' अट्ठ ' त्ति अष्टाधिका चतुरधिका च विंशतिः अष्टाविंशतिश्चतुर्विंशतिश्चेत्यर्थः । तथा सप्तदश षोडश पञ्चदश चेत्यमूनि स्थानानि वर्जयित्वा शेषाणि एकद्वित्रिचतु पञ्चषट्सप्ताष्टनवदशैकादशद्वादशत्रयोदशचतुर्दशाष्टादशैकोनविंशतिविंशत्येकविंशतिद्वाविंशतित्रयोविंशतिपञ्चविंशतिषड्विंशतिसप्तविंशतिलक्षणानि त्रयोविंशतिसंख्यानि मोहनीये संक्रमस्थानानि भवन्ति । तथाहि—अष्टाविंशतिसत्कर्मणो मिथ्यादृष्टेर्मिथ्यात्वं सम्यक्त्व-सम्यग्मिथ्यात्वयो पतद्ग्रह इति मिथ्यात्वव्यतिरिक्ता· शेषा· सप्तविंशति· संक्रामन्ति । तत्र चारित्रमोहनीयं पञ्चविंशतिप्रकृत्यात्मकं परस्परं संक्रामति सम्यक्त्वसम्यग्मिथ्यात्वयोः मिथ्यात्वे । तथा सम्यक्त्वे उद्वलिते सति सप्तविंशतिसत्कर्मणो मिथ्यादृष्टेर्मिथ्यात्वं सम्यग्मिथ्यात्वस्य पतद्ग्रह इति तद्व्यतिरिक्ता शेषाः षड्विंशति· संक्रामन्ति । सम्यग्मिथ्यात्वेऽप्युद्वलिते सति षड्विंशतिसत्कर्मणः पञ्चविंशति· । अथवा-अनादिमिथ्यादृष्टे· षड्विंशतिसत्कर्मण पञ्चविंशतिः, मिथ्यात्वस्य संक्रमाभावात् । न हि तत् चारित्रमोहनीये संक्रामति , दर्शनमोहनीयचारित्रमोहनीययोः परस्परं संक्रमाभावात् । अथवौपशमिकसम्यग्दृष्टेरष्टाविंशतिसत्कर्मणः सम्यक्त्वलाभादावलिकाया ऊर्द्ध वर्त्तमानस्य सम्यक्त्वे मिथ्यात्वसम्यग्मिथ्यात्वयो संक्रमः । तेन तत् पतद्ग्रह इति । तस्मिन्नपसारिते शेषा सप्तविंशति· संक्रमं प्राप्यते । तस्यैव चोपशमिकसम्यग्दृष्टेरष्टाविंशतिसत्कर्मण आवलिकाया अभ्यन्तरे वर्तमानस्य सम्यग्मिथ्यात्वं सम्यक्त्वे न संक्रामति । यतो मिथ्यात्वपुद्गला एव सम्यक्त्वानुगति ( त ) विशोधिप्रभावत सम्यग्मिथ्यात्वलक्षणं परिणामान्तरमापादिता । अन्यप्रकृतिरूपतया परिणामान्तरापादन च संक्रम· , संक्रमावलिकागतं च सकलकरणायोग्यमिति सम्यक्त्वलाभादावलिकाया अभ्यन्तरे वर्तमानेन सम्यग्मिथ्यात्वं सम्यक्त्वे न संक्रम्यते, किं तु केवल मिथ्यात्वमेव तत· सम्यग्मिथ्यात्वेऽप्यपसारिते शेषा षड्विंशति· संक्रामति । चतुर्विंशतिस्तु संक्रमे न प्राप्यते , यतश्चतुर्विंशतिसत्कर्मा सम्यग्दृष्टिर्मिथ्यात्व गत· सन् यद्यप्यनन्तानुबन्धिनो भूयोऽपि बध्नाति , तथापि तान् सतोऽपि न संक्रमयति , बन्धावलिकागतस्य सर्वकरणायोग्यत्वात् । मिथ्यात्वं च सम्यक्त्वसम्यग्मिथ्यात्वयो· पतद्ग्रह इति तस्मिन्नपसारिते शेषा त्रयोविंशतिरेव संक्रामति । अथवा-चतुर्विंशतिसत्कर्मण· सम्यग्दृष्टे सम्यक्त्वं मिथ्यात्वसम्यग्मिथ्यात्वयो· पतद्ग्रह इति तस्मिन्नपसारिते शेषा त्रयोविंशति· संक्रामति । तस्यैव मिथ्यात्वे क्षपिते द्वाविंशति । अथवौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य चारित्रमोहनीयस्यान्तरकरणे कृते सति लोभसंज्वलनस्यापि संक्रमो न भवति , ' अन्तरकरणे कृते पुरुषवेदसंज्वलनचतुष्टययोरानुपूर्व्या संक्रमो भवतीति वचनप्रामाण्यात् , अनन्तानुबन्धिचतुष्टयस्य च विसंयोजितत्वादुपशान्तत्वाद्वा संक्रमाभाव । सम्यक्त्वं च मिथ्यात्वसम्यग्मिथ्यात्वयोः पतद्ग्रह इति संज्वलनलोभानन्तानुबन्धिचतुष्टयसम्यक्त्वेष्वष्टाविंशतेरपनीतेषु शेषा द्वाविंशतिः संक्रामन्ति । तस्यैवौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य नपुंसकवेदे उपशान्ते एकविंशतिः द्वाविंशतिसत्कर्मणो वा सम्यक्त्वं न क्वापि संक्रामतीत्येकविंशतिः संक्रमे प्राप्यते । यद्वा—क्षपकश्रेण्यां वर्तमानस्य क्षपकस्य यावदद्याप्यष्टौ कषाया न क्षयमुपयान्ति तावदेकविंशतिः संक्रमे प्राप्यते । औपशमिकसम्यग्दृष्टे सम्बन्धिन्याः प्रागुक्ताया· एकविंशते स्त्रीवेदे उपशान्ते सति शेषा विंशतिः संक्रामति । यद्वा—क्षायिकसम्यग्दृष्टेरुपशमश्रेणिं प्रतिपन्नस्य चारित्रमोहनीयस्यान्तरकरणे कृते लोभसंज्वलनस्यापि । प्रागुक्तयुक्ते संक्रमो न भवतीति तस्मिन्नपसारिते विंशतिः संक्रमे प्राप्यते । ततो नपुंसकवेदे उपशान्ते एकोनविंशति·; स्त्रीवेदे उपशान्तेऽष्टादश औपशमिकसम्यग्दृष्टेरुपशमश्रेण्या वर्तमानस्य प्रागुक्ताया विंशतेः षट्सु नोकषायेषूपशान्तेषु शेषाश्चतुर्दश संक्रामन्ति । तत· पुरुषवेदे उपशान्ते त्रयोदश । यद्वा—क्षपकस्य क्षपकश्रेण्या वर्त्तमानस्य प्रागुक्ताया एकविंशतेरष्टसु कषायेषु क्षीणेषु शेषास्त्रयोदश संक्रामन्ति । तस्यैव क्षपकस्य चारित्रमोहनीयस्यान्तरकरणे कृते संज्वलनलोभस्य प्रागुक्तयुक्ते संक्रमो न भवतीति तस्मिन्नपसारिते शेषा द्वादश संक्रामन्ति । अथवा—क्षायिकसम्यग्दृष्टेरुपशमश्रेण्या वर्तमानस्य प्रागुक्ताभ्योऽष्टादशभ्य· षट्सु नोकषायेषूपशान्तेषु सत्सु शेषा द्वादश संक्रामन्ति । तत· पुरुषवेदे उपशान्ते एकादश । क्षपकस्य वा प्रागुक्ताभ्यो द्वादशभ्यो नपुंसकवेदे क्षीणे शेषा एकादश संक्रामन्ति । अथवौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां प्रागुक्ताभ्यस्त्रयोदशभ्योऽप्रत्याख्यानप्रत्याख्यानावरणक्रोधद्विके उपशान्ते शेषा एकादश संक्रमे प्राप्यन्ते । क्षपकश्रेण्यामेकादशभ्य· स्त्रीवेदे क्षीणे शेषा दश संक्रामन्ति । औपशमिकसम्यग्दृष्टेर्वोपशमश्रेण्या वर्तमानस्यैकादशभ्य· संज्वलनलोभे उपशान्ते शेषा दश संक्रामन्ति । क्षायिकसम्यग्दृष्टेरुपशमश्रेण्या वर्तमानस्य प्रागुक्ताभ्य एकादशभ्योऽप्रत्याख्यानावरणलक्षणे क्रोधद्विक उपशान्ते शेषा नव संक्रामन्ति । तस्यैव संज्वलनक्रोधेऽप्युपशान्तेऽष्टौ । अथवौपशमिकसम्यग्दृष्टेरुपशमश्रेण्या वर्त्तमानस्य प्रागुक्ताभ्यो दशभ्योऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे मानद्विके उपशान्ते शेषा अष्टौ संक्रामन्ति । तस्यैव संज्वलनमाने उपशान्ते सप्त । क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्योऽष्टाभ्योऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे मानद्विके उपशान्ते शेषा षट् संक्रामन्ति । तस्यैव संज्वलनमाने उपशान्ते पञ्च । यद्वौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्य सप्तभ्य· प्रकृतिभ्याऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे मायाद्विके उपशान्ते शेषाः पञ्च संक्रामन्ति । तस्यैव संज्वलनमायायामुपशान्तायां चतस्र· । अथवा-क्षायिकसम्यग्दृष्टे क्षपकस्य प्रागुक्ताभ्यो दशभ्य· षट्सु नोकषायेषु क्षीणेषु शेषाश्चतस्र· प्रकृतय संक्रामन्ति । तस्यैव पुरुषवेदे क्षीणे तिस्र· । अथवा क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रागुक्ताभ्य· पञ्चभ्योऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे मायाद्विके उपशान्ते शेषास्तिस्र संक्रामन्ति · तस्यैव संज्वलनमायायामुपशान्तायां द्वे । अथवौपशमिकसम्यग्दृष्टेरुपशमश्रेण्या वर्तमानस्य प्रागुक्ताभ्यश्चतसृभ्य· प्रकृतिभ्योऽप्रत्याख्यानप्रत्याख्यानावरणलक्ष-

णे लोभद्विक उपशान्ते शेषे द्वे प्रकृती संक्रामत' । अथवा-क्षायिकसम्यग्दृष्टेः क्षपकस्य प्रागुक्ताभ्यस्तिसृभ्य सञ्ज्वलनक्रोधे क्षीणे द्वे संक्रामत. । तस्यैव सञ्ज्वलनमाने क्षीणे एका तदेवं परिभाव्यमानेऽष्टाविंशतिचतुर्विंशतिसप्तदशषोडशपञ्चदश—लक्षणानि संक्रमस्थानानि न प्राप्यन्ते । इति प्रतिषिध्यन्ते । तेषु च प्रतिषिद्धेषु शेषाणि त्रयोविंशतिसंख्यानि संक्रमस्थानान्यवगन्तव्यानि । एतेषु संक्रमस्थानेषु मध्ये पञ्चविंशतिप्रकृत्यात्मक संक्रमस्थानम् । साद्यादिरूपतया चतुष्प्रकारम् । तद्यथा-साद्यनादि ध्रुवमध्रुव च । तत्राष्टाविंशतिसत्कर्मण सम्यक्त्वसम्यग्मिथ्यात्वयोरुद्वलितयोर्भवत् सादि, अनादि मिथ्यादृष्टेरनादि, अध्रुवध्रुवता भव्याभव्यापेक्षया । शेषाणि तु संक्रमस्थानानि साद्यध्रुवाणि , कादाचित्कत्वात् कृता मोहनीये सक्रमासक्रमस्थानप्ररूपणा ।

सम्प्रति पतद्ग्रहापतद्ग्रहस्थानप्ररूपणार्थमाह—

**सोलस बारसगऽट्ठग, वीसग तेवीसगा इगे छच्च ।**
**वज्जिय मोहस्स पडि-ग्गहा उ अट्ठारस हवंति ॥ ११ ॥**

'सोलस' त्ति षोडश द्वादशाष्टौ विंशतिस्त्रयोविंशत्यादयश्च षट् । तद्यथा-त्रयोविंशतिश्चतुर्विंशति. पञ्चविंशति. षड्विंशतिः सप्तविंशतिरष्टाविंशतिश्च । एतानि स्थानानि वर्जयित्वा शेषाण्येकद्वित्रिचतुः पञ्चषट्सप्तनवदशैकादशत्रयोदशचतुर्दशपञ्चदशसप्तदशाष्टादशैकोनविंशत्येकविंशतिद्वाविंशतिलक्षणानि अष्टादश पतद्ग्रहस्थानानि भवन्ति । तत्र कस्मिन् पतद्ग्रहे का प्रकृतय. संक्रामन्तीत्येतद्भाव्यते-तत्र मिथ्यादृष्टेरष्टाविंशतिसत्कर्मणो मिथ्यात्व सम्यक्त्वसम्यग्मिथ्यात्वयोः पतद्ग्रह इति तस्मिन्नपसारिते शेषा सप्तविंशतिर्मिथ्यात्वषोडशकषायान्यतरवेदभयजुगुप्साहास्यरतियुगलारतिशोकयुगलान्यतरयुगललक्षणाया द्वाविंशतौ संक्रामति । तस्यैव सम्यक्त्व उद्वलिते सप्तविंशतिसत्कर्मणो मिथ्यादृष्टेर्मिथ्यात्वसम्यग्मिथ्यात्वस्य पतद्ग्रह इति तस्मिन्नपसारिते शेषा षड्विंशति. प्रागुक्ताया द्वाविंशतौ संक्रामति । तस्यैव मिथ्यादृष्टे । सम्यग्मिथ्यात्व उद्वलित षड्विंशतिसत्कर्मणो मिथ्यात्वे न किमपि संक्रामतीति न तत्कस्यचित्पतद्ग्रह इति । तस्मिन् प्रागुक्ताया द्वाविंशतेरपनीते शेषे एकविंशतिप्रकृतिसमुदायात्मके पतद्ग्रहे पञ्चविंशति' । अथवाऽनादिमिथ्यादृष्टे. षड्विंशतिसत्कर्मणो मिथ्यात्वं न कापि सक्रामति, नापि तत्रान्या प्रकृतिरित्याधाराधेयभावपरिभ्रष्ट मिथ्यात्वमपनीयते, तत. शेषा पञ्चविंशति प्रागुक्तायामेकविंशतौ सक्रामति । तथा चतुर्विंशतिसत्कर्मा मिथ्यात्व गत. सन् यद्यपि मिथ्यात्वप्रत्ययतो भूयोऽप्यनन्तानुबन्धिनो बध्नाति,तथाऽपि बन्धावलिकागत सकलकरणायोग्यमिति कृत्वा सतोऽपि तान् न संक्रमयति । मिथ्यात्व च सम्यक्त्वसम्यग्मिथ्यात्वयो. पतद्ग्रहस्ततोऽनन्तानुबन्धिचतुष्टयमिथ्यात्ववर्जित. शेषास्त्रयोविंशतिप्रकृतय. प्रागुक्ताया द्वाविंशतौ संक्रामन्ति । तदेव मिथ्यादृष्टेर्द्वाविंशतिपद्ग्रहे सप्तविंशतिषड्विंशतित्रयोविंशतिसक्रमा । एकविंशतिपद्ग्रहे च पञ्चविंशतिसंक्रम उक्त , शेष' संक्रमः पतद्ग्रहो वा न सभवति । सासादनसम्यग्दृष्टेस्तु शुद्धदृष्टित्वाभावाद्दर्शनमोहनीयत्रयस्य संक्रमाभावः।ततोऽस्य सर्वदा एकविंशतिरूपे पतद्ग्रहे पञ्चविंशतिरेव संक्रामति । सम्यग्मिथ्यादृष्टेरपि शुद्धदृष्टित्वाभावाद्दर्शनत्रयस्य सक्रमाभाव इति अष्टाविंशतिसत्कर्मण. सप्तविंशतिसत्कर्मणो वा पञ्चविंशतिः। चतुर्विंशतिसत्कर्मण. पुनरेकविंशति. । द्वादशकषायपुरुषवेदभयजुगुप्साऽन्यतरयुगललक्षणसप्तदशप्रकृतिसमुदायरूपे पतद्ग्रहे संक्रामति । तदेवमुक्तौ सासादनसम्यग्मिथ्यादृष्टी संप्रत्यविरतदेशविरतप्रमत्ताप्रमत्तेषु संक्रमाणां तुल्यत्वात् युगपत्पतद्ग्रहा उच्यन्ते-तेषामविरतादीनामौपशमिकसम्यग्दृष्टीनां सम्यक्त्वलाभप्रथमसमयादारभ्य यावदावलिकामात्रं तावत् सम्यक्त्वसम्यग्मिथ्यात्वयोः पतद्ग्रहतैव भवति , न संक्रमः , इति शेषा षड्विंशतिविरतानां द्वादशकषायपुरुषवेदभयजुगुप्साऽन्यतरयुगलसम्यक्त्वसम्यग्मिथ्यात्वरूप एकोनविंशतिपतद्ग्रहे, देशविरतानां प्रत्याख्यानावरणसंज्वलनकषायपुरुषवेदभयजुगुप्साऽन्यतरयुगलसम्यक्त्वसम्यग्मिथ्यात्वलक्षणे पञ्चदशपतद्ग्रहे, प्रमत्ताऽप्रमत्तानां संज्वलनचतुष्टयपुरुषवेदसम्यक्त्वसम्यग्मिथ्यात्वभयजुगुप्साऽन्यतरयुगलरूपे एकादशपतद्ग्रहे संक्रामति । तेषामेवाऽविरतसम्यग्दृष्ट्यादीनामावलिकाया परतः सम्यग्मिथ्यात्वे संक्रमे पतद्ग्रहे च लभ्यते इति सप्तविंशतिः प्रागुक्तेषु त्रिषु पतद्ग्रहेषु संक्रामति । तथा तेषामेवाविरतसम्यग्दृष्ट्यादीनामनन्तानुबन्धिषूद्वलितेषु चतुर्विंशतिसत्कर्मणां क्षायोपशमिकसम्यग्दृष्टीनां सम्यक्त्वं पतद्ग्रह इति कृत्वा शेषा त्रयोविंशति. प्रागुक्तेष्वेवैकोनविंशत्यादिषु त्रिषु पतद्ग्रहेषु संक्रामति । ततो मिथ्यात्वे क्षपिते सति सम्यग्मिथ्यात्वं पतद्ग्रहभावे न लभ्यते, मिथ्यात्वं च संक्रमे न लभ्यते । तत. शेषा द्वाविंशतिरविरतदेशविरतसंयताना यथासंख्यमष्टादशचतुर्दशदशरूपेषु पतद्ग्रहेषु संक्रामति । ततः सम्यग्मिथ्यात्वे क्षपिते सति सम्यग्मिथ्यात्वस्य न संक्रमो नापि पतद्ग्रह इत्येकविंशतिराविरतादीना यथासंख्यं सप्तदशत्रयोदशनवकरूपेषु पतद्ग्रहेषु संक्रामति । सम्प्रत्यौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य संक्रममाश्रित्य पतद्ग्रहविधिरुच्यते—चतुर्विंशतिसत्कर्मण. सम्यक्त्वं मिथ्यात्वसम्यग्मिथ्यात्वयो. पतद्ग्रह एवेति कृत्वा तस्मिन्नपसारिते शेषा त्रयोविंशतिः पुवेदसंज्वलनचतुष्टयसम्यक्त्वसम्यग्मिथ्यात्वरूपे सप्तकपतद्ग्रहे संक्रामति, तस्यैवोपशमश्रेण्या वर्तमानस्यान्तरकरणे कृते संज्वलनलोभस्य संक्रमो न भवति इति तस्मिन्नपसारिते शेषा द्वाविंशति. पूर्वोक्त एव सप्तकपतद्ग्रहे संक्रामति । तस्यैव नपुंसकवेदे उपशान्ते सप्तकपतद्ग्रहे एकविंशतिः । तत' स्त्रीवेदे उपशान्ते विंशति । तत. पुरुषवेदस्य प्रथमस्थितौ समयोनावलिकाद्विकशेषायां " दुसु आवलियासु पढमठिईसु सेसासुऽवि य वेदो । " इति वचनात् पुरुषवेदः पतद्ग्रहो न भवति । तत प्रागुक्तात् सप्तकात्पुरुषवेदेऽपनीते शेष षट्करूपे पतद्ग्रहे प्रागुक्ता विंशति संक्रामति । तत. षट्सु नोकषायेषूपशान्तेषु शेषाश्चतुर्दश प्रकृतय प्रागुक्ते एव षट्करूपे पतद्ग्रह संक्रामन्ति । ताश्च तावत्संक्रामन्ति यावत्समयोनमावलिकाद्विकम् । तत. पुरुषवेदे उपशान्ते शेषास्त्रयोदश षट्करूपे एतद्ग्रहे सक्रामन्ति । ताश्च तत्र ताव-

घाद्वन्तर्मुहूर्तम् । तत. संज्वलनक्रोधस्य प्रथमस्थितौ समयोनावलिकात्रिकशेषायां संज्वलनक्रोधोऽपि 'तिसु आवलियासु समऊ-णियासु अपडिग्गहा उ संजलणा' इति वचनात् पतद्ग्रहो न भवतीति प्रागुक्तात् पञ्चकात्तस्मिन्नपसारिते शेषे पञ्चकरूपे पतद्ग्रहे ता एव त्रयोदश प्रकृतयः संक्रामन्ति । ततोऽप्रत्याख्यानप्रत्याख्यानावरणक्रोधद्विक उपशान्ते शेषा एकादश प्रागुक्त एव पञ्चकपतद्ग्रहे संक्रामन्ति । ताश्च तावद्यावत्समयोनावलिकाद्विकम् । ततः संज्वलनक्रोधे उपशान्ते शेषा दश प्रकृतयस्तस्मिन्नेव पञ्चकपतद्ग्रहे तावत्संक्रामन्ति यावदन्तर्मुहूर्तम् । ततः संज्वलनमानस्य प्रथमस्थितौ समयोनावलिकात्रिकशेषायां संज्वलनमानोऽपि पतद्ग्रहो न भवतीति पञ्चकात्तस्मिन्नपनीते शेषे चतुष्करूपे पतद्ग्रहे ता एव दश प्रकृतयः संक्रामन्ति । ताश्च तावद्यावत्समयानमावलिकाद्विकम् । ततोऽप्रत्याख्यानप्रत्याख्यानावरणरूपे मानद्विके उपशान्ते शेषा अष्टौ प्रकृतयश्चतुष्करूपे एव पतद्ग्रहे संक्रामन्ति । तत. संज्वलनमाने उपशान्ते सप्त , ताश्च सप्त चतुष्करूपे पतद्ग्रहेऽन्तर्मुहूर्तं कालं यावत्संक्रामन्ति । तत. संज्वलनमायाया. प्रथमस्थितौ समयोनावलिकात्रिकशेषाया संज्वलनमायाऽपि पतद्ग्रहो न भवतीति चतुष्कात्तस्यामपगताया शेषे त्रिकरूपे पतद्ग्रहे पूर्वोक्ताः सप्त संक्रामन्ति । ताश्च तावद्यावत् समयोनमावलिकाद्विकम् । ततोऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे मायाद्विके उपशान्ते शेषा. पञ्च प्रकृतयस्त्रिकरूपे पतद्ग्रहे संक्रामन्ति । ताश्च तावद्यावत्समयोनमावलिकाद्विकम् । तत. संज्वलनमायायामुपशान्तायां शेपाश्चतस्र. प्रकृतयः संक्रामन्ति । ताश्च तावद्यावदन्तर्मुहूर्तम् । ततोऽनिवृत्तबादरसम्परायचरमसमयेऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे लोभद्विके उपशान्ते शेषे द्वे प्रकृती संक्रामत. । ते च मिथ्यात्वसम्यग्मिथ्यात्वलक्षणे । नचैते संज्वलनलोभे संक्रामतः, दर्शनमोहनीयचारित्रमोहनीययोः परस्परं संक्रमाभावात् । ततस्तस्यापि पतद्ग्रहता न भवतीति द्वयोरेव ते द्वे संक्रामत. । तत्र मिथ्यात्वं सम्यक्त्वसम्यग्मिथ्यात्वयो. , सम्यग्मिथ्यात्वं सम्यक्त्वे । तदेवमौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां संक्रमपतद्ग्रहविधिरुक्त । सम्प्रति क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां संक्रमपतद्ग्रहविधिरुच्यते-तत्रानन्तानुबन्धिचतुष्टयदर्शनत्रिकरूपे सप्तके क्षपिते सति एकविंशतिसत्कर्मा सन् क्षायिकसम्यग्दृष्टिरुपशमश्रेणिं प्रतिपद्यते । तस्य चान्तर्मुहूर्तं कालं यावत्पुरुषवेदसंज्वलनचतुष्टयरूपे पञ्चकपतद्ग्रहे एकविंशति' संक्रामति । ततोऽन्तरकरणे कृते सति संज्वनलोभस्य संक्रमो न भवतीति एकविंशतेस्तस्मिन्नपनीते शेपा विंशतिः पञ्चकपतद्ग्रहे संक्रामति । सा चान्तर्मुहूर्तं कालं यावत् । ततो नपुंसकवेदे उपशान्ते एकोनविंशति. । साऽपि चान्तर्मुहूर्तं कालं यावत् । तत. स्त्रीवेदे उपशान्ते शेषा अष्टादश प्रकृतयस्तस्मिन्नेव पञ्चकपतद्ग्रहे संक्रामन्ति । ताश्च तत्र तावत् यावदन्तर्मुहूर्तम् । तत. पुरुषवेदस्य प्रथमस्थितौ समयोनावलिकाद्विकशेषायां पुरुषवेदः पतद्ग्रहो न भवतीति पञ्चकात्तस्मिन्नपगते शेषे चतुष्करूपे पतद्ग्रहे ता एवाष्टादश प्रकृतय. संक्रामन्ति । तत षट्सु नोकषायेषूपशान्तेषु शेषा द्वादश प्रकृतयश्चतुष्करूपे एव तस्मिन् पतद्ग्रहे संक्रामन्ति । ताश्च तावद्यावत्समयोनमावलिकाद्विकम् । ततः पुरुषवेद उपशान्ते एकादश । ताश्चतुष्करूपे पतद्ग्रहे तावत्संक्रामन्ति यावदन्तर्मुहूर्तम् । ततः संज्वलनक्रोधस्य प्रथमस्थितौ समयोनावलिकात्रिकशेषायां संज्वलनक्रोधोऽपि पतद्ग्रहो न भवतीति चतुष्कात्तस्मिन्नपगते शेषे त्रिकरूपे पतद्ग्रहे ताः पूर्वोक्ता एकादश प्रकृतयः संक्रामन्ति । ताश्च तावद्यावत् समयोनमावलिकाद्विकम् । ततोऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे क्रोधद्विके उपशान्ते शेषा नव प्रकृतयः पूर्वोक्त एव त्रिकरूपे पतद्ग्रहे संक्रामन्ति ; ताश्च तावद्यावत्समयोनमावलिकाद्विकम् । ततः संज्वलनक्रोधे उपशान्तेऽष्टौ संक्रामन्ति । ताश्च त्रिकरूपे पतद्ग्रहे तावत्संक्रामन्ति यावदन्तर्मुहूर्तम् । ततः संज्वलनमानस्य प्रथमस्थितौ समयोनावलिकात्रिकशेषायां संज्वलनमानोऽपि पतद्ग्रहो न भवतीति त्रिकात्तस्मिन्नपनीते शेषे द्विकरूपे पतद्ग्रहे पूर्वोक्ता अष्टौ प्रकृतयः संक्रामन्ति । ताश्च तावद्यावत्समयोनमावलिकाद्विकम् । ततोऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे मानद्विके उपशान्ते शेषा. षट् प्रकृतयो द्विकपतद्ग्रहे संक्रामन्ति ताश्च तावद्यावत्समयोनमावलिकाद्विकम् । ततः संज्वलनमाने उपशान्ते पञ्च संक्रामन्ति । ताश्च द्विकरूपे पतद्ग्रहे तावत् संक्रामन्ति यावदन्तर्मुहूर्तम् । ततः संज्वलनमायायाः प्रथमस्थितौ समयोनावलिकात्रिकशेषायां संज्वलनमायाऽपि पतद्ग्रहो न भवतीति द्विकात्तस्यामपगतायां शेषे संज्वलनलोभ एवैकस्मिंस्ता. पञ्च प्रकृतयः संक्रामन्तीति ; ताश्च तावद्यावत् समयोनावलिकाद्विकम् । ततोऽप्रत्याख्यानप्रत्याख्यानावरणलक्षणे मायाद्विके उपशान्ते शेषास्तिस्र. प्रकृतयः संज्वलनलोभे संक्रामन्ति । ताश्च तावद्यावत् समयोनमावलिकाद्विकम् । ततः संज्वलनमायायामुपशान्तायां शेषे द्वे अप्रत्याख्यानप्रत्याख्यानावरणलोभलक्षणे प्रकृती संज्वलनलोभे संक्रामत.,ते चान्तर्मुहूर्तं काल यावत् । ततोऽनिवृत्तिबादरसंपरायगुणस्थानकचरमसमये ते अप्युपशान्ते इति न किमपि क्वापि संक्रामति । तदेवं क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां संक्रमपतद्ग्रहविधिरुक्तः । संप्रति क्षायिकसम्यग्दृष्टेः, क्षपकश्रेण्यां संक्रमपतद्ग्रहविधिरभिधीयते-तत्र क्षायिकसम्यग्दृष्टिरेकविंशतिसत्कर्मा क्षपकश्रेणिं प्रतिपद्यते। तस्य चानिवृत्तिबादरसंपरायगुणस्थानं प्राप्तस्य पुरुषवेदसंज्वलनचतुष्टयरूप पञ्चकपतद्ग्रहे प्रथमत एकविंशतिप्रकृतयः संक्रामन्ति । ततोऽष्टसु कषायेषु क्षीणेषु त्रयोदश, ताश्चान्तर्मुहूर्तं कालं यावत् । ततोऽन्तरकरणे कृते सति संज्वलनलोभस्य संक्रमो न भवतीति शेषा द्वादश प्रकृतयस्तस्मिन्नेव पञ्चकपतद्ग्रहे संक्रामन्ति, ताश्चान्तर्मुहूर्तं कालं यावत् । ततो नपुंसकवेदे क्षीणे एकादश, ता अपि अन्तर्मुहूर्तं कालं यावत् । ततः स्त्रीवेदे क्षीणे दश । ता अप्यन्तर्मुहूर्तं कालं यावत् तस्मिन्नेव पञ्चकरूपे पतद्ग्रहे संक्रामन्ति । ततः पुरुषवेदस्य प्रथमस्थितौ समयोनावलिकाद्विकशेषाया पुरुषवेद. पतद्ग्रहो न भवतीति पञ्चकात्तस्मिन्नपनीते शेषे चतुष्करूपे पतद्ग्रहे ता एव दश संक्रामन्ति । ताश्च तावद्यावत्समयोनमावलिकाद्विकम् । तत. षट्सु नोकषायेषु क्षीणेषु शेषाश्चतस्र. प्रकृतयस्तस्मिन्नेव चतुष्करूपे पतद्ग्रहे संक्रामन्ति । ततः पुरु-

पवेदः क्षीण· । तत्समये च संज्वलनक्रोधस्यापि पतद्ग्रहता न भवतीति तस्मिन्नपगते शेषासु तिसृषु प्रकृतिषु तिस्र· प्रकृतयः संक्रामन्ति, ताश्चान्तर्मुहूर्तं कालं यावत् । ततः समयोनावलिकाद्विकेन कालेन संज्वलनक्रोध· क्षीयते । तत्समये च संज्वलनमानस्याऽपि पतद्ग्रहता न भवतीति शेषयोर्द्वयो प्रकृत्योर्द्वे प्रकृती संक्रामतः , ते चान्तर्मुहूर्तं कालं यावत् । तत· समयोनावलिकाद्विकेन कालेन संज्वलनमानोऽपि क्षीयते । तत्समयमेव च संज्वलनमायाया अपि पतद्ग्रहता न भवति । तत एकस्यामेव संज्वलनलोभलक्षणायां प्रकृतौ संज्वलनमायालक्षणा एका प्रकृतिः संक्रामति , सा चान्तर्मुहूर्तं कालं यावत् । तत आवलिकाद्विकेन कालेन संज्वलनमायाऽपि क्षीयते । तत ऊर्ध्वं न किमपि क्वापि संक्रामति ।

सम्प्रति यथोक्तरूपेषु पतद्ग्रहेषु प्रत्येकं संक्रमस्थानानि संकलयन्नाह—

छव्वीससत्तवीसा—ण संकमो होउ चउसु ठाणेसु ।
बावीसपन्नरसगे, एकारस इगुणवीसाए ॥ १२ ॥

' छव्वीस ' त्ति चतुर्षु स्थानेषु पतद्ग्रहरूपेषु । तद्यथा— द्वाविंशतौ , पञ्चदशके , एकादशके , एकोनविंशतौ च षड्विंशतिसप्तविंशत्यो· संक्रमो भवति । तत्र द्वाविंशतौ मिथ्यादृष्टे , पञ्चदशके देशविरतस्य , एकादशके प्रमत्ताप्रमत्तयो·, एकोनविंशतौ अविरतसम्यग्दृष्टे· ।

सत्तरसएकवीसा—सु संकमो होइ पन्नवीसाए ।
नियमा चउसु गईसुं, नियमा दिट्ठी कए तिविहे ॥१३॥

' सत्तरस'त्ति—सप्तदशकैकविंशत्यो· पञ्चविंशते संक्रमो भवति । तत्र सप्तदशके मिश्रदृष्टे , एकविंशतौ मिथ्यादृष्टेः सासादनस्य च । अयं च पञ्चविंशते· सप्तदशकैकविंशत्योः संक्रमो नियमाच्चतसृष्वपि गतिषु प्राप्यते । नियमाच्च सप्तदशके सासादनैकविंशतौ च पञ्चविंशते· संक्रम· त्रिविधाया-त्रिप्रकारायां दृष्टौ दर्शनमोहनीये कृतायां वेदितव्य । मिथ्यादृष्टेस्त्वेकविंशतौ पञ्चविंशतिसंक्रमोऽनादिमिथ्यादृष्टेरपि भवति । 'कए ' इति ' तिविहे ' इति च पुंस्त्वनिर्देशः प्राकृतत्वात् ।

बावीसपन्नरसगे, सत्तगएक्कारसिगुणवीसासु ।
तेवीसाए नियमा, पंच वि पंचिंदिएसु भवे ॥ १४ ॥

' बावीस ' त्ति त्रयोविंशते· संक्रमो द्वाविंशतिपञ्चदशकसप्तकैकादशकैकोनविंशतिरूपेषु पञ्चसु पतद्ग्रहेषु भवति । तत्र द्वाविंशतौ मिथ्यादृष्टेः , पञ्चदशके देशविरतस्य , सप्तके औपशमिकसम्यग्दृष्टेरुपशमश्रेण्या वर्तमानस्य , एकादशके प्रमत्ताप्रमत्तयो· , एकोनविंशतौ अविरतसम्यग्दृष्टे । एतानि च पञ्च पतद्ग्रहस्थानानि पञ्चेन्द्रियेष्वेव भवन्ति ॥

चोद्दसगदसगसत्तग, अट्ठारसगे य होइ बावीसा ।
नियमा मणुयगईए, नियमा दिट्ठीकए दुविहे ॥ १५ ॥

' चोद्दस ' त्ति द्वाविंशति· संक्रमयोग्या भवति, चतुर्दशके दशके सप्तकेऽष्टादशके च । तत्र चतुर्दशके देशविरतस्य , दशके प्रमत्ताप्रमत्तयोः, सप्तके औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य , अष्टादशकेऽविरतसम्यग्दृष्टे· एषा च द्वाविंशतिर्नियमान्मनुजगतौ भवति, नान्यत्र । नियमाच्च दृष्टौ द्विविधायां कृतायां सम्यक्त्वसम्यग्मिथ्यात्वयोरेव सतोरित्यर्थः ।

तेरसगनवगसत्तग, सत्तारसपणगएकवीसासु ।
एक्कवीसा संकमइ, सुद्धसासादणमीसेसु ॥ १६ ॥

'तेरस' त्ति त्रयोदशकनवकसप्तकसप्तदशकपञ्चकैकविंशतिरूपेषु षट्सु पतद्ग्रहेष्वेकविंशतिः संक्रामति । केषु जीवेष्वित्याह-शुद्धसासादनमिश्रेषु शुद्धेषु विशुद्धदृष्टिषु अविरतसम्यग्दृष्ट्यादिषु सासादनमिश्रेषु । तत्र त्रयोदशके देशविरतस्य, नवके प्रमत्ताप्रमत्तयो , सप्तके औपशमिकसम्यग्दृष्टेरुपशमश्रेण्या वर्तमानस्य , सप्तदशकेऽविरतसम्यग्दृष्टेर्मिश्रदृष्टेश्च , पञ्चके क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य क्षपकश्रेण्या वा एकविंशतौ सासादनस्य इह येराचार्यैश्चतुर्विंशतिसत्कर्मा सन्नुपशमश्रेणीत· प्रतिपतन् मिथ्यात्वाभिमुख· सासादन इष्यते, तन्मते सासादनस्यैकविंशतावेकविंशति· संक्रमेऽभिहिता अन्यथा पुनरनन्तानुबन्ध्युदयसहितस्य सासादनस्यैकविंशतौ पञ्चविंशतिरेव संक्रमे प्राप्यते । सा च प्रागेवोक्ता ।

एत्तो अविसेसा सं—कमंति उवसामगे व खवगे वा ।
उवसामगेसु वीसा, य सत्तगे छक्कपणगे य ॥ १७ ॥

'एत्तो' त्ति इत ऊर्ध्वमविशेषा· सप्तदश संक्रमाः संक्रामन्ति, उपशमके क्षपके वा । तत्र विंशतिः संक्रमयोग्या सप्तके षट्के पञ्चके चौपशमिकेषु प्राप्यते । तत्रापि सप्तके षट्के चौपशमिकसम्यग्दृष्टेरुपशमश्रेण्या वर्तमानस्य पञ्चके क्षायिकसम्यग्दृष्टेरुपशमश्रेण्याम् ।

पंचसु एगुणवीसा, अट्ठारस पंचगे चउके य ।
चउदस छसु पगईसुं, तेरसगं छक्कपणगम्मि ॥ १८ ॥

'पंचसु' त्ति—पञ्चके एकोनविंशति· संक्रामति । सा च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्या वर्तमानस्य । तथा तस्यैवाष्टादश संक्रामन्ति पञ्चके चतुष्के च, तथा चतुर्दश षट्सु प्रकृतिषु । ताश्चौपशमिकसम्यग्दृष्टेरुपशमश्रेण्या वर्तमानस्य तथा त्रयोदशकं षट्के पञ्चके च । तत्र षट्के औपशमिकसम्यग्दृष्टेरुपशमश्रेण्या वर्तमानस्य, पञ्चके क्षपकश्रेण्याम् ।

पंच चउके बारस, एकारस पंचगे तिगचउके ।
दसगं चउक्कपणगे, नवगं च तिगम्मि बोधव्वं ॥ १९ ॥

'पंच' त्ति—पञ्चके चतुष्के च द्वादश संक्रामन्ति । ताश्च पञ्चके क्षपकश्रेण्या,चतुष्के क्षायिकसम्यग्दृष्टेरुपशमश्रेण्या वर्तमानस्य । तथैकादश पञ्चके त्रिके चतुष्के च संक्रामन्ति । तत्र पञ्चके औपशमिकसम्यग्दृष्टेरुपशमश्रेण्या ( वर्तमानस्य, क्षपकश्रेण्या ) त्रिके चतुष्के च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्या च, तथा दशकं चतुष्के पञ्चके च संक्रामति । तच्चौपशमिकसम्यग्दृष्टेरुपशमश्रेण्या वर्तमानस्य क्षपकश्रेण्यां च । तथा नवकं त्रिके बोद्धव्यम् । तच्च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य ।

अट्ठ दुगतिगचउक्के, सत्त चउक्के तिगे य बोधव्वा।
छक्कं दुगम्मि नियमा, पंच तिगे एक्कगदुगे य ॥ २० ॥

'अट्ठ त्ति' अष्टौ द्विके त्रिके चतुष्के च संक्रामन्ति। तत्र द्विके त्रिके च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य, चतुष्के औपशमिकसम्यग्दृष्टेः। तथा सप्त त्रिके चतुष्के च बोद्धव्याः। ताश्च त्रिके चतुष्के चौपशमिकसम्यग्दृष्टेरेवोपशमश्रेण्या वर्तमानस्य वेदितव्याः। तथा षट्कं द्विके एव नियमाद्भवति। तच्च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य। तथा पञ्च त्रिके एकके द्विके च संक्रामन्ति। तत्र त्रिके औपशमिकसम्यग्दृष्टेरुपशमश्रेण्या वर्तमानस्य। द्विके एकके च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्याम्।

चत्तारि तिगचउक्के, तिन्नि तिगे एक्कगे य बोधव्वा।
दो दुसु एक्काए वि य, एक्का एक्काएँ बोधव्वा ॥ २१ ॥

'चत्तारि' त्ति चतस्रस्त्रिके चतुष्के च संक्रामन्ति। तत्र त्रिके औपशमिकसम्यग्दृष्टेरुपशमश्रेण्या वर्तमानस्य, चतुष्के क्षपकश्रेण्याम्। तथा तिस्रस्त्रिके एकके च बोद्धव्याः। तत्र त्रिके क्षपकश्रेण्याम्। एकके क्षायिकसम्यग्दृष्टेरुपशमश्रेण्याम्। तथा द्वे प्रकृती द्वयोरेकस्या च संक्रामतः। तत्र द्वयोः क्षपकश्रेण्यामौपशमिकसम्यग्दृष्टेश्चोपशमश्रेण्याम्। एकस्या तु क्षायिकसम्यग्दृष्टेरुपशमश्रेण्याम्। तथैकप्रकृतिरेकस्या बोद्धव्या, सा च क्षपकश्रेण्यामेव। एतच्च पतद्ग्रहेषु संक्रमस्थानसंकलनं प्रागुक्तं सप्त पञ्च पतद्ग्रहेषु संक्रमस्थानसम्बन्धं षट्कादौ प्रस्तार्य परिभावनीयम्।

सम्प्रति पतद्ग्रहेषु संक्रमस्थानसंकलने मार्गणोपायानाह–

अणुपुव्विऽणाणुपुव्वी, झीणमझीणे य दिट्ठिमोहम्मि।
उवसामगे य खवगे, य संकमे मग्गणोवाया ॥ २२ ॥

'अणुपुव्वि' त्ति पतद्ग्रहेषु संक्रमे संक्रमस्थानसंकलनचिन्तायामेते मार्गणोपायाः। तथाहि–किमिदं संक्रमस्थानमानुपूर्व्या संक्रमे उपपद्यतेऽनानुपूर्व्या वोभयत्र वा ?, तथा क्षीणे दृष्टिमोहे आहोस्विदक्षीणे उभयत्र वा ?। तथोपशमके उतस्वित् क्षपके उभयत्र वेति ?।

तदेवमुक्तो मोहनीयस्य प्रपञ्चतः संक्रमपतद्ग्रहविधिः। संप्रति नामकर्मणोऽभिधीयते। तत्र द्वादश नामकर्मणः संक्रमस्थानानि। तथा चाह–

तिदुगेगसयं छप्पण, चउतिगनउई य इगुणनउईया।
अट्ठचउदुगेक्कसीई, संकमा बारस य छट्ठे ॥ २३ ॥

'तिदुगेगसयं' ति षष्ठे नामकर्मणि द्वादश संक्रमस्थानानि। तद्यथा–त्र्युत्तरशत, द्व्युत्तरशतम्, एकोत्तरशतं, षण्णवति, पञ्चनवति, चतुर्नवतिः, त्रिनवतिः, एकोननवति, अष्टाशीतिः, चतुरशीतिः, द्व्यशीतिः, एकाशीतिश्चेति। तत्र नाम्न सर्वसंख्यया त्र्युत्तरं प्रकृतिशतम्। तद्यथा–गतिचतुष्टय, जातिपञ्चकं, शरीरपञ्चकं, संघातपञ्चकम्, बन्धनपञ्चदशकं, संस्थानषट्कं, संहननषट्कम्, अङ्गोपाङ्गत्रयं, वर्णपञ्चकं, गन्धद्विकं, रसपञ्चकं, स्पर्शाष्टकम्, अगुरुलघु, आनुपूर्वीचतुष्टय, पराघातं। उपघातोच्छ्वासातपोद्योत। विहायोगतिद्विकत्रसस्थावरबादरसूक्ष्मपर्याप्तापर्याप्तप्रत्येकसाधारणस्थिरास्थिरशुभाशुभसुभगदुर्भगदुःस्वरसुस्वरादेयानादेययशःकीर्त्ययशःकीर्तिनिर्माणतीर्थकराणि च। एतदेव च तीर्थकरवर्जं द्व्युत्तरशतम्। अथवा–यशःकीर्तिरहितं द्व्युत्तरशतम्। तीर्थकरयशःकीर्तिरहितमेकोत्तरशतम्। त्र्युत्तरशतमेवाहारकसप्तकरहितं षण्णवतिः। सैव तीर्थकररहिता पञ्चनवतिः। अथवा यशःकीर्तिरहिता पञ्चनवतिः। यशःकीर्तितीर्थकररहिता चतुर्नवतिः। तीर्थकररहिता पञ्चनवतिरेव देवगतिदेवानुपूर्व्योरुद्वलितयोस्त्रिनवतिः। अथवा–नरकगतिनरकानुपूर्वीरहिता त्रिनवतिः। त्र्युत्तरशतान्नरकगतिनरकानुपूर्वीतिर्यग्गतितिर्यगानुपूर्वीपञ्चेन्द्रियजातिवर्जशेषजातिचतुष्टयस्थावरसूक्ष्मसाधारणाऽऽतपोद्योतलक्षणासु त्रयोदशसु प्रकृतिषु क्षीणासु यशःकीर्तौ चापनीतायामेकोननवतिर्भवति। सैव तीर्थकररहिताऽष्टाशीतिः। त्रिनवतेर्वैक्रियसप्तके उद्वलिते नरकगतिनरकानुपूर्व्योश्चोद्वलितयोः शेषा चतुरशीतिर्भवति। मनुजगतिमनुजानुपूर्व्योरुद्वलितयोर्द्व्यशीतिः। अथवा षण्णवतिः प्रागुक्तासु त्रयोदशसु प्रकृतिषु क्षीणासु यशःकीर्तौ चापनीतायां द्व्यशीतिः। सैव तीर्थकररहिता एकाशीतिः। एतानि नाम्नः संक्रमस्थानानि।

सम्प्रति पतद्ग्रहस्थानप्रतिपादनार्थमाह–

तेवीसपंचवीसा, छव्वीसा अट्ठवीसगुणतीसा।
तीसेक्कतीसएगं, पडिग्गहा अट्ठ नामस्स ॥ २४ ॥

'तेवीस' त्ति त्रयोविंशतिः, पञ्चविंशतिः, षड्विंशतिः, अष्टाविंशति, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्, एका चेत्यष्टौ नाम्नः पतद्ग्रहस्थानानि भवन्तीति।

सम्प्रति काः ? प्रकृतयः कुत्र संक्रामन्तीत्येतन्निरूपणार्थमाह–

एक्कगदुगमयपणचउ, नउईता तेरसूणिया वाऽवि।
परभवियबंधवोच्छेय उवरि सेढीएँ एक्कस्स ॥ २५ ॥

'एक्कग' त्ति पारभविकीनां–परभववेद्यानां नामप्रकृतीनां देवगतिप्रायोग्यैकत्रिंशदादीनां बन्धव्यवच्छेदे सति उपरि द्वयोरपि श्रेण्योरुपशमक्षपकश्रेणिरूपयोरेकस्यां यशःकीर्तिलक्षणायां प्रकृतौ बध्यमानायामष्टौ संक्रमस्थानानि संक्रामन्ति। तद्यथा–एकोत्तरशतं, द्व्युत्तरशतं, पञ्चनवतिः, चतुर्नवतिः, 'ता' इति तान्येवानन्तरोदितानि चत्वारि संक्रमस्थानानि त्रयोदशन्यूनानि चत्वारि भवन्ति। तद्यथा–अष्टाशीतिः, एकोननवति, द्व्यशीतिः, एकाशीतिश्चेति। तत्र त्र्युत्तरशतसत्कर्मणो यशःकीर्तिर्बध्यमाना पतद्ग्रह इति तस्यामुत्सारितायां शेषं द्व्युत्तरशतं यशःकीर्तिपतद्ग्रहे संक्रामति। एवमेव द्व्युत्तरशतसत्कर्मण एकोत्तरं शतम्। तथा षण्णवतिसत्कर्मणो यशःकीर्तिः पतद्ग्रह इति तस्यामुत्सारितायां शेषा पञ्चनवतिः तस्यां यशःकीर्तौ संक्रामति। एवमेव पञ्चनवतिसत्कर्मणश्चतुर्नवतिः। तथा त्र्युत्तरशतसत्कर्मणस्त्रयोदशसु पूर्वोक्तेषु नामकर्मसु क्षीणेषु सत्सु यशःकीर्तिः पतद्ग्रह इति तस्यामपगतायां शेषा एकोननवतिर्यशःकीर्तौ संक्रामति। द्व्युत्तरशतसत्कर्मण पुनस्त्रयोदशसु क्षीणेष्वष्टाशीति संक्रामति। षण्णवतिसत्कर्मणस्तु नामत्रयोदशके क्षीणे द्व्यशीतिः। पञ्चनवतिसत्कर्मण एकाशीतिः॥

एकत्रिंशत्प्रकृतिसमुदायरूपे पतद्ग्रहे चत्वारि संक्रमस्थानानि तथा चाह—

**तिगदुगसयं छपंचग-नउई य जइस्स एक्कतीसाए ।**
**एगंतसेढिजोगे,वज्जिय तीसिगुणतीसासु ॥ २६ ॥**

'तिग' त्ति यतेरप्रमत्तस्यापूर्वकरणस्य च देवगतिपञ्चेन्द्रियजातिवैक्रियशरीरसमचतुरस्रसंस्थानवैक्रियाङ्गोपाङ्गदेवानुपूर्वीपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरशुभसुभगसुस्वरादेययशःकीर्तितैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणतीर्थकराहारकद्विकलक्षणामेकत्रिंशत बध्नतस्तस्यामेकत्रिंशति एकत्रिंशत्प्रकृतिसमुदायरूपे पतद्ग्रहे त्र्युत्तरशतं द्व्युत्तरशतं षण्णवतिः पञ्चनवतिरिति चत्वारि सङ्क्रमस्थानानि संक्रामन्ति । तत्र त्र्युत्तरशतं तीर्थकराहारकयोर्बन्धावलिकायामपगतायामेकत्रिंशत्प्रकृतिपतद्ग्रहे सङ्क्रामति । तीर्थकरनाम्न· पुनर्बन्धावलिकायामनपगताया द्व्युत्तरशतम् । आहारकसप्तकस्य तु बन्धावलिकायामनपगताया षण्णवतिः । तीर्थकराहारकसप्तकयोः पुनर्बन्धावलिकायामनपगताया पञ्चनवति· । 'एगते' त्यादि एकान्तेन श्रेणियोग्यानि यानि संक्रमस्थानानि एकोत्तरशतचतुर्नवत्येकोननवत्यष्टाशीत्येकाशीतिरूपाणि । एतानि हि श्रेणावेव वर्त्तमानेन यशःकीर्तावेकस्यां बध्यमानायां सङ्क्रम्यमाणानि प्राप्यन्त,नान्यत्र । ततस्तानि वर्जयित्वा शेषाणि त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतित्रिनवतिचतुरशीति–द्व्यशीतिरूपाणि त्रिंशत्पतद्ग्रहे एकोनत्रिंशत्पतद्ग्रहे च सप्त सङ्क्रमस्थानानि भवन्ति।तत्र त्र्युत्तरशतसत्कर्मणो देवस्य सम्यग्दृष्टेस्तैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणपञ्चेन्द्रियजात्यौदारिकशरीरौदारिकाङ्गोपाङ्गसमचतुरस्रसंस्थानवज्रर्षभनाराचसंहननमनुजगतिमनुजानुपूर्वीत्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसुभगसुस्वरादेययश·—कीर्तिपराघातोच्छ्वासप्रशस्तविहायोगतितीर्थकरलक्षणां मनुजगतिप्रायोग्यां तीर्थकरनामसहितां त्रिंशत बध्नतस्त्र्युत्तरशत तस्मिन् त्रिंशत्पतद्ग्रहे सङ्क्रामति । द्व्युत्तरशतसत्कर्मणोऽप्रमत्तसंयतस्यापूर्वकरणस्य वा देवगतिपञ्चेन्द्रियजातिवैक्रियशरीरसमचतुरस्रसंस्थानवैक्रियाङ्गोपाङ्गदेवानुपूर्वीपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरशुभसुभगसुस्वरादेययशःकीर्तितैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणाहारकद्विकलक्षणा देवगतिप्रायोग्या त्रिंशत बध्नतो द्व्युत्तरशतं तस्मिन् त्रिंशत्पतद्ग्रहे संक्रामति । अथवा–द्व्युत्तरशतसत्कर्मणामेकेन्द्रियादीनामुद्योतसहिता द्वीन्द्रियादिप्रायोग्या तैजसकार्मणागुरुलघूपघातनिर्माणवर्णादिचतुष्कातिर्यग्गतितिर्यगानुपूर्वीद्वीन्द्रियाद्यन्यतमजातित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरदुर्भगदुःस्वरानादेययशःकीर्त्ययशःकीर्त्यन्यतरौदारिकशरीरौदारिकाङ्गोपाङ्गान्यतमसंस्थानान्यतमसंहननाप्रशस्तविहायोगतिपराघातोद्योतोच्छ्वासलक्षणां त्रिंशतं बध्नतां द्व्युत्तरशतं तस्मिन् त्रिंशत्पतद्ग्रहे संक्रामति । षण्णवतिसत्कर्मणां देवनारकाणा मनुजगतिप्रायोग्यां तीर्थकरनामसहिता प्रागुक्ता त्रिंशत बध्नतां तस्मिन् त्रिंशत्पतद्ग्रहे षण्णवतिः संक्रामति । पञ्चनवतिसत्कर्मणामप्रमत्तापूर्वकरणसंयतानामाहारकद्विकमहितां प्रागुक्तां देवगतिप्रायोग्यां त्रिंशतं बध्नतामाहारकसप्तकस्य बन्धावलिकायामनपगतायां पञ्चनवतिस्त्रिंशत्पतद्ग्रहे सङ्क्रामति । अथवा-पञ्चनवतिसत्कर्मणामेकेन्द्रियादीनां द्वीन्द्रियादिप्रायोग्यामुद्द्योतसहितां प्रागुक्तां त्रिंशतं बध्नतां पञ्चनवतिस्त्रिंशत्पतद्ग्रहे संक्रामति । त्रिनवतिसत्कर्मणां चतुरशीतिसत्कर्मणां द्व्यशीतिसत्कर्मणां चैकेन्द्रियादीनां विकलेन्द्रियपञ्चेन्द्रियतिर्यग्गतिप्रायोग्यां प्रागुक्तामुच्छ्वाससहितां त्रिंशतं बध्नतां यथाक्रमं त्रिनवतिश्चतुरशीतिर्द्व्यशीतिश्च त्रिंशत्पतद्ग्रहे संक्रामति । एकोनत्रिंशत्पतद्ग्रहेऽप्येतान्येव सप्त संक्रमस्थानानि । तत्र त्र्युत्तरशतसत्कर्मणामविरतसम्यग्दृष्टिदेशविरतप्रमत्तसंयतानां देवगतिप्रायोग्यां तीर्थकरनामसहितां देवगतिदेवानुपूर्वीपञ्चेन्द्रियजातिवैक्रियशरीरवैक्रियाङ्गोपाङ्गपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसुभगसुस्वरादेययश कीर्त्ययशःकीर्त्यन्यतरसमचतुरस्रसंस्थानतैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणतीर्थकरलक्षणामेकोनत्रिंशत बध्नता त्र्युत्तरशतमेकोनत्रिंशत्पतद्ग्रहे संक्रामति । एतेषामेवाविरतादीनां त्रयाणां प्रागुक्तामेकोनत्रिंशतं बध्नता तीर्थकरनाम्नो बन्धावलिकायामनपगतायां द्व्युत्तरशत तस्मिन्नेकोनत्रिंशत्पतद्ग्रहे संक्रामति । अथवैकेन्द्रियादीनां द्व्युत्तरशतसत्कर्मणां द्वीन्द्रियादिप्रायोग्यां प्रागुक्तामेव त्रिंशतमुद्योतरहितामेकोनत्रिंशतं बध्नतां द्व्युत्तरशतमेकोनत्रिंशत्पतद्ग्रहे संक्रामति । अविरतसम्यग्दृष्टिदेशविरतप्रमत्तसयतानां षण्णवतिसत्कर्मणां प्रागुक्ताया देवगतिप्रायोग्यायास्त्रिंशत आहारकद्विकेऽपनीते तीर्थकरनाम्नि च तत्र प्रक्षिप्ते सति या सञ्जातैकोनत्रिंशत् तां बध्नतां षण्णवतिस्तस्मिन्नेकोनत्रिंशत्पतद्ग्रहे संक्रामति । अथवा-नैरयिकस्य तीर्थकरनामसत्कर्मणो मिथ्यादृष्टेरपर्याप्तावस्थायां वर्तमानस्य मनुजगतिप्रायोग्यां मनुजगतिमनुजानुपूर्वीपञ्चेन्द्रियजातित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसुभगदुर्भगान्यतरादेयानादेयान्यतरयश कीर्त्ययशःकीर्त्यन्यतरसंस्थानषट्कान्यतमसंस्थानसंहननषट्कान्यतमसंहननवर्णादिचतुष्कागुरुलघूपघाततैजसकार्मणनिर्माणौदारिकशरीरौदारिकाङ्गोपाङ्गसु·स्वरदु स्वरान्यतरपराघातोच्छ्वासप्रशस्ताप्रशस्तान्यतरविहायोगतिलक्षणामेकोनत्रिंशतं बध्नत· षण्णवतिरेकोनत्रिंशति संक्रामति । अविरतसम्यग्दृष्टीनां देशविरतानां प्रमत्तसयतानां च षण्णवतिसत्कर्मणां प्रागुक्तां तीर्थकरनामसहितां देवगतिप्रायोग्यामेकोनत्रिंशतं बध्नता तीर्थकरनामकर्मणो बन्धावलिकायामनपगतायामेकोनत्रिंशति पञ्चनवति सङ्क्रामति । यद्वा-पञ्चनवतिसत्कर्मणामेकेन्द्रियादीना द्वीन्द्रियादिप्रायोग्या प्रागुक्ता या त्रिंशत् सैवोद्योतरहितैकोनत्रिंशत् । ता बध्नता तस्यामेवैकोनत्रिंशति पञ्चनवति· संक्रामति । त्रिनवतिचतुरशीतिद्व्यशीतयो यथा त्रिंशत्पतद्ग्रहेऽभिहितास्तथैवात्रापि भावनीया· ।

**अट्ठावीसाए वि ते, बासीइ तिसयवज्जिया पंच ।**
**ते च्चिय बासीइजुया, सेसेसुं छन्नउइवज्जा ॥ २७ ॥**

'अट्ठावीसाए' त्ति अष्टाविंशतावपि तान्येव पूर्वोक्तानि द्व्यशीतिव्युत्तरशतवर्जितानि शेषाणि द्व्युत्तरशतपञ्चनवतिपञ्चनवतित्रिनवतिचतुरशीतिरूपाणि पञ्च संक्रमस्थानानि संक्रामन्ति। तत्र मिथ्यादृष्टेर्नरकगतिप्रायोग्या नरकगतिनरकानुपूर्वीपञ्चेन्द्रियजातिवैक्रियशरीरवैक्रियाङ्गोपाङ्गहुण्डसंस्थानपराघातोच्छ्वासाप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरदुर्भगदुःस्वरानादेयायशःकीर्तिवर्णादिचतुष्कागुरुलघूपघाततैजसकार्मणनिर्माणलक्षणां, तथा मिथ्यादृष्टेः सम्यग्दृष्टेर्वा देवगतिप्रायोग्यां तैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणदेवगतिदेवानुपूर्वीपञ्चेन्द्रियजातिवैक्रियशरीरवैक्रियाङ्गोपाङ्गसमचतुरस्रसंस्थानपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसुभगसुस्वरादेययशःकीर्त्ययशःकीर्त्यन्यतरलक्षणामष्टाविंशतिं बध्नतो द्व्युत्तरशतसत्कर्मणो द्व्युत्तरशतमष्टाविंशतिपतद्ग्रहे संक्रामति। तथा मनुष्यस्य तीर्थकरनामसत्कर्मणः पूर्वमेव नरके बद्धायुष्कस्य सतो नरकाभिमुखस्य सतो मिथ्यात्वं प्रपन्नस्य नरकगतिप्रायोग्यां पूर्वोक्तामष्टाविंशतिं बध्नतः पण्णवतिसत्कर्मणोऽष्टाविंशतिपतद्ग्रहे पण्णवतिः संक्रामति। यथा द्व्युत्तरशतस्य भावना कृता तथा पञ्चनवतेरपि भावना कार्या केवलं द्व्युत्तरशतस्थाने पञ्चनवतिरित्युच्चारणीयम्। तथा मिथ्यादृष्टेस्त्रिनवतिसत्कर्मणो देवगतिप्रायोग्या पूर्वोक्तामष्टाविंशतिं बध्नतो वैक्रियसप्तकदेवगतिदेवानुपूर्वीणां बन्धावलिकाया परतो वर्तमानस्य त्रिनवतिरष्टाविंशतौ संक्रामति। अथवा-पञ्चनवतिसत्कर्मणो देवगतिप्रायोग्यां पूर्वोक्तामेवाष्टाविंशतिं बध्नतो देवगतिदेवानुपूर्व्योर्बन्धावलिकाया अभ्यन्तरे वर्तमानस्य त्रिनवतिरष्टाविंशतौ संक्रामति। त्रिनवतिसत्कर्मणो मिथ्यादृष्टेर्नरकगतिप्रायोग्या पूर्वोक्तामष्टाविंशतिं बध्नतो नरकगतिनरकानुपूर्वीवैक्रियसप्तकानां बन्धावलिकाया परतो वर्तमानस्य त्रिनवतिरष्टाविंशतौ संक्रामति। अथवा पञ्चनवतिसत्कर्मणो मिथ्यादृष्टेर्नरकगतिप्रायोग्या पूर्वोक्तामष्टाविंशतिं बध्नतो नरकगतिनरकानुपूर्व्योर्बन्धावलिकाया अभ्यन्तरे वर्तमानस्य त्रिनवतिरष्टाविंशतौ संक्रामति। तथा त्रिनवतिसत्कर्मणो मिथ्यादृष्टेर्देवगतिप्रायोग्यामष्टाविंशतिं बध्नतो देवगतिदेवानुपूर्वीवैक्रियसप्तकाना बन्धावलिकाया अभ्यन्तरे वर्तमानस्य चतुरशीतिरष्टाविंशतौ संक्रामति। अथवा-त्रिनवतिसत्कर्मणो मिथ्यादृष्टेर्नरकगतिप्रायोग्यां पूर्वोक्तामष्टाविंशतिं बध्नतो नरकगतिनरकानुपूर्वीवैक्रियसप्तकाना बन्धावलिकाया अभ्यन्तरे वर्तमानस्य चतुरशीतिरष्टाविंशतौ संक्रामति। षड्विंशत्यादिपतद्ग्रहेषु संक्रमस्थानान्याह—'ते च्चिय' त्यादि शेषेषु षड्विंशतिपञ्चविंशतित्रयोविंशतिलक्षणेषु पतद्ग्रहेषु तान्येव पूर्वोक्तानि द्व्युत्तरशतादीनि पण्णवतिरहितानि द्व्यशीतियुतानि पञ्च संक्रमस्थानानि संक्रामन्ति। तद्यथा—द्व्युत्तरशत पञ्चनवतिस्त्रिनवतिश्चतुरशीतिर्द्व्यशीतिश्च। तत्रैकेन्द्रियादीनां नैरयिकवर्जितानां द्व्युत्तरशतसत्कर्मणां पञ्चनवतिसत्कर्मणां च तैजसकार्मणागुरुलघूपघातनिर्माणवर्णादिचतुष्कैकेन्द्रियजातिहुण्डकसंस्थानौदारिकशरीरतिर्यग्गतितिर्यगानुपूर्वीस्थावर (बादर) पर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरदुर्भगानादेयायशःकीर्तिपराघातोच्छ्वासातपोद्द्योतान्यतररूपामेकेन्द्रियप्रायोग्यां षड्विंशतिं बध्नतां द्व्युत्तरशतं पञ्चनवतिश्च तस्यामेव षड्विंशतौ संक्रामति। तथा तेषामेवैकेन्द्रियादीनां देववर्जानां त्रिनवतिसत्कर्मणां देवनारकवर्जानां चतुरशीतिसत्कर्मणां च तामेव पूर्वोक्तां षड्विंशतिं बध्नतां त्रिनवतिश्चतुरशीतिश्च तस्यामेव षड्विंशतौ संक्रामति। तथा तेषामेवैकेन्द्रियादीनां देवनारकमनुष्यवर्जाना द्व्यशीतिसत्कर्मणां तामेव पूर्वोक्तां षड्विंशतिं बध्नता द्व्यशीतिस्तस्यामेव षड्विंशतौ संक्रामति। तथा पञ्चविंशतिपतद्ग्रहे तान्येव पञ्च संक्रमस्थानानि चिन्त्यन्ते-तत्रैकेन्द्रियपर्याप्तप्रायोग्या पूर्वोक्तामेव षड्विंशतिमातपनोद्द्योतेन वा रहितां पञ्चविंशतिं बध्नतामेकद्वित्रिचतुरिन्द्रियादीनां द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिसत्कर्मणां यथासंख्यं तस्यामेव पञ्चविंशतौ द्व्युत्तरशतं पञ्चनवतिः त्रिनवतिः चतुरशीतिः द्व्यशीतिश्च संक्रामति। अथवा-अपर्याप्तविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुजप्रायोग्यां तैजसकार्मणवर्णादिचतुष्कागुरुलघूपघातनिर्माणद्वीन्द्रियाद्यन्यतमजातिहुण्डसंस्थानसेवार्तसंहननौदारिकशरीरौदारिकाङ्गोपाङ्गतिर्यग्गतितिर्यगानुपूर्वीत्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरदुर्भगानादेयायशःकीर्तिलक्षणां पञ्चविंशतिं बध्नतामेकद्वित्रिचतुःपञ्चेन्द्रियतिरश्चां द्व्युत्तरशतादिसत्कर्मणां पञ्चविंशतौ द्व्युत्तरशतादीनि पञ्च संक्रमस्थानानि संक्रामन्ति। तथा पर्याप्तकैकेन्द्रियप्रायोग्यां वर्णादिचतुष्कागुरुलघूपघातनिर्माणतैजसकार्मणहुण्डसंस्थानौदारिकशरीरैकेन्द्रियजातितिर्यग्गतितिर्यगानुपूर्वीबादरसूक्ष्मान्यतरस्थावरपर्याप्तप्रत्येकसाधारणान्यतरास्थिराशुभदुर्भगानादेयायशःकीर्तिलक्षणा त्रयोविंशतिं बध्नतामेकद्वित्रिचतुःपञ्चेन्द्रियतिरश्चां द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिसत्कर्मणां यथासंख्यं द्व्युत्तरशतादीनि पञ्च संक्रमस्थानानि संक्रामन्ति।

तदेवमुक्तः प्रकृतिसंक्रमः। सम्प्रति स्थितिसंक्रमाभिधानावसरः। तत्र चैतेऽर्थाधिकाराः। तद्यथा—भेदो विशेषलक्षणम् उत्कृष्टस्थितिसंक्रमणप्रमाणं जघन्यस्थितिसंक्रमप्रमाणं साद्यनादिप्ररूपणा स्वामित्वप्ररूपणा चेति। तत्र भेदविशेषलक्षणयोः प्रतिपादनार्थमाह—

**ठिइसंकमो त्ति वुच्चइ, मूलुत्तरपगईउ य जा हि ठिई।**
**उव्वट्टिया उ ओव-ट्टिया व पगइं निया वऽन्नं ॥२८॥**

'ठिइ' त्ति—इह 'मूलुत्तरपगईउ' इत्यत्र षष्ठ्यर्थे पञ्चमी। ततोऽयमर्थः—हि स्फुटं या स्थितिर्मूलप्रकृतीनामष्टसंख्यानामुत्तरप्रकृतीनां वाऽष्टपञ्चाशदधिकशतसंख्यानां सम्बन्धिनी उद्वर्तिता ह्रस्वीभूता सती दीर्घीकृता, अपवर्तिता वा दीर्घीभूता सती ह्रस्वीकृता, अन्या वा प्रकृतिं नीता पतद्ग्रहप्रकृतिस्थितिषु मध्ये नीत्वा निवेशिता स स्थितिसंक्रम उच्यते। एतदुक्तं भवति-द्विविधः स्थितिसंक्रमो मूलप्रकृतिस्थितिसंक्रम, उत्तरप्रकृतिस्थितिसंक्रमश्च। तत्र मूलप्रकृतिस्थितिसंक्रमोऽष्टप्रकारः। तद्यथा—ज्ञानावरणीयस्य यावदन्तराय-

स्य। उत्तरप्रकृतिस्थितिसंक्रमोऽष्टपञ्चाशदधिकशतधा। तद्यथा-मतिज्ञानावरणीयस्य श्रुतज्ञानावरणीयस्य यावद्वीर्यान्तरायस्य। 'तदेव मूलुत्तरपगईउ' इत्यनेन भेद उक्तः। 'उवट्टिया य' इत्यादिना तु विशेषलक्षणं त्रिप्रकारम्। तत्र कर्मपरमाणूनां ह्रस्वस्थितिकालतामपहाय दीर्घकालतया व्यवस्थापनमुद्वर्तना। कर्मपरमाणूनामेव दीर्घस्थितिकाल—तामपहाय ह्रस्वस्थितिकालतया व्यवस्थापनमपवर्तना। यत्पुनः संक्रम्यमाणप्रकृतिस्थितीनां पतद्ग्रहप्रकृतौ नीत्वा निवेशनं तत्प्रकृत्यन्तरनयनं, स्थितीनां चान्यत्र निवेशनं स्थितियुक्ताना परमाणूनामवसेयम्, स्थितेरन्यत्र नेतुमशक्यत्वात्। इदं च विशेषलक्षणं सामान्यलक्षणे सत्येवावगन्तव्य, न सर्वथा तदपवादेन, तेन मूलप्रकृतीना परस्परं संक्रमप्रतिषेधात्, तासामन्यप्रकृत्यन्तरनयनलक्षणः स्थितिसंक्रमो न भवति, किंतु-द्वावेव उद्वर्तनापवर्तनालक्षणौ संक्रमौ। उत्तरप्रकृतीना तु त्रयोऽपि संक्रमा द्रष्टव्याः।

तदेवं भेदविशेषलक्षणे प्रतिपाद्य संप्रत्युत्कृष्टस्थितिसंक्रमपरिमाणप्रतिपादनार्थमाह—

तीसासत्तरि चत्ता-लीसा वीसुदहिकोडिकोडीणं।
जेट्ठा आलिगदुगहा, सेसाण वि आलिगातिगूणो ॥२९॥

'तीस' त्ति—इह सर्वासां प्रकृतीनां बन्धमाश्रित्योत्कृष्टा स्थितिः प्रागेव बन्धनकरणे प्रतिपादिता। अत्र पुन. संक्रमे उत्कृष्टा स्थितिश्चिन्त्यमाना द्विधा प्राप्यते—बन्धोत्कृष्टा, संक्रमोत्कृष्टा च। तत्र या बन्धादेव केवलादुत्कृष्टा स्थितिर्लभ्यते सा बन्धोत्कृष्टा। या पुनर्बन्धेऽबन्धे वा सति संक्रमादुत्कृष्टा स्थितिर्भवति सा संक्रमोत्कृष्टा। तत्र यासामुत्तरप्रकृतीनां स्वस्वमूलप्रकृत्यपेक्षया स्थितेर्न्यूनता न भवति, किंतु—तुल्यतैव, ता बन्धोत्कृष्टा ज्ञातव्या। ता. सप्तनवतिसंख्याः। तद्यथा-ज्ञानावरणपञ्चकम्, दर्शनावरणनवकम्, अन्तरायपञ्चकम्, आयुश्चतुष्टयम्, असातवेदनीयम्, नरकद्विकम्, तिर्यग्द्विकम्, एकेन्द्रियजातिः, पञ्चेन्द्रियजाति', तैजससप्तकम्, औदारिकसप्तकम्, वैक्रियसप्तकम्, नीलतिक्तवर्जमशुभवर्णसप्तकम्, अगुरुलघु, पराघातम्, उपघातम्, उच्छ्वासाऽऽतपोद्योतानि, निर्माणम्, षष्ठ संस्थानम्, षष्ठ संहननम्, अशुभविहायोगतिः, स्थावरम्, त्रसचतुष्कम्, अस्थिरषट्कम्, नीचैर्गोत्रम्, षोडश कषायाः, मिथ्यात्वं च। सर्वसंख्यया सप्तनवति.। अत्र नरकतिर्यगायुषी यद्यपि स्वमूलप्रकृत्यपेक्षया तुल्यस्थितिके न भवतः, तथाऽपि संक्रमोत्कृष्टत्वाभावात्ते बन्धोत्कृष्टे उक्ते। शेषास्त्वेकषष्टिप्रकृतयः संक्रमोत्कृष्टाः। ताश्चेमा -सातवेदनीयम्, सम्यक्त्वम्, सम्यग्मिथ्यात्वम्, नव नोकषाया., आहारकसप्तकम्, शुभवर्णाद्येकादशकम्, नीलम्, तिक्तम्, देवद्विकम्, मनुजद्विकम्, द्वित्रिचतुरिन्द्रियजातय., अन्तवर्जानि संस्थानानि, अन्तवर्जानि संहननानि, प्रशस्तविहायोगति', सूक्ष्मं, साधारणम्, अपर्याप्तम्, स्थिरशुभसुभगसुस्वरादेययश कीर्तितीर्थकरोच्चैर्गोत्राणि च। तत्र बन्धोत्कृष्टाना मतिज्ञानावरणीयादिमिथ्यात्वषोडशकषायनरकद्विकादीनां यथाक्रमं त्रिंशत्सप्ततिचत्वारिंशद्विंशतिसागरोपमकोटीकोटीस्थितिकानां ज्येष्ठ उत्कृष्ट' स्थितिसंक्रमः 'आ (व) लियदुगह' त्ति आवलिकाद्विकहीन.। तथाहि-स्थितिर्बद्धा सती बन्धावलिकायामतीताया सत्यां संक्रामति। तत्राप्युदयावलिका सकलकरणायोग्येति कृत्वोदयावलिकात उपरितनी। ततो बन्धोत्कृष्टानां मतिज्ञानावरणीयानामुत्कृष्टः स्थितिसंक्रमो बन्धावलिकाद्विकहीन एव प्राप्यते। इ—होदयवतीनामनुदयवतीनां वा प्रकृतीनामुदयसमयादारभ्यावलिकामात्रा स्थितिरुदयावलिकेति पूर्वग्रन्थेषु व्यवह्रियते। तथा यद्यपि 'तीसासत्तरिचत्तालीसा' इत्यनेन ग्रन्थेनेह मिथ्यात्वस्य सप्ततिसागरोपम—कोटीकोटीस्थितिकस्योत्कृष्टतः स्थितिसंक्रम आवलि—काद्विकहीन उक्तस्तथाऽप्यन्तर्मुहूर्तोनोऽवगन्तव्य.। यतो मिथ्यात्वस्योत्कृष्टां स्थितिं बद्धा जघन्यतोऽप्यन्तर्मुहूर्तं कालं यावन्मिथ्यात्वे एवावतिष्ठते। तत. सम्यक्त्वं प्रतिपद्य मिथ्यात्वस्य स्थितिमन्तर्मुहूर्तोनां सम्यक्त्वे सम्यग्मिथ्यात्वे च संक्रमयति। ततोऽन्तर्मुहूर्तोन एवास्योत्कृष्टः स्थितिसं—क्रम.। वक्ष्यति च—'मिच्छत्तस्सुक्कोसो' इत्यादि इह पुनर्यत् सत्तरीत्युपादानं तदशेषाणामपि बन्धोत्कृष्टानां प्रकृतीनां व्याप्तिपुर सरमविशेषेणावलिकाद्विकहीनोत्कृष्टस्थितिसंक्रमप्रदर्शनार्थम्। 'सेसाण वि आलिगतिगूणो' त्ति शेषाणां संक्रमोत्कृष्टानामावलिकात्रिकहीन उत्कृष्ट. स्थितिसंक्रमः। तथाहि—बन्धावलिकायामतीतायां सत्यामावलिकात उपरितनी स्थिति' सर्वाऽप्यन्यत्र प्रकृत्यन्तरे आवलिकाया उपरि संक्रामति। तत्र च संक्रान्ता सती आवलिकामात्रं कालं यावत्सकलकरणायोग्येति कृत्वा संक्रमावलिकायामतीताया सत्यामुदयावलिकात उपरितनी स्थितिस्ततोऽप्यन्यत्र प्रकृत्यन्तरे संक्रामति। ततः संक्रमोत्कृष्टानामुत्कृष्ट' स्थितिसंक्रम आवलिकात्रिकहीन एव। तद्यथा—नरकद्विकस्य विंशतिसागरोपमकोटीकोटीप्रमाणामुत्कृष्टां स्थितिं बद्धा बन्धावलिकायामतीतायां सत्यामावलिकात उपरितनीं ता सर्वामपि स्थितिं मनुजद्विकं बध्नन् तत्र मनुजद्विके संक्रमयति, तत्र च संक्रान्ता सती आवलिकामात्रं काल यावत्सकलकरणायोग्येति कृत्वा संक्रमावलिकायामतिक्रान्तायां सत्यामुदयावलिकात उपरितनीं तां सर्वामपि स्थितिं देवद्विकं बध्नन् तत्र संक्रमयति। एवमन्यासामपि संक्रमोत्कृष्टानामुत्कृष्ट. स्थितिसंक्रम आवलिकात्रिकहीनो भावनीय.।

तदेवं यासां प्रकृतीना बन्धे सति संक्रमादुत्कृष्टा स्थितिर्भवति, तासामेव तत् उत्कृष्टस्थितिसंक्रमपरिमाणमुक्तम्। सम्प्रति पुनर्यासां बन्धेन विना संक्रमादेव केवलादुत्कृष्टा स्थितिर्लभ्यते, तासामुत्कृष्टस्थितिसंक्रमपरिमाणनिरूपणार्थमाह—

मिच्छत्तस्सुकोसो, भिन्नमुहुत्तूणगो उ सम्मत्ते।
मिस्सेवंतो कोडा-कोडी आहारतित्थयरे ॥ ३० ॥

'मिच्छत्तस्स' त्ति—मिथ्यात्वस्योत्कृष्ट. स्थितिसंक्रमो भिन्नमुहूर्तोनोऽन्तर्मुहूर्तोनस्तथा सम्यक्त्वे सम्यक्त्वस्य मिश्रे मिश्रस्य चोत्कृष्ट स्थितिसंक्रमो भिन्नमुहूर्तोन। तुशब्दस्याधिकार्थसंसूचनादावलिकाद्विकहीनश्च वेदितव्य'।

इयमत्र भावना—दर्शनमोहनीयत्रितयसत्कर्मा मिथ्यादृष्टिरुत्कृष्टे संक्लेशे वर्तमानो मिथ्यात्वस्योत्कृष्टां स्थितिं बद्ध्वा ततोऽन्तर्मुहूर्तमात्रानन्तरं मिथ्यात्वात् प्रतिपत्य विशुद्धिमासादयन् सम्यक्त्वं प्रतिपद्यते । ततो मिथ्यात्वस्योत्कृष्टां स्थितिं सप्ततिसागरोपमकोटीकोटीप्रमाणामन्तर्मुहूर्तोनां सम्यक्त्वे सम्यग्मिथ्यात्वे च संक्रमयति । सा च संक्रान्ता सती संक्रमावलिकायामतीतायामुदयावलिकात उपरितनीं सम्यक्त्वस्थितिमपवर्तनाकरणेन स्वस्थाने संक्रमयति । सम्यग्मिथ्यात्वस्थितिमपि संक्रमावलिकायामतीतायामुदयावलिकात उपरितनीं सम्यक्त्वे संक्रमयति अपवर्तयति च । तदेवं मिथ्यात्वस्यान्तर्मुहूर्तोनः सम्यक्त्वसम्यग्मिथ्यात्वयोस्त्वन्तर्मुहूर्तावलिकाद्विकहीन उत्कृष्टः स्थितिसंक्रमः । इह तीर्थकरस्याहारकसप्तकस्य चोत्कृष्टः स्थितिबन्धोऽन्तः सागरोपमकोटीकोटीप्रमाणः सत्कर्माऽप्येतेषामन्तःसागरोपमकोटीकोटीप्रमाणमेव, ततः संशयः-किमेता संक्रमोत्कृष्टा उत बन्धोत्कृष्टा इति, तदपनोदार्थमाह-'अंतो कोडाकोडी' त्यादि आहारके आहारकसप्तके तीर्थकरे च संक्रमतः स्थितिसत्कर्म अन्तः सागरोपमकोटीकोटी, अत एताः संक्रमोत्कृष्टाः । यद्यपि च बन्धेऽप्यन्तःसागरोपमकोटीकोटीप्रमाणं स्थितिसत्कर्माभिहितं, तथाऽपि बन्धोत्कृष्टायाः स्थितेः सकाशात् संक्रमोत्कृष्टा स्थितिः संख्येयगुणा द्रष्टव्या । उक्तं च चूर्णौ-"बंधट्ठिईओ संतकम्मट्ठिई संखिज्जगुणा" । ननु नामकर्मण उत्कृष्टा स्थितिर्विंशतिसागरोपमकोटीकोटीप्रमाणा ततः आहारके तीर्थकरे च संक्रमादुत्कृष्टा स्थितिः प्राप्यमाणा बन्धावलिकोदयावलिकारहिता विंशतिसागरोपमकोटीकोटीप्रमाणैव लभ्यते, कथमुच्यते तीर्थकराहारकयोः संक्रमतोऽप्युत्कृष्टा स्थितिरन्तःसागरोपमकोटीकोटीप्रमाणेति ? तदयुक्तमभिप्रायापरिज्ञानात् । तथाहि—तीर्थकराहारकयोः प्रकृत्यन्तरस्य स्थितिः संक्रामति बन्धकाले नान्यदा, बन्धश्चानयोर्यथाक्रमं विशुद्धसम्यग्दृष्टेः संयतस्य च । विशुद्धसम्यग्दृष्टीनां संयतानां च स्थितिसत्कर्म सर्वेषामपि कर्मणामायुर्वर्जानामन्तः सागरोपमकोटीकोटीप्रमाणं नाधिकम् । ततः संक्रमोऽप्येतावन्मात्र एव प्राप्यते नाधिक इत्यदोषः ।

सम्प्रति सर्वासां प्रकृतीनां बन्धोत्कृष्टानां संक्रमोत्कृष्टानां वा संक्रमणकाले यावती स्थितिः प्राप्यते तावतीं निर्दिदिक्षुराह—

सव्वासिं जट्ठिइगो, सावलिगो सो अहाउगाणं तु ।
बंधुक्कोसुक्कोसो, साबाहठिईए जट्ठिइगो ॥ ३१ ॥

'सव्वासिं' ति-सर्वासां प्रकृतीनां संक्रमो यत्स्थितिकः संक्रमणकाले या स्थितिर्विद्यते सा यत्स्थितिरित्युच्यते । सा यस्य संक्रमस्यास्ति स संक्रमो यत्स्थितिकः । या स्थितिर्विद्यते यस्यासौ इति बहुव्रीहिसमासाश्रयणात् । सावलिकः आवलिकया सहितो द्रष्टव्यः । एतदुक्तं भवति-यः प्रागुक्तः संक्रमः स आवलिकया सहितः सन् यावान् भवति तावती संक्रमकाले स्थितिरित्यर्थः । ततो बन्धोत्कृष्टानामावलिकाहीना, संक्रमोत्कृष्टानां त्वावलिकाद्विकहीना संक्रमकाले सर्वा स्थितिर्वेदितव्या । तथाहि-संक्लेशादिकारणवशतः उत्कृष्टां स्थितिं बद्धा बन्धावलिकायामतीतायामुदयावलिकातः उपरितनीं स्थितिमन्यत्र प्रकृत्यन्तरे संक्रमयितुमारभते । ततो बन्धोत्कृष्टानामेकावलिकाहीना संक्रमकाले सर्वा स्थितिः प्राप्यते । संक्रमोत्कृष्टानां पुनर्बन्धावलिकानां संक्रमावलिकयोरतीतयोरुदयावलिकातः परतो वर्तमाना स्थितिमन्यत्र संक्रमयति । तेन संक्रमोत्कृष्टानामावलिकाद्विकहीना संक्रमकाले सर्वा स्थितिरवाप्यते । अथायुषामुत्कृष्टा स्थितिः किं बन्धोत्कृष्टा उत संक्रमोत्कृष्टा ? उच्यते-बन्धोत्कृष्टैव । तथा चाह-'अहाउगाणं' मित्यादि आयुषामुत्कृष्टः स्थितिसंभवो बन्धोत्कृष्ट एव न संक्रमोत्कृष्टः, यतो नायुषां परस्परं संक्रमः "मोहदुगाउगमूलप्पगडीण न परोप्परम्मि संकमणं" इति वचनात् । 'साबाहठिईए' इत्यादि आयुषां साबाधा अबाधासहिता या सर्वा स्थितिः सा यत्स्थितिरवगन्तव्या । केवलं "बंधुक्कोसाणं आवलिगूणा ठिई जट्ठिइ" इति वचनात् बन्धावलिकोना द्रष्टव्या । तथाहि—आयुर्बन्धे प्रवर्तमान एव प्रथमसमये यद्बद्धं दलिकं तद्बन्धावलिकातीतं सदुद्वर्तयति । ततः उद्वर्तनारूपसंक्रमे बन्धावलिकोना साबाधा यत्स्थितिः प्राप्यते । अथवा-अपवर्तनाऽपि निर्व्याघातभाविन्यायुषो बन्धावलिकायामतीतायां सर्वदैव प्रवर्तते । ततस्तामधिकृत्य यथोक्ता यत्स्थितिरवसेया ।

तदेवमुक्तमुत्कृष्टस्थितिसंक्रमपरिमाणम् । सम्प्रति जघन्यस्थितिसंक्रमपरिमाणप्रतिपादनावसरः । जघन्यस्थितिसंक्रमश्च द्विधा-स्वप्रकृतौ परप्रकृतौ च । तत्र स्वप्रकृतौ जघन्यस्थितिसंक्रमप्रतिपादनार्थमाह—

आवरणविग्घदंसण, चउक्कलोभंतवेयगाऊणं ।
एगा ठिई जहन्नो, जट्ठिइ समयाहिगावलिया ॥ ३२ ॥

'आवरण' त्ति-पञ्चानां ज्ञानावरणीयप्रकृतीनां 'विग्घ' त्ति पञ्चानामन्तरायप्रकृतीनां, चतसृणां दर्शनावरणीयप्रकृतीनां चक्षुरचक्षुरवधिकेवलदर्शनावरणलक्षणानां, संज्वलनलोभस्य, वेदकसम्यक्त्वस्य, चतुर्णां चायुषां, सर्वसंख्यया विंशतिप्रकृतीनाम् आत्मीयात्मीयसत्ताव्यवच्छेदसमये समयाधिकावलिकाशेषायां स्थितावुदयावलिका सर्वकरणायोग्येति कृत्वोदयावलिकात उपरितनी समयमात्रा स्थितिरपवर्तनासंक्रमेणाधस्तने उदयावलिकात्रिभागे समयाधिके संक्रामति, तदा च सर्वस्थितिपरिमाणं समयाधिकावलिका । तथा चाह-'जट्ठिइ' इत्यादि ।

निद्दादुगस्स एक्का, आवलिगदुगं असंखभागो य ।
जट्ठिइहासच्छक्के, संखिज्जाओ समाओ य ॥ ३३ ॥

'निद्द' त्ति निद्राद्विकस्य—निद्राप्रचलालक्षणस्य जघन्यः स्थितिसंक्रमः स्वसंक्रमान्ते स्वस्थितेरुपरितनी एका समयमात्रा स्थितिः, सा आवलिकाया अधस्तने त्रिभागे निक्षिप्यते । तदानीं च यत्स्थितिः सर्वा स्थितिः आवलिकाद्विकं तृतीयस्याश्चावलिकाया असंख्येयो भागः । अत्र वस्तुस्वभाव एष यन्निद्राद्विकस्यावलिकाऽसंख्येयभागाधिकाऽऽवलिकाद्विकशेषाया स्थितावुपरितनी समयमात्रैका स्थितिः संक्रामति, न पुनर्मतिज्ञानावरणीयादीनामिव समयाधिकावलिकाशे—

षायामिति । सम्प्रति यासां परप्रकृतिषु संभवी जघन्यस्थितिसंक्रमस्ताः प्रतिपादयति—' हासच्छक्के ' इत्यादि, हास्येनोपलक्षितं षट्कं हास्यषट्कं हास्यरत्यरतिभयशोकजुगुप्सालक्षणं, तस्य क्षपकेणापवर्तनाकरणेन संख्येयवर्षप्रमाणा स्थितिः कृता । ततः सा स्वनिर्लेपनावसरे संज्वलनक्रोधे प्रक्षिप्यमाणा जघन्यः स्थितिसंक्रमः ।

सोणमुहुत्ता जट्ठिइ, जहन्नबंधो उ पुरिससंजलने ।
जट्ठिइसगऊणजुत्तो, आवलिगदुगूणओ तत्तो ॥३४॥

'सोणमुहुत्त' त्ति—संक्रमणकाले सैव संख्येयवर्षप्रमाणा स्थितिः सोनमुहूर्ता-अन्तर्मुहूर्तेनाभ्यधिका यत्स्थितिः सर्वा स्थितिः । तथाहि—अन्तरकरणे वर्तमानस्ता संख्येयवर्षप्रमाणां स्थितिं संज्वलनक्रोधे संक्रमयति, अन्तरकरणे च कर्मदलिक न वि (वे) द्यते, किंतु-तत ऊर्ध्वम्, ततोऽन्तरकरणकाले नाभ्यधिका संख्येयवर्षप्रमाणा स्थितिर्हास्यषट्कस्य जघन्यस्थितिसंक्रमकाले यत्स्थितिः । ' जहन्नबंधो ' इत्यादि, पुरुषवेदस्य संज्वलनानां च यो जघन्यः स्थितिबन्धः प्रागुक्तः । तद्यथा-पुरुषवेदस्याष्टौ संवत्सराणि, संज्वलनक्रोधस्य मासद्वयं, संज्वलनमानस्य मासः, संज्वलनमायाया अर्धमासः, स एव जघन्य. स्थितिबन्धोऽबाधाकालोनस्तेषां जघन्यः स्थितिसंक्रमः अबाधारहिता हि स्थितिरन्यत्र संक्रामति, तत्रैव कर्मदलिकसंभवात्, 'अबाधाकालोना कर्मस्थिति. कर्मनिषेकः' इति वचनात्, जघन्यस्थितिबन्धे चाऽबाधाऽन्तर्मुहूर्तप्रमाणा । न च जघन्यस्थितिसंक्रमणकालेऽबाधाकालमध्ये प्राग्बद्धं सत्कर्म प्राप्यते , तस्य तदानीं सर्वस्याऽपि क्षीणत्वात् । ततोऽन्तर्मुहूर्तहीन एवैतेषां पुरुषवेदादीनां स्वस्वो जघन्यस्थितिबन्धो जघन्यस्थितिसंक्रमः , तदानीं चैतेषां यत्स्थितिः सर्वा स्थितिः स्वकीयेनोनेनाबाधारूपान्तर्मुहूर्तलक्षणेन युक्तोऽबाधाकालसहित इत्यर्थः, जघन्य. स्थितिबन्धः । ततः पुनरप्यावलिकाद्विकेनोनो हीनः सन् द्रष्टव्यः । एतदुक्तं भवति—जघन्यस्थितिसंक्रमेऽबाधाकालः प्रक्षिप्यते । तत्प्रक्षेपानन्तर चावलिकाद्विक ततोऽपसार्यते । तदुत्सारणे च कृते यावती स्थितिर्भवति, एतावती जघन्यस्थितिसंक्रमकाले सर्वा स्थितिः । आवलिकाद्विकं कस्मादुत्सार्यत इति चेदुच्यते-बन्धव्यवच्छेदानन्तरं बन्धावलिकायामतीतायां चरमसमयबद्धाः पुरुषवेदादिप्रकृतिलताः संक्रमयितुमारब्धाः । आवलिकामात्रेण च कालेन ताः संक्रम्यन्ते, संक्रमावलिकाचरमसमये च जघन्यः स्थितिसंक्रमः प्राप्यते । ततो बन्धावलिकासंक्रमावलिकारहित एवाबाधासहितो जघन्यः स्थितिबन्धो जघन्यस्थितिसंक्रमकाले सर्वा स्थितिः ।

सम्प्रति केवलिसत्कर्मणा जघन्यस्थितिसंक्रमप्ररूपणार्थमाह—

जोगंतियाण अंतो, मुहुत्तिओ सेसयाण पल्लस्स ।
भागो असंखियतमो, जट्ठिइगो आलिगाइ सह ॥३५॥

'जोगंतियाण' त्ति—योगिनि—सयोगिकेवलिनि संक्रममाश्रित्यान्तः-पर्यन्तो यासां ता योग्यन्तिका. नरकद्विकतिर्यग्द्विकपञ्चेन्द्रियजातिवर्जशेषजातिचतुष्टयस्थावरसूक्ष्मसाधारणातपोद्योतवर्जाः शेषा नाम्नो नवतिप्रकृतयः सातासातवेदनीयोच्चैर्गोत्रनीचैर्गोत्राणि ! एतासां सयोगिकेवलिचरमसमये सर्वापवर्तनयाऽन्तर्मुहूर्तिकी स्थितिर्भवति । सा चापवर्त्यमाना उदयावलिकारहिता, जघन्यस्थितिसंक्रमः उदयावलिकासकलकरणायोग्येति कृत्वा नापवर्त्यते, तया चावलिकया सहिता अपवर्तनारूपजघन्यस्थितिसंक्रमकाले तासां यत्स्थितिः । नन्वासां प्रकृतीनामयोगिकेवलिनि समयाधिकावलिकाशेषायां स्थितौ वर्तमानो जघन्यः स्थितिसंक्रमः कस्मान्नाभिधीयते, क्षीणकषाय इव मतिज्ञानावरणीयादीनामिति ? उच्यते-अयोगिकेवली भगवान् सकलसूक्ष्मवादरयोगप्रयोगरहितो मेरुरिव निष्प्रकम्पो नैकमप्यग्रानां करणानां मध्ये करणं प्रवर्तयति, निष्क्रियत्वात् । केवलमुदयप्राप्तानि वेदयते । तत· सयोगिकेवलिन एवैतासां जघन्यः स्थितिसंक्रमः प्राप्यते । 'सेससियाणे' त्यादि उक्तशेषाणां प्रकृतीनां स्त्यानर्द्धित्रिकमिथ्यात्वसम्यग्मिथ्यात्वानन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणनपुंसकस्त्रीवेदनरकद्विक· तिर्यग्द्विकपञ्चेन्द्रियजातिवर्जशेषजातिचतुष्टयस्थावरसूक्ष्मातपोद्योतसाधारणलक्षणानां द्वात्रिंशत्प्रकृतीनामात्मीयात्मीयक्षपणकाले यश्चरमः संक्षोभः पल्योपमासंख्येयभागमात्रः स जघन्यः स्थितिसंक्रमः । यत्स्थितिकस्तु सर्वस्थितियुक्तस्तु स एवावलिकया सह युक्तो वेदितव्यः । अयमिह सम्प्रदाय.-स्त्रीनपुंसकवेदवर्जानां प्रकृतीनामेकामधस्तादावलिकां मुक्त्वा शेषमुपरितनं पल्योपमासंख्येयभागमात्रं चरमखण्डमन्यत्र संक्रमयति । ततस्तासां जघन्यस्थितिसक्रमकाले यत्स्थिति. स एव जघन्यस्थितिसंक्रम आवलिकयाऽभ्यधिको वेदितव्यः । स्त्रीनपुंसकवेदयोस्त्वन्तर्मुहूर्तेनाभ्यधिको यतस्तयोश्चरमं स्थितिखण्डमन्तरकरणे स्थितः सन् संक्रमयति । अन्तरकरणे च कर्मदलिकं न वि (वे) द्यते, किं तु-तत ऊर्ध्वम्, अन्तरकरणं चान्तर्मुहूर्तप्रमाणम् । ततोऽन्तर्मुहूर्तयुक्तां जघन्यस्थितिसंक्रमस्तयोर्यत्स्थितिरवसेया । शेषाणा तु प्रकृतीनामन्तरकरणं न भवति, ततस्तासामावलिकायुक्त एव यत्स्थितिः ।

तदेवमुक्तं जघन्यस्थितिसंक्रमपरिमाणम् । सम्प्रति साद्यनादिप्ररूपणावसरः । सा च द्विधा मूलप्रकृतीनामुत्तरप्रकृतीनां च । तत्र मूलप्रकृतीनां साद्यनादिप्ररूपणार्थमाह—

मूलठिई अजहन्नो, सत्तण्ह तिहा चउव्विहो मोहे ।
सेसविगप्पा तेसिं, दुविगप्पा संकमे होंति ॥ ३६ ॥

'मूलठिइ' त्ति-इह जघन्यादन्यत्सर्वमजघन्यं यावदुत्कृष्टम् । उत्कृष्टादन्यत्सर्वमपि यावज्जघन्यं तावदनुत्कृष्टम् । तत्र मोहनीयवर्जानां सप्तानां कर्मणामजघन्यस्थितिसंक्रमस्त्रिधा । तद्यथा—अनादिर्ध्रुवोऽध्रुवश्च । तथाहि—ज्ञानावरणदर्शनावरणान्तरायाणां क्षीणकषायस्य समयाधिकावलिकाशेषायां स्थितौ वर्तमानस्य जघन्य. स्थितिसंक्रमो भवति । नामगोत्रवेदनीयायुषां तु सयोगिकेवलिचरमसमयेऽन्तर्मुहूर्तप्रमाणे आवलिकारहितो जघन्य. स्थितिसंक्रम । स च सादिरध्रुवश्च । तस्मादन्य' सर्वोऽपि स्थितिसक्रमोऽजघन्य । स चानादि' ध्रुवोऽभव्यानां भव्यानामध्रुव । ' चउव्विहो

मोहे ' त्ति मोहे मोहनीयेऽजघन्यः स्थितिसंक्रमश्चतुर्विधः । तद्यथा—सादिरनादिर्ध्रुवोऽध्रुवश्च । तथाहि—मोहनीयस्य जघन्यः स्थितिसंक्रमः सूक्ष्मसंपरायस्य क्षपकस्य समयाधिकावलिकायां शेषायां स्थितौ, ततोऽसौ सादिरध्रुवश्च । तस्माच्च जघन्यादन्यः सर्वोऽप्यजघन्यः । स च क्षायिकसम्यग्दृष्टेरुपशान्तमोहगुणस्थानके न भवति, ततः प्रतिपाते च भवति, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, अध्रुवध्रुवौ भव्याभव्यापेक्षया । शेषविकल्पा उत्कृष्टानुत्कृष्टजघन्यलक्षणास्तेषां कर्मणां संक्रमे संक्रमविषये द्विविकल्पा भवन्ति । तद्यथा—सादयोऽध्रुवाश्च । तथाहि-य एवोत्कृष्टां स्थितिं बध्नाति स एवोत्कृष्ट स्थितिसंक्रमं करोति, उत्कृष्टां च स्थितिं बध्नाति उत्कृष्ट संक्लेशे वर्तमानः । न चोत्कृष्टः संक्लेशः सर्वदैव लभ्यते, किं त्वन्तराऽन्तरा, शेषकाले त्वनुत्कृष्टः । तत एतौ द्वावपि साद्यध्रुवौ । जघन्यश्च साद्यध्रुवः प्रागेव भावितः ।

सम्प्रत्युत्तरप्रकृतीनां साद्यनादिप्ररूपणार्थमाह-

धुवसंतकम्मिगाणं, तिहा चउद्धा चरित्तमोहाणं ।
अजहन्नो सेसेसु य, दुहेतरासिं च सव्वत्थ ॥ ३७ ॥

'धुव' त्ति-ध्रुवं सत्कर्म यासां ता ध्रुवसत्कर्मिकास्त्रिशदुत्तरशतसङ्ख्याः । तथाहि-नरकद्विकमनुजद्विकदेवद्विकवैक्रियसप्तकाहारकसप्तकतीर्थकरनामसम्यक्त्वसम्यग्मिथ्यात्वोच्चैर्गोत्रायुश्चतुष्टयलक्षणा अष्टाविंशतिसङ्ख्या अध्रुवसत्कर्मिकाः प्रकृतयस्ता अष्टापञ्चाशदधिकात् शतादपनीयन्ते । ततः शेषं त्रिंशदुत्तरमेव शतं ध्रुवसत्कर्मिकाणां भवति । तस्मादपि चारित्रमोहनीयप्रकृतयः पञ्चविंशतिसंख्या अपनीयन्ते, तासां पृथग्वक्ष्यमाणत्वात् । ततः शेषस्य पञ्चोत्तरशतस्य स्वस्वक्षपणपर्यवसाने जघन्यः स्थितिसंक्रमो भवति स च सादिरध्रुवश्च ततोऽन्यः सर्वोऽप्यजघन्यः । स चाऽनादिः, अध्रुवध्रुवौ भव्याभव्यापेक्षया । चारित्रमोहनीयप्रकृतीनां पञ्चविंशतिसंख्यानामजघन्यः स्थितिसंक्रमश्चतुर्धा । तद्यथा-सादिरनादिर्ध्रुवोऽध्रुवश्च । तथाहि-उपशमश्रेण्यामुपशान्तौ सत्यां संक्रमाभावः, उपशमश्रेणितः प्रच्यवने न पुनरप्यजघन्यं स्थितिसंक्रममारभते, ततोऽसौ सादिः, तत्स्थानमप्राप्तस्य पुनरनादिः, अध्रुवध्रुवौ भव्याऽभव्यापेक्षया । ' सेसेसु य दुहा ' शेषेषूत्कृष्टानुत्कृष्टजघन्येषु द्विधा प्ररूपणा कर्त्तव्या । तद्यथा-सादिरध्रुवश्च । तत्रोत्कृष्टानुत्कृष्टयोर्यथा मूलप्रकृतिषु भावना कृता तथाऽत्रापि कर्त्तव्या । जघन्यस्थितिसंक्रमः स्वस्वक्षयावसरे प्राप्यते, ततोऽसौ सादिरध्रुवश्च । 'इयरासि' मित्यादि इतरासामध्रुवसत्कर्मणां पूर्वोक्तानामष्टाविंशतिसङ्ख्यानां सर्वत्रापि सर्वेष्वपि जघन्याजघन्योत्कृष्टानुत्कृष्टेषु द्विधा प्ररूपणा कर्तव्या । तद्यथा-सादिरध्रुवश्च । सा च साद्यध्रुवताऽध्रुवसत्कर्मत्वादेव परिभावनीया ।

सम्प्रति क्रमप्राप्तं स्वामित्वमभिधानीयम् । तच्च द्वेधा-उत्कृष्टस्थितिसंक्रमस्वामित्वं जघन्यस्थितिसंक्रमस्वामित्वं च । तत्रोत्कृष्टस्थितिसंक्रमस्वामित्वं प्रतिपिपादयिषुराह—

बंधाओ उक्कोसो, जासिं गंतूण आलिगं परओ ।
उक्कोससामिओ सं-कमाउ जासिं दुगं तासिं ॥ ३८ ॥

' बंधाओ ' त्ति-यासां प्रकृतीना बन्धात्-बन्धनात् उत्कृष्टस्थितिबन्धो भवति तासां ते एवोत्कृष्टस्थितिबन्धका देवनैरयिकतिर्यङ्मनुष्याः। गंतूण आलिगं परओ' त्ति बन्धाऽऽवलिकां गत्वा-अतिक्रम्य परतः बन्धावलिकायामतीतायामित्यर्थः । उत्कृष्टस्वामिनः उत्कृष्टस्थितिसंक्रमस्वामिन उत्कृष्टां स्थितिं संक्रमयन्तीत्यर्थः । यासां पुनः प्रकृतीनामुत्कृष्टा स्थितिः संक्रमेण प्राप्यते तासां द्विकं बन्धावलिकासंक्रमावलिकालक्षणं गत्वाऽतिक्रम्य परत उत्कृष्टस्वामिनः, बन्धावलिकासंक्रमावलिकयोरतीतयोरुत्कृष्टस्थितिसंक्रमस्वामिनो भवन्तीत्यर्थः ।

सम्यक्त्वसम्यग्मिथ्यात्वयोरुत्कृष्टस्थितिसंक्रमस्वामिनमाह-

तस्संतकम्मिगो बं-धिऊण उक्कोसगं मुहुत्तंतो ।
सम्मत्तमीसगाणं , आवलिया सुद्धदिट्ठी उ ॥ ३९ ॥

'तस्संतकम्मिगो' त्ति-तत्सत्कर्मा-सम्यक्त्वसम्यग्मिथ्यात्वसत्कर्मा मिथ्यादृष्टिरुत्कृष्टां स्थितिं सप्ततिसागरोपमकोटीकोटीप्रमाणां बद्ध्वा ततोऽन्तर्मुहूर्तादनन्तरं मिथ्यात्वात् प्रतिपत्य सम्यक्त्वं प्रतिपद्यते ततोऽसौ शुद्धदृष्टिः । सम्यग्दृष्टिरन्तर्मुहूर्तोनामुत्कृष्टां मिथ्यात्वस्थितिं सम्यक्त्वसम्यग्मिथ्यात्वयोः संक्रमयति ततः संक्रमावलिकायामतीतायामुदयावलिकात उपरितनीं सम्यक्त्वस्थितिमपवर्तनाकरणेन स्वस्थाने संक्रमयति । सम्यग्मिथ्यात्वस्थितिमपि संक्रमावलिकायामतीतायामुदयावलिकात उपरितनीं सम्यक्त्वे संक्रमयति , अपवर्तयति च । तत एवं तिसृणामपि दर्शनमोहनीयप्रकृतीनामुत्कृष्टस्थितिसंक्रमस्वामी सम्यग्दृष्टिरेवेति ।

तदेवमुक्त उत्कृष्टस्थितिसंक्रमस्वामी , संप्रति जघन्यस्थितिसंक्रमस्वामिनमाह—

दंसणचउक्कविग्घा-वरणं समयाहिगालिगा छउमो ।
निद्दाणावलिगदुगे , आवलियअसंखतमसेसे ॥ ४० ॥

'दंसण' त्ति—चक्षुरचक्षुरवधिकेवलदर्शनावरणीयानां 'विग्घ ' त्ति पञ्चानामन्तरायप्रकृतीनां पञ्चानां च ज्ञानावरणीयप्रकृतीनां जघन्यस्थितिसंक्रमस्वामी ' छउमो ' त्ति क्षीणकषायवीतरागच्छद्मस्थः स्वगुणस्थानकस्य समयाधिकावलिकाशेषे वर्तमानः । तथा निद्रयोर्निद्राप्रचलयोः स एव क्षीणकषायवीतरागच्छद्मस्थो द्वयोरावलिकयोः शेषयोस्तृतीयस्याश्चावलिकाया असंख्येयतमे भागे शेषे वर्तमानो जघन्यस्थितिसंक्रमस्वामी भवति ।

वेदकसम्यक्त्वस्य जघन्यस्थितिसंक्रमस्वामिनमाह—

समयाहिगालिगाए, सेसाए वेयगस्स कयकरणे ।
सक्खवगचरमखंडग, संछुभणा दिट्ठिमोहाणं ॥ ४१ ॥

'समय' त्ति-दर्शनमोहनीयक्षपको मनुष्यो जघन्यतोऽपि वर्षाष्टकादुपरि वर्तमानो मिथ्यात्वसम्यग्मिथ्यात्वे क्षपयित्वा सम्यक्त्वे च सर्वापवर्तनयाऽपवर्त्य सम्यक्त्वं वेदयमानस्ततः सम्यक्त्वे क्षपितशेषे सति कश्चिच्चतसृणां गतीनामन्यतमस्या गतौ प्रयाति । ततश्चतुर्गतिकानामन्यतमः सम्यक्त्वस्य समयाधिकावलिकाशेषाया स्थितौ वर्तमानः ' कयक-

रणो' त्ति कृतकरणः क्षपणकरणेऽभ्युद्यतो जघन्यस्थितिसंक्रमस्वामी भवति ॥ मिथ्यात्वसम्यग्मिथ्यात्वयोर्जघन्यस्थितिसंक्रमस्वामिनमाह-' सम्मत्तवगे ' त्यादि दर्शनमोहयोर्मिथ्यात्वसम्यग्मिथ्यात्वयोः क्षपणकाले यश्चरमखण्ड संक्षुभणं सर्वापवर्तनेनापवर्त्य परस्थाने पल्योपमासंख्येयभागमात्रचरमखण्डे प्रक्षेपणं तत्र वर्तमानो मनुष्योऽविरतसम्यग्दृष्टिर्देशविरतः प्रमत्तोऽप्रमत्तो वा जघन्यस्थितिसंक्रमस्वामी भवति ।

**समउत्तरालिगाए, लोभे सेसाएँ सुहुमरागस्स ।**
**पढमकसायाण विसं-जोयण संछोभणाए उ ॥ ४२ ॥**

'समउत्तरे' ति-सूक्ष्मसम्परायस्य स्वगुणस्थानकस्य समयाधिकावलिकाशेषाया स्थितौ वर्तमानस्य लोभे लोभस्य जघन्यः स्थितिसंक्रमो भवति । इदमिह तात्पर्यम्—सूक्ष्मसम्परायः स्वगुणस्थानकस्य समयाधिकावलिकाशेषायां स्थितौ वर्तमानो लोभसत्कजघन्यस्थितिसंक्रमस्वामी भवति ॥ अनन्तानुबन्धिनां जघन्यस्थितिसंक्रमस्वामिनमाह—' पढमे ' त्यादि, प्रथमकषायाणामनन्तानुबन्धिना विसंयोजने-विनाशने या चरमा पल्योपमासंख्येयभागमात्रा संछोभणा प्रक्षेपणं तत्र वर्तमानश्चतुर्गतिकानामन्यतमः सम्यग्दृष्टिर्जघन्यस्थितिसंक्रमस्वामी भवति ।

**चरिमसजोगे जा अ-त्थि तासि सो चेव सेसगाणं तु ।**
**खवगक्कमेण अनिय-ट्टिबायरो वेयगो वेए ॥ ४३ ॥**

' चरिम ' त्ति—या सयोग्यन्तिकाः प्रकृतयश्चतुर्नवतिसंख्याः प्रागुक्तास्तासां स एव सयोगिकेवली चरमापवर्तने वर्तमानो जघन्यस्थितिसंक्रमस्वामी भवति ॥ शेषप्रकृतीनां जघन्यस्थितिसंक्रमस्वामिनमाह-' सेसगाण ' मित्यादि, शेषाणां स्त्यानर्द्धित्रिकनामत्रयोदशकाष्टकषायनवनोकषायसंज्वलनक्रोधमानमायालक्षणानां षट्त्रिंशत्प्रकृतीना क्षपणक्रमेण-क्षपणपरिपाट्या चरमे पल्योपमासंख्येयभागादिमात्रे संछोभणे वर्तमानोऽनिवृत्तिबादरो जघन्यस्थितिसंक्रमस्वामी भवति । ' वेयगो वेदे ' त्ति वेदको वेदे वेदस्य जघन्यस्थितिसंक्रमस्वामी । इयमत्र भावना—पुरुषवेदोदये वर्तमानः पुरुषवेदस्य, स्त्रीवेदोदये वर्तमानः स्त्रीवेदस्य, नपुंसकवेदोदये वर्तमानो नपुंसकवेदस्यानिवृत्तिबादरसंपरायश्चरमसंक्रमं कुर्वन् जघन्यस्थितिसंक्रमस्वामी वेदितव्यः । अन्येन हि वेदेन क्षपकश्रेणिमारूढस्यान्यस्य वेदस्य जघन्यस्थितिसंक्रमो न लभ्यते । तथाहि-येन वेदेन क्षपकश्रेणिमारोहति तस्य वेदस्योदयोदीरणापवर्तनादिभिः स्थितेः पुद्गलाश्च यहव परिसटन्ति । ततो यद्यपि नपुंसकवेदेन क्षपकश्रेणिं प्रपन्नः स्त्रीवेदनपुंसकवेदौ युगपत्क्षपयति, तथापि नपुंसकवेदस्यैव जघन्यः स्थितिसंक्रमः प्राप्यते, न स्त्रीवेदस्य उदयोदीरणयोरभावात् । स्त्रीवेदेन च प्रतिपन्नो नपुंसकवेदक्षयानन्तरमन्तर्मुहूर्तेन कालेन स्त्रीवेदं क्षपयति । एतावता च कालेनोदयोदीरणाभ्यां यह्वी स्थितिस्त्रुट्यति । यद्यपि च पुरुषवेदेनाऽपि प्रतिपन्नस्यैतावान् कालो लभ्यते तथाऽपि तस्य स्त्रीवेदसत्के उदयोदीरणे न भवत इति स्त्रीवेदप्रतिपन्नस्यैव स्त्रीवेदस्य जघन्यः स्थितिसंक्रमो, न शेषस्य । तथा पुरुषवेदेन क्षपकश्रेणिं प्रपन्नो हास्यादिषट्कक्षयानन्तरं पुरुषवेदं क्षपयति , अन्यथा तु हास्यादिषट्कसहितम् । उदितस्य च वेदस्योदीरणाऽपि प्रवर्तते इति बह्वी स्थितिस्त्रुटयति । पुरुषवेदस्यापि पुरुषवेदारूढस्यैव च घन्यस्थितिसंक्रमो न शेषस्य ।



तदेवमुक्तः स्थितिसंक्रमः , सम्प्रत्यनुभागसंक्रमाऽभिधानावसरः, तत्र चैतेऽर्थाधिकारास्तद्यथा-भेद-स्पर्धकप्ररूपणा, विशेषलक्षणप्ररूपणा, उत्कृष्टानुभागसंक्रमप्रमाणप्ररूपणा, जघन्यानुभागसंक्रमप्रमाणप्ररूपणा, साधनादिप्ररूपणा , स्वामित्वं चेति । तत्र भेदप्ररूपणार्थमाह—

**मूलुत्तरपगइगतो, अणुभागे संकमो जहा बंधे ।**
**फड्डगनिद्देसो सिं, सव्वेयरघायऽघाईणं ॥ ४४ ॥**

'मूलुत्तर' त्ति-अनुभागेऽनुभागविषये संक्रमो मूलोत्तरप्रकृतिगतः । किमुक्तं भवति ?—द्विधाऽनुभागसंक्रमस्तद्यथा-मूलप्रकृत्यनुभागसंक्रमः, उत्तरप्रकृत्यनुभागसंक्रमश्च । ते च मूलोत्तरप्रकृतिभेदा यथा बन्धे-बन्धशतकेऽभिहितास्तथात्रापि द्रष्टव्याः । कृता भेदप्ररूपणा ॥ स्पर्धकप्ररूपणार्थमाह—'फड्डगे' त्यादि आसां सर्वघातिनीनां देशघातिनीनामघातिनीना प्रकृतीनां स्पर्धकनिर्देशः स्पर्धकप्ररूपणा यथा शतके कृता तथात्राऽपि कर्तव्या । तथापि किंचिदुच्यते—तत्र च केवलज्ञानावरणकेवलदर्शनावरणाद्यद्वादशकषायनिद्रापञ्चकमिथ्यात्वलक्षणाना विंशतिप्रकृतीनां रसस्पर्धकानि सर्वघातीनि , सर्वं स्वघात्यं केवलज्ञानादिलक्षणं गुणं घातयन्तीति सर्वघातीनि , तानि च ताम्रभाजनवत् निश्छिद्राणि घृतवत् स्निग्धानि द्राक्षावत्तनुप्रदेशोपचितानि स्फटिकाभ्रहारवच्चातीव निर्मलानि । उक्तं च—" जो घाएइ सविसयं , सयल सो होइ सव्वघाइरसो । सो निच्छिड्डो निद्धो, तणुओ फलिहब्भहरविमलो ॥ १ ॥ " मतिश्रुतावधिमनःपर्यायज्ञानावरणचक्षुरचक्षुरवधिदर्शनावरणसंज्वलनचतुष्टयनवनोकषायान्तरायपञ्चकलक्षणाना पञ्चविंशतिसंख्याना देशघातिप्रकृतीनाम् । ( देशघातिप्ररूपणा ' देसघाइण ' शब्दे चतुर्थभागे २६२६ पृष्ठे गता । ) वेदनीयायुर्नामगोत्राणां सम्बन्धिन एकादशोत्तरप्रकृतिशतस्याघातिनो रसस्पर्धकान्यघातीनि वेदितव्यानि । केवलं वेद्यमानसर्वघातिरसस्पर्धकसम्बन्धात्तान्यपि सर्वघातीनि भवन्ति । यथेह लोके स्वयमचौराणामपि चौरसम्बन्धाच्चौरता । उक्तं च-"जाण न विसओ घाइ-त्तणम्मि ताणं पि सव्वघाइरसो । जायइ घाइसगासे-ण चोरया वेहऽचोराणं ॥ १ ॥ "

सम्प्रति दर्शनमोहनीयस्य स्पर्धकप्ररूपणार्थमाह—

**सव्वेसु देसघाइसु, सम्मत्तं तदुवरिं तु वा मिस्सं ।**
**दारुसमाणस्साणं-ततमो मिच्छत्तमुप्पिमओ ॥४५॥**

'सव्वेसु'त्ति-इह दर्शनमोहनीयस्य सत्कर्म प्रतीत्य द्विविधानि रसस्पर्धकानि । तद्यथा-देशघातीनि, सर्वघातीनि च । तत्र यानि देशघातीनि स्पर्धकानि एकस्थानकरसोपेतानि द्वि-

स्थानकरसोपेतानि च। तेषु सर्वेष्वपि सम्यक्त्वं 'तदुवरिं तु वा मिस्स' यत्र देशघातीनि स्पर्धकानि निष्ठितानि तत उपरि सम्यग्मिथ्यात्वस्य स्पर्धकानि भवन्ति। तानि च सर्वघातीनि द्विस्थानकरसोपेतानि च तानि सम्यग्मिथ्यात्वस्य स्पर्धकानि तावद् द्रष्टव्यानि यावत् 'दारुसमाणस्साणंततमो त्ति' दारुसमान इति द्विस्थानको रसस्तस्य सम्बन्धिनां स्पर्धकानामनन्ततमो भागो गतो भवति। ततो यत्र सम्यग्मिथ्यात्वस्य स्पर्धकानि निष्ठां यान्ति, ततः प्रभृति द्विस्थानकत्रिस्थानकचतुःस्थानकरसोपेतानि स्पर्धकानि सर्वाण्यपि मिथ्यात्वस्य द्रष्टव्यानि।

कृता स्पर्धकप्ररूपणा। सम्प्रति विशेषलक्षणप्ररूपणार्थमाह-

तत्थट्ठपयं उव्व-ट्टिया व ओवट्टिया व अविभागा।
अणुभागसंकमो ए-स अन्नपगइं निया वाऽवि ॥४६॥

'तत्थ'त्ति-तत्रानुभागसंक्रमेऽर्थपदं याथात्म्यनिर्धारणमिदम्-यदुत उद्वर्तिताः प्रभूतीकृता., यद्वा—अपवर्तिता ह्रस्वीकृता अथवाऽन्यां प्रकृतिं नीता अन्यप्रकृतिस्वभावेन परिणमिताः अविभागा अनुभागाः। एष सर्वोऽप्यनुभागसंक्रमः। तत्र मूलप्रकृतीनामुद्वर्तनापवर्तनारूपौ द्वावेव संक्रमौ नान्यप्रकृतिनयनरूप सक्रमः, तासां परस्परं संक्रमाभावात्। उत्तरप्रकृतीनां तु त्रयोऽपि संक्रमा.।

तदेवमुक्तं विशेषलक्षणम्। सम्प्रत्युत्कृष्टानुभागसंक्रमप्रमाणप्रतिपादनार्थमाह—

दुविहपमाणे जेट्ठो, सम्मत्ते देसघाइदुट्ठाणा।
नरतिरियाऊ आयव-मिस्से वि य सव्वघाइम्मि ॥४७॥

'दुविहे' त्ति-द्विविधे प्रमाणे स्थानप्रमाणे घातित्वप्रमाणे च ज्येष्ठ उत्कृष्टोऽनुभागसंक्रम. सम्यक्त्वस्य देशघातिनि द्विस्थानके रसस्पर्धके संक्रम्यमाणे वेदितव्य.। एतदुक्तं भवति—सम्यक्त्वस्य घातित्वमाश्रिते देशघातिस्थानमाश्रित्य सर्वोत्कृष्टद्विस्थानकरसोपेतं स्पर्धकपटलं यदा संक्रामति तदा तस्योत्कृष्टोऽनुभागसंक्रम इति नरायुस्तिर्यगायुरातपसम्यग्मिथ्यात्वानां स्थानं प्रतीत्य सर्वोत्कृष्टद्विस्थानकरसोपेतघातित्वमाश्रित्य सर्वघातिनि रसस्पर्धके उत्कृष्टोऽनुभागसंक्रम.। अत्रापीयं भावना-नरतिर्यगायुरातपसम्यग्मिथ्यात्वानां सर्वोत्कृष्टद्विस्थानकरसोपेतं सर्वघातिरसस्पर्धकं यदा संक्रामति तदा स तेषामुत्कृष्टोऽनुभागसंक्रमः। अत्र नरतिर्यगायुरातपानां "दुतिचउट्ठाणा उ सेसा उ" इति वचनात् द्वित्रिचतुःस्थानकरससंभवेऽपि यत् द्विस्थानकरसस्पर्धकस्यैव संक्रमे उत्कृष्टोऽनुभागसंक्रम उक्त, स एवं ज्ञापयति—एतेषां कर्मणां तथा स्वाभाव्यादेव त्रिस्थानकचतुःस्थानकरसस्पर्धकानामुद्वर्तनापवर्तनाप्रकृत्यन्तरनयनरूपस्त्रिप्रकारोऽपि संक्रमो न भवतीति।

सेसासु चउट्ठाणे, मंदो संमत्तपुरिससंजलणे।
एगट्ठाणे सेसा-सु सव्वघाइम्मि दुट्ठाणे ॥ ४८ ॥

'सेसासु' त्ति—शेषाणामुक्तव्यतिरिक्तानां प्रकृतीनां स्थानमाश्रित्य सर्वोत्कृष्टश्चतुःस्थानको घातित्वमाश्रित्य सर्वघाती रसो यदा सक्रामति तदा स तासामुत्कृष्टोऽनुभागसंक्रम। तदेवमुक्तमुत्कृष्टानुभागसंक्रमप्रमाणम्॥ सम्प्रति जघन्यानुभागसंक्रमप्रमाणप्रतिपादनार्थमाह—'मंदो' त्ति सम्यक्त्वस्य पुरुषवेदस्य संज्वलनानां चैकस्थानके रसे संक्रामति मन्दो जघन्योऽनुभागसंक्रमो वेदितव्य.। एतदुक्तं भवति—सम्यक्त्वस्य सर्वविशुद्ध एकस्थानको रसो यदा संक्रामति तदा तस्य जघन्योऽनुभागसक्रमः, पुरुषवेदसंज्वलनानां च क्षपणकाले यानि समयोनावलिकाद्विकबद्धानि स्पर्धकानि एकस्थानरसोपेतानि तानि यदा संक्रामन्ति तदा स तेषां जघन्योऽनुभागसंक्रमः। 'सेसासु' इत्यादि शेषासूक्तव्यतिरिक्तासु सर्वासु प्रकृतिषु सर्वघातिनि द्विस्थानकरसोपेते स्पर्धके संक्रम्यमाणे जघन्योऽनुभागसंक्रमो वेदितव्य। इदमत्र तात्पर्यम्-सम्यक्त्वपुरुषवेदसंज्वलनचतुष्टयव्यतिरिक्तानां शेषप्रकृतीनां घातित्वमाश्रित्य सर्वघातीनि, स्थानमाश्रित्य द्विस्थानकरसोपेतानि मन्दानुभावानि यानि रसस्पर्धकानि तानि यदा संक्रामन्ति तदा स तासां जघन्योऽनुभागसंक्रमः। इह यद्यपि मतिश्रुतावधिमनःपर्यायज्ञानावरणचक्षुरचक्षुरवधिदर्शनावरणान्तरायपञ्चकानामेकस्थानकोऽपि रसो बन्धे प्राप्यते तथाऽपि क्षयकालेऽपि प्राग्बद्धो द्विस्थानकोऽपि रस. सक्रामति, नैकस्थानक. केवल इति जघन्यसक्रमविषयतया नैतेषामेकस्थानकरस उक्तः।

तदेवमुक्तं जघन्यानुभागसंक्रमपरिमाणम्। सम्प्रति साद्यनादिप्ररूपणा कर्तव्या। सा च द्विधा—मूलप्रकृतिसाद्यनादिप्ररूपणा उत्तरप्रकृतिसाद्यनादिप्ररूपणा च। तत्र मूलप्रकृतीना साद्यनादिप्ररूपणार्थमाह—

अजहन्नो तिण्णि तिहा, मोहस्स चउव्विहो अहाउस्स।
एवमणुक्कोसो से-सगाण तिविहो अणुक्कोसो ॥ ४९ ॥
सेसा मूलप्पगइसु, दुविहा अह उत्तरासु अजहन्नो।
सत्तरसण्ह चउद्धा, तिविकप्पो सोलसण्हं तु ॥ ५० ॥

'अजहन्नो' त्ति-ज्ञानावरणदर्शनावरणान्तरायलक्षणानां त्रयाणां कर्मणामजघन्योऽनुभागस्त्रिधा त्रिप्रकारस्तद्यथा-अनादिरध्रुवो,ध्रुवश्च। तथाहि-क्षीणकषायस्यैतेषां कर्मणां समयाधिकावलिकाशेषायां स्थितौ जघन्यानुभागसंक्रमो भवति,स च सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यजघन्य. स चानादि.। अध्रुवध्रुवौ भव्याऽभव्यपेक्षया। मोहनीयस्याजघन्योऽनुभागसंक्रमश्चतुर्विधः। तद्यथा-सादिरनादिर्ध्रुवोऽध्रुवश्च। तथाहि—सूक्ष्मसंपरायस्य क्षपकस्य मोहनीयस्य समयाधिकावलिकाशेषायां स्थितौ जघन्योऽनुभागसक्रमो भवति। स च सादिरध्रुवश्च। ततोऽन्य. सर्वोऽप्यजघन्यः, स च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्योपशान्तमोहगुणस्थानके न भवति। उपशान्तमोहगुणस्थानकाच्च प्रतिपतत. सत. पुनरपि भवति, ततोऽसौ सादि.। तत्स्थानमप्राप्तस्य पुनरनादि। ध्रुवाध्रुवौ पूर्ववत्। आयुषस्त्वनुत्कृष्टोऽनुभागसंक्रमश्चतुर्विध। तद्यथा—सादिरनादिर्ध्रुवोऽध्रुवश्च। तथाहि-अप्रमत्तो देवायुष उत्कृष्टमनुभागं बद्ध्वा बन्धावलिकायाः परत संक्रमयितुमारभते तं च तावत्संक्रमयति यावदनुत्तरसुरभवे स्थितस्य त्रयस्त्रिंशत्सागरोपमाण्यतिक्रामन्ति

आवलिकामात्रा स्थितिरवतिष्ठते । ततोऽन्योऽनुभागसंक्रम आयुष' सर्वोऽप्यनुत्कृष्ट'। स च साऽऽदि । तत्स्थानमप्राप्तस्य पुनरनादिः । ध्रुवाध्रुवावभव्यभव्यापेक्षया । शेषाणां नामगोत्रवेदनीयानामनुत्कृष्टोऽनुभागसंक्रमस्त्रिविधस्त्रिप्रकारः । तद्यथा—अनादिरध्रुवो ध्रुवश्च । तथाहि—सूक्ष्मसम्परायेण क्षपकेण स्वगुणस्थानकस्य चरमसमये तेषा नामगोत्रवेदनीयानां सर्वोत्कृष्टोऽनुभागो बध्यते । बन्धावलिकायामतीतायां यावत्सयोगिचरमसमयस्तावत्संक्रामति । स च सादिरध्रुवश्च । ततोऽन्य' सर्वोऽप्यनुत्कृष्टः । स चानादिः, आदेरभावात् । ध्रुवाऽध्रुवौ पूर्ववत् । उक्तशेषेषु विकल्पेषु द्विधा प्ररूपणा कर्तव्या । तद्यथा—सादिरध्रुवश्च । तत्र चतुर्णां घातिकर्मणाम् उत्कृष्टानुत्कृष्टजघन्येषु जघन्य' सादिरध्रुवश्च भावित एव । उत्कृष्ट कदाचिन्मिथ्यादृष्टिर्भवति, अन्यदा तु तस्याप्यनुत्कृष्ट., अत एतौ साद्यध्रुवौ । शेषाणां चतुर्णामघातिकर्मणा जघन्याजघन्योत्कृष्टेषु मध्ये उत्कृष्टो भावित एव । जघन्य. सूक्ष्मस्यापर्याप्तस्यैकेन्द्रियस्य हतप्रभूतानुभागसत्कर्मणो लभ्यते, नान्यस्य । प्रभूतानुभागसत्कर्मघाताभावे तु तस्याप्यजघन्य. । तत एतावपि साद्यध्रुवौ । कृता मूलप्रकृतीनां साद्यनादिप्ररूपणा ॥ सम्प्रत्युत्तरप्रकृतीना साद्यनादिप्ररूपणार्थमाह-'अहेत्यादि' उत्तरासूत्तरप्रकृतिषु मध्ये सप्तदशानां कर्मणामनन्तानुबन्धिचतुष्टयसंज्वलनचतुष्टयनवनोकषायलक्षणानामजघन्योऽनुभागसंक्रमश्चतुर्धा । तद्यथा—सादिरनादिर्ध्रुवोऽध्रुवश्च । तथाहि—एतेषामनन्तानुबन्धिवर्जानां त्रयोदशकर्मणां स्वस्वक्षयपर्यवसानावसरे जघन्यस्थितिसंक्रमकाले जघन्योऽनुभागसंक्रमः प्राप्यते । अनन्तानुबन्धिनां पुनरुद्वलनासंक्रमेणोद्वल्य भूयोऽपि मिथ्यात्वप्रत्ययतो बद्धानां बन्धावलिकायामतीताया द्वितीयावलिकाया प्रथमसमये जघन्योऽनुभागसंक्रम, एतदन्य' पुन सर्वोऽप्येतासां सप्तदशप्रकृतीनामजघन्य । स चोपशमश्रेण्यामुपशान्तानामेतासां न भवति तत. प्रतिपाते च भवति, ततोऽसौ सादि. । तत्स्थानमप्राप्तस्य पुनरनादि. । अध्रुवध्रुवौ भव्याभव्यापेक्षया । तथा पञ्चविधज्ञानावरणस्त्यानर्द्धित्रिकवर्जं षड्दर्शनावरणपञ्चविघ्नान्तरायलक्षणानां षोडशकर्मणामजघन्योऽनुभागसंक्रमस्त्रिविकल्पस्त्रिप्रकारस्तद्यथा—अनादिरध्रुवो ध्रुवश्च । तथाहि—एतेषा षोडशकर्मणां जघन्यानुभागसंक्रम. क्षीणकषायस्य स्वगुणगुणस्थानकस्य समयाधिकावलिकाशेषायां स्थितौ वर्तमानस्य प्राप्यते । ततोऽन्य' सर्वोऽप्यजघन्यः तस्य चादिर्न विद्यते इत्यनादिः । अध्रुवध्रुवौ भव्याऽभव्यापेक्षया ॥ ५० ॥

तिविहो छत्तीसाए, ऽणुक्कोसोऽह नवगस्स य चउद्धा ।
एयासिं सेसाऽसे-सगाण सव्वे य दुविगप्पा ॥ ५१ ॥

'तिविहो' त्ति सातवेदनीयपञ्चेन्द्रियजातितैजससप्तकसमचतुरस्रसंस्थानशुक्ललोहितहारिद्रसुरभिगन्धकषायाम्लमधुरमृदुलघूष्णशीत ( स्निग्धोष्ण ) लक्षणशुभवर्णाद्येकादशकागुरुलघूच्छ्वासपराघातप्रशस्तविहायोगतित्रसादिदशकनिर्माणलक्षणाना षट्त्रिंशत्प्रकृतीनामुत्कृष्टोऽनुभागसंक्रमस्त्रिविधस्त्रिप्रकार. । तद्यथा—अनादिर्ध्रुवोऽध्रुवश्च । तथाहि-आसा षट्त्रिंशत्प्रकृतीनां क्षपक आत्मीयात्मीयबन्धव्यवच्छेदकाले उत्कृष्टमनुभागं बध्नाति, बद्धा च बन्धावलिकायामतीतायां संक्रमयितुमारभते । तं च तावत्संक्रमयति यावत्सयोगिकेवलिचरमसमय. । ततः क्षपकसयोगिकेवलिवर्जस्य शेषस्यानुकृष्ट एवानुभाग एतासां संक्रामति । तस्य चादिर्न विद्यत इत्यनादि. , ध्रुवाध्रुवा अभव्यभव्यापेक्षया । 'अहेत्यादि' अथ शब्दस्तथाविधार्थे । नवकस्य-उद्योतवजर्षभनाराचसंहननौदारिकसप्तकलक्षणस्यानुत्कृष्टोऽनुभागसंक्रमश्चतुर्विधः । तद्यथा—सादिरनादिर्ध्रुवोऽध्रुवश्च । तथाहि-एतेषामुद्योतवर्जानामष्टाना कर्मणाम् सम्यग्दृष्टिर्देवोऽत्यन्तविशुद्धपरिणाम उत्कृष्टमनुभागं बद्ध्वा बन्धावलिकायामतीताया संक्रामति । उद्योतनाम्नः पुन. सप्तमनरकपृथिव्यां वर्तमानो नैरयिको मिथ्यादृष्टि. सम्यक्त्वं प्रतिपत्तुकाम उत्कृष्टमनुभागबन्धं करोति । ततो बन्धावलिकायामतीतायां संक्रमयति । तं च जघन्येनान्तर्मुहूर्तमुत्कर्षतो द्वे षट्षष्टी सागरोपमाणां यावत् । इह यद्यपि सप्तमनरकपृथिव्यां चरमेऽन्तर्मुहूर्तेऽवश्यं मिथ्यात्वं गच्छति यथाऽप्यग्रेतने भवेऽन्तर्मुहूर्तानन्तरं यः सम्यक्त्वं प्रतिपद्यते स इह गृह्यते । ततोऽपान्तराले स्तोको मिथ्यात्वकालो भवन्नपि चिरन्तनग्रन्थेषु न विवक्षित इत्यस्माभिरपि द्वे षट्षष्टी सागरोपमाणां यावदित्युक्तम् । तत उत्कृष्टात्प्रतिपतितस्यानुत्कृष्टः । स च साऽऽदि. । तत्स्थानमप्राप्तस्य पुनरनादि' । ध्रुवाध्रुवौ भव्याभव्यापेक्षया । 'एयासि' मित्यादि एतासां सप्तदशषोडशषट्त्रिंशन्नवकरूपाणां प्रकृतीनामुक्तशेषा विकल्पा उक्तसप्तदशादिव्यतिरिक्ताना च शेषप्रकृतीनामशीतिसंख्याना सर्वेऽप्युत्कृष्टानुत्कृष्टजघन्याजघन्या द्विविकल्पा द्विप्रकारा ज्ञातव्या. । तद्यथा-सादयोऽध्रुवाश्च । तथाहि-सप्तदशाना षोडशानां चोत्कृष्टोऽनुभागसंक्रमो मिथ्यादृष्टेरुत्कृष्टे सङ्क्लेशे वर्तमानस्य प्राप्यते । शेषकालं तु तस्याप्यनुत्कृष्ट एव । अत एव ता द्वावपि साद्यध्रुवौ जघन्यो भावित एव । तथा षट्त्रिंशत्प्रकृतीनां नवकस्य च जघन्योऽनुभागसंक्रम' सूक्ष्मैकेन्द्रिये हतप्रभूतानुभागसत्कर्मणि प्राप्यते । प्रभूतानुभागसत्कर्मघाताभावे तु तस्मिन्नप्यजघन्यस्तत एतौ साद्यध्रुवौ । उत्कृष्टो भावित एव । शेषाणा प्रकृतीनां संज्ञिनि पञ्चेन्द्रिये पर्याप्ते शुभाना वैक्रियसप्तकदेवद्विकोच्चैर्गोत्रातपतीर्थकराहारकसप्तकमनुजद्विकनरकायुर्वर्जशेषायुस्त्रयरूपाणां चतुर्विंशतिसंख्याना विशुद्धावशुभानां च स्त्यानर्द्धित्रिकासातवेदनीयदर्शनमोहनीयत्रितयाप्रत्याख्यानप्रत्याख्यानावरणकषायनरकायुर्नरकद्विकतिर्यग्द्विकपञ्चेन्द्रिजातिवर्जं —शेषजातिचतुष्टयप्रथमवर्जसंस्थानप्रथमवर्जसंहननाऽशुभवर्णादिनवकाप्रशस्तविहायोगत्युपघातस्थावरदशकनीचैर्गोत्ररूपाणा षट्पञ्चाशत्संख्यानां संक्लेशे उत्कृष्टोऽनुभागबन्धो लभ्यते । शेषकालं त्वनुत्कृष्टः एवं संक्रमोऽपि । तत एतौ साद्यध्रुवौ । जघन्योऽनुभागसंक्रम. पुन सूक्ष्मैकेन्द्रिये हतप्रभूतानुभागसत्कर्मणि प्राप्यते । प्रभूतानुभागसत्कर्मघाताभावे तु तस्मिन्नप्यजघन्यः । तत एतावपि साद्यध्रुवौ ।

कृता साद्यनादिप्ररूपणा । सम्प्रति स्वामित्व वक्तव्यम् । तच्च द्विधा उत्कृष्टानुभागसंक्रमस्वामित्वं, जघन्यानुभागसंक्रमस्वामित्वं च । तत्रोत्कृष्टानुभागसंक्रमस्वामित्वमभिधि-

त्सुस्तत्कालप्रमाणनियमनार्थमिदमाह-

**उक्कोसगं पबंधिय, आवलियमइच्छिऊण उक्कोसं ।**
**जावं न घाणइ तगं, संकमइ य आमुहुत्तंतो ॥५२॥**

'उक्कोसगं' ति—मिथ्यादृष्टिरुत्कृष्टमनुभागं बद्धा तत आवलिकामतिक्रम्य. बन्धावलिकायाः परत इत्यर्थः। तमुत्कृष्टमनुभागं संक्रमयति तावद्यावन्न विनाशयति। कियन्तं कालं यावत्पुनर्न विनाशयतीति चेदुच्यते-आ मुहूर्तान्तः, अन्तर्मुहूर्तं यावदित्यर्थः। परतो मिथ्यादृष्टिः शुभप्रकृतीनामनुभागं संक्लेशेन अशुभप्रकृतीनां तु विशुद्धयाऽवश्यं विनाशयति।

सम्प्रति स्वामी प्रतिपाद्यते—

**असुभाणं अन्नयरो, सुहुम अपज्जत्तगाइ मिच्छो य ।**
**वज्जिय असंखवासा-उए य मणुओववाए य ॥ ५३ ॥**

'असुभाणं' ति—अशुभानां प्रकृतीनां पञ्चविधज्ञानावरणनवविधदर्शनावरणासातवेदनीयाद्याविंशतिविधमोहनीयनरकद्विकतिर्यग्द्विकपञ्चेन्द्रियजातिवर्जशेषजातिचतुष्टयप्रथमवर्जसंस्थानप्रथमवर्जसंहनननीलकृष्णदुरभिगन्धातिक्तकटुकरूक्षशीतकर्कशगुरूपघाताप्रशस्तविहायोगतिस्थावरसूक्ष्मसाधारणापर्याप्तास्थिराशुभदुर्भगदु.स्वरानादेयायशःकीर्तिनीचैर्गोत्रपञ्चविधान्तरायलक्षणानामष्टाशीतिसंख्यानामन्यतरः सूक्ष्मापर्याप्तादिः, आदिशब्दात्—पर्याप्तसूक्ष्मपर्याप्तापर्याप्तबादरद्वित्रिचतुरिन्द्रियासंज्ञिसंज्ञितिर्यक्पञ्चेन्द्रियमनुष्य—देवनारकपरिग्रहः। तत एतेषामन्यतमो मिथ्यादृष्टिरुत्कृष्टमनुभागसंक्रमं करोति। केवलमसंख्येयवर्षायुषो मनुष्यतिरश्चो ये च देवाः स्वभवाच्च्युत्वा मनुष्येषूत्पद्यन्ते तांश्च मनुष्योपपातान् आनतप्रमुखान् देवान् वर्जयित्वा। एते हि मिथ्यादृष्टयोऽपि नाशुभप्रकृतीनामुक्तस्वरूपाणामुत्कृष्टमनुभागं बध्नन्ति, तीव्रसंक्लेशाभावात्। ततश्चोत्कृष्टानुभागसंक्रमाभाव इति तेषां वर्जनम्।

**सव्वत्थायावुज्जो-यमणुयगइपंचगाण आऊणं ।**
**समयाहिगालिगा से-सग त्ति सेसाण जोगंता ॥ ५४ ॥**

'सव्वत्थ'त्ति—सर्वत्र—सर्वेषु सूक्ष्मापर्याप्तादिषु नैरयिकपर्यवसानेषु असंख्येयवर्षायुस्तिर्यग्मनुष्येषु मनुष्योपपातेषु च देवेषु आनतादिषु मिथ्यादृष्टिषु सम्यग्दृष्टिषु वा। आतपस्योद्योतस्य मनुजगतिपञ्चकस्य मनुजगतिमनुजानुपूर्व्यौदारिकद्विकवज्रर्षभनाराचसंहननलक्षणस्य अत्रौदारिकद्विकग्रहणादौदारिकसप्तकं गृह्यते, तथा विवक्षणात्। ततः सर्वसंख्यया द्वादशानां प्रकृतीनामुत्कृष्टोऽनुभागसंक्रमो वेदितव्य.। तथाहि—सम्यग्दृष्टि. शुभमनुभागं न विनाशयति, किं तु-विशेषतो द्वे षट्षष्टी सागरोपमाणां यावत् परिपालयति। तत उत्कर्षत एतावन्तं कालं यावदुत्कृष्टमनुभागमविनाश्य पश्चात्सर्वत्र यथायोग्यमुत्पद्यते। ततो मिथ्यादृष्टिष्वप्यनन्तरोक्तप्रकृतीनामुत्कृष्टोऽनुभागसंक्रमोऽन्तर्मुहूर्तं कालं यावदवाप्यते। आतपोद्योतयोश्चोत्कृष्टोऽनुभागो मिथ्यादृष्टिनैव बध्यते। ततो न तत्र तयोरुत्कृष्टानुभागसंक्रमाभाव.। मिथ्यात्वाच्च प्रतिपत्य सम्यक्त्वं गते सम्यग्दृष्टावपि प्राप्यते। न च सम्यग्दृष्टि. सन् तयोरुत्कृष्टमनुभागं विनाशयति, शुभप्रकृतित्वात्, ततो द्वे षट्षष्टी अपि सागरोपमाणां यावदुत्कर्षतस्तयोस्तत्र संक्रमो द्रष्टव्यः। तथा चतुर्णामायुषामुत्कृष्टमनुभागं बद्धा बन्धावलिकायामतीतायां यावत्समयाधिकावलिका शेषा तावदुत्कृष्टानुभागसंक्रमः प्राप्यते। शेषाणां तु शुभप्रकृतीनां सातवेदनीयदेवद्विकपञ्चेन्द्रियजातिवैक्रियसप्तकाहारकसप्तकतैजससप्तकसमचतुरस्रसंस्थानशुक्ललोहितहारिद्रवर्णसुरभिगन्धकषायाम्लमधुररसमृदुलघुस्निग्धोष्णस्पर्शप्रशस्तविहायोगत्युच्छ्वासागुरुलघुपराघातत्रसादिदशनिर्माणतीर्थकरोच्चैर्गोत्रलक्षणाना चतु.पञ्चाशत्संख्यानामात्मीयात्मीयबन्धव्यवच्छेदसमये उत्कृष्टमनुभागं बद्धा बन्धावलिकाया. परतस्तावदुत्कृष्टमनुभागं संक्रमयति यावत्सयोगिकेवलिचरमसमयः। तथा चैतासां प्रकृतीनामुत्कृष्टानुभागसंक्रमस्वामिनः प्रायोऽपूर्वकरणादयः सयोगिकेवलिपर्यवसाना द्रष्टव्याः।

तदेवमुक्त उत्कृष्टानुभागसंक्रमस्वामी, संप्रति जघन्यानुभागसंक्रमस्वामिनं प्रतिपिपादयिषुर्जघन्यानुभागसंक्रमसम्भवपरिज्ञानार्थमाह—

**खवगस्संतरकरणे, अकए घाईण सुहुमकम्मुवरिं ।**
**केवलिणोऽणंतगुणं, असन्निओ सेसअसुभाणं ॥ ५५ ॥**

'खवगस्स' त्ति-यावद्द्याप्यन्तरकरणं न विधीयते तावत्क्षपकस्य सर्वघातिनीना देशघातिनीनां च प्रकृतीनां सम्बन्धी अनुभागः सूक्ष्मैकेन्द्रियसत्कादनुभागसत्कर्मणोऽनन्तगुणो भवति। अन्तरकरणे तु कृते सति सूक्ष्मैकेन्द्रियस्यापि सत्कादनुभागसत्कर्मणो हीनो भवति। तथा शेषाणामप्यघातिनीनामशुभप्रकृतीनामसातवेदनीयप्रथमवर्जसंस्थानप्रथमवर्जसंहननकृष्णनीलदुरभिगन्धतिक्तकटुगुरुकर्कशरूक्ष—शीतोपघाताप्रशस्तविहायोगतिदुर्भगदु.स्वरानादेयास्थिराशुभापर्याप्तायशःकीर्तिनीचैर्गोत्रलक्षणानां त्रिंशत्संख्यानां केवलिनोऽनुभागसत्कर्म असंज्ञिपञ्चेन्द्रियसत्कादनुभागसत्कर्मणोऽनन्तगुणं वेदितव्यम्। तथा च सति सर्वघातिनीनां देशघातिनीनां च प्रकृतीनां जघन्यानुभागसंक्रमसम्भव' क्षपकस्यान्तरकरणे कृते सति वेदितव्यः। शेषाणां त्वशुभप्रकृतीनामुक्तरूपाणां जघन्यानुभागसंक्रमसंभवः, न सयोगिकेवलिनि, किं तु-हतसत्कर्मणः सूक्ष्मैकेन्द्रियादे., तस्यैव वक्ष्यमाणत्वात्।

इह 'संकमइ य आमुहुत्तंतो' इति वचनात्सम्यग्दृष्टयो मिथ्यादृष्टयो वा किलान्तर्मुहूर्तात्परतः सर्वप्रकृतीनामनुभागघातं कुर्वन्तीति प्रसक्तम्-तत्रापवादमाह—

**सम्मद्दिट्ठी न हणइ, सुभाणुभागे असम्मदिट्ठी वि ।**
**सम्मत्तमीसगाणं, उक्कोसं वज्जिया खवणं ॥ ५६ ॥**

'सम्मद्दिट्ठि' त्ति-इह या. शुभप्रकृतय. सातवेदनीयदेवद्विकमनुजद्विकपञ्चेन्द्रियजातिप्रथमसंस्थानप्रथमसंहननौदारिकवैक्रियसप्तकाहारकसप्तकतैजससप्तकशुभवर्णाद्येकादशकागुरुलघूपघातोच्छ्वासातपोद्योतप्रशस्तविहायोगतित्रसादिदशकनिर्माणतीर्थकरोच्चैर्गोत्रलक्षणा' षट्षष्टिसंख्यास्तासा सर्वासामपि शुभमनुभागमुत्कर्षतो द्वे षट्षष्टी सागरोपमाणां यावत्सम्यग्दृष्टिर्न विनाशयति। असम्यग्दृष्टिर्मिथ्यादृष्टि। अपि शब्दात्सम्यग्दृष्टिश्च सम्यग्मिथ्यात्वयोरुत्कृष्टमनुभागं

न विनाशयति ।' क्षपणं—क्षपणकालं वर्जयित्वा । एतदुक्तं भवति—क्षपणकाले सम्यग्दृष्टिरपि सम्यक्त्वसम्यग्मिथ्यात्वयोरुत्कृष्टमनुभागं विनाशयति, तेन क्षपणकालो वर्ज्यते । तथा चोक्तं पञ्चसंग्रहमूलटीकायाम्—" सम्यग्दृष्टयो मिथ्यादृष्टयश्च सम्यक्त्वसम्यग्मिथ्यात्वयोर्नोत्कृष्टमनुभागं विनाशयन्ति, अपि तु क्षपकः सम्यग्दृष्टिर्विनाशयति, उभयोरपि दृष्टयोरिति " मिथ्यादृष्टिः पुनः सर्वासामपि शुभप्रकृतीनां संक्लेशेनाशुभप्रकृतीनां तु विशुद्ध्याऽन्तर्मुहूर्तात्परत उत्कृष्टमनुभागमवश्यं विनाशयति ।

तदेवं जघन्यानुभागसंक्रमस्वामित्वप्रतिपादनाय भावना कृता । सम्प्रति जघन्यानुभागसंक्रमस्वामित्वमेवाह—

अंतरकरणा उवरिं, जहन्नठिइसंकमो उ जस्स जहिं ।
घाईणं नियगचरम-रसखंडे दिट्ठिमोहदुगे ॥ ५७ ॥

'अंतरकरण' त्ति-अन्तरकरणादूर्ध्वं घातिकर्मप्रकृतीनां मध्ये यस्याः प्रकृतेर्यत्र गुणस्थानके जघन्यस्थितिसंक्रम उक्तः, तस्यास्तत्र जघन्यानुभागसंक्रमोऽपि वेदितव्यः । एतदुक्तं भवति—अन्तरकरणे कृते सति अनिवृत्तिबादरसंपरायक्षपको नवनोकषायसंज्वलनचतुष्टयानां क्षपणक्रमेण जघन्यस्थितिसंक्रमणकाले जघन्यानुभागसंक्रमं करोति, ज्ञानावरणपञ्चकान्तरायपञ्चकचक्षुरचक्षुरवधिकेवलदर्शनावरण—निद्राप्रचलारूपदर्शनाऽऽवरणषट्कानां क्षीणकषायः समयाधिकावलिकाशेषायां स्थितौ वर्तमानो जघन्यानुभागसंक्रमं करोति'नियगे'त्यादि दर्शनमोहनीयद्विकस्य सम्यक्त्वसम्यग्मिथ्यात्वरूपस्य क्षपणकाले निजकचरमरसखण्डे आत्मीयात्मीयचरमरसखण्डसंक्रमणकाले जघन्यानुभागसंक्रमो भवति ।

आऊण जहणठिई, बंधिय जाव त्थि संकमो ताव ।
उव्वलणतित्थसंजो-यणा य पढमालियं गंतुं ॥ ५८ ॥

' आऊण ' त्ति चतुर्णामप्यायुषां जघन्यां स्थितिं बद्धा,जघन्यां हि स्थितिं बध्नन् जघन्यमनुभागं बध्नातीति जघन्यस्थितिग्रहणम् । ततो जघन्यां स्थितिं बद्धा बन्धावलिकाया परतस्तावज्जघन्यानुभागं संक्रमयति यावत्समयाधिकावलिका शेषा भवति । ततो जघन्यां स्थितिं बद्धा यावदस्ति संक्रमस्तावज्जघन्यानुभागसंक्रमं प्राप्यते । तथा नरकद्विकमनुजद्विकदेवद्विकवैक्रियसप्तकाहारकसप्तकोच्चैर्गोत्रलक्षणानामेकविंशत्युद्वलनप्रकृतीनां तीर्थकरस्यानन्तानुबन्धिनां च जघन्यमनुभागं बद्धा प्रथमावलिकां बन्धावलिकालक्षणां गत्वाऽतिक्रम्य, बन्धावलिकायाः परत इत्यर्थः । जघन्यमनुभागं संक्रमयति । कः संक्रमयतीति चेदुच्यते—वैक्रियसप्तकदेवद्विकनरकद्विकानामसंज्ञिपञ्चेन्द्रियः, मनुष्यद्विकोच्चैर्गोत्रयोः सूक्ष्मनिगोदः, आहारकसप्तकस्याप्रमत्तः, तीर्थकरस्याविरतसम्यग्दृष्टिः, अनन्तानुबन्धिनां पश्चात्कृतसम्यक्त्वो मिथ्यादृष्टिः संक्रमयतीति ।

सेसाण सुहुमहयसं-तकम्मिगो तस्स हेट्ठओ जाव ।
बंधइ तावं एगिं-दिओ वऽणेगिंदिओ वाऽवि ॥५९॥

'सेसाण'त्ति—उक्तशेषाणां शुभानामशुभानां प्रकृतीनां सप्तनवतिसंख्यानां यः सूक्ष्मैकेन्द्रियो वायुकायिकोऽग्निकायिको वा हतसत्कर्मा , हत—विनाशित प्रभूतमनुभागसत्कर्म येन स हतसत्कर्मा , स तस्यात्मसत्कस्यानुभागसत्कर्मणोऽधस्तात्, ततः स्तोकतरमित्यर्थः, अनुभागं तावद्बध्नाति यावदेकेन्द्रियस्तस्मिन्नन्यस्मिन् वा एकेन्द्रियभवे वर्तमानोऽनेकेन्द्रियो वेति, स एव हतसत्कर्मा एकेन्द्रियोऽन्यस्मिन् द्वीन्द्रियादिभवे वर्तमानो यावदन्यं बृहत्तरमनुभाग न बध्नाति तावत्तमेव जघन्यमनुभागं संक्रमयति ।



तदेवमुक्तोऽनुभागसंक्रमः । सम्प्रति प्रदेशसंक्रमाभिधानावसरः । तत्र चैतेऽर्थाधिकाराः, तद्यथा—सामान्यलक्षणभेदः साद्यनादिप्ररूपणा । उत्कृष्टप्रदेशसंक्रमस्वामी जघन्यप्रदेशसंक्रमस्वामी च । तत्र सामान्यलक्षणप्रतिपादनार्थमाह—

जं दलियमन्नपगइं, निज्जइ सो संकमो पएसस्स ।
उव्वलणो विज्झाओ, अहापवत्तो गुणो सव्वो ॥६०॥

जं'लि'—यत्संक्रमप्रायोग्यं दलिकं कर्मद्रव्यम् अन्यप्रकृतिं नीयेत अन्यप्रकृतिरूपतया परिणम्यते स प्रदेशसंक्रमः । उक्तं सामान्यलक्षणम् ॥ सम्प्रति भेदमाह—' उव्वलणो ' इत्यादि । प्रदेशसंक्रमः पञ्चधा । तद्यथा—उद्वलनासंक्रमः , विध्यातसंक्रमः , यथाप्रवृत्तसंक्रमः , गुणसंक्रमः , सर्वसंक्रमश्च । तत्र यथोद्देशं निर्देश इति न्यायात्प्रथमत उद्वलनासंक्रमस्य लक्षणमभिधीयते—इहानन्तानुबन्धिचतुष्टयसम्यक्त्वसम्यग्मिथ्यात्वदेवद्विकनरकद्विकवैक्रियसप्तकाहारकसप्तकमनुजद्विकोच्चैर्गोत्रलक्षणानां सप्तविंशतिप्रकृतीनां प्रथमतः पल्योपमासंख्येयभागमात्रं स्थितिखण्डमन्तर्मुहूर्तेन कालेनोत्किरति । ततः पुनरपि द्वितीयं स्थितिखण्डं पल्योपमासंख्येयभागमात्रमेव , केवलं प्रथमात् स्थितिखण्डात् विशेषहीनमन्तर्मुहूर्तेन कालेनोत्किरति । ततोऽपि तृतीयं स्थितिखण्डं पल्योपमासंख्येयभागमात्रम् , द्वितीयात् स्थितिखण्डात् विशेषहीनमन्तर्मुहूर्तेन कालेनोत्किरति । एवं पल्योपमासंख्येयभागमात्राणि स्थितिखण्डानि पूर्वस्मात् पूर्वस्मात् स्थितिखण्डाद्विशेषहीनानि तावद्वाच्यानि यावत् द्विचरमं स्थितिखण्डम् सर्वाण्यपि च तानि प्रत्येकमन्तर्मुहूर्तेन कालेनोत्कीर्यन्ते । इह च द्विधा प्ररूपणा—अनन्तरोपनिधया, परम्परोपनिधया च । तत्रानन्तरोपनिधया प्रथमस्थितिखण्डस्य प्रभूता स्थितिः । ततो द्वितीयस्य विशेषहीना । ततोऽपि तृतीयस्य विशेषहीना । एवं यावद् द्विचरमं स्थितिखण्डम् । कृताऽनन्तरोपनिधया प्ररूपणा ॥ संप्रति परम्परोपनिधया क्रियते—तत्र प्रथमस्थितिखण्डापेक्षया कानिचित् स्थितिखण्डानि स्थित्यपेक्षयाऽसंख्येयभागहीनानि,कानिचित्संख्येयभागहीनानि,कानिचित् संख्येयगुणहीनानि, कानिचिदसंख्येयगुणहीनानि । यदा तु प्रदेशपरिमाणं चिन्त्यते, तदा प्रथमस्थितिखण्डात् द्वितीयं स्थितिखण्डं दलिकापेक्षया विशेषाधिकम् । ततोऽपि तृतीयं विशेषाधिकम्,एवं तावद्वाच्यं यावत् द्विचरमं स्थितिखण्डम् । इयमनन्तरोपनिधा । परम्परोपनिधा पुनरियम्-प्रथमात् स्थितिखण्डाद्दलिकमपेक्ष्य किंचिदसंख्येयभागाधिकम् , किंचित्संख्येयभागाधिकम् ,किंचित्संख्येयगुणाधिकम् ,किंचिदसंख्येयगुणाधिकम् , स्थितिखण्डानां चोत्करणविधिरयम्-प्रथमसमये स्तोकं दलिकमुत्किरति । द्वितीये समयेऽसंख्ये-

यगुणम्। ततोऽपि तृतीयसमयेऽसंख्येयगुणम्। एवं तावद्वाच्यं यावदन्तर्मुहूर्तस्य चरमसमयः। गुणकारश्चात्र पल्योपमासंख्येयभागलक्षणो वेदितव्यः। एवं सर्वेष्वपि स्थितिखण्डेषु द्रष्टव्यम्। दलिकं चोत्कीर्य क्व प्रक्षिप्यत इति चेदुच्यते-किंचित्स्वस्थाने किंचित्परस्थाने। तत्र कियत्प्रक्षिप्यत इति विशेषतो निरूप्यते-प्रथमे स्थितिखण्डे प्रथमसमये यत्कर्मदलिकमन्यप्रकृतिषु प्रक्षिपति तत् स्तोकम्। यत् स्वस्थान एवाधस्तात्प्रक्षिप्यते तत्ततोऽसंख्येयगुणम्। ततोऽपि द्वितीयसमये यत्स्वस्थाने प्रक्षिप्यते तदसंख्येयगुणम्। परप्रकृतिषु पुनर्यत् प्रक्षिप्यते तत्प्रथमसमयपरस्थानप्रक्षिप्ताद्विशेषहीनम्। तृतीयसमये यत्स्वस्थाने प्रक्षिप्यते तत् द्वितीयसमयस्वस्थानप्रक्षिप्तादसंख्येयगुणम्। यत्पुनः परप्रकृतिषु प्रक्षिप्यते,तत् द्वितीयसमयपरस्थानप्रक्षिप्ताद्विशेषहीनम्। एव तावद्वाच्यं यावदन्तर्मुहूर्तचरमसमय। एवं सर्वेष्वपि स्थितिखण्डेषु द्विचरमस्थितिखण्डपर्यवसानेषु वाच्यम्।सम्प्रति चरमखण्डस्य विधिरुच्यते-चरमस्थितिखण्डं द्विचरमस्थितिखण्डापेक्षयाऽसंख्येयगुणं तदपि चरमस्थितिखण्डमन्तर्मुहूर्तेन कालेनोत्कीर्यते। तस्य च यत्प्रदेशाग्रं तदुदयावलिकागतं मुक्त्वा शेषं सर्वं परस्थाने प्रक्षिपति। तच्चैवम्-प्रथमसमये स्तोकं, द्वितीये समयेऽसंख्येयगुणं, ततोऽपि तृतीयसमयेऽसंख्येयगुणम्, एवं यावच्चरमसमय। चरमसमये तु यत्परप्रकृतिषु प्रक्षिप्यते दलिकं स सर्वसंक्रम उच्यते। तत्र यावत्प्रमाणं द्विचरमस्थितिखण्डसत्कं कर्मदलिकं चरमसमये परप्रकृतिषु संक्रमयति. तावत्प्रमाणं चेच्चरमस्थितिखण्डस्य कर्मदलिकं प्रतिसमयमपह्रियते तर्हि तच्चरमं स्थितिखण्डमसंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिर्निर्लेपीभवति एषा कालतो मार्गणा। क्षेत्रत पुनरियम्—यावत्प्रमाणं द्विचरमस्थितिखण्डसत्कं कर्मदलिकं परप्रकृतिषु संक्रमयति, तावत्प्रमाणं कर्मदलिकं चरमस्थितिखण्डस्य सत्कमेकत्रापह्रियते, अन्यत्र एक आकाशप्रदेश। एवमपह्रियमाणं चरमस्थितिखण्डमङ्गुलमात्रक्षेत्रगतप्रदेशराशेरसंख्येयतमेन भागेनापह्रियते। अङ्गुलस्यासंख्येयतमे भागे यावन्त आकाशप्रदेशास्तावन्ति चरमस्थितिखण्डे यथोक्तप्रमाणानि खण्डानि भवन्तीत्यर्थः। यावत्प्रमाणं पुनर्द्विचरमस्थितिखण्डसत्कं कर्मदलिकं स्वस्थाने संक्रमयति, तावत्प्रमाणं चेच्चरमस्थितिखण्डस्य कर्मदलिकं प्रतिसमयमपह्रियते तर्हि तच्चरमं स्थितिखण्डं पल्योपमासंख्येयभागमात्रगतैः समयैर्निर्लेपीभवति।

तदेवमुक्तमुद्वलनासंक्रमलक्षणम्। सम्प्रत्येतदेव लक्षणं योजयन्नाहारकसप्तकस्योद्वलनासंक्रमकारकमाह—

आहारतणू भिन्नमु-हुत्ता अविरइगओ पउव्वलए।
जा अविरतो त्ति उव्वल-इ पल्लभागे असंखतमे ॥६१॥

'आहार' त्ति—आहारकसप्तकसत्कर्माऽविरतिर्विरत्यभावं गतः सन् अन्तर्मुहूर्तात्परत आहारकतनुम्, इहाहारकग्रहणेनाहारकसप्तकं गृहीतं द्रष्टव्यम्। तत आहारकसप्तकम्। 'पउव्वलए' त्ति प्रोद्वलयति। कियता पुन कालेनोद्वलयतीति चेदुच्यते—यावदविरतिस्तावदुद्वलयति। एतेनाविरतिप्रत्यया आहारकसप्तकस्योद्वलना प्रतिपादिता द्रष्टव्या। अविरतिश्चानन्तमपि कालं यावद्भवति, ततो नियममाह—' पल्लभागे असंखतमे' पल्योपमस्यासंख्येयतमेन भागेन-सर्वमुद्वलयतीत्यर्थः।

अंतोमुहुत्तमद्धं, पल्लासंखिज्जमित्तठिइखंडं।
उक्किरइ पुणो वि तहा, ऊणूणमसंखगुणहं जा ॥ ६२ ॥

'अंतोमुहुत्तं' ति-अन्तर्मुहूर्तप्रमाणामद्धा यावदन्तर्मुहूर्तेन-कालेनेत्यर्थ। पल्योपमासंख्येयभागमात्रं स्थितिखण्डमुत्किरति। एष विधि. प्रथमखण्डस्य॥ तत. पुनरपि तथा तेनैव प्रकारेणान्तर्मुहूर्तेन कालेनान्यत् पल्योपमासंख्येभागमात्रं खण्डं पूर्वस्मादूनमूनतरमुत्किरति। एवं तावद्वाच्यं यावद् द्विचरमं स्थितिखण्डम्। तच्च प्रथमस्थितिखण्डापेक्षया-ऽसंख्येयगुणहीनम्।

तं दलियं सत्थाणे, समए समए असंखगुणियाए।
सेढीए परठाणे विसेसहाणीए संछुभइ ॥ ६३ ॥

'तं' ति—तदुत्कीर्यमाणं दलिकं समये समये स्वस्थाने असंख्येयगुणितया श्रेण्या संछुभते—प्रक्षिपति। यत्पुन. परस्थाने परप्रकृतौ तद्विशेषहान्या। तद्यथा-प्रथमसमये यत् परप्रकृतौ प्रक्षिपति तत् स्तोकम्। यत्पुनः स्वस्थाने एवाधस्तात् प्रक्षिप्यते, तत्ततोऽसंख्येयगुणम्। ततोऽपि द्वितीयसमये यत् स्वस्थाने प्रक्षिप्यते तदसंख्येयगुणम्। परप्रकृतिषु पुनर्यत् प्रक्षिप्यते तत्प्रथमसमये परस्थानप्रक्षिप्ताद्विशेषहीनम्। एवं तावत्प्रतिसमयं वाच्यं यावदन्तर्मुहूर्तस्य चरमसमय.। एष प्रथमस्थितिखण्डस्योत्करणविधि.। एवमन्येषामपि द्रष्टव्यम्।

जं दुचरमस्स चरिमे, अन्नं संकमइ तेण सव्वं पि।
अंगुलअसंखभागे-ण हीरए एस उव्वलणा ॥ ६४ ॥

'जं' ति-द्विचरमस्थितिखण्डस्य चरमसमये यत् कर्मदलिकमन्यां प्रकृतिं संक्रमयति, तेन मानेन—तावत्प्रमाणेन दलिकेनेत्यर्थ.। यदि चरमं स्थितिखण्डमपह्रियते, ततः कालतोऽसंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरपह्रियते क्षेत्रतः पुनरङ्गुलमात्रक्षेत्रासंख्येयतमेन भागेन। एषा प्रागुक्ता द्विचरमस्थितिखण्डं यावदाहारकसप्तकस्योद्वलना।

सम्प्रति चरमस्थितिखण्डकस्य वक्तव्यतामाह-

चरममसंखिज्जगुणं, अणुसमयमसंखगुणियसेढीए।
देइपरत्थाणे ए- वं संछुभतीणि(एव)मविकसिणो ॥६५॥

'चरमं' ति-द्विचरमस्थितिखण्डाच्चरमं स्थितिखण्डं स्थित्यपेक्षयाऽसंख्येयगुणम्। तथा तस्य चरमखण्डस्य यत्प्रदेशाग्रं तदुदयावलिकागतं मुक्त्वा शेष परस्थाने परप्रकृतिषु। अनुसमयम्-प्रतिसमयम् असंख्येयगुणतया श्रेण्या प्रक्षिपति। तद्यथा-प्रथमसमये स्तोकम्, द्वितीयसमयेऽसंख्येयगुणम्, तृतीयसमयेऽसंख्येयगुणम्। एवं यावच्चरमसमय। एवममुना प्रकारेण परप्रकृतौ प्रक्षिप्यमाणाना प्रकृतीनाम्। अपिः सम्भावने। चरमसमये य. कृत्स्नसंक्रमो भवति स सर्वसंक्रम.। एतेन सर्वसंक्रमस्य लक्षणं प्रतिपादितं द्रष्टव्यम्।

सम्प्रति वेदकसम्यक्त्वादीनामुद्वलनासंक्रमकारकानाह-

एवं मिच्छद्दिट्ठि-स्स वेयगं मीसगं ततो पच्छा।

एगिंदियस्स सुरदुग-मश्रो स वेउव्विनिरयदुगं ॥६६॥

'एवं' ति-अष्टाविंशतिसत्कर्मा मिथ्यादृष्टिः प्रथमत एवमुपदर्शितेन प्रकारेण सम्यक्त्वमुद्वलयति, ततः सम्यग्मिथ्यात्वम्। तथा एकेन्द्रियाहारकसप्तकरहिता या नामकर्मणः पञ्चनवतिप्रकृतयस्तत्सत्कर्मा देवगतिदेवानुपूर्व्यौ पूर्वोक्तेन विधिना युगपदुद्वलयति ततोऽनन्तरं वैक्रियसप्तकं नरकद्विकं च युगपदुद्वलयति।

सुहुमतसेगो उत्तम-मश्रो य नरदुगमहानियट्टिम्मि।
छत्तीसाए नियगे, संजोयणदिट्ठिजुयले य॥ ६७॥

'सुहुम' त्ति-सूक्ष्मत्रसस्तैजस्कायिको वायुकायिकश्च। उत्तमं गोत्रमुच्चैर्गोत्रम्। प्रथमतः पूर्वोक्तेन विधिनोद्वलयति। ततो नरद्विकं-मनुजगतिमनुजानुपूर्वीलक्षणम्। तदेवं मिथ्यादृष्टेरुद्वलना प्रतिपादिता॥ सम्प्रति सम्यग्दृष्टेः प्रतिपाद्यते—'अहानियट्टिम्मि छत्तीसाए' त्ति अथशब्दोऽधिकारान्तरसूचकः। किमिदमधिकारान्तरमिति चेदुच्यते—प्राक्तनीनां प्रकृतीनामुद्वलना पल्योपमासंख्येयभागमात्रेण कालेन भवति यथायोगं मिथ्यादृष्टेश्च, वक्ष्यमाणानां चान्तर्मुहूर्तेन कालेन सम्यग्दृष्टीनां चेत्यधिकारान्तरता। अनिवृत्तावनिवृत्तबादरसम्पराये षट्त्रिंशत्प्रकृतीनामुद्वलना। एतदुक्तं भवति-अनिवृत्तिबादरसम्परायः क्षपकः स्त्यानर्द्धित्रिकनामत्रयोदशकाप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टकनवनोकषायसंज्वलनक्रोधमानमायालक्षणाः षट्त्रिंशत्प्रकृतीः स्वस्वक्षपणकालेऽन्तर्मुहूर्तेन कालेनोद्वलयति। 'नियगे' इत्यादि,निजके-आत्मीये क्षपके-स्वक्षपके,अविरतसम्यग्दृष्ट्यादावित्यर्थः। संयोजनदृष्टियुगले च। अत्र षष्ठ्यर्थे सप्तमी, संयोजनानामनन्तानुबन्धिनां दृष्टियुगलस्य च मिथ्यात्वसम्यग्मिथ्यात्वयोश्च पूर्वोक्तविधिनोद्वलनाऽन्तर्मुहूर्तेन कालेनावगन्तव्या।

तदेवमुद्वलनासंक्रम उक्तः। सम्प्रति विध्यातसंक्रमस्य लक्षणमाह—

जासि न बंधो गुणभव-पच्चयश्रो तासि होइ विज्झाश्रो।
अंगुलअसंखभागो, ववहारो तेण सेसस्स॥ ६८॥

'जासि' त्ति—यासां प्रकृतीनां गुणप्रत्ययतो भवप्रत्ययतो वा बन्धो न भवति तासां विध्यातसंक्रमोऽवसेयः। कास्ता भवप्रत्ययतो गुणप्रत्ययतो वा बन्धं नायान्तीति चेदुच्यते—इह या मिथ्यादृष्टिगुणस्थानान्ता षोडश प्रकृतयस्तासां सासादनादिषु गुणप्रत्ययतो बन्धो न भवति। सासादनान्तानां पञ्चविंशतिप्रकृतीना सम्यग्मिथ्यादृष्ट्यादिषु, अविरतसम्यग्दृष्ट्यन्तानां दशाना देशविरतादिषु, देशविरतान्ताना च चतसृणा प्रमत्तादिषु, प्रमत्तान्तानां षण्णामप्रमत्तादिषु, गुणप्रत्ययतो बन्धो न भवति। ततस्तासां तत्र तत्र विध्यातसंक्रमः प्रवर्तते। तथा वैक्रियसप्तकदेवद्विकनरकद्विकैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातिस्थावरसूक्ष्मसाधारणापर्याप्ताऽऽतपलक्षणाना विंशतिप्रकृतीनां नैरयिका मिथ्यात्वादिरूपे हेतौ विद्यमानेऽपि भवप्रत्ययतो बन्धका न भवन्ति। नरकद्विकदेवद्विकवैक्रियसप्तकद्वित्रिचतुरिन्द्रियजातिसूक्ष्मापर्याप्तसाधारणानां सप्तदशप्रकृतीना समस्ता अपि देवा भवप्रत्ययतो बन्धका नोपजायन्ते। एकेन्द्रियजात्यातपस्थावरनाम्नामपितु सनत्कुमारादयः। संहननषट्कसमचतुरस्रवर्जसंस्थानपञ्चकनपुंसकवेदमनुजद्विकौदारिकसप्तकतिर्यगेकान्तयोग्यस्थावरादिप्रकृतिदशकदुर्भगादित्रिकनीचैर्गोत्राप्रशस्तविहायोगतिप्रकृतीनां त्वसंख्येयवर्षायुषः। एवं यस्य यत् यत् कर्म भवप्रत्ययतो गुणप्रत्ययतो वा न बन्धमायाति तत्तत्तस्य तस्य विध्यातसंक्रमयोग्यं वेदितव्यम्। दलिकप्रमाणनिरूपणार्थमिदमाह-'अंगुले' त्यादि यावत्प्रमाणं कर्मदलिकं प्रथमसमये विध्यातसंक्रमेण परप्रकृतिषु प्रक्षिप्यते, तेन मानेन शेषस्य दलिकस्यापहारे क्रियमाणेऽङ्गुलस्यासंख्येयतमेन भागेनापहारो भवति। इयमत्र भावना-यावत्प्रमाणं प्रथमसमये कर्मदलिकं विध्यातसंक्रमेण प्रकृत्यन्तरे प्रक्षिप्यते, तावत्प्रमाणैः खण्डैः शेषं सर्वमपि तत्प्रकृतिगतं दलिकमपह्रियमाणमङ्गुलमात्रस्य क्षेत्रस्यासंख्येयतमे भागे यावन्त आकाशप्रदेशास्तावत्संख्याकैरपह्रियते। इदं क्षेत्रतो निरूपणम्। कालतस्त्वसंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरपहारः। अयं च विध्यातसंक्रमः प्रायो यथाप्रवृत्तसंक्रमावसाने वेदितव्यः। ( गुणसंक्रमस्य लक्षणं 'गुणसंकम' शब्दे तृतीयभागे ६३० पृष्ठे गतम्। )

सम्प्रति यथाप्रवृत्तसंक्रामस्य लक्षणं प्रतिपादयति-

बंधे अहापवत्तो, परित्तिश्रो वा अबंधे वि॥ ६९॥

'बंधे'इत्यादि,ध्रुवबन्धिनीनां प्रकृतीनां बन्धे सति यथाप्रवृत्तसंक्रमः प्रवर्तते। 'परित्तिश्रो वा इति,'परि'त्ति अनेन परावर्तमानाः प्रकृतय उच्यन्ते। तासामबन्धेऽपि आस्तां बन्धे-इत्यपिशब्दार्थः, यथाप्रवृत्तसंक्रमो भवति। इयमत्र भावना-सर्वेषामपि संसारस्थानमसुमतां ध्रुवबन्धिनीनां बन्धे परावर्तमानप्रकृतीनां तु स्वस्वभवबन्धयोग्यानां बन्धेऽबन्धे वा यथाप्रवृत्तसंक्रमो भवति।

सांप्रतमेतैरेवोद्वलनासंक्रमविध्यातसंक्रमगुणसंक्रमयथाप्रवृत्तसंक्रमैरपहारकालस्याल्पबहुत्वमभिधीयते-

थोवोवहारकालो, गुणसंकमणेण संखगुणणाए।
सेसस्स ऽहापवत्ते, विज्झाए उव्वलणनामे॥ ७०॥

'थोवो' त्ति-उद्वलनासंक्रमाभिधानावसरे यत्प्रागभिहितं चरमखण्डं तच्छेषमित्युच्यते। तस्य शेषस्य यदि गुणसंक्रममानेनापहारः क्रियते, ततोऽन्तर्मुहूर्तमात्रेण कालेन सकलमपि तदपह्रियते। ततो गुणसंक्रमेणापहारकालः सर्वस्तोकः। ततो यथाप्रवृत्तसंक्रमेणापहारकालोऽसंख्येयगुणः। यतस्तदेव चरमखण्डं यदि यथाप्रवृत्तसंक्रमेणापह्रियते तर्हि पल्योपमासंख्येयभागमात्रेण कालेनापह्रियते। ततो विध्यातसंक्रमेणापहारकालोऽसंख्येयगुणः। यतस्तदेव चरमखण्डं यदि विध्यातसंक्रमेणापह्रियते ततोऽसंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरपह्रियते। ततोऽप्युद्वलनासंक्रमेणापहारकालोऽसंख्येयगुणः। तथाहि—तदेव चरमखण्डं द्विचरमस्थितिखण्डस्य चरमसमये यत्परप्रकृतौ प्रक्षिप्यते तेन मानेन चेदपह्रियते, ततोऽतिप्रभूताभिरसंख्येयोत्सर्पिण्यवसर्पिणीभिरपह्रियते। ततः पाश्चात्यादयमुद्वलनासंक्रमेणापहारकालोऽसंख्येयगुणः।

इह प्राग्यथाप्रवृत्तसंक्रमस्य कालो नोक्तः, उद्वलनासंक्रमेऽपि यद् द्विचरमं स्थितिखण्डं तस्य चरमसमये स्वस्थाने यत्कर्मदलिकं प्रक्षिप्यते तेन मानेन शेषस्य चरमस्थितिखण्डस्यापहारकालो नोक्तस्ततस्तन्निरूपणार्थमाह—

पल्लासंखियभागेण-हापवत्तेण सेसगऽवहारो ।
उव्वलणेण वि थिवुगो, अणुइन्नाए उ जं उदए ॥७१॥

'पल्ल' त्ति—उद्वलनासंक्रमे यच्चरमं स्थितिखण्डं तस्य यदि यथाप्रवृत्तसंक्रममानेनापहारः क्रियते, तर्हि पल्योपमासंख्येयभागमात्रेण कालेन निःशेषतोऽपहारो भवति। उद्वलनासंक्रमेणापि द्विचरमस्थितिखण्डकस्य चरमसमये यत्स्वस्थाने प्रक्षिप्यते दलिकं तेन मानेन चरमस्थितिखण्डस्यापहारकालः पल्योपमासंख्येयभागलक्षणो वेदितव्यः। तत एतौ द्वावपि तुल्यौ। इहान्योऽपि षष्ठः स्तिवुकसंक्रमोऽस्ति; परं नासौ संक्रमकरणे सम्बध्यते करणलक्षणासम्भवात्। करणं हि सलेश्यं वीर्यमुच्यते। अथ च लेश्यातीतोऽपि भगवानयोगिकेवली द्विचरमसमये द्विसप्ततिप्रकृतीः स्तिवुकसंक्रमेण संक्रमयति। अपि च स्तिवुकसंक्रमेण संक्रान्तं दलिकं न सर्वथा पतद्ग्रहप्रकृतिरूपतया परिणमते, ततो नासौ संक्रमे संबध्यते। परमेषोऽपि संक्रम इति संक्रमप्रस्तावात्तल्लक्षणनिरूपणार्थमाह—'थिवुगो' इत्यादि अनुदीर्णाया-अनुदयप्राप्तायाः सत्कं यत्कर्मदलिकं सजातीयप्रकृतावुदयप्राप्तायां समानकालस्थितौ संक्रमयति संक्रमय्य चानुभवति, यथा मनुजगतावुदयप्राप्तायां शेषं गतित्रयम्, एकेन्द्रियजातौ जातिचतुष्टयमित्यादि स स्तिवुकसंक्रमः। एष एव च प्रदेशानुभवः।

तदेवमुक्तं लक्षणं भेदश्च। सम्प्रति साद्यनादिप्ररूपणा कर्तव्या। तत्र मूलप्रकृतीनां परस्परं संक्रमो न भवति, तत उत्तरप्रकृतीनामेव साद्यनादिप्ररूपणार्थमाह—

धुवसंकमअजहन्नो, ऽणुक्कोसो तासि वा विवज्जित्तु ।
आवरणनवगविग्घं, ओरालियसत्तगं चेव ॥ ७२ ॥
साइयमाइ चउद्धा, सेसविगप्पा य सेसगाणं च ।
सव्वविगप्पा नेया, साई अधुवा पएसम्मि ॥ ७३ ॥

'धुवसंकम' त्ति-प्रागुक्तानां ध्रुवसत्कर्मणां षड्विंशत्युत्तरशतसंख्यानामजघन्यः प्रदेशसंक्रमश्चतुर्धा-चतुष्प्रकारः। तद्यथा—सादिरनादिर्ध्रुवोऽध्रुवश्च। तत्र क्षपितकर्मांशो वक्ष्यमाणलक्षणः क्षपणार्थमभ्युद्यतो ध्रुवसत्कर्मप्रकृतीनां सर्वासामपि जघन्यं प्रदेशसंक्रमं करोति, स च सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यजघन्यः। स चोपशमश्रेण्यां बन्धव्यवच्छेदे सति सर्वासामपि प्रकृतीनां न भवति, ततः प्रतिपाते च भवति; ततोऽसौ साऽऽदिः, तत्स्थानमप्राप्तस्य पुनरनादिः। ध्रुवाध्रुवावभव्यभव्यापेक्षया। अनुत्कृष्टोऽपि प्रदेशसंक्रमो ध्रुवसत्कर्मप्रकृतीनां चतुर्धा। किं सर्वासां नेत्याह—आवरणनवकं ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयलक्षणम्, तथाऽन्तरायपञ्चकमौदारिकसप्तकं च वर्जयित्वा शेषस्य पञ्चोत्तरप्रकृतिशतस्य। तथाहि—सर्वासामपि प्रकृतीनां गुणितकर्मांशे वक्ष्यमाणलक्षणे क्षपणार्थमभ्युद्यते उत्कृष्टः प्रदेशसंक्रमः प्राप्यते, नान्यत्र। ततोऽसौ सादिः। तस्मादन्यः सर्वोऽप्यनुत्कृष्टः; स चोपशमश्रेण्यां व्यवच्छिद्यते, ततः प्रतिपाते च भवति, ततोऽसौ साऽऽदिः-तत्स्थानमप्राप्तस्य पुनरनादिः। ध्रुवाध्रुवावभव्यभव्यापेक्षया। 'सेसे' त्यादि शेषविकल्पाः पञ्चोत्तरशतस्य जघन्य उत्कृष्टश्च ज्ञानावरणीयाद्येकविंशतिप्रकृतीनां जघन्योत्कृष्टानुत्कृष्टाः सादयोऽध्रुवाश्च। तत्र पञ्चोत्तरशतस्य जघन्य उत्कृष्टश्च साद्यध्रुवतया भावित एव ज्ञानावरणीयादीनां चोत्कृष्टः प्रदेशसंक्रमो गुणितकर्मांशे मिथ्यादृष्टौ कदाचिल्लभ्यते, शेषकालं त्वनुत्कृष्टः। तत एतौ द्वावपि साद्यध्रुवौ। जघन्यस्तु साद्यध्रुवतया भावित एव। शेषप्रकृतीनां च सर्वेऽप्युत्कृष्टानुत्कृष्टजघन्याजघन्यविकल्पा अध्रुवसत्कर्मत्वात् मिथ्यात्वध्रुवसत्कर्मणोऽपि सदैव एतद्ग्रहाप्राप्तेर्नीचैर्गोत्रसातासातवेदनीयानां तु परावर्तमानत्वात् सादयोऽध्रुवाश्चावगन्तव्याः।

तदेवं कृता साद्यनादिप्ररूपणा। साम्प्रतमुत्कृष्टप्रदेशसंक्रमस्वामित्वमभिधातव्यम्। तच्च गुणितकर्मांशे लभ्यत इति तन्निरूपणार्थमाह—

जो वायरतसकाले,णूणं कम्मट्ठिइं तु पुढवीए ।
वायर (रि) पज्जत्ताप-ज्जत्तगदीहेयरद्धासु ॥ ७४ ॥
जोगकसा उक्कोसो, वहुसो निच्चमवि आउबंधं च ।
जोगजसेणुवरि-ल्लठिइनिसेगं वहुं किच्चा ॥ ७५ ॥

'जो वायर' त्ति—इह द्विधा त्रसाः—सूक्ष्माः, बादराश्च। तत्र बादरा द्वीन्द्रियादयः, सूक्ष्मास्तेजोवायुकायिकाः। तत्र सूक्ष्मत्रसव्यवच्छेदार्थं बादरग्रहणम्। बादरत्रसानां द्वीन्द्रियादीनां यः कायस्थितिकालः पूर्वकोटीपृथक्त्वाभ्यधिकद्विसहस्रसागरोपमप्रमाणः, तेनोनां कर्मस्थितिं सप्ततिसागरोपमकोटीकोटीप्रमाणां यावत् पृथिव्यां बादरे बादरपृथिवीकायभवेषु स्थित्वा। कथं स्थित्वेत्यत आह—'पज्जत्तापज्जत्तगदीहेयरद्धासु' त्ति दीर्घेतराऽद्धाभ्यां पर्याप्तापर्याप्तयोर्यथासंख्येन योजना। ततोऽयमर्थः—दीर्घाऽद्धं पर्याप्तभवेषु, इतराऽद्धं स्तोकाद्धमपर्याप्तभवेषु। प्रभूतेषु पर्याप्तभवेषु स्तोकेषु चापर्याप्तभवेषु स्थित्वेत्यर्थः। तथा बहुशोऽनेकवारम्। योगकषायोत्कृष्ट उत्कृष्टेषु योगस्थानेषु उत्कृष्टेषु च काषायिकेषु संक्लेशपरिणामेषु वर्तित्वा। इह शेषैकेन्द्रियेभ्यो बादरपृथिवीकायस्य प्रभूतमायुस्तेनाव्यवच्छिन्नं तस्य प्रभूतकर्मपुद्गलोपादानम्। बलवत्तया च तस्यातीव वेदनासहिष्णुत्वम्। तेन तस्य प्रभूतकर्मपुद्गलपरिसाटो न भवतीति बादरपृथिवीकायिकग्रहणम्। अपर्याप्तभवग्रहणं च परिपूर्णकायस्थितिपरिग्रहार्थम्। तेषां चापर्याप्तकभवानां स्तोकानां पर्याप्तकभवानां च प्रभूतानां ग्रहणं प्रभूतकर्मपुद्गलपरिसाटाभावप्राप्त्यर्थम् अन्यथा हि निरन्तरमुत्पद्यमानम्रियमाणेषु बहवः पुद्गलाः परिसटन्ति। न च तेन प्रयोजनम् उत्कृष्टेषु च योगस्थानेषु वर्तमानः प्रभूतं कर्मदलिकमादत्ते, उत्कृष्टसंक्लेशपरिणामश्चोत्कृष्टां स्थितिं बध्नाति प्रभूतां चोद्वर्तयति स्तोकं चापवर्तयति, अतो योगकषायोत्कृष्टग्रहणम्। 'निच्चमि' त्यादि, नित्यं सर्वकालं भवे भवे आयुर्बन्धकाले जघन्ये योगे वर्तमानः—आयुर्बन्धं कृत्वा। उत्कृष्टे हि आयुःप्रायोग्ये योगे वर्तमानः प्रभूतानायुःपुद्गलान् आदत्ते, तथा स्वाभाव्याच्च ज्ञानावरणीयस्य

प्रभूतान् पुद्गलान् परिसाटयति । न च तेन प्रयोजनम् , अतो जघन्ययोगग्रहणम् । तथोपरितनीषु स्थितिषु निषेकं कर्मदलिकन्यासरूपं बहु स्वभूमिकानुसारेणातिशयेन प्रभूतं कृत्वा । एवं बादरपृथ्वीकायिकेषु मध्ये पूर्वकोटिपृथक्त्वाभ्यधिकसागरोपमसहस्रद्वयन्यूनाः सप्ततिसागरोपमकोटीकोटीः संसृत्य ततो विनिर्गच्छति, विनिर्गत्य च बादरत्रसकायेषु द्वीन्द्रियादिषु मध्ये समुत्पद्यते ।

बायरतसेसु तक्का-लमेवमंते य सत्तमखिईए ।
सव्वलहुं पज्जत्तो, जोगकसायाहिओ बहुसो ॥ ७६ ॥

'बायर' त्ति-एवं पूर्वोक्तेन विधिना-"पज्जत्तापज्जत्तग-दीहेयरद्धासु॥ जोगकसाउक्कोसो,बहुसो निच्चमवि आउवन्धं च। जोगजहन्नएणुवरि-ल्लाट्ठिइनिसेगं बहुं किच्चा ॥१॥" इत्येवंरूपेण बादरत्रसेषु तत्कालं बादरत्रसकायस्थितिकालं पूर्वकोटिपृथक्त्वाभ्यधिकसागरोपमसहस्रद्वयप्रमाणं परिभ्रम्य यावतो वारान् सप्तमीं नरकपृथिवीं गन्तुं योग्यो भवति तावतो वारान् गत्वा अन्तिमे सप्तमपृथिवीनारकभवे वर्तमानः । इह दीर्घजीवित्वं योगकषायोत्कटता च लभ्यत इति यावत्सम्भवसप्तमनरकपृथ्वीगमनग्रहणम् । तथा सप्तमपृथ्वीनारकभवे सर्वलघुपर्याप्तः सर्वेभ्योऽप्यन्येभ्यो नारकेभ्यः शीघ्रं पर्याप्तभावमुपगतः । इहापर्याप्तापेक्षया पर्याप्तस्य योगोऽसंख्येयगुणो भवति । तथा च सति तस्यातीव प्रभूतकर्मपुद्गलोपादानसम्भवः । तेन चेह प्रयोजनमिति सर्वलघुपर्याप्त इत्युक्तम् । बहुशश्चानेकवारं च तस्मिन् भवे वर्तमानो योगकषायाधिक उत्कृष्टानि योगस्थानानि उत्कृष्टाश्च काषायिकान् परिणामविशेषान् गच्छन् ।

जोगजवमज्झ उवरिं, मुहुत्तमच्छित्तु जीवियवसाणे ।
तिचरिमदुचरिमसमए, पूरित्तु कसायउक्कस्सं ॥ ७७ ॥
जोगुक्कोसं चरिमदु-चरिमे समए य चरिमसमयम्मि ।
संपुण्णगुणियकम्मो, पगयं तेणेह सामित्ते ॥ ७८ ॥

'जोग' त्ति—योगयवमध्यस्योपरि अष्टसामायिकाना योगस्थानानामुपरीत्यर्थः । अन्तर्मुहूर्तं कालं यावत् स्थित्वा जीवितावसानेऽन्तर्मुहूर्ते आयुषः शेषे । एतदुक्तं भवति—अन्तर्मुहूर्तावशेषे आयुषि योगयवमध्यस्योपरि असंख्येयगुणवृद्ध्याऽन्तर्मुहूर्तं कालं यावत् प्रवर्धमानो भूत्वा । ततः किमित्याह-'तिचरिमे' त्यादि त्रयश्चरमा यस्मात्स त्रिचरमः यत आरभ्यान्तिमः समयस्तृतीयो भवति, स त्रिचरम इत्यर्थः। तस्मिन् भवस्य त्रिचरमे द्विचरमे च समये वर्तमान उत्कृष्टं काषायिकं संक्लेशस्थानं पूरयित्वा चरमे द्विचरमे च समये योगस्थानमपि चोत्कृष्टं पूरयित्वा । इहोत्कृष्टो योग उत्कृष्टश्च संक्लेशो युगपदेकमेव समयं यावत् प्राप्यते, नाधिकमिति विषमसमयतया उत्कृष्टयोगोत्कृष्टकषायस्थानग्रहणम् । त्रिचरमे द्विचरमे च समये उत्कृष्टसंक्लेशग्रहणं प्रभूतोद्वर्तनास्वल्पापवर्तनाभावनार्थं, द्विचरमे चरमे च समये उत्कृष्टयोगग्रहणं परिपूर्णप्रदेशोपचयसम्भवार्थम् । स इत्थंभूतो नारकभवस्य चरमसमये वर्तमानः सम्पूर्णगुणितकर्मांशो भवति, तेन च सम्पूर्णगुणितकर्मांशेन इहोत्कृष्टप्रदेशसंक्रमस्वामित्वे प्रकृतमधिकारः । तदेवमुक्तो गुणितकर्मांशः ।

सम्प्रति स्वामित्वमभिधीयते-

तत्तो उव्वट्टित्ता, आवलिगासमयतब्भवत्थस्स ।
आवरणविग्घचोद्दस-गोरालियसत्त उक्कोसो ॥ ७९ ॥

'तत्तो' त्ति-स गुणितकर्मांशस्ततः सप्तमपृथ्वीरूपान्नरकादुद्वृत्य पर्याप्तपञ्चेन्द्रियतिर्यक्षु मध्ये समुत्पन्नस्ततस्तद्भवस्थस्य तस्मिन् पर्याप्तसंज्ञिपञ्चेन्द्रियभवे तिष्ठतः प्रथमावलिकाया उपरितने चरमे समये ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकौदारिकसप्तकलक्षणानामेकविंशतिप्रकृतीनामुत्कृष्टप्रदेशसंक्रमो भवति । एतासां हि कर्मप्रकृतीनां नारकभवचरमसमये उत्कृष्टयोगवशात् प्रभूतं कर्मदलिकमात्रम् । तच्च बन्धावलिकायामतीतायां संक्रमयति , नान्यथा । अन्यत्र चैतावत् प्रभूतं कर्मदलिकं न प्राप्यत इति 'आवलिगासमयतब्भवत्थस्स' इत्युपात्तम् ।

कम्मचउक्के असुभा-ण बज्झमाणीण सुहुमरागंते ।
संछोभणम्मि नियगे, चउवीसाए नियट्टिस्स ॥ ८० ॥

'कम्मचउक्के' त्ति—कर्मचतुष्के दर्शनावरणवेदनीयनामगोत्रलक्षणे या अशुभाः सूक्ष्मसम्परायावस्थायामबध्यमानाः प्रकृतयो निद्राद्विकासातवेदनीयप्रथमवर्जसंस्थानप्रथमवर्जसंहननाशुभवर्णादिनवकोपघाताप्रशस्तविहायोगत्यपर्याप्तास्थिरासुभगदुर्भगदुःस्वरानादेयायशःकीर्तिनीचैर्गोत्रलक्षणा द्वात्रिंशत्प्रकृतयस्तासां गुणितकर्मांशस्य क्षपकस्य सूक्ष्मसम्परायस्यान्ते चरमसमये उत्कृष्ट प्रदेशसंक्रमो भवति । तथाऽनिवृत्तिबादरस्य गुणितकर्मांशस्य क्षपकस्य मध्यमकषायाष्टकस्त्यानर्द्धित्रिकतिर्यग्द्विकद्वित्रिचतुरिन्द्रियजातिसूक्ष्मसाधारणनोकषायषट्करूपाणां चतुर्विंशतिप्रकृतीनाम् आत्मीये आत्मीये चरमसंक्षोभे चरमसंक्रमे उत्कृष्टः प्रदेशसंक्रमो भवति ।

तत्तो अणंतरागय-समयादुक्कस्स सायबंधद्धं ।
बंधिय असायबंधा, लिगंतसमयम्मि सायस्स ॥ ८१ ॥

'तत्तो' त्ति ततो नरकभवादनन्तरभवे समागतः प्रथमसमयादारभ्य सातवेदनीयमुत्कृष्टां बन्धाऽद्धाम्, उत्कृष्टं बन्धकालं यावदित्यर्थः । बद्धा असातवेदनीयं बद्धुमारभते । ततोऽसातवेदनीयस्य बन्धावलिकान्तसमये सातवेदनीयं सकलमपि बन्धावलिकातीतं भवतीतिकृत्वा तस्मिन् समयेऽसातवेदनीये बध्यमाने सातं यथाप्रवृत्तसंक्रमेण संक्रमयतः सातस्योत्कृष्ट प्रदेशसंक्रमो भवति ।

संछोभणाएँ दोण्हं, मोहाणं वेयगस्स खणसेसे ।
उप्पाइय सम्मत्तं, मिच्छत्तगए तमतमाए ॥ ८२ ॥

'संछोभणाए' त्ति-क्षपकस्य द्वयोर्मोहनीययोर्मिथ्यात्वसम्यग्मिथ्यात्वरूपयोरात्मीयात्मीयचरमसंक्षोभे सर्वसंक्रमेणोत्कृष्टः प्रदेशसंक्रमो भवति । तथा क्षणशेषेऽन्तर्मुहूर्तावशेषे आयुषि तमस्तमाऽभिधानायां सप्तमपृथिव्यां वर्तमान औपशमिकं सम्यक्त्वमुत्पाद्य दीर्घेण च गुणसंक्रमकालेन वेदकसम्यक्त्वपुञ्जं समापूर्य सम्यक्त्वात् प्रतिपतितो मिथ्यात्वं च प्रतिपद्य तत्प्रथमसमय एव वेदकसम्यक्त्वस्य मिथ्यात्वे उत्कृष्टं प्रदेशसंक्रमं करोति ।

भिन्नमुहुत्ते सेसे, तच्चरमावस्सगाणि किच्चेत्थ ।

संजोयणा विसंजो-यगस्स संछोभणा एसिं ॥ ८३ ॥

'भिन्नमुहुत्ते'-त्ति-सगुणितकर्मांशः सप्तमपृथिव्यां वर्तमानो भिन्नमुहूर्तावशेषे आयुषि तस्मिन् भवे यानि चरमावश्यकानि-" जोगजवमज्झउवरिं, मुहुत्तमच्छित्तु जीवियवसाणे। तिचरिमदुचरिमसमए, पूरित्तु कसायउक्कस्सं ॥ १ ॥ " इत्यादिलक्षणानि तानि कृत्वा तस्याश्च सप्तमपृथिव्या उद्धृत्य सम्यक्त्वं चोत्पाद्य वेदकसम्यग्दृष्टिः सन् संयोजनान् अनन्तानुबन्धिनो विसंयोजयति। विसंयोजना क्षपणा। तत एषामनन्तानुबन्धिनां चरमसंक्षोभे सर्वसंक्रमेणोत्कृष्टः प्रदेशसंक्रमो भवति।

ईसाणागयपुरिस-स्स इत्थियाए य अट्ठवासाए।
मासपुहुत्तब्भहिए, नपुंसगे सव्वसंकमणे ॥ ८४ ॥

'ईसाणागय' त्ति-ईशानदेवो गुणितकर्मांशः संक्लेशपरिणामेनैकेन्द्रियप्रायोग्यं बध्नन् नपुंसकवेदं भूयो भूयो बद्ध्वा तत ईशानाच्च्युतः सन् स्त्री वा पुरुषो वा जातः। ततो मासपृथक्त्वाभ्यधिकेष्वष्टसु वर्षेष्वतिक्रान्तेषु क्षपणायोद्यतते। तस्य नपुंसकवेदं क्षपयतश्चरमसंक्षोभे सर्वसंक्रमेण नपुंसकवेदस्योत्कृष्टः प्रदेशसंक्रमो भवति।

इत्थीए भोगभूमिसु, जीवियवासाण संखियाणि तओ।
हस्सठिई देवत्ता, सव्वलहुं सव्वसंछोभे ॥ ८५ ॥

'इत्थीए' त्ति-भोगभूमिषु भूयो भूयोऽसंख्येयवर्षाणि यावत् स्त्रीवेदं बद्ध्वा तत पल्योपमासंख्येयभागे गते सति अकालमृत्युना मृत्वा ह्रस्वस्थितिं दशवर्षसहस्रप्रमाणां देवायुषो बद्ध्वा देवत्वेनोत्पन्नः। तत्रापि तमेव स्त्रीवेदमापूर्य स्वायुःपर्यन्ते मनुजेषु मध्येऽन्यतरवेदसहितो जातः। ततो लघु-शीघ्रं क्षपणायोद्यतः। ततः 'इत्थीए' त्ति तस्य स्त्रीवेदस्य क्षपणसमय-चरमसंक्षोभे सर्वसंक्रमेणोत्कृष्टः प्रदेशसंक्रमो भवति। इहैवमेव स्त्रीवेदस्योत्कृष्टमापूरणमुत्कृष्टश्च प्रदेशसंक्रमः केवलज्ञानेनोपलब्धो नान्यथेत्येषैव युक्तिरत्रानुसर्तव्या, न युक्त्यन्तराणि, युक्त्यन्तराणा चिरन्तनग्रन्थेषु अदर्शनतो निर्मूलतयाऽन्यथाऽपि कर्तुं शक्यत्वात्। एवमुत्तरत्रापि यथायोग तथैव केवलज्ञानेनोपलम्भादित्युत्तरमनुसरणीयम्।

वरिसवरित्थिं पूरिय, सम्मत्तमसंखवासियं लहियं।
गंता मिच्छत्तमओ, जहन्नदेवट्ठिई भोच्चा ॥ ८६ ॥

'वरिसवर' त्ति-वर्षवरो नपुंसकवेदः तमीशानदेवलोके प्रभूतकालमापूर्य भूयो भूयो बन्धेन दलिकान्तरसंक्रमणेन च स्वायुःक्षये ततश्च्युत्वा संख्येयवर्षायुष्केषु मध्ये समागत्य पुनरसंख्येयवर्षायुष्केषु मध्ये समुत्पन्नः। तत्रासंख्येयवर्षाणि यावत् स्त्रीवेदमापूर्य ततोऽसंख्येयवर्षाणि यावत् सम्यक्त्वं लब्ध्वा-आस्वाद्य तद्धेतुकं च पुरुषवेदं तावन्ति वर्षाणि यावत् बध्नन् तत्र स्त्रीवेदनपुंसकवेदयोर्दलिकं निरन्तरं संक्रमयति। ततः पल्योपमासंख्येयभागमात्रं सर्वायुः प्रमाणं जीवित्वा पर्यन्ते च मिथ्यात्वमासाद्य ततो जघन्यस्थितिषु दशवर्षसहस्रप्रमाणस्थितिषु देवेषु मध्ये समुत्पन्नः। तत्र समुत्पन्नः सन् अन्तर्मुहूर्तेन कालेन सम्यक्त्वं प्रतिपद्यते।

आगंतु लहुं पुरिसं, संछुभमाणस्स पुरिसवेयस्स।
तस्सेव सगे कोह-स्स माणमायाणमवि कसिणो ॥ ८७ ॥

'आगंतु' त्ति-ततो देवभवाच्च्युत्वा मनुष्येषु मध्ये समुत्पन्नस्ततो मासपृथक्त्वाभ्यधिकेष्वष्टसु वर्षेष्वतिक्रान्तेषु लघु-शीघ्रं क्षपणायोद्यतते। केवलं बन्धव्यवच्छेदादर्वाक् आवलिकाद्विकेन कालेन यद्बद्धं पुरुषवेददलिकं तदतीव स्तोकमिति-कृत्वा यत्परित्यज्य शेषस्य चरमसंक्षोभे उत्कृष्टः प्रदेशसंक्रमो वेदितव्यः। तथा तस्यैव पुरुषवेदोत्कृष्टप्रदेशसंक्रमस्वामिनः संज्वलनक्रोधस्य संसारे परिभ्रमता उपचितस्य क्षपणकाले प्रकृत्यन्तरदलिकानां गुणसंक्रमेण प्रचुरीकृतस्य स्वके-आत्मीये चरमसंक्षोभे उत्कृष्टः प्रदेशसंक्रमो भवति। अत्रापि बन्धव्यवच्छेदादर्वाक् आवलिकाद्विकेन कालेन यद्बद्धं तन्मुक्त्वा शेषस्य चरमसंक्षोभे उत्कृष्टः प्रदेशसंक्रमो द्रष्टव्यः। एवं मानमाययोरपि वाच्यम्।

चउरुवसमित्तु खिप्पं, लोभजसाणं ससंकमस्संते।
सुभधुवबंधिगनामा, आवलिगं गंतु बंधंता ॥ ८८ ॥

'चउर' त्ति-अनेकभवभ्रमणेन चतुरो वारान् यावन्मोहनीयमुपशमय्य चतुर्थोपशमनानन्तरं शीघ्रमेव क्षपकश्रेणिं प्रतिपन्नस्य तस्यैव गुणितकर्मांशस्य स्वसंक्रमस्यान्ते, चरमसंक्षोभे इत्यर्थः। संज्वलनलोभयशःकीर्त्योरुत्कृष्टः प्रदेशसंक्रमो भवति। इहोपशमश्रेणिं प्रतिपन्नेन सता प्रकृत्यन्तरदलिकानां प्रभूतानां गुणसंक्रमेण तत्र प्रक्षेपात् द्वे अपि सज्वलनलोभयशःकीर्तिप्रकृती निरन्तरमापूर्येते, तत उपशमश्रेणिग्रहणम्। आसंसारं च परिभ्रमता जन्तुना मोहनीयस्य चतुर एव वारान् यावदुपशमः क्रियते, न पञ्चममपि वारम्, ततश्चतुरुपशमय्येत्युक्तम्। तथा संज्वलनलोभस्य चरमसंक्षोभोऽन्तरकरणचरमसमये द्रष्टव्यः न परत, परतस्तस्य संक्रमाभावात्। " अन्तरकरणम्मि कए चरित्तमोहेऽणुपुव्विसंकमणं " इति वचनात्। यशःकीर्तिरपूर्वकरणगुणस्थानके त्रिंशत्प्रकृतिबन्धव्यवच्छेदसमयेऽवगन्तव्या, परतस्तस्याः संक्रमस्याभावात्। 'सुभे' त्यादि या शुभध्रुवबन्धिन्यो नामप्रकृतयस्तैजससप्तकशुक्ललोहितहारिद्रसुरभिगन्धकषायाम्लमधुरमृदुलघुस्निग्धोष्णागुरुलघुनिर्माणलक्षणा विंशतिसंख्याः तासां चतुष्कृत्वो मोहनीयोपशमानन्तरं बन्धान्ताद् बन्धव्यवच्छेदादूर्ध्वमावलिकां गन्तुमावलिकायाः परतो यशःकीर्तौ प्रक्षिप्यमाणानामुत्कृष्टः प्रदेशसंक्रमो लभ्यते। इह गुणसंक्रमेण संक्रान्तं प्रकृत्यन्तरदलिकमावलिकायामतीतायां सत्यामन्यत्र संक्रमणयोग्यं भवति, नान्यथेत्यत उक्तम्-"आवलियं गंतु बंधता " इति।

निद्धसमा य थिरसुभा, सम्मद्दिट्ठिस्स सुभधुवाओ वि।
सुभसंघयणजुयाओ, बत्तीससयोदहिचियाओ ॥ ८९ ॥

'निद्धसम' त्ति स्निग्धलक्षणस्पर्शसमये स्थिरशुभनामनी द्रष्टव्ये। इदमुक्तं भवति-यथाऽनन्तरं शुभध्रुवबन्धिनामप्रकृतीनामन्तर्गतस्य स्निग्धस्पर्शस्योत्कृष्टप्रदेशसंक्रमभावना कृता, तथैतयोरपि स्थिरशुभनाम्नोरवगन्तव्या। एते च स्थिरशुभनामनी अध्रुवबन्धित्वात् पृथगुपात्ते। 'सम्मद्दिट्ठिस्से' त्यादि सम्यग्दृष्टेर्याः शुभध्रुवबन्धिन्यः पञ्चेन्द्रियजाति-

समचतुरस्रसंस्थानपराघातोच्छ्वासप्रशस्तविहायोगतित्रस-बादरपर्याप्तप्रत्येकसुभगसुस्वरादेयलक्षणा द्वादश प्रकृतयः शुभसंहननयुता वज्रर्षभनाराचसंहननसहिताः वज्रर्षभनाराचं हि देवभवे नारकभवे वा वर्तमानाः सम्यग्दृष्टयो बध्नन्ति, न मनुजतिर्यग्भवे, तत्र वर्तमानानां सम्यग्दृष्टीनां देवगतिप्रायोग्यबन्धसम्भवेन संहननबन्धासम्भवात्। ततो नैतत्सम्यग्दृष्टेः शुभध्रुवबन्धीति पृथगुपात्तम्।

तथा द्वात्रिंशदधिकसागरोपमशतचिताः । तथाहि—षट्षष्टिसागरोपमाणि यावत्सम्यक्त्वमनुपालयन् एता बध्नाति। ततोऽन्तर्मुहूर्तं कालं यावत् सम्यग्मिथ्यात्वमनुभूय पुनरपि सम्यक्त्वं प्रतिपद्यते। ततो भूयोऽपि सम्यक्त्वमनुभवन् षट्षष्टिसागरोपमाणि यावदेताः प्रकृतीर्बध्नातीति। तदेवं द्वात्रिंशदभ्यधिकं सागरोपमशतं यावत् सम्यग्दृष्टिर्ध्रुवा आपूर्य, वज्रर्षभनाराचसंहननं तु मनुष्यभवहीनं यथासम्भवमुत्कृष्टं कालमापूर्य,ततः सम्यग्दृष्टेर्ध्रुवा अपूर्वकरणगुणस्थानके बन्धव्यवच्छेदानन्तरमावलिकामात्रं कालमतिक्रम्य यशःकीर्तौ संक्रमयतस्तासामुत्कृष्टः प्रदेशसंक्रमः, तदानीं प्रकृत्यन्तरदलिकानामप्यतिप्रभूतानां गुणसंक्रमेण लब्धानां संक्रमावलिकातिक्रान्तत्वेन संक्रमसंभवात् । वज्रर्षभनाराचसंहननस्य तु देवभवाच्च्युतः सन् सम्यग्दृष्टिर्देवगतिप्रायोग्यं बध्नन् आवलिकामात्रं कालमतिक्रम्योत्कृष्टं प्रदेशसंक्रमं करोति।

पूरित्तु पुव्वकोडी–पुहुत्तसंछोभगस्स निरयदुगं ।
देवगईनवगस्स य, सगबंधंतालिगं गंतुं ॥ ६० ॥

'पूरित्तु' त्ति-नरकद्विकम्-नरकगतिनरकानुपूर्वीलक्षणं पूर्वकोटीपृथक्त्वं यावत्पूरयित्वा,सप्तसु पूर्वकोट्यायुष्केसु तिर्यग्भवेषु भूयो भूयो बद्ध्वेत्यर्थः।ततोऽष्टमभवे मनुष्यो भूत्वा क्षपकश्रेणिं प्रतिपन्नोऽन्यत्र तन्नरकद्विकं संक्रमयन् चरमसंछोभे सर्वसंक्रमेण तस्योत्कृष्टं प्रदेशसंक्रमं करोति। तथा देवगतिनवकं—देवगतिदेवानुपूर्वीवैक्रियसप्तकलक्षणं यदा पूर्वकोटिपृथक्त्वं यावदापूर्याष्टमभवे क्षपकश्रेणिं प्रतिपन्नः सन् स्वकबन्धान्तात् स्वबन्धव्यवच्छेदादनन्तरमावलिकामात्रं कालमतिक्रम्य यशःकीर्तौ प्रक्षिपति तदा तस्योत्कृष्टप्रदेशसंक्रमो भवति। तदानीं हि प्रकृत्यन्तरदलिकानामपि गुणसंक्रमेण लब्धानां संक्रमावलिकातिक्रान्तत्वेन संक्रमः प्राप्यत इति कृत्वा।

सव्वचिरं सम्मत्तं,अणुपालिय पूरइत्तु मणुयदुगं ।
सत्तमखिइनिग्गइए, पढमे समए नरदुगस्स ॥ ६१ ॥

'सव्वचिरं' ति-सर्वचिरं सर्वोत्कृष्टं कालमन्तर्मुहूर्तोनानि त्रयस्त्रिंशत्सागरोपमाणीत्यर्थः सम्यक्त्वमनुपाल्य नारक सप्तमक्षितौ वर्तमानः सम्यक्त्वप्रत्ययं तावन्तं कालं मनुजद्विकं—मनुजगतिमनुजानुपूर्वीलक्षणमापूर्य—बद्ध्वा चरमेऽन्तर्मुहूर्ते मिथ्यात्वं गतः। ततस्तन्निमित्तं तिर्यग्द्विकं तस्य बध्नतो गुणितकर्मांशस्य सप्तमपृथिव्याः सकाशाद्विनिर्गतस्य प्रथमसमये एव मनुजद्विकं यथाप्रवृत्तसंक्रमेण तस्मिन् तिर्यग्द्विके बध्यमाने संक्रमयतस्तस्य मनुजद्विकस्योत्कृष्टः प्रदेशसंक्रमो भवति।

थावरतज्जाआया, वुज्जोयाओ नपुंसगसमाओ ।
आहारगतित्थयरं,थिरसमसुक्कस्स समकालं ॥ ६२ ॥

'थावर'त्ति-स्थावरनाम तथा तज्जातिः-स्थावरजातिः,एकेन्द्रियजातिरित्यर्थः। तथा आतपनाम—उद्योतनाम। एता अतस्रः प्रकृतयो नपुंसकसमाः-नपुंसकवेदस्येव आसामपि प्रकृतीनामुत्कृष्टः प्रदेशसंक्रमो, भावनीय इत्यर्थः। तथा आहारकसप्तकं तीर्थकरनाम च स्थिरसमं वक्तव्यम्। केवलं तदुत्कृष्टस्वकबन्धकालं यावदापूरणीयमभिधातव्यम्। इयमत्र भावना—आहारकसप्तकं तीर्थकरनाम चोत्कृष्टं स्वबन्धकालं यावदापूर्य तत्राहारकसप्तकस्य स्वबन्धकाल उत्कृष्टो देशोनां पूर्वकोटीं यावत्संयममनुपालयतो यावानप्रमत्तताकालस्तावान् सर्वो वेदितव्यः। तीर्थकरनाम्नश्च स्वबन्धकाल उत्कृष्टो देशोनपूर्वकोटीद्वयाभ्यधिकानि त्रयस्त्रिंशत्सागरोपमाणि। तत एतावन्तं कालं यावदापूर्य क्षपकश्रेणिं प्रतिपन्नो यदा बन्धव्यवच्छेदादनन्तरमावलिकामात्रं कालमतिक्रम्य यशःकीर्तौ संक्रमयति, तदा तयोरुत्कृष्टः प्रदेशसंक्रमः।

चउरुवसमित्तु मोहं, मिच्छत्तगयस्स नीयबन्धंतो ।
उच्चागोउक्कोसो, तत्तो लहु सिज्झओ होइ ॥ ६३ ॥

'चउ' त्ति—इह मोहोपशमं कुर्वन् उच्चैर्गोत्रमेव बध्नाति, न नीचैर्गोत्रम्। नीचैर्गोत्रसत्कानि च दलिकानि गुणसंक्रमेणोच्चैर्गोत्रे संक्रमयति । ततश्चतुष्कृत्वो मोहोपशमग्रहणमवश्यं कर्तव्यम्। तत्र चतुरो वारान् मोहनीयमुपशमयन् उच्चैर्गोत्रं च बध्नन् तत्र नीचैर्गोत्रं गुणसंक्रमेण संक्रमयति। चतुष्कृत्वश्च मोहोपशमः किल भवद्वयेन भवति। ततस्तृतीये भवे मिथ्यात्वं गतः सन् नीचैर्गोत्रं बध्नाति, तच्च बध्नन् तत्रोच्चैर्गोत्रं संक्रमयति । ततः पुनरपि सम्यक्त्वमासाद्योच्चैर्गोत्रं बध्नन् तत्र नीचैर्गोत्रं संक्रमयति। एवं भूयो भूय उच्चैर्गोत्रं नीचैर्गोत्रं च बध्नतो नीचैर्गोत्रबन्धव्यवच्छेदानन्तरं शीघ्रमेव सिद्धिं गन्तुकामस्य नीचैर्गोत्रबन्धचरमसमये उच्चैर्गोत्रस्य गुणसंक्रमेण बन्धेन चोपचितीकृतस्योत्कृष्टः प्रदेशसंक्रमो भवति।

तदेवमुत्कृष्टप्रदेशसंक्रमस्वामित्वम्। सम्प्रति जघन्यप्रदेशसंक्रमस्वामित्वमभिधानीयम् । तच्च प्रायः क्षपितकर्मांशे प्राप्यत इति तस्यैव स्वरूपमाह–

पल्लासंखियभागो–ण कम्मठिइमच्छिओ निगोएसु ।
सुहुमे सभवियजोग्गं, जहन्नयं कट्टु निग्गम्म ॥ ६४ ॥
जोग्गे ससंखवारे, सम्मत्तं लभिय देसविरयं च ।
अट्ठक्खुत्तो विरई, संजोयणहा य तइवारे ॥ ६५ ॥
चउरुवसमित्तु मोहं, लहुं खवेंतो भवे खवियकम्मो ।
पाएण तहिं पगयं, पडुच्च काई वि सविसेसं ॥६६॥

'पल्ल'त्ति-यो जीव पल्योपमासंख्येयभागन्यूनां कर्मस्थितिं सप्ततिसागरोपमकोटीकोटीप्रमाणां यावत् पल्योपमासंख्येयभागहीनं सप्ततिसागरोपमकोटीकोटीप्रमाणं कालं यावदित्यर्थः । सूक्ष्मनिगोदेषु सूक्ष्मानन्तकायिकेषु मध्ये उषित्वा। सूक्ष्मनिगोदा हि स्वल्पायुषो भवन्ति, ततस्तेषां प्रभूतजन्ममरणभावेन वेदनार्तानां प्रभूतपुद्गलपरिशाट उपजायते । अपि च—सूक्ष्मनिगोदजीवानां मन्दयोगता म-

न्दकषायत्वं च भवति । ततोऽभिनवकर्मपुद्गलोपादानमपि तेषां स्तोकतरमेव प्राप्यत इति सूक्ष्मनिगोद ( जीवानां मन्दयोग ) ग्रहणम् " अभवियजोग्गं जहन्नयं कट्टु निग्गम्म" त्ति अभव्यप्रायोग्यं जघन्यम् अभव्यप्रायोग्यजघन्यकल्पं प्रदेशसञ्चयं कृत्वा तत. सूक्ष्मनिगोदेभ्यो निर्गत्य योग्येषु- सम्यक्त्वदेशविरतिसर्वविरतियोग्येषु त्रसेषु मध्ये उत्पद्य पल्योपमासंख्येयभागमध्ये संख्यातीतान् वारान् यावत् सम्यक्त्वं स्वल्पकालिकीं देशविरतिं च लब्ध्वा । कथं लब्ध्वेति चेदुच्यते—सूक्ष्मनिगोदेभ्यो निर्गत्य बादरपृथ्वी— कायेषु मध्ये समुत्पन्नस्ततोऽन्तर्मुहूर्तेन कालेन विनिर्गत्य मनुष्येषु पूर्वकोट्यायुष्केषु मध्ये समुत्पन्नः । तत्राऽपि शीघ्रमेव माससप्तकानन्तरं योनिविनिर्गमनेन जातः । ततोऽष्टवार्षिकः सन् संयमं प्रतिपन्न । ततो देशोनां पूर्वकोटीं यावत् संयममनुपाल्य स्तोकावशेषे जीविते सति मिथ्यात्वं प्रतिपन्नस्ततो मिथ्यात्वेनैव कालगत' सन् दशवर्षसहस्रप्रमाणस्थितिषु देवेषु मध्ये देवत्वेनोपजातः । ततोऽन्तर्मुहूर्तमात्रे गते सति सम्यक्त्वं प्रतिपद्यते । ततो दशवर्षसहस्राणि जीवित्वा तावन्तं च कालं सम्यक्त्वमनुपाल्य पर्यवसानावसरे मिथ्यात्वेन कालगतः सन् बादरपृथिवीकायिकेषु मध्ये समुत्पन्न । ततोऽन्तर्मुहूर्त्तेन ततोऽप्युद्वृत्त्य मनुष्येषु मध्ये समुत्पद्यते । ततः पुनरपि सम्यक्त्वं वा देशविरतिं वा सर्वविरतिं वा प्रतिपद्यते । एवं देवमनुष्यभवेषु सम्यक्त्वादि गृह्णन् मुञ्चंश्च तावद्भ्रमयतो यावत् पल्योपमासंख्येयभागमध्ये संख्यातीतान् वारान् यावत् सम्यक्त्वलाभ' स्वल्पकालिकश्च देशविरतिलाभो भवति । इह यदा यदा सम्यक्त्वादिप्रतिपत्तिस्तदा तदा बहुप्रदेशा' प्रकृतीरल्पप्रदेशाः करोति । ततो बहुश. सम्यक्त्वादिप्रतिपत्तिग्रहणम् । एतेषु च सम्यक्त्वादियोग्येषु भवेषु मध्येऽष्टौ वारान् सर्वविरतिं प्रतिपद्यते तावत् एव वारान्; अष्टौ वारानित्यर्थः । विसंयोजनहा—अनन्तानुबन्धिविघातको भूत्वा । तथा चतुरो वारान्मोहनीयमुपशमय्य ततोऽन्यस्मिन् भवे लघु—शीघ्रं कर्माणि क्षपयन् क्षपितकर्मांश इत्यभिधीयते । एतेन च क्षपितकर्मांशेनेह जघन्यप्रदेशसंक्रमस्वामित्वे चिन्त्यमाने प्रायेण—बाहुल्येन प्रकृतमधिकार. । काश्चित्पुन. प्रकृतीरधिकृत्य सविशेषं भणिष्यामि ।

तत्र जघन्यप्रदेशसंक्रमस्वामित्वमाह—

**आवरणसत्तगम्मि उ, सहोहिणा तं विणोहिजुयलम्मि ।**
**निद्दादुगंतराइय–हासचउक्के य बंधंते ॥ ९७ ॥**

' आवरण ' त्ति-अवधिना सह वर्तते यो जीवः तस्य अवधिज्ञानावरणरहितं ज्ञानावरणचतुष्टयम् , अवधिदर्शनावरणरहितं दर्शनावरणत्रयम् , एतासा सप्तानां प्रकृतीनामात्मीयात्मीयबन्धव्यवच्छेदसमये यथाप्रवृत्तसंक्रमेण जघन्य. प्रदेशसंक्रमो भवति । अवधिज्ञानमुत्पादयन् प्रभूतान् कर्म— पुद्गलान् परिसाटयति स्म । तत एतासां स्वस्वबन्धव्यवच्छेदसमये स्तोका एव पुद्गला. प्राप्यन्ते । अत्रापि च जघन्यप्रदेशसंक्रमेणाधिकार , ततोऽवधिना सह यो वर्तत- इत्युक्तम् । तथा तमवधिं विनाऽवधिज्ञानावधिदर्शनरहित इत्यर्थ. । अवधियुगले-अवधिज्ञानावरणावधिदर्शनावरणरूपे स्वस्वबन्धव्यवच्छेदसमये जघन्यः प्रदेशसंक्रमो भवति । अवधिज्ञानमवधिदर्शनं चोत्पादयतः प्रबलक्षयोपशमभावतोऽवधिज्ञानावरणावधिदर्शनावरणयोरतीव रूक्षाः कर्मपुद्गला जायन्ते । ततो बन्धव्यवच्छेदकालेऽपि प्रभूताः परिसटन्ति । तथा च सति जघन्य. प्रदेशसंक्रमो न लभ्यत इति 'तं विणे' त्युक्तम् । ' निद्दे ' त्यादि निद्राद्विकं—निद्राप्रचलारूपम् , अन्तरायपञ्चकं, हास्यचतुष्कं—हास्यरतिभयजुगुप्सालक्षणम्, एतासामेकादशप्रकृतीनां स्वबन्धान्तसमये यथाप्रवृत्तसंक्रमेण जघन्यः प्रदेशसंक्रमो भवति । निद्राद्विकहास्यचतुष्टययोर्बन्धव्यवच्छेदानन्तरं गुणसंक्रमेण संक्रमो जायते । ततः प्रभूतं दलिकं लभ्यते । अन्तरायपञ्चकस्य बन्धव्यवच्छेदानन्तरं संक्रम एव न भवति, पतद्ग्रहाप्राप्तेः, ततो बन्धान्तसमयग्रहणम् ।

**सायस्सऽणुवसमित्ता, असायबंधाणचरिमबंधंते ।**
**खवणाए लोभस्स वि, अपुव्वकरणालिगाअंते ॥ ९८ ॥**

' सायस्स ' त्ति-अनुपशमय्य-मोहनीयोपशममकृत्वा, उपशमश्रेणिमकृत्वेत्यर्थ. । असातबन्धानां मध्ये यश्चरमोऽसातबन्धस्तस्यान्तिमे समये वर्तमानस्य क्षपणायोद्यतस्य सातस्य जघन्य' प्रदेशसंक्रमो भवति । परतो हि सातस्य पतद्ग्रहता भवति, न संक्रम. । ' खवणाए ' इत्यादि मोहनीयोपशममकृत्वा क्षपणायोद्यतस्यापूर्वकरणाद्धायाः प्रथमावलिकाया अन्तसमये संज्वलनलोभस्य जघन्यः प्रदेशसंक्रमः । परतो गुणसंक्रमे लब्धस्यातिप्रभूतस्य दलिकस्य संक्रमावलिकातिक्रान्तत्वेन संक्रमसम्भवात् जघन्यप्रदेश— संक्रमाभाव. ।

**अयरच्छावट्ठिदुगं, गालिय थीवेयथीणगिद्धितिगे ।**
**सगखवणहापवत्त–स्संते एमेव मिच्छत्ते ॥ ९९ ॥**

'अयर' त्ति-सागरोपमाणां द्वे षट्षष्टी यावत्सम्यक्त्वमनुपालयन् स्त्रीवेदस्त्यानर्द्धित्रिकलक्षणाश्चतस्र. प्रकृतीर्गाल— यित्वा तासां सम्बन्धि प्रभूतं कर्मदलिकं परिसाट्य किञ्चिच्छेषाणा सतीनां तासां क्षपणाय समभ्युद्यतस्य यथाप्रवृत्तकरणान्तिमसमये विध्यातसंक्रमेण जघन्यः प्रदेशसं— क्रमो भवति । परतोऽपूर्वकरणे गुणसंक्रमेण पभूतकर्मदलिकसंक्रमसम्भवात् जघन्यप्रदेशसंक्रमो न लभ्यत इति यथाप्रवृत्तकरणान्तसमयग्रहणम् । ' एमेव मिच्छत्त ' इति एवमेव पूर्वोक्तेनैव प्रकारेण मिथ्यात्वस्य जघन्यः प्रदेशसंक्रमोऽवगन्तव्यः । तद्यथा—द्वे षट्षष्टी सागरोपमाणां यावत्सम्यक्त्वमनुपाल्य तावन्तं कालं मिथ्यात्वं गालयित्वा किञ्चिच्छेषस्य मिथ्यात्वस्य क्षपणाय समुद्यतस्य स्वकीययथाप्रवृत्तकरणान्तसमये वर्तमानस्य विध्यातसंक्रमेण मिथ्यात्व स्य जघन्यः प्रदेशसंक्रमो भवति, परतो गुणसंक्रमः प्रवर्तते, तेन स न प्राप्यते ।

**हस्सगुणसंकमद्धा–ए पूरयित्ता समीससम्मत्तं ।**
**चिरसम्मत्ता मिच्छ–त्तगयस्सुव्वलणथोगो सिं ॥१००॥**

'हस्स'त्ति-सम्यक्त्वमुत्पाद्य ह्रस्वया गुणसंक्रमाऽद्धया स्तो-

ककालेन, गुणसंक्रमेणेत्यर्थः। समिश्रं सम्यक्त्वं, सम्यक्त्वसम्यग्मिथ्यात्वे इत्यर्थः। मिथ्यात्वदलेन पूरयित्वा—आपूर्य-चिरेण प्रभूतेन कालेन सम्यक्त्वान्मिथ्यात्वं गतस्य द्वे षट्षष्टी, सागरोपमाणां यावत्सम्यक्त्वमनुपाल्य, मिथ्यात्वं गतस्येत्यर्थः। पल्योपमासंख्येयभागमात्रेण कालेन ते सम्यक्त्वसम्यग्मिथ्यात्वे उद्वलयत. स्तोके उद्वलनसंक्रमे तयोर्जघन्य. प्रदेशसंक्रमो द्विचरमखण्डस्य चरमसमये सम्यक्त्वसम्यग्मिथ्यात्वयोर्यद्दलिकं परस्थाने मिथ्यात्वप्रकृतिरूपे प्रक्षिप्यते स तयोर्जघन्यः, प्रदेशसंक्रम इत्यर्थ ।

संजोयणाण चतुरुव-समित्तु संजोजइत्तु अप्पद्धं।
अयरच्छावट्ठिदुगं, पालियसकहप्पवत्तंते ॥ १०१ ॥

'संजोयणाए' त्ति-चतुरो वारान् मोहनीयमुपशमय्य, चतुष्कृत्वो मोहनीयोपशमनेन किं प्रयोजनमिति चेदुच्यते—प्रभूतपुद्गलपरिसाट. । तथाहि-चारित्रमोहनीयप्रकृतीनामुपशमं कुर्वन् स्थितिघातरसघातगुणश्रेणिगुणसंक्रमै. प्रभूतान् पुद्गलान् परिसाटयतीति। ततश्चतुष्कृत्वो मोहनीयोपशमं कृत्वा मिथ्यात्वं गच्छति । मिथ्यात्वं गतश्च सन् अल्पाद्धाम्—अल्पं कालं यावत् संयोजनान् संयोज्यानन्तानुबन्धिनो बद्धा , तदानीं च चारित्रमोहनीयदलिकं स्वल्पमेव विद्यते , चतुष्कृत्वो मोहोपशमकाले तस्य स्थितिघातादिभिर्घातितत्वात्। ततोऽनन्तानुबन्धिनो वध्नन् तेषु यथाप्रवृत्तसंक्रमेण स्तोकमेव चारित्रमोहनीयदलिकं संक्रमयति। ततोऽन्तर्मुहूर्ते गते सति पुनरपि सम्यक्त्व प्रतिपद्यते। तच्च द्वे षट्षष्टी सागरोपमाणां यावदनुपाल्यानन्तानुबन्धिना क्षपणाय समुद्यतते। तस्य स्वकयथाप्रवृत्तकरणान्तसमये तेषामनन्तानुबन्धिना विध्यातसंक्रमेण जघन्य. प्रदेशसंक्रमो भवति। परतोऽपूर्वकरणे गुणसंक्रम. प्रवर्तते इति स न प्राप्यते।

अट्ठकसायासाए, य असुभधुवबन्धि अथिरतिगे य।
सव्वलहुं खवणाए, अहापवत्तस्स चरिमम्मि ॥१०२॥

'अट्ठ' त्ति—अप्रत्याख्यानप्रत्याख्यानावरणरूपा अष्टौ कषाया. , असातवेदनीयम् , अशुभध्रुवबन्धिन्य. कुवर्णादिनवकोपघातरूपा , अस्थिरत्रिकम्—अस्थिराशुभायशःकीर्तिसञम् , एतासा द्वाविंशतिप्रकृतीना कषायाष्टकरहितानाम् । 'सव्वलहुं' ति सर्वेभ्योऽन्येभ्य. शीघ्रमेव क्षपणायोत्थितस्य मासपृथक्त्वाभ्यधिकेषु अष्टसु वर्षेष्वतिक्रान्तेषु, क्षपणायोद्यतस्येत्यर्थः। अष्टौ कषायान् प्रति देशोना पूर्वकोटीं यावत् संयममनुपाल्य। पञ्चसंग्रहे पुन सर्वा अप्येता. प्रकृतीरधिकृत्य देशोनां पूर्वकोटीं यावत् संयममनुपाल्येत्युक्तम्। क्षपकश्रेणिं प्रतिपन्नस्य यथाप्रवृत्तकरणचरमसमये कषायाष्टकस्य विध्यातसंक्रमेण शेषाणां यथाप्रवृत्तसंक्रमेण जघन्यः प्रदेशसक्रमो भवति।

पुरिसे संजलणतिगे, य घोलमाणेण चरमबद्धस्स।
सगअंतिमे असाए-ण समा अरई य सोगो य ॥१०३॥

'पुरिसे' त्ति—'पुरिसे' इत्यादौ षष्ठ्यर्थे सप्तमी। पुरुषवेदस्य सज्वलनत्रिकस्य च क्रोधमानमायारूपस्य क्षपणाय समुद्यतेन क्षपणश्रेणिं प्रतिपन्नेन स्वस्ववन्धचरमसमये । 'घोलमाणेणं' ति जघन्ययोगिना यद्बद्धं दलिकं तस्य चरमसंक्षोभे जघन्य. प्रदेशसंक्रमो भवति । तथाहि—आसां चतसृणामपि प्रकृतीनां वन्धव्यवच्छेदसमये समयोनावलिकाद्विकबद्ध मुक्त्वाऽन्यत् प्रदेशसत्कर्म न विद्यते। तदपि च प्रतिसमयं संक्रमेण क्षयमुपगच्छति। तावत् यावच्चरमसमयबद्धस्यासंख्येयो भाग. शेषो भवति । ततस्तं सर्वसंक्रमेण संक्रमयतो जघन्यः प्रदेशसंक्रमः। 'असाएण समा अरई य सोगो य' त्ति अरतिशोकावसातसमौ असातवेदनीयस्येवारतिशोकयोर्जघन्य. प्रदेशसंक्रमो भावनीय इत्यर्थ.।

वेउव्विक्कारसगं,उव्वलियं बंधिऊण अप्पद्धं।
जिट्ठठिई निरयाओ, उव्वट्टित्ता अबंधित्तु ॥ १०४ ॥
थावरगयस्स चिरउ-व्वलणो एयस्स एव उच्चस्स।
मणुयदुगस्स य तेउसु,वाउसु वा सुहुमबद्धाणं ॥१०५॥

'वेउव्वि' त्ति-देवद्विकनरकद्विकवैक्रियसप्तकलक्षणं वैक्रियैकादशकम् एकेन्द्रियभवे उद्वर्तमानेनोद्वलितं पुनरपि पञ्चेन्द्रियत्वमुपागतेन सता, अल्पाऽद्धाम्-अल्पकालम् , अन्तर्मुहूर्तं कालं यावदित्यर्थः। बद्धा , ततो ज्येष्ठस्थितिरुत्कृष्टस्थितित्रयस्त्रिंशत्सागरोपमस्थितिक इत्यर्थः । सप्तमनरकपृथिव्या नारको जात. । ततस्तावन्तं कालं यावत् यथायोगं तद्वैक्रियैकादशकमनुभूय ततो नरकादुद्वृत्य पञ्चेन्द्रियतिर्यक्षु मध्ये समुत्पन्न. । तत्र च तद्वैक्रियैकादशकमबद्ध्वा स्थावरेष्वेकेन्द्रियेषु मध्ये समुत्पन्न. । तस्य चिरोद्वलनया पल्योपमासंख्येयभागमात्रेण कालेनोद्वलनया तदुद्वलयतो यत् द्विचरमखण्डस्य चरमसमये प्रकृत्यन्तरे दलिकं संक्रामति , स तस्य वैक्रियैकादशकस्य जघन्य प्रदेशसक्रम । 'एयस्से' त्यादि एतस्यैवानन्तरोक्तस्य जीवस्य पूर्वोक्तेन विधिना तेजोवायुषु मध्ये समागतस्य सूक्ष्मैकेन्द्रियभवे वर्तमानेन यद्बद्धमुच्चैर्गोत्रं मनुजद्विकं च—मनुजगतिमनुजानुपूर्वीलक्षणम् । ते चिरोद्वलनयोद्वलयतो द्विचरमखण्डस्य चरमसमये परप्रकृतौ यद्दलिकं संक्रामति स तयोर्जघन्य. प्रदेशसंक्रम. । इयमत्र भावना—मनुजद्विकमुच्चैर्गोत्रं च प्रथमतस्तेजोवायुभवे वर्तमानेनोद्वलितं, पुनरपि सूक्ष्मैकेन्द्रियभवमुपागतेनान्तर्मुहूर्तं यावद्बद्धम्। तत. पञ्चेन्द्रियभवं गत्वा सप्तमनरकपृथिव्यामुत्कृष्टस्थितिको नारको जात. । तत उद्वृत्य पञ्चेन्द्रियतिर्यक्षु मध्ये समुत्पन्न.। एतावन्तं च कालमबद्ध्वा प्रदेशसंक्रमेण चानुभूय तेजोवायुषु मध्ये समागत. । तस्य मनुजद्विकोच्चैर्गोत्रे चिरोद्वलनयोद्वलयतो द्विचरमखण्डस्य चरमसमये परप्रकृतौ यद्(लिकं)ल सक्रामति स तयोर्जघन्य प्रदेशसंक्रम. ।

ह्रस्सं कालं बंधिय, विरओ आहारसत्तगं गंतुं।
अविरइं महुव्वलत-स्स, जा थोवउव्वलणा ॥ १०६ ॥

'ह्रस्सं' ति-ह्रस्व कालं-स्तोकं कालं यावत् विरतोऽप्रमत्तसंयत सन् आहारकसप्तकं बद्धा कर्मोदयपरिणतिवशात् पुनरप्यविरतिं गत । ततोऽन्तर्मुहूर्तात्परतो महोद्वलनया चिरोद्वलनया पल्योपमासंख्येयभागमात्रेण कालेनोद्वलन-

योद्वलयत. सतो या स्तोकोद्वलना द्विचरमखण्डस्य चरमसमये यत्कर्मदलिकं परप्रकृतिषु प्रक्षिप्यते, सा स्तोकोद्वलना, सा आहारकस्य जघन्य. प्रदेशसंक्रम.।

तेवट्ठिसयं उदही-ण स चउपल्लाहियं अबंधित्ता।
अंते गहप्पवत्तक-रणस्स उज्जोवतिरियदुगे ॥ १०७ ॥

'तेवट्ठिसयं' ति—त्रिषष्ट्यधिकमुदधिशतं सागरोपमाणां शतं चतुष्पल्योपमाधिकं च यावत् स क्षपितकर्मांश. सर्वजघन्यतिर्यग्द्विकोद्योतसत्कर्मा उद्द्योततिर्यग्द्विकमबद्ध्वा यथाप्रवृत्तकरणस्यान्ते चरमसमये उद्द्योततिर्यग्द्विकयोर्जघन्यं प्रदेशसंक्रमं करोति । कथं त्रिषष्ट्यधिकं सागरोपमाणां शतं चतुष्पल्याधिकं च यावदबद्धेति चेदुच्यते—स क्षपितकर्मांशस्त्रिपल्योपमायुष्केषु मनुजेषु मध्ये समुत्पन्नस्तत्र देवद्विकमेव बध्नाति, न तिर्यग्द्विकम् नाप्युद्द्योतम्। तत्र चान्तर्मुहूर्ते शेषे सत्यायुषि सम्यक्त्वमवाप्य ततोऽप्रतिपतितसम्यक्त्व एव पल्योपमस्थितिको देवो जातः । ततोऽप्यप्रतिपतितसम्यक्त्वो देवभवात् च्युत्वा मनुष्येषु मध्ये समुत्पन्न'। ततस्तेनैवाप्रतिपतितेन सम्यक्त्वेन सहित एकत्रिंशत्सागरोपमस्थितिको ग्रैवेयकेषु मध्ये देवो जात ।तत्र चोत्पत्त्यनन्तरमन्तर्मुहूर्तादूर्ध्वं मिथ्यात्वं गत.। ततोऽन्तर्मुहूर्तावशेषे आयुषि पुनरपि सम्यक्त्वं लभते। ततो द्वे षट्षष्टी सागरोपमाणां यावन्मनुष्यानुत्तरसुरादिषु सम्यक्त्वमनुपाल्य तस्या' सम्यक्त्वाऽद्धाया अन्तर्मुहूर्ते शेषे शीघ्रमेव क्षपणाय समुद्यत. । ततोऽनेन विधिना त्रिषष्ट्यधिकं सागरोपमाणां शतं चतुष्पल्याधिकं च यावत्तिर्यग्द्विकमुद्द्योतं च बन्धरहितं भवतीति।

इगविगलिंदियजोग्गा, अट्ठ य पज्जत्तगेण सह तेसिं।
तिरियगइसमं नवरं, पंचासीउदहिसयं तु ॥ १०८ ॥

'इग' त्ति—एकेन्द्रियविकलेन्द्रिययोग्या अष्टौ याः प्रकृतयः एकद्वित्रिचतुरिन्द्रियजातिस्थावरातपसूक्ष्मसाधारणलक्षणा.। तासामपर्याप्तकसहितानां नवानां प्रकृतीना तिर्यग्गतिसमं वक्तव्यम्। नवरमत्र पञ्चाशीत्यधिकं सागरोपमशतं चतुष्पल्याधिकं यावदबद्धेति वक्तव्यम् । कथमेतावन्तं कालं यावदबन्ध इति चेदुच्यते—इह क्षपितकर्मांशो द्वाविंशतिसागरोपमस्थितिक षष्ठपृथिव्यां नारको जात । तत्राप्यन्तर्मुहूर्तावशेषे आयुषि सम्यक्त्वं प्राप्तवान् । ततोऽप्रतिपतितसम्यक्त्व एव मनुष्यो जातः ततस्तेनाप्रतिपतितेन सम्यक्त्वेन देशविरतिमनुपाल्य चतुष्पल्योपमस्थितिक' सौधर्मदेवलोके देवो जात.। ततस्तेनाप्रतिपतितेन सम्यक्त्वेन सह देवभवाच्च्युत्वा मनुष्यो जात.। तस्मिंश्च मनुष्यभवे संयममनुपाल्य ग्रैवेयकेष्वेकत्रिंशत्सागरोपमस्थितिको देवो जात । तत्र चोत्पत्त्यनन्तरमन्तर्मुहूर्तादूर्ध्वं मिथ्यात्वं गत.। ततोऽन्तर्मुहूर्तावशेषे आयुषि भूयोऽपि सम्यक्त्वं प्रतिपद्यते। ततो द्वे षट्षष्टी सागरोपमाणा यावत् सम्यक्त्वमनुपाल्य तस्या सम्यक्त्वाद्धाया अन्तर्मुहूर्ते शेषे क्षपणाय समुद्यते। तदेव पञ्चाशीत्यधिकं सागरोपमशतं चतुष्पल्याधिकं यावत्पूर्वोक्तानां नवप्रकृतीनां बन्धाभाव ।

छत्तीसाएँ सुभाणं, सेढिमणारुहियसेसगविहीहिं ।
कट्टु जहन्नं खवणं, अपुव्वकरणालिया अंते ॥ १०९ ॥

'छत्तीसाए' त्ति—श्रेणिमनारुह्योपशमश्रेणिमकृत्वा शेषैर्विधिभिः क्षपितकर्मांशसत्कैः षट्त्रिंशत्संख्यानां शुभप्रकृतीनां पञ्चेन्द्रियजातिसमचतुरस्रसंस्थानवज्रर्षभनाराचसंहननतैजससप्तकप्रशस्तविहायोगतिशुक्ललोहितहारिद्रसुरभिगन्धकषायाम्लमधुरमृदुलघुस्निग्धोष्णागुरुलघुपराघातोच्छ्वासत्रसादिदशकनिर्माणलक्षणानां जघन्यं प्रदेशाग्रं कृत्वा क्षपणायोत्थितस्य क्षपितकर्मांशस्यापूर्वकरणसत्कायाः प्रथमावलिकाया अन्ते-चरमसमये तासा जघन्य. प्रदेशसंक्रमो भवति। तत ऊर्ध्वं तु गुणसंक्रमेण लब्धस्यातिप्रभूतस्य दलिकस्य संक्रमावलिकातिक्रान्तत्वेन संक्रमसम्भवात् स न प्राप्यते। पञ्चसंग्रहे तु वज्रर्षभनाराचवर्जितानां शेषाणां पञ्चत्रिंशत्प्रकृतीनामेवापूर्वकरणप्रथमावलिकान्ते जघन्यः प्रदेशसंक्रम उक्त.। वज्रर्षभनाराचसंहननस्य तु स्वबन्धव्यवच्छेदसमये इति ।

सम्मद्दिट्ठि अजोग्गा-ण सोलसण्हं पि असुभपगईणं।
थीवेएण सरिसगं, नवरं पढमं तिपल्लेसु ॥ ११० ॥

'सम्मद्दिट्ठि' त्ति-सम्यग्दृष्टेरयोग्यानां षोडशानामशुभप्रकृतीनां प्रथमवर्जसंस्थानप्रथमवर्जसंहननाप्रशस्तविहायोगतिदुर्भगदु:स्वरानादेयनपुंसकवेदनीचैर्गोत्रलक्षणानां स्त्रीवेदेन सदृशं वक्तव्यम्। यथा प्राक् स्त्रीवेदस्य जघन्यप्रदेशसंक्रमभावना कृता तथाऽत्रापि कर्तव्या । नवरमेतासां जघन्यप्रदेशसंक्रमस्वामी प्रथमं त्रिपल्योपमायुष्केषु मनुष्येषु मध्ये समुत्पन्नो वक्तव्य.। अन्तर्मुहूर्तावशेषे चायुषि प्राप्तसम्यक्त्वः। शेषं तथैव वक्तव्यम्।

नरतिरियाण तिपल्ल-स्संते ओरालियस्स पाउग्गा ।
तित्थयरस्स य बंधा, जहन्नओ आलिगं गंतु ॥ १११ ॥

'नर' त्ति—नरतिरश्चां त्रिपल्योपमस्यान्ते औदारिकस्य प्रायोग्याः प्रकृतयो जघन्यप्रदेशसक्रमयोग्या.। इयमत्र भावना—यो जीव सकलान्यजीवापेक्षया सर्वजघन्यौदारिकसत्कर्मा सन् त्रिपल्योपमायुष्केषु तिर्यङ्मनुष्येषु मध्ये समुत्पन्नः, तस्यौदारिकसप्तकमनुभवतो विध्यातसंक्रमेण परप्रकृतौ संक्रमयतश्च स्वायुषश्चरमसमये तस्यौदारिकसप्तकस्य जघन्यः प्रदेशसंक्रमो भवति । औदारिकस्य प्रायोग्या इत्यौदारिकसप्तकम्। 'तित्थयरस्से' त्यादि तीर्थकरनामकर्मणो बन्धं कुर्वता यत्प्रथमसमये बद्ध दलिकं तत् बन्धावलिकातीतं सत् यदा परप्रकृतिषु यथाप्रवृत्तसंक्रमेण संक्रमयति तदा तीर्थकरनाम्नो जघन्यः प्रदेशसंक्रमो भवति। तदेवमुक्तः प्रदेशसंक्रमः । तदुक्तौ च समर्थितं संक्रमकरणम्। क० प्र० ३ प्रक०। (भवाद् भवान्तरं संक्रामन् किमायु. प्रकरोति इति 'आउ' शब्दे द्वितीयभागे १८ पृष्ठे उक्तम्।)

संकमण-संक्रमण-न०। संक्रम्यते अन्यप्रकृत्यादिरूपतया व्यवस्थाप्यते येन तत्संक्रमणम्। क० प्र० १ प्रक० । असत्तादेः सत्तादौ देपणरूपे संक्रमे, विशे०। संक्रान्तौ,विशे०। आव०। नि०चू०। संथा०। आक्रमणे, आव० ४ अ०। पर्यटने, सूत्र० १

श्रु०४अ० २ उ०। पिपीलिकामत्कुणादीनां स्फुटितस्य गमने, नि० चू० १२ उ०। संक्रम्यतेऽनेनेति संक्रमणम्। चारित्रे, आचा० १ श्रु० २ अ० ३ उ०।

संकमणकाल-संक्रमणकाल-पुं०। अवान्तरसंक्रान्तिसमये, आ० क० १ अ०।

संकममाण-संक्रामत्-त्रि०। गच्छति, स्था० २ ठा० ४ उ०। जं०। जी०। सम्-एकीभावेन क्रामन् गच्छन्। संगच्छमाने, जी० ३ प्रति० १ अधि० १ उ०।

संकमुक्किट्ठट्ठिइ-संक्रमोत्कृष्टस्थिति-स्त्री०। संक्रमोत्कृष्टस्थितिभेदे, या बन्धादेव केवलादुत्कृष्टा स्थितिर्लभ्यते। क० प्र० २ प्रक०। पं० सं०।

संकर-संकर-पुं०। भिन्नजातीयानां मीलके, सूत्र० १ श्रु० १ अ० १ उ०। बृ०। विशे०। कन्यानयनीयनगरस्य स्वनामख्याते श्रावकाणां प्रतिपन्ने राजनि, ती० ५० कल्प। सांकर्ये, संकीर्णत्वे, विशे०। संमीलनशीले, बृ० ४ उ०। संकीर्यते संपिण्ड्य संकरणं वा संपिण्डनं संकरः। गौणपरिग्रहे, प्रश्न० ५ आश्र० द्वार।

संकरगायत्ती-शङ्करगायत्री-स्त्री०। रुद्रप्रतिपादिकायां गायत्र्याम्, "तन्महेशाय विद्महे वाग्विशुद्धाय धीमहि तन्नो रुद्रः प्रचोदयात्"। गा०।

संकरदूस-शङ्करदूष्य-न०। संकर इह प्रस्तावात्तृणभस्मगोमयाङ्गारादिमीलक उत्कुरुटिका इति यावत्, तत्र दूष्यं वस्त्रं संकरदूष्यम्। अत्यन्तनिकृष्टे निरुपयोगिनि लोकैरुत्सृष्टे वस्त्रे, उत्त० १२ अ०।

संकरपुर-शङ्करपुर-न०। लक्ष्मणावतीसविधे स्वनामख्याते दुर्गरक्षिते पुरे, विक्रमे १३६० संवत्सरे लक्ष्मणावतीहम्मीर-श्रीसुरत्राणसमदीनः शङ्करपुरदुर्गोपयोगिपाषाणग्रहणार्थं प्रतोलीं पातयित्वा कपाटसंपुटमग्रहीत्। ती० ३४ कल्प।

संकरसमय-शङ्करसमय-पुं०। भिन्नजातीयानां मीलकस्यैकवाक्यतायाम्, यथा-वाममार्गादावनाचारप्रवृत्तावपि गुप्तिकरणमिति। सूत्र० १ श्रु० १ अ० १ उ०।

संकरसामि-शङ्करस्वामिन्-पुं०। नयनमनसोरपि प्राप्यकारित्ववादिनि स्वनामख्याते दार्शनिकविदुषि, नं०। सम्म०।

संकरिय-शाङ्कर्य-न०। परस्परानुविद्धरूपतायाम्, अने० १ अधि०।

संकरिसण-शङ्कर्षण-पुं०। नवमे बलदेवे, ति०। ती०। स०।

संकरी-शङ्करी-स्त्री०। विद्याभेदे, या हि पठितमात्रा एव दासदासीसखीपरिवारभूत्वाऽऽदेशं करोति, अन्तिकमागतं प्रत्यनीकं निवारयति, दूरस्थस्याऽपि चेष्टितं पृष्टा सती कथयति। उत्त० १३ अ०।

संकल-शृङ्खल-न०। "शृङ्खले खः कः" ॥ ८।१।१८९॥ इत्यनेनात्र खस्य ककारादेशः। संकलं। प्रा०। हस्त्यन्दुके, प्र श्न० ५ संव० द्वार।

संकला-शृङ्खला-स्त्री०। अयोमयनिगडे, सूत्र १ श्रु० ४ अ० २ उ०।

संकलिय-संकलित-त्रि०। अनुबद्धे, अनु०। सूत्र०।

संकलिया-संकलिका-स्त्री०। अन्तादिपदयोः सङ्कलनात्सङ्कलिका। आदानपदाख्ये सूत्रकृताङ्गस्य पञ्चदशे अध्ययने, सूत्र०। अस्याध्ययनस्यान्तादिपदयोः संकलनात्संकलिकेति नाम कुर्वते तस्या अपि नामादिकश्चतुर्द्धा निक्षेपो विधेयः। तत्रापि द्रव्यसङ्कलिका निगडादौ भावसङ्कलना तूत्तरोत्तरविशिष्टाध्यवसायसङ्कलनमिदमेव वाऽध्ययनम्, आद्यन्तपदयोः सङ्कलनादिति। सूत्र० १ श्रु० १५ अ०।

संका-शङ्का-स्त्री०। शङ्कनं शङ्का। संशयकरणे, आतु०। सन्देहे, ध० २ अधि०। जीवादितत्त्वेषु अस्ति न वेति संशयकरणे, ध० २ अधि०। नि० चू०। उत्त०। व्य०। भगवदर्हत्प्रणीतेषु पदार्थेषु धर्मास्तिकायादिष्वत्यन्तगहनेषु मतिदौर्बल्यात्सम्यगनवधार्यमाणेषु संशये, आव० ६ अ०। शङ्का भगवदर्हत्प्रणीतेषु पदार्थेषु धर्मास्तिकायादिष्वत्यन्तगहनेषु मतिदौर्बल्यात् सम्यगनवधार्यमाणेषु संशयः, किमेवं स्यान्नैवमिति। यदाहुः-संशयकरणं शङ्केति। सा च शङ्का द्विविधा-देशशङ्का, सर्वशङ्का च। देशशङ्का-देशविषया; जीवाद्यन्यतमपदार्थैकदेशगोचरेत्यर्थः। यथाऽस्ति जीवः केवलं सर्वगतोऽसर्वगतो वा, सप्रदेशोऽप्रदेशो वेति। सर्वशङ्का-सर्वविषया यथाऽस्ति वा धर्मो नास्ति वेति। इयं च द्विधाऽपि शङ्का भगवदर्हत्प्रणीतप्रवचनेऽप्रत्ययरूपा सम्यक्त्वं दूषयतीत्यतीचारः। केवलागमगम्या अपि हि पदार्था अस्मदादिप्रमाणपरीक्षानिरपेक्षा आप्तप्रणेतृकत्वान्न सन्देग्धुं योग्याः, यत्राऽपि मतिदौर्बल्यादिभिर्मोहवशात् क्वचन संशयो भवति तत्राऽप्यप्रतिहतेयमर्गला।

यथा—

"कत्थ य मइदुब्बल्लेणं तव्विहायरियविरहओ वाऽवि।
न य गहणत्तणेण य, नाणावरणोदयेणं च ॥ १ ॥
हेऊदाहरणासं-भवे य सइ सुट्ठु जं न बुज्झेज्जा।
सव्वन्नुमयमवितहं, तहाऽवि तं चिंतए मइमं ॥ २ ॥
अणुवकयपराणुग्गह-परायणा जं जिणा जुगप्पवरा।
जिअरागदोसमोहा, अनन्नहा वाइणो तेणं ॥ ३ ॥"

यथा च—

"सूत्रोक्तस्यैकस्या-प्यरोचनादक्षरस्य भवति नरः।
मिथ्यादृष्टिः सूत्रं, हि नः प्रमाणं जिनाभिहितम् ॥ १ ॥
एकस्मिन्नप्यर्थे, सन्दिग्धे प्रत्ययोऽर्हति नष्टे।
मिथ्या च दर्शनं तत्, स चादिहेतुर्भवगतीनाम् ॥२॥" प्रव० ६ द्वार।

(शङ्काव्याख्या 'मिच्छदिट्ठि' शब्दे ६ भागे २७५ पृष्ठे गता।)

संसयकरणं संका, कंखा अण्णोण्णदंसणग्गाहो।
संतम्मि वि वितिगिच्छा, सिज्झेज्जं मे अयं अट्ठो ॥ २४ ॥

संसयणं-संसयो करणं-क्रिया, संसयस्स करणं ससयकरणमित्याह-जमिदं संसयकरणं किमिदं वत्थाणत्थंतरभूतं उताणत्थंतरमिति?। गुरुराह-णमिदमत्थन्तरभूतं घडस्स दंडादयो जहा, इदं तु अणत्थंतरं अगुलियचक्ककरणवत्, जदिदं संसयकरणं स एव संका, संकण संका; चिन्तासंकेत्यर्थः, सा दुविहा-देसे, सव्वे य। देसे जहा तुल्ले जीवत्ते कहमेगे भव्वा?, एगे अभव्वा?। अहवा-एगेणं-परमाणुणा एगे आगासपदेसे पुणो पुणो वि परमाणू तत्थेवागासपदेसे अव-

गाहति। ण य परमाणू, परमाणुतो सुहुमतरो भवति। ण य आयपमाणे अण्णावगाहं पयच्छति। कहमेयं ति एवमादि-देसे संका। 'सव्वसंक' त्ति सव्वं दुवालसंगं गणिपिडगं पाययभासाणिवद्धं माणुए तं कुसलकप्पियं होज्जा। संकिणो असंकिणो य दोसगुणदीवणत्थं उदाहरणं— जहा, ते पेया पाया दारगा। एगस्स गिहवतिणो पस-वियपुत्ता भज्जा मता। तेण य अण्णा घरिणी कता। तीए वि पुत्तो जाओ। ते दो वि लेहसालाए पढंति। भोयणकाले य आगता। दोण्ह वि गिण्हंतो मिट्ठाणमासकणफोडिया पेया दिन्ना। तत्थ मुयमातिओ चिंतेइ, मच्छिया इमा ससंकि-ओ पियति। तस्स संकाए वग्गुलिया वाही जातो मतो य। वितिओ चिंतेति—ण ममं माता मच्छियाओ देति णिस्संकितो पिवति जीवितो य। तम्हा संका ण कायव्वा। णिस्सं-कितेण भवियव्वं। संके त्ति दारं गतं। नि० चू० १ उ०। आ०। सूत्र०। दश०। जीत०। संथा०। दर्श०। ग०।

शङ्कायामुदाहरणं पेयापायिनः—

"नार्योः कुत्रापि कस्याश्चि-द्दारकौ द्वौ बभूवतुः।
सपत्नीतनुभूरेको, द्वितीयश्चात्मभूर्द्वयोः॥ १॥
प्राप्तयोर्लेखशालायां, माषपेयामदत्त सा।
अचिन्तयत्सपत्नीभूः, पेयाऽसौ मक्षिकान्विता॥ २॥
इत्याशङ्की वमन्नित्यं, वल्गुलीव्याधिना मृतः।
द्वितीयोऽचिन्तयन्माता, न प्रयच्छति मक्षिकाः॥ ३॥
निःशङ्कितो जीवितोऽसौ, संजातो भोगभाजनम्॥ ४॥"
आ० क० ६ अ०।

संकाठाण-शङ्कास्थान-न०। शङ्काविषये स्थाने, उत्त०। "संकाठाणाणि सव्वाणि, वज्जिज्जा पणिहाणवं"। उत्त० १६ अ०।

संकामण-संक्रामण-न०। प्रस्तुतप्रमेये, स्था०। संक्रा-मणं-प्रस्तुतप्रमेयेऽप्रस्तुतप्रमेयस्य प्रवेशनं; प्रमेयान्तर्गमन-मित्यर्थः। अथवा-प्रतिवादिमते आत्मनः संक्रामणं, परमता-भ्युनुज्ञानमित्यर्थः। तदेव दोष इति। स्था० १० ठा० ३ उ०।

संकामणी-संक्रामणी-स्त्री०। सङ्क्रमणकारके विद्याभेदे, ज्ञा० १ श्रु० १६ अ०।

संकामिय-संकामित-त्रि०। स्वस्थानात् परस्थाने नीते, आव० ४ अ०। स्था०। 'संकामिय' त्ति संक्रामितं विभक्तिवचना-द्यन्तरतया परिणामितं तदनुयोगो यथा—'साहूणं व-न्दणेणं नासति पाव, असंकिया भावा' इह साधूना-मित्येतस्याः षष्ठ्या. साधुभ्यः सकाशादित्येवंलक्षणं पञ्च-मीत्वेन विपरिणामं कृत्वा अशङ्किता भावा भवन्तीति एतत्पदं सम्बन्धनीयम्। तथा "अच्छंदा जे न भुंजंति, न से चा इ त्ति वुच्चइ" इत्यत्र सूत्रे न स त्यागीत्युच्यते इत्येकवचनस्य बहुवचनतया परिणामं कृत्वा न ते त्यागिन उच्यन्ते इत्येवं पदघटना कार्येति। स्था० १० ठा० ३ उ०।

संकामेजमाण-संक्रम्यमाण-त्रि०। हस्तादिना संक्रमं का-र्यमाणे, स्था० ३ ठा० १ उ०।

संकावय-शङ्कापद-त्रि०। किमेतन्मदारब्धमनुष्ठानं निष्फलं स्यादित्येवंभूतो विकल्पः—शङ्का, तस्याः पदं निमित्तकार-णम्। आर्हतप्रोक्तेष्वत्यन्तसूक्ष्मेष्वतीन्द्रियेषु केवलागमग्राह्ये-ष्वर्थे संशीती, आचा० १ श्रु० ५ अ० १ उ०।

संकास-संकाश-त्रि०। सदृशे, स्था० ६ ठा० ३ उ०। उत्त०। प्रश्न०।

संकासिया-शङ्काशिका-स्त्री०। स्थविरात् श्रीगुप्ताच्चा-र्यान्निर्गतस्य चारणगणस्य तृतीयशाखायाम्, कल्प०।

संकिट्ठ-संक्लिष्ट-त्रि०। संकीर्णे, वृ० १ उ० ३ प्रक०।

संकिट्ठवियारभूमि-संक्लिष्टविचारभूमि-स्त्री०। संयतानां सं-यतीनां चैकस्यामेव संज्ञाभूमौ, वृ० १ उ० ३ प्रक०।

संकिण्ण-संकीर्ण-त्रि०। व्याप्ते, प्रज्ञा० २ पद। विशे०। मिश्र-त्वे, विशे०। भ०। "एएसिं हत्थीणं, थोवं थोवं तु जो इ तरइ हरइ हत्थी। रूवेण य सीलेण य, सो संकिण्णो त्ति नेयव्वो॥१॥" इति वचनात् संकीर्णनाम्नि हस्तिविशेषे, पुं०। स्था० ४ ठा० २ उ०। शबलीकृतचारित्रे, वृ० ३ उ०। स्वप-क्षपरपक्षव्याकुले क्षेत्रे, नपुं०। भ० २५ श० ७ उ०।

संकिय-शङ्कित-त्रि०। एकभावविषयसंशयसंयुक्ते, स्था० ४ ठा० ३ उ०। संशयक्रोडीकृते, वृ० २ उ०। शङ्किते, शङ्का-योग्ये वागुरादिके, सूत्र० १ श्रु० १ अ० २ उ०। शङ्कितो देशतः सर्वतो वा। संशयवति, स्था० ३ ठा० ४ उ०। सूत्र०। सम्भाविताधाकर्मादिदोषयुक्ते भक्तादिके, ग० १ अधि०। आचा०। आधाकर्मादिशङ्काकलुषितो यद्ग्राह्यादत्ते तच्छ-ङ्कितम्। ध० ३ अधि०। जी०। पञ्चा०। प्रव०। शङ्कितं न विद्म' किमिदमुद्गमादिदोषयुक्तं, किं वा—नेत्येवमाशङ्कास्पदी-भूतम्। दश० ८ अ०। पिं०। (तत्र शङ्कितपदव्याख्या 'एस-णा' शब्दे, तृतीयभागे ५४ पृष्ठे गता।)

किं बहुनेति, उपदेशसर्वस्वमाह—

जं भवे भत्तपाणं तु, कप्पाकप्पम्मि संकिअं।
दिंतिअं पडिआइक्खे, न मे कप्पइ तारिसं॥ ४४॥

यद्भवेद्भक्तपानं तु कल्पाकल्पयोः, कल्पनीयाकल्पनीयधर्मवि-षय इत्यर्थः, किम्?-शङ्कितं न विद्म. किमिदमुद्गमादिदोषयुक्तं किं वा नेत्याशङ्कास्पदीभूतं, तदित्थंभूतमसति कल्पनी-यनिश्चये ददतीं प्रत्याचक्षीत। न मम कल्पते तादृशमिति सूत्रार्थः॥ ४४॥ दश० ८ अ०।

संकियगणणोवगा-शङ्कितगणणोपगा-स्त्री०। प्रत्युपेक्षणाभे-दे, ध०। तथा शङ्किता चाऽसौ गणना च शङ्कितगणना ता-मुपगच्छति या प्रत्युपेक्षणा सा शङ्कितगणनोपगा तां न कु-र्यात्। अयं भावः-पुरिमादय. कियन्तो जाता इति शङ्कायां तद्गणनां करोति यः प्रमादी भवति पूर्वमित्थंभूता प्रत्युपेक्षणा न कर्तव्येति स्थितम्। ध० ३ अधि०।

संकियपडिसेवणा—शङ्कितप्रतिसेवना—स्त्री०। "जं संके-

तं समावज्जे " इति वचनात् । एषणीयेऽप्यनेषणीयतया श-ङ्किते प्रतिसेवनायाम् , स्था० १० ठा० ३ उ० ।

संकिलिट्ठ-संक्लिष्ट—त्रि०। संक्लेशवति , प्रश्न०२ आश्र०द्वार। स्था० ।

इदाणीं संकिलिट्ठं भण्णति—

जं वंतु संकिलिट्ठं, तं सणिमित्तं व होज्ज अणिमित्तं ।
जं तं सणिमित्तं पुण, तस्सुप्पत्ती तिधा होति ॥१८॥

जं ति अणिहिट्ठं तं ति पूर्वाभिहितं । तुशब्दो संकिलिट्ठ-विसेसणे। तस्स संकिलिट्ठस्स दुविहा उप्पत्ती-सणिमित्ता, अणिमित्ता य । णिमित्तं हेऊ कारणं वक्खमाणस्सरूवो । अणिमित्तं निरहेतुकं । जं तं सणिमित्तं तस्सुप्पत्ती , बाहि-रवत्थुमवेक्ख तिविहा भवति । पुनरवधारणे । चोदग आ-ह-णणु कम्मं चेव तस्स णिमित्तं किमत्थं बाहिरणिमित्तं घोसिज्जति ।

आचार्य्याह—

कामं कम्म णिमित्तं, उदयो णऽत्थि उदयओ तव्वज्जो।
तह वि य बाहिरवत्थुं,होति णिमित्तं तिमं तिविधं॥१६॥

कामं अनुमतार्थे , किमनुमन्यते ?—कम्मं णिमित्तो उ-दयेत्यर्थः । न इति प्रतिषेधे , उदयः कर्म्मवज्जो न भवती-त्यर्थः । तथाऽपि कश्चिद्वाह्यवस्त्वपेक्षो कर्म्मोदयो भवतीत्य-र्थः । इदं तिविधं बाह्यनिमित्तम् उच्यते ।

सद्दं वा सोऊणं, दट्ठुं सरितुं व पुव्वभुत्ताइं ।
सणिमित्तऽणिमित्तं पुण, उदयाहारे सरीरे य ॥ २० ॥

गीतादि विसयसद्दं सोउं, आलिंगणादि त्थीरूवं वा दट्ठुं, पुव्वकीलियाणि वा सरिउं, एतेहिं कारणेहिं सणिमित्तो मोहुदओ । अणिमित्तो पुण, पुणसद्दो अणिमित्तविसेसणे । किमुदओ आहारेण सरीरोववेया । चसद्दो भेदप्रदर्शने । नि० चू० १ उ० ।

संकिलिट्ठकम्म-संक्लिष्टकर्म्मन्—न० । छेदनभेदनादिके दुष्क-र्मणि, जी० १ प्रति० ।

संकिलिट्ठकाल-संक्लिष्टकाल-पुं० । गीतार्थसंविग्नरहिते का-ले,"संकिलिट्ठकालो नाम जम्मि काले गीयत्थसंविग्गा नऽत्थि स संकिलिट्ठकालः " । प० चू० ४ कल्प० ।

संकिलिट्ठलेस्सा-संक्लिष्टलेश्या-स्त्री० । संक्लेशहेतौ लेश्या-याम् , स्था०३ ठा० ४ उ० । (ताश्च संक्लिष्टा लेश्या· ' लेसा ' शब्दे षष्ठे भागे ६८७ पृष्ठे गताः । )

संकिलिट्ठायार-संक्लिष्टाचार-पुं० । संसर्गवशात् स्थापिता-दिभोजिनि, व्य० ६ उ० ।

संकिलिस्समाण-संक्लिश्यमान-त्रि० । अविशुद्धिं गच्छति, भ० १३ श० १ उ० । उपशमश्रेणीतः प्रच्यवमाने, भ० २५ श० ७ उ० ।

१०

संकिलेस-संक्लेश-पुं० । असमाधौ, पा० । रागादिलक्षणे चित्तमालिन्ये, पञ्चा० १५ विव० । आव० । तीव्ररागादि-संवेदने अरतौ, पं० सू० १ सूत्र । स्था० ।

तिविहे संकिलेसे पण्णत्ते , तं जहा-णाणसंकिलेसे, दं-सणसंकिलेसे, चरित्तसंकिलेसे ॥ ( सू० १६५ + )

ज्ञानादिप्रतिपतनलक्षणः संक्लिश्यमानपरिणामनिबन्धनो ज्ञानादिसंक्लेशो, ज्ञानादिशुद्धिलक्षणो विशुद्ध्यमानपरिणा-महेतुकस्तदसंक्लेशः । स्था० ३ ठा० ४ उ० ।

दसविहे संकिलेसे पण्णत्ते । तं जहा-उवहिसंकिलेसे उवस्सयसंकिलेसे कसायसंकिलेसे भत्तपाणसंकिलेसे म-णसंकिलेसे वतिसंकिलेसे कायसंकिलेसे नाणसंकिलेसे दंसणसंकिलेसे चरित्तसंकिलेसे ॥ ( सू० ७३६ + )

' दसे ' त्यादि संक्लेशः—असमाधिरुपधीयते-उपष्टभ्यते संयम· सयमशरीरं वा येन स उपधिर्वस्त्रादिः, तद्वि-षयः संक्लेश उपधिसंक्लेश· । एवमन्यत्रापि नवरम् ' उ-वस्सय ' त्ति उपाश्रयो-वसतिस्तथा कषाया एव कषायैर्वा संक्लेश· कषायसंक्लेशः।तथा भक्तपानाश्रितः संक्लेशो भक्तपान-संक्लेशः। तथा मनसि मनसो वा संक्लेशः, वाचा संक्लेशः, का-यमाश्रित्य सक्लेश इति विग्रहः । तथा ज्ञानस्य संक्लेशोऽविशु-द्ध्यमानता स ज्ञानसंक्लेशः । एवं दर्शनचारित्रयोरपीति । स्था० १० ठा० ३ उ० ।

संकिलेसमाणय-संक्लिश्यमानक-पुं० । उपशमश्रेण्याः प्रति-पतत· संयमभेदे, स्था० २ ठा० १ उ० ।

संकु-शङ्कु-पुं० । कीलके, आ० म० १ अ० । कल्प० ।

संकुइय-संकुचित-न० । संकुचनं संकुचितम् । गात्रसको-चकरणे, दश० ४ अ० । आ० म० । ग० । शिखरीकृत्य संको-चनमुपगते , त्रि० । जी० ३ प्रति० १ अधि० २ उ० ।

संकुइयपसारिय-संकुचितप्रसारित-न० । नाट्यभेदे 'आ० म० १ अ० । जं० ।

संकुक-शंकुक-पुं० । शङ्कुकाविद्याप्रधाने वैताढ्यपर्वतस्योत्तर-श्रेण्या विद्याधरनिकाये , आ० चू० १ अ० । वैताढ्यपर्वत-स्योत्तरश्रेण्या विद्याधरनिकायविशेषाणां विद्यायाम् , स्त्री० । आ० चू० १ अ० ।

संकुचेमाण-संकुचयत्-त्रि० । हस्तपादादिसंकोचनत संको-चं गच्छति , आचा० १ श्रु० ६ अ० ४ उ० ।

संकुडिय-संकुटित-त्रि० । संकुचिते,जं० २ वक्ष० । "संकुडि-यवलितरङ्गपरिवेढियंगमंगा " संकुटितं-वलीलक्षणतरङ्गै· प-रिवेष्टितं च अङ्गं येषा ते तथा । भ० ७ श० ६ उ० ।

संकुल-संकुल-त्रि० । व्याप्ते, अष्ट० २२ अष्ट० । स्वनामख्याते ग्रामे,संकुलो नाम ग्रामस्तत्र जिनदत्तनामा श्रावकस्तस्य भा-र्या विनिमति· । पिं० ।

ग्रामवर्णकश्चेत्थम्-तत्र च ग्रामे कोद्रवा रालकाश्च प्राचुर्येणोत्पद्यते इति तेषामेव कूरं गृहे गृहे भिक्षार्थमटन्त साधवो लभन्ते। वसतिरपि स्त्रीपशुपण्डकविवर्जिता समभूतलादिगुणैरतिरमणीया कल्पनीया च प्राप्यते। स्वाध्यायोऽपि तत्र वसतामविघ्नमभिवर्द्धते, केवलं शाल्योदनो न प्राप्यते इति न केचनापि सूरयो भरेण तत्रावतिष्ठन्ते। पिं०। (विशेषश्चात्रत्य 'आधाकम्म' शब्दे द्वितीयभागे ४० पृष्ठे गत.।)

संकेय-संकेत-त्रि०। केतं—चिह्नं केतेन सह वर्तत इति संकेतम्। सचिह्ने, आव० ६ अ०। स्था०।

संकेयपचक्खाण-संकेतप्रत्याख्यान-न०। प्रत्याख्याने, ध०। अङ्गुष्ठमुष्टिग्रन्थ्यादिचिह्नोपलक्षितं सङ्केतं, तत्र श्रावक पौरुष्यादिप्रत्याख्यानं कृत्वा क्षेत्रादौ गतो गृहे वा तिष्ठन् भोजनप्राप्ते प्राक् प्रत्याख्यानरहितो मा भूवमित्यङ्गुष्ठादिकं सङ्केतं करोति 'यावदङ्गुष्ठं मुष्टिं ग्रन्थिं (वा) न मुञ्चामि, गृहं वा न प्रविशामि, स्वेदबिन्दवो यावन्न शुष्यन्ति, एतावन्तो वा उच्छ्वासा यावन्न भवन्ति, जलादिमञ्चिकायां यावदेते बिन्दवो न शुष्यन्ति, दीपो वा यावन्न निर्वाति तावन्न भुञ्जे इति। ध० २ अधि०।

इदानीं सङ्केतद्वारविस्तरार्थप्रतिपादनायाऽऽह—

अंगुट्ठमुट्ठिगंठी-घरसेउस्सासथिवुगजोइक्खे।
भणियं संकेयमेयं, धीरेहिँ अणंतनाणीहिं॥ १५७८॥

अङ्गुष्ठश्च मुष्टिश्चेत्यादिद्वन्द्वः, अङ्गुष्ठमुष्टिग्रन्थिगृहस्वेदोच्छ्वासस्तिबुकज्योतिष्कान् तान् चिह्नं कृत्वा यत् क्रियते प्रत्याख्यानं तत् भणितम्—उक्तं संङ्केतमेतत्, कैः ? धीरैः अनन्तज्ञानिभिरिति गाथासमासार्थः। अवयवत्थो पुण-केतं नाम चिंधं, सह केतेन सङ्केतं, सचिह्नमित्यर्थः। 'साधू सावगो वा पुण्णे वि पच्चक्खाणे किंचि चिण्हं अभिगिण्हति, जाव एवं तावाधं ण जिमेमि' त्ति ताणिमाणि चिंधाणि-अंगुट्ठमुट्ठिगंठिघरसेऊसासथिवुगदीवगाणि। तत्थ ताव सावगो पोरुसीपच्चक्खाइतो ताथे छेत्तं गतो, घरे वा ठितो ण ताव जेमेति, ताथे ण किर वट्टति अपच्चक्खाणस्स अच्छितुं तदा अंगुट्ठचिंधं करेति, जाव ण मुयामि ताव न जेमेमि त्ति, जाव वा गंठिं ण मुयामि, जाव घरं ण पविसामि, जाव सेओ ण णस्सति, जाव वा एवतिया उस्सासा, पाणियमंचिताए वा, जाव एत्तिया थिवुगा उस्सासविंदू थिवुगा वा, जाव एस दीवगो जलति ताव अहं ण भुंजामि त्ति। न केवलं भत्ते अण्णेसु वि अभिग्गहविसेसेसु संकेतं भवति। एवं ताव सावयस्स, साधुस्स वि पुण्णे पच्चक्खाणे किं अपच्चक्खाणी अच्छउ ? तम्हा तेण वि कातव्वं सङ्केतमिति। व्याख्यातं सङ्केतद्वारम्। आव ६ अ०।

संकोडना-संकोटना-स्त्री०। गात्रसंकोचने, प्रश्न० ३ आश्र० द्वार। विपा०।

संकोडिय-संकोटित-त्रि०। संकोचिते, प्रश्न० ३ आश्र० द्वार। आ० चू०।

संकोय-संकोच-पुं०। नस्कारे, आ० क०। द्रव्यभावसंकोचनम्। द्रव्यसंकोचनम्-करशिरःपादादिसंकोचः, भावसंकोचनम्-मनस एकाग्रता। द्रव्यसंकोचः पालकस्य। भावसंकोचोऽनुत्तरदेवानाम्। उभयसंकोचः शम्बस्य। उभयाभावः शून्यः। आ० क० १ अ०।

संख-शङ्ख-पुं०। "शषोः सः"॥८।४।३०९॥ इति शस्य सः। प्रा०। समुद्रोद्भवे (प्रश्न० १ पद।) वृत्ते द्वीर्घाकृतौ, (नि० चू० १७ उ०।) जलचरप्राणिविशेषे, नि० चू० १ उ०। कम्बुनि, स्था० ६ ठा० ३ उ०। औ०। उत्त०। प्रश्न०। वासुदेवस्य पाञ्चजन्यः शंखः। उत्त० १० अ०। शंखः पाञ्चजन्यो द्वादशयोजनविस्तारध्वनिः। प्रव० २१२ द्वार। आ० म०। उत्त०। रा०। जं०। प्रश्न०। नं०। "परिट्ठिया संखसुत्ति व्व।" प्रा० २ पाद। आचा०। आ० म०। अनु०। अक्षिप्रत्यासन्नावयवविशेषे, आ० १ श्रु० ८ अ०। एकोनविंशतितमे महाग्रहे, स्था० २ अ० ३ उ०। कल्प०। चं० प्र०। सू० प्र०।

दो संखा। (सूत्र) स्था० २ ठा० ३ उ०।

वैशालीनगरीवास्तव्ये सिद्धार्थराजमित्रे, आ० म० १ अ०। आ० चू०। लवणसमुद्रस्य वेलारक्षके स्वनामख्याते वेलन्धरनागराजे, जम्बूद्वीपस्य बाह्यवेदिकान्तात् द्वाचत्वारिंशद्योजनान्यवगाह्य लवणसमुद्रे संखस्य वेलन्धरनागराजस्यावासपर्वते, स्था०४ ठा० २ उ०। (संखस्य वेलन्धरनागराजस्य तदावासभूतस्य पर्वतस्य च वक्तव्यता 'लवणसमुद्द' शब्दे ६ भागे ६४५ पृष्ठे गता।) स्वनामख्याते श्रावस्तीवास्तव्ये श्रावके, स्था०। शङ्खशतकौ श्रावस्तीश्रावकौ, ययोरीदृशी वक्तव्यता-किल श्रावस्त्यां कोष्ठके चैत्ये भगवानेकदा विहरति स्म, शङ्खादिश्रमणोपासकाश्चागतं भगवन्तं विज्ञाय वन्दितुमागताः। ततो निवर्तमानांस्तान् शंखः खल्वाख्याति स्म—यथा भो देवानांप्रिया! विपुलमशनाद्युपस्कारयत ततस्तत्परिभुञ्जानाः पाक्षिकं पर्व्व कुर्वाणा विहरिष्यामः। ततस्ते तत्प्रतिपेदिरे, पुनः शङ्खोऽचिन्तयत्-न श्रेयो मेऽशनादिभुञ्जानस्य पाक्षिकपौषधं प्रतिजाग्रतो विहर्त्तुं,श्रेयस्तु मे पौषधशालायां पौषधिकस्य मुक्ताभरणशस्त्रादेः शान्तवेषस्य विहर्त्तुम्।अथ स्वगृहे गत्वा उत्पलाभिधानस्वभार्याया वार्तां निवेद्य पौषधशालायां पौषधमकार्षीत्। इतश्च तेऽशनाद्युपस्कारयांचक्रुः, एकत्र च समवेयुः शङ्खं प्रतीक्षमाणास्तस्थुः। ततोऽनागच्छति शङ्खे पुष्कलीनामा श्रमणोपासकः शतक इत्यपरनामा शंखस्याकारणार्थं तद्गृहं जगाम। आगतस्य चोत्पला श्रावकोचितप्रतिपत्तिं चकार। ततः पौषधशालायां स विवेश, ईर्यापथिकीं प्रतिचक्राम। शङ्खमभ्युवाच-यदुतोपस्कृतं तदशनादि तद् गच्छाम श्रावकसमवायं, भुञ्ज्महे तदशनादि, प्रतिजागृमः पाक्षिकपौषधम्।ततः उवाच शङ्खः-अहं हि पौषधिको नागमिष्यामीति। ततः पुष्कली गत्वा श्रावकाणां तन्निवेदे। ते तु तदनुबुभुजिरे, शङ्खस्तु प्राप्तः पौषधमपारयित्वैव पारगतपादपद्मप्रणिपतनार्थं प्रतस्थौ। प्रणिपत्य च समुचितदेशे उपविवेश। इतरेऽपि भगवन्तं वन्दित्वा धर्म्मं च श्रुत्वा शंखान्तिकं गत्वा एवमूचु:—सुष्ठु त्वं देवानांप्रिय! अस्मान् हीलयसि, ततस्तान् भगवान् जगाद-मा भो यूयं शङ्खं हीलयत शङ्खो ह्यहीलनीय, यतोऽयं प्रियधर्मा दृढधर्मा च। तथा सुदृष्टिजागरिकां जाग-

रित इत्यादि। स्था० ६ ठा० ३ उ०। आ० क०। आ० म०। आ० चू०। कल्प०।

तेणं कालेणं तेणं समयेणं सावत्थी नामं नगरी होत्था। वण्णओ, कोट्ठए चेइए वण्णओ, तत्थ णं सावत्थीए नगरीए बहवे संखप्पामोक्खा समणोवासगा परिवसंति अड्ढा० जाव अपरिभूया अभिगयजीवाजीवा०जाव विहरंति। तस्स णं संखस्स समणोवासगस्स उप्पला नामं भारिया होत्था। सुकुमाल ०जाव सुरूवा समणोवासिया अभिगयजीवाजीवा० जाव विहरइ। तत्थ णं सावत्थीए नगरीए पोक्खली नामं समणोवासए परिवसइ अड्ढे अभिगय०जाव विहरइ। तेणं कालेणं तेणं समएणं सामी समोसढे परिसा निग्गया०जाव पज्जुवासइ। तए णं ते समणोवासगा इमीसे जहा आलभियाए०जाव पज्जुवासइ। तए णं समणे भगवं महावीरे तेसिं समणोवासगाणं तीसे य महति०धम्मकहा० जाव परिसा पडिगया। तए णं ते समणोवासगा समणस्स भगवओ महावीरस्स अंतियं धम्मं सोच्चा निसम्म हट्ठतुट्ठ० समणं भगवं महावीरं वंदइ नमंसइ वंदित्ता नमंसित्ता पसिणाइं पुच्छंति। पसिणाइं पुच्छित्ता अट्ठाइं परियादियंति, अट्ठाइं परियादियित्ता उट्ठाए उट्ठेति, उट्ठित्ता समणस्स भगवओ महावीरस्स अंतियातो कोट्ठयाओ चेइयाओ पडिनिक्खमइ, पडिणिक्खमित्ता से जेणेव सावत्थी नगरी तेणेव पहारेत्थगमणाए। (सू०-४३७ +) तए णं से संखे समणोवासए ते समणोवासए य एवं वयासी-तुज्झे णं देवाणुप्पिया! विउलं असणं पाणं खाइमं साइमं उवक्खडावेह, तए णं अम्हे तं विपुलं असणं पाणं खाइमं साइमं आसाएमाणा विस्साएमाणा परिभुंजेमाणा परिभाएमाणा पक्खियं पोसहं पडिजागरमाणा विहरिस्सामो। तए णं ते समणोवासगा संखस्स समणोवासगस्स एयमट्ठं विणएणं पडिसुणंति। तए णं तस्स संखस्स समणोवासगस्स अयमेयारूवे अब्भत्थिए० जाव समुप्पज्जित्था नो खलु मे सेयं तं विउलं असणं०जाव साइमं अस्साएमाणस्स०४ पक्खियं पोसहं पडिजागरमाणस्स विहरित्तए। सेयं खलु मे पोसहसालाए पोसहियस्स बंभचारिस्स उम्मुक्कमणिसुवन्नस्स ववगयमालावन्नगविलेवणस्स निक्खित्तसत्थमुसलस्स एगस्स अविइयस्स दब्भसंथारोवगयस्स पक्खियं पोसहं पडिजागरमाणस्स विहरित्तए त्ति कट्टु एवं संपेहेति, संपेहित्ता जेणेव सावत्थी नगरी जेणेव सए गिहे जेणेव उप्पला समणोवासिया तेणेव उवागच्छइ, उवागच्छित्ता उप्पलं समणोवासियं आपुच्छइ, आपुच्छित्ता जेणेव पोसहसाला तेणेव उवागच्छइ उवागच्छित्ता पोसहसालं अणुपविसइ पोसहसालं अणुपविसित्ता पोसहसालं पमज्जइ, पोसहसालं पमज्जित्ता उच्चारपासवणभूमिं पडिलेहेइ, उच्चारपासवणभूमिं पडिलेहित्ता दब्भसंथारगं संथरति, दब्भसंथारगं संथरित्ता दब्भसंथारगं दुरूहइ, दुरूहित्ता पोसहसालाए पोसहिए बंभयारी० जाव पक्खियं पोसहं पडिजागरमाणे विहरइ। तए णं ते समणोवासगा जेणेव सावत्थी नगरी जेणेव साइं गिहाइं तेणेव उवागच्छइ, उवागच्छित्ता विपुलं असणं पाणं खाइमं साइमं उवक्खडावेंति, उवक्खडावेत्ता अन्नमन्ने सद्दावेंति, अन्नमन्ने सद्दावेत्ता एवं वयासी—एवं खलु देवाणुप्पिया! अम्हेहिं से विउले असणपाणखाइमसाइमे उवक्खडाविए, संखे य णं समणोवासए नो हव्वमागच्छइ। तं सेयं खलु देवाणुप्पिया! अम्हं संखं समणोवासगं सद्दावेत्तए। तए णं से पोक्खली समणोवासए, ते समणोवासए य एवं वयासी—अच्छह णं तुज्झे देवाणुप्पिया! सुनिव्वुया वीसत्था अहन्नं संखं समणोवासगं सद्दावेमित्ति कट्टु तेसिं समणोवासगाणं अंतियाओ पडिनिक्खमति, पडिनिक्खमित्ता सावत्थीए नगरीए मज्झं मज्झेणं जेणेव संखस्स समणोवासगस्स गिहे तेणेव उवागच्छइ, उवागच्छित्ता संखस्स समणोवासगस्स गिहं अणुपविट्ठे। तए णं सा उप्पला समणोवासिया पोक्खलिं समणोवासयं एज्जमाणं पासइ, पासित्ता हट्ठतुट्ठ ० आसणाओ अब्भुट्ठेइ अब्भुट्ठित्ता सत्तट्ठपयाइं अणुगच्छइ, अणुगच्छित्ता पोक्खलिं समणोवासगं वंदति नमंसति वंदित्ता नमंसित्ता आसणेणं उवनिमंतेइ, उवनिमंतित्ता एवं वयासी—संदिसंतु णं देवाणुप्पिया! किमागमणप्पयोयणं?, तए णं से पोक्खली समणोवासए उप्पलं समणोवासियं एवं वयासी—कहन्नं देवाणुप्पिए! संखे समणोवासए?, तए णं सा उप्पला समणोवासिया पोक्खलिं समणोवासयं एवं वयासी—एवं खलु देवाणुप्पिया! संखे समणोवासए पोसहसालाए पोसहिए बंभयारी ० जाव विहरइ। तए णं से पोक्खली समणोवासए जेणेव पोसहसाला जेणेव संखे समणोवासए तेणेव उवागच्छइ, तेणेव उवागच्छित्ता गमणागमणाए पडिक्कमइ गच्छइ गच्छित्ता संखं समणोवासगं वंदति नमंसति वंदित्ता नमंसित्ता एवं वयासी—एवं खलु देवाणुप्पिया! अम्हेहिं से विउले असण०जाव साइमे उवक्खडाविए तं गच्छामो णं देवाणुप्पिया! तं विउलं असणं ० जाव साइमं आसादमाणा ० जाव प-

डिजागरमाणा विहरामो। तए णं से संखे समणोवासए पोक्खलिं समणोवासगं एवं वयासी—णो खलु कप्पइ देवाणुप्पिया! तं विउलं असणं पाणं खाइमं साइमं आसाएमाणस्स ० जाव पडिजागरमाणस्स विहरित्तए, कप्पइ मे पोसहसालाए पोसहियस्स ० जाव विहरित्तए, तं छंदेणं देवाणुप्पिया! तुब्भे तं विउलं असणं पाणं खाइमं साइमं आसाएमाणा ०जाव विहरइ। तए णं से पोक्खली समणोवासगे संखस्स समणोवासगस्स अंतियाओ पोसहसालाओ पडिनिक्खमइ, पडिनिक्खमित्ता सावत्थिं नगरिं मज्झं मज्झेणं जेणेव ते समणोवासगा तेणेव उवागच्छइ, उवागच्छित्ता ते समणोवासए एवं वयासी—एवं खलु देवाणुप्पिया! संखे समणोवासए पोसहसालाए पोसहिए ० जाव विहरइ, तं छंदेणं देवाणुप्पिया! तुब्भे विउलं असणपाणखाइमसाइमे ० जाव विहरइ। संखे णं समणोवासए नो हव्वमागच्छइ। तए णं ते समणोवासगा तं विउलं असणपाणखाइमसाइमे आसाएमाणा ० जाव विहरंति। तए णं तस्स संखस्स समणोवासगस्स पुव्वरत्तावरत्तकालसमयंसि धम्मजागरियं जागरमाणस्स अयमेयारूवे ०जाव समुप्पज्जित्था-सेयं खलु मे कल्लं ०जाव जलंते समणं भगवं महावीरं वंदित्ता नमंसित्ता ०जाव पज्जुवासित्ता तओ पडिनियत्तस्स पक्खियं पोसहं पारित्तए त्ति कट्टु एवं संपेहेति एवं संपेहेत्ता कल्लं० जाव जलंते पोसहसालाओ पडिनिक्खमति पडिनिक्खमित्ता सुद्धप्पावेसाइं मंगल्लाइं वत्थाइं पवरपरिहिए सयाओ गिहाओ पडिनिक्खमति, सयाओ गिहाओ पडिनिक्खमित्ता पादविहारचारेणं सावत्थिं नगरिं मज्झं मज्झेणं ०जाव पज्जुवासति, अभिगमो नऽत्थि। तए णं ते समणोवासगा कल्लं पादु ०जाव जलंते एहाया कयबलिकम्मा ० जाव सरीरा सएहिं २ गेहेहिंतो पडिनिक्खमंति सएहिं० २ मित्ता एगयओ मिलायंति एगयओ मिलायंति एगय ० त्ता सेसं जहा पढमं० जाव पज्जुवासंति। तए णं समणे भगवं महावीरे तेसिं समणोवासगाणं तीसे य धम्मकहा ० जाव आणाए आराहए भवति। तए णं ते समणोवासगा समणस्स भगवओ महावीरस्स अंतियं धम्मं सोच्चा निसम्म हट्ठतुट्ठा उट्ठाए उट्ठेंति उट्ठेत्ता समणं भगवं महावीरं वंदंति नमंसंति वंदित्ता नमंसित्ता जेणेव संखा समणोवासए तेणेव उवागच्छन्ति तेणेव उवागच्छित्ता संखं समणोवासयं एवं वयासी—तुमं देवाणुप्पिया! हिज्जा अम्हेहिं अप्पणा चेव एवं वयासी—तुम्हे णं देवाणुप्पिया! विउलं असणं ०जाव विहरिस्सामो। तए णं तुमं पोसहसालाए० जाव विहरिए, तं सुट्ठु णं तुमं देवाणुप्पिया! अम्हं हीलसि। अज्जो त्ति समणे भगवं महावीरे ते समणोवासए एवं वयासी—मा णं अज्जो! तुज्झे संखं समणोवासगं हीलह निंदह खिसह गरहह अवमन्नह। संखे णं समणोवासए पियधम्मे चेव दढधम्मे चेव सुदक्खु जागरियं जागरिए ( सू०—४३८ )

'आसाएमाण' त्ति ईषत्स्वादयन्तो बहु च त्यजन्तः इक्षुखण्डादेरिव 'विस्साएमाण' त्ति विशेषेण स्वादयन्तोऽल्पमेव त्यजन्तः खर्जूरादेरिव 'परिभाएमाण' त्ति ददतः 'परिभुंजेमाण' त्ति सर्वमुपभुञ्जाना अल्पमप्यपरित्यजन्त., एतेषा च पदाना वार्त्तमानिकप्रत्ययान्तत्वेऽप्यतीतप्रत्ययान्तता द्रष्टव्या। ततश्च तद्विपुलमशनाद्यास्वादितवन्त सन्तः 'पक्खियं पोसहं पडिजागरमाणा विहरिस्सामो' त्ति पक्षे—अर्द्धमासि भवं पाक्षिकं पौषधम्—अव्यापारपौषधं प्रतिजाग्रतः—अनुपालयन्त. विहरिष्यामः-स्थास्यामः। यच्चेहातीतकालीनप्रत्ययान्तत्वेऽपि वार्त्तमानिकप्रत्ययोपादानं तद्भोजनानन्तरमेवाक्षेपेण पौषधाभ्युपगमप्रदर्शनार्थम्। एवमुत्तरत्राऽपि गमनिका कार्येत्येके। अन्ये तु व्याचक्षते-इह किल पौषधं पर्वदिनानुष्ठानं, तच्च द्वेधा-इष्टजनभोजनदानादिरूपमाहारादिपौषधरूपं च। तत्र शंखः इष्टजनभोजनदानरूपं पौषधं कर्त्तुकाम सन् यदुक्तवांस्तद्दर्शयतेदमुक्तम्-'तए णं अम्हे तं विउलं असणपाणखाइमसाइमं अस्साएमाणा' इत्यादि, पुनश्च शङ्ख एव संवेगविशेषवशादाद्यपौषधविनिवृत्तमना. द्वितीयपौषधं चिकीर्षुर्यच्चिन्तितवांस्तद्दर्शयतेदमुक्तम्-'नो खलु मे सेयं त' मित्यादि, 'एगस्स अबिइयस्स' त्ति एकस्य-बाह्यसहायापेक्षया केवलस्य अद्वितीयस्य तथाविधक्रोधादिसहायापेक्षया केवलस्यैव। न चैकस्येति भणनादेकाकिन एव पौषधशालाया पौषधं कर्त्तु कल्पत इत्यवधारणीयम्, एतस्य चरितानुवादरूपत्वात्, तथा ग्रन्थान्तरे बहूनां श्रावकाणा पौषधशालायां मिलनश्रवणाद्दोषाभावात्परस्परेण स्मारणादिविशिष्टगुणसम्भवाच्चेति। 'गमणाऽऽगमणाए पडिक्कमइ' त्ति ईर्यापथिकीं प्रतिक्रामतीत्यर्थ.। 'छंदेणं' ति स्वाभिप्रायेण न तु मदीयाज्ञयेति। 'पुव्वरत्तावरत्तकालसमयंसि' त्ति पूर्वरात्रश्च-रात्रेः पूर्वो भागः अपगता रात्रिरपररात्रः, स च पूर्वरात्रापररात्रस्तल्लक्षणः कालसमयो य. स तथा तत्र 'धम्मजागरियं' ति धर्माय धर्मचिन्तया वा जागरिका—जागरण धर्मजागरिका ता 'पारित्तए त्ति कट्टु एव संपेहेइ' त्ति-पारयितुं—पारं नेतुम् एव सम्प्रेक्षते—इत्यालोचयति, किमित्याह—इति कर्त्तुम् एतस्यैवार्थस्य करणायेति। 'अभिगमो णऽत्थि' त्ति पञ्चप्रकार. पूर्वोक्तोऽभिगमो नास्त्यस्य, सचित्तादिद्रव्याणां विमोचनीयानामभावादिति। 'जहा पढमं' ति यथा तेषामेव प्रथमनिर्गमस्तथा-द्वितीयनिर्गमोऽपि वाच्य इत्यर्थः। भ० १२ श० १ उ०। ध० र०। स०। मल्लीसह प्रव्रजिते काशीराजे, ज्ञा० १ श्रु० ८ अ०। ('मल्लि' शब्दे षष्ठे भागे १५८ पृष्ठेऽस्य वक्तव्यता गता।) शंखः काशीवर्द्धनो वाराणसीनगरीसम्बन्धिजनपदवृद्धिकर इत्यर्थ.। अथ च

न प्रतीतः केवलमलकाभिधानो राजा वाराणस्यां भगवता प्रव्राजितोऽन्तकृद्दशासु श्रूयते स यदि परं नामान्तरेणायं भवतीति । स्था० ८ ठा० ३ उ० । हरिकेशबलसाधोः पूर्वभवजीवस्य सोमदेवपुरोहितस्य प्रज्ञापके मथुराराज्यमुपभुज्य प्रव्राजिते स्वनामख्याते राजनि, उत्त० १२ अ० । हस्तिनापुरनगरवासिनि स्वनामख्याते इभ्यश्रावके, दर्श० ४ तत्त्व। आ० चू० । वैताढ्यपर्वतस्योत्तरश्रेणेः सुरम्याया नगर्य्या राजनि स्वनामख्याते विद्याधरेन्द्रे, ती० ६ कल्प । स्वनामख्याते महानिधौ, जं० ।

वट्टविही आउगविही,कव्वस्स य चउव्विहस्स उप्पत्ती ।
संखे महाणिहिम्मि, तुडियंगाणं च सव्वेसिं ॥ ६ ॥

जं० ३ वक्ष० । ति० । दर्श० । ती० । ( नवनिधिवक्तव्यता 'णिहि' शब्दे चतुर्थभागे २१५१ पृष्ठे गता । ) ऋषभदेवस्य शतपुत्राणां तृतीये पुत्रे, कल्प० १ अधि० ७ क्षण । जम्बूद्वीपे मन्दरस्य पश्चिमे शीतोदाया महानद्या दक्षिणे स्वनामख्याते चक्रवर्तिविजये, स्था० ८ ठा०३ उ० । अरिष्टनेमेः पूर्वभवजीवे स्वनामख्याते राजनि, उत्त० १२ अ० ।

संख्य–त्रि० । संख्यानं संख्या तामर्हतीति संख्यः । 'दण्डादेर्यः' ॥६।४।१७८॥ इति यप्रत्ययः । संख्याते, कर्म०५ कर्म० । संख्यायत इति संख्यः । पक्षमासर्त्त्वयनादिप्रमिते काले, विशे० । संग्रामे, बृ० ३ उ० ।

सांख्य–पुं०। संख्यानं संख्या विवेकस्तां वेत्तीति सांख्यः । कपिलशिष्ये, सूत्र०१ श्रु०१ अ०१ उ०। सांख्याः प्राहुः–"अशेषशक्तिप्रचितात्, प्रधानादेव केवलात् ।कार्यभेदाः प्रवर्त्तन्ते,तद्रूपा एव भावतः॥७॥यदशेषाभिर्महदादिकार्यग्रामजनिकाभिरात्मभूताभिः शक्तिभिः प्रचितं युक्तं सत्त्वरजस्तमसां साम्यावस्थालक्षणं प्रधानम् , तत एव महदादयः कार्यभेदाः प्रवर्त्तन्त इति कापिलाः। 'प्रधानादेवे' त्यवधारणं कालपुरुषादिव्यवच्छेदार्थं, ' केवलादि ' ति वचनं सेश्वरसांख्योपकल्पितेश्वरनिराकरणार्थम् 'प्रवर्त्तन्ते' इति साक्षात्पारम्पर्येण उत्पद्यन्त इत्यर्थः । तथाहि–तेषां प्रक्रिया–प्रधानाद्–बुद्धिः प्रथममुत्पद्यते, बुद्धेश्चाहंकारः, अहंकारात्पञ्च तन्मात्राणि शब्दस्पर्शरूपरसगन्धात्मकानीति, इन्द्रियाणि चैकादशोत्पद्यन्ते—पञ्च बुद्धीन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणलक्षणानि, पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थसंज्ञकानि । एकादशं मनश्चेति–पञ्चभ्यस्तन्मात्रेभ्यः पञ्च भूतानि शब्दादाकाशः, स्पर्शाद्वायुः, रूपात्तेजः, रसादापः, गन्धात्पृथिवीति । तदुक्तमीश्वरकृष्णेन–"प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशक । तस्मादपि षोडशका–त्पञ्चभ्यः पञ्च भूतानि ॥२२॥" अत्र च–महानिति बुद्ध्यभिधानम्, बुद्धिश्च घटः पट इत्यध्यवसायलक्षणा, अहङ्कारस्त्वहं सुभगोऽहं दर्शनीय इत्याद्यभिधानस्वरूपः । मनस्तु संकल्पलक्षणम् , तद्यथा–कश्चिद्बटुः शृणोति–ग्रामान्तरे भोजनमस्तीति तत्र तस्य संकल्पः स्याद्यास्यामीति किं तत्र दधि स्यादुत दुग्धमित्येवं संकल्पः स्यात् । संकल्पवृत्ति मन इति । तदेवं बुद्ध्यहङ्कारमनसां परस्परं विशेषोऽवगन्तव्यः । महदादयः प्रधानपुरुषौ चेति पञ्चविंशतिरेषां तत्त्वानि । यथोक्तम्–"पञ्चविंशतितत्त्वज्ञो, यत्र तत्राश्रमे रतः । शिखी मुण्डी जटी वापि, मुच्यते नात्र संशयः ॥१॥" इति । महदादयश्च कार्यभेदाः प्रधानात्प्रवर्त्तमाना न कारणादत्यन्तभेदिनो भवन्ति बौद्धाद्यभिमता इव कार्यभेदाः,किं तु प्रधानरूपात्मान एव त्रैगुण्यादिना प्रकृत्यात्मकत्वात्।तथाहि–यदात्मकं कारणं कार्यमपि तदात्मकमेव यथा कृष्णैस्तन्तुभिरारब्धः पटः कृष्णः शुक्लैः शुक्ल उपलभ्यते,एवं प्रधानमपि त्रिगुणात्मकम्।तथा बुद्ध्यहङ्कारतन्मात्रेन्द्रियभूतात्मकं व्यक्तमपि त्रिगुणात्मकमुपलभ्यते,तस्मात्तद्रूपम्।किंच-अविवेकि।तथाहि इमे सत्त्वादयः 'इदं च महदादिकं व्यक्तमिति' पृथग् न शक्यते कर्तुं,किं तु–"ये गुणास्तद्व्यक्तं यद् व्यक्तं ते गुणा" इति । तथोभयमपि विषयो भोग्यस्वभावत्वात्। सामान्यं च सर्वपुरुषाणां भोग्यत्वात्पण्यस्त्रीवद्। अचेतनात्मकं च सुखदुःखं मोहाऽवेदकत्वात् । प्रसवधर्म्मि च । तथाहि प्रधानं बुद्धिं जनयति, साऽप्यहंकारं, सोऽपि तन्मात्राणि-इन्द्रियाणि चैकादश–तन्मात्राणि महाभूतानि जनयन्तीति। तस्मात्त्रैगुण्यादिरूपेण तद्रूपा एव कार्यभेदाः प्रवर्त्तन्ते।यथोक्तम्—"त्रिगुणमविवेकि विषयः,सामान्यमचेतनं प्रसवधर्मि।व्यक्तं तथा प्रधानं,तद्विपरीतस्तथा च पुमान्।११।"(साङ्ख्यकारि०) इति । अथ यदि तद्रूपा एव कार्यभेदाः कथं शास्त्रे व्यक्ताव्यक्तयोर्वैलक्षण्योपवर्णनम्।"हेतुमदनित्यमव्यापि, सक्रियमनेकमाश्रितं लिङ्गम् । सावयवं परतन्त्रं,व्यक्तं विपरीतमव्यक्तम्" ॥१०॥(साङ्ख्यकारिका)इति । क्रियमाणं शोभेत।अत्र ह्ययमर्थः-हेतुमत्कारणवद्व्यक्तमेव। तथाहि–प्रधानेन हेतुमती बुद्धिः,अहङ्कारो बुद्ध्या हेतुमान् पञ्च तन्मात्राणि एकादश चेन्द्रियाणि हेतुमन्ति अहंकारेण भूतानि तन्मात्रैः।नत्वेवमव्यक्तम् कुतश्चित्तस्यानुत्पत्तेः। तथा'व्यक्तमनित्यमुत्पत्तिधर्मकत्वात्'।तद्विपर्ययान्नत्वेवमव्यक्तम्। प्रधानपुरुषौ दिवि भुवि चान्तरिक्षे च सर्वत्र व्यापितया यथा वर्तेते न तथा व्यक्तं वर्त्तेत इति तदव्यापि।यथा च संसारकाले त्रयोदशविधेन बुद्ध्यहंकारेन्द्रियलक्षणेन करणेन संयुक्तं सूक्ष्मशरीराश्रितं व्यक्तम् संसारि न त्वेवमव्यक्तं तस्य विभुत्वेन सक्रियत्वायोगात्।बुद्ध्यहंकारादिभेदेन चानेकविधं व्यक्तमुपलभ्यते नाव्यक्तम्।तस्यैकस्यैव सकलत्रिलोकीकारणत्वात् । आश्रितं च व्यक्तं–यद्यस्मादुत्पद्यते तस्य तदाश्रितत्वात् , नत्वेवमव्यक्तम् अकार्यत्वात्तस्य । लयं गच्छतीति इति कृत्वा लिङ्गं च व्यक्तम् । तथाहि—प्रलयकाले भूतानि तन्मात्रेषु लीयन्ते, तन्मात्राणीन्द्रियाणि चाहंकारे,सोऽपि बुद्धौ, साऽपि प्रधाने।नत्वेवमव्यक्तं क्वचिदपि लयं गच्छतीति । लीनं वा अव्यक्तलक्षणमर्थं गमयति व्यक्तं कार्यत्वाल्लिङ्गं, न त्वेवमव्यक्तमकार्यत्वात् तस्य । सावयवं च व्यक्तं शब्दस्पर्शरूपरसगन्धात्मकैरवयवैर्युक्तत्वात् , नत्वेवमव्यक्तं तत्र शब्दादीनामनुपलब्धेः । अपि च—यथा पितरि जीवति पुत्रो न स्वतन्त्रो भवति तथा व्यक्तं सर्वदा कारणायत्तत्वात्परतन्त्रम् , नैवमव्यक्तमकारणाधीनत्वात्सर्वदा तस्येति । न, परमार्थतस्तद्रूप्येऽपि प्रकृतिविकारभेदेन तयोर्भेदाविरोधात् । तथाहि–स्वभावतस्त्रैगुण्यरूपेण प्रकृतिरूपा एव प्रवर्त्तन्ते विकाराः । सत्त्वरजस्तमसान्तूत्कटानुत्कटत्वविशेषात्सर्गवैचित्र्यं महदादिभेदेन न विरोत्स्यत इति कारणात्मनि कार्यमस्तीति प्रतिज्ञात भवति । सम्म०१ काण्ड (३ गाथाव्याख्यायाम्)।

इदानीमकारकवादिमताभिधित्सयाऽऽह—

कुव्वं च कारयं चेव, सव्वं कुव्वं न विज्जई ।

एवं अकारओ अप्पा, एवं ते उ पगब्भिआ ॥१३॥

कुर्वन्निति स्वतन्त्रः कर्ताऽभिधीयते आत्मनश्चामूर्तत्वान्नित्यत्वात्सर्वव्यापित्वाच्च कर्तृत्वानुपपत्तिः। अत एव हेतोः कारयितृत्वमप्यात्मनोऽनुपपन्नमिति । पूर्वश्चशब्दोऽतीतानागतकर्तृत्वनिषेधको, द्वितीयः समुच्चयार्थः । ततश्चात्मा न स्वयं क्रियायां प्रवर्तते नाप्यन्यं प्रवर्तयति । यद्यपि च स्थितिक्रियां मुद्राप्रतिबिम्बोदयन्यायेन ( जपास्फटिकन्यायेन च ) भुजिक्रियां करोति, तथापि समस्तक्रियाकर्तृत्वं तस्य नास्तीत्येतद्दर्शयति—' सव्वं कुव्वं ण विज्जइ' त्ति सर्वो परिस्पन्दादिकां देशाद्देशान्तरप्राप्तिलक्षणां क्रियां कुर्वन्नात्मा न विद्यते सर्वव्यापित्वेनामूर्तत्वेन चाकाशस्येवात्मनो निष्क्रियत्वमिति । तथा चोक्तम्-'अकर्ता निर्गुणो भोक्ता, आत्मा सांख्यनिदर्शने' इति । एवमनेन प्रकारेणात्माऽकारक इति । ते—सांख्या तुशब्दः पूर्वेभ्यो व्यतिरेकमाह-ते पुनः सांख्या एवं प्रगल्भिताः प्रगल्भवन्तो धार्ष्ट्यवन्तः सन्तो भूयो भूयस्तत्र तत्र प्रतिपादयन्ति, यथा "प्रकृतिः करोति पुरुष उपभुङ्क्ते तथा बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते इत्याद्याकारवादिमतमिति। सूत्र० १ श्रु० १ अ० १ उ०। ( 'कज्जकारणभाव' शब्दे तृतीयभागे १८७ पृष्ठे सत्कार्यवाद उक्तः । )

सांख्यदर्शनप्रतिक्षेपः—अशुद्धद्रव्यास्तिकसांख्यमतप्रतिक्षेपकस्तु पर्यायास्तिक प्राह-यदुक्तं कापिलैः "प्रधानादेव महदादिकार्यविशेषाः प्रवर्त्तन्ते" इति । तत्र यदि महदादयः कार्यविशेषाः प्रधानस्वभावा एव कथमेषां कार्यतया ततः प्रवृत्तिर्युक्ता ?, न हि यद् यतोऽव्यतिरिक्तं तत्तस्य कार्यं कारणं वेति व्यपदेष्टुं युक्तं,कार्यकारणयोर्भिन्नलक्षणत्वात् अन्यथा हि 'इदं कारणं कार्यं च' इत्यसंकीर्णव्यवस्थोत्सीदेत्। ततश्च यदुक्तं प्रकृतिकारणिकैः —"मूलप्रकृतेः कारणत्वमेव, भूतेन्द्रियलक्षणस्य षोडशकगणस्य कार्यत्वमेव, महदहङ्कारतन्मात्राणां च पूर्वोत्तरापेक्षया कार्यत्वकारणत्वे च ' इति तत्सङ्गतं न स्यात्। आह चेश्वरकृष्णः—"मूलप्रकृतिरविकृति—र्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो, न प्रकृतिर्न विकृतिः पुरुषः ॥३॥" (सांख्यका०) इति। यतः सर्वेषां परस्परमव्यतिरेकात्कार्यत्वं कारणत्वं वा प्रसज्येत् अन्यापेक्षत्वाद्वा कार्यकारणभावस्यापेक्षणीयस्य रूपान्तरस्य-वाऽभावात्। पुरुषवत् न प्रकृतित्व विकृतित्वं वा सर्वेषां स्यात्। अन्यथा पुरुषस्यापि प्रकृतिविकारव्यपदेशप्रसक्तिः । उक्तं च—" यदेव दधि तत् क्षीरं, यत् क्षीरं तद्दधीति च । वदता विन्ध्यवासित्वं, ख्यापितं विन्ध्यवासिना ॥ १ ॥" इति । 'हेतुमत्त्वादिति धर्मासक्तिविपरीतमव्यक्तम्' इत्येतदपि बालप्रलापमनुकरोति । न हि यद्यतोऽव्यतिरिक्तस्वभावं तत्ततो विपरीतं युक्तं वैपरीत्यस्य रूपान्तरलक्षणत्वात्, अन्यथा भेदव्यवहारोच्छेदप्रसक्त इति । सत्त्वरजस्तमसा चैतन्यानां च परस्परभेदाभ्युपगमो निर्निमित्तो भवेत्ततश्च विश्वस्यैकरूपत्वात् सहोत्पत्तिविनाशप्रसङ्गः अभेदव्यवस्थितेरभिन्नयोगक्षेमलक्षणत्वादिति । व्यक्तरूपाव्यतिरेकाद् अव्यक्तमपि हेतुमदादिधर्मासक्तिप्रसक्तं व्यक्तस्वरूपवत्, अहेतुमत्त्वादिधर्मकलापाध्यासितं वा व्यक्तम् अव्यक्तरूपाव्यतिरेकात्तत्स्वरूपवत् अन्यथाऽतिप्रसक्तिः । अपि च-अन्वयव्यतिरेकनिबन्धनः कार्यकारणभावः प्रसिद्धः,न च प्रधानादिभ्यो महदाद्युत्पत्त्यवगमनिबन्धनः अन्वयो व्यतिरेको वा प्रतीतिगोचरः सिद्धः,ः यतः -'प्रधानान्महान्महतोऽहङ्कारः' इत्यादि प्रक्रिया सिद्धिसौधशिखरमध्यास्त । तस्मान्निर्बन्धन एवायं प्रधानादिभ्यो महदाद्युत्पत्तिप्रक्रमः । न च नित्यस्य हेतुभाव संगतः यतः प्रधानान्महदादीनामुत्पत्तिः स्यान्नित्यस्य क्रम-यौगपद्याभ्यामर्थक्रियाविरोधादिति प्रतिपादयिष्यमाणत्वात्। अथ नास्माभिरपूर्वस्वभावोत्पत्त्या कार्यकारणभावोऽभ्युपगतः यतो रूपाऽभेदादसौ विरुध्येते। किं तु-प्रधानं महदादिरूपेण परिणतिमुपगच्छति, सर्पः कुण्डलादिरूपेणेवेति । ' प्रधानं महदादिकारणम् ' इति व्यपदिश्यते, महदादयस्तु तत्परिणामरूपत्वात्तत्कार्यव्यपदेशमासादयन्ति । न च परिणामोऽभेदेऽपि विरोधमनुभवति एकवस्त्वधिष्ठानत्वात्तस्येति, असम्यगेतत्परिणामासिद्धेः । तथाहि-असौ-पूर्वरूपप्रच्युतेर्भवेदप्रच्युतेर्वेति कल्पनाद्वयम् । तत्र यद्यप्रच्युतेरिति पक्षस्तदावस्थासांकर्याद्वृद्धाद्यवस्थायामपि युवत्वाद्यवस्थोपलब्धिप्रसङ्गः । अथ प्रच्युतिरिति पक्षस्तदा स्वरूपहानिप्रसक्तिरिति पूर्वकं स्वभावान्तरं निरुद्धम् अपरं च तदुत्पन्नमिति न कस्यचित्परिणामः सिद्ध्येत् । अपि च तस्यैवान्यथाभाव परिणामो भवद्भिर्वर्ण्यते; स चैकदेशेन सर्वात्मना वा ? न तावदेकदेशेन,एकस्यैकदेशासम्भवात् , नाऽपि सर्वात्मना, पूर्वपदार्थविनाशेन पदार्थान्तरोत्पादप्रसक्तात् । अतो न तस्यैवान्यथात्वं युक्तं, तस्य स्वभावान्तरोत्पादनिबन्धनत्वात् । व्यवस्थितस्य धर्मिणो धर्मान्तरनिवृत्तौ धर्मान्तरप्रादुर्भावलक्षण परिणामोऽभ्युपगम्यते नतु स्वभावान्यथात्वमिति चेत् , असदेतत् , यतः प्रच्यवमान उत्पद्यमानश्च धर्मो धर्मिणोऽर्थान्तरभूतोऽभ्युपगन्तव्यः, अन्यथा धर्मिण्यवस्थिते तस्य तिरोभावाविर्भावासम्भवात् । तथाहि-यस्मिन् वर्तमाने यो व्यावर्त्तते स ततो भिन्नो , यथा घटेऽनुवर्त्तमाने ततो व्यावर्त्यमानः पटः , व्यावर्त्तते च धर्मिण्यनुवर्त्तमानेऽप्याविर्भावतिरोभावासङ्गी धर्मकलाप इति, कथमसौ ततो न भिन्न इति । धर्मी तदवस्थ एवेति कथं परिणतो नाम? यतो नार्थान्तरभूतयोः कटपटयोरुत्पादविनाशेऽचलितरूपस्य घटादेः परिणामो भवत्यतिप्रसङ्गात् , अन्यथा चैतन्यमपि परिणामि स्यात् । तत्सम्बन्धयोर्धर्मयोरुत्पादविनाशात् तस्याऽसावभ्युपगम्यते नान्यस्येति चेत् , न, सदसतोः सम्बन्धाभावेन तत्सम्बन्धित्वायोगात्। तथाहि-सम्बन्धो भवन् सतो वा भवेदसतो वा भवेदिति कल्पनाद्वयम्। न तावत् सतः समधिगताशेषस्वभावस्यान्यानपेक्षतया क्वचिदपि पारतन्त्र्यासम्भवात्। नाप्यसतः, सर्वोपाख्याविरहिततया तस्य क्वचिदाश्रितत्वानुपपत्तेः ; नहि शशविषाणादिः क्वचिदप्याश्रित उपलब्धः। नच व्यतिरिक्तधर्मान्तरोत्पादविनाशे सति परिणामो भवद्भिर्व्यवस्थापितः,किं तर्हि? यत्रात्मभूतैकस्वभावानुवृत्तिः अवस्थाभेदश्च तत्रैव तद्व्यवस्था। नच धर्मिणः सकाशाद्धर्मयोर्व्यतिरेके सति एकस्वभावानुवृत्तिरस्ति, यतो धर्म्येव तयोरेक आत्मा; स च व्यतिरिक्त इति नात्मभूतैकस्वभावानुवृत्तिः । न च निरुध्यमानोत्पद्यमानधर्मद्वयव्यतिरिक्तो धर्मी उपलब्धिलक्षणप्राप्तो दृग्गोचरमवतरति कस्यचिदिति तादृशोऽसद्व्यवहारविषयतैव। अथ अनर्थान्तरभूत इति पक्षः कक्षीक्रियते । तथाऽप्येकस्माद्धर्मिस्वरूपादव्यतिरिक्तत्वात्तिरोभावाऽऽविर्भाववतोर्धर्मयोर्द्वयोरप्येकत्वं

धर्मिस्वरूपवदिति केन रूपेण धर्मी परिणतः स्यात् धर्मो वा ? अवस्थातुश्च धर्मिणः सकाशादव्यतिरेकाद्धर्मयोरवस्थातृस्वरूपवन्न निवृत्तिः, नाऽपि प्रादुर्भावः, धर्माभ्यां च धर्मिणोऽनन्यत्वात् धर्मस्वरूपवत्। अपूर्वस्य चोत्पादः पूर्वस्य च विनाश इति नैकस्य कस्यचित्परिणतिः सिद्धयेदिति, न परिणामवशादपि साङ्ख्यानां कार्यकारणभावव्यवहारस्संगच्छते। सम्म० १ काण्ड। (न च परिणामप्रसाधकं प्रमाणं क्षणिकमक्षणिकं वा सम्भवतीत्यादि, साङ्ख्यमतप्रदर्शनं तत्प्रतिक्षेपश्च 'कज्जकारणभाव' शब्दे तृतीयभागे १८८ पृष्ठे गतः।) ततः 'शक्तस्य शक्यकरणाद्' इत्ययमप्यनैकान्तिक.। सत्कार्यवादे च कारणभावस्याघटमानत्वाद् 'कारणभावाद्' इत्ययमप्यनैकान्तिकः। अथवा-कार्यत्वासम्भवस्य सतः प्राक् प्रतिपादितत्वदासत्कार्यवाद एव चोपादानग्रहणादिनियमस्य युज्यमानत्वाद् 'उपादानग्रहणाद्' इत्यादिहेतुचतुष्टयस्य साध्यविपर्ययसाधनाद्विरुद्धता। अथ यदि 'असदेवोत्पद्यत' इति भवतां मतं तत् कथं सदसतोरुत्पादः सूत्रे प्रतिषिद्धः?। उक्तं च तत्र-"अनुत्पन्नाश्च महामतेः सर्वधर्म्मा सदसतोरनुत्पन्नत्वादिति," न, वस्तूनां पूर्वापरकोटिशून्यक्षणमात्रावस्थायी स्वभाव एव उत्पाद उच्यते भेदान्तरप्रतिक्षेपेण तन्मात्रजिज्ञासायां, न पुनर्वैभाषिकपरिकल्पिता जातिः संस्कृतलक्षणा प्रतिषेत्स्यमानत्वात्तस्याः। नापि वैशेषिकादिपरिकल्पितसत्तासमवाय. स्वकारणसमवायो वा तयोरपि निषेत्स्यमानत्वात्, नित्यत्वात् तयोः परमतेन, नित्यस्य च जन्मानुपपत्तेः, उक्तं च-'सत्ता स्वकारणाश्लेष-करणात्कारणं किल। सा सत्ता स च सम्बन्धो, नित्यौ कार्यमथेह किम् ॥१॥' इति। स एवमात्मक उत्पादो नाऽसता तादात्म्येन सम्बध्यते, सदसतोर्विरोधात्। न ह्यसत् सद्भवति। नापि सता पूर्वभाविना सम्बध्यते। तस्य पूर्वमसत्वात्कल्पनाबुद्धया तु केवलमसता वस्तु संबध्यते, न ह्यसन्नाम किंचिदस्ति यदुत्पत्तिमाविशेत्। 'असदुत्पद्यत' इति तु कल्पनाविरचितव्यवहारमात्रम्। कल्पनाबीजं तु प्रतिनियतपदार्थानन्तरोपलब्धस्य रूपस्योपलब्धिलक्षणप्राप्तस्योत्पत्त्यवस्थात. प्रागनुपलब्धि· तदेवमुत्पत्तेः प्राक्कार्यस्य न सत्त्वं धर्म., नाऽप्यसत्त्वं धर्मस्यैवाभावात्। अपि च-पयःप्रभृतिषु कारणेषु दध्यादिकं कार्यमस्तीति यदुच्यते तदा वक्तव्य-किं व्यक्तिरूपेण तत्तत्र सद्, अथ शक्तिरूपेण ?, तत्र यदि व्यक्तिरूपेण इति पक्षः, स न युक्त.-क्षीराद्यवस्थायामपि दध्यादीनां स्वरूपेणोपलब्धिप्रसक्तात्। नाऽपि शक्तिरूपेण,यतः तद्रूपं दध्यादेः कार्यानुपलब्धिलक्षणप्राप्तात् किमन्यद्, आहोश्वित् तदेव ?, यदि तदेव तदा पूर्वमेवोपलब्धिप्रसक्तो दध्यादेः। अथान्यदिति पक्षस्तदा कारणात्मनि कार्यमस्तीत्यभ्युपगमस्त्यक्तो भवेत् कार्याद्भिन्नतनो· शक्त्यभिधानस्य पदार्थान्तरस्य सद्भावाभ्युपगमात्,तथाहि-यदेवाविर्भूतविशिष्टरसवीर्यविपाकादिगुणसमन्वित पदार्थस्वरूपं तदेव दध्यादिकं कार्यमुच्यते-क्षीरावस्थायां च तदुपलब्धिलक्षणप्राप्तमनुपलभ्यमानमसद्व्यवहारविषयत्वमवतरति। यच्चान्यच्छक्तिरूपं तत्कार्यमेव न भवति, नच अन्यस्य भावेऽन्यत्सद्भवति अतिप्रसङ्गात्। न च-उपचारकल्पनया तद्व्यपदेशसद्भावेऽपि वस्तुव्यवस्था, शब्दस्य वस्तुप्रतिबन्धाभावात्। तद्भावेऽपि वस्तुसद्भावासिद्धेः। यदपि 'भेदानामन्वयदर्शनात्प्रधानास्तित्वम्' उक्तम् तत्र हेतोरसिद्धत्वं, नहि शब्दादिलक्षणं व्यक्तं सुखाद्यन्वितं सिद्ध सुखादीना ज्ञानरूपत्वाच्छब्दादीना च तद्रूपविकलत्वाच्च सुखाद्यन्वितत्वम्। तथा च प्रयोगः। ये ज्ञानरूपविकला न ते सुखाद्यात्मका.,यथा-परोपगत आत्मा। ज्ञानरूपविकलाश्च शब्दादय इति व्यापकानुपलब्धिः। अथ ज्ञानमयत्वेन सुखादिरूपत्वस्य व्याप्तिर्यदि सिद्धा भवेत् तदा तन्नि(न्नि)वर्त्तमानं सुखादिमयत्वमादाय निवर्तेत; न च सा सिद्धा पुरुषस्यैव संविद्रूपत्वेनेष्टेरिति, असदेतत्, सुखादीनां स्वसंवेदनरूपतया स्पष्टमनुभूयमानत्वात्। तथाहि-स्पष्टेयं सुखादीनां प्रीतिपरितापादिरूपेण शब्दादिविषयसन्निधाने असन्निधाने च प्रकाशान्तरनिरपेक्षा प्रकाशात्मिका स्वसंवित्तिः। यच्च प्रकाशान्तरनिरपेक्षं सातादिरूपतया स्वयं सिद्धिमवतरति तज्ज्ञानं, संवेदनं, चैतन्यं, सुखमित्यादिभिः पर्यायैरभिधीयते। न च सुखादीनामन्येन संवेदनेनाऽनुभवादनुभवरूपता प्रथते, तत्संवेदनस्यासातादिरूपताप्रसक्तेः स्वयमतदात्मकत्वात्। तथाहि—योगिनोऽनुमानवतो वा परकीयं सुखादिकं संवेदयतो न सातादिरूपता,अन्यथा योग्यादयोऽपि साक्षात् सुखाद्यनुभाविन इवातुरादयः स्युर्योग्यादिवद्वा अन्येषामप्यनुग्रहोपघातौ न स्याताम् अविशेषात्। संवेदनस्य च सातादिरूपत्वाभ्युपगमे संविद्रूपत्वं सुखादेः सिद्धम्। इदमेव हि सुखं दुःखं च न. 'यत्सातमसातं च संवेदनम्' इति नानैकान्तिकता हेतो.। नाप्यसिद्धता, सर्वेषां बाह्यार्थवादिनां संविद्रूपरहितत्वस्य शब्दादिषु सिद्धत्वात्। विज्ञानवादिमताभ्युपगमोऽन्यथा प्रसज्येत। तथा चेष्टसिद्धिरेव। विरुद्धताऽप्यस्य हेतोर्न सम्भवति सपक्षे भावात्। न च यथा बहिर्देशावस्थितनीलादिसन्निधानवशादनीलादिस्वरूपमपि संवेदनं नीलनिर्भासं संवेद्यते तथा बाह्यसुखाद्युपधानसामर्थ्यादसातादिरूपमपि सातादिरूप लक्ष्यते तेन संवेदनस्य सातादिरूपत्वेऽपि न सुखादीनां संविद्रूपत्वं सिध्यति अतोऽनैकान्तिकता हेतोरिति वक्तव्यम्, अभ्यास-प्रकृतिविशेषत एकस्मिन्नपि त्रिगुणात्मके वस्तुनि प्रीत्याद्याकारप्रतिनियतगुणोपलब्धिदर्शनात्। तथाहि-भावनावशेन मद्याङ्गनादिषु कामुकादीनां जातिविशेषाच्च करभादीनां केषाञ्चित्प्रतिनियताः प्रीत्यादय. सम्भवन्ति न सर्वेषाम्, एतच्च शब्दादीनां सुखादिरूपत्वान्न युक्तं, सर्वेषामभिन्नवस्तुविषयत्वान्नीलादिविषयसंवित्तिवत्प्रत्येकं चित्रा संवित्प्रसज्येत। अथ यद्यपि त्र्यात्मकं वस्तु तथाऽप्यदृष्टादिलक्षणसहकारिवशात्किचिदेव कस्यचिद्रूपमाभाति न सर्वं सर्वस्य,असदेतत्;तदाकारशून्यत्वादवस्त्वालम्बनप्रतीतिप्रसक्ते.। तथाहि-त्र्याकारं तद्वस्तु एकाकाराश्च संविद· संवेद्यन्त इति कथम् अनालम्बनास्ता न भवन्ति? प्रयोग -यद् यदाकारं संवेदनं न भवति न तत्तद्विषयं, यथा चक्षुर्ज्ञानं न शब्दविषयम्, त्र्यात्मकवस्त्वाकारशून्याश्च यथोक्ता. संविद इति व्यापकानुपलब्धि.। तथापि-तद्विषयत्वेऽतिप्रसङ्गापत्तिर्विपर्यये वा बाधकं प्रमाणम्। न च यथा प्रत्यक्षेण गृहीतेऽपि सर्वात्मना वस्तुन्याभ्यासादिवशात् क्वचिदेव क्षणिकत्वादौ निश्चयोत्पत्तिर्न सर्वत्र तद्वददृष्टादिवलादेकाकारा संविदुदेष्यतीत्यभिधातुं क्षमं, क्षणिकादिविकल्पस्याऽपि परमार्थता वस्तुविषयत्वानभ्युपग-

माद्वस्तुनो विकल्पागोचरत्वात्परम्परया वस्तुप्रतिबन्धात् । तथाविधतत्प्राप्तिहेतुतया तु तस्य प्रामाण्यम्। उक्तं च-"लिङ्गलिङ्गिधियोरेवं, पारंपर्येण वस्तुनि । प्रतिबन्धात्तदाभासशून्ययोरप्यवन्धनम् ॥ १ ॥" इति परैस्तु परमार्थत एव वस्तुविषयत्वमिष्टं प्रीत्यादिप्रतिपत्तीनाम्, अन्यथा सुखाद्यात्मनां शब्दादीनामनुभवात्सुखानुभवस्यातिरित्येतदसङ्गतं स्यात् । सुखादिसंविदां च सविकल्पकत्वान्न किंचिदनिश्चितं रूपमस्तीति सर्वात्मनाऽनुभवस्यातिप्रसक्तिः। यतः स्वार्थप्रतिपत्तिर्निश्चयानामियमेव यत्तन्निश्चयनं नाम । यदपि'प्रसादतापदैन्याद्युपलम्भात्सुखाद्यन्वितत्वं सिद्धं शब्दादीनामि'त्यभिहितं, तदनैकान्तिकम् । तथाहि—योगिनां प्रकृतिव्यतिरिक्तं पुरुषं भावयतां तमालम्ब्य प्रकर्षप्राप्तयोगानां प्रसादः प्रादुर्भवति प्रीतिश्च, अप्राप्तयोगानां तद् द्रुततरमपश्यतामुद्वेग आविर्भवति। जडमतीनां च प्रकृत्यावरणं प्रादुर्भवति । न च परैः पुरुषस्त्रिगुणात्मकोऽभीष्ट इति 'प्रसादतापदैन्यादिकार्योपलब्धेः' इत्यस्य कथं नानैकान्तिकता ?। नच सङ्कल्पात्प्रीत्यादीनि प्रादुर्भवन्ति न पुरुषादिति वाच्यं शब्दादिष्वप्यस्य समानत्वात्, सङ्कल्पमात्रभावित्वे च सुखादयो बाह्या न स्युः सङ्कल्पस्य संविद्रूपत्वात् । बाह्यविषयोपधानमन्तरेणाऽपि पुरुषदर्शने प्रीत्याद्युत्पत्तिदर्शनात्।'बाह्यसुखाद्युपधानबलात्सातादिरूपं संवेदनस्य'इत्यपि सव्यभिचारमेव इष्टानिष्टविकल्पादनावाश्रितवाह्यविषयसन्निधानं प्रसिद्धमेव हि सुखादिसंवेदनं कथं तत्परोपधानमेव युक्तम् ?। नच मनोऽपि त्रिगुणं तदुपधानवशात्तदाविर्भवतीति वक्तव्यम् ,'यदेव हि प्रकाशान्तरनिरपेक्षं स्वयं सिद्धम्' इत्यादिना संविद्रूपत्वस्य तत्र साधितत्वात् अतः 'समन्वयादि'त्यसिद्धो हेतुः। नैकान्तिकश्च प्रधानाख्येन कारणेन हेतो कचिदप्यन्वयासिद्धेः। तथाहि-व्यापि नित्यमेकं त्रिगुणात्मकं कारणं साधयितुमिष्टं, नचैवंभूतेन कारणेन हेतोः प्रतिबन्धः प्रसिद्धः। न-चाऽयं नियम. यदात्मकं कार्यं कारणमपि तदात्मकमेव,तयोर्भेदात्।तथाहि—हेतुमदादिभिर्धर्मैर्युक्तं व्यक्तमभ्युपगम्यते तद्विपरीतं चाऽव्यक्तमिति कथं न कार्यकारणयोर्भेदादनैकान्तिको हेतु. ?, धर्मिविशेषविपरीतसाधनाद्विरुद्धोऽप्ययं हेतु.।तथाहि-एको नित्यस्त्रिगुणात्मक. कारणभूतो धर्मी साधयितुमिष्टस्तद्विपरीतश्चानेकोऽनित्यश्च,तत. सिद्ध-, मासादयति,यतो व्यक्तं नैकया त्रिगुणात्मिकया स्वात्मभूतया जात्या समन्वितमुपलभ्यते, किं तर्हि ?, अनेकत्वानित्यत्वादिधर्मकलापोपेतमेव, अतः कार्यस्यानित्यत्वाऽनेकत्वादिधर्मान्वयदर्शनात्कारणमपि तथैवाऽनुमीयते । क्रमयौगपद्याभ्यामर्थक्रियाविरोधान्न नित्यस्य कारणत्वं कारणभेदकृतत्वाच्च कार्यवैचित्र्यस्य अन्यथा निर्हेतुकत्वप्रसङ्गात्,नैकरूपस्याऽपि कारणत्वमिति विपर्ययसिद्धिप्रसक्तेर्न नित्यैकरूपप्रधानसिद्धिः। यदि तु अनित्यानेकरूपे कारणे'प्रधानम्'इति संज्ञा क्रियते तदा अविवाद एव। यद्यपि 'सत् सदि' त्येकरूपेण 'स एवाऽयमिति'च स्थिरेण स्वभावेनानुगता अध्यवसीयन्ते कल्पनाज्ञानेन भावास्तथाऽपि नैषामेकजात्यन्वयः स्वस्वभावव्यवस्थिततया देशकालशक्तिप्रतिभासादिभेदात् , नापि स्थैर्यं क्रमोत्पत्तिमतां तथैव प्रतिभासनात् । 'प्रतिभासभेदश्च भावान् भिनत्ति'इत्यसकृत्प्रतिपादितम्।'मृद्विकारादिवद्'इति दृष्टान्तोऽपि साध्यसाधनविकलः एकजात्यन्वयस्यैककारणप्रभवत्वस्य च तत्राऽप्यसिद्धत्वात् । न चैकं मृत्पिण्डादिकं कारणं मृदादिजातिश्चैकानुगता तत्र सिद्धेति वक्तव्यं,यतोऽनैकोऽवयवी मृत्पिण्डादिरस्ति एकदेशावरणे सर्वाऽऽवरणप्रसङ्गात् । नाऽप्येका जातिः, प्रतिव्यक्ति प्रतिभासभेदादिति प्रतिपादितत्वात्प्रतिपादयिष्यमाणत्वाच्च ।

'समन्वयाद्' इत्यस्य हेतोः पुरुषैश्चानैकान्तिकत्वम् । तथाहि—चेतनत्वादिधर्मैरन्विताः पुमांसोऽभीष्टाः । नच तथाविधैककारणपूर्वकास्त इष्यन्ते । नच चेतनाद्यन्वितत्वं पुरुषाणां गौणं यतोऽचेतनादिव्यावृत्ताः सर्व एव पुरुषाः, अतोऽर्थान्तरव्यावृत्तिरूपा चैतन्यादिजातिस्त-दनुगामिनी कल्पिता,न तु तात्त्विकी समस्तीति वक्तव्यम् , अन्यत्रापि समानत्वात्-यतः शब्दादिष्वप्यमुख्यं सुखा-द्यन्वितत्वमसत्स्वप्येककारणपूर्वकत्वे पुरुषेष्विव भविष्यतीति कथं नानैकान्तिकत्वं हेतोः। मूलप्रकृत्यवस्थायां च सत्त्वरजस्तमोलक्षणा गुणाः, गुणत्वाऽचेतनाऽभोक्तृत्वादिभिरान्विता. प्रधानपुरुषाश्च नित्यत्वादिभिरन्वितास्तथाभूतैककारणपूर्वकाश्च न भवन्तीत्यनैकान्तिकत्वमेव । तदेवं 'समन्वयाद्'इत्यस्य हेतोरसिद्धविरुद्धानैकान्तिकदोषदुष्टत्वान्न प्रधानप्रसाधकत्वम्। अनेनैव न्यायेन 'परिमाणात्'शक्तितः प्रवृत्तेः कार्यकारणभावाद्वैश्वरूप्यस्याविभागादित्यादिकानामपि न प्रधानाऽस्तित्वसाधकत्वम्।तथाहि-साध्यविपर्यये च बाधकप्रमाणाप्रदर्शनात्सर्वेऽप्येतेऽनैकान्तिका.। नहि प्रधानाख्यस्य हेतोरभावेन परिमाणादीनां विरोधः सिद्ध.। तथाहि-यदि तावत्कारणमात्रस्याऽस्तित्वमत्र साध्यते तदा सिद्धसाध्यता नह्यस्माकं कारणमन्तरेण कार्यस्योत्पादोऽ-भीष्ट., नच कारणमात्रस्य 'प्रधानमिति'नाम कारणे किंचिद्बाध्यते । अथ प्रेक्षावत्कारणमस्ति यद् व्यक्तं नियतपरिमाणमुत्पादयति शक्तितश्च प्रवर्त्तत इति साध्यते तदाऽनैकान्तिकता, विनाऽपि हि प्रेक्षावता विधात्रा स्वहेतुसामर्थ्यात्प्रतिनियतपरिमाणादियुक्तस्योत्पत्त्यविरोधात्। न च प्रधानं प्रेक्षावत्कारणं युक्तम्,अचेतनत्वात् तस्य प्रेक्षायाश्च चेतनापर्यायत्वात्। अपि च-'शक्तितः प्रवृत्तेः' इत्यनेन किमव्यतिरिक्तशक्तिमत्कारणं साध्यते, आहोस्विद्व्यतिरिक्तानेकशक्तिसम्बन्धि तदेकत्वादिधर्मकलापाध्यासितमिति कल्पनाद्वयम् । तत्र यद्याद्या कल्पना तदा सिद्धसाधनं कारणमात्रस्य ततः सिद्धयभ्युपगमात् । द्वितीयायां हेतोरनैकान्तिकता, तथाभूतेन क्वचिदप्यन्वयासिद्धेर्हेतुश्चासिद्धो यतो न विभिन्नशक्तियोगात्कस्यचित् क्वचित्कार्ये कारणस्य प्रवृत्ति' सिद्धा स्वात्मभूतत्वाच्छक्तीनाम् निरन्वयविनाशावष्टब्धत्वात् सर्वभावानां क्वचिदपि लयासिद्धेः, अविभागाद्वैश्वरूपस्येत्ययमपि हेतुरसिद्धः,लयो हि भवन् पूर्वस्वभावापगमे वा भवेद्, अनपगमे वा?, यद्याद्य. पक्षस्तदा निरन्वयविनाशप्रसक्तः। द्वितीयस्तदा लयाऽनुपपत्ति', यतो नाविकलं स्वरूपं बिभ्रत. कस्यचिल्लयो नामातिप्रसक्तादतिविरुद्धमिदं परस्परतः अविभागो 'वैश्वरूप्यं ' चेति । विरुद्धा वा एते हेतव. प्रधानहेत्वभावस्वकारणशक्तिभेदतः कार्यस्य परिमाणादिरूपेण वैचित्र्यस्य कार्यकारणभावादिना चोपपद्यमानत्वात् । तथाहि-प्रधानं यदि व्यक्तस्य कारणं भवेत्तदा सर्वमेव विश्वं तत्स्वरूपवत्तदात्मकत्वादेकमेव द्रव्यं स्यात् ,

ततश्च 'बुद्धिरेका एकोऽहंकारः पञ्च तन्मात्राणी' त्यादिकः परिमाणविभागोऽसङ्गतः स्यादिति निष्परिमाणमेव जगत्स्यात्। तथा प्रधानहेत्वभावे एव-प्राक्तनन्यायेन'अभेदे न शक्तिर्न क्रिया' इत्यादिना घटादिकरणे कुम्भकारादीनां शक्तितः प्रवृत्तिरुपपद्यते, कार्यकारणविभागोऽपि प्रधानहेत्वभावे एव युक्तो ननु तत्सद्भावे इति प्राक् प्रतिपादितम्। प्रधानसद्भावे वैश्वरूप्यमनुपपत्तिकमेव, सर्वस्य जगतः तन्मयत्वेन तत्स्वरूपवदेकत्वप्रसक्तेस्तदविभागो दूरोत्सारित एवेति न कुतश्चिद्धेतोः प्रधानासिद्धिः।

यदपि प्रधानविकारबुद्धिव्यतिरिक्तं चैतन्यमात्मनो रूपं कल्पयन्ति "चैतन्यं पुरुषस्य स्वरूपम्" इत्यागमात्पुरुषश्च शुभाशुभकर्मफलस्य प्रधानोपनीतस्य भोक्ता न तु कर्त्ता सकलजगत्परिणतिरूपाया' प्रकृतेरेव कर्तृत्वाभ्युपगमात्। प्रमाणयन्ति चात्र यत्संघातरूपं वस्तु तत्परार्थं दृष्टं, यथाशयनाशनाद्यङ्गादि, संघातरूपाश्च चक्षुरादय इति स्वभावहेतु, यश्चासौ पर. स आत्मेति सामर्थ्यात्सिद्धम्। अत्र च 'चैतन्यं पुरुषस्य स्वरूपम्' इत्यादिवदता चैतन्यं नित्यैकरूपमिति प्रतिज्ञातम् तस्य नित्यैकरूपात्पुरुषादव्यतिरिक्तत्वात्, अध्यत्तविरुद्धं चेदं रूपादिसंविदां स्फुटं स्वसंवित्त्या भिन्नस्वरूपावगमादेकरूपत्वे त्वात्मनोऽनेकविधार्थस्य भोक्तृत्वाभ्युपगमो विरुद्ध आसज्येत। अभोक्त्रवस्थाव्यतिरिक्तत्वाद्भोक्त्रवस्थाया', न च दिदृक्षादियोगादविरोधो दिदृक्षाशुश्रूषादीनां परस्परतोऽभिन्नानामुत्पादैरात्मनोऽप्युत्पादप्रसङ्ग' तासां तदव्यतिरेकात्, व्यतिरेके च 'तस्य ता' इति सम्बन्धानुपपत्तिरुपकारस्य तन्निबन्धनस्याभावात्, भावे वा तत्राऽपि भेदाभेदविकल्पाभ्यामनवस्था-तदुत्पत्तिप्रसङ्गतो दिदृक्षाद्यभावाश्च भोक्तृत्वम्, प्रयोगा-यस्य यद्भावव्यवस्थानिबन्धनं नास्ति नासौ प्रेक्षावता तद्भावेन व्यवस्थाप्य., यथाऽऽकाशं मूर्त्तत्वेन, नास्ति च भोक्तृत्वव्यवस्था-निबन्धनं पुरुषस्य दिदृक्षादि इतिकारणानुपलब्धि'। नचायमसिद्धो हेतुरिति प्रतिपादितम्। कर्तृत्वाभावाद्भोक्तृत्वमपि तस्य न युक्तम् न ह्यकृतस्य कर्मण' फल कश्चिदुपभुङ्क्ते अकृताभ्यागमप्रसङ्गात्। न च पुरुषस्य कर्माऽकर्तृत्वेऽपि प्रकृतिरस्याऽभिलषितमर्थमुपनयतीत्यसौ भोक्ता भवति,यतो नासावप्यचेतना सती शुभाऽशुभकर्मणां कर्त्री युक्ता येनाऽसौ कर्मफलं पुरुषस्य सम्पादयेत्। अथ यथा पङ्ग्वन्धयो. परस्परसंबन्धात्प्रवृत्तिस्तथा महदादिलिङ्गं चेतनपुरुषसम्बन्धाच्चेतनावदिव धर्मादिषु कार्येषु अध्यवसायं करोतीत्यदोष एवायम्। उक्तं च-"पुरुषस्य दर्शनार्थं,कैवल्यार्थं तथा प्रधानस्य। पङ्ग्वन्धवदुभयोरपि, संयोगात् तत्कृत सर्ग. ॥ २१ ॥" (साङ्ख्यका०) इति। असदेतत्; यतो यदि प्रकृतिरकृतस्याऽपि कर्मण' फलमभिलषितमुपनयति तदा सर्वदा सर्वस्य पुंसोऽभिलषितार्थसिद्धि किमिति न स्यात्?। न च तत्कारणस्य धर्मस्याभावान्नासाविति वक्तव्यम्, यतो धर्मस्याऽपि प्रकृतिकार्यतया तदव्यतिरेकात्तद्वत्सदैव भाव इति। सर्वदा सर्वस्याऽभिलषितफलप्राप्तिप्रसक्ति। अपि चयद्यभिलषितं फलं प्रकृतिरुपनयति तदा नानिष्टं प्रयच्छेत्, न हि कश्चिदनिष्टमभिलषति। किं च-उपनयतु नाम प्रकृत्ति फलं तथाऽपि भोक्तृत्वं पुंसोऽयुक्तमविकारित्वान्नहि सुखदुःखादिनाऽऽह्लादपरितापादिरूपं विकारमनुपनीयमानस्य भोक्तृत्वमस्याकाशवत् सङ्गतम्।न च प्रकृतिरस्योपकारिणी अधिकृतात्मन्युपकारस्य कर्तुमशक्यत्वात् ,विकारित्वे वा नित्यत्वहानिप्रसक्ति अतावदस्थ्यस्याऽनित्यत्वलक्षणत्वात्तस्यापि विकारिण्यवश्यंभावित्वात्। अथ न विकारापत्त्याऽऽत्मनो भोक्तृत्वमिष्टं, किं तर्हि? बुद्ध्यध्यवसितस्याऽर्थस्य प्रतिबिम्बोदयन्यायेन संचेतनात्, तथाहि-बुद्धिदर्पणसंक्रान्तमर्थप्रतिबिम्बक द्वितीयदर्पणकल्पे पुंस्यध्यारोहति, तदेव भोक्तृत्वमस्य ननु विकारापत्ति.। न च पुरुषप्रतिबिम्बमात्रसंक्रान्तावपि स्वरूपप्रच्युतिमान् दर्पणवदविचलितस्वरूपत्वात्, असदेतत्, यतो बुद्धिदर्पणारूढमर्थप्रतिबिम्बक द्वितीयदर्पणकल्पे पुंसि सङ्क्रामत् ततो व्यतिरिक्तमव्यतिरिक्तं वेति वाच्यम्। यदि अव्यतिरिक्तमिति पक्षस्तदा तदेवोदयव्ययपयोगित्वं पुंस. प्रसज्येत उदयादियोगिप्रतिबिम्बाव्यतिरेकात्तत्स्वरूपवत्। अथ व्यतिरिक्तमित्यभ्युपगमस्तदा न भोक्तृता न भोक्त्रवस्थातस्तस्य कस्यचिद्विशेषस्याऽभावात्। न चार्थप्रतिबिम्बसम्बन्धात्तस्य भोक्तृत्व युक्तमनुपकार्योपकारकयो. सम्बन्धासिद्धे. उपकारकल्पनाया अपि भेदाभेदविकल्पतोऽनुपपत्तेः।

अपि च—पुरुषस्य दिदृक्षा प्रधान यदि जानीयात्तदा पुरुषार्थं प्रति प्रवृत्तिर्युक्ता स्यात् नचैवं तस्य जडरूपत्वात्,सत्यपि चेतनावत्सम्बन्धे न पङ्ग्वन्धदृष्टान्तादप्रवृत्तिर्युक्तिमती, यतोऽन्धो यद्यपि मार्ग नोपलभते तथाऽपि पङ्गोर्विवक्षामसौ वेत्ति तस्य चेतनावत्त्वात् न चैवं प्रधान पुरुषविवक्षामवगच्छति तस्याचेतनावत्त्वेन जडरूपत्वात्। नच तयोर्नित्यत्वेन परस्परमनुपकारिणो. पङ्ग्वन्धवत्सम्बन्धोऽपि युक्त.। अथ प्रधानं पुरुषस्य दिदृक्षामवगच्छतीत्यभ्युपगम्यते, तथा सति भोक्तृत्वमपि तस्य प्रसज्यते करणज्ञस्य भुजिक्रियावेदकत्वाविरोधात्। न च य एकं जानाति तेनापरमपि ज्ञातव्यमित्यय न नियमो यतः प्रधानस्य कर्तृत्वे भोक्तृत्वमपि नियतसन्धीति युक्तं वक्तुम्, यतो यदि प्रधानस्य बुद्धिमत्त्वमङ्गीक्रियते तदा पुरुषवच्चैतन्यप्रसङ्गो बुद्ध्यादीनां चैतन्यपर्यायत्वात्,यतो यत् प्रकाशात्मतया अपरप्रकाशनिरपेक्षं स्वसंविदितरूपं चकास्ति तत् चैतन्यमुच्यते,तद्यदि बुद्धेरपि समस्ति चिद्रूपा सा किमिति न भवेत्। न च यथोक्तबुद्धिव्यतिरेकेणापर चैतन्यमुपलक्षयाम., यतस्तद्व्यतिरिक्तस्य पुरुषस्य सिद्धिर्भवेत्। (सम्म०।) (अत्रत्या विशेषवक्तव्यता 'बुद्धि' शब्दे पञ्चमभागे १३२७ पृष्ठे गता।) यदपि-"परार्थाश्चक्षुरादय." इत्याद्युक्तम्, तत्राधेयातिशयो वा पर साध्यत्वेनाभिप्रेत', यद्वा—अविकार्यनाधेयातिशय', आहोस्वित्सामान्येन चक्षुरादीना पारार्थ्यमात्रं साध्यत्वेनाभिप्रेतमिति विकल्पत्रयम्। तत्र यदि प्रथम पक्ष स न युक्त ,सिद्धसाध्यताद्दोषाऽऽघ्रातत्वाद् यतोऽस्माभिरपि विज्ञानोपकारित्वेनाभ्युपगता एव चक्षुरादय. "चक्षु प्रतीत्य रूपादि-चोत्पद्यते, चक्षुर्विज्ञानम्' इत्यादिवचनात्। अथ द्वितीय' पक्षोऽङ्गीक्रियते तदा हेतोर्विरुद्धतालक्षणो दोष, विकार्युपकारित्वेन चक्षुरादीना साध्यविपर्ययेण दृष्टान्ते हेतोर्व्याप्तत्वप्रतीते.। तथाहि-अविकारिण्यतिशयस्याधातुमशक्यत्वाच्छयनाशनाद्योऽनित्यस्यैवोपकारिणो युक्ता नाऽनित्यस्येति कथ न हेतोर्विरुद्धता?, यदि पुन सामान्येन आधेयाऽनाधेयातिशयविशेषणमपास्य पारा-

र्थ्यमात्रं साध्यत इत्ययं पक्षः कक्षीक्रियते तदापि सिद्धसाध्यतैव, चक्षुरादीनां विज्ञानोपकारित्वेनेष्टत्वात्। न च चित्तमपि साध्यधर्मित्वेनोपात्तमित्यपरस्य तद्व्यतिरिक्तस्य परत्वमत्राभिप्रेतं,चित्तादिव्यतिरेकिणोऽपरस्याविकारिण उपकार्यत्वासम्भवात्, चक्षूरूपालोक-मनस्काराणामपरचक्षुरादिकदम्बकोपकारित्वस्याऽन्यायप्राप्तत्वात्। विज्ञानस्य वा अनेककारणकृतोपकाराध्यासितस्य संहतत्वे कल्पितमविरुद्धमेवेति नात्र साध्ये हेतोरप्यसिद्धता सङ्गच्छते?। तत्र सांख्योपकल्पितचैतन्यरूपं, कल्पितचैतन्यरूपस्य नित्यस्यात्मनः कुतश्चित्सिद्धिः। तत्र अशुद्धद्रव्यास्तिकमतावलम्बिसांख्यदर्शनपरिकल्पितपदार्थसिद्धिरिति पर्यायास्तिकमतम्। सम्म०१ काण्ड ३ गाथाटीका। औ०। विशे०। सूत्र०। आचा०। स्या०।

संखडि-संखडि-स्त्री०। सखण्ड्यन्ते प्राणिनो यस्यां सा। अनेकसत्त्वव्यापत्तिहेतौ, औ०। आचा०। जीत०। स्था०। आहारावपाकस्थाने, आचा० १ श्रु० ६ अ० १ उ०। संस्कृति-स्त्री०। ओदनपाके, कल्प० ३ अधि० ६ क्षण। संखडिं दृष्ट्वा न गच्छेत्। दश० ७ अ०। ( संखण्ड्यन्ते प्राणिनः इति व्याख्या तद्वर्णनं च 'भासा' शब्दे पञ्चमभागे १५४७ पृष्ठे गतम्। )

से भिक्खू वा भिक्खुणी वा परं अद्धजोयणमेराए संखडिं नच्चा संखडिपडियाए नो अभिसंधारिज्जा गमणाए। से भिक्खू वा भिक्खुणी वा पाईणं संखडिं नच्चा पडीणं गच्छे अणाढायमाणे, पडीणं संखडिं नच्चा पाईणं गच्छे अणाढायमाणे, दाहिणं संखडिं नच्चा उदीणं गच्छे अणाढायमाणे, उईणं संखडिं नच्चा दाहिणं गच्छे अणाढायमाणे जत्थेव सा संखडी सिया। तं जहा-गामंसि वा नगरंसि वा खेडंसि वा कव्वडंसि वा मडंबंसि वा पट्टणंसि वा आगरंसि वा दोणमुहंसि वा नेगमंसि वा आसमंसि वा सन्निवेसंसि वा ०जाव रायहाणिंसि वा संखडिं संखडिपडियाए नो अभिसंधारिज्जा गमणाए, केवली बूया-आयाणमेयं संखडिं संखडिपडियाए अभिधारेमाणे आहाकम्मियं वा उद्देसियं वा मीसजायं वा कीयगडं वा पामिच्चं वा अच्छिज्जं वा अणिसिट्ठं वा अभिहडं वा आहट्टु दिज्जमाणं भुंजिज्जा। ( सू०-१३ × )

'से भिक्खू वे' त्यादि स भिक्षुः परं प्रकर्षेणार्द्धयोजनमात्रे क्षेत्रे संखण्ड्यन्ते—विराध्यन्ते प्राणिनो यत्र सा संखडिस्तां ज्ञात्वा तत्प्रतिज्ञया नाभिसंधारयेत्—न पर्यालोचयेत्तत्र गमनमिति ; न तत्र गच्छेदिति यावत्। यदि पुनर्ग्रामेषु परिपाट्या पूर्वप्रवृत्तं गमनं तत्र च संखडिं परिज्ञाय यद्विधेयं तद्दर्शयितुमाह—' से भिक्खू वे ' त्यादि-स भिक्षुर्यदि प्राचीनां पूर्वस्यां दिशि संखडिं जानीयात्ततः प्रतीचीनम्-अपरदिग्भागं गच्छेत्, अथ प्रतीचीनां जानीयात्ततः प्राचीनं गच्छेत्, एवमुत्तरत्राऽपि व्यत्ययो योजनीयः। कथं गच्छेत् ?—'अनाद्रियमाणः' संखडिमनादरयन्नित्यर्थः। एतदुक्तं भवति-यत्रैवासौ संखडिः स्यात्तत्र न गन्तव्यमिति, क चाऽसौ स्यादिति दर्शयति, तद्यथा—ग्रामे वा प्राचुर्येण ग्रामधर्मोपेतत्वात्, करादिगम्यो वा ग्रामः, नास्मिन् करोऽस्तीति नकरं, धूलिप्राकारोपेतं खेटं, कर्बटं—कुनगरं, सर्वतोऽर्द्धयोजनात्परेण स्थितग्रामं-मडम्बं पत्तनं—यस्य जलस्थलपथयोरन्यतरेण पर्याहारप्रवेशः, आकरः-ताम्रादेरुत्पत्तिस्थानं, द्रोणमुखं—यस्य जलस्थलपथावुभावपि, निगमा—वणिजस्तेषां स्थानं नैगमम्, आश्रमं—यत्तीर्थस्थानं, राजधानी—यत्र राजा स्वयं तिष्ठति, सन्निवेशो यत्र प्रभूतानां भाण्डानां प्रवेश इति, तत्रैतेषु स्थानेषु संखडिं ज्ञात्वा संखडिप्रतिज्ञया न गमनम् अभिसंधारयेत्-न पर्यालोचयेत्। किमिति ?, यतः केवली ब्रूयात्—आदानमेतत्-कर्मोपादानमेतदिति। पाठान्तरं वा 'आयणमेयंति' आयतन-स्थानमेतद्दोषाणां यत्संखडिगमनमिति। कथं दोषाणामायतनमिति दर्शयति—' संखडिं संखडिपडियाए ' त्ति—या या संखडिस्तां ताम्—अभिसन्धारयतः—तत्प्रतिज्ञया गच्छतः साधोरवश्यमेतेषां मध्येऽन्यतमो दोषः स्यात्, तद्यथा—आधाकर्म वा औद्देशिकं वा मिश्रजातं वा क्रीतकृतं वा उद्यतकं वा आच्छेद्यं वा अनिसृष्टं वा अभ्याहृतं वेति, एतेषां दोषाणामन्यतमदोषदुष्टं भुञ्जीत, स हि प्रकरणकर्त्तैवमभिसन्धारयेत्-यथाऽयं यतिर्मत्प्रकरणमुद्दिश्येहायातः, तदस्य मया येन केनचित्प्रकारेण देयमित्यभिसन्धायाधाऽऽकर्मादि विदध्यादिति। यदि वा-यो हि लोलुपतया संखडिप्रतिज्ञया गच्छेत् स तत एवाऽऽधाकर्माद्यपि भुञ्जीतेति।

किञ्च संखडिनिमित्तमागच्छतः साधूनुद्दिश्य गृहस्थ एवम्भूता वसतीः कुर्यादित्याह—

असंजए भिक्खुपडियाए खुड्डियदुवारियाओ महल्लियदुवारियाओ कुज्जा, महल्लियदुवारियाओ खुड्डियदुवारियाओ कुज्जा, समाओ सिज्जाओ विसमाओ कुज्जा, विसमाओ सिज्जाओ समाओ कुज्जा, पवायाओ सिज्जाओ निवायाओ कुज्जा, निवायाओ सिज्जाओ पवायाओ कुज्जा, अंतो वा वहिं वा उवस्सयस्स हरियाणि छिंदिय छिंदिय दालिय दालिय संथारगं संथारिज्जा, एस विलुंगयामो सिज्जाए। तम्हा से संजए नियंठे तहप्पगारं पुरेसंखडिं वा पच्छासंखडिं वा संखडिं संखडिपडियाए नो अभिसंधारिज्जा गमणाए, एयं खलु तस्स भिक्खुस्स० जाव सया जए ( सू०-१३) त्ति बेमि।

असंयतः—गृहस्थः स च श्रावकः प्रकृतिभद्रको वा स्यात्, तत्राऽसौ साधुप्रतिज्ञया क्षुद्रद्वाराः—सङ्कटद्वाराः सत्यस्ता महाद्वाराः कुर्यात्, व्यत्ययं वा कार्यापेक्षया कुर्यात्, तथा समाः शय्या—वसतयो विषमाः सागारिकापातभयात् कुर्यात्, साधुसमाधानार्थं वा व्यत्ययं कुर्यात्, तथा प्रवाताः शय्या शीतभयान्निवाताः कुर्यात्, ग्रीष्मकालापेक्षया वा व्यत्ययं विध्यादिति। तथाऽन्तः—म-

ध्ये उपाश्रयस्य यद्विर्वा हरितानि छित्त्वा छित्त्वा विदार्य विदार्य उपाश्रयं संस्कुर्यात्, संस्तारकं वा संस्तारयेत्, गृहस्थश्चानेनाभिसन्धानेन संस्कुर्यात् । यथैष-साधुः शय्यायाः संस्कारे विधातव्ये 'विलुंगयामो' त्ति-निर्ग्रन्थः अकिञ्चन इत्यतः स गृहस्थः कारणे संयतो वा स्वयमेव संस्कारयेदित्युपसंहरति, तस्मात् तथाप्रकाराम् अनेकदोषदुष्टां संखडिं विज्ञाय सा पुरःसंखडिः पश्चात्संखडिर्वा भवेत्, जातनामकरणविवाहाऽऽदिका-पुरःसंखडिः, तथा मृतकसंखडिः-पश्चात्संखडिरिति, यदि वा-पुरः-अग्रतः-संखडिर्भविष्यति अतोऽनागतमेव यायात्, वसतिं वा गृहस्थः संस्कुर्यात्, वृत्ता वा संखडिरतोऽत्र तच्छेषोपभोगाय साधवः समागच्छेयुरिति । सर्वथा सर्वो संखडिं संखडिप्रतिज्ञया नोऽभिसंधारयेत्-न पर्यालोचयेद्गमनक्रियामिति, एवं तस्य भिक्षोः सामग्र्यं-सम्पूर्णता भिक्षुभावस्य यत्सर्वथा संखडिवर्जनमिति । आचा० २ श्रु० १ चू० १ अ० २ उ० ।

अस्य चायमभिसम्बन्धः—इहानन्तरोद्देशके दोषसम्भवात्संखडिगमनं निषिद्धं प्रकारान्तरेणाऽपि तद्गतानेव दोषानाह—

से एगइओ अन्नयरं संखडिं आसित्ता पिबित्ता छड्डिज्ज वा वमिज्ज वा भुत्ते वा से नो सम्मं परिणामिज्जा अन्नयरे वा से दुक्खे रोगायंके समुप्पज्जिज्जा, केवली बूया-आयाणमेयं । ( सू० १४ ) इह खलु भिक्खू गाहावईहिं वा गाहावइणीहिं वा परिवायएहिं वा परिवाइयाहिं वा एगज्जं सद्धिं सुंडं पाउं भो वइमिस्सं हुरत्था वा उवस्सयं पडिलेहेमाणो नो लभिज्जा तमेव उवस्सयं सम्मिस्सीभावमावज्जिज्जा, अन्नमणे वा से मत्ते विप्परियासियभूए इत्थिविग्गहे वा किलीबे वा तं भिक्खुं उवसंकमित्तु बूया-आउसंतो समणा ! अहे आरामंसि वा अहे उवस्सयंसि वा राओ वा वियाले वा गामधम्मनियंतियं कट्टु रहस्सियं मेहुणधम्मपरियारणाए आउट्टामो, तं चेवेगईओ सातिज्जिज्जा, अकरणिज्जं चेयं संखाए एए आयाणा ( आयतणाणि ) संति संविज्जमाणा पच्चवाया भवंति, तम्हा से संजए नियंठे तहप्पगारं पुरेसंखडिं वा पच्छासंखडिं वा संखडिं संखडिपडियाए नो अभिसंधारिज्जा गमणाए । ( सू०-१५ )

स भिक्षुः एकदा-कदाचिद् एकचरो वा अन्यतराम्-काञ्चित्पुरःसंखडिं पश्चात्संखडिं वा संखडिमिति संखडिभक्तम् आस्वाद्य—भुक्त्वा तथा पीत्वा शिखरिणीदुग्धादि तत्रातिलोलुपतया रसगृद्धयाऽऽहारितं सत् 'छड्डेज्ज वा' छर्दिं विदध्यात्, कदाचिच्चापरिणतं तद्विसूचिकां कुर्यात्, अन्यतरो वा रोग-कुष्ठादिकः आतङ्कस्त्वाशुजीवितापहारी शूलादिकः समुत्पद्येत, केवली—सर्वज्ञो ब्रूयात्, यथा एतत् संखडीभक्तम् आदानं-कर्मोपादानं वर्त्तत इति । यथैतदादानं भवति तथा दर्शयति—'इहेति' संखडिस्थानेऽस्मिन् वा भवेऽमी अपायाः, आमुष्मिकास्तु दुर्गतिगमनादयः, खलुशब्दो वाक्यालङ्कारे, भिक्षणशीलो भिक्षुः स गृहपतिभिस्तद्भार्याभिर्वा परिव्राजकैः परिव्राजिकाभिर्वा सार्द्धमेकद्यम्-एकवाक्यतया सम्प्रधार्य भो—इत्यामन्त्रणे एतानामन्त्र्य चैतद्दर्शयति-संखडिगतस्य लोलुपतया सर्वं संभाव्यत इत्यतस्तैर्व्यतिमिश्रं 'सुंडं' ति सीधुम् अन्यद्वा प्रसन्नादिकं पातुं पीत्वा ततः 'हुरवत्था वा' बहिर्वा निर्गत्योपाश्रयं याचेत, यदा च प्रत्युपेक्षमाणो विवक्षितमुपाश्रयं न लभेत ततस्तमेवोपाश्रयं यत्राऽसौ संखडिस्तत्राऽन्यत्र वा गृहस्थपरिव्राजिकादिभिर्मिश्रीभावमापद्येत । तत्र चासावन्यमना मत्तो गृहस्थादिको विपर्यासीभूत आत्मानं न स्मरति, स वा भिक्षुरात्मानं न स्मरेत्, अस्मरणाच्चैवं चिन्तयेद्—यथाऽहं गृहस्थ एव, यदि वा-स्त्रीविग्रहे-शरीरे विपर्यासीभूतः-अध्युपपन्नः क्लीबे वा नपुंसके वा । सा च स्त्री नपुंसको वा तं-भिक्षुम् उपसंक्रम्य-आसन्नीभूय ब्रूयात्, तद्यथा-आयुष्मन् ! श्रमण ! त्वया सहैकान्तमहं प्रार्थयामि, तद्यथा-आरामे वोपाश्रये वा, कालतश्च रात्रौ वा विकाले वा, तं भिक्षु ग्रामधर्मैः-विषयोपभोगगतैर्व्यापारैर्नियन्त्रितं कृत्वा, तद्यथा—मम त्वया विप्रियं न विधेयं, प्रत्यहमहमनुसर्पणीयेति, एवमादिभिर्नियम्य ग्रामासन्ने वा कुत्रचिद्रहसि मिथुनं—दाम्पत्यं तत्र भवं मैथुनम्-अब्रह्मेति तस्य धर्माः—तद्गता व्यापारास्तेषां 'परियारणा' आसेवना तया 'अउट्टामो' त्ति-प्रवर्त्तामहे । इदमुक्तं भवति—साधुमुद्दिश्य रहसि मैथुनप्रार्थनां काचित्कुर्यात्, तां चैकः कश्चिदेकाकी वा 'साइज्जेज्ज' त्ति अभ्युपगच्छेत्, अकरणीयमेतद् एवं संख्याय-ज्ञात्वा संखडिगमनं न कुर्यात्। यस्मादेतानि आयतनानि कर्मोपादानकारणानि सन्ति-भवन्ति संचीयमानानि प्रतिक्षणमुपचीयमानानि । इदमुक्तं भवति—अन्यान्यपि कर्मोपादानकारणानि भवेयुः, यत एवमादिकाः प्रत्यपाया भवन्ति तस्मादसौ संयतो निर्ग्रन्थस्तथाप्रकारां संखडिं पुरःसंखडिं पश्चात्संखडिं वा संखडिं ज्ञात्वा संखडिप्रतिज्ञया नाभिसंधारयेद् गमनाय-गन्तुं न पर्यालोचयेदित्यर्थः ।

तथा—

से भिक्खू वा भिक्खुणी वा अन्नयरिं संखडिं सुच्चा निसम्म संपहावइ उस्सुयभूएण अप्पाणेणं, धुवा संखडी नो संचाएइ तत्थ इयरेयरेहिं कुलेहिं सामुदाणियं एसियं वेसियं पिंडवायं पडिगाहित्ता आहारं आहारित्तए, माइट्ठाणं संफासे, नो एवं करिज्जा । से तत्थ कालेण अणुपविसित्ता तत्थियरेयरेहिं कुलेहिं सामुदाणियं एसियं वेसियं पिंडवायं पडिगाहित्ता आहारं आहारिज्जा । ( सू०-१६ ) ।

स भिक्षुरन्यतरां-पुरःसंखडिं पश्चात्संखडिं वा श्रुत्वाऽन्यतःस्वतो वा निशम्य-निश्चित्य कुतश्चिद्धेतोस्ततस्तदभिमुखं सम्प्रधावत्युत्सुकभूतेनात्मना । यथा-ममात्र भविष्यत्यद्भुतभूतं भोज्यं, यतस्तत्र ध्रुवा—निश्चिता संखडिरस्ति; 'नो संचाएइ' त्ति न शक्नोति तत्र संखडिग्रामे इतरेतरेभ्य कुलेभ्यः संखडिरहितेभ्यः 'सामुयाणियं' ति भैक्षं, किम्भूतम् ?—

एषणीयम् आधाकर्मादिदोषरहितं 'वेसियं' ति केवलरजोहरणादिवेषाल्लब्धमुत्पादनादिदोषरहितम्, एवम्भूतं पिण्डपातम्—आहारं परिगृह्याभ्यवहर्तुं न शक्नोतीति सम्बन्ध.। तत्र चाऽसौ मातृस्थानं संस्पृशेत्, तस्य मातृस्थानं संभाव्येत, कथं ?-यद्यपीतरकुलाहारप्रतिज्ञया गतो, नचासौ तमभ्यवहर्तुमलं पूर्वोक्तया नीत्या, ततोऽसौ संखडिमेव गच्छेत्। एवं च मातृस्थानं तस्य संभाव्येत, तस्मान्नैवं कुर्याद्-ऐहिकामुष्मिकापायभयात् संखडिग्रामगमनं न विदध्यादिति। यथा च कुर्यात्तथाऽऽह—स भिक्षु तत्र संखडिनिवेशे कालेनानुप्रविश्य तत्रेतरेतरेभ्यो गृहेभ्यः उग्रकुलादिभ्यः सामुदानिकं-समुदानं—भिक्षा तत्र भवं सामुदानिकम् एषणीयं-प्रासुकं वैषिकं-केवलवेषावासं धात्रीपिण्डादिरहितं पिण्डपातं प्रतिगृह्याहारमाहारयेदिति।

पुनरपि संखडिविशेषमधिकृत्याह—

से भिक्खू वा भिक्खुणी वा से जं पुण जाणिज्जा गामं वा०जाव रायहाणिं वा इमंसि खलु गामंसि वा ०जाव रायहाणिंसि वा संखडी सिया तं पि य गामं वा जाव० रायहाणिं वा संखडिं संखडिपडियाए नो अभिसंधारिज्जा गमणाए। केवली बूया-आयाणमेयं, आइन्नाऽवमाणं संखडिं अणुपविस्समाणस्स-पाएण वा पाए अक्कंतपुव्वे भवइ, हत्थेण वा हत्थे संचालियपुव्वे भवइ, पाएण वा पाए आवडियपुव्वे भवइ, सीसेण वा सीसे संघट्टियपुव्वे भवइ, काएण वा काए संखोभियपुव्वे भवइ, दंडेण वा अट्ठीण वा मुट्ठीण वा लेलुणा वा कवालेण वा अभिहयपुव्वेण वा भवइ, सीओदएण वा उस्सित्तपुव्वे भवइ, रयसा वा परिघासियपुव्वे भवइ, अणेसणिज्जे वा परिभुत्तपुव्वे भवइ अन्नेसिं वा दिज्जमाणे पडिग्गाहियपुव्वे भवइ। तम्हा से संजए नियंठे तहप्पगारं आइन्नावमाणं संखडिं संखडिपडियाए नो अभिसंधारिज्जा गमणाए। (सू०१७)

स भिक्षुर्यदि पुनरेवम्भूतं ग्रामादिकं जानीयात्, तद्यथा—ग्रामे वा नगरे वा यावद्राजधान्यां वा संखडिर्भविष्यति,तत्र च चरकादयोऽपरे वा भिक्षाचरा. स्युरतस्तदपि ग्रामादिकं संखडिप्रतिज्ञया नाभिसन्धारयेद्गमनाय-न तत्र गमनं कुर्यादित्यर्थ.। तद्गतांश्च दोषान् सूत्रेणैवाह-केवली ब्रूयाद्-यथैतदादानं-कर्मोपादानं वर्त्तत इति दर्शयति-सा च संखडि. आकीर्णा वा भवेत्-चरकादिभि सङ्कुला अवमा-हीना शतस्योपस्कृते. पञ्चशतोपस्थानादिति, तां चाकीर्णामवमां चानुप्रविशतोऽमी दोषा., तद्यथा—पादेनापरस्य पाद आक्रान्तो भवेत्, हस्तेन वा हस्त. सञ्चालितो भवेत्, पात्रेण वा भाजनेन वा पात्रं भाजनमापतितपूर्वं भवेत्, शिरसा वा शिर. संघट्टितं भवेत्, कायेनापरस्य चरकादे कायः सङ्क्षोभितपूर्वो भवेदिति। स च चरकादिराकुपित. कलहं कुर्यात्,कुपितेन च तेन दण्डेनास्थ्ना वा मुष्टिना वा लोष्टेन वा कपालेन वा साधुरभिहतपूर्वो भवेत्, तथा शीतोदकेन वा कश्चित्सिञ्चेत्, रजसा वा परिघर्षितो वा भवेत्। एते तावत्सङ्कीर्णदोषा.। अवमदोषाश्चामी-अनेषणीयपरिभोगो भवेत्, स्तोकस्य संस्कृतत्वात्प्रभूतत्वाच्चार्थिनां,प्रकरणकारस्यायमाशयः स्याद् यथा मत्प्रकरणमुद्दिश्यैते समायातास्तत एतेभ्यो मया यथाकथञ्चिद्देयमित्यभिसन्धिनाऽऽधाकर्माद्यपि कुर्याद्, अतोऽनेषणीयपरिभोग. स्यादिति। कदाचिच्च दात्राऽन्यस्मै दातुमभिवाञ्छितं, तच्चान्यस्मै दीयमानमन्तराले साधुर्गृह्णीयात्, तस्मादेतान् दोषानभिसम्प्रधार्य संयतो-निर्ग्रन्थस्तथाप्रकारामाकीर्णामवमां संखडिं विज्ञाय संखडिप्रतिज्ञया नाऽभिसन्धारयेद् गमनायेति। आचा० २ श्रु० १ चू० १ अ० ३ उ०।

इहानन्तरोद्देशके संखडिगतो विधिरभिहितस्तदिहाऽपि तच्छेषविधेः प्रतिपादनार्थमाह—

से भिक्खू वा भिक्खुणी वा ० जाव समाणे से जं पुण जाणेज्जा मंसाइयं वा मच्छाइयं वा मंसखलं वा मच्छखलं वा आहेणं वा पहेणं वा हिंगोलं वा संमेलं वा हीरमाणं पेहाए अंतरा से मग्गा बहुपाणा बहुबीया बहुहरिया बहुओसा बहुउदया बहुउर्त्तिगपणगदगमट्टियमक्कडासंताणया बहवे तत्थ समणमाहणअतिहिकिवणवणीमगा उवागया उवागमिस्संति ( उवागच्छंति ) तत्थाइन्ना वित्ती नो पन्नस्स निक्खमणपवेसाए नो पन्नस्स वायणपुच्छणपरियट्टणाणुप्पेहधम्माणुओगचिंताए, से एवं नच्चा तहप्पगारं पुरेसंखडिं वा पच्छासंखडिं वा संखडिं संखडिपडिआए नो अभिसंधारिज्जा गमणाए। से भिक्खू वा भिक्खुणी वा से जं पुण जाणिज्जा मंसाइयं वा मच्छाइयं वा ० जाव हीरमाणं वा पेहाए अंतरा से मग्गा अप्पा पाणा ० जाव संताणगा नो जत्थ बहवे समण ०जाव उवागमिस्संति अप्पाइन्ना वित्ती पन्नस्स निक्खमणपवेसाए पन्नस्स वायणपुच्छणपरियट्टणाणुप्पेहधम्माणुओगचिंताए, सेवं नच्चा तहप्पगारं पुरेसंखडिं वा ०जाव अभिसंधारिज्जा गमणाए। ( सू०-२२ )

स भिक्षु कश्चिद्ग्रामादौ भिक्षार्थं प्रविष्ट. सन् यद्येवम्भूतां संखडिं जानीयात् तत्प्रतिज्ञया नाभिसन्धारयेद् गमनायेत्यन्ते क्रिया। यादृग्भूता च संखडिं न गन्तव्यं तां दर्शयति-मासमादौ प्रधानं यस्या सा मांसादिका तामिति। इदमुक्तं भवति—मांसनिर्वृत्तिं कर्तुकामाः पूर्णाया वा निवृत्तौ मांसप्रचुरां संखडिं कुर्यु., तत्र कश्चित्स्वजनादिस्तदनुरूपमेव किञ्चिन्नयेत्, तच्च नीयमानं दृष्ट्वा न तत्र गन्तव्यं तत्र दोषान् वक्ष्यतीति। तथा मत्स्या आदौ प्रधानं यस्यां सा तथा, एवं मांसखलमिति, यत्र संखडिनिमित्तं मांसं छित्त्वा छित्त्वा शोष्यते शुष्कं वा पुञ्जीकृतमास्ते तत्तथा, क्रिया पूर्ववत्। एवं मत्स्यखलमपीति। तथा—'आहेणं' ति यद्विवाहोत्तरकालं वधूप्रवेशे वरगृहे भोजन क्रियते, 'पहेणं' ति वध्वा नीयमानाया यत्पितृगृहभोजनमिति, 'हिंगोलं' ति मृतकभक्तं, यक्षादियात्राभोजन वा, 'संमेल' ति परिजनसन्मानभक्तं गोष्ठीभक्तं वा, तदेवम्भूतां संख-

डिं ज्ञात्वा तत्र च केनचित्स्वजनादिना तन्निमित्तमेव किञ्चिद् ह्रियमाणं—नीयमानं प्रेक्ष्य तत्र भिक्षार्थं न गच्छेद्, यतस्तत्र गच्छतो गतस्य च दोषाः सम्भवन्ति। तांश्च दर्शयति—गच्छतस्तावदन्तरा-अन्तराले तस्य भिक्षोः मार्गाः पन्थानो बहव. प्राणाः—प्राणिनः पतङ्गादयो येषु ते तथा, तथा बहुबीजा बहुहरिता बह्ववश्याया बहूदका बहूत्तिङ्गपनकोदकमृत्तिकामर्कटसन्तानकाः। प्राप्तस्य च तत्र संखडिस्थाने बहवः श्रमणब्राह्मणाऽतिथिकृपणवनीपका उपागता उपागमिष्यन्ति तथोपागच्छन्ति च। तत्राकीर्णा चरकादिभिः—वृत्तिः—वर्त्तनम् अतो न तत्र प्राज्ञस्य निष्क्रमणप्रवेशाय वृत्तिः कल्पते, नापि प्राज्ञस्य वाचना-प्रच्छना-परिवर्तनाऽनुप्रेक्षा-धर्मानुयोगचिन्तायै वृत्तिः कल्पते, न तत्र जनाकीर्णे गीतवादित्रसम्भवात् स्वाध्यायादिक्रियाः प्रवर्त्तन्त इति भावः। स भिक्षुरेवं गच्छगतापेक्षया बहुदोषां तथाप्रकारा मांसप्रधानादिकां पुरःसंखडिं पश्चात्संखडिं वा ज्ञात्वा तत्प्रतिज्ञया नाभिसन्धारयेद्गमनायेति। साम्प्रतमपवादमाह—स भिक्षुरध्वनि क्षीणो ग्लानोत्थितस्तपश्चरणकर्षितो वाऽवमौदर्यं वा प्रेक्ष्य दुर्लभद्रव्यार्थी वा स यदि पुनरेवं जानीयात्—मांसादिकमित्यादि पूर्ववदालापका यावदन्तरा अन्तराले 'से' तस्य भिक्षोर्गच्छतो मार्गा अल्पप्राणा अल्पबीजा अल्पहरिता इत्यादि व्यत्ययेन पूर्ववदालापकः। तदेवमल्पदोषां संखडिं ज्ञात्वा मांसादिदोषपरिहरणसमर्थः सति कारणे तत्प्रतिज्ञयाऽभिसन्धारयेद्गमनायेति। आचा० २ श्रु० १ चू० १ अ० ४ उ०।

संखडिप्रलोकनाय न गच्छेत्। सूत्रम्—

संखडिं वा संखडिपडियातिए(एतुं) एत्तए ॥ ४८ ॥

अथाऽस्य सूत्रस्य सम्बन्धमाह—

दुविहाऽवाता उ विहे, वुत्ता ते होज्ज संखडीए तु।
तत्थ दिया वि न कप्पति,किमु राती एस संबंधो ॥६६१॥

'दुविहे' त्ति अध्वनि गच्छता संयमात्मविराधनाभेदाद् द्विविधा. प्रत्यपाया उक्ताः, संखड्यामपि गच्छता त एव प्रत्यपाया भवेयुः अतस्तत्र दिवाऽपि गन्तुं न कल्पते, किमुत रात्रौ, एष सम्बन्ध.। अनेन सम्बन्धेनायातस्याऽस्य (सू०४८) व्याख्या—'संखडिं वे' ति वाशब्दान्न कल्पते इत्यादि पदान्यनुवर्त्तनीयानि। तद्यथा—न केवलमध्वानं रात्रौ वा विकाले वा गन्तुं न कल्पते, किन्तु—संखडिमपि रात्रौ वा विकाले वा संखडिप्रतिज्ञया एतुं—गन्तुं न कल्पते, एष सूत्रसंक्षेपार्थ.।

अथ भाष्यकारो विस्तरार्थं विभणिषुराह—

संखंडिज्जँति आऊ—णि जियाणं सखडी स खलु वुच्चइ।
तप्पडिआएँ ण गम्मति,अन्नत्थ गते सिया गमणं॥६६२॥

समिति—सामस्त्येन खण्ड्यन्ते—ताड्यन्ते जीवाना वनस्पतिप्रभृतीनामायूंषि प्राचुर्येण यत्र प्रकरणविशेषे सा खलु संखडिरित्युच्यते। 'सूरेभ्य.' इत्यौणादिक इप्रत्यय', पृषोदरादित्वादनुस्वारलोप। तां 'संखडिज्जंति जहिं आऊणि जियाण सखडिं' तत्प्रतिज्ञया संखडिमहं गमिष्यामीत्येवंलक्षणया गन्तुं न कल्पते। एवं ब्रुवता सूत्रेणेदं सूचितम्—अन्यार्थमपरकार्यनिमित्तं संखडिग्राम तस्य संखडग्राममपि गमन स्यादिति।

राओ व दिवसतो वा, संखडिगमणे हवंतिऽणुग्घाया।
संखडिएगमणेगा, दिवसेहिँ तहेव पुरिसेहिं ॥ ६६३ ॥

रात्रौ वा दिवसतो वा संखड्यां गमने चत्वारोऽनुद्धाताः प्रायश्चित्तम्। सा च संखडी दिवसैः पुरुषैश्च एका अनेका च भवति।

इदमेव स्पष्टयति—

एगो एगदिवसियं, एगो ऽणेगाहियं च कुज्जाहि।
ऽणेगा व एगदिवसि तु, ऽणेगा व अणेगदिवसिं तु ॥६६४॥

एक' पुरुष' एकदैवसिकीं संखडीं कुर्यात्, एकोऽनेकाहिकामनेकदैवसिकीम्, अनेके पुरुषाः संभूयैकदैवसिकीम्, अनेके पुरुषा अनेकदैवसिकीं संखडिं कुर्वन्ति।

एक्केका सा दुविहा, पुरसंखडि पच्छसंखडी चेव।
पुव्वावरसूरम्मि, अहवा वि दिसाविभागेणं ॥ ६६५ ॥

एकैका—एकदैवसिकी अनेकदैवसिकी च संखडि' प्रत्येकं द्विविधा—पुरःसंखडी, पश्चात्संखडी च। या पूर्वसूर्ये-पूर्वदिग्विभागमध्यासीने रवौ क्रियते सा पूर्वसंखडी, या पुनरपरसूर्ये सा पश्चात्संखडी। अथवा-दिग्विभागेनानयोः पुरःपश्चाद्विभागो विज्ञेय.। या विवक्षितग्रामादे. सकाशात् पूर्वस्या दिशि भवति सा पूर्वसंखडी, या तु तस्यैवापरस्यां दिशि सा पश्चात्संखडी।

अत्र प्रायश्चित्तमाह—

दुविहाएँ वि चउगुरू, विसेसिया भिक्खुमादिणं गमणे।
गुरुगादिव जा सपयं, पुरिसेगअणेगदिणरातो ॥६६६॥

द्विविधायामपि अनन्तरोक्तायां संखड्या गमने चतुर्गुरुका' एते च भिक्षुप्रभृतीनां तप'कालविशेषिताः,भिक्षोस्तपसा कालेन च लघव., वृषभस्य तपसा लघव', उपाध्यायस्य कालेन लघव., आचार्यस्य तपसा कालेन च गुरव'। अथवा चतुर्गुरुकमादौ कृत्वा एकानेकपुरुषकृतैकानेकदैवसिकसंखडीषु रात्रौ गच्छत' स्वपदं यावत् वेदितव्यम्। तद्यथा-भिक्षुरेकपुरुषकृतामेकदैवसिकीं संखडिं व्रजति चतुर्गुरव, एकपुरुषकृतानेकदैवसिक्या षड्लघव', अनेकपुरुषकृतानैकदैवसिक्या छेदः, एवं भिक्षुविषयमुक्तम्। वृषभस्य षड्लघुकादारब्धं मूले, उपाध्यायस्य षड्गुरुकादारब्धमनवस्थाप्ये, आचार्यस्य छेदादारब्ध पाराञ्चिके निष्ठामुपयाति।

प्रकारान्तरेण प्रायश्चित्तमेवाह—

आयरियगमणेँ गुरुगा,वसभाण असारणम्मि चउलहुगा
दोण्ह वि दोसि वि गुरुगा,वसभपलातितरे सुद्धा॥६६७॥

आचार्यस्य संखड्यां गच्छाम इति ब्रुवाणस्य चत्वारो गुरव, तमेवं ब्रुवाणं वृषभा न वारयन्ति चतुर्लघुकाः। अथाचार्येण सखडीं व्रजाम इत्युक्ते वृषभा अपि व्रजाम इति भणन्ति ततो द्वयोरपि वृषभाचार्ययो चत्वारो मासास्ते द्वयेऽपि गुरुका कर्त्तव्या, वृषभाणामपि चतुर्गुरुका भवन्तीति भाव। अथ वृषभैर्वारिता अप्याचार्या बलमोडिकया गच्छन्ति ततस्ते आचार्या प्रायश्चित्ते लग्ना। इतरे वृषभास्तु शुद्धा न प्रायश्चित्तभाज इति।

सव्वेसि गमणे गुरुगा, आयरियअवारणे भवे गुरुगा ।
वसभे गीतागीए, लहुगा गुरुगा य लहुगो य ॥६६८॥

यदि सर्वेऽपि साधवो भणन्ति संखड्यां गच्छाम इति ततस्तेषां चत्वारो गुरुकाः, आचार्यस्तान्न वारयति ततो गुरुकाः। वृषभो न वारयति चतुर्लघवः, गीतार्थो भिक्षुं न वारयति लघुको मासः।

एगस्स अणेगाण व, छंदेण पहाविया तु ते संता।
वत्तमवत्तं सुच्चा, नियत्तणे होंति चउगुरुगा ॥ ६६६ ॥

एकस्याऽऽचार्यादेरनेकेषां वा बहूनां छेदेनाऽभिप्रायेण ते संखड्या उपरि प्रधाविताः सन्तो वृत्तां वा संखडिं श्रुत्वा यदि निवर्त्तन्ते ततश्चतुर्गुरुका भवन्ति।

वेलाए दिवसेहिं, वत्तमवत्तं निसम्म पच्चेति ।
होहिइ अमुगं दिवसं,सा पुण अन्नम्मि पक्खम्मि॥१०००॥

वेलया दिवसैर्वा प्रतिनियता संखडीं श्रुत्वा प्रस्थिताः,गच्छद्भिश्चापान्तराले श्रुता, यथा-सा सखडी वृत्ता-समाप्ता,अवृत्ता वा अन्यस्यां वेलायामन्यस्मिन् दिवसे भाविनी एवं वृत्तामवृत्तां वा निशम्य-श्रुत्वा प्रत्यायान्ति-प्रतिनिवर्त्तन्ते । यथा कैश्चिदपि साधुभिः श्रुतम्-यथा अमुकगृहे पूर्वाह्णवेलायां संखडिर्भविष्यति ततस्ते पात्राण्युद्ग्राह्य तस्यां गन्तुं प्रस्थिताः, अपान्तराले च तैः श्रुतम्-अतिक्रान्ता संखडी वा आकर्षितं यथा नाऽपि तत्र वेला एवं श्रुत्वा प्रतिनिवर्त्तन्ते ।दिवसमधिकृत्य पुनरित्थं 'होहिइ'इत्यादि पश्चार्द्धम्।काचिद् ग्रामे स्थितैः श्रुतम्—अमुकग्रामे अमुकदिवसे पञ्चमीप्रभृतिके संखडी भविष्यति, इत्याकर्ण्य ते ग्रामं प्रस्थिताः, तत्र गच्छद्भिरन्तरा श्रुतम्-यथा वृत्ता सा संखडी न भविष्यति वा। कथमित्याह-' सा पुण अन्नम्मि पक्खम्मि ' त्ति यस्या पञ्चम्यां भाविनी संखडी साधुभिः श्रुता सा पुनरन्यस्मिन् अतीते अनागते वा पक्षे भूता वा भविष्यति च, न तत्पक्षवर्त्तिनीति भावः।

अथ संखडी कथं कुत्र वा भवतीत्युच्यते—

आदेसो सेलपुरे, आदाणऽट्ठाहिया य महिमाए ।
तोसलिविसए विसत्र-खद्धा तह होति गमणं वा ।१००१।

आदेश -संखडिविषये दृष्टान्तः-तोसलिविषये शैलपुरे नगरे ऋषितडागं नाम सरः। तत्र वर्षे वर्षे भूयान् लोकोऽष्टाह्निकां महिमा करोति। तत्रोत्कृष्टावगाहिमादिधान्यस्यादाने ग्रहणं कार्यम्।तदर्थं कोऽपि लुब्धो गन्तुमिच्छति। ततः स गुरूणां विज्ञापना संखडिगमनार्थं करोति। आचार्यो वारयति।तथाऽपि यदि गमनं करोति ततस्तस्य प्रायश्चित्त दोषाश्च वक्तव्याः। इति पुरातनगाथासमासार्थः।

अथैनामेव विवृणोति-

सेलपुरे (इ)सि तलाग-म्मि होति लट्ठाहियामहामाहिमा।
कोंमलमेत्तपभासे, अव्वुयपाईणवाहम्मि ॥ १००२ ॥

तोसलिदेशे शैलपुरे नगरे ऋषितडागे सरसि प्रतिवर्षं महता विच्छर्द्देनाष्टाह्निकाया महती महिमा भवति । तथा कुण्डलमैत्रनाम्नो वाणव्यन्तरस्य यात्राया भरुकच्छपरिसरवर्त्ती भूयान् लोकः संखडिं करोति। प्रभासे वा तीर्थे अर्बुदे वा पर्वतयात्रायां सखडिः क्रियते । प्राचीनवाहः सरस्वत्या सम्बद्धः पूर्वदिगभिमुखप्रवाहः , तत्रानन्दपुरवास्तव्यो लोको गत्वा यथाविभवं शरदि संखडिं करोति । पञ्चमादिषु कोऽप्युत्कृष्टद्रव्यलुब्धो गुरून् संखडिगमनार्थं विज्ञपयति। गुरवो ब्रुवते-आर्य ! न कल्पते संखडिं गन्तुम्।

ततोऽसौ मायया ब्रवीति—

अत्थि य मे पुव्वदिट्ठा, चिरदिट्ठा ते अवस्सदट्ठव्वा ।
मायागमणे गुरुगा, तहेव गामाऽणुगामम्मि ॥१००३॥

सन्ति मे पूर्वदृष्टाः-पूर्वपरिचिताः सुहृदादयस्ते च चिरदृष्टाः प्रभूतकालतस्तेषां मिलितानाममभवदिति भावः। अत इदानीमवश्यं दृष्टव्यास्ते मया; एवं मायया गुरून् आपृच्छ्य यदि गच्छति तदा गुरुको मासः। ग्रामानुग्रामेऽपि विहरतां संखडिं श्रुत्वा गच्छतां तथैव मासगुरुकम्।

इदमेव व्याचष्टे-

गामाणुगामियं वा, रीयंता सो उ संखडिं तुरियं।
छड्डेंति वसतिकाले, गामं तेसिं पि दोसा तु ॥१००४॥

ग्रामानुग्रामिकं वा रीयमाणा-विहरन्तः क्वाऽपि ग्रामे संखडिं श्रुत्वा ये त्वरितं गच्छन्ति, सति वा भिक्षाकाले तं ग्रामं परित्यजन्ति , परित्यज्य च संखडिग्रामं गच्छन्ति तेषामपि दोषा वक्ष्यमाणा भवन्ति ।

गन्तुमणा अन्नदिसिं,अन्नदिसिं ते वयंति संखडिनिमित्तं।
मूलग्गामे अपंडिय-वसभा गच्छंति तदट्ठाए ।१००५।

भिक्षाचर्यायामन्यस्यां दिशि गन्तुमनसः संखडिं श्रुत्वा-तन्निमित्तमन्यस्यां दिशि व्रजन्ति, मूलग्रामे तदर्थं संखडिहेतोर्गच्छन्ति ।

एतेषु सर्वेष्वपि गमनप्रकारेषु दोषानुपदिदर्शयिषुराह—

एगाहि अणेगाहिं, दिवा व रातो व गंतुपडिसिद्धं ।
आणादिणो य दोसा,विराहणा पंथिपच्चे य ॥ १००६ ॥

एकाहिकीमनेकाहिकीं वा तां संखडिं गन्तुं दिवा रात्रौ प्रतिषिद्धम् , यदि गच्छति ततः आज्ञादयो दोषाः, विराधना च संयमात्मविषया पथि वर्त्तमानानां तत्र प्राप्ताना च भवति।

तत्र पथि वर्त्तमानाना भावदोषानभिधित्सुराह—

मिच्छत्ते उड्डाहो, विराहणा होति संजमायाए ।
रीयादि संजमम्मि य, छक्कायअचक्खुविसयम्मि।१००७।

संखडिं गच्छतः साधून् दृष्ट्वा यथा भद्रका मिथ्यात्वे स्थिरतरा भवेयुः, उड्डाहो भवेत् । तथा संयमात्मविराधना भवति । संयमविराधना रात्रौ गच्छन् ईर्यादिसमितीर्न शोधयति, अचक्षुर्विषये च गच्छतां षट्कायविराधना । आत्मविराधना तु पुरस्ताद्वक्ष्यते ।

अथ मिथ्यात्वो-ड्डाहद्वारे व्याचष्टे—

जीहादोसनियत्ता, वयंति लूहेति तज्जिया भोज्जे ।
थिरकरणं मिच्छत्ते, तप्पक्खियखोभणा चेव ॥१००८॥

लोको ब्रूयात्-अहो अमी श्रमणा जिह्वादोषनिवृत्ता-रसगृद्धिरहिता अपि रूक्षैर्वल्लचणकादिभिराहारैस्तर्जिताः सन्तः प्रातभोज्यार्थं-संखडिहेतोर्गच्छन्तीत्युड्डाहो भवेत्। तथा यथैतदमीषामसत्यं तथा अन्यदपि मिथ्याप्रलपितमिति मिथ्यात्वे स्थिरीकरणं भवति। एवं च तत्पाक्षिका साधुमानिनः श्रावकास्तेषा क्षोभणा मिथ्यादृष्टिभिः सम्यक्त्वाच्चालना भवति।

अथाऽऽत्मविराधनामाह—

वाले तेणे तह सा–वते य विसमे य खाणुकंटे य।

अकम्हा भयत्तसमुत्था, रत्तेमादी भवे दोसा ॥१००९॥

रात्रौ संखडिगमे व्यालः—सर्पस्तेन दश्येत। स्तेनैरुपकरणमपहियेत, श्वापदैः सिंहादिभिरुपद्रूयेत, विषमे च निम्नोन्नते प्रपतेत्। स्थाणुना वा कण्टकेन वा विध्येत। अकस्माद्भय वा स्वयमात्मसमुत्थं भवति। रात्रावेवमादयो दोषा भवेयुः। एवं तावत्पथि गच्छतां दोषा अभिहिताः।

अथ तत्र प्रार्थनामाह—

वसहीए जे दोसा, परउत्थियतज्जणाएँ विलधम्मे।

आतोज्जगीतसद्दे, इत्थीसद्दे य साविकारे॥ १०१०॥

वसतेः सम्बन्धिनो ये आधाकर्म्मादयो दोषास्ते लगन्ति, परतीर्थिकाश्च तत्र गतानां तर्जनां कुर्वन्ति। विलधर्म्मो नाम एकस्यामेव वसतौ गृहस्थैः समं संवासः तत्रैकत्रावस्थाने तत्र संखडं स्यात्। तत्र च संखड्यामातोद्यगीतशब्दान् स्त्रीशब्दाँश्च सविकारान् श्रुत्वा चशब्दादविरतिकाः अलंकृताः दृष्ट्वा स्मृतिकरणादयो दोषाः। इति द्वारगाथासमासार्थः।

साम्प्रतमेनामेव विवृणोति—

आहाकम्मियमादी, मंडवगादीसु होति अमणुन्ना।

रुक्खे अब्भावासे, उवरिं दोसे परूविस्सं ॥ १०११॥

संखडीवर्त्ती दानश्राद्धो यथाभद्रको वा साधूनां निमित्तमाधाकर्मिकान् कारयेत्। आदिशब्दाद्यावन्तिकादिपरिग्रहः। तेषु मण्डपेषु आदिशब्दात्पर्णकुटीप्रभृतिषु डाले—अवकाशे वा वसन्ति, तत्र वसतां ये दोषास्तानुपरिष्टादस्मिन्नेव सूत्रे प्ररूपयिष्यामि।

परतीर्थिकद्वारं भजनाद्वारमाह—

इंदियमुंडे मा किं–चि देह मा णे डहेज्ज साहूणं।

पेहासोभादीसु य, असंखडं हेतुवादो य॥ १०१२॥

संखडीं श्रुत्वा शाक्यशैवभागवतादयः परतीर्थिकाः समायातास्ते साधून् तर्जयन्त इत्थं ब्रुवते इन्द्रियपहा–मुण्डा अमी संखडिप्राप्ताः श्रमणा' मा किञ्चिद् ब्रूत किमप्यमीषां सम्मुखं विरूपकं भाषणीयं (णे) युष्मान् अमी तपस्विन आक्रुष्टा' सन्तः शापेन दहेयु., एवं तर्जनामसहमाना अपरिणतास्तैस्सह संखडं कुर्यु.। तथा प्रेक्षा-प्रत्युपेक्षणां कुर्वतो दृष्ट्वा शोभा वा स्वल्पकलुषादिना पानकेन विधीयमाना दृष्ट्वा आदिशब्दात्—संयतभाषया भाषमाणान् श्रुत्वा परतीर्थिका उड्डाहकान् कुर्वन्ति। तत्र तथैव सखडं भवेत्, हेतुना वा ते परतीर्थिका वादं मार्गयेयु.। बठरशिर शेखरा एते न किमपि जानन्तीत्यादि।

विलधर्मद्वारमाह—

सिंगारेण ण दिण्णा, न य तुब्भं पेतिगी सभा एसा।

अतिबहुओ ओगासो, गहितेण तु सो कलह एवं।१०१३।

एवं साधारणे सभादौ पिण्डीभूय साधवो गृहस्थाश्च यदेकत्रावतिष्ठन्ते स विलधर्म', तेन वसतां साधुभिः प्रभूतेऽवकाशे मिलिते सति गृहस्था ब्रुवते-भो श्रमणा.! एषा सभा तुभ्यं न शृङ्गारेण दत्ता, उदकेन वा कल्पेति भावः। न च न वेयं पैत्रिकी-पितृपरम्परागता। अतः किं नु नाम अतिबहुकोऽवकाशस्त्वया गृहीतः, एवं कलहो भवति।

तत्थ य अतितूर्डेतो, संविट्ठो वा छिवेज्ज इत्थीओ।

इच्छमणिच्छे दोसा, भुत्तमभुत्ते य फासादी॥ १०१४॥

तत्र वनादौ कोऽपि साधुरतिगच्छन्निर्गच्छन् वा समुपविष्टो वा स्त्रीं स्पृशेत्, तत आत्मपरोभयसमुत्था दोषाः। तत्र च यदि नाम विरतिकां प्रतिसेवितुमिच्छति तदा संयमविराधना, अथ नेच्छति ततः सा उड्डाहं कुर्यात्। स्त्रीणां च स्पर्शादिषु तथा आतोद्यगीतशब्दान् स्त्रीसम्बन्धिनश्च हसितकूजितादिशब्दान् श्रुत्वा भुक्ताभुक्तसमुत्था दोषाः।

भूयोऽपि दोषदर्शनार्थमाह—

आवासगसज्झाए, पडिलेहणेँ भुंजणे य भासाए।

वीयारे गेलन्ने, जा जहि आरोवणा भणिया॥१०१५॥

आवश्यके स्वाध्याये प्रत्युपेक्षणायां भोजने च भाषायां विचारे ग्लानत्वे च या यत्रारोपणा भणिता सा तत्र ज्ञातव्येति द्वारगाथासमासार्थः।

साम्प्रतमेनामेव प्रतिपदं विवृणोति—

आवासगं तत्थ करेन्ति दोसा,

सज्झाएँ एमेव य पेहणम्मि।

उड्डुंच वारेंतमवारणे य,

आरोवणा ताणि अकुव्वतो जा॥ १०१६॥

तत्र गृहस्थैः सह वसन्तो यद्यावश्यकं स्वाध्यायं वा कुर्वन्ति तदा ते कर्णकटुका नाम एते इति गमयन्ति, उड्डाहकान्वा कुर्वन्ति, एवमादयो दोषा'। प्रत्युपेक्षणायामप्येवमेवोड्डाहकान् कुर्वन्ति। यदि वार्यन्ते अन्यकुलैः सह संखडं कुर्यु'। अथ न वार्यन्ते ततो भगवत्प्रवचनस्य भक्ति' कृता न स्यात्। अथैतद्दोषभयादावश्यकादीनि न कुर्वन्ति ततस्तान्यकुर्वतो या काचिदारोपणा सा द्रष्टव्या। तद्यथा—कायोत्सर्गं न करोति, वन्दनकं न ददातिस्तुतिप्रदानं न करोति, सूत्रपौरुषीं न करोति, सर्वेष्वपि मासलघु। अर्थपौरुषीं न करोति मासगुरु। जघन्यमुपधिं न प्रत्युपेक्षते रात्रिन्दिवपञ्चकम्। मध्यमं न प्रत्युपेक्षते मासलघु। उत्कृष्टं न प्रत्युपेक्षते चतुर्लघु।

तथा—

जं मंडलिं भञ्जइ तत्थ मासो,

गारत्थिभासासु य एवमेवं।

चत्तारि मासा खलु मण्डलीए,

उड्डाहोँ भासासमिए वि एवं॥ १०१७॥

भोजनं कुर्वन् सागारिकमिति मत्वा यद् मण्डलीं भनक्ति तत्र मासलघु, अगारस्थभाषासु भाष्यमाणासु एवमेव मासलघु। अथैतत्प्रायश्चित्तभयान्मण्डल्यां समुद्दिशन्ति तदा चत्वारो मासलघव। उड्डाहश्च प्रवचनोपघातो मण्डल्यां समुद्देशेन भवति। एवं भाषासमितेऽपि मन्तव्यम्। संयतभाषया भाषमाणस्य चत्वारो लघुमासा भवन्तीति भाव।

थोवे थणे गंधजुते अभावे,
विअस्स दव्वारगताण दोसा ।
आवातसंलोगगया य दोसा,
करंत कुव्वं परितावणादी ॥ १०१८ ॥

विचारभूमौ गतानां स्तोके—स्वल्पे थने—कलुषे गन्धयुते दुर्गन्धिनि द्रवे अभावे वा सर्वथैव द्रव्यस्य दोषा अवर्णवादभक्तपानप्रतिषेधादयो भवन्ति । तथा पुरुषादीनामापातेसंलोके संज्ञां-कायिकीं वा कुर्वति तदा तद्गता दोषाः । यथा पीठिकायां विचारकल्पिकद्वारे उक्तास्तथा द्रष्टव्याः । अथैतद्दोषभयात् कायिकीं वा संज्ञां वा न करोति किं तु धारयति तदा परितापनादुःखमूर्च्छादयो दोषाः ।

गिलाणतो तत्थऽतिभुंजणेण,
उच्चारमादीण तु संनिरोधा ।
अगुत्तसेज्जासु व सण्णिवासा,
उड्डाहँ कुव्वन्ति मकुव्वतो य ॥ १०१९ ॥

तत्र संखड्यामुत्कृष्टद्रव्यलोभादतिमात्रभोजने, यद्वा-सागारिकाकीर्णतया तत्रोच्चारादीनां सन्निरोधात् ग्लानो भवेत् । अथवा-अगुप्ता—असंवृता या शय्या-वसतयस्तासु सन्निवासाद् ग्लानत्वमुपजायते । प्रतिश्रयशीतलतया भक्तस्याजीर्यमाणत्वात् । स च ग्लानो यदि तत्रोच्चारप्रश्रवणादि करोति तदा सागारिका उड्डाहं कुर्युः । अथ न करोति परितापनादयो दोषाः ।

अथैतद्दोषभयाद् ग्रामाद्बहिर्वसन्ति तत. को दोषः स्यादिति प्रश्नावकाशमाशङ्क्याह—

बहिता य रुक्खमूले, छक्काया साणतेणपडिणीए ।
मत्तु-मत्तविउव्वण, वाहणजाणे सतीकरणं ॥ १०२० ॥

ग्रामादेर्बहिर्वृक्षमूले आकाशं वा पृथिवीकाय.-सचित्तरज.-प्रभृतिकः, अप्कायः-स्नेहकणिकादिस्तेजस्कायो-विद्युदादिर्वायुकायो-महावातादिर्वनस्पति कायो-विवक्षितवृक्षसक्तः अल्पफलादिः त्रसकायो-वृक्षनिश्रितद्वीन्द्रियादिरूप. सम्भवन्ति,एते षट्कायास्तत्र तिष्ठतां विराध्यन्ते । असंवृते च तत्रस्थानां भाजनमपहरेयुस्तेना उपद्रवेयु. । प्रत्यनीको वा विजनं मत्वा हन्याद्वा मारयेद्वा । तथा मत्ता-मदिरामदभाविताः उन्मत्ता-मन्मथोन्मादयुक्ता-विटा इत्यर्थः, ते विकुर्व्वणां भूषणादिभिरलङ्करणं विधाय तत्रागच्छन्ति । वाहनानि—हस्त्यश्वादीनि यानानि-शिविकारथादीनि तानि दृष्ट्वा भुक्तभोगिनां स्मृतिकरणम् । अभुक्तभोगिनां तु कौतुकमुपजायते इति निर्युक्तिगाथासमासार्थः ।

अथैनामेव विवृणोति—

मा होज्ज अंतो इति दोसजालं,
तो जाति दूरं बहिरुक्खमूले ।
अभुंजमाणे तहि गंतुकाया,
अवाउडे तेणसुणे य ऽणेगे ॥ १०२१ ॥

ग्रामाभ्यन्तरे वसतामित्यनन्तरोक्तं दोषजालं मा भूदित्यभिसन्धाय ततो ग्रामाद्बहिर्दूरे वृक्षमूले याति, तत्र वा भुज्यमाने अव्याप्रियमाणे प्रदेशे पूर्वोक्तनीत्या षडपि काया विराध्यन्ते । अपावृते च तत्र स्तेनाः श्वानश्चानेके उपद्रवं विदधति ।

उम्मत्तगा तत्थ विचित्तवेसा,
पढंति चित्ताभिणया बहूणि ।
कीलंति मत्ता य अमत्तगा य,
तत्थित्थिपुंसा सुअलंकिता य ॥ १०२२ ॥

यत्रोद्याने उन्मत्ता विचित्रवेषा विविधवस्त्रादिनेपथ्यधारिणश्चित्राभिनया नानाप्रकारहस्ताद्यभिनया बहूनि शृङ्गारकाव्यानि पठन्ति । तथा मत्ता अमत्ता वा तत्र स्त्रीपुरुषाः सुष्ठु वस्त्राभरणैरलंकृताः सन्तः क्रीडन्ति ।

आसे रहे गोरहगे य चित्ते,
तत्थाभिरूढा उ गणे य केइ ।
विचित्तरूवा पुरिसा ललंता,
हरंति चित्ताणि विकोवियाणं ॥ १०२३ ॥

तत्रोद्याने केचित्पुरुषा अश्वान् अपरे रथान् तदन्ये गोरथकान्—कल्लोडकान् केचिच्चित्राणि नानाप्रकाराणि युग्यादीनि यानानि डगडानि च यानविशेषरूपाण्यधिरूढा. सन्तो विचित्ररूपा पुरुषाः श्रेष्ठिपुत्रादयो लालन्तः क्रीडन्तो विकोविदानामगीतार्थानां चित्तानि हरन्ति ।

ततश्च भुक्ताऽभुक्तसमुत्था दोषा –

सामिड्ढिसंदंसणवावडेण ,
विप्पस्सता तेसि परेसि मोक्खे ।
तत्थित्थिऽपातम्मि समंततेण,
भिक्खावियारादिसु दुप्पयारं ॥ १०२४ ॥

समृद्धया—वस्त्राभरणादिरूपया समिति सामस्त्येन यद्दर्शनमवलोकनं तत्र व्यापृतेन इदं पश्यामि इदं च पश्यामीति व्याक्षिप्तचेतसां सदा तेषां परेषां श्रेष्ठिप्रभृतीनां यानवाहनादीनि मुख्यानि विविधमनेकप्रकारं पश्यतां सूत्रार्थयोः परिमन्थः कृत. स्यादिति शेष । तत्र च स्त्रीपुरुषै. समन्तत ' अपाते ' देशीपदत्वात् आकर्णे भिक्षाया विचारभूमौ आदिशब्दाद्विकारभूम्यादौ च दुष्प्रचारं भवति, यत एते दोषा अतः संखड्यां न गन्तव्यम् ।

अथ पर आह–

दोसेहिं एत्तिएहिं, अगेण्हता चेव लग्गिमो अम्हे ।
गेण्हासु य भुंजातु य,ण य दोस जहा तहा सुणसु १०२५।

संखडिगमने यावन्त एते षट् दोषा उक्ताः एतावद्भिः वयं संखडिभक्तमगृह्णाना एव गच्छामः, ततो न कार्यमस्माकं ग्रामादिमध्यासनेन । सूरिराह-वयं संखडिभक्तं गृह्णीमो वा भुञ्महे वा नच दोषा. पूर्वोक्ता यथा भवन्ति तथाऽभिधीयमानं शृणु । इयं पुरातनी गाथा ।

अथैनामेव व्याख्यानयति-

अपरिग्गहित अभुत्ते, जति दोसा एत्तिया पसज्जंती ।
इत्थं गते सुविहिया, वसंतु रन्ने अणाहारा ॥ १०२६ ॥

परः प्राऽऽह-अपरिगृहीते अभुक्तेऽपि च संखडिभक्ते यद्ये-

तावन्तो दोषा· पथि गच्छतां ग्रामादेर्मध्ये वहिश्च तिष्ठतां भवन्ति ; तत इत्थमेवं व्यवस्थिते सम्प्रति सुविहिता अनाहाराः सन्तोऽरण्ये वसन्तु ।

गुरुराह—

होहिंति न वा दोसा,ते जाण जिणो ण चेव छउमत्थो ।
पाणियसद्देण उवा–हणत्र्रो से वेभलो मुयति ॥१०२७॥

हे नोदक ? नायं नियमो; यत्–संखडिं गच्छतामवश्यमनन्तरोक्ता दोषा भवन्ति, कारणे यतनया गच्छतस्तेषामसम्भवात् । ततस्ते दोषा भविष्यन्ति वा न वेत्येतत् जिनोक्तिनैव छद्मस्थो भवादृशो वेत्ति, अतो यदुक्तं भवता इत्थं गते सुविहिता अरण्यं गत्वा वसन्तु तदेतदज्ञानविजृम्भितम् । यतः पानीयशब्देनोपानहौ वा विद्ध, मूर्खो मुञ्चति,यो मूर्खो भवति स एवं मुञ्चतीतिभाव·।एवं भवानपि संखडिगमनमात्रे दोषोपदर्शनं श्रुत्वा यदेवं ग्रामादीन् परित्यज्य अरण्ये वासमभ्युपगच्छति, तत्ते नमद्वुधचक्रवर्ति हृदयम् ।

अपि च–

दोसे चेव विमग्गह,पुण दोसित्तेण णिच्चमुज्जुत्ता ।
ण हि होति सप्पलोट्ठी,जीवितुकामस्स सेताए॥१०२८॥

हे नोदक ! गुणद्वेषित्वेन यूयं नित्यमुद्युक्ताः सन्तो गुणान्वेषणबुद्धया दोषानेव विमार्गयथ न गुणान् । भवन्ति तद्दशा अपि केचिदस्मिन् जगति ये दोषानेव केवलान् पश्यन्ति न गुणनिवहम् । उक्तं च–"गुणोच्छ्रिते सत्यपि स्वप्रभूते, दोषेषु यत्नस्तु महान् खलानाम् । क्रमेलकः केलिवनं प्रविश्य, प्रतीक्षते कण्टकजालमेव ॥१॥"यतो न हि–नैव सर्प्पलुब्धिः सर्प्पग्राहकत्वं जीवितुकामस्य पुरुषस्य श्रेयसे भवति, किंतु प्रत्युत मरणाय । एवं भवतोऽपि संयमगुणान्वेषणबुद्धया अरण्यवसनम् ; तन्न श्रेयसे सम्पद्यते,प्रत्युताहाराभावेनार्त्तध्यानादिपरिणामसम्भवात्कन्दमूलफलादिभक्षणाद्वा तस्यैव संयमस्योपघात जनयति ।

आह यद्येव ततो निरूप्यतां कथमत्र दोषा भवन्ति कथं वा न भवन्तीत्युच्यते—

भणति उ चेव गमणे, इति दोसा दप्पतो य जहि गंतुं ।
कमगहणभुंजणे य,न होंति दोसा अदप्पेणं ॥ १०२६॥

भण्यतेऽत्र प्रतिवचनम्–यद्ययं व्याकुट्टिकया संखड्यां गच्छति दर्पतश्च गुरुग्लानादिकारणाभावेन यत्र गत्वा गृह्णाति भुङ्क्ते वा तत्राऽनन्तरोक्ता दोषा मन्तव्या· । अथ क्रमेण गृहपरिपाट्या संखडिगृहं प्राप्त·, ततस्तत्र ग्रहणं भोजनं वा कुर्वाणस्य न दोषा भवन्ति । अदर्प्पेण वा पुष्टालम्बनेन संखडिप्रतिज्ञयाऽपि गच्छतो न दोषा भवन्ति ।

इदमेव भावयति—

पडिलेहियं च खेत्तं , पंथे गामे य भिक्खवेलाए ।
गामाणुगामियम्मि य,जहि पायोग्गं तहिं लभते ।१०३०।

मासकल्पस्य वर्षावासस्य वा योग्यं क्षेत्रं प्रत्युपेक्षितं गन्तुं प्रस्थितानां पथि मार्गे वर्तमानाना यद्वा तस्मिन्नेव ग्रामे प्राप्तानां संखडिरुपस्थिता । उभयत्राऽपि यदि भिक्षावेलायां भक्तपानं प्राप्यते तदा कल्पते गन्तुम् । ग्रामाऽनुग्रामिकेऽप्यनियतविहरता यत्र भिक्षावेलाया प्रायोग्यं प्राप्यते तत्र ग्रहीतुं लभते नान्यत्रेति ।



अथैनामेव गाथां व्याचष्टे—

वासाविहारखेत्तं, वचंताणंऽतरा जहिं भोज्जं ।
अत्तट्ठिताणं तहिं, भिक्खमडंताण कप्पेज्जा ॥ १०३१ ॥

वर्षाविहारो नाम वर्षावासस्तत्प्रायोग्यं क्षेत्रं व्रजतामन्तरा पथि यत्र भोज्यं–संखडी भवति । आह चूर्णिकृत्–"भोज्जन्ति वा संखडि त्ति वा एगट्ठं"तत्र ग्रामादावन्यार्थे स्थितानां सार्थमत्र स्थिताना न तु संखडिनिमित्तं गृहपरिपाट्या च भिक्षामटतां संखडिं गत्वा भक्तपानं ग्रहीतुं कल्पते ।

कुत इति चेदुच्यते—

नऽत्थि पवत्तणदोसो, पडिवाडी पडित मो ण वाइण्णा ।
परसंसट्ठं अविलं–वियं च गेण्हंति अणिसण्णा ॥१०३२॥

नास्ति तत्र संखड्यां गमने प्रवर्त्तमाना दोषा ; परिपाट्या पतितं–प्राप्तावसरं यतस्तत्र भक्तपानं गृह्णाति न तदेवैकं गृहमुद्दिश्य गत्वेति । मो इति पादपूरणे । न वा सा संखडी आकीर्णा जनाकुला परसंसृष्टं च गृहस्थादिपरिवेषणनिमित्तं हस्तो वा मात्रकं वा संसृष्टम् , अवलम्बितं च तत्र प्राप्ता· सन्तो गृह्णन्ति । भिक्षावेलायां गमनात्तत्क्षणादेव भक्तपानं लभन्ते न पुनरुपविष्टा· प्रतीक्षन्ते इति भाव· ।

किं च—

संतन्ने ववराघा, कज्जम्मि जतो णिदंसवज्जेतु ।
जो पुण जतणारहितो,गुणा वि दोसायते तस्स॥१०३३॥

सन्ति–विद्यन्ते अन्येऽप्यनेषणीयग्रहणादयोऽपराधाः । येषु कार्ये ज्ञानादौ यतः प्रयत्नं कुर्वन् प्रतिसेवमानोऽपि न दोषवान् भवति । यः पुनर्यतनारहितः प्रवर्त्तते तस्य गुणोऽपि दोषायते—दोष इव मन्तव्य· ।

असढस्सऽप्पडिकारे, अच्छेज्ज ततो ण कोइ अवराघो ।
सप्पडिकारे अजतो,दप्पो ण व दोस वी दोसा॥१०३४॥

अशठस्य–रागद्वेषरहितस्याप्रतीकारे प्रतिसेवना विना नास्त्यन्यो यस्य प्रतीकार इत्येवंलक्षणे अर्थे—संखडिगमनादौ यतमानस्य यतनां कुर्वतो न कोऽप्यपराधो भवति । यस्तु स प्रतीकारे परिहर्तुं शक्ये अर्थे अयतो–न यतना करोति–सेवते तस्य द्वयोरप्ययतनादर्प्पयोर्दोषा भवन्ति—कर्मबन्ध इत्यर्थ· ।

यत एवमत·–

निद्दोसा आइन्ना, दोसवती संखडी यऽणाइण्णा ।
सुत्तमणाइण्णाए, तस्स विहाणा इमे होंति १०३५ ॥

निर्दोषा—वक्ष्यमाणदोषरहिता संखडी आचीर्णा साधूनां गन्तुं कल्पनीया, या तु दोषवती सा अनाचीर्णा । तत्र सूत्रमनाचीर्णामेवावतरति, न तत्र संखडिप्रतिज्ञया रात्रौ वा विकाले वा गन्तव्यम् । तस्याश्चानाचीर्णाया अमी भेदा भवन्ति ।

तानेवाह—

जावंतिया पगणिया, सक्खेत्ताऽखेत्तबाहिगद्दारा ।
अविसुद्धपंथगमणा, सपच्चवाया य भेदा य ॥ १०३६ ॥

यावन्तो भिक्षाचरा आगमिष्यन्ति तावद्दानव्यमित्यभिप्रायेण यस्यां दीयते सा यावन्तिका । तत्र श्रावका , द–

श परिव्राजका., दश श्वेतपटा., एवमादिगणनया यत्र दीयते सा प्रगणिता।'सक्खेत्ते'त्ति सक्रोशयोजनक्षेत्राभ्यन्तरवर्त्तिनी 'अखेत्ते' त्ति सचित्तपृथिव्यादावक्षेत्रे अस्थण्डिले स्थिता वा 'वाहिर' त्ति । सक्रोशयोजना क्षेत्रवहिर्वर्त्तिनी, आधारा नाम चरकपरिव्राजकादिभिराकुला, अविशुद्धेन पृथिव्यप्कायादिसंसक्तेन पथा गमनं यस्या साऽविशुद्धपथगमना । यत्र स्तेनश्वापदादयो दर्शनादिविषयाश्च प्रत्यपाया भवति सा सप्रत्यपाया। सा च जीवितभेदाय चरणभेदाय वा भवेदिति द्वारगाथासमासार्थ. ।

अथैनामेव प्रतिपदं विवृणोति—

आचंडाला पढमा, वितिया पासंडजातिणामेहिं ।
सक्खेत्ते जा सकोसं, अक्खेत्ते पुढविमाईसु ॥१०३७॥

प्रथमा यावन्तिकी, सा आ चण्डालात् यावन्त' केचन नटिकाकार्पटिकादयो भिक्षाचरा यावदपश्चिमश्चाण्डालस्तावतां दातव्यमितिलक्षणा । द्वितीया प्रगणिता प्रकर्षेण पाषण्डिनो जात्या नाम्ना वा गणयित्वा यत्र दीयते । तत्र जातिं प्रतीत्य गणना-दश भौताः,दश भागवताः,दश श्वेताम्वरा इत्यादि।नाम प्रतीत्य गणना, यथा-अमुक. श्वेतपटः अमुकश्च रक्तपट इत्यादि । स्वक्षेत्रसंखडी नाम या सक्रोशयोजनक्षेत्राभ्यन्तरे भवति। अक्षेत्रसंखडी तु या सचित्तवनस्पतिकायादिष्वनन्तरं वा प्रतिष्ठिता ।

एतासु गच्छत. प्रायश्चित्तमाह-

जावंतिगाएँ लहुगा, चउगुरु पगणीएँ लहुग सक्खेत्ते ।
मीसग सचित्ताणंतर, परंपरे कायपच्छित्तं ॥ १०३८ ॥

यावन्तिकायां चतुर्लघव , प्रगणितायां चतुर्गुरव., स्वक्षेत्रसंखड्यां गच्छतश्चतुर्लघु, अक्षेत्रसंखड्यां मिश्रसचित्तानन्तरपरम्परप्रतिष्ठितायां कायप्रायश्चित्तम् । तत्र पृथिव्यादिषु प्रत्येकवनस्पतिपर्यन्तेषु मिश्रेषु परम्परप्रतिष्ठिताया लघुपञ्चकम् , अनन्तरप्रतिष्ठितायां मासलघु । एतेष्वेव सचित्तेषु परम्परप्रतिष्ठितायां मासलघु, अनन्तरप्रतिष्ठितायां चतुर्लघु अनन्तरवनस्पतिषु च । तान्येव प्रायश्चित्तानि गुरुकाणि कर्त्तव्यानि ।

वहि वुड्ढिअड्ढजोयण, गुरुगादी सत्तहिं भवे सपदं ।
चरगादी आइण्णा, चउगुरु हत्थाइभंगो य ॥ २०३६ ॥

क्षेत्राद्वहि संखड्यां गच्छतश्चतुर्लघु, ततः परमर्द्धयोजनवृद्ध्या चतुर्गुरुकमादौ सप्तभिर्वृद्धिभि. स्वपदं पाराञ्चिकम् । तद्यथा—क्षेत्रवहिरर्द्धयोजने चतुर्गुरु , योजने षड्लघु । सार्द्धयोजने षड्गुरु, द्वयोर्योजनयोश्छेद , अर्द्धतृतीययोजनेषु मूलम् , त्रिषु योजनेषु नवमम् ,अर्द्धचतुर्थयोजनेषु पाराञ्चिकम् ,तथा या च परिव्राजककार्पटिकादिभिराकुला सा आकीर्णा,तां गच्छतश्चतुर्गुरुकम् । तत्र चातिसम्मर्देन हस्तपादपात्राणां भङ्गो भवेत् ।

अथाऽविशुद्धपथगमनादीनि द्वाराणि व्याख्याति-

काएहिं विसुद्धपहा, सावयतेणा पहे पवायाओ ।
दंसणवंभवता वा, तिविधा पुण होंति पत्तस्स ।१०४०।

दंसणवादे लहुगा, सेसा वादेसु चउगुरू होंति ।
जीवियचरित्तभेदा,विसचरगादीहिं गुरु काउं॥१०४१॥

कायैः-पृथिव्यादिभिरविशुद्धः एष मार्गो यस्याः संखडेः सा तथा, अस्यां च कायनिष्पन्नं प्रायश्चित्तं प्रत्यपायाश्च द्विविधाः । पथि वर्त्तमानस्य, तस्य प्राप्तस्य च । तत्र पथि श्वापदस्तेनकण्टकादयः , तत्र प्राप्तस्य तु त्रिविधा. प्रत्यपाया भवन्ति । दर्शनब्रह्मव्रतादिषु भेदात् । ततः संखडिं गतस्य चरकशाक्यादिभिया ग्रहणे दर्शनापायः, चरिकातापसीप्रभृतिभिरन्याभिर्वा मत्तप्रमत्तादिस्त्रीभिर्ब्रह्मव्रतापाय. । आत्मापायस्तु पूर्वोक्त एव हस्तभङ्गादिकाः, एवंविधास्तत्सहिता सप्रत्यपाया. । अत्र च दर्शनापाये चतुर्लघुकाः । शेषेषु स्तेनश्वापदादिषु ब्रह्मव्रतात्मविषयेषु प्रत्यपायेषु चतुर्गुरवो भवन्ति । तथा सौगतोपासकादिदोषदुष्टा संखडिर्नैवाचीर्णा, एतद्विपरीता आचीर्णेति ।

द्वितीये पदे एतैः कारणैः संखडिमपि गच्छेत्—

कप्पइ गिलाणगऽट्ठा , संखडिगमणं दिवा व रातो वा।
दव्वम्मि लब्भमाणे,गुरुउवदेसो त्ति वत्तव्वं ॥१०४२॥

ग्लानार्थं संखडिगमनं दिवा वा रात्रौ वा कल्पते । तत्र च द्रव्ये ग्लानप्रायोग्ये लभमाने यावन्मात्रं ग्लानस्योपयुज्यते तावति प्रमाणप्राप्ते सति प्रतिषेधयन्ति । यद्यसौ दाता ब्रूयात्-किमिति न गृह्णीथ? ततो वक्तव्यं-भणनीयम् , गुरुवैद्यस्तस्योपदेशोऽयम्—यदेतावत. प्रमाणादूर्ध्वं ग्लानस्य पथ्यादिकं न दातव्यम् ।

इदमेव भावयति—

पुव्विं ता सक्खेत्ते, असंखडीसंखडीसु वा जतति ।
पडिवसभमलब्भंते,तो वच्चति संखडी जत्थ ॥१०४३॥

ग्लानस्य प्रायोग्यं पूर्वं तावत् स्वक्षेत्रे—स्वग्रामे असंखड्यां गवेषयितव्यम्—यद्यसंखड्यां न प्राप्यते, तत. स्वग्राम एव या' संखड्यस्तासु यतते । तदभावे प्रतिवृषभग्रामेष्वपि. तत संखड्यामपि । अथ तत्राऽपि न लभ्यते यत्र ग्रामादौ संखडी भवति तत्र व्रजन्ति । ताश्च संखड्यो द्विधा—सम्यग्दर्शनभाविता , तीर्थविषयाश्च । तत्र प्रथममाद्यासु गन्तव्यम् ।

यत आह—

उज्जिंतणायसंखडि–सिद्धसिलादीण चेव जत्तासु ।
सम्मत्तभाविएसुं,ण हुंति मिच्छत्तदोसाओ ॥१०४४॥

उज्जयन्ते ज्ञातसंखडे सिद्धशिलायाम् एवमादिषु सम्यक्त्वभावितेषु तीर्थेषु या. प्रतिवर्षं यात्राः संखड्यो भवन्ति; तासु गच्छतो मिथ्यात्वस्थिरीकरणादयो दोषा न भवन्ति ।

एतेसिं असईए, इतरीओ वयंति तत्थिमा यतणा ।
पुट्ठो अतिकमिस्सं.कुणाति व असावदेसं तु ॥१०४५॥

एतेषां सम्यक्त्वभावितानामभावे इतरा अपि मिथ्यात्वभावितनीर्थविषया' संखडीर्व्रजन्ति । तत्र च गच्छत इयं यतना—यदि केनाऽपि पृच्छ्यन्ते—किं संखडीं गमिष्यथे-

ति?, ततः पृष्टः सन्नेवं ब्रूयात्—अतिक्रमिष्याम्यहं संखडीमग्रतो गमिष्यामीत्यर्थः। अथवा—अन्यापदेशं करोति। अव्यक्तमपि प्रतिवचनं ब्रूते इति भावः।

तहियं पुव्वं गंतुं, अप्पोगासासु ठाति वसहीसु।
जे य अविपक्कदोसा,ण णेति ते तत्थ अगिलाणे॥१०४६॥

तत्र-संखडिग्रामे पूर्वमेव गत्वा या अल्पावकाशा वसतयस्तासु तिष्ठन्ति, विस्तीर्णावकाशासु पुनः स्थितानां गृहस्थादिभिः पश्चादागतैः सह त एवासंखडादयो दोषाः, ये च तत्राविपक्वदोषा इन्द्रियकषायान् ग्रहीतुमसमर्था अपि—"केचिदेव" आह चूर्णिकृत्—"अविपक्कदोसा नाम जे असमत्था निगिरिहउं इंदियकसाए" अधिको विषया वा तत्रालंकृतस्त्रीदर्शनादिसमुत्थदोषपरिजिहीर्षयाऽन्यग्लानकार्याभावेन निर्गच्छन्ति।

अथ ग्लानस्य प्रायोग्यग्रहणे विधिमाह—

विणा वि ओभासितसंथवेहिं,
जं लब्भती तत्थ तु जोग्गदव्वं।
गिलाणभुत्तुव्वरियं वि (साहू),
न भुंजमाणा वि अतिकमंति॥१०४७॥

अवभाषणमवभाषितं याचनमित्यर्थः, संस्तवनं—संस्तवो दातुर्गुणविकत्थनम् तेन सहात्मना सम्बन्धविकत्थनं वा तासां विनाऽपि तत्र संखड्यां यत्प्रीतियोग्यद्रव्यं लभ्यते तत्प्रथमतो ग्लानेन, तन्मध्यादुद्धृतं तत उद्धरितं भुञ्जाना अपि साधवो, नाऽतिक्रामन्ति—न भगवदाज्ञां विलुम्पन्ति।

ओभासियं जं तु गिलाणगट्टा,
तं माणपत्तं तु णिवारयंति।
तुब्भे व अन्ने व जया नु बेंति।
भुंजेत्थ ता कप्पति णऽण्णहा तु॥१०४८॥

यत् पुनः प्रायोग्यद्रव्यं ग्लानार्थमवभाषितम्, तद्यदा मानप्राप्तवैद्योपदिष्टपथ्यमात्रं प्राप्तं भवति तदा निवारयन्ति, पर्याप्तमायुष्मन्नेतावता अतः परं ग्लानस्य नोपयोक्ष्यते, एवमुक्ते यदा ते गृहस्था एवं ब्रुवते-यूयं वा अन्ये वा साधवो भुञ्जन्तु तदा ग्लानयोग्यं प्रमाणादधिकमपि ग्रहीतु कल्पते, नान्यथा।

इदमेव स्फुटतरमाह—

दिणे दिणे दाहिसि थोवथोवं,
दीहाउया तेण ण गिरिहमो णिंह।
णो हावइस्सामि गिलाणगस्स,
तुज्झेव ता गिरहह गेरहणे वा॥१०४९॥

भो! श्रावक! ग्लानस्य दीर्घा-चिरकालस्थायिनी रुक्-रोगः समस्ति अतो दिने दिने इदं ग्लानयोग्यद्रव्यं दास्यति तेन कारणेन वयमिद न गृह्णीम। ततो यदि ते गृहस्था ब्रुवते वयं प्रतिदिनं ग्लानस्य प्रायोग्यं न हापयिष्याम. यूयमपि च तावत्प्रसादं कृत्वा गृह्णीत एवमुक्ते प्रमाणप्राप्तादधिकस्याऽपि ग्रहणं कर्त्तव्यम्। एवं तावत्साधूनां प्रवेशे लभ्यमाने विधिरुक्तः।

अथ यत्र साधवः प्रवेशं न लभन्ते तद्विषयं विधिमाह—

न वि लब्भते पवेसो, साधूणं लब्भए त्थ अज्जाणं।
वावारण पडिकिरणा,पडिच्छणा चेव अज्जाणं॥१०५०॥

यत्र-अन्तःपुरादौ नाऽपि-नैव साधूनां प्रवेशो लभ्यते, किंतु लभ्यते तत्रार्यिकाणां प्रवेशः। कर्मकर्तर्ययं प्रयोगः। ततः षष्ठीविभक्तिरदुष्टा,, तत्रार्यिकाणां व्यापारणा विधेया। ततस्ता अन्तःपुरादौ प्रविश्य प्रज्ञापयन्ति। तथाऽपि चेत् प्रवेशो न लभते, ततः अन्त पौरकरणनिम्ना आर्यिका ग्लानप्रायोग्यं गृहीत्वा साधूनां पात्रेषु परिकिरन्ति। तत आर्यिकाणां हस्तात् ग्लानप्रायोग्यं प्रतीच्छन्ति।

इदमेव स्पष्टयति—

अलब्भमाणे जतिणं पवेसे,
अन्तोउरे इब्भघरेसु वाऽवि।
उज्जाणमाईसु व संठियाणं,
अज्जाउ कारेंति जतिप्पवेसं॥१०५१॥

राजादीनामन्तःपुरे वा अन्यगृहेषु वा यतीनां प्रवेशे अलभ्यमाने उद्यानादिषु वा यतीनां प्रवेशे अलभ्यमाने उद्यानादिषु वा संस्थितानां साधूनामनागन्तुकानामित्यर्थः,आर्यास्तत्र यतीनां प्रवेशं कारयन्ति। कथमिति चेदुच्यते-ता आर्यिका अन्तःपुरादौ गत्वा प्रज्ञापयन्ति-यथैते भगवन्तो महातपस्विनो निःस्पृहा एतेभ्यो दत्तं बहुफलं भवति, एवमादिप्रज्ञापनया यदा तानि कुलानि भावितानि भवन्ति, तदा साधवः प्रविशन्ति।

अथ तथाऽपि प्रवेशो न लभ्यते ततः किं कर्त्तव्यमित्याह—

पुराणमाईसु व णीणवेंति,
गिहत्थभाणेसु सयं व ताओ।
अगारिसंका जतिसत्तएही,
दुट्ठोवभोगेहिँ य आणवेंति॥१०५२॥

आर्यिका गृहस्थभाजनेषु ग्लानप्रायोग्यं गृहीत्वा पुराणादिभिर्गृहस्थैः साधुसमीपं नाययन्ति; प्रापयन्तीत्यर्थ। अथ तादृशो गृहस्थो न प्राप्यते ततः स्वयमेव ताः आर्यिका गृहस्थभाजनेषु गृहीत्वा साधुसमीपं नयन्ति। तथाऽगारिण. शङ्कां कुर्युः—नूनमेता गृहस्थभाजनेष्वेवंविधमुत्कृष्टद्रव्यं गृहीत्वा केषांचिदविरतिकानां प्रयच्छन्ति ततो यतीनां सत्कानि यान्यधस्तादुपभोग्यानि-असम्भोग्यानि भाजनानि;उपहतानीत्यर्थ. तेषु गृहीत्वा साधूनां समीपमानाययन्ति वा।

तेसामभावा अहवा वि संका,
गिरहंति भाणेसु सएसु ताओ।
अभोइभाणेसु उ तेसि भोगो,
गारत्थि तेसेव व भोगिसुं वा॥१०५३॥

तेषां संयतभाजनानामभावात्; अथवा—तेषु गृह्यमाणेषु गृहस्थानां शङ्का भवेत्; एतानि संयमभाजनानि, तदवश्य-

भेता. संयतानां प्रयतानां प्रयच्छन्ति। अतस्ता आर्यिकाः स्वकेषु भाजनेषु गृह्णन्ति। ततः साधवोऽसंभोग्यभाजनेषु गृहीत्वा तस्य प्रायोग्यद्रव्यस्य भोगं कुर्वते। असंभोग्यभाजनाभावे गृहस्थभाजनेषु। अथ तान्यपि न सन्ति ततः तेष्वेव संयतीभाजनेषु भुञ्जते। अथ संयतीनां तैर्भाजनैः शीघ्रं प्रयोजनं तत. सम्भोगिकेष्वपि भाजनेषु प्रक्षिप्यते। एवं तावत् ग्लाननिमित्तं यथा गृह्यते तथा भणितम्।

अथ संखडीगमने कारणान्तराण्याह—

अद्धाण निग्गयादी, पविसंता वावि अहव ओमम्मि।
उपधिस्स गहणलिंपण-भावम्मि य तं पि जयणाए॥१०५४॥

अध्वनो निर्गता आदिशब्दादशिवादिनिर्गता वा अध्वनि वा प्रविशन्तः, अथवा अवमे दुर्भिक्षे संखडिं गच्छेयुः। अथवा यत्र ग्रामादौ संखडिस्तत्रोपधिवस्त्रपात्रादिकः सुलभस्तस्य ग्रहणार्थं गन्तव्यम्। पात्रकाणि वा लेपनीयानि सन्ति, तत्र च लेप. प्रचुरः सुप्रापश्च भावो वा शैक्षस्य संखडिगमने समुत्पन्नः। एतै. कारणैस्तदपि संखडिगमनं यतनया कर्त्तव्यमिति संग्रहगाथासमासार्थः।

साम्प्रतमेनामेव विवृणोति—

पविट्ठकामा व विहं महंतं,
विनिग्गया वाऽवि ततोऽथवो मे।
अप्पायणट्ठा य सरीरगाणं,
अत्ता वयंती खलु संखडीओ॥१०५५॥

विहम्—अध्वानं महान्तं—विप्रकृष्टं प्रवेष्टुकामास्ततो वा अध्वनो निर्गता जनपदं प्राप्ता., अथवा-अवमे-दुर्भिक्षे चिरमटन्तोऽपि न पर्याप्तं लभन्ते, अतस्ते शरीरेण दुर्बला आहारलुब्धा., तत्र यानि कुत्सितत्वात् शरीरकाणि तेषामप्यायनार्थमार्त्ता.-प्रथमद्वितीयपरीषहपीडिताः, अथवा-आप्ताः रागद्वेषरहिता', यद्वा—भीमो भीमसेन इति न्यायात् आत्तो-गृहीतः सूत्रार्थो यैस्ते आत्तगीतार्थाः संखडीं व्रजन्ति।

वत्थं व पत्तं व तहिं सुलंभं,
णाणादिसंपिंडियवाणितेसु।
पवित्तिसंघत्थकुलादिकज्जे,
लेवं व घिच्छाम अतो वयंति॥१०५६॥

तत्र क्षेत्रे नानाप्रकारेभ्यो दक्षिणापथादिदिग्भ्यो वस्त्रादिविक्रयार्थं समागत्य पिण्डिता मिलिता ये वणिजस्तेषु वस्त्रं वा पात्रं वा सुलभम्। अथवा-तत्र क्षेत्रे प्राप्ताः कुलादिकार्याणि कुलगणसंघप्रयोजनानि प्रवर्त्तयिष्याम', लेपं वा तत्र प्राप्ताः सन्तो ग्रहीष्यामः अत एवंविधं पुष्टमालम्ब्य संखडीं व्रजन्ति।

सेहं विदित्ता अतितिव्वभावं,
गीया गुरुं विण्णवयंति तत्थ।
जे ते सहाया अभविंसु पुव्विं,
दीवेसु ते तस्स हिता वयन्ति॥१०५७॥

शैक्षमभिनवप्रव्रजितमतितीव्रभावं संखडिग्रामगमने अतीव तीव्राभिलाषं विदित्वा गीतार्था गुरुं विज्ञपयन्ति, तत आचार्यास्तं शैक्षं भणन्ति-एते वृषभास्ते सहायाः पूर्वमभवन् अभिहिता इति भाव.। ते तस्य शैक्षस्य हिता मातृवदनुकूला सन्तो दीपयन्ति। दीपयित्वा च ततस्तं गृहीत्वा व्रजन्ति।

पुव्वोदितं दोसगणं च तं तु,
वज्जेति सज्जाइजुतं जतीए।
संपुण्णमेवं तु भवे गणित्तं,
जं कंखियाणं पविणेति कंखं॥१०५८॥

पूर्वोदितं-प्राग् भणितं शय्या वसतिः तदाऽऽदिभिर्युतं समग्रं दोषगणं यतनया प्रागुक्तलक्षणया वर्जयन्ति। अथ किमेवं-शैक्षस्यानुवर्त्तनां कृत्वा संखडिगमनेनाचार्या अनुजानन्तीत्याह-सम्पूर्णमसंखडमेवं विदधानस्याचार्यस्य गणित्वमाचार्यकं भवति। यत्काङ्क्षितानां-संखडिगमनाद्यभिलाषवतां शिष्याणां काङ्क्षां प्रकर्षेण तदीप्सितसम्पादनलक्षणात् विनयति स्फेटयति। उक्तं च दशाश्रुतस्कान्धे गणिसंपद्वर्णनाप्रक्रमे-'कंखियस्स कंखं पविणित्ता भवइ' त्ति। वृ० १ उ० ३ प्रक०। (उद्दिश्य भोज्यसंखडिर्भवेत् तत्र विधिः 'सागारिय' शब्दे वक्ष्यते) (संखड्यां भक्तं गृहीत्वा भक्ष्यते उद्गाले आगते इति कर्तव्यता 'उग्गाल' शब्दे द्वितीयभागे ७३० पृष्ठे उक्ता।)

जे भिक्खू संखडिपलोयणाए असणं वा पाणं वा खाइमं वा साइमं वा पडिगाहेइ पडिगाहंतं वा साइज्जइ॥१३॥

जे भिक्खू संखडिपलोअए इत्यादि 'संखडि' त्ति आउआणि जम्मि जीवाणं संखडिज्जंति सा संखडी संखडिसामिणा अणुणातो तम्मि रसवतीए पविसित्ताओ आणाति, पलोइउं भणाति-इतो इतो पयच्छाहिति एस पलोयणा। जो एवं गेण्हति असणाति तस्स मासलहुं। नि० चू० ३ उ०।

गाहा—

एसमणाइणा खलु, तव्विवरीता तु होति आइणा।
जा कोयी भत्तेणं, पाणेणं पलोयणं कारे॥४०॥

एस जावंतिया तिदोसदुट्ठा आणातिणो जावंबियादिदोसविप्पमुक्का आइणा कोइ सड्ढी आइणाए भणाति-तुज्झे पलोएह जं एत्थ रुच्चति तं अत्थउ, सेसं मरुगादीणं पयच्छामि।

गाहा—

तं जो उ पलोइज्जा, गेण्हेज्जा आयइज्ज वा भिक्खू।
सो आणाअणवत्थं, मिच्छत्तविराधणं पावे॥४१॥

एवं भणितो जो तं पलोएज्ज गेण्हेज्ज आदिएज्ज वा सो आणाभंगे वट्टति, अणवत्थं करेति, मिच्छत्तं जाणेति, आयसंजमविराहणं च पावति।

पुव्वं पलोतिते गहिते वा इमे दोसा। पडिणीयगाहा—

पडिणीयविसक्खेवा, तत्थ अणत्थ वाविं तप्पिस्सा।
मरुगादीण पओसो,अधिकरणुक्कोस वित्तचयो॥४२॥

साधुणा जं पलोइयं भत्तपाणगं तत्थ पडीणीओ उवासगादि विसं खिवेज्ज। साधुणीसाए वा वा पविट्ठो अण्णत्थ वा कोवि विसं पक्खिवेज्जा। अत्यते य ठवणादोसा मरुगादय. संखडीसामियस्स पदुट्ठं भोत्तुं णेच्छंति। समणाण पुव्वं दत्तं उक्कोसं

वा ठविय त्ति अगारदाहं वा करेज्ज, साहुं वा पदुट्ठो हणेज्ज। असुईएहिं वा छिक्कंति उप्फोसेज्ज अहिगरणं भवति। सो वा संखडिसामिओ धीयारेसु अभुंजतेसु संजयाणं पदुसेज्ज रिक्को मे वित्तचयो जाओ होज्जति। अधवा-चिज्जाइयाण दाउं भुंजावेइ एताएट्ठा वित्तचओ मे अत्थिगो जाओ त्ति। भवे कारणं जेण पलोइज्जा।

गाहा-

असिवे ओमोयरिए, रायदुट्ठे भए व गेलसे।
अद्धाण रोधए वा,जतणाए लोयणं कुज्जा ॥ ४३ ॥

इमा जयणा।

गाहा—

इत्थेण आदिसिंते, अणावडंतो अणाभिडंतो य।
दिस्सऽणमुहो भणति,होज्जा णे कज्जमगुएणं ॥४४॥

इत्थेण दापति इओइ ति अणावडंतो अणाभिडंतो उ फासणदोसपरिहरणत्थं णाओ णत्तो अएणतो मुहं पलोएत्ता सणियं भणाति,अमुगेण दहिमादिणा कज्जं होतव्व। तं च गच्छुवग्गहकरं पणीयं पलिट्ठं पज्जत्तं दव्वं पलोएति। नि० चू० ३ उ०।

संखडिकरण–संखडिकरण–न०। परमान्ने उपस्कृते,व्य०१उ०।

संखडग–शंखनक–पुं०। लघुशङ्खेषु, जी० १ प्रति०। प्रज्ञा०। नि० चू०।

संखणाम–शंखनाम–पुं०। स्वनामख्याते महाग्रहे, कल्प० १ अधि० ६ क्षण। सू० प्र०। (स च 'महग्गह' शब्दे षष्ठे भागे दर्शितः)।

संखतल–शंखतल–न०। शंखस्योपरितने भागे,जी० ३ प्रति० ४ अधि०। रा०। शंखतलेन कम्बुरूपेण विमलेन पङ्कादिरहितेन सन्निकाशः शंकाश. सदृशो यः सः। स्था० ६ ठा० ३ उ०। "शंखतलविमलणिम्मलदधिघणगोखीरफेणरययनिगरप्पगासे" इति—विमलं—विगतमलं यत् शंखतलं शङ्खस्योपरितनभागो यश्च निर्मलो दधिघनो घनीभूतं-दधि गोक्षीरफेनो रजतनिकरश्च तद्वत् प्रकाशः प्रतिभवा यस्य तत्तथा। जी० ३ प्रति० ४ अधि०।"संखदलविमलसणिणगासे" शङ्खस्य यद्दलं खएडं दलं वा रूपं विमलं तत्सन्निकाशः सदृशो य. स तथा। भ० १५ श०।

संखधमग–शंखध्मक–पुं०। शंखं ध्मात्वा ये जेमन्ति यदन्यः कोऽपि नागच्छतीति। वानप्रस्थभेदे, औ०। नि० चू०। भ०।

संखपाणिलेह–शंखपाणिरेख–पुं०। शङ्खाङ्कितहस्ततले, जी० ३ प्रति० ४ अधि०। प्रश्न०।

संखपुर–शंखपुर–न०।स्वनामख्याते नगरे, ती०। पुव्विं किर नवमो पडिवासुदेवो जरासिंधो रायगिहाओ समग्गसिन्नसंभारेण नवमस्स वासुदेवस्स कएहस्स य विग्गहत्थं पच्छिमदिसं चलिओ,कएहो वि समग्गसाणग्गीए बारवईओ निग्गंतूण संमुहं तस्स गओ। विसयसीमाए तत्थ भयवयाऽरिट्ठनेमिणा पंचजन्नो संखो पूरिओ। तत्थ संखेसरं नाम नयरं निविट्ठं। तओ संखस्स निनाएण खुभिएण जरासंधेण जराभिहाणं कुलदेवय आराहित्ता विउव्विया विणिहणो वालजरातपखाससासरोगेहि य पीडियं नियसेन्नं दिट्ठं। आउली हूअचित्तेण केसवेण पुट्ठो-भयवं अरिट्ठनेमी, सामिणो भविस्ससस्स अरिहओ पासस्स पडिमा चिट्ठइ। नियदेवयावसरे तुमं पूएसि। तेण ते निरुवद्दवं च जयसिरी य होहिति। तं सोऊण विएहुणा सत्त मासे तिन्नि दिवसा अप्पिया य नागराएण। तओ महूसवपुव्वं आणित्ता नियदेवयावसरे ठविआ पूएउमाढत्ता तिकालं विहिणा। तओ तीए एहवणोदगेणं अहिसित्ते सयलसिन्ने नियत्तेसु जरारोगसोगाइविग्घेसु समच्छीहूअं विएहुणो सेन्नं। कमेण पराजिओ जरासिंधू। लोहासुरगयासुरवाणा राइणो अ निज्जिया। तप्पभिइं धरणिंदपउमावईसन्निदेसेण य सयलविग्घहारिणी सयलरिद्धिजणणी य सा पडिमा संजाया ठविआ तत्थेव संखपुरे। कालंतरेण पच्छन्नीहूआ, कमेण संखकूवंतरे पयडीहूआ। अज्ज जाव चेइहरे सयलसंघेण पूइज्जइ, पूरेइ य अणेगविहे पव्वए तुरुक्करायाणो वि तत्थ महिमं करिंति। "संखपुरट्ठियमुत्ती,कामियतित्थं जिणेसरो पासो। तस्स य समए कप्पे,लिहिओ गीयाणुसारेणं ॥१॥" ती० २ कल्प। आ०क०।

संखमाल–शंखमाल–पुं०। सुखमसुखमायां जाते कल्पद्रुमजातिविशेषे, जं० २ वक्ष०।

संखय–संस्कृत–त्रि०। संस्क्रियत इति संस्कृतम्। तद्धर्तयितुं त्रोटयितुं संधातुं वा शक्ये, उत्त०। सम्प्रति संस्कृतप्रतिषेधादसंस्कृतं विज्ञायत इति संस्कृतशब्दस्य निक्षेपो वाच्यः, तत्र च यद्यपि समित्युपसर्गोऽप्यस्ति तथापि धात्वर्थद्योतकत्वात्तस्य करणस्यैव चात्र धात्वर्थात्तदेव निक्षेप्तुमाह निर्युक्तिकृत्। उत्त० ४ अ०। (असंस्कृतस्य व्याख्या 'असंखय' शब्दे, प्रथमभागे ८१६ पृष्ठे गता।) (द्रव्यस्य कथा 'धण' शब्दे, चतुर्थभागे २६४५ पृष्ठे गता।) (करणस्य व्याख्या 'करण' शब्दे, तृतीयभागे ३५६ पृष्ठे गता।)

इदानीं कर्मणामवन्ध्यतामभिदधत् प्रकृतमेवार्थं द्रढयितुमाह—

तेणे जहा संधिमुहं गहीए,
सकम्मुणा किच्चइ पावकारी।
एवं पया पिच्च इहं च लोए,
कडाण कम्माण न मोक्खो अत्थि ॥ ३ ॥

स्तेन'-चौर यथेति दृष्टान्तोपदर्शने, सन्धि'-क्षत्रं तस्य मुखमिव मुखं-द्वारं तस्मिन् गृहीत -आत्तः स्वकर्मणा-आत्मीयानुष्ठानेन, किम् ?-कृत्यते-छिद्यते, पापकारी-पातकनिमित्तानुष्ठानसेवी। कथं पुनरसौ कृत्यत इति चेद्—अत्रोच्यते सम्प्रदाय.-" एगम्मि नयरे एगो चोरो, तेण अभिन्नतो घरगस्स फलगचियस्स पागारकविसीसगसन्निहं खत्तं खणियं। खत्ताणि अणेगागाराणि—कलसागिइं नंदावत्तसंठियं पउमागिइं पुरिसागिइं च। सो य तं कविसीसगसंठियं खत्तं खणंतो घरसामिए णिबुद्धो। ततो तेण अद्धपविट्ठो पाएसु गहितो। मा पविट्ठो संतो पहरणेण पहरिस्सति त्ति, पच्छा चोरेण वि बाहिरत्थेण हत्थे गहिओ। सो तेहिं दोहिं वि बलवंतेहिं उभयहा कड्ढिज्जमाणो सयंकियपागारकविसीसगेहिं फालिज्जमाणो अत्ताणो विलवित्ति" एयममुमेवार्थमागमदर्शितन्यायेन प्रना —ऽ गागिन !' पे-

च्छ' त्ति प्रेत्यध्वम् प्राकृतत्वाद्वचनव्यत्यय, एतच्च यत्रा-ऽपि नोच्यते तत्राऽपि भावनीयम्। इह—अस्मिन् लोके—जन्मनि, आस्तां परलोक इत्यपिशब्दार्थ, कृतानां-स्वयं-विरचितानां कर्म्मणां ज्ञानावरणादीनां, न मोक्ष—न मुक्ति, ईश्वरादेरपि तद्विमोचनं प्रत्यसामर्थ्यात्, अन्यथा सकलसुखित्वाद्यापत्तेः। इदमुक्तं भवति—यथासावर्थग्रहणवाञ्छया प्रवृत्त. स्वकृतेनैव क्षत्रखननात्मकोपायेन कृत्यते, न तस्य स्व कृतकर्म्मणो विमुक्ति', एवमन्यस्याऽपि तत्तदनुष्ठानतोऽशुभकारिणो न ततो विमुक्तिः, किन्तु तद्विहापि विपच्यत एवेति। पठ्यते च—" एव पया पेच्च इहं च " त्ति इहाऽपि कृत्यत इति, संवध्यते, कृत्यत इव कृत्यते तथाविधवाधानुभवनेन। काऽसौ ?—प्रजा, क्व ?—प्रेत्य—परभवे, इहं चेति—इहलोके किमिति प्रेत्येत्युच्यते—यावता इह कृतमिहैवापगतमत आह—यत् कृतानां कर्म्मणां मोक्षो नास्ति, इह परत्र वा वेद्यमेवावश्यं कर्मेति। अहवा " एवं पयापेच्च इहं पि लोए,ण कम्मुणो पीहति ता कयाती" एवं प्रजा! आमन्त्रणपदमेतत्, प्रेत्येह लोके च यत' प्राणिन कृत्यन्ते 'तो' इति ततो हेतो' कदाचित्-कस्मिंश्चित्काले नेति निषेधे 'कम्मुणो' त्ति कर्म्मणे प्रस्तावाद् कुत्सितानुष्ठानाय स्पृहयेत्-नाभिलापमपि कुर्याद् आस्तां तत्करणमित्याकूतम्, तदभिलपणस्याऽपि वहुदोषत्वात्। तथा च वृद्धा —" एगम्मि नयरे एगेण चोरेण रत्ति दुरवगाढे पासाए आरोढुं विमग्गेण खत्तं कयं। सुवहुं च दव्वजायं णीणियं। णियघरं चऽणेण संपावियं। पहायाए रयणीए राहाय समालद्धसुद्धवासो तत्थ गतो। को किं भासति त्ति जाणणत्थं। जइ ताव ऽज्जलोगो मं ण याणिस्सइ ता पुणो वि पुव्वट्ठिइए चोरिस्सामीति संपहारिऊण तम्मि य खत्तट्ठाणे गओ। तत्थ य लोगो वहू मिलितो संलवति—कहं दुरारोहे पासाए आरोढुं विमग्गेण खत्तं कयं? कहं च खुड्डलएणं खत्तदुवारेणं पविट्ठो?, पुणो य सह दव्वेण णिग्गओ त्ति। सो सुणेउं हरिसितो चिंतेइ सच्चमेयं। किहऽहं एएण निग्गतो त्ति?, अप्पणो उदरं च कडिं च पलोएउं खत्तमुहं पलोएति। सो य रायनिउत्तेहिं पुरिसेहिं कुसलेहिं जाणितो, रायणो उवणीतो सासितो य" एवं पापकर्म्मणामभिलपणमपि सदोपमिति न विदधीतेति सूत्रार्थ.।

इह कृतानां कर्मणामवन्ध्यत्वमुक्तम्—तत्र च कदाचित् स्वजनत एव तन्मुक्तिर्भविष्यति, अमुक्तौ वा विभज्यैवामी धनादिवद् भोक्ष्यन्त इति कश्चिन्मन्येत अत आह-

संसारमावन्न परस्स अट्ठा,साहारणं जं च करेति कम्मं।
कम्मस्स ते तस्स उ वेयकाले,न बंधवा बंधवयं उवेंति।४।

पाठान्तरेऽपि पापकर्मस्पृहणं सदोपमिति निषिद्धम्। ततस्तत्राऽपि स्यादेतत्—यथेह सर्व साधारणं तथाऽमुष्मिन्नपि भविष्यत्यत आह-संसारसूत्रम्। संसरणं—संसार—तेपु तेपूच्चावचेपु पर्यटनं तम् आपन्न—प्राप्त, परस्य—आत्मव्यतिरिक्तस्य पुत्रकलत्रादे., अर्थात्—इति अर्थं-प्रयोजनमाश्रित्य साधारणम्। 'ज च' त्ति चस्य वाशब्दार्थत्वाद्भिन्नक्रमत्वाच्च साधारणं वा यदात्मनोऽन्येपा चैतद् भविष्यतीत्यभिसन्धिपूर्वकं करोति—निर्वर्त्तयति भवान्, कर्म्महेतुत्वात् कर्म्म, क्रियत इति वा कर्म-कृष्यादि कर्म्म तस्यैव कृष्यादेः 'ते'-तव हे कृष्यादिकर्म्मकर्त्तः! तस्य-परार्थस्य साधारणस्य वा, तुशब्दोऽपिशब्दार्थः, आस्तामात्मनिमित्तं कृतस्येत्यभिप्रायः, वेदनं—वेदो विपाक. तत्तत्कर्मफलानुभवनं तत्काले न—इति निषेध, अवधारणफलत्वाद्वाक्यस्य नैव बान्धवा—स्वजना.-यदर्थं-तत्कर्म्म कृतवान् करोषि वा, ते बान्धवतां-बन्धुभावं तद्विभजनापनयनादिना 'उवेंति' त्ति उपयन्तीति, यतश्चैवमतस्तदुपरि प्रेमादिप्रमादपरिहारतो धर्म एवावहितेन भाव्यम्, तथाविधाऽऽभीरीव्यंसकवणिग्वत्। तथा च वृद्धाः-" एगम्मि नयरे एगो वाणियगो अतराऽऽवणेसुं ववहरइ, एगा आभीरी उज्जुगा दो रूवए घेत्तूण कप्पासनिमित्तमुवट्ठिया। कप्पासो य तया समग्घो वट्टति। तेण वाणियएण एगस्स रूवस्स दो वारा तोलेउं कप्पासो दिन्नो। सा जाणइ-दोण्ह वि रूवगाण दिन्नो त्ति। सा पोट्टलयं बंधिऊण गया। पच्छा वाणियगो चिंतेति-एस रूवगो मुहा लद्धो। ततो अहं एयं उवभुंजामि। तेण तस्स रूवगस्स समियं घयं गुलो विक्किणिउं घरे विसज्जिउं भज्जा संलत्ता-घयपुएणे करेज्जासि त्ति। ताए कया घयपुएणा। जामाउगो से सवयंसो आगतो। सो ताए परिवेसितो घयपुएणेहिं, सो भुंजिउं गतो। वाणियगो राहाणयतो भोयणत्थमुवगतो। सो ताए परिवेसितो साभाविएण भत्तेण। भणति-किं न कया घयाउरा?, ताए भणति-कया परं जामाउएण सवयंसेण खाइया। सो चिंतेति—पेच्छ जाणिसं कयं मया, सा वराई आभीरी वंचेउं परनिमित्तं अप्पा अवुन्नेण सजोइओ। सो य सचिंतो सरीरचिंताए णिग्गतो गिम्हो य वट्टति। सो मज्झण्हवेलाए कयसरीरचिंतो एगस्स रुक्खस्स हेट्ठा वीसमति। साहू य तेणोगासेण भिक्खाणिमित्तं जाति। तेण सो भणति-भगव! एत्थ रुक्खच्छायाए विस्सम मया समाणं ति। साहुणा भणियं-तुरियं मए णियकज्जेण गतव्वं। वणिएण भणियं—किं भयवं! कोऽवि परकज्जेणावि गच्छइ?, साहुणा भणियं-जहा तुमं चिय भज्जाइनिमित्तं किलिस्ससि। " स मर्मणीव स्पृष्ट." तेणेव एक्कवयणेण संबुद्धो भणति—भयवं! तुम्हे कत्थ अच्छह?, तेण भणइ—उज्जाणे। ततो तं साहुं कयपज्जत्तियं जाणिऊण तस्स सगासं गतो, धम्मं सोउं भणति-पव्वयामि जाव सयणं आपुच्छिऊणं। गतो णियगं घरं बंधव भज्जं च भणइ—जहा आवणे ववहरंतस्स तुच्छो लाभगो, तो दिसावाणिज्जं करेस्सामि। दो य सत्थवाहा, तत्थेगो मुल्लभंडं दाऊण सुहेण इट्टपुरं पावेइ, तत्थ विढत्ते ण किंचि गिराहति। वीओ न किंचि मुल्लभंडं देति, पुव्व विढत्तं च विलुंपेति। तं कयरेण सह वच्चामि?, सयणेण भणियं-पढमेण सह वच्चसु। तेहिं सो समणुरणातो बंधुसहितो गओ उज्जाणं। तेहिं भणति—कयरो सत्थवाहो?,तेण भणति-एणु परलोगसत्थवाहो एस साहू असोगच्छायाए उवविट्ठो णियएणं भंडेणं ववहारावेइ। एएण सह निव्वाणपट्टणं जामि त्ति पव्वइतो' यथा चायं वणिक् स्वजनस्वतत्त्वमालोचयन् प्रव्रज्यां प्रत्यादत, तथाऽन्यैरपि विवेकिभिर्यतितव्यम्। तथा च वाचक.-

"रोगाघ्रातो दु खा-र्दितस्तथा स्वजनपरिवृतोऽतीव।

क्रणति करुणं सवाष्पं, रुजं निहन्तुं न शक्तोऽसौ ॥ १ ॥
माता भ्राता भगिनी, भार्या पुत्रस्तथा च मित्राणि।
न घ्नन्ति ते यदि रुजं, स्वजनवलं किं वृथा वहसि ? ॥ २ ॥
रोगहरणेऽप्यशक्ताः, प्रत्युत धर्म्मस्य ते तु विघ्नकराः।
मरणाच्च न रक्षन्ति, स्वजनपराभ्या किमभ्यधिकम् ? ॥ ३ ॥
तस्मात् स्वजनस्यार्थे, यदिहाकार्यं करोषि निर्लज्ज !।
भोक्तव्यं तस्य फलं, परलोकगतेन ते मूढ ! ॥ ४ ॥
तस्मात् स्वजनस्योपरि, सङ्गं परिहाय निर्वृतो भूत्वा।
धर्म्मं कुरुष्व यत्ना-द्यत्परलोकस्य पथ्यदनम् ॥ ५ ॥"
इति सूत्रार्थः।

इत्थं तावत् स्वकृतकर्म्मभ्यः स्वजनाच्च मुक्तिरित्युक्तम् ; अधुना तु द्रव्यमेव तन्मुक्तये भविष्यतीति कस्यचिदाशयः स्यादत आह–

**वित्तेण ताणं न लभे पमत्ते, इमम्मि लोए अदुवा परत्थ।**
**दीवप्पणट्ठे व अणंतमोहे, नेयाउयं दट्ठुमदट्ठुमेव ॥ ५ ॥**

वित्तेन–द्रविणेन त्राणं–स्वकृतकर्मणो रक्षणं न लभते–न प्राप्नोति इति। कीदृक् ?–प्रमत्त.—मद्यादिप्रमादवशगः, क्व ?–'इमम्मि' त्ति अस्मिन्ननुभूयमानतया प्रत्यक्ष एव लोके जन्मनि, 'अदुवे' त्ति अथवा परत्रेति—परभवे, कथं पुनरिहापि जन्मनि न त्राणाय ?, अत्रोच्यते वृद्धसम्प्रदाय.–"एगो किल राया इदमहाईए कम्हि ऊसवे अत्तपुरे निग्गच्छंते घोसणं घोसावेइ–जहा सव्वे पुरिसा नयरातो निग्गच्छंतु। तत्थ पुरोहियपुत्तो रायवल्लभो वेसाघरमणुपविट्ठो घोसिएऽवि ण णिग्गतो। सो रायपुरिसेहिं गहितो। तेण वल्लभेण न तेसिं किंचि दाऊण अप्पा विमोइतो। दप्पायमाणो विवदंतो रायसगासमुवणीतो। राइणा वि वज्झो आणत्तो। पच्छा पुरोहिओ उवट्ठितो भणति–सव्वस्सं पि य देमि मा मारिज्जउ, तोऽवि ण मुक्को, सूलाए भिन्नो।" उत्त० ४ अ०। (द्वीपशब्दवक्तव्यता'दीव' शब्दे चतुर्थभागे २५४१पृष्ठे गता।) श्रुतज्ञानात्मकात् दृष्ट्वाऽपि वित्तादिव्यासक्तितस्तदावरणोदयाददृष्टैव भवति, तथा च न केवल स्वतस्त्राणाय वित्तं न भवति, किन्तु कथञ्चित् त्राणहेतुं सम्यग्दर्शनादिकमप्यवासमुपहन्तीति सूत्रार्थ.।

एवं धनादिकमेव सकलकल्याणकारि भविष्यतीत्याशङ्कायां तस्य कुगतिहेतुत्वं कर्म्मणश्चावन्ध्यत्वमुपदर्श्य यत् कृत्यं तदाह—( सूत्रम् )

**सुत्तेसु आवी पडिबुद्धजीवी,नो विस्ससे पंडिय आसुपन्ने।**
**घोरा मुहुत्ता अवलं सरीरं,भारंडपक्खीव चर ऽप्पमत्तो।६।**

सुप्तेषु—द्रव्यतः शयानेषु भावतस्तु–धर्म्मं प्रत्यजाग्रत्सु, च. पादपूरणे,चशब्द समाहारेतरेतरयोगसमुच्चयावधारणपादपूरणाधिकवचनादिष्विति वचनात्, अपि. सम्भावने,ततोऽयमर्थ.–सुप्तेष्वप्यास्तां जाग्रत्सु च ( उत्त० ४ अ० ) ( पडिबुद्धजीवी इत्यस्य व्याख्या 'पडिवुद्धजीवि' [ ण् ] शब्दे पञ्चमभागे ३२१ पृष्ठे गता ) ( अगडदत्तस्य कथा 'अगडदत्तशब्दे प्रथमभागे १५५ पृष्ठे गता। ), न विश्वस्यात्, प्रमादेष्विति गम्यते, किमुक्तं भवति ? —बहुजनप्रवृत्तिदर्शनान्नैतेऽनर्थकारिण इति न विश्रम्भवान् भवेत्, 'पण्डितः'–प्राग्वत्, आशु–शीघ्रमुचितकर्त्तव्येषु यतितव्यमिति प्रज्ञा–बुद्धिरस्येति–आशुप्रज्ञ, किमिति आशुप्रज्ञः ?, यतो घूर्णयन्तीति घोरा.–निरनुकम्पा., सततमपि प्राणिनां प्राणापहारित्वात्, क एते ?–'मुहुत्ताः' कालविशेषा., कदाचिच्छारीरवलाद् घोरा अप्यमी न प्रभविष्यन्तीत्यत आह–'अवलं' वलविरहित न मृत्युदायिनो मुहूर्त्तान् प्रति सामर्थ्यवत्, किं तत् ?–शरीरम्, एवं तर्हि किं कृत्यमित्याह ?–'भारण्डपक्खीव चर ऽप्पमत्तो'इति पतत्यनेनेति पक्षः सोऽस्यास्तीति पक्षी। भारण्डश्चासौ पक्षी च भारण्डपक्षी स यद्वदप्रमत्तश्चरति तथा त्वमपि प्रमादरहितश्चर–विहितानुष्ठानमासेवस्व,अन्यथा हि यथाऽस्य भारण्डपक्षिण. पक्षान्तरेण सद्यान्तर्वर्त्तिसाधारणचरणसम्भवात् स्वल्पमपि प्रमाद्यतोऽवश्यमेव मृत्युः, तथा तवापि संयमजीविताद् भ्रंश एव प्रमाद्यत इति सूत्राऽर्थः।

अमुमेवार्थं स्पष्टयन्नाह—

**चरे पयाइं परिसंकमाणो,**
**जं किंचि पासं इह मन्नमाणो।**
**लाभंतरे जीविय वूहइत्ता,**
**पच्छा परिण्णायमलावधंसी ॥ ७ ॥**

चरेत्—गच्छेत् पदानि—पादविक्षेपरूपाणि परिशङ्कमान.–अपाये विगणयन्, किमित्येवमत आह– 'यत्किञ्चिद्' गृहस्थसंस्तवाद्यल्पमपि पाशमिव पाशं संयमप्रवृत्तिं प्रति स्वातन्त्र्योपरोधितया मन्यमानो—जानान, यद्वा चरेदिति—संयमाध्वनि यायात्, किं कुर्वन् ? –पदानि–स्थानानि, धर्म्मस्येति गम्यते, तानि च मूलगुणादीनि परिशङ्कमानो—मा ममेह प्रवर्त्तमानस्य मूलगुणेषु मालिन्यं स्खलना वा भविष्यतीति परिभावयन् प्रवर्त्तेत। 'जं किंचि' त्ति यत्किञ्चिदल्पमपि दुश्चिन्तितादि प्रमादपदं मूलगुणादिमालिन्यजनकतया वन्धहेतुत्वेन पाशमिव पाशं मन्यमान., तदयमुभयत्राभिप्राय.–यथा भारण्डपक्षी अपरसाधारणान्तर्वर्त्तिचरणतया पदानि परिशङ्कमान एव चरति यत्किञ्चिदवरकादिकमपि पाशं मन्यमान तथाऽप्रमत्तश्चरेत्। ननु यदि परिशङ्कमानश्चरेत्तर्हि सर्वथा जीवितनिरपेक्षेणैव प्रवर्तितव्य, तत्सापेक्षतया हि कदाचित्कथञ्चिदुक्तदोषसम्भव इत्याशङ्क्याह–'लाभंतरे' त्यादि वृत्तार्द्धम्। लम्भनं लाभ.–अपूर्वार्थप्राप्ति.–अन्तरं–विशेष., लाभश्चासावन्तर च लाभान्तरं तस्मिन् सतीत्यर्थ। किमुक्तं भवति ? –यावद्विशिष्टविशिष्टतरसम्यग्ज्ञानदर्शनचारित्रावाप्तिरितः सम्भवति तावदिदं जीवितं–प्राणधारणात्मकं 'वृहयित्वा—अन्नपानोपयोगादिना वृद्धिं नीत्वा, तदभावे प्रायस्तदुपक्रमणसम्भवादित्थमुक्तम्, 'खुहा पिवासा य वाही य' त्ति वचनात् क्षुदादीनामप्युपक्रमणकारणत्वेनाभिधानाद्, इह च वृंहयित्वेव वृंहयित्वेति व्याख्येयम्, अन्यथा ह्यसंस्कृतं जीवितमिति विरुध्यत इति भावनीयम्। तत किमित्याह–पश्चाद्–लाभविशेषप्राप्त्युत्तरकालं 'परिणाय' त्ति सर्वप्रकारैरवबुध्य यथेदं नेदानीं प्राग्वत्सम्यग्दर्शनादिविशेषहेतु, तथा च नातो निर्जरा। न हि चरया व्याधिना

वा अभिभूतं तत् तथाविधधर्माधानं प्रति समर्थम्, उक्तं हि-"जरा जाव ण पीलेति,वाही जाव ण वड्ढति। जाविंदिया ण हायंति, ताव धम्मं समायरे ॥ १ ॥" एवं ज्ञपरिज्ञया परिज्ञाय ततः प्रत्याख्यानपरिज्ञया च भक्तं प्रत्याख्याय, सर्वथा जीवितनिरपेक्षो भूत्वेति भावः। मलवदत्यन्तमात्मनि लीनतया मलः-अष्टप्रकारं कर्म्म तदपध्वंसत इत्येवंशीलः, मलापध्वंसी—मलविनाशकृत्, स्यादिति शेषः। ततो यावल्लाभं देहधारणमपि गुणायैवेति भावः। यद्वा—जीवितं बृंहयित्वा लाभान्तरे-लाभविच्छेदेऽन्तर्वहिश्च मलाश्रयत्वान्मलः—औदारिकशरीरं तदपध्वंसी स्यात्, कोऽर्थ.—जीवितं त्यजेद्। इदमुक्तं भवति-अयमस्यैको हि गुणो मानुष्यमवाप्य लभ्यते धर्म्म इति भावयन् यावदितस्तल्लाभः तावदिदं बृंहयेत्,लाभविच्छेदं सम्भाव्य संलेखनादिविधानतस्त्यजेत्। (उत्त०) (इह च यावल्लाभधारणे मण्डिकचौरोदाहरणम् 'मंडिय' शब्दे षष्ठे भागे २१ पृष्ठे व्याख्यातम्।) दृष्टान्तानुवादपूर्वकोऽयमिहोपनयः—यथाऽयमकार्यकार्यपि मण्डिको यावल्लाभं मूलदेवनृपतिना धारित. तथा धर्मार्थिनाऽपि संयमोपहतिहेतुकमपि जीवितं निर्जरालाभमभिलषता तल्लाभं यावद्धार्यमिति। न च तद्धारणे संयमोपरोध एव, यथाऽऽगमं हि प्रवृत्तस्य तत्तदुपष्टम्भकमेवेति भावनीयम्, इत्यलं प्रसङ्गेनेति सूत्रार्थ।

सम्प्रति यदुक्तं जीवितं बृंहयित्वा मलापध्वंसी स्यादिति तत्किं स्वातन्त्र्यत एव उतान्यथेत्याह-

छंदं णिरोहेण उवेति मुक्खं,
आसे जहा सिक्खियवम्मधारी।
पुव्वाइ वासाइ चर ऽप्पमत्तो,
तम्हा मुणी खिप्पमुवेति मुक्खं ॥ ८ ॥

छन्दो-वशस्तस्य निरोध छन्दोनिरोध —स्वच्छन्दतानिषेध तेन उपैति—उपयाति मोक्षं—मुक्तिम्। किमुक्तं भवति ?—गुरुपरतन्त्रतया स्वाग्रहाग्रहयोगितां विना तत्र प्रवर्त्तमानोऽपि संक्लेशविकल इति न कर्म्मबन्धभाक्, किन्त्वविकलचरणतया तन्निर्जरणमेवाप्नोति, अप्रवर्त्तमानोऽपि चाहारादिष्वाग्रहग्रहाकुलकुलितचेताः 'छट्ठट्ठमदसमे' त्यादिवचनादनन्तसंसारितायनर्थभागेव भवति। तत्सर्वथा तत्परतन्त्रेणैव मुमुक्षुणा भाव्यं, तस्यैव सम्यग्ज्ञानादिसकलकल्याणहेतुत्वाद्। उक्तं च—" णाणस्स होइ भागी, थिरयरतो दंसणे चरित्ते य। धण्णा आवकहाए, गुरुकुलवासं न मुंचंति ॥ १ ॥ " यद्वा-छन्दसा--गुर्वभिप्रायेण निरोध -आहारादिपरिहाररूप. छन्दोनिरोधः तेनैवोक्तन्यायतो मुक्त्यवाप्ति, तत्तद्वस्तुविषयाभिलाषात्मिका इच्छा वा छन्दः तन्निरोधेन मुक्तिः, तस्या एव तद्विबन्धकत्वात्, तथा च लौकिका अप्याहु.—" श्लोकार्धेन हि तद्वक्ष्ये, यदुक्तं ग्रन्थकोटिभि.। तृष्णा च सत् (चेत्सं) परित्यक्ता प्राप्तं च परमं पदम् ॥ १ ॥ " अथवा—छन्दो वेद आगम इत्यनर्थान्तरम्, तत छन्दसा 'आणाए आणाए च्चिय चरणं' मित्यादिना निरोध—इन्द्रियादिनिग्रहात्मक छन्दोनिरोध तेनोपैति मोक्षं न तु सर्वथा जीवितं प्रत्यनपेक्षतया। तथा च समयविदः—" सव्वत्थ संजमं सं—जमातो अप्पाणमेव रक्खिज्जा। मुच्चइ अइवायातो, पुणोऽवि सोही ण या विरती ॥१॥" अत्रोदाहरणमाह—अश्वो यथा शिक्षितो—वल्गनप्लवनधावनादिशिक्षां ग्राहितो वृणोति-आच्छादयति शरीरकमिति वर्म्म-अश्वतनुत्राणं तद्धरणशीलो वर्म्मधारी, शिक्षितश्चासौ वर्म्मधारी च शिक्षितवर्म्मधारी, अनेन शिक्षकतन्त्रतयाऽस्य स्वातन्त्र्यापोहमाह-ततोऽयमर्थः-यथा अश्वः स्वातन्त्र्यविरहात्प्रवर्त्तमान. समरशिरसि न वैरिभिरुपहन्यत इति तन्मुक्तिमाप्नोति, स्वतन्त्रस्तु प्रथममशिक्षितो रणमवाप्तस्तैरुपहन्यते। अत्र च सम्प्रदायः—" एगेण रायणा दोण्ह वि कुलपुत्ताणं दो आसा दिण्णा सिक्खावणपोसणत्थं। तत्थेगो कालोचिएण जवसजोगासणेणं संरक्खमाणो धाविचलालियवग्गियाइयातो कलातो सिक्खावेइ। बीओ को पयस्स इट्ठजवसजोगासणं दाहिइ त्ति घरट्टे वाहेइ ण तु सिक्खावेइ, सेसं अप्पणा भुंजति। संगामकाले उवट्ठिए ते रण्णा वुत्ता—तेसु चेवास्सेसु आरोढुं झत्ति आगच्छह, संपत्ता, भणिया ब राइणा-पविसह संगामं। तत्थ पढमोऽसो सिक्खागुणत्तणतो सारहियमणुवट्टमाणो संगामपारतो जातो, दुइओ विसिट्ठसिक्खाभावतोऽसब्भावभावणाभावियत्तणओ गोधूमजंतगजुत्त इव तत्थेव भमिउमाढत्तो। तं च परा उवलक्खेउं हयसाराहिं काऊण गृहीतवन्त.। दृष्टान्तानुवादपूर्वकोऽयमुपनय'—यथाऽसावश्व' तथा धर्मार्थ्यपि स्वातन्त्र्यविरहितो मुक्तिमवाप्नोति, अत एव च पूर्वाणि—उक्तपरिमाणानि वर्षाणि-वत्सराणि " कालात्यन्तसंयोगे द्वितीया" (पा० २-३-५), किमित्याह—'चर' इति सततमागमोक्तक्रियामासेवस्व, कथम् ?—अप्रमत्तः-गुरुपारतन्त्र्यापहारिप्रमादपरिहर्त्ता, 'तम्ह' त्ति तस्मात् अप्रमादचरणादेव, मन्यते—जानाति जीवादीनिति मुनिः—तपस्वी क्षिप्रं-शीघ्रम् उपैति मोक्षम्। ननु छन्दोनिरोधोऽपि तत्त्वतोऽप्रमादात्मक एवेति कथं न पुनरुक्तदोष.। , उच्यते—अप्रमाद एवादर. कार्य इति ख्यापनार्थत्वादध्ययनार्थोज्जीवनार्थत्वाच्चास्य न पौनरुक्त्यमिति भावनीयम्। पूर्वाणि वर्षाणीति च एतावदायुषामेव चारित्रपरिणतिरिति दर्शनार्थमुक्तमिति सूत्रार्थः।

ननु यदि छन्दोनिरोधेन मुक्ति'-अयमन्त्यकाल एव तर्हि विधीयतामित्याशङ्कयाह, यद्वा यदि पश्चान्मलापध्वंसी स्यात् तदैव छन्दोनिरोधादिकमपि तद्धेतुभूतमस्त्वत आह—

स पुव्वमेवं ण लभेज्ज पच्छा,
एसोवमा सासयवाइयाणं।
विसीदति सिढिले आउयम्मि,
कालोवणीए सरीरस्स भेए ॥ ९ ॥

स इति—यत्तदोर्नित्याभिसम्बन्धात् य. प्रथममेवाप्रमत्ततया भावितमतिर्न भवति स तदात्मकं छन्दोनिरोधम् 'पुव्वमेवं' ति एवं शब्दस्यात्रोपमार्थत्वात्पूर्वमिवान्त्यकालात् मलापध्वंससमयाद्वा अभावितमतित्वात् न लभेत्-न प्राप्नुयात्। सम्भावने लिङ्। ततश्च लाभसम्भावनाऽपि न समस्ति, किं पुनस्तल्लाभ इति। पश्चात्-अन्त्यकाले मलापध्वंससमये वा; 'एसोवम' त्ति एषा-अनन्तरमभिहित-

स्वरूपा उप—सामीप्येन मीयते—परिच्छिद्यते स्वयं—प्रसिद्धया अपरमप्रसिद्धं वस्त्वनयेत्युपमा , केषां ?-शाश्वता इव वदितुं शीलमेषामिति शाश्वतवादिनः, उष्ट्रक्रोशिवत्"कर्त्तर्युपमाने" ( पा०३-२-१६ ) इति णिनिः, तेषां शाश्वतवादिनाम् , आत्मनि मृत्युमनियतकालभाविनमपश्यताम् , इदमिहाकूतम्-यो हि छन्दोनिरोधमुत्तरकालमेव करिष्यामीति वक्ति सोऽवश्यं शाश्वतवादी, स चैव प्रज्ञाप्यते—यथा भद्र ! इदानीं भवतस्तत्कालात्पूर्वमसाधुक्तहेतुतो न समस्ति, तथोत्तरकालमप्यसौ प्रमादिनस्तव न भवितेति । यदिवा एषा—उपमेति—उपेत्युपयोगपूर्वकं मेति ज्ञानमुपमा—सम्प्रधारणा यदुत पश्चाद्धर्मं करिष्यामः इति शाश्वतवादिनां—निरुपक्रमायुषाम् , ये निरुपक्रमायुष्कतया शाश्वतमिवात्मानं मन्यन्ते तेषां युज्येतापि, न तु जलबुद्बुदसमानायुषाम् , तथा चासावुत्तरकालमपि छन्दोनिरोधमनाप्नुवन् विषीदति—कथमहमकृतसुकृत. सम्प्रत्यनर्वाक्—पारं भवाम्भोधिं भ्राम्यन् भविष्यामीत्येवमात्मकं वैक्लव्यमनुभवति । कदा ?-शिथिलयति-आत्मप्रदेशान् मुञ्चति आयुषि-मनुष्यभवोपग्राहिण्यायुष्कर्माणि, 'कालोवणीय ' त्ति कालेन-मृत्युना स्वस्थितिक्षयलक्षणेन वा सयमेनोपनीतः उपढौकितः-तस्मिन् , क ? इत्याह-शरीरस्य-औदारिककायात्मकस्य भेदे—सर्वपरिशाटत. पृथग्भावे, तदिदमैदम्पर्यम्-आदित एव न प्रमादवद्भिर्भाव्यम् , तथा चाह—" गमनं किमद्य किं श्व., कदाऽपि वा सर्वथा ध्रुवं कापि ? । इति जानन्नपि मूढ-स्तथाऽपि मोहात्सुखं शेते ॥ १ ॥ " इति सूत्रार्थ. ।

किं पुन. पूर्वमिव पश्चादपि छन्दोनिरोध न लभत इत्याह—

खिप्पं न सकेइ विवेगमेउं,
तम्हा समुट्ठाय पहाय कामे ।
समेच्च लाभं समता महेसी,
आयाणरक्खी चरमप्पमत्तो ॥ १० ॥

क्षिप्रं तत्क्षण एव न शक्नोति न समर्थो भवति, किं कर्त्तुम् ?—एतुं-गन्तुं, प्राप्तुमिति यावत् , कम् ?-विवेकं द्रव्यतो बहि. सङ्गपरित्यागरूपं, भावतस्तु-कषायपरिहारात्मकम् , न ह्यकृतपरिकर्म्मा झगिति तत्परित्यागं कर्त्तुमलम् । अत्रोदाहरणं ब्राह्मणी—" एगो मरुतो परदेसं गतूण साहापारतो होऊण सविसयमागतो, तस्सऽन्नेण मरुतेण खन्धपलालितो त्ति काउं दारिका दत्ता । सो य लोए दक्खिणातो लहति, परे विभवे वट्टति तेण तीसे भारियाए सुवहुं अलंकारं कारियं । सा निच्चमंडिया अच्छइ । तेण भण्णइ—एस पच्चंतगामो, ता तुम एयाणि आभरणगाणि तिहि पव्वणीपु आविंधाहि, कहिं चोरा उवगच्छेज्जा तो सुह गोविज्जंति । सा भणइ-अहं ताए वेलाए सिग्घमेव अवणेस्स ति । अन्नया तत्थ चोरा पडिया, तमेव णिच्चमडियागिह अणुपविट्ठा, सा तेहिं सालंकिया गहिया, सा य पणीयभोयणत्ता मसोवचितपाणिपाया ण सकेइ कडगाईणि अवणेउं, ततो चोरेहिं तीसे हत्थे छेत्तूण अवणीया , गेण्हिउं च निग्गया । " एवमन्योऽपि प्रागकृतपरिकर्म्मा न तत्काल एव विवेकमेतु शक्नोति , मलापध्वसतस्तु तथा सति दूरापास्त एवेति , न च मरुदेव्युदाहरणं तत्राप्यभिधेयम् , आश्चर्यरूपत्वादस्य, न ह्येवं तीव्रभावा बहव सम्भवन्ति, यत एवं तस्मात् सम् इति-सम्यक् प्रवृत्त्या उत्थायेति च पश्चाच्छन्दो निरोत्स्याम इत्यालस्यत्यागेनोद्यमं विधाय, तथा ' पहाय कामे ' त्ति प्रकर्षेण—मनसाऽपि तदचिन्तनात्मकेन हित्वा त्यक्त्वा कामान्-इच्छामदनात्मकान् समेत्य-सम्यग् ज्ञात्वा लोकं समस्तप्राणिसमूहं , कया ?—समतया—समशत्रुमित्रतया कचिद्रक्तद्विष्टतयेति यावत् , तथा च महर्षि. सन् , मह.—एकान्तोत्सवरूपत्वान्मोक्षस्तमिच्छतीत्येवंशीलो महैषी वा-किमुक्तं भवति ?-विषयाभिलाषविगमान्निर्निदान सन् आत्मान रक्षत्यपायेभ्य. कुगतिगमनादिभ्य इत्येवंशील आत्मरक्षी,यद्वा आदीयते-स्वीक्रियते आत्महितमनेनेत्यादान.-संयमः तद्रक्षी ' चरमप्पमत्तो ' त्ति मकारोऽलाक्षणिक. , ततश्चाप्रमत्त.-प्रमादरहित. , इह च प्रमादपरिहाराऽपरिहारयोरैहिकमुदाहरणं वणिग्महिला । तत्र च सम्प्रदाय.— " एगा वणिगमहिला पउत्थपतिया सरीरसुस्सूसापरा दासभयगकम्मकरे णिजणिजभियोगेसु न नियोजयति, न य तेसिं कालोचवन्नं जहिच्छ आहारं भत्तिं वा देति, ते सव्वे नट्ठा । कम्मंतपरिहाणीए विभवपरिहाणी । आगतो वाणियओ । एवंविहं पस्सिऊण पच्छा तेण णिच्छूढा । अन्नं तु पुक्खलेणं सुंकेणं वरेति, लद्धा पणेण । तेण तीसे णियगा भणन्ति—जइ अप्पाणं रक्खइ ता परिणेमि त्ति, ताए यऽमुणियपरमत्थाए दुग्गयकन्नगाए सोउ नियगा भणति-रक्खामि ( क्खिहिइ ) अप्पगं, सा तेण विवाहिया , गतो वाणिज्जेणं । साऽवि दासभयगकम्मकरादीणं संदेसं दाउं तेसिं पुव्वण्हिकाइकाले भोयणं देइ, महुराहिं च वायाहिं उच्छाहेइ, भई च तेसिं अकालपरिहीण देइ, ण य णियगसरीरसुस्सूसापरा । एवमप्पाणं रक्खतीए भत्ता उवागओ । सो एवविह पस्सिऊण तुट्ठो, तेण सव्वसामिणी कया ।" इत्थं तावदिहैव गुणायाऽप्रमादो दोषाय च प्रमादः, आस्तामन्यजन्मनीत्यभिप्रायेणात्रैवैहिकोदाहरणाभिधानमिति परिभावनीयमिति सूत्रार्थ ।

प्रमादमूल च रागद्वेषाविति सोपायं तत्परिहारमाह—

मुहुं मुहुं मोहगुणे जयंतं ,
अणेगरूवा समणं चरंतं ।
फासा फुसंती असमंजसं च ,
ण तेसु भिक्खू मणसा पउस्से ॥ ११ ॥
मंदा य फासा बहुलोभणिज्जा ,
तहप्पगारेसु मणं ण कुज्जा ।
रक्खेज्ज कोहं विणएज्ज माणं ,
मायं ण सेवेज्ज पहिज्ज लोहं ॥ १२ ॥

मुहुर्मुहु —वारं वारम् , सततप्रवृत्त्युपलक्षणमेतत् ,मोहयति जानानमपि जन्तुमाकुलयति प्रवर्त्तयति चान्ययेहेति मोह. तस्य गुणा मोहगुणा —तदुपकारिण शब्दादय , तान् जयन्तम्—अभिभवन्तम् , किमुक्त भवति ?-अविच्छेदतस्तज्जयप्रवृत्तम् , यद्वा-कथञ्चिन्मोहनीयात्यन्तोदयत एकदा तै. पराजितमपि पुन पुनस्तज्जयं प्रति प्रवर्त्तमानं न तु तत एव विमुक्तसंयमोद्योगम् , अनेकरूपा.—अनेकामिति-अ-

नेकविधं परुषविषमसंस्थानादिभेदं रूपं-स्वरूपमेषामिति अ-नेकरूपा , श्रमणं चरन्तं प्रागवत् , 'फास' त्ति स्पृशन्ति स्वानि स्वानीन्द्रियाणि गृह्यमाणतया इति स्पर्शाः-शब्दादयस्ते स्पृशन्ति-गृह्यमाणतयैव सम्बध्नन्ति, असमञ्जसम्-अननुकूलमिति क्रियाविशेषणमेतत् , चशब्दोऽवधारणे असमञ्जसमेव , अथवा-स्पर्शनविषयाः-स्पर्शा स्पृशन्ति, स्पर्शोपादानं चास्यैव दुर्जयत्वाद्बहुपायित्वाच्च , न तेषु-स्पर्शेषु भिक्षुः-मुनिः , मनसा उपलक्षणत्वाच्च वाचा कायेन च , यद्वाऽपिशब्दस्य लुप्तनिर्दिष्टत्वान्मनसाऽपि आस्तां वाचा कायेन वा , 'पदूसे' त्ति प्रदूषयेत् प्रद्विष्याद्वा । किमुक्तं भवति ?-कर्कशसंस्तारकादिस्पर्शादौ हन्तोपतापिता वयमेतेनेति च चिन्तयेत् नैव वा वदेत्परिहरेद्वा तमिति । " मंदाये " ति सूत्रम् , तथा मन्दायन्तीति मन्दाः-हिताहितविवेकिनमपि जनमन्यतां नयन्तीति कृत्वा , चशब्द पूर्वापेक्षया समुच्चये , स्पर्शाः प्राग्वच्छब्दादयः , बहून् लोभयन्ति-विमोहयन्तीति बहुलोभनीयाः अन्यत्रापि (कृत्यल्युटो बहुलम् ) इति वचनात् कर्त्तर्यनीयः, अनेनात्याक्षेपकत्वमुक्तम् , 'तहप्पगारेसु' त्ति अपेर्गम्यमानत्वात्तथाप्रकारेष्वपि बहुलोभनीयेष्वपि मृदुमधुररसादिषु मनः-चित्तं न कुर्यात् , अथवा-धातूनामनेकार्थत्वान्न निवेशयेत् । यद्वा-सङ्कल्पात्मकमेव मनः , ततो मन इति सङ्कल्पमपि न कुर्यात्-न विदध्यात् , आस्ता तत्प्रवृत्तिमिति । अथवा-मन्दबुद्धित्वान्मन्दगमनत्वाद्वा मन्दाः-स्त्रियः ता एव स्पर्शप्रधानत्वात् स्पर्शा , ततश्च मन्दाश्च ता. स्पर्शाः, बहूनां कामिनां लोभनीयाः-गृद्धिजनका बहुलोभनीया यास्तासु ' तहप्पगारेसु ' त्ति लिङ्गव्यत्ययात्तथाप्रकारासु बहुलोभनीयासु मनोऽपि न कुर्याद् , इह च स्त्रीणामेव बहुतरापायहेतुत्वादित्थमुच्यते, तथा चाह-" स्पर्शेन्द्रियप्रसक्ताश्च, बलवन्तो मदोत्कटाः । हस्तिबन्धकिसंसक्ता , बध्यन्ते मत्तवारणाः ॥१॥" इति । एवं च पूर्वसूत्रेण द्वेषस्य परिहार उक्तः, अनेन च रागस्य , स तु कथं भवतीत्यत आह-रक्षयेत्-निवारयेत् , कम् ?-क्रोधम्-अप्रीतिलक्षणं , विनयेत्-अपनयेत् मानम्-अहङ्कारात्मकम् , मायां-परवञ्चनबुद्धिरूपां न कुर्यात्, प्रजह्यात्-परित्यजेत् लोभम्-अभिष्वङ्गस्वभावम् , तथा च क्रोधमानयोर्द्वेषात्मकत्वान्मायालोभयोश्च रागरूपत्वात्तन्निग्रह एव तत्परिहृतिरिति भावनीयम् । अथवा-स्पर्शपरिहारमभिदधता, चतुर्थव्रतमुक्तम् , तच्च ' अबंभचेरं घोरं पमायं दुरहिट्ठगं ' ति वचनान्महाप्रमादरूपस्याब्रह्मणो निरोधकृदिति , तदभिधानाद्धिंसादिनिरोधोऽप्युक्त एवेति , अनेनार्थतो मूलगुणाभिधानम् , रक्षेत् क्रोधमित्यादिना च पिण्डादिकमयच्छते यच्छते वा न कषायवशगो भवेदित्युत्तरगुणोक्तिरिति सूत्रद्वयार्थः ।

सम्प्रति यदुक्तं-' तम्हा समुट्ठाय पहाय कामे ' इत्यादि, तत्कदाचिच्चरकादिष्वपि भवेत् , अत आह-यद्वैतावता चारित्रशुद्धिरुक्ता, सा च न सम्यक्त्वविशुद्धिमपहायातस्तदर्थमिदमाह-

जे संखया तुच्छपरप्पवादी,
ते पेज्जदोसाणुगया परज्झा ।
एए अहम्मु त्ति दुगंछमाणो ,
कंखे गुणे जाव सरीरभेए ॥ १३ ॥ त्ति बेमि ।

'ये' इति अनिर्दिष्टस्वरूपा', संस्कृता इति न तात्त्विकशुद्धिमन्त' किन्तूपचरितवृत्तय', यद्वा-संस्कृतागमप्ररूपकत्वेन संस्कृता,यथा सौगता',ते हि स्वागमे निरन्वयोच्छेदमभिधाय पुनस्तैनैव निर्वाहमपश्यन्तः परमार्थतोऽन्वयिद्रव्यरूपमेव सन्तानमुपकल्पयांबभूवुः, सांख्याश्चैकान्तनित्यतामुक्त्वा तत्त्वत' परिणामरूपां चै (पावे)व पुनराविर्भावतिरोभावावुक्तवन्तो, यथा वा-"उक्तानि प्रतिषिद्धानि, पुनः सम्भावितानि च । सापेक्षनिरपेक्षाणि, ऋषिवाक्यान्यनेकशः ॥१॥" इति वचननिषेधनसम्भवादिभिरुपस्कृतस्मृत्यादिशास्त्रा मन्वादयः,अत एव 'तुच्छ'त्ति तुच्छा यदृच्छाभिधायितया निःसारा. 'परप्पवाइ' त्ति परे च ते स्वतीर्थिकव्यतिरिक्ततया प्रवादिनश्च परप्रवादिनः, त किमित्याह-'पेज्जदोसाणुगया' प्रेमद्वेषाभ्यामनुगताः प्रेमद्वेषानुगताः, तथाहि-सर्वथा संवादिनि भगवद्वचसि निरन्वयोच्छेदैकान्तनित्यत्वादिकल्पनं-वचननिषेधनसम्भावनादि वा न रागद्वेषाभ्यां विनेति भावनीयम् , अत एव च 'परज्झ' त्ति देशीपदत्वात्परवशा रागद्वेषग्रहग्रस्तमानसतया न ते स्वतन्त्राः । यदि त एवंविधास्तत' किमित्याह-एते इति-अर्हन्मतबाह्याः , अधर्म्महेतुत्वादधर्म्म', ' इति ' त्यमुनोल्लेखेन ' दुगंछमाणो ' त्ति जुगुप्समानः उन्मार्गानुयायिनोऽमी इति तत्स्वरूपमवधारयन् , न तु निन्दन् , निन्दायाः सर्वत्र निषेधात् , तदेवंविधश्च किं कुर्यादित्याह-काङ्क्षेत् अभिलषेत् गुणान्-सम्यग्दर्शनचारित्रात्मकान् भगवदागमाभिहितान् , किं नियतकालमेवोतान्यथेत्याह-यावच्छरीरात्-औदारिकात्पञ्चप्रकाराद्वा भेद -पृथग्भावः शरीरभेदो, मरणं विमुक्तिर्वेति यावद् , अनेनैव समुत्थानं कामप्रहाणादि च तत्त्वतः, अन्यत्र तु संवृत्तिमदित्युक्तम्, एवं च काङ्क्षात्मकसम्यक्त्वातिचारपरिहाराभिधानतः सम्यक्त्वशुद्धिर्वेति सूत्रार्थः ॥१३॥ इति परिसमाप्तौ, ब्रवीमीति पूर्ववत् । उक्तोऽनुगमः । सम्प्रति नयाः ते च पूर्ववत् । उत्त० ४ अ० ।

किञ्च-

ण य संखयमाहु जीवियं, तह वि य बालजणो पगब्भइ ।
काले पावेहिँ मिज्जती,इति संखाय मुणी ण मज्जती ।२१।

न च-नैव जीवितम्-आयुष्कं कालपर्यायेण त्रुटितं सत् पुनः ' संखय ' मिति संस्कर्त्तुं-तन्तुवत्सन्धातुं शक्यते इत्येवमाहुस्तद्विदः, तथाऽपि एवमपि व्यवस्थिते बालः-अज्ञो जनः प्रगल्भते पापं कुर्वन् धृष्टो भवति, असदनुष्ठानरतोऽपि न लज्जत इति, स चैवम्भूतो बालस्तैरसदनुष्ठानापादितैः पापैः कर्मभिः मीयते-तद्युक्त इत्येवं परिच्छिद्यते, मीयते वा मेयेन धान्यादिना प्रस्थकवदिति, एवं संख्याय-ज्ञात्वा मुनिः-यथावस्थितपदार्थाना वेत्ता न माद्यतीति तेष्वसदनुष्ठानेष्वहं शोभनः कर्त्तेत्येवं प्रगल्भमानो मदं न करोति । सूत्र० १ श्रु० २ अ० २ उ० । ( 'छंदेणेति (२२) ' सूत्रं तद्व्याख्या च ' छंद ' शब्दे तृतीयभागे १३४० पृष्ठे गता । )

संखराय-शंखराज-पुं० । वाराणस्यां स्वनामख्याते राजनि, यो हि मल्लितीर्थकृता सह प्रव्रजितः । स्था० ७ ठा० ३ उ० । " संखयरिसी " ती० ।

संखवस-शंखवर्ण-पुं० । विंशे महाग्रहे, स्था० । कल्प० । सू० प्र० । चं० प्र० ।

दो संखवन्ना । ( सू०-६०X ) स्था० २ ठा० ३ उ० ।

संखवसाभ-शंखवर्णाभ-पुं० । एकविंशतितमे महाग्रहे, स्था० ।

दो संखवसाभा । (सू०-६०X) स्था० २ ठा० ३ उ० ।

संखवर-शंखवर-पुं० । द्वीपभेदे, अनु० । " संखवरे दीवम्मि, संखे संखप्पभे य दो देवा । (५८) " द्वी० ।

संखवरसमुद्द-शंखवरसमुद्र-पुं० । शंखवरद्वीपस्याभितः समुद्रे, " संखवरसमुद्द अभिवाओ । मणिप्पभे मणिहिसेए दो देवा " द्वी० ।

संखवायण-शंखवादन-न० । शंखध्मानकरणे, नि० चू० १ उ० । ( शंखवादनं कल्पते न वेति 'मूलगुणपडिसेवणा' शब्दे षष्ठे भागे ३५६ पृष्ठे उक्तम् । )

संखवाल-शंखपाल-पुं० । धरणस्य नागकुमारस्य चतुर्थे लोकपाले, भूतानन्दस्य चतुर्थे लोकपाले च । स्था० ४ ठा० १ उ० । धरणनागकुमारेन्द्रस्योत्तरदिग्लोकपाले, भ० ३ श० ८ उ० । स्था० । कालोदायिप्रभृतिष्वन्ययूथिकेष्वन्यतमे (भ० ७ श० १० उ० ।) स्वनामख्याते आजीविकोपासके, भ० ८ श० ५ उ० ।

संखा-संख्या-स्त्री० । संख्यायन्ते परिच्छिद्यन्ते जीवादयः पदार्था येन तज् ज्ञानं संख्येत्युच्यते । सूत्र० १ श्रु० १३ अ० । सम्यक् ख्याप्यते-प्रकाश्यतेऽनयेति संख्या । प्रज्ञायाम्, आचा० १ श्रु० ६ अ० ४ उ० । सूत्र० । संख्यानं-संख्या । परिच्छेदे, सूत्र० १ श्रु० १२ अ० । एकादिव्यवहारहेतौ, सम्म० ३ काण्ड । गणनायाम्, आ० चू० १ अ० । आ० म० । अनु० । सूत्र० । विशे० ।

संख्याप्रमाणं विवरीषुराह—

से किं तं संखप्पमाणे ?, संखप्पमाणे अट्ठविहे पण्णत्ते, तं जहा—नामसंखा, ठवणसंखा, दव्वसंखा, ओवम्मसंखा, परिमाणसंखा, जाणणासंखा, गणणासंखा, भावसंखा । से किं तं नामसंखा ?, नामसंखा जस्स णं जीवस्स वा० जाव से तं नामसंखा । से किं तं ठवणसंखा ?; ठवणसंखा ?, जण्णं कट्ठकम्मे वा पोत्थकम्मे वा० जाव से तं ठवणसंखा । नामठवणाणं को पइविसेसो ?, नाम ( पाएणं ) आवकहियं, ठवणा इत्तरिया वा होज्जा, आवकहिया वा होज्जा । से किं तं दव्वसंखा ?, दव्वसंखा दुविहा पण्णत्ता, तं जहा—आगमओ य नो आगमओ य० जाव जाणयसरीरभवियसरीरवइरित्ता दव्वसंखा ?, से किं तं जाणय०२तिविहा पण्णत्ता, तं जहा-एगभविए बद्धाउए अभिमुहणामगोत्ते अ । एगभविए णं भंते ! एगभविए त्ति कालओ केवचिरं होइ ? , जहण्णेणं अंतोमुहुत्तं उक्कोसेणं पुव्वकोडी।बद्धाउए णं भंते ! बद्धाउए त्ति कालओ केवचिरं होइ ?, जहण्णेणं अंतोमुहुत्तं उक्कोसेणं पुव्वकोडीतिभागं । अभिमुहनामगोए णं भंते ! अभिमुहनामगोए त्ति कालओ केवचिरं होइ ?, जहन्नेणं एक्कं समयं उक्कोसेणं अंतोमुहुत्तं । इयाणिं को णओ कं संखं इच्छइ-तत्थ णेगमसंगहववहारा तिविहं संखं इच्छंति , तं जहा—एगभवियं बद्धाउअं अभिमुहनामगोत्तं च । उज्जुसुओ दुविहं संखं इच्छइ , तं जहा-बद्धाउअं च अभिमुहनामगोत्तं च । तिण्णि सद्दनया अभिमुहणामगोत्तं संखं इच्छंति । से तं जाणयसरीरभवियसरीरवइरित्ता दव्वसंखा । से तं नो आगमओ दव्वसंखा । से तं दव्वसंखा । ( सू०-१५०X )

संख्यानं—संख्या, संख्यायतेऽनयेति वा संख्या, सैव प्रमाणं संख्याप्रमाणम् । इह च संख्याशब्देन संख्याशङ्खयोर्द्वयोरपि ग्रहणं द्रष्टव्यम् , प्राकृतमधिकृत्य समानशब्दाभिधेयत्वात् , गोशब्देन पशुभूम्यादिवत् । उक्तं च— " गोशब्द. पशुभूम्यप्सु, वाग्दिगर्थप्रयोगवान् । मन्दप्रयोगे दृष्ट्यम्बु-वज्रस्वर्गाभिधायकः ॥ १ ॥ " एवमिहापि संखा इति प्राकृतोक्तौ संख्या शंखाश्च प्रतीयन्ते, ततो द्वयस्यापि ग्रहणम् । एवं च नामस्थापनाद्रव्यादिविचारेऽपि प्रक्रान्ते संख्या शंखा वा यत्र घटन्ते,तत्तत्र प्रस्तावबलेन स्वयमेव योज्यमिति । ' से किं तं नामसंखे ' त्यादि, सर्वं पूर्वाभिहितनामावश्यकादिविचारानुसारत. स्वयमेव भावनीयं यावत् ' जाणयसरीरभवियसरीरवइरित्ते दव्वसंखे तिविहे पण्णत्ते ' इत्यादि, इह यो जीवो मृत्वाऽनन्तरभवे शंखेषु उत्पत्स्यते स तेष्वबद्धायुष्कोऽपि जन्मदिनादारभ्य एकभविक. स शंख उच्यते , यत्र भवे वर्तते स एवैको भव. शंखेषूत्पत्तेरन्तरेऽस्तीति कृत्वा, एवं शंखप्रायोग्यम् । बद्धमायुष्कं येन स बद्धायुष्क. , शंखभवप्राप्तानां जन्तूनां ये अवश्यमुदयमागच्छतस्ते द्वीन्द्रियजात्यादिनीचैर्गोत्राख्ये अभिमुखे जघन्यतः समयेनोत्कृष्टतोऽन्तर्मुहूर्तमात्रेणैव व्यवधानात् । उदयाभिमुखप्राप्ते नामगोत्रे कर्मणी यस्य सोऽभिमुखनामगोत्र. , तदेष त्रिविधोऽपि भावशंखताकारणत्वात् ज्ञशरीरभव्यशरीरव्यतिरिक्तो द्रव्यशंख उच्यते , यद्येवं द्विभविकत्रिभविकचतुर्भविकादिरपि कस्मान्नेत्थं व्यपदिश्यत इति चेत् , नैवं , तस्यातिव्यवहितत्वेन भावकारणतानभ्युपगमात् , तत्कारणस्यैव द्रव्यत्वाद् । इदानीं त्रिविधमपि शंखं कालत. क्रमेण निरूपयन्नाह—' एगभविए णं भंते ! 'इत्यादि , एकभविक शंखो भदन्त ! एकभविक इति व्यपदेशेन कालत कियच्चिरं भवतीति ।अत्रोत्तरम्—' जहण्णेण ' मित्यादि , इदमुक्तं भवति—पृथिव्याद्यन्यतर-

भवेऽन्तर्मुहूर्त्तं जीवित्वा योऽनन्तरं शंखेषूत्पद्यते सोऽन्तर्मुहूर्तमेकभविक. शंखो भवति, यस्तु मत्स्याद्यन्यतमभवे पूर्वकोटीं जीवित्वैतेषूत्पद्यते तस्य पूर्वकोटिरेकभविकत्वे लभ्यते, अत्र चान्र्मुहूर्तादपि हीनं जन्तूनामायुरेव नास्तीति जघन्यपदेऽन्तर्मुहूर्तग्रहणम्। यस्तु पूर्वकोट्यधिकायुष्कः सोऽसंख्यातवर्षायुष्कत्वाद्देवेष्ववोत्पद्यते न शंखेष्वित्युत्कृष्टपदे पूर्वकोट्युपादानम्, आयुर्बन्धं च प्राणिनोऽनुभूयमानायुषो जघन्यतोऽप्यन्तर्मुहूर्ते शेष एव कुर्वन्त्युत्कृष्टतस्तु पूर्वकोटित्रिभाग एव न परत इति बद्धायुष्कस्य जघन्यतोऽन्तर्मुहूर्तमुत्कृष्टतः पूर्वकोटीत्रिभाग उक्त.। आभिमुख्यं त्वासन्नतायां सत्यामुपपद्यते अतोऽभिमुखनामगोत्रस्य जघन्यत. समय उत्कृष्टतस्त्वन्तर्मुहूर्तं काल उक्तः, यथोक्तकालात् परतस्त्रयोऽपि भावशंखतां प्रतिपद्यन्त इति भावः॥ इदानीं नैगमादिनयानां मध्ये को नयो यथोक्तत्रिविधशंखस्य मध्ये कं शंखमिच्छतीति विचार्यते—तत्र नैगमसंग्रहव्यवहारा' स्थूलदृष्टित्वात् त्रिविधमपि शंखमिच्छन्ति। दृश्यते हि स्थूलदृशा कारणे कार्योपचारं कृत्वा इत्थं व्यपदेशप्रवृत्तिः, यथा राज्यार्हकुमारे राजशब्दस्य, घृतप्रक्षेपयोग्ये घटे घृतघटशब्दस्येत्यादि ऋजुसूत्र एभ्यो विशुद्धत्वादाद्यस्यातिव्यवहितत्वेनातिप्रसङ्गभयाद् द्विविधमेवेच्छति, शब्दादयस्तु विशुद्धतरत्वाद् द्वितीयमप्यतिव्यवहितं मन्यन्ते, अतोऽतिप्रसङ्गनिवृत्त्यर्थमेकं चरममेवेच्छन्ति। अनु०। व्य०। आ० म०। सूत्र०। संख्याया अपि वस्तुगतान्वयव्यतिरेकानुविधानाभावो नासिद्ध.। सम्म० ३ काण्ड।

संखाईय-संख्यातीत-त्रि०। संख्यानं—संख्या तामतीता अतिक्रान्ता. संख्यातीता.। असंख्येयेषु, विशे०। आ० म०। विपा०।

संखाईयगुण-संख्यातीतगुण-त्रि०। संख्यातगुणेषु, विशे०।

संखाण-संख्यान—न०। संख्यायते—गण्यतेऽनेनेति संख्यानम्। गणिते, स्था० ४ ठा० ३ उ०। गुणितस्कन्धे, नि०१ श्रु० ३ वर्ग ३ अ०। औ०। विशे०। ज्ञा०। कल्प०। स्था०।

दसविहे संखाणे पण्णत्ते, तं जहा—"परिकम्मं १ ववहारो २, रज्जू ३ रासी ४ कलासवन्ने ५ य। जावंतावति ६ वग्गो ७, घणो ८ य तह वग्गवग्गो ९ वि॥ १॥ कप्पे य० १०।" (सू० ७४७)

'दसेत्यादि' 'परिकम्मं' गाहा, परिकर्म्म-संकलिताद्यनेकविधं गणितज्ञप्रसिद्धं तेन यत्संख्येयस्य संख्यानं—परिगणनं तदपि परिकर्मेत्युच्यते १, एवं सर्वत्रेति, व्यवहारः-श्रेणीव्यवहारादि' पाटीगणितप्रसिद्धोऽनेकधा २, 'रज्जु' त्ति रज्ज्वा यत्संख्यानं तद्रज्जुरभिधीयते, तच्च क्षेत्रगणितम् ३, 'रासि'त्ति धान्यादिरुत्करस्तद्विषयं संख्यानं राशि, स च पाट्यां राशिव्यवहार इति प्रसिद्धः ४, 'कलासवन्ने य' त्ति कलानाम्-अंशाना सवर्णनं सवर्णं सवर्ण.-सदृशीकरणं यस्मिन् संख्याने तत्कलासवर्णम् ५, (यावत्तावत् प्रक्रान्त्यता 'जावंतावं' शब्दे चतुर्थभागे १४५७ पृष्ठे गता।) यथा वर्गः—संख्यानं यथा द्वयोर्वर्गश्चत्वारः 'सदृशद्विराशिघात' इति वचनात् ७, 'घणो य' त्ति घन. संख्यानं यथा द्वयोर्घनोऽष्टौ 'समत्रिराशिहति' रिति वचनात् ८, 'वग्गवग्गो' त्ति वर्गस्य वर्गो वर्गवर्गः, स च संख्यानं यथा द्वयोर्वर्गश्चत्वारश्चतुर्णां वर्गः षोडशेति, अपिशब्दः समुच्चये ९, 'कप्पे य' त्ति गाथाधिकम्, तत्र कल्पः—छेद. क्रकचेन काष्ठस्य तद्विषयं संख्यानं कल्प एव यत्पाट्यां क्राकचव्यवहार इति प्रसिद्धमिति, इह च परिकर्म्मादीनां केषाञ्चिदुदाहरणानि मन्दबुद्धीनां दुरवगमानि भविष्यन्त्यतो न प्रदर्शितानीति १०। स्था० १० ठा० ३ उ०।

संखादत्तिय-संख्यादत्तिक-पुं०। संख्याप्रधानाः परिमिता एव दत्तयः सकृद् भक्तादिक्षेपलक्षणाद् ग्राह्या यस्य स संख्यादत्तिकः। स्था० ५ ठा० १ उ। भ०। सूत्र०। औ०। परिमितभिक्षाप्रमाणेषु अभिग्रहविशेषधारकेषु साधुषु, स्था० ५ ठा० १ उ०।

संखाय-संख्याय-अव्य०। सम्यग् ज्ञात्वेत्यर्थे, सूत्र० १ श्रु० २ अ० २ उ०। अवधार्येत्यर्थे, आचा० १ श्रु०६ अ० ५ उ०। सूत्र०।

संस्त्यान-न०। 'स्त्यै' संघाते इति सम्-स्त्या क्त-"समः स्त्यः खाः"॥८।४।१५॥ इति स्त्यास्थाने खा। "क-ग-च-ज—त द—प—य—वां प्रायो लुक्॥ ८। १। १७७॥ इति तलोपः। "अवर्णो यश्रुति" ॥ ८। १। १८०॥ इति यः। घनीभूते, प्रा० १ पाद।

संखायण-शंखायन-पुं०। शंखर्षिगोत्रापत्ये, सू० प्र १० पाहु०। चं० प्र०। जं०।

संखार-संस्कार-पुं०। वासनायाम्, अष्ट० १ अष्ट०। वैशेषिकसम्मतगुणभेदे, संस्कारस्य वेगभावनास्थितिस्थापकभेदात्त्रैविध्येऽपि संस्कारत्वं जात्यपेक्षया एकत्वाच्छौर्यौदार्यादीनां चात्रैवान्तर्भावान्नाधिक्यम्। स्या०।

संखालग्ग-शंखालग्न-त्रि०। शंखयोरक्षिप्रत्यासन्नावयवविशेषयो. सम्बद्धे, ज्ञा० १ श्रु० ८ अ०।

संखावई-संखावती-स्त्री०। जम्बूद्वीपे भरतक्षेत्रे मध्यमखण्डे कुरुजाङ्गलजनपदे स्वनामख्यातायां नगर्याम्, ती० ६ कल्प।

संखित्त-संक्षिप्त—पुं०। ह्रस्वतां गते, चं०प्र० १ पाहु०। भ०। लघूकृते, स्था० ३ ठा० ३ उ०। औ०। जं०। रा०। संगृहीते, पं० सं० १ द्वार। नि०।

संखित्तविउलतेउलेस्स-संक्षिप्तविपुलतेजोलेश्य—त्रि०। संक्षिप्ता शरीरान्तर्गतत्वेन ह्रस्वता गता विपुला-विस्तीर्णा अनेकयोजनप्रमाणक्षेत्राश्रितवस्तुदहनसमर्थत्वात्तेजोलेश्याविशिष्टतपोजन्यलब्धिविशेषप्रभवा तेजोज्वाला यस्य स तथा। सू० प्र०१ पाहु०। विपा०। रा०। शरीरान्तर्लीनतेजोलेश्याके, भ०। ('तेउलेस्सा' शब्दे ४ भागे २३४६ पृष्ठे अत्र विस्तरो गत.।) (अस्य व्याख्या 'गोसालग' शब्दे तृतीयभागे १०१८पृष्ठे गता)

संखिय-शांखिक-पुं०। शङ्खवादनशिल्पमेषामिति शांखिकाः, शंखो वा विद्यते येषां माङ्गल्यचन्दनाधारभूतास्ते शांखिकाः। आ० १ श्रु० १ अ०। चन्दनगर्भहस्तेषु माङ्गल्यकारिषु, शङ्खवादकेषु च। भ० ६ श० ३३ उ०। कल्प०। औ०। आ० चू०।

संखिया-शांखिका-स्त्री०। लघुशंखे, जी० ३ प्रति० ४ अधि०। नि० चू०। जं०। रा०। ह्रस्वशंखे, भ० ५ श० ४ उ०। रा०।

संखुड्ड-रम्-धा०। क्रीडायाम्, "रमेः संखुड्ड-खेड्डोब्भाव-किलिकिञ्च-कोट्टुम-मोट्टाय-णीसरवेल्लाः" ॥८।४।१६८॥ अनेन वैकल्पिकः संखुड्डादेशः। संखुड्डइ। रमते। प्रा० ४ पाद।

संखुभिय-संक्षुभित-त्रि०। महामत्स्यमकराद्यनेकजलजन्तुजातिसम्मर्द्देन प्रविलोडिते, स०।

संखेज्ज-संखेय-त्रि०। संख्यायत इति संख्येयः। संख्यार्हे, आ० म० १ अ०। विशे०। नं०। स०। कर्म०। सख्यातवर्षसहस्रे, प्रश्न० १ आश्र० द्वार।

संखेज्जकाल-संख्येयकाल-पुं०। समयादिके शीर्षप्रहेलिकापर्यन्ते काले, जी० १ प्रति०। ('काल' शब्दे तृतीयभागे ४७० पृष्ठे व्याख्यातम्।)

संखेज्जकालसमय-संख्येयकालसमय-पुं०। कालः कृष्णोऽपि स्यात् समय आचारोऽपि स्यादतः कालश्चासौ समयश्चेति कालसमयः। संख्येयो वर्षप्रमाणतः स चासौ कालसमयश्च संख्येयकालसमयः। दशवर्षसहस्रादिके समये, स्था० २ ठा० २ उ०।

संखेज्जकालसमयट्ठिइय-संख्येयकालसमयस्थितिक-त्रि०। कालः कृष्णोऽपि स्यात् समय आचारोऽपि स्यादत कालश्चासौ समयश्चेति कालसमयः। संख्येयो वर्षप्रमाणतः स यस्या सा संख्येयकालसमया स्थितिरवस्थान येषां ते संख्येयकालसमयस्थितिकाः। दशवर्षसहस्रादिस्थितिकेषु, स्था० २ ठा० २ उ०। ('असंखेज्जकालसमयट्ठिय' शब्दे प्रथमभागे ८२० पृष्ठे अस्य दण्डकमुक्तम्।)

संखेज्जजीविय-संख्यातजीविक-पुं०। संख्याता जीवा येषु सन्ति ते संख्यातजीविका। संख्यातजीवपरिगृहीतेषु वनस्पतिषु, भ०।

से किं तं संखेज्जजीविया?, गोयमा! संखेज्जजीविया अणेगविहा पण्णत्ता, तं जहा-ताले तमाले तक्कलि तेतलि जहा पण्णवणाए ०जाव नालिएरि जे यावण्णे तहप्पगारा। से तं संखेज्जजीविया। (सू० ३२४×)

'संखेज्जजीविय' त्ति संख्याता जीवा येषु सन्ति ते संख्यातजीविका, एवमन्यदपि पदद्वयम्। 'जहा पण्णवणाए' त्ति यथा—प्रज्ञापनायां तथा—इदं सूत्रमध्येयम्-'ताले तमाले तक्कलि, तेतलिसाले य सालकल्लाणे। सरले जायइ केयइ, कदलि तह चम्मरुक्खे य॥१॥ भुयरुक्खे हिंगुरुक्खे, लवंगरुक्खे य होइ बोद्धव्वे। पूयफली खज्जूरी, बोद्धव्वा नालिएरी य॥२॥" 'जे यावन्ने तहप्पगारे' त्ति ये चाप्यन्ये तथाप्रकारा वृक्षविशेषास्ते संख्यातजीविका इति प्रक्रमः। भ० ८ श० ३ उ०।



संखेज्जय-संख्येयक-न०। गणनासंख्याभेदे, अनु०।

से किं तं संखेज्जए?, संखेज्जए तिविहे पण्णत्ते, तं जहा-जहण्णए उक्कोसए अजहण्णमणुक्कोसए। (सू० १५०×)

सा च संख्येयकादिभेदभिन्ना, तद्यथा-संख्येयकम्, असंख्येयकम्, अनन्तकम्। तत्र सख्येयकं जघन्यादिभेदात्त्रिविधम्। अनु०।

संख्येयकादिभेदप्ररूपणामात्रं कृत्वा विस्तरतः तत्स्वरूपनिरूपणार्थमाह—

जहण्णयं संखेज्जयं केवइअं होइ?, दो रूवयं, तेणं परं अजहण्णमणुक्कोसयाइं ठाणाइं० जाव उक्कोसयं संखेज्जयं न पावइ। (सू० १५०×)

'जहण्णयं संखेज्जय केवइय' मित्यादि अत्र जघन्यं सख्येयकं द्वौ, ततः परं त्रिचतुरादिकं सर्वमप्यजघन्योत्कृष्टं यावदुत्कृष्टं न प्राप्नोति।

तत्र कियत्पुनरुत्कृष्टं संख्येयकं भवतीति विनेयेन पृष्टे विस्तरेण तस्य प्ररूपयिष्यमाणत्वादित्थमाह—

उक्कोसयं संखेज्जयं केवइअं होइ?, उक्कोसयस्स संखेज्जयस्स परूवणं करिस्सामि-से जहानामए पल्ले सिआ एगं जोयणसयसहस्सं आयामविक्खंभेणं तिण्णि जोयणसयसहस्साइं सोलस सहस्साइं दोण्णि अ सत्तावीसे जोयणसए तिण्णि अ कोसे अट्ठावीसं च धणुसयं तेरस य अंगुलाइं अद्धं अंगुलं च किंचि विसेसाहिअं परिक्खेवेणं पण्णत्ते, से णं पल्ले सिद्धत्थयाणं भरिए, तओ णं तेहिं सिद्धत्थएहिं दीवसमुद्दाणं उद्धारो घेप्पइ, एगो दीवे एगो समुद्दे एवं पक्खिप्पमाणेणं२ जावइआ दीवसमुद्दा तेहिं सिद्धत्थएहिं अप्फुण्णा एस णं एवइए खेत्ते पल्ले (आइट्ठा) पढमा सलागा, एवइआणं सलागाणं असंलप्पा लोगा भरिआ तहावि उक्कोसयं संखेज्जयं न पावइ, जहा को दिट्ठंतो? से जहानामए मंचे सिआ आमलगाणं भरिए तत्थ एगे आमलए पक्खित्ते सेऽवि माते अण्णेऽवि पक्खित्ते सेऽवि माते अन्नेऽवि पक्खित्ते सेऽवि माते एवं पक्खिप्पमाणेणं एवं पक्खिप्पमाणेणं होही सेऽवि आमलए जंसि पक्खित्ते से मंचए भरिज्जिहिइ जे तत्थ आमलए न माहिइ। (सू० १५०×)

उत्कृष्टस्य सख्येयकस्य प्ररूपणां करिष्यामि, तदेवाह-तद्यथा नाम कश्चित्पल्यः स्यात्, कियन्मान इत्याह-आयामविष्क-

म्भाभ्या योजनशतसहस्रं, परिधिना तु-"परिही तिलक्खसोलस,सहस्स दो य सयसत्तवीसऽहिया । कोसतिय अट्ठवीसं, धणुसय तेरंगुलऽद्धहियं ॥ १ ॥" इति गाथाप्रतिपादितमानो, जम्बूद्वीपप्रमाण इति भाव. । अयं चाधस्ताद्योजनसहस्रमवगाढो द्रष्टव्यः, रत्नप्रभापृथिव्या रत्नकाण्डं भित्त्वा वज्रकाण्डे प्रतिष्ठित इत्यर्थः, स चैवंप्रमाण., पल्यो जम्बूद्वीपवेदिकात उपरि सशिखः सिद्धार्थानां सर्षपाणां भ्रियते, 'तओ णं नेहिं' मित्यादि, इदमुक्तं भवति-ते सर्षपा असत्कल्पनया देवादिना समुत्क्षिप्य एको द्वीपे एक. समुद्रे इत्येवं सर्वेऽपि प्रक्षिप्यन्ते, यत्र च द्वीपे समुद्रे वा ते इत्थं प्रक्षिप्यमाणा निष्ठा यान्ति तत्पर्यवसानो जम्बूद्वीपादिरनवस्थितपल्य. कल्प्यते, अत एवाह-'एस णं एवइए खेत्ते पल्ले' त्ति यावन्तो द्वीपसमुद्रास्तै सर्षपैः 'अप्फुण्ण' त्ति व्याप्ता इत्यर्थ', एतदेतावत्प्रमाणं क्षेत्रमनवस्थितपल्यः; सर्षपभृतो बुद्ध्या परिकल्पत इत्यर्थः । तत. किमित्याह-'पढमा सलाग' त्ति ततः शलाकापल्ये प्रथमशलाका-एक. सर्षप प्रक्षिप्यत इत्यर्थ., 'एवइयाणं सलागाणं असंलप्पा लोगा भरिय' त्ति लोक्यन्ते-केवलिना दृश्यन्त इति लोका-व्याख्यानादिह वक्ष्यमाणाः शलाका पल्यरूपा गृह्यन्ते,ते चैकदशशतसहस्रलक्षकोटिप्रकारेण संलपितुमशक्या असंलप्या., अतिवहव इत्यर्थ, यथोक्तशलाकानामसत्कल्पनया भृता.-पूरितास्तथाऽप्युत्कृष्टं संख्येयकं न प्राप्नोति, आकण्ठपूरिता अपि हि लोकरूढ्या भृता उच्यन्ते, न चैतावतैवोत्कृष्टं संख्येयकं सम्पद्यते, किंतु यदा सशिखतया तथा ते भ्रियन्ते यथा नैकोऽपि सर्षपस्तत्रापरो माति तदा तद्भवतीति भाव. । ननु सशिखतया सर्वथा अभृतमपि लोके किं भृतमुच्यते?, सत्यं, प्रोच्यत एव, तथा चात्रार्थे दृष्टान्तं दिदर्शयिपुराह-यथा कोऽत्र दृष्टान्त. ?, इति शिष्येण पृष्टे सत्युत्तरमाह-तद्यथानाम कश्चिन्मञ्चः स्यात्, स चामलकाना भृत इति शिखामन्तरेणापि लोकेन व्यपदिश्यते, अथ च तत्रैकमामलकं प्रक्षिप्तं तन्मातमपरमपि प्रक्षिप्तं तदपि मातमन्यदपि प्रक्षिप्त तदपि मातमेवमपरापरैः प्रक्षिप्यमाणै. भविष्यति तदामलकं येनासौ मञ्चो भरिष्यति, यच्च तदुत्तरकालं तत्र मञ्चे न मास्यति, इत्थं चात्राप्यपरापरैर्यथोक्तशलाकारूपै. प्रक्षिप्तैर्यदा संलपितुमशक्या अतिवहव. सशिखा. पल्या असत्कल्पनया भृता भवन्ति तदोत्कृष्टं संख्येयकं भवतीत्यध्याहारो द्रष्टव्य इति तावदक्षरार्थः ॥ भावार्थस्त्वयम्-पूर्वनिर्दर्शितस्वरूपादनवस्थितपल्यादपरेऽपि जम्बूद्वीपप्रमाणा योजनसहस्रावगाढास्त्रय. पल्या बुद्ध्या कल्प्यन्ते, तत्र प्रथम शलाकापल्यो, द्वितीय. प्रतिशलाकापल्यस्तृतीयो महाशलाकापल्य । तत्रानवस्थितपल्यो भृत शलाकापल्ये च प्रथमा शलाका प्रक्षिप्तेति पूर्वमादर्शितम्, तदनन्तरं पुनरप्यनवस्थितपल्यसर्षपा समुत्क्षिप्यैको द्वीपे एकः समुद्रे इत्येवं प्रक्षिप्यन्ते, तैश्च निष्ठितै शलाकापल्ये द्वितीया शलाका प्रक्षिप्यते, सर्षपाश्च प्रक्षिप्यमाणा यत्र द्वीपे समुद्रे वा निष्ठितास्तत्पर्यवसान. पूर्वेण सह वृहत्तरोऽनवस्थितपल्य. सर्षपभृत परिकल्प्यते, अत एवायमनवस्थितपल्य उच्यते, अवस्थितपल्यरूपाभावात्, पुनः सोऽप्युत्क्षिप्यैकैकसर्षपक्रमेण द्वीपसमुद्रेषु प्रक्षिप्यते, शलाकापल्ये च तृतीया शलाका प्रक्षिप्यते, ते च सर्षपाः प्रक्षिप्यमाणा यत्र द्वीपे समुद्रे वा निष्ठितास्तत्पर्यवसानः पूर्वेण सह वृहत्तमोऽनवस्थितपल्यः सर्षपभृतः परिकल्प्यते । पुनः सोऽप्युत्क्षिप्य तेनैव क्रमेण द्वीपसमुद्रेषु प्रक्षिप्यते, शलाकापल्ये च चतुर्थी शलाका प्रक्षिप्यते, एवं यथोत्तरं वृद्धस्यानवस्थितपल्यस्य भरणरिक्तीकरणक्रमेण तावद् वाच्यं यावदेकैकशलाकाप्रक्षेपेण शलाकापल्यो भ्रियते, अपरां शलाकां न प्रतीच्छति, ततोऽनवस्थितपल्यो भृतोऽपि नोत्क्षिप्यते,किंतु शलाकापल्य एवोद्भ्रियते,अयमप्यनवस्थितपल्याक्रान्तक्षेत्रात्परत एकैकसर्षपक्रमेण द्वीपसमुद्रेषु प्रक्षिप्यते, यदा च निष्ठितो भवति तदा प्रतिशलाकापल्यलक्षणे तृतीये पल्ये प्रथमा प्रतिशलाका प्रक्षिप्यते, ततोऽनवस्थितपल्यः समुत्क्षिप्य शलाकापल्ये निष्ठास्थानात्परतस्तेनैव क्रमेण निक्षिप्यते, निष्ठिते च तस्मिन् शलाकापल्ये शलाका प्रक्षिप्यते, इत्थं पुनरप्यनवस्थितपल्यपूरणरेचनक्रमेण शलाकापल्यः शलाकानां भ्रियते, ततोऽनवस्थितशलाकापल्ययोर्भृतयोः शलाकापल्य एवोत्क्षिप्य पूर्वोक्तक्रमेणैव निक्षिप्यते, प्रतिशलाकापल्ये च द्वितीया प्रतिशलाका प्रक्षिप्यते, ततोऽनवस्थितपल्यः समुद्धृत्य शलाकापल्यनिष्ठास्थानात्परतस्तेनैवन्यायेन प्रक्षिप्यते, शलाकापल्ये च शलाका प्रक्षिप्यते, एवमनवस्थितपल्यस्योत्क्षेपप्रक्षेपक्रमेण शलाकापल्य. शलाकानां भरणीयः । शलाकापल्यस्य तूत्क्षेपप्रक्षेपविधिना प्रतिशलाकापल्यः प्रतिशलाकानां पूरणीय, यदा च प्रतिशलाकापल्यः शलाकापल्योऽनवस्थितपल्यश्च त्रयोऽपि भृता भवन्ति तदा प्रतिशलाकापल्य एवोत्क्षिप्य द्वीपसमुद्रेषु तथैव प्रक्षिप्यते, निष्ठिते च तस्मिन् महाशलाकापल्ये प्रथमा महाशलाका प्रक्षिप्यते, तत. शलाकापल्य उत्क्षिप्य तथैव प्रक्षिप्यते, प्रतिशलाकापल्ये च प्रतिशलाका प्रक्षिप्यते, ततोऽनवस्थितपल्य उत्क्षिप्य तथैव प्रक्षिप्यते, शलाकापल्ये च शलाका प्रक्षिप्यते, एवमनवस्थितपल्योत्क्षेपप्रक्षेपक्रमेण शलाकापल्यो भरणीयः, शलाकापल्योद्धरणविकिरणविधिना प्रतिशलाकापल्यः पूरणीय., प्रतिशलाकापल्योत्पाटनप्रक्षेपणाभ्यां महाशलाकापल्य. पूरयितव्य. । यदा तु चत्वारोऽपि परिपूर्णा भवन्ति तदोत्कृष्टं संख्येयकं रूपाधिकं भवति । इह यथोक्तेषु चतुर्षु पल्येषु ये सर्षपा ये चानवस्थितपल्यशलाकापल्यप्रतिशलाकापल्योत्क्षेपप्रक्षेपक्रमेण द्वीपसमुद्रा व्याप्ता एतावत्संख्यमुत्कृष्टसंख्येयकमेकेन सर्षपरूपेण समधिकं सम्पद्यत इति भाव । एतावद्भिश्च सर्षपैरसंलप्या लोकाः * शलाकापल्यलक्षणा भ्रियन्त एवेति सूत्रमविरोधेन भावनीयम् । इदं च तावदुत्कृष्टं संख्येयकम्, जघन्य तु द्वौ, जघन्योत्कृष्टयोश्चान्तराले यानि संख्यास्थानानि तत्सर्वमजघन्योत्कृष्टम्, आगमे च यत्र क्वचिदविशेषितं संख्येयकग्रहणं करोति तत्र सर्वत्राजघन्योत्कृष्टं द्रष्टव्यम् । इदं चोत्कृष्टं संख्येयकमित्थमेव प्ररूपयितुं शक्यते, शीर्षप्रहेलिकान्तराशिभ्योऽतिवहूनां समातिक्रान्तत्वात् प्रकारान्तरेणाख्यातुमशक्यत्वादिति । उक्तं त्रिविधं संख्येयकम् । अनु० । (* 'लोक' शब्दो द्रष्टव्य.)

सम्प्रति संख्येयकादिद्वारं प्रचिकटयिपुराह—

संखिज्जेगमसंखं, परित्तजुत्तनियपयजुयं तिविहं ।
एवमणंतं पि तिहा, जहन्नमज्झुक्कसा सव्वे ॥ ७१ ॥

एतावन्त एत इति संख्यानं संख्येयम् " य एचातः "(५-१-२८) इति यप्रत्ययः । तच्चैकमेकमेव भवति नापरे असंख्येयादेरिव परीत्तादयो मूलभेदस्वरूपा भेदा अस्य विद्यन्त इति भावः। न संख्यामर्हतीत्यसंख्य "दण्डादिभ्यो यः" (६-४-१७६) इति यप्रत्ययः। असंख्येयकं तत्पुनः परीत्तं च युक्तं च निजपदं स्वकीयपदमसंख्येयकलक्षणम्, तच्च परीत्तयुक्तनिजपदानि च तैर्युक्तं-समन्वितं सत्। किमित्याह—त्रिविधं-त्रिप्रकारं भवति । यथा—परीत्तासंख्येयक , युक्तासंख्येयकम् , असंख्यातासंख्येयकमित्युक्त त्रिधाऽसंख्येयकम्॥ अधुना त्रिविधमनन्तकमाह—'एवमणंतं पि तिह' त्ति एवमनेनानन्तरप्रदर्शितप्रकारेण परीत्तयुक्तनिजपदयुक्तलक्षणेनानन्तमपि—अनन्तकमपि न केवलमसंख्येयकमित्यपि—शब्दार्थः । त्रिधा त्रिप्रकारं वेदितव्यम्, तद्यथा—परीत्तानन्तकं , युक्तानन्तकम् , अनन्तानन्तकमित्येवमेतानि समुदितानि सप्तापि पदानि पुनरेकैकशस्त्रिरूपाणि भवन्तीति दर्शयितुमाह—"जहन्नमज्झुक्कसा सव्वे" त्ति प्राकृतत्वाल्लिङ्गव्यत्ययाज्जघन्यमध्यमोत्कृष्टानि-जघन्यमध्यमोत्कृष्टभेदभिन्नानि सर्वाणि—समस्तानि एकैकशः सप्तापि पदानि वेदितव्यानीत्यर्थः । तथाहि—जघन्यसंख्येयकं , मध्यमसंख्येयकम् , उत्कृष्टसंख्येयकम्। तथा जघन्यपरीत्तासंख्येयकं, मध्यमपरीत्तासंख्येयकम् ,उत्कृष्टपरीत्तासंख्येयकम्। जघन्ययुक्तासंख्येयकं , मध्यमयुक्तासंख्येयकम् , उत्कृष्टयुक्तासंख्येयकम्। जघन्यासंख्यातासंख्येयकं, मध्यमासंख्यातासंख्येयकम्, उत्कृष्टासंख्यातासंख्येयकम्। तथा जघन्यपरीत्तानन्तकं , मध्यमपरीत्तानन्तकम्, उत्कृष्टपरीत्तानन्तकम् , जघन्ययुक्तानन्तकं, मध्यमयुक्तानन्तकम् , उत्कृष्टयुक्तानन्तकम् । जघन्यानन्तानन्तकं, मध्यमानन्तानन्तकम् , उत्कृष्टानन्तानन्तकम्। तदेवं सख्यातकं त्रिधा, असख्यातमनन्तकं च नवधा भवतीति ॥ ७१ ॥

तदेवं संख्येयकादिभेदप्ररूपणामात्रं कृत्वा विस्तरतस्तत्स्वरूपं निरुरूपयिपु. संख्यातकं त्रिधेति यदुद्दिष्टं तद्विवृण्वन्नाह—

लहु संखिज्जं दुच्चिय, अश्रो परं मज्झिमं तु जा गुरुयं।
जंबुद्दीवपमाणय, चउपल्लपरूवणाइ इमं ॥ ७२ ॥

इहैकको गणनसंख्या न लभते, यत एकस्मिन् घटादौ दृष्टे घटादि वस्त्विदं तिष्ठतीत्येवमेव प्रायः प्रतीतिरुत्पद्यते , नैकसंख्याविषयत्वेन । अथवा-दानसमर्पणादिव्यवहारकाले एकं वस्तु प्रायो न कश्चिद्गणयति , अतोऽसंव्यवहार्यत्वादल्पत्वाद्वा नैको गणनसंख्यां लभते,तस्माद् द्विप्रभृतिरेव गणनसंख्या । अत एवाह—संख्येयं संख्यातकं लघु जघन्यं ह्रस्वं , चियशब्दस्यावधारणार्थत्वात्, यदाहु. श्रीहेमचन्द्रसूरिपादा. प्राकृतलक्षणे—"णइ चेव चिय च्च अवधारणे" (८ २-८४) द्वावेव, नैकः पूर्वोदितयुक्ते । अतः परमेतस्माद् द्विकभूतजघन्यसंख्यातकादूर्ध्वं, मध्यमं तु-संख्यातकं, पुनस्त्रिचतुरादिकमनेकप्रकारं भवति। कियद् दूरं यावन्मध्यमं भवतीत्याह—'जा गुरुयं' ति यावदित्यवधौ गुरुकमुत्कृष्ट सर्वोपरिवर्ति सख्यातकं प्राप्नोति इति शेष । अथेदमेव गुरुकं संख्यातकं कथं विज्ञेयमित्याह—इदमधुनैव वक्ष्यमाणस्वरूपं गुरुकं संख्यातकं ज्ञेयमिति शेष'। कया ? जम्बूद्वीपप्रमाणचतुष्पल्य(प्र)रूपणया जम्बूनाम्ना वृक्षेणोपलक्षितो द्वीपो जम्बूद्वीपस्तेन जम्बूद्वीपेन प्रमाणमियत्तावधारणं येषा ते जम्बूद्वीपप्रमाणकास्ते च ते चत्वार-श्चतुःसंख्याः पल्याश्च धान्यपल्या इव जम्बूद्वीपप्रमाणकचतुष्पल्यास्तेषां प्रकृष्टरूपा प्ररूपणा व्यावर्णना तया। एतदुक्तं भवति। यथा-जम्बूद्वीपो लक्षयोजनप्रमाण एवमेतेऽप्यायामविष्कम्भाभ्यां प्रत्येकं लक्षयोजनप्रमाणा वृत्ताकारत्वाच्च परिधिना—"परिहीति लक्ख स्रोलस,सहस्स दो य सयसत्तवीसहिया। कोसातिय अट्ठवीसं, धणुसयतेरंगुलद्धहियं ॥१॥" इति गाथाभिहितप्रमाणोपेताः। उक्तं च श्रीमदनुयोगद्वारसूत्रे—"जहन्नयं संखिज्जय कित्तिन्नियं होइ ? दो रूवाइं तेण परं अजहन्नमणुक्कोसयं ठाणाइं जाव उक्कोसयं संखिज्जयं न व पावइ। उक्कोसयं संखिज्जयं कित्तियं होइ ?, उक्कोसयस्स संखिज्जयस्स परूवणं करिस्सामि, से जहानामए पल्ले सिया एगं जोयणसयसहस्सं आयामविक्खंभेण तिन्नि जोयणसयसहस्साइं सोलससहस्साइ दोन्नि य सत्तावीसे जोयणसए तिन्नि य कोसे अट्ठावीसं च धणुसयं तेरस अंगुलाइं अद्धंगुलं च किंचि विसेसाहियं परिक्खेवेणं"ततो जम्बूद्वीपप्रमाणचतुष्पल्यप्ररूपणयेदमुत्कृष्टसंख्यातकं प्ररूपयिष्यत इति भावः॥७२॥

अथैते चत्वारोऽपि पल्याः किंनामान इत्येतदाह—

पल्लाणवट्ठियसला-गपडिसलागमहासलागक्खा ।
जोयणसहसोगाढा, सवेइयंता ससिहभरिया ॥ ७३ ॥

धान्यपल्य इव पल्याः कल्प्यन्ते,ते च जम्बूद्वीपप्रमाणा. किंनामान इत्याह-'अणवट्ठिये' त्यादि यथोत्तरं वर्धमानस्वभावतयाऽवस्थितरूपाभावादनवस्थित एवोच्यते। तथेह शलाका-एकैकसर्षपप्रक्षेपलक्षणास्ताभिः शलाकाभिर्भ्रियमाणत्वात्पल्योऽपि शलाका। तथा प्रतिशलाकाभिर्निष्पन्नत्वात्प्रतिशलाका, महाशलाकाभिर्निर्वृत्तत्वान्महाशलाका। तत एषा द्वन्द्वेऽनवस्थितशलाकाप्रतिशलाकामहालाकास्ता इत्थम्भूता आख्या सञ्ज्ञा येषां तेऽनवस्थितशलाकाप्रतिशलाका—महाशलाकाख्या' । त एव विशिष्यन्ते—योजनसहस्रं तु व्यवगाढा। इदमुक्तं भवति-रत्नप्रभाया पृथिव्या प्रथमं योजनसहस्रप्रमाणं रत्नकाण्डं भित्त्वा द्वितीये वज्रकाण्डे प्रतिष्ठिता इति। पुनस्त एव विशिष्यन्ते-'सवेइयंत' त्ति वज्रमय्या अष्टयोजनोच्छ्रायाश्चत्वार्यष्टौ द्वादश योजनान्युपरि मध्याधोविस्तृताया जम्बूद्वीपनगरप्राकारकल्पाया जगत्या द्विगव्यूतोच्छ्रितेन पञ्चधनु.शतविस्तृतेन नानारत्नमयेन जालकटकेन परिक्षिप्ताया उपरिवेदिकेति; पद्मवरवेदिकेत्यर्थ'। द्विगव्यूतोच्छ्रिता पञ्चधनु.शतातिस्तीर्णा गवाक्षहेमकिङ्किणीजालघण्टायुक्ता देवानामासनशयनमोहनविविधक्रीडास्थानमुभयतो वनखण्डवती तस्या अन्त -पर्यवसानमग्रभाग इति यावत् वेदिकान्त., ततश्च सह वेदिकान्तेन वर्तन्त् इति सवेदिकान्ता.। ते च कथं सर्षपैर्भृ-

ता इत्याह-'ससिहभरिय' त्ति सह शिखयोच्छ्रयलक्षणया वर्त्तन्त इति सशिखाः, ततः सशिखं यथाभवति तथा स-र्षपैर्भृताः—पूरिताः सशिखभृताः कर्तव्या इति शेषः । अयमत्राशयः-एतेषां व्यावर्णितस्वरूपाणां चतुर्णामपि पल्यानां मध्याद्यो यथावसरं सर्षपैः पूर्यते तं योजनसहस्रावगाढादूर्ध्वं समधिकाष्टयोजनोच्छ्रितवेदिकान्तं पूरयित्वा तदुपरि तावच्छिखा वर्द्धनीया यावदेकोऽपि सर्षपो नावतिष्ठत इति । अत्र सर्वे सवेदिकान्ताः सशिखभृताश्च कर्त्तव्या इति सामान्योक्तावपि प्रथममनवस्थितपल्य एव भृतः करणीयः, शेषास्तु यथावसरमेवेति मन्तव्यमिति ॥ ७३ ॥

अधुना तस्यानवस्थितपल्यस्य जम्बूद्वीपप्रमाणस्य सर्षपैर्भृतस्य यद्विधेयं तदाह—

ता दीवुदहिसु इक्कि-क्कसरिसवं खिविय निट्ठिए पढमे ।
पढमं व तदंतं चिय, पुण भरिए तम्मि तह खीणे ॥७४॥

ततः सर्षपभरणादनन्तरमसत्कल्पनया केनचिद्देवेन दानवेन वा वामकरतले धृत्वा द्वीपोदधिषु द्वीपसमुद्रेषु एकैकं सर्षपं-सिद्धार्थं क्षिप्त्वा निष्ठिते-ऽन्तर्भूते, अथवा-निष्ठापिते रिक्तीकृते प्रथमेऽनवस्थितपल्ये, कोऽर्थः ? एकं सर्षपं द्वीपे प्रक्षिपति, एकमुदधौ, पुनरप्येकं द्वीपे, एकमुदधौ, एवं प्रतिद्वीपं प्रत्युदधि चैकैकं सर्षपं प्रतिक्षिपन्नसौ देवो वा दानवो वा तावद्गतो यावदनवस्थितपल्यो निष्ठितो भवति । ततः किं विधेयमित्याह-'पढमं वे' त्यादि द्वीपे समुद्रे वा यत्रासावनवस्थितपल्यो निष्ठितो भवति तदन्तं 'चिय'त्ति स एवानवस्थितपल्यस्य निष्ठाकारी द्वीपः समुद्रो वाऽन्तः पर्यवसानप्रमाणतया यस्य द्वितीयानवस्थित पल्यस्य स तदन्तस्तं द्वितीयानवस्थितपल्यप्रमाणाभिधायकं विशेषणमिदम्, ततस्तदन्तमेव चियशब्दस्यावधारणार्थत्वाद्विस्तीर्णतया तावत्प्रमाणमेवेत्यर्थः । प्रथममिवाद्यपल्यमिवेत्युपमानेन द्वितीयमनवस्थितपल्यमपि सहस्रयोजनावगाढमष्टयोजनोच्छ्रितजगत्युपरिवेदिकोपशोभितं सशिखं सर्षपैर्भृतं कुर्यादिति सूचयति । ततः प्रथमानवस्थितपल्यमिव तदन्तमेव पुनर्भूयो भृतैः सर्षपैः पूरिते तस्मिन् द्वितीयानवस्थितपल्ये तथा तेन प्रकारेण निक्षिप्तचरमसर्षपद्वीपादेरग्रत एकः सर्षपो द्वीपे, एकः समुद्रे, इत्यादिना क्षीणे निष्ठिते सति द्वितीयानवस्थितपल्ये ।

ततः किं विधेयमित्याह—

खिप्पे सलागपल्ले, गुसरिसवो इय सलागखवणेणं ।
पुन्नो बीओ य तओ, पुव्विं पित्र तम्मि उद्धरिए ॥७५॥

क्षिप्यते-निधीयते शलाकापल्ये द्वितीये शलाकासंज्ञक एकसंख्य एव सर्षपः, स च नानवस्थितपल्यसत्कः, किं त्वन्य एवेत्यवसीयते, 'पुण भरिए तम्मि तह खीणे' इति सूत्रावयवस्य सामस्त्यरिक्तीकरणप्रतिपादनपरत्वात् । अन्ये त्वनवस्थितपल्यसत्क एव क्षिप्यते इत्याचक्षते । तत्त्वं तु केवलिनो विदन्तीति । आह-किमिति द्वितीयपल्य एव निष्ठिते सत्येकस्य सर्षपस्य शलाकापल्ये प्रक्षेपणमभिहितं यावता प्रथमपल्येऽपि निष्ठिते तत्रैकस्य सर्षपस्य प्रक्षेपो युज्येत इति ?, तदयुक्तम्, अभिप्रायापरिज्ञानात्, यतोऽनवस्थितपल्यस्य शलाकाभिरेवासौ पूरणीयः, प्रथमश्च लक्षयोजनविस्तृतत्वेनावस्थितपरिणामतयाऽनवस्थित एव न भवतीत्यतो द्वितीयाद्यनवस्थितपल्यशलाका एव तत्र प्रक्षेपमर्हन्तीति । न चैतत् स्वमनीषिकाविजृम्भितम्, यदुक्तमनुयोगद्वारेषु—"से णं पल्ले सिद्धत्थयाणं भरिए तओ णं तेहिं सिद्धत्थएहिं दीवसमुद्दाणं उद्धारे घिप्पइ एगे दीवे एगे समुद्दे, एगे दीवे एगे समुद्दे एवं खिप्पमाणेहिं खिप्पमाणेहिं जावइया णं दीवसमुद्दा तेहिं सिद्धत्थएहिं अप्फुन्ना एस णं एवइए खित्ते पल्ले आइट्ठे से णं पल्ले सिद्धत्थयाणं भरिए तओ णं तेहिं सिद्धत्थएहिं दीवसमुद्दाणं उद्धारे घिप्पइ एगे दीवे एगे समुद्दे एगे दीवे एगे समुद्दे एवं खिप्पमाणेहिं खिप्पमाणेहिं जावइयाणं दीवसमुद्दा तेहिं सिद्धत्थएहिं अप्फुन्ना एस णं एवइए खित्ते पल्ले पढमा सलागा" इति । यश्च "पल्लाणवट्ठिए" इत्यादिना गाथाया प्रथमस्यानवस्थितव्यपदेशोऽसौ योग्यतामात्रेण राज्यार्हकुमारस्य राजव्यपदेशवत् द्रष्टव्य । 'इय सलागखवणेण पुन्नो बीओ य त्ति' इत्यमुना पूर्वप्रदर्शितशलाकाक्षपणप्रकारेण द्वितीयश्च शलाकापल्यः पूर्णो भृतो भवति सशिख इति यावत् । इयमत्र भावना—ततो यस्मिन् द्वीपे समुद्रे वा स एव द्वितीयपल्यो निष्ठां गतस्तदन्ता मूलतः सर्वेऽपि ये द्वीपसमुद्रास्तावत्प्रमाणः पुनरन्यः पल्यः परिकल्प्यते पूर्ववत् सर्षपैः पूर्यते, ततस्तं तावत्प्रमाणं पल्यमुत्पाट्य ततो निष्ठितस्थानात् परतो द्वीपसमुद्रेष्वेकैकं सर्षपं प्रक्षिपेत्, यावदसौ निष्ठितो भवति । ततो द्वितीया शलाका सर्षपरूपा शलाकापल्ये प्रक्षिप्यते ततोऽपि यस्मिन् द्वीपे समुद्रे वा स एव तृतीयोऽनवस्थितपल्यो निष्ठितस्तदन्ता मूलतः सर्वेऽपि ये द्वीपसमुद्रास्तावत्प्रमाणः पुनरन्यः पल्यः परिकल्प्यते पूर्ववत् सर्षपैरापूर्यते, ततस्तं तावत्प्रमाणं पल्यमुत्पाट्य ततो निष्ठितस्थानात्परतो द्वीपसमुद्रेष्वेकैकं सर्षपं प्रक्षिपेत्, यावदसौ निष्ठितो भवति । ततस्तृतीया सर्षपरूपा शलाका शलाकापल्ये प्रक्षिप्यते, एवमनेन क्रमेण पुनः पुनरनवस्थितपल्यस्य सर्षपभरणरिक्तीकरणलब्धैकैकसर्षपरूपाभिः शलाकाभिः शलाकापल्यो यथोक्तप्रमाणः सशिखाकस्तावत्पूरयितव्यो यावत्तत्रैकोऽप्यन्य सर्षपो नमातीति । 'बीओ य' त्ति इत्यत्र चशब्दात्पूर्वपरिपाट्यागतोऽनवस्थितपल्यः सर्षपैरापूरणीय । ततः किं विधेयमित्याह-'तओ पुव्वं पिव तम्मि उद्धरिए' त्ति ततः शलाकापल्यपूर्वपरिपाट्यागतानवस्थितपल्यापूरणानन्तरं पूर्ववत्तस्मिन् शलाकापल्ये उद्धृते सति ।

खीणे सलाग तइए, एवं पढमेहिं बीययं भरसु ।
तेहिं तइयं तेहि य, तुरियं जा किर फुडा चउरो ॥७६॥

क्षीणे च निर्लेपे सति सर्षपरूपा शलाका तृतीये प्रतिशलाकापल्ये प्रक्षिप्यते इतीयमक्षरगमनिका । भावार्थस्त्वयम्-ततः शलाकापल्यापूरणानन्तरं तं शलाकापल्यं वामकरतले कृत्वा पूर्वानवस्थितपल्यचरमसर्षपाक्रान्तात्-द्वीपात् समुद्राद्वा परतः प्रतिद्वीपं प्रतिसमुद्रं चैकैकं सर्षपं प्रतिक्षिपेद्यावदसौ निष्ठितो भवति । ततः प्रतिशलाकापल्ये सर्षपरूपा प्रथमा प्रतिशलाका प्रक्षिप्यते, ततोऽनन्तरोक्तोऽनवस्थितपल्य उत्पाट्य-

ते, ततः शलाकापल्यसर्षपाक्रान्ताद् द्वीपात् समुद्राद्वा परतः पूर्वक्रमेण द्वीपसमुद्रेष्वेकैकं सर्षपं प्रक्षिपेत् , यावदसौ निःशेषतो रिक्तो भवति । ततः शलाकापल्ये पुनरपि सर्षपरूपा एका शलाका प्रक्षिप्यते , ततोऽनन्तरोक्तानवस्थितपल्यचरमसर्षपाक्रान्तो द्वीपः समुद्रो वा यस्तदन्तमनवस्थितपल्यसर्षपैर्भृत्वा तत. परतः पुनरप्येकैकं सर्षपं प्रतिद्वीपं प्रतिसमुद्रं च प्रक्षिपेद्यावदसौ निष्ठितो भवति , ततो द्वितीया शलाका शलाकापल्ये प्रक्षिप्यते । एवमपरापरानवस्थितपल्यापूरणरिक्तीकरणलब्धैकैकसर्षपैर्यदा शलाकापल्य आपूरितो भवति पूर्वपरिपाट्या चानवस्थितपल्यस्तदा शलाकापल्यमुत्पाट्य प्राक्तनानवस्थितपल्यचरमसर्षपाक्रान्ताद् द्वीपात् समुद्राद्वा परतः प्रतिद्वीपं प्रतिसमुद्रं चैकैकं सर्षपं प्रक्षिपेत् , यावदसौ निर्लेपो भवति । ततः प्रतिशलाकापल्ये द्वितीया शलाका प्रक्षिप्यते, ततोऽनवस्थितपल्यमुत्पाट्यानन्तररिक्तीकृतशलाकापल्यचरमसर्षपाक्रान्ताद् द्वीपात् समुद्राद्वा परत. पूर्वक्रमेण द्वीपसमुद्रेष्वेकैकं सर्षपं प्रक्षिपेत् , यावदसौ निष्ठितो भवति । ततः पुनरपि शलाकापल्ये सर्षपरूपा शलाका प्रक्षिप्यते, यत्र चासौ द्वीपे समुद्रे वा निष्ठितस्तावत्प्रमाणविस्तरात्मकमनवस्थितपल्यं सर्षपैरापूर्य तत. परतः पूर्वक्रमेण द्वीपसमुद्रेष्वेकैकं सर्षपं प्रक्षिपेद्यावदसौ निष्ठितो भवति । तत. शलाकापल्ये द्वितीया शलाका सर्षपरूपा प्रक्षिप्यते, एवमनेन क्रमेण तावद्वक्तव्य यावत् त्रयोऽपि प्रतिशलाकापल्यशलाकापल्यानवस्थितपल्याः परिपूर्णमापूरिता भवन्ति । तत प्रतिशलाकापल्यमुत्पाट्य निष्ठितस्थानात्परत प्रतिद्वीपं प्रतिसमुद्रमेकैकं सर्षपं प्रक्षिपेद्यावदसौ निष्ठितो भवति । ततो महाशलाकापल्य एका सर्षपरूपा शलाका प्रक्षिप्यते,तत. शलाकापल्यमुत्पाट्य प्रतिशलाकापल्यगतचरमसर्षपाक्रान्ताद् द्वीपात् समुद्राद्वा परत प्रतिद्वीपं प्रतिसमुद्रमेकैकं सर्षपं प्रक्षिपेद्यावदसौ निष्ठितो भवति। तत प्रतिशलाकापल्ये प्रतिशलाका प्रक्षिप्यते , ततोऽनवस्थितपल्यमुत्पाटयेत् , उत्पाट्य च शलाकापल्यगतचरमसर्षपाक्रान्ताद् द्वीपात्समुद्राद्वा परतो द्वीपसमुद्रेष्वेकैकं सर्षपं प्रक्षिपंस्तावद्गच्छेद्यावदसौ निःशेषतो रिक्तो भवति । तत. शलाकापल्ये प्रथमा शलाका प्रक्षिप्यते। ततोऽनन्तरोक्तानवस्थितपल्यगतचरमसर्षपाक्रान्तो द्वीप समुद्रो वा यस्तत्पर्यन्तविस्तरात्मकोऽनवस्थितपल्य कल्पयित्वा सर्षपैरापूर्यते, ततस्त समुत्पाट्य ततो निष्ठितस्थानात्परतो द्वीपसमुद्रेष्वेकैकं सर्षपं प्रक्षिपेद्यावदसौ ( निष्ठितो ) निर्लेपो भवति । ततो द्वितीया शलाका शलाकापल्ये प्रक्षिप्यते, एवं शलाकापल्य आपूरणीय । एवमापूरणोत्पाटनप्रक्षेपपरम्परया तावद्वक्तव्यं यावन्महाशलाकापल्यप्रतिशलाकापल्यशलाकापल्यानवस्थितपल्या. सर्वेऽपि परिपूर्णशिखायुक्ता. समापूरिता भवन्ति। एतदेव निगमयन्नाह-'एव पढमेहिं'इत्यादि,एवमनेन प्रदर्शितक्रमेण प्रथमैरनवस्थितपल्यैर्द्वितीयमेव द्वितीयकं शलाकापल्यं भरस्व—पूरय, तैश्च द्वितीयस्थानवर्तिभि. शलाकापल्यैस्तृतीयं प्रतिशलाकापल्य भरस्व, तैश्च प्रतिशलाकापल्यै , तुर्यम्—चतुर्थं महाशलाकापल्यं तावद्भरस्व यावत् 'किलेत्याप्तागमवादसमसूचक.' स्फुटा व्याप्ता. सशिखा भृता इति यावच्चत्वारश्चतु संख्याः अनवस्थितशलाकाप्रतिशलाकामहाशलाकाख्या. पल्या भवन्तीति ।

ततश्चतुर्णां पल्यानां पूर्णत्वे यत्सम्पद्यते तदाऽऽह–

पढमतिपल्लुद्धरिया, दीवुदहीपल्लचउसरिसवाए य ।
सव्वो वि एगरासी, रूवूणो परमसंखिज्जं ॥ ७७ ॥

प्रथमम्-आद्यं यत्त्रिपल्यं-पल्यत्रयमनवस्थितशलाकाप्रतिशलाकाख्य तेनोद्धृता एकैकसर्षपप्रक्षेपेण व्याप्ता. प्रथमत्रिपल्योद्धृता ,क एत इत्याह—द्वीपोदधयो, न केवलं द्वीपोदधय. पल्यचतुष्कसर्षपाश्च, किं भवतीत्याह—सर्वोऽपि—समस्तोऽप्येषोऽनन्तरोक्त -सर्षपव्याप्तद्वीपसमुद्रपल्यचतुष्कगत' सर्षपलक्षणो राशिः सघातो रूपोन -एकेन सर्षपरूपेण रहितः सन् परमसख्येयमुत्कृष्टसंख्यातकं भवतीति । तदेवं तावदिदमुत्कृष्टसंख्येयकम् , जघन्यं तु द्वौ, जघन्योत्कृष्टयोश्चान्तराले यानि संख्यास्थानानि सर्वाणि मध्यमं संख्येयकमिति सामर्थ्यादुक्तं भवति । सिद्धान्ते यत्र क्वचित् संख्यातग्रहणं करोति तत्र सर्वत्रापि मध्यमं संख्येयकं द्रष्टव्यम् । यदुक्तमनुयोगद्वारचूर्णौ-"सिद्धन्ते य जत्थ जत्थ संखिज्जगगहणं, तत्थ तत्थ अजहन्नमणुक्कोसयं दट्ठव्वं ति" । इदं चोत्कृष्टं संख्येयकमित्थमेव प्ररूपयितुं शक्यते, द्विकादिदशशतसहस्रलक्षकोट्यादिशीर्षप्रहेलिकान्तराशिभ्योऽतिबहुना समतिक्रान्तत्वेन प्रकारान्तरेणाख्यातुमशक्यत्वात्। यदाहुः प्रसिद्धसिद्धान्तसन्दोहविवरणप्रकरणकरणप्रमाणप्रथनावाप्तसुधांशुधामधवलयशःप्रसरधवलितसकलवसुन्धरावलयश्रीहरिभद्रसूरिपादा अनुयोगद्वारटीकायाम्-" जंबुद्दीवप्पमाणमेत्ता चत्तारि पल्ला। पढमो अणवट्ठियपल्लो,बीओ सलागापल्लो, तईओ पडिसलागापल्लो,चउत्थओ महासलागापल्लो। एए चउरो वि रयणप्पहपुढवीए पढमं रयणकंडं जोयणसहस्सावगाहं भित्तूण विइए वयरकडे पइट्ठिया इमा ठवणा(००००)एए ठविया। एगो गणणं न उवेइ दुप्पभिई संखं ति काउं, तत्थ पढमे अणवट्ठियपल्ले दो सरिसवा पक्खित्ता एयं जहन्नग संखिज्जग। ततो एगुत्तरवुड्ढीए तिन्नि चउरो पंच ० जाव सो पुण्णो अन्नसरिसव न पडिच्छइ त्ति ताहे असब्भावट्ठवणं पडुच्च वुच्चति। तं को वि देवो दाणवो उक्खित्तं वामकरयले काउं ते सरिसवे जंबुद्दीवाइ ( ए ) एगं दीवे एगं समुद्दे पक्खिविज्जा ० जाव निट्ठिया। ताहे सलागापल्ले एगो सरिसवो छूढो जत्थ निट्ठिओ तेण सह आरिल्लएहिं दीवसमुद्देहिं पुणो अन्नो पल्लो आइज्जइ , सो वि सरिसवाणं भरिओ । तओ परओ एक्केक्कं दीवसमुद्देसु पक्खिवंतेण निट्ठाविओ , तओ सलागापल्ले विइया सलागा पक्खित्ता । एवं एएणं अणवट्ठियपल्लकरणक्कमेण सलायग्गहणं करेंति , तेण सलागापल्लो सलागाए भरिओ कमागतो अणवट्ठियओ वि तओ सलागापल्लो सलाग न पडिच्छइ त्ति काउं सो चेव निट्ठियट्ठाणाओ परओ पुव्वक्कमेण उक्खित्तो पक्खित्तो निट्ठिओ य तओ पडिसलागापल्ले पढमा सलागा छूढा। तओ अणवट्ठिओ उक्खित्तो निट्ठियट्ठाणाओ परओ पुव्वक्कमेण पक्खित्तो निट्ठिओ य। तओ सलागापल्ले सलागा पक्खित्ता , एवं अणेणेणं अणेणेणं अणवट्ठिएण आइण्णनिक्किरणेण जाहे पुणो सलागापल्लो भरिओ

अणवट्ठिओ य, ताहे पुणो सलागापल्लो उक्खित्तो प- क्खिप्पमाणो निट्ठिओ य पुव्वक्कमेण, ताहे पडिसलागा- पल्ले बिइया पडिसलागा छूढा । एवं आइरणनिक्किरणेण जाहे तिन्नि वि पडिसलागसलागअणवट्ठियपल्लो य भरि- ओ ताहे पडिसलागापल्लो उक्खित्तो पक्खिप्पमाणो नि- ट्ठिओ य ताहे महासलागापल्ले पढमा सलागा छूढा । ताहे सलागापल्लो उक्खित्तो पक्खिप्पमाणो निट्ठिओ य, ताहे पडिसलागापल्ले सलागा पक्खित्ता ताहे अणवट्ठि ओ उक्खित्तो पक्खित्तो य, ताहे सलागापल्ले सलागा प- क्खित्ता। एवं आइरणनिक्किरणकमेण ताव कायव्वं जाव पं- रम्परेण महासलागपडिसलागसलागअणवट्ठियपल्लो य च उरो वि भरिया। ताहे उक्कोसमइच्छियं, इत्थ जावइया अ- णवट्ठियपल्लसलागपल्लपडिसलागपल्लेण य दीवसमुद्दा उ- द्धरिया, जे उ चउपल्लट्ठिया सरिसवा एस सव्वो वि एत- प्पमाणो रासी एगरूवूणो उक्कोसयं संखिज्जयं हवइ , ज- हन्नुक्कोसट्ठाणमज्झे जे ठाणा ते सव्वे पत्तेयं अजहण्णमणु- क्कोसया संखिज्जया भणियव्वा। सिद्धंते य जत्थ जत्थ सं- खिज्जगगहणं कयं तत्थ तत्थ सव्वं अजहन्नमनुक्कोसयं दट्ठव्वं । एवं संखेज्जगे परूविए सीसो पुच्छइ-भगवं ! किमेएणं अण- वट्ठियपल्लसलागपडिसलागाईहिं य दीवसमुद्दुद्धारगहणेण य उक्कोससंखिज्जपरूवणा किज्जइ ?, गुरू भणइ-नऽत्थि अन्नो संखिज्जगस्स परूवणोवाओ त्ति" ॥७७॥ कर्म० ४ कर्म० ।

संखेज्जवित्थड-संख्येयविस्तृत-त्रि० । संख्येययोजनप्रमाणं विस्तृतं विस्तारो येषा ते। संख्येययोजनप्रमाणविस्तृतेषु, जी० ३ प्रति० १ अधि० २ उ०।

संखेव-संक्षेप-पुं०।संक्षेपणं संक्षेप । विशे० ।समासे,स्था०५ठा० ३ उ०। आचा०। संग्रहे, उत्त० २८ अ०। स्था०। अवान्तर- भेदापरिग्रहे, नयो०। विस्ताराभवे, ग०१ अधि०। आ० म०। समन्ताद् दुष्कर्मणः क्षेपो यत्र सः संक्षेप'। स्तोकाक्षरे सामा- यिके,द्वादशाङ्गार्थपिण्डनात्, (आ० क० १ अ०) तत्र महार्थ- स्याप्यस्य स्तोकाक्षरत्वात्। विशे०।

अथ संक्षेपे आत्रेयकथा—

" नगर्यां श्रीविशालायां, जितशत्रुर्महीपतिः।
ऋषयस्तत्र चत्वार , स्वस्वशास्त्राणि चक्रिरे ॥ १ ॥
उपेत्याहुर्नृपं सर्वे, राजन् ! शास्त्राणि न शृणु।
राजोचे मानमेषा किं, लक्षालक्षेति तेऽभ्यधु ॥ २ ॥
सोऽवदन्न क्षम श्रोतुं, राज्यं सीदति मे यतः।
संक्षिपद्भिस्तत· सर्वैं-रर्द्धार्द्धादि क्रमेण तै ॥ ३ ॥
यावच्चतुर्भिरप्येक·, श्लोकश्चक्रे स चैषक —
जीर्णे भोजनमात्रेय कपिल· प्राणिनां दया।
बृहस्पतिरविश्वास', पञ्चाल स्त्रीषु मार्दवम् ॥ ४ ॥
तद्राजाऽप्यशृणोदेव, यस्मिन् सामायिकेऽप्यहो।
चतुर्दशानां पूर्वाणा, संक्षिप्यार्थोऽस्ति पिण्डित ॥ ५ ॥"

एतदेवाह—

" सयसाहस्सा गंथा, सहस्स पंच य दिविड्ढमेगं वा।
ठविआ एगसिलोए, संखेवो एस नायव्वो ॥ १ ॥"

तथा—

" जिण्णे भोअणमत्तेओ, कविलो पाणिणं दया।
विहस्सई रविस्सासो, पंचालो थीसु मद्दवं ॥ २ ॥"
आ० क० १ अ०। आ० म०। आ० चू०।

संखेवओ-संक्षेपतः-अव्य०। संक्षिप्तभविकजनानुकम्पायाम्, पं० स० ५ द्वार।

संखेवण-संक्षेपण-न०। संकोचने, गृहशय्यास्थानादेः परतो निषेधरूपे च। ध० २ अधि० । गोचराभिग्रहरूपे संकोचे, प्रव० ६ द्वार।

संखेवपिंडियत्थ-संक्षेपपिण्डितार्थ-पुं० । संक्षेपेण समासेन; सामान्यरूपतयेत्यर्थः, पिण्डित एकत्र मीलितस्तात्पर्यमात्र- व्यवस्थितोऽर्थोऽभिधेयं यस्य स·। संक्षिप्तार्थे, पं०।

संखेवरुइ-संक्षेपरुचि-स्त्री०। संक्षेपः संग्रहस्तत्र रुचिः-संक्षे- परुचि·। उपशमादिपदत्रयविषयिण्यां रुचौ , तद्वति च। त्रि०। ध० २ अधि०। प्रज्ञा०।

संक्षेपरुचिमाह—

**अणभिग्गहियकुदिट्ठी, संखेवरुइ त्ति होइ नायव्वो।**
**अविसारओ पवयणं,अणभिग्गहिओ य सेसेसु ॥१२५॥**

'अणभिग्गहि य' इत्यादि, नाभिगृहीता कुत्सिता दृष्टिर्येन सोऽनभिगृहीतकुदृष्टि', अविशारद' प्रवचने-जिनप्रणीते शेष षु च कपिलादिप्रणीतेषु प्रवचनेषु, अनभिगृहीतो न विद्यते आभिमुख्येन उपादेयतया गृहीत ग्रहणमस्येत्यनभिगृहीतः। पूर्वमनभिगृहीतकुदृष्टिरित्यनेन परदर्शनान्तरपरिग्रह· प्रति- षिद्धोऽनेन परदर्शनपरिज्ञानमात्रमपि निषिद्धमिति विशेषः, स इत्थंभूत· संक्षेपरुचिरिति ज्ञातव्यः। प्रज्ञा० १ पद ।

संखेवियदसा-संक्षेपिकदशा-स्त्री०। दशाध्ययनप्रतिबद्धे ग्र- न्थविशेषे, स्था०।

**संखेवियदसाणं दस अज्झयणा पण्णत्ता, तं जहा-खु- ड्डिया विमाणपविभत्ती १ महल्लिया विमाणपविभत्ती २ अंगचूलिया ३ वग्गचूलिया ४ विवाहचूलिया ५ अरुणो- ववाते ६ वरुणोववाते ७ गरुलोववाते ८ वेलंधरोववाते ६ वेसमणोववाते १०। ( सू० ७५५× )।**

संक्षेपिकदशा अप्यनवगतस्वरूपा एव, तदध्ययनानां पुन- रयमर्थ·-' खुड्डिए ' त्यादि, इहावलिकाप्रविष्टेतरविमानप्रवि- भजनं यत्राध्ययने तद्विमानप्रविभक्ति·, तच्चैकमल्पग्रन्थार्थं तथाऽन्यन्महाग्रन्थार्थमतः क्षुल्लिकाविमानप्रविभक्तिर्महती विमानप्रविभक्तिरिति । अङ्गस्य—आचारादेश्चूलिका— यथाऽऽचारस्यानेकविधा, इहोक्तानुक्तार्थसंग्राहिका चूलि- का, ' वग्गचूलिय ' त्ति इह च वर्ग —अध्ययनादिसमूहो यथा अन्तकृद्दशास्वष्टौ वर्गास्तस्य चूलिका वर्गचूलिका। ' विवाहचूलिय ' त्ति व्याख्या—भगवती तस्याश्चूलिका व्याख्याचूलिका । स्था० १० ठा० ३ उ० । ( अरुणोप- पात इत्यस्य व्याख्या " अरुणोववाय " शब्दे प्रथमभागे ७६६ पृष्ठे गता। )

संखेसरपासणाह-शंखेश्वरपार्श्वनाथ-पुं०। शंखेश्वरपुराधिष्ठिते पार्श्वनाथपरमेश्वरे, प्रति०।

संग-सङ्ग-पुं०। सज्यन्त इति सङ्गाः। मातृपित्रादिसम्बन्धे कर्मोपादानहेतुषु, सूत्र० १ श्रु० ३ अ० २ उ०। मातापितृपुत्रकलत्रादिजनिते धनधान्यहिरण्यादिजनिते सङ्गे, आचा० १ श्रु० ६ अ० ५ उ०। प्राणिनामासक्तौ कर्मानुषङ्गे, आचा० १ श्रु० ५ अ० ६ उ०। रागद्वेषाभ्यां सम्बन्धे, आचा०। पुत्रपौत्रादिजनिते सम्बन्धे, कामानुषङ्गे च। आचा० १ श्रु० ६ अ० २ उ०। सबाह्याभ्यन्तरसंबन्धे, सूत्र० २ श्रु० १ अ०। उत्त०। स्था०। सम्पर्के, प्रश्न० २ विव०। परिग्रहे, आ० क० ४ अ०। संगच्छते वशीभवति जीवो यस्मात् स सङ्गः। बन्धने, उत्त० २ अ०। नि० चू०। संगतौ, ध० १ अधि०। ग०।

संगइ-संगति-स्त्री०। मित्रत्वे,ज्ञा०१श्रु०१अ०। सूत्र०। सम्यक् स्वपरिणामेन गतिर्यस्य यदा यत्र यत्सुखदुःखानुभवन सा संगतिः। नियतौ,सूत्र०१श्रु०१अ०२उ०। एकत्वे,अष्ट०१५अष्ट०।

संगइय-साङ्गतिक-त्रि०। सङ्गतं विद्यते यस्याऽसौ साङ्गतिकः। परिचिते, स्था० ४ ठा० ३ उ०। सम्यक् स्वपरिणामेन गतिर्यस्य यदा यत्र यत्सुखदुःखानुभवनं सा सङ्गतिर्नियतिस्तस्या भवं साङ्गतिकम्। नियतिकृते सुखदुःखादिके, सूत्र० १ श्रु० १ अ० २ उ०।

संगभा(गज्भा)ण-संगध्यान-न०। सङ्गे परित्यक्तेऽपि पुनः सङ्गध्याने राजीमत्यां रथनेमेरिव नागिलां प्रति भवदेवस्येव वा ध्याने, आतु०।

संगंथ-संग्रन्थ-पुं०। स्वजनस्याऽपि स्वजने पितृव्यपुत्रश्यालादिके, आचा० १ श्रु० २ अ० १ उ०।

संगतअ-सङ्गतक-पुं०। दासे, आ० चू० ४ अ०।

संगपरिण्णा-सङ्गपरिज्ञा-स्त्री०। सङ्गः परिग्रहः तस्य परिज्ञा प्रत्याख्यानम्। सङ्गप्रत्याख्याने, आ० क०।

अत्रोदाहरणम्—

"णयरी अ चंपनामा, जिणदेवे सत्थवाह अहिछत्ता।
अडवी अ तेण अगणी, सावयसंगाण वोसिरणा॥ १॥
चम्पायां जिनदेवाख्यः, श्रावकः सार्थपोऽभवत्।
प्रतस्थे घोषणापूर्व-महिच्छत्रां पुरीं प्रति॥ २॥
स भिल्लैर्लुण्ठितः सार्थो-ऽनश्यत् श्राद्धोऽटवीं ययौ।
पृष्ठे व्याघ्रः पुरोवह्नि-रभितोऽभि प्रपा ततः॥ ३॥
अपश्यन् शरणं सोऽथ, भावलिङ्गं प्रपन्नवान्।
कृतसामायिकः कायो-त्सर्गस्थः श्वापदा हतः॥ ४॥
अन्तकृत्केवली भूत्वा, सिद्धिसौख्यमवाप सः॥ ५॥
आ० क० ४ अ०।

संगम-सङ्गम-पुं०। मीलने, दर्श० ४ तत्त्व। नदीमीलके, ज्ञा० १ श्रु० १ अ०। उत्त०। स्था०। (अत्र सङ्गमस्थविरकथा 'एगचरियापरीसह' शब्दे तृतीयभागे ६ पृष्ठे उक्ता।) शालिभद्रस्यानुत्तरोपपातिकदशोक्तस्य पूर्वभवजीवे स्वनामख्याते वत्सपाले, आव० १ अ०। आ० म०। तथा सङ्गमकसुरः सुरेशेन निष्काशितः स भवधारणीयेन शरीरेण मेरुचूलायां जगामोत्तरवैक्रियेण वेति?, अत्र मौलेनेति विज्ञायते उत्तरवैक्रियस्यैतावत्कालमवस्थानाभावात्, यत्तु मौलं शरीरं विमानाद्बहिर्न निर्गच्छतीति वचस्तत्प्रायिकमिति बोध्यम्। ह्री० ३ प्रका०।

संगमथेर-सङ्गमस्थविर-पुं०। कोलकिनगरे नित्यवासिनि स्वनामख्याते स्थविरे, आव० ४ अ०। आ० चू०। दर्श०। ('णितियवास' शब्दे चतुर्थभागे २०७० पृष्ठे कथोक्ता।)

श्रीसङ्गमसूरिकथा पुनरेवम्—

"इह सिरिसंगमसूरी, दूरीकयसयलगुरुपमायभरो।
अन्नाणदारुदारुणद-चहुयवहसरिससमयधरो॥ १॥
पइ समयमुत्तरुत्तर—विसुद्धपरिणामहणियपावोहो।
नगनगरगाममाइसु, नवकप्पपकप्पियविहारो॥ २॥
अइतिव्वपवरसद्धा-वसपरिणयसुद्धभावचारित्तो।
जंघावलपरिहीणो, कुल्लागपुरम्मि विहियठिई॥ ३॥
वट्टंते दुब्भिक्खे, कयजणदुक्खे कयावि सो भगवं।
पवयणमायापरिपा-लणुज्जय उज्जयविहारं॥ ४॥
आहिंडिय बहुदेसं, अवधारिय सयलदेसबहुभासं।
सीहं नामऽणगारं, गणाहिवत्ते निरूवेइ॥ ५॥
भणइ य जइ वि महायस,सयमवि त पुणसि सयलकरणिज्जं।
आयारु त्ति विचिंतिय, इय वुच्चसि तह वि अम्हेहिं॥ ६॥
उल्लसिरपवरसद्धो, चरणभरं दुद्धरं धरिज्ज सया।
सीयंतं सीसगणं, मिउमहुरगिराहि सारिज्जा॥ ७॥
जओ—
जीहाए वि लिहंतो, न भद्दओ जत्थ सारणा नऽत्थि।
दंडेण वि ताडंतो, स भद्दओ सारणा जत्थ॥ ८॥
जह सीसाइँ निकंतइ, कोई सरणागयाण जंतूणं।
एवं सारणियाणं, आयरिओ असारओ गच्छे॥ ९॥
तथा—
दव्वाइ अपडिवद्धो, अममो विहरिज्ज विविहदेसेसु।
अनियविहारया जं, जइण सुत्ते विणिद्दिट्ठा॥ १०॥
तथाहि—
अनिए य वासो समुदाण चरिया,
अन्नायउंछं पयरिक्कया य।
अप्पोवही कलहविवज्जणा य,
विहारचरिया इसिणं पसत्था॥ ११॥
इच्चाइ कहिय वुत्तो, सो एवं वच्छ विहर,अन्नत्थ।
मा ओमे इत्थ ठिओ, सीसगणो एस सीइज्जा॥ १२॥
एगागी वि अहं पुण, पहीणजंघावलो अवलदेहो।
अनलो विहरिउमन्न-त्थ तो इहं चेव ठाइस्सं॥ १३॥
इय भणिय मुणी वुत्ता, वच्छा सच्छा सया सयाकालं।
कुलवहुनाएण इमं, मा मुंचिज्जह कयावि तुमे॥ १४॥
तिन्नुच्चिय भवजलही, एयपसाया सुहेण तुब्भेहिं।
संपइ इमिणा सद्धिं,कुणह विहारं महाभागा?॥ १५॥
इह सुणिय सुमुणिवइणो,ते मुणिणो सूरिचरणठवियसिरा।

मुंचंता गुरु विरहु-स्थ सो य उत्पन्नअसुभरं ॥ १६ ॥
पडिपुन्नमन्नुभररु-द्ध कंठउट्ठिंतगग्गरगिरिल्ला ।
गुरुवयणं पडिकूखिउ, भचयंता दुक्खसंतत्ता ॥ १७ ॥
कहमवि नमिउं गुरुणो, अवराहपए खमाविउं नियए ।
ओमाइदोसरहिए, देसे पत्ता विहारेणं ॥ १८ ॥
संगमगुरू वि खित्तं, नवभागी काउ कायनिरविक्खो ।
वीसुं वसहीगोयर-विआरभूमाइसु जयइ ॥ १६ ॥
सुभिक्खे गुरुपासे कयावि सीहेण पेसिओ दत्तो ।
सो पुव्ववसहिसंठिय-सूरिं दट्टुं विचिंतेइ ॥ २० ॥
कारणवसा न कीरइ; खित्ते अवरावरे जइ विहारो ।
नवनववसहिविहारो, कीस एएहिं परिचत्तो ॥ २१ ॥
ता एस सिढिलचरणो, खणं पि न खमो इमेण संवासो ।
एवं चिंतिय वीसुं, समीववसहीइ सो ठाइ ॥ २२ ॥
भिक्खासमए गुरुणा, सह हिंडंतो विसिट्ठमाहारं ।
दुब्भिक्खवसा अलहं-तओ य जाओ कसिणवयणो ॥२३॥
तं तह निए वि सूरी, कम्मि वि ईसरगिहे गओ तत्थ ।
रेवइदोसेणेगो, सया रुयंतो सिसू अत्थि ॥ २४ ॥
सो दाउं चप्पुडियं, गुरुणा भणिओ य बाल मा रुयसु ।
गुरुतेयं असहंती, झड त्ति सा रेवई नट्ठा ॥ २५ ॥
जाओ बालो सुत्थो, तज्जणगो गहियमोयगे पत्तो ।
गुरुणा करुणानिहिणा, दवाविया ते उ दत्तस्स ॥ २६ ॥
अह मुणिपहुणा भणियं, तं गच्छसु दत्तसंपयं वसहिं ।
अहयं पि आगमिस्सं, पडिपुन्नं काउ समुयाणं ॥ २७ ॥
सड्ढगिहमेगमिमिणा, भिराउमह दंसियं सयं अहुणा ।
सेसेसु गमी दत्तो, इय चिंततो गओ वसहिं ॥ २८ ॥
गुरुणो वि अंतपंतं, गहिउं सुचिरेण आगया वसहिं ।
पन्नगविलनाएणं, मुंजंति तयं समयविहिणा ॥ २६ ॥
आवस्सयवेलाए, आलोइय सूरिणो समुवविट्ठा ।
सो निसेयंतो गुरुणा, आलोइसु सम्ममिय वुत्तो ॥ ३० ॥
स भणइ तुब्भेहिं चिय,सह परिभमिओ म्हि किमिहविडयेपि
आह गुरू सिसुविसयं, सुहुमं नणु धाइपिंडं ति ॥ ३१ ॥
दत्तो तओ दुरप्पा, अणप्पसंकप्पकप्पणाभिहओ ।
विवुक्कडकइयगिरा-ई मुणिवरं पइ इमं भणइ ॥ ३२॥
राईसरिसवमित्ताणि, परच्छिद्दाणि पिच्छसि ।
अप्पणो बिल्लमित्ताणि, पासंतो वि न पाससि ॥ ३३ ॥
इय भणिय गओ एसो, नियवसहिं तयणु तस्स सिक्खत्थं ।
पुरदेवयाइ सिग्घ, विउव्वियं दुद्दिणं गरुयं ॥ ३४ ॥
फुडफुट्टमाणबंभ-डभंडरवविरसजलहराराव ।
सो निसुणंतो भयभर-खलंतवयणो भणइ सूरिं ॥ ३५ ॥
भयवं ! बीहेमि अहं, आह गुरुएहि मम सयासम्मि ।
स भणइ तिमिरभरेणं, दिसि विदिसिं नेव पिच्छामि ॥३६॥
दीवसिहं व जलंतिं, नय खेलेणं नियंगुलिं काउं ।
दंसेऊण य गुरुणा, सो वुत्तो वच्छ ! एहि इओ ॥ ३७ ॥
तं ददठु स दुठ्ठप्पा, जंपइ दीवो वि अत्थि किमिमस्स ? ।
तो पच्चक्खीहोउं, एवं वुत्तो स देवीए ॥ ३८ ॥
हा दुट्ठ ! सेह ! निन्नेह, देहगेहाइमुक्कपडिबंधे ।
मुणिनाहम्मि इमम्मि त्रि, एवं चिंतेसि निल्लज्ज ॥ ३६ ॥
वसहिविहारकमेणं, पुणो वि इत्थट्ठियं सुगुरुमेयं ।
पाविट्ठ ! दुट्ठ धम्मिट्ठ-मन्नसी सिढिलचारित्तं ॥ ४० ॥
हा अंतपंतभोयण-परं पि कप्पेसि मुद्धरसगिद्धं ।
धिद्धी लद्धिसमिद्धं, पि दीवजुत्तं पयंपेसि ॥ ४१ ॥
दव्वाइदोसवसओ, वीयपयट्ठिएं विसुद्धसद्धाए ।
भावचरित्तपवित्ते, किह अवमन्नसि इमे गुरुणो ? ॥ ४२ ॥
इय अणुसिट्ठो सो दे-वयाइसंजायगुरुयअणुतावो ।
गुरुपयलग्गो खामइ, पुणो पुणो नियमवराहं ॥ ४३ ॥
आलोइयाइयारो, दत्तो गुरुदत्तविहियपच्छित्तो ।
विणउज्जुओ सुनिम्मल-चारित्ताराहगो जाओ ॥ ४४ ॥
संगमसूरी वि चिरं, विहिसेवावल्लिपल्लवणमेहो ।
निरुवमसमाहिजुत्तो, सुगइं पत्तो गयकिलेसो ॥ ४५ ॥
इत्थं विशुद्धविधिसेवनतत्परस्य,
श्रीसङ्गमस्य सुगुरोश्चरितं निशम्य ।
द्रव्यादिदोषनिहता अपि साधुलोकाः,
श्रद्धा विधत्त चरणे प्रवरां पवित्रे ॥ ४६ ॥ "

इति सङ्गमसूरिकथा । ध० र० ३ अधि० २ लक्ष० ।

**संगय**-सङ्गत-त्रि० । उपपन्ने, चं० प्र० २० पाहु० । स्था० । ज्ञा० । सम्यग्ज्ञानदर्शनचारित्रात्मतया गतं सङ्गतम् । आचा० १ श्रु० १ अ० ३ उ० । जी० । औ० । उचिते, ज्ञा०१श्रु० १ अ० । उपपत्तिभिरबाधिते, प्रश्न० २ संव० द्वार । स० । रा० । व्याप्ते, द्वा० १७ द्वा० । सङ्गतं—गमनम् । सविलासे चंक्रमणे, सू० प्र० २० पाहु० । " संगयगयहसियभणियचेट्ठिय " सङ्गतं—सुश्लिष्टं यद्गतं—गमनं हंसगमनवत् हसितं हसनं कपोलविकासि प्रेम सन्दर्शि च भणितं भणनं गम्भीरं मन्मथोद्दीपनं चेष्टितं—चेष्टनम् । जी० ३ प्रति० ४ अधि० । विपा० ।

**संगयपास**-सङ्गतपार्श्व-त्रि० । सङ्गतौ देहप्रमाणोचितौ पार्श्वौ येषां ते तथा । जी० ३ प्रति० ४ अधि० । देहप्रमाणोचितपार्श्वेषु, औ० ।

**संगयय**-सङ्गतक-पुं० । उज्जयिन्यां नगर्यां देविलसुते, आव० ४ अ० । ( 'सव्वकामविरइ' शब्दे कथां वक्ष्ये । )

**संगर**-संगर-न० । समरे, पाइ० ना० । सङ्केते, 'सङ्कर' त्ति सङ्केतोऽभिधीयते । ओघ० ।

**संगरिगाफल**-साङ्गरिकाफल-न० । बब्बूलफले, सेन० । प्रवचनसारोद्धारस्य तृतीयशतकस्य त्रयस्त्रिंशत्तमगाथाया 'संगरिगाइम्मि अप्पडिए' एतत्पदव्याख्याने श्रीआनन्दसूरिणा—सङ्गरिकादौ अपतिते पतिते तु द्विदलदोषसम्भवान्न कल्पते घोलादि इत्युक्तमस्ति, एतदुक्तिबलात् सांगरिकाफलं बब्बूलफलमपि द्विदलत्वेन खरतरैरभ्युपगम्यते, आनन्दसूरिश्च वडगच्छीय. श्रूयते, तेन तदुक्तं कथमात्मनां प्रमाणं नास्तीति ? प्रश्नेऽत्रोत्तरम्-आनन्दसूरिकृतग्रन्थस्तु अद्य यावद् दृष्टो नास्ति, तेन तद्दर्शने तद्विषयविचारो युक्तिमान्नान्यथेति ॥ २६१ ॥ सेन० ३ उल्ला० ।

**संगल**-सम् घट्-धा० । संघटने, " समो गल " ॥ ८।४। ११३ ॥ अनेन सम्पूर्वस्य घटतेर्वैकल्पिको गलादेशः । संगलइ । संघटते । प्रा० ४ पाद ।

**संगलिया**-सङ्कलिका-स्त्री० । कलिकायाम् , अणु० ।

**संगह**-संग्रह-पुं० । संग्रहणं संग्रह. । स्वीकरणे,स्था० ८ ठा० ३ उ० । सग्रहो द्विधा-द्रव्यतो, भावतश्च । तत्र द्रव्यत.-आहारोपध्यादीनाम् , भावतः सूत्रार्थौ । व्य० ३ उ० ।

सम्प्रति संग्रहकुशलो व्याख्येयस्तत. संग्रहप्ररूपणार्थमाह-

दव्वे भावे संगहो , दव्वे ऊ उक्खहारमादी उ ।
साहिज्जादी भावे, परूवणा तस्सिमा होइ ॥ १५० ॥

संग्रहो द्विधा—द्रव्ये , भावे च । तत्र द्रव्ये-उक्षादिकः , आहारादिकश्च । उक्षा-बलीवर्द. । भावे भावविषय. साहाय्यादिकस्य भावसंग्रहस्य इयं-वक्ष्यमाणा भवति प्ररूपणा ।

तामेवाह—

साहिज्जवयण वायण-अणुभासण देसकालसंसमरणं ।
अणुकंपणमणुसासण-पूयणमब्भंतरं करणं ॥ १५१ ॥
संभुंजणसंभोगे, भत्तोवहिअन्नमन्नसंवासो ।
संगहकुसल गुणनिही,अणुकरणकारावणनिसग्गो॥१५२

'साहिज्जं' सहायकृत्यकरणं वचनमाभापितस्य इच्छाकारभणनम्,अथवा-अभिग्रहस्य-गृहीतमौनव्रतस्य वचनविपयेन केनाऽप्याभाषणं कृते तस्योत्तरभणनं वचन ' वायण ' त्ति वाचनया क्लान्ते गुरौ साधूना ददाति वाचनम् । अनुभाषणं नाम-आचार्येण भाषिते पश्चाद्भाषणं, न पुन. प्रधानीभूयाचार्यभाषणादग्रेऽवभाषते । देशकालसंस्मरणं नाम अस्मिन् देशे अस्मिन् काले च कर्त्तव्यमिदं ग्लानादीनामिति विज्ञाय यद्देशे यत्काले स्मारयत्याचार्याणा ग्लानादीनामनुकम्पनं-दु'खार्त्तस्यानुकम्पाकरणं वालवृद्धासहायान् यथादेशकालमनुकम्पते इति भाव । (अनुशासनस्य व्याख्या 'अणुसासण' शब्दे प्रथमभागे ४२१ पृष्ठे गता।) पूजनं नाम यथाक्रमं गुर्वादीनामाहारादिसम्पादनविनयकरणम् ,यदि वा-ज्ञानाचारादिपु पञ्चस्वाचारादिपु यथायोगमुद्यच्छतामुपबृंहणम् ,अभ्यन्तरकरणं नाम-द्वयो साध्वोर्गच्छमेढीभूतयोरभ्यन्तरे कुलादिकार्थनिमित्तं परस्परमुल्लपतोस्तृतीयस्योपश्रुश्रूषोर्वहिष्करणम् । अथवा—यदिष्ट. सन्नभ्यन्तरे गत्वा तत् गच्छादिप्रयोजनं ब्रूते एतदभ्यन्तरकरणम् । यदि वा-तेन सह ये आत्मभावं मन्यन्ते तानपि तथाऽनुवर्त्तयति यथा त तेर्जास्वनमभिमन्यन्ते एतदभ्यन्तरकरणम् ॥१५१॥ संभोजनं नाम-यत्साभोगिकै सह भोजनसंयोग., 'भत्तोवहीति' यदि भक्तमुपधिं वा संभोगयति । किमुक्तं भवति-यद्यस्योपकारक भक्तमुपधिर्वा तत्स्वयमुत्पाद्य तस्मै ददाति ततो गृह्णाति वा तथा ' अन्नमन्नं संवासे ' इति साम्भोगिकै परस्परमेकत्र वसनमेतानि कुर्वाण. संग्रहकुशल । व्य० ३ उ० । (अन्यदत्रैव ' सगहकुसल ' शब्दे वक्ष्यते ।) संगृह्णातीति संग्रह । संग्राहके, व्य० ३ उ० । शिष्याणा श्रुतोपादाने, स्था० ५ ठा० ३ उ० । व्य० । संग्रहणं संग्रह । व्यसनादौ सहायकरणे , स्था० १० ठा० ३ उ० । शिष्याणां संग्रहणे, प्रति० । पं० भा० ।

दव्वे भावे संगहो , दव्वे आहारमादिएहिं तु ।
सिक्खावणमगिलाए, गेल्लणे यावि करणं तु ॥
भावम्मि संगहो खलु, णाणादी तत्तु होति बोधव्वो ।
जह वट्टावेउं वा, गच्छं तु उवायकुसले तु ॥
संसारभउव्विग्गो, संविग्गो सोऽवि होति णायव्वो ।
एतेसिं तु पदाणं, चउभंगा होंति एक्केक्के ॥
तदुभयविसारदो खलु, न संगहे कुसलो एत्थ चउभंगो।
तदुभयवाए कुसले, एत्थं पि तु होंति चउभंगा ॥
तदुभयसंविग्गेहि वि, चउभंगो एव होति कायव्वो ।
एवं गुणजातियस्स, पव्वावेउं तु कप्पति तु ॥
पव्वावेंतो भणित्ता । पं० भा० १ कल्प।

" दव्वे भावे संगहो , दव्वे आहारवत्थमादीहिं । भावे णाणादीहि तु, संगेण्हति संगहो तेण " ( प० भा० ५ कल्प । ) इत्युक्तलक्षणायां गौणानुज्ञायाम् , नं० । उग्रादिक्षत्रियसघे, ति० ।

उग्गा भोगा रायम-खत्तिया संगहो भवे चउहा ।
आरक्खि ( ग ) गुरुवयंसा, सेसाओ खत्तिया होंति ॥

ति० । संगृह्णाति सामान्यरूपतया सर्ववस्तु क्रोडीकरोतीति सग्रह. । ग० २ अधि० । अष्ट० । स्था० । अनु० । सूत्र० । (अत्रत्या व्याख्या ' जाइ ' शब्दे चतुर्थभागे १४३८ पृष्ठे गता ।)

संगहियपिंडियत्थं, संगहवयणं समासतो विंति ।

सम्-आभिमुख्येन गृहीत उपात्त संगृहीत , पिण्डित एकजातिमापन्न अर्थो विपयो यस्य तत्संगृहीतपिण्डितार्थम् । संग्रहस्य वचनं संग्रहवचनं समासत. सक्षेपेण ब्रुवते तीर्थकरगणधरा. । किमुक्तं भवति-सामान्यप्रतिपादनपर. संग्रहनय , शब्दव्युत्पत्तिश्चैवम्—संगृह्णाति अशेपविशेपविरोधनद्वारेण सामान्यरूपतया समस्तं जगदादत्ते इति सग्रह । आ० म० १ अ० ।

अथ संग्रहनयं विवृणोति-

संग्रहो द्विविधो ज्ञेयः, सामान्याच्च विशेपतः ।
द्रव्याणि चाविरोधीनि, यथा जीवाः समे समाः॥१२॥

संगृह्णातीति सग्रह , अथवा—संगृह्यते अनेन सामान्यविशेपाविति संग्रह , स च द्विविध'—द्विप्रकारस्तयोरेक सामान्यौघात् सामान्यसंग्रह , १ द्वितीयो विशेपाद् व्यक्तेर्विशेपसंग्रह २, इत्थ द्विभेद । अथानयो प्रत्येकमुदाहरणे द्रव्याणि धर्मास्तिकायादीनि अविरोधीनि परस्परविरोधरहितानीत्यर्थ । एकद्रव्यसद्भावे द्रव्यषट्कमेव प्राप्यते इति प्रथमोदाहरणम् १ , यथा च जीवा सर्वेऽविरोधिनो जीवा हि संसृतिविपर्यये सिद्धिविपर्यये ज्ञानन्ता वर्त्तन्ते । तेषां निरुक्ति -जीवति चैतन्यादिति जीव । अथ च जीव प्राणधारणे, तत्र प्राणा द्विधा-द्रव्य-भावभदा-

त्। तत्र च द्रव्यप्राणा दश, भावप्राणाश्चत्वारः । मोक्षप्राप्तौ यद्यपि द्रव्यप्राणाना कर्मजन्यानां सर्वथा क्षयस्तथाऽपि जीवनलक्षणा जीवस्य भावप्राणा· सहचारिणः कर्मासद्भावेऽपि भवन्ति सिद्धानामपि जीवत्वात् भावप्राणा भवन्ति, अतो मुक्ता संसारिणश्च जीवाः। मुक्ता पुनः पञ्चदशभेदा ,संसारिणो-देवनारकतिर्यङ्मनुष्यभेदाच्चतुर्द्धा, तत्रान्तिमभेदयो· पञ्चभेदा , तत्रापि मनुष्यस्य पञ्चाशल्लक्षण एक एव भेद ,तिरश्च एकस्मादारभ्य पञ्च यावत् । अक्षभेदादेकाक्षद्व्यक्षत्र्यक्षचतुरक्षपञ्चाक्षभेदात् पञ्च भवन्ति। एवं भेदतोऽपि जीवा· सर्वे अविरोधिन , संग्रहाद् विशेषसंग्रहभेदः२। अथ च संग्रहस्वरूपमुपवर्णयन्ति-सामान्यमात्रग्राही परामर्शः संग्रह इति,सामान्यमात्रमशेषविशेषरहितम्। स तु द्रव्यत्वादिकं गृह्णातीत्येवंशीलः, समेकीभावेन विशेषराशिं गृह्णातीति संग्रहः। अयमर्थ·-स्वजातेर्दृष्टेष्टाभ्यामविरोधेन विशेषाणामेकरूपतया यद्ग्रहणं स संग्रह इति। अनुभेदानादर्शयन्ति, अनुभयविकल्प परः अपरश्चेति। तत्र परसंग्रहमाहुः-अशेषविशेषेष्वौदासीन्यं भजमान· शुद्धद्रव्यं सन्मात्रमभिमन्यमान परसंग्रह इति। परामर्श इति, अग्रेतनेऽपि योजनीयमुदाहरति—विश्वमेकं सदविशेषादिति 'यथे' ति अस्मिन्नुक्ते हि सदिति ज्ञानाभिधानानुवृत्तिलिङ्गानुमितिसत्ताकत्वेनैकत्वमशेषार्थानां संगृह्यते ।

अथ संग्रहनयभेदं दर्शयन्नाह-

संग्रहभेदकव्यव-हारोऽपि द्विविधः स्मृतः ।
जीवाजीवौ यथा द्रव्यं,जीवाः संसारिणः शिवाः ॥ २१॥

संग्रहस्य नयस्य यो भेदको विषयस्तस्य दर्शकः स व्यवहारनयः कथ्यते, व्यवह्रियते संग्रहविषयोऽनेनेति व्यवहार·, सोऽपि द्विविधः—द्विप्रकार· स्मृत·-कथितः, तस्यैव-पूर्वोदितस्य संग्रहनयस्य भेदवदस्याऽपि भेदभावना कर्त्तव्या,यत एक· सामान्यसंग्रहभेदकव्यवहार· १,द्वितीयो विशेषसंहग्रहभेदकव्यवहारः २,एवं भेदद्वयम्। अथ तयोरुदाहरणे तत्राद्यस्योदाहृतिर्यथा जीवाजीवौ द्रव्यम्। अत्र जीवस्य चेतनस्याजीवस्याचेतनस्य संग्रहसामान्यविषयत्वाद् द्रव्यमिति एकैव संज्ञा। कथम्? द्रवति तांस्तान् पर्यायान् गच्छतीति त्रिकालानुयायी यो वस्त्वंशस्तद् द्रव्यमिति व्युत्पत्त्या स्वगुणपर्यायवत्त्वेनोभयोरपि जीवाजीवयोर्द्रव्यपदं साधारणमित्यर्थो· जीवद्रव्यमजीवद्रव्यमिति सामान्यसंग्रहभेदकव्यवहार· १, अथ जीवा· संसारिण ,सिद्धाश्च अत्र जीवानामनन्तानां चैतन्यवता संसारित्वं सिद्धत्वं च विशेषव्यवहार·,अतो द्वितीयभेद· विशेषसंग्रहभेदकव्यवहार· २, एवमुत्तरोत्तरविवक्षया सामान्यविशेषवत्त्वं भावनीयम्। द्रव्या० ६ अ० । ( संग्रहस्वरूपोपवर्णनं 'णय' शब्दे चतुर्थभागे १८४६ पृष्ठे गतम्। )

प्रकारान्तरेण संग्रहं लक्षयति—

संग्रहः संगृहीतस्य, पिण्डितस्य च निश्चयः ।
संगृहीतं परा जातिः, पिण्डितं च परा स्मृता ॥ २२ ॥

संग्रह इति—संगृहीतस्य पिण्डितस्य च निश्चयः संग्रहस्तत्र संगृहीतं परा-सर्वव्यापिका जातिर्मताऽऽख्याता महासामान्यमिति यावत्। पिण्डितं त्वपरा देशव्यापिका—जातिर्द्रव्यत्वादिसामान्यमिति यावत् । यद्यप्येतदुभयग्राहित्वं प्रत्येकग्राहिण्यवाप्तप्रत्येकग्राहित्वं चाननुगतं तथाऽपि सामान्यमात्राभ्युपगमप्रवणैकदेशबोधत्वं संग्रहनयत्वमिति लक्षणं बोध्यम्, 'संगहे अपिण्डिअत्थं संगहवयणं समासओ बिंति' त्ति सूत्रस्वारस्याच्चेत्थमुक्तिः। यद्वा-नैकगमाद्यपगतार्थपदं संग्रहश्च विशेषविनिर्मोकोऽशुद्धविषयविनिर्मोकश्चेत्यादि यथासम्भवमुपादेयस्तेन न प्रस्थले सामान्यविधयाऽसंग्रहात्तत्स्थलप्रदर्शितसंग्रहनयेऽव्याप्तिरित्यादिकं बोध्यम् । "अर्थानां सर्वैकदेशग्रहणं संग्रहः" इति तत्त्वार्थभाष्यम्। अत्र सर्वं सामान्यम् एकदेशश्च विशेषस्तयोर्ग्रहणं संग्रहः सामान्यैकशेषस्वीकार इत्यर्थः। अयं हि घटादीनां भवनानर्थान्तरत्वाद्भावांश एव च प्रत्यक्षादिप्रमाणवृत्तेस्तन्मात्रत्वमेव स्वीकुरुते, घटादिविशेषविकल्पस्त्वविद्योपजनित एवेति मन्यते, अतद्व्यावृत्तिव्यवहारोऽप्यस्य प्रतियोगिसापेक्षत्वेन कल्पनामूल एवायं चाऽशुद्धसंग्रहविषय एव तदवान्तरभेदास्तु यत् यत् सामान्यान्तर्भावेन विधिव्यवहारं प्रवर्त्तयन्ति तत्तत्सामान्यैकशेषस्वीकारिणो द्रष्टव्या·, तादृशतादृशसंग्रहनयविचारे च तत्तदवान्तरधर्म्माकारश्रुतिनिश्रितं मतिज्ञानमपि जायत एव, रूपविशेषवान्मणि· पद्मराग इत्युपदेशार्थप्रतिसन्धानानन्तरं चाक्षुषोपयोगे पद्मरागाकारमिव प्रत्यक्षमिति कार्यविशेषादपि तद्विशेष इति दिक्।

संग्रहावान्तरभेदैरेव संग्राह्यार्थव्यवहारभेदमुपदर्शयति—

एकद्वित्रिचतुःपञ्च-षड्भेदा जीवगोचराः ।
भेदाभ्यामस्य सामान्य-विशेषाभ्यामुदीरिताः ॥ २३ ॥

एकेति—चेतनत्वेन जीव एकः, त्रसस्थावराभ्यां द्विविधः, पुंवेद १ स्त्रीवेद २ नपुंसकवेदैस्त्रिविधः, देवमनुष्यतिर्यग्नारकगतिभेदैश्चतुर्विधः, एकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियभेदात्पञ्चविधः, पृथ्वीकायाप्कायतेजस्कायवायुकायवनस्पतिकायत्रसकायभेदात् षड्विध·, इत्येवं ये· जीवगोचराः संग्रहप्रकारा उदीरिताः सिद्धान्ते तेऽस्य संग्रहनयस्य सामान्यविशेषाभ्यां-सामान्यसंग्रहविशेषसंग्रहलक्षणाभ्या भेदाभ्यामवगन्तव्याः ।

नैगमव्यवहारयोरपेक्षया यथाऽस्य शुद्धत्वं तथाह-

उपचारा विशेषाश्च, नैगमव्यवहारयोः ।
इष्टा ह्यनेन नेष्यन्ते, शुद्धार्थपक्षपातिना ॥ २४ ॥

उपचारा इति—उपचारा· गौणव्यवहारा विशेषाश्च तत्तद्व्यावृत्तिरूपा नैगमव्यवहारयोरिष्टा शुद्धार्थपक्षपातिना एतदुभयापेक्षया स्वविषयोत्कर्षाभिमानिना हि निश्चितमनेन संग्रहनयेन नेष्यन्ते, तथा च-नैगमव्यवहारसंमतोपचारविशेषानवलम्बित्वादस्य शुद्धत्वं स्वसमवायोचितोपचारविशेषयो क्वचिदवलम्बनेनाऽपि नापोद्यत इति भाव·। नयो०। स्या०। सम्म०। अत्यर्थमतृष्णया धनमेलने, अनु०। संगृह्यतेऽनेनेति संग्रहः। "पुन्नाम्नि घः" ॥ ५। ३। १३० ॥ इति करणे घ ( ञ् ) प्रत्ययः। संग्राहके, पं० सं० १ द्वार।

संगहएक्कय-संग्रहैकक-पुं० । एककरूपे संग्रहे, स्था० ४ ठा०२ उ० । ( व्याख्या 'एक्कक्क' शब्दे तृतीयभागे १ पृष्ठे गता । )

संगहकाय-संग्रहकाय-पुं० । संग्रहणं—संग्रहः, स एव कायः संग्रहकायः । कायभेदे, आव० ५ अ० ।

संगहकुसल-संग्रहकुशल-पुं० । उपध्यादिना साधूनां संग्रहकरणनिपुणे, व्य० । स च ( संग्रहकुशलः ) पुनः कथंभूत इत्याह-संग्रहानुगता ये गुणास्तेषां निधिरिव गुणनिधिः, तथा-अनुकरणं नाम-यत्सीवनलेपादि कुर्वन्तं दृष्ट्वा ब्रूते—इच्छाकारेण तवेदमहं करिष्यामि कुरुते वा, कारापणं वा न यत्स्वयं करणे अकुशलानन्यानपीच्छाकारेण कारापयति तस्मिन् निसर्गः स्वभावो यस्य सोऽनुकरणकारापणनिसर्गः, इत्थंभूतस्तस्य स्वभावो यदि अनभ्यर्थित एव करोति कारयति चेति भावः ।

सम्प्रति कतिपयपदव्याख्यानार्थमाह-

वयणे तु अभिग्गहिय-स्स केणऽवी तस्स उत्तरं कुणति ।
जा जयणाए किएहं, ते उ गुरुम्मी वयणं देइ ॥१५३॥

वचने-वचनविषये अभिग्रहिकस्य-गृहीताऽभिग्रहप्रतिपन्नमौनव्रतस्येत्यर्थः । केनापि प्रश्ने कृते सति तस्योत्तरं यद् भणत्येष वचनसंग्रहकुशलः । पश्चार्द्धं सुगमम् ।

साहूणं अणुभासइ, आयरिएणं तु भासिए संते ।
सारेयायरियाणं, देसे काले गिलाणादि ॥ १५४ ॥

अत्र साधूनामिति पदं पश्चात् गाथाया सम्बध्यते ।

शेषपदव्याख्यानार्थमाह—

दुक्खत्ते अणुकंपा, अणुसासणभज्जमाणरक्खो वा ।
जो वा जहुत्तकारी, अणुसासणकिच्चमेयं तु ॥ १५५ ॥

इयमपि व्याख्यातार्था । ( व्य० ) ( अभ्यन्तकरणम् 'अब्भंतरकरण' शब्दे प्रथमभागे व्याख्यातम् । )

संभुंजण संभोगे-णभुंजएज्जस्स कारगं भत्तं ।
तं घेत्तुमप्पणा से, देइ एमेव उवहिं पि ॥ १५६ ॥

संभोजनं नाम-यत्संभोगेन योजयति । साम्भोगिकैः सहैकत्र भुङ्क्ते इति । तथा यद्यस्य कारकम्-उपकारकं भक्तं तदात्मना गृहीत्वा तस्मै ददाति । एवमेवोपधिमपि उपधिरपि यो यस्योपकारकस्तं स्वयमुत्पाद्य तस्मै ददाति ।

एतेन 'संभोगे भत्तोवहीति' व्याख्यात परस्प—
रमेकत्र संवास सुप्रतीतत्वान्न व्याख्यातः ।

अणुकरण सिव्वणले-वणादिअणुभासणा उ दुम्मेहो ।
एरिसो तस्स निसग्गा,जं भणियं एरिससहावो ॥१५७॥

अनुकरण नाम-सीवनलेपनादि स्वयं किंचित् कुर्वन्तं दृष्ट्वा इच्छाकारेणानुज्ञाप्य करोति । तथा दुर्मेधसि स्वयं सीवनलेपनादि कर्तुमनुजानाति, स्वयं तावत्करोत्येव किंत्वन्यानपि भाषते । यथा कुरुतैतस्य महानुभागस्यैतत्करणम् । ईदृशस्तस्यानुकरणे कारापणे च निसर्गः स्वभावः । "जं भणियं" ति किमुक्तं भवतीत्यर्थ —ईदृशस्वभाव उक्तः संग्रहकुशल । व्य० ३ उ० । ( उपग्रहकुशलः 'उवग्गहकुशल' शब्दे द्वितीयभागे व्याख्यातः । )

संगहज्झाण-संग्रहध्यान-न०।संग्रहोऽत्यर्थमतृष्णया धनमेलनं तस्य ध्यानम् । मध्यमवणिजि इव धनसंग्रहाध्यवसाये, अनु० ।

संगहट्ठया-संग्रहार्थता-स्त्री० । संग्रह'-शिष्याणां श्रुतोपादानं स एवार्थः प्रयोजनं तद्भावस्तत्त्वम् । संग्रह एवार्थो यस्य स संग्रहार्थः । स्था० ५ ठा० ३ उ० । कथं नु नामैते शिष्याः सूत्रार्थसंग्राहकाः सम्पत्स्यन्ते इत्येवरूपे संग्रहनिमित्ते, आ० म० १ अ० ।

संगहट्ठाण-संग्रहस्थान-न० । संग्रहो ज्ञानादीनां शिष्याणां वा तस्य स्थानानि-हेतवः संग्रहस्थानानि ज्ञानशिष्ययोः संग्रहहेतौ, ग० १ अधि० । स्था० ।

संग्रहस्थानसूत्रम्-

आयरियउवज्झायस्स णं गणंसि सत्त संगहठाणा पन्नत्ता, तं जहा-आयरियउवज्झाए गणंसि आणं वा धारणं वा संपउंजित्ता भवति,एवं जधा पंचट्ठाणे०जाव आयरियउवज्झाए गणंसि आपुच्छियचारी यावि भवति नो अणापुच्छियचारी यावि भवति। आयरियउवज्झाए गणंसि अणुप्पन्नाइं उवगरणाइं सम्मं उप्पाइत्ता भवति,आयरियउवज्झाए गणंसि पुव्वुप्पन्नाइं उवकरणाइं सम्मं सारक्खेत्ता संगोवित्ता भवति णो असम्मं सारक्खेत्ता संगोवित्ता भवइ । आयरियउवज्झायस्स णं गणंसि सत्त असंगहठाणा पन्नत्ता, तं जहा-आयरियउवज्झाए गणंसि आणं वा धारणं वा नो सम्मं पउंजित्ता भवति, एवं०जाव उवगरणाणं नो सम्मं सारक्खेत्ता संगोवेत्ता भवति । ( सू० ५४४ )

'आयरिए' त्यादि, आचार्योपाध्यायस्येति समाहारद्वन्द्वः कर्मधारयो वा। गणे गच्छे संग्रहो ज्ञानादीनां शिष्याणां वा तस्य स्थानानि—हेतवः संग्रहस्थानानि, आचार्योपाध्यायो गणे आज्ञां वा—विधिविषयमादेशं धारणां वा-निषेधविषयमादेशमेवं सम्यक् प्रयोक्ता भवति, एवं हि ज्ञानादिसंग्रहः शिष्यसंग्रहो वा स्याद्, अन्यथा तद्भ्रंश एवेति प्रतीतम्। यतः-"जहि नत्थि सारणा वा-रणाय पडिचोयणा य गच्छम्मि । सो उ अगच्छो गच्छो,मोत्तव्वो संजमत्थीहिं ॥१॥" इति । 'एवं जहा पंचट्ठाणे त्ति' तच्चेदम्—'आयरियउवज्झाए णं गणंसि अहाराइणियाए कितिकम्मं पउजित्ता भवति २ आयरियउवज्झाए णं गणंसि जे सुयपज्जवजाते धारेइ ते काले काले सम्मं अणुप्पवाइत्ता भवइ ३ आयरियउवज्झाए णं गणंसि गिलाणसेहवेआवच्चं सम्मं अब्भुट्ठित्ता भवइ ४ आयरियउवज्झाए णं गणंसि आपुच्छियचारी यावि हवइ, नो अणापुच्छियचारी ५, स्थानद्वयं त्विहैवेति, व्याख्या तु सुकरैव, नवरमापृच्छनं गच्छस्य, यत उक्तम्—" सीसे जइ आमंते, पडिच्छगा तेण बाहिरं भावं । अह इयरे तो सीसा, तेव समत्तम्मि गच्छंति ॥ १ ॥

तरुणा वाहिरभावं, न य पडिलेहोवहीणा किइकम्मं। मूलगपत्तसरिसगा, परिभूया वच्चिमो थेरा॥ २॥" इति। तथा—'अगुप्पन्नाइं' ति अनुत्पन्नानि—अलब्धानि उपकरणानि वस्त्रपात्रादीनि सम्यग्—एषणादिशुद्धया 'उत्पादयिता' सम्पादनशीलो भवति, संरक्षयिता—उपायेन चौरादिभ्यः सङ्गोपयिता—अल्पसागारिककरणेन मलिनतारक्षणेन वेति। एवं संग्रहस्थानविपर्ययभूतमसंग्रहसूत्रमपि भावनीयमिति। स्था० ७ ठा० ३ उ०।

संगहणी-संग्रहणी-स्त्री०। संग्रहगाथायाम्, स०।

संगहदाण-संग्रहदान-न०। दानभेदे, संग्रहणं संग्रहो व्यसनादौ सहायकरणं तदर्थं दानं संग्रहदानम्। अथवा-भेदाद्दानमपि संग्रह उच्यते, । आह च—'अभ्युदये व्यसने वा, यत् किंचिद्दीयते सहायार्थम्। तत्संग्रहतोऽभिमतं, मुनिभिर्दानं न मोक्षाय॥ १॥' इति। स्था० १० ठा० ३ उ०।

संगहपरिण्णा-संग्रहपरिज्ञा-स्त्री०। संग्रहः स्वीकरणं तत्र परिज्ञानं नामाभिधानम्। अष्टम्यां गणिसम्पदि, स्था० ८ ठा० ३ उ०। दशा०। (संग्रहप्रतिज्ञायाः व्याख्या 'गणिसंपया' शब्दे तृतीयभागे ८२६ पृष्ठादारभ्य द्रष्टव्या।)

संगहसुत्त-संग्रहसूत्र-न०। प्रभूतार्थसंग्राहके सूत्रे, सूत्र० १ श्रु० १ अ० १ उ०।

संगहाभास-संग्रहाभास-पुं०। अयथार्थसंग्रहनये, रत्ना० ७ परि०। (सत्ताद्वैतं कुर्वाणः 'णय' शब्दे चतुर्थभागे १६०३ पृष्ठे व्याख्यात.।)

संगहिय-संगृहीत-न०। भावे क्तः प्रत्यय.। सामान्याभिमुख्येन ग्रहणे अनुगमे, सर्वव्यक्तिष्वनुगतस्य सामान्यस्य प्रतिपादने, विशे०। अनु०। आ० चू०। दृढीकृते, जं० ३ वक्ष०। शिष्यत्वेनाश्रिते, आभिमुख्येन गृहीते, आ० म०१ अ०। आ० चू०। आश्रिते, स्था० ८ ठा० ३ उ०।

संगहुवग्गहणिरय-संग्रहोपग्रहनिरत-त्रि०। संग्रह उपदेशादिना, उपग्रहो वस्त्रादिना, व्यत्यय इत्यन्ये तत्र निरतः। संग्रहोपग्रहयोरासक्ते, पं० व ४ द्वार।

संगाम-संग्राम-पुं०। रणशिरसि, सूत्र० १ श्रु० ३ अ० १ उ०। स्था०। आचा०। प्रश्न०। महाजनसमक्षकलहे, तं०। संग्रामे हता देवलोकं यान्ति। भ० ७ श० ६ उ०।

देवे णं भंते! महड्ढिए ०जाव महे सक्खे रूवसहस्सं विउव्वित्ता पभू अन्नमन्नेणं सद्धिं संगामं संगामित्तए?, हंता पभू। ताओ णं भंते! बोंदीओ किं एगजीवफुडाओ अणेगजीवफुडाओ?, गोयमा! एगजीवफुडाओ णो अणेगजीवफुडाओ। तासि णं भंते! बोंदीणं अंतरा किं एगजीवफुडा अणेगजीवफुमा?, गोयमा! एगजीवफुडा नो अणेगजीवफुडा। पुरिसेणं भंते! अंतरेणं हत्थेण वा एवं जहा अट्ठमसए तइए उद्देसए० जाव नो खलु तत्थ सत्थं कमति। (सू०-६३५)

'देवे ण' मित्यादि, 'तासिं बोंदीणं अंतर' त्ति तेषां विकुर्वितशरीराणामन्तराणि 'एवं जहा अट्ठमसए' इत्यादि अनेन यत्सूचितं तदिदम्-'पाएण वा हत्थेण वा अंगुलियाए वा सिलागाए वा कट्ठेण वा किलिंचेण वा आमुसमाणे वा आलिहमाणे वा विलिहमाणे वा अन्नयरेण वा तिक्खेणं सत्थजाएणं आछिंदमाणे वा विछिंदमाणे वा अगणिकाएण वा समोडहमाणे वा तेसिं जीवप्पएसाणं आवाहं वा वावाहं वा करेइ छविच्छेयं वा उप्पाएइ?, णो इणट्ठे समट्ठे' त्ति व्याख्या चास्य प्राग्वत्। भ० १८ श० ७ उ०। (रथमुशलसंग्रामवक्तव्यता 'रहमुसल' शब्दे षष्ठे भागे गता।) (देवासुरसंग्रामवक्तव्यता 'देवासुरसंगाम' शब्दे चतुर्थभागे उक्ता।)

संग्रामकाल-संग्रामकाल-पुं०। परानीकयुद्धावसरे, सूत्र० १ श्रु० ३ अ० ३ उ०।

संगामरह-संग्रामरथ-पुं०। संग्रामयोग्ये रथे, यस्योपरि प्राकारानुकारिणी कटीप्रमाणा फलकमयी वेदिका क्रियते यत्रारूढैः संग्राम. क्रियते। अनु०। वृ०।

संगामसंकड-संग्रामसङ्कट-न०। संग्रामसहने, प्रश्न० ३ आश्र० द्वार।

संगामसीस-संग्रामशीर्ष-न०। संग्राममूर्धनि, आचा० १ श्रु०६ अ० ३ उ०। "एस संगामसीसे वियाहिए।" संग्रामशिरसि परानीकनिशिताकृष्टकृपाणानि यत्र प्रभासञ्चलितोद्यतसूर्यत्विड्डुद्भूतविद्युन्नयनचमत्कृतिकारिणि कृतकरणेऽपि सुभटश्चित्तविकारं न विधत्ते एवं मरणकालेऽपि समुपस्थिते परिकर्मितः मतेरप्यन्यथाभावः कदाचित्स्यादतो यो मरणकाले न मुह्यते स पारगामी। आचा० १ श्रु० ६ अ० ५ उ०।

संगामिय-सांग्रामिक-त्रि०। संग्रामप्रयोजने, स्था० ५ ठा० १ उ०। भ०। ज्ञा०।

संगामिया-सांग्रामिकी-स्त्री०। या सग्रामकाले समुपस्थिते सामन्तादीनां ज्ञापनार्थं वाद्यते। कृष्णवासुदेवस्य भेर्य्याम्, आ० चू० १ अ०। विशे०। आ० म०।

संगार-सङ्गार-पुं०। सङ्केते, सूत्र० १ श्रु० १ अ० १ उ०। भ०। द० प०। आ० म०। वृ०। स्था०। ज्ञा०। आचा०।

संगारा-सङ्गारा-स्त्री०। प्रव्रज्याभेदे, 'संगारमन्निणाते, सत्तविवाकासि जइ तु संगारं।' पं० भा० १ कल्प। पं० चू०।

संगारदत्त-सङ्गारदत्त-त्रि०। सङ्गार.-सङ्केतः स दत्तो यस्य शैक्षस्य स संगारदत्तः। आहिताग्न्यादिराकृतिगणत्वात् क्तान्तस्य परनिपात.। कृतसङ्केते शिष्यादिके, वृ० ३ उ०।

संगारपवज्जा-सङ्गारप्रव्रज्या-स्त्री०। प्रव्रज्याभेदे, स्था०। ('पवज्जा' शब्दे पञ्चमभागे ७३० पृष्ठे व्याख्या गता।)

संगारसमय-सङ्गारसमय-पुं०। सङ्गारः सङ्केतस्तद्रूप. समय· सङ्गारसमय.। सङ्केतरूपे समयभेदे, सूत्र० १ श्रु० १ अ० १ उ०।

संगास-सङ्काश-त्रि० । सदृशे, उत्त० ३४ अ० । छायाविशेषे, आ० म० १ अ० ।

संगिय-स्वाङ्गिक-न० । परिभुक्तप्राये, स्था० ४ ठा० ३ उ० । आचा० ।

संगिया-सङ्गिता-स्त्री० । सङ्गो यस्यास्ति स सङ्गी तद्भावस्तत्ता । द्रव्यादिषु सत्सङ्गे, भ० २ श० ५ उ० ।

संगिल्ल-सङ्ग--पुं० । समुदाये, व्य० १ उ० । ज्ञा० ।

संगिल्लि-संगेल्लि-पुं० । अन्योऽन्यं हस्तावलम्बे, ज्ञा० १ श्रु० ३ अ० ।

संगोवग-साङ्गोपाङ्ग-त्रि० । शिक्षा १ कल्प २ व्याकरण३ निरुक्त ४ छन्दो ५ ज्योतिष्कानयन ६ लक्षणानि षडुपाङ्गानि तद्व्याख्यानरूपाणि तैः सह वर्त्तन्त इति साङ्गोपाङ्गा. । अनु० । अङ्गोपाङ्गसहितेषु, " संगोवंगा वेया " तत्राङ्गानि शिक्षा १ कल्पं २ व्याकरणम् ३ छन्दः ४ ज्योति. ५ निरुक्तञ्च ६, उपाङ्गानि-अङ्गार्थविस्ताररूपाणि । कल्प० १ अधि०१ क्षण ।

संगोवित्ता-सङ्गोपयितृ-त्रि० । क्षेमस्थानप्रापयितरि, स्था० ७ ठा० ३ उ० ।

संगोवेमाणी-सङ्गोपयन्ती-स्त्री० । वस्त्राच्छादनगर्भगृहप्रवेशनादिभिः क्षेमप्रापिकायाम्, विपा० १ श्रु० २ अ० ।

संघ-सङ्घ-पुं० । सङ्घाते, व्य० ३ उ० । गुणसंघाते, व्य० ३ उ० । समुदाये, जी० ३ प्रति०४ अधि० । प्रज्ञा० । ग० । रा० । औ० । कीटिकादिगणसमुदाये,स्था० ५ ठा० १ उ० । भ० । कुलसमुदायो गण., वालुकापर्यन्त' संघः । पं० व० १ द्वार । सम्यग्दर्शनादिसमुचितप्राणिगणे साधुसाध्वीश्रावकश्राविकारूपे ( सघा० १ प्रस्ता० १ अधि० । प्रव० । ध० । ) गुणरत्नपात्रभूते ( पं० व० १ द्वार । ) सत्त्वसमूहे, स्था० ।

चउव्विहे संघे पण्णत्ते, तं जहा-समणा समणीओ सावगा सावियाओ । ( सू० ३६३ )

संघो—गुणरत्नपात्रभूतसत्त्वसमूहः, तत्र श्राम्यन्ति—तपस्यन्तीति श्रमणा. । अथवा-सह मनसा शोभनेन निदानपरिणामलक्षणपापरहितेन चेतसा वर्त्तन्त इति समनसस्तथा समानं—स्वजनपरजनादिषु तुल्यं मनो येषा ते समनसः । उक्तञ्च—" तो समणो जइ सुमणो, भावेण य जइ न होइ पावमणो । सयणे य जणे य समो, समो य माणावमाणेसुं ॥ १ ॥" अथवा—समिति-समतया शत्रुमित्रादिष्वणन्ति-प्रवर्त्तन्त इति समणाः । आह च-"नऽत्थि य सि को इ वेसो, पिओ व सव्वेसु चेव जीवेसु । एएण होइ समणो,एसो अन्नोऽवि पज्जाओ ॥ १ ॥" इति, प्राकृततया सर्वत्र ' समण ' त्ति । एवं समणीओ, तथा शृण्वन्ति जिनवचनमिति श्रावका , उक्तञ्च-" अवाप्तदृष्ट्यादिविशुद्धसम्पत्, परं समाचार मनुप्रभातम् । शृणोति य' साधुजनादतन्द्र-स्तं श्रावकं प्राहुरमी जिनेन्द्रा ॥१॥" इति । अथवा—श्रान्ति पचन्ति तत्त्वार्थश्रद्धानं निष्ठां नयन्तीति श्रा , तथा वपन्ति-गुणवत्सप्तक्षेत्रेषु धनबीजानि निक्षिपन्तीति वा, तथा किरन्ति-क्लिष्टकर्म्मरजो विक्षिपन्तीति का', तत कर्म्मधारये श्रावका इति भवति । यदाह-" श्रद्धालुतां श्राति पदार्थचिन्तना-द्धनानि पात्रेषु वपत्यनारतम् । किरत्यपुण्यानि सुसाधुसेवना-दथापि तं श्रावकमाहुरञ्जसा ॥१॥" इति एवं श्राविका अपि । स्था० ४ ठा० ४ उ० । आ० म० । " तित्थयरे तित्थयरे, तित्थं पुण जाण गोयमा ! संघं । " महा० ४ अ० ।

संघावज्ञाप्रतिक्षेप.—

तित्थयरवंदणिज्जं, संघं पि खिवेइ कोइ अइबालो ।
नत्थी संघो एसो, भणिओ आसायगो कप्पे ॥ ८१ ॥

तीर्थङ्करवन्दनीयं-सर्व्वज्ञवन्द्यं 'नमो तित्थस्से' ति भणनात् सघमपि साधुसाध्वीश्रावकश्राविकाश्च ज्ञानादिगुणरूपं न केवलमाचार्यादीत्यपेरर्थ', क्षिपति-तिरस्कुरुते कोऽपि कश्चिदेकस्त्वितरोऽन्योऽपि प्राकृतस्वभावः अतिबालो-महामूर्खे , कथ क्षिपतीत्यत आह-न नास्ति विद्यते संघ उक्तरूप' एष संक्षेपको भणित उक्तश्चाशातनाकारकः कल्पे—छेदग्रन्थ इति गाथाऽर्थ. ।

कल्पभणितमेवाह—

अक्कोसतज्जणाई, संघमहिक्खिवइ संघपडिणीओ ।
अन्ने वि अत्थि संघा-ण सियालणतिक्कमाईणं ॥८२॥

आक्रोशतर्जनादिभि संघं-साध्व्यादिवर्गमधिक्षिपति-निराकरोति सघप्रत्यनीकः-प्रवचनप्रतिकूल., तत्राक्रोशो दुष्टवाग्भणन तर्जनं तु-किमनेन सिद्ध्यतीति, एवमादि भणितिग्रहणाद्यथौचित्यविनयाद्यकरणग्रहो विभक्तिलोपाच्चेत्थ निर्देश. । एवं च वदन् सघ क्षिपतीत्याह-अन्येऽपि-परे न केवलमयं साध्व्यादिवर्ग इत्यपेरर्थः । सन्ति-विद्यन्ते संघसमाग्रहणे केषामित्याह-' सियालणतिक्कमाईणं ' तत्र शृगाल. प्रतीत' णतिक्क' देशीभाषया कालिकरव', आदिशब्दाच्छेषजन्तुपरिग्रह. । मकारोऽत्रालाक्षणिक इति गाथाऽर्थ. ।

पुनरपि संघस्य पूज्यतां दर्शयन्निदमाह—

उग्घाडणा भएणं, सुयकेवलिणा वि मंनिओ संघो ।
पुव्वाणं परिवाडिं, देहि भणंतो महासइणा ॥ ८३ ॥

उद्घाटना-समयभाषया संघाद्बहिष्करणलक्षणा तस्या भयं तेन अनुस्वारश्च पूर्ववत् , श्रुतकेवलिनाऽपि चतुर्दशपूर्वधरेण न केवलं तीर्थकरेणेत्यपेरर्थ' मानित'-पूजित. संघ प्रतीत. । पूर्वेषा समयप्रसिद्धाना परिपार्टी पाठरूपा देहि प्रयच्छ शिष्येभ्य इत्यध्याहार' भणन्—ब्रुवन् , किंविशिष्टेन महाशयिना-अचिन्त्यशक्तिना । अत्र च ' कगचजे' त्यादिना तकारलोपे स्वरे प्रकृतिलोपसंधय इत्यनेन तकाराकारलोपे रूपमिदम् । इदमिहतत्त्वं किल श्रीवीरस्वामिनो मोक्षे गतस्य दुष्कालो महान् सवृत्त , सर्व्वोऽपि साधुवर्ग एकत्र मिलितो भणितं च परस्परं कस्य किमागच्छति सूत्र?, यावत् न कस्याऽपि पूर्वाणि समागच्छन्ति , तत श्रावकैर्विज्ञाते भणितं यथा कुत्र साम्प्रत पूर्वाणि सन्ति ?, तै भणितम् भद्रबाहुस्वामिनि । तत सर्वसङ्घसमुदायेन पर्यालोच्य प्रेषितस्तत्समीपे साधुसङ्घाटक',गत्वा प्रणम्य च तेन भणिता. सूरयो यथा सुशिष्याणा पूर्वपरिपार्टी प्रयच्छत । तैरुक्तं साम्प्रतं वयं महाप्राणध्यानारब्धास्ततो न ता दातुं शक्ता इ-

त्युक्तः समागतः साधुसङ्घाटकः, संघसमीपे कथितं तद्वचः। ततो भूयोऽपि प्रेषितो यः संघवचो न कुरुते तस्य किं विधीयते,एवं गत्वा ब्रुवीत,तथा कृते तैरुक्तम्-यत्संघो भणति तदहं करोमि;इत्युक्ते, प्रेषितानि स्थूलभद्रप्रमुखानि सुशिष्याणां पञ्चशतानीति गाथाऽर्थः।

ननु न वयं संघं निराकुर्मः किं त्वास्माकीनः संघो नान्येषामिति ये मन्येरन् तान् प्रत्याह—

अम्हाणं चिय संघो, अत्ताणं न उण लक्खणा भावा।
नेवं वोत्तुं जुत्तं, छउमत्थाणं जत्रो भणिअं॥ ८४॥

अस्माकमेव संघः अन्येषाम्-अपरेषां न पुनर्लक्षणाभावात् ज्ञानादयसत्त्वात् नैवमित्थं वक्तुम्-गदितुं युक्तं-संगतं छद्मस्थानामतीन्द्रियज्ञानाभाववतां यतो—यस्मात् भणितम्-उक्तम्, इति गाथार्थः। जीवा० १४ अधि०। ( संघगुणस्य वक्तव्यता 'परिणाम' शब्दे पञ्चमभागे ६१२ पृष्ठे गता।)

एवं स्थिते जीवोपदेशमाह—

संघस्सोवरि वेयण, कयामि भणसु जाव पडिकुट्ठे।
जुत्ता तत्थ करवयण-मणम्मि भावो ण संपत्तं॥८६॥

प्रकटार्था। जीवा० १४ अधि०।

सत्तीएँ संघपूआ, विसेसपूआउ बहुगुणा एसा।
जं एस सुए भणिओ, तित्थयराणंतरो संघो॥११३४॥

शक्त्या संघपूजा विभवोचितया, किमित्यत आह-विशेषपूजायाः द्विगादिगतायाः सकाशाद्बहुगुणा एषा संघपूजा,विषयमहत्त्वादेतदाह-यदेष श्रुते भणितः—आगमे उक्तः तीर्थकरानन्तरः संघ इत्यतो महानेष इति गाथाऽर्थः।

एतदेवाह—

गुणसमुदाओ संघो, पवयणतित्थं ति होंति एगट्ठा।
तित्थयरोऽवि अ एअं,णमए गुरुभावओ चेव॥११३५॥

गुणसमुदायः संघः अनेकप्राणिस्थसम्यग्दर्शनात्मकत्वात्प्रवचनं तीर्थमिति भवन्त्येकार्थिका एवमादयोऽस्य शब्दा इति, तीर्थकरोऽपि चैनं संघं तीर्थसंज्ञिनं नमति धर्मकथादौ गुरुभावत एव 'नमस्तीर्थाये' ति वचनादेतदेवमिति गाथाऽर्थः।

अत्रैवोपपत्त्यन्तरमाह

तप्पुव्विआ अरहया, पूइअपूआ य विणयकम्मं च।
कयकिच्चो वि जह कहं,कहेइ णमए तहा तित्थं॥११३६॥

तत्पूर्विका—तीर्थपूर्विका अर्हन्तः तदुक्ताऽनुष्ठानफलत्वात्पूजितपूजा चेति भगवता पूजितपूजत्वाल्लोकस्य विनयकर्म्म च कृतज्ञताधर्म्मगर्भं कृतं भवति। यद्वा—किमन्येन कृतकृत्योऽपि स भगवान् यथा कथा कथयति धर्म्मसम्बन्धिनीमिति तथा तीर्थं तीर्थकरनामकर्म्मोदयादेवौचित्यप्रवृत्तेरिति गाथाऽर्थः।

एयम्मि पूइअम्मी, णत्थि तयं जं न पूइअं होइ।
भवणे वि पूयणिज्जं, गुणठाणं वा तओ अन्नं॥११३७॥

एतस्मिन् संघे पूजिते नास्ति तद्वस्तु यन्न पूजितमभिनन्दितं भवति। किमित्यत आह—भुवनेऽपि सर्वत्र पूज्यं-पूजनीयं न गुणस्थानं कल्याणतस्ततः संघादन्यदिति गाथाऽर्थः।

तप्पूआपरिणामो, हंदि महाविसय एव मुणिअव्वो।
तद्देसपूअओ वि हु, देवयपूआइणाएणं॥ ११३८॥

तत्पूजापरिणामः-संघपूजापरिणामः 'हन्दि' महाविषय एव मन्तव्यः, संघस्य महत्त्वात्तद्देशपूजातोऽप्येकत्वेन सर्वपूजाभावे देवतोद्देशादिपूजोदाहरणेनेति गाथाऽर्थः। पं० व० ४ द्वार। (पूर्वोल्लिखितगाथानां विवरणं पञ्चाशकटीकायां कृतं तच्च तृतीयभागे १२७३ पृष्ठे दर्शितम्।)

अथ संघं मुकुटोपमया वर्णयन् गाथाद्वयमाह—

गुत्तीसमिइगुणड्ढो, संजमतवनियमकणयकयमउडो।
सम्मत्तनाणदंसण, तिरियणसंपावियमहग्घो॥११६॥

तत्र तावन्मुकुटस्वरूपं भण्यते 'गुत्तीसमिइगुणड्ढो' त्ति गोपनं गुप्ती रत्नानां प्रतिश्रयसुवर्णेन संधिमीलनम्, सम्-सामस्त्येन इति -गमनं समितिः, मेलापको मणिरत्नसुवर्णानां यत्र सा समितिः, गुप्तिश्च समितिश्च गुप्तिसमिती, गुप्तिसमित्योर्गुणो गुप्तिसमितिगुणस्तेन आढ्यो महान्, मुकुटो हि ज्वरविषापहारादिमणिसंपर्काद् गुणाढ्यो भवति। पुनः कथंभूतः 'संजमतवनियमकणयकयमउडो' त्ति संयमतपोनियमस्थानीयं त्रिप्रकारमर्जुनरक्तपनीयकाञ्चनरूपं यत्कनकं तेन कृतो निर्म्मितः सेर्लोपात्मुकुटविशेषणं 'मउडो' त्ति मुकुट इति विशेष्यकम् 'सम्मत्तनाणदंसणतिरियणसंपाविय' त्ति कथंभूतो मुकुटः ? सम्यक्त्वज्ञानदर्शनतुल्यत्रिरत्नसंप्रापितः शिखरत्रये हि रत्नत्रयालंकृतो मुकुटो भवति। अथवा—प्राकृतत्वात्प्रापितशब्दस्य परनिपातात् संप्रापितत्रिरत्नः, यत एव हि संप्रापितः त्रिरत्नोऽत एव महार्घ्यः-महामूल्य 'पञ्चोइय' त्ति पाठे त्रिभी रत्नैः प्रत्योपितैः परिकर्मितैर्महार्घ्यः एवंविधस्तावन्मुकुटः तेन संघ उपमीयते। तथाहि-गुप्तिसमितो गुणाढ्यो वाऽनेकातिशयर्द्धिगुणवान् संजमतपोनियमैः कनकस्थानीयैः कृतो-निर्वर्तितः संघमुकुटो मुकुट इव मुकुटः शिरसा धार्यत इति भावः। 'सम्मत्तणाणदंसण' त्ति सम्यक्त्वज्ञाने प्रतीते, 'दंसण' त्ति दृश प्रेक्षणे, दृश्यते-सम्यक् परिज्ञायते सावद्यमनेनेति दर्शनं चारित्रमनेकार्थत्वाद्धातूनां ततः सम्यक्त्वज्ञानचारित्ररूपत्रिरत्नसंप्रापितशिखरः, तथा महार्घ्योऽर्थयितुम् अशक्य॥ ११६॥

अथेतरमुकुटात्संघमुकुटस्याधिक्यमाह—

संघो सइंदयाणं, सदेवमणुयासुरम्मि लोगम्मि।
दुल्लहतरो विसुद्धो, अविसुद्धो तो महामउडो॥११७॥

इतरमुकुटः सुप्राप एव संघमुकुटश्च सेन्द्राणामपि देवानां सदेवमनुजासुरेऽपि च लोके दुर्लभतरः, 'विसुद्धो' त्ति विशुद्धश्च संघमुकुटो विशुद्धकर्मक्षयहेतुत्वात्, तत संघमुकुटाद् यो महानपि मुकुटः सुलभो बालतपस्विक्रिययाऽपि

व्यन्तरत्वनरेन्द्रत्वसद्भावे तल्लाभात्। 'अविसुद्धो तो महामउडो' त्ति अविशुद्ध एव स मुकुटस्तत्प्राप्तावनुरागादिभिर्मोनादिवृद्धिहेतुत्वेन महाकर्मापचयनिबन्धनत्वात्। ततो महामुकुट संघमुकुटापेक्षया सर्वप्रकारैरशुद्ध एवेत्यर्थः॥११७॥ संथा०।

सम्प्रति तीर्थकरानन्तरं सङ्घः पूज्य इति परिभावयन् संघस्य नगररूपकेण स्तवमाह-

गुणभवणगहणसुयरयण-भरियदंसणविसुद्धरत्थागा।
संघनगर! भद्दं ते, अक्खंडचरित्तपागारा॥ ४॥

'गुणभवणे' त्यादि-गुणा इह उत्तरगुणा गृह्यन्ते, मूलगुणानामग्रे चारित्रशब्देन गृह्यमाणत्वात्, ते चोत्तरगुणाः-पिण्डविशुद्ध्यादयो, यत उक्तम्-" पिंडस्स जा विसोही, समिईओ भावणा तवो दुविहो। पडिमा अभिग्गहाऽवि य,उत्तरगुण मो वियाणाहि॥१॥" त एव भवनानि तैर्गहनं-गुपिलं प्रचुरत्वादुत्तरगुणानां गुणभवनगहनं, संघनगरमभिसम्बध्यते, तस्याऽऽमन्त्रणं हे गुणभवनगहन!,तथा श्रुतरत्नभृत! श्रुतान्येव आचारादीनि निरुपमसुखहेतुत्वाद्रत्नानि श्रुतरत्नानि तैभृतं-पूरितं तस्यामन्त्रणं हे श्रुतरत्नभृत! तथा दर्शनविशुद्धरथ्याक!-इह दर्शनं-प्रशमसंवेगनिर्वेदानुकम्पास्तिक्यलिङ्गगम्यात्मपरिणामरूपं सम्यग्दर्शनमिति गृह्यते, तच्च क्षायिकादिभेदात् त्रिधा,तद्यथा-क्षायिकं,क्षायोपशमिकमौपशमिकं च। उक्तं च-" सम्मत्त पि य तिविहं, खओवसमियं तहोवसमियं च। खइयं चे" ति तत्र त्रिविधस्याऽपि दर्शनमोहनीयस्य क्षयेण-निर्मूलमपगमेन निर्वृत्तं क्षायिकम्, उदयावलिकाप्रविष्टस्यांशस्य क्षयेण शेषस्य तूपशमेन निर्वृत्तं क्षायोपशमिकम्, उदयावलिकाप्रविष्टस्यांशस्य क्षये सति शेषस्य भस्मच्छन्नाग्नेरिवानुद्रेकावस्था उपशमः तेन निर्वृत्तमौपशमिकम्। आह-औपशमिकक्षायोपशमिकयोः कः प्रतिविशेषः?,उच्यते क्षायोपशमिके तदावारकस्य कर्मणः प्रदेशतोऽनुभवोऽस्ति न त्वौपशमिके इति। दर्शनमेवासारमिथ्यात्वादिकचवररहिता विशुद्धरथ्या यस्य तत्तथा,तस्यामन्त्रणं हे दर्शनविशुद्धरथ्याक!' सेर्लोपः सम्बोधने ह्रस्वो वे ति प्राकृतलक्षणसूत्रे वाशब्दस्य लक्ष्यानुसारेण दीर्घत्वसूचना (थत्वा) त् दीर्घनिर्देश, यथा "गोयमा!" इत्यत्र, संघः-चातुर्वर्ण्यः श्रमणादिसंघातः स नगरमिव संघनगरं 'व्याघ्रादिभिर्गौणैस्तदनुक्तौ-विति' समासो, यथा पुरुषो व्याघ्र इव पुरुषव्याघ्रः, तस्यामन्त्रणं हे संघनगर! भद्रं-कल्याणं ते-तव भवतु, अखण्डचारित्रप्राकार! चारित्रं-मूलगुणा अखण्डम्-अविराधितं चारित्रमेव प्राकारो यस्य तत्तथा 'मांसादिषु चेति' प्राकृतलक्षणत्वात् चारित्रशब्दस्यादौ ह्रस्वः, तस्यामन्त्रणं हे अखण्डचारित्रप्राकार! दीर्घत्वं प्रागिव।

भूयोऽपि संघस्यैव संसारोच्छेदकारित्वाच्चक्ररूपकेण—स्तवमाह—

संजमतवतुंबारय-स्स नमो सम्मत्तपारियल्लस्स।
अप्पडिचक्कस्स जओ, होउ सया संघचक्कस्स॥ ५॥

सयम -सप्तदशप्रकार, यदुक्तम्-" पञ्चाश्रवाद्विरमणं,पञ्चेन्द्रियनिग्रह कषायजयः। दण्डत्रयविरतिश्चे-ति संयम सप्तदशभेदः॥१॥" तपो द्विधा-बाह्यम्, आभ्यन्तरं च। तत्र-बाह्यं षड्विधम्, यदुक्तम्" अनशनमूनोदरता, वृत्तेः संक्षेपणं रसत्यागः। कायक्लेशः संलीनतेति बाह्यं तपः प्रोक्तम्॥१॥" आभ्यन्तरमपि षोढा, यत उक्तम्—" प्रायश्चित्तध्याने, वैयावृत्त्यविनयावथोत्सर्गः। स्वाध्याय इति तपः षट्—प्रकारमाभ्यन्तरं भवति॥ २॥" संयमश्च तपांसि च संयमतपांसि तुम्बं च अराश्च—अरकाः तुम्बाराः संयमतपांस्येव यथासंख्यं तुम्बारा यस्य तत्तथा तस्मै संयमतपस्तुम्बाराय नमः। सूत्रे षष्ठी प्राकृतलक्षणाच्चतुर्थ्यर्थे वेदितव्या। उक्तं च-"छट्ठिविहत्तीए, भन्नइ चउत्थी" तथा—' सम्मत्तपारियल्लस्स' सम्यक्त्वमेव पारियल्लं—बाह्यपृष्ठस्य बाह्याभ्रमिर्यस्य तत्तथा तस्मै नमः, गाथार्द्धं व्याख्यातम्। तथा न विद्यते प्रति—अनुरूपं समानं चक्रं यस्य तदप्रतिचक्रं, चरकादिचक्रैरसमानमित्यर्थः, तस्य जयो भवतु सदा—सर्वकालं, संघश्चक्रमिव संघचक्रं तस्य।

सम्प्रति संघस्यैव मार्गगामितया रथरूपकेण स्तवमभिधित्सुराह—

भद्दं सीलपडागू-सियस्स तवनियमतुरयजुत्तस्स।
संघरहस्स भगवओ, सज्झायसुनंदिघोसस्स॥ ६॥

भद्रं—कल्याणं संघरथस्य भगवतो भवत्विति योगः, किंविशिष्टस्य सत इत्याह—शीलोच्छ्रितपताकस्य शीलमेव-अष्टादशशीलाङ्गसहस्ररूपमुच्छ्रिता पताका यस्य स तथा, भार्योढादेराकृतिगणतया तन्मध्यपाठाभ्युपगमादुच्छ्रितशब्दस्य परनिपातः, प्राकृतशैल्या वा, न हि प्राकृते विशेषणपूर्वापरनिपातनियमोऽस्ति, यथा कथञ्चित्पूर्वर्षिप्रणीतेषु वाक्येषु विशेषणनिपातदर्शनात्, तपोनियमतुरङ्गयुक्तस्य—तपःसंयमाश्वयुक्तस्य, तथा स्वाध्यायः—पञ्चविध, तद्यथा-वाचना प्रच्छना परावर्त्तना अनुप्रेक्षा धर्मकथा च, स्वाध्याय एव सन्—शोभनो नन्दिघोषो द्वादशविधतूर्यनिनादो यस्य स तथा तस्य, 'सज्झायसुनेमिघोसस्से' ति क्वचित्पाठः, तत्र—स्वाध्यायः एव शोभनो नेमिघोषो यस्येति द्रष्टव्यम्, इह शीलाङ्गप्ररूपणे सत्यपि तपोनियमप्ररूपणं तयोः प्रधानपरलोकाङ्गत्वख्यापनार्थम्। अस्ति चायं न्यायो यदुत—सामान्योक्तावपि प्राधान्यख्यापनार्थं विशेषाभिधानं क्रियते, यथा—ब्राह्मणा आयाता वशिष्ठोऽप्यायात इति, एवमन्यत्रापि यथायोगं परिभावनीयम्।

संघस्यैव लोकमध्यवर्त्तिनोऽपि लोकधर्मासंश्लेषतः पद्मरूपकेण स्तवं प्रतिपादयितुमाह—

कम्मरयजलोहविणि-ग्गयस्स सुयरयणदीहनालस्स।
पंचमहव्वयथिरक-न्नियस्स गुणकेसरालस्स॥ ७॥
सावगजणमहुअरिपरि-वुडस्स जिणसूरतेयबुद्धस्स।
संघपउमस्स भद्दं, समणगणसहस्सपत्तस्स॥ ८॥

कर्म-ज्ञानावरणाद्यष्टप्रकारं तदेव जीवस्य गुण्डनेन मालिन्यापादनाद्रजो भण्यते, कर्मैरज एव जन्मकारणत्वाज्जलौघ तस्माद्विनिर्गत इव विनिर्गत कर्मरजोजलौघविनिर्गतः तस्य, इह पद्मं जलौघाद्विनिर्गतं सुप्रतीतं, जलौघस्योपरि तस्य व्यवस्थितत्वात्, संघस्तु कर्मरजोजलौघाद्विनिर्गतोऽल्पसंसारत्वादवसेय, तथा च—अविर-

तसस्थगृहेष्वप्यपार्द्धपुद्गलपरावर्त्तमान एव संसारः, अत एव विनिर्गत इवेति व्याख्यातं, न तु साक्षाद्विनिर्गतः, अद्यापि संसारित्वात्, तथा श्रुतरत्नमेव दीर्घो नालो यस्य स तथा तस्य, दीर्घनालतया च श्रुतरत्नस्य रूपणं कर्म्मरजोजलौघत' तद्वलाद्विनिर्गतेः, तथा पञ्च महाव्रतान्येव-प्राणातिपातादिविरमणलक्षणानि स्थिरा-दृढा कर्णिकामध्यगण्डिका यस्य तत्तथा तस्य, तथा गुणाः-उत्तरगुणाः त एव पञ्चमहाव्रतरूपकर्णिकापरिकरभूतत्वात् केसरा इव गुणकेसरा', ते विद्यन्ते यस्य तत्तथा तस्य, अत्र 'मतुवत्थम्मि मुणिज्जह आलं इल्लं मणं तह य' इति प्राकृतलक्षणात् मत्वर्थे आलप्रत्ययः। तथा ये अभ्युपेतसम्यक्त्वा-प्रतिपन्नाणुव्रता अपि प्रतिदिवसं यतिभ्यः साधूनामगारिणां चोत्तरोत्तरविशिष्टगुणप्रतिपत्तिहेतोः सामाचारीं शृण्वन्ति ते श्रावकाः, उक्तं च—"संपत्तदंसणाई, पयदियहं जइ जणा सुणेई य। सामायारिं परमं, जो खलु तं सावगं विंति ॥ १ ॥" श्रावकाश्च ते जनाश्च श्रावकजनाः त एव मधुकर्यः ताभिः परिवृतस्य तस्य, तथा—जिनसूर्यतेजोबुद्धस्य-जिन एव सकलजगत्प्रकाशकतया सूर्य इव-भास्कर इव जिनसूर्यस्तस्य तेजो विशिष्टसंवेदनप्रभवा धर्मदेशना तेन बुद्धस्य, तथा श्राम्यन्तीति श्रमणा 'नन्द्यादिभ्योऽन' ॥ ५।१।५२ ॥ इति कर्त्तर्यनप्रत्ययः श्राम्यन्ति-तपस्यन्ति, किमुक्तं भवति ?-प्रव्रज्याऽऽरम्भदिवसादारभ्य सकलसावद्ययोगविरता गुरूपदेशादाप्राणोपरमाद्यथाशक्त्यनशनादि तपश्चरन्ति। उक्तं च-"यः समः सर्वभूतेषु, त्रसेषु स्थावरेषु च। तपश्चरति शुद्धात्मा,श्रमणोऽसौ प्रकीर्त्तितः॥१॥" श्रमणानां गणः श्रमणगणः स एव सहस्रं पत्राणां यस्य तत् श्रमणगणसहस्रपत्रं तस्य ( श्रीसंघपद्मस्य भद्रं भवतु )।

भूयोऽपि संघस्यैव सोमतया चन्द्ररूपकेण स्तवमभिधित्सुराह—

तवसंजममयलंछण, अकिरियराहुमुहदुद्धरिस निच्चं ।
जय संघचंद ! निम्मल-सम्मत्तविसुद्धजोण्हागा ॥९॥

तपश्च संयमश्च तपःसंयमं, समाहारो द्वन्द्वः तपःसंयममेव मृगलाञ्छनं-मृगरूपं चिह्नं यस्य तस्यामन्त्रणं हे तपःसंयममृगलाञ्छन !, तथा न विद्यन्तेऽनभ्युपगमात् परलोकविषया क्रिया येषां ते अक्रियाः—नास्तिकाः त एव जिनप्रवचनशशाङ्कग्रसनपरायणत्वाद्राहुमुखमिवाक्रियराहुमुखं तेन दुष्प्रधृष्यः—अनभिभवनीय तस्यामन्त्रणं हे अक्रियराहुमुखदुष्प्रधृष्य !, संघश्चन्द्र इव संघचन्द्र तस्यामन्त्रणं हेसंघचन्द्र ! तथा निर्मलं—मिथ्यात्वमलरहितं यत्सम्यक्त्वं तदेव विशुद्धा ज्योत्स्ना यस्य स तथा, 'शेषाद्वा' ॥ ७ । ३ । १७५ ॥ इति कः प्रत्ययः। तस्यामन्त्रणं हे निर्मलसम्यक्त्वविशुद्धज्योत्स्नाक ! दीर्घत्वं प्रागिव प्राकृतलक्षणादवसेयम्, नित्यं—सर्वकालं जय—सकलपरदर्शनतारकेभ्योऽतिशयवान् भव, यद्यपि भगवान् संघचन्द्रः सदैव जयन् वर्त्तते तथाऽपीत्थं स्तोतुरभिधानं कुशलमनोवाक्कायप्रवृत्तिकारणमित्यदुष्टम्।

पुनरपि संघस्यैव प्रकाशकतया सूर्यरूपकेण स्तवमाह—

परतिथियगहपहना-सगस्स तवतेयदित्तलेसस्स ।
नाणुज्जोयस्स जए, भद्दं दमसंघसूरस्स ॥ १० ॥

परतीर्थिकाः-कपिलकणभक्षाक्षपादसुगतादिमतावलम्बिनः त एव ग्रहाः तेषां या प्रभा एकैकदुर्नयाभ्युपगमपरिस्फूर्तिलक्षणा तामनन्तनयसङ्कुलप्रवचनसमुत्थविशिष्टज्ञानभास्करप्रभावितानेन नाशयति—अपनयतीति परतीर्थकग्रहप्रभानाशकः तस्य, तथा तपस्तेज एव दीप्ता-उज्ज्वला लेश्या-भास्वरता यस्य स तथा तस्य तपस्तेजोदीप्तलेश्यस्य, तथा ज्ञानमेवोद्द्योतो वस्तुविषयः प्रकाशो यस्य स तथा तस्य ज्ञानोद्द्योतस्य, जगति—लोके भद्रं—कल्याणं, भवत्विति शेषः, दमः-उपशमः तत्प्रधानः संघः सूर्य इव संघसूर्यः तस्य दमसंघसूर्यस्य।

सम्प्रति संघस्यैवाक्षोभ्यतया समुद्ररूपकेण स्तवं चिकीर्षुराह—

भद्दं धिइवेलापरि-गयस्स सज्झायजोगमगरस्स ।
अक्खोहस्स भगवओ, संघसमुद्दस्स रुंदस्स ॥ ११ ॥

संघ एव समुद्रः संघसमुद्रः तस्य भद्रं भवत्विति क्रिया शेषः। किंविशिष्टस्य सत इत्याह—धृतिवेलापरिगतस्य—धृतिः—मूलोत्तरगुणविषयः प्रतिदिवसमुत्सहमान आत्मपरिणामविशेषः सैव वेला-जलवृद्धिलक्षणा तया परिगतस्य, तथा स्वाध्याययोग एव कर्म्मविदारणक्षमशक्तिसमन्विततया मकर इव मकरो यस्मिन् स तथा तस्य, तथा अक्षोभ्यस्य परीषहोपसर्गसम्भवेऽपि निष्प्रकम्पस्य भगवतः समग्रैश्वर्यरूपयशोधर्मप्रयत्नश्रीसम्भारसमन्वितस्य रुन्दस्य-विस्तीर्णस्य।

भूयोऽपि संघस्यैव सदास्थायितया मेरुरूपकेण स्तवमाह—

सम्मद्दंसणवरवइर-दढरूढगाढावगाढपेढस्स ।
धम्मवररयणमंडिअ-चामीयरमेहलागस्स ॥ १२ ॥
नियमूसियकणयसिला-यलुज्जलजलंतचित्तकूडस्स ।
नंदणवणमणहरसुरभि-सीलगंधुद्धुमायस्स ॥ १३ ॥
जीवदयासुंदरकं-दरुद्दरियमुणिवरमइंदइन्नस्स ।
हेउसयधाउपगलं-तरयणदित्तोसहिगुहस्स ॥ १४ ॥
संवरजलपगलियउ-ज्झरपविरायमाणहारस्स ।
सावगजणपउररवं-तमोरनचंतकुहरस्स ॥ १५ ॥
विणयनयपवरमुणिवर-फुरंतविज्जुज्जलंतसिहरस्स ।
विविहगुणकप्परुक्खग-फलभरकुसुमाउलवणस्स॥१६॥
नाणवररयणदिप्पं-तकंतवेरुलियविमलचूलस्स ।
वंदामि विणयपणओ, संघमहामंदरगिरिस्स ॥ १७ ॥

गाथापदकेन सम्बन्धः। सम्यक्—अविपरीतं दर्शनं-तत्त्वार्थश्रद्धानं सम्यग्दर्शनं तदेव प्रथमं मोक्षाङ्गतया सारत्वाद्वरवज्रमिव सम्यग्दर्शनवरवज्रं तदेव दृढं निष्प्रकम्पं रूढं-चिरप्ररूढं गाढं-निबिडमवगाढं निमग्नं पीठं—प्रथमभूमिका यस्य स तथा,इह मन्दरगिरिपक्षे वज्रमयं पीठं दृढादिविशेषणं सुप्रतीतम्, संघमन्दरगिरिपक्षे तु सम्यग्दर्शनवरवज्रमयं पीठं दृढं शङ्कादिछिद्ररहिततया परतीर्थिकवासनाजलेना-

न्तःप्रवेशाभावतश्चालयितुमशक्यम्, रूढं प्रतिसमयं विशुद्ध्यमानतया प्रशस्ताध्यवसायेषु चिरकालं वर्त्तनात्, गाढं तीव्रतत्त्वविषयरुच्यात्मकत्वात्, अवगाढं जीवादिषु पदार्थेषु सम्यगवबोधरूपतया प्रविष्टं, तं वन्दे। सूत्रे प्राकृतत्वात् द्वितीयार्थे षष्ठी। यदाह पाणिनिः स्वप्राकृतलक्षणे-' द्वितीयार्थे षष्ठी ' अथवा-सम्बन्धविवक्षया षष्ठी, यथा मापाणामश्नीयादित्यत्र, यद्वा-इत्थम्भूतस्य संघमन्दरगिरेर्यत् माहात्म्य तद् वन्दे, इति महात्म्यशब्दाध्याहारापेक्षया षष्ठी, तथा दुर्गतौ प्रपतन्तमात्मान धारयतीति धर्मः, स एव वररत्नमण्डिता चामीकरमेखला यस्य स धर्म्मवररत्नमण्डितचामीकरमेखलाकः, 'शेषाद्वा' ॥७।३।१७५॥ इति कः प्रत्ययः तस्य, इह धर्मो द्विधा-मूलगुणरूपः, उत्तरगुणरूपश्च। तत्रोत्तरगुणरूपो रत्नानि, मूलगुणरूपस्तु मेखला, न खलु मूलगुणरूपधर्मात्मकचामीकरमेखला विशिष्टोत्तरगुणरूपवररत्नविभूषणविकला शोभते। इहोच्छ्रितशब्दस्य व्यवहितः प्रयोगः। ततश्चायमर्थः-नियमा एव इन्द्रियनोइन्द्रियदमरूपाः कनकशिलातलानि तेषु उच्छ्रितानि-उज्ज्वलन्ति ज्वलन्ति चित्तान्येव कूटानि यस्मिन् स तथा तस्य, इह मन्दरगिरौ कूटानामुच्छ्रितत्वमुज्ज्वलत्वं भासुरत्वं च सुप्रतीतम्, संघमन्दरगिरिपक्षे तु चित्ररूपाणि कूटान्युच्छ्रितानि अशुभाध्यवसायपरित्यागादुज्ज्वलानि प्रतिसमयं कर्ममलविगमात् ज्वलन्ति उत्तरोत्तरसूत्रार्थस्मरणेन भासुरत्वात्, तथा नन्दन्ति सुरासुरविद्याधरादयो यत्र तन्नन्दनं वनम्-अशोकसहकारादिपादपवृन्दं नन्दनं च तद्वनं च नन्दनवनं, लतावितानगतविविधफलपुष्पप्रवालसंकुलतया मनो हरतीति मनोहरं, 'लिहादिभ्यः' इत्यच् प्रत्ययः, नन्दनवनं च तन्मनोहरं च तस्य सुरभिस्वभावो यो गन्धस्तेन उद्धुमायः-आपूर्णः, उद्धुमायशब्द आपूर्णपर्यायः, यत उक्तमभिमानचिह्नेन-"पडिहत्थमुद्धुमायं अ, हिरे इय च जाण आउराणो" तस्य, संघमन्दरगिरिपक्षे तु-नन्दनं-सन्तोषः, तथाहि-तत्र स्थिताः साधवो नन्दन्ति-तत्त्वविविधामर्षौषध्यादिलब्धिसङ्कुलतया मनोहरं, तस्य सुरभिः शीलमेव गन्धः तेन व्याप्तस्य, अथवा-मनोहरत्वं सुरभिशीलगन्धविशेषणं द्रष्टव्यम्। जीवदया एव सुन्दराणि स्वपरनिर्वृतिहेतुतया कन्दराणि तपस्विनामावासभूतत्वात्, तथा च लोकेऽपि प्रतीतम्-'अहिंसाव्यवस्थित. तपस्वी' ति, जीवदयासुन्दरकन्दराणि, तेषु ये उत्-प्रावल्येन कर्मशत्रुजय प्रति दर्पिता उद्दर्पिता मुनिवरा एव शाक्यादिमृगपराजयात् मृगेन्द्राः तैराकीर्णो-व्याप्तस्तस्य, तथा मन्दरगिरेर्गुहासु निष्यन्दवति चन्द्रकान्तादीनि रत्नानि भवन्ति कनकादिधातवो दीप्ताश्चौषधयः, सघमन्दरगिरिपक्षे तु अन्वयव्यतिरेकलक्षणा ये हेतवस्तेषा शतानि हेतुशतानि तान्येव धातव', कुयुक्तिव्युदासेन तेषां स्वरूपेण भास्वरत्वात्, तथा प्रगलन्ति-निष्यन्दमानानि क्षायोपशमिकभावस्यन्दित्वात् श्रुतरत्नानि दीप्ता. जाज्वल्यमाना ओषधय-आमर्षौषध्यादयो गुहासु-व्याख्यानशालारूपासु यस्य स तथा तस्य, सवर'-प्राणातिपातादिरूपपश्चाश्रवप्रत्याख्यान तदेव कर्ममलप्रक्षालनात् सांसारिकतृडपनोदकारित्वात् परिणामसुन्दरत्वाच्च वरजलमिव सवरवरजल तस्य, प्रगलितः-सातत्येन व्यूढ. उज्झर'-प्रवाहः स एव प्रविराजमानो हारो यस्य स तथा, श्रावकजना एव स्तुतिस्तोत्रस्वाध्यायविधानमुखरतया प्रचुरा रवन्तो मयूराः तैर्नृत्यन्तीव कुहराणि-जिनमण्डपादिरूपाणि यस्य स तथा तस्य, विनयेन नता विनयनता ये प्रवरमुनिवरा' त एव स्फुरन्त्यो विद्युतो विनयनतप्रवरमुनिवरस्फुरद्विद्युत ताभिर्ज्वलन्ति-भासमानानि, शिखराणि, यस्य स तथा तस्य इह शिखरस्थानीयाः प्रावचनिका विशिष्टा आचार्यादयो द्रष्टव्याः, विनयनताना च प्रवरमुनिवराणा विद्युता रूपणं विनयादिरूपेण तपसा तेषां भासुरत्वात्, तथा विविधा गुणा येषा ते विविधगुणाः विशेषणान्यथानुपपत्त्या साधवो गृह्यन्ते, त एव विशिष्टकुलोत्पन्नत्वात् परमानन्दरूपसुखहेतुधर्म्मफलदानाच्च कल्पवृक्षा इव विविधगुणकल्पवृक्षका, प्राकृतत्वात् स्वार्थे कप्रत्यय', तेषा च यः फलभरो यानि च कुसुमानि तैराकुलानि वनानि यस्य स तथा तस्य, इह फलभरस्थानीयो मूलोत्तरगुणरूपो धर्म., कुसुमानि नानाप्रकारा ऋद्धयः, वनानि तु गच्छा'। तथा ज्ञानमेव परमनिर्वृतिहेतुत्वात् वरं रत्नं ज्ञानवररत्नं तदेव दीप्यमाना कान्ता विमला वैडूर्यमयी चूडा यस्य स तथा, तत्र मन्दरपक्षे वैडूर्यमयी चूडा कान्ता विमला च सुप्रतीता, संघमन्दरपक्षे तु कान्ता भव्यजनमनोहारित्वाद्विमला यथावस्थितजीवादिपदार्थस्वरूपोपलम्भात्मकत्वात्, तस्य, इत्थभूतस्य सघमहामन्दरगिरेर्यन्माहात्म्यं तद्विनयप्रणतो वन्दे। तदेवं सघस्यानेकधा स्तवोऽभिहितः। नं०। "दुप्पसहो सूरी फग्गुसिरी अज्जा नाइलो सावओ सव्वसिरी साविया एस अपच्छिमो संघो पुव्वण्हे भारहे वासे अत्थमेहिइ।" ती० २० कल्प। ह्री०। (संघव्यवहारः 'ववहार' शब्दे षष्ठे भागे ६१६ पृष्ठे द्रष्टव्य'।) श्रीवज्रस्वामिना पटविद्यया संघ सुभिक्षदेशे नीत, तत्र संघ. किं चतुर्विध., साधुसाध्वीमात्रसमुदायो वा? पटविद्या च किंस्वरूपेति? प्रश्नोऽत्रोत्तरम्-परिशिष्टपर्वाद्युक्तवज्रस्वामिसम्बन्धानुसारेण चतुर्विधसघोऽवसीयते, न तु साधुसाध्वीरूप एव। तथा यया चक्रवर्त्तिचर्मरत्नवद्विवक्षितविस्तार. पटो भवति सा पटविद्येति॥ ३५१॥ सेन० ३ उल्ला०। अथ वार्षिककृत्यानि यथा-संघार्चनादीनि वहुविधानि, यत. श्राद्धविधावेकादशद्वारैः प्रतिपादितानि। गाथोत्तरार्द्धे-" पइवरिस सघच्चण १ साहम्मिअभत्ति २ जत्ततिगं ३ ॥१॥ जिणगिहण्हवणं ४ जिणधण-वुड्ढी ५ महपूआ ६ धम्मजागरिआ ७। सुअपूआ ८ उज्जवणं ६, तह तित्थपहावणा सोही १०॥ २॥" तत्र सघपूजाया निजविभवाद्यनुसारेण भृशादरबहुमानाभ्या साधुसाध्वीयोग्यमाधाकर्मादिदोपरहित वस्त्रकम्बलपादप्रोञ्छनसूत्रोर्णापात्रदण्डकदण्डिकासूचीकण्टककर्षणकागदकुम्पकलेखनीपुस्तकादिक श्रीगुरुभ्यो दत्ते, यद्दिनकृत्यसूत्रम्-" वत्थ पत्तं च पुत्थं च, कवल पायपुंछणं। दंडं सथारयं सिज्जं, अन्न ज किंचि सुज्झई॥१॥" एव प्रातिहारिकपीठफलकपट्टिकाद्यपि संयमोपकारि सर्वं साधुभ्य श्रद्धया देयम्। सूच्यादीनामुपकरणत्वं तु श्रीकल्पे उक्तम्-यथा-"असणाई वत्थाई, सूआई चउगा तिन्नि" अशनादीनि वस्त्रादीनि सूच्यादीनि चेति त्रीणि चतुष्कानि, सङ्कलनया द्वादश। यथा-अशनं १ पानं २ खा-

दिमं ३ स्वादिमं ४, वस्त्रं १ पात्रं २ कम्बलं ३ पादप्रोञ्छनम् ४, सूची १ पिप्पलको २ नखच्छेदनकं ३ कर्णशोधनकं ४ चेति। एवं श्रावकश्राविकारूपसंघमपि यथाशक्ति सभक्तिप-रिधापनकादिना सत्करोति, यथोचितं च देवगुर्वादिगुण-गायकान् याचकादीनपि। संघार्चा हि उत्कृष्टादिभेदात् त्रि-धा--तत्रोत्कृष्टा सर्वपरिधापनेन, जघन्येन जघन्या--सूत्र-मात्रादिना, एकद्वयादेर्वा, शेषा मध्यमा। तत्राधिकव्यय-नेऽशक्तोऽपि प्रतिवर्षं गुरुभ्यो मुखवस्त्रादिमात्रं द्वित्रादि-श्राद्धेभ्य. पूगादीनि दत्त्वा संघार्चाकृत्यं भक्त्या सत्याप-यति, नि स्वस्य तावताऽपि महाफलत्वात्, शक्त्या च क्रियमाणेयं महागुणकरी। यतः पञ्चाशके--" सचीइ-संघपूजा, विसेसपूजा च बहुगुणा एसा। जं एस सुए भणिश्रो, तित्थयराणंतरो संघो ॥ १॥" इति संघार्चा-विधि. १। ध० २ अधि०।

संघट्ट--संघट्ट--पुं०। जङ्घार्द्धप्रमाणे उदके, ओघ०। ग०। यस्मिन् काले उत्तरतां पादतलादारभ्य जङ्घाया अर्द्धं बुडति स सं-घट्ट.। वृ० ४ उ०। स्था०। स्पर्शे, रा०। ध०।

संघट्टंती--संघट्टयन्ती--स्त्री०। षट्कायान् शेषशरीरावयवेनेव स्पृशन्त्याम्, पिं०।

संघट्टण--संघट्टन--न०। अविधिना स्पर्शने, श्राव० ४ अ०। मनाक् स्पर्शन, ग०२ अधि०। अन्योऽन्यं गात्रैः संहतीकरणे, भ० ५ श० ६ उ०। जीवाना संघट्टने प्रायश्चित्तम्। महा० १ चू०। "नो संघट्टेज्जा नो णं परिभुंजेज्जा" महा० १ चू०। संघट्टे पारञ्चियं। महा० १ चू०।

संघट्टसुमिणसा--संघट्टसुमिनसा--स्त्री०। वल्लीभेदे, प्रज्ञा० १ पद।

संघट्टिय--संघट्टित--त्रि०। मनाक् स्पृष्टे, आव० ४ अ०। ध०। संघर्षिते, भ० ११ श० ३ उ०। आचा०।

संघड--संघट--त्रि०। निरन्तरे, आचा०१ श्रु० ४ अ० ४ उ०।

संघडणा--संघटना--स्त्री०। रचनायाम्, सूत्र० १ श्रु० १ अ० १ उ०।

संघडदंसिन्--संघटदर्शिन्--त्रि०। निरन्तरदर्शिनि, आचा०१ श्रु० ४ अ० ४ उ०।

संघडिय--संघटित--त्रि०। सम्यग्घटिते परस्परं स्नेहेन सम्ब-द्धे, ( वयस्यादौ ) उत्त० १४ अ०।

संघडियव्व--संघटितव्य--त्रि०। अप्राप्तेषु वस्तुषु कार्ययोगे, स्था० ८ ठा० ३ उ०।

संघतिलगसूरि--संघतिलकसूरि--पुं०। रुद्रपालीयगच्छे गुण-शेखरसूरिशिष्ये, येन विक्रमीय १४४२ संवत्सरे सम्यक्त्वस-प्तत्युपरि टीका कृता। जै० इ०।

संघथेर--संघस्थविर--पुं०। सघकार्ये आप्रष्टव्ये स्थविरभेदे, पं० भा० ५ कल्प। पं० चू०।

संघदाससमासमण--संघदासक्षमाश्रमण--पुं०। पञ्चकल्पभा-ष्यनिर्मातरि स्वनामख्याते आचार्ये, पं० भा० ५ कल्प। नं०। वसुदेवहिण्डीग्रन्थस्य प्रथमखण्डोऽनेन रचितः। जै० इ०।

संघधम्म--संघधर्म्म--पुं०। संघधर्मो गोष्ठीसमाचारः, आर्हता-नां वा गुणसमुदायरूपश्चतुर्वर्णो वा संघस्तद्धर्मस्तत्समा-चारः। धर्म्मभेदे, स्था० १० ठा० ३ उ०।

संघपउम--संघपद्म--न०। लोकमध्यवर्तित्वेऽपि लोकधर्मासं-श्लेषत' पद्मरूपतां गते संघे, नं०।

संघपालिय--संघपालित--पुं०। स्थविरस्य आर्यवृद्धस्य गौत-मगोत्रे स्वनामख्याते शिष्ये, कल्प० २ अधि० ८ क्षण। "थेरं च संघवालिय--गोयमगुत्तं पणिवयामि"। कल्प० २ अधि० ८ क्षण।

संघपाहुणग--संघप्राघूर्णक--पुं०। कुलगणसंघस्थविरेषु, कु-लगणसघथेरा संघपाहुणा भएणंति। नि० चू० ४ उ०।

संघमज्झयार--संघमध्यकार--पुं०। कारशब्दोऽत्र रूपमात्रे इति। संघाभ्यन्तरे, व्य० ३ उ०।

संघयण--संहनन--न०। अस्थिसंचये, वज्रऋषभाद्युपमाने उ-पमेये शक्तिविशेषे, स्था० ६ ठा० ३ उ०।

छव्विहे संघयणे पण्णत्ते, तं जहा--वतिरोसभणारायसं-घयणे उसभणारायसंघयणे नारायसंघयणे अद्धनारा-यसंघयणे खीलियासंघयणे छेवट्ठसंघयणे ॥ ( सू०४९४ )

संहननम्-अस्थिसंचय.,वक्ष्यमाणोपमानोपमेय',शक्तिविशेष इत्यन्ये। तत्र वज्रं-कीलिका ऋषभः-परिवेष्टनपट्ट. नाराच - उभयतो मर्कटबन्ध ,यत्र द्वयोरस्थ्नोरुभयतो मर्कटबन्धेन ब-द्धयोः पट्टाकृतिना तृतीयेनास्थ्ना परिवेष्टितयोरुपरि तद्--स्थित्रितयभेदिकीलिकाकारं वज्रनामकमस्थि भवति तद्वज्र-ऋषभनाराच प्रथमम्, यत्र तु कीलिका नास्ति तद् ऋषभनाराचं द्वितीयम्, यत्र तूभयोर्मर्कटबन्धः एव तन्ना-राचं तृतीयम्, यत्र त्वेकतो मर्कटबन्धो द्वितीयपार्श्वे की-लिका तदर्द्धनाराचं चतुर्थम्, कीलिकाविद्धास्थिद्वयसञ्चितं कीलिकाख्यं पञ्चमम्। अस्थिद्वयपर्यन्तस्पर्शनलक्षणां से-वामार्त्ते सेवामागतमिति सेवार्तं षष्ठम्। शक्तिविशेषपक्षे त्वेवं विघदार्वादेरिव दृढत्वं संहननमिति। इह गाथे--" वज्ज-रिसभनारायं, पढमं वीयं च रिसभनारायं। नाराय अ-द्धनारा-य कीलिया तह य छेवट्ठं॥ १॥ रिसहो य होइ पट्टो, वज्जं पुण खीलियं वियाणाहि। उभओ मक्कडबंधं, नारायं तं वियाणाहि॥ २॥" स्था० ६ ठा० ३ उ०।

सम्प्रति संहनननाम षड्विधमभिधित्सुर्गाथायुगलमाह-

संघयणमट्ठिनिचओ, तं छद्धा वज्जरिसहनारायं।
तह रिसहनारायं, नारायं अद्धनारायं ॥ ३७ ॥
कीलिहछेवट्ठं इह, रिसहो पट्टो य कीलियावज्जं।
उभओ मक्कडबंधो, नारायं इममुरालंगे ॥ ३८ ॥

संहन्यन्ते--दृढीक्रियन्ते शरीरपुद्गला येन तत् संहननं तच्चास्थिनिचयः कीलिकादिरूपाणामस्थ्नां निचयो र-चनाविशेषोऽस्थिनिचय। तत्संहननं षड्धा षट्प्रकारैर्भ-वति। तद्यथा--वज्रऋषभनाराचं, तथा ऋषभनाराचमि-हानुस्वारोऽलाक्षणिक, नाराचम्, अर्धनाराचं, कीलिका-

णानीति । सन्निकर्षद्वारे—'सामाइयसंजमे णं भंते ! सामाइयसजयस्से' त्यादौ 'सिय हीणे' त्ति असख्यातानि तस्य संयमस्थानानि, तत्र च यदैको हीनशुद्धिकेऽन्यस्त्वितरत्र वर्त्तते तदैको हीनोऽन्यस्त्वभ्यधिक., यदा तु समाने सयमस्थाने वर्तने तदा तुल्ये, हीनाधिकत्वे च षट्स्थानपतितत्वं स्यादत एवाऽऽह-'छट्ठाणवडिए' त्ति उपयोगद्वारे-सामायिकसंयतादीनां पुलाकवदुपयोगद्वय भवत्ति । सूक्ष्मसम्परायसंयतस्य तु विशषोपदर्शनार्थमाह-'नवरं सुहुमसंपराइए' इत्यादि, सूक्ष्मसम्परायः साकारोपयुक्तस्तथास्वभावत्वादिति । लेश्याद्वारे-यथाख्यातसंयत. स्नातकसमान उक्तः । स्नातकश्च सलेश्यो वा स्यादलेश्यो वा । यदि सलेश्यस्तदा परमशुक्ललेश्यः स्यादित्येवमुक्त । यथाख्यातसंयतस्य तु निर्ग्रन्थत्वापेक्षया निर्विशेषेणापि शुक्ललेश्या स्यादतोऽस्य विशेषस्याभिधानार्थमाह-'णवर जइ' इत्यादि ।

परिणामद्वारे—

सामाइयसंजए णं भंते ! किं वड्डमाणपरिणामे होज्जा, हीयमाणपरिणामे होज्जा, अवट्ठियपरिणामे वा होज्जा ?, गोयमा ! वड्डमाणपरिणामे जहा पुलाए । एवं०जाव परिहारविसुद्धिए । सुहुमसंपराए पुच्छा, गोयमा ! वड्डमाणपरिणामे वा होज्जा हीयमाणपरिणामे वा होज्जा, नो अवट्ठियपरिणामे होज्जा । अहक्खाए जहा नियंठे । सामाइयसंजए णं भंते ! केवतियं कालं वड्डमाणपरिणामे होज्जा?, गोयमा ! जघेणं एक्कं समयं जहा पुलाए । एवं० जाव परिहारविसुद्धिए वि । सुहुमसंपरागसंजए णं भंते ! केवतियं कालं वड्डमाणपरिणामे होज्जा ?, गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं अंतोमुहुत्तं । केवतियं कालं हीयमाणपरिणामे एवं चेव । अहक्खायसंजए णं भंते ! केवतियं कालं वड्डमाणपरिणामे होज्जा ?, गोयमा ! जहन्नेणं अंतोमुहुत्तं, उक्कोसेण वि अंतोमुहुत्तं केवतियं कालं अवट्ठियपरिणामे होज्जा ?, गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं देसूणा पुव्वकोडी ॥२०॥ ( सू०-७६३ ) ।

'सुहुमसंपराए' इत्यादौ, 'वड्डमाणपरिणामे वा होज्जा हीयमाणपरिणामे वा होज्जा नो अवट्ठियपरिणामे होज्ज' त्ति सूक्ष्मसंपरायसंयत श्रेणिं समारोहन् वर्द्धमानपरिणामस्ततो भ्रस्यन् हीयमानपरिणाम, अवस्थितपरिणामस्त्वसौ न भवति, गुणस्थानकस्वभावादिति । तथा 'सुहुमसंपरायसजए णं भते ! केवइय कालं' इत्यादौ 'जहन्नेणं एक्कं समय' ति सूक्ष्मसपरायस्य जघन्यतो वर्द्धमानपरिणाम एकं समयं प्रतिपत्तिसमयानन्तरमेव मरणात्, 'उक्कोसेणं अतोमुहुत्तं' ति तद्गुणस्थानकस्यैतावत्प्रमाणत्वात्, एव तस्य हीयमानपरिणामोऽपि भावनीय इति । तथा 'अहक्खायसजए ण भते !' इत्यादौ 'जहन्नेणं अंतोमुहुत्तं उक्कोसेण पि अंतोमुहुत्त' ति यो यथाख्यातसंयत. केवलज्ञानमुत्पादयिष्यति यश्च शैलेशीप्रतिपन्नस्तस्य वर्द्धमानपरिणामो जघन्यत उत्कर्षतश्चान्तर्मुहूर्तं तदुत्तरकालं तद्व्यवच्छेदात्, अवस्थितपरिणामस्तु जघन्येनैकं समयम्, उपशमाऽद्धाया प्रथमसमयानन्तरमेव मरणात्, 'उक्कोसेणं देसूणा पुव्वकोडि' त्ति एतच्च प्राग्वद्भावनीयमिति ।

बन्धद्वारे—

सामाइयसंजए णं भंते ! कइ कम्मप्पगडीओ बंधइ ?, गोयमा ! सत्तविहबंधइ वा अट्ठविहबंधए वा एवं जहा बउसे, एवं ०जाव परिहारविसुद्धिए । सुहुमसंपरागसंजए पुच्छा, गोयमा ! आउयमोहणिज्जवज्जाओ छ कम्मप्पगडीओ बंधति, अहक्खाए संजए जहा सिणाए ॥२१॥ सामाइयसंजए णं भंते ! कति कम्मप्पगडीओ वेदेति ?, गोयमा ! नियमं अट्ठ कम्मप्पगडीओ वेदेति, एवं जाव० सुहुमसंपराए । अहक्खाए पुच्छा, गोयमा ! सत्तविहवेयए वा चउव्विहवेयए वा, सत्तविहवेदमाणे मोहणिज्जवज्जाओ सत्त कम्मप्पगडीओ वेदेति, चत्तारि वेदेमाणे वेयणिज्जाओ य नामगोयाओ चत्तारि कम्मप्पगडीओ वेदेति ॥२२॥ सामाइयसंजए णं भंते ! कति कम्मप्पगडीओ उदीरेति ?, गोयमा ! सत्तविह जहा बउसो, एवं ०जाव परिहारविसुद्धिए । सुहुमसंपराए पुच्छा, गोयमा ! छव्विह उदीरए वा पंचविह उदीरए वा, छ उदीरेमाणे आउयवेयणिज्जवज्जाओ छ कम्मप्पगडीओ उदीरेइ, पंच उदीरेमाणे आउयवेयणिज्जमोहणिज्जवज्जाओ पंच कम्मप्पगडीओ उदीरेइ । अहक्खायसंजए पुच्छा, गोयमा ! पंचविह उदीरए वा दुविह उदीरए वा अणुदीरए वा, पंच उदीरेमाणे आउयवेयणिज्जवज्जाओ सेसं जहा नियंठस्स॥२३॥(सू०७६४)॥सामाइयसंजए णं भंते ! सामाइयसंजयत्तं जहमाणे किं जहति किं उवसंपज्जति ?, गोयमा ! सामाइयसंजयत्तं जहति छेदोवट्ठावणियसंजयं वा सुहुमसंपरागसंजयं वा असंजमं वा संजमासंजमं वा उपसंपज्जति । छेओवट्ठावणिए पुच्छा, गोयमा ! छेओवट्ठावणियसंजयत्तं जहति सामाइयसंजत्तं जहति परिहारविसुद्धियत्तं जहति सुहुमसंजमं वा उवसंपज्जति असंजमं वा उवसंपज्जति संजमासंजमं वा उवसंपज्जति । परिहारविसुद्धिए पुच्छा, गोयमा ! परिहारविसुद्धियसंजयत्तं जहति, छेदोवट्ठावणियसंजयं वा; असंजमं वा उवसंपज्जति । सुहुमसंपराए पुच्छा, गोयमा ! सुहुमसंपरायसजयत्तं जहति सामाइयसंजयं वा छेदोवट्ठावणियसंजयं वा अहक्खायसंजयं वा असंजमं वा उवसंपज्जइ । अहक्खायसंजए णं पुच्छा, गोयमा ! अहक्खायसंजयत्तं जहति सुहुमसंपरायसंजयं वा असंजयं वा सिद्धिगतिं वा उवसंपज्जति ॥ २४ ॥ ( सू० ७६५ ) सामाइयसंजए ण

भंते ! किं सन्नोवउत्ते होज्जा नो सन्नोवउत्ते होज्जा ?, गोयमा ! सन्नोवउत्ते जहा बउसो, एवं० जाव परिहारविसुद्धिए, सुहुमसंपराए अहक्खाए य जहा पुलाए ॥ २५ ॥ सामाइयसंजए णं भंते ! किं आहारए होज्जा, अणाहारए होज्जा?, जहा पुलाए, एवं०जाव सुहुमसंपराए, अहक्खायसंजए जहा सिणाए ॥ २६ ॥ सामाइयसंजए णं भंते ! कति भवग्गहणाइं होज्जा ?, गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं अट्ठ,एवं छेदोवट्ठावणिएऽवि । परिहारविसुद्धिए पुच्छा, गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं तिन्नि, एवं०जाव अहक्खाए ॥२७॥ [ सू०-७९६ ]

'सुहुमसंपराए' इत्यादौ 'आउयमोहणिज्जवज्जाओ छ कम्मप्पगडीओ बंधइ' त्ति सूक्ष्मसम्परायसंयतो ह्यायुर्न वध्नाति अप्रमत्तान्तत्वात्तद्बन्धस्य, मोहनीयं च वादरकषायोदयाभावान्न वध्नातीति तद्वर्जाः षट् कर्मप्रकृतीर्बध्नातीति । वेदद्वारे—'अहक्खाये' त्यादौ 'सत्तविहवेयए वा चउव्विहवेयए व' त्ति यथाख्यातसंयतो निर्ग्रन्थावस्थायां 'मोहवज्ज' त्ति मोहवर्जानां सप्तानां कर्मप्रकृतीनां वेदको, मोहनीयस्योपशान्तत्वात् क्षीणत्वाद्वा, स्नातकावस्थायां तु चतसृणामेव, घातिकर्मप्रकृतीनां तस्य क्षीणत्वात् । उपसम्पद्धानद्वारे-'सामाइयसंजए णं' मित्यादि, सामायिकसंयत. सामायिकसंयतत्वं त्यजति, छेदोपस्थापनीयसंयतत्वं प्रतिपद्यते, चतुर्यामधर्मात्पञ्चयामधर्मसंक्रमे पार्श्वनाथशिष्यवत्, शिष्यको वा महाव्रतारोपणे, सूक्ष्मसंपरायसंयतत्वं वा प्रतिपद्यते श्रेणिप्रतिपत्तितः असंयमादिर्वा भवेद्भावप्रतिपातादिति । तथा छेदोपस्थापनीयसंयतश्छेदोपस्थापनीयसंयतत्वं त्यजन् सामायिकसंयतत्वं प्रतिपद्यते, यथाऽऽदिदेवतीर्थसाधुः अजितस्वामितीर्थे प्रतिपद्यमान., परिहारविशुद्धिकसंयतत्वं वा प्रतिपद्यते, छेदोपस्थापनीयवत एव परिहारविशुद्धिसंयमस्य योग्यत्वादिति । तथा परिहारविशुद्धिकसंयत. परिहारविशुद्धिकसंयतत्वं त्यजन् छेदोपस्थापनीयसंयतत्वं प्रतिपद्यते पुनर्गच्छाद्याश्रयणात्,असंयमं वा प्रतिपद्यते देवत्वोत्पत्ताविति। तथा सूक्ष्मसम्परायसंयत. सूक्ष्मसंपरायसंयतत्वं श्रेणीप्रतिपातेन त्यजन् सामायिकसंयतत्वं प्रतिपद्यते, यदि पूर्वे सामायिकसंयतो भवेत् छेदोपस्थापनीयसंयतत्वं वा प्रतिपद्यते, यदि पूर्वे छेदोपस्थापनीयसंयतो भवेत्, यथाख्यातसंयतत्वं वा प्रतिपद्यते श्रेणीसमारोहणत इति, तथा यथाख्यातसंयतो यथाख्यातसंयतत्वं त्यजन् श्रेणिप्रतिपतनात् सूक्ष्मसम्परायसंयतत्वं प्रतिपद्यते असंयमं वा प्रतिपद्यते, उपशान्तमोहत्वे मरणात् देवोत्पत्तौ, सिद्धिगतिं वोपसम्पद्यते स्नातकत्वे सतीति ।

आकर्षद्वारे—

सामाइयसंजयस्स णं भंते ! एगभवग्गहणीया केवतिया आगरिसा पण्णत्ता, गोयमा ! जहन्नेणं जहा बउसस्स, छेदोवट्ठावणियस्स पुच्छा गोयमा ! जहन्नेणं एक्कं उक्कोसेणं वीसपुहुत्तं । परिहारविसुद्धियस्स पुच्छा , गोयमा ! जहन्नेणं एक्कं, उक्कोसेणं तिन्नि । सुहुमसंपरायस्स पुच्छा , गोयमा ! जहन्नेणं एक्कं, उक्कोसेणं चत्तारि । अहक्खायस्स पुच्छा, गोयमा ! जहन्नेणं एक्कं, उक्कोसेणं दोन्नि । सामाइयसंजयस्स णं भंते ! नाणाभवग्गहणीया केवतिया आगरिसा पण्णत्ता ?, गोयमा ! जहा बउसे । छेदोवट्ठावणियस्स पुच्छा, गोयमा ! जहन्नेणं दोन्नि, उक्कोसेणं उवरिं नवण्हं सयाणं अन्तोसहस्सस्स परिहारविसुद्धियस्स जहन्नेणं दोन्नि, उक्कोसेणं सत्त । सुहुमसंपरायस्स जहन्नेणं दोन्नि, उक्कोसेणं नव । अहक्खायस्स जहन्नेणं दोन्नि, उक्कोसेणं पंच । ( सू०—७९७ )

'छेदोवट्ठावणीयस्से' त्यादौ 'वीसपुहुत्तं' ति छेदोपस्थानीयस्योत्कर्षतो विंशतिपृथक्त्वं पञ्चषादिविंशतयः आकर्षणां भवन्ति,'परिहारविसुद्धियस्से' त्यादौ 'उक्कोसेणं तिन्नि'त्ति परिहारविसुद्धिकसंयतत्वं त्रीन् वारान् एकत्र भवे उत्कर्षत. प्रतिपद्यते, 'सुहुमसंपरायस्से' त्यादौ 'उक्कोसेणं चत्तारि' त्ति एकत्र भवे उपशमश्रेणीद्वयसंभवेन प्रत्येकं संक्लिश्यमानविशुद्ध्यमानलक्षणसूक्ष्मसंपरायद्वयभावाच्चतस्रः प्रतिपत्तयः सूक्ष्मसंपरायसंयतत्वे भवन्ति, 'अहक्खाये' त्यादौ 'उक्कोसेणं दोन्नि' त्ति उपशमश्रेणिद्वयसम्भवादिति। नानाभवग्रहणाऽऽकर्षाधिकारे 'छेओवट्ठावणीयस्से' त्यादौ 'उक्कोसेणं उवरिं नवण्हं सयाणं अन्तोसहस्स' त्ति, कथम्? किलैकत्र भवग्रहणे षड्विंशतय आकर्षाणां भवन्ति, ताश्चाष्टाभिर्भवैर्गुणिता नव शतानि षण्णवत्यधिकानि भवन्ति। इदं च संभवमात्रमाश्रित्य संख्याविशेषप्रदर्शनमतोऽन्यथाऽपि यथा नव शतान्यधिकानि भवन्ति तथा कार्यम्। 'परिहारविशुद्धियस्से' त्यादौ 'उक्कोसेण सत्त' त्ति कथम् ?, एकत्र भवे तेषां त्रयाणामुक्तत्वात्, भवत्रयस्य च तस्याभिधानादेकत्र भवे त्रयं द्वितीये द्वयं तृतीये द्वयमित्यादिविकल्पतः सप्ताऽऽकर्षाः परिहारविशुद्धिकस्येति। 'सुहुमसंपरायस्से' त्यादौ 'उक्कोसेणं नव' त्ति, कथम् ?,सूक्ष्मसंपरायस्यैकत्र भवे आकर्षचतुष्कस्योक्तत्वाद्भवत्रयस्य च तस्याभिधानादेकत्र चत्वारो द्वितीयेऽपि चत्वारस्तृतीये चैक इत्येवं नवेति। 'अहक्खाए' इत्यादौ 'उक्कोसेणं पंच' त्ति, कथम् ?, यथाख्यातसंयतस्यैकत्र भवे द्वावाकर्षौ द्वितीये च द्वावेकत्र चैक इत्येवं पञ्चेति।

कालद्वारे—

सामाइयसंजए णं भंते ! कालओ केवच्चिरं होइ ?, गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं देसूणएहिं नवहिं वासेहिं ऊणिया पुव्वकोडी, एवं छेदोवट्ठावणिए वि । परिहारविसुद्धिए जहन्नेणं एक्कं समयं उक्कोसेणं देसूणएहिं एगूणतीसाए वासेहिं ऊणिया पुव्वकोडी, सुहुमसंपराए जहा नियंठे, अहक्खाए जहा सामाइयसंजए ।

सामाइयसंजया णं भंते ! कालओ केवच्चिरं होइ ?, गोयमा ! सव्वऽद्धा, छेदोवट्ठावणिएसु पुच्छा ?, गोयमा ! जहन्नेणं अड्डाइज्जाइं वाससयाइं उक्कोसेणं पन्नासं सागरोवमकोडिसयसहस्साइं। परिहारविसुद्धीए पुच्छा, गोयमा ! जहन्नेणं देसूणाइं दो वाससयाइं उक्कोसेणं देसूणाओ दो पुव्वकोडीओ। सुहुमसंपरागसंजया णं भंते ! पुच्छा, गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं अंतोमुहुत्तं, अहक्खायसंजया जहा सामाइयसंजया ॥ २९ ॥ सामाइयसंजयस्स णं भंते ! केवतियं कालं अंतरं होइ ?, गोयमा ! जहन्नेणं जहा पुलागस्स एवं०जाव अहक्खायसंजयस्स। सामाइयसंजयस्स भंते ! पुच्छा, गोयमा! नऽत्थि अंतरं। छेदोवट्ठावणियपुच्छा, गोयमा ! जहन्नेणं तेवट्ठिं वाससहस्साइं उक्कोसेणं अट्ठारससागरोवमकोडाकोडीओ, परिहारविसुद्धियस्स पुच्छा? गोयमा ! जहन्नेणं चउरासीयं वाससहस्साइं उक्कोसेणं अट्ठारससागरोवमकोडाकोडीओ सुहुमसंपरायाणं जहा नियंठाणं। अहक्खायाणं जहा सामाइयसंजयाणं ॥३०॥ सामाइयसंजयस्स णं भंते ! कति समुग्घाया पण्णत्ता ?, गोयमा ! छ समुग्घाया पण्णत्ता, तं जहा–कसायकुसीलस्स। एवं छेदोवट्ठावणियस्स वि। परिहारविसुद्धियस्स जहा पुलागस्स। सुहुमसंपरागस्स जहा नियंठस्स। अहक्खायस्स जहा सिणायस्स ॥ ३१ ॥ सामाइयसंजए णं भंते ! लोगस्स किं संखेज्जइभागे होज्जा असंखेज्जइभागे पुच्छा, गोयमा ! नो संखेज्जइ जहा पुलाए, एवं० जाव सुहुमसंपराए। अहक्खायसंजए जहा सिणाए ॥ ३२ ॥ सामाइयसंजए णं भंते ! लोगस्स किं संखेज्जइभागं फुसइ जहेव होज्जा तहेव फुसइ ॥ ३३ ॥ सामाइयसंजए णं भंते ! कयरम्मि भावे होज्जा ?, गोयमा ! उवसमिए भावे होज्जा, एवं ०जाव सुहुमसंपराए। अहक्खायसंपराए पुच्छा, गोयमा! उवसमिए वा खइए वा भावे होज्जा ॥ ३४ ॥ सामाइयसंजयाणं भंते ! एगसमएणं केवतिया होज्जा ?, गोयमा ! पडिवज्जमाणए य पडुच्च जहा कसायकुसीला तहेव निरवसेसं। छेदोवट्ठावणिया पुच्छा, गोयमा ! पडिवज्जमाणए पडुच्च सिय अत्थि, सिय नऽत्थि, जइ अत्थि जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं सयपुहुत्तं, पुव्वपडिवन्नए पडुच्च सिय, अत्थि सिय नऽत्थि, जइ अत्थि जहन्नेणं कोडिसयपुहुत्तं उक्कोसेण वि कोडिसयपुहुत्तं, परिहारविसुद्धिया जहा पुलागा। सुहुमसंपराया जहा नियंठा। अहक्खायसंजयाणं पुच्छा, गोयमा ! पडिवज्जमाणए पडुच्च सिय अत्थि सिय नऽत्थि, जइ अत्थि जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं यावट्ठसयं अट्ठुत्तरसयं खमगाणं च उप्पन्नं उवसामगाणं, पुव्वपडिवन्नए पडुच्च जहन्नेणं कोडिपुहुत्तं उक्कोसेणं वि कोडिपुहुत्तं। एएसि णं भंते ! सामाइयछेओवट्ठावणियपरिहारविसुद्धियसुहुमसंपरायअहक्खायसंजयाणं कयरे कयरे ०जाव विसेसाहिया?, गोयमा ! सव्वत्थोवा सुहुमसंपरायसंजया परिहारविसुद्धियसंजया संखेज्जगुणा अहक्खायसंजया संखेज्जगुणा छेओवट्ठावणियसंजया संखेज्जगुणा सामाइयसंजया संखेज्जगुणा ॥ ३६ ॥ ( सू०—७९८ )

'सामाइय' इत्यादौ सामायिकप्रतिपत्तिसमयसमनन्तरमेव मरणादेक· समयः, 'उक्कोसेणं देसूणएहिं नवहिं वासेहिं ऊणिया पुव्वकोडि' त्ति यदुक्तं तद्गर्भसमयादारभ्यावसेयम्, अन्यथा जन्मदिनापेक्षयाऽष्टवर्षोनिकैव सा भवतीति, 'परिहारविसुद्धिए जहन्नेणं एक्कं समय' ति मरणापेक्षमेतत्, 'उक्कोसेणं देसूणएहिं' ति, अस्यायमर्थ–देशोननववर्षजन्मपर्यायेण केनापि पूर्वकोट्यायुषा प्रव्रज्या प्रतिपन्ना, तस्य च विंशतिवर्षप्रव्रज्यापर्यायस्य दृष्टिवादोऽनुज्ञातस्ततश्चासौ परिहारविशुद्धिकं प्रतिपन्न, तच्चाष्टादशमासमानमप्यविच्छिन्नतत्परिणामेन तेनाजन्म पालितमित्येवमेकोनत्रिंशद्वर्षोना पूर्वकोटिं यावत्तस्याविति, 'अहक्खाए जहा सामाइयसंजए' त्ति तत्र जघन्यत एकं समयम् उपशमावस्थाया मरणात्, उत्कर्षतो देशोना पूर्वकोटी, स्नातकयथाख्यातापेक्षयेति। पृथक्त्वेन कालचिन्तायां 'छेओवट्ठावणिए' इत्यादि, तत्रोत्सर्पिण्यामादितीर्थकरस्य तीर्थं यावच्छेदोपस्थापनीयं प्रभवतीति, तीर्थं च तस्य सार्द्धे द्वे वर्षशते भवतीत्यत उक्तम्–'अड्डाइज्जाइं' इत्यादि, तथाऽवसर्पिण्यामादितीर्थकरस्य तीर्थं यावच्छेदोपस्थापनीय प्रवर्त्तते तच्च पञ्चाशत्सागरोपमकोटीलक्षा इत्यतः 'उक्कोसेणं पन्नास' मित्याद्युक्तमिति। परिहारविशुद्धिककालो जघन्येन 'देसूणाइं दो वाससयाइं' ति, कथम्?, उत्सर्पिण्यामाद्यस्य जिनस्य समीपे कश्चिद्वर्षशतायु परिहारविशुद्धिकं प्रतिपन्नस्तस्यान्तिके तज्जीवितान्तेऽन्यो वर्षशतायुरेव तत परतो न तस्य प्रतिपत्तिरस्तीत्येवं द्वे वर्षशते, तयोश्च प्रत्येकमेकोनत्रिंशतिवर्षेषु गतेषु तत्प्रतिपत्तिरित्येवमष्टपञ्चाशता वर्षैर्न्यूने त इति–देशोने इत्युक्तम्, एतच्च टीकाकारव्याख्यानम्, चूर्णिकारव्याख्यानमप्येवमेव, किन्त्ववसर्पिण्यन्तिमजिनापेक्षमिति विशेष। 'उक्कोसेणं देसूणाओ दो पुव्वकोडीओ' त्ति, कथम्?, अवसर्पिण्यामादितीर्थकरस्यान्तिके पूर्वकोट्यायु कश्चित्परिहारविशुद्धिक प्रतिपन्नस्तस्यान्तिके तज्जीवितान्तेऽन्यस्तादृश एव तत्प्रतिपन्न इत्येव पूर्वकोटीद्वयं तथैव देशोनं परिहारविशुद्धिकस्य यतत्वं स्यादिति। अन्तरद्वारे–'छेओवट्ठावणिए' त्यादौ जहन्नेण तेवट्ठिं वाससहस्साइं' ति, कथम्?, अवसर्पिण्यां दुष्षमा यावच्छेदोपस्थापनीयं प्रवर्त्तते, ततस्तस्या एकविंशतिवर्षसहस्रमानायामेकान्तदुष्षमायामुत्सर्पिण्याश्चैकान्तदुष्षमाया च तत्प्रमाणायामेव तदभाव स्यात्, एव चैकविंशतिवर्षसहस्रमानत्रयेण त्रिषष्टिवर्षसहस्राणामन्तरमिति।

' उक्कोसेणं अट्ठारससागरोवमकोडाकोडीओ ' त्ति किलोत्सर्पिण्यां चतुर्विंशतितमजिनतीर्थे छेदोपस्थापनीयं प्रवर्त्तते, नतश्च सुषमदुष्षमादिसमात्रये क्रमेण द्वित्रिचतुःसागरोपमकोटीकोटीप्रमाणे अतीते अवसर्पिण्याश्चैकान्तसुषमाविषये क्रमेण चतुस्त्रिद्विसागरोपमकोटीकोटीप्रमाणे अतीतप्राये प्रथमजिनतीर्थे छेदोपस्थापनीयं प्रवर्त्तत इत्येवं यथोक्तं छेदोपस्थापनीयस्यान्तरं भवति। यच्चेह किञ्चिन्न पूर्यते यच्च पूर्वसूत्रेऽतिरिच्यते तदल्पत्वान्न विवक्षितमिति। ' परिहारविसुद्धियस्से ' त्यादि, परिहारविशुद्धिकसंयतस्यान्तरं जघन्यं चतुरशीतिवर्षसहस्राणि, कथम् ?, अवसर्पिण्या दुष्षमैकान्तदुष्षमयोरुत्सर्पिण्याश्चैकान्तदुष्षमादुष्षमयो प्रत्येकमेकविंशतिवर्षसहस्रप्रमाणत्वेन चतुरशीतिर्वर्षसहस्राणां भवति तत्र च परिहारविशुद्धिकं न भवतीति कृत्वा जघन्यमन्तरं तस्य यथोक्तं स्यात्, यश्चेहान्तिमजिनानन्तरो दुष्षमायां परिहारविसुद्धिककालो यश्चोत्सर्पिण्यास्तृतीयसमायां परिहारविशुद्धिकप्रतिपत्तिकालात्पूर्वः कालो नासौ विवक्षितोऽल्पत्वादिति, ' उक्कोसेणं अट्ठारससागरोवमकोडाकोडीओ ' त्ति छेदोपस्थापनीयोत्कृष्टान्तरवदस्य भावना कार्येति। परिणामद्वारे—' छेदोवट्ठावणिए ' इत्यादौ ' जहन्नेणं कोडीसयपुहुत्तं उक्कोसेण वि कोडीसयपुहुत्तं ' ति, इहोत्कृष्टं छेदोपस्थापनीयसयतपरिमाणमादितीर्थकरतीर्थान्याश्रित्य संभवति, जघन्यं तु तत्सम्यग् नावगम्यते,यतो दुष्षमान्ते भरतादिषु दशसु क्षेत्रेषु प्रत्येकं तद्द्वयस्य भावाद्विंशतिरेव तेषां श्रूयते। केचित्पुनराहु —इदमप्यादितीर्थकराणां यस्तीर्थकालस्तदपेक्षयैव समवसेयम्, कोटीशतपृथक्त्व च जघन्यमल्पतरमुत्कृष्टं च बहुतरमिति। अल्पबहुत्वद्वारे-' सव्वत्थोवा सुहुमसंपरायसंजय' त्ति स्तोकत्वात्तत्कालस्य निर्ग्रन्थतुल्यत्वेन च शतपृथक्त्वप्रमाणत्वात्तेषां, ' परिहारविशुद्धियसंजया संखेज्जगुणा ' त्ति तत्कालस्य बहुत्वात् पुलाकतुल्यत्वेन च सहस्रपृथक्त्वमानत्वात्तेषाम्, ' अहक्खायसंजया संखेज्जगुणा ' त्ति कोटीपृथक्त्वमानत्वात्तेषा, ' छेदोवट्ठावणियसंजया संखेज्जगुणा ' त्ति कोटीशतपृथक्त्वमानतया तेषामुक्तत्वात्, ' सामाइयसंजया संखेज्जगुणा ' त्ति कषायकुशीलतुल्यतया कोटीसहस्रपृथक्त्वमानत्वेनोक्तत्वात्तेषामिति। भ० २५ श० ७ उ०।

जीवा णं भंते ! किं संजया,असंजया,संजयासंजया,नोसंजया,नोअसंजया,नोसंजयासंजया ?,गोयमा ! जीवा संजया वि १,असंजया वि २,संजयासंजया वि ३,नोसंजया,नोअसंजया,नोसंजयासंजया वि४नेरइया णं भंते ! पुच्छा,गोयमा ! नेरइया नो संजया असंजया नोसंजयासंजया नो नोसंजय नोअसंजयनोसंजयासंजया,एवं० जाव चउरिंदियपंचिंदियतिरिक्खजोणियाणं पुच्छा,गोयमा! पंचिंदियतिरिक्खजोणिता नो संजता असंजता वि संजतासंजता वि नो नोसंजतनोअसंजतनोसंजतासंजता वि,मनुस्साणं पुच्छा.गोयमा! मणूमा संजता वि असंजता वि संजतासंजता वि,नो-नोसंजतनोअसंजतनोसंजतासंजता,वाणमंतरजोतिसियवेमाणिया जहा नेरइया, सिद्धाणं पुच्छा, गोयमा ! सिद्धा नो संजता १,नो असंजता २, नो संजतासंजता ३, नो संजतनोअसंजतनोसंजतासंजता ४। गाहा "संजयअसंजय मी-समा य जीवा तहेव मणुया य। संजतरहिया तिरिया, सेसा असंजता होंति॥ १॥" ( सू० ३१६ )। संजयपयं समत्तं ॥१२॥

' जीवा णं भंते ! ' इत्यादि, संयच्छन्ति स्म—सर्वसावद्ययोगेभ्यः सम्यगुपरमन्ति स्म अर्थात् निरवद्ययोगेषु चारित्रपरिणामस्फातिहेतुषु वर्त्तन्ते स्म इति संयताः ' गत्यर्थनित्याकर्मका ' दिति कर्त्तरि क्तप्रत्ययः, हिंसादिपापस्थानेभ्यो निवृत्ता इत्यर्थः। तद्विपरीता असंयताः। हिंसादीनां देशतो निवृत्ताः संयतासंयताः, त्रितयप्रतिषेधविषयाः सिद्धाः, कथमिति चेत्, उच्यते, उक्तमिह संयमो नाम निरवद्येतरयोगप्रवृत्तिनिवृत्तिरूपः, ततः संयतादिपर्यायो योगाऽऽश्रयः,सिद्धाश्च भगवन्तो योगाऽतीताः शरीरमनसोऽभावादतस्त्रितयप्रतिषेधविषयाः, एवं च सामान्यतो जीवपदे चतुष्टयमपि घटते। तथा चाह-' गोयमे ' त्यादि, गौतम ! जीवाः संयता अपि साधूना संयतत्वात्, असंयता अपि नैरयिकादीनामसंयतत्वात्; संयतासंयता अपि पञ्चेन्द्रियतिरश्चां मनुष्याणां च देशतः संयमस्य भावात्, नोसंयतनोअसंयतनोसंयतासंयता अपि सिद्धानां त्रयस्यापि प्रतिषेधात्। चतुर्विंशतिदण्डकसूत्राणि सुगमानि। अत्रैवं संग्रहणिगाथामाह 'संयते' त्यादि,संयता असंयता मिश्रकाश्च-संयतासंयता जीवास्तथैव मनुष्याश्च। किमुक्तं भवति ?–जीवपदे मनुष्यपदे च एतानि त्रीण्यपि पदानि घटन्ते नतु न घटन्ते इत्येवं परमेतत् सूत्रम्,अन्यथा जीवपदे त्रितयप्रतिषेधरूपं चतुर्थमपि पदं घटत एव,यथोक्तं प्राक्,तथा संयतरहिता उपलक्षणमेतत् त्रितयप्रतिषेधरहिताश्च तिर्यञ्च -तिर्यक्पञ्चेन्द्रियाः। आह-कथं संयतपदरहितास्तिर्यक्पञ्चेन्द्रियाः ?, यावता तेषामपि संयतत्वमुपपद्यते एव, तथाहि-संयतत्वं नाम निरवद्येतरयोगप्रवृत्तिनिवृत्त्यात्मकं, ते च निरवद्येतरयोगेषु प्रवृत्तिनिवृत्ती तिरश्चामपि सम्भवतः, यतश्चरमकालेऽपि चतुर्विधस्याप्याहारस्य प्रत्याख्यानं कृत्वा शुभेषु योगेषु वर्त्तमाना दृश्यन्ते।अन्यच्च सिद्धान्ते तत्र तत्र प्रदेशे महाव्रतान्यप्यात्मन्यारोपयन्तः श्रूयन्ते,उक्तं च–"तिरियाणं चारित्तं,निवारितं तह य अह पुणो तेसिं। सुव्वइ बहुयाणं चिय, महव्वयारोवणं समए॥ १॥" तदेतदयुक्तं, सम्यग्वस्तुतत्त्वापरिज्ञानात्, संयतत्वमिह निरवद्येतरयोगप्रवृत्तिनिवृत्तिरूपमान्तरचारित्रपरिणामानुषक्तमवगन्तव्यं, न शेषं, न च तेषां कृतचतुर्विधाहारप्रत्याख्यानानामपि महाव्रतान्यारोपयता भवप्रत्ययादेव चरणपरिणाम उपजायते, स ह्यचिन्त्यचिन्तामणिकल्पे मनुष्यभव एव यदि परं कर्मक्षयोपशमाद् भवति, नान्यथा, अत एवायमतिदुर्लभो गीयते भगवद्भिः। अथ कथमवसीयते न तिरश्चां तथा चेष्टमानानामप्यान्तरश्चारित्रपरिणाम ?, उच्यते, केवलज्ञानाद्यश्रवणात्, यदि हि तिरश्चामपि चरणपरिणामस्सम्भवेत् तत् क्वचित् कदाचित् कस्यचिदुत्कर्षतो भावतो मनःपर्यायज्ञानं केवलज्ञानं वा श्रूयेत, तयोश्चारित्रपरिणामनिबन्धनत्वात्, न च श्रूयते, तस्मादवसीयते-न तेषां चारित्रपरिणाम। उक्तं च–"न महव्वयसब्भावे, वि चरणपरिणामसं-

भवो तेसिं । न बहुगुणाणं पि जओ,केवलसंभूइपरिणामो॥१॥" तद्भावाऽभावास् संयमपदरहिताः, शेषाः संसारस्था असंयताः-असंयतपदसहिता भवन्ति,न शेषपदसहिताः । प्रश्न० ३२ पद । संयताश्चतुर्धा, असंविग्नाः गीतार्थाः, संविग्नाः गीतार्थाः गीतार्थाः संविग्नाः, असंविग्नाः अगीतार्थाश्च । बृ० १उ० २प्रक० । वीरेण सह प्रव्रजिते स्वनामख्याते राजपुत्रे, स्था० ८ ठा० ३ उ० । स्वनामख्याते काम्पिल्यराजे , ती० २४ कल्प । उत्त० ।

सञ्जयशब्दनिक्षेपायाह निर्युक्तिकृत्—

निक्खेवो संजइज्ज-म्मि चउव्विहे दुविहो उ होइ दव्वम्मि।
आगम नोआगमतो,नोआगमओ य सो तिविहो।३६२।
जाणगसरीरभविए, तव्वइरित्ते य से पुणो तिविहो ।
एगभवियबद्धाउय, अभिमुहओ नामगोए य ॥३६३॥
संजयनामं गोयं, वेयंतो भावसंजओ होइ ।
तत्तो समुट्ठियमिणं, अज्झयणं संजइज्जं ति ॥ ३६४ ॥

गाथात्रयं व्याख्यातप्रायम् ,नवरं'णिक्खेवो संजइज्जम्मि'त्ति निक्षेप-न्यास सञ्जयीयाध्ययने अर्थात्-सञ्जयस्येति गम्यते। तथा च तृतीयगाथायां 'संजयनाम गोयं वेयंतो' इत्युक्तं 'तत' इति सञ्जयादभिधेयभूतात् समुत्थितम्-उत्पन्नम् इदम् अध्ययनं सञ्जयीयमिति, तस्माद्धेतोरुच्यत इति गाथात्रयार्थः। इत्युक्तो नामनिष्पन्ननिक्षेपः ।

सम्प्रति सूत्रालापकनिष्पन्नस्यावसरः, स च सूत्रे सति भवस्यतः सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

कंपिल्ले नयरे राया, उदिन्नबलवाहणे ।
नामेणं संजओ नाम, मिगव्वं उवनिग्गए ॥ १ ॥

काम्पिल्ये नगरे राजा नृपतिरुदीर्णम्-उदयप्राप्तं बलं-चतुरङ्गं वाहनं च-गिल्लिथिल्लयादिरूपं यस्य सोऽयमुदीर्णबलवाहनः।यद्वा बल-शरीरसामर्थ्यं वाहनं-गजाश्वादि पदात्युपलक्षण चैतत् ,स च नाम्ना—अभिधानेन सञ्जयः नाम इति प्राकाश्ये, ततोऽयमर्थः-सञ्जय. इति नाम्ना प्रसिद्धो, मृगव्यां-मृगया प्रतीति शेष',उप-सामीप्येन निर्गतो निष्क्रान्त उपनिर्गतस्तत एव नगरादिति शेष. । इति सूत्रार्थः ।

स च कीदृग् विनिर्गतः, किञ्च कृतवानित्याह—

हयाणीए गयाणीए, रहाणीए तहेव य ।
पायत्ताणीए महया, सव्वओ परिवारिए ॥ २ ॥
मिए छुभित्ता हयगओ, कंपिल्लुज्जाणकेसरे ।
भीए संते मिए तत्थ, वहेइ रसमुच्छिए ॥ ३ ॥

पाठसिद्धम् , नवरं पदातीनां समूहः पादातं तस्यानीकं-कटकं पादातानीकं तेन, सुब्व्यत्यय प्राग्वत् , एव पूर्वत्रापि , महता—बृहत्प्रमाणेन मृगान् क्षिप्त्वा ' कंपिल्लुज्जाणकेसरि ' त्ति तस्यैव काम्पिल्यस्य नगरस्य सम्बन्धिनि केशरनाम्न्युद्याने भीतान्—त्रस्तान् सतो मितान्—परिमितान् तत्र—तेषु मृगेषु मध्ये ' वहेइ ' त्ति व्यथति हन्ति या, शरैरिति गम्यते, रस'—तत्पिशितास्वादस्तत्र मूर्छितो-गृद्धो रसमूर्छित इति सूत्रद्वयार्थः ।

अमुमेवार्थं सूत्रस्पर्शिकनिर्युक्त्या स्पष्टयितुमाह—

कंपिल्लपुरवरम्मि अ, नामेणं संजओ नरवरिंदो ।
सो सेणाए सहिओ, नासीरं निग्गओ कयाइ ॥३६५॥
हयमारूढो राया, मिए छुहित्ताण केसरुज्जाणे ।
ते तत्थ उ उत्तत्थे, वहेइ रसमुच्छिओ संतो ॥ ३६६ ॥

गाथाद्वयं प्रतीतमेव, नवरमिह नासीरं—मृगयां प्रति उत्त्रस्तान्—अतिभीतानिति गाथाद्वयार्थः ।

अत्रान्तरे यदभूत्तदाह सूत्रकृत्—

अह केसरम्मि उज्जाणे, अणगारे तवोधणे ।
सज्झायज्झाणजुत्तो, धम्मज्झाणं झियायइ ॥ ४ ॥
अप्फोवमंडवम्मी, झायई झवियासवे ।
तस्सागए मिए पासं, वहेई से नराऽहिवे ॥ ५ ॥

अथ—अनन्तरं केशरे उद्यानेऽनगारस्तपोधनः स्वाध्यायः—अनुप्रेक्षणादिर्ध्यानं—धर्मध्यानादि ताभ्यां युक्तो-यथाकालं तदासेवकतया सहित. स्वाध्यायध्यानयुक्तोऽत एव धर्मध्यानम्—आज्ञाविजयादि ' झियायइ ' त्ति ध्यायति चिन्तयति, क ?—' अप्फोवमंडवम्मि ' त्ति वृक्षाद्याकीर्णे, तथा च वृद्धा.-' अप्फोव ' इति । किमुक्तं भवति ?—आस्तीर्णे, वृक्षगुच्छगुल्मलतासंछन्न इत्यर्थ. , मण्डपे—नागवल्ल्यादिसम्बन्धिनि ध्यायति धर्मध्यानमिति गम्यते, पुनरभिधानमतिशयख्यापकम् ' झविय ' त्ति क्षपिता निर्मूलिता आश्रवाः कर्मबन्धहेतवो हिंसादयो येन स तथा, तस्य—इत्युक्तविशेषणान्वितस्यानगारस्य पार्श्वे—समीपमिति सम्बन्ध , आगतान्—प्राप्तान् मृगान् ' वहेइ ' त्ति विध्यति हन्ति वा स इति-सञ्जयनामा नराधिपः-राजेति सूत्रद्वयार्थ. ।

अमुमेवार्थं सविशेषमाह निर्युक्तिकृत्—

अह केसरमुज्जाणे, नामेणं गद्दभालि अणगारो।
अप्फोवमंडवम्मि अ, झायइ झाणं झविअदोसो।३६७।

' अहे ' ति गाथा व्याख्यातप्रायैव । नवरं नाम्ना अभिधानेन गर्दभालिनामेत्यर्थ , ' झविय ' त्ति क्षपिता दोषा. कर्माश्रवहेतुभूता हिंसादयो येन स तथा ।

पुनस्तत्र यदभूत्तदाह—

अह आसगओ राया, खिप्पमागम्म सो तहिं ।
हए मिए उपासित्ता, अणगारं तत्थ पासइ ॥ ६ ॥

अथ-अनन्तरम् अश्वगत —तुरगारूढो राजा क्षिप्रं-शीघ्रमागत्य'स'इति-सञ्जयनामा तस्मिन्-यत्र मण्डपे स भगवान् ध्यायति, हतान्-विनाशितान् मृगान् तुशब्द एवकारार्थस्ततो मृगानेव; न पुनरनगारमित्यर्थं ' पासित ' त्ति दृष्ट्वा अनगारं—साधुं तत्र इति—तस्मिन्नेव स्थाने पश्यतीति सूत्रार्थ ।

ततः किमसावकार्षीदित्याह—

अह राया तत्थ संभंतो, अणगारो मणाऽऽहओ ।
मए उ मंदपुस्रेणं, रसगिद्धेण घंतुणा ॥ ७ ॥
आसं विसज्जइत्ता णं, अणगारस्स सो निवो ।
विणएणं वंदई पाए, भगवं ! इत्थ मे खमे ॥ ८ ॥
अह मोणेण सो भगवं, अणगारो झाणमस्सिओ ।
रायाणं न पडिमंतेइ, तओ राया भयदुओ ॥ ९ ॥
संजओ अहमस्सीति, भगवं ! वाहिराहि मे ।
कुद्धे तेएण अणगारे, दहिज्जा नरकोडिओ ॥ १० ॥

अथ राजा तत्र इति—तद्दर्शने सति संभ्रान्तः भयव्याकुलो, यथाऽनगारो—मुनिर्मनागिति—स्तोकेनैव आहतः—विनाशितः, तदासन्नमृगहननादित्यभिप्रायः, मया तु मन्दपुण्येन रसगृद्धेन—रसमूर्छितेन 'घंतुण' त्ति घातुकेन; हननशीलेनेत्यर्थः । ततश्च अश्वं—तुरगं विसृज्य—विमुच्य 'णं' प्राग्वत्, अनगारस्य—उक्तस्यैव सः सञ्जयनामा नृपः ,विनयेन-उचितप्रतिपत्तिरूपेण वन्दते—स्तौति पादौ—चरणौ, अत्यादरख्यापकं चैतत्, पादावपि तस्य भगवतः स्तवनीयाविति, वक्ति च—यथा भगवन् ! अत्र एतस्मिन् मृगव्ये, मम अपराधमिति शेषः, क्षमस्व—सहस्व । अथ इत्यनन्तरं मौनेन वाग्निरोधात्मकेन 'सो' त्ति स गर्दभालिनामा भगवान् अनगारः ध्यानं—धर्मध्यानम् आश्रितः—स्थितः राजानं नृपं न प्रतिमन्त्रयते न प्रतिवक्ति, यथाऽहं क्षमिष्ये नवेति, ततः तत्प्रतिवचनाभावतोऽवश्यमयं क्रुद्ध इति न किमपि मा प्रभाषते इति राजा भयद्रुतः—अतीव भयत्रस्तो, यथा न ज्ञायते किमसौ क्रुद्धः करिष्यतीति । उक्तवांश्च यथा—संजयः—सञ्जयनामा राजाऽहमस्मि, मा भून्नीच एवायमिति सुतरां कोपः इत्येतदभिधानमिति, इति अस्माद्धेतोर्भगवन् ! 'वाहराहि' त्ति व्याहर-संभाषय मे इति, सुब्व्यत्ययान्माम्, अथाऽपि स्यात्—किमेवं भवान् भयद्रुत इत्याह—क्रुद्धः—कुपितः तेजसा तपोमाहात्म्यजनितेन तेजोलेश्यादिना अनगारः मुनिः दहेत् भस्मसात्कुर्यात् नरकोटीः, आस्तां शतं सहस्रं वेति । अतोऽत्यन्तभयद्रुतोऽहमिति सूत्रचतुष्टयार्थः ।

इदमेव व्यक्तीकर्तुमाह निर्युक्तिकृत्—

अह आसगओ राया, तं पासिअ संभमागओ तत्थ ।
भणइ अहो जह इण्हि,इसिवज्झाए मणालित्तो ॥३९८॥
वीसज्जिऊण आसं, अह अणगारस्स एइ सो पासं ।
विणएण वंदिऊणं, अवराहं ते खमावेइ ॥ ३९९ ॥
अह मोणमस्सिओ सो, अणगारो नरवई न वाहरइ ।
तस्स तवतेयभीओ, इणमट्ठं सो उदाहरइ ॥ ४०० ॥
कंपिल्लपुराहिवई, नामेणं संजओ अहं राया ।
तुज्झ सरणागओऽम्हि,निद्दहिहा मा मि तेएणं ॥४०१॥

गाथाचतुष्टयं स्पष्टमेव । नवरं तं 'पासिअ संभमागतो' त्ति मुनिरत्र दृश्यत इत्यसावपि मया विद्धो भविष्यतीत्याकुलत्वमापन्नः, भणति च—वक्ति च—हा इति खेदे, यथेदानीम् 'इसिवज्झाए' त्ति ऋषिहत्यया मनागपि लिप्तोऽहं-स्वल्पेनैव न स्पृष्टः 'तुज्झ' त्ति तव शरणागतोऽस्मि त्वामेव शरणम्—आश्रये प्रतिपन्नोऽस्मि, ततश्च निर्द्धाक्षीः मानिषेधे, 'मि' इति मां तेजसा तपोजनितेनेति गम्यते, इति गाथाचतुष्टयार्थः ।

इत्थं तेनोक्ते यन्मुनिरुक्तवांस्तदाह—

अभओ पत्थिवा ! तुज्झं, अभयदाया भवाहि य ।
अणिच्चे-जीवलोगम्मि, किं हिंसाए पसज्जसि ? ॥ ११ ॥
जया सव्वं परिच्चज्ज, गंतव्वमवसस्स ते ।
अणिच्चे जीवलोगम्मि, किं रज्जम्मि पसज्जसि ? ॥१२॥
जीवियं चेव रूवं च, विज्जुसंपायचंचलं ।
जत्थ तं मुज्झसी रायं, पिच्चत्थं नाव बुज्झसी ॥ १३ ॥
दाराणि य सुया चेव, मित्ता य तह बंधवा ।
जीवंतमणुजीवंति, मयं नाणुव्वयंति य ॥ १४ ॥
नीहरंति मयं पुत्ता, पियरं परमदुक्खिया ।
पियरो अ तहा पुत्ते, बंधू रायं ! तवं चरे ॥ १५ ॥
तओ तेणऽज्जिए दव्वे, दारे य परिरक्खिए ।
कीलंतऽन्ने नरा रायं !, हट्ठतुट्ठमलंकिया ॥ १६ ॥
तेणावि जं कयं कम्मं, सुहं वा जइ वा दुहं ।
कम्मुणा तेण संजुत्तो, गच्छई उ परं भवं ॥ १७ ॥

'अभओ' त्ति अभयं—भयाभावः पार्थिव ! नृपते ! आकारोऽलाक्षणिकः, कस्य ?—'तुज्झं' ति तव, न कश्चित्त्वां दहतीति भावः, इत्थं समाश्वास्योपदेशमाह-अभयदाता च-प्राणिनां त्राणकर्त्ता 'भवाहि य' त्ति भव-यथाहि भवतो मृत्युभयमेवमन्येषामपीति भावः, चशब्दो योजितः एव, अमुमेवार्थं सहेतुकं व्यतिरेकद्वारेणाह—अनित्ये अशाश्वते जीवलोके प्राणिगणे, किमिति परिप्रश्ने, हिंसायां प्राणिवधरूपायां प्रसजसि अभिष्वक्तो भवसि ?, जीवलोकस्य ह्यनित्यत्वे भवानप्यनित्यस्ततकिमिति—केन हेतुना स्वल्पदिनकृते पापमित्थमुपार्जयसि ?, नैवेदमुचितमिति भावः । इत्थं हिंसात्यागमुपदिश्य राज्यपरित्यागोपदेशमाह-यदा सर्वे कोशान्तःपुरादि परित्यज्य-इहैव विमुच्य गन्तव्यं भवान्तरमिति शेषः, तदपि न स्ववशस्य किन्तु अवशस्य—अस्वतन्त्रस्य ते-तव, कसति ?-अनित्ये जीवलोके, ततः किं राज्ये—नृपतित्वे प्रसजति ?, राज्यपरित्याग एव युक्त इति भावः, पाठान्तरतश्च किं हिंसाया प्रसजसि ?, इह च पुनर्वचनमादरातिशयख्यापनार्थमिति पुनरुक्तता । जीवलोकाऽनित्यत्वमेव भावयितुमाह—जीवितम्-आयुः च समुच्चये, एवेति पूरणे, रूपं च—पिशिताविपुष्टस्य शरीरशोभात्मक विद्युत् संपात संपातः—चलनचमत्कारो विद्युत्सम्पातस्तद्वच्चञ्चलम्—अतीवाऽस्थिरं विद्युत्सम्पातचञ्चलं यत्र जीविते रूपे च 'तं' ति त्वं मुह्यसि मोहं विधत्से मूढ—अ हिंसादौ प्रसजसीति भावः; राजन् ! नृपते ! प्रेत्यार्थं पर-

लोकप्रयोजनं नावबुध्यसे, किमुक्तं भवति ?-जानास्यपि न किं पुनस्तत्करणमिति । तथा दाराश्च-कलत्राणि प्राकृतत्वान्नपुंसकनिर्देशः, सुताश्चैव मित्राणि च प्रतीतान्येव, तथा बान्धवाः-स्वजनाः जीवन्तम् अनुजीवन्ति-तदुपार्जितवित्ताद्युपभोगत उपजीवन्ति, मृतं 'णाणुव्वयंति य' त्ति चशब्दस्यापिशब्दार्थत्वादनुव्रजन्त्यपि न, किं पुनः सह यास्यन्तीति, तदनेन दारादीनामपि कृतघ्नतया न तेष्वास्थां विधाय धर्मे उदासितव्यमित्युक्तमिति । इदं च सूत्रं चिरन्तनवृत्तिकृता न व्याख्यातं, प्रत्यन्तरेषु च दृश्यत इत्यस्माभिरुन्नीतम् । पुनस्तत्प्रतिबन्धनिराकरणायाह-'नीहरंति' त्ति निस्सारयन्ति मृतम् इति-गतायुषं पुत्राः-सुताः पितरं-जनकं परमदुःखिताः-अतिशयसञ्जातदुःखा अपि, किं पुनर्ये न तथा दुःखभाज इति भावः, पितरोऽपि तथा पुत्रान्, 'बंधु' त्ति बान्धवाश्च बन्धूनिति शेषः । अतश्च किंकृत्यमित्याह-राजन् ! तपः उपलक्षणत्वाद्दानादि चरेः-आसेवस्वेति । अपरञ्च 'ततो' त्ति मृतनिःसारणादनन्तरं तेन इति-मित्रपित्रादिना अर्जिते-विढपिते द्रव्ये-वित्ते दारेषु च-कलत्रेषु च परिरक्षितेषु-सर्वोपायपरिपालितेषु ; उभयत्रार्षत्वादेकवचनं, क्रीडन्ति-विलसन्ति तेनैव-वित्तेन दारैश्चेति गम्यते, अन्ये-अपरे राजन् ! 'हट्ठतुट्ठमलंकिय' त्ति हृष्टाः-बहिःपुलकादिमन्तः तुष्टाः-आन्तरप्रीतिभाजः अलंकृताः-विभूषिताः, यत ईदृशी भवस्थितिस्ततो राजन् ! तपश्चरेरिति मध्यदीपकत्वादनन्तरसूत्रोक्तेन सम्बन्धः । मृतस्य च को वृत्तान्त इत्याह-तेनापि मृतेन यत् कृतम्-अनुष्ठितं कर्म शुभं वा पुण्यप्रकृतिरूपं,यद्वा-सुखं वा-सुखहेतु यदि वेति-अथवा-दुःखं-दुःखहेतुः, पापप्रकृत्यात्मकमित्यर्थः । कर्मणा तेन सुखहेतुना दुःखहेतुना वा, उत्तरत्र तुशब्दस्यैवकारार्थत्वाद् भिन्नक्रमत्वाच्च तेनैव, न तु दुःखपरिरक्षितेनापि द्रव्यादिना संयुक्तः-सहितः गच्छति-याति परम्-अन्यं भवं-जन्म,यतश्च शुभाशुभयोरेवानुयायिता ततः शुभहेतु तप एव चरेरिति भावः, इति सूत्रसप्तकार्थः ।

ततस्तद्वचः श्रुत्वा राजा किमचेष्टतेत्याह—

सोऊण तस्स सो धम्मं, अणगारस्स अंतिए ।
महया संवेगनिव्वेयं, समावन्नो नराहिवो ॥१८॥
संजओ चइउं रज्जं, निक्खंतो जिणसासणे ।
गद्दभालिस्स भगवओ, अणगारस्स अंतिए ॥ १९ ॥

श्रुत्वा-आकर्ण्य तस्य इत्यनगारस्य स 'स' इति-सञ्जयाभिधानो राजा धर्मम्-उक्तरूपम् अनगारस्य-भिक्षोः अन्तिके-समीपे 'महय' त्ति महता आदरेणेति शेषः, सुब्व्यत्ययेन वा महत्, संवेगनिर्वेदं तत्र संवेगो-मोक्षाभिलाषो निर्वेदः-संसारोद्विग्नता समापन्नः-प्राप्तः नराधिपः राजा सञ्जयः सञ्जयनामा 'चइउं' त्यक्त्वा राज्यं—राष्ट्राधिपत्यरूपं निष्क्रान्तः-प्रव्रजितः जिनशासने-अर्हद्दर्शने, न तु सुगतादिदेशितेऽसद्दर्शने एवेति भावः, गर्दभाले—गर्दभालिनाम्नो भगवतोऽनगारस्यान्तिक इति सूत्रद्वयार्थः ।

सूत्रनवकोक्तमेवार्थं स्पष्टयितुमाह निर्युक्तिकृत्-

अभयं तुज्झ नरवई, जलबुब्बुअसंनिभे अ माणुस्से ।
किं हिंसाइ पसज्जसि, जाणन्तो अप्पणो दुक्खं ॥४०१॥
सव्वमिणं चइऊणं, अवस्सं जया य होइ गन्तव्वं ।
किं भोगेसुं रसज्जसि, किंपागफलोवमनिभेसुं ॥४०२॥
सोऊण य सो धम्मं, तस्सऽणगारस्स अंतिए राया ।
अणगारो पव्वइओ, रज्जं चइउं गुणसमग्गं ॥ ४०३ ॥

व्याख्यातप्रायमेव, नवरं 'अप्पणो दुक्खं' ति आत्मनो दुःखमिति दुःखजनकं मरणमिति शेषः, 'किंपागफलोवमणिभेसुं' ति किंपाकफलोपमा निभा—छाया येषां ते तथा-आपातमधुरत्वपरिणतिदारुणत्वाभ्यां, तथा अनगारः अविद्यमानगृहो, जात इति शेषः, स च शाक्यादिरपि संभवेदत आह 'पव्वइओ' त्ति प्रकर्षेण-विपर्यासाभिष्वङ्गादिपरिहाररूपेण व्रजितो—निष्क्रान्तः प्रव्रजितो, भावभिक्षुरिति यावत्, तथा गुणाः-कामगुणा मनोज्ञशब्दादय ऐश्वर्यादयो वा तैः समग्रं-सम्पूर्णं गुणसमग्रमिति गाथात्रयार्थः ।

स चैवं गृहीतप्रव्रज्योऽधिगतहेयोपादेयविभागो दशविधचक्रवालसामाचारीरतश्चानियतविहारितया विहरन् तथाविधसन्निवेशमाजगाम, तत्र च तस्य यदभूत्तदाह—

चिच्चा रट्ठं पव्वइओ, खत्तिओ परिभासई ।
जहा ते दीसई रूवं, पसन्नं ते तहा मणो ॥ २० ॥
किंनामे किंगुत्ते, कस्सट्ठाए व माहणे ? ।
कहं पडियरसी बुद्धे, ?, कहं विणीय त्ति वुच्चसि ? ॥२१॥

त्यक्त्वा राष्ट्रं ग्रामनगरादिसमुदायं प्रव्रजितः प्रतिपन्नदीक्षः क्षत्रियः—क्षत्रजातिरनिर्दिष्टनामा परिभाषते, सञ्जयमुनिमित्युपस्कारः, स हि पूर्वजन्मनि वैमानिक आसीत् ततश्च्युतः क्षत्रियकुलेऽजनि, तत्र च कुतश्चित्तथाविधनिमित्ततः स्मृतपूर्वजन्मा तत एव चोत्पन्नवैराग्यः प्रव्रज्यां गृहीतवान् । गृहीतप्रव्रज्यश्च विहरन् सञ्जयमुनिं दृष्ट्वा तद्विमर्शार्थमिदमुक्तवान्, यथा ते दृश्यते—अवलोक्यते रूपम्—आकृतिः प्रसन्नं विकाररहितं ते-तव तथा—तेनैव प्रकारेण प्रसन्नमिति प्रक्रमः, किं तत् ? मनः-चित्तं, न ह्यन्तःकलुषताया बहिरप्येवं प्रसन्नतासम्भवः, तथा किंनाम-किमभिधानः किंगोत्रः—किमन्वयः 'कस्सट्ठाए व' त्ति कस्मै वा अर्थाय-प्रयोजनाय 'माहणे' इति मा वधीत्येवंरूपं मनो वाक् क्रिया च यस्यासौ माहनः, 'सर्वे धातवः पचादिषु दृश्यन्ते' इति वचनात्पचादित्वादच्, स चैवंविधः प्रव्रजित एव सम्भवत्यतः किं वा प्रयोजनमुद्दिश्य प्रव्रजितः कथं-केन प्रकारेण प्रतिचरसि-सेवसे, कान् ? बुद्धान् आचार्यादीन्, कथं 'विणीय' त्ति विनीतः-विनयवानित्युच्यत इति सूत्रद्वयार्थः ।

सञ्जयमुनिराह—

संजयो नाम नामेणं, तहा गुत्तेण गोयमो ।
गद्दभाली ममायरिया, विज्जाचरणपारगा ॥ २२ ॥

यदुक्तं त्वया किंनामा त्वमिति, तत्र संजयो नाम—नाम्ना, यच्चावोचः किंगोत्रः ? इति, तत्राह—तथा गोत्रेण अन्वयेन गौतमः, उभयत्राहमिति गम्यते, शेषप्रश्नत्रयप्रतिवचनमाह-गर्दभालयः गर्दभाल्यभिधाना मम आचार्या भ-

र्मोपदेशकत्वादिना, विद्यतेऽनया तत्त्वमिति विद्या—श्रुतज्ञानं तथा चर्यत इति चरणं—चारित्रं विद्या च चरणं च विद्याचरणे तयो. पारगा —पर्यन्तगामिनो विद्याचरणपारगा, एवं च वदतोऽयमाशय —यथा गर्दभालिभिर्धर्माचार्यैर्विद्याजनाश्निवर्त्तितोऽह, विद्याचरणपारगत्वाच्च तैस्तन्निवृत्तौ मुक्तिलक्षणं फलमुक्तम्, ततस्तदर्थं माहनोऽस्मि यथा च तदुपदेशस्तथा गुरून् प्रति चरामि, तदुपदेशासेवनाच्च विनीत इति सूत्रार्थः ।

इत्थं विमृश्य तद्गुणवहुमानाकृष्टचेता अपृष्टोऽपि क्षत्रिय इदमाह—

किरियं अकिरियं विणयं, अन्नाणं च महामुणी ।
एएहिँ चउहिँ ठाणेहिं, मेयन्ने किं पभासई ॥ २३ ॥

क्रिया अस्तीत्येवंरूपा, लिङ्गव्यत्ययान्नपुंसकनिर्देश., अक्रिया तद्विपरीता, विनय —नमस्कारकरणादि, लिङ्गव्यत्ययः प्राग्वत्, तथा ज्ञानं-वस्तुतत्त्वावगमस्तद्भावोऽज्ञानं, च समुच्चये, महामुने ! सम्यक् प्रव्रज्याप्रतिपत्तिगुरुपरिचर्यादिकरणतः प्रशस्ययते ! एतैः क्रियादिभिश्चतुर्भिः तिष्ठन्त्येषु कर्मवशगा जन्तव इति स्थानानि-मिथ्याऽध्यवसायाधारभूतानि तैः 'मेयन्ने' त्ति, मीयत इति मेय—ज्ञेय जीवादिवस्तु तज्जानन्तीति मेयज्ञा क्रियादिभिश्चतुर्भि स्थानैः स्वस्वाभिप्रायकल्पितैर्वस्तुतत्त्वपरिच्छेदिन इति यावत्, किम् इति कुत्सितं 'पभासइ'त्ति प्रकर्षेण भाषन्ते-प्रभाषन्ते, विचाराऽक्षमात्वात्, तथाहि—ये तावत्क्रियावादिनस्तेऽस्तिक्रियाविशिष्टमात्मान मन्यमाना अपि तस्य सदा विभुत्वाविभुत्वकर्तृत्वाकर्तृत्वादिभिर्विप्रतिपद्यन्ते । उक्तं हि वाचकैः-क्रियावादिनो नाम येषामात्मनोऽस्तित्वं प्रत्यविप्रतिपत्ति' किन्तु स विभुरविभु कर्त्ताऽकर्त्ता क्रियावानितरो मूर्त्तिमान् मूर्त्तिरित्येवमाद्याग्रहोपहतप्रतीतयस्तेऽस्ति माता पिताऽस्ति न कुशलाकुशलकर्मवैफल्यं, न न सन्ति गतय इत्येवं प्रतिज्ञाश्च । इह च विभुत्वं व्यापित्वम्, तच्चात्मनो न घटते, शरीर एव तल्लिङ्गभूतचैतन्योपलब्धे । न च वक्ष्यमाणोऽव्यापित्वे सुखदु खबुद्धीच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारा नवाऽऽत्मगुणा इति वचनात्तद्गुणयोर्धर्माधर्मयोरप्यव्यापित्व, तथा च द्वीपान्तरगतदेवदत्तादृष्टाकृष्टमणिमुक्तादीना नेहागमनं स्यादिति, विभिन्नदेशस्याप्ययस्कान्तादेरय प्रभृतिवस्त्वाकर्षणशक्तिदर्शनाद्धर्माधर्मयोरपि शरीरमात्रव्यापित्वेऽपि तद्विप्रकृष्टवस्त्वाकर्षकत्वादिति न तावद्विभुरात्मा युज्यते । तथाऽविभुरप्यङ्गुष्ठपर्वाद्यधिष्ठानो यैरिष्यते तेषां सकलशरीरव्यापिचैतन्यासत्त्वम्, तदसत्त्वाच्च शेषशरीरावयवेषु शस्त्राद्यभिघाते वेदनानुभवासम्भवो, नचैतद् दृष्टमिष्ट वा, एवं सर्वदा कर्तृत्वादिकमपि यथा न युज्यते तथा स्वधिया वाच्यम् १ । ये त्वक्रियावादिनस्तेऽस्तीति क्रियाविशिष्टमात्मानं नेच्छन्त्येव, अस्तित्वे वा शरीरेण सहैकत्वान्यत्वाभ्यामवक्तव्यमिच्छन्ति, एकत्वे ह्यविनष्टशरीरावस्थितौ न कदाचिन्मरणप्रसक्ति, आत्मन शरीरानन्यत्वेनावस्थितत्वात्, तथा मुक्त्यभावाद्यनेकदोषापत्तिश्च, शरीरान्यत्वे तु शरीरच्छेदादौ तस्य वेदनाऽभावप्रसङ्ग, तस्मादवक्तव्य एवेति । अक्रियावादिनां चैषा कथञ्चिद्भेदाभेदलक्षणप्रकारान्तराभावेन तदभावस्यैवावशिष्यमाणत्वात्, येऽप्युत्पत्त्यनन्तरमात्मनः प्रलयमिच्छन्ति तेषामपि तदस्तित्वाभ्युपगमेऽप्यनुपचरितपरलोकाद्यसम्भवात्, तत्त्वतस्तदसत्त्वमेवेत्यक्रियावादित्वम्, उक्तं हि वाचकैः-"ये पुनरिहाक्रियावादिनस्तेषामात्मैव नास्ति,न चावक्तव्यः शरीरेण सहैकत्वान्यत्वे प्रति, उत्पत्त्यनन्तरप्रलयस्वभावको वा, तस्मिन्ननिर्णीते च कर्तृत्वादिविशेषमूढा एवे"ति, अमीषां तु विचाराक्षमत्वमात्माऽस्तित्वस्य प्राक् प्रत्यक्षानुमानलक्षणप्रमाणद्वयसमधिगम्यत्वेन साधनात्,तस्य च शरीरात्कथञ्चिद्भिन्नाभिन्नरूपतया तत्र तत्र वक्तव्ये (व्यत्वे) न स्थापितत्वात्, क्षणिकपक्षस्य तु सामुच्छेदिकनिह्नववक्तव्यतायामेवोन्मूलितत्वादिति २। विनयवादिनो विनयादेव मुक्तिमिच्छन्ति, यत उक्तम्—" वैनयिकवादिनो नाम येषां सुरासुरनृपतपस्विकरितुरगहरिणगोमहिष्यजाविकश्वशृगालजलचरकपोतकाकोलूकचटकप्रभृतिभ्यो नमस्कारकरणात् क्लेशनाशोऽभिप्रेतो, विनयाच्छ्रेयो भवति नान्यथेत्यध्यवसिताः एतेऽपि न विचारसहिष्णवो, न हि विनयमात्रादिहापि विशिष्टानुष्ठानविकलादभिलषितार्थावाप्तिरवलोक्यते, नाऽपि चैषा विनयार्हत्वं, येन पारलौकिकश्रेयोहेतुता भवेत्, तथाहि—लोकसमयवेदेषु गुणाभ्यधिकस्यैव विनयार्हत्वमिति प्रसिद्धि., गुणास्तु तत्त्वतो ज्ञानध्यानानुष्ठानात्मका एव, न च सुरादीनामज्ञानाश्रवाविरमणादिदोषदूषितानामेतेष्वन्यतरस्याऽपि गुणस्य सम्भव इति कथं यदृच्छया विधीयमानस्य तस्य श्रेयोहेतुतेति ? ३ । अज्ञानवादिनस्त्वाहु -यथेद जगत् कैश्चिद् ब्रह्मादिविवर्त्त इष्यते, अन्यै प्रकृतिपुरुषात्मकमपरैर्द्रव्यादिषड्भेदम्,तदपरैश्चतुरार्यसत्यात्मकम्,इतरैर्विज्ञानमयम्,अन्यैस्तु शून्यमेव इत्यनेकधाभिन्ना. पन्थान, तथाऽऽत्माऽपि नित्यानित्यादिभेदतोऽनेकधैवोच्यते, तत्को ह्येतद्वेद किं चानेन ज्ञातेन ?, अपवर्गे प्रत्यनुपयोगित्वात् ज्ञानस्य, केवलं कष्टं तप एवानुष्ठेयं, न हि कष्टं विनेष्टसिद्धिः, तथा चाह- 'अज्ञानिका नाम येषामियमुपधृति', यथेह ज्ञानाधिगमप्रयासोऽपवर्गं प्रति अकिञ्चित्करो, घोरैश्चैततपोभिरपवर्गोऽवाप्यते ' इति । विचारासहत्वं चैषा विज्ञानरहितस्य महतोऽपि कष्टस्य तिर्यग्नारकादीनामिवापवर्गं प्रत्यहेतुत्वात्, तदन्तरेण व्रततपउपसर्गादीनामपि स्वरूपापरिज्ञानत. क्वचित्प्रवृत्त्यसम्भवादिति । एषा च क्रियावादिनामुत्तरोत्तरभेदतोऽनेकविधत्वम्। उक्तं वाचकै -' एषां मौलेषु चतुर्षु कल्पेष्ववस्थितेषु तद्भेदा सुवहवोऽवनिरुहशाखाप्रशाखानिकरवदवगन्तव्या." तत्र तावच्छतमशीत क्रियावादिनाम्, अक्रियावादिनश्च चतुरशीतिसंख्या., अज्ञानिका सप्तषष्टिविधा, वैनयिकवादिनो द्वात्रिंशत्, एवं त्रिषष्ट्यधिकशतत्रयं, सर्वेऽपि चामी विचाराक्षमत्वात्कुत्सितं प्रभाषन्ते इति स्थितमिति सूत्रार्थ ।

न चैतत्स्वाभिप्रायेणैवोच्यते, किन्तु—

इह पाउकरे बुद्धे, नायए परिनिव्वुडे ।
विज्जाचरणसंपन्ने, सच्चे सच्चपरक्कमे ॥ २४ ॥

'इह' इति-तत् क्रियादिवादिन. किं प्रभाषन्ते ? इत्येवं रूपं 'पाउकरे' त्ति प्रादुरकार्षीत्—प्रकटितवान् बुद्धः-अवगत-

तस्यः सन् ज्ञात एव ज्ञातकः-जगत्प्रतीतः क्षत्रियो वा, स चेह प्रस्तावान्महावीर एव, परिनिर्वृतः कषायानलविध्यापनात्समन्ताच्छीतीभूतो विद्याचरणाभ्यामर्थात् क्षायिकज्ञानचारित्राभ्यां सम्पन्नो—युक्तो विद्याचरणसम्पन्नोऽत एव सत्य: सत्यवाक्, तथा सत्यः—अवितथस्तात्त्विकत्वेन परे—भावशत्रवस्तेषामाक्रमणम् आक्रमः-अभिभवो यस्याऽसौ सत्यपराक्रम इति सूत्रार्थः।

तेषां च फलमाह—

पडंति नरए घोरे, जे नरा पावकारिणो।
दिव्वं च गइं गच्छंति, चरित्ता धम्ममारियं ॥ २५ ॥

पतन्ति गच्छन्ति नरके-सीमन्तकादौ घोरे-नित्यान्धकारादिना भयानके ये नरा उपलक्षणत्वात्स्त्र्यादयो वा पातयति नरकादिषु जन्तुमिति पापं; तच्च हिंसाद्यनेकधा, इह त्वसत्प्ररूपणैव, तत्कर्तुम्-अनुष्ठातुं शीलमेषामिति पापकारिणः। ये त्वेवंविधा न भवन्ति ते किमित्याह—दिव्यां च गतिं देवलोकगतिं, चशब्द पुनरर्थे, स च पूर्वेभ्यो विशेषद्योतकः, गच्छन्ति—यान्ति चरित्वा—आसेव्य धर्मः—श्रुतधर्मादिः अनेकविधः, इह च सत्यप्ररूपणारूपः श्रुतधर्म एव तम्, आर्य—प्राग्वत्, तदयमभिप्रायः असत्प्ररूपणापरिहारेण सत्प्ररूपणापरेणैव च भवता भवितव्यम् इति सूत्रार्थः।

कथं पुनरमी पापकारिण इत्याह—

मायावुइयमेयं तु, मुसाभासा निरत्थिया।
संजममाणोऽवि अहं, वसामि इरियामि य ॥ २६ ॥

मायया-शाठ्येन 'वुइयं' ति उक्तं मायोक्तम् एतत्-यदनन्तरं क्रियादिवादिभिरुक्तं, तु. एवकारार्थो भिन्नक्रमश्च मायोक्तमेव, यतश्चैतत् मृषा-अलीका भाषाः-उक्तिः निरर्थिका-सम्यगभिधेयशून्या, तत एव च 'संजममाणोऽवि' त्ति अपि. एवकारार्थस्ततः सयच्छन्नेव-उपरमन्नेव तदुक्त्याकर्णनादितः, अहम् इत्यात्मनिर्देशे विशेषतः तत्स्थिरीकरणार्थम्, उक्तं हि-" ठियंतो ठावए पर" ति, वसामि—तिष्ठामि उपाश्रय इति शेषः, 'इरियामि य' त्ति ईरे च-गच्छामि च गोचरचर्यादिष्विति सूत्रार्थः।

इदमपि सूत्रं प्रायो न दृश्यते। कुतः पुनस्त्वं तदुक्त्याकर्णनादिभ्यः संयच्छसीत्याह अनन्तरसूत्राभावे च यदुक्तं चतुर्भिः स्थानैर्मे यज्ञाः किं प्रभाषन्ते इति तत्कुत इत्याह—

सव्वे ते विइया मज्झं, मिच्छादिट्ठी अणारिया।
विज्जमाणे परे लोए, सम्मं जाणामि अप्पगं ॥ २७ ॥

सर्वे-निरवशेषा ते क्रियादिवादिनः विदिताः-ज्ञाता मम, यथाऽमी, 'मिच्छादिट्ठि' त्ति मिथ्या-विपरीता परलोकात्माद्यपलापित्वेन दृष्टिः-बुद्धिरेषामिति मिथ्यादृष्टयः तत एव, अनार्या—अनार्यकर्मप्रवृत्ता, कथं पुनस्त एवंविधास्त विदिता इत्याह-विद्यमाने सति परलोके-अन्यजन्मनि सम्यग् अविपरीतं जानामि-अवगच्छामि 'अप्पगं' ति आत्मानं, ततः परलोकात्मनो सम्यग्वेदनात् ममैवंविधत्वेन विदितास्ततोऽहं तदुक्त्याकर्णनादितः संयच्छामि किं प्रभाषकाश्चैत इति सूत्रार्थः।

कथं पुनस्त्वमात्मानमन्यजन्मनि जानासीत्याह—

अहमासी महापाणे, जुइमं वरिससओवमे।
जा सा पाली महापाली, दिव्वा वरिससओवमा ॥२८॥
से चुए बंभलोगाओ, माणुस्सं भवमागए।
अप्पणो य परेसिं च, आउं जाणे जहा तहा ॥२९॥

'अहमासि' त्ति अहमभूवं महापाणे—महाप्राणनाम्नि ब्रह्मलोकविमाने द्युतिमान्-दीप्तिमान् 'वरिससओवमे' त्ति वर्षशतजीविना उपमा-दृष्टान्तो यस्याऽसौ वर्षशतोपमो' मयूरव्यंसकादित्वात्समासः, ततोऽयमर्थः-यथेह वर्षशतजीवी इदानीं परिपूर्णायुरुच्यते, एवमहमपि तत्र परिपूर्णायुरभूवम्। तथाहि-या सा पालिरिव पालिः-जीवितजलधारणाद्भवस्थितिः, सा चोत्तरत्र महाशब्दोपादानादिह पल्योपमप्रमाणा, महापाली सागरोपमप्रमाणा, तस्या एव महत्त्वात्, दिवि भवा दिव्या वर्षशतेनोपमा यस्याः सा वर्षशतोपमा, यथाहि-वर्षशतमिह परमायुः तथा तत्र महापाली उत्कृष्टतोऽपि हि तत्र सागरोपमैरेवायुरुपनीयते, न तूत्सर्पिण्यादिभिः, अथवा—" योजनं विस्तृतः पल्य-स्तथा योजनमुच्छ्रितः। सप्तरात्रप्ररूढानां, केशाग्राणां स पूरितः ॥ १ ॥ ततो वर्षशते पूर्णे, एकैकं केशमुद्धरेत्। क्षीयते येन कालेन, तत्पल्योपममुच्यते ॥ २ ॥ " इति वचनाद्वर्षशतैः केशोद्धारहेतुभिरुपमा अर्थात् पल्यविषया यस्याः सा वर्षशतोपमा, द्विविधाऽपि स्थितिः, सागरोपमस्याऽपि पल्योपमनिष्पाद्यत्वात्, तत्र मम महापाली दिव्या भवस्थितिरासीदित्युपस्कारः, अतश्चाह वर्षशतोपमायुरभूवमिति भावः। 'से' इति—अथ स्थितिपरिपालनादनन्तरं च्युतः—भ्रष्ट ब्रह्मलोकात्-पञ्चमकल्पात् मानुष्यं-मानुष्यसम्बन्धिनं भवं-जन्म आगतः-आयातः। इत्थमात्मनो जातिस्मरणलक्षणमतिशयमाख्यायातिशयान्तरमाह-आत्मनश्च परेषां वा आयुः-जीवितं जाने-अवबुध्ये यथा-येन प्रकारेण स्थितमिति गम्यते तथा-तेनैव प्रकारेण न त्वन्यथेत्यभिप्रायः, इति सूत्रद्वयार्थः।

इत्थं प्रसङ्गतः परितोषतश्चापृष्टमपि स्ववृत्तान्तमावेद्योपदेष्टुमाह—

नाणारुइं च छंदं च, परिवज्जिज्ज संजओ।
अणट्ठा जे अ सव्वत्था, इइ विज्जामणुसंचरे ॥ ३० ॥

नानेति-अनेकधा रुचिं च-प्रक्रमात्क्रियावाद्यादिमतविषयमभिलाषं छन्दश्च-स्वमतिकल्पितमभिप्रायम्, इहाऽपि नानेति सम्बन्धादनेकविधं परिवर्जयेत्—परित्यजेत् सयन-यतिः। तथा अनर्थाः-अनर्थहेतवो ये च सर्वार्था अशेषहिंसादयो गम्यमानत्वात्तान् वर्जयेदिति सम्बन्ध, यद्वा— 'सव्वत्थे' त्याकारस्यालाक्षणिकत्वात्सर्वत्र क्षेत्रादावनर्था इति निष्प्रयोजना ये च व्यापारा इति गम्यते, तान् परिवर्जयेत्, इतीत्येवंरूपां विद्यां सम्यग्ज्ञानरूपामन्विति-लक्षीकृत्य सञ्चरेः त्वं सम्यक् संयमाध्वनि यायाः, इति सूत्रार्थः।

अन्यच्च—

पडिक्कमामि पसिणाणं, परमंतेहिं वा पुणो।

अहो उट्टिओ अहो रायं, इइ विज्जातवं चरे ॥ ३१ ॥

प्रतीपं क्रमामि प्रतिक्रमामि—प्रतिनिवर्त्ते, केभ्यः ?—'प-सिणाणं' ति सुव्यत्ययात् प्रश्नेभ्यः—शुभाशुभसूचके-भ्योऽङ्गुष्ठप्रश्नादिभ्यः, अन्येभ्यो वा साधिकरणेभ्यः, त-था परे-गृहस्थास्तेषां मन्त्राः परमन्त्राः-तत्कार्यालोचनरूपा-स्तेभ्यः, वा समुच्चये, पुनः विशेषणे, विशेषेण परमन्त्रेभ्यः प्रतिक्रमामि, अतिसावद्यत्वात्तेषां, सोपस्कारत्वात्सूत्रस्या-मुनाऽभिप्रायेण यः संयमं प्रत्युत्थानवान् सः अहो इति विस्मये उत्थितः धर्मं प्रत्युद्यतः। कश्चिदेव हि महात्मैवं-विधः सम्भवति अहोरात्रम्-अहर्निशम् इति-इत्येतदनन्त-रोक्तं 'विज्ज' त्ति विद्वान् जानन् 'तवं' ति अवधारणफलत्वा-द्वाक्यस्य तप एव न तु प्रश्नादि चरे.-आसेवस्वेति सूत्रार्थः।

पुनस्तत्स्थिरीकरणार्थमाह—

जं च मे पुच्छसी काले, सम्मं सुद्धेण चेयसा।
ताइं पाउकरे, बुद्धे, तं नाणं जिणसासणे ॥ ३२ ॥

यच्च मे इति-मां पृच्छसि-प्रश्नयसि काले-प्रस्तावे सम्यग्बु-द्धेन अविपरीतबोधवता चेतसा-चित्तेन,लक्षणे तृतीया, 'ता' इति सूत्रत्वात्तत्'पाउकरे'त्ति प्रादुष्करोमि-प्रकटीकरोमि प्र-तिपादयामीति यावत्,बुद्धः-अवगतसकलवस्तुतत्त्वः। कुतः पुनर्बुद्धोऽस्यत आह-तदिति यत्किञ्चिदिह जगति प्रचरति ज्ञानं-यथाविधवस्त्ववबोधरूपं तज्जिनशासनेऽस्तीति गम्यते, ततोऽहं तत्र स्थितः इति तत्प्रसादाद् बुद्धोऽस्मीत्यभिप्रायः, इह च यतस्त्वं सम्यग्बुद्धेन चेतसा पृच्छस्यतः प्रतिक्रान्तप्र-श्नादिरप्यहं यत्पृच्छसि तत्प्रादुष्करोमीत्यतः पृच्छ यथेच्छ-मित्यैदम्पर्यार्थः। अथवा-अत एव लक्ष्यते यथा'अप्पणो य प-रेसिं च' इत्यादिना तस्यायुर्विज्ञतामवगम्य सञ्जयमुनिनाऽसौ पृष्टः कियन्ममायुरिति ततोऽसौ प्राह-यच्च त्वं मां कालवि-षयं पृच्छसि तत्प्रादुष्कृतवान् बुद्धः-सर्वज्ञोऽत एव तज्ज्ञानं जिनशासने व्यवच्छेदफलत्वाज्जिनशासन एव न त्वन्यस्मिन् सुगतादिशासने,अतो जिनशासन एव यत्नो विधेयो येन य-थाऽहं जानामि तथा त्वमपि जानीषे,शेषं प्राग्वदिति सूत्रार्थः।

पुनरुपदेष्टुमाह—

किरियं च रोअए धीरो, अकिरियं परिवज्जए।
दिट्ठीए दिट्ठिसंपन्नो, धम्मं चरसु दुच्चरं ॥ ३३ ॥

क्रिया च अस्ति जीव इत्यादिरूपां सदनुष्ठानात्मिकां वा रोचयेत् तथा तथा भावनातो यथाऽसावात्मने रु-चिता जायते तथा विदध्यात् धीरः—मिथ्यादृग्भिरक्षो-भ्यः। तथा अक्रियां नास्त्यात्मेत्यादिकां मिथ्यादृक्परिक-ल्पिततत्तदनुष्ठानरूपां वा परिवर्जयेत्—परिहरेत्। ततश्च दृष्ट्या-सम्यग्दर्शनात्मिकया हेतुभूतया 'दिट्ठिसंपन्नो' त्ति 'धीर्दृष्टिः शेमुषी धिषणा' इति शाब्दिकश्रुतेर्दृष्टिः-बुद्धिः, सा चेह प्रस्तावात्सम्यग्ज्ञानात्मिका तया सम्पन्नो—युक्तो-दृष्टिसम्पन्नः, एवं च सम्यग्दर्शनज्ञानान्वितः सन् धर्मं-चा-रित्रधर्मं चर—आसेवस्व सुदुश्चरम्—अत्यन्तदुरनुष्ठेयमिति सूत्रार्थः।

पुनः क्षत्रियमुनिरेव सञ्जयमुनिं महापुरुषो-दाहरणैः स्थिरीकर्तुमाह—

एयं पुण्णपयं सुच्चा, अत्थधम्मोवसोहियं।
भरहोऽवि भारहं वासं, चिच्चा कामाइँ पव्वए ॥३४॥
सगरोऽवि सागरंतं, भरहवासं नराहिवो।
इस्सरियं केवलं हिच्चा, दयाए परिनिव्वुडे ॥ ३५ ॥
चइत्ता भारहं वासं, चक्कवट्टी महिड्डिओ।
पव्वज्जमब्भुवगओ, मघवं नाम महाजसो ॥ ३६ ॥
सणंकुमारो मणुस्सिंदो, चक्कवट्टी महिड्डिओ।
पुत्तं रज्जे ठवित्ताणं,सोऽवि राया तवं चरे ॥ ३७ ॥
चइत्ता भारहं वासं, चक्कवट्टी महिड्डिओ।
संती संतिकरो लोए, पत्तो गइमणुत्तरं ॥ ३८ ॥
इक्खागरायवसहो, कुंथूनाम नरेसरो।
विक्खायकित्ती धिइमं, मुक्खं गओ अणुत्तरं ॥३९॥
सागरंतं जहित्ता णं, भरहवासं नरेसरो।
अरो अ अरयं पत्तो, पत्तो गइमणुत्तरं ॥ ४० ॥
चइत्ता भारहं वासं, चक्कवट्टी महिड्डिओ।
चिच्चा य उत्तमे भोए, महापउमो दमं चरे ॥ ४१ ॥
एगच्छत्तं पसाहित्ता, महिं माणनिसूरणो।
हरिसेणो मणुस्सिंदो, पत्तो गइमणुत्तरं ॥ ४२ ॥
अन्निओ रायसहस्सेहिं, सुपरिच्चाई दमं चरे।
जयनामो जिणक्खायं, पत्तो गइमणुत्तरं ॥ ४३ ॥
दसण्णरज्जं मुइयं, चइत्ता णं मुणी चरे।
दसण्णभद्दो निक्खंतो, सक्खं सक्केण चोइओ ॥ ४४ ॥
( नमी नमेइ अप्पाणं, सक्खं सक्केण चोइओ।
जहित्ता रज्जं वइदेही, सामन्ने पज्जुवट्ठिओ ॥ )

प्रक्षिप्ता—

करकंडू कलिंगाणं, पंचालाण य दुम्मुहो।
णमी राया विदेहाणं, गंधाराण य नग्गई ॥ ४५ ॥
एए नरिंदवसभा, निक्खंता जिणसासणे।
पुत्ते रज्जे ठवित्ता णं, सामन्ने पज्जुवट्ठिआ ॥ ४६ ॥
सोवीररायवसभो, चइत्ता अ मुणी चरे।
उद्दायणो पव्वइओ, पत्तो गइमणुत्तरं ॥ ४७ ॥
तहेव कासिराया वि, सेओ सच्चपरक्कमो।
कामभोगे परिच्चज्ज, पहणे कम्ममहावणं ॥ ४८ ॥
तहेव विजओ राया, अणट्ठा कित्तिपव्वए।
रज्जं तु गुणसमिद्धं, पयहित्तु महायसो ॥ ४९ ॥
तहेवुग्गं तवं किच्चा, अव्वक्खित्तेण चेयसा।
महाबलो रायरिसी, अद्दाय सिरसा सिरं ॥ ५० ॥

सूत्राणि सप्तदश। एतत्—अनन्तरोक्तं पुण्यहेतुत्वात्पुण्यं तच्च तत् पद्यते—गम्यतेऽनेनार्थ इति पदं च, पुण्यपदं, पुण्यस्य वा पदं-स्थानं पुण्यपदं-क्रियादिवादिस्वरूपमानारु-चिपरिवर्जनाद्यावेदकं शब्दसन्दर्भं श्रुत्वा-आकर्ण्य, अर्थ्यत इति अर्थः-स्वर्गापवर्गादि धर्मः-तदुपायभूत श्रुतधर्मादि—

स्ताभ्यामुपशोभित--विभूषितमर्थधर्मोपशोभित भरतोऽपि भरतनामा चक्रवर्त्यपि, अपिशब्द उत्तरापेक्षया समुच्चये 'भारहं' ति प्राकृतत्वाद्भारतं वर्ष--क्षेत्रं त्यक्त्वा 'कामाइं' ति चस्य गम्यमानत्वात् कामाश्च विषयान् प्राकृतत्वान्नपुंसकनिर्देश, 'पव्वए' त्ति प्राव्राजीत् । 'सगरो वी' त्यादि सर्वमपि स्पष्टं, नवरं सागरान्तं--समुद्रपर्यन्तं दिक्त्रये, अन्यत्र तु हिमवत्पर्यन्तमित्युपस्कार., तथा ऐश्वर्यम् आज्ञैश्वर्यादि केवलं परिपूर्णमनन्यसाधारणं वा दयया संयमेन परिनिर्वृतः इहैव विध्यातकषायानलत्वाच्छीतीभूतो मुक्तो वा । तथा--' अरो य ' त्ति अरनामा च तीर्थकृच्चक्रवर्त्ती ' अरयं ' ति रतस्य रजसो वाऽभावरूपमरतमरजो वा, पाठान्तरत.-अरसं वा श्रृङ्गारादिरसाभाव, प्राप्त.--गतो गतिमनुत्तरां--मुक्तिमित्यर्थः । तथा त्यक्त्वोत्तमान् भोगानिति, पुनस्त्यक्त्वेत्यभिधानं भिन्नवाक्यत्वादपौनरुक्त्यं, महापद्म' महापद्मनामा 'चरे' त्ति आचरत् । तथा एक छत्र--नृपतिचिह्नमस्यामित्येकच्छत्रा ता, कोऽर्थ. ?--अविद्यमानद्वितीयनृपतिं मही--पृथ्वीं प्रसाध्य-वशीकृत्वेति सम्बन्ध, ' माणनिसूरणो ' त्ति दसारात्यहङ्कारविनाशक. मनुष्येन्द्र इति चक्री । तथा 'अन्नितो' त्ति अन्वित.-युक्त. 'सुपरिच्चाइ' त्ति सुष्ठु-शोभनेन प्रकारेण राज्यादि परित्यजतीत्येवं शील' सुपरित्यागी दमं-जिनाख्यातमिति सम्बन्धः, ' चरि ' त्ति अचारीच्चरित्वा च जयनामा चक्रीति शेषः प्राप्तो गतिमनुत्तराम् । तथा दशार्णो नाम देशस्तद्राज्य-तदाधिपत्य मुदितं सकलोपद्रवविरहितं प्रमोदवत् त्यक्त्वा ' ण. प्राग्वत् ' चरे ' त्ति अचारीत्, अप्रतिबद्धविहारतया विहृतवानित्यर्थ., साक्षाच्छक्रेण चोदितः-अधिकविभूतिदर्शनेन धर्म प्रति प्रेरित. । तथा निष्क्रान्ताः प्रव्रजिता निष्क्रम्य च श्रामण्ये--श्रमणभावे पर्युपस्थिता. तदनुष्ठान प्रत्युद्यता. अभूवन्निति शेष. । तथा सौवीरेषु राजवृषभ.--तत्कालभाविनृपतिप्रधानत्वात्सौवीरराजवृषभ' 'चेच्च ' त्ति त्यक्त्वा राज्यमिति शेष. प्राग्वत्, मुनि.--त्रैकाल्यावस्थावेदी सन् ' चरे ' त्ति अचारीत्, कोऽसौ ?--' उदायणो ' त्ति उद्रायननामा प्रव्रजित', चरित्वा च किमित्याह--प्राप्तो गतिमनुत्तराम् । तथैव--तेनैव प्रकारेण काशीराज. काशीमण्डलाधिपति. श्रेयसि--अतिप्रशस्ये सत्ये-संयम पराक्रम.--सामर्थ्यं यस्याऽसौ श्रेय सत्यपराक्रमः ' पहणे ' त्ति प्राहन्--प्रहतवान् कर्म महावनमिवातिगहनतया कर्ममहावनम् । तथैव विजय इति विजयनामा ' अणट्ठाकित्तिपव्वए ' त्ति, आर्षत्वाद् अनार्त्तः--आर्त्तध्यानविकलः कीर्त्या-दीनानाथादिदानोत्थया प्रसिद्ध्योपलक्षित. सन्, यद्वा--अनार्त्ता--सकलदोषविगमतोऽबाधिता कीर्त्तिरस्येत्यनार्त्तकीर्त्ति. सन्, पठ्यते च-'आणट्ठा किइपव्वइ' त्ति, आज्ञा--आगमोऽर्थशब्दस्य हेतुवचनस्याऽपि दर्शनाद्, अर्थो--हेतुरस्या. सा तथाविधा आकृतिरर्थान्मुनिवेषात्मिका यत्र तदाज्ञार्थाकृति यथा भवत्येवं प्राव्राजीद् गुणे--राज्यगुणे शब्दादिभिर्वा समृद्ध-सम्पन्न गुणसमृद्ध, पूर्वत्र तुशब्दस्यापिशब्दार्थत्वाद्व्यवहितसम्बन्धत्वाच्च गुणसमृद्धमपि । तथा ' अद्दाय ' त्ति आर्षत्वाद् आदित-गृहीतवान्-एतदुक्तं भवति स्वीकृतवान् शिरसेव शिरसा--शिर प्रदानेनेव जीवितनिरपेक्षमिति योऽर्थ, 'सिरं' ति शिर इव शिर सर्वजगदुपरिवर्त्तितया मोक्ष, पठ्यते च-'आदाय सिरसो सिरिं' ति. अत्र च आदाय--गृहीत्वा शिर श्रियं सर्वोत्तमां केवललक्ष्मीं परिनिर्वृत इति शेष', इति सप्तदशसूत्रार्थः ।

इत्थं महापुरुषोदाहरणैर्ज्ञानपूर्वकक्रियामाहात्म्यमभिधायोपदेष्टुमाह--

कहं धीरो अहेऊहिं, उम्मत्तो व्व महिं चरे ? ।
एए विसेसमादाय, सूरा दढपरक्कमा ॥ ५१ ॥

कथं-केन प्रकारेण धीर' उक्तरूप' अहेतुभि -क्रियावाद्यादिपरिकल्पितकुहेतुभिः उन्मत्त इव--ग्रहगृहीत इव तात्त्विकवस्त्वपलपनेनालजालभाषितया मही--पृथ्वी चरेत्--भ्रमेत् ? नैव चरेदित्यर्थः, किमिति ?, ये एते-अनन्तरोदिता भरतादय. विशेषम्-विशिष्टता गम्यमानत्वान्मिथ्यादर्शनेभ्यो जिनशासनस्य आदाय--गृहीत्वा मनसि सम्प्रधार्येति यावत् शूरा दृढपराक्रमा एतदेवाश्रितवन्त इति शेषः । अयमभिप्राय.--यथैते महात्मानो विशेषमादाय कुवादिपरिकल्पितक्रियावाद्यादिदर्शनपरिहारतो जिनशासन एव निश्चितमतयोऽभूवंस्तथा भवताऽपि धीरेण सताऽस्मिन्नेव निश्चितचेता विधेयमिति सूत्रार्थः ।

किञ्च--

अच्चंतनियाणखमा, एसा मे भासिया वई ।
अतरिंसु तरंतेगे, तरिस्संति अणागया ॥ ५२ ॥

अत्यन्तम्-अतिशयेन निदानै.-कारणै, कोऽर्थ ?, हेतुभिर्न तु परप्रत्ययेनैव, क्षमा--युक्ताऽत्यन्तनिदानक्षमा, यद्वा निदानं--कर्ममलशोधन तस्मिन् क्षमा--समर्था एषा--अनन्तरोक्ता, पाठान्तरतः-सर्वा-अशेषा सत्या वा मे मया भाषिता, अनयाऽङ्गीकृतया अतीर्षु'-तीर्णवन्त तरन्ति एकेऽपरे, पाठान्तरताऽन्ये, सम्प्रत्यपि तत्कालापेक्षया क्षेत्रान्तरापेक्षया वेत्थमभिधानमिति,तथा तरिष्यन्ति अनागता.-भाविनो, भवोदधिमिति सर्वत्र शेष इति सूत्रार्थ ।

यतश्चैवमत --

कहं धीरे अहेऊहिं, अद्दायं परियावसे ।
सव्वसंगविणिम्मुक्को,सिद्धे भवइ नीरए॥५३॥ त्ति बेमि ।

कथं धीरोऽहेतुभि. आदाय--गृहीत्वा, क्रियादिवादिमतमिति शेष ,पर्यावसेत् परीति-सर्वप्रकारमावसत् तत्रैव निलीयेत्, नैव तत्राभिनिविष्टो भवेदिति भाव । पठ्यते च-'अत्ताण परियावसि' त्ति आत्मान पर्यावासयेद्, अहेतुभि.-कथमात्मानमहेत्वावास कुर्यात् ?; नैव कुर्यादित्यर्थ । किं पुनरित्थमकरणे फलमित्याह सर्वे--निरवशेषा सजन्ति कर्मणा सम्बध्यन्ते जन्तव एभिरिति सङ्गा द्रव्यतो द्रविणादयो भावतस्तु मिथ्यात्वरूपत्वादेत एव क्रियादिवादास्तैर्विनिर्मुक्तो--विरहित सर्वसङ्गविनिर्मुक्त सन् सिद्धो भवति नीरजा, तदनेनाहेतुपरिहारस्य सम्यग्ज्ञानहेतुत्वेन सिद्धत्व फलमुक्तमिति सूत्रार्थ ।

इत्थं तमनुशास्य गतो विवक्षितं स्थानं क्षत्रियः शेषस-ञ्जयवक्तव्यतां त्वाह निर्युक्तिकृत्—

काऊण तवच्चरणं,बहूणि वासाणि सो धुयकिलेसो।
तं ठाणं संपत्तो, जं संपत्ता न सोयंति ॥४०४॥

सुगमैव, नवरं धुना -अपनीताः क्लिश्यन्त्येषु सत्सु जन्तव इति क्लेशाः—रागादयो येन स धुतक्लेशो यत्सम्प्राप्ता न शोचन्ते, शोकहेतुशारीरमानसदुःखाभावादिति गाथार्थः इतिः परिसमाप्तौ ब्रवीमि पूर्ववत्। उत्त० १८ अ०। ऋषभदेवस्य पुत्राणां शतकाभ्यन्तरवर्तिनि चतुर्नवतितमे पुत्रे , कल्प० १ अधि० ७ क्षण।

संजयभद्द–संजयभद्र–पुं०। साध्वनुकूले संयते , नि० चू० ११ उ०।

संजयविरयपडिहयपच्चक्खायपावकम्म–संयतविरतप्रत्याख्यातपापकर्मन्–पुं०। सामस्त्येन यतः संयतः सप्तदशप्रकारसंयमोपेतः, विविधमनेकधा द्वादशविधे तपसि रतो विरतः संयतश्चाऽसौ विरतश्च, तथा प्रतिहतं स्थितिह्रासतो ग्रन्थिभेदेन विनाशितं प्रत्याख्यातं हेत्वभावतः पुनर्वृद्ध्यभावेन निराकृतं पापकर्म-ज्ञानावरणीयादि येन स तथा पुनः कर्मधारय । सुसंयते, ध० ३ अधि०। दश०।

संजयाऽऽभास–संयताभास–पुं०। संयतवदवभासमाने असंयते, आचा० १ श्रु० २ अ० १ उ०।

संजयासंजय–संयतासंयत–पुं० । देशविरते , भ० ६ श० ३ उ०। नं०।

संजलण–संज्वलन–पुं०।ईषज्ज्वलनात्संज्वलनाः,सपदि ज्वलनाद् वा संज्वलना। परीषहादिसंपाते चारित्रिणमपि ज्वलयन्तीति संज्वलनाः। अल्पतरेषु क्रोधादिषु कषायेषु, विशे०। स्था०। परीषहोपसर्गोपनिपाते यतिमप्यमी समीषज्ज्वलयन्त्येव तेन संज्वलनाः स्मृताः, ते चत्वारः क्रोधमानमायालोभाः। कर्म० १ कर्म०। आव०।

अथ 'संजलणाणं उदए' इत्यादिनिर्युक्तिगाथोत्तरार्धव्याख्यामाह—

ईसिं सयराहं वा, संपाए वा परीसहाईणं।
जलणाओ संजलणा, नाहक्खायं तदुदयम्मि ॥१२४६॥
अकसायमहक्खायं, जं संजलणोदए न तं तेणं।
लब्भइ लद्धं च पुणो,भस्सइ सव्वं तदुदयम्मि ।१२४७।
न हु नवरिमहक्खाओ, वघाइणो सेसचरणदेसं पि।
घाएंति ताणमुदए, होइ जओ साइयारं तं ॥ १२४८॥

इह संशब्दस्य त्रयोऽर्थाः, तद्यथा—ईषज्ज्वलनात् संज्वलना , अथवा-' सयराहं ' झगिति ज्वलनात् संज्वलनाः, यदि वा—परीषहादिसम्पाते चारित्रिणमपि ज्वलयन्तीति संज्वलनाः, तदुदये यथाख्यातचारित्रं न भवति। कुतस्तदुदये तद् न भवति ?। इत्याह-'अकसाय' मित्यादि, 'जं' तिं-यस्मादकषायं यथाख्यातमुच्यते , तेन कारणेन संज्वलनकषायोदये तद् न लभ्येत, पूर्वलब्धमपि च पुनस्तदुदये सर्वं तद् भ्रश्यतीति। न हि-नैव यथाख्यातमात्रोपघातिनः संज्वलनाः, किन्तु-शेषचारित्राणामपि देशोपघातिनो भवन्ति, यतस्तेषामुदये तदपि शेषचारित्रं सातिचारं भवति, इति गाथार्थः ॥ १२४६॥ १२४७ ॥ १२४८॥ विशे०। सूत्र०। संज्वलयति दीपयति सर्वसावद्यविरतिमपीन्द्रियार्थसम्पाते वा संज्वलति दीप्यत इति संज्वलनः। स्था० ४ ठा० १ उ०। प्रतिक्षणरोषणे, दशा० १ अ०। आ० म०। सूत्र०। मुहुर्मुहुः क्रोधाग्निना ज्वलने, भ० १२ श० ५ उ०। आ० चू०। स०। पं० सं०।

संजलणकसायसंगय–संज्वलनकषायसङ्गत–त्रि०। अस्पतरकल्पकषायोद्भवे, पञ्चा० १७ विव०।

संजलणतिग–संज्वलनत्रिक–न०। संज्वलनक्रोधमानमायारूपे कषायत्रये, कर्म० २ कर्म०।

संजलणा–संज्वलना–स्त्री०। ज्ञानादिगुणोद्दीपनायाम्, उत्त० १ अ०।

संजाणय–संज्ञापक–त्रि०। विज्ञे, अनु०।

संजाय–सञ्जात–त्रि०। उत्पन्ने औ०।

संजायतिव्वसद्ध–सञ्जाततीव्रश्रद्ध–त्रि०। समुत्पन्नोत्कटगुरुरुचौ, पञ्चा० २ विव०।

संजायसड्ढ–सञ्जातश्रद्ध–त्रि०। प्रकर्षेण जातश्रद्धे , सू० प्र० १ पाहु०। रा०।

संजीवणी–सञ्जीवनी–स्त्री०। जीवितदात्र्याम् , सूत्र० १ श्रु० ५ अ० २ उ०।

संजुय–संयुग–न० । संग्रामे , षष्ठभागे ' मूलपिंड ' शब्दे उदाहृते सिन्धुराजपालिते नगरे, पिं०। पाइ० ना०।

संजुत्त–संयुक्त–त्रि०। मिश्रिते ' कम्मुणा तेण संजुत्तो गच्छइ उ परभवं। ' उत्त० १८ अ०। संबद्धे , उत्त० १ अ०।

संजुत्तदव्वसम्मत्त–संयुक्तद्रव्यसम्यक्त्व–न० । द्वयोर्द्रव्ययोः संयोगो गुणान्तराधानाय नोपमर्दाय उपभोक्तुर्मनःप्रीतये पयः-शर्करयोरिव तत्संयुक्तद्रव्यसम्यक्। द्रव्यसम्यक्त्वभेदे , उत्त० २८ अ०।

संजुत्तसंजोग–संयुक्तसंयोग–पुं०। ' संजोग ' शब्दे वक्ष्यमाणे संयोगभेदे , उत्त० १ अ०।

संजुत्ताहिगरण–संयुक्ताधिकरण–पुं०। अधिक्रियते नरकादिष्वनेनेत्यधिकरणं वासः उदूखलमुशलशिलापुत्रकगोधूमयन्त्रादिसंयुक्तमर्थक्रियाकरणयोग्यम्, संयुक्तं च तदधिकरणं चेति समासः। आव० ६ अ०। उपा०। आ०। पञ्चा०। तूणीरधनुर्मुशलोदूखलघरट्टादिके, ध० २० २ अधि०।

संजुत्ताहिगरणया–संयुक्ताधिकरणता–स्त्री०।अधिक्रियते आत्माऽनेनेत्यधिकरणम्। उदूखलादिसंयुक्तं चार्थक्रिया। ध० २ अधि०। 'संजुत्ताहिगरणे'त्ति सयुक्तम्-अर्थक्रियाकरणक्षमम् अधिकरणम्—उदूखलमुशलादि , तदतिचारहेतुत्वादतिचारो हिंस्रप्रदाननिवृत्तिविषयः, यतोऽसौ साक्षाद्यपि हिंस्रं

शकटादिकं न समर्पयति परेषां तथापि तेन संयुक्तेन तेऽयाचितवाऽप्यर्थक्रियां कुर्वन्ति विसंयुक्ते तु तस्मिंस्ते स्वत एव विनिवारिता भवन्ति ॥ ४ ॥ अर्थक्रिया- करणक्षमे चतुर्थेऽतिचारे, उपा० १ अ० । संयुक्ता- धिकरणम्--अधिक्रियते नरकादिष्वनेनेत्यधिकरणम् , वास्तूदूखलशिलापुत्रकगोधूमयन्त्रकादि संयुक्तम् अर्थ- क्रियाकरणयोग्यम् , संयुक्तं च तदधिकरणं चेति समासः । 'एत्थ सामाचारी--सावगेण संजुत्ताणि चेव सगडादीनि न धरेतव्वाणि, एवं वासीपरसुमादिविभासा ।' उपभोगपरि- भोगातिरेक' इति उपभोगपरिभोगशब्दार्थो निरूपित एव तद तिरेकः । एत्थ वि सामायारी-उवभोगातिरित्तं जदि तेल्ला- मलए बहुए गेण्हति ततो बहुंगा एहायगा वच्चंति तस्स लो- लियाए, अण्णहविएहायगा एहायंति, एत्थ पूतरगा आउक्काय- वधो, एवं पुप्फतंबोलमादिविभासा, एवं ण वट्टति । का- विधी सावगस्स उवभोगे एहाणे?, घरे एहायव्वं णऽत्थि ता- धे तेल्लामलएहिं सीसं घंसित्ता सव्वे साडेतूणं ताहे तडागा- ऽऽइतडे निविट्ठो अंजलीहिं एहाति । एवं जेसु य पुप्फेसु पुप्फकुंथुगाणि ताणि परिहरति । आव० ६ अ० ।

संजुद्ध-देशी-सरपन्दे, दे० ना० ८ वर्ग ६ गाथा ।

संजुय-संयुग-पुं० । संग्रामे, व्य० १ उ० ।

संजुत-त्रि० । बहुविधैश्वर्यअनादिभिः सहिते, उत्त० १२ अ० ।

संजूह-संयूथ-न० । निकायविशेषे, अनुयोगभेदे , भ०१५ श० । दृष्टिवादस्याष्टाशीतिसूत्रेषु सप्तमे सूत्रे,स० १४७ सम० । संकृतं युक्तार्थे यूथं पदानां पदयोर्वा समूहः संयूथं; समास इत्यर्थः । स्था० १० ठा० ३ उ० । सूत्र० ।

संजोइत्ता-संयोज्य-अव्य० । संयोगं कृत्वेत्यर्थे,स्था०१० ठा० ।

संजोइम-संयोगिम-त्रि० । संयोगिमं च संयोगस्तेन निर्वृत्तः "भावादिम." ॥६।४।२१॥ इतीमप्रत्ययः । संयोगनिष्पन्ने,हैम० ।

संजोग-संयोग-पुं० । संयुज्यते संयोजनं वा संयोगः । आ- चा० १ श्रु० २ अ० १ उ० । समुचितो योगः । पं० सू० १ सूत्र । " आद्यर्यो जः " ॥ ८ । १ । २४५ ॥ इति यस्य ज. । आ० । परस्परोचितपदार्थानां योगे, औ० । जीवस्य सम्ब- न्धे, आचा० १ श्रु० ८ अ० १ उ० । उत्त० । नानाभवेषु पु- त्रकलत्रमित्रशरीरादिसम्बन्धे, आतु० । आचा० । सूत्र० । विशे० । उत्त० । पुत्रकलत्रमित्रादिजनिते सम्बन्धे, आचा० १ श्रु० ४ अ० १ उ० । सम्बन्धे, सूत्र० २ श्रु० १ अ० । केनचित्सह सम्बन्धे, आव० ४ अ० । पित्रादिभिः सार्द्धं सम्बन्धे, दर्श० ४ तत्त्व । ममत्वकृते सम्बन्धे, आचा० १ श्रु० २ अ० ६ उ० । अप्राप्तिपूर्विकायां प्राप्तौ, सम्म० ३ का- ण्ड । आचा० ।

संयोगभेदाः—

से किं तं संजोए णं ?, संजोगे चउव्विहे पण्णत्ते,तं जहा- दव्वसंजोगे खेत्तसंजोगे कालसंजोगे भावसंजोगे ? । से किं तं दव्वसंजोगे ?, दव्वसंजोगे तिविहे पण्णत्ते, तं जहा- सचित्ते अचित्ते मीसए । से किं तं सचित्ते ?, सचित्ते- गोहिं गोमिए महिसीहिं महिसए ऊरणीहिं ऊरणीए उ- ट्टीहिं उट्टीवाले, से तं सचित्ते। से किं तं अचित्ते?, अचित्ते छत्तेण छत्ती दंडेण दंडी पडेण पडी घडेण घडी कडे- ण कडी, से तं अचित्ते । से किं तं मीसए?, मीसए हलेणं हालिए सगडेणं सागडिए रहेणं रहिए नावाए नाविए से तं दव्वसंजोगे । से किं तं खित्तसंजोगे ?, २ भारहे एर- वए हेमए एरणवए हरिवासए रम्मगवासए देवकुरुए उ- त्तरकुरुए पुव्वविदेहए अवरविदेहए, अहवा-मागहे माल- वए सोरट्ठए मरहट्ठए कुंकणए, से तं खेत्तसंजोगे । से किं तं कालसंजोगे ?, २सुसमसुसमाए सुसमाए सुसमदुसमाए दुसमसुसमाए दुसमाए दुसमदुसमाए । अहवा-पावसए वासारत्तए सरदए हेमंतए वसंतए गिम्हए, से तं कालसं- जोगे । से किं तं भावसंजोगे ?, २ दुविहे पण्णत्ते,तं जहा- पसत्थे अ,अपसत्थे अ । से किं तं पसत्थे?,२ नाणेणं नाणी दंसणेणं दंसणी चरित्तेणं चरित्ती, से तं पसत्थे। से किं तं अपसत्थे ?, २ कोहेणं कोही माणेणं माणी मायाए मायी लोहेणं लोही । से तं अपसत्थे । से तं भावसंजोगे । से तं संजोए णं ।

संयोग.-सम्बन्धः,स चतुर्विधः प्रज्ञप्तः, तद्यथा-द्रव्यसंयोग इत्यादि , सर्वं सूत्रसिद्धमेव, नवरं—सचित्तद्रव्यसंयोगेन गावोऽस्य सन्तीति गोमानित्यादि । अचित्तद्रव्यसंयोगेन छत्रमस्यास्तीति छत्रीत्यादि, मिश्रद्रव्यसंयोगेन हलेन व्य- वहरतीति हालिक इत्यादि । अत्र हलादीनामचेतनत्वाद् ब- लीवर्दानां सचेतनत्वान्मिश्रद्रव्यता भावनीया । क्षेत्रसंयो- गाधिकारे भरते जातो भरते वाऽस्य निवास इति तत्र जात. ( का० ५०७ ) "सोऽस्य निवास" इति चाऽ- णप्रत्यये भारत । एवं शेषेष्वपि भावना कार्या । का- लसंयोगाधिकारे सुषमसुषमायां जात इति " सप्तमी पञ्चम्यन्ते जनेर्ड. "( का० रू० ६६१ ) । इति डप्रत्यये सुषम- सुषमज एवं सुषमजादिष्वपि भावनीयम् । भावसंयोगाधि- कारे भाव.—पर्याय., स च द्विधा—प्रशस्तो ज्ञानादिरप्रश- स्तश्च क्रोधादि , शेषं सुगमम् । इदमपि संप्रयोगप्रधानतया प्रवृत्तत्वान्नोपादिश्यत इति ६ । अनु० ।

सम्प्रति सूत्राऽऽलापकनिष्पन्ननिक्षेपस्य सूत्रस्पर्शिकनिर्युक्ते- श्च प्रस्ताव इति मन्यमान संयोग इत्याद्यं पदं स्पृशन्निदे- मुमाह निर्युक्तिकृत्—

संजोगे निक्खेवो, छक्को दुविहो उ दव्वसंजोगे ।
संजुत्तगसंजोगो, नायव्वियरेयरो चेव ॥ ३० ॥

संयोग इति-संयोगविषयः निक्षेप न्यासः, पदपरिमाणम- स्येति षट्क प्राग्वत्कन् , एतच्चेदाश्च नामस्थापनाद्रव्यक्षेत्र- कालभावा , प्रसिद्धत्वादुत्तरत्र व्याख्यानत उन्नीयमानत्वाच्च नोक्ता ,(अत्रत्या वक्तव्यता'चक्खाण' शब्दे 'णामणय' शब्दे'ठ- वणाणय'शब्दे च उक्ता)उक्त पूज्यै -"आगारो चिय मइम-इय- त्थुकिरियाफलाभिहाणाइं। आगारमयं सव्वं, जमणागारं तयं

नऽत्थि ॥१॥ ण पराणुमयं वत्थुं, अगाराभावओ खपुप्फं व। उवलंभव्ववहारा, भावाओ णाणगारं च ॥ २ ॥" द्रव्यनय आह—" यथानामादिनाकारं, विना संवेद्यते तथा। नाऽऽकारोऽपि विना द्रव्यं, सर्वं द्रव्यात्मकं ततः ॥ १ ॥ " तथाहि—द्रव्यमेव मृदादिर्निखिलस्थासकोशकुशूलकुटकपालाद्याकारानुयायि वस्तु सत्, तस्यैव तत्तदाकारानुयायिन सद्बोधविषयत्वात्, स्थासकोशाद्याकाराणां तु मृद्द्रव्यानिरेकिणां कदाचिदनुपलम्भात्, तच्चोत्पादादिसकलविकारविरहितं तथा तथाऽविर्भावतिरोभावमात्रान्वितं सम्मूर्च्छितसर्वप्रभेदनिर्भेदवीजं द्रव्यमगृहीततरङ्गादिप्रभेदस्तिमितसरःसलिलवत्, आह च—

" दव्वपरिणाममेत्तं, मोत्तूणागारदरिसणं किं तं।
उप्पायव्वयरहियं, दव्वं चिय निव्वियारं ति ॥ १ ॥
आविब्भावतिरोभा-वमेत्तपरिणामकारणमचिन्तं।
णिच्चं बहुरूवं पि य, नडो व्व वेसंतरावण्णो ॥ २ ॥"

( भावनयव्याख्या 'भावणय' शब्दे पञ्चमभागे गता। ) परमार्थतस्त्वयम्—संविन्निष्ठैव सर्वाऽपि विषयाणां व्यवस्थितिः। संवेदनं च नामादि, विकलं नानुभूयते। तथाहि—

"घटोऽयमिति नामैतत्, पृथुबुध्नादिनाऽऽकृतिः।
मृद्द्रव्यं भवनं भावो, घटे दृष्टं चतुष्टयम् ॥ १ ॥
तत्राऽपि नाम नाकार-माकारो नाम नो विना।
तौ विना नापि चान्योऽन्य-मुत्तरावपि संस्थितौ ॥ २ ॥
मयूराण्डरसे यद्व-द्वर्णा नीलादय स्थिताः।
सर्वेऽप्यन्योऽन्यमुन्मिश्रा-स्तद्वन्नामादयो घटे ॥ ३ ॥"

इत्थं चैतत् परस्परसव्यपेक्षितयैवाशेषनयानां सम्यग्नयत्वात्, इतरथा उत्पादव्ययध्रौव्ययुक्तं सदिति प्रत्यक्षादिप्रमाणप्रतीतसल्लक्षणानुपपत्तेश्च। किञ्च-शब्दादपि घटादेर्नामादिभेदरूपेणैव घटाद्यर्थे बुद्धिपरिणामो जायते, इत्यतोऽपि नामादिचतूरूपतैव सर्वस्य वस्तुनः। उक्तं च—" नामादिभेदसद्द—त्थ बुद्धिपरिणामभावओ णिययं। जं वत्थु अत्थि लोए, चउपज्जायं तय सव्वं ॥ १ ॥" ततश्च—"चतुष्काभ्यधिकस्येह, न्यासो योऽन्यस्य दृश्यते। एतदन्तर्गतः सोऽपि, ज्ञातव्यो धीधनान्वितैः ॥ १ ॥" इत्यलं प्रसङ्गेन ॥ सम्प्रति निर्युक्तिरनुश्रि ( स्रि ) यते। तत्र नामस्थापने आगमतो नोआगमतश्च ज्ञशरीरभव्यशरीररूपश्च द्रव्यसंयोगः सुगम इति मन्वानो व्यतिरिक्तद्रव्यसंयोगमभिधातुमाह—द्विविधस्त्विति द्विविध एव, द्रव्येण द्रव्यस्य वा, समिति सङ्गतो योग संयोगः। संयोगद्वैविध्यमेवाह—संयुक्तमेव संयुक्तकम्—अन्येन सश्लिष्टं, तस्य संयोगः—व स्त्वन्तरसम्बन्धः संयुक्तकसंयोगो ज्ञातव्यः। इतरेतर इति इतरेतरसंयोग। च समुच्चये। एवः अवधारणे। इत्यमेव द्विविध एप संयोग इति गाथासमासार्थः ॥ ३० ॥

विस्तरार्थं त्वभिधित्सु "यथोद्देशं निर्देश" इति न्यायतः संयुक्तकसंयोगं भेदेनाह—

**संजुत्तगसंजोगो, सचित्तादीण होइ दव्वाणं।**
**दुममणुसुवन्नमाई, संतइकम्मेण जीवस्स ॥ ३१ ॥**

संयुक्तकसंयोग अनन्तराभिहितस्वरूपः सचित्तादीनां सचित्ताचित्तमिश्राणां भवति द्रव्याणाम्। अमीषामुदाहरणान्याह—'दुममणुसुवण्णमाइ' त्ति' अत्र मकारस्यालाक्षणिकत्वात् सुव्व्यत्ययाच्च द्रुमाणुसुवर्णादीनां प्रत्येकं चादिशब्दसम्बन्धात्सचित्तद्रव्याणां द्रुमादीनाम्, अचित्तद्रव्याणामणवादीनां सुवर्णादीनां च, मिश्रद्रव्यस्य तु सन्ततिकर्मणोपलक्षितस्य जीवस्य। अत्र चाऽणवादीनां सुवर्णादीनामित्युदाहरणद्वयमचित्तद्रव्याणां सचित्तमिश्रद्रव्यापेक्षया भूयस्त्वख्यापनार्थम्। एतद्भूयस्त्वं च जीवेभ्यः पुद्गलानामनन्तगुणत्वात्। उक्तं च—" जीवा पोग्गलसमया, दव्वपएसा य पज्जवा चेव। थोवाऽणंताणंता, विसेसमहिया दुवेऽणंता ॥ ॥ १ ॥ " इति, अनेन च सचित्तादेः संयोगद्रव्यस्य त्रैविध्यात् संयुक्तकसंयोगस्य त्रैविध्यमुक्तमिति गाथार्थः ॥ ३ ॥

तत्र द्रुमादीनां सचित्तसंयुक्तद्रव्यसंयोगं विवरीतुमाह—

**मूले कंदे खंधे, तया य साले पवालपत्तेहिं।**
**पुप्फफले बीएहि अ, संजुत्तो होइ दुममाई ॥ ३२ ॥**

मूले कन्दे स्कन्धे इति सर्वत्र सूत्रत्वात्, तृतीयार्थे सप्तमी। ततश्च मूलेन—अधःप्रसर्पिणा स्वावयवेन कन्देनतेनैव मूलस्कन्धान्तरालवर्तिना स्कन्धेन-स्थुडेन त्वचा-छविरूपया 'साले' त्ति एकारोऽलाक्षणिकः, ततः शालाप्रवालपत्रै शाखापल्लवपलाशैः, फले इत्यत्राप्येकारस्तथैव, तत: पुष्पफलवीजैश्च प्रसिद्धैरेव संयुक्त -सम्बद्धो भवति। 'दुममाइ' त्ति मकारोऽलाक्षणिकः ततो द्रुमादिः, आदिशब्दाद्-गुच्छगुल्मादिश्च संयुक्तकसंयोग इति प्रक्रमः। स हि प्रथममुद्गच्छन्नङ्कुरात्मक पृथिव्याः संयुक्त एव मूलेन संयुज्यते, ततो मूलसंयुक्तक एव कन्देन, कन्दसंयुक्त एव स्कन्धेन एवं त्वक्शाखाप्रवालपुष्पफलबीजैरपि पूर्वसंयुक्त एवोत्तरोत्तरै संयुज्यते इति भावनीयम्। नन्वेवं द्रुमादद्रव्यत्वात् संयुक्तकसंयोगस्य च गुणत्वात्कथं द्रुमादिरेव स इति, अत्रोच्यते—धर्मधर्मिणो कथञ्चिदनन्यत्वादेवमुक्तमित्यदोष। एवमुत्तरभेदयोरपीति गाथार्थ ॥३२॥

अणवादीनामचित्तसंयुक्तकद्रव्यसंयोगं स्पष्टयितुमाह—

**एगरस एगवन्ने, एगे गंधे तहा दुफासे अ।**
**परमाणू खंधेहि अ, दुपएसाईहि णायव्वो ॥ ३३ ॥**

एक -अद्वितीयस्तिक्तादिरसान्यतमो रसोऽस्येति एकरसः, तथैक कृष्णादिवर्णान्यतमो वर्णोऽस्येति एकवर्णः, एवम् एकगन्धः—सुगन्धीतरान्यतरगन्धान्वितः, 'एगे' इत्येकारस्यालक्षणिकत्वात्, तथा द्वौ चाविरुद्धौ स्निग्धशीताद्यात्मकौ स्पर्शावस्येति द्विस्पर्शः। चशब्दः स्वगतानन्तभेदोपलक्षकः। क एवंविधः ?, इत्याह—परम -तदन्यसूक्ष्मतरासम्भवात् प्रकर्षवान् स चासावणुश्च परमाणु, उपलक्षणत्वाद् द्व्यणुकादिश्च, स्कन्धैश्च—स्कन्धशब्दाभिधेयैः, कैरित्याह—द्वौ प्रदेशावारम्भकावस्येति द्विप्रदेशो-द्व्यणुकः, स आदिर्येषां त्रिप्रदेशादीनामाचित्तमहास्कन्धपर्यन्तानां ते तथा तैः-चशब्दात्परमाण्वन्तरैर्वर्णान्तरादिभिश्च, संयुज्यमान इति गम्यते। विज्ञेयः विशेषेण—संख्यातासंख्यातानन्तभङ्गवि-

भावनात्मकेनावबोद्धव्यः , पाठान्तरतो ज्ञातव्यः, अचित्तसंयुक्तकसंयोग इति प्रक्रमः, अयमर्थः-"कारणमेव तदन्त्यं, सूक्ष्मो नित्यश्च भवति परमाणुः । एकरसवर्णगन्धो, द्विस्पर्शः कार्यलिङ्गश्च ॥ १ ॥ " इत्येवंलक्षणः परमाणुर्यदा व्यणुकादिस्कन्धपरिणतिमनुभवति तदा रसादिसंयुक्त एव द्व्यणुकादिभिः स्कन्धैः संयुज्यते , यदा वा तिक्ततादिपरिणतिमपहाय कटुकत्वादिपरिणतिं प्रतिपद्यते तदाऽपि वर्णादिभिः संयुक्त एव कटुकत्वादिना संयुज्यते इति संयुक्तसंयोग उच्यते । अत्र च कृष्णपरमाणुः कृष्णत्वमपहाय नीलत्वं प्रतिपद्यत इत्येको भङ्गः , एवं रक्तत्वं पीतत्वं शुक्लत्वं चेति चत्वारः । तथाऽयमेव रसपञ्चकगन्धद्वयाविरुद्धस्पर्शैस्तारतम्यजनितैश्च स्वस्थान एव द्विगुणकृष्णत्वादिभिः परमाण्वन्तरद्विप्रदेशादिभिश्च योजनाद्विवक्षावशतः संख्यातासंख्यातानन्तात्मिका भङ्गरचनामवाप्नोति , एवं वर्णान्तररसस्पर्शगन्धस्वगततारतम्ययुक्तोऽपि , तथा द्विप्रदेशादिश्च । यच्च—' वण्णरसगंधफासा, पोग्गलाणं च लक्खणं ' इत्यादिसूत्रेषु वर्णस्यादित्वेन दर्शनेऽपि ' एगरसएगवण्णे ' त्ति रसस्य प्रथमत उपादानं तदनानुपूर्व्या अपि व्याख्याङ्गत्वेन गाथाबन्धानुलोम्येन चेति भावनीयम् । सुवर्णादीनां च प्राच्यवर्णकासंयुक्तानामेव विशिष्टवर्णकादिभिः संयोगोऽचित्तसंयुक्तकसंयोग उक्तानुसारेण सुज्ञान एवेति निर्युक्तिकृता न व्याख्यात इति गाथार्थः ।

दृष्टान्तपूर्वकं सन्ततिकर्मणा जीवस्य मिश्रसंयुक्तकद्रव्यसंयोग व्यक्तीकर्तुमाह—

जह धाऊ कणगाई, सभावसंजोयसंजुया हुंति ।
इय संतइकम्मेणं, अणाइसंजुत्तश्रो जीवो ॥ ३४ ॥

यथा इति-उदाहरणोपन्यासार्थः,यथा धातवः कनकादियोनिभूता मृदादयः ' कणगाइ ' त्ति सूत्रत्वात्कनकादिभिः , आदिशब्दात्ताम्रादिभिश्च, किमित्याह—स्वभावेन संयोगः-प्रकृतीश्वरार्थान्तरव्यापारानपेक्षयोपलब्ध्यानुपलब्धिरूपो यः सम्बन्धस्तेन संयुक्ता—मिश्रिताः स्वभावसंयोगसंयुता भवन्ति—विद्यन्ते इतीत्यमुनैवार्थान्तरानिरपेक्षत्वलक्षणेन प्रकारेण सन्तति —उत्तरोत्तरनिरन्तरोत्पत्तिरूपः प्रवाहस्तयोपलक्षितं कर्म—ज्ञानावरणादि सन्ततिकर्म तेन , न विद्यते आदि —प्राथम्यमस्येत्यनादि , स चेह प्रक्रमात्संयोगस्तेन ' स ' मिति ' अण्णोण्णाणुगयाणं इमं च त च त्ति विभयणमजुत्तं ' इत्यागमाद्विभागाभावतो युक्तः श्लिष्टोऽनादिसंयुक्तः; स एव अनादिसंयुक्तकः, यद्वा संयोगसंयुक्तं ततोऽनादिसंयुक्तमस्येति अनादिसंयुक्तकः, क इत्याह—जीवति जीविष्यति जीवितवांश्चेति जीवः , मिश्रसंयुक्तकद्रव्यसंयोग इति प्रक्रमः । इदमुक्तं भवति—जीवो ह्यनन्तकर्माणुवर्गणाभिरावेष्टितप्रवेष्टितोऽपि न स्वरूपं चैतन्यमतिवर्तते, नचाचैतन्यं कर्माण्व इति तद्युक्ततया विवक्ष्यमाणोऽसौ संयुक्तकमिश्रद्रव्यं, ततोऽस्य कर्मप्रदेशान्तरैः संयोगो मिश्रसंयुक्तकद्रव्यसंयोग उच्यते । इह च जीवकर्मणोरनादिसंयोगस्य धातुकनकादिसंयोगदृष्टान्तद्वारेणाभिधानं तद्वदेवानादित्वेऽप्युपायतो जीवकर्मसंयोगस्याभावस्थापनार्थम् , अन्यथा मुक्त्यनुष्ठानवैफल्यापत्तेरिति भावनीयमिति गाथार्थः । उक्तः संयुक्तकसंयोग ।

इतरेतरसंयोगमाह—

इयरेयरसंजोगो, परमाणूणं तहा पएसाणं ।
अभिपेयमणभिपेश्रो, अभिलावो चेव संबंधो ॥३५॥

इतरेतरस्य-परस्परस्य संयोगो—घटना इतरेतरसंयोगः परमाणूनाम्-उक्तरूपाणां, तथा प्रकर्षेण-सूक्ष्मातिशयलक्षणेन दिश्यन्ते—कथ्यन्त इति प्रदेशा —धर्मास्तिकायादिसम्बन्धिनो निर्विभागा भागास्तेषाम् , 'अभिपेयं' ति प्राकृतत्वादभिप्रेतः, इतरेतरसंयोग इति योज्यते, एवमुत्तरत्रापि । अभिप्रेतत्वं चास्य अभिप्रेतविषयत्वाद्,एतद्विपरीतोऽनभिप्रेत ।अभिलप्यते—आभिमुख्येन व्यक्तमुच्यतेऽनेनार्थ इत्यभिलापो वाचकः शब्दस्तद्विषयत्वात् अभिलाप । च समुच्चये । एवः अवधारणे ।सम्बन्धशब्दानन्तरं चैतौ योज्यौ, ततः सम्बन्धनं सम्बन्धः,स चैव स्वस्वामित्वादिरनेकधा वक्ष्यमाणः । एतावद्भेद एवायमितरेतरसंयोग इति चावधारणस्यार्थ इति गाथासमासार्थः ।

परमाणूनां संयोगमाह—

दुविहो परमाणूणं, हवइ य संठाणखंधश्रो चेव ।
संठाणे पंचविहो, दुविहो पुण होइ खंधेसुं ॥ ३६॥

द्वौ विधौ प्रकारावस्येति द्विविधः—द्विभेदः, कोऽसौ ?-परमाणूनाम् इति परमाणुसम्बन्धी , प्रक्रमादितरेतरसंयोगो भवति । च. पूरणे । कथं द्विविध इत्याह-'संठाणखधतो' त्ति सन्तिष्ठतेऽनेन रूपेण पुद्गलात्मकं वस्त्विति संस्थानम्-आकारविशेषः ततस्तमाश्रित्य, स्कन्धतः स्कन्धमाश्रित्य । च समुच्चये । एवः भेदावधारणे। द्विविधस्याऽपि प्रत्येकं भेदानाह-संस्थाने संस्थानविषयः पञ्चविधः-पञ्चप्रकारः द्विविध - द्विप्रकारः , पुनःशब्दो वाक्यान्तरोपन्यासे , भवति, स्कन्धेषु स्कन्धविषय इति गाथार्थः ।

इह च संस्थानस्कन्धभेदद्वारक एवायमितरेतरसंयोगभेद इति तदभिधानमुचितं, तत्र यथोद्देशं निर्देश इति न्यायतः संस्थानभेदाभिधानप्रस्तावेऽप्यल्पवक्तव्यत्वात् स्कन्धभेदं हेतुभेदद्वारेणाऽऽह—

परमाणुपुग्गला खलु, दुन्निव बहुगा य संहता संता ।
निव्वत्तयंति खंधं, तं संठाणं श्रणित्थत्थं ॥३७॥

परमाणुपुद्गलौ खलु द्वौ वा बहवः एव बहुकाः —त्रिप्रभृतयः , ते च परमाणुपुद्गलाः संहताः -एकपिण्डतामापन्नाः सन्तो निर्वर्तयन्ति-जनयन्ति, किमित्याह—स्कन्ध- द्व्यणुकादिकम् , अनेन च द्विपरमाणुजन्यतया बहुपरमाणुजन्यत्वेन च स्कन्धस्य द्विभेदत्वमुक्तम् ।खलुशब्दोऽत्र विशेषं द्योतयति,स चायम्- इह रूक्षः स्निग्धो वा एकगुणः सम्बध्यमानो द्विगुणाधिकेनैव स्वस्वरूपापेक्षया सम्बध्यते , ननु समगुणेनैकगुणाधिकेन वा। किमुक्तं भवति ?—एकगुणस्निग्धस्त्रिगुणस्निग्धेन सम्बध्यते, त्रिगुणस्निग्धः पञ्चगुणस्निग्धेन, पञ्चगुणस्निग्धः सप्तगुणस्निग्धेनेत्यादि । तथा द्विगुणस्निग्धश्चतुर्गुणस्निग्धेन,चतुर्गुणस्निग्धः षड्गुणस्निग्धेनेत्यादि एवमेकगुणरूक्ष-

त्रिगुणरूक्षेण, त्रिगुणरूक्ष' पञ्चगुणरूक्षेणेत्यादि, तथा द्विगुणरूक्षश्चतुर्गुणरूक्षेण, चतुर्गुणरूक्ष. षड्गुणरूक्षेणेत्यादि, एवं द्विगुणाधिकसम्बन्धो भावनीय., नत्वेकगुणस्निग्धः एकगुणस्निग्धेन द्विगुणस्निग्धेन वा सम्बध्यते, द्विगुणस्निग्धो द्विगुणस्निग्धेन त्रिगुणस्निग्धेन वा यावदनन्तगुणस्निग्धोऽप्यनन्तगुणस्निग्धेन समगुणेनैकगुणाधिकेन वा । एवमेकगुणरूक्ष एकगुणरूक्षेण द्विगुणरूक्षेण वा, द्विगुणरूक्षो द्विगुणरूक्षेण त्रिगुणरूक्षेण वा यावदनन्तगुणरूक्षोऽप्यनन्तगुणरूक्षेण समगुणेनैकगुणाधिकेन वेति । अन्ये त्वाहु.-एकगुणादिस्वस्थानापेक्षया द्विगुणेन रूपाधिकेन सम्बध्यत इति । अयमत्र विशेषः खलुशब्देन सूच्यते, तथा चैककस्य स्वस्थानापेक्षया द्विगुणो द्विक एव, स च रूपाधिकस्त्रिक एव इति त्रिगुणेनैवैकगुणस्य सम्बन्धः । तथा द्विगुणस्य पञ्चगुणेन, त्रिगुणस्य सप्तगुणेन, चतुर्गुणस्य नवगुणेन, पञ्चगुणस्यैकादशगुणेनेत्यादि । उक्तं च-

"समनिद्धयाइ बंधो, न होइ समलुक्खया वि य न होइ ।
वेमाइनिद्धलक्ख-त्तणेण बधो उ खधाण ॥ १ ॥"

तथा—

"दोरह जहएणगुणाणं, निद्धाण तह य लुक्खदव्वाणं ।
एगाहिए वि य गुणे, ण होति बधस्स परिणामो ॥ २ ॥
णिद्धविउणाहिएण, बंधा निद्धस्स होइ दव्वस्स ।
लुक्खविउणाहिएण य, लुक्खस्स समागमं पप्प ॥ ३ ॥"

स्निग्धरूक्षपरस्परबन्धविचारणायां तु समगुणयोर्विषमगुणयोर्वा जघन्यवर्जयोर्बन्धपरिणतिरिति विशेष. । तथा चाह-" वज्झति णिद्धलुक्खा, विसमगुणा अहव समगुणा जेऽवि । वज्जित्तु जहन्नगुणे, वज्झती पोग्गला एव ॥१॥" इत्यादि, येन विशेषेण संस्थानात् स्कन्धस्य भेदेनोपादानं तमाविष्कर्तुमाह-' तं संठाणं' ति प्राकृतत्वादेवं पाठ , तस्य-स्कन्धस्य संस्थानम्-आकारस्तत्संस्थानम्, अनेन-हृदि विवर्तमानतया प्रत्यक्षेण परिमण्डलादिनाऽनन्तरोक्तप्रकारेणेत्थमित्थं तिष्ठति इत्थस्थं, न तथा अनित्थंस्थम्, अनेन नियतपरिमण्डलाद्यन्यतराकारं संस्थानं शेषोऽनियताऽऽकारस्तु स्कन्ध इत्यनयोर्विशेष इत्युक्तं भवति । आह-स्कन्धानामपि परस्परं बन्धोऽस्तियदुक्तम्-" एमेव य खंधाणं, दुपएसाईण बंधपरिणामो " त्ति अत' किं न तेषामपीतरेतरसयोग इहोक्त.?, उच्यते-उक्त एव, तेषां प्रदेशसद्भावात्, प्रदेशाना च 'इयरेयरसंजोगो, परमाणूण तहा पएसाणं' इत्यनेन तदभिधानादिति गाथार्थ ॥३७॥

संस्थानभेदानाह—

परिमंडले य वट्टे, तंसे चउरंसमायए चेव ।
घणपयर पढमवज्जं, ओयपएसे य जुम्मे य ॥ ३८ ॥

'लिङ्गं व्यभिचार्यपि' इति प्राकृतलक्षणात् सर्वत्र लिङ्गव्यत्यय', ततः परिमण्डल, प्रक्रमात् संस्थानमेवमुत्तरत्राऽपि, तच्च बहिर्वृत्ततावस्थितप्रदेशजनितमन्त शुषिरम्, यथा वलकस्य चशब्द उत्तरभेदापेक्षया समुच्चये । वृत्तं तदेवान्तः शुषिरविरहितं यथा कुलालचक्रस्य, त्र्यस्रं त्रिकोणं, यथा शृङ्गाटकस्य चतुरस्रं-चतुष्कोणं, यथा कुम्भिकाया', आयत-दीर्घं, यथा दण्डस्य । च. पूर्वभेदापेक्षया समुच्चये । एव अवधारणे । तत इयत एव संस्थानभेदा ,'घणपयर'त्ति घनं च प्रतर च घनप्रतरं प्राकृतत्वाद्बिन्दुलोप., सर्वत्र च प्रतरपूर्वक एव घन. प्ररूप्यते, इहापि तथैवोपदर्शयिष्यते, ततः प्रतरघन इति निर्देशः प्राप्त , अल्पाक्षरत्वात्तु घनशब्दस्य पूर्वनिपातः, । ततश्चैकैकं परिमण्डलादि प्रतर घन च, भवतीति गम्यते । तथा प्रथमम्—आद्य वर्जयति-त्यजतीति प्रथमवर्जं—परिमण्डलरहित वृत्तादिसंस्थानचतुष्कमित्यर्थः ' ओयपएसे य ' त्ति ओज.प्रदेशं च विषमसंख्यपरमाणुकं 'जुम्मे य ' त्ति प्रक्रमाद् युग्मप्रदेशं च , उभयत्र चः समुच्चये । इह च घनप्रतरभेदमेव वृत्तादीत्थं भिद्यते, तत. प्रतरवृत्तमोजःप्रदेशं युग्मप्रदेशं च, तथा घनवृत्तमोज.प्रदेशं युग्मप्रदेशं च , एवं त्र्यस्रादिष्वपि चतुर्विधं भावनीयम् । परिमण्डलं वर्जनीयं च, समसंख्याणुष्वेव तस्य सम्भवेनैवंविधभेदासम्भवात्, तथा च द्विविधमेव परिमण्डलमिति गाथार्थः ।

इह च परिमण्डलादि प्रत्येकं जघन्यमुत्कृष्टं च , तत्रोत्कृष्टं सर्वमनन्ताणुनिष्पन्नमसंख्यप्रदेशावगाढं चेत्येकरूपतयाऽनुक्तमपि सम्प्रदायाज्ज्ञातुं शक्यमिति तदुपेक्ष्य जघन्य तु प्रतिभेदमन्यान्यरूपतया न तथेति तदुपदर्शनार्थमाह-

पंचग वारसगं खलु, सत्तग बत्तीसगं तु वट्टम्मि ।
तिय छक्कग पणतीसा, चत्तारि य हुंति तंसम्मि ॥३९॥
नव चेव तहा चउरो, सत्तावीसा य अट्ठ चउरंसे ।
तिगदुगपन्नरसेऽवि य, छच्चेव य आयए हुंति ॥ ४० ॥
पणयालीसा वारस, छब्भेया आययम्मि संठाणे ।
वीसा चत्तालीसा, परिमंडलि हुंति संठाणे ॥ ४१ ॥

आसामर्थः स्पष्ट एव, नवरमायते षड्भेदाभिधानमव्यापित्वेन प्रागनुद्दिष्टस्यापि श्रेणिगतभेदद्वयस्याधिकस्य तत्र सम्भवात्, तथा परिमण्डलादित्वेऽपि संस्थानानां वृत्तादिभेदानामोजःप्रदेशप्रतरादीनामनन्तरोद्दिष्टत्वात् प्रत्यासत्तिन्यायेन यथाक्रमं पञ्चकादिभिः प्रथममुपदर्शनं, पश्चात् परिमण्डलभेदद्वयस्य । तत्रौज.प्रदेशप्रतरवृत्तं पञ्चाणुनिष्पन्नं पञ्चाकाशप्रदेशावगाढ च तत्रैकोऽणुरन्तरेव स्थाप्यते, चतसृषु पूर्वादिदिक्षु चैकैक. स्थापना १— युग्मप्रदेशप्रतरवृत्तं द्वादशप्रदेशं, द्वादश प्रदेशावगाढं च, तत्र हि चतुर्षु प्रदेशेषु निरन्तरमन्तश्चतुरोऽणून्निधाय तत्परिक्षेपेणाष्टौ स्थाप्यन्ते , स्थापना २ , ओज.प्रदेशं घनवृत्तं सप्तप्रदेशं, सप्तप्रदेशावगाढं च, तथैवं तत्रैव पञ्चप्रदेशे प्रतरवृत्ते मध्यस्थितस्याणोरुपरिष्टादधस्ताच्चैकैकोऽणुरवस्थाप्यते, ततो द्वयसहिता. पञ्च सप्त भवन्ति ३, युग्मप्रदेशं घनवृत्तं द्वात्रिंशत्प्रदेशं द्वात्रिंशत्प्रदेशावगाढं च , तत्र प्रतरवृत्तोपदर्शितद्वादशप्रदेशोपरि द्वादशान्ये, तदुपरि चत्वारोऽधस्ताच्च तावन्त एवाणवः स्थाप्याः, एते मीलिता द्वात्रिंशद्भवन्ति ४ । ओजःप्रदेशं प्रतरत्र्यस्रं त्रिप्रदेशं त्रिप्रदेशावगाढं च । तत्र च तिर्यग्निरन्तरमणुद्वयं विन्यस्याऽधस्याध एकोऽणु स्थाप्यः, स्थापना १— युग्मप्रदेशं प्रतरत्र्यस्र षट्प्रदेश, षट्प्रदेशावगाढं च, तत्र च तिर्यग्निरन्तरं त्रयोऽणवः स्थाप्यन्ते ततः

आद्यस्याधस्तादध ऊर्ध्वभावेन द्वयं द्वितीयस्य त्वध एकोऽणु स्थाप्यः, स्थापना १-  ओज प्रदेशं घनत्र्यस्रं पञ्चत्रिंशत्प्रदेशं पञ्चत्रिंशत्प्रदेशावगाढं च, तत्र च तिर्यग्निरन्तराः पञ्चाऽणवो न्यस्यन्ते तेषां चाधोऽधः क्रमेण तिर्यगेव चत्वारस्त्रयो द्वावेकश्चाणुः स्थाप्यन्ते, स्थापना



अस्य च प्रतरस्योपरि सर्वपङ्क्तिष्वन्त्या—न्त्यपरमाणुपरिहारेण दश, तथैव तेषामुपर्युपरि षट् त्रय



एकश्चेति  क्रमेणाणवः स्थाप्याः, तेषां स्थापना इति मीलिता. पञ्चत्रिंशद्भवन्ति ३, युग्मप्रदेशं घनत्र्यस्रं चतुष्प्रदेशं चतुष्प्रदेशावगाढं च, तत्र च प्रतरत्र्यस्र एव त्रिप्रदेशे एकतरस्योपर्येकोऽणुर्दीयते, ततो मीलिताश्चत्वारो भवन्ति ४ । ओजःप्रदेशं प्रतरचतुरस्रं नवप्रदेशं नवप्रदेशावगाढं च । तत्र च तिर्यग्निरन्तरं त्रिप्रदेशास्तिस्रः, पङ्क्तयः-स्थाप्याः । स्थापना १

| | | |
|---|---|---|
| ० | ० | ० |
| ० | ० | ० |
| ० | ० | ० |

युग्मप्रदेशं प्रतरचतुरस्रं-चतुष्प्रदेशं चतुष्प्रदेशावगाढ च, तत्र च तिर्यग्निरन्तरं द्विप्रदेशे द्वे पङ्क्ती स्थाप्येते, स्थापना-२

| | |
|---|---|
| ० | ० |
| ० | ० |

ओज.प्रदेशं घनचतुरस्रं सप्तविंशतिप्रदेशं सप्तविंशतिप्रदेशावगाढं च, तत्र च नवप्रदेशस्य प्रतरचतुरस्रस्यैवाध उपरि च तथैव नव नवाणव. स्थाप्या.,ततस्त्रिगुणा नव सप्तविंशतिर्भवति ३, युग्मप्रदेशं घनचतुरस्रम् अष्टप्रदेशमष्टप्रदेशावगाढं च । तत्र चतुष्प्रदेशस्य प्रतरस्यैवोपरि चत्वारोऽन्ये स्थाप्याः, ततो द्विगुणाश्चत्वारोऽष्टौ भवन्ति ४ । ओज प्रदेशं श्रेण्यायतं त्रिप्रदेशं-त्रिप्रदेशावगाढं च । तत्र च तिर्यग् निरन्तरास्त्रयोऽणवः स्थाप्याः । स्थापना १,  युग्मप्रदेशं श्रेण्यायतं द्विप्रदेशं—द्विप्रदेशावगाढं च । तत्र च तथैवाणुद्वयं न्यस्यते, स्थापना २- ।०।०। ओज. प्रदेशं प्रतरायतं पञ्चदशप्रदेशं पञ्चदशप्रदेशावगाढं च । तत्र प्राग्वत् पङ्क्तित्रये पञ्च पञ्चाणव. स्थाप्याः, स्थापना ३-



युग्मप्रदेशं प्रतरायतं षट्प्रदेशं षट्प्रदेशावगाढ च, तत्र च प्राग्वत् पङ्क्तिद्वये त्रयस्त्रयोऽणव स्थाप्या. स्थापना ४-

| | | |
|---|---|---|
| ० | ० | ० |
| ० | ० | ० |

ओज.प्रदेशं घनायतं पञ्चचत्वारिंशत्प्रदेशं पञ्चचत्वारिंशत्प्रदेशावगाढं च । तत्र पञ्चदशप्रदेशस्य प्रतरायतस्यैवाध उपरि च तथैव पञ्चदश पञ्चदशाणव स्थाप्या., ततस्त्रिगुणा. पञ्चदश पञ्चचत्वारिंशद्भवन्ति ५, युग्मप्रदेशं घनायतं द्वादशप्रदेशं द्वादशप्रदेशावगाढं च । तत्र च षट्प्रदेशस्य प्रतरायतस्यैवोपरि तथैव तावन्तोऽणव. स्थाप्याः,ततो द्विगुणाः षट् द्वादश भवन्ति ६। ( घनपरिमण्डलस्थापना ' परिणाम ' शब्दे पञ्चमभागे ५६८ पृष्ठे गता । ) न चैतान्यतीन्द्रियत्वेनातिशायिगम्यत्वात् सर्वथाऽनुभवमारोपयितुं शक्यन्ते, स्थापनादिद्वारेण च कथञ्चिल्लक्ष्यानीति तथैव दर्शितानीति गाथात्रयभावार्थ. ।

उक्तः परमाणूनामितरसंयोग. । सम्प्रति तमेव प्रदेशानामाह—

धम्माइपएसाणं, पंचण्ह उ जो पएससंजोगो ।
तिण्ह पुण अणाईओ, साईओ होति दुण्हं तु ॥ ४२॥

धर्मादीनां—धर्माधर्माकाशजीवपुद्गलाना प्रदेशाः—उक्तरूपा धर्मादिप्रदेशास्तेषां पञ्चानाम् इति सम्बन्धिनां धर्मादीनां पञ्चसंख्यत्वेन पञ्चसंख्यानाम्, तुः पुनरर्थः, संयोग इति गम्यते । स च श्रुतत्वाद्धर्मादिभिः स्कन्धैस्तथा तदन्तर्गतैर्देशैः प्रदेशान्तरैश्च सजातीयेतरैः, असौ किमित्याह-प्रदेशानां संयोग. प्रकृतत्वादितरेतरसंयोगाख्य. प्रदेशसंयोग., उच्यते इति शेष. । अस्यैव विभागमाह—त्रयाणां पुन., पुन.-शब्दस्य विशेषद्योतकत्वात् धर्माधर्माकाशप्रदेशाना धर्मादिभिरेव त्रिभिस्तेषामेव देशैः प्रदेशान्तरैश्च प्रकृतत्वादितरेतरसंयोगः अनादिः-आदिविकलः सदा संयुक्तत्वादेषाम्, सादिक.-आदियुक्तो भवति द्वयो. पारिशेष्याज्जीवप्रदेशपुद्गलप्रदेशयोः, तथाहि—संयुज्यन्ते वियुज्यन्ते संसारिजीवप्रदेशाः कर्मपुद्गलप्रदेशाश्च परस्परं धर्मादिप्रदेशैश्च सह, तुशब्दो विशेषं द्योतयति । स चायं जीवप्रदेशानां धर्मादित्रयदेशप्रदेशापेक्षया पुद्गलस्कन्धाद्यपेक्षया च सादिसंयोगः, धर्मादिस्कन्धत्रयापेक्षया त्वनादि. पुद्गलप्रदेशानामपि धर्मादिस्कन्धत्रयापेक्षयाऽनादि ,: शेषापेक्षया तु सादि. । इह च धर्मादिस्कन्धाना तद्देशाना च य. परस्परं संयोग. स न प्रदेशसंयोगमन्तरेणेति तदभिधानत एवोक्तो मन्तव्य. । अप्रदेशस्य तु परमाणोर्धर्मादिभिः संयोग उक्तानुसारत. सुज्ञान एव इति नोक्त इति गाथार्थ ।

उक्त. प्रदेशानामितरेतरसंयोग., सम्प्रत्यभिप्रेतानभिप्रेतभेदरूपं तमेवाह—

अभिपेयमणभिपेओ, पंचसु विसएसु होइ नायव्वो ।
अणुलोमोऽभिप्पेओ,अणभिप्पेओ अ पडिलोमो ॥४३॥

' अभिपेय ' त्ति अभिप्रेत.'अनभिप्पेओ' त्ति चस्य गम्यमानत्वादनभिप्रेतश्च, प्रक्रमादितरेतरसंयोग. । किमित्याह— पञ्चसु विषयेषु शब्दादिपञ्चकगोचरे, अर्थादिन्द्रियमनसां तद्ग्रहणप्रवृत्तौ ग्राह्यग्राहकभाव., स चाभिप्रेतार्थविषयोऽभिप्रेत., अनभिप्रेतार्थविषयस्त्वनभिप्रेतो भवति—ज्ञातव्य. । आह—अस्त्वेवाभिप्रेतानभिप्रेतार्थविषयत्वेनाभिप्रेत. अनभिप्रेतश्चेतरेतरसंयोग., अभिप्रेतानभिप्रेतार्थौ तु काविति, अत्रोच्यते—अनुलोम इति इन्द्रियाणां प्रमोदहेतुतयाऽनुकूलश्चन्यकाकलीगीतादिरभिप्रेत', अनभिप्रेतश्च प्रतिलोम उक्तविपरीतकाकस्वरादिरिति गाथार्थ ।

इह गाथापश्चार्द्धेन मनोनिरपेक्षप्रवृत्त्यभावेऽपीन्द्रियाणां प्राधान्यमाश्रित्य तदपेक्षयाऽभिप्रेतोऽनभिप्रेतश्चार्थ उक्त, सम्प्रति मनोऽपेक्षया तमेवाह—

सव्वा ओसहजुत्ती, गंधज्जुत्ती य भोयणविही य ।

रागविहि गीयवाइय-विही अभिप्पेयमणुलोमो ।।४४।।

सर्वाः—समस्ताः, कोऽर्थः ?-इन्द्रियाणामनुकूलाः प्रतिकूलाश्च । अस्य चौषधयुक्त्यादिभिः प्रत्येकं सम्बन्धः । ततश्च औषधादीनाम्-अगुरुकुङ्कुमादीनां सज्जिकाराजिकादीनां च युक्तयो-योजनानि समविषमविभागनीतयो वा औषधयुक्तयः गन्धानां-गन्धद्रव्याणां श्रीखण्डादीनां लशुनादीनां च युक्तयः गन्धयुक्तयः. ताश्च, भोजनस्य अन्नस्य विधयः—शाल्योदनादयः कोद्रवभक्तादयश्च भेदाः भोजनविधयः ते च, 'रागविहिगीयवाइयविहि' त्ति सूत्रत्वाद्वचनव्यत्यये रागविषयश्च गीतवादित्रविषयश्च रागविधिगीतवादित्रविधयः । तत्र रञ्जनं रागः—कुसुम्भादिना वर्णान्तरापादनं तद्विधयः-स्निग्धत्वादयो रूक्षत्वादयश्च । गीतवादित्रविधयः इति, अत्र विधिशब्दस्योभयत्र योगात्, गीतं गानं तद्विधयः—कोकिलारुतानुकारित्वादयः काकस्वरानुविधायित्वादयश्च, वादित्रम्—आतोद्यम्, इह चोपचारात्तद्ध्वनिः तद्विधयो-मृदङ्गादिस्वनाः केवलकरटिकादिस्वनाश्च । चशब्दो नृत्तादिविधिसमुच्चयार्थः । एते किमित्याह-'अभिप्पेयं' ति अभिप्रेतार्था उच्यन्ते, कीदृशाः सन्त इत्याह-अनुलोमाः, कोऽर्थः? शुभा अशुभा वा मनोऽनुकूलतया प्रतिभासमानाः, एतेनैतदप्याह-यथैत एव देशकालावस्थादिवशतो विचित्राभिसन्धितया जन्तूनां मनसोऽननुलोमाः सन्तोऽनभिप्रेतोऽर्थः । इत्थं व्याख्यानतो विशेषप्रतिपत्तिमाश्रित्येन्द्रियापेक्षया मनोऽपेक्षया च भेदेनाभिप्रेतोऽनभिप्रेतश्चार्थो व्याख्यातः, अथवाऽनन्तरगाथापश्चार्द्धेनाविशेषेणेन्द्रियाणां मनसश्चानुकूलोऽभिप्रेतोऽर्थः इतरस्त्वनभिप्रेत उक्तः । एतद्गाथयाऽपि स एव विशेषतो दर्शित इति व्याख्येयम् । अत्र च सर्वा इति सर्वप्रकारा अनुलोमा इति चेन्द्रियमनसामनुकूलाः शेषं प्राग्वत् । उपेक्षणीयस्य त्विहानभिधानं न यस्य कस्यचिन्मतेनानभिप्रेत एव तस्यान्तर्भावादिति गाथार्थः ।

उक्तोऽभिप्रेतानभिप्रेतभेदरूप इतरेतरसंयोगः,
साम्प्रतममुमेवाभिलापविषयमाह—

अभिलावे संजोगो, दव्वे खित्ते अ कालभावे अ ।
दुगसंजोगाईओ, अक्खरसंजोयमाईओ ।। ४५ ।।

अभिलाप उक्तस्वरूपः, तद्विषयः संयोगः प्रक्रमादभिलापेतरेतरसंयोगः । अयं च त्रिधा सम्भवति, तत्रैकोऽभिलापस्याभिलाप्येन, द्वितीयोऽभिलाप्यस्याऽभिलाप्यान्तरेण, तृतीयो वर्णस्य वर्णान्तरेण । तत्राद्योऽभिलाप्यस्य द्रव्यादिभेदेन चतुर्विधत्वाद् द्रव्ये इति द्रव्यविषयः, स चार्थाद् घटादिशब्दस्य पृथुबुध्नोदराद्याकारपरिणतद्रव्येण वाच्यवाचकभावलक्षणः सम्बन्धः, एवं क्षेत्रे च क्षेत्रविषयः;आकाशध्वनेरवगाहदानलक्षणक्षेत्रेण कालभावे इति समाहारद्वन्द्वः,ततः काले कालविषयः समयादिश्रुतेर्वर्तनादिव्यङ्ग्येन कालपदार्थेन, भावे च भावविषयः औदयिकादिवचसो मनुष्यत्वादिपर्यायेण, चशब्दोऽत्र पूर्वत्र च समुच्चये । द्वितीयमाह-द्विकस्य संयोगो द्विकसंयोगः स आदिर्यस्य त्रिकसंयोगादेः सोऽयं द्विकसंयोगादिकः । इहाभिलापसंयोगस्य त्रिविधत्वाद् तत्र चाद्यस्यानन्तरमेवोक्तत्वात् तृतीयस्य चाभिधास्यमानत्वाद् अर्थाद् द्विकग्रहणेनाभिलाप्यद्वयमेव गृह्यते,तत्र द्विकसंयोगो यथा-स च स च तौ,त्रिकसंयोगो यथा-स च तौ च ते, अत्र तौ च ते चेत्युक्ते स च स च तथा स च तौ चेत्यनुक्तावप्येकत्राभिलाप्यार्थद्वयमन्यत्र चाभिलाप्यार्थत्रयं सह प्रतीयते अभिलापसंयोगत्वं चास्याभिलापद्वारकत्वादभिलाप्येन सह प्रतीते । तृतीयमाह-अक्षरे च अक्षराणि च अक्षराणि तेषां संयोगः अक्षरसंयोगः, स आदिर्यस्योदात्ताद्यशेषवर्णधर्मसंयोगस्य सोऽयमक्षरसंयोगादिकः,मकारोऽलाक्षणिकः । तत्राक्षरयोः संयोगो यथा-क इति,अक्षराणां संयोगो यथा-श्रीरिति । उदात्तादिवर्णधर्मसंयोगास्तु स्वधिया भावनीयाः । अस्याप्यभिलापसंयोगत्वं वर्णादीनां कथञ्चिदभिलापानन्यत्वेन तदात्मकत्वात्,यद्वाऽक्षरसंयोग इत्यनेन सर्वोऽपि व्यञ्जनसंयोग उक्तः,आदिशब्देन त्वर्थसंयोगः, एतद्विशेषणं च द्विकसंयोगादिरिति योजनीयम् । अन्यत् प्राग्वत् ।द्रव्यसयोगत्वं चास्याभिलापस्य द्रव्यत्वात्,द्रव्यत्वं चास्य स्पर्शवत्त्वेन गुणाश्रयत्वात्।वक्ष्यति हि-"गुणाणमासओ दव्वं"ति न च स्पर्शवत्त्वमसिद्धं प्रतिघातजनकत्वात्,तथाहि-यत् प्रतिघातजनकं तत्स्पर्शवत् दृष्टं,यथा लोष्टादि,प्रतिघातजनकश्च शब्दः,अन्यथा-तथाविधशब्दश्रुतावनुभवसिद्धश्रोत्रान्त पीडाया असम्भवादिति गाथार्थः

उक्तोऽभिलापविषय इतरेतरसंयोगः सम्प्रति सम्बन्धनसंयोगरूपस्य तस्यावसरः, सोऽपि
द्रव्यक्षेत्रकालभावभेदतश्चतुर्धा, तत्र
द्रव्यसंयोगसम्बन्धमाह—

संबंधणसंजोगो, सच्चित्ताचित्तमीसओ चेव ।
दुपयाइ हिरण्णाई, रहतुरगाई अ बहुहा उ ।। ४६ ।।

सम्बध्यते प्रायो ममेदमित्यादिबुद्धितोऽनेनास्मिन् वाऽऽत्माऽष्टविधेन कर्मणा सहेति सम्बन्धनः, स चाऽसौ संयोगश्च सम्बन्धनसंयोगः, 'सच्चित्ताचित्तमीसओ चेव' त्ति प्राग्वत् सुपो लुकि सचित्तोऽचित्तो मिश्रकः । चः समुच्चये । एवः भेदावधारणे । यथाक्रममुदाहरणान्याह—द्विपदेत्यादिना, सचित्ते द्विपदादिः, आदिशब्दाच्चतुष्पदापदपरिग्रहः । तत्र च द्विपदसंयोगा यथा-पुत्री, चतुष्पदसंयोगो यथा—गोमान्, अपदसंयोगो यथा-पनसवान् । अचित्ते हिरण्यादिः, आदिशब्दान्मणिमुक्तादिग्रहः, स च हिरण्यवानित्यादि मिश्रे रथयोजितस्तुरगः मध्यपदलोपे रथतुरगस्तदादिः, आदिशब्दाच्छकटवृषभादिपरिग्रहः । स च रथिक इत्यादि । चः समुच्चये । बहुधा तु इति बहुप्रकार एव, तुशब्दस्यैवकारार्थत्वात्,इह च सचित्तविषयत्वात् सम्बन्धनसंयोगोऽपि सचित्त इत्यादि सर्वत्र भावनीयम् । आह-यदि सचित्तादिविषयत्वादसौ सचित्तादिरिति व्यपदिश्यते,एवं सत्यात्मन् एवाऽसौ तैः सह, तत उभयनिष्ठत्वात्तेनापि किं न व्यपदिश्यते ?, उच्यते—यवाङ्कुरादिवदसाधारणेनैव व्यपदेशः, आत्मनश्च सर्वैरप्यमीभिरसावितिं तस्य साधारणत्वात्र तेनेह व्यपदेशः पृथिव्यादिभिरिवाङ्कुरस्येति न दोषः, एवमुत्तरत्रापि, इति गाथार्थः ।

अमुमेव क्षेत्रकालभावविषयमभिधित्सु—

खेत्ते काले य तहा, दुण्ह वि दुविहो उ होइ संजोगो ।

भावम्मि होइ दुविहो, आएसे चेवऽणाएसे ॥ ४७ ॥

क्षेत्रे-क्षेत्रविषयः, काले च-कालविषयश्च, तथा इति-तेनागमप्रसिद्धप्रकारेण द्वयोरपि इति-अनयोरेव क्षेत्रकालयोः द्विविधः द्विभेदः, चशब्दो 'भावम्मि' इत्यत्र योक्ष्यते, भवति संयोगः प्रक्रमात् सम्बन्धनसंयोग. । नव क्षेत्रे काले इत्युक्ते द्वयोरपीति पौनरुक्त्याद् दुष्टं, लोकेऽपि हस्तिन्यश्वे च द्वयोरपि राज्ञो हरिरित्येवंविधप्रयोगदर्शनाद् । भावे च भावविषयश्च, संयोग इति संटङ्क, भवति द्विविध. । कथं क्षेत्रादिद्वैविध्यम् ? इत्याह—' आएसे चेवऽणाएसे ' त्ति ( अस्य पदस्य व्याख्या 'आएस' शब्दे द्वितीयभागे ४५ पृष्ठे गता । )

अत्र क्षेत्रकालगतयोरादेशानादेशयोरल्पवक्तव्यत्वेन सम्प्रदायादपि सुज्ञानत्वात् तद्विषयः सम्बन्धनसंयोगोऽपि सुज्ञान एवेति मत्वा भावगतादेशानादेशविषयं तमभिधित्सुरुक्तेतोरेव प्रथममनादेशविषयं भेदत आह-

ओदइअ ओवसमिए, खइए य तहा खओवसमिए य ।
परिणामसन्निवाए, छव्विहो हो अणाएसो ॥ ४८ ॥

तत्रोदयः—शुभानां तीर्थकरनामादिप्रकृतीनाम् अशुभानां च मिथ्यात्वादीनां विपाकतोऽनुभवनं तेन निर्वृत्त औदयिक' क्वचित्तु—' उदयिए ' त्ति पठ्यते, तत्र च—पदावसानवर्तिन एकारस्य गुरुत्वेऽपि विकल्पतो लघुत्वानुज्ञानात् नात्र छन्दोभङ्ग. । उक्तं हि—" इहियारा विंदुजुया,एओ सुद्धा पयावसाणम्मि । रहवंजणसंजोए, परम्मि लहुणो विभासाए ॥ १ ॥" विपाकप्रदेशानुभवरूपतया द्विभेदस्याप्युदयस्य विष्कम्भणमुपशमस्तेन निर्वृत्त औपशमिक , क्षयः-कर्मणामत्यन्तोच्छेद. तेन निर्वृत्त. क्षायिका. स च, तथा क्षयश्च—अभाव उदयावस्थस्य उपशमश्च-विष्कम्भितोदयत्वं तदन्यस्य क्षयोपशमौ ताभ्यां निर्वृत्त. क्षायोपशमिक. स च, परीति-सर्वप्रकारं नमनं-जीवानामजीवाना च जीवत्वादिस्वरूपानुभवन प्रति प्रह्वीभवनं परिणाम ,'एदोद्वलोपो विसर्जनीयस्ये' ति विसर्गलोप ,सामिति संहतरूपतया नीति-नियतं पतनं,गमन कोऽर्थः-एकत्र वर्तनं,सन्निपात.-औदयिकादिभावानामेव द्व्यादिसंयोग., च. सर्वत्र समुच्चये । इत्थं षड् विधा.-प्रकारा अस्येति षड्विधो भवति अनादेश सामान्यं, सामान्यतवं चौदयिकादीनां गतिकषायादिविशेषेष्वनुवृत्तिधर्मकत्वाद् । अनादेशस्य षड्विधत्वे तद्विषय. संयोगोऽपि षड्विध इत्युक्तं भवति, इति गाथार्थ. ।

इदानीमादेशविषयं तमेव भेदत आह—

आएसो पुण दुविहो, अप्पिअववहारऽणप्पिओ चेव ।
इक्किक्को पुण तिविहो, अत्ताण परे तदुभए य ॥४९॥

आदेश —अभिहितरूप , पुन शब्दो विशेषणे,द्विविध'-द्विभेद.,कथमित्याह—' अप्पियववहारऽणप्पिओ चेव'त्ति व्यवहारशब्दोऽत्र डमरुकमणिन्यायेनोभयत्र सम्बध्यते, ततश्चार्पित इति व्यवहारो यस्मिन् सोऽयमर्पितव्यवहार ,मयूरव्यंसकादित्वात् समास ,अनर्पितव्यवहारस्तु तद्विपरीत ।तत्रार्पितो नाम क्षायिकादिर्भाव. स्वाधारे भाववति ज्ञाताऽयमित्यादिरूपेण ज्ञानमस्येत्यादिरूपेण वा वक्तृव्यापारेण वक्त्रा स्थापित । अनर्पितस्तु वस्तुन. साधारणत्वेऽपि निराधार एव प्ररूपणार्थं विवक्षितो यथा—सर्वभावप्रधान. क्षायिको भाव । अनयोरपि भेदानाह—एकैकः-इत्यर्पितव्यवहार । अनर्पितव्यवहारश्च पुनस्त्रिविध., कथमित्याह-' अत्ताण ' त्ति आर्षत्वाद्-आत्मनि परस्मिन् तयोरात्मपरयोरुभयं तस्मिंश्च, विषयसप्तम्यश्चैना', ततो विषयत्रैविध्येनानयोस्त्रैविध्यम् , इहाप्यादेशभेदाभिधानद्वारेण सम्बन्धनसंयोगस्य भेद उक्तो भवति, तत्र चानर्पितस्य प्ररूपणामात्रसत्त्वेऽप्यर्पितप्रतिपक्षत्वेनैवात्रोपादानम् , अतो वस्तुनस्तस्यासत्त्वान्न तेन कस्याचित्संयोगसम्भव इति न तद्भेदेन संयोगभेद. । अर्पितस्य त्वात्मपरोभयार्पितभेदतस्त्रैविध्यात् तद्भेदेन त्रिविध. सम्बन्धनसंयोग इति गाथार्थः ।

तत्राऽऽत्मार्पितसम्बन्धनसंयोगमाह—

ओवसमिए य खइए, खओवसमिए य पारिणामे य ।
एसो चउव्विहो खलु, नायव्वो अत्तसंजोगो ॥ ५० ॥

औपशमिके चस्य भिन्नक्रमत्वात् क्षायिके च क्षायोपशमिके च सर्वत्र सम्यक्त्वादिरूपे जीवस्य ( स्व ) भावे तथा तेनागमोक्तप्रकारेण चस्याऽस्याऽपि भिन्नक्रमत्वात् परिणामे च जीवत्वाद्यात्मके च सर्वत्र संयोग इति प्रक्रम. । पठ्यते च-' खओवसमिए य पारिणामे य ' त्ति स्पष्टमेव , एष.-अनन्तरोक्त औपशमिकादिसंयोग चतुर्विध -चतुष्प्रकारः , खलु-निश्चितं ज्ञातव्य.-अवबोद्धव्य., आत्मसंयोग इत्यात्मार्पितसम्बन्धनसंयोग. । अत्र ह्यात्मशब्देनार्पितभाव एव धर्मधर्मिणो. कथञ्चिदनन्यत्वादुक्त । तथा च वृद्धा — ' एए हि जीवमया भवंति, एएसु भावेसु जीवोऽनन्नो हवइ ' तदात्मक इत्यर्थ , औपशमिकादिभावाना च प्रागनादेशतोक्तावप्यत्रादेशत्वेनाभिधानं सम्यक्त्वादिविशेषनिष्ठत्वेन विवक्षितत्वाद् भावसामान्यापेक्षया वेति गाथार्थ ।

किञ्च—

जो सन्निवाइओ खलु, भावो उदएण वज्जिओ होइ ।
इक्कारससंजोगो, एसो च्चिय अत्तसंजोगो ॥ ५१ ॥

य. सान्निपातिक. खलु -वाक्यालङ्कारे,भाव उदयेन,औदयिकभावेन वर्जित'-रहितो भवति , एकादश-एकादशमङ्ख्या. सयोगा-द्व्यादिमीलनात्मका यस्मिन् स एकादशसयोग. , सूचकत्वात् सूत्रस्येतद्विषयो य. संयोग , एषोऽपि, न केवलमौपशमिकादिसंयोग ; इत्यपिशब्दार्थ. । च: पूरणे , आत्मसयोग -प्राग्वदात्मार्पितसयोग , एकादश संयोगाश्चैवं भवन्ति-औपशमिकक्षायिकक्षायोपशमिकपारिणामिकाना चतुर्णां षट् द्विकसयोगाश्चत्वारस्त्रिकसंयोगा एकश्चतुष्कसंयोग , एते च मीलिता एकादश इति गाथार्थ ।

बाह्यार्पितसम्बन्धनसंयोगमाह—

लेसा कसायवेयण, वेओ अन्नाणमिच्छ मीसं च ।
जावइया ओदइया, सव्वो सो बाहिरो जोगो ॥ ५१ ॥

लेश्या-लेश्याध्ययनेऽभिधास्यमाना. , कषायाश्च-वक्ष्यमाणा वेदना च-सातासातानुभवात्मिका कषायवेदनं , प्राकृतत्वाद्विन्दुलोप , वेद पुम्स्त्र्युभयाभिलाषाऽभिव्यङ्ग्य. , मिथ्यात्वोदयवतामसदध्यवसायात्मकं मत् ज्ञानमप्यज्ञानम्,

उक्तं हि-" जह दुव्वयणमवयणं, कुच्छियसीलं असीलम-सईए । भण्णइ तह नाणं पि हु, मिच्छद्दिट्ठिस्स अन्नाणं ॥१॥ " अत एव मिथ्यात्वोदयभावीत्वादस्यौदयिकत्वं, तद्दलिकेषु चार्पितत्वविवक्षया बाह्यार्पितत्वमिति भावनीयम् । मिथ्येति भावप्रधानत्वान्निर्देशस्य मिथ्यात्वम्-अशुद्धदलिकस्वरूपं, मिश्रं—शुद्धाशुद्धदलिकस्वभावं , चशब्दः शेषौदयिकभेदसमुच्चये । अत एवोपसंहारमाह—यावन्तो यत्परिमाणा औदयिकाः, भावा इति गम्यते, प्रक्रमादेतद्विषयो यः संयोगः सर्वः निर्विशेषः, स. बाह्यः पर. तद्विषयत्वाद्, बाह्यसंयोग इति प्रकृतक्षायोपशमिकेन मत्यादिना औपशमिकत्वात्सम्बन्धनसंयोगो ज्ञातव्य इति शेष. । इहापि बाह्यशब्देन प्राग्वद् बाह्यार्पित उक्त. । आह-' भावा भवन्ति जीवस्यौदयिका. पारिणामिकाश्चैव ' इति वचनादौदयिकोऽपि जीवभावत्वेन जीवार्पित एवेति कथं बाह्य कर्मस्वर्पित इति । अत्रोच्यते—कर्मानुभवनमुदयः, अनुभवनं चानुभवितरि जीवेऽनुभूयमाने च कर्मणि स्थितम् , तत्र यदाऽनुभवितरि जीवे विवक्ष्यते तदोदयः जीवगतो लेश्यादिपरिणामः प्रयोजनमस्येत्यौदयिकः कर्मणः फलप्रदानाभिमुख्यलक्षणो विपाक एव तमाश्रित्य कर्मणि बाह्येऽर्पितत्वमिहौदयिकभावस्योक्तम् , यदा त्वनुभूयमानस्थतया विवक्ष्यते तदोदय कर्मण. फलप्रदानाभिमुख्यलक्षणे भव औदयिको लेश्याकषायादिरूपो जीवपरिणाम , तदाश्रयणेन चोच्यते भावा भवन्ति जीवस्यौदयिका इत्यादि । इहापि चादेशान्तरेण वक्ष्यति ' छव्विहो अत्तसंजोगो ' त्ति सर्व. स इति चैकवचनं बाह्यसंयोगस्य विधीयमानतया प्राधान्यात् प्रधानानुयायित्वाच्च व्यवहाराणामिति गाथार्थ. ।

उभयार्पितसम्बन्धनसंयोगमाह—

जो सन्निवाइओ खलु, भावो उदएण मीसिओ होइ ।
पन्नारससंजोगो, सव्वो सो मीसिओ जोगो ॥ ५३ ॥

य. सान्निपातिकः खलु भाव. उदयेन औदयिकभावेन मिश्रित. संयुतो भवति, कियत्संख्य इत्याह—पञ्चदश सयोगा अस्मिन्निति पञ्चदशसंयोग. सर्व. स., किमित्याह—आत्मकर्मणोर्मिश्रत्वात्तदर्पितभावा अप्यौदयिकसहितौपशमिकादयो मिश्राः, ततस्तद्विषयत्वात्संयोगोऽपि मिश्रः, स एव मिश्रको योग., प्रक्रमात् सम्बन्धनसंयोगो ज्ञेय इति शेषः । ते च पञ्चदश संयोगा औदयिकममुञ्चता औपशमिकादिपञ्चकस्य द्विकत्रिकचतुष्कपञ्चकसंयोगत. कार्याः । तत्र चत्वारो द्विकसंयोगा. षट् त्रिकसंयोगाश्चत्वारश्चतुष्कसंयोगा एक पञ्चकसंयोग , एते च मीलिता. पञ्चदश, भावना तु वक्ष्यमाणा इति गाथार्थ ।

पुनरात्मसंयोगादीनेव प्रकारान्तरेणाभिधित्सु. प्रस्तावनामाह—

बीओऽवि य आएसो, अत्ताणे बाहिरे तदुभए य ।
संजोगो खलु भणिओ, तं कित्तेऽहं समासेणं ॥ ५४ ॥

द्वितीयोऽपि च न केवलमेक एव इत्यपि शब्दार्थ । च. पूरणे । आदेश.—प्रकार , प्रस्तावात् प्ररूपणीयः, कीदृश इत्याह—आत्मनि बाह्ये तदुभयस्मिन्ब, संयोग इति सम्बन्धनसंयोग , खलु-निश्चितं भणित-उक्तो, गणधरादिभिरिति गम्यते, अनेन च गुरुपारतन्त्र्यमाविष्करोति , तम् इति-द्वितीयमादेशं कीर्तये संशब्दये ' वर्तमानसामीप्ये वर्तमानवद् वा' ( पा० ३-३-१३१ । इति भविष्यत्सामीप्ये लट् , अहम् इत्यात्मनिर्देशः , समासेन—संक्षेपेणेति गाथार्थः ,

तत्र तावदात्मसंयोगमाह—

ओदइय ओवसमिए, खइए य तहा खओवसमिए य ।
परिणामसन्निवाए, अ छव्विहो अत्तसंजोगो ॥ ५५ ॥

औदयिके—औदयिकविषये, एवम् औपशमिके च क्षायिके तथा क्षायोपशमिके च परिणामसन्निपाते च सर्वत्र संयोग इति प्रक्रमः, तत एष षड्विधः षड्भेदः, आत्मभिः-आत्मरूपैः संयोग इति सम्बन्धनसंयोगः आत्मसंयोगः न चैषामेकैकेनात्मनः संयोग. सम्भवति, अपि तु—द्वाभ्यां त्रिभिश्चतुर्भिः पञ्चभिर्वा । तत्र द्वाभ्यां क्षायिकेण सम्यक्त्वेन ज्ञानेन वा पारिणामिकेन च जीवत्वेन, त्रिभिरौदयिकेन देवगत्यादिना क्षायोपशमिकेन मत्यादिना पारिणामिकेन च जीवत्वेन, चतुर्भिस्त्रिभिरे ( वमे ) व चतुर्थेनौपशमिकेन क्षायिकेण वा सम्यक्त्वेन, पञ्चभिर्यदा क्षायिकसम्यग्दृष्टिरेवोपशमश्रेणिमारोहति तदौदयिकेन मनुष्यत्वेन, क्षायिकेण सम्यक्त्वेन क्षायोपशमिकेन मत्यादिना औपशमिकेन चारित्रेण पारिणामिकेन जीवत्वेनेति , अत्र च त्रिकभङ्गक एकः, चतुष्कभङ्गौ च द्वावेते त्रयोऽपि गतिचतुष्टयभाविन इति गतिचतुष्टयेन भिद्यमाना द्वादश भवन्ति । उक्तं च-

"ओदइय खओवसमो , तइओ पुण पारिणामिओ भावो ।
एसो पढमवियप्पो, देवाणं होइ नायव्वो ॥ १ ॥
ओदइय खओवसमो, ओवसमियपारिणामिओ बीओ ।
उदइयखइयपरिणामिय, खइओवसमो भवे तइओ ॥ २ ॥
एए चेव वियप्पा, णरतिरिणरएसु हुंति बोद्धव्वा ।
एए सव्वे मिलिया, बारस होंती भवे भेया ॥ ३ ॥ "

पञ्चभिर्मनुष्यस्यैव, तस्यैव तथोपशमश्रेण्यारम्भकत्वात् , तस्यामेव च तत्सम्भवात् । तथा चाह—" ओदइए ओवसमिए, खओवसमिए खए य परिणामे । उवसमसेढिगयस्स, एस वियप्पो मुणेयव्वो ॥१॥ " अन्यथाऽपि च त्रिभि. संभवति, तद्यथा—औदयिकेन मनुष्यत्वेन क्षायिकेण ज्ञानेन पारिणामिकेन जीवत्वेन,अयं च केवलिनाम् । उक्तं हि-"उदइय खइयपरिणामिय भावा होंति केवलीणं तु । " प्रागुक्तभावोभयेन च सिद्धानामेव, उक्तं हि—" खाइय तह परिणामा, सिद्धाणं होंति नायव्वा " एवं चैते पञ्चकत्रिकद्विकसंयोगभङ्गास्त्रयः पूर्वे च द्वादशेति मीलिताः पञ्चदश सम्भवन्ति । एत एव चाविरुद्धसान्निपातिकभेदा. पञ्चदश तत्र तत्रोच्यन्ते । तथा चाहुः—" एए संजोएणं, भावा पन्नरस होंति नायव्वा । केवलिसिद्धुवसमसे-ढिएसु सव्वासु य गईसु ॥ १ ॥ " आह-एवं सान्निपातिकेनैवात्मन. सदा संयोगसम्भवात् कथं षड्विधत्वमात्मसंयोगस्य ?, उच्यते-सहभावित्वेऽपि भावानां यदैकस्य प्राधान्यं विवक्ष्यते तदैकेनाप्यात्मसंयोगसम्भव इत्यदोष इति गाथार्थः ।

बाह्यसम्बन्धनसंयोगमाह—

नामम्मि अ खित्तम्मि अ, नायव्वो बाहिरो य संजोगो ।

कालेण बाहिरो खलु, मीसोऽवि य तदुभए होइ ॥५६॥

नाम्ना-वस्त्वभिधायिध्वनिस्वभावेन, चकारात्-द्रव्येण क्षेत्रेण चाकाशदेशात्मकेन, प्राकृतत्वात् तृतीयार्थे सप्तमी। प्रकृतत्वात् संयोगः, किमित्याह—ज्ञातव्यः बाह्यविषयत्वाद् बाह्यः। तुः पुनरर्थः। संयोग इति सम्बन्धनसंयोगः, कालेन इति-चस्य गम्यमानत्वात् कालेन च समयाऽऽवलिकादिना, तत एव संयोगो बाह्यसम्बन्धनसंयोगः खलु-निश्चितं, ज्ञातव्य इति योज्यम्। इदमिहैदम्पर्यम्-यः पुरुषादेर्देवदत्तादिनाम्ना सम्बन्धोऽयं देवदत्त इत्यादिः, द्रव्येण च दण्डीत्यादिः, क्षेत्रेणारण्यजो नगरज इत्यादि, कालेन दिनजो रजनिज इत्यादि, स सर्वो नामादिभिर्बाह्यैरेवेति बाह्यः सम्बन्धनसंयोगः। भावेन तु संयोग आत्मसंयोगत्वेनोक्त एव, भविलुरनन्यत्वात् भावस्य, अन्यथा तस्याभावत्वप्रसङ्ग इतीह तस्यानभिधानम्। तथा कालेन बाह्य इति च भिन्नवाक्यताकरणं केषाञ्चिन्मतेन कालस्यासत्त्वख्यापनार्थम्, यद्वा-नाम्नि, क्षेत्र इति च विषयसप्तम्येव, यो हि येन सह भवति स तद्विषय एवेति कृत्वा। आह—नाम्नोऽप्यभिलापत्वात् तद्विषयोऽपि संयोगोऽभिलापसंयोगः, स चोक्त एवेति कथं न पौनरुक्त्यम्?, उच्यते-अभिलापसामान्यविषयोऽभिलापसंयोगः, अयं तु सम्बन्धनसंयोगस्य प्रकृतत्वात् तस्य च सकषायजीवसम्बन्धित्वात्। वक्ष्यति हि-"संबंधणसंयोगो, कसायबहुलस्स होइ जीवस्स"त्ति,कस्यचिन्नाम्न्यप्यभिष्वङ्गसम्भवादभिष्वङ्गहेत्वभिलापविषय एवेति न पौनरुक्त्यम्। 'मीसोऽवि य' त्ति अपिः पुनरर्थे। चः पूरणे। ततो मिश्रविषयत्वान्मिश्रः सम्बन्धनसंयोगः पुनर्ज्ञातव्यः, यः कीदृगित्याह-'तदुभए' त्ति प्राग्वत्तदुभयत्वेन-आत्मबाह्यलक्षणेन तदुभयस्मिन् वोक्तरूप एव भवति, यः संयोग इति शेषः, यथा-क्रोधी देवदत्तः, क्रोधी कौन्तिको, मानी सौराष्ट्रः, क्रोधी वासन्तिकः, अत्र क्रोधादिभिरौदयिकभावान्तर्गतत्वेनात्मरूपैर्नामादिभिस्त्वात्मनोऽन्यत्वेन बाह्यरूपै संयोग इत्युभयसम्बन्धनसंयोग उच्यते। नन्वेवं न कदाचिन्नामादिविकलैरौदयिकादिभिरौदयिकादिरहितैर्वा नामादिभिरात्मनः संयोग इति सर्वदोभयसम्बन्धनसंयोग एव प्राप्तः, सत्यमेतत्, किन्तु—वक्तुरभिप्रायवैचित्र्यात्कदाचिदौदयिकादिभिः कदाचिन्नामादिभिः कदाचित्तदुभयेन संयोगविवक्षेति नात्मपरोभयसम्बन्धनसंयोगत्रयविरोध इति गाथार्थः।

प्रकारान्तरेण बाह्यसम्बन्धनसंयोगमाह—

आयरिय सीस पुत्तो,पिया य जणणी य होइ धूया य।
भज्जा पइ सीउण्हं, तमुज्जोया ऽऽयवे चेव ॥ ५७ ॥

आङ्क्त्यभिव्याप्त्या मर्यादया वा स्वयं पञ्चविधाचारं चरत्याचारयति वा परान्; आचर्यते वा मुक्त्यर्थिभिरासेव्यत इति आचार्यः अन्यत्रापीति वचनात् कर्तरि कर्मणि वा कृत्यप्रत्ययः। तथा शासितुं शक्यः शिष्यः, पुनाति पितुराचारानुवर्तितयाऽऽत्मानमिति पुत्रः, पाति-रक्षत्यपत्यमिति पिता, स च जनयति प्रादुर्भावयत्यपत्यमिति जननी, सा च भवति बाह्यसम्बन्धनसंयोगविषयत्वात् बाह्यसम्बन्धनसंयोग इति वृत्ताः। इदं च सर्वत्र योज्यम्। दोग्धि च केवलं जननीं स्तन्यार्थमिति दुहिता, ततश्च "दुहितरि धो हिलोपश्च" इति वचनादादेर्धत्वे हिलोपे च "उदूत् सुपुष्पोत्सधीतसुकदुहितृषु" इति वचनात्, उत ऊत्त्वे च धूया, सा च, चकारत्रयं पूरणे। भ्रियते—पोष्यते भर्त्रेति भार्या, पाति-रक्षति तामिति पतिः, स्त्यायते धातूनामनेकार्थत्वात् कठिनीभवत्यस्मिन् जलादीति शीतम्, उषति-दहति जन्तुमिति उष्णं, तमयति—खेदयति जनलोचनानीति तमः औणादिकोऽस्मन् 'उज्ज' त्ति आर्षत्वादुद्योतयतीति उद्योतः पचादित्वादच्, छ्यति छिनत्ति वाऽऽतपमिति छाया, आ-समन्तात्तपति सन्तापयति जगदिति आतपः, चशब्दो राजभृत्याद्यनुक्ताशेषसम्बन्धिसमुच्चये, लक्षणानुपपत्तौ च सर्वत्र नैरुक्तो विधिः। सुपश्च यत्राश्रवणं तत्र प्राग्वल्लुक्। इदमत्रैदम्पर्यम्—आचार्यः शिष्यादन्यत्वेन बाह्यः, ततो यस्तेन शिष्यस्य संयोगः-शिष्य इत्युक्तिरवश्यमाचार्यमाक्षिपति यस्याऽयं शिष्य इत्याद्याक्षेप्याक्षेपकभावलक्षणः स बाह्येनेति कृत्वा बाह्यसम्बन्धनसंयोगः, ततस्तद्विषय आचार्योऽप्युपचारात्तथोच्यते। एवं शिष्योऽप्याचार्यादन्यत्वेन बाह्यः। तेनाप्याचार्यस्य यः संयोगः-आचार्य इत्युक्तिरवश्यं शिष्यमाक्षिपति यस्यायमाचार्य इत्याद्याक्षेप्याक्षेपकभावरूपः सोऽपि बाह्येनेति कृत्वा बाह्यसम्बन्धनसंयोगः, ततस्तद्विषयः शिष्योऽप्युपचारात् तथोच्यते। एवं पुत्रपित्रादिद्वयेष्वपि भावनीयम्। सर्वत्र सामान्येन परस्पराक्षेप्याक्षेपकभावः सम्बन्धनः। विशेषनिरूपणाया त्वाचार्यशिष्यभार्यापतीनामुपकार्योपकारकभावः,पितृपुत्रजननीदुहितॄणा,जन्यजनकभावः, शीतोष्णादीनां च विरोधः, सम्बन्धः। अत एव च विशेषाद् द्रव्यसंयोगत्वेऽप्यस्य भेदेनोपादानमिति गाथार्थः। उत्त० १ अ०।

सह जायगाइमित्ता, नाई माया पिईहि संबद्धा।
ससुरकुलं संजोगो, तिण्हि उ मेत्तादयो छट्ठो ॥

सहजातकादयः सुहृदो-मित्राणि आदिग्रहणात्-सहपांशुक्रीडितकाः—सहपांशुक्रीडितकाः सहृदारदर्शिनश्चेति ज्ञातयो-मातृपितृसंबद्धाः मातृकुलसंबद्धाश्चेत्यर्थः। तत्र मातृकुलसंबद्धा-मातामहादयः पितृकुलसंबद्धा —पितृव्यपितामहादयः, श्वशुरकुलसंयोगोऽभिधीयते। किमुक्तं भवति-श्वशुरकुलपाक्षिका ये—केचित् श्वशुरश्वश्रूश्यालकादयस्तेषां संबन्धः संयोग उच्यते। सू० १ उ० २ प्रक०।

सम्प्रति संयोगप्रक्रमेऽप्याचार्यशिष्यमूलत्वादनुयोगस्य तयोः स्वरूपमाह—

आयरिओ तारिसओ, जारिसओ नवरि हुज्ज सो चेव।
आयरियस्स वि सीसो, सरिसो सव्वेहि वि गुणेहिं॥५८॥

आचार्यः तादृश तथाविधः, यादृश क इत्याह-यादृशो नवरमिति यदि परं भवेत् 'स चेव' त्ति चः पूरणे, स एव-आचार्य एव। किमुक्तं भवति ?-आचार्यस्याचार्य एवान्यसदृशो भवति, न पुनरनाचार्यः, आचार्यगुणानामन्यत्राविद्यमानत्वात्, नह्याचार्यादन्यः षट्त्रिंशत्सद्गुणगणगुणसमन्वित इहास्ति, तत्समन्वितत्वे त्वन्योऽपि तत्त्वत आचार्यः एवेति। अथ क एते षट्त्रिंशद्गुणाः?, उच्यन्ते—प्रत्येकं चतुष्प्रकारा अष्टौ गणिसम्पदो द्वात्रिंशत्,

षट्त्रिंशद्भवन्ति तत्र चाचारादिचतुर्विधविनयमीलनात्, उक्तं च "अट्ठविहा गणिसंपद, चउग्गुणा नवरि होंति बत्तीसा । विणओ य चउभेओ, छत्तीस गुणा हवंतेए" ॥१॥ तत्राष्टौ गणि-सम्पद इमाः-आचारसम्पत् १श्रुतसम्पत्२शरीरसम्पत् ३ वचनसम्पत् ४ वाचनासम्पत् ५ मतिसम्पत् ६ प्रयोगमतिसम्पत् ७ संग्रहपरिज्ञासम्पत् ८, तथा चाह— "आयारसुयसरीरे, वयणे वायणमती पत्तोगमती । एएसु संपया खलु, अट्ठमिया संगहपरिण्णा" ॥ १ ॥ तत्र चाचारसम्पत् चतुर्धा—संयमध्रुवयोगयुक्तता १ असम्प्रग्रहता २ अनियतवृत्तिः ३ वृद्धशीलता चेति ४, तत्र संयम.—चरणं तस्मिन् ध्रुवो—नित्यो योगः—समाधिस्तद्युक्तता, कोऽर्थः ? सन्ततोपयुक्तता संयमध्रुवयोगयुक्तता १, असम्प्रग्रहः-समन्तात् प्रकर्षेण जात्यादिप्रकृष्टतालक्षणेन ग्रहणम्—आत्मनोऽवधारणं सम्प्रग्रहस्तदभावोऽसम्प्रग्रहः, जात्याद्यनुत्सिक्ततेत्यर्थः २, अनियतवृत्तिः अनियतविहाररूपा ३, वृद्धशीलता—वपुषि मनसि च निभृतस्वभावता निर्विकारतेति यावत् ४, १। श्रुतसम्पच्चतुर्धा—बहुश्रुतता १ परिचितसूत्रता २ विचित्रसूत्रता ३ घोषविशुद्धिकरणता ४ च, तत्र बहुश्रुतता—युगप्रधानागमता १ परिचितसूत्रता-उत्क्रमक्रमवाचनादिभिः स्थिरसूत्रता २ विचित्रसूत्रता-स्वपरसमयविविधोत्सर्गापवादादिवेदिता ३ घोषविशुद्धिकरणता—उदात्तानुदात्तादिस्वरशुद्धिविधायिता ४, २। शरीरसम्पत् चतुर्धा-आरोहपरिणाहयुक्तता १ अनवत्राप्यता २ परिपूर्णेन्द्रियता ३ स्थिरसंहननता च ४, इह च-आरोहो-दैर्घ्यं परिणाहो-विस्तरः ताभ्यां तुल्याभ्यां युक्तता आरोहपरिणाहयुक्तता १ अविद्यमानमवत्राप्यम्-अवत्रपणं-लज्जनं यस्य सोऽयमनवत्राप्यः, यद्वा-अवत्रापयितुं-लज्जयितुमर्हः शक्यो वाऽवत्राप्यो-लज्जनीयः न तथाऽनवत्राप्यस्तद्भावोऽनवत्राप्यता २ उभयत्राहीनसर्वाङ्गत्वं हेतुः, परिपूर्णेन्द्रियता—अनुपहतचक्षुरादिकरणता ३ स्थिरसंहननता-तप प्रभृतिषु शक्तियुक्तता ४, ३। वचनसम्पच्चतुर्भेदा-आदेयवचनता १ मधुरवचनता २ अनिश्रितवचनता ३-असन्दिग्धवचनता ४। तत्र आदेयवचनता-सकलजनग्राह्यवाक्यता मधुर-रसवद् यदर्थतो विशिष्टार्थवत्तया-अर्थावगाढत्वेन शब्दतश्चापरुषत्वसौस्वर्यगाम्भीर्यादिगुणोपेतत्वेन श्रोतुराह्लादमुपजनयति तदेवंविधं वचनं यस्य स तथा तद्भावो मधुरवचनता २अनिश्रितवचनता रागाद्यकलुषितवचनता३असंदिग्धवचनता परिस्फुटवचनता ४, ४। वाचनासम्पच्चतुर्धा-विदित्वोद्देशनं १ विदित्वा समुद्देशनं २ परिनिर्वाप्य वाचना ३ अर्थनिर्यापणेति ४, तत्र विदित्वोद्देशने विदित्वा समुद्देशने ज्ञात्वा परिणामकत्वादिगुणोपेतं शिष्यं यद् यस्य योग्यं तस्य तदेवोद्दिशति समुद्दिशति वा, अपरिणामिकादावपक्वघटनिहितजलोदाहरणतो दोषसम्भवात्२, परीति—सर्वप्रकारं निर्वापयतो निरो निर्दग्धादिषु भृशार्थस्यापि दर्शनात् भृशं गमयतः-पूर्वदत्तालापकादि सर्वात्मना स्वात्मनि परिणमयत शिष्यस्य सूत्रगताशेषविशेषग्रहणलक्षणं कालं प्रतीक्ष्य शक्त्यनुरूपप्रदानेन प्रयोजकत्वमनुभूय परिनिर्वाप्य वाचना-सूत्रप्रदानं परिनिर्वाप्यवाचना ३, अर्थः—सूत्राभिधेयं वस्तु तस्य निरिति-भृशं यापना-निर्वाहणा पूर्वापरसाङ्गत्येन स्वयं ज्ञानतोऽन्येषां च कथनतो निर्गमना निर्यापणा ४, ५ मतिसम्पत् अवग्रहेहापायधारणारूपा चतुर्द्धा, अवग्रहादयश्च तत्र तत्र प्रपञ्चिता एवेति न विव्रियन्ते ६। प्रयोगमतिसम्पच्चतुर्धा—आत्मपुरुषक्षेत्रवस्तुविज्ञानात्मिका, तत्राऽऽत्मज्ञानं वादादिव्यापारकाले किममुं प्रतिवादिनं जेतु मम शक्तिरस्ति न वा ? इत्यालोचनम्, पुरुषज्ञानं—किमयं प्रतिवादी पुरुषः सांख्यः सौगतोऽन्यो वा ?, तथा प्रतिभादिमानितरो वेति परिभावनम् २, क्षेत्रज्ञानं-किमिदं मायाबहुलमन्यथा वा ?, तथा साधुभिरभावितं भावितं वा नगरादीति विमर्शनम् ३, वस्तुज्ञान—किमिदं राजाऽमात्यादि सभासदादि वा वस्तु—दारुणमदारुणं भद्रकमभद्रकं वेति निरूपणम् ४, ७, संग्रहपरिज्ञा तु बालदुर्बलग्लाननिर्वाहबहुजनयोग्यक्षेत्रग्रहणलक्षणैका १ निषद्यादिमालिन्यपरिहाराय फलकपीठोपादानाऽऽत्मिका द्वितीया २ यथासमयमेव स्वाध्यायोपधिसमुत्पादनप्रत्युपेक्षणभिक्षादिकरणात्मिका तृतीया ३ प्रव्राजकाध्यापकरत्नाधिकादिगुरूणामुपधिवहनविश्रामणसंपूजनाभ्युत्थानदण्डकोपादानादिरूपा चतुर्थीति ४, ८। इत्युक्ता अष्टौ चतुर्गुणा आचारादिगणिसम्पदः। विनयस्तूत्तरत्राचार्यविनयप्रस्तावेऽभिधास्यते, इति गतं प्रासङ्गिकम्। प्रकृतमुच्यते-तत्राऽऽचार्यस्य स्वरूपमभिहितं, शिष्यस्याह—आचार्यस्य, अपिभिन्नक्रमः, ततः शिष्योऽपि, न केवलमाचार्यस्तादृशो यादृशो नवरं स एवेति वचनादाचार्य इत्यपिशब्दार्थः, सदृशः-तुल्यः, सर्वैरपि न कतिपयैरेव, कैः ?-गुणैः-साधारणैः क्षान्त्यादिभिरिति गम्यते। यद्वा लक्षणे तृतीया, ततः सर्वैरपि स्वगुणैर्लक्षितः शिष्य आचार्यस्य सदृश इति योज्यम्, सादृश्यं च स्वगुणमाहात्म्यविभूषित उभयोरपि यथोक्तान्वर्थयुक्त (त्व) मेव, अथवाऽऽचार्यस्यापीति अपेरेवकारार्थत्वात् स्वगुणोपलक्षितः शिष्यः सदृश एव—अनुरूप एव, अनुरूपार्थस्यापि सदृशशब्दस्य दर्शनात्, यथाऽऽत्मसदृशं कुर्याः कुलानुरूपमित्यर्थः। अननुरूपस्तु तत्त्वतोऽशिष्य एवेति भावः। अथ के अमी शिष्यगुणाः ?, उच्यन्ते-" भावविणयाणमणुय-त्तणा उ भत्ती गुरूण बहुमाणो । दक्खत्तं दक्खिणयं, सीलं कुलमुज्जमो लज्जा ॥ १ ॥ सुस्सूसा पडिपुच्छा, सुणणं गहणं च ईहणमवाओ । धरणं करणं सम्मं, एमाई होंति सीसगुणा ॥ २ ॥ " इति गाथार्थः।

इत्थमनुयोगोपयोगित्वादाचार्यशिष्ययोः स्वरूपमुक्तं, प्रकारान्तरेणोभयसम्बन्धनसंयोगमाह—

एवं नाणे चरणे, सामित्ते अप्पणो उ (यं) पिउणो त्ति ।
मज्झं कुलेऽयमस्स य, अह यं अब्भिंतरो मित्ति ॥५६॥

एवम्—अनन्तरोक्तबाह्यसंयोगवदाक्षिप्याक्षेपकभावेन ज्ञाने-ज्ञानविषयः चरणे-चरणविषयः, आत्मन उभयसम्बन्धनसंयोगो ज्ञातव्य इति वृद्धाः। अत्र भावना—ज्ञानेनात्मभूतेन संयोगो, ज्ञानमित्युक्तिर्निराश्रयस्य निर्विषयस्य च ज्ञानस्यासम्भवादवश्यं ज्ञानिनं ज्ञेयं चाऽऽक्षिपतीति, ज्ञानाक्षिप्तेन स ज्ञेयेन बाह्येन तद्द्वारकः संयोग इत्युभयसंयोगः। एवं चरणेनाप्यात्मभूतेनोक्तवत्तदाक्षिप्तेन चर्यमाणेन च बाह्येन संयोगः

इत्युभयसम्बन्धनसंयोगः।-अयमाक्षेप्याऽऽक्षेपकभावे उभयसम्बन्धनसंयोग उक्तः। अमुमेव प्रकारान्तरेणाह-स्वामित्वेन स्वामित्वविषयः, उभयसम्बन्धनसंयोग इति प्रक्रमः। किंरूप ? इत्याह—आत्मनः-मम च. पूरणे, पितुः-जनकस्य पुत्र इति गम्यते, एवंविधोल्लेखव्यङ्ग्ये, अत्रात्मनः पित्रा सहात्मकद्वारकः स्वस्वामिभावलक्षणः सम्बन्धः, तत्पुत्रेण परद्वारकः, मम पितुरयं, पुत्र इति पितृद्वारेणासाविति कृत्वा तत उभयद्वारकत्वादुभयविषयसंयोग उभयसम्बन्धसंयोगः, इति शब्दो मम पितु' पिता, मम भ्रातुः पुत्र., मम दासस्य कम्बल इत्येवप्रकारसम्बन्धान्तरव्यञ्जकान्योल्लेखसूचकः, अनेन लौकिके स्वामित्व उभयसम्बन्धनसंयोग उक्तः। लोकोत्तरमेवाह—मम कुले नागेन्द्रादावयं साध्वादिरिति गम्यते। यद्वा कुलमेव कुलकं तस्य चःसमुच्चये योक्ष्यते, ततोऽहमेव अहकम् अभ्यन्तरः अस्मि-भवामि। चशब्दादयं च साध्वादिरित्येवंविधोल्लेखद्वयव्यङ्ग्य.। एषोऽप्युभयसम्बन्धनसंयोग इति वृद्धा। अत्र हि मच्छब्दवाच्यस्य कुलेन सहात्मद्वारकः स्वस्वामिभावसम्बन्ध., कुलान्तर्वर्तिना च साध्वादिना परद्वारको, मम कुलेऽयमिति कुलद्वारकत्वादस्य, ततोऽयमपि प्राग्वदुभयसम्बन्धनसंयोगः। इहापि इतिशब्दोऽयं मम गुरोः साध्वादिरित्याद्येवंप्रकारसम्बन्धान्तरव्यञ्जकान्योल्लेखसूचकार्थः। इह चोल्लेखद्वयाभिधानमेकत्राप्यनेकोल्लेखसम्भवख्यापनार्थमिति गाथार्थः।

पुनरन्यथा तमेवाह—

पच्चयओ य बहुविहो, निव्वित्ती पच्चओ जिणस्सेव।
देहा य बद्धमुक्का, माइपिइसुआइ अ हवंति ॥ ६० ॥

प्रतीयतेऽनेनार्थ इति प्रत्ययः—ज्ञानकारणं घटादि., सर्वथा निरालम्बनज्ञानाभावेन तदविनाभावित्वात् ज्ञानस्य, ततस्तमाश्रित्य, चकारात् ज्ञानतश्च—ज्ञानं चाश्रित्य बहुविध.-बहुप्रकार., प्रक्रमादात्मनो यः संयोग. स उभयसम्बन्धनसयोगः, तद्बहुत्वं च प्रत्ययानां तद्विशिष्टज्ञानानाम् बहुविधत्वात्। तथा च वृद्धाः-घटं प्रतीत्य घटज्ञान,पट प्रतीत्य पटज्ञानम्, एवमादीनि प्रत्ययात् ज्ञानानि भवन्ति। तथा च सति ज्ञानेनात्मद्वारको ममेदं ज्ञानमिति प्रत्ययेन परद्वारको, मम ज्ञानस्यायं विषय इति ज्ञानद्वारकत्वात्तस्य, तत उभयविषयत्वादुभयसम्बन्धनसंयोग.। आह—एवं केवलिनोऽप्युभयसंयोग एवेति। अत्रोच्यते—निर्वृत्ति.-इत्युक्तत्रैवकारस्य भिन्नक्रमत्वान्निर्वृत्तिरेव—सकलावरणक्षयादुत्पत्तिरेव प्रत्ययो जिनस्य, जिनसम्बन्धिज्ञानस्येति गम्यते। इदमाकूतम्—छद्मस्थज्ञानं हि मत्यादिकं लब्धिरूपतयोत्पन्नमप्युपयोगरूपतायां बाह्यमपि घटादिकमपेक्षते। तथाहि—घटं प्रतीत्य घटज्ञानं, पटं प्रतीत्य पटज्ञानं, केवलिनस्तु ज्ञानं लब्धिरूपतयोत्पन्नं पुनरुपयोगरूपता प्रति न बाह्यं घटादिकमपेक्षते, तज्ज्ञानस्योत्पत्तिसमकालमेव सकलातीतानागतदूरान्तरितस्थूलसूक्ष्मार्थयाथात्म्यवेदितयैवोपयोगभावात्। यदुक्तम्—उभयावरणाईतो, केवलवरणाणदंसणसहावो। जाणइ पासइ य जिणो, सव्वं णेयं सयाकालं ॥ १ ॥" तत केवलज्ञानस्य सर्वत्र सततोपयोगेन नोपयोगं प्रति बाह्यापेक्षेति निर्वृत्तिरेव प्रत्यय, ततो न छद्मस्थज्ञानस्येव प्रत्ययत उभयसंयोग। आह-उक्त एव ज्ञानस्योभयसंयोग' तत् किं पुनरुच्यते ?, सत्यम्, उक्त स्तत्राक्षेप्याक्षेपकभावेन, इह त्वेकस्यापि वस्तुन उपाधिभेदेनानेकसम्बन्धसम्भवख्यापनाय अन्यजनकभावेनोच्यते इति न दोषः। उभयसम्बन्धनसंयोगमेव पुनः स्वस्वामिभावेनाह-दिह्यन्ते—उपचीयन्ते पुद्गलैरिति देहा.-काया' ते च बद्धा-इहजन्मनि जीवेन सम्बद्धा मुक्ता-अन्यजन्मनि तेनैवोज्झिता., अनयोर्द्वन्द्वे बद्धमुक्ता, ' माइपिइसुयाइ ' त्ति ' णो जस्सशसोर्लोपे आर्षत्वाच्च ' लोपे दीर्घः ' इति दीर्घत्वस्याभावे पितृमातृसुतादय.। आदिशब्दात् भ्रातृभगिन्यादयो, बद्धमुक्ता इत्यत्रापि योज्यते। चशब्दोऽयं पूर्वश्च समुच्चये। एते च किमित्याह—' भवन्ति ' त्ति जायन्ते, प्राग्वदुभयसम्बन्धनसंयोगा.,जीवस्येति गम्यते। इयमत्र भावना—बद्धा देहा मात्रादयश्चात्मरूपा. तत्र देहात्मनो. क्षीरनीरवदन्योऽन्यानुगतत्वेन मात्रादयश्चात्यन्तस्नेहविषयतयाऽऽत्मवद् दृश्यमानत्वेन, मुक्तास्तूभयेऽपि बाह्या। तत्र देहा आत्मनः पृथग्भूतत्वेन, मात्रादयश्च तथाविधस्नेहाविषयतयाऽऽत्मवद्दृश्यमानत्वेन, अतो देहैर्मात्रादिभिश्च बद्धमुक्तैः स्वस्वामिभावलक्षणसम्बन्धो जीवस्योभयसम्बन्धनसंयोगः। आह—देहादयो मुक्ताश्च स्वस्वामिविषयाश्चेति विरुद्धमेतत्, एवमेतद्, यदि भावतोऽपि मुक्ता स्यु, अथ भावतोऽप्यहमेषा स्वामी ममैते स्वमिति भावाभावान्मुक्ता एव ते,नन्वेवमैहिकेष्वप्यमीष्वपरापरोपयोगवत आत्मनो न सततमेवं भावोऽस्तीति कथ तेष्वपि तद्विषयता ?, अथ तेष्वेवं भावाभावेऽपि व्युत्सर्गाकरणतस्तद्विषयत्वम्, एतदिहापि समानं, व्युत्सर्गाकरणत एव तद्विषयत्वस्येहापि विवक्षितत्वादिति गाथार्थ.।

इत्थमनेकधा सम्बन्धनसंयोग उक्त, अयं च कीदृशस्य कस्य भवतीत्याह-

संबंधणसंजोगो, कसायबहुलस्स होइ जीवस्स।
पहुणो वा अपहुस्स व,मज्झं ति ममंजमाणस्स ॥६१॥

सम्बन्धनसंयोग. उक्तरूप, कषाया -क्रोधादयस्तैर्बहुलस्य—व्याप्तस्य, प्रभूतकषायस्येत्यर्थ., भवति—जायते, कस्य ?—जीवस्य, पुन कीदृशस्य ?—प्रभवति-सम्बन्धिवस्तु तत्र तत्र स्वकृत्ये नियोक्तु समर्थो भवतीति प्रभुस्तस्य वा अप्रभोर्वा उक्तविपरीतस्य, वाशब्दौ समुच्चये, उभयोरपि संयोगसाम्यं प्रति कारणमाह-'मज्झं ति ममज्ञमाणस्स ' त्ति ममेदं नगरजनपदादीनि ममत्वमाचरत, इदमुक्त भवति—सत्यसति वा मत्सम्बन्धतया बाह्यवस्तुनि तत्त्वतोऽभिष्वङ्ग एव सम्बन्धनसंयोग, अनेन च काका कषायबहुलत्वे हेतुरुक्त, कषायबहुलस्येति च ब्रुवता कषायद्वारेण सम्बन्धनसंयोगस्य कर्मबन्धहेतुत्वं ख्यापितं भवति, आह—मिथ्यात्वादयो हि बन्धहेतव, तत्कथ कषायसत्तामात्रेणैव तद्धेतुत्वख्यापनम् ?, उच्यते, तेषामेव तत्र प्राधान्यात्, तत्प्राधान्य च तत्सारत्वस्यैव बन्धतास्यात्। उक्तं च-" जइ भागगया मत्ता, रागाईणं तहा चउकम्मे " इति, बाहुल्यापेक्षं च उक्ता बलात्येत्यादिवत् कषायबहुलस्य जीवस्येत्युच्यते, ततोऽकषायहेतुकत्वेऽप्यौपशमिकादिभाव-

नामादिसंयोगानामजीवविषयत्वेऽपि च शीतोष्णादिविरोधिसंयोगानां सम्बन्धनसंयोगत्वं न विरुध्यते। आह-एवमभिप्रेतानभिप्रेतसंयोगयोरपि तत्त्वतः सकषायजीवविषयत्वात् सम्बन्धनसंयोगत्वप्राप्तिः, सत्यं, तथापीन्द्रियमनसोः साक्षात्तावुक्तौ, अयं तु जीवस्येति न दोषः। अन्यस्त्वाह-संयुक्तकसंयोगोऽपि द्विष्ठत्वेनेतरेतरस्यैव तथेतरेतरसंयोगोऽपि स्वपरधर्मैः संयुक्तत्वात् सर्ववस्तुनः संयुक्तस्यैवेति नानयोः प्रतिविशेषः, एवमेतत्, तथाऽप्येकस्कन्धताऽऽपन्नद्रव्यविषये संयुक्तकसंयोगः, इतरेतरसंयोगस्तु तथाऽन्यथा च, तत्र परमाणुसंयोगस्तथा, प्रदेशादिसंयोगस्तु प्रायोऽन्यथेति युक्त एव तयोर्भेदः। एवं तर्हि परमाणुसंयोगस्य संयुक्तकसंयोगादभेदोऽस्तूभयोरपि एकस्कन्धताऽऽपन्नद्रव्यविषयत्वात्, अयमपि न दोषः, यतो निष्पाद्यमानविषय इतरेतरसंयोगः, परिमण्डलादिसंस्थितद्रव्यस्य तेनैव (वि) निष्पाद्यमानत्वात्, संयुक्तसंयोगस्तु प्रायो निष्पन्नद्रव्यविषयः निष्पन्नं हि मूलादिरूपेण वृक्षादिद्रव्यं कन्दादिना युज्यते, इत्यस्त्यनयोर्विशेष इति गाथार्थः।

इत्थं सम्बन्धनसंयोगः स्वरूपत उक्तः, सम्प्रति तस्यैव फलतः प्ररूपणापूर्वकं विप्रमुक्तस्येति प्रकृतसूत्रपदं व्याख्यानयन् यथा ततो विप्रमुक्ता भवन्ति यच्च तेषां फलं तदाह—

**संबंधणसंजोगो, संसारओ अणुत्तरणवासो ।**
**तं छित्तु विप्पमुक्का, माइपिइसुआइ य हवंति ॥ ६२ ॥**

सम्बन्धनसंयोग उक्तरूपः, संसरन्त्यस्मिन् कर्मवशवर्तिजन्तव इति संसारस्तस्मात्, न विद्यते उत्तरणं-पारगमनमस्मिन् सतीत्यनुत्तरणं, स चासौ वासश्च—अवस्थानमनुत्तरणवासः, अनुत्तरणवासहेतुत्वादायुर्घृतमित्यादिवदनुत्तरणवासः, अथवा-'अनुत्तरणवासो' त्ति आत्मनः पारतन्त्र्यहेतुतया पाशवत् पाशः, ततोऽनुत्तरणश्चासौ पाशश्च अनुत्तरणपाशः, उभयत्र च सापेक्षत्वेऽपि गमकत्वात् समासः, अनेन संसारावस्थितिः पारवश्यं वा सम्बन्धनसंयोगस्यार्थतः फलमुक्तम्। तम्-एवंविधं सम्बन्धनसंयोगम्, अर्थाद् औदयिकभावविषयं मात्रादिविषयं च छित्त्वा द्विधा विधाय निर्णाश्येति यावत्, किमित्याह-विप्रमुक्ताः, श्रुतत्वादनन्तरोक्तसम्बन्धनसंयोगादेव, के ते, ?-साधवः-अनगाराः, येनैवं तेन किमित्याह-मुक्ताः ततः संसारात्, तद्धेतुकत्वात्तस्य, तेन हेतुना, अनेन च गाथापश्चार्धेन सम्बन्धच्छेदनलक्षणेन प्रकारेण विप्रमुक्ता भवन्ति, तेषां च फलं मुक्तिरित्यर्थत उक्तं भवति। यच्च विप्रमुक्तस्येत्येकत्वप्रक्रमेऽपि विप्रमुक्ता इतीह बहुवचनं तदेवंविधभिक्षो पूज्यत्वख्यापनार्थमिति गाथार्थः।

एवं 'संजोगे निक्खेवो' इत्यादि मूलगाथोपक्षिप्तसंयुक्तकसंयोगेतरेतरसंयोगभेदतो द्विविधं द्रव्यसंयोगं निरूप्य तत्र संयुक्तकसंयोगं सचित्तादिभेदतस्त्रिविधम्, इतरेतरसंयोगं तु परमाणुप्रदेशाभिप्रेतानभिप्रेताभिलापसम्बन्धनविधानतः षड्विधमभिधाय सम्बन्धनसंयोग एव च साक्षात् कर्मसम्बन्धनिबन्धनतया संसारहेतुरिति तत् त्याज्यतां च। सम्प्रति तत्प्रतिपादनत एवान्यदुक्तप्रायमिति मन्वानः क्षेत्रादिनिक्षेपमविशिष्टमतिदेष्टुमाह-

**संबंधणसंजोगे, खित्ताईणं विभासो जा भणिया ।**
**खित्ताइसु संजोगो, सो चेव विभासियव्वो अ ॥ ६३ ॥**

सम्बन्धनसंयोगे क्षेत्रादीनाम्, आदिशब्दात्—कालभावपरिग्रहः, विविधा-आदेशानादेशादिभेदादनेकभेदा भाषा विभाषा, या इति प्रस्तुतपरामर्शः, भणिता-अभिहिता, क्षेत्रादिषु क्षेत्रादिविषयः संयोगः प्रथमद्वारगाथासूचितः। स चैव विभाषितव्यः। तुः पूरणे। संयोगत्वं चात्र विभाषाया वचनरूपत्वाद्वचनपर्यायाणां कथञ्चिद्वाच्यादभेदख्यापनार्थमुक्तम्। ततोऽयमर्थः-सम्बन्धनसंयोगविषयक्षेत्रादिविभाषायां यत्संयोगस्वरूपमुक्तम्, इहापि तदेव वक्तव्यं, चकारस्यानुक्तसमुच्चयार्थत्वात्। संयुक्तकसंयोगः सम्भवन्त इतरेतरसंयोगशेषभेदाश्च वाच्याः। तत्र क्षेत्रस्य संयुक्तकसंयोगो यथा-जम्बूद्वीपः स्वप्रदेशसंयुक्तक एव लवणसमुद्रेण युज्यते, इतरेतरसंयोगः क्षेत्रप्रदेशानामेव परस्परं धर्मास्तिकायादिप्रदेशैर्वा संयोगः। एवं कालभावयोरपि नेयमिति गाथार्थः। इह चोक्तनीत्या सम्बन्धनसंयोग एव साक्षादुपयोगी, इतरेषां तु तदुपकारितया तेषामपि कथञ्चित्त्याज्यतया च शिष्यमतिव्युत्पादनाय चोपन्यास इति भावनीयम्। उक्तः संयोगः, तदभिधानाच्च व्याख्यातं प्रथमसूत्रम् ॥१॥ उत्त० १ अ०। कथं संयोगासिद्धत्वम्' येनोक्तदोषदुष्टः प्रकृतो हेतुः स्यात्? उच्यते—तद्ग्राहकप्रमाणाभावात्, बाधकप्रमाणोपपत्तेश्च।' तथाहि—"संख्यापरिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपि (द्रव्य) समवायाच्चाक्षुषाणि (वैशेषिकद० ४।१।११।)" इति वचनात् दृश्यवस्तुसमवेतस्य परेण प्रत्यक्षग्राह्यत्वमभ्युपगतम्। न च निरन्तरोत्पन्नवस्तुद्वयप्रतिभासकालेऽध्यक्षप्रतिपत्तौ तद्व्यतिरेकेणापरः संयोगो बहिर्ग्राह्यरूपतां बिभ्राणः प्रतिभाति, नापि कल्पनाबुद्धौ वस्तुद्वयं यथोक्तं विहाय, शब्दोल्लेखं चान्तरमपरं वर्णाकृत्यक्षराकाररहितं संयोगस्वरूपमुद्भाति। तदेवमुपलब्धिलक्षणप्राप्तस्य संयोगस्यानुपलब्धेरभावः, शशविषाणवत्। तेन यदाहोद्द्योतकरः-"यदि संयोगो नार्थान्तरं भवेत्तदा क्षेत्रबीजोदकादयो निर्विशिष्टत्वात् सर्वदैवाङ्कुरादिकार्यं कुर्युः, न चैवम्— तस्मात् सर्वदा कार्यानारम्भात् क्षेत्रादीन्यङ्कुरोत्पत्तौ कारणान्तरसापेक्षाणि, यथा मृत्पिण्डादिसामग्री घटादिकरणे कुलालादिसापेक्षा; योऽसौ क्षेत्रादिभिरपेक्ष्यः स संयोग इति सिद्धम्। किञ्च—असौ संयोगो द्रव्ययोर्विशेषणभावेन प्रतीयमानत्वात् ततोऽर्थान्तरत्वेन प्रत्यक्षसिद्ध एव। तथाहि—कश्चित्केनचित्संयुक्ते द्रव्ये आहरेत्युक्ते ययोरेव द्रव्ययोः संयोगमुपलभते ते एवाहरति न द्रव्यमात्रम्। किञ्च—दूरतरवर्त्तिनः पुंसः सान्तरेऽपि वने निरन्तररूपाऽवसायिनी बुद्धिरुदयमासादयति; शेषं मिथ्याबुद्धिः मुख्यपदार्थानुभवमन्तरेण न कचिदुपजायते। न ह्यननुभूतगोदर्शनस्य गवये 'गौः' इति विभ्रमो भवति। तस्मादवश्यं संयोगो मुख्योऽभ्युपगन्तव्यः। तथा—'न चैत्रः कुण्डली' इत्यनेन प्रतिषेधवाक्येन न कुण्डलं प्रतिषिध्यते, नापि चैत्रः, तयोरन्यत्र देशादौ सत्त्वात्। तस्माच्चैत्रस्य कुण्डलसंयोगः प्रतिषिध्यते।

तथा चैत्रः कुण्डली इत्यनेनापि विधिवाक्येन न चैत्रकुण्डलयोरन्यतरविधानम्, तयोः सिद्धत्वात्; पारिशेष्यात् संयोगविधानम्। तस्मादस्त्येव संयोगः" इति। सन्निरस्तं द्रष्टव्यम्। संयुक्तद्रव्यस्वरूपावभासव्यतिरेकेणापरस्य संयोगस्य प्रत्यक्षे निर्विकल्पके सविकल्पके वाऽप्रतिभासस्य प्रतिपादितत्वात्। न च संयुक्तप्रत्ययान्यथानुपपत्त्या संयोगकल्पनोपपन्ना, निरन्तरावस्थयोरेव भावयोः संयुक्तप्रत्ययहेतुत्वात्। यावच्च तस्यामवस्थाया संयोगजनकत्वेन संयुक्तप्रत्ययहेतुत्वेन ताविष्येते, तावत्संयोगमन्तरेण संयुक्तप्रत्ययहेतुत्वेन तद्विषयौ किं नेष्येते ?, किं पारम्पर्येण ?, न च सान्तरे सने निरन्तरावभासिनी बुद्धिः मुख्यपदार्थानुभवपूर्विकाऽस्खलत्प्रत्ययत्वेनानुपचरितत्वात्। 'न चैत्रः कुण्डली' इत्यादौ चैत्रसम्बन्धि कुण्डलं निषिध्यते विधीयते वा, न संयोगः। न च सम्बन्धव्यतिरेकेण चैत्रस्य कुण्डलसम्बन्धानुपपत्तिरिति वक्तुं शक्यम्, यतश्चैत्रकुण्डलयोः किं सम्बन्धिनोः स सम्बन्धः, उत-असम्बन्धिनोः, नासम्बन्धिनोः हिमवद्विन्ध्ययोरिवासंबन्धिनोः सम्बन्धानुपपत्तेः। न चासम्बन्धिनोर्भिन्नसम्बन्धेन तदभिन्न सम्बन्धित्वं शक्य विधातुम्। विरुद्धधर्माध्यासेन भेदात्। नापि भिन्नम्। तत्सद्भावेऽपि तयोः स्वरूपेणासम्बन्धित्वप्रसङ्गात्; भिन्नस्य तत्कृतोपकारमन्तरेण तत्सम्बन्धित्वायोगात्; ततोऽपरोपकारकल्पनेऽनवस्थाप्रसङ्गात्। सम्बन्धिनोस्तु सम्बन्धपरिकल्पनं व्यर्थम्, सम्बन्धमन्तरेणापि तयोः स्वत एव सम्बन्धिस्वरूपत्वात्। यत्तूक्तम्-'विशिष्टावस्थाव्यतिरेकेण क्षितिबीजोदकादीनां नाङ्कुरजनकत्वम्' सा च विशिष्टावस्था तेषां संयोगरूपा शक्तिः। तदसादरम्; यतो यथा विशिष्टावस्थायुक्ताः क्षित्यादयः संयोगमुत्पादयन्ति, तथा तदवस्थायुक्ता अङ्कुरादिकमपि कार्यं निष्पादयिष्यन्तीति व्यर्थं संयोगशक्तेस्तदन्तरालवर्त्तिन्याः परिकल्पनम्। अथ संयोगशक्तिव्यतिरेकेण न कार्योत्पादने कारणकलापः प्रवर्त्तेत इति निर्बन्धः, तर्हि संयोगशक्त्युत्पादनेऽप्यपरसंयोगशक्तिव्यतिरेकेण नासौ प्रवर्त्तेत इत्यपरा संयोगशक्तिः परिकल्पनीया, तत्राप्यपरेत्यनवस्था। अथ तामन्तरेणाऽपि शक्तिमुत्पादयन्ति, तर्हि कार्यमपि तामन्तरेणैवाङ्कुरादिकं निर्वर्त्तयिष्यन्तीति व्यर्थं संयोगशक्तेः तदन्तरालवर्त्तिन्याः कल्पनम्। न च विशिष्टावस्थाव्यतिरेकेण पृथिव्यादयः संयोगशक्तिमपि निर्वर्त्तयितुं क्षमाः, तथाऽभ्युपगमे सर्वदा तन्निर्वर्त्तनप्रसङ्गादङ्कुरादेरप्यनवरतोत्पत्तिप्रसङ्गः। न चान्यतरकर्मादिसव्यपेक्षाः संयोगमुत्पादयन्ति क्षित्यादय इति नायं दोषः, कर्मोत्पत्तावपि संयोगपक्षोक्तदूषणस्य सर्वस्य तुल्यत्वात्। तस्मादेकसामग्र्यधीनविशिष्टोत्पत्तिमत्पदार्थव्यतिरेकेण नापरः संयोग। तस्य बाधकप्रमाणविषयत्वात्, साधकप्रमाणाभावाच्च। यस्तु 'संयुक्ते द्रव्ये एते' इति, 'अनयोर्वाऽय संयोगः' इति व्यपदेशः, स भेदान्तरप्रतिक्षेपाऽप्रतिक्षेपाभ्यां तथाऽवस्थोत्पन्नवस्तुद्वयनिबन्धन एव, नातोऽपरस्य संयोगस्य सिद्धिः। नचाक्षणिकत्वे तयोः स सम्बन्धी युक्तः। तत् सम्बन्धस्य समवायस्य निषिद्धत्वात्, निषेत्स्यमानत्वाच्च। न च तज्जन्यत्वादसौ तत्सम्बन्धी, अक्षणिकत्वे जनकत्वविरोधस्य प्रतिपादयिष्यमाणत्वात्। क्षणिकत्वेऽपि तयोरेकसामग्र्यधीना नैरन्तर्योत्पत्तिरेव, नापरसंयोग इति 'रचनावत्त्वाद्' इति अत्र हेतोर्विशेषणस्य संयोगविशेषस्य रचनालक्षणस्याऽसिद्धेः तद्वतो विशेष्यस्याप्यसिद्धिरिति स्वरूपासिद्धत्वम्। सम्म० १ काण्ड।

संजोगवियोगतो य लब्भइ जहा दो महुरातो दाहिणा,उत्तरा य। तत्थुत्तरातो वाणियतो दक्खिणं गतो, तत्थ एगो वाणियगो तप्पडिमो, तेण से पाहुणं कय। ताहे ते निरंतरं ते मित्ता जाया, अम्हं थिरतरा पीती होउ त्ति जइ अम्ह पुत्तो धूया य जायइ तो संजोग करिस्सामो। ताहे दक्खिणेण उत्तरस्स धूया वरिया,दिन्नाणि वालाणि,एत्थंतरे दक्खिणमहुरा,वाणिओ मतो,पुत्तो से तम्मि ठाणे ठितो। अन्नया सो एहाई, चउद्दिसिं चत्तारि सोवन्निया कलसा ठविया ताण बाहिं रोप्पिया। ताणं बाहिं तंविया,ताण बाहिं मट्टिया। अन्ना य एहाणविही रइया। ततो तस्स पुरतो पुव्वाए दिसाए सोवन्निओ कलसो नट्ठो। एवं चउद्दिसिं पि,एवं सव्वे नट्ठा,उट्ठियस्स एहाणपीढं वि नट्ठं, तस्स अधिती जाया। जाव घरं पविट्ठो ताहे भोयणविही उवट्ठविया, ताहे सोवण्णियरुप्पमयाणि थालाणि रइयाणि, तत्थ एक्केक्क भायणं नासिउमारद्धं, सो य पेच्छति नासंते जा वि से मूलपत्ती सा वि णासिउमारद्धा। ताहे तेण गहिया,जत्तियं गहियं तत्तियं ठियं, सेस नट्ठं ततो गतो सिरिघरं जो एइ सो वि रित्तओ। जं पि निहाणपउत्तं तं पि नट्ठं। ज पि आभरणं त पि नऽत्थि। ज पि वुड्ढिपउत्तं ते वि भणन्ति-तुमं न याणामो,जो वि दासीवग्गो सो वि नट्ठो। ताहे चिंतेइ। पव्वयामि। पव्वइतो सामाइयाणिएक्कारस अंगाणि पढियाणि। ततो तेण खंडेण हत्थगएण कोऊहल्लेण हिंडइ, जइ पेच्छेज्जामि विहरंतो उत्तरमहुरं गतो। ताणि वि रयणाणि ससुरकुलं गयाणि, ते य कलसा,तहा हि सो उत्तरमाहुरो वाणितो उवगिज्जंतो अन्नया कयाई मज्जई, तस्स मज्जमाणस्स ते कलसा गया। ताहे सो तेहिं चेव पमज्जितो,भोयणवेलाए सव्वं भोयणभंडं उवट्ठियं सोवि साहू भिक्खं अडंतो त घरं पविट्ठो। तत्थ सत्थवाहस्स धूया पढमजोव्वणे वट्टमाणी वीयणयं गहाय अच्छइ। ताहे सो साहू तं भोयणभंडं पेच्छइ। सत्थवाहेण भिक्खा नीणाविया। गहिए वि अच्छई, ताहे पुच्छई—किं भयवं! एयं चेडिं पलोवेह। ताहे सो भणई-न मम चेडीए पओयणं। एयं भोयणभंडग पलोएमि। ततो पुच्छई-कतो एयस्स आगमो ?, सो भणइ-अज्जयपज्जयागयं, तेण भणियं-सब्भावं साह, तेण भणियं-मम एहायंतस्स एवं चेव एहाणविही उवट्ठिया। एवं सव्वो वि जेमणवेलाए भोयणविही सिरिघराए वि भरियाणि दिट्ठाणि अदिट्ठपुव्वा य वाणियगा आणित्ता देंति। ताहे सो भणइ-एयं सव्वं मम आसि। सो पुच्छइ इह ताहे साहू कहेई। एहाणादि जइ न पत्तियसि भोयणपत्ती खंड पेच्छ जाव ढोइयं चड त्ति लग्गं पिउणो नामं साहइ। ताहे नायं एस सो जामाओ,ताहे सो उट्ठित्ता अवयामेऊण परुतो पच्छा भणई। एयं सव्वं तव तदवत्थं अच्छइ। एसा पुव्वदिन्ना चेडी पडिच्छसु त्ति। सो भणइ-पुरिसो वा पुव्वं कामभोगे विप्पजहइ, कामभोगा वा पुव्वं पुरिसं विप्पजहंति-

ति। ताहे सो वि संवेगमावन्नो ममं पि एमेव विप्पजहिस्संति त्ति पव्वइतो । तत्थ एगेण वि विप्पओगेण लद्धं एगेण संजोगेण सामाइयं लद्धं ति।" आ० म० १ अ०। "अमन्त्रमक्षरं नास्ति, नास्ति मूलमनौषधम् । अधुना पृथिवी नास्ति, संयोगा: खलु दुर्लभा: " ॥ १ ॥ गा०।

संजोगगम-संयोगगम-त्रि० । संयोगगमं संयोगतो गमः प्रकारो यस्य तत्तथा । व्य० १ उ० । संयोगतोऽनेकप्रकारे, व्य० १ उ०।

संजोगट्ठि(ण्)-संयोगार्थिन्-त्रि० । संयुज्यते संयोजनं वा प्रयोजनं सोऽस्यास्तीति संयोगार्थी । तत्र धनधान्यहिरण्यद्विपदचतुष्पदराजभार्यादिसंयोगस्तेनार्थी तत्प्रयोजनः। अथवा-शब्दादिविषयः संयोगो मातापित्रादिभिर्वा तेनार्थी। संयोगप्रयोजिनि, व्य० ५ उ०।

संजोगदिट्ठपाढि-संयोगदृष्टपाठिन्-पुं०। संयोग औषधद्रव्यमीलनप्रयोगस्तद्विषयो दृष्टः पाठश्चिकित्साशास्त्रावयवविशेषो येन सः आर्षत्वाद् इन्प्रत्यः । बृ० १ उ० २ प्रक०। क्रियाशास्त्रयोर्निपुणे यो ह्यनेकान् संयोगान् व्यापार्यमाणान् दृष्टवान् यश्च तत्पाठं पठितवान् तादृशे, व्य० ५ उ०।

संजोगमूला-संयोगमूला-स्त्री० । संयोगो नानाभवेषु पुत्रकलत्रमित्रशरीरादिसम्बन्धरूपः स एव मूलं यासां ताः संयोगमूलाः । संयोगकारणीभूतायां स्त्रियाम् , आतु०।

संजोगरय-संयोगरत-त्रि० । पुत्रकलत्रमित्रादिजनितसम्बन्धरते, आचा० १ श्रु० ४ अ० १ उ०।

संजोगसंबंध-संयोगसम्बन्ध-पुं० । संयोगस्य संबन्धोऽभिलाषः । नानाभवेषु पुत्रकलत्रमित्रशरीरादिसम्बन्धेच्छायाम्, आतु०।

संजोणिय-संयोनिक-त्रि० । सह योन्युत्पत्तिस्थानेन वर्त्तते इति संयोनिकः । संसारिणि, स्था० २ ठा० १ उ०।

संजोत्ता-संयोजयिता-पुं० । संयोगं कारयितरि , स्था० ६ ठा० ३ उ०।

संजोयणा-संयोजना-स्त्री० । लोभाद् द्रव्यस्य मण्डकादेर्द्रव्यान्तरेण खण्डघृतादिना वसतेर्बहिरन्तर्वा योजनं संयोजना। ध० ३ अधि० । संयोजनं संयोजना । उत्कर्षतोत्पादनार्थं द्रव्यस्य द्रव्यान्तरेण मीलने, प्रव० ६३ द्वार । पं० व० । पिं० । भक्तादेर्गुणान्तरोत्पादनीयद्रव्यान्तरमीलने, पञ्चा० १३ विव० । ग्रासैषणाया: प्रथमे दोषे, यथा—क्षीरदधिघृतादि द्रव्यं सम्मील्य रसलौल्येन भुङ्क्ते। उत्त० २४ अ०। जीत० । नि० चू० । पिं० ।

संप्रति संयोजनामेव व्याचिख्यासुः प्रथमतस्तस्या निक्षेपमाह—

दव्वे भावे संजो-यणा उ दव्वे दुहा उ बहि अंतो ।
भिक्खं चिय हिंडंतो,संजोयं तम्मि बाहिरिया ॥६३६॥

संयोजना द्विधा, तद्यथा—द्रव्ये—द्रव्यविषया , भावे—भावविषया । तत्र द्रव्ये—द्रव्यविषया संयोजना द्विविधा, तद्यथा-बहिरन्तश्च । तत्र यदा भिक्षार्थमेव हिण्डमानः सन् क्षीरादिकं खण्डादिभिः सह रसगृद्ध्या रसविशेषोत्पादनाय संयोजयति एषा बाह्या-बहिर्भवा संयोजना।

एतामेव स्पष्टं भावयति—

खीरदहिसूवकट्टर-लंभे गुडसप्पिवट्टगवालुंके ।
अंतो उ तिहा पाए, लंबणवयणे विभासा उ ॥६३७॥

क्षीरदधिसूपानां प्रतीतानां कट्टरस्य तीमनोन्मिश्रघृतवटिकारूपस्य देशविशेषप्रसिद्धस्य लाभे सति तथा गुडसर्पिर्वटकवालुङ्कानां च प्राप्तौ सत्यां रसगृद्ध्या रसविशेषोत्पादनायानुकूलद्रव्यैः सह संयोजनां यत्करोति बहिरेव भिक्षामटन् एषा बाह्या द्रव्यसंयोजना । अभ्यन्तरा, पुनर्यद्वसतावागत्य भोजनवेलायां संयोजयति, तथा चाहअन्तस्तु अभ्यन्तरा, पुनः संयोजना त्रिधा-त्रिप्रकारा, तद्यथा-पात्रे लम्बने वदने च, नवरं लम्बनं—कवलः, ततोऽस्यास्त्रिविधाया अपि विभाषा—व्याख्या कर्त्तव्या। सा चैवं यद् द्रव्यं यस्य द्रव्यस्य रसविशेषाधायि तत्तेन सह पात्रे रसगृद्ध्या संयोजयति, यथा—सुकुमारिकादिकं खण्डादिना सह, एषा पात्रेऽभ्यन्तरा संयोजना, यदा तु हस्तगतमेव कवलतयोत्पाटितचूर्णे सुकुमारिकादि खण्डादिना सह संयोजयति तदा कवलेऽभ्यन्तरा संयोजना । यदा पुनर्वदने कवलं प्रक्षिप्य ततः शालनकं प्रक्षिपति, यद्वा-मण्डकादिकं पूर्वं प्रक्षिप्य पश्चाद् गुडादिकं प्रक्षिपति एषा वदनेऽभ्यन्तरा संयोजना। एषा च द्रव्यसंयोजना समस्ताऽप्यप्रशस्ता यतोऽनयाऽऽत्मानं रागद्वेषाभ्यां संयोजयति।

तथा चामुमेव दोषं वक्तुकाम आह—

संजोयणाए दोसो, जो संजोएइ भत्तपाणं तु ।
दव्वाई रसहेउं, वाघाओ तस्सिमो होइ ॥ ६३८ ॥

संयोजनायां प्रागुक्तस्वरूपायामयं दोषः—' दव्वाइरसहेउं ' ति , अत्रार्षत्वादादिशब्दस्य व्यत्यासेन योजना। ततोऽयमर्थः-द्रव्यस्य सुकुमारिकादेः रसहेतोः-रसविशेषोत्पादनाय, आदिशब्दाच्छुभगन्धादिनिमित्तं च, यो भक्तं पानं चानुकूलद्रव्येण खण्डादिना सह संयोजयति तस्य साधोरयं वक्ष्यमाणः व्याघातः—दीर्घदुःखोपनिपातरूपो भवति ।

तमेव भावयन् भावसंयोजनामप्याह—

संजोयणा उ भावे, संजोएऊण ताणि दव्वाइं ।
संजोयइ कम्मेणं, कम्मेण भवं तओ दुक्खं ॥६३९॥

तानि हि सुकुमारिकाखण्डादीनि द्रव्याणि रसगृद्ध्या संयोजयन्नात्मानमप्रशस्तेन गृद्धयात्मकेन भावेन संयोजयति , एषा भावे भावविषया संयोजना , ततस्तानि द्रव्याणि तथा संयोज्यात्मनि कर्म ज्ञानावरणीयादिकं संयोजयति सम्बध्नाति कर्मणा च संयोजयति भवं दीर्घतरं संसारं तस्माच्च भवाद्दीर्घतरसंसाररूपात् दुःखम्—असातं संयोजयति, ततो यो द्रव्यसंयोजनां करोति तस्येत्थमनन्तकालसंवेद्यो दुःखनिपात इति ।

सम्प्रत्यस्या एव द्रव्यसंयोजनाया अपवादमाह—

पत्तेय पउरलम्भे, भुत्तुव्वरिए य सेसगमणऽट्ठा ।
दिट्ठो संजोगो खलु, अह कमो तस्सिमो होइ ॥६४०॥

प्रत्येकम्—एकैकं साधुसंघाटकम् प्रति प्रचुरलाभे—विपुलघृतादिप्राप्तौ सत्यां यदि कथमपि भुङ्क्ते सति च—समुच्चये शेषम्—उद्धरितं भवति, ततस्तस्य शेषस्य निर्गमनार्थं दृष्ट—अनुज्ञातस्तीर्थकरादिभिः खलु संयोगः, उद्धरितं हि घृतादि न खण्डादिकमन्तरेण मण्डकादिभिरपि सह भोक्तुं शक्यते प्रायस्तृप्तत्वात्, न च परिष्ठापन युक्तं, घृतादिपरिष्ठापने स्निग्धत्वात् पश्चादपि कीटिकादिसत्वव्याघातसम्भवेन बृहत्तरप्रायश्चित्तसम्भवात् तत उद्धरितघृतादिनिर्गमनार्थं खण्डादिभिरपि तस्य संयोजनं न दोषाय, एष तावदयमपवादः संयोजनायाः । अथान्योऽपि तस्य संयोगस्यायं वक्ष्यमाणः क्रमो-भवनपरिपाटीरूपो भवति ।

तमेवाह—

रसहेउं पडिसिद्धो, संयोगो कप्पए गिलाणऽट्ठा ।
जस्स व अभत्तछंदो, सुहोचिओऽभाविओ जो य॥६४१॥

रसहेतोः—गृद्ध्या रसविशेषोत्पादनाय संयोगः प्रतिषिद्धस्तीर्थकरादिभिः, यावता पुनः स एव संयोगो ग्लानार्थं—ग्लानसज्जीकरणार्थं कल्पते, यद्वा—यस्य अभक्तच्छन्दः—भक्तारोचकः, यश्च सुखोचितो राजपुत्रादिः यश्चाद्याप्यभावितः—असञ्जातसम्यक्परिणामः शैक्षकस्तस्य निमित्तं कल्पते । उक्तं संयोजनाद्वारम् । पिं० । ध० । पं० चू० । महा० । ग० । आचा० । अनन्तानुबन्धिकषायेषु, प० सं० ३ द्वार । संयोज्यते—सम्बध्यतेऽनेकसंख्यैर्भवैर्जन्तवो यैस्ते संयोजना । संयोजयत्यात्मनोऽनन्तमपि कालमिति "रम्यादिभ्यः कर्त्तरि" इत्यनटि प्रत्यये संयोजना । कर्म०५ कर्म०। " संजोयणाए कसाया भवादिसंजोयणातो य । " आ० म० १ अ० । एकजातीयातिचारमीलने, यथा—शय्यातरपिण्डो गृहीतः सो ह्युदकार्द्रहस्तादिना सौम्याहृतः सोऽप्याधार्कमिकः तत्र यत्प्रायश्चित्त तत्संयोजनाप्रायश्चित्तम् सयोजनोच्यते । स्था०४ ठा० १ उ० । कथं संयोजना पृथक् प्रायश्चित्तमुच्यते । अधुना संयोजनाप्रायश्चित्तं वक्तव्यम् । अस्मिंश्च व्याख्याते यतः प्ररूपणापृथक्त्वमित्येतदपि द्वारं व्याख्यातं द्रष्टव्यम् ।

तत्र चोदकः सयोजनाऽऽदीना भेदाना प्ररूपणापृथक्त्वमाक्षिपन्नाह—

पडिसेवणं विणा खलु, संजोगाऽऽरोवणा न दिज्जंति ।
माया वि य पडिसेवा, अइप्पसंगो य इति एक्कं ॥१३७॥

इह प्रायश्चित्त सर्वमुत्पद्यते, प्रतिसेवनातो, खलु मूलगुणगुणप्रतिसेवनाम्, उत्तरगुणप्रतिसेवनां वा विना क्वापि प्रायश्चित्तस्य संभवः " पडिसेवियम्मि दिज्जइ पच्छित्तं इहरहाउ पडिसेहो " इति वचनात्, तत संयोजनाप्रायश्चित्तमारोपणाप्रायश्चित्तं च प्रतिसेवनामन्तरेण न भवतीति तयो सम्प्रति प्रतिसेवनायामेवान्तर्भाव । प्रतिकुञ्चनाप्रायश्चित्तमपि न प्रतिसेवनातः पृथगुपपन्नं यतः प्रतिकुञ्चनानाम—माया । तथा चोक्तम्—" पलिउंचणं ति य माय त्ति य नियडि त्ति य एगट्ठा इति । " माया च प्रतिसेवना तत एकमेव प्रतिसेवनप्रायश्चित्तमुपपत्तिमत् न शेषाणि त्रीणि संयोजनादीनि पृथक् प्रायश्चित्तानि, अन्यथैवमतिप्रसङ्ग आपद्येत । तथाहि-संयोजनादीनि त्रीणि प्रायश्चित्तानि प्रतिसेवना रूपाणि भवन्त्यपि प्रतिसेवना भवन्ति । तत प्रतिसेवनाऽपि न प्रतिसेवना स्यात्, विशेषाभावात् । अनिष्ट चैतत्तस्मादेकमेव प्रायश्चित्तं प्रतिसेवना न शेषाणीति ।

एवं चोदकेनाऽऽक्षिप्ते प्ररूपणापृथक्त्वे सूरिरुत्तरमाह—

एगाहिगारिगाण वि, नाणत्तं केत्तिया व दिज्जंति ।
आलोयणाविही वि य,इय नाणत्तं चउण्हं पि ॥१३८॥

ऐकाधिकारिकाणि नाम एकस्मिन् शय्यातरपिण्डादावधिकृतदोषेऽनालोचिते एवं यानि शेषदोषसमुत्थितानि प्रायश्चितानि तान्यैकाधिकारिकाणि—एकाधिकारे भवान्यैकाधिकारिकाणि अध्यात्मादित्वादिकणिति व्युत्पत्ते ,तेषामप्येकाधिकारिकाणा नानात्वं, न पुनरेकाधिकारिकतया एकत्वमिति प्रज्ञापनाय तदर्थं संयोजनाप्रायश्चित्तं पृथगुच्यते ।

नानात्वमेव गाथाद्वयेन दर्शयति—

सेज्जातरपिण्डे य, उदउल्ले खलु तहा अभिहडे य ।
आहाकम्मे य तहा, सत्त उ सागारिए मासा ॥१३९॥

केनापि साधुना प्रथमतः शय्यातरपिण्ड उपभुक्त तस्मिंश्चानालोचित एव तदनन्तरमुदकार्द्रमासेवितं, ततोऽभ्याहृतं, तदनन्तरमाधाकर्म्मिकम्, एतानि चत्वार्यप्यैकाधिकारिकाणि अधिकृत एव शय्यातरपिण्डदोषे अनालोचिते शेषदोषप्रायश्चित्तानां संभवात् । एतेषा चैकाधिकारिकाणामपि नानात्वं ननु शय्यातरपिण्डे एव शेषाण्यन्तर्भवन्ति । ततः सर्वाण्यपि पृथगालोचनीयानि न केवल एवैकः शय्यातरपिण्ड इति परिज्ञानाय संयोजना दर्श्यते तत्र शय्यातरपिण्डे मासलघु, उदकार्द्रेऽपि मासलघु । स्वग्रामादाहृतेऽपि मासलघु । आधाकर्म्मिके चत्वारो गुरुमासा । " गुरुगा आहय " इति वचनात् । एवं शय्यातरपिण्डे अधिकृते संयोजनाप्रायश्चित्तं सप्त मासास्तथाचाह-" सत्त उ सागारिए मासा " सागारिको नाम-शय्यातरस्तस्मिन्सागारिके-सागारिकपिण्डे अधिकृते एकाधिकारिकाणामपि नानात्वात् संयोजनाप्रायश्चित्तं सप्त मासा ।

रण्णो आहाकम्मे, उदउल्ले खलु तहा अभिहडे य ।
दसमास रायपिंडे, उग्गमदोसादिणो चेव ॥ १४० ॥

केनापि प्रथमतो राजपिण्ड उपभुक्तस्ततस्तत्रैव राजपिण्डे उपभुक्ते अनालोचित एव आधाकर्मिकमुपभुक्तं तदनन्तरमुदकार्द्रं ततोऽभ्याहृतमेवमेतान्यपि चत्वार्यैकाधिकारिकाणि, अधिकृत एव—राजपिण्डदोषे शेषदोषाणा सम्भवात् । एतेषा च नानात्वमिति पृथगालोचनाया सयोजना दर्श्यन्ते—राजपिण्डे चत्वारो गुरुमासा, आधाकर्मिकेऽपि चत्वारो गुरुमासा । उदकार्द्रे लघुमास । अभ्याहृतेऽपि लघुमास इत्यधिकृते राजपिण्ड उद्गमदोषादिना उद्गमदोषेण आदिशब्दादुत्पादनादोषेणैषणादोषेण चशब्दादन्येन च

१-पुस्तकान्तरे-' आलोयणाविहीवि य, इय णाणत्त चउण्हं पि '।

यथासंभवं संयोजनाया दश मासा प्रायश्चित्तम् , एवमनया दिशा तत्तद्दोपसंयोजनात्, संयोजनाप्रायश्चित्तमवसातव्यम्। एवं संयोजनायामनुमतायां मा भूदारोपणाशङ्केति कस्मिन्नपि नीर्थे कति मासा दीयन्ते प्रायश्चित्तमिति परिज्ञानाय संयोजनात् आरोपणाप्रायश्चित्त पृथक्कृतम्, 'आलोयणा विही त्ति य त्ति । यद्यथा प्रतिसेवितं तत्तथैवालोचयितव्यम् । न तु मायया प्रतिकुञ्चनीयमन्यथा मायया प्रतिकुञ्चनेन मायाप्रत्ययमधिकं मासगुरुं प्राप्नोतीत्येवं ज्ञापित. सन् यथा प्रतिसेवितमालोचयते । तत आलोचनाविधिरपि सम्यग्ज्ञापित. स्यात्, अपिशब्दादेवं ज्ञापितो यदा मायया अन्यथा आलोचयते तदा आरोपणायां क्रियमाणायां यत्र मासलघु आभवति , तत्र मासगुरु प्रदातव्यमिति ज्ञापनार्थमारोपणात. प्रतिकुञ्चना-प्रतिकुञ्चनाप्रायश्चित्त भिन्न कृतमिति । एवमुक्तेन प्रकारेण चतुर्णामपि प्रायश्चित्तानां नानात्वमिति । उक्तं संयोजनाप्रायश्चित्तं तदुक्तौ यत प्ररूपणापृथक्त्वमिति द्वारमप्युक्तम् । व्य० १ उ० ।

संजोयणादोसदुट्ठ-संयोजनादोषदुष्ट-त्रि० । संयोजना द्रव्यस्य गुणविशेषार्थं द्रव्यान्तरेण योजनं सैव दोपस्तेन दुष्टं यत् । द्रव्यान्तरसंयोगदोषदुष्टे, भ० ७ श० १ उ० ।

संजोयणाहिगरणिया-संयोजनाधिकरणिकी-स्त्री० । संयोजनं हलगरविषकूटयन्त्राङ्गना पूर्वनिर्वर्त्तितानां मीलनं तदेवाधिकरणक्रिया सयोजनाधिकरणक्रिया । अधिकरणिक्याः क्रियाया भेदे, भ० ३ श० ३ उ० ।

संझच्छेयावरण-सन्ध्याच्छेदावरण-पुं० । संध्याच्छेद.—सन्ध्याविभाग स आव्रियते येन स सन्ध्याच्छेदावरण । चन्द्रे, व्य० ७ उ० ।

संझप्पभ-संध्याप्रभ-न० । शक्रलोकपालस्य सोमस्य विमाने, भ० ३ श० ७ उ० ।

संझब्भराग-सन्ध्याभ्रराग-पुं० । वर्षासु सन्ध्यासमयभाविनि अभ्ररागे, जी० ३ प्रति० ४ अधि० । ज० । प्रज्ञा० ।

संझा-सन्ध्या-स्त्री०।' ङ-ञ-ण-नो व्यञ्जने" ॥ ८ । १ । २५ ॥ अनेनात्र नकारस्यानुस्वार । संझा । प्रा० । सायकाले,प्रज्ञा० १७ पद ४ उ० । जी० ।

संझागय-सन्ध्यागत-न० । यत्र नक्षत्रे सूर्योऽनन्तरं स्थास्यति तादृशे नक्षत्रे, आ० म० १ अ० । यत्र नक्षत्रे सूर्यस्तिष्ठति तस्माच्चतुर्दश पञ्चदशं वा नक्षत्रं सन्ध्यागतमित्यन्ये, विशे० । जीत० । पं० व० । नि० चू० । द० प० ।

संझाणुराग-सन्ध्यानुराग-पुं० । सन्ध्याभ्ररागे , "संझाणुरागवसणा वाउकुमारा मुणेयव्वा " प्रज्ञा० २ पद ।

संझापडिक्कमण-सन्ध्याप्रतिक्रमण-न०। प्रतिक्रमणभेदे,सेन०। सन्ध्याप्रतिक्रमणे षडावश्यकसूत्राणि कानीति ? प्रश्न , अत्रोत्तरम्—" नमो अरिहंताणमि " त्यादि सम्पूर्णनमस्कार. ' करेमि भंते ! सामाइअं ' इत्यादित ' अप्पाणं वोसिरामी ' त्यन्तं प्रथमं सामायिकाध्ययनम् ॥ १ ॥ 'लोगस्सउज्जोअगरे'त्यादित 'सिद्धा सिद्धिं मम दिसंतु' इत्यन्तं द्वितीयं चतुर्विंशतिस्तवाध्ययनम् ॥२॥ ' इच्छामि खमासमणो ! वंदिउं जाव णिज्जाए णिसीहियाए अणुजाणह मे मिउग्गहमि' त्यादि तृतीयं वन्दनकाध्ययनम् ॥ ३ ॥ ' चत्तारि मङ्गलं, इच्छामि पडिक्कमिउ जो मे देवसिओ , इच्छामि पडिक्कमिउं इरिआवहिआए० 'इच्छामि पडिक्कमिउं पगामसिज्जाए०' इत्यादि चतुर्थं प्रतिक्रमणाध्ययनम् ॥ ४ ॥ 'इच्छामि ठामि काउस्सग्गं' राइदेव० १७ । ५ इच्छामि ठामि काउस्सग्गं, जो मे देवसिओ अइआरो कओ काइओ वाइओ माणसिओ उस्सुत्तो उम्मग्गो अकप्पो अकरणिज्जो दुज्झाओ दुव्विचिंतिओ अणायारो अणिच्छिअव्वो असावगपाउग्गो नाणे दंसणे चरित्ताचरित्ते सुए सामाइए, तिण्हं गुत्तीणं, चउण्हं कसायाणं, पंचण्हमणुव्वयाणं, तिण्हं गुणव्वयाणं, चउण्हं सिक्खावयाणं, बारसविहस्स सावगधम्मस्स, जं खंडिअं जं विराहियं तस्स मिच्छामि दुक्कडं । राइदेव० ३ । १०-तस्स उत्तरीकरणेणं, पायच्छित्तकरणेणं, विसोहीकरणेणं, विसल्लीकरणेणं, पावाणं कम्माणं निग्घायणट्ठाए ठामि काउस्सग्गं ॥ १ ॥ अन्नत्थ ऊससिएणं नीससिएणं खासिएणं छीएणं जभाइएणं उड्डुएणं वायनिसग्गेणं भमलीए पित्तमुच्छाए ॥ १ ॥ सुहुमेहिं अंगसंचालेहिं, सुहुमेहिं खेलसंचालेहिं, सुहुमेहिं दिट्ठिसंचालेहिं ॥ २ ॥ एवमाइएहिं आगारेहिं अभग्गो, अविराहिओ, हुज्ज मे काउस्सग्गो ॥ ३ ॥ जाव अरिहंताणं भगवंताणं नमुक्कारेणं न पारेमि ॥ ४ ॥ ताव कायं ठाणेणं मोणेणं झाणेणं अप्पाणं वोसिरामि ॥ ५ ॥ सव्वलोए अरिहंतचेइआणं , करेमि काउस्सग्गं ॥ १ ॥ वंदणवत्तिआए पूअणवत्तिआए सक्कारवत्तिआए सम्माणवत्तिआए बोहिलाभवत्तिआए निरुवसग्गवत्तिआए ॥ २ ॥ सद्धाए मेहाए धिईए धारणाए अणुप्पेहाए वड्ढमाणीए ठामि काउस्सग्गं ॥ ३ ॥ अन्नत्थ० ।

"पुक्खरवरदीवड्ढे, धायइसंडे अ जंबुदीवे अ ।
भरहेरवयविदेहे, धम्माइगरे नमंसामि ॥ १ ॥
तमतिमिरपडलविद्धं-सणस्स सुरगणनरिंदमहिअस्स ।
सीमाधरस्स वंदे, पप्फोडिअमोहजालस्स ॥ २ ॥
जाईजरामरणसोगपणासणस्स,
कल्लाणपुक्खलविसालसुहावहस्स ।
को देवदाणवनरिंदगणच्चिअस्स,
धम्मस्स सारमुवलब्भ करे पमायं ॥ ३ ॥
सिद्धे भो ! पयओ णमो जिणमए नंदी सया संजमे ।
देवं नायसुवण्णकिन्नरगणस्सब्भूअभावच्चिए ॥
लोगो जत्थ पइट्ठिओ जगमिणं तेलुक्कमच्चासुरं ।
धम्मो वड्ढउ सासओ विजयओ धम्मुत्तरं वड्ढउ ॥ ४ ॥
'सुअस्स भगवओ करेमि काउस्सग्गं वंदणवत्तिआए० ।
सिद्धाणं बुद्धाणं, पारगयाणं परंपरगयाणं ।
लोअग्गमुवगयाणं, नमो सया सव्वसिद्धाणं ॥ १ ॥
जो देवाण वि देवो, जं देवा पंजली नमंसन्ति ।
तं देवदेवमहिअं, सिरसा वंदे महावीरं ॥ २ ॥
इक्को वि नमुक्कारो, जिणवरवसहस्स वद्धमाणस्स ।
संसारसागराओ, तारेइ नरं व नारिं वा ॥ ३ ॥
उज्जिंतसेलसिहरे, दिक्खा नाणं निसीहिआ जस्स ।
तं धम्मचक्कवट्टिं, अरिट्ठनेमिं नमंसामि ॥ ४ ॥

चत्तारि अट्ठ दस दो य, वंदिया जिणवरा ! चउव्वीसं।
परमट्ठनिट्ठिअट्ठा, सिद्धा ! सिद्धिं मम दिसंतु ॥ ५ ॥
वेआवच्चगराणं संतिगराणं इच्छामि खमासमणो अब्भुट्ठिओ मि अब्भिंतरदेवसिअं खामेउं ? इच्छं खामेमि देवसिअं जं किंचि अपत्तिअं परपत्तिअं भत्ते पाणे विणए वेआवच्चे आलावे संलावे उच्चासणे समासणे अंतरभासाए उवरिभासाए जं किंचि मज्झ विणयपरिहीणं सुहुमं वा बायरं वा तुब्भे जाणह अहं न जाणामि तस्स मिच्छा मि दुक्कडं।' इच्छामि खमासमणो ! पिअं च मे जं भे' इत्यादि पञ्चमं कायोत्सर्गाध्ययनम् ॥ ५ ॥ 'उग्गए सूरे नमुक्कारसहिअं पच्चक्खामी' त्यादि सर्वाण्यपि प्रत्याख्यानसूत्राणि षष्ठं प्रत्याख्यानाध्ययनम् ॥ ६ ॥ च इमानि प्रतिक्रमणे षडावश्यकसूत्राणि परम्परया ज्ञेयानीति ॥ ५१ ॥ सेन० ३ उल्ला०।

संझाराइ-सन्ध्यारात्रि-स्त्री०। सन्ध्या येन राजते-शोभते दीप्यतेऽनेन सन्ध्यारात्रि.। रजन्याम् , नि० चू० १६ उ०।

संझाविगम-सन्ध्याविगम-पुं०। रात्रौ, नि० चू० १६ उ०।

संझाविराग-सन्ध्याविराग-पुं० । सन्ध्यारूपो विरुद्धस्तिभिररूपत्वाद् रागः संन्ध्याविराग।संध्यासमये,जी० ३ प्रति० ४ अधि०।

संटंक-संटङ्क-पुं०। प्रबन्धसम्बन्धे, आचा० १ श्रु० २ अ० १ उ०। विशे०।

संठवण-संस्थापन-न०। संस्करणे , विशे० । सूत्र०।

संठवणा-संस्थापना-स्त्री० । संस्कारे, पं० व० २ द्वार । वसतेः संस्कारकरणे,ध०। तस्यामपि नियुक्ता भणन्ति—वयमकुशलाः संस्थापनाकर्मणि कर्तव्ये सप्राभृतिकायामपि वसतौ कारणत स्थिता स्वकीयमुपकरणं प्रयत्नेन संरक्षन्ति यावत्प्राभृतिका क्रियते तावदेकस्मिन् पार्श्वे तिष्ठन्ति। ध० ३ अधि०। पुनरपि योगोत्क्षेपे,पं०चू० ४ कल्प।

संठ(ठा)विअ-संस्थापित-त्रि० । " वाऽव्ययोत्खातादावदात "॥ ८। १ ।६७॥ इत्याकारस्याऽकार.। संस्थाप्रापिते,प्रा०।

संठवित्तए-संस्थापयितुम्-अव्य० । गृहस्थभावेन द्रव्यलिङ्गाच्च्यावयितुमित्यर्थे, सूत्र० १ श्रु० २ अ० १ उ०।

संठाण-संस्थान-न० । संतिष्ठतेऽनेन रूपेण पुद्गलात्मकं वस्त्विति संस्थानम् । उत्त० १ अ० । आकारविशेषे, मुखवृत्त्या पुद्गलरचनाकारे, आव०४ अ०। दर्श०। अत्यद्भुते रचनाविशेषे, आ० म० १ अ०। विशे० । स० । औ०। स्था०। अनु०। चं० प्र०। अनु०। भ०।

आकृतिविशेषा संस्थानानि तानि च जीवाजीवसम्बन्धित्वेन द्विधा भवन्ति तत्रेहाजीवसम्बन्धीनि तावदाह—

कति णं भंते ! संठाणा पण्णत्ता ? , गोयमा ! छ संठाणा पण्णत्ता, तं जहा—परिमंडले वट्टे तंसे चउरंसे आयते अणित्थंथे। परिमंडला णं भंते ! संठाणा दव्वट्ठयाए किं संखेज्जा असंखेज्जा अणंता ? , गोयमा ! नो संखेज्जा नो असंखेज्जा अणंता। वट्टा णं भंते ! संठाणा एवं चेव एवं०जाव अणित्थंथा एवं पएसट्ठाए वि। (७२४+)

'कइ णं भंते ' इत्यादि, संस्थानानि—स्कन्धाकारा ' अणित्थंथे ' त्ति इत्थम्—अनेन प्रकारेण परिमण्डलादिना तिष्ठतीति इत्थंस्थं न इत्थंस्थमनित्थंस्थं , परिमण्डलादिव्यतिरिक्तमित्यर्थ. , ' परिमण्डला णं भंते ! संठाण ' त्ति परिमण्डलसंस्थानवन्ति भदन्त ! द्रव्याणीत्यर्थ. ' दव्वट्ठयाए ' त्ति द्रव्यरूपमर्थमाश्रित्येत्यर्थः ' पएसट्ठयाए ' त्ति प्रदेशरूपमर्थमाश्रित्येत्यर्थः। भ० २५ श० ३ उ०। ( एतेषामल्पबहुत्वम् 'अप्पाबहुय' शब्दे प्रथमभागे ६६६२ पृष्ठे गतम्। )

रत्नप्रभाद्यपेक्षया संस्थानप्ररूपणामाह—

कति णं भंते ! संठाणा पन्नत्ता ?, गोयमा ! पंच संठाणा पण्णत्ता। परिमण्डले ०जाव आयते। परिमण्डला णं भंते ! संठाणा किं संखेज्जा असंखेज्जा अणंता ?, गोयमा ! नो संखेज्जा, नो असंखेज्जा. अणंता। वट्टा णं भंते संठाणा किं संखेज्जा० ? एवं चेव एवं ०जाव आयता। इमीसे णं भंते ! रयणप्पभाए पुढवीए परिमण्डला संठाणा किं संखेज्जा असंखेज्जा अणंता ? , गोयमा ! नो संखेज्जा नो असंखेज्जा अणंता। वट्टा णं भंते ! संठाणा किं संखेज्जा असंखेज्जा एवं चेव, एवं ०जाव आयया। सक्करप्पभाए णं भंते ! पुढवीए परिमण्डला संठाणा एवं चेव एवं०जाव आयया। एवं०जाव अहे सत्तमाए। सोहम्मे णं भंते ! कप्पे परिमण्डला संठाणा एवं चेव एवं ०जाव अच्चुए। गेविज्जगविमाणा णं भंते ! परिमंडलसंठाणा एवं चेव एवं अणुत्तरविमाणेसु वि , एवं ईसिपब्भाराए वि ॥ जत्थ णं भंते ! एगे परिमंडले संठाणे जवमज्झे तत्थ परिमंडला संठाणा किं संखेज्जा असंखेज्जा अणंता ?, गोयमा ! नो संखेज्जा नो असंखेज्जा, अणंता। वट्टा णं भंते ! संठाणा किं संखेज्जा असंखेज्जा चेव, एवं ०जाव आयता। जत्थ णं भंते ! एगे वट्टे संठाणे जवमज्झे तत्थ परिमंडला संठाणा एवं चेव वट्टा संठाणा एवं चेव, एवं ०जाव आयता। एवं एक्केक्केणं संठाणेणं पंच वि चारेयव्वा। जत्थ णं भंते ! इमीसे रयणप्पभाए पुढवीए एगे परिमंडले संठाणे जवमज्झे तत्थ णं परिमंडला संठाणा किं संखेज्जा०। पुच्छा , गोयमा ! नो संखेज्जा नो असंखेज्जा अणंता। वट्टा णं भंते ! संठाणा किं संखेज्जा० पुच्छा गोयमा ! नो संखेज्जा नो असंखेज्जा अणंता, एवं चेव०जाव आयता। जत्थ णं भंते ! इमीसे रयणप्पभाए पुढवीए एगे वट्टे संठाणे जवमज्झे तत्थ ण परिमंडला संठाणा किं संखेज्जा० ? पुच्छा गोयमा ! नो संखेज्जा नो असंखेज्जा अणंता ।

वट्टा संठाणा एवं चेव० जाव आयता । एवं पुणरवि एक्के क्केणं संठाणेणं पंच वि चारेयव्वा जहेव हेट्ठिल्ला०जाव आ यता णं एवं ० जाव अहेसत्तमाए एवं कप्पेसु वि० जाव ईसीपब्भाराए पुढवीए । ( सू० ७२५ )

'कइ ण' मित्यादि, इह षष्ठसंस्थानस्य तदन्यसंयोगनिष्पन्नत्वेनाविवक्षणात् पञ्चेत्युक्तम्। अथ प्रकारान्तरेण तान्याह—'जत्थ ण' मित्यादि,किल सर्वोऽप्ययं लोकः परिमण्डलसंस्थानद्रव्यैर्निरन्तरं व्याप्तस्तत्र च कल्पनया यानि यानि तुल्यप्रदेशावगाहीनि तुल्यप्रदेशानि तुल्यवर्णादिपर्यवाणि च परिमण्डलसंस्थानवन्ति द्रव्याणि तानि तान्येकपङ्क्त्यां स्थाप्यन्ते , एकमेकैकजातीयेष्वेकैकपङ्क्त्यामौत्तराधर्येण निक्षिप्यमाणेष्वल्पबहुत्वभावाद् यवाकार परिमण्डलसंस्थानसमुदायो भवति। तत्र किल जघन्यप्रदेशिकद्रव्याणां वस्तुस्वभावेन स्तोकत्वादाद्या पङ्क्तिर्ह्रस्वा तत. शेषाणां क्रमेण बहुबहुतरत्वाद्दीर्घदीर्घतरा, तत. परेषा क्रमेणाल्पतरत्वात् ह्रस्वह्रस्वतरैव यावदुत्कृष्टप्रदेशानामल्पतमत्वेन ह्रस्वतमेत्येवं तुल्यैस्तदन्यैश्च परिमण्डलद्रव्यैर्यवाकारं क्षेत्रं निष्पाद्यत इति इदमेवाश्रित्योच्यते-'जत्थ' त्ति यत्र देशे 'एगे' त्ति एकं'परिमंडले'त्ति परिमण्डलं-संस्थानं वर्त्तेत इति गम्यते,'जवमज्झे' त्ति यवस्येव मध्यं-मध्यभागो यस्य विपुलत्वसाधर्म्यात्तद् यवमध्यं; यवाकारमित्यर्थ. । तत्र यवमध्ये परिमण्डलसंस्थानानियवाकारनिर्वर्त्तकपरिमण्डलसंस्थानव्यतिरिक्तानि किं संख्यातानि ? इत्यादि प्रश्न., उत्तरं त्वनन्तानि यवाकारनिर्वर्त्तकेभ्यस्तेपामनन्तगुणत्वात् तदपेक्षया च यवाकारनिष्पादकानामनन्तगुणहीनत्वादिति। पूर्वोक्तमेव संस्थानप्ररूपणां रत्नप्रभादिभेदेनाह—' जत्थे ' त्यादि सूत्रसिद्धम् ।

अथ संस्थानान्येव प्रदेशतोऽवगाहतश्च निरूपयन्नाह—

वट्टे णं भंते ! संठाणे कतिपदेसिए कतिपदेसोगाढे पण्णत्ता ?, गोयमा ! वट्टे संठाणे दुविहे पण्णत्ता , घणवट्टे य पयरवट्टे य। तत्थ णं जे से पयरवट्टे से दुविहे पण्णत्ता, तं जहा—ओयपएसे य जुम्मापएसे य। तत्थ णं जे से ओय पएसिए से जहन्नेणं पंचपएसिए पंचपएसोगाढे उक्कोसेणं अणंतपएसिए असंखेज्जपएसोगाढे । तत्थ णं जे से जुम्मपएसिए से जहन्नेणं बारसपएसिए बारसपएसोगाढे उक्कोसेणं अणंतपएसिए असंखेज्जपएसोगाढे । तत्थ णं जे से घणवट्टे से दुविहे पण्णत्ता, तं जहा—ओयपएसिए य जुम्मपएसिए य। तत्थ णं जे से ओयपएसिए से जह० सत्तपएसिए सत्तपएसोगाढे प० , उक्कोसेणं अणंतपएसिए असंखेज्जपएसोगाढे पण्णत्ता, तत्थ णं जे से जुम्मपएसिए से जहन्नेणं बत्तीसपएसिए बत्तीसपएसोगाढे प० , उक्कोसेणं अणंतपएसिए असंखेज्जपएसोगाढे ।। तंसे णं भंते ! संठाणे कतिपदेसिए कतिपदेसोगाढे प० ?, गोयमा ! तंसे णं संठाणे दुविहे पण्णत्ते तं जहा—घणतंसे य पयरतंसे य । तत्थ णं जे से पयरतंसे से दुविहे पण्णत्ता, तं जहा—ओयपएसिए य जुम्मपएसिए य। तत्थ णं जे से ओयपएसिए से जह० तिपएसिए तिपएसोगाढे प० उक्कोसेणं अणंतपएसिए असंखेज्जपएसोगाढे। तत्थ णं जे से जुम्मपएसिए से जहन्नेणं छप्पएसिए छप्पएसोगाढे प०, उक्कोसेणं अणंतपएसिए असंखेज्जपएसोगाढे प० । तत्थ णं जे से घणतंसे से दुविहे प०, तं जहा—ओयपएसिए जुम्मपएसिएय। तत्थ णं जे से ओयपएसिए से जहन्नेणं पणतीसपएसिए पणतीसपएसोगाढे उक्कोसेणं अणंतपएसिए तं चेव। तत्थ णं जे से जुम्मपएसिए से जहन्नेणं चउप्पएसिए चउप्पएसोगाढे प० उक्को० अणंतपएसिए तं चेव ।। चउरंसे णं भंते ! संठाणे कतिपदेसिए ? पुच्छा, गोयमा ! चउरंसे संठाणे दुविहे प० भेदो जहेव वट्टस्स० जाव तत्थ णं जे से ओयपएसिए से जहन्नेणं नवपएसिए नवपएसोगाढे प०,उक्कोसेणं अणंतपएसिए असंखेज्जपएसोगाढे प०। तत्थ णं जे से जुम्मपदेसिए से जहन्नेणं चउपएसिए चउपएसोगाढे प०, उक्कोसेणं अणंतपएसिए तं चेव । तत्थ णं जे से घणचउरंसे से दुविहे पण्णत्ता, तं जहा—ओयपएसिए जुम्मपएसिए य। तत्थ णं जे से ओयपएसिए से जहन्नेणं सत्तावीसइपएसिए सत्तावीसतिपएसोगाढे, उक्कोसेणं अणंतपएसिए तहेव। तत्थ जे से जुम्मपएसिए से जहन्नेणं अट्ठपएसिए अट्ठपएसोगाढे पण्णत्ता, उक्को०अणंतपएसिए तहेव। आयए णं भंते ! संठाणे कतिपदेसिए कतिपएसोगाढे प० ?, गोयमा ! आयए णं संठाणे तिविहे पण्णत्ता, तं जहा—सेढिआयते पयरायते घणायते । तत्थ णं जे से सेढिआयते से दुविहे पण्णत्ता, तं जहा—ओयपएसिए य जुम्मपएसिए य । तत्थ णं जे ओयप० से जह० तिपएसिए तिपएसोगाढे उक्को० अणंतपए० तं चेव, तत्थ णं जे से जुम्मपएसे से जह० दुपएसिए दुपएसोगाढे, उक्कोसेणं अणंता तहेव । तत्थ णं जे से पयरायते से दुविहे प०, तं जहा—ओयपएसिए य जुम्मपएसिए य । तत्थ णं जे से ओयपएसिए से जहन्नेणं पन्नरसपएसिए पन्नरसपएसोगाढे, उक्कोसेणं अणंता तहेव। तत्थ णं जे से जुम्मपएसिए से जहन्नेणं छप्पएसिए छप्पएसोगाढे उक्कोसेणं अणंता तहेव । तत्थ णं जे से घणायते से दुविहे प० तं जहा—ओयपएसिए जुम्मपएसिए । तत्थ णं जे से ओयपएसिए से जहन्नेणं पणयालीसपएसिए पणयालीसपएसोगाढे उक्कोसेणं अणंत०तहेव। तत्थ णं जे से जुम्मपएसिए से जह ०बारसपएसिए बारसपएसोगाढे उक्कोसेणं अणंत० तहेव ।। परिमंडले णं भंते ! संठा-

णे कतिपदेसिए ?, पुच्छा, गोयमा ! परिमंडले णं संठाणे दुविहे पण्णत्ते, तं जहा—घणपरिमंडले य, पयरपरिमंडले य, तत्थ णं जे से पयरपरिमंडले से जहन्नेणं वीसतिपदेसिए वीसइपएसोगाढे, उक्कोसे णं अणंतपदे०तहेव। तत्थ णं जे से घणपरिमंडले से जहन्नेणं चत्तालीसतिपदेसिए चत्तालीसपएसोगाढे पण्णत्ता, उक्कोसेणं अणंतपएसिए असंखेज्जपएसोगाढे पन्नत्ता। ( सू०-७२६ )

'वट्टे ण' मित्यादि अथ परिमण्डलं पूर्वम्—आदावुक्तम् इह तु कस्मात्तत्यागेन वृत्तादिना क्रमेण तानि निरूप्यन्ते ?, उच्यते—वृत्तादीनि चत्वार्यपि प्रत्येकं समसंख्यविषमसंख्यप्रदेशान्यतस्तत्साधर्म्यात्तेषां पूर्वमुपन्यास. परिमण्डलस्य पुनरेतदभावात्पश्चाद् विचित्रत्वाद्वा सूत्रगतेरिति, 'घणवट्टे' त्ति सर्वत्र सम घनवृत्तं मोदकवत् 'पयरवट्टे' त्ति बाहल्यतो हीनं तदेव प्रतरवृत्तं मण्डलवत्, 'ओयपएसिए' त्ति विषमसंख्यप्रदेशनिष्पन्नं 'जुम्मपएसिए' त्ति समसंख्यप्रदेशनिष्पन्नं, 'तत्थ णं जे से ओयपएसिए पयरवट्टे से जहन्नेणं पचपएसिए' इत्यादि, इत्थं पञ्चप्रदेशावगाढं, पञ्चाणुकात्मकमित्यर्थ., उत्कर्षेणानन्तप्रदेशिकमसंख्येयप्रदेशावगाढं . लोकस्याप्यसंख्येयप्रदेशात्मकत्वात्, 'जे से जुम्मपएसे से जहन्नेण वारसपएसिए' इति एतस्य स्थापना 'जे से ओयपएसिए घणवट्टे से जहन्नेण सत्तपएसिए सत्तपएसोगाढे' त्ति एतस्य स्थापना—अस्य मध्यपरमाणोरुपर्येक. स्थापितोऽधश्चैक इत्येवं सप्तप्रदेशिकं घनवृत्तं भवतीति 'जे से जुम्मपएसिए से जहन्नेणं बत्तीसइपएसिए' इत्यादि एतस्य स्थापना—अस्य चोपरीदश एव प्रतरः स्थाप्यस्तत. सर्वे चतुर्विंशतिस्तत. प्रतरद्वयस्य मध्याणूना चतुर्णामुपर्यन्ये चत्वारोऽधश्चेत्येवं द्वात्रिंशदिति त्र्यस्रसूत्रे—'जे से ओयपएसिए से जहन्नेण तिपएसिए' त्ति अस्य स्थापना-'जे से जुम्मपएसिए से जहन्नेणं छप्पएसिए' त्ति अस्य स्थापना-'जे से ओयपएसिए से जहन्नेणं पणतीसपएसिए' त्ति,अस्य स्थापना-अस्य पञ्चदशप्रदेशिकस्य प्रतरस्योपरि दशप्रदेशिक. एतस्याप्युपरि षट्प्रदेशिकः एतस्याप्युपरि त्रिप्रदेशिक. प्रतर एतस्याप्युपर्येक प्रदेशो दीयते इत्येव पञ्चत्रिंशत् प्रदेशा इति। 'जे से जुम्मपएसिए से जहन्नेणं चउप्पएसिए' त्ति, अस्य स्थापना-अत्रैकस्योपरि प्रदेशो दीयत इत्येवं चत्वार इति। चतुरस्रसूत्रे-'जे से ओयपएसिए से जहन्नेण नवपएसिए' त्ति एव 'जे से जुम्मपएसिए से जहन्नेण चउप्पएसिए' त्ति, एवं 'जे से ओयपएसिए से जहन्नेण सत्तावीसपएसिए' त्ति, एवमेतस्य नवप्रदेशिकप्रतरस्योपर्यन्यदपि प्रतरद्वयं स्थाप्यत इत्येवं सप्तविंशतिप्रदेशिकं चतुरस्रं भवतीति 'जे से जुम्मपएसिए से जहन्नेणं अट्ठपएसिए' इत्येवमस्योपर्यन्यश्चतुष्प्रदेशिकप्रतरो दीयत इत्येवमष्टप्रदेशिकं स्यादिति। आयतसूत्रे—'सेढिआयए' त्ति श्रेण्यायतं प्रदेशश्रेणीरूप प्रतरायत—कृतविष्कम्भश्रेणीद्वयादिरूप घनायतं—बाहल्यविष्कम्भोपेतमनेकश्रेणीरूपम्, तत्र श्रेण्यायतमोज प्रदेशिकं जघन्यं त्रिप्रदेशिक, तच्चैवम्—१ तदेव युग्मप्रदेशिकं द्विपदेशिकं तच्चैवं 'जे से ओयपएसिए से जहन्नेण पन्नरसपएसिए' त्ति, एव तदेव युग्मप्रदेशिक जघन्य षट्प्रदेशिकम्। तच्चैवम्-एवं घनायतमोजःप्रदेशिकं जघन्यं पञ्चचत्वारिंशत्प्रदेशिक तच्चैवम्-अस्योपर्यन्यत् प्रतरद्वयं स्थाप्यत इत्येवं पञ्चचत्वारिंशत्प्रदेशिक जघन्यमोजःप्रदेशिकं घनायत भवति। तदेव युग्मप्रदेशिक द्वादशप्रदेशिकम्। तच्चैवम्—एतस्य षट्प्रदेशिकस्योपरि षट्प्रदेशिक एवान्य प्रतर स्थाप्यते ततो द्वादशप्रदेशिकं भवतीति 'परिमंडलेणमि' त्यादि इह ओजोयुग्मभेदौ न स्त युग्मरूपत्वेनैकरूपत्वात्परिमण्डलस्येति तत्र प्रतरपरिमण्डल जघन्यतो विंशतिप्रदेशिकं भवति, तदेवं स्थापना-एतस्यैवोपरि विंशतिप्रदेशिकेऽन्यस्मिन् प्रतरे दत्ते चत्वारिंशत्प्रदेशिकं घनपरिमण्डल भवतीति॥ अनन्तरं परिमण्डलं प्ररूपितम्। भ० २५ श० ३ उ०। साङ्गोपाङ्गविचारे, ज० ३ वक्ष०। दर्श०। सू० प्र०। आ० म०। आ० चू०। परिमण्डलादिसंस्थानाना संख्येयासंख्येयत्वविचार' 'चरम' शब्दे तृतीयभागे ११३७ पृष्ठे गतः।)

संस्थानभेदानाह—

कइविहे णं भंते ! संठाणे पन्नत्ते ?, गोयमा ! छव्विहे संठाणे पण्णत्ता। तं जहा-समचउरंसे १ णिग्गोहपरिमण्डले२ साइए३ वामणे४ खुज्जे५ हुंडे६। णेरइया णं भंते ! किंसंठाणी पण्णत्ता ?, गोयमा ! हुंडसंठाणी पण्णत्ता, असुरकुमारा किंसंठाणी पण्णत्ता ? गोयमा !, समचउरंससंठाणसंठिया पण्णत्ता, एवं० जाव थणियकुमारा। पुढवी मसूरसंठाणा पण्णत्ता; आऊ थिबुयसंठाणा पन्नत्ता, तेऊ सूइकलावसंठाणा पन्नत्ता, वाऊ पडागासंठाणा पन्नत्ता, वणस्सई नाणासंठाणसंठिया पन्नत्ता, बेइंदियतेइंदियचउरिंदियसंमुच्छिमपंचेंदियतिरिक्खा हुंडसंठाणा पण्णत्ता, गब्भवक्कंतिया छव्विहसंठाणा संमुच्छिममणुस्सा हुंडसंठाणसंठिया पन्नत्ता, गब्भवक्कंतियाणं मणुस्साणं छव्विहा संठाणा पण्णत्ता, जहा असुरकुमारा तहा वाणमंतरजोइसियवेमाणिया वि। [ सू०-१५५+ ]

'कइविहे' ण 'भंते ! संठाणे' त्यादि, तत्र मानोन्मानप्रमाणानि अन्यूनान्यनतिरिक्तानि अङ्गोपाङ्गानि च यस्मिन् शरीरसंस्थाने तत्समचतुरस्रसंस्थान, तथा नाभित उपरि सर्वावयवाश्चतुरस्रा-लक्षणाऽविसंवादिनोऽधस्तु तदनुरूपं यत्र भवति तन्न्यग्रोधसंस्थानम्, तथा नाभितोऽध सर्वावयवाश्चतुरस्रा लक्षणाविसंवादिनो यस्योपरि च यत्तदनुरूपं न भवति तत्सादिसंस्थानम्, तथा ग्रीवाहस्तपादाश्च समचतुरस्रा लक्षणयुक्ता यत्र संक्षिप्तं विकृतं च मध्ये कोष्ठ तत् कुब्जसंस्थानम्, तथा यल्लक्षणयुक्त कोष्ठ चतुरस्रलक्षणोपेतं ग्रीवाद्यवयवहस्तपाद च तद्वामनम्, तथा यत्र हस्तपादाद्यवयवा बहुप्राया प्रमाणविसंवादिनश्च तद्धुण्डमित्युच्यते। स० १५५ सम०। ('धम्म' शब्दे चतुर्थभागे २६७६ पृष्ठे गता वक्तव्यता।) (पृथिवीकायिकादीना संस्थानानि पृथिव्यादिषु शब्देषु।)

कृतयुग्मादिभेदेन संस्थानमाह—

परिमंडले णं भंते ! संठाणे दव्वट्ठयाए किं कडजुम्मे

तेओए दावरजुम्मे कलियोए ?, गोयमा ! नो कडजुम्मे णो तेयोए णो दावरजुम्मे, कलियोए । वट्टे णं भंते ! संठाणे दव्वट्ठयाए एवं चेव एवं० जाव आयते । परिमंडला णं भंते ! संठाणा दव्वट्ठयाए किं कडजुम्मा तेयोया दावरजुम्मा कलियोगा पुच्छा, गोयमा ! ओघादेसेणं सिय कडजुम्मा सिय तेओगा सिय दावरजुम्मा सिय कलियोगा, विहाणादेसेणं नो कडजुम्मा नो तेओगा नो दावरजुम्मा, कलिओगा, एवं० जाव आयता ॥ परिमंडले णं भंते ! संठाणे पएसट्ठयाए किं कडजुम्मे ? पुच्छा, गोयमा ! सिय कडजुम्मे सिय तेयोगे सिय दावरजुम्मे सिय कलियोए, एवं० जाव आयते । परिमंडला णं भंते ! संठाणा पएसट्ठयाए किं कडजुम्मा ? पुच्छा, गोयमा ! ओघादेसेणं सिय कडजुम्मा० जाव सिय कलियोगा, विहाणादेसेणं कडजुम्मा वि तेओगा वि दावरजुम्मा वि कलिओगा वि ४ एवं० जाव आयता ॥ परिमंडले णं भंते ! संठाणे किं कडजुम्मपएसोगाढे० जाव कलियोगपएसोगाढे?, गोयमा ! कडजुम्मपएसोगाढे, णो तेयोगपएसोगाढे नो दावरजुम्मपएसोगाढे नो कलियोगपएसोगाढे ॥ वट्टे णं भंते ! संठाणे किं कडजुम्मे ? पुच्छा, गोयमा ! सिय कडजुम्मपदेसोगाढे सिय तेयोगपएसोगाढे नो दावरजुम्मपएसोगाढे, सिय कलियोगपएसोगाढे ॥ तं से णं भंते ! संठाणे पुच्छा, गोयमा ! सिय कडजुम्मपएसोगाढे सिय तेयोगपएसोगाढे सिय दावरजुम्मपदेसोगाढे, नो कलिओगपएसोगाढे । चतुरंसे णं भंते ! संठाणे जहा वट्टे तहा चउरंसे वि । आयए णं भंते ! पुच्छा, गोयमा ! सिय कडजुम्मपएसोगाढे० जाव सिय कलिओगपएसोगाढे । परिमंडला णं भंते ! संठाणा किं कडजुम्मपएसोगाढा तेयोगपएसोगाढा ? पुच्छा, गोयमा ! ओघादेसेण वि विहाणदेसेण वि कडजुम्मपएसोगाढा, णो तेयोगपएसोगाढा, नो दावरजुम्मपएसोगाढा, नो कलियोगपएसोगाढा । वट्टा णं भंते ! संठाणा किं कडजुम्मपएसोगाढा पुच्छा, गोयमा ! ओघादेसेणं कडजुम्मपएसोगाढा नो तेयोगपएसोगाढा नो दावरजुम्मपएसोगाढा नो कलियोगपएसोगाढा वि । तंसा णं भंते ! संठाणा किं कडजुम्मा पुच्छा, गोयमा ! ओघादेसेणं कडजुम्मपएसोगाढा णो तेयोगपएसोगाढा नो दावरजुम्मपएसोगाढा नो कलियोगपएसोगाढा, विहाणादेसेणं कडजुम्मपएसोगाढा तेयोगपएसोगाढा नो दावरजुम्मपएसोगाढा नो कलियोगपएसोगाढा । चउरंसा जहा वट्टा । आयया णं भंते ! संठाणा पुच्छा, गोयमा ! ओघादेसेणं कडजुम्मपएसोगाढा नो तेयोगपएसोगाढा नो दावरजुम्मपएसोगाढा नो कलिओगपएसोगाढा, विहाणादेसेणं कडजुम्मपएसोगाढा वि० जाव कलिओगपएसोगाढा वि । परिमंडले णं भंते ! संठाणे किं कडजुम्मसमयठितीए तेयोगसमयठितीए दावरजुम्मसमयठितीए कलिओगसमयठितीए ?, गोयमा ! सिय कडजुम्मसमयठितीए० जाव सिय कलिओगसमयठितीए एवं० जाव आयते । परिमंडला णं भंते ! संठाणा किं कडजुम्मसमयठितीया पुच्छा, गोयमा ! ओघादेसेणं सिय कडजुम्मसमयठितीया० जाव सिय कलिओगसमयठितीया, विहाणादेसेणं कडजुम्मसमयठितीया वि० जाव कलिओगसमयठितीया वि, एवं० जाव आयता ॥ परिमंडले णं भंते ! संठाणे कालवन्नपज्जवेहिं किं कडजुम्मे० जाव सिय कलियोगे ?, गोयमा ! सिय कडजुम्मे एवं एएणं अभिलावेणं जहेव ठितीए एवं नीलवन्नपज्जवेहिं एवं पंचहिं वन्नेहिं दोहिं गंधेहिं पंचहिं रसेहिं अट्ठहिं फासेहिं ० जाव लुक्खफासपज्जवेहिं । ( सू०-७२७ )

'परिमंडले' त्यादि, परिमण्डलं द्रव्यार्थतयैकमेव द्रव्यं, न हि परिमण्डलस्यैकस्य चतुष्कापहारोऽस्तीत्येकत्वचिन्तायां न कृतयुग्मादिव्यपदेशः, किन्तु—कल्योजव्यपदेश एव, यदा तु पृथक्त्वचिन्ता तदा कदाचिदेतावन्ति तानि परिमण्डलानि भवन्ति यावतां चतुष्कापहारेण विच्छेदता भवति कदाचित्पुनस्त्रीण्यधिकानि भवन्ति कदाचिद् द्वे कदाचिद्कमधिकमित्यत एवाह—' परिमंडला णं भंते !' इत्यादि 'ओघादेसेणं' ति सामान्यतः, विहाणादेसेणं' ति विधानादेशो यत्समुदितानामप्येकैकस्यादेशनं तेन च कल्योजतैवेति । अथ प्रदेशार्थचिन्तां कुर्वन्नाह—' परिमंडलेण' मित्यादि, तत्र परिमण्डलं संस्थानं प्रदेशार्थतया विंशत्यादिषु क्षेत्रप्रदेशेषु ये प्रदेशा परिमण्डलसंस्थाननिष्पादका व्यवस्थितास्तदपेक्षयेत्यर्थः, ' सिय कडजुम्मे ' त्ति तत्प्रदेशानां चतुष्कापहारेणापह्रियमाणानां चतुष्पर्यवसितत्वे कृतयुग्मं तत्स्यात्, यदा त्रिपर्यवसानं तसदा त्र्योज, एवं द्वापरं कल्योजश्चेति, यस्मादेकत्रापि प्रदेशे बहवोऽणवोऽवगाहन्त इति । अथावगाहप्रदेशनिरूपणायाह—' परिमंले' त्यादि, ' कडजुम्मपएसोगाढे ' त्ति यस्मात् परिमण्डलं जघन्यतो विंशतिप्रदेशावगाढमुक्तं विंशतेश्च चतुष्कापहारे चतुष्पर्यवसितत्वं भवति, एवं परिमण्डलान्तरेऽपीति । ' वट्टेण ' मित्यादि, ' सिय कडजुम्मपएसोगाढे , त्ति यत्प्रतरवृत्तं द्वादशप्रदेशिकं यच्च घनवृत्तं द्वात्रिंशत्प्रदेशिकमुक्तं तच्चतुष्कापहारे चतुरग्रत्वात्कृतयुग्मप्रदेशावगाढं ' सिय तेओयपएसोगाढं ' त्ति यच्च घनवृत्तं सप्तप्रदेशिकमुक्तं तत्त्र्यग्रत्वात्त्र्योज प्रदेशावगाढं ' सिय कलिओयपएसोगाढं ' त्ति यत्प्रतरवृत्तं पञ्चप्रदेशिकमुक्तं तदेकाग्रत्वात्कल्योज प्रदेशावगाढमिति ॥ 'तंसेणं' मित्यादि, 'सिय कडजुम्मपएसोगाढे' त्ति यद् घनत्र्यस्रं चतुष्प्र-

वेशिकं 'तत्कृतयुग्मप्रदेशावगाढम्' 'सिय तेओगपएसोगाढे' त्ति यत् प्रतरत्र्यस्रं-त्रिप्रदेशावगाढं घनत्र्यस्रं च-पञ्चत्रिंशत्प्रदेशावगाढं तत्र्यग्रत्वात्त्र्योज प्रदेशावगाढं, 'सिय दावरजुम्मपएसोगाढे' त्ति यत्प्रतरत्र्यस्रं षट्प्रदेशिकमुक्तं तद् द्व्यग्रत्वाद् द्वापरप्रदेशावगाढमिति ॥ 'चउरंसेणं' मित्यादि, 'जहा वट्टे' त्ति 'सिय कडजुम्मपएसोगाढे सिय तेओयपएसोगाढे सिय कलिओयपएसोगाढे' इत्यर्थः,तत्र यत् प्रतरचतुरस्रं चतुष्प्रदेशिकं घनचतुरस्रं चाष्टप्रदेशिकमुक्तं तच्चतुरग्रत्वात्कृतयुग्मप्रदेशावगाढं, तथा यद् घनचतुरस्रं सप्तविंशतिप्रदेशिकमुक्तं तत्त्र्यग्रत्वात्त्र्योज प्रदेशावगाढं,तथा यत्प्रतरचतुरस्रं नवप्रदेशिकमुक्तं तदेकाग्रत्वात् कल्योज प्रदेशावगाढमिति । 'आयएण' मित्यादि 'सियकडजुम्मपएसोगाढे' त्ति यद् घनायतं द्वादशप्रदेशिकमुक्तं तत्कृतयुग्मप्रदेशावगाढं यावत्करणात्-'सिय तेओयपएसोगाढे सिय दावरजुम्मपएसोगाढे' त्ति दृश्यम्, तत्र च यत् श्रेण्यायतं त्रिप्रदेशावगाढं यच्च प्रतरायतं पञ्चदशप्रदेशिकमुक्तं तत्त्र्यग्रत्वात्त्र्योजःप्रदेशावगाढम्,यत्पुनः श्रेण्यायतं द्विप्रदेशिकं यच्च प्रतरायतं षट्प्रदेशिकं तद् द्व्यग्रत्वाद् द्वापरयुग्मप्रदेशावगाढं, 'सिय कलिओयपएसोगाढे' त्ति यद् घनायत पञ्चचत्वारिंशत्प्रदेशिकं तदेकाग्रत्वात्कल्योजःप्रदेशावगाढमिति । एवमेकत्वेन प्रदेशावगाढमाश्रित्य संस्थानानि,चिन्तितानि अथ पृथक्त्वेन तानि तथैव चिन्तयन्नाह- 'परिमंडलाण' मित्यादि 'ओघादेसेणं वि' त्ति सामान्यतः समस्तान्यपि परिमण्डलानीत्यर्थः 'विहाणादेसेण वि' त्ति भेदतः एकैकं परिमण्डलमित्यर्थः,कृतयुग्मप्रदेशावगाढान्येव विंशतिचत्वारिंशत्प्रभृतिप्रदेशावगाहित्वेनोक्तत्वात्तेषामिति। 'वट्टा णं' मित्यादि,'ओघादेसेणं कडजुम्मपएसोगाढे' त्ति वृत्तसंस्थानाः स्कन्धाः सामान्येन चिन्त्यमानाः कृतयुग्मप्रदेशावगाढाः सर्वेषा तत्प्रदेशानां मीलने चतुष्कापहारे तत्स्वभावत्वेन चतुष्पर्यवसितत्वात्, विधानादेशेन पुनर्द्वापरप्रदेशावगाढवर्जाः शेषावगाढा भवन्ति, यथा पूर्वोक्तेषु पञ्चसप्तादिषु जघन्यवृत्तभेदेषु चतुष्कापहारे द्वयावशिष्टता नास्ति एवं सर्वेष्वपि तेषु वस्तुस्वभावत्वाद्, अत एवाह-'विहाणादेसेणं' मित्यादि॥ एवं त्र्यस्रादिसंस्थानसूत्राण्यपि भावनीयानि ॥ एवं तावदेतेत्र एकत्वपृथक्त्वाभ्यां संस्थानानि चिन्तितानि । अथ ताभ्यामेव कालतो भावतश्च तानि चिन्तयन्नाह-'परिमंडलेणं' मित्यादि, अयमर्थः—परिमण्डलेन संस्थानेन परिणताः स्कन्धाः कियन्त कालं तिष्ठन्ति ? किं चतुष्कापहारेण तत्कालस्य समयाश्चतुरग्रा भवन्ति त्रिद्व्येकाग्रा वा ?, उच्यते, सर्वे संभवन्तीति । इह चैता वृद्धोक्ता संग्रहगाथा.—

"परिमंडले य १ वट्टे २, तंसे ३ चउरंस ४ आयए ५ चेव ।
घणपयरपढमवज्जं, ओयपएसे य जुम्मे य ॥ १ ॥
पंच य बारसयं खलु, सत्त य बत्तीसयं च वट्टम्मि ।
तियछक्कयपणतीसा, चउरो य हवंति तंसम्मि ॥ २ ॥
नव चेव तहा चउरो, सत्तावीसा य अट्ठ चउरंसे ।
तिगदुगपन्नरसं चे-व छ चेव य आयए होंति ॥ ३ ॥
पणयालीसा बारस, छब्भेया आययम्मि संठाणे ।
परिमंडलम्मि वीसा, चत्ता य भवे पएसग्गं ॥ ४ ॥
सव्वे वि आययम्मि,गेण्हसु परिमंडलम्मि कडजुम्मं ।
वज्जेज कलिं तसे, दावरजुम्मं च सेसेसु ॥ ५ ॥" इति ।

भ० २५ श० ३ उ०। (इन्द्रियाणां संस्थानम् । 'इंदिय' शब्दे द्वितीयभागे ५४८ पृष्ठे उक्तम् । ) ( नैरयिकाणां तथा-नरकपृथिवीनां संस्थानानि 'णरग' शब्दे चतुर्थभागे१६०७ पृष्ठे उक्तानि।) (शरीराणां संस्थानानि 'सरीर' शब्दे वक्ष्यते।) (वनस्पतिजीवानां संस्थानम् 'वणप्फइ' शब्दे षष्ठभागे उक्तम् । ) मृगशिरोनक्षत्रे च । सू० प्र० १२ पाहु० ।

संठाणकप्प-संस्थानकल्प-पुं०। संस्थानरूपे कल्पे, पं० भा० ।

दारं ।

दंसण-णाण-चरित्ते, तवे य तह भावणा तु समितीसु ।
छण्हं पि तिप्पगारं, सद्दह संठाणसंधणता ॥
सद्दहति सम्मदंसण, आयरति परूवणं च कुणसाणो ।
संठाणकप्प एसो, एवं सेसाण वी णेयं ॥
संठाणकप्प एसो, भणितो तु समासतो जिणक्खाओ ॥
पं० भा० ५ कल्प ।

संठाणगसंकमण-संस्थानकसंक्रमण-न० । पिपीलिकादीनामण्डादिसञ्चलने, सण्ठाणगसङ्कमणं पिपीलियगमकोडगादीणं भण्णति । नि० चू० १३ उ० ।

संठाणछक्क-संस्थानषट्क-न० । समचतुरस्रन्यग्रोधपरिमण्डलसादिवामनकुब्जहुण्डसंस्थानानां समुदाये, कर्म० २ कर्म० ।

संठाणऽज्झयण-संस्थानाध्ययन-न०। अनुत्तरौपपातिकदशाना पञ्चमाध्ययने, स्था० १० ठा० ३ उ० ।

संठाणणाम-संस्थाननामन्-न० । संतिष्ठते निर्शिष्टावयवरचनात्मिकया शरीराकृत्या जन्तवो भवन्ति येन तत्संस्थानं तदेव नाम संस्थाननाम । समचतुरस्रादिसंस्थानकारणे नामकर्मभेदे, कर्म० १ कर्म० । संस्थानमाकारविशेषस्तेष्वेव गृहीतसंघातितवद्देहेष्वौदारिकादिषु पुद्गलेषु संस्थानविशेषो यस्य कर्मण उदयात्प्रादुर्भवति तत्संस्थाननाम । पं० स० ३ द्वार । आ० । प्रव० । प्रज्ञा० ।

से किं तं संठाणणामे संठाणणामे पंचविहे पण्णत्ते, तं जहा-परिमंमलसंठाणणामे वट्टसंठाणणामे तंससंठाणणामे चउरंससंठाणणामे आयतसंठाणणामे से तं संठाणणामे । अनु० ।

संठाणणिव्वत्ति-संस्थाननिर्वृत्ति-स्त्री० । निर्वृत्तिभेदे, भ० १९ श० ८ उ० । ( सा च पञ्चविधा 'णिव्वत्ति' शब्दे चतुर्थभागे २१२० पृष्ठे दर्शिता । )

संठाणपरिणय-संस्थानपरिणत-पुं० । संस्थानरूपतया परिणते पुद्गले, प्रज्ञा० ।

संठाणपरिणया पंचविधा पण्णत्ता, तं जहा-परिमण्डलसंठाणपरिणया वट्टसंठाणपरिणया तंससंठाणपरिणया चउरंससंठाणपरिणया आययसंठाणपरिणया । प्रज्ञा० १ पद ।

संठाणपरिणाम-संस्थानपरिणाम-पुं० । संस्थानरूपे परिणामे, प्रज्ञा० २३ पद । ( अत्रत्यं सूत्रम् 'परिणाम' शब्दे पञ्चमभागे ५६५ पृष्ठे उक्तम् । )

संठाणविचय-संस्थानविचय-न० । संस्थानानि लोकद्वीपसमुद्राद्याकृतय' विचीयन्ते-निर्णीयन्ते पर्यालोच्यन्ते वा यस्मिंस्तत् संस्थानविचयम् । धर्मध्यानभेदे, ध० । संस्थानं लोकाकाशस्येव धर्माधर्मयोर्जीवानां समचतुरस्रादि, अजीवानां परिमण्डलादि, कालस्य मनुष्यक्षेत्राकृति । ध० ३ अधि० । औ० ।

संठावंत-संस्थापयत्-त्रि० । अविनाशयति, नि०चू० १७ उ० ।

संठिइ-संस्थिति-स्त्री० । व्यवस्थायाम्, चं० प्र० १ पाहु० । सू० प्र० । वृ० ।

संठिय-संस्थित-त्रि० । विशिष्टसंस्थानवति, आ० १ श्रु० १ अ० । उपा० । स्वप्रमाणतया स्थिते, सूत्र० १ श्रु० ३ अ० १ उ० । सम्यक् स्वप्रमाणतया स्थित' संस्थित इति व्युत्पत्तेः । जी० ३ प्रति० ४ अधि० । स्था० । तं० । औ० । व्यवस्थिते, भ० १ श० १ उ० । रा० । " संठियसुसिलिट्ठगूढगुप्फ " सम्यक् स्वप्रमाणतया स्थितौ संस्थितौ सुश्लिष्टौ मासलौ गूढौ गुल्फौ गुलुकौ येषां ते तथा । जी० ३ प्रति० ४ अधि० । तं० । रा० । प्रश्न० । संस्थाने, न० । आकारे, रा० । जं० । प्रश्न० ।

संड-पण्ड-न० । खण्डे, वने, जं० ३ वक्ष० ।

संडंस-सन्दंश-पुं० । अयस्कारोपकरणे, ओघ० । आ० म० ।

संडंसतुंड-सन्दंशतुण्ड-पुं० । सन्दंशाकारं तुण्डं येषां ते तथा । संदंशाकारमुखेषु पक्षिषु, उत्त० १६ अ० । प्रश्न० ।

संडप्पवायगुहा-षण्डप्रपातगुहा-स्त्री० । ' संडप्पवायगुहा ' शब्दे उक्तेऽर्थे, आ० क० १ अ० ।

संडामग-सन्दंशक-पुं० । अयस्कारस्य लोहग्रहणदण्डे, विशे० । आ० चू० । नि० चू० । दश० । जानुपुनापादरूपकोणत्रयाकलिते जानुसंदंशके, तत्र जिनकल्पिकस्योत्कुटुकनिविष्टस्य जानुसंदंशकादारभ्य पुताद्दष्टं च छादयित्वा स्कन्धस्योपरि यावता न प्राप्यते एतावत्तदीयकल्पस्य दैर्घ्यप्रमाणम्, अयं च संदंशक उच्यते । वृ० ३ उ० । नाशिकाके- शोत्पाटने, सूत्र० २ श्रु० २ अ० ।

संडिज्भ-सण्डिज्भ-न० । बालक्रीडास्थाने, दश० ५ अ० १ उ० ।

संडिल्ल-शाण्डिल्य-पुं० । नन्दिपुरप्रतिबद्धेषु जनपदेषु प्रज्ञा०१ पद । नन्दिपुरं नगरं शाण्डल्या शाण्डिल्या वा देश । प्रव० २७५ द्वार । कौशिकगोत्रे श्यामार्य्यशिष्ये, नं० । आर्य्यधर्म्मशिष्ये, कल्प० २ अधि० ८ क्षण । दशपुरनगरं स्वनामख्यात ब्राह्मणे, उत्त० १३ अ० ।

संडेय-पाण्डेय-पुं० । पण्ढपुत्रे, पण्डे च । औ० । ज्ञा० ।

संडेवग-मंडेवक-पुं० । पाषाणादेरन्यस्मिन् पाषाणादौ पादविक्षेपे, स च द्विविध -तद्यात ,इतरश्च । अन्यत आनीय तत्र निहितः । ओघ० । ( स एकैकस्त्रिविध इति ' णईसंतार ' शब्दे चतुर्थभागे १७४० पृष्ठे उक्तम् । )

संढ-षण्ढ-पुं० । तृतीयवेदोदयवर्तिनि महामोहकर्म्मणि, ध० ३ अधि० । 'सकारपच्चन्तरिओ ढकारो' सकारप्रत्यन्तरितो ढकार इति प्रतिपत्तव्यम् । प्राकृतशैल्या-सण्ढ संस्कृते तु षण्ढ इति भावः । वृ० ४ उ० । अनु० । ( ' पंडग ' शब्दे पञ्चमभागे एतल्लक्षणमुक्तम् । )

षण्ड-न० । खण्डे, वने, जं० ३ वक्ष० । आव० ।

संणद्ध-सन्नद्ध-त्रि० । कृतसन्नाहे, औ० । रा० । ' संणद्धबद्धवम्मियकवये ' संनद्धः सन्नाहबद्धः कशाबन्धनतो वर्मितो वर्मतया कृतोऽङ्के निवेशनात् कवच' कङ्कटो येन स तथा । भ० ७ श० ६ उ० । औ० । जी० ।

संणयपास-सन्नतपार्श्व-त्रि० । सन्नतावधोऽधो नमन्तौ पार्श्वौ प्रतीतौ येषा ते तथा । सन्नमितपार्श्वदेशे, प्रश्न० ४ आश्र० द्वार ।

संणाहपट्ट-संन्नाहपट्ट-पुं० । विहारे उपधेः शरीरेण सह बन्धनार्थे उपधौ, वृ० ३ उ० ।

संणिभ-सन्निभ-त्रि० । सदृशे, उत्त० १६ अ० ।

संण्णत्ति-संज्ञप्ति-स्त्री० । प्रज्ञप्तौ, प्रतिबोधने, स्था० १० ठा० ३ उ० ।

संत-शान्त-त्रि० । क्रोधाद्यबाधिते, यो० विं० । क्रोधविकाररहिते, द्वा० २० द्वा० । ज्ञा० । उत्त० । पं० व० । अन्तर्वृत्त्या ( कल्प० १ अधि० ६ क्षण ) उपशमवति, " न यत्र दुःखं न सुखं न रागो, न द्वेषमोहौ न च काचिदिच्छा । रसः स शान्तो विहितो मुनीना, सर्वेषु भावेषु सम' प्रदिष्टः " षो० १४ विव० । आचा० । इन्द्रियनोइन्द्रियैः शर्म प्राप्ते, आचा० १ श्रु० ६ अ० १ उ० ।। ( ' पसंतरस ' शब्दे पञ्चमभागेऽप्ययमुक्त । )

श्रान्त-त्रि० । सामान्येन श्रमार्ते, ज्ञा० १ श्रु० १ अ० । कल्प० । आ० चू० । देहत' खिन्ने, विशे० । ज्ञा० ।

सत्-त्रि० । विद्यमाने, सूत्र० २ श्रु० १ अ० । स्था० । स्वायत्ते, भ० ६ श० ३३ उ० । मुनौ, साधौ, विशे० । स्था० । आ० म० । नि० चू० । भ० । शोभने, सूत्र० १ श्रु० १० अ० । ज्ञा० । आव० । सौम्यमूर्त्तौ, ज्ञा० १ श्रु०५ अ० । प्रशस्ते, उत्पादव्ययध्रौव्ययुक्तं सदिति । सूत्र० १ श्रु० १ अ० १ उ० । आचा० ।

स्वान्त-न० । अन्त करणे, अष्ट० ३ अष्ट० ।

संतअसंतकज्जवाय-सदसद्कार्यवाद-पुं० । प्रागुत्पत्ते' कथंचिदसत' कथंचित्सत' कार्यस्योत्पादवादे, सूत्र० । (स च जैनसंमतः ' अत्तछट्ठ' शब्दे प्रथमभागे ५०२ पृष्ठे दर्शितः । )

संतकज्जवाय-सत्कार्यवाद-पुं० । प्रागुत्पत्ते' सत्कार्यमित्येवं वादे, सूत्र० १ श्रु १ अ १ उ० । आचा० । ( ' भूगोल ' शब्दे पञ्चमभागे व्याख्यातम् । )

संतकम्म-सत्कर्मन्-न० । उदयप्राप्तस्य कर्मणस्सत्तायाम्, क० प्र०।

सम्प्रति सत्ताभिधानावसरः, तत्र चेमेऽर्थाधिकाराः । तद्यथा—भेद., साद्यनादिप्ररूपणा, स्वामित्वं चेति । तत्र भेदनिरूपणार्थमाह—

मूलुत्तरपगइगयं, चउव्विहं संतकम्ममवि नेयं ।
धुवमद्धुवणाईयं, अट्ठण्हं मूलपगईणं ॥ १ ॥

'मूलुत्तर'त्ति सत्कर्म द्विधा-मूलप्रकृतिगतम् .उत्तरप्रकृतिगतं च । तत्र मूलप्रकृतिगतमष्टप्रकार, तद्यथा-ज्ञानावरणीयम्, दर्शनावरणीयमित्यादि । उत्तरप्रकृतिगतमष्टपञ्चाशदधिकशतप्रकारम् ,तद्यथा—मतिज्ञानावरणीयमित्यादि । पुनरेकैकं चतुर्विधम्, तद्यथा-प्रकृतिसत्कर्म , स्थितिसत्कर्म, अनुभागसत्कर्म , प्रदेशसत्कर्म च । तदेवमुक्तो भेद. । सम्प्रति साद्यनादिप्ररूपणार्थमाह- 'धुवे' त्यादि अष्टाना मूलप्रकृतीना सत्कर्म त्रिधा , तद्यथा—ध्रुवमध्रुवमनादि च । तत्रानादित्वं सदैव भावात् । ध्रुवाध्रुवताऽभव्यभव्यापेक्षया ।

सम्प्रत्युत्तरप्रकृतीना साद्यनादिप्ररूपणार्थमाह—

दिट्ठिदुगाउगछगगति, तणुचोद्दसगं च तित्थगरमुच्चं ।
दुविहं पढमकसाया, होंति चउद्धा तिहा सेसा ॥२॥

'दिट्ठिदुग' त्ति—दृष्टिद्विकं सम्यक्त्वसम्यङ्मिथ्यात्वरूप , आयूंषि चत्वारि, 'छगइ' त्ति मनुष्यद्विकं देवद्विक नरकद्विक च , तनुचतुर्दशकं वैक्रियसप्तकाहारकसप्तकरूपम् , तथा-तीर्थकरनामोच्चैर्गोत्र च , एतासामष्टाविंशतिप्रकृतीना सत्कर्म द्विविधं-द्विप्रकारं, तद्यथा—सादि, अध्रुवं च । साद्यध्रुवता चाध्रुवसत्कर्मत्वादवसेया । तथा—प्रथमकषाया अनन्तानुबन्धिन. सत्कर्मापेक्षया चतुर्विधा. , तद्यथा-सादयोऽनादयो ध्रुवा, अध्रुवाश्च । तथाहि—ते सम्यग्दृष्टिना प्रथममुद्वलिता. , ततो मिथ्यात्वं गतेन यदा भूयोऽपि मिथ्यात्वप्रत्ययेन बध्यन्ते , तदा सादय. । तत्स्थानमप्राप्तस्य पुनरनादय । ध्रुवाध्रुवता पूर्ववत् । तथा शेषा षड्विंशतिशतसङ्ख्या. प्रकृतयः सत्कर्मापेक्षया त्रिधा—त्रिप्रकारा , तद्यथा—अनादयो ध्रुवा अध्रुवाश्च । तत्रानादित्वं ध्रुवसत्कर्मत्वात् । ध्रुवाध्रुवता पूर्ववत् ।

तदेवं कृता साद्यनादिप्ररूपणा । सम्प्रति स्वामित्वं वक्तव्यम् । तच्च द्विधा—एकैकप्रकृतिगतं, प्रकृतिस्थानगतं च । तत्रैकैकप्रकृतिगतं स्वामित्वमभिधित्सुराह—

छउमत्थंता चउदस, दुचरमसमयम्मि अत्थि दो निद्दा ।
बद्धाणि ताव आउ-णि वेइयाइं ति जा कसिणं ॥३॥

'छउमत्थंत'त्ति-ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयरूपाश्चतुर्दश प्रकृतय छद्मस्थान्ता क्षीणकषायवीतरागछद्मस्थगुणस्थानकं यावत्सत्या भवन्तीत्यर्थ । परतस्तासामभाव. । एवमुत्तरत्राप्युक्तगुणस्थानकात्परतोऽभावो वेदितव्य. । तथा द्वे निद्रे क्षीणकषायवीतरागछद्मस्थगुणस्थानकद्विचरमसमय यावत्सत्यौ स्त. । आयूंषि चत्वार्यपि बद्धानि तावत्सन्ति यावत्कृत्स्नं-निरवशेष वेदितानि न भवन्ति ।

तिसु मिच्छत्तं नियमा, अट्ठसु ठाणेसु होइ भइयव्वं ।
आसाणे सम्मत्तं, नियमा सम्मं दससु भज्जं ॥४॥

'तिसु'त्ति त्रिषु गुणस्थानकेषु मिथ्यादृष्टिसासादनसम्यग्मिथ्यादृष्टिलक्षणेषु नियमादवश्यतया मिथ्यात्वं सत्-विद्यमानम् । शेषेषु पुनरष्टसु गुणस्थानकेषु उपशान्तमोहगुणस्थानकपर्यवसानेषु भाज्यम् । तथाहि-अविरतसम्यग्दृष्ट्यादिना क्षपिते न भवति,उपशान्ते तु भवति । क्षीणमोहादिषु पुनस्तस्यावश्यमभाव । तथा-आसादने सासादने सम्यक्त्वं नियमादस्ति । दशसु पुनर्गुणस्थानकेषु मिथ्यादृष्ट्याद्युपशान्तमोहगुणस्थानकपर्यवसानेषु भाज्य कदाचिद्भवति कदाचिन्न भवतीत्यर्थ. । तथाहि-मिथ्यादृष्टावभव्ये न भवति, भव्येऽपि कदाचिद्भवति कदाचिन्न । तथा-सम्यग्मिथ्यादृष्टिर्न्वं कियत्कालं सम्यक्त्वे उद्वलितेऽपि भवति, ततस्तत्रापि तद्भाज्यम् । अविरतादिषु पुन. क्षपकेषु न भवति, उपशमकेषु तु भवति, अतस्तत्रापि तद्भाज्यम् ।

बिइय-तइएसु मिस्सं, नियमा ठाणनवगम्मि भयणिज्जं ।
संजोयणाउ नियमा, दुसु पंचसु होइ भइयव्वं ॥ ५ ॥

'बिइय त्ति-द्वितीये तृतीये च गुणस्थानके मिश्र सम्यग्मिथ्यात्वं नियमादस्ति । यत सासादनो नियमादष्टाविंशतिसत्कर्मैव भवति, सम्यङ्मिथ्यादृष्टिश्च सम्यगमिथ्यात्वं विना न भवति,ततः सासादने सम्यग्मिथ्यादृष्टौ च सम्यगमिथ्यात्वमवश्यमस्ति । स्थाननवके-गुणस्थानकनवके मिथ्यादृष्ट्यविरतसम्यग्दृष्ट्यादौ उपशान्तगुणस्थानकान्ते भजनीय, कदाचिद् भवति कदाचिन्न भवति । भावना च प्रागुक्तप्रकारेण स्वयमेव कर्त्तव्या,सुगमत्वात् । तथा संयोजना अनन्तानुबन्धिनो द्वयोर्मिथ्यादृष्टिसासादनयोर्नियमाद्भवन्ति । यत एतावावश्यमनन्तानुबन्धिनो बध्नाति पञ्चसु पुनर्गुणस्थानकेषु सम्यङ्मिथ्यादृष्ट्यादिष्वप्रमत्तसंयतपर्यन्तेषु भजनीया । यदि उद्वलितास्ततो न सन्ति, इतरथा तु सन्तीत्यर्थ. ।

खवगानियट्टि अद्धा, संखिज्जा होंति अट्ठ वि कसाया ।
निरयतिरियतेरसगं, निद्दानिद्दातिगेणुवरिं ॥ ६ ॥

'खवग' त्ति—क्षपकस्य अनिवृत्तिबादरसम्परायाद्धाया यावत् सङ्ख्येया भागास्तावत् अष्टावपि अप्रत्याख्यानप्रत्याख्यानसंज्ञा. कषाया' सन्ति । परतो न विद्यन्ते , क्षीणत्वात् । उपशमश्रेणिमधिकृत्य पुनरुपशान्तमोहगुणस्थानक यावत् सन्तो वेदितव्या. । निरयतिर्यगेकान्तप्रायोग्य यन्नामत्रयोदशकं नरकद्विकतिर्यग्द्विकैकद्वित्रिचतुरिन्द्रियजातिस्थावरातपोद्योतसूक्ष्मसाधारणरूप निद्रानिद्रात्रिकेण सह संयुक्तं कषायाष्टकक्षयादुपरि स्थितिखण्डेषु सङ्ख्येषु गतेषु सत्सु युगपत्क्षयमेति । ततो यावन्न क्षय याति तावत् सत् , क्षयं च सति असत् । उपशमश्रेण्या पुनरेता षोडशापि प्रकृतय उपशान्तमोहगुणस्थानकं यावत् सत्यो वेदितव्या ।

अपुमित्थीए समं वा, हासच्छक्कं च पुरिससंजलणा ।
पत्तेगं तस्स कमा, तणुरागंता त्ति लोभो य ॥ ७ ॥

'अपुमित्थीए' त्ति—पूर्वोक्तप्रकृतिषोडशकक्षयादनन्तरं सङ्ख्येयेषु स्थितिखण्डेषु गतेषु सत्सु नपुंसकवेद क्षीयते , यावच्च न क्षीयते तावत् सत् । तत पुनरपि स्थितिखण्ड-

पु संख्येयेपु गतेपु सत्सु स्त्रीवेद क्षीयते, सोऽपि यावत्क्षयं न याति तावत्सन्; एवं स्त्रीवेदेन पुरुषवेदेन वा क्षपकश्रेणिं प्रतिपन्नस्य द्रष्टव्यम्। नपुंसकवेदेन प्रतिपन्नस्य तु स्त्रीवेदनपुंसकवेदौ युगपत्क्षयमुपगच्छतः, यावच्च न क्षयमुपगच्छतस्तावत्सन्तौ । उपशमश्रेणिमधिकृत्य पुनरुपशान्तमोहगुणस्थानकं यावत्सन्तौ । ततः स्त्रीवेदक्षयानन्तरं संख्येयेपु स्थितिखण्डेपु गतेपु सत्सु हास्यादिपट्कं युगपत्क्षयमुपयाति, ततः समयोनावलिकाद्विकातिक्रमे पुरुषवेद । एवं पुरुषवेदेन क्षपकश्रेणिं प्रतिपन्नस्य द्रष्टव्यम्। स्त्रीवेदेन नपुंसकवेदेन वा क्षपकश्रेणिं प्रतिपन्नस्य पुन पुरुषवेदो हास्यादिपट्कं च युगपत्क्षीयते। तत पुरुषवेदक्षयानन्तरं संख्येयेपु स्थितिखण्डेपु गतेपु सत्सु संज्वलनक्रोधः क्षयमुपयाति । ततः पुनरपि संख्येयेपु स्थितिखण्डेपु गतेपु सत्सु संज्वलनमानः । ततोऽपि संख्येयेपु स्थितिखण्डेपु गतेपु संज्वलनमाया। यावच्च हास्यादिप्रकृतय क्षयं नोपयान्ति तावत्—सत्यः। 'तणुरागंतो त्ति लोभो य' लोभ संज्वलनलोभो यावत्तनुरागान्तः सूक्ष्मसंपरायगुणस्थानकान्त तावत् सन् वेदितव्य, परतोऽसन्। उपशमश्रेणिमधिकृत्य पुनर्हास्यादिप्रकृतय सर्वा अपि उपशान्तमोहगुणस्थानकं यावत् सत्योऽवसेया ।

मणुयगइजाइतसवा-यरं च पज्जत्तसुभग आएज्जं ।
जसकित्ती तित्थयरं, वेयणिउच्चं च मणुयाणं ॥ ८ ॥
भवचरिमस्स मयम्मि उ, तम्मग्गिल्लसमयम्मि सेसा उ ।
आहारगतित्थयरा, भज्जा दुसु नऽऽत्थि तित्थयरं ॥९॥

'मणुयगई' त्यादि मनुष्यगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्तितीर्थकरान्यतरवेदनीयोच्चैर्गोत्रमनुष्यायूरूपा द्वादश प्रकृतयो भवचरमसमये सन्ति अयोगिकेवलिचरमसमयं यावत् विद्यन्ते परतोऽसत्य इत्यर्थः । शेषाः पुनरुक्तव्यतिरिक्ता सर्वा अपि त्र्यशीतिसंख्याः । 'तम्मग्गिल्लसमयम्मि' त्ति भवचरमसमयपाश्चात्यसमयेऽयोगिकेवलिद्विचरमसमये इत्यर्थः, सत्यो भवन्ति, चरमसमये त्वसत्यः । आहारकतीर्थकरनामनी सर्वेष्वपि गुणस्थानकेपु भाज्ये । द्वयोः-पुनर्गुणस्थानकयोः सासादनसम्यङ्मिथ्यादृष्टिरूपयोस्तीर्थकरनाम नियमान्न विद्यते,तीर्थकरनामसत्कर्मणः स्वभावत एवोक्तरूपे गुणस्थानकद्विके गमनासम्भवात् ।

तदेवमुक्तमेकैकप्रभृतिसत्कर्म । सम्प्रति प्रकृतिस्थानसत्कर्मप्ररूपणार्थमाह—

पढमचरिमाणमेगं, छन्नव चत्तारि बीयगे तिन्नि ।
वेयणियाउयगोए-सु दोन्नि एगो त्ति दो होंति ॥१०॥

'पढम' त्ति-प्रथमचरमयोर्ज्ञानावरणान्तराययोरेकैकं पञ्चप्रकृत्यात्मकं स्थानम्। तच्च क्षीणकषायचरमसमयं यावत्सत्, परतोऽसत् । तथा—द्वितीये दर्शनावरणीये त्रीणि प्रकृतिस्थानानि, तद्यथा—पट् नव चतस्रः । तत्र सकलदर्शनावरणीयप्रकृतिसमुदायो नव । ताश्च नव प्रकृतय उपशमश्रेणिमधिकृत्य उपशान्तमोहगुणस्थानकं यावत् सत्य । क्षपकश्रेणिमधिकृत्य पुनरनिवृत्तिबादरसम्परायाद्धाया यावत् संख्येयभागास्तावत्सत्य, परत स्त्यानर्द्धित्रिकक्षये पट्

भवन्ति । ताश्च तावत्सत्यो यावत् क्षीणकषायस्य द्विचरमसमयः । तस्मिन् द्विचरमसमये निद्राप्रचले व्यवच्छिद्येते । ततश्चरमसमये चतस्र एव सत्यः । ता अपि तत्र व्यवच्छिद्यन्ते। तथा वेदनीयायुर्गोत्राणां द्वे प्रकृतिस्थाने तद्यथा द्वे एका च । तत्र वेदनीयस्य यावदेकं न क्षीणं तावत् द्वे सत्यौ । एकस्मिंस्तु क्षीणे एका । गोत्रस्य यावदेकं न क्षीणम् उद्वलितं तावत् द्वे सत्यौ । नीचैर्गोत्रे क्षपिते उच्चैर्गोत्रे वा उद्वलिते पुनरेका सती । आयुषस्तु यावद्वद्धमायुर्नोदेति तावत् द्वे प्रकृती सत्यौ उदिते तु तस्मिन् प्राक्तनं क्षीणमिति एका प्रकृतिः ।

सम्प्रति मोहनीयस्य प्रकृतिसत्कर्मस्थानप्रतिपादनार्थमाह—

एगाइ जाव पंचग-मिक्कारस बार तेरसिगवीसा ।
बिय तिय चउरो छ स-त्त अट्ठवीसा य मोहस्स ॥११॥

'एगाइ' त्ति-मोहनीयस्य पञ्चदशप्रकृतिसत्कर्मस्थानानि। तद्यथा एका द्वे तिस्रः चतस्रः पञ्च एकादश द्वादश त्रयोदश एकविंशतिः द्वाविंशतिः त्रयोविंशतिः चतुर्विंशतिः पड्विंशतिः सप्तविंशतिरष्टाविंशतिश्चेति। एतानि सुखावबोधार्थं गाथाक्रमवैपरीत्येन भाव्यन्ते,तत्र मोहनीयस्य सर्वप्रकृतिसमुदायोऽष्टाविंशतिः । सम्यक्त्वे उद्वलिते सप्तविंशतिः । ततोऽपि सम्यङ्मिथ्यात्वे उद्वलिते पड्विंशतिः । अथवा अनादिमिथ्यादृष्टेः पड्विंशतिः । अष्टाविंशतिरनन्तानुबन्धिचतुष्टये क्षीणे चतुर्विंशति । ततो मिथ्यात्वे क्षीणे त्रयोविंशतिः । ततः सम्यग्मिथ्यात्वे क्षीणे द्वाविंशतिः । ततः सम्यक्त्वे क्षीणे एकविंशतिः । ततोऽष्टसु कषायेषु क्षीणेषु त्रयोदश । ततो नपुंसकवेदे क्षीणे द्वादश । ततः स्त्रीवेदे क्षीणे एकादश । ततः पट्सु नोकषायेषु क्षीणेषु पञ्च । ततः पुरुषवेदे क्षीणे चतस्रः । ततः संज्वलनक्रोधे क्षीणे तिस्रः । ततः संज्वलनमाने क्षीणे द्वे । संज्वलनमायाया च क्षीणायामेका ।

सम्प्रत्येतानि प्रकृतिसत्कर्मस्थानानि गुणस्थानकेषु विचिन्तयन्नाह—

तिन्नेग तिगं पणगं, पणगं पणगं च पणगमह दोन्नि ।
दस तिन्नि दोन्नि मिच्छा-इगेसु जावोवसंतो त्ति ॥१२॥

'तिन्नेग' त्ति-यावदुपशान्तमोहगुणस्थानकं तावन्मिथ्यादृष्ट्यादिषु गुणस्थानकेषु यथासंख्यं त्र्यादीनि प्रकृतिसत्कर्मस्थानानि भवन्ति । तत्र मिथ्यादृष्टिगुणस्थानके त्रीणि प्रकृतिसत्कर्मस्थानानि । तद्यथा—अष्टाविंशतिः, सप्तविंशतिः, पड्विंशतिश्च । एतानि प्रागेव भावितानि । सासादनसम्यग्दृष्टिगुणस्थानके एकं प्रकृतिसत्कर्मस्थानमष्टाविंशतिरूपम्। सम्यग्मिथ्यादृष्टिगुणस्थानके त्रीणि प्रकृतिसत्कर्मस्थानानि, तद्यथा—अष्टाविंशतिः सप्तविंशतिश्चतुर्विंशतिश्च । इह योऽष्टाविंशतिसत्कर्मा सन् सम्यग्मिथ्यात्वं गतस्तमाश्रित्याष्टाविंशति । येन पुनर्मिथ्यादृष्टिना सता पूर्वं सम्यक्त्वमुद्वलित ततः सप्तविंशतिसत्कर्मणा सता सम्यग्मिथ्यात्वमनुभवितुमारब्धं तं प्रति सप्तविंशतिः । चतुर्विंशतिसत्कर्मणा सम्यग्मिथ्यादृष्टिं प्रतीत्य पुनश्चतुर्विंशतिः प्राप्यते। तथाऽविरतसम्यग्दृष्टिगुणस्थानके पञ्चप्रकृतिसत्कर्मस्थानानि, तद्यथा—अष्टाविंशतिः चतुर्विंशतिः त्रयोवि-

शति. द्वाविंशति' एकविंशतिश्च । तत्राष्टाविंशतिरौपशमिकसम्यग्दृष्टेः क्षायोपशमिकसम्यग्दृष्टेर्वा । अष्टाविंशतिसत्कर्मणोऽनन्तानुबन्धिक्षये वेदकसम्यग्दृष्टेरौपशमिकसम्यग्दृष्टेर्वा चतुर्विंशतिः । वेदकसम्यग्दृष्टेर्मिथ्यात्वे क्षपिते त्रयोविंशतिः । तस्यैव सम्यग्मिथ्यात्वे क्षपिते द्वाविंशतिः । क्षायिकसम्यग्दृष्टेरेकविंशतिः । तथा देशविरतिगुणस्थानके पञ्चप्रकृतिसत्कर्मस्थानानि, तानि च पूर्वोक्तान्येव प्रमत्तसंयतगुणस्थानके । तान्येव चाप्रमत्तसंयतगुणस्थानके । 'अह दोन्नि' त्ति अथ-अनन्तरम् अपूर्वकरणगुणस्थानके द्वे प्रकृतिस्थाने, तद्यथा—चतुर्विंशतिरेकविंशतिश्च । तत्रोपशमश्रेणिं प्रतिपन्नस्य चतुर्विंशतिः, क्षायिकसम्यग्दृष्टिमधिकृत्य द्वयोरपि श्रेण्योरेकविंशति. । तथा अनिवृत्तिबादरसम्परायगुणस्थानके दशप्रकृतिसत्कर्मस्थानानि, तद्यथा—चतुर्विंशतिः एकविंशतिः त्रयोदश द्वादश एकादश पञ्च चतस्र. तिस्र. द्वे एका च । तत्र चतुर्विंशतिरुपशमश्रेणिमधिकृत्य,एकविंशति, क्षायिकसम्यग्दृष्टेर्द्वयोरपि श्रेण्यो शेषाणि पुनः क्षपकश्रेण्यां, तानि च प्रागेव भावितानि सूक्ष्मसम्परायगुणस्थानके त्रीणि प्रकृतिसत्कर्मस्थानानि, तद्यथा—चतुर्विंशति. एकविंशति एका च । तत्र चतुर्विंशतिरौपशमिकसम्यग्दृष्टे., एकविंशतिश्च क्षायिकसम्यग्दृष्टे., एते च द्वे अपि प्रकृतिसत्कर्मस्थाने उपशमश्रेण्याम्, एका च क्षपकश्रेण्याम् । तथा—द्वे प्रकृतिसत्कर्मस्थाने उपशान्तमोहगुणस्थानके, तद्यथा—चतुर्विंशतिरेकविंशतिश्च । एते च द्वे अपि प्रागिव भावनीये ।

सम्प्रति मतान्तरमाह--

संखीणदिट्ठिमोहे, केई पणवीसई पि इच्छंति ।
संजोयणाण पच्छा, नासं तेसिं उवसमं च ॥ १३ ॥

'संखीण' त्ति केचिदाचार्या. पञ्चविंशतिलक्षणमपि प्रकृतिसत्कर्मस्थानमिच्छन्ति । ते हि प्रथमतो दृष्टिमोहे दर्शनमोहनीयत्रितये सङ्क्षीणे क्षयमुपगते सति पश्चादनन्तानुबन्धिना नाशमिच्छन्ति । ततस्तन्मतेन दर्शनमोहनीयत्रितयक्षये सति पञ्चविंशतिरूपमपि प्रकृतिसत्कर्मस्थानं प्राप्यते । यद्येवं तर्हि तन्मतमिह कस्मान्नाभ्युपगम्यते ?, उच्यते—आर्षेण विरोधात् । यदाह चूर्णिकृत्—" तं आरिसे न मिलइ तेण न इच्छिज्जइ " त्ति । तथा त एवाचार्यास्तेषामनन्तानुबन्धिनामुपशमं चेच्छन्ति, नान्ये परमार्थवेदिन । अत एव च,प्रागनन्तानुबन्धिनामुपशमनाऽस्माभिर्नोपदर्शिता

सम्प्रति नामकर्मण. प्रकृतिसत्कर्मस्थानानि प्रतिपिपादयिषुराह--

तिदुगसयं छप्पंचग, तिग नउई नउई गुणनउई य ।
चउ तिग दुगाहिगासि,नव अट्ठ य नाम ठाणाइं ॥१४॥

'तिदुगसय' ति--नामकर्मणो द्वादश प्रकृतिसत्कर्मस्थानानि, तद्यथा—त्र्युत्तरशतं द्व्युत्तरशतं षण्णवति पञ्चनवति' त्रिनवति नवति. एकोननवति चतुरशीति' त्र्यशीति द्व्यशीति नव अष्टौ चेति । तत्र सर्वनामकर्मप्रकृतिसमुदायस्त्र्युत्तरशतम् । तदेव तीर्थकररहितं द्व्युत्तरशतम्, त्र्युत्तरशतमेवाहारकसप्तकरहितं षण्णवति. । सैव तीर्थकररहिता पञ्चनवति. । पञ्चनवतिरेव देवद्विकरहिता नरकद्विकरहिता वा त्रिनवति । तथा—त्र्युत्तरशतमेव नामत्रयोदशकरहितं नवति. । सैव तीर्थकररहिता एकोननवति. । तथा त्रिनवतिर्नरकद्विकवैक्रियसप्तकरहिता देवद्विकवैक्रियसप्तकरहिता वा चतुरशीतिः । षण्णवतिस्त्रयोदशरहिता त्र्यशीतिः पञ्चनवतिस्त्रयोदशरहिता द्व्यशीतिः, अथवा—चतुरशीतिर्मनुजद्विकरहिता द्व्यशीति । मनुजगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययश कीर्तितीर्थकररूपा नव ता एव तीर्थकररहिता अष्टौ ।

एतान्येव प्रकृतिसत्कर्मस्थानानि गुणस्थानकेषु चिन्तयन्नाह—

एगे छद्दोसु दुगं, पंचसु चत्तारि अट्ठगं दोसु ।
कमसो तीसु चउक्कं, छत्तु अजोगम्मि ठाणाणि ॥ १५ ॥

'एगे'त्ति—एकस्मिन्मिथ्यादृष्टिलक्षणे गुणस्थानके षट् प्रकृतिसत्कर्मस्थानानि, तद्यथा—द्व्युत्तरशतं षण्णवतिः पञ्चनवति. त्रिनवति' चतुरशीति' द्व्यशीतिः । ननु षण्णवतिस्तीर्थकरनामसहिता भवति तत. सा कथं मिथ्यादृष्टौ प्राप्यते ?, उच्यते—इह कश्चित् नरकेषु बद्धायुष्क. पश्चात्सम्यक्त्वं प्राप्य, तन्निमित्तं तीर्थकरनामकर्म बद्धा नरकाभिमुख. सन् सम्यक्त्वं त्यक्त्वा मिथ्यादृष्टिर्जात, ततो नरके उत्पन्न. सन् अन्तर्मुहूर्त्तानन्तरं पुनरपि सम्यक्त्वं प्रतिपद्यते, ततोऽन्तर्मुहूर्त्ते कालं यावत् षण्णवतिर्मिथ्यादृष्टौ प्राप्यते, आहारकसप्तकतीर्थकरनामसत्कर्मा च मिथ्यात्वं न प्रतिपद्यते । उक्तं च—'उभए संति न मिच्छो' इति ततस्त्र्युत्तरशतं मिथ्यादृष्टौ न प्राप्यते । तथा—द्वयोः सासादनसम्यग्मिथ्यादृष्टिगुणस्थानकयोर्द्वे प्रकृतिसत्कर्मस्थाने, तद्यथा-द्व्युत्तरशतं पञ्चनवतिश्च । तथा—पञ्चसु अविरतसम्यग्दृष्टिगुणस्थानकप्रभृतिषु अपूर्वकरणगुणस्थानकान्तेषु चत्वारि चत्वारि प्रकृतिसत्कर्मस्थानानि । तद्यथा-त्र्युत्तरशतं द्व्युत्तरशत षण्णवति. पञ्चनवति । शेषाणि क्षपकश्रेण्यामेकेन्द्रियादौ च संभवन्तीति कृत्वा इह न प्राप्यन्ते । तथा द्वयोरनिवृत्तिबादरसूक्ष्मसम्परायलक्षणयोर्गुणस्थानकयोरष्टकम्, अष्टौ प्रकृतिसत्कर्मस्थानानि । तद्यथा-त्र्युत्तरशतं द्व्युत्तरशतं षण्णवतिः पञ्चनवति नवति एकोननवति त्र्यशीतिः द्व्यशीतिश्च । तत्रानिवृत्तिबादरस्यादिमानि चत्वारि उपशमश्रेण्या क्षपकश्रेण्या वा यावन्न त्रयोदशकं क्षीयते, शेषाणि पुन क्षपकश्रेण्यामेव । सूक्ष्मसम्परायस्यादिमानि चत्वारि उपशमश्रेण्यां, शेषाणि तु क्षपकश्रेण्याम् । तथा-त्रिषु उपशान्तमोहक्षीणमोहसयोगिकेवलिलक्षणेषु गुणस्थानकेषु चत्वारि चत्वारि प्रकृतिसत्कर्मस्थानानि भवन्ति । तत्रोपशान्तमोहे इमानि चत्वारि,तद्यथा त्र्युत्तरशतं द्व्युत्तरशतं षण्णवति पञ्चनवति' । क्षीणमोहसयोगिकेवलिनो. पुनरमूनि, तद्यथा-नवति एकोननवति त्र्यशीति द्व्यशीतिश्च । 'छत्तु अजोगम्मि ठाणाणि' त्ति अयोगिकेवलिनि षट्प्रकृतिसत्कर्मस्थानानि, तद्यथा—नवति. एकोननवति' त्र्यशीति द्व्यशीति नव अष्टौ चेति । एतेषामादिमानि चत्वारि अयोगिकेवलिद्विचरमसमयं यावत्, चरमसमये तु

तीर्थकराऽतीर्थकरौ प्रतीत्य द्वे अन्तिमे प्रकृतिसत्कर्मस्थाने । तदेवमुक्तं प्रकृतिसत्कर्म । सम्प्रति स्थितिसत्कर्म वक्तव्यम् । तत्र त्रयोऽर्थाधिकाराः, तद्यथा— भेदः साद्यनादिप्ररूपणा स्वामित्वं चेति । तत्र भेदः प्रागिव । साद्यनादिप्ररूपणा च द्विधा—मूलप्रकृतिविषया, उत्तरप्रकृतिविषया च । तत्र प्रथमतो मूलप्रकृतिविषयां साद्यनादिप्ररूपणां चिकीर्षुराह—

मूलठिई अजहन्नं, तिहा चउद्धा य पढमगकसाया ।
तित्थयरुव्वलणायुग-वज्जाणि तिहा दुहाणुत्तं॥१६॥

'मूलठिइ' त्ति मूलप्रकृतिस्थितिसत्कर्म अजघन्यं त्रिधा-त्रिप्रकारम् । तद्यथा—अनादि ध्रुवमध्रुवं च । तथाहि—मूलप्रकृतीनां जघन्यं स्थितिसत्कर्म स्वस्वक्षयपर्यवसाने समयमात्रैकस्थित्यवशेषे भवति, तच्च सादि, अध्रुवं च । ततोऽन्यत्सर्वमजघन्यं, तच्चानादि, सदैव भावात् । ध्रुवाध्रुवता पूर्ववत् । उत्कृष्टमनुत्कृष्टं च साद्यध्रुवं द्वयोरपि पर्यायेणानेकशो भवनात् । कृता मूलप्रकृतीनां साद्यनादिप्ररूपणा, सम्प्रत्युत्तरप्रकृतीना क्रियते—' चउद्धा य ' इत्यादि अत्र षष्ठ्यर्थे प्रथमा, ततोऽयमर्थः—प्रथमकषायाणामनन्तानुबन्धिनामजघन्यं स्थितिसत्कर्म चतुर्धा चतुःप्रकारं, तद्यथा—सादि अनादि ध्रुवमध्रुवं च । तथाहि—एषा जघन्यं स्थितिसत्कर्म स्वक्षयोपान्त्यसमये स्वरूपापेक्षया समयमात्रैकस्थितिरूपम्, अन्यथा तु द्विसमयमान, तच्च साद्यध्रुवं ततोऽन्यत्सर्वमजघन्यं, तदपि चोद्वलितानां भूयो बन्धे साऽऽदि,तत्स्थानमप्राप्तानां पुनरनादि, ध्रुवाध्रुवता पूर्ववत् । तथा-तीर्थकरनामोद्वलनयोग्यत्रयोविंशत्यायुश्चतुष्टयवर्जितानां शेषाणां षड्विंशत्यधिकशतसंख्यानां प्रकृतीनामजघन्यं स्थितिसत्कर्म त्रिधा, तद्यथा—अनादि ध्रुवमध्रुवं च । तथाहि-एतेषा जघन्यं स्थितिसत्कर्म स्वस्वक्षयपर्यवसाने उदयवतीना समयमात्रैकस्थितिरूपम्,अनुदयवतीना स्वरूपतः समयमात्रैकस्थितिकम् । अन्यथा तु द्विसमयमात्रम्, तच्च साद्यध्रुवम् । ततोऽन्यत्सर्वमजघन्यं तच्चानादि, सदैव भावात् । ध्रुवाऽध्रुवता पूर्ववत् । 'दुहाणुत्तं' ति । अनुक्तम्-उक्तप्रकृतीनामुत्कृष्टानुत्कृष्टजघन्यरूपं तीर्थकरनामोद्वलनयोग्यदेवद्विकनरकद्विकमनुजद्विकवैक्रियसप्तकाहारकसप्तकोच्चैर्गोत्रसम्यक्त्वसम्यग्मिथ्यात्वरूपत्रयोविंशत्यायुश्चतुष्टयाना जघन्याजघन्योत्कृष्टानुत्कृष्टरूपं विकल्पचतुष्टयं द्विधा-द्विप्रकारं, तद्यथा—सादि, अध्रुवं च । तथाहि—उक्तप्रकृतीनामुत्कृष्टमनुत्कृष्टं च स्थितिसत्कर्म पर्यायेणानेकशो भवति । ततो द्वितयमपीदं साद्यध्रुवम् । जघन्यं च प्रागेव भावितम् । तीर्थकरनामादीनां चाध्रुवसत्कर्मत्वाच्चत्वारोऽपि विकल्पा साद्यध्रुवा अवसेया. । मूलप्रकृतीनां चानुक्तं जघन्यमुत्कृष्टमनुत्कृष्टं च द्विप्रकारं प्रागेव चोक्तम् ।

तदेवं कृता साद्यनादिप्ररूपणा । सम्प्रति स्वामित्वं वक्तव्यम् । तच्च द्विधा उत्कृष्टस्थितिसत्कर्मस्वामित्व जघन्यस्थितिसत्कर्मस्वामित्वं च । तत्र प्रथम उत्कृष्टस्थितिसत्कर्मस्वामित्वमाह—

जेट्ठठिई बंधसमं, जेट्ठं बंधोदया उ जासि सह ।
अणुदयबंधपराणं, समऊणा जट्ठिई जेट्ठं ॥ १७ ॥

'जट्ठठिइ' त्ति-यासां प्रकृतीनां सह युगपत् बन्धोदयौ भवतः कासां युगपद्बन्धोदयौ भवतः इति चेदुच्यते-ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयासातवेदनीयमिथ्यात्वषोडशकषायपञ्चेन्द्रियजातितैजससप्तकहुण्डसंस्थानवर्णादिविंशत्यगुरुलघुपराघातोच्छ्वासाप्रशस्तविहायोगत्युद्योतत्रसबादरपर्याप्तप्रत्येकास्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्त्तिनिर्माणनीचैर्गोत्रपञ्चविधान्तरायाख्या तिर्यङ्मनुष्यानधिकृत्य वैक्रियसप्तकस्य सर्वसंख्यया षडशीतिप्रकृतीनाम् तासा ज्येष्ठमुत्कृष्टंस्थितिसत्कर्म ज्येष्ठस्थितिबन्धसमम् उत्कृष्टस्थितिबन्धप्रमाणं भवति । तासां हि उत्कृष्टस्थितिबन्धारम्भेऽबाधाकालेऽपि प्राग्बद्धं दलिकं प्राप्यते । न च तासां प्रथमस्थितिरन्यत्र स्तिबुकसंक्रमेण संक्रामति, उदयवतीत्वात् । ततस्तासामुत्कृष्टस्थितिबन्धप्रमाणमुत्कृष्टं स्थितिसत्कर्म प्राप्यते । अनुदयबन्धपराणां समयोना ज्येष्ठा स्थितिर्ज्येष्ठमुत्कृष्टं स्थितिसत्कर्म । तत्रानुदये उदयाभावे पर उत्कृष्टः स्थितिबन्धो यासां ता अनुदयबन्धपराः निद्रापञ्चकनरकद्विकतिर्यग्द्विकौदारिकसप्तकैकेन्द्रियजातिसेवार्तसंहननातपस्थावररूपा विंशतिसंख्यास्तासां समयोना उत्कृष्टा स्थितिरुत्कृष्टं स्थितिसत्कर्म । तथाहि—एतासामुत्कृष्टस्थितिबन्धारम्भे यद्यप्यबाधाकालेऽपि प्राग्बद्धं दलिकमस्ति तथापि प्रथमस्थितिं तासामुदयवतीषु मध्ये स्तिबुकसंक्रमेण संक्रमयति । तेन तया प्रथमस्थित्या समयमात्रया ऊना उत्कृष्टा स्थितिरुत्कृष्टं स्थितिसत्कर्म। अथोच्येत-कथं निद्रादीनामनुदये सति बन्धेनोत्कृष्टा स्थितिः प्राप्यते ?, उच्यते-उत्कृष्टो हि स्थितिबन्ध उत्कृष्टे सङ्क्लेशे भवति । न चोत्कृष्टे संक्लेशे वर्त्तमानस्य निद्रापञ्चकोदयसम्भवः नरकद्विकस्य तिर्यञ्चो मनुष्या वा उत्कृष्टस्थितिबन्धकाः । न च तेषां नरकद्विकोदयः सम्भवतीति शेषकर्मणा तु देवा नारका वा यथायोगमुत्कृष्टस्थितिबन्धकाः । न च तेषु तेषामुदयो घटते ।

संकमओ दीहाणं, सहालिगाए उ आगमो संतो ।
समऊणमणुदयाणं, उभयासिं जट्ठिई तुल्ला ॥ १८ ॥

'संकमओ' त्ति यासां प्रकृतीना संक्रमत उत्कृष्टं स्थितिसत्कर्म प्राप्यते, न बन्धतः, उदयोऽपि च विद्यते तासां संक्रमतो दीर्घाणा संक्रमवशलब्धोत्कृष्टस्थितिकाना य आगमः संक्रमेण आवलिकाद्विकहीनोत्कृष्टस्थितिसमागमः स आवलिकया उदयावलिकया सह उत्कृष्टं स्थितिसत्कर्म । एतदुक्तं भवति-सातं वेदयमानः कश्चिदसातमुत्कृष्टस्थितिकं बध्नाति । तच्च बद्धा सातं बद्धुं लग्नः । असातवेदनीयं च बन्धावलिकातीतं सत आवलिकात् उपरितनं सकलमपि आवलिकाद्विकहीनं त्रिंशत्सागरोपमकोटीकोटीप्रमाणं स्थितिसत्कर्म तस्मिन् सातवेदनीये वेद्यमाने बध्यमाने च उदयावलिकाया उपरिष्टात् संक्रमयति । ततस्तया उदयावलिकया सहितः संक्रमणावलिकाद्विकहीनोत्कृष्टस्थितिसमागमः सातवेदनीयस्योत्कृष्टं स्थितिसत्कर्म । एव नवनोकषायमनुजगतिप्रथमसंहननपञ्चकप्रथमसंस्थानपञ्चकप्रशस्तविहायोगतिस्थिरशुभसुभगसुस्वरादेययशःकीर्त्त्युच्चैर्गोत्राणामष्टाविंशतिप्रकृतीनामावलिकाद्विकहीनः स्वस्वसजातीयोत्कृ-

ष्टस्थितिसमागम' उदयावलिकया सहित उत्कृष्टं स्थितिसत्कर्म भावनीयम् । सम्यक्त्वस्य पुनरन्तर्मुहूर्तोन उत्कृष्टस्थितिसमागम उदयावलिकया सहित उत्कृष्टं स्थितिसत्कर्म । तथाहि—मिथ्यात्वस्योत्कृष्टां स्थितिं बद्ध्वा तत्रैव च मिथ्यात्वेऽन्तर्मुहूर्तं स्थित्वा तत सम्यक्त्वं प्रतिपद्यते । तस्मिंश्च प्रतिपन्ने सति मिथ्यात्वस्योत्कृष्टां स्थितिम्—आवलिकात उपरितनीं स्थितिं—तथापि संख्यया ऽन्तर्मुहूर्तोनसप्ततिसागरोपमकोटीकोटीप्रमाणां सकलामपि सम्यक्त्वे उदयावलिकात उपरि संक्रमयति । ततोऽन्तर्मुहूर्तोन एवोत्कृष्टस्थितिसमागम उदयावलिकया सहित सम्यक्त्वस्योत्कृष्टं स्थितिसत्कर्म । यासां पुन प्रकृतीनां संक्रमत उत्कृष्टा स्थितिः प्राप्यते, न च संक्रमकाले उदयोऽस्ति, तासां संक्रमकालेऽनुदयाना तावदेव पूर्वोक्तं स्थितिसत्कर्म समयोनमवगन्तव्यम्, आवलिकाद्विकहीनोत्कृष्टस्थितिसमागम आवलिकया सहित समयोनस्तासामुत्कृष्टं स्थितिसत्कर्मेत्यर्थ. । तथाहि–कश्चिन्मनुष्य उत्कृष्टसंक्लेशवशादुत्कृष्टां नरकगतिस्थितिं बद्ध्वा परिणामपरावर्तनेन देवगतिं बद्धुमारब्धवान्; तस्यां च देवगतौ बध्यमानायामावलिकाया उपरि नरकस्थितिं बन्धावलिकातीताम् उदयावलिकाया उपरितनीं सकलामपि विंशतिसागरोपमकोटीकोटीप्रमाणां संक्रमयति । प्रथमा च स्थिति' समयमात्रा देवगतेः सत्का मनुजगतौ वेद्यमानायां स्तिबुकसंक्रमेण संक्रामति । त तस्तया समयमात्रया स्थित्या ऊन आवलिकयाऽभ्यधिक आवलिकाद्विकहीनोत्कृष्टस्थितिसमागमो देवगतेरुत्कृष्टं स्थितिसत्कर्म । एवं द्वित्रिचतुरिन्द्रियजात्याहारकसप्तकमनुजानुपूर्वीदेवानुपूर्वीसूक्ष्मापर्याप्तसाधारणतीर्थकराख्यानामपि षोडशप्रकृतीनां यथोक्तमानमुत्कृष्टं स्थितिसत्कर्म भावनीयम् । स म्यङ्मिथ्यात्वस्य पुनरन्तर्मुहूर्तोन उत्कृष्टस्थितिसमागम आवलिकयाऽभ्यधिकसमयोन उत्कृष्ट स्थितिसत्कर्म वाच्यम्, तच्च सम्यक्त्वोक्तभावनानुसारेण भावनीयम्, ' उभयासिं जट्ठिई तुल्ल ' त्ति उभयीषामुदयवतीनामनुदयवतीना च प्रकृतीना संक्रमोत्कृष्टस्थितीना संक्रमकाले यत्स्थिति' सर्वा स्थितिस्तुल्या । यतोऽनुदयवतीनामपि तदानीं प्रथमस्थितिः स्तिबुकसंक्रमेणोदयवतीषु संक्रम्यमाणाऽपि दलिकरहिता विद्यत एव । न हि काल संक्रमयितुं शक्यते, किं तु तत्स्थं दलिकमेव । तत प्रथमस्थितिगतदलिकसंक्रान्तावपि दलिकरहिता प्रथमा स्थितिः तदानीं विद्यत एवेति कृत्वा उभयीषामपि यत्स्थिति. तुल्या । यश्च यासां प्रकृतीनामुत्कृष्टा स्थितिं बध्नाति, यश्च यासूत्कृष्टां स्थितिं संक्रमयति, स तासामुत्कृष्टस्थितिसत्कर्मस्वामी । तदेवमुक्तमुत्कृष्टस्थितिसत्कर्मस्वामित्वम् ।

सम्प्रति जघन्यस्थितिसत्कर्मस्वामित्वमाह—

संजलणतिगे सत्तसु, य नोकसाएसु संकमजहन्नो ।
सेसाण ठिई एगा, दुसमयकाला अणुदयाणं ॥ १६ ॥

'सजलणतिगे' त्ति-संज्वलनत्रिकस्य-क्रोधमानमायारूपस्य सप्ताना च नो कषायाणां पुरुषवेदहास्यादिषट्करूपाणां जघन्यस्थितिसत्कर्म जघन्यस्थितिसंक्रमो वेदितव्य । एता हि प्रकृतयो बन्धे उदये च व्यवच्छिन्ने सति अन्यत्र संक्रमेण क्षयं नीयन्ते, तेन एतासां य एव चरमसंक्रम. स एव जघन्यं स्थितिसत्कर्म । उक्तं च–"हासाइपुरिसकोहा–दि तिन्नि संजलण जेण बन्धुदये । वोच्छिन्ने संकमइ , तेण इहं संकमो चरिमो ॥ १ ॥ " जघन्यं स्थितिसत्कर्मेति सम्बन्ध. । शेषाणा पुनरुदयवतीना ज्ञानावरण—पञ्चकदर्शनावरणचतुष्टयवेदकसम्यक्त्वसज्वनलोभायुश्चतुष्टयनपुंसकवेदस्त्रीवेदसातासातवेदनीयोच्चैर्गोत्रमनुजगति —पञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययश कीर्तिनीर्थक—रान्तरायपञ्चकरूपाणा प्रकृतीनां चतुस्त्रिंशत्सख्यानां स्वस्वक्षयपर्यवसानसमये या एका समयमात्रा स्थिति. सा जघन्यं स्थितिसत्कर्म । अनुदयवतीनां पुनः प्रकृतीना स्वस्वक्षयोपान्त्यसमये या स्वरूपापेक्षया समयमात्रा स्थितिरन्यथा तु द्विसमयमात्रकाला, सा जघन्यं स्थितिसत्कर्म । अनुदयवतीना हि चरमसमये स्तिबुक—संक्रमणोदयवतीषु प्रकृतिषु मध्ये प्रक्षिपति , तत्स्वरूपण चानुभवति, तेन चरमसमये तासा दलिकं स्वरूपेण न प्राप्यते,किं तु पररूपेण । अत उक्तम्–'उपान्त्यसमये स्वरूपापेक्षया समयमात्रा अन्यथा तु द्विसमयमात्रकालेति । सम्प्रति सामान्येन सर्वकर्मणा जघन्यस्थितिसत्कर्मस्वामी प्रतिपाद्यते–तत्रानुबन्धिना दर्शनमोहनीयत्रिकस्य चाविरताऽऽदिरप्रमत्तपर्यन्ता यथासभव जघन्यस्थितिसत्कर्मस्वामी । नारकतिर्यग्देवायुषा नारकतिर्यग्देवा स्वस्वभवचरमसमये वर्त्तमाना. । कषायाष्टकस्त्यानर्द्धित्रिकनामत्रयोदशकनवनोकषायसज्वलनत्रिकरूपाणा षट्त्रिंशत्प्रकृतीनामनिवृत्तिबादरसम्पराय. । संज्वलनलोभस्य सूक्ष्मसपराय । ज्ञानावरणपञ्चकदर्शनावरणषट्कान्तरायपञ्चकाना क्षीणकषाय. , शेषाणा पञ्चनवतिसख्यानामयोगिकेवली जघन्यस्थितिसत्कर्मस्वामी । तदेवमुक्तं जघन्यस्थितिसत्कर्मस्वामित्वम् ।

सम्प्रति स्थितिभेदप्ररूपणार्थमाह—

ठिइसंतट्ठाणाइं, नियगुक्कस्सा हि थावरजहन्नं ।
नेरंतरेण हेट्ठा, खवणाइसु संतराइं पि ॥ २० ॥

' ठिइसतट्ठाणाइ ' ति सर्वेषा कर्मणा स्वकीयात्स्वकीयादुत्कृष्टात् स्थितिस्थानात् समयमात्रादारभ्याधस्तात्तावदवतरीतव्यं यावत् स्थावरजघन्यम् एकेन्द्रियप्रायोग्यं जघन्यं स्थितिसत्कर्म । एतावता स्थितिकण्डके यावन्त समया—स्तावन्ति स्थितिस्थानानि नानाजीवापेक्षया निरन्तरेण-नैरन्तर्येण लभ्यन्ते । तद्यथा—उत्कृष्टा स्थितिरेक स्थितिस्थानम् । समयोना उत्कृष्टा स्थितिर्द्वितीयं स्थितिस्थानम् । द्विसमयोना उत्कृष्टा स्थितिस्तृतीयं स्थितिस्थानम् । एव तावद्वाच्यं यावदेकेन्द्रियप्रायोग्य जघन्य स्थितिसत्कर्म । एकेन्द्रियप्रायोग्याच्च जघन्यस्थितिसत्कर्मणोऽधस्तात् क्षपणादिषु क्षपणे उद्वलने च सान्तराणि स्थितिस्थानानि लभ्यन्ते । अपिशब्दान्निरन्तराणि च । कथमिति—चेदुच्यते—एकेन्द्रियप्रायोग्यजघन्यस्थितिसत्कर्मण उपरितनाग्रिमभागात्पल्योपमासंख्येयभागमात्रं स्थितिखण्डं खण्डयितुमारभते । खण्डनारम्भप्रथमसमयादारभ्य च समये समयेऽस्तादुदयवतीनामनुभावनानुदयवतीनां स्तिबुक—

संक्रमेण समयमात्रा समयमात्रा स्थितिः क्षीयते। नत प्रतिसमयं स्थितिविशेषा लभ्यन्ते। तद्यथा—तत्स्थावरप्रायोग्यं जघन्यं स्थितिसत्कर्म प्रथमसमयेऽतिक्रान्ते समयहीनं द्वितीये समयेऽतिक्रान्ते द्विसमयहीनम्। तृतीये समयेऽतिक्रान्ते त्रिसमयहीनमित्यादि। अन्तर्मुहूर्त्तेन च कालेन तत्स्थितिखण्डं खण्डयति। तत एतावती स्थितिर्युगपदेव त्रुटितेति कृत्वाऽन्तर्मुहूर्त्तादूर्ध्वं निरन्तराणि स्थितिस्थानानि लभ्यन्ते। ततः पुनरपि द्वितीयं पल्योपमासंख्येयभागमात्रमन्तर्मुहूर्त्तमात्रेण खण्डयति। तत्रापि प्रतिसमयमधः समयमात्रसमयमात्रस्थितिक्षयापेक्षया निरन्तराणि स्थितिस्थानानि पूर्वप्रकारेण लभ्यन्ते। द्वितीये च स्थितिखण्डे खण्डिते सति पुनरपि पल्योपमासंख्येयभागमात्रा स्थितिर्युगपदेव त्रुटितेति न भूयोऽप्यन्तर्मुहूर्त्तादूर्ध्वं निरन्तराणि स्थितिस्थानानि लभ्यन्ते एवं तावद्वाच्यं यावदावलिकाशेषा भवति। साऽपि चावलिका उदयवतीनामनुभवेनानुदयवतीनां स्तिबुकसंक्रमेण समये समये क्षयमुपयाति तावद्यावदेका स्थितिः।' ततोऽमूनि आवलिकामात्रसमयप्रमाणानि स्थितिस्थानानि निरन्तराणि लभ्यन्ते। तदेवं स्थितिस्थानभेदोपदर्शनमपि कृतम्।

सम्प्रत्यनुभागसत्कर्मप्ररूपणार्थमाह—

संकमसममणुभागे, नवरि जहन्नं तु देसघाईणं।
छन्नोकसायवज्जाणं, एगट्ठाणम्मि देसहरं ॥ २१ ॥
मणनाणं दुट्ठाणं, देसहरं सामिगोयसम्मत्ते।
आवरणविग्घसोलस-ग किट्टिवेएसु य सगंते ॥ २२ ॥

'संकमसममि' त्यादि-अनुभागसंक्रमेण तुल्यमनुभागसत्कर्म वक्तव्यम्। एतदुक्तं भवति-यथाऽनुभागसंक्रमे स्थानप्रत्ययविपाकशुभाशुभत्वसाद्यनादित्वस्वामित्वानि प्राक् प्रतिपादितानि तथैवात्राप्यनुभागसत्कर्मणि वक्तव्यानि। नवरमयं विशेषो यदुत देशघातिनीनां हास्यादिषट्कवर्जितानां मतिश्रुतावधिज्ञानावरणचक्षुरचक्षुरवधिदर्शनावरणसंज्वलनचतुष्टयवेदत्रिकान्तरायपञ्चकरूपाणामष्टादशप्रकृतीनां जघन्यानुभागसत्कर्मस्थानमधिकृत्य एकस्थानीयं, घातिसंज्ञामधिकृत्य देशहरं देशघाति वेदितव्यम्। मनःपर्यायज्ञानावरणे पुनर्जघन्यमनुभागसत्कर्मस्थानमधिकृत्य द्विस्थानं, घातिसंज्ञामधिकृत्य देशघाति। इहोत्कृष्टानुभागसत्कर्मस्वामिन उत्कृष्टानुभागसंक्रमस्वामिन एव वेदितव्याः। जघन्यानुभागसत्कर्मस्वामिन पुनराह—'सामिगोये' त्यादि। सम्यक्त्वज्ञानावरणपञ्चकदर्शनावरणषट्कान्तरायपञ्चकरूपप्रकृतिषोडशककिट्टिरूपसंज्वलनलोभवेदत्रयाणां स्वस्वान्तिमसमये वर्तमाना जघन्यानुभागसत्कर्मस्वामिनो वेदितव्याः।

अत्रैव विशेषमाह—

मइसुयचक्खु अचक्खू-ण सुयसमत्तस्स जेट्ठलद्धिस्स।
परमोहिस्सोहिदुगं, मणनाणं विउलनाणस्स ॥ २३ ॥

'मइसुय त्ति-मतिज्ञानावरणश्रुतज्ञानावरणचक्षुर्दर्शनावरणाचक्षुर्दर्शनावरणानां श्रुतसमासस्य सकलश्रुतपारगामिनश्चतुर्दशपूर्वधरस्येत्यर्थः। ज्येष्ठलब्धिकस्य उत्कृष्टाया श्रुतार्थलब्धौ वर्तमानस्य जघन्यमनुभागसत्कर्म। इदमत्र तात्पर्यम्-मतिज्ञानावरणादीनां चतसृणां प्रकृतीनामुत्कृष्टश्रुतार्थसम्पन्नश्चतुर्दशपूर्वधरो जघन्यानुभागसत्कर्मस्वामी वेदितव्यः। तथा परमावधिज्ञानेनावधिद्विकमवधिज्ञानावरणावधिदर्शनावरणरूपं जघन्यानुभागसत्कर्म भवति। एतदुक्तं भवति-अवधिज्ञानावरणावधिदर्शनावरणयोर्जघन्यानुभागसत्कर्मस्वामी परमावधियुक्तो वेदितव्यः। तथा मनोज्ञानं मनःपर्यायज्ञानावरणं जघन्यानुभागसत्कर्म विपुलमनःपर्यायज्ञानिनोऽवगन्तव्यम्, स्वामित्वभावना अवधिज्ञानावरणवत्। लब्धिसहितस्य हि प्रभूतोऽनुभागः प्रलयमुपयातीति 'परमोहिस्से' त्याद्युक्तम्। शेषाणां तु प्रकृतीनां य एव जघन्यानुभागसंक्रमस्वामिनस्त एव जघन्यानुभागसत्कर्मणोऽपि द्रष्टव्याः।

इदानीमनुभागसत्कर्मस्थानभेदप्ररूपणार्थमाह—

बंधहयहयहउप्प-त्तिगाणि कमसो असंखगुणियाणि।
उदयोदीरणवज्जा-णि होंति अणुभागठाणाणि ॥२४॥

'बंध' त्ति इहानुभागस्थानानि त्रिधा, तद्यथा—बन्धोत्पत्तिकानि हतोत्पत्तिकानि हतहतोत्पत्तिकानि च। तत्र बन्धादुत्पत्तिर्येषां तानि बन्धोत्पत्तिकानि। तानि चासंख्येयलोकाकाशप्रदेशप्रमाणानि, तद्धेतूनामसंख्येयलोकाकाशप्रदेशप्रमाणत्वात्। तथा उद्वर्तनापवर्तनाकरणवशतो वृद्धिहानिभ्यामन्यथाऽन्यथा यान्यनुभागस्थानानि वैचित्र्यभाञ्जि भवन्ति, तानि हतोत्पत्तिकान्युच्यन्ते। हतात् घातात् पूर्वावस्थाविनाशरूपादुत्पत्तिर्येषां तानि हतोत्पत्तिकानि तानि च पूर्वेभ्योऽसंख्येयगुणानि, एकैकस्मिन् बन्धोत्पत्तिके स्थाने नानाजीवापेक्षया उद्वर्तनापवर्तनाभ्यामसंख्येयभेदकरणात्। यानि पुनः स्थितिघातेन रसघातेन चान्यथाऽन्यथाभवनादनुभागस्थानानि जायन्ते; तानि च हतहतोत्पत्तिकान्युच्यन्ते। हते उद्वर्तनापवर्तनाभ्यां घाते सति भूयोऽपि हतात् स्थितिघातेन रसघातेन वा घातादुत्पत्तिर्येषां तानि हतहतोत्पत्तिकानि। तानि चोद्वर्तनापवर्तनाजन्येभ्योऽसंख्येयगुणानि। संप्रत्यक्षरयोजना क्रियते—यानि उदयत उदीरणातश्च प्रतिसमयं क्षयसम्भवात् अन्यथाऽन्यथानुभागस्थानानि जायन्ते, तानि वर्जयित्वा शेषाणि बन्धोत्पत्तिकादीनि अनुभागस्थानानि क्रमशोऽसंख्येयगुणानि वक्तव्यानि उदयोदीरणाजन्यानि कस्माद्वर्ज्यन्त इति चेदुच्यते—यस्मादुदयोदीरणयोः प्रवर्त्तमानयोर्नियमात् बन्धोद्वर्तनापवर्तनास्थितिघातरसघातजन्यानामन्यतमान्यवश्यं सम्भवन्ति, तत्र उदयोदीरणाजन्यानि तत्रैवान्तः प्रविशन्तीति न पृथक् क्रियन्ते।

तदेवमुक्तमनुभागसत्कर्म। सम्प्रति प्रदेशसत्कर्म वक्तव्यं, तत्र चैतेऽर्थाधिकाराः, तद्यथा—भेदः साद्यनादिप्ररूपणा, स्वामित्वं चेति। तत्र भेदः प्राग्वत्। सम्प्रति साद्यनादिप्ररूपणा कर्त्तव्या, सा च द्विधा-मूलप्रकृतिविषया, उत्तरप्रकृतिविषया च। तत्र मूलप्रकृतिविषया ता बिभीर्षुराह—

सत्तण्हं अजहन्नं, तिविहं सेसा दुहा पएसम्मि।
मूलपगईसु आउस्, साई अधुवा य सव्वे वि ॥ २५ ॥

'सत्तराहं' ति आयुर्वर्जानां सप्तानां मूलप्रकृतीनामजघन्यं प्रदेशसत्कर्म त्रिविधं त्रिप्रकारम्, तद्यथा-अनादि, ध्रुवम्, अध्रुवं च। तत्र क्षपितकर्मांशस्य आयुर्वर्जानां सप्तानां कर्मणां स्वस्वक्षयावसरे चरमस्थितौ वर्तमानस्य जघन्यं प्रदेशसत्कर्म। तच्च साद्यध्रुवं ततोऽन्यत्सर्वमजघन्यम्, तच्चानादि, सदैव सद्भावात्। ध्रुवाध्रुवताऽभव्यभव्यापेक्षया। 'सेसा दुह' त्ति शेषा विकल्पा उत्कृष्टानुत्कृष्टजघन्यरूपा द्विधा-द्विप्रकारा, तद्यथा-साद्योऽध्रुवाश्च। तत्रोत्कृष्टप्रदेशसत्कर्मगुणितकर्मांशस्य मिथ्यादृष्टेः सप्तमपृथिव्यां वर्तमानस्य प्राप्यते। शेषकालं तु तस्याप्यनुत्कृष्टं ततो द्वे अपि साद्यध्रुवे। जघन्यं तु भावितमेव। तथा आयुषः सर्वेऽपि विकल्पा उत्कृष्टानुत्कृष्टजघन्याजघन्यरूपाः साद्योऽध्रुवाश्च, अध्रुवसत्कर्मत्वात्।

सम्प्रत्युत्तरप्रकृतीरधिकृत्य साऽऽद्यनादिप्ररूपणां विकीर्षुराह—

बायालाणुक्कस्सं, चउवीससया जहन्न चउतिविहं।
होइह छएह चउद्धा, अजहन्नमभासियं दुविहं॥ २६॥

'बायाल' त्ति सातवेदनीयसंज्वलनचतुष्टयपुरुषवेदपञ्चेन्द्रियजातितैजससप्तकप्रथमसंस्थानप्रथमसंहननशुभवर्णा—शुभवर्णाद्येकादशकागुरुलघुपराघातोच्छ्वासप्रशस्तविहायो—गतित्रसबादरपर्याप्तप्रत्येकस्थिरशुभसुभगसुस्वरादेययशः—कीर्तिनिर्माणरूपाणां द्विचत्वारिंशत्प्रकृतीनामनुत्कृष्टं प्रदेशसत्कर्म चतुर्विधम्। तद्यथा-साद्यनादि ध्रुवमध्रुवं च। तद्यथा—वज्रर्षभनाराचवर्जानां शेषाणामेकचत्वारिंशत्प्रकृतीनां क्षपकश्रेण्यां स्वस्वबन्धान्तसमये गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्म भवति, तच्चैकसामयिकमिति कृत्वा साद्यध्रुवम्। ततोऽन्यत्सर्वमनुत्कृष्टम्। तदपि च द्वितीये समये भवत्सादि। तत्स्थानमप्राप्तस्य पुनरनादि ध्रुवाध्रुवे पूर्ववत्। वज्रर्षभनाराचसंहननस्य तु सप्तमपृथिव्यां सम्यग्दृष्टेर्नारकस्य मिथ्यात्वगन्तुकामस्योत्कृष्टं प्रदेशसत्कर्म तच्च साद्यध्रुवं, ततोऽन्यदनुत्कृष्टं, तदपि च द्वितीये समये भवत्सादि। तत्स्थानमप्राप्तस्य पुनरनादि। ध्रुवाध्रुवे पूर्ववत्। अनन्तानुबन्धियशःकीर्तिसंज्वलनलोभवर्जितानां चतुर्विंशत्यधिकशतसंख्यानां ध्रुवसत्कर्मप्रकृतीनामजघन्यं प्रदेशसत्कर्म त्रिविधम्। तद्यथा-अनादि, ध्रुवम्, अध्रुवं च। तथाहि-एतासां क्षपितकर्मांशस्य स्वस्वक्षयचरमसमये जघन्यं प्रदेशसत्कर्म, तच्चैकसामयिकमिति कृत्वा साद्यध्रुवं च। ततोऽन्यदजघन्यम्, तच्चानादि, सदैव सद्भावात्। ध्रुवाध्रुवता पूर्ववत्। 'चउतिविह' ति यथासंख्येन योजनीयम्, द्विचत्वारिंशत्प्रकृतीनामनुत्कृष्टं चतुर्विधं, ध्रुवसत्कर्मणां चाजघन्यं त्रिविधमिति। तथाऽनन्तानुबन्धिचतुष्टयसंज्वलनलोभयशःकीर्तिरूपाणां षण्णां प्रकृतीनामजघन्यं प्रदेशसत्कर्म चतुर्विधम्। तद्यथा—सादि, अनादि, ध्रुवम्, अध्रुवं च। तथाहि-अनन्तानुबन्धिनामुद्वलके क्षपितकर्मांशे यदा शेषीभूता एका स्थितिर्भवति तदा जघन्यं प्रदेशसत्कर्म। तच्चैकसामयिकमिति कृत्वा साद्यध्रुवं च ततोऽन्यत्सर्वमजघन्यम्। तच्चोद्वलितानां मिथ्यात्वप्रत्ययेन भूयोऽपि बध्यमानानां सादि, तत्स्थानमप्राप्तस्य पुनरनादि। ध्रुवाध्रुवे पूर्ववत्। यशःकीर्तिसंज्वलनलोभयोः पुनः क्षपितकर्मांशस्य क्षपणायोद्यतस्य यथाप्रवृत्तिकरणस्यान्तिमसमये जघन्यं प्रदेशसत्कर्म। तच्चैकसामयिकमिति कृत्वा साद्यध्रुवं च। ततोऽन्यत्सर्वमजघन्यम् तदपि चानिवृत्तिकरणप्रथमसमये गुणसंक्रमेण प्रभूतस्य दलिकस्य प्राप्यमाणत्वात् अजघन्यं भवत् सादि, तत्स्थानमप्राप्तस्य पुनरनादि। ध्रुवाध्रुवता पूर्ववत्। 'अभासियं दुविहं' ति अभाषितम्-अनुक्तं सर्वासां प्रकृतीनां द्विविधं-द्विप्रकारमवगन्तव्यम्। तद्यथा-साद्यध्रुवं च। तत्र द्विचत्वारिंशत्प्रकृतीनामभाषितं जघन्यमजघन्यमुत्कृष्टं च। तत्रोत्कृष्टं द्विप्रकारं भावितमेव। जघन्याजघन्यता च वक्ष्यमाणं स्वामित्वमवलोक्य स्वयमेव भावनीया। ध्रुवसत्कर्मणां च चतुर्विंशतिशतसंख्यानामभाषितमुत्कृष्टमनुत्कृष्टं जघन्यं च। तत्र जघन्यं भावितमेव। उत्कृष्टानुत्कृष्टे मिथ्यादृष्टौ गुणितकर्मांशे प्राप्येते। ततो द्वे अपि साद्यध्रुवे। एवमनन्तानुबन्धिसंज्वलनलोभ—यशःकीर्तीनामपि उत्कृष्टानुत्कृष्टे भावनीये। जघन्यं तु भावितमेव शेषाणां चाध्रुवसत्कर्मणां चत्वारोऽपि विकल्पाः साद्यध्रुवा अध्रुवसत्कर्मत्वादवसेयाः।

तदेवं कृता साद्यनादिप्ररूपणा। सम्प्रति स्वामित्वं वक्तव्यम्। तच्च द्विधा-उत्कृष्टप्रदेशसत्कर्मस्वामित्वं जघन्यप्रदेशसत्कर्मस्वामित्वं च। तत्रो-त्कृष्टप्रदेशसत्कर्मस्वामित्वमाह—

संपुन्नगुणियकम्मो, पएसउक्कस्ससंतसामी उ।
तस्सेव उ उप्पिविणि-ग्गयस्स कासिं चि वरणेहिं॥२७॥

'संपुन्न' त्ति—उत्कृष्टप्रदेशसत्कर्मस्वामी सम्पूर्णगुणितकर्मांशः सप्तमपृथिव्यां नारकश्चरमसमये वर्तमानः प्रायः सर्वासामपि प्रकृतीनामवगन्तव्यः। कासांचित्पुनः प्रकृतीनां तस्यैव सम्पूर्णगुणितकर्मांशस्य सप्तमपृथिव्या विनिर्गतस्योपरिष्टात् विशेषोऽस्ति, ततस्तमहं वर्णयामि वर्णयिष्यामि। "वर्तमानसामीप्ये वर्तमानवद्वा" (पा०-३३-३१३) इति (श्रीसि०—३—४—८४) भविष्यति वर्तमानः।

प्रतिज्ञातमेवाऽऽह—

मिच्छत्ते मीसम्मि य, संपक्खित्तम्मि मीस सुद्धाणं।
वरिसवरस्स उ ईसा-णगस्स चरमम्मि समयम्मि॥२८॥

'मिच्छत्ते' त्ति—स,प्रागभिहितस्वरूपो गुणितकर्मांशः सप्तमपृथिव्या उद्वृत्य तिर्यक्षूत्पन्नः, तत्राप्यन्तर्मुहूर्तं स्थित्वा मनुष्येषु मध्ये समुत्पन्नः, तत्र सम्यक्त्वं प्राप्य सप्तकक्षपणाय शीघ्रमभ्युद्यतः। ततो यस्मिन् समये मिथ्यात्वं सम्यग्मिथ्यात्वे सर्वसंक्रमेण प्रक्षिपति, तस्मिन्समये सम्यङ्मिथ्यात्वस्योत्कृष्टं प्रदेशसत्कर्म। तदपि च सम्यङ्मिथ्यात्वं यस्मिन् समये सर्वसंक्रमेण सम्यक्त्वे प्रक्षिपति, तस्मिन् समये सम्यक्त्वस्योत्कृष्टं प्रदेशसत्कर्म। अक्षरयोजना त्वियम्—मिथ्यात्वे मिश्रे च यथासंख्यं मिश्रे सम्यक्त्वे च प्रक्षिप्ते सति तयोर्मिश्रशुद्धयोः मिश्रसम्यक्त्वयोरुत्कृष्टं प्रदेशसत्कर्म भवति। तथा स एव गुणितकर्मांशो नारकस्तिर्यग्भूत्वा कश्चिदीशानदेवो जातः। सोऽपि च तत्रातिसंक्लिष्टो भूत्वा भूयो भूयो नपुंसकवेदं बध्नाति। तदानीं च तस्य स्वभवान्त्यसमये वर्तमानस्य वर्षवरस्य नपुंसकवेदस्योत्कृष्टं प्रदेशसत्कर्म।

ईसाणे पूरित्ता, नपुंसगंतो असंखवासासु ।
पल्लासंखियभागे-ण पूरिए इत्थिवेयस्स ॥ २६ ॥

'ईसाणे' त्ति—ईशानदेवलोके उत्कृष्टप्रकारेण नपुंसकवेदमापूर्य नपुंसकवेदस्योत्कृष्टं प्रदेशसंचयं कृत्वा ततः संख्येयवर्षायुष्केषु मध्ये समुत्पद्य पुनरसंख्येयवर्षायुष्केषु मध्ये समुत्पन्न । तत्र च तेन संक्लिष्टेन भूत्वा पल्योपमासंख्येयभागमात्रेण कालेन पूरिते स्त्रीवेदे बन्धेन नपुंसकवेददलिकसंक्रमेण च प्रभूतमापूरिते स्त्रीवेदे सति तदानीं तस्य स्त्रीवेदस्योत्कृष्टं प्रदेशसत्कर्म भवति ।

पुरिसस्स पुरिससंकम-पएसउक्कस्स सामिगस्सेव ।
इत्थी जं पुण समयं, संपक्खित्ता हवइ ताहे ॥ ३० ॥

'पुरिसस्स' त्ति—पुरुषस्य पुरुषवेदस्योत्कृष्टं प्रदेशसत्कर्म उत्कृष्टपुरुषवेदसंक्रमस्वामिन एव वेदितव्यम् , एतदुक्तं भवति—य एवोत्कृष्टपुरुषवेदसंक्रमस्वामी स एवोत्कृष्टपुरुषवेदप्रदेशसत्कर्मस्वाम्यपि वेदितव्यः । नवरं यं समयं यस्मिन् समये स्त्रीवेदं पुरुषवेदे संप्रक्षेप्ता भवति संक्रमयति 'ताहे' तदानीं पुरुषवेदस्योत्कृष्टप्रदेशसत्कर्मस्वामी ।

तस्सेव उ संजलणा, पुरिसाइकमेण सव्वसंछोभे ।
चउरुवसमित्तु खिप्पं, रागंते सायउच्चजसा ॥ ३१ ॥

'तस्सेव' त्ति-य एव पुरुषवेदोत्कृष्टप्रदेशसत्कर्मस्वामी तस्यैव संज्वलनाश्चत्वारः क्रोधादयः क्रमेण पुरुषवेदादिसत्कदलिकसर्वसंक्षोभे उत्कृष्टप्रदेशसत्कर्मणो भवन्ति । इयमत्र भावना—य एव पुरुषवेदोत्कृष्टप्रदेशसत्कर्मस्वामी यदा पुरुषवेदं सर्वसंक्रमेण संज्वलनक्रोधे संक्रमयति तदा संज्वलनक्रोधोत्कृष्टप्रदेशसत्कर्मस्वामी । स एव यदा संज्वलनक्रोधं सर्वसंक्रमेण माने संक्रमयति तदा संज्वलनमानोत्कृष्टप्रदेशसत्कर्मस्वामी । स एव संज्वलनमानं सर्वसंक्रमेण संज्वलनमायायां संक्रमयति तदा संज्वलनमायोत्कृष्टप्रदेशसत्कर्मस्वामी । स एव यदा संज्वलनमाया सर्वसंक्रमेण संज्वलनलोभे संक्रमयति तदा संज्वलनलोभोत्कृष्टप्रदेशसत्कर्मस्वामी । तथा चतुरो वारान् मोहनीयमुपशमय्य गुणितकर्मांशः शीघ्रं क्षपणायोत्थितस्तस्य सूक्ष्मसंपरायगुणस्थानकचरमसमये वर्तमानस्य सातवेदनीयोच्चैर्गोत्रयशःकीर्तीनामुत्कृष्टं प्रदेशसत्कर्म । यस्मादेतासु प्रकृतिषु श्रेण्यामारूढः सन् गुणसंक्रमेण प्रभूतान्यशुभप्रकृतिदलिकानि संक्रमयति । ततः सूक्ष्मसम्परायचरमसमये एतासामुत्कृष्टं प्रदेशसत्कर्म प्राप्यते । उक्तं च—" चउरुवसामिय मोहं, जसुच्चसायाण सुहुमखवगंते । जं असुभपगइदलिया-ण, संकमो होइ एयासु ॥ १ ॥ "

देवनिरियाउगाणं, जोगुक्कस्सेहिँ जेट्ठगद्धाए ।
बद्धाणि ताव जावं, पढमे समए उदिन्नाणि ॥ ३२ ॥

'देवनिरियाउगाण' त्ति-देवनारकायुषोरुत्कृष्टैर्योगैरुत्कृष्टया च बन्धाऽद्धया द्वयोः सतोस्तावदुत्कृष्टं प्रदेशसत्कर्म प्राप्यते, यावत्प्रथमे समये उदीर्णे उदयप्राप्ते भवतः । किमुक्तं भवति—बन्धादारभ्योदयप्रथमसमयं यावद्देवनारकायुषोरुत्कृष्टप्रकारेण द्वयोरुत्कृष्टं प्रदेशसत्कर्म भवति ।

सेसाउगाणि नियगे-सु चेव आगम्म पुव्वकोडीए ।
सायबहुलस्स अचिरा, बंधंते जाव नो वट्टे ॥ ३३ ॥

'सेसाउगाणि' त्ति—शेषायुषी—तिर्यङ्मनुष्यायुषी । 'पुव्वकोडीए' त्ति पूर्वकोट्योपलक्षिते पूर्वकोटिप्रमाणे उत्कृष्टया बन्धाऽद्धया उत्कृष्टैर्योगैर्बद्धे । बद्धा च निजकेषु भवेषु निजनिजभवे समागत्य, सातबहुलः सन् ते आयुषी यथायोगमनुभवति । सुखितस्य हि न भूयांस आयुःपुद्गलाः परिसटन्तीति कृत्वा सातग्रहणं कृतम् । ततोऽचिरात् बन्धान्ते इति उत्पत्तिसमयादूर्ध्वमन्तर्मुहूर्त्तमात्रमेव स्थित्वा मर्तुकामो जातः सन् उत्कृष्टया बन्धाऽद्धया उत्कृष्टैश्च योगैरन्यत् पारभविकं समानजातीयं मनुष्यो मनुष्यायु तिर्यङ् च तिर्यगायुर्बध्नाति । ततो बन्धान्तसमये यावन्नाद्याप्यपवर्तयति तावत्तस्य सातबहुलस्य मनुष्यस्य सतो मनुष्यायुषः तिरश्चः ( च ) सतस्तिर्यगायुष उत्कृष्टं प्रदेशसत्कर्म भवति । यतस्तस्य तदानीं स्वभवायुः किञ्चिदूनं परभवायुश्च समानजातीयं परिपूर्णदलिकमस्तीति कृत्वा, बन्धान्तरं चायुर्वेद्यमाने द्वितीये समयेऽपवर्त्तयिष्यति, ततः उक्तं बन्धान्ते इति ।

पूरित्तु पुव्वकोडी, पुहुत्तनारगदुगस्स बंधंते ।
एवं पल्लतिगंते, वेउव्वियसेसनवगम्मि ॥ ३४ ॥

'पूरित्तु' त्ति-पूर्वकोटीपृथक्त्वं पूर्वकोटीसप्तकं यावत् संक्लिष्टाध्यवसायवशेन नरकद्विकं नरकगतिनरकानुपूर्वीलक्षणं भूयोभूय आपूर्य बन्धेन निचितं कृत्वा नरकाभिमुखो बन्धान्तसमये नरकद्विकस्योत्कृष्टप्रदेशसत्कर्मस्वामी । तथा एवम्-अनेनैव प्रकारेण पूर्वकोटिपृथक्त्वं यावत् भोगभूमिषु मध्ये पल्योपमत्रयं च यावद्विशुद्धाध्यवसायवशेन वैक्रियैकादशकात् नरकद्विकेऽपनीते शेषं यद्वैक्रियनवकं देवद्विकं वैक्रियसप्तकं चेत्यर्थः । तत् बन्धेनापूर्य देवत्वाभिमुखस्तासां देवद्विकवैक्रियसप्तकरूपाणां नवप्रकृतीनामुत्कृष्टप्रदेशसत्कर्मस्वामी ।

तमतमगो सव्वलहुं, सम्मत्तं लभिय सव्वचिरमद्धं ।
पूरित्ता मणुयदुगं, स वज्जरिसहं सबंधंते ॥ ३५ ॥

'तमतमगो' त्ति-तमस्तमगः सप्तमपृथ्वीनारकः । सर्वलघु अतिक्षिप्रं जन्मानन्तरमन्तर्मुहूर्ते गते सतीत्यर्थः । सम्यक्त्वं लब्ध्वा । ' सव्वचिरमद्धं ' ति अतिदीर्घं कालं यावत् सम्यक्त्वमनुपालयन् मनुष्यद्विकं वज्रर्षभनाराचसंहननं च बन्धेनापूर्य यतोऽनन्तरसमये मिथ्यात्वं यास्यति तस्मिन् समये बन्धाऽद्धाचरमभूते तयोर्मनुष्यद्विकवज्रर्षभनाराचसंहननयोरुत्कृष्टं प्रदेशसत्कर्म भवति ।

सम्मद्दिट्ठिधुवाणं, बत्तीसुदहीसयं चउक्खुत्तो ।
उवसामइत्तु मोहं, खवेंतगे तियगबंधंते ॥ ३६ ॥

' सम्मद्दिट्ठि ' त्ति-याः प्रकृतयः सम्यग्दृष्टीनां बन्धमाश्रित्य ध्रुवाः पञ्चेन्द्रियजातिसमचतुरस्रसंस्थानपराघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकसुस्वरसुभगादेयरूपा द्वादश तासां द्वात्रिंशदधिकसागरोपमाणां शतं यावद्बन्धेनोपचितानां चतुः कृत्वः चतुरो वारान् मोहनीयं चोपशमय्य । मोहनीयं हि उपशमयन् प्रभूतानि दलिकानि गुणसंक्रमेण

संक्रमयतीति कृत्वा चतुःकृत्वो मोहोपशमग्रहणम्। ततः क्षपणायोद्यतस्य निजबन्धव्यवच्छेदकाले उत्कृष्टं प्रदेशसत्कर्म भवति।

धुवबंधीण सुभाणं, सुभथिराणं च नवरि सिग्घयरं।
तित्थगराहारगतणू, तेचीसुदही विरचिया य ॥ ३७ ॥

'धुवबधीण' त्ति-याः शुभध्रुवबन्धिन्यः प्रकृतयस्तैजससप्तकशुभवर्णाद्येकादशकगुरुलघुनिर्माणरूपा विंशतिप्रकृतयः तासां शुभस्थिरयोश्च पूर्वोक्तेन प्रकारेणोत्कृष्टं प्रदेशसत्कर्म भावनीयम्। नवरं चतुःकृत्वो मोहनीयोपशमनानन्तरं शीघ्रतरं क्षपणायोद्यतस्येति वक्तव्यं शेषं तथैव। तथा तीर्थकरनाम्नो गुणितकर्मांशेन देशोनपूर्वकोटिद्विकाधिकानि त्रयस्त्रिंशत्सागरोपमाणि यावद्बन्धेन पूरितस्य स्वबन्धान्तसमये उत्कृष्टं प्रदेशसत्कर्म। आहारकतनोराहारकसप्तकस्य तु विरचितस्य देशोनपूर्वकोटिं यावत् भूयो भूयो बन्धेनोपचितस्य स्वबन्धव्यवच्छेदसमये उत्कृष्टं प्रदेशसत्कर्म।

तुल्ला नपुंसवेए, एगिंदियथावरायवुज्जोया।
विगलसुहुमत्तिया वि य, नरतिरिय चिरऽज्जिया होंति॥३८

'तुल्ल' त्ति—नपुंसकवेदेन तुल्या एकेन्द्रियजातिस्थावरातपोद्योता वेदितव्याः। यथा नपुंसकवेदस्य ईशानदेवभवचरमसमये उत्कृष्टं प्रदेशसत्कर्मोक्तं तथा एतेषामपि द्रष्टव्यमित्यर्थः। विकलत्रिकं द्वित्रिचतुरिन्द्रियजातिरूपं, सूक्ष्मत्रिकं सूक्ष्मापर्याप्तसाधारणरूपं यदा पूर्वकोटिपृथक्त्वं यावत् तिर्यङ्मनुष्यभवैरर्जितं भवति, तदा स्वबन्धान्तसमये तेषां तिर्यङ्मनुष्याणां तद्विकलत्रिकादिकमुत्कृष्टप्रदेशसत्कर्म भवति। तदेवमुक्तमुत्कृष्टप्रदेशसत्कर्मस्वामित्वम्।

सम्प्रति जघन्यप्रदेशसत्कर्मस्वामित्वमाह—

खविर्य सयम्मि पगयं, जहन्नगे नियगसंतकम्मंते।
खणसंजोइय संजो—यणाण चिरसम्मकालंते ॥ ३९ ॥

'खवियं'ति-जघन्ये-जघन्यप्रदेशसत्कर्मस्वामित्वे प्रकृतमधिकारः। क्षपितकर्मांशेन। सूत्रे चात्र सप्तमी तृतीयार्थे वेदितव्या। 'नियगसंतकम्मंते' त्ति स्वस्वसत्ताचरमसमये। एव तावत्सर्वकर्मणां सामान्येनोक्तम्। सम्प्रति पुनर्येषां कर्मणां विशेषोऽस्ति तानि पृथगेवाह-'खणे' त्यादि इह क्षपितकर्मांशेन सम्यग्दृष्टिना सता अनन्तानुबन्धिन उद्वलिताः। ततः पुनरपि मिथ्यात्वं गतेनान्तर्मुहूर्तं कालं यावदनन्तानुबन्धिनो बद्धाः। ततो भूयोऽपि सम्यक्त्वं प्रतिपन्नः। तच्च सम्यक्त्वं द्वे षट्षष्ठी सागरोपमाणां यावदनुपाल्य क्षपणार्थमभ्युद्यतस्तस्यानन्तानुबन्धिनं क्षपयतो यदा एका स्थितिः स्वरूपापेक्षया समयमात्रावस्थाना अन्यथा तु द्विसमयावस्थाना शेषीभवति तदा तेषां जघन्यं प्रदेशसत्कर्म।

उव्वलमाणीणं उ—व्वलणा एगट्ठिइ दुसामइगा।
दिट्ठिदुगे वत्तीसे, उदहिसए पालिए पच्छा ॥ ४० ॥

'उव्वलमाणीणं' ति—उद्वल्यमानानां त्रयोविंशतिप्रकृतीनामुद्वलनकाले या एका स्थितिः स्वरूपापेक्षया समयमात्रावस्थाना, अन्यथा तु द्विसमयमात्रावस्थाना, सा तासां जघन्यं प्रदेशसत्कर्म। एतच्च सामान्येनोक्तम्, अत्रैव विशेषमाह— 'दिट्ठिदुगे' त्यादि द्वात्रिंशदधिकं सागरोपमाणां शतं यावत् सम्यक्त्वमनुपाल्य पश्चान्मिथ्यात्वं गतो मन्दोद्वलनया च पल्योपमासंख्येयभागमात्रप्रमाणया सम्यक्त्वमिश्रे उद्वलयितुमारभते स। उद्वलयंश्च तद्दलिकं मिथ्यात्वे संक्रमयति। सर्वसंक्रमेण चावलिकाया उपरितनं सकलमपि दलिकं संक्रमितम् आवलिकागतं च दलिकं स्तिवुकसंक्रमेण संक्रमयति संक्रमयतश्च यदैका स्थितिः स्वरूपापेक्षया समयमात्रावस्थाना, अन्यथा तु द्विसमयमात्रावस्थाना, तदा तयोः सम्यक्त्वमिश्रयोर्जघन्यं प्रदेशसत्कर्म।

अंतिमलोभजसाणं,मोहं अणुवसमइत्तु खीणाणं।
नेयं अहापवत्त—करणस्स चरमम्मि समयम्मि ॥ ४१ ॥

'अन्तिम' त्ति—अन्तिमलोभः—संज्वलनलोभः ततः संज्वलनलोभयशःकीर्त्योश्चतुरो वारान् मोहनीयमनुपशमय्य-मोहस्योपशमं कृत्वा, उपशमश्रेणिमकृत्वेत्यर्थः। शेषाभिः क्षपितकर्मांशक्रियाभिः क्षीणयोर्यथाप्रवृत्तकरणचरमसमये जघन्यं प्रदेशसत्कर्म ज्ञेयम्। मोहनीयोपशमे हि क्रियमाणे गुणसंक्रमेण प्रभूतं दलिकमवाप्यते, न च तेन प्रयोजनमिति कृत्वा मोहनीयोपशमनप्रतिषेधः।

वेउव्विकारसगं, खणबंधगतेउनरयजिट्ठठिई।
उव्वट्टित्तु अबंधिय, एगेंदिगए चिरुव्वलणे ॥ ४२ ॥

'वेउव्विकारसगं' ति—नरकद्विकदेवद्विकवैक्रियसप्तकरूपं वैक्रियैकादशकं पूर्वं क्षपितकर्मांशेनोद्वलितम्, ततो भूयोऽप्यन्तर्मुहूर्तं कालं यावद्बद्धम्। ततो ज्येष्ठस्थितौ नरकेऽप्रतिष्ठानाभिधाने नरके जातः। तत्र च सता तेन तत् वैक्रियैकादशकं त्रयस्त्रिंशत्सागरोपमाणि यावत् विपाकतः संक्रमतश्च यथायोगमनुभूतम्। ततो नरकादुद्वृत्य तिर्यक्पञ्चेन्द्रियेषु मध्ये समुत्पन्नः। तत्र च वैक्रियैकादशकस्य भूयोऽपि बन्धो न कृतः, तथाविधाध्यवसायाभावात्। ततः एकेन्द्रियो जातः। स च तद्वैक्रियैकादशकं चिरोद्वलनया उद्वलयितुं लग्नः। चिरोद्वलनया चोद्वलयतः सतो यदैका स्थितिः स्वरूपापेक्षया समयमात्रावस्थाना, अन्यथा तु द्विसमयमात्रावस्थाना शेषीभवति तदा तस्य वैक्रियैकादशकस्य जघन्यं प्रदेशसत्कर्म।

मणुयदुगुच्चागोए, सुहुमखणबद्धगेसु सुहुमतसे।
तित्थयराहारतणू, अप्पद्धा बंधिया सुचिरं ॥ ४३ ॥

'मणुय' त्ति—मनुष्यद्विकमुच्चैर्गोत्रं च पूर्वं सूक्ष्मत्रसेन क्षपितकर्मांशेनोद्वलितम्, ततः 'सुहुमखणबद्धगेसु' त्ति सूक्ष्मेण सूक्ष्मैकेन्द्रियेण पृथिव्यादिना सता क्षणमन्तर्मुहूर्तकालं यावत् भूयोऽपि बद्धम्। ततः सूक्ष्मत्रसेषु तेजोवायुषु मध्ये समुत्पन्नः। तत्र च चिरोद्वलनया उद्वलयितुं लग्नः उद्वलयतश्च यदा तेषामेका स्थितिर्द्विसमयमात्रावस्थाना शेषीभवति तदा तयोर्मनुष्यद्विकोच्चैर्गोत्रयोः सूक्ष्मत्रसयोर्जघन्यं प्रदेशसत्कर्म। तथा तीर्थकरनाम 'अप्पद्धाबंधिय' त्ति' अल्पं कालं चतुरशीतिवर्षसहस्राणि सातिरेकाणि यावद्बद्धा केवली जातः। ततः 'सुचिरं' ति प्र-

भूतं कालं देशोनपूर्वकोटिरूपं यावत् केवलिपर्यायं परिपाल्यायोगिकेवलिनः सतः क्षपितकर्मांशस्य चरमसमये वर्तमानस्य तीर्थकरनाम्नो जघन्यं प्रदेशसत्कर्म । अन्ये तु ब्रुवते-तीर्थकरनाम्नः क्षपितकर्मांशेन तत्प्रायोग्यजघन्ययोगिना प्रथमसमये या लता बद्धा सा जघन्यं प्रदेशसत्कर्म । 'आहारतणु' त्ति आहारकतनूपलक्षितमाहारकसप्तकम् । 'अप्पद्धा बंधिय' त्ति अल्पकालं बद्धा मिथ्यात्वं गतः, ततः 'सुचिर' त्ति चिरोद्वलनया उद्वलयतः सतो यदा एका स्थितिर्द्विसमयमात्रावस्थाना शेषीभवति तदा तस्य जघन्यं प्रदेशसत्कर्म । तदेवमुक्तं जघन्यप्रदेशसत्कर्मस्वामित्वम् ।

सम्प्रति प्रदेशसत्कर्मस्थानप्ररूपणार्थं स्पर्धकप्ररूपणामाह—

चरमावलियपविट्ठा, गुणसेढी जासिमत्थि न य उदओ ।
आवलिगा समयसमा, तासिं खलु फड्डगाइं तु ॥ ४४ ॥

'चरमावलिय' त्ति-चरमा-सर्वान्तिमा या क्षपणकाले आवलिका तां प्रविष्टा गुणश्रेणिर्यासां प्रकृतीनामस्ति न च उदय तासां स्त्यानर्द्धित्रिकमिथ्यात्वाद्यद्वादशकषायनरकद्विकतिर्यग्द्विकपञ्चेन्द्रियजातिवर्जजातिचतुष्टयातपोद्योतस्थावरसूक्ष्मसाधारणरूपाणामेकोनत्रिंशत्संख्यानामावलिकाया यावन्त समयास्तावन्ति स्पर्धकानि भवन्ति । खलुशब्दो वाक्यालङ्कारे । तुरेवकारार्थः । आवलिकासमयसमा-ऽन्यैवेत्यर्थः । इयमत्र भावना-अभव्यप्रायोग्यजघन्यप्रदेशसत्कर्मयुक्तस्त्रसेषु मध्ये समुत्पन्नः । तत्र च सर्वविरतिं देशविरतिं चानेकशो लब्ध्वा चतुरश्च वारान् मोहनीयमुपशमय्य भूयोऽप्येकेन्द्रियेषु मध्ये समुत्पन्नः । तत्र च पल्योपमासंख्येयभागमात्रं कालं यावत् स्थित्वा मनुष्येषु मध्ये समुत्पन्नः तत्र च क्षपणायामभ्युत्थितः । तस्य चरमे स्थितिखण्डकेऽपगते सति चरमावलिकायाः स्तिबुकसंक्रमेण क्षीयमाणाया यदा एका स्थितिर्द्विसमयमात्रावस्थाना शेषीभवति तदा सर्वमजघन्यं यत् प्रदेशसत्कर्म तत् प्रथमं प्रदेशसत्कर्मस्थानम् । ततः एकस्मिन् परमाणौ प्रक्षिप्ते सति अन्यत्—द्वितीयं प्रदेशसत्कर्मस्थानं भवति । ततो द्वयोः परमाण्वोः प्रक्षिप्तयोरन्यत्-तृतीयं प्रदेशसत्कर्मस्थानं त्रिषु परमाणुषु प्रक्षिप्तेषु अन्यत् । एवमेकैकपरमाणुप्रक्षेपेण प्रदेशसत्कर्मस्थानानि नानाजीवापेक्षयाऽनन्तानि तावद्वाच्यानि यावत्तस्मिन्नेव चरमे स्थितिविशेषे गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्मस्थानं भवति । अतः ऊर्ध्वमन्यत्प्रदेशसत्कर्मस्थानं न प्राप्यते ततः इदमेकं स्पर्धकम् । इदं तु चरमस्थितिमधिकृत्य । एवं द्वयोश्चरमस्थित्योर्द्वितीयं स्पर्धकं वक्तव्यम् । तिसृषु च स्थितिषु तृतीयम् । एवं तावद्वाच्यं यावत्समयोनावलिकासमयप्रमाणानि स्पर्धकानि भवन्ति । तथा चरमस्थितिघातस्य चरमं प्रक्षेपमादिं कृत्वा पश्चानुपूर्व्या प्रदेशसत्कर्मस्थानानि यथोत्तरं वृद्धानि तावद्वक्तव्यानि यावदात्मीयमात्मीयमुत्कृष्टं प्रदेशसत्कर्म । ततः एतावदेतदपि सकलस्थितिगतं यथासम्भवमेकं स्पर्धकं विवक्ष्यते । ततः एतेन स्पर्धकेन सहावलिकासमयप्रमाणानि स्पर्धकानि भवन्ति ।

संजलणतिगे चेवं, अहिगाणि य आलिगाएँ समएहिं ।
दुसमयहीणेहिँ गुणा-णि जोगठाणाणि कसिणाणि॥४५॥

'संजलणतिगे' त्ति-संज्वलनत्रिके क्रोधमानमायारूपे, एवं पूर्वोक्तेन प्रकारेण स्पर्धकानि वाच्यानि । इयमत्र भावना—क्रोधादीनां प्रथमस्थितिर्यावदावलिकाशेषा न भवति तावत् स्थितिघाते रसघातबन्धोदयोदीरणाः प्रवर्त्तन्ते । आवलिकाशेषायां तु प्रथमस्थितौ व्यवच्छिद्यन्ते, ततोऽनन्तरसमये समयोनावलिकागतं समयद्वयोनावलिकाद्विकबद्धं च सत्कदस्ति, अन्यत् सर्वं क्षीणं तत्र समयोनावलिकामतस्य दलिकस्य स्पर्धकभावना यथा प्राक् कृता तथाऽत्रापि कर्त्तव्या, यत्तु समयद्वयोनावलिकाद्विकबद्धं दलिकमस्ति तस्यान्यथा स्पर्धकभावना क्रियते पूर्वप्रकारेणात्र स्पर्द्धकस्वरूपस्याप्राप्यमाणत्वात् । अथोच्येत कथं स्थितिघातरसघातबन्धोदयोदीरणाव्यवच्छेदानन्तरसमये समयद्वयोनावलिकाद्विकबद्धमेव दलिकमस्ति न शेषमिति ज्ञायते ?, उच्यते—इह चरमसमयक्रोधादिवेदकेन यद्बद्धं दलिकं तद्बन्धावलिकातीतम् आवलिकामात्रेण कालेन निरवशेषं संक्रमयति । तथा च सति आवलिकाचरमसमये स्वरूपापेक्षयाऽकर्मी भवति । द्विचरमसमयवेदकेन यद्बद्धं तदपि च बन्धावलिकायामतीतायामन्येनावलिकामात्रेण कालेन संक्रमयति, आवलिकायाश्चरमसमये अकर्मी भवति । एवं यत्कर्म यस्मिन् समये बद्धं तत्तस्मात्समयादारभ्य द्वितीयावलिकाचरमसमयेऽकर्मी भवति । तथा च सति बन्धाद्यभावप्रथमसमये समयद्वयोनावलिकाद्विकबद्धमेव सत्प्राप्यते, न शेषम् । तथाहि-तत्त्वतोऽसंख्यातसमयात्मिकाऽप्यावलिका किलासत्कल्पनया चतुःसमयात्मिका कल्प्यते । ततो बन्धादिव्यवच्छेदचरमसमयादर्वाक् अष्टमे समये यद्बद्धं तद्बन्धावलिकाया चतुः समयात्मिकायामतीतायाम् अन्यया चतुः समयात्मिकया आवलिकया अन्यत्र संक्रम्यमाणं चरमसमये बन्धादिव्यवच्छेदसमयरूपे सर्वथा स्वरूपेण न प्राप्यते, अन्यत्र सर्वात्मना संक्रमितत्वात् । सप्तमे समये यद्बद्धं तच्चतुःसमयात्मिकायामावलिकायामतिक्रान्तायामन्यया चतुःसमयात्मिकया अन्यत्र संक्रम्यमाणं बन्धादिव्यवच्छेदानन्तरसमये स्वरूपेण न प्राप्यते, सर्वात्मनाऽन्यत्र संक्रमितत्वात्, शेषषष्ठादिसमयबद्धं तु प्राप्यते । ततो बन्धादौ व्यवच्छिन्ने सति अनन्तरसमये समयद्वयोनावलिकाद्विकबद्धमेव सत् प्राप्यते नान्यदिति । तत्र बन्धादिव्यवच्छेदसमये जघन्ययोगिना सता यद्बद्धं तस्य बन्धावलिकायामतीतायामन्यया आवलिकयाऽन्यत्र संक्रम्यमाणस्य चरमसमये यत्संक्रमयिष्यति न तावत्संक्रमयति तत् संज्वलनक्रोधस्य जघन्यं प्रदेशसत्कर्मस्थानम् । एवं द्वितीययोगस्थानवर्तिना बन्धादिव्यवच्छेदसमये यद्बद्धं तस्यापि दलिकं चरमसमये द्वितीयं प्रदेशसत्कर्मस्थानम् । एवं तावद्वाच्यं यावदुत्कृष्टयोगस्थानवर्तिना सता बन्धादिव्यवच्छेदसमये यद्बद्धं तस्य दलिकं चरमसमये सर्वोत्कृष्टमन्तिमं प्रदेशसत्कर्मस्थानम् । एवं जघन्यं योगस्थानमादिं कृत्वा यावन्ति योगस्थानानि भवन्ति तावन्ति प्रदेशसत्कर्मस्थानान्यपि चरमसमये प्राप्यन्ते, इदमेकं स्पर्धकम् । एवं बन्धादिव्यवच्छेदद्विचरमसमये जघन्ययोगादिना यद्बध्यते तत्रापि द्वितीयावलिकाचरमसमये

प्रागिव तावन्ति प्रदेशसत्कर्मस्थानानि भावनीयानि । केवलं स्थितिद्वयभावीनि तानि प्रतिपत्तव्यानि, बन्धादिव्यवच्छेदचरमसमये बद्धस्यापि दलिकस्य तदानीं द्विसमयस्थितिकस्य प्राप्यमाणत्वात् । इदं द्वितीयं स्पर्धकम् । एव ब-न्धादिव्यवच्छेदद्विचरमसमये जघन्ययोगादिना यद्बध्यते तत्रापि द्वितीयावलिकाचरसमये प्रागिव तावन्ति प्रदेशसत्कर्मस्थानानि भवन्ति । नवरं स्थितित्रयभावीनि तानि भावनीयानि, तदानीं बन्धादिव्यवच्छेदचरमसमयब-द्धस्यापि दलिकस्य त्रिसमयस्थितिकस्य प्राप्यमाणत्वा-त् । इदं तृतीयं स्पर्धकम् । एवं समयद्वयोनावलिकाद्विके या-वन्तः समयास्तावन्ति स्पर्धकानि भवन्ति । तत आह-' अ-हिगाणि य आवलिगाए ' इत्यादि । योगस्थानानि कृत्स्नानि समस्तानि समुदायैकरूपतया विवक्षितानि, सकलयोगस्थानसमुदाय इत्यर्थः । आवलिकागतैः समयैः समयद्वयहीनैर्गु-ण्यन्ते गुणिते सति यावन्तः सकलयोगस्थानसमुदायास्ताव-न्ति प्रथमस्थितौ व्यवच्छिन्नायामधिकानि स्पर्धकानि भव-न्ति । तथाहि-बन्धादिव्यवच्छेदानन्तरसमये समयद्वयोना-वलिकाद्विकसमयप्रमाणानि स्पर्धकानि प्राप्यन्ते । एतच्चान-न्तरमेव भावितम् । बन्धादिव्यवच्छेदादूर्ध्वं च प्रथमस्थिति-रावलिकामात्रा तिष्ठति, ततस्तस्यामावलिकामात्रायां प्रथम-स्थितौ संक्रमेण व्यवच्छिद्यमानायां परत आवलिकासमय-प्रमाणानि स्पर्धकानि अन्यत्र संक्रमेण व्यवच्छिद्यन्ते अत एव च तानि पृथक् न गुण्यन्ते । ततस्तेषु व्यवच्छिन्नेषु प्र-थमस्थितौ च व्यवच्छिन्नाया शेषाणि समयद्वयोनावलिका-समयप्रमाणान्येवाधिकानि प्राप्यन्ते, नान्यानीति ।

वेएसु फड्डगदुगं, अहिगा पुरिसस्स वेड आवलिया ।
दुसमयहीणा गुणिया, जोगट्ठाणेहिँ कसिणेहिं ॥४६॥

'वेएसु' त्ति—वेदेषु स्त्रीवेदपुरुषवेदनपुंसकवेदेषु प्रत्येकं द्वे द्वे स्पर्धके भवत. । कथमिति चेद् ?, उच्यते-कश्चिज्जन्तुरभवसिद्धिकप्रायोग्यजघन्यप्रदेशसत्कर्मा त्रसेषु मध्ये समुत्पन्न. तत्र देशविरतिं सर्वविरतिं च बहुशो लब्ध्वा चतुरश्च वारान् मोहनीयमुपशमय्य द्वात्रिंशदधिक च सागरोपमाणां शतं यावत्सम्यक्त्वमनुपाल्याप्रतिपतितसम्यक्त्वो नपुंसकवेदेन क्षपकश्रेणिमारूढः, ततो नपुंसकवेदस्य प्रथमस्थितौ द्विचरमसमये वर्तमाने उपरितनस्थितिखण्डमन्यत्र संक्रमितम् ,तथा सति उपरितनी स्थितिः सर्वात्मना निर्लेपीकृता । ततः प्रथमस्थितौ चरमसमये सर्वजघन्यं यत् प्रदेशसत्कर्म तत् प्रथमं प्रदेशसत्कर्मस्थानम् । तत एकस्मिन् परमाणौ प्रक्षिप्ते सति द्वितीयं प्रदेशसत्कर्मस्थानम् । परमाणुद्वयप्रक्षेपे च तृतीयम् । एव नानाजीवापेक्षया एकैकपरमाणुवृद्ध्या प्रदेशसत्कर्मस्थानानि अनन्तानि तावद्वाच्यानि यावद्गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्मस्थानम् । इदमेकं स्पर्धकम् । ततो द्वितीयस्थितौ चरमखण्डे संक्रम्यमाणे चरमसमये पूर्वोक्तप्रकारेण सर्वजघन्यं यत्प्रदेशसत्कर्मस्थानं तत् आदि कृत्वा नानाजीवापेक्षया यथासम्भवमुत्तरोत्तरवृद्ध्या निरन्तरं प्रदेशसत्कर्मस्थानानि तावद्वाच्यानि यावद्गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्मस्थानम् । तानि द्वितीयं स्पर्धकम् । अथवा—यावत्प्रथमा स्थितिर्द्वितीया च स्थितिर्विद्यते तावदेकं स्पर्धकम् । द्वितीयस्थितौ च क्षीणायां प्रथमस्थितौ शेषीभूताया समयमात्रायां द्वितीयं स्पर्धकमिति । एवं प्रकारद्वयेन स्त्रीवेदस्यापि स्पर्धकद्वयं भावनीयम् । पुरुषवेदस्य पुनः स्पर्धकद्वयमेवं भावनीयम्—उदयचरमसमये जघन्यं प्रदेशसत्कर्म आदि कृत्वा नानाजीवापेक्षया एकैकपरमाणुवृद्ध्या निरन्तरं प्रदेशसत्कर्मस्थानानि तावद्वाच्यानि यावद्गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्मस्थानम् । एतानि सर्वाण्यनन्तानि । एतान्येकं स्पर्धकम् । उदयचरमसमये च द्वितीयस्थितौ चरमखण्डे संक्रम्यमाणे सर्वजघन्यं प्रदेशसत्कर्मस्थानमादि कृत्वा प्रागिव द्वितीयं स्पर्धकं वाच्यम् । किंच—'अहिगा पुरिसस्स' त्ति पुरुषवेदस्याधिकान्यपि स्पर्धकानि भवन्ति । कियन्ति भवन्तीति चेदुच्यते-' वेड आवलिया' इत्यादि, अत्र द्वे आवलिके इत्यत्र तृतीयार्थे प्रथमा । 'जोगट्ठाणेहिं कसिणेहिं ' इति अत्र तु तृतीया प्रथमार्थे ततोऽयमर्थ.-कृत्स्नानि योगस्थानानि, सकलयोगस्थानसमुदाय इत्यर्थ. । द्वाभ्यामावलिकाभ्यां द्विसमयहीनाभ्याम् आवलिकाद्विकसमयैर्द्विरूपहीनैरित्यर्थ , गुण्यन्ते गुणिते च सति यावन्तः सकलयोगस्थानसमुदायास्तावन्ति स्पर्धकान्यधिकानि भवन्ति , समयद्वयहीनावलिकाद्विकसमयप्रमाणानि अधिकानि भवन्तीत्यर्थ. । तथाहि-पुरुषवेदस्य बन्धोदयादिव्यवच्छेदे सति समयद्वयोनावलिकाद्विकबद्धं पुरुषवेदस्य दलिकं विद्यते । ततोऽवेदकस्य सत. संज्वलनत्रिकोक्तप्रकारेण योगस्थानापेक्षया समयद्वयहीनावलिकाद्विकसमयप्रमाणानि स्पर्धकानि वाच्यानि।

सम्प्रत्युक्ताना वक्ष्यमाणानां च स्पर्धकानां सामान्यरूपं लक्षणमाह—

सव्वजहन्नाढत्तं, खंधुत्तरओ निरन्तरं उप्पिं ।
एगं उव्वलमाणी, लोभजसा नोकसायाणं ॥४७॥

'सव्वजहन्न'त्ति- सर्वजघन्यात् प्रदेशसत्कर्मस्थानादारब्धमेकैकेन कर्मस्कन्धेनोत्तरत. पूर्वस्मात्पूर्वस्मादुत्तरोत्तरेण निरन्तरं प्रदेशसत्कर्मस्थानजालं तावन्नेय यावत् 'उप्पिं ' उपरितन सर्वोत्कृष्टं प्रदेशसत्कर्मस्थानं भवति । इयमत्र भावना—सर्वजघन्यप्रदेशसत्कर्मस्थानादारभ्य योगस्थानापेक्षया एकैकेन कर्मस्कन्धेन वृद्धानि प्रदेशसत्कर्मस्थानानि निरन्तराणि तावन्नेतव्यानि यावदुत्कृष्टं प्रदेशसत्कर्मस्थान भवति । एकैककर्मस्कन्धेनोत्तरत इति चोक्तं योगस्थानवशलब्धस्पर्धकापेक्षया , अन्यथा " चरमावलियपविट्ठ " त्यादौ यानि स्पर्धकान्युक्तानि तेष्वेकैकेन प्रदेशेनैवोत्तरोत्तरा वृद्धिः प्राप्यते इति।तदेवमुक्तं सामान्येन लक्षणं स्पर्धकानाम् । सम्प्रत्युद्वल्यमानप्रकृतीना स्पर्धकप्ररूपणार्थमाह-'एगं उव्वलमाणी' एकं स्पर्धकमुद्वल्यमानप्रकृतीना त्रयोविंशतिसंख्यानाम् । तत्र सम्यक्त्वस्य भावना क्रियते—अभव्यप्रायोग्यजघन्यस्थितिसत्कर्मा त्रसेषु मध्ये समुत्पन्नस्तत्र सम्यक्त्वं देशविरतिं चानकवारान् लब्ध्वा चतुरश्च वारान् मोहनीयमुपशमय्य द्वात्रिंशदधिकं च सागरोपमाणां शतं यावत्सम्यक्त्वमनुपाल्य मिथ्यात्वं गत ,ततश्चिरोद्वलनया सम्यक्त्वमुद्वलयता यदा चरमखण्ड संक्रान्तम् एका च शेषा उदयावलिका तिष्ठति , तामपि स्तिबुकसंक्रमेण मिथ्यात्वे संक्रमयति ।

संक्रमयतश्च या एका स्थितिर्द्विसमयमात्रावस्थाना शेषीभूता यदाऽवतिष्ठते तदा सम्यक्त्वस्य सा जघन्यं प्रदेशसत्कर्मस्थानम्। ततो नानाजीवापेक्षया एकैकप्रदेशवृद्ध्या प्रदेशसत्कर्मस्थानानि तावन्नेतव्यानि यावद् गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्मस्थानं भवति । इदमेकं स्पर्धकम् । एवं सम्यग्मिथ्यात्वस्यापि एवमेव च शेषाणामप्युद्वलनयोग्यानां वैक्रियैकादशकाहारकसप्तकोच्चैर्गोत्रमनुष्यद्विकरूपाणां प्रकृतीनाम्। नवरं तासां द्वात्रिंशदधिकसागरोपमशतप्रमाणः सम्यक्त्वकालो मूलत एव न वक्तव्यः। 'लोभजसे' त्यादि सञ्ज्वलनलोभयशःकीर्त्योरपि एकं स्पर्धकम्।तथाहि-स एवाभवसिद्धिकप्रायोग्यजघन्यस्थितिसत्कर्मा त्रसेषु मध्ये समुत्पन्नः। तत्र चतुःकृत्वो मोहोपशममन्तरेण शेषाभिः क्षपितकर्मांशक्रियाभिः कर्मदलिकं प्रभूतं क्षपयित्वा चिरकालं च संयममनुपाल्य क्षपणायोत्थितः । तस्य यथाप्रवृत्तकरणचरमसमये जघन्यं प्रदेशसत्कर्म। ततस्तस्मादारभ्य नानाजीवापेक्षया एकैकप्रदेशवृद्ध्या निरन्तराणि प्रदेशसत्कर्मस्थानानि तावद्वाच्यानि यावद् गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्मस्थानम्, एवमेकं सञ्ज्वलनलोभयशःकीर्त्योः स्पर्धकम् ।एषामपि च नोकषायाणां प्रत्येकमेकैकं स्पर्धकम् ,तदपि चैवम्-स एवाभविसिद्धिकप्रायोग्यजघन्यप्रदेशसत्कर्मा त्रसेषु मध्ये समुत्पन्नः। तत्र सम्यक्त्वं देशविरतिं चानेकशो लब्ध्वा चतुरश्च वारान्मोहनीयमुपशमय्य स्त्रीवेदनपुंसकवेदौ च भूयो भूयो बन्धेन हास्यादिदलिकसंक्रमेण च प्रभूतमापूर्य मनुष्यो जातस्तत्र चिरकालं संयममनुपाल्य क्षपणायोत्थितः। तस्य चरमखण्डचरमसमये यद्विद्यमानं प्रत्येकं षण्णां नोकषायाणां प्रदेशसत्कर्म तत्सर्वं जघन्यम्। ततस्तस्मादारभ्य नानाजीवापेक्षया एकैकप्रदेशवृद्ध्या निरन्तराणि प्रदेशसत्कर्मस्थानानि अनन्तानि तावद्वाच्यानि यावद् गुणितकर्मांशस्योत्कृष्टं प्रदेशसत्कर्म। एवमेकं षण्णां नोकषायाणां प्रत्येकं स्पर्धकम्।

सम्प्रति मोहनीयवर्जानां घातिकर्मणां स्पर्धकनिरूपणार्थमाह—

ठिइखंडगविच्छेया, खीणकसायस्स सेसकालसमा ।
एगहियॉ घाईणं, निद्दापयलाण हिचेकं ॥ ४८ ॥

'ठिइखंडग' त्ति-क्षीणकषायस्य स्थितिखण्डव्यवच्छेदात्-स्थितिघातव्यवच्छेदात् परतो यः शेषकालस्तिष्ठति तत्समानि शेषकालसमयसमानि स्पर्धकानि एकाधिकानि घातिकर्मणां भवन्ति। निद्राप्रचलयोस्तु हित्वा-परित्यज्य एकं चरमं स्थितिगतं स्पर्धकं, शेषाणि वाच्यानि, निद्राप्रचलयोर्हि उदयाभावात् स्वस्वरूपेण चरमसमये दलिकं न प्राप्यते, किं तु-पररूपप्रकृतिरूपेण, तेन तयोरेकं स्पर्धकं चरमस्थितिगतं परित्यज्यते। स्पर्धकानां चेयं भावना-क्षीणकषायाऽद्धायाः संख्येयेषु भागेषु गतेषु सत्सु एकस्मिंश्च संख्येयतमेऽन्तर्मुहूर्तप्रमाणे भागेऽवतिष्ठमाने ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकानां स्थितिसत्कर्मसर्वापवर्तनयाऽपवर्त्य क्षीणकषायाद्धासमं करोति। निद्राप्रचलयोस्त्वेकसमयहीनम् । अत्र च कारणं प्रागेवोक्तम्, तदानीं च स्थितिघातादयो निवृत्ताः । यद्यपि च क्षीणकषायाद्धासमं स्थितिसत्कर्म कृतम्, तदपि च क्रमेण यथासम्भवमुदयोदीरणाभ्यां क्षयमुपगच्छत्तावद्वक्तव्यं यावदेका स्थितिः शेषीभवति । तस्यां च क्षपितकर्मांशस्य सर्वजघन्यं यत्प्रदेशसत्कर्म तत्प्रथमं स्थानम्, तत एकस्मिन् परमाणौ प्रक्षिप्ते सति द्वितीयं प्रदेशसत्कर्मस्थानम्, एवमेकैकपरमाणुवृद्ध्या निरन्तराणि प्रदेशसत्कर्मस्थानानि तावद्वाच्यानि यावद्गुणितकर्मांशस्य सर्वोत्कृष्टं प्रदेशसत्कर्मस्थानम्। इदमेकं स्पर्धकम्। द्वयोश्च स्थित्योः शेषीभूतयोरुक्तप्रकारेण द्वितीयं स्पर्धकम्। तिसृषु स्थितिषु शेषीभूतासु तृतीयं स्पर्धकम्। एवं क्षीणकषायाऽद्धासमीकृते सत्कर्मणि यावन्तः स्थितिविशेषास्तावन्ति स्पर्धकानि वाच्यानि। चरमस्य च स्थितिघातस्य चरमं प्रक्षेपमादौ कृत्वा पश्चानुपूर्व्या प्रदेशसत्कर्मस्थानानि यथोत्तरं वृद्धानि तावद्वक्तव्यानि यावदात्मीयमात्मीयं सर्वोत्कृष्टं प्रदेशसत्कर्म तावदेतदपि सकलनिजनिजस्थितिगतं यथासम्भवमेकैकं स्पर्धकं द्रष्टव्यम्। ततस्तेनाधिकानि स्थितिघातव्यवच्छेदात् परतः क्षीणकषायाद्धासमयसमानि स्पर्धकानि भवन्ति। निद्राप्रचलयोस्तु द्विचरमस्थितिमधिकृत्य स्पर्धकानि वाच्यानि, चरमसमये तद्दलिकस्याप्राप्यमाणत्वात्। तत एकेन हीनानि तस्य स्पर्धकानि द्रष्टव्यानि।

सेलेसिसंतिगाणं, उदयवईणं तु तेण कालेणं ।
तुल्ला रोगहियाइं, सेसाणं एगऊणाइं ॥ ४९ ॥

'सेलेसि' त्ति-शैलेसी-अयोग्यवस्था तस्याः सत्ता यासां प्रकृतीनां ताः शैलेशीसत्ताकाः। ताश्च द्विधा, तद्यथा-उदयवत्योऽनुदयवत्यश्च । तत्रोदयवत्यो मनुष्यगतिमनुष्यायुःपञ्चेन्द्रियजातित्रससुभगादेयपर्याप्तबादरयशःकीर्तितीर्थकरोच्चैर्गोत्रसातासातान्यतरवेदनीयरूपा द्वादश । तासां प्रकृतीनां तेनायोगिकालेन तुल्यानि स्पर्धकानि एकैकेनाधिकानि भवन्ति । अयोगिकाले यावन्तः समयास्तावन्ति स्पर्धकानि एकेनाधिकानि भवन्तीत्यर्थः। कथमिति चेदुच्यते—अयोगिकेवलिनश्चरमसमये क्षपितकर्मांशमधिकृत्य यत्सर्वजघन्यं प्रदेशसत्कर्मस्थानम्, तत् प्रथमं स्थानम्। तत एकस्मिन् परमाणौ प्रक्षिप्ते सति द्वितीयं प्रदेशसत्कर्मस्थानम्। एवं नानाजीवापेक्षया एकैकप्रदेशवृद्ध्या तावत्प्रदेशसत्कर्मस्थानानि द्रष्टव्यानि यावद्गुणितकर्मांशस्य सर्वोत्कृष्टं प्रदेशसत्कर्मस्थानम्, इदमेकं स्पर्धकम्। तत एवमेव द्वयोः स्थित्योः शेषीभूतयोर्द्वितीयं स्पर्धकम्। तिसृषु स्थितिषु तृतीयम् । एवं निरन्तरं तावद्वगन्तव्यम्, यावदयोगिप्रथमसमयः। तथा सयोगिकेवलिचरमसमये चरमस्थितिखण्डसत्कं चरमप्रक्षेपमादिं कृत्वा यावदात्मीयमात्मीयं सर्वोत्कृष्टं प्रदेशसत्कर्म तावदेतदपि सकलस्वस्वस्थितिगतमेकैकं स्पर्धकं द्रष्टव्यम् । ततोऽयोगिकेवलिगुणस्थानके यावन्तः समयास्तावन्ति स्पर्धकानि एकाधिकानि उदयवतीनां प्रकृतीनां प्रत्येकं भवन्ति, शेषाणां त्वनुदयवतीनां प्रकृतीनां त्र्यशीतिसंख्यानां तावन्ति स्पर्धकान्येकेन हीनानि भवन्ति। यतस्ता अयोगिकेवलिचरमसमये उदयवतीषु मध्ये स्तिवुकसंक्रमेण संक्रम्यन्ते । ततस्तासां चरमसमयगतं स्पर्धकं न प्राप्यत इति तेन हीनानि तासां स्पर्धकानि भवन्ति । इह यद्यपि म-

नुष्यगत्यादीनाम् 'एगं उव्वलमाणी' इत्यनेन ग्रन्थेन प्रागेव स्पर्धकप्ररूपणा कृता तथापि इहापि तासां स्पर्धकानि प्राप्यन्त इति भूय उपादानम्। एवं करणेष्वपि बन्धनादिषु यथासम्भवं स्पर्धकानि वाच्यानि।

तथा चाह—

**संभवतो ठाणाइं, कम्मपएसेहिँ होंति नेयाइं।**
**करणेसु य उदयम्मि य, अणुमाणेणेव मेएणं ॥५०॥**

'संभवतो' त्ति सम्भवमाश्रित्य स्थानानि प्रदेशसत्कर्मस्थानानि करणेषु बन्धनादिषु उदये च कर्मप्रदेशेभ्यः कर्मप्रदेशानधिकृत्य ज्ञेयानि—ज्ञातव्यानि। कथमित्याह—एवमुपदर्शितेन एतेन—प्रागुक्तेन अनुमानेन प्रकारेण ज्ञातव्यानि। तथाहि—बन्धनकरणे जघन्यं योगस्थानमादिं कृत्वा यावदुत्कृष्टयोगस्थानम् एतावन्ति प्रदेशसत्कर्मस्थानानि बन्धमाश्रित्य प्राप्यन्ते, तावन्ति चैकं स्पर्धकम् एवं संक्रमणादिष्वपि प्रत्येकं यथायोगं भावनीयम्।

**करणोदयसंताणं, पगइट्ठाणेसु सेसगतिगे य।**
**भूयक्कारप्पयरो, अवट्ठिओ तह अवत्तव्वो ॥ ५१ ॥**

'करणोदयसंताणं' ति—अष्टानां करणानामुदयसत्तयोश्च प्रकृतिस्थानेषु 'सेसगतिगे य त्ति' शेषके च त्रिके स्थित्यनुभागप्रदेशरूपे प्रत्येकं चत्वारो विकल्पा ज्ञातव्याः। तद्यथा—भूयस्कारः, अल्पतरः, अवस्थितः, अवक्तव्यश्च।

एतेषां चतुर्णां लक्षणमिदम्—

**एगादहिगे पढमो, एगाई ऊणगम्मि बिइओ उ।**
**तत्तियमेत्तो तइओ, पढमे समये अवत्तव्वो ॥ ५२ ॥**

'एगादहिगे' त्ति—इह बन्धमाश्रित्य भावना क्रियते। बन्धो द्विं-मूलप्रकृतीनामुत्तरप्रकृतीनां च। तत्र मूलप्रकृतीनां बन्धः कदाचित् अष्टानाम्, कदाचित्सप्तानाम्, कदाचित् षण्णाम्, कदाचिदेकस्या। तत्र यदा स्तोकाः प्रकृतीराबध्नन् परिणामविशेषतो भूयसीः प्रकृतीर्बध्नाति, यथा सप्त बद्धा अष्टौ बध्नाति, यद्वा—षड् एका च बद्धा सप्त, तदा स बन्धो भूयस्कारः। तथा चाह—'एगादहिगे पढमो' एकादिभिरेकद्विव्यादिभिः प्रकृतिभिरधिके बन्धे प्रथम प्रकारो भवति, भूयस्कारो बन्धो भवतीत्यर्थः। यदा तु प्रभूता प्रकृतीर्बध्नन् परिणामविशेषत स्तोका बद्धुमारभते, यथाऽष्टौ बद्धा सप्त बध्नाति, सप्त वा बद्धा षट् षड्वा बद्धा एका, तदानीं स बन्धोऽल्पतरः। तथा चाह—'एगाई ऊणगम्मि बिइओ उ' एकादिभिरेकद्विव्यादिभि प्रकृतिभिरूने बन्धे द्वितीयः प्रकारः अल्पतर इत्यर्थ। तथा स एव भूयस्कारोऽल्पतरो वा द्वितीयादिषु समयेषु तावन्मात्रतया प्रवर्तमानोऽवस्थित इति व्यपदेशं लभते। तथा चाह—'तत्तियमेत्तो तइओ' तावन्मात्रप्रकृतीयोऽवस्थित इत्यर्थः। एते त्रयोऽपि प्रकारा मूलप्रकृतीनां सम्भवन्ति। चतुर्थस्तु न सम्भवति। न हि मूलप्रकृतीनां सर्वासा बन्धव्यवच्छेदे सति भूयोऽपि बन्ध सम्भवति येन चतुर्थो बन्ध स्यात्। तत उत्तरप्रकृतीरधिकृत्य स वेदितव्य। यथा मोहनीयस्य तद्गतसर्वोत्तरप्रकृतिबन्धव्यवच्छेदे सति उपशान्तमोहगुणस्थानकात् प्रतिपाते भूयोऽपि बन्धारम्भप्रथमसमये, स हि तदानीं न भूयस्कारो वक्तुं शक्यते, नाप्यल्पतर, नाप्यवस्थितः, तल्लक्षणायोगात्, ततोऽसाववक्तव्य इत्युच्यते, भूयस्कारादिनाम्ना वक्तुमशक्यत्वात्। एवमुत्तरप्रकृतीरधिकृत्य ज्ञानावरणीयादीनां वेदनीयवर्जानामवक्तव्यो भावनीय। वेदनीयस्य त्ववक्तव्यो न सम्भवति, तस्य हि सर्वथा बन्धव्यवच्छेदः सयोगिकेवलिचरमसमये। न च ततः प्रतिपातो येन भूयो बन्ध प्रवर्त्तमान प्रथमसमयेऽवक्तव्य स्यात्। तदेवं मूलप्रकृतीरधिकृत्य वक्तव्यवर्जा शेषास्त्रय प्रकाराः, उत्तरप्रकृतीस्त्वधिकृत्य चत्वारोऽपि प्रकारा सम्भवन्ति। यथा च बन्धे चत्वारोऽपि प्रकारा भाविताः। एवं संक्रमे उद्वर्त्तनायामपवर्तनायामुदीरणायामुपशमनायामुदये सत्तायां च प्रकृतिस्थानेषु स्थित्यनुभागप्रदेशस्थानेषु च यथायोगं स्वयमेव भावनीया।

**करणोदयसंताणं, सामित्तोघेहिँ सेसगं नेयं।**
**गइयाइमग्गणासुं, संभवओ सुट्ठु आगमिय ॥ ५३ ॥**

'करणोदयसंताणं' ति-अष्टाना करणानामुदयसत्तयोश्च यदुक्तं प्रत्येकं सप्रपञ्चं स्वरूपं तत् ओघस्वामित्वमुच्यते। 'सामित्तोघेहिं' ति द्वितीयार्थे तृतीया, व्यक्त्यपेक्षया च बहुवचनम्। ततश्च तानि ओघस्वामित्वानि यथोक्तकरणाष्टकोदयसत्तास्वरूपाणि सुष्ठु आगम्य परिभाव्य शेषकमपि ज्ञातव्यम्। क ज्ञातव्यमित्याह-गत्यादिषु चतुर्दशसु मार्गणास्थानेषु। कथमित्याह—सम्भवतो यथासम्भवति घटते तथैव, नाऽन्यथा।

**बंधोदीरणसंकम-संतुदयाणं जहन्नगाईहिं।**
**संवेहो पगइठिई, अणुभागपएसओ नेओ ॥५४॥**

'बंधोदीरण' त्ति-बन्धोदीरणासंक्रमसतोदयरूपाणां पञ्चानां पदार्थानां प्रकृतिस्थित्यनुभागप्रदेशतः प्रकृतिस्थित्यनुभागप्रदेशानधिकृत्य जघन्याजघन्योत्कृष्टानुत्कृष्टै सम्बन्ध परस्परमेककालमागमाविरोधेन मीलनम्। यथा ज्ञानावरणीयस्य जघन्ये स्थितियन्धे जघन्योऽनुभागबन्ध, जघन्य प्रदेशबन्धः अजघन्याः स्थित्युदीरणासंक्रमसत्तोदया इत्यादिरूप, तत्पूर्वापरौ सुष्ठु परिभाव्य ज्ञातव्यम्। क० प्र० १० प्रक०। पं० सं०।

संतगुणनासग-सद्गुणनाशक-पुं०। गुणापालके, प्रश्न० २ आश्र० द्वार।

संतचित्त-शान्तचित्त-त्रि०। उपशान्तमनसि, प्रो० ११ विव०।

संतच्छण-सन्तक्षण-न०। समेकीभावेन तक्षणे, सूत्र० १ श्रु० ५ अ० १ उ०।

संतज्जण-संतर्जन-न०। विग्रहस्य परित्राणं मत्तो भविष्यतीत्यादिरूपे राज्यव्यवहार्यभेदे, स्था० ३ ठा० ३ उ०।

संतति-सन्तति-स्त्री०। सन्ताने, विशे०। उत्तरोत्तरनिरन्तरोत्पत्तिरूपप्रवाहे, उत्त० १ अ०।

संतत्त-संतप्त-त्रि०। समन्तात् तप्ते, सूत्र० १ श्रु०३ अ०१ उ०।

संतत्तव(स्)-सन्तप्ततपस्-पुं०।आहारादिनिमित्तं तपःकारिणि, पं० व० ५ द्वार।

संतपय-सत्पद-न०। सच्च तत्पदं च सत्पदम्। विद्यमानार्थे पदे, विशे०।

संतपयपरूवणया-सत्पदप्ररूपणता-स्त्री०।सच्च तत्पदं च सत्पदं तस्य प्ररूपणं सत्पदप्ररूपणम्। गत्यादिद्वारेषु विचारणम्। तद्भावस्तत्ता कस्मिन् गत्यादिद्वारे इदं सदीत्येव सतो विद्यमानस्यार्थस्य गत्यादिद्वारेषु प्ररूपणायाम्, विशे०। आ० म०। आ० चू०। नं०। अनु०। इह स्तम्भकुम्भादीनि पदानि सदर्थविषयाणि दृश्यन्ते, खरशृङ्गव्योमकुसुमादीनि त्वसदर्थविषयाणि, तत्रानुपूर्व्यादिपदानि किं स्तम्भादिपदानीव सदर्थविषयाण्याहोस्वित् खरविषाणादिपदवत् असदर्थगोचराणीत्येतत्प्रथमं पर्यालोचयितव्यं तथाऽनुपूर्व्यादिपदाभिधेयद्रव्याणां प्रमाणं संख्यास्वरूपं प्ररूपणीयम्। अनु०। आ० म०।

संतप्प-सं-तप-धा०। सम्यक् दुःखे, "संतपेर्झङ्खः" ॥८।४।१४०॥ इति झङ्खादेशाभावे-संतप्पइ। प्रा० ४ पाद।

संतबुद्धि-सद्बुद्धि-स्त्री०। शोभनोऽयमित्येवं रूपायां शोभनाया बुद्धौ, हा० २६ अष्ट०।

संतमस-संतमस्-न०। अन्धकारे, 'संतमसं अंधकारं' पाइ० ना० ४६ गाथा। ('अंधकार' शब्दे प्रथमभागे १०५ पृष्ठे अस्य स्थित्यादिनिरूपणमुक्तम्।)

संतय-सन्तत-त्रि०। व्याप्ते,उत्त० २ अ०। निरन्तराले, विशे०। आचा०। निरन्तरे, पाइ० ना० ८७ गाथा।

संतर-सान्तर-न०। सहान्तरेण व्यवधानेन वर्त्तते इति सान्तर। सव्यवधाने, उत्त० ५ अ०। स्वस्वकृते त्रिकालावस्थाने, बृ० २ उ०। (सान्तरं निरन्तरं वा उपपद्यन्ते इति उक्तम् 'उववाय' शब्दे द्वितीयभागे ६६७ पृष्ठे)

संतरण-सन्तरण-न०। नद्यादेः पारगमने, अष्ट० २१ अष्ट०। आव०। ('णईसंतार' शब्दे चतुर्थभागे १७३८ पृष्ठे सन्तरणविधिर्दर्शित।)

संतरणिरन्तरा-सान्तरनिरन्तरा-स्त्री०। यासां कर्मप्रकृतीनां जघन्यतः समयमात्रमुत्कर्षतः समयादारभ्य नैरन्तर्येणान्तर्मुहूर्तस्योपर्यपि असंख्येयकालं यावत्तादृशीषु कर्मप्रकृतिषु, पं० सं० ३ द्वार।

संतरणोपाय-सन्तरणोपाय-पुं०। पारंगमनोपाये, अष्ट० २२ अष्ट०।

संतरयणदित्ति-सद्रत्नदीप्ति-स्त्री०। सद्रत्नस्य जात्यरत्नस्य स्वभावत एव क्षारमृत्पुटपाकाद्यभावेऽपि भास्वररूपस्य या दीप्तिः। सद्रत्नप्रकाशे, षो० ११ विव०।

संतरा-सान्तरा-स्त्री०। यासां प्रकृतीनां जघन्यतः समयमात्रबन्धस्तासु कर्मप्रकृतिषु, पं० स० ३ द्वार। (एताश्च 'कम्म' शब्दे तृतीयभागे २६६ पृष्ठे दर्शिता।)

संतरित्तए-सन्तरितुम्-अव्य०। भूयः प्रत्यागन्तुमित्यर्थे, साकल्येन नावादिना तरितुमित्यर्थे, बृ० ४ उ०।

संतरुत्तर-सान्तरोत्तर-त्रि०। आन्तरः सौत्रकल्पः,उत्तर और्णिकस्ताभ्यां सहितः सान्तरोत्तरः। सौत्रौर्णिकाभ्यां प्रावृते, कल्प० ३ अधि० ६ क्षण। आचा०।

संतसंगम-सत्सङ्गम-पुं०। सत्पुरुषसम्पर्के, षो० १३ विव०।

संतसण-संत्रसन-न०। त्रासप्राप्तौ, उत्त० २ अ०। उद्वेगे, उत्त० २ अ०।

संतसार-सत्सार-त्रि०। शोभनसारे, सूत्र० २ श्रु० १ अ०।

संतसोय-शान्तश्रोतस्-त्रि०। शान्तप्रवाहे, द्वा० ११ द्वा०।

संता-शान्ता-स्त्री०। सुपार्श्वस्य शासनदेव्याम्, प्रव०। सा च सुवर्णवर्णा गजवाहना चतुर्भुजा वरदाक्षसूत्रयुक्तदक्षिणकरद्वया शूलाभययुक्तवामहस्तद्वया च। प्रव० २७ द्वार।

संताचेल-सदचेल-पुं०। सद्भिर्वस्त्रैरचेलाः सदचेलाः। जिनेभ्योऽन्येषु साधुषु, पञ्चा० १७ विव० (तत्त्वं चोक्तम् 'अचेल' शब्दे प्रथमभागे १८८ पृष्ठे।)

संताण-सन्तान-पुं०। तन्तुजाले, आचा० १ श्रु० ८ अ० ६ उ०। आव०। पं० व०। आ० चू०। प्रवाहे, आव० ४ अ०। औ०। गुणानां समभागसन्ततानवरतप्रवृत्तौ, विशे०।

संताणकर-सत्त्राणकर-त्रि०। आर्त्तजनपरित्राणकारिणि, बृ० १ उ० २ प्रक०।

संताणभेद-सन्तानभेद-पुं०। सन्तानश्चासौ भेदश्च संतानभेदः। क्षणप्रवाहविशेषे, हा० १४ अष्ट०।

संताभाव-सद्भाव-पुं०। सद्भावे सन्ति साधवः परं न धर्मकथादिषु कुशला इत्येवंरूपे विद्यमानस्यार्थस्याभावे, व्य० ६ उ०।

संताव-सन्ताप-पुं०। मानसे क्लेशे, आ० म० १ अ०। 'संतावणिज्जए' संतापः एकत्र शोकादिकृतोऽन्यत्र चाऽग्निकृतो नित्यं यत्र स संतापनित्यकः। प्रश्न० ३ आश्र० द्वार।

संतावणकिच्छ-सन्तापनकृच्छ्र-न०। "त्र्यहमुष्णं पिबेदम्बु, त्र्यहमुष्णं घृतं पिबेत्। त्र्यहमुष्णं पिबेन्मूत्रं, त्र्यहमुष्णं पिबेत् पयः ॥१॥" इत्येवंरूपे तपोभेदे, द्वा० १२ द्वा०।

संतावणी-सन्तापनी-स्त्री०। सन्तापयतीति संतापनी। नरककुम्भ्याम्, सूत्र० १ श्रु० ५ अ० २ उ०।

संतासंतसत्ति-सदसच्छक्ति-पुं०। सद्भावेनासद्भावेन वाऽशक्ते, तत्र सद्भावो न लब्धमत्र प्रान्तं तेन क्षामीभूतोऽसद्भावो यथाऽस्ति भक्तस्यैवाभावः स तथा क्षामीभूतो विहर्तुमशक्नुवन्। व्य० ४ उ०।

संति-शान्ति-स्त्री०। मोक्षे, स्था० ८ ठा० ३ उ०। सूत्र०। कर्मदाहोपशमे, सूत्र० १ श्रु० ३ अ० ४ उ०। अशेषद्वन्द्वोपरमे, सूत्र० १ श्रु० १४ अ०। क्रोधजये, सूत्र० १ श्रु० १६ अ०। द्रोहविरतौ, प्रश्न० १ संव० द्वार। शमनं-शान्तिः। अहिंसायाम्,आचा०१श्रु० ६ अ० ५ उ०। शान्तिः-उपशमप्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणसम्यग्दर्शनज्ञानचरणकलापैः शान्तिरुच्यते। निराबाधमोक्षाख्यशान्ति-

प्राप्तिकारणत्वात् तस्य। आचा० १ श्रु० १ अ० ७ उ०। अशेषकर्मापगमे मोक्षे, आचा० १ श्रु० २ अ० ४ उ०। मिथ्यात्वादिदावानलविध्मापनात् सामायिके, आ० म० १ अ०। शान्तियोगात् तदात्मकत्वात् कर्तृकत्वाद्वा शान्तिरिति। तथा गर्भस्थे पूर्वोत्पन्ना शिवशान्तिरभूदिति शान्तिः। ध० २ अधि०। आ० म०। भरते वर्षे वर्तमानावसर्पिण्या जाते षोडशे तीर्थकरे, आ० चू० १ अ०।

इदानीं शान्त्यात्मकत्वात् शान्तिः तत्र सर्व एव तीर्थकृत एवं रूपा अतो विशेषमाह—

जातो असिवोवसमो, गब्भगते तेण संति जिणो ॥

पूर्वं महदशिवमासीत् भगवति तु गर्भगते जातः अशिवोपशमस्तेन कारणेन शान्तिजिन। आ० म० २ अ०। अनु०। प्रव०। ति०। आ० चू०। स०। "स्मरणं यस्य सत्त्वाना, तीव्रपापौघशान्तये। उत्कृष्टगुणरूपाय, तस्मै श्रीशान्तये नमः॥ १॥" आ०। ('तित्थयर' शब्दे चतुर्थभागे सम्पूर्णोऽधिकार उक्तः।)

चइत्ता भारहं वासं, चक्कवट्टी महड्ढिओ।
सन्ती संतिकरे लोए, पत्तो गइमणुत्तरं ॥ ३८ ॥

पुन. शान्तिः-शान्तिनाथः प्रस्तावात्पञ्चमश्चक्री अनुत्तरां गतिं प्राप्तः मोक्षं प्राप्त.। कथम्भूतः शान्तिः?, लोके शान्तिकरः शान्तिं करोतीति शान्तिकरः इति विशेषणेन तीर्थङ्करत्वं प्रतिपादितं षोडशस्तीर्थकर. शान्तिनाथो, मोक्षं जगाम इत्यर्थ.। किं कृत्वा भारतं वासं त्यक्त्वा भरतस्य इदं भारतं भरतक्षेत्रसंबन्धि वासम् इति- राज्यवासम्। कीदृशः शान्तिः ?, चक्रवर्त्ती महर्द्धिकः इत्यनेन शान्तेश्चक्रवर्त्तित्वं तीर्थकरत्व च प्रतिपादितम् ॥ ३८ ॥

अत्र शान्तिनाथदृष्टान्त.-इहैव जम्बूद्वीपे भरतक्षेत्रे वैताढ्यपर्वते रथनूपुरचक्रवालं नाम नगरमस्ति। तत्र राजा अमिततेजा परिवसति। तस्य सुतारा नाम्नी भागिनी वर्तते। सा च पोतनाऽधिपतिना श्रीविजयराजेन परिणीता। अन्यदाऽमिततेजोराज. पोतनपुरे श्रीविजयसुतारादर्शनार्थं गत.। प्रेक्षते च प्रमुदितमुच्छ्रितपताकं सर्वमपि पुरं विशेषतश्च राजकुलम्। ततो विस्मितलोचनोऽमिततेजोराजो गगनतलादुत्तीर्णः गतश्च राजभवनमभ्युत्थानादिसत्कृत. श्रीविजयेन कृतमुचितं करणीयमुपविष्ट. सिंहासनेऽमिततेजोराज. पप्रच्छ नगरोत्सवकारणम्। यतः श्रीविजय एव प्राह-यथा इतोऽष्टमे दिवसे मदन्तिके एको नैमित्तिक. समायातः, मदनुज्ञाते सिंहासने उपविष्ट. पृष्टश्च मया किमागमनप्रयोजनम् ?, ततस्तेन भणितं महाराज ! मया निमित्तमवलोकितं यथा पोतनाधिपतेरुपरि इतो दिवसात्सप्तमे दिवसे मध्याह्नसमये विद्युत्पतिष्यति। इदं च कर्णकटुकं वच श्रुत्वा मन्त्रिणा-भणितं तदानीं तवोपरि किं पतिष्यति ?, तेनोक्तं मा कुप्यत यथा मयोपलब्धं निमित्तं तथा भवता कथित न चात्र मम कोऽपि भावदोषोऽस्ति। ममोपरि तस्मिन् दिवसे हिरण्यवृष्टिः पतिष्यति। मया भणितं त्वयैतन्निमित्त क्व पठितम् ? तेन भणितं मया त्रिपृष्ठवासुदेवभ्रातृचलवलदेवदीक्षासमये पित्रा सम मयाऽपि प्रव्रज्या गृहीता तत्रानेकशास्त्राध्ययन कुर्वताऽष्टाङ्गनिमित्तमप्यधीतम्। ततोऽहं मासयौवन' पूर्वदत्तकन्याया भ्रातृभिरुत्प्रव्राजितः कर्मपरिणतिवशेन सा मया परिणीता। तेन मया सर्वज्ञप्रणीतनिमित्तानुसारेण प्रलोकितम् यथा—सप्तमे दिवसे पोतनाधिपतेरुपरि विद्युत्पातो भविष्यति। एवं तेन नैमित्तिकेनोक्ते एकेन मन्त्रिणा भणितम्—यथा महाराज ! समुद्रमध्ये वाहनान्तर्भवद्भिः सप्तदिवसात् यावत् स्थेयम्, तत्र विद्युन्न प्रभवति। अन्येन मन्त्रिणा भणितं-दैवयोगोऽन्यथा कर्तुं न तीर्यते,यत उक्तम्-"धारिज्जइ इन्तो सा-गरो वि कल्लोलभिन्नकुलसेलो। न हु अन्नजम्मनिम्मिअ-सुहासुहो कम्मपरिणामो" ॥ १ ॥ अपरेण मन्त्रिणा भणितम्-पोतनाधिपतेर्वधोऽनेन समादिष्टो न पुन' श्रीविजयराजस्य ततः सप्तमदिवसात् यावदपरः कोऽपि पोतनाधिपतिर्विधीयते, सर्व्वैरप्युक्तमयमुपायः साधु', मयोक्तं मज्जीवितरक्षाकृतेऽपरजीववधः कथं क्रियते सर्व्वैरुक्तं तर्हि यक्षप्रतिमाया राज्याभिषेक. क्रियते, एवं मन्त्रयित्वा सर्व्वैरपि यक्षप्रतिमा पोतनपुरराज्येऽभिषिक्ता, सप्तदिवसान् यावत् मया पौषधागारे गत्वा पौषधा एव कृता.। सप्तमदिवसमध्याह्नसमये गगनमार्गेऽकस्मान् मेघ. समुत्पन्न', स्फुरिता विद्युल्लता, इतस्तत' परिभ्रम्य यक्षप्रतिमा विनाशिता, अष्टमे दिवसे चाह पौषधशालातो निर्गत्य क्षेमेण स्वभवने समायातः, तं नैमित्तिक कनकरत्नादिभि. पूजितवान्, पुनरहं नागरिकैः पोतनराज्ये अभिषिक्त, तदिदमस्मिन्नगरे विविधमहोत्सवकारणमिति श्रीविजयेनोक्तेऽमिततेजाः प्राह—अविसम्वादनिमित्तं शोभनो रक्षणोपाय इत्युक्त्वा अमिततेजोराज. स्वस्थानं गतवान्। अन्यदा श्रीविजयराज. सुतारया समं वने रन्तुं गतः सुतारया तत्र कनकमृगो दृष्ट' श्रीविजयस्योक्तं स्वामिन् ! ममैनं मृगमानीय देहि। मम क्रीडार्थं भविष्यति। ततः श्रीविजयराजा तद्ग्रहणार्थं स्वयमेव प्रधावितो, नष्टो मृगस्तत्पृष्ठिं राजा-न त्यजति कियन्तीं भुवं गत्वा उत्पतितो मृगः, तावता सुतारा कुर्कुटसर्पेण दष्टा पूच्कार। अहं कुर्कुटसर्पेण दष्टा हा प्रिय ! मां त्रायस्वेति श्रुत्वा श्रीविजयस्त्वरितं पश्चादायात' तावता सुतारा पञ्चत्वमुपागता। राजा च शोकपरवसस्तया समं चितायां प्रविष्ट, उद्दीप्तो ज्वलनः तावत्ता स्तोकवेलायां समागतौ द्वौ विद्याधरौ। तत्र एकेन सलिलमभिमन्त्र्य चिता सिक्ता वैतालिनी विद्या नष्टा, राजा स्वस्थो जातो वभाण च—किमिदमिति ?, विद्याधराभ्या भणितमावाममिततेजस स्वकीयौ जिनवन्दननिमित्तमाकाशमार्गे भ्रमन्तौ अशनिघोषविद्याधरेणापह्रियमाणाया' सुताराया आक्रन्दशब्दं श्रुतवन्तौ तन्मोचनार्थमावाभ्या युद्धमारब्धम्। तत सुतारया च प्रोक्तमलं युद्धेन यथा महाराज' श्रीविजयो वैतालिनीविद्यामोहितो जीवितं न परित्यजति तथा तदुद्याने गत्वा शीघ्रं कुरुताम्। तत आवामिहायातौ दृष्टस्त्वं वैतालिन्या समं चितारूढ। अभिमन्त्र्य जलेन सिक्ता चिता नष्टा सा दुष्टवैतालिनी। स्वस्थावस्थस्त्वमुत्थित इति। अपहृता सुतारा मत्वा विषण्ण. श्रीविजयो राजा भणितश्च ताभ्या राजन् ! खेद मा कुरु, स पाप क्व यास्यति ? इत्यादिवचनै श्रीविजयराजानमाश्वास्य तौ विद्याधरौ अमिततेज समीपं गतौ। ततोऽमिततेज प्रेषित विद्याधररचितविमाने. स श्रीविजयोऽपि अमिततेज.समीपं

गतः। अमिततेज·श्रीविजयाभ्यां ससैन्याभ्यां गत्वा तन्नगरं वेष्टितमशनिघोषान्तिके दूतः प्रेषितः तयोरागमनं श्रुत्वाऽशनिघोषो नष्ट· उत्पन्नकेवलस्य अचलस्य समीपे गत·। अमिततेजःश्रीविजयावपि तत्पृष्ठतस्तत्रायातौ, सर्वेऽपि गतमत्सरा धर्मं शृण्वन्ति। एकेन अमिततेजोविद्याधरेण सुताराऽपि तत्रानीता। लब्धावसरेणाशनिघोषेण भणितं न मया दुष्टभावेन सुतारा अपहृता किं तु विद्यां साधयित्वा गच्छता मया इयं दृष्टा, पूर्वस्नेहेन इमां त्यक्तुं न शक्नोमीति वैतालिन्या विद्यया श्रीविजयं मोहयित्वा सुतारां गृहीत्वा स्वनगरे गत·। नास्या· शीलभङ्गमकार्षं तथापि ममात्रार्थे योऽपराध· स क्षन्तव्य इत्याकर्ण्य अमिततेजसा भणितम्-भगवन्! किं पुन· कारणमेतस्य अस्यां स्नेहोऽभूत्। ततोऽचलकेवली कथयति—मगधदेशेऽचलग्रामे धरणीजढो नाम विप्रस्तस्य कपिला नाम चेटी तस्या· पुत्र· कपिलो नाम, तेन कर्णश्रवणमात्रेण विद्या शिक्षिता, गतश्च देशान्तरे "रत्नपुरं" नाम नगरम्। तत्र कस्यचिदुपाध्यायस्य मठे गतः उपाध्यायेन पृष्ट· कस्त्वम्?, कुत आगत·?, कपिलेनोक्तमचलग्रामे धरणीजढविप्रसुनः कपिलनामाऽहं विद्यार्थी अत्रायातस्तव समीपमिति। उपाध्यायेन स वहुमानं स्वगृहे रक्षित·, विद्यामध्याप्य स्वपुत्री तस्य दत्ता सत्यभामा नाम्नी। अन्यदा वर्षाकाले स कपिलो रात्रौ स्ववस्त्राणि कक्षायां कृत्वा वर्षत्येव मेघे स्वगृहद्वारे समायातः। सत्यभामा च अयं स्तिमितवस्त्रो भविष्यतीति चिन्तयन्ती अपराणि वस्त्राणि गृहीत्वा गृहद्वारे सन्मुखमायाता। कपिलेन तस्या उक्तम्, अस्ति मम प्रभावो येन वस्त्राणि न स्तिम्यन्ति, तावता विद्युत्प्रकाशे तया स नग्नो दृष्टः। ज्ञातं चायं नग्न एव समायातो वस्त्राणि कक्षायां च निहितवानित्यवश्यमयं हीनकुल इति सा कपिले मन्दस्नेहा जाता। अन्यदा धरणिजढो विप्रस्तत्र कपिलसमीपे समायातः, सत्यभामा च पितापुत्रयोर्विरुद्धमाचारं दृष्ट्वा परमार्थं पृष्टो धरणिजढविप्र·। तेन यथार्थं कथितं तच्छ्रुत्वोद्विग्ना सत्यभामा कामभोगेभ्यो निर्विण्णा प्रव्रज्याग्रहणनिमित्तं पृष्टः कपिल·, न मुञ्चत्येष कपिलः तदा इयं गता तन्निवासिश्रीषेणराजसमीपं बभाण च। भो राजन्! मां कपिलसमीपान्मोचय,येनाहं दीक्षां गृह्णामि। राज्ञा कपिलस्योक्तम्,कपिलो न मन्यते। राज्ञा पुनस्तस्या उक्तं,तावत् त्वं मम गृहे तिष्ठ यावत् कपिलं बोधयामीति। अन्यदा स राजा स्वपुत्रौ गणिकानिमित्तं युध्यमानौ दृष्ट्वा वैराग्येण विषं भक्षितवान्। तत· सिंहनन्दिताऽभिनन्दितानाम्न्यौ श्रीषेणनृपस्य भार्ये कपिलस्य भार्या सत्यभामा च विषप्रयोगेण कालं गता। चत्वारोऽप्यमी जीवा देवकुरुषु युगलत्वेनोत्पन्ना·। तत सौधर्मे कल्पे गताः। ततश्च्युत्वा श्रीषेणजीवोऽमिततेजा जात। अभिनन्दिता जीव· श्रीविजयो जात,सत्यभामा जीव सुतारा जाता, स कपिलजीवस्तिर्यग्भवेषु चिरकालं भ्रान्त्वा क्वचित्तथाविधमनुष्ठानं कृत्वाऽशनिघोष· समुत्पन्न। सुतारा च सत्यभामाब्राह्मणीजीवं दृष्ट्वा पूर्वस्नेहेन अपहृत्य गत। पुनरप्यमिततेजसा पृष्टं भगवन्नहं किं भविको न वा?, अचलकेवलिना कथितं त्वम्?, भविक·, इतश्च नवमे भवे तीर्थकरो भविष्यसि,एषोऽपि श्रीविजयस्तव गणधरो भविष्यति। तत एतदाकर्ण्यामिततेज·श्रीविजयनृपौ अचलकेवलिनं वन्दित्वा गतौ स्वस्वस्थानम्। अन्यदा अमिततेज·श्रीविजयाभ्यामुद्यानगताभ्यां चारणश्रमणाभ्यामवधिज्ञानेन ज्ञात्वा उक्तम्—यथा षड्विंशतिदिनानि भवतोर्द्वयोरप्यायुः ततस्ताभ्यां मेरौ गत्वा कृतोऽष्टाह्निकामहोत्सव· स्वस्वराज्ये च गत्वा स्वस्वपुत्रौ अभिषिच्य जगन्नन्दनमुनिसमीपे संयममादाय पादपोपगमनमनशनं च विहितम्। विधिना कालं कृत्वा प्राणते कल्पे विंशतिसागरोपमायुर्देवत्वेनोत्पन्नौ ततश्च्युतौ इहैव जम्बूद्वीपे पूर्वविदेहे रमणीविजये शीताया महानद्या दक्षिणकूले सुभगायां नगर्यां प्रेमसागरस्य राज्ञो वसुन्धराऽनङ्गसुन्दर्योर्महागर्भे क्रमेण कुमारत्वेनोत्पन्नौ अमिततेजोजीवोऽपराजितनामा, श्रीविजयजीवोऽनन्तवीर्यनामा जातः। तत्रापि प्रतिशत्रुरिदमिता व्यापाद्य क्रमेण बलदेवं वासुदेवत्वमापन्नौ। तयोश्च पिता प्रव्रज्याविधानेन मृत्वाऽसुरकुमारेन्द्रत्वेनोत्पन्न·। अनन्तवीर्यस्तु काल कृत्वा द्विचत्वारिंशत्सहस्रवर्षायुर्नारकः प्रथमपृथिव्यामुत्पन्न·, चमरश्च पुत्रस्नेहेन तत्र गत्वा वेदनोपशमं चकार। सोऽपि संविग्नः सम्यक् सहते। अपराजितो बलदेवो भ्रातृविरहदुःखितो निक्षिप्तपुत्रराज्यो जगद्धरगणधरसमीपे निष्क्रान्तः। शुद्धां प्रव्रज्यां परिपाल्य अच्युतेन्द्रत्वेनोत्पन्नः। अनन्तवीर्यस्तु, नरकादुद्वृत्य वैताढ्ये विद्याधरत्वेनोत्पन्नः अच्युतेन्द्रेण प्रतिबोधितोऽसौ प्रव्रज्यां गृहीत्वाऽच्युतकल्पे इन्द्रः सामानिकत्वेनोत्पन्नः। अपराजितोऽच्युतेन्द्रस्ततश्च्युत्वा इहैव जम्बूद्वीपे शीतामहानदीदक्षिणकूले मङ्गलावतीविजये रत्नसंचयापुर्यां क्षेमंकरो राजा, तस्य भार्या रत्नमाला, तयोः पुत्रो वज्रायुधाभिधानो जात·। इतश्च श्रीविजयजीवो देवायुरप्रतिष्ठितम्। अन्यदा पौषधशालायां स्थितो वज्रायुधो देवेन्द्रेण प्रशंसितः, यथाऽयं वज्रायुधो धर्माच्चालयितुं न शक्यते देवैर्दानवैश्च। तत एको देवस्तद्वाक्यमश्रद्दधान· पारापतरूपं विकुर्व्य भयभ्रान्तो वज्रायुधमाश्रित·। हे वज्रायुध! तव शरणं ममास्तु इति मनुष्यभाषयोवाच। वज्रायुधेन तस्य शरणं दत्तम्, स्थितस्तदन्तिके पारापतः। तदनन्तरं तत्रैवागतो लावक·। तेनापि भणितम्—यथा महासत्त्व!—एष मया क्षुधाक्रान्तेन प्राप्त·, ततो मुञ्चैनमन्यथा नास्ति मम जीवितमिति। ततस्तद्वचनमाकर्ण्य वज्रायुधेन भणितं न युक्तं शरणागतसमर्पणम्। तवापि न युक्तमेतत्, यत·—"हंतूण परप्पाणे, अप्पाणं जो करेइ सप्पाणं। अप्पाणं दिवसाणं,क एस नासेइ अप्पाणं॥१॥" यथा जीवितं तव प्रियं स, र्वेषामपि जीवानां तथैवास्ति,एनं भयभ्रान्तं दीनं व्यापादयितुं तव न युक्तम्। धर्मं कुरु। पापं मुञ्च। लावक· प्रतिभणति-राजन्नहं बुभुक्षितः न मे मनसि धर्मस्तिष्ठति। ततः पुनरपि भणितं राज्ञा-भो महासत्त्व! यदि बुभुक्षितस्त्वं ततोऽन्यत्तव मांसं ददामि। लावकः प्रतिभणति—स्वयं व्यापादितजीवमांसाशयस्म्यहं न च रोचते मह्यं परव्यापादितमांसम्। राज्ञा भणितम्-यावन्मात्रेण पारापतस्तुलति तावन्मात्रं मांसं ददामि। सोऽप्यवदत् यदि त्वं स्वदेहादुत्कीर्य मांसं ददासि तदाऽहं मुञ्चामि तद्राज्ञा प्रतिपन्नं ततस्तुष्टो लावक। राज्ञा च तुला आनायिता एकस्मिन् पार्श्वे पारापतः प्रक्षिप्त, एकस्मिन् पार्श्वे स्वदेहादुत्कीर्णमांसारोपो वि-

हित'। राजा यथा यथा तत्र मांसं प्रक्षिपति तथा तथा अन्यत्र पार्श्वे पारापतो गुरुतरो देवमायया भवति। राजा पुनःपुनः स्वदेहमांसमन्यत्र क्षिपति। तं दृष्ट्वा राजलोकः समस्तो हाहारवं चकार। पारापतपार्श्वे गुरुभारमवेदय स्वमांसपार्श्वे राजा स्वयमारूढः। एतादृशं वज्रायुधस्य सत्त्वं दृष्ट्वा विस्मितो देवः स्व रूपं प्रकटीकृत्य प्रकाम स्तुत्वा च स्वस्थाने गतवान्। अन्यदा वज्रायुधसहस्रायुधौ पितापुत्रौ क्षेमंकरगणधरसमीपे जातवैराग्यौ सहस्रायुधसुतं बलिं राज्येऽभिषिच्य प्रव्रज्यापर्याय च परिपाल्य पादपोपगमनविधिना कालं कृत्वा द्वावपि जनावुपरितनग्रैवेयके एकत्रिंशत्सागरोपमस्थितिकौ अहमिन्द्रदेवौ जातौ अहमिन्द्रसौख्यमनुभूय ततश्च्युतौ इहैव जम्बूद्वीपे पूर्वविदेहे पुष्कलावतीविजये पुण्डरीकिण्या नगर्यां घनरथो राजा तस्य द्वे महादेव्यौ पद्मावती मनोरमती च तयोर्गर्भे जातौ, वज्रायुधो मेघरथः, सहस्रायुधो दृढरथश्चेति वृद्धिं गतौ। ततः कृत ताभ्यां कलाग्रहण तौ द्वौ राज्ये स्थापयित्वा घनरथः स्वयं दीक्षा गृहीत्वा केवलज्ञानमुत्पाद्य तीर्थकरो जातः। तयोर्मेघरथ-दृढरथयोः पूर्वभवाभ्यासतो जिनधर्मदक्षताऽभूत्। अधिगतजीवाजीवादिभावौ तौ सुश्रावकौ जातौ। अन्यदा पितुस्तीर्थंकरस्य समीपे द्वावपि जनौ निजपुत्रं राज्येऽभिषिच्य प्रव्रजितौ। तत्राऽधीतसूत्राऽर्थेन मेघरथेन विंशतिस्थानकैः समर्जितं तीर्थकरनामगोत्रं, दृढरथेन शुद्धं चारित्रमाराधितम्। द्वावपि संलेखनाविधिना कालं कृत्वाऽनुत्तरोपपातिकेषु देवेषु उत्पन्नौ, तत्र सर्वार्थसिद्धविमानेऽनर्गलं सुखमनुभूय मेघरथकुमारस्ततश्च्युत्वा इहैव जम्बूद्वीपे भरते क्षेत्रे हस्तिनागपुरे विश्वसेनस्य राज्ञोऽचिरादेव्याः कुक्षौ भाद्रपदकृष्णसप्तम्यां चतुर्दशस्वप्नसूचित पुत्रत्वेनोत्पन्नः। पुनः ज्येष्ठकृष्णत्रयोदशीदिने जन्मास्यसंजातः। चतुःषष्टिसुरेन्द्रैरपि जन्माभिषेक कृत। उचितसमये गर्भस्थे चास्मिन् भगवति सर्वदेशेषु शान्तिर्जातेति शान्तिरिति नाम कृत मातापितृभ्याम्। क्रमेणासौ सर्वकलाकुशलो जातः, यौवन प्राप्त, विवाहितः प्रवरराजकन्या, क्रमेण राज्ये स्थापितः, पित्रा चारित्रं गृहीत, शान्तेश्चक्रवर्तिपदवी समायाता, उत्पन्नानि चतुर्दश रत्नानि, साधित भरतम्, षट्खण्डराज्यं परिपाल्य उचितावसरे स्वयं संबुद्धोऽपि लोकान्तिकामरैः प्रतिबोधितः, सांवत्सरं दानं दत्त्वा ज्येष्ठकृष्णचतुर्दश्यां चक्रिभोगास्त्यक्त्वा निष्क्रान्तः। चतुर्ज्ञानसमन्वितस्य उग्रतविहारं कुर्वत पौषशुद्धनवम्यां केवलज्ञानं समुत्पन्नम्, देवैः समवसरणं कृत, भगवता धर्मदेशना प्रारब्धा, प्रव्राजिता गणधरा, प्रतिबोधिता बहवः प्राणिनः। क्रमेण विहृत्य भरतक्षेत्रे बोधिबीजमुप्त्वा क्षीणसर्वकर्मांशो ज्येष्ठकृष्णत्रयोदश्यां मोक्षं गत इति। अस्य भगवतः कुमारत्वे पञ्चविंशतिवर्षसहस्राणि, माण्डलिकत्वेऽपि पञ्चविंशतिवर्षसहस्राणि, चक्रित्वे पञ्चविंशतिवर्षसहस्राणि, श्रामण्ये च पञ्चविंशतिवर्षसहस्राणि दीक्षापर्यायं सर्व्वायुश्च वर्षलक्षमेकं जातमिति। उत्त० १८ अ०।

संती अरहा चत्तालीसं धणूइं उड्ढं उच्चत्तेणं होत्था। ( सू० ८४०× ) स० ४० सम०।



संतिस्स णं अरहओ नउइगणा नउइगणहरा होत्था। ( सू० ६०+ )

शान्तिनाथस्येह नवतिर्गणा गणधराश्चोक्ताः। आवश्यके तु-पञ्चनवतिरजितस्य षट्त्रिंशत्तु शान्तेरुक्तास्तदिदमपि मतान्तरमिति। स० ६० सम०।

संतिस्स णं अरहओ एगूणनउइ अज्जासाहस्सिओ उक्कोसिया अज्जियासंपया होत्था। [ सू० ८६+ ]

इह शान्तिजिनस्यैकोननवतिरार्यिकासहस्राण्युक्तान्यावश्यके त्वेकषष्टि सहस्राणि शतानि च षडभिधीयन्त इति मतान्तरमेतदिति। स० ८६ सम०।

संतिस्स णं अरहओ तेणउइ चतुद्दसपुव्विसया होत्था। [ सू० ६३× ] स० ६२ सम०।

शान्ति-स्त्री०। पापोपशमहेतौ अध्ययनपद्धतौ, उत्त० १२ अ०।

संतिकम्म-शान्तिकर्मन्-न०। दुरितोपशमक्रियायाम्, भ० ११ श० ११ उ०। अग्निकारिकादिके (प्रश्न० २ आश्र०द्वार।) ग्रहोपशमनार्थे बलिकरणादिके,स्था० ५ ठा० ३ उ०। विघ्नोपशमकर्मणि,ज्ञा० १ श्रु० १अ०। होमादिके, स्था० ८ ठा०३ उ०।

संतिकम्मंत-शान्तिकर्मान्त-न०। शान्तिकर्मगृहे, यत्र शान्तिकर्म क्रियते। आचा० २ श्रु० १ चू० २ अ० २ उ०।

संतिगय-शान्तिगत-त्रि०। पूर्वोक्तप्रकारां शान्तिं गताः-प्राप्ताः शान्तिगताः। शान्तौ वा स्थिता शान्तिगताः। ज्ञानदर्शनचारित्राख्येषु मोक्षमार्गे स्थितेषु, आचा० १ श्रु० १ अ० ७ उ०।

संतिगर-शान्तिकर-पुं०। क्षुद्रोपद्रवेषु शान्तिकृत्सु, ल०।

संतिगिह-शान्तिगृह-न०। शान्तिकर्मस्थाने, भ०३ श०७ उ०।

संतिघर-शान्तिगृह-न०। शान्तिकर्म्मस्थाने, कल्प० १ अधि० ४ क्षण। यत्र राज्ञा शान्तिकर्म्म होमादि क्रियते। स्था० ५ ठा० १ उ०।

संतिचंदगणि-शान्तिचन्द्रगणिन्-पुं०। अजितशान्तिस्तवपट्टोपाङ्गटीकयोः कर्त्तरि सकलचन्द्रवाचकशिष्ये, तेन च तौ ग्रन्थौ १६५१ विक्रमसंवत्सरे विरचितौ, जै० इ०।

संतिजल-शान्तिजल-न०। शान्त्यर्थं मन्त्रपाठपूर्वकं मस्तके दातव्य जले, शान्तिपानीये, ध० २ अधि०।

संतिणाह-शान्तिनाथ-पुं०। शान्तितीर्थकृति, प्रव०२७ द्वार।

संतिणिव्वाण-शान्तिनिर्वाण-न०। शान्ति -कर्मदावोपशमस्तेन च निर्व्वाण-मोक्षपद-सर्वद्वन्द्वापगमरूपम्। अशेषकर्मक्षयरूपे मोक्षे, सूत्र० १ श्रु० ३ अ० ४ उ०।

संतिण्ण-संतीर्ण-त्रि०। मुक्ते सूत्र० १ श्रु० २ अ० ३ उ०।

संतिण्णमम-सन्तीर्णगमम-त्रि०। नागार्जुनीयस्य तु गमयत्वदर्शनं मुक्तप्राये, सूत्र० १ श्रु० २ अ० ३ उ०।

संतिथय-शान्तिस्तव-पुं० । शान्त्यर्थं देवस्तवपाठे, ध० २ अधि० ।

संतिदास-शान्तिदास-पुं० । धर्मसंग्रहवृत्तिकृतो मानविजयस्य धर्मसंग्रहवृत्तिकरणप्रार्थके, ध० ३ अधि० । ( शान्तिदासस्य वृत्तं 'धम्मसंगह' शब्दे चतुर्थभागे २७३२ पृष्ठे गतम् । )

संतिदेवया-शान्तिदेवता-स्त्री० । शान्तिसुरे, शान्तिकारिण्यां देवतायाम्, पञ्चा० १६ विव० ।

संतिविजय-शान्तिविजय-पुं० । धर्मसंग्रहवृत्तिकारकमानविजयसूरिगुरौ विजयानन्दसूरिशिष्ये, ध० ३ अधि० ।

संतिविरइ-शान्तिविरति-स्त्री० । शान्तिरुपशमः क्रोधजयस्तत्प्रधाना प्राणातिपातिभ्यो विरतिः शान्तिविरतिः । क्रोधजयार्थं विरमणे सूत्र० २ श्रु० १ अ० ।

संतिसूरि-शान्तिसूरि-पुं० । थारापद्रीयगच्छे विजयसिंहसूरिशिष्ये, वादितुष्टेन भोजराजेनास्मै 'वादिवेताल' इति विरुदमर्पितमनेनैव उत्तराध्ययनटीका रचिता, या पाई टीकेति प्रसिद्धा । दिगम्बरविजेता देवसूरिरस्यैव विद्याशिष्य आसीत् । वीरसूरि-शालिभद्रसूरि-सर्वदेवसूरयश्चास्य त्रयः पट्टशिष्या आसन् । विक्रमीय १०९६ वर्षे अयं स्वर्गतः । जै० इ० ।

संतिसेणीय-शान्तिश्रेणिक-पुं० । स्थविरस्यार्यशिष्यस्य प्रथमे शिष्ये, कल्प० २ अधि० ८ क्षण ।

संतुयट्ट-सन्त्वग्वर्त-त्रि० । शयिते, ज्ञा० १ श्रु० १३ अ० ।

संतुयट्टण-सन्त्वग्वर्त्तन-न० । सम्यक्त्वग्वर्तने शयने, व्य० ५ उ० ।

संतोदत्त-शान्तोदात्त-पुं० । शान्तस्तथाविधेन्द्रियकषायविकारविकलः, उदात्त-उच्चोच्चतराचाचरणस्थितिबद्धचित्तस्ततः शान्तश्चासावुदात्तश्च शान्तोदात्तः । श्रद्धानुष्ठानसाधनपरे सूक्ष्मभावसंयुक्त तत्त्वसंवेदनानुगे, यो० विं० । द्वा० ।

संतोस-संतोष-पुं० । अल्पेच्छतायाम्, स्था० १० ठा० ३ उ० । संतुष्टौ, पञ्चा० १ विव० । द्वा० । सर्वद्वन्द्वोपरमरूपे, सूत्र० २ श्रु० ६ अ० । "संतोषः परमं सौख्यम्" । द्वा० २६ अष्ट० । "विश्वस्यापि स वल्लभो गुणगणस्तं संश्रयत्यन्वहं, तेनेयं समलंकृता वसुमती तस्मै नमः संततम् ॥ तस्मादन्यतमः समस्ति न परस्तस्यानुगा कामधुक्, तस्मिन्नाश्रयतां यशांसि दधते संतोषभाक् यः सदा ॥ १ ॥" ध० र० १ अधि० ११ गुण ।

संतोसि(ण्)-सन्तोषिन्-पुं० । येन केनचित् संतुष्टे अवीतरागे, सूत्र० १ श्रु० १२ अ० ।

संथड-संस्तृत-त्रि० । कृतसंस्तारे, आचा० २ श्रु० १ चू० १ अ० ३ उ० ।

संथडिय-संस्तृत-त्रि० । समर्थे, तद्दिवसं पर्याप्तभोजिनि च । वृ० ८ उ० ।

संथणण-संस्तनन-न० । अत्यर्थं सशब्दनिःश्वासे, सूत्र० १ श्रु० २ अ० ३ उ० ।

संथर-संस्तर-पुं० । द्रव्यादिरहितकाले, दर्श० ४ तत्त्व ।

संथरंत-संस्तरत्-त्रि० । विवक्षितानुष्ठानवाहनसमर्थे, व्य० २ उ० ।

संथरण-संस्तरण-न० । प्रासुकैषणीयाहारादिप्राप्तौ साधूनां निर्वाहे, ध० २ अधि० । ( अत्रत्या व्याख्या 'ठवणाकुल' शब्दे चतुर्थभागे १६६० पृष्ठे गता । ) ( त्रिविधं संस्तरणम्-जघन्यं, मध्यमम्, उत्कृष्टं च । तत्राऽऽचार्यादीनामाचारः 'अइसेस' शब्दे प्रथमभागे २३ पृष्ठे गतः । ) संस्तारककरणे, सूत्र० १ श्रु० २ अ० २ उ० ।

संथरमाण-संस्तरत्-त्रि० । विद्यमाने, 'संथरमाणेहिं जणवएहिं' आचा० २ श्रु० १ चू० ३ अ० १ उ० । प्रतिपन्नप्रतिमापरिपालनक्षमे, संस्तरन् नाम उच्यते-यः सूत्रोक्तविधिना प्रतिमाप्रतिपत्तियोग्यतामुपगतः मासिक्यादीनां च प्रतिमानां मध्ये यां प्रतिमा प्रतिपन्नस्तां सम्यक् परिपालयितुं क्षमस्तस्य संस्तरतो विधिः । वृ० १ उ० २ प्रक० ।

संथव-संस्तव-पुं० । संस्तवनं संस्तवः । दातृगुणविकत्थने, तेन सहात्मनः सम्बन्धविकत्थने च । वृ० १ उ० ३ प्रक० । परिचये, प्रत्यासत्तौ, सूत्र० १ श्रु० ४ अ० १ उ० । स्नेहे, उत्त० ५ अ० । सूत्र० । स्वरूपज्ञानादुत्पन्ने परिचये, उत्त० २८ अ० । एकासने स्थित्वा परिचये, उत्त० १६ अ० । अभिष्वङ्गे, सूत्र० १ श्रु० २ अ० २ उ० । कामसम्बन्धे, सूत्र० १ श्रु० २ अ० ३ उ० । गृहगमनालापदानसंप्रीणनादिरूपे परिचये, सूत्र० १ श्रु० ४ अ० १ उ० । सहसंवासे, सूत्र० १ श्रु० ६ अ० । दर्श० । वृ० । एकत्र संवासात् परस्परालापादिजनिते परिचये, ध० २ अधि० । अभ्यासे, आव० १ अ० । आ० । संवासजनितपरिचये, सहवासभोजनालापादिलक्षणे स्नेहे, आव० ६ अ० । आ० चू० । सूत्र० । पञ्चा० । निजपटप्रदर्शनेन लोकावर्जने, पिं० । प्रव० ।

संस्तवपिण्डो न ग्राह्यः । सांप्रतं संस्तवपरिहारमाह—

गिहिणो जे पव्वइएण दिट्ठा, अपव्वइएण व संथुया हविज्जा ।
तेसिं इहलोयफलट्ठयाए, जो संथवं न करेइ स भिक्खू ॥ १० ॥

गृहिण-गृहस्था ये प्रव्रजितेन गृहीतदीक्षेण दृष्टा उपलक्षणत्वात्परिचिताश्च अप्रव्रजितेन वा गृहस्थावस्थेन सह संस्तुताः परिचिता भवेयुर्गृहिणो य इति सम्बन्धः । 'तेसिं' ति तैरुभयावस्थयोः परिचितैर्गृहिभिरिहलौकिकफलार्थं-वस्त्रपात्रादिलाभनिमित्तं यः संस्तवं-परिचयं न करोति स भिक्षुरिति सूत्रार्थः । उत्त० १६ अ० ।

पुरे संथवं करेइ—

जो भिक्खू पुरे संथवं करेइ करंतं वा साइज्जइ ॥ २३७ ॥

संथवो-थुती अदत्ते दाणे पुव्वं संथवो, दिण्णे पच्छा संथवो जो तं करेति सातिज्जति वा तस्स मासलहु । अहवा-सयणे पुव्वपच्छसंथवं करेति ।

अत्र निर्युक्तिमाह—

दव्वे खेत्ते काले, भावम्मि य संथवो मुणेयव्वो ।
अत्तपरतदुभए वा, एक्केको सो पुणो दुविधो ॥ २३८ ॥

साहू आत्मसंस्तवं करोति, साहू उभयस्स वि संस्तवं क-

रोति । अहवा-आत्मना संस्तवं करोति इति आत्मसंस्तव । साहु गिहत्यं थुणति एस आत्मस्तव , गिहत्थो साधु थुणति एस परस्तव., दो वि परोप्परं एस उभयस्तव । एतेसिं एक्केको पुण दुविहो संतासंतो य ।

दव्वे खेत्ते काले संथवो इमो । गाहा-

दव्वे पुट्ठमपुट्ठो, परिहीणधणा तु पुव्वयंती उ ।
खेत्तेकतरा खेत्ता, कम्मि व तो दिक्खितो काले ॥२३९॥

दव्वसंथवो परेण पुच्छिओ-तुमं सो ईसरो आमं ति, भणाति । सो पुण तहा संतो वा असंतो वा पुच्छितो भणाति अमुगणामधेयं तुमं इस्सरं ण याणसि तो एव भणति परिहीणधणा पव्वयंति त्ति परिहीणधणो-दरिद्रेत्यर्थः,एवं परेण णिदितो समुन्नुइतो परं णिभं काउ अप्पाण पि थुणाति यथा भवानैश्वर्य्ययुक्त. तथा अहमप्यासीत्। खेत्तसंथवो कतरातो तुम चेव सरिसव्वतोह । अथवा-प्रथमवयंसि णिविट्ठो णिविस्समाणो वा । भावे संथवो दुविहो-सयणे, वयणे य ।

सयणे ताव इमो । गाहा-

सयणे कस्स सरिसओ, आमं तुसिणीएँ पुच्छई को वा ।
आउट्टणाणिमित्तं, वयणे आउट्टिओ वाऽवि ॥ २४० ॥

केणइ पुच्छिओ जो सो इंददत्तभाया पव्वतितो सो तुमं सरिसो दीससि । सो भणइ-आमं, तुसिणीओ वा अच्छति भणति वा को परिसाणि पुच्छति । इदाणिं वयणसंथवो अदित्ते दाणे पुव्व करेति, आउट्टणाणिमित्तं वरं मे आउट्टितो इट्ठं दाणं देहिति । दाणेण वा दत्तेण आराहितो पच्छा वयणसंथव करेति । एस सखेवो भणितो । इदाणीं वित्थारो संखेवभणियस्स वा इम वक्खाणं ।

तत्थ दव्वसंथवो इमो चउसट्ठिप्पगारो । गाहा—

धण्णाइं रतणथावर, दुपदचतुप्पद तहेच कुवियं वा ।
चउवीसं चउवीसं, तियदुगदसहा अणेगविधं ॥ २४१ ॥

धण्णादियाणं कुवियपज्जवसाणाणं छण्हं पच्छद्धेणं जहासंखं संखा भणिता ।

गाहा-

धण्णाणि चतुव्वीसं, जव गोहुम सालि वीहि सट्ठी य ।
कोद्दव अणवा कंगू, रालग तिल मुग्ग मासा य ॥२४२॥

वृहच्छिरा कगू , अल्पतरशिरा रालकः ।

गाहा—

अतसि हिरिमंथतिपुडग, णिप्फावसलिसिद रायमासा य।
इक्खू मसूर तुवरी, कुलत्थ तह धाणगकलाया ॥ २४३ ॥

अतसी मालवे प्रसिद्धा.हेरिमंथा वट्टचणग, तिपुडालगा चणगा, णिप्फावा वल्ला, अलिसिंदा चवलगा, रायमासा पडरचलगा, धाणा कुंथुभरी, वट्टचणगा ।

गाहा—

रयणाइं चउवीसं, सुवण्णतवुतंबुरयतलोहाइं ।
सीसगहिरण्णपासा-ण वेरमणिमोत्तियपवालो ॥ २४४ ॥

संखतिणिसा अगुलुचं-दणाइँ वत्थामिलाइँ कट्ठाइं ।
तह दंत चम्मवाला, गंधा दव्वोसहाइं च ॥२४५॥

रयतं-रुप्प हिरण्णं-रूपका पाषाणा स्फटिकादय मणि सूर-चन्द्रकातादय. , तिणिसा रुक्खकट्ठा अगलुं-अगरु यानि न म्लायन्ते शीघ्रं तानि अमिलातानि वस्त्राणि कट्ठा शाकादिस्तम्भा दंता हस्त्यादीना,चम्मा वग्घाणं,वाला चमरीणं, गंधयुक्तिकृता गधा एक गंध,ओषधं—द्रव्यं बहुद्रव्यसमुदायादौषधं ।

त्रिविधं थावरं । गाहा—

भूमिघरतरुगणादी, तिविधं पुण थावरं समासेणं ।
चक्कारबद्धमाणुस, दुविधं पुण होति दुपय तु ॥२४६॥

भूमीघरं केल्लाघरं खातमियमुभय तिविध, तरुगणा-आम्रवणारामादि दुपयं दुविध होदि अरगबद्ध मानुस च ।

दसविधं चतुप्पद । गाहा—

गावी महिसी उट्टी, अय एलग आस आसतरगा य ।
घोडग गद्दभ हत्थी, चतुप्पदा होंति दसधा तु ॥२४७॥

आसतरगा अस्सतरी ।

कुप्पोवकरणं णाणाविहं । गाहा—

णाणाविहो वि करणं, लक्खणकुप्पं समासतो होति ।
चतुसट्ठिपगारोत्तं, एवं भणितो भवे अत्थो ॥२४८॥

कुप्पोवकरणं णाणाविह अणेगलक्खणं तच कसभंडं लोहभाडं ताम्रमय मृन्मयादि च २ । ४ ।२ । ४ व्ह ३ ।२ । १० । १ । एप सर्वोपि संपिण्डित चतु पष्टिप्रकारोऽभिहित. ।

आतमपरसंस्तवोपसंहारनिमित्तमिदमाह-

चतुसट्ठिपगारेणं, जाध व अट्ठेण उवचितोमि त्ति ।
किं अप्पसंथवेणं, कातण एमेव अहयं पी ॥२४९॥

यथा त्व चतु षष्टिप्रकारेणोपपेतस्तथाऽहमप्यासं किं वाऽऽत्मसंस्तवेनेति १ ।

इयाणि खेत्तसंस्तवोपेतं । गाहा—

अम्हा साहू देसी, एगग्गामेगणगरवत्थे य ।
पुणाओ खेत्ताओ, अम्हं मो पुच्छिओ वत्ती ॥२५०॥

जइ भणाति लोइयं तू , पुण्णं खेत्तं तहिं भवे गुरुगा ।
अह आरुह तं अम्ह वि,जिणजम्मादी तहिं लहुओ॥२५१॥

गिहिणा पुच्छितो कम्मि देसे अज्जो उप्पण्णो साहू भणति-कुरुखेत्ते, गिही भणति—अम्ह साहू देसीणए गामणगरउप्पण्णा गिहिणा पुच्छिओ कहिं गामम्मि त्ति साहू भणति कुरुखेत्ते एव जइ लोइय पुण्णखेत्त भणति तो चतुगुरु, लोउत्तर लहुओ ।

इदाणीं कालसंथवो गिहिणा पुच्छिओ कम्मि वए पव्वतितो भणाति । गाहा—

एवइयम्मि य जम्मे, परियाओ वि मज्झ एवतियो ।
मयणसमत्थ णिविट्ठो,णिव्विसमाणो पत्तो वा॥२५२॥

एवइओ मे जम्मो एवइआए वा पव्वतितो मयणसमत्थो वा

पव्वइतो णिविट्ठो परिणीश्रो णिव्विसमाणो विवाहदिणे ठविए पसूयपुत्तो जाश्रो। इदाणिं णिस्साकतं जाश्रो। नि० चू० २ उ०।

गाहा—

सुत्तणिवातो नियमा, चतुव्विधे संथवम्मि संतम्मि ।
मोत्तूण सयणसंथव, तं सेवं तम्मि आणादी ॥२६३॥

सुत्तणिवातो दव्वादिचतुव्विहे संथवे संतम्मि मासलहुं, मोत्तूण सयणसथवं सयणसंथवे पुण इमं पुरिससंथवे चउलहुं इत्थीसंथवे चउगरुं, चउव्विहे वि दव्वातिए संथवे आणादिया दोसा, कारणे पुण संथवं करेज्जति ।

गाहा—

अधिकरण-रायदुट्ठे, गेलण्णद्धाण-संभमभए वा ।
पुरिसित्थीसंबंधे , समणाणं संजतीणं च ॥ २६४ ॥

गिहत्थेण समं अहिकरणमुप्पएणं तस्स उवसमणट्ठाए पुव्वं चतुव्विहं पि दव्वातियं संतं करेंति, पच्छा असतं पि। एवं रायदुट्ठे वि उवसमणट्ठता गिलाणोसहणिमित्त वा श्रद्धाण संभमभएसु, संताणट्ठया वा ' पुरिसित्थि ' त्ति एएहिं कारणेहिं संजताए संजतीए वा ।

'पुरिसित्थि'त्ति संबंधो भवेज्ज वयणसयणक्कमप्रदर्शनार्थं इदमाह। गाहा—

वयसंथवसंतेणं , पुव्वथुणे पुरिससंथवे तत्तो ।
णातितित्थिगतेणं वा, भाइयवज्जं च इतरेणं ॥ २६५ ॥

पुव्विं वयसंथवेणं संतेणं, पच्छा पुरिससंथवेणं पुव्वावरेणं संतेणं ततो पच्छा णातितित्थिगतेणं संतेणं ततो भाइयवज्जं इतरेण पच्छा संथवेणं सतेणं ततो पच्छा वयणादि असंतेण ।

गाहा—

पुव्वे अवरे य पदे, एसेव गमो उ होइ समणीणं ।
जह समणाणं गुरुई,इत्थी तह तासि पुरिसा उ॥२६६॥

संजतीए एसेव गमो, जहा समणाणं इत्थी गुरुगा , तहा- समणीणं पुरिसा गुरुगा ।

सूत्रं—

जे भिक्खू समाणे वा वसमाणे वा गामाणुगामं दुइज्ज- माणे पुरे संथुतियाणि वा पच्छा संथुइयाणि वा कुलाइं पुव्वामेव अणुपवेसित्ता पच्छा वा भिक्खायरियाए अणुपविसइ अणुपविसंतं वा साइज्जइ ॥ ३८ ॥

समाणो नाम समवेत॰ अप्रवसित॰ को सो वुड्ढावास॰ वसमाणो उडुबद्धिए अट्ठमासे वासावासं व णवमं एय णयविहं विहारेंतो वसमाणो भएणति, अनु-पश्चाद्भावे गामातो अण्णो गामो अणुगामो दोसु पाएसु सिसिरगिम्हेसु वारिज्जति त्ति दूइज्जति। पुरे संथुता मातापितादी,पच्छा संथुता सुसरादी, कुलशब्द प्रत्येकं भिक्खाकालातो पुव्विं अप्राप्त भिक्खाकाले इत्यर्थ । अनुप्रवेशो पच्छा भिक्खाकाले अतिक्रान्तेत्यर्थ । एवं अप्राप्त अतिक्रान्ते वा पविसंतं साइज्जति-अनुमोदते मासलहु ' से ' पच्छिउत्तं । एस सुत्तत्थो । नि० चू० २ उ० । पं० चू० । दृश० । व्य० ।

संस्तवनं व्याख्यानयति—

सुत्तेण अत्थेण य उत्तमो उ,
आगाढपण्णेसु य भावियप्पा ।
जच्चन्निश्रो याऽवि विसुद्धभावो,
संते गुणेवं पविकत्थयंतो ॥ ४७ ॥

सूत्रेण अर्थेन च एष उत्तम॰-प्रधान॰ परिपूर्णः, सूत्रस्यार्थस्य चावदातस्यास्य संभवात्। तथा आगाढा प्रज्ञा येषु व्याप्रियते न या काचन तान्यागाढप्रज्ञानि शास्त्राणि तेषु भावितात्मा तात्पर्यग्राहितया तत्रातीव निष्पन्नमतिरिति भाव॰। तथा जात्या सकलजनप्रशस्यया‌न्वितो-युक्तो जात्यन्वित॰, तथा विशुद्ध॰-स्वपरससारनिस्तारैकतानतयाऽवदातो भावः-अभिप्रायो यस्य स विशुद्धभाव , एवंभूतो गुणान् गणधारिण॰ शिष्या अपरे च प्रकर्षतो हर्षातिरेकलक्षणतो विकत्थयन्ते-श्लाघ्यन्ते । व्य० ३ उ० । संस्तव॰ परिचयः तस्याभिष्वङ्गहेतुत्वात्। द्वाविंशे परिग्रहे, प्रश्न० ५ आश्र० द्वार ।

से भिक्खू वा भिक्खुणी वा वसमाणे वा, गामाणुगामं वा दूइज्जमाणे से जं पुण जाणेज्जा गामं वा०जाव रायहाणिं वा इमंसि खलु गामंसि वा० जाव रायहाणिंसि वा संतेगतियस्स भिक्खुस्स पुरेसंथुया वा पच्छासंथुया वा परिवसंति, तं जहा-गाहावई वा०जाव कम्मकरी वा तहप्पगाराइं कुलाइं णो पुव्वामेव भत्ताए वा णिक्खमिज्ज वा पविसिज्ज वा, केवली बूया-आयाणमेयं, पुरा पेहाए तस्स परो अट्ठाए असणं वा पाणं वा खाइमं वा साइमं वा उवकरेज्ज वा उवक्खडेज्ज वा अह भिक्खू णं पुव्वोवदिट्ठा० ४ जं णो तहप्पगाराइं कुलाइं पुव्वामेव भत्ताए वा पाणाए वा पविसेज्ज वा णिक्खमिज्ज वा २ से तमायाय एगंतमवक्कमिज्जा २, अणावायमसंलोए चिट्ठेज्जा, से तत्थ कालेणं अणुपविसेज्जा २ तत्थेतरेतरेहिं कुलेहिं सामुदाणियं एसियं वेसियं पिंडवायं एसित्ता आहारं आहारेज्जा, सिया से परो कालेण अणुपविट्ठस्स आहाकम्मियं असणं वा पाणं वा खाइमं वा साइमं वा उवकरेज्ज वा उवक्खडेज्ज वा। तं चेगतिश्रो तुसिणीतो उवेहेज्जा आहडमेवं पच्चाइक्खिस्सामि माइट्ठाणं संफासे,णो एवं करेज्जा से पुव्वामेव आलोएज्जा आउसो त्ति वा भगिणि त्ति वा णो खलु मे कप्पति आहाकम्मियं असणं वा पाणं वा खाइमं वा साइमं वा भोत्तए वा पायए वा मा उवकरेहि मा उवक्खडेहि से सेवं वयं तस्स परो आहाकम्मियं असणं वा० ४ उवक्खडावित्ता आहट्टु दलएज्जा तहप्पगारं असणं वा० ४ अफासुयं लाभे संते णो पडिगाहेज्जा । ( सू० ५० )

स भिक्षुर्यत् पुनरेवं जानीयात्, तद्यथा-ग्रामं वा यावद्राजधानीं वा-अस्मिंश्च ग्रामादौ सन्ति-विद्यन्ते कस्यचिद्भिक्षोः पूर्वसंस्तुता पितृव्यादयः, पश्चात्संस्तुता वा-श्वशुरादय॰, ते

च तत्र वद्धगृहाः प्रबन्धेन प्रतिवसन्ति ते चामी गृहपतिर्वा यावत्कर्मकरी वा तथाप्रकाराणि च कुलानि भक्तपानाद्यर्थं न प्रविशेन्नापि निष्क्रामेत् । स्वमनीषिकापरिहारार्थमाह—केवली ब्रूयात्-कर्मोपादानमेतत् किमिति ?,यतः पूर्वमेवैतत्प्रत्युपेक्षेत-पर्यालोचयेत् , यथैतस्य भिक्षोः कृते परो गृहस्थोऽशनाद्यर्थम् उपकुर्यात्—ढौकयेत् उपकरणजातम् 'उवक्खडेज्ज' त्ति तदशनादि पचेद्वेति । अथ-अनन्तरं भिक्षूणां पूर्वोपदिष्टमेतत्प्रतिज्ञादि, यथानो तथाप्रकाराणि स्वजनसम्बन्धीनि कुलानि पूर्वमेवभिक्षाकालादारत एव भक्ताद्यर्थं प्रविशेद्वा निष्क्रामेद्वेति । यद्विधेय तद्दर्शयति-'से तमादाये' त्ति स-साधु एतत्-स्वजनकुलम् आदाय-ज्ञात्वा केनचित्स्वजनेनाज्ञात एवैकान्तमपक्रामेद् , अपक्रम्य च स्वजनाद्यनापातेऽनालोके च तिष्ठेत् , स च तत्र स्वजनसम्बद्धग्रामादौ कालेन-भिक्षावसरेणानुप्रविशेत् , अनुप्रविश्य च इतरेतरेभ्य कुलेभ्य -स्वजनरहितेभ्य. 'एसियं' ति—एषणीयम्-उद्गमादिदोषरहितं 'वेसियं' ति वेषमात्रादवाप्तमुत्पादनादिदोषरहित पिण्डपातं-भिक्षाम् एषित्वा-अन्विष्य एवभूत ग्रासैषणादोषरहितमाहारमाहारयेदिति । आचा० ( उत्पादनादोषा. ग्रासैषणादोषाश्च स्वस्वस्थानादवगन्तव्या. । ) ग्रासैषणादिदोषरहित. सम्राहारमाहारयेदिति । अथ कदाचिदेवं स्यात् , स पर -गृहस्थ कालेनानुप्रविष्टस्यापि भिक्षोराधाकर्मिकमशनादि विदध्यात् , तच्च कश्चित्साधुस्तूष्णींभावेनोत्प्रेक्षेत , किमर्थम् ?, आहृतमेव प्रत्याख्यास्यामीति , एवं च मातृस्थानं संस्पृशेत् , न चैवं कुर्यात् , यथा च कुर्यात्तद्दर्शयति—स पूर्वमेव आलोकयेत्—दत्तोपयोगो भवेत् , दृष्ट्वा चाहारं संस्क्रियमाणमेव वदद्—यथा असुक ! इति वा भगिनि ! इति वा न खलु मम कल्पत आधाकर्मिक आहारो भोक्तुं वा पातु वाऽतस्तदर्थं यत्नो न विधेय. । अथैवं वदतोऽपि पर आधाकर्मादि कुर्यात्ततो लाभे सति न प्रतिगृह्णीयादिति ॥ आचा० २ श्रु० १ चू० १ अ० ६ उ० । कर्त्तरि प्रत्यये । त्रि० । संस्तावके, ज्ञा० १ श्रु० १६ अ० ।

संथवदाण-संस्तवदान-न० । परिचयकरणे , व्य० ७ उ० ।

संथवपिंड-संस्तवपिण्ड-पु० । पूर्वे जननीजनकादिद्वारेण पश्चाच्च श्वश्रूश्वशुरादिद्वारेणात्मपरिचयानुरूपं सम्बन्धं भिक्षार्थं घटयता ग्राह्ये पिण्डे, जीत० । ध० ।

संस्तवद्वारमाह—

दुविहो उ संथवो खलु, संबंधीवयणसंथवो चेव ।
एक्केको वि य दुविहो, पुव्विं पच्छा य नायव्वो ॥४८४॥

द्विविध खलु संस्तव., तद्यथा-परिचयरूप , श्लाघारूपश्च । तत्र परिचयरूप. सम्बन्धिसंस्तव.,श्लाघारूपो वचनसंस्तव. । तत्र सबन्धिनो-मात्रादय , श्वश्र्वादयश्च । तद्रूपतया य. संस्तव' स संबन्धिसंस्तव । वचनं श्लाघा तद्रूपो य संस्तव स वचनसंस्तव । एकैकोऽपि च द्विधा । तद्यथा 'पुव्विं पच्छा य' त्ति पूर्वसंस्तव , पश्चात्संस्तवश्च ।

तत्र संबन्धिसंस्तवस्य द्विविधस्यापि स्वरूपमाह-

मायपिइपुव्वसंथव, सासुसुसराइयाण पच्छा उ ।
गिहिसंथवसंबंधं, करेइ पुव्विं च पच्छा वा ॥४८५॥

मातापित्रादिरूपतया य संस्तव'-परिचय स पूर्वसंस्तवो मात्रादीनां पूर्वकालभावित्वात् । यस्तु श्वश्रूश्वशुरादिरूपतया सस्तवः स पश्चात्संस्तव. । श्वश्र्वादीना पश्चात्कालभावित्वात् । तत्र साधुर्भिक्षार्थं प्रविष्ट सन् गृहिभि सह संस्तवसंबन्ध-परिचयघटनम् पूर्वं-पूर्वकालभाविमात्रादिरूपतया पश्चाद्वा पश्चात्कलभाविश्वश्र्वादिरूपतया वा करोति ।

कथमित्याह—

आयवयं परवयं, नाउं संबंध एतयणुरूवं ।
मम माया एरिसिया, ससा य धूया व नत्ताई ॥ ४८३ ॥

इह साधुर्भिक्षार्थं गृहं प्रविष्ट सद्याहारलम्पटतया आत्मवय. परवयश्च ज्ञात्वा तदनुरूपं वयोऽनुरूपं संबध्नाति,यदि सा वयोवृद्धा स्वयं च मध्यमवयास्ततो ममेदृशी माताऽभूदिति ब्रूते । यदि पुन साऽपि मध्यमवयास्तन ईदृशी मम स्वसाऽभूदिति वदति । अथ बालयास्ततो दुहिता नप्ता वेत्यादि ।

संप्रत्यस्यैव पूर्वरूपसंबन्धसंस्तवस्योदाहरणमाह-

अद्धिइ दिट्ठीपण्हव, पुच्छा कहणं ममेरिसी जणणी ।
थणखेवो संबंधो, विहवासुण्हाइदाणं च ॥ ४८७ ॥

कोऽपि साधुर्भिक्षार्थं प्रविष्ट. काचिन्निजमातृसमानां स्त्रीमवेक्ष्य आहारादिलम्पटतया मातृस्थानेनाधृत्या दृष्टिप्रस्रवम्—ईषदश्रुविमोचन करोति । तत. 'पुच्छ' त्ति । सा स्त्री पृच्छति—किं त्वमधृतो दृश्यसे ? इति । तत. साधो कथनम् । मम ईदृशी त्वत्सदृशी जनन्यभूदिति । अत्र दोषानाह—ततस्तया मातृत्वप्रकटनार्थं साधुमुखे स्तनप्रक्षेप क्रियते । परस्परं च सबन्ध स्नेहवृद्धिरूपो जायते । तथा विधवा स्नुषादिदानं च करोति मृतपुत्रस्य स्थाने अयं मे पुत्र इति बुद्धया स्वस्नुषादान कुर्यात् । आदिशब्दात्स्नेहवशतो दास्यादिदान च । उक्तं पूर्वसंबन्धिसस्तवोदाहरणम् । एवं पश्चात्संबन्धिसस्तवोदाहरणमपि भवानीयम् ।

संप्रति पुन' पश्चात्संबन्धिसंस्तवे दोषानाह-

पच्छा संथवदोसा, सासूविहवादिधूयदाणं च ।
भज्जा ममेरिसि च्चिय,सज्जो घाओ व(य)भंगो वा ॥४८८॥

पश्चात्संबन्धिसंस्तवे इमे दोषा —श्वश्रूरीदृशी ममाऽऽसीदित्युक्ते सा विधवाया आदिशब्दात् कुण्डादिरूपाया सुताया दानं करोति, तथा भार्या ममेदृश्यभवदित्युक्ते यदि ईर्ष्यालुस्तद्भर्ता समीपे च वर्तते तदा मम भार्याऽनेन स्वभार्या कल्पितेति विचिन्त्य साधोर्घातं कुर्यात् । अथेर्ष्यालुस्तद्भर्ता न भवति, समीपे वा न वर्त्तते: तदा भार्याऽहमनेन कल्पितत्युन्मत्ता भार्येव समाचरन्ती चित्तक्षोभमापादयेत् ततो व्रतभङ्ग ।

एष तावत्पूर्वसम्बन्धिसस्तवस्य पश्चात्सबन्धिसंस्तवस्य च प्रत्येकमसाधारणान् दोषानभिधाय संप्रत्युभयोरपि साधारणानभिधित्सुराह—

मायावी चडुयारी, अम्हं ओहावणं कुणइ एसो ।
निच्छुभणाई पंतो, करिज्ज भद्देसु पडिबंधो ॥ ४८९ ॥

अर्थार्तिदर्प्रिप्रस्तवाऽऽदि कुर्वन्मायावी एषोऽस्माकमावर्जनानिमित्तं चाटूनि करोतीति निन्दा, तथाऽस्माकं स्वस्य कार्पटिकप्रायस्य जनन्यादिकल्पनेनापभ्राजनं विधत्ते, तत एवं विचिन्त्य ग्रान्त स्वगृहनिष्काशनादि करोति । अथ ते गृहिणो भद्रा भवेयुस्तर्हि तेषु भद्रेषु साधोरुपरि प्रतिबन्धो भवेत् , प्रतिबन्धे च सत्याधाकर्मादिकं कृत्वा दद्यादिति । उक्तो द्विविधोऽपि सम्बन्धिसंस्तवः ।

अथ वचनसंस्तवस्य पूर्वरूपस्य लक्षणमाह—

गुणसंथवेण पुव्वं, संताऽसंतेण जो थुणिज्जाहि ।
दायारमदिन्नम्मी, सो पुव्वं संथवो हवइ ॥ ४६० ॥

गुणा औदार्यादय तेषां यः संस्तवः—प्रशंसारूपो वचनसघातस्तेन सत्यरूपेणासत्यरूपेण वा यः साधुर्दातव्ये भक्तादावदत्ते सति दातारं स्तूयात् , स एष पूर्वसंस्तवो भवति ।

अस्यैवोल्लेखं दर्शयति—

एसो सो जस्स गुणा, वियरंति अवारिया दसदिसासु ।
इहरा कहासु सुणिमो, पच्चक्खं अज्ज दिट्ठोऽसि ॥४६१॥

सुगमम् । नवरं, 'इहरा' इतरथा, इदानीं दर्शनात् पूर्वमित्यर्थः ।

सम्प्रति पश्चाद्रूपस्य वचनसंस्तवस्य लक्षणमाह—

गुणसंथवेण पच्छा, संतासंतेण जो थुणिज्जाहि ।
दायारं दिन्नम्मि, सो पच्छा संथवो होइ ॥ ४६२ ॥

दत्ते भक्तादौ सति पश्चात् दातारं गुणसंस्तवेन सत्यरूपेणाऽसत्यरूपेण वा यः साधु स्तूयात् एष पश्चात्संस्तवो भवति ।

संप्रति तस्यैवोल्लेखं दर्शयति—

विमलीकय म्ह चक्खू , जहत्थया वियरिया गुणा तुज्झं ।
आसि पुरा मे संका, संपय निस्संकियं जायं ॥ ४६३ ॥

भिक्षार्थं प्रविष्ट साधुर्लब्धे भक्तादौ दातारं वक्ति,यथा-निजदर्शनेन त्वया विमलीकृते नः चक्षुषी तथा यथार्थास्तवगुणा सर्वत्रापि विचरिता । तथा पुरा-पूर्वं मे शङ्का आसीत् यादृक् गुण श्रूयते स किं तादृश एवोतान्यादृश इति । सम्प्रति तु त्वयि दृष्टे निःशङ्कितं मे हृदयं जातम् । उक्तं संस्तवद्वारम् । पिं० ।

संथार–संस्तार–पुं० । संस्तरन्ति साधवोऽस्मिन्निति संस्तारः । उपाश्रये, व्य० ४ उ० । संस्तीर्यते भूपीठे विस्तार्यते शयालुभिरिति संस्तारः । पर्यन्तक्रिया कुर्वद्भिर्दर्भादिविस्तरणे, सथा० ।

अथैकोनविंशत्या गाथाभिः संस्तारकमाहात्म्यमेवाह—

भूइग्गहणं जह नग्गयाण अवमाणयं च वज्जाणं ।
मल्लाणं च पडागा, तह संथारो सुविहियाणं ॥ ३ ॥

'जहनक्कयाणं' ति—यथा न्यक्कृताना-पराभूताना निराकृताना पित्रादिस्मशानात् भागमलभमानानां राजादिविज्ञपनेन भूतिग्रहणं-विभूतिलाभो महते तोषाय, देवाना वा स्वर्गादिस्थानात्काशिनानां पुनरिन्द्रादिप्रकीकरणेन स्वर्गस्थानलाभः राज्ञा वा स्वराज्यान्निर्द्धाटितानां पुनर्मित्रादिबलदलमीलनेन स्वराज्यप्राप्तिः, मन्त्रिणा वा स्वपदच्यावितानां पुना राज्ञा व्यावर्ज्जनेन स्वमुद्रावाप्तिः, श्रेष्ठिना वा स्वनगरान्निर्वासितानां महाजनसमावर्जनेन पुनः स्वपुरप्रवेशेन श्रेष्ठिपदप्रतिष्ठेति । तथा-संस्तारकः प्रमोदाय ।'भूइगहणं जह नग्गयाणं' ति पाठः । भूतिग्रहणं-भस्मादानं प्रथमतो दीक्षाग्रहणकाले नग्नस्य भावो नाग्न्यं तेषां नाग्न्यानां-सरजस्कानां प्रथमभस्मावगुण्ठनं तेषा यथैवेति यथा तथा संस्तारकः । 'अवमाणयं च वज्झाणं' ति-'अचः अची' ति अवशब्दाकारलोपात् 'अवज्झाणं' ति जातम् ,'अवज्झाण' ति-ज्ञातव्यम्-अवमानकं च पूजनकं च न वद्यं पापं येषा ते अवद्या निर्दोषास्तेषां निर्दूषणानां केनापि प्रत्यनीकेनापि तद्व्यलीकानां यथाऽयं पारदारिक इति, चौर इति, अभिमर इति, अपाङ्क्त्य इति,सीतासुभद्रानामिव आरोपितकलङ्कानां ततोऽपि स्वयमेव ज्वलनप्रवेशादिना प्रतीतिदानेनोत्तारितकलङ्कानाम् । अवमानकं च तोषाय 'ववज्झाणं च' पाठे पूर्ववदकारलोपे 'अवज्झाणं ति भवति,तत्र अवध्याना वधानर्हाणामपि छिद्रपिवचनतो वध्यत्वेन स्थापितानां सुदर्शनसुजातादीनामिव देवताप्रातिहार्यतो निराकृतवध्यत्वदोषाणाम् अवमानक च दधिवाहनादिनरेन्द्रैर्यथा प्रीतये तथाऽयं संस्तारक इति 'मल्लाणं च पडागा' त्ति-यथा मल्लानां मर्द्दनकमल्लादीनामिव 'उज्जेणि अट्टणे खलु, सीहगिरिसो पारयंमि । पुहवई मच्छिमल्लो, दूरिल्लकाविया फलिहमल्ले य' इत्येतस्मिन्प्रबन्धे अट्टनक उज्जयिनीतो गत्वा प्रतिवर्षं मात्सिकमल्लपताकामवहतवान् अपहरतश्च यथा तस्य तोषस्तथा संस्तारक इति गाथार्थः ।

वेरुलिय व्व मणीणं, गोसीसगचंदणं व गंधाणं ।
जह व रयणेसु वयरं, तह संथारो सुविहियाणं ॥ ४ ॥

यथा मणीनां सूर्यादिमणीनां मध्ये विषापहाररोगोपशमादिना सातिशयगुणेन वैडूर्यमणिः सर्वोत्तमस्तथाऽयमपि । 'गोसीसगचंदणं व गधाण' ति-यथा गोशीर्षकचन्दन निर्विकारत्वेन निर्मलस्थिरगन्धत्वेन गन्धेषु मध्ये प्रशस्यते तथाऽयमपि यद्यपि कस्तूरिकाया अपि सातिशयगन्धोऽस्ति तथापि सर्वे निकृष्टवर्णा समला च,तथा यद्यपि घनसारः सारतरवर्णस्तथाप्यस्थायिगन्धो दुर्वर्णासारसंसर्गभाक् च,अतो न तयोर्गन्धः प्रशस्यते 'जह व रयणेसु वयरं ति'-यथा रत्नेषु इन्द्रनीलकर्केतनादिषु मध्ये महामूल्यत्वेन प्रशस्यते वज्ररत्नं च । यदाह-

" जं जहमुल्लं रयणं, तं जाणइ रयणवाणिओ निउणो ।
थोवं तु महल्लस्स, विकासविअप्पस्स वि बहुं च ॥ १ ॥
अहवा कायमणिस्स य, सुमहल्लस्सावि कागिणी मुल्लं ।
वयरस्स उ अप्पस्स वि, मुल्लं होही सयसहस्सं ॥ २ ॥
वेरुलिय व्व मणीणं, गोसीसं चंदणं व गंधाणं ।
जह व रयणेसु वयरं, तह संथारो सुविहियाणं ॥ ४ ॥"

यथा मणीना-सूर्यादिमणीनां मध्ये विषापहाररोगोपशमादिना सातिशय तथाऽयमपीति गाथार्थः ।

पुरिसवरपुंडरीओ, अरहा इव सव्वपुरिससीहाणं ।
महिलाण भगवईओ,जिणजणणीओ जयम्मि जहा॥५॥

'पुरिसवर' त्ति-पुरुषाणां मध्ये वरः पुरुषवरः पुरुषवराणां मध्ये पुण्डरीकमिव-कमलमिव यथा पुण्डरीकं पङ्के जा-

तं जले च वृद्धिमुपगतं न पङ्केन लिप्यते नापि जलेन, किं तु जलोपरिवर्त्यैव भवति एवमर्हो ऽपि तीर्थकर कामैर्जातो भोगैर्वृद्धिमुपगतो न कामैर्लिप्तो नापि भोगैः, किं तु त्रिभुवनोपर्येव जातः । पुण्डरीकमातपत्र पुरुषवराणा पुण्डरीकमिव-आतपत्रमिव तद्धि आतपं निवारयति, अर्होऽपि कर्म्मातपनिवारणसमर्थत्वात्तेनोपमीयते । यदि वा-पुण्डरीकश्वित्रकः पुरुषवराणां मध्ये पुण्डरीक इव । यथा स केनापि पशुजातीयेन न पराभूयते एवमर्होऽपि त्रिपष्ठ्यधिकैस्त्रिभिः पाषण्डिकशतेन न कदापि पराभूयत इति । यथाऽर्हं सर्वोत्तमस्तथा संस्तारकोऽपीति ' महिलाए भगवईओ ' त्ति यथा महिलाना मध्ये भगवत्य पूज्या जिनजनन्यो जिनमातरस्त्रिभुवनस्यापि चतुःषष्टेरपीन्द्राणां पूज्यत्वात् सत्यत्वाश्च सर्व्वोत्तमा जगति-त्रिभुवने तथाऽयमिति ।

वंसाणं जिणवंसो, सव्वकुलाणं च सावयकुलाइं ।
सिद्धिगईव्व गईणं , मुत्तिसुहं सव्वसोक्खाणं ॥ ६ ॥

वंशानाम्-अन्वयाना मध्ये यथा जिनवंशः प्रधानं तथा सर्वकुलानामुग्रादिकुलानां मध्ये श्रावककुल प्रधानं धर्मस्य मूलबीजत्वात् , तथा सर्वगतीना नारकतिर्यग्नरामरलक्षणानां मन्ये सर्वश्रेष्ठा सिद्धिगतिः पुनरागमनाभावात् तथा-मुक्तिसुखं—सिद्धिसुखं सर्वसुखानां संसारिकाणां मध्ये साद्यपर्यवसित्वादुत्तमम् । यदाह ( औ० )—

" न वि अत्थि माणुसाण, तं सुक्खं णो य सव्वदेवाणं ।
जं सिद्धाणं सोक्खं , अव्वावाहं उवगयाणं ॥ १३ ॥
तत्थ य जरजम्ममणे सा, रोगसोगतन्हाछुहाइयविमुक्को ।
साइअपज्जवसाणं, कालमणंतं सुहं लहई ॥ १ ॥ "

यथा तत् प्रधान तथाऽयमपि ।

धम्माणं व अहिंसा, जणवयवयणाण साहुवयणाणि ।
जिणवयणं वसुईणं , सुद्धीणं दंसणं व जहा ॥ ७ ॥

यथा धर्म्माणा दानादीना मध्ये अहिंसा रक्षा त्रसस्थावरजीवानामुत्तमा यतस्ता विनान्योऽप्रमाणमेव । उक्तं च—

" न तद्दानं न तद् ध्यानं, न तज्ज्ञानं न तत्तपः ।
न सा दीक्षा न सा भिक्षा, दया यत्र न विद्यते ॥ १ ॥ "

तथा हारिभद्राष्टके—

" अहिंसैका मता मुख्या, स्वर्गमोक्षप्रसाधनी ।
अस्याः संरक्षणार्थं च, न्याय्यं सत्यादिपालनम् ॥ ५ ॥ "
( अस्य व्याख्या अहिंसा शब्दे )

किंच—

" एकं चिय इत्थ वय, निद्दिट्ठं जिणवरेहिँ सव्वेहिं ।
पाणइवायविरमण-मवसेसा तस्स रक्खट्ठा ॥ ३ ॥
किं ताए पढिआए, पयकोडीए पलालभूयाए ।
जत्थित्तिय न नाय, परस्स पीडा न कायव्वा ॥४॥" इति ।

यथा सर्वधर्म्माणामहिंसा तथाऽयमिति ' जणवयवयणाण साहुवयणाणि' त्ति जनपदवचनाना मध्ये यथा साधुवचनानि असत्यसत्यामृषावचनपरित्यागेन सत्यासत्यामृषारूपाणि निर्दोषाणि । यत आह ( विशेषावश्यके )—

" सब्भाहिय सयामिह, संतो मुणओ गुणा पयत्था वा ।
तव्विवरीता मोसा, मीसा जा तदुभयसहावा ॥ ३७५ ॥
अणहिगया जा तिसु वि ति,सद्दो च्चिय केवली असच्चमुसा ।
एया सभेयलक्खणा, सोदाहरणा मुणेयव्वा ॥ ३७६ ॥

तत्र सत्या दशप्रकारा दर्श्यते—

" जणव य १ सम्मय २ ठवणा ३ ,
नामे ४ रूवे ५ पडुच्च सच्चे य ६ ।
ववहार ७ भाव ८ जोगे ९,
व समे ओवम्म १० सच्चे य ॥ १ ॥ "
( प्रज्ञा० ११ पद १६५ सूत्र )

तत्र जनपदसत्यं यथा उदकार्थे कोङ्कणादिदेशरूढ्या पय इति वचनम् १, सम्मतसत्यं यथा-समानेऽपि पङ्कसम्भवे गोपालादीनामपि संमतत्वेनारविन्दमेव पङ्कजमुच्यते न कुवलयादीनि २, स्थापनासत्यं-जिनप्रतिमादिषु जिनादिव्यपदेश ३, नामसत्यं यथाकुलमवर्द्धयन्नपि कुलवर्द्धन इत्युच्यते ४, रूपसत्यं यथा भावतोऽश्रमणोऽपि तद्रूपधारी श्रमण इत्युच्यते५, प्रतीतसत्यं यथा अनामिका कनिष्ठा प्रतीत्य दीर्घेत्युच्यते,सैव मध्यमां प्रतीत्य ह्रस्वेति ६,व्यवहारसत्यं यथा गिरिगततृणादिषु दह्यमानेषु व्यवहारगद्गिरिर्दह्यत इति ७, भावसत्यं यथा सत्यपि पञ्चवर्णत्वे शुक्लत्वलक्षणभावोत्कटत्वात् शुक्ला बलाकेति ८ योगसत्यं यथा दण्डयोगाद्दण्डी इत्यादि ९ उपमासत्य यथा समुद्रवत्तडाग इत्यादि १०, असत्यभाषाभेदा १० ' कोहे १ माणे २ माया ३, लोभे ४ पिज्जे ५ तहेव दोसे य६ । हास ७ भए ८ अक्खाइय ९, उवघाइय ९ निस्सिए १० दसमा ॥१॥' ( प्रज्ञा० ११ पद १६५ सूत्र ) क्रोधनिश्रिता-क्रोधाभिभूतोऽदासमपि दासं भणति १, माननिश्रिता-अल्पधनोऽपि पृष्ट सन्नात्मोत्कर्षेणाननुभूतमपि विभवादि अनुभूतमिति प्रकाशयति २ मायानिश्रिता परस्य वञ्चनार्थं नात्रकाणि योजयति कूटक्रयं कथयति, स्वकीयं क्रयाणकं प्रशंसयति, परकीय निन्दति, इन्द्रजालिकवेशकरो दृष्टिं संवध्नाति ३ लोभनिश्रिता लुब्धनन्दस्येव सुवर्णमपि लोह भणत अप्राना दायकाना रत्नमपि पाषाणं कर्प्पूरमपि लवण पट्टसूत्रमपि सण इति भणति ४ प्रेमनिश्रिता-'अइपेमेण दोसेणं हतव्वे' त्ति ५ दोषनिश्रित'-तीर्थकरादीनामपि निन्दा करोति ६ हास्यनिश्रित हास्येन सार्थवाहमकालगतमपि सार्थवाहिन्या अग्रत कालगत इति भणति ७ भयनिश्रिता स्वामिनमस्कारादि भयेन कर्मकरोऽहमिति प्राघूर्णकोऽहमिति वा वदति, राजपुरुषगृहीतचोरो वा वदति नाह चोरो यथा रौहिणेय ८ आख्यायिका-कल्पितकथा धूर्त्ताख्यायिका कमण्डलुमध्ये षण्मासानग्रतो दिगम्बर पश्चाद्धस्ती इत्यादि ९ उपघातनिश्रिता अचौरमपि चौरं भणति एते छत्रिणो गच्छन्ति महाराजकत्वादिति ब्राह्मणो न हन्तव्य , गौरवध्या,शेषजीवानर्थापत्त्या घातयति,सर्वजीवा न हन्तव्या इति वक्तव्यम् , १० सत्यासत्यभाषाभेदा १० "उप्पन्न१ विगय २ मीसित, ३जीव ४ मजीवे य जीअजीवे य ६ । तह मीसगा अणंता७,परित्त ८ अद्धा य ९ अद्धद्धा १०'॥१॥(प्रज्ञा० ११ पद १६५ सूत्र)उत्पन्न मिश्रा यथा व्यवहारे कस्यचित्समुत्पन्नं द्वितीयो वदति-अनेन पञ्चशतानि विटिपितानि, एव दश दारका जाता इत्यादि १ विगतमिश्र मार्गे स्तोकेऽपि व्यतीते बहुतरं गतमिति २ उत्पन्नविगतमिश्रा-अमुकपुरे यथा दश दारका जाता दश चतुर्दश विगता इत्यभिदधतस्तन्न्यूनाधिकभावे ३ 'जीवमीसए' त्ति-अजीवजीवमिश्र यथा तस्मिन्नेव कृमिराशौ च जी-

वराशिरिति ५ 'जीवाजीवमीसए' त्ति-जीवाजीवविषयं मिश्रं यथा तस्मिन्नेव जीवन्मृतकृमिराशौ प्रमाणजीवा मृता इत्यभिदधतस्तन्न्यूनाधिका च ६। अनन्तमिश्रा यथा-वनस्पतिपत्राणि अनन्तानि न तु जन्त्वादि यत. सर्वोऽपि वणोऽनन्त इति वदतः७प्रत्येकामिश्रा सर्वोऽपि वणः प्रत्येकमिश्र इति ८। अद्धामिश्रा अद्धा काल. घटिकाद्वये तिष्ठति रात्रि. पतिता अनुदितेऽपि आदित्ये वदति उत्तिष्ठति वहिर्घटिकाद्वयं चढितम् ६ अद्धाद्धामिश्रा प्रहरद्वयेऽपि अचढिते वदति प्रहरद्वयं चढितमिति १०, असत्यामृपाभाषाभेदा. १२-' आमंतणि १ आणयणी २, जायणि ३ तह पुच्छणी य ४ पन्नवणी ५। पच्चक्खाणी भासा६,भासा इच्छाणुलोमा,य ७॥१॥ अणभिग्गहियो भासा८भासा य अभिग्गहम्मि बोधव्वा ६। संसयकरणी भासा १०, वागड११अव्वागडा१२चेव॥२॥ (प्रज्ञा०११पद१६५ सूत्र) आमंतणी-देवदत्त१, आज्ञापनी काजपरस्स पवत्तणी,जहा अमुगं करेहि २,जायणी-कस्स य वत्थुविसेसस्स देहि त्ति पराणि३, पुच्छणी-अविज्ञातस्य संविग्नस्य वा अर्थस्य यथा कीदृशो जीवो मोक्षो वा कथं वा धर्म्मो भवति ४ पन्नवणी शिष्यस्य उपदेश. 'पाणि वहा न नियत्ता,भवन्ति दीहा जया अरोगा य। एमाइयपन्नवणी, पन्नत्ता वीयरागेहिं ५॥१॥' प्रत्याख्यानी याचमानस्य अदित्सा मेऽतो मां मोयचस्वेत्यादि प्रत्याख्यानरूपा६ भाषा इच्छानुलोमा च प्रतिपादयितुर्या इच्छा तदनुलोमा तदनुकूला,यथा कार्ये प्रेरितस्य एवमस्तु ममाप्यभिप्रेतमेतदिति वचः ७ अनभिगृहीता अर्थानभिग्रहेण या उच्यते डित्थादिवत् ८ भाषा चाभिग्रहेण बोद्धव्या। अर्थमभिगृह्य योच्यते घटादिवत् ६संशया अनेकार्थप्रतिपत्तिकरी सा संशयकरणी, यथा-सैन्धवशब्दः पुरुषलवणवाजिषु वर्त्तमान इति१० व्याकृता लोकप्रतीतशब्दार्था११अव्याकृता गम्भीरशब्दार्था मन्मनाक्षरप्रयुक्ता वा अविभावितार्था ॥१२॥ इति द्वाचत्वारिंशद्भाषाभेदविधिज्ञानां साधूनां साधुत्वव्यवस्थितानां वचनानि जनपदवचनानां सामान्यजनवचनानां मध्ये शोभन्ते-यत.। 'अविसंवादनयोग., कायमनोवागजिह्मता चैव । सत्यं चतुर्विधं त-ज्जिनवरवचनेऽस्तिनान्यत्र ॥१॥' इति । यथा-संस्तारक. 'जिनवयणं व सुईणं'ति श्रूयन्त इति श्रुतय' श्रुतीनां मध्ये यथा जिनवचन तीर्थंकरवचनमविसंवादितया सर्व्वसत्त्वहिततया च प्रधानम् । तथाहि—

"अविसवादनयोगः, कायमनोवागजिह्मता चैव ।
सत्यं चतुर्विधं त-ज्जिनवरवचनेऽस्ति नान्यत्र ॥ १ ॥

सुलहा सुरलोयसिरी, रयणायरमेहला मही सुलहा ।
निव्वुइसु जह णियरुई, जिणरयणसुई जहा दुलहा ॥ २ ॥

रिभियपयक्खरसरला, मिच्छियरतिरिच्छसगरपरिणामा ।
मणनिव्वाणीविणिजो-यण नीहारिणी जं च ॥ ३ ॥

नारयतिरियनरामर-संसारियसव्वदुक्खरोगाणं ।
जिणवयणमेगमोसह-मलक्खणपवग्गसुहियकयफलयं ॥४॥"

तथाऽयमपीति'सुद्धीणं दंसणं वज्जह'त्ति शोधनं शुद्धि' तत्र द्रव्यशुद्धि भावशुद्धिश्च। द्रव्यशुद्धिर्जलाग्न्यादिका। उक्तं च'अयरजोहमहीणं,कमसो जह मलकलंकपंकीणं। सब्भावणयणसेसो,होहिंति जलानलाइया॥१॥' भावशुद्धिस्तु सत्यमस्य कुचारित्राणि इति जलाग्न्यादिशुद्धी मध्ये यथा दर्शनं यथा ज्ञातसम्यक्त्वं पुनर्मिथ्यात्वागमनात् तन्महती शुद्धिस्तथाऽयमपीति भाव. ।

कल्लाणं अब्भुदओ, देवाणं दुल्लहं तिहुयणम्मि ।
बत्तीसं देविंदा, जं तं झायंति एगमणा ॥ ८ ॥

कल्याणमारोग्यमणति-गच्छतीति कल्याणं निरुक्तं यथा प्रमोदाय तथाऽयमपीति । यद्वि कल्याणहेतुत्वात्कल्याणवत् इह शान्तिकर्मादिसंस्तारकप्रतिपत्तौ तु कर्म्मोपशमः। अभ्युदयो यथेयं राज्याभिषेकादिप्रीतये यथा भवति तथा स्वर्गापवर्गप्राप्तिहेतुत्वादस्य संस्तारकस्येति एषोऽप्यभ्युदयः। 'बत्तीसं ' ति-द्वात्रिंशतोऽपि देवेन्द्राः तत्र दशकल्पजा. विंशति । भावनाधिपा. चन्द्रादित्यौ च जम्बूद्वीपजौ एते द्वात्रिंशत् । शेषज्योतिष्केन्द्रव्यन्तरेन्द्राश्च तत्परिवारकल्पत्वाद[illegible]र्द्धिकत्वाच्च न गणिताः'जं तं ति'यं तं संस्तारकं ध्यायन्ति स्मरन्ति 'एगमणत्ति' एकाग्रमनसः सन्त इत्यर्थ. ।

लद्धं तु तए एयं, पंडियमरणं तु जिणवरक्खायं ।
हंतूण कम्ममल्लं, सिद्धिपडागा तुमे लद्धा ॥ ६ ॥

लब्ध प्राप्तं तुरवधारणे 'तए'त्ति-त्वया हि क्षपक ! 'एयं'ति पण्डितमरणं संस्तारकप्रतिरूपं विशेष्यत्वेनाध्याहरणीय पण्डितमरणमुत्तमार्थप्रतिपत्तिरूपं त्वया प्राप्तमेवेत्यर्थ. । कथंभूतं तदिति , जिनवराख्यातं—तीर्थंकरभणितम् । किं कृत्वेत्याह—' हंतूण ' हत्वा—विनाश्य 'कम्ममल्लं ' ति कर्म्माण्येव मल्ल.—सुभटः कर्म्ममल्लोऽष्टाचत्वारिंशदुत्तरप्रकृतिरूपस्तं 'सिद्धिपडाग ' त्ति सिद्धिः सुखहेतुत्वादाराधनाया. पताकेव पताका सिद्धिरेव पताका मोक्षपताका सा त्वया प्राप्तेत्यर्थः ।

झाणाण परमसुक्कं, नाणाणं केवलं जहा नाणं ।
परनिव्वाणं च तहा,कमेण भणियं जिणवरेहिं ॥१०॥

'झाणाणं' ति ध्यायन्ते स्वस्वहेतुभिः स्मर्यन्त इति ध्यानानि रौद्रार्त्तधर्म्मशुक्लरूपाणि । तत्राद्याना त्रयाणामिहानुपयोगित्वात् चतुर्थमेव स्वरूपत आर्षवचनैर्दर्श्यते । तथाहि'सुक्के चउव्विहे चउप्पडोयारे पन्नत्ते,त जहा-पुहुत्तवियक्के सवियारी१।एगत्तवियक्के अवियारी२।सुहुमकिरिए अनियट्टी३, समुच्छिन्नकिरिए अप्पडिवाई ४ । 'सुयनाणे उवउत्तो, अत्थम्मि य वंजणम्मि सवियारं । झायइ चउदसपुव्वी,पढम सुक्के सरागो उ ।१। सुयनाणे उवउत्तो,अत्थम्मि य वंजणम्मि अवियारं।अनियट्टिजवसपुव्वा,वीयं सुक्कं विगयरागो।२।,अथ संकमणं चेव तहा-वंजणसंकमं, जोगसंकमणं चेव । पढमे झाणे नियरुद्धइ३वीए भाणे न विज्जए ४ जोगे जोगेसु यथा पढमं वीयं जोगम्मि कमिवी, तइयं च कायइजोगे , चतुत्थे च अजोगिणो । पढमं वीयं च झाणाइं झायंति पुव्वजाणगा उवसंतेहिं कसाएहिं खीणे च महासुणी ६ वीयस्स तइयस्स वि अंतराए य केवलनाणमुप्पज्जइ दुन्नी पुव्वझाणा पुव्वे केवलनाणिणा खीणमोहा झियायन्ति केवली दुन्नी उत्तरा ७ सिज्झिउकामो जीवो कायं जोगं निरुभइ ताहे तस्स सुहुमउस्सासनिस्सासा ८ तत्थ य दुसमयट्ठिइयं कम्मं परमसायं इरियावहियं वज्झसुहुमकिरिय ।अनियट्टी झाणं भवइ,जो-

गनिरोहे य पुव्वपत्रोगेण चतुत्थ समुच्छिन्नकिरियमप्पडिवा-यभाणं ।' पढमबीया उ सक्काए , तइयं परमसुक्कए ।
चउत्थं उवरिल्लेहिं, होइ झाणं वियाहिय ॥१॥, अणुत्तरेहिं देवेहिं , पढमबीएहि गच्छइ । उवरिल्लेहिं झाणेहिं ,
सिज्झई नीरत्रो धुवं ॥२॥' अणुप्पेहा चउव्विहा-अवायाणुप्पेहा असुभाणुप्पेहा अणंतवत्तियाणुप्पेहा विपरिणामाणुप्पेहा । जहत्थ आस तइअ वा य पिक्खइ संसारस्स असुभत्त अणन्तत्तं सव्वभावविपरिणामिय । रक्खणाणि चत्तारि त जहा—विवेगो वि उस्सग्गे अव्वहे असंमोहे सव्वसंजोगविवेग पिक्खइ । विउस्सग्गे सव्वोवहिमाइविउस्सग्गं करेइ । अव्वहे विन्नाणसंपन्नो न वीहइ न चलइ असमोहे सुहोवमे अत्थेन संखुज्झइ त्ति । आलंवणाणि चत्तारि त जहा-खंती-मुत्ती-अज्जव मद्दव" ति इत्येव चतु'प्रकारे शुक्ले यथा प्रथमं द्वितीयभेदातीत तृतीय परमशौक्लिक—परमशुक्लध्यानप्रधान, तथा ज्ञानानां-मतिश्रुतावधिमन पर्यायकेवलज्ञानाना-मध्ये यथा केवलज्ञान प्रधान तथा सुखानामि त्यध्याहारो दृश्यः,यथा सुखाना मध्ये परिनिर्वाणं सर्वकर्मक्षयरूपं मोक्ष प्रधानम् इति तावदेषा स्वस्थाने प्राधान्यमस्त्येव पर तथापि "क्रमेण भणियं जिणवरेहि" इति भणनेन ग्रन्थकार एषामुत्तरोत्तरप्राधान्यमप्याह-यतस्तावत्परमशुक्ल तृतीयभेदरूपं प्रधान तत्सद्भावे च केवलज्ञानं भवतीति, तत केवलज्ञानं प्रधानम् । केवलिनोऽपि पञ्चाशीतिकर्मप्रकृतिसत्ताकत्वात् ततोऽपि परं निर्वाणं पञ्चाशीतिकर्मप्रकृतिक्षयात् मोक्ष प्रधानतर क्रमेण परिपाट्या यथा जिनवरैर्भणितं तथा ऽय सस्तारक इति गाथाभावार्थ ।

सव्वुत्तमलाभाणं, सामन्नं चेव लाभं मन्नंति ।
परमुत्तमतित्थयरो, परमगई परमसिद्धि त्ति ॥ ११ ॥

सर्वेषामुत्तमा सर्वोत्तमा , ते च ते लाभाश्च सर्वोत्तमलाभाः सम्यक्त्वदेशविरतिलाभरूपा, तत्प्राप्तौ संसारपरिकरणात् तेषामपि लाभाना मध्ये श्रामण्यमेव चारित्रमेव लाभं मन्यन्ते विद्वांसः, तत्प्राप्तावेव मोक्षगमनात् । उक्तं च-"जम्मा दंसण नाणा, सपुन्नफल न दिंति पत्तेयं । चारित्तजया दिंति,तिसमए तेण चारित्तं ॥१॥" इति आस्ता सस्तारकलाभोत्तम सर्वोत्तमलाभाना श्रामण्यमेव तावल्लाभ मन्यत, यथा सर्वोत्तम पुरुषेषु मध्ये तीर्थकर, यथा च परमगति -सर्वोत्तमगति ।
'परमसिद्धि' त्ति-सिद्धयस्तावद्-अणिमा, गरिमा लघिमा, तनिमा, वशिमाद्या अपि भवन्ति, अत आह-परमा चासौ सिद्धिश्च परमसिद्धि , गतौ विषये उत्तमा सर्वकर्मक्षयरूपा यथा निर्व्वाणप्राप्तिस्तथाऽयमिति ।

मूलं तह संजमो वा, परलोगरयाण कट्ठकम्माणं ।
सव्वुत्तमलाभाणं, सामन्नं चेव मन्नंति ॥ १२ ॥

परलोको-भवान्तरं तस्य हिते रताना भवान्तरमस्तीति श्रद्धावताम्, अथवा-आत्मव्यतिरिक्त परलोक'सर्वलोकसर्वजन्तुसमूहस्तस्य हिते रताना साधूना,कष्ट मिथ्यात्वादि कर्मणां विलसिताशेषपापानां जीवाना मोक्षतरोर्मूलं सम्यक्त्वं,यदाह-
" परिगिदिएसु अत्थि य, कालमणंत परुत्तमन्तु व्व ।
कहमवि कयाइ केई, जीवा पाविंति तसभाव ॥ १ ॥
तत्थ नरत्त तत्थ वि, सुह त्ति त तत्थ वि य सुहक्खित्तं ।
जाइ कुलरूव तत्था-रोगं चिरजीवितं च अइदुलह ॥ २ ॥
तत्थ वि बहुसुहकम्मो-दएण धम्मे वि हुज्ज जइ बुद्धी ।
तो वि जियाण न सुलहो, जिणवयणसवणसंगो मगुन्न ॥ ३ ॥
तो गुहिरमहोदहिमज्झे, पडियरयण व सकलगामगिंग ।
दुलह पि लहिय तह वि य, मूलं धम्मस्स सम्मत्तं ॥ ४ ॥"
इति मूलसम्यक्त्वं दुष्प्राप्यम्, 'तह' ति तथा संयमश्चारित्रं दुर्लभं वाशब्दाज्ज्ञान च एषोऽपि तावन्महान लाभ पर तथापि सर्वोत्तमलाभानामेषा श्रामण्यमेव विशिष्टलाभं मन्यन्ते विवेकिन । यत आह—" सम्मत्त आचरित—स्स हुज्ज भयणाए नियमसो नऽत्थी । जो पुण चरित्तजुत्तो, तस्स हु नियमेण सम्मत्त ॥१॥" तथैव-श्रामण्यदेशविरतिरूप एव संस्तारकप्राप्तिरिति गाथाभावार्थ ।

लेसाण सुक्कलेसा, नियमाणं बंभचेरवासो य ।
गुत्तीसमी गुणाणं, मूलं तह संजमो य तवो ॥ १३ ॥

'लेसाणं' ति-लेश्याना कृष्णनीलकापोततेजःपद्मशुक्लाना मध्ये यथा शुक्ललेश्या उत्तमा 'नियमाणं ति-नियमाना-विरमणाना मध्ये यथा ब्रह्मचर्यवास उत्तमजनशक्य-"ब्रह्मचर्यव्रत घोर, शूरैश्च न तु कातरै । करिपर्याणमुद्धाहं, करिभिर्न तु रासभै ॥१॥" किं च-"देवदाणवगधव्वा, जक्खरक्खसकिंनरा । बंभयारिं नमंसन्ति, दुक्कर जं करेंति य॥२॥"गुत्तीसमी गुणाणं ' ति-तथा यथा गुप्तिसमित्यौ गुणाना सप्तविंशतियतिगुणाना मध्ये उत्तमे प्रधाने तथा सयमोपायलक्षण यन्मूल मोक्षकारणं तत्तप , सतोऽपि ज्ञानादेस्तद्भावे मुक्तेरभावादिति । निखिभिर्गाथाभि श्रामण्यस्यापि प्राधान्यमुक्त किमुत्तरसंस्तारकस्येति ।

सव्वुत्तमतित्थाणं, तित्थयरपयासियं जह य तित्थं ।
अभिसेउ व्व सुराणं, तह संथारो सुविहियाणं ॥१४॥

'सव्वुत्तमं' ति यथा लौकिकानां प्रभासप्रयागादीना तीर्थाना तथा लोकोत्तराणामप्यष्टापदादितीर्थाना मध्ये तीर्थकरप्रकाशित प्रकटितं तीर्थं यथा ज्ञानादिचतुर्विधसङ्घो वा प्रथमगणधरो वा तथाऽयमपीति । ' अभिसेउ व्व सुराणं ' ति-अभिषेको वा अभिनवोत्पन्नदेवाना यथा राज्याभिषेकरूप', तथाऽयमपीति ।

सियकलसकमलसुत्थि-नंदावत्तवरमल्लदामाणं ।
तेसिं पि मंगलाणं, संथारो मंगलं अहियं ॥ १५ ॥

शित शुभ्र कलशो विवाहादावुत्सवे यो मङ्गल्यत तस्यैव माङ्गलिकत्वात् ग्रहणं शितकलशश्च कमल च स्वस्तिकश्च—नन्द्यावर्त्तश्च वरमाल्यदाम च शितकलशकमलस्वस्तिकनन्द्यावर्तवरमाल्यदामानि तेषामेतानि च लोके माङ्गल्यतया रूढाणि तथापि तेषामपि मङ्गलाना मध्ये सस्तारकोऽधिक मङ्गलमिति भाव ।

तवअग्गिनियमसूरा, जिणवरनाणा विसुद्धपत्थयणा ।
जं निव्वहंति पुरिसा, संथारगयंदमारूढा ॥ १६ ॥

'तवअग्गि' त्ति-अष्टप्रकार कर्म तापयतीति तप , तप एवाग्निस्तपोऽग्नि , नियमाश्च व्रतान्यभिग्रहविशेषाश्च 'सूर' त्ति शूरा -सुभटा तथा चार्षम् ' चत्तारि सूरा पन्नत्ता, त जहा-खंतिसूरे तवसूरे दाणसूरे जुद्धसूरे । खंति सूरे अरिहंता, तवसूरा अणगारा, दाणसूरे वेसमणे जुद्धसूरे वासुदेवे' तत्र तपोऽग्नौ कर्मसमुदाहकत्वेन नियमेषु च सत्सु अभिग्रह—

विशेषेषु वा नवकर्म्मानादानभूतेषु शूरा अकातराश्चारित्रिण इत्यर्थ, 'जिणवरनाण' त्ति-जिनवराणां ज्ञानं सामान्यत सदुपदेशरूपं विशेषत' अज्ञानज्ञादिरूपं वा येषां मोहराजवि जयनीतिप्रदर्शकत्वाद्येषां ते तथा 'विसुद्धपत्थयण' त्ति विशुद्धं पथ्यदनं शंबलं भवान्तरानुयायित्वात् सम्यक्त्वं येषान्ते विशुद्धपथ्यदना', के एवंविधा इत्याह 'जे निव्वहंति पुरिस' त्ति ये पुरुषा निर्वहन्ति मोहराजविजयं कर्तु संस्तारक-गजेन्द्रमारूढा' सन्त, योधा अपि नानाविधप्रहरणयुद्धकौश-ल्याभिज्ञनादत्तताव्यवसायशरीरारोग्यतादिगुणयुक्ताः शात्र-वसंघाततापकाग्नितैलतनुत्राणनियमा शत्रुनिधमने वन्धने वा शूरा'-सुभटा रणदीक्षावद्धकक्षा 'जिणवरनाण' त्ति-जिनव-राणा जयस्वामिनां वराज्ञाकारिणः जिनवरज्ञाना वा 'विसु-द्धपत्थयण' त्ति विशुद्धपथ्यदना गृहीतकुलरिकादिशंवला' ये एवंविधा योधा भवन्ति ते गजेन्द्रस्कन्धमारूढा' सन्तः, प्रवलजय निर्वहन्ति रिपुसंघातं जयन्तीति गाथार्थ ।

परमत्थे परमतुलं, परमाययणं ति परमकप्पो त्ति ।
परमुत्तमतित्थयरो, परमगई परमसिद्धि त्ति ॥ १७ ॥

परमार्थे-मोक्षे परं-प्रकृष्टमतुलं-तुलनातिक्रान्तं संसारिकल-क्षणं कारणं 'परमाययणं' ति परममायतनं स्थानं ज्ञानादी-नामेतदित्यर्थः । 'परमकप्पो' त्ति स्थविरादीनामेष प्रधानक-ल्प -पर्यन्तकृत्यविधिः संस्तारक इत्यर्थ. । 'परमुत्तमतित्थ-यरो परमगई परमसिद्धि' त्ति पूर्ववत् ।

ता एयं तुमि लद्धं, जिणवयणामयविभूसियं देहं ।
धम्मरयणस्सिय त्ति य,पडिया भुवणम्मि वसुहारा॥१०॥

'ता इति' तावत् एयं' ति-एतत् 'तुमि' त्ति त्वया संस्तार-कारूढेन 'लद्धं' ति प्राप्तं 'जिणवयणामयविभूसियं देहं' ति हे क्षपक! एतदस्मिन्नवसरे जिनवचनामृतेन जिनोपदेशं साधय। सर्वकुश्रुतिमूर्च्छाविघातकेन विभूषित देहं शरीरं प्राप्तम, त-र्त्कि जातमित्याह-'धम्मरयणस्सिय' त्ति धर्मरत्नैराश्रिता यु-क्ता पाठान्तरेण 'धम्मरयणम्मिय' त्ति धर्मैर्निर्मिता निष्पा-दिता 'धम्मरयणामय' त्ति वा धर्म्मरत्नमया वा,ते इति ते त-व भवने-देहगृहे वसुधारेव पतिता सर्वकार्यसिद्धिहेतुत्वात्। अत्रायं भावार्थ -यथा कस्यापि पुण्यवतो गृहाङ्गणे वसुधा-रापात, सर्वतोऽपि निपुणगीतार्थनिर्यामकमुखात् जिनवच-नामृतश्रवणस्यास्यामवस्थाया भवतीति-जानीहीति भाव ।

पत्ता उत्तमपुरिमा !, कल्लाणपरंपरा परमदिव्वा ।
पावयणसाधुधीरा !, कयं च ते अज्ज सप्पुरिसा ! ॥१६॥

'पत्त' त्ति प्राप्ता—संपादिता हे उत्तमपुरुष ! का प्राप्तेति 'कल्लाण' त्ति कल्याणपरंपरा-माङ्गल्यपदार्थसन्तति. संस्तार-फलाभात् 'पावयणसाहु' त्ति प्रवचनं वदन्ति जानन्ति प्राव-चना प्रावचनाश्च ते माधवश्च प्रावचनसाधव. प्रावचनमा-धूना मध्ये धीर इव धीर तस्य संबोधनं हेप्रावचनसाधुधीर! 'कय चे' नि कृतं च निष्पादितं किं यत्किमपि समीहितं स-र्वथेष्टकार्यमित्यध्याहार ते त्वया अद्यास्मिन्नहनि उत्तमा-र्थप्रतिपन्यङ्गीकारात् हे सत्पुरुष ! इति गाथार्थ ।

समत्तनाण दंसण-वररयणा नाणतेयसंजुत्ता ।
चारित्तसुद्धसीला, तिरयणमाला तुमे लद्धा ॥ २० ॥

'समत्तनाण त्ति' समाप्तं-गतमज्ञानं-मिथ्यात्वोपगमाद्यस्य स समाप्ताऽज्ञानस्तस्य संबोधनं हेसमाप्ताज्ञान ! दीर्घत्वं सर्वत्र प्राकृतत्वाद् 'दंसणवररयण' त्ति हे दर्शनवर-रत्न! प्रवरसम्यक्त्वरत्न!.अथवा-सम्यक्त्वस्य वररचन अनेन कृत्वा दर्शनस्य-सम्यक्त्वस्य वरा-प्रधाना रचना-विच्छित्त-र्यो येन स समाप्तज्ञानदर्शनवररचन' तस्य संबोधनं हेसमा-प्तज्ञानदर्शनवररचन ! तद्रचना चैवं, तथाहि—

"एगविह दुविह तिविहं, चउहा पंचविह दसविहं सम्मं ।
दव्वाइकारगाइं, उवसमभेएहि वा सम्मं ॥ १ ॥
एगविहं सम्मरुई, निसग्गभिगमेहि तं भवे दुविहं ।
तिविहं तं खइयाई, अहवा विहु कारगाई य ॥ २ ॥
सम्मत्त मीसमिच्छ-त्तकम्मक्खयओ भणंति त खइयं ।
मिच्छत्तखओवसमा,खाओवसमं ववइसति ॥ ३ ॥
मिच्छत्तउवसमाउ, उवसमम्मत्तं भणंति समयन्नू ।
तं उवसमसेढीए, उवसमसम्मत्तलाभे वा ॥ ४ ॥
विहियाणुट्ठाणं पुण, कारगमिह रोयगं तु सद्दहणं ।
मिच्छद्दिट्ठी दीवइ, जं पत्ते दीवगं तं तु ॥ ५ ॥
खइयाई सासायण, सहियं तं चउविहं तु विन्नेयं ।
एतं समत्तभंगे, मिच्छत्तापत्तिरूव तु ॥ ६ ॥
वेयगसम्मत्त पुण, एयं चिय पंचहा विणिद्दिट्ठं।
सम्मत्त चरिमपोग्गल-वेयणकाले तयं होइ ॥ ७ ॥
एयं चिय पंचविहं, निसग्गाऽभिगमभेयओ दसहा ।
अहवा निस्सग्गरुई, इच्चाइ जमागमे भणियं ॥ ८ ॥"

अयमेवार्थ आर्षे दर्शनात्॥ सम्मत्तं समाइयं तिविह-खइयं, उवसमियं खाओवसमियं । अहवा तिविहं सम्मत्तसामाइयं कारगं रोयगं दीवगं । कारगं जहा साहूणं, रोयगं सेणियाई-णं च, दीवगं अभवसिद्धियस्स मिच्छादिट्ठिस्स वा भवसि-द्धिस्स वा । अभवसिद्धियस्स कहं ?, जं सो एगारस अंगाई पढइ न य सद्दहइ धम्मं च कहेई एवं दीवगं । अहवा-निस-ग्गसम्मद्दंसणं अभिगमसम्मद्दंसणं च । निसग्गसम्मद्दंसणं-निसर्ग' स्वभाव परिणाम इत्यनर्थान्तर जं उवसममंतरेण वि गिण्हइ तं निसग्गसम्मद्दसणं, अहिगमसम्मद्दंसणं-जं जीवा-इनवपयत्थे उवलंभेऊण गिण्हइ त्ति 'नाणतेयसंजुत्त' त्ति ज्ञान तेजसा संयुक्तो ज्ञानतेज सयुक्तस्तस्य संबोधन हेज्ञानतेज सं-युक्त ! प्रनष्टमोहान्धकार ! चारित्तसुद्धसील ' त्ति चारित्रेण निरतिचारतया शुद्ध शील' समाचारो यस्य स चारित्रशु-द्धशीलस्तस्य संबोधनं हे चारित्रशुद्धशील ! 'तिरयणमाल ' त्ति त्रिरत्नमाल ! ज्ञानदर्शनचारित्ररूपरत्नत्रयमाला त्वयैव लब्धा प्राप्ता,रत्नमालाऽपि समाप्ताऽज्ञानतिमिरा दर्शनैर्दर्शनी-यैव यै रत्नैर्निर्मिता समाप्ताज्ञाना च दर्शनवररत्ना च समा-प्ताज्ञानदर्शनवररत्ना ज्ञानतेजोयुक्ता परीक्षाहेतुकज्ञानतेज स-मन्विता चारित्रशुद्धशीला शुभा च शुद्धा त्रासादिदोषरहिता प्रशस्यत इति गाथार्थ. ।

सुविहितगुण ! वित्थारं, संथारं जे लहंति सप्पुरिसा ! ।
तेमि जियलोयसारं, रयणाहरणं कय होइ ॥ २१ ॥

हे सुविहितगुण ! शोभनानुष्ठानगुण ! विस्तार व्यावर्णितं व्यावर्ण्यमानम् अनेकातिशयप्रकारं सस्तारं ये सत्पुरुषा ल-भन्ते तेषा जीवलोकसारं रत्नाभरणं ज्ञानदर्शनचारित्ररूपं कृतं भवति इति तद्भवताऽलंकृतमिति जानीहि अवेहि 'ति-

लोयसार' मिति पाठे त्रिज्ञानादिरत्नाभरणमात्मनः कृतं भवतीत्यर्थः।

तं तित्थं तुमे लद्धं, जं पवरं सव्वजीवलोगम्मि।
भूयो जत्थ मुणिवरा, निव्वाणमणुत्तरं पत्ता ॥ २२ ॥

तं तीर्थं प्रभासतीर्थप्रयागादि लौकिकं लोकोत्तरमष्टापदादि द्रव्यतीर्थव्यतिरिक्तं भावतीर्थं त्वया लब्धं प्राप्तं,यत्र तीर्थे स्नाता. क्षालितकर्ममलपटला मुनिवरा निर्वाणसुख मोक्षसुखमनुत्तरं प्राप्ता इति। द्रव्यतीर्थे देहाद्युपशमतृष्णाव्यवच्छेद-मलप्रक्षालनात्सुख भवति,अत्र तु भावतीर्थे कषायोपशमलोभ-निग्रहसकलकल्मषमलप्रक्षालनान्निर्वाणसुखमिति।

आसवसंवरनिज्जर, तिन्नि वि अत्था समाहिया जत्थ।
तं तित्थं ति भणंति, सीलव्वयबद्धसोवाणा ॥ २३ ॥

अथ तीर्थशब्दस्य व्युत्पत्तिं तीर्थकर एवाह-त्रिषु तिष्ठतीति त्रिस्थं,के ते त्रय इत्याह-'आसवसंवरनिज्जर'त्ति आश्रवाणाम्-इन्द्रियाणां समाधानं हितेषु-प्रवृत्तिरहितेषु निवृत्ति.। तत्राश्रवभेदा 'इंदियकसाए'त्यादि द्वाचत्वारिंशत्प्रसिद्धा एव४२यथा कषायशब्देन षोडश कषाया नव६ नोकषाया एते पञ्चविंशतिः, योगशब्देन 'सच्च मोसं मीसमि'त्यादि योगा. पञ्चदश आश्रव भेदाः पञ्चसप्तति संवरणं संवरः'समिइ गुत्ती परीसहे'त्यादि ५७ तथा गुप्तिशब्देन मनोगुप्त्याद्या. ३ ब्रह्मचर्यगुप्तयो ६ भावनाशब्देनानित्याद्याः १२ महाव्रतानां २५ 'कंदप्पदेव१किब्बिस २ अभिओगा ३ आसुरा य ४ संमोहो ५' इति शुभभावनानां रुविपक्षत्वेनाशुभभावना अपि गृह्यन्ते, तदा संवरभेदा.६६'सवरत्व च कन्दर्पादीना परिज्ञानात् येभ्यः कारणेभ्य एते भवन्ति तत्परिहारेण'निज्जर'त्ति निर्जरणं निर्जरा तपः,तद् द्वादशधा प्रसिद्धमेव। आश्रवश्च संवरश्च निर्जरा च आश्रवसवरनिर्जरा. प्राकृतत्वाद्विभक्तिलोप, 'तिन्नि वि'त्ति एते प्रयोगार्था. 'समाहिय' त्ति समाधियुक्ता कृताः समाहृता वा-मीलिता. यत्र तत् त्रिस्थ तीर्थं वा भणनो विवेकिनः 'सीलवयबद्धसोवाण' त्ति शीलव्रतान्येव बद्धानि सोपानानि यैस्ते शीलव्रतबद्धसोपाना.। कस्य एतत् त्रिस्थस्य तीर्थस्य, त तथाविधा' सन्तो भणन्तो विवेकिनिर्व्वाणमनुत्तरं प्राप्ता इति पूर्वगाथात. संबध्यत इति गाथार्थ'।

भंजिय परीसहचमुं, उत्तमसंजमबलेण संजुत्ता।
भुंजंति कम्मरहिया, निव्वाणमणुत्तरं रज्जं ॥ २४ ॥

कथं निर्व्वाणं प्राप्तास्तत्र किं कुर्व्वन्तीत्याह-'भंजिय'भक्त्वा परीषहचमू-परीषहसेनाम् उत्तमसंयमबलेन युक्ता सन्तो भुञ्जन्ति कर्मरहिता निर्व्वाणमनुत्तरं विशिष्टं राज्यमित्यर्थ.।

तिहुयणरज्जसमाहिं, पत्तो सि तुमं पि समयकप्पम्मि।
रज्जाभिसेयमतुलं, विउलफलं लोएँ विहरंति ॥ २५ ॥

त्रिभुवनस्य राज्यं त्रिभुवनराज्य समाधान समधि ,त्रिभुवनराज्यस्य समाधिः त्रिभुवनराज्यसमाधिस्तम्। तत्र समाधिर्दशधा धम्मचिंता य१सन्नाणे२सुविणे३देवदंसणे४।ओहीदंसण ५ नाणे य ६,मणपज्जव ७ केवले॥१॥नाणे य ८ दंसणे चेव ९,केवलीमरणे इ य १०।असमुप्पन्ना समुप्पज्जो,दसचित्तसमाहिओ॥२॥' इति हे क्षपक!येन समाधिना त्रिभुवनस्य राज्यमिव तीर्थकृत्त्व केवलज्ञान मुक्तिर्वा प्राप्यते तं समाधिं त्वमपि प्राप्तोऽसि'समयकप्पम्मि'ति सिद्धान्तविचारणायां क्रियमाणायां किमिति राज्येनोपमितमित्युच्यते, 'रज्जाभिसेयमतुलं विउलफलं लोए विहरंति'यथा क्षत्रिया राज्याभिषेकं विशिष्टमतुलं विपुलैहिकसुखफलं प्राप्य लोके जानपदलोकमध्ये प्रमुदितात्मनो विहरन्ति-विविधं चेष्टन्ते विजृम्भन्ते ते दत्तराज्याभिषेकतुल्यमतुलं चारित्रं दधानास्तावत्साधवो विहरन्ति, त्वया तु संस्तारकमाश्रयता त्रिभुवनाधिपत्यसमाधिः समायभाषया प्राप्त इति गाथार्थ.।

अभिनंदइ मे हिययं, तुज्झे मोक्खस्स साहणोवाओ।
जं लद्धो संथारो, सुपुरिसपरमत्थसंथारो ॥ २६ ॥

अथ क्षपकस्य गुरुरात्मोत्कर्षदर्शनेन स्थैर्यमुत्पादयति। हे क्षपक! भवानभिनन्दयति प्रीतं करोति मे—मदीयं हृदय यत. कारणात्'तुज्झे मोक्खस्स'त्ति त्वया मोक्षस्य अपुनर्भवस्य साधनोपायः आत्मशान्तिसाधनोपायः कृतः। यत्-यस्मात्कारणात् लब्धः—प्राप्त. सस्तीर्यते विस्तीर्यते यस्मिन् जीवदयार्थं दर्भादिः स संस्तारक —सत्पुरुषपरमार्थज्ञानादिस्तस्य संस्तारो विस्तार इति महान् प्रमोद इति गाथार्थ'।

देवाऽवि देवलोए, भुंजंता बहुविहाइँ सोक्खाइं।
संथारं चिंतंता, आसणसयणाणि मुंचंति ॥ २७ ॥

देवा अपि देवलोके व्यवस्थिता अपि भुञ्जाना बहुविधानि सुखानि सस्तारकगतं साधुधर्मानुभूताराधनं वा संस्तारकगुणान्वा चिन्तयन्त' स्मरन्त आसनशयनानि मुञ्चन्ति-परित्यजन्ति त्वद्गुणाकृष्टचेतसो भक्तिहर्षवशादभ्युत्थानादि कुर्व्वन्तीति गाथार्थ.।

चंद व्व पेच्छणिज्जो, सूरो इव तेयसा वि दिप्पंतो।
धणवंतो गुणवंतो, हिमवंत महंतविक्खाओ ॥ २८ ॥

अथाङ्गीकृतसंस्तारक. क्षपक' क इव शोभते इत्याह-सौम्यताया चन्द्रवत्, प्रेक्षणीय, तपस्तेजसाऽपि सूर इव दीप्ततेजा भवति, धनवानिव सर्वस्याप्याश्रयणीय ,गुणवानिव सर्वपूज्यो भवति, हिमवानिव महत्त्वस्थैर्याभ्या विख्यात.—प्रसिद्ध इत्यर्थ'।

गुत्तीसमिइउवेओ, संजमतवनियमजोगजुत्तमणो।
समणो समाहियमणो, दंसणनाणे अणण्णमणो ॥२९॥

'गुत्तीसमिइ' त्ति गोपनं गुप्तिर्मनोवाक्कायनिरोधलक्षणा समयन—समितिः ईर्याभाषैषणादनिक्षेपपारिष्ठापनिकालक्षणा पञ्चप्रकारा गुप्तिश्च समितिश्च गुप्तिसमती ताभ्यामुपेतो युक्तो गुप्तिसमित्युपेत 'संजमतवनियम' त्ति सयम —पञ्चाश्रवविरमणलक्षणः, तपो—द्वादशविधं नियमो—अभिग्रहविशेषा 'उक्खित्तचरगा निक्खित्तचरगा' इत्यादिका योगा मनोवाक्कायनिरोधा, संजमश्च तपश्च नियमश्च योगाश्च संयमतपोनियमयोगास्तै युक्तं मनो यस्य स संयमतपोनियमयोगयुक्तमना सुप्रणिहितमना श्रमणस्तपस्वि सदा. समाहितमना'—सुप्रणिहितचित्त 'दंसणनाणे' त्ति दर्शनं सम्यक्त्व ज्ञानं मत्यादिक दर्शन च ज्ञान च दर्शनज्ञानम्, समाहारत्वादेकवचनं तस्मिन्, न विद्यते अन्यस्मिन्ध्यानलक्षणान्मनो यस्य स अनन्यमना -एकाग्रचित्त एवंविध साधुः संस्तारक प्रतिपद्यते इति शेष इति गाथार्थ ।

तथा—

मेरु व्व पव्वयाणं, सयंभुरमणु व्व सव्वउदहीणं ।

चंदो इव ताराणं, तह संथारो सुविहियाणं ॥ ३० ॥

मेरुरिव-पर्वतानां मध्ये यथा मेरुः प्रशस्य., स्वयंभूरमणो यथा गाम्भीर्यगुरुत्वाभ्यां प्रशस्यते, चन्द्रश्च यथा तारकाणां मध्ये प्रकाशकतया शोभते, तथा संस्तारक. सुविहितानां शोभनानुष्ठानानां भवतीत्यर्थः ।

भण केरिसस्स भणिओ, संथारो केरिसे व ओगासे ।

उक्खंभिगस्स करणे, एयं ता इत्थिमो नाउं ॥३१॥

अथ तत्स्य. श्रोता गुरुं पृच्छति-भो प्रभो!भण कथय कीदृशस्य क्षपकस्य भणितः-प्रतिपादितः संस्तारक.! कीदृशो वाऽवकाश. भूप्रदेशे ग्रामनगरादौ वा गन्धर्व्वनाट्यशालादिविवर्जिते ? 'उक्खंभिगस्स करणे' त्ति यथा कस्मिंश्चिद् गृहादौ जीर्णे पतितुकामे वा उत्प्रावल्येन स्तम्भनम् उत्तम्भनम्, उत्तम्भ एव उत्तम्भिक , स्वार्थे इकणप्रत्यय , उत्तम्भिकस्य भाव उत्तम्भिकत्वम् तस्य उत्तम्भिकस्य अवष्टम्भनकस्य प्रति स्तम्भदारुकादे करणे तृतीयार्थत्वात्सप्तम्या', तत उत्तम्भिकस्य करणेन गृहादौ स्थैर्यं विधीयते तथा साधोरपि स्तम्भ्यते स्थिरीक्रियते जीवो मुक्तिकारणेषु येन—पर्यन्ताराधनालक्षणेन तस्य विधाने करणेन वा यथा परमार्थसाधना-मोक्षसाधना भवति । एवं 'ता' इति-एतत् तावदिति भाषाक्रमे इच्छामो वाञ्छा कुर्म्मो ज्ञातुमिति गाथार्थ. ।

हायंति जस्स जोगा, जरा य विविहा य हुंति आयंका ।

आरुहई संथारं, सुविसुद्धो तस्स संथारो ॥३२॥

अथ शिष्य पृच्छति-कदा संस्तारक क्रियते?, तत्राह सालम्बनैरेव"काहं अधित्तिं अदुवा अहीहं, तवोवहाणे सुयउज्जमिस्सं। गणं व नीए अइसारविस्सं,सालंवसेवी समुवेइ सोक्खं॥१॥ यदा तु तान्यालम्बानानि न भवन्ति क्षीणबलत्वात् रोगाद्यभिभूतत्वात् वृद्धत्वाक्रान्तत्वात्तदैव चिन्तयति 'जो देहदेसेण दढो य जाओ,सिलिप्पई सो हु करेइ कज्जं। जो दुव्वलो संतवि ओसतो उ,न तं तु सीलंति विसन्नदारुं" इति'हायंति' हीयन्ते हानिं प्राप्नुवन्ति यस्य योगा. संयमव्यापारास्त्रुटितबलत्वात् 'जरा य'त्ति जरा च वार्द्धकं सर्वरूपादिवलाऽपहारका भवन्ति ' विविहा य हुंति आयंक ' त्ति विविधा-अनेकप्रकारा भवन्ति आतङ्का. सद्योघातिनः शूलादिका रोगा.-स्फेटयितुमशक्या अत कारणादिहलोकनिरपेक्षया आरोहति अङ्गीकरोति संस्तारकं तस्य सुविशुद्धो निरतिचार. संस्तारक इति।

जो गारवेण मत्तो, निच्छइ आलोयणं गुरुसगासे ।

आरुहई संथारं,अविसुद्धो तस्स संथारो ॥३३॥

य साधुर्गौरवेण ऋद्धिरससातलक्षणेन मायति स मत्तो दर्पवान् नेच्छति नाभिलषति गृहीतुमालोचनां गुरुसकाशे-गुरुसमीपे, यत. "लज्जाए गारवेण व,वहुसुयमएण वावि दुच्चरिय। जइ न कहिंति गुरुणं,न हु ते आराहगा हुंति ॥१॥" इति अकृत्वा आलोचनां य संस्तारकमारोहति तस्याविशुद्ध. संस्तारक इति गाथार्थः ।

जो पुण पत्तभूओ, करेइ आलोयणं गुरुसकासे ।

आरुहई संथारं, सुविसुद्धो तस्स संथारो ॥३४॥

य. पुन. पात्रभूतो योग्यो निर्म्माय. संविग्न. कृतसंलेखनः सन् आलोचनां गुरुसमीपे कृत्वा चारोहति संस्तारकमिति।

जो पुण दंसणसुद्धो, आयचरित्तो करेइ सामन्नं ।

आरुहई संथारं, सुविसुद्धो तस्स संथारो ॥ ३५ ॥

यः पुन. साधु. श्रावको वा 'दंसणे' त्ति दर्शनेन सम्यक्त्वेन सप्तषष्टिभेदभिन्नेन-शुद्धो-निर्म्मल.। ते चामी सप्तषष्टिभेदा'—

"चउसद्दहणं तिलिंगं३,दसवेयण१०तिसुद्धि३पंचगयदोसं५।

अट्ठपभावण ८ भूसण ५, रक्खण ५ पंचविह सम्मुत्तं ॥ १ ॥

छव्विहजयणारंभा ६, छब्भावेण ६ भावियं ठाण ५ ।

वइ सत्तसट्ठिलक्खण, भेयविसुद्धं च सम्मत्तं ॥ २ ॥

(चउसद्दहणं ति)—

परमत्थसंथवो खलु, मुणियपरमत्थ जाइ जणनिसेवा ।

वावन्नकुदिट्ठीण य, वज्जणमिह चतुद्दसद्दहणं ॥ ३ ॥

जीवाइपयत्थाणं, सम्मपयाईहिं अट्ठेहिं पयंहिं ।

वुद्धाए मि पुण पुण स-वण चिंतणं संथवो होइ ॥ ४ ॥

गीयत्थचरित्तीणं, सेवावहुमाणविणयपरिसुद्धा ।

तत्ताव वोहजोगा सम्मत्तं निम्मलं कुणइ ॥ ५ ॥

पावन्नदंसणाणं, निरहगया सत्थअन्नउत्थीणं ।

उम्मग्गुवएसेहिं, वला वि भालिज्जए सम्मं ॥ ६ ॥

मोहिज्जइ मंदमई, कुदिट्ठिसत्थेहि गुविलसद्देहिं ।

दूरेण वज्जियव्वा, तेणइ नेसुद्धवुद्धीणं ॥ ७ ॥

परमागमसुस्सूसा, अणुरागो धम्मसाहणे परमो ।

जिणगुरुवेयावच्चे, नियमो सम्मत्तलिंगाइं ॥ ८ ॥

तरुणो सुहोवदिट्ठो, रागी पि य पणइणी जुओ सो उ ।

इच्छइ जह सुरगीयं, तओहिया समयसुस्सूसा ॥ ९ ॥

कंतारुत्तिन्नदिओ, घयपुन्ने भुत्तुमिच्छइ च्छुहिओ ।

जह तह सदणुट्ठाणे, अणुराओ धम्मराउ त्ति ॥ १० ॥

पूयाइए जिणाणं, गुरूण विस्सामणाइएहि विहे ।

नियमो अंगीकारो, वेयावच्चे जहासत्ती ॥ ११ ॥

दसविणय त्ति य अरिहं-त सिद्धचेइयसुए य धम्मे य ।

आयरिय उवज्झाए, पावयणे दंसणे वावि ॥ १२ ॥

अरिहंता विहरंता, सिद्धा कम्मक्खया सिवं पत्ता ।

साहुवग्गेय चेइय, सुरा तु सामाइयाईयं ॥ १३ ॥

धम्मो चरित्तधम्मो, आहारो तस्स साहुवग्गो त्ति ।

आयरियउवज्झाया, विसेसगुणसंपया जुत्ता ॥ १४ ॥

पवयणमसेससंघो, दंसणमिच्छति इत्थ सम्मत्तं ।,

विणओ दंसणमेसिं, कायव्वा चेव एयं तु ॥ १५ ॥

भत्ती वहुमाणो व—न्नजणण नासणमवन्नवायस्स ।

आसायणपरिहारो, दसणविणओ समासेणं ॥ १६ ॥

भत्ती वहुपडिवत्ती, वहुमाणो मणसि निब्भरा पीई ।

वन्नजणण च तेसिं, असेसगुणकित्तणाईहिं ॥ १७ ॥

उड्डाहगोवणाइं, भणियं नासणमवन्नवायस्स ।

आसायणपरिहरणं, उचियासणसेवणाईयं ॥ १८ ॥

मणवायाकाएणं, सुद्धीसम्मत्तसोहणा तत्थ ।

मणसुद्धी जिणजिणमय-वज्जमसारं मणुयलोयं ॥ १९ ॥

तित्थकरत्वलणऽऽराहे, रोणज मज्झ सिज्झइ तिसुद्धित्ति ।

कज्जं परयेयन्तं, देसविसेसं ति वयसुद्धी ॥ २० ॥

छिज्जंतो भिज्जंतो, पीलीरज्जंतो वि डज्झमाणो वि ।

जिणवज्जदेवयाणं, जनमइलो तस्स तणुसुद्धी ॥ २१ ॥
पंचगय दोसंति, दूसिज्जइ जेहि मंतदोसा य ।
संकाकंखदुगुंछा, परतित्थि पसंससंथवणं ॥ २२ ॥
( पचेव वज्जणिज्जा )
देवगुरुतत्तविसया , अच्छिन्नच्छित्तिसंसओ संका ।
कंखाई संदेहो, ( होई ) मुणिजणम्मि वि दुगुंछा ॥ २३ ॥
गुणकित्तणं पसंसा, पयवयकरणं च संथवणं ।
( अट्ठ पभावण त्ति )
सम्मद्दंसणजुत्तो , सइ सामत्थे पभावगो होइ ।
सो पुण इत्थ विसिट्ठो, निद्दिट्ठो अट्ठहा सुत्ते ॥ २५ ॥
पावयणी धम्मकही, वाई नेमित्तिओ तवस्सी य ।
विज्जासिद्धो कोई, अट्ठेव पभावगा भणिया ॥ २६ ॥
कालोचियसुत्तधरो, पावयणी तित्थवाहगो सूरो ।
पडिबोहियभव्वजणो , धम्मकही कहणलद्धिन्नू ॥ २७ ॥
वाई य वायकुसलो, रायदुवारे वि लद्धमाहप्पो ।
नेमित्तिओ निमित्तं, कज्जम्मि पउंजई निउणं ॥ २८ ॥
जिणमयमुब्भावेंतो, विगिट्ठखमणेण भणइ तवस्सी ।
सिद्धबहुविज्जमंतो, विज्जावंतो वि उचियन्नू ॥ २६ ॥
संघाइकज्जसाहग , चुन्नंजणजोगमंतसिद्धो उ ।
भूयत्थसत्थगथी , जिणसाणदेसओ सुकवी ॥ ३० ॥
( भूसण त्ति )
सम्मत्तभूसणाइं, कोसल्लं तित्थसेवणं भत्ती ।
थिरया पभावणा वि य, भावत्थ तेसि वोच्छामि ॥ ३१ ॥
वंदणसंवरणाई, किरियानिउणत्तण च कोसल्लं ।
तत्थ वि सेवा सययं, सविग्गिजणाण संसग्गी ॥ ३२ ॥
भत्ती आयरकरणं, जहोचियं जिणवरिंदसाहूणं ।
थिरया दढसम्मत्तं , पभावणुस्सप्पणाकरणं ॥ ३३ ॥
( लक्खणपंचविह त्ति )
हिययगयं सम्मत्तं, लक्खिज्जइ जेहि ताइं पंचेव ।
उवसमसंवेगो तह, निव्वेयणुकंप अत्थिक्कं ॥ ३४ ॥
अवराहे वि महंते, कोहाणुदओ वियाहियोपसमो ।
संवेगो मोक्ख पइ, अहिलासो भवविरागो य ॥ ३५ ॥
निव्वेओ चागित्त , तुरियं संथारवारयगिहस्स ।
दुहियदया अणुकंपा, अत्थिक्कं पंचओ वयणे ॥ ३६ ॥
( छव्विह जयण त्ति )
परतित्थीणं तह दे-वयाण भग्गहिय चेइयाणं च ।
जं छव्विहववहारं ; न कुणइ सा छव्विहा जयणा ॥ ३७ ॥
वंदणनमंसणे वा , दाणपयाणम्मि मेसि वज्जेइ ।
आलावं संलावं, पुव्वमणाभत्तगो न करे ॥ ३८ ॥
वंदणयं करजोडण, सिरनामणवंदणं च इह यं च ।
वायाए नमोक्कारो , नमसणं मणपसाओ य ॥ ३६ ॥
गउरवपिसुणवियरणा , मिट्ठासणपाणजज्जसेज्जाणं ।
दाण तं चिय बहुसो , अणुप्पयाण मुणी विंति ॥ ४० ॥
सप्पणयं सभासण, कुसलं वासागयं च आलावो ।
संवासो पुणरुत्तं, सुहदुहगुणदोसपडिपुच्छा ॥ ४१ ॥
( आगार त्ति )
राया गणबलदेवय, गुरुनिग्गहावित्तिछेयमाईहिं ।
आगारेहिं भज्जइ, संमत्त मज्झ न कयाइ ॥ ४२ ॥
( छब्भावणभावियं ति )
४०

देहलहुं मुक्खफल, दंसणमूलं दढम्मि धम्मदुमो ।
भंतु दंसणदारं , न पवेसो धम्मनयरम्मि ॥ ४३ ॥
नंदइ वयपासाओ, दंसणपीढम्मि सुप्पइट्ठम्मि ।
सम्मत्तमहाधरणी, आधारो चरणलोगस्स ॥ ४४ ॥
सुयसीलमणुन्नरसं , दंसणवरभायणं लहुं धरई ।
मूलुत्तरगुणरयणा , दसणअक्खयनिहाणं च ॥ ४५ ॥
( छट्ठाणं ति )
अत्थि जिओ तह निच्चो, कत्ता भुत्ता य पुन्नपावाणं ।
अत्थि धुव निव्वाणं, तस्सोवाओ य छट्ठाणा ॥ ४६ ॥
अयणुपवयसिद्धो, गम्मइ तह चित्तवेयणाईहिं ।
जीवो अत्थि अवस्सं, पच्चक्खो नाणदिट्ठीणं ॥४७॥
दव्वट्ठयाए निच्चो, उप्पायविणासवज्जिओ जेण ।
पुव्वकयाणुसरणओ, पज्जाया तस्स उ अणिच्चा ॥ ४८ ॥
कत्ता सुहाऽसुहाणं, कम्माणं कसायजोगमाईहिं ।
मिउदंडचक्कचीवर, सामग्गिवसा कुलालं व ॥ ४६ ॥
भुंजइ सय कयाइ, परकयभोगो उ .।
अकयस्स नत्थि भोगो, अन्नह मुक्खे वि सो हुज्जा ॥५०॥
सम्मत्तनाणचरणा, संपुन्नो मुक्खसाहणोवाओ ।
ता इह जत्तो जुत्तो, ससत्तिओ नाणतत्ताणं ॥ ५१ ॥"
इत्येवंप्रकारेण दर्शनेन शुद्धो निरतिचार 'आय-चरित्तो' त्ति आयभूतं निरतिचारतया चारित्रं यस्य स आयचरित्रो दृढचारित्रत्वात् प्राकृतत्वादात्तचारित्रो-गृहीतचारित्रः करोति—पालयति श्रामण्यं—श्रमणभावम् आरोहति संस्तारं सुविशुद्धस्तस्य संस्तार. ।

जो रागदोसरहिओ, तिगुत्तिगुत्तो तिसल्लमयरहिओ ।
आरुहई संथारं, सुविसुद्धो तस्स संथारो ॥ ३६ ॥

यः साधु. रागद्वेषाभ्यां रहित' तिसृभिर्मनोवाक्कायल-क्षणाभिर्गुप्तिभिर्गुप्तः तथा त्रिभिर्मायाशल्यनिदानशल्यमि-थ्यादर्शनशल्यैर्मदैश्च रहित आरोहति संस्तारं सुविशुद्धस्त-स्य संस्तारक. ।

तिहिं गारवेहिं रहिओ, तिदंडपडिमोयगो पहियकित्ती।
आरुहई संथारं, सुविसुद्धो तस्स संथारो ॥ ३७ ॥

त्रिभिर्गौरवैः ऋद्धिरससातलक्षणै रहितः त्रयाणां मनोवाका-यलक्षणाना परिमोचकः प्रतिमोचको वा प्रथितकीर्त्तिः स्या-तप्रसिद्धिः आरोहति संस्तारकं सुविशुद्धस्तस्य संस्तारक ।

चउविहकसायमहणो, चउहिं विगहाहि विरहिओ निच्चं।
आरुहई संथारं, सुविसुद्धो तस्स संथारो ॥ ३८ ॥

चतुर्विधाना-क्रोधमानमायालोभरूपाणां कषायाणां मथनो-विनाशक चतुर्विधकषायमथन चतसृभिः स्त्रीकथाभक्तकथा-राजकथादेशकथालक्षणाभिर्विरहितो नित्य-सदाकालम्, आ-रोहति संस्तारक सुविशुद्धस्तस्य संस्तारक इति ।

पंचमहव्वयकलिओ, पंचसु समिईसु सुट्ठ आउत्तो ।
आरुहई संथारं, सुविसुद्धो तस्स संथारो ॥ ३६ ॥

पञ्चभिर्महाव्रतैः कलितो—युक्तः तथा पञ्चसु ईर्यादिसमि-तिषु सुष्ठुातिशयेनायुक्त आरोहति संस्तारक सुविशुद्धस्त-स्य संस्तारक इति ।

छक्कायाए विरओ, सत्तमयट्ठाणविरहियमईओ ।
आरुहई संथारं, सुविसुद्धो तस्स संथारो ॥ ४० ॥

षण्णां कायानां समाहारः षट्कायं तस्मात् षट्कायात् तदारम्भात् विरतो-निवृत्तस्तथा सप्तभ्यो भयस्थानेभ्य इहपरलोकादानाकस्मादाजीविकामरणाश्लोकलक्षणेभ्यो विरहिता मतिर्यस्य स सप्तभयस्थानविरहितमतिकः आरोहति संस्तारं सुविशुद्धस्तस्य संस्तारः।

अट्ठमयट्ठाणजढो, कम्मट्ठविहस्स ख(व)मणहेतु त्ति।
आरोहइ संथारं, सुविसुद्धो होइ संथारो ॥ ४१ ॥

अष्टभिर्जातिकुलबलरूपतपऐश्वर्यश्रुतलाभरूपैर्मदस्थानैर्जढस्त्यक्तोऽष्टमदस्थानजढः 'कम्मट्ठविहस्स' त्ति प्राकृतत्वात् कर्मशब्दस्य पूर्वनिपातः, ततोऽष्टविधकर्मणः क्षपणमष्टविधकर्मक्षपणं तस्य हेतुमारोहति संस्तारं सुविशुद्धस्तस्य संस्तारः।

नववंभचेरगुत्तो, उज्जुत्तो दसविहे समणधम्मे।
आरुहई संथारं, सुविसुद्धो तस्स संथारो ॥ ४२ ॥

नवसु वसत्यादिषु ब्रह्मचर्यगुप्तिषु गुप्तः नवब्रह्मचर्यगुप्तः, तथा-उद्युक्त उद्यमवान् दशविधक्षान्त्यादिके श्रमणधर्मे एवंविधः सन्नारोहति संस्तारं सुविशुद्धस्तस्य संस्तारः।

अथ संस्तारकस्थं क्षपकमालोक्य शिष्यो गुरुं पृच्छति गाथाद्वयेन। भगवन्! संस्तारकस्थस्य मुनेः कीदृशो लाभः कीदृशश्च सुखमिति तदेव गाथाद्वयेनाह—

जुत्तस्स उ(त्त)त्तिमट्ठे, मलियकसायस्स निव्वियारस्स।
भण केरिसओ लाभो, संथारगयस्स समणस्स ॥४३॥

युक्तस्य-व्यवस्थितस्य च उत्तमार्थेऽनशनप्रतिपत्तिरूपे मलितकषायस्य अधःकृतकषायस्य अत एव निर्विकारस्य कोपादिविकाररहितस्य भण-कथय कीदृशो लाभो भवति संस्तारगतस्य श्रमणस्य।

जुत्तस्स उत्ति(त्त)मट्ठे, मलियकसायस्स निव्वियारस्स।
भण केरिसं च य सुखं, संथारगयस्स समणस्स ॥४४॥

'जुत्तस्सेति' पादद्वयं तथैव भण-ब्रूहि कीदृशं च सौख्यं संस्तारकगतस्य श्रमणस्य।

गुरुरपि गाथाद्वयेन क्रमेणोत्तरमाह—

पढमिल्लगम्मि दिवसे, संथारगयस्स जो हवइ लाभो।
को दाणि तस्स सक्का, काउं अग्घं अणग्घस्स ॥ ४५ ॥

'पढमिल्लगम्मि' त्ति-प्रथमकेऽपि दिवसे संस्थारकगतस्य-संस्तारके व्यवस्थितस्य साधोर्यो लाभो भवति'को दाणि' त्ति क इदानीं निरतिशयिनि काले तस्य लाभस्य'सक्क' त्ति समर्थः स्यात् 'काउं' ति कर्तुमर्घमनर्घस्य-अर्घगोचरातीतस्य।

जो संखिज्जभवट्ठिइ, सव्वं पि खवेइ सो तहिं कम्मं।
अणुसमयं साहुपयं, साहू वुत्तो तहिं समए ॥ ४६ ॥

यः साधु 'संखिज्जभवट्ठिइ' त्ति संख्याता-संख्यायुलक्षणा भवे-एकस्मिन् भवे एकजन्मन्यस्थितिकः-असंख्यातवर्षायुषो हि चारित्रप्रतीतिरपि न भवतीति संख्यातवर्षस्थितिकत्वमुक्तम्, 'सव्वं पि खवइ सो तहिं कम्मं' ति सर्वमपि क्षपयति-निर्जरयति स साधुस्तत्र तस्मिन्संस्तारके व्यवस्थितः, प्रथमसंहननवत्प्रकृष्टाराधनः क्षपयति अष्टप्रकारमपि कर्म। अथ प्रतिसमयं स साधुः साधुपदं प्रतिपन्नः सन् तस्मिन्नेव भवे प्राय: कर्म क्षपयति। अनुसमयं तस्मिन्सुपर्यन्ताराधनासमयैर्व्युक्तौ विशेषेणोक्तिः तस्यामवस्थायां विशेषतः क्षपणात्, लाभप्रश्नस्य गुरुणा निर्वचनं दत्तम्।

अथ सौख्यस्य उत्तरमाह—

तणसंथारनिवन्नो, वि मुणिवरो भट्ठरागमयमोहो।
जं पावइ मुत्तिसुहं, न चक्कवट्टी वि तं लभइ ॥४७॥

तृणसंस्तारके कर्कशे दर्भादितृणमये निपन्नः सुप्तः तृणसंस्तारकनिपन्नः अतस्तृणसंस्ताकस्यातिकर्कशत्वमुक्तं, परं स मुनिवरस्तृणसंस्तारकनिपन्नोऽपि सुप्तोऽपि भ्रष्टो रागमदमोहो यस्य स भ्रष्टरागमदमोहः यत्प्राप्तो निर्लोभत्वेन सुखं मुक्तिसुखं मोक्षसुखं वा लेशतः परमानन्दमयं; संतोषमित्यर्थः, 'न चक्कवट्टी वि' त्ति न चक्रवर्त्यपि तल्लभते; .... त्यर्थः। यदाह-"तुष्टयर्थमन्नमिह यत्प्रणिधिप्रयासं,संत्रासदोषकलुषो नृपतिस्तु भुङ्क्ते। .... यन्निर्भयः प्रशमसौख्यरतश्च भुङ्क्ते ॥१॥" ॥४७॥

निप्पुरिसनाडगम्मि व, न सा रई तह सहत्थवित्थारे।
जिणवयणम्मि विसाले, हेउसहस्सोवगूढम्मि ॥ ४८ ॥

देवानां संबन्धिनि नाटके सा रतिर्न भवति। कथंभूते निजपुरुषनाटके निजपुरुषा नाटककर्त्तारः स्वस्वामिनः सातं बुध्यन्ते, ततस्तत्सुरा नाटकपात्राणि विकुर्वन्ति 'तह सहत्थवित्थारि'त्ति तथा देवा वैक्रियलब्ध्या स्वहस्ताभ्यां पात्राणि निष्काश्य द्वात्रिंशद्विधं नाटकं विस्तारयन्ति,परमात्मेच्छयाऽपि विरचिते तस्मिन् न सा रतिर्न तत्सुखम्, जिनवचने विशाले विस्तीर्णे हेतुसहस्रोपगूढे-हेतुसहस्रयुक्ते क्षपकेण श्रूयमाणे-मनसि धार्यमाणे च यत् सुखं या रतिरित्यर्थः। अथवा-'निप्पुरिसनाडगम्मि' त्ति निर्गता-रहिताः पुरुषा यस्मिन्नाटके तन्निप्पुरुषं तस्मिन्निप्पुरुषनाटके केवलस्त्रीपात्रमये नाटके स्वहस्तविस्तारस्वेच्छासंचारितहस्तादिलये न सा रतिर्न तत् सुखम्। केवलस्त्रीनाटके हि सर्वविषयाविर्भावके रागिणामत्रैव रतिर्भवति परं तस्मिन्नपि सा रतिर्न भवति या जिनवचने रतिर्भवति इति तात्पर्यार्थः।

जं रागदोसमइयं, सुक्खं जं होइ विसयमइयं च।
अणुहवइ चक्कवट्टी, न होइ तं वीयरागस्स ॥४९॥

यत्सुखं रागमयं-पुत्रकलत्रादिस्नेहमयं द्वेषमयं-शत्रुविनाशसंभवं, यच्च सुखं 'विसयमइयं' ति शब्दादिविषयसंभवं-चतुःषष्टिसहस्रललनापरिचारणामयमनुभवति चक्रवर्ती भवति तत्सुखं मोहमयम्,वीतरागस्य-गतरागद्वेषमोहत्वान्महामुनेः तद्धि सुखं क्षणविनश्वरं महर्षेस्तु परमसंतोषसुखसंभृतत्वान्न तत्किंचिदित्यर्थः।

मा होइ वासगणया, न तत्थ वरिसाणि परिगणिज्जंति।
वहवे गच्छं वुच्छा, जम्मणमरणं च ते छुत्ता ॥५०॥

गुरुः शिष्यान् प्रति भणति-भो वत्सा! मा भवथ वर्षगणकीयता स्तोकेनापि कालेन ये इमेऽर्हन्तस्ते पुण्डरीकवत्परमार्थसाधका भवन्ति, न तत्र वर्षाणि गण्यन्ते, यदुतानेन वहूनि वर्षाणि दीक्षा कृताऽनेन स्तोकानीति। यतो वहवोऽपि गच्छवासमुषिताश्चिरं कालं यावद्गच्छवासं कृतवन्तोऽपि प्रवलप्रमादतया "जयन्तराजर्षिवत्" पार्श्वस्थतया विहृत्य

जन्ममरणरूप ससारमतिशयेन त्रुटता मग्ना. त्रुटता वा संसार-सागरे त्रुडिता इत्यर्थः।

पच्छा वि ते पयावा, खिप्पं काहिंति अप्पणो पत्थं।
जे पच्छिमम्मि काले, मरंति संथारमारूढा ॥ ५१ ॥

पश्चादपि पर्यन्तसमयेऽपि उद्यतविहारितया "सेलकवत्" उद्यतमरणेन"अर्हन्नकवत्" साधव. पूर्वं-प्रथममेव वा पुण्डरीकगजसुकुमालवदुद्यतविहारेण पूर्व्वं वा उद्यतमरणेनावन्तीसुकुमारवत्। अथवा-'पयावा' इति-प्रपाताद्वा स्वदोपनिन्दा-गर्हालक्षणात् क्षिप्रं-शीघ्रं करिष्यन्ति आत्मन' पथ्यं-हितम्। के ते आत्मनो हितं विधास्यन्तीत्याह-'पच्छिमम्मि' त्ति ये पश्चिमेऽपि काले 'मरन्ति'त्ति म्रियन्ते संस्तारकारूढा. सन्तो विहितानशना इत्यर्थः।

अथ कीदृशो वाऽवकाशे संस्तारकः कर्त्तव्य इति प्रश्नस्य निर्वचनमाह—

न वि कारणं तणमओ, संथारो न वि य फासुया भूमी।
अप्पा खलु संथारो, हवइ विसुद्धो चरित्तम्मि ॥ ५२ ॥

नापि-नैव कारणं-निमित्तं तृणमय. संस्तारकः पर्यन्ताराधनस्य कारणं नापि प्रासुका निरया भूमि' तर्हि किंनिमित्तमित्याह-'अप्पा खलु' त्ति-आत्मा खलु-निश्चयेन संस्तारको भवति विशुद्धो निर्म्मलः 'चरित्तम्मि' त्ति—चारित्रे निर्म्मले, निरतिचारे इत्यर्थ.।

अथ कीदृशस्य कस्मिन् काले इत्युभयनिर्वचनमाह—

निच्चं ति तस्स भावु-ज्जुयस्स जत्थ व जहिं व संथारो।
जो होइ अहक्खाया, विहारमब्भुज्जओ लुक्खो ॥ ५३॥

नित्यं-सर्वदा तस्य-क्षपकस्य 'भावुज्जुयस्स' त्ति भावसो निर्मायस्याऽप्रमादिनः कृतालोचनस्य 'जत्थ व' त्ति यत्रैव क्षेत्रे ग्रामनगरादौ, यत आह "चक्खुयजोगाणं पुण, मुणीण झाणे सुनिश्चलमणाण। गामम्मि जणाइन्ने, सुन्नेऽरन्नम्मि न विसेसो ॥१॥" 'जहिं व' त्ति यस्मिन्वा काले दिवसनिशादौ हेमन्तग्रीष्मादौ वा, यदाह-'काले वि सो च्चिय जहिं, जोगसमाहाणमुत्तमं लहइ। न तु दिवसनिसावेला, इ (इ) नियमणं झाइणो भणियं ॥१॥' अथवा-' जहिं ' ति दर्भतृणकुसुमशिलातलतूलिकादौ यो भवति 'अहक्खाय' त्ति यथा च जिनवचनप्ररूपकः ' विहारमब्भुज्जओ ' त्ति विहारमुद्यतविहारं द्वादशसांवत्सरिकमभ्युद्यत. कृतसंलेखन, अत एव कृतसंलेखनात्वाद्रूक्ष क्षीणधातुत्वादस्थिचर्मावनद्धशरीरो, भावत. कपायपरिहारेण इति, द्रव्यत. क्षेत्रत' कालतो भावतश्च क्षपकस्य शुद्धिरुक्ता।

अथ यथाविधि तपो विधाय यस्मिन् काले संस्तारको विधेय इति तमाह—

वासारत्तम्मि तवं, चित्तविचित्ताइ सुट्ठु काऊणं।
हेमंते संथारं, आरुहई सव्वऽवत्थासु ॥ ५४ ॥

पूर्वं तावद्गुरुमनुज्ञाप्य—

" चत्तारि विचित्ताइं, विगई निज्जूहियाइ चत्तारि।
संवच्छरे य दुन्नी, एगतरियं च आयामं ॥ १ ॥
नाऽइविसिट्ठो य तवो, छम्मासे परिमियं च आयामं।
अन्ने वि य छम्मासे, होइ विगिट्ठं तवोकम्म ॥ २ ॥
वीसं कोडीसहियं, आयामं कट्टु आणुपुव्वीए।
गिरिकंदरनवगंतु, पाउवगमणं अह करेइ ॥ ३ ॥"

वर्षाकाले रात्रौ तपश्चित्रविचित्रादिकं 'सुट्ठु' त्ति सुष्ठुतिशयेन कृत्वा हेमन्तशीतकालादौ सस्तारक कर्त्तव्यो निरापदि आयुपि च पूर्यमाणे आपदि चतुष्पदायुपि वा 'आरुहइ' आरोहति करोति संस्तारकं सर्वास्ववस्थास्विति गाथार्थ.।

अथ कै. कैरभ्युद्यतमरणविधिर्विहित इति तान् द्वात्रिंशता गाथाकलापेनाह—

आसी य पोयणपुरे, अज्जा नामेण पुप्फचूल त्ति।
तीसे धम्मायरिओ, पविस्सुओ अन्नियापुत्तो ॥ ५५ ॥

"गंगाए तडे पुप्फभद्दं नाम नयरंमि" त्यावश्यकचूर्णि। इदं पुनस्तस्यैव नामान्तरं संभाव्यते। आसीत्पोतनपुरे आर्यिका पुष्पचूलेति, तस्या धर्माचार्य.-धर्म्मगुरु प्रकर्षेण विश्रुतः प्रविश्रुतो विख्यात. अन्निकापुत्र. सूरिरिति।

सो गंगमुत्तरंतो, सरसा उस्सारिओ य नावाए।
पडिवन्नो उत्तमट्ठं, तेण वि आराहियं मरणं ॥ ५६ ॥

अन्यदाऽभिनवदीक्षितायाः पुष्पचूलायाः केवलोत्पत्तावात्मानं निन्दन् तया भणितो भगवतामपि गङ्गामुत्तरतां केवलमुत्पत्स्यते, ततोऽसौ झटित्येव गङ्गायां नावमारूढ.। तत्र च नगराधिष्ठातृदेवता सूरिभक्ता। नदीदेवता तु तस्या. प्रत्यनीका। तया चिन्तितं-मदीयवैरिण्या गुरुरयं मारयितव्य' इति चिन्तयन्ती एवं विधत्ते, "जेणं जेणं पासेणं विलगति तं बुड्डइ सो मज्झे ठिओ सव्वा पाणी बुड्डइ तेहिं नाविएहिं पाणीए छूढो देवयाए तिसूलेणं विद्धो, नाणं उप्पन्न देवेहिं महिमा कया पयाग ति तत्थ जाय तित्थं।" संपूर्णकथा आवश्यकचूर्णितो ज्ञेया। अधुनाऽक्षरयोजना-स गङ्गामुत्तरन् सहसा तत्क्षणादेव नाविकेनाचार्य उत्सारित, पातित., प्रतिपन्न उत्तमार्थं; तेनापि मरणमाराधितम्।

पंचमहव्वयकलिया, पंच सया अज्जिया सुपुरिसाणं।
नयरम्मि कुंभकारे, करगम्मि निवेसिया तइया ॥५७॥

पञ्चमहाव्रतकलितानि पञ्चशतानि 'अज्जिय' त्ति प्राकृतत्वादर्दितानि-पीडितानि प्राकृतत्वादेव वा अर्जितानि रागादिभि सत्पुरुषाणां 'नयरम्मि' कुम्भकारोपकारस्य लाक्षिणिकत्वात् नगरे कुम्भकारे कटके 'निवेसिय' त्ति निवेशितानि ' जतम्मि ' त्ति अग्रेतनगाथायां संबन्ध', यन्त्रे-घाणके।

एगूण पंच सया, वाएण पराजिएण रुट्ठेणं।
जंतम्मि पावमइणा, छुन्नाछुन्ना अणुकमेणं ॥५८॥

एकोनानि पञ्च शतानि स्कन्दकाचार्यशिष्याणा, वादे पराजितेन रुष्टेन कलकाभिधद्विजातिना पापमतिना क्षुण्णाक्षुण्णा पिष्टा. अनुक्रमेण—परिपाट्या।

निम्मम निरहंकारा, नियमसरीरे वि अप्पडीबद्धा।
ते वि तह छुज्जमाणा, पडिवन्ना उत्तमं अट्ठं ॥ ५९ ॥

निर्म्ममा—ममत्वरहिता. निर्गताहंकारा —निजदेहेऽप्यप्रतिबद्धा —प्रतिबन्धरहिता तेऽपि, तथा—तेनैव प्रकारेण ' छुज्जमाण ' त्ति क्षुद्यमाना —पीड्यमाना' प्रतिपन्ना उत्तमार्थमिति।

दंडो त्ति विस्सुयजसो,पडिमा दसधारओ ठिओ धम्मं।
जउणावंके नयरे, सरेहि विद्धो य सुरगीओ ॥ ६० ॥

दण्ड इति नाम्ना मुनिर्विश्रुतयशा विख्यातकीर्त्तिः 'पडिमा दसधारउ' त्ति तृतीयसप्तरात्रिंदिवलक्षणदशमभिक्षुप्रतिमाधारकः स्थित प्रतिमां-कायोत्सर्गे यमुनावङ्के उद्याने नगरे-मथुरानाम्नि शरैर्बाणैः विद्धः । यमुनाराजा तत्पदातिभिश्च 'सुरगीउ' त्ति सुरैर्देवैर्गीतस्तद्गुणगानेन।

जिणवयणनिच्छियमई, निययसरीरे वि अप्पडीबद्धो।
सोऽवि तह विज्झमाणो, पडिवन्नो उत्तमं अट्ठं ॥६१॥

जिनवचने निश्चिता मतिर्यस्याऽसौ जिनवचननिश्चितमतिकः, तथा निजकशरीरेऽपि अप्रतिबद्ध —प्रतिबन्धमुक्तः सोऽपि तथा विध्यमानोऽपि प्रतिपन्न उत्तमार्थम्। भावार्थः कथागम्यः, स चायम्—" महुरा नयरी जउणावंक उज्जाणं अवरेण जउणाए कुप्परो दिन्नो। तथा दंडो अणगारो आयावेइ। सो रायाए नितेण दिट्ठो, तो रोसेण असिणा सीसं छिन्नं। अन्ने भणंति-फालेहिं आहओ पच्छा सव्वेहि वि मणूसेहिं कोवोदयं पइयस्स आवइकाले मओ सिद्धो, देवाण महिमा करणं, सक्कागमणं। पालएणं तस्स वि रन्नो अधिई जाया, वज्जेण, भासिओ सक्केण-जइ पव्वयसि तो मुच्चसि। पवयणथेराणं अंतिए अभिग्गहं गिण्हइ। जइ भिक्खागओ वा संभरामि ता न जिमेमि,जइ दूरे जिमिओ ता सेसगं पि विगिंचिम। एवं किर तेण भगवया एगमवि दिवसं नाहारियं। तस्स वि दव्वावई दंडयस्स भावावई एवं दढधम्मया कायव्वा।

आसी सुकोसलरिसी, चाउम्मासस्स पारणादिवसे।
ओरुहमाणो य नगे, खइओ छुहियाएँ वग्घीए ॥६२॥

आसीद्-अभूत्सुकोसलर्षिश्चातुर्मासस्य पारणकदिने 'ओरुहमाणो य नगे' त्ति पञ्चम्यर्थे सप्तमी नगादवतरन् 'खइओ छुहियाए' त्ति क्षोभया-बुभुक्षितया व्याघ्रया।

धीधणियबद्धकच्छो, पचक्खाणम्मि सुट्ठु आउत्तो।
सो वि तह खज्जमाणो, पडिवन्नो उत्तमं अट्ठं ॥ ६३ ॥

धृत्या-अन्तरङ्गहृदयावष्टम्भेन घनिता अत्यर्थं बद्धा कक्षा-प्रतिज्ञा येन स धृतिघनितबद्धकक्षः प्रत्याख्यानेऽनशनप्रतिपत्तिरूपे सुष्ठुतिशयेन युक्त —उपयोगवान् सोऽपि भगवान् तथा खाद्यमानः प्रतिपन्न उत्तमार्थम्।

उज्जेणी नयरीए, अवंतिनामेण विस्सुओ आसी।
पाउवगमणनिवन्नो, मुसाणमज्झेण एगंते ॥ ६४ ॥

उज्जयिन्या नगर्यामवन्तिनाम्ना विश्रुतः "अवन्तीसुकुमार" इति ख्यात आसीत्। पादप इवोपगमनमवस्थानं तेन पादपोपगमननिपन्न सुप्तः पादपोपगमननिपन्नः 'मुसाणमज्झेण' त्ति महाकालाख्यश्मशाने 'एगंते' त्ति निर्जनप्रदेशे।

तिन्नि रयणीउ चइउं, भालुंका उट्ठिया विकड्डंति।
सो वि तह खज्जमाणो, पडिवन्नो उत्तमं अट्ठं ॥ ६५ ॥

'तिन्नि रयणीउ' त्ति-त्रीन् रजनिप्रहरान् अवयवे समुदायोपचारात् 'चइउ' त्यक्त्वा स्वशरीरमित्यध्याहारः' अथवा-व्यापारयितुं-क्षारयितुं रुधिरादि गात्रिदिव,मार्गे च गच्छतोऽति सुकुमारत्वात् रुधिरस्रावात् तद्गन्धेनाकृष्टा 'मालुंका' श्टगाली 'उट्ठिया वि' त्ति उत्थिता 'कड्डंतीति' कर्षयति साऽन्वादि। यत उक्तम् 'लोहियगंधेणं सिवा आगमणं सिवा एगं पायं खाइ, एक्कं पि लूगाणि, पढमे जाणुगाणि, बीए ऊरू, तइए पोट्टं कालगओ, विस्तरेणावश्यकचूर्णेरवसेयम्। सोऽप्यवन्तिसुकुमारस्तथा खाद्यमानः प्रतिपन्न उत्तमार्थमिति।

जल्लमलपंकधारी, आहारो सीलसंजमगुणाणं।
आजीरणो य गीओ, कत्तियअज्जो सरवणम्मि ॥ ६६ ॥

याति लगति च जल्लो-रजोमात्रः मलः-कठिनीभूतः पङ्को-मल एव स्वेदेनार्द्रीभूतः जल्लश्च मलश्च पङ्कश्च तान् निष्प्रतिकर्मतया धारयतीत्येवंशीलो जल्लमलपङ्कधारी। पुनः किंभूतः, आधारः-स्थानं, केषां ?, शीलसंयमगुणानां शीलमष्टादशधा ब्रह्मचर्यम् अष्टादशसहस्रशीलाङ्गानि वा संयमः सप्तदशधा गुणाः सप्तविंशत्यनगारगुणाः। शीलं च संयमश्च गुणाश्च शीलसंयमगुणास्तेषाम् 'आजीरणो य' त्ति आजीरणश्च आजिं-संग्रामं ईरयति प्रेरयति क्षपयति जयतीति यावत्, आजीरणो राज्यावस्थायां शत्रुभिः सह श्रामण्ये कर्म्मभिः सहेति 'गीओ' त्ति गीतः प्रसिद्धः गीतार्थश्च 'आग्गीउ' त्ति पाठे प्राकृतत्वात् अग्ने राज्ञोऽयमाग्नेयः। यत आह-' रोहेडगम्मि सत्ती, हओ वि कोवेण अग्गिनिवदइओ। तं वेयणमहियासिय, पडिवन्नो उत्तमं अट्ठं ' ॥१॥ ' कत्तियअज्जो सरवणम्मि ' त्ति कार्त्तिकार्य इति नाम्ना सरवणसंनिवेशे यो महात्मा यात इति।

रोहेडगम्मि नयरे, आहारं फासुयं गवेसंतो।
कोवेण खंतिएणं, भिन्नो सत्तिप्पहारेण ॥ ६७ ॥

स च भगवान् रोहेडकपुरे प्रासुकमाहारं गवेषयन् राज्यावस्थापराद्धेन केनापि क्षत्रियेण कोपेन शक्तिप्रहारेण शक्तिप्रहरणविशेषेण भिन्नो-विदारितः।

ततोऽनन्तरं स महर्षिः किं कृतवानित्याह-

एगंते मणवाए, विच्छिन्ने थंडिले चयइ देहं।
सो वि तह विज्झमाणो, पडिवन्नो उत्तमं अट्ठं ॥६८॥

एकान्ते-दुष्टपशुश्वानश्वापदस्त्र्यादिवर्जिते अनापाते धर्मध्याने व्याघातकागन्तुकजनरहिते विस्तीर्णे-पुष्कले स्थण्डिले संस्तारककरणप्रायोग्ये भूखण्डे त्यजति-मुञ्चति व्युत्सृजति स्वयमेव देहं निजशरीरम्। 'चइय' इति पाठे त्यक्त्वा देहं सोऽपि महासत्त्वस्तथा विध्यमानस्तेन शक्त्या ताड्यमानः प्रतिपन्न उत्तमार्थम्। ( ' पाडली ' त्यादि गाथात्रयम् ' धम्मसीह ' शब्दे चतुर्थभागे २७३४ पृष्ठे गतम्।) ( चाणक्यः इङ्गिनीमरणं प्रतिपन्न इति ' इंगिणीमरण ' शब्दे द्वितीयभागे ५३२ पृष्ठे गतम्। )

अणुलोमपूयणाए, अह सो सत्तुंजओ डहइ देहं।
सो वि तह डज्झमाणो, पडिवन्नो उत्तमं अट्ठं ॥७२॥

अनुलोमा-अनुकूला पूजनाऽनुलोमपूजना तया अनुलोमपूजनया कृष्णागुरुप्रभृतिसुरभिधूपोत्क्षेपदाहव्याजेन गोवाटककरीपदहनतया सुबन्धुः दहति देहं शरीरम्, सोऽपि तथा दह्यमानः प्रतिपन्न उत्तमार्थम्।

एतत्सवादिगाथेयम्—

गुट्ठे पाओवगओ, सुबंधुणा गोमये पलिवियम्मि ।
डज्झंतो चाणक्को, पडिवन्नो उत्तमं अट्ठं ॥७३॥

अथ गाथात्रयेण संबन्धः ।

कायंदीनयरीए, राया नामेण अमयघोसो त्ति ।
तत्तो सुयस्स रज्जं, दाऊणं अह चरे धम्मं ॥७४॥

काकन्द्यां नगर्यां राजा नाम्ना "अमृतघोष" इति, ततः स राजा सुतस्य—पुत्रस्य राज्यं दत्त्वाऽथ चरेदनुतिष्ठेत् धर्मं चारित्रप्रतिपत्तिलक्षणम् ।

आहिंडिऊण वसुहं, सुत्तत्थविसारओ सुयरहस्सो ।
काइंदी चेव पुरिं, अह संपत्तो विगयसोगो ॥७५॥

आहिण्ड्य-परिभ्रम्य विहृत्येत्यर्थः वसुधां सूत्रार्थविशारदो-विचक्षणः, यत एव सूत्रार्थविशारदोऽत एव श्रुतरहस्यः श्रुतनिकषः काकन्दीमेव पुरीमथ विहरन्नुद्यतविहारेण संप्राप्तः विगतशोकः-परित्यक्तदैन्यभाव इति ।

नामेण चंडवेगो, अह सो पडिछिंदई तयं देहं ।
सो वि तह छिज्जमाणो, पडिवन्नो उत्तमं अट्ठं ॥७६॥

नाम्ना चण्डवेगः पूर्वोपराद्धो मन्त्री अन्यो वा कोऽपि सपत्नोऽथ स प्रत्यनीकस्तक राजर्षिदेहं-शरीरं प्रतिछिनत्ति-द्विधाकरोति । सोऽपि भगवानमृतघोषस्तथा छिद्यमानः प्रतिपन्न उत्तमार्थम् । ( संथा० ) ( अथ 'कोसंबी' त्यादिगाथा 'ललियघडा' शब्दे षष्ठभागे गता । )

जलमज्झे ओगाढा, नईएँ पूरेण निम्ममसरीरा ।
तह वि हु जलदहमज्झे, पडिवन्नो उत्तमं अट्ठं ॥७८॥

ततश्च तेषा भगवता पादपोपगमनिकावतामकाले वृष्टिप्रादुर्भावान्नदी पूरेणायाता । नदीपूरेण च महता वहता काष्ठशय्याऽस्य जलमध्ये ओगाढा-विक्षिप्ता ।तत्र च निर्ममः-शरीरेऽपि ममत्ववर्जितस्तथापि हु-स्फुट 'जलदहमज्झि' त्ति अकालागतनदीपूरेणोह्यमानो जलहृदं-समुद्रं प्रापितः । ततो जलहृदमध्येऽपि उत्तमार्थं प्रतिपन्नः ।

अथ गाथाचतुष्टयेन संबन्धः—

आसी कुणालनगरे, राया नामेण वेसमणदासो ।
तस्स अमच्चो रिट्ठो, मिच्छादिट्ठी अहिनिविट्ठो ॥७९॥

आसीद्-अभूत् कुणालनगरे—उज्जयिन्यामित्यर्थः , राजा नाम्ना वैश्रमणदासः।तस्य राज्ञः अमात्यो-मन्त्री रिष्टो-रिष्टाभिधानः मिथ्यादृष्टिर्जिनशासनप्रत्यनीकः अभिनिविष्टः—सर्वज्ञमतं प्रति द्वेषवान् समभूदित्यर्थः ।

तत्थ य मुणिवरवसभो,गणिपिडगधरो तहाऽऽसि आयरिओ।
नामेण उसभसेणो, सुयसागरपारगो धीरो ॥८०॥

तत्र-तस्यामुज्जयिन्यां मुनिवरवृषभः प्रधानाचार्यः गणिपिटकधरो द्वादशाङ्गधारी, तथा आसीदाचार्यः नाम्ना'उसभसेण ' त्ति—वृषभसेनः श्रुतसागरपारगः-सर्वश्रुताम्भोधितीरगामी धीरः-परीषहसहनसमर्थः ।

तस्साऽऽसी य गणहरो, नाणासुत्तत्थगहियपेयालो ।
नामेण सीहसेणो, वाएण पराजिओ रिट्ठो ॥ ८१ ॥

तस्य शिष्य आसीद्गणधरः आचार्यः, नानासूत्रार्थगृहीतपेयाल'—अनेकसूत्रार्थपरिज्ञानविचारः नाम्ना सिंहसेन , तेन च 'वाएणं' ति वादेन-स्वदर्शनस्थापनलक्षणेन पराजितः-पराभग्नः रिष्टः—रिष्टामात्यो वादे उपस्थित सन्नित्यर्थः ।

अह सो निराणुकंपो, अग्गिं दाऊण सुविहियपसंते ।
सो वि तह डज्झमाणो, पडिवन्नो उत्तमं अट्ठं ॥ ८२ ॥

अथ स रिष्टः पापिष्ठः 'निराणुकंपो' त्ति निर्गतघृणः 'अग्गिं दाऊण' ति अग्निं—वैश्वानरं दापयित्वा दत्त्वा वा सुविहिताना-साधूना पश्यत्युपाश्रयति वेति विहितोपाश्रय 'सुविहियपसुत्ते' त्ति पाठे सुविहितेऽप्यप्रसुप्तेऽपि दहतीत्यध्याहारः । सोऽपि सिंहसेनाचार्यस्तथा दह्यमानः प्रतिपन्न उत्तमार्थमिति ।

कुरुदत्तो वि कुमारो, संबलिफालि व्व अग्गिणा दड्ढो ।
सो वि तह डज्झमाणो, पडिवन्नो उत्तमं अट्ठं ॥ ८३ ॥

"कुरुदत्तः" कुरुदत्तनामाऽपि इभ्यपुत्रर्षिः 'सबलिफालि व्व' त्ति शाल्मली वृक्षविशेषस्तस्य फालिवत्-तरय शाखावत् अग्निना दग्धः, सा हि निःसारत्वादग्निना झटित्येव दह्यते । सोऽपि तथा दह्यमानः प्रतिपन्न उत्तमार्थम् । अस्य भावार्थोऽपि दर्श्यते । तथाहि-"हत्थिणाउरे नयरे कुरुदत्तसुओ नाम इब्भपुत्तो,स तहारूवाणं थेराणं अंते पव्वइओ। बहुस्सुओ समणो कयाइ एगल्लविहारं पडिमं पडिवन्नो । सो साएयस्स नयरस्स अदूरसामंते आगओ। विहरंतो चरिमा ओगाढा पोरिसी। तत्थेव पडिमं ठिओ चच्चरे, तत्थ य एमाओ गावीओ हरियाओ तेणेहिं । तेण ओगासेण नीयाओ जाव मग्गमाणा उट्ठिया आगया, दिट्ठो साहू । तत्थ दुवे पथा । पच्छा ते न जाणंति कयरेण नीयाओ । ते साहु पुच्छंति सो भगवं न वाहरइ । तेहिं पउट्ठेहिं सीसे मट्टिया पालिं बंधेऊण चियगाओ अंगारे घित्तूण सीसे छूढा । तेण भगवया सम्ममहियासियं ।" ( 'आसी' इत्यादि गाथा ' चिलाइ पुत्त ' शब्दे तृतीयभागे ११६२ पृष्ठे गता । )

आसी गयसुकुमालो, अल्लयचम्मं व कीलयसएहिं ।
धरणियले उव्विद्धो, तेण वि आराहियं मरणं ॥८५॥

आसीद्गजसुकुमाल इभ्यपुत्र ,कुरुदत्तन्यायेन गृहीतव्रतः सकलाधीतश्रुतः एकल्लविहारप्रतिमाप्रतिपन्न कायोत्सर्गस्थस्तेनैव प्रकारेण कुटिकैः पृष्टो गोगमनमार्गो न गदितवानिति गजसुकुमारस्य शरीरमार्द्रचर्मवत्कीलकशतैस्ताडयित्वा धरणितले महीपीठे उद्विद्ध , तेनापि भगवता मरणमाराधित प्राणसमाप्तिं यावच्च धर्मध्यानवान् जात इति तात्पर्यार्थः ।

मंखलिणा वि अरहओ, सीसा तेयस्स उग्गया दड्ढा ।
ते वि तह डज्झमाणा, पडिवन्ना उत्तमं अट्ठं ॥ ८६ ॥

'मंखलिणा वि' त्ति-पुत्रशब्दलोपान्मङ्खलिपुत्रेणापि गोशालकेन अर्हतो महावीरशिष्यौ सुनक्षत्रसर्वानुभूती ' तेयस्स उग्गय ' त्ति तेजसस्तेजोलेश्याया ' उग्गया दड्ढा ' त्ति उग्रतया—तीव्रतया दग्धौ—भस्मीकृतौ, तौ तथा दह्यमानौ प्रतिपन्नावुत्तमार्थमिति, इत्थं दृष्टान्ता यथा अभिहिता एव ।

शास्त्रप्रसिद्धत्वान्न दर्शिताः पर्यायमात्रनिदर्शने हेतुत्वात्प्रारम्भस्य।

अथ गाथाद्वयेन संबन्धः।

परिजाणइ त्तिगुत्तो , जावज्जीवाएँ तिविहमाहारं।
संघसमवायमज्झे, सागारं गुरुनिओगेणं ॥ ८७ ॥
अहवा समाहिहेउं, करेइ सो पाणगस्स आहारं।
तो पाणगं पि पच्छा, वोसिरइ मुणी जहाकालं ॥८८॥

परिजानाति-ज्ञपरिज्ञया प्रत्याख्याति त्रिगुप्तो-मनोवाक्कायगुप्त 'जावज्जीवाए' त्ति यावज्जीवं सर्वमपि चतुर्विधमप्याहारं, क्व प्रत्याख्याति ?-गुरुसमीपे। कथमिव प्रत्याख्यातीत्याह-'भवचरिमं पच्चक्खामि चउव्विहं पि आहारं, असणं पाणं खाइमं साइमं अन्नत्थऽणाभोगेणं सहसागारेणं वोसिरामि' किमेकाक्येव प्रत्याख्याति उत कानपि साक्षिणः कृत्वेत्याह-संघसमवायमध्ये-संघसभामध्ये 'सागारं गुरुनिओगेणं'ति एतत्पदमग्रेतनगाथाया संबध्यते। ततः किमित्याह-अथवा समाधिहेतुं-समाधिनिमित्तं 'सागारं गुरुनिओगेणं ति' एतत्पदम् आकारचतुष्टययुक्तं तदेवाह-'भवचरिमं करेमि' कोऽर्थः गुरुनियोगेन-गुर्वाज्ञया स पानकस्याहारे प्रथमतः पूर्वमुक्तकल करोति ' तो पाणगं पि ' त्ति ततोऽनन्तरं पानकमपि पश्चात्पर्यन्तसमये व्युत्सृजति , यथाकालं-यथावसरं ज्ञात्वा-' अह कयमंजलिपणओ भणइ ' त्ति पदमुत्कालितमेव। अथ क्षपक कृताञ्जलि प्राकृतत्वान्मकारागमश्च रचिताञ्जलिकोरकः प्रणतः सन् भणति।

यच्च भणति तदाह—

खामेइ सव्वसंघं, संवेगं सेसगाण कुणमाणो।
मणवइकाएहिँ पुरा, कयकारियअणुमए वाऽवि॥८९॥

क्षमयति-मर्षयति सर्वसंघ-साधुसाध्वीश्रावकश्राविकारूपं कुर्वन् क्षमयति 'संवेग'ति संवेगं मोक्षाभिलापम्। यत आह-' सिद्धी य देवलोगो सुकुलुप्पत्ती य होइ संवेगो ' शिष्यकाणामपि मुनीना कुर्वाण कथं क्षमयति ' मणवइजोगेहि पुरा ' इति-मनोवाग्योगाभ्यामुपलक्षणत्वात्काययोगेन च पुर ' त्ति पूर्वकृतानपराधान् न केवलं मनोवाक्काययोगैः 'कयकारियअणुमए वाऽवि' त्ति तृतीयाविभक्तिबहुवचनलोपात् कृतकारितानुमतिभि अपिवाशब्दस्य समुच्चयार्थत्वात् क्षमयत्यपीत्यर्थ।

सव्वे अवराहपया, एस खमावेमि अज्ज निस्सल्लो।
अम्मापिउणो सरिसा, सव्वे वि खमंतु मे जीवा॥९०॥

' सव्वे अवराहपय ' त्ति-प्राकृतत्वात्पुंलिङ्गनिर्देश , सर्वाण्यपराधपदानि आशातनारूपाणि एप-अहं ' खमावेमि ' क्षमयामि पूर्वगाथाया संबन्धः क्षमयतीत्युक्तम्। तत्र संघस्य मुख्यो गुरु , तद्विषयाश्च त्रयस्त्रिंशदाशातना ताश्च द्वादशावर्त्तकृतकर्मपूर्वं क्षमयितव्या ,अतो भण्यते-अपराधक्षामणां कुर्वन् रजोहरणोपरिन्यस्तमस्तको विनेयो भणति-' खामेमी त्यादि दैवसिकव्यतिक्रममवश्यकरणीययोगविराधनारूपमपराधम् , अवसिए' त्यादि 'जं मे अइयारो कओ'इत्येतत्पर्यन्तं स्वकायाद्यर्चनाचार्यानिवेदनपरमालोचनार्हं प्रायश्चित्तसूचकं सूत्रम् 'तस्स खमासमणो इत्यादिकं प्रतिक्रमणार्हप्रायश्चित्ताभिधायकं व्युत्सृजाम्यात्मानं दुष्टकर्मकारिणं तदनुमतित्यागेन च। अथ त्रयस्त्रिंशदाशातना दर्श्यन्ते—

" पुरओ पक्खासन्ने, गंता चिट्ठण निसीयणागमणे।
आलोयण पडिसुणणे, पुव्वालवणे य आलोए॥ १॥
तह उवदंसनिमंतण, खद्धयणे तहा अपडिसुणणे।
खद्धत्ति य तत्थ गए, किं तु मत जायनो सुमणे॥ २॥
णो सरसि कहं छित्ता, परिसंभित्ता अणुट्ठिया य कहा।
संथारपायघट्टण, चिट्ठुच्च समासणे यावि॥३॥"

प्रथमगाथायां चतुर्दश, द्वितीयायामेकादश, तृतीयायामष्टौ चेति। तत्र गुरोः पुरतो निष्कारणं गमनं शिष्यस्य १ पार्श्वाभ्यामपि गमनं २ पृष्ठतोऽप्यासन्नगुरुगमनं निःश्वासक्षुत् (च) श्लेष्मपातादिप्रसङ्गात् ३ एवं पुरतः४पार्श्वतः५ पृष्ठतश्च स्थानम्६एवं निषदनम् ६ आचार्येण सहोच्चारभूमिं गतस्याचार्यात्प्रथममेवागमनम्१०आचार्येण सह बहिर्गतस्य शिष्यस्य पुनर्निवृत्तस्याचार्यात्प्रथममेव गमनागमनलोचनम् , ११ तत्राचार्यः कः स्वपिति जागर्त्ति वेति गुरोः पृच्छतोऽपि जाग्रतापि शिष्येणाप्रतिश्रवणम् १२ गुरोरालापनीयस्य शिष्येण प्रथममालापनम् १३ भिक्षामानीय पूर्वं शैक्षस्य पुरत आलोच्य पश्चाद् गुरोरालोचनम् १४ भिक्षामानीय प्रथममेव शिष्यस्योपदर्श्य पश्चाद् गुरोर्दर्शनम् १५ भिक्षामानीय शैक्ष निमन्त्र्य गुरोर्निमन्त्रणम् ,१६गुरुमनापृच्छ्य शैक्षाणां यथारुचि प्रभूताहारदानम् ,१७शैक्षेण भिक्षामानीय गुरवे यत्किंचिद्धा स्वयं स्निग्धमधुरमनोज्ञाहारशाकादीनां वर्णरसगन्धरसस्पर्शवतां च द्रव्याणा स्वयमुपभोगः१८दिवापि अप्रतिश्रवणम् १९ गुरोः पुरतो बहिः कर्कशस्योच्चैःस्वरस्य च विशेषेणाभणनम् २० गुरोर्व्याहरति यत्र तत्र स्थितेन शयितेन वा शिष्येण प्रतिवचनदानम् ,आहूते बहिः सन्निहितीभूय मस्तकेन वन्दे इति वदता गुरुवच श्रोतव्यम्२१गुरुणा आहूतशिष्यस्य किमिति वचनम् २२ गुरु प्रति शिष्यस्य त्वंकारः, २३ गुरुणा ग्लानादिवैयावृत्यादि कुर्वित्यादिष्टस्त्वमेव किं न कुरुषे इति त्वमलस इत्युक्ते त्वमप्यलस इति च शिष्यस्य जातवचनम् २४ गुरुः धर्म्मं कथयति—साधूक्तं भगवद्भिरिति अननुमोदमानस्यापहतमनस्त्वम् २५ न स्मरसि त्वमेनमर्थं नायमर्थः संभवतीति शिष्यस्य वचनम् २६ न एवमेतदिति अन्तराले शिष्यस्य वचनम् २७ इयं भिक्षावेला-भोजनवेला इत्यादिना शिष्येण पर्षद्भेदनम् , २८ आचार्येण धर्म्मकथां कृतायामनुत्थितायामेव पर्षदि स्वस्य पाटवादिज्ञापनाय शिष्येण सविशेषधर्म्मकथनम् २९ गुरौ धर्म्मकथां कथयिष्यामीति शिष्येण कथनं,वा गुरो शय्यासंस्तारकादिकस्य पादेन घट्टनमननुज्ञाप्य हस्तेन स्पर्शनं घट्टयित्वा स्पृष्ट्वा वा अक्षामणम् ३०गुरोः शय्यासंस्तारकादौ स्थानं निषदनं शयनं वेति ३१ गुरो पुरत उच्चासने शिष्यस्योपवेशनम् ३२ समासने गुरोरुपवेशनम् ३३ एतास्तावद् गुरुविषया 'जंवा' इत्यादिकाः पुनश्चतुर्दश केवलस्यैव सूत्रस्य विषया अपि सामान्यतस्त्रयस्त्रिंशत् क्षमयति इत्यमुना प्रकारेणाचार्योपाध्यायसाधुसाध्वीश्रावकश्राविकारूप चतुर्विध सङ्घं मनोवाक्कायकृतकारितानुमतिभि सर्वापराधपदानि क्षमयामि-मर्षयामि एप प्रत्यक्षवर्त्ती अद्यास्मिन्नहनि निःशल्यो-मायामिथ्यादर्शननिदानशल्य-

रहितः कृताऽऽलोचन इत्यर्थः। (अतः परम् 'अम्मापिउणो सरिस' त्ति ( संथा० ) पदव्याख्या 'जीव' शब्दे चतुर्थभागे १५३६ पृष्ठे गता।)

धीरपुरिसपन्नत्तं, सप्पुरिसनिसेवियं परमघोरं।
धन्ना सिलायलगया, साहिंती उत्तमं अट्ठं ॥ ६१ ॥

अथ गुरवः क्षपकमनुशासयन्ति, हे वत्स ! धीरपुरुषप्रज्ञप्तं तीर्थंकरगणधरादिदेशितं सत्पुरुषनिषेवितं पुण्डरीकादिमहापुरुषाचीर्णं परमघोरं क्लीवैर्दुरनुचरं धन्या एव शालिभद्रादिन्यायेन साधयन्ति निष्ठां प्रापयन्ति उत्तमार्थं विशिष्टाराधनम्।

तामेवानुशासनां चतुर्गतिकसांसारिकपरिभ्रमणं दर्शयति—

नारयगइ-तिरियगइ-माणुसदेवत्तणे वसंतेणं।
जं पत्तं सुहदुक्खं, तं अणुचिंते अणन्नमणो ॥ ६२ ॥

नरकगतिश्च तिर्यग्गतिश्च मानुषाश्च देवाश्च नरकगतितिर्यग्गतिमानुषदेवास्तेषां भावो नरकगतितिर्यग्गतिमानुषदेवत्वं तस्मिन्नरकगतितिर्यग्गतिमानुषदेवत्वे वसता सता यत्प्राप्तसुखं दुःखं च सुखदुःखं तत् अनुचिन्तय-स्मर ' अणन्नमणो ' त्ति एकाग्रचित्त इत्यर्थः ।

नरएसु वेयणाओ, अणोवमाओ असायबहुलाओ।
कायनिमित्तं पत्तो, अणंतखुत्तो बहुविहाओ ॥ ६३ ॥

नरकेषु वेदनाः शीतोष्णदशक्षुत्पिपासादाहज्वरशोकभयकण्डूपारवश्यरूपा दशप्रकारा । यत उक्तं च " अच्छिनिमीलणमित्तं, नऽत्थि सुहं दुक्खमेव अणुबद्धं । नरए नेरइयाणं, दुक्खसयाइं अविस्साम ॥ १ ॥ अइसीयं अइउन्हं, अइतन्हा अइखुहा अइभयं च । नरए नेरइयाणं, वेयणसयसंपगाढाए ॥२॥' 'अणोवमाओ' त्ति अनुपमा-उपमातीता असातबहुला-दुःखप्रचुराः ' कायनिमित्तं पत्तो ' त्ति वैक्रियादेः शरीरयोगात्प्राप्ता बहुविधाः तप्तत्रपुपानतप्तायोमयस्त्रीपुत्तलिकासमालिङ्गनकूटशाल्मलिशिखरारोपणचरणशिरःसमाकर्षणायोघनघातनवज्रमयमुद्गरनिकरप्रहरणवज्रविनिर्मितनिशितवास्यादितक्षणक्षतक्षारोष्णतैलनिक्षेपणकुन्तादिप्रोतनभ्राष्ट्रभर्जनयन्त्रपीडनक्रकचपाटनवैक्रियानककङ्कोलूकनकुलसर्पवृश्चिकश्वमार्जारव्याघ्रसिंहादिकदर्थनाकदम्बपुष्पाकारवज्रवालुकावतारणासिपत्रवनप्रवेशनवैतरणीनदीप्लावनपरस्परयोधनादिका वेदनाः नानाप्रकाराः शरीरभावात् । अशरीरिणा सिद्धाना सर्वथाऽपि तासामभावादिति । अथ कियतीर्वेलास्ताः प्राप्ता इत्याह—' अणंतखुत्तो ' त्ति—अनन्तकृ(त्वा)त्वः—अनन्तवेला इत्यर्थः ।

देवत्ते मणुयत्ते, पराभिओगत्तणं उवगएणं।
दुक्खपरिकिलेसकरिं, अणंतखुत्तो समणुभूओ ॥६४॥

न केवलं नरकत्वे एव वेदना समनुभूता , किं तु देवत्वमानुषत्वेऽपि समनुभूताः। देवत्वे तावदीर्ष्याविषादपरपरिभवप्रेक्षताभियोगिकत्ववज्रताडनादिका, मनुजत्वे मण्टकुण्टटुण्टपङ्गुबधिरान्धदुःस्वरदुर्भगहीनदीनदारिद्र्योपद्रवरोगशोकेष्टवियोगानिष्टसंप्रयोगजन्मजरामरणादिका पराभियोगकत्वमुपगतेन प्रादुर्भूताः,'दुक्खपरिकिलेसकरिं' त्ति दुःखपरिक्लेशकरीर्वेदनाः 'समणुभूओ' त्ति समनुभवति स्म समनुभूतः 'अणंतखुत्तो' त्ति अनन्तकृत्वोऽनन्तेषु भवेष्वित्यर्थः ।

तिरियगइं अणुपत्तो , भीममहावेयणा अणेगविहा।
जम्मणमरणरहट्टे , अणंतखुत्तो परिब्भमिओ ॥६५॥

तिर्यग्गतिमनुप्राप्तः भीमाश्च-भयानकाः महती वेदना-महावेदनाः भीमाश्च ता महावेदनाश्च भीममहावेदना—वधबन्धदहनाङ्कनिर्वृषणगलकर्त्तनकर्णच्छेदपुच्छच्छेदतृष्णाक्षुधाभारवहनादिकाः 'अणोयारे' त्ति अनर्वाक् अलब्धपारे अपारपर्यन्ते जन्ममरणारघट्टे संसारेऽनन्तकृत्वः परिभ्रान्त -पर्यटित इत्यर्थः ।

सुविहिय ! अईयकाले, अणंतकालं तु आगयगएणं।
जम्मणमरणमणंतं , अणंतखुत्तो समणुभूओ ॥६६॥

हे सुविहित! अस्मिन्संसारे चातुर्गतिकेऽतीते काले व्यतीताद्धायाम् अनन्तकालं ' तु ' त्ति अपिशब्दार्थे, ततोऽयमर्थो न केवलं संख्यातं कालं किं त्वनन्तकालमपि आगतगतं काले कृत्वा गमनेन पुनः परिभ्रमणेनेत्यर्थः,'जम्मणमरणमणंतं'ति-प्राकृतत्वादेकवचनं जन्ममरणान्यनन्तानि । एकपरिपाट्याऽपि अनन्तानि भवन्तीत्याह—'अणतखुत्तो' त्ति—अनन्तान्यपि । अनन्ता परिपाटी कथम् ?, निगोदेष्वनन्तकालमुषित्वा ततस्त्रसत्वं प्राप्य पुनः तेष्वेवानन्तकालमुषित्वा एवमनयैव परिपाट्या अनन्तकृत्वोऽपि अनन्तानीत्थमनुभूत इत्यर्थः।

नऽत्थि भयं मरणसमं, जम्मणसरिसं न विज्जए दुक्खं।
जम्मणमरणायंकं, छिंद ममत्तं सरीराओ ॥ ६७ ॥

नास्ति भयं मरणसमं—मृत्युतुल्यं , यत आह-' सव्वे जीवा पियाउया अप्पियवहा (सुयसाया) दुक्खपडिकूला । सव्वे जीविउकामा सव्वेसिं जीवियं पियं ति ॥ १ ॥ किं च—" तृणायाऽपि न मन्यन्ते, सुतदारार्थसंपदः । जीवितार्थे नरास्तेन , तेषामायुरतिप्रियम् ॥ १ ॥ " तथा जन्मसदृशं दुःखं न विद्यते । यत -" सूईहिं अग्गिवन्नाहिं , संभिन्नस्स य जंतुणो । जावइयं गोयमा । दुक्खं , गब्भे अट्ठगुणं तओ ॥ १ ॥ गब्भाओ निस्सरन्तस्स , जोणीजंतनिपीलणे । सयसाहस्सियं दुक्खं, कोडाकोडीगुणं पि वा ॥ २ ॥" जन्ममरणातङ्कं जन्ममरणे आतङ्कहेतुत्वात् ममत्वं छिन्धि-नाशय ममत्वं शरीरात् , शरीरे ममत्ववतानि भवन्तीत्यर्थः ।

अन्यच्च किं भावय—

अन्नं इमं सरीरं, अन्नो जीवो त्ति निच्छयमईउ ।
दुक्खपरिकिलेसकरिं, छिंद ममत्तं सरीराओ ॥६८॥

अन्यदेतच्छरीरम् अन्यश्च जीवः शरीराद् व्यतिरिक्त इति निश्चयमतिकः सन् दुःखपरिक्लेशकारि ' ममत्त ' ति प्राकृतत्वान्ममत्वं मूर्च्छा छिन्धि-नाशयेत्यर्थः ।

यत कारणात्—

जावंति केइ दुक्खा, सारीरा माणसा य संसारे ।
पत्तो अणंतखुत्तो, कायस्स ममत्तदोसेणं ॥ ६९ ॥

यावन्तिकानि च दुःखानि शारीराणि मानसानि च संसारे वर्त्तन्ते तानि प्रक्षतानि प्राकृतत्वाल्लिङ्गनिर्देशः सर्वत्र अनन्तकृत्व. कायस्य—देहस्य ममत्वभावेनेत्यर्थः।

तम्हा सरीरमाई, सब्भितरबाहिरं निरविसेसं।
छिंद ममत्तं सुविहिय!, जइ इच्छसि उत्तमं अट्ठं ॥१००॥

तस्मात्-कारणात् शरीरादिना सहाभ्यन्तरबाह्येन वर्त्तते इति सबाह्याभ्यन्तरम्।तत्राभ्यन्तरं-कषायनिदानादि बाह्यमुपधिस्वजनपरिवारादिकं निरविशेषं—परिपूर्णं छिन्धि—विदारय ममत्वं-प्रतिबन्ध हे सुविहित! उत्कृष्टाराधन! यदि इच्छसि—वाञ्छसि मोक्षमिति तात्पर्यार्थः।

विशेषतः पुनः उत्तमार्थे संघक्षामणामाह—

जगआहारो संघो, सव्वो मह खमउ निरविसेसं पि।
अहमवि खमामि सुद्धो, गुणसंघायस्स संघस्स ॥१०१॥

जगतो—लोकस्य दुर्गतौ पततः आधारः-आलम्बनं संघ, संघप्रसादतो दुर्गतिपातो न भवतीत्यर्थः, सर्वोऽपि साधुसाध्वीश्रावकश्राविकालक्षणः 'मह खमउ' त्ति मम क्षमय निरविशेषमप्यपराधजातम्। अहमपि क्षमामि—क्षमां करोमि गुणसंघातस्य—गुणसमुदायस्य सत्कमपराधजातमित्यर्थः।

पूर्वमपि संघक्षामणा सर्वजीवराशिक्षामणा च कृतेति पुनरपि किंचित्सनामग्राहमाह—

आयरिय उवज्झाए, सीसे साहम्मिए कुलगणे य।
जे मे कया कसाया,सव्वे तिविहेण खामेमि ॥१०२॥
सव्वस्स समणसंघ-स्स भगवओ अंजलिं करिय सीसे।
सव्वं खमावइत्ता,खमामि सव्वस्स अहयं पि ॥१०३॥
सव्वस्स जीवरासि-स्स भावओ धम्मो निहियनियचित्ते।
सव्वं खमावइत्ता, अहयं पि खमामि सव्वेसिं ॥१०४॥

गाथात्रयमपि प्रतिक्रमणाध्ययनप्रसिद्धत्वान्न विवृतम्।

इइ खामियाइयारो, अणुत्तरं तवसमाहिमारूढो।
पप्फोडंतो विहरइ, बहुभवबाहाकयं कम्मं ॥१०५॥

'इति' सर्वसंघसर्वजीवराशिक्षामितातिचार सन् अनुत्तरां—प्रधाना तप समाधिं 'नो इह लोगट्ठयाए तवमहिट्ठिज्जा, नो परलोगट्ठयाए तवमहिट्ठिज्जा, नो कित्तिवण्णसद्दसिलोगट्ठयाए तवमहिट्ठिज्जा,नन्नत्थ निज्जरट्ठयाए तवमहिट्ठिज्जा इत्येवरूपां चतुर्विधामपि तपसि परमसमाधिमारूढ उत्कृष्टाराधनाकरणे बद्धकक्ष प्रस्फोटयन्—विनाशयन् विहरति—वर्त्तते। किमित्यत आह—'बहुभवबाहाकयं कम्मं' ति—बहवश्च ते भवाश्च बहुभवास्तेषां बाधा-निरन्तरं परिभ्रमणेन संकटं बहुभवबाधा बहुभवबाधया कृतं किं कर्म्म तत्प्रस्फोटयति-विनाशयति इत्यर्थः।

तदेव कर्म्मस्फोटनं विशेषेण विवृणोति—

जं बद्धमसंखेज्जा-हि असुहभवसयसहस्सकोडीए।
एगसमएण वि हणइ, संथारं आरुहंतो य ॥१०६॥

यत्कर्म्म बद्धम् असंख्याताभिरशुभभवशतसहस्रकोटिभिः 'असुह' त्ति विभक्तिलोपाद्वा अशुभं पापप्रकृतिरूपं वा तत् कर्म्म एकसमयेनापि हन्ति संस्तारकमारुहन्नित्यर्थः।

इहभवविहारिणो सा, विग्घंकरीवेयणा समुट्ठेइ।
तीसे विज्झवणाए, अणुसट्ठिं दिंति निज्जवगा ॥१०७॥

इत्थम्—अमुना प्रकारेण तपोविहारिण.—अनशनरूपतपश्चारिणः सा पूर्ववर्णितचतुर्गतिकभवभाविनी विघ्नकरी धर्म्मध्यानविघातकवेदना समुत्तिष्ठति-प्रादुर्भवति। ततस्तस्या वेदनाया विध्मापनार्थम्-उपशमनार्थमनुशास्ति 'दिंति' त्ति ददति निर्यामका—गीतार्थगुरव इत्यर्थ।

केनोल्लेखेन ते ददतीत्याह—

जइ ताव ते मुणिवरा, आरोवियवित्थरा अपरिकम्मा।
गिरिपब्भार विलग्गा, बहुसावयसंकडं भीमं ॥ १०८ ॥

यदि तावत्ते मुनिवृषभाः सुकोशलादयः 'आरोवियवित्थर' त्ति-आरोपितो-नियोजित आत्मनि आराधनाविस्तरो यैस्ते आरोपितविस्तरा. 'अपरिकम्म' त्ति सर्वथा शरीरपरिकर्म्मणा वर्जितत्वादपरिकर्माण. 'गिरिपब्भार' त्ति प्राकृतत्वाद् द्वितीयैकवचनलोपात् गिरिप्राग्भारं पर्वतनितम्बं विलग्नाः कथंभूतमित्याह-बहूनि च तानि स्वापदशतानि च सिंहव्याघ्रादीनि तैः संकटं व्याप्तमत एव भीमं-भीषणाकारम्।

तत्र किं कुर्व्वन्तीत्याह—

धीधणियबद्धकच्छा, अणुत्तरविहारिणो समक्खाया।
सावयदाढगया वि हु, साहिंती उत्तमं अट्ठं ॥ १०९ ॥

यदि ते एकाकिनोऽपि असहाया अपि 'धीधणियबद्धकच्छ' त्ति धृत्या-चित्तस्वास्थ्येन धनितम्-अत्यर्थं बद्धा-कृता आराधनारूपा कक्षा-प्रतिज्ञा परिकरो वा यैस्ते धृतधनितबद्धकक्षाः, अत एव जिनशासने ते अनुत्तरविहारिण समाख्याता.-कथिता. पूर्वमुनिभिरिति अध्याहारः। 'सावयदाढगया वि हु' त्ति श्वापददंष्ट्रोपगता अपि व्याघ्रादिश्वापददंष्ट्रया निष्ठुरपीडापरिगता अपि साधयन्ति-निष्पादयन्ति उत्तमार्थं न ध्यानात् भ्रश्यन्ते, वेदनाव्याप्ता अपि निर्यामकविवर्जिता अपीत्यर्थः।

किं पुण अणगारसहा-यगेहिं संगयमणेहि धीरेहिं।
न हु नित्थरिज्जइ इमो, संथारो उत्तिमट्ठम्मि ॥११०॥

हे क्षपक! यदि तावत्तैरपि दुर्गोपसर्गप्राप्तैरप्यसहायैरप्ययं संस्तारको निस्तीर्णः किं पुनर्युष्मादृशैरनगारसहायकैर्निर्यामकगुरुयुक्तैः धीरैर्बुद्धिमद्भिः संगतमनोभिर्विशेषोपसर्गसंसर्गरहितत्वेन सिद्धान्तं श्रुत्वा, निर्यामक गुरुमुखनि.सृततया संगतं युक्तमार्त्तरौद्रध्यानरहितं मनो येषा ते संगतमनसस्तैः संगतमनोभि.-निश्चलचित्तैः, न हु-नैव 'नित्थरिज्जइ इमो' त्ति निस्तीर्यते-पर्यन्ते प्राप्यते 'इमो' अयं संस्तारक काका अक्षरयोजना, किं न निस्तीर्यते अपि तु निस्तीर्यत एव उत्तमार्थे-उत्तमार्थविषये इति।

उच्छूढसरीरघरा, अन्नो जीवो सरीरमन्नं ति।
धम्मस्स कारणे सुवि-हिया सरीरं पि छड्डंति ॥१११॥

उज्झितं त्यक्तं शरीरगृहं यैस्ते उज्झितशरीरगृहाः-परित्यक्तदेहभवनाः,केनोल्लेखनैवंविधा इत्याह-' अन्नो जीवो सरीरमन्नंति ' त्ति-अन्यः शुभाशुभफलभोक्ता जीवस्तद्व्यतिरिक्तं शरीरमन्यदिति चिन्तय, मा शरीरप्रतिबन्धं कुरु भाटकगृहकल्पत्वाच्छरीरस्य । यतो धर्मस्य कारणे-धर्मनिमित्तं सुविहिता' शरीरमप्यास्तां पुत्रकलत्रादि 'छड्डुंति' त्ति त्यजन्तीत्यर्थः ।

अथ गुरुरेव क्षपकस्य संस्तारगुणमाह—

पोराण य पच्चन्ना, याओ अहियासिऊण वियणाओ ।
कम्मकलंकलवल्ली, विहुणइ संथारमारूढो ॥ ११२ ॥

पुरातना-रोगज्वरादिवेदना.—प्रत्युत्पन्ना.-वर्त्तमाना. क्षुत्पिपासादिकाः देवमनुजतिर्यक्कृतोपसर्गरूपा वा अधिरुह्य सम्यक् सोढा 'कम्मकलकलवल्ली' ति कर्मैव कल-कश्मलमशुभवस्तु तस्य वल्लीव वल्ली—तत्संतान. कर्मकलङ्कलवल्लीः श्रेणी' कर्मतापन्ना ' विहणइ ' त्ति संस्तारकमारूढ. क्षपको यो यः अन्योऽपि य एवंविधो हस्त्यारूढो भवति सोऽपि वल्लीरङ्कुशेन त्रोटयति ।

विशेषेण वेदनासहनस्य गुणमाह—

जं अन्नाणी कम्मं, खवेइ बहुयाहि वासकोडीहिं ।
तं नाणी तिहिँ गुत्तो, खवेइ ऊसासमित्तेणं ॥ ११३ ॥

प्रकटार्थैव ।

एतदेव पुनर्व्यक्तीकरोति—

अट्ठविहकम्ममूलं, बहुएहिँ भवेहिँ अज्जियं पावं ।
तन्नाणी तिहिँ गुत्तो, खवेइ ऊसासमित्तेणं ॥११४॥

अष्टप्रकारकर्ममूलमष्टकर्महेतुकं बहुभिर्भवैरर्जित—संचितं पापं ज्ञानी—ज्ञानवान् त्रिभिर्मनोवाक्कायगुप्त. क्षिपति-प्रेरयति उच्छ्वासमात्रेणापि कालेन ।

अथ संस्तारकरणस्य फलमाह—

एवँ मरिऊण धीरा, संथारम्मि उ गुरुप्पसत्थम्मि ।
तइयभवेण व तेण व.सिज्झित्ता खीणकम्मरया ॥११५॥

एवम्-अमुना प्रकारेण मृत्वा-प्राणत्यागं कृत्वा धीरा.-सुभटा. 'संथारम्मि उ' त्ति संस्तारके गुरौ-महति 'पसत्थम्मि' त्ति गुणैः सर्वोत्तमै प्रशस्ते, तृतीयभवेन, सामान्याराधनाया तेनैव भवेनोत्कृष्टाराधनाया कृताया ' सिज्झिज्ज ' त्ति सिद्धार्थाः—निष्ठितार्था भवेयु. क्षीणकर्मरजसः—क्षीणकर्मकचवरा इत्यर्थ' । ( सथा० ) ( सघस्य मुकुटोपमया वर्णनं ' सघ ' शब्देऽस्मिन्नेव भागे ७८ पृष्ठे गतम् । ) अथ संस्तारकग्रन्थमुपसंजिहीर्षुर्ग्रन्थकारश्चित्रमहर्षिदृष्टान्तमुपदर्शयन् गाथात्रयमाह—यथा चित्रेण भवगता ब्रह्मदत्तपूर्वभवभ्रात्रा प्रधानाराधना विहिता तथैव विधेयेति । कथंभूतेन तेन विहितेत्याह-' डज्झतेण व ' त्ति दह्यमानेनेव दह्यमानेन क ग्रीष्मे-घर्मर्त्तौ ' कालसिलाए ' त्ति कालशिलायां मरणार्थे पादपोपगमनशिलायाम् । कथभूताया ' कविल्लभूयाए' त्ति कविल्लभूताया, कविल्लक-मण्डकपचनिका तद्वत्तप्तायामित्याह-'सूरेण व' त्ति सूर्येण वा भास्करेण, कथंभूतेन किरणसहस्सपयंडेण ' त्ति दीर्घत्वं प्राकृतप्रभवं, किरणसहस्रप्रचण्डेन, तथा ग्रीष्मे उपलक्षणत्वाच्छिशिरर्तौ—महाहिमपाते चन्द्रेणेवातिशीतलेश्याया दाहकत्वेन मनागपि तप्तायमिति शीतयुक्तायामित्यर्थ । अथवा ' सूरेण व चंदेण व ' त्ति विशेषण साधोरेव । कथंभूतेन चित्रेण ? सूर्येणेव किरणसहस्रप्रचण्डेन तपस्तेजसा विराजमानेन, चन्द्रेणेव सौम्यचन्द्रिकाभ्यधिकेन मनोवाक्कायसौम्यतासुभगेन कोपादिपरिहारतोऽतिशीतलेश्येनेत्यर्थ. ।

लोगविजयं करेंतेण, झाणोवओगचित्तेणं ।
परिसुद्धनाणदंसण-विभूइमंतेण चित्तेणं ॥११९॥

लोक —कषायलोकस्तस्य विजयो लोकविजयस्तं कुर्वता कषायान् जितवता तेन महात्मना ' झाणोवओगचित्तेण ' ति ध्यानोपयोगे-विशिष्टध्यानाभ्यासे चित्तं यस्य स ध्यानोपयोगचित्तस्तेन, पुन. किं विशिष्टेन?-'परिसुद्धनाणदंसणविभूइमंतेण' त्ति परिसुद्धज्ञानदर्शनविभूतिमता केवलज्ञानकेवलदर्शनयुक्तेनेत्यर्थ. । 'चित्तेणं' ति चित्रेण विधानमाधुना ।

किं तेन कृतमित्याह-

चंदगविज्झं लद्धुं, केवलसरिसं समाउपरिहीणं ।
उत्तमलेसाणुगओ, पडिवन्नो उत्तमं अट्ठं ॥१२०॥

तेन महात्मना चन्द्रकवेध्यं—राधावेध लब्धं—प्राप्तम् ,कथंभूतमित्याह—'केवलिसरिस'ति केवलज्ञाननिमित्तम् ।यथा कोऽपि राधावेधं कृत्वा सर्वोत्कर्षजयी भवति, एवं कोऽपि केवलज्ञानलाभाद्राधावेधकल्पोपक्ष ' समाउपरिहीण ' तिकेवलज्ञानेन समं-सह आयु.-परिक्षीणं परिसमाप्त केवलज्ञानेन सह मोक्षं गत इत्यर्थ., 'उत्तमलेसाणुगओ ' त्ति उत्तमलेश्यानुगतः—शुक्ललेश्यासमन्वित. प्रतिपन्न उत्तमार्थं मोक्षमिति ।

अथ शास्त्रकारः संस्तारकं प्रतिपृच्छन् प्रार्थयन्नाह-

एवं मए अभिथुया, संथारगइंदखंधमारूढा ।
सुसमणनरिंदचंदा, सुहसंकमणं ममं दिंतु ॥१२१॥

एवम्-अमुना प्रकारेण मया अभिष्टुता-विशिष्टगुणोत्कीर्त्तनेन व्यावर्णिता महर्षय ।कथभूता ?संस्तारकगजेन्द्रस्कन्धमारूढा -संस्तारकद्विपेन्द्राधिरोहिण ।के त इत्याह-'सुसमणनरिंद ' ,त्ति सुश्रमणा एव नरेन्द्रा. सामान्यराजान्नेपामपि चन्द्रा इव चन्द्रा बलदेववासुदेवचक्रवर्त्तिनस्ते सुश्रमणनरेन्द्रचन्द्रा. ' सुहसंकमण ' ति सुखस्य—मुक्तिरूपस्य वा विशिष्टपुण्यप्रकृतिरूपस्य संक्रमणं—सक्रान्ति संसारदुःखादशुभाद्वा निस्तारणेन मम दिन्तु ददतु नरेन्द्रचन्द्रा अपि रणशिरसि गजेन्द्रस्कन्धाधिरूढा लब्धजयपताकास्तत्स्तावकमागधजनाना विपुलं जीवितार्हं प्रीतिदान ददति, इति तदुपमा इति भद्र भवतु । संथा० । अर्द्धतृतीयसहस्रप्रमाणे , आचा० २ श्रु० १ चू० २ अ० ३ उ० । ग० । ध० । कम्बलास्तरणे, विशे० । दर्भसंस्तारकादौ, आतु० । उत्त० । फलककम्बलादौ , उत्त० १७ अ० । आचा० । लघुतरं शयनं, औ० । रा० । प० भा० । ज्ञा० । प० व० । स्था० ।

साण्डसपरिकर्मण संस्तारकग्रहणम्-

से भिक्खू वा भिक्खुणी वा अभिकंखेज्जा संथारगं ए-

मित्तए से जं पुण संथारयं जाणिज्जा सअंडं ०जाव स-संताणगं तहप्पगारं संथारगं लाभे संते णो पडिगाहेज्जा १, से भिक्खू वा भिक्खुणी वा से जं पुण संथारयं जा-णिज्जा अप्पंडं ०जाव संताणगरुयं तहप्पगारं लाभे संते णो पडिगाहेज्जा २, से भिक्खू वा भिक्खुणी वा अप्पंडं ०जाव अप्पसंताणगं लहुयं अपाडिहारियं तहप्पगारं सेज्जा संथारयं लाभे संते णो पडिगाहे-ज्जा ३, से भिक्खू वा भिक्खुणी वा से जं पुण संथा-रगं जाणिज्जा अप्पंडं ०जाव अप्पसंताणगं लहुयं पाडिहा-रियं नो अहावद्धं तहप्पगारे लाभे संते नो पडिगाहेज्जा ४, से भिक्खू वा भिक्खुणी वा से जं पुण संथारगं जा-णिज्जा अप्पंडं ०जाव संताणगं लहुयं पाडिहारियं अहावद्धं तहप्पगारं संथारगं लाभे संते पडिगाहेज्जा। ( सू० ६६ )

स भिक्षुर्यदि फलहकादिसंस्तारकमेषितुमभिकाङ्क्षयेत्, नचैवंभूतं जानीयात्, तद्यथा—प्रथमसूत्रे साण्डादि-त्वात्संयमविराधनादोष १, द्वितीयसूत्रे गुरुत्वादुत्क्षेपणा-दावात्मविराधनादिदोष. २, तृतीयसूत्रेऽप्रतिहारकत्वात्त-त्परित्यागादिदोष ३, चतुर्थसूत्रे त्ववद्धत्वात्तद्बन्धनादिप-लिमन्थदोष ४ पञ्चमसूत्रे त्वल्पाण्डं यावदल्पसन्तानकल-घुप्रातिहारिकावबद्धत्वात्सर्वदोषविप्रमुक्तत्वात्संस्तारको ग्रा ह्य इति सूत्रपञ्चकसमुदायार्थ ५।

साम्प्रतं संस्तारकमुद्दिश्याभिग्रहविशेषानाह—

इच्चेयाइं आयतणाइं उवाइक्कम-अह भिक्खू जाणिज्जा इमाइं चउहिं पडिमाहिं संथारगं एसित्तए, तत्थ खलु इमा पढमा पडिमा—से भिक्खू वा भिक्खुणी वा उद्दिसिय उ० २ संथारगं जाइज्जा, तं जहा—इक्कडं वा कढिणं वा जंतुयं वा परगं वा मोरगं वा तणगं वा सोरगं वा कुसं वा कुच्चगं वा पिप्पलगं वा पलालगं वा, से पुव्वामेव आलोइज्जा आ-उसो! त्ति वा भगिणी० दाहिसि मे इत्तो अन्नयरं संथारयं? तहप्पगारं संथारगं सयं वा णं जाइज्जा परो वा देज्जा फासुयं एसणिज्जं ०जाव पडिगाहेज्जा पढमा पडिमा। ( सू० १०० ) अहावरा दुच्चा, पडिमा—से भिक्खू वा भि० पेहाए संथारगं जाइज्जा, तं जहा—गाहावइं वा कम्मकरिं वा से पुव्वामेव आलोइज्जा—आउसो! त्ति वा भइ०! दाहिसि मे?, ०जाव पडिगाहिज्जा, दुच्चा पडिमा ॥ २ ॥ अहावरा तच्चा पडिमा—से भिक्खू वा भि० जस्सुवस्सए संवसिज्जा जे तत्थ अहासमन्नागए, तं जहा—इक्कडे इ वा ०जाव पलाले इ वा तस्स लाभे संवसिज्जा तस्सालाभे उक्कुडुए वा नेस-ज्जिए वा विहरिज्जा तच्चा पडिमा॥३॥ ( सू०१०१ ) अहा-वरा चउत्था पडिमा से भिक्खू वा०अहासंथडमेव संथारगं जाइज्जा, तं जहा—पुढविसिलं वा कट्ठसिलं वा अहासं-थडमेव, तस्स लाभे संते संवसिज्जा, तस्स अलाभे उक्कु-डुए वा विहरिज्जा, चउत्था पडिमा ॥ ४ ॥ (सू० १०२) इच्चेयाणं चउण्हं पडिमाणं अन्नयरं पडिमं पडिवज्जमाणे तं चेव० जाव अन्नोऽन्नसमाहीए एवं च णं विहरंति। ( सू० १०३ )

इत्येतानि—पूर्वोक्तानि आयतनादीनि दोषरहितस्थानानि व-सतिगतानि संस्तारकगतानि च उपातिक्रम्य—परिहृत्य वक्ष्य-माणांश्च दोषान् परिहृत्य संस्तारको ग्राह्य इति दर्शयति— अथ—आनन्तर्ये स भावभिक्षुर्जानीयात् आभिः—करणभूता-भिश्चतसृभि' प्रतिमाभि' अभिग्रहविशेषभूताभिः संस्तारक-मन्वेष्टुम्। ताश्चेमा'—उद्दिष्ट १ प्रेक्ष्य २ तस्यैव३ यथासंस्तृत-४ रूपा, तत्रोद्दिष्टा फलहकादीनामन्यतमद्ग्रहीष्यामि १, यदेव प्रागुद्दिष्टं तदेव द्रक्ष्यामि ततो ग्रहीष्यामि नान्यदिति द्वि-तीया प्रतिमा २, तदपि यदि तस्यैव शय्यातरस्य गृहे भवति ततो ग्रहीष्यामि नान्यत आनीय तत्र शयिष्ये— इति तृतीया ३, तदपि फलहकादिकं यदि यथा संस्तृत— मेवास्ते ततो ग्रहीष्यामि नान्यथेति चतुर्थी प्रतिमा ४ आसु च प्रतिमास्वाद्ययोः प्रतिमयोर्गच्छनिर्गतानामग्रहः, उत्तरयोरन्यतरस्यामभिग्रह, गच्छान्तर्गतानां तु चतस्रोऽ-पि कल्पन्त इति। एताश्च यथाक्रमं सूत्रैर्दर्शयति—तत्र खल्विमा प्रथमा प्रतिमा, तद्यथा—उद्दिश्योद्दिश्येक्कडादी— नामन्यतमद्ग्रहीष्यामीत्येव यस्याभिग्रह. सोऽपरलाभेऽपि न प्रति गृह्णीयादिति। शेषं कण्ठ्यं नवरं कठिनं-वंशकटादि जन्तुकं—तृणविशेषोत्पन्न परकं—येन तृणविशेषेण पुष्पाणि ग्रथ्यन्ते 'मोरगं' ति मयूरपिच्छनिष्पन्नं 'कुच्चगं' ति येन कू-र्चकाः क्रियन्ते, एते चैवंभूताः संस्तारका अनूपदेशे सा-र्द्रादिभूम्यास्तरणार्थमनुज्ञाता इति। अत्रापि पूर्ववत्सर्वं भ-णनीयम्, यदि परं 'तमिक्कडादिक' संस्तारकं दृष्ट्वा या-चेत नादृष्टमिति। एवं तृतीयाऽपि नेया, इयास्तु विशेषः गच्छान्तर्गतो निर्गतो वा यदि वसतिदातैव संस्तारकं प्र-यच्छति ततो गृह्णाति, तदभावे उत्कुटुको वा निषण्णो वा पद्मासनादिना सर्वरात्रमास्त इति एतदपि सुगमम्, केव-लमस्यामयं विशेष.—यदि शिलादिसंस्तारक यथासंस्थतं शयनयोग्यं लभते तत शेते नान्यथेति। किञ्च—'इच्चेया' इ-त्यादि। आसां चतसृणा प्रतिमानामन्यतरा प्रतिपद्यमानो ऽन्यमपरप्रतिमाप्रतिपन्नं साधुं न हीलयेद्, यस्मात्ते सर्वेऽ-पि जिनाज्ञामाश्रित्य समाधिना वर्त्तन्त इति। आचा० २ श्रु० १ चू० २ अ० ३ उ०। व्य०।

ऋतुबद्धिकं शय्यासंस्तारकं पर्युषणाया. परं नयति।

ऋतुबद्धे संस्तारकमाह—

से य अहालहुस्सगं सेज्जासंथारगं गवेसेज्जा जं चक्किया एगेणं हत्थेणं उगिज्झ ०जाव एगाहं वा दुयाहं वा तियाहं वा अद्धाणं परिवहित्तए एस मे हेमंतगिम्हा-सु भविस्सइ ॥ २ ॥ से अहालहुस्सगं सेज्जासंथारयं गवे-सेज्जा जं चक्किया एगेणं हत्थेणं उगिज्झ ० जाव

एगाहं वा दुयाहं वा तियाहं वा अद्धाणं परिवहित्तए एस मे वासावासेसु भविस्सइ ॥ ३ ॥ से अहालहुस्सगं सेज्जासंथारयं गवेसेज्जा जं चक्किया एगेण उगिज्झ ०जाव एगाहं वा दुयाहं वा तियाहं वा चउयाहं वा पंचाहं वा दूरमवि अद्धाणं परिवहित्तए एस मे वुड्ढावासासु भविस्सति ॥ ४ ॥

सोऽधिकृतो भिक्षुर्यथालघुस्वकम्—अनेकान्तलघुकं वीणाग्रहणग्राह्य शय्या—सर्वाङ्गिका संस्तारकोऽर्द्धतृतीयहस्तदीर्घ, हस्तश्चत्वार्यङ्गुलानि विस्तीर्णः । अथवा—तत्पुरुषः समासः—शय्या एव संस्तारकः शय्यासंस्तारकः तृणमयं पट्टमयं वा गवेषयेत् । तत्र यत् शक्नुयात् एकेन हस्तेनावगृह्य यावदेकाहं वा द्व्यहं वा त्र्यहं वा अध्वानं गच्छन् परिवोढुं तत् गृह्णीयात् एष मे वर्षावासे भविष्यति । एष वर्षासूत्रस्यार्थः ॥ ३ ॥ एवं हेमन्तग्रीष्मसूत्रार्थौ वृद्धावाससूत्रार्थश्च भावनीयः । नवरं वृद्धावाससूत्रे चतुरहं वा पञ्चाहं वेत्यधिकं वक्तव्यम् ।

अधुना निर्युक्तिविस्तरः—

सो पुण उउम्मि घेप्पइ, संथारो वासे वुड्ढवासे वा ।
ठाणं फलगादिं वा, उउम्मि वासासु य दुवेऽवि ॥ ७ ॥

स पुनः संस्तारकः स्थानं—स्थानरूपम् ऋतुबद्धे—वर्षाकाले वृद्धावासे च यथानुरूपं गृह्यते । तद्यथा—ऋतुबद्धे काले अवकाशे गृह्यते वर्षावासे वृद्धावासे च निवातस्थानेऽपि । तथा ऋतुबद्धे काले ऊर्णादिमयं संस्तारकं परिगृह्य पुरुषविशेषं ग्लानादिकमपेक्ष्य फलकादि वा वर्षावासे द्विकावपि-द्वावपि संस्तारकौ वक्ष्यमाणलक्षणौ गृह्णीयात् ।

उउबद्धे दुविहगहणे, लहुगो लहुगा य दोस आणादी ।
झामियहियवक्खेवे, संघट्टणमादिपलिमंथो ॥ ८ ॥

द्विविधः संस्तारकः—परिशाटिरूपः, अपरिशाटिरूपश्च । तत्र परिशाटिरूपो द्विविधः-झुषिरः, अझुषिरश्च । तत्र शाल्यादि पलालतृणमयो झुषिरः, कुशकाशादिरूपः अझुषिरः । अपरिशाटिरूपो द्विविधः-एकाङ्गिकः, अनेकाङ्गिकश्च । एकाङ्गिकोऽपि द्विविधः—संघातितः, असंघातितश्च । तत्र संघातितः एकफलात्मकः, असंघातितो-द्व्यादिफलसंघातात्मकः । अनेकाङ्गिकः कम्बिकाप्रस्तारात्मकः । तत्र यदि ऋतुबद्धे अझुषिरं परिशाटिसंस्तारकं गृह्णाति तदा तस्य प्रायश्चित्तं लघुको मासः, झुषिरं गृह्णतश्चत्वारो लघुकाः, अपरिशाटिमपि गृह्णतश्चत्वारो लघुकाः, न केवलं प्रायश्चित्तं किं त्वाज्ञादयश्च दोषाः । तथा यद्यग्निना स ध्याम्यते तदापि प्रायश्चित्तं चत्वारो लघुकाः, व्याक्षेपेण वा स्तेनैरपहृते चतुर्लघुकम्, अपरिशाटौ ध्यामिते हृते वा मासलघु, ततोऽन्यं संस्तारकं मृगयमाणानां सूत्रार्थपलिमन्थः । तथा तस्मिन्संस्तारके ये प्राणजातयः आगन्तुकास्तदुद्भूता वा तान् संघट्टयति, अपद्रावयति च ततस्तन्निष्पन्नं तस्य प्रायश्चित्तमित्येष गाथार्थः ।

सांप्रतमेनामेव भाष्यकृत् विवृणोति—

परिसाडि अपरिसाडी, दुविहो संथारओ समासेणं ।
परिसाडी झुसिरेयर, एत्तो वुच्छं अपरिसाडी ॥ ९ ॥

द्विविधः समासेन संक्षेपेण संस्तारकस्तद्यथा-परिशाटिः, अपरिशाटिश्च । तत्र परिशाटिर्द्विधा—झुषिरः, इतरश्च । इतरो नाम—अझुषिरः । अत ऊर्ध्वमपरिशाटिं वक्ष्ये ।

प्रतिज्ञातमेव करोति—

एगंगि अणेगंगी, संघातिम एतरो य एगंगी ।
अझुसिरगहणे लहुगो, चउरो लहुगा य सेसेसु ॥ १० ॥

अपरिशाटिर्द्विधा एकाङ्गिकः, अनेकाङ्गिकश्च । तत्रैकाङ्गिको द्विधा—संघातिमः, इतरश्च । अमीषां व्याख्यानं प्रागेव कृतम् । तत्राझुषिरस्य संस्तारस्य ग्रहणे प्रायश्चित्तं लघुको मासः । शेषेषु झुषिरसंघाते इतरैकाङ्गिकानेकाङ्गिकेषु प्रत्येकं चत्वारो लघुकाः ।

लघुका य झामियम्मि य, हरिए वि य होंति अपरिसाडिम्मि ।
परिसाडिम्मि य लहुगो, आणादिविराहणा चेव ॥ ११ ॥

अग्निना ध्यामिते अपरिशाटौ स्तेनैर्वा तस्मिन्नपहृते प्रत्येकं प्रायश्चित्तं चत्वारो लघुका भवन्ति । परिशाटौ ध्यामिते हृते वा प्रत्येकं लघुको मासः, आज्ञादयश्च दोषाः । तथा विराधना च संयमस्य ।

तामेवाभिधित्सुराह—

विक्खेवो सुत्तादिसु, आगंतुतदुब्भवेण घट्टादी ।
पलिमंथो पुव्वुत्तो, मंथिज्जति संजमो जेणं ॥ १२ ॥

अन्यसंस्तारकमार्गणे सूत्रादिषु-सूत्रेष्वर्थेषु च विक्षेपो-व्याघातः, परिमन्थ इत्यर्थः । तथा ये तत्रागन्तुकाः प्राणाः कीटिकादयो ये च तदुद्भवा मत्कुणादयस्तेषां यत् घट्टनादि तन्निमित्तमपि प्रायश्चित्तम् । इदानीं परिमन्थो व्याख्येयः । स च पूर्वमेव 'विक्खेवो सुत्तादिसु' इत्यादिना ग्रन्थेनोक्तः । अथ कस्मात् व्याक्षेपो घट्टनादि वा परिमन्थ इत्युच्यते । तत आह—एतेन कारणेन येन संयमः उपलक्षणमेतत् सूत्रमर्थश्च मथ्यते तेन परिमन्थ इति ।

तम्हा उ न घेत्तव्वो, उउम्मि दुविहो वि एस संथारो ।
एवं सुत्तं अफलं, सुत्तनिवाओ उ कारणितो ॥ १३ ॥

यस्मादेते दोषास्तस्मात् ऋतौ—ऋतुबद्धे काले द्विविधोऽप्येष परिशाट्यपरिशाटिरूपः संस्तारो न ग्रहीतव्यः । अत्र पर आह-एवं सति सूत्रमफलं सूत्रे तृणमयशय्यासंस्तारकस्यानुज्ञानात् । आचार्य आह—सूत्रनिपातः कारणिकः-कारणवशात्प्रवृत्तः ।

तदेव कारणमुपदर्शयति—

सुत्तनिवातो तणेसु, देसे गिलाणे य उत्तमट्ठे य ।
चिक्खल्लपाणहरिए, फलगाणि वि कारणे जाते ॥ १४ ॥

सूत्रस्य निपातो निपतनमवकाश इति भावः । देशे—देशविशेषे तथा ग्लाने उत्तमार्थे च तथा चिक्खल्ले—कर्दमे प्राणजाते—भूमौ समस्ते तथा हरितकाये एवरूपे कारणे जाते सति फलकान्यपि गृह्यन्ते । फलकरूपोऽप्यपरिशाटिः संस्तारको गृह्यते इति गाथासंक्षेपार्थः ।

साम्प्रतमेनामेव विवरीषु· प्रथमतस्तृणेषु 'दोसो' इत्यस्य व्याख्यामाह—

असिवादिकारणगत्ता, उवही कुच्छण अजीरगभया वा ।
अभुसिरमसंधिऽवीए, एकमुहे भंगसोलसगं ॥ १५ ॥

अशिवादिभि· कारणैस्तत्र प्रदेशे गता ये वर्षारात्रे पानीयेन प्लाव्यन्ते यथा सिन्धुविषय । अथवा—तत्र देशे स्वभावतः यतः प्रस्तरा भूमिस्ततो रात्रौ शीतलवातसंपर्केतोऽवश्याय· पतनतो वा जलप्लाविते च सा भूमिरुपजायते । अथवा—आसन्नीभूतेन पानीयेन तमवकाशमप्राप्नुवताऽपि भूमि· स्विद्यति । तत्रोपधेः कोथनं मा भूत् वा माऽजीर्णेन ग्लास्यामित्युपधिकोथनभयादजीर्णकभयाद्वा तृणानि गृह्णन्ति साधवस्तानि च अशुषिराणि असंधीनि अबीजानि च । एतान्येकमुखानि क्रियन्ते । यत्र च अशुषिरे असंधौ अबीजे एकमुखरूपेषु चतुर्षु पदेषु भङ्गषोडशकम्—षोडशभङ्गा ।

| | | | |
|---|---|---|---|
| ।।।। | ।ऽ।। | ऽ।।। | ऽऽ।। |
| ।।।ऽ | ।ऽ।ऽ | ऽ।।ऽ | ऽऽ।ऽ |
| ।।ऽ। | ।ऽऽ। | ऽ।ऽ। | ऽऽऽ। |
| ।।ऽऽ | ।ऽऽऽ | ऽ।ऽऽ | ऽऽऽऽ |

तत्राऽशुषिरादिव्याख्यानार्थमाह—

कुसमादि अभुसिराई, असंधऽवीयाइ एकउ मुहाइं ।
देसीपोरपमाणा, पडिलेहा तिन्नि वेहासं ॥ १६ ॥

कुशादीनि—कुश-वच्चकप्रभृतीनि तृणानि अशुषिराणि-असंधीनि अबीजानि—बीजातीतानि भवन्ति तानि एकमुखानि कर्त्तव्यानि । तत्र भङ्गषोडशकमध्ये यत्र भङ्गे शुषिराणि तत्र प्रायश्चित्तं चत्वारो लघुकाः, बीजेषु प्रत्येकेषु पञ्चरात्रिन्दिवानि लघुकानि, अनन्तकायिकेषु गुरुकाणि, शेषेषु भङ्गेषु मासलघु, प्रथमे भङ्गे गृह्णन्त· शुद्धा· । 'देसीपोरे' त्यादि देशीत्यङ्गुष्ठोऽभिधीयते, तस्य यत्पर्व तत्प्रमाणानि जिनकल्पिकानां स्थविरकल्पिकानां च तृणानि भवन्ति । इयमत्र भावना-अङ्गुष्ठस्य यत्पर्व तत्राङ्गुल्यग्राणि स्थापयित्वा यावद्भिस्तृणैर्मुष्टिरापूर्यते तावन्ति मुष्टिप्रमाणानि जिनकल्पिकानां स्थविरकल्पिकानां च तृणानि भवन्ति, तेषां च तृणानां प्रत्युपेक्षास्तिस्र· । तद्यथा-प्रभाते, मध्याह्ने, अपराह्णे च । यदा च भिक्षादौ गच्छन्ति तदा विहायसि कुर्वन्ति ।

साम्प्रतमेतदेव किंचिद् व्याचिख्यासुराह—

अंगुट्ठपोरमेत्ता, जिणाण थेराण होंति संमासो ।
भूमीएँ विरल्लेउं, अवरेण तु पमज्जए भूमिं ॥ १७ ॥

अङ्गुष्ठपर्वमात्राणि-अङ्गुष्ठपर्वपरिमितमुष्टिप्रमाणानि जिनानां—जिनकल्पिकाना स्थविराणां स्थविरकल्पिकानां भवन्ति, तैश्च तृणै संस्तारक आस्तीर्यमाणस्तावद्भिर्भवति यावन्मात्राम , ( संदंशक· ) तानि च भूमौ विरल्य-शयनार्थं विरलीकृत्य भूमिं प्रमार्जयति ।

सम्प्रति 'गेलन्ने उत्तिमट्ठे य' इति व्याख्यानार्थमाह—

गेलन्ने उत्तिमट्ठे, उस्सग्गे तु वत्थसंथारो ।
असतीएँ अभुसिराइं, खरा सतीए उ भुसिरा वि॥ १८॥

यो नाम ग्लानो यो वा प्रतिपन्नोत्तमार्थ -कृतानशनप्रत्याख्यान तस्मिन् द्वयेऽपि संस्तार उत्सर्गतो वस्त्ररूप क्रियते तस्य कोमलतया समाधिभावात् ।असति-अविद्यमाने वस्त्ररूपे संस्तारके अशुषिराणि कुशवच्चकप्रभृतीनि मृग्यन्ते । अथ तानि खराणि, यदि वा-न सन्ति तदा शुषिराण्यपि शाल्यादिपलालमयान्यानेतव्यानि ।

तद्दिवसं मलियाइं, अपरिमिय सयं तुयट्टजयणाए ।
उभयट्ठ उट्ठिए उ, चंकमणविज्जकज्जे वा ॥१९॥

तद्दिवसं-प्रतिदिवसं मलितानि-तृणान्युत्सार्यन्ते अन्यानि च समानीयन्ते;तानि वा परिमितानि गृह्यन्ते,यथा समाधिर्भवति तथा सकृत्-एकवारं तुयट्टानि-प्रस्तारितानि तिष्ठन्ति तत्र यतनया करणम्।उभयं नाम-उच्चारः प्रस्रवणं च तदर्थमुत्थिते ग्लाने उत्तमार्थे वा अन्यो निषीदति । किं कारणमिति चेत्प्राणिदयार्थम् , अन्यथा शुषिरभावतस्तत्रागन्तुका· प्राणास्तृणान्युपलीयेरन् स तावन्निषीदति यावत्स तत्र प्रत्यागच्छति । एवं चंक्रमणार्थमभ्युत्थिते, प्रवातार्थे वा बहिर्निर्गते, वैद्यकार्ये वा बहिर्नीते यावत्स प्रत्यानीयते तावदन्यो निषीदति, तस्मिन्नागते स उत्तिष्ठति । अथवा-स गुरूणामपि पूज्य इति तस्मिन् पूर्वोक्तकारणैरुत्थिते तत्रान्यस्य निषदनं न कल्पते ततस्तेषां तृणानामुपरि हस्त· कर्त्तव्य· ।

एतदेवाह—

अन्नो निसिज्जइ तहिं, पाणियदट्ठाएँ तत्थ हत्थो वा ।
निक्कारणमगिलाणे, दोसा ते चेव य विकप्पा ॥२०॥

अन्यस्तत्र संस्तारके प्राणिदयार्थं निषीदति, हस्तो वा तत्र क्रियते।अत्र भावना प्रागेव कृता । एतै· कारणैर्यथोक्तरूप संस्तारक ऋतुबद्धे काले । निष्कारणम् देशादिकारणमन्तरेण अग्लाने अग्लानस्य तृणमयसंस्तारकग्रहणे त एव पूर्वोक्ता दोषा· । विकल्पो, विकल्पदोषश्च । विकल्पग्रहणेन विकल्पप्रकल्पावपि सूचितौ ।

तेषां व्याख्यानमाह-

अत्थरणवज्जितो उ, कप्पो पकप्पो उ होति पट्टदुगं ।
तिप्पभिई तु विकप्पो, अकारणे चेव तणभोगो ॥२१॥

आस्तरणवर्जित·—कल्प· । किमुक्तं भवति—यद् जिनकल्पिका अनवस्तृते रात्रावुत्कुटुकास्तिष्ठन्ति एष कल्प इत्यभिधीयते । तत्पुन· पट्टद्विकं भवति, संस्तारोत्तरपट्टयोरुपरि यत्सुप्यते इत्यर्थ· ; एष भवति प्रकल्प· । यानि पुनस्त्रिप्रभृतीनि संस्तारके प्रस्तारयति एष विकल्पः । यश्च अकारणे कारणमन्तरेण तृणानां भोग· क्रियते एषोऽपि विकल्पः ।

अथवा अन्यथा कल्प-प्रकल्पव्याख्यानमाह—

अहवा अभुसिरगहणे,कप्पो पकप्पो उ कज्जे भुसिरे वि।
भुसिरे य अभुसिरे वा,होइ विकप्पो अकज्जम्मि ॥२२॥

अथवेति प्रकारान्तरोपदर्शने यत्कारणे समापतिते अशुषिराणि तृणानि गृह्णाति एष कल्प· यत्पुनः कार्ये समापतिते शुषिराण्यपि तृणानि गृह्णाति एष प्रकल्प· । यत्पुनः अकार्ये शुषिराणि अशुषिराणि वा गृह्णाति एष भवति विकल्प । एवं तावत्तृणानामृतुबद्धे काले कारणे गृहीतानां यतनोक्ता ।

सम्प्रति कारणैरेव ऋतुबद्धे काले फलकरूपस्य संस्तारकस्य ग्रहणे यतनां चाऽऽह—

जह कारणे तणाइं, उउबद्धम्मि उ हवंति गहियाइं।
तह फलगाणि वि गेण्हे,चिक्खल्लादीहिँ कज्जेहिं ॥२३॥

यथा कारणे-देशादिलक्षणे ऋतुबद्धे काले तृणानि गृहीतानि भवन्ति, तथा ऋतुबद्धे एव काले चिक्खल्लादिभिः कार्यैरादिशब्दात्प्राणससक्तिहरितकायपरिग्रहः फलकान्यपि गृह्णाति।

तत्र यतनामाह—

अझुसिरमविद्धमफुडिय, अगरुयअणिसट्ठवीणगहणेणं।
आयासंजमेँ गुरुगा, सेसाणं संजमे दोसा ॥ २४ ॥

अझुसिरो झुषिररहितोऽविद्धो-वेधरहितोऽस्फुटितोऽराजितोऽगुरुको-गुरुभाररहितोऽनिसृष्ट—प्रातिहारिकः एतेषां च पञ्चानां पदानां द्वात्रिंशद्भङ्गाः। ते च प्रागिव प्रस्तारतः स्वयं ज्ञातव्याः। अत्र यः प्रथमभङ्गः सोऽनुज्ञातस्तत्र दोषाभावात्, अयं लघुकः शेषदोषविनिर्मुक्तश्च। ततो यथा वीणालघुकत्वात् दक्षिणहस्तेन मुखं—विवक्षितं स्थानं नीयते एवमेषोऽपि। तथा चाह—वीणाग्रहणेन यत्नतः तत्र वा नीयते इति वाक्यशेषः। शेषा एकत्रिंशत् भङ्गा नानुज्ञाताः। तत्र गुरुके आत्मविराधनाप्रत्ययं च प्रायश्चित्तं चतुर्गुरुकम्। संयमविराधना पुनरेवं भवति। गुरुके हस्तात्पतिते एकेन्द्रियादीनामुपघातोऽत्र स्वस्थानप्रायश्चित्तं शेषेषु संयमदोषाः—संयमविराधना। ततस्तत्र प्रत्येकं प्रायश्चित्तं चत्वारो लघुकाः।

अझुसिरमादिपएहिं, जा अणिसट्ठं तु पंचिमा भयणा।
अह संथडपासुद्धे, विपज्जए होंति चउलहुगा ॥ २५ ॥

अझुषिरादिभिः पदैरारभ्य यावदनिसृष्टमिति पञ्चमं पदं तेषु पञ्चसु पदेषु प्रथमभङ्गरूपेषु इयं—वक्ष्यमाणा भजना-विकल्पना। तामेवाह—'अह संथड' इत्यादि शय्यातरेण य उपाश्रयो दत्तस्तस्मिन् यो यथाऽवस्थितः प्रथमभङ्गरूपः संस्तारकः स ग्रहीतव्यः, तदभावे पार्श्वेन कृतस्तस्याप्यभावे ऊर्द्धकृतः, एवं क्रमेण यतनया ग्रहणं कर्त्तव्यम्। यदि पुनर्विपर्यासेन गृह्णाति तदा विपर्यस्ते गृह्यमाणे प्रायश्चित्तं चत्वारो लघुकाः।

अंतोवस्सय बाहिं, निवेसना वाडिसाहिए गामे।
खेत्तंतोँ अन्नगामे, खेत्तबहिं वा अवोच्चत्थं ॥ २६ ॥

एवमन्तरुपाश्रयस्य यदि संस्तारकं फलकरूपं न लभते तदा बहिरुपाश्रयस्य तथैव ग्रहीतव्यः, तत्राऽप्यलाभे, तेनैव क्रमेण निषदनादानेतव्यः, तत्राप्यसति वाटकात्, तत्राप्यलाभे साहीतः, तत्राप्यसति दूरादपि ग्राममध्यादानेतव्यो, ग्राममध्येऽप्यसति ग्रामान्तस्ततोऽप्रग्रमध्यभागात् अन्यग्रामादानेतव्यः, तत्राप्यसति क्षेत्राद्बहिष्टोऽप्यानेयः। एवमविपर्यस्तमानयनं कर्त्तव्यम्। यदि पुनः सति लाभे विपर्यस्तमानयति तदा प्रायश्चित्तं चत्वारो लघुकाः।

सम्प्रत्यानयनयतनामाह—

सुत्तं च अत्थं च दुवे वि काउं,



भिक्खं अडंतो उ दुए वि एसे।
लाभे सइए वि दुए वि घेत्तुं,
लाभासती एगदुवे व हावे ॥ २७ ॥

सूत्रं च अर्थं च द्वावपि कृत्वा भिक्षामटन् द्वावप्येषयेत्—गवेषयेत्। तद्यथा—भिक्षा संस्तारकं च तत्र लाभे सति समर्थौ द्वावपि गृहीत्वा प्रत्यागच्छन्ति, लाभेऽसति भिक्षां गतस्य संस्तारकाभावे एकं सूत्रमर्थं वा, यदि वा-द्वावपि हापयति संस्तारकगवेषणेन।

दुल्लभो सेज्जसंथारो, उदुबद्धम्मि कारणे।
मग्गणम्मि विही एसो, भणितो खेत्तकालतो ॥ २८ ॥

ऋतुबद्धे काले कारणे समापतिते दुर्लभे शय्यासंस्तारके यन्मार्गणे तत्र क्षेत्रतः कालतश्च विधिरेष भणितः, अनेन विधिना नान्यथेति।

वर्षासु संस्तारग्रहणम्—

उउबद्धेँ कारणम्मि, अगेण्हणे लहुगगुरुगवासासु।
उउबद्धे जं भणियं, तं चेव य सेसयं वोच्छं ॥ २९ ॥

ऋतुबद्धे काले कारणे सति यदि संस्तारकं न गृह्णाति तदा प्रायश्चित्तं चत्वारो लघुकाः, वर्षासु पुनरवश्यं ग्रहीतव्यः संस्तारकस्तत्र सूत्रस्याग्रहणे चत्वारो गुरुकाः। नथा या ऋतुबद्धे काले यतना भणिता गवेषणादौ सा वर्षास्वपि द्रष्टव्या शेषं वक्ष्यामि।

प्रतिज्ञानमेव करोति—

वासासु अपरिसाडी, संथारो सो अवस्स घेत्तव्वो।
मणिकुट्टिमभूमिए वि,तमगेण्हणेँ चउगुरू आणा॥३०॥

वर्षासु यदि मणिकुट्टिमायां भूमौ वसन्ति तथापि संस्तारकोऽपरिशाटिः फलकरूपोऽवश्यं ग्रहीतव्यः, तमगृह्णति प्रायश्चित्तं चत्वारो गुरुकाः, तथा आज्ञा उपलक्षणमनवस्थादयश्च दोषाः।

किं कारणमत आह—

पाणा सीयल कुंथू, उप्पायगदीहगोम्हिमिसुनागे।
पणए य उवहिकुच्छण,मलउदकवहो अजिणादी ॥३१॥

कालस्य शीतलतया भूमौ प्राणाः सम्मूर्च्छन्ति। के ते इत्याह-कुन्थवः प्रतीताः, उत्पादका नाम-ये भूमिं भित्त्वा समुत्तिष्ठन्ति दीर्घाः-सर्पास्तेभ्य आत्मविराधना। गोम्मी नाम कर्णशृगाली शिशुनागः-अलसः तथा शीतलायां भूमौ पनकः संजायते। उपधावपि पनकः समूर्च्छति। तथा उपधेः शीतलभूमिस्पर्शतः कोथनसंभवः। तथा स चेद् धूलिलग्नः मलसंभवः, ततो हिण्डमानस्य वर्षे पतति उदकवधः-अप्कायविराधना। तथा उपधेर्मलिनत्वेनाजीर्णसम्भवे निद्राया अलाभतोऽजीर्णत्वसम्भवः। आदिग्रहणात्-ततो ग्लानत्वं तदनन्तरं चिकित्साकरणेत्यादिपरिग्रहः।

तम्हा खलु घेत्तव्वो, तत्थ इमे पंच वणिणता भंगा।
गहणे य अणुण्णवणे, एगंगियअकुयपाउग्गं ॥३२॥

यस्मादेते तस्मादवश्यं फलकरूपः संस्तारको ग्रहीत-

व्य, तत्र च ग्रहणे इमे—वक्ष्यमाणा पञ्च वर्णिता भेदाः । तानेवाह-ग्रहणे अनुज्ञापनायामकाङ्क्षिके अकुचे प्रायोग्ये च । तत्र प्रथमतो ग्रहणद्वारमाह—

गहणं च जाणएणं, सेज्जाकप्पो उ जेण समहीतो ।
उस्सग्गववाएहिं, सो गहणे कप्पिओ होइ ॥३३॥

येन समधीत—सम्यगधीतः शय्याकल्पः शय्याग्रहणविधिः तेन जानता ग्रहणं संस्तारकस्य कर्त्तव्यम् । यतः स उत्सर्गापवादाभ्यां ग्रहणे कल्पिको योग्यो भवति । गतं ग्रहणद्वारम् ।

इदानीमनुज्ञापने या यतना तामाह—

अणुसवणाएँ जयणा, गहिते जयणा य होति कायव्वा ।
अणुसवणाएँ लद्धे, बेंति पडिहारियं एयं ॥३४॥

अनुज्ञापनाया यतना-गृहीते च यतना कर्त्तव्या । तत्रानुज्ञायामियम्-लब्धे संस्तारके ब्रुवते, एतं संस्तारकं प्रातिहारिकं ग्रहीष्यामो यावत्प्रयोजनं तावद्धरिष्यामः पश्चात्समर्प्पयिष्याम इति ।

कालं च ठवेइ तहिं, वेइ य परिसाडिवज्जमप्पहिमो ।
ऽणुसवणे जयणाँ एँसा, गहिय जयणा इमा होति ॥३५॥

यदा संस्तारको लब्धो भवति तदा तत्र कालं स्थापयति एतावन्तं कालं धरिष्यामः, तथा ब्रूते—एष संस्तारको जराजीर्णतया परिशाटिरूपस्तमेनं वयं ग्रहीष्यामः । तत्र निर्व्याघातेनैतावता कालेन यत्परिशटति तन्मुक्त्वा शेषमर्पयिष्याम । एवं यदि प्रतिपद्यते तदा गृह्णन्ति, अथ न प्रतिपद्यते तदा न ग्रहीतव्यः किं त्वन्यो याच्यते । अथान्यो याच्यमानो न लभ्यते तदा स एव प्रतिगृह्यते केवलं परिशाटौ यतना विधेया । एषा अनुज्ञापने यतना । गृहीते यतना इयं वक्ष्यमाणा भवति ।

तामेवाह—

कीसं पुण घेयव्वो, वेति ममं जा हि तुं भवे सुन्नो ।
अमुगस्स सो वि सुन्नो, ताहे घरम्मि ठवेज्जाहि ॥३६॥
कहि एत्थ चेव ठाणे, पासे उवरिं व तस्स पुंजस्स ।
अहवा तत्थेव थओ, ते वि हु नीयल्लगा अम्हं ॥३७॥

गृहीते संस्तारके पुनः पृच्छति—कार्यसमाप्तौ कस्य पुनर्गायितव्यः एष संस्तारकः ? एवमुक्ते स यदि ब्रूते ममैव समर्प्पयितव्यः इति, तदा वक्तव्यं यदा त्वं भवसि अन्यः । किमुक्तं भवति—यदा यूयं न दृश्यध्वे तदा कस्य समर्पणीयः ? एवमुक्ते स ब्रूयादमुकस्य । ततो भूयोऽपि वक्तव्यम्, सोऽपि यदा शून्यो भवति न दृश्यते इत्यर्थः, तदा कस्मै समर्प्पणीयः ? । अथ ब्रूयादत्रैव गृहे स्थापयेत् ततः पुनरपि पृच्छेत् कतरस्मिन्नवकाशे स्थापनीयः ?, एवमुक्ते यदि स ब्रूयात् यतोऽवकाशात् गृहीतोऽत्रैव स्थाने स्थापयेत्, यदि वा—वदेत् अत्रैव स्थाने कुत्रे प्रदेशे, अथवा-यतोऽवकाशात् गृहीतस्तस्य पार्श्वे, अथवा-अस्य पुञ्जस्योपरि स्थापयेत् । यद्वा-यत्र यूयं नयथ तत्रैव तिष्ठतु, यतो यस्योपाश्रये यूयं वसथ सोऽपि हु-निश्चितम्-अस्माकं निजकः । किं बहुना यत्र वदति तत्र नीत्वा स्थापयितव्यः ।

एसा गहिए जयणा, एत्तो गेण्हंतए उ वुच्छामि ।
एगो च्चिय गच्छे पुण, संघाडो गेण्हति ग्गहितो ॥३८॥

एषा-अनन्तरोदिता गृहीते यतना, अत ऊर्द्ध्वं गृह्णति यतनां वक्ष्यामि । प्रतिज्ञातमेव करोति--गच्छे पुनरेक एव संघाटः आभिग्रहिकः संस्तारकं गृह्णाति, न शेषोऽन्यथा व्यवस्थापत्तेः ।

आभिग्गहियस्स ऽसती, वीसुं गहणे पमिच्छिउं सव्वे ।
दाऊण तिन्नि गुरुणो, गिण्हंति सेसे जहावुड्ढं ॥३९॥

आभिग्रहिकस्याभावे विष्वक्—प्रत्येकं संघाटकाना ग्रहणं प्रवर्त्तते । इयमत्र भावना--एकैकः संघाटकः प्रत्येकमेकैकं संस्तारकं मार्गयति, अभ्यधिकास्त्रयः संस्तारका आचार्यस्य योग्या मृग्यन्ते । तत्रापि सैव मार्गणे अनुज्ञापने गृहीते च यतना यावत्कार्यसमाप्तौ क स्थापयितव्य इति । एवं विष्वक् ग्रहणे सर्वान् संस्तारकान्प्रतीच्छ्य-प्रतिगृह्य त्रीन् संस्तारकान् गुरोर्दत्त्वा शेषानन्यान् यथावृद्धं गृह्णन्ति । इयमत्र सामाचारी--आभिग्रहिकसंघाटकेन प्रत्येकं प्रत्येकं संघाटकैरानीतानां वाऽनानीतानां वा मध्यादाचार्यस्योत्कृष्टान् त्रीन् संस्तारकान् प्रवर्त्तको दत्त्वा शेषाणां रत्नाधिकतया संस्तारकान् भाजयन्ति तानपि तथैव गृह्णन्ति ।

णेगाण उ णाणत्तं, सगणेयरभिग्गहीण अन्नगणे ।
दिट्ठोभासणलद्धे, मन्नाउट्टे पभू चेव ॥ ४० ॥

अनेकानां स्वगणेतराभिग्रहिकाणां यन्नानात्वं--प्रतिविशेषो यश्चान्यगणेन सह स्वगणसाधूनां समुदायेन संस्तारकान् मार्गयतामाभवद्व्यवहारनानात्वं तत् वक्ष्ये । तत्र-पञ्च द्वाराणि, तद्यथा—दृष्टद्वारमवभाषणं नाम-याचनं तद् द्वारं, लब्धद्वारमभापयं-मानयाचनं तद्द्वारं, प्रभुद्वारं च ।

दिट्ठादिएसु एत्थं एक्केक्के होंतिमे उ छब्भेया ।
दट्ठूण अहाभावे-ण यावि सोउं च तस्सेव ॥ ४१ ॥
विप्परिणामणकहणा, वोच्छिन्ने चेव तिपडिसिद्धे य ।
एएसिं तु विसेसं, वुच्छामि अहाणुपुव्वीए ॥ ४२ ॥

अत्र एषु दृष्टादिकेषु द्वारेषु मध्ये एकैकस्मिन् द्वारे इमे-वक्ष्यमाणाः षड्भेदा भवन्ति । तद्यथा--दृष्ट्वेति द्वारं, यथा-भावेनेति द्वारं, तस्य वा वचनतः श्रुत्वेति द्वारं, विपरिणामनद्वारं, कथनद्वारं व्यवच्छिन्नद्वारं च । एतेषां तु द्वाराणां यथानुपूर्व्या क्रमेण विशेषं वक्ष्यामि । यदपि च दृष्टादिषु द्वारनानात्वं तदपि यथावसरं वक्ष्यते ।

संथारं देहंतं, असहीणपभुं तु पेसिओ पढमो ।
ताहे परियरिऊणं, ओभासिय लब्भमाणेति ॥ ४३ ॥

मानसंस्तारकं-फलकरूपं पट्टरूपं वा देहान्त-देहप्रमाणम्, अस्वाधीनप्रभुम्—न विद्यते स्वाधीनस्तत्कालप्रत्यासन्नः प्रभुर्यस्य स तथा, तमस्वाधीनप्रभुं दृष्ट्वा कमपि पृच्छति, कस्यैष संस्तारकः ?, स प्राह-अमुकस्य, परमिदानीमत्र स न तिष्ठति । ततः संघाटकश्चिन्तयति—यदा संस्तारकस्वामी समागमिष्यति तदा याचिष्ये, इति विचिन्त्य प्रसरति-प्रतिनिवर्त्तते वसत्यामागच्छतीत्यर्थः । ततः प्रतिनिवृत्य त-

दा अन्यदा अवभाषिते याचिते संस्तारकं लब्ध वसतिमानयति ।

अत्रैवापान्तराले वक्तव्यशेषमाह—

संथारो दिट्ठो न य,तस्स पभू लघुगो अकहणे गुरुगा।
कहिए व अकहिए वा,अरणेण वि आणितो तस्स ॥४४॥

यदा संस्तारक--प्रेदय तस्य स्वामिनमदृष्ट्वा वसतौ प्रत्यागतस्तदा तेन गुरूणामाचार्याणां कथनीयम्--यथा दृष्ट॰ संस्तारको न च तस्य संस्तारकस्य य॰ प्रभुः स उपलब्ध इति । एवं चेन्नालोचयति तस्य प्रायश्चित्तं लघुको मासः । तथा कथिते अकथिते वा गुरूणां यद्यन्येन सघाटकेनामुकस्य गृहे संस्तारकोऽमुकेन संघाटकेन दृष्ट॰ परं स्वामी नोपलब्ध इति न याचितस्तस्मादयं याचित्वा नयाम इति विचिन्त्य तत्र गत्वा स्वामिनमनुज्ञाप्य आनीतस्तथापि येन पूर्वं दृष्टस्तस्याऽऽभवति न पाश्चात्यसंघाटस्य । तदेवं 'दट्ठूणेति' व्याख्यातम् ।

इदानीं यथाभावेनेति व्याख्यानयति—

बितिओ उ अन्नदिट्ठं, अहभावेणं तु लद्धमाणेति ।
पुरिमस्सेव उ स खलु, केई साहारणं बेंति ॥४५॥

प्रथमसंघाटके संस्तारकं दृष्ट्वा स्वामिनमनुपलभ्य याचित्वैव वसतौ प्रत्यागते द्वितीय॰ संघाटकोऽशठभावोऽन्येन पूर्वं दृष्ट इत्यजानानो यथाभावे तमन्यदृष्टं संस्तारकं स्वामिनमनुज्ञाप्य लब्ध्वा समानयति स कस्याऽऽभवतीति चेदत आह-स खलु नियमात्पूर्वस्य संघाटकस्य येन पूर्वं दृष्टो, न पाश्चात्यस्य येन लब्ध॰ समानीत॰, किं तु उभयोरपि संघट्योराभवनमधिकृत्य साधारणं ब्रुवते । गतं यथाभावेनेति द्वारम् ।

इदानीं तस्यैव वचनत॰ श्रुत्वेति द्वारव्यानार्थमाह—

तइओ उ गुरुसगासे, विगडिज्जंतं सुणेतु संथारं ।
अमुगत्थ मए दिट्ठो, हिंडंतो वऽसासीसंतं ॥ ४६ ॥

तृतीय॰ संघाटक प्रथमेन सघाटकेन क्वापि संस्तारकं दृष्ट्वा स्वामिनमनुपलभ्य वसतौ प्रत्यागतेन गुरुसकाशे-आचार्यस्य समीपे दृष्टो मया संस्तारक॰ परं स्वामी न दृष्टस्तन आगत स न याचिष्ये इति, सस्तारकं विद्यमानमालोच्यमान श्रुत्वा, यदिवा-भिक्षां हिण्डमानोऽन्यस्य संघाटकस्य शास्ति-कथयति यथा अमुकत्र मया दृष्ट परं स्वामी नास्ति इति न याचित स्वामिन्यागते याचिष्यामि एव शिष्यमाण श्रुत्वा—

गंतूण तहिं जायइ, लद्धम्मी बेंति अम्ह एस विही ।
अन्नदिट्ठो॰न कप्पइ, दिट्ठो एसो उ अमुगेणं ॥ ४७ ॥
मा दिज्जसि तस्सेयं, पडिसिद्धंतम्मि एस मज्झं तु ।
अणो धम्मकहाए, आउट्टेऊण त पुव्वं ॥ ४८ ॥
संथारगदाणफला-दिलोभियं बेंति देहि संथारं ।
अमुगं तिन्नि य वारो, पडिसेहेऊण तं मज्झं ॥ ४९ ॥

गत्वा तत्र संस्तारकस्वामिनं संस्तारकं याचते, याचित्वा लब्धे तं परिणामयति । यथा एषोऽस्माक विधिराचारो योऽन्येन दृष्टो दृष्ट्वा च संस्तारकस्वामिनं याचिष्ये इत्यध्यवसित॰ सोऽन्यस्य न कल्पते एष च संस्तारकोऽन्येन दृष्टस्ततस्त्व मम प्रियतया तस्य याच्यमानस्य संस्तारकममुं दद्या, ततस्तस्मिन् प्रतिषिद्धे एष मम भविष्यति । अत्रेयमाभवनचिन्ता यदि विपरिणामकरणे लब्धस्ततस्तस्य नाऽऽभवति किं तु पूर्वस्यैव संघाटस्य । अथवा-द्वितीयो विपरिणामनप्रकारस्तमाह-गुरुसकाशे कथ्यमानमन्यस्य वा संघाटस्य शिष्यमाण सस्तारकं श्रुत्वाऽन्य॰ संघाटकस्तत्र गत्वा संस्तारकस्वामिनं पूर्वकथया धर्मकथाकथननावृत्यात्मानुकूल कृत्वा पश्चाद्विपरिणामयति, कथमित्याह-' संथारगदाणे ' त्यादि संस्तारकस्वामिनं पूर्वसंस्तारकदानफलादिलाभितं ब्रूते-अमुकं संघाटकं याचमानं त्रीन्वारान्प्रतिषिध्य तदनन्तरं मम सस्तारक देहि । एवं विपरिणामकरणतो लब्ध॰ स पूर्वस्यैव संघाटकस्याऽऽभवति न पाश्चात्यस्य ।

अथ प्रायश्चित्तविधिमाह—

एवं विपरिणामिएणं,लभती लहुगा य होंति सगणिच्चे ।
अन्नगणिच्चे गुरुगा, मायनिमित्तं भवे गुरुगो ॥ ५० ॥

एवम्-उक्तेन प्रकारेण विपरिणामितेन-स्वामिना यदि लभते स्वगणसत्कसाधुस्तदा तस्य प्रायश्चित्त चत्वारो लघुका, अन्यगणसत्के चत्वारो गुरुका । तथा स्वगणसत्को वा अन्यगणसत्को वा विपरिणम्य लब्ध्वा यदि पृष्ट सन् विपरिणामनमपलपति तदा मायानिमित्तो—मायाप्रत्ययो भवत्यधिको गुरुको मास॰ ।

सम्प्रति व्यवच्छिन्नद्वारमाह—

अह पुण जेणं दिट्ठो, अन्नो लद्धो उ तेण संथारो ।
छिन्नो तदुवरि भावो, ताहे जो लभति तस्सेव ॥५१॥

अथ पुनर्येन संघाटकेन दृष्ट संस्तारकस्तेनान्यो लब्ध संस्तारकस्तस्य पूर्वदृष्टस्योपरि भावोऽध्यवसायश्छिन्नो-व्यवच्छिन्नस्ततो य॰ पश्चात् लभते तस्यैव स आभवति नेतरस्य । गत व्यवच्छिन्नद्वारम् ।

अधुना त्रिप्रतिषिद्धद्वारमाह—

अहवा वि तिन्नि वारा,उ मग्गितो न वि य तेण लद्धो उ ।
भावे छिन्नमछिन्ने, अन्नो जो हवइ तस्सेव ॥ ५२ ॥

अथवा येन दृष्टस्तेन याचित परं न लब्धो द्वितीयमपि वार याचितो न लब्धस्तृतीयमपि वार न लब्धस्तत एव त्रीन् वारान् याचितो न च तेन लब्धस्ततस्तस्योपरि यदि तस्य सघाटकस्य भावो व्यवच्छिन्नो, यदिवा-न व्यवच्छिन्नस्तथा योऽन्यो लभते तस्याऽऽभवति न पूर्वसंघाटकस्य । तदेवं पड्भिर्द्वारैः समाप्त प्रथम दृष्टद्वारम् ।

अधुनाऽवभाषितद्वारमाह—

एवं ता दिट्ठम्मी, ओभासितके वि होंति छन्नेव ।
सोउं अहभावेण य, विप्परिणामे य धम्मकहा ॥५३॥
वोच्छिन्नम्मि य भावे, अन्नो वऽन्नस्स जस्स देज्जाहि ।
एए खलु छन्भेया, ओहारणे होंति बोद्धव्वा ॥५४॥

एवमुक्तेन प्रकारेण दृष्टे-दृष्टद्वारे षड् भेदा प्रकाशिता एव मवभाषितेऽपि षड् भेदा भवन्ति--ज्ञातव्या । तद्यथा--प्रथमं श्रुत्वेति द्वारं, द्वितीयं यथाभावेनेति द्वारं, तृतीयं विपरिणामद्वारं, चतुर्थं धर्मकथाद्वारं, पञ्चमं व्यवच्छिन्नद्वारं, षष्ठमन्यो वा तस्येति द्वारम् । तत्र एते खलु षड् भेदा अवभाषणे भवन्ति-बोद्धव्या. ।

प्रथमद्वारव्याख्यानार्थमाह—

ओभासिते अलद्धे, अव्वोच्छिन्ने य तस्स भावे उ ।
सोउं अण्णो भासइ, लद्धोऽण्णो तप्पुरिल्लस्स ॥ ५५ ॥

संघाटकेन भिक्षामटता संस्तारकस्वामी च संस्तारकं याचित. परं न लब्ध.,अथ च तस्य-संघाटकस्य संस्तारकोपरि भावोऽद्यापि न च व्यवच्छिद्यते तेन च संघाटकेन गुरुसमीपमागत्यालोचितो यथा अमुकस्य गृहे संस्तारको दृष्ट. याचितश्च परं न लब्धः द्वितीयं वारं याचिष्यते एवमवभाषिते अलब्धे अव्यवच्छिन्ने च तस्य संस्तारकस्योपरि भावे विकटनं श्रुत्वा अन्य संघाटकस्तत्र गत्वा याचते लभते, च, स लब्धो नीत. सन् कस्याऽऽभवतीत्यत आह—पूर्वस्य । येन पूर्वमवभाषितोऽपि न लब्धस्तस्याऽऽभवति, तद्विषयभावाव्यवच्छेदान्नेतरस्य ।

सेसाणि जहा दिट्ठे, अह भावादीणि जाव वोच्छिन्ने ।
दाराइं जोएज्जा, छट्ठे सेसं तु वुच्छामि ॥ ५६ ॥

शेषाणि यथा भावादीनि चत्वारि द्वाराणि यावद् व्यवच्छिन्नद्वारम्, यथा दृष्टे--दृष्टद्वारे पूर्वं भावितानि तथा योजयेत् । तद्यथा—एकेन संघाटेन भिक्षामटता कापि संस्तारको दृष्टो याचितश्च परं न लब्ध, द्वितीयः संघाटको यथाभावेन तत्र गत्वा तं संस्तारकमानयति स पूर्वसंघाटकस्याऽऽभवति, न येनानीतस्तस्य । अन्ये तु ब्रुवते--द्वयोरपि संघाटकयोराभवनमधिकृत्य साधारणमिति, गतं यथाभावद्वारम् ॥ २ ॥ अधुना विपरिणामद्वारमुच्यते-गुरुसमीपे विकथ्यमानमन्यस्य कथ्यमानं याचितमलब्धं संस्तारकं मह्य सम्प्रति देहि, अत्रापि पूर्वस्यैव संघाटकस्य स आभवति न येनानीतस्तस्य । गतं विपरिणामद्वारम् ॥ ३ ॥ सम्प्रति धर्मकथाद्वारमुच्यते—अग्रेतनेन संघाटकेन याचिते अलब्धे चान्यसंघाटकस्तत्र गत्वा तं संस्तारकस्वामिनं धर्मकथाकथनेन समाकर्ण्य याचते संस्तारकम्, स तथा लब्ध्वानीत सन् पूर्व संघाटकस्याऽऽभवति न येन पश्चादानीतस्तस्येति । गतं धर्मकथाद्वारम् ॥ ४ ॥ अधुना व्यवच्छिन्नभावद्वारमुच्यते-प्रथमसंघाटकेन संस्तारको याचितो न लब्धस्ततस्तद्विषये भावो व्यवच्छिन्न, गुरुसमीपे च गत्वा तथैवालोचितं यथा अमुकस्य गृहे संस्तारको दृष्टो याचितश्च परं न लब्ध, स तिष्ठतु द्वितीयं वारं न कोऽपि याचिष्यते । एवं व्यवच्छिन्ने भावे ज्ञात्वा योऽन्यसंघाटको याचते, लभते च स च तस्याऽऽभवति, न पूर्वस्य । तदेवं योजितानि यथाभावादीनि चत्वार्यपि द्वाराणि ॥ ५ ॥ अत ऊर्ध्वमाह—षष्ठं द्वारं अन्यो वाऽन्यस्येति लक्षणे निःशेषतस्तं वक्ष्यामि ।

प्रतिज्ञातमेव करोति ।

अच्छिन्ने अन्नोऽन्नं, सो वा अन्नं तु जइ से देज्जाहि ।
कप्पइ जो उ पणइतो, तेण व अन्नेण व न कप्पइ॥५७॥

येन प्रथमसंघाटकेन संस्तारको दृष्टो याचितश्च न लब्धस्तस्य तद्विषये भावे अच्छिन्ने-अव्यवच्छिन्ने अन्येन संघाटकेन तत्र गत्वा याचिते अन्यो मनुष्योऽन्यसंस्तारकं यदि दद्यात्, यदि वा-स एव संस्तारकस्वामी अन्यं संस्तारकं दद्यात्, तदा 'से'-तस्य कल्पते । यस्तु प्रणयितो—याचितः संस्तारक. स तेन स्वामिना अन्येन वा मनुष्येण दीयमानो न कल्पते । गतमवभाषितद्वारम् ।

अधुना लब्धद्वारमाह—

लद्धद्दारे चेवं, जोए जहसंभवं तु दाराइं ।
जत्तियमेत्तो विसेसो, तं वुच्छामी समासेणं ॥५८॥

लब्धद्वारेऽप्येवमुक्तप्रकारेण श्रुत्वादीनि द्वाराणि यथासंभवं योजयेत् । यावन्मात्रश्च विशेषस्तावन्मात्रं तं विशेषं समासेन वक्ष्ये ।

तत्र प्रथमं । श्रुत्वेति द्वारमधिकृत्य विशेषमाह-

ओभासियम्मि लद्धे, भणंति न तरामि इण्हिं नेउं जो ।
अच्छउ नेहामो पुण, कल्ले वा घिच्छिहामो त्ति ॥५९॥

प्रथमसंघाटेन कापि संस्तारको दृष्टो याचितो लब्धश्च, तस्मिन् अवभाषिते लब्धे च साधवो भणन्ति-न शक्नुमः संप्रति भिक्षामटन्तः संस्तारकं नेतुम्, ततस्तिष्ठतु पश्चान्नेष्याम. । एतच्च गुरुसमीपे समागत्य तेन संघाटकेनालोचितम्, तच्च श्रुत्वा अन्यो याचते लभते च, स आनीतः सन् पूर्वसंघाटकस्याऽऽभवति ,न येनानीतस्तस्य । अपरः संघाटकोऽग्रेतनसंघाटकवृत्तान्तमविदित्वा यथाभावेन गत्वा याचते तेनाप्यानीत. पूर्वसंघाटकस्याऽऽभवति न तस्य । अपरे द्वयोरपि तं साधारणमाचक्षते ।

विपरिणामद्वारं साक्षादाह-

नवरि अण्णो आगतो,तेण वि सो चेव पणयितो तत्थ ।
दिन्नो अन्नस्स तओ,वी(वि)परिणामेइ तह चेव ॥६०॥

प्रथमसंघाटकेन संस्तारके याचिते लब्ध नेतुमशक्यतया तत्रैव मुक्ते नवरि-केवलमन्य. संघाटक आगतस्तेनापि तत्र स एव संस्तारक प्रणयितो-याचित. । संस्तारकस्वामिनोक्तं दत्तोऽन्यस्य,ततस्तथैव तं विपरिणामयति,यथा सर्वदैवाहं तव प्रियस्ततो मयि सति किमन्यस्मै तव दातुमुचितं तस्माद्यदि स आगच्छति तर्हि तस्य प्रतिषिध्य पश्चान्मम दातव्य इति । एवं यदि विपरिणम्यानीतो भवति तत. पूर्वतमस्याऽऽभवति,नेतरस्य। तदेवमुक्तं विपरिणामद्वारम् ॥ अधुना धर्मकथाद्वारम्-तथैव प्रथमसंघाटकेन संस्तारके याचिते लब्धे नेतुमशक्यतया तत्रैव मुक्ते अन्यसंघाटकस्तत्र समागत्य तं संस्तारकं याचितवान् । तत संस्तारकस्वामिनोक्त-दत्तोऽन्यस्मै । ततो धर्मकथाकथनतस्तमावर्ज्य ब्रूते यथा तस्य प्रतिषिध्यायं संस्तारको मह्यं देय. । एवमानीत पूर्वसंघाटकस्य स आभवति, नेतरस्य । तथा

येन प्रथमसंघाटकेन संस्तारको याचितो लब्ध. श्रुतश्च तस्य तद्विषये भावः कुतश्चित्कारणात् व्यवच्छिन्न', अन्येन वा अशठभावेन याचितो लब्धश्च तस्याऽऽभवति, न प्रथमसंघाटस्य तस्य तद्विषयभावव्यवच्छेदात्। तथा प्रथमसंघाटकेन संस्तारके याचिते लब्धे नेतुमशक्यतया तत्रैव मुक्ते अन्य. संघाटकस्तत्र समागत्य संस्तारक याचते । तत्र यदि अन्यो मनुष्योऽन्यं संस्तारकं दद्यात्, स वा प्रथमसंघाटकयाचितोऽन्यं तदा स तस्य कल्पते। य' पुन. प्रणयित' स तेनान्येन वा दीयमानो न कल्पते।

तथा च विपरिणामद्वारमुक्त्वा शेषद्वाराणामतिदेशमाह--

अहभावोऽऽलोयणध-म्मकहण वोच्छिन्नमन्नदाराणि ।
नेयाणि तहा चेव उ, जहेव उ छुद्धदारम्मि ॥ ६१ ॥

यथाभावद्वारम्, 'आलोयण' त्ति-पदैकदेशे पदसमुदायोपचाराद् आलोचनां श्रुत्वेति द्वारं, धर्मकथनद्वार, व्यवच्छिन्नद्वारमन्यद्वार चेति पञ्च द्वाराणि यथैवावभाषितद्वारेऽभिहितानि तथैव ज्ञेयानि। षष्ठ तु विपरिणामद्वारं साक्षादुक्तम्। गतं लब्धद्वारम्।

इदानीं संज्ञातिकद्वारमाह--

सएणायए वि एचिय, दारा नवरं इमं तु नाणत्तं ।
आयरिएणाभिहितो, गेएहह संथारयं अज्ज ! ॥ ६२ ॥
सुद्धदसमीठियाणं, वेति य घेच्छामि तद्दिणं चेव ।
नायगिहे परिणातो, मए उ संथारतो भंते ! ॥६३॥

यान्येव श्रुताऽऽदीनि पद् द्वाराणि लब्धद्वाराभिहितानि एतान्येव संज्ञातिकद्वारेऽपि द्रष्टव्यानि, नवरं भावनाया यन्नानात्वं तदिद वक्ष्यमाणम्। तदेवाऽऽह--' आयरिएणे ' त्यादि आचार्येणाभिहितः आर्य ! सस्तारकं गृहाण, एवमुक्त. सन् संज्ञातिकानां गृहमागच्छन् दृष्ट. सस्तारको याचितो लब्धश्च। अथवा-संज्ञातिकैरयाचितैरेव स उक्तो गृहाण संस्तारकम्, ततस्तेनोक्तम्-यस्मिन् दिवसे सस्तारके स्वप्तुमारभ्यते तस्मिन् दिवसे नेष्याम', आचार्यश्च शुद्धदशम्या तत्र स्थित' स आगत्य शुद्धदशमीस्थिताना गुरूणामन्ते ब्रूते--आलोचयति भदन्त ! मया ज्ञातिगृहे संस्तारक प्रतिज्ञप्तो निभालितस्तिष्ठति। ततो यत्र दिने संस्तारके स्वप्स्यते तद्दिवसमेव-तस्मिन्नेव दिने ग्रहीष्याम । एवमालोचितं श्रुत्वा अन्यो याचते लभते च, स आनीत पूर्वसंघाटकस्याऽऽभवति न येनानीतस्तस्य। गत श्रुत्वा अपरः संघाटकोऽग्रेतनसंघाटकवृत्तान्तमनवज्ञाय यथाभावेन गत्वा याचते लभते च स तेनानीत' पूर्वसघाटकस्याऽऽभवति न तस्य। अपरे तु द्वयोरपि सघाटकयोस्त साधारणमाचक्षते। यथाभावद्वारमपि गतम्।

इदानीं साक्षाद्विपरिणामद्वारमाह--

विपरीणामे तह वि य, अन्नो गंतूण तत्थ नायगिहं ।
आसन्नयरो गेएहइ, मित्तो अएणो वि मं वोत्तुं ॥६४॥
अन्ने वि तस्स नियगा, देहिह अन्नं च तस्स मम दाउं ।
दुल्लभलाभमणा उं-ठियम्मि दाणं हवति सुद्धं ॥६५॥

सन्नायगिहो अन्नो, न गेएहए तेण असमणुणातो ।
सति विहवे सत्तीए,सो वि हु न वि तेण निव्विसति ॥६६॥

तेन साधुना मया भदन्त ! ज्ञातगृहे सस्तारक प्रतिज्ञप्तोऽस्ति ततस्तस्मिन्नेव दिने समानेष्यते, इत्यालोचितं श्रुत्वा अन्य आसन्नतरो मित्ररूपो वा ज्ञातिगृहं गत्वा तत्र तथैव संस्तारकस्वामिनं विपरिणामयति, स चान्यो विपरिणम्य गृह्णाति। इदं वक्ष्यमाणमुक्त्वा तदेवाह-' अन्ने वी ' त्यादि अन्येऽपि च तस्य निजका संस्तारक दास्यन्ति। यदि वा-ममामुं सस्तारकं दत्त्वा तस्यान्य संस्तारकं दद्या.। अथवा-अस्मादृशे अज्ञातोञ्छवृत्तिजीविनि यद् दुर्लभदान दीयते तद्भवति शुद्धमिहपरलोकाशंसाविप्रमुक्तत्वात्। तथा स्वज्ञातगृहेऽन्योऽसंज्ञातिकस्तेन संस्तारकस्वामिना असमनुज्ञातो न गृह्णाति। अह पुन संज्ञातिकस्ततो-वा शय्यामेकवारमनुज्ञातस्यापि सस्तारकस्य ग्रहणे, तथा सति विभवे, यदि वा-विभवाभावेऽपि स्वशक्त्या सोऽपि संज्ञातिकस्तेनात्मीयेन संज्ञातिकेन विना न निर्विशति उपभुङ्क्ते भक्तपानसंस्तारकादि तस्मान्मम दातव्य एष संस्तारक इति। एवं विपरिणम्यानीतः पूर्वसंघाटस्याऽऽभवति न येनानीतस्तस्य। गतं विपरिणामद्वारम् ॥ अधुना धर्मकथाद्वारमुच्यते--तथैवालोचनामाकर्ण्यान्य संघाटकस्तत्रागत्य धर्मकथामारभते, ततो धर्मकथया तमत्यन्तमावर्ज्य तं संस्तारकं याचते, स धर्मकथाश्रवणोपरोधतो न निषेद्धुं शक्त इति तस्मै दत्तवान्, सोऽपि पूर्वसंघाटस्याऽऽभवति न येनानीतस्तस्य। गतं धर्मद्वारम् ॥ संप्रति व्यवच्छिन्नद्वारमाह, भावना-तस्य संज्ञातिकस्य याचितसंस्तारकविषये भाव. कुतश्चित्कारणतो व्यवच्छिन्नोऽन्येन च सघाटकेनाभावेन याचित्वा समानीत। स येनानीतस्तस्याऽऽभवति, न पूर्वसंज्ञातिकस्य। अन्यद्वारभावना त्वियम्-पूर्वप्रकारेण तेन संज्ञातिकेन गुरूणामन्तिके विकटने कृते तत् श्रुत्वा अन्य संघाटकस्तत्र गत्वा संस्तारकं याचते, तत्रान्यो मनुष्योऽन्य सस्तारकं यदि ददाति, यदि वा--स एव पूर्वसंघाटकयाचित. संस्तारकस्वामी; परमन्यं संस्तारक तदा कल्पते । पूर्वं याचितस्त्वनेनान्येन वा दीयमानो न कल्पते।

तथा चाऽऽह--

सेसाणि य दाराणि, तह वि य बुद्धिए भासणीयाइं ।
उद्धद्दारे वि तहा, नवरं उद्धम्मि नाणत्तं ॥ ६७ ॥

शेषाण्यपि विपरिणामजानि श्रुत्वादीनि द्वाराणि तथैव प्राग्गुक्तप्रकारेणैव बुद्ध्या परिभाव्य भावनीयानि तानि च तथैव भावितानि। गतं संज्ञातिकद्वारम् ॥ इदानीमूर्द्धद्वारमाह--ऊर्द्धद्वारेऽपि तथा पूर्वोक्तप्रकारेण द्वाराणि षडपि श्रुत्वादीनि योजनीयानि नवरमूर्द्धे--ऊर्द्धकारणे नानात्वम् ।

तदेव भावयति--

आणेऊण न तिणि, वासस्स य आगमं तु नाऊणं ।
मा उल्लेज्ज हु छुणे, ठवेइ अण्णो य मग्गेज्जा ॥ ६८ ॥

सघाटकेन क्वापि गृहे संस्तारको दृष्टो, याचितो लब्धश्च । आनेतुमपि व्यवस्मिन पर वर्षस्य आगमम्-आगमनं

ध्यात्वा माऽपान्तराले वर्षे पतेदिति कृत्वा नानेतुं तीर्ण-गृहः। तया मा वर्षेणात्र प्रस्तारित आर्द्रीक्रियेत। तथा मा अन्य संघाटक समागत्य मार्गयेत्—याचेत इति छन्ने प्रदेशे कुड्ये-अवष्टभ्य ऊर्द्धीकृतस्ततो गुरुसमीपे समागत्य विकटयति, तच्च श्रुत्वा अन्य उपेत्य-आगत्य याचते स च तेनानीत पूर्वसंघाटकस्याऽऽभवति न येनानीतस्तस्य। गतं श्रुत्वा द्वारम्।

इदानीं यथाभावद्वारं विवक्षुराह—

पुच्छाए णाणत्तं, केणुद्धकयं तु पुच्छियमसिट्ठे।
अन्नासढमाणीयं, पि पुरिल्लो केइ साहारं॥ ६९॥

यथाभावद्वारे पृच्छाया नानात्वं, किं तदिति चेत्?। उच्यते—अन्य. संघाटकस्तत्र यथाभावेन गतस्तेन ऊर्द्धीकृतं संस्तारकं दृष्ट्वा चिन्तितम्—किं नामैष संयतेन ऊर्द्धीकृत उत गृहस्थेन?, यथाभावत एवं तेन संशयेन पृष्ट-केनायमूर्द्धीकृत इति?, गृहस्थैश्च न किमपि शिष्ट-कथितम्, ततोऽन्येन संघाटकेनाशठेन संस्तारको याचितो लब्ध-आनीतश्च। तथाऽन्येनाशठेनानीतमपि संस्तारकं पूर्वस्य संघाटकस्याऽऽभवन्तमाचक्षते, केचित् पुनर्द्वयोरपि संघाटकयोः साधारणम्। अथ पृष्टे गृहस्थैराख्यातं गृहीतेनोर्द्धीकृत., यथाभावेन याचितो लब्धश्च सोऽप्यानीत पूर्वसंघाटस्याऽऽभवति। अपरं तु द्वयोरपि साधारणमाहुः।

छन्ने उड्ढो व कतो, संथारो जइ वि सो अहाभावा।
तत्थ वि सामायारी, पुच्छिज्जा इतरहा लहुतो॥७०॥

यद्यपि संस्तारो यथाभावात्—यथाभावेन गृहस्थै. छन्ने प्रदेशे ऊर्द्धीकृतो ज्ञायते चैतत्तथापि तत्रेयं सामाचारी—गृहस्थोऽवश्यमुक्तप्रकारेण पृच्छयते, इतरथा-पृच्छाकरणाभावे प्रायश्चित्तं लघुको मास.। गतं यथाभावद्वारम्। विपरिणामेन धर्मकथाव्यवच्छिन्नभावान्यद्वाराणि पूर्ववत् भावनीयानि।

तथा चाह—

सेसाइं तह चेव य, विपरीणामाइयाइँ दाराइं।
वुद्धीएँ विभामेज्जा, एत्तो वुच्छं पभूदारं॥७१॥

शेषाणि—विपरिणामादीनि द्वाराणि बुद्धया यथा प्रागभिहितानि तथैव परिभाव्य विभाषेत-प्रतिपादयेत्। गतमूर्द्धीकृतद्वारम्। अत ऊर्ध्वं प्रभुद्वारं वक्ष्यामि।

प्रतिज्ञातमेव निर्वाहयति-

पभुदारे वी एवं, नवरं पुण तत्थ होइ अहभावे।
एगेण पुत्तो जाइओ, विइएण पिया उ तस्सेव॥७२॥

प्रभुद्वारेऽपि एवं—पूर्वोक्तप्रकारेण श्रुत्यादीनि षट् द्वाराणि ज्ञेयानि नवरं पुनस्तत्र प्रभुद्वारे यथाभावलक्षणे अवान्तरभेदे नानात्वं भवति। एकेन संघाटकेन यथाभावेन पुत्रो याचित, एकेन तस्यैव पिता, द्वाभ्यामपि दत्त स कस्याऽऽभवति?।

तत आह—

जो पभुतरओ तेसिं, अहवा दोहिं पि जस्स दिन्नं तु।
अपभुम्मि लहू आणा, एगतरपदोसतो जं च॥ ७३॥

तयो. पितापुत्रयोर्मध्ये यः प्रभुतरस्तेन यस्य दत्तस्तस्याऽऽभवति। अथ द्वावपि प्रभू ताभ्यामपि संभूय यस्य. दत्तस्तस्याऽऽभवति, यस्य तु प्रतिषिद्धस्तस्य नाऽऽभवति। अथाप्रभुणादत्तं गृह्णाति, गाथायां सप्तमी तृतीयार्थे, तदा तस्य प्रायश्चित्तं चत्वारो लघव', तथा आज्ञादयो दोषाः। यच्च एकतरप्रद्वेषत आपद्यते प्रायश्चित्तं तदपि तस्य द्रष्टव्यम्। एकतरप्रद्वेषो नाम—यः प्रभु. स संयतस्य—वोपरि प्रद्वेषं यायात्, येन वा अप्रभुणा सता दत्तस्तस्य।

अहवा दोण्हि वि पहुणो, ताहे साहारणं तु दोण्हं पि।
विप्परिणामादीणि उ, सेसाणि तहेव मासेज्जा॥७४॥

अथवा द्वावपि पितापुत्रौ प्रभू, द्वाभ्यामपि च पृथक् पृथक् द्वयोः संघाटकयोरनुज्ञातः, तदा तयोर्द्वयोरपि संघाटकयोः साधारणमाचक्षते संस्तारकम्। तदेवं यथाभावे विशेषो दर्शित.। शेषाणि तु विपरिणामादीनि पञ्चापि द्वाराणि तथैव भावनीयानि यथा प्रागभिहितानि।

साम्प्रतमुपसंहारमाह—

एसो विही उ भणितो, जहियं संघाडएहिँ मग्गंति।
संघाडे अलभंतो, ताहे वंदेण मग्गंति॥ ७५॥

यत्र संघाटकै. प्रत्येकं प्रत्येकं संस्तारका मृग्यन्ते तत्र एष प्रत्येकं प्रत्येकमानीताना संस्तारकाणामाभवनव्यवहारविषयो विधिरुक्त., यत्र पुनरेकैक. संघाटको न लभते तदा वृन्दसाध्यानि कार्याणि वृन्देन कर्त्तव्यानीति न्यायात् संघाटकैरलभमाने वृन्देन-समुदायेन मार्गयन्ति।

तत्र विधिमतिदेशत आह-

वंदेणं तह चेव य, गहणुण्णवणाइतो विही एसो।
नवरं पुण णाणत्तं, अप्पणए होइ णायव्वं॥ ७६॥

वृन्देनापि मार्गणे तथैव तेनैव प्रकारेण ग्रहणे अनुज्ञापनायामादिशब्दादर्पणे च विधिरेष प्रागभिहितो द्रष्टव्यो नवरं पुनरर्पणे भवति नानात्वं ज्ञातव्यम्।

तदेवाऽऽह—

सव्वे वि दिट्ठरूवे, करेहि पुन्नम्मि अम्ह एगयरो।
अण्णो वा वाघाए, अप्पहिति जं भणसि तस्स॥ ७७॥

संस्तारकस्वामिनं प्रति उच्यते-सर्वानप्यस्मान् दृष्टरूपान्-दृष्टमूर्त्तीन् कुरु अस्माकमेकतर' पूर्णे वर्षाकाले संस्तारकं युष्माकमर्पयिष्यति। अथास्माकमेतेषां कश्चनापि व्याघातो भवेत्तदा अन्योऽपि यत्त्वं भणसि तस्य समर्पयिष्यति।

एवं ता सग्गामे, असती आणेज्ज अण्णगामातो।
सुत्तत्थे काऊणं, मग्गइ भिक्खं तु अडमाणो॥ ७८॥

एवमुक्तप्रकारेण तावत्स्वग्रामे संस्तारकानयने विधिरुक्त, असति-स्वग्रामे संस्तारकस्याभावे अन्यग्रामादपि आनयेत्। कथमित्याह—सूत्रार्थौ कृत्वा सूत्रपौरुषीमर्थपौरुषीं च कृत्वा भिक्षामटन् संस्तारकं मार्गयति। यदि पुनरन्यग्रा-

मेऽपि प्रत्येकं संघाटकस्यालाभस्तदा अर्धपौरुषीं हापयित्वा तत्र वृन्देन गत्वा याच्यते।

अदिट्ठे सामिम्मि उ, वसिउं आणेइ विइयदिवसम्मि ।
सक्खेत्तम्मि उ असते, आणयणं खेत्तबहियातो ॥७६॥

यदि स्वग्रामे न दृश्यते संस्तारको, दृश्यमानो वा न लभ्यते तदा स्वक्षेत्राद् द्विगव्यूतप्रमाणे वा, तत्रापि न लभ्यते तदा अन्यग्रामे गत्वा याचनीयः। अथ न दृश्यते तत्र संस्तारकस्वामी तदा गृहे उषित्वा द्वितीयदिवसे संस्तारकमनुज्ञाप्य गृहीत्वा समागच्छति। अथ स्वक्षेत्रे न लभ्यते तदा स्वक्षेत्रे संस्तारकस्याभावे स्वक्षेत्राद्बहिष्टादप्यानयनं संस्तारकस्य द्वित्रिदिनमध्ये कर्त्तव्यम्।

सव्वेहि आगएहिं, दाउं गुरुणो उ सेसें जहवुड्ढं ।
संथारे घेत्तूणं, ओगासे होइऽणुन्नवणा ॥८०॥

सर्वैरपि संघाटकैः परपरतरग्रामेभ्यः समागतैः संस्तारकपरिपूर्णतायां सत्यां त्रय उत्कृष्टाः संस्तारका गुरोर्दातव्याः, ततः शेषैर्यथावृद्धं—यथारत्नाधिकतया ग्रहीतव्याः। तान्संस्तारकान् गृहीत्वा तदनन्तरमवकाशे भवत्यनुज्ञापना। एतावता ग्रहणमिति द्वारं समाप्तमनुज्ञापनाद्वारमापतितमित्यावेदितम्।

जो पुव्वमणुण्णवितो, पेसिज्जंतेण होति ओगाढो ।
हेट्ठिल्ले सुत्तम्मी,तस्सावसरो इहं पत्तो ॥८१॥

यः पूर्वमधस्तने प्रथमे पिण्डसूत्रे प्रेष्यमाणेनावकाशोऽनुज्ञापितस्तस्यावसर इह प्राप्तस्ततः स भण्यते।

नाऊण सुद्धभावं, थेरा वियरंति तं तु ओगासं ।
सेसाणि वि-जो जस्स उ,पाउग्गो तस्स तं देंति ॥८२॥

तत्र प्रेष्यमाणस्यावकाशमनुज्ञापयतः स्थविरा-आचार्याः शुद्धं भावं ज्ञात्वा तमेवावकाशं वितरन्ति-अनुजानते, शेषाणामपि योऽवकाशो यस्य साधोः प्रायोग्यस्ततस्तस्येदं ददति।

अत्र विधिमाह—

खेलनिवातपवाते, कालगिलाणे य सेहपडियरए ।
समविसमे पडिपुच्छा, आसंखडिए अणुन्नवणा ॥८३॥

यस्य खेलः-श्लेष्मा प्रस्यन्दते स गुरून् अनुज्ञापयति-भगवन्! श्लेष्मा पतति ततोऽन्यदवकाशान्तरमनुजानीत ततस्तस्मादन्योऽवकाशो दातव्यः। तथा निवाते घर्मे निपीड्यमानो यदि प्रवातमनुज्ञापयति तर्हि तस्य प्रवातो दातव्यः। प्रवातेन पीड्यमानस्य निवातं कालग्रहीति द्वारमूलमनुज्ञापयति। स तत्र स्थाप्यते ग्लानस्य समीपे शैक्षस्य प्रतिचारकः शिक्षाद्वयं ग्राहयित्वा शैक्षकस्य समीपे समविषमायां भूमौ यस्य पार्श्वाणि दु:खयति सोऽध्यास्याया भूमौ स्थाप्यते,योऽथ पुनः पुनः प्रतिपृच्छति स तस्य पार्श्वे आसंखडिक सूत्रधारकस्य पार्श्वे, एवमनुज्ञापना साधूनां भवति। आचार्येण च शुद्धभावमवगम्य तथैवानुज्ञायते।

अथ उपसंहारमाह-

एवमणुण्णवणाए, एयं दारं इहं परिसमत्तं ।
एगंगियादिदादारा, एत्तो उड्ढं पवक्खामि ॥ ८४ ॥

एवम्—उक्तप्रकारेण साधूनामनुज्ञापनायां भणितायामेतत् अनुज्ञापनालक्षणं द्वारमिह परिसमाप्तम्, अत ऊर्द्धं तु एकाङ्गिकादीनि द्वाराणि प्रवक्ष्यामि।

प्रतिज्ञातमेव निर्वाहयति—

असंघातिमेव फलगं, घेत्तव्वं तस्स असति संघाइं ।
दोमादि तस्स असती,गेण्हेज्ज अहाकडा कं(वी)टी॥८५॥

पूर्वमसंघातिममेव फलकं ग्रहीतव्यम्, तस्यासत्यभावे संघातिमम्। किंविशिष्टमित्याह—द्व्यादिफलकात्मकं—द्विफलकात्मकम्, आदिशब्दात्—त्रिफलकात्मकं चतुःफलकात्मकं वा गृह्णीयादिति योगः। तस्य फलकसंघातात्मकस्य संस्तारकस्याभावे यथाकृता कण्टी(म्वी)गृह्णीयात्, गृहीत्वा तन्मयः संस्तारको विधीयते। तत्र या नमन्तिकं व्यस्ताः सान्तराः क्रियन्ते, निरन्तराभिः प्राणजातिविराधनात्, एतच्च फलकेष्वपि द्रष्टव्यम्।

तथा चाह—

दोमादिसंतराणि उ, करे इमा तत्थ ऊऽनमंतेहिं ।
संघरिसेणऽणोण्णं, पाणादिविराहणा हुज्जा ॥ ८६ ॥

द्व्यादीनि फलकानि नमनशीलानि सान्तराणि करोति। किमर्थमित्याह-तत्र द्व्यादिफलकात्मके संस्तारकेऽनमद्भिः फलकैरन्योन्यं संस्तारके प्राणादीनां विराधना भवेत्। प्राणा द्वित्रिचतुरिन्द्रियाः, आदिशब्दाद्-जीवादिपरिग्रहः। गतमेकाङ्गिकद्वारम्। इदानीमकुचद्वारम्। कुच्-स्यन्दने। न कुचतीत्यकुचः, इगुपान्त्यलक्षणः कप्रत्ययः। यस्तथा बद्धः सन् न स्यन्दते सोऽकुचग्राह्य। यस्तु कुचबन्धनः स परिहार्यः।

तथा चाह

कुयबंधणम्मि लहुगा, विराहणा होइ संजमायाए ।
सिढिलिज्जंतम्मि जहा, विराहणा होइ पाणाणं ॥८७॥
पवडिज्ज व दुब्बद्धे, विराहणा तत्थ होइ आयाए ।
जम्हा एए दोसा, तम्हा उ कुयं न बंधेज्जा ॥ ८८ ॥

कुचं—शिथिलं बन्धनं यस्य तस्मिन् कुचबन्धने संस्तारके गृह्यमाणे प्रायश्चित्तं चत्वारो लघुकास्तथा विराधना भवति संयमे, आत्मनि च। यतस्तस्मिन् शैथिल्यमाने शिथिलबन्धनतया प्रस्यन्दमाने प्राणानां विराधना भवति। एषा संयमविराधना दुर्बद्धे स तस्मात् प्रपतेत्, तत्र भवत्यात्मविराधना। यस्मादेते दोषा तस्मात् यथा कुचं—शिथिलं भवेत्, तथा न बध्नीयात्किं तु गाढबन्धनबद्धं कुर्यात्।

तद्दिवसं पडिलेहा, ईमी उक्खेत्तु हेट्ठ उवरिं च ।
रयहरणेणं भंडं, अके भूमीऍ वा काउं ॥ ८६ ॥

तद्दिवसं—प्रतिदिवसं दिने दिने इत्यर्थः। भाण्डं संस्तारकादिलक्षणमीषत् उत्क्षिप्य अङ्के—उत्सङ्गे भूमौ वा कृत्वा अध उपरि च रजोहरणेन तस्य प्रत्युपेक्षा कर्त्तव्या।

एवं तु दोण्णि वारा, पडिलेहा तम्मि होइ कायव्वा ।
सव्वे बंधे मुत्तुं, पडिलेहा तस्स कायव्वा ॥ ६० ॥

एवम्-उक्तेन प्रकारेण द्वौ वारौ प्रातरपराह्णे च तस्य संस्तारकस्य प्रत्युपेक्षा भवति कर्त्तव्या । पजस्य पक्षस्यान्ते पुन सर्वान् बन्धान् मुक्त्वा-छोटयित्वा प्रत्युपेक्षा भवति कर्त्तव्या । गतमकुचद्वारम् ।

अधुना प्रायोग्यद्वारमाह—

उग्गममादी सुद्धो, गहणादी जाव वण्णितो एसो ।
एसो खलु पायोग्गा, हेट्ठिमसुत्ते य जो भणितो ॥ ०१ ॥

य उद्गमादिदोषशुद्ध—उद्गमोत्पादनादिदोषविशुद्धो यो वा एषोऽनन्तरमुपवर्णितो ग्रहणादौ ग्रहणेऽनुज्ञापनायां बद्ध एकाङ्गिकोऽकुचश्च । यदि वा—यो भणितोऽधस्तनसूत्रे—ऋतुबद्धप्रत्येकसूत्रे द्वात्रिंशद्भङ्गेषु मध्ये प्रथमभङ्गवर्त्ती एष खलु प्रायोग्यो वेदितव्यः ।

कज्जम्मि समत्तम्मि, अप्पेयव्वो अणप्पिणे लहुगा ।
आणादीया दोसा, विइयं उट्ठाणहियदड्ढो ॥ ६२ ॥

कार्ये समाप्ते सति नियमात् संस्तारकोऽर्पयितव्यः । अनर्प्पणे प्रायश्चित्तं चत्वारो लघुका , आज्ञादयश्च दोषा । अत्रापि द्वितीयपदमपवादपदम् । यदि रोगस्योत्थानं प्रवर्त्तेत, स्तेनैर्वाऽपहृतोऽग्निना वा कथमपि दग्धस्तदा नार्पणमिति । तदेवं भावितं वर्षावाससूत्रम् ।

संप्रति वृद्धावाससूत्रभावनार्थमाह—

वुड्ढावासे चेवं, गहणादिपदा उ होंति नायव्वा ।
नाणत्तखेत्तकाले, अप्पडिहारी य सो नियमा ॥ ६३ ॥

वृद्धावासेऽप्येवं—पूर्वोक्तेन प्रकारेण ग्रहणादीनि पदानि ज्ञातव्यानि भवन्ति । किमुक्तं भवति । यथा प्राक् वर्षावासे ग्रहणानुज्ञापनैकाङ्गिकाकुचप्रायोग्यलक्षणानि पञ्च द्वाराण्यभिहितानि, तथा—वृद्धावासेऽप्यनुगन्तव्यानि । तुशब्दो विशेषणे । स चैतद्विशिनष्टि-वृद्धावासे ऋतुबद्धेऽप्येष एव विधिरिति, नवरमत्र नानात्वं क्षेत्रे काले च तथा नियमादप्रतिहारी स वृद्धावासयोग्यः संस्तारको ग्रहीतव्य ।

संप्रत्येतदेव सुस्पष्टं विभावयिषुराह—

काले जा पंचाहं, परेण वा खेत्तं जाव वत्तीसा ।
अप्पडिहारी असती, मंगलमादीसु पुव्वुत्ता ॥ ६४ ॥

इह वर्षावासे संस्तारकस्यानयने कालत उत्कर्षेण त्रीणि दिनान्युक्तानि, अत्र तु वृद्धावासे काले-कालमधिकृत्य यावत्पञ्चाहं—पञ्च दिनानि, तत परेण वा आनयनं द्रष्टव्यम् । क्षेत्रतो यावत् द्वात्रिंशत् योजनानि । तथा अप्रतिहारिणोऽसत्यभावे संस्तारकस्य यानि मङ्गलादीनि पूर्वमुक्तानि तानि प्रयोक्तव्यानि । व्य० ८ उ० ।

रत्नाधिकतया रत्नाधिकार्थाय शय्यासंस्तारग्रहणम्-

कप्पइ निग्गंथाण वा निग्गंथीण वा अहारायणियाए सेज्जासंथारए पडिगाहित्तए ॥ २० ॥

अथास्य सूत्रस्य क संबन्ध इत्याह—

जइ तु जहक्कमेणं, उवहीसंथारएसु उवयंति ।
तेसिं पि जया गहणं,तं पि हु एमेव संबंधो ॥६८०॥

अथ रत्नाधिकक्रमेणोपधिं गृहीत्वा ततस्ते स्वस्वसंस्तारकभूमिषु स्थापयन्ति।तेषामपि च संस्तारकाणां यदा ग्रहणं तदा तदप्येवमेव यथारत्नाधिकं कर्त्तव्यमेष पूर्वसूत्रेण संबन्ध ,अनेन संबन्धेनायातस्यास्य (सूत्रस्य-२०) व्याख्या-कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा यथारत्नाधिकं शय्यासंस्तारकान् प्रतिग्रहीतुमिति सूत्रसंक्षेपार्थ ।

अथेदमेव सूत्रं विवरीषुराह—

सेज्जासंथारो वा, सेज्जा वसही उ ठाणसंथारो ।
पुव्वण्हम्मि उ गहणं,अगिण्हणं लहुग आणादी ।६८१।

संस्तारो नाम शय्या-वसतिस्तस्या यत् स्थानं शयनयोग्यावकाशलक्षणं स शय्यासंस्तारक उच्यते। तस्य च शय्यासंस्तारकस्य उपाश्रयं प्राप्तै पूर्वाह्णवेलायामेव ग्रहणं कर्त्तव्यम् , अग्रहणे मासलघु प्रायश्चित्तमाज्ञादयश्च दोषाः ।

चोयगपुच्छा दोसा, मंडलिबंधम्मि होइ आगमणं ।
संयम आयविराहणा,वियायगहणे य जे दोसा ॥६८२॥

अत्र नोदक पृच्छां करोति-यदि पूर्वाह्ण एव ग्रामं प्राप्तास्त तस्तदैव शय्यासंस्तारकमपि गृह्णन्तु, वयमप्येतत्प्रतिपद्यामहे ततो बहिरेव समुद्दिश्य चरमपौरुषीप्रत्युपेक्षणं कृत्वा स्वाध्यायं च विधाय कालवेलाया ग्रामं प्रविशन्तु। सूरिराह—'दोस' त्ति—बहिर्भुञ्जानाना बहवो दोषाः । कथमित्याह—मण्डलीबन्धे चिलिमिलिकां दत्त्वा मण्डलीरचनया भोजने विधीयमानो कुतूहलेन सागारिकाणामागमनं भवति, तै सहासंखडे क्रियमाणे संयमात्मविराधना। अकाले वसतेर्ग्रहणे ये दोषा भवन्ति, तन्निष्पन्नं प्रायश्चित्तं भवतीति द्वारगाथासमासार्थ ।

सांप्रतमेनामेव विवरीषुराह—

अइभारेण व इरियं, न सोहए कंटगाइ आयाए ।
भत्तट्ठिय वोसरिया, अतितुं एवं जढा दोसा ॥६८३॥

पर प्राह—भक्तवेलायां प्राप्तैस्तावत्प्रथमतो भक्तं ग्रहीतव्यमन्यथा वेलातिक्रमे भक्तपानलाभो न भवेद् , ततो भक्तपानं गृहीत्वा वसतिं गवेषयित्वा यदि तदानीमेव तत्र प्रवेशः क्रियते तदा भक्तपानोपकरणसत्के योऽतिभारस्तेन वाशब्दस्योक्तसमुच्चयार्थतया बुभुक्षातृष्णापरितापनया चोपयोगमप्रयच्छन्त संयमेर्यां न शोधयेयु । आत्मनि कण्टकादिकं न पश्येयु ।एवं च यथाक्रमं संयमात्मविराधना।ततो भक्तार्थितव्युत्सृष्टा -पूर्वं भक्तार्थिता बहिरेव समुद्दिष्टास्ततो व्युत्सृष्टा कृतपुरीषप्रस्रवणोत्सर्गा सन्तो ग्राममतियन्तु प्रविशन्तु । एवं हि दोषा संयमात्मविराधनालक्षणा परित्यक्ता भवन्ति ।

अथाऽऽचार्य प्रत्युत्तरयति—

आयरियवयणदोसा, दुविहा नियमा उ संजमायाए ।
वच्चह को वा सामी, असंखडं मंडलीए वा ॥६८४॥

आचार्यस्य वचनमिदम्-त्वदुक्तनीत्या बहिर्भुञ्जानाना नियमाद् द्विविधा संयमात्मविराधनादोषा भवन्ति। तथा हि-तैस्तद् भक्तपानमानीतं,सागारिकाश्च कुतूहलवशाद् तद्दर्शनार्थमागतास्ततो यदि तावन्तं कालं भक्तपान धारयन्तस्ति-

ह्नन्ति तदा भारेण महती परितापना भवेत्, सूत्रार्थयोश्च परिहानिरुपजायेत । अथ सागारिकान् ब्रुवते—ब्रजत यूयं ततोऽधिकरणं भवति । अथवा—सागारिका एवमुच्यमाना ब्रुवीरन् कोऽस्य वृक्षस्य देवकुलस्य वा स्वामी यो वाऽस्माकं संमुखं व्रजतीति भणिते एवमसंखडे तैः सह संजाते ततश्च भाजनभेदादयो दोषाः । अथ मण्डल्या रचितायां सागारिकाः समागच्छन्ति ततो महान्तमुड्डाहं कुर्युः ।

अमुमेवार्थं सविशेषमाह—

भत्तट्ठिणो सज्झाए, पडिलेहण रत्तिगेण्हणे जं च ।
पुव्वण्हम्मि तु गहणं,परिहरिया ते भवे दोसा ॥६८५॥

भक्तार्थिना मण्डल्या भोजनं स्वाध्यायं प्रत्युपेक्षणा वा क्रियमाणा विलोक्येति उड्डाहं उड्डं वक्रं वा ब्रुवीरन्, तत्रापि तथैवासंखडिदोष. । अथ ते सागारिका· प्रद्विष्टाः सन्तो वसतिं न प्रयच्छन्ति ततोऽपरं ग्रामं गच्छेयु· । तत्र च विकाले प्राप्ताः सन्तो रात्रौ वसतिग्रहणं कुर्वन्तो यद्दोषजालमापद्यन्ते तन्निष्पन्नं प्रायश्चित्तम्, अत· पूर्वाह्ने एव वसतेर्ग्रहणं कर्त्तव्यम्, ततश्च ते पूर्वोक्ता दोषाः परिहृता भवन्ति ।

किं च—

कोतूहल आगमणं, संखोहेणं अकंटगमणादी ।
ते चेव संखडादी, वसहिं व न देंति जं चऽन्नं ॥६८६॥

मण्डल्यां सागारिका· कुतूहलेनागमन कुर्यु', तत्र कस्यापि संयतस्य संक्षोभेण भक्तपानस्य कण्टगमादिकमथोतोगमनप्रभृतिकं भवेत् । अथवा-कोऽप्यसहिष्णुर्ब्रूयात् किमेनं प्रति कथयत, तत एवासंखडादयो दोषा· । अथ सागारिकमिति कृत्वा अभुक्ता एव भक्तपानव्यग्रहस्ता ग्राम प्रविशन्ति, तत्र च यै· सममसंखड कृतं तत्र ते वसतिं न प्रयच्छेयु·, अन्यानपि च ददतो निवारयेयु । एव च तत्र निवसतावप्राप्यमाणाया यदन्यद्दोषजातमासज्जते तन्निष्पन्नं प्रायश्चित्तम् ।

अथ वसत्यभावादकृतभोजना एवान्यं ग्रामं गच्छेयु—
स्तत इमे दोषाः—

भारेण वेयणा य, अनपेहा खाणुमाइए दोसे ।
इरियाइसंजमम्मी, परिगलमाणे य छक्काया ॥ ६८७ ॥

भक्तपानस्योपकरणस्य च सबन्धिना भारेण वेदना भवेत्, तथा च स्थाणुकण्टकादीन् दोषाननपेक्षतश्चात्मविराधना, यत्पुनरीर्याया अशोधन सा सयमविराधना । परिगलति भक्तपाने षट्कायविराधना ।

तत्र प्राप्तान् दोषानभिधित्सुराह-

पविसणमग्गणठाणे, वेसित्थिदुगुंछिए य सुणे य ।
सज्झाए संथारे, उच्चारे चेव पासवणे ॥ ६८८ ॥

अन्यस्मिन् ग्रामे विकालवेलाया प्रवेशे कृते वसतेर्मार्गणे परस्परस्फिटितानामाकारणेन महानधिकरणदोषो भवति । वेश्यास्त्री (वा) पाटके चर्म्मकारादिस्थाने वा जुगुप्सिते तिष्ठता बहुप्रमाणं दोषजातम् । शून्यगृहादौ वा प्रत्युपेक्षिताया संस्तारकमुच्चारं प्रस्रवणं च कुर्वतां च बहवो दोषा भवन्तीति द्वारगाथासमासार्थः ।

अथैनामेव विवृणोति—

सावय तेणे दुविहा,विराहणा जा य उवहिणा उ विणा ।
गुम्मियगहणाहणणा, गोणादी चमढणा रत्तिं ॥६८९॥

विकाले प्रविशता श्व (श्वा) पदभयं भवति । स्तेना द्विधा-शरीरापहारिण , उपकरणापहारिणश्च । ते तदानीमभिद्रवन्ति । उपधावपहृते या तेन विना तृणग्रहणाग्निसेवनादिका सयमविराधना तन्निष्पन्नं प्रायश्चित्तम् । अथवा—स प्रत्यन्तप्रदेशवर्त्ती ग्रामस्ततस्तत्र बद्धस्थानकगौल्मिका आरक्षिकपुरुषा· स्तेनादीनभिलीयमानान् रक्षन्ति, ततो विकालवेलायां प्राप्ताना स्तेना अमी इति बुद्ध्या ग्रहणाहननादिक कुर्यु. । अथवा-विकाले प्रविशन्तो गवादिभि पादप्रहारादिका चमढनामासादयन्ति । एते रात्रौ प्राप्ताना दोषा ।

किञ्च—

फिडिताऽन्नान्नोऽऽगारण, तेणा रत्तिं दिया व पंथम्मि ।
मसाणाइवेसकुच्छिय, तवोवणं मूसगा जं च ॥ ६९० ॥

विकाले वसतिगवेषणार्थं पृथक् २ गतास्ततः स्फिटिता·—परस्परपरिभ्रष्टा सन्तोऽन्योन्यमाकारणं--व्याहरणं कुर्यु , स्तेनकास्तद्वचनं श्रुत्वा रात्रौ मुषितुमभिलषेयु , दिवा वा द्वितीये दिवसे पथि-मार्गे गच्छत· स्तेनका मुष्णेयु । श्वानादयो वा रात्रौ वसतिगवेषणार्थं पर्यटन्तस्तान् उपद्रवेयुः । 'वेसकुच्छिय ' त्ति रात्रौ च वसतिमन्वेषयन्त किमेतद् गृहं वेश्यापाटकस्य प्रत्यासन्नमुत नेति । यद्वा-किमेतच्चर्म्मकारकादिजुगुप्सितकुलासन्नमाहोश्विन्नेति । एवं च जनास्ते वेश्यापाटकासन्ने प्रतिश्रये वसेयु । ततो लोको ब्रूयात्-अहो तपोवनमध्यासने जितेन्द्रिया अमी महर्षय इति । अथ जुगुप्सितस्थानासन्ने स्थितास्ततो लोका ब्रुवीरन् स्वस्थानं मूषिका· समागता एतेऽप्येव जानीया इति भाव 'ज च ' त्ति यच्च रात्रौ अन्योन्यालपनं अप्कायानयनादिकमपि करणं तन्निष्पन्नं प्रायश्चित्तम् । तथा तत्रोपाश्रये रात्रौ प्राप्ता सन्त· काले भूमिर्न प्रत्युपेक्षितेति कृत्वा यदि स्वाध्यायं न कुर्वन्ति ततस्सूत्रार्थनाशादयो दोषा· । अथ कुर्वन्ति तत सामाचारीविराधना ।

अथ संस्तारकद्वारं व्याख्याति—

अप्पडिलेहियकंटा, बिलं व संथारगम्मि आयाए ।
छक्कायाण विराहण, विलीण सेहऽन्नहाभावो ॥६९१॥

अप्रत्युपेक्षिताया वसतौ कण्टका भवेयु , बिल-सर्पादिसंबन्धि तत· संस्तारके प्रस्तीर्यमाणे आत्मनि विराधना । भावत पृथिव्यादयो दोषा , षट्कायास्तत्र भवेयु तेषा स-स्तारकेनाक्रम्यमाणाना विराधना भवति । विलीनं वा-जुगुप्सित वा संज्ञाकायिक्यादिक तत्र भवेत् , तत शैक्षस्य जुगुप्सया अन्यथाभावो-निष्क्रमणाभिप्रायो भवेत् ।

अथोच्चारप्रस्रवणद्वारद्वय युगपदाह-

खाणुगकंटगवाला, विलम्मि जइ वोसिरिज्ज आयाए ।
संजमओ छक्काया , गमणे पत्ते अइंते य ॥ ६९२ ॥

अप्रत्युपेक्षिते प्रतिश्रये स्थाणुकण्टकव्याला भवेयुस्तदा-कुले-बिलसमाकुले वा प्रदेशे यदि व्युत्सृजति तेन आत्म-विराधना। अथ पृथिव्यादिषट्कायवति भूभागे व्युत्सृजति तत. संयमविराधना। एते द्वे अपि विराधने 'गमणे' त्ति संज्ञाकायिकीव्युत्सर्जनार्थं वा गच्छत.। 'पत्ते' त्ति संज्ञा-भुवं-कायिकीभुवं वा प्राप्तस्य 'अइंते य' त्ति संज्ञां कायिकीं वा व्युत्सृज्य भूयोऽपि वसतिं प्रविशतो यथासंभवं मन्तव्ये।

अथ विराधनाभयान्न व्युत्सृजति तत इमे दोषा.—

मुत्तनिरोहे चक्खुं, वच्चनिरोधेण जीवियं जहइ।
उड्डनिरोहे कोढं, गेलन्नं वा भवे तिसु वि ॥ ६९३ ॥

मूत्रनिरोधे विधीयमाने चक्षुरुपहन्यते। वर्च.--पुरीषं तस्य निरोधेन जीवितं परित्यजति। अचिरादेव मरणं भवतीत्यर्थ.। ऊर्ध्व-वमनं तस्य निरोधे कुष्ठं भवति। ग्लानं वा सामान्यतो मान्द्यं त्रिष्वपि मूत्रपुरीषवमनेषु निरुध्यमानेषु भवेत्।

यत एते दोषा. अतः—

पढमबिइयाएँ तम्हा, गमणं पडिलेहणाएँ वेसो य।
पुव्वठिया जइ गच्छं, ठवेतु बाहिं इमे तिन्नि ॥ ६९४॥

तस्मात्प्रथमद्वितीयस्यां वा पौरुष्यां विवक्षितग्रामे गमनं कृत्वा ततो वसते. प्रत्युपेक्षणा प्रवेशश्च तस्यां कर्त्तव्य.। कथमित्याह-यदि तत्र केऽपि साधवः पूर्वस्थिता. सन्ति तदा सर्वेऽपि प्रविशन्ति। अथ न सन्ति पूर्वस्थितास्ततो गच्छं कचित् वृक्षादरधो बहि स्थापयित्वा इमे ईदृशास्त्रय साधवो ग्रामं प्रविशन्ति।

परिणयवयगीयत्था, हयसंका पुंछचिलिमिलीदारे।
तिन्नि दुवे एको वा, वसहीपेहट्ठया पविसे ॥ ६९५ ॥

गीतार्था परिणतवयस. अत एव हतशङ्का—अशङ्कनीया ते गुरुमापृच्छ्य दण्डप्रोञ्छनकं चिलिमिलीदवरकाश्च गृहीत्वा त्रयो जनास्तदभावे द्वौ जनौ तदप्राप्तावेको वा वसतिप्रत्युपेक्षणार्थं ग्रामं प्रविशति। ततो वसतिं गृहीत्वा प्रमृज्य च चिलिमिलिकां च दत्त्वा सबालवृद्धमपि गच्छं तत्र प्रवेशयति।

अथ विकालवेलाया न प्रवेष्टव्यमिति यदुक्तं तदपवदन्नाह-

बिइयं ताहे पत्ता, एए व ततो उवस्सयं न लभे।
सुन्नघरदेउले वा, उज्जाणे वा अपरिभोगे ॥ ६९६ ॥

द्वितीयपदमत्राभिधीयते-तदानीं विकालवेलायामेव प्राप्ता', यद्वा-प्रगे-प्रभाते प्राप्ता परमुपाश्रय न लभन्ते ततो विकाले प्रविश्य प्रभातप्राप्ताश्च दिवा शून्यगृहे देवकुले वा उद्याने या अपरिभोग्य—जनोपभोगरहिते तिष्ठन्ति तत्रैव च समुद्देशन कुर्वन्ति।

आवाय चिलिमिणीए, रन्ने वा निब्भये समुद्दिसणं।
सभये पच्छण्णासइ, कमढगकुरुयावसंतरिया ॥ ६९७ ॥

अथ शून्यगृहादौ सागारिकाणामपि यतो भवति तत चिलिमिलिका दत्त्वा समुद्देष्टव्यम्। अरण्ये वा यदि निर्भयं ततस्तत्र गत्वा समुद्दिशन्ति। अथारण्यं सभयं वसतिसमीपे एव यः प्रच्छन्नप्रदेशस्तत्र समुद्देशनं कर्तव्यम्। अथ प्रच्छन्नस्थानं नास्ति ततस्तत्रैव शून्यगृहादौ कमठकेषु शुक्लेपेन सबाह्याभ्यन्तरं लिप्तेषु कांस्यकोदकाकारेषु समुद्दिशन्ति। कुरुचावसमुद्देशनानन्तरं पादप्रक्षालनादिका बहुना द्रवेण कर्त्तव्या। समुद्दिशन्तश्च सान्तरा-सावकाशाः वृहदन्तराला उपविशन्ति। एवं कृत्वा बहिरेव संज्ञादि व्युत्सृज्य ततो ग्राम प्रविशन्ति, प्रविष्टाश्च या पूर्वं भिक्षां हिण्डमानैर्वसति. प्रत्युपेक्षिता तस्यां वसन्ति।

कथमित्याह—

कोट्ठग सभा व पुव्वं, कालवियारादि भूमिपडिलेहा।
पच्छा अतिंति रत्तिं, अहवण पत्ता निसिं चेव ॥६९८॥

कोष्ठक--आवासविशेष, सभा प्रतीता, एवमादिकं यत्पूर्वं भिक्षां पर्यटद्भि. प्रत्युपेक्षितं तत्र कालग्रहणयोग्यां भूमिं विचारस्य च--संज्ञाया', आदिशब्दात् कायिक्याश्च भूमिं सूर्ये ध्रियमाण एव प्रत्युपेक्षन्ते। ततः पश्चात्सर्वेऽपि वसतौ रात्रौ प्रदोषसमये अतियन्ति 'अहवण' त्ति अथवा ते साधवो निशायामेव प्राप्ता भवेयु।

तत. को विधिरित्याह—

गोम्मियभेसणसमणा,निब्भयबहिठाण वसहिपडिलेहा।
सुन्नघरपुव्वभणिए, कंचुग तह दारुदंडेणं ॥ ६९९ ॥

गुल्मेन-समुदायेन चरन्तीति गौल्मिका'-स्थानरक्षपालास्ते यदि भीषणं-वित्रासनं कुर्वन्ति ततो वक्तव्यं श्रमणा वय न स्तेना यदि रात्रौ वासो निर्भयो भवति तदा 'ठाण' त्ति। बहिरेव गच्छस्तावदवस्थानं करोति, वृषभास्तु वसतिप्रत्युपेक्षणार्थं ग्रामं प्रविशन्ति तत्र च शून्यगृहं पूर्वभणितेन विधिना प्रत्युपेक्ष्य सर्पादिपतनभयात् गोपालक परिधाय दारुदण्डेन प्रोञ्छनकेन वसतिमुपरि प्रस्फोटयन्ति ततो गच्छ. प्रविशति।

अथ संस्तारकग्रहणविधिमाह--

संथारगभूमितिगं, आयरिए सेसगाण एक्केकं।
रुंदाएँ पुप्फकिन्ना, मंडलिया आवली इतरे ॥७००॥

'आयरिए' त्ति षष्ठीसप्तम्योरर्थं प्रत्यभेदादाचार्यस्य योग्यं संस्तारभूमित्रयं प्रथमतो निरूपणीयम्। तत्रैका निवाता संस्तारकभूमिरपरा प्रवाता, अनिवातप्रवाता च शेषाणा साधूना योग्यामेकैका संस्तारभूमिमन्वेषयेत्। इह वसतिस्त्रिधा-विस्तीर्णा, क्षुल्लिका, प्रमाणयुक्ता च। तत्र रुन्दा नाम विस्तीर्णा, घट्टशालादिरित्यर्थ। तस्या पुष्पावकीर्णा पुष्पकरवदवकीर्णा अनियतक्रमा अयथार्था स्वपन्ति, येन सागारिकाणामवकाशो न भवति। अथ क्षुल्लिका ततो मध्ये पात्रकाणि कृत्वा मण्डलिकाकारेण पार्श्वत शेरते। इतरा नाम प्रमाणयुक्ता तस्यामावल्या पङ्क्त्या स्वपन्ति।

अत्रैव विधिविपर्यासे प्रायश्चित्तमाह-

सीमं इतो य पादा, इहं च मे बंधिया इहं मज्झं।
जइ अगहियसंथारो,भणइ लहुगो.ऽहिकरणादी ॥७०१॥

इतो मे शीर्षमितः पादौ भविष्यतः । इह च मे वादका भाजनानि वा स्थाप्यन्ते, एवं यद्यगृहीतसंस्तारक आत्मीयया इच्छया भणति, विरिटकादिकं च स्थापयति , तदा लघुमासः प्रायश्चित्तम् ,अधिकरणादयश्च दोषा भवन्ति। अधिकरणं नाम-द्वितीयोऽपि साधुरेवमेव ब्रूयात् , ममाप्यत्रैव शीर्षादि भविष्यतीति । ततश्चास्थिभङ्गादयो दोषाः ।

यत एवमत —

संथारग्गहणीए, वेंटियउक्खेवणं तु कायव्वं ।
संथारो घेत्तव्वो, मायामयविप्पमुक्केणं ॥७०२॥

'संथारग्गहणीए' त्ति आर्षत्वात् स्त्रीत्व,संस्तारकग्रहणकाले विरिटकाया उत्क्षेपणं कर्त्तव्यम् , येन सुखेनैव दृष्टायां भुवि संस्तारका विभक्तुं शक्यन्ते । स च संस्तारको यो यस्मै साधवे दीयते स तेन मायामदविप्रमुक्तेन ग्रहीतव्यः । माया नाम-अहं सतीर्थ्यो ममात्रैवावकाशं प्रयच्छत इत्यादि सुन्दरतरावकाशलोभेनासद्भूतकारणनिवेदनलक्षणा, मदोऽहंकार., अहो अहममुष्मादपि गरीयान् येन मे शोभना संस्तारकभूमि. प्रदत्तेति ।

अथ किमर्थं संस्तारकग्रहणकाले विरिटका उत्क्षिप्यन्ते ? । उच्यते—

समविसमाइँ न पासइ, दुक्खं व ठियम्मि ठायई अन्नो ।
नेव य असंखडादी, विणयो अममत्तया चेव ॥७०३॥

विरिटका यदि नोत्क्षिप्यन्ते, तदा गणावच्छेदिकादिसंस्तारकान् विभजमानः समविषमाणि स्थानानि न पश्यति अवकाशानित्यर्थः । तथा एकस्मिन्साधौ विरिटकासहिते पूर्वं स्थिते सति अन्यो न तिष्ठति—स्थातुं न शक्नोतीति भावः । अपि च—विरिटकासूत्क्षिप्तासु असंखडादयो दोषा नैव भवन्ति । यथारत्नाधिकं च संस्तारकग्रहणे विनयः कृतो भवति । अममता च ममत्वं संस्तारकभूमिविषयं परिहृत भवति । अत. साधुभि' स्वस्योपकरणे प्रत्युपेक्षिते, उपाश्रये च प्रमार्जिते सूरिभिर्वक्तव्यम्-आर्या ! उत्क्षिपत स्वा वेरिटकाः, एवमुक्ते यो नोत्क्षिपति तस्य मासलघु । अथ वेरिटकासु समुत्क्षिप्यमाणासु कश्चिदिमा माया कुर्यात् ।

संथारग्गहणीए, कंटगवीयारपासवणधम्मे ।
पयलायणमासगुरुं, सेसेसु वि मासियं लहुगं ॥७०४॥

संस्तारकग्रहणकाले समसुन्दरभूमिलोभेन कण्टकोद्धरणमहं संप्रति करिष्यामि, विचारं वा-संज्ञाव्युत्सृष्टं प्रस्रवणं वा कर्त्तु वहिर्गमिष्यामि , धर्मं वा शय्यातरादेरग्रे कथयिष्यामि इत्यादि ब्रूयात् । प्रचलायनं स्वपनमिदानीं विदध्यात् । एवं शेषेषु कण्टकादिषु मायाभेदेषु मासलघुकम् ।

अथ कण्टकादिपदानि विवृणोति—

दुक्खं ठिओ व निज्जइ, नियाणुपाएण पेल्लिउं सक्का ।
जो वि वणे अवणेहिड,तं पि य नेहामि इति मंता॥७०५॥
संथारभूमिलुद्धो, भणेइ छंदेण भंत ! गिण्हित्तो ।
संथारगभूमीओ, कंटकमहमुद्धरामेणं ॥७०६॥

कोऽपि समसुन्दरे अवकाशे संस्तारकं कर्तुकामस्तत्र चापर. कोऽपि साधुः स्थितः-उपविष्टो वर्त्तते, स च दु ग दु·खेन नीयते अन्यत्र स्थाप्यते, नचानुपायेन कण्टकोद्धरणादिव्याजमन्तरेण प्रेरयितु शक्य , योऽपि 'वणे' इति मदीयं कण्टकमपनेष्यति तमप्यहं नेष्यामीति मत्वा संस्तारकभूमिलुब्धो भणति-भदन्त ! इह संस्तारकभूमौ छन्देन स्वाभिप्रायेण गृहीत अहं पुनरत्र कण्टकमेनमुद्धरामीति, एवं मायाकरणे मासलघु प्रायश्चित्तम् ।

अथ सद्भावादेव कण्टको लग्नस्तत्र किमित्यत आह—

लग्गे वऽणहियासम्मि, कंटए उक्खिवे वि अन्नेणं ।
मज्झिमव्वगमवणेत्ता, कमागयं गेण्हह ममं पि ॥७०७॥

वा इति अथवा सद्भावेनैव तस्य कण्टको लग्न ,स चानधिसह्यः सोढुमशक्य. । ततो वेरिटकामन्येनोत्क्षेपयेत् , उत्क्षिप्य च ब्रूयात् मदीयकण्टकमपनीय क्रमागत ममापि योग्य संस्तारकं गृहीत । एष शुद्धः ।

अथ विचारादीनतिदिशन्नाह—

एमेव य वीयारे, उज्ज. अणुज्जू तहेव पासवणे ।
धम्मकहालक्खेण य, आवज्जइ मासियं मायी ॥७०८॥

एवमेव विचारविषयेऽपि ऋजुरनृजुश्च वक्तव्य , मायी अमायी चेत्यर्थ । तथैव प्रस्रवणद्वारेऽपि विभाषा कर्तव्या । धर्मकथाया वा लक्ष्येण-व्याजेन कश्चित् क्रमागतसंस्तारकं व्यत्यासं करोति सोऽपि मायी-मायावानिति कृत्वा मासिकं लघुकमापद्यते । अथ सद्भावतो धर्मकथा करोति तत. शुद्ध एव ।

अपि च तदानीं सद्भावतो धर्मकथायां विधीयमानाया-
ममी गुणा.—

दुवियड्ढबुद्धिमलणं, सड्ढा सज्झायरेयराणं च ।
तित्थवियड्ढिपभावण,असारियं चेव कहयंते ॥ ७०९ ॥

श्रोतॄणां दुर्विदग्धा—विपरीतशास्त्रपल्लवग्राहिणी बुद्धिस्तस्या मलनं-मर्दन कृतं भवति । शय्यातरस्य इतरेषां च श्राद्धानां श्रद्धा वर्द्धिता भवति । धर्मश्रवणानन्तरं च बहुषु प्रव्रज्या प्रतिपद्यमानेषु तीर्थस्य विवृद्धि. कृता भवति । प्रभावना च प्रवचनस्य जायते । अहो विजयते जैनेन्द्रशासनं, यत्रेदृशी धर्मकथा लब्धिसम्पन्ना इति । येऽपि च सागारिका बहिर्धर्मश्रवणव्याक्षिप्ता सन्त —प्रतिश्रयमध्ये न प्रविशेयु , ततश्च साधूनामुपकरण प्रत्युपेक्ष्यमाणानामसागारिक भवति । एवमेते गुणा धर्म कथयति भवन्ति ।

अथ प्रचलायनद्वारं भावयति—

मा पयल गिण्ह संथा-रगं ति पयलाइए वि जइ वुत्तो ।
को नाम न निगिण्हइ,खणमेत्तं तेण गुरुओ सो ॥७१०॥

गणावच्छेदिकादिना कश्चित्प्रचलायमानो भणित , मा प्रचलायस्व गृहाण संस्तारकमित्युक्तोऽपि यदसौ प्रचलायते ततो ज्ञातव्य शठ एष । पुन इत्याह—को नाम महानिद्रालुरपि क्षणमात्र यावता संस्तारको गृह्यते , तावन्मात्रकालं निद्रा न निगृह्णाति. स तु तावन्तमपि काल निद्रानिरोधमकुर्वाण परिस्फुटं मायावी मन्तव्य । एत

एव 'से' तस्य तीव्रतरमायाविनो मासगुरु प्रायश्चित्तम्।

अथ संस्तारकग्रहणे विधिमाह—

वित्थिन्नकुट्टिमतले, डहराए विसमए य घेप्पंते।
होइ अहाराइणियं, राइणियाते इमे होंति ॥ ७११ ॥

विस्तीर्णाया वा डहरायां वा-संपूर्णायां वसतौ कुट्टिमतले च विषमे वा भूभागे यथारत्नाधिकं संस्तारको गृह्यते। ते च रत्नाधिका इमे भवन्ति।

उवसंपज्ज गिलाणे, परित्तखमए अवाउडियथेरे।
तेण परं वित्थिन्ने, परियाए मो त्ति मे तिन्नि ॥७१२॥

प्रथमतो गुरूणां संस्तारकत्रयं दत्त्वा ततो यो ज्ञानाद्यर्थमुपसंपदं प्रतिपन्नस्तस्य संस्तारको दातव्यः, ततो ग्लानस्य, ततः परीत्तोपधेः, ततः क्षपकस्य, ततः अपावृतकस्य-अपावृतेन मया सकलाऽपि रजनी गमनीयेत्येवं प्रतिपन्नाभिग्रहस्य, तदनन्तरं स्थविरस्य—श्रुतेन वयसा वा वृद्धस्य ततः परं विस्तीर्णे प्रतिश्रये पर्यायेण रत्नाधिकक्रमेण संस्तारको ग्रहीतव्यः, परं मुक्त्वा अमून् त्रीन् क्षुल्लकशैक्षवैयावृत्यकरान् वक्ष्यमाणगाथायामभिधास्यमानान्। आह—उपसंपन्नग्लानादीनां क्रियतां प्रथमं संस्तारकप्रदानेनानुग्रहः, यस्तु तपस्वी विपुलां निर्जरामभिलषन् स्वयमेवापावृतेन मया स्थातव्यमित्येवमभिगृह्णाति तस्य किमर्थं स्थविरादिभ्यः प्रथमं संस्तारको दीयते।

कामं सकामकिच्चो, अभिग्गहो नो बलाभिओगेणं।
तणुसाहारणहेउं, तहवि निवाए व ठावेंति ॥ ७१३ ॥

काममनुमतमिदं स्वकामेन—स्वकीयया एव इच्छया कृत्यः कर्त्तव्योऽभिग्रहो न तु बलाभियोगेन परं तथापि न तु साधारणहेतोः शरीरस्य शीतोपद्रवसंरक्षणनिमित्तं निवाते प्रदेशे तं स्थापयन्ति।

कुत इति चेदित्याह—

अन्नोण्णकारेण वि निज्जरा जा,
न सा भवे तस्स विवज्जएणं।
जहा तवस्सी धुणुते तवेणं,
कम्मं तहा जाण तवोऽणुमंता ॥ ७१४ ॥

अन्योन्यकारो नाम—परस्परं वैयावृत्त्यकरणं तेन या निर्जरा विशिष्टकर्मक्षयरूपा सा तस्य अन्योन्यकारस्य विपर्ययेण—व्यतिरेकेण न भवति। यथा किल तपस्वी तपसा कर्म-ज्ञानावरणादि धुनोति, तथा यस्तस्य साहाय्यकरणेन तदीयतपसोऽनुमन्ता तमपि तथैव कर्मक्षयकारिणं जानीहि अतो गुरुभिरपावृताभिग्रहिकस्यानुग्रहविधानम्।

अथ यदुक्तममून् त्रीन् मुक्त्वेति तस्य व्याख्यानार्थमाह—

वीहेत एव खुड्डे, वेयावच्चकरे सेहो (जस्स) पासम्मि।
विसमऽप्प तिन्नि गुरूणं, इतरे गहियम्मि गेण्हंति ॥७१५॥

क्षुल्लकस्यभयोदय बिभ्यन् भवति ततो बहिः स्थाप्यमानः कृजितरुदितादि कुर्यात्, अतो यस्तं परिवर्त्तयति तस्य मूलेऽपि स्थाप्यते। वैयावृत्त्यकरो—ग्लानस्य प्रतिचरकः स ग्लानपार्श्वे क्रियते। शैक्षो यस्य पार्श्वे भिक्षा गृह्णाति तस्यान्तिके स्थापनीय। तथा विषमे वा अल्पे वा संकीर्णे प्रतिश्रये त्रीन् संस्तारकान् गुरूणां दत्त्वा तत इतरे उपसंपन्नादयो गुरुभिर्गृहीते सति संस्तारकत्रये यथाक्रमेण गृह्णन्ति एष संग्रहगाथासमासार्थः।

अथास्या एव पूर्वार्द्धं विभावयिषुराह—

वीहेज्ज बाहिं ठवितो उ खुड्डो, तेणाइगं मो य अजग्गरा ये।
सारेइ जो तं उभयं च नेई, तस्सेव पासम्मि करेंति तं तु ॥७१६

क्षुल्लको बहिः स्थापितः सन् अजागरणशीलश्चासौ बहिः सुप्तः, स न केनापि उत्थापितः प्रतिक्रमणवेलायामपि न जागृयात्, ततो यस्तं क्षुल्लकं सारयति भिक्षां ग्राहयति उभयं च-संज्ञाकायिकीलक्षणं तदीयं यो नयति परिष्ठापयति तस्यैव पार्श्वे तं कुर्वन्ति।

संथारगं जो इतरं व मत्तं,
उव्वत्तमादी व करेइ तस्स।
गाहेइ सेहं खलु जो य मेरं,
करेन्ति तस्सेव उ तं सगासे ॥ ७१७ ॥

ग्लानस्य संस्तारकं यः करोति, इतरद्वा संज्ञाव्युत्सर्जनं यो ग्लानं कारयति, मात्रकं वा परिष्ठापयति, उद्वर्त्तनपरावर्त्तनादीनि वा तस्य ग्लानस्य यः करोति तं वैयावृत्यकरं तस्यैव पार्श्वे स्थापयन्ति यो वा शैक्षं मेरां समाचारीं ग्राहयति तं तस्यैव सकाशे कुर्वन्ति।

एवं विस्तीर्णायां वसतौ तावद्विधिरुक्तः। अथ-संकीर्णायां विधिमभिधित्सुराह—

समविसमा थेराणं, आवलिया तत्थ अप्पणो इच्छा।
खेलपवायनिवाए, पाहुणए जं विहिग्गहणं ॥ ७१८ ॥

संकीर्णायां वसतौ सर्वत्रापि संस्तारणीयेन पुनर्विषम इति कृत्वा कश्चिदप्यवकाशश्चान्यो मोक्तव्य। तत आवलिकया पङ्क्त्या यथारत्नाधिकं विभज्यमाना संस्तारकभूमिः स्थविराणां—वृद्धानां समा वा समागच्छेद्विषमा वा। तत्र विषमाया तेषामात्मीया इच्छा। कोऽर्थः-यदि सहिष्णुतया विषमेऽपि संस्तारयितुं शक्नुवन्ति ततस्तत्रैव संस्तारयन्ति। अथ असहिष्णवस्तदा समां भूमिमनुज्ञापयन्ति। 'खेल' त्ति यस्य खेल स्यन्दते तस्य मध्ये अवकाशः समायातस्तेन विविक्ते अवकाशे यः संस्तारकः सोऽनुज्ञापनीय। य पित्तल, स प्रवाते स्थातुमभिलषति यो वातूलः स निवाते। एतयोः परस्परं संस्तारकपरावर्त्तो भवति। प्राघूर्णक आचार्यादिः समागतः तस्याऽपि यद्विधिना वक्ष्यमाणेन संस्तारकग्रहणं तदनुज्ञातमिति पुरातनगाथासमासार्थः।

अथैनामेव विभावयिषुराह—

विसमो मे संथारो, गाढापासा मे एत्थ भज्जंति।
को देज्ज मज्झ ठाणं, समं ति तरुणा सयं वेंति ॥ ७१९॥

संस्तारकभूमि स्थविराणा विषमा तरुणानां समा याता। य स्थविर असहिष्णु स ब्रूयात् विषमो मे मदीय संस्तारकः पार्श्वाणि चात्र विषमे शयानस्य गाढं मम भज्यन्ते, अतः को नाम मह्यं सम स्थानं दद्यादिति। ततो ये तरुणास्ते

स्वयमेव गुरुभिरनुक्ता ब्रुवते—अस्माकमवकाशे यूयं संस्तारयत ।

जइ पुण अच्छिज्जंता, न दिंति ठाणं बला न दावेंति ।
देंति तह पुच्छणादी, बहिभावा संखडं मा वा ॥७२०॥

यदि पुनस्तरुणाः समं भूभागमर्थ्यमाना अपि न प्रयच्छन्ति, ततो वृषभा सूरयो वा न तैर्बलाद्दापयन्ति । मा बलाद्दाप्यमानास्ते बहिर्भावं गच्छेयुः, असंखडं वा कुर्युः । स्थविराश्च तत्र विषमेऽवकाशे पादप्रोञ्छनादिकं ददति, येन सुखेनैव संस्तारयितुं शक्यते ।

खेलद्वारमाह ।

मज्झम्मि ठाओ मम एस जातो,
पासंदए निच्च ममं च खेलो ।
वाओ सरावस्स य नऽत्थि एत्थं,
सिविज्जखेलेण य मा हु सुत्ते ॥ ७२१ ॥

श्लेष्मलो ब्रूयात्—मम तावदेष स्थायः—अवकाशो मध्ये संजातः, मम च खेलः—श्लेष्मा नित्यं प्रस्यन्दते । अत्र चोभयतोऽपि पार्श्ववर्त्तिसंस्तारकाकीर्णे शरावस्य-खेलमल्लकस्य नास्त्यवकाशः । अत्र संस्तारयन् अहं प्रत्यासन्नसुप्तान् शेषसाधूनपि मा श्लेष्मणा सिञ्चेयमिति ततो यस्य विविक्ते प्रदेशे संस्तारकः स तस्यात्मीयमवकाशं प्रयच्छति ।

प्रवातनिवातद्वारमाह—

निद्दं ण विंदामि य उद्धरेण,
को मे पवायम्मि दएज्ज भूमिं ।
सीएण वाएण य मज्झ बाहिं,
न पच्चए अन्न महऽन्नमाह ॥ ७२२ ॥

पित्तलो ब्रूयात्—अहमिह निवाते संस्तारयन् उद्धरेण-धर्मोपतापेन निद्रां न विन्दामि—न लभे, अतः को नाम प्रवाते भूमिकां दद्यात् । अथानन्तरमन्यो वातलः स आह-ब्रूयात्, शीतेन वातेन पीड्यमानस्य मम बहिः सुप्तस्यान्नं न पच्यते—न जीर्यति । तत एतौ परस्परं संस्तारकं परिवर्त्तयतः । इह संग्रहगाथायां खेलप्रवातनिवातग्रहणमुपलक्षणं तेनेदमभिधीयते ।

जो एति एक्कं न उ एक्कलेणं,
ठवेंति तं सूरगहस्स पासे ।
एक्कम्मि खंभम्मि न मत्तहत्थी,
वज्झन्ति वग्घा न य पंजरे दो ॥७२३॥

य एकः असंखडिकः—कलहनशील इत्यर्थः, तमेकेन सह न योजयन्ति, किं तु यः शूरो ग्राहकः—कलहादिकुर्वतां शिक्षां कर्तुं समर्थः तस्य पार्श्वे तं स्थापयन्ति, यतः एकस्मिन् आलीनस्तम्भे द्वौ मत्तहस्तिनौ न बध्येते, परस्परं भण्डनसम्भवात् । एवमेकस्मिन् पञ्जरे द्वौ व्याघ्रौ न प्रक्षिप्येते ।

अथ 'पाहुणए जं विहिग्गहणं' ति पदं व्याख्यातुमाह—

रायणिओ आयरिओ, आयरियस्सेव अक्कमइ ठाणं ।
इतरो वसभट्ठाए, ठायइ जे ते व दो एगो ॥ ७२४ ॥

यदि प्राघूर्णक आचार्यो रत्नाधिकस्ततोऽसावाचार्यस्यैव स्थानमवकाशमाक्रामति । वास्तव्याचार्यस्थाने संस्तारयतीत्यर्थः । इतरो वास्तव्याचार्यो वृषभस्योपाध्यायस्य वा अवकाशे तिष्ठति संस्तारयति । अथाचार्यसत्कं संस्तारकत्रयं तन्मध्यादेकस्मिन् प्राघूर्णकाचार्यः प्रसुप्त 'जे ते वा दो एग' त्ति । ततो यौ तौ द्वाववशिष्यमाणौ संस्तारकौ तयोरेकस्मिन् वास्तव्याचार्यः संस्तारयति ।

ओमे पुण आयरिओ, वसभो मासे अणंतरे वसभो ।
संछोभपरंपरओ, चरिमं सेहं व मोत्तूणं ॥ ७२५ ॥

अथाऽसौ प्राघूर्णक आचार्यः अवमपर्यायलघुस्ततो वृषभस्यावकाशे संस्तारयति । वृषभस्तु तदनन्तरमवमरात्रिकस्थाने स्वपिति । एवं संस्तारकाणां संघो परंपरकः परपरया स्थानान्तरसंक्रमणरूपस्तावन्मन्तव्यो यावद् द्विचरमः साधुः । यस्तु चरमः सर्वपाश्चात्यावकाशशायी तं शैक्षं च मुक्त्वा तयोः संस्तारको नान्यत्र संक्रामयितव्य इति भावः ।

इदमेव व्याचष्टे—

चरिमो बहिं न कीरइ, सेहं न सहायगा विहुयलं ति ।
रंगिड्ढिपुरिसनायं, सव्वे तत्थेव मावेंति ॥७२६।

चरमः—प्रत्यन्तवर्त्ती बहिर्न क्रियते । शैक्षमपि सहायकान्-शिक्षाग्राहकान् न विहुगलन्ति-न स्फाटयति,बहिर्निष्काश्यमानौ हि तौ बहिर्नावगच्छत , बहिरवगमनतः प्रतिगमनादीनि कुर्याताम् । अतः संस्तारकं संक्षिप्य तथा प्रस्तारणीय , यथा तयोरपि चरमशैक्षयोः संस्तारकौ प्रतिश्रयमध्य एव पूर्येताम् । तथा चात्र रङ्के ये बुद्धिमन्तः पुरुषास्तर्ज्ञात कर्त्तव्यः। यथा रङ्गभूमौ पूर्वं प्राकृतजनैराकीर्णायामपि ये राजामात्यश्रेष्ठिप्रभृतयः प्रधानपुरुषाः पश्चादागच्छन्ति तेषामुपवेशनयोग्यानवकाशान् दत्त्वा न्यक्षिप्ततरावकाशस्थापनेन प्रागुपविष्टा अपि तत्रैव माप्यन्ते । एवमस्माकमपि प्राघूर्णकः प्रधानपुरुषकल्पस्ततस्तेषां यथायोग्यमवकाशान दत्त्वा वृषभाः संस्तारकभूमीः संक्षिप्य प्रयच्छन्तः सपूर्वानपि साधून् तत्रैव मापयन्तीति । वृ० ३ उ० ।

प्रातिहारिकं शय्यासंस्तारमनर्पयित्वा न गन्तव्यम्—

नो कप्पति निग्गंथाण वा निग्गंथीण वा पाडिहारियं सेज्जासंथारयं आयाए अपडिहट्टु संपव्वइत्तए ॥ २५ ॥

अस्य सूत्रस्य कः संबन्ध इत्याह—

अविदिण्णमंतरगिहे, परिकहणमियं पदिण्णमिइ जोगो ।
निग्गमणं वसभाणं, वहिं व वत्तं इमं अंतो ॥८१८॥

अन्तरगृहे यत्परिकथनमनुपदेशप्रदानं तदवर्णानि नोधिरत्रे गृ- दर्पातिना यानुज्ञानम् । इदमपि प्रातिहारिकं शय्यासंस्तार-

कस्य प्रत्यर्पणमदत्तमननुज्ञातमित्येवं योग-संबन्ध । यद्वा-निमित्तं प्रतिश्रयात् द्वयोरपि सूत्रयो समानं-तुल्यम्। अथ वा-पूर्वसूत्रे प्रतिश्रयाद्वहिर्भिक्षायां निर्गतस्य धर्मकथनं न कल्पते इत्युक्तम्, इदं पुनरन्त. प्रतिश्रयमध्ये संस्तारकस्य यन्निक्षेपण तत्कल्पते इत्यत्र प्रतिपद्यते। अनेन संबन्धेनाया-तस्यास्य ( सूत्रस्य-२५ ) व्याख्या-नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीना वा प्रतिहरणं प्रतिहारः-प्रत्यर्पण तमर्हतीति प्राति-हारिकं, शय्या च सर्वाङ्गीणा संस्तारकश्चार्द्धतृतीयहस्तमान. शय्यासंस्तारकं तदादाय—गृहीत्वा कार्यसमाप्तौ अप्रतिहृ-त्यार्पणमकृत्वा संप्रव्रजितुं ग्रामान्तरं विहर्तुमिति सूत्रार्थः ।

सिज्जा संथारो य, परिसाडी अपरिसाडिमो होई।
परिसाडि कारणम्मि,अणप्पिणामो सो आणादी॥६२०॥

शय्या संस्तारको वा-परिशाटी, अपरिशाटी च भवति। परिशाटी तृणादिमय, अपरिशाटी फलकादिमयः। तत्र प-रिशाटी संस्तारक कारणवशादृतुबद्धे गृहीतो भवेत्, तं मासकल्पे पूर्णे अनर्पयित्वा व्रजतो मासलघु, आज्ञादयो दोषा.।

एते वा अपरे—

सोचा गत त्ति लहुगा, अप्पत्तियगुरुग जं च वोच्छेओ।
कप्पट्ठखेल्लणेण य, डह लहु लहुगा य गुरुगा य॥६२१॥

संस्तारकस्वामिना श्रुतं संस्तारकमनर्पयित्वा गतास्ते संयता। एवं श्रुत्वा यदि प्रीतिकं करोति, अनर्पितेऽप्यनु-ग्रह एवास्माकमिति ततश्चतुर्लघव । अथाप्रीतिकं करो-ति मदीयानि तृणानि हारितानि विनाशितानि चेति, तदा च चतुर्गुरव । यदि तद्द्रव्यस्यान्यद्रव्यस्य वा व्यवच्छेदः तथापि चतुर्गुरुकम्। अथवा—तस्मिन्संस्तारके शून्ये 'क-प्पट्ठ' त्ति बालकानि खेलन्ते मासलघु। अथान्यत्र तं नय-न्ति ततश्चतुर्लघु। अग्नौ प्रक्षिप्य दहन्ति चतुर्लघवः। दह्य-माने च तस्मिन्नन्येषा प्राणजातीयानां विराधना भवेत् तन्निष्पन्नं प्रायश्चित्तम्।

तथा प्रीतिकपदं व्याचष्टे—

दिज्जंते वि तया णि-च्छज्ज ण अलभेसु भे त्ति णत्तसं।
कयकज्जा जणभोगं, काऊण कहिं गया सच्छा॥६२२॥

ग्रहणकाले निर्देशमपि दीयमानं तदानीं नेच्छति स। अ-निष्पन्नमभिकाङ्क्ष्य मासकल्पे पूर्णे 'भे'—भवतामर्पयिष्याम इति भणनपूर्वक नीत्वा। साम्प्रतं कृतकार्या विहितान्यप्रयोज-ना शून्य जनभोग्य कृत्वा कुत्रचित् ग्रामे नगरे वा गता, 'सच्छ' त्ति। नैषानिकपद कुत्सायां वर्त्तते, वा पुनस्ते दुर्दृष्ट-धर्माणो गता इत्यर्थ ।

अथ 'कप्पट्ठखेलणे' इत्यादि विवृणोति—

कप्पट्ठखेलणतुअ-ट्टणे य लहुगो य होइ गुरुगो य।
इत्थीपुरिसतुयट्टे, लहुगा गुरुगा अणायारे॥६२३॥

तत्र संस्तारके कल्पस्थकानि खेलन्ति लघुको मास । अथ तान्येव त्वग्वर्त्तयन्ति गुरुको मास। अथ महती स्त्री महा-न्पुरुषो वा त्वग्वर्त्तयति चतुर्लघु। अथ एतावनाचारमाच-रतस्तदा चतुर्गुरवः ।

वोच्छेदे लहुगुरुगा, नयणे डहणे य दोस वी लहुगा।
छिदिणिग्गयादलंभे,जं पावे सयं चतु णियत्ता॥६२४॥

तस्यैकस्य साधोस्तस्यैवैकस्य द्रव्यस्य व्यवच्छेदे चतुर्लघु, अनेकेषां साधूनामन्यद्रव्याणा च व्यवच्छेदे चतुर्गुरु। संस्ता-रकस्य कल्पस्थकैरन्यत्र नयने दहने च द्वयोरपि चतुर्लघवः। व्यवच्छेदकरणाच्च संस्तारकादेरलाभे विहम्-अध्वा तन्नि-र्गता यत्परितापनादि प्राप्नुवन्ति स्वयं वा निवृत्तास्तत्र प्रा-प्ता संस्तारकादिकमलभमाना यः विराधनामासादयन्ति तन्निष्पन्नं प्रायश्चित्तम्।

माइस्स होति गुरुगो,जति एक्कतो भागऽणप्पिए दोसा।
अह होंति अण्णमणे,ते चेव य अप्पिणे सुद्धो॥६२५॥

मायिनो-मायाविनो गुरुको मासो भवति, कथं पुनर्मायां करोतीत्याह यच्चैकेन एकस्माद् ग्रहादनेकैः साधुभिरनेके संस्तारका आनीतास्तदा 'भाग' त्ति प्रत्यर्पणकाले तेषु पृथग्भागीकृतेषु य आत्मीयं भागं तत्रैव ग्रहीतव्य इति कृत्वा तेषां मध्ये प्रक्षिपति, नात्मना तत्र नयति, एष मा-यी भण्यते। अस्य च ये अनर्पिते संस्तारकदोषास्ते सर्वे ऽपि मन्तव्या । अथान्येभ्यो गृहेभ्य आनीताः संस्तारका भवन्ति तदापि मायाकरणे त एव दोषा। तस्माद्यतो गृहा-दानीतः तत्र विधिना प्रत्यर्पणे शुद्ध इति संग्रहगाथासमा-सार्थः।

अथैनामेव विवृणोति—

संथारे य गमणगे, भयणऽट्ठविहा उ होइ कायव्वा।
पुरिसे घरसंथारे, एगमणेगे तिसु पदेसु॥६२६॥

संस्तारके गृह्यमाणे एकानेकपदाभ्यामष्टविधा भजना क-र्त्तव्या भवति, अष्टौ भङ्गा इत्यर्थ. सा चैतेषु त्रिषु पदेषु। तद्यथा—पुरुषे गृहे संस्तारके च। एतेषु एकानेकपदाभ्या-मष्टौ भङ्गा.। यथा एकेन साधुना एकस्माद् गृहादेक. संस्ता रक आनीतः। एकेन एकस्माद् अनेके। एकेन अनेके-भ्यो गृहेभ्य एकः। एकेन अनेकेभ्यो गृहेभ्यः अनेके सं-स्तारका आनीताः एव एकेन साधुना चत्वारो भङ्गा ल-ब्धा.। अनेकैरपि साधुभिरेवमेव चत्वारो लभ्यन्ते। सर्व-संख्ययैते अष्टौ भङ्गा।

आणयणे जा भयणा, सा भयणा होति अप्पिणंते वि।
वोच्चत्थमायिसहिए, दोसा य अणप्पिऽणंतम्मि॥६२७॥

संस्तारकस्य आनयने या भजना-अष्टभङ्गी भणिता सैवे-व भजना संस्तारकमर्पयतोऽपि भवति, यथैवानीतस्तथैव प्रत्यर्पयितव्य इति भावः। अथ विपर्यस्त प्रत्यर्पयति न वा सर्वथैवार्पयति ततो विपर्यस्ते मायासहिते अनर्पयति च दोषा व्यवच्छेदादयो भवन्ति। तत्र ये आद्याश्चत्वारो भङ्गास्तेषु यथैव गृह्णन्ति तथैवार्पयन्ति। पञ्चमभङ्गे ग्रहण-काले अस्माकमन्यतर. समर्पयिष्यतीत्येष विधिर्निर्विहित-स्ततो यद्येक प्रत्यर्पयति, तदा विपर्यस्तं भवति। अष्ट-मभङ्गे एक साधु प्रत्यर्पयितु प्रस्थित, अपरश्चिन्तयति मदीया अपि तृणकम्बिकास्तत्रैवानेतव्या इति कृत्वा तदी-याना तृणादीना मध्ये प्रक्षिपति, एषा माया भण्यते। स-

प्रमे भङ्गे तृतीयभङ्गे वा कम्बिकास्तृणानि वा एकस्मिन् गृहे अर्पयतोऽनर्पणं भवति। यत एते दोषास्तस्मात्पृथक् पृथक् सर्वैरपि प्रत्यर्पणीया.। कारणे पुनर्विपरीतमर्पयति।

तदेव कारणमाह—

विइयपयज्झामिते वा, देसुट्ठाणे व बोधिकभए वा।
अद्धाणसीसए वा, संछोवपधाविते तुरियं॥ ६२८॥

द्वितीयपदे संस्तारको ध्यामितो भवेत्, देशोत्थाने वा संस्तारकस्वामी कुत्रापि गत इति न ज्ञायते। बोधिकभये संस्तारकस्वामी साधवो वा नष्टा, अध्वसार्थको वा सार्थस्त्वरितं प्रधावितो भवेत्, यावत् संस्तारकं प्रत्यर्पयति तावत् सार्थो दूरं गच्छति, अपरश्च सार्थो दुर्लभ.।

एतेहिँ कारणेहिं, वच्चंते कोऽवि तस्स उ णिवेदे।
अप्पाहंति व सागा-रियाइ असदाणसाहूणं॥ ६२६॥

एतै कारणैः न प्रत्यर्पयेयु, अध्वशीर्षके च त्वरितं व्रजनामेकः कोऽपि साधुर्गत्वा तस्य संस्तारकस्वामिनो निवेदयति-अमुकस्मिन्कुले सस्तारक प्रत्यर्पणीयः।अन्यसाधूनामसत्यभावे सागारिकादीन्' अप्पाहंति' संदिशन्ति। एवं संस्तारकोऽमुकस्यार्पणीय. एष तृणकम्बिकासु विधिरुक्त.।

एमेव गमो नियमा, फलएसु वि होइ आणुपुव्वीए।
चउरो लहुगा माई, य नऽत्थि एयं तु नाणत्तं॥६३०॥

एष एव गमो नियमात् फलकेष्वपि आनुपूर्व्या वक्तव्यो भवति, नवरं प्रायश्चित्ते विशेष.। फलकमयस्य संस्तारकस्याप्रत्यर्पणे चतुर्लघुक.। मायिना यथा तृणेषु कम्बिकासु वा अपरास्तृणकम्बिका' प्रक्षिप्यन्ते तथा फलकानां नास्ति प्रक्षेप इति भावः। एतन्नानात्वमत्र मन्तव्यम्। वृ० ३ उ०।

सागारिकसत्कं संस्तारमादाय विकरणं कृत्वा न संप्रव्रजितुं कल्पते—

नो कप्पइ निग्गंथाण वा निग्गंथीण वा सागारियसंतियं सेज्जासंथारगं आयाए अहिकरणं कट्टु संपव्वइत्तए (सू० २३)

अस्य सबन्धमाह—

संथारगअहिगारो, अहवा पडिहारिगा उ सागारी।
नीहरिमो अणीहा-रिमो य इति एस संबंधो॥७३१॥

संस्तारकस्याधिकारोऽयमनुवर्त्तते इदमपि संस्तारकसूत्रमारभ्यते। अथवा-पूर्वसूत्रे प्रातिहारिक. संस्तारक उक्तः, अत्र तु सागारिकसत्कोऽभिधीयते। यद्वा-निर्हारिमोऽनिर्हारिमश्चेति द्विधा संस्तारक, तत्र निर्हरणमन्यत्र नयनम्, तन्निर्वृत्तो निर्हारिम अन्यत्र नीत्वा प्रत्यर्पणीय इत्यर्थ। तद्विपरीतोऽनिर्हारिम। तत्र निर्हारिम उक्त। इह पुनरनिर्हारिम उच्यते, एष सबन्ध। अथास्य सूत्रस्य (२३) व्याख्या—न कल्पते निर्ग्रन्थाना वा निर्ग्रन्थीना वा सागारिक शय्यातरस्तस्य सत्क शय्यासस्तारकमादाय-गृहीत्वा, अधिकरण कृत्वा अधिकरणं नाम—यत् साधुना करण कृत तृणानां प्रस्तरणं कम्बिकाना वन्धन फलकस्य स्थापन तदनपनीय संप्रव्रजितु-विहर्तुमिति सूत्रार्थ.।

अथ निर्युक्त्या विस्तारयितुमाह—

सागारिसंत विकरणें, परिसाडिं अपरिसाडियं चेव।
तम्मि वि सो चेव गमो,पच्छित्तुस्सग्गअववाए॥७३२॥

सागारिकसत्कस्य संस्तारकस्य विकरणं कृत्वा गन्तव्यम्। स च परिशाटी, अपरिशाटी चेति द्विविध.। तत्रापि स एव प्रायश्चित्तोत्सर्गापवादेषु गमो मन्तव्य।

अविकरणे चेमे दोषा.—

किड्ड तुअट्टण वाले,णयणे डहणे य होइ तह चेव।
विकरणपासुट्टं वा, फलगतणेसुं तु साहरणं॥७३३॥

बालाना—कलपस्थकाना क्रीडने त्वग्वर्तने अन्यत्र नयने च दोषास्तथैव भवन्ति, ततो विकरणं कर्त्तव्यम्। कथमित्याह—फलकस्य पार्श्वतः स्थापनमूर्द्धकरणं वा तृणेषु सहरणम्-एकत्र मीलन,तुशब्दात्कम्बिकासु वन्धनच्छोटनमतद्विकरणम्।

इदमेव व्याख्याति—

पुंजे वा पासे वा, उवरिं पुंजेसु विकरणतणेसुं।
फलगं जत्तो गहियं, वाहाए विकरणं कुज्जा॥ ७३४॥

यानि तृणानि पुञ्जात् गृहीतानि तानि पुञ्जे एव निक्षेपणीयानि, यानि पार्श्वतस्तानि पार्श्वे स्थापनीयानि, एव तृणेषु विकरणं भवति। फलक यतो गृहीतं तत्रैव नीत्वा यदि पार्श्वेन. स्थापितमासीत्तदा पार्श्वे, अथोर्द्ध स्थापितमासीत्तत ऊर्द्धे स्थाप्यते।कम्बिका अपि यतो गृहीतास्तत्र बन्धात् छोटयित्वा निक्षेपणीया.। अथ व्याघातेन तत्र नेतुं न पार्यन्ते तदा तत्रैव स्थापयित्वा नियमाद्विकरण कुर्यात्।

विवियमहसंथडे ग, देसुट्ठाणादिसुवकज्जेसु।
एएहिँ कारणेहिं, सुद्धो अविकरणकरणे वि॥७३५॥

द्वितीयपदे यथासस्तृते विकरण न कुर्यात्। न च प्रायश्चित्तमाप्नुयात् यथासस्तृतं नाम—निष्प्रकम्पचम्प—कपट्टादि देशोत्थादिषु पूर्वसूत्रोक्तेषु कार्येषु विकरण न कुर्यात्। एतै कारणै—विकिरणाकरणेऽपि शुद्ध। वृ० ३ उ०।

सागारिकसंस्तारकं सागारिकसत्कं बहिर्नयति—

जे भिक्खू वा भिक्खुणी वा सागारियसंतियं सेज्जासंथारयं आयाए अधिकरणं कट्टु अणप्पणित्ता संपव्वयति संपव्वयंतं वा साइज्जइ॥ ५६॥

अधिकरणं णाम-ज संजेतण कयं तणाण वा संथरण कंबीण वा बंधो फलगस्स वा ओअवण एयं च ण अप्फोडित्ता अणप्पिणित्ता वयति मासलहु। इमा णिज्जुत्ती पडिगाहा। दोसु मिसिरगिम्हासु णिइज्जंति वा दोसु वा पदेसु णिइज्जंति, अविकरणे इमे दोसा। किड्डतुयट्टणगाहा। कप्पट्टगाणं किड्डणं, तुअट्टण थीपुरिसाण। तुयट्टणे अणायारसेवण अमत्थ वाहण डहणं वा, पंतेसु चेव ते दोसा, पच्छित्तं च पूर्ववत्। फलगस्स विकरण पासल्लियं करेति, उड्डाहं या करेइ, तणेसु साहारणं करेसु पधाण छोडण वा। पुंजाणं सा गाहा। जे तणा पुंजाओ गहिता ते पुंजे ठवेयव्वा।

जे पासातो गहिता ते तहिं ठवेयव्वा । जं वा जतो गहियं तं तहिं ठवेयव्वं ति । कंचीमादीफलगं जतो पदेसातो गहितं तहिं ठवेयव्वं । मासकप्पे वा पुण्णे अंतरा वाघात उप्पण्णे णियमावकरणं कायव्वं, ण करेज्जा विकरणं वा करेज्जा पावेज्जा पच्छित्तं । विनियपढगाहा । अहासंखडं णाम—णिप्पकंपं पट्टादि । शेषं पूर्ववत् । नि० चू० २ उ० ।

जे भिक्खू सागारियसंतियं सेज्जासंथारयं पच्चप्पिणित्ता दोच्चं पि अणुण्णविय अहाठिइ अहाठंतं वा साइज्जइ ॥२४॥ जे भिक्खू पडिहारियं वा सागारियसंतियं सेज्जासंथारयं पच्चप्पिणित्ता दोच्चं पि अणुण्णविय अहिट्ठेति अहिट्ठंतं वा साइज्जइ ॥ २५ ॥

सेज्जा एव संथारओ सेज्जासंथारओ, अहवा—सेज्जा-सव्वंगिआ, संथारओ अड्ढाइज्ज हत्थो । अथवा-सेज्जा वसही संथारगो पुण पडिसारिमितरो वा । सामिणो अप्पेउं अणुण्णवेत्ता पुणो अधिट्ठेति परिभुंजति तस्स मासलहुं । सेज्जासंथारगगाहा-परिसाडि अपरिसाडी णिज्जायमाणा अप्पेउं गता अवसउणेहिं पच्चागता सो य संथारओ तहेव अच्छति, तं दोच्चं अणणुण्णवेत्ता पुणो अधिट्ठेति परिभुंजति मासलहुं, आणाइआ य दोसा । नि० चू० ५ उ० ।

साम्प्रतं प्रातिहारकसंस्तारकप्रत्यर्पणे विधिमाह—

से भिक्खू वा भिक्खुणी वा अभिकंखिज्जा संथारगं पच्चप्पिणित्तए, से जं पुण संथारगं जाणिज्जा सअंडं० जाव ससंताणयं तहप्पगारं संथारगं नो पच्चप्पिणिज्जा । ( सू० १०४ ) से भिक्खू वा भिक्खुणी वा अभिकंखिज्जा संथारगं पच्चप्पिणित्तए, से जं पुण संथारगं जाणिज्जा सअप्पंडं ०जाव ससंताणगं तहप्पगारं संथारगं पडिलेहिय, पडिलेहिय पमज्जिय २ आयाविय २ विहुणिय २ तओ संजयामेव पच्चप्पिणिज्जा । ( सू० १०५ )

'से' इत्यादि स भिक्षुः प्रातिहारिकं संस्तारकं यदि प्रत्यर्पयितुमभिकाङ्क्षेदेवभूतं जानीयात्, तद्यथा—गृहकोकिलकाद्यण्डकसंबद्धमप्रत्युपेक्षणयोग्यं ततो न प्रत्यर्पयेदिति । किञ्च—'से' इत्यादि सुगमम् । आचा० २ श्रु० १ चू० २ अ० ३ उ० ।

प्रातिहारिकं शय्यासंस्तारमन्यसत्कं द्वितीयमप्यवग्रहमननुज्ञाप्य न कल्पते-

णो कप्पइ णिग्गंथाण वा णिग्गंथीण वा पाडिहारियं वा सागारियसंतियं वा सेज्जासंथारगं दोच्चं पि उग्गहं अणणुण्णवित्ता बहिया णीहरित्तए । कप्पइ णिग्गंथाण वा णिग्गंथीण वा पाडिहारियं वा सागारियसंतियं वा सेज्जासंथारगं दोच्चं पि उग्गहं अणुण्णवित्ता बहिया णीहरित्तए ॥ ६ ॥ णो कप्पति णिग्गंथाण वा णिग्गंथीण वा पाडिहारियं वा सागारियसंतियं वा सेज्जासंथारगं पच्चप्पिणित्ता दोच्चं पि तमेव उग्गहं अणणुण्णवेत्ता अहिट्ठित्तए । कप्पति णिग्गंथाण वा णिग्गंथीण वा सेज्जासंथारयं पाडिहारियं वा सागारियसंतियं वा सेज्जासंथारयं पच्चप्पिणित्ता दोच्चं पि उग्गहं अणुण्णवेत्ता अहिट्ठित्तए ॥ ७ ॥ ( व्य० )

अस्य सूत्रस्य संबन्धमाह-

संथारएसु पगए-सु अंतरा छत्तदंडकत्तिछे ।
जंगमथेरे जयणा, अणुकंपरिहे समक्खाया ॥ १२६ ॥
दोच्चं वऽणणुण्णवणा, भणिया इमिगा वि दोच्चऽणुण्णवणा ।
नियउग्गहम्मि पढमं, वियइं तु परोग्गहे सुत्तं ॥ १२७ ॥

संस्तारकेषु पूर्वसूत्रेष्वधिकृतेषु अन्तरा छत्रदण्डकृत्तिचत्रि-जङ्गमस्थविरे समस्तस्याऽपि गच्छस्यानुकम्पार्हे यतना अनन्तरसूत्रेण समाख्याता ॥ १२६ ॥ संप्रति पुनः संस्तारकोऽनेन सूत्रेण भण्यते एष सूत्रसंबन्धः । अथवा अन्यथा सूत्रसंबन्धस्तमेवाह-'दोच्चं वे' त्यादि द्वितीयावग्रहानुज्ञापना जङ्गमस्थविरस्यानन्तरसूत्रेण भणिता । इयमपि सूत्रेणाभिधीयमाना द्वितीयावग्रहानुज्ञापना । ततः द्वितीयावग्रहानुज्ञापनाप्रस्तावादिदं सूत्रं पूर्वसूत्रादनन्तरमुक्तम्, नवरं प्रथममनन्तरसूत्रं निजकस्यात्मीयस्योपकरणस्यावग्रहे अनुज्ञापनाविषयम् । द्वितीयमधिकृतं तु सूत्रं परस्य-परकीयस्य शय्यातरसत्कस्यान्यसत्कस्य वा इत्यर्थः, अवग्रहे अनुज्ञापनायामेवमनेन संबन्धेनायातस्यास्य व्याख्या । नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा प्रातिहारिकं शय्यासंस्तारकं शय्यादातृसत्कमन्यसत्कं वा द्वितीयमप्यवग्रहमननुज्ञाप्य बहिर्विहर्तुं नवरमनुज्ञाप्य पुनः कल्पते इति सूत्रसंक्षेपार्थः । व्य० ८ उ० ।

जे भिक्खू वा भिक्खुणी वा पाडिहारियं सेज्जासंथारगं दोच्चं पि अणुण्णवेत्ता बाहिं णीणाइ णीणंतं वा साइज्जइ ॥५२॥ जे भिक्खू वा भिक्खुणी वा सागारियसंतियं सेज्जासंथारयं दोच्चं पि अणुण्णवित्ता बाहिं णीणाइ णीणंतं वा साइज्जइ ॥ ५३ ॥

पाडिहारिको प्रत्यर्पणीयो सेज्जातरस्स वा संतिओ—तं जदि पुण्णे मासकप्पे दोच्चं अणुण्णवेत्ता अंतोहिंतो बाहिं णीणेति बाहिंतो वा अंतो अतिणीणेति तहाऽवि मासलहुं, एस सुत्तत्थो ।

इमा णिज्जुत्ती । गाहा—

परिसाडिमपरिसाडी, सागारियसंतियं व पडिहारि ।
दोच्चमणणुण्णवेत्ता, अंतो बहि णेति आणादी ॥२६५॥

कुसातितणसंथारए परिभुज्जमाणे जस्स किंचि परिसडति सो परिसाडी, वंसकप्पिमादी अपरिसाडी । दोच्चं अणणुण्णवेत्ता जो णेति तस्स आणा अणवत्थादी दोसा भवति । चोदगाह—णणु सुत्ते अणुण्णवेंतस्स वि मासलहु वुत्त णिक्कारणे, आचार्याह-णिक्कारणे वुत्तं । अत्थो तु कारणे विधिं दरिसेति ।

अविधीए इमे दोसा । गाहा—

ताइं तणफलगा ते, तेणाहडगाणि अप्पणो वाऽवि ।

णिज्जंतागहियाइं, सिवाणि तहा य असिवाणि ॥४९६॥

ते तणफलगा तस्स तेणाहडा वा अप्पणा वा तेणाहडेसु णिज्जतेसु अंतरे पुव्वसामी ददठं गहितेसु साधू पुच्छिता जति कहेति, जस्स ते ण कहेंति वा तो उभयहा वि दोसा, तम्हा दोसपरिहरणत्थं विही भण्णति—सपरिक्खेवे ठिताणं अंतो मासो बहिं मासो अंतो मासकप्प काऊणं विहिणिग्गच्छंतो तत्थेव तणफलगा गेण्हंतु। अह ण लब्भति अण्णगामं वयतु। अह तेसु असिवादिकारणा अत्थि तो तेसिं सव्वेसिं फलयादीणं इमा विही।

गाहा—

अण्णउवस्सयगमणे, अणपुच्छा णऽत्थि किंचि णेतव्वं।

जो णेति अणापुच्छा, तत्थ उ दोसा इमे होंति॥४९७॥

सपरिक्खेवे अण्णउवस्सयं वयंता अणापुच्छाए न किंचि णेयव्वं, णत्थि अनापृच्छय नास्ति किंचिन्नेयमिति। जो पुण अणापुच्छाए णेति तस्सिमे दोसा।

गाहा—

कम्मे तेणा फलगा, सिट्ठे अमुगस्स तस्स गहणादी।

णिण्हवति व सो भीओ, पंचंगिरलोगमुड्डाहो ॥४९८॥

णेदिट्ठे सिट्ठे गहि-ए कड्ढण(व)वहारववहरिते।

उड्डाहे य विभंगे, उद्दवणे चेव णिव्विसए ॥४९९॥

लहुओ लहुगा गुरुगा, छल्लहु छग्गुरुगछेदमूलदुगं।

अहवा वि असिट्ठम्मि य,एसेव उ संकणे लहुया॥५००॥

निस्संकियम्मि गुरुगा, एगमणेगे य गहणमाईया।

अणवट्ठप्पो दोसुं, दोसु य पारंचिओ होति ॥५०१॥

तेणाहडा अणापुच्छाए णिज्जंता पुव्वसामिणा दिट्ठा साहू पुच्छितो-कस्सेते तणफलगा ? । साहू भणति—अमुगस्स तस्स गेण्हणे कड्ढणमाईया दोसा। अह णिण्हवेति सो भीतो सतो साइ तो पचंगिरदोसो। परितोष. तस्मिन् संभाव्यत इति प्रत्यंगिरा लोगे वि उड्डाहो साधवो वि परदव्वावहारिणो त्ति। गहणादिपदस्स इमा वक्खा-तणफलया अणापुच्छाए णेति, तेणाहडा णिज्जमाणो पुव्वसामिणा दिट्ठं पुच्छिएण साहुणा सिट्ठं अमुगस्स। सो रायपुरिसेहिं हत्थे गहिउं कड्ढिओ ववहारमेव त्ति पुव्वसामिणा सद्धिं ववहराहि त्ति वुत्तं भवति। ववहारिए त्ति ववहारितुमारद्धे पुच्छा कडे त्ति। जिते उड्डाहेवि रुधाए एक्कपदं। उद्दविते णिव्विसए एक पदं। एतेसु चउसु पदेसु इमं पच्छित्तं। मासलहुगादि, मासगुरुं मोत्तु णिण्हवति पच्छद्धस्स इमा वक्खा-अहवेत्ययं निपात अविशब्द. प्रकारवाची। असिट्ठे-अनाख्याते एसेव तु तेणो त्ति संकिते लहुगा, निस्संकिते एस तेणो त्ति चउगुरुगा। तस्सेवेगस्स अणेगाए अणेगेसिं साहूण गहणादी।

इमे दोसा गाहा—

णायणे गहिते कड्ढे-विकड्ढे कड्ढववहारववहरिए।

उड्डाहे य विभंगे, उद्दवणे चेव णिव्विसए ॥ ५०२ ॥

एक्कगादीए दोण्हं पि पच्छित्तं । तेणाहडादीए तणफलयाए अणापुच्छाए भयणं पुव्वग्गामिणो दट्ठु तणफलयाणि साहुस्स वा गहणं कयं विकोपयित्वा कड्ढणं त्वं चौर इति विकोवणं साहुस्स रायपुरिसेण कड्ढणं कतं साहू ते रायपुरिसे प्रतीप कड्ढति त्ति विकड्ढणं । सेसा ते चेव पदा त चेव पच्छित्त। शिष्यः प्राह—किमस्तीदृशसंभवः ? । आचार्य्याह ।

गाहा—

दंतपुरे आहरणं, तेणाहडवच्चगादिसु तणेसु।

छावण मीराकरणे, अत्थरणत्थं तु चंपाटी ॥५०३॥

दंतपुरे दंतवक्कआख्यानक प्रसिद्धं। तद्यथा-तत्र तेनाहडप्पगादिसु तणेसु संभवो भवे। तानि पुन किमर्थं साधवो नयंति?,उच्यते-छावणनिमित्तं वा मीराकरणं वा मराकरणमित्यर्थः। पत्थरणत्थं वा। फलगा वि मीराकरणपत्थरणनिमित्त ते पुण चपपट्टादी नयंति इदाणीं।

गाहा—

अतेणहडाणयणे, लहुओ लहुगा य होंति सद्दम्मि।

अप्पत्तियम्मि गुरुगा, वोच्छेदपसज्जणा सेसे ॥५०४॥

भाणियव्वा अतेणाहडतणाइं जदि नेति अणापुच्छाए तणेसु लहुगो अप्पणणे से सिट्ठ तुज्झ चया तणफलया साधूर्हि चाहिं नीणिता हु एत्थ लहुगा। अणुग्गहो त्ति एत्थ वि चउलहुगा अप्पत्तियम्मि गुरुगा वोच्छेदं वा करेज्ज। तस्स साधुस्स तद्दव्वस्सन्नस्स वा पसज्जणा। सेसे त्ति अणेसिं पि साधूण असणादियाण य दव्वाणं य वोच्छेदो।

तणफलगविशेषज्ञापनार्थमाह। गाहा-

एसेव गमो णियमा, फलएसु वि होति आणुपुव्वीए।

णवरं पुण णाणत्तं, चतुरो लहुगा जहण्णपदे ॥५०५॥

जो तणेसु विधी भणितो फलगेसु वि एसो चेव विधी। नवरं नाणत्त चतुरो लहुगा जहन्नपदे। जत्थ तणेसु मासलहुं तत्थ फलगेसु चउलहू भवंतीत्यर्थ ।

गाहा-

वितियं पहुणिव्विसए, णट्ठुट्ठितमुणमतप्पणमब्भे।

संधारअगणिभंगे, दुल्लभसंथारए जतणा ॥५०६॥

अणापुच्छाए वि सेज्जासंथारगपभू निव्विसओ कतो, नट्ठो वा उट्ठितो। उव्वासितो वा मुणो पविस्सितो मतो वा अण्णप्पज्झो वा जातो, खधावारतया वा वहितो अतिनेति, अग्गिभये वा नेति, विसयभंगे वा नेति, दुल्लभसंथारए वा जतणाए नेति।

इमा सा जतणा गाहा-

तम्मि तु असधीणा वा, परिचत्तुं वा मईण वक्खित्ते।

पुव्वावरसंझासु व, णयति अंतो व बाहिं वा ॥५०७॥

गिहसंथारयसामी जदा असहीणो तदा नयंति। सहीणो वा पडिचत्तुं जदा वक्खित्तचित्तो तदा नयंति। पुव्वसंझाए अवरसंझाए वा अंतो वा बाहिं, बाहितो वा अंतो नयति।

जे भिक्खू पाडिहारियसंथारं वा सेज्जासंथारं दोच्चं

पि अणुण्णवित्ता बाहिं णीणेइ णीणेंतं वा साइज्जइ ॥५४॥
जे भिक्खू पाडिहारियं सेज्जासंथारयं आयाते अपरिहट्टु संपव्वयति संपव्वयंतं वा साइज्जइ ॥ ५५ ॥

आदाय गृहीत्वा अप्पडिहट्टु सम्मं अणप्पणित्ता सम्मं ए-गीभावेण प्रव्रजति संप्रव्रजति तस्स मासलहुं एस सुत्तत्थो।

इयाणिं णिज्जुत्तीवित्थरो त्ति गाहा-

परिहरिणउ पडिहारि उ, ओआतायतंडगेऊणं ।
अप्पडिहट्टुमणप्पि उ, संपव्वएँ सम्मगमणं तु ॥५०८॥

मासकप्पे पुण्णे मासकप्पे अपडिहट्टुमणप्पितुं न प्र-तीपं अर्पयतीत्यर्थः सम्यक्भावं व्रजति व्रजगतौ सम्म एगी प्रव्रजनं ।

संथारगो दुविहो गाहा-

सेज्जा संथारो उ, परिसाडी अपरिसाडिओ होति ।
परिसाडि कारणम्मी, अणप्पिणे मासो आणादी॥५०९
सोच्चागत त्ति लहुगा,अप्पत्ति य गुरुग जं च वोच्छेदो ।

सव्वंगी सेज्जा , अड्ढतियहत्थो संथारगो । अहवा से-ज्जा एवं संथारगो एक्केक्को दुविहो-परिसाडी, अपरि-साडी य । उडुबद्धे परिसाडी कारणे घेप्पति तं मासकप्पे पुण्णे अणप्पेउ व देंतस्स मासलहु, आणादयो दोसा । इमे य अण्णे दोसु तं तेण संथारगसामिणा जहा ते संजता संथारगं अणप्पिणित्तगता चउलहुगा पच्छित्तं, परियणो य से भणति । किं च संजताण दिण्णएण सो भवति । अप्पडिते वि अणुग्गहो अम्हं एयं पत्तिए वि चउलहुं, अह उप्पत्तियं करे-ति तेणा इमे लुप्पा हारित्ता विणासिता वा चउगुरु । जं च वोच्छेद करेंति, तस्स वा अण्णस्स वा साहुस्स, तद्दव्वस्स वा अण्णदव्वस्स वा, एत्थ वि चउगुरुगं । अहवा तम्मि सं-थारये सुण्णे कप्पट्ठाणि खेलंति मासलहु,अह तुयट्टंति मास-गुरुं । अह अण्णतो नयति मासलहु । अह वहति चउलहुं । दज्झंतेसु य अण्णपाणाण जा विराहणा तण्णिप्फण्णं च पच्छित्तं ।

गाहा—

कप्पट्ठखेलणेण य,डहणे लहुगा लहुग अन्नत्थ॥५१०॥
कप्पट्ठखेलणतुय-ट्टणे य लहुगो होति गुरुगो य ।
इत्थीपुरिसतुयट्टे, लहुगा गुरुगा अणायारे ॥ ५११ ॥
दिज्जंते वि तदा णि-च्छिजण अलभेसु भे त्ति णेत्तणं ।
कतकज्जा जणभोग,कातूण कहिं ? गया सच्छो ॥५१२॥
संथारगमग्गणे, भयणट्ठविधा तु होति कायव्वा ।
पुरिसे घरसंथारे, एगमणेगे य पत्तेगो ॥ ५१३ ॥
आणयणे जा जयणा, सा जयणा होति अप्पिणंते वि ।
वोच्छिन्नमायमहितं,दोसा य अणप्पिणंतम्मि ॥ ५१४ ॥
वितियपदमभामिते वा, देसुट्ठाणे व वोधिगादीसुं ।
अद्धाण सीसए वा, सत्थो व पधावितो तुरितं ॥५१५॥

१-बृहत्कल्प और व्यवहार, उत्तराध्ययनायेऽपि इमा गाथा ।

एतेहिं कारणेहिं, वच्चंते को वि तस्स तु णिवेदे ।
अप्पाहंति व सागा-रियादि असदस्ससाधूणं ॥ ५१६ ॥
एसेव गमो णियमा, फलगाण वि होति आणुपुव्वीए ।
चतुरो लहुया मायी,य णऽत्थि एयं तु णाणत्तं ॥५१७॥
परिसाडिमपरिसाडिय, सागारियसंतियं तु संथारं ।
अधिकरणं कातूणं, दूतिज्जंतम्मि आणादी ॥ ५१८ ॥
किड्डतुयट्टणवाले, णयणे डहणे य होति तह चेव ।
विकरणपासुद्धं वा, फलगतणेसुं तु साहरणं ॥ ५१९ ॥
पुंजे पासे व गहितं, जं जहितं तहि ठवेतव्वं ।
फलगं जत्तो गहितं, वाहाए वि कुरणं कज्जा ॥ ५२० ॥

पुव्वद्धं गतार्थं तम्मि सुण्णे संथारगे पुरिसित्थीसु तु प-देसु चउलहुं । अणायारमाचरतेसु चउगुरुगं । अहवा सोउं गते इमं फरुसवयणं भणेज्ज । दिज्जते वि गाहा—गहणका-ले तद्दिज्जे पि दिज्जमाणं नेच्छिऊण पुण्णे मासकप्पे अप्पे-सु त्ति । एवं भणित्ताणेण अप्पणा कते कज्जे सुण्णे जणभो-गं करेऊण कहि ति कं गामं नगरं वाति पुनः शब्दो द्रष्टव्यः ॥ भच्छेति निट्ठुरं किं पुण गामं नगरं वा गतत्यर्थः । संथारगस्स गहणकाले इमा विही । संथारे गाहा संथारे घेप्पमाणे एगाणेगवयणे अट्ठविहभंगरयणा कायव्वा । सा य सेसेसु तिसु पदेसु पुरिसघरसंथारएसु । एगेण सा-हुणा एगो संथारो पढमो भंगो । एव अट्ठ भंगा कायव्वा । 'एगमणेगे पत्तेगे' त्ति एगमणेगे, एगगणे अणेगगणेसु वा सा धारणपत्तगेसु खेत्तेसु एस विधी भणिता—इमो अप्पिणं-तेसु विधी । आणयणे गाहा भणियव्वा आणयणे जा-अट्ठविहा भगभयणा कता अप्पिणंते वि सा चेव अट्ठविहा भंगभयणा कातव्वा । अविवरीतं अप्पेति मायं वा करेति न वा अप्पेति वोच्छेदादयो दोसा भवंति । जं पढमा चत्तारि भंगा तिसु जं हत्थेण गहणं तहेव अप्पिणते पञ्चमभंगे गहणकाले अम्हे अण्णतरं अप्पेहिति त्ति । एस विधी न कतो एगप्पेणं वोच्चत्थं भवति । छट्ठभंगे एगो साधू पच्च-प्पिणिओ पिट्ठतो अवरो साहू चिंतेति मज्झ वि तणकवी-ओ तत्थेव नयव्वा, तस्स चयाण मज्झ च मुंचति अयाणंत-स्स नेच्छति नेउ त्ति एवं माया भवति । सत्तमभंगे ततिय-भंगे वा ओहारकंवीयो तणा एगघरे समप्पेंतस्स अप्पणं संभवति जम्हा एते दोसा तम्हा सव्वेहिं सव्वं वीसु २ अ-प्पेतव्वा । कारणे पुण विवरीत अप्पेति न अप्पेति वा ।

इमे य ते कारणा । गाहा—

वितियपदमवासंथड, देसुट्ठाणे व वोहिगादीसुं ।
अद्धाणसीसए वा, सत्थो व पधावितो तुरियं ॥५२१॥

सो सथारो झामितो जेसु ठाणेसु वा सो संथारगसा-मी वा कतो विगतो , वोहिभये संथारगसामी साधू वा नट्ठ अद्धाणसीसए वा सत्थो लद्धो तुरितं पहावितो जाव अप्पि-णति ताव सत्थातो फिट्टति, अण्णो दुल्लभो सत्थो । एतेहिं कारणेहिं गाहा-न पच्चप्पिणति । विकरणं पुण करेति । अण्णे साधू सत्थेण वयंति । एगो साधू तस्सेव निवेदयति सत्थो तु-रितं पधावितो तेण न आनीओ तुज्झं एय संथारयं अणुजाद

अत्थे वा साधू भणंति-तुज्झं इमं संथारयं अमुगे कुले अप्पेज्जइ। असति साहू सागारियादीण अप्पहेंति इमं संथारयं अप्पेज्जह णिवेदणं वा करेज्जह। एस तणकंबीणं विधी भणिता। एसेव कमो गाहा-फलगेसु वि सव्वो एसो विधी णवरं विसेसो पच्छित्त चउलहुगा। मायी तणत्थी जहा तणेसु कंबीसु वा अगणे तणा कंबीओ पक्खिवंति तहा फलगाण एऽत्थि पक्खेवो। नि० चू० २ उ०।

संप्रति निर्युक्तिविस्तरः—

परिसाडिमपरिसाडी, पुव्वं भणिया इमं तु नाणत्तं।
पडिहारिय सागारिय, तं चेवंतो बहिं णेति ॥१२८॥

परिशाटिः यादृशः संस्तारको भवति,यादृशश्चापरिशाटिः। एतौ द्वावपि पूर्वमस्मिन्नेवाधुनोद्देशके भणिताविदन्त्वत्र नानात्वम्,तदेवाह-प्रातिहारिकं सागारिकसत्कं तमेव शय्यातरसंस्तारकमन्तःस्थित वहिर्नयते।

एतदेव सविस्तरं भावयति-

परिसाडीपडिसेहो, पुणरुद्धारो य वणितो पुव्वं।
अप्परिसाडिग्गहणं,वासासु य वणिउं णियमा ॥१२९॥

पूर्वं परिशाटेः शय्यासंस्तारकस्य प्रतिषेधः कृतो यथा-न कल्पते परिशाटिः शय्यासंस्तारक इति। ततः पुनरुद्धारोऽपवादः पूर्वमेव वर्णितो यथा ऋतुबद्धे काले निष्कारण संस्तारका न कल्पन्ते, तथा पूर्वमेवैनदपि वर्णितं यथा वर्षासु काले नियमादपरिशाटेः शय्यासंस्तारकस्य ग्रहण कर्त्तव्यमिति।

पुण्णम्मि अंतो मासे, वासावासे वि संभवइ सुत्तं।
तत्थेव ऽण्णगवेसे, असती तं चेवऽणुण्णवए ॥१३०॥

अन्तर्ग्रामस्य नगरस्य वा मध्ये पूर्णे मासे वा वहिरवस्थातुकाममिदमधिकृतं सूत्र भवति। यथा न कल्पन्ते अभ्यन्तराणि तृणफलकानि यैर्दत्तानि तानि अनापृच्छ्य च बहिर्नेतुमिति। तत्र प्रथमतस्तत्रैव बहिः प्रदेशे अन्यत्र तृणफलकादिमयं शय्यासंस्तारकं गवेषयेत्। असति-बहिः संस्तारकस्यालभ्यमानत्वेनाभावे तमेव सागारिकसत्कमन्यसत्कं वा शय्यासंस्तारकमनुज्ञापयेत्। यथा बहिर्यांचित शय्यासंस्तारक पर न लब्धस्ततो यूयमनुजानीतास्मीयं संस्तारकं येन वहिर्नयाम इति। यदि नानुज्ञापयति तदा तृणमयसंस्तारकविषये प्रायश्चित्त मासलघु, फलकमयसंस्तारकविषये चतुर्लघु।

अत्रैवापवादमधिकृत्य विकल्पानाह—

अहवा अवस्सघेत्त-व्वयम्मि दव्वम्मि किं भवे पढमं।
णयणं समणुण्णा वा, विवज्जतो वा जहुत्तातो ॥१३१॥

अथवेत्यपवादमधिकृत्य प्रकारान्तरोपदर्शने, यदि नियमात्तं संस्तारकद्रव्यं वहिर्नेतव्यं न शक्यते तद्विना मोक्षसाधन कर्तुमिति, तर्हि प्रथमतः किं कर्त्तव्यं नयनं समनुज्ञा वा?। आचार्य आह—अवश्य नयनलक्षणे अपवादे प्राप्ते पूर्वं नयनं कर्त्तव्यम्, पश्चादनुज्ञापना। यदि वा-पूर्वमनुज्ञापना कर्त्तव्या पश्चान्नयनम्। विपर्ययो वा यथोक्त। किमुक्तं भवति?, नापि पूर्वमनुज्ञापयेत् नापि नीत्वा पश्चादनुज्ञापयेत्, ततः पूर्वमनुज्ञापन पश्चान्नयनमित्येकान्तशुद्धो भङ्गः। एष च भङ्गस्तदा द्रष्टव्यो यदा ये दोषा मासकल्पे वर्णितास्ते अन्त सन्ति वहिर्न विद्यन्ते। बहिश्च तृणफलकादीन्यनुज्ञाप्यमानान्यपि न लभ्यन्ते तदा अभ्यन्तराणि यथा सत्कानि तावदनुज्ञाप्य नीयन्ते। अथान्तर्गमिवादीनि कारणे निर्गमनमुहूर्त्तश्चातिप्रत्यासन्नो न च बहिस्तृणफलकादीनि लभ्यन्ते तदा पूर्वनयनं पश्चादनुज्ञापनं यथा बहिर्याचितानि तृणफलकादीनि परं न लब्धानि ततो युष्मदीयान्येव तत्र नीतानीत्यस्माकं तान्यनुजानीत। यदा तु कारणवशतो बहिरवश्यं गन्तव्यं बहिश्च तृणफलकादीनि न लभ्यन्ते नत्र तानि विना सावद्यः संस्तरीतुं शक्नुवन्ति। ननु येषामभ्यन्तराणि तृणफलकादीनि ते अनुजानन्त् समाव्यन्ते नचाऽननुज्ञाप्यम्, तेषु बहिर्नीतेषु तेषामभिनिवातदानपूर्वमनुज्ञापनं नापि नीत्वा पश्चादनुज्ञापनमिति। तदेव पूर्णमासकल्पे पूर्णे च वर्षाकल्पे वाऽयं विधिरुक्तः। एवमपूर्णेऽपि द्रष्टव्यम्।

तथा चाह—

एमेव अपुण्णम्मि वि, वसहीवाघाए अन्नसंकमणे।
गंतव्वुवासवासति, संथारो सुत्तनिद्देसो ॥ १३२ ॥

एवमेव अनेनैव प्रकारेण अपूर्णे मासकल्पे द्रष्टव्यम्। कथमित्याह-वसतेर्व्याघाते सति उपाश्रयाभावे सति उपाश्रयाभावे गन्तव्यमवश्य जातम्। तत्रान्यत्रत्रसङ्क्रमणे तत्र संस्तारकालाभे पूर्वप्रकारेण संस्तारको नेतव्य, एष सूत्रनिर्देशः—एष सूत्रविषय इति भावः।

तत्र पूर्वनयन पश्चादनुज्ञापनमिति भङ्गमधिकृत्य विधिमाह—

नीहरिउं संथारं, पासवणोच्चारभूमिभिक्खादी।
गच्छेह वा वि (स)ज्झायं, करे इमा तत्थ आरुवणा१३३

यदि कारणवशत पूर्वमनुज्ञाप्य तृणफलकादिमय संस्तारको वहिर्नीत, यदि वा-वसतेर्व्याघाते च वहिरन्या वसतिं गत्वा तत्र संस्तारकोऽननुज्ञाप्य नीत्वा स्थापितस्तर्हि शेषव्यापारपरित्यागेन नियमेन पश्चादनुज्ञापना कर्त्तव्या। अथ नीत्वा प्रस्रवणभूमिमुच्चारभूमिं भिक्षादौ वा गच्छेद्, अथवा स्वाध्यायं करोति तत्रेय वक्ष्यमाणा-आरोपणा प्रायश्चित्तम्।

तामेवाह—

एएसुं चउसुं पी, तणेसु लहुगो य लहुगफलगेसु।
रायदुट्ठग्गहणे, चउगुरुगा होंति णातव्वा ॥१३४॥

एतेषु-प्रस्रवणभूम्यादिषु चतुर्षु स्थानेष्वननुज्ञाप्य प्रवृत्तौ तृणेषु—तृणमयसंस्तारकविषये प्रायश्चित्त लघुको मास। फलकेषु विषये चत्वारो लघुका। राजद्विष्टेना राजप्रतिषिद्धेना तृणफलकादीनामनुज्ञाप्य ग्रहणे चत्वारो गुरुका भवन्ति-ज्ञातव्या।

नो कप्पइ निग्गंथाण वा निग्गंथीण वा पुव्वामेव ओग्गहं ओगिण्हित्ता तओ पच्छा अणुन्नवेत्तए ॥ १० ॥

कप्पइ निग्गंथाण वा निग्गंथीण वा पुव्वामेव ओग्गहं अणुन्नवेत्ता तओ पच्छा ओगिण्हित्तए अह पुण एवं जा-

णेज्ञा इह खलु निग्गंथाण वा निग्गंथीण वा नो सुलभे पाडिहारिए सेज्जासंथारए त्तिकट्टु एवएहं कप्पइ पुव्वामेव ओग्गाहं ओगिरिहत्ता तओ पच्छा अणुन्नवेत्तए मा व- हउं अज्जोवइ अणुलोमेणं अणुलोमयव्वे सिया इति ।११।

अस्य सूत्रस्य संबन्धमाह—

उग्गहसमणुएणासुं, सेज्जासंथारएसु य तहेव ।
अणुवत्तंतेसु भवे, पंते अणुलोमवति सुत्तं ॥१३५॥

अवग्रह' संस्तारकाश्च स्वामिना अनुज्ञाता , अवग्रहीत- व्या', इत्युत्सर्गत उपदेशस्तदेवमवग्रहसमनुज्ञासु शय्यासं- स्तारकेषु तथैव समनुज्ञातव्येष्वनुवर्त्तमानेष्विदमिति सूत्रं समनुज्ञातसंस्तारकादिग्रहणविषये भवति । अपवादतोऽननु- ज्ञाप्य संस्तारकग्रहणे यदि संस्तारकस्वामी प्रान्तो रुष्टो भ- वेत् तस्मिन्प्रान्ते अनुलोमवाक् वक्तव्या, अनेन संबन्धेनाया- तस्यास्य व्याख्या—न कल्पते निर्ग्रन्थाना निर्ग्रन्थीनां वा प्रातिहारिकं शय्यासंस्तारकं सर्वात्मना अर्पयित्वा द्वितीय- मप्यवग्रहमननुज्ञाप्य, अधिष्ठातुम् अनुज्ञाप्य पुन॰ कल्पते एवं सागारिकसत्केऽपि शय्यासंस्तारके द्वावालापकौ वक्त- व्यौ । तथा न कल्पते निर्ग्रन्थाना वा निर्ग्रन्थीनां वा पूर्वमे- वावग्रहमवगृहीतुं ततः पश्चादनुज्ञापयितुम् । कल्पते निर्ग्र- न्थाना वा निर्ग्रन्थीनां वा पूर्वमेवावग्रहमनुज्ञापयितुं पश्चा- दवग्रहीतुमिति । अथ पुनरेतत् जानीयात्—इह खलु निर्ग्र- न्थानां वा निर्ग्रन्थीनां वा न सुलभः शय्यासंस्तारक इति कृत्वा एवमेव-अमुना प्रकारेण । णमिति वाक्यालंकारे । कल्प- ते पूर्वमेवावग्रहमवग्रहीतुं ततः पश्चादनुज्ञापयितुम् । तत्रैव कारणे शय्यासंस्तारकस्वामिना सह संयतानां कलहे आ- चार्या संयतान् ब्रुवते—' भो ' आर्या ! द्विविधा कुरुत द्वा- यपि कुरुत एकं वसतिं प्रतिगृह्णीथ अपरे परुषाणि भाषध्वे, तस्मात् क्षमध्वमित्येवं वचसा अनुलोमेन—अनुकूलेनानु- लोमयितव्य॰ स्यादिति ।

सेज्जासंथारदुगं, अणुसवेऊण ठायमाणस्स ।
लहुगो लहुगो लहुगा, आणादी निच्छुभणपंतो ॥१३६॥

शय्यासंस्तारकद्विकं परिशाट्यपरिशाटिरूपं शालादिषु चा- वग्रहमननुज्ञाप्य तिष्ठत॰ प्रायश्चित्तं लघुकादि । तद्यथा-शा- लादिष्ववग्रहमननुज्ञाप्य तिष्ठतां लघुको मास॰ । परिशाटौ मासलघु, अपरिशाटौ चत्वारो लघुका । तथा आज्ञादय - आज्ञाभङ्गादयो दोषा । तथा साम्प्रत कोऽपि रुष्ट॰ सन् नि- ष्कुभणं—निष्काशनं कुर्यात् ।

एवमदिएणवियारे, दिएणवियारे वि सभपवादीसुं ।
तणफलगाणुएणाया, कप्पडियादीण जत्थ भवो ॥१३७॥

एवमदत्तविचारे शालादौ द्रष्टव्यम् । दत्तविचारं नाम यत्र कार्पटिकादिर्न कोऽपि वार्यते तच्च, सभा वा प्रपा वा मण्ड- पको वा यान्यपि च तत्र तृणफलकादीनि तान्यप्यनुज्ञा- तानि । तथा चाह-यत्र कार्पटिकादीना तृणफलकादीन्यनु- ज्ञातानि भवन्ति तेष्वपि दत्तविचारेषु सभाप्रपादिषु यानि तृणफलकादीनि तान्यपि ।

किमित्याह—

ताणि वि उ न कप्पंती, अणणुएणवियम्मि लहुगमासो उ ।
इत्तरियं पि न कप्पइ, तम्हा उ अजातितो गहणं ॥१३८॥

तान्यपि अननुज्ञापिते स्वामिनि ग्रहीतुं न कल्पन्ते । यदि पु- नरननुज्ञाप्य गृह्णाति तदा प्रायश्चित्तं लघुको मासः । कस्मा- देवमत आह-यस्मादित्वरमपि-क्षणमात्रमपीत्यर्थं , अवग्र- हणमयाचितं न कल्पते । उक्तं च-" इत्तरियं पि न कप्पइ , अविदिन्नं खलु परोग्गहादीसुं । चिट्ठित्तु निसीयइत्तुं, तुवट्टइत्तुं च (तइयव्वय) रक्खणट्ठाए ॥ १ ॥ "

तथा अननुज्ञापने तिष्ठत इमे च दोषाः—

जावंतियदोसो वा, अदत्तनिच्छुभणादिवसरातो वा ।
एए दोसे पावइ, दिन्नवियारे वि ठायंतो ॥ १३६ ॥

अननुज्ञाते दत्तविचारोऽपि यदि तिष्ठति तदा यावन्तिक- दोषस्तथा 'अदत्ते' त्ति-अदत्तदानग्रहदोषश्चोपजायते । तथा कदाचित् स सभादिस्वामी प्रान्तो ब्रूयात् केनामीषामत्र स्थानं दत्तं नह्यमीषां योग्यमिति । ततो रुष्ट सन् दिवसे रात्रौ वा निष्काशनं कुर्यात् । तस्माद्दत्तविचारेऽप्यननुज्ञाप्य तिष्ठन् एतान् दोषान्प्राप्नोति, तस्मात्तत्रापि पूर्वमनुज्ञाप्य पश्चात्क- ल्पते स्थातुम् । एवं सति यावन्तिकदोषो न भवति । स्वामि- सत्कं कृत्वा तदनुज्ञापनाददत्तादानं निष्काशनं च न भवतीति ।

किं तु अदिन्नवियारे, कोट्ठारादीसु जत्थ तणफलगा ।
रक्खिज्जंते तहियं, अणणुन्नाए य ठायंति ॥१४०॥

आस्तां दत्तविचारे अनुज्ञापनमन्तरेण न तिष्ठन्ति प्रागु- क्तदोषसंभवात् । किं तु-अदत्तविचारेष्वपि । गाथायामेकवच- नमपिशब्दलोपश्चार्षत्वात् । न दत्तो विचारप्रदेशो यत्र ता- न्यदत्तविचाराणि तेष्वपि, केष्वित्याह-कोष्ठागारादिषु को- ष्ठागारं धान्यस्य तृणादीना वा आदिशब्दात्-चतु.शाला- दीनि । तथा देवकुलं गोष्ठिकादीना वा गृहाणि, यत्र गो- ष्ठिकादय॰ समवाय कुर्वन्ति तानि ; दत्तविचाराणि भव- न्ति अदत्तविचाराणि गृह्यन्ते, तेषु कोष्ठागारादिषु यत्र येषु तृणफलकानि रक्ष्यन्ते । तथाहि-प्रतीतमेतत्कोष्ठागारादि- षु मा कोऽपि किमपि हार्षीरिति प्राहरिकमोचनेन तृणा- नि फलकानि धान्यानि च प्रयत्नेन रक्ष्यन्ते ।

तत्र तेष्वननुज्ञातेषु साधवो न तिष्ठन्ति । किमर्थमिति चे- दत आह—

दोसाण रक्खणट्ठा, चोएइ निरत्थयं ततो सुत्तं ।
भन्नइ कारणियं खलु, इमे य ते कारणा हुंति ॥१४१॥

दोषाणां प्रायश्चित्तप्रसङ्गतो भङ्गादिरूपाणा रक्षणार्थे-रक्ष- णाय तत्र न तिष्ठन्ति । अत्र परश्चोदयति-यद्येवं ततः सूत्रम्- 'इह खलु निग्गंथाण वा निग्गंथीण वा नो खलु भे पाडि- हारिए' इत्यादि निरर्थकमाविषयत्वात् , सूत्रे हि अनुज्ञा- पनमन्तरेणापि पूर्वमनुज्ञातमिति । सूरिराह—भण्यते—उ- त्तरं दीयते । इदं च खलु सूत्रं कारणिकं-कारणैर्निर्वृत्तम् तानि च कारणानि इमानि-वक्ष्यमाणानि भवन्ति ।

तान्येवाह—

अद्धाणे अट्ठाहिय, ओमसिवगामाणुगामियवियाले ।

तेण सावयमसगा, सीयं वा संदुराहियासं ॥१४२॥

अध्वनि—मार्गे गता. साधवः तत्रान्यत्र याचिता वसति; परं न लब्धा। अथवा—अष्टाहिका द्रष्टुमागता.। यदि वा—ग्लानादीनां कारणेन। यदिवा—अवमौदर्यमशिवं वा भविष्यतीत्यन्यदेशं प्रस्थिता विकाले प्राप्ता। अथवा—ग्रामानुग्रामं विहरन्ति। व्यतिक्रान्तमन्तरमपान्तराले इति कृत्वा सार्थवशेन वा निशि—विकाले प्राप्ता, अन्या च वसतिर्नारोचते। वसतिमन्तरेण च स्तेनभयं वा स्वापदभयं वा मशका वा दुरध्यासाः, शीतं वा दुरध्यासं पतति, यथा उत्तरापथे। वर्षं वा घनं निपतन् तिष्ठति। तत एतै कारणैरदृष्टेऽप्यधिकृतवसतिस्वामिनि मा-यथा अन्ये पथिका कार्पटिका वा तिष्ठन्ति तथैव कायिक्यादिभूमी. प्रत्युपेक्ष्य पूर्वमवग्रहं गृहीत्वा पश्चाद् वसतिस्वामिनमनुज्ञापयति।

एतदेव सविशेषमाह—

एएहिँ कारणेहिं, पुव्वं पेहेतु दिट्ठ गुणाए।
ताहे अयंति दिट्ठे, इमा उ जयणा तहिं होइ ॥१४३॥

एतैः-अनन्तरोदितैः कारणैः पूर्वमुच्चारादिभूमी प्रत्युपेक्ष्य दृष्टः परिजनोऽनुज्ञाप्यते। ततस्तस्या वसतावायान्ति साधवस्तत्र दृष्टे परिजने इयं वक्ष्यमाणा यतना भवति।

तामेवाह—

पेहे उच्चारभूमादी, ठायंती वोत्तु परिजणं।
अत्थाओ जाव सो एई, जाचीहामो तमागयं ॥१४४॥

प्रेक्ष्य—प्रत्युपेक्ष्य उच्चारभूम्यादि परिजनमुक्त्वा साधवस्तत्र तिष्ठन्ति—कथमुक्त्वेत्यत आह—आस्महे तावत् यावत्स गृहस्वामी समागच्छति ततस्तमागतं याचिष्यामहे।

स चागतो येन विधिना समनुज्ञापयितव्यस्तं विधिमाह—

वयं वण्णं च णाऊणं, वयंते वग्गुवादिणो।
सभंडा वेयरे सेज्जं, अप्फंदंती निरंतरं ॥१४५॥

वयो वर्णं च गृहस्वामिनो ज्ञात्वा वल्गु शोभनं वदन्तीत्येवंशीला वल्गुवादिनो वसतिस्वामिनं वक्ष्यमाणं वदन्ति। इतरे च सभाण्डाः सोपकरणा सन्तो निरन्तरं वसतिमास्पन्दन्ते व्याप्नुवन्ति।

कथं वदन्तीत्यत आह—

अब्भासत्थं गंतू-ण पुच्छए दूरएत्तिमा जयणा।
तद्दिसमेत्तपडिच्छण, पत्ते य कहेंति सब्भावं ॥१४६॥

यदि अभ्यासस्थो-निकटवर्ती भवति तदा गत्वा वसतिस्वामिनं पृच्छति। अथ दूरप्राप्तस्तत्रेयं यतना। ता दिशमागच्छतः प्रतीक्षणं कर्त्तव्यम् प्राप्ते च तस्मिन् सद्भावं कथयन्ति यथा वयं स्तेनादिभयात् युष्माकमुपाश्रये वयं स्थिताः, तथैवं वदन्ति।

विले व वसिउं नागा,(पातो)गच्छामो तज्जणा निरत्थाणं।
बहिँ दोसा जाते मा,होज्जा तुज्झ वि अहोमज्जा ॥१४७॥

विले नागा इव वयं युष्मदुपाश्रये उषित्वा प्रातर्गच्छाम



एवं याचितो यदि ददाति तत सुन्दरम्। अथ न ददाति तदाऽनुलोमेन वचसा अनुलोमयितव्यः। धर्मकथा तस्य कथ्यते, निमित्तादिकं वा प्रयुज्यते। तथाप्यददति परुषमपि वक्तव्यम्। कथमित्याह—निरस्तानां—निष्काशितानामस्माकं ये स्तेनकश्वापदादिभिरुपधिशरीरमरणदोषा जायेरन् मा ते तवाप्युपरि पतेयुरिति।

एतदेव सविस्तरमभिधित्सुराह—

जइ देइ सुंदरं तु, अह उ वएज्जाहि नीति मज्झ गिहा।
अन्नत्थ वसहिँ मग्गह,तहियं अणुसट्ठिमादीणि ॥१४८॥

यदि 'विले व वसिउं नागा' इत्यादि भणनानन्तरं वसतिं ददाति ततः सुन्दरम्। अथ वदेत् मम गृहान्निर्गच्छत—अन्यत्र वसतिं याचध्वमिति तदा तत्रानुशिष्ट्यादीनि क्रियन्ते, अनुशिष्टिः-अनुशासनं क्रियते। आदिशब्दात्-धर्म्मकथा कथ्यते इति परिग्रहः।

अणुलोमणं सजाती, सजाइमेवेति वह वि उ अठंते।
अभिओगनिमित्तं वा, बंधण गोसे य ववहारो ॥१४९॥

तथा अनुलोमेन वचसा अनुलोमनं कर्त्तव्यम्। अथ तथापि न ददाति तर्हि सजातिः सजातिमनुकूलयतीति न्यायमङ्गीकृत्य ये तस्य स्वजना यानि च मित्राणि तैरनुनयितव्यः। तथाप्यतिष्ठति अभियोगो मन्त्रादिना कर्त्तव्यः, निमित्तं वा प्रयोक्तव्यम्, बन्धनं वा सर्वैरपि साधुभिस्तस्य कर्त्तव्यम्। ततः प्रभाते व्यवहारः कर्त्तव्यः।

मा णो छिवसु भाणाइं, मा भिंदिस्समि णोऽजत !।
दुहतो वायँ वोलेंति, थेरा वारेंति संजए ॥ १५० ॥

यदि साधूना भाण्डकं बहिर्नेतुं व्यवसितस्तदा स भण्यते। मा न-अस्माकं भाजनानि स्पृश, हे अयत ? मा वा नोऽस्माकं भाजनानि भिन्धि। यदि पुनस्तं संयता निर्द्धर्म्मादिवचोभिराक्रोशन्ति तदा स्थविरा आचार्या संयतान् वारयन्ति। आचार्या द्विधातो वाचं कुर्युः, एक तावत् वसतिं प्रतिगृह्णीथ, द्वितीयं परुषाणि भाषध्वे। तस्मान्मा एवं भणत; यत्करोति तत् क्षमध्वमिति।

अहवा वेंति अम्हे ते, सहामो एस ते बली।
न सहेज्जाऽवराहं ते, तेण होज्ज न ते खेमं ॥ १५१ ॥

अथवा इदं ब्रुवते-वयं तवापराधं सहामहे, एष पुनर्बलीयान् तवापराधं न सहेत। असहिष्णुना वा तेन यत्क्रियेत तन्न ते क्षेमं भवेत्।

एवमुक्तो यदि सोऽनिर्गमेण न तिष्ठति, निष्काशयति, प्रहारैर्वा धावति, तदा स बलीयान् यत्करोति तद्दर्शयति—

सो य रुट्ठो व उट्ठित्ता, खंभं कुड्डं व कंपए।
पुव्वं वा नातिमित्तेहिं, तं गमेंति पदूण वा ॥ १५२ ॥

स बलीयान् रुष्ट इव, न तु परमार्थतो रुष्ट उत्थाय स्तम्भं वा कुड्यं वा मुष्टिप्रहारेण कम्पयति। कम्पयंश्च ब्रूते-एवं शिरः पातयिष्यामि, यदि न स्थास्यसि। एतच्च पर्यन्ते उच्यते, अन्यथा पूर्वमेव ज्ञातिमित्रैर्वा प्रभुणा न गमयन्ति, तथाऽप्यतिष्ठत्यनन्तरोदितं क्रियते। व्य० ८ उ०।

संस्तारको विप्रणष्टः स्यात् तदावग्रहः—

इह खलु निग्गंथाण वा निग्गंथीण वा पडिहारिए वा सागारियसंतिए वा सेज्जासंथारए परिब्भट्ठे सिया,से य अणुगवेसियव्वे सिया,से य अणुगवेसमाणे लभेज्जा। तस्सेव अणुप्पदायव्वे सिया, से अ अणुगवेसमाणे णो लभेज्जा। एवं से कप्पइ दोच्चं पि उग्गहं ओगिण्हित्ता परिहारं परिहरित्तए ॥ २८ ॥

अथास्य ( सूत्रस्य ) संबन्धमाह—

दोण्हेगयरं णट्ठं, गवेसिउं पुव्वसामिणो देंति ।
अपमादट्ठा अहिए, हिए य सुत्तस्स आरंभो ॥६३६॥

द्वयोः-प्रातिहारिकसागारिकयोः परिशाट्यपरिशाटिनोर्वा संस्तारकयोरेकतरं संस्तारकं नष्टं गवेषयित्वा पूर्वस्वामिनः प्रयच्छन्ति । अत अहृते-अनष्टेऽप्रमादार्थं, हृते च गवेषणादिसामाचारीप्रदर्शनार्थमस्य सूत्रस्यारम्भः क्रियते । अनेन संबन्धेनायातस्यास्य (२८) व्याख्या-इहास्मिन् मौनीन्द्रे प्रवचने स्थितानां खलुर्वाक्यालंकारे निर्ग्रन्थानां वा निर्ग्रन्थीनां वा प्रातिहारिको वा सागारिकसत्को वा शय्यासंस्तारको विप्रणश्येत्-विविधैः प्रकारैः प्रकर्षेण रक्ष्यमाणोऽपि नश्यते। स चानुगवेषयितव्यो विप्रणाशानन्तरं पृष्ठत एव गवेषयितव्यः स्यात्-भवेत् । स चानुगवेष्यमाणो लभ्येत, तस्यैव-संस्तारकस्वामिनः प्रतिदातव्यः —प्रत्यर्पणीयः स्यात् । स चानुगवेष्यमाणो नो लभ्येत, तत एवं ' से ' तस्य कल्पते द्वितीयमप्यवग्रहमनुज्ञाप्य । एकं तावत्प्रथमं यदा गृहीतस्तदाऽनुज्ञापितः, ततो विप्रनष्टः सन् गवेष्यमाणोऽपि यदा न लब्धस्तदा संस्तारकस्वामिनः कथिते सति यद्यसावन्यं संस्तारकं ददाति, यद्वा स एव संस्तारकस्वामिना मृग्यमाणो लब्धः, ततस्तद्विषयं द्वितीयमवग्रहमनुज्ञाप्य परिहारं-धारणापरिभोगलक्षणं परिहर्तुं धातूनामनेकार्थत्वात्कर्तुमिति सूत्रार्थः ।

अथ निर्युक्तिविस्तरः—

संथारो नासिहिती, वसहीपालस्स मग्गणा होति ।
सुन्नाई उ विभासा, जहेव हेट्ठा तहेव इहं ॥ ६३७ ॥

शून्यायां वसतौ कृतायां संस्तारको नश्यतीति प्रथमत एव वसतिः शून्या कर्त्तव्या येनासौ न नश्यति। अतः एवात्र वसतिपालस्य मार्गणा भवति । कथमित्याह-'सुन्नाई' इत्यादि यथैवाधस्तात्पीठिकायां शय्याकल्पिकद्वारे ' सुन्ने बालगिलाणे ' इत्यादिका विभाषा कृता तथैवेहापि मन्तव्या ।

स्थानाशून्यार्थं पुनरिदमाह—

पढमम्मि य चउलहुगा, सेसेसुं मासियं तु नाणत्तं ।
दोहि गुरू एक्केणं, चउत्थपए दोहि वी लहुगा ॥६३८॥

प्रथमे स्थाने वसतेः शून्यताकरणलक्षणे चतुर्लघुकाः, द्वाभ्यां तपःकालाभ्यां गुरुकाः । शेषेषु—बालग्लानाव्यक्तस्थापनलक्षणेषु त्रिषु लघुमासिकम् । तत्र बालस्थापने तपसा गुरुकं, ग्लानस्थापने कालेन गुरुकं , चतुर्थपदे-अव्यक्तस्थापनात्मके द्वाभ्यामपि-तपःकालाभ्यां लघुकम् ।

तत्र दोषानुपदर्शयति—

मिच्छत्तबहुगवारण-भडाण मरणं तिरिक्खमणुयाणं ।
आएसबालनिक्के-यणे य सुन्ने भवे दोसा ॥ ६३९ ॥
बलिधम्मकहाकिड्डा-पमज्जणा वरिसणा य पाहुडिया ।
खंधारअगणि भंगे, मालवतेणा ऍमाईया ॥६४०॥

गाथाद्वयं पीठिकायां सविस्तरं व्याख्यातम् । यत एते दोषा अतो वसतिः शून्या न कर्त्तव्या, न वा बालो ग्लानोऽव्यक्तो वा वसतिपाल स्थापनीयः ।

संथारविप्पणासो, एवं खु भविज्जतीति चोएति ।
सुत्तं होइ य अफलं, अह सफलं उभयहा दोसा ॥६४१॥

नोदयति-परः प्रेरयति, एवं खु-अवधारणे सुरक्षिते क्रियमाणे संस्तारकस्य विप्रणाशो न विद्यते । तथा च ' सेज्जासंथारए विप्पणस्सिज्जा ' इत्यादिलक्षणं सूत्रमफलं भवति । अथ सूत्रं सफलं मन्यध्वे ततो बालादिदोषरहितो वसतिपालः स्थापनीयः इति यदुक्तं तदफलं प्राप्नोति । एवमुभयथाऽपि दोषा भवन्ति ।

सूरिराह-यथा द्वयमपि सफलं भवति तथाऽभिधीयते-

निज्जंताऽणिज्जंतो , आयावणणीणितोऽवहीरेज्जा ।
तेणाऽगणिउदगसंभम-बोहिकभयरट्ठउट्ठाणे ॥ ६४२ ॥

प्रत्यर्पणार्थं नीयमानः संस्तारको राजपुरुषैरन्तराऽपह्रियेत ' आणिज्जंतो ' त्ति गृहपतिगृहादानीयमानो वा राजपुरुषैर्बलादपह्रियेत । आतापनमातापे संस्तारकस्य प्रदानं तदर्थं वा बहिर्निष्काशितः केनापि ह्रियेत , स्तेनाग्न्युदकसंभ्रमेषु वा बोधिकभये वा राष्ट्रस्य देशस्य यदुत्थानम्-उद्वसीभवनं तत्र ह्रियेत ।

पडिसेहेण व लद्धो, पडिलेहणमादिविरहिते गहणं ।
अणुसिट्ठी धम्मकहा, वल्लभो वा निमित्तेणं ॥६४३॥

प्रतिषेधो नाम संस्तारको मार्ग्यमाणस्तेन स्वामिना नाहं प्रयच्छामीति भवेत् प्रतिषिद्धस्ततः स केनचित् भद्रकेणानुशिष्टः-किं न प्रयच्छसीति ?, स प्राह—विप्रणाशभयात् । इतरो ब्रवीति—नामीषां हस्तात्किंप्रणश्यति , एवंविधेन प्रतिषेधेन वा लब्धः स प्रयत्नेन रक्ष्यमाणोऽपि प्रत्युपेक्षणानिमित्तं बहिर्नीतः , साधुश्च विस्मृतरजोहरणार्थं मध्ये प्रविष्टः । स चोत्कृष्टोऽयमिति कृत्वा विरहितं मत्वा केनापि गृहीतः । आदिग्रहणादुपाश्रयस्यान्तः राजवल्लभेन दृष्ट्वा बलमोटिकया ग्रहणं कृतम् । एवं विप्रनष्टे सति येन हृतस्तस्य पार्श्वान्मार्गयितव्यः । अथ मार्गितोऽपि न ददाति ततोऽनुशिष्टिः क्रियते । तथाप्यप्रयच्छति धर्मकथा कर्त्तव्या । एवमप्यददाने यो द्रुमकस्तस्य तापनं क्रियते । यस्तु राजवल्लभः स निमित्तेनावर्तनीयः ।

कथं पुनरनुशिष्टिः क्रियते इत्युच्यते—

दिन्नो भवविहेणे-व एस णारिहसि णे ण दाउं जो ।

अन्नो वि ताव देयो, देज्जाणमजाणताऽऽणीयं ॥६४४॥
य एष भवता संस्तारको गृहीतः स भवद्भिरेव शिष्ट-पुरुषेण दत्तस्ततो 'ऐ'-अस्माकं न नार्हसि दातुम्, अतोऽपि तावद्भवता संस्तारको देयः किं पुनर्योऽन्यदत्त.। ततः अजानता जानता वा आनीतमतोऽस्माकं प्रयच्छ।

एवम् अनुशिष्टो यदि न प्रयच्छति ततोऽयं विधिः—

मंतनिमित्तं पुण रा-यवल्लभे दमगभेसणमदेंते।

धम्मकहा पुण दोसु वि,जति अवराहो दुहा वऽहिओ६४५

राजवल्लभे अददति,मन्त्रो निमित्तं वा प्रयोक्तव्यम्। द्रमकस्य तु भेषणं कर्त्तव्यम्। धर्मकथा पुनर्द्वयोरपि द्रमकराजवल्लभयोः प्रयुज्यते, यथा यतय.-साधवस्तेषामुपकरणापहारादपराधो हि इह लोके परलोके वाऽहितो भवति।

इदमेव व्यनक्ति—

अन्नं पि ताव तेन्नं, इहपरलोके य पारिणामऽहियं।

परतो जायितलद्धं, किं पुण मन्नुप्पहरणेसुं ॥६४६॥

अन्यदपि प्राकृतजनविषयमपि यत्स्तैन्यं तत्तावदिह परलोके वा परिणामेऽहितं भवति। किं पुन. परतो याचितं यल्लब्धं तदपि ह्रियमाणं मन्युप्रहरणेषु साधुषु। मन्यु.-क्रोधस्तत्प्रहरणास्तदायुधा एव ऋषय.। ततस्तेषां ह्रियमाणमिहपरलोकयोः सुतरामहितं भवति।

एवमप्युक्तो यदि न दद्यात् ततः—

खंते व भूणए वा, भोइगजामातुगे असइ साहे।

सिट्ठम्मि य जं कुणइ, सो मग्गणदाणववहारो ॥६४७॥

'खंते' त्ति-पिता तेन गृहीते पुत्रस्य निवेद्यते, भ्रूणक.-पुत्रस्तेन गृहीते पिता प्रज्ञाप्यते। यद्वा—या तस्य भोजिका-भार्या,यो वा जामाता ताभ्यामसौ भाणयितव्यः। 'असइसाहे' त्ति सर्वथाऽपि यदि न ददाति तदा महत्तरादीनां निवेद्यते। तस्य शिष्टे कथिते यदसौ महत्तरादिः करोति तत्प्रमाणम्। एवं प्रनष्टस्य संस्तारकस्य मार्गणा, एवमप्यलभ्यमाने प्रान्तस्य संस्तारकस्वामिनो 'दाणं' निवेदनं दीयते, व्यवहारो वा करणं प्रविश्य कर्त्तव्य इति संग्रहगाथासमासार्थ.।

अथैनामेव विवृणोति—

भूणगगहिते खंतं, भणाइ खंतगहिते य से पुत्तं।

असति त्ति न देमाणे,कुणति दवावेति बलवाओ॥६४८॥

भ्रूणकेन गृहीते खन्त-पितरं भणति-प्रज्ञापयति। खन्तेन तु गृहीते 'से' तस्य पुत्र भणति। उपलक्षणमिदं तेन भोजिकादीनपि भाणयति 'असइ' त्ति एतद्ग्रहणपदं व्याचष्टे 'न देमाणे' त्ति एवमप्यददाने भोगिकादे निवेद्यते। ततो यदसौ बन्धनरोधनादि करोति दापयति वा तत्प्रमाणम्।

भोइय व उत्तरोत्तरं, नेयव्वं जाव ऽपच्छिमो राया।

दाणं विसज्जणं वा, दिट्ठमदिट्ठे इमं होइ ॥ ६४६ ॥

प्रथम भोगिकस्य निवेद्यते, यद्यसौ न दापयति ततो यस्तस्य देशारक्षिक स ज्ञाप्यते। एवमुत्तरोत्तरं तावन्नेतव्यं यावदपश्चिमो राजा। ततो 'दाणं' ति भोगिकादयश्चौरसकाशाद् गृहीत्वा साधूनां संस्तारक दद्यु। 'विसज्जणं व' त्ति यद्वा ते भोगिकादयो भणेयु', गच्छत यूयं वयं संस्तारकं संस्तारकस्वामिने समर्पयिष्याम, इति एष विधिर्दृष्टे संस्तारके मन्तव्य। अदृष्टे इदं वक्ष्यमाणं भवति।

अथैनामेव गाथा व्याचष्टे—

खंतादिसिट्ठे दिंते, महत्तरकिच्चकरभोइए वाऽवि।

देसारक्खियमच्चे, करणे निवे मा गुरू दंडो ॥ ६५० ॥

'खंत' त्ति—पितरि तदानीमनन्तरोक्तनीत्या शिष्टे-कथितेऽप्यददाने महत्तरस्य-ग्रामप्रधानपुरुषस्य कथयन्ति। कृत्यकरो—ग्रामकृत्ये नियुक्तो भोगिको—ग्रामस्वामी तयोर्वा कथयन्ति। देशारक्षिका-महाबलाधिकृत ,अमात्यो-राजमन्त्री तयोर्वा यथाक्रमं निवेद्यते। तथाप्यददाने करणेऽपि निवेदयन्ति। नृपस्य तु न निवेद्यते, मा गुरुर्गरीयान् सर्वस्वहारणादिको दण्डो भवेदिति कृत्वा।

एए उ दवावेंती, अहव भणेज्जा स कस्स दायव्वो।

अमुकस्स त्ति य भणिए,वच्चह तस्स प्पणिस्सामो॥६५१॥

एते भोगिकादयो यदि दापयन्ति ततो लष्टम्। अथवा-ते भणेयु'-स संस्तारक कस्य दातव्य इति। तत साधुभिरमुकस्येति भणिते ते ब्रुवते—व्रजत यूय, वयमेव तस्यार्पयिष्याम इति।

जति सिं कज्जसमत्ती, वयंति इहरा उ घेत्तु संथारं।

दिट्ठे णाते चेवं, अदिट्ठ णाए इमा जयणा ॥ ६५२ ॥

यदि 'सिं' तेषा साधूनां तेन संस्तारकेण कार्यसमाप्ति संजाता मासकल्पश्च पूर्णस्ततो भोगिकादिभिर्विसर्जिता व्रजन्ति, इतरथा-संस्तारककार्ये असमाप्ते, अपूर्णे मासकल्पे त वा अन्यं वा संस्तारक गृहीत्वा परिभुञ्जते। एवं दृष्टे संस्तारके ज्ञाते वा स्तेने विधिरुक्त।

अदृष्टे अज्ञाते चैवं यतना भवति—

विज्जादीहि गवेसण, अदिट्ठे भोइयस्स वा कहिंति।

जो भद्दओ गवेसति, पंते अणुसिट्ठिमाईणि ॥ ६५३ ॥

विद्यादिभि संस्तारकस्य गवेषणा कर्त्तव्या। अथ न सन्ति विद्यादयस्ततोऽदृष्टेऽज्ञाते स्तेने भोगिकस्य कथयन्ति। ततो यो भद्रको भवति स स्वयमेव गवेषयति, यस्तु प्रान्त. स स्वय न गवेषयति ततस्तत्रानुशिष्ट्यादीनि पदानि प्रयोक्तव्यानि। एषा पुरातनगाथा।

अत एनां व्याख्यानयति—

आभोगिणिए पसिणे—ण देवयाए निमित्ततो वाऽवि।

एवं नाए जयणा, सा चिय खंतादि जा राया ॥६५४॥

आभोगिनी नाम विद्या सा भण्यते, या परिजापिता सती मानस परिच्छेदमुत्पादयति। सा यद्यस्ति ततस्तया येन संस्तारको गृहीत स आभोग्यते। एव प्रश्नेनाङ्गुष्ठप्रश्नप्रश्नादिना देवतया वा क्षपकप्रयुक्तेन निमित्तेन वा अतिशयादिना तं स्तेन जानन्ति। एवं ज्ञाते सति सैव यतना कर्त्तव्या, या खन्तादिगृहीते संस्तारके भणिता। एतेषामभावे विधिमाह-यावदपश्चिमो राजा।

विज्जादसई भोइय, विकहण केण गहिओ न जाणीमो।

दीहो हु रायहत्थो, भद्दो आम ति मग्गयते ॥ ६५५ ॥

१ भोजिका-भार्या। भोगिक.-ग्रामपक.।

विद्यादीनामभावे न ज्ञायते केनापि गृहीत इति, ततो भोगिकादीनां कथयन्ति । संस्तारकोऽस्माकं नष्टो वर्त्तते, यूयं तं गवेषयत । भोगिकः प्राह-केन गृहीतः , साधवो ब्रुवते-न जानीमो वयम् । भोगिकः प्राह-अज्ञायमानं कथं गवेषयामि । साधुभिर्वक्तव्यं दीर्घो हि राजहस्तो भवति, तेन हि गवेष्यमाणः सुखेनैव स्तेनः प्राप्यते । ततो यो भद्रको भवति स आमं सत्यमिदमिति भणित्वा मार्गयति ।

प्रान्तः पुनरिदमाह—

जाणह जेणं हडो सो, कत्थति मग्गामि णं अजाणंतो ।
इति पंते अणुसिट्ठी, धम्मनिमित्ताइ तह चेव ॥६५६॥

य. प्रान्त स ब्रूयात्—जानीत यूयं येनासौ संस्तारको हृत. । अज्ञातेन तु कुत्राहं मार्गयामि । अज्ञकवदन्धवद्वा इति प्रान्ते ब्रुवाणे अनुशिष्टिधर्मकथानिमित्तादि तथैव प्रयोक्तव्यम् ।

असती य भेसणं वा, भीया वा भोइयस्स व भएणं ।
साहिंति दारमूले, पडिणीए इमेसु वि छुभेज्जा॥६५७॥

अथ नास्ति तत्र भोगिकः , अस्ति वा परं न दापयति , तदा साधवो भेषणं कुर्वन्ति । ततो भीता वा भोगिकस्य वा भयेन द्वारमूले संहरन्ति, संस्तारकं स्थापयन्तीत्यर्थः । यस्तु प्रत्यनीकः स एतेष्वपि पृथिव्यादिषु कायेषु प्रक्षिपेत् । यद्यस्माकं न जातस्तत एतेषामपि मा भूदिति कृत्वा । एष पुरातनगाथासमासार्थः ।

अथैनामेव व्याख्याति—

भोइयमादीण सती, अहवा वेंते वि विंति जणपुरओ ।
मुग्गहीहामो सकज्जे, किह लोगमयाइ जाणंता ॥६५८॥

भोगिकादीनामभावे तेषु वा संस्तारकमदापयत्सु साधवो बहुजनस्य पुरतो ब्रुवते । वयं लोकमभिजानन्तः स्वकार्ये कथं मुह्यामहे, यदि लोकस्य नष्टं विनष्टं विस्मृतं वा जानीमस्तत कथमात्मीयं न ज्ञास्याम इति भाव. । अतो यद्यस्माकं संस्तारकं नार्पयथ ततो वयं जनपुरतस्तं हस्ते गृहीत्वा दापयिष्याम. ।

अथ यूयं न प्रतीच्छथ तत.—

पेहुण तंदुलपव्वय-भीया साहंति भोइगस्सेते ।
साहित्थि साहरंति व,दोण्ह वि मा होउ पडिणीए ।६५६।

तन्दुला द्विधा क्रियन्ते-एके ' पेहुणमिश्रिताः, अपरे केवलां. एव । पेहुणं नाम-मयूराङ्गपिच्छ तत एक. साधु. साधूनां मध्यादपसरति, गृहस्थाश्च भणति । युष्माकं मध्यादेक. किमप्युपकरणं गृह्णातु ततो गृहीते सति स साधुरागत्य भणति युक्त्या सर्वेऽपि तिष्ठन्तु, स्थितेषु च स नैमित्तिकसाधुरुदकं तेषामञ्जलौ ददाति । येन च साधुना तत् गृह्यमाणं दृष्टं स तन्दुलान् प्रयच्छन् येन गृहीतं तत्र पेहुणमिश्रितान् ददाति । ततो नैमित्तिकसाधुस्तानि पेहुणानि दृष्ट्वा भणति, अनेन गृहीतमिति । एवं प्रत्यये उत्पन्ने भीतश्चिन्तयति । नूनमेते एवं ज्ञात्वा भोगिकस्य कथयिष्यन्ति । एवं विचिन्त्य स्वहस्तेन प्रतिश्रयद्वारमूले संस्तारकं स्थापयन्ति । प्रत्यनीकता वा द्वयोरपि वर्गयोरस्माकममीषा च मा भूदिति बुद्ध्या एतेषु संहरन्ति ।

पुढवी आउकाए, अगणिवणस्सइतसेसु साहरइ ।
घित्तूण य दायव्वो, अदिट्ठे दिट्ठे य दोच्चं पि ॥६६०॥

कश्चित्प्रत्यनीकः साधुसामाचारीकोविद· सचित्तपृथिव्यप्कायवनस्पतित्रसेषु प्रक्षिप्ते न ग्रहीष्यतीति बुद्ध्या तेषु आगाढे वा गर्त्तायां प्रक्षिपति । यद्यप्येतेषु प्रक्षिप्तस्तथापि ततो गृहीत्वा संस्तारकस्वामिनो दातव्यः। अथ प्रयत्नेन गवेषितोऽपि न कुत्रापि दृष्टः । यद्वा—स प्रत्यनीकतया न ददाति ततो ' दोच्चं पि ' त्ति द्वितीयमपि वारमवग्रहमनुज्ञापयेत् । पर. प्राह—यथाऽहं भणामि तथा द्वितीयावग्रहः अनुज्ञापनीयः । कथमिति चेदुच्यते—स संस्तारकस्वामी न ज्ञाप्यते, यथा नष्टः संस्तारकः, किं तु गत्वा भणितव्यं देहि तं संस्तारकमिदानीमेष द्वितीयोऽवग्रह उच्यते ।

गुरुराह—

दिट्ठंत पडिहणित्ता, जयणाए भद्दतो विसज्जेति ।
मग्गंते यतणाए , उवहिग्गहणे ततो वाओ ॥ ६६१ ॥

दृष्टान्तो नाम—नोदकेन स्वमत्यां योऽभिप्रायो दृष्ट' , तं प्रतिहत्य निक्षिप्य संस्तारकस्वामिना यतनया सद्भावः कथनीयः । कथिते च भद्रको विसर्जयति गच्छत नाहं किंचिदपि भणामि । य. प्रान्त. स संस्तारकं मार्गयति, तत्रानुशिष्टिः कर्त्तव्या । अथ नेच्छति तदा यतनया प्रान्तोपधिर्दातव्यः । अथ बलादेव सारोपधिग्रहणं करोति ततो राजकुले विवादः कार्यः ।

अमुमेवार्थं व्याख्याति—

परवयणाऽऽउट्टेउं, संथारं देहि तं तु गुरु एवं ।
आणेह भणति पंतो, तेणं दाणं न वा दाहं ॥६६२॥

पर. प्रेरकस्तस्य वचनमत्र भवति ' आउट्टेउं ' ति धर्मकथया संस्तारकस्वामी आवर्त्त्य याच्यते । तं संस्तारकं निर्व्याजं प्रयच्छ । गुरुराह-एवं मायया याचमानस्य चतुर्गुरुकम् । भद्रकप्रान्तकृताश्च दोषा भवन्ति । प्रान्तो भणति आनयत संस्तारकं ततो दास्यामि वा न वा ।

किं च—

दिज्जंतो वि न गहिओ किं सुहसेज्जो इयाणि संजाओ ।
हियनट्ठो वा नूण, अथक्कजायाएँ थवयामो ॥ ६६३ ॥

दीयमानोऽपि तदानीं यो न गृहीतः किमसौ संस्तारक इदानीं सुखशय्यः संजात. । अनया अथक्रयाञ्चया अकालप्रार्थनया स्तवयाम.—स्तवं कुर्मः । स नूनं हृतो वा नष्टो वा ।

भद्दो पुण अग्गहणं, जाणंतो वा वि विपरिणामेज्जा ।
किं फुडमेवं सीसइ, इमो हु अन्ने वि संथारा ॥६६४॥

यः पुनर्भद्रक. स साधुषु अग्रहणमनादरं कुर्यात् , यो वा जानाति संस्तारको हृतो-नष्टो वेति स सम्यग्दर्शनप्रव्रज्याऽऽद्यभिमुखो विपरिणमेत् अहो मायाविनोऽमी । विपरिणतो ब्रूयात्—किं स्फुटमेवास्माकं न शिष्यते—न कथ्यते यथा संस्तारको नष्ट , किमेवं मायया याच्यते ? । इमो हुरिति प्रत्यक्षमुपलभ्यमाना अन्येऽपि संस्तारका' सन्ति ।

इह चोयगदिट्ठंतं, पडिहंतुं सिस्सते य सब्भावो ।

भद्दो सो मम नट्ठो, मग्गामि न तो पुणो दाहं॥६६५॥

इति' पुर प्रदर्शने, एवं भद्रकप्रान्तदोषोपदर्शनेन नोदकदृष्टान्तं पराभिप्राय प्रतिहन्य तत्त्वमुच्यते। तस्य—संस्तारकस्वामिन. सद्भावः शिष्यते–निवेद्यते। निवेदिते च भद्रको भणति—स संस्तारको मम नष्टो न युष्माकम्, अद्य प्रभृति नाहं मार्गयामि लब्धं तु तं पुनरपि युष्मभ्य दास्यामि।

तुज्झे वि ताव मग्गह, अहं पि भूसेमि मग्गह व अन्नं।
नट्ठे वि तुब्भ खट्टा, वदंति पंतेऽणुसिट्ठादी ॥ ६६६ ॥

यूयमपि तावत्तं संस्तारकं मार्गयत, अहमपि त 'झुसेमि' त्ति–गवेषयामि। अथ युष्माकं चरितं–संस्तारकेण प्रयोजनं तदा यावदसौ लभ्यते तावदन्यं मार्गयत। यस्तु प्रान्त' स सद्भावे कथिते भणति—नष्टेऽपि संस्तारके यूय मम नष्टा., यतो जानीथ ततः संस्तारकं मार्गयत।

इयं यतना—

मोल्लं णत्थिऽहिरणा, उवधिं मे देहपंतदायणया।
अन्नं वदंति फलगं, जयणाए मग्गिउं तस्स ॥ ६६७॥

अहिरण्या वयं नास्ति मूल्यम्। स ब्रूयात्–उपधिं प्रयच्छ। ततो येन साधुना स संस्तारक आनीतः तस्य सत्कमन्तप्रान्तमुपकरणं दर्शनीयम्। अन्यं वा फलकं यतनया मार्गयित्वा ददाति। तत्र प्रथमत' शुद्धम्। तदभावे पञ्चकपरिहाण्या राजकुले वा गत्वा व्यवहार. क्रियते। दत्त्वा दातुमनीश्वर इति एतेन 'अग्गहदाणं व ववहारो' त्ति पद व्याख्यातम्।

सव्वे वि तत्थ रुंभति, भद्दो मुल्लेण जाव अवरण्हे।
एगं ठवेउ गमणं, सो वि य जा अट्ठमं काउं॥ ६६८॥

कोऽपि राजवल्लभादिः सर्वानपि साधून् तत्र निरुणद्धि, ततो यदि कश्चिद्यथाभद्रको मूल्येन मोचयति स न प्रतिषेद्धव्यः। अथ प्रतिषेधं कुर्वन्ति तदा चतुर्गुरु। अथ नास्ति मोचयिता ततोऽपराह्णे यावत् सर्वेऽपि सबालवृद्धास्तिष्ठन्ति, यदि न मुञ्चति तत एकं क्षपकादिक स्थापयित्वा शेषाः सर्वेऽपि गच्छन्ति। सोऽपीदृश. स्थाप्यते योऽष्टमं कर्तुं समर्थो भवति। असमर्थस्थापने चतुर्गुरु। ततोऽसावष्टम कृत्वा पलायते।

लद्धे तीरियकज्जा, तस्सेवऽप्पंति अहव भुंजंति।
पभु लद्धेवऽसमत्तं, दोचोग्गहो तस्स मूलाउ ॥६६९॥

लब्धे संस्तारक यदि तीरितकार्या. समाप्तप्रयोजनास्ततस्तस्यैव संस्तारकस्वामिनोऽर्पयन्ति। अथ कार्यमसमाप्त ततो भुञ्जते। अथ प्रभुणा—संस्तारकस्वामिना साधूना च कार्यमद्याप्यसमाप्त ततस्तस्य मूलाद्वितीयं वा स चावग्रहोऽनुज्ञाप्यते एप सूत्रोक्तो द्वितीयोऽवग्रह।

अथ द्वितीयपदमाह—

वितियं पभुनिव्विसए, णट्ठुट्ठियसुण्णमयमणप्पज्झे।
असहू य रायदुट्ठे, वोहिकभयमद्धसीसे वा ॥ ६७० ॥

द्वितीयपदमत्र भवति–संस्तारकेण कार्ये समाप्तम्, योऽपि संस्तारकस्य प्रभु स राज्ञा निर्विषय आज्ञप्त. देशभङ्गे वा नष्ट, दुर्भिक्षे वा उत्थित–उद्वसितः, 'सुण्ण' त्ति सपुत्रदारः कुत्राप्यामन्त्रित सन् गतो गृहं शून्यं संजातम्, मृतो वा–कालगत.। एतानि गृहस्थकारणानि। अमूनि तु संयतकारणानि। स साधुरसहिष्णुर्न शक्नोति गवेषयितुम्, राजद्विष्टे वोधिकभये वा अध्वशीर्षके वा सार्थवशत. एभि कारणैः—विप्रनष्ट शय्यासंस्तारकं न गवेषयेत्, न च प्रायश्चित्तमाप्नुयात्। वृ० ३ उ०।

विप्रनष्टं शय्यासंस्तारकं गवेषयेत्—

जे भिक्खू वा भिक्खुणी वा पाडिहारियसंतियं वा सेज्जासंथारयं विप्पणट्ठं ण गवेसइ न गवेसंतं वा साइज्जइ॥ ५७॥
जे भिक्खू वा भिक्खुणी वा सागारियसंतियं वा सेज्जासंथारयं विप्पणट्ठं ण गवेसइ ण गवेसंतं वा सातिज्जइ।५८।

वि इति विधीए प इति प्रकारेण पक्खिवज्जमाणो णट्ठो विप्पणट्ठो शेषं पूर्ववत्। नि० चू० ३ उ०। (यस्मिन् दिवसे निर्ग्रन्था. शय्यासंस्तारकं विप्रजहति तत्रापरे आगच्छेयु, तत्रावग्रह 'उग्गह' शब्दे द्वितीयभागे ७१५ पृष्ठे उक्त।) (रात्रावपि संस्तारको ग्राह्य इति 'राइभोयण' शब्दे षष्ठभागे उक्तम्।)

साम्प्रत वसतौ वसता विधिमधिकृत्याह—

से भिक्खू वा भिक्खुणी वा समाणे वा वसमाणे वा गामाणुगामं दूइज्जमाणे वा पुव्वामेव पण्णस्स उचारपासवणभूमिं पडिलेहिज्जा, केवली बूया–आयाणमेयं अपडिलेहियाए उच्चारपासवणभूमीए। से भिक्खू वा भिक्खुणी वा राओ वा वियाले वा उच्चारपासवणं परिट्ठवेमाणे पयलेज्ज वा पवडेज्ज वा से तत्थ पयलमाणे वा पयडमाणे वा हत्थं वा पायं वा०जाव लूसिज्ज वा पाणाणि वा ४ ०जाव ववरोविज्जा। अह भिक्खू णं पुव्वोवदिट्ठा जं पुव्वामेव पणस्स उचारपासवणभूमिं पडिलेहिज्जा। (सू० १०६)

'से' इत्यादि सुगम नवरं साधूना सामाचार्येषा, यदुत विकाले प्रस्रवणादिभूमय. प्रत्युपेक्षणीया इति।

साम्प्रत संस्तारकभूमिमधिकृत्याह—

से भिक्खू वा भिक्खुणी वा अभिकंखेज्जा सेज्जासंथारगभूमिं पडिलेहित्तए णण्णत्थ आयरिएण वा उवज्झाएण वा० जाव गणावच्छेएण वा बालेण वा वुड्ढेण वा सेहेण वा गिलाणेण वा आएसेण वा अंतेण वा मज्झेण वा समेण वा विसमेण वा पवाएण वा णिवाएण वा तओ संजयामेव पडिलेहिय २ पमज्जिय २ तओ संजयामेव बहुफासुयं सेज्जासंथारगं संथरेज्जा। (सू० १०७)

स भिक्षुराचार्योपाध्यायादिभि स्वीकृता भूमिं मुक्त्वाऽन्या स्वसंस्तारकाय प्रत्युपेक्षेत, शेष सुगमम्। नवरमादेश —प्राघूर्णिक इति, तथाऽन्तेन येत्यादीना पदाना तृतीया सप्तम्यर्थे इति।

इदानीं शयनविधिमधिकृत्याह—

से भिक्खू वा भिक्खुणी वा बहुफासुयं सेज्जासंथारगं संथरित्ता अभिकंखेज्जा बहुफासुए सेज्जासंथारए दुरूहित्तए, से भिक्खू वा भिक्खुणी वा बहुफासुए सेज्जासंथारए दुरूहमाणे पुव्वामेव ससीसोवरियं कायं पाए य पमज्जिय पमज्जिय ततो संजयामेव बहुफासुए सेज्जासंथारगे दुरूहेज्जा, दुरूहित्ता तओ संजयामेव बहुफासुए सेज्जासंथारए सएज्जा। ( सू०-१०८ )

'से इत्यादि' स्पष्टम्।

इदानीं सुप्तविधिमधिकृत्याह—

से भिक्खू वा भिक्खुणी वा बहुफासुए सेज्जासंथारए सयमाणे णो अण्णमण्णस्स हत्थेणं हत्थं पाएण पायं काएण कायं आसाएज्जा, से अणासायमाणे तओ संजयामेव बहुफासुए संथारए सएज्जा। से भिक्खू वा भिक्खुणी वा उस्ससमाणे वा णीससमाणे वा कासमाणे वा छीयमाणे वा जंभायमाणे वा उड्डोए वा वातणिसग्गं वा करेमाणे पुव्वामेव आसयं वा पोसयं वा पाणिणा परिपेहित्ता तओ संजयामेव ऊससेज्ज वा० जाव वायणिसग्गं वा करेज्जा। ( सू० १०६ )

'से' इत्यादि निगदसिद्धम्। इयमत्र भावना-स्वपद्भिर्हस्तमात्रव्यवहितसंस्तारकैः स्वप्तव्यमिति। एवं सुप्तस्य निःश्वसितादिविधिसूत्रमुत्तानार्थं, नवरम् 'आसयं व' त्ति-आस्यं 'पोसयं वा' इत्यधिष्ठानमिति। आचा० २ श्रु० १ चू० २ अ० ३ उ०।

तत्र च लब्धायां वसतौ को विधिरित्यत आह—

कोट्ठगसभा य पुव्विं, कालवियाराइभूमिपडिलेहा।
पच्छा अईंति रत्तिं, पत्ता वा ते भवे रत्तिं ॥२००॥

कोष्ठक-आवासविशेषः सभा-प्रतीता कोष्ठकसभा वसतौ लब्धाया प्रागेव 'काले' त्ति—कालभूमिं प्रत्युपेक्षन्ते, यत्र कालो गृह्यते। तथा 'वियारभूमिपडिलेहा' विचारभूमिः-संज्ञाकायिकाभूमिस्तस्याश्च प्रत्युपेक्षणा क्रियते। तत एवं प्रत्युपेक्षिताया विकाले वसतौ 'पच्छा अतिंति रत्तिं' ति—पश्चाच्छेपाः साधवो रात्रौ प्रविशन्ति। 'पत्ता वा ते भवे रत्तिं' ति—यदा पुनस्त आगच्छन्त एव कथमपि रात्रावेव प्राप्तास्तदा रात्रावपि प्रविशन्ति।

तत्र च प्रविशताम्—

गुम्मियभेसण समणा, णिब्भय बहिठाण वसहिपडिलेहा।
सुन्नघरपुव्वभणियं, कंचुग तह दारुदंडेणं ॥२०१॥

गुल्मिकाः-स्थानकरक्षपाला भेसणं ति यदि ते कथञ्चित् त्रासयन्ति ततश्चेदं वक्तव्यं-यदुत श्रमणा वयं न चौराः। 'निब्भय' त्ति—अथ तु स सन्निवेशो निर्भय एव भवेत्तदा 'बहिट्ठाणं' ति बहिरेव गच्छस्तावत्तिष्ठति, वृषभास्तु वसतिप्रत्युपेक्षणार्थं व्रजन्ते। किंविशिष्टाऽसौ वसतिरन्विष्यते ?—शून्यगृहादि पूर्वोक्तम्, 'कंचुग तह दारुदंडेणं' ति-दण्डकपुञ्छनं तथा कञ्चुकं परिधाय सर्पपतनभयाद्दण्डनपुञ्छनकेन वसतिमुपरिष्टात्प्रस्फोटयन्ति, गच्छश्च प्रविशति।

ततः को विधिः स्वापे ?—

संथारगभूमितिगं, आयरियाणं तु सेसगाणेगा।
रुंदाए पुप्फइन्ना, मंडलिआ आवली इयरे ॥२०२॥

संस्तारकभूमित्रयमाचार्याणां निरूप्यते, एका निवाता संस्तारकभूमिरन्या प्रवाता अन्या निवातप्रवाता। 'सेसगाणेग' त्ति शेषाणां साधूनामेकैका संस्तारकभूमिर्दीयते। 'रुंदाए' त्ति यद्यसौ वसतिर्विस्तीर्णा भवति ततः पुष्पावकीर्णाः स्वपन्ति—पुष्पप्रकरवदयथायथं स्वपन्ति, येन सागारिकावकाशो न भवति। 'मंडलिय' त्ति-अथासौ वसतिः क्षुल्लिका भवति ततो मध्ये पात्रकाणि कृत्वा मण्डल्याः पार्श्वे स्वपन्ति। 'आवलिय' त्ति—प्रमाणयुक्तायां वसतौ 'आवल्या' पङ्क्त्या स्वपन्ति 'इयरे' त्ति-क्षुल्लिकाप्रमाणयुक्तयोर्वसत्योरयं विधिः।

संथारग्गहणाए, वेंटिअउक्खेवणं तु कायव्वं।
संथारो घेत्तव्वो, मायामयविप्पमुक्केणं ॥ २०३ ॥

संस्तारकग्रहणाय संस्तारकभूमिग्रहणकाले, एतदुक्तं भवति-यदा स्थविरादि संस्तारकभूमिविभजनं करोति तदा साधुभिः किं कर्त्तव्यमत आह-'वेंटिअउक्खेवणं तु कायव्वं' वेण्टिया—उपधिवेण्टलिकास्तासां सर्वैरेव साधुभिरात्मीयात्मीयानामुत्क्षेपणं कर्त्तव्यं येन सुखेनैव दण्डया भुवि विभज्यन्ते संस्तारकाः शक्यन्ते। स च संस्तारको यो यस्मै साधवे दीयते स कथं तेन ग्राह्य इत्याह—मायामदविप्रमुक्तेन तेन न माया कर्त्तव्या, यदुताहं वातार्थी ममेह प्रयच्छ, नापि मदः-अहङ्कारः कार्यो, यदुताहमस्यापि पूज्यो येन मम शोभना संस्तारकभूर्दत्तेति।"जइ रत्तिं आगया ताहे कालं न गेण्हंति, निज्जुत्तीओ संगहणीओ य सणिअं गुणेंति, मा घेसिरिथिदुगुंछिआदओ दोसा होहिंति। कायिका मत्तएसु छड्डुंति उच्चारं पि जयणाए। जइ पुण कालभूमी पडिलेहिया ताहे कालं गिण्हंति, यदि सुद्धो करेंति सज्झायं, अह न सुद्धो न पडिलेहिआ वा वसही ताहे निज्जुत्तीओ गुणेंति। पढमपोरिसिं काऊण बहुपडिपुण्णाए पोरिसीए गुरुसगासं गंतूण भणति—इच्छामि खमासमणो वंदिउंजाव णिज्जाए निसीहिआए मत्थएण वंदामि, खमासमणा! बहुपडिपुण्णा पोरिसी, अणुजाणह राईसंथारयं, ताहे पढमं काइअभूमिं वच्चति। ताहे जत्थ संथारगभूमी तत्थ वच्चंति। ताहे उवहिम्मि उवओगं करेंता पमज्जंता उवहीए दोरयं उच्छोडेंति। ताहे संथारगपट्टअं उत्तरपट्टयं च पडिलेहित्ता दो वि एगत्थ लाएत्ता ऊरुम्मि ठवेंति। ताहे संथारगभूमिं पडिलेहंति, ताहे संथारयं अच्छुरंति सउत्तरपट्टं। तत्थ य लग्गा मुहपोत्तिआए उवरिल्लं कायं पमज्जति, हेट्ठिल्लं रयहरणेण। कप्पे य वामपासे ठवेंति, पुणो संथारए चढंतो भणइ-जे-ट्ठज्जाईण पुरतो चिट्ठंताणं अणुजाणेज्जह। पुणो सामाइअं तिण्णि वारे काढऊणं सोवइ। एस ताव कमो।

इदानीं गाथा व्याख्यायते—

पोरिसि आपुच्छणया, सामाइय उभय कायपडिलेहा ।
साहणिअ दुवे पट्टे, पमज्जभूमिं जओ पाए ॥ २०४ ॥

पौरुष्यां निर्युक्तीर्गुणयित्वा 'आपुच्छण' त्ति—आचार्यसमीपे मुखवस्त्रिकां प्रतिलेखयित्वा भणति 'बहुपडिपुण्णा पोरिसी' संदिशत सस्तारके तिष्ठामीति । 'सामाइयं' ति-सामायिक वारत्रयमाकृष्य स्वपिति । 'उभयं ति—संज्ञाकायिकोपयोग कृत्वा 'कायपडिलेह' त्ति—सकलं काय प्रमृज्य 'साहणिअ दुवे पट्टे' त्ति—साहणिय—एकत्र लात्ता दुवे पट्टे—उत्तरपट्टो संथारपट्टो अ, तत ऊर्वो. स्थापयति । 'पमज्जभूमिं जओ पाओ' त्ति-पादौ यतस्तेन भूमिं प्रमृज्य ततः सोत्तरपट्टं संस्तारकं मुञ्चति । अस्याश्च सामाचार्यनुक्रमेण गाथाया संबन्धो न कृतः, किन्तु स्वबुद्ध्या यथाक्रमेण व्याख्येया ।

एवमसौ संस्तारकमारोहन् किं भणतीत्याह—

अणुजाणह संथारं, बाहुवहाणेण वामपासेणं ।
कुक्कुडिपायपसारणं, अतरंत पमज्जए भूमिं ॥ २०५ ॥

अनुजानीध्वं संस्तारकम्, पुनश्च बाहूपधानेन वामपार्श्वेन स्वपिति । 'कुक्कुडिपायपसारणं' ति-यथा कुक्कुटी पादावाकाशे प्रथमं प्रसारयती एवं साधुनाऽप्याकाशे पादौ प्रथममशक्नुवता प्रसारणीयौ । 'अतरंता' त्ति-यदा आकाशव्यवस्थिताभ्या पादाभ्या न शक्नोति स्थातु तदा 'पम 'ज्जए भूमिं' ति-भुवं प्रमृज्य पादौ स्थापयति ।

संकोए संडासं, उव्वत्तंते य कायपडिलेहा ।
दव्वाई उवओगं, णिस्सासनिरुंभणा लोयं ॥ २०६ ॥

यदा तु पुनः सङ्कोचयति पादौ तदा 'संडासं' ति संदंशम्-ऊरुसन्धिं प्रमृज्य सङ्कोचयति । 'उव्वत्तंते य' त्ति—उद्वर्त्तयंश्चासौ साधु कायं प्रमार्जयति । एवमस्य स्वपतो विधिरुक्त । यदा पुन. कायिकार्थमुत्तिष्ठति स तदा किं करोतीत्याह-'दव्वाई उवओग' द्रव्यत क्षेत्रत· कालतो भावतश्चोपयोगं ददाति । तत्र द्रव्यत. कोऽहं प्रव्रजितो वा ?, क्षेत्रत· किमुपरितलेऽन्यत्र वा ?, कालत किमियं रात्रिर्दिवा ?, भावत कायिकादिना पीडितोऽहं न वेति, एवमुपयोगे दत्तेऽपि यदा निद्रयाऽभिभूयते तदा 'णिस्सासनिरुंभण' त्ति-नि श्वास निरुणद्धि नासिका दृढ गृह्णाति, निश्वासनिरोधार्थं ततोऽपगतायां निद्रायां 'आलोय त्ति-आलोकं पश्यति द्वारम् ।

यत·-

दारं जा पडिलेहे, तेण मए दोण्णि सावए तिण्णि ।
जइ य चिरं तो दारे, अण्णं ठवित्तु पडिअरइ ॥२०७॥

तदाऽसौ द्वारं यावत् प्रत्युपेक्षयन्-प्रमार्जयन् व्रजति, एवमसौ निर्गच्छति, तत्र च यदि स्तेनभयं भवति तत 'दोण्णि' त्ति-द्वौ साधू निर्गच्छत, तयोरेको द्वारे तिष्ठति अन्य कायिका व्युत्सृजति । 'सावए तिण्णि' त्ति-श्वापदभये सति त्रय साधव उत्तिष्ठन्ति । तत्रैको द्वारे तिष्ठति, अन्य· कायिकां व्युत्सृजति, अन्यस्तत्समीपे रक्षपालस्तिष्ठति । 'जति य चिरं' ति-यदि च चिरं तस्य व्युत्सृजतो जात ततो योऽसौ द्वारे व्यवस्थित साधु सोऽन्यं द्वारे स्थापयित्वा साधुं पुनश्चासौ व्युत्सृजन्तं 'पडिअरति' त्ति प्रतिजागर्त्ति ।

आगम्म पडिक्कंतो, अणुपेहे जाव चोद्दस वि पुव्वे ।
परिहाणि जा तिगाहा, निद्दपमाओ जढो एवं ॥२०८॥

सोऽपि साधु कायिकां व्युत्सृज्य आगत्य वसतौ 'पडिक्कंतो' त्ति—ईर्यापथिकां प्रतिक्रान्त· सन् 'अणुपेहे' अनुगुणनं करोति । कियद् दूर यावदत आह—' जाव चोद्दस वि पुव्वे ' यावच्चतुर्दश पूर्वाणि समाप्तानि । यस्त्र साधु सूत्रमानप्राणलब्धिसंपन्न अथैवं न शक्नोति तत· 'परिहाणि जा तिगाहा' परिहाण्या गुणयति स्तोकं स्तोकतरमिति यावद्गाथात्रयं जघन्येन यद्वा तद्वा परिगुणयति शैक्षोऽपि । एवं च कृते विधौ निद्राप्रमादो 'जढो' परित्यक्तो भवति ।

अतरंतो य निवज्जे, असंथरंतो अ पाउणे एक्कं ।
गद्दभदिट्ठंतेणं, दो तिण्णि बहू जह समाही ॥ २०९ ॥

अथासौ गाथात्रयमपि गुणयितु न शक्नोति तत· 'णिवज्जे' त्ति-ततः स्वपित्येवेति । 'असंथरंतो अ' त्ति-उत्सर्गतस्तावत्प्रावरणरहित· स्वपिति । अथ न शक्नोति यापयितुमात्मानं ततोऽसंस्तरमाण प्रावृणोति । एकं कल्प द्वौ त्रीन् वा । तथाऽपि यदि शीतेन बाध्यते तदा बाह्यतोऽप्रावृतः कायोत्सर्गं करोति । ततश्च शीतव्याप्तोऽभ्यन्तर प्रविशति । तत्र च प्रविष्टोऽनिवातमिति मन्यते, तथापि स्थातुमशक्नुवन् कल्प गृह्णाति । एव द्वौ त्रींस्तावद्यावत्समाधानं जातम् । अत्र च गर्दभदृष्टान्त·, 'जहा मिरुछगद्दभो अणुरुवभारेण आरुविएण सो वहिउं नेच्छइ, ताहे जोऽवि अण्णस्स भारो सो वि चडाविज्जइ, अप्पणावि आरोहति । जाहे नातिदूर गया ताहे अप्पणा उत्तरति, ताहे सो जाणाति—उत्तरितो मम भारो त्ति तुरियतरं पहाविओ । पच्छा अण्णो से अवणीओ, ताहे सो सिग्घयरं पहाविओ । एवं साहू वि णिवायतरं मग्गंतो सुहेण अच्छति । जाव रत्ति, एस विही, अववाएणं जहा वा समाही होति तहा कायव्व । संगारविनिअवमहि' त्ति व्याख्यातम् । ओघ० । नि० । संस्तारकर्त्तरि, प्रव० ७१ द्वा० ।

संथारग-संस्तारक-पु० । संस्तीर्यते भूपीठे शयालुभिरिति संस्तार. स एव सस्तारक । पर्यन्तक्रिया कुर्वद्भिर्दर्भादिविस्तरणे तत्क्रियाप्रतिपादनरूप प्रकीर्णकग्रन्थ, सथा० । अर्द्धतृतीयहस्तमाने (अनु० ।) लघुतरे शयन, स्था० ? श्रु० ४ अ० । स्था० । ध० ।

संथारगपइण्णग-संस्तारकप्रकीर्णक-न० । संस्तारकप्रतिपादके प्रकीर्णकग्रन्थे, सथा० ।

संथारपोरसी-सस्तारपौरुषी-स्त्री०।"साधुविश्रामणादेरा,निशायप्रहरे गते। गुर्वादेराज्ञया कुर्या,त्संस्तारे शयनं तथा।।१॥' संस्तरे शयनयोग्ये रात्रिपौरुषीप्रहरे, ध० २ अधि० ।

( 'संथार' शब्देऽस्मिन्नेव भागेऽनुपदमेव तद्विधिरुक्तः। )

संथारप्पलोइ-संस्तारप्रलोकिन्-त्रि०। शिशयिषोर्गुरोः संस्तारप्रेक्षणं कर्तरि, कथं संस्तारः कृतः काऽत्र त्रुटिरिति-द्रष्टरि शिष्ये, आचा० १ श्रु० ५ अ० ४ उ०।

संथारुत्तरपट्ट-संस्तारोत्तरपट्ट-पुं०। संस्तारकोत्तरपट्टयोर्द्वन्द्वे "संथारुत्तरपट्टो, अड्ढाइज्जा य आयया हत्था। दोण्हं पि अ-वित्थारो, हत्थो चउरंगुलं चेव ॥१॥" ध० ३ अधि०।

संथीण-संस्त्यान-न०। विनाशे, सम्म० ३ काण्ड।

संथुय-संस्तुत-त्रि०। विनयविषयत्वेन परिचिते,सद्भूतगुणोत्कीर्त्तनादिभिः सम्यक्स्तुते च। उत्त० १ अ०। पुं०। संयुतकरमुद्राविशेषवृन्दे, जं० २ वक्ष०। उत्त०। त्रि०। सम्बद्धे, सूत्र० १ श्रु० १२ अ०। दर्शनभाषणादिभिः परिचिते, प्रश्न० ४ संव० द्वार। भिक्षोः पुरः संस्तुता भ्रातृव्यादयः, पश्चात् संस्तुताः श्वशुरकुलसम्बद्धाः। आचा० २ श्रु०१ चू० १ अ० ४ उ०।

संदट्ठ-संदष्ट-त्रि०। "ष्टस्यानुष्ट्रेष्टासंदष्टे" ॥ ८। २। ३४॥ अत्रानुष्ट्रेष्टासन्दष्टग्रहणात् ष्टकारस्य टकार एव। चुण्ण व्व सन्दट्ठो। संदष्टे, प्रा०।" संदष्टो दंशमशकैः-स्त्रासं द्वेषं न वा व्रजेत्। न वारयेदुपेक्षेत, सर्वाहारप्रियत्ववित् ॥ १ ॥" आ० म० १ अ०।

संदट्टय-देशी-संलग्ने, दे० ना० ८ वर्ग १८ गाथा।

संदन-स्यन्दन-पुं०। रथविशेषे, प्रश्न० ५ संव० द्वार। द्विविधो रथः साग्रामिको, देवयानरथश्च। प्रश्न० १ आश्र० द्वार।"सदणो रहो" पाइ० ना० २२३ गाथा। अतीतोत्सर्पिण्यां भारते जाते त्रयोविंशतितमे तीर्थकरे, प्रव० ७ द्वार।

संदब्भ-संदर्भ-पुं०। सूत्रेण ग्रन्थने, स्था० ४ ठा० ४ उ०। आ० म०।

संदब्भिय-संदर्भित-त्रि०। स्नेहरज्जुभिर्ग्रथिते, स्था० ४ ठा० ३ उ०।

संदमाणिया-स्यन्दमानिका-स्त्री०। पुरुषस्य स्वप्रमाणावकाशदायिनि दीर्घे जम्पानविशेषे, रा०। जी०। भ०। औ०। ज्ञा०। अनु०। जं०। दशा०। शिबिकायाम्, औ०। सूत्र०।

संदाण-कृ-धा०। अवष्टम्भकरणे, "निष्टम्भावष्टम्भे णिट्ठुह-संदाणं" ॥८।४। ६७॥ अनेनावष्टम्भविषयस्य कृञो वैकल्पिकः संदाण इत्यादेशः। संदाणइ-अवष्टम्भं करोतीति। प्रा० ४ पाद।

संदाणिअ-संदानित-त्रि०। वन्धिते, " वद्धं संदाणिअं निअलिअ च " पाइ० ना० १६७ गाथा।

संदिट्ठ-संदिष्ट-पुं०। गुरुणाऽभिहिते, कथिते, निरूपिते, पञ्चा० १३ विव०। आ० म०। उत्त०। संदेशिते, नपुं०। " संदिट्ठं अप्पाहिअ" पाइ० ना० १८५ गाथा।

संदिद्ध-संदिग्ध-त्रि०। अनिश्चिते सकलसंशयादिदोषसहिते, स्था० ६ ठा० ३ उ०। सैन्धवशब्दवत् लवणपटघोटकाद्यनेकार्थसंशयकारिणि, आ० म० १ अ०।

अत्थेसु दोसु तिसु वा, सामन्नऽभिहाणओ उ संदिद्धं।
जह सिंधवं तु आणय, अत्थबहुत्तम्मि संदेहो॥

यस्मिन्नर्थेऽभिधीयमाने द्वयोस्त्रिषु सामान्याभिधानतः संदेह उपजायते तत्संदिग्धं, यथा-सैन्धवमानयेत्युक्ते किमश्वस्य ग्रहणमाहोश्वित् पुरुषस्य, उताहो लवणस्येत्यर्थबहुत्वे सन्देहः। बृ० १ उ० १ प्रक०। " संदिद्धं संसइअं " पाइ० ना० १८५ गाथा।

संदिसाविय-संदिश्य-अव्य०।अनुज्ञाप्येत्यर्थे, पं० व० २ द्वार।

संदिसाविऊण-संदेश्य-अव्य०। संदिशन्तमनुजानन्तमाचार्यमनुप्रयुज्य संदिशत यूयं मां येन पारयामीत्येवमनुज्ञाप्येत्यर्थे, पञ्चा० ५ विव०।

संदिहाण-संदिहान-त्रि०। संशयाने, विशे०।

संदीण-संदीन-त्रि०। संदीयते जलप्लावनात् क्षयमाप्नोतीति संदीनः। उत्त० ४ अ०। यो हि पक्षमासादुदकेन प्लाव्यते तस्मिन् द्वीपभेदे, आचा० १ श्रु० ६ अ० ३ उ०।

संदुम-प्रदीप-धा०। प्रज्वालने, "प्रदीपेस्तेअव-संदुम-सन्धुक्काभुत्ताः ॥ ८। ४। १५२॥ अनेन प्रदीप्यतेः संदुमादेशः संदुमइ। प्रदीप्यते। प्रा० ४ पाद।

संदुमिअ-संदीप्त-त्रि०। " संदुमिअं ऊसिक्किअं " पाइ० ना० १६ गाथा।

संदेव-देशी-सीमायाम्, दे० ना० ८ वर्ग ७ गाथा।

संदेस-संदेश-पुं०। भाषकान्तरेण देशान्तरस्थस्य भणने, ज्ञा० १ श्रु० ६ अ०। अपभ्रंशे स्वार्थे डप्रत्ययः। प्रा०।

संदेह-संदेह-पुं०। दोलायमानतायाम्, दर्श० ५ तत्त्व। आचा०। संशये, आचा० १ श्रु० ५ अ० १ उ०।

संदोह-संदोह-पुं०। निकुरम्बे, को०। सारे, आव० ६ अ०।

संधणा-संधना-स्त्री०। अभिसन्धनायाम्, प्रार्थनायाम्, सूत्र० १ श्रु० १ अ० १ उ०। संधानकरणे, व्य०।

संधनास्थानमाह-

रज्जुयमादि अछिन्नं, कंचुयमादी य छिन्नसंधणया।
सेढिदुगं अच्छिन्नं, अपुव्वगहणं तु भावम्मि॥ ३३॥

संधना-संधानकरणं, सा द्विधा-द्रव्यसंधना, भावसंधना च। द्रव्यसंधना द्विधा-छिन्नसंधना, अच्छिन्नसंधना च। तत्र रज्जुकादिकमच्छिन्नं यत् वलयति एषा अच्छिन्ना द्रव्यसंधना। कञ्चुकादीनां छिन्नसंधनता कञ्चुकादयो ह्यन्योन्यखण्डमीलनतः संधीयन्ते ततस्ते छिन्नसंधनाः। भावसंधनाऽपि द्विधा-छिन्नसंधना, अछिन्नसंधना च। तत्राच्छिन्नसंधना श्रेणिद्विकम्, उपशमश्रेणि, क्षपकश्रेणिश्च। तथाह्युपशमश्रेण्या प्रविष्टो यदाऽनन्तानुबन्धिप्रभृतिमोहनीयमुपशमयितुं तथा यतते, यथा सर्वं मोहनीयमुपशमयति, तदा भवत्युपशमश्रेणिरछिन्नसंधना क्षपकश्रेण्यामपि दर्शनसप्तकक्षयानन्तरं कषायाष्टकादि क्षपयितुं प्रवृत्तो-क्षियमादाकेवलप्रासेर्न निवर्त्तते ततः क्षपकश्रेणिरप्यछिन्नसंधना। 'अपुव्वगहणं तु भावम्मि' इति प्रशस्तेषु भावेषु वर्तमानो यदपूर्व

भावं संदधाति यया ऽच्यच्छिन्ना भावसंधना। शुभभावसंधनस्याव्यवच्छिन्नत्वात्।

( भाष्यम् ) इयं पुनश्छिन्नसंधना—

मीसत्तो ओदइयं गयस्स मीसगमणे पुणो छिन्नं।
अपसत्थपसत्थं वा, भावे पगयं तु छिन्नेण ॥ ३४ ॥

छिन्नाभावे सधनामिश्र· क्षायोपशमिको भावः। तस्मात् मिश्रात् क्षायोपशमिकभावात् यदा औदयिकभाव संक्रामन्ति तदा तस्य औदयिकं गतस्य छिन्नभावसंधना भावान्तरे संक्रान्तत्वात्। तथा तस्मादौदयिकभावात् यदा पुनर्मिश्रगमनं भवति-मिश्रं भावं संक्रामति, तदापि छिन्नभावसंधना, एवं शेषेष्वपि भावेषु यथायोगं भावनीयम्। अथवा-द्विविधा छिन्नभावसधना—प्रशस्ता, अप्रशस्ता च। तत्र यदा प्रशस्ते चरणादिभावे स्थित' सन् तथाविधकर्मोदयवशतोऽप्रशस्तमचरणभावं संक्रामति तदा प्रशस्ता छिन्नभावसंधना। अत्र प्रकृतमधिकारः,छिन्नेन भावसंधानेन तत्राप्रशस्तेन। तथाहि-प्रायश्चित्तस्थान तदा प्रतिसेवतो, यदा प्रशस्ताद्भावादप्रशस्तं भावं संक्रान्तो भवति तदेवं स्थाननिरूपणा। व्य०। स्था०। आचा०। ग्रहणे गुणने, नि० चू० १ उ०।

संदोह-संदोह-पुं०। निकुरम्बे, " संदोहो निकुरंबो " पाइ० ना० १६ गाथा।

संधाण-सन्धान-न०। पाटितसीवने, आचा०१ श्रु० ६ अ०३ उ०। मीलने, आचा०१ श्रु० ३ अ०३ उ०। अर्द्धे सन्धियोग्ये, पं०चू० ४ कल्प। सूत्रादेः प्रदेशान्तरे नष्टस्य मीलने, आ० म० १ अ०। आत्मना सहाविच्छेदेन संघट्टने, (अचार) अथाणाख्याते नानाद्रव्यसंयोगजे रस्ये, आचा० १ श्रु० १ अ० १ उ०। संधानं निम्बकविल्वकादीनामनेकसंसक्तिनिमित्तत्वाद् वर्ज्यम्। ध०२ अधि०। ('संधावण' इत्यस्य व्याख्या ' उवभोगपरिभोगपरिणाम ' शब्दे द्वितीयभागे ६०१ पृष्ठे गता।) विस्मृतस्य पुनरनुसन्धाने, पञ्चा० १२ विव०।

संधावण-सन्धावन-न०। पौनःपुन्येन गमने, आचा० १ श्रु० १ अ० १ उ०।

संधि-सन्धि-पुं०। सुरङ्गादौ, सन्धानं सन्धिः कर्मसन्ततिः। है०। सन्धीयते इति वा भवात् भवान्तरमनेनेति सन्धि·। अष्टप्रकारे कर्म्मसन्ततिरूपेऽर्थे, ' जहेत्थ मए संधी झोसिए एवमणत्थसंधी दुज्झोसिए भवति ' आचा० १ श्रु० ५ अ० २ उ०। मीलने, ज्ञा० १ श्रु० ६ अ०। संथा०। द्रव्यतो विवरे, भावतः कर्मविवरे, आचा०। सन्धिर्द्रव्यतो, भावश्च। तत्र द्रव्यत· कुड्यादिविवरं, भावत कर्म्मविवरम्, तत्र दर्शनमोहनीयं यदुदीर्णं तत्क्षीणं शेषमुपशान्तमित्यय सम्यक्त्वावाप्तिलक्षणो भावसन्धि, यदि वा-ज्ञानावरणीयं विशिष्टक्षायोपशमिकभावमुपगतमित्ययं सम्यग्ज्ञानावाप्तिलक्षणः सन्धि। अथवा-चारित्रमोहनीयक्षयोपशमात्मकः सन्धिस्तं ज्ञात्वा न प्रमाद श्रेयानिति यथाहि-लोकस्य चारकाद्यवरुद्धस्य कुड्यनिगडादीना सन्धि-छिद्रं ज्ञात्वोपलभ्य न प्रमाद श्रेयान्, एव मुमुक्षोरपि कर्मविवरमासाद्य लवक्षणमपि पुत्रकलत्रसंसारसुखव्यामोहो न श्रेयसे भवतीति। यदि वा-सन्धानं सन्धि· स च भावसन्धीर्ज्ञानदर्शनचारित्राध्यवसायस्य कर्मोदयात् त्रुटय·त पुनः सन्धानं-मीलनम्, एतत्क्षायोपशमिकादिभावलोकस्य विभक्तिपरिणामाद्वा लोके ज्ञानदर्शनचारित्राहं भावसन्धि ज्ञात्वा तदक्षुण्णप्रतिपालनाय विधेयमिति। यदि वा-सन्धि·-अवसरो धर्मानुष्ठानस्य तं ज्ञात्वा लोकस्य-भूतग्रामस्य दु·खोत्पादनानुष्ठान न कुर्यात्। सर्वत्रात्मौपम्यं समाचरेदिति। आचा०१ श्रु०१ अ०३ उ०।'अयं खधी' इत्यादि, अविवक्षितकर्म्मका अप्यकर्मका धातवो,यथा पश्य मृगो धावति एवमत्राप्यद्राक्षीदित्येतत्क्रियायोग अप्यय सन्धिरिति प्रथमा कृतेति। ' अय ' मिति प्रत्यक्षगोचरापन्न आर्यक्षेत्रसुकुलोत्पत्तीन्द्रियनिर्वृत्तिश्रद्धासंवेगलक्षण· सन्धि·-अवसरो मिथ्यात्व क्षयानुदयलक्षणो वा सम्यक्त्वावाप्तिहेतुभूतकर्म्मविवरलक्षण· सन्धिः शुभाध्यवसायसन्धानभूतो वा सन्धिरित्येनं स्वात्मनि व्यवस्थापितमद्राक्षीद्भगवानित्यतः क्षणमप्येकं न प्रमादयेत् न विषयादिप्रमादवशगो भूयात्। आचा० १ श्रु० ५ अ० २ उ०। " तेणावि संधि च्च णं णच्चा "—संधिं छिद्रं विवरम्। संधि ज्ञानावरणादिकर्मविवररूप नापि—नैव ज्ञात्वा अज्ञात्वेत्यर्थः। णं वाक्यालंकारे, यथा जीवकर्म्मणोः संधिः—भिन्नत्वं भवति तथा ज्ञात्वा मोक्षार्थं प्रवृत्ता इत्यर्थ। संधिर्द्विविध'—द्रव्यसंधिः—कुड्यादे·, भावसंधिः कर्मविवररूपस्तमुत्तरोत्तरपदार्थपरिज्ञानं वा संधिस्तं ज्ञात्वा प्रवृत्ता'। सूत्र० दी० १ श्रु० १ अ० १ उ०। फलकद्वयापान्तरालदेशे, जी० ३ प्रति० ४ अधि०। रा०। जं०। आ० म०। संधाने, प्रश्न० १ आश्र० द्वार। अङ्गुल्याद्यस्थिमेलापकस्थाने, तं०। जानुकूर्परादिके, सूत्र० १ श्रु० १५ अ०। गृहद्वयान्तराले, उत्त० २० अ०। सन्निकर्षे, प्रश्न० २ संव० द्वार। पं० चू०। खात्रे, सूत्र० २ श्रु० २ अ०। चौरखात्रे भित्तिसन्धौ च। आचा० २ श्रु० १ चू० १ अ० ६ उ०। विप्रतिपत्तौ संस्थायाम्, प्रश्न० ३ आश्र० द्वार।

संधिअ-देशी—दुर्गन्धे, दे० ना० ८ वर्ग ८ गाथा।

संधिकरण-सन्धिकरण-न०। स्वाग्रच्छेदे स्थूलमृषावादविरतेरतिचारे, उपा० १ अ०।

संधिच्छेयग-सन्धिच्छेदक-पुं०। खात्रखानके,प्रश्न०३ आश्र० द्वार। आ० म०। सन्धिच्छेदका ये गृहभित्तिसन्धिं विदारयन्ति। ज्ञा० १ श्रु० १८ अ०। विपा०।

संधिच्छेयणत्त-सन्धिच्छेदकत्व-न०। सन्धिच्छेदकभावे, खात्रखननत्वे, सूत्र० २ श्रु० २ अ०। ज्ञा०।

संधिदोस-सन्धिदोष-पुं०। विश्लिष्टसंहितत्वे, सन्ध्यभावे च। आ० म० १ अ०। विशे०। यत्र सन्धिप्राप्तौ तं न करोति दुष्टं वा करोति तत्र सन्धिदोष। अनु०।

संधिबन्धण-सन्धिबन्धन-न०। जानुकूर्परादिषु सन्धिषु सयमने, प्रश्न० ३ आश्र० द्वार।

संधिपाल-सन्धिपाल-पुं०। राज्यसन्धिरक्षके, ज्ञा० १ श्रु० १ अ०। कल्प०। भ०।

संधिमग्ग-सन्धिमार्ग-पुं०। मर्मस्थाने, आ० म० १ अ०।

संधिमुह-सन्धिमुख-न०। खात्रद्वारे, उत्त० ४ अ०।

संधिरण-सं(धी)धिरण-पुं०। पितामहकृतस्वाभिधाने देवदत्तसम्भवे अम्बिकापुत्रे, ती० ३५ कल्प।

संधुक्क-प्र-दीप-धा०। प्रज्वाले, "प्रदीपेस्तेअव-संदुम-सन्धुक्काब्भुत्ता." ॥ ८। ४। १५२॥ प्रदीप्यते. संधुक्कादेशः। सन्धुक्कइ। प्रदीप्यते। प्रा० ४ पाद।

संधुक्किअ-प्रदीप्त-त्रि०। उद्दीपिते, "संधुक्किअं उद्दीविअं" पाइ० ना० १६ गाथा।

संधेमाण-सन्दधान-त्रि०। सन्धानं कुर्वाणे, आचा० १ श्रु० ६ अ० ३ उ०।

संधेयव्व-सन्धातव्य-त्रि०। जोडनीये, "जं णेव छिन्दियव्वं संधेयव्वं च सिव्वियव्वं च। तं होति अधाकडयं जहण्णयं मज्झिमुक्कोसं ॥ १ ॥" नि० चू० १ उ०।

संपआ-सम्पद्-स्त्री०। प्राकृते "स्त्रियामादविद्युत." ॥८।१। १५॥ इति आ अन्त्यव्यञ्जनस्य। संपत्तौ, प्रा० १ पाद।

संपइ-सम्प्रति-अव्य०। आर्षत्वात्, "प्रत्यादौ ड." ॥ ८। १। २०६॥ इति तस्य न ड.। इदानींतनकाले, प्रा० "इण्हिं संपइ इरिंहि" पाइ० ना० ६७ गाथा। सम्प्रतिजातत्वात् सम्प्रति.। स्वनामख्याते चन्द्रगुप्तपौत्रे, वृ०।

संप्रतिनृपतिदृष्टान्तमाह-

कोसंबाहारकते, अज्जसुहत्थीण दमगपव्वज्जा।
अव्वत्तेणं सामा-इएण रण्णो घरे जातो ॥११२७॥

कौशाम्ब्यामाहारकृते आर्यसुहस्तिनामन्तिके द्रमकेण प्रव्रज्या गृहीता। स तेनाव्यक्तेन सामायिकेन मृत्वा राज्ञो गृहे जात इत्यक्षरार्थः। भावार्थस्तु कथानकगम्यः। तच्चेदम्-"कोसंबीए नयरीए अज्जसुहत्थी समोसढो। तया य अंवियकालो साधुजणो य हिंडमाणो गच्छति। एत्थ एगेन दमएण ते दिट्ठा, ताहे सो भत्त जायति। तेहिं भणियं अम्हं आयरिया जाणंति। ताहे सो गतो आयरियसगासं। आयरिया उवउत्ता, तेहिं णातं एस पवयणउग्गहे वट्टिहिति। ताहे भणिओ जति पव्वयसि तो दिज्जए भत्त। सो भणइ-पव्वयामि त्ति। ताहे पव्वाइतो सामाइयं कारिउं। तेण अतिसमुद्दिट्ठं। तओ कालगतो। तस्स अव्वत्तसामाइयस्स पभावेण कुणालकुमारस्स अंधस्स रण्णो पुत्तो जातो। को कुणालो कहिं वा अंधो त्ति-पाडलिपुत्ते असोगसिरी राया तस्स पुत्तो कुणालो। तस्स कुमारभत्तीए उज्जेणी दिण्णा। सो य अट्ठवरिसो रण्णा लेहो विसज्जितो 'शीघ्रमधीयतां कुमार' असंवत्तिए लेहं रण्णो उट्ठितस्स माइसवत्तीए कतं, अंधीयतां कुमार.। सयमेव तत्तलोहाए अच्छीणि अंजियाणि, सुत रण्णा गामो से दिण्णो। गंधव्वकलासिक्खणं पुत्तस्स रज्जत्थी। आगतो पाडलिपुत्ते असोगसिरिणो जवणिअंतरिउं गंधव्वं करेइ। आउट्टो राया भणइ-मग्गिज्जंत अभिरुइय ति। तेण भणियं-

"चंदगुत्तपपुत्तो यं, विंदुसारस्स नत्तुओ।
असोगसिरिणो पुत्तो, अंधो जायति काकणिं" ॥ १ ॥

चन्द्रगुप्तस्य राज्ञः प्रपौत्रो बिन्दुसारस्य नृपतेर्नप्ता पौत्र., अशोकश्रियो नृपस्य पुत्र., कुणालनामा अन्धः काकणीं-राज्यं याचते। तओ रण्णा भणितो-किं ते अंधस्स रज्जेणं?, तेण भणियं-पुत्तस्स मे कज्जति। रण्णो भणियं-अहित पुत्तो त्ति। तेण आणित्ता दाइओ इमो मे संपइ जाओ पुत्तो त्ति, ते चेव नामं कयं। तओ संवड्ढिओ दिन्नं रज्जं। तेण संपइराइणा उज्जेणिं आयकाउं दक्खिणावहो सव्वो तत्थट्ठिएण अवि सव्वे पच्चंतरायाणो वसीकया। तओ सो विउल रज्जसिरिं भुंजइ। किंच-

"अज्जसुहत्थीगमणं, दट्ठुं सरणं च पुच्छणा कहणा।
पावयणम्मि य भत्ती, तो जाता संपतीरण्णो" ॥

जीवन्तस्वामिवन्दनार्थमुज्जयिन्यामार्यसुहस्तिन आगमनम्। तत्र च रथयात्रायां राजाङ्गणप्रदेशे रथपुरतः स्थितानार्यान् सुहस्तिगुरून् दृष्ट्वा नृपतेर्जातिस्मरणम्। ततस्तत्र गत्वा गुरुपदकमलमभिवन्द्य पृच्छा कृता। भगवन्! अव्यक्तस्य सामायिकस्य किं फलम्?, सूरिराह राज्यादिकम्। असौ संभ्रान्तः प्रगृहीताञ्जलिरानन्दोदकपूरपूरितनयनयुगल प्राह-भगवन्! एवमेवेदं परमहं भवद्भिः कुत्रापि दृष्टपूर्वो नवेनि?। ततः सूरयः उपयुज्य कथयन्ति-महाराज! दृष्टपूर्वस्त्वं पूर्वभवे मदीयशिष्य आसीदित्यादि। ततोऽसौ परमं संवेगमापन्नस्तदन्तिके सम्यग्दर्शनमूलं पञ्चाणुव्रतमयं श्रावकधर्ममयं प्रपन्नवान्। ततश्चैवं प्रवचने संप्रतिराजस्य भक्तिः संजाता। किंच-

"जवमज्झमुरियवंसे, दाणावणिविवणिदारसंलोए।
तसजीवपडिक्कमओ, पभावओ समणसंघस्स ॥ १ ॥"

यथा यवो मध्यभागे पृथुल. आदावन्ते च हीनः एवं मौर्यवंशोऽपि। तथाहि-चन्द्रगुप्तस्तावद् बहुलवाहनादिविभूत्या विभूषित आसीत्। ततो बिन्दुसारो बृहत्तरस्ततोऽप्यशोकश्रीर्बृहत्तमस्तत. संप्रतिः सर्वोत्कृष्टः। ततो भूयोऽपि तथैव हानिरवसातव्या। एवं यवमध्यकल्प. सम्प्रतिनृपतिरासीत्। तेन च राज्ञा द्वारसंलोके चतुर्ष्वपि नगरद्वारेषु दान प्रवर्तितम् 'वणिविवणि' त्ति इह ये बृहत्तरा आपणास्ते आपणय इत्युच्यन्ते, ये तु दरिद्रापणास्ते विपणयः। यद्वा-ये आपणान् व्यवहरन्ति ते वणिज। ये पुनरापणेन विनाऽप्यूर्द्धस्थिता वाणिज्यं कुर्वन्ति ते विवणिज। एतेषु तेन राज्ञा साधूनां वस्त्रादिकं दापितम्, स च राजा वक्ष्यमाणनीत्या त्रसजीवप्रतिक्रामक. प्रभावकश्च श्रमणसंघस्यासीत्।

अथ 'दाणावणिविवणिदारसंलोए' इति भावयति-

ओदरियमओ दारे-सु चउसु वि महाणसे स कारेइ।
णिंताणिंते भोयण, पुच्छा सेसे य सुन्ने य ॥११२८॥

औदरिको-द्रमक. पूर्वभवेऽहं भूत्वा मृतः सन्निहायात इत्यात्मीयं वृत्तान्तमनुसरन् नगरस्य चतुर्षु द्वारेषु स राजा सत्राकारमहानसानि कारयति। ततो दीनानाथादिको लोको यस्तत्र निर्गच्छन् वा प्रविशन्वा भोक्तुमिच्छति स सर्वो भोजनं कार्यते, यच्छेषमुद्वरति तन्महानसिकानामाभवति। ततो राज्ञा ते महानसिकाः

पृष्टा, यदस्माकं दीनादिभ्यो ददतामवशिष्यते तेन यूयं किं कुरुथ ? तैरुक्तम्-अस्माकं गृहे उपयुज्यते । नृपतिराह—यद्दीनादिभिरभुक्तं तद्भवद्भिः साधूनां दातव्यम् ।

एतदेवाह—

साहूण देह एयं, अहं भे दाहामि तत्तियं मोल्लं ।
णेच्छंति घरे घेत्तुं, समणे मम रायपिंडो त्ति ॥११२९॥

साधूनामेतद्भक्तपानं प्रयच्छत, अहं 'भे' भवता तावन्मात्रं मूल्यं दास्यामि । यतो मम गृहे श्रमणा राजपिण्ड इति कृत्वा ग्रहीतुं नेच्छन्ति ।

एमेव तिल्लगोलिय-पूवियमोरंडदुस्सिए चेव ।
जं देह तस्स मोल्लं,दलामि पुच्छा य महगिरिणो११३०

एवमेव तैलिकास्तैलं, गोलिका मथितविक्रयिका· तक्रादिकं, अपूपलिका अपूपादिकं, मोरण्डकाः-तिलादिमोदकास्तद्विक्रयिकास्तिलादिमोदकान् । दौष्यका वस्त्राणि च दायिता । कथमित्याह-यत्तैलतक्रादि यूयं साधूनां दत्थ तस्य मूल्यमहं भवतां प्रयच्छामि, तत आहारवस्त्रादौ किमपीप्सिते लभ्यमाने श्रीमहागिरिरार्यसुहस्तिनं पृच्छति । आर्य ! प्रचुरमाहारवस्त्रादिकं प्राप्यते ?, ततो जानन्त्यार्या', राज्ञा लोकः प्रवर्त्तितो भवेत् ।

अज्जसुहत्थिममत्ते, अणुरायाधम्मतो जणो देति ।
संभोगवीसुकरणं, तक्खणआउट्टणनियत्ती ॥ ११३१ ॥

आर्यसुहस्ती जानानोऽप्यनेषणीयमात्मीयशिष्यममत्वेन भणति—क्षमाश्रमण ! अनुराजधर्मतो राजधर्ममनुवर्तमानः एष जन· एवं यथेप्सितमाहारादिकं प्रयच्छति । तत आर्यमहागिरिणा भणितम्—आचार्य ! त्वमपि ईदृशो बहुश्रुतो भूत्वा यद्येवमात्मीयशिष्यममत्वेनेत्थं ब्रवीषि ततो मम तव चाद्य प्रभृति विसंभोगो—नैकत्र मण्डल्या समुद्देशनादिव्यवहार इत्येवं विसंभोगस्याविष्करणम— भवत् । तत आर्यसुहस्ती चिन्तयति—मायाभावादेवमनेषणीयमाहारजातं साधवो ग्राहिता , स्वयमपि चानेषणीयं भुक्तम् । अपरं चेदानीमहमित्थमुपलम्भयामि तदेतन्मम द्वितीय बालस्य मन्दत्वमित्यापन्नम् । अथवा—नाद्यापि किमपि विनष्टं भूयोऽप्यहमेतस्मादर्थात्प्रतिक्रमामीति विचिन्त्य तत्क्षणादेवावर्त्तनमभवत् , ततो यथावदालोचना दत्त्वा स्वापराधं सम्यक् क्षामयित्वा तस्या अकल्पप्रतिसेवनायास्तस्य निवृत्तिरभूत्, ततो भूयोऽपि तयो संभोगिकत्वमभवत् ।

अथ त्रसजीवप्रतिक्रामक इत्यस्य भावार्थमाह—

सो रायाऽवंतिवती, समणाणं भावतो सुविहिताणं ।
पच्चंतियरायाणो, सव्वे सद्दाविया तेणं ॥ ११३२ ॥

स सम्प्रतिनामा राजा अवन्तीश्रमणाना श्रावकरूपश्चाणुव्रतधारी अभवदिति शेष । ते च शाक्यादयोऽपि भवन्तीत्यत आह—सुविहितानां-शोभनानुष्ठानानां ततस्तेन राज्ञा ये केचित् प्रात्यन्तिका प्रत्यन्तदेशाधिपतयो राजानस्ते सर्वेऽपि शब्दायिता ।

ततः किं कृतवानित्याह—

कहिओ य तेसि धम्मो, वित्थरतो गाहिता य सम्मत्तं ।
अप्पाहिता य बहुसो, समणाणं भद्दगा होह ॥११३३॥

कथितश्च तेषां प्रात्यन्तिकराजानां तेन विस्तरतो धर्म , ग्राहिताश्च ते सम्यक्त्वं, तत· स्वदेशगमना अपि ते बहुशस्तेन राज्ञा संदिष्टा', यथा श्रमणानां भद्रका भक्तिमन्तो भवत ।

अथ कथमसौ श्रमणसंघप्रभावको जात इत्याह—

अणुजाणे अणुजाती, पुप्फारुहणाइ ओक्किरणगाइं ।
पूयं च चेइयाणं, ते वि सरज्जेसु कारिंति ॥११३४॥

अनुयानं-रथयात्रा तत्राप्यसौ नृपतिरनुयाति, दण्डभटभोजिकादिसहितो रथेन सह हिण्डते । तत्र पुष्पारोपणम् आदिशब्दात्-माल्यगन्धचूर्णाभरणारोपणं च करोति, 'उक्किरणगाइं' ति रथपुरतो विविधफलानि खाद्यकानि कपर्दवस्त्रप्रभृतीनि चोत्किरणानि करोति । आह निशीथचूर्णिकृत्-'रहग्गतो य विविहफलखज्जगेयकवड्डगवत्थमादी य उक्किरणं करेइ' त्ति । अन्यया च चैत्यगृहे स्थितानां चैत्यानां भगवद्बिम्बानां पूजनं महता विच्छर्दनं करोति, तेऽपि च राजान एवमेव स्वराज्येषु रथयात्रामहोत्सवादिकं कारयन्ति । इदं च ते राजान सम्प्रतिनृपतिना भणिता· ।

जति मं जाणह सामिं,समणाणं पणमहा सुविहियाणं ।
दव्वेण मे न कज्जं,एयं खु पियं कुणह मज्झं ॥११३५॥

यदि मां स्वामिनं यूयं जानीथ मन्यध्वे तत· श्रमणेभ्य सुविहितेभ्य प्रणमत-प्रणता भवत, द्रव्ये-दण्डदानद्रव्येनार्थेन मे न कार्यं किंत्वेतदेव श्रमणप्रणमनादिकं मम प्रियं तदेव यूय कुरुत ।

वीसज्जिया य तेणं, समणं घोसावणं सरज्जेसुं ।
साहूण सुहविहारा, जाता पच्चंतिया देसा ॥ ११३६ ॥

एव तेन राज्ञा शिक्षा दत्त्वा विसर्जिता , ततस्तेषां स्वराज्येषु गमनं, तत्र च ते स्वदेशेषु सर्वत्राप्यमाघातघोषणं कारितं, चैत्यगृहाणि च कारितानि । तथा प्रात्यन्तिका देशा साधूनां सुखविहारा· संजाता । कथमिति चेदुच्यते-तेन सम्प्रतिना साधवो भणिता —भगवन्त ! एतान् प्रत्यन्तदेशान् गत्वा धर्मकथया प्रतिबोधयमाना पर्यटन्तु । साधुभिरुक्तम् राजन्नात्र साधूनामाहारवस्त्रपात्रादेर्लाभ ।

तत किमभूदित्याह—

समणभडभाविएसुं, तेसु रज्जेसु एसणादीसुं ।
साहू सुहं विहरिया, तेणं चि य भद्दगा ते उ ॥११३७॥

श्रमणवेषधारिभिर्भटैरेषणादिभि शुद्धमाहारादिग्रहणं कुर्वाणै साधुविधिना भावितेषु तेषु राज्येषु साधव सुखं विहृता । तत एव च सम्प्रतिनृपतिकालात्ते प्रत्यन्तदेशा भद्रका सजाता ।

इदमेव स्पष्टयति—

उदिण्णजोहाउलसिद्धसेणा-
पडिट्ठितो णिज्जियसत्तुसेणो ।

समंततो साहुसुहप्पयारे ,
अकासि अंधे दविले य घोरे ॥ ११३८ ॥

उदीर्णाः प्रबला ये योधास्तैराकुला—संकीर्णा सिद्धा—प्रतिष्ठिता सर्वत्राप्यप्रतिहता सेना यस्य स तथा,अत एव च निर्जितशत्रुसैन्य.-स्ववशीकृतविपक्षनृपतिसैन्य. एवंविध. स संप्रतिनामा पार्थिव., अन्ध्रान् द्रविडान् चशब्दान्महाराष्ट्रान् कुडुक्कादीन् प्रत्यन्तदेशान् घोरान् प्रत्यपायबहुलान् समन्तत. साधुसुखप्रचारान् साधूनां सुखविहारानकार्षीत्-कृतवान्। बृ० १ उ० ३ प्रक०। विशे०। नि० चू०। कल्प०। दर्शनशुद्धौ—

" जय जय नाणदिवायर !, परोवयारिक्कपच्चल ! मुणिंद !।
गुरुकरुणारससायर !, नमो नमो तुज्झ पायाणं ॥ २६ ॥
दारिद्दअमुद्दसमु—द्दमज्झनिवडंतजंतुपोयाणं ।
गुरुकरुणारससायर !, नमो नमो तुज्झ पयाणं ॥ २७ ॥
सग्गापवग्गमग्गा—गुलग्गजणसत्थवाहपायाणं ।
गुरुकरुणारससायर !, नमो नमो तुज्झ पायाणं ॥ २८ ॥
चक्कंकुसझसवरकल-सकुलिसकमलाइलक्खणजुयाणं ।
गुरुकरुणारससायर !, नमो नमो तुज्झ पायाणं ॥ २९ ॥
इम थोउं सो गुरुणो, गिहिधम्मं गहिय सगिहमणुपत्तो ।
सव्वत्थ वि नियरज्जे, रहजत्ताओ पवत्तेइ ॥ ३० ॥
जह सुमरिय रंकत्तं-सत्तागारा कराविया तेणं ।
जह बोहिया अणज्जा, तहा निसीहाउ नेयव्वं ॥ ३१ ॥
जिणसासणं पभाविय-सुइरं सुगुरू सुसूसुमाणपरो ।
सो संपइनरनाहो, जाओ वेमाणिओ सुसुरो ॥ ३२ ॥
इत्यधिकार्य्ये धर्मविचारं, संप्रतिभूपतिवृत्तमुदारम् ।
सद्गुरुप्रहताखिलबहुमानं,भव्यजना दधतां बहुमानम् ३३"

संपइक्खि—साम्प्रतेक्षिन्—पुं०। बाले, अपरिणामदर्शिनि, सूत्र० १ श्रु० ५ अ० २ उ०।

संपइण्ण—सम्प्रकीर्ण—त्रि०। रमणीयतया व्याप्ते, रा०।

संपउत्त—सम्प्रयुक्त—त्रि० । सम्बद्धे , स्था० ४ ठा० १ उ० । व्यापृते , संगते , स्था० ८ ठा० ३ उ० । प्रवर्त्तिते , स्था० ६ ठा० ३ उ० । समन्विते , सूत्र० २ श्रु० ७ अ० । व्यापारिते , ज्ञा० १ श्रु० १ अ० । औ० । योजिते , ज्ञा० १ श्रु० १ अ० । अविरुद्धतया प्रवर्त्तिते, जं० १ वक्ष०।

संपओग—सम्प्रयोग—पुं० । सम्बद्धे , स्था० ४ ठा० १ उ० । सूत्र० । प्रवर्त्तने , ज्ञा० १ श्रु० १८ अ० । सम्यगग्रतो वा प्रयोग सम्प्रयोग. । अकल्पिते योगे , दश० १ अ० । सम्पर्के , प्रश्न० ४ संव० द्वार । आ० म० । आव० ।

संपक्क—सम्पर्क—पुं० । सङ्गमे, आ० म० १ अ० ।

संपक्खालग—संप्रक्षालक—पुं० । वानप्रस्थभेदे, मृत्तिकाद्याघर्षणपूर्वकं ये अङ्गं क्षालयन्ति ते संप्रक्षालका उच्यन्ते । नि०१ श्रु० ३ वर्ग ३ अ० । औ० ।

संपक्खालिय—सम्प्रक्षालित—त्रि० । क्षालितसर्वपापमले , ध० ३ अधि० । भ० ।

संपगाढ—सम्प्रगाढ—त्रि० । अध्युपपन्ने, "वित्तेसिणो मेहुणसंपगाढा" सूत्र० २ श्रु० ६ अ० । व्याप्ते , सूत्र० २ श्रु० ६ अ० । सम्यङ् नारकतिर्यङ्नरामरभेदेन प्रगाढा.—प्रकर्षेण व्यवस्थिता इति । सूत्र० १ श्रु० १२ अ० । असह्ये, सूत्र० १ श्रु० ५ अ० २ उ० ।

संपग्गह—सम्प्रग्रह—पुं० । आत्मनो जात्याद्युत्सेकरूपग्रहे, स्था० ८ ठा० ३ उ० ।

संपज्ज—सम्पद्—धा० । सम्पत्तौ, " खिदां ज्जः " ॥८।४।२२४॥ अनेनात्रान्त्यस्य द्विरुक्तो जकारादेशः । सम्पद्यते । प्रा० ४ पाद ।

संपज्जण—सम्पज्जन—न० । रसपुष्टिजनने, सूत्र० १ श्रु० ७ अ०।

संपट्ठिय—सम्प्रस्थित—त्रि० । सम्प्रयाते,प्रज्ञा० १५ पद । औ०। "बहवे तडियकप्पडिगादयो सम्पट्ठिया" आव० १ अ० ।

संपडिअ—देशी—लब्धे, दे० ना० ८ वर्ग १४ गाथा ।

संपडिलेहियव्व—सम्प्रत्युपेक्षितव्य—त्रि० । सम्यक् प्रतिलेखितव्ये, दश० १ चू० ।

संपडिवाइय—सम्प्रतिपादित—त्रि० । स्थापिते, "धम्मे संपडिवाइओ" दश० २ अ० ।

संपणादिय—संप्रणादित—त्रि० । सम्यक् श्रोत्रमनोहारितया प्रकर्षेण सर्वकालं नदितं सम्प्रणादितम् । सम्यक् प्रकर्षेण शब्दं कुर्वति, जी० ३ प्रति० ४ अधि० । प्रज्ञा० ।

संपणा—देशी—घृतपूरार्थगोधूमपिष्टे, दे० ना०८वर्ग ८ गाथा ।

संपणोलिय—सम्प्रणुद्य—अव्य० । भाजनस्थं प्रेर्येत्यर्थे, द्रव्या० ।

संपन्न—सम्पन्न—त्रि० । युक्ते, उत्त० १ अ० । सूत्र० । स्था० । ओघ० । आतु० । समन्विते, आव० ४ अ० । उपेते, जं० २ वक्ष० ।

संपन्नदोहला—सम्पन्नदौहदा—स्त्री० । विवर्त्तितार्थभोगसंपद्यानन्दसंप्राप्तायामन्तर्वर्त्न्याम्, विपा० १ श्रु० २ अ० ।

संपन्ना—देशी—घृतपूरार्थगोधूमपिष्टे, दे० ना० ८ वर्ग ८ गाथा ।

संपण्णाय—सम्प्रज्ञात—त्रि० । सम्यक् प्रज्ञानप्रतिपादके समाधिभेदे, सम्यक् संशयविपर्ययध्यानाध्यवसायरहितत्वेन प्रज्ञायते प्रकर्षेण ज्ञायते भव्यस्य स्वरूपं येन स सम्प्रज्ञात उच्यते । द्वा० २० द्वा० । (सम्प्रज्ञातस्य व्याख्या 'जोग' शब्दे चतुर्थभागे १६२६ पृष्ठे उक्ता ।)

संपत्त—सम्प्राप्त—त्रि० । संलग्ने, आ० म० १ अ० । समागते, ज्ञा० १ श्रु० १ अ० । उत्त० । शोभनेन प्रकारेण स्वाध्यायकरणादिना प्राप्ते, दश० ५ अ० १ उ० ।

संपत्ति—सम्पत्ति—स्त्री०। यथोक्तार्थसम्पादने, भ०३ श० १ उ०। विभवसमागमे, द्वा० १२ द्वा० । "सम्प्राप्तिश्च विपत्तिश्च, कार्याणां द्विविधा स्मृता । संप्राप्ति सिद्धिरर्थेषु विपत्तिश्च विपर्यय. ॥१॥" नि० चू० १५ उ० । 'विलिंगेण लिंगणीए संपत्तिं जइ निग्गच्छई तो मूढो' बृ० ३ उ० । प्राप्तौ, पञ्चा० १६ विव० । अपूर्वलाभे, पो० १२ विव० । भ० ।

संपत्थिय—सम्प्रस्थित—त्रि० । सम्प्रस्थानकाले प्रयाते, व्य० १ उ० । शीघ्रे, दे० ना० ८ वर्ग ११ गाथा ।

संपदागम–सम्पदागम–पुं०। सम्पत्तिसम्प्राप्तौ, सम्पदागम. सदनुष्ठानलक्षणम्, तत एव शुभभावपुण्यसिद्धेः। द्वा० २३ द्वा०।

संपधारणा–संप्रधारणा–स्त्री०। धारणाव्यवहारे, व्य०।–"ज. म्हा संपहारं पउंजती तम्हा कारणा तेण नायव्वा संपधारणा।" तथा यस्मात्सम्प्रधार्य सम्यक् प्रकर्षेणावधार्य व्यवहारं प्रयुङ्क्ते तस्मात्कारणात्तेन शिष्येण संप्रधारणा भवति ज्ञातव्या। व्य० १० उ०।

संपधूमिय–सम्प्रधूमित–त्रि०। सौगन्ध्यार्थे धूपैर्वासिते, कल्प० १ अधि० ६ क्षण। धूपद्रव्येण समन्ततः प्रकर्षेण धूपिते, सू० १ उ० ३ प्रक०।

संपमज्जिय–संप्रमृज्य–अव्य०। प्रक्षाल्येत्यर्थे, कल्प० ३ अधि० ६ क्षण।

संपमिज्जमाण–संपरिमृजत्–त्रि०। सम्यग् परि समन्तात् हस्तपादादीनवयवान् तन्निक्षेपस्थानानि वा रजोहरणादिना मृजति, आचा० १ श्रु० ५ अ० ४ उ०।

संपयं–साम्प्रतम्–अव्य०। वर्त्तमानक्षणभाविनि युक्ते, विशे०। शब्दनये, अस्य द्वितीयनाम साम्प्रतवस्त्वाश्रयणात् साम्प्रतम्। यथा ह्येषोऽपि ऋजुसूत्रनय इव साम्प्रतमेव वस्त्वभ्युपगच्छति, नाप्यतीतमनागतं, नापि वर्त्तमानमपि परकीयम्। आ० म० १ अ०। आचा०।

संपयकालीण–सांप्रतकालीन–त्रि०। वर्त्तमाने, विशे०।

संपयगाहि–साम्प्रतग्राहिन्–पुं०। वर्त्तमानैकलक्षणवस्तुग्राहिणि, विशे०।

संपयहीण–सम्पद्धीन–त्रि०। सम्पद्रहिते, स० ३ सम०।

संपया–सम्पदा–स्त्री०। सम्पन्नतायाम्, उत्त०१ अ०। ऋद्धौ, स्था० ३ ठा० १ उ०। उत्त०। व्य०। समृद्धौ, ज्ञा० १ श्रु० ११ अ०। चतुर्थीकारके अर्थविश्रामस्थाने, संघा० १ अधि० १ प्रस्ता०।

संपयाण–सम्प्रदान–न०। सम्यक् सत्कृत्य वा दानं यस्मै तत्सम्प्रदानम्। दात्रा कर्मणाऽभिप्रेतघटादिग्रहीतरि, विशे०। सत्कृत्य सम्यग्वा प्रदीयते यस्मै तत्संप्रदानम्। तच्च त्रिविध तद्यथा—दीयतां मह्यं बहुफलं भवता भविष्यतीत्यादिवचनप्रपञ्चेन किञ्चित् प्रेरकं यथा वटुर्ब्राह्मण.। अपरं त्वित्थमप्रेरकमपि दानस्य ग्रहणपरिभोगाभ्यामनुमोदकं भवति। यथा मुनि' साधु। अन्यत्तु पुष्पाद्यनिषेधकम्—यथाऽर्हत्प्रतिमादे.। आ० म० १ अ०। आ० चू०। सम्यगर्थिभ्यो दानं, आ० म० १ अ०। विशे०। अनु०।

संपयामूल–सम्पदामूल–न०। श्रीकरणे, पञ्चा० ६ विव०।

संपयावण–सम्प्रदा(प)न–न०। सत्कृत्य प्रदाप्यते यस्मै उपलक्षणत्वात्सम्प्रदीयते वा यस्मै तत्संप्रदापनम्, संप्रदानं वा। चतुर्थीकारके, "चउत्थी संपयावणे" चतुर्थी सम्प्रदाने भवति, यथा भिक्षवे भिक्षां दापयति ददाति वा। स्था० ७ ठा० ३ उ०।

संपराइय–सांपरायिक–त्रि०। संपराया बादरकषायास्तेभ्य आगतं साम्परायिकम्। तज्जीवोपमर्दकत्वेन धर्मानुल्लङ्घनया तदुत्पन्नकारिभि. स्वपापविधायिभिर्बध्यमाने कर्मणि, सूत्र० १ श्रु० ८ अ०।

संपराइयबंध–सांपरायिकबन्ध–पुं०। संपरैति–संसार पर्यटति एभिरिति साम्परायाः कषायास्तेषु भवं साम्परायिकं कर्म, तस्य यो बन्ध. स साम्परायिकबन्ध। कषायप्रत्यये बन्धे, भ०।

संपराइयं णं भंते! कम्मं किं नेरइयो बंधइ, तिरिक्खजोणीओ बंधइ ० जाव देवी बंधइ ?, गोयमा! नेरइओ वि बंधइ तिरिक्खजोणीओ वि बंधइ, तिरिक्खजोणिणी वि बंधइ, मणुस्सो वि बंधइ, मणुस्सी वि बंधइ, देवो वि बंधइ, देवी वि बंधइ॥ तं भंते! किं इत्थी बंधइ, पुरिसो बंधइ, तहेव ०जाव नो इत्थी नो पुरिसो नो नपुंसओ बंधइ ?, गोयमा! इत्थी वि बंधइ पुरिसो वि बंधइ ०जाव नपुंसगो वि बंधइ। अह वेए य अवगयवेदो य बंधइ, अह वेए य अवगयवेया य बंधंति। जइ भंते! अवगयवेदो य बंधइ अवगयवेदा य बंधति, तं भंते! किं इत्थी पच्छाकडो बंधइ पुरिसपच्छाकडो बंधइ? एवं जहेव ईरियावहिया बंधगस्स तहेव निरवसेसं ०जाव अहवा इत्थी पच्छाकडा य पुरिसपच्छाकडा य नपुंसगपच्छाकडा य बंधंति। तं भंते! किं बंधी बंधइ बंधिस्सइ १ बंधी बंधइ न बंधिस्सइ२ बंधी न बंधइ बंधिस्सइ ३ बंधी न बंधइ न बंधिस्सइ ४ ?, गोयमा! अत्थे गतिए बंधी बंधइ बंधिस्सइ १ अत्थे गतिए बंधी बंधइ न बंधिस्सइ २ अत्थेगतिए बंधी न बंधइ बंधिस्सइ३ अत्थेगतिए बंधी न बंधइ न बंधिस्सइ४॥ तं भंते! किं साइयं सपज्जवसियं बन्धइ? पुच्छा तहेव, गोयमा! साइयं वा सपज्जवसियं बंधइ, अणाइयं वा सपज्जवसियं बंधइ, अणाइयं वा अपज्जवसियं बंधइ, णो चेव णं साइयं अपज्जवसियं बंधइ। तं भंते! किं देसेणं बंधइ, एवं जहेव ईरियावहिया बंधगस्स ०जाव सव्वेणं सव्वं बंधइ। (सू०–३४२)

'संपराइयं णं' मित्यादि, 'किं नेरइओ' इत्यादय सप्त प्रश्ना, उत्तराणि च सप्तैव, एतेषु च मनुष्यमानुषीवर्जा. पञ्च साम्परायिकबन्धका एव सकषायत्वात, मनुष्यमानुष्यौ तु सकषायित्वे सति साम्परायिकं बध्नीतो न पुनरन्यदेति। साम्परायिकबन्धमेव स्त्र्यादिप्रत्यया निरूपयन्नाह–'तं भंते! किं इत्थी' त्यादि, इह स्त्र्यादयो विवक्षितलिङ्गप्रधाना यदुत्पत्त्या पद सर्वदा साम्परायिकं बध्नन्ति, अपगतवेदश्च कदाचिदेव तस्य कादाचित्कत्वात्। ततश्च स्त्र्यादय केवला बध्नन्ति अपगतवेदसहिताश्च। ततश्च यदाऽपगतवेद-

सहितास्तदोच्यते अथवैते स्त्र्यादयो बध्नन्ति अपगतवेदश्च, तस्यैकस्यापि सम्भवात्। अथवैते स्त्र्यादयो बध्नन्ति अपगतवेदाश्च, तेषां बहूनामपि सम्भवात्, अपगतवेदश्च साम्परायिकबन्धको वेदत्रये उपशान्ते क्षीणे वा यावद्यथाख्यातं न प्राप्नोति तावल्लभ्यत इति, इह च पूर्वप्रतिपन्न—प्रतिपद्यमानकविवक्षा न कृता, द्वयोरप्येकत्वबहुत्वयोर्भावेन निर्विशेषत्वात्। तथाहि—अपगतवेदत्वे साम्परायिकबन्धोऽल्पकालीन एव तत्र च योऽपगतवेदत्वं प्रतिपन्नपूर्वः साम्परायिकं बध्नात्यसावेकोऽनेको वा स्यात्, एवं प्रतिपद्यमानकोऽपीति। अथ साम्परायिककर्म्मबन्धमेव कालत्रयेण विकल्पयन्नाह—'तं भंते ! किमि' त्यादि इह च पूर्वोक्तिष्वष्टासु विकल्पेष्वाद्याश्चत्वार एव सम्भवन्ति नेतरे, जीवाना साम्परायिककर्मबन्धस्यानादित्वेन 'न बंधी' त्यस्यानुपपद्यमानत्वात्, तत्र प्रथमः सर्व एव संसारी यथाख्यातासंप्राप्तोपशमकक्षपकावसानः स हि पूर्वं बद्धवान् वर्त्तमानकाले तु बध्नाति अनागतकालापेक्षया तु भन्त्स्यति १। द्वितीयस्तु मोहक्षयात्पूर्वमतीतकालापेक्षया बद्धवान् वर्त्तमानकाले तु बध्नाति भाविमोहक्षयापेक्षया तु न भन्त्स्यति २। तृतीयः पुनरुपशान्तमोहत्वात् पूर्वं बद्धवान् उपशान्तमोहत्वे न बध्नाति तस्माच्च्युतः पुनर्भन्त्स्यतीति ३। चतुर्थस्तु मोहक्षयात्पूर्वं साम्परायिकं कर्म बद्धवान् मोहक्षये न बध्नाति न च भन्त्स्यतीति। साम्परायिककर्मबन्धमेवाश्रित्याह—'त' मित्यादि, 'साइयं वा सपज्जवसियं बंधइ' त्ति-उपशान्तमोहताया च्युतः पुनरुपशान्तमोहतां क्षीणमोहतां वा प्रतिपत्स्यमानः, 'अणाइय वा सपज्जवसियं बंधइ' त्ति आदित क्षपकापेक्षमिदम्, 'अणाइयं वा अपज्जवसियं बंधइ' त्ति-एतच्चाभव्यापेक्षं, 'नो चेव णं साइयं अपज्जवसियं बंधइ' त्ति सादिसाम्परायिकबन्धो हि मोहोपशमाच्च्युतस्यैव भवति, तस्य चावश्यं मोक्षयायित्वासाम्परायिकबन्धस्य व्यवच्छेदसम्भवः। ततश्च न सादिरपर्यवसानः साम्परायिकबन्धोऽस्तीति। भ० ८ श० ८ उ०।

संपराइया—साम्परायिका—स्त्री०। सम्परायाः—कषायास्तेषु भवा साम्परायिकी। पुद्गलराशेः कर्मतापरिणतिरूपाया जीवव्यापारस्याविवक्षणादजीवक्रियायाम्, सा च सूक्ष्मसंपरायान्ताना गुणस्थानकवता भवति। स्था० २ ठा० १ उ०।

संपराय—सम्पराय—पुं०। सम्परायन्ति भृशं पर्यटन्त्यस्मिन् जन्तव इति सम्परायः। संसारे, उत्त० २० अ०। सूत्र०। कषायोदये, आ० म० १ अ०। स्था०। दर्श०। उत्त०। संग्रामे,ज्ञा० १ श्रु० ६ अ०। दश०। बादरकषाये, सूत्र० १ श्रु० ८ अ०। विशे०। अनु०।

संपरिखित्त—सम्परिक्षिप्त—त्रि०। वेष्टिते, स्था० ३ ठा० ४ उ०।

संपरिखित्तु—सम्परिक्षिप्य—अव्य०। परिवार्येत्यर्थे, स्था० ५ ठा० २ उ०।

संपरिवुड—संपरिवृत—त्रि०। सम्यक् नायकैकचित्ताराधनपरतया परिवृते, रा०। सम्यक् आराधकभावं बिभ्राणैः परिवृते, रा०। सम्यक् परिवारणीत्या परिवृते, रा०। औ०। भ०। सेवागतनानाविधपरिवारोपेते, आ० म० १ अ०। भ०। सम्यक् परिवारिते, परिकरभावेन परिकरिते, भ० २ श० ५ उ०। ज्ञा०। वेष्टिते, सूत्र० १ श्रु० ७ अ०।

संपलग्ग—संप्रलग्न—त्रि०। योद्धुं समारब्धे, विपा० १ श्रु० ३ अ०। रा०।

संपलिथालग—सम्पलिस्थालक—न०। वल्लादिफलीनां पाके, आचा० २ श्रु० १ चू० १ अ०।

संपलिय—सम्पलित—पुं०। आर्यकालकशिष्ये,कल्प० २ अधि० ८ क्षण। 'गोयमगुत्तकुमारं, सम्पलियं तह य भद्दयं वंदे' कल्प० २ अधि० ८ क्षण। नपुं०। मुद्गादीनां विध्वस्तफले, आचा० २ श्रु० १ चू० १ अ० १० उ०।

संपलियंक—सम्पर्यङ्क—पुं०। पद्मासने, औ०।

संपलियंकणिसएण—समपर्यङ्कनिषण्ण—त्रि०। पद्मासनसन्निविष्टे, रा०। भ०।

संपवत्तमाण—संप्रवर्त्तमान—त्रि०। व्याप्रियमाणे, पञ्चा० ८ विव०।

संपवयमाण—सम्प्रव्रजत्—त्रि०। सम्यक्-प्रव्रज्यामभ्युपगच्छति, आचा० १ श्रु० ५ अ०। सम्यक् प्रव्रजने, नि० चू० २ उ०। सम्—एकीभावेन प्रव्रजति, नि० चू० २ उ०।

संपवेयण—सम्प्रवेतन—न०। कम्पने, आचा० २ श्रु० ४ चू०।

संपसार—सम्प्रसार—पुं०। सम्—एकीभावेन किमप्युद्दिश्य एकत्र मीलनं, समवाये, आ० म० १ अ०।

संपसारण—सम्प्रसारण—न०। पर्यालोचने, आचा० १ श्रु० ५ अ० ४ उ०। सूत्र०।

संपसारय—सम्प्रसारक—पुं०। देववृत्त्यर्थकाण्डादिसूचककथाविस्तारके, सूत्र० १ श्रु० २ अ० २ उ०। कुशीलभेदे, नि०चू०।

जे भिक्खू वा भिक्खुणी वा संपसारयं वंदइ वंदंतं वा साइज्जइ ॥ ५७ ॥ जे भिक्खू वा भिक्खुणी वा संपसारयं पसंसइ पसंसंतं वा साइज्जइ ॥ ५८ ॥

जो संपसारयं इत्यादि द्वे सूत्रे गिहीण कज्जाणं गुरुलाघवेण संपसारेंतो संपसारातो।

गाहा।

अस्संजयाण भिक्खू, कज्जे अस्संजमप्पवत्तेसु।
जो देती सामत्थं, संपसारतो उ नायव्वो ॥ १०१ ॥

जो भिक्खू असंजमकज्जपवत्ताणं पुच्छंताणं अपुच्छंताणं वा समत्थयं वंदति सो एवं इमं वा करेहि एत्थ बहू दोसा जहाहं भणामि, भद्दा करेहि त्ति। एव करेंतो स परतो भवति। ते य इमे असजमकज्जा गिहीण,

गाहा।

गिहिणिग्गमणपवेसे, आवाहविवाहविक्कयकए वा।
गुरुलाघवं कहेंत, गिहिणो खलु संपसारीओ ॥१०२॥

गिहिणं असंजयाणं गिहओ दिसि जत्ताए वा णिग्गमणं देति, गिहिजत्ताओ वा आगयस्स वा पवेसं देति, आवाहो

विद्दियालंभणयं सुह दिवसं कहेति, मा वा पयस्स देहि इमस्स वा देहि, विवाहपडलमादिएहिं जोतिसगंथेहिं विवाहवेलं देति, अग्घकंडमादिएहिं गथेहिं इमं दव्वं विकिणाहि इमं वा किणाहि एवमादिएसु कज्जेसु गिहीणं गुरुलाघवं कहेंतो संपसारत्तणं पावति। नि० चू० १३ उ०।

संपहारित्थ–सम्प्रहारितवत्–त्रि०। विकल्पितवति, 'संपहारित्थ गमणाए' ज्ञा० १ श्रु० १ अ०।

संपहारिय—संप्रधार्य—अव्य०। ज्ञात्वेत्यर्थे, आचा० २ श्रु० १ चू० २ अ० १ उ०। समालोचितवति, सूत्र० २ श्रु० १ अ०।

संपहावण—सम्प्रधावन–न०। सम्यगौत्सुक्येन धावने, आचा०२ श्रु० १ चू० १ अ० ३ उ०।

संपहिट्ठ—सम्प्रहृष्ट–त्रि०। हर्षिते, उत्त० १५ अ०।

संपहित्ता—सम्पिधाय—अव्य०। स्थगयित्वेत्यर्थे, स० ३० समः।

संपा—देशी-काञ्च्याम् ' दे० ना० ८ वर्ग २ गाथा।

संपाइन्—सम्पातिन्–पुं०। सम्पतितुमुत्प्लुत्योत्प्लुत्य गन्तुमागन्तु वा शीलं येषा ते सम्पातिन जीवा.। मक्षिकाभ्रमरपतङ्गमशकपक्षिवातादिकेषु प्राणिषु, आचा० १ श्रु० १ अ० ४ उ०।

संपाइअवं–सम्पादितवत्–त्रि०। "भवद्भगवतोः" ।८।४।२६५। अस्य क्वाचित्कत्वात् नकारस्य मकारादेशः। संपातं कृतवति, सपाइअवं सीसो। प्रा० ४ पाद।

संपाइम–सम्पातिम–पुं०। सम्पातनशीलेषु शलभादिषु प्राणिषु, सूत्र० १ श्रु० ७ अ०।

संपाउप्पायक–सम्पातोत्पादक–पुं०। सम्पातानामनर्थमीलकानामुत्पादक. सम्पातोत्पादक.। अष्टादशे गौणपरिग्रहे, प्रश्न० ५ आश्र० द्वार।

संपागड–सम्प्रकट–त्रि०। गीतार्थसमक्षे, स्था० ४ ठा० १ उ०। आव०।

संपागडअकिच–सम्प्रकटाकृत्य–पुं०। सम्प्रकटानि प्रवचनोपघातनिरपेक्षतया समस्तजनप्रत्यक्षाण्यकृत्यानि मूलोत्तरगुणप्रतिसेवनारूपाणि यस्य स तथा। सम्प्रकटप्रतिसेविनि, बृ० ३ उ०।

संपागडपडिसेविन्–सम्प्रकटप्रतिसेविन्–पुं०। सम्प्रकटमेव गीतार्थप्रत्यक्षमेव प्रतिसेवते मूलगुणान् उत्तरगुणान् वा दर्पत. कल्पेन वेति सम्प्रकटप्रतिसेवी। स्था० ४ ठा० २ उ०। सम्प्रकटमगीतार्थसमक्षमकल्प्यभक्तादिप्रतिसेवितु शीलं यस्य स.। स्था० ४ ठा० २ उ०। प्रवचनोपघातनिरपेक्षतयैव मूलोत्तरगुणप्रतिसेवके, आव० ३ अ०। नि० चू०।

संपाडणहेतु–सम्पादनहेतु–पुं०। सपादनार्थे, पञ्चा० ६ विव०।

संपाय–सम्पात–पु०। आगमने, पञ्चा० ६ विव०। चलने, उत्त० २ अ०।

सम्प्रातर्–अव्य०। प्रात.-प्रभातं तेन समं प्रात. सम्प्रातः। प्रभातसमकाले, स्था० ३ ठा० १ उ०।

संपायणा–सम्पादना–स्त्री०। निर्वर्त्तनायाम्, पञ्चा० १३ विव०।

संपाविउकाम–सम्प्राप्तुकाम–त्रि०। प्राप्तुमनसि,"सिद्धिगइनामधिज्ज ठाणं संपाविउकामेणं" स० १४ समः। प्राप्तुमना न तु तत्प्राप्तस्याकारणत्वेन विवक्षितार्थानां प्ररूपणासंभवात्। प्राप्तुकाम इति च यदुच्यते तदुपचारादन्यथा हि निरभिलाषा एव भगवन्त केवलिनो भवन्ति ' मोक्षे भवे च सर्वत्र निस्पृहो मुनिसत्तम ' इति वचनात्। भ० १ श० १ उ०।

संपाविय–सम्प्रापित–त्रि०। नीते, प्रश्न० १ आश्र० द्वार।

संपासंग–देशी–दीर्घे, दे० ना० ८ वर्ग ११ गाथा।

संपिंडण–सम्पिण्डन–न०।समूहे,औ०।मोदकादिवन्धने,पिं०।

संपिंडिय–सम्पिण्डित–त्रि०। अविच्छिन्ने, प्रव० २ द्वार। एकत. पिण्डीभूते, जी० २ प्रति० ४ अधि०। औ०। रा०। जं०। मिलिते, ज्ञा० १ श्रु० १ अ०। सम्यक् पुञ्जीकृते, उत्त० १४ अ०।

संपिंडियकरण–सम्पिण्डितकरण–न०। अव्यवच्छिन्ने, प्रव० २ द्वार।

संपिणद्ध–सम्पिनद्ध–त्रि०। बद्धे, जं० २ वक्ष०।

संपील–सम्पीड–पु०। संघाते, उत्त० ३२ अ०।

संपुच्छण–सम्प्रश्न–पुं०। सम्प्रश्नः सावद्यो गृहस्थविषय'। रागाद्यर्थं कीदृशो वाऽहमित्यादिरूपे साधुना(दश०३अ०।) गृहस्थगृहे कुशलादिप्रच्छने, आत्मीयशरीरावयवप्रच्छने च। सूत्र० १ श्रु० ६ अ०। नरैरुदन्तवहने, व्य० २ उ०।

संपुच्छिया–सम्प्रोञ्छिका–स्त्री०। पादादिलूषिकाया सम्मार्जिकायाम्, ज्ञा० १ श्रु० ७ अ०।

संपुंजिऊण–सम्पूज्य–अव्य०। सन्मानयित्वेत्यर्थे, पञ्चा० ८ विव०।

संपुडग–सम्पुटक–पुं०। द्वयोर्वस्तुनोरेकत्र समावेशे, व्य० ७ उ०।

संपुडफलय–सम्पुटफलक–पुं०। पुस्तकपञ्चकान्तर्गतेऽन्यतमपुस्तके," संपुडगो दुगमाई फलगा पोत्थं " सपुटफलको यत्र द्व्यादीनि फलकानि भवन्ति। वणिग्जनस्योद्धारनिक्षेपादिरूपे संपुटकाख्ये करणविशेषे, स्था० ४ ठा० २ उ०। वृ०। आव०। नि० चू०।

संपुडिय–सम्पुटित–त्रि०। सम्पुटं सञातमस्येति सम्पुटिता, तारकादिदर्शनादित प्रत्यय। आद्यन्तरुद्धसम्पुटे, व्य० २ उ०।

संपुण्ण–सम्पूर्ण–त्रि०। समग्र, प्रनि०। आचा०। उत्त०। विशे०। ज्ञा०।

संपुण्णकिच्छ–सम्पूर्णकृच्छ्र- न०। चतुर्गुणिते पादकृच्छ्रव्रते, पादकृच्छ्रत्वे तत.—' एकभक्तो न नक्तेन, तथैवायाचि-

तेन च । उपवासेन चैकेन, पादकृच्छ्रं विधीयते ॥ १ ॥ " इति सम्पूर्णकृच्छ्रं पुनरेतदेव चतुर्गुणितमिति । द्वा० १२ द्वा० ।

संपुरणगुण–सम्पूर्णगुण–त्रि० । सुविशुद्धज्ञानादिगुणे, जी० १ प्रति० ।

संपुराणघोस–सम्पूर्णघोष–त्रि० । सम्पूर्णो घोषः शब्दो यत्र तत्तथा । पूर्णशब्दसहिते, कल्प० १ अधि० ३ क्षण ।

संपुराणदोहला–सम्पूर्णदोहदा–स्त्री० । अभिलषितार्थपूरणे,भ० १ श० ३ उ० । कल्प० । समस्तवाञ्छितार्थपूरणे, परिपूर्णमनोरथायामन्तर्वत्न्याम् , विपा० १ श्रु० २ अ० ।

संपुराणनाणकरण–संपूर्णज्ञानकरण–न०। सर्वविरतिप्रतिपत्तितोऽखरडे, आप्तवचनानुपालने च । पञ्चा० ६ विव० ।

संपुल–सम्पुल–पुं० । स्वनामख्याते दधिवाहननृपकञ्चुकिनि, आ० क० १ अ० । आ० म० ।

संपूयण–सम्पूजन–न० । वस्त्रपात्रादिना पूजने, सूत्र० १ श्रु० १० अ० ।

संपेहण–सम्प्रेक्षण–न० । पर्यालोचने, ज्ञा० १ श्रु० १ अ० । उत्त० । आचा० ।

संपेहा–सम्प्रेक्षा–स्त्री० । पर्यालोचनायाम् , आचा० १ श्रु० २ अ० २ उ० ।

संफाली–देशी–पङ्क्तौ, दे० ना० ८ वर्ग ५ गाथा ।

संफास–संस्पर्श–पुं० । " लुप्त य-र-व-श-ष-सां श-ष-सां दीर्घः " ॥८।१।४३॥ अनेनात्र लुप्तसकारस्यादेः स्वरस्य दीर्घ । संस्पर्श. । संफासो । प्रा० । सङ्गे, आचा० १ श्रु० ५ अ० ४ उ० । असकृदनीप्सया स्पर्शे, दश० ४ अ० ।

संब–साम्ब–पुं० । अम्बया पार्वत्या सहित इति । उमया सहिते शिवे, अन्त० ।

शाम्ब–पुं० । कृष्णवासुदेवस्य जाम्बवतीगर्भसम्भूते पुत्रे, अन्त० । आ० क० । आ० चू० । नि० चू० । "द्वारवत्यामभूत् पुर्य्यां, वासुदेवो महीपति. । तस्य पालकशाम्बाद्या, बभूवुर्बहवः सुताः ॥ १ ॥ " प्रव० २ द्वार । विशे० । आ० म० । शत्रुञ्जयस्तोत्रमध्ये शाम्बप्रद्युम्नाभ्यां सहाष्टौ कोटयः सिद्धाः कथितास्सन्ति, केचन सार्द्धकोटित्रयं कथयन्त्यत्र निर्णयः प्रसाद्य इति, प्रश्न । अत्रोत्तरम्–श्रीशत्रुञ्जयमहात्म्यानुसारेण श्रीशत्रुञ्जये शाम्बप्रद्युम्नाभ्यां सह सार्द्धकोटित्रयं सिद्धमिति ज्ञायते ॥ १६२ ॥ सेन०४ उल्ला०।कुन्थुनाम्न सप्तदशतीर्थकरस्य प्रथमशिष्ये, प्रव० ८ द्वार । स० ।

संबंध–सम्बन्ध–पुं० । सङ्गे, आचा०१श्रु०३अ०१ उ० । संयोगे, पं० व० ४ द्वार । द्वयो. संश्लेषे, स्था०१० ठा०३ उ० । 'द्विष्ठसम्बन्धसंवित्ति–नैकरूपप्रवेदनात् । द्वयोः स्वरूपग्रहणे, सति सम्बन्धवेदनम् ॥ १ ॥ " इति वचनात् । स्था० । अनन्तरसूत्रादिभि. सह योजने , व्य० ५ उ० । ( संबन्धस्य व्याख्या ' वक्खाण ' शब्दे षष्ठभागे गता ।

सम्बन्ध इति चिन्तया संबन्धविधिमेव तावदुपदर्शयति–

सुत्ते सुत्तं वज्झति, अंतिमपुप्फे व वज्झती तंसे ।
ता (इय) सुत्तातो सुत्तं, अत्थाओ वा भवे सुत्तं ॥ १ ॥

इह संबन्धोऽनेकधा भवति । यथा पुष्पेषु ग्रथ्यमानेषु यदा सूत्रं तन्तुनिष्ठितं भवति तदा तस्य यदार्द्य सूत्रम् तद्यदि सदृशाधिकारकं भवति तदा सूत्रात् सूत्रं ग्रथ्नातीत्युच्यते । क्वापि पुनरर्थादपरं सूत्रं संबध्यते । बादरशब्दोपादानात्काप्यर्थादर्थस्य संबन्धः क्रियते । बृ० ४ उ० । संबन्धस्तु द्विधा–उपायोपेयभावलक्षण', गुरुपर्वक्रमलक्षणश्च । तत्र प्रथमस्तर्कानुसारिणः प्रति । स चायम्–वचनरूपापन्नं शास्त्रमिदमुपायः, उपेयं–सम्यगेतच्छास्त्रार्थपरिज्ञानं मुक्तिपदं वा तस्याप्यतः पारंपर्येण प्राप्तेः । श्रद्धानुसारिणस्तु प्रति गुरुपर्वक्रमलक्षणसंबन्धः, तत्क्रमश्चायम्–प्रथमं हि घनाघनपटल इवातिप्रसारिणि पटुतरोज्जृम्भमाणखरकिरणनिकरप्रकाशसंकाशकमनीयकेवलालोकन्यक्कारिणि घनघातिकर्मनिचये प्रचरडप्रभञ्जनप्रसारिणेवाध्यामलशुभध्यानेन प्रलयमापादिते नि शेषयथावस्थितजीवाजीवादिपदार्थसार्थावभासिनि निःसपत्ने समुत्पन्ने केवलज्ञानालोके नाकिनगरगुरुतरविशुद्धसमृद्धिसंभारतिरस्कारकारिण्यामपापाया नगर्यां सकललोकलोचनामन्दानन्दोत्सवकारिनिरुपमप्राकारत्रयोद्भासितसमवसरणमध्यभागव्यवस्थापितविचित्ररत्नखराडखचितसिंहासनोपविष्टेन विशिष्टमहाप्रातिहार्यादिपरमार्हन्त्यसमृद्धिमहिम्ना भगवता श्रीमन्महावीरेण सुरासुरकिन्नरनरेश्वरनिकरपरिकरितायां परिषदि प्रवचनसारभूताः सर्वेऽपि पदार्था अर्थतो निवेदिता. , तदनु प्रवचनाधिपतिसुधर्मस्वामिना त एव सूत्रतो रचिताः , " अत्थं भासइ अरहा , सुत्तं गंथंति गणहरा निउणं " इत्यार्षवचनात् , तदनु जम्बूस्वामिप्रभवशय्यंभवयशोभद्रसंभूतविजयभद्रबाहुस्थूलभद्रमहागिरिसुहस्तिस्वातिश्यामार्यप्रभृतिभिः सूरिभिः स्वकीयस्वकीयसूत्रेषु, विस्तृततरविस्तृततमविस्तृतेषूपनिबध्यमाना भव्यजनेभ्यश्च प्रकाश्यमाना एतावतीं भूमिकां यावदानीता. ततस्तेभ्योऽपि सूत्रेभ्य ऐदंयुगीनमन्दमेधसामवबोधाय संक्षिप्यास्मिन् प्रकरणे अन्योपकारकरणं धर्माय महीयसे च भवतीत्यधिगतपरमार्थानामविवादो वादिनामत्रेति परोपकाररसिकान्त करणप्राक्कालिकश्रुतधराभिहितश्रुतमनुस्मरता मया समुद्ग्रथ्यन्ते , इत्येवं परंपरया सर्वविन्मूलमिदं प्रकरणमर्थमाश्रित्य न पुनर्मया नूतनं किंचिदत्र सूत्र्यते, इत्यवदातबुद्धीनामिदमुपादेयं भवतीति । प्रव० १ द्वार ।

संबंधण–सम्बन्धन–न० । सम्बन्धे, उत्त० १ अ० ।

संबंधणसंजोग–सम्बन्धनसंयोग–पुं० । संबध्यते प्रायो ममेदमित्यादिबुद्धितोऽनेनास्मिन् वात्माष्टविधेन कर्मणा सहेति संबन्ध. स चासौ संयोगश्च सम्बन्धनसंयोग. । संयोगभेदे, उत्त० ७ अ० । (स च 'संजोग' शब्देऽस्मिन्नेव भागे ११४ पृष्ठे दर्शित. । ) बद्धीकरणे, स्था० ४ ठा० १ उ० ।

संबंधसंबंधि–सम्बन्धसम्बन्धिन्–त्रि० । श्वशुरपाक्षिकादिसत्के, विपा० १ श्रु० २ अ० ।

संबंधसमकप्प-सम्बन्धसमकल्प-पुं० । सम्-एकीभावेन परस्परोपकार्योपकारितया च बद्धा -पुत्रकलत्रादिस्नेहपाशैः स-म्बद्धा गृहस्थास्तैः समस्तुल्यः कल्पो व्यवहारोऽनुष्ठानं येषा ते । सम्बद्धसमकल्पगृहस्थानुष्ठानतुल्यानुष्ठानेषु साधुषु, सूत्र० १ श्रु० ३ अ० ३ उ० ।

संबंधि-सम्बन्धिन्-त्रि० । पुत्रपौत्राणां श्वशुरादिषु, कल्प० १ अधि० ५ क्षण । विपा० । औ० । सम्बन्धिनो मातृपक्षीयाः । भ० ३ श० १ उ० । संबन्धी स्वजन । वृ० १ उ० २ प्रक० । सम्बन्धिनस्तासामेव संयतीनां नालबद्धा वा भ्रातृ-सम्बन्धयुक्ता इत्यर्थः, श्वशुरकुलानां वा । वृ० १ उ० ३ प्रक० । श्वशुरपुत्रश्वश्रुरादयः । व्य० ५ उ० । ज्ञा० । देवरादिषु, औ० ।

संबद्ध-सम्बद्ध-त्रि० । सम्-एकीभावेन परस्परोपकारितया च बद्धाः सम्बद्धाः । पुत्रकलत्रादिस्नेहपाशैः सम्बद्धेषु गृहस्थादिषु, सूत्र० १ श्रु० १ अ० ४ उ० । लग्ने, विशे० । नं० ।

संबद्धसम-सम्बद्धसम-पुं० । सम्बद्धा गृहस्थास्तैस्समस्तुल्यः । गृहस्थतुल्ये, सूत्र० १ श्रु० ३ अ० ३ उ० ।

संबमुणि-साम्बमुनि-पुं०।नागेन्द्रकुलीये जम्बूगुरुकृतजिनशतकटीकावृत्तिकारके,वैक्रमीयसंवत्सरे १०२५ दुर्गकश्रावकप्रेरणयाऽनेन टीका कृता । जै० इ० ।

संबल-शम्बल-न० । पथ्यदने, संथा० । आ० चू० । ज्ञा० । स्वनामख्याते नागकुमारे, आ० म० १ अ० (तत्कथा 'कवल' शब्दे तृतीयभागे १७६ पृष्ठे दर्शिता । )

संबलिफालि-शाल्मलीफालि-स्त्री० । शाल्मलीशाखायाम्, संथा० ।

संबसाहस-शाम्बसाहस-न० । शाम्बनाम्नः कृष्णवासुदेवपुत्रस्य साहसे, आ० क० १ अ० । ('अणुओग' शब्दे प्रथमभागे कथा गता ।)

संबाह-सम्बाध-पुं० । यात्रासमागतप्रभूतजनविशेषे, व्य० १ उ० । जी० । प्रश्न० । नि० चू० । संबाधो नाम यत्र कृषीवललोकोऽन्यत्र कर्षणं कृत्वा वणिग्वर्गो वा वाणिज्यं कृत्वाऽन्यत्र पर्वतादिषु विषमेषु स्थानेषु संबोढुमिति कणादिकं समुह्य कोष्ठागारादौ च प्रक्षिप्य वसति । वृ० १ उ० २ प्रक० । प्रभूतचातुर्वर्ण्यनिवासे, उत्त० ३४ अ० । पर्वतनितम्बादिदुर्गे, औ० । बहुप्रकारलोकसङ्कीर्णस्थानविशेषे, अनु० । सोभणग्गाहा संबाहा सा चउव्विहा । नि० चू० ३ उ० । ज्ञा० । समभूमौ कृषिं कृत्वा येषु दुर्गभूमिभूतेषु धान्यादिकृषीवलाः संवहन्ति रक्षार्थमिति स सबाधः । स्था० १ ठा० । नि० चू० । कल्प० । सवाहो सवोढुं, वसति जहिं पव्वयाइविसमेसु । वृ० १ उ० २ प्रक० । यात्रासमागतप्रभूतजननिवेशे, जी० ३ प्रति० ४ अधि० ।

संबाहण-सम्बाधन-न० । अङ्गपरिकर्मणि, प्रश्न० ५ आश्र० द्वार । शरीरस्याऽस्थिसुखत्वादिना नैपुण्येन मर्दनविशेषे, स्था० ४ ठा० ४ उ० । वि-श्रामणायाम्, औ० । आत्मनः पादौ संबाधयति, नि० चू० ४ उ० ।

जे भिक्खू वा भिक्खुणी वा अप्पणो पाए संबाहिज्ज वा पलिमद्देज्ज वा संबाहंतं वा पलिमद्दंतं वा साइज्जइ ॥१६॥

सति प्रशंसा सोभणा वाहा संवाहा—सा चउव्विहा अट्ठिसुहा मंससुहा मज्जासुहा तयासुहा सा गुरुमाइयाण विसाले संबाधा भवति । जो पुण अड्ढरत्ते पच्छिमरत्ते दिवसतो वा अणगसो संबाधेति सा परिमद्दा भण्णति । नि० चू० ३ उ० । आचा० । ज्ञा० । विश्रामणे सङ्कल्पमर्दने, नि० चू० १ उ० । पर्वतदुर्गे, संबाधशब्दार्थे, संबाधनं चाद्रिश्टङ्गे, सूत्र० २ श्रु० २ अ० ।

संबाहिज्जावंत-सम्बाधयत्-त्रि० । विश्रामणां कारयति, नि० चू० १८ उ० ।

संबाहित-सम्बाधित-त्रि० । सम्-एकीभावेन बाधिता -पीडिता । सपीडितेषु, सूत्र० १ श्रु० ५ अ० २ उ० ।

संबाहिय-सम्बाधित-त्रि० । हस्ताभ्यां कृतापपीडनसेवे,पिं० ।

संबिद्ध-सम्विद्ध-त्रि० । सम्यग् ताडिते, आचा० १ श्रु० ५ अ० ३ उ० ।

संबिद्धपह-सम्विद्धपथ-पुं० । सम्यक् विद्धस्ताडित क्षुण्णः पन्था मोक्षमार्गो ज्ञानदर्शनचारित्राख्यो-येन स तथा । दृष्टप्रयातपथे, आचा० १ श्रु० ५ अ०३ उ० ।

संबिल्लिय-सम्वेल्लित-त्रि० । संवृते, ज० १ वक्ष० । "सवेल्लियग्गसिरया" संवेल्लिताग्रशिरोजा संवेल्लित संवृतमग्रं येषां गर-रकर्मकरणात्ते सम्वेल्लिताग्राः, शिरोजा केशा यासां तास्तथा । जी० ३ प्रति० ४ अधि० ।

संबुक्क-सम्बूक-पुं० । शङ्खे, स्था० ४ ठा० २ उ० । प्रश्न० । उत्त० । स्वनामख्याते अवन्तिसविधे खेटे, 'अवन्तीनामजणवए तत्थ य सम्बुक्के नाम खेडे ' महा० २ चू० ।

संबुक्कवट्टा-शम्बूकवृत्ता-स्त्री० । शम्बूकः शङ्खस्तद्वच्छङ्गरभ्रमिवदित्यर्थः, या वृत्ता सा शम्बूकवृत्ता । गोचरचर्याभेदे, स्था० ६ ठा० ३ उ० । इयं च द्वेधा तत्र यस्यां क्षेत्रबहिर्भागाच्छङ्खवृत्तत्वगत्या अटन् क्षेत्रमध्यभागमायाति साऽभ्यन्तरशम्बूका, यस्यां तु मध्यभागाद्बहिर्याति सा बहि शम्बूकेति । स्था० ६ ठा० ३ उ० । ध० । ग० । दशा० । उत्त० । दशा० । कल्प० ।

संबुज्झमाण-संबुद्ध्यमान-पुं० । संसारपातनाय प्रमाद इत्येवमवगच्छति, आचा० । सम्यक् श्रुतचारित्राख्यं धर्मं वा भावसन्धिं वा बुद्ध्यमाने, । विदितानुष्ठाने,सूत्र० १ श्रु० १० अ० । सम्बुद्ध्यमानका भवन्ति, तद्यथा—स्वयम्बुद्धा प्रत्येकबुद्धा बुद्धबोधिताश्च । आचा० १ श्रु० ८ अ० ३ उ० । यथोपदिष्टधर्मं सम्यगवबुध्यमाने, आचा० १ श्रु० ४ अ० २ उ० ।

संबुद्ध-सम्बुद्ध-त्रि० । विदितविषयसुखस्वभावे सम्यग्दर्शी, दश० २ अ० । हेयोपादेयवस्तुतत्त्वं विदितवति, नं० । सम० । उत्त० । सम्यग्ज्ञाततत्त्वे, उत्त० १० अ० । मिथ्यात्वापगमेनोपगतजीवाजीवादितत्त्वे, उत्त० २ अ० । हेयोपादेयोपलक्षणवस्तु तत्त्वं विदितवति, भ० १ श० १ उ० ।

संबुद्धा-सम्बुद्धा-स्त्री० । अपरोपदेशमन्तरेण जायमाने प्रव्रज्याभेदे, "संबुद्धा तित्थकरा" पं० भा० १ कल्प । "सम्बुद्धो भरहो राया" पं० चू० १ कल्प ।

संवेल्लि-सम्वेल्लि-स्त्री० । मालायाम्, ज्ञा० १ श्रु० १ अ० ।

सम्वेल्लिय-सम्वेल्लित-त्रि० । संवृत्ते किञ्चिदाकुञ्चिते, जं० १ वक्ष० । संकोचिते, ज्ञा० १ श्रु० १ अ० ।

संवोह-संवोध-पुं० । सुप्तस्य प्रबोधे,स च नामस्थापनाद्रव्यभावभेदात् चतुर्द्धा । तत्र नामस्थापने सुगमे। द्रव्ये-द्रव्यविषये सुप्तस्य बोधनम्, भावे-भावविषये पुनर्बोधो दर्शनज्ञानचारित्रतपःसंयमा द्रष्टव्याः । सूत्र० १ श्रु० २ अ० १ उ०। ( 'वेयालिया' शब्दे षष्ठभागे तदध्ययनोक्तः सम्बोध उक्तः । )

संवोहण-सम्बोधन-न०। आमन्त्रणे, आह्वाने,आ० म०१ अ०। ( तीर्थकृतो लोकान्तिकदेवैः संबोधनं 'तित्थयर' शब्दे च तुर्थभागे २२०१ पृष्ठे उक्तम् । )

संवोहि-संबोधि-स्त्री० । सम्यग्ज्ञानदर्शनचारित्रावाप्तौ, सूत्र०।

अंतं करंति दुक्खाणं, इहमेगेसि आहियं ।
आघायं पुण एगेसिं, दुल्लभेयं समुस्सये ॥ १७ ॥
इओ विद्धंसमाणस्स, पुणो संबोहि दुल्लभा ।
दुल्लहाओ तहच्चाओ, जे धम्मट्ठं वियागरे ॥ १८ ॥

नह्यमनुष्या अशेषदुःखानामन्तं कुर्वन्ति; तथाविधसामग्र्यभावादित्यर्थैकेषा वादिनामास्यातम् । तद्यथा-देवा एवोत्तरोत्तरं स्थानमास्कन्दन्तोऽशेषक्लेशप्रहाणं कुर्वन्ति तथेहार्हते प्रवचने इति । इदमन्यत् पुनरेकेषां गणधरादीनां स्वशिष्याणां वा गणधरादिभिराख्यातम् । तद्यथा-युगसमिलादिन्यायावाप्त कथंचित्कर्मविवरात् योऽयं शरीरमुच्छ्रय सोऽकृतधर्मोपायैरसुमद्भिर्महासमुद्रप्रभ्रष्टरत्नवत्पुनर्दुर्लभो भवति, तथा चोक्तम्-" ननु पुनरिदमतिदुर्लभ-मगाधसंसारजलधिविभ्रष्टम् । मानुष्यं खद्योतक-तडिल्लताविलासितप्रतिमम् ॥ १ ॥" इत्यादि ॥ १७ ॥

अपि च-' इओ विद्धंसे' इत्यादि । इत-अमुष्मात् मानुष्यभवात्सद्धर्मतो वा विध्वंसमानस्याकृतपुण्यस्य पुनरस्मिन् संसारे पर्यटतो बोधिः-सम्यग्दर्शनावाप्तिः सुदुर्लभोत्कृष्टत अपार्धपुद्गलपरावर्तकालेन यतो भवति, तथा दुर्लभा दुरापा तथाभूता सम्यग्दर्शनप्राप्तियोग्या अर्चा लेश्या-अन्तःकरणपरिणतिरकृतधर्माणामिति । यदिवा-अर्चा-मनुष्यशरीरं तदप्यकृतधर्मबीजानामार्यक्षेत्रसुकुलोत्पत्तिसकलेन्द्रियसामग्र्यादिरूपं दुर्लभं भवति, जन्तूनां ये धर्मरूपमर्थं व्याकुर्वन्ति, ये धर्मप्रतिपत्तियोग्या इत्यर्थः । तेषां तथाभूतार्चा सुदुर्लभा भवतीति ॥ १८॥ सूत्र० १ श्रु० १५ अ०।

संवोहियव्व-संबोधयितव्य-त्रि० । आमन्त्रयितव्ये, स्था० ४ ठा० ३ उ० ।

संभंत-संभ्रान्त-त्रि० । व्याकुलीभूते, ज्ञा० १ श्रु० १ अ० । आ० म० ।

संभंति-संभ्रान्ति-स्त्री० । सम्भ्रमे, भ० १६ श० ५ उ० ।

संभंतियवंदणय-सम्भ्रान्तिकवन्दनक-न० । सम्भ्रान्तिः सम्भ्रम औत्सुक्यं; तया निर्वृत्तं सम्भ्रान्तिकं यद् वन्दनं तत्तथा । औत्सुक्यजवन्दनक्रियायाम्, भ० १६ श० ५ उ० ।

संभग्ग-सम्भग्न-त्रि० । चूर्णिते, उत्त० १६ अ० । ज्ञा० । प्रश्न० । 'सम्भग्गमउडविडओ'-संभग्नो मुकुटविटपः शेखरकविस्तारो यस्य स तथा । भ० ३ श० ३ उ० ।

संभम-सम्भ्रम-पुं० । व्याकुलत्वे, अनु० । सूत्र० । प्रमोदकृतौत्सुक्ये, ज्ञा० १ श्रु० १ अ० । संक्षोभे, जीत० । प्रश्न० । भक्तिकृतौत्सुक्ये, औ० । भगवत्समीपगमने, वनदवाग्निसम्भ्रमादिके, व्य० ४ उ० । सर्वोत्कृष्टसम्भ्रमतो नामेह स्वनायकविषयबहुमानख्यापनपरा स्वनायकोपदिष्टकार्यसम्पादनाय यावच्छक्तित्वरिता प्रवृत्तिः । रा० । आ० म० । प्रश्न० । परचक्रादिभये, अनु० । सत्कारे, आ० म० १ अ० । उदकाग्निहस्त्याद्यागमसमुत्थे आकस्मिके संत्रासे, बृ० १ उ० २ प्रक० ।

संभयणा-सम्भजना-स्त्री० । संवासे, आ० चू० ४ अ० ।

संभरिय-संस्मृत-त्रि० । चिन्तिते, द्वा० २७ अष्ट० ।

संभरित्ता-स्मृत्वा-अव्य० । अनुचिन्त्येत्यर्थे, स्था० ४ठा०१उ०।

संभली-सम्भली-स्त्री० । दूतिकायाम्, व्य० ५ उ० । दे० ना०।

संभव-सम्भव-पुं० । उत्पादे,विशे०।सदा भवने, सूत्र०२ श्रु० ६ अ०।अनु०। समुत्पत्तौ,सूत्र०२श्रु०१अ०। ज्ञा० । संभवो त्ति वा, उववत्ति त्ति वा एगट्ठा । आ०चू०२अ०। सम्भवति प्रकर्षेण भवन्ति चतुस्त्रिंशदतिशयगुणा यस्मिन् स सम्भवः । आ० म० १ अ० । ध० । आ० चू० । भारते वर्षेऽस्यामवसर्पिण्यां जाते तृतीये तीर्थकरे, प्रव० ८ द्वार । ति० ।

संभवेणं अरहा एगूणसट्ठिं पुव्वसयसहस्साइं आगारमज्झे वसित्ता मुंडे ०जाव पव्वइए ॥ ( सू० ५६ + )

सम्भवस्यैकोनषष्टिः पूर्वलक्षाणि गृहस्थपर्याय इहोक्तः । आवश्यके तु चतुःपूर्वाङ्गाधिका सोक्तेति । स० ५६ सम० । ( अस्य सर्वोऽप्यधिकारः 'तित्थयर' शब्दे, चतुर्थभागे २२४७ पृष्ठे उक्तः )समुदायेन समुदायिनोऽवगम इत्येवं लक्षणे प्रमाणभेदे, खारी द्रोण इत्यादिर्नानुमानात्पृथक् तथा हि खारी द्रोणवती खारीत्वात्पूर्वोपलब्धखारीवत् । समुदायेन समुदायिनोऽवगम इत्येवंलक्षणः संभवः, स च न प्रमाणान्तरम् । रत्ना० २ परि० । प्रव० । प्रसवचरायाम्, दे० ना० ८ वर्ग ४ गाथा ।

संभवंत-संभवत्-त्रि० । वर्त्तमाने,आचा० १ श्रु० ६ अ० ४ उ०। संभवमाश्रित्येत्यर्थे, क० प्र० १ प्रक० ।

संभवदेव-सम्भवदेव-पुं० । श्रावस्त्यां सम्भवतीर्थकृत्प्रतिमायाम्, श्रावस्त्यां श्रीसम्भवदेवो जाङ्गुलीविद्याधिपतिः । ती० ४३ कल्प ।

संभवसमणंतर-सम्भवसमनन्तर-न० । उत्पत्त्यनन्तरे, पं० व० ४ द्वार ।

संभाणय-संभाणक-न० । गुर्जरधरित्रीसत्कनगरभेदे, "इओ

य चंदकुले सिरिवद्धमाणसूरिसीसजिणेसरसूरीण सीसो सिरिअभयदेवसूरी गुज्जरत्ताए संभाणयट्ठाणे विहरिओ।" ती० ५२ कल्प ।

संभार–सम्भार–पुं० । बहुद्रव्यसंयोगे , बृ० २ उ० । उपरिप्रक्षेपद्रव्यैस्त्वगेलाप्रभृतौ , आ० १ श्रु० १६ अ० । आवश्यकतया कर्मणो विपाकानुभवने, वेदने, सूत्र० २ श्रु०७ अ० । आ० । सम्भ्रियते धार्यते सम्भरणं वा धारणं संभारः । षष्ठे गौणपरिग्रहे, प्रश्न० ५ आश्र० द्वार ।

संभारघय–संभारघृत–न० । संभारो बहुद्रव्यसंयोगस्तत्प्रधानं घृतं सम्भारघृतम् । बहुद्रव्यमिश्रिते घृते , बृ० २ उ० ।

संभालणा–सम्भालना–स्त्री० । अन्यत्रान्यापारणे , विशे० ।

संभाव–लुभ–धा०।विमोहने,"लुभेः संभावः"॥८।४।१५३॥अनेन लुभ्यते. पाक्षिक. संभाव इत्यादेशः।संभावइ। लुभ्यते। प्रा०।

संभावि–धा०। "सम्भावेरासङ्घः" ॥८।४।३५॥ अनेन संभावयतः पाक्षिक आसङ्घादेशाभावे-सम्भावइ। सम्भावयति। प्रा०।

संभावणत्थतक्क–संभावनार्थतर्क–पुं० । प्राकृतशैल्या अर्थसंभावनातर्कः । एवमेव चायमर्थ उपपद्यत इत्यादिरूपे तर्के, दश० ४ अ० ।

संभावणा–सम्भावना–स्त्री० । अर्थालङ्कारभेदे, व्याकरणोक्ते क्रियासु योग्यताध्यवसाये लिङर्थभेदे, उत्कटकोटिकसंशयरूपे ज्ञानभेदे च । वाच० । आचा० ।

संभास–संभाष–पुं० । परस्परालापे, बृ० १ उ० ३ प्रक० ।

संभासण–संभाषण–न० । उचितकाले स्मरकथाभिर्जल्पे , प्रव० १६६ द्वार । दश० ।

संभासिय–संभाषिक–पुं० । समाप्तभाषाव्यवहारिणि , व्य० ४ उ० ।

संभिण्ण–संभिन्न–त्रि० । सम्-एकीभावेन भिन्ने, विशे०। अयहुभेदमापके, औ०। प्रव० । आ० चू० ।

संभिण्णवरणाणदंसणधर–संभिन्नवरज्ञानदर्शनधर–पुं० । संभिन्ने सम्पूर्णे वरे श्रेष्ठे ज्ञानदर्शने धरन्ति ये ते तथा । केवलिषु , कल्प० १ अधि० ६ क्षण ।

संभिण्णवित्त–संभिन्नवृत्त–पुं० । अखण्डनीयखण्डितचारित्रे , दश० १ चू० ।

संभिण्णसोय–सम्भिन्नश्रो(तृ)तस्–पुं० । सम्भिन्नान्-बहुभेदभिन्नान् पृथक् पृथक् शृण्वन्तीति सम्भिन्नश्रोतारः । संभिन्नानि-शब्देन व्याप्तानि शब्दग्राहीणि प्रत्येकं वा शब्दादिविषयैः श्रोतांसि सर्वेन्द्रियाणि येषां ते तथा । औ० । रा० । आ० म० । ग० । लब्धिविशेषशालिषु , पा० । 'जे संभिन्नसोय ' त्ति—य सर्वतः सर्वैरपि शरीरदेशैः शृणोति स सभिन्नश्रोता । अथवा—श्रोतांसीन्द्रियाणि संभिन्नान्येकैकशः सर्वविषयैर्यस्य स तथा । एकतरेणापीन्द्रियेण समस्तापरेन्द्रियगम्यान्विषयान्यो मुणत्यवगच्छति स सभिन्नश्रोता इत्यर्थः । अथवा-श्रोतांसीन्द्रियाणि संभिन्नानि परस्परत एकरूपतामापन्नानि यस्य स तथा । श्रोत्रं चक्षुः-कार्यकारित्वाच्चक्षूरूपतामापन्नं चक्षुरपि श्रोत्रकार्यकारित्वात्तद्रूपतामापन्नमित्येवं संभिन्नानि श्रोतांसि सर्वाण्यपि परस्परेन्द्रियाणि यस्याऽसौ संभिन्नश्रोता इति भावः । इत्यत्रापि स एवार्थः । अथवा-द्वादशयोजनस्य चक्रवर्त्तिकटकस्य युगपद् ब्रुवाणस्य तूर्यसंघातस्य वा युगपदास्फाल्यमानस्य संभिन्नान् लक्षणतोऽभिधानतश्च परस्परतो विभिन्नान् जननिवहसमुत्थान् शङ्खभेरीपणवढक्कादितूर्यसमुत्थान् वा युगपदेव शृण्वन् शब्दान्यः शृणोति स संभिन्नश्रोता । एवं च संभिन्नश्रोतृत्वलब्धिरपि ऋद्धिरेवेति । आ० चू० १ अ० ।

संभिण्णालाव–सम्भिन्नालाप–पुं०।सम्यग्भाषणे, ठा०८ ठा०।

संभिय–सभृत–त्रि० । संस्कृते, विशे० । सम्यग्भृते, सूत्र० १ श्रु० ६ अ० । आ० म० । स्था० ।

संभु–शम्भु–पुं० । शिवे, को० ।

संभुंजंत–सम्भुञ्जान–त्रि० । एकमण्डल्यां सम्भोगं कुर्वाणे, नि० चू० १० उ० ।

संभुंजण–सम्भोजन–न० । एकमण्डल्यां भोजनादिव्यवहारे, पं० भा० १ कल्प । एकमण्डल्यां सम्-एकीभूय भोजने, बृ० ४ उ० ।संभुंजणा तिविहा-लोइया,लोउत्तरिया,कुप्पावयणिया । पं० चू० १ कल्प । साम्भोगिकैः सह भोजने, व्य० ३ उ० ।

संभुंजित्तए–सम्भोक्तुम्–अव्य० । एकमण्डलीसमुद्देशादिना व्यवहारयितुमित्यर्थे, बृ० ४ उ० । स्था० ।

संभुंजिय–सम्भुज्य–अव्य० । एकमण्डल्यां समुद्देशनादिव्यवहारं कृत्वेत्यर्थे, प० व० २ द्वार ।

संभुल्ल—देशी—दुर्जने, दे० ना० ८ वर्ग ७ गाथा ।

संभूत (य)–सम्भूत–त्रि० । सञ्जाते, आचा० १ श्रु० ६ अ० १ उ० । आच० । प्रश्न० । समुत्पन्ने, सूत्र० १ श्रु० १ अ० ४ उ०। सम्यक् प्रतिपालनाय संछन्ने, आचा० १ श्रु० २ अ० ३ उ०। मिलित्वेत्यर्थे, अने० । बलदेववासुदेवयोः प्रथमे धर्माचार्ये, स० । ति० । ब्रह्मदत्तचक्रवर्त्तिजीवे , उत्त० १३ अ० । ( सम्भूतकथा ' बंभदत्त ' शब्दे पञ्चमभागे उक्ता । ) यशोभद्रशिष्ये , " जसभद्दसीसो संभूतो सभूयस्स थूलभद्द जाव सव्वेसिं " नि० चू० ५ उ० । वीरजिनजीवस्य पूर्वभवविश्वभूतेर्नामक्षत्रियस्य दीक्षाप्रदायके यतौ , आ० म० १ अ० ।

संभूत ( य ) विजय–सम्भूतविजय–पुं० । भद्रबाहुस्वामिनो गुरुभ्रातरि स्थूलभद्रस्य शकटालपुत्रस्य दीक्षादातरि, स्था० १० ठा० ३ उ० । आ० चू० । नं० । कल्प० । ( तदानीमध्ययना दीर्घदशानामध्येनऽध्ययनं प्रोक्ता तत एवावगन्तव्या, परन्त्विदानीं स ग्रन्थ एव व्युच्छिन्नः ।) "केवली, चरमो जम्बू-स्वामी ततः प्रभवप्रभुः । शय्यम्भवो यशोभद्रः , सम्भूतविजयस्तथा ॥ भद्रबाहुः स्थूलभद्रः , श्रुतकेवलिनो हि षट् ॥१॥" सञ्जमहागिरिरत्तिण " आर्यमहागिरिर्जिनकल्पविच्छेदेऽपि जिनकल्पतुलनामकार्षीत् । कल्प० २ अधि० ८ क्षण । ( तस्य

शिष्यादिकुलं 'थेरावली' शब्दे चतुर्थभागे २३१६ पृष्ठे दर्शितम्।) माढागोत्रेऽयं वीरस्य षट्षष्टिसंवत्सरे जातः स च द्वाचत्वारिंशद् वर्षाणि गृहिपर्यायं ततः श्रामण्यपर्यायं परिपाल्य युगप्रधानपदवीमुपगत्य नवतिवार्षिकः १५६ वीरसंवत्सरे स्वर्गतः। जै० इ०।

संभूतिविजय-संभूतिविजय-पुं०। स्वनामख्यातेऽनगारे अयं पूर्वभवे प्रतिलाभ्य राजपुत्रो धनपतिनामा सुखेन सिद्धः। विपा० २ श्रु० ७ अ०।

संभोइत्तए-संभोक्तुम्-अव्य०। एकमण्डलीसमुद्देशादिना व्यवहारयितुमित्यर्थे, वृ०४ उ०। भोजनमण्डल्यां निवेशयितुमित्यर्थे, स्था० २ ठा० १ उ०।

संभोइय-साम्भोगिक-पुं०। सम्-एकत्र भोगो-भोजनं सम्भोगः, साधूनां समानसमाचारितया परस्परमुपध्यादिदानग्रहणसंव्यवहारलक्षणं संविद्यते यस्य स साम्भोगिकः। स्था० ३ ठा० ३ उ०। एकसामाचारीप्रविष्टे, आचा० १ श्रु० १ चू० ७ अ० १ उ०। एकमण्डलिकादिके, स्था० ४ ठा० ४ उ०। प्रव०।

संभोएत्ता-सम्भोज्य-अव्य०। मिश्रयित्वेत्यर्थे, आचा०२ श्रु० १ चू० १ अ० ७ उ०।

संभोग-संभोग-पुं०। सम्-एकीभूय समानसमाचाराणां साधूना भोजनं संभोगः। स० ११ सम०। एकमण्डल्यां भोजने, उत्त० १६ अ०। ('विसंभोग' शब्दे षष्ठभागे पंर्द्विधः संभोग उपसंभोगश्चोक्तः।)

दुवालसविहे संभोगे पण्णत्ता, तं जहा-
"उवहिसु अभत्तपाणे, अंजलीपग्गहे त्ति य।
दायणे य निकाए य, अब्भुट्ठाणेति आवरे॥ १॥
किइकम्मस्स य करणे, वेआवच्चकरणे इ य।
समोसरणं संनिसिज्जा य, कहाए य पवन्धणे॥ २॥

सम्-एकीभूय समानसमाचाराणां साधूनां भोजनं सम्भोगः स चोपध्यादिलक्षणविषयभेदात् द्वादशधा। तत्र 'उवही' त्यादिरूपकद्वयम्। तत्रोपधिर्वस्त्रपात्रादिस्तं साम्भोगिकः साम्भोगिकेन सार्द्धमुद्गमोत्पादनैषणादोषैर्विशुद्धं गृह्णन् शुद्धः, अशुद्धं गृह्णन् प्रेरितः। प्रतिपन्नप्रायश्चित्तो वारत्रयं यावत्सम्भोगार्हश्चतुर्थवेलायां प्रायश्चित्तं प्रतिपद्यमानोऽपि, विसम्भोगार्ह इति, विसम्भोगिकेन-पार्श्वस्थादिना, वा संयत्या वा सार्द्धमुपधिं शुद्धमशुद्धं वा निष्कारणं गृह्णन् प्रेरितः, प्रतिपन्नप्रायश्चित्तोऽपि वेलात्रयस्योपरि न सम्भोग्यः। एवमुपधेः परिकर्म परिभोगं वा कुर्वन् सम्भोग्यो विसम्भोग्यश्चेति। उक्तं च-" एगं व दो व तिन्नि व, आउट्टंतस्स होइ पच्छित्तं [आलोचयत इत्यर्थः]। आउट्टते वि तओ, परेण तिण्हं विसंभोगो॥ १॥" त्ति, 'सुव' त्ति-साम्भोगिकस्यान्यसाभोगिकस्य वोपसम्पन्नस्य श्रुतस्य वाचनाप्रच्छनादिकं विधिना कुर्वन् तथा शुद्धः; तस्यैवाविधिनोपसम्पन्नस्यानुपसम्पन्नस्य वा पार्श्वस्थादेर्वा स्त्रिया वा वाचनादि कुर्वंस्तथैव वेलात्रयोपरि विसम्भोग्यः। तथा 'भत्तपाणे' त्ति-उपधिद्वारवदवसेयं, नवरमिह भोजनं दानं च परिकर्मपरिभोगयो स्थाने वाच्यमिति। तथा 'अंजलीपग्गहे त्ति य' इहेतिशब्दा उपदर्शनार्थौ, चकाराः समुच्चयार्थाः, तत्रोपलक्षणत्वादञ्जलिप्रग्रहस्य वन्दनादिकमपीह द्रष्टव्यं, तथाहि-साम्भोगिकानामन्यसाम्भोगिकानां वा संविग्नानां वन्दनकं-प्रणाममञ्जलिप्रग्रहं नमः क्षमाश्रमणेभ्य इति भणनम्, आलोचनासूत्रार्थनिमित्तनिषद्याकरणं च कुर्वन् शुद्धः। पार्श्वस्थादेरेतानि कुर्वंस्तथैव सम्भोग्यो विसम्भोग्यश्चेति। तथा 'दायणे य' त्ति-दानं, तत्र साम्भोगिकः साम्भोगिकाय (वस्त्रादिभिः शिष्यगणोपग्रहासमर्थे साम्भोगिके) अन्यसाम्भोगिकाय वा शिष्यगणं यच्छन् शुद्धः, निष्कारणं विसाम्भोगिकस्य पार्श्वस्थादेर्वा संयत्या वा तं यच्छंस्तथैव सम्भोग्यो विसम्भोग्यश्चेति। तथा 'निकाए य' त्ति-निकाचनं छन्दनं निमन्त्रणमित्यनर्थान्तरम्, तत्र शय्योपध्याहारैः शिष्यगणप्रदानेन स्वाध्यायेन च साम्भोगिकः साम्भोगिकं निमन्त्रयन् शुद्धः, शेषं तथैव। तथा 'अब्भुट्ठाणे त्ति यावरे' त्ति-अभ्युत्थानमासनत्यागरूपमित्यपरं सम्भोगासम्भोगस्थानमित्यर्थः, तत्राभ्युत्थानं पार्श्वस्थादेः कुर्वंस्तथैवासम्भोग्यः, उपलक्षणत्वादभ्युत्थानस्य किङ्करतां च-प्राघूर्णकग्लानाद्यवस्थायां किं विश्रामणादि करोमीत्येवं प्रश्नलक्षणा तथाऽभ्यासकरणपार्श्वस्थादिधर्माच्च्युतस्य पुनस्तत्रैव संस्थापनलक्षणं, तथा अविभक्तिं च-अपृथगभावलक्षणां कुर्वन्नशुद्धोऽसम्भोग्य-श्चापि। एतान्येव यथाऽऽगमं कुर्वन् शुद्धः सम्भोग्यश्चेति, तथा 'किइकम्मस्स य करणे' त्ति-कृतिकर्म-वन्दनकं तस्य करणं-विधानं तद्विधिना कुर्वन् शुद्धः, इतरथा तथैवासम्भोग्यः। तत्र चायं विधिः-यः साधुर्वातेन स्तब्धदेह उत्थानादिः कर्तुमशक्तः स सूत्रमेवास्खलितादिगुणोपेतमुच्चारयति, एवमावर्त्तशिरोनमनादि यच्छक्नोति तत्करोत्येवं चाशठप्रवृत्तिर्वन्दनविधिरिति भावः। तथा 'वेयावच्चकरणे इय' त्ति-वैयावृत्त्यम्-आहारोपधिदानादिना प्रश्रवणादिमात्रकार्पणादिनाऽधिकरणोपशमनेन साहाय्यदानेन वोपष्टम्भकरणं तस्मिंश्च विषये सम्भोगासम्भोगौ भवत इति। तथा 'समोसरणं' ति-जिनस्नपनरथानुयानपट्टयात्रादिषु यत्र बहवः साधवो मिलन्ति तत्समवसरणम्। इह च क्षेत्रमाश्रित्य साधूनां साधारणोऽवग्रहो भवति, वसतिमाश्रित्य साधारणोऽसाधारणश्चेति। अनेन चान्येऽप्यवग्रहा उपलक्षिताः, ते चानेके, तद्यथा-वर्षावग्रह ऋतुबद्धावग्रहो वृद्धवासावग्रहश्चेति। एकैकश्चायं साधारणावग्रहः प्रत्येकावग्रहश्चेति द्विधा। तत्र यत् क्षेत्रं वर्षाकल्पाद्यर्थं युगपत् द्व्यादिभिः साधुभिर्भिन्नगच्छस्थैरनुज्ञाप्यते स साधारणः, यत्तु क्षेत्रमेके साधवोऽनुज्ञाप्याश्रिताः स प्रत्येकावग्रह इति। एवं चैतेष्ववग्रहेषु आकुट्टया अनाभाव्य सचित्तं शिष्यमचित्तं वा वस्त्रादि गृह्णन्तोऽनाभोगेन च गृहीतं तदनर्पयन्तः समनोज्ञा अमनोज्ञाश्च प्रायश्चित्तिनो भवन्त्यसंभोग्याश्च। पार्श्वस्थादीना चावग्रह एव नास्ति तथापि यदि तत् क्षेत्रं क्षुल्लकमन्यत्रैव च संविग्ना निर्वहन्ति ततस्तत् क्षेत्रं परिहरन्त्येव। अथ पार्श्वस्थादीनां क्षेत्रं विस्तीर्णं संविग्नाश्चान्यत्र न निर्वहन्ति ततस्तत्रापि प्रविशन्ति, सचित्तादि च गृह्णन्ति, प्रायश्चित्तिनोऽपि न भवन्तीति। आह च-" समणुन्नमसमणुन्ने, अदिन्नणाभव्वगिण्हमाणे वा। सम्भोग वीसुकरणं, (पृथक्करणमित्य-

र्थ'] इयरे य अलंभ पेहंति ॥ १ ॥ " [ इतरान् पार्श्वस्थादीनित्यर्थः ।] तथा 'सन्निसिज्जा य' त्ति सन्निष-द्या-आसनविशेषः, सा च सम्भोगाऽसम्भोगकारणं भवति। तथाहि—संनिषद्यागत आचार्यो निषद्यागतेन सम्भोगिका-चार्येण सह श्रुतपरिवर्त्तना करोति शुद्धः । अथामनोज्ञपार्श्व-स्थादिसाध्वीगृहस्थैः सह तदा प्रायश्चित्ती भवति । तथा अ-क्षनिषद्यां विनाऽनुयोगं कुर्वतः शृण्वतश्च प्रायश्चित्तम् । तथा निषद्यायामुपविष्टः सूत्रार्थौ पृच्छति, अतिचारान् वाऽऽलो-चयति, यदि तदा तथैवेति । तथा 'कहाए य पबंधणे' त्ति-कथा—वादादिका पञ्चधा, तस्याः प्रबन्धनं-प्रबन्धेन करणं कथाप्रबन्धनं, तत्र सम्भोगासम्भोगौ भवतः । तत्र मतमभ्यु-पगम्य पञ्चावयवेन त्र्यवयवेन वा वाक्येन यत्तत्समर्थनं स छलजातिविरहितो भूतार्थान्वेषणपरो वादः । स एव छलजा तिनिग्रहस्थानपरो जल्पः । यत्रैकस्य पक्षपरिग्रहोऽस्ति नाप-रस्य सा दूषणमात्रप्रवृत्ता वितण्डा । तथा प्रकीर्णकथा चतु-र्थी । सा चोत्सर्गकथा द्रव्यास्तिकनयकथा वा, तथा निश्चय-कथा पञ्चमी, सा चापवादकथा पर्यायास्तिकनयकथा वेति तत्राद्यास्तिस्रः कथाः श्रमणीवर्जैः सह करोति, श्रमणीभिस्तु सह कुर्वन् प्रायश्चित्ती । चतुर्थवेलाया चालोचयन्नपि विस-म्भोगार्ह इति रूपकद्वयस्य संक्षेपार्थः । विस्तरार्थस्तु निशी-थपञ्चमोद्देशकभाष्यादवसेय इति । स० १२ सम० । उत्त० ।

प्रत्यक्षं प्रत्येकं सम्भोगः—

जे निग्गन्था य निग्गन्थीओ य संभोइया सिया, नो एहं कप्पइ पारोक्खं पाडिएक्कं संभोइयं विसंभोइयं करे-त्तए । कप्पइ एहं पच्चक्खं पाडिएक्कं संभोइयं विसंभोइयं करेत्तए । जत्थेव अन्नमन्नं पासेज्जा, तत्थेव एवं वएज्जा-अहो णं अज्जो !, तुमाए सद्धिं इमम्मि कारणम्मि पच्चक्खं पाडिएक्कं संभोइयं विसंभोगं करेमि । से य पडितप्पेज्जा, एवं से नो कप्पइ पच्चक्खं पाडिएक्कं संभोइयं विसंभोगं करेत्तए, से य नो पडितप्पेज्जा । एवं से कप्पइ पच्चक्खं पाडिएक्कं संभोइयं विसंभोगं करेत्तए ॥ ३ ॥ जाओ-निग्गन्थीओ वा निग्गन्था वा संभोइया सिया, नो एहं कप्पइ पच्चक्खं पाडिएक्कं संभोइयं विसंभोगं करेत्तए, क-प्पइ एहं पारोक्खं पाडिएक्कं संभोइयं विसंभोगं करेत्तए । जत्थेव ताओ अप्पणो आयरियउवज्झाए पासेज्जा, तत्थे-व एवं वएज्जा-अह णं भन्ते ! अमुगीए अज्जाए सद्धिं इमम्मि कारणम्मि पारोक्खं पाडिएक्कं संभोइयं विसंभोगं करेमि । सा य से पडितप्पेज्जा, एवं से नो कप्पइ पारो-क्खं पाडिएक्कं संभोइयं विसंभोगं करेत्तए । सा य से नो पडितप्पेज्जा, एवं से कप्पइ पारोक्खं पाडिएक्कं संभोइयं विसंभोगं करेत्तए ॥ ४ ॥

ये निर्ग्रन्था निर्ग्रन्थ्यश्च साभोगिकाः स्युस्तेषां 'नो णमि'ति घा-क्यालंकारे,कल्पते परोक्षे प्रत्यक्षे सांभोगिकं विसांभोगिकं क-र्तुं,यत्रैव एव वदेत् 'अहो ण मिति पूर्ववत्। अहो-आर्य! त्वया सार्द्धमस्मिन्कारणे प्रत्यक्षं प्रत्येकं साम्भोगिकं विसम्भोगं क-रोमि, एवमुक्ते यदि स परितप्यते मिथ्यादुष्कृतं न भूय एवं करिष्यामि , एवं सति 'से' तस्य न कल्पते प्रयाणां प्र-त्यक्षं प्रत्येकं सांभोगिकं विसाम्भोगिकं कर्तुम् । अथ स न परितप्यते एवं सति 'से' तस्य कल्पते प्रयाणां प्रत्ये-कं साम्भोगिकं विसाम्भोगिकं कर्तुमिति सूत्राक्षरार्थः ॥३॥ या निर्ग्रन्थ्यो निर्ग्रन्था वा साम्भोगिकाः स्युस्तेषां न कल्पते प्रत्यक्षं प्रत्येकं साम्भोगिकीं विसंभोगां कर्तुम् । य-त्रैव ता निर्ग्रन्थ्य आत्मीयानाचार्योपाध्यायान् पश्यन्ति तत्रै-व एवं वदन्ति । अथ णमिति वाक्यालंकारे । भदन्त ! अ-मुकया सहास्मिन् कारणे समापतिते परोक्षं प्रत्येकं साम्भोगिकं विसंभोगं करोमि । सा च 'से' तस्या प्रव-र्त्तिन्याः परितपति मिथ्यादुष्कृतप्रदानेनानुतपति अ-सद्वा तदाख्यानमिति प्रत्याययति । एवं सति न कल्पते परोक्षं प्रत्येकं साभोगिकं विसंभोगं कर्तुम् । अथ सा तस्याः प्रागुक्तप्रकारेण नानुपतिता एवं सति 'से' त-स्याः कल्पते परोक्षं प्रत्येकं सभोगं कर्तुमिति सूत्राक्षरार्थः । व्य० अ० ७ उ० ।

अधुना भाष्यकार आह—

संभोगो पुव्वुत्तो, पत्तेयं पुण वयंति पडिएक्कं ।
तप्पंते समणुण्णे,पडितप्पणमाऽणुतप्पंतु ॥४६॥

संभोगः पूर्वं निशीथाध्ययने उक्तः, 'पडिएक्कं'पुनर्वदन्ति प्रत्ये-कं यो विसंभोगं करोति स तप्यते, यथा एतेन नाम शय्या-तरपिण्डप्रतिसंवितो हा कष्टमेवं तप्यन्तमितरो ज्ञात्वाऽनु-तप्यते, एष मम दोषेण तप्यति तस्मात् प्रत्याययामि, यथा-असदेतत् यदहं शय्यातरं पिण्डं सेवितवान् । अथ स तु तदा-ऽसौ चिन्तयति मम दोषेणैव तप्यतु तस्मान् मिथ्यादुष्कृतं करोमि, एवं संविग्ने तप्यति यदनुतपन तत् प्रतिपतनमिति। तदेव भाष्यकृता विषमाणि सूत्राक्षराणि विवृतानि ।

संप्रति निर्युक्तिविस्तरः—

सागारियगिहानिग्ग-ते य वडघरिए जंबुघरए य।
धम्मियगुलवाणियए, हरितालित्ते य दीवे य ॥४७॥

सागारिके शय्यातरगृहान्निर्गते वटगृहिके जम्बूगृहिके वा असद् व्याख्यानेन विसंभोगं कृतं । इयमक्षरघटना। भावार्थस्त्वयम्—एकस्मिन् नगरे आचार्यस्य वटगृहिकः शय्यातरस्तस्मिन्नेव नगरे आर्यो जम्बूगृहिको गृहस्थोऽस्ति ताभ्यां वटगृहिकजम्बूगृहिकाभ्यामात्मीयं गृहं कारितम् । तयोश्च निर्मापितयो द्वयोरपि गृहयोः कपोता प्रविष्टास्त-तोऽमङ्गलमिति मन्यमानौ तौ नैमित्तिकं पृच्छतः । कथमे-तस्य दुर्निमित्तस्य व्याघातो भवेत् ?, नैमित्तिको वदति-व-टगृहिको जम्बूगृहिकस्य गृहमधितिष्ठतु, जम्बूगृहिको वट-गृहिकगृहम् । तत कतिपयानि दिनानि स्थित्वा पश्चान्निज-निजगृहं गच्छेताम् । तौ परस्परं गृहं सञ्चरितौ अथान्यदा अन्यस्मात् गच्छात् प्राघूर्णकाः समागताः , तदा यास्तयो-र्जम्बूगृहिकगृहं प्रविष्टस्य गृहात्प्रथमालिकामानीय तेषां प्राघूर्णकानां दत्ता तैः शय्यातरपिण्डं मन्यमानैरगवेषण-शाद्भीत्या भुक्तास्ततस्ते प्राघूर्णका निर्गत्य आत्मीयस्या-चार्यस्य समीपं गत्वा आलोचयन्ति । अस्माभिः साभोगिका

शय्यातरपिण्डं भुङ्क्ते अस्माभि कथमप्यपरोधवशादप्रीत्या प्रथमालिका भुक्ता, एवं श्रुत्वाऽऽचार्योऽपि अविचिन्त्य य दि विसंभोगं तं करोति तदा अत्रैतदधिकृतसूत्रं पतति ।

तथा चाह भाष्यकारः—

नवघरकवोतपविसण, दोण्हं नेमित्ति जुगव पुच्छा य ।
अण्णोण्णस्स घराई, पविसथ नेमित्तिश्रो भणई ॥ ४८ ॥
आदेसागम पढमा, भोतुं लज्जाएँ गंतु गुरुकहणं ।
सो जइ करेज्ज वीसुं, संभोगं एत्थ सुत्तं तु ॥ ४६ ॥

नवयोर्गृहयोः कपोतानां प्रविशनं, ततो द्वयोरपि गृहस्वामिनोर्युगपन्नैमित्तिको भणति-अन्योन्यस्य गृहं प्रविशताम् । तौ च प्रविष्टावन्यदा आदेशाना प्राघूर्णकानामागमस्ततो वास्तव्यैर्जम्बूगृहिकस्य वटगृहिकगृहं प्रविष्टस्य गृहात्प्रथमालिका आनीता तां लज्जया भुक्त्वा ततो निर्गत्य गुरुसमीपं गत्वा गुरो कथनं, स यद्यविचार्य विष्वक्संभोगं तं करोति । तदा अत्र सूत्रमापतितं द्रष्टव्यम् । अत्र विचारो यदि तावित्वरं गृहपरिवर्त्तं कृतवन्तौ तदा स जम्बूगृहिकोऽशय्यातर एव । अथ यावत्कथिकस्तदा जम्बूगृहिक एव शय्यातरः ।

' धम्मिय ' त्ति अस्य व्याख्यानमाह—

धम्मितो देउलं तस्स, पालेइ जइ भद्दश्रो ।
सो य संवट्टियं तत्थ, लद्धुं देज्जा जईण उ ॥ ५० ॥

तस्य शय्यातरस्य किंचित् देवकुलं तत् धार्मिक पालयति , स च यतीनां भद्रकस्तत संवर्द्धि—तमग्रकूरं तस्मिन् शय्यातरगृहे लब्धं साधूनामानीय ददाति, अत्रापि तथैव प्राघूर्णकागमनं, धार्म्मिकात् प्रथमालिकानयनमित्यादि सर्वं तथैव वाच्यम् ।

' गुलवाणिय ' इत्यस्य व्याख्यानम्—

वाणियश्रो य गुलं तत्थ, विकिणंतो उ दंतए।
तत्थ मो बाहिरे हुज्जा, अडं कच्छुपुडेण वा ॥ ५१ ॥

शय्यातरगृहे स्थितो गुडवणिक्, स तत्र गुडं विक्रीणन् साधूनां गुडं ददाति । अथवा—शय्यातरस्यापवरिकायामात्मीयभाण्डे निक्षिप्तं, ततः कच्छपुटेनाटित्वा तत्रैव समागच्छति, स चाटन् यदा तदा वा साधूनां भिक्षां ददाति । ततः प्राघूर्णकागमनमित्यादि विभाषा ।

तथैव ' हरितोपलिप्ते ' इत्यस्य व्याख्यानम्—

हरितोलित्ता कया सेज्जा, कारणे ते य संठिया ।
पसज्झा वसहिपालस्स, चेइयट्ठा गणागए ॥ ५२ ॥

छिन्नानि वा हरितानि, छगणेन वसतिरधुनोपलिप्ता कृता, हरितानि च तत्र परिसाटितानि । तस्यामधुनोपलिप्तायां पातितेषु वा हरितेषु साधव कारणेन स्थिता । अथवा-पूर्वस्थिताना चैत्यवन्दनार्थं गणे निर्गते पश्चात् वसतिपालस्य प्रसह्य बलात्कारेणोपलिप्ता कृता,हरितानि च पातितानि।अत्रावसरे प्राघूर्णका समागतास्ते वसतिं दृष्ट्वा चिन्तयन्ति प्रतिदिवसमुपलिप्यते शय्या आचार्यस्य कथितम् । तेन यद्यविचार्य विसंभोग क्रियते तदा अत्र सूत्रोपनिपात ।

' दीपा वे ' त्यस्य व्याख्यानम्—

छिण्णाणि वा वि हरिताणि, पविट्ठो दीवएण वा ।
कयकज्जस्स पम्हुट्ठे, सो वि जाणे दिणे दिणे ॥ ५३ ॥

यस्यां शय्यायां संयता स्थिताः तत्र शय्यातरः केनापि कारणेन प्रदोपदीपकेन सह प्रविष्टस्ततो येन कार्येण समागतस्तत्कार्यं कृत्वा निर्गत, दीपस्तत्रैव विस्मृत,तत्र च तस्मिन् दिवसे साभोगिकाः समागताः । स च प्राघूर्णको गृहस्तर शय्यातरस्य कृतकार्यस्य विस्मृतं दीपं जानाति दिने दिने वसतौ दीपः क्रियते । एतच्च ज्ञात्वा गुरो प्राघूर्णकेन कथितं, स च विचिन्त्य विसंभोगं कृतवान् । अत्राप्यधिकृतसूत्रस्योपनिपातः ।

एतानि सन्ति तानि कारणानि । अत्र प्रायश्चित्तविधिमाह—

दट्ठुं साहण लहुश्रो, वीसु करेंताण लहुग आणादी ।
श्रद्धाणनिग्गयादी, दोण्हं गणभंडणं चेव ॥ ५४ ॥

योऽसन्ति कारणान्यविवेच्य गुरोर्निवेदयति तस्य प्रायश्चित्तं लघुको मासः , कथितेऽपि यद्याचार्या न विवेचयन्ति अविवेच्य च विसंभोगं कुर्वन्ति तदा तेषां विष्वक् कुर्वतां चत्वारो लघुका । न केवलं प्रायश्चित्तं किं त्वाज्ञाभङ्गादयश्च दोषा । तथा अध्वादिनिर्गतानामादिशब्दादशिवादिकारणपरिग्रहः द्वयोरपि गणयोर्भण्डनं च ।

एतदेव च स्पष्टं भावयति—

तं सोउं मणसंतावो, संतईए ति तुट्टई ।
अण्णे वि ते विवज्जंति, वज्जिया अमुएहि वा ॥ ५५ ॥

ये तेषां सांभोगिकास्तै तत् शय्यातरपिण्डाद्यासेवनं श्रुत्वा मन संताप क्रियते, यथा तेन धर्मश्रद्धिकेनापि भवतां शय्यातरपिण्डाद्यकल्पिकमासेवितमतोऽद्य प्रभृत्यस्माकं संततेस्त्रुट्य(स्तुद्य)ति-पृथग्विभिन्न इत्यर्थः । ततो येऽन्ये तेषां सांभोगिकास्तेऽपि तान् विवर्जयन्ति, यतस्तेऽवसन्ना जातास्ततोऽमुकेनाचार्येण विवर्जिता ।

ततो वा अन्नतो वा वि, तं सुच्चा इह निग्गया ।
वज्जेत्ता जं तु पावेंति, निज्जरातो य हाविता ॥५६॥

ततस्ते विवर्जिता अध्वनिर्गता अशिवादिकारणेन वा निर्गता, इह यत्र ते पूर्वसाभोगिकास्तिष्ठन्ति तत्र प्राप्तास्ततो यैरविवेच्य शय्यातरपिण्डादिकमासेवितमित्याचार्येण कथितं, तेभ्योऽन्येभ्यो वा श्रुत्वा यूयं पृथक्कृता इत्याकर्ण्य तं गणं वर्जयित्वा यत प्रथमद्वितीयपरीषहाभ्यामनागाढादि परितापनं प्राप्नुवन्ति । तन्निष्पन्नमविवेच्य विसभोगकारणं प्रायश्चित्तम् । ' निज्जरातो य हाविता ' इति तेषाम्—अध्वादिनिर्गताना ते वास्तव्या वैयावृत्यं कृत्वा निर्ज्जरा प्राप्नुयुस्ते ततो हापिता प्रभूतं च कर्म्म अविवेच्य न तर्कैर्बध्यते, यन्महता ससारेण निस्तरीतु शक्यते ।

तं कज्जतो अ कज्जे, वा सेवियं जइ वि तं अकज्जेण ।
न हु कीरइ पारोक्खं, सहसा इति भंडण हुज्जा ॥५७॥

यस्मादेते दोषास्तस्मात्कार्यतः—कारणेन कार्ये वा कारणाभावे वा यद्यपि सेवितं तत् शय्यातरपिण्डादिकं तथाऽप्यकार्येण एवमेव परोक्ष सहसा इत्येवं न विसंभोगः क्रियते, मा परस्पर द्वयोर्गणयोर्भण्डनं भूयादिति हेतोः ।

कथं विवेकः कर्त्तव्य इत्यत आह—

निस्संकियं च काउं , आसंकनिवेयणा तहिं गमणे ।
सुद्धेहिं कारणमणा–भोगजाणता दप्पतो दोण्हँ ॥५८॥

तैः प्राघूर्णकैस्ते प्रष्टव्याः, को युष्माकं शय्यातरः ? , कथमेष शय्यातरो न भवति ?, एवं निःशङ्कितं कृत्वा । अथ लज्जया न पृष्टास्ततो न निश्चय इति एवमाशङ्कानिवेदनायां कृतायां यस्याचार्यस्य कथितं तेन प्रेषितस्य सघाटस्य तत्र गमन , तेन च संघाटकेन गत्वा यत्तैः कथितम् । तत्तेन प्रष्टव्यम् , ते गृहपरिवर्त्तादि यथातथ्यं कथयन्ति । ततः संघाटो गत्वा निजसूरिसमीपं कथयति ; एवमक्रियमाणे द्वयोर्गणयोर्भण्डनम् । तदेव पश्चार्द्धेन भावयति—' सुद्धेहिं ' शुद्धैरप्यस्माभिः समं यूय विसंभोग कुरुथ । अथवा—कारणं गृहपरिवर्त्तादिकमधिकृत्य तत् गृहीतम् । यदि वा-अनाभोगेन गृहीतम् । अथवा-द्वयोः प्रथमद्वितीयपरीषहयोरुदीर्णयोर्जानता दर्पतो गृहीतं, पुनः पश्चात् कृता शोधि । अपि च यदि च निष्कारणेऽपि गृहीतं तथापि न युक्तं परोक्ष विसंभोगकरणम् । यदि वय नावृता भवामस्ततो युक्तं विसंभोगकरणम् । अथ कारणे गृहीतं तदा वयं शुद्धा एव कथं विसंभोगकरणमेवं भण्डनं स्यात् ।

सांप्रतं 'कारणमनाभोगे' ति पदद्वयं व्याख्यानयति—

कज्जेण वा वि गहियं, सागॉरपरियट्टतो व सो अम्हं ।
कारणमजाणतो वा, गहियं किं सूचिकरणं तु ॥५६॥

कार्येण च गृहीतमस्माभिर्वापिशब्दो विकल्पने । तच्च कार्यमस्माकं स्वागारपरिवर्त्तः । अथवा—कारणमजानता यदि गृहीतं तथापि किं कस्मात् परोक्षे शोधिकरणं—विसंभोगकरणम् ।

सम्प्रति ' जाणता दप्पतो ' इति व्याख्यानयति—

जाणंतेहि व दप्पा, घेत्तुं आवट्टिउं कया सोही ।
तुज्झत्थ निइयारा, पसीय भंते ! कुसीलाणं ॥ ६० ॥

जानद्भिरपि वा प्रथमद्वितीयपरीषहत्याजितो दर्पतो गृहीत्वा आवृत्य कृताऽस्माभिः शोधि तस्मात् यूयमेवात्र गतिर्निरतिचारा भदन्त ! कुशीलानामस्माकं प्रसीदतेत्युपहासवचनमेतत् ।

पढमविइय दप्पेणं, जं सव्वं आउरेहि तं गहियं ।
दिट्ठंताणि भवंतो , जं विइयपएसु नित्तण्हा ॥ ६१ ॥

प्रथमद्वितीययोः परीषहोदयेन यत्तत्सर्वमातुरैर्गृहीतं, युष्माभिस्तत् विस्मृतं दृष्टान्ता भवन्त इत्यर्थः , नीयते द्वितीयपदेषु निस्तृष्णा इति, एतदप्युपहासवचनम् । एवं भण्डनं प्रवर्तते । यत एव परोक्ष विसंभोगकरणे भण्डनदोषास्तस्मात्कल्पते निर्ग्रन्थाना प्रत्यक्ष साभोगिकं विसंभोगं कर्तुम् ।

अस्य सूत्रस्य व्याख्यानमाह—

सत्तमए ववहारे, अवराहविभावियस्स साहुस्स ।
आउट्टणाउट्टे, पच्चक्खेणं विसंभोगो ॥ ६२ ॥

अस्मिन् सप्तमे व्यवहारस्योद्देशके अपराधेन विभावितः परिभावितो यदि प्रत्यावर्त्तनं तदा तस्यापराधविभावितस्य साधोरावृत्तस्य विसंभोगो न क्रियते , प्रायश्चित्तं पुनर्दीयते । अथ नावर्त्तते ततो वारत्रयं भण्यते, आवर्त्तस्व महानुभाव !, एवमुक्तोऽपि यदि नावर्त्तते तदा तस्मिन्ननावृत्ते प्रत्यक्षेण प्रत्यक्षतया विसंभोगः क्रियते ।

संभोगऽभिसंबंधे–ण आगतो केरिसेण सह नाओ ।
केरिसएण विसंभो–गो भणइ सुणसु समासेणं ॥६३ ॥

एवमभिसंबन्धेन संभोगतः शिष्यः पृच्छति—कीदृशेन सह सभोगो ज्ञेयः, कीदृशेन सह विसभोग । सूरिराह—भण्यते एतत्समासेन तत् त्वं भण्यमानं शृणु ।

प्रतिज्ञातमेव निर्वाहयति—

पडिसेहे पडिसेहो, ऽसंविग्गे दाणमादि तिक्खुत्तो ।
अविसुद्धे चतु गुरुया, दूरे साहारणं काउं ॥ ६४ ॥

प्रतिषिध्यते पार्श्वस्थत्वादिकं न कल्पते इति निवार्यते इति प्रतिषेधः, असंविग्न —पार्श्वस्थादि भण्यते, तस्मिन् प्रतिषेधे असंविग्ने दानादेर्दानग्रहणसंसर्गाद् प्रतिषेध. । त्रि कृत्व इति यदि कथमपि दानादि करोति तदा एकं द्वौ त्रीन्वारान् वार्यते, एकैकस्मिंश्च वारे प्रायश्चित्तं मासलघु । वारत्रयवारणेऽपि यदि भूयस्तैः सह दानादि करोति तदाऽसौ अविशुद्ध इति विसंभोगः क्रियते—विसांभोगिकं करोति, तस्य प्रायश्चित्तं चत्वारो लघुका । दूरे गतानां यदि केऽपि पृच्छन्ति, यथा सत्यमस्माकं च सांभोगिकास्तत्र देशे इति ?, तदा साधारणं कृत्वा वक्तव्यम्—यदा तदा साभोगिका अभवन् इदानीं पुनर्न जानीम किमनुपालयन्ति साभोगिकत्वं किं वा नेति । एष निर्युक्तिगाथासमासार्थः ।

साम्प्रतमेनामेव भाष्यकारो विवरीषुराह—

पासत्थादिकुसीले, पडिसिद्धे जो उ तेमि संसग्गी ।
पडिसिज्झइ एसो खलु, पडिसेहे होइ पडिसेहो ॥६५॥

पार्श्वस्थादिके कुशीलस्थाने प्रतिषेध यस्तेषां पार्श्वस्थादिस्थाने वर्त्तिनां संसर्गी प्रतिषिध्यते, स च संसर्गी दानग्रहणाभ्यामवसातव्य एष भवति प्रतिषेध । न चैव प्रतिषेधेनार्थः ।

यत आह—

सूयगडंगे एत्थं ध–म्मज्झयणे निकाचितं ।
अकुसीले सया भिक्खू, नो य संसग्गियं वदे ॥ ६६ ॥

सूत्रकृताङ्गे द्वितीये स्कन्धे धर्माध्ययने एव निकाचितम्—एव निश्चयपूर्वकं भणितम् । यथा सदा भिक्षुरकुशीलो भवेद् नैव कुशीलैः सह संसर्गिकं व्रजेत् ।

दाणादीसंसग्गी, संघकते तिप्पडिसिद्धे लहुगो ।

आउट्टे उ असुद्धे, गुरुतो उ होइ तेण परं ॥ ६७ ॥

दानादिभिः संसर्गैः दानादिसंसर्गैस्तस्यां कृतायां स प्रतिषिध्यते, आर्य ! कस्मात्पार्श्वस्थादिभिः समं संसर्गं करोषि, एवं प्रतिषिद्धे यदि स आवर्त्तते तदा स सांभोगिक एव केवलं तस्मिन्नावृत्ते प्रायश्चित्तं लघुको मासः । द्वितीयमपि वारं यदि करोति ततोऽपि मासलघु, अथ तृतीयमपि वारं करोति आवर्त्तते च तदापि मासलघु, सद्भावतस्त्रि कृत्व आवृत्ते लघुको मासः । तेन परमिति ततस्तृतीयवारात् परं यदि चतुर्थवारं संसर्गं करोति तदा असौ अशुद्ध इति तस्य प्रायश्चित्तं गुरुको मासः ।

एतदेव स्पष्टतरमाह—

तिक्खुत्तो मासलहू, आउट्टे गुरुगो मासो तेण परं ।
अविसुद्धे तं वीसुं, करोति जो भुंजती गुरुगा ॥६८॥

त्रि:कृत्व आवृत्ते प्रायश्चित्तं लघुको मासस्ततः परं भूयः संसर्गिकरणे सोऽविशुद्ध इति गुरुको मासः, तं च विष्वक् विसंभोगं करोति । योऽपि तं संभुङ्क्ते तस्यापि प्रायश्चित्तं चत्वारो गुरुकाः ।

अथ कस्मात् वारत्रयात् परं भूयः संसर्गिकृतो विसंभोगः क्रियते इत्यत आह—

सति दोसि वा वि होज्ज, अमाई तु माइ तेण परं ।
सुद्धस्स होति चरणं, मायासहिते चरणभेदो ॥६९॥

सकृत्-एकवारं द्वौ त्रीन् वारान् वा स्यादमायी, ततस्तृतीयात् वारात् परं संसर्गिकरणे मायी । अथ शुद्धस्य भवति चरणं मायासहिते तु चरणभेदश्चरणाभावस्ततो विसंभोगः क्रियते ।

एवं पासत्थादिसु, संसग्गियवारिया य आएसा ।
समणुन्ने वि ऽपरिच्छिते, विदेसमादी गते एवं ॥७०॥

एवम्-उक्तेन प्रकारेण एषा दानग्रहणाभ्यां संसर्गिवारिता, एवं समनोज्ञेऽपि विदेशादागते अपरीक्षिते संसर्गिवारिता द्रष्टव्या । तेनापि सह संसर्गिः परीक्ष्य कर्त्तव्यो नान्यथेति भावः ।

संप्रति 'दूरे साहारणं काउ' मित्यस्य विभावनार्थमाह—

समणुन्नेसु विदेसं, गतेसु पच्छऽऽसे होज्ज अवसन्ना ।
ते वि तहिँ गंतुमणा, अत्थि तहिं केइ मणुण्णा णे ॥७१॥

कस्याप्याचार्यस्य समनोज्ञेषु सांभोगिकेषु विदेशं गतेषु पश्चादागत्य साभोगिकाः केचित् भिक्षाद्यलाभेनावसन्ना भवेयुस्ततस्तेऽपि तत्र विदेशे गन्तुमनस आचार्यं पृच्छन्ति, सन्ति तत्र केचिदस्माकं मनोज्ञाः सांभोगिकाः ।

अत्थि त्ति होइ लहुतो, कयाइ ओसन्नि भुंजणे दोसा ।
नऽत्थि वि लहुतो भंडण, न खित्तकहनेव पाहुणगं ॥७२॥

एवमुक्ते यद्याचार्यो वदति सन्ति तत्र नः सांभोगिकाः तदा प्रायश्चित्तं भवति तस्य लघुको मासः । किं कारणमिति चेदत आह-कदाचित्ते अवसन्नीभूता भवेयुस्ते च प्राघूर्णकास्तत्र गतास्तैः सह भुञ्जन्ति, भुञ्जानानां च चतुर्गुरुकं प्रायश्चित्तम् । यत एवं दोषः तस्मात्सन्तीति न वक्तव्यम् । अथाचार्यो ब्रूयात्-न सन्तीति तदापि मासो लघुकः, कस्मादिति चेत् भण्डनदोषः । तथाहि-ते तत्र प्राप्तास्तेषां नास्ति केनापि गृहीते, तैर्वास्तव्यैरुक्तमस्माकं ते सांभोगिकास्ततस्ते प्राघूर्णकाः उक्ताः, कस्माद्यूयं तेषां नोत्तीर्णाः ?, प्राघूर्णकैरुक्तमस्माभिः क्षमाश्रमणाः पृष्टाः, सन्त्यस्माकं तत्र सांभोगिकास्तैरुक्तं न सन्ति । एवं वास्तव्यानामप्रीतिर्जाता । किमस्माभिः कृतं यद्वयं विसंभोगाः कृताः । तदनन्तरं परुषमपि भाषन्ते, ततो भण्डनम् । तथैव चाप्रीत्या मासप्रायोग्यं वर्षाप्रायोग्यं वा न कथयन्ति, न च प्राघूर्णकत्वं कुर्युः । यस्मादेते दोषास्तस्मादाचार्येणैवं वक्तव्यम् ।

आसि तया समणुण्णा, भुंजह दव्वाइएहिँ पेहित्ता ।
एवं भंडणदोसा, न होंति अमणुन्नदोसा य ॥ ७३ ॥

यदा अस्मात् देशात् निर्गतास्तदा समनोज्ञाः सांभोगिका आसीरन्, इदानीं न जानीमः किमनुपालयन्ति । सांभोगिकत्वं किं वा नेति । केवलं द्रव्यादिभिर्द्रव्यतः क्षेत्रतः कालतो भावतश्च प्रेक्ष्य संभुञ्ज्ध्वमित्येवमाचार्येणोक्ते न भण्डनदोषाः, नाप्यमनोज्ञदोषा भवन्तीति ।

नायमनाए आलो-यणा उ ऽणालोइए भवे गुरुगा ।
गीयत्थे आलोयण, सुद्धमसुद्धं विगिंचंति ॥ ७४ ॥

ज्ञाते अज्ञाते वा सांभोगे आलोचना दातव्या, तदनन्तरं तैः सह संभुञ्जते । यदि पुनरनालोचिते परस्परं भुञ्जते तदा भवन्ति चत्वारो गुरुकाः प्रायश्चित्तम् । सा चालोचना गीतार्थे दातव्या । 'सुद्धमसुद्धं विगिंचंति' त्ति-शुद्धोऽशुद्धो वा य उपधिस्तं विचिन्वन्ति-पृथक् कुर्वन्ति, विवेच्य यो निष्कारणे उद्गमादिभिरशुद्धो गृहीतो यश्च कारणे वा अयतनया तयोः परित्यागः कर्त्तव्यस्तन्निष्पन्नं प्रायश्चित्तं प्रतिपद्यन्ते । एष निर्युक्तिगाथासमासार्थः ।

साम्प्रतमेनामेव विवरीषुः प्रथमतो 'नायमनाए' इत्यस्य व्याख्यानमाह—

अविणट्ठे संभोगे, नायमनाए य नासि पारिच्छा ।
पत्थोवसंपयं खलु, सेहं वा ऽऽसज्ज आणादी ॥७५॥

आर्यमहागिरेः परतः संभोगो विनष्ट आसीत्, तदा ज्ञाते अज्ञाते वा नास्ति द्रव्यादिभिः परीक्षा, आर्यसुहस्तिशिष्यद्रमकप्रव्रज्याप्रतिपत्तिप्रभृतित आरात् विनष्टः संभोग इति ज्ञाते अज्ञाते वा द्रव्यादिभिः परीक्षाऽऽलोचयितव्या । अनालोचिते च सह भुञ्जते । अथ सांभोगिकाः सन्तः कथं न ज्ञायन्ते येनाज्ञाते इत्युच्यमानं शोभेत तत आह-' पत्थोवसंपयं खलु ' इत्यादि पूर्वं ये उपसंपन्नास्ते असमानीभूताः, अन्ये पश्चात्केऽप्युपसंपन्नाः । अथवा-पश्चादागत्य केचित् प्रव्राजितास्ततोऽदृष्टपूर्वतया ते न ज्ञायन्ते इत्यज्ञाता भवन्ति । गाथायामेकवचनं जातौ । ततोऽयमर्थः—आरादपि पूर्वदर्शनादर्वागपि पश्चादुपसंपत् शैक्षत्वमासाद्य सांभोगिकानामप्यज्ञानता भवति । तदेवं ' नायमनाए ' त्ति गतम् ।

इदानीम् ' आलोयणा उ ' इति व्याख्यानयति—

महल्लयाए गच्छस्स, कारणे असिवाइहिं ।
देसंऽतरागयाऽसोसे, तत्थिमा जयणा भवे ॥ ७६ ॥

१—इकारान्त संसर्गिशब्दः ( सू–१४ ) प्रश्न० ४ आश्र० द्वार ।

अतिमहत्तया गच्छस्य नास्त्येकत्र , संस्तरणं , यद्यस्ति वा अशिवादिभिः कारणैर्देशान्तरं गताः , एतैः कारणैर्वहवः पृथक् पृथक् स्थिताः । तत्र पूर्वस्थितेषु पश्चादागतानां परस्परं यत्र मेलापको भवति तत्रेयं ( वक्ष्यमाणा ) यतना-

दोण्णि वि जइ गीयत्था, राइणिए तत्थ विगडणा पुव्वं ।
पच्छा इयरो वि दए, समाणतो छत्तछायातो ।।७७।।

अगीतार्थेन गीतार्थस्य पुरत आलोचयितव्यम् , यदि पुनर्द्वावपि गीतार्थौ ततोऽवमरत्नाधिकेन गुरुरत्नाधिकस्य पुरत आलोचयितव्यम् । अवमरत्नाधिकेनालोचिते पश्चादितरोऽपि अवमरत्नाधिकस्य पुरतः आलोचनां ददाति,यः पुनः समानच्छायाकः स—अवमरत्नाधिकस्तत्र यः पश्चादाचार्यसमीपान्निर्गतस्तस्य पुरतः प्रथममालोचयितव्यं पश्चादितरस्य समीपे तेन । यदि पुनरनालोचिते परस्परं भुञ्जते तदा प्रायश्चित्तं प्रत्येकं चत्वारो गुरुकाः । एतेन 'अनालोइए भवे गुरुगा गीयत्थे आलोयए' इति व्याख्यातम् ।

संप्रति 'सुद्धमसुद्धं विगिंचंती' त्यस्य व्याख्यानमाह—

निकारणे असुद्धो उ, कारणे वाऽणुवायतो ।
अंतिए उवहिं दो वि, तस्स सोहिं करेंति य ।। ७८ ।।

य उपधिर्निष्कारणं-पुष्टालम्बनमन्तरेणोद्गमादिभिर्दोषैरशुद्धो गृहीतः, यश्च कारणेऽनुपायतोऽयतनया गृहीतस्तमुपधिं द्वावपि परित्यजतः । तस्य परस्परमालोचनाया येन दोषेण अशुद्धोपधिस्तत्प्रत्ययमयतनाप्रत्ययं च प्रायश्चित्तं प्रतिपद्यते ।

एवं तु विदेसत्थे, अयमन्नो खलु भवे सदेसत्थे ।
अभिणीवारीगादी, विणिग्गए गुरुसगासातो ।। ७६ ।।

एवम्—उक्तेन प्रकारेण खलु विदेशस्थे यतना भणिता, अयमन्यः खलु यतनाप्रकारः स्वदेशस्थे । तमेवाह—अभिनिवारिका प्राघुणकस्वरूपा तया आदिशब्दादुपधिकार्येण स्पर्द्धकयतीना वा साराकरणेन गुरूपदेशतो गुरुसकाशाद्विनिर्गते विनिर्गमेनैव प्रत्यागतैराचार्यपादमूले कस्या वेलायामागन्तव्यम् ।

तामेव निर्युक्तिगाथां भाष्यकारो विवृणोति—

अभिनिवारिएँ निग्गते, अहवा अन्नेण वाऽवि कज्जेणं ।
विसणं समणुण्णेसुं, काले को वा विकालो तु ।। ८० ।।

अभिनिवारिकया-प्राघुणकस्वरूपया निर्गते, अन्येन वा उपध्युत्पादादिना कार्येण निर्गते, भूयः समनोज्ञेषु साम्भोगिकेषु आचार्यपादमूले इत्यर्थः, विशनं-प्रवेशः काले कर्त्तव्यः । शिष्य आह—क कालः ।

सूरिराह—

भत्तट्ठियआवासग, सोहेउमति त्ति एत्थ अवरण्हे ।
अब्भुट्ठाणं दंडा-इयाण गहणेगवयणेणं ।। ८१ ।।

भक्तार्थितां कृत्वा बाह्यग्रामेषु भिक्षामटित्वा भोजनं च विधाय तदनन्तरमावश्यकमुच्चारादि शोधयित्वा पश्चादपराह्ने काले वेलायामायान्ति । वास्तव्यैरपि नैषेधिकीशब्दं श्रुत्वा अभ्युत्थानं कर्त्तव्यम् । दण्डादीनामादिशब्दात्पात्रादिपरिग्रह , ग्रहणं कर्त्तव्यम् । कथमित्याह—एकवचनेन दण्डादिकं गृह्णामीत्येवंरूपेणैकेन वचनेन यदि समर्पयन्ति तदा ग्रहीतव्याः । किं कारणमित्येतदुच्यते-वास्तव्येनानिशयेन गृहीतमिति मन्यमानेन प्राघूर्णकेन वास्तव्यागृहीते मुक्ते भाजनभेदो भवति । तेन पतता प्राणजातिविराधना ततस्तन्निष्पन्नं प्रायश्चित्तम् । तस्मादेकवचनेन दण्डादिग्रहणम् । वक्ष्यमाणकारणैः पुनरपवादतः कालवेलायां न प्रविशेत् ।

तान्येव कारणान्याह—

खुड्डगविगिट्ठगामे, उग्हं अवरण्हे तवो तु पागे वि ।
पक्खित्तं मुत्तूणं, निक्खिवति उक्खित्तमाहेणं ।। ८२ ।।

क्षुल्लको ग्रामे यत्र प्राप्तो वर्तते तत्र पर्याप्तं न भविष्यतीति विचार्य दिवा विकृष्टमन्तरे ततः कृतभिक्षाकान् प्राप्स्यामः । अथवाऽपराह्ने व्रजतां तापस्तत एतैः कारणैः प्रागपि प्रातरपि प्रविशेत् । तत्र च नैषेधिकीशब्दं श्रुत्वा तन्मुखे प्रक्षिप्तं तन्मुक्त्वा तत् गलनीयमित्यर्थः । यत उत्क्षिप्तलम्बनं वर्त्तते तत्पात्रे निक्षिप्य वास्तव्यैरभ्युत्थातव्यम् । अत्र यदि प्राघूर्णकाः कृतपर्याप्ताः ततस्तैर्वक्तव्यं वा अभ्युत्तिष्ठत वयं कृतपर्याप्ताः समागताः । यदि वा-यस्य कस्यार्थे , स समं भुङ्क्ते । अथ कदाचित् प्राघूर्णका न कृतपर्याप्ता भवेयुस्तदा तेषां दत्त्वा वास्तव्या अन्यत् गृह्णन्ति । अथ वास्तव्यैरतिशयेन पर्याप्ते लब्धे ते प्राघूर्णका समागतास्ततो यदि तपोऽर्हं प्रायश्चित्तमापन्नास्तदा ओघाऽऽलोचनया आलोच्य तैः समं भुञ्जते, एष निर्युक्तिगाथासमासार्थः ।

साम्प्रतमेनामेव विषमपदव्याख्यानतो व्याख्यानयति 'तत्र ओहेणे' ति एनं व्याचिख्यासुराह—

जइ उ तवं आवन्नो, जा भिन्नो अहव होज्ज नावन्नो ।
तहियं ओहालोयण, तेण परेणं विभागो उ ।।८३।।

वास्तव्यैर्भिक्षावेलामतिशयेन पर्याप्ते लब्धे यदि प्राघूर्णकाः समागच्छन्ति तदा यदि प्राघूर्णकास्तपोऽर्हं प्रायश्चित्तमापन्ना , यावदद्यापि भिन्ना न भवन्ति छेदादिकमप्राप्ता इत्यर्थः । अथवा तपोऽर्हमपि प्रायश्चित्तं नापन्ना , तदा ओघालोचनया आलोच्य तैः समं मण्डल्या समुद्दिशन्ति । ततः समुद्देशानन्तरं परतो विभागालोचनयाऽऽलोच्य प्रायश्चित्तं प्रतिपद्यन्ते । अथ छेदादिकमापन्नास्ततो मण्डल्या उत्कृष्य दीयते ।

अथ वेलायां न प्राप्ता कियन्नागाढाया पौरुष्यां प्राप्तास्तत्र विधिमाह—

अहवा भुत्तुव्वरियं, संखडि अन्नेहि वा वि कज्जेहिं ।
तं सुत्ता पत्तेयं, इमे य पत्ता नहिं होज्जा ।।८४ ।।

अथवेति प्रकारान्तरे वास्तव्यभुक्तोद्धरितं वर्त्तते । अथवा संखड्या निमन्त्रिताः श्राद्धादिभिर्यास्तव्यास्तत्र पर्याप्तं गृहीतमस्ति । यदि वाऽऽचार्या कुलादिकार्यैर्विनिर्गतास्तत् कियन्त काले प्रतीक्ष्य तद् योग्यं मण्डल्या भुक्तं प्रत्येकमुद्-

रितमस्ति , इमे च प्राघूर्णकास्तत्रावसरे प्राप्ता भवेयुस्ततो वास्तव्या नैषेधिकीशब्दं श्रुत्वा समुत्थाय भणन्ति ।

भुंजह भुत्ता अम्हे, जे वा इच्छंति भुत्तु सह भोज्जं ।
सव्वं व तेसि दाउं, अन्नं गेरहंति वत्थव्वा ॥८५॥

भुङ्ग्ध्व यूयं भुक्ता यो वा इच्छति अभुक्तैर्वास्तव्यैः सह भोज्यं स तैः सह भुङ्क्ते अथ प्राघूर्णकाना न पश्चाद्भागे परिपूर्णं जातं ततः सर्वं तेषां प्राघूर्णकानां दत्त्वा वास्तव्या अन्यत् गृह्णन्ति ।

तिरिण दिणे पाहुरणे, सव्वेसिं असति बालवुड्ढाणं ।
तरुणा जे सग्गामे, वत्थव्वा बाहि हिंडंति ॥ ८६ ॥

सर्वेषामागतानां त्रीणि दिनानि यावत्प्राघूर्णकत्वं करणीयम् । अथ सर्वेषां कर्तुं न शक्नुवन्ति ततः सर्वेषामभावे बालवृद्धानां त्रीणि दिनानि, प्राघूर्णकत्वं कर्तव्यम् । ये तत्र प्राघूर्णकानां तरुणास्ते स्वग्रामे हिण्डन्ते ये तु वास्तव्यतरुणास्ते उद्भ्रामकभिक्षाचर्यया वहिर्ग्रामे हिण्डन्ते ।

संघाडगसंजोगो, आगंतुगभद्दए तया हिंडे ।
आगंतुका व बाहिं, वत्थव्वयभद्दए हिंडे ॥ ८७ ॥

यदि ग्रामवास्तव्या जना आगन्तुकभद्रकास्तदा प्राघूर्णकानामेकैको वास्तव्येन समं संघाटकेन हिण्डते । इतरे-वास्तव्यानां संघाटकसंयोगा उद्धरितास्ते वहिर्ग्रामे उद्भ्रामकभिक्षाचर्यया व्रजन्ति । अथ ग्रामवास्तव्या जना वास्तव्यभद्रकास्ततो वास्तव्यानामेकैकः-प्राघूर्णकेन समं हिण्डते । ये तु प्राघूर्णकानां संघाटकसंयोगा अधिकास्ते वहिरुद्भ्रामकभिक्षाचर्यया व्रजन्ति । उपधिचिन्तायामपि परस्परमालोचनायां दत्तायां यो गीतार्थेन उपधिरुत्पादितः स परिभुज्यते । यस्त्वगीतार्थेनोत्पादितस्तस्य परित्याग करणीयः ।

सूत्रम्-" जे निग्गंथा निग्गंथीओ य० " इत्यादि । अस्य संबन्धप्रतिपादनार्थमाह-

मंडुगगतिसरिसो खलु, अहिगारो होइ विइयसुत्तस्स ।
संपुडतो वा दोरहं वि, होइ विसेसोवलंभो वा ॥८८॥

मराडूकः-शालूरः स यथा उत्प्लुत्य गच्छति, एवं निर्ग्रन्थसूत्रान्निर्ग्रन्थीसूत्रं विसदृशमिति मराडूकगतिसदृशं तत उक्तम् । द्वितीयसूत्रस्याधिकारप्रस्तावो मराडूकगतिसदृश । तथा ' सपुडतो वा ' इत्यादि, यथा द्वे फलके एकसंपुट इत्युच्यते, एवं निर्ग्रन्थसूत्रात् द्वितीयं निर्ग्रन्थीसूत्रं संपुटसदृशं भवति । तत उक्तं द्वयोरपि सूत्रयोः संपुटक इति निर्ग्रन्थसूत्रादनन्तरं निर्ग्रन्थीसूत्रमुक्तं भवति । विशेषोपलम्भो वा इति । ' जे निग्गंथा निग्गंथीओ य संभोगिया सिया " इत्यादि । यन्निर्ग्रन्थसूत्रमस्मात्तदनन्तरं निर्ग्रन्थीसूत्रं सपद्यते ततः शिष्याणा विशेषोपलम्भो भवति । दूरव्यवधाने तु न स्यात्ततो भवति विशेषोपलम्भ इति कृत्वा निर्ग्रन्थसूत्रादनन्तरं निर्ग्रन्थीसूत्रमुक्तम् एवमनेन संबन्धेनायातस्यास्य(व्या०)
( सूत्रद्वयस्यापि व्याख्या सहैवास्मिन्नेव भागे गता । )
संप्रति भाष्यकारः प्राह—

एसेव गमो नियमा, निग्गंथीणं पि होइ नायव्वो ।
जं एत्थ उ नाणत्तं, तमहं वोच्छं समासेणं ॥ ८९ ॥

यो निर्ग्रन्थस्य सूत्रस्य व्याख्यागम उक्तः , एष एव गमो निर्ग्रन्थीनामपि सूत्रे भवति-ज्ञातव्यः , केवलं यदत्र नानात्वं तदहं समासेन वक्ष्ये ।

तदेव विवक्षुः प्रथमतः प्रश्नमुत्थापयति—

किं कारणं परोक्खं, संभोगो तासु कीरई वीसुं ।
पाएण ताहि तुच्छा, पच्चक्खं भंडणं कुज्जा ॥ ९० ॥

किं कारणं केन कारणेन तासु संयतीसु परोक्षं संभोगो विष्वक् क्रियते ? । आचार्य आह-हि यस्मात्प्रायेण ताः संयत्यस्तुच्छा , ततः प्रत्यक्षं विसंभोगकरणे भण्डनं कुर्युः ।

दोण्णि वि ससंयतीया, गणिणो एगस्स वा दुवे वग्गा ।
वीसुं करणम्मि ते च्चिय, कवोयमादी उदाहरणा ॥९१॥

द्वौ गणिनावाचार्यौ समं यतिकौ परस्परं सांभोगिकौ च । अथवा—एकस्य द्वौ वर्गौ संयतवर्गः, संयतीवर्गश्चापरस्य त्वेक एव संयतवर्गः । तौ यां विसंभोगां कुरुतस्तां तैरेव चटकगृहिककपोतप्रविशनादिरूपाद्युदाहरणात् प्रागुक्तप्रकारेण विसंभोगा कुरुत इत्यर्थः ।

कथमित्याह—

पडिसेवितं तु नाउं, साहंती अप्पणा गुरूणं तु ।
ते च्चिय वाहरिऊणं, पुच्छंति य दो वि सब्भावं ॥९२॥

काश्चित् संयत्यः कासांचित्संयतीनां प्राघूर्णकागतास्ताभिश्च पूर्वप्रकारेण प्रथमालिका कृता, जाता शय्यातरपिण्डाऽऽशङ्का । अथवा हरितोपलिप्तायां वसतौ स्थिताः, यदि वा—सदीपायां, ततस्ताभिरागत्य निजप्रवर्त्तिन्याः कथितम्; यथा—एताः शय्यातरपिण्डमासेवन्ते प्रतिदिवसं हरितोपलिप्तायां वसतौ वसन्ति, सदीपायां चेति । सा प्रवर्त्तिनी तन्मुखात् प्रतिसेवितुमिति ज्ञात्वा ताभिः सह गत्वाऽऽत्मनो गुरूणा कथयति । तेऽपि च गुरवो व्याहृत्य आ कार्यं द्वावपि संयतीवर्गौ सद्भावं पृच्छन्ति केवलं यदि ता एकगुरुप्रतिबद्धा , अन्यथा दोष ।

तथा चाह—

जइ ताउ एगमेगं, अहवा वी परगुरुं वइज्जाही ।
अहवा वी परगुरुतो, पवत्तिणी तीसु वी गुरुगा ॥९३॥

यदि यकाभि प्रतिसेवितं शय्यातरपिण्डादि, यकाभिश्च प्रतिसेवितं ज्ञात्वा गुरुभ्यः कथितं ता यदि एकैकमाचार्यमाश्रिताः, अथवा—आत्मीया अपि सत्यः शय्यातरपिण्डाद्यासेविन्यः परं गुरून् कुतश्चित्कारणात् व्रजेयुः प्रतिपन्नाः, यदिवा—सा प्रवर्त्तिनी यत्संयतीभिः शय्यातरपिण्डाद्यासेवितं तासां परगुरुत उपसंपदं प्रतिपन्ना एतासु तिसृष्वपि यद्याचार्य स्वयं पृच्छति, कोऽत्र भूतार्थ ?, इति तदा प्रायश्चित्तं चत्वारो गुरुकाः ।

किं कारणमिति चेदत आह—

भंडणदोसा हुंती, वगडासुत्तम्मि जे भणिय पुव्विं ।
सयमवि य वीसु करणे,गुरुगा-वाबल्लया कलहो ॥९४॥

तासां तिसृणामपि स्वयं प्रच्छन्ने भण्डनदोषा भवन्ति, ये भणिताः पूर्वं कल्पाध्ययने प्रथमोद्देशके वगडासूत्रे ते चैव-मेतासां स्वयं प्रच्छन्ने त्रिषु स्थानेषु भण्डनम्। तानि च त्रीणि स्थानान्यमूनि—आत्मनो द्वौ गच्छौ संयतवर्गः संयतीवर्गश्च। तृतीयोऽन्याचार्यसत्काः संयताः, संयत्यश्च, एषो वा वर्गो गण्यते। भण्डनं पुनरेवं जायते ता संयत्यः परकीयरूपाः पृष्टाः सत्यो ब्रूयुर्यथा जानीमो येन दुःखापिता। इहलोकसहायतया निजप्रवर्तिन्या एवमुक्ते संयतास्ताभिः सह कलहं कुर्युः। संयतीनामपि परस्परं रण्डारात्टिर्भवति। तथा-अन्य-गच्छवर्तिनः साधवः पराचार्येण समं परसंयतैः समं परसंयतीभिश्च समं राटिं विदध्युः। यत एव दोषास्तस्मात् द्वावपि तौ संयतीवर्गावात्मन आत्मन आचार्यस्य कथयतः। यदि पुनस्ताः संयत्यः स्वयमेव विष्वक् संभोगं कुर्वन्ति तदा तासां प्रायश्चित्तं चत्वारो गुरुकाः। कस्मादिति चेदत आह—चापल्यतः—चपलतादोषेण कलहः परस्परं भूयादिति हेतोः।

पत्तेयं भूयत्थं, दोण्हं पि य गणहरो तुलेऊणं।
मिलिउं तक्खणदोसे, परिक्खितुं सुत्तनिद्देसो ॥ ६५ ॥

यत एवं दोषास्तस्मादात्मन आचार्यस्य कथनीयम्, तौ चरणधरो द्वयोरपि संयतीवर्गयोः प्रत्येकं भूतार्थं तुलयित्वा सम्यग्विज्ञाय तत एकत्र मिलित्वा तयोर्द्वयोरपि सयतीवर्गयोर्गुणदोषान्परीक्ष्य सूत्रनिर्देशः कर्त्तव्यः। स चायं यदि नानुतपति ततस्तत्रैव यत्र मिलिताः संयतीनां परोक्ष विसंभोगं कुर्वन्ति। प्रत्यक्ष संयतीनां विसंभोगकरणे तुच्छतया कलहभावात्। व्य० ७ उ०।

तओ न कप्पंति संभुंजित्तए पंडए कीवए वाइए।
(सू०-४४) वृ० ४ उ०।

('पवज्जा' शब्दे पञ्चमभागे ७७२ पृष्ठे व्याख्यात-मिदं सूत्रम्।)—(गणान्तरं संभोगप्रतिज्ञयोपसंपद्य-विहरणम् 'उवसपया' शब्दे द्वितीयभागे १०१६ पृष्ठे प्रतिपादितम्।)-(उपस्थापनायामकृतायां संभोगे दोषाः 'जड्ड' शब्देऽथैतो ४ भाग दर्शिता।) निर्ग्रन्थ्याः क्षताचारायाः प्रायश्चित्तमदत्त्वा संभोगो न कर्त्तव्य इति 'खयायार' शब्दे तृतीयभागे ७१७ पृष्ठे उक्तम्) (आर्यसुहस्तिनो विसम्भोगः 'सपइ' शब्देऽस्मिन्नेव भागे उक्तः।) (त्रिभि स्थानैः साम्भोगिकं कुर्वन्नातिक्रामति इत्युक्तं 'विसंभोइय' शब्दे षष्ठे भागे) (अन्ययूथिकैः सह सम्भोगो न कार्य इति 'अण्णउत्थिय' शब्दे प्रथमभागे ४७७ पृष्ठे उक्तम्।) तत्र परतीर्थिकैः सार्द्धं न भोक्तव्यम्, स्वयूथ्यैश्च पार्श्वस्थादिभि सहाऽसाभोगिकैः सहैवालोचना दत्त्वा भुञ्जानानामयं विधि। तद्यथा—'से तत्थ भुंजमाणे' इत्यादि सुगमम्, इति वृत्तिलेशः। ध० ३ अधि०। ज्ञानादिसद्भावे हि द्वादशविधसम्भोगपरिहारो नोपपद्यते। यत आह भगवान् भद्रबाहुस्वामी-"अड्ढाइएहिं दीवो-दहीहिं जे कम्मभूमिगा साहू। एगम्मि हीलियम्मी,ते सव्वे हीलिया होंति॥१॥" दर्श०५ तत्त्व।

संभोगकप्प-संभोगकल्प-पुं०। एकमण्डल्या सह भोजनाचारे, पं० भा०।

संभोगकप्पमेत्तो, वोच्छामि अहं समासेणं॥
पुव्वभणितो विभागो, संभोगविहीए दोहिं ठाणेहिं।
दोसु वि पसंगदोसा, सेसे अतिरेग पण्हवए॥
दसविहसत्तविहेहिं, पुव्वुत्ते तेहिं दोहिं ठाणेहिं।
दोसु वि पसंगदोसा, ण भुंजए अण्हसंभोई॥
जम्हा तु ण णज्जंती, उग्गममादी उ जे भवे दोसा।
एतेण अपरिभोगो, असणुन्ने होति वोधव्वो॥
दारं—
जं तत्थ ण वुत्तं तु, तत्थ ह वोच्छामि एतमतिरेगं।
जे तु गुणा संभोग, ते वसे ऽहं समासेणं॥
अणुकंपा संगहे चेव, लाभालाभे वि दाघता।
दावट्ठे गेलण्णे, कंतारे अंचिए गुरू॥
दारं।
वालाणुकंपणट्ठा, असहू अतरंतसंगहट्ठाए।
दारं।
केऽवि सलद्धि अलद्धी, तेसिं साहिण्हयट्ठाए।
दारं।
उप्पण्णे अहिगरणे, काहिंति वि ओसणं तु अविदाहि।
ण य गच्छे वहिभावे, उप्परओ हं ति परिभूतो॥
दारं।
मज्झं अणेकभाणे, ति काउमाएस पेच्छती पुव्विं।
जत्थ उ कुले महल्ले, लब्भति भिक्खा महल्ली तु॥
तम्हा उ दवदवस्स, पुव्विं गच्छामहं तु तं गेहं।
एते तु परिहरीता, दोसा हु भवंति सभोगे॥
गेलण्णे खवए तस्स, हिंमंतू आणियं तु अण्णेहिं।
भोक्खति य साहुवग्गो, कंतारे आणितं तु साहूहिं॥
दारं।
एमेव अंचिए वी,(दारं)गुरू वि गेण्हति तु अन्नमन्नस्स।
एक्को पुण परितम्मति, वाहिरभावं च गच्छेज्जा॥
एते उ एवमादी, संभोगम्मि उ गुणा भवन्ती उ।
तम्हा खलु कायव्वो, संभोगगुणन्निएण गगं॥
एताइं ठाणाइं, जो तु महू होति उ पमादि त्ति।
अन्ने आणेति त्ति, घेत्तूणं जं च तं नेत्ति॥
सेमाणुवालणट्ठा, तो त उम्मंडलि करेंती तु।
जदि आउट्टति वज्जति,ताहे मेलंजति पुणो वि॥
अह पुण चोइज्जंतो, बहुसो णाउट्टए उ तं दोसं।
सविलाभलद्धिजुत्तो, णिज्जूहती तु तं ताहे॥
अह मंदलाभलद्धी-ण जो तं णिज्जूहति अहन्यामं।
सो वि खग्गेऊणं, मेलिज्जति मंडलीए तु॥
किं कारणं निज्जुहणा, जं माहूणं गुणुत्तरभगणं।

ण करोती वच्छल्लं, तेण उ णिज्जूहणा तस्स ॥
एवं आयरिएण तु, जोगो सव्वस्स चेव गच्छस्स ।
वोढव्वो दिट्ठंतो, गतेण इत्थं इमो होति ॥
जह गणकुलसंभूओ, गिरिकंदरविसमकडगदुग्गेसु ।
परिवहति अपरितंतो, नियसरीरोग्गते दंते ॥
तह पवयणभत्तिगतो, साहम्मियवच्छलो असढभावो ।
परिवहति अपरितंतो, खेत्तविसमकालदुग्गेसु ॥
जदि एक्कभाणजिमिता,गिहिणो वि य दीहमेत्तिया होंति।
जिणवयणबहिब्भूता, धम्मं पुण्णं अयाणंता ॥
किं पुण जगजीवसुहा-वहेण संभुंजिऊण समणेणं ।
सक्का हु एक्कमेक्को, णियओ वि वरिक्खितुं देहो ॥
केरिसयं वा वित्तू-णं संभुंजे त्ति वावि भन्नत्ति ।
उग्गमसुद्धं भुंजे, तहा असुद्धं ण भुंजेज्जा ॥
वोंदे आहारादि, उग्गममाइं असुद्ध मा भुंजे ।
जं पुण अपेहणादी, कालादीहिं उवहयं तु ।
तं पुण सुद्धोवहिणा, मासमयं एक्कहिं तु बंधेज्जा ।
संघासेणं तस्स तु, उवघातो मा हु सुद्धस्स ॥
भण्णति सुद्धस्स जदी, संघासेणं तु होति उवघातो ।
सुद्धेण असुद्धस्स वि, पावति सुद्धी तवमएणं ॥
अह उवघातो त्ति मतं, संफासेण तु मता विसोही उ ।
तेणुत्ते (इ)च्छाछित्ते-ण य इच्छामेत्तओ सिद्धी ॥
उवघातो वि विसोही, णत्थि अजीवस्स भावतो एसो ।
उवघातो विसोही वा, परिणामवसेण जीवस्स ॥
तस्सेव पसत्थेसु तु, परिणामस्स अह रक्खणट्ठाए ।
कीरति संभोगविही, गच्छपमोत्ते गमा गच्छे ॥
संभोगदारं गतं । पं० भा० ४ कल्प । पं० चू० ।

संभोगपचक्खाण-संभोगप्रत्याख्यान-न० । स्वपरलाभमीलनात्मकेन भोगः सम्भोगः, एकमण्डलीभोक्तृत्वमिति यो ऽर्थस्तस्य यत् प्रत्याख्यानं-जिनकल्पादिप्रतिपत्त्या परिहारस्तत्तथा । गीतार्थावस्थाया जिनकल्पाचारग्रहणेन परिहारे, उत्त० ।

एतत्फलम्-

संभोगपच्चक्खाणेणं भंते!जीवे किं जणयइ ?, सम्भोगपच्चक्खाणेणं आलंवणाइं खवेइ, निरालम्बणस्स य आयतट्ठिया जोगा भवन्ति । सएणं लाभेणं संतुस्सइ, परलाभं नो आसाएइ नो तकेइ नो पीहेइ नो पत्थेइ नो अहिलसइ । परस्स लाभं अणासाएमाणे अतक्केमाणे अपत्थेमाणे अणभिलसमाणे दोच्चं सुहसिज्जं उवसम्पज्जित्ता णं विहरइ ॥ ३३ ॥

हे भदन्त ! -सम्भोगप्रत्याख्यानेन-एकमण्डल्या स्थित्वा आहारस्य करणं संभोगस्तस्य प्रत्याख्यानेन उत्कृष्टत्वेन पृथगाहारकरणेन जीवः किं फलं जनयति ?, तदा गुरुराह-हे शिष्य!संभोगप्रत्याख्यानेन आलम्बनानि क्षपयति;यतोऽहं ग्लानोऽस्मि रोग्यस्मि इत्यादि कथनानि क्षपयति धीरो भवति इत्यर्थः । निरालम्बनस्य च आयतार्था योगा भवन्ति । आयतो-मोक्षः स एव अर्थः-प्रयोजनं येषां ते आयतार्थाः, एतादृशा ये योगा. मनोवाक्काययोगा. भवन्ति । स्वेन लाभेन सन्तुष्यति, परस्य लाभं न आस्वादयति न वाञ्छति । ततश्च परस्य लाभाशो तर्कयति, मह्यं दास्यतीति मनसा न विकल्पयति, नो स्पृहयति-परलाभे श्रद्धालुतया स्वस्य स्पृहां न प्रकटीकरोति । पुनः परस्य लाभं न प्रार्थयति-मह्यं देहीति न याचते । यत इदं पुनर्न अभिलषति-परस्य लालसापूर्वकं न वाञ्छति । अथ परस्य लाभं ' अणासाएमाणे ' अनास्वादयन् अतर्कयन् अनीहमानः अप्रार्थमानः अनभिलषन् द्वितीयां सुखशय्यामुपसंपद्य विहरति-अपरेभ्यः साधुभ्यः पृथक् उपाश्रयमङ्गीकृत्य प्रवर्तते । यादृशी स्थानाङ्गे उक्तास्ति तां प्रतिपद्य विहरति । अत्र हि एते शब्दा एकार्थाः प्रतिपादिताः, तत अनेकदेशीयशिष्याणां प्रतिबोधनार्थं पर्यायत्वेन प्रतिपादिताः । उत्त० २९ अ० ।

संभोगवत्तिया-सम्भोगप्रत्यया-स्त्री० । सम्भोगनिमित्ते कर्मसम्बन्धे, नि० चू० ५ उ० । ( ' संभोग ' शब्देऽस्मिन्नेव भागे दर्शिता । )

संमज्जग-सम्मज्जक-पुं० । उन्मज्जनस्यैवासकृत्करणेन ये स्नान्ति तेषु वानप्रस्थेषु, भ० ११ श० ९ उ० ।

संमज्जण-सम्मार्जन-न० । दण्डप्रच्छादिना ( अनु० ) जलेन वा शोधने, भ० ११ श० ९ उ० । सम्मार्जन्या कचवरापनयने वसति प्रतिकर्मणि, व्य० ४ उ० ।

संमज्जणी-सम्मार्जनी-स्त्री० । कचवरापनयनकारिकायाम् , व्य० ४ उ० ।

समज्जिअ-सम्मार्जित-त्रि० । प्रमार्जनिकादिना (भ०१ श०३३ उ० । ) अपहृतकचवरे, प्रज्ञा० १ पद । कल्प० । ज्ञा० । जी० । कचवरशोधिते, आ० म० १ अ० । जी० । वस्त्रादिनार्द्रतामपनयनीये, आचा० २ श्रु० १ चू० १ अ० ४ उ० ।

संमज्जिया-सम्मार्जिका-स्त्री० । गृहस्यान्तर्बहिश्च बहुकरिकावाहिकायाम्, ज्ञा० १ श्रु० ७ अ० ।

संमट्ठ-संमृष्ट-त्रि० । कचवरापनयनेन ( ज्ञा० १ श्रु० १ अ० । औ० ) प्रमार्जिते, ग० १ अधि० । भूमिकर्मादिना संस्कृते, आचा० २ श्रु० १ चू० २ अ० १ उ० ।

संमि (ल्ल)ल-सम्मील-धा० । सङ्कोचे, "प्रादेर्मीले. ।" ॥ ८।४। २३२ ॥ अनेन प्रादे' परस्य मीलेरन्त्यस्य वा द्वित्वम् । संमिलइ । संमिल्लइ । सम्मीलति । प्रा० ४ पाद ।

संमुइ-संमुचि-पुं० । जम्बूद्वीपे आगामिन्यामुत्सर्पिण्यां भविष्यति षष्ठे कुलकरे, स्था० १० ठा० ३ उ० ।

संमुच्छिमम‌णुस्स-सम्मूर्छिममनुष्य-पुं० । मनुष्यभेदे, प्रज्ञा० १ पद । ( व्याख्या ' मणुस्स ' शब्दे षष्ठे भागे द्रष्टव्या । )

संमुत्त-संमुक्त-पुं० । माण्डवगोत्रावान्तरगोत्रविशेषप्रवर्त्तके पुरुषे, स्था० ७ ठा० ३ उ० ।

संमुसमाण-सम्मृशत्-त्रि० । सामस्त्येन स्पृशति, भ० ८ श० ३ उ० ।

संमुह-सम्मुख-त्रि० । अभिमुखे, सूत्र० १ श्रु० १५ अ० ।

संमुहागय-सम्मुखागत-त्रि० । सम्मुखे स्थिते, जं० १ वक्ष० ।

संमुहीभूय-सम्मुखीभूत-त्रि० । अभिमुखीभूते, सूत्र० १ श्रु० १५ अ० ।

संमूढ-सम्मूढ-त्रि० । समिति-भृशं मूढा वैचित्त्यमुपगता. सम्मूढाः । उत्त० ३ अ० । मोहजालेन मोहं गतेषु, तं० ।

संमोहभावणा-संमोहभावना-स्त्री० । पञ्चमभावनाभेदे, प्रव० ७३ द्वार । ( व्याख्या पञ्चमभागे ' भावणा ' शब्दे गता । )

संरंभ-संरम्भ-पुं० । विनाशसंकल्पे, भ० ३ श० ३ उ० । स्था० । विशे० । ' संकप्पो संरम्भो ' प्राणातिपातं करोमीति यः संकल्पोऽध्यवसाय' स संरम्भः । आह च चूर्णिकृत्-पाणाइवायं करोमि त्ति जो सकप्पं करेइ चिन्तयतीत्यर्थः । व्य० १ उ० । (पञ्चमभागे 'पडिसेवणा' शब्दे ३३४ पृष्ठे एतत्प्रायश्चित्तमुक्तम् । ) परजीवस्य विनाशनसमर्थे दुष्टविधाना गुणने, उत्त २४ अ० । इष्टानिष्टप्राप्तिपरिहाराय प्राणातिपातादिसंकल्पविशेषे, आचा० १ श्रु० २ अ० ५ उ० । विषयादिषु तीव्राभिलाषे, आतु० । क्रोधे, "सरभो अमरिसो मन्नू" पाइ० ना० १६१ गाथा ।

संरंभज्झाण-संरम्भध्यान-न० । संरम्भो-विषयादिषु तीव्राभिलाषस्तस्य ध्यानम् । जनन्युपरोधतो वर्त पालयतोऽपि विषयाभिलाषिण' क्षुल्लककुमारस्येव दुर्ध्याने, आतु० ।

संरक्खण-संरक्षण-न० । सर्वैर्मारणाद्यैरुपायैः । करादिभ्यो निजवित्तस्य सङ्गोपने, विशे० । सर्वोपायैः परित्राणे रौद्रध्यानभेदे, स्था०४ ठा०१ उ० । आपद्. संगोपने, सूत्र० १ श्रु० १४ अ० । परिपालने, आव० १४ अ० ।

संरक्खय-संरक्षक-पुं० । नानाव्यसनेभ्यः सङ्गोपके, सूत्र० १ श्रु० १ अ० ।

संरोहणी-संरोहणी-स्त्री० । संरोहणकारिकायामौषध्याम् , आ० म० १ अ० ।

संलप्प-संलप्य-त्रि० । संलपितुं शक्ये, अनु० ।

संलवण-संलपन-न० । मिथो भाषणे, स्था० ४ ठा० २ उ० ।

संलवमाण-संलपत्-त्रि० । मिथो भाषमाणे, स्था० ४ ठा० २ उ० । स्त्रियाम्—'सलवमाणी' । कल्प० १ अधि० ३ क्षण ।

संलवित्तए-संलपितुम्-अव्य० । पुनः पुन संलापं कर्तुमित्यर्थे, प्रति० । उपा० ।

संलाव-संलाप-पुं० । मिथःकथाद्यालापे,सूत्र०१श्रु०४अ०१उ० । पुन पुनर्जल्पने, सूत्र० १ श्रु० १६ अ० । आव० । संलाप पुनः पुन सभाषणम् । भ० ३ श० १ उ० । मुहुर्मुहुर्जल्पने, भ० ३ श०१उ० । प्रीत्या सह सकाममुहुर्मुहुर्मिथःप्रत्यर्पणात्मकं परस्परसम्भाषणे, जी० ३ प्रति० ४ अधि० । औ० । ज्ञा० । जं० । प्रियया सह सप्रमोद सकाम परस्परं सकथायाम् , चं० प्र० २० पाहु० । सू० प्र० । 'संलापो भाषणं मिथ' इति वचनात् । स्था०७ठा०३ उ० । मिथ कथारूपे,ध० २ अधि० । ( 'णिग्गंथी' शब्दे चतुर्थभागे २०४६ पृष्ठे सूत्रं तद्व्याख्या च गता । )



संलावक्कीव-संलापक्लीव-पुं० । सम्भाषणनपुंसके , संलावकीवा जो अवसससलवियव्वे परम्मुहो संलवति । नि० चू० ४ उ० ।

संलिहण-संलेखन-न० । ईषल्लेखने, दश० ८ अ० ।

संलिहणकप्प-संलेखनकल्प-पुं० । पात्राणां संलेखनपूर्वकधावने, औ० । ( वक्तव्यता 'भोयण' शब्दे पञ्चमभागे द्रष्टव्या । भोजनान्तेऽयं विधिरुक्तः । )

संलिहित्ताणं-संलिख्य-अव्य० । प्रदेशिन्या निरवयवं कृत्वेत्यर्थे, दश० ५ अ० २ उ० ।

संलिहिय-संलिख्य-अव्य० । निर्लिप्तीकृत्वेत्यर्थे, कल्प० ३ अधि० ६ क्षण । निरवयवं कृत्वेत्यर्थे,-आचा० २ श्रु० १ चू० १ अ० ४ उ० ।

संलिखित-त्रि० । संलेखनविधिना शोषिते , तच्च त्रिधा—आहारा., शरीरम् , उपधिश्च । वृ० ३ उ० ।

संलीण-संलीन-त्रि० । एकाश्रयस्थे , दश० ३ अ० । उत्त० । संवृते , प्रव० ६ द्वार ।

संलीणया-संलीनता-स्त्री० । संलीनस्य—संवृतस्य भाव. संलीनता । पञ्चा० १६ विव० । अङ्गोपाङ्गादि संवृत्य प्रवर्त्तने, उत्त० ३० अ० । दश० । प्रव० । नं० । स० । संलीनता गुप्तता, सा चेन्द्रियकषाययोगविषया विविक्तशय्यासनता चेति चतुर्द्धा । ध० २ अधि० । ग० । उत्त० ।

अथ संलीनतामाह—

एगन्तमणावाए, इत्थीपसुविवज्जिए ।
सयणासणसेवणया, विवित्तसयणासणं ॥ २८ ॥

एकान्ते—जनैरनाकुले पुनरनापात न विद्यते आपातः स्त्रीपुरुषादीनामागमनं यत्र तत् अनापात तस्मिन् पुन. पशुपण्डकादिविवर्जिते आरामोद्यानशून्यगृहादिस्थाने शयनासनसेवनया कृत्वा संलीनताख्यं तपो ज्ञयमित्यर्थः । उत्त० ३४ अ० ।

संलुंचमाण-संलुच्यमान-त्रि० । इतश्चेतश्च भज्यमाने, आचा० १ श्रु० ८ अ० ३ उ० ।

संलेह-संलेख-पुं० । चवलप्रथमभागे शरीरायशोपणार्थेमाहारे, वृ० ५ उ० ।

संलेहणा-संलेखना-स्त्री० । उद्वलने, आचा० १ श्रु० १ अ०२ उ० । संलिख्यतेऽनया शरीरकषायादीनि संलेखना । तपोविशेषे, स्था० २ ठा० २ उ० । सूत्र० । शरीरशोषणायाम् ,प्रव०१ द्वार । आगमोक्तेन विधिना शरीरादिपरित्यागे , प्रव० १३४ द्वार । कषायशरीरकृशनायाम् , स्था० १ श्रु० १ अ० । औ० ।

आगमप्रसिद्धचरमानशनविधिक्रियायाम् , पञ्चा० १ विव० । सा जघन्या मध्यमा उत्कृष्टा च । व्य० १० उ० ।

साम्प्रतं 'संलेहणा दुवालसवरिसे' त्ति चतुस्त्रिंशदुत्तरशततम द्वारमाह-

चत्तारि विचित्ताइं, विगई निज्जूहियाइँ चत्तारि ।
संवच्छरे य दोन्नि, एगंतरियं च आयामं ॥८८२॥
नाइविगिट्ठो य तवो, छम्मासे परिमिश्रं च आयामं ।
अवरे वि य छम्मासे, होइ विगिट्ठं तवो कम्मं ॥८८३॥
वासं कोडीसहियं, आयामं कट्टु आणुपुव्वीए ।
गिरिकंदरं व गंतुं, पाउवगमणं पवज्जेई ॥८८४॥

'चत्तारि विचित्ताइं'इत्यादि गाथात्रयम् , संलेखने-संलेखना आगमोक्तेन विधिना शरीराद्यपकर्षणम् , सा च त्रिविधा-जघन्या षाण्मासिकी , मध्यमा संवत्सरप्रमाणा, उत्कृष्टा तु द्वादश वर्षाणि । तत्रोत्कृष्टा तावदेवं प्रथमं चत्वारि वर्षाणि विचित्राणि विचित्रतपांसि करोति । किमुक्तं भवति-चत्वारि वर्षाणि यावत्कदाचिच्चतुर्थम् , कदाचित्षष्ठम् , कदाचिदष्टममेवं दशमद्वादशादीन्यपि करोति,पारणकं च सर्वकामगुणितेनोद्गमादिशुद्धेनाहारेण विधत्ते । ततः परमन्यानि चत्वारि-वर्षाणि उक्तप्रकारेण विचित्रतपांसि करोति, विकृति-निर्व्यूहितानि-विकृतिरहितानि । किमुक्तं भवति—विचित्रं तपः कृत्वा पारणके निर्विकृतिकं भुङ्क्ते उत्कृष्टरसवर्जं च । ततः परतोऽन्ये द्वे च वर्षे एकान्तरितमाचाम्लं करोति, एकान्तरं चतुर्थं कृत्वा आचाम्लेन पारयतीत्यर्थः । एवमेतानि दशवर्षाणि गतानि । एकादशस्य तु वर्षस्याद्यान् षण्मासान् नातिविकृष्टं नातिगाढं तपः करोति । नातिविकृष्टं नाम तपश्चतुर्थं षष्ठं वाऽवसेयं नाष्टमादिके , पारणके तु परिमितं किञ्चिदूनोदरतासम्पन्नमाचाम्लं करोति । ततः परमपरान् षण्मासान् विकृष्टमष्टमदशमद्वादशादिकं तपः कर्म भवति, पारणके तु मा शीघ्रमेव मरणं यासिषमिति कृत्वा परिपूर्णमाचाम्लं करोति, न पुनरूनोदरतयेति । द्वादशं तु वर्षे कोटीसहितं निरन्तरमाचाम्लं करोतीत्यर्थः । उक्तं च निशीथचूर्णौ-' दुवालसमं वरिसं निरन्तरं हायमाणं उसिणोदएण आयंबिलं करेइ, तं कोडीसहियं भवइ , जेणायंबिलस्स कोडी-कोडीए मिलइ' त्ति चतुर्थं कृत्वा आचाम्लेन पारयति, पुनश्चतुर्थं विधायाचाम्लेनैव पारयतीत्यादीन्यपि बहूनि मतान्तराणि द्वादशस्य वर्षस्य विषये वीक्ष्यन्ते, परं ग्रन्थगौरवभयान्नात्र लिखितानीति । इह च द्वादशे वर्षे भोजनं कुर्वन् प्रतिदिनमेकैककवलहान्या तावदूनोदरतां करोति यावदेकं कवलमाहारयति । ततः शेषेषु दिनेषु क्रमशः एकेन सिक्थेनोनमेकं कवलमाहारयति, द्वाभ्यां सिक्थाभ्यां त्रिभिः सिक्थैरेव यावदन्ते एकमेव सिक्थं भुङ्क्ते , यथा दीपे समकालं तैलवर्त्तिक्षयो भवति, तथा शरीरायुषोरपि समकं क्षयः स्यादिति हेतो ।अपरं च-द्वादशस्य वर्षस्य पर्यन्तवर्तिनश्चतुरो मासान् यावदेकान्तरितं तैलगण्डूषं चिरकालमसौ मुखे धारयति,ततः खेलमल्लके भस्ममध्ये प्रक्षिप्य मुखमुष्णोदकेन शोधयति । यदि पुनस्तैलगण्डूषविधानं न कार्यते तदा रूक्षत्वात्तेन मुखयन्त्रमीलनसम्भवे पर्यन्तसमये नमस्कारमुच्चारयितुं न शक्नोति, तदेवमनया आनुपूर्व्या क्रमेण द्वादशवार्षिकीमुत्कृष्टां संलेखनां कृत्वा गिरिकन्दरं गत्वा उपलक्षणमेतदन्यदपि षट्कायोपमर्दरहितं विविक्तं स्थानं गत्वा पादपोपगमनं, वाशब्दाद् भक्तपरिज्ञामिङ्गिनीमरणं च प्रपद्यते । मध्यमा तु संलेखना पूर्वोक्तप्रकारेण द्वादशभिर्मासैः,जघन्या च द्वादशभिः पक्षैः परिभावनीया । वर्षस्थाने मासान् पक्षांश्च स्थापयित्वा तपोविधिः । प्रागिव निरवशेष उभयत्रापि भावनीय इति भावः । प्रव० १३४ द्वार । नि० चू० । स० । पं० व० । आ० चू० ।

विस्मृतसंलेखनाविधिः—

संलेहणा इहं खलु, तवकिरिया जिणवरेहिँ पण्णत्ता ।
जं तीएँ संलिहिज्जइ, देहकसायाइ णिश्रमेणं ॥१३६६॥

संलेखना इह खलु प्रक्रमे तपःक्रिया विचित्रा जिनवरैः प्रज्ञप्ता । किमित्याह—यद्यस्मात्तया संलिख्यते कृशीक्रियते देहकषायादि बाह्यमान्तरं च नियमेनेति गाथार्थः ।

अतिप्रसङ्गपरिहारमाह—

ओहेणं सव्व च्चिय-तवकिरिश्रा जइ वि एरिसी होइ ।
तह वि अ इमाऽवसिट्ठा,घिप्पइ जा चरिमकालम्मि१३६७

ओघेन सामान्येन सर्वैव तप क्रिया आदित आरभ्य यद्यपीदृशी देहकषायादिसंलेखनात्मिका भवति तथापि चैषा प्रस्तुतावशिष्टा गृह्यते, तपःक्रियया चरमकाले देहत्यागायेति गाथार्थः ।

एतदेवाह—

परिवालिऊण विहिणा, गणिमाइपयं जईणमिश्रमुचिश्रं ।
अब्भुज्जओ विहारो,अहवा अब्भुज्जयं मरणं ॥१३६८॥

परिपाल्य विधिना सूत्रोक्तेन गणयादिपदम् आदिशब्दाद्—उपाध्यायादिपरिग्रहः, यतीनामुचितमिदं चरमकाले यदुताभ्युद्यतो विहारो जिनकल्पादिरूपः, अथवा-अभ्युद्यतं मरणं पादपोपगमनादीति गाथार्थः ।

एसो अ विहारो विह, जम्हा संलेहणासमो चेव ।
ता ण विरुद्धो णेओ, एत्थं संलेहणादारे ॥ १३६६ ॥

एष च विहारोऽभ्युद्यतः; यस्मात् संलेखनासमो वर्त्तते तत्तस्माद्व विरुद्धो ज्ञेयोऽत्र प्रस्तुते सलेखनाद्वारे भण्यमान इति गाथार्थः ।

भणिऊण इमं पढमं, लेसुद्देसेण पच्छश्रो वोच्छं ।
दाराणुवायगं चिश्र, सम्मं अब्भुज्जश्रं मरणं ॥१३७०॥

भणित्वा एनमभ्युद्यतविहारेण प्रथमं लेशोद्देशेन--संक्षेपेण पृष्ठतः-ऊर्ध्वं वक्ष्ये, द्वारानुपात्येव प्रस्तुतमित्यर्थः । सम्यक्सिद्धान्तनीत्याऽभ्युद्यतं मरणमिति गाथार्थः ।

तत्र द्वारगाथामाह-

अव्वोच्छित्तीमिण पं-चतुलणउवगरणमेव परिकम्मो ।
तवसत्तसुएगत्ते, उवसग्गसहे अ वडरुक्खे ॥ १३७१ ॥

अव्यवच्छित्तिमिन' प्रयुङ्क्ते, तथा पञ्चानामाचार्यादीनां तुलना स्वयोग्यविषया उपकरणमेवेति वक्तव्यमुचितं, परि-

कर्मेन्द्रियादिजय तपःसत्त्वश्रुतैकत्वे उपसर्गसहश्चेति । पञ्च भावना भवन्तीत्यर्थः । वटवृक्ष इत्यपवादात्तदेव प्रतिपद्यत इति गाथार्थः ।

व्यासार्थमाह-

सो पुव्वावरकाले, जागरमाणे उ धम्मजागरिअं ।
उत्तमपसत्थझाणे, हिअएण इमं विचिंतेइ ॥ १३७२ ॥

स गणी वृद्धः सन् पूर्वापरकाले सुप्तः सुप्तोत्थितो वा रात्रौ जाग्रत् धर्म्मजागरिकां धर्म्मचिन्तां कुर्व्वन्नित्यर्थः, उत्तमप्रशस्तध्यानः प्रवृद्धशुभयोगहृदयेनेदं वक्ष्यमाणं वस्तु विचिन्तयतीति गाथार्थः ।

अणुपालिओ उ दीहो, परिआओ वायणा तहा दिया ।
णिप्फाइआ य सीसा, मज्झ किं संपयं जुत्तं ॥१३७३॥

अनुपालित एव दीर्घः पर्यायः प्रव्रज्यारूपः , वाचना तथा दत्ता उचितेभ्यः,निष्पादिताश्च शिष्याः, कृतऋणमोक्षस्य मम किं साम्प्रतं युक्तमेतच्चिन्तयतीति गाथार्थः ।

किंकिन्नु विहारेणा-ब्भुज्जएण विहरामणुत्तरगुणेणं ।
उअ अब्भुज्जयसास-णेण विहिणा अणुमरामि॥१३७४॥

केन विहारेणाभ्युद्यतेन जिनकल्पादिना वा विहरामि?उत्तरगुणेनैतत्कालापेक्षया उताभ्युद्यतशासनेन विधिना सूत्रोक्तेन अनुम्रिये इति गाथार्थः ।

पारद्धा वोच्छित्ती, एहिं उचियकरणा इहरआ उ ।
विरसावसाणऊणो, इत्थं दारस्स संपाओ ॥१३७५॥

प्रारब्धा व्यवस्थितिः प्रव्रज्यानिर्वहणमखण्डम् , इदानीमुचितकरणाद्भवति , इतरथा तु तदकरणे विरसावसानतः कारणाच्च प्रारब्धा व्यवस्थितिस्तन्न्यूनत्वादिति । अत्र द्वारस्य व्यवस्थितिमिनःसंजितस्य संपात इति गाथार्थः । पं० व० ४ द्वार।

संलेहणापुरस्सर-मेअं पाएण वा तयं पुव्विं ।
वोच्छं तओ कमेणं, समासओऽब्भुज्जयं मरणं ।१५७३।

संलेखनापुरस्सरमेतत्प्रायशः पादपविशेषं मुक्त्वा तत्ते पूर्वे वक्ष्ये संलेखनाम् , ततः क्रमेणोक्तरूपेण समासतोऽभ्युद्यतमरणं वक्ष्ये इति गाथार्थः ।

चत्तारि विचित्ताइं, विगईणिज्जूहिआइं चत्तारि ।
संवच्छरे उ दोण्णि उ, एगंतरिअं च आयामं ॥१५७४॥

चतुरः संवत्सरान् विचित्राणि तपांसि करोति षष्ठादीनि तथा विकृतिनिर्यूढानि निर्विकृतिकानि चतुर एव, संवत्सरौ द्वौ च तदूर्द्ध्वमेकान्तरितमेवं च नियोगत आयामं तप करोतीति गाथार्थः ।

णाइविगिट्ठो अ तवो, छम्मासे परिमिअं च आयामं ।
अणे वि अ छम्मासे, होइ विगिट्ठं तवोकम्मं ॥१५७५॥

नातिविकृष्टं च तप चतुर्थादि षण्मासान् करोति । तत ऊर्द्ध्वं परिमितं चायामं तत्पारणक इति तैलगण्डूषधारणं च, मुखभङ्गे अन्यान्यपि च षण्मासान् अत ऊर्ध्वं भवति विकृष्टमेव तप कर्मेति गाथार्थः ।

वासं कोडीसहियं, आयामं तह य आणुपुव्वीए ।
संघयणादणुरूवं, एत्तो अद्धाइ नियमेण ॥१५७६॥

वर्षकोटीसहितमायामं तथा चानुपूर्व्या एवमेव संहननाद्यनुरूपम्, आदिशब्दाद्-शक्त्यादिग्रह ,अत ऊर्ध्वतकालाद्र्धादि अर्द्धमत्यर्द्धत्वान्नियमेन करोति,इह च कोटीसहितमित्यत्र वृद्धा ब्रुवते-"पट्ठवगओ य दिवसो, पच्चक्खाणस्स निट्ठवगओ य। जहियं समिंति दोण्णि उ,तं भण्णइ कोडिसहियं तु॥१॥" भावत्थो पुण इमस्स जत्थ पच्चक्खाणस्स कोणो कोणो य मिलयइ । कहं?गोसे आवस्सए अब्भत्तट्ठो गहियो, अहोरत्त अत्थिऊण पच्छा पुणरवि अब्भत्तं करेइ, बीयस्स पट्ठावणा पढमस्स निट्ठावणा एवं दो वि कोणा एगट्ठ दो वि मिलिया । अट्ठमादिसु दुगहउ कोडिसहियं, जो चरिमदिवसो तस्स वि एगा कोडी एवं आयंविलनिव्विइयएगासणएगट्ठाणाणि वि । अहवा इमो अण्णो विही-अब्भत्तट्ठ कयं, आयंबिलेण पारिय पुणरवि अब्भत्तट्ठं करेइ आयंबिल च । एवं एगासणगाईहि वि संजोगा कायव्वा , णिव्विगतिगाइसु सव्वेसु सरिसेसु य एत्थ आयंबिलेणाहिगारो " त्ति गाथार्थः ।

इत्थमसंलेखनायां दोषमाह—

देहम्मि असंलिहिए, सहसा धाऊहिँ खिज्जमाणेहिं ।
जायइ अट्टज्झाणं, सरीरिणो चरमकालम्मि ॥१५७७॥

देहे असंलिखिते सति सहसा धातुभिः क्षीयमाणैर्मांसादिभिर्जायत आर्त्तध्यानम्-असमाधिः शरीरिणश्चरमकाले-मरणसमय इति गाथार्थः ।

विहिणा उ थोवथोवं, खविज्जमाणेहिं संभवइ णेअं ।
भवविडविबीअभूअं, इत्थ य जुत्ती इमा णेआ॥१५७८॥

विधिना तु शास्त्रोक्तेन स्तोकस्तोकं क्षयमाणैर्धातुभिः संभवति नैतदार्त्तध्यान भवविटपिबीजभूतमेतदत्र युक्तिरियं ज्ञेयाऽसंभवे इति गाथार्थः ।

कथं जय इत्याह—

सइसुहभावेण तहा, थोवविवक्खत्तणेण णो बाहा ।
जायइ बलेण महया, थेवस्सारंभभावाओ ॥१५७९॥

सदा शुभभावस्य ' तथा ' तेन संलेखनाप्रकारेण स्तोकविपक्षत्वेन हेतुना न बाधा जायते कुत इत्याह-बलेन महता शुभभावेन तेन स्तोकस्य दुःखस्यारम्भभावादिति गाथार्थः ।

उवक्कमणं पुण एवं, सम्पडिआरं महाबलं णेयं ।
उचिआणामंपायण,सइ सुहभावं विसेसेणं ॥१५८०॥

उपक्रमणमेव धात्वादीनां सप्रतीकारं भूयो वृंहणेन महाबलं ज्ञेयम् , अत्र उचितानामसंपादनेन सदा शुभभावमुपक्रमणं विशेषयति गाथार्थः ।

थोवं उवक्कमिज्जं, वज्झं अब्भिंतरं च एअस्स ।
जाइ इअ गो।अरत्तं, तहा तहा समयभेएणं ॥१५८१॥

स्तोकमुपक्रमणीयम् , बाह्यं मांसादि, आभ्यन्तर च अशुभपरिणामादि, एतस्योपक्रमणस्य याति एव गोचरत्वं संसेनाया तथा तथा समयभेदेन-कालभेदेनेति गाथार्थः ।

जुगवं तु खिविज्जंतं, उदग्गभावेण पायसो जीवं ।
चावइ सुहजोगाओ, वहुगुरुसेणं च सुहडं ति॥१५८२॥

युगपत्तु क्षिप्यमाणं तन्मांसादि उदग्रभावेण प्रचुरतया प्रायशो जीवं, किमित्याह–च्यावयति शुभयोगात् सकाशात् । किमिव कमित्याह–वहुगुरुसैन्यमिव सुभटं च्यावयति जयादिति गाथार्थः।

आहप्पवहणिमित्तं, एसा कह जुज्जई जइजणस्स ।
समभावविचिणो तह, समयत्थविरोहओ चेव ॥१५८३॥

आह–आत्मवधनिमित्तमेषा संलेखना कथं युज्यते ?, यतिजनस्य समभाववृत्तेः सतः, तथा समतार्थविरोधतश्चैवेति गाथार्थः।

विरोधमाह—

तिविहाऽतिवायकिरिया,अप्पपरोभयगया जओ भणिया।
वहुसो अणिट्ठफलया, धीरेहि अणंतनाणीहिं ॥१५८४॥

त्रिविधा अतिपातक्रिया , कथमित्याह—आत्मपरोभयगता यतो भणिता समये वहुशोऽनिष्टफलदेयं क्रिया धीरैरनन्तज्ञानिभिः सर्वज्ञैरिति गाथार्थः।

भणइ सच्चं एअं, ण उ एसा अप्पवहणिमित्तंति ।
तल्लक्खणविरहाओ,विहिआणुट्ठाणभावेणं ॥ १५८५ ॥

भण्यते सत्यमेतत्त्रिविधातिपातक्रियेति, नत्वेषा संलेखना क्रिया आत्मवधनिमित्तेति। कुत इत्याह—तल्लक्षणविरहात्–आत्मवधक्रियालक्षणविरहात्, विरहश्च विहितानुष्ठानभावेन हेतुनेति गाथार्थः।

जा खलु पमत्तजोगा, णिअमा रागाइदोससंसत्ता ।
आणाउ वहिब्भूआ,सा होइ अइवायकिरिआ य।१५८६।

या खलु प्रमत्तयोगात् सकाशात् नियमाद्रागादिदोषसंसक्ता स्वरूपतः आज्ञातो वहिर्भूता उच्छास्त्रा सा भवत्यतिपातक्रिया इदं लक्षणमस्या इति गाथार्थः।

जा पुण एअविउत्ता, सुहभावविवड्ढिणी अ नियमेणं ।
सा होइ सुद्धकिरिया, तल्लक्खणजोगओ चेव ॥१५८७॥

या पुनरेतद्वियुक्ता क्रिया शुभभावविवर्द्धिनी च नियमेन अवश्यतया सा भवति शुद्धक्रिया कुतस्तल्लक्षणयोगत एवेति गाथार्थः।

पडिवज्जइ अ इमं जो, पायं किअकिच्चिमो उ इह जम्मे।
सुहमरणा कियकिच्चो,तस्सेसा जायइ जहुत्ता ॥१५८८॥

प्रतिपद्यते चैनां संलेखनक्रियां यः प्रायः स कृतकृत्य एवेह जन्मनि निष्ठितार्थः सुभमरणेनात्र कृतकृत्यो यदि परं तस्यैषा जायते यथोक्ता संलेखना शुद्धक्रिया चेति गाथार्थः।

मरणपडिआरभूआ, एसा एवं च ण मरणनिमित्ता ।
जह गंडछेअकिरिआ,णो आयविराहणारूवा ॥१५८९॥

मरणप्रतीकारभूतैषा एवं चोक्तन्यायान्न मरणनिमित्ता, यथा गण्डच्छेदक्रिया दुःखरूपाऽपि नात्मविराधनारूपेति गाथार्थः।

अब्भत्था सुहजोगा, असंपन्ना पायसो जहासमयं ।
एसो इमस्स उचिओ,अमरणधम्मेहिँ निद्दिट्ठो॥१५९०॥

अभ्यस्ताः शुभयोगाः औचित्येन असंपन्नाः यथागमं प्रायशो यथासमयं यथाकालमेषोऽप्यस्य मरणं योगस्योचितः समयः, अमरणधर्मभिर्वीतरागैर्निर्दिष्टः सूत्रे इति गाथार्थः।

यतश्चैवम्—

ता आराहेमु इमं, चरमं चरमगुणसाहगं सम्मं ।
सुहभाव विवड्ढी खलु, एवमिह पवत्तमाणस्स ॥१५९१॥

यतश्चैवं तत्–तस्मादाराधयामः—संपादयामः एनं चरमं शुभयोगं चरमगुणसाधकमाराधनानिष्पादकं 'सम्यग्' आगमनीत्या, शुभभाववृद्धिः खलु कुशलाशयवृद्धिरित्यर्थः। एवमिह संलेखनायां प्रवर्त्तमानस्य सत इति गाथार्थः।

उचिए काले एसा, समयम्मि वि वण्णिआ जिणिंदेहिं ।
तम्हा तओ ण दुट्ठा,विहिआणुट्ठाणओ चेव ॥१५९२॥

उचिते काले–चरमे 'एषा' संलेखना 'समयेऽपि'–आगमेऽपि वर्णिता 'जिनेन्द्रैः'। तीर्थकरैर्यस्मात्तस्मान्न दुष्टा एषा। कुत इत्याह–विहितानुष्ठानत एव शास्त्रोक्तत्वादिति गाथार्थः।

भावमवि संलिहेई, जिणप्पणीएण झाणजोएणं ।
भूअत्थभावणाहिं, परिवड्ढइ वोहिमूलाइं ॥१५९३॥

भावमप्यान्तरं संलिखति–वशं करोति, जिनप्रणीतेनागमानुसारेण ध्यानयोगेन धर्मादिना भूतार्थभावनाभिश्च वक्ष्यमाणाभिः परिवर्द्धयति–वृद्धिं नयति बोधिमूलान्यवन्ध्यकारणानीति गाथार्थः।

एतदेवाह—

भावेइ भाविअप्पा,विसेसओ नवरँ तम्मि कालम्मि ।
पयईए निग्गुणत्तं, संसारमहासमुद्दस्स ॥१५९४॥

भावयति–अभ्येति भावितात्मा सूत्रेण विशेषतोऽतिशयेन नवरं तस्मिन्काले चरमे, किमित्याह–स्वभावेन निर्गुणत्वमसारत्वं संसारमहासमुद्रस्य भवोदधेरिति गाथार्थः।

जम्मजरामरणजलो, अणाइमं वसणसावयाइण्णो ।
जीवाण दुक्खहेऊ, कट्ठं रोद्दो य भवसमुद्दो ॥१५९५॥

जन्मजरामरणजलो वहुत्वादमीषामनादिमानित्यगाधः व्यसनश्वापदाकीर्णः. अपकारित्वादमीषां जीवानां दुःखहेतुः सामान्येन , कष्टरौद्रो–भयानको भवसमुद्रः एवंभूत इति गाथार्थः।

धण्णोऽहं जेण मए, अणोरपारम्मि नवरमेअंसि ।
भवसयसहस्सदुलहं, लद्धं सद्धम्मजाणंति ॥१५९६॥

धन्योऽहं सर्वथा येन मया 'अनर्वाक्पारे' महामहति नवरमेतस्मिन् भवसमुद्रे भवशतसहस्रदुर्लभमेकान्तेन लब्धम्—प्राप्तं सद्धर्मयानं–सद्धर्म एव यानपात्रमिति गाथार्थः।

एअस्स पहावेणं, पालिज्जंतस्स सइ पयत्तेणं ।
जम्मंतरे वि जीवा, पावंति ण दुक्खदोगच्चं ॥१५९७॥

एतस्य प्रभावेण धर्म्मयानस्य पाल्यमानस्य सदा-सर्व्वकालं प्रयत्नेन-विधिना जन्मान्तरेऽपि जीवाः-प्राणिनः प्राप्नुवन्ति न, किमित्याह-दुःखप्रधानं दौर्गत्यं दुर्गतिभावमिति गाथार्थः ।

चिंतामणी अपुव्वो, एयमपुव्वो य कप्परुक्खो त्ति ।
एअं परमो मंतो, एअं परमामयं एत्थ ॥१५९८॥

चिन्तामणिरपूर्वोऽचिन्त्यमुक्तिसाधनादेतद्धर्मयानम्, अपूर्वश्च कल्पवृक्ष इत्यकल्पितफलदानात्, एतत्परमो मन्त्रो रागादिविषघातित्वात्, एतत्परमामृतमत्रामरणावन्ध्यहेतुत्वादिति गाथार्थः ।

इच्छं वेआवडिअं, गुरुमाईणं महाणुभावाणं ।
जेसि पहावेणेअं, पत्तं तह पालिअं चेव ॥१५९९॥

इच्छामि वैयावृत्त्यं सम्यग् गुर्वादीनां, महानुभावानाम् आदिशब्दात्-सहायसाधुग्रह, येषां प्रभावेणेदं धर्म्मयानं प्राप्तं मया, तथा पालितं चैवाविघ्नेनेति गाथार्थः ।

तेसि णमो तेसि णमो, भावेण पुणो पुणो वि तेसि णमो ।
अणुवकयपरहिअरया, जे एयं दिंति जीवाणं ॥१६००॥

तेभ्यो नमः, तेभ्यो नम, भावेन अन्तःकरणेन पुनरपि तेभ्यो नम इति त्रिर्वाक्यम् । अनुपकृतपरहितरता गुरवो यत एतद्ददति जीवेभ्यो धर्म्मयानमिति गाथार्थः ।

नो इत्तो हिअमण्णं, विज्जइ भुवणे वि भव्वजीवाणं ।
जाअइ अओ वि अ जओ, उत्तरणं भवसमुद्दाओ ॥१६०१॥

नातो धर्म्मयानाद्धितमन्यद्वस्तु विद्यते भुवनेऽपि त्रैलोक्येऽपि भव्यजीवानाम्, कुत इत्याह-जायते अत एव धर्म्मयानात् उत्तरणं भवसमुद्रादिति गाथार्थः ।

एत्थ उ सव्वे ठाणा, तहखसंजोगदुक्खसयकलिआ ।
रोद्दाऽणुबंधजुत्ता, अच्चंत सव्वहा पावा ॥ १६०२ ॥

अत्र तु भवसमुद्रे सर्वाणि स्थानानि देवलोकादीनि तथाऽन्यसंयोगदुःखशतकलितानि योगावसाने विमानादीनि संयोगदुःखानीति प्रतीतम्, अत एव रौद्रानुवन्धयुक्तानि विपाकदारुणत्वादत्यन्तं सर्वथा पापान्यशोभनानीति गाथार्थः ।

किं एत्तो कट्ठयरं, पत्ताणं कहिंचि मणुअजम्मम्मि ।
जं इत्थ वि होइ रई, अच्चंतं दुक्खफलयम्मि ॥१६०३॥

किमतः कष्टतरमन्यत्प्राप्ताना कथंचित्कृच्छ्रेण मनुजजन्मन्यपि यदत्रापि भवति रतिः संसारसमुद्रे अत्यन्तं दुःखफलदे यथोक्तन्यायादिति गाथार्थः ।

भावनान्तरमाह—

तह चेव सुहुमभावे, भावइ संवेगकारए सम्मं ।
पवयणगब्भभूए, अकरणनिअमाइसुद्धफले ॥१६०४॥



तथैव सूक्ष्मभावान्-निपुणपदार्थान् भावयति । संवेगकारकान्प्रशस्तभावजनकान् सम्यग् विधानेन प्रवचनगर्भभूतान् सारभूतानित्यर्थः, अकरणनियमादिशुद्धफलान्-आदिशब्दादनुबन्धह्रासपरिग्रह इति गाथार्थः ।

परसावज्जच्चाए-जोएणं तस्स जो सयं चाओ ।
संवेगसारगुरुओ, सो अकरणणियमवरहेऊ ॥१६०५॥

परसावद्यत्यागयोगेन-व्यापारेण तस्य यः स्वयं त्यागः सावद्यस्य, किंभूत इत्याह-संवेगसारगुरु -प्रशस्तभावप्रधानः स सावद्यत्यागोऽकरणनियमवरहेतु पापाऽकरणस्यावन्ध्यहेतुरिति गाथार्थः ।

परिसुद्धमणुट्ठाणं, पुव्वावरजोगमंगयं जं तं ।
हेमघडत्थाणीअं, सयाऽवि णिअमेण इट्ठफलं ॥१६०६॥

परिशुद्धमनुष्ठानं समयशुद्धं पूर्वापरयोगसंगतं यत् त्रिकोटीशुद्धं तत् हेमघटस्थानीयं वर्त्तते, सदाऽपि नियमेनेष्टफलमपवर्गसाधनानुवन्धीति गाथार्थः ।

जं पुण अप्पडिसुद्धं, मियमयघडतुल्लमो तयं णेअं ।
फलमित्तसाहगं चिअ, ण साणुबंधं सुहफलम्मि ॥१६०७॥

यत्पुनरपरिशुद्धं समयनीत्या मृन्मयघटतुल्यमसारं हि तत् ज्ञेयं फलमात्रसाधकमेव, यथा कथंचिन्न सानुबन्धं शुभफले इतरवदिति गाथार्थः ।

धम्मम्मि अ अइआरे, सुहुमेणाभोगसंगए वि त्ति ।
ओहेण चयइ सव्वे, गरहापडिवक्खभावेण ॥१६०८॥

धर्म्मे चातिचारानपवादान् सूक्ष्मान्-स्वल्पान् अनाभोगसंगतानपि कथंचिदोघेन त्यजति सर्वान् सूत्रनीत्या गर्हाप्रतिपक्षभावेन हेतुनेति गाथार्थः ।

सो चेव भावणाओ, कयाइदुल्लसिअविरिअपरिणामो ।
पावइ सेढिं केवल-मेव मओ णो पुणो मरई ॥१६०९॥

स चैवं भावनातः सकाशात् कदाचिदुल्लसितवीर्यपरिणाम संप्राप्नोति श्रेणिं तथा केवलम् । एवं मृतकेवलात्या न पुनर्म्रियते कदाचिदर्थनिति गाथार्थः ।

जइ वि न पावइ सेढिं, तहाऽवि संवेगभावणाजुत्तो ।
णिअमेण सुगइं लहइ, तहा य जिणधम्मबोहिं च ॥१६१०॥

यद्यपि न प्राप्नोति श्रेणिं कथमपि संवेगभावनायुक्तः, यन्नियमेन सुगतिं लभते अन्यजन्मनि, तथा जिनधर्म्मबोधिं च लभत इति गाथार्थः ।

एतदेवाह—

जमिह सुहभावणाए, अइसयभाविओ भाविओ जीवो ।
जम्मंतरेऽवि जायइ, एवंविहभावजुत्तो अ ॥१६११॥

यत् यस्मादिह शुभभावनया अतिशयभावेन भावितो जीव सुवासित इत्यर्थः, जन्मान्तरेऽप्यन्यत्र जायते एवंविधभावयुक्तश्च शुभभावयुक्त इति गाथार्थः ।

एमेव बोहिलाभो, सुहभावबलेण जो उ जीवस्स ।

पेच्चावि सुहो भावो,वासिअतिलतिल्लनाएणं ॥१६१२॥

एष एव बोधिलाभो वर्त्तते । शुभभावबलेन वासनान्याम-
र्थ्यात्र एव जीवस्य प्रेत्यापि-जन्मान्तरेऽपि शुभो भावो भव-
ति वासिततिलतैलज्ञानेन,तेषां हि तैलमपि सुगन्धि भवती-
ति गाथार्थः ।

संलिहिऊणऽप्पाणं, एवं पच्चप्पणित्तु फलगाई ।
गुरुमाइए अ सम्मं, खमाविऊ भावसुद्धीए ॥१६१३॥

संलिख्यात्मानमेवं द्रव्यतो भावतश्च प्रत्यर्प्य फलकादि-
प्रातिहारिकं गुर्वादींश्च सम्यक् क्षमयित्वा यथार्हं भाव-
शुद्धया संवेगेनेति गाथार्थः ।

उववूहिऊण सेसे, पडिवद्धं तम्मि तह विसेसेण ।
धम्मे उज्जमिअव्वं, संजोगा इह वियोगंता ॥१६१४॥

उपबृंह्य 'शेषान्' गुर्वादिभ्योऽन्यान् प्रतिबद्धान्, 'त-
स्मिन्' स्वात्मनि तथा विशेषेणोपबृंह्य, धर्मे 'उद्यमितव्यम्'
यत्नः कार्यः, संयोगा इह वियोगान्ताः, एवमुपबृंहेति
गाथार्थः ।

अह वंदिऊण देवे, जहाविहिं सेसए अ गुरुमाई ।
पच्चक्खाइत्तु तओ, तयंतिगे सव्वमाहारं ॥१६१५॥

अथ वन्दित्वा देवान्-भगवतो यथाविधि-सम्यग् शेषां-
श्च गुर्वादीन् वन्दित्वा,प्रत्याख्याय ततः-तदनन्तरं तदन्तिके
गुरुसमीपे सर्वमाहारमिति गाथार्थः ।

समभावम्मि वि अप्पा,सम्मं सिद्धंतभणिअमग्गेण ।
गिरिकंदरं तु गंतुं, पायवगमणं अह करेइ ॥१६१६॥

समभावे स्थितात्मा स सम्यक् सिद्धान्तोक्तेन मार्गेण
निरीहः सन् गिरिकन्दरं तु गत्वा स्वयमेव पादपगमनमेव
करोति । पादपसमान उन्मेषाद्यभावादिति गाथार्थः ।

सव्वत्थापडिबद्धो,दण्डाययमाइठाणमिह ठाउं ।
जावज्जीवं चिट्ठइ, णिच्चिट्ठो पायव समाणो ॥१६१७॥

सर्वत्राप्रतिबद्धः समभावात्, दण्डायतादिस्थानमिह स्थि-
त्वा स्थण्डिले यावज्जीवं तिष्ठति महात्मा निश्चेष्टः
पादपसमान, उन्मेषाद्यभावादिति गाथार्थः ।

पढमिल्लुगसंघयणे, महाणुभावा करिंति एवमिणं ।
एअं सुहभावचिअ, णिच्चलपयकारणं परमं ॥१६१८॥

प्रथमसंहननेनेति योगतः महानुभावा—ऋषयः कुर्वन्त्ये-
वमेतदनशनं प्रायः शुभभाव एव, नान्ये, निश्चलपदकारणं
परमं, निश्चलपदं, मोक्ष इति गाथार्थः ।

णिव्वाघाइयमेअं, भणियं इह पक्कमाणुसारेणं ।
संभवइ अ इअरं पि हु,भणियमिणं वीअरागेहिं॥१६१९॥

निर्व्याघातवदेतत्पादपगमनं भणितम् । इह प्रक्रमानुसारेण
हेतुना संभवति चेतरदपि-सव्याघातवदेतत्, भणितमिदं
वीतरागैस्तीर्थकरैरिति गाथार्थः ।

सीहाईहिँ अभिभूओ, पायवगमणं करेइ थिरचित्तो ।
आउम्मि पहुप्पंते, विआणिउं नवरं गीअत्थो ॥१६२०॥

सिंहादिभिरभिभूतः सन् पादपगमनं करोति स्थिर—
चित्तः कश्चिदायुषि प्रभवति सति विज्ञाय नवरं गीतार्थः
उपक्रममिति गाथार्थः ।

संघयणाभावाओ, इअ एवं काउँ जो उ असमत्थो ।
सो पुण थेवयरागं, कालं संलेहणं काउं ॥ १६२१ ॥

संहननाभावात् कारणादेवमेतत्कर्त्तुं योऽसमर्थः पाद-
पगमनं, स पुनः स्तोकतरं काल जीवितानुसारेण संलेखनां
कृत्वेति गाथार्थः । ( पं० व० । ) ( इङ्गिनीमरणव्याख्यानम्
'इंगिणिमरण' शब्दे द्वितीयभागे ५३२ पृष्ठे गतम् । )

भत्तपरिणाए वि हु, आपव्वज्जं तु विअडणं देइ ।
पुव्विं सीअलगो वि हु, पच्छा संजायसंवेगो ॥१६२६॥

भक्तपरिज्ञायामपि—तृतीयानशनरूपायाम् आप्रव्रज्यमेव-
प्रव्रज्याकालादेवारभ्य विकटना ददाति, पूर्वं शीतलोऽपि
परलोकं प्रति पश्चात्तत्काले संजातसंवेगः—उत्पन्नसंवेग
इति गाथार्थः ।

वज्जइ अ संकिलिट्ठं, विसेसओ णवरँ भावणं एसो ।
उल्लसिअजीवविरिओ, तओ अ आराहणं लहइ॥१६२७॥

वर्जयति च 'सङ्क्लिष्टाम्' अशुद्धां विशेषतो नवरं भावनामेषः
यथोक्तानशनी उल्लसितजीववीर्यः सत्संवेगात् ततश्चा-
राधनां लभते-प्राप्नोतीति गाथार्थः ।

कंदप्पदेवकिव्विस-अभिओगा आसुरा य संमोहा ।
एसा उ संकिलिट्ठा, पंचविहा भावणा भणिआ॥१६२८॥

कान्दर्पिकी, कैल्बिषिकी, आभियोगिकी, आसुरी, संमोहनी
च । कन्दर्पादीनामियमिति सर्वत्र भावनीयम् । एषा तु संक्लि-
ष्टा पञ्चविधा भावना भणिता, तत्तत्स्वभावाभ्यासो भावनेति
गाथार्थः ।

जो संजओ वि एआ-सु अप्पसत्थासु वट्टइ कहंचि ।
सो तव्विहेसु गच्छइ, सुरेसु भइओ चरणहीणो॥१६२९॥

यः संयतोऽपि सन् व्यवहारत एतास्वप्रशस्तासु भाव-
नासु वर्त्तते कथंचिद्भावप्राधान्यात्स तद्विधेषु गच्छति
सुरेषु—कन्दर्पादिप्रकारेषु भाज्यश्चरणहीनः सर्वथा तत्स-
त्ताविकलो द्रव्यचरणहीनश्चेति गाथार्थः ।

तत्र—

कंदप्पे कुक्कुइए, दवसीले आवि हासणपरे अ ।
विम्हाविंतो अ परं, कंदप्पं भावणं कुणई ॥ १६३० ॥

कन्दर्पवान् कन्दर्प एवं कौत्कुच्य द्रुतदर्पशीलश्चापि
हासकरश्च, तथा विस्मापयंश्च परान् कान्दर्पी भावनां
करोतीति गाथार्थः ।

कन्दर्पवान् कान्दर्पी भावनां करोतीत्युक्तं स च यथा
करोति तथाह—

कहकहकहस्स हसणं, कंदप्पो अणिहुआ य संलावा ।

कंदप्पकहाकहणं, कंदप्पुवएससंसा य ॥ १६३१ ॥

' कहकहकहस्से ' ति " अन्यत्रापि सुपो भवन्ति " ॥ इति तृतीयार्थे षष्ठी, कहकहकहेन हसन्तः; अट्टहास इत्यर्थः । तथा कन्दर्प-परिहासः स्वानुरूपेण अनिभृताश्च संलापाः, गुर्वादिनाऽपि निष्ठुरवक्रोक्त्यादयः, तथा कन्दर्पकथाकथनं-कामकथाग्रह , तथा कन्दर्पोपदेशो विधानद्वारेणैवं कुर्विति शंसा च प्रशंसा च कन्दर्पविषया यस्य स कन्दर्पवान् ज्ञेय इति गाथार्थः ।

कौत्कुच्यवन्तमाह—

भूमुहणयणाइएहिं, वयणेहिँ अ तेहिँ तेहिँ तहचिट्ठं ।
कुणइ य जह कुक्कुअं चिअ,हसइ परो अप्पणा अहसं१६३२

भ्रूमुखनयनादिभिर्देहावयवैर्वचनैश्च तैस्तैर्हासकारकैः तथा चेष्टा करोति क्वचित् तथाविधमोहदोषाद् यथा कुकुचमेव-गात्रपरिस्पन्दवत् हसति पर -तद्द्रष्टा, आत्मना अ हसन् , अभिभिन्नमुखराग इव य एवंविधः स कौत्कुच्यवानिति गाथार्थः ।

द्रुतदर्पशीलमाह—

भासइ दुअं दुअं ग-च्छई अ दप्पिअ व्व गोविसो सरए।
सव्वदुअदुअकारी,फुट्टइ व ठिओ वि दप्पेणं ॥१६३३॥

भाषते द्रुतं द्रुतमसमीक्ष्य संभ्रमाद् वेगाद् गच्छति च द्रुतं द्रुतमेव, 'दर्पित इव' दर्पोद्धुर इव 'गोवृषभो' बलीवर्दविशेषः शरदि काले तथा सर्वद्रुतद्रुतकारी असमीक्ष्यकारीति यावत् तथा स्फुटतीव तीव्रोद्रेकविशेषात् स्थितोऽपि 'दर्पेण' कुत्सितबलरूपेण य इत्थंभूतः स द्रुतदर्पशील इति गाथार्थः ।

हासकरद्वारमाह—

वेसवयणेहिँ हासं, जणयंतो अप्पणो परेसिं च ।
अह हासणे त्ति भण्णइ,घयणो व्व छले णिअच्छंतो ।१६३४।

वेषवचनैस्तथा विभ्ररूपैर्हासं जनयन्नात्मनः परेषां च द्रष्टृणामथ हासन इति भण्यते, हासकर इत्यर्थः । ' घतने इव ' भाण्ड इव ' छलानि ' छिद्राणि ' नियच्छन्निति ' गाथार्थः ।

विस्मापकद्वारमाह—

सुरजालमाइएहिं, तु विम्हयं कुणइ तव्विहजणस्स ।
तेसु ण विम्हियइ सयं, आहट्टकुहेडएसुं च ॥ १६३५ ॥

'सुरजालादिभिस्तु' इन्द्रजालिको विस्मयं करोति चित्तविभ्रमलक्षणं तद्विधजनस्य—बालिशप्रायस्य, तेष्विन्द्रजालादिषु न विस्मयते विस्मय स्वय न करोत्यात्मना आहृतकुहेटकेषु च पुनस्तथाविधग्राम्यलोकप्रतिबद्धेषु य स विस्मापक इति गाथार्थः । उक्ता कान्दर्पी भावना ।

कैल्बिषिकीमाह—

नाणस्स केवलीणं, धम्मायरियाण सव्वसाहूणं ।
हासं अवण्णमाई, किव्विसियं भावणं कुणइ ॥१६३६॥

ज्ञानस्य-श्रुतरूपस्य ' केवलिनां ' वीतरागाणां ' धर्माचार्याणां ' गुरूणां सर्वसाधून् सामान्येन, भाषमाणोऽवर्णमश्लाघारूपं तथा मायी सामान्येन य स कैल्बिषिकीं भावनां तद्भावाभ्यासरूपां करोतीति गाथार्थः ।

ज्ञानाऽवर्णमाह—

काया वया य ते चिअ, ते चेव पमायअप्पमाया य ।
मोक्खाहिआरिआणं, जोइसजोणीहिँ किं कज्जं।१६३७।

कायाः-पृथिव्यादयः, व्रतानि-प्राणातिपातनिवृत्त्यादीनि , तान्येव भूयो भूयः, तथा त एव प्रमादाः—मद्यादय , अप्रमादाश्च तद्विपक्षभूता तत्र तत्र कथ्यन्त इति पुनरुक्तदोष , तथा मोक्षाधिकारिणा—साधूनां ज्योतिषयोनिभ्यां-ज्योतिषयोनिप्रवृत्तिभ्या किं कृत्यं ?, न किञ्चिद्भवहेतुत्वादिति ज्ञानावर्णवादः, इह कायादय एव यत्नेन परिपालनीया इति । तथा तदुपदेशः उपाधिभेदे तन्मा भूदिति साधनेनेति ज्योतिःशास्त्रादि च शिष्यग्रहणपालनफलमित्यदुष्टफलमेव सूक्ष्मधिया भावनीयमिति गाथार्थः ।

कैवल्यवर्णमाह दारं—

सव्वे वि ण पडिबोहेँइ, णयाऽविसेसेण देइ उवएसं ।
पडितप्पइ ण गुरूण वि,आणो इह णिट्ठिअट्ठो उ।१६३८।

सर्वानपि प्राणिनो न प्रतिबोधयतीति न समवृत्तिरेव वा विशेषेण ददात्युपदेशमपि तु गम्भीरगम्भीरतरदेशनाभेदेन, तथा परितप्यते न गुरुभ्योऽपि दानादिना आस्तामन्यस्य ज्ञातः सर्वमेवमिति निष्ठितार्थ एवालौकिका गर्हा शब्द एष इति केवल्यवर्णवादः । नहाभव्याः, काङ्कटुकप्रायाश्च भव्याः केनचित्प्रतिबोध्यन्ते उपायाभावादिति सर्वानपि न प्रतिबोधयति, अत एवाविशेषेण न ददात्युपदेशं गुणगुरुत्वाच्च गुरुभ्यो न परितप्यते साधुर्निष्ठितार्थ इति गाथार्थः ।

धर्माचार्यावर्णमाह—

जच्चाइहिं अवण्णं, विहँसइ वट्टइ णयावि ओवाए ।
अहिओ छिद्दप्पेही, पगासवाई अणणुलोमो ॥१६३९॥

जात्यादिभि सद्भिरसद्भिर्वा अवर्णमश्लाघारूपं विभाषते अनेकधा ब्रवीति , वर्त्तते नवाप्यवपाते-गुरुसेवानुवृत्तौ तथा अहित छिद्रप्रेक्षी गुरोरेव प्रकाशवादी—सर्वसमक्षं तद्दोषवादी अननुलोम —प्रतिकूल इति धर्माचार्यावर्णवाद । जात्यादयो ह्यकारणमत्र गुणा कल्याणकारणं, गुरु परिभवाभिनिवेशादयस्त्वतिरौद्रा इति गाथार्थ ।

साध्ववर्णमाह दारं—

अविसहणाऽतुरियगई,अणाणुवित्ती अ अवि गुरूणं पि ।
खणमित्तपीइरोमा, गिहिवच्छलगा य संचइया।।१६४०॥

अविषहणा न सहन्ते कस्यचिदपि तु देशान्तरं यान्ति । अत्वरितगतयो मन्दगामिन इत्यर्थः । अननुवर्तिन स्वप्रकृतिनिष्ठुरा अपि तु गुरुमपि प्रत्यास्नामन्यो जन , तथा क्षणमात्रप्रीतिरोषा, तदैव रुष्टास्तदैव तुष्टा गृहिवत्सलाश्च स्वभावेन सचयिन सर्वसंग्रहपरा इति साध्ववर्णवाद । इहाविषहणाः परोपतापेन, अत्वरितगतय ईर्यादिरक्षणमननुवर्तिन गःसंयमागेक्षया, क्षणमात्रप्रीतिरोषा अल्पकषायतया, गृहिव-

त्सला धर्म्मप्रतिपत्तये संचयवन्त उपकरणाभावे परलोकाभावादिति गाथार्थः ।

मायिस्वरूपमाह दारं—

गूहइ आयसहावं, छायइ अगुणे परस्स संते वि ।
चोरो व्व सव्वसंकी, गूढायारो हवइ मायी ॥ १६४१ ॥

गूहति—प्रच्छादयत्यात्मनः स्वभावं गुणाभावरूपमशोभनं छादयति गुणान्परस्यान्यस्य सतोऽपि विद्यमानानपि मायादोपेण तथा चौर इव सर्वशङ्की स्वचित्तदोषेण गूढाचारः सर्वत्र वस्तुनि भवति मायी जीव इति गाथार्थः । उक्ता कैल्विषिकी भावना ।

आभियोगिकीमाह दारं—

कोउअ भूईकम्मे, पसिणा इअरे णिमित्तमाजीवी ।
इड्ढिरससायगुरुओ, अभिओगं भावणं कुणइ ॥१६४२॥

कौतुकं वक्ष्यमाणम् एवं भूतिकर्म्म एवं प्रश्न', एवमितरः प्रश्नाप्रश्न एव निमित्तम् आजीवति कौतुकाद्याजीवकः ऋद्धिरससातगुरुः सन्नाभियोगां भावनां करोति, तथाविधाभ्यासादिति गाथार्थः । पं० व० ४ द्वार । ( कौतुकस्वरूपनिरूपणं 'कोउय' शब्दे तृतीयभागे ६६६ पृष्ठे गतम् । )

भूतिकर्माण्याह—

भूइए अ मट्टिआए, सुत्तेण व होइ भूइकम्मं तु ।
वसहीसरीरभंडग-रक्खा अभिओगमाईआ ॥१६४४॥

भूत्या भस्मरूपया मृदा वाऽऽर्द्रपांसुलक्षणया सूत्रेण वा प्रसिद्धेन भवति भूतिकर्म्म परिरयवेष्टनरूपम् । किमर्थमित्याह-वसतिशरीरभण्डकरक्षेत्येतद्रक्षार्थमभियोगादय इति कृत्वा तेन कृतेन तद्रक्षा कर्तुमिति गाथार्थः ।

प्रश्नस्वरूपमाह दारं—

पण्हाउ होइ पसिणं, जं पासइ वा सयं तु तं पसिणं ।
अंगुट्ठोच्छिट्ठपए, दप्पणअसितोयकुड्डाई ॥ १६४५ ॥

प्रश्नस्तु भवति पाठादिरूपः प्रश्न इति यत्पश्यति स्वयमात्मना तुशब्दादन्ये च अत्रस्थाः प्रस्तुतं च स्तुते स प्रश्न इति । क तदित्याह-अङ्गुष्ठोच्छिष्टपदे इत्यङ्गुष्ठपदे तु शिष्ट कासारादिभक्षणेन एवं दर्पणे-आदर्शे असौ च-खड्गे तोये-उदके कुड्ये—भित्तौ आदिशब्दान्मदनफलादिपरिग्रह , ( पाठान्तरे- ) कुड्डादिः कुड्यः प्रशान्तो वा पश्यति—कल्पविशेषादिति गाथार्थः ।

प्रश्नाप्रश्नमाह—

पसिणापसिणं सुमिणे, विज्जासिट्ठं कहेइ अन्नस्स ।
अहवा आइंखणिए,घंटिअसिट्ठिं परिकहेइ ॥ १६४६ ॥

प्रश्नाप्रश्नोऽयमेवंविधो भवति , यः स्वप्ने ' विद्याशिष्ट'-'विद्याकथितं सत्कथयत्यन्यस्मै शुभजीवितादि, अथवा-'आइंखणि ए' त्ति । ईक्षणिका दैवज्ञा आख्यात्री लोकसिद्धा डोम्बी, साऽपि घण्टिकाशिष्टं घण्टिकायां स्थित्वा घण्टिकयक्षेण कथितं परिकथयत्येष वा प्रश्नाप्रश्न इति गाथार्थः ।

निमित्तमाह—

तिविहं होइ णिमित्तं, तीए पच्चुप्पणागयं चेव ।
एत्थ सुभासुभभेअं, अहिगरणेतरविभासाए ॥१६४७॥

त्रिविधं भवति निमित्तं कालभेदेनेत्याह-अतीतं प्रत्युत्पन्नमनागतं चैव,अतीतादिविषयत्वात्तस्य, अत्र शुभाशुभभेदमेतल्लोके, कथमित्याह—अधिकरणेतरविभाषा यत्साधिकरणं तदशुभमिति गाथार्थः ।

एयाणि गारवट्ठा, कुणमाणो आभिओगिअं बंधे ।
बीअं गारवरहिओ, कुव्वइ आराह उच्चं च॥१६४८॥

एतानि भूतिकर्मादीनि गौरवार्थे-गौरवनिमित्तं कुर्वन् ऋषिः आभियोगिकम् अभियोगनिमित्तं बध्नाति कर्म्म देवताद्यभियोगादि कृत्यमेतत् । द्वितीयमपवादपदनिमित्तम् , अत्र गौरवरहितः सन्निस्पृह एव करोत्यतिशयज्ञाने सत्येतत्स चैवं कुर्वन्नाराधको न विराधकः, उच्चं च गोत्रं बध्नातीति शेषः । तीर्थोन्नतिकरणादिति गाथार्थः । उक्ता आभियोगिकी भाना ।

साम्प्रतमासुरीमाह—

अणुबद्धविग्गहे वि अ, संसत्ततवो णिमित्तमाएसी ।
णिक्किवणिराणुकंपो,आसुरिअं भावणं कुणई ॥१६४९॥

अनुबद्धविग्रहः—सदा कलहशीलः , अपि च-संसक्ततपा आहारादिनिमित्तं तपःकारी , तथा निमित्तम्-अतीतादिभेदमादिशति । तथा निष्कृपः—कृपारहितः,तथा निरनुकम्पोऽनुकम्पारहितः अन्यस्मिन् कम्पमानेऽपि । इत्यासुरीभावनोपेतो भवतीति गाथार्थः ।

व्यासार्थमाह—

णिच्चं, वुग्गहसीलो, काऊण य णाणुतप्पई पच्छा ।
ण य खामिओ पसीअइ,अवराहीणं दुविण्हं पि।१६५०।

नित्यं व्युद्ग्रहशीलः ?-सततं कलहस्वभावः, कृत्वा च कलहं नानुतप्यते पश्चादिति न च क्षान्तः सन्नपराधिमा प्रसीदति-प्रसादं गच्छति । अपराधिनोर्द्वयोः—स्वपक्षपरपक्षगतयोः कषायोदयादेवेत्येषोऽनुबद्धविग्रह इति गाथार्थः ।

संसक्ततपसमाह—

आहारउवहिसिज्जा-सु जस्स भावो उ निच्चसंसत्तो ।
भावोवहओ कुणइ अ, तवोवहाणं तयट्ठाए ॥१६५१॥

आहारोपधिशय्यास्वोदनादिरूपासु यस्य भावस्तु-आशयः 'नित्यसंसक्तः'-सदा प्रतिवद्ध , भावोपहतः स एवंभूतः करोति च तप उपधानम्-अनशनादि, तदर्थम्-आहाराद्यर्थं यः स संसक्तपा यतिरिति गाथार्थः ।

निमित्तादेशनमाह दारं—

तिविहं निमित्तं एक्कि-क्क छव्विहं तं तु होइ विण्णेअं ।
अभिमाणाभिनिवेसा,वागरिअं आसुरं कुणई॥१६५२॥

त्रिविधं भवति निमित्तम्-कालभेदेन, एकैकं षड्विधं लाभालाभसुखदुःखजीवितमरणविषयभेदेन तत्तु भवति विज्ञेय-

१-तालव्या अपि दन्त्याश्च शम्बशूकरपाशव । अमरटीका ।

म् । एतश्चाभिमानाभिनिवेशादित्यभिमानतीव्रतया व्याख्यातं, सदा आसुरीं भावनां करोति तद्भावाभ्यासरूपत्वादिति गाथार्थः ।

निष्कृपमाह दारं—

चंकमणाईसत्तो, सुणिक्किवो थावराइसत्तेसु ।
काउं च णाणुतप्पइ,एरिसओ णिक्किवो होइ ॥१६५३॥

चङ्क्रमणादि—गमनासनादि तत्र सक्तः सन् क्वचित्सु-निष्कृपः सुष्ठु गतघृणः स्थावरादिसत्त्वेषु करोत्यजीवप्रति-पत्त्या कृत्वा वा चङ्क्रमणादि नानुतप्यते केनचिन्नोदितः सन्नेतादृशो निष्कृपो भवति, लिङ्गमेतदस्येति गाथार्थः ।

निरनुकम्पमाह दारं—

जो उ परं कंपंतं, दट्ठूण न कंपए कढिणभावो ।
एसो उ णिरणुकंपो, पण्णत्तो वीअरागेहिं ॥ १६५४ ॥

यस्तु परं कम्पमानं दृष्ट्वा कुतश्चिद्धेतुतः न कम्पते कठिनभावः सन् क्रूरतया एष पुनः निरनुकम्पो जीवः प्रज्ञप्तो वीतरागैराप्तैरिति गाथार्थः । उक्ता आसुरी भावना ।

सांप्रतं संमोहनीमाह दारं—

उम्मग्गदेसओम-ग्गदूसओ मग्गविप्पडीवत्ती ।
मोहेण य मोहित्ता, संमोहणिँ भावणं कुणई ॥१६५५॥

उन्मार्गदेशकः वक्ष्यमाणः, एवं मार्गदूषकः एवं मार्ग-विप्रतिपत्तिः तथा मोहेन स्वगतेन तथा मोहयित्वा परं संमोहिनीं भावना करोति । तद्भावाभ्यासरूपत्वादिति गाथार्थः ।

उन्मार्गदेशकमाह—

नाणाइ दूसयंतो, तव्विवरीअं तु उद्दिसइ मग्गं ।
उम्मग्गदेसओ एस होइ अहिओ अ सपरेसिं ॥१६५६॥

ज्ञानादीनि दूषयन्पारमार्थिकानि तद्विपरीतं तु पारमार्थिकज्ञानविपरीतमेवोद्दिशति मार्गं धर्म्मसंबन्धिनमुन्मार्गदेशक एष एवंभूतः भवत्यहितः, एवं परमार्थेन स्वपरयोर्द्वयोरपीति गाथार्थः । पं० व० ४ द्वार । ( मार्गदूषकव्याख्या 'मग्गदूसग' शब्दे पष्ठभागे ५८ पृष्ठे गता । )

मार्गविप्रतिपत्तिमाह—

जो पुण तमेव मग्गं, दूसित्ताऽपंडिओ सतक्काए ।
उम्मग्गं पडिवज्जइ, विप्पडिवत्तेस मग्गस्स ॥ १६५८ ॥

य पुनस्तमेव मार्गं—ज्ञानादि दूषयित्वा अपण्डितः सन् स्वतर्कया जातिरूपया देशे उन्मार्गं प्रतिपद्यते एष एव मार्गविप्रतिपत्तिरिति गाथार्थः ।

मोहमाह—

तह तह उवहयमइओ, मुज्झइ णाणचरणंतरालेसु ।
इड्ढीओ अ बहुविहा, दट्ठुं जत्तो उ मोहो य ॥ १६५९॥

तथा तथा चित्ररूपतया उपहतमतिः सन् मुह्यति ज्ञानचरणान्तरालेषु गहनेषु ऋद्धीश्च बहुविधा दृष्ट्वा परतीर्थिकाना यतो मुह्यत्यसौ मोह इति गाथार्थः ।

मोहयित्वेति व्याचिख्यासुराह—

जो पुण मोहेइ परं, सब्भावेणं च कइअवेणं वा ।
समयंतरम्मि सो पुण, मोहित्ता घेप्पइ अणेणं॥१६६०॥

यः पुनर्मोहयति परमन्यं प्राणिनं सद्भावेन वा तथ्येनैव कैतवेन वा परिकल्पितेन समयान्तरे-परसमये मोहयति-स पुनरेवभूतः प्राणी 'मोहयित्वे' ति गृह्यते अनेन द्वारगाथावयवेनेति गाथार्थः ।

आसां भावनानां फलमाह—

एयाओँ भावणाओ, भावित्ता देवदुग्गइं जंति ।
तत्तो वि चुआ संता, पडिंति भवसागरमणंतं ॥१६६१॥

एता भावना भावयित्वा अवश्य देवदुर्गतिं यान्ति प्राणिनः, ततस्तस्या अपि च्युता सन्तः देवदुर्गतेः पर्यटन्ति भवसागरं-संसारसमुद्रमनन्तमिति गाथार्थः ।

प्रकृतोपयोगमाह—

एयाओँ विसेसेणं, परिहरई चरणविग्घभूआओ ।
एअन्निरोहओ चिअ,सम्मं चरणं पि पावेइ ॥१६६२॥

एता भावना विशेषेण परिहरति चरणविघ्नभूता । एता इति एतन्निरोधादेव कारणात्सम्यक्चरणमपि प्राप्नोति प्रस्तुतानशनीति गाथार्थः ।

आह ण चरणविरुद्धा, एआओ एत्थ चेव जं भणिओ ।
जो संजओ वि भइओ,चरणविहीणो अ इच्चाई ।१६६३।

आह न चरणविरुद्धा एता भावनाः, अत्रैव यद् भणितं ग्रन्थे यः संयतोऽप्येतास्वित्यादि तथा भाज्यश्चरणहीनश्चेत्यादि प्रागिति गाथार्थः ।

अत्रोत्तरम्—

ववहारणया चरणं, एआसुं जं असंकिलिट्ठो वि ।
कोई कंदप्पाई, सेवइ ण उ णिच्छएँण एसुं ॥१६६४॥

व्यवहारनयाच्चरणम् एतासु भावनासु यदसङ्क्लिष्टोऽपि प्राणी कश्चित्कन्दर्पादीन् सेवते , न तु निश्चयेन तेन चरणमेतास्विति गाथार्थः ।

एतदेवाह—

अखंडं गुणट्ठाणं, इट्ठं एअस्स णियमओ चेव ।
सइ उचियपवित्तीए, सुत्ते वि जओ इमं भणियं ॥१६६५॥

अखण्ड गुणस्थानं निरतिचारमिष्टमेतस्या नियमत एव निश्चयनयेन यस्य सदौचित्यप्रवृत्त्या हेतुभूतया सूत्रेऽपि यत इदं भणितं वक्ष्यमाणमिति गाथार्थः ।

किं तदित्याह—

जो जहवायं न कुणइ, मिच्छादिट्ठी तओ हु को अण्णो ।
वड्ढेइ अ मिच्छत्तं, परस्स संकं जणेमाणो ॥ १६६६ ॥

यो यथावादं यथाऽऽगमं न करोति विहितं मिथ्यादृष्टिस्तस्मा-देवंभूतात्कोऽन्य स एवागमविराधनादि विराधयति न, मिथ्यात्वमशात्मन परस्य शङ्कां जनयन्नदनुष्ठानविषया-मिति गाथार्थः ।

स्याद् यथावादमेव कन्दर्पादिकरणमित्याशङ्कयाह—

कंदप्पाई वाओ, न चेह चरणम्मि सुइ कहं चि ।
ताए अ सेवणं पि हु, तह वायविराहगं चेव ॥१६६७॥

कन्दर्पादिवादो नत्वेहागमे चरणे चारित्रविषयः श्रूयते क्वचित्कस्मिंश्चित्सूत्रस्थाने, तत्तस्मादेतत्सेवनं कन्दर्पसेवनमपि तद्वादविराधकं चारित्रवादविराधकमेवेति गाथार्थः ।

एवं निश्चयनयेनैतदुक्तम्—

किं तु असंखिज्जाइं, संजमठाणाइँ जेण चरणे वि ।
भणियाइँ जाइँ भेया, तेण न दोसो इहं कोइ ॥१६६८॥

किं त्वसंख्येयानि संयमस्थानानि तारतम्यभेदेन येन चरणेऽपि-चारित्रेऽपि भणितान्यागमे जातिभेदात्तज्जातिभेदेन तेन कारणेन दोषा इह कश्चित्कन्दर्पादौ तथाविधसंयमस्थानभावादिति गाथार्थः ।

प्रकृतयोजनामाह—

एआणँ विसेसेणं, तच्चाओ तेण होइ कायव्वो ।
पुव्विं तु भाविआण वि, पच्छातावाइजोगेणं ॥१६६९॥

एतासां भावनानां विशेषेण तत्त्यागो भवति तेन कर्त्तव्यो विवक्षिताऽनशनिना, पूर्वभावितानामपि सतीना पश्चात्तापादियोगेन भवसारेणेति गाथार्थ. ।

कयमित्थ पसंगेणं, पगयं वोच्छामि सव्वणयसुद्धं ।
भत्तपरिण्णाए खलु, विहाणसेसं समासेणं ॥१६७०॥

कृतमत्र प्रसङ्गेन, प्रकृतं वक्ष्यामि । किंभूतं सर्वनयविशुद्धम्, किमित्याह-भक्तपरिज्ञायाः खलु विधानशेषं यन्नोक्तं तं समासेन-संक्षेपेणेति गाथार्थ. ।

वियडणअब्भुट्ठाणं, उचिअं संलेहणं च काऊण ।
पच्चक्खाइ ओहारं, तिविहं चउव्विहं वाऽवि ॥१६७१॥

विकटना दत्त्वा तदन्वभ्युत्थानं संयमे उचितां संलेखना च संहननादि कृत्वा प्रत्याख्यात्याहारं गुरुसमीपे त्रिविधं चतुर्विधं चापि यथासमाधानमिति गाथार्थः ।

उव्वत्तइ परिअत्तइ, सयमप्पेणावि कारवइ किंचि ।
जत्थऽसमत्थो नवरं, समाहिजणगं अपडिवद्धो ।१६७२।

उद्वर्त्तने परावर्त्तते स्वयमात्मनैव अन्येनापि कारयति, किंचित् वैयावृत्यकरणे यत्रासमर्थो नवरं तत्कारयति , समाधिजनकं ह्यात्मन. अप्रतिबद्ध. सन् सर्वत्रेति गाथार्थ. ।

मेत्तादी सत्ताइसु, जिणिंदवयणेण तह य अच्चत्थं ।
भावेइ तिव्वभावो, परमं संवेगमावण्णो ॥ १६७३ ॥

मैत्र्यादीनि मैत्रीप्रमोदकारुण्यमाध्यस्थ्यानि सत्त्वादिपु स्वगुणाधिकस्य मानाविनेयेपु जिनेन्द्रवचनेन हेतुभूतेन तथा चात्यर्थं नितरां भावयति तीव्रभाव. सन् परमं संवेगमापन्न अतिशयेनार्द्रान्त.करण इति गाथार्थः ।

देहसमाधौ यतितव्यमित्याह—

सुहझाणाओ धम्मो, तं देहसमाहिसंभवं पायं ।
ता धम्माऽपीडाए, देहसमाहिम्मि जइअव्वं ॥१६७४॥

शुभध्यानाद्धर्मादेः धर्मो भवति तच्छुभध्यानं देहसमाधिसंभवं प्रायो बाहुल्येनास्मद्विधानाम् । यत एवं तत्तस्माद्धर्मापीडया हेतुभूतया देहसमाधौ-शरीरसमाधाने यतितव्यं-प्रयत्न कार्य इति गाथार्थः ।

इहरहछेवट्टम्मि य, संघयणे थिरधिईए रहिअस्स ।
देहस्स समाहीए, कत्तो सुहझाणभावो त्ति ॥ १६७५ ॥

इतरथा छेदवर्तिनि संहनने सर्वजघन्य इत्यर्थः । स्थिरधृत्या रहितस्य दुर्बलमनस देहस्याऽसमाधौ संजाते सति कुतः शुभध्यानभावो नैवेति गाथार्थः ।

तयभावम्मि अ असुहा,जायइ लेसा वि तस्स णियमेणं ।
तत्तो अ परभवम्मि अ,तल्लेसेसुं तु उववाओ ॥१६७६॥

तदभावे च-शुभध्यानाभावे च अशुभा जायते लेश्याऽपि तथाविधात्मपरिणामरूपा तस्य नियमेन देहासमाधिमत. ततश्चाशुभलेश्यातः परभवे—जन्मान्तरेऽपि तल्लेश्यास्वेवोपपातो महाननर्थ इति गाथार्थ ।

तम्हा उ सुहं झाणं, पच्चक्खाणिस्स सव्वजत्तेणं ।
संपाडेअव्वं खलु, गीअत्थेणं सुआणाए ॥ १६७७ ॥

यस्मादेवं तस्मात् शुभमेव ध्यानं प्रत्याख्यानिन. सर्वयत्नेन कवचज्ञातात्संपादयितव्यं खलु नियोगत. गीतार्थेन श्रुतज्ञेन-साधुनेति गाथार्थः ।

सो वि अ अप्पडिवद्धो, दुल्लहलाभस्स विरइभावस्स ।
अप्पडिपडणत्थं वि अ,तं तं चिट्ठं करावेइ ॥ १६७८ ॥

सोऽपि च प्रत्याख्यानी अप्रतिबद्धः सर्वत्र दुर्लभलाभस्य दुर्लभप्राप्ते. विरतिभावस्य—चारित्रस्य अप्रतिपतनार्थमेव चाज्ञापरतन्त्र. सन् ता ता चेष्टां कारयति कवचादिरूपामिति गाथार्थ. ।

तह वि तया अदीणो,जिणवरवयणम्मि जायबहुमाणो ।
संसाराउ विरत्तो,जिणेहिँ आराहओ भणिओ॥१६७९॥

तथापि तदा अदीन. सन् भावेन जिनवरवचने जातबहुमान. वचनैकनिष्ठ. सन् संसाराद्विरक्त. संविग्नो जिनैराराधको भणित. परमार्थेन इति गाथार्थ. ।

अत्रोपपत्तिमाह—

जं सो सया वि पायं,मणेण संविग्गपक्खिओ चेव ।
इअरो उ विरइरयणं,न लहइ चरमे वि कालम्मि॥१६८०॥

यदसावेवंविध. सदापि प्राय. मनसा भावेन संविग्नपाक्षिक एवम् इतरस्त्वसंविग्नपाक्षिक. विरतिरत्नं-चारित्रं न लभत न प्राप्नोति चरमकालेऽपीति गाथार्थ. ।

संविग्गपक्खिओ पुण, अण्णत्थ पयट्टओ वि काएणं ।
धम्मे चिअ तल्लिच्छो,दढरत्ति त्थि व्व पुरिसम्मि॥१६८१॥

संविग्नपाक्षिक. पुन. शीतलविहारी अन्यत्र प्रवृत्तोऽपि कायादिभोगे कायेन प्रमादात् धर्म एव तल्लिप्स. तद्गतचित्त. दृढरक्तस्त्रीवत् पुरुषे । सा यथा कुलजा प्रोषितभर्तृ-

का क्वचिज्जातरागा कादाचित्कस्वल्पकालतत्प्राप्त्या दानादिक्रियाप्रवृत्ताऽपि तद्गतचित्ता पापे न युज्यते, स्वल्पं च दानादिक्रियाफलमाप्नोतीत्येवं संविग्नपाक्षिकोऽपि कायमात्रेणासमञ्जसप्रवृत्तो भावेन धर्मरक्तो धार्मिक एव मन्तव्य इति गाथार्थः।

तत्तो च्चिअ भावाओ, णिमित्तभूअम्मि चरमकालम्मि।
उक्करिसविसेसेणं, कोई विरइं पि पावेइ ॥ १६८२ ॥

तत एव भावात्—धर्म्मविषयात् निमित्तभूते चरमकाले सति उत्कर्षविशेषेण शुभभावस्य कश्चिद्विरतिमपि प्राप्नोति धन्य इति गाथार्थः।

युक्तियुक्तमेतत्—

जो पुण किलिट्ठचित्तो, णिरवेक्खोऽणत्थदंडपडिबद्धो।
लिंगोवघायकारी, ण लहइ सो चरमकाले वि॥१६८३॥

यः पुनः क्लिष्टचित्तः सत्त्वनिरपेक्षः सर्वत्रानर्थदण्डप्रतिवद्धः तथा लिङ्गोपघातकारी तेन तेन प्रकारेण न लभते स विरतिरत्नं चरमकालेऽपीति गाथार्थः।

चोएइ कहं समणो, किलिट्ठचित्ताइदोसवं होइ।
गुरुकम्मपरिणईओ, पायं तह दव्वसमणो अ॥१६८४॥

चोदयति चोदकः, कथं श्रमणः संक्लिष्टचित्तादिदोषवान् भवतीति, उत्तरमत्र—गुरुकर्म्मपरिणतेर्भवति प्रायस्तथा बाहुल्येन द्रव्यश्रमणश्चेति गाथार्थः।

एतदेव समर्थयते—

गुरुकम्मओ पमाओ, सो खलु पावो जओ तओऽणेगे।
चोद्दसपुव्वधरा वि हु, अणंतकाए परिवसंति॥१६८५॥

गुरुकर्म्मणः सकाशात्प्रमादो भवति, स खलु पापोऽतिरौद्र यस्ततः प्रमादादनेके चतुर्दशपूर्वधरा अपि तिष्ठन्त्वन्ये अनन्तकाये परिवसन्ति वनस्पताविति गाथार्थः।

किञ्च—

दुक्खं लब्भइ नाणं, नाणं लद्धूण भावणा दुक्खं।
भाविअमई वि जीवो,विसएसु विरज्जई दुक्खं ॥१६८६॥

दुःखं लभ्यते-कृच्छ्रेण-प्राप्यते ज्ञानं—यथास्थितपदार्थावसायि,तथा ज्ञानं लब्ध्वा-प्राप्य भावना एवमेवैतदित्येवरूपा दुःखं भवति। भावितमतिरपि जीवः कथंचित् कर्म्मपरिणतिवशात् विषयेभ्यः शब्दादिभ्यो विरज्यते अपरिवृत्तिरूपेण दुःखं तत्प्रवृत्तेः सात्मीभूतत्वादिति गाथार्थः। एव गुरुकर्म्मपरिणतेः क्लिष्टचित्तादिभावो विरुद्ध, द्रव्यश्रमणमाह—

अन्ने उ पढमगं च्चिअ, चरित्तमोहक्खओवसमहीणा।
पव्वइआ ण लहंती,पच्छा वि चरित्तपरिणामं॥१६८७॥

अन्ये तु प्रथममेव-आदित आरभ्य चारित्रमोहक्षयोपशमहीनाश्चारित्रमन्तरेणैव प्रव्रजिताः द्रव्यतः एवंभूता सन्तो न लभन्ते पश्चादपि तत्रैव तिष्ठन्तश्चारित्रपरिणाम प्रव्रज्यास्तित्वरूपमिति गाथार्थः।

एतदेवाह—

मिच्छादिट्ठीओ वि हु, केई इह होंति दव्वलिंगधरा।
ता तेसिँ कह ण हुंती,किलिट्ठचित्ताइओ दोसा॥१६८८॥

मिथ्यादृष्टयोऽपि अपिशब्दादभव्या अपि केचनेह लोके शासने वा भवन्ति द्रव्यलिङ्गधारिणो विडम्बकप्रायाः, तत्तस्मात्तेषामेवंभूतानां कथं न भवन्ति?, भवन्त्येव क्लिष्टचित्तादयो दोषाः प्रागुपन्यस्ता इति गाथार्थः।

तत्रैव प्रक्रमे विधिशेषमाह—

एत्थ य आहारो खलु, उवलक्खणमेव होइ णायव्वो।
वोसिरइ तओ सव्वं, उवउत्तो भावसल्लं पि॥१६८९॥

अत्र चानशनाधिकारे आहारः खलु परित्यागमधिकृत्योपलक्षणमेव भवति ज्ञातव्यः शेषस्यापि वस्तुनः। तथा चाह—व्युत्सृजति—परित्यजत्यसावनशनी सर्व्वम्, उपयुक्तः सन् भावशल्यमपि सूक्ष्ममिथ्यात्वादीनीति गाथार्थः।

किं बहुना—

अण्णं पिव अप्पाणं, संवेगाइसयाउ चरमकाले।
मण्णइ विसुद्धभावो,जो सो आराहओ भणिओ॥१६९०॥

अन्यमिवात्मानं प्राक्तनादात्मनः संवेगातिशयात् संवेगातिशयेन चरमकाले प्राणप्रयाणकाले मन्यते शुद्धभावः सन् सर्वोऽसदभिनिवेशत्यागेन यः स आराधको भणितस्तीर्थकरगणधरैरिति गाथार्थः।

अयमेव विशिष्यते—

सव्वत्थापडिबद्धो, मज्झत्थो जीविए अ मरणे अ।
चरणपरिणामजुत्तो,जो सो आराहओ भणिओ॥१६९१॥

सर्वत्राप्रतिबद्धः इहलोके परलोके च,तथा मध्यस्थो जीविते मरणे च; न मरणमभिलषति नापि जीवितमित्यर्थः, चरणपरिणामयुक्तो न तद्विकलः, य एवंभूतः स आराधको भणितस्तीर्थकरगणधरैरिति गाथार्थः।

अस्यैव फलमाह—

सो तप्पभावओ च्चिअ, खविउं तं पुव्वदुक्कडं कम्मं।
जायइ विसुद्धजम्मा,जोग्गो अ पुणो वि चरणस्स॥१६९२॥

स एवंभूतस्तत्प्रभावत एव—चारित्रपरिणामप्रभावादेव क्षपयित्वाऽभावमापाद्य तत्पूर्वदुष्कृतं कर्म्म शीतलविहाराज्जायते विशुद्धजन्मा—जात्यादिदोषरहित योग्यश्च पुनरपि तज्जन्मापेक्षया चरणस्येति गाथार्थः।

त्रिविधको भवतीति तद्विशेषमभिधातुमाह—

एसो अ होइ तिविहो, उक्कोसो मज्झिमो जहण्णो य।
लेसादारेण फुडं, वोच्छामि विसेसमेएसिं ॥ १६९३ ॥

एष चाराधको भवति त्रिविधः। त्रैविध्यमेवाह—उत्कृष्टो, मध्यमो, जघन्यश्च। भावनोपदा चोत्कृष्टत्वादि यत एषमतो लेश्याद्वारेण-लेश्याद्वीकरणेन स्फुट-प्रकट वक्ष्यामि विशेषमेतेषामुत्कृष्टादिभेदानामिति गाथार्थः।

तत्र—

सुक्काए लेसाए, उक्कोसगमंसगं परिणमित्ता।

जो मरइ सो हु णियमा, उक्कोसाराहओ होइ ॥१६६४॥

शुक्लाया लेश्याया. सर्वोत्तमाया उत्कृष्टमंशकं विशुद्धं परिणम्य-तद्भावमासाद्य यो म्रियते कश्चित्सत्त्व. स नियमा-देवोत्कृष्टाऽऽराधको भवति स्वल्पभवप्रश्च इति गाथार्थ. ।

मध्यमाऽऽराधकमाह—

जे सेसा सुक्काए, अंसा जे आवि पम्हलेसाए ।
ते पुण जो सो भणिओ,मज्झिमओ वीयरागेहिं॥१६६५॥

ये शेषा उत्कृष्टं विहाय शुक्लाया. अंशाः-भेदा , ये चापि पद्मलेश्याया , सामान्येन तान् पुनर्विपरिणम्य यो म्रियते स मध्यमो भणितो मध्यमाराधको वीतरागैर्जिनैरिति गाथार्थः।

जघन्यमाराधकमाह—

तेओ लेसाए जे, अंसा अह ते ओ जे परिणमित्ता ।
मरइ तओ वि हु णेयो, जहण्णगाराहओ इत्थ ॥१६६६॥

तेजोलेश्याया. ये अंशाः-प्रधाना.,अथवा तान् य. परिणम्यां-ऽशकान् कांश्चित् म्रियतेऽसावप्येवंभूतो ज्ञेयः, किंभूत इत्याह—जघन्याराधकोऽत्र प्रवचन इति गाथार्थ. ।

अस्यैव सुसंस्कृतभोजनलवणकल्पविशेषमाह—

एसो पुण सम्मत्ताऽऽ-इसंगओ चेव होइ विण्णेओ ।
ण उ लेस्सामित्तेणं,तं जमभव्वाण वि सुराणं ॥१६६७॥

एप पुनर्लेश्याया द्वारोक्ताराधक. सम्यक्त्वादिसंगत एव-सम्यक्त्वज्ञानतद्भावस्थायिचरणयुक्त एव भवति विज्ञेय आराधको न तु लेश्यामात्रेण केवलेन आराधकः । कुत इत्याह-'तत्'-लेश्यामात्रं 'यत्' यस्मात् कारणात् अभव्यानामपि सुराणां भवति, यल्लेश्याश्च म्रियन्ते तल्लेश्या एवोत्पद्यन्ते इति गाथार्थ. ।

आराधकगुणमाह-

आराहगो अ जीवो, तत्तो खविऊण दुक्कडं कम्मं ।
जायइ विसुद्धजम्मा,जोग्गो वि पुणो वि चरणस्स।१६६८

आराधकश्च जीवः तत आराधकत्वात् क्षपयित्वा दुष्कृतं कर्म्म प्रमादजं ज्ञानावरणादि जन्मादिकुलाद्यपेक्षया योग्यस्य पुनरपि चरणस्य तद्भावभाविन इति गाथार्थ ।

आराधनाया एव प्रधानफलमाह—

आराहिऊण एवं, सत्तट्ठभवाण सारओ चेव ।
तेलुक्कमत्थअत्थो, गच्छइ सिद्धिं णिओगेणं ॥१६६९॥

आराध्यैवमुक्तप्रकारं, किमित्याह—सप्ताष्टभवेभ्य. सप्ताष्टजन्मभ्य आरत एव त्रिपु वा चतुर्पु वा जन्मसु , किमित्याह—त्रैलोक्यमस्तकस्थ —सकललोकचूडामणिभूतो गच्छति सिद्धिं-मुक्तिं नियोगेनावश्यंतयेति गाथार्थ. ।

तत्र च गत सन्—

सव्वण्णु सव्वदरिसी, निरुवमसुहमंगओ य सो तत्थ ।
जम्माइदोसरहिओ, चिट्ठइ भयवं सयाकालं ॥१७००॥

सर्वज्ञ सर्वदर्शी नाचेनना गगनकल्प तथा निरुपमसुखसंगतश्च सकलव्याबाधानिवृत्ते. स आराधको मुक्त. तत्र सिद्धो जन्मादिदोपरहितः-जन्मजरामरणादिरहित. संस्तिष्ठति भगवान् सदाकालं-सर्वकालमेव नत्वभावी भवति यथाऽऽहुरन्ये-'प्रविध्यातदीपकल्पोपमो मोक्षः' इति गाथार्थ. । पं०व० ४ द्वार । आव० । ध० । ( 'पज्जुसवणा' शब्दे वर्षासु संलेखनाविधिः )

**संलेहणाझूसिय**–संलेखनाझोपित–त्रि० । संलेखना-शरीरस्य तपसा कृशीकरणं तथा वा ' झूसिय ' त्ति जुष्टाः सेविना ये ते तथा । संलेखनाख्यतप.कारिपु, ओघ० ।

**संलेहणाझोसणाझु(झू)सिय**–संलेखनाजोपणा(झूषित)जुष्ट–त्रि० । संलेखनायां-कपायशरीरकृशीकरणे या जोषणा-प्रीतिः सेवा वा जुपी प्रीतिसेवनयोरिति वचनात् , तया तां वा ये जुष्टा. सेवितास्ते तथा ' झूसिय ' त्ति झूषिताः क्षीणा ये ते तथा । संलेखनातप.कारिपु, भ० ३ श० ७ उ० । औ० ।

**संलेहणासुय**–संलेखनाश्रुत–न० । यत्र संलेखनायां श्रुतं प्रतिपाद्यते तत् संलेखनाश्रुतम् । उत्कालक्षणसंलेखनाप्रतिबद्धे उत्कालिकश्रुतविशेपे, पा० ।

**संलोग**–संलोक–पुं०।संलोक्यत इति संलोकः।चतुर्दशरज्ज्वात्मके लोके , आव० २ अ० । ( लोकस्य ध्रुवाध्रुवत्वविचारः ' भूगोल ' शब्दे पञ्चमभागे १६०१ पृष्ठे गतः । ) (लोके गोलानामसंख्येयत्वविचारः ' लोक ' शब्दे षष्ठभागे ७०६ पृष्ठे गत' । ) प्रकाशे, आचा० १ श्रु० १ अ० २ उ० । संदर्शने , आचा० १ श्रु० १ अ० ३ उ० ।

**संवग्ग**–संवर्ग–पुं० ।संवर्ग्यते इति संवर्ग.।गुणिते, व्य०६ उ० । गुणने, नि० चू० १ उ० ।

**संवच्छर**–संवत्सर–पुं० । " ह्रस्वात् थ्य-श्च-त्स-प्सामनिश्चले" ।८।२।२१। अनेनात्र ह्रस्वात्परस्य त्सस्य छकार.। प्रा० । द्वादशमासात्मके वर्षे,आ०म०१अ०।पञ्चा०। "दो अयणा संवच्छरे' जं० २ वक्ष०। कर्म०। भ०। ज्यो०। अयनद्वयेन संवत्सर. । तं० । अनु० । आ० म० । विशे० । अनु० । स्था० ।

ता कति णं भंते !संवच्छरे आहिताति वदेज्जा ?, ता पंच संवच्छरा आहितेति वदेज्जा, तं जहा—णक्खत्तसंवच्छरे , जुगसंवच्छरे, पमाणसंवच्छरे, लक्खणसंवच्छरे, सणिच्छरसंवच्छरे । ( सू० ५४ )

'ता कइ ण ' मित्यादि, ता इति पूर्ववत् , कति-किंसङ्ख्याः णमिनि वाक्यालङ्कारे, संवत्सरा आख्याता इति वदेत् ?, भगवानाह-' ता ' इत्यादि, ता इति प्राग्वत् , पञ्च संवत्सरा आख्याता इति वदेत् , तद्यथा-नक्षत्रसंवत्सरमित्यादि, तत्र यावता कालेनाष्टाविंशत्याऽपि नक्षत्रै. सह क्रमेण योगपरिसमाप्तिस्तावान् कालविशेषो द्वादशभिर्गुणितो नक्षत्रसंवत्सर , उक्तं च—"नक्खत्तचंदजोगो वारसगुणिओ य नक्खत्तो" अत्र पुनरेकोनितनक्षत्रपर्याययोग एको नक्षत्रमास ,स च सप्तविंशतिरहोरात्रा एकविंशतिश्च सप्तषष्टिभागा अहोरात्रस्य, एप राशिर्यदा द्वादशभिर्गुण्यते तदा त्रीण्यहोरात्रश-

तानि सप्तविंशत्यधिकानि एकपञ्चाशच्च सप्तषष्टिभागा अहोरात्रस्य, एतावत्प्रमाणो नक्षत्रसंवत्सरः । युग पञ्चवर्षात्मकं तत्पूरकः संवत्सरो युगसंवत्सरः । युगस्य प्रमाणहेतुः संवत्सरः प्रमाणसंवत्सरः । लक्षणेन यथावस्थितेनोपेतः संवत्सरो लक्षणसंवत्सरः । शनैश्चरनिष्पादितः संवत्सरः शनैश्चरसंवत्सरः । शनैश्चरसंभवः । सू० प्र० १० पाहु० । नक्षत्रसंवत्सरो ' णक्खत्तसंवच्छर ' शब्दे चतुर्थभागे १७६२ पृष्ठे उक्तः । ) ( युगसंवत्सरः ' जुग ' शब्दे चतुर्थभागे १५६७ पृष्ठे उक्तः । ) ( प्रमाणसंवत्सरः ' पमाणसंवच्छर ' शब्दे पञ्चमभागे ४७६पृष्ठे उक्तः । ) ( लक्षणसंवत्सरः ' लक्खणसंवच्छर ' शब्दे षष्ठभागे उक्तः । )

प्रमाणसंवत्सरेऽत्र विशेषमाह—

**ता पमाणसंवच्छरे पंचविहे पणत्ते, तं जहा—नक्खत्ते चंदे उद्द आइच्चे अभिवड्ढिए । ( सू० ५७ )**

'पमाणे' त्यादि, प्रमाणसंवत्सरः पञ्चविधः प्रज्ञप्तः, तद्यथा—नक्षत्रसंवत्सरः ऋतुसंवत्सरश्चन्द्रसंवत्सरः आदित्यसंवत्सरोऽभिवर्द्धितसंवत्सरश्च । तत्र नक्षत्रचन्द्राभिवर्द्धितसंवत्सराणां स्वरूपं प्रागेवोक्तमिदानीमृतुसंवत्सरादित्यसंवत्सरयोः स्वरूपमुच्यते—तत्र द्वे घटिके एको मुहूर्त्तस्त्रिंशन्मुहूर्त्ता अहोरात्रः, पञ्चदश परिपूर्णा अहोरात्राः पक्षः, द्वौ पक्षौ मासो, द्वादश मासाः संवत्सरो, यस्मिंश्च संवत्सरे त्रीणि शतानि षष्ट्यधिकानि परिपूर्णान्यहोरात्राणां भवति एष ऋतुसंवत्सरः । ऋतवो लोकप्रसिद्धाः वसन्तादयः तत्प्रधानः संवत्सरः ऋतुसंवत्सरः । अस्य चापरमपि नामद्वयमस्ति, तद्यथा—कर्म्मसंवत्सरः, सवनसंवत्सरः । तत्र कर्म लौकिको व्यवहारस्तत्प्रधानः संवत्सरः कर्म्मसंवत्सरः, लोको हि प्रायः सर्वोऽप्यनेनैव संवत्सरेण व्यवहरति । तथा चैतद्गतमासमधिकृत्यान्यत्रोक्तम्—"कम्मो निरसयाए, मासो ववहारकारगो लोए । सेसाओ संसयाए, ववहारे दुक्करो घित्तुं ॥१॥" तथा सवनं—कर्म्मसु प्रेरणं 'षू' प्रेरणे इति वचनात्, तत्प्रधानः संवत्सरः सवनसंवत्सर इत्यप्यस्य नाम, तथा चोक्तम्—

"बे नालिया मुहुत्तो, सट्ठी उण नालिया अहोरत्तो ।
पन्नरस अहोरत्ता, पक्खो तीसं दिणा मासो ॥ १ ॥
संवच्छरो उ बारस, मासा पक्खा य ते चउव्वीसं ।
तिन्नेव सया सट्ठी, हवंति राइंदियाणं तु ॥ २ ॥
एसो उ कमो भणिओ, नियमा संवच्छरस्स कम्मस्स ।
कम्मो त्ति सावणो त्ति य, उउऽ त्ति य तस्स नामाणि ॥३॥"

तथा यावता कालेन षडपि प्रावृडादयः ऋतवः परिपूर्णा परावृत्ता भवन्ति तावान् कालविशेष आदित्यसंवत्सरः । उक्तं च—"छप्पि उऊ परियट्टा, एसो संवच्छरो उ आइच्चो" तत्र यद्यपि लोके षष्ट्यहोरात्रप्रमाणः प्रावृडादिक ऋतुः प्रसिद्ध तथापि परमार्थतः स एकषष्ट्यहोरात्रप्रमाणो वेदितव्यः, तथैवोत्तरकालमव्यभिचारदर्शनात्, अत एव चास्मिन् संवत्सरे त्रीणि शतानि षट्षष्ट्यधिकानि रात्रिन्दिवानां द्वादशभिश्च मासैः संवत्सरं भवति, तथा चान्यत्रापि पञ्चस्वपि संवत्सरेषु यथाक्रमेव रात्रिन्दिवानां परिमाणमुक्तम्—

"तिन्नि अहोरत्तसया, छावट्ठा भक्खरो हवइ वासो ।
तिन्नि सया पुण सट्ठी, कम्मो संवच्छरो होइ ॥ १ ॥
तिन्नि अहोरत्तसया, चउपन्ना नियमसो हवइ चंदो ।
भागो य बारसेव य, बावट्ठिकएण छेएण ॥ २ ॥
तिन्नि अहोरत्तसया, सत्तावीसा य होंति नक्खत्ता ।
एक्कावन्न भागा, सत्तट्ठिकएण छेएण ॥ ३ ॥
तिन्नि अहोरत्तसया, तेसीई चेव होइ अभिवड्ढी ।
चोयालीसं भागा, बावट्ठिकएण छेएण ॥ ४ ॥"

एताश्चतस्रोऽपि गाथाः सुगमाः । इदं च प्रतिसंवत्सरं रात्रिन्दिवपरिमाणमग्रेऽपि वक्ष्यति परमिह प्रस्तावादुक्तम् । सम्प्रति विनेयजनानुग्रहाय संवत्सरसंख्यातो माससंख्या प्रदर्श्यते—तत्र सूर्यसंवत्सरस्य परिमाणं—त्रीणि शतानि षट्षष्ट्यधिकानि रात्रिन्दिवानां द्वादशभिश्च मासैः संवत्सरस्तत्र त्रयाणां शतानां षट्षष्ट्यधिकानां द्वादशभिर्भागो ह्रियते, लब्धाः त्रिंशत् ३०, शेषाणि तिष्ठन्ति षट् ६, ते अर्द्धे क्रियन्ते, जाता द्वादश, ततो लब्धमेकं दिवसस्यार्द्धमेतावत्परिमाणः सूर्यमासः, तथा कर्म्मसंवत्सरस्य परिमाणं—त्रीणि शतानि षष्ट्यधिकानि रात्रिन्दिवानां तेषां द्वादशभिर्भागे हृते लब्धास्त्रिंशदहोरात्रा एतावत्कर्ममासपरिमाणम्, तथा चन्द्रसंवत्सरस्य परिमाणं त्रीण्यहोरात्रशतानि चतुष्पञ्चाशदधिकानि द्वादश च द्वाषष्टिभागा अहोरात्रस्य, तत्र त्रयाणां शतानां चतुष्पञ्चाशदधिकानां द्वादशभिर्भागे हृते लब्धा एकोनत्रिंशदहोरात्राः, शेषाः तिष्ठन्ति षट् अहोरात्राः, ते द्वाषष्टिभागकरणार्थं द्वाषष्ट्या गुण्यन्ते, जातानि त्रीणि शतानि द्विसप्तत्यधिकानि ३७२, येऽपि द्वादश द्वाषष्टिभागा उपरितनास्तेऽपि तत्र प्रक्षिप्यन्ते, जातानि त्रीणि शतानि चतुरशीत्यधिकानि, तेषां द्वादशभिर्भागे हृते लब्धा द्वात्रिंशत् द्वाषष्टिभागाः, एतावच्चन्द्रमासपरिमाणम् । तथा नक्षत्रसंवत्सरस्य परिमाणं—त्रीणि शतानि सप्तविंशत्यधिकानि रात्रिन्दिवानामेकस्य च रात्रिन्दिवस्य एकपञ्चाशत्सप्तषष्टिभागा । तत्र त्रयाणां शतानां सप्तविंशत्यधिकानां द्वादशभिर्भागो ह्रियते, लब्धा सप्तविंशतिरहोरात्राः, शेषास्त्रयस्तिष्ठन्ति, ततस्तेऽपि सप्तषष्टिभागकरणार्थं सप्तषष्ट्या गुण्यन्ते, जाते द्वे शते एकोत्तरे २०१, येऽपि च उपरितना एकपञ्चाशत्सप्तषष्टिभागास्तेऽपि तत्र प्रक्षिप्यन्ते, जाते द्वे शते द्विपञ्चाशदधिके २५२, तेषां द्वादशभिर्भागे हृते लब्धा एकविंशतिः सप्तषष्टिभागा, एतावन्नक्षत्रमासपरिमाणम् । तथा अभिवर्द्धितसंवत्सरस्य परिमाणं—त्रीणि रात्रिन्दिवशतानि त्र्यशीत्यधिकानि चतुश्चत्वारिंशच्च, द्वाषष्टिभागा रात्रिन्दिवस्य, तत्र त्रयाणां शतानां त्र्यशीत्यधिकानां द्वादशभिर्भागो ह्रियते, लब्धा एकत्रिंशदहोरात्राः शेषास्तिष्ठन्त्यहोरात्रा एकादश, ते च चतुर्विंशत्युत्तरशतभागकरणार्थं चतुर्विंशत्युत्तरशतेन १२४ गुण्यन्ते, जातानि त्रयोदश शतानि चतुःषष्ट्यधिकानि १३६४, येऽपि चोपरितनाश्चतुश्चत्वारिंशद्द्वाषष्टिभागास्तेऽपि चतुर्विंशत्युत्तरशतभागकरणार्थं द्वाभ्यां गुण्यन्ते, जाता अष्टाशीतिः । साऽनन्तरराशौ प्रक्षिप्यते, जातानि चतुर्दश शतानि द्विपञ्चाशदधिकानि १४५२, तेषां द्वादशभिर्भागो ह्रियते, लब्ध-

मेकविंशत्युत्तरं शतं चतुर्विंशत्युत्तरशतभागानाम्, एतावद-भिवर्द्धितमासपरिमाणम्, तथा चोक्तम्-

"आइच्चो खलु मासो, तीसं अद्धं च सावणो तीसं ।
चंदो एगुणतीसं, विसट्ठिभागा य बत्तीसं ॥ १ ॥
नक्खत्तो खलु मासो, सत्तावीसं भवे अहोरत्ता ।
अंसा य एक्कवीसा, सत्तट्ठिकएण छेएण ॥ २ ॥
अभिवड्ढिओ य मासो, एक्कत्तीसं भवे अहोरत्ता ।
भागसयमेगवीसं, चउवीससएण छेएणं ॥ ३ ॥"

सम्प्रति एतैरेव पञ्चभिः संवत्सरैः प्रागुक्तस्वरूपं युगं पञ्च-संवत्सरात्मकं मासानधिकृत्य प्रमीयते । तत्र युगं प्रागुदित-स्वरूपं यदि सूर्यमासैर्विभज्यते ततः षष्टिः सूर्यमासा युगं भवति,तथाहि-सूर्यमासे सार्द्धास्त्रिंशदहोरात्रा युगे चाहोरात्रा-णामष्टादश शतानि त्रिंशदधिकानि भवन्ति । कथमेतदवसी-यते इति चेत्, उच्यते-इह युगे त्रयश्चन्द्रसंवत्सरा द्वौ चाभि-वर्द्धितसंवत्सरौ, एकैकस्मिंश्च चन्द्रसंवत्सरेऽहोरात्राणां त्रीणि शतानि चतुष्पञ्चाशदधिकानि भवन्ति, द्वादश च द्वाष-ष्टिभागा अहोरात्रस्य ३५४ $\frac{१२}{६२}$ तत एतत् त्रिभिर्गुण्यते, जातान्यहोरात्राणां दश शतानि द्वाषष्ट्यधिकानि १०६२ षट्त्रिंशच्च द्वाषष्टिभागा अहोरात्रस्य $\frac{३६}{६२}$, अभिवर्द्धितसंवत्सरे च एकैकस्मिन् अहोरात्राणां त्रीणि शतानि त्र्यशीत्यधिकानि चतुश्चत्वारिंशच्च द्वाषष्टिभागा अहोरात्रस्य, ( तत एतद् द्वाभ्यां गुण्यते जातानि सप्तषष्ट्यधिकानि सप्त-शतान्यहोरात्राणां षड्विंशतिश्च द्विषष्टिभागा अहोरात्रस्य त-देवं चन्द्रसंवत्सरत्रयाभिवर्द्धितसंवत्सरद्वयाहोरात्रमीलने त्रिंशदधिकान्यहोरात्राणामष्टादश शतानि, सूर्यमासस्य च पूर्वोक्तरीत्या सार्द्धत्रिंशदहोरात्रमानंतति तेन भागे कृते स्पष्टमेव षष्टेर्लाभ । तथाहि-अष्टादशशत्यास्त्रिंशदधि-काया अर्धीकरणाय द्वाभ्यां गुणने षष्ठ्यधिका षट्— त्रिंशच्छती त्रिंशतश्चार्धीकरणाय द्वाभ्यां गुणने षष्टिः, एक प्रक्षेपे एकषष्टिस्तेन पूर्वोक्तराशेः भागे कृते लभ्यते षष्टिः, तथा च युगमध्ये सूर्यमासा षष्टिरिति स्थितम्। सावनस्य तु मासा एकषष्टि, त्रिंशद्दिनमानत्वाद् तस्य त्रिंशदधिकाया अष्टादशशत्यास्त्रिंशता भागे एकषष्टेर्लाभात्। चन्द्रमासा द्विषष्टिर्यत एकोनविंशत्या अहोरात्रैरेकोनत्रिंशता द्विषष्टि-भागैरधिकैर्मासः, युगदिनानां तैर्भागे च द्वाषष्टेर्लाभात्, कथम् ?, त्रिंशदधिकाया अष्टादशशत्या द्विषष्टिभागकरणार्थं गुणकारे एकं लक्षं त्रयोदश सहस्राणि षष्ट्यधिकमेकं शतम् ११३१६६, चन्द्रमासस्यापि भागकरणाय द्विषष्ट्या एकोनत्रिंशति गुणिते प्रक्षिप्ते च द्वात्रिंशति त्रिंशदधिका— या अष्टादशशत्या भाव, तया भक्ते पूर्वोक्तराशौ द्वाषष्टेर्भा-वात् चन्द्रमासा द्वाषष्टिरिति । नक्षत्रमासाः सप्तषष्टिः, कथमिति चेत्, नक्षत्रमासस्तावत् सप्तविंशत्या अहोरा-त्रैरेकविंशत्या च सप्तषष्टिभागैः, ) तत्र सप्तविंशतिरहोरा-त्राः सप्तषष्टिभागकरणार्थं सप्तषष्ट्या गुण्यन्ते, जातान्यष्टा-दश शतानि नवोत्तराणि १८०६, तत उपरितना एकविंश-तिः सप्तषष्टिभागास्तत्र प्रक्षिप्यन्ते, जातान्यष्टादश शतानि त्रिंशदधिकानि १८३०, युगस्यापि सम्बन्धिनस्त्रिंशदधिका-ष्टादशशतप्रमाणा अहोरात्राः सप्तषष्ट्या गुण्यन्ते, जात एको लक्षः द्वाविंशतिः सहस्राणि षट् शतानि दशोत्तराणि १२२६१०, एतेषामष्टादशशतैस्त्रिंशदधिकैर्नक्षत्रमाससत्कसप्त-षष्टिभागरूपैर्भागो ह्रियते, लब्धाः सप्तषष्टिर्भागाः ६७ । तथा यदि युगमभिवर्द्धितमासैः परिभज्यते तदा अभिवर्द्धितमासा युगे भवन्ति सप्तपञ्चाशत् सप्त रात्रिन्दिवानि एकादश मुहूर्त्ता एकस्य च मुहूर्त्तस्य द्वाषष्टिभागास्त्रयोविंशतिः, तथा-हि-अभिवर्द्धितमासपरिमाणमेकत्रिंशदहोरात्रा एकविंशत्यु-त्तरं शतं चतुर्विंशत्यधिकशतभागानामहोरात्रस्य, तत एक-त्रिंशदहोरात्राश्चतुर्विंशत्युत्तरशतभागकरणार्थं चतुर्विंशत्युत्त-रेण शतेन गुण्यन्ते जातान्यष्टात्रिंशच्छतानि चतुश्चत्वारिंशद-धिकानि ३८४४, तत उपरितनमेकविंशत्युत्तरं शतं भागानां तत्र प्रक्षिप्यते, जातान्येकोनचत्वारिंशच्छताति पञ्चषष्ट्यधि-कानि३९६५,यानि च युगे अहोरात्राणामष्टादश शतानि त्रिंश-दधिकानि १८३० तानि चतुर्विंशत्युत्तरेण शतेन गुण्यन्ते, जाते द्वे लक्षे षड्विंशति सहस्राणि नव शतानि विंशत्य-धिकानि २२६९२०, तत एतेषामेकोनचत्वारिंशच्छतैः पञ्च-षष्ट्यधिकैरभिवर्द्धितमाससत्कचतुर्विंशत्युत्तरशतभागरूपैर्भागो ह्रियते, लब्धाः सप्तपञ्चाशन्मासाः 'शेषाणि तिष्ठ-न्ति नव शतानि पञ्चदशोत्तराणि ९१५, तेषामहोरा-त्रानयनाय चतुर्विंशत्यधिकेन शतेन भागो ह्रियते, ल-ब्धानि सप्त रात्रिन्दिवानि, शेषास्तिष्ठन्ति चतुर्विंशत्युत्तर-शतभागाः सप्तचत्वारिंशत्, तत्र चतुर्भिर्भागैरेकस्य च भागस्य चतुर्भिस्त्रिशद्भागैर्मुहूर्त्तो भवति, तथाहि— एकस्मिन्नहोरात्रे त्रिंशन्मुहूर्त्ता अहोरात्रे च चतुर्विंशत्यु-त्तर शतं भागानां कल्पितमास्तं, ततस्तस्य चतुर्विंश-त्युत्तरशतस्य त्रिंशता भागे हृते लब्धाश्चत्वारो भागाः एकस्य च भागस्य सत्काश्चत्वारस्त्रिंशद्भागास्तत्र प-ञ्चचत्वारिंशद्भागैरेकस्य च भागस्य सत्कैश्चतुर्दशभिस्त्रिं-शद्भागैरेकादश मुहूर्त्ता लब्धाः शेषस्तिष्ठत्येको भागः, ए-कस्य च भागस्य सत्काः षोडश त्रिंशद्भागाः । किमुक्तं भवति?—षट्चत्वारिंशत्त्रिंशद्भागा एकस्य भागस्य सत्काः शेषास्तिष्ठन्ति, ते च किल मुहूर्त्तस्य चतुर्विंशत्युत्तरश-तभागरूपास्ततः षट्चत्वारिंशतश्चतुर्विंशत्युत्तरशतस्य च द्विकेनापवर्त्तना क्रियते, लब्धा मुहूर्त्तस्य द्वाषष्टिभागास्त्र-योविंशतिः । उक्तं चैतदन्यत्रापि—

"तत्थ पडिमिज्जमाणे, पंचहिं माणेहिं सव्वगणिएहिं ।
मासेहिं विभज्जंता, जइ मासा होंति ते वोच्छं ॥१॥"

अत्र 'तत्थे' त्ति तत्र, 'पंचहिं माणेहिं' ति-पञ्चभिर्मानैः-मानसंवत्सरैः प्रमाणसंवत्सरैरादित्यचन्द्रादि-भिरित्यर्थः,पूर्वगणितैः—प्राक्प्रतिसंख्यातस्वरूपैः प्रतिमीय-माने प्रतिगण्यमाने मासैः—सूर्यादिमासैः शेषं सुगमम् । "आइच्चेण उ सट्ठी, मासा उउणो उ होंति एगट्ठी । चंदेण उ बावट्ठी, सत्तट्ठी होंति नक्खत्ते ॥ १ ॥ सत्तावण्णं मासा, सत्त य राइंदियाइं अभिवड्ढे । इक्कारस य मुहुत्ता, विसट्ठिभागा य तेवीसं ॥ २ ॥" सू० प्र० १० पाहु० ।

यथा 'संवत्सराणामादिर्वक्तव्य' इति, ततस्तद्विषयं प्र-श्नसूत्रमाह–

ता कहं ते संवच्छराणमादी आहितेति वदेज्जा ?, तत्थ

खलु इमे पंच संवच्छरे पण्णत्ता, तंजहा–चंदे, चन्दे, अभिवड्ढिते, चंदे, अभिवड्ढिते। ता एतेसि णं पंचण्हं संवच्छराणं पढमस्स चंदस्स संवच्छरस्स के आदी आहितेति वदेज्जा ?, ता जेणं पंचमस्स अभिवड्ढितसंवच्छरस्स पज्जवसाणे से णं पढमस्स चंदस्स संवच्छरस्स आदी अणंतरपुरक्खडे समए, तीसे णं किं पज्जवसिते आहितेति वदेज्जा ?, ता जेणं दोच्चस्स आदी चंदसंवच्छरस्स से णं पढवस्स चंदसंवच्छर पज्जवसाणे अणंतरपच्छाकडे समये। तं समयं च णं चंदे केणं णक्खत्तेणं जोएति ?, ता उत्तराहिं आसाढाहिं, उत्तराणं आसाढाणं छदुवीसं मुहुत्ता छदुवीसं च बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिधा छित्ता चउप्पण्णं चुण्णिया भागा सेसा, तं समयं सूरे केणं णक्खत्तेणं जोएति ?, ता पुणव्वसुणा, पुणव्वसुस्स सोलस मुहुत्ता अट्ठ य बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता वीसं चुण्णिया भागा सेसा। ता एएसि णं पंचण्हं संवच्छराणं दोच्चस्स णं चंदसंवच्छरस्स के आदी आहितेति वदेज्जा ?, ता जे ण पढमस्स चंदसंवच्छरस्स पज्जवसाणे से णं दोच्चस्स णं चंदसंवच्छरस्स आदी अणंतरपुरक्खडे समये, ता से णं किं पज्जवसिते आहितेति वदेज्जा ?, ता जे णं तच्चस्स अभिवड्ढियसंवच्छरस्स आदी से णं दोच्चस्स संवच्छरस्स पज्जवसाणे अणंतरपच्छाकडे समये। तं समयं च णं चंदे केणं णक्खत्तेणं जोएति ?, ता पुव्वाहिं आसाढाहिं, पुव्वाणं आसाढाणं सत्त मुहुत्ता तेवण्णं च बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिधा छेत्ता इगतालीसं चुण्णिया भागा सेसा, तं समयं च णं सूरे केणं णक्खत्तेणं जोएति ?, ता पुणव्वसुणा, पुणव्वसुस्स णं बायालीस मुहुत्ता पणतीसं च बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिधा छेत्ता सत्त चुण्णिया भागा सेसा। ता एतेसि णं पंचण्हं संवच्छराणं तच्चस्स अभिवड्ढितसंवच्छरस्स के आदी आहिताति वदेज्जा ?, ता जेणं दोच्चस्स चंदसंवच्छरस्स पज्जवसाणे से णं तच्चस्स अभिवड्ढितसंवच्छरस्स आदी अणंतरपुरक्खडे समए। ता से णं किं पज्जवसिते आहितेति वदेज्जा ?, ता जे णं चउत्थस्स चंदसंवच्छरस्स आदी से णं तच्चस्स अभिवड्ढितसंवच्छरस्स पज्जवसाणे अणंतरपच्छाकडे समए। तं समयं च णं चंदे केणं नक्खत्तेणं जोएति ?, ता उत्तराहिं आसाढाहिं उत्तराणं आसाढाणं तेरस मुहुत्ता तेरस य बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिधा छेत्ता सत्तावीसं चुण्णिया भागा सेसा, तं समयं च णं सूरे केणं णक्खत्तेणं जोएति ?, ता पुणव्वसुणा, पुणव्वसुस्स दो मुहुत्ता छप्पण्णं बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिधा छेत्ता सट्ठी चुण्णिया भागा सेसा। ता एएसि णं पंचण्हं संवच्छराणं चउत्थस्स चंदसंवच्छरस्स के आदी आहितेति वदेज्जा ?, ता जे णं तच्चस्स अभिवड्ढितसंवच्छरस्स पज्जवसाणे से णं चउत्थस्स चंदसंवच्छरस्स आदी अणंतरपुरक्खडे समये, ता से णं किं पज्जवसिते आहितेति वदेज्जा ?, ता जे णं चरिमस्स अभिवड्ढियसंवच्छरस्स आदी से णं चउत्थस्स चंदसंवच्छरस्स पज्जवसाणे अणंतरपच्छाकडे समये, तं समयं च णं चंदे केणं नक्खत्तेणं जोएति?, ता उत्तराहिं आसाढाहिं, उत्तराणं आसाढाणं चत्तालीसं मुहुत्ता चत्तालीसं च बा(ब)वट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिधा छेत्ता चउसट्ठी चुण्णिया भागा सेसा। तं समयं च णं सूरे केणं णक्खत्तेणं जोएति ?, ता पुणव्वसुणा, पुणव्वसुस्स अउणतीसं मुहुत्ता एक्कवीसं बावट्ठिभागा मुहुत्तस्स बावट्ठिभाग च सत्तट्ठिधा छेत्ता सीतालीसं चुण्णिया भागा सेसा, ता एतेसि णं पंचण्हं संवच्छराणं पञ्चमस्स अभिवड्ढितसंवच्छरस्स के आदी आहिताति वदेज्जा ?, ता जे णं चउत्थस्स चंदसंवच्छरस्स पज्जवसाणे से णं पंचमस्स अभिवड्ढितसंवच्छरस्स आदी अणंतरपुरक्खडे समये। ता– से णं किं पज्जवसिते आहितेति वदेज्जा ?, ता जे णं पढमस्स चंदसंवच्छरस्स आदी से णं पंचमस्स अभिवड्ढितसंवच्छरस्स पज्जवसाणे अणंतरपच्छाकडे समये। तं समयं च णं चंदे केणं णक्खत्तेणं जोएति ?, ता उत्तराहिं आसाढाहिं, उत्तराणं चरमसमये, तं समयं च णं सूरे केणं णक्खत्तेणं जोएति ?, ता पुस्सेणं, पुस्सस्स णं एक्कवीसं मुहुत्ता तेतालीसं च बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं सत्तट्ठिधा छेत्ता तेत्तीसं चुण्णिया भागा सेसा। ( सू० ७१ ) ॥ एक्कारसमं पाहुडं समत्तं ॥

'ता कहं ते' इत्यादि, ता इति पूर्ववत्, कथ–केन प्रकारेण भगवन्! त्वया संवत्सराणामादिराख्यात इति वदेत् ?, भगवानाह–'तत्थ खलु' इत्यादि, तत्र–संवत्सरविचारविषये खल्विमे पञ्च संवत्सराः प्रज्ञप्ताः, तद्यथा–चन्द्रश्चन्द्रोऽभिवर्धितश्चन्द्रोऽभिवर्धितः, एतेषां च स्वरूपं प्रागेवोपदर्शितम्। भूयः प्रश्नयति–'ता एएसि णं' मित्यादि, ता इति पूर्ववत्, एतेषां पञ्चानां संवत्सराणां मध्ये प्रथमस्य चान्द्रस्य संवत्सरस्य क आदिराख्यात इति वदेत् ?, भगवानाह–'ता जे णं' मित्यादि, यत् पाश्चात्ययुगवर्तिनः पञ्चमस्याभिवर्धितसंवत्सरस्य पर्यवसानं–पर्यवसानसमयः तस्मादनन्तरं पुरस्कृतो–भावी यः समयः स प्रथमस्य चन्द्रसंवत्सरस्यादिः, तदयं प्रथमसंवत्सरस्यादिरिति। स-

म्प्रति पर्यवसानसमयं पृच्छति—' ता से णं ' इत्यादि , ता इति पूर्ववत् , स प्रथमश्चान्द्रसंवत्सरः किं पर्यवसितः—किं पर्यवसान आख्यात इति वदेत् ?,भगवानाह—' ता जे ण ' मित्यादि , यो द्वितीयस्य चान्द्रसंवत्सरस्यादिः—आदिसमयस्तस्मादनन्तरो य. पुरस्कृतः—अतीतसमयः स प्रथमचान्द्रसंवत्सरस्य पर्यवसानं-पर्यवसानसमयः, 'तं समयं च णं' मित्यादि, तस्मिंश्चान्द्रसंवत्सरपर्यवसानभूते समये चन्द्र. केन नक्षत्रेण सह योगं युनक्ति-करोति ? , भगवानाह-' ता उत्तराहिं ' इत्यादि , इह द्वादशभिः पौर्णमासीभिश्चान्द्रः संवत्सरो भवति, ततो यदेव प्राक् द्वादश्यां पौर्णमास्यां चन्द्रनक्षत्रयोगपरिमाणं सूर्यनक्षत्रयोगपरिमाणं चोक्तं तदेवान्यूनातिरिक्तमत्रापि द्रष्टव्यम् ,तथैव गणितभावना कर्त्तव्या , एवं शेषसंवत्सरगतान्यादिपर्यवसानसूत्राणि भावनीयानि यावत्प्राभृतपरिसमाप्तिः, नवरं गणितभावना क्रियते-तत्र द्वितीयसंवत्सरपरिसमाप्तिश्चतुर्विंशतितमपौर्णमासीपरिसमाप्तौ , तत्र ध्रुवराशि. षट्षष्टिर्मुहूर्त्ता एकस्य च मुहूर्तस्य पञ्च द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य एकः सप्तषष्टिभागः ६६—५—१ इत्येवं प्रमाणश्चतुर्विंशत्या गुण्यते, जातानि पञ्चदश शतानि चतुरशीत्यधिकानि मुहूर्तानां मुहूर्त्तगतानां च द्वाषष्टिभागानां विंशत्युत्तरं शतमेकस्य च द्वाषष्टिभागस्य चतुर्विंशतिः सप्तषष्टिभागाः १५८४। १२०।२४ । तत एतस्मादष्टभिः मुहूर्त्तशतैरेकोनविंशत्यधिकैरेकस्य च मुहूर्तस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागैरेकः परिपूर्णो नक्षत्रपर्यायः शुद्ध्यति , तत. स्थितानि पश्चात्सप्त मुहूर्त्तशतानि पञ्चषष्ट्यधिकानि मुहूर्त्तगतानां च द्वाषष्टिभागानां पञ्चनवतिरेकस्य च द्वाषष्टिभागस्य पञ्चविंशति. सप्तषष्टिभागाः ७६५। ६५। २५। ततो 'मूले सत्तेव चोयाला' इत्यादि वचनात् सप्तभिश्चतुश्चत्वारिंशदधिकैर्मुहूर्त्तशतैरेकस्य च मुहूर्त्तस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागैरभिजिदादीनि मूलपर्यन्तानि नक्षत्राणि शुद्धानि, तत. स्थिता. पश्चात् द्वाविंशतिर्मुहूर्त्ता एकस्य च मुहूर्त्तस्याष्टौ द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य षड्विंशतिः सप्तषष्टिभागा. ॥ २२।८।६६॥ तत आगतं द्वितीयचान्द्रसंवत्सरस्य पर्यवसानसमये पूर्वाषाढानक्षत्रस्य सप्त मुहूर्त्ता एकस्य च मुहूर्त्तस्य त्रिपञ्चाशद् द्वाषष्टिभागा एकस्य द्वाषष्टिभागस्य एकचत्वारिंशत् सप्तषष्टिभागाः शेषाः, तदानीं च सूर्येण युक्तस्य पुनर्वसोर्द्वाचत्वारिंशद् मुहूर्त्ता एकस्य च मुहूर्त्तस्य पञ्चत्रिंशत् द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य सप्त सप्तषष्टिभागा' शेषा', तथाहि—स एव ध्रुवराशि ।६६।५।१। चतुर्विंशत्या गुणितो जातानि पञ्चदश शतानि चतुरशीत्यधिकानि मुहूर्त्तानां मुहूर्तगतानां च द्वाषष्टिभागाना विंशत्युत्तरं शतम् एकस्य च द्वाषष्टिभागस्य चतुर्विंशतिः सप्तषष्टिभागा ॥१५८४॥ १२०।२४। तत एतस्मादष्टभि. शतैरेकोनविंशत्यधिकैर्मुहूर्त्तानामेकस्य च मुहूर्त्तस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागै ॥८१६।२४।६६ ॥ एक. परिपूर्णो नक्षत्रपर्यायः शुद्धः, स्थितानि पश्चात् सप्तमुहूर्तशतानि पञ्चषष्ट्यधिकानि मुहूर्त्तानामेकमुहूर्त्तगताश्च द्वाषष्टिभागाः पञ्चनवतिः एकस्य च द्वाषष्टिभागस्य पञ्चविंशतिः सप्तषष्टिभागाः ।७६५।६५।२५। तत एतेभ्य एकोनविंशत्या मुहूर्तैरेकस्य च मुहूर्तस्य त्रिचत्वारिंशता द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य त्रयस्त्रिंशता सप्तषष्टिभागैः पुष्यः शुद्ध', स्थितानि पश्चान्मुहूर्त्तानां सप्त शतानि षट्चत्वारिंशदधिकानि एकस्य च मुहूर्त्तस्य एकपञ्चाशत् द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्यैकोनषष्टिः सप्तषष्टिभागाः ७४६। ५१।५९। ततो भूयोऽप्येतस्मात् सप्तभिर्मुहूर्त्तशतैश्चतुश्चत्वारिंशदधिकैरेकस्य च मुहूर्त्तस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागैरश्लेषादीनि आर्द्रापर्यन्तानि शुद्धानि, स्थितौ पश्चाद् द्वौ मुहूर्त्तावेकस्य च मुहूर्त्तस्य षड्विंशतिर्द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य षष्टिः सप्तषष्टिभागाः २।२६।६०। आगतं द्वितीयचान्द्रसंवत्सरपर्यवसानसमये पुनर्वसुनक्षत्रस्य द्वाचत्वारिंशन्मुहूर्त्ता एकस्य च मुहूर्त्तस्य पञ्चत्रिंशद् द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य सप्त सप्तषष्टिभागाः शेषाः, तथा तृतीयाभिवर्द्धितसंज्ञसवत्सरपरिसमाप्तिः सप्तत्रिंशता पौर्णमासीभिस्ततो ध्रुवराशिः ६६। ५। १। सप्तत्रिंशता गुण्यते, जातानि मुहूर्त्तानां चतुर्विंशतिः शतानि द्वाचत्वारिंशदधिकानि द्वाषष्टिभागानां च पञ्चाशीत्यधिकं शतं सप्तषष्टिभागा. सप्तत्रिंशत् २४४२। १८५। ३७ ।तत एतेभ्योऽष्टौ मुहूर्त्तशतानि एकोनविंशत्यधिकानि एकस्य च मुहूर्त्तस्य चतुर्विंशतिर्द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य षट्षष्टिः सप्तषष्टिभागा इत्येकनक्षत्रपर्यायपरिमाणं द्वाभ्या गुणयित्वा शोध्यते, ततः स्थितानि पश्चादष्टौ मुहूर्त्तशतानि चतुरुत्तराणि मुहूर्त्तसत्कानां च द्वाषष्टिभागानां पञ्चत्रिंशदधिकं शतम् एकस्य च द्वाषष्टिभागस्य एकोनचत्वारिंशत्सप्तषष्टिभागा. । ८०४। १३५। ३९ । तत एतेभ्य. सप्तभिर्मुहूर्त्तशतश्चतुःसप्तत्यधिकैरेकस्य च मुहूर्त्तस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागैरभिजिदादीनि पूर्वाषाढापर्यन्तानि नक्षत्राणि शुद्धानि , स्थिताः पश्चादेकत्रिंशन्मुहूर्त्ता एकस्य च मुहूर्तस्याष्टचत्वारिंशद् द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य चत्वारिंशत्सप्तषष्टिभागाः ३१। ४८। ४०। तत आगतं तृतीयाभिवर्द्धितसंज्ञसंवत्सरपर्यवसानसमये उत्तराषाढानक्षत्रस्य त्रयोदश मुहूर्त्ता एकस्य च मुहूर्त्तस्य त्रयोदश द्वाषष्टिभागा., एकस्य च द्वाषष्टिभागस्य सप्तविंशति. सप्तषष्टिभागा., शेषाः, तदानीं च सूर्येण सम्प्रयुक्तस्य पुनर्वसुनक्षत्रस्य द्वौ मुहूर्तौ एकस्य,च मुहूर्त्तस्य षट्पञ्चाशद् द्वाषष्टिभागाः, एकं च द्वाषष्टिभागं सप्तषष्टिधा छित्वा तस्य सत्काः षष्टिश्चूर्णिका भागा शेषा., तथाहि-स एव ध्रुवराशि. ६६। ५। १। सप्तत्रिंशता गुण्यते, जातानि मुहूर्त्तानां चतुर्विंशति शतानि द्वाचत्वारिंशदधिकानि मुहूर्त्तसत्कानां च द्वाषष्टिभागाना पञ्चाशीत्यधिकं शतम्। एकस्य च द्वाषष्टिभागस्य सप्तत्रिंशत् सप्तषष्टिभागा. २४४२। १८५। ३७। तत एतेभ्य. पूर्ववत् सकलनक्षत्रपर्यायपरिमाणं द्विगुणं कृत्वा शोध्यते स्थितानि पश्चादष्टौ मुहूर्त्तशतानि चतुरुत्तराणि मुहूर्त्तसत्काना द्वाषष्टिभागाना पञ्चत्रिंश-

धिकं शतम्,एकस्य च द्वाषष्टिभागस्य एकोनचत्वारिंशत्सप्तषष्टिभागा. ८०४ । १३५ । ३६ । ततो भूय एतेभ्य एकोनविंशत्या मुहूर्त्तैरेकस्य च मुहूर्त्तस्य त्रिचत्वारिंशता द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य त्रयस्त्रिंशता सप्तषष्टिभागै. पुष्य. शुद्ध. , स्थितानि पश्चान्मुहूर्तानां सप्त शतानि पञ्चाशीत्यधिकानि मुहूर्त्तसत्कानां च द्वाषष्टिभागानां द्विनवतिरेकस्य च द्वाषष्टिभागस्य पट् सप्तषष्टिभागा. ७८५ । ६२ । ६ । ततो भूयोऽप्येतेभ्य. सप्तभिर्मुहूर्त्तशतैश्चतुश्चत्वारिंशदधिकैरेकस्य च मुहूर्त्तस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागैरश्लेषादीनि आर्द्रापर्यन्तानि शुद्धानि, स्थिता. पश्चान्मुहूर्त्ता द्वाचत्वारिंशत् एकस्य च मुहूर्त्तस्य पञ्च द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य सप्त सप्तषष्टिभागाः ४२ । ५ । ७ । तत आगतं तृतीयाभिवर्द्धितसक्षमेव-सरपर्यवसानसमये सूर्येण सह संयुक्तस्य पुनर्वसोर्द्वौ मुहूर्त्तावेकस्य च मुहूर्त्तस्य पट् पञ्चाशद् द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य षष्टिश्चूर्णिका भागा. शेषाः।तथा चतुर्थचान्द्रसंवत्सरपर्यवसानमेकोनपञ्चाशत्तमपौर्णमासीपरिसमाप्तौ, तत. स एव ध्रुवराशि' ६६ । ५। १। एकोनपञ्चाशता गुण्यते, जातानि मुहूर्त्तानां द्वात्रिंशच्छतानि चतुस्त्रिंशदधिकानि मुहूर्त्तसत्कानां च द्वाषष्टिभागानां द्वे शते पञ्चचत्वारिंशदधिके, एकस्य च द्वाषष्टिभागस्य एकोनपञ्चाशत् सप्तषष्टिभागा. ३२३४ । २४५ । ४६ । तत एतस्मात् , प्रागुक्तं सकलनक्षत्रपर्यायपरिमाणं त्रिभिर्गुणयित्वा शोध्यते, तत स्थितानि सप्त शतानि सप्तसप्तत्यधिकानि मुहूर्त्तानां मुहूर्त्तसत्कानां च द्वाषष्टिभागानां सप्तत्यधिकं शतम् , एकस्य च द्वाषष्टिभागस्य द्विपञ्चाशत् सप्तषष्टिभागा. ७७७ । १७० । ५२ । तत. सप्तभि' शतै. चतु'सप्तत्यधिकैर्मुहूर्त्तानामेकस्य च मुहूर्त्तस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य पट्षष्ट्या सप्तषष्टिभागैर्भूयोऽभिजिदादीनि पूर्वाषाढापर्यन्तानि नक्षत्राणि शुद्धानि, स्थिता. पश्चात्पञ्च मुहूर्त्ता एकस्य च मुहूर्त्तस्य एकविंशतिर्द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य त्रिपञ्चाशत्सप्तषष्टिभागा. ५ । २१ । ५३ । तत आगत चतुर्थचान्द्रसंवत्सरपर्यवसानसमये उत्तराषाढानक्षत्रस्य चन्द्रयुक्तस्य एकोनचत्वारिंशन्मुहूर्त्ता एकस्य च मुहूर्त्तस्य चत्वारिंशद् द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य चतुर्दश सप्तषष्टिभागा. शेषा' , तदानीं च सूर्येण सह युक्तस्य पुनर्वसुनक्षत्रस्य एकोनत्रिंशन्मुहूर्त्ता एकविंशतिर्द्वाषष्टिभागा मुहूर्त्तस्य एकं च द्वाषष्टिभागं सप्तषष्टिधा छित्त्वा तस्य सत्का. सप्तचत्वारिंशच्चूर्णिका भागा. शेषा. , तथाहि—स एव ध्रुवराशि एकोनपञ्चाशता गुण्यते , गुणयित्वा च तत प्रागुक्त सकलनक्षत्रपर्यायपरिमाणं त्रिभिर्गुणयित्वा शोध्यते , स्थितानि सप्त मुहूर्त्तशतानि सप्तसप्तत्यधिकानि मुहूर्त्तसत्कानां च द्वाषष्टिभागानां सप्तत्यधिक शतमेकस्य च द्वाषष्टिभागस्य द्विपञ्चाशत्सप्तषष्टिभागा. ७७७ । १७० । ५२ । , तत एतेभ्य एकोनविंशत्या मुहूर्त्तैरेकस्य च मुहूर्त्तस्य त्रिचत्वारिंशता द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य त्रयस्त्रिंशता सप्तषष्टिभागै पुष्य. शुद्ध , स्थितानि पश्चान्मुहूर्त्तानां सप्त शतानि अष्टापञ्चाशदधिकानि मुहूर्त्तसत्कानां च द्वाषष्टिभागानां सप्तविंशत्यधिकं शतम्,एकस्य च द्वाषष्टिभागस्य एकोनविंशति सप्तषष्टिभागा । ७५८ । १२७ । १६ । तत सप्तभि शतैश्चतुश्चत्वारिंशदधिकैर्मुहूर्त्तानामेकस्य च मुहूर्त्तस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागैरश्लेषादीन्यार्द्रापर्यन्तानि नक्षत्राणि शुद्धानि , स्थिता. पश्चात् पञ्चदश मुहूर्त्ता एकस्य च मुहूर्त्तस्य चत्वारिंशद् द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य विंशतिः सप्तषष्टिभागा । १५ । ४० । २० ।, तत आगतं चतुर्थचान्द्रसंवत्सरपर्यवसानसमये पुनर्वसुनक्षत्रस्य एकोनत्रिंशन्मुहूर्त्ता एकस्य च मुहूर्त्तस्य एकविंशतिर्द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य सप्तचत्वारिंशत्सप्तषष्टिभागा. शेषा इति, पञ्चमाभिवर्द्धितसंवत्सरपर्यवसानं च द्वाषष्टितमपौर्णमासीपरिसमाप्तिसमये , तत एव प्राक् द्वाषष्टितमपौर्णमासीपरिसमाप्तिसमये चन्द्रनक्षत्रयोगपरिमाणं सूर्यनक्षत्रयोगपरिमाणं चोक्तं तदेवान्यूनातिरिक्तमत्रापि द्रष्टव्यम् ॥ इति श्रीमलयगिरिविरचितायां सूर्यप्रज्ञप्तिटीकायामेकादशं प्राभृतं समाप्तम् ।

*तदेवमुक्तमेकादशं प्राभृतम् , सम्प्रति द्वादशमुच्यते-तस्य चायमर्थाधिकारः , यथा 'कति संवत्सरा भवन्ति ' तद्विषयं प्रश्नसूत्रमाह—*

ता कति णं संवच्छरा आहितातिं वदेज्जा ?, तत्थ खलु इमे पंच संवच्छरा पण्णत्ता, तं जहा-णक्खत्ते चंदे उडू आदिच्चे अभिवड्ढिते, ता एतेसि णं पंचण्हं संवच्छराणं पढमस्स नक्खत्तसंवच्छरस्स णक्खत्तमासे तीसतिमुहुत्तेणं ती० २ अहोरत्तेणं मिज्जमाणे केवतिए राइंदियग्गेणं आहितेति वदेज्जा ?, ता सत्तावीसं राइंदियाइं एक्कवीसं च सत्तट्ठिभागा राइंदिअस्स राइंदिअग्गेण आहितेति वदेज्जा ता से णं केवतिए मुहुत्तग्गेणं आहितेति वदेज्जा ?, ता अट्ठसए एकूणवीसे मुहुत्ताणं सत्तावीसं च सत्तट्ठिभागे मुहुत्तस्स मुहुत्तग्गेणं आहितेति वदेज्जा, ता एएसि णं अद्धा दुवालसक्खुत्तकडा णक्खत्ते संवच्छरे, ता से णं केवतिए राइंदियग्गेण आहितात्ति वदेज्जा ?, ता तिण्णि सत्तावीसे राइंदियसते एकावन्नं च सत्तट्ठिभागे राइंदियस्स राइंदियग्गेणं आहितेति वदेज्जा , ता से णं केवतिए मुहुत्तग्गेणं आहितेति वदेज्जा ?, ता णव मुहुत्तसहस्सा अट्ठ य बत्तीसे मुहुत्तसए छप्पन्नं च सत्तट्ठिभागे मुहुत्तस्स मुहुत्तग्गेणं आहितेति वदेज्जा । ( सू० ७२ X )

'ता कइ संवच्छरा' इत्यादि, ता इति पूर्ववत्, कति संवत्सरा भगवन् ! त्वया आख्याता इति वदेत्?, भगवानाह-'तत्थे'त्यादि, तत्र—संवत्सरविचारविषये खल्विमे पञ्च संवत्सरा प्रज्ञप्ता', तद्यथा—' नक्खत्ते ' इत्यादि, पदैकदेशे पदसमुदायोपचारात नक्षत्रसंवत्सरश्चन्द्रसंवत्सर ऋतुसंवत्सर आदित्यसंवत्सरोऽभिवर्द्धितसंवत्सर । एतेषां च पञ्चानामपि संवत्सराणां स्वरूप प्रागेवोपदर्शितम् .' ता एए-

सि ण' मित्यादि प्रश्नसूत्रम्, 'ता' इति पूर्ववत्, एतेषां पञ्चानां संवत्सराणां मध्ये प्रथमस्य नक्षत्रसंवत्सरस्य सत्को यो नक्षत्रमासः स त्रिंशन्मुहूर्त्तप्रमाणेनाहोरात्रेण गण्यमानः कियान् रात्रिन्दिवाग्रेण रात्रिन्दिवपरिमाणेनाख्यात इति वदेत् ?, भगवानाह—'ता' इत्यादि, ता इति पूर्ववत्, सप्तविंशतिः रात्रिन्दिवानि एकविंशतिश्च सप्तषष्टिभागा रात्रिन्दिवस्य रात्रिन्दिवाग्रेणाख्यात इति वदेत्, तथाहि-युगे नक्षत्रमासाः सप्तषष्टिरेतच्च प्रागेव भावितम्, युगे चाहोरात्राणामष्टादश शतानि त्रिंशदधिकानि १८३०, ततस्तेषां सप्तषष्ट्या भागे हृते लब्धाः सप्तविंशति रहोरात्रा एकस्य चाहोरात्रस्य एकविंशतिः सप्तषष्टिभागाः २७ $\frac{२१}{६७}$ 'ता से ण' मित्यादि, स नक्षत्रमासः कियान् मुहूर्त्ताग्रेण-मुहूर्त्तपरिमाणेनाख्यात इति वदेत् ?, भगवानाह- 'ता अट्ठसए' इत्यादि, अष्टोत्तरशतान्येकोनविंशत्यधिकानि मुहूर्त्तानामेकस्य च मुहूर्त्तस्य सप्तविंशतिः सप्तषष्टिभागाः ८१९। $\frac{२७}{६७}$। मुहूर्त्ताग्रेणाख्यात इति वदेत्, तथाहि-नक्षत्रमासपरिमाणं सप्तविंशतिरहोरात्रा एकस्य चाहोरात्रस्य एकविंशतिः सप्तषष्टिभागाः, ततः सवर्णनार्थं सप्तविंशतिरप्यहोरात्राः सप्तषष्ट्या गुण्यन्ते, गुणयित्वा चोपरितना एकविंशतिः सप्तषष्टिभागाः प्रक्षिप्यन्ते, जातानि सप्तषष्टिभागानामष्टादश शतानि त्रिंशदधिकानि १८३०, तानि मुहूर्त्तानयनार्थं त्रिंशता गुण्यन्ते, जातानि चतुष्पञ्चाशत्सहस्राणि नव शतानि मुहूर्त्तगतसप्तषष्टिभागानां ५४९००, तत एतेषां सप्तषष्ट्या भागो ह्रियते, लब्धानि अष्टौ शतान्येकोनविंशत्यधिकानि मुहूर्त्तानामेकस्य च मुहूर्त्तस्य सप्तविंशति सप्तषष्टिभागा इति १९। $\frac{२७}{६७}$। 'ता एस ण' मित्यादि, एषा अनन्तरमुक्ता नक्षत्रमासरूपा अद्धा द्वादशकृत्वः कृता-द्वादशभिर्वारैर्गुणिता इत्यर्थः, नक्षत्रसंवत्सरो भवति, सम्प्रति सकलनक्षत्रसंवत्सरगतरात्रिन्दिवपरिमाणमुहूर्त्तपरिमाणविषयप्रश्ननिर्वचनसूत्राण्याह—'ता से ण' मित्यादि सुगमं,नवरं रात्रिन्दिवचिन्तायां नक्षत्रमासरात्रिन्दिवपरिमाणं मुहूर्त्तचिन्तायां नक्षत्रमासमुहूर्त्तपरिमाणं द्वादशभिर्गुणितव्यं,ततो यथोक्ता रात्रिन्दिवसंख्या मुहूर्त्तसंख्या च भवति। सू० प्र० १२ पाहु०। ( चन्द्रसंवत्सरविषयः 'चंदसंवच्छर' शब्दे तृतीयभागे १०६५ पृष्ठे गतः।)(ऋतुसंवत्सरविषयः 'उउसंवच्छर'शब्दे द्वितीयभागे ६८६ पृष्ठे गतः।) ( आदित्यसंवत्सरविषयः 'सूरसंवच्छर' शब्दे वक्ष्यते ) ( अभिवर्द्धितसंवत्सरविषयः 'अभिवड्ढिय' शब्दे प्रथमभागे ७२७ पृष्ठे गतः।)

सम्प्रत्येते पञ्च संवत्सरा एकत्र मीलिता यावत्प्रमाणा रात्रिन्दिवपरिमाणेन भवन्ति तावतो निर्दिदिक्षुः प्रथमतः प्रश्नसूत्रमाह—

ता केवतियं ते तो जुगे राइंदियग्गेणं आहितेति वदेज्जा?, ता सत्तरस एकाणउते राइंदियसत्ते एगूणवीसं च मुहुत्तं च सत्तावण्णे बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिधा छेत्ता पणपण्णं चुण्णिया भागे राइंदिग्गेणं आहितेति वदेज्जा। ता से णं केवतिए मुहुत्तग्गेणं आहितेति वदेज्जा ?, ता तेपण्णमुहुत्तसहस्साइं, सत्त य उणापन्ने मुहुत्तसते सत्तावण्णं बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिधा छेत्ता पणपण्णं चुण्णिया भागा मुहुत्तग्गेणं आहितेति वदेज्जा, ता केवतिए णं ते जुगप्पत्ते राइंदियग्गेणं आहितेति वदेज्जा, ता अट्ठतीसं राइंदियाइं दस य मुहुत्ता चत्तारि य बावट्ठिभागे मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिधा छेत्ता दुवालस चुण्णिया भागे राइंदियग्गेणं आहितातिति वदेज्जा, ता से णं केवतिए मुहुत्तग्गेणं आहितेति वदेज्जा ?, ता एक्कारस पण्णासे मुहुत्तसए चत्तारि य बावट्ठिभागं च सत्तट्ठिहा छेत्ता दुवालस चुण्णिया भागे मुहुत्तग्गेणं आहितेति वदेज्जा, ता केवतियं जुगे राइंदियग्गेणं आहितेति वदेज्जा, ता अट्ठारस तीसे राइंदियसते राइंदियग्गेणं आहियाति वदेज्जा, ता से णं केवतिए मुहुत्तग्गेणं आहियाति वदेज्जा ?, ता चउप्पण्णं मुहुत्तसहस्साइं णव य मुहुत्तसताइं मुहुत्तग्गेणं आहितेति वदेज्जा?, ता से णं केवतिए बावट्ठिभागमुहुत्तग्गेणं आहितेति वदेज्जा ?, ता चउत्तीसं सतसहस्साइं अट्ठतीसं च बावट्ठिभागमुहुत्तसते बावट्ठिभागमुहुत्तग्गे आहितेति वदेज्जा,। ( सू० ७३ )

'ता' इति पूर्ववत्, कियत्—किंप्रमाणं ते—त्वया भगवन्! 'नोयुगं' नोशब्दो देशनिषेधवचनः, किञ्चिदूनं युगमित्यर्थः, रात्रिन्दिवाग्रेण रात्रिन्दिवपरिमाणेनाख्यात इति वदेत्?, भगवानाह-'ता सत्तरसे' त्यादि नोयुगं हि किञ्चिदून युगं तच्च नक्षत्रादिपञ्चसंवत्सरपरिमाणमतो नक्षत्रादिपञ्चसंवत्सरपरिमाणानामेकत्र मीलने भवति यथोक्ता रात्रिन्दिवसंख्या। तथाहि-नक्षत्रसंवत्सरस्य परिमाणं त्रीणि रात्रिन्दिवशतानि सप्तविंशत्यधिकानि एकस्य च रात्रिन्दिवस्य एकपञ्चाशत्सप्तषष्टिभागाः,चन्द्रसंवत्सरस्य त्रीणि रात्रिन्दिवशतानि चतुष्पञ्चाशदधिकानि द्वादश च द्वाषष्टिभागा रात्रिन्दिवस्य ऋतुसंवत्सरस्य त्रीणि रात्रिन्दिवशतानि षष्ट्यधिकानि, सूर्यसंवत्सरस्य त्रीणि शतानि षट्षष्ट्यधिकानि रात्रिन्दिवानाम्, अभिवर्द्धितसंवत्सरस्य त्रीणि,रात्रिन्दिवशतानि त्र्यशीत्यधिकानि एकविंशतिश्च मुहूर्त्ता एकस्य च मुहूर्त्तस्याष्टादश द्वाषष्टिभागाः, तत्र सर्वेषां रात्रिन्दिवानामेकत्र मीलने जातानि सप्तदश शतानि नवत्यधिकानि, ये च एकपञ्चाशत्सप्तषष्टिभागा रात्रिन्दिवस्य ते मुहूर्त्तकरणार्थं त्रिंशता गुण्यन्ते,जातानि पञ्चदश शतानि त्रिंशदधिकानि १५३० तेषां सप्तषष्ट्या भागो ह्रियते, लब्धा द्वाविंशतिर्मुहूर्त्ता एकस्य च मुहूर्त्तस्य षट्पञ्चाशत्सप्तषष्टिभागाः २२ $\frac{५६}{६७}$। मुहूर्त्ताश्च लब्धाः एकविंशतौ मुहूर्त्तेषु मध्ये प्रक्षिप्यन्ते, जातास्त्रिचत्वारिंशन्मुहूर्त्तास्तत्र त्रिंशता अहोरात्रो लब्ध इति जातान्यहोरात्राणां सप्तदश शतान्येकनवत्यधिकानि १७९१, शेषास्तिष्ठन्ति मुहूर्त्तास्त्रयोदश १३, येऽपि च द्वाषष्टिभागा अहोरात्रस्य द्वादश तेऽपि मुहूर्त्तकरणार्थं त्रिंशता गुण्यन्ते, जातानि त्रीणि शतानि षष्ट्यधिकानि ३६०, तेषां

द्वापष्ट्या भागो ह्रियते, लब्धाः पञ्चमुहूर्त्तास्ते प्रागुक्तेपु त्रयोदशसु मुहूर्त्तेपु मध्ये प्रक्षिप्यन्ते, जाता अष्टादश, शेपास्तिष्ठन्ति पञ्चाशत् द्वापष्टिभागा मुहूर्तस्य, यद्यपि च पट्पञ्चाशत्सप्तपष्टिभागा मुहूर्त्तस्य ते त्रैराशिकेन द्वापष्टिभागा एव क्रियन्ते—यदि सप्तपष्ट्या द्वापष्टिभागा लभ्यन्ते ततः पटपञ्चाशता सप्तपष्टिभागैः कियन्तो द्वापष्टिभागा लभ्यन्ते राशित्रयस्थापना ६७। ६२। ५६। अत्रान्त्येन राशिना मध्यराशेर्गुणन जातानि चतुर्स्त्रिंशच्छतानि द्वासप्तत्यधिकानि ३४७२, तेपामादिराशिना सप्तपष्ट्या भागो ह्रियते, लब्धा एकपञ्चाशद् द्वापष्टिभागा, ते च प्रागुक्तेपु पञ्चाशति द्वापष्टिभागेष्वन्तः प्रक्षिप्यन्ते जातमेकोत्तरं शतं १०१, ततस्तन्मध्येऽभिवर्धितसंवत्सरसत्का उपरितना अष्टादश द्वापष्टिभागाः प्रक्षिप्यन्ते जातमेकोनविंशत्यधिकं शतं द्वापष्टिभागानाम् ११९, शेपास्तिष्ठन्ति पञ्चपञ्चाशत् द्वापष्टिभागस्य सप्तपष्टिभागाः। $\frac{५५}{६७}$। द्वापष्ट्या द्वापष्टिभागैरेको मुहूर्तो लब्धः, स प्रागुक्तेष्वष्टादशसु मुहूर्त्तेपु मध्ये प्रक्षिप्यते जाता एकोनविंशतिर्मुहूर्त्ता १९, शेपा सप्तपञ्चाशत् द्वापष्टिभागा अवतिष्ठन्ते इति। 'ता से णं'मित्यादि, मुहूर्त्तपरिमाणविपयप्रश्नसूत्रं निर्वचनसूत्रं च सुगमं, रात्रिन्दिवपरिमाणस्य त्रिंशता गुणने तदुपरि शेपमुहूर्तप्रक्षेपे च यथोक्तमुहूर्तपरिमाणसमागमात्,' ता केवइए णं ते' इत्यादि, 'ता' इति पूर्ववत्, कियता रात्रिन्दिवपरिमाणे तदेव नोयुगं युगप्राप्तमाख्यातमिति वदेत्?, कियत्सु रात्रिन्दिवेपु प्रक्षिप्तेपु तदेव नोयुगं परिपूर्णं युगं भवतीति भावः। भगवानाह—'ता अट्ठतीसं' मित्यादि, अष्टात्रिंशद् रात्रिन्दिवानि दश मुहूर्त्ता एकस्य च मुहूर्त्तस्य चत्वारो द्वापष्टिभागा एकं च द्वापष्टिभाग सप्तपष्टिधा छित्त्वा तस्य सत्का द्वादश चूर्णिका भागा इत्येतावता रात्रिन्दिवपरिमाणेन युगप्राप्तमाख्यातमिति वदेत्, एतावत्सु रात्रिन्दिवादिपु प्रक्षिप्तेपु तत् नोयुग परिपूर्णं युगं भवति इति भावः। सम्प्रति तदेव नोयुगं मुहूर्त्तपरिमाणात्मकं यावता मुहूर्त्तपरिमाणेन प्रक्षिप्तेत परिपूर्णं युगं भवति तद्विपय प्रश्नसूत्रमाह—'ता से णं' मित्यादि सुगमं भगवानाह—'ता इक्कारसे' त्यादि, इदं चाष्टात्रिंशतो रात्रिन्दिवानां त्रिंशता गुणनेन शेपमुहूर्त्तादिप्रक्षेपे च यथोक्तं भवति, भावार्थश्चायम्—एतावति मुहूर्त्तपरिमाणे प्रक्षिप्ते प्रागुक्त नोयुगमुहूर्त्तपरिमाण परिपूर्णयुगमुहूर्त्तपरिमाण भवतीति। सम्प्रति युगस्यैव रात्रिन्दिवपरिमाणं मुहूर्त्तपरिमाणं च प्रतिपिपादयिपु प्रश्ननिर्वचनसूत्राण्याह—'ता केवइय ते' इत्यादि सुगमम्, अधुना समस्तयुगविपये एव मुहूर्त्तगतद्वापष्टिभागपरिज्ञानार्थं प्रश्नसूत्रमाह—'ता से णं' मित्यादि सुगमम्, भगवानाह—'ता चोत्तीसं' मित्यादि, इदमक्षरार्थमधिकृत्य सुगमम्, भावार्थस्त्वयम्—चतुष्पञ्चाशन्मुहूर्त्तसहस्त्राणां नवशताधिकानां द्वापष्ट्या गुणनं क्रियते ततो यथोक्ता द्वापष्टिभागसंख्या भवतीति।

सम्प्रति कदाऽसौ चन्द्र(न्द्रादि)संवत्सर सूर्य (र्यादि) संवत्सरेण सह समादि समपर्यवसानो भवतीति जिज्ञासिपु प्रश्नं करोति—

ता कता णं एते आदिच्चचंदसंवच्छरा समादीया समपज्जवसिया आहितेति वदेज्जा ?, ता सट्ठिं एए आदिच्चमासा बावट्ठिं एतेए चन्दमासा, एस णं अद्धा छ खुत्तकडा दुवालसभयिता तीसं एते आदिच्चसंवच्छरा एक्कतीसं एते चंदसंवच्छरा, तता णं एते आदिच्चसंवच्छरा समादीया समपज्जवसिया आहिताति वदेज्जा। ता कता णं एते आदिच्चउडुचंदणक्खत्ता संवच्छरा समादीया समपज्जवसिया आहितेति वदेज्जा ?, ता सट्ठिं एते आदिच्चा मासा एगट्ठिं एते उडुमासा बावट्ठिं एते चंदमासा सत्तट्ठिं एते नक्खत्ता मासा, एस णं अद्धा दुवालस खुत्तकडा दुवालस भयिता सट्ठिं एते आदिच्चा संवच्छरा एगट्ठिं एते उडुसंवच्छरा बावट्ठिं एते चंदा संवच्छरा सत्तट्ठिं एते नक्खत्ता संवच्छरा,तता णं एते आदिच्चउडुचंदणक्खत्ता संवच्छरा समादीया समपज्जवसिया आहितेति वदेज्जा। ता कता णं एते अभिवड्डिआदिच्चउडुचंदणक्खत्ता संवच्छरा समादीया समपज्जवसिता आहितेति वदेज्जा ?, ता सत्तावण्णं मासा सत्त य अहोरत्ता एक्कारस य मुहुत्ता तेवीसं बावट्ठिभागा मुहुत्तस्स एते अभिवड्डिता मासा सट्ठिं एते आदिच्चमासा एगट्ठिं एते उडुमासा बावट्ठिं एते चंदमासा सत्तट्ठिं एते नक्खत्तमासा, एस णं अद्धा छप्पण्णसतखुत्तकडा दुवालस भयिता सत्तसता चोत्ताला एते णं अभिवड्डित्ता संवच्छरा, सत्तसता असीता एते णं आदिच्चा संवच्छरा, सत्तसता तेणउता एते णं उडुसंवच्छरा अट्ठसता छलुत्तरा एते णं चंदा संवच्छरा, एकसत्तरी अट्ठसया एए णं नक्खत्ता संवच्छरा,तता णं एते अभिवड्डितआदिच्चउडुचंदनक्खत्ता संवच्छरा समादीया समपज्जवसिया आहितेति वदेज्जा, ता णयट्ठताए णं चंदे संवच्छरे तिण्णि चउप्पण्णे राइंदियसते दुवालस य बावट्ठिभागे राइंदियस्स आहितेति वदेज्जा, ता अहातच्चे णं चंदे संवच्छरे तिण्णि चउप्पण्णे राइंदियसते पंच य मुहुत्ते पण्णासं च बावट्ठिभागे मुहुत्तस्स आहितेति वदेज्जा। ( सू० ७४ )

'ता कया णं' मित्यादि, सुगमं, भगवानाह—'ता सट्ठिं' मित्यादि, ता इति पूर्ववत्, एत—एकयुगवर्तिनः षष्टिः सूर्यमासाः एते च एकयुगान्तर्वर्तिन एव द्वापष्टिश्चन्द्रमासाः, एतावती अद्धा पड्गुणा क्रियते—पड्भिर्गुण्यते ततो द्वादशभिर्भज्यते द्वादशभिश्च भागे—हृते त्रिंशदेते सूर्यसंवत्सरा भवन्ति एकत्रिंशदेते चन्द्रसंवत्सरा, तदा एतावति काले तिष्ठन्ते एते आदित्यचन्द्रसंवत्सरा समादय समप्रारम्भा समपर्यवसिता —समपर्यवसाना आख्याता इति वदेत् समप र्यवसाने। किमुक्तं भवति ?—एत चन्द्रसूर्यसंवत्सरा [illegible] तस्यादौ समा —समप्रारम्भप्रारब्धा [illegible] पष्टियुगपर्यवसाने समपर्यवसाना भवन्ति, तथाहि—एकस्मिन् युगे [illegible]

तौ च प्रत्येकं त्रयोदशचन्द्रमासात्मकौ, ततः प्रथमयुगे पञ्च चन्द्रसंवत्सरा द्वौ च चन्द्रमासौ, द्वितीये युगे दश चन्द्रसंवत्सराश्चत्वारश्चन्द्रमासाः, एवं प्रतियुगं मासद्विकवृद्ध्या पष्ठयुगपर्यन्ते परिपूर्णा एकत्रिंशच्चन्द्रसंवत्सरा भवन्ति, 'ता कया ण' मित्यादि, 'ता' इति पूर्ववत्, कदा णमिति वाक्यालङ्कारे आदित्यऋतुचन्द्रनक्षत्रसंवत्सराः समादिकाः समपर्यवसिता आख्याता इति वदेत् ?, भगवानाह-'ता सट्ठी' त्यादि, षष्टिरेते एकयुगान्तर्वर्तिनः, आदित्यमासा एकषष्टिरेते ऋतुमासाः द्वाषष्टिरेते चन्द्रमासाः सप्तषष्टिरेते नक्षत्रमासा, एतावती प्रत्येकमद्धा द्वादशकृत्वः कृता, द्वादशभिर्गुणिता इत्यर्थः, तदनन्तरं संवत्सरानयनाय द्वादशभिर्भक्ता तत एवमेते षष्टिरादित्यसंवत्सरा एकषष्टिरेते ऋतुसंवत्सरा द्वाषष्टिरेते चन्द्रसंवत्सराः सप्तषष्टिरेते नक्षत्रसंवत्सरास्तदा द्वादशयुगातिक्रमे इत्यर्थः, एते आदित्यऋतुचन्द्रनक्षत्रसंवत्सराः समादिकाः, समपर्यवसिता आख्याता इति वदेत् । एतदुक्तं भवति-विवक्षितयुगस्यादावेते चत्वारोऽपि समा --समारब्धप्रारम्भा' सन्तस्तत आरभ्य द्वादशयुगपर्यन्ते समपर्यवसाना भवन्ति, अर्वाक् चतुर्णामन्यतमस्यावश्यंभावेन कतिपयमासानामधिकतया युगपत् सर्वेषां समपर्यवसानत्वासम्भवात्, 'ता कया ण' मित्यादि प्रश्नसूत्रं सुगमम्, भगवानाह-'ता सत्तावण्ण' मित्यादि, सप्तपञ्चाशन्मासाः सप्त अहोरात्रा एकादशमुहूर्ता एकस्य च मुहूर्त्तस्य त्रयोविंशतिर्द्वाषष्टिभागा एतावत्प्रमाणा एते एकयुगान्तर्वर्तिनोऽभिवर्द्धितमासाः षष्टिरेते सूर्यमासाः एकषष्टिरेते ऋतुमासा द्वाषष्टिरेते चन्द्रमासाः सप्तषष्टिरेते नक्षत्रमासा, एतावती प्रत्येकमद्धापदपञ्चाशदधिकशतकृत्वः क्रियते, कृत्वा च द्वादशभिर्भज्यते, द्वादशभिश्च भागे हृते चतुश्चत्वारिंशदधिकसप्तशत--संख्या ७४४ एतेऽभिवर्द्धितसंवत्सराः, अशीत्यधिकसप्तशतसंख्याः ७८० एते आदित्यसंवत्सरा', त्रिनवत्यधिकसप्तशतसंख्याः ७९३ एते ऋतुसंवत्सराः, षडुत्तराष्टशतसंख्या ८०६ एते चन्द्रसंवत्सराः, एकसप्तत्यधिकाष्टशतसंख्या ८७१ नक्षत्रसंवत्सराः, तदा णमिति वाक्यालङ्कारे एतेऽभिवर्द्धितादित्यऋतुचन्द्रनक्षत्रसंवत्सराः समादिकाः समपर्यवसिता आख्याता इति वदेत्, अर्वाक् कस्यापि कतिपयमासाधिकत्वेन युगपत् सर्वेषां समपर्यवसानत्वासम्भवात्। सम्प्रति यथोक्तमेव चन्द्रसंवत्सरपरिमाणं गणितभेदमधिकृत्य प्रकारद्वयेनाह--'ता नयट्ठाए' इत्यादि 'ता' इति पूर्ववत्, नयार्थतया परतीर्थिकानामपि सम्मतस्य नयस्य चिन्तया चन्द्रसंवत्सरस्त्रीण्यहोरात्रशतानि चतुष्पञ्चाशदधिकानि द्वाषष्टिभागा अहोरात्रस्येत्यादिराख्यात इति वदेत्, याथातथ्येन पुनश्चिन्त्यमानश्च--न्द्रसंवत्सरस्त्रीणि रात्रिन्दिवशतानि चतुष्पञ्चाशदधिकानि पञ्च च मुहूर्त्ता एकस्य च मुहूर्त्तस्य पञ्चाशत् द्वाषष्टिभागा इत्येवंप्रमाण आख्यात इति वदेत्, तत्राहोरात्रपरिमाण--मुभयत्रापि तावदेकरूपं, ये तूपरितना द्वादश द्वाषष्टिभा--गा रात्रिन्दिवस्य ते मुहूर्त्तकरणार्थं त्रिंशता गुण्यन्ते, जातानि त्रीणि शतानि षष्ट्यधिकानि ३६०, तेषां द्वाषष्ट्या भागो ह्रियते, लब्धाः पञ्च मुहूर्त्ताः, शेषास्तिष्ठन्ति पञ्चाशन्मुहूर्तस्य द्वाषष्टिभागा इति । तदेवं सवत्सरवक्तव्यता समयपञ्चमुक्ता । सू०प्र०१२ पाहु०। चं० प्र० । ज्यो० । जं० । (संवत्सरेषु चन्द्रसूर्यावृत्तय 'आउट्टि' शब्दे द्वितीयभागे ३० पृष्ठे उक्ताः ।) वर्षासु चातुर्मासिके ज्येष्ठावग्रहे, दशा०२ चू० । "संवत्सरं वावि परं पमाणं, वीअं च वासं न तहिं वसिज्जा" दशा० २ चू० ।

**संवच्छरदान-संवत्सरदान**-न० । तीर्थकरस्य प्रव्रज्यासमये संवत्सरपर्यन्तदाने, आचा० ।

**संवच्छरपडिलेहग-संवत्सरप्रतिलेखक**-पुं० । जन्मदिनादारभ्य संवत्सरमहोत्सवपूर्वकं जन्मदिनमहोत्सवे, यत्र दिने वर्षे वर्षे प्रति संख्याज्ञापनार्थे ग्रन्थिबन्धः क्रियते, ज्ञा० १ श्रु० ८ अ० । रा० ।

**संवच्छरपरियाय-संवत्सरपर्याय**-पुं० । संवत्सरमेकं यावत् पर्यायः प्रव्रज्यालक्षणो येषां ते संवत्सरपर्यायाः । वर्षैकप्रव्रजितेषु स० ५३ सम० ।

**संवच्छरवासर-संवत्सरवासर**-पुं० । सांवत्सरिकदिने, संवत्सरवासरे पूगीफलसहितनाणकप्रभावना लान्ति न वा ? इति, प्रश्न ?, अत्रोत्तरम्-पूगीफलादिसहितं तथा रहितां वा प्रभावनां लान्ति, पश्चाद् यस्मिन् ग्रामे या रीतिस्तदनुसारेण प्रवर्त्तितव्यमिति ॥ १५२ ॥ सेन० ४ उल्ला० ।

**संवच्छरादि-संवत्सरादि**-पुं० । संवत्सराणामादिः संवत्सरादि । संवत्सराणामादितिथौ,सू०प्र० १ पाहु० ।

**संवच्छरिय-सांवत्सरिक**-त्रि० । संवत्सरे भवस्सांवत्सरिकः । वार्षिके,विशे० ।यद्येक वर्षे प्रतिदिनं क्रियते, यथा-संवत्सरपर्यन्तं तीर्थकृतः प्रव्रज्यावसरे दीयते दानम् । आ० चू० १ अ० । आ० म० । संवत्सरस्यान्ते सांवत्सरिकम् । वर्षान्तोद्भवे, प्रव० ३ द्वार ।

**संवच्छरियपडिक्कमण-सांवत्सरिकप्रतिक्रमण**-न० । पर्युषणापर्वान्तप्रतिक्रमणे, कल्प० १ अधि० १ क्षण । ('काउस्सग्ग' 'पज्जुसणा' शब्दयोरनयोर्व्याख्या)

**संवट्ट-संवर्त्त**-पुं० । नगररोधके, बृ० ३ उ० । संवर्तो नाम यत्र नगजलदुर्गादिषु बहूनां ग्रामाणां जनः संवर्त्तीभूय तिष्ठति।ज्ञा० १श्रु०१अ०।भयत्रस्तजनसमवाये,उत्त०३४अ०।चौरधाटीभयेन यद्वहवो ग्रामनायकाधिष्ठिता एकत्र स्थिताः संवर्त' । बृ० ३ उ० । जाले, आ० म० १ अ० । वातविकुर्वणान्निवर्त्तन्ते ! संवर्त्तकवातमुपसंहरन्तीति भावः । रा० ।

**संवट्टइत्ता-संवर्त्य**-अव्य० । एकत्र स्थाने न्यस्येत्यर्थे, औ० । स्था० । संकोच्ये, स्था० २ ठा० ४ उ० ।

**संवट्टण-संवर्तन**-न० । विनाशने, अनु० । मार्गमिलनस्थाने, ज्ञा० १ श्रु० २ अ० । संक्षपणे, आचा० १ श्रु० ८ अ० ६ उ० । 'संवट्टण अचित्ते सुवण्णे कुंडलाइकरणं' नि० चू० १ उ० ।

**संवट्टणिग्गय-संवर्त्तनिर्गत**-त्रि० । मासप्रायोग्यक्षेत्रान्निर्गत्य संवर्त्ते स्थितेषु, बृ० ३ उ० ।

**संवट्टमेह-संवर्त्तमेघ**-पुं० । पुष्कलसंवर्तके मेघे, आव० १ अ० ।

संवट्टय-संवर्त्तक-पुं० । संवर्त्तनमपवर्त्तनं संवर्त्त स एव संवर्त्तकः । उपक्रमे, स्था० ।

दोएहं आउयसंवट्टए पएणत्ते, तं जहा-मणुस्साणं चेव, पंचेदियतिरिक्खजोणियाणं चेव । स्था० ३ ठा० २ उ० । ( सू० ८५ × ) जं० । नं० ।

संवट्टयवाय-संवर्त्तकवात-पुं० । संवर्तनस्वभावे, भ० १ श० १ उ० । वायुकायभेदे, भ० १ श० ४ उ० । रा० । आ० म० ।

संवट्टिअ-संवर्त्तित-त्रि० । "र्तस्याधूर्तादौ" ।८।२।३०। अनेनात्र र्त्तस्य टकारादेशः । संवट्टिअ । पिण्डीभूते, प्रा० । नि० चू० । सकोचित, स्था० २ ठा० ४ उ० ।

संवट्टियावराह-संवर्त्तितापराध-पुं० । सवर्तिता पिण्डीभूता अपराधा यत्र तत् संवर्त्तितापराधम् । वहपराधे, संवयितमासे, व्य० १ उ० । संवृते, दे० ना० ८ वर्ग १२ गाथा ।

संवड्डिय-संवर्द्धित-त्रि० । भोजनादिना संवर्द्धिते अनाथपुत्रके, स्था० १० ठा ३ उ० ।

संवत्तण-संवर्त्तन-न० । 'र्त्तस्याधूर्त्तादौ' ॥ ८ । २ । ३० ॥ इति धूर्तादिपर्युदासात्र टः । पिण्डीभवने, प्रा० २ पाद ।

संवर-संवर-पुं० । क ग च ज त द प य वां प्रायो लुक् ॥८।१।१७७॥ इति स्वरात्परत्वाभावान्न लुक् । प्रा० । संवरण सवरः । आच्छादने, विशे० । संव्रियते कर्म कारण प्राणातिपातादि निरुध्यते येन परिणामेन स संवर । आश्रवनिरोधे, स्था० १ ठा० । प्रश्नव्याकरणेषु अहिंसादिशब्देषु, प्रश्न०१ आश्र०द्वार । सम्म० । सवरस्योत्तरप्रकृतयः । द्रव्या० । स्था० ।

अथाश्रवप्रतिपक्षभूतसंवरस्वरूपमाह—

एगे संवरे । ( सूत्रम् )

संव्रियते-कर्म कारणं प्राणातिपातादि निरुध्यते येन परिणामेन स संवरः, आश्रवनिरोध इत्यर्थ । सच समितिगुप्तिधर्म्मानुप्रेक्षापरीषहचारित्ररूपः क्रमेण पञ्च-त्रिदश-द्वादश-द्वाविंशति-पञ्च-भेद , आह—" समिई ५ गुत्ती ३ धम्मो १० अणुपेह १२ परीसहा चरित्तं च ५ । सतावन्न भेया, पणतिगभेयाइ सवरणे ॥१॥" त्ति अथवाऽयं द्विधा-द्रव्यतो , भावतश्च । तत्र द्रव्यतो जलमध्यगतनावादेरनवरतप्रविशज्जलाना छिद्राणा तथाविधद्रव्येण स्थगनं संवरः , भावतस्तु जीवद्रोण्यामाश्रवत्कर्म्मजलानामिन्द्रियादिछिद्राणा समित्यादिना निरोधन सवर इति । स च द्विविधोऽपि संवर सामान्यादेक इति । स्था० १ ठा० । सथा० । सूत्र० । पं० भा० । आव० । स० । प्राणातिपातविरमणादौ , औ० । नं० । आचा० । सूत्र० । अशुभकर्मागमनिरोधे , आव० ४ अ० । आश्रवद्वारप्रविशत्कर्मनिरोधे, जीत० । कर्मानुपादाने , स० ५ सम० । सम्म० । औ० । श्रा० । जीवतडागे कर्मजलस्य निरोधने , स्था० ५ ठा० २ उ० । चारित्रे, दश०५ अ० २ उ० । इन्द्रियकषायनिग्रहादिभेदे, स्था० ४ ठा० १ उ० । इन्द्रियनो इन्द्रियसङ्गोपने । स्था० १० ठा० ३ उ० । आ० म० । संवरसिद्धिः—संवरस्य त्वध्यक्षानुमानागमप्रसिद्धता न्यायानुगतैव चैतन्यपरिणतेः स्वात्मनि स्वसंवेदनाध्यक्षसिद्धत्वाद् अन्यत्र तु तत्प्रभवकार्यानुमेयत्वादागमस्य च तत्प्रतिपादकस्य प्रदर्शितत्वात् । सम्म० ३ काण्ड । कर्म० ।

पञ्च संवरद्वाराणि—

पंच संवरदारा पणत्ता, तं जहा-सम्मत्त विरती अपमाओ अकमातित्तमजोगित्तं । ( सू०-४१+ )

तथा संवरणं जीवतडागे कर्मजलस्य निरोधनं संवरस्तस्य द्वाराणि- उपायाः सवरद्वाराणि , मिथ्यात्वादीनामाश्रवाणा क्रमेण विपर्ययाः सम्यक्त्वविरत्यप्रमादाकषायित्वायोगित्वलक्षणाः प्रथमाध्ययनवद् वाच्या इति । स्था० ५ ठा० २ उ० ।

पञ्चविधः संवरः —

पंचविहे संवरे पणत्ते , तं जहा-सोइंदियसंवरे ० जाव फासिंदियसंवरे । ( सू०-४२७× ) स्था०५ठा०२ उ० ।

षड्विधः सवरः—

छव्विहे संवरे पन्नत्ते, तं जहा-सोइंदियसंवरे ०जाव फासिंदियसंवरे णो इंदियसंवरे । ( सू०-४८७+ ) स्था० ६ ठा० ३ उ० ।

अष्टविधः संवरः—

अट्ठविहे संवरे पएणत्ते, तं जहा-सोइंदियसंवरे० जाव फासिंदियसंवरे मणसंवरे वयसंवरे कायसंवरे । ( सू० ५९८× ) स्था० ८ ठा० ३ उ० ।

दसविहे संवरे पएणत्ते, तं जहा-सो इंदियसंवरे ० जाव फासिंदियसंवरे मणवयकायउवगरणसंवरे सूईकुसग्गसंवरे । ( सू०-७०९ ) स्था० १० ठा० ३ उ० ।

प्रतिघाते, सूत्र० १ श्रु० १ अ० ३ उ० ।

सवरद्वारे प्रतिपक्षद्वारमाह—

" वाणारसी कुट्ठग-पासे गोपालिभद्दसेणे य ।
नंदिसिरी पउमसिरी, रायगिहे सेणिए वीरे ॥ १ ॥ "

" पुरं राजगृहे श्रीम-द्वर्द्धमानप्रभो पुर ।
एका नाट्यविधिं देवी, दर्शयित्वा ययौ तत ॥ १ ॥
पप्रच्छ श्रेणिक सैपा, स्वाम्यूचे काशिपत्तने ।
भद्रसेनाभिधो जीर्ण , श्रेष्ठी नन्दा च तत्प्रिया ॥ २ ॥
नन्दश्रीस्तत्सुता कन्या, तत्र चैत्ये च कोष्टके ।
श्रीपार्श्व समवासार्षी-न्नन्दश्री प्राव्रजत्तत ॥ ३ ॥
दत्ता गोपालिकाया सा, शिष्या तीव्र तपो व्यधात् ।
पश्चाच्च बकुशा जाता, हस्तपादादिधावनात् ॥ ४ ॥
वार्यमाणा पृथक्स्था तु तदनालोच्य सा मृता ।
क्षुद्रे हिमवदाद्रौ श्री—र्देवी पद्मादेऽभवत् ॥ ५ ॥
सेयं नाट्य व्यधादस्या ,फलमलसमसंयमम् ॥" आव०४अ० ।

स्तानिकाशोधकेषु, व्य० २ उ० । अनेकभागमृत्छिद्युरे घटे यथासौ , प्रश्न० २ आश्र० द्वा० । प्रश्न० । प्रा० । ज० । अभिनन्दनजिनस्य पितरि , प्रव० ११

द्वार। आव०। स०। भारते वर्षे भविष्यति अष्टादशे तीर्थकरे, "अट्ठारसो सयालिजीवो संवरो एगूणवीसो दीवायणजीवो संवरो," ती० २० कल्प। स०। पञ्चदश्यां गौणानुज्ञायाम्, नं०। प्रव०।

संवरजोग–संवरयोग–पुं०। नूतनकर्मनिरोधः संवरस्तद्रूपो योगो व्यापारः, संवरेण योगः सम्बन्धो वा संवरयोगः। नूतनकर्मनिरोधव्यापारे, ध० ३ अधि०। "एसा महव्वय-उच्चारणा संवरजोगे" पा०।

संवरण–संवरण–न०। संवरणे, विशे०। आव०। संरक्षणे, पं० व० ३ द्वार। सङ्क्षेपने, स्था० १० ठा० ३ उ०। आच्छादने, बृ० २ उ०। निवारणे, बृ० ४ उ०। प्रच्छदपटे, बृ० १ उ० २ प्रक०। पर्यालोचने, ज्ञा० १ श्रु० १ अ० कपाटे, बृ० १ उ० ३ प्रक०।

संवरणकरण–संवरणकरण–न०। प्रत्याख्यानग्रहणे, ध० २ अधि०।

संवरणी–संवरणी–स्त्री०। संवरकारिणि विद्याभेदे, ज्ञा० १ श्रु० १६ अ०।

संवरबहुल–संवरबहुल–त्रि०। प्राणातिपाताद्याश्रवद्वारनिरोधप्रचुरे प्रश्न० ३ संव० द्वार।

संवरभावणा–संवरभावना–स्त्री०। संवरतत्त्वपर्यालोचने, प्रव० ६७ द्वार। ( संवरभावना 'भावणा' शब्दे पञ्चमभागे १५०८ पृष्ठे गता। )

संवरसंवुड–संवरसंवृत–त्रि०। प्राणातिपातादिपञ्चमहाव्रतोपेते, सूत्र० १ श्रु० १ अ० ४ उ०।

संवरसमाहिबहुल–संवरसमाधिबहुल–पुं०। संवर इन्द्रियविषये समाधिरनाकुलत्वं बहुलं प्रभूतं यस्य स तथा विध इति समासः। संवरसमाधिप्रचुरे, दशा० २ चू०।

संवरसुय–संवरसुत–पुं०। अभिनन्दनजिने, "तिन्नेव सयसहस्सा, अभिणंदणजिणवरस्स सीसाणं। सव्वविरियव्ववस्सा, सिद्धत्तं संवरसुयस्स ॥" ति०।

संवरिय–संवृत–त्रि०। स्थगिते, आव० ५ अ०। "संवरियवलयबाहू" संवृत्तौ हर्षातिरेकादतिस्थूरीभवन्तौ निषिद्धौ वलयैः कटकैर्बाहू भुजौ यस्या सा तथा। भ० ६ श० ३३ उ०।

संवरियदार–संवृतद्वार–त्रि०। संवृतानि स्थगितानि आश्रवद्वाराणि प्राणातिपातादीनि येन सः। आच्छादितेन्द्रियद्वारे, बृ० ३ उ०। आव०।

संवलि–संवलि–पुं०। वृक्षविशेषे, स्था० ५ ठा० २ उ०।

संववहारिपच्चक्ख–सांव्यवहारिकप्रत्यक्ष–न०। संव्यवहारो बाधारहितप्रवृत्तिनिवृत्ती प्रयोजनमस्येति सांव्यवहारिकम्, तच्च प्रत्यक्षं चेति बाह्येन्द्रियादिसामग्रीसापेक्षत्वादपारमार्थिकेऽस्मदादिप्रत्यक्षे, रत्ना० २ परि०।

संवसण–संवसन–न०। स्त्रीभिः सार्द्धं परिभोगे, सूत्र० १ श्रु० ४ अ० १ उ०। सहवासे, पं० भा० १ कल्प। पं० चू०।

संवसमाणी–संवसन्ती–स्त्री०। पुरुषेण सह संवासं कुर्वत्याम्, स्था० ५ ठा० २ उ०।

संवहण–संवहन–न०। क्षेत्रादिभ्यस्तृणकाष्ठधान्यादेर्गृहादावानयने, उपा० १ अ०। वृद्धस्य ग्राम्यभाषायां संबोधनप्रयोज्ये शब्दे, 'वुड्ढे संवहणेति णो वएज्जा' आचा० १ श्रु० २ अ० ६ उ०। दश०।

संवहणिय–सांवहनिक–त्रि०। संवहनं क्षेत्रादिभ्यस्तृणकाष्ठधान्यादेर्गृहादावानयनम्, तत्प्रयोजनकं सांवहनिकम्। भारवहनगन्त्र्याम्, उपा० १ अ०।

संवाअ–देशी–नकुले, श्येने च। दे० ना० ८ वर्ग ४७ गाथा।

संवाय–संवाद–पुं०। संवादने, रागादिविरहेण यथावद् वदने, विशे०। धर्मकथाया व्याख्याने सूत्र० १ श्रु० १४ अ०। संवादादिति चेन्न तु संवादप्रत्ययस्याप्यदुष्टकारणारब्धत्वविशेषोऽन्यस्माददुष्टकारणारब्धात्संवादप्रत्ययात्। सम्म० १ काण्ड। स्था०।

संवास–संवास–पुं०। सान्निध्ये, सूत्र० १ श्रु० ४ अ० १ उ०। सम्भजनायाम्, आ० चू० ४ अ०। मैथुनार्थे संवसने, स्था० ४ ठा० ४ उ०। औ०। चिरं संवासे, स्था० ४ ठा० १ उ०। स्त्रीभिः सहैकत्र निवासे, सूत्र० १ श्रु० ४ अ० २ उ०। आचा०।

संवासभेदानाह—

चउव्विहे संवासे पण्णत्ते, तं जहा—देवे णाममेगे देवीए सद्धिं संवासं गच्छेज्जा, देवे णाममेगे छवीए सद्धिं संवासं गच्छेज्जा, छवी णाममेगे देवीए सद्धिं संवासं गच्छेज्जा, छवी णाममेगे छवीए सद्धिं संवासं गच्छेज्जा। (सू० २४८+) स्था० ४ ठा० १ उ०।

संवासो दिव्यासुरराक्षसमानुषाणाम्—

चउव्विहे संवासे पण्णत्ते, तं जहा—दिव्वे आसुरे रक्खसे माणुसे १। चउव्विहे संवासे पण्णत्ते, तं जहा—देवे नाममेगे देवीए सद्धिं संवासं गच्छइ, देवे नाममेगे असुरीए सद्धिं संवासं गच्छइ, असुरे नाममेगे देवीए सद्धिं संवासं गच्छइ, असुरे नाममेगे असुरीए सद्धिं संवासं गच्छइ २, चउव्विहे संवासे पण्णत्ते, तं जहा—देवे णाममेगे देवीए सद्धिं संवासं गच्छइ, देवे नाममेगे रक्खसीए सद्धिं संवासं गच्छइ, रक्खसे नाममेगे देवीए सद्धिं संवासं गच्छति, रक्खसे नाममेगे रक्खसीए सद्धिं संवासं गच्छति। ४–३। चउव्विहे संवासे पण्णत्ते, तं जहा—देवे नाममेगे देवीए सद्धिं संवासं गच्छइ, देवे नाममेगे मणुस्सीहिं सद्धिं संवासं गच्छइ मणुस्से णाममेगे देवीहिं सद्धिं संवासं गच्छति, मणुस्से णाममेगे मणुस्सीहिं सद्धिं संवासं गच्छति। ४–४। चउव्विहे संवासे पण्णत्ते, तं जहा-असुरे नाममेगे असुरीहिं सद्धिं संवासं

गच्छइ, असुरे नाममेगे रक्खसीहिं सद्धिं संवासं गच्छइ० ४-५। चउव्विहे संवासे पण्णत्ते, तं जहा-असुरे नाममेगे असुरीए सद्धिं संवासं गच्छइ; असुरे नाममेगे मणुस्सीए सद्धिं संवासं गच्छइ० ४-६। चउव्विहे संवासे पण्णत्ते; तं जहा-रक्खसे नाममेगे रक्खसीए सद्धिं संवासं गच्छइ; रक्खसे नाममेगे माणुस्सीए सद्धिं संवासं गच्छइ० ॥

"चउव्विहे संवासे" त्यादि कराठ्य नवरं स्त्रिया सह संवसनं-शयनं संवासः, द्यौ:—स्वर्गस्तद्वासी देवोऽप्युपचाराद् द्यौस्तत्र भवो दिव्यो वैमानिकसंबन्धीत्यर्थः। असुरस्य-भवनपतिविशेषस्यायमासुर एवमितरौ,नवरं राक्षसो-व्यन्तरविशेषश्चतुर्भङ्गिकासूत्राणि देवासुरेत्येवमादिसयोगन षड् भवन्ति। स्था०४ ठा०४ उ०। (संवासे संभोग 'संभोग'शब्देऽस्मिन्नेव भागे २०६ पृष्ठे निषिद्ध।) परढक क्लीवो वातिक इति त्रयो न कल्पन्ते संवासयितुम्। वृ० ४ उ० १ प्रक०। स्था०। आधाकर्मभोक्तृभिः सहैकत्र संवसने, पिं०। (आधाकर्मभोक्तृभिः सह संवासात् शुद्धाहारभोज्यपि आधाकर्मभोजी द्रष्टव्य इति 'आधाकम्म' शब्दे द्वितीयभागे २१६ पृष्ठे गतम्।)

सचेलस्य सचेलिक्या सह संवासे प्रायश्चित्तम्—

जे भिक्खू सचेले सचेलियाणं मज्झे संवसइ संवसंतं वा साइज्जइ॥१६४॥ जे भिक्खू सचेले अचेलियाणं मज्झे संवसइ संवसंतं वा साइज्जइ॥१६५॥ जे भिक्खू अचेले सचेलियाणं मज्झे संवसइ संवसंतं वा साइज्जइ॥१६६॥ जे भिक्खू अचेले अचेलियाणं मज्झे संवसइ संवसंतं वा साइज्जइ॥१६७॥

सचेला संजता सचेलाओ संजतीओ चउभंगसूत्रं व्याख्येय। चउसु वि भंगेसु चउगुरुं तवकालपरिसिद्धं।

गाहा—

जे भिक्खू य सचेलो, ठाणनिसीयणतुयट्टणं वा वि।
चेतिज्जइ चेलाणं, सो पावति आणमादीणि॥ ४८४॥
वीसत्थादी दोसा, चतुदेसम्मि वन्निया जे तु।
ते चेव निरवसेसा, सचेलमज्झे अचेलस्स॥ ४८५॥

कंठा।

कारणे वसेज्ज—

वितियपदमणप्पज्झे, गेलएणुवसग्गरोहगद्धाणे।
समणाणं असतीए, समणी पव्वावितेते चेव॥ ४८६॥

अणप्पज्झे वसेज्ज। गिलाणं पडियरन्तो वसेज्ज। उवसग्गे वा जहा सो रायकुमारो सगुत्तो रोहए वा एक्कवसही लद्धा, अलद्धाए पडिवसग्रो वा। सजयाए असति सजतिवसहीए वसेज्जा। अहवा दो वि वग्गा अद्धाए पडिवन्ना वसेज्जा। अथवा समणाए असती ते समणीहिं भाया पिया वा पव्वाविओ सो वसेज्जा।

गाहा—

एमेव वितियभंगे, कंतारादीसु उवहिवाघातो।
होंति समणाए वसिते,दोसा किं पुणगतरगिगिरिणा॥८७
उभओ दिट्ठमदिट्ठे, दिट्ठिपयारे य भेत्र दोसो।
आयपरउभये दोसा,वितिए भंग न कप्पती वितियं४८८
विहसुद्धदव्वदारां, अद्धाणादिसु वएति एगतथ।
एमेव ततियभंगे, अद्धाणे उवस्सयं तु लभे॥ ४८९॥
... ... ... ... ... ।
खट्टादिमज्झे समणी,सावयभयचिट्ठणादीसु॥४९०॥
एमेव चरिमभंगे, दोसा जयणा सुदप्पमादीहिं।
सभयम्मि मज्झे समणी,निरवाए मग्गतो एति॥४९१॥
दुहतो वाघातो पुण, चउत्थभंगम्मि होति नायव्वो।
एमेव य परपक्खे, पुव्वे अवरम्मि य पढम्मि॥४९२॥
दुहतो वाघायम्मी, पुरतो समणा तु मग्गतो समणी।
खुडाहि भणावेंति, कज्जे देयं ति दावेंति॥ ४९३॥

वितियभंगे समणीए उवधिवाघातो। ततियभंगे समणाए वचसा विभंगेसिम दोसा। संचरिते गाहा। पढमभंगे उभये वि संचरिते वीसत्थादि आलावादिया य दोसा किं पुण वितियततिय उभयणिगेहे य सविसेसा दोसा। सजतो संजती वा चिंतेति-दिट्ठं अदिट्ठं मे अगाढागाढि सागारिया दिट्ठिपयारेण चित्तक्खोभो भवति, गुभिओ अणायारपडिसेवण करेज्जा। दुहओ वा गाहा। पुव्वद्ध कंठ, परपक्खो गिहत्थिअन्नतित्थिणीओ तेसु एव चव चउभंगो दोसा य वत्तव्वा। एगतेर उभयपक्खे वा विवित्ते वत्थाभाव खंडगपत्तदज्झचीवरहत्थपिहणादि जयणा कायव्वा सावयभयादीसु य सजइओ मज्झे छोढु ठाणानो चेतेज्जा दुहतो वि अवेलाए पंथे इमा गमणे विही। दुहओ वा गाहा। अग्गतो साहू गच्छंति पिट्ठतो समणीओ,जति सजतीओ किंचि वत्तव्वाओ खुड्डेहिं भणावेंति। ज किंचि देय तं पि गुड्डेहिं चेव दवावेंति।सभए पुण पिट्ठओ अग्गतो पासतो या संजया गच्छति न दोसो। विइयचउत्थेसु भंगेसु सन्नपयत्तेण संजतीए वत्था दायव्वा।

गाहा—

समणाणं जो उ गमो, अट्ठहिं सुत्तेहिं वणितो एसो।
सो चेव निरवसेसो, वत्तव्वो होइ समणीणं॥ ४९४॥

चउरो संजतिसुत्ता चउरो गिहत्थअन्नतित्थिणीसु एत अट्ठा संजतीए वि सजतेसु चउरो सुत्ता गिहत्थअन्नतित्थीएसु चउरो एसेव विवज्जासो दोसा य वत्तव्वा। नि० चू० ११ उ०।

नायकमनायकं वा संवासयति—

जे भिक्खू णायगं वा अणायगं वा उवासगं वा अणुवासगं वा अंतो उवस्सयस्स अद्धं रातिं कसिणं वा रातिं संवासावेइ संवासावेंतं वा साइज्जइ॥ १२॥ जे भिक्खू तं न पडियाइक्खेइ ण पडियाइक्खंतं वा साइज्जइ॥ १३॥

णायगो स्वजनो अणायगो-अस्वजन उवासगो-श्रावक इयरो अणुवासगो सद्धं रातीए सो जाणा, वा सिवस्वीएण ब-

गं वा जामं, चउरो जामा, कसिणराती, वा विकप्पेण तिण्णि जामा एगवसहीए संवासा वसाहि त्ति भणाति, अण्णं वा अणुमोदेति, जो तं ण पडिसेधेति, अण्णं वा पडिसेधंतं णाणुमोदेति तस्स चउगुरुं।

गाहा—

णायगमणायगं वा, सावगमस्सावगं च जे भिक्खू।
अद्धं वा कसिणं वा, रातिं तु संवसाणादी ॥ १२६ ॥

आणाअणवत्थिया दोसा।

गाहा—

साधुं उवासमाणो, उवासगो सो वती व अवती वा।
तो पुण णायग इतरो, एवऽणुवासे वि दो भंगा॥१२७॥

साधुं उवासतीति उवासगो, थूलगपाणवहादिया य वा जेणं गहिता सो वती, इयरो अवती। सो दुविहो वि सयणो, असयणो य। एवं अणुवासए वि दो भंगा, भंगा इति प्रकारा इत्यर्थ.।

इमं पुण सुत्तं। गाहा—

इत्थिं पडुच्च सुत्तं, सहिरण्णसभोयणे व आवासो।
जति णिस्सागयं जे वा, मेहुणणिसिभोयणं कुज्जा॥१२८॥

जइ इत्थी उवासगे संवसति, सइत्थीओ वा पुरिसो, अणित्थीओ वा सहिरण्णो, अहिरण्णो गहियपत्तपाणभोयणो एते वा साधू वसहीए आवासेति, रातो साधुं वा पडुच्च आगता वसहिट्ठिया मेहुणं करेंति, रातो वा भुजति। एएसु सुत्तणिवातो—ह। एतद्दोसविप्पमुक्के पुरिसे—ह। पुण अद्धराईए एगं वा जामं तिण्णि वा जामा स भवति।

गाहा—

जति पत्ता तु निसीहे, एगें व णितेसु अण्णमण्णतरे।
एगतरमुभयतो वा, वाघातेणं तु अद्धणिसिं ॥१२९॥

जइ अद्धरत्ते वा एगम्मि वा जामे गते तेहिं वा जामेहिं गतेहिं पत्ता हवेज्जा। एगतरं ति गिहत्था संजता वा, उभय त्ति गिहत्था संजया य, एवं वाघायकारणेण वा अप्पणो वा रातीए एए णिग्गच्छंताणं अद्धणिस्सादिसंभवो भवति।

गिहिणा सह वसंताण इमे दोसा। गाहा—

सागारिय अधिकरणे, भासादोसा पयालमातंको।
आउयवाघातम्मि य, सपक्खपरपक्खतेणादी ॥१३०॥
किं वा णट्ठा एएहिं, घाइतो गहणदोसगमणं वा।
अणेणावि अवहिते, संकागहणादिया दोसा॥१३१॥

काइयसण्णं वोसिरति तो उदगस्स अभावे कारणतो मोयपमज्जणेण पायपमज्जणेण वा सागरियं भवति, आउज्जोपवणवणियादि अधिकरणं। अहवा णिंतापिंते चलणादिसंघट्टिते अधिकरणं कलहो हवेज्ज। जति संजतिभासाहिं भासंति तो गिहत्था गेण्हति। अह गारत्थियभासाए भासति तो असजता वोलेंति। सो गिहत्थो सप्पेण स्तो, आयकेण वा मतो, अध य कालेण वा मतो, ताहे संका। किंच णूणं एयस्स गिहत्थस्स किंचणं अपसितं, आयु संजएहिं। उद्दविओ गेण्हणादिया दोसा पावेति। कोइ सड्ढो असड्ढो वा अपुट्ठधम्मी तं हिरण्णं जाणेत्ता तं से हरिउं णासेज्ज, एवं गमणगहणपक्खेवि। स हिरण्णगं जाणित्ता तं गिहत्थं अण्णो कोइ गिही हरेज्ज ताहे संजतासिं किं कज्जंति, ताहे सो रायकुलं गतं कहेज्जा संजएहिं मे हिरण्णं आसियावियं, तत्थ गेण्हणादिया दोसा। आदिग्गहणातो वा उभयं हरेज्ज। जम्हा एते दोसा।

तम्हा ण संवसेज्जा, खिप्पं णिक्खामते ततो ते उ।
जे भिक्खू ण निक्खामे, सो पावति आणमादीणि॥१३२॥

*णिक्खमणं णिप्फडणं तत आश्रयात् ते इति—गृहस्थाः सा*—इहिं च तज्जा णिग्गच्छहिति। नि० चू० ८ उ०। ( कारणे वसेदपीति निशीथग्रन्थादष्टमोद्देशकादवसेयम्।) ( अत्रत्यं वक्तव्यं 'ठाण' शब्दे चतुर्थभागे १६६५ पृष्ठे।) ( 'णिग्गंथी' शब्दे चतुर्थभागे २०४७ पृष्ठे च गतम्) वापकानां कर्षकाणामावासे, अन्नत्थ किसिं करेत्ता अण्णत्थ वोढु वसंति तं संवासं भणणति। नि० चू० १२ उ०।

**संवासभद्दय**—संवासभद्रक—पुं०। संवासश्चिरं सह वासस्तस्मिन्भद्रकोऽहिंसकत्वात् संसारकारणनियोजकत्वाद् वेति संवासभद्रकः। संवासभद्रकारिणि, स्था० ४ ठा० १ उ०।

**संवासित्तए**—संवासयितुम्—अव्य०। एकसमीपे आसयितुमित्यर्थे, वृ० ४ उ०। स्था०। संस्तारकमण्डल्यां निवेशयितुमित्यर्थे, स्था० २ ठा० १ उ०।

**संवाह**—संवाह—पुं०। समभूमौ कृषिं कृत्वा येषु दुर्गभूमिभूतेषु धान्यानि कृषीवला. संवहन्ति रक्षार्थमिति। कृषीवलानां धान्यरक्षार्थं निर्मितेषु समभूमितलेषु, स्थानेषु, स्था० १ ठा०।

**संविक्खमाण**—संवीक्षमाण—त्रि०। समतया ईक्षमाणे, उत्त० २४ अ०।

**संविग्ग**—संविग्न—पुं०। मोक्षाभिलाषिणि, बृ० ३ उ०। आव०। पं० व०। औ०। पञ्चा०। आ० म०। दर्श०। ध०। व्य०। वक्ष्यमाणलक्षणसंवेगमग्ने, सूत्र० १ श्रु० १ अ० १ उ०। पञ्चा०। यो विं०। ध०। उत्त्रस्ते, व्य० १ उ०। संविग्ना नाम उत्त्रस्तास्ते च द्विधा द्रव्यतो, भावतश्च। द्रव्यतः संविग्ना मृगास्तेषां इतस्ततो वा विभ्यता प्रायः सदैवोत्त्रसमानत्वात्। भावसंविग्ना ये संसारादुत्त्रस्तमानसतया सदैव पूर्वरात्रादिष्वेतच्चिन्तयन्ति। 'किं मे कडं किं वा मेऽत्थि सेसं किं सक्कणिज्जं न समायरामि' इत्यादि। व्य० १ उ०। ( संविग्नस्य विशेषतो व्याख्या 'उस्सारकप्प' शब्दे द्वितीयभागे ११७६ पृष्ठे गता।) संविग्गो दव्वसंविग्गो, भावसंविग्गो। सव्वतो अवज्जस्स वीहेति। उक्तं च—" मृगा यथा मृत्युभयस्य भीता, उद्विग्नवासे न लभन्ति निद्राम्। एवं बुधा ज्ञानविशेषबुद्धा, संसारभीता न लभन्ति निद्राम् ॥१॥ " आ० चू० ३ अ०। आव०। पं० भा०। पं० चू०। संसारभीरौ, पञ्चा० १२ विव०। सामाचार्या सम्यगुद्युक्ते, व्य० ४ उ०। सम्यग् व्याप्ते वशीभूते, सूत्र० १ श्रु० १ अ० २ उ०। उद्यतविहारिणि, नि० चू० ४ उ०। वृ०। आव०।

संविग्गपक्खिय—संविग्नपाक्षिक—पुं०। संविग्ना सुसाधव. तेषां पक्षेण चरति यः स संविग्नपाक्षिकस्तेषां वा पाक्षिक पक्षग्राही संविग्नपाक्षिक। सम्यक्त्वसंयमपरिपालनासमर्थसंयतिपक्षपातेन आत्मनिस्तारके, दर्श० १ तत्त्व। पञ्चा०। पं० व०। (अत्रत्यव्याख्या 'संलेहणा' शब्देऽस्मिन्नेव भागे २१८ पृष्ठे गता।)

अथ संविग्नपाक्षिकस्यैव किंचित् कर्त्तव्यं दर्शयन्नाह—

सम्मग्गमग्गसंप-ट्ठिआणँ साहूणँ कुणइ वच्छल्लं।
ओसहभेसज्जेहि अ, सयमन्नेणं तु कारेइ ॥ ३५॥

सन्मार्गमार्गसंप्रस्थितानां-सन्मुनिमार्गे सम्यक् प्रवृत्तानां साधूनां-मुनीना करोति-विधत्ते, स्वयम्-आत्मना वात्सल्यं समाधिसंपादनम्, अधिकारात् संविग्नपाक्षिक, कै? औषधभैषज्यैः। तत्र औषधानि-केवलद्रव्यरूपाणि बहिरुपयोगीनि वा भैषज्यानि सायोगिकानि अन्तर्भोग्याणि वा, चशब्दोऽनेकान्यप्रकारसूचकः। तथाऽन्येनात्मव्यतिरिक्तेन कारयति, तुशब्दात् कुर्वन्तमन्यमनुजानातीति गाथाछन्द.। ग० १ अधि०। द्वा०। "संविग्गोऽणुवएस, ण देइ दुब्भासिअं कडुविवागं। जाणतो तम्मि तहा, अतहक्कारो उ मिच्छत्तं ॥१॥" इति। द्वा० १ द्वा०।

संविग्गभाविय—संविग्नभावित—त्रि०। उद्यतविहारिसंभाविते, नि० चू० ४ उ०।

संविग्गविहार—संविग्नविहार—पुं०। संविग्नानुष्ठाने, भ० १ श० ६ उ०।

संविग्गविहारि(ण्)—संविग्नविहारिण्—पुं०। संविग्नानुष्ठानकर्त्तरि उद्यतविहारिणि, भ० ११ श० १२ उ०।

संविग्गसुहाभिगम—संविग्नसुखाभिगम—त्रि०। संविग्नैः संसारभयोद्वेगाविर्भूतमोक्षाभिलाषैरपकृष्यमाणरागद्वेषाहंकारकालुष्यैरिदमेव जिनवचनं तत्त्वमित्येव सुखेनावगम्यते यत्तत् संविग्नसुखाभिगमनम्। संविग्नानां स्वावबोधे, सम्म० ३ काण्ड।

संविढत्त—समर्जित—त्रि०। सम्पादिते, पं० व० १ द्वार।

संवित्ति—संवित्ति—स्त्री०। ज्ञाने, आ० म० १ अ०। स्था०।

संविधुणिय—संविधूय—अव्य०। प्रमथ्येत्यर्थे, आचा० १ श्रु० ६ अ० ८ उ०।

संविभागि(ण्)—संविभागिन्—पुं०। संविभजति आनीताहारमन्येभ्य साधुभ्य. प्रार्थयतीत्येवंशीलो य. स संविभागी। परेभ्यो दत्त्वा भोक्तरि, उत्त० ११ अ०।

संविभाविऊण—संविभाव्य—अव्य०। पर्यालोच्येत्यर्थे, महा० ? चू०।

संविह—संविध—पुं०। आजीविकोपासकभेदे, भ० ८ श० ५ उ०।

संवीत—संवीत—त्रि०। आकुले, सूत्र० १ श्रु० ३ अ० २ उ०।

संवुअ—संवृत—त्रि०। "उदत्वादौ" ॥ ८। १। १३१॥ इति आदे ऋत उत्त्वम्। संवुअं। निरुद्धे, प्रा० १ पाद।



संवुड—संवृत—त्रि०। उपयुक्ते सन्माधौ, दश० ४ अ० १ उ०। निरुद्धेन्द्रिये, औ०। सामान्येन प्राणातिपाताद्याश्रवद्वारसंवरोपेते, भ० ११ श० ११ उ०। निरुद्धाश्रवद्वारे सर्वविरते, भ० १६ श० ६ उ०। उत्त०। आचा०। मनोवाक्कायगुप्ते, सूत्र० १ श्रु० ४ अ० १ उ०। यमनियमरते, सूत्र० १ श्रु० २ अ० ४ उ०। त्रिगुप्तिगुप्ते, सूत्र० १ श्रु० २ अ० ३ उ०। उत्त०। इन्द्रियनोइन्द्रिय. संयते, सूत्र० १ श्रु० १ अ० ४ उ०। (संवृतस्यानगारस्य क्रियाया विषय. 'अणगार' शब्दे प्रथमभागे २७२ पृष्ठे दर्शित.।) समन्तत आवृते, चं० प्र० २० पाहु०। पार्श्वतः कटकुड्यादिनाऽऽच्छादिते, उत्त० १ अ०। कालपनिके, द्वा० ८ द्वार।

संवुडकम्म—संवृतकर्मन्—पुं०। संवृतानि-निरुद्धानि कर्माण्यनुष्ठानानि सम्यगुपयोगरूपाणि वा मिथ्यादर्शनाविरतिप्रमादकषाययोगरूपाणि वा यस्य स तथा। निरुद्धकर्मणि, सूत्र० १ श्रु० २ अ० ३ उ०।

संवुडचारि(ण्)—संवृतचारिन्—पुं०। यमनियमाद्युपेते शब्दमनस्के, सूत्र० १ श्रु० १ अ० २ उ०।

संवुडबहुल—संवृतबहुल—त्रि०। प्राणातिपाताद्याश्रवद्वारनिरोधप्रचुरे, प्रश्न० ३ संव० द्वार।

संवुडवियडा—संवृतविवृता—स्त्री०। संवृतविवृतोभयरूपे योनिभेदे, स्था० ३ ठा० १ उ०। प्रज्ञा०।

संवुडा—संवृता—स्त्री०। घटिकालयवत् योनिभेदे, स्था० ३ ठा० १ उ०। प्रज्ञा०।

संवुडासंवुड—संवृतासंवृत—न०। संवृतासंवृता स्थगितास्थगिता. परित्यक्तापरित्यक्ता सावद्ययोगा. यस्मिन् सामायिके तत्संवृतासंवृतम्। देशविरतिसामायिके, विशे०। आ० म०।

संवुड्ढ—संवृद्ध—पुं०। अभ्युत्क्रान्ते, आचा० २ श्रु० १ चू० १ अ० ८ उ०।

संवेग—संवेग—पुं०। संवेजनं संवेग। भ० १७ श० ३ उ०। सम्यग् वेग उद्वेग संवेग। आ० चू० ४ अ०। मोक्षोत्कण्ठे, आ० चू० ४ अ०। व्य०। नरसुरसुखपरिहारेण मोक्षसुखाभिलाषे, दश० १ अ०। प्रव०। द्वा०। श्रा०। संथा०। ध०। संथा०। दर्श०। अष्ट०। विरतिप्रतिपत्तिकारणभूते मोक्षाभिलाषाध्यवसाये, पञ्चा० ४ विव०। दश०। जी०। वृ०। उत्त०। आव०। अनन्यभाविनिर्वेदे, उत्त० २९ अ०। भवभये, भ० १ श० ७ उ०। दश०। स०। शुभाध्यवसायविशेषे, पञ्चा० १५ विव०। संवेगलक्षणम्-"तथ्ये धर्मे ध्वस्तहिंसाप्रबन्धे, देवे रागद्वेषमोहादिमुक्ते। साधौ सर्वग्रन्थसन्दर्भहीने, संवेगोऽसौ निश्चलो योऽनुराग ॥ १॥" यो० वि०। ध०। समुद्रपाल संवेग, प्राप्त सन्निदमब्रवीत्" किं कृत्वा न चौर वध्यं दृष्ट्वा इदम् इति. किम्?, अहो इत्याश्चर्यं अशुभाना कर्मणामिदं पापक निर्याणम्, अशुभं प्रान्तं दृश्यते। उत्त० २१ अ०।

संवेगफलम्—

संवेगेणं भंते! जीवे किं जणयइ?, संवेगेणं अणुत्तरं धम्मसद्धं जणयइ,अणुत्तराए धम्मसद्धाए संवेगं हव्वमागच्छइ, अणन्ताणुबन्धिकोहमाणमायालोभे खवेइ, नवं च कम्मं न बंधइ, तप्पच्चइयं च णं मिच्छत्तविसोहिं काऊणं दंसणाराहए भवइ । दंसणविसोहीए णं विसुद्धाए अत्थेगइए तेणेव भवग्गहणेणं सिज्झइ, सोहिएणं विसुद्धाए तच्चं पुण भवग्गहणं नाइक्कमइ ॥ १ ॥

शिष्यः पृच्छति-हे भदन्त ! हे पूज्य ! संवेगेन—मोक्षाभिलाषेण कृत्वा जीव. किं जनयति—किमुत्पादयति, तदा गुरुराह-हे शिष्य ! संवेगेन कृत्वा जीवोऽनुत्तरां प्रधानां धर्मे श्रद्धां धर्मरुचिं जनयति, तया प्रधानया धर्मस्य श्रद्धया संवेगः मोक्षाभिलाष. 'हव्वं' इति शीघ्रमागच्छति-प्राप्नोति, ततो नरकानुबन्धिनो नरकगतिदायिनोऽनन्तानुबन्धिक्रोधमानमायालोभान् चतुरोऽपि कषायान् क्षपयति, नवं च कर्म न बध्नाति, तत्प्रत्ययाम्—अनन्तानुबन्धिकषायक्षयादुत्पन्नां मिथ्यात्वविशुद्धिं सर्वथा मिथ्यात्वक्षर्णिं कृत्वा दर्शनाराधको भवति, स्यायकशुद्धसम्यक्त्वस्य आराधको—निरतिचारपालको भवति, तत. सम्यक्त्वविशुद्ध्या अतिनिर्मलया अस्त्येक. कश्चित् भव्यो य. स तेनैव भवग्रहणेन-जन्मोपादानेन सिद्ध्यति-सिद्धिं प्राप्नोति । एक पुन सम्यक्त्वस्य निर्मलया विशुद्धया तृतीयं पुनर्भवग्रहणं नातिक्रामति इत्यनेन शुद्धस्यायकसम्यक्त्ववान् भवत्रयमध्ये मोक्षं व्रजत्येव । उत्त० २६ अ० । जिनवचनभावितान्त करणतायाम्, दर्श०५ तत्त्व । संवेगो-भवविरागः निर्वेदो-मोक्षाभिलाष इति । ( ध० ) संवेगो-भयम् जिनप्रवचनानुसारिणो नरकेषु शीतोष्णादिसहनं संक्लिष्टासुरादिनिर्मितं परस्परोदीरितं च तिर्यक्षु भारारोपणाद्यनेकविधं मनुजेषु दारिद्र्यदौर्भाग्यादि देवेष्वपि ईर्ष्याविषादपरप्रेष्यत्वादि । ध० २ अधि० ।

संवेगे कथा । संवेगद्वारमाह—

चंपाए मित्तपभे, धणमित्ते धणसिरी सुजाए य ।
पियंगू धम्मघोसे य,ऽरक्खुरी चेव चंदघोसे य ॥१३०२॥
चंदजसा रायगिहे, वारत्तपुरे अभयसेणवारत्ते ।
सुसुमारधुंधुमारे, अंगारवई य पज्जोए ॥ १३०३ ॥

" मित्र प्रभो नृपश्चम्पा-पुर्यो राज्ञी च धारिणी।
धनमित्र' सार्थवाहो, धनश्रीस्तस्य वल्लभा ॥ १ ॥
तस्योपयाचितशतै-र्जाते पुत्र जनोऽवदत् ।
अहो सुजातमस्येति, कुलेऽमुष्मिन् महर्द्धिके ॥ २ ॥
सुजात इति तस्याथ, द्वादशेऽह्नि कृताऽभिधा ।
सोऽत्यन्तरूपवांस्तस्य, ललितं शिक्षते जन. ॥ ३ ॥
अमात्यो धर्मघोषोऽभूत्, प्रियङ्गुस्तस्य च प्रिया ।
सा सुजातगुणान् श्रुत्वा, ऽवोचद्दासीं यथाऽमुना ॥ ४ ॥
यदैत्येष तदाऽऽख्येयं, येन प्रेक्षे नवं स्मरम् ।
तेनाध्वनाऽन्यदाऽऽयात् स, प्रियङ्गो पथितस्तया ॥ ५ ॥
दृष्ट्वाऽथ सा सपत्नीकं, तं प्रियङ्गुरदोऽवदत् ।
धन्या साऽसौ प्रियो यस्या, रतेरिव मनोभव' ॥६॥
सुजातवेषमाधाय, प्रियङ्गू रमतेऽन्यदा ।
तद्विलासाँस्तदालापान्, स्वसपत्नीषु कुर्वती ॥ ७ ॥
अमात्यश्च तदाऽऽयातो,ऽन्त'पुरं निध्वनीति सः ।
शनैरेत्य द्वारसंधौ, तां विक्रीडां निरैक्षत ॥ ८ ॥
सोऽथ दध्यौ विनष्टं मे,ऽन्तः पुरं छन्नमेव तत् ।
सुजातं कारयामीति, परं बिभेति तत्पितुः ॥ ९ ॥
मा भूत्ततो विनाशो मे, राजमान्योऽस्ति येन सः ।
कूटं लेखं विधायाथ, राज्ञो राजद्विषस्ततः ॥ १० ॥
नृपाग्रेऽवाचयन् मन्त्री, मित्रप्रभुनरेश्वरः ।
भो' सुजात ! त्वया घात्यो-ऽर्द्धराज्यं दास्यते तव ॥ ११ ॥
कुपितोऽथ नृपो लेख-हरान् वध्यान् समादिशत् ।
मन्त्रिणा ते धृताच्छन्ना., पृथ्वीनाथोऽथ दध्यिवान् ॥१२॥
लोकख्यातं हतेऽमुष्मिन् ; पुरक्षोभो भविष्यति ।
मम तस्य च भूपस्य, प्रदास्यत्ययशो जनः ॥ १३ ॥
ततः प्रत्यन्तनगरं, 'अर(क्खु)री' ति नामनि ।
अस्ति माण्डलिकस्तत्र, निजश्चन्द्रध्वजाभिधः ॥ १४ ॥
सुजातः प्रहितस्तत्र, विशिष्टैश्वर्यसंयुत' ।
राजादेशं समर्प्य स्वं, चन्द्रध्वजनृपान्तिके ॥ १५ ॥
राजकार्योपदेशेन, कर्त्तुं प्रेताधिपातिथिम् ।
सोऽगात्तत्र नृपोऽदर्शि, राजादेश' समर्पितः ॥ १६ ॥
घात्यस्त्वयैष दृष्ट्वेति, दध्यावस्तु हनिष्यते ।
सह प्रतिदिनं तेन, खेलति स्म महीपतिः ॥ १७ ॥
रूपशीलसदाचारान् , दृष्ट्वा तस्य व्यचिन्तयत् ।
नूनमन्त पुरध्वंस-दोषान्निग्राहितोऽस्त्यसौ ॥ १८ ॥
ईदृग्रूपं कथं हन्मी-त्याख्यत्तस्याखिलं रहः ।
सुजात' स्माह यद्वेत्सि, तत् कुरुष्वाथ सोऽवदत् ॥ १९ ॥
न त्वां हन्मि रहस्तिष्ठ, दत्ता चन्द्रयशा' स्वसा ।
अस्ति त्वग्दोषिणी साऽथ, तया सार्द्धं समस्ति सः ॥२०॥
सुजातस्यापि संक्रान्तो, रोगस्तत्सङ्गतो मनाक् ।
सा तु तेनोपदेशौघै', प्रबोध्य श्राविका कृता ॥ २१ ॥
सा दध्यौ मम संङ्गन , सरुग् जातोऽयमप्यतः ।
संविग्नाऽनशनं चक्रे, तेनैव निरयाम्यत ॥ २२ ॥
देवो जज्ञेऽथ सोऽज्ञासीद् , दृष्ट्वा नत्वा वदत्यसौ ।
किं कुर्म. सोऽपि संविग्न , स्माह पित्रोर्विलोकनात् ॥२३॥
जिघृक्षामि व्रतं देव—स्तमूचे तत्करिष्यते ।
तदैवोत्पाट्य तं कृष्णो-द्याने मुक्त्वा पुरोपरि ॥ २४ ॥
शिलां स चक्रे महतीं, लोकोऽभूद् व्याकुलोऽखिल ।
धूपहस्तोऽवदद्राजा, योऽस्ति रुष्ट सुरोऽसुर. ॥ २५ ॥
स तु दर्शयतु स्वं मे, येन प्राऽऽसादयामि तम् ।
देवोऽवदत् सुजातोऽयं, श्रावक परमार्हत. ॥ २६ ॥
निर्दोषो मन्त्रिणाऽदूषि, तत्सर्वं चूरयाम्यहम् ।
तं प्रसाद्यानयध्वं चे-त्ततो मुञ्चामि नान्यथा ॥ २७ ॥
राजोचे क्वास्ति देवोऽवग्, बाह्योद्याने नृपस्ततः ।
तत्र गत्वा सपौरोऽपि, क्षमयित्वा तमानयत् ॥ २८ ॥
शिलां संहृत्य देवोऽगात् , सुजात पितरौ पुन ।
आपृच्छ्य व्रतमादत्त, पश्चात्तौ पितरावपि ॥ २९ ॥

ते त्रयोऽपि शिवं प्रापु-र्मन्त्री राज्ञा प्रवासितः।
सुजातस्य गुणान्मन्त्री, श्रुत्वा सर्वाङ्गगानिमान् ॥ ३० ॥
यथा नेत्रे तथा शीलं, यथा नासा तथाऽर्जवम्।
यथा रूपं तथा चित्तं, यथा शीलं तथा गुणाः ॥ ३१ ॥
ततश्च सोऽपि निर्विण्णो, दध्यौ पापं मया कृतम्।
गतो राजगृहे साधु-सन्निधौ व्रतमात्तवान् ॥ ३२ ॥
अभृद्बहुश्रुतो भ्राम्यन्, वारत्तगपुरं ययौ।
तत्रेशोऽभयसेनोऽभू-न्मन्त्री वारत्तकः पुनः ॥ ३३ ॥
तद्गृहं धर्मघोषोऽगा-त्क्रमन् भिक्षामुपाहरत्।
परमान्नं सखण्डाज्यं, बिन्दोः पाते न सोऽग्रहीत् ॥३४॥
वारत्तको गवाक्षस्थो, दध्यौ नैच्छदिदं कथम्।
तावद्बिन्दौ लगन्ति स्म, मक्षिकास्ताश्च खादितुम् ॥३५॥
गृहालिका समायासी-त्तत्कलासश्च तां पुनः।
ततस्तदर्थं मार्जारि-र्जिघत्सु तां पुनः शुनौ ॥ ३६ ॥
एकः स्वाम्यपरो यायी, एकद्रव्यार्थिनोस्तयोः।
बभूवास्फलनं पश्चा-त्कलिस्तत्स्वामिनोऽभवत् ॥३७॥
ततो बलं मेलयित्वा, चक्रे ताभ्यां महारणः।
वारत्तकस्ततो दध्यौ, स नैच्छत्कारणादतः ॥ ३८ ॥
इति ध्यायन् सोऽपि जाति-मस्मरत् प्रतिबुद्धवान्।
उपधिं देवताऽयच्छ-द्वारत्तकमुनिस्ततः ॥ ३९ ॥
सुसुमारपुरेऽयासी-द्विहरन् द्मामनिश्रया।
धुन्धुमारो नृपस्तत्र, तस्याङ्गारवती सुता ॥ ४० ॥
सा परिव्राजिकाधर्म-विचारे जितवत्यथ।
सापत्न्येऽमुं क्षिपामीति, वैरात्प्राव्राजिकाऽधमा ॥४१॥
लिखित्वा चित्रफलके-ऽवन्त्यां प्रद्योतभूतेः।
ऐक्षयिष्ट स पप्रच्छ, साऽख्यद्वन्धोऽथ तत्कृते ॥ ४२ ॥
प्रैषीद् दूतं ततो धुन्धु-मारस्तमिदमुक्तवान्।
विद्यावद्विनयेनैव, लभ्यन्ते कन्यका अपि ॥ ४३ ॥
आख्यत् प्रतिगतो दूत-स्ततत्तदुक्ताधिकं प्रभोः।
कुपितः सोऽथ सर्वौघे-णागत्याऽवेष्टयत्पुरम् ॥४४ ॥
धुन्धुमारोऽल्पसेनागो, विभ्यन्नैमित्तिकं जगौ।
स ऊचे वीक्ष्य वक्ष्यामि, तद् द्रष्टुमथ सोऽगमत् ॥४५॥
क्रीडन्त्येकत्र डिम्भानि, भीषयामास वीक्ष्य सः।
तत्र चास्ते नागगृहे, वारत्तकमहाऋषिः ॥४६॥
प्रतिमास्थस्तत्र तानि, रुदति प्रययुर्भयात्।
वारत्तकोऽवदत्तानि, मा भैषुरिति संभ्रमात् ॥ ४७ ॥
नैमित्तिकस्तदाकर्ण्य, नृपस्याख्यन्न ते भयम्।
अवस्कन्दमथो दत्त्वा, धृत्वा प्रद्योतभूपतिम् ॥ ४८ ॥
धुन्धुमारोऽन्तराऽऽनीय, पुरद्वाराण्यबन्धयत्।
अथ प्रद्योतमूचे ते, किमातिथ्यं विधीयताम् ॥ ४९ ॥
सोऽवदद्रोचते यत्ते, धुन्धुमारो ददौ ततः।
महाभूत्याऽङ्गारवतीं, तया सार्द्धमथास्ति सः ॥ ५० ॥
राजपाटीमथान्येद्यु-स्तत्र कुर्वन्प्रवन्तिराट्।
दृष्ट्वा बलाल्पतामूचे, गृहीतोऽहं कथं प्रिये ! ॥ ५१ ॥
सा साधुवाक्यमाचख्यौ, तन्मूलं स गतोऽवदत्।
नैमित्तिकमुने ! वन्दे, सस्माराथोपयुज्य सः ॥ ५२ ॥
डिम्भभयगिरं दत्त्वा, संवेगं परमं गताः।
सुजातो धर्मघोषश्च, तथा चन्द्रयशा अपि ॥ ५३ ॥"
आ० क० ४ अ०।

संवेगकरणत्थ-संवेगकरणार्थ-पुं०। संवेगहेतुषु भावेषु, स० १४७ सम०।

संवेगपर-संवेगपर-पुं०। संविग्ने चारित्रिणि, पञ्चा० १६ विव०।

संवेगपरायण-संवेगपरायण-त्रि०। संवेगः संसारभयं मोक्षाभिलाषो वा परमयनं गमनं येषु तानि संवेगपरायणानि। संवेगतात्पर्यकेषु, षो० ८ विव०।

संवेगभावियमइ-संवेगभावितमति-पुं०। मोक्षाभिलाषत्वासिनमतिके, पञ्चा० १० विव०। जी०।

संवेगरसायणय-संवेगरसायनद-त्रि०। संवेगः संसारनिर्वेदो मोक्षानुरागो वा स एव रसायनममृतमजरामरत्वहेतुत्वात् संवेगरसायनम्, तद्ददाति प्रयच्छतीति संवेगरसायनदः। संवेगोत्पादके, पञ्चा० २ विव०।

संवेगविसेसजोग-संवेगविशेषयोग-पुं०। भवभयातिशयसंबन्धे, पञ्चा० १६ विव०।

संवेगवुड्डिजणग-संवेगवृद्धिजनक-त्रि०। मोक्षाभिलाषातिशयकारिणि, पञ्चा० ६ विव०।

संवेगसमावण्ण-संवेगसमापन्न-त्रि०। मोक्षसुखाभिलाषमेवानुगते, पं० व० ४ द्वार।

संवेगसारगुरु-संवेगसारगुरु-पुं०। प्रशस्तभावप्रधाने, पं० व० ५ द्वार।

संवेगसुद्धजोग-संवेगशुद्धयोग-पुं०। संवेगेन शुद्धव्यापारे, पं० व० ३ द्वार।

संवेज्ज-संवेद्य-त्रि०। संवेदनार्हे, योगिनामेतदन्येषां श्रुतिगोचरं उपमाभावातो व्यक्तमभिधातुं न शक्यते। द्वा०२२अष्ट०।

संवेध-संवेध-पुं०। संयोगे, व्य० १ उ०। (बन्धोदयसत्ताप्रकृतिस्थानानां परस्परं प्ररूपणा 'कम्म' शब्दे तृतीयभागे २६५ पृष्ठे 'पच्छित्त' शब्दे पञ्चमभागे १५६ पृष्ठे विस्तरतः उक्ता।)

संवेयण-संवेदन-न०। वस्तुस्वरूपपरामर्शे, षो० १२ विव०। पुरोऽवस्थिते घटादौ विषये तद्भावेतराभावाध्यवसायरूपे विज्ञाने, अने० २ अधि०। णाणं ति वा संवेदणं ति वा अहिगमं ति वा वेयणं त्ति वा भावो त्ति वा एगट्ठा। आ० चू० १ अ०। न०। आचा०।

संवेयणी-संवे(द)(ग)जनी-स्त्री०। संवेगयति संवेगं करोतीति सवंयते वा संवेज्यते वा संवेगं प्राप्यते श्रोता अनयेति संवेगनी संवेदनी संवेजनी चेति। कथाभेदे, स्था० ४ ठा० २ उ०।

संवेयणीकहा चउव्विहा पण्णत्ता, तं जहा-इहलोगसंवेयणी परलोगसंवेयणी आयसरीरसंवेयणी परसरीरसंवेयणी (सू०-२८२×)

इहलोको मनुष्यजन्म तत्स्वरूपकथनेन संवेगनी इहलोकसंवेगनी, सर्वमिदं मानुषत्वमसारमध्रुवं कदलीस्तम्भसमानमित्यादिरूपा, एवं परलोकसंवेदनी-देवादिभवस्वभावकथनरूपा, देवा अपीर्ष्याविषादभयवियोगादिदुःखैरभिभूता

किंपुनस्तिर्यगादय इति, आत्मशरीरसंवेगनी-यदेतदस्मदीयं शरीरमेतदशुचि अशुचिकारणजातमशुचिद्वारविनिर्गतमिति न प्रतिबन्धस्थानमित्यादिकथनरूपा, एवं परशरीरसंवेगनी । अथवा—परशरीरं—मृतकशरीरमिति । स्था० ४ ठा० २ उ० ।

मता संवेजनी स्वान्य-देहेहप्रेत्यगोचरा ।
यया संवेज्यते श्रोता, विपाकविरसत्वतः ॥ १३ ॥

मतेति—यया कथया विपाकविरसत्वतो विपाकवैरस्यात् प्रदर्शितात् श्रोता संवेज्यते—संवेगं ग्राह्यते, सा संवेजनी स्वान्यदेहेहप्रेत्यगोचरा—स्वशरीरपरशरीरेहलोकपरलोकविषया चतुर्विधा मता । द्वा० ६ द्वा० ।

संवेल्लेमाण-संवेष्टयत्—त्रि० । " समो ल्लः " ॥ ८ । ४ । २२२ ॥ अनेन सम्पूर्वस्य द्विरुक्तो लकारः । सङ्कोचयति, प्रा० ४ पाद ।

संवेल्लिअ-संवेष्टित-त्रि० । संवर्त्तिते, भ० १६ श० ६ उ० । मुकुलिते, " संवेल्लिअं मउलिअं " पाइ० ना० १८१ गाथा । संवृते, दे० ना० ८ वर्ग १२ गाथा ।

संसइय-संशायित-त्रि० । कथमिदं स्यादित्येवं संशयशीले, आ० म० १ अ० । दर्श० । संशयविषये, सूत्र० २ श्रु० २ अ० ।

संशायिक-त्रि० । संशयेन निवृत्ते मिथ्यात्वे, यद्वशाद्भगवदर्हदुपदिष्टेष्वपि जीवाजीवादितत्वेषु संशय उपजायते, यथा—न जाने किमिदं भगवदुक्तं धर्मास्तिकायादि सत्यमुतान्यथेति । कर्म्म० ४ कर्म० । संदिग्धे, "सदिद्धं संसइअं" पाइ० ना० १८५ गाथा ।

संसग्ग-संसर्ग-पुं० । सम्यक् सर्गो योग. संसर्ग. सम्यक् संबन्धे, विशे० । सूत्र० । सांगत्ये, सूत्र० १ श्रु० २ उ० । आव० । उत्त० । प्रश्न० । " गवाशनाना स गिर. शृणोति, वयं च राजन् ! मुनिपुङ्गवानाम् । प्रत्यक्षमेतद्भवताऽपि दृष्टं, संसर्गजा दोषगुणा भवन्ति ॥१॥ " आ० चू० ३ अ० ( संसर्गविशेषे दर्दुरकथा ' दद्दुर ' शब्दे चतुर्थभागे २४५१ पृष्ठे उक्ता । ) ( पार्श्वस्थादिसंसर्ग. 'किइकम्म' शब्दे ५१७ पृष्ठे ३ भागे निषिद्धः । संसर्गाद् गुणाऽगुणव्यवस्थाऽपि तत्रैव । )

संसग्गि-संसर्गि-पुं० । प्राकृतत्वात्संसर्ग. । उत्त० १ अ० १ । संगतौ, उत्त० १ अ० । संसक्तौ, वृ० ४ उ० । आ० चू० । कुशीलादिसंसर्गिनिषिद्धा । व्य० ७ उ० । पं० व० । मैथुनसम्पर्के-स्त्रीपुंसंसर्गविशेषरूपत्वात्संसर्गजत्वात् संसर्गिरित्युच्यते । प्रश्न० ४ आश्र० द्वार ।

संसज्जिय-संसर्जित-त्रि० । सामस्त्येन प्रगुणिते जीवेन स्वप्रदेशेषु सम्बन्धिनि चारित्रमोहनीयादिकर्मणि, पञ्चा० ४ विव० ।

संसट्ठ-संसृष्ट-त्रि० । खरण्टिते, स्था० ५ ठा० १ उ० । खरण्टितेन हस्तादिना दीयमाने, सूत्र० २ श्रु० २ अ० । अन्यदीयपिण्डेन सह सम्मीलिते, वृ० २ उ० । संसृष्टं नाम भोक्तुकामेन गृहीतं कूरादौ हस्तः क्षिप्तो न तावन्मुखे क्षिपति तच्च लेपालेपकरणस्वभावमिति । स्था० ३ ठा० ३ उ० । " असंसट्ठे संसट्ठे चेव बोद्धव्वे । " दश० ।

संसट्ठेण हत्थेण, दव्विए भायणेण वा ।
दिज्जमाणं पडिच्छेज्जा, जं तत्थेसणियं भवे ॥ ३६ ॥

संसृष्टेन हस्तेन-अन्नादिलिप्तेन तथा दर्व्या भाजनेन वा दीयमानं प्रतीच्छेत् गृह्णीयात्किं सामान्येन ? नेत्याह-यत्तत्रैषणीयं भवति, तदन्यदोषरहितमित्यर्थ , इह च वृद्धसंप्रदाय. "संसट्ठे हत्थे संसट्ठे मत्ते सावसेसे दव्वे, संसट्ठे हत्थे संसट्ठे मत्ते णिरवसेसे दव्वे, एवं अट्ठ भंगा एत्थ पढमभङ्गो सव्वुत्तमो अन्नेसु वि जत्थ सावसेसं दव्वं तत्थ धिप्पइ ण इयरेसु पच्छाकम्मदोसाउ" त्ति सूत्रार्थ. । दश० ५ अ० १ उ० ।

संसट्ठकप्पेण चरिज्ज भिक्खू ,
तज्जायसंसट्ठ जई जइज्जा ॥ ६ ॥

संसृष्टकल्पेन—हस्तमात्रकादिसंसृष्टविधिना चरेत् भिक्षुरित्युपदेश., अन्यथा पुरःकर्मादिदोषात् । संसृष्टमेव विशिनष्टि—तज्जातसंसृष्ट इत्यामे गोरसादिसमानजातीयसंसृष्टे हस्तमात्रकादौ यतिर्यतेत-यत्नं कुर्यात्, अतज्जातसंसृष्टे संसर्ज्जनादिदोषादित्यनेनाष्टभङ्गसूचनम् । तद्यथा—"संसट्ठे हत्थे संसट्ठे मत्ते सावसेसे दव्वे" इत्यादि, अत्र प्रथमभङ्ग. श्रेयान् , शेषास्तु चिन्त्या इति सूत्रार्थः । दश० २ चू० । आ० चू० । प्रव० । रा० । पूर्वपरिचिते उद्भ्रामके, वृ० १ उ० ३ प्रक० । संश्लेषिते, प्रव० ५ द्वार । गोरससंश्लिष्टे भाजने प्रक्षिप्तत्वेन गोरसरसेन परिणामिते उदके, वृ० १ उ० २ प्रक० । ( ' लेव ' शब्दे षष्ठभागे संसृष्टोदकेन लेपकरणं दर्शितम् । )

संसट्ठकप्पिय-संसृष्टकल्पिक-पुं० । संसृष्टेन खरण्टितेनेत्यर्थो हस्तभाजनादिना दीयमानं कल्पिकं कल्पवत् कल्पनीयमुचितमभिग्रहविशेषाद्भक्तादि यस्य सः । तथाविधाभिग्रहविशेषधारके साधौ, स्था० ५ ठा० १ उ० । सूत्र० । औ० ।

संसट्ठचरय-संसृष्टचरक-पुं० । संसृष्टेन खरण्टितेन इत्यादिना दीयमानं संसृष्टमुच्यते, तच्चरति य. स तथा । संसृष्टकल्पिके, औ० ।

संसट्ठा-संसृष्टा-स्त्री० । भिक्षाभेदे, नि० चू० १६ उ० ।

तम्मी या संसट्ठा, हत्थमत्तए इमा पढमभिक्खा ॥७४७॥

' तम्मि ' त्ति प्राकृतत्वात् तासु भिक्षासु मध्ये संसृष्टा हस्तमात्रकाभ्या भवति । कोऽर्थ. संसृष्टेन तक्रतीमनादिना खरण्टितेन हस्तेन संसृष्टेनैव च मात्रकेण करोटिकादिना गृह्णन. साधोः संसृष्टा नाम भिक्षा भवति । इयं च द्वितीयाऽपि मूलगाथोक्तक्रमापेक्षया प्रथमा । अत्र च संसृष्टासंसृष्टसावशेषनिरवशेषद्रव्यैरष्टौ भङ्गास्तेषु चाष्टमो भङ्ग —संसृष्टो हस्त. संसृष्टं मात्रं सावशेषं

द्रव्यमित्येष गच्छनिर्गतानामपि कल्पते। शेषास्तु भङ्गा गच्छान्तर्गतानां सूत्रार्थहान्यादिकं कारणमाश्रित्य कल्पन्त इति। प्रव० ९६ द्वार। सूत्र०। आचा०। पञ्चा०। प्रव०। आव०।

**संसट्ठुसिणोदग**-संसृष्टोष्णोदक-न०। लवङ्गादिरसभाजनस्थे उष्णोदके, नि० चू०। लवङ्गरसभायणणिक्केयणे जं तं संसट्ठुसिणोदगं भण्णति। अहवा—कोसलविसयादिसु सन्नोयणाविणस्सणभया सीतोदगे छुब्भति तम्मि य ओदणे भुत्ते तं अवीभूतं जइ अ तमागतो घेप्पति एतं वा संसट्ठुसिणोदगं। नि० चू० १ उ०।

**संसत्त**-संसक्त-त्रि०। संबद्धे, ज्ञा० १ श्रु० ८ अ०। संकीर्णे, स० ८ समा०। सप्रतिबन्धे, उत्त० २५ अ०। श्वापदविशेषे, कल्प० १ अधि० ३ क्षण। (निर्ग्रन्थ्या पात्रे उदकविन्दुः पर्यापयेत तत्र ग्रहणविधिः 'पाणग'. शब्दे पञ्चमभागे ८२७ पृष्ठे उक्तः।) द्वीन्द्रियादिजन्तुमिश्रे भक्तपाने, वृ० ३ उ०। (यत्र देशे भक्तपानं संसज्यते तं देशं प्राप्ताना यतना 'पडिसेवणा' शब्दे पञ्चमभागे ३६४ पृष्ठे उक्ता।) दध्यादिद्रव्ये, पिं०। "घडिअं लग्गं च संसत्तं" पाइ० ना० २०१ गाथा।

संसक्तग्रहणम्—

से भिक्खू वा भिक्खुणी वा गाहावइकुले पिंडवायपडियाए अणुपविट्ठे समाणे से जं पुण जाणेज्ज असणं वा पाणं वा खाइमं वा साइमं वा पाणेहिं वा पणएहिं वा बीएहिं वा हरिएहिं वा संसत्तं उम्मिस्सं सीओदएण वा ओसित्तं रयसा वा परिघासियं वा तहप्पगारं असणं वा पाणं वा खाइमं वा साइमं वा परहत्थंसि वा परपायंसि वा अफासुअं अणेसणिज्जं ति मण्णमाणे लाभे वि संते नो पडिग्गहिज्जा। (सू०-१×)

'से' इति मागधदेशीवचनः प्रथमान्तो निर्देशे वर्त्तते। यः कश्चिद्भिक्षणशीलो भावभिक्षुः मूलोत्तरगुणधारी विविधाभिग्रहरतः भिक्षुणी वा साध्वी स भावभिक्षुर्वेदनादिभिः कारणैराहारग्रहणं करोति, तानि चामूनि-"वेयण वेयावच्चे इरियट्ठाए य संजमट्ठाए। तह पाणवत्तियाए छट्ठं पुण धम्मचिन्ताए॥१॥" इत्याद्यमीषां मध्ये अन्यतमेनापि कारणेनाहारार्थी-सन् गृहपतिर्गृहस्थस्य कुलं-गृहं तदनुप्रविष्टः; किमर्थं 'पिंडवायपडियाए' त्ति-पिण्डपातो-भिक्षालाभस्तत्प्रतिज्ञया अहमत्र भिक्षां लप्स्ये इति,स प्रविष्टः सन् यत्पुनरशनादि जानीयात्, कथमिति दर्शयति-प्राणिभि रसजादिभिः पनकैरुल्लिजीवैः ससक्तं बीजैर्गोधूमादिभिर्हरितैर्दूर्वाङ्कुरादिभिरुन्मिश्रं शबलीभूतं तथा शीतोदकेन वा अवसिक्तमार्द्रीकृतं रजसा वा सचित्तेन 'परिघासियं' ति परिगुण्डित क्रियद्वा वक्ष्यति ?, तथाप्रकारम्—एवंजातीयकम—शुद्धमशनादि चतुर्विधमप्याहारं परहस्ते—दातृहस्ते परपात्रे वा स्थितम् अप्रासुकं सचित्तमनेषणीयमाधाकर्मादिदोषदुष्टमित्येवं मन्यमान स—भावभिक्षु सत्यपि लाभे न प्रतिगृह्णीयादित्युत्सर्गतः, अपवादतस्तु द्रव्यादि ज्ञात्वा प्रति गृह्णीयादपि। तत्र द्रव्यं दुर्लभद्रव्यं क्षेत्रं-साधारणद्रव्यलाभरहितं सरजस्कादिभावितं वा कालो-दुर्भिक्षादि भावो-ग्लानतादिरित्यादिभिः कारणैरुपस्थितैरल्पबहुत्वं पर्यालोच्य गीतार्थो गृह्णीयादिति।

अथ कथंचिदनाभोगात् संसक्तमागामिसत्त्वोन्मिश्रं वा गृहीत तत्र विधिमाह—

से य आहच्च पडिग्गहे सिया से तं आया य एगंतमवक्कमिज्जा एगंतमवक्कमित्ता अहे आरामंसि वा अहे उवस्सयंसि वा अप्पंडे अप्पपाणे अप्पबीए अप्पहरिए अप्पोसे अप्पोदए अप्पुत्तिंगपणगदगमट्टियमक्कडासंताणए विगिंचिय विगिंचिय उम्मीसं विसोहिय२ तओ संजयामेव भुंजिज्ज वा पीइज्ज वा जं च णो संजाएज्जा भोत्तए वा पायए वा से तमायाय एगंतमवक्कमेज्जा। (सू०-१×)

'से आहच्च' त्यादि स च भावभिक्षुः 'आहच्च' त्ति-सहसा संसक्तादिकमाहारजातं कदाचिदनाभोगात् प्रतिगृह्णीयात्, स चानाभोगो दातृप्रतिग्रहीतृपदद्वयाच्चतुर्धा योजनीय इति, तम्—एवंभूतमशुद्धमाहारमादाय एकान्तम्—अपक्रामेद्गच्छेत्। तमपक्रम्य गत्वेति यत्र सागारिकाणामनालोकमसंपातश्च भवति तदेकान्तमनेकधेति दर्शयति— 'अहे आरामसि यं' ति-अथारामे वा अथोपाश्रये वा। अथशब्दः अनापातविशिष्टप्रदेशोपसंग्रहार्थं, वाशब्दो विकल्पार्थः। शून्यगृहाद्युपसंग्रहार्थो वा। तद्विशिनष्टि-अल्पाण्डे अल्पशब्दो ऽभाववचनः अपगताण्ड इत्यर्थ, एवमल्पबीजे अल्पहरिते अल्पावश्याये अवश्याय उदकसूक्ष्मतुषारः, अल्पोदके, तथा-अल्पोत्तिङ्गपनकदगमृत्तिकामर्कटसन्तानके। तत्रोत्तिङ्गस्तृणाग्र उदकविन्दुः (भुञ्जीतेत्युत्तरक्रियया सबन्ध) पनकः—उल्लीविशेषः उदकप्रधाना मृत्तिका उदकमृत्तिकेति, मर्कटकः—सूक्ष्मजीवविशेषस्तेषां संतानः, यदिवा—मर्कटकसन्तानः कोलियकस्तदेवं मण्डादिदोषरहिते आरामादिके स्थण्डिले गत्वा प्राग्गृहीताहारस्य यत् संसक्तं तद्विविच्य विविच्य त्यक्त्वा त्यक्त्वा क्रियाभ्यावृत्त्या,अशुद्धस्य परित्यागमि शेषतामाह—उन्मिश्रं वा आगामुकसत्त्वसंवलितं सक्तुकादि तत प्राणिनो विशोध्य विशोध्य-अपनीयापनीय ततस्तदनन्तरं शेषं शुद्धं परिभाव्य सम्यग्यत एव भुञ्जीत पिवेद्वा रागद्वेषविप्रमुक्तः सन्निति। उक्तञ्च-"बायालीसे सणसंकडम्मि गहणम्मि जीव ण हु छलिओ। इण्हि जह ण छलिज्जसि, भुजन्तो रागदोसेहिं॥१॥ रागेण सइंगाल, दोसेण सधूमगं विजाणाहि। रागदोसविमुक्को, भुंजेज्जा णिज्जरा पेही॥२॥" तच्चाहारादिकं पातुं भोक्तुं वा न शक्नुयाद्बहुप्राचुर्यादशुद्धपृथक्करणासंभवाद्वा, स भिक्षुस्तदाहारजातमादाय एकान्तमपक्रामेदपक्रम्य च तदाहारजातं परिष्ठापयेत् त्यजेदिति सबन्धः।

यत्र च प्रतिष्ठापयेत्तद्दर्शयति—

अहे झामथंडिलंसि वा अट्ठिरासिंसि वा किट्टरासिंसि वा तुसरासिंसि वा गोमयरासिंसि वा अण्णयरंसि वा तहप्पगारंसि थंडिलंसि पडिलेहिय पडिलेहिय पमज्जिय पमज्जिय तओ संजयामेव परिट्ठविज्जा। (सू०-१×)

'अहे झामथंडिलंसि वे' त्ति—अथानन्तर्यार्थे, वाशब्द उत्तरापेक्षया विकल्पार्थे, 'झामे' त्ति—दग्धे तस्मिन् वा स्थण्डिले अस्थिराशौ वा किट्टो-लोहादिमलस्तद्राशौ वा तुषराशौ वा गोमयराशौ वा कियद्वा वक्ष्यते इत्युपसंहरति—अन्यतरराशौ वा तथाप्रकारे-पूर्वसदृशे प्रासुके स्थण्डिले गत्वा तत्प्रत्युपेक्ष्य२ अक्ष्णा प्रमृज्य २ रजोहरणादिना अत्रापि द्विर्वचनमादरख्यापनार्थमिति प्रत्युपेक्षणप्रमार्जनपदाभ्यां सप्तभङ्गका भवन्ति, तद्यथा-अप्रत्युपेक्षितमप्रमार्जितम्१, प्रत्युपेक्षितं प्रमार्जितम् २ प्रत्युपेक्षितमप्रमार्जितम् ३ तत्राप्रत्युपेक्ष्य प्रमृजन् स्थानात् स्थानसंक्रमणेन त्रसान् विराधयति, प्रत्युपेक्ष्याप्यप्रमृजन्नागन्तुकपृथिवीकायादीन् विराधयतीति, चतुर्थभङ्गके तु चत्वारोऽमी, तद्यथा-दुष्प्रत्युपेक्षितं दुष्प्रमार्जितम्४, दुष्प्रत्युपेक्षितं सुप्रमार्जितम् ५ सुप्रत्युपेक्षितं दुष्प्रमार्जितम् ६ सुप्रत्युपेक्षितं सुप्रमार्जितमिति स्थापना । तत्रैवंभूते सप्तमभङ्गायाते स्थण्डिले संयत एव सम्यगुपयुक्त एव शुद्धाशुद्धपुञ्जभागपरिकल्पनया परिष्ठापयेत्—त्यजेदिति । आचा० २ श्रु० १ चू० १ अ० १ उ० । ( औषधविधिवक्तव्यता 'गोयरचरिया' शब्दे तृतीयभागे ९९४ पृष्ठे द्रष्टव्या । )

भिक्षां गृह्णतः साधोः पात्रे प्राणादि पतेयुः—

निग्गंथस्स य गाहावइकुलं पिंडवायपडियाए अणुप्पविट्ठस्स अंतो पडिग्गहंसि पाणे वा बीये वा रए वा परियावज्जेज्जा । तं च संचाएइ विगिंचित्तए वा विसोहित्तए वा ततो संजतामेव भुंजेज्ज वा पिवेज्ज । तं च नो संचाएइ विगिंचित्तए वा विसोहित्तए वा,तं नो अप्पणा भुंजेज्जा नो अन्नेसिं अणुप्पदेज्जा, एगंते बहुफासुए थंडिले पडिलेहित्ता पमज्जित्ता परिट्ठवयव्वे सिया ॥ ११ ॥

अस्य सम्बन्धमाह—

वंतादियाण रत्तिं, णिवारितं दिवसतो वि अत्थेणं ।
वंतमणेसियगहणं, सिया पडिपक्खओ सुत्तं ॥ १८१ ॥

रात्रौ वान्तादिपानं पूर्वसूत्रे निवारितं दिवसतोऽप्यर्थेन वारितम् । अनेषणीयग्रहणमपि साधुभिर्वर्जितमेव अतस्तदिह प्रतिषिध्यते,'सिया उ पडिवक्खओ सुत्तं' ति-स्याद् यतनया प्रतिपक्षतो वा एतत् सूत्रं भवति अप्रतिपक्षतो वा । तत्र प्रतिपक्षतो यथा पूर्वसूत्रे रात्रौ वान्ताऽऽपानं निवारितम्, इदं तु दिवा अनेषणीयं वान्तं निवार्यते । अथ प्रतिपक्षतो यथा पूर्वसूत्रे वान्तं न वर्त्तते, प्रत्यापातुमित्युक्तम्, इहाप्यनेषणीयं वान्तं न वर्त्तते ग्रहीतुमित्युच्यते । अनेन सम्बन्धेनायातस्यास्य (११सू०) व्याख्या-निर्ग्रन्थस्य गृहपतिकुलं पिण्डपातप्रतिज्ञया तु प्रविष्टस्यान्तः प्रतिग्रहे प्राणा वा बीजानि वा रजो वा परि समन्तादापतेयुः, तच्च प्राणादिकं यदि शक्नोति विवेक्तुं वा विशोधयितुं वा ततस्तत्प्राणजातादिकं लात्वा हस्तेन गृहीत्वा विशोध्य २ सर्वथैवापनीय ततः संयत एव प्रयत्नपर एव भुञ्जीत वा पिबेद्वा. तच्च न शक्नोति विवेक्तुं वा विशोधयितुं वा तदात्मना भुञ्जीत, न वा अन्येषां दद्यात् । एकान्ते बहुप्रासुके प्रदेशे प्रत्युपेक्ष्य प्रमृज्य परिष्ठापयितव्यं स्यादिति सूत्रार्थः ।

अथ भाष्यकृद्विषमपदानि विवृणोति—

पाणग्गहणेण तसा, गहिया बीएहिँ सव्ववणकाओ ।
रयगहणा होति मही, तेऊ व ण संपरड्ढाई ॥ १८२ ॥

प्राणग्रहणेन त्रसा गृहीताः, बीजग्रहणेन तु सर्वोऽपि वनस्पतिकायः सूचितः, रजोग्रहणेन च मही—पृथिवीकायो गृहीतः, तेजस्कायो वा परस्थो न भवतीति कृत्वा विवेचनादिकं तत्र न घटते ।

ते पुण आणिज्जंते, पडेज्ज पुव्विं व संसिया दव्वे ।
आगंतुगतब्भवा वा, आगंतूहिं तिमं सुत्तं ॥ १८३ ॥

ते पुनस्त्रसादय आनीयमाने वा भक्ते पतेयुः पूर्वं वा । तत्र द्रव्ये भक्तपाने संश्रितास्ते च द्विविधाः, आगन्तुकास्तदुद्भवा वा । तत्रागन्तुकत्रसादिविषयमिदं प्रस्तुतसूत्रं मन्तव्यम् ।

अथ के तदुद्भवाः के वा आगन्तुका भवेयुरित्याह—

रसया पणतो वसिया, होज्ज अणागंतुगाण पुण सेसा ।
एमेव य आगंतुय, पणगविवज्जा भवे दुविहा ॥१८४॥

ये रसजा—तक्रदधितीमनादिरसोत्पन्नाः कृम्यादयस्त्रसादयश्च पनकः स्यात् एते अनागन्तुकास्तदुद्भवा भवन्ति, न पुनः शेषाः पृथिवीकायादयः । एवमेव च ये पनकवर्ज्या द्विविधाः त्रसाः स्थावराश्च जीवास्ते सर्वेऽप्यागन्तुका संभवन्ति ।

सुत्तम्मि कड्डियम्मि, जयणा गहणं तु पडितो दट्ठव्वो ।
लहुगो अपिक्खणम्मि,आणादिविराहणा दुविहा॥१८५॥

एवं सूत्रमुच्चार्य पदच्छेदं कृत्वा य एष सूत्रार्थो भणितः एतत्सूत्रमाकर्षितमिति भण्यते । एवं सूत्रे आकर्षिते सति निर्युक्तिविस्तर उच्यते—तेन साधुना यतनया भक्तपानस्य ग्रहणं कर्तव्यम् । का पुनर्यतनेत्याह—पूर्वं गृहस्थहस्तगतः पिण्डो निरीक्षणीयो यदि शुद्धस्ततो गृह्यते, एवं यतनया गृहीतोऽपि प्रतिग्रहे पतितो द्रष्टव्यः । यदि न प्रेक्षते ततो लघुको मासः,आज्ञादयश्च दोषाः विराधना च द्विविधा—तत्र संयमे त्रसादय उष्णे वा द्रवे वा पतिता विराध्यन्ते । आत्मविराधना तु मक्षिकादिसन्मिश्रे भुक्ते वल्गुलीव्याधिर्मरणं वा भवेत् । तस्मात् प्रथममेव प्रतिग्रहपतितः पिण्डो द्रष्टव्यः ।

अहिगारो ऽसंसत्ते, संकप्पादी तु देससंसत्ते ।
संसज्जिमं तु तहियं, ओदणसत्तुदधिदवाई ॥१८६॥

अत एव यस्मिन् देशे त्रसप्राणादिभिः संसक्तं भक्तपानं न भवति तत्रासंसक्ते अधिकारस्तस्मिन्नेव देशे विहरणीयमिति भावः । यस्तु संसक्ते देशे संकल्पादीनि पदानि करोति तस्य प्रायश्चित्तम्, तच्चोत्तरत्र वक्ष्यते । तत्र च संसज्जिमं संसक्तियोग्यमोदनसक्तुदधिद्रवादिकं द्रव्यं मन्तव्यम् ।

अथ संसक्तदेशे संकल्पादिषु प्रायश्चित्तमाह—

संकप्पे पदभिंदण, पंथे पत्ते तहेव आवण्णे ।
चत्तारि छच्च लहु गुरु, सट्ठाणं चेव आवण्णे ॥ १८७ ॥

यस्मिन् विषये भक्तादिकं प्राणिभिः संसज्यते तत्र संकल्प—गमनानि प्रायः करोति चतुर्लघु । यदा भेदं करोति च

लुर्गुरु ससक्तदेशस्य पन्थान गच्छत. पड्लघु, तं देश प्राप्तस्य पड्गुरु, तथैव द्वीन्द्रियादः सघट्टनादिकमापन्नस्य स्वस्थानप्रायश्चित्तम्, तद्यथा-द्वीन्द्रिय सघट्टयति चतुर्लघु, परितापयति चतुर्गुरु, अपद्रावयति पड्लघु, त्रीन्द्रियाणां संघट्टनादिपु पदेपु चतुर्गुरुकादरब्धं पड्गुरुके तिष्ठति। चतुरिन्द्रियाणा सघट्टनादिपु पड्लघुकादिक छेदान्तमिति।

(अ) सिवादिएहिं तु तहिं पविट्ठा,
संसज्जिमाइं परिवज्जयंति।
भूइट्ठसंसज्जिमदव्वलंभे,
गेण्हंतुवाएण इमेण जुत्ता ॥ १८८ ॥

अशिवादिभि· कारणैस्तत्र संसक्तदेशे प्रविष्टास्ततः संसज्जिमानि सक्तुदधिप्रभृतीनि द्रव्याणि परिवर्जयन्ति। अथ भूयिष्ठानि-प्रभूततराणि ससज्जिमद्रव्याणि लभ्यन्ते ततोऽमुनोपायेन युक्ताः प्रयत्नपरा गृह्णन्ति।

गमणागमणे गहणे, पत्ते पडिए य होति पडिलेहा।
अगहियदिट्ठविवज्जण, अह गिण्हइ जं तमाभज्ज ॥१८९॥

भक्तार्थं दायकमध्ये गमनं कुर्वन् कीटिकामण्डूकीप्रभृतिजन्तुसंसक्तायां भूमौ मा विराधना कुर्यादिति सम्यग् निरीक्षणीय., एवमागमने भिक्षाया हस्तेन ग्रहणमवविलोकनीयम्। प्राप्ते च दायके तदीयहस्तगत· पिण्ड· प्रत्युपेक्षणीय·। पात्रे च पतित· प्रत्युपेक्षितव्य·। ततो गृहीते त्रसादिकं प्राणजातं पश्यति ततस्तस्मिन् दृष्टे वर्जयति न गृह्णातीत्यर्थ·। अथ गृह्णाति ततो येन द्वीन्द्रियादिना ससक्त गृह्णाति तन्निष्पन्न प्रायश्चित्तमापद्यते।

अथ पुनरेवं न प्रत्युपेक्षते तत इमे दोषा·—

पाणाइसंजमम्मि, अ।ता मयमच्छिकटकविसं वा।
मुइंगमच्छिविच्छुग, गोवालियमाइया उभए ॥१९०॥

संयमे त्रसप्राणपनकादयो विराध्यन्ते। आत्मविराधनायां घृत मक्षिकासमिश्र भुङ्क्ते वल्गुलीव्याधिस्ततश्च क्रमेन मरणं भवेत्, कण्टको वा विष वा समागच्छेत्। उभयविराधनाया मुइङ्गा-पिपीलिका मक्षिकावृश्चिकगोपालिकादयो वा भवन्ति। गोपालिका अहिलोहिकाख्यो जीवविशेष। एते हि मक्षिका जीवा भक्तेन सह भुक्ता· संयमोपघातमात्मनश्च मेधाद्युपघातं कुर्वन्ति।

पवयणघातं च सिया, तं वियडं पिमियमट्ठजातं वा।
आदाणकिलेसऽजसे, दिट्ठंतो सेट्ठिकप्पट्ठो ॥ १९१ ॥

प्रवचनोपघाति वा स्यात्तद्विकट पिशितं वा तत् स्याद्-भवेत्, अर्थजात वा सुवर्णशकलिकामुद्रिकादिक कश्चिदनुकम्पया प्रत्यनीकतया तावद्दद्यात्, तत पतित पिण्डं प्रत्युपेक्षेत तथाप्रत्युपेक्ष्य गृहीत मन्दधर्मण कस्याप्युत्प्रव्रजितुकामस्यादानमाजीविकाकारण भवति, तदादायोत्प्रव्रजतीत्यर्थ। अर्थजात च गृहीते साधुना रक्षणादिके महान् परिक्लेशोऽयशो वा भवेत्। तथा चात्र सिद्धिविराज्यपदोपविष्टरूपस्यरूपकोपलक्षितस्य काष्ठश्रेष्ठिनो दृष्टान्त। स चावश्यकटीकातोऽवगन्तव्य।

तम्हा खलु दट्ठव्वो, मुकप्पगहणं अगएहणे लहुगा।
आणादिणो य दोसा, विराहणा जा भणियपुव्विं ॥१९२॥

यत एते दोषास्तस्मात् खलु—नियमात् पात्रकर्पानेन पिण्डो द्रष्टव्य। ससक्ते च देशे शुष्कस्य कूरस्य पृथक् मात्रके ग्रहण कार्यम्। अथ पृथक् न गृह्णाति ततश्चतुर्लघु आज्ञादयश्च दोषा., विराधना च द्विधा सयमात्मविषया पूर्वमनन्तरमेव भणिता।

इदमेव भावयति—

संसज्जिमम्मि देसे, मत्तगसक्कसपडिलेहणा उवरिं।
एवं ताव अणुण्हे, उण्हे कुसणं च उवरिं तु ॥१९३॥

संसज्जिमे देशे य· शुष्कपोट्टलिकोऽनुष्णो लभ्यते स मात्रके गृहीत्वा प्रत्युपेक्ष्य यद्यससक्तस्तदा प्रतिग्रहोपरि क्षिप्यते, एव तावदनुष्ण विधिरुक्त। य· पुनरुष्ण· कूर कुसणं वा तन्नियमादससक्तमिति कृत्वा प्रतिग्रहस्यैवोपरि गृह्णाति।

गुरुमादीण व जोग्गं, एगम्मितरम्मि पेहिउं उवरिं।
दोसु वि संसत्तेसुं, दुल्लहपुव्वेतरं पुच्छा ॥१९४॥

गुरुग्लानादीना च योग्यमेकस्मिन् मात्रके गृह्णाति, इतरस्मिन्-द्वितीय मात्रके ससक्त प्रत्युपेक्ष्य प्रतिग्रहोपरि प्रक्षिप्यते, एवं तावद्यत्रैकं भक्तं पानक वा संसक्त तत्र विधिरुक्तः। यत्र तु द्वे अपि भक्तपानक संसक्त तत्र यद्भक्त पानक वा दुर्लभं तत्पूर्वं गृह्णन्ति, इतरत्-सुलभ पश्चाद् गृह्णन्ति।

एसा विही तु दिट्ठे, आउट्टियगेण्हणे तु जं जत्थ।
अणाभोगगहे विगिंचणे, खिप्पमवि चिंतियं जत्थ१९५

एष विधिर्दृष्टे गृह्यमाणे भणित। अथाकुट्टिकया ससक्तं गृह्णन्ति ततो यद्यत्र द्वीन्द्रियपरितापनादिक करोति तत्तत्र प्राप्नोति। यथाऽनाभोगेन संसक्त गृह्णाति तत क्षिप्रमेव विवेचनम्। अथ क्षिप्रं न विनक्ति ततो यावत्परिष्ठापयति तावत् यत्र यद्विनाशमश्नुते तन्निष्पन्नं प्रायश्चित्तम्।

क· पुन· क्षिप्रकाल इत्याह—

सत्त पदा गम्मंते, जावति कालेण तं भवे खिप्पं।
कीरति वा तालाओ अद्दुयमविलंविता सत्त ॥१९६॥

यावता कालेन सप्त पदानि गम्यन्ते तत् क्षिप्र मन्तव्यम्। यावता वा कालेनाद्रुतमविलम्बित सप्त ताला क्रियन्ते तावान् कालविशेष क्षिप्रम्।

तम्हा विविंचितव्वं, आमणे वसहिदूरजयणाए।
सागारिय उण्हविए, पमज्जणा सत्तुगदव्वे य ॥१९७॥

तस्मात्तज्जन्तुससक्तमनन्तरोक्तक्षिप्रकालमध्य एव विवेचनीयम्। यदि च वसतिरासन्ना ततस्तत्र गत्वा परित्यक्तव्यम्, अथ दूरे वसतिस्तदा शून्यगृहादिषु यतनया परिष्ठापयति। अथ सागारिकं पश्यति उष्ण वा भूभागे स्थितो वा ऊर्द्ध्वं स्थित परिष्ठापयति ततो वक्ष्यमाण प्रायश्चित्तम्। यत्र च परिष्ठाप्यते तत्र प्रमार्जना कर्त्तव्या। एतावदनन्तरस्य विधि। सक्तुद्रव्यस्य सर्वत्रैवात्मसागारिके प्रकृत्य ल्याया परिष्ठापन विधेयम्।

इदमेव व्याचष्टे—

जावइ कालें वसहिं उवेति जंति ताव ते ण चिट्ठंती ।
तं पियमणुण्हमदवं, तो गंतुमवस्सए पट्ठो ॥ १९८ ॥

यावता कालेन वसतिमुपैति तावता कालेन यदि ते प्राणिनो न दिशन्ति न विपश्यन्ति तद्वसतिं नीयते तदनुष्णमद्रवं च यदि भवति ततः प्रतिश्रयं नेतव्यम् । किमुक्तं भवति—यद्युष्णः कूरो द्रवं वा संसक्तं ततः प्रतिश्रयं न नीयते । मा यावत्प्रतिश्रयं नीयते तावत्प्राणजातीया उष्णे द्रवे वा मरिष्यन्तीति कृत्वा । अथानुष्णमद्रवं वा तत उपाश्रये गत्वाऽपद्रवेत—परिष्ठापयेत । यत्पुनरुष्णं द्रवे वा तत्तत्रैव शून्यगृहादौ परिष्ठापनीयम् । अथ दूरे वसतिस्ततोऽनुष्णमपि शून्यगृहादिषु परिष्ठापयितव्यम् ।

सुण्णघरादीण सती, दूरे को णयति अंतरीभूवे ।
उक्कुडु पमज्जछाया, वतिकोणादीसु विकिरणं ॥ १९९ ॥

अथ शून्यगृहादीनि न सन्ति ततो दूरे एकान्तं गत्वा यत्र कोणस्थितो वृत्त्या अन्तरितीभूतो वा सागारिको न पश्यति तत्रोत्कुटुको भूत्वा प्रमृज्य छायायां वृत्तेः, कोणके प्रक्षिपति, आदिग्रहणेन वृत्तेर्मध्येऽपि विकिरति—परिष्ठापयतीत्यर्थः । एवमोदनस्य सक्तानां द्रवस्य वा परिष्ठापनं कर्त्तव्यम् ।

सागारिएँ उण्हठिए, अपमज्जंते य मासियं लहुगं ।
वोच्छेदुड्डाहादी, सागारियसेसए काया ॥ २०० ॥

अथ सागारिके च पश्यति उष्णे वा प्रदेशे भूत्वा स्थितो वा ऊर्द्धं भूमेरप्रमार्ज्य वा परिष्ठापयति ततश्चतुर्ष्वपि लघुमासिकम् । सागारिके च पश्यति यदि भक्तं परिष्ठाप्यते तदा स भक्तपानेन व्यवच्छेदमुड्डाहादिकं वा कुर्यात्, शेषेषु उष्णादित्रये परिष्ठापयत' पृथिव्यादिकाया विराध्यन्ते ।

इइ ओअणसत्तविही, सत्तू तद्दिणकतादि जा तिण्णि ।
वीसुं वीसुं गहणं, चतुरादिदिणादि एगत्थ ॥ २०१ ॥

इत्येवमोदनस्य संसक्तस्य विधिरुक्तः । सक्तुसक्तानां विधिरुच्यते-यत्र सक्तवः संसक्ता लभ्यन्ते तत्र नैव गृह्यन्ते । अथ न संस्तरति ततस्तद्दिवसकृतान् सक्तुकान् गृह्णन्तीति । आदिशब्दात्तैरप्यसंस्तरतो द्वितीयतृतीयदिनकृतानपि सक्तून् गृह्णन्ति, ते पुनः पृथग्२ गृह्यन्ते । चतुर्थदिवसकृतादयस्तु सर्वेऽप्येकत्र गृह्यन्ते, तेषामयं प्रत्युपेक्षणाविधिः । रजस्त्राणमधः-प्रस्तीर्य तस्योपरि पात्रकस्थलं कृत्वा तत्र सक्तवः प्रकीर्यन्ते, तत ऊर्ध्वमुखं पात्रकबन्धं कृत्वा एकस्मिन्पार्श्वे नीत्वा यास्तत्र कणिका लग्नास्ता उद्धृत्य कर्प्परे प्रक्षिप्यन्ते । एवं प्रत्युपेक्ष्य भूयोऽपि तथैव प्रत्युपेक्षन्ते ततः ।

नव पेहातो अदिट्ठे, दिट्ठे अण्णा उ होंति णव चेव ।
एवं नवगा तिण्णी, तेण परं संथरे उज्झे ॥ २०२ ॥

नव वारा प्रत्युपेक्षणा कृत्वा यदि प्राणजातीया न दृष्टास्ततो भोक्तव्यास्ते सक्तव', अथ दृष्टास्ततो भूयोऽप्यन्या नव वारा प्रत्युपेक्षणा भवन्ति । तथापि यदि दृष्टास्ततः पुनरपि नव वारा प्रत्युपेक्षन्ते । ततो यद्येवं त्रिभिर्नवकैः शुद्धास्ततो भुञ्जनाम् । अथ न शुद्धास्तदा तान् तत परं परिष्ठापयेत् । अथासंस्तरणं तनस्तावत्प्रत्युपेक्षन्ते यावत् शुद्धीभवन्ति ।

प्राणजातीयानां च परिष्ठापने विधिरयम्-

आगरमादी असती, कप्परमादीसु सत्तुए उरणी ।
पिंममलेवकडाण य, काऊण दवं तु तत्थेव ॥ २०३ ॥

या ऊरणिकाः प्रत्युपेक्षमाणेन दृष्टास्ता आकरादिषु परिष्ठापनीयाः, इह घरट्टादिसमीपे प्रभूता यत्र तुषा भवन्ति स आकर उच्यते । तस्याभावे कर्प्परादिषु स्तोकान् सक्तून् प्रक्षिप्य तत्रोरणिकाः स्थापयित्वा बहिरनाबाधे प्रदेशे स्थाप्यन्ते, यदि च द्रवभाजनं नास्ति ततो ये सक्तवः शुद्धा अलेपकृताश्च ते पिण्डं कृत्वा भाजनस्यैकपार्श्वे स्थापयित्वा तत्रैव च द्रवं कृत्वा गृहीत्वा भुञ्जते ।

यत्र च काञ्जिकं संसज्जते तत्रायं विधिः-

आयामसंसट्ठसिणोदगं वा,
गिण्हंति वा खिव्वतचाउलोदं ।
गिहत्थभाणेसु वि पेहिताणं,
मत्तेव सोहेंतुवरिं छुभंति ॥ १०४ ॥

आयामं संसृष्टपात्रकमुष्णोदकं वा त्रिवृत्तं वा प्राशुकीकृतं वा उष्णोदकं तन्दुलधावनं गृह्णन्ति । एतेषामभावे तदेव काञ्जिकं गृहस्थभाजनेषु प्रत्युपेक्ष्य मात्रके वा शोधयित्वा यद्यसंसक्तं तदा गृहोपरि प्रक्षिपन्ति ।

द्वितीयपदमाह—

बिइयपदऽपेक्खणं तु, गेलण्णद्धाणओमगमादीसुं ।
तं चेव सुक्खगहणे, दुल्लभदव्वेसु वी जयणा ॥ २०५ ॥

द्वितीयपदे ग्लानाध्वावमादिषु कारणेष्वपेक्षणं-पिण्डस्याप्रत्युपेक्षणमपि कुर्यात् । तदेव ग्लानत्वादिकं द्वितीयपदं शुष्कस्यौदनस्य ग्रहणे मन्तव्यम् । दुर्लभं वा द्रव्यं पश्चात् लभ्यते, ततः पूर्वं तद् गृहीतमिति कृत्वा नास्ति तद्भाजनं यत्र पृथक् शुष्कं गृह्यते 'दोसु वी जयणा' त्ति द्वयोरप्युपेक्षणं शुष्कग्रहणयोरेषा यतना कर्तव्या । एष संग्रहगाथा-समासार्थः ।

साम्प्रतमेनामेव विवृणोति—

अच्चाउरसंमूढो, वेलातिक्कमति सीयलं होइ ।
असढो गेण्हणगहिते, सुज्झेइ अपेक्खमाणो वि ॥ २०६ ॥

कश्चिदतीवातुरत्वेन ग्लानत्वेन संमूढः संमोहसमुद्घातमुपगतस्ततो यावत्प्रत्युपेक्षते तावद्वेला अतिक्रामति । शीतलं वा तावता कालेन भवति, तदप्यशठो—विशुद्धभावो गृह्णानो वा, गृहीते वा पिण्डे प्रत्युपेक्षणामकुर्वाणोऽपि शुध्यति तत्प्रायश्चित्तभाग् न भवति ।

ओमाणपेल्लितो वे—लतिक्कमे चलितुमिच्छति भयं वा ।
एवंविहे अपेहा, ओमो सति कालवेला वा ॥ २०७ ॥

अध्वनि वा गच्छसार्थोऽवमानप्रेरिते प्रभूतभिक्षाचराकीर्णो यावच्च प्रत्युपेक्षते तावद्वेलातिक्रमो भवति, सर्वः सार्थश्चलितुमिच्छति, पृष्ठो भो गच्छता च भयं, तत एवंविधे कारणे अपेक्षा प्रत्युपेक्षामन्तरेणापि पिण्डं गृह्णीयादित्यर्थः । अयमेव प्रत्युपेक्षमाणाना सत्कालो भिक्षाग्रा देशः कालः स्फिटति । सूर्ये चास्तमिते अथ स्थानं वा भिक्षाचराकीर्णं ततोऽप्रत्युपेक्षितमपि गृह्णीयात् ।

तो कुज्जा उवओगं, पाणे दट्ठूण तं परिहरेज्जा ।

कुजाए वा वि पेहं, मुज्झइ अतिसंभमा सो उ॥२०८॥
यद्यनन्तरोक्तकारणैः प्रत्युपेक्षणं न भवति तत उपयोगं कुर्यात्। कृते चोपयोगे यदि प्राणिनः पश्यति ततस्तान् दृष्ट्वा भक्तपानं परिहरेत्। अथवा—अत्यातुर प्रेक्ष्य उपयोगमपि कुर्याद्वा, न वा। अनुपयुञ्जानोऽपीति सम्भ्रमादसौ साधु शुध्यति। यद्वाऽधस्तादुक्तस्तथोक्तं शुष्कौदनः पृथक् गृह्यते तत्प्राप्येतेष्वेव ग्लानाध्वावमशेषेषु कारणेषु द्वितीयपदं मन्तव्यम्।

तथा चाऽऽह—

चीसुं घेप्पइ अतरं–तगस्स बितियं दवं तु सोहेति।
तेण उ असक्खगहणं, तं पि य उग्गेहतरो पेहे ॥२०९॥
अतरन्तगस्य ग्लानस्य योग्यं विष्वगेकस्मिन् मात्रके गृह्यते, द्वितीये च मात्रके गृह्यते द्रवं शोधयति। ततो यत्र शुष्कौदनं पृथक् गृह्यते ततः तृतीयमात्रकं नास्तीति कृत्वा शुष्कादेव तत्रैव प्रतिग्रहे गृह्णीयात्। ग्लानस्यापि यदोदनं द्वितीयाद्यादिकमेकस्मिन् मात्रके गृह्णाति तदप्युष्णं ग्रहीतव्यम्, इतरत्तु शीतलं प्रत्युपेक्षितं यद्यसंसक्तं ततो गृह्णीयादन्यथा तु नेति भाव।

अद्धाणे ओमे वा, तहेव वेलातिवातियं णातुं।
दुल्लभदवे व मा सिं, धोवणपियणेण होहिंति ॥२१०॥
अध्वनि वा अवमौदर्ये वा वेलाया अतिपातमपि–अतिक्रमं ज्ञात्वा तथैव शुष्कं विष्वग् न गृह्णीयात्। दुर्लभे वा तत्र ग्रामे द्रवं पानकं ततो मा 'सिं' एषां साधूनां भाजनधावनपानेन भविष्यत इति कृत्वा पूर्वमात्रके द्रवं ग्रहीत ततो नास्ति भाजनं यत्र शुष्कं पृथक् गृह्यते, अत एकत्रैव गृह्णीयात्। उक्तमोदनविषयं द्वितीयपदम्।

अथ पानकविषयमाह—

आउट्टिएँ संसत्ते, (देसे) गेलण्णद्धाण कक्खडे खिप्पं।
इयराणि य अद्धाणे, कारणगहिते य जयणाए ॥२११॥
यथा कारणे आकुट्टिकया जनितेऽपि ससक्ते देशे गच्छन्ति तथा तत्र गता सन्त ससक्तमपि पानकं गृह्णन्ति, गृहीत्वा ग्लानत्वे अध्वनि कर्कशे वा अवमे क्षिप्रं न परित्यजेयुरपि। तथाहि–ग्लानत्वे यावत्ससक्तं परिष्ठापयन्ति तावत् ग्लानस्य वेलातिक्रमो भवति, अध्वनि सार्थात्परिभ्रस्यन्ति, अवमौदर्ये भिक्षाकालः स्फिटति, ततो न क्षिप्रं परित्यजेयुः। इतराणि च सागारिकस्य पश्यत परिष्ठापनं संस्तृत्यादीनि यानि पूर्वप्रतिषिद्धानि तान्यप्यध्वनि वर्त्तमानं कुर्यात्, एवं कारणे यतनया गृहीतस्य संसक्तस्य विवेचने विधिरवगन्तव्य इति संग्रहगाथासमासार्थः।

अथैनामेव विवृणोति—

आउट्टिगमणसंग–त्त गिण्हणं न य विगिंचए खिप्पं।
ओमगिलाणे वेला–विहम्मि सत्थो वइक्कमइ ॥२१२॥
यथा आकुट्टिकया संसक्ते देशे गमनं तथा तत्र गतः संसक्तमपि गृह्णीयात् न च क्षिप्रं विविच्यात्, परिष्ठापयेत्। कुत इत्याह–अथ मे भिक्षाकाल स्फिटति ग्लान्य वा ग्लानस्य वेला अतिक्रामेत्। विहे–अध्वनि सार्थोऽतिक्रामति तत क्षिप्रं न परित्यजेत्।

असिवादिहिँ संसत्ते, संकप्पादी पदा तु जह सुज्झे।
संसट्ठमसुचाउल–संसत्त सती तहा गहणं ॥२१३॥
अशिवादिभिः कारणैर्यथा समक्ते देशे सङ्कल्पादीनि पदानि कुर्वाणोऽपि शुद्ध्यति, तथा तत्र गतो यत्र संसक्तं पानकं लभते ततः संसृष्टपानकं तन्दुलोदकं वा संसक्तं तथैव गृह्णीयात्।

तेषां पुनर्गृहीतानामयं विधि—

ओवग्गहियं चीरं, गालणहेउं घणं तु गेण्हंति।
तह वि य असुज्झमाणे, असती अद्धाण जयणा उ ॥२१४॥
औपग्रहिकं घनं–निश्छिद्रं चीवरं तेषां संसक्तपानकानां गालनाहेतोर्गृह्णन्ति। तथापि गाल्यमाने यदि न शुद्धयति न वा तन्दुलधावनादिकमपि लभ्यते ततो वा प्रथमोद्देशके अध्वनि गच्छता तु 'चारफलयरक्खे' इत्यादिना पानकयतना भणिता सा कर्त्तव्या।

अथ दधिविषयं विधिमाह–

संसत्त गोरसाणं, ण गालणं णेव होइ परिभोगो।
कोडिदुगलिंगमादी, तहि जयणा णो य संसत्तं ॥२१५॥
यदि क्वापि ससक्तो गोरसो लभ्यते ततस्तस्य न गालनं न वा परिभोगः कर्त्तव्यः, किं तु–'कोडिदुगलिंगमाइ' त्ति–कोटिद्वयेन विशोधिकोट्या च अविशोधिकोट्या भक्तपानग्रहणे यतितव्यं यावदाधाकर्मापि गृह्यते, अन्यलिङ्गमपि कृत्वा भक्तपानमुत्पाद्यते न पुनः ससक्तो गोरसो ग्रहीतव्यः।

अथ 'इयराणि' इत्यादि पश्चार्द्धं व्याचष्टे—

सागारियसव्वत्तो, णऽत्थि य छाया विहम्मि दूरे वा।
वेला सत्थो व चले, ण खिसीयपमज्जणे कुज्जा ॥२१६॥
अध्वनि गच्छता सर्वतोऽपि सागारिकं छाया च तत्र नास्ति, अस्ति वा परं दूरे। तत्र च गच्छता वेलाऽतिक्रामति, सार्थो वा चलति, तत्र उष्णेऽपि भूभागं परिष्ठापयेत्। यत्र चोपविशत सागारिकं वा शङ्कादयो दोषा अशुचिरं वा स्थानं तत्र निषदनप्रमार्जने अपि न कुर्यात्। वृ० ४ उ०। (संसक्तनिर्युक्त्युक्तानि संसक्तद्रव्याणि 'भुञ्जाभुञ्ज' शब्देऽस्माभिर्दर्शितानि) कदाचित्संविग्नगुणाना कदाचित्पार्श्वस्थादिदोषाणा सबन्धात् गौरवत्रयसंसञ्जनाच्च संसक्तम्। स्था० ? श्रु० ४ अ०। गुणैश्च दोषैश्च समज्जते मिश्रीभवतीति संसक्तः। प्रव० २ द्वार। संसक्त इव संसक्त। पार्श्वस्थादिक तपस्विनं वा आसाद्य संनिहितदोषगुणे, व्य० १ उ०।

संसक्तलक्षणम्—

संसत्तो य इयाणिं, सो पुण गोभत्तलंदए चेव।
उचिट्ठमणुचिट्ठं, जं किंची छुब्भई सव्वं ॥ १ ॥
एमेव य मूलुत्तर, दोसा य गुणा य जत्तिया केइ।
ते तम्मि वि सन्निहिया, संसत्तो भन्नई तम्हा ॥२॥
रायविदूसगमाई, अहवाऽवि नडो जहा उ बहुरूवो।
अहवाऽवि मेलगो जो, हलिद्दरागाइबहुवन्नो ॥३॥
एमेव जारिसेणं, सुद्धमसुद्धेण वाऽवि संमिलइ।
तारिसओ चिय होई, संसत्तो भण्णई तम्हा ॥ ४ ॥
आव० ३ अ०।

संप्रति संसक्तसूत्रं वक्ष्यति , तच्च प्राग्वत् परिभावनीम् । अधुना संसक्तप्ररूपणामाह-' संसक्त अलिन्द इव नट इव बहुरूपी नटरूपी एडक इव ज्ञातव्य इति शेषः ।

एतदेव व्याचिख्यासुराह—

गोभत्तालिंदो विव, बहुरूवो नडो व्व एलगो चेव ।
संसत्तो सो दुविहो, असंकिलिट्ठो य इयरो वा ॥ २६८ ॥

गोभक्तयुक्तोऽलिन्दो गोभक्तालिन्द. स इव । किमुक्तं भवति-यथा अलिन्दे गोभक्त कुक्कुसा ओदननिश्रय. अवश्रावण-मित्यादि । सर्वमेकत्र मिलितं भवतीति संसक्त उच्यते । एवं यः पार्श्वस्थादिषु मिलितः पार्श्वस्थसदृशो भवति, संविग्नेषु मिलितः संविग्नसदृश. स संसक्त इति । यथा वा नटो रङ्गभूमौ प्रविष्ट. कथानुसारतः तत्तद्रूपं करोति एवं बहुरूपनट इव सोऽपि पार्श्वस्थादिमिलितः पार्श्वस्था-दिरूपं भजते, संविग्नमिलित. संविग्नरूममिति । यदिवा-यथा एडको लाक्षारसे निमग्न सन् लोहितवर्णो भवति, गुलिकाकुण्डे निमग्न सन् नीलवर्ण इत्यादि । एवं पार्श्व-स्थादिर्द्विधा, तद्यथा-असंक्लिष्ट , इतरश्च-संक्लिष्ट ।

तत्रासंक्लिष्टमाह—

पासत्थे अहाच्छंदे, कुसील ओसण्णमेव संसत्ते ।
पियधम्मा पियधम्मसु,(चेव)असंकिलिट्ठो भवे एसो।२६९।

पार्श्वस्थे मिलित पार्श्वस्थ , यथाच्छन्दे यथाच्छन्द., कुशीले कुशील , अवसन्ने अवसन्न , संसक्ते संसक्त, तथा प्रियधर्म्मसु मिलित. प्रियधर्म्मा , एष संसक्तोऽसंक्लिष्टो ज्ञातव्य. ।

संक्लिष्टमाह—

पंचासवप्पसत्तो, जो खलु तिहिं गारवेहिं पडिबद्धो ।
इत्थिगिहिसंकिलिट्ठो, संसत्तो संकिलिट्ठो सो ॥ २७० ॥

य. खलु पञ्चसु आश्रवेषु हिंसादिषु प्रवृत्त ,तथा त्रिभिर्गौरवै -ऋद्धिरससातलक्षणैः प्रतिबद्ध. , तथा स्त्रीषु च प्रतिबद्ध स संक्लिष्ट संसक्तो ज्ञातव्य. । अस्य वा संक्लिष्टस्य प्रायश्चित्तविधिर्देशत. पार्श्वस्थस्येव वेदितव्य. । व्य० १ उ० । "संसक्ते संकिलिट्ठा उ " संसक्त. ससर्गवशात् स्थापितादि-भोजी संक्लिष्ट. संक्लिष्टाचार. । व्य० ३ उ० । (संसक्तस्य आहारो न देयो न वा ग्राह्य इति ' दाण ' शब्दे चतुर्थभागे २४६३ पृष्ठ उक्तम् ।)

संसत्तणिज्जुत्ति-संसक्तनिर्युक्ति-स्त्री० । अग्रायणीयाख्यद्वितीयपूर्वादुद्धृत सम्मूर्च्छिमजीवसंसक्तिमद्भोज्याभोज्यप्रदर्शके पूर्वधररचित निर्युक्तिग्रन्थे, संस० नि० ।

उमहाइवीरचरिमे, सुरअसुरनमंसिए पणमिऊणं ।
संखेवओ महत्थं, भणामि संसत्तनिज्जुत्तिं ॥ १ ॥
वीयाओ पुव्वीओ, अग्गेणीयस्स इमं सुअमुआरं ।
संसइम समुच्छिम-जीवाणं जाणिऊणगं ॥ २ ॥
संस० नि० ।

संसत्ततव-संसक्तपस्-पुं० । आहारादिपूजासु नित्यं परिणतभाव , बृ० ।

अथ संसक्ततपसमाह—

आहारोवहिपूया-सु जस्स भावो उ निच्चं संसत्तो ।
भावोवहतो कुणइ अ, तवोवहाणं तदट्ठाए ॥ ४८७ ॥

आहारोपधिपूजासु यस्य भावः—परिणामो नित्यसंसक्तः सदा प्रतिबद्धः स एवं रसगौरवादिना भावेनोपहतः करोति तप—उपधानमनशनादिकं तदर्थमाहाराद्यर्थं यः स संसक्ततपा इति । बृ० १ उ० २ प्रक० । ध० ।

संसत्ततवोकम्म-संसक्ततपःकर्मन्-न० । आहारोपधिशय्या-दिप्रतिबद्धभावतपश्चरणे , स्था० ४ ठा० ४ उ० ।

संसद्दण-संशब्दन-न० । उत्कीर्त्तने , आव० ४ अ० ।

संसप्पग-संसर्प्पक-पुं० । संसर्प्पन्तीति संसर्पकाः । शून्यगृहादिष्वहिनकुलादिषु, आचा० १ श्रु० ६ अ० २ उ० । संसर्पणशीलेषु, अहिनकुलादिषु, बृ० १ उ० १ प्रक० । पिपीलिकाकोष्टादिषु, आचा०१ श्रु०१ अ०८ उ० । नि० चू० ।

संसप्पिअ-देशी-उत्प्लुत्य गमने, दे० ना० ८ वर्ग १५ गाथा ।

संसय-संशय-पुं० । एकतरविशेषनिश्चयचिकीर्षोः किमिदमिति विमर्शरूपे, ( विशे० । स्था० । ) अनवधारितार्थज्ञाने, चं० प्र० १ पाहु० । दोलायमानमानसात्मके, उत्त० १ अ० । नि० चू० । आ० म० । अनिर्द्धारितार्थमुभयवस्त्वाशावलम्बितया प्रवृत्ते ज्ञाने, ज्ञा० १ श्रु० १ अ० । औ० । रा० । नं० । किमित्यनवधारणार्थे प्रत्यये, सूत्र० १ श्रु० १२ अ० ।

संशय लक्षयन्ति—

साधकबाधकप्रमाणाभावादनवस्थिताऽनेककोटिसंस्पर्शि ज्ञानं संशयः ॥ ११ ॥

उल्लिख्यमानस्थाणुत्वपुरुषत्वाद्यनेकांशगोचरयोः साधकबाधकप्रमाणयोरनुपलम्भादनवधारितनानांशावलम्बिविधि-प्रतिषेधयोरसमर्थं संवेदनं संशय इत्यर्थ , समिति-समन्तात् सर्वप्रकारैः शेत इवेति व्युत्पत्तेः ॥ ११ ॥

उदाहरन्ति—

यथाऽयं स्थाणुर्वा पुरुषो वा ॥ १२ ॥

व्यक्तम् । अयं च प्रत्यक्षविषये संशयः । परोक्षविषये तु यथा क्वाऽपि विपिनप्रदेशे शृङ्गमात्रदर्शनात् किं गौरयं स्याद् , गवयो वा ? इत्यादि ॥ १२ ॥ रत्ना० १ परि० । नं० । संशयोऽपि ग्रन्थादौ प्रवृत्त्यङ्गम्, संशयश्च द्विधा—अर्थसंशय',अनर्थसंशयश्च । तत्रार्थसंशया यथा, यदि वृष्ट्यादि-सामग्री तत. संभवति सस्यनिष्पत्ति., अनर्थसंशया यथा-विषमिदं यो भक्षयति स म्रियते । तत्रानर्थसंशयात् कस्य चित्सचेतस. प्रवृत्तिरनर्थत. संशयस्यापि विभ्यत्त्वात्, अर्थसंशयस्तु प्रेक्षावतोऽपि प्रवृत्त्यङ्गमनर्थशङ्काया अभावात्, फलस्य च केषाचिद्दर्शनात् । न चायमधिकृतप्रयोजनाद्युपन्यासजनितसंशयोऽनर्थसंशय इति भवति प्रेक्षावता प्रवृत्तिरिति न किंचिदनुपपन्नम् । आ० म० १ अ० । रत्ना० । आचा० ।

संसयं परिआणओ संसारे परिन्नाए भवइ,संसयं अपरियाणओ संसारे अपरिन्नाए भवइ । ( सू०-१४३ )

( अस्य सूत्रस्य व्याख्या 'लोगसार' शब्दे पष्ठभागे

गता । ) " स्वामिश्रयैकनिष्ठानां, कार्यसिद्धिः परानृणाम् । संशयतुलणचित्ताना, कार्ये संशीतिरेव हि ॥ १ ॥ " श्रा० १ श्रु० १६ अ० ।

संश्रय-पुं० । आश्रयणे, सूत्र० १ श्रु० १० अ० ।

संसयकरणी-संशयकरणी-स्त्री० । संदेहजनिकायां भाषायाम्, संशयकरणी या एका वागनेकार्थाभिधायितया परस्य संशयमुत्पादयति, यथा-सैन्धवमानीयतामित्यत्र सैन्धवशब्दो लवणवस्त्रपुरुषवाजिषु वर्त्तमान इति । प्रज्ञा० ११ पद । दश० । संथा० । ध० । भ० ।

संसरंत-संसरत्-त्रि० । परिभ्रमति, आतु० ।

संसरण-संस्मरण-न० । सकलिपकरुयादिदर्शनत स्मरणरूपे असंप्राप्तकामभेदे, दश० ६ अ० ।

संसार-संसार-पुं० । संसरणं संसारः । भावे घञ्प्रत्ययः । आ० म० ४ अ० । भवाद्भवान्तरगमने, विशे० । नरकादिषु पुनः पुनर्भ्रमणे, विशे० । दुर्गतिभ्रमणे, सूत्र० १ श्रु० ५ अ० २ उ० । आव० । दर्श० । (एतत्संभवः 'परलोग' शब्दे पञ्चमभागे ५४२ पृष्ठे साधित ।) तेषु तेषु उच्चावचेषु कुलेषु पर्यटने, उत्त० ३ अ० । चतसृषु गतिषु सर्वावस्थासु ससरणे, स्था० ४ ठा० १ उ० । चतुर्गतिकभेदेन संसृतौ, सूत्र० १ श्रु० ६ अ० । पं० सू० । दश० । स० । गतिषूत्पादे, आचा० १ श्रु० १ अ० ७ उ० ।

संसारो द्रव्यादिभेदाच्चतुर्धा—

चउव्विहे संसारे पण्णत्ते, तं जहा-दव्वसंसारे खेत्तसंसारे कालसंसारे भावसंसारे । ( सू०-२६१ ) ।

तत्र संसरणम्—इतश्चेतश्च परिभ्रमणं ससार , तत्र संसारशब्दार्थश्चतत्रानुपयुक्तो द्रव्याणां वा जीवपुद्गललक्षणानां यथायोग भ्रमणं द्रव्यससार , तेषामेव क्षेत्रे—चतुर्दशरज्ज्वात्मके यत्संसरणं स क्षेत्रसंसार , यत्र वा क्षेत्रे संसारो व्याख्यायते तदेव क्षेत्रमभेदोपचारात् संसारो, यथा-रसवतीगुणनिकेत्यादि । कालस्य—दिवसपक्षमासर्त्त्वयनसंवत्सरादिलक्षणस्य ससरणं—चक्रन्यायेन भ्रमण पल्योपमादिकालविशेषविशेषित वा यत्कस्यापि जीवस्य नरकादिषु स कालसंसार , यस्मिन् वा काले—पौरुष्यादिके संसारो व्याख्यायते स कालोऽपि संसार उच्यते; अभेदाद्यथा-प्रत्युपेक्षणाकरणात् कालोऽपि प्रत्युपेक्षणेति । तथा संसारशब्दार्थज्ञ तत्रोपयुक्तो जीवपुद्गलयोर्वा संसरणमात्रमुपसर्जनीकृतसम्बन्धिद्रव्य, भावानां चौदयिकादीना वर्णादीना वा संसरणपरिणामो भावससार इति । स्था० ४ ठा० १ उ० । सूत्र० ।

लक्खणमेयं चेव उ, पयरस्स असंखभागमेत्ता ते ।
निक्खमणे य पवेसो, एगा वीया वि एमेव ॥ ७ ॥

निक्खमपवेसकाले, समयाई एत्थ आवलियभागो ।
अंतोमुहुत्तविरहो, उदहिमहस्साहिए दोण्णि ॥ ८ ॥

आचा० १ श्रु० १ अ० ६ उ० । द्रव्यससारो व्यतिरिक्तो द्रव्यसंसृतिरूप , क्षेत्रससारो येषु क्षेत्रेषु द्रव्याणि संसरन्ति, कालससार यस्मिन् काल इति नारकतिर्यङ्नरामरगतिचतुर्विधानुपूर्व्युदयाद्भवान्तरसंक्रमणं, कालससार , भावससारस्तु संसृतिस्वभाव औदयिकादिभावपरिणतिरूप , तत्र च प्रकृतिस्थित्यनुभागप्रदेशबन्धानां प्रदेशविपाकानुभवनम् , एवं द्रव्यादिक पञ्चविध संसार । अथवा-द्रव्यादिकश्चतुर्धा संसार , तत्र था-अश्वाद्धस्तिन, ग्रामान्नगरं, वसन्ताद् ग्रीष्मम् , औदयिकादौपशमिकमिति गाथार्थः । आचा० १ श्रु० २ अ० १ उ० ।

नरकादि —

चउव्विहे संसारे पण्णत्ते, तं जहा-णेरतियसंसारे ०जाव देवसंसारे । ( सू०×२६४ )

' चउव्विहे ' इत्यादि , व्यक्तं , किन्तु संसरणं संसार — मनुष्यादिपर्यायान्नारकादिपर्यायगमनमिति । स्था० ४ ठा० २ उ० । दश० । सूत्र० । आचा० । नं० । नि० चू० । ससारश्चतूरूपो गतिचतुष्कभेदात् । पञ्चप्रकारश्च एकेन्द्रियद्वीन्द्रियादिभेदात् , षट्प्रकारश्च पृथिव्यप्प्रभृतिभिर्भेदात् इति सम्भाव्यते । नि० चू० २० उ० । आव० ।

नवभि स्थाने ससारं वर्त्तयन्ति । स्था० ।

जीवाणं नवहिं ठाणेहिं संसारं वत्तिंसु वा वत्तंति वा वत्तिस्संति वा, तं जहा-पुढविकाइयत्ताए ०जाव पंचिंदियकाइयत्ताए । ( सू० ६६६ + )

'वत्तिंसु व त्ति' संसरणं निर्वर्तितवन्तोऽनुभूतवन्त , एवमन्यदपि । स्था० ६ ठा० ३ उ० । ( " अधुव असासयम्मि , संसार ( प )-यम्मि दुक्खपउराए । किं नाम होज्ज त कम्म, जेणाहं दुग्गइं न गच्छेज्जा ॥ १ ॥ ' इति कपिलनिर्वेद 'कविल'शब्दे तृतीयभागे ३८८ पृष्ठे उक्त ) ससारमुच्छेत्तुमना अष्टप्रकारं कर्म छेदयेत् । आचा० १ श्रु० २ अ० १ उ० । "ससारम्मि अणते, अविलाजोणीए एक्कए सत्ता । हविय-सकुढियमाणा, जोणीए मज्झदेसम्मि ॥ १ ॥ " महा० ६ अ० ।

संसारं ज्ञात्वा रतिं कुर्यात् संसार इति
चतुर्थे भेदं व्याचिख्यासुराह—

दुहरूवं दुक्खफलं, दुहाणुबंधी विडंबणारूवं ।
संसारमसारं जा-णिऊण न रइं तहिं कुणइ ॥ ६३ ॥

इह तत्र संसारे रतिं न करोतीति योगम्-किं कृत्वा ज्ञात्वा संसारम् , किंविशिष्टम् ? , दुःखरूपं जन्मजरामरणरोगशोकादिग्रस्तत्वेन दुःखस्वभावम् तथा दुःखफलं जन्मान्तरे नरकादिदुःखभावात् , दुःखानुबन्धीति दुःखानुबन्धिना पुनः पुनर्दुःखसन्तानसंधानात् , तथा विडम्बनायामिव जीवाना सुरनरनैरयिकतिर्यक्सुभगदुर्भगादीनि विविधानि रूपाणि यत्र स विडम्बनारूपस्तमेवंविधं संसारं चतुर्गतिरूपं सुखसाराभावादसारं ज्ञात्वा-अवबुध्य न रतिं-धृतिं तस्मिन् कुरुते-विदधाति धीदत्तवत् । तद्दृष्टान्तश्चायम्—

" पाउसकालम्मिमिव, गहुमस्सगूलागमनिरंस्सांस ।
आसि जिणधम्मरसो, सिरिदत्तो सिट्ठिवरपुत्तो ॥ १ ॥
तस्सऽग्गिणि भज्जा, तनिवि य मरणमणुपत्ता ।
संसारविरत्तमणो, ता सा इय चिंतिइ सम्मा ॥ २ ॥

सुरअन्नुन्नुदीरिय—साहाविवेयणासमभिभूए ।
नरयभवम्मि जियाणं, निमेसमित्तं पि नत्थि सुहं ॥ ३ ॥
छिंदणभिंदणवंधण—दुव्वहभरवहणमसुहदुक्खेहिं ।
सययं संतत्ताणं, तिरियाणं नाम किं सुक्ख ॥ ४ ॥
खंडियआखंडलवा—वचंचलं जीवियं इह नराणं ।
दुल्लहजणसंजोगो महल्लकल्लोललोलतरो ॥ ५ ॥
ताव भरक्कंतसकुं—तपोयगलचंचलं च तरुणत्तं ।
इह संपयाउ संपा—संपायसमाउ सयकालं ॥ ६ ॥
इय इट्ठाणिट्ठविश्रो—गजोगबहुरोगसोगपमुहेहिं ।
निच्चमभिद्दमियाणं, मणुयाणं न सुहगंधो वि ॥७॥
असरिसअमरिसईसा—विसायरोसाइमइलियमणेसु ।
अमरेसु वि अइफारो, दुहसंभारो वियंभेइ ॥ ८ ॥
ता चउगइसंसारे, जियाण नूण न अत्थि इत्थ सुहं ।
सयलसुहहेउदुहजल—हिसेउ जिणधम्ममुक्काणं ॥९॥
इय चिंतिय सिरिदत्तो, गिण्हइ दिक्खं कमेण संजाओ ।
गीयत्थो पडिवज्जइ, एगल्लविहारवरपडिमं ॥ १० ॥
कस्स य गामस्स वहिं, पेयवणे अन्नया निसाइ इमो ।
अणिमिसनयणो वीरा—सणेण चिट्ठइ सुहज्झाणो ॥११॥
इत्तो हरी पसंसइ, सिरिदत्तमुणी इमो सुरेहिं पि ।
झाणाउ न चालिज्जइ, खरपवणेहिं व अमरगिरी ॥ १२ ॥
तं गिरमसद्दहंतो, एगो अमरो समागओ तत्थ ।
काउं रक्खसरूवं, तं मुणिमुवसग्गए गाढं ॥१३॥
चंदणतरु व वेढिय—सव्वंगं डसइ विसहरो होउं ।
सुमुणिं तह अवि हत्थो, गलहत्थइ हत्थिरूवेणं ॥ १४ ॥
जालइ जडालजाला—कलावकलियं चउद्दिसिं जलणं,
खरपवणेहिं पडि—त्तु भामए अक्कतूलं व ॥१५॥
करहयकंठकडारे-ण पंसुपूरेण पिहइ सव्वत्तो ।
विसमविसपसरचिंचइ-य विंछुए मुंचए तत्तो ॥१६॥
अह मुणिणोऽभिप्पायं, अमरो जानियइ ओहिनाणेण ।
ता चिंतइ साहू सा-हसिक्कमल्लो मणम्मि इमं ॥१७॥
सहियउवसग्गवट्टो, तुज्झ इमो जीवसत्तकसवट्टो ।
सत्थाचत्थाइ वयं, पायं पालेइ सव्वो वि ॥ १८ ॥
इत्तो अणंतगुणिया, सहिया वियणा तए परवसेण ।
रे जिय! इह भवगहणे,न उण गुणो को वि संजाओ ॥१९॥
ता धरिय धीरिमगुणं, खणं इम वेयणं सहसु सम्मं ।
जेण लहु भवजलहिं, तरिउं पाविसि सिवं जीव ! ॥ २० ॥
खामेसु सयलजीवे, तुमं पि तेसिं खमेसु रे जीव ! ।
सव्वत्थ कुणसु मित्तिं, इमम्मि अमरे विसेसेण ॥२१॥
जो य तुमं कड्ढिय भव-कारागाराउ खिवइ किर अप्पं ।
सो एस सुरो तुह जिय, परमसुही परमवंधू य ॥ २२ ॥
किं तु इमो उवसग्गो, जह मह हरिसा य भवहरत्तेण ।
तह णतभवनिवंधण-मिमस्स इय दुमइ मणम्मि ॥ २३ ॥
इय सुहभावणधणसा-रवासिय मुणिमणं मुणे वि सुरो ।
गयमिच्छत्तो पयडिय—नियरूवो नमिय इय थुणइ ॥२४॥
जय जयइ! धम्मधुरी-ण ! रीण भवगहणओ मुणिसुधीर !!
धीरिमनिज्जियमंदर !, घरविसहरनियरवरगरुड ! ॥ २५ ॥
तम्स तुह चरणकमलं, कमलम्मरं सारम्म व्व अणुसरिमो ।
जस्स सय देविंदो, वंदि व्व पसंसइ गुणोहं ॥ २६ ॥
इय थुणिऊण मुणिंदं, सुरलोय सुरवरो गओ अहवा ।
गुणिथुणणा ओसग्गं, जंति जिया किमिह अच्छरियं ॥२७॥
सिरिदत्तमुणिवरो वि हु, परियायं पालिऊण चिरकालं ।
अणसणविहिणा मरिउं, जाओ अमरो महासुक्के ॥ २८ ॥
तो चविउं साएए, पुरम्मि सिरितिलयनयरसिट्ठिस्स ।
दइयाइ जसवईए, उयरे पुत्तो समुप्पन्नो ॥ २९ ॥
सो अट्ठममासे जिण-धम्म जणणीइ निसुणमाणीए ।
गब्भदुहं अमरसुहं, निसामिउ संभरइ जाइं ॥ ३० ॥
तो भवविरत्तचित्तो, अभिग्गहं लेइ जह मए समए ।
दिक्ख च्चिय गहियव्वा, नियमो पुण गेहवासस्स ॥ ३१ ॥
कमसो जाओ कयपउ-मनामओ तरुणभावमणुपत्तो ।
चउनाणिगुरुसमीवे, गिण्हिय दिक्खं गओ मुक्ख ॥ ३२ ॥

श्रीदत्तचेष्टितमिति स्फुटफुल्लमल्ली—
वल्लीवितानविशदं विनिशम्य सम्यक् ।
निःसंख्यदु खनिकरप्रभवे भवेऽस्मिन्—
नित्यं विरक्तमनसो भविनो भवन्तु ॥ ३३ ॥
ध० र० २ अधि० ३ लक्ष० ।

जइ उप्पज्जइ दुक्खं, दट्ठव्वो सहावओ नवरं ।
किं किं मए न पत्तं, संसारं संसरंतेणं ॥ ६२ ॥
संसारचक्कवाले, सव्वे वि य पुग्गला मए बहुसो ।
आहारिया य परिणा-मिया य न पहं गओ तत्तिं ॥६३॥
आतु० ।
णाणस्स दंसणस्स य, सम्मत्तस्स य चरित्तजुत्तस्स ।
जो काही उवओगं, संसाराओ विमुच्चिहिति ॥८०॥
आतु० ।
निक्कसायस्स दंतस्स, सूरस्स ववसाइणो ।
संसारपरिभीयस्स, पच्चक्खाणं सुहं भवे ॥ ८२ ॥
आतु० ।

संसारमावण्णपरस्स अट्ठा,
साहारणं जं च करेइ कम्मं ।
कम्मस्स ते तस्स उ वेयकाले,
न बंधवा बंधवयं उवेंति ॥ ४ ॥ उत्त० ४ अ० ।

णत्थि चाउरंते संसारे, णेवं सन्नं निवेसए ।
अत्थि चाउरंते संसारे, एवं सन्नं निवेसए ॥ २३ ॥
सूत्र० २ श्रु० ६ अ० । ( 'अत्थिवाय' शब्दे प्रथमभागे ५२१ पृष्ठे व्याख्यातैषा गाथा । ) ( यथा यथा रागद्वेषास्तथा तथा संसारवृद्धिरिति 'किरियावाइ' शब्दे तृतीयभागे ५५ पृष्ठे उपपादितम् । ) ( संसारे कथं न वंभ्रम्यादिति-'ससय' शब्देऽस्मिन्नेव भागे अनुपदमेवोक्तम् ।) अथेहापि किञ्चित्प्रतिपाद्यते, द्वाभ्यां स्थानाभ्यां संपन्नो—युक्तो नास्यागार—गेहमस्तीत्यनगार.—साधु , नास्त्यादिरस्येत्यनादिकं तत् अवदग्रं-पर्यन्तस्तन्नास्ति यस्य सामान्यजीवापेक्षया तदनवदग्रं तत् दीर्घा अद्धा कालो यस्य तद् दीर्घाद्धं तत् । मकार आगमिक , दीर्घो वाऽध्वा—मार्गो यस्मिंस्तद्दीर्घाध्वं तच्चतुरन्तं—चतुर्विभागं नरकादिगतिविभागेन, दीर्घत्व प्रकटादित्वादिति, संसारकान्तार—भवारण्यं

व्यतिव्रजेद्—अतिक्रामेत्, तद्यथा—विद्यया चैव—ज्ञानेन चैव चरणेन चैव—चारित्रेण चैवेति, इह च संसारकान्तारव्यतिव्रजनं प्रति विद्याचरणयोर्योगपद्येनैव कारणत्वमवगन्तव्यम्। स्था० २ ठा० १ उ०। ( त्रिभिः स्थानैः संपन्नोऽनगारः संसारमतिक्रामतीति—इति 'अणगार' शब्दे प्रथमभागे २६६ पृष्ठे गतम्। ) "जम्मं दुक्खं जरा दुक्खं, रोगा य मरणाणि य। अहो दुक्खो हु संसारो, जत्थ कीसंति पाणिणो॥१॥" तथा "तएहाइयस्स पाणं, कूरो छुहियस्स भुजए तित्ती। दुक्खसयसंपउत्तं, जरियमिव जगं कलयलेइ॥१॥" सूत्र० १ श्रु० ७ अ०।

अनादिरेष संसारः—

अनादिरेष संसारो, नानागतिसमाश्रयः।
पुद्गलानां परावर्त्ता, अत्रानन्तास्तथा गताः॥७०॥

अनादिः—अविद्यमानमूलारम्भः एषः—प्रत्यक्षतो दृश्यमानः संसारो—भवः। कीदृशः?, इत्याह—नानागतिसमाश्रयः—नरकादिविचित्रपर्यायपात्रं वर्तते। ततश्च पुद्गलानाम्—औदारिकादिवर्गणारूपाणां सर्वेषां परावर्त्ता—ग्रहणमोक्षात्मकाः अत्र—संसारे अनन्ता—अनन्तवारस्वभावास्तथा—तेन समयप्रसिद्धप्रकारेण गता—अतीताः।

केषामित्याह—

सर्वेषामेव सत्त्वानां, तत्स्वाभाव्यनियोगतः।
नान्यथा संविदेतेषां, सूक्ष्मबुद्ध्या विभाव्यताम्॥७१॥

सर्वेषामेव सत्त्वानां—प्राणिनाम् तत्स्वाभाव्यात्—अनन्तपुद्गलपरावर्त्तपरिभ्रमणस्वभावता, तस्य नियोगो—व्यापारस्तस्मात्। अत्रैव व्यतिरेकमाह—न—नैव अन्यथा—तत्स्वाभाव्यनियोगमन्तरेण संविद्—अवबोधो घटते एतेषाम्—अनन्तपुद्गलपरावर्त्तानां सूक्ष्मबुद्ध्या—निपुणाभोगेन विभाव्यताम्—अनुचिन्त्यतामेतत्। यो०विं०।

चरणविहिं पवक्खामि, जीवस्स उ सुहावहं।
जं चरित्ता बहू जीवा, तिन्ना संसारसागरं॥१॥
उत्त० २० अ०।

( 'चरणविहि' शब्दे तृतीयभागे ११२८ पृष्ठे व्याख्यातैषा ) ( संसारोऽशाश्वतस्तद्गतानां संसारिणां स्वकृतकर्मवशगानामितश्चेतश्च गमनादिति। सूत्र० १ श्रु० १२ अ०।

अनादिरेष संसारः—

अणादियं परिन्नाय, अणवदग्गे त्ति वा पुणो।
सासयमसासए वा, इति दिट्ठिं न धारए॥२॥

सूत्र० २ श्रु० २ अ०। ( 'अणायार' शब्दे प्रथमभागे ३१६ पृष्ठे व्याख्यातैषा। ) यत्र कर्मवशवर्त्तिनः प्राणिनः संसरन्ति समसार्षुः संसरिष्यन्ति चेति संसारः। स्था० १ उ०। नारकतिर्यग्नरामरलक्षणे मातापितृभार्यादिस्नेहलक्षणे च जगति, आचा० १ श्रु० २ अ० १ उ०।

एस संसारो त्ति पवुच्चइ मंदस्स अविजाणओ।

एष अण्डजादिप्राणिकलापः संसारः प्रोच्यते नानोऽन्यत्रसानामुत्पत्तिप्रकारोऽस्तीति। आचा० १ श्रु० १ अ० ६ उ०। ( 'तस' शब्दे चतुर्थभागे २२१६ पृष्ठेऽप्रत्यक्षिस्तरो गतः )

सम्यग्दृष्टिमिथ्यादृष्ट्योश्च समः संसारः—तथा "अंतोमुहुत्तमित्तं पि" त्ति-गाथया सम्यग्दृष्टेर्न्यूनार्धपुद्गलपरावर्त्तः संसार उत्कर्षतः प्रतिपादितोऽस्ति, "जो अकिरियावाई सो भविओ अभविओ वा" इत्यादि दशाचूर्णिग्रन्थानुसारेण तु सम्यग्दृष्टेः क्रियावादिनो मिथ्यादृष्टेश्चोत्कर्षतो न्यूनपुद्गलपरावर्त्तः संसारः, परं सोऽप्यागमान्तरानुसारेण न्यूनार्धपुद्गलरूपोऽवसीयते। अथ सम्यग्दृष्टेः क्रियावादिनो मिथ्यादृष्टेश्च कथं संसारसाम्यमिति?, अत्र यद्यपि आपाततोऽत्र साम्यमुक्तमस्ति तथापि सम्यग्दृष्टेः कस्यचिदासातनाबहुलस्य विराधकस्यैतावान् संसारो भवति, नान्यस्य क्रियावादिमिथ्यादृष्टिसमुदाये तु कस्यचिल्लघुकर्मणः पूर्वैकावतारित्वसंभव इति कथं साम्यशङ्केति प्रतिभाति। तत्त्वं तु तत्त्वविद् वेत्ति, इति॥२॥ तथा कस्यचिज्जानतोऽभिनिविष्टस्य संसारवृद्धिहेतुः कर्मबन्धो भूयानुताभिनिविष्टस्य तन्मार्गानुयायिनो वा अजानत इति?, अत्र व्यवहारेण जानतः कर्मबन्धो भूयानित्यवसीयते॥३॥ ही० ३ प्रका०।

संसारकंतार-संसारकान्तार-पुं०। संसार एव कान्तारं-निर्जलः समयस्थानरहितोऽरण्यप्रदेशः। संसाराटव्याम्, सूत्र० २ श्रु० ३ अ०।

संसारकलंकलीभाव-संसारकलङ्कलीभाव-पुं०। असमञ्जसत्वे, औ०।

संसारकलंकलीभावपुणब्भवगब्भवासवसहीपवंचमइक्कंता।
( सू०४३× )

संसारे कलङ्कलीभावेन असमञ्जसत्वेन ये पुनर्भवाः-पौनःपुन्येनोत्पादा गर्भवासवसतयश्च गर्भाश्रयनिवासास्तासां यः प्रपञ्चो विस्तरः स तथा तमतिक्रान्ता निस्तीर्णा। औ०।

संसारचक्कवाल-संसारचक्रवाल-पुं०। संसार एव चक्रवालं, चक्रवालशब्दः समूहार्थे। भवसमूहे, आतु०। सूत्र० द० प०।

संसारजलहि-संसारजलधि-पुं०। भवोदधौ, पञ्चा० ६ विव०।

संसारण-संसारण-न०। ईषत्स्वस्थानात्स्थानान्तरनयेन चालने, आ० १ श्रु० ४ अ०।

संसारनिग्गुण-संसारनैर्गुण्य-न०। वैराग्यसाधने, पं० व० ३ द्वार।

संसारतरु-संसारतरु-पुं०। कषायमूलके संसाररूपे वृक्षे, आचा०। यतो नारकतिर्यङ्नरामरगतिस्कन्धस्य गर्भनिषेककललार्बुदमांसपेश्यादिजन्मजरामरणशाखस्य दारिद्र्याद्यनेकव्यसनोपनिपातपत्रगहनस्य प्रियविप्रयोगाप्रियसंप्रयोगार्थनाशानेकव्याधिशतपुष्पोपचितस्य शारीरमानसोपचितनानातरदुःखोपनिपातफलस्य संसारतरोः (मूलम्)। आचा० १ श्रु० २ अ० ३ उ०।

संसारतरुबीय-संसारतरुबीज-न०। भववृक्षकारणे, आव० ४ अ०।

संसारपडिग्गह-संसारप्रतिग्रह-पुं०। द्रष्टान्तरान्तर्गतसिद्धश्रेणिकापरिकर्मभेदे, स० १४७ सम०।

संसारपडिवण्ण-संसारप्रतिपन्न-पुं० । संसारं चतुर्गतिलक्षणं प्रतिपन्ने, आचा० १ श्रु० ४ अ० २ उ० ।

संसारपयणुकरण-संसारप्रतनुकरण-त्रि० । संसारं-भवं प्रतनु-अल्पं करोति इति संसारप्रतनुकरण· । पञ्चा० ६ विव० । संसारक्षयकारके, " संसारपयणुकरणो , विरयाविरयाण एस खलु जोगो । " प्रति० ।

संसारपवड्ढग-संसारप्रवर्धक-पुं० । दीर्घसंसारिणि, पं० व०१ द्वार ।

संसारपारकंखि(ण्)-संसारपारकाङ्क्षिन्-त्रि० । मोक्षाभिलाषुके, सूत्र० १ श्रु० १ अ० ३ उ० ।

संसारपारगामि(ण्)-संसारपारगामिन्-त्रि० । भवनारके,ध० ३ अधि० । पा० ।

संसारभावणा-संसारभावना-स्त्री० । संसारतत्त्वपर्यालोचने, प्रव० ७१ द्वार । ( 'भावणा' शब्दे पञ्चमभागे १५०७ पृष्ठे गतैषा भावना । )

संसारमंडल-संसारमण्डल-न० । संसारिजीवचक्रवाले , संसारमण्डलशब्देन परिभाषितसंज्ञेह सूचिता । भ० ५ श० ५ उ० ।

संसारमोयग-संसारमोचक-पुं० । व्यापाद्योपकृतये दु खितसत्त्वव्यापादनमुपदिशति वादिनि, आ० । संसारमोचकानां व्यापाद्योपकृतये दु खितसत्त्वव्यापादनमुपदिशतामकुशलमार्गप्रवृत्तत्वमावेदितं द्रष्टव्यम् , यतस्त एवमाहु·— यत् परिणामसुन्दरं तदापातकटुकमपि परेषामाधेयम् , यथा रोगोपशमनमौषधम् , परिणामसुन्दरं च दु खितसत्त्वाना व्यापादनमिति, तथाहि—कृमिकीटपतङ्गमशकलावकचटककुष्ठिकमहादरिद्रान्धपङ्ग्वादयो दु खितजन्तव· पापकर्मोदयवशात्संसारसागरमभिप्लवन्ते , ततस्तेऽवश्यं तत्पापक्षपणाय परोपकरणैकरसिकमानसेन व्यापादनीया· तेषा हि व्यापदने महादु खमतीवोपजायते , तीव्रदु खवेदनाभिभववशाच्च प्राग् बद्धं पापकर्मोदीर्योदीर्यानुभवन्त प्रतिक्षिपन्ति । स्यादेतत्-किमत्र प्रमाणं यत्ते व्यापाद्यमाना तीव्रवेदनाऽनुभवत· प्राग्बद्धं पापकर्मोदीर्योदीर्य परिक्षिपन्ति न पुनरार्त्तरौद्रध्यानोपगमत· प्रभूततरं पापमावर्जयन्तीति ?, उच्यते-युक्तिसिद्धान्तानुगतमत्र नारकस्वरूपोपदर्शकं वच , तथाहि-नारका निरन्तरं परमाधार्मिकसुरै· ताडनभेदनोत्कर्त्तनशूल्यारोपणाद्यनेकप्रकारमुपहन्यमाना· परमाधार्मिकसुराभावे परस्परोदीरिततीव्रवेदना रौद्रध्यानोपगता अपि प्राग्बद्धमेव कर्म क्षपयन्ति, नापूर्वं पापमधिकतरमुपार्जयन्ति, नारकायुर्बन्धासम्भवात् , तदनन्तरभवश्चानन्तरं भूय तत्रैवोत्पादाभावाद् । अपि च-यत एव रौद्रध्यानोपगता अत एव तेषा प्रभूततरप्राग्बद्धपापकर्मपरिक्षय , तीव्रसंक्लेशाभावात् , न खलु तीव्रसंक्लेशाभाव परमाधार्मिकसुरा अपि तेषा कर्म क्षपयितु शक्ता तते रौद्रादिध्यानमुपजनयन्तोऽपि व्यापादका व्यापाद्यानामुपकारका एव । इत्थं च व्यापादनत तेषामुपकारसम्भवे ये तद्व्यापादनमुपेक्षन्ते प्रतिषेधन्ति वा ते महापापकारिण , ये पुन प्रागुपात्तपुण्यकर्मोदयवशात सुखासिकामनुभवन्तोऽवतिष्ठन्ते न ते व्यापादनीयाः , तेषां व्यापादने सुखानुभवनियोगभावतोऽपकारसम्भवात् । न च परहितनिरता· परापकृतये संरम्भमातन्वन्ते तदेतदयुक्तम् , परोपकारो हि स एव सुधिया विधेयो य आत्मन उपकारक· । न च परेषा व्यापादनेनोपकृतिकरणे भवतः कमप्युपकारमीक्षामहे, यथाहि—परेषा व्यापादने को भवतः उपकार·?, किं पुण्यबन्ध उत कर्मक्षय· ?, तत्र न तावत्पुण्यबन्ध· ?, परेषामन्तरायकरणात् , ते हि परे यदि भवता न व्यापाद्येरंस्ततस्ते परान् सत्त्वान् व्यापाद्य पुण्यमुपार्जयेयुः , व्यापादिताश्च परवधे अप्रसक्ता इति व्यापादनं पुण्योपार्जनान्तरायकरणम् , न च पुण्योपार्जनान्तरायकृत् पुण्यमुपार्जयति विरोधात् सर्वस्य पुण्यबन्धप्रसक्तेश्च। एतेन यदुक्तम्- ' परिणामसुन्दरं च दु खितसत्त्वानां व्यापादनमिति ' तदनिष्टं द्रष्टव्यम् , पुण्योपार्जनान्तरायकरणेन परिणामसुन्दरत्वायोगात् । अथ कर्मक्षय इति पक्ष· , ननु तत्कर्म किं सहेतुकमुताहेतुकम्? । सहेतुकमपि किमज्ञानहेतुकमुताहिंसाजन्यमुताहो वधजन्यम् ?, तत्र न तावदज्ञानहेतुकम् , अज्ञानहेतुकतायां हिंसातो निवृत्त्यसम्भवात् , यो हि यन्निमित्तो दोष· स तत्प्रतिपक्षस्यैवासेवायां निवर्त्तते, यथा हिमजनितं शीतमनलासेवनेन, न चाज्ञानस्य हिंसा प्रतिपक्षभूता , किं तु सम्यग्ज्ञानम् , तत्कथमज्ञानहेतुकं कर्म हिंसातो विनिवर्त्तते ? , अथाहिंसाजन्यमिति वदेत् , तदपि न युक्तम् , एवं सति मुक्तानामपि कर्मबन्धप्रसक्ते·, तेषामहिंसकत्वात् । अथ हिंसाजन्यम् , यद्येवं तर्हि कथं हिंसात एव तस्य निवृत्तिः, न हि यत एव यस्य प्रादुर्भाव· तत एव तस्य निवृत्तिर्भवितुमर्हति , विरोधात् , न खल्वजीर्णप्रभवो रोगो मुहुरजीर्णकरणात् निवर्तते ; तत· प्राणिहिंसोत्पादितकर्मनिवृत्त्यर्थमवश्यमहिंसाऽऽसेवनीया, उक्तं च—" तम्हा पाणिवहो व-च्छियस्स कम्मस्स खवणहेऊओ । वहविरई कायव्वा, संवररूव त्ति नियमेणं ॥१॥ " अथाहेतुकं न तर्हि तदस्ति, खरविषाणवत् , तत्कथं तदपगमाय प्राणिवधोद्यमो भवत· ?, अथाहेतुकमप्यस्ति यथाऽऽकाशं , तर्ह्याकाशस्येव तस्यापि न कथञ्चन विनाश इत्यफलत्वात् न कार्य· प्राणिवध । यदप्युक्तम्-' ये तु प्रागुपात्तपुण्यकर्मवशात· सुखासिकामनुभवन्तोऽवतिष्ठन्ते न ते व्यापादनीया' , इत्यादि , तदप्ययुक्तं, यत· पुण्यपापक्षयान्मुक्ति , ततो यथा परेषा पापक्षपणाय व्यापादने भवत प्रवृत्ति· तथा पुण्यक्षपणायापि भवति । अथ पापं दु खानुभवफलं ततो व्यापादनेन दु खोत्पादनत· पापं क्षपयितुं शक्यं , पुण्य तु सातानुभवफलं तत्कथ दु खोत्पादनेन क्षपयितु शक्यम् ? , शातानुभवफल हि कर्म सातानुभवोत्पादनेनैव क्षपयितुं शक्यम् , नान्यथा, तदपि न समीचीनं , यतो यत्पुण्यं विशिष्टं देवभवे वेदनीय तन्मनुष्यादिभवव्यापादनेन प्रत्यासभीक्रियत , प्रत्यासभीकृत च प्राय स्वल्पकालवेद्य भवति , तत एव पुण्यक्षपणस्यापि सम्भवात् कथं न व्यापादनेन पुण्यपरिक्षय ?, अथ व्यापादनानन्तर विशिष्टदेवभववेदनीय· पुण्योदय संदिग्ध· कस्यचित्पापोदयस्या-

पि सम्भवात्, ततो न व्यापादनं पुण्यमनुभवतः कर्त्तुमुचितम्। यद्येवमितरत्र कथं निश्चयः?, इतरत्रापि संदेह एव तथाविधदुःखितोऽपि यदि मार्यते तर्हि नरकदुःखानुभवभागी भवति, अमारितश्च सन् कदाचनापि प्रभूतसत्त्वव्यापादनेन पुण्यमुपार्ज्य विशिष्टदेवाधिभवभागी भवेत्, ततो दुःखितानामपि व्यापादनं न भवतो युक्तम्। एवं च सति सन्दिग्धानैकान्तिकोऽपि हेतुः, व्यापादनस्य परिणामसुन्दरत्वसन्देहात्। यदप्युक्तम्-'युष्मत्सिद्धान्तानुगं नारकस्वरूपोपदर्शकं वचः' इत्यादि, तदप्यसमीक्षिताभिधानं सम्यगस्मत्सिद्धान्तापरिज्ञानात्, अस्मत्सिद्धान्ते ह्येवं नारकस्वरूपव्यावर्णना—नारकाणां परमाधार्मिकसुरोदीरितदुःखानां परस्परोदीरितदुःखानां वा वेदनातिशयभावतः सम्मोहमुपागतानां नातीव परत्र संक्लेशो यथाऽत्रैव केषाञ्चिन्मानवानां सम्मूढानाम्, यथा हि-मानवा लकुटादिप्रहारजर्जरीकृतशिरःप्रभृत्यवयवा वेदनातिशयभावतः सम्मूढचेतना नातीव परत्र संक्लिश्यमाना उपलभ्यन्ते, तथा नारका अपि सदैव द्रष्टव्याः, ततः तथाविधतीव्रसंक्लेशाभावान् नारकाणां नाभिनवप्रभूततरपापोपचयः। यद्येवं तर्हि सम्मोहो महोपकारी, तथाहि--सम्मोहवशान्न परत्रातीव संक्लेशः, तीव्रवेदनाभावतश्च प्राग्बद्धपापकर्मपरिक्षयः सम्मोहश्च हिंस्रव्यापारादुपजायते, ततो हिंसका महोपकारिण इति सिद्धमस्मत्समीहितम्। तदयुक्तम्-हिंसकानां परपीडोत्पादनतः क्लिष्टकर्मबन्धप्रसक्तेः, न खलु पापस्य परपीडामतिरिच्यान्यन्निबन्धनमीक्षामहे। यदि स्यात्तर्हि मुक्तानामपि पापबन्धप्रसङ्गः, तेषामहिंसकत्वात्, ततः कथमिव सचेतनो मनसाऽपि परं व्यापादयितुमुत्सहते? इत्यलं पापचेतोभिः सह प्रसङ्गेन। नं०।

संसारविउस्सग्ग–संसारव्युत्सर्ग–पुं०। ज्ञानावरणादिकर्मबन्धहेतूनां ज्ञानप्रत्यनीकत्वादीनां त्यागे, औ०। नारकायुष्कादिहेतूनां मिथ्यात्वादीनां त्यागे, भ० २ श० ५ उ०।

संसारवुड्ढि–संसारवृद्धि–स्त्री०। संसारपरिवृद्धौ, दी० ३ प्रका०।

संसारवेइ–संसारवेदिन्–पुं०। यथावस्थितसंसारतत्त्वज्ञातरि, आचा० १ श्रु० ५ अ० १ उ०।

संसारसंचिट्ठणकाल–संसारसंस्थानकाल–पुं०। संसारस्य भवाद् भवान्तरसञ्चरणलक्षणस्य संस्थानं भवस्थितिक्रिया तस्य कालः—अवसरः संसारसंस्थानकालः। अमुष्य जीवस्यातीतकाले कस्यां कस्यां गताववस्थाने, भ०।

जीवस्स णं भंते! तीतद्धाए आदिट्ठस्स कइविहे संसारसंचिट्ठणकाले पण्णत्ते?, गोयमा! चउव्विहे संसारसंचिट्ठणकाले पण्णत्ते, तं जहा-णेरइयसंसारसंचिट्ठणकाले तिरिक्खजोणियसंसारसंचिट्ठणकाले मणुस्सजोणियसंसारसंचिट्ठणकाले देवजोणियसंसारसंचिट्ठणकाले य पण्णत्ते। नेरइयसंसारसंचिट्ठणकाले णं भंते! कतिविहे पण्णत्ते?, गोयमा! तिविहे पण्णत्ते, तं जहा-सुन्नकाले, असुन्नकाले, मिस्सकाले। तिरिक्खजोणियसंसारपुच्छा, गोयमा! दुविहे पण्णत्ते, तं जहा-असुन्नकाले य, मिस्सकाले य। मणुस्साण य, देवाण य जहा नेरइयाणं। एयस्स णं भंते! नेरइयसंसारसंचिट्ठणकालस्स सुन्नकालस्स असुन्नकालस्स मीसकालस्स य कयरे कयरेहिंतो अप्पा वा बहुए वा तुल्ले वा विसेसाहिए वा?, गोयमा! सव्वत्थोवे असुन्नकाले, मिस्सकाले अणंतगुणे, सुन्नकाले अणंतगुणे। तिरिक्खजोणियाणं भन्ते! गोयमा! सव्वथोवे असुन्नकाले, मिस्सकाले अणंतगुणे, मणुस्सदेवाण य जहा नेरइयाणं। एयस्स णं भन्ते! नेरइयस्स संसारसंचिट्ठणकालस्स० जाव देवसंसारसंचिट्ठण० जाव विसेसाहिए वा?, गोयमा! सव्वत्थोवे मणुस्ससंसारसंचिट्ठणकाले, नेरइयसंसारसंचिट्ठणकाले असंखेज्जगुणे, देवसंसारसंचिट्ठणकाले असंखेज्जगुणे, तिरिक्खजोणिए अणंतगुणे। (सू०-२३)

'जीवस्स णं' मित्यादि व्यक्तं, नवरं किंविधस्य जीवस्य? इत्याह—आदिष्टस्य—अमुष्यनारकादेरित्येवं विशेषितस्य 'तीतद्धाए' त्ति—अनादावतीते काले कतिविधः—उपाधिभेदात्कतिभेदः, संसारस्य—भवाद्भवान्तरे संचरणलक्षणस्य संस्थानम्—अवस्थितिक्रिया तस्य कालः—अवसरः संसारस्थानकालः, अमुष्य—जीवस्यातीतकाले कस्यां कस्यां गताववस्थानमासीत्? इत्यर्थः, अत्रोत्तरम्-चतुर्विधः, उपाधिभेदादिति भावः। तत्र नारकभवानुगसंसारावस्थानकालस्त्रिधा—शून्यकालः, अशून्यकालो, मिश्रकालश्चेति। तिरश्चां शून्यकालो नास्तीति, तेषां द्विविधः, मनुष्यदेवानां त्रिविधोऽप्यस्ति। आह च—"सुन्नासुन्नो मीसो, तिविहो संसारचिट्ठणाकालो। तिरियाणं सुन्नवज्जो, सेसाणं होइ तिविहो वि॥१॥" तत्राशून्यकालस्तावदुच्यते, अशून्यकालस्वरूपपरिज्ञाने हि सतीतरौ सुज्ञानौ भविष्यत इति, तत्र वर्त्तमानकाले सप्तसु पृथिवीषु ये नारका वर्त्तन्ते तेषां मध्याद् यावन्न कश्चिदुद्वर्त्तते न चान्य उत्पद्यते तावन्मात्रा एव ते आसते स कालस्तान्नारकानङ्गीकृत्याशून्य इति भण्यते। आह च—" आएसमवन्नाणं, नेरइयाण न जाव एक्को वि। उव्वट्टइ अन्नो वा, उववज्जइ सो असुन्नो उ॥१॥" मिश्रकालस्तु तेषामेव नारकाणां मध्यादेकादय उद्वृत्ता, यावदेकोऽपि शेषस्तावन्मिश्रकालः। शून्यकालस्तु यदा त एवादिष्टसामयिका नारकाः सामस्त्येनोद्वृत्ता भवन्ति नैकोऽपि तेषां शेषोऽस्ति स शून्यकाल इति। आह च—" उव्वट्टे एक्कम्मि वि, ता मीसो धरइ जाव एक्को वि। निल्लेविएहि सव्वेहि, वट्टमाणेहि सुन्नो उ॥१॥" इह च मिश्रनारकसंसारावस्थानकालचिन्तायां न तेषां वार्त्तमानिकनारकभवमङ्गीकृत्य प्रवृत्तम्, अपि तु-वार्त्तमानिकनारकजीवानां गत्यन्तरगमने नरकेऽप्यागमनमाश्रित्य यदि पुनस्तमेव नारकभवमङ्गीकृत्येदं सूत्रं स्यात्तदाऽनन्तकालापेक्षया मिश्रकालस्यानन्तगुणता सूत्रोक्ता न स्यात्। आह

च—" एयं पुण ते जीवे, पडुच्च सुत्तं न तब्भवं चेव । जइ होज्ज तब्भवं तो, अनन्तकालो ण संभवइ ॥ १ ॥" कस्मात्? इति चेद् उच्यते—ये वार्त्तमानिका नारकास्ते स्वायुष्ककालस्यान्ते उद्वर्त्स्यन्ते, असंख्यातमेव च तदायुः, अत उत्कर्षतो द्वादशमौहूर्त्तिकाशून्यकालापेक्षया मिश्रकालस्यानन्तगुणत्वाभावप्रसङ्गादिति । आह च—"किं कारणमाइट्ठा, णेरइया जे इमम्मि समयम्मि । ते ठिइकालस्संते, जम्हा सव्वे खविज्जंति ॥ १ ॥" इति । 'सव्वत्थोवे असुन्नकाले' त्ति—नारकाणामुत्पादोद्वर्त्तनाविरहकालस्योत्कर्षतोऽपि द्वादशमुहूर्त्तप्रमाणत्वात्, 'मीसकाले अणंतगुणे' त्ति—मिश्राख्यो विवक्षितनारकजीवनिर्लेपनाकालोऽशून्यकालापेक्षयाऽनन्तगुणो भवति, यतोऽसौ नारकेतरेष्वागमनगमनकालः, स च त्रसवनस्पत्यादिस्थितिकालमिश्रितः सन्ननन्तगुणो भवति, त्रसवनस्पत्यादिगमनागमनानामनन्तत्वात्, स च नारकनिर्लेपनाकालो वनस्पतिकायस्थितेरनन्तभागे वर्त्तत इति । उक्तं च—" थोवो-असुन्नकालो, सो उक्कोसेण वारसमुहुत्तो । तत्तो य अणंतगुणो, मीसो निल्लेवणाकालो ॥१॥ आगमणगमणकालो, तसाइतरुमीसिओ अणंतगुणो । अह निल्लेवणकालो, अणंतभागे वणद्धाए ॥२॥" इति 'सुन्नकाले अणंतगुणे' त्ति-सर्वेषां विवक्षितनारकजीवाना प्रायो वनस्पतिष्वनन्तानन्त—कालमवस्थानात्, एतदेवं वनस्पतिष्वनन्तानन्तकालावस्थानं जीवाना नारकभवान्तरकाल उत्कृष्टो देशित समय इति । उक्तं च—"सुन्नो य अणंतगुणो, सो पुण पायं वणस्सइगयाणं । एयं चेव य नारय—भवंतरं देसियं जेट्ठं ॥ १ ॥" इति । 'तिरिक्खजोणियाणं सव्वत्थोवे असुन्नकाले' त्ति-स चान्तर्मुहूर्त्तमात्र., अयं च यद्यपि सामान्येन तिरश्चामुक्तस्तथाऽपि विकलेन्द्रियसम्मूर्च्छिमानामेवावसेयः, तेषामेवान्तर्मुहूर्त्तमानस्य विरहकालस्योक्तत्वात्. यदाह—"भिन्नमुहुत्तो विगलिं-दिएसु संमुच्छिमेसु वि स एव ।" एकेन्द्रियाणां तूद्वर्त्तनोपपातविरहाभावनाशून्यकालाभाव एव । आह च— "एगो असंखभागो, वट्टइ उव्वट्टणोववायम्मि । एगनिगोए निच्चं, एवं सेसेसु वि स एव ॥ १ ॥" पृथिव्यादिषु पुनः 'अणुसमयमसंखेज्ज' त्ति वचनाद्विरहाभाव इति, 'मिस्सकाल अणंतगुणे' त्ति-नारकवत्, शून्यकालस्तु तिरश्चां नास्त्येव, यतो वार्त्तमानिकसाधारणवनस्पतीनां तत उद्वृत्तानां स्थानमन्यन्नास्ति, 'मणुस्सदेवाणं जहा नेरइयाणं' ति अशून्यकालस्यापि द्वादशमुहूर्त्तप्रमाणत्वात्, अत्र गाथा— 'एवं नरामराण वि, तिरियाणं नवरि नत्थि सुन्नद्धा । जं निग्गयाण तेसिं, भायणमन्न तओ नऽत्थि ॥ १ ॥" भ० १ श० २ उ० ।

संसारसमावण्ण—संसारसमापन्न—न० । संसरणं संसारो नारकतिर्यग्नरामरभवानुभवलक्षणस्तं सम्यग्—एकीभावेनापन्न संसारसमापन्न' । संसारवर्तिनि, प्रज्ञा० १ पद । स्था० । संसारं—भवं समापन्नका—आश्रिता संसारसमापन्नका. । संसारिषु, स्था० २ ठा० १ उ० । भववर्तिषु, स्था० । ४ ठा० २ उ० । संसारं—चतुर्गतिभ्रमणरूपं सम्यग्-एकीभावेनापन्ना एव ससारसमापन्नका', प्राकृतत्वात्स्वार्थे कप्रत्यय । ससारिषु जीवेषु, प्रज्ञा० १२ पद । ( तद्भेदाः 'भासग ' शब्दे पञ्चमभागे उक्ताः । ) ( 'जीव' शब्दे चतुर्थभागे १५२५ पृष्ठे च दर्शिताः ।

संसारसागर—संसारसागर—पुं० । संसरणं संसारस्तिर्यङ्नरकामरभवानुभवलक्षणः; स एव भवस्थितिकायस्थितिभ्यामनेकधाऽवस्थानेनालब्धपारत्वात् सागर इव संसारसागरः । ल० । आव० । द० प० । अतिगहनत्वात् सागरकल्पे संसारे, दर्श० ४ तत्त्व ।

संसाराडवीमहाकडिल्ल—संसाराटवीमहाकडिल्ल—न० । भवारण्यगुरुगहने, पञ्चा० १५ विव० ।

संसाराणुप्पेहा—संसारानुप्रेक्षा—स्त्री० । संसारस्य चतसृषु गतिषु सर्वावस्थासु संसरणलक्षणस्यानुप्रेक्षा संसारानुप्रेक्षा । स्था० ३ ठा० १ उ० । द० प० । भ० । " माता भूत्वा दुहिता, भगिनी भार्या च भवति संसारे । व्रजति सुत. पितृतां भ्रातृतां पुन. शत्रुतां चैव ॥१॥" इत्येवं संसारस्य—चतसृषु गतिषु सर्वावस्थासु संसरणलक्षणस्यानुप्रेक्षा संसारानुप्रेक्षा इति । धर्मध्यानभेदे, स्था० ४ ठा० १ उ० ।

संसाराभिणंदि—संसराभिनन्दिन्—पुं० । भवाभिनन्दिनि मुमुक्षौ, आ० म० १ अ० ।

संसारावेस—संसारावेश—पुं० । संसरणे, सूत्र० । "यथा प्रकारा यावन्तः, संसारावेशहेतवः । तावन्तस्तद्विपर्य्यासा, निर्वाणावेशहेतवः ॥ १ ॥" सूत्र० १ श्रु० १२ अ० ।

संसारि(न्)—संसारिन्—पुं० । संसरणं संसार., संसरणं ज्ञानावरणादिकर्मयुक्तानां गमनं स एषामस्तीति संसारिणः । दश० २ अ० । विशे० । संसारो गतिचतुष्काविर्भावः, सोऽस्ति येषां ते संसारिणः । द्रव्या० ५ अध्या० । संसारमध्यवर्तिषु अमुक्तेषु, द्रव्या० ६ अध्या० ।

संसारिकज्ज—संसारिकार्य—न० । गृहकार्ये,"जइ मे हुज्ज पमाओ, इमस्स देहस्स इमाइ रयणीए । आहारमुवहिदेहं, सव्वं तिविहेण वोसिरिअं ॥ १ ॥" एतद्गाथानुसारेण श्राद्धेन रात्रौ निद्रापगमे सांसारिककार्ये कृत्वा सुप्यते तदा पुनर्गाथोच्चारो विधीयते, किं वा प्राक् कृतोच्चार एव प्रमाणमिति प्रश्न. ?, अत्रोत्तरम्—श्राद्धः शयनवेलायामेवं प्रत्याख्यानं कृत्वा स्वपिति यद्रात्रौ प्रमादो भवति तदाहारप्रमुखं व्युत्सृजामि, तस्मान्निद्रापगमेऽपि कश्चित्कदाचित्ससारकार्यं करोति तदा प्रत्याख्यानभङ्गो न भवति इति ॥ ७४ ॥ सेन० ४ उल्ला० ।

संसारिय—सांसारिक—पुं० । परस्परसंसरणशीलेषु, सूत्र० २ श्रु० ७ अ० । संसारो विद्यते येषु ते सांसारिका. । संसारिषु, सूत्र० २ श्रु० ७ अ० ।

संसारुत्तारण—संसारोत्तारण—न० । महाभीमभयभ्रमणपारगमने, पा० ।

संसारुत्तारणी—संसारोत्तारणी—स्त्री० । संसाराद्युत्तारयति मुक्तिप्रापकत्वेन निस्तारयतीति संसारोत्तारणी । तथाविधाया धर्मश्रुतौ, उत्त० ३ अ० ।

संसाहग—संसाधक—पुं० । दोलायके पृष्ठतः कुतश्चिदागते साधौ, बृ० ४ उ० ।

सगडा(डुदा)हरण-शकटोदाहरण-न० । शकटं यानं तेनो- पलक्षितमुदाहरणं-कथानकं शकटोदाहरणम् । शकटदृष्टान्ते, पञ्चा० ५ विव० ।

सगडी-शकटी-स्त्री० । गन्त्र्याम्,भ०१५ श०। आ० । ध० । रा० ।

सगणिचिया-सगणीया-स्त्री० । स्वगच्छवासिन्यां शिष्या- याम् , नि० चू० १ उ० । स्वगणसम्बन्धिन्यां शिष्यायाम् , स्था० ५ ठा० ३ उ० ।

सगतेयकम्म-सप्ततैजसकर्म्मन्-न० । तैजसकार्मणोपलक्षिते सप्तके , तैजसशरीर १ , कार्मणशरीर २, तैजसतैजसबन्धन ३, तैजसकार्मणबन्धन ४ , कार्मणकार्मणबन्धन ५ , तैजस- संघातन ६, कार्मणसंघातनरूपे ७ समूहे , कर्म० ५ कर्म० ।

सगर-सगर-पुं० । अजितस्वामिकालीने द्वितीयचक्रवर्त्तिनि , स० ७२ सम० । आव० । ति० । स० । प्रव० । स्था० । उत्त० ।

सगरोऽवि सागरंतं, भरहं वासं नराऽऽहिवो ।
इस्सरियं केवलं हिच्चा, दयाइपरिनिव्वुओ ॥ ३५ ॥

हे मुने ! सगरोऽपि-सगरनामा नराधिपोऽपि दयया-संय- मेन परिनिवृत्त-कर्मभ्यो मुक्तः, अत्र नराधिपशब्देन अपि- शब्दात्-द्वितीयश्चक्रवर्त्यधिकारात् अनुक्तोऽपि चक्रयेव गृह्य- ते. किं कृत्वा भरतवर्ष-भरतक्षेत्रम् अर्थात् भरतक्षेत्रराज्यं त्यक्त्वा पुन. केवलं-परिपूर्णम् एकच्छत्ररूपम्-ऐश्वर्यं हित्वा त्यक्त्वा , कीदृशं भरतवर्षम् ? , सागरान्तम्-समुद्रान्तस- हितं चुल्लहिमवत्पर्वतं यावत् विस्तीर्णं भरतक्षेत्रराज्यमित्य- र्थ । अत्र सगरचक्रवर्त्तिदृष्टान्त. । तथाहि-अयोध्यायां नग- र्याम् इक्ष्वाकुकुलोद्भवो जितशत्रु. नृपोऽस्ति । तस्य भार्या वि- जयानाम्नी अस्ति । सुमित्रनामा जितशत्रुसहोदरो युवरा- जो वर्त्तते । तस्य यशोमती नाम्नी भार्याऽस्ति । जितशत्रु- राजेन विजयानाम्न्याश्चतुर्दशमास्वप्नसूचितः पुत्रः प्रसूत. । तस्य नाम अजित इति दत्तम् । स च द्वितीयस्तीर्थकर इति । सुमित्रयुवराजपत्न्या यशोमत्या सगरनामा द्वितीयश्चक्रव- र्ती प्रसूत. । तौ द्वावपि यौवनं प्राप्तौ पितृभ्यां कन्याः प- रिणायितौ कियता कालेन जितशत्रुराजेन निजे राज्येऽ- जितकुमार. स्थापितः । सगरो यौवराज्ये स्थापितः । सहो- दरविजयसहितेन जितशत्रुनृपेण दीक्षा गृहीता । अजितरा- जेन च कियत् कालं राज्यं परिपाल्य तीर्थप्रवर्तनसमये स्वराज्ये सगरं स्थापयित्वा दीक्षा गृहीता । सगरस्तु उत्प- न्नचतुर्दशरत्न साधितपट्खण्डभरतक्षेत्रे राज्यं पालयति । तस्य पुत्रा षष्टिसहस्रसंख्याका जाताः एकराश्युदरात् । सर्वेषां तेषां मध्ये ज्येष्ठा जह्नुकुमारो वर्त्तते ।(उत्त०)(सगरपु- त्रैर्गङ्गानद्यानयनम् ' गङ्गा ' शब्दे , तृतीयभागे ७८६ पृष्ठे । ) सगरचक्रवर्त्तिना श्रीअजितनाथसमीपे दीक्षा गृहीता , क- मेण कर्मक्षयं कृत्वा सगर. सिद्धः । अन्यदा भगीरथिना राज्ञा कश्चिदतिशयज्ञानी पृष्ट., भगवन् ! किं कारणं तत् जह्नुप्रमुखा. षष्टिसहस्रा भ्रातर. समकालं मरणं प्राप्ताः ? , ज्ञानिना भणितम्-महाराज ! एकदा महान् संघश्चैत्यवन्द- नार्थं संमेतपर्वते प्रस्थित. । अरण्यमुल्लङ्घ्य अन्तिमं ग्रामं प्राप्त , तन्निवासिना सर्वेण अनार्यजनेन अत्यन्तमुपद्रुतो दु- र्वचनेन वस्त्रान्नधनहरणादिना च तत्प्रत्ययं तद्ग्रामवासि- लोकैरशुभं कर्म बद्धम्,तदानीमेकेन प्रकृतिभद्रकेण कुम्भकारे- णोक्तम्-मा उपद्रवत इमं तीर्थयात्रागतं जनम् । इतरस्यापि नि- रपराधस्य परिक्लेशनं महापापस्य हेतुर्भवति, किं पुनरेतस्य धार्मिकजनस्य । ततो यद्येतस्य संघस्य स्वागतप्रतिपत्तिं कर्तुं न शक्तास्तदा उपद्रवन्तु रक्षन इति भणित्वा कुम्भकारेण निवारितः स ग्रामजनः । संघस्तत्र गतः । अन्यदा तद्ग्रामनि- वासिना एकेन नरेण राजसन्निवेशे चौर्यं कृतम् । ततो राज- नियुक्तैः पुरुषै. स ग्रामो द्वारपिधानपूर्वकं ज्वालितः, तदा स कुम्भकार. साधुप्रसिद्ध्या ततो निष्कासितोऽन्यस्मिन् ग्रामे गत ,तत्र षष्टिसहस्रजना दग्धा.,उत्पन्ना विराट्विषयेऽन्तिम- ग्रामे कोद्रववित्वेन, ता. कोद्रव एकत्र पुञ्जीभूताः स्थिताः सन्ति,तत्रैकः करी समायातः तत्खुरखेन ता. सर्वा अपि मर्दि- तास्ततो मृतास्ते नानाविधासु सुखदु.खप्रवरासु योनिषु सुचिरं परिभ्रम्य अनन्तरभवे किञ्चित् शुभकर्म उपार्ज्य- सगरचक्रिसुतत्वेनोत्पन्नाः षष्टिसहस्रप्रमाणा अपि ते त- त्कर्मशेषवशेन तादृशं मरणं-व्यसनं प्राप्ताः । सोऽपि कुम्भकारस्तदा स्वायु.क्षये मृत्वा एकस्मिन् सन्निवेशे ध- नसमृद्धो वणिग् जात. । तत्र कृतसुकृतः सञ्जातो मृत्वा न- रपतिस्तत्र शुभानुबन्धेन शुभकर्मोदयेन प्रतिपन्नो मुनिः , शुद्धं धर्मं च परिपाल्य ततो मृत्वा सुरलोकं गत. । त- तश्च्युतस्त्वं जह्नुसुतो जात. । इदं भागीरथः श्रुत्वा संवे- गमुपागतस्तमतिशयज्ञानिनं नत्वा गत. स्वभवनम् । इदं च भगीरथिपृच्छासंविधानकं प्रसक्त उक्तम् । इति सगरदृ- ष्टान्त. ॥ ३५ ॥ उत्त० १८ अ० ।

सगराय-शकराज-पुं० । शकाख्यम्लेच्छजातीये राजनि , यदा कालिकाचार्येण शका आनीतास्तदा उज्जयिन्यां न- गर्यां शको राजा जातः । व्य० १० उ० ।

सगल-सकल-त्रि० । समस्ते , उत्त० ५ अ० । अशेषे , वि- शे० । नि० चू० । प्रश्न० ।

शकल-पुं । खण्डे , एकभागे , त्वचि , वल्कले , वाच० ।

सगलजणसमक्ख-सकलजनसमक्ष-न० । समस्तलोकप्रक- टे, जी० ३ प्रति० ।

सगलसुयणाणि(न्)-सकलश्रुतज्ञानिन्-पुं० । सकलं-सम- स्तं चतुर्दशपूर्वात्मकं जानातीति सकलश्रुतज्ञानी । चतुर्दश- पूर्वधरे, पं० भा० १ कल्प । पं० चू० ।

सगलाएस-सकलादेश-पुं० । प्रतिपन्नानन्तधर्मात्मकवस्तुना कालादिभिरभेदवृत्ति प्रधान्याद्भेदोपचाराद् वा यौगपद्येन प्रतिपादके वचसि , स्था० ।

सगीय-स्वकीय-त्रि० । आत्मीयलाभादौ , आव० ४ अ० । आचा० ।

सगुणरस्सि-सगुणरश्मि-पुं० । आत्मीयगुणरश्मौ, अष्ट० १८ अष्ट० ।

सगुरुअणुण्णायगुरुपय-स्वगुर्वनुज्ञातगुरुपद-पुं० । स्वगुरुणा ग- च्छनायकेनानुज्ञातं गुरुपदं यस्य स. । स्वाचार्येण समा- रोपिते गुरुपदवीके, ध० ३ अधि० ।

सगुरुजोयण-स्वगुरुयोजन-न० । स्वगुरुभिरात्मीयपूज्यैर्यो- जन.-सम्बन्ध. । आत्मीयपूज्यै. सह औचित्येन प्रणामादीनां योगे , षो० ३ विव० ।

सग्ग-सर्ग-पुं० । स्वर्गादिसृष्टौ, यो०विं ।

स्वक-पुं० । आत्मीये , उत्त० २० अ० ।

स्वर्ग-पुं० । देवलोके, आव० ६ अ० । " अविग्घेण सग्गं गमिस्सामो । " औ० । देवालये , दर्श० ४ तत्त्व ।

सग्गइ-सद्गति-स्त्री० । मोक्षगतौ , उत्त० २ अ० ।

सग्गंथ-सद्ग्रन्थ-पुं० । संश्चासौ ग्रन्थश्च सद्ग्रन्थः । शोभनग्रन्थे, उत्त० २५अ० । परिग्रहग्रहिले, "सहिरन्नगा सग्गथा अहिरन्नगा समणा ।" सू० १ उ० २ प्रक० ।

सग्गकंखिय-स्वर्गकाङ्क्षिक-पुं० । स्वर्गे-देवलोके काङ्क्षा-यस्यासौ स्वर्गकाङ्क्षिकः । स्वर्गगमनासक्तेषु, तं० ।

सग्गकामय-स्वर्गकामक-पुं० । स्वर्गे-देवलोके कामो यस्य स स्वर्गकाम. । स्वर्गगमनेच्छौ, तं० ।

सग्गदुवार-स्वर्गद्वार-न० । अयोध्यायां सरयूतटे घट्टभेदे, अयोध्यायां"सग्गदुवारन्ति पसिद्धमावन्नो "ती० १३कल्प ।

सग्गपिपासिय-स्वर्गपिपासित-पुं० । स्वर्गे-देवलोके पिपासा प्राप्त्यत्वर्तिर्यस्यासौ स्वर्गपिपासितः । स्वर्गगमनसतृष्णे,तं० ।

सग्गप्पभा-स्वर्गप्रभा-स्त्री० । रुचकपर्वतस्य पश्चिमदिग्वास्तव्याया दिक्कुमार्याम् , द्वी० ।

सग्गह-सग्रह-न० । ग्रहाधिष्ठिते नक्षत्रे, विशे० । यत् क्रूरग्रहेणाक्रान्तं तत्सग्रहम् । व्य० १ उ० । पं० व० । भौमादिक्रूरग्रहोपयुक्ते नक्षत्रे, जीत० । ( अत्रत्या वक्तव्यता ' भावसुद्धि ' शब्दे पञ्चमभागे उक्ता । ) क्रूरग्रहेणाक्रान्तं सग्रहम् । नि० चू० २० उ० ।

स्वाग्रह-पुं० । स्वकीयाभिनिविशे आगमापारतन्त्र्ये, पञ्चा० १२ विव० ।

सग्गहजुत्त-स्वाग्रहयुक्त-त्रि० । अशास्त्रीयानुष्ठानाभिनिवेशोपेते, पञ्चा० १३ विव० ।

सग्गापवग्गमग्गमग्गंत-स्वर्गापवर्गमार्गमार्गयत्-त्रि० । स्वर्गो-देवालयः अपवर्गो-मोक्षस्तयोर्मार्गं -पन्थास्तं मार्गयति-अन्वेषयति य. स. । स्वर्गमोक्षान्वेषके,दर्श० ४ तत्त्व ।

सग्गुण-सद्गुण-त्रि० । सन्तो-विद्यमाना गुणा यस्यासौ सद्गुण. । शोभनगुणे, ध० ३ अधि० । वृ० । स्था० ।

सग्घ-श्लाघ्य-त्रि० । प्रशस्ते , सूत्र० १ श्रु० ३ अ० ३ उ० । विशे० । नि० चू० ।

सघर-सगृह-त्रि० । सह गृहेण वर्त्तते इति सगृह. । गृहसहिते , नि० चू० १ उ० ।

स्वगृह-न० । स्वकीयगृहे, नि० चू० १ उ० ।

सघरमीसय-स्वगृहमिश्रक-त्रि० ।गृहस्य साधूना चार्थाय निर्मापिते, वृ० १ उ० २ प्रक० ।

सचक्क-सचक्र-त्रि० । चक्रयोधिनि वासुदेवे,आव० १ अ० ।

स्वचक्र-न० । स्वकीयराज्यसैन्ये, स० ३१ सम० । आचा० ।

सचराचरजीवदयासहिय-सचराचरजीवदयासहित-त्रि०।चरण चरस्तत. सह चरेण-गमनेन वर्तन्त इति सचरा द्वीन्द्रियादयस्तदभावादचरा.-पृथिव्यादय , ते जीवाश्च तेषां दया-रक्षणं तया सहिता-युक्तोऽन्वित इति । प्रसस्थावरहिंसाविरते, दर्श० ४ तत्त्व ।

सचाव-सचाप-त्रि० । सह चापं येषां ते सचापा । जी० ४ प्रति० ३ अधि० । रा० । "क-ग-च-ज-त-द-प-य-वां प्रायो लुक्" ॥ ८ । १ । १७७ ॥ अत्र प्रायोग्रहणान्न लुक् । धानुष्केषु, प्रा० । चापसहिते, "सचावसरपहरणावरणभरियजुद्धसज्जाणं" ति-सह चापैः शरैश्च यानि प्रहरणानि कुन्तादीनि आवरणानि च स्फुरकादीनि तेषां भृतैना युद्धसज्जाश्च-युद्धप्रगुणा ये ते तथा तेषाम् । भ० ६ श० ३३ उ० । " सचावसरपहरणावरणभरियजोहजुद्धसज्ज " सह चापं शरैर्यानि प्रहरणानि-खड्गादीनि आवरणानि च-स्फुरकादीनि तेषां भृतोऽन्त एव योद्धाना युद्धसज्जश्च-युद्धप्रगुणो य. स तथा तम् । भ० १७ श० १६ उ० ।

सचिट्ठ-सचेष्ट-त्रि० । सव्यापारे, आव० ३ अ० ।

सचित्त-सचित्त-त्रि० । सह चित्तेन वर्तत इति सचित्तम् । जीवति, आव० ४ अ० । चित्तं चेतना सञ्ज्ञानमुपयोगोऽवधानमिति पर्यायाः । सह चित्तेन वर्त्तत इति सचित्तम् । आव० १ अ० । सचेतने, सूत्र० २ श्रु० १ अ० । ' जीवजुत्तं दव्वं सचेयण ।' नि० चू०१ उ० । सचेतनद्रव्ये, पञ्चा० १० विव० । ध० । आव० । सूत्र० । अनु० । भ० । ( ' उवभोगपरिभोग ' शब्दे द्वितीयभागे ९०२ पृष्ठे सचित्ततालफलाद्यग्रहणम् । पलव शब्दे पञ्चमभागे ७१० पृष्ठे च उक्तम् । ) ( 'आम' शब्दे द्वितीयभागे २८७ पृष्ठे सचित्ताऽऽम्रफलग्रहणं निषिद्धम् । ) विद्यमानचैतन्ये, ( सचित्तप्रतिमा ' उवासगपडिमा ' शब्दे द्वितीयभागे ११०६ पृष्ठे उक्ता । ) पृथिव्यादिषु जीवेषु, आतु० । ( सचित्तानि दारुदण्डादीनि न गृह्णातीति ' दंड ' शब्दे चतुर्थभागे २४२१ पृष्ठे प्रत्यपादि । ) सचित्तेक्षुखण्डानि-अथ पण्डितवानरगणिशिष्यपण्डिताऽऽनन्दविजयगणिकृतप्रश्नौ । यथा-करस्वके तक्रे वा प्रक्षिप्तं सचित्तं जीरकमचित्तीभवति न वा ?, यदि वा-अचित्तीभवति तर्हि घटिकाद्वयाद्वा, प्रहरत्रयाद्वा रात्र्यतिक्रमाद्वा, भवति ॥ १ ॥ तथा इक्षुखण्डानि छिन्नपर्वाणि सचित्तान्यचित्तानि वा, घटिकाद्वयात् सचित्तपरिहारिगृहस्थस्य तु कल्पन्ते न वा !, अथैतयो प्रश्नयोर्यथाक्रम प्रतिवचसी-करम्बकादौ क्षिप्तं सचित्तजीरकं प्रासुकं न भवतीति ज्ञातमस्ति ॥१॥ तथेक्षुखण्डानि छिन्नपर्वाण्यपि सचित्तानीति ज्ञायते ॥२॥ ही०२ प्रका० । शुष्कं लशुनं सचित्त वाऽचित्त वा कथ्यते !, यद्यचित्त तर्हि तथाविधकारणे तदौषधं आर्यवर्गे कार्यते न वा इति ?, प्रश्न , अत्रोत्तरम्-शुष्कलशुनमचित्तं सम्भाव्यते, तेन तथाविधकारणे आर्यवर्गस्यापि तस्य ऐकान्तिको निषेधो नास्तीति मन्तव्यम् ॥४८॥ सेन० ? उल्ला० ।

सचित्तकम्म-सचित्रकर्मन्-त्रि० । चित्रकर्मणा संयुक्ते, वृ०१ उ० ३ प्रक० । ( सचित्रकर्मोपाश्रये न स्थातव्यमिति 'वसहि' शब्दे षष्ठभागे ९७३ । ९७४ पृष्ठे गतम् । )

सचित्तचूडा-सचित्रचूडा-स्त्री० । पुष्पकचूलायाम , नि० चू० १ उ० ।

सचित्तणिक्खेवण-सचित्तनिक्षेपण-न०। सचित्तेषु व्रीह्यादिषु निक्षेपणम् अन्नादेरदानबुद्धया मातृस्थानतः अन्यत्र स्थापने. उपा० २ अ०। ध०। आव०। ध०।

सचित्तदवियकप्प-सचित्तद्रव्यकल्प-पुं०। सचित्तद्रव्यसामाचार्याम्, पं० भा० १ कल्प।

सचित्तपइट्ठिय-सचित्तप्रतिष्ठित-त्रि०। सचित्तद्रव्येषु वर्त्तमाने, नि० चू० १ उ०। ( सचित्तप्रतिष्ठितं गन्धं जिघ्रतीत्युक्तं 'गंध' शब्दे तृतीयभागे ७६६ पृष्ठे।)

सचित्तपडिबद्ध-सचित्तप्रतिबद्ध-त्रि०। सह चित्तेन-चेतनया वर्तते यस्तथोक्तस्तेन प्रतिबद्ध। सचित्तसम्बद्धे, ध०२ अधि०।

सचित्तपडिबद्धाहार-सचित्तप्रतिबद्धाऽऽहार-पुं०। सचित्ते वृक्षादौ प्रतिबद्धस्य गुन्दादेरभ्यवहरणे, सचित्तेऽस्थिके प्रतिबद्धे पक्वेऽचेतने फलादिके, उपा० १ अ०। आव०। कृतसचित्तव्याख्यानस्य कृततत्परिमाणस्य वा सचित्तमतिरिक्तमनोयोगादिनाऽभ्यवहरतः आहारे, ध०२ अधि०।

सचित्तपडिमा-सचित्तप्रतिमा-स्त्री०। सप्तम्यां श्रावकप्रतिमायाम्, सचित्ताहारान् परिहरतीति सप्तमी उपाशकप्रतिमा दर्शिता। ध० २ अधि०।

सचित्तपरिण्णा-सचित्त(परि)प्रतिज्ञा-स्त्री०। सचित्ताहारपरित्यागे, आ० चू० ४ उ०। सचेतनाहारप्रतिज्ञातः श्रावकः सप्तमीप्रतिमेति। स० ११ सम०।

सचित्तपेहण-सचित्तपिधान-न०। सचित्तेन फलादिना स्थगने, पञ्चा० १ विव०। उत्त०। आव०। ध०।

सचित्तरयस-सचित्तरजस्-न०। सचित्तधूलौ, सचित्तरजोनाम-व्यवहारसमन्विता वातोद्धृता श्लक्ष्णधूलिस्तच्च सचित्तरजो वर्ण्यते। व्य० ७ उ०। प्रव०।

सचित्तरससंजुय-सचित्तरससंयुत-त्रि०। तत्कालपतितत्वेन सचेतनलवणादिरसोन्मिश्रे, पञ्चा० १० विव०।

सचित्तरुक्ख-सचित्तवृक्ष-पुं०। हरितवृक्षे, अशुष्कवृक्षे, नि० चू० १२ उ०। प्राणहरानागच्छतो दृष्ट्वा स्तम्भनविद्यया नदीपूरादिकं स्तम्भनीयात्, विद्याया अभावे पलायेत्, पलायनासमर्थश्च श्रान्तो वा सचित्तवृक्षमप्यारोहेत् दोषः। सचित्तवृक्षमधिष्ठाय नाहारं कार्यं। जीन०।

सचित्तविगइ-सचित्तविकृति-स्त्री०। सचित्तविकृतिषु, सेन०। अप्रासुकोदकमोदकादिकं सचित्तविकृतिमध्ये गण्यते द्रव्यमध्ये वेति प्रश्नः?, अत्रोत्तरं-श्राद्धविधौ सचित्तविकृतिवर्ज्जं यन्मुखे क्षिप्यते तद् द्रव्यमध्ये गण्यते इति वचनात्प्रासुकनीरांपूर्णोदकतन्दुलधावनोदकादीनां सचित्तत्वाभावाद् द्रव्यमध्ये गणनं, मुद्गमोदकभैषजलड्डुकनिर्विकृतघृतादीनां विकृतित्वाभावाद् द्रव्यमध्ये गणनं च क्रियते। तथैकस्मिन्नपि द्रव्ये पोलिका-लाभितपोलिका लहचूई-सप्तपुटिकागडद्दादिभेदेन भिन्ननामरसवत्त्वात् पृथक् पृथक् द्रव्यमध्ये गण्यते, अप्रासुकजलमोदकादिकं तु सचित्तविकृतिमध्ये गण्यते, अधुना केचन द्रव्यमध्येऽपि गणयन्तो दृश्यन्ते। किञ्च-रूप्यादिधातुशिलाकादिमुखे क्षिप्यते तद् द्रव्यमध्ये न गण्यते, रसास्वादाभावात्॥६१॥सेन०३ उल्ला०।

सचित्तसम्मिस्साऽऽहार-सचित्तसंमिश्राऽऽहार-पुं०। सचित्तेन संमिश्रः आहारः सचित्तसंमिश्राहारः। वल्ल्यादिपुष्पादिना संमिश्रे आहारे, आव० ६ अ०।

सचित्ताहार-सचित्ताहार-पुं०। पृथिव्यप्कायवनस्पतिजीवशरीराणां सचेतनानामभ्यवहरणे, उपा० १ अ०। आव०। सचित्ताहारः-सचित्तं चेतना संज्ञानमुपयोगोऽवधानमिति पर्यायाः। सचित्तश्चासावाहारश्चेति समासः, सचित्तो वाऽऽहारो यस्य सचित्तमाहारयतीति वा मूलकन्दलीकन्दकार्द्रकादिसाधारणप्रत्येकतरुशरीराणि सचित्तानि सचित्तं पृथिव्याद्याहारयतीति भावना। तथा सचित्तप्रतिबद्धाहारो यथा वृक्षे प्रतिबद्धो गुन्दादि पक्वफलानि वा। तथा-अपक्वौषधिभक्षणत्वमिदं प्रतीतं सचित्तसन्मिश्राहार इति वा पाठान्तरम्-सचित्तेन सन्मिश्र आहारः सचित्तसन्मिश्राहारः, वल्ल्यादि पुष्पादि वा सन्मिश्रं तथा दुष्पक्वौषधिभक्षणता-दुष्पक्वा-अस्विन्ना इत्यर्थः, तद्भक्षणता तथा तुच्छौषधिभक्षणता। आव० ६ अ०। ध० २०।

सचित्ताहारवज्जण-सचित्ताहारवर्जन-न०। सचित्ताभ्यवहरणपरित्यागे, सचित्ताहारवर्जनप्रतिमा सप्तम्युपासकप्रतिमा। उपा० १ अ०।

सचिव-सचिव-पुं०। सहाये, पो० ४ विव०।

सचेयण-सचेतन-त्रि०। विवेकिनि, आचा० १ श्रु० ३ अ० १ उ०। अशस्त्रोपहते पृथिव्यादिचतुष्के,

अशस्त्रोपहतानि च पृथिव्यऽप्तेजोवायुलक्षणानि चत्वारि भूतानि सचेतनानि, अतः पराभिप्रायमाशङ्क्य तेषां सचेतनत्वं सिसाधयिषुराह-

किह सजीवाइँऽमई, तल्लिङ्गाओऽनिलावसाणाइं।
वोमं विमुत्तिभावा-दाधारो चेव न सजीवं॥ १७५२॥

कथं पुनः सह जीवेन वर्त्तन्त इति सजीवानि भूतानि? इति परस्य अमतिः स्यात्। अत्रोच्यते-तस्य जीवस्य लिङ्गं तल्लिङ्गं तस्मात् तदुपलब्धेरित्यर्थः, सचेतनान्यनिलावसानानि चत्वारि भूतानि। व्योम-आकाशं पुनर्विगतमूर्तिभावादाधार एव, न तु सजीवमिति।

तल्लिङ्गात्-इत्युक्तम्, तत्र पृथिव्याः सजीवत्वे किं लिङ्गम्? इत्याह-

जम्मजराजीवणमर-णरोहणाहारदोहलामयओ।
रोगतिगिच्छाईहि य,नारि व्व सचेयणा तरवो॥१७५३॥

सचेतनास्तरवः-इति प्रतिज्ञा। जन्म-जरा-जीवन-मरण-क्षतसंरोहण-ऽऽहार-दौहृदा-ऽऽमय-तच्चिकित्सादिसद्भावात्-इति हेतुः। नारीवत्-इति दृष्टान्तः। आह-नन्वनैकान्तिकोऽयम्, अचेतनेष्वपि जन्मादिव्यपदेशदर्शनात्, तथा हि-'जातं तद् दधि' इति व्यपदिश्यते, न चैतत् सचेतनम्, तथा, 'जीवितं विषम्' 'मृतं कुसुम्भकम्' इत्यादि। अत्रोच्यते-वनस्पतौ सर्वाण्यपि सचेतनलिङ्गानि जन्मादीन्युपलभ्यन्ते, अतो मनुष्येष्विव तानि तेषु निरुपचरितानि, दध्यादौ तु प्रतिनियत एव कश्चिज्जातादिव्यपदेशो दृश्यते, स चौपचारिक एव-जातमिव जातं दधि, मृतमिव मृतं कुसुम्भकमित्यादि।

वनस्पतेरेव सचेतनत्वसाधने हेत्वन्तराण्याह—

छिक्कपरोइया छिक्क-मेत्तसंकोयओ कुलिंगो व्व ।
आसयसंचाराओ, वियत्त वल्लीवियाणाइं ॥१७५४॥
सम्मादयो य साव-प्पबोहसंकोयणाइओऽभिमया ।
बउलादओ य सद्दा-इविसयकालोवलंभाओ ॥१७५५॥

सचेतना स्पृष्टप्ररोदिकादयो वनस्पतयः, स्पृष्टमात्रसंकोचात्, कुलिङ्ग—कीटादिस्तद्वत् । तथा, सचेतना वल्ल्यादयः, स्वरक्षार्थं वृत्ति-वृक्ष-वरण्डकाद्याश्रयं प्रति संचरणात् । तथा—शम्यादयश्चेतनत्वेनाभिमता, स्वापप्रबोध-संकोचादिमत्त्वात्, देवदत्तवत् । तथा, सचेतना बकुलाऽशोककुरुबकविरहकचम्पकतिलकादयः, शब्दादिविषयकालोपलम्भात्—शब्दरूपगन्धरसस्पर्शविषयाणां काले प्रस्तावे उपभोगस्य यथासंख्यमुपलम्भादित्यर्थः, यज्ञदत्तवदिति । एवं पूर्वमपि दौहृदादिलिङ्गेषु कूष्माण्डीबीजपूरकादयो वनस्पतिविशेषाः पक्षीकर्त्तव्या इति ।

अथ सामान्येन तरूणां पृथ्वीविशेषाणां च विद्रुमादीनां सचेतनत्वसाधनायाऽऽह—

मंसंकुरो व्व सामा-णजाइरूवंकुरोवलंभाओ ।
तरुगणविद्दुमलवणो-वलादओ सासयावत्था ॥१७५६॥

तरुगणः, तथा विद्रुमलवणोपलादयश्च स्वाश्रयावस्था—स्वजन्मस्थानगताः सन्तश्चेतना । छिन्नानामप्यमीषां पुनस्तत्स्थान एव समानजातीयाङ्कुरोत्थानात्, अर्शो मांसाङ्कुरवत् । आह—ननु पृथिव्यादिभूतानामिह सचेतनत्वं साधयितुमारब्धम्, ततः पृथिव्या एवादौ तत् साधयितुं युक्तम्, तस्या एवादावुपन्यासात्, तत्किमिति 'जम्मजराजीवण—' इत्यादिना तरूणामेवादौ तत् साधितम्, पश्चात्तु विद्रुमलवणोपलादीनामिति ? सत्यम्, किन्तु पृथ्वीविकारतया पृथ्वीभूत एव तरूणामन्तर्भावो लोकप्रसिद्धः, सुव्यक्तचैतन्यलिङ्गाश्च यथा तरवो न तथा लवणोपलजलादय इति तेषामेवादौ चैतन्यं साधितमिति ।

अथोदकस्य सचेतनत्वं साधयितुमाह—

भूमिक्खयसाभाविय, संभवओ दद्दुरो व्व जलमुत्तं ।
अहवा मच्छो व सभा-व वोमसंभूयपायाओ ॥१७५७॥

भौममम्भः सचेतनमुक्तम्, क्षतभूमिसजातीयस्वाभाविकस्य तस्य संभवात्, दर्दुरवत् । अथवा-सचेतनमन्तरिक्षमम्भः, अभ्रादिविकारस्वभावसंभूतपातात्, मत्स्यवदिति ।

तेजोऽनिलावधिकृत्याऽऽह—

अपरप्पेरितिरिय,नियमियदिग्गमणओऽणिलो गो व्व ।
अनलो आहाराओ,विद्धिविगारोवलम्भाओ ॥१७५८॥

सात्मको वायुः, अपरप्रेरिततिर्यगनियमितदिग्गमनात्, गोवत् । तथा-सात्मकं तेजः, आहारोपादानात्, तद्वृद्धौ विकारविशेषोपलम्भाच्च, नरवत् । गाथाबन्धानुलोम्याच्च व्यत्ययेनोपन्यास इति ।

तदेवं पृथिव्यादीनां प्रत्येकं सचेतनत्वं प्रसाध्येदानीं सर्वेषां सामान्येन तत् साधयन्नाह—

तणवोऽणब्भाइविगा-रमुत्त जाइत्तओऽणिलंताइं ।
सत्थामत्थहयाओ, निज्जीवसजीवरूवाओ ॥ १७५९ ॥

पृथिव्याद्यनिलान्तानि चत्वारि भूतानि जीवानिर्वर्त्तितानि तनवः, अनभ्रादिविकारमूर्तजातित्वात्, गवादिशरीरवत् । अभ्रादिविकारस्तु विस्रसापरिणतपुद्गलसंघातरूपत्वेनाचेतनत्वाद् वर्जित । नाऽस्य पृथिव्यादितनवः शस्त्रोपहता निर्जीवाः, अशस्त्रोपहतास्तु सजीवा वर्णगन्धरसादिलक्षणतः समधर्मतया इति । विशे० ।

सचेलय-सेचलक-पुं० । चेलान्विते, उत्त० २ अ० ।

सचेलिया-सचेलिका-स्त्री० । सवस्त्रायां निर्ग्रन्थ्याम्, स्था० ४ ठा० २ उ० ।

सच्च-सत्य-न० । सन्तः प्राणिनः पदार्था मुनयो वा तेभ्यो हितं सत्यम् । पा० । आव० । स्था० । प्रश्न० । सन्तो—मुनयः पदार्था वा जीवादयस्तेषु यथासंख्यं मुक्तिप्रापकत्वेन यथावस्थितवस्तुस्वरूपचिन्तनेन साधु-सत्यम्, यथा अस्ति जीवः सदसद्रूपो देहमात्रव्यापीत्यादिरूपतया यथावस्थितवस्तुविकल्पनचिन्तनपरम् । प्रव० २२७ द्वार । पं० सं० । आ० चू० । 'सोऽचेलः' ॥८। २। १३॥ इति त्यस्य चः । प्रा० । यथावस्थितवस्तुस्वरूपकथने, त्रिविधं सत्यम्-मनोवाक्कायम्, मनःकायसत्यम्, वाक्कायसत्यं चेति । ध० ३ अधि० ।

चतुर्विधं सत्यम्—

चउव्विहे सच्चे पण्णत्ते, तं जहा-णामसच्चे ठवणासच्चे दव्वसच्चे भावसच्चे । ( सू० ३०८ )

नामस्थापनासत्ये सुज्ञाने द्रव्यसत्यमनुपयुक्तस्य सत्यमपि भावसत्यं तु यत् स्वपरानुपरोधेनोपयुक्तस्येति । स्था० ४ ठा० २ उ० ।

चउव्विहे सच्चे पण्णत्ते, तं जहा-काउज्जुयया भासुज्जुयया भावुज्जुयया अविसंवायणाजोगे । (सू०२५४×) ( स्था० ४ ठा० १ उ० । ) सद्भ्यो हितं सत्यम्-अनलीकम्, तच्चतुर्विधम्, यतोऽवाचि-"अविसंवादनयोगः, कायमनोवागजिह्मता चैव । सत्यं चतुर्विधं त—च्च जिनवरमतेऽस्ति नान्यत्र ॥ १ ॥" इति । स्था० ४ ठा० १ उ० ।

दशविधं सत्यम्—

दसविहे सच्चे पण्णत्ते, तं जहा-'जणवयं सम्मयं ठवणा नामे रूवे पडुच्च सच्चे य । ववहारे भाव जोगे, दसमे ओवम्मसच्चे य ॥१॥ (स्था०) दसविहे सच्चामोसे पण्णत्ते, तं जहा-उप्पन्नमीसते १, विगतमीसते २, उप्पण्णविगतमीसते ३, जीवमीसए ४, अजीवमीसए ५, जीवाजीवमीसए ६, अणंतमीसए ७, परित्तमीसए ८, अद्धामीसए ९, अद्धद्धामीसए १० । ( सू० ७४१ × )

'दसविहे' त्यादि, सन्तः—प्राणिनः पदार्था मुनयो वा तेभ्यो हितं सत्यं दशविधं तथ्यमम्, तद्यथा—' जणवय ' गाहा, ' जणवय ' त्ति—सत्यशब्दः प्रत्येकमभिसम्बन्धनीयः, ततश्च—जनपदेषु-देशेषु यदर्थवाचकतया रूढं देशान्तरेऽपि तदर्थवाचकतया प्रयुज्यमानं सत्यमवितथमिति जनपदसत्यम्, यथा कोङ्कणादिषु पय पिच्चं

नीरम्—उदकमित्यादि, सत्यत्वं चास्यादुष्टविवक्षाहेतुत्वा-ज्ञानाजनपदेष्विष्टार्थप्रतिपत्तिजनकत्वाद् व्यवहारप्रवृत्तेः, एवं शेषेष्वपि भावना कार्येति। 'संमय' त्ति—संमतं च तत् सत्यं चेति सम्मतसत्यं, तथाहि—कुमुदकुवलयोत्पलतामरसानां समाने पङ्कसम्भवे गोपालादीनामपि सम्मतमरविन्दमेव पङ्कजमिति; अतस्तत्र संमततया पङ्कजशब्द. सत्यः कुवलयादावसत्योऽसंमतत्वादिति। 'ठवण' त्ति—स्थाप्यत इति स्थापना यल्लेप्यादिकर्म्मार्हदादिविकल्पेन स्थाप्यते तद्विषये सत्यं स्थापमासत्यम्, यथा अजिनोऽपि जिनोऽयमनाचार्योऽप्याचार्योऽयमिति। 'नामे' त्ति—नाम-अभिधानं तत्सत्यं नामसत्यम् यथा कुलमवर्द्धयन्नपि कुलवर्द्धन उच्यते, एवं धनवर्द्धन इति। 'रूवे' त्ति—रूपापेक्षया सत्यं रूपसत्यम्, यथा प्रपञ्चयतिः प्रव्रजति रूपं धारयन् प्रव्रजित उच्यते, न चासत्यताऽस्येति। 'पडुच्च सच्चेय' त्ति-प्रतीत्य-आश्रित्य वस्त्वन्तरं सत्यं प्रतीत्य सत्यम्, यथा-अनामिकाया दीर्घत्वं ह्रस्वत्वं चेति, तथाहि-तस्यानन्तपरिणामस्य द्रव्यस्य तत्तत्सहकारिकारणसन्निधाने तत्तद्रूपमभिव्यज्यत इति सत्यता। 'ववहार' त्ति—व्यवहारेण सत्यं व्यवहारसत्यम्, तथा दह्यते गिरि', गलति भाजनम्, अयं च गिरिगततृणादिदाहे व्यवहार. प्रवर्त्तते, उदके च गलति सतीति। 'भाव' त्ति-भावं-भूयिष्ठशुक्लादिपर्यायमाश्रित्य सत्यं भावसत्यम्, यथा शुक्ला वलाकेति, सत्यपि हि पञ्चवर्णसम्भवे शुक्लवर्णोत्कटत्वात् शुक्लेति। 'जोगे' त्ति—योगतः-सम्बन्धत. सत्यं योगसत्यम्, यथा दण्डयोगाद् दण्ड., छत्रयोगाच्छत्रः एवोच्यत इति। दशममौपम्यसत्यमिति उपमैवौपम्य तेन सत्यमौपम्यसत्यं यथा समुद्रवत्तडागं देवोऽयं सिंहस्त्वमिति, सर्वत्रैकार. प्रथमैकवचनार्थो द्रष्टव्य इहेति। (स्था०) सत्यासत्ययोगे मिश्रं वचनं भवतीति तदाह—'दसे' त्यादि, सत्यं च तन्मृषा चेति प्राकृतत्वात्—'सच्चामोसं' ति-उप्पन्नमीसए' त्ति—उत्पन्नविषयं मिश्रं-सत्यामृषा उत्पन्नमिश्रं तदेवोत्पन्नमिश्रकम्, यथैकं नगरमधिकृत्यास्मिन्नद्य दश दारका उत्पन्ना इत्यभिदधतस्तन्न्यूनाधिकभावे व्यवहारतोऽस्य सत्यमृषात्वात्, श्वस्ते शतं दास्यामीत्यभिधाय पञ्चाशत्यपि दत्ताया लोके मृषात्वादर्शनादनुत्पन्नेष्वेवादत्तेष्वेव वा मृषात्वसिद्धे., सर्वथाऽक्रियाभावेन सर्वथा व्यत्ययाद्, एवं विगतादिष्वपि भावनीयमिति १, 'विगतमीसए' त्ति—विगतविषयं मिश्रकं विगतमिश्रकम्, यथैकं ग्राममधिकृत्यास्मिन्नद्य दश वृद्धा विगता इत्यभिदधतो न्यूनाधिकभावे मिश्रमिति २, 'उप्पन्नविगयमीसए' त्ति-उत्पन्नं च विगतं च उत्पन्नविगते तद्विषयं मिश्रकम् उत्पन्नविगतमिश्रकम्, यथैकं पत्तनमधिकृत्यास्मिन्नद्य दश दारका जाता. दश च वृद्धा विगता इत्यभिदधतस्तन्न्यूनाधिकभाव इति ३, 'जीवमीसए' त्ति-जीवविषयं मिश्रं-सत्यासत्यं जीवमिश्रम्, यथा जीवन्मृतकृमिराशौ जीवराशिरिति ४, 'अजीवमीसए' त्ति—अजीवानाश्रित्य मिश्रमजीवमिश्रम्, यथा तस्मिन्नेव प्रभूतमृतकृमिराशावजीवराशिरिति ५, 'जीवाजीवमिस्सए' त्ति—जीवाजीवविषयं मिश्रकं जीवाजीवमिश्रकम्, यथा तस्मिन्नेव जीवन्मृतकृमिराशौ प्रमाणनियमेनैतावन्तो जीवन्त्येतावन्तश्च मृता इत्यभिदधतस्तन्न्यूनाधिकत्वे ६, 'अणंतमीसए' त्ति-अनन्तविषयं मिश्रकमनन्तमिश्रकं, यथा मूलकन्दादौ परीत्तपत्रादिमत्यनन्तकायोऽयमित्यभिदधत. ७, 'परित्तमिस्सए' त्ति—परीत्तविषयं मिश्रकं परीत्तमिश्रकं, यथा अनन्तकायलेशवति परीत्ते परीत्तोऽयमित्यभिदधतः ८, 'अद्धामिस्सए' त्ति-कालविषयं सत्यासत्यं, यथा कश्चित् कस्मिँश्चित्प्रयोजने सहायास्त्वरयन् परिणतप्राये वा वासरे एव रजनी वर्त्तत इति ब्रवीति ९, अद्धद्धामीसए' त्ति-अद्धा दिवसो रजनी वा तदेकदेशः प्रहरादिः अद्धाद्धा, तद्विषयं मिश्रकं सत्यासत्यम् अद्धाद्धामिश्रकम्, यथा कश्चित् कस्मिंश्चित्प्रयोजने प्रहरमात्र एव मध्याह्न इत्याह। स्था० १० ठा० ३ उ०। संथा०। प्रव०। प्रश्न०। वचनविशेषे,आ० १ श्रु०१ अ०। आचा०। मृषावादविरतौ,प्रव० ६६ द्वार। स्था०। प्रश्न०। सर्वथा लोकपरिहरणे, दर्श० २ तत्त्व। स०। अवितथे, सूत्र० १ श्रु० १२ अ०। सद्भ्यो हितं सत्यम्, सुगतिगमनाविसंवादनात् सर्वज्ञोपदेशाच्च सत्यम्। तथ्ये, आचा० १ श्रु० ८ अ० ६ उ०। विशे०। ज्ञा०।

समिक्खपंडिए तम्हा, पासजाइपहे बहू।
अप्पणा सच्चमेसेज्जा, मित्तिं भूएसु कप्पए ॥१२॥

तस्मादज्ञानिनां मिथ्यात्विनां संसारभ्रमणत्वात् पण्डितः-तत्त्वज्ञ. आत्मना—स्वयमेव परोपदेश विनैव सत्यमेषयेत्, सद्भ्यो हितं सत्यम् अर्थात्-संयमम् अभिलषेत्, पुन. पण्डितो भूतेषु—पृथिव्यादिषु षट्कायेषु मैत्रीं कल्पयेत्, किं कृत्वा ?, बहून् पासजातिपथान् समीक्ष्य पाशाः पारवश्यहेतवः पुत्रकलत्रादिसम्बन्धास्ते एव मोहहेतुतया एकेन्द्रियादिजातीना पन्थान. पाशजातिपथास्तान् पाशजातिपथान् दृष्ट्वा, यदा हि पुत्रकलत्रादिषु मोहं करोति तदा हि एकेन्द्रियत्वं जीवो बध्नाति। उत्त० ६ अ०। सूत्र०।

तहिं तहिं सुयक्खायं, से य सच्चे सुआहिए।
सया सच्चेण संपन्ने. मित्तिं भूएहिँ कप्पए ॥ ३ ॥

रागद्वेषमोहानामनृतकारणानामसंभवात् सद्भ्यो हितत्वाच्च सत्यः स्वाख्यात.-तत्स्वरूपविद्भिः प्रतिपादितः। रागादयो ह्यनृतकारणं ते च तस्य न सन्ति, अत. कारणाभावात्कार्याभाव इति कृत्वा तद्वचो भूतार्थप्रतिपादकम्। तथा चोक्तम्—"वीतरागा हि सर्वज्ञा, मिथ्या न ब्रुवते वच.। यस्मात्तस्माद्वचस्तेषां, तथ्यं भूतार्थदर्शनम् ॥ १ ॥" ननु च सर्वज्ञत्वमन्तरेणापि हेयोपादेयमात्रपरिज्ञानादपि सत्यता भवत्येव। तथा चोक्तम्-" सर्वं पश्यतु वा मा वा, तत्त्वमिष्टं तु पश्यतु। कीटसंख्यापरिज्ञानं, तस्य नः क्वोपयुज्यते ? ॥ १ ॥" इत्याशङ्क्याह—सदा-सर्वकालं सत्येन—अवितथभाषणत्वेन संपन्नोऽसौ, अवितथभाषणत्वं च सर्वज्ञत्वे सति भवति, नान्यथा। तथाहि—कीटसंख्यापरिज्ञानासंभवे सर्वत्रापरिज्ञानमाशङ्क्यते। तथा चोक्तम्—"सदृशे बाधासम्भवे तल्लक्षणमेव दूषित स्याद्" इति सर्वत्रानाश्वास, तस्मात्सर्वज्ञत्वं तस्य भगवत एष्टव्यम्, अन्यथा तद्वचस. सदा सत्यता न स्यात्, सत्यो वा संयम. सन्त.-प्राणिनस्तेभ्यो हितत्वाद् अतस्तेन तप.प्रधा-

नेन संयमेन भूतार्थहितकारिणा सदा-सर्वकाल संपन्नो-युक्तः, एतद्गुणसंपन्नश्चासौ भूतेषु-जन्तुषु मैत्री-तद्रक्षणपरतया भूतदयां कल्पयेत्—कुर्यात्। इदमुक्तं भवति—परमार्थतः स सर्वज्ञस्तत्त्वदर्शितया यो भूतेषु मैत्रीं कल्पयेत्, तथा चोक्तम्—"मातृवत्परदाराणि, परद्रव्याणि लोष्टवत्। आत्मवत्सर्वभूतानि, यः पश्यति स पश्यति ॥ १ ॥" ॥ ३ ॥ सूत्र० १ श्रु० १५ अ० । " वरं कूपशताद्वापी, वरं वापीशतात्क्रतुः । वरं क्रतुशतात्पुत्रः, सत्यं पुत्रशताद्वरम्॥१॥" स्था० ४ ठा० ३ उ० ।

सच्चेसु वा अणवज्जं परं ।

सत्येषु वाक्येषु यदनवद्यं पीडानुत्पादकं वाक्यं तत् श्रेष्ठं सत्यं-तदेव यत्परपीडानुत्पादकम्। यतः लोकेऽपि श्रूयते वादः तथाऽसत्येन कौशिकः "पतितो वधयुक्तेन नरके तीव्रवेदने" यथा-" तहेव काणं काणि त्ति, पंडगं पंडग त्ति वा । वाहिअं वा वि रोगि त्ति, चोरं चोरि त्ति नो वदे ॥१॥ " सूत्र० दीपि० १ श्रु० ६ अ०। रा०। सद्भ्यो हितं सत्यम्। परमार्थे, यथावस्थितपदार्थनिरूपणे मोक्षे, तदुभयभूते संयमे, सूत्र० १ श्रु० १२ अ० । उत्त० । स्था० । नं० । व्य० । भ० । ध० । चू० । स० ।

सच्चम्मि धिइं कुव्वहा ( सू० ११२× )

' सच्चे ' इत्यादि, सद्भ्यो हितः सत्यः-संयमस्तत्र धृतिं कुरुध्वं, सत्यो वा—मौनीन्द्रागमो यथावस्थितवस्तुस्वरूपाविर्भावनात्। तत्र भगवदाज्ञाया धृतिं कुमार्गपरित्यागेन कुरुध्वमिति । आचा० १ श्रु० ३ अ० २ उ० ।

तमेव सच्चं णीसंकं जं जिणेहिं पवेइयं । ( सू० १६२× )

' तमेव सच्चं ' इत्यादि, यत्र क्वचित्स्वसमयपरसमय—श्चार्याभावात् सूक्ष्मव्यवहितातीन्द्रियपदार्थेषूभयसिद्धदृष्टान्तसम्यग्हेत्वभावाच्च ज्ञानावरणीयोदयेन सम्यग्ज्ञानाभावेऽपि शङ्काविचिकित्सादिरहित इदं भावयेत्, यथा तदेवैकं सत्यम्-अवितथम् । आचा० १ श्रु० ५ अ० ५ उ० ।

तत्सत्यतामेव दर्शयन्नाह—

से नूणं भंते ! तमेव सच्चं णीसंकं, जं जिणेहि पवेइयं ?, हंता गोयमा ! तमेव सच्चं णीसंकं जं जिणेहिं पवेदितं । ( सू०३० )

' से णूणं ' मित्यादि व्यक्तम्, नवरं तदेव न पुरुषान्तरैः प्रवेदितं रागाद्युपहतत्वेन तत्प्रवेदितस्यासत्यत्वसम्भवात्, सत्यम्-सूनृतं तच्च व्यावहारतोऽपि स्यादत आह—निःशङ्कम्-अविद्यमानसन्देहमिति ।

अथ जिनप्रवेदितं सत्यमित्यभिप्रायवान् यादृशो भवति-

तद्दर्शयन्नाह—

से नूणं भंते ! एवं मणं धारेमाणे एवं पकरेमाणे एवं चिट्ठमाणे एवं संवरेमाणे आणाए आराहए भवति ?, हंता गोयमा ! एवं मणं धारेमाणे० जाव भवइ । ( सू० ३१ )

' से नूणं ' मित्यादि व्यक्तम्, नवरं नूनं—निश्चितम्, ' एवं मणं धारेमाणे ' त्ति ' तदेव सत्यं निःशङ्कं यज्जिनैः प्रवेदित ' मित्यनेन प्रकारेण मनो—मानसमुत्पन्नं सत् धारयन्—स्थिरीकुर्वन् ' एवं पकरेमाणे ' त्ति-उक्तरूपेणानुत्पन्नं सत् प्रकुर्वन्-विदधानः ' एवं चिट्ठमाणे ' त्ति-उक्तन्यायेन मनश्चेष्टयन् नान्यमतानि सत्यानीत्यादिचिन्ताया व्यापारयन् चेष्टमानो वा विधेयेषु तपोध्यानादिषु ' एवं संवरेमाणे ' त्ति—उक्तवदेव मनः संवृण्वन्—मतान्तरेभ्यो निवर्तयन् प्राणातिपातादीन् वा प्रत्याचक्षाणो जीव इति गम्यते, ' आणाए ' त्ति—आज्ञाया—ज्ञानाद्यासेवारूपजिनोपदेशस्य ' आराहए ' त्ति—आराधकः—पालयिता भवतीति । भ० १ श० ३ उ० ।

सच्चंसि परिचिट्ठिंसु । ( सू० १४० × )

सत्यमिति ऋतं तपः संयमो वा तत्र परिचितेः स्थिरे तस्थुः स्थितवन्तः, उपलक्षणार्थत्वात् त्रिकालविषयता द्रष्टव्या-तत्रातीते काले अनन्ता अपि सत्ये तस्थुर्वर्तमाने पञ्चदशसु कर्मभूमिषु संख्येयास्तिष्ठन्ति, अनागते अनन्ता अपि स्थास्यन्ति । आचा० १ श्रु० ४ अ० ३ उ० । स्वप्नादिप्रकारेण अवितथोपदेष्टरि देवादिके, भ०१२श० ८ उ० । औ० । (' विणय ' शब्दे षष्ठ भागे एतत्कथानकमुक्तम् । )

सच्चमेव समभिजाणाहि सच्चस्स आणाए से उवट्ठिए मेहावी मारं तरइ । ( सू० ११८ × )

सद्भ्यो हितः सत्यः—संयमस्तमेवापरव्यापारनिरपेक्षः समभिजानीहि—आसेवनापरिज्ञया समनुतिष्ठ, यदि वा-सत्यमेव समभिजानीहि गुरुसाक्षिगृहीतप्रतिज्ञानिर्वाहको भव। यदि वा—सत्य -आगमस्तत्परिज्ञानं च मुमुक्षोस्तदुक्तप्रतिपालनम्, किमर्थमेतदिति चेदाह—' सच्चस्स ' इत्यादि सत्यस्य आगमस्याज्ञयोपस्थितः सन् मेधावी मारं—संसारं तरति । आचा० १ श्रु० ३ अ० ३ उ० । शब्दानुशासनोपदर्शिते यथोक्तलक्षणेऽविपरीते वचने, आ० म० १ अ० । ( इदं च ' मुसावायवेरमण ' शब्दे षष्ठभागे ३२५ पृष्ठे विस्तरतः प्रपञ्चितम् । )

अथ द्वितीयव्रतलक्षणमाह—

सर्वथा सर्वतोऽलीका-दप्रियाच्चाहितादपि ।
वचनाद्धि निवृत्तिर्या, तत्सत्यव्रतमुच्यते ॥ ४१ ॥

सर्वतः क्रोधादिसकलप्रकारजनितात् अलीकाद्—असत्यात् पुनरप्रियाद्-अप्रीतिकारिणः । तथा अहितादपि आयतौ अहितकारिणः न केवलम् अलीकादेवेत्यपिशब्दार्थः, एवंविधाद्वचनाद्या सर्वथा त्रिविधत्रिविधेन निवृत्तिर्विरमणं तत् सत्यं-सत्यव्रतमुच्यते जिनैरिति शेषः । ननु अलीकाद्वचनान्निवृत्तिरित्येवास्तु सत्यव्रताधिकारात् किमप्रियाऽहितयोर्ग्रहणं तयोरनधिकारात्, इति चेन्न; सत्यं व्यवहारतः सत्यस्यापि अप्रियस्याऽहितस्य च परमार्थतोऽसत्यत्वात्, यथा-चौरं प्रति चौरस्त्वं, कुष्ठिनं प्रति कुष्ठी त्वमिति, तदप्रियत्वान्न तथ्यम्-तथा च सूत्रम्-" तहेव काणं काणत्ति, पडगं पंडग त्ति अ । वाहिअं वावि रोगि त्ति, तेणं चोरि त्ति नो वए ॥१॥ ' अत एव एव भाषा शब्दसमा उक्तास्तथाहि-"हीलिअखिंसिअफरुसा, अलिआ तह गारहत्थिआ भासा । छट्ठी पुण उवघना-हिआणुप्पासमंजणी ॥१॥" इति तथा मृगयुभिः पृष्टस्यारण्ये मृगान् दृष्टवतो नैव मृगा दृष्टा इति तज्जन्तुघातहेतुत्वान्न तथ्यम् । तथा चोक्तं योगशास्त्रे—" न सत्यमपि भाषेत, परपीडाकरं वचः । लोकेऽपि श्रूयते यस्मात्, कौशिको नरकं गतः ॥ १ ॥ इति ।

घ०३ अधि०। आचा०। (सत्यवचने कालिकाचार्योदाहरणम् 'उम्मग्गदेसणा' शब्दे द्वितीयभागे ८४५ पृष्ठे उक्तम्।) अहोरात्रस्य दशमे मुहूर्त्ते, स० ३० सम०। (सत्योऽसत्य—श्चेति चत्वारि पुरुषजातानि 'पुरिसजाय' शब्दे पञ्चमभागे १०१८ पृष्ठे दर्शितानि।)

सार्च–त्रि०। सपूज्ये, अवितथे, जगत्पूजास्पदत्वात्तस्य। ध० ३ अधि०। प्रश्न०।

दृश—धा०। प्रेक्षणे, प्रा०। "दृशो निअच्छ-पेच्छावयच्छा-वयज्झ-वज्ज-सच्च-देक्खौअक्खावक्खावअक्ख—पुलोअ-पुलअ-निआवअास-पासा." ॥ ८। ४। १८१॥ अनेन दृशे स्थाने सच्चादेशः। सच्चइ। पश्यति। प्रा०। (सत्यं केन सह वक्तव्यम् इति 'भरह' शब्दे पञ्चमभागे १४१६ पृष्ठे गतम्।)

सच्चइ–सत्यकि–पुं०। निर्ग्रन्थीपुत्रे, स्था० ६ ठा० ३ उ०। (तस्य वक्तव्यता 'णियंठिपुत्त' शब्दे चतुर्थभागे २०८६ पृष्ठे कथिता।) यो हि द्वादशस्तीर्थकृद् भविष्यति। स०। ती०। स्पर्शलोलुपे स्वनामख्याते पुत्रे आचा० १ श्रु० ३ अ० १ उ०।

सच्चउर–सत्यपुर–न०। जम्बूद्वीपे भरतक्षेत्रे मरुमण्डले स्वनामख्याते नगरे, ती०।

"पणमिय सिरिवीरजिणं, देवं सिरिबंभसंतिकयसेवं।
सच्चउरतित्थकप्पं, जहासुअं किं पि जंपेमि॥ १॥
सिरिनाहडनरवई, कारिअ जिणभवणिदेसदारुमए।
तेरसवच्छरसइए, वीरजिणो जयउ सच्चउरे॥ २॥"

इहेव जंबुद्दीवे दीवे भारहे वासे मरुमंडले सच्चउरं नाम नयरं, तत्थ नाहडकारियं सिरिजज्जिगसूरिगणहरपइट्ठियं पित्तलमयं सिरिवीरबिंबं चेइहरे अच्छइ। कहं नाहडराइणा तं कारिअं ति। तस्स उप्पत्ती भएणइ। पुव्विं नड्डूलमंडलमडणमडोवरनयरस्स सामिं रायाणं बलवंतेहिं दाइएहिं मारिऊण तं नयरं अहिट्ठिय। तस्स रएणो महादेवी आवएणसत्ता पलाइत्ता बंभाणपुरं पत्ता। तत्थ य सा सयललक्खणसंपुएणं दारयं पसूआ। तओ नयरीए बाहिं एगत्थ रुक्खे तं बालयं झोलिआगयं ठावित्ता सयं तप्पासए ठिया। किंचि कम्मं काउमाढत्ता। तत्थ य देवजोगेण समागया सिरिजज्जिगसूरिणो तरुच्छायं अपरावत्तमाणिं दट्ठूण एस पुएणवंतो भावि त्ति कलिऊण चिरं अवलोइंता अच्छिआ। तीए रायपत्तीए आगंतूण भणिआ सूरिणो—भयवं! किं एस दारओ कुलक्खणो कुलक्खयकरो दीसइ?। सूरिहिं वुत्तं—भद्दे! एस महापुरिसो भविस्सइ, ता सव्वपयत्तेण पालणिज्जो। तओ सा अणुकंपाए चेइहरचिंताकरणे निउत्ता। गुरूहिं सो अ दारओ कयनाहडनामो गुरुमुद्दाओ पंचपरमेट्ठिनमोक्कार सिक्खिउं सो अ चवलत्तेण गहिअधणुसरो अक्खयपट्टयस्स उवरिं आगच्छइत्त मूसए अमूढलक्खो मारेइ। तओ सावएहिं चेइहराओ निक्कालिओ। जणाणं गावीओ रक्खेइ। अन्नया केण वि जोगिणा पुरबाहिरे भमंतेण सो दिट्ठो। बत्तीसलक्खणधरो त्ति विन्नासिओ। तओ तेण सुवएणपुरिससाहणत्थं तमणुगच्छंतेण तस्स मायरं अणुएणविअ तत्थेव ठिई कया। तओ अवसरं तेण जोगिणा भणिओ नाहडो, जत्थ गावीरक्खणाइं कुणंतो रत्तदुद्धं कुलिसतरुं पाससि तत्थ चिएहं काऊण ममं कहिज्जासि। बालेण तह त्ति पडिवएणं। अन्नया दिव्वजोएण तं दट्ठूण जाणाविअं। जोगिणो दो वि गया तत्थ। तओ लहुत्तविहाणेण अग्गि पज्जालिऊण तं रत्तक्खीरं तत्थ पक्खिवित्ता जोगिम्मि पयाहिएं दिंतो, नाहडेणावि पयक्खिणीकओ अग्गी। कहिं चि जोगिणो दुट्ठचित्तवित्ति नाऊण रायपुत्तेण सुमरिओ पंचनमुक्कारो' तप्पभावेण जोगी अप्पहवंतो उक्खिविअ जलणे खित्तो नाहडेण, जाओ सुवएणपुरिसो। तओ चिंतिअं तेण अहो मंतस्स माहप्पं। कहं नु तेसिं गुरूणं पयस्स दायगाणं पच्चुवयरिस्सामि त्ति आगंतुं पणया गुरुणो, सव्वं च तं सरूवं विएणत्तं। किंच आइसह त्ति भणियं, गुरुवयणाओ उत्तुगाइं चउवीसं चेइआइं कारिआइं कमेण पत्तो पउरं रज्जसिरिसंभारेण गंतुं गहिअं पेइयं सट्ठाणं। अन्नया विन्नत्ता सिरिजज्जिगसूरिणो तेण, जहा भगवंतं किंवि कज्जं आइसह जेण तुज्झाणं मज्झ य कित्ती चिरकाले पसरइ त्ति। तओ गुरूहिं घणू चउहिं थणेहिं जत्थ खीरं झरइ तं भूमिं अब्भुदयकरं नाऊण तं ठाणं दंसिअ रएणो। तेण गुरुआएसेणं सच्चउरे वीरमुक्खाओ छव्वी ससएहिं महंतं कारिअं अब्भंलिहसिहरं चेइअं। तत्थ पइट्ठाविआ पित्तलमई सिरिमहावीरपडिमा जज्जिगसूरिहिं। जया पइट्ठाकरणत्थं आयरिया पट्ठिआ तया अंतराले एगम्मि उत्तमलग्गे वहनामे नाहडरायपुव्वपुरिसस्स विंदझरायस्स आसाढरूढस्स मुत्तीए पइट्ठा कया। वीरम्मि लग्गे लग्गविसेसाउ मइच्च महीए जायाए संखनामचिल्लएणं गुरुआएसाओ दंडघाएण कूवओ कओ अज्ज वि संखकूवओ भएइ। सो अएणया सुक्को वि वइसाहपुएिणमाए पाणिएण भरिज्जइ। तइए लग्गे वीरसामी पइट्ठिओ। जम्मि य लग्गे वीरस्स पइट्ठा कया तम्मि चेव लग्गे दुग्गासूअग्गामे वयणए गामे च दुन्नि वीरपडिमाओ साहुसावयहत्थाए सिअवासेहिं पइट्ठियाओ। तं च वीरपडिमं निच्चमच्चइ राया। एवं नाहडएण जं बिंबं कारिअं तं च बंभसंतिजक्खेण सन्निहिअपाडिहेरेण अहोनिसिं पज्जुवासिज्जइ। सो अ पुव्विं घणदेवसिट्ठिणो वसहो आसि, तेण वेगवईए नदीए पंचसयसगडभरो कड्ढिओ। सो तुट्ठो, तओ सिट्ठिणा चारिजलाऽऽइहेउं वेयणं दाऊण वद्धमाणगामवासिलोआणं समप्पिय। त य गामिल्लया गहियरिच्छा तस्स वसहस्स चिंतं पि न कुएति, तओ सो अकामनिज्जराए मरिऊण वंतरेसु सूलपाणिनामा जक्खो जाओ। विभंगनाणे पउंजिय विन्नाय पुव्वजम्मवइरो तम्मि गामे वद्धमच्छरो मारिं विउव्वेइ। तओ अ इमाणो गामो एहाउ कयबलिकम्मो धूअकडुच्छुअहत्थो भणइ जस्स देवस्स दाणवस्स वा अम्हेहिं किं पि अवरद्धं सो मरिसेउ त्ति। तओ तेण जक्खेण पुव्वभववसहस्सवुत्तंतो कहिओ। तस्स वसहस्स अट्ठिपुंजोवरिं देउल लोएहिं कया। तस्स पडिमा कारिया इंदसम्मो देव व्व उट्ठिओ। तओ सो वद्धमाणगामो अट्ठिअगामो त्ति पसिद्धो। जायं सिवं। कमेण दूइज्जतगताव ससओ भयव वद्धमाणसामी छउमत्थविहारेण विहरता वा-

सारत्ते तत्थ गामे पत्तो । गाममणुप्पविसिअ तत्थेव देवउले रय-णीए काउस्सग्गे ठिओ । तेण मिच्छादिट्ठिणा सुरेण भीमट्टहा-सहत्थिपिसायनागरूवेहिं उवसग्गित्ता सिरकण्णनासादंतनह-त्थिपिट्ठिवियणाओ विउव्वियाओ। सव्वहा भयवं तमक्खोभ नाऊण सो उवसंतो गीयनट्टथुइमाईहिं पज्जुवासेइ । तप्पभिइ तस्स जक्खस्स बंभसंति त्ति नामं रूढं । सो य सच्चउरवीर-चेइए पइट्ठाविसेसेण निवेसइ । इओ अ गुज्जरधराए पच्छिम-भागे वलहि त्ति नयरी रिद्धिसमिद्धा । तत्थ सिलाइच्चो नाम राया । तेण य रयणजडियकंकसीलुंद्धएण रंकओ नाम सिट्ठी प-राभूओ । सो अ कुविओ तन्निग्गहणत्थं गज्जणवइहम्मीरस्स पभूअं धणं दाऊण तस्स महंतं सेन्नं आणेइ । तम्मि अवसरे वलहिओ चंदप्पहसामिपडिमा अंबखित्तवालजुत्ता अहि-ट्ठायगबलेणं गयणपहेण अंबपट्टणं गया । रहाहिरूढा य दे-वयाबलेणं वीरनाहपडिमा अदिट्ठवत्तीए संचरन्तीए आसो-यपुण्णे सिरिमालपुरमागया । अण्णे वि साइसया देवा जहोचियं ठाणं गया । पुरदेवयाए सिरिवद्धमाणसूरीणं उ-प्पाओ जाणविओ । जत्थ भिक्खालद्धं खीरं रुहिरं होऊण पुण खीरं होहिइ तत्थ साहूहिं ठायव्व ति । तेण य सेन्नेण विक्कमाओ अट्ठहिं सएहिं पणयालेहिं वरिसाणं गएहिं वलहिं भजिऊण सो राया मारिओ । गओ सट्ठाणं हम्मीरो,तओ अ-ण्णया अन्नो गज्जणवई गुज्जरं भजिउं तओ चलतो पत्तो स-च्चउरे दससयइक्कासीए विक्कमवरिसे मिच्छराओ । दिट्ठं तत्थ मणोहरं वीरभवणं पविट्ठो हणहण त्ति । तओ गयउरजुत्तित्ता वीरसामी ठाणा उ तसमित्तं पि न चलिओ सट्ठाणाओ । त-ओ वइल्लेसु जुत्तिएसु पुव्वभववरागेण बंभसंतिणा अंगुलच-उक्कं चालिओ सय इक्कत्ते वि गज्जणवइम्मि निव्वलीहोउ ठिओ जगनाहो जाओ । विलक्खो मिलक्खुनाहो । तओ घणवाएहिं ताडिओ सामी।लग्गति घाया ओरोहसुंदरीणं । तओ खग्गप-हारेसु विहलीभूएसु मच्छरेणं तुरक्केहिं वीरस्स अंगुली कट्टि-आ।त गहिऊण य ते पट्ठिआ । तओ लग्गा पज्जलिओ तुरयाण पुच्छा लग्गा य वलिओ मिच्छाण पुच्छा। तओ तुरए छड्डित्ता पायचारिणो चेव पणट्ठा धम्म त्ति धरणीए पडिया । रहिमान सुमरंता विलवंता दीणखीणसव्वबला नहंगणे अदिट्ठवाणीए भणिया । एवं वीरस्स अगुली आणीता तुम्हेहिं जीवसंसए पडिआ , तओ गज्जणाहिवई विम्हिअमणो सीस धुणंतो मिल्लारे आइसइ, जहा-पयमगुलिं वलिऊण तत्थेव ठावह । तओ भीएहिं तेहिं पच्चाणीया सा लग्गा य सड त्ति सा-मिणो करे,तमच्छेरं पिच्छिय पुणो वि सव्वपुणं पि न मग्गं ति तुरक्का । तुट्ठो चउव्विहो समणसंघो वीरभवणे पूआ-महिमागीयनट्टवाइत्तदविणदाणेहिं पभावणं करेइ । अ-ण्णया बहुम्मि काले वोलीणे मालवाहिवइनरिंदो गुज्जरधर-भंजिऊण सच्चउरसामीए पहुत्तो । तओ बंभसंतिणा पउरं सिन्नं विउव्विऊण भजिओ तस्स बल । तस्स लद्धास आ-वासेसु उट्ठिओ वज्जग्गी । मालवाहिवई कोसओ कुट्टागारा-इ छड्डिय पणट्ठो कागणास । अह अन्नया तेरहसयअडयाले विक्कमसंवच्छरेण पबलेणं कप्पुरदलेणं देसंति भज्जन्ते न-यरे, गामेसु पलाणेसु, जिणभवणदुवारेसु ढंपिएसु, जोअ-णचउमज्झे बभसंतिमाइप्पेण अणाहयगाहिरस्सरं त-वक्क वज्जन्त सोऊण सिरिसामंदेवमहाराणो आगया स-किऊण भग्गं मुग्गलदलं । सच्चउरसामी वि न चलिओ । अ-तेरसमयछप्पणविक्कमवरिसे अल्लाउद्दीणसुरत्ताणस्स कणिट्ठो भाया लुक्खाननामधिज्जो ढिल्लीपुराओ मंतिमाहव-पेरिओ गुज्जरधरं पट्ठिओ । चित्तकूडाहिवई समरसीहेण दंड दाउं मेवाडदेसो तया रक्खिओ । तओ हम्मीरजुव राओ मेवाडदेसे मुहडासयाईं नयराणि य भंजिय आ-सावल्लीए पत्तो । कण्णदेवराओ अ नट्ठो । सोमनाहं च गण-घाएण भंजित्ता गड्ढे पक्खिविऊण ढिल्लीवामगउल्लीए गंतु मं-डलिकरणेण य दंडित्ता सोरट्ठं नियट्टाण पयट्टाविना आ-सावल्लीए आवासिओ । मढमंदिरदेवघरुलाईणि पज्जालेइ क-मेण सत्तसयदसं सपत्तो । तओ सच्चउरे नेहय अगाह— तेसु चक्केसु वज्जंतेसु मिलिच्छदलं पलाणं । एव अणेगाणि अवदाणाणि पुहवीमंडले सव्वओ वीरनाहस्स पभावाणि वुच्चंति । अह अलंघणिज्जा भवियव्वय त्ति दूसमकाल-विलसिएण कलिप्पिया वतरा हवंति । सोमसकलिरकुडिए अ भवणाओ दूरीभवंति देवयाउ त्ति,असंखिप्पिए पमत्ते अ-हिट्ठायगे बंभसंतिजक्खम्मि अलाउद्दीणेण रण्णा सो चेव अ णप्पमाहप्पो भयवं वीरसामी तेरसयसत्तसट्ठे विक्कमाइअ-संवच्छरे ढिल्लीए आणित्ता आसायणाभायणं कओ । का-लंतरेण पुणरवि पडिमंतरपायडए भावा पूआसिद्धो भवि-स्सइ । ' सच्चउरकप्पमय, निच्चं वायंतु महिमयं अमेय । वच्छिअफलसिद्धिकए, सिरिजिणपहसुरिणो भव्या ॥ १ ॥ ' इति श्रीसत्यपुरकल्प । ती० १६ कल्प ।

सच्चणेमि-सत्यनेमि-पुं० । समुद्रविजयस्य राज्ञः शिवादे— व्यामुत्पन्ने पुत्र, अन्त० । ( स चारिष्टनेमेरन्तिके प्रव्रज्य-शत्रुञ्जये सिद्ध इत्यन्तकृद्दशाना चतुर्थे वर्गे नवमे अध्ययने प्रत्यपादि । )

सच्चपइण्ण-सत्यप्रतिज्ञ-त्रि० । सत्यसन्धे , अङ्गीकृतपरिपा-लयितरि, आव० ४ अ० ।

सच्चपरक्कम-सत्यपराक्रम-त्रि० । निहितवीर्ये,उत्त०१८ अ० ।

सच्चपरूवय-सत्यप्ररूपक-त्रि० । अवितथदेशके, जीवा० १ अधि० ।

सच्चप्पभा-सत्यप्रभा-स्त्री० । सत्यभामानाम्न्यां कृष्णस्याग्र-महिष्याम् , स्था० ८ ठा० ३ उ० । ( सा च नेमेरन्तिके प्रव्र-ज्य सिद्धा । )

सच्चप्पभाव-सत्यप्रभाव-त्रि० । प्रत्यक्षतो दृश्यमानप्रभुत्वे , आ० ।

सच्चप्पवाय-सत्यप्रवाद-न० । सत्यं संयमो वचनं प्रकर्षेण सप्रपञ्चं वदन्ति यस्मिन् तत्सत्यप्रवादम् । पूर्वे, न०। सत्यप्रवाद नाम यत्र जनपदसत्यादि. प्रवदनमिति । दश० १ अ० । स० । तस्य पदपरिमाणमेका कोटी एकपदोना । स० १४७ सम० ।

सच्चप्पवायपुव्व-सत्यप्रवादपूर्व-न०।षष्ठे पूर्वगतश्रुतभेदे,स्था०

सच्चप्पवायपुव्वस्स णं दुवे वत्थू पण्णत्ता ।(सू० १०६)

'सच्चप्पवाये'त्यादि, सद्भ्यो जीवेभ्यो हित सत्य—स-यम सत्यवचन वा स यत्र सभेद सप्रतिपक्ष प्रकर्षे-णोच्यते अभिधीयते तत् सत्यप्रवाद तच्च तत् पूर्व च सत्य-

श्रुतात् पूर्वं क्रियमाणत्वादिति सत्यप्रवादपूर्वम् , तच्च षष्ठं, तत्परिमाणं च एका पदकोटी षट्पदाधिका,तस्य द्वे वस्तुनी वस्तु च तद्विभागविशेषोऽध्ययनादिवदिति । स्था० २ ठा० ४ उ० । स० ।

सच्चभाणु-सत्यभानु-पुं० । धर्म्मजिनेन्द्रस्य पितरि, ति० । ( समवायाङ्गे तु भानुरित्येव । )

सच्चभामा-सत्यभामा-स्त्री० । स्वनामख्यातायां कृष्णाग्रमहिष्याम् , आचा० १ श्रु० ४ अ० १ उ० ।

सच्चमंत-सत्यमन्त्र-पुं० । महत्यामप्यापदि अदीने, "सच्चं पधानं महंतीए वि आवदीए जो अदीणो भवति—सो सच्चमंतो" नि० चू० २ उ० ।

सच्चमणजोग-सत्यमनोयोग-पुं० । मनोयोगभेदे, कर्म्म० ४ कर्म० ।( 'मणजोग ' शब्दे षष्ठभागे ८४ पृष्ठेऽस्य व्याख्या द्रष्टव्या । )

सच्चमणप्पओग-सत्यमनःप्रयोग-पुं० । सद्भूतार्थचिन्तननिबन्धनस्य मनसः प्रयोगे , भ० ५ श० ४ उ० ।

सच्चरत-सत्यरत-त्रि० । सत्यप्रधाने, "अकोहणे सच्चरते तवस्सी ।" सूत्र० १ श्रु० १० उ० ।

सच्चरित-सच्चरित-त्रि० । सच्चरणे शोभनसंयमे , दर्श० ३ तत्त्व ।

सच्चवइजोग-सत्यवाग्योग-पुं० । वाग्योगभेदे,कर्म० ४ कर्म० । ( 'वइजोग' शब्दे षष्ठ भागे ७५८ पृष्ठे स्वरूपमस्य द्रष्टव्यम् ।)

सच्चवं-सत्यवत्-पुं० । त्रिंशत्तमेऽहोरात्रमुहूर्त्ते , चं० प्र० १० पाहु० ।

सच्चवई-सत्यवती-स्त्री० । दर्शनपुरे दन्तवक्रराजभार्यायाम् , आव० ४ अ० ।

सच्चवयण-सत्यवचन-न० । सद्भ्यो—मुनिभ्यो गुणेभ्यः पदार्थेभ्यो वा हितं सत्यम् । आह च—" सच्चं हियं सयामिह संतो मुणउ गुणा पयत्था वा" सत्यं च तद्वचनञ्च सत्यवचनम् । प्रश्न० २ संव० द्वार । यथार्थवचने , दर्श० । मृषावादविरतौ , औ० । रा० । स० । ( चतुस्त्रिंशत् सत्यवचनस्यातिशयाः 'अइसेस ' शब्दे प्रथमभागे ३१ पृष्ठे दर्शिताः । )

सच्चवाइ-सत्यवादिन्-पुं० । अविरुद्धवक्तरि , दश० ६ अ० ३ उ० ।

सच्चवाय-सत्यवाद-पुं० । सत्यो वादः सत्यवादः । तथ्यवादे, स्था० १० ठा० ३ उ० ।

सच्चविय-सत्यविद्वस्-पुं० । संयमपालके , पा० ।

सच्चवीरिय सत्यवीर्य-पुं० । अभिनन्दनजिनस्तावके, " तिन्नेव सयसहस्सा , अभिणंदणजिणवरस्स सीलाणं । सच्चवीरियथुयस्स , सिद्धतथा सवरसुयस्स ॥ " ति० ।

सच्चसंध-सत्यसन्ध-पुं० । सत्यप्रतिज्ञे , आव० ४ अ० । आ० म० ।

सच्चसंहणणबंध-सत्यसंहननबन्ध-पुं० । सर्वेण सर्वस्य संहननलक्षणो बन्धः क्षीरनीरादीनामिवेति । सत्यसंहननबन्धभेदे, भ० ८ श० ६ उ० ।

सच्चसेण-सत्यसेन-पुं० । ऐरवतवर्षे भविष्यति त्रयोदशे जिने, प्रव० ७ द्वार ।

सच्चसेव-सत्यसेव-त्रि० । सेवायाः सफलीकरणात् । सेवाफलदे, ज्ञा० १ श्रु० १ अ० ।

सच्चा-सत्या-स्त्री० । भाषाभेदे, विशे० । ( अत्रत्या व्याख्या 'भासा' शब्दे पञ्चमभागे गता । )

सच्चामोस-सत्यामृषा-अव्य० । यत्र किञ्चित्सत्यं किञ्चिन्मृषेति मिश्रभाषायाम् , आचा०२ श्रु० १ चू०४ अ० १ उ० । औ० । दश० । (सत्यामृषावक्तव्यता 'भासा' शब्दे पञ्चमभागे १५२३ पृष्ठे द्रष्टव्या ।) ( ' सच्च ' शब्देऽस्मिन्नेव भागे सूत्रं गतम् । )

अथ तृतीयाया दश भेदाः, यथा—

" उप्पन्न १ विगय २ मीसग ३,
जीव ४ अजीवे अ ५ जीवअज्जीवे ६ ।
तह मीसिया अणंता ७,
परित्त ८ अद्धा य ९ अद्धद्धा १० ॥ १ ॥ "

अत्र मिश्रिताशब्दस्य प्रत्येकं योगादुत्पन्नमिश्रिता इत्यादि द्रष्टव्यम् , ततश्च—उत्पन्नमिश्रिताऽनुत्पन्नैः सह संख्यापूरणार्थं यया सा उत्पन्नमिश्रिता । एवमन्यत्रापि यथायोगं भाव्यम् । तत्रोत्पन्नमिश्रिता क ?, यथा—कस्मिंश्चिद् ग्रामे न्यूनेष्वधिकेषु वा दारकेषु जातेषु दश दारका अत्राद्य जाता इत्यादि व्यवहरतः सत्याऽसत्या एव, श्वस्ते शतं दास्यामीत्युक्त्वा पञ्चाशत्यपि दत्ते लोके मृषात्वादर्शनात् अनुत्पन्नांशे च मृषात्वव्यवहारात् ,१ । एवं मरणकथा विगतमिश्रिता २ । अकृतनिश्चये जातस्य मृतस्य च कृतपरिणामस्याभिधाने मिश्रकमिश्रिता उत्पन्नविगतमिश्रितेत्यर्थः, यथा—अद्य दश जाता मृताश्चेति ३ । तथा बहूनां जीवानां स्तोकानां च मृतानां शङ्खशङ्खनकादीनामेकत्र राशौ दृष्टे जीवराशिरयमिति भाषणं जीवमिश्रिता ४ । एवं प्रभूतेषु मृतेषु स्तोकेषु च जीवत्सु अजीवराशिरिति वाक्यम् ५ । तथा तस्मिन्नेव राशौ अकृतनिश्चये एतावन्तो जीवन्त एतावन्तश्च मृता इति अवधारणवाक्यं च जीवाजीवमिश्रिता ६ । तथा मूलकादि अनन्तकायं तस्यैव सत्कैः परिपाण्डुपत्रैरन्येन वा केनचिद्वनस्पतिना मिश्रं विलोक्य सर्वोऽप्येष अनन्तकाय इति वदतोऽनन्तमिश्रिता ७ । एवं प्रत्येकमनन्तेन सह दृष्ट्वा सर्वोऽपि प्रत्येक इति वदतः प्रत्येकमिश्रिता ८, अद्धा—कालः स चेह प्रस्तावात् दिवसो रात्रिर्वा गृह्यते, सा मिश्रिता यया साऽद्धामिश्रिता यथा कश्चित् कञ्चन त्वरयन् दिवसेऽपि रात्रिर्जातेति वदति ९, तथा दिवसस्य रात्रेर्वा एकदेशोऽद्धाद्धा सा मिश्रिता यया साऽद्धाद्धामिश्रिता , यथा प्रथमपौरुष्यामेव त्वरयमाणः कञ्चन वक्ति—शीघ्रो भव, मध्याह्नो जात इति १० । ध० ३ अधि० ।

सच्चावाइ-सत्यावादिन्-पुं० । सत्यं वदितुं शीलमस्येति स-

त्यवादी । सत्यवदनशीले, आचा० १ श्रु० ८ अ० १ उ० ।

सच्चाहिट्ठिय-सत्याधिष्ठित-त्रि० । सत्येनावितथभावेनाधिष्ठित —समाश्रितः सत्याधिष्ठितः । सत्यवचनव्याप्ते, पा० ।

सच्चिदाणंद-सच्चिदानन्द-पु० । सत्—शुभ शाश्वतं वा चित्-ज्ञानं तस्य य आनन्दः । सुखप्रकाशरूपे ब्रह्मणि, अष्ट० १ अष्ट० ।

सच्चोवाय-सत्यावपात-त्रि० । सफलसेवे, ज्ञा० १ श्रु० ८ अ० । भ० । सत्याभिलापे, औ० ।

सच्छंद-स्वच्छन्द-त्रि० । स्वम्-आत्मीयं छन्दः-अभिप्रायो यस्याऽसौ । व्य० १ उ० । स्वाभिप्राये,आ० म० १ अ० । नं० । आव० । प्रव० । अनु० । ज्ञा० । आत्मच्छन्दसि, व्य० ६ उ० । स्ववशे, विपा० १ श्रु० २ अ० । ज्ञा० । अनु० । सुरुचौ, स० ।

सच्छंदचारि-स्वच्छन्दचारिन्-त्रि० । कामरूपिणि, आ० म० १ अ० ।

सच्छंदमइ-स्वच्छन्दमति-त्रि० । स्वच्छन्दा-स्ववशा स्ववशे वा मतिरस्येति-स्वच्छन्दमतिः । निरर्गलबुद्धौ,विपा० १ श्रु० २ अ० । प्रव० । ज्ञा० ।

सच्छंदया-स्वच्छन्दता-स्त्री० । स्वाभिप्रायेण वर्त्तितायाम्, व्य० १ उ० ।

सच्छंदयारिन्-स्वच्छन्दचारिन्-त्रि० । स्वच्छन्देन-स्वाभिप्रायेण न तु जिनाज्ञया चरतीति स्वच्छन्दचारी । यथाछन्दे, ग० २ अधि० ।

सच्छंदविगप्पिय-स्वच्छन्दविकल्पित-त्रि०।स्वच्छन्देन स्वाऽभिप्रायेण विकल्पितम् । स्वेच्छाकल्पिते, व्य० १ उ०।सघा०।

सच्छत्त-सच्छत्र-त्रि० । छत्रेण सहिते, स० ३४ सम० । जी० । औ० ।

सच्छाय(ह)-सच्छाय-त्रि० । सती-शोभना छाया निर्मलस्वरूपा येषां ते।रा० ।"छायाया होऽकान्तौ वा" ॥८। १ । २४६॥ अनेनान्त्ययकारस्य वैकल्पिको हकारादेशः । सच्छायम् ।सच्छाहम् । प्रा० । जी० । शोभनच्छायेषु, जी० ३ प्रति० ४ अधि० ।

सजल-सजल-त्रि० । जलसम्पूर्णे, कल्प० १ अधि० ३ क्षण ।

सजसा-सयशस्-स्त्री० । शीतलजिनस्य प्रथमशिष्यायाम्, ति० ।

सजाईय-स्वजातीय-त्रि० । आत्मीयजातिविशिष्टे, आ० म० १ अ० ।

सजित्था-सजित्वा-अव्य० । शक्ति गृहीत्वेत्यर्थे, नि० चू० १ उ० ।

सजीव-सजीव-त्रि० । कोट्यारोपितप्रत्यञ्चे, ज्ञा० १ श्रु० १६ अ० । औ० । विपा० । मृतधात्वादीनां सहजस्वरूपापादने, ज० २ वक्ष० । स० । ज्ञा० ।

सजूह-स्वयूथ-पुं० । स्वकीयनिकाये,प्रश्न० १ आश्र० द्वार ।

सजोग-सयोग-त्रि० । संसारिणि,स्था० २ ठा० ४ उ० । मनोवाक्कायात्मकैर्योगैः सह वर्त्तमानेषु, नं० ।

संजोगि(ण्)-सयोगिन्-त्रि० । सह योगैः कायव्यापारादिभिर्यः स सयोगी । स्था० २ ठा० १ उ०। सह योगेन वर्त्तन्ते ये ते संयोगा मनोवाक्कायाः ,ते यस्य विद्यन्ते स सयोगी । पं० सं० २ द्वार । मनोवाक्कायात्मकैर्योगैर्वर्त्तमाने, नं० ।

सजोगिकेवलिगुणट्ठाण-सयोगिकेवलिगुणस्थान-न०। त्रयोदशे गुणस्थाने,कर्म० । योगो वीर्यं शक्तिरुत्साहः पराक्रम इति पर्यायाः ,स च मनोवाक्कायलक्षणकरणभेदात्त्रिधा संज्ञा लभते, मनोयोगो वाग्योगः काययोगश्चेति । तथा चोक्तं कर्मप्रकृतौ-"परिणामालंबणगहण-साहणं तेण लद्धनामतिगं । कज्जब्भासान्नुन्न-प्पवेसविसमीकयपएसं ॥१॥ " तत्र भगवतो मनोयोगो मनःपर्यायज्ञानिभिरनुत्तरसुरादिभिर्वा मनसा पृष्टस्य सतो मनसैव देशनात् , ते हि भगवत्प्रयुक्तानि मनोद्रव्याणि मनःपर्यायज्ञानेनावधिज्ञानेन वा पश्यन्ति, दृष्ट्वा च ते विवक्षितवस्त्वाकारान्यथानुपपत्त्या लोकस्वरूपादिबाह्यमर्थमवगच्छन्तीति वाग्योगो,धर्मदेशनादौ काययोगो निमेषोन्मेषचङ्क्रमणादौ । ततोऽनेन योगत्रयेण सह वर्तते इति सयोगी । "सर्वादेरिन्" इतीनप्रत्ययः । केवलं-केवलज्ञानं केवलदर्शनं च विद्यते यस्य स केवली । सयोगी चासौ केवली च सयोगिकेवली तस्य गुणस्थानं सयोगिकेवलिगुणस्थानम् । कर्म० २ कर्म० । प० सं० । आ० चू० । प्रव० । दर्श० ।

सजोगिभवत्थकेवलनाण-सयोगिभवस्थकेवलज्ञान-न०।सह योगैः कायव्यापारादिभिर्यः स सयोगी इन् समासान्तत्वात् स चासौ भवस्थश्च तस्य केवलज्ञानमिति विग्रहः । कायव्यापारसहितस्य भवस्थस्य केवलज्ञाने, स्था० ।

सजोगिभवत्थकेवलणाणे दुविहे पण्णत्ते, तं जहा-पढमसमयसजोगिभवत्थकेवलणाणे चेव,अपढमसमयसजोगिभवत्थकेवलणाणे चेव । अहवा—चरिमसमयसजोगिभवत्थकेवलणाणे चेव , अचरिमसमयसजोगिभवत्थकेवलणाणे चेव । ( सू० ७१+ )

' सयोगी ' त्यादि प्रथमः समयः सयोगित्वे यस्य स तथा एव प्रथमा—द्यादिसमयो यस्य स तथा, शेषं तथैव । 'अथवे ' त्यादि चरमः अन्त्यः —समयो यस्य सयोगित्वस्थाया स तथा, शेषं तथैव । स्था० २ ठा० १ उ० ।

सजोणिय—सयोनिक-त्रि० । सह योन्या उत्पत्तिस्थानेन वर्तन्ते इति सयोनिकाः । संसारिषु , स्था० २ ठा० १ उ० ।

सजोति-सज्योतिष्-त्रि० । सह ज्योतिषा—उद्द्योतेन वर्तत इति सज्योतिः । साग्निके,सूत्र०१ श्रु०५ अ० १ उ० ।सज्योति -साग्निकमित्यर्थः । दश० ८ अ० २ उ० ।

सज्ज-सज्ज-त्रि० । प्रगुणीभूते, ज्ञा० १ श्रु० १८ अ० । औ० ।

सद्यस्—अव्य० । शीघ्र, सातु० । तत्काले वृ० १ उ०३ प्रक०।

सर्ज—पु० । वृक्षविशेषे, ज्ञा० १ श्रु० १८ अ० । जि०।कल्प० ।

षड्ज-त्रि०।षड्भ्यो जातः षड्जः । अनु० । " ष-स-द-उ-त-ह-प-श-ष-स", -द-, पाकृते लुक्" ॥८। २ । ७७॥ अनेनात्र दकारस्य लुक् । सज्जो । षड्जः । प्रा० । स्वरभेदे,"नासाकण्ठमुरस्तालु-जिह्वादन्तांश्च संश्रितः । षड्भिः सञ्जायते

यस्मा-त्तस्मात् षड्ज इति स्मृत." ॥ १ ॥ अनु० । ('सर' शब्दे सर्वा वक्तव्यतां वक्ष्यामि ।)

सज्जइ—सद्यति—पुं० । सत्साधौ , षो० १२ विव० ।

सज्जण—सज्जन-पुं० । "अन्त्यव्यञ्जनस्य" ॥ ८।१।११ ॥ इति जकारस्य लुक् । सज्जनः । सज्जणो । प्रा० । विशिष्टलोके, प्रश्न० ३ आश्र० द्वार ।

नाम सज्जन इति त्रिवर्णकं,
कर्णकोटरकुटुम्बि चेद्भवेत् ।
नोल्लसन्ति विपशक्तयस्तदा,
दिव्यमन्त्रनिहताः खलोक्तयः ॥ १ ॥
स्याद्बली बलमिह प्रदर्शयेत् ,
सज्जनेषु यदि सत्सु दुर्जनः ।
किं बलं नु तमसोऽपि वर्ण्यते ,
यद्भवेदसति भानुमालिनि ॥ २ ॥
दुर्जनस्य रसना सनातनीं ,
संगतिं न परुपस्य मुञ्चति ।
सज्जनस्य तु सुधातिशायिनः ,
कोमलस्य वचनस्य केवलम् ॥ ३ ॥
या द्विजिह्वदलनाद्यनादरा-
द्याऽऽत्मनीह पुरुषोत्तमस्थितिः ।
याऽप्यनन्तगतिरेतयेष्यते ,
सज्जनस्य गरुडानुकारिता ॥ ४ ॥
सज्जनस्य विदुषां गुणग्रहे,
दूषणे निविशते खलस्य धीः ।
चक्रवाकदृगहर्पतेर्द्युतौ ,
घूकदृक् तमसि सङ्गमञ्चति ॥ ५ ॥
दुर्जनैरिह सतामुपक्रिया ,
तद्वचो विजयकीर्तिसंभवात् ।
व्यातनोति जिततापविप्लवां ,
वह्निरेव हि सुवर्णशुद्धताम् ॥ ६ ॥
या कलङ्किवसनेन सचया,
या कदापि न भुजङ्गसङ्गता ।
गोत्रभित्सदसि या न सासतां,
वाचि काचिदतिरिच्यते सुधा ॥ ७ ॥
दुर्जनोद्यमतपर्तुपूर्तिजा,
तापतः श्रुतलता चयं व्रजेत् ।
नो भवेद्यदि गुणाम्बुवर्षिणी,
तत्र सज्जनकृपातपात्ययः ॥ ८ ॥
तन्यते सुकविकीर्तिवारिधौ ,
दुर्जनेन वडवानलव्यथा ।
सज्जनेन तु शशाङ्ककौमुदी ,
सङ्गरङ्गवदहो महोत्सवः ॥ ९ ॥
यद्यनुग्रहपरं सतां मनो ,
दुर्जनात् किमपि नो भयं तदा ।
सिंह एव तरसा वशीकृते ,
किं भयं भुवि शृगालबालकात् ॥ १० ॥
खेदमेव तनुते जडात्मनां ,
सज्जनस्य तु मुदं कवेः कृतिः ।
स्मेरता कुवलयेऽब्जपीडनं,
चन्द्रभासि भवतीति हि स्थितिः ॥ ११ ॥
न त्यजन्ति कवयः श्रुतश्रमं,
संमुदैव खलपीडनादपि ।
स्वोचिताचरणबद्धवृत्तयः,
साधवः शमदमक्रियामिव ॥ १२ ॥
नव्यतन्त्ररचनं सतां रते-
स्त्यज्यते न खलखेदतो बुधैः ।
नैव भारभयतो विमुच्यते,
शीतरक्षणपटीयसी पटी ॥ १३ ॥
आगमे सति नवः श्रमो मदा-
श्च स्थितेरिति खलेन दूष्यते ।
नौरिवेह जलधौ प्रवेशकृत् ,
सोऽयमित्यथ सतां सदुत्तरम् ॥ १४ ॥
पूर्वपूर्वतनसूरिहीलना,
नो तथापि निहतेति दुर्जनः ।
तातवागनुविधायिबालव-
न्नेयमित्यथ सतां सुभाषितम् ॥ १५ ॥
किं तथापि पलिमन्थमन्थरै-
रत्र साध्यमिति दुर्जनोदिते ।
स्वान्ययोरुपकृतिर्नवा मति-
श्चेति सज्जनयोक्तिरर्गला ॥ १६ ॥
सप्रसङ्गमिदमाद्यविंशिको-
पक्रमे मतिमतोपपादितम् ।
चारुतां व्रजति सज्जनस्थिति-
र्नीचतासु नियतं खलोक्तिषु ॥ १७ ॥
न्यायतन्त्रशतपत्रभानवे,
लोकलोचनसुधाञ्जनत्विषे ।
पापशैलसतकोटिमूर्त्तये,
सज्जनाय सततं नमो नमः ॥ १८ ॥
भूषिते बहुगुणे तपागणे,
श्रीयुतैर्विजयदेवसूरिभिः ।

भूमिसूरितिलकैरपि श्रिया,
पूरितैर्विजयसिंहसूरिभिः ॥ १६ ॥
धामभास्वदधिकं निरामयं,
रामणीयकमपि प्रसूत्वरम् ।
नाम कामकलशातिशायिना,
मिष्टपूर्तिषु यदीयमश्नुति ॥ २० ॥
यैरुपेत्य विदुषां सतीर्थ्यतां,
स्फीतजीतविजयाभिधानताम् ।
धर्मकर्म विदधे जयन्ति ते,
श्रीनयादिविजयाभिधा बुधाः ॥ २१ ॥
उद्यतैरहमपि प्रसद्य तै-
स्तर्कतन्त्रमधिकाशि पाठितः ।
एष तेषु धुरि लेख्यतां ययौ,
सद्गुणस्तु जगतां सतामपि ॥ २२ ॥
येषु येषु तदनुस्मृतिर्भवे-
त्तेषु धावति च दर्शनेषु धीः ।
यत्र यत्र मरुदेति लभ्यते,
तत्र तत्र खलु पुष्पसौरभम् ॥ २३ ॥
तद्गुणैर्मुकुलितं रवेः करैः,
शास्त्रपद्ममिह मन्मनोहृदात् ।
उल्लसन्नयपरागसंगतं ,
सेव्यते सुजनषट्पदव्रजैः ॥ २४ ॥
निर्गुणो बहुगुणैर्विराजितां
स्तान् गुरूनुपकरोमि कैर्गुणैः ।
वारिदस्य ददतो हि जीवनं,
किं ददातु बत चातकार्भकः ॥ २५ ॥
प्रस्तुतश्रमसमर्थितैर्नयै-
र्योग्यदानफलितैस्तु तद्यशः ।
यत्प्रसर्पति सतामनुग्रहा—
देतदेव मम चेतसो मुदे ॥ २६ ॥
आसते जगति सज्जनाः शतं ,
तैरुपैमि नु समं कमज्ञमा ।
किं न सन्ति गिरयः परः शता ,
मेरुरेव तु बिभर्तु मेदिनीम् ॥ २७ ॥
तत्पदाम्बुरुहषट्पदः स च,
ग्रन्थमेनमपि मुग्धधीर्व्यधाम्
यस्य भाग्यनिलयोऽजनि श्रियां,
सद्म पद्मविजयः सहोदरः ॥ २८ ॥
सन्त एव मृदुबुद्धयश्च ये ,
तेष्वतोऽप्युपकृतिश्च भाविनी ।
किं च बालवचनानुभाषणा-
नुस्मृतिः परमबोधशालिनाम् ॥ २६ ॥
अत्र पद्यमपि पाङ्क्तिकं क्वचि—
द्वर्तते च परिवर्तितं क्वचित् ।
स्वान्ययोः स्मरणमात्रमुद्दिशं-
स्तत्र नैव तु जनोऽपराध्यति ॥ ३० ॥
ख्यातिमेष्यति परामयं पुनः,
सज्जनैरनुगृहीत एव च ।
किं न शङ्करशिरोनिवासतो ,
निम्नगा सुविदिता सुरापगा ॥ ३१ ॥

यत्र स्याद्वादविद्या परमततिमिरध्वान्तसूर्यांशुभारा, निस्ताराज्जन्मसिन्धोःशिवपदपदवीं प्राणिनो यान्ति यस्मात्। अस्माकं किं च यस्माद्भवति शमरसैर्नित्यमाकण्ठतृप्ति, जैनेन्द्रं शासनं तद्विलसति परमाऽऽनन्दकन्दाम्बुवाहः ॥ ३२ ॥ द्वा० ३२ द्वा० ।

सज्जमरण–सद्योमरण–न० । तात्कालिकमरणे, आव० ४ अ०।

सज्जमाण–सज्जमान–त्रि० । सङ्गम कुर्वति, सूत्र० १ श्रु० १ अ० । आसक्तिं कुर्वति, सूत्र० १ श्रु० ७ अ० । नि० चू० । "स-ज्जमाणेहि विणिग्घायमाणाहिं" आचा० २ श्रु० ३ चू० ।

सज्जम्मदरिद्द–सज्जन्मदरिद्र–पुं० । आजन्मदरिद्रे, महा०२ चू० ।

सज्जा–शय्या–स्त्री० । शेरतेऽस्यामिति शय्या । प्रव० १०१ द्वार । वसतौ, आव० ४ अ० । शयने, स्था० ४ ठा० २ उ० । यक्षशालादिरूपायां वसतौ, स० २० सम० । प्रव० ।

संज्ञा–स्त्री० । "ज्ञो ञः" ॥८। २ । ८३ ॥ अनेनात्र सम्बन्धिनस्य ञकारस्य वैकल्पिको लुक् । सज्ञा । सण्णा । ज्ञाने, प्रा० २ पाद ।

सज्जिय–सज्जित–त्रि० । निष्पादिते, जी० ३ प्रति ४ अधि० । वितानिते, औ० ।

सज्जोग–सद्योग–पुं० । सद्धर्मपरायणे, षो० ६ विव० ।

सज्जोगविग्घवज्जणया–सद्योगविघ्नवर्जनता–स्त्री० । सन्तश्च ते योगाश्च धर्मव्यापाराः स्वाध्यायध्यानादयस्तेषु विघ्न उपरोधो विघातस्तस्य वर्जना । सद्योगापरिहारे,पञ्चा०४ विव०। षो०।

सज्जोगावंचग–सद्योगावञ्चक–पुं० । " सद्भि कल्याण-सम्पन्नै-र्दर्शनादपि पावनैः । तथाऽऽदर्शनतो योग,आद्यो वञ्चक उच्यते ॥१॥ ' इत्युक्तलक्षणे प्रथमवञ्चकयोगे, षो० ६ विव० ।

सज्झ–साध्य–त्रि० । "साध्वस-ध्य-ह्यां झः ॥ ८ । २६ ॥ इति ध्यस्य झः । सज्झ । प्रा० । शक्ये, त्रि० । नियतस्वस्वभावे, सा० म० १ अ० । अनुमानतः साध्ये,रत्ना० ३परि०। (अत्र-या ख्या पक्षव्यता 'हेउ' शब्दे अनिनेव भागे वक्ष्यते । )

अनुद्दिष्टं कस्मान्न पठ्यते ? तत्राह-

बहुमाणविणयआउ-त्तताति उद्देसतो गुणा होंति ।
पढमो एसो सव्वो, एत्तो वुच्छं चरणकालं ॥ २०० ॥

उद्देशे हि क्रियमाणे श्रुतस्य-श्रुताधारस्य वा अध्यापकस्योपरि बहुमानमान्तरः प्रीतिविशेषो भवति, विनयश्च प्रयुक्तः स्यात्, आयुक्तता च महती भवति, एते उद्देशतो गुणा भवन्ति । एष सर्वोऽप्यङ्गादिविषय उद्देशः-प्रथमोद्देशः, अत ऊर्द्ध्वं तु स्वाध्यायकरणकालं वक्ष्ये ।

प्रतिज्ञातमेव निर्वाहयति-

थयथुइधम्मक्खाणं, पुव्वुद्दिट्ठं तु होइ संझाए ।
कालियँकाले इयरं, पुव्वुद्दिट्ठं विगिट्ठे वि ॥ २०१ ॥

स्तवः—स्तुतिर्धर्माख्यानं वा पूर्वोद्दिष्टं संध्यायामपि पठनीयं भवति, कालिकं पुनः श्रुतं प्रथमायां पौरुष्यामुद्दिष्टं काले—प्रथमपौरुषीलक्षणे चरमपौरुषीलक्षणे च पठ्यते नाकाले । इतरत् उत्कालिकं प्रथमाया पौरुष्यामुद्दिष्टव्यतिकृष्टेऽपि काले संध्यायामस्वाध्यायिकं च वर्जयित्वा पठ्यते ।

पत्ताण समुद्देसो, अंगसुयक्खंधपुव्वसूरम्मि ।
इच्छा निसीहमादी, सेसादि ण पच्छिमादीसुं ॥२०२॥

अध्ययनमुद्देशं वा पठन्तो यदैव श्रवणं प्राप्ता भवन्ति तदैव तस्याध्ययनस्योद्देशस्य वा समुद्देशः क्रियते, श्रुतस्कन्धो वा पूर्वसूरे उद्घाटायामपि पौरुष्यामनुज्ञायते । येषामागाढा योगास्तेषां निशीथादीनामिच्छा प्रथमाया चरमाया वा पौरुष्यां तेषामनुज्ञा प्रवर्त्तते इति । शेषाणि अध्ययनान्युद्देशका वा दिवसस्य पश्चिमायां पौरुष्याम्, आदिशब्दाद् रात्रेः प्रथमाया चरमायाश्चानुज्ञायते ।

अनुज्ञामेवाधिकृत्य विशेषव्याख्यानमाह—

दिवसस्स पच्छिमाए, निसिन्तु पढमाए पच्छिमाए वा ।
उद्देसज्झयणुन्ना-ण य रत्ति णिसीहमादीणं ॥ २०३ ॥

उद्देशाध्ययनाना चानुज्ञा दिवसस्य पश्चिमायाम्, निशि तु प्रथमायां पश्चिमाया वा प्रवर्त्तते । निशीथादीनामागाढयोगाना दिवसस्य प्रथमाया पौरुष्यामनुज्ञानं, न तु रात्रौ ।

अत्रैवादिशब्दस्याधिकार्थसंस्तवकत्वमुपदर्शयति—

आदिग्गहणा दसका-लिउत्तरज्झयणचुल्लसुतमादी ।
एएसि भइअऽणुण्णा,पुव्वण्हे याऽवि अवरण्हे ॥२०४॥

आदिग्रहणादादिशब्दोपादानात्, यानि दशवैकालिकोत्तराध्ययनक्षुल्लककल्पश्रुतादीनि, अत्र शब्दादौपपातिकादिपरिग्रहः, एतेषामनुज्ञा भजिता--विकल्पिता पूर्वाह्णे वा स्यादपराह्णे वा ।

साम्प्रतमङ्गश्रुतस्कन्धानामनुज्ञाविधिमाह—

नंदीभासणचुण्णे, उ विभासा होइ अंगसुयखंधे ।
मंगलसद्धाजणणं, सुयपूयाभत्तवोच्छेदो ॥ २०५ ॥

अङ्गे श्रुतस्कन्धे च भवति । अनुज्ञाया कर्त्तव्याया नन्दीभाषणं-ज्ञानपञ्चकोच्चारणम्, चूर्णे च विभाषा—यदि भवन्ति वासाः शिरसि प्रक्षिप्यन्ते, तदभावे केसराण्यपि । कस्मादेवमनुज्ञा क्रियते इति चेत् ?, अत आह-नन्दीभाषणे वासनिक्षेपे च मङ्गलं भवति । ज्ञानपञ्चकस्य भावमङ्गलत्वाद्वासनिक्षेपस्य च द्रव्यमङ्गलत्वात् । तथा अन्येषां परमश्रद्धाजननम्, यथैकोऽमुकस्याङ्गस्य श्रुतस्कन्धस्य च पारगत आचार्येण स्वयं सकलजनसमक्षं पूजितस्तस्माद्वयमपि गाढतरमुत्साहं कुर्म्म इति, तथा अध्ययनाना वा व्यवच्छेदोऽन्यथा नानुज्ञानमन्येषां दीयते इति तेषां व्यवच्छेदः स्यात् ।

अत्रैवाऽपवादमाह—

बिइयपयं आयरिए, अंगसुयक्खंधमुद्दिसंतम्मि ।
मंगलसद्धाभयगो-रवे य तह निट्ठिए चेव ॥ २०६ ॥

स्वपक्ष उद्देशः कर्त्तव्यो न परपक्ष इत्युत्सर्गः । अत्र द्वितीयपदम्—अपवादपदं, यदि प्रवर्त्तिन्यास्तत् श्रुतं न विद्यते तत आचार्यः परपक्षेऽपि संयतीरूपे अङ्गं श्रुतस्कन्धं वा उपलक्षणमेतदध्ययनादिकं चोद्दिशति । अथवा—सत्यपि तस्मिन् प्रवर्त्तिन्याः श्रुते आचार्यः संयत्या अङ्गं श्रुतस्कन्धं वा उद्दिशति । मङ्गलादीनि भवन्ति तत्र स परमं ज्ञानपात्रमिति मङ्गलबुद्धिरुपजायते । तथा यस्मादाचार्येणोद्दिष्टमिदमत आदरेण पठनीयमिति पाठिकायाः महती श्रद्धा भवति । तथा यदि पाठे प्रमादं करिष्यामि ततो न पठितमित्याचार्या रुष्येयुरिति भयम् । तथा ममेदमाचार्येण गौरवेणोद्दिष्टं तस्मादादरेण पठित्वा शीघ्रं समाप्तिं नयामि । ' तह निट्ठिए चेव ' त्ति-तथा निष्ठिते अङ्गे श्रुतस्कन्धे वा समाप्तिं नीते यथासम्भवमेतैरेव कारणैरङ्गं श्रुतस्कन्धं वा आचार्योऽनुजानीयात् ।

एमेव संयती वा, उद्दिसति संजयाण बिइयपदे ।
असतीएँ संजयाणं, अज्झयणाणं च वुच्छेदो ॥२०७॥

तत् विवक्षितं श्रुतं संयताना न विद्यते, अध्ययनाना चान्यथा व्यवच्छेदः स्यात् । ततो द्वितीयपदेनापवादपदेन गाथाया सप्तमी तृतीयार्थे संयत्यपि संयतानामुद्दिशति ।

एवं वा उद्देसो, अज्झाओ वी न कप्पइ विगिट्ठे ।
दोण्हं पि हुंति लहुगा, विराहणा मेव पुव्वुत्ता॥२०८॥

एवमुक्तेन प्रकारेण तावदुद्देशोऽभिहितो यथा व्यतिकृष्टे काले स न क्रियते अध्यायोऽप्यध्ययनं द्वयोरपि लघुकं प्रायश्चित्तम्, विराधना च पूर्वोक्ता, ज्ञानविराधना, आत्मविराधना च । तत्र ज्ञानविराधना ज्ञानाचारहननादात्मविराधना प्रान्तदेवताछलनात् ।

अत्रैवापवादमाह—

वितिगिट्ठे सागारि-याए कालगया असति वुच्छेदो ।
एवं कप्पइ तहियं, किं ते दोसा न संती उ ॥ २०९ ॥

कदाचित्साधवः कारणेन सागारिकायां वसतौ स्थितास्तत्र परित्यागशब्दात् श्रुत्वा यस्य यत्पराजितं स तत्परावर्त्तयति आदिशब्दात् शेषमप्यादि समागतं तु यस्य यत्पराजितं स तत् गुणयतीति परिग्रहस्तथा कालगतः संयतो यदि कारणेन प्रतीक्षापयितव्यो भवति तदा रात्रौ जागरणनिमित्तं यस्य यत्पराजितं स तत्परावर्त्तयति । तथा यस्य सकाशे तत् श्रुतमधीतं स कालगतोऽन्यत्र च तत् श्रुतं नास्ति, ततः स्मृतिं पठितं मा विस्मरिति सागारम्, अनुप्रेक्षाया च सोऽप्युत्पन्नतत्त्व पठेत्तेन कारणैर्द्वितीयपदमाश्रित्य व्यतिकृष्टेऽपि काले स्वाध्याय करोति । अत्र पर आह-

तत्रापवादपदेन व्यतिक्रान्तेऽपि काले पठने किं ते दोषा आज्ञाभङ्गाऽऽदयो न सन्ति—न भवन्ति ? ।

अत्रोत्तरमाह—

भएइ जेण जिणेहिं, अणुणायाइं कारणे ताइं ।
तो दोसो न सँजायइ, जयणाए तहिँ करेंतस्स ॥२१०॥

भण्यते—अत्रोत्तरं दीयते येन कारणेन जिनैः कारणे-सागारिकादिलक्षणे तानि पठनान्यनुज्ञातानि तस्मात् कारणात् रहस्यश्रुतस्यापि च यतनया वक्ष्यमाणलक्षणया तत्र सागारिकवसत्यादौ पाठं कुर्वतो दोष—आज्ञाभङ्गादिलक्षणो न संजायते ।

तत्र यतनामाह—

कालगयं मुत्तूणं, इमा अणुप्पेह दुब्बले जयणा ।
अन्नवसहिं अगीते, असती तत्थेवऽणुच्चेणं ॥ २११ ॥

कालगतं मुक्त्वा शेषेषु कारणेष्वनुप्रेक्षा दुर्बले इयं वक्ष्यमाणा यतना । अन्यस्यां वसतौ गत्वा रहस्यश्रुतं परावर्त्तयन्ति मा अगीते अगीतार्थस्य श्रुतश्रवणं भूयादिति हेतोः । अथान्य उपाश्रयो न विद्यते ततोऽन्यस्या वसतेरभावे तत्रैव—तस्यामेव वसतावनुच्चेन शब्देन परावर्त्तयन्ति । कालगतेऽपि वसत्यन्तरे न यान्ति, किन्तु-तत्रैव जागरणनिमित्तमनुच्चशब्देन गुणयन्ति । संयत्योऽप्यपवादपदेन संयतानां समीपे पठेयुः,परावर्त्तयेयुर्वा न कश्चिद्दोषः । व्य० ७ उ० । (व्यतिक्रान्तकाले निर्ग्रन्थीनां स्वाध्यायो न कल्पते इत्युक्तम् 'वायणा' शब्दे षष्ठभागे १०६४ पृष्ठे । )स्वाध्यायहीनता नाम यदि प्राप्तायामपि कालवेलायां कालप्रतिक्रमणं करोति,अधिकता-यद्यतिक्रान्तायामपि कालवेलायां कालं प्रतिक्रामति-चन्दनादिक्रियां वा तदनुगतां हीनाधिकां करोति , इत्यादि सर्वम् ' आलोयणा ' शब्दे द्वितीयभागे ४१० पृष्ठे उक्तम् । ) ( पूर्वोत्तरयोर्द्वयोर्दिशोः स्वाध्यायः समुद्देष्टव्योऽनुज्ञातव्य इति ' दिसा ' शब्दे चतुर्थभागे २५२७ पृष्ठे उक्तम्।)(सचित्तवृक्षे स्थित्वा स्वाध्यायो न कर्त्तव्य इत्युक्तम् ' सचित्तरुक्ख ' शब्देऽस्मिन्नेव भागे ।) क्षेत्रप्रत्युपेक्षका· क्षेत्रे लब्धे तत्र स्वाध्यायं ये न कुर्वन्ति तेषां प्रायश्चित्तं मासकल्पम् । बृ० १ उ० २ प्रक० । (सन्ध्यासु स्वाध्यायो न कर्त्तव्य इत्युक्तम् ' असज्झाइय ' शब्दे प्रथमभागे ३० पृष्ठे ।) ( उदकतीरे स्वाध्यायो न कर्त्तव्य इति ' दगतीर ' शब्दे चतुर्थभागे २४४२ पृष्ठे उक्तम् । ) (रात्रौ संयतीनामुपाश्रयाऽन्तरं स्वाध्यायकरणम् ' विहार ' शब्दे षष्ठे भागे १३२७पृष्ठे रात्रिविहारप्रस्तावे उक्तम् । ) ( यो भिक्षुः स्वाध्यायं कृत्वा प्रत्युपेक्षणं न करोति तस्य प्रायश्चित्तम् ' विकहा ' शब्दे षष्ठे भागे ११२६ पृष्ठे गतम् । ) अनुराधारेवतीचित्राभृगशिरोनक्षत्रेषु स्वाध्यायाऽनुज्ञा उद्देश्यसमुपदेशौ कुर्य्यात् । द० प० । स्वाध्यायसमं तपो नास्ति । द० प० ।

बारसविहम्मि वि ता, सब्भितरबाहिरे कुसलदिट्ठे ।
न वि अत्थि न वि य होही,सज्झायसमं तवाकम्मं ॥८६॥
मेहा हुज्ज न हुज्ज व, जं मोहो उवसमेइ कम्माणं ।
उज्जोओ कायव्वो, णाणं अभिकंखमाणेणं ॥ ६० ॥
कम्ममसंखिज्जभवं, खवेइ अणुसयमेव आउत्तो ।
बहुभवे संचियं पि हु,सज्झाएणं खणे खवइ ॥६१॥
सतिरिअसुरासुरनरो, सकिंनरमहोरगो सगंधव्वो ।
सव्वो छउमत्थजणो,पडिपुच्छइ केवलिं लोए ॥६२॥
द० प० चन्दविज्झगपइन्ना । व्य० ।

स्वाध्यायगुणा.—

पढणाई सज्झायं, वेरग्गनिबंधणं कुणइ विहिणा ।

पठनमपूर्वश्रुतग्रहणमादिशब्दात्प्रच्छनापरावर्तनानुप्रेक्षाधर्मकथा गृह्यन्ते,ततः पञ्चप्रकारमपि स्वाध्यायं करोति—किंविशिष्टम्?वैराग्यनिबन्धनं-विरागताकारणं विधिना-शास्त्रोक्तेन श्र्येनश्रेष्ठिवत् । तत्र पठनविधिः-"पर्यस्तिकामवष्टम्भं, तथा पादप्रसारणम् । वर्जयेद्विकथां हास्यमधीयन् गुरुसन्निधौ"॥१॥इति पृच्छाविधिरयम्-"आसणगओ न पुच्छिज्जा, नेव सिज्जागओ कया । आगम्मुकुडुओ संतो, पुच्छिज्जा पंजलीउडो ॥ १ ॥" इति । ध० र० २ अधि ३ लक्ष० । व्य० । ( धर्मकथानां परावर्तनानुप्रेक्षा ' परियट्टणा ' शब्दे पञ्चमभागे ७२७ पृष्ठे गता । )

स्वाध्यायफलम्—

सज्झाएणं भंते ! जीवे किं जणयइ?,सज्झाएणं नाणावरणिज्जं कम्मं खवेइ ॥१६॥

हे भदन्त ! स्वाध्यायेन पञ्चप्रकारेण जीव' किं जनयति?, गुरुराह—हे शिष्य ! स्वाध्यायेन ज्ञानावरणीयं कर्म क्षपयति । उत्त० २६ अ० । ( दोषाविष्करणम् ' पाढयंत' शब्दे पञ्चमभागे ८२५ पृष्ठे गतम् । ) " स्वाध्यायादिष्टदर्शनम् " स्वाध्यायात्स्वभ्यस्तादिष्टदर्शनम् , जप्यमानमन्त्राभिप्रेतदेवतादर्शनं भवति । तदाह—"स्वाध्यायादिष्टदेवतासंप्रयोग." ( २—४४) द्वा० २२ द्वा० । उत्त० ।

से किं तं सज्झाए ? सज्झाए पंचविहे पण्णत्ते, तं जहा—वायणा पडिपुच्छणा परियट्टणा अणुप्पेहा धम्मकहा । सेत्तं सज्झाए । ( सू० ८०२X) भ० २५ श० ७ उ० ।

मालवीयऋष्यादीनां स्वाध्यायो मण्डल्यां कल्पते न वा ?,आगमोक्तयतीनां सांप्रतीनानामाचार्याणां भट्टारकाणां च स्वाध्यायो मण्डल्यां कल्पते, नत्वन्येषां वार्तमानिकोपाध्यायादीनामिति वृद्धवादः । ही० २ प्रक० । महाहिंसावत्त्वेनाश्विनचैत्रदिनानि सिद्धान्तवाचनादिषु अस्वाध्यायदिनानीति कृत्वा त्यज्यन्ते , तद्वद् "ईद" दिनमपि तेन हेतुना कथं न त्यज्यते ?, केचिच्च मतिनस्तद्दिनं त्यजन्ति , आत्ममां का मर्यादा ? , "ईद" दिने अस्वाध्यायविषये वृद्धैरनाचरणमेव निमित्तमवसीयते । ही० ३ प्रका० । गुरुसन्निधौ पाश्चात्यप्रतिलेखनाक्रियां कुर्वाणा· आद्धाः स्वाध्यायमुपविश्य कुर्वन्ति ऊर्ध्वस्था वा ?, ऊर्ध्वस्था· स्वाध्यायं विदधति ॥ ही०२ प्रक० । स्वाध्यायोऽपि किं हीनाऽऽचारैः पार्श्वस्थावसन्नकुशीलसंसक्ताहाच्छन्दनित्यवासिभिः समं सह सर्वजिनेन्द्रैर्वृषभादिभिः प्रतिक्रुष्टो निराकृत· ?, तदालापादेर्मिथ्यात्वहेतुत्वादिति । दर्श०४ तत्त्व । सान्ध्यप्रतिक्रमणस्वाध्यायप्रान्तवदन्येष्वपि स्वाध्यायप्रान्तेषु सम्पूर्णो नमस्कार· कथनीयो न वेति ? प्रश्न· , अत्रोत्तरम्—यथा·

देशद्वयं तत्र स्वाध्याये नमस्कारद्वयभणनम्, यत्र चैकादेशस्तत्रैक एव नमस्कारः पठनीय इति । सान्ध्यप्रतिक्रमणस्वाध्यायप्रान्ते सम्पूर्णनमस्कारपठनं सामाचार्यादौ न दृश्यते परम्परया तु दृश्यते, तेन तदपि मङ्गलरूपत्वाद् दोषमेवेति ॥८॥ सेन० १ उल्ला० । सामाचार्यां नवमद्वारे कालग्रहणविधौ " गिलिउग्गिलिए " इति शब्देन किमुच्यते तत्स्वाक्षर प्रसाद्यमिति ? प्रश्नः, अत्रोत्तरम्-मार्जारादिना मूषिकादौ "गिलितोद्गिलिते" इति गिलितस्सन्नुद्गिलितो वान्तस्तस्मिन् कोऽर्थः ?-स्थानान्तरे गिलित्वा वसते षष्टिहस्तमध्ये आगत्य वान्ते स्वाध्यायो न भवतीत्यभिप्राय आवश्यकवृत्त्यादावस्तीति ॥१२॥ सेन० १ उल्ला० । प्रतिक्रमणहेतुगर्भे रात्रिकप्रतिक्रमणविधौ रात्रिकप्रायश्चित्तकायोत्सर्गस्ततः चैत्यवन्दनं, ततः स्वाध्यायः, एवं पश्चात्प्रतिक्रमणादौ चत्वारि क्षमाश्रमणान्युक्तानि सन्ति एवं तु न क्रियन्ते, तत्कि बीजमिति ? प्रश्नः, अत्रोत्तरम्-यतिदिनचर्यादौ स्वाध्यायादनु चत्वारि क्षमाश्रमणानि प्रोक्तानि, श्राद्धदिनकृत्यवृत्तिवन्दारुवृत्त्यादौ तु स्वाध्यायादनु प्रतिक्रमणस्थापनमुक्तम्, ततस्तानि स्वाध्यायात्पूर्वं क्षाम्यन्ते । अयं च विधिः परम्परया बाहुल्येन क्रियमाणोऽस्ति । सामाचारीविशेषेण चोभयथाऽपि अविरुद्धमेवेति ॥ १६२ ॥ सेन० ३ उल्ला० । प्रणवपूर्वाणां मन्त्राणां जपे, द्वा० २२ द्वा० । कुइणाख्यवनस्पतिभेदे, प्रज्ञा० १ पद ।

सज्झायजोग-स्वाध्याययोग-पुं० । वाचनाद्युपचारव्यापारे, दश० २ चू० ।

सज्झायज्झाणरय-स्वाध्यायध्यानरत-न० । स्वाध्याय एव ध्यानं स्वाध्यायध्यानं तत्र रतः । स्वाध्याये ध्याने च रते, दश० ८ अ० ।

सज्झायभूमि-स्वाध्यायभूमि-स्त्री० । विचारभूमौ, स भिक्षुर्बहिर्विचारभूमिं सञ्ज्ञाव्युत्सर्गभूमिं तथा विहारभूमिं स्वाध्यायभूमिं तैरन्यतीर्थिकादिभिः सह दोषसम्भवान्न प्रविशेत् । आचा० २ श्रु० २ चू०३ अ० । अन्ययूथिकैः सह न प्रविशेत् । नि० चू० २ उ० । ( स्वाध्यायभूमिविषय 'चरियापविट्ठ' शब्दे तृतीयभागे ११५६ पृष्ठे गतः । )

सज्झायमुक्कजोग-स्वाध्यायमुक्तयोग-त्रि० । स्वाध्यायेन मुक्तो योगो--व्यापारो यस्य स स्वाध्यायमुक्तयोगः । स्वाध्यायकारिणि, ग० ३ अधि० ।

सज्झायवाय-स्वाध्यायवाद-पुं० । विशुद्धपाठकोऽहमित्यादिके वादे, स० ३० सम० ।

सज्झायसारणा-स्वाध्यायसारणा-स्त्री० । स्वाध्यायनिर्वाहणायाम्, " गुरुपारतंतं विणओ सज्झायसारणा चेव " पञ्चा० १८ विव० । ( अत्रत्या व्याख्या 'भिक्खुपडिमा' शब्दे पञ्चमभागे १५६८ । १५७७ पृष्ठे गता । )

सज्झिल्लग-साज्झिल्लक-पुं० । धर्मभ्रातरि, पं० व० ३ द्वार । भ्रातरि, पिं० । वृ० । व्य० । भगिन्याम्, सज्झिल्लिका । स्त्री० । पिं० ।

सञ्ञा-संज्ञा-स्त्री० । "णो ञ्ञ पैशाच्याम्" ॥ ८ । ४ । ३०३॥ इति ज्ञस्य ञ्ञः । सङ्केते, प्रा० ४ पाद ।

सट्ठाण-स्वस्थान-न० । आत्मीये स्थाने, यत्र हि स तिष्ठति, वृ० ४ उ० । भ० । चं० प्र० । द्वादशमस्यऽहोरात्रमुहूर्ते, कल्प० १ अधि० ६ क्षण । सगट्ठाणं सट्ठाणं । नि० चू० १ उ० । इहापत्तिरूपं प्रायश्चित्तं स्वस्थानमुच्यते । जीत० ।

सट्ठाणसंकमण-स्वस्थानसंक्रमण-न० । पिपीलिकादीनामण्डादिसंचालने, सट्ठाणसंकमणं पिपीलिगमक्कोडगादीणं भवति । नि० चू० १३ उ० ।

सट्ठाणट्ठाणंतर-स्वस्थानस्थानान्तर-न० । स्वस्थानात् पूर्वपूर्वस्थानादुत्तरोत्तरस्य सङ्ख्यास्थानस्य उत्पत्तिस्थानात्संख्याविशेषलक्षणात् गुणनीयादित्यर्थः स्थानान्तराणि । अनन्तरस्थाने, स० ८४ सम० ।

सट्ठाणसण्णिगास-स्वस्थानसन्निकर्ष-पुं० । स्वम्-आत्मीयं सजातीयं स्थानं पर्यवाणामाश्रय स्वस्थानं पुलाकादेः पुलाकादिभिरेव, तस्य संनिकर्षः । स्वस्थानसंयोजने, भ० २५ श० ६ उ० ।

सट्ठाणाऽऽरोवणा-स्वस्थानाऽऽरोपणा-स्त्री० । स्वकं स्थानं स्वस्थानं, स्वस्थानस्यारोपणा स्वस्थानारोपणा । प्रतिसेव्यमानस्य प्रतिसेवनीयस्थानस्यारोपणायाम्, नि० चू० १ उ० ।

सट्ठि-षष्टि-स्त्री० । षडावृत्ताया दशसङ्ख्यायाम्, प्रज्ञा० २ पद ।

सट्ठितंत-षष्टितन्त्र-न० । कापिलीयशास्त्रे, आ० १ श्रु० ४ अ० । औ० । अनु० । नि० । पश्चात् षष्टितन्त्रं सवृत्तमेव कुर्तीर्थजातं तत्कपिलोपदिष्टमिति । आ० चू० १ अ० । ( षष्टितन्त्रोत्पत्तिवृत्तान्तम् 'कविल' शब्दे तृतीयभागे २८७ पृष्ठे गतम् । )

सट्ठितंतविसारय-षष्टितन्त्रविशारद-पुं० । षष्टितन्त्र-कापिलीयशास्त्रं तत्र विशारदः--पण्डितः । सांख्यवेत्तरि, कल्प० १ अधि० १ क्षण । औ० ।

सट्ठिभत्त-षष्टिभक्त-न० । उपवासत्रिंशतौ, "सट्ठि भत्ताइं अणसणाइं छेएत्ता" प्रतिदिनं भोजनद्वयस्य त्यागात् त्रिंशद् दिनैः षष्टिभक्तानि त्यक्तानि भवन्ति । भ० २ श० १ उ० ।

सट्ठिय-साष्टिक-त्रि० । षष्टिवर्षजाते, न० । षष्ट्यहोरात्रैः परिपच्यमानेषु शालिषु, ज० ३ वक्ष० । भ० ।

सट्ठिहायण--षष्टिहायन--त्रि० । षष्टिर्हायना- संवत्सरा यस्य स षष्टिहायनः । षष्टिवर्षजाते, जी० ३ प्रति० १ अधि० २ उ० ।

सड-सद्-धा० । विशरणगत्यवसादनेषु, "सदपतोर्डः" ॥८॥४॥ २१९॥ अनेनान्त्यस्य डकारः । सडइ । सीदति । प्रा० ४ पाद । शद्-धा । रुजा विशरणगत्यवसादनेषु, सडति । शटति । उत्त० ५ अ० । विशे० ।

सडंगविय-षडङ्गविद्-पुं० । पूर्वोक्तानि षडङ्गानि विजानातीति षडङ्गवित् । कल्प० १ अधि० १ क्षण । शिक्षादिविचारके, औ० । नि० चू० ।

सडण-सटन-न० । कुष्ठादिनाऽङ्गुल्यादिगलने, आ० १ श्रु० १ अ० । न० । स्वत एव विगलने, प्रश्न० १ आश्र० द्वार ।

सड्डल-शाद्वल-न० । प्रत्यग्रशाद्वल तृणे, आ० १ श्रु० १ अ० ।

तत्रापवादपदेन व्यतिकृष्टेऽपि काले पठने किं ते दोषा आ-ज्ञाभङ्गाऽऽदयो न सन्ति—न भवन्ति ? ।

अत्रोत्तरमाह—

भएइ जेण जिणेहिं, अणुण्णायाइ कारणे ताइं ।
तो दोसो न संजायइ, जयणाए तहिँ करेंतस्स ॥२१०॥

भएयते—अत्रोत्तरं दीयते येन कारणेन जिनैः कारणे-सा-गारिकादिलक्षणे तानि पठनान्यनुज्ञातानि तस्मात् कार-णात् रहस्यश्रुतस्यापि च यतनया वक्ष्यमाणलक्षणया त-त्र सागारिकवसत्यादौ पाठं कुर्वतो दोष—आज्ञाभङ्गादिल-क्षणो न संजायते ।

तत्र यतनामाह—

कालगयं मुत्तूणं, इमा अणुप्पेह दुब्बले जयणा ।
अन्नवसहिं अगीते, असती तत्थेवऽणुच्चेणं ॥ २११ ॥

कालगतं मुक्त्वा शेषेषु कारणेष्वनुप्रेक्षा दुर्बले इयं वक्ष्यमाणा यतना । अन्यस्यां वसतौ गत्वा रहस्यश्रुतं प-रावर्त्तयन्ति मा अगीते अगीतार्थस्य श्रुतश्रवणं भूयादिति हे-तोः । अथान्य उपाश्रयो न विद्यते ततोऽन्यस्या वसतेरभावे तत्रैव—तस्यामेव वसतावनुच्चेन शब्देन परावर्त्तयन्ति । कालगतेऽपि वसत्यन्तरे न यान्ति, किन्तु-तत्रैव जागरण-निमित्तमनुच्चशब्देन गुणयन्ति । संयत्योऽप्यपवादपदेन सं-यतानां समीपे पठेयु.,परावर्त्तयेयुर्वा न कश्चिद्दोष. । व्य० ७ उ० । (व्यतिकृष्टकाले निर्ग्रन्थीनां स्वाध्यायो न कल्पते इत्युक्त-म् 'वायणा' शब्दे षष्ठभागे १०६४ पृष्ठे ।)स्वाध्यायहीनता नाम यदि प्राप्तायामपि कालवेलायां कालप्रतिक्रमणं करोति,अधि-कता-यद्यतिक्रान्तायामपि कालवेलायां कालं प्रतिक्रामति-चन्दनादिक्रियां वा तदनुगतां हीनाधिकां करोति , इत्यादि सर्वम् ' आलोयणा ' शब्दे द्वितीयभागे ४१० पृष्ठे उक्तम् । ) ( पूर्वोत्तरयोर्द्वयोर्दिशोः स्वाध्यायः समुद्देष्टव्योऽनुज्ञातव्य इति ' दिसा ' शब्दे चतुर्थभागे २५२७ पृष्ठे उक्तम्।)(सचित्तवृक्षे स्थित्वा स्वाध्यायो न कर्त्तव्य इत्युक्तम् ' सचित्तरुक्ख ' शब्देऽस्मिन्नेव भागे ।) क्षेत्रप्रत्युपे-क्षका क्षेत्रे लब्धे तत्र स्वाध्यायं ये न कुर्वन्ति तेषां प्रायश्चि-त्तं मासकल्पम् । वृ० १ उ० २ प्रक० । (सन्ध्यासु स्वाध्यायो न कर्त्तव्य इत्युक्तम् ' असज्झाइय ' शब्दे प्रथमभागे ३० पृष्ठे ।) ( उदकतीरे स्वाध्यायो न कर्त्तव्य इति ' दगतीर ' शब्दे चतुर्थभागे २४४२ पृष्ठे उक्तम् । ) (रात्रौ संयतीनामुपाश्रयाऽ-न्तरं स्वाध्यायकरणम् ' विहार ' शब्दे षष्ठे भागे १३२७पृष्ठे रा-त्रिविहारप्रस्तावे उक्तम् ।) ( यो भिक्षु स्वाध्यायं कृत्वा प्रत्यु-पेक्षणं न करोति तस्य प्रायश्चित्तम् ' विकहा ' शब्दे षष्ठे भागे ११२६ पृष्ठे गतम् । ) अनुराधारेवतीचित्रामृगशिरोनक्षत्रेषु स्वाध्यायाऽनुज्ञा उद्देश्यसमुपदेशौ कुर्यात् । द० प० । स्वा-ध्यायसमं तपो नास्ति । द० प० ।

बारसविहम्मि वि ता, सब्भिंतरबाहिरे कुसलदिट्ठे ।
न वि अत्थि न वि य होही,सज्झायसमं तवोकम्म ॥८९॥
मेहा हुज्ज न हुज्ज व, जं मोहो उवसमेइ कम्माणं ।
उज्जोओ कायव्वो, णाणं अभिकंखमाणेणं ॥ ९० ॥
कम्ममसंखिज्जभवं, खवेइ अणुसयमेव आउत्तो ।
बहुभवे संचियं पि हु,सज्झाएणं खणे खवइ ॥९१॥
सतिरिअसुरासुरनरो, सकिंनरमहोरगो सगंधव्वो ।
सव्वो छउमत्थजणो,पडिपुच्छइ केवलिं लोए ॥९२॥
द० प० चन्दविज्झगपइन्ना । व्य० ।

स्वाध्यायगुणा.—

पढणाई सज्झायं, वेरग्गनिबंधणं कुणइ विहिणा ।

पठनमपूर्वश्रुतग्रहणमादिशब्दात्प्रच्छनापरावर्तनानुप्रेक्षाधर्म-कथा गृह्यन्ते,तत पञ्चप्रकारमपि स्वाध्यायं करोति—किं विशिष्टम्?वैराग्यनिबन्धनं-विरागताकारणं विधिना-शास्त्रो-क्तेन श्येनश्रेष्ठिवत् । तत्र पठनविधि.-"पर्यस्तिकामवष्टम्भं, तथा पादप्रसारणम् । वर्जयेद्विकथां हास्यमधीयन् गुरुस-न्निधौ"॥१॥इति पृच्छाविधिरयम्-"आसणगओ न पुच्छिज्जा, नेव सिज्जागओ कया । आगम्मुक्कुडुओ संतो, पुच्छिज्जा पंजलीउडो ॥ १ ॥" इति । ध० र० २ अधि ३ लक्ष० । व्य० । ( धर्मकथानां परावर्तनानुप्रेक्षा ' परियट्टणा ' शब्दे पञ्चम-भागे ७२७ पृष्ठे गता । )

स्वाध्यायफलम्—

सज्झाएणं भंते ! जीवे किं जणयइ?,सज्झाएणं नाना-वरणिज्जं कम्मं खवेइ ॥१८॥

हे भदन्त ! स्वाध्यायेन पञ्चप्रकारेण जीव' किं जनयति?, गुरुराह—हे शिष्य ! स्वाध्यायेन ज्ञानावरणीयं कर्म क्षप-यति । उत्त० २९ अ० । ( दोषाविष्करणम् ' पाढयंत' शब्दे पञ्चमभागे ८२५ पृष्ठे गतम् । ) " स्वाध्यायादिष्टदर्शनम् " स्वाध्यायात्स्वभ्यस्तादिष्टदर्शनम् , जप्यमानमन्त्राभिप्रेतदेव-तादर्शनं भवति । तदाह—"स्वाध्यायादिष्टदेवतासंप्रयोग." ( २—४४) द्वा० २२ द्वा० । उत्त० ।

से किं तं सज्झाए ? सज्झाए पंचविहे पत्तत्ते, तं जहा—वायणा पडिपुच्छणा परियट्टणा अणुप्पेहा धम्मकहा । सेत्तं सज्झाए । ( सू० ८०२X) भ० २५ श० ७ उ० ।

मालवीयऋष्यादीनां स्वाध्यायो मण्डल्यां कल्पते न वा ?,आगमोक्षयतीनां सांप्रतीनानामाचार्याणां भट्टार-काणां च स्वाध्यायो मण्डल्यां कल्पते , नत्वन्येषां वार्तमानिकोपाध्यायादीनामिति वृद्धवादः । ह्री० २ प्रक० । महाहिंसावत्त्वेनाश्विनचैत्रदिनानि सिद्धान्तवाचनादिषु अ-स्वाध्यायदिनानीति कृत्वा त्यज्यन्ते , तद्वद् "ईद" दिनमपि तेन हेतुना कथं न त्यज्यते ?, केचिच्च मतिनस्तद्दिनं त्य-जन्ति , आत्मनां का मर्यादा ? , "ईद" दिने अस्वाध्याय-विषये वृद्धैरनाचरणमेव निमित्तमवसीयते । ह्री० ३ प्रका० । गुरुसन्निधौ पाश्चात्यप्रतिलेखनाक्रियां कुर्वाणा. श्राद्धाः स्वाध्यायमुपविश्य कुर्वन्ति ऊर्ध्वस्था वा ?, ऊर्ध्वस्था. स्वा-ध्यायं विदधति ॥ ह्री०२ प्रक० । स्वाध्यायोऽपि किं हीनाऽऽ-चारै. पार्श्वस्थावसन्नकुशीलसंसक्ताद्यच्छन्दनित्यवासिभि' समं सह सर्वजिनेन्द्रैर्वृषभादिभि. प्रतिकुष्टो निराकृत. ?, तदालापादेर्मिथ्यात्वहेतुत्वादिति । दर्श०४ तत्त्व । सान्ध्यप्रति-क्रमणस्वाध्यायप्रान्तवदन्येष्वपि स्वाध्यायप्रान्तेषु सम्पूर्णो नमस्कार. कथनीयो न वेति ? प्रश्न. , अत्रोत्तरम्—यथा.

देशद्वय तत्र स्वाध्याये नमस्कारद्वयभणनम्, यत्र चैकादेशस्तत्रैक एव नमस्कारः पठनीय इति । सान्ध्यप्रतिक्रमणस्वाध्यायप्रान्ते सम्पूर्णनमस्कारपठनं सामाचार्यादौ न दृश्यते परम्परया तु दृश्यते, तेन तदपि मङ्गलरूपत्वाद्दोषमेवेति ॥८॥ सेन० १ उल्ला० । सामाचार्यां नवमद्वारे कालग्रहणविधौ " गिलिउग्गिलिए " इति शब्देन किमुच्यते तत्साक्षर प्रसाद्यमिति ? प्रश्न', अत्रोत्तरम्-मार्जारादिना मूषिकादौ "गिलितोद्गिलिते" इति गिलितस्सन्नुद्गिलितो वान्तस्तस्मिन् कोऽर्थ. ?-स्थानान्तरे गिलित्वा वसते षष्टिहस्तमध्ये आगत्य वान्ते स्वाध्यायो न भवतीत्यभिप्राय आवश्यकवृत्त्यादावस्तीति ॥१२॥ सेन० १ उल्ला० । प्रतिक्रमणहेतुगर्भे रात्रिकप्रतिक्रमणविधौ रात्रिकप्रायश्चित्तकायोत्सर्गस्ततः चैत्यवन्दनं, तत. स्वाध्याय , एवं पश्चात्प्रतिक्रमणादौ चत्वारि क्षमाश्रमणान्युक्तानि सन्ति एवं तु न क्रियते, तर्त्कि बीजमिति ? प्रश्न', अत्रोत्तरम्-यतिदिनचर्यादौ स्वाध्यायादनु चत्वारि क्षमाश्रमणानि प्रोक्तानि, श्राद्धदिनकृत्यवृत्तिवन्दारुवृत्त्यादौ तु स्वाध्यायादनु प्रतिक्रमणस्थापनमुक्तम्, ततस्तानि स्वाध्यायात्पूर्वं ज्ञायन्ते । अयं च विधि' परम्परया बाहुल्येन क्रियमाणोऽस्ति । सामाचारीविशेषेण चोभयथाऽपि अविरुद्धमेवेति ॥ १६२ ॥ सेन० ३ उल्ला० । प्रणवपूर्वाणां मन्त्राणां जपे, द्वा० २२ द्वा० । कुहणाख्यवनस्पतिभेदे, प्रज्ञा० १ पद ।

सज्झायजोग-स्वाध्याययोग-पुं० । वाचनाद्युपचारव्यापारे, दश० २ चू० ।

सज्झायज्झाणरय-स्वाध्यायध्यानरत-न० । स्वाध्याय एव ध्यानं स्वाध्यायध्यानं तत्र रत । स्वाध्याये ध्याने च रते, दश० ८ अ० ।

सज्झायभूमि-स्वाध्यायभूमि-स्त्री० । विचारभूमौ, स भिक्षुर्बहिर्विचारभूमिं सञ्ज्ञाव्युत्सर्गभूमिं तथा विहारभूमिं स्वाध्यायभूमिं तैरन्यतीर्थिकादिभि सह दोषसम्भवान्न प्रविशेत् । आचा० २ श्रु० २ चू०३ अ० । अन्ययूथिकै सह न प्रविशेत् । नि० चू० २ उ० । ( स्वाध्यायभूमिविषय. ' चरियापविट्ठ ' शब्दे तृतीयभागे ११५६ पृष्ठे गत. । )

सज्झायमुक्कजोग-स्वाध्यायमुक्तयोग-त्रि० । स्वाध्यायेन मुक्तो योगो--व्यापारो यस्य स. स्वाध्यायमुक्तयोग' । स्वाध्यायकारिणि, ग० ३ अधि० ।

सज्झायवाय-स्वाध्यायवाद-पुं० । विशुद्धपाठकोऽहमित्यादिके वादे, स० ३० सम० ।

सज्झायसारणा-स्वाध्यायसारणा-स्त्री० । स्वाध्यायनिर्वाहणायाम् , " गुरुपारततं विणओ सज्झायसारणा चेव " पञ्चा० १८ विव० । ( अत्रत्या व्याख्या ' भिक्खुपडिमा ' शब्दे पञ्चमभागे १५६८ । १५७७ पृष्ठे गता । )

सज्झिल्लग-सज्झिल्लक-पु० । धर्म्मभ्रातरि, पं० व० ३ द्वार । भ्रातरि, पिं० । वृ० । व्य० । भगिन्याम् , सज्झिल्लिका । स्त्री० । पिं० । .

सञ्ञा-संज्ञा-स्त्री० । "ज्ञो ञ्ञ पैशाच्याम् " ॥ ८ ।४ । ३०३॥ इति ज्ञस्य ञ्ञ । सङ्केते, प्रा० ४ पाद ।

सट्ठाण-स्वस्थान-न० । आत्मीये स्थाने, यत्र हि स तिष्ठति , वृ० ४ उ० । भ० । च० प्र० । द्वादशसंख्येऽहोरात्रमुहूर्त्ते , कल्प० १ अधि० ६ क्षण । सगट्ठाण सट्ठाण । नि० चू० १ उ० । इहापत्तिरूपं प्रायश्चित्तं स्वस्थानमुच्यते । जीत० ।

सट्ठाणगसंकमण-स्वस्थानकसंक्रमण-न० । पिपीलिकादीनामण्डादिसचालने, सट्ठाणगसंकमणं पिपीलिगमक्कोडगादीणं भणति । नि० चू० १३ उ० ।

सट्ठाणट्ठाणंतर-स्वस्थानस्थानान्तर-न० । स्वस्थानात् पूर्वपूर्वस्थानादुत्तरोत्तरस्य संख्यास्थानस्य उत्पत्तिस्थानात्संख्याविशेषलक्षणात् गुणनीयादित्यर्थः स्थानान्तराणि । अनन्तरस्थाने, स० ८४ सम० ।

सट्ठाणसण्णिगास-स्वस्थानसन्निकर्ष-पुं० । स्वम्-आत्मीयं सजीतायं स्थानं पर्यवाणामाश्रय. स्वस्थान पुलाकादेः पुलाकादिभिरेव, तस्य सन्निकर्ष. । स्वस्थानसंयोजने, भ० २५ श० ६ उ० ।

सट्ठाणाऽऽरोवणा-स्वस्थानाऽऽरोपणा-स्त्री० । स्वकं स्थानं स्वस्थान, स्वस्थानस्यारोपणा स्वस्थानारोपणा । प्रतिसेवमानस्य प्रतिसेवनीयस्थानस्यारोपणायाम् , नि० चू० १ उ० ।

सट्ठि-षष्टि-स्त्री० । षडावृत्ताया दशसंख्यायाम् , प्रज्ञा० २ पद ।

सट्ठितंत-षष्टितन्त्र-न० । कापिलीयशास्त्रे, ज्ञा० १ श्रु० ५ अ० । औ० । अनु० । नि० । पश्चात् षष्टितन्त्र सवृतमेवं कुतीर्थ्यजात तत्कपिलोपदिष्टमिति । आ० चू० १ अ० । ( षष्टितन्त्रोत्पत्तिवृत्तान्तम् ' कविल ' शब्दे तृतीयभागे २८७ पृष्ठे गतम् । )

सट्ठितंतविसारय-षष्टितन्त्रविशारद-पुं० । षष्टितन्त्र-कापिलीयशास्त्रं तत्र विशारद —पण्डितः । साख्यवेत्तरि, कल्प० १ अधि० १ क्षण । औ० ।

सट्ठिभत्त-षष्टिभक्त-न० । उपवासविंशतौ, "सट्ठिं भत्ताइं अणसणाइं छेएत्ता" प्रतिदिनं भोजनद्वयस्य त्यागात् त्रिंशद् दिनै' षष्टिभक्तानि त्यक्तानि भवन्ति । भ० २ श० १ उ० ।

सट्ठिय-साष्टिक-त्रि० । षष्टिवर्षजाते, न० । षष्ट्यहोरात्रै. परिपच्यमानेषु शालिषु, जं० ३ वक्ष० । ध० ।

सट्ठिहायण-षष्टिहायन-त्रि० । षष्टिर्हायना. सम्वत्सरा यस्य स षष्टिहायन. । षष्टिवर्षजाते , जी० ३ प्रति० १ अधि० २ उ० ।

सड-सद्-धा० । विशरणगत्यवसादनेषु,"सदपतोर्ड " ॥८॥४। २१६॥ अनेनान्त्यस्य डकारः । सडइ । सीदति । प्रा० ४ पाद । शद्-धा । रुजा विशरणगत्यवसादनेषु, सडति । शटति । उत्त० ५ अ० । विशे० ।

सडंगविय-षडङ्गविद्-पु० । पूर्वोक्तानि षडङ्गानि विचारयतीति षडङ्गवित् । कल्प० १ अधि० १ क्षण । शिक्षादिविचारके, औ० । नि० चू० ।

सडण-सटन-न० । कुष्ठादिनाऽङ्गुल्यादेर्गलने, ज्ञा० १ श्रु० १ अ० । न० । स्वत एव विशरणे, प्रश्न० १ आश्र० द्वार ।

सड्डुल-शाड्वल-न० । प्रत्यग्रहरिते तृणे, ज्ञा० १ श्रु० १ अ० ।

सड्ड-श्राद्ध-पु० । श्रद्धा—श्रद्धान यस्मिन्नस्ति स श्राद्ध. । श्रद्धेयवचने । स्था० ३ ठा० ३ उ० । तत्त्वं प्रति श्रद्धावति , पञ्चा० ३ विव० । श्रद्धालौ , पञ्चा० १५ विव० । श्रावके , पञ्चा० ७ विव० । धर्म्मलिप्सौ , सूत्र० २ श्रु० १ अ० । दर्शनश्रावके , प्रति० । आचा० । प्रव० । आ० क० । श्राद्ध —श्रद्धावान् दीक्षितस्यापि श्रद्धाराहितस्याङ्गारमर्दकादरिवं त्याज्यत्वात् । ध० ३ अधि० । ( श्राद्धगुणा. 'धम्मरयण' शब्दे चतुर्थभागे २७२६ पृष्ठे वर्णिता. । ) श्रद्धया क्रियमाणे मृतेषु पित्रादिषु पिण्डदाने , "मृतानामपि जन्तूनां , श्राद्धं चेत् तृप्तिकारणम् । तन्निर्वाणप्रदीपस्य , स्नेह. सम्वर्द्धयेत् त्विषम्-॥ १ ॥" स्था० १ ठा० । भ० । औ० । नि० । श्रद्धाः पाक्षिकदिनेऽतीचारान् कथयन्ति , तत्र षष्ठं दिग्व्रतं दशमं च देशावकाशिकं कथिनम् , तदन्ये नाऽङ्गीकुर्वन्ति, यद् व्रतद्वयं कथिनमस्ति, तदात्मश्राद्धे. कथितम् । यत्पष्ठव्रतं यावज्जीवप्रत्ययिकं दशम तु दिनप्रत्ययिकमित्यपि नाङ्गीकुर्व्वन्ति , तत्र का युक्तिरिति ? प्रश्न , अत्रोत्तरम्—श्रीआवश्यके श्रावकव्रताधिकारे देशावकाशिकव्रतालाप कथितोऽस्ति स लिख्यते, यथा—'दिसिव्वयगहिअस्स दिसापरिमाणस्स पइदिणं परिमाणकरणं देसावगासिअं , देसावगासिअस्स समणोवासएण इमे पंच अइआरा जाणियव्वा न समायरिअव्वा । त जहा—आणवणप्पओगे १ पेसवणप्पओगे २ सद्दाणुवाए ३ रूवाणुवाए ४ बहिआ पुग्गलक्खेवे ५' एतदालापकानुसारेण षष्ठदिग्व्रतस्य संक्षेपरूपदेशावकाशिकं स्पष्टनया ज्ञायते, तथा—योगशास्त्राद्यनेकग्रन्थेषु षष्ठदिग्व्रतसंक्षेपरूपदेशावकाशिकं कथितमस्ति, तथा—श्रीउपासकदशाङ्गे आनन्दव्रताधाराधिकारे सामायिकादिचतुष्कव्रतालापकविस्तारो न कथित , तस्मात्केचन नाऽङ्गीकुर्वन्ति, तत्तु तदज्ञानमेव, यतो व्रतोच्चारादौ एवं पाठोऽस्ति-' अहण्णं भंते ! देवाणुप्पिआणं अंतिए पंचाऽणुव्वइअं सत्तसिक्खावइअं दुवालसविहं सावयधम्मं पडिवज्जिस्सामि अहासुहं देवाणुप्पिया ! मा पडिबंधं करेह ' तथा व्रतोच्चारानन्तरमेवं पाठोऽस्ति-'तए णं आणंदे गाहावई समणस्स भगवओ महावीरस्स अंतिए पंचाणुव्वइअं सत्त सिक्खावइअं दुवालसविहं सावयधम्मं पडिवज्जइ, पडिवज्जित्ता समणं भगवं महावीरं वंदइ नमंसइ' एतदालापकद्वये द्वादशव्रतोच्चाराङ्गीकार. कथं घटते ?, यदि देशाऽवकाशिकव्रतं न भवति तर्हि पञ्चातीचाराः कथं कथिता , तस्मादानन्देन चत्वारि व्रतानि सविस्तराणि नोच्चरितानि यत्प्रतिदिनं वारं वारमुच्चार्यन्ते । पुन सङ्क्षेपतस्तदुच्चरितान्येवेति ज्ञेयम् ॥७३॥ सेन०४उल्ला० । महाविदेहेषु ये श्राद्धा देशवतिनस्ते उभयकालमावश्यकं कुर्वन्ति, किं वा-यतिवत्कारणे समुत्पन्ने कुर्वन्तीति ? प्रश्न , अत्रोत्तरम्—' देसिअ राइय पक्खिअ, चाउम्मासिअ वच्छरी अ नामाओ । दोण्हं पण पाडकमणा , मज्झिमगाणं तु दो पढमा ॥१॥" इति सप्ततिशतस्थानकसूत्रगाथानुसारेण यदि यतीनां दैवसिकरात्रिकप्रतिक्रमणद्वयकरणं प्रत्यहं दृश्यते , तर्हि श्रावकाणां तत्करणे किं वक्तव्यमिति । १४ । सेन० ८ उल्ला० ।

सड्डकय-श्राद्धकृत-त्रि० । श्रावकविहिते, जी० १ प्रति० ।

सड्डा-श्रद्धा-स्त्री० । " श्रद्धर्द्धि—मूर्द्धार्द्धेऽन्त्ये वा " ॥ ८।२। ४१ ॥ अनेनान्त्यस्य सयुक्तधकारस्य ढकार' । सड्ढा । सद्धा । प्रा० । रुचौ, उत्त० ५ अ० । अभिलाषे, ज्ञा० १ श्रु० ६ अ० । रा० । इच्छायाम् , नि० १ श्रु० १ वर्ग १ अ० । ज्ञा० । मोक्षमार्गोद्यमेच्छायाम् , आचा० १ श्रु० ३ अ० ४ उ० । तत्त्वेषु श्रद्धाने, आस्तिक्ये, अनुष्ठानेषु वा निजेऽभिलाषे, योषिति, पं० व० ५ द्वार । स्त्रीसङ्गाभिलाषे, दश० ६ अ० । आ० क० ।

सड्डाइकहणावाघाय-श्रद्धादिकथनाव्याघात-पुं० । श्रावकविधिधर्म्मपदार्थकथनविघ्नाभावे, पं० व० २ द्वार ।

सड्डाण-श्रद्धान-पुं० तत्त्वेषु अनुष्ठानेषु वा निजेऽभिलाषे, स्था० ८ ठा० ३ उ० ।

सड्डि-श्राद्धिन्-पुं० । श्रद्धा मोक्षमार्गोद्यमेच्छा वर्त्तते यस्यासौ श्रद्धावान् । आचा० १ श्रु० ३ अ० ४ उ० । श्रद्धा—धर्मेच्छा विद्यते यस्यासौ श्रद्धावान् । आचा० १ श्रु० ५ अ० ५ उ० । नि० चू० । स्था० । श्रद्धावति, सूत्र० १ श्रु० ११ अ० । पिं० । श्रावके, नि० चू० २ उ० । सूत्र० । कल्प० ।

सड्डिय-श्राद्धिक-त्रि० । श्राद्धे, प्रव० १ द्वार । श्रद्धा—श्रद्धानं यस्मिन्नस्ति स श्राद्धः । श्रद्धेयवचने, स्था० ३ ठा० ३ उ० ।

सड्डी-श्रद्धी-स्त्री० । अविरतसम्यग्दृष्टिकायाम् , व्य० ३ उ० । श्राविकायाम् , जी० १ प्रति० ।

सढ-शठ-पु० । " ठो ढ. " ॥ ८ । १ । १९९ ॥ इति ठस्य ढः । सढो । प्रा० । धूर्ते, उत्त० ७ अ० । स्तब्धे, ( पाइ० ना० २२५ गाथा । ) शठकर्म्मकारित्वात् । सूत्र० १ श्रु० २ अ० ३ उ० । मिथ्याभाषिणि, उत्त० ३४ अ० । विश्वस्तजनवञ्चके, उत्त० ७ अ० । शठानुष्ठाने, सूत्र० १ श्रु० ३ अ० २ उ० । स्था० । मायिनि, प्रश्न०२ आश्र० द्वार । निकृतिमति मायोपेते, प्रश्न० ३ संव० द्वार । कैतवयुक्ते, स० ३ सम० । आ० म० ।

सढवंदण-शठवन्दन-न० । शठ शाठ्येन विश्रम्भार्थं वन्दनम् , अज्ञानादिव्यपदेशं वा कृत्वा न सम्यग्वन्दनम् । ध०२ अधि० । स्वनामख्याते विंशतितमे वन्दनकदोषे, बृ० ।

विंशतितमं दोषमाह—

वीसंभट्ठाणमिणं, सब्भावजढे सढे हवइ एतं ।
कवडंति कयवयंति य, सढया वि य होंति एगट्ठा ॥

विश्रम्भो--विश्वासस्तस्य स्थानमिदं वन्दनकमेवास्मिन् यथावद्दीयमाने श्रावकादयो विश्वसन्तीत्यभिप्रायेणाद्य सद्भावरहिते अन्तर्वासनाशून्ये वन्दमाने शिष्ये शठमतद्वन्दनकं भवति । बृ० ३ उ० । आव० । आ० चू० ।

सढा-शठा-स्त्री० । जटायाम् , ज्ञा० १ श्रु० १ अ० ।

सण-शण-पुं० । वल्कलप्रधाने वनस्पतिविशेषे, ज्ञा० १ श्रु० ६ अ० । प्रव० । शणप्रभृतय सप्तदश धान्यानि । आ० म० १ अ० । प्रज्ञा० । त्वक्प्रधाननाले धान्यविशेषे, भ०६ श०७ उ० ।

उत्त० । स्था० । तत्तुप्ये, न० । ज्ञा० १ श्रु० १ अ० । सण-जातिभेदे, अनु० ।

सणंकुमार-सनत्कुमार-पुं० । चतुर्थचक्रवर्तिनि, स० । प्रव० । ति० । आव० ।

सणंकुमारो मणुस्सिंदो, चक्कवट्टी महड्ढिए ।
पुत्तं रज्जे ठवेऊणं, सोऽवि राया तवं चरे ॥ ३७ ॥

अत्र सनत्कुमारदृष्टान्तः—अस्त्यत्र भरतक्षेत्रे कुरुजाङ्गलजनपदे हस्तिनागपुरं नाम नगरम् । तत्राश्वसेनो नाम राजा, तस्य भार्या सहदेवीनाम्नी । तयोः पुत्रश्चतुर्दशस्वप्नसूचितश्चतुर्थश्चक्रवर्ती सनत्कुमारो नाम । तस्य सूरिकालिन्दीतनयेन महेन्द्रसिंहेन परममित्रेण समं कलाचार्यसमीपे सर्वकलाभ्यासो जातः । सनत्कुमारो यौवनमनुप्राप्तः । अन्यदा वसन्तमासेऽनेकराजपुत्रनगरलोकसहितः सनत्कुमारः क्रीडार्थमुद्याने गतः, तत्राश्वक्रीडां कर्तुं सर्वे कुमाराः अश्वारूढाः स्वस्वमश्वं खेलयन्ति । सनत्कुमारोऽपि जलधिकल्लोलाभिधानं तुरङ्गमारूढः, समकालं सर्वैः कुमारैर्मुक्तस्ततो विपरीतशिक्षितेन कुमाराश्वेन तथा गतिः कृता यथा अपरकुमाराश्वाः प्राक् पतिताः, कुमाराश्वस्तु अदृश्यीभूतः । ज्ञातवृत्तान्तो राजा सपरिकरस्तत्पृष्ठौ चलितः । अस्मिन्नवसरे प्रचण्डवायुर्वातुं लग्नः, तेन तुरङ्गपदमार्गो भग्नः । महेन्द्रसिंहो राजाज्ञां मार्गयित्वा उन्मार्गेणैव कुमारमार्गणाय लग्नः, प्रविष्टो भीषणां महाटवीं, तत्र भ्रमतस्तस्य वर्षमेकमतिक्रान्तम्, एकस्मिन् दिवसे गतः स्तोकं भूमिभागं तावत्, यावदेकं महत्सरोवरं दृष्टवान् । तत्र कमलपरिमलमाघ्रातवान् । श्रुतवांश्च मधुरगीतवेणुरवम् । यावन्महेन्द्रसिंहोऽग्रे गच्छति तावत्तरुणीगणमध्यसंस्थितं सनत्कुमारं दृष्टवान् । विस्मितमना महेन्द्रसिंहश्चिन्तयति—किं मया एष विभ्रमो दृश्यते । किं वा सत्य एवायं सनत्कुमारः ?, यावदेवं चिन्तयन् महेन्द्रसिंहस्तिष्ठति तावत्पठितमिदं वन्दिना—"जय आससेण ! नहयल-मयङ्क ! कुरुभुवणलग्गणे खंभ ! । जय तिहुयणनाह ! सणं-कुमार ! जय लद्धमाहप्प ! ॥१॥" ततो महेन्द्रसिंहः सनत्कुमारोऽयमिति निश्चितवान् । अथ प्रकामं प्रमुदितमनाः सनत्कुमारेण दूरादागच्छन् दृष्टः सनत्कुमारोऽप्युत्थायाभिमुखमाययौ । महेन्द्रसिंहः सनत्कुमारपादयोः पतितः । सनत्कुमारेण समुत्थापितो गाढमालिङ्गितश्च । द्वावपि प्रमुदितमनस्कौ विद्याधरदत्तासने उपविष्टौ । विद्याधरलोकश्च तयोः पार्श्वे उपविष्टः । अथानन्दजलपूरितनयनेन सनत्कुमारेण भणितम्—मित्र ! कथमेकाक्येव त्वमस्यामटव्यामागतः ?। कथं चात्र स्थितोऽहं त्वया ज्ञातः । किञ्च-करोति मद्विरहे मम पिता माता च । कथितः सर्वो वृत्तान्तो महेन्द्रसिंहेन । ततो महेन्द्रसिंहो वरविलासिनीभिर्मज्जितः स्नापितश्च भोजनं द्वाभ्यां सममेव कृतम् । भोजनावसाने च महेन्द्रसिंहेन—सनत्कुमारः पृष्टः—कुमार ! तदा त्वं तुरङ्गमेणापहृतः क्व गतः ?, क्व स्थितश्च ?, कुत एतादृशी ऋद्धिस्त्वया प्राप्ता ?, सनत्कुमारेण चिन्तितं—न युक्तं निजचरित्रकथनं निजमुखेनेति संक्षिप्ता स्वयं परिणीता खेचरेन्द्रपुत्री विपुलमतीनाम्नी स्वप्रिया सनत्कुमारवृत्तान्तं स्वविद्याबलेन कथयितुं प्रवृत्ता । तदानीं कुमारो भवदादिषु पश्यत्सु तुरङ्गमेणापहृतो महाटव्यां प्रविष्टः । द्वितीयदिनेऽपि तथैव धावतोऽश्वस्य मध्याह्नसमयो जातः । क्षुधापिपासाकुलितेन श्रान्तेनाश्वेन निष्कासिता जिह्वा । कुमारस्ततः उत्तीर्णः । सोऽश्वस्तदानीमेव मृतः । कुमारस्ततः पादाभ्यामेव चलितः । तृषाक्रान्तश्च सर्वत्र जलं गवेषयन्नपि न प्राप । ततो दीर्घाध्वश्रमेण सुकुमारत्वेन चात्यन्तमाकुलीभूतो दूरदेशस्थितं सप्तच्छदं वृक्षं पश्यन् तदभिमुखं धावन् कियत् कालानन्तरं तत्र प्राप्तः । छायायामुपविष्टः पतितश्च लोचने भ्रामयित्वा कुमारः । अत्रावसरे कुमारपुण्यानुभावेन वनवासिना यक्षेण जलमानीतम् । शिशिरशीतलजलेन सर्वाङ्गे सिक्तः, आश्वासितश्च । लब्धचेतनेन च कुमारेण जलं पीतम्, पृष्टश्च कस्त्वं ? कुतो वाऽऽनीतं जलमिदम्?, तेन भणितम्-अहं यक्षोऽत्र निवासी । सलिलं चेदं मानससरोवरादानीतम् । कुमारेणोक्तम्-यदि मां तद्दर्शयसि तदा तत्र मानसरोवरे प्रक्षालयामि तथा च मद्वपुस्तत्तापमुपनयति । तच्छ्रुत्वा यक्षेण करतलसंपुटे गृहीत्वा नीतो मानसरोवरम् । तत्र व्यसनापतितोऽयमिति कृत्वा क्रुद्धेन वैताढ्यवासिना असितयक्षेण समं कुमारस्य युद्धं जातम् । तथाहि-यक्षेण प्रथमं मोटिततरुः प्रचण्डः पवनो मुक्तः । तेन नभस्तलं बहुलधूल्याऽन्धकारितम् । ततो विमुक्ताऽट्टाऽट्टहासा ज्वलनज्वालापिङ्गलकेशाः पिशाचा मुक्ताः । कुमारस्तैर्मनाक् न भीतिं गतः । ततो नयनज्वालास्फुलिङ्गवर्षद्भिर्नागपाशैः कुमारो यक्षेण बद्धः । जीर्णरज्जुबन्धनानीव तान् त्रोटयति स्म कुमारः । ततः करास्फालनपूर्वं मुष्टिमुद्यम्य यक्षः समायातः । तावता मुष्टिप्रहारेण कुमारस्तं खण्डीकृतवान् । पुनर्यक्षः स्वस्थीभूय गुरुमत्सरेण कुमारं घनप्रहारेण हतवान् । तत्प्रहारार्त्तः कुमारश्छिन्नमूलद्रुम इव भूमौ निपतितः । ततो यक्षेण दूरमुत्क्षिप्य गिरिवरः कुमारस्योपरि क्षिप्तः, तेन दृढपीडिताङ्गोऽसौ निश्चेतनो जातः । अथ कियत्कालानन्तरं लब्धसंज्ञः कुमारस्तेन समं बाहुयुद्धं चकार । कुमारेण करमुद्गराहतो यक्षः प्रचण्डवाताहतचूत इव तथा भूमौ निपतितः यथा मृत इव दृश्यते । परं देवत्वात्स न मृतः । आरार्टिं कुर्वाणः स यक्षस्तथा नष्टो यथा पुनर्न दृष्टः । कौतुकान्नभस्यागतविद्याधरैः पुष्पवृष्टिर्मुक्ता । उक्तं च-जितो यक्षः कुमारेणेति । ततो मानससरसि यथेष्टं स्नात्वा उत्तीर्णः कुमारो यावत् स्तोकं भूमिभागं गतः तावत्तत्र वनमध्यगता अष्टौ विद्याधरपुत्रीर्दृष्टवान् । ताभिरप्यसौ स्निग्धदृष्ट्या विलोकितः । कुमारेण चिन्तितम्-एताः कुतः समायाताः सन्ति, पृच्छाम्यासां स्वरूपमिति पृष्टं कुमारेण । तासां समीपे गत्वा मधुरवाण्या कुतो भवत्य आगताः ?, किमर्थमेतत् शून्यमरण्यमलंकृतम् । ताभिर्भणितम्-महाभाग ! इतो नातिदूरे प्रियसङ्गमाभिधाना अस्माकं पुरी अस्ति । त्वमपि तत्रैवागच्छेति भणितः । किङ्करीदर्शितमार्गस्तासां नगरीं प्राप्तः । कञ्चुकिपुरुषैः राजभवनं नीतः । दृष्टश्च तन्नगरस्वामिना भानुवेगराजेन अभ्युत्थानादिना सत्कृतश्च । उक्तं राज्ञा-महाभाग ! त्वमेतासां ममाष्टकन्यानां वरो भव । पूर्वं हि अत्रायातेन अर्चिमालिनाम्ना मुनिना एवमादिष्टम् योऽसितानं यक्षं जे-

ष्यति स एतासां भर्त्ता भविष्यति । ततस्त्वमेता परिण-येति नृपणोक्ते कुमारेण तथेति प्रतिपन्नम्। राज्ञा महामह-पूर्वकं विवाहः कृतः। कङ्कणं कुमारकरे बद्धम् सुतश्च ताभिः सार्द्धं रतिभवने कुमारः पल्यङ्कोपरि। निद्राविगमे चात्मानं भूमौ पश्यति। किमेतदिति चिन्तितवांश्च करवद्धं कङ्कणं च न पश्यति। ततः खिन्नमनाः कुमारस्ततो गन्तुं प्रवृत्तः । अरण्यमध्ये च गिरिवरशिखरे मणिमयस्तम्भप्रतिष्ठितं दिव्य-भवनं दृष्टं कुमारेण। चिन्तितम्—इदमपीन्द्रमायाजालप्रायं भविष्यतीति । तदासन्ने यावद्गन्तुं प्रवृत्तः कुमारस्तावत् तद्भवनान्तः करुणस्वरेण रुदन्त्या एकस्या नार्याः शब्दं श्रुतवान्। प्रविष्टस्तद्भवनान्तः सप्तमभूमिमारूढः। रुदन्त्या तत्र एकया कन्यया भणितम्—कुरुजनपदनभस्तलमृगाङ्क! स नत्कुमार! त्वं भवान्तरेऽपि मम भर्ता भूया इति वारं वारं भणन्ती पुनर्गाढं रोदितुं प्रवृत्ता। ततो रुदन्त्यैव तयाऽऽस-नं दत्तम्। तत्रोपविश्य कुमारस्तां पृष्टवान्-सनत्कुमारेण स-ह तव कः सम्बन्धः?, येन त्वं तमेवं स्मारयसि । सा प्राह—मम स मनोरथमात्रेण भर्त्ता। कथमिति कुमारेणो-क्ते सा प्राह—अहं हि साकेतपुरस्वामिसुरथनामनरेन्द्र-भार्यायाः चन्द्रयशःपुत्री अस्मि। अन्यदाऽहं यौवनं प्राप्ता। पित्रा च मत्कृतेऽनेकराजकुमारचित्रपटरूपाणि दूतैरानीय द-र्शितानि एकमपि चित्रपटरूपं मम न रोचते। एकदा सन-त्कुमारचित्रपटरूपं दूतैरानीय मे दर्शितम्, तदत्यन्तं मे रुरु-चे। मोहिता चाहं तद्रूपमेव ध्यायन्ती स्वगृहे तिष्ठामि। तावदहमेकेन विद्याधरेण पितृगृहादपहृता अत्रानीता स्वयं विकुर्वितेऽस्मिन्नावासे मां मुक्त्वा स क्वचित् गतोऽस्ति । यावत्सा कन्या एवं वदन्त्यस्ति तावत् अशनिवेगसुत-वज्रवेगेण विद्याधरेण तत्रागत्य सनत्कुमार उत्क्षिप्तो ग-गनमण्डले । सा च कन्या हा हा एवं कुर्वाणा मू-र्च्छापराधीना निपातिता पृथिवीपीठे । तावदाकाशमा-र्गादागत्य सनत्कुमारेण स विद्याधरो मुष्टिप्रहारेण व्या-पादितः। सनत्कुमारेण तस्य वृत्तान्तः कथितः, परिणी-ता च सा सुनन्दाभिधाना कन्या। साऽस्य स्त्रीरत्नं भवि-ष्यति। स्तोकवेलायां तत्र वज्रवेगविद्याधरभगिनी स-न्ध्यावली समागता भ्रातरं व्यापादितं दृष्ट्वा कोपमुपाग-ता। पुनरपीदं नैमित्तिकं वचः स्मृतिपथमागतम्—यथा तव भ्रातृवधकस्तव भर्त्ता भविष्यतीति मत्वा कुमार-स्यैवं विज्ञप्तिं चकार-अहमिह त्वां विवाहार्थमायाताऽस्मी-ति! सनत्कुमारेण सा तत्रैव परिणीता । अत्रान्तरे सन-त्कुमारसमीपे द्वौ विद्याधरनृपौ समायातौ। ताभ्यां प्रणा-मपूर्वं कुमारस्यैवं भणितम्-देव! अशनिवेगविद्याधरो वि-द्याबलेन ज्ञातपुत्रमरणवृत्तान्तस्त्वया समं योद्धुमायाति । ततश्चन्द्रवेगभानुवेगाभ्यामावां हरिचन्द्रसेनाभिधानौ च निजपुत्रौ प्रेषितौ रहसि संनाहश्च प्रेषितः। आवामस-न्निपतरौ भवत्सेवार्थं संप्राप्तौ । तदनन्तरं ततः समागतौ चन्द्रवेगभानुवेगौ सनत्कुमारस्य साहाय्याय सन्ध्यावल्या प्रज्ञप्तिविद्या दत्ता । चन्द्रवेगभानुवेगसहितः सनत्कुमारः संग्रामाभिमुखं चलित , तावताऽशनिवेगः सेनावृतः समायातः। तेन समं प्रथमं चन्द्रवेगभानुवेगौ योद्धुं प्रवृत्तौ। चिरकालं युद्धं कृत्वा तयोर्बलं भग्नम् । ततः स्वयमुत्थितः सनत्कुमारः, तेन अशनिवेगेन समं घोरं युद्धमारब्धं प्रथमं महोरगास्त्रं कुमारस्याभिमुखं मुक्तम्, तच्च कुमारेण मुष्टिनैव निहतम्। पुनस्तेन आग्नेयमस्त्रं मुक्तं, तत् कुमारेण वरुणास्त्रे-ण निहतम्। पुनस्तेन वायव्यास्त्रं मुक्तं कुमारेण शैलास्त्रेण प्रतिहतम्। ततो गृहीतधनुर्बाणान् मुञ्चन् कुमारस्तं नि-र्जीवमिव चकार। पुनर्गृहीतकरवालः स सनत्कुमारेण छि-न्नदक्षिणकरः कृतः। ततो द्वितीयकरेण बाहुयुद्धमिच्छतस्त-स्याभिमुखमायातस्य कुमारेण चक्रेण शिरश्छिन्नम्। तदानीम् अशनिवेगविद्याधरलक्ष्मीरनेकविद्याधरैः सहिता सनत्कुमा-रेण संक्रान्ता । ततोऽशनिवेगचन्द्रवेगादिविद्याधरपरिवृतः सनत्कुमारो नभोमार्गाद्विद्याधररथेन समुत्तीर्य तदावासे पुनरायातः। दृष्टस्तत्र हर्षिताभ्यां सुनन्दासन्ध्यावली-भ्याम्। उक्तश्च ताभ्याम्—आर्यपुत्र ! स्वागतम् । अत्र च समस्तविद्याधरैः सनत्कुमारस्य राज्याभिषेकः कृतः। सुखेनात्र विद्याधरराजसेवितः सनत्कुमारस्तिष्ठति । अन्यदा चन्द्रवेगेन विज्ञप्तः सनत्कुमारः, यथा—देव! मम पूर्वमर्चिमालिमुनिनैवमादिष्टम्—यथेदं तव कन्या-शतं भानुवेगस्य चाष्टकन्याः यः परिणेष्यति सोऽवश्यं सनत्कुमारनामा चतुर्थश्चक्री भविष्यति। स इतो मासमध्ये मानसरोवरे समेष्यति। तत्र व्यसनापतितं सरसि स्नानम् असिताक्षो यक्षः पूर्वभववैरी द्रक्ष्यति। स पूर्वभववैरी क-थमिति सनत्कुमारेण पृष्टे चन्द्रवेगो मुनिमुखश्रुतं तत्पूर्वभ-ववृत्तान्तं प्राह—अस्तिकाञ्चनपुरं नाम नगरम्। तत्र विक्रम-यशोनामा राजा। तस्य पञ्चशतान्यन्तःपुर्यो वर्त्तन्ते । तत्र नागदत्तः सार्थवाहोऽस्ति। तस्य रूपलावण्यसौभाग्ययौवन-गुणैः सुरसुन्दरीभ्योऽधिका विष्णुश्रीनाम भार्याऽस्ति साऽन्यदा विक्रमयशोराजेन दृष्टा। मदनातुरेण तेन स्वान्तःपुरे क्षिप्ता ततो नागदत्तस्तच्चिन्तया उन्मत्तीभूत एवं विलप-ति। हा चन्द्रानने! क्व गता, दर्शनं मे देहीति विलपन् कालं नयति । विक्रमयशोराजस्तु मुक्तसकलराजकार्योऽगणित-जनापवादस्तया विष्णुश्रिया सह अत्यन्तरतिं प्रसक्तः कालं नयति। पञ्चशतान्त पुरीणां नामापि न गृह्णाति। अन्यदा ताभिः कार्मणादियोगेन विष्णुश्रीर्व्यापादिता। ततो राजा तस्या मरणेनात्यन्तं शोकार्त्तोऽश्रुजलभृतनयनो नागदत्त इवोन्म-त्तीभूतो विष्णुश्रीकलेवरं वह्निसात्कर्तुं न ददाति। ततो मन्त्रि भिर्नृपं कथमपि वञ्चयित्वा अरण्ये तत् कलेवरं त्यक्तम्। राजा च तत् कलेवरमपश्यन् परिहृतान्नपानभोजनः स्थितः । मन्त्रिभिर्विचारितम्—एष तत्कलेवरदर्शनम-न्तरेण मरिष्यतीति अरण्ये नीत्वा राज्ञस्तत्कलेवरं द-र्शितम् । राज्ञा तदानीं तत्कलेवरं गलत्पूतिनिबद्धं नि-र्यत्कृमिजालं वायसकर्षितनयनयुगलं चण्डखगतुण्डख-ण्डितं दुरभिगन्धं प्रेक्ष्य एवमात्मानं निन्दितुमार-ब्धम्। रे जीव! यस्य कृते त्वया कुलशीलजातियशोल-ज्जाः परित्यक्ता तस्येदृशी अवस्था जाता । ततो वैरा-ग्यमार्गं प्राप्तो राजा राज्यं राष्ट्रं पुरं स्वजनवर्गं च परिहृ-त्य सुव्रताचार्यसमीपे निष्क्रान्तः । ततश्चतुर्थषष्ठाष्टमादि-विचित्रतपःकर्मभिरात्मानं भावयन् प्रान्ते संलेखनां कृ-त्वा सनत्कुमारदेवलोके गतः। ततश्च्युतो रत्नपुरे श्रेष्ठि-सुतो जिनधर्मो जातः। स च जिनवचनभावितमना सम्य-

क्त्वमूलं द्वादशविध श्रावकधर्मं पालयन् जिनेन्द्रपूजारत. काल गमयति । इतश्च स नागदत्तः प्रियाविरहदु खितो भ्रान्तचित्त आर्त्तध्यानपरिक्लिष्टशरीरो भूत्वा बहुतिर्यग्योनिषु भ्रान्त्वा ततः सिंहपुरे नगरेऽग्निशर्मनामा द्विजो जात. । कालेन त्रिदण्डिव्रतं गृहीत्वा द्विमासक्षपणरतो रत्नपुरमागत. । तत्र हरिवाहनो नाम राजा तापसभक्तस्तेन तपस्वी आगत. श्रुत. । पारणकदिने राज्ञा निमन्त्रित. स गृहमागत. । अत्रान्तरे स जिनधर्म्मा नामा श्रावकस्तत्रागत. । तं दृष्ट्वा पूर्वभवजातवैरानुभावेन रोषारुणलोचनेन मुनिना एवमुक्त राज्ञ., यदा त्व मा भोजयसि तदाऽस्य श्रेष्ठिन. पृष्ठे स्थाल विन्यस्य मा भोजय ? अन्यथा नाह भोक्ष्ये । राज्ञोक्तमसौ श्रेष्ठी महान् वर्तते, ततोऽपरस्य पुरुषस्य पृष्ठे त्व भोजनं कुरु । स प्राह—एतस्य पृष्ठावेव भोजनं करिष्ये । नापरस्येति राज्ञा तापसानुरागेण तत् प्रतिपन्नम्, राज्ञो वचनात् श्रेष्ठिना पृष्ठे स्थालमारोपितम् । तापसेन तत्पृष्ठे दाहपूर्वकभोजन कृतम् । श्रेष्ठिना पूर्वभवदुष्कर्मफल ममोपस्थितमिति मन्यमानेन तत्सम्यक् सोढमिति स्थालीदाहेन तत्पृष्ठे व्रन जातम् ।तत. स तापसस्तथा भुक्त्वा स्वस्थाने गत., श्रेष्ठ्यपि स्वगृहे गत्वा स्वकुटुम्बवर्ग प्रतिबोध्य जैनदीक्षा जग्राह । ततो नगरान्निर्गतो गिरिशिखरे गत्वा अनशनमुच्चचार । पूर्वदिगभिमुख मासार्द्ध यावत्कायोत्सर्गेण स्थित', एवं शेषास्वपि दिक्षु । ततः पृष्ठिक्षते काकशिवादिभिर्भक्षित सम्यग् तत्पीडा सहमानो मृत्वा सौधर्म्मे कल्पे इन्द्रो जात.। स तापसोऽपि तस्यैव वाहनम् ऐरावणो जात. । ततश्च्युतोऽथ स ऐरावणो नरतिर्यक्षु भ्रान्त्वाऽसिताक्षो जात । शक्रोऽपि ततश्च्युत्त्वा हस्तिनागपुरे सनत्कुमार. चक्री जात. । एवमसिताक्षयक्षस्य भवता सह वैरकारणमिति मुनिनोक्ते मया तवान्तरवासनिमित्तं भानुवेगं विसर्जयित्वा प्रियसङ्गमपुरीनिवेशपूर्व तव भानुवेगेन कन्या. परिणायिता.। मुक्तो मयैव कारणेन त्व तद्वने । एव करिष्याम इति विचार्य तदा विद्याधरास्तत्कृतवन्त. । ततो विज्ञपयामि देव ! मन्यस्व मे कन्याशतपाणिग्रहणम्, ता अपि तत्र भवन्मुखकमलं पश्यन्ति । एवं भवत्विति कुमारेणोक्ते स चन्द्रवेग कुमारेण समं स्वनगरे गत ।तत्र कुमारेण कन्याशतं परिणीतम् । पुनरत्रागतश्च दशोत्तरेण कन्याशतेन सह भोगान् भुङ्क्ते कुमार ।अद्य पुनरेवमुक्त कुमारेण यथाद्य गन्तव्य यत्रास्माभिर्यक्षो जित । साम्प्रतमत्रायातस्य कुमारस्य पुर प्रेक्षणं कुर्वन्तीनामस्माकं कुमारपत्नीनां भवद्दर्शन जातमिति । अत्रान्तरे रतिगृहशय्यात उत्थित कुमार महेन्द्रसिंहेन सम विद्याधरपरिवृतो वैताढ्यं गत. । अवसरं लब्ध्वा महेन्द्रसिंहेन विज्ञप्तम् । कुमार ! तव जननीजनकौ त्वद्विरहार्त्तौ दु खेन कालं गमयत, ततस्तद्दर्शनप्रसाद. क्रियताम् इति । महेन्द्रसिंहवचनानन्तरमेव महता गगनस्थितविद्याधरविमानहयगजादिवाहनारूढविद्याधरवृन्दसमर्दैन हस्तिनागपुरे संप्राप्त कुमार ,आनन्दिताश्च जननीजनकनागरजना । ततो महत्या विभूत्याऽश्वसेनराजेन सनत्कुमार स्वराज्येऽभिषिक्त । महेन्द्रसिंहश्च सेनापति कृत. । जननीजनकाभ्या स्थविराणामन्तिके प्रव्रज्या गृहीत्वा स्वकार्यमनुष्ठितम् ।

सनत्कुमारोऽपि प्रवर्द्धमानकोशवलसारो राज्यमनुपालयति । उत्पन्नानि चतुर्दश रत्नानि नवनिधयश्च । कृता च तेषां पूजा । तदनन्तरं चक्ररत्नदर्शितमार्गो मागधवरदामप्रभाससिन्धुखण्डप्रपातादिक्रमेण भरतक्षेत्रं साधितवान् । सनत्कुमार. । हस्तिनागपुरे चक्रवर्त्तिपदवीं पलायन् यथेष्ट सुखानि भुङ्क्ते, शक्रेणावधिज्ञानप्रयोगात्त पूर्वभवे स्वपदाधिरुढ ज्ञात्वा महता हर्षेण वैश्रमणोऽनुज्ञप्त. । सनत्कुमारस्य राज्याभिषेक कुरु । इमं च हारं वनमाला छत्रं मुकुटं चामरयुगलं कुण्डलयुग दूष्ययुगं सिंहासनञ्च पादपीठञ्च प्राभृतं कुरु । शक्रेण तव वृत्तान्तः पृष्टोऽस्तीति ब्रूया. । वैश्रमणोऽपि शक्रदत्तं गृहीत्वा गजपुरनगरे समागत्य तत् प्राभृतं चक्रिणः पुरो मुक्तवान्, शक्रवचनं चोक्तवानिति । पुन शक्रेण तिलोत्तमारम्भे देवाङ्गने तत्र तदभिषेककरणाय प्रेषिते । चक्रिणोऽनुज्ञां गृहीत्वा विकुर्वितयोजनप्रमाणमणिपीठोपरिरचितमणिमण्डपान्त स्थापिते मणिसिंहासने कुमार निवेश्य कनककलशाहृतक्षीरोदजलधाराभिर्धवलगीतानि गायन्तीदेवीदेवाश्चाभ्यषिञ्चन् । रम्भातिलोत्तमादेव्यौ तदानीं नृत्य कुरुत, महामहोत्सवेन कुमारमभिषिच्य वैश्रमणादय. स्वलोक जग्मु., चक्र्यपि भोगान् भुञ्जन् काल गमयति । अन्यदा सुधर्मसभाया सौधर्मेन्द्रः सिंहासने अनेकदेवदेवीसेवित. स्थितोऽस्ति । अत्रान्तरे एक ईशानकल्पदेव सौधर्मेन्द्रपार्श्वे आगत. । तस्य देहप्रभया सभास्थित. देवदेहप्रभाभर. सर्वतो नष्ट । आदित्योदये चन्द्रग्रहादय इव निष्प्रभा. सर्वे सुरा जाता. । तस्मिन् पुन स्वस्थाने गते देवै सौधर्म्मेन्द्रः पृष्ट. । स्वामिन् ! केन कारणेन अस्य देवस्येदृशी प्रभा जाताऽस्ति । शक्र. प्राह-अनेन पूर्वभवे आचाम्लवर्द्धमानतप खण्ड कृतम् तत्प्रभावादस्य देहे प्रभा ईदृशी जाताऽस्ति। देवै पुनरिन्द्र पृष्ट, अन्योऽपि कश्चिदीदृशो दीप्तिमानस्ति न वा ?, इन्द्रेण भणितं यथा हस्तिनागपुरे कुरुवंशेऽस्ति सनत्कुमारनामा चक्री, तस्य रूपं सर्वदेवेभ्योऽप्यधिकमस्ति । इद शक्रवचोऽश्रद्दधानौ, विजयवैजयन्तौ देवौ ब्राह्मणरूपौ आगतौ, प्रतीहारेण मुक्तद्वारौ गृहान्त. प्रविष्टौ,राजसमीप गतौ । दृष्टश्च तैलाभ्यङ्ग कुर्वन् राजा अतीव विस्मितौ देवौ शक्रवर्णितरूपाधिकरूप तौ पश्यन्तौ राज्ञा पृष्टौ । किमर्थं भवन्तौ अत्रायातौ । तौ भणत देव ! भवद्रूप त्रिभुवने वर्ण्यते तद्दर्शनार्थं कौतुकेन आवामत्रायातौ । ततोऽतिरूपगर्वितेन राज्ञा तौ उक्तौ भो भो विप्रौ युवा किं मद्रूप दृष्ट स्तोककालं प्रतीक्षेथा यावदहमास्थानसभामुपविशामि एवमस्त्विति प्रोच्य निर्गतौ द्विजौ । चक्र्यपि शीघ्र मज्जनं कृत्वा सर्वाङ्गोपाङ्गश्टङ्गार दधत् सभाया सिंहासने उपविष्ट । आकारितौ द्विजौ ताभ्या तदा चक्रिरूपं दृष्ट्वा विषण्णाभ्या भणितम्—अहो मनुष्याणा रूपलावण्ययौवनानि क्षणदृष्टनष्टानि । तयोर्द्विजयोरेतद्वच. श्रुत्वा चक्रिणा भणितम्, भो किमेव भवन्तौ विपण्णौ मम शरीरं निन्दत । ताभ्या भणितम्-महाराज ! देवाना रूपयौवनतेजासि प्रथमवयस आरभ्य षण्मासशेषायु समय यावदवस्थितानि भवन्ति,यावज्जीव न हीयन्ते । भवना शरीरे तु आश्चर्यं दृश्यते।यत्तद्रूपलावण्यादिकं साम्प्रतमेव दृष्टं नष्टम्। राज्ञा भणितम्-कथमेव भवद्भ्या ज्ञानम्?ताभ्या शक्रप्रशंसादिक सर्वा-

ऽपि वृत्तान्त कथित । चक्रिणा तु केयूरादिविभूपितं बाहुयुगलं पश्यता हारादिविभूपितमपि स्ववक्ष स्थलं विवर्णमुपलक्ष्य चिन्तितम् । अहो अनित्यता संसारस्य,असारता शरीरस्य, प तावन्मात्रेणापि कालेन मच्छरीरस्य यौवनतेजासि नष्टानि । अयुक्तोऽस्मिन् भवे प्रतिबन्ध , शरीरमोहोऽज्ञानं, रूपयौवनाभिमानो मूर्खत्वं, भोगासेवनमुन्माद , परिग्रहो ग्रह इव । तन एतत्सर्वं व्युत्सृज्य परलोकहितं संयमं गृह्णामीति विचार्य चक्रिणा पुत्रः स्वराज्येऽऽभिषिक्त स्वयं संयमग्रहणाय उद्यतो जात । तदानीं देवदेवीभ्या भणितम्—"अणुहरिअ धीर ! तुमे, चरियं निययस्स पुव्वपुरिसस्स । भरहमहानरवइणो,तिहुअणविक्खायकित्तिस्स ॥१॥" इत्याद्युक्त्वा देवौ गतौ । चक्र्यपि तदानीमेव सर्व परिग्रहं परित्यज्य विरताचार्यसमीपे प्रव्रजितः। तत स्त्रीरत्नप्रमुखाणि सर्वरत्नानि, शेयाश्च रमण्य., सर्वेऽपि नरेन्द्रा.,सर्वसैन्यलोका नवनिधयश्च पराणमासान् यावत्तन्मार्गानुलग्ना. । तेन सयमिना सिंहावलोकनन्यायेन दृष्ट्याऽपि न विलोकिता. । षष्ठभक्तेन भिक्षानिमित्तं गोचरप्रविष्टस्य प्रथममेव अजातक्र तस्य गृहस्थेन दत्त, तद्भुक्तम् । द्वितीयदिवसे च षष्ठमेव कृतं पारणके प्रान्तनीरसाहारकरणात्तस्यैते रोगा प्रादुर्भूता. । कण्डू १ ज्वर. २ कासश्वास. ४ स्वरभङ्ग. ५ अक्षिदु खम् ६ उदरव्यथा ७ एता. सप्त व्याधय. सप्तशतवर्षाणि यावदध्यासिता उग्रतप. कुर्वतस्तस्य आमर्पौपधी १ खेलौपधी २ विप्पौपधी ३ जल्लौपधी ४ सर्वौपधी ५ प्रभृतयो लब्धय. सम्पन्ना., तथाप्यसौ स्वशरीरप्रतीकारं न करोति । पुनः शक्रेणैकदा एवं प्रशंसित., अहो पश्यन्तु देवा. सनत्कुमारस्य धीरत्वं, व्याधिकदर्थितोऽप्ययं न स्ववपु.प्रतीकारं कारयति । एतदिन्द्रवचनमश्रद्दधानौ तावेव देवौ वैद्यरूपेण तस्य मुने. समायातौ,भणितवन्तौ च । भगवन् ? तव वपुष्यावा प्रतीकारं कुर्व । सनत्कुमारस्तदानीं तूष्णीक एव स्थित । पुनस्ताभ्या भणितम्–तथैव मुनिर्मौनभाक् जात. । पुनः पुनस्तथैव तौ भणत., तदा मुनिना भणितम्—भवन्तौ किं शरीरव्याधिस्फेटकौ, किं वा–कर्मव्याधिस्फेटकौ ? ताभ्यां भणितमाभ्या शरीरव्याधिस्फेटकौ । तदानीं सनत्कुमारमुनिना स्वमुखथूत्कृतेन घर्षिता स्वाङ्गुली कनकवर्णा दर्शिता , भणितञ्च—अहं स्वयमेव शरीरव्याधिं स्फेटयामि, यदि मे सहनशक्तिर्न स्यात्तदेति । युवा यदि संसारव्याधिस्फेटनसमर्थौ तदा तं स्फेटयतम्, तौ देवौ विस्मितमनस्कौ प्रकटितस्वरूपौ एवमूचतु –भगवन् ! त्वमेव ससारव्याधिस्फेटनसमर्थोऽसि, आवाभ्यां तु शक्रवचनमश्रद्दधानाभ्यामिहागत्य त्वं परीक्षितो यादृश शक्रेण वर्णितस्तादृश एव त्वमसीत्युक्त्वा प्रणम्य च स्वस्थान गतौ । भगवान् सनत्कुमारस्तु कुमारत्वे पञ्चाशद्वर्षसहस्राणि चक्रवर्तित्वे वर्षलक्षं श्रामण्ये च वर्षलक्षमेक परिपाल्य संमेतशैलशिखरं गत. । तत्र शिलातले आलोचनाविधानपूर्वमासिकेन भक्तेन कालं कृत्वा सनत्कुमारकल्पे देवत्वेनोत्पन्न , ततश्च्युतो महाविदेहे वासे सेत्स्यति । इति सनत्कुमारदृष्टान्त. । ३७ । उत्त० १८ अ० । ध० र० । स्था० । प्रव० । सनत्कुमारप्रधानविमानकल्प सनत्कुमार । अनु० । तृतीये देवलोके , अनु० । स्था० । प्रज्ञा० । प्रव० । औ० । स० । ( तृतीयकल्पदेवाधिपे, स च कल्प क कथं तद्व आधिपत्यं करोतीति 'ठाण' शब्दे चतुर्थभागे १७१२ पृष्ठे उक्तम् । ) दाक्षिणात्यानां सनत्कुमारकल्पस्येन्द्रे, स्था० २ ठा० ३ उ० । विपा० ।

सणंकुमारे णं भंते ! देविंदे देवराया किं भवसिद्धिए अभवसिद्धिए सम्मद्दिट्ठी मिच्छादिट्ठी परित्तसंसारिए अणंतसंसारिए सुलभबोहिए दुल्लभबोहिए आराहए विराहए चरिमे अचरिमे ?, गोयमा ! सणंकुमारे णं देविंदे देवराया भवसिद्धिए, णो अभवसिद्धिए ,एवं सम्मद्दिट्ठी परित्तसंसारिए सुलभबोहिए आराहए चरिमे पसत्थं नेयव्वं । से केणऽट्ठेणं भंते !, गोयमा ! सणंकुमारे देविंदे देवराया बहूणं समणाणं बहूणं समणीणं बहूणं सावयाणं बहूणं सावियाणं हियकामए सुहकामए पत्थकामए आणुकंपिए निस्सेयसिए हियसुहनिस्सेसकामए, से तेणट्ठेणं गोयमा ! सणंकुमारे णं भवसिद्धिए०जाव णो अचरिमे । सणंकुमारस्स णं भंते ! देविंदस्स देवरण्णो केवइयं कालं ठिई पण्णत्ता ? , गोयमा ! सत्त सागरोवमाइं ठिई पण्णत्ता । से णं भंते ! तओ देवलोगाओ आउक्खएणं० जाव कहिं उववज्जिहिति ?, गोयमा ! महाविदेहे वासे सिज्झिहिति ०जाव अंतं करेहिइ । ( सू० १४१+ )

'आराहए' त्ति—ज्ञानादीनामाराधयिता 'चरमे ' त्ति—चरम एव भवो यस्य प्राप्तस्तिष्ठति, देवभवो वा चरमो यस्य स,चरमभवो वा भविष्यति यस्य स चरम., 'हियकामए' त्ति—हितं सुखनिबन्धनं वस्तु ' सुहकामए ' त्ति–सुख-शर्म' पत्थकामए' त्ति—पथ्यं-दु खत्राणम् , कस्मादेवमित्यत आह—'आणुकंपिए' त्ति-कृपावान् , अत एवाह–' निस्सेयसिए' त्ति—नि श्रेयसं—मोक्षस्तत्र नियुक्त इव नै.श्रेयसिक ' हियसुहनिस्सेसकामए ' त्ति-हित यत्सुखमदु खानुबन्धमित्यर्थ., तन्नि शेषाणा सर्वेषा कामयते वाञ्छति य स तथा । भ० ३ श० १ उ० । ( यद्यपि सनत्कुमारे स्त्रीणामुत्पत्तिर्नास्ति तथापि या. सौधर्मोत्पन्नाः समयाधिकपल्योपमादिदशपल्योपमान्तस्थितयोऽपरिगृहीतदेव्यस्ता सनत्कुमारदेवाना भोगाय संपद्यन्ते इति ' परियारणा ' शब्दे पञ्चमभागे ६३२ पृष्ठे गतम् । )

सणंकुमारमाहिंदकप्प–सनत्कुमारमाहेन्द्रकल्प–पुं०।स्वनामख्याते कल्पे, स्था० ४ ठा० ४ उ० । ( अस्मिन् कल्पे कतिविधानि विमानानीति ' विमाण ' शब्दे षष्ठे भागे १०११ पृष्ठे गतम् । )

सणंदिघोस–सनन्दिघोष–त्रि०। सह नन्दिघोषो द्वादशतूर्यनिनादो यस्य स । नन्दिघोषतुल्ये , जी० ३ प्रति० ४ अधि० ।

सणकप्पास–शणकर्पास–पुं० । शणत्वचि, ' सणो वणस्सनिजातो तस्स वा गोकव्वणिज्जो कप्पासो भण्णति । नि० चू० २ उ० ।

सणबंधण–शणबन्धन–न० । शणपुष्पवृन्ते , औ० ।

सणय-शणज-न० । शणाडिवल्कजे, नि० चू० १ उ० ।

सणसत्तरस-शणसप्तदशन्- त्रि० । शण सप्तदशो येषां व्रीह्यादीनां तानि तथा । शणादिसप्तदशसङ्ख्याकेषु धान्येषु, प्रश्न० २ संव० द्वार ।

सणह-सनख-पुं० । जम्बूद्वीपे भारते वर्षे भविष्यति षष्ठे कुलकरे, समवायाङ्गे तु-सुमहनामाऽयम् । ति० ।

सणहप्पई-सनखपदी-स्त्री० । सनखपदपञ्चेन्द्रियतिर्यग्जातिस्त्रियाम्, जी० २ प्रति० ।

सणहप्पय-सनखपद-पुं० । नखरेषु सिंहादिषु, स्था० ४ ठा० ४ उ० । सनखानि दीर्घनखपरिकलितानि पदानि येषां ते श्वादय. प्राकृतत्वाच्च ' सणहप्पया ' इति । जी० १ प्रति० । सूत्र० । प्रश्न० । भ० ।

से किं तं सणहप्प(प्फ)या ? सण० अणेगविहा पण्णत्ता, तं जहा-सीहा वग्घा दीविया अच्छा मरच्छा परस्सरा सियाला विडाला सुणगा कोलसुणगा कोकंतिया ससगा चित्तगा चिल्लगा । जे यावण्णे तहप्पगारा । से त्तं सणहप्प(प्फ)या । ते समासओ दुविहा पण्णत्ता, तं जहा-संमुच्छिमा य, गब्भवक्कंतिया य । तत्थ णं जे ते संमुच्छिमा ते सव्वे णपुंसगा, तत्थ णं जे ते गब्भवक्कंतिया ते तिविहा पण्णत्ता, तं जहा-इत्थी पुरिसा नपुंसगा । (सू० ३४ ×)

तथा सनखानि दीर्घनखपरिकलितानि पदानि येषां ते सनखपदा श्वादय । प्राकृतत्वाच्च—' सणहप्फया ' इति-सूत्रे निर्देश, अधुना एतानेव एकखुरादीन् भेदतः क्रमेण प्रतिपिपादयिषुरिदमाह—'से किं तं'मित्यादि, सुगम नवर ये केचिज्जीवभेदा प्रतीतास्ते लोकतो वेदितव्या. ' ते समासओ दुविहा पन्नत्ता ' इत्यादि सूत्रं प्राग्वद्भावनीयम्, नवरमत्र जातिकुलकोटीना योनिप्रमुखाणि शतसहस्राणि दश भवन्तीति वेदितव्यम्, अत्रापि च संमूर्छिमानां गर्भव्युत्क्रान्तिकाना च प्रत्येकं यच्छरीरादिद्वारेषु चिन्तन यच्च स्त्रीपुंनपुंसकानां परस्परमल्पबहुत्वं तज्जीवाभिगमटीकातो वेदितव्यम् । प्रज्ञा० १ पद ।

सणहमच्छ-सनखमत्स्य-पुं० । मत्स्यभेदे, जी० १ प्रति० । प्रज्ञा० ।

सणहा-सनखा-स्त्री० । नखोपलक्षितायां पिण्डिकायाम्, यस्या पिण्डिकाया बध्यमानायामङ्गुलीनखा ओष्ठस्याधो लगन्ति सा सनखेत्युच्यते । भ० १५ श० ।

सणाण-सज्ञान-न० । ज्ञानेन सहितम् । सम्यग्दृष्टिसहितेषु, स्था० २ ठा० ४ उ० ।

सणातण-सनातन-त्रि० । शाश्वते, द्रव्यार्थतया नित्ये, सूत्र० २ श्रु० ६ अ० ।

सणाह-सनाथ-त्रि० । सस्वामिके, ज्ञा० १ श्रु० ८ अ० । आ० म० ।

सणाभि-सनाभि-त्रि० । बान्धवे, " बंधू सयणो सणाही य" पाइ० ना० १०१ गाथा ।

सणिअं-शनैस्-अव्य० । "शनैसो डिअम् " ॥ ८ । २ । १६८ ॥ इति स्वार्थे डिअ प्रत्यय । अत्वरायाम्, प्रा० २ पाद । डित्वाच्च टेर्लुक् । सणिअमवगूढो । प्रा० । " मसिणं सणिअ मट्ठं " पाइ० ना० १५ गाथा ।

सणिओग-शनियोग-पुं० । परस्य कुचुण्डिसुघुद्धादिदाने शनैश्चरग्रहयोगे, उत्त० ३२ अ० ।

सणिंचर शनैश्चर-पु० । महाग्रहभेदे, स्था० ।

दो सणिंचरा । स्था० २ ठा० ३ उ० ।

सणिचारि(ण्)-शनैश्चारिन्-पु० । शनैर्मन्दमुत्सुकत्वाभावाच्चरन्तीत्येवंशीला. शनैश्चारिण. । भ० ६ श० ७ उ० । यत्र सुखमसुखमाकाल तत्रत्यमनुष्यजातौ, जी० ३ प्रति० ४ अधि० ।

सणिच्चर-शनैश्चर-पुं० । ताराग्रहभेदे, स्था० ६ ठा० ३ उ० ।

सणिच्छर-शनैश्चर-पुं० । " इत्सैन्धवशनैश्चरे " ॥ ८।१।१४६ ॥ अनेनात्रैत इत्वम् । सणिच्छरो । प्रा० । चतुर्थे महाग्रहविशेषे, कल्प० १ अधि० ५ क्षण । च० प्र० । स्था० । ज्योतिर्देवे, प्रज्ञा० २ पद । सूत्र० । औ० । प्रश्न० । जं० ।

सणिच्छरसंवच्छर-शनैश्चरसंवत्सर-पुं० । शनैश्चरनिष्पादित संवत्सर. शनैश्चरसंवत्सर. । संवत्सरभेदे, चं० प्र० ।

ता सणिच्छरसंवच्छरे णं अट्ठावीसतिविहे पण्णत्ते, तं जहा-अभियी सवणे० जाव उत्तरासाढा । जं वा सणिच्छरे महग्गहे तीसाए संवच्छरेहिं सव्वं णक्खत्तमंडलं समाणेति । ( सू० ५८ × )

' ता सणिच्छरे ' त्यादि तत्र शनैश्चरसंवत्सरोऽष्टाविंशतिविध. प्रज्ञप्त., तद्यथा—अभिजित्—अभिजिच्छनैश्चरसंवत्सर, श्रवण —श्रवणशनैश्चरसंवत्सर', एवं यावदुत्तरापाढा—उत्तरापाढाशनैश्चरसवत्सर । तत्र यस्मिन् सवत्सरे अभिजिता नक्षत्रेण सह शनैश्चरो योगमुपादत्ते सो ऽभिजिच्छनैश्चरसवत्सर', श्रवणेन सह यस्मिन् संवत्सरे शनैश्चरो योगमुपादत्ते स श्रवणशनैश्चरसवत्सर । एवं सर्वत्र भावनीयम् । 'जं वे' त्यादि, वाशब्द. प्रकारान्तरताद्योतनाय तत्सर्व समस्त नक्षत्रमण्डलं शनैश्चरो महाग्रहस्त्रिंशता सवत्सरै समापयति, एतावान् कालविशेषस्त्रिंशद्वर्षप्रमाण. शनैश्चरसंवत्सर । च० प्र० १० पाहु० । स्था० । सू० प्र० । ज० ।

सणिधण-सनिधन-त्रि० । सक्षये, प्रश्न० १ आश्र० द्वार ।

सणिद्ध-स्निग्ध-त्रि० । " स्निग्धे वादितौ " ॥ ८।२।१०६ ॥ इति स्निग्धे सयुक्तस्य नात्पूर्वोऽत् । सिणिद्धं । सणिद्ध । स्नेहवति, प्रा० २ पाद ।

सणिमित्त-सनिमित्त-त्रि० । सह निमित्तेन उपादानकारणेन सहकारिकारणेन वा वर्त्तत इति सनिमित्तम् । सकारणे, सूत्र० २ श्रु० १ अ० । कर्म० ।

सणियं-शनैस्-अव्य० । मन्दे, अश्रव्ये च । " सणियं सणियं " आचा० २ श्रु० ३ चू० ।

सणियाण-सनिदान-त्रि० । सह निदानेन वर्त्तत इति सनिदान । भोगप्रार्थनारूपनिदानसहिते, सूत्र० १ श्रु० १३ अ० ।

सणेह-स्नेह-पुं०। "स्नेहाग्न्योर्वा" ॥८।२।१०२॥ अनेनात्र संयुक्तादन्त्यव्यञ्जनात्पूर्वस्याकारादेशः। सणेहो। नेहो। प्रीतौ, प्रा० २ पाद।

सण्ढ-सं(ष)ण्ढ-पुं०। "वर्गेऽन्त्यो वा" ॥ ८। १। ३०॥ अनेनात्रानुस्वारस्य वैकल्पिको वर्गान्त्यादेश.। संढो। सण्ढो। नपुसंक, प्रा० १ पाद।

सण्ण-संज्ञ-त्रि०। सम्यग् जानाति पश्यतीति संज्ञः। ज्ञानदर्शनयुक्ते, आचा० १ श्रु० ५ अ० ६ उ०।

सन्न-त्रि०। अवसन्ने, मग्ने, "सन्नो इह काममुच्छिया, मोहं जंति असंवुडा नरा।" सूत्र० १ श्रु० २ अ० १ उ०।

सण्णक्खर-संज्ञाक्षर-न०। संज्ञायतेऽनयेति संज्ञा—नाम तन्निवन्धन तत्कारणमक्षरं संज्ञाक्षरम्। अक्षरश्रुतभेदे, वृ० १ उ० १ प्रक०। (एतच्च 'अक्खर' शब्दे प्रथमभागे १४० पृष्ठे उपपादितम्।)

सण्णकुंभ-स्वर्णकुम्भ-पुं०। वासुपूज्यशिष्ये रोहिणीतप-उपदेष्टरि, ती० ३४ कल्प।

सण्णजंघ-स्वर्णजंघ-पुं०। ऋषभदेवजीवस्य वज्रजङ्घस्य पितरि, आ० क० १ अ०।

सण्णद्ध-सन्नद्ध-त्रि०। कृतसन्नाहे, ज्ञा० १ श्रु० २ अ०। विपा०। औ०। "सण्णद्धवद्धवम्मियकवया" सन्नद्धवद्धवर्म्मितकवचा'। कवचं-तनुत्राणं वर्म-लोहमयकुतूलिकादिरूपं संजातमस्मिन्निति वर्म्मितम्। सन्नद्धं-शरीरे आरोपणात् वद्ध-गाढतरवन्धनेन वन्धनात् वर्म्मितं कवचं यैस्ते सन्नद्धवद्धवर्म्मितकवचा। जी० ३ प्रति० २ उ०। भ०।

सण्णप्प-संज्ञाप्य-त्रि०। प्रज्ञापनीये, नं०। स्था०। आचा०।

सण्णय-सन्नय-पुं०। समीचीननये, प्रति०।

सण्णयपास-सन्नतपार्श्व-सम्यगधोऽध क्रमेण नतौ पार्श्वौ येषा त सन्नतपार्श्वा। अधोऽध. क्रमावनतपार्श्वेषु, जी० ३ प्रति० ४ अधि०। जं०।

सण्णवणा-संज्ञापना-स्त्री०। संवोधनायाम्, ज्ञा० १ श्रु० १अ०।

सण्णा-सज्ञा-स्त्री०। संज्ञानं संज्ञा। "उपसर्गादात."।५।३।११०। इत्यम् प्रत्यय.। तत. "म्नज्ञोर्ण." ॥८।२।४२॥ इति ज्ञस्य ण.। प्रा०। व्यञ्जनावग्रहोत्तरकालभवे मतिविशेषे, आहारभयाद्युपाधिकायामचेतनायाम्, अभिधाने, स्था०।

एगा सण्णा। (सू० ३) स्था० १ ठा०।

संज्ञानं संज्ञा। आभोग, सज्ञायतेऽनयेति वा संज्ञा। भ० ७ श० ८ उ०। आ० म०। घटशब्दादिलक्षणे अभिधाने, विशे०। आ० म०। नं०। आख्यायाम्, अनु०। उत्तरकालपरिलोचनायाम्, सूत्र० २ श्रु० ४ अ०। ऊहापोहविमर्षे, सूत्र० २ श्रु० ७ उ०। प्रत्युत्पन्नवर्त्तमानार्थग्राहिण्या चेतनायाम्, दश० ४ अ०। संज्ञानं संज्ञा। पदार्थपरिच्छित्तौ, 'पत्तेयं सण्णा' प्रत्येकं संज्ञा। मन्दमन्दतरपटुपटुतरभेदात्। प्रत्येकमेवोपजायते। सर्वज्ञादारतस्तरतमयोगेन मतेर्द्यवस्थितत्वात्। सूत्र० १ श्रु० ७ उ०। ज्ञाने, सूत्र० २ श्रु० १ अ०। अन्तःकरणवृत्तौ, सूत्र० १ श्रु० ४ अ० १ उ०। प्रतिनियतशब्दाभिधेयत्वे, सम्म० १ काण्ड। दश० भूतभवद्भाविभावस्वभावपर्यालोचने, कर्म्म० ४ कर्म०। पं० सं०। नं०। संज्ञा स्मृतिरववोध इत्यनर्थान्तरम्। आचा० १ श्रु० १ अ० १ उ०।

सुयं मे आउसं! तेणं भगवया एवमक्खायं-इहमेगेसिं णो सण्णा भवइ। (सू० १)

"सुत्तं अट्ठहि य गुणेहिं उववेयं॥१॥" इत्यादि, तच्चेदं सूत्रम्- 'सुयं मे आउसं! तेणं भगवया एवमक्खायं-इहमेगेसिं णो सण्णा भवति' अस्य संहितादिक्रमेण व्याख्या—संहितोच्चारितैव, पदच्छेदस्त्वयम्-श्रुतं मया आयुष्मन्! तेन भगवता एवमाख्यातम्—इह एकेषां नो संज्ञा भवति। एकं तिङन्तं शेषाणि सुवन्तानि, गत सपदच्छेद' सूत्रानुगम.। साम्प्रत सूत्रपदार्थः समुन्नीयते—भगवान् सुधर्म्मस्वामी जम्वूनाम्न इदमाचष्टे, यथा-श्रुतम्-आकर्णितमवगतमवधारितमिति यावद्, अनेन स्वमनीषिकाव्युदासो मयेति साक्षान्न पुन. पारम्पर्येण आयुष्मन्निति जात्यादिगुणसम्भवेऽपि दीर्घायुष्कत्वगुणोपादानं दीर्घायुरविच्छेदेन शिष्योपदेशप्रदायको यथा स्यात्। इहाचारस्य व्याचिख्यासितत्वात्तदर्थस्य च तीर्थकृत्प्रणीतत्वादिति सामर्थ्यप्रापितम्, तेनेति तीर्थकरमाह। यदि वा-आमृशता भगवत्पादारविन्दम् अनेन विनय आवेदितो भवति, आवसता वा तदन्तिक इत्यनेन गुरुकुलवास कर्त्तव्य इत्यावेदितं भवति, एतच्चार्थद्वयम्' आमुसतेण आवसंतेणे' त्येतत्पाठान्तरमाश्रित्यावगन्तव्यमिति। भगवतेति भग -ऐश्वर्य्यादिषडर्थात्मकः सोऽस्यास्तीति भगवान् तेन, एवमिति वक्ष्यमाणविधिना, आख्यातमित्यनेन कृतकत्वव्युदासेनार्थरूपतया आगमस्य नित्यत्वमाह-'इह' ति-क्षेत्रे प्रवचने आचारे शस्त्रपरिज्ञायां वा आख्यातमिति सम्वन्ध.। यदिवा-'इह' ति-संसारे एकेषां ज्ञानावरणीयावृतानां प्राणिना नो संज्ञा भवति, संज्ञानं संज्ञा स्मृतिरववोध इत्यनर्थान्तरम्, सा नो जायत इत्यर्थः। उक्त पदार्थ.। पदविग्रहस्य तु सामासिकपदाभावादप्रकटनम्। इदानीं चालना—ननु चाकारादिकप्रतिषेधकलघुशब्दसम्भवे सति किमर्थं नोशब्देन प्रतिषेध इति?, अत्र प्रत्यवस्था, सत्यमेवम्, किन्तु-प्रेक्षापूर्वकारितया नोशब्दोपादानम्, सा चेयम्—अन्येन प्रतिषेधेन सर्वनिषेध स्याद् यथा न घटोऽघट इति चोक्ते सर्वात्मना घटनिषेध., स च नेष्यत, यत. प्रज्ञापनाया दश सज्ञाः सर्वप्राणिनाम—भिहितास्तासां सर्वासा प्रतिषेध. प्राप्नोतीति कृत्वा। ताश्चेमा —"कइ ण भते! सण्णाओ पण्णत्ताओ?, गोयमा! दस सण्णाओ पण्णत्ताओ, त जहा—आहारसण्णा भयसण्णा मेहुणसण्णा परिग्गहसण्णा कोहसण्णा माणसण्णा मायासण्णा लोभसण्णा ओहसण्णा लोगसण्णा" त्ति, आसा च प्रतिषेधे स्पष्टो दोष, अतो नोशब्देन प्रतिषेधनमकारि, यतोऽयं सर्वनिषेधवाची, देशनिषेधवाची च। तथा हि—नो घट इत्युक्ते यथा घटाभावमात्रं प्रतीयते, तथा प्रकरणादिप्रसक्तस्य विधानम्। स पुनर्विधीयमानः प्रतिषेध्यावयवो ग्रीवादि प्रतिषेध्यादन्यो वा पटादि प्रतीयत इति। तथा चोक्तम्—'प्रतिषेधयति समस्त, प्रसक्तमर्थं च जगति नोशब्द। स पुनस्तदवयवे वा, तस्मादर्थान्तरे वा स्याद्॥१॥" इति, एवमिहापि न सर्वसंज्ञानिषेध, अपि

तु-विशिष्ट ज्ञानानिषेधो, यया ऽत्मादिपदार्थस्वरूपं गत्याग- त्यादिकं ज्ञायते तस्या निषेध इति ।

साम्प्रतं निर्युक्तिकृत्सूत्रावयवनिक्षेपार्थमाह—

दव्वे सचित्ताई, भावेऽणुभवणजाणणा सन्ना ।
मति होइ जाणणा पुण,अणुभवणा कम्मसंजुत्ता ॥३८॥

संज्ञा नामादिभेदाच्चतुर्द्धा, नामस्थापने क्षुण्णे । ज्ञशरीर- भव्यशरीरव्यतिरिक्ता सचित्ताऽचित्तमिश्रभेदात्त्रिधा,सचि- त्तेन हस्तादिद्रव्येण पानभोजनादिसंज्ञा , अचित्तेन ध्व- जादिना, मिश्रेण प्रदीपादिना संज्ञानं—संज्ञा अवगम इति कृत्वा । भावसंज्ञा पुनर्द्विधा—अनुभवनसंज्ञा, ज्ञानसंज्ञा च । तत्राल्पव्याख्येयत्वात्तावत् , ज्ञानसंज्ञां दर्शयति—' मइ होइ जाणणा पुण' त्ति-मननं मति·—अवबोध·, सा च मतिज्ञा- नादि· पञ्चधा, तत्र केवलसंज्ञा क्षायिकी शेषास्तु क्षायो- पशमिक्य· , अनुभवनसंज्ञा तु स्वकृतकर्मोदयादिसमुत्था जन्तोर्जायते ।

सा च षोडशभेदेति दर्शयति—

आहारभयपरिग्गह-मेहुणसुखदुक्खमोहवितिगिच्छा ।
कोहमाणमायलोहे, सोगे लोगे य धम्मोहे ॥ ३९ ॥

आहाराभिलाष आहारसंज्ञा, सा च तैजसशरीरनामक- र्म्मोदयादसातोदयाच्च भवति, भयसंज्ञा त्रासरूपा, परिग्रह- संज्ञा मूर्छा रूपा, मैथुनसंज्ञा स्त्र्यादिवेदोदयरूपा , एताश्च मोहनीयोदयात् सुखदु खसंज्ञे सातासातानुभवरूपे वेदनी- योदयजे । मोहसंज्ञा मिथ्यादर्शनरूपा मोहोदयात् , विचि- कित्सासंज्ञा चित्तविप्लुतिरूपा मोहोदयात् ज्ञानावरणी- योदयाच्च, क्रोधसंज्ञा अप्रीतिरूपा मानसंज्ञा गर्व- रूपा, मायासंज्ञा वक्रतारूपा, लोभसंज्ञा गृद्धिरूपा, शोक- संज्ञा विप्रलापवैमनस्यरूपा, एता मोहोदयजा , लोकसं- ज्ञा· स्वच्छन्दघटितविकल्परूपा लौकिकाचरिता, यथा न सन्त्यनपत्यस्य लोका , श्वानो यक्षा , विप्रा देवाः, काका पितामहा , बर्हिणा पक्षवातेन गर्भ इत्येवमादिका ज्ञानावर- णक्षयोपशमान्मोहोदयाच्च भवन्ति । धर्मसंज्ञा क्षमाद्यासेवन- रूपा मोहनीयक्षयोपशमाज्जायते , एताश्चाविशेषोपादानात् पञ्चेन्द्रियाणां सम्यग्मिथ्यादृशां द्रष्टव्या·, ओघसंज्ञा तु अ- व्यक्तोपयोगरूपा वल्लिवितानारोहणादिलिङ्गा ज्ञानावरणी- याल्पक्षयोपशमसमुत्था द्रष्टव्येति । इह पुनर्ज्ञानसंज्ञयाऽधि- कारी, यत सूत्रे सैव निषिद्धा इह एकेषा नो संज्ञा—ज्ञान- म् अवबोधो भवतीति ॥ १ ॥

प्रतिषिद्धज्ञानविशेषावगमार्थमाह-सूत्रम्—

तं जहा-पुरत्थिमाओ वा दिसाओ आगओ अहमंसि, दाहिणाओ वा दिसाओ आगओ अहमंसि,पच्चत्थिमाओ वा दिसाओ आगओ अहमंसि, उत्तराओ वा दिसाओ आगओ अहमंसि, उड्ढाओ वा दिसाओ आगओ अहमं- सि, अहोदिसाओ वा आगओ अहमंसि, अण्णयरीओ वा दिसाओ अणुदिसाओ वा आगओ अहमंसि । एवमेगेसिं णो णायं भवति । ( सू० २ )

"तं जहे" त्यादि "णो णायं भवती" ति यावत् तद्यथेति प्र- तिज्ञानार्थोदाहरणम् , 'पुरत्थिमाउ ' त्ति-प्राकृतशैल्या मा गधदेशीभाषानुवृत्त्या पूर्वस्या दिशोऽभिधायकात् पुरत्थिम- शब्दात्पञ्चम्यन्तात्तसा निर्देश ।वाशब्द उत्तरपक्षापेक्षया वि- कल्पार्थ·।यथा लोके भोक्तव्यं वा शयितव्यं वेति । एवं पूर्वस्या वा दक्षिणस्या वेति । दिशतीति दिक्,अतिसृजति-व्यपदिश- ति द्रव्यं द्रव्यभाग वेति भाव· । आचा० १ श्रु० १ अ० १ उ० । द्विविधा संज्ञा सा पुनः सामान्येन क्षायोपशमिकी, औपशमिकी च । तत्राद्या ज्ञानावरणक्षायोपशमजा मति- भेदरूपा न तयेहाधिकार·, द्वितीया सामान्येन चतुर्विधाऽऽ हारसंज्ञादिलक्षणा । आव० ४ अ० । आ० चू० । त्रिविधा संज्ञा दीर्घकालिकोपदेशेन हेतुवादोपदेशेन दृष्टिवादोपदेशेन । विशे० । वृ० । प्रव० ।

इदानीं ' सन्नाओ तिन्नि ' त्ति चतुश्चत्वारिंशच्छततमं- द्वारमाह—

सन्नाओ तिन्नि पढमे,त्थ दीहकालोवएसियासयानाम ।
तह हेउवायदिट्ठी,वा उवएसा तदियराओ ॥६३२॥

संज्ञान संज्ञा, ज्ञानमित्यर्थ·, सा त्रिभेदा, 'पढमे त्थ ' त्ति- प्रथमा—आद्या अत्र एतासु तिसृषु संज्ञासु मध्ये दीर्घका- लोपदेशिका नाम दीर्घकालमतीतानागतवस्तुविषयत्वेनो- पदेश· कथन यस्या· सा दीर्घकालोपदेशी, सैव दीर्घकालो- पदेशिका । तथा तदितरे द्वितीये हेतुवाददृष्टिवादोपदेशे , उपदेशशब्दस्य प्रत्येकमभिसंबन्धात् । हेतुवादोपदेशा द्वितीया संज्ञा, दृष्टिवादोपदेशा च तृतीयेत्यर्थ । तत्र हेतुर्वा कारणं निमित्तमित्यनर्थान्तरम् , तस्य वदन वादस्तद्विषय उपदेश·-प्ररूपणा यस्यां सा हेतुवादोपदेशा, तथा दृष्टिर्दर्शनं सम्यक्त्वं तस्य वदनं वादो दृष्टीना वादो दृष्टिवाद , तद्विषय उपदेश · प्ररूपणा यस्या सा दृष्टिवादोपदेशेति ।

अथ दीर्घकालोपदेशसंज्ञायाः स्वरूपं प्रतिपिपादयिषु— स्वयां सज्ञिनमेवाह—

एयं करेमि एयं, कयं मए इममहं करिस्सामि ।
सो दीहकालसन्नी, जोइय तिकालसन्नधरो ॥६३३॥

एतत्करोऽम्यहम् , एतत्कृतं मया , एतत्करिष्याम्य- हम् , इत्येवं यस्त्रिकालविषया वर्त्तमानातीतानाग- तकालत्रयवर्तिवस्तुविषया संज्ञा मनोविज्ञानं धारयति स· , दीर्घकाला—दीर्घकालोपदेशा संज्ञाऽस्यास्तीति कृत्वा , स च गर्भजस्तिर्यङ् मनुष्यो वा देवो नारक- श्च मन·पर्याप्तियुक्तो विज्ञेय , तस्यैव त्रिकालविषयविम- र्शादिसंभवात्, एष च प्राय· सर्वमप्यर्थं स्फुटरूपमुपल- भते । तथाहि—यथा चक्षुष्मान् प्रदीपादिप्रकाशेन स्फुट- मर्थमुपलभते , तथैषोऽपि मनोलब्धिसपन्नो मनोद्रव्याव- ष्टम्भसमुत्थविमर्शवशात पूर्वापरानुसंधानेन तथावस्थितं स्फुटमर्थमुपलभते । यस्य पुनर्नास्ति तथाविधस्त्रिकाल- विषयो विमर्श सोऽसंज्ञीति सामर्थ्याल्लभ्यते । स च सं- मूर्च्छितपञ्चेन्द्रियविकलेन्द्रियादिर्विज्ञेय । स हि स्वल्प- स्वल्पतरमनोलब्धिसंपन्नत्वादस्फुटतरमर्थं जानाति । तथा- हि—पञ्चेन्द्रियापेक्षया संमूर्च्छिमपञ्चेन्द्रियोऽस्फुटमर्थं जा- नाति । जानाति ततोऽप्यस्फुटं चतुरिन्द्रिय , ततो- ऽप्यस्फुटतरं त्रीन्द्रिय· , ततोऽप्यस्फुटतमं द्वीन्द्रिय '

ततोऽप्यत्यस्फुटतममेकेन्द्रिय , तस्य प्रायो मनोद्रव्यासम्भवात्, केवलमव्यक्तमेव किंचिदतीवाल्पतरं मनो द्रष्टव्यम्— यद्वशादाहारादिसंज्ञा अव्यक्तरूपा. प्रादुष्यन्तीति ? ।

साम्प्रतं हेतुवादोपदेशसंज्ञया संज्ञिनमसंज्ञिनं चाह—

जे उण संचिंतेउ, इट्ठाणिट्ठेसु विसयवत्थूसु ।
वत्तंति नियत्तंति य, सदेहपरिपालणाहेउं ॥६३४॥
पाएण संपइच्चिय, कालम्मि न याऽवि दीहकालम्मि ।
ते हेउवायसन्नी, निचेट्ठा हुंति हु असन्नी ॥ ६३५ ॥

ये पुन संचिन्त्य संचिन्त्येष्टानिष्टेषु छायातपाहारादिषु- विषयवस्तुषु मध्ये स्वदेहपरिपालनाहेतोरिष्टेषु वर्तन्ते । अनिष्टेभ्यस्तु तेभ्य एव निवर्तन्ते । प्रायेण च साम्प्रतकाल एव , न चापि नैव दीर्घकालेऽतीतानागतलक्षणे , प्रायोग्रहणात् केचिदतीतानागतकालावलम्बिनोऽपि, नातिदीर्घकालानुसारिण , ते द्वीन्द्रियादयो हेतुवादोपदेशसंज्ञया संज्ञिना विज्ञेया. । अत्र च निश्चेष्टा घर्माद्यभिताऽपितास्तन्निराकरणाय प्रवृत्तितन्निवृत्तिविरहिता पृथिव्यादय एवासंज्ञिनो भवन्ति । किमुक्तं भवति ?—यो बुद्धिपूर्वकं स्वदेहपरिपालनार्थमिष्टेष्वाहारादिषु वस्तुषु प्रवर्तते , अनिष्टेभ्यश्च निवर्तते; स हेतूपदेशसंज्ञी , स च द्वीन्द्रियादिरपि वेदितव्य. । तथाहि—इष्टानिष्टविषयप्रवृत्तिनिवृत्तिसंचिन्तनं न मनोव्यापारमन्तरेण सम्भवति , मनसा च पर्यालोचनं रूज्ञा , सा च द्वीन्द्रियादेरपि विद्यते , तस्यापि प्रतिनियतेष्टानिष्टविषयप्रवृत्तिनिवृत्तिदर्शनात् । ततो द्वीन्द्रियादिरपि हेतूपदेशसंज्ञया संज्ञी लभ्यते , नवरमस्य संचिन्तनं प्रायो वर्त्तमानकालविषयम् , न भूतभविष्यद्विषयमिति । नायं दीर्घकालोपदेशेन संज्ञी यस्य पुनर्नास्त्यभिसंधारणपूर्विका प्रवृत्तिनिवृत्तिशक्ति. स प्राणी हेतुवादोपदेशेनाप्यसंज्ञी लभ्यते । स च पृथिव्यादिरेकेन्द्रियो वेदितव्य । तस्याभिसंबन्धपूर्वकमिष्टानिष्टप्रवृत्तिनिवृत्त्यसम्भवात् , या अपि च आहारादिका दश संज्ञाः पृथिव्यादीनामप्यत्र वक्ष्यन्ते , प्रज्ञापनायामपि च प्रतिपादितास्ता अप्यत्यन्तमव्यक्तरूपा मोहोदयजन्यत्वादशोभनाश्च इति न तदपेक्षयापि तेषां संज्ञित्वव्यपदेश । न हि लोकेऽपि कार्षापणमात्रास्तित्वेन धनवानुच्यते , न चाविशिष्टेन मूर्तिमात्रेण रूपवानिति , अन्यत्रापि हेतुवादोपदेशसंज्ञित्वमाश्रित्योक्तं—कृमिकीटपतङ्गाद्या समनस्का, जङ्गमाश्चतुर्भेदा. । अमनस्का पञ्चविधा । पृथिवीकाद्या जीवा ।

अथ दृष्टिवादोपदेशसंज्ञया संज्ञिनमसंज्ञिनं चाह—

सम्मद्दिट्ठी सन्नी, सते नाणे खओवसमिए य ।
असन्नि मिच्छत्तम्मि, (य) दिट्ठिवाओवएसेण ॥६३६॥

दृष्टिवादोपदेशेन क्षायोपशमिकज्ञाने वर्त्तमान सम्यग्दृष्टिरेव संज्ञी , संज्ञान संज्ञा सम्यग्ज्ञानम् । तद्युक्तत्वात् । मिथ्यादृष्टि पुनरसंज्ञी , विपर्ययत्वेन वस्तुनः सम्यग्ज्ञानरूपसंज्ञारहितत्वात् । यद्यपि च मिथ्यादृष्टिरपि सम्यग्दृष्टिरिव घटादिकं जानाति , व्यवहरति च, तथापि तस्य संबन्धिव्यवहारमात्रेण ज्ञानमपि निश्चयतोऽज्ञानमेवोच्यते । तर्हि किमिति क्षायोपशमिकज्ञानयुक्तोऽसौ गृह्यते ?, क्षायिकज्ञाने हि विशिष्टतरा सा प्राप्यते, ततस्तद्वृत्तिरप्यसौ किं नाऽङ्गीक्रियते ?, उच्यते—यतोऽतीतस्यार्थस्य स्मरणमनागतस्य च चिन्ता संज्ञाऽभिधीयते, सा च केवलिनां नास्ति । सर्वदा सर्वार्थावभासकत्वेन केवलिनां स्मरणचिन्ताद्यतीतत्वात् , इति क्षायोपशमिकज्ञान्येव सम्यग्दृष्टि संज्ञीति । ननु प्रथमं हेतुवादोपदेशेन संज्ञी वक्तुं युज्यते । हेतुवादोपदेशेनाल्पमनोलब्धिसम्पन्नस्यापि द्वीन्द्रियादे. संज्ञित्वेनाभ्युपगमात् , तस्य चाविशुद्धतरत्वात् , ततो दीर्घकालोपदेशेन हेतूपदेशसंज्ञ्यपेक्षया दीर्घकालोपदेशसंज्ञिनो मन पर्याप्तियुक्ततया विशुद्धत्वात् । तत्किमर्थमुत्क्रमोपन्यास. !, उच्यते- इह सर्वत्र सूत्रे यत्र क्वचित्संज्ञी असंज्ञी वा परिगृह्यते तत्र सर्वत्रापि प्रायो दीर्घकालोपदेशेन गृह्यते, न हेतुवादोपदेशेन , नापि दृष्टिवादोपदेशेन , तत एतत्संप्रत्ययार्थं प्रथमं दीर्घकालोपदेशेन संज्ञिनो ग्रहणम् । उक्तञ्च—" सन्नि त्ति असन्नि त्ति य, सव्वसुए कालिओवएसेणं । पायं संववहारो, कीरइ तेणाइओ सकओ ॥ १ ॥ " ततोऽनन्तरमप्रधानत्वात् हेतूपदेशेन संज्ञिनो ग्रहणम् । ततः सर्वप्रधानत्वादन्ते दृष्टिवादोपदेशेनेति । प्रव० १४४ द्वार । आ० म० । कर्म्म० । नं० । संज्ञानं संज्ञा असातवेदनीयमोहनीयकर्म्मोदयजन्ये चैतन्यविशेषे, पा० । वेदनीयमोहनीयोदयाश्रिताना ज्ञानावरणदर्शनावरणक्षयोपसमाश्रिताया विचित्राहारादिप्राप्तिक्रियायाम्, प्रव० १४ द्वार । दर्श० । अभिलापे, आहारसंज्ञा—आहाराभिलाष क्षुद्वेनीयप्रभव. खल्वात्मपरिणामविशेष इति । नं० ।

संज्ञा चतुर्धा—

चत्तारि सण्णाओ पण्णत्ताओ, तं जहा—आहारसण्णा भयसण्णा मेहुणसण्णा परिग्गहसण्णा । ( सू० ३५६ × )

' चत्तारि ' इत्यादि व्यक्तं केवल संज्ञानं संज्ञा—चैतन्यं, तच्चासातवेदनीयमोहनीयकर्म्मोदयजन्यविकारयुक्तमाहारसंज्ञादित्वेन व्यपदिश्यत इति । स्था० ४ ठा० ४ उ० । स० । आतु० । उत्त० । प्रव० । ( आहारसंज्ञावक्तव्यता ' आहारसण्णा ' शब्दे द्वितीयभागे ५२७ पृष्ठे द्रष्टव्या । ) ( भयसंज्ञावक्तव्यता ' भयसण्णा ' शब्दे पञ्चमभागे १३८५ । १३८४ पृष्ठे गता । ) ( मैथुनसंज्ञाव्याख्या ' मेहुणसण्णा ' शब्दे षष्ठ भागे ४२६ । ४३० पृष्ठे गता । ) ( परिग्रहसंज्ञावक्तव्यता ' परिग्गहसण्णा ' शब्दे पञ्चमभागे ५६७ पृष्ठे गता । )

इदानीं ' सण्णाओ चउरो ' त्ति पञ्चचत्वारिंशच्छततम द्वारमाह—

आहार१ भय२ परिग्गह३,मेहुण४ रूवाउ हुंति चत्तारि ।
सत्ताणं सन्नाओ, आसंसारं समग्गाणं ॥ ६३७ ॥

संज्ञान संज्ञा आभाग , सा द्विधा—क्षायोपशमिकी औदयिकी च । तत्राद्या ज्ञानावरणक्षयोपशमजन्यमतिभेदरूपा, सा चानन्तरमेवोक्ता । द्वितीया पुन. सामान्येन चतुर्विधाऽऽहारसंज्ञादिलक्षणा, तत्र क्षुद्वेदनीयोदयाद्या कवलाद्याहारार्थं तथाविधपुद्गलोपादानक्रिया सा आहार-

संज्ञा, तस्या आभोगात्मिकत्वात् सा पुनश्चतुर्भिः कारणैः समुत्पद्यते । यदुक्तं स्थानाङ्गे—'चउहिं ठाणेहिं आहारसराणा समुप्पज्जइ, तं जहा—ओमकुट्ठयाए छुहावेयणिज्जस्स कम्मस्सुदएणं मईए तदट्ठोवओगेणं' ति । तत्र अवमकोष्ठतया रिक्तोदरतया, क्षुद्वेदनीयकर्मोदयेन, मत्या आहारकथाश्रावणादिजनितबुद्ध्या, तदर्थोपयोगेन सततमाहारचिन्तयेति, तथा भयमोहनीयोदयाद्भयोद्भ्रान्तस्य दृष्टिवदनविकाररोमाञ्चोद्भेदादिक्रिया भयसंज्ञा । इयमपि चतुर्भिः स्थानैरुत्पद्यते, यदुक्तं "हीणसत्तयाए य भयवेयणिज्जस्स कम्मस्सुदएणं, मईए तदट्ठोवओगेणं" ति । तत्र हीनसत्त्वतया सत्त्वाभावेन, मत्या भयवार्ताश्रवणभीषणदर्शनादिजनितया बुद्ध्या, तदर्थोपयोगेन इह लोकादिभयलक्षणार्थपर्यालोचनेनेति, तथा लोभोदयात्प्रधानसंस्कारकारणाभिष्वङ्गपूर्विका सचित्तेतरद्रव्योपादानक्रियापरिग्रहसंज्ञा । एषापि चतुर्भिः स्थानैरुत्पद्यते, यदुक्तम्—'अविमुत्तियाए लोभेवेयणिज्जस्स कम्मस्स उदएणं, मईए तदट्ठोवओगेणं' ति तत्र अविमुक्ततया सपरिग्रहतया, मत्या सचेतनादिपरिग्रहदर्शनादिजनितबुद्ध्या तदर्थोपयोगेन परिग्रहचिन्तनेनेति । तथा पुंवेदोदयान्मैथुनाय स्त्र्यालोकनप्रसन्नवदनसंस्तम्भितोरुवेपथुप्रभृतिलक्षणा क्रिया मैथुनसंज्ञा, असावपि चतुर्भिः स्थानैरुत्पद्यते । यदुक्तम्—'चियमंससोणियाए मोहणिज्जस्स कम्मस्सुदएणं मईए तदट्ठोवओगेणं" ति । तत्र चिते उपचिते मांसशोणिते यस्य स तथा तद्भावस्तत्ता, तया चितमांसशोणिततया मत्या सुरतकथाश्रवणादिजनितबुद्ध्या तदर्थोपयोगेन मैथुनलक्षणार्थचिन्तनेनेति, एताश्चतस्रः संज्ञाः समग्राणामेकेन्द्रियादीनां पञ्चेन्द्रियपर्यवसानानां सत्त्वानां-जीवानामासंसारं संसारवासं यावद्भवन्ति । तथा च केषाचिदेकेन्द्रियाणामप्येता स्पष्टमेवोपलभ्यन्ते । तथाहि—जलाद्याहारोपजीवनाद्वनस्पत्यादीनामाहारसंज्ञा । संकोचनी वल्ल्यादीनां तु हस्तस्पर्शादिभीत्या अवयवसंकोचनादिभ्यो भयसंज्ञा, बिल्वपलाशादीनां तु निधानीकृतद्रविणोपरि पादमोचनादिभ्यः परिग्रहसंज्ञा । कुरवकाशोकतिलकादीनां तु कमनीयकामिनीभुजलतावगूहनपार्ष्णिप्रहारकटाक्षविक्षेपादिभ्यः प्रसूनपल्लवादिप्रसवप्रदर्शनान्मैथुनसंज्ञेति । प्रव० १४५ द्वार ।

कइ णं भंते ! सराणाओ पराणत्ताओ ?, गोयमा ! दस सराणाओ पराणत्ताओ, तं जहा-आहारसराणा भयसराणा मेहुणसराणा परिग्गहसराणा कोहसराणा माणसराणा मायासराणा लोहसराणा लोयसराणा ओहसराणा । सू० १४७ × ) प्रज्ञा० ८ पद ।

( आसामर्थ स्वस्वस्थाने ) प्रज्ञा० । प्रव० । स्था० । ( एकेन्द्रियाणामपि आहारादिसंज्ञा विद्यन्ते इति 'णाण' शब्दे चतुर्थभागे १९४० पृष्ठे मतिज्ञानयोर्भेदप्रस्तावे उक्तम् । )

नेरइयाणं भंते ! कइसराणाओ पराणत्ताओ ? गोयमा ! दस सराणाओ पराणत्ताओ, तं जहा-आहारसराणा ०जाव ओघसराणा । ( सू० १४७ × )

असुरकुमाराणं भंते ! कइ सराणाओ पराणाओ ?, गोयमा ! दस सन्नाओ पराणत्ताओ, तं जहा-आहारसराणा ०जाव ओघसराणा, एवं० जाव थणियकुमाराणं एवं पुढविकाइयाणं ०जाव वेमाणियावसाणाणं नेतव्वं । ( सू० १४७ × ) नेरइयाणं भंते ! किं आहारसन्नोवउत्ता भयसन्नोवउत्ता मेहुणसन्नोवउत्ता परिग्गहसराणोवउत्ता ?, गोयमा ! ओसन्नं कारणं पडुच्च भयसन्नोवउत्ता, संतइभावं पडुच्च आहारसन्नोवउत्ता वि ०जाव परिग्गहसन्नोवउत्ता वि । एएसि णं भंते ! नेरइयाणं आहारसराणोवउत्ताणं भयसन्नोवउत्ताणं मेहुणसराणोवउत्ताणं परिग्गहसराणोवउत्ताण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा नेरइया मेहुणसराणोवउत्ता आहारसराणोवउत्ता संखिज्जगुणा परिग्गहसराणोवउत्ता संखिज्जगुणा भयसराणोवउत्ता संखिज्जगुणा ॥ तिरिक्खजोणियाणं भंते ! किं आहारसराणोवउत्ता ०जाव परिग्गहसराणोवउत्ता ?, गोयमा ! ओसन्नं कारणं पडुच्च आहारसराणोवउत्ता संतइभावं पडुच्च आहारसराणोवउत्ता वि ०जाव परिग्गहसराणोवउत्ता वि, एएसि णं भंते ! तिरिक्खजोणियाणं आहारसराणोवउत्ताणं ०जाव परिग्गहसराणोवउत्ताण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा तिरिक्खजोणिया परिग्गहसराणोवउत्ता, मेहुणसन्नोवउत्ता संखिज्जगुणा भयसन्नोवउत्ता संखिज्जगुणा आहारसन्नोवउत्ता संखिज्जगुणा ॥ मणुस्सा णं भंते ! किं आहारसन्नोवउत्ता ०जाव परिग्गहसन्नोवउत्ता ?, गोयमा ! ओसन्नं कारणं पडुच्च मेहुणसन्नोवउत्ता संततिभावं पडुच्च आहारसन्नोवउत्ता वि ०जाव परिग्गहसन्नोवउत्ता वि । एएसि णं भंते ! मणुस्साणं आहारसन्नोवउत्ताणं ०जाव परिग्गहसन्नोवउत्ताण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा मणूसा भयसन्नोवउत्ता आहारसन्नोवउत्ता संखिज्जगुणा परिग्गहसराणोवउत्ता संखिज्जगुणा मेहुणसराणोवउत्ता संखिज्जगुणा ॥ देवा णं भंते ! किं आहारसन्नोवउत्ता ०जाव परिग्गहसन्नोवउत्ता ?, गोयमा ! ओसन्नं कारणं पडुच्च परिग्गहसन्नोवउत्ता संततिभावं पडुच्च आहारसन्नोवउत्ता वि ०जाव परिग्गहसन्नोवउत्ता वि, एएसि णं भंते ! देवाणं आहारसन्नोवउत्ताणं ०जाव परिग्गहसन्नोवउत्ताण य-

कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा वि-सेसाहिया वा ?, गोयमा ! सवत्थोवा देवा आहारसन्नोवउत्ता भयसन्नोवउत्ता संखिज्जगुणा मेहुणसन्नोवउत्ता संखिज्जगुणा परिग्गहसन्नोवउत्ता संखेज्जगुणा । ( सू० १४८ )

'कइ णं भंते ! सन्नाओ पण्णत्ताओ' इति—कति—कियत्संख्या 'ण' मिति वाक्यालङ्कारे । भदन्त । संज्ञाः प्रज्ञप्ताः, तत्र संज्ञानं संज्ञा आभोग इत्यर्थः । यद्विा—संज्ञायतेऽनयाऽयं जीव इति संज्ञा, उभयथापि वेदनीयमोहोदयाश्रिता ज्ञानावरणदर्शनावरणक्षयोपशमाश्रिता च विचित्राहारादिप्राप्तिक्रिया, सा चोपाधिभेदाद्दशविधा, तथा चाह—गौतम ! दशविधाः प्रज्ञप्ताः, तदेव दशविधत्वं नामग्राहमाह—'आहारसन्ना' इत्यादि तत्र क्षुद्वेदनीयोदयात् या कवलाद्याहारार्थं तथाविधपुद्गलोपादानक्रिया साऽऽहारसंज्ञा, तस्या आभोगात्मिकत्वात् । यद्विा—संज्ञायते जीवोऽनयेति, एवं सर्वत्रापि भावना कार्या । तथा भयमोहनीयोदयात् भयोद्भ्रान्तस्य दृष्टिवदनविकाररोमाञ्चोद्भेदादिक्रिया भयसंज्ञा, पुवेदोदयान्मैथुनाय स्त्र्यालोकनप्रसन्नवदनसंस्तम्भितोरुवेपनप्रभृतिलक्षणक्रिया मैथुनसंज्ञा, तथा लोभोदयात् प्रधानसंसारकारणाभिष्वङ्गपूर्विका सचित्तेतरद्रव्योपादानक्रिया परिग्रहसंज्ञा, तथा क्रोधवेदनीयोदयात् तदावेशगर्भा पुरुषमुखवदनदन्तच्छदस्फुरणचेष्टा क्रोधसंज्ञा, तथा मानोदयादहङ्कारात्मिका उत्सेकादिपरिणतिर्मानसंज्ञा, मायावेदनीयेनाशुभसंक्लेशादनृतसंभाषणादिक्रिया मायासंज्ञा, तथा लोभवेदनीयोदयतो लालसत्वेन सचित्तेतरद्रव्यप्रार्थना लोभसंज्ञा, तथा मतिज्ञानावरणकर्मक्षयोपशमनात् शब्दाद्यर्थगोचरा सामान्यावबोधक्रिया ओघसंज्ञा, तथा तद्विशेषावबोधक्रिया लोकसंज्ञा । एवं चेदमापतितम्—दर्शनोपयोग ओघसंज्ञा, ज्ञानोपयोगो लोकसंज्ञा, अन्ये त्वभिदधति—सामान्यप्रवृत्तिर्यथा वल्ल्या वृत्त्यारोहणमोघसंज्ञा, लोकस्य हेया प्रवृत्तिर्लोकसंज्ञा, तदेवमेताः सुखप्रतिपत्तये स्पष्टरूपाः पञ्चेन्द्रियानधिकृत्य व्याख्याताः, एकेन्द्रियाणां त्वेता अव्यक्तरूपा अवगन्तव्या, नैरयिकसूत्रे 'ओसन्नकारणं पडुच्च भयसन्नोवउत्ता' इति—तत्रोत्सन्नशब्देन बाहुल्यमुच्यते कारणशब्देन च बाह्यं कारणम्, ततोऽयमर्थः—बाह्यकारणमाश्रित्य नैरयिका बाहुल्येन भयसंज्ञोपयुक्ताः, तथाहि—सन्ति तेषां सर्वतः प्रभूतानि परमाधार्मिकाय —कवल्लीशक्तिकुन्तादीनि भयोत्पादकादीनि, 'संतइभावं पडुच्च' इति—इहानन्तरोऽनुभवभावः—सन्ततिभाव उच्यते ; ततः आन्तरमनुभवभावमपेक्ष्य नैरयिका आहारसंज्ञोपयुक्ता अपि यावत्परिग्रहसंज्ञोपयुक्ता अपि । अल्पबहुत्वचिन्तायां सर्वस्तोका मैथुनसंज्ञोपयुक्ता, नैरयिका हि चक्षुर्निमीलनमात्रमपि न सुखिनः केवलमनवरतमतिप्रबलदुःखाग्निना सतप्यमानशरीरा । उक्तं च-" अच्छिनिमीलणमेत्तं, नऽत्थि सुहं दुक्खमेव पडिबद्धं । नरए नेरइयाणं, अहोनिसं पच्चमाणाणं ॥ १ ॥ " ततो मैथुनेच्छा नैतेषां भवतीति, यदि परं कचित्कदाचित्केषाञ्चित् भवति साऽपि च स्तोककाला इति पृच्छा समये स्तोका मैथुनसंज्ञोपयुक्ताः, तेभ्यः संख्येयगुणा आहारसंज्ञोपयुक्ताः, दुःखितानामपि प्रभूतानां प्रभूतकालं चाहारेच्छाया भावतः पृच्छासमये अतिप्रभूतानामाहारसंज्ञोपयुक्तानां संभवात्, तेभ्यः संख्येयगुणाः परिग्रहसंज्ञोपयुक्ताः, आहारेच्छा हि देहार्थमेव भवति परिग्रहेच्छा तु देहे प्रहरणादिषु च, प्रभूततरकालावस्थायिनी च परिग्रहेच्छा, ततः पृच्छासमयेऽतिप्रभूततराः परिग्रहसंज्ञोपयुक्ता अवाप्यन्ते इति भवन्ति पूर्वेभ्यः संख्येयगुणाः, तेभ्यो भयसंज्ञोपयुक्ताः संख्येयगुणाः, नरकेषु हि नैरयिकाणां सर्वतो भयमामरणान्तभावि, ततः पृच्छासमयेऽतिप्रभूततमा भयसंज्ञोपयुक्ताः प्राप्यन्ते इति संख्येयगुणाः । तिर्यक्पञ्चेन्द्रिया अपि बाह्यं कारणं प्रतीत्य बाहुल्येनाहारसंज्ञोपयुक्ता भवन्ति न शेषसंज्ञोपयुक्ताः तथा प्रत्यक्षत एवोपलब्धेः, आन्तरमनुभवभावमाश्रित्याहारसंज्ञोपयुक्ता अपि यावत्परिग्रहसंज्ञोपयुक्ता अपि, अल्पबहुत्वचिन्तायां सर्वस्तोकाः परिग्रहसंज्ञोपयुक्ताः, परिग्रहसंज्ञायाः स्तोककालत्वेन पृच्छासमये तेषां स्तोकानामेवाऽवाप्यमानत्वात्, तेभ्यो मैथुनसंज्ञोपयुक्ताः संख्येयगुणाः, मैथुनसंज्ञोपयोगस्य प्रभूततरकालत्वात्, तेभ्योऽपि भयसंज्ञोपयुक्ताः संख्येयगुणाः, सजातीयात्परजातीयाच्च तेषां भयसंभवतो भयोपयोगस्य च प्रभूततमकालत्वात्, पृच्छासमये भयसंज्ञोपयुक्तानामतिप्रभूततराणामवाप्यमानत्वात्, तेभ्यः संख्येयगुणाः आहारसंज्ञोपयुक्ताः, प्रायः सततं सर्वेषामाहार ( संज्ञा ) संभवात् । मनुष्या बाह्यं कारणमधिकृत्य बाहुल्येन मैथुनसंज्ञोपयुक्ताः स्तोकाः शेषसंज्ञोपयुक्ताः, सन्ततिभावमान्तरानुभवभावरूपं प्रतीत्याहारसंज्ञोपयुक्ता अपि यावत्परिग्रहसंज्ञोपयुक्ता अपि । अल्पबहुत्वचिन्तायां सर्वस्तोका भयसंज्ञोपयुक्ताः, स्तोकानां स्तोककालं च भयसंज्ञासंभवात्, तेभ्य आहारसंज्ञोपयुक्ताः संख्येयगुणाः, आहारसंज्ञोपयोगस्य प्रभूततर-कालभावात् अत एव हेतोः तेभ्यः संख्येयगुणाः परिग्रहसंज्ञोपयुक्ताः, तेभ्यो मैथुनसंज्ञोपयुक्ताः संख्येयगुणाः, मैथुनसंज्ञाया अतिप्रभूततरकालं यावद् भावतः पृच्छासमये तेषामतिप्रभूततराणामवाप्यमानत्वात् । तथा बाह्यं कारणमधिकृत्य बाहुल्येन देवाः परिग्रहसंज्ञोपयुक्ताः, मणिकनकरत्नादीनां परिग्रहसंज्ञोपयोगहेतूनां तेषां सदा सन्निहितत्वात्, संततिभावं यथोक्तरूपं प्रतीत्य पुनराहारसंज्ञोपयुक्ता अपि यावत्परिग्रहसंज्ञोपयुक्ता अपि, अल्पबहुत्वचिन्तायां सर्वस्तोका आहारसंज्ञोपयुक्ताः, आहारेच्छाविरहकालस्यातिप्रभूततया आहारसंज्ञोपयोगकालस्य चातिस्तोकतया तेषां पृच्छासमये सर्वस्तोकानां तेषामवाप्यमानत्वात्, ततो भयसंज्ञोपयुक्ताः, संख्येयगुणाः, भयसंज्ञायाः प्रभूतानां प्रभूतकालं च भावात्, तेभ्योऽपि मैथुनसंज्ञोपयुक्ताः संख्येयगुणाः, तेभ्यः परिग्रहसंज्ञोपयुक्ताः संख्येयगुणाः, जीवापेक्षया बहवो वक्तव्यास्ते च तथैव भाविता इति । प्रज्ञा० ८ पद ।

जीवा णं भंते ! किं सएणी असएणी नोसएणी नोअसएणी ?, गोयमा ! जीवा सएणी वि असएणी वि नोसएणी नोअसएणी वि । णेरइयाणं पुच्छा, गोयमा !

णेरइया सण्णी वि असण्णी वि नोसण्णी नोअसण्णी वि। एवं असुरकुमारा ०जाव थणियकुमारा। पुढविकाइयाणं पुच्छा, गोयमा! नो सण्णी असण्णी, नो नोसण्णी नोअ-सण्णी,एवं बेइंदियतेइंदियचउरिंदिया वि मणुस्सा जहा जीवा पंचिंदियतिरिक्खजोणिया वाणमंतरा य जहा णेरइया जो-इसियवेमाणिया सण्णी नोअसण्णी, नो नोसन्नी नो असण्णी सिद्धाणं पुच्छा गोयमा! नो सण्णी नो असण्णी नोसण्णी नोअसण्णी। "णेरइयतिरियमणुया, य वणयरगसुराइ सण्णीऽसण्णी य। विगलिंदिया असण्णी, जोइसवेमाणिया सण्णी ॥१॥" (सू० ३१५×)

'जीवा णं भंते! किं सण्णी' इत्यादि, संज्ञानं संज्ञा-'उपस-र्गादातः' ॥५।३।११०॥ इत्यङ्प्रत्ययः, भूतभवद्भाविभावस्वभा-वपर्यालोचनं सा विद्यते येषां ते संज्ञिनः, विशिष्टस्मरणादि-रूपमनोविज्ञानभाज इत्यर्थः, यथोक्तमनोविज्ञानविकला अ-संज्ञिनः, ते च एकेन्द्रियविकलेन्द्रियसम्मूर्च्छिमपञ्चेन्द्रिया वेदितव्याः। अथवा—सञ्ज्ञायते—सम्यक् परिच्छिद्यते पू-र्वोपलब्धो वर्त्तमानो भावी च पदार्थो यया सा सञ्ज्ञा-भिदादिपाठाभ्युपगमात् करणे घञ् विशिष्टा मनोवृत्तिरि-त्यर्थः, सा विद्यते येषां ते संज्ञिनः समनस्का इत्यर्थः। तद्वि-परीता असञ्ज्ञिनोऽमनस्का इत्यर्थः, ते चैकेन्द्रियादय एवा-नन्तरोदिता प्रतिपत्तव्याः। एकेन्द्रियाणां प्रायः सर्वथा मनोवृत्तेरभावात्, द्वीन्द्रियादीनां तु विशिष्टमनोवृत्ते-रभावः, ते हि द्वीन्द्रियादयो वार्त्तमानिकमेवार्थं शब्दा-दिकं शब्दादिरूपतया संविदन्ति, न भूतं भाविनं चेति। केवली सिद्धश्चोभयप्रतिषेधविषयः। केवली हि यद्य-पि मनोद्रव्यसम्बन्धभाक् तथापि न तैरसौ भूतभवद्भावि-भावस्वभावपर्यालोचनं करोति, किन्तु क्षीणसकलज्ञानदर्श-नावरणत्वात् पर्यालोचनमन्तरेणैव केवलज्ञानेन केवलदर्श-नेन च साक्षात्समस्तं जानाति पश्यति च, ततो न संज्ञी नाप्यसंज्ञी, सकलकालकलाकलापव्यवच्छिन्नसमस्तद्र-व्यपर्यायप्रपञ्चसाक्षात्करणप्रवणज्ञानसमन्वितत्वात्। सिद्धो-ऽपि न संज्ञी, द्रव्यमनसोऽप्यभावात्, नाप्यसंज्ञी सर्वज्ञ-त्वात्, तदेवं सामान्यतो जीवपदे सञ्ज्ञिनोऽसंज्ञिनो नो-संज्ञि-नोअसञ्ज्ञिनश्च लभ्यन्ते इति भगवान् तथैव प्रतिसमा-धानमाह—'गौतमे' त्यादि, जीवाः सञ्ज्ञिनोऽपि नैरयिका-दीनां संज्ञिनां भावात्, असंज्ञिनोऽपि पृथिव्यादीनामसं-ज्ञिनां भावात्, नोसंज्ञि-नोअसंज्ञिनोऽपि सिद्धकेवलिनां नोसंज्ञि—नोअसंज्ञिनामपि भावात्। एतेनैव चतुर्विंश-तिदण्डकक्रमेण चिन्तयति—'नेरइया णं' मित्यादि, इह ये नैरयिकाः संज्ञिभ्य उत्पद्यन्ते ते संज्ञिनो व्यवह्रियन्ते इतरे त्वसंज्ञिनः न च नैरयिकाणां केवलिभावो घटते, चारित्र-प्रतिपत्तेरभावात्, तत उक्तं नैरयिकाः सञ्ज्ञिनोऽप्यसंज्ञि—नोऽपि, नो नोसञ्ज्ञिनो नोअसंज्ञिनः, एवमसुरकुमारा-दयोऽपि स्तनितकुमारपर्यवसाना भवनपतयो वक्तव्याः, तेषामप्यसंज्ञिनोऽप्युत्पादात् केवलित्वाभावाच्च। 'मणूसा जहा जीवा' त्ति-मनुष्याः प्राक् यथा जीवा उक्तास्तथा वक्तव्याः, संज्ञिनोऽपि असंज्ञिनोऽपि नोसंज्ञि-नोअसंज्ञि-नोऽपि वक्तव्या इति भावः। तत्र ये गर्भव्युत्क्रान्तास्ते संज्ञिनः सम्मूर्च्छिमा असञ्ज्ञिनः केवलिनो नोसंज्ञि-नो-असञ्ज्ञिनः,'पंचिंदियतिरिक्खजोणियवाणमंतरा जहा नेरइया' इति पञ्चेन्द्रियतिर्यग्योनिका व्यन्तराश्च यथा नैरयिका उ-क्तास्तथा वक्तव्याः, सञ्ज्ञिनोऽपि असंज्ञिनोऽपि नोसंज्ञि-नोअ-संज्ञिनो वक्तव्या इति भावः। तत्र पञ्चेन्द्रियतिर्यग्योनिकाः संमूर्च्छिमा असंज्ञिनः गर्भव्युत्क्रान्ताः संज्ञिनः, व्य-न्तरा असञ्ज्ञिभ्य उत्पन्ना असंज्ञिनः, संज्ञिभ्य उत्पन्नाः सञ्ज्ञिनः। उभयेऽपि चारित्रप्रतिपत्तेरभावावात् नो संज्ञि-नोअसंज्ञिनः। ज्योतिष्कवैमानिका संज्ञिन एव नोअ-संज्ञिनः सञ्ज्ञिभ्य उत्पादाभावान्नो नोसंज्ञि—नोअसंज्ञिनश्चा-रित्रप्रतिपत्तेरभावात्, सिद्धास्तु प्रागुक्तयुक्तितो नो संज्ञिनो नाप्यसञ्ज्ञिनः, किं तु-नोसंज्ञि-नोअसंज्ञिनः। अत्रैव सुखप्रति-पत्तये सग्रहणिगाथामाह—'नेरइए' इत्यादि, नैरयिकाः 'ति-रिय' त्ति-तिर्यक्पञ्चेन्द्रियाः मनुष्या वनचरा व्यन्तरा असु-रादयः—समस्ता भवनपतयः प्रत्येकं संज्ञिनोऽसंज्ञिनश्च वक्तव्या, एतच्चानन्तरमेव भावितम्। विकलेन्द्रिया एकद्वि-त्रिचतुरिन्द्रिया असञ्ज्ञिनो ज्योतिष्कवैमानिकाः सञ्ज्ञिन इति। प्रज्ञा० ३१ पद। प्रव०। संकेते, नि० चू० २ उ०। विषयाभि-ष्वङ्गजनितसुखेच्छायाम्, परिग्रहसंज्ञायां च। आचा०१ श्रु०२ अ०६ उ०। ('वणप्फइ' शब्दे षष्ठे भागे ८०८ पृष्ठे उत्पलादि-वनस्पतीनां सञ्ज्ञाद्वारम्।) (सामायिकसंयतादयः किं संज्ञोपयुक्ताः इति 'संजय' शब्देऽस्मिन्नेव भागे ६६ पृष्ठे गतम्।) (निर्ग्रन्थानां संज्ञाद्वारम् 'णिग्गंथ' शब्दे चतुर्थभागे २०४५ पृष्ठे उक्तम्।) (विप्रकृष्टेष्वपि विषये-षु अविरतेः कर्मबन्धो भवतीति प्रतिपादनात् संज्ञ्यसंज्ञि-दृष्टान्तौ 'पच्चक्खाण' शब्दे ५ भागे १११ पृष्ठे उक्तौ।) समयपरिभाषया पुरीषोत्सर्गे, पं० व० १ द्वार (थंडिल शब्दे चतुर्थभागे २३८० पृष्ठे तद्विधिरुक्तः।)

स्वर्णा-स्त्री०। उज्जयन्तशैले स्वनामख्यातायां नद्याम्, ती० ३ कल्प। (गाथा 'उज्जयंत' शब्दे द्वितीयभागे ७३५ पृष्ठे।)

सण्णाकरण-संज्ञाकरण-न०। सञ्ज्ञाविशिष्टं करणं संज्ञाकर-णम्। सङ्केतकरणे, विशे०। आ० म०।

सण्णाखंध-संज्ञास्कन्ध-पुं०। संज्ञानिमित्ताऽवग्रहणात्मके प्र-त्यये, सूत्र० १ श्रु० १ अ० १ उ०।

सण्णाण-संज्ञान-न०। सम्यग्ज्ञाने,पो० १३ विव०। उपयोगे अवधाने, आव० ६ अ०। स्मृतावबोधे, आचा० १ श्रु० १ अ० १ उ०। सञ्ज्ञा व्यञ्जनावग्रहोत्तरकालभवे मतिविशेषे, स्था० १ ठा०।

स्वज्ञान-न०। स्वगतबोधे, षञ्चा० १२ विव०।

संणाणपसंसा-संज्ञानप्रशंसा-स्त्री०। संज्ञानप्रशंसनमिति स-द् अविपर्यस्तं ज्ञानं यस्य स सज्ज्ञानः पण्डितो जनः, सतो वा ज्ञानस्य सविवेचनलक्षणस्य प्रशंसनं पुरस्कार इति। विद्वज्जनप्रशंसायाम्, ध०।

"तन्नेत्रैस्त्रिभिरीक्षते न गिरिशो नो पद्मजन्माऽष्टभिः,

स्कन्दो द्वादशभिर्न वा न मघवा चक्षु सहस्रेण च ।
संभूयापि जगत्त्रयस्य नयनैस्तद्वस्तु नो वीक्ष्य(क्ष)ते,
प्रत्याहृत्यदृशः समाहितधियः पश्यन्ति यत्पण्डिताः॥१"इति।

तथा

"नो प्राप्यमभिवाञ्छन्ति, नष्टं नेच्छन्ति शोचितुम्।
आपत्सु च न मुह्यन्ति, नराः पण्डितबुद्धयः ॥ २ ॥
न हृष्यत्यात्मनो माने, नापमाने च रुष्यति ।
गाङ्गो ह्रद इवाक्षोभ्यो, यः स पण्डित उच्यते ॥ ३॥"
ध० १ अधि०।

सएणाणसंवेयवेरग्ग-संज्ञानसंवेगवैराग्य-न०। एवं विज्ञाय तत्त्यागस्त्र सर्वथा वैराग्यमाहुः । संज्ञानसङ्गततत्त्वदर्शन इत्युक्तलक्षणे वैराग्यभेदे, हा० १० अष्ट०।

सण्णाणादुदय-संज्ञानाद्युदय-पुं० । सम्यग्ज्ञानदर्शनादिनिर्वाणकारणोत्पत्तौ , पञ्चा० ४ विव०।

सण्णाणिव्वत्ति-संज्ञानिर्वृत्ति-स्त्री० । संज्ञानिष्पत्तौ, भ० १६ श० ८ अ० । ( संज्ञानिर्वृत्तिव्याख्या 'णिव्वत्ति' शब्दे चतुर्थभागे २१२० पृष्ठे उक्ता । )

सण्णाभूमि-संज्ञाभूमि-स्त्री० । व्युत्सर्गभूमौ , आचा० १ श्रु० १ अ० १ उ० ।

सण्णामुह-संज्ञामुख-न० । पुरीषोच्चये , आ० म० १ अ०।

सणायग-सन्नायक-पुं० । शोभने नायके, गृहस्वामिनि , नि० चू० २ उ० ।

सण्णास-संन्यास-पुं० । परित्यागे , नं० ।

सण्णासिद्धि-संज्ञासिद्धि-स्त्री० । संज्ञानं संज्ञा रूढिरिति पर्यायाः । तया सिद्धिः संज्ञासिद्धिः । संज्ञासम्बन्धे, दश० १ अ० ।

सण्णासुत्त-संज्ञासूत्र-न० । स्वसङ्केतपूर्वकं निबद्धे, सूत्र० १ श्रु० १ अ० १ उ० । ( वक्ष्यते 'सुत्त' शब्देऽस्मिन्नेव भागे एतद्विवृतिः । )

सण्णाह-सन्नाह-पुं० । प्रहरणे खड्गादिके , स्था० ६ ठा० ३ उ० । औ० ।

सण्णि(ण)-संज्ञिन्-पुं० ; संज्ञानं संज्ञा भूतभवद्भाविभावस्वभावपर्यालोचनम् "उपसर्गादातः" ॥ ५ । ३ । ११० ॥ ( सिद्धहेम० )इत्यङ्प्रत्ययः । स विद्यते यस्य स संज्ञी "व्रीह्यादिभ्यस्तौ" ॥ ७ । २ । ५ ॥ ( सिद्धहेम० ) इतीन् प्रत्ययः । विशिष्टसंवरणादिरूपमनोविज्ञानभाजि प्राणिनि यः सम्यग् जानाति 'ईहापोहादिगुणजुत्तो त्ति वुत्त भवति' आ० चू० १ अ० । कर्म० । दर्श० । पं० स० । स्था० । आ० म० । औ० । विशिष्टसरणादिरूपमनोविज्ञानसहितेन्द्रियपञ्चकसमन्विते प्राणिनि, कर्म० ३ कर्म० । नं० । ( 'असण्णि' शब्दे प्रथमभागे ८३६ पृष्ठे दण्डक उक्तः । ) ( के संज्ञिनः के वा असंज्ञिन इति 'सण्णा' शब्देऽस्मिन्नेव भागे अनुपदमेवोक्तम् । ) सज्ञा गुरुदेवधर्मपरिज्ञानं सा विद्यते यस्य स संज्ञी । वृ० ? उ० ३ प्रक० । श्रावके, आव० ४ अ० । समानस्कन्धवर्जाये, विशे० । नि० चू० ।

सण्णिओय-सन्नि(स्वनि)योग-पुं० । स्वकीयव्यापारे, आगमरचनादिके, पञ्चा० ४ विव० ।

सण्णिक्खित्त-सन्निक्षिप्त-त्रि० । न्यस्ते, स्था० ५ ठा० १ उ० । जगत्स्थितिस्वाभाव्येन सम्यग्निवेशिते, रा० ।

सण्णिकोसलय-संज्ञिकोशलक-पुं० । कोशलश्रावके , व्य० १० उ० ।

सण्णिगब्भ-संज्ञिगर्भ-पुं० । मनुष्यगर्भवसतौ , भ० १४ श० १० उ० ।

सण्णिगरिस-सन्निकर्ष-पुं० । संबन्धे, सूत्र० १ श्र० १२ अ० । संयोगे, "सजोग सन्निगासो पडुच्च संबन्ध एगट्ठा ।"नं० ।

सण्णिगास-सन्निकाश-पुं० । सदृशे, ज्ञा० १ श्रु० १अ०।आ० म० । रा० । "सन्निगासो नाम अब्भासो वा अववादो वा " पं० चू० ४ कल्प ।

सण्णिचय-सन्निचय-पुं० । प्राचुर्ये उपभोग्यद्रव्यनिचये, आचा० १ श्रु० २ अ० १ उ० । सम्यग् निश्चयेन चीयते इति सन्निचयः । विनाशिद्रव्याणामभयासितामृद्धीकादीनां संग्रहे, आचा० १ श्रु० २ अ० ५ उ० ।

सण्णिचिय-सन्निचिय-पुं० । प्रचयविशेषान्निविडीकृते, अनु०।

सण्णिणाय-सन्निनाद-पुं० । प्रश्न० । प्रतिशब्दे, औ० ।

सण्णिन्दा-सन्निन्दा-स्त्री० । सतां सत्पुरुषाणां साधुश्रावकप्रभृतीनां निन्दा सन्निन्दा । सद्गर्हायाम् , षो० १ विव० ।

सण्णिपुव्वजाइसरण-संज्ञिपूर्वजातिस्मरण-न०। संज्ञिना-सता या पूर्वजातिः-प्राक्तनो भवस्तस्या यत्स्मरणं तत्तथा । संज्ञिनां सतां पूर्वभवस्य स्मरणे, औ० ।

सण्णिप्पवाय-सन्निप्रपात-पुं० । संज्ञिनोऽवपतनस्थाने, स्था० ३ ठा० ।

सण्णिभ-सन्निभ-पुं० । सदृशे, अष्ट० १ अष्ट० । तं० । जं० ।

सण्णिभूय-संज्ञिभूत-पुं० । संज्ञिनः पञ्चेन्द्रियाः सन्तो भूता नारकत्वं गताः संज्ञिभूताः । पञ्चेन्द्रियेषु सत्सु नारके , भ० १ श० २ उ० ।

सण्णिर-सन्निर-त्रि० । पत्रशाके, दश० ५ अ० १ उ० ।

सण्णिरुद्ध-सन्निरुद्ध-त्रि० । सम्यग् निरुद्धं सन्निरुद्धम् । आचा० २ श्रु० २ चू० १ अ० । सूत्रकादिना अत्यन्तं नियन्त्रिते, आचा० २ श्रु० १ चू० १ अ० ४ उ० । उत्त० ।

सण्णिवयमाण-सन्निपतत्-त्रि० । गच्छति, आचा० २ श्रु० १ चू० १ अ० ३ उ० ।

सण्णिवाइय-सान्निपातिक-पुं० । संहतरूपतया नाऽतिनियतं पतनं गमनमेकत्र वर्त्तनं सन्निपातः , कोऽर्थः एषामेव द्व्यादिसंयोगप्रकारस्तेन निर्वृत्तः सान्निपातिकः । कर्म० ४ कर्म० । स्था० । प० स० । भ० । सन्निपात एवामौदयिकादिभावानां द्व्यादिमेलापकः स एव , तेन वा निर्वृत्तः सान्निपातिकः । अनु० । पं० सं० । पञ्चानामपि भावानां द्विकादिसंयोगनिष्पन्ने भावभेदे, सूत्र० १ श्रु० १३ अ० । अनु० ।

से किं तं सण्णिवाइए ?, सण्णि० एएसिं चेव उदइअउवस-

मिश्रखइअखओवसमिअपारिणामिआणं भावाणं दुगसं-जोएणं तियसंजोएणं चउक्कसंजोएणं पंचगसंजोएणं जे निप्फज्जइ सव्वे से सन्निवाइए नामे । तत्थ णं दस दुअसं-जोगा दस तिअसंजोगा पंच चउक्कसंजोगा एगे पंचकसं-जोगे । ( सू० १२७× )

सन्निपात'-एषामेवौदयिकादिभावानां द्व्यादिमेलापक', स एव तेन वा निर्वृत्त सान्निपातिक' । तथा चाह—' एए-सिं चेवे ' त्यादि , एषामौदयिकादीनां पञ्चानां भावानां द्विकत्रिकचतुष्कपञ्चकसंयोगैर्ये षड्विंशतिर्भङ्गा भवन्ति ते सर्वेऽपि सान्निपातिको भाव इत्युच्यते । एतेषु मध्ये जीवेषु नारकादिषु षडेव भङ्गा सम्भवन्ति , शेषास्तु विंशतिर्भङ्गका रचनामात्रेणैव भवन्ति । न पुनः क्वचित् सम्भवन्ति, अत' प्ररूपणामात्रतयैव ते अवगन्तव्या । एतत् सर्वं पुरस्ताद्व्यक्तीकरिष्यते । कियन्तः पुनस्ते द्व्यादिसंयोगा प्रत्येकं सम्भवन्ति, इत्याह—' तत्थ ण दस दुगसंजोगा ' इत्यादि, पञ्चानामौदयिकादिपदानां दश द्विकसंयोगा' , दशैव त्रिकसंयोगा', पञ्च चतु संयोगा , एकस्तु पञ्चक-संयोगः संपद्यत इति । सर्वेऽपि षड्विंशतिः ।

तत्र के पुनस्ते दश द्विकसंयोगा इति जिज्ञासायां प्राह—

एत्थ णं जे ते दस दुगसंजोगा ते णं इमे—अत्थि णा-मे उदइए उवसमनिप्फरणे १ अत्थि णामे उदइए खा-इगनिप्फरणे २ अत्थि णामे उदइए खओवसमनिप्फण्णे ३ अत्थि णामे उदइए पारिणामिअनिप्फण्णे ४ अत्थि णामे उवसमिए खयनिप्फण्णे ५ अत्थि णामे उवसमि-ए खओवसमनिप्फण्णे ६ अत्थि णामे उवसमिए पारि-णामिअनिप्फण्णे ७ अत्थि णामे खइए खओवसमनि-प्फण्णे ८ अत्थि णामे खइए पारिणामिअनिप्फण्णे ९ अत्थि णामे खओवसमिए पारिणामिअनिप्फण्णे १० । कयरे से नामे उदइए उवसमनिप्फण्णे ?, उदइए त्ति मणुस्से उवसंता कसाया, एस णं से नामे उदइए उव-समनिप्फण्णे १, कयरे से नामे उदइए खयनिप्फण्णे ?, उदइए त्ति मणुस्से खइयं सम्मत्तं । एस णं से नामे उदइए खयनिप्फण्णे २, कयरे से णामे उदइए खओ-वसमनिप्फण्णे ?, उदइए त्ति मणुस्से खओवसमिआइं इंदिआइं, एस णं से णामे उदइए खओवसमनिप्फण्णे ३, कयरे से णामे उदइए पारिणामिअनिप्फण्णे ?, उदइए त्ति मणुस्से पारिणामिए जीवे एस णं से णामे उदइए पारिणामिअनिप्फण्णे ४, कयरे से णामे उवस-मिए खयनिप्फण्णे ?, उवसंता कसाया खइयं सम्म-त्तं । एस णं से णामे उवसमिए खयनिप्फण्णे ५, कयरे से णामे उवसमिए खओवसमनिप्फण्णे ?, उवसंता क-साया खओवसमिआइं इंदिआइं , एस णं से णामे उवसमिए खओवसमनिप्फरणे ६ , कयरे से णामे उव-समिए पारिणामिअनिप्फरणे ? , उवसंता कसाया पा-रिणामिए जीवे , एस णं से णामे उवसमिए पारिणा-मिअनिप्फरणे ७ , कयरे से णामे खइए खओवसमनि-प्फरणे ? , खइयं सम्मत्तं खओवसमिआइं इंदिआइं । एस णं से णामे खइए खओवसमनिप्फरणे ८, कयरे से णामे खइए पारिणामिअनिप्फरणे ? , खइअं सम्मत्तं परिणामिए जीवे । एस णं से णामे खइए पारिणामि-अनिप्फरणे ९ , कयरे से णामे खओवसमिए पारिणा-मिअनिप्फरणे ? , खओवसमिआइं इंदिआइं पारिणा-मिए जीवे । एस णं से णामे खओवसमिए पारिणामि-अनिप्फण्णे १० । ( सू० १२७ )

नामाधिकारादित्थमाह—अस्ति तावत्सन्निपातिकभावान्त-र्वर्ति नाम । विभक्तिलोपादौदयिकौपशमिकलक्षणभावद्वयनि-ष्पन्नमित्येको भङ्ग ,एवमन्येनाप्युपरितनभावत्रयेण सह संयो-गादौदयिकेन चत्वारो द्विकसंयोगा लब्धा , ततस्तत्परित्यागे औपशमिकस्योपरितनभावत्रयेण सह चारणाया लब्धास्त्रयः तत्परिहारे क्षायिकस्योपरितनभावद्वयमीलनाया लब्धौ द्वौ, ततस्तं विमुच्य क्षायोपशमिकस्य पारिणामिकमीलने ल-ब्ध एक इति सर्वेऽपि दश । एवं सामान्यतो द्विकसं-योगभङ्गकेषु दर्शितेषु विशेषतस्तत्स्वरूपमजानन् विनेयः पृच्छति—' कयरे से णामे उदइए ? ' इत्यादि, अत्रोत्त-रम्—' उदइए त्ति मणुस्से ' इत्यादि, औदयिके भावे मनु-ष्यत्वं—मनुष्यगतिरिति तात्पर्यम् , उपलक्षणमात्रं चेदं , तिर्यगादिगतिजातिशरीरनामादिकर्मणामप्यत्र सम्भवाद् । उपशान्तास्तु कषाया औपशमिके भाव इति गम्यते , अत्राप्युदाहरणमात्रमेतत् , दर्शनमोहनीयनोकषायमोहनी-ययोरप्यौपशमिकत्वसम्भवाद् । एतन्निगमयति—' एस ण से णामे उदइए उवसमनिप्फरणे ' त्ति—' ण ' मिति वा-क्यालङ्कारे । एतत्तन्नाम यदुद्दिष्टं प्रागौदयिकौपशमिक-भावद्वयनिष्पन्नमिति प्रथमद्विकयोगे भङ्गकव्याख्यानम् । अयं च द्विकयोगविवक्षामात्रत एव संपद्यते , न पुनरीदृशो भङ्ग क्वचिज्जीवे सम्भवति । तथाहि—यस्यौदयिकी मनु-ष्यगतिरौपशमिका कषाया भवन्ति तस्य क्षायोपश-मिकानीन्द्रियाणि पारिणामिकं जीवत्वं कस्यचित् क्षायिकं सम्यक्त्वमित्येतदपि सम्भवति, तत्कथमस्य के-वलस्य सम्भव ? , एवमेतद्व्याख्यानुसारेण शेषा अपि व्याख्येया , केवल क्षायिकपारिणामिकभावद्वयनिष्पन्नं नवमभङ्गं विहाय परेऽसम्भाविनो द्रष्टव्या , नवमस्तु सि-द्धस्य संभवति , तथाहि—क्षायिके सम्यक्त्वज्ञाने पारिणा-मिक तु जीवत्वमित्येतदेव भावद्वयं तस्यास्ति नापरः , तस्मादयमेक सिद्धस्य सम्भवति, शेषास्तु नव द्विक-योगा प्ररूपणामात्रमिति स्थितम् , अन्यथा हि संसारिजी-वानामौदयिकी गति क्षायोपशमिकानीन्द्रियाणि पारिणा-मिकं जीवत्वमित्येतद्भावत्रयं जघन्यतोऽपि लभ्यत इति कथं तेषु द्विकयोगसम्भव ? इति भाव ।

त्रिकयोगान्निर्दिदिक्षुराह-

तत्थ णं जे ते दस तिगसंजोगा ते णं इमे— अत्थि णामे उदइए उवसमिए खयनिप्फण्णे १, अत्थि णामे उदइए उवसमिए खओवसमनिप्फण्णे २, अत्थि णामे उदइए उवसमिए पारिणामिअनिप्फण्णे ३, अत्थि णामे उदइए खइए खओवसमनिप्फण्णे ४, अत्थि णामे उदइए खइए पारिणामिअनिप्फण्णे ५, अत्थि णामे उदइए खओवसमिए पारिणामिअनिप्फण्णे ६, अत्थि णामे उवसमिए खइए खओवसमनिप्फण्णे ७, अत्थि णामे उवसमिए खइए पारिणामिअनिप्फण्णे ८, अत्थि णामे उवसमिए खओवसमिए पारिणामिअनिप्फण्णे ९. अत्थि णामे खइए खओवसमिए पारिणामिअनिप्फण्णे १० । कयरे से णामे उदइए उवसमिए खयनिप्फण्णे ?, उदइए त्ति मणुस्से उवसंता कसाया खइअं सम्मत्तं । एस णं से णामे उदइए उवसमिए खयनिप्फण्णे १, कयरे से णामे उदइए उवसमिए खओवसमियनिप्फण्णे ?, उदइए त्ति मणुस्से उवसंता कसाया खओवसमिआइं इंदिआइं, एस णं से णामे उदइए उवसमिए खओवसमनिप्फण्णे २, कयरे से णामे उदइए उवसमिए पारिणामिअनिप्फण्णे ?, उदइए त्ति मणुस्से उवसंता कसाया पारिणामिए जीवे, एस णं से णामे उदइए उवसमिए पारिणामिअनिप्फण्णे ३, कयरे से णामे उदइए खइए खओवसमनिप्फण्णे ?, उदइए त्ति मणुस्से खइअं सम्मत्तं खओवसमिआइं इंदिआइं । एस णं से णामे उदइए खइए खओवसमनिप्फण्णे ४, कयरे से णामे उदइए खइए पारिणामिअनिप्फण्णे ?, उदइए त्ति मणुस्से खइअं सम्मत्तं पारिणामिए जीवे, एस णं से नामे उदइए खइए पारिणामिअनिप्फण्णे ५, कयरे से णामे उदइए खओवसमिए पारिणामिअनिप्फण्णे ?, उदइए त्ति मणुस्से खओवसमिआइं इंदिआइं पारिणामिए जीवे, एस णं से णामे उदइए खओवसमिए पारिणामिअनिप्फण्णे ६, कयरे से णामे उवसमिए खइए खओवसमनिप्फण्णे ?, उवसंता कसाया खइअं सम्मत्तं खओवसमिआइं इंदिआइं, एस णं से णामे उवसमिए खइए खओवसमनिप्फण्णे ७, कयरे से णामे उवसमिए खइए पारिणामिअनिप्फण्णे ?, उवसंता कसाया खइअं सम्मत्तं पारिणामिए जीवे, एस णं से णामे उवसमिए खइए पारिणामिअनिप्फण्णे ८, कयरे से णामे उवसमिए खओवसमिए पारिणामिअनिप्फण्णे ?, उवसंता कसाया खओवसमिआइं इंदिआइं पारिणामिए जीवे, एस णं से णामे उवसमिए खओवसमिए पारिणामिअनिप्फण्णे ९, कयरे से णामे खइए खओवसमिए पारिणामिअनिप्फण्णे ?, खइअं सम्मत्तं । खओवसमियाइं इंदिआइं पारिणामिए जीवे, एस णं से णामे खइए खओवसमिए पारिणामिअनिप्फण्णे १० । ( सू० १२७ )

एतदप्यौदयिकौपशमिकक्षायिकक्षायोपशमिकपारिणामिकभावपञ्चकं भूम्यादावालिख्य तत आद्यभावद्वयस्योपरितनभावत्रयेण सह चारणायां लब्धास्त्रय इत्यादिक्रमेण दशाऽपि भावनीयाः,एतानेव स्वरूपतो विवरीपुराह—'कयरे से णामे उदइए उवसमिए ' इत्यादि, व्याख्या पूर्वानुसारतोऽत्रापि कर्त्तव्या, नवरमत्रौदयिकक्षायिकपारिणामिकभावत्रयनिष्पन्नः पञ्चमो भङ्गः केवलिनः सम्भवति, तथाहि— औदयिकी मनुष्यगतिः, क्षायिकाणि ज्ञानदर्शनचारित्राणि, पारिणामिकं तु जीवत्वमित्येते त्रयो भावास्तस्य भवन्ति, औपशमिकस्त्विह नास्ति, मोहनीयाश्रयत्वेन तस्योक्तत्वात्, मोहनीयस्य च केवलिन्यसम्भवात् । तथा क्षायोपशमिकोऽप्यत्रापास्य एव क्षायोपशमिकानामिन्द्रियादिपदार्थानामस्यासम्भवाद्, ' अतीन्द्रियाः केवलिन ' इत्यादिवचनात्,तस्मात् पारिशेष्याद्यथोक्तभावत्रयनिष्पन्नः पञ्चमो भङ्गः केवलिनः सम्भवति, षष्ठस्त्वौदयिकक्षायोपशमिकपारिणामिकभावनिष्पन्नो नारकादिगतिचतुष्टयेऽपि संभवति । तथाहि—औदयिकी अन्यतरा गतिः, क्षायोपशमिकानीन्द्रियाणि, पारिणामिकं जीवत्वमित्येवमेतद्भावत्रयं सर्वास्वपि गतिषु जीवानां प्राप्यत इति, शेषास्त्वष्टौ त्रिकयोगाः प्ररूपणामात्रम्, क्वाप्यसम्भवादिति भावनीयम् ।

चतुष्कसंयोगान्निर्दिदिक्षुराह—

तत्थ णं जे ते पंच चउक्कसंजोगा ते णं इमे-अत्थि णामे उदइए उवसमिए खइए खओवसमनिप्फण्णे १ अत्थि णामे उदइए उवसमिए खइए पारिणामिअनिप्फण्णे २ अत्थि णामे उदइए उवसमिए खओवसमिए पारिणामिअनिप्फण्णे ३ अत्थि णामे उदइए खइए खओवसमिए पारिणामिअनिप्फण्णे ४ अत्थि णामे उवसमिए खइए खओवसमिए पारिणामिअनिप्फण्णे ५।कयरे से णामे उदइए उवसमिए खइए खओवसमनिप्फण्णे ?, उदइए त्ति मणुस्से उवसंता कसाया खइयं सम्मत्तं खओवसमिआइं इंदिआइं । एस णं से णामे उदइए उवसमिए खइए खओवसमनिप्फण्णे १, कयरे से नामे उदइए उवसमिए खइए पारिणामिअनिप्फण्णे ?, उदइए त्ति मणुस्से उवसंता कसाया खइअं सम्मत्तं पारिणामिए जीवे । एस णं से नामे उदइए उवसमिए खइए पारिणामिअनिप्फण्णे २, कयरे से णामे उदइए उवसमिए खओवसमिए पारिणामिअणिप्फण्णे ?, उदइए त्ति मणुस्से उवसंता कसाया खओवसमिआइं इंदिआइं पारिणामिए जीवे । एस णं से णामे उदइए उवसमिए ख-

ओव० पारिणा० ३, कयरे से णामं उदइए खइए खओ-वसमिए पारिणामिअनिप्फरो ?, उदइए त्ति मणुस्से खइअं सम्मत्तं खओवसमिआइं इंदिआइं पारिणामिए जीवे । एस णं से नामे उदइए खइए खओवसमिए पारिणामिअ-निप्फरो ४, कयरे से णामे उवसमिए खइए खओवसमिए पारिणामिअनिप्फरो ?,उवसंता कसाया खइअं सम्मत्तं खओवसमिआइं इंदिआइं पारिणामिए जीवे । एस णं से नामे उवसमिए खइए खओवसमिए पारिणामिअनिप्फरो ५ । ( सू० १२७X )

भङ्गकरचना अक्षरच्छायावसेयैव । इदानीं तान्येव पञ्च भङ्गान् व्याचिख्यासुराह—'कयरे से नामे उदइए' इत्यादि भावना पूर्वाभिहितानुगुरायेन कर्त्तव्या, नवरमत्रौदयिकौपशमिकक्षायोपशमिकपारिणामिकभावनिष्पन्नस्तृतीयभङ्गो गतिचतुष्टयेऽपि सम्भवति,तथाहि-औदयिकी अन्यतरा गति नारकतिर्यग्देवगतिषु प्रथमसम्यक्त्वलाभकाले एव उपशमभावो भवति, मनुष्यगतौ तु तत्रोपशमश्रेण्यां चौपशमिकं सम्यक्त्वं क्षायोपशमिकानीन्द्रियाणि पारिणामिक जीवत्वमित्येवमयं भङ्गक सर्वासु गतिषु लभ्यते । यत्त्विह सूत्रे प्रोक्तम्–' उदइए त्ति मणुस्से उवसता कसाय ' त्ति-तत्तु मनुष्यगत्यपेक्षयैव द्रष्टव्यम् , मनुष्यत्वोदयस्योपशमश्रेण्या कषायोपशमस्य च तस्यामेव भावाद् । अस्य चोपलक्षणमात्रत्वादिति, एवमौदयिकक्षायिकक्षायोपशमिकपारिणामिकभावनिष्पन्नश्चतुर्थभङ्गोऽपि चतसृष्वपि गतिषु सम्भवति, भावना त्वनन्तरोक्ततृतीयभङ्गकवदेव कर्तव्या, नवरमौपशमिकसम्यक्त्वस्थाने क्षायिकसम्यक्त्वं वाच्यम् , अस्ति च क्षायिकसम्यक्त्वं सर्वास्वपि गतिषु , नारकतिर्यग्देवगतिषु पूर्वप्रतिपन्नस्यैव । मनुष्यगतौ तु पूर्वप्रतिपन्नस्य प्रतिपद्यमानकस्य च तस्यान्यत्र प्रतिपादितत्वादिति, तस्मादत्राप्येतौ द्वौ भङ्गकौ सम्भविनौ, शेषास्तु त्रय. संवृतिमात्रम् , तद्रूपेण वस्तुन्यसम्भवादिति ।

साम्प्रतं पञ्चकसंयोगमेकं प्ररूपयन्नाह—

तत्थ णं जे से एक्के पंचगसंजोए से णं इमे-अत्थि नामे उदइए उवसमिए खओवसमिए खइए पारिणामिअनिप्फरो १, कयरे से णामे उदइए उवसमिए खइए खओवसमिए पारिणामिअनिप्फरो ?, उदइए त्ति मणुस्से उवसंता कसाया खइअं सम्मत्तं खओवसमिआइं इंदिआइं पारिणामिए जीवे । एस णं से णामे ०जाव पारिणामिअनिप्फरो । से तं सन्निवाइए । ( सू० १२७ )

अयं च सविवरण सुगम एव, केवलं क्षायिक सम्यग्दृष्टि सन् य. उपशमश्रेणीं प्रतिपद्यते तस्यायं भङ्गक सम्भवति, नान्यस्य, समुदितभावपञ्चकस्यास्य तत्रैव भावादिति परमार्थ । तदेवमेको द्विकसयोगभङ्गको द्वौ द्वौ त्रिक योगचतुष्कयोगभङ्गकावेकस्त्वयं पञ्चकयोगे इत्येते षड् भङ्गका अत्र सम्भविन प्रतिपादिता , शेषास्तु विंशति सयोगोत्थानमात्रतयैव प्ररूपिता इति स्थितम् । एतेषु च षट्सु-



भङ्गकेषु मध्ये एकस्त्रिकसंयोगो द्वौ चतुष्कसंयोगावित्येते त्रयोऽपि प्रत्येकं चतसृष्वपि गतिषु सम्भवन्तीति निर्णीतम् , अतो गतिचतुष्टयभेदात् ते किल द्वादश वक्ष्यन्ते , ये तु शेषा द्विकयोगत्रिकयोगपञ्चकयोगलक्षणास्त्रयो भङ्गाः सिद्धकेवल्युपशान्तमोहाना यथाक्रमं निर्णीता ते यथोक्तैकैकस्थानसम्भवित्वात् त्रय एवेत्यनया विवक्षयाऽयं सान्निपातिको भाव स्थानान्तरे पञ्चदशविध उक्तो द्रष्टव्य । यदाह—' अविरुद्धसन्निवाइय-भेया एमेव पएणरस ' त्ति , ' से तं सरिणवाइए ' त्ति निगमनम् । उक्त. सान्निपातिको भाव , तद्भणने चोक्ता. षडपि भावा , ते च तद्वाचकैर्नामभिर्विना प्ररूपयितुं न शक्यन्त इति तद्वाचकान्यौदयिकादीनि नामान्यप्युक्तानि । एतैश्च षड्भिरपि धर्मास्तिकायादे' समस्तस्यापि वस्तुन. संग्रहात् षट्प्रकार सत् सर्वस्यापि वस्तुनो नाम परणामेत्यनया दिशा सर्वमिदं भावनीयम् । अनु० । स्था० । सूत्र० । आ० म० । भ० । आचा० । सन्निपातजन्ये , त्रि० । त० । औदयिकादिपञ्चभावसमकालनिष्पादिते, आचा० १ श्रु० ५ अ० १ उ० । ( 'भाव' शब्दे षष्ठभागे उदाहरणान्तरमपि ।

सरिणवाय-सन्निपात-पुं० । अपरापरस्थानेभ्यो जनानामेकत्र मीलने, औ० । ज्ञा० । वातादित्रयसंयोगे, प्रश्न० ५ सव० द्वार । भ० । औ० । द्वित्रिभावाना संयोगे, आ० म० १ अ० । मेलापके, सूत्र० २ श्रु० ६ अ० । चू० । स्था० । औदयिकादिभावानामेव द्व्यादिसंयोगे, उत्त०१ अ० । अनन्तराङ्गादिभावानां मेलके , अनु० । समवाये , स्था० ४ ठा० ३ उ० । संङ्कीर्णलक्षणे द्व्यादिमेलके, स्था० ४ ठा० ४ उ० ।

सरिणविट्ठ-सन्निविष्ट-त्रि० । सम्यक् स्वशरीरानाबाधया न तु विषमसंस्थानेन निविष्टाः सन्निविष्टा । जी० ३ प्रति० ४ अधि० । अभिनिविष्टे, प्रश्न० ५ आश्र० द्वार । सम्यक् निश्चलता आपत्परिहारेण च निविष्टे , आ० म० १ अ० । प्रश्न० । जं० । रा० । निवेशिते, विपा० १ श्रु० ३ अ० । ज्ञा० । औ० । सन्निवेशपाटके , रा० । आवसिते , आचा० २ श्रु० १ चू० १ अ० ३ उ० ।

सरिणवेस-सन्निवेश-पुं० । यात्राद्यर्थसमागतजनावासे, जनसमागमे च । आचा० १ श्रु० ८ अ० ६ उ० । उत्त० । स्थाने , आचा० १ श्रु० ६ अ० १ उ० । यत्र प्रभूतानां भाण्डानां प्रवेश. स सन्निवेश. । स्था० ५ ठा० १ उ० । कटकादीनामावासे , ज्ञा० १ श्रु० ८ अ० । स्था० । सूत्र० । औ० । घोषादौ , अनु० । भ० । औ० । सत्थावासणत्थाणं सरिणवेसो गामो वा पीडितो संनिविट्ठो जत्तागतो वा लोगो सन्निविट्ठो सो सरिणवेसं भरणति । नि० चू० १२ उ० ।

सरिणसज्जा-सन्निषद्या-स्त्री० । सच्छोभना सुखोत्पादकतयाऽनुकूलत्वान्निषद्या इव निषद्या । स्त्रीभि कृतायां मायायाम् , स्त्रीवसतौ च । " तम्हा समणा ण समेंति आयहियाए सन्निसेज्जाओ । " सूत्र० १ श्रु० ४ अ० १ उ० ।

सरिणसरण-सन्निषरण-त्रि० । सङ्गततया निषण्णम् । सुखासीने , भ० ७ श० १० उ० । रा० ।

सरिणसिज्जा-सन्निषद्या—स्त्री० । शोभानायां निषद्यायाम् , व्य० १ उ० ।

स्वनिपद्या-स्त्री०। स्वकीयाया निपद्यायाम्, व्य० ४ उ०।

सरिणसुय-संज्ञिश्रुत-न०। संज्ञा विद्यन्ते येषां ते संज्ञिन परं सर्वत्राप्यागमे दीर्घकालिक्या संज्ञया संज्ञिनस्ते संज्ञिन उच्यन्ते। ततः संज्ञिना श्रुतं संज्ञिश्रुतम्। समनस्काना मन सहितैरिन्द्रियैर्जानिते श्रुतज्ञाने, कर्म्म० १ कर्म०।

से किं तं सरिणसुअं ?, सरिणसुयं(अं) तिविहं पएणत्तं, तं जहा-कालिओवएसेणं हेऊवएसेणं दिट्ठिवाओवएसेणं। से किं तं कालिओवएसेणं ?, कालिओवएसेणं जस्स णं अत्थि ईहा अवोहो मग्गणा गवेसणा चिंता वीमंसा से णं सएणीति लब्भइ। जस्स णं नऽत्थि ईहा अवोहो मग्गणा गवेसणा चिंता वीमंसा से णं असन्नीति लब्भइ। से तं कालिओवएसेणं। से किं तं हेऊवएसेणं ?, जस्स णं अत्थि अभिसंधारणपुव्विआ करणसत्ती से णं सएणीति लब्भइ, जस्स णं नऽत्थि अभिसंधारणपुव्विआ करणसत्ती से णं असएणीति लब्भइ, से तं हेऊवएसेणं। से किं तं दिट्ठिवाओवएसेणं ?, दिट्ठिवाओवएसेणं सरिणसुअस्स खओवसमेणं सएणी लब्भइ, असरिणसुअस्स खओवसमेणं असएणी लब्भइ। से तं दिट्ठिवाओवएसेणं। से तं सरिणसुअं। से तं असरिणसुअं। (सू० ३९।)

'से किं त' मित्यादि, अथ किं तत्संज्ञिश्रुतम् ?, संज्ञानं संज्ञा साऽस्यास्तीति संज्ञी तस्य श्रुतं संज्ञिश्रुतम्। आचार्य आह—संज्ञिश्रुतं त्रिविधं प्रज्ञप्तम् संज्ञिनस्त्रिभेदत्वात्, तदेव त्रिभेदत्वं संज्ञिनो दर्शयति। तद्यथा—कालिक्युपदेशेन १ हेतूपदेशेन २ दृष्टिवादोपदेशेन ३। तत्र कालिक्युपदेशेनेत्यत्रादिपदलोपाद्दीर्घकालिक्युपदेशेनेति द्रष्टव्यम्।' से किं त' मित्यादि अथ कोऽयं कालिक्युपदेशेन संज्ञी ?, इह दीर्घकालिकी संज्ञा कालिकीति व्यपदिश्यते, आदिपदलोपादुपदेशनमुपदेश —कथनमित्यर्थः, दीर्घकालिक्या उपदेश —दीर्घकालिक्युपदेशस्तेन, आचार्य आह—कालिक्युपदेशेन संज्ञी स उच्यते यस्य प्राणिनोऽस्ति विद्यते ईहा — सदर्थपर्यालोचनमपोहो—निश्चयो मार्गणा—अन्वयधर्मान्वेषणरूपा गवेषणा—व्यतिरेकधर्मस्वरूपपर्यालोचनं चिन्ता —कथमिदं भूतं कथं चेदं सम्प्रति कर्त्तव्यं कथं चैतद्भविष्यतीति पर्यालोचनं विमर्शनं विमर्शः —इदमित्थमेव घटते इत्थं वा तद्भूतमित्थमेव वा तद्भावीति यथावस्थितवस्तुस्वरूपनिर्णय, स प्राणी 'ण' मिति वाक्यालङ्कारे संज्ञीति लभ्यते। स च गर्भव्युत्क्रान्तिकपुरुषादिरौपपातिकश्च देवादिर्मन पर्याप्तियुक्तो विज्ञेय. तस्यैव त्रिकालविषयचिन्ताविमर्शादिसम्भवाद्, आह च भाष्यकृद्—" इह दीहकालिगी—कालिगित्ति मया जया सुदीहं पि। समभरइ भूयमेस्सं, चिंतेइ य किह णु कायव्वं ॥१॥ कालियसन्नि त्ति तओ, जस्स मई सो य तो मणोजोग्गे। खंधेऽणंते चेत्तुं, मन्नइ तल्लद्धिसंपत्तो ॥२॥" एष च प्रायः सर्वमप्यर्थं स्फुटरूपमुपलभते, तथाहि—यथा चक्षुष्मान् प्रदीपादिप्रकाशेन स्फुटमर्थमुपलभते तथैषोऽपि मनोलब्धिसम्पन्नो मनोद्रव्यावष्टम्भसमुत्थविमर्शवशतः पूर्वापरानुसन्धानेन यथावस्थितं स्फुटमर्थमुपलभते, यस्य पुनर्नास्ति ईहा अपोहो मार्गणा गवेषणा चिन्ता विमर्शः सोऽसंज्ञीति लभ्यते, स च संमूर्च्छिमपञ्चेन्द्रियविकलेन्द्रियादिर्विज्ञेय., स हि स्वल्पस्वल्पतरमनोलब्धिसम्पन्नत्वादस्फुटमस्फुटतरमर्थं जानाति। तथाहि-संज्ञिपञ्चेन्द्रियापेक्षया संमूर्च्छिमपञ्चेन्द्रियोऽस्फुटमर्थं जानाति, ततोऽप्यस्फुटं चतुरिन्द्रिय., ततोऽप्यस्फुटतरं त्रीन्द्रिय, ततोऽप्यस्फुटतमं द्वीन्द्रिय, ततोऽप्यस्फुटतममेकेन्द्रिय, तस्य प्रायो मनोद्रव्यासम्भवात्, केवलमव्यक्तमेव किञ्चिदतीवाल्पतरं मनोद्रव्यं, यद्वशादाहारादिसंज्ञा अव्यक्तरूपा प्रादुःष्यन्ति, 'सेत्त' मित्यादि, सोऽयं कालिक्युपदेशेन संज्ञी। 'से किं त' मि त्यादि, अथ कोऽयं हेतूपदेशेन संज्ञी ?, हेतुः कारणं निमित्तमित्यनर्थान्तरम्, उपदेशनमुपदेश हेतोरुपदेशन हेतूपदेशस्तेन, किमुक्तं भवति !,-कोऽयं सञ्ज्ञित्वनिबन्धनहेतुमुपलभ्य कालिक्युपदेशेनासंज्ञ्यपि संज्ञीति व्यवह्रियते, आचार्य आह—हेतूपदेशेन संज्ञा यस्य प्राणिनोऽस्ति—विद्यतेऽभिसन्धारणम्—अव्यक्तेन व्यक्तेन वा विज्ञानेनालोचनं तत्पूर्विका—तत्कारणिका करणशक्तिः—करणं क्रिया तस्या शक्ति —प्रवृत्ति., स प्राणी णमिति वाक्यालङ्कारे, हेतूपदेशेन संज्ञीति भण्यते, एतदुक्तं भवति-यो बुद्धिपूर्वकं स्वदेहपरिपालनार्थमिष्टेष्वाहारादिषु वस्तुषु प्रवर्तते अनिष्टेभ्यश्च निवर्त्तते स हेतूपदेशेन संज्ञी, स च द्वीन्द्रियादिरपि वेदितव्य, तथाहि-इष्टानिष्टविषयप्रवृत्तिनिवृत्तिसञ्चिन्तनं न मनोव्यापारमन्तरेण सम्भवति, मनसा पर्यालोचनं संज्ञा, सा च द्वीन्द्रियादेरपि विद्यते, तस्यापि प्रतिनियतेष्टानिष्टविषयप्रवृत्तिनिवृत्तिदर्शनात्, ततो द्वीन्द्रियादिरपि हेतूपदेशेन संज्ञी लभ्यते, नवरमस्य चिन्तनं प्रायो वर्तमानकालविषयं न भूतभविष्यद्विषयमिति न कालिक्युपदेशेन संज्ञी लभ्यते। यस्य पुनर्नास्त्यभिसन्धारणापूर्विका करणशक्ति स प्राणी, णमिति वाक्यालङ्कारे, हेतूपदेशेनाप्यसंज्ञी लभ्यते, स च पृथिव्यादिरेकेन्द्रियो वेदितव्य', तस्याभिसन्धिपूर्वकमिष्टानिष्टप्रवृत्तिनिवृत्त्यसम्भवात्, या अपि चाहारादिसंज्ञा पृथिव्यादीना वर्त्तन्ते ता अप्यत्यन्तमव्यक्तरूपा इति तदपेक्षयाऽपि न तेषां संज्ञित्वव्यपदेश.। उक्तं च भाष्यकृता "जे पुण संचिंतेउं, इट्ठाणिट्ठेसु विसयवत्थूसुं। वत्तंति नियत्तंति य, सदेहपरिपालणाहेउं ॥१॥ पाएण संपइ च्चिय, कालम्मि न याइदीहकालराणू। ते हेउवायसएणी, निच्चिट्ठा होंति अस्सएणी ॥२॥" अन्यत्रापि हेतूपदेशेन संज्ञित्वमाश्रित्योक्तम्—' कृमिकीटपतङ्गाद्या., समनस्का जङ्गमाश्चतुर्भेदा। अमनस्का पञ्चविधा, पृथिवीकायादयो जीवा' ॥१॥' 'सेत्त' मित्यादि, सोऽयं हेतूपदेशेन संज्ञी। 'से किं त' मित्यादि। अथ कोऽयं दृष्टिवादोपदेशेन संज्ञी ?, दृष्टिर्दर्शनं—सम्यक्त्वादि वदन—वाद दृष्टीना वादो दृष्टिवादस्तदुपदेशेन, तद-

पेक्षयेत्यर्थः, आचार्य आह—दृष्टिवादोपदेशेन संज्ञिश्रुतस्य क्षयोपशमेन संज्ञी लभ्यते, संज्ञानं संज्ञा—सम्यग्ज्ञानं तदस्यास्तीति (स) संज्ञी—सम्यग्दृष्टिस्तस्य यच्छ्रुतं तत्संज्ञिश्रुतं, सम्यक्श्रुतमिति भावार्थः, तस्य क्षयोपशमेन तदावारकस्य कर्म्मणः क्षयोपशमभावेन संज्ञी लभ्यते, किमुक्तं भवति?—सम्यग्दृष्टिः क्षायोपशमिकज्ञानयुक्तो दृष्टिवादोपदेशेन संज्ञी भवति, स च यथाशक्ति रागाऽऽदिनिग्रहपरो वेदितव्यः, स हि सम्यग्दृष्टिः सम्यग्ज्ञानी वा यो रागादीन् निगृह्णाति, अन्यथा हिताहितप्रवृत्तिनिवृत्त्यभावतः सम्यग्दृष्टित्वाद्ययोगात्, उक्तं च—'तज्ज्ञानमेव न भवति, यस्मिन्नुदिते विभाति रागगणः। तमसः कुतोऽस्ति शक्ति-र्दिनकरकिरणाग्रतः स्थातुम्? ॥ १ ॥" अन्यस्तु मिथ्यादृष्टिरसंज्ञी, तथा चाह—'असंज्ञिश्रुतस्य मिथ्याश्रुतस्य क्षयोपशमेनासंज्ञीति लभ्यते, 'से त्त' मित्यादि निगमनं, सोऽयं दृष्टिवादोपदेशेन संज्ञी। तदेवं संज्ञिनस्त्रिभेदत्वात् श्रुतमपि तदुपाधिभेदात् त्रिविधमुपन्यस्तम्। अत्राह—ननु प्रथमं हेतूपदेशेन संज्ञी वक्तुं युज्यते, हेतूपदेशेनाल्पमनोलब्धिसम्पन्नस्यापि द्वीन्द्रियादेः संज्ञित्वेनाभ्युपगतत्वात् तस्य चाविशुद्धतरत्वात्, तत कालिक्युपदेशेन, हेतूपदेशसंज्ञापेक्षया कालिक्युपदेशेन संज्ञिनो मनःपर्याप्तियुक्ततया विशुद्धत्वात्, तत्किमर्थमुत्क्रमोपन्यासः?, उच्यते, इह सर्वत्र सूत्रे यत्र क्वचित् संज्ञी असंज्ञी वा परिगृह्यते तत्र सर्वत्रापि प्रायः कालिक्युपदेशेन गृह्यते न हेतूपदेशेन, नापि दृष्टिवादोपदेशेन तत एतत्सम्प्रत्ययार्थं प्रथमं कालिक्युपदेशेन संज्ञिनो ग्रहणम्। उक्तं च—" सन्निति असन्निति य, सव्वसुए कालिओवएसेणं। पायं संववहारो, कीरइ तेणाइओ सकओ ॥ १ ॥" ततोऽनन्तरमप्रधानत्वाद्धेतूपदेशेन संज्ञिनो ग्रहणम्, ततः सर्वप्रधानत्वादन्ते दृष्टिवादोपदेशेनेति 'से त्त' मित्यादि, तदेतत्संज्ञिश्रुतम्, असंज्ञिश्रुतमपि प्रतिपक्षाभिधानादेव प्रतिपादितम्। तत आह— 'से त्तं असन्निसुअं' तदेतदसंज्ञिश्रुतम्। नं०।

सरिणसेज्जागय—सन्निषद्यागत—त्रि०। सती नाम शोभना स्वकीया वा निषद्या सन्निषद्या तस्यां गतः। सन्निषद्योपविष्टे, व्य० ४ उ०।

सरिणह—सन्निभ—त्रि०। सदृशे, प्रज्ञा० २ पद।

सरिणहाण—सन्निधान—न०। सन्निधीयते आधीयते यस्मिंस्तत्सन्निधानम्, अनु०। सन्निधीयते क्रियाऽस्मिन्निति सन्निधानम्। आधारे, स्था० ८ ठा० ३ उ०। सम्यग् निधीयते नारकादिगतिषु येन तत्सन्निधानम्। कर्म्मणि, आचा० १ श्रु० ८ अ० ३ उ०। सन्निधिः सन्निधानम्। वस्त्रादेर्व्यवस्थाने, सूत्र० १ श्रु० ४ अ० १ उ०।

सरिणहि—सन्निधि—पुं०। सम्यक्प्रकारेण निधीयते-स्थाप्यते दुर्गतौ आत्मा येन स सन्निधिः। संचये, उत्त० ६ अ०। दश०। विनाशिद्रव्याणां दध्योदनादीनां स्थापने, आचा० १ श्रु० २ अ० ५ उ०। विशिष्टाहारसंग्रहस्य संचये, सूत्र० १ श्रु० १६ उ०। व्य०। गोरसादेः सन्निचये, नि० श्रायामशनादिधारणे, ग० २ अधि०।

सन्निधिं न कुर्यात्—

सण्णिहिं च न कुव्विज्जा, लेवमायाइ संजए।
पक्खी पत्तं समादाय, निरविक्खो परिव्वये ॥ १६ ॥

च—पुनः संयतः—साधुर्लेपमात्रयाऽपि संनिधिं न कुर्यात् लेपस्य मात्रा लेपमात्रा तया लेपमात्रया सम्-सम्यक् प्रकारेण निधीयते—स्थाप्यते दुर्गतौ आत्मा येन स सन्निधिः घृतगुडादिसंचयस्तं न कुर्यात्, यावता पात्रं लिप्यते तावन्मात्रमपि घृतादिकं न संचयेत्। भिक्षुराहारं कृत्वा पात्रं समादाय—पात्रं गृहीत्वा निरपेक्षः सन्—निःस्पृहः सन् परिव्रजेत्—साधुमार्गे प्रवर्तेत। क इव-पक्षी इव यथा पक्षी आहारं कृत्वा पत्रं—तनूरुहमात्रं गृहीत्वा उड्डीयते तथा साधुरपि कुक्षिसंबलो भवेत् ॥१६॥ उत्त० ७ अ०। (सन्निधिशब्दवक्तव्यता 'वयछक्क' शब्दे षष्ठे भागे गता।)

सन्निहिं च न कुव्विज्जा, अणुमायं पि संजए।
मुहा जीवी असंबद्धे, हविज्ज जगनिस्सिए ॥ २४ ॥

सन्निधिं—प्रागनिरूपितस्वरूपां न कुर्यात् अणुमात्रमपि—स्तोकमपि संयतः—साधुस्तथा मुधाजीवीति पूर्ववत्, असंबद्धः पद्मिनीपत्रोदकवत् गृहस्थैः एवंभूतः सन् भवेत् जगन्निश्रितश्चराचरसंरक्षणे प्रतिबद्ध। इति सूत्रार्थः। दश०८ अ० २ उ०। (सन्निधिव्याख्या 'भिक्खु' शब्दे पञ्चमभागे १५६८—पृष्ठे गता।) (तथा सन्निधिव्याख्या 'रायपिंड' शब्दे षष्ठे भागे ५५४—पृष्ठे गता।) (तथा 'आरंभ' शब्दे द्वितीयभागे ३६५ पृष्ठे गता।) (तथा 'परिग्गह' शब्दे पञ्चमभागे ५५३ पृष्ठे गता।) ('पडिसेवणा' शब्दे रात्रिभोजनस्य दर्पिकाप्रतिसेवनप्रस्तावे सन्निधिदोष उक्तः।) " न यश्चोद्रामिनेऽर्थाय,सन्निधत्तेऽशनादिकम्।" आगामिनेऽर्थाय श्वः परश्वो वा भाविने प्रयोजनाय सन्निधत्ते साधु। द्वा० २७ द्वा०।

न सण्णिहिं कुव्वइ आसुपन्ने। (२५ +)

तथा सन्निधानं सन्निधिः स च द्रव्यसन्निधिः धनधान्यहिरण्यपदचतुष्पदरूपो, भावसन्निधिस्तु मायाक्रोधादयो वा सामान्येन कषायास्तमुभयरूपमपि सन्निधिं न करोति भगवाँस्तथाऽऽशुप्रज्ञः सर्वत्र सदोपयोगान्न छद्मस्थवन्मनसा पर्यालोच्य पदार्थपरिच्छित्तिं विधत्ते। सूत्र० १ श्रु० ६ अ०। (सन्निधिव्याख्या 'आतङ्क' शब्दे द्वितीयभागे १५८ पृष्ठे गता।)

सन्निहिय—सन्निहित—त्रि०। अशेषिते विशे०। दाक्षिणात्यानामाज्ञप्तिकानामिन्द्रे, स्था० २ ठा० ३ उ०।

सण्णिहियपाडिहेर—सन्निहितप्रातिहार्य—पुं०। सन्निहितं प्रतिहार्यं प्रतिहारकर्म्म सान्निध्यं दैवेन यस्य स तथा। भ० १४ श० ८ उ०। विहितदैवतप्रातिहार्ये, औ०।

सण्णिहिसण्णिचय—सन्निधिसन्निचय—पुं०। सन्निधानं सन्निधिस्तस्य सन्निचयः सन्निधिसन्निचयः, अथवा—सम्यग् निधीयते स्थाप्यते उपभोगाय योऽर्थः स सन्निधिस्तस्य सन्निचयः, प्राचुर्यमुपभोग्यम्। द्रव्यनिचये,आचा० १ श्रु० २ अ० १ उ०। सन्दर्गाभिधीयन इति सन्निधिः, विनाशित-

द्रव्याणां दध्योदनादीनां तथा सम्यग् निश्चयेन चीयते इति सन्निचय । विनाशिद्रव्याणामभयासितामृद्धीकादीनां संग्रहे, आचा० १ श्रु० २ अ० ५ उ० ।

सण्ह-श्लक्ष्ण—स्त्री० । " सूक्ष्म-श्न-ष्ण-स्न-ह्न-ह्न-क्ष्णां ण्हः" ॥ ८ । २ । ७५ ॥ अनेनात्र क्ष्णस्य णकाराक्रान्तो हकारादेश. । सण्हं । प्रा० । मसृणे, स० । सू० प्र० । चं० प्र० । श्लक्ष्णपुद्गलस्कन्धनिष्पन्ने, श्लक्ष्णदलनिष्पन्नपटवत् । प्रश्न० २ पद । जी० । रा० । जं० । श्लक्ष्णपुद्गलनिष्पादितवहि प्रदेशे, जी० ३ प्रति० ४ अधि० ।

सूक्ष्म—त्रि० । "सूक्ष्म-श्न-ष्ण-स्न-ह्न-ह्न-क्ष्णां ण्हः" ॥ ८ । २ । ७५ ॥ अनेनात्र सूक्ष्मशब्दसम्बन्धिन. क्ष्मस्य णकाराक्रान्तो हकारादेश. । सण्हं । प्रा० । " अदूतः सूक्ष्मे वा " ॥ ८ । १ । १८॥ अनेनात्रोकारस्य वैकल्पिक. अदादेश.।सण्ह । सुण्हं । प्रा० । अणुपरिमाणवति, अल्पे च । वाच० । मृदुलघुस्पर्शे, प्रश्न० २ पद ।

सण्हकरणी-श्लक्ष्णकरणी-स्त्री० । श्लक्ष्णानि चूर्णरूपाणि द्रव्याणि क्रियन्ते यस्या सा श्लक्ष्णकरणी । पेषणशिलायाम्, भ० १६ श० ३ उ० ।

सण्हपट्ट-श्लक्ष्णपट्ट-पुं० । श्लक्ष्णं पट्टवृत्ति पट्टसूत्रम् । श्लक्ष्णपट्टमये, कल्प० १ अधि० २ क्षण ।

सण्हपट्टभत्तिसयचित्तताणगा-श्लक्ष्णपट्टभक्तिसतचित्तताणका-स्त्री० । श्लक्ष्णपट्टसूत्रमयो भक्ति तच्चित्रस्थानको यस्या सा तथा । घनमसृणविविधचित्रायां शाटिकायाम्, भ० ११ श० ३ उ० ।

सण्हबायरपुढवीकाइय-श्लक्ष्णबादरपृथिवीकायिक-पुं० । पृथ्वीकायिकभेदे, जी० । "सण्हबायरपुढविकाइया" जी० १ प्रति० । ('पुढवीकाइय' शब्दे पञ्चमभागे ६७३ पृष्ठे व्याख्या गता । )

सण्हामच्छ-श्लक्ष्णमत्स्य-पुं० । मत्स्यभेदे,विपा० ।

सत-सप्त-पुं० ।'तदोस्त.' ॥८।४। ३०७॥ इति पैशाच्यां तस्य त । सतं । संख्याभेदे, प्रा० ४ पाद ।

सतक्का-सतर्का-स्त्री० । स्वकीयमिथ्यात्वविकल्पे, वृ० १ उ० २ प्रक० ।

सतंत-स्वतन्त्र-त्रि० । आत्मायत्ते , स्वतन्त्र. कर्त्ता । विशे० । स्वकार्यकर्तृत्व प्रत्यपरनिरपेक्ष्ये, सूत्र० २ श्रु० १ अ० । स्वसिद्धान्ते, नि० चू० ११ उ० ।

सतंतअविरुद्ध-स्वतन्त्राविरुद्ध-त्रि०। स्वतन्त्र—स्वसिद्धान्तस्तस्मिन्नविरुद्धम् । स्वसमयाविरुद्धे, नि० चू० ११ उ० ।

सतंतविरुद्ध-स्वतन्त्रविरुद्ध-त्रि० । स्वसमयविरुद्धे, यथा-सर्वत्र सर्वकालं नास्त्यात्मेति । " अध सव्वत्थ सव्वकालं नऽत्थि आया तो सतंतविरुद्ध भन्नति " नि० चू० १ उ० ।

सतत-सतत-न० । अविच्छिन्ने, प्रश्न० ३ आश्र० द्वार । अनवरत, सूत्र० १ श्रु० १२ अ० ।

सतन-सदन-न० । "तदोस्त '॥८।४। ३०७॥ पैशाच्याम् अनेनात्र दकारस्य तकारादेश । सतनम् । गृहे, प्रा० ४ पाद ।

सतत्तचिंता स्वतत्त्वचिन्ता-स्त्री० । स्वरूपचिन्तने, पञ्चा० १ विव० ।

शतपत्त-शतपत्र-न० । दलशतकलिते कमले, जं० १ वक्ष० । रा० । भ० ।

सतवाइया-सप्तपादिका-स्त्री० । त्रीन्द्रियजीवभेदे, प्रश्न० १ पद ।

सतारुक-शतारुक-न० । क्षुद्रकुष्ठभेदे, प्रश्न० ५ संव० द्वार ।

सति-स्मृति-स्त्री० । चिन्तने, स्था० ४ ठा० १ उ० ।

सतिगिच्छा-सचिकित्सा-त्रि० । प्रतिक्रियोपेते, पञ्चा० १६ विव० ।

सतेरा-शतेरा-स्त्री० । विदिग्रुचकवास्तव्यायां तृतीयकुमारीमहत्तरिकायाम्, जं० ५ वक्ष० । आ० क० । आ० म० । विद्युत्कुमारमहत्तरिकायाम्, आव० १ अ० । औ० । स्था० ।

सतोरणवर-सतोरणवर-त्रि० । तोरणवरसहिते, रा०। जी० ।

सत्त-शक्त-त्रि० । समर्थे, विशे० । स्या० । अहोरात्रस्य द्वितीये मुहूर्त्ते, स० ३ सम० । आचा० ।

सक्त-त्रि० । सुखदुःखेषु बद्धे, आचा० १ श्रु० ८ अ० २ उ० । सूत्र० । गृद्धे, सूत्र० १ श्रु० १ अ० १ उ० । आचा० । अध्युपपन्ने, सूत्र० १ श्रु० १० अ० । रते, आचा० । तत्परे, आचा०१ श्रु०१ अ० ७ उ० । लग्ने, सूत्र० १ श्रु० १० उ० । उत्त० । रा०।

सत्त्व-न० । उत्पादव्ययध्रौव्ययुक्ततारूपाया विद्यमानतायाम्, दश० १ अ० । अने० । अनु० । विशे० । दर्श० । जन्तौ, सूत्र०१ श्रु०११ अ० । आचा० । सत्तायोगात् सत्त्वाः । स्था०४ ठा०२ उ० । "जम्हा सत्ते सुहासुहेहिं कम्मेहिं तम्हा सत्ते वि वत्तव्वं सिया" आसक्त. शक्तो वा समर्थ', सुन्दरासुन्दरासु-चेष्टासु । अथवा-सक्तस्सम्बद्धः शुभाशुभैः कर्मभिरिति । भ० २ श०१ उ० । आ० चू० । प्राणिनि, ज्ञा० १ श्रु० १६ अ०। सूत्र० । जीवे, विशे० । आव० । " प्राणा द्वित्रिचतु प्रोक्ता, भूतास्तु तरवः स्मृता. । जीवा' पञ्चेन्द्रिया ज्ञेयाः, शेषाः सत्त्वा इतीरिता' ॥ १ ॥ " इति वनस्पतिव्यतिरिक्तेषु एकेन्द्रियेषु, स्था० ५ ठा० २ उ० । ज्ञा० । जी० । आचा० ।

" सत्तविराहणपावं, असंखगुणियं तु इक्कभूयस्स ।
भूयस्स य संखगुणं, पावइ इक्कस्स पाणस्स ॥ १ ॥
बेइंदिय तेइंदिय, चउरिंदिय चेति तह य पंचिंदी ।
लक्खसहस्सं तह सय-गुणं च पावं मुणेयव्वं ॥२॥ "

इति गाथाद्वयं कस्मिन् ग्रन्थे विद्यते ?, " सत्तविराहणपावमि " त्यादिगाथाद्वयं छूटकपत्रेषु लिखित दृश्यते परं न क्वापि ग्रन्थे । ही० २ प्रका० । तिर्यङ्नरामरलक्षणेषु संसारिजीवेषु, आचा० १ श्रु० ६ अ० ५ उ० । दैन्यविनिर्मुक्ते मानसेऽवष्टम्भे, अनु० । सामर्थ्ये, ज्ञा० १ श्रु० १६ अ० । साहसे, जं० ३ वक्ष० । वीर्यान्तरायकर्मक्षयोपशमादिजन्ये आत्मपरिणामे, आ० म०१ अ० । प्रभूततरभापणे पवर्द्धमाने आन्तर उत्साहविशेषे, वृ० ५ उ० । परीषहादिसहने रणाङ्गणे वा अवष्टम्भ, स्था० ४ ठा० ३ उ० । प्राणव्यपरोपणसमर्थविद्याप्रयोग व्यवसित तन्मानोपमर्दहेतौ अवष्टम्भे व्य० १ उ० ।

सत्त-सप्तन्-त्रि०। ( सात ) संख्याभेदे, नि० चू० १ उ०। जं०। स०।

सत्तंग-सप्ताङ्ग-न०। राजामात्याऽ १ मात्यगृहाऽ २ र्थलाभ—३ कोश ४ राष्ट्र ५ दुर्ग ६ सैन्य ७ लक्षणे सप्तावयवे राज्ये, कल्प० १ अधि० ३ क्षण।

सत्तंगपइट्ठिय-सप्ताङ्गप्रतिष्ठित-त्रि०। सप्ताङ्गानि चत्वारः पादा. कर. पुच्छं शिश्नं चेति, एतानि प्रतिष्ठितानि भूमौ लग्नानि यस्य तत्तथा। सप्तभि. पादादिभिर्भूमौ लग्ने, उपा० २ अ०।

सत्तंत-सत्तन्त्र-न०। सच्छास्त्रे, प्रति०।

सत्तकप्प-सप्तकल्प-पुं०। सप्तविधकल्पे, पं० भा०।

सत्तविहकप्पमेत्तो, वोच्छामि अहक्कमेणं तु।
ठितमट्ठितजिणथेर-लिंगे उवही तहेव संभोगे॥
एसो तु सत्तकप्पो, णेयव्वो आणुपुव्वीए। पं० भा० १ कल्प। पं० चू०।

सत्तखेत्ती-सप्तक्षेत्री-स्त्री०। सप्तानां क्षेत्राणां समाहारः सप्तक्षेत्री। जिनबिम्बादिसप्तके, सप्तक्षेत्र्यां धनवाप.। ध०। सप्ताना क्षेत्राणा समाहार सप्तक्षेत्री, जिनबिम्ब १ भवना—२ऽऽगम ३ साधु ३ साध्वी ५ श्रावक ६ श्राविका ७ लक्षणा तस्या वित्तस्य—धनस्य श्रावकाधिकारान्न्यायोपात्तस्य वापो-विकरणं तच्च विशेषतो गृहिधर्मो भवतीति योज्यम्। एवमग्रेऽपि स्वयमूह्यम्। क्षेत्रे हि बीजस्य वपनमुचितमित्युक्तं वाप इति। वपनमपि क्षेत्रे उचित गाऽक्षेत्र इति सप्तक्षेत्र्यामित्युक्तम्। क्षेत्रत्व च सप्तानां रूढमेव वपनं च सप्तक्षेत्र्यां यथोचितस्य द्रव्यस्य भक्त्या श्रद्धया च। ध० २ अधि०।

सत्तग-सप्तक-पुं०। सप्तपरिमाणस्य सप्तक.। सप्तावयवे, व्य० ४ उ०।

सत्तगइय-सप्तगतिक-पुं०। मृताना सप्त गतय.-अण्डजादियोनिलक्षणा येषा ते सप्तगतय। मृत्वा सप्तसु गतिषु उत्पत्स्यमानेषु, स्था० ७ ठा० ३ उ०।

सत्तघर-सप्तगृह-न०। जीवानुशासनकारस्य जिनदत्तसूरेर्निवासस्थाने, जी० १ प्रति०।

सत्तघरंतर-सप्तगृहान्तर-न०। सप्तगृहमध्ये, कल्प० ३ अधि० ६ क्षण।

सत्तघरंतरिय-सप्तगृहान्तरिक-पुं०। सप्तगृहाण्यन्तरं भिक्षाग्रहणे यस्य स सप्तगृहान्तरिक.। सप्त २ गृहाण्यतिक्रम्य-भिक्षाग्रहणाभिग्रहे, औ०।

सत्तच्छद-सप्तच्छद-पु०। सप्तपर्णवृक्षे, विशे०। " अजुअल ( प ) वण्ण सत्तच्छय " पाइ० ना० २५७ गाथा।

सत्तट्ठाणणिव्वत्तिय-सप्तस्थाननिर्वर्त्तित-पुं०। सप्तकारनिष्पादिते, स्था० ७ ठा० ३ उ०।

सत्तट्ठिमट्ठिखंडिय-सप्तषष्टिखण्डित-त्रि०। सप्तषष्टिप्रविभागीकृते, ज्यो० ६ पाहु०।

सत्तणउइ-सप्तनवति-स्त्री०। सप्ताधिकाया नवतिसंख्यायाम्, स०।

सत्तणाम-सप्तनाम-न०। सप्तानामर्थानामभिधायके नामनि, अनु०।

से किं तं सत्तनामे?, सत्तनामे सत्त सरा पण्णत्ता, तं जहा-सज्जे रिसहे गंधारे, मज्झिमे पंचमे सरे।
रेवए चेव नेसाए, सरा सत्त वित्राहिआ॥ १॥

' स्वृ ' शब्दोपतापयोरिति स्वरणानि स्वरा.—ध्वनिविशेषा, ते च सप्त, तद्यथा—' सज्जे ' त्ति श्लोक., व्याख्या—षड्भ्यो जात षड्ज, उक्तं च—" नासां कण्ठमुरस्तालु, जिह्वा दन्तॉश्च संश्रित.। षड्भिः सजायते यस्मात्, तस्मात्, षड्ज इति स्मृत॥ १॥ " तथा ऋषभो—वृषभस्तद्वत् यो वर्तते स ऋषभ', आह च—" वायु. समुत्थितो नाभे, कण्ठशीर्षसमाहतः। नर्दन् वृषभवद् यस्मात्, तस्माद्वृषभ उच्यते॥ २॥ " तथा गन्धो विद्यते यस्य स गन्धार., स एव गान्धारो, गन्धवाहविशेष इत्यर्थ, अभाणि च—" वायु. समुत्थितो नाभेर्हृदि कण्ठे समाहत'। नानागन्धवह पुण्यो, गान्धारस्तेन हेतुना॥ ३॥ " तथा मध्ये कायस्य भवो मध्यम', यदवाचि—" वायु समुत्थितो नाभे—रुरोहृदि समाहत.। नाभि प्राप्तो महानादो, मध्यमत्वं समश्नुते॥ ४॥ " तथा पञ्चाना षड्जादिस्वराणा निर्देशक्रममाश्रित्य पूरण. पञ्चम, अथवा—पञ्चसु-नाभ्यादिस्थानेषु मातीति पञ्चमः स्वर, यदभ्यधायि—" वायु समुत्थितो नाभे-रुरोहृत्कण्ठशिरोहत.। पञ्चस्थानोत्थितस्यास्य, पञ्चमत्वं विधीयते॥ ५॥ " तथाऽभिसन्धयतेऽनुसंधयति शेषस्वरानिति निरुक्तिवशाद्धैवत, यदुक्तम्—" अभिसंधयते यस्मा-देतान् पूर्वोदितस्वरान्। तस्मादस्य स्वरस्यापि, धैवतत्वं विधीयते॥ ६॥ " पाठान्तरेण रैवतश्चैवति, तथा निषीदन्ति स्वरा यस्मिन् स निषाद', यतोऽभिहितम्—" निषीदन्ति स्वरा यस्मि-न्निषादस्तेन हेतुना। सर्वांश्चाभिभवत्येव, यदादित्योऽस्य दैवतम्॥ ७॥ " इति, तदेवं स्वरा -जीवाजीवनिश्रितध्वनिविशेषा' ' सत्तवियाहिय ' त्ति-विविधप्रकारैराख्यातास्तीर्थकरगणधरैरिति श्लोकार्थ। आह-ननु कारणभेदेन कार्यस्य भेदात् स्वराणा च जिह्वादिकारणजन्यत्वात् तद्गता' च द्वीन्द्रियादित्रसजीवानामसंख्येयत्वाज्जीवनिसृता अपि तावत् स्वरा असंख्याताः प्राप्नुवन्ति किमुताजीवनिसृता इति कथं सप्तसंख्या नियमो न विरुध्यत इति?, अत्रोच्यते, असङ्ख्यातानामपि स्वरविशेषाणामेतेष्वेव सप्तसु सामान्यस्वरेष्वन्तर्भावाद् यादृशाणा वा केषाञ्चिदेवोपलभ्यमानविशिष्टव्यक्तीना ग्रहणाद्दीनोपकारिणां विशिष्टस्वराणा वक्तुमिष्टत्वाददोष इति।

स्वराश्रामनो निरूप्य कारणतस्तानेवाभिधित्सुराह—

एएसि णं सत्तण्हं सराणं सत्त सरट्ठाणा पण्णत्ता।
तं जहा- सज्जं च अग्गजीहाए, उरेण रिसहं सरं।
कंठुग्गएण गंधारं, मज्झजीहाए मज्झिमं॥ २॥

१ नवाऽपरो०५ पाठ

नासाए पंचमं बूआ, दंतोट्टेण अ रेवतं । भमुहक्खेवेण । णेसाहं, सरट्ठाणा विआहिआ ॥ ३ ॥ सत्त सरा जीव-णिस्सिआ पण्णत्ता, तं जहा-"सज्जं रवइ मऊरो, कुक्कुडो रिसभं सरं । हंसो रवइ गंधारं, मज्झिमं च गवेलगा ॥४॥ अह कुसुमसंभवे काले, कोइला पंचमं सरं । छट्ठं च सारसा कुंचा, नेसायं सत्तमं गओ ॥ ५ ॥ सत्तसरा अजीवनिस्सिआ पण्णत्ता, तं जहा-सज्जं रवइ मुअंगो, गोमुही रिसहं सरं । संखो रवइ गंधारं, मज्झिमं पुण झल्लरी ॥ ६ ॥ चउसरणपइट्ठाणा, गोहिआ पंचमं सरं । आडंबरो रेवइयं, महाभेरी अ सत्तमं ॥ ७ ॥

तत्र नाभेरुत्थितोऽविकारी स्वर आभोगतोऽनाभोगतो वा यदत्र जिह्वादिस्थानं प्राप्य विशेषमासादयति तत् स्वरस्योपकारकमत स्वरस्थानमुच्यते, तत्र 'सज्ज' मित्यादिश्लोकद्वयं सुगमम्—नवरं चकारोऽवधारणे, षड्जमेव प्रथमस्वरलक्षणं ब्रूयात्, कयेत्याह-अग्रभूता जिह्वा अग्रजिह्वा जिह्वाग्रमित्यर्थस्तया, इह यद्यपि षड्ज—भणने स्थानान्तराण्यपि कण्ठादीनि व्याप्रियन्ते अग्रजिह्वा च स्वरान्तरेषु व्याप्रियते तथापि सा तत्र बहुव्या—पारवतीति कृत्वा तया तमेव ब्रूयादित्युक्तम् । इदमत्र हृदयम्—षड्जस्वरोऽग्रजिह्वां प्राप्य विशिष्टां व्यक्तिमासादयत्यतस्तदपेक्षया सा स्वरस्थानमुच्यते, एवमन्यत्रापि भावना कार्या । उरो—वक्षस्तेन ऋ—षभं स्वरम् ब्रूयादिति सर्वत्र सम्बध्यते । 'कंठु—ग्गएणं' ति—कण्ठादुद्गमनमुद्गतिः—स्वरनिष्पत्तिहेतुभूता क्रिया तेन कण्ठोद्गतेन गान्धारम्, जिह्वाया मध्यो भागो मध्यजिह्वा तया मध्यमम्, तथा दन्ताश्चौष्ठौ च दन्तोष्ठं तेन धैवतं रैवतं वेति । भ्रूत्क्षेपावष्टम्भेन निषादमिति । इत ऊर्ध्वं सर्वं निगदसिद्धमेव, नवरं 'जीवनिस्सिय' त्ति-जीवाश्रिता· जीवेभ्यो वा निसृता—निर्गता, 'सज्ज रवई' त्यादिश्लोक, रवति—नदति 'गवेल' त्ति—गावश्च एलकाश्च-ऊरणका गवेलकाः, अथवा-गवेलका· ऊरणका एव, 'अह कुसुमे' त्यादि, अथेति विशेषणार्थो, विशेषणार्थता चैव—यथा गवेलका अविशेषेण मध्यमस्वरं नन्दन्ति-न तथा पञ्चमं कोकिल·, अपि तु-वनस्पतिषु बाहुल्येन कुसुमानां—मल्लिकापाटलादीना सम्भवो यस्मिन् काल स-तथा तस्मिन्, मधुमास इत्यर्थ· । 'अजीवनिस्सिय' त्ति-तथैव, नवरमजीवेभ्योऽपि मृदङ्गादिषु जीवव्यापारो-त्थापिता एवामी मन्तव्या, अपर षड्जादीनां मृदङ्गादिषु यद्यपि नासाकण्ठाद्युत्पन्नत्वलक्षणो व्युत्पत्त्यर्थो न घटते तथापि सादृश्यात् तद्भावोऽवगन्तव्य· । 'सज्ज' मित्यादि-श्लोकद्वयम्, गोमुखी काहला यस्या मुखे गोशृङ्गादिवस्तु दीयत इति, चतुर्भिश्चरणै प्रतिष्ठानम्—अवस्थानं भुवि यस्या सा गोधा चर्मावनद्धा, गोधिका—वाद्यविशेषो दर्द-रिकेत्यपरनाम्ना प्रसिद्धा, आडम्बर—पटह, सप्तम-मिति निषादमित्यर्थ ।

एएसि णं सत्तण्हं सराणं सत्त सरलक्खणा पण्णत्ता, तं जहा—

सज्जेण लहई वित्तिं, कयं च न विणस्सइ ।
गावो पुत्ता य मित्ता य, नारीणं होइ वल्लहो ॥८॥
रिसहेण उ एसज्जं (एसेज्जं), सेणावच्चं धणाणि अ ।
वत्थगंधमलंकारं, इत्थिओ सयणाणि य ॥ ६ ॥
गंधारे गीतजुत्तिण्णा, वज्जवित्ती कलाहिआ ।
हवंति कइणो धण्णा, जे अण्णे सत्थपारगा ॥ १० ॥
मज्झिमस्सरमंता उ, हवंति सुहजीविणो ।
खायई पियई देइ, मज्झिमस्सरमस्सिओ ॥११॥
पंचमस्सरमंता उ, हवंति पुहवीपई ।
सूरा संगहकत्तारो, अणेगगणनायगा ॥ १२ ॥
रेवयस्सरमंता उ, हवंति दुहजीविणो ।
कुचेला य कुवित्ती य, चोरा चंडालमुट्ठिया ॥१३॥
णिसायस्सरमंता उ, होंती कलहकारगा ।
जंघाचरा लेहवाहा, हिंडगा भारवाहगा ॥ १४ ॥

एतेषां सप्तानां स्वराणां प्रत्येकं लक्षणस्य विभिन्नत्वात् सप्त स्वरलक्षणानि—यथास्वं फलप्राप्त्यव्यभिचारीणि स्वरतत्त्वानि भवन्ति, तान्येव फलत आह—'सज्जेणे' त्यादि सप्त श्लोका· । षड्जेन लभते वृत्तिम्, अयमर्थः-षड्जस्येदं लक्षणं—स्वरूपमस्ति येन तस्मिन् सति वृत्ति-जीवनं लभते प्राणी, एतच्च मनुष्यापेक्षया लक्ष्यते, वृत्तिलाभादीना तत्रैव घटनात्, कृतं च न विनश्यति, तस्येति शेष, निष्फलारम्भो न भवतीत्यर्थ·, गावः पुत्राश्च मित्राणि च भवन्तीति शेष· । गान्धारे गीतयुक्तिज्ञा वर्यवृत्तय·—प्रधानजीविका कलाभिरधिका· कवयः काव्यकर्तार प्राज्ञा·—सद्बोधा· ये चोक्तेभ्यो गीतयुक्तिज्ञादिभ्योऽन्ये—शास्त्रपारगाः चतुर्वेदादिशास्त्रपारगामिनस्ते भवन्तीति । शकुनेन श्येनलक्षणेन चरन्ति पापर्धिं कुर्वन्ति शकुनान् वा घ्नन्तीति शाकुनिका·, वागुरा-मृगबन्धनं तया चरन्तीति वागुरिका·, शूकरेण सन्निहितेन शूकरवधार्थं चरन्ति शूकरान् वा घ्नन्तीति शौकरिका·, मौष्टिका मल्ला इति । पाठान्तराण्यप्युक्तानुसारेण व्याख्येयानि ।

एएसि णं सत्तण्हं सराणं तओ गामा पण्णत्ता, तं जहा-सज्जगामे मज्झिमगामे गंधारगामे । सज्जगामस्स णं सत्त मुच्छणाओ पण्णत्ताओ, तं जहा-मग्गी कोरविआ हरिया, रयणी अ सारकंता य । छट्ठी अ सारसी नाम, सुद्धसज्जा य सत्तमा ॥ १५ ॥ मज्झिमगामस्स णं सत्त मुच्छणाओ, पण्णत्ताओ, तं जहा-उत्तरमंदाररयणी, उत्तरा उत्तरासमा । समोक्कंता य सोवीरा, अभिरूपा होइ सत्तमा ॥१६॥ गंधारगामस्स णं सत्त मुच्छणाओ पण्णत्ताओ, तं जहा-नंदी अ खुड्डिमा पूरिमा य,

चउत्थी अ सुद्धगंधारा । उत्तरगंधाराविअ,सा पंचमिआ हवइ मुच्छा ॥१७॥सुद्धुत्तरमायामा, सा छट्ठी सव्वओ य णायव्वा । अह उत्तरायया को-डिमा य सा सत्तमी मु-च्छा ॥ १८ ॥

एतच्चिरन्तनमुनिगाथाभ्या व्याख्यायते—" सज्जाइतिद्धागामो, ससमूहो मुच्छणाण विन्नेओ । ता सत्त एक्कमेक्के तो सत्तसराण इगवीसा ॥ १ ॥ अन्नन्नसरविसेसे, उप्पायतस्स मुच्छणा भणिया । कत्ता व मुच्छिओ इव, कुणई मुच्छं व सो व त्ति ॥२॥ कर्त्ता वा मूर्छित इव ताः करोतीति मूर्च्छना उच्यन्ते, ' मुच्छं वा सो व त्ति ' मूर्च्छामिव वा स कर्त्ता ता. करोतीति मूर्च्छना उच्यन्त इत्यर्थ. । मद्गीप्रभृतीनां चैकविंशतिमूर्च्छनानां स्वरविशेषाः पूर्वगतस्वरप्राभृते भणिताः, इदानीं तु तद्विनिर्गतेभ्यो भरतविशाखिलादिशास्त्रेभ्यो विज्ञेया इति। अनु०। (सप्तस्वरोत्पत्त्यादिव्याख्या ' गीय ' शब्दे तृतीयभागे ६०१ पृष्ठ गता । )

सत्ततंतु–सप्ततन्तु–पुं० । यज्ञे, " अद्धरा सत्ततंतुणो जन्ना " पाइ० ना० १३५ गाथा ।

सत्तपण्ण–सप्तपर्ण–पुं० । सप्तच्छेद, अनु० । सप्तपर्णपर्याये वृक्षविशेषे, औ० । रा० । प्रज्ञा० ।

सत्तपरिग्गहियत्त–सत्त्वपरिग्रहीतत्त्व–न०। ओजस्वितारूपसत्यवचनातिशये, रा० ।

सत्तपरिवज्जिय–सत्त्वपरिवर्जित–त्रि० । सत्त्वरहिते, प्रश्न० १ आश्र० द्वार ।

सत्तभङ्गी–सप्तभङ्गी–स्त्री० । भज्यन्ते—भिद्यन्ते अर्था यैस्ते भङ्गा. सप्तानां भङ्गानां समाहारः सप्तभङ्गी । सप्तभि प्रकारैर्वचनविन्यासे, रत्ना० ८ परि० । स्या० ।

अनन्तरमनन्तधर्मात्मकत्वं वस्तुनि साध्यं मुकुलितमुक्तम्, तदेव सप्तभङ्गीप्ररूपणद्वारेण प्रपञ्चयन् भगवतो निरतिशय वचनातिशय च स्तुवन्नाह—

अपर्ययं वस्तु समस्यमान-मद्रव्यमेतच्च विविच्यमानम् ।
आदेशभेदोदितसप्तभङ्ग-मदीदृशस्त्वं बुधरूपवेद्यम् ॥२३॥

समस्यमानं—संक्षेपेणोच्यमानं वस्तु, अपर्ययमविवक्षितपर्यायम् , वसन्ति गुणपर्याया अस्मिन्निति वस्तु—धर्मा—धर्माऽऽकाशपुद्गल—काल—जीवलक्षणं द्रव्यषट्कम् । अयमभिप्राय.—यदैकमेव वस्तु आत्मघटादिक चेतनाऽचेतन सतामपि पर्यायाणामविवक्षया द्रव्यरूपमेव वक्तुमिष्यते ; तदा संक्षेपेणाऽभ्यन्तरीकृतसकलपर्यायनिकायत्वलक्षणेनाभिधीयमानत्वात् अपर्ययमित्युपदिश्यते—केवलद्रव्य—रूपमेव इत्यर्थ , यथाऽऽत्माऽयं घटोऽयमित्यादि , पर्यायाणा द्रव्याऽनतिरेकात्, अत एव द्रव्यास्तिकनया. शुद्धसंग्रहादयो द्रव्यमात्रमेवेच्छन्ति , पर्यायाणा तदविष्वग्भूतत्वात्। पर्यय , पर्यव , पर्याय इत्यनर्थान्तरम् । अद्रव्यमित्यादि—च पुनरर्थे , स च पूर्वस्माद् विशेषद्योतने भिन्नक्रमश्च विविच्यमानं चेति , विवेकेन पृथग्रूपतयोच्यमान पुनरतद् वस्तु अद्रव्यमेव—अविवक्षितान्वयिद्रव्यं केवलपर्यायरूपमित्यर्थ । यदा ह्यात्मा ज्ञानदर्शनादीन् पर्यायानधिकृत्य प्रतिपर्याय विचार्यते, तदा पर्याया एव प्रतिभासन्ते, न पुनरात्माख्यं किमपि द्रव्यम् । एवं घटोऽपि कुण्डलौष्ठ—पृथुबुध्नोदग्पूर्वापरादिभागाद्यवयवापेक्षया विविच्यमानः पर्याया एव, न पुनर्घटाख्यं तदतिरिक्तं वस्तु । अत एव पर्यायास्तिकनयानुपातिन पठन्ति—"भागा एव हि भासन्ते, सन्निविष्टास्तथा तथा । तद्वान् नैव पुन' कश्चि-न्निर्भाग' संप्रतीयते ॥ १ ॥ " इति । ततश्च द्रव्यपर्यायोभयात्मकत्वेऽपि वस्तुनो द्रव्यनयार्पणया । पर्यायनयाऽनर्पणया च द्रव्यरूपता, पर्यायनयार्पणया द्रव्यनयाऽनर्पणया च पर्यायरूपता, उभयनयार्पणया च तदुभयरूपता। अत एवाऽऽह वाचकमुख्य'—"अर्पितानर्पितसिद्धे." इति । एवंविधं द्रव्यपर्यायात्मकं वस्तु त्वमेवाऽदीदृशस्त्वमेव दर्शितवान्, नान्य इति काक्वाऽवधारणाऽवगति. । नन्वन्याभिधानप्रत्ययविषयं द्रव्यम् , अन्याभिधानप्रत्ययविषयाश्च पर्याया' । तत्कथमेकमेव वस्तूभयात्मकम्? इत्याशङ्क्य विशेषणद्वारेण परिहरति—आदेशभेदेत्यादि-आदेशभेदेन-सकलादेशविकलादेशलक्षणेन आदेशद्वयेन , उदिताः-प्रतिपादिता., सप्तसंख्या भङ्गा वचनप्रकारा यस्मिन् वस्तुनि तत्तथा । ननु यदि भगवता त्रिभुवनबन्धुना निर्विशेषतया सर्वेभ्य एवंविधं वस्तुतत्त्वमुपदर्शितम् , तर्हि किमर्थं तीर्थान्तरीया तत्र विप्रतिपद्यन्ते ?, इत्याह—"बुधरूपवेद्यम्" इति—बुध्यन्ते यथावस्थितं वस्तुतत्त्वं सारेतरविषयविभागविचारणया इति बुधा , प्रकृष्टा बुधा बुधरूपा नैसर्गिकाऽऽधिगमिकाऽन्यतरसम्यग्दर्शनविशदीकृतज्ञानशालिनः प्राणिन., तैरेव वेदितुं शक्यं वेद्यं परिच्छेद्यम् । न पुन' स्वस्वशास्त्रतत्त्वाभ्यासपरिपाकशाणानिशातबुद्धिभिरप्यन्यै. । तेषामनादिमिथ्यादर्शनवासनादूषितमतितया यथावस्थितवस्तुतत्त्वाऽनवबोधेन बुधरूपत्वाभावात्। (स्या०।) अथ केऽमी सप्तभङ्गा' ?, कश्चायमादेशभेद इति ?। उच्यते-एकत्र जीवादौ वस्तुनि, एकैकसत्त्वादिधर्मविषयप्रश्नवशाद् अविरोधेन प्रत्यक्षादिबाधापरिहारेण, पृथग्भूतयो समुदितयोश्च विधिनिषेधयो पर्यालोचनया कृत्वा स्याच्छब्दलाञ्छितो वक्ष्यमाणै सप्तभि प्रकारैर्वचनविन्यास' सप्तभङ्गीति गीयते । तद्यथा—१ स्यादस्त्येव सर्वमिति विधिकल्पनया प्रथमो भङ्ग । २-स्यान्नास्त्येव सर्वमिति निषेधकल्पनया द्वितीय । ३-स्यादस्त्येव स्यान्नास्त्येवेति क्रमतो विधिनिषेधकल्पनया तृतीय । ४—स्यादवक्तव्यमेवेति युगपद्विधिनिषेधकल्पनया चतुर्थ । ५-स्यादस्त्येव स्यादवक्तव्यमेवेति विधिकल्पनया युगपद्विधिनिषेधकल्पनया च पञ्चम । ६-स्यान्नास्त्येव स्यादवक्तव्यमेवेति निषेधकल्पनया युगपद्विधिनिषेधकल्पनया च षष्ठ । ७-स्यादस्त्येव स्यान्नास्त्येव स्यादवक्तव्यमेवेति क्रमतो विधिनिषेधकल्पनया, युगपद्विधिनिषेधकल्पनया च सप्तम' । तत्र—स्यात्कथंचित् स्वद्रव्यक्षेत्रकालभावरूपेणाऽस्त्येव सर्वं कुम्भादि, न पुन परद्रव्यक्षेत्रकालभावरूपेण , तथाहि—कुम्भो द्रव्यत पार्थिवत्वेनाऽस्ति, नाऽऽप्यादिरूपत्वेन। क्षेत्रत पाटलिपुत्रकत्वेन, न कान्यकुब्जादित्वेन । कालत शैशिरत्वेन, न वासन्तिकादित्वेन। भावत. श्यामत्वेन, न रक्तादित्वेन । अन्यथेतररूपापत्त्या स्वरूपहानिप्रसक्त इति। अवधारणं चात्र भङ्गेऽनभिमतार्थव्यावृत्त्य-

र्थमुपात्तम् , इतरथा अनभिहिततुल्यतैवास्य वाक्यस्य प्रसज्येत, प्रतिनियतस्वार्थाऽनभिधानात् । यदुक्तम्—"वाँक्येऽवधारणं ताव—दनिष्टार्थनिवृत्तये । कर्त्तव्यमन्यथाऽनुक्त—समत्वात् तस्य कुत्रचित् ॥ १ ॥" तथाऽप्यस्त्येव कुम्भ इत्येतावन्मात्रोपादाने कुम्भस्य स्तम्भाद्यस्तित्वेनाऽपि सर्वप्रकारेणाऽस्तित्वप्राप्तेः प्रतिनियतस्वरूपानुपपत्तिः स्यात् । तत्प्रतिपत्तये 'स्याद्' इति शब्दः प्रयुज्यते । स्यात्कथंचित् स्वद्रव्यादिभिरेवाऽयमस्ति,न परद्रव्यादिभिरपीत्यर्थः । यत्राऽपि चासौ न प्रयुज्यते तत्रापि व्यवच्छेदफलैवकारवद् बुद्धिमद्भिः प्रतीयत एव । यदुक्तम्—"सोऽप्रयुक्तोऽपि वा तज्ज्ञैः, सर्वत्राऽर्थात्प्रतीयते । यथैवकारोऽयोगादि-व्यवच्छेदप्रयोजन ॥१॥" इति प्रथमो भङ्गः । स्यात्कथंचिद् नास्त्येव कुम्भादिः, स्वद्रव्यादिभिरिव परद्रव्यादिभिरपि वस्तुनोऽसत्त्वाऽनिष्टौ हि प्रतिनियतस्वरूपाऽभावाद् वस्तुप्रतिनियतिर्न स्यात् ।न चास्तित्वैकान्तवादिभिरत्र नास्तित्वमसिद्धमिति वक्तव्यम् , कथंचित् तस्य वस्तुनि युक्तिसिद्धत्वात् ,साधनवत् । न हि क्वचिद् अनित्यत्वादौ साध्ये सत्त्वादिसाधनस्यास्तित्वं विपक्षे नास्तित्वमन्तरेणोपपन्नम् , तस्य साधनत्वाऽभावप्रसङ्गात् । तस्मात् वस्तुनोऽस्तित्वं नास्तित्वेनाऽविनाभूतम् , नास्तित्वं च तेनेति । विवक्षावशाच्चाऽनयोः प्रधानोपसर्जनभावः । एवमुत्तरभङ्गेष्वपि ज्ञेयम्—"अर्पिताऽनर्पितसिद्धेः" इति वाचकवचनात् । इति द्वितीयः। तृतीयः स्पष्ट एव । द्वाभ्यामस्तित्व-नास्तित्वधर्माभ्यां युगपत्प्रधानतयाऽर्पिताभ्याम् , एकस्य वस्तुनोऽभिधित्साया तादृशस्य शब्दस्याऽसंभवाद् , अवक्तव्यं जीवादिवस्तु, तथाहि-सदसत्त्वगुणद्वयं युगपद् एकत्र सदित्यनेन वक्तुमशक्यम् , तस्याऽसत्त्वप्रतिपादनाऽसमर्थत्वात् ,तथाऽसदित्यनेनाऽपि तस्य सत्त्वप्रत्यायनसामर्थ्याऽभावात् । न च पुष्पदन्तादिवत् साङ्केतिकमेकं पदं तद् वक्तुं समर्थम् ,तस्याऽपि क्रमेणार्थद्वयप्रत्यायने सामर्थ्योपपत्तेः , शतृशानयोः संकेतितसच्छब्दवत् , अत एव द्वन्द्वकर्मधारयवृत्त्योर्वाक्यस्य च न तद्वाचकत्वम् , इति सकलवाचकरहितत्वाद् अवक्तव्यं वस्तु युगपत्सत्त्वाऽसत्त्वाभ्या प्रधानभावार्पिताभ्यामाक्रान्तं व्यवतिष्ठते । न च सवर्थाऽवक्तव्यम् ,अवक्तव्यशब्देनाप्यनभिधेयत्वप्रसङ्गात् । इति चतुर्थः । शेषास्त्रयः सुगमाभिप्रायाः । न च वाच्यमेकत्र वस्तुनि विधीयमाननिषिध्यमानाऽनन्तधर्माभ्युपगमेनाऽनन्तभङ्गीप्रसङ्गाद् असङ्गतैव सप्तभङ्गीति, विधिनिषेधप्रकारापेक्षया प्रतिपर्यायं वस्तुनि अनन्तानामपि सप्तभङ्गीनामेव सम्भवात् । यथा हि सदसत्त्वाभ्याम् , एवं सामान्यविशेषाभ्यामपि सप्तभङ्ग्येव स्यात् ।तथाहि-स्यात्सामान्यम् ,स्याद् विशेष , स्यादुभयम् , स्यादवक्तव्यम् , स्यात्सामान्यावक्तव्यम् ,स्याद् विशेषावक्तव्यम् , स्यात्सामान्यविशेषाऽवक्तव्यमिति । न चात्र विधि-निषेधप्रकारौ न स्त इति वाच्यम् ,सामान्यस्य विधिरूपत्वाद् ,विशेषस्य च व्यावृत्तिरूपतया निषेधात्मकत्वात् । अथवा-प्रतिपक्षशब्दत्वाद् यदा सामान्यस्य प्राधान्यं तदा तस्य विधिरूपता विशेषस्य च निषेधरूपता ।यदा विशेषस्य पुरस्कारस्तदा तस्य विधिरूपता इतरस्य च निषेधरूपता । एवं सर्वत्र योज्यम् । अत एवोत्कृष्टतोऽनन्ता अपि सप्तभङ्ग्य एव भवेयुरिति प्रतिपर्यायं प्रतिपाद्यपर्यनुयोगानां सप्तानामेव सम्भवाद् , तेषामपि सप्तत्वं सप्तविधतज्जिज्ञासानियमात् ; तस्या अपि सप्तविधत्वं सप्तधैव तत्संदेहसमुत्पादात् , तस्यापि सप्तविधत्वनियमः स्वगोचरवस्तुधर्माणां सप्तविधत्वस्यैवोपपत्तेरिति । स्या० ।

अथ सप्तभङ्गीमेव स्वरूपतो निरूपयन्ति—

**एकत्र वस्तुन्येकैकधर्मपर्यनुयोगवशादविरोधेन व्यस्तयोः समस्तयोश्च विधिनिषेधयोः कल्पनया स्यात्काराङ्कितः सप्तधा वाक्प्रयोगः सप्तभङ्गी ॥ १४ ॥**

एकत्र जीवादौ वस्तुन्येकैकसत्त्वादिधर्मविषयप्रश्नवशादविरोधेन प्रत्यक्षादिबाधापरिहारेण पृथग्भूतयोः समुदितयोश्च विधिनिषेधयोः पर्यालोचनया कृत्वा स्याच्छब्दलाञ्छितो वक्ष्यमाणैः सप्तभिः प्रकारैर्वचनविन्यासः सप्तभङ्गी विज्ञेया । भज्यन्ते—भिद्यन्तेऽर्था यैस्ते भङ्गा वचनप्रकारास्ततः सप्त भङ्गाः समाहृताः सप्तभङ्गीति कथ्यते । नानावस्त्वाश्रयविधिनिषेधकल्पनया शतभङ्गीप्रसङ्गनिवर्त्तनार्थमेकत्र वस्तुनीत्युपन्यस्तम् । एकत्रापि जीवादिवस्तुनि विधीयमाननिषिध्यमानानन्तधर्मपर्यालोचनयाऽनन्तभङ्गीप्रसक्तिव्यावर्त्तनार्थमेकैकधर्मपर्यनुयोगवशादित्युपात्तम् । अनन्तेष्वपि हि धर्मेषु प्रतिधर्मं पर्यनुयोगस्य सप्तधैव प्रवर्त्तमानत्वात् । तत्प्रतिवचनस्यापि सप्तविधत्वमेवोपपन्नमित्येकैकस्मिन् धर्मे एकैकैव सप्तभङ्गी साधीयसी । एवं चानन्तधर्मापेक्षया सप्तभङ्गीनामानन्त्यं यदायाति , तदभिमतमेव । एतच्चाग्रे सूत्रत एव निर्णेष्यते । प्रत्यक्षादिविरुद्धसदाद्येकान्तविधिप्रतिषेधकल्पनयाऽपि प्रवृत्तस्य वचनप्रयोगस्य सप्तभङ्गीत्वानुषङ्गभङ्गार्थमविरोधेनेत्यभिहितम् । अवोचाम च—

" या प्रश्नाद्विधिपर्युदासभिदया बाधच्युता सप्तधा,
धर्मं धर्ममपेक्ष्य वाक्यरचनाऽनेकात्मके वस्तुनि ।
निर्दोषा निरदेशि देव ! भवता सा सप्तभङ्गी यया,
जल्पन् जल्परणाङ्गणे विजयते वादी विपक्षं क्षणात् ॥१॥ "

इदं च सप्तभङ्गीलक्षणं प्रमाणनयसप्तभङ्ग्योः साधारणमवधारणीयम् । विशेषलक्षणं पुनरनयोरग्रे वक्ष्यते ।

अथास्या प्रथमभङ्गोल्लेखं तावद्दर्शयन्ति—

**तद्यथा-स्यादस्त्येव सर्वमिति विधिविकल्पनया प्रथमो भङ्गः ॥ १५ ॥**

स्यादित्यव्ययमनेकान्तवद्द्योतकं स्यात्कथञ्चित्स्वद्रव्यक्षेत्रकालभावरूपेणास्त्येव सर्वं कुम्भादि, न पुनः परद्रव्यक्षेत्रकालभावरूपेण । तथाहि-कुम्भो द्रव्यतः पार्थिवत्वेनाऽस्ति, न जलादिरूपत्वेन, क्षेत्रतः पाटलिपुत्रकत्वेन,न कान्यकुब्जादित्वेन, कालतः शैशिरत्वेन, न वासन्तिकादित्वेन, भावतः श्यामत्वेन, न रक्तत्वादिना । अन्यथेतररूपापत्त्या स्वरूपहानिप्रसङ्ग इति । अवधारणं चात्र भङ्गेऽनभिमतार्थव्यावृत्त्यर्थमुपात्तम् । इतरथाऽनभिहिततुल्यतैवास्य वाक्यस्य प्रसज्येत, प्रतिनियतस्वार्थानभिधानात् । तदुक्तम्—" वाक्येऽवधारणं ताव—दनिष्टार्थनिवृत्तये । कर्त्तव्यमन्यथाऽनुक्त—समत्वात् तस्य कुत्रचित् " ॥ १ ॥ तथाऽप्यस्त्येव कुम्भ इत्येतावन्मात्रोपादाने कुम्भस्य स्तम्भाद्यस्तित्वेनापि सर्वप्रकारेणास्तित्वप्राप्तेः प्रतिनियतस्वरूपानुप-

पक्षि॰ स्यात्, तत्प्रतिपत्तये स्यादिति प्रयुज्यते, स्यात्क-थञ्चित्स्वद्रव्यादिभिरेवायमस्ति, न परद्रव्यादिभिरपीत्यर्थः । यत्रापि चासौ न प्रयुज्यते तत्रापि व्यवच्छेदफलैवकारवद् बुद्धिमद्भि प्रतीयत एव । यदुक्तम्–" सोऽप्रयुक्तोऽपि वा तज्ज्ञैः, सर्वत्रार्थात्प्रतीयते । यथैवकारो योगादि-व्यवच्छेद-प्रयोजन॰ ॥ १ ॥ "

अथ द्वितीयभङ्गोल्लेखं ख्यापयन्ति–

**स्यान्नास्त्येव सर्वमिति निषेधकल्पनया द्वितीयः ॥१६॥**

स्वद्रव्यादिभिरिव परद्रव्यादिभिरपि वस्तुनोऽसत्त्वानिष्टौ प्रतिनियतस्वरूपाभावाद्वस्तुप्रतिनियमविरोध । न चास्तित्वैकान्तवादिभिरत्र नास्तित्वमसिद्धमित्यभिधानीयम् कथञ्चित्तस्य वस्तुनि युक्तिसिद्धत्वात्साधनवत् । न हि क्वचिदनित्यत्वादौ साध्ये सत्त्वादिसाधनस्यास्तित्व विपक्षे नास्तित्वमन्तरेणोपपन्नम्, तस्य साधनाभासत्वप्रसङ्गात् । अथ यदेव नियतं साध्यसद्भावेऽस्तित्वं तदेव साध्याभावे साधनस्य नास्तित्वमभिधीयते, तत्कथं प्रतिषेध्यम् ', स्वरूपस्य प्रतिषेधत्वानुपपत्तेः', साध्यसद्भावे नास्तित्वं तु यत्तत्प्रतिषेध्यम्, तेना विना भावित्वे साध्यसद्भावास्तित्वस्य व्याघातात्तेनैव स्वरूपेणास्ति नास्ति चेति प्रतीत्यभावादिति चेत् । तदसत् एवं हेतोस्त्रिरूपत्वविरोधात् । विपक्षासत्त्वस्य तात्त्विकस्याभावात् । यदि चायं भावाभावयोरेकत्वमाचक्षीत, तदा सर्वथा न क्वचित्प्रवर्त्तेत । नापि कुतश्चिन्निवर्त्तेत । प्रवृत्तिनिवृत्तिविषयस्य भावस्याभावपरिहारेणासंभवात्, अभावस्य च भावपरिहारेणेति वस्तुनोऽस्तित्वनास्तित्वयो रूपान्तरत्वमेष्टव्यम्। तथा चास्तित्वं नास्तित्वेन प्रतिषेध्येनाविनाभावि सिद्धम् । यथा च प्रतिषेध्यमस्तित्वस्य नास्तित्व तथा प्रधानभावत॰ क्रमार्पितोभयत्वादिधर्मपञ्चकमपि वक्ष्यमाणं लक्षणीयम् ।

अथ तृतीयं भङ्गमुल्लेखतो व्यक्तीकुर्वन्ति—

**स्यादस्त्येव स्यान्नास्त्येवेति क्रमतो विधिनिषेधकल्पनया तृतीयः ॥ १७ ॥**

सर्वमिति पूर्वसूत्रादिहोत्तरत्र चानुवर्त्तनीयम् । ततोऽयमर्थ॰ । क्रमार्पितस्वपरद्रव्यादिचतुष्टयापेक्षया क्रमार्पिताभ्यामस्तित्वनास्तित्वाभ्यां विशेषितं सर्वं कुम्भादि वस्तु स्याद्स्त्येव स्यान्नास्त्येवेत्युल्लेखेन वक्तव्यमिति ।

इदानीं चतुर्थभङ्गोल्लेखमाविर्भावयन्ति–

**स्यादवक्तव्यमेवेति युगपद्विधिनिषेधकल्पनया चतुर्थः॥१८**

द्वाभ्यामस्तित्वनास्तित्वाख्यधर्माभ्या युगपत्प्रधानतयार्पिताभ्यामेकस्य वस्तुनोऽभिधित्सायां तादृशस्य शब्दस्यासम्भवादवक्तव्यं जीवादि वस्त्विति । तथाहि—सदसत्त्वगुणद्वय युगपदेकत्र सदित्यभिधानेन वक्तुमशक्यम् । तस्यासत्त्वप्रतिपादनासमर्थत्वात्, तथैवासदित्यभिधानेन न तदुवक्तु शक्यम् । तस्य सत्त्वप्रत्यायने सामर्थ्याभावात् । साङ्केतिकमेकं पदं तदभिधातुं समर्थमित्यपि न सत्यम् । तस्यापि क्रमेणार्थद्वयप्रत्यायने सामर्थ्योपपत्ते, शतृशानचौ सदिति शतृशानचो सङ्केतितसच्छब्दवत् । द्वन्द्ववृत्तिपदं तयो' सकृदभिधायकमित्यप्यनेनापास्तम् । सदसत्त्वे इत्यादि पदस्य क्रमेण धर्मद्वयप्रत्यायने समर्थत्वात् । कर्मधारयादिवृत्तिपदमपि न तयोरभिधायकं तत एव वाक्यं तयोरभिधायकमनेनैवापस्तमिति सकलवाचकरहितत्वादवक्तव्यं वस्तु युगपत् सदसत्त्वाभ्या प्रधानभावार्पिताभ्यामाक्रान्तं व्यवतिष्ठते । अथ च भङ्ग' कैश्चित्तृतीयभङ्गस्थाने पठ्यते, तृतीयश्चैतस्य स्थाने । न चैवमपि कश्चिद्दोषः, अर्थविशेषस्याभावात् ।

अथ पञ्चमभङ्गोल्लेखमुपदर्शयन्ति—

**स्यादस्त्येव स्यादवक्तव्यमेवेति विधिकल्पनया युगपद्विधिनिषेधकल्पनया च पञ्चमः ॥ १९ ॥**

स्वद्रव्यादिचतुष्टयापेक्षयाऽस्तित्वे सत्यस्तित्वनास्तित्वाभ्या सह वक्तुमशक्यम् सर्वं वस्तु । तत' स्यादस्त्येव स्यादवक्तव्यमेवेत्येव पञ्चमभङ्गेनोपदर्श्यत इति ।

अथ षष्ठभङ्गोल्लेखं प्रकटयन्ति—

**स्यान्नास्त्येव स्यादवक्तव्यमेवेति निषेधकल्पनया युगपद्विधिनिषेधकल्पनया च षष्ठः ॥ २० ॥**

परद्रव्यादिचतुष्टयापेक्षया नास्तित्वे सत्यस्तित्वनास्तित्वाभ्यां यौगपद्येन प्रतिपादयितुमशक्यं समस्त वस्तु । ततः स्यान्नास्त्येव स्यादवक्तव्यमेवेत्येवं षष्ठभङ्गेन प्रकाश्यते ।

सम्प्रति सप्तमभङ्गमुल्लिखन्ति—

**स्यादस्त्येव स्यान्नास्त्येव स्यादवक्तव्यमेवेति क्रमतो विधिनिषेधकल्पनया युगपद्विधिनिषेधकल्पनया च सप्तम इति ॥ २१ ॥**

इतिशब्द॰ सप्तभङ्गीसमाप्त्यर्थ । स्वपरद्रव्यादिचतुष्टयाऽपेक्षयाऽस्तित्वनास्तित्वयो॰ सतोरस्तित्वनास्तित्वाभ्या समसमयमभिधातुमशक्यमखिलं वस्तु तत एवमनेन भङ्गेनोपदर्श्यते ।

अथास्यामेव सप्तभङ्ग्यामेकान्तविकल्पाञ्शिराचिकीर्षव॰ सूत्राण्याहु —

**विधिप्रधान एव ध्वनिरिति न साधु ॥ २२ ॥**

प्राधान्येन विधिमेव शब्दोऽभिधत्ते इति न युक्तम् ।

अत्र हेतुमाहु.—

**निषेधस्य तस्मादप्रतिपत्तिप्रसक्तेः ॥ २३ ॥**

' तस्मादिति '–शब्दात् ।

आशङ्कान्तरं निरस्यन्ति—

**अप्राधान्येनैव ध्वनिस्तमभिधत्ते इत्यप्यसारम् ॥ २४ ॥**

तमिति निषेधम् ।

अत्र हेतुमाचक्षते–

**क्वचित्कदाचित्कथञ्चित्प्राधान्येनाप्रतिपन्नस्य तस्याप्राधान्यानुपपत्तेः ॥ २५ ॥**

न खलु मुख्यत स्वरूपेणाप्रतिपन्नं वस्तु क्वचिदप्रधानभावमनुभवतीति ।

इत्थ प्रथमभङ्गैकान्तं निरस्येदानीं द्वितीयभङ्गैकान्तनिरासमनिदिशन्ति—

**निषेधप्रधान एवशब्द इत्यपि प्रागुक्तन्यायादपास्तम्॥२६॥**

स्यक्रम्।

अथ तृतीयभङ्गैकान्तं पराकुर्वन्ति—

क्रमादुभयप्रधान एवायमित्यपि न साधीयः ॥ २७ ॥

'अयमिति'—शब्द.।

एतदुपपादयन्ति—

अस्य विधिनिषेधान्यतरप्रधानत्वानुभवस्याप्यत्राबाध्यमानत्वात् ॥ २८ ॥

प्रथमद्वितीयभङ्गैकैकप्रधानत्वप्रतीतेरप्यबाधितत्वान्न तृतीयभङ्गैकान्ताभ्युपगमः श्रेयान्।

अथ चतुर्थभङ्गैकान्तपराभवाय प्राहु:—

युगपद्विधिनिषेधात्मनोऽर्थस्यावाचक एवासाविति च न चतुरस्रम् ॥ २९ ॥

स्यादवक्तव्यमेवेति चतुर्थभङ्गैकान्तो न श्रेयानित्यर्थः।

कुत इत्याहु—

तस्यावक्तव्यशब्देनाप्यवाच्यत्वप्रसङ्गात् ॥ ३० ॥

अथ पञ्चमभङ्गैकान्तमपास्यन्ति—

विध्यात्मनोऽर्थस्य वाचकः सन्नुभयात्मनो युगपदवाचक एव स इत्येकान्तोऽपि न कान्तः ॥ ३१ ॥

अत्र निमित्तमाहु—

निषेधात्मनः सह द्वयात्मनश्चार्थस्य वाचकत्वाऽवाचकत्वाभ्यामपि शब्दस्य प्रतीयमानत्वात् ॥ ३२ ॥

निषेधात्मनोऽर्थस्य वाचकत्वेन सह, विधिनिषेधात्मनोऽर्थस्यावाचकत्वेन च शब्द षष्ठभङ्गे प्रतीयते यत., तत. पञ्चमभङ्गैकान्तोऽपि न श्रेयान्।

षष्ठभङ्गैकान्तमपाकुर्वन्ति—

निषेधात्मनोऽर्थस्य वाचकः सन्नुभयात्मनो युगपदवाचक एवायमित्यप्यवधारणं न रमणीयम् ॥ ३३ ॥

अत्र हेतुमुपदर्शयन्ति—

इतरथाऽपि संवेदनात् ॥ ३४ ॥

आद्यभङ्गादिषु विध्यादिप्रधानतयाऽपि शब्दस्य प्रतीयमानत्वादित्यर्थ।

अथ सप्तमभङ्गैकान्तमपाकुर्वन्ति—

क्रमाऽक्रमाभ्यामुभयस्वभावस्य भावस्य वाचकश्चाऽवाचकश्च ध्वनिर्नान्यथेत्यऽपि मिथ्या ॥ ३५ ॥

अत्र बीजमाख्यान्ति—

विधिमात्रादिप्रधानतयाऽपि तस्य प्रसिद्धः ॥ ३६ ॥

नन्वेकस्मिन् जीवादौ वस्तुन्यनन्तानां विधीयमाननिषिध्यमानानां धर्माणामङ्गीकरणादनन्ता एव वचनमार्गा स्याद्वादिना भवेयु, वाच्येयत्ताऽऽयत्तत्वाद् वाचकेयत्ताया., तनो विरुद्धैव सप्तभङ्गीति ब्रुवाणं निरस्यन्ति—

एकत्र वस्तुनि विधीयमाननिषिध्यमानानन्तधर्माभ्युपगमेनानन्तभङ्गीप्रसङ्गादसङ्गतैव सप्तभङ्गीति न चेतसि निधेयम् ॥ ३७ ॥

अत्र हेतुमाहु—

विधिनिषेधप्रकारापेक्षया प्रतिपर्यायं वस्तुन्यनन्तानामपि सप्तभङ्गीनामेव संभवात् ॥ ३८ ॥

एकैकं पर्यायमाश्रित्य वस्तुनि विधिनिषेधविकल्पाभ्यां व्यस्तसमस्ताभ्यां सप्तैव भङ्गाः सम्भवन्ति, न पुनरनन्ता.। तत्कथमनन्तभङ्गीप्रसङ्गादसङ्गतत्वं सप्तभङ्ग्याः समुद्भाव्यते?

कुतः सप्तैव भङ्गाः सम्भवन्तीत्याहु:—

प्रतिपर्यायं प्रतिपाद्यपर्यनुयोगानां सप्तानामेव सम्भवात् ॥ ३९ ॥

एतदपि कुत इत्याहु —

तेषामपि सप्तत्वं सप्तविधतज्जिज्ञासानियमात् ॥ ४० ॥

अथ सप्तविधतज्जिज्ञासानियमे निमित्तमाहु —

तस्या अपि सप्तविधत्वं सप्तधैव तत्सन्देहसमुत्पादात् ॥ ४१ ॥

तस्या अपीति प्रतिपाद्यजिज्ञासायाः। तत्सन्देहसमुत्पादादिति प्रतिपाद्यसंशयसमुत्पत्ते.।

सन्देहस्यापि सप्तधात्वे कारणमाहु:—

तस्याऽपि सप्तप्रकारत्वनियमः स्वगोचरवस्तुधर्माणां सप्तविधत्वस्यैवोपपत्तेः ॥ ४२ ॥

तस्य—प्रतिपाद्यगतसन्देहस्य स्वगोचरवस्तुधर्माणां सन्देहविषयीकृतानामस्तित्वादिवस्तुपर्यायाणाम्।

इयं सप्तभङ्गी किं सकलादेशस्वरूपा, विकलादेशस्वरूपा वेत्यारेकां पराकुर्वन्ति—

इयं सप्तभङ्गी प्रतिभङ्गं सकलादेशस्वभावा विकलादेशस्वभावा च ॥ ४३ ॥

एकैको भङ्गोऽस्या. संबन्धी सकलादेशस्वभावः, विकलादेशस्वभावश्चेत्यर्थः।

अथ सकलादेशं लक्षयन्ति—

प्रमाणप्रतिपन्नानन्तधर्मात्मकवस्तुनः कालादिभिरभेदवृत्तिप्राधान्यादभेदोपचाराद्वा यौगपद्येन प्रतिपादकं वचः सकलादेशः ॥ ४४ ॥

कालादिभिरष्टाभि कृत्वा यदभेदवृत्तेर्धर्मधर्मिणोरपृथग्भावस्य प्राधान्यं तस्मात्, कालादिभिर्भिन्नात्मनामपि धर्मधर्मिणामभेदाध्यारोपाद्वा समकालमभिधायकं वाक्यं सकलादेशः प्रमाणवाक्यमित्यर्थ। अयमर्थ —यौगपद्येनाशेषधर्मात्मकं वस्तु कालादिभिरभेदवृत्त्या, अभेदोपचारेण वा प्रतिपादयति सकलादेश., तस्य प्रमाणाधीनत्वात्। विकलादेशस्तु क्रमेण भेदोपचाराद्, भेदप्राधान्याद्वा तदभिधत्ते, तस्य नयायत्तत्वात्। कः पुन. क्रम?, किं वा यौगपद्यम्?। यदाऽस्तित्वादिधर्माणा कालादिभिर्भेदविवक्षा, तदैकस्य शब्दस्यानेकार्थप्रत्यायने शक्त्यभावात् क्रमः, यदा तु तेषामेव धर्माणा कालादिभिरभेदेन वृत्तमात्मरूपमुच्यते, तदैकेनापि शब्देनैकधर्मप्रत्यायनमुखेन तदात्मकतामापन्नस्यानेकाशेषरूपस्य वस्तुनः प्रतिपादनसम्भवाद्यौगपद्यम्। के पुन कालादयः?। काल, आत्मरूपम्, अर्थ, सम्बन्ध., उपकार, गुणिदेश, संसर्ग, शब्द, इत्यष्टौ। तत्र स्या-

जीवादि वस्त्वस्त्येवेत्यत्र यत्कालमस्तित्वं तत्कालाः शेषानन्तधर्मा वस्तुन्येकत्रेति तेषां कालेनाभेदवृत्तिः १। यदेव चास्तित्वस्य तद्गुणत्वमात्मरूपम्, तदेव चान्यानन्तगुणानामपीत्यात्मरूपेणाभेदवृत्तिः २ । य एव चाधारोऽर्थो द्रव्याख्योऽस्तित्वस्य, स एवान्यपर्यायाणामित्यर्थेनाभेदवृत्तिः ३ । य एव चाविष्वग्भाव. कथञ्चित्तादात्म्यलक्षणः सम्बन्धोऽस्तित्वस्य, स एवाशेषविशेषाणामिति सम्बन्धेनाभेदवृत्तिः ४ । य एव चोपकारोऽस्तित्वेन स्वानुरक्तत्वकरणम्, स एव शेषैरपि गुणैरित्युपकारेणाभेदवृत्ति' ५ । य एव गुणिनः सम्बन्धी देशः क्षेत्रलक्षणोऽस्तित्वस्य, स एवान्यगुणानामिति गुणिदेशेनाभेदवृत्तिः ६ । य एव चैकवस्त्वात्मनाऽस्तित्वस्य संसर्ग', स एवाशेषधर्माणामिति संसर्गेणाभेदवृत्तिः । ननु प्रागुक्तसम्बन्धादस्य क. प्रतिविशेष' ?। उच्यते—अभेदप्राधान्येन भेदगुणभावेन च प्रागुक्तः संबन्ध' भेदप्राधान्येनाभेदगुणभावेन चैष संसर्ग इति ७ । य एवास्तीति शब्दोऽस्तित्वधर्मात्मकस्य वस्तुनो वाचकः, स एव शेषानन्तधर्मात्मकस्यापीति शब्देनाभेदवृत्तिः ८ । पर्यायार्थिकनयगुणभावे द्रव्यार्थिकनयप्राधान्यादुपपद्यते द्रव्यार्थिकगुणभावेन पर्यायार्थिकप्राधान्ये तु न गुणानामभेदवृत्तिः सम्भवति, समकालमेकत्र नानागुणानामसम्भवात्, सम्भवे वा तदाश्रयस्य तावद्धा भेदप्रसङ्गात् १ । नानागुणानां संबन्धिन आत्मरूपस्य च भिन्नत्वात्, आत्मरूपाभेदे तेषा भेदस्य विरोधात् २ । स्वाश्रयस्यार्थस्यापि नानात्वात् अन्यथा नानागुणाश्रयत्वविरोधात् ३ । सम्बन्धस्य च सम्बन्धिभेदेन भेददर्शनात्, नानासम्बन्धिभिरेकत्रैकसम्बन्धाघटनात् ४ । तैः क्रियमाणस्योपकारस्य च प्रतिनियतरूपस्यानेकत्वात्, अनेकैरुपकारिभि. क्रियमाणस्योपकारस्यैकस्य विरोधात् ५ । गुणिदेशस्य च प्रतिगुणं भेदात्, तदभेदे भिन्नार्थगुणानामपि गुणिदेशाभेदप्रसङ्गात् ६ । संसर्गस्य च प्रतिसंसर्गिभेदात्, तदभेदे संसर्गिभेदविरोधात् ७ । शब्दस्य च प्रतिविषयं नानात्वात्, सर्वगुणानामेकशब्दवाच्यतायां सर्वार्थानामेकशब्दवाच्यताऽऽपत्तेः शब्दान्तरवैफल्यापत्तेः ८ । तत्त्वतोऽस्तित्वादीनामेकत्र वस्तुन्येवमभेदवृत्तेरसंभवे कालादिभिर्भिन्नात्मनामभेदोपचार' क्रियते, तदेताभ्यामभेदवृत्त्यभेदोपचाराभ्यां कृत्वा प्रमाणप्रतिपन्नानन्तधर्मात्मकस्य वस्तुनः समसमयं यदभिधायकं वाक्यं स सकलादेशः प्रमाणवाक्यापरपर्याय इति स्थितम् । " कालात्मरूपसम्बन्धा., संसर्गोपक्रिये तथा । गुणिदेशार्थशब्दाश्चेत्यष्टौ कालादय. स्मृताः ॥ १ ॥"

अधुना नयवाक्यस्वभावत्वेन नयविचारावसरलक्षणीयस्वरूपमपि विकलादेशं सकलादेशस्वरूपनिरूपणप्रसङ्गेनात्रैव लक्षयन्ति-

तद्विपरीतस्तु विकलाऽऽदेशः ॥ ४५ ॥

नयविषयीकृतस्य वस्तुधर्मस्य भेदवृत्तिप्राधान्याद् भेदोपचाराद्वा क्रमेण यदभिधायक वाक्यम्, स विकलाऽऽदेश. । एतदुल्लेखस्तु नयस्वरूपानभिज्ञश्रोतृणा दुरवगाह इति नयविचारावसर एव प्रदर्शयिष्यते ।

प्रमाणं निर्णीयाथ यतः कारणात् प्रतिनियतमर्थमेतद्व्यवस्थापयति तत्कथयन्ति—

तद् द्विभेदमपि प्रमाणमात्मीयप्रतिबन्धकापगमविशेषस्वरूपसामर्थ्यतः प्रतिनियतमर्थमवद्योतयति ॥४६॥

प्रत्यक्षपरोक्षरूपतया द्विप्रकारमपि प्रागुपवर्णितस्वरूपं प्रमाणं स्वकीयज्ञानावरणाद्यदृष्टविशेषक्षयक्षयोपशमलक्षणं योग्यतावशात्प्रतिनियतं नीलादिकमर्थं व्यवस्थापयति ।

एतद्व्यवच्छेद्यमाचक्षते—

न तदुत्पत्तितदाकारताभ्याम्, तयोः पार्थक्येन सामस्त्येन च व्यभिचारोपलम्भात् ॥ ४७ ॥

तथाहि—ज्ञानस्य तदुत्पत्तितदाकारताभ्यां व्यस्ताभ्या समस्ताभ्या वा प्रतिनियतार्थव्यवस्थापकत्व स्यात्। यदि प्राच्य. पक्ष., तदा कपालक्षण. कलशान्त्यक्षणस्य व्यवस्थापकः स्यात्, तदुत्पत्ते. केवलाया. सद्भावात्। स्तम्भ. स्तम्भान्तरस्य च व्यवस्थापकः स्यात्, तदाकारतायास्तदुत्पत्तिरहितायाः सम्भवात्। अथ द्वितीयः, तदा कलशस्योत्तरक्षणः पूर्वक्षणस्य व्यवस्थापको भवेत्, समुदितयोस्तदुत्पत्तितदाकारतयोर्विद्यमानत्वात्। अथ विद्यमानयोरप्यनयोर्ज्ञानमेवार्थस्य व्यवस्थापकम्, नार्थ, तस्य जडत्वादिति मतम्। तदपि न न्यायानुगतम्, समानार्थसमनन्तरप्रत्ययोत्पन्नज्ञानैर्व्यभिचारात्। तानि हि यथोक्तार्थव्यवस्थापकत्वलक्षणस्य समग्रस्य सद्भावेऽपि प्राच्यं जनकज्ञानक्षणं न गृह्णन्ति। अपि च-किमिदमर्थाकारत्वं वेदनानां ? यद्वशात्प्रतिनियतार्थपरिच्छेदः स्यात्। किमर्थाकारोल्लेखित्वम्, अर्थाकारधारित्वं वा। प्रथमप्रकारे, अर्थाकारोल्लेखोऽर्थाकारपरिच्छेद एव, ततश्च ज्ञान प्रतिनियतार्थपरिच्छेदात्प्रतिनियतमर्थमवद्योतयतीति साध्याविशिष्टत्वं स्पष्टमुपढौकते। द्वितीयप्रकारे पुनरर्थाकारधारित्वं ज्ञानस्य सर्वात्मना, देशेन वा। प्रथमपक्षे, जडत्वादर्थस्य ज्ञानमपि जडं भवेत्, उत्तरार्थक्षणवत्। प्रमाणरूपत्वाभावश्चोत्तरार्थक्षणवदेवास्य प्रसज्येत, सर्वात्मना प्रमेयरूपताऽनुकरणात्। अथ देशेन नीलत्वादिनाऽर्थाकारधारित्वमिष्यते ज्ञानस्य, तर्हि तेनाजडाकारेण जडताप्रतिपत्तेरसम्भवात् कथं तद्विशिष्टत्वमर्थस्य प्रतीयेत ?। न हि रूपज्ञानेनाप्रतिपन्नरसेन तद्विशिष्टता सहकारफलादौ प्रतीयते। किं च देशेनार्थाकारधारित्वान्नीलार्थवन्नि शेषार्थानामपि ज्ञानेन ग्रहणापत्ति, सत्त्वादिमात्रेण तस्य सर्वत्रार्थाकारधारित्वाविशेषात्। अथ तदविशेषेऽपि नीलाद्याकारवैलक्षण्यान्निखिलार्थानामग्रहणम्, तर्हि समानाकाराणां समस्ताना ग्रहणप्राप्तिः। अथ यत एव ज्ञानमुत्पद्यते, तस्यैवाकारानुकरणद्वारेण ग्राहकम्, हन्त! एवमपि समानार्थसमनन्तरप्रत्ययस्य तद् ग्राहकं स्यादित्युक्तम्। ततो न तदुत्पत्तितदाकारताभ्या ज्ञानस्य प्रतिनियतार्थावभासः, किं तु-प्रतिबन्धकापगमविशेषादिति सिद्धम्। रत्ना० ४ परि०। स्या०। दश०। ( अत्रत्या वक्तव्यता ' अणेगंतवाय ' शब्दे प्रथमभागे ४३१ पृष्ठे गता। )

सत्तभामा-सत्यभामा-स्त्री०। स्वनामख्यातायां कृष्णाग्रम-

द्दिष्याम्, अन्त० । ( सा चारिष्टनेमेरन्तिके प्रव्रज्यां गृहीत्वा सिद्धेति अन्तकृद्दशाया. पञ्चमे वर्गे सप्तमे अध्ययने सूचितम् ।)

सत्तभावणा-सत्त्वभावना-स्त्री० । सत्त्वविषयायामसंक्लिष्टभावनायाम्, व्य० १ उ० । बृ० ।

अथ सत्त्वभावनामाह—

जे वि य पुव्विं निसि नि-ग्गमेसु विसहिंसु साहसभयाइं ।
अहितक्करगोवाई, विसिंसु घोरे य संगामे ॥ ५०३ ॥

येऽपि च राजवजिनादयः पूर्वं गृहवासे निशि-रात्रौ वीरचर्यादिना निर्गमेषु साध्वसम्-अहेतुकभयरूपं, भयं-सहेतुकं ते अहितस्करगोपादिसंबन्धिनी व्यषहन्-विषोढवन्तः, घोरे च संग्रामे सात्त्विकतया 'विसिंसु' त्ति-प्राविशन्, तेऽपि जिनकल्पप्रतिपित्सव. सत्त्वभावनामवश्यं भावयन्ति ।

कथमिति चेत् ? उच्यते—

पासुत्ताण तुयट्टं, सोयव्वं जं च तीसु जामेसु ।
थोवं थोवं जिणइ उ, भयं च जं संभवइ तत्थ ॥५०४॥

यत् स्थविरकल्पिकाना पार्श्वत उत्तानकं वा त्वग्वर्त्तनं यच्च कारणे त्रिषु यमिषु-प्रहरेषु स्वप्तव्यं-शयनं कारणभावे तु यस्तृतीयप्रहरे स्वप्तव्यं तत्सर्वमपि स्तोकं स्तोकं जयति; शनैः शनैरित्यर्थः । भयं च मूषिकादिजनितं यद्यत्रोपाश्रयादिषु संभवति तत्तत्र जयति । अत्र च सत्त्वभावनाया पञ्च प्रतिमा भवन्ति ।

ता एवाऽऽह—

पढमा उवस्सयम्मी, बिइया बाहिं तइयॉ चउक्कम्मि ।
सुन्नघरम्मि चउत्थी, तह पंचमिया सुसाणम्मि ॥५०५॥

प्रथमा प्रतिमा उपाश्रये, द्वितीया उपाश्रयाद्बहिः, तृतीया चतुष्के-चत्वरे, चतुर्थी शून्यगृहे, पञ्चमी श्मशाने ।

तत्र प्रथमां तावदाह—

भोगजढे गंभीरे, उव्वरए कोट्ठए अलिन्दे वा ।
तणुसाइ जागरो वा, झाणट्ठाए भयं जिणइ ॥ ५०६ ॥

भोगजढे-अपरिभोग्ये गम्भीरे-सान्धकारे उपाश्रयसत्केऽपवरके वा कोष्ठके वा अलिन्दके वा तनुशायी-स्तोकनिद्रावान् जागरित्वा निद्रामकुर्वन् ध्यानार्थं शुभाध्यवसायस्थैर्यहेतोः प्रसुप्तेषु शेषसाधुषु कायोत्सर्गस्थितो भय जयति ।

कथमित्याह—

विक्कस्स व खइयस्स व, मूसिगमाईहि वा निसिचरेहिँ ।
जइ जह सा न वि जायइ, रोमंचुब्भय चाडो वा ॥५०७॥

स्पृष्टस्य वा खादितस्य वा मूषकैरादिग्रहणान्मार्जारादिभिनिशाचरैः-रात्रिपरिभ्रमणशीलैः, यथा सहसा नापि जायते रोमाञ्चोद्भेदः-भयोद्रेकजनितो रोमोद्गम 'चाडो वा' पलायनं तथा सत्त्वभावनयाऽऽत्मा भावयितव्यः । उक्ता प्रथमा प्रतिमा ।

अथ द्वितीयादिकाश्चतस्रोऽप्यतिदिशन्नाह—

सविसेसतरा बाहिं, तक्करआरक्खिसावयाईया ।
सुणघरसुसाणेसु य, सविसेसतरा भवे तिविहा ॥५०८॥

यान्युपाश्रयप्रतिमायां भयान्युक्तानि तान्युपाश्रयाद्बहिः प्रतिमायां सविशेषतराणि तस्करारक्षिकश्वापदादिभयसहितानि मन्तव्यानि । शून्यगृहश्मशानयोश्चशब्दात्—चतुष्के च सविशेषतराणि त्रिविधानि दिव्यमानुषतैरश्चोपसर्गरूपाणि भयानि भवन्ति तान्यपि सम्यग् जयतीति प्रक्रम. ।

अस्या एव भावनाया. फलमाह—

देवेहिँ भेसिओ वि, दिया व रातो व भीमरूवेहिं ।
ता सत्तभावणाए, वहइ भरं निब्भओ सयलं ॥५०९॥

तत एवं सत्त्वभावनया स्वभ्यस्तया दिवा रात्रौ वा भीमरूपैः देवैर्भेषितोऽपि भरं-जिनकल्पभारं सकलमपि निर्भयः सन् वहतीति । गता सत्त्वभावना । बृ०१ उ०२ प्रक० । आ० म० । ध० ।

सत्तभूमिय-सप्तभूमिक-पुं० । सप्तमालखण्डे प्रासादे, उत्त० १३ अ० ।

सत्तम-सप्तम-त्रि० । सप्तसंख्यापूरणे, उपा० १ अ० ।

सत्तमट्ठाण-सप्तमस्थान-न० । स्थानाङ्गस्य सप्तमेऽध्ययने, स्था० ८ ठा० ३ उ० ।

सत्तमपव्व-सप्तमपर्वन्-न० । भाद्रकृष्णपक्षे, स्था०६ ठा०३ उ० । (वर्णनमस्य'पव्व' शब्दे पञ्चमभागे ७६८ पृष्ठे उपपादितम् । )

सत्तमा-सत्तमा-स्त्री० । सप्तम्या नरकपृथिव्याम्, जी० ३ प्रति० १ उ० ।

सत्तमासिया-सप्तमासिकी-स्त्री० । सप्तमासान् यावत्सप्तादत्तिप्रमाणभिक्षाके साधुप्रतिज्ञाविशेषे,आ० चू०४ अ० । औ० ।

सत्तमी-सप्तमी-स्त्री० । सप्तसंख्यापूरके अहोरात्रे, ज्यो० ४ पाहु० । आ० म० । ङि-ओस् सुप् ( बु ) रूपायां विभक्तौ, "सन्निहाणे य सत्तमी" अनु० । सप्तसंख्यापूरके स्त्रीलिङ्गेऽर्थे, द० प० । स्था० ।

सत्तरस-सप्तदशन्-त्रि० । सप्ताधिकेषु दशसु,प्रज्ञा०१५ पद ।

सत्तरसम-सप्तदश-त्रि० । सप्तदशसंख्यापूरके, चं० प्र० ८ पाहु० ।

सत्तरसाह-सप्तरसाह-पुं० । स्वनामख्याते श्रेष्ठिनि,यानि निधानानि प्राप्य कल्किनृप. सर्वो सामग्रीमुत्पाद्य महाराजो भविष्यति । ती० २० कल्प ।

सत्तरह-सप्तरथ-पुं० । जम्बूद्वीपे भारते वर्षे भविष्यति दशमे तीर्थकरे, स्था० १० ठा० ३ उ० ।

सत्तरि-सप्तति-स्त्री० । "सप्ततौ रः" ॥ ८ । १ । २१० ॥ अनेनात्र तकारस्य रेफादेश. । सत्तरि । दशावृत्तायां सप्तसंख्यायाम्, प्रा० । आव० ।

सत्तरिसत्थ-सप्ततिकाशास्त्र-न० । षष्ठे कर्मग्रन्थे, कर्म० ।

"अशेषकर्मांशतम. समूह-क्षयाय भास्वानिव दीप्ततेजा ।
प्रकाशिताशेषजगत्स्वरूप.,प्रभु स जीयाज्जिनवर्द्धमान.॥१॥
जीयाज्जिनेशसिद्धान्तो, मुक्तिकामप्रदीपन ।
कुश्रुत्यातपतप्तानां, सान्द्रो मलयमारुत ॥ २ ॥
चूर्णयो नावगम्यन्ते, सप्ततेर्मन्दबुद्धिभि. ।
तत स्पष्टावबोधार्थं, तस्याष्टीका करोम्यहम् ॥ ३ ॥
अहर्निशं चूर्णिविचारयोगान्,
मन्दोऽपि शक्तो विवृतिं विधातुम् ।

निरन्तरं कुम्भनिक ( घ ) र्षयोगात्,
ग्रावाऽपि कूपे समुपैति घर्षिम् ॥ ४ ॥ "

इह यत् शास्त्रं प्रकरणं वा सर्वविन्मूलं तत् प्रेक्षावतामुपादेयं भवति, नान्यत्, ततः सप्ततिकाख्यं प्रकरणमारभमाण आचार्यः प्रेक्षावता प्रकरणविषये उपादेयबुद्धिपरिग्रहार्थं प्रकरणस्य सर्वविन्मूलताम्, तथा सर्वविन्मूलत्वेऽपि न प्रेक्षापूर्वकारिणोऽभिधेयादिपरिज्ञानमन्तरेण यथाकथंचित्प्रवर्त्तन्ते प्रेक्षावत्ताक्षतिप्रसङ्गात् । कर्म्म० ६ कर्म० ।

संप्रत्याचार्योऽनुद्धतत्वेनात्मनोऽल्पागमत्वं ख्यापयन् शेषबहुश्रुताना च बहुमानं प्रकटयन्—प्रकरणपरिपूर्णताविधिविषयं तेषां प्रार्थना विदधान आह–

जो जत्थ अपडिपुन्नो, अत्थो अप्पागमेण बद्धो त्ति ।
तं खमिऊण बहुसुया, पूरेऊणं परिकहंतु ॥ ७५ ॥

अत्र सप्ततिकाख्ये प्रकरणे यत्र बन्धे उदये सत्ताया वा योऽर्थोऽपरिपूर्णः खण्डोऽल्पागमेनाल्पश्रुतेन मया बद्धो निबद्धः, इतिशब्दः समाप्तिवचन, स च गाथापर्यन्ते वेदितव्यः, तमपरिपूर्णमर्थं तत्र बन्धादौ ममाऽपरिपूर्णार्थाभिधानलक्षणमपराधं क्षमित्वा बहुश्रुता दृष्टिवादज्ञाः पूरयित्वा तत्तदर्थप्रतिपादिका गाथा प्रक्षिप्य शिष्यजनेभ्यः परिकथयन्तु–सामस्त्येन प्रतिपादयन्तु । बहुश्रुता हि परिपूर्णज्ञानसंभारसंपत्समन्वितया परोपकारकरणैकरसिकमानसा भवन्ति, ततो मम शिष्याणां च परमोपकारमाधित्सवस्तेऽवश्यं ममाऽस्फुटापरिपूर्णार्थाभिधानलक्षणमपराधं विपह्य परिपूर्णमर्थं पूरयित्वा शिष्येभ्यः कथयन्तु—

" निरुपममनन्तमनर्घं, शिवपदमधिरूढमपगतकलङ्कम् ।
दर्शितशिवपुरमार्गं, वीरजिनं नमत परमशिवम् ॥ १ ॥
यस्योपान्तेऽपि संप्राप्ते, प्राप्यन्ते संपदोऽनघा. ।
नमस्तस्मै जिनेशश्री-वीरसिद्धान्तसिन्धवे ॥ २ ॥
यैरेषा विषमार्था, सप्ततिका सुस्फुटीकृता सम्यक् ।
अनुपकृतपरोपकृत-चूर्णिकृतस्तान्नमस्कुर्वे ॥ ३ ॥
प्रकरणमेतद्विषमं, सप्ततिकाख्यं विवृण्वता कुशलम् ।
यदवापि मलयगिरिणा, सिद्धिं तेनाश्नुतां लोकः ॥ ४ ॥
अर्हंतो मङ्गलं सिद्धा,—मङ्गलं सयतानहम् ।
अशिश्रियं जिनाख्यातं, धर्मं परममङ्गलम् ॥ ५ ॥ "
कर्म० ६ कर्म० । प्रश्न० । स० ।

सत्तरिसभ-सप्तर्षभ–पुं० । एकविंशतितमेऽहोरात्रमुहूर्त्ते, स० ३० सम० ।

सत्तवइय–साप्तपदिक–पुं० । सप्तभिः पदैर्व्यवहरतीति साप्तपदिकः । तथाविधे व्यवहारिणि, आ० म० १ अ० । " ( सत्तवइए त्ति—(१३४ गाथा) अस्य व्याख्या-सप्तभिः पदैर्व्यवहरन्तीति साप्तपदिक —सत्तपदिगो एगम्मि पञ्चंतगामे एगो ओलग्गयमणूसो, साधुमाहणादीणं न सुणेति, ण वा अल्लीणति, ण वा सेज्जं देति, मा मम धम्मं कहेहिन्ति, ताहे मा सद्धो होहामि त्ति । अण्णया कया त गामं साहुणो आगता, पडिस्सयं मग्गंति, ताहे गोट्ठिलएहिं एसो न देति त्ति सो वि एतेहिं पवंचिओ होउ त्ति तस्स घरं चिंधिअं,जहा एरिसो तारिसो सावगो त्ति तस्स घरं जाह । त गता पुच्छंता दिट्ठो जाव ण चेव आढाति । तत्थेक्केण साहुणा भणिअं-जदि वा ण चेव सो एसो, अहवा-पवंचितामो त्ति, तं सोऊण पुच्छिता तेण, कथितं जहा अम्ह कथितं एरिसो तारिसो सावगो त्ति । सो भणति-अहो अकज्जं, ममं ताव पवंचतु । ता किं साधुणो पवंचितेन्ति, ताहे मा सारता तेम्मि होउ त्ति भणति-देमि पडिस्सयं एक्काए ववत्थाए, जदि मम धम्मं ण कहेह, साहूहिं कहियं-एवं होउ त्ति । दिण्णं घरं, वरिसारत्ते वित्ते आपुच्छंतेहिं धम्मो कहिओ । तत्थ ण किंचितरइ घेत्तुं मूलगुणउत्तरगुणाणं मधुमज्जमंसविरतिं वा । पच्छा सत्तपदिवयं दिण्ण-मारेउकामेणं जावइण्णं कालेण सत्त पदा ओसक्किज्जंति एवइअं काल पडिक्खिउ मारेयव्वं । संबुज्झिस्संति त्ति काउ, गता । अण्णया चोरो(रओ) गतो, अवसउणेणं णिअत्तो, रत्तिं सणिअं घरं एति । तद्दिवसं च तस्स भगिणी आगएल्लिआ, सा पुरिसणेवत्थिआ भाउज्जायाए समं गोज्झपेक्खिया गया । ततो चिरेण आगया, णिद्दक्कताओ तहेव एक्कम्मि चेव सयणे सइयाओ इअरो अ आगओ ।ततो पेच्छति,परपुरिसो त्ति असिं करिसित्ता आहणेमित्ति,वतं सुमरियं । ठितो सत्तपदंतरं । एअम्मि अंतरे भगिणी अ से बाहा भज्जाए अक्कंतिआ । ताए दुक्खाविज्जंतियाए भणिअं हला ! अवणेहि बाहाओ मे सीसं । तेण सरेण णाया भगिणी एसा मे पुरिसणेवत्थ त्ति लज्जितो,जातो अहो मणाग मए अकज्ज न कयति । उवगओ जहा सावगभज्जाए, सबुद्धो, विभासा , पव्वइओ । आव० १ अ० ।

सत्तवच्छ–सप्तवत्स–पुं० । लोमपक्षिविशेषे, प्रज्ञा० १ पद ।

सत्तविहबंधग–सप्तविधबन्धक–पुं० । सप्तप्रकारकर्मोपार्जके, पञ्चा० १६ विव० ।

सत्तसत्तमिया–सप्तसप्तकि(मि)का–स्त्री०।सप्तसप्तकदिनानि यस्या सा सप्तसप्तकिका सप्तशब्दककारस्य मकार प्राकृतत्वात्। अथवा—सप्त सप्तमानि दिनानि यस्या सा, यस्यां हि सप्तदिनसप्तमकानि भवन्ति । प्रव० २७१ द्वार । सप्त सप्तमानि दिनानि यस्यां सा सप्तसप्तकैर्दिनसप्तकैर्यथोत्तरवर्द्धमानदत्तिभिर्निष्पन्ने प्रतिमाभेदे, स्था० ७ ठा० ३ उ० ।

सूत्रम्—

सत्तसत्तमिया णं भिक्खुपडिमा,एगूणं पन्नए राइंदिएहिं एगेण छण्णउएणं भिक्खासएणं अहासुत्तं ( अहाकप्पं अहामग्गं अहातच्चं अहासम्मं फासिया पालिया तीरिया किट्टिया ) अणुपालिया भवइ ॥ ३१ ॥

अस्य सवन्धप्रतिपादनार्थमाह—

सागारियअग्गहणे, अन्नाउञ्छं फुडं समक्खायं ।
सो होति ऽभिग्गहो खलु,पडिमाऽऽइअभिग्गहो चेव॥७४॥
अन्नाउञ्छविसुद्धं, घेत्तव्वं तस्स किं पमाणं ।
कालम्मि य भिक्खासु य,इति पडिमासुत्तसंबंधो ॥७५॥

पूर्वसूत्रेषु सागारिकपिण्डो न ग्राह्य इत्युक्तं सागारिकपिण्डाऽग्रहणे स्फुटमज्ञातोञ्छग्रहः खलु भवत्यभिग्रह , प्रतिमाप्र–

¹—० जाव अणुपालिया भवइ ॥ ३१ ॥

भिग्रह इत्यभिग्रहप्रस्तावात्सागारिकसूत्राऽनन्तरं प्रतिमासूत्रस्योपनिपात । अथवा—अन्यथा संबन्ध. सागारिकपिण्डप्रतिषेधनोऽज्ञातोञ्छविशुद्धं ग्रहीतव्यमित्याख्यातं, तस्य भिक्षाकालेषु किं परिमाणमिति प्रश्नावकाशमाशङ्क्य प्रतिमासूत्रमुपन्यस्तवान्, एष प्रतिमासूत्रसम्बन्धः। अनेन सम्बन्धेनायातस्यास्य(सू०३१)व्याख्या-सप्तसप्तका दिनानां यस्या सा सप्तसप्तकिका सप्तकशब्दे ककारस्य मकार. प्राकृतत्वात्, 'ए' मिति वाक्यालङ्कारे। भिक्षुप्रतिमा एकोनपञ्चाशता रात्रिन्दिवैकेन पराणवनेन भिक्षाशतेन यथा सूत्रं सूत्रानतिक्रमेण यावत्करणात्-" अहासुत्तं अहाकप्पं अहामग्गं अहातच्चं अहासम्मं फासिया पालिया तीरिया किट्टिया अणुपालिया भवइ " इति-परिग्रहस्तत्र यथाकल्पं-यथाविधि-सूत्रोक्तविध्यनतिक्रमेणेत्यर्थ , यथामार्गं—ज्ञानदर्शनचारित्राणामविराधनेन 'अहातच्चं' ति—याथातथ्यमेकान्तत. सूत्रानुसारेणापादितसत्य(त्यं)तार्कं 'अहासम्मं' यथासम्यक् त्रिविधेनापि योगेनाऽपरिताम्यता सम्यक्करणस्पर्शिता सेविता पालिता विराधनारक्षणेन., अत एव शोधिता अतीचारलेशेनाप्यकलङ्कनात्। तीरिता-तीरं नीता, पर्यन्तं नीता इत्यर्थ.। कीर्तिता-आचार्याणां कथिता, यथा प्रतिमा मया समाप्ता आज्ञया तीर्थकरोपदेशेन अत्र पालिता भवति । एवमष्टाष्टकिका-नवनवकिका-दशदशकिका-सूत्राण्यपि भावनीयानि। विशेषस्तु पाठसिद्ध , एष सूत्रचतुष्टयसंक्षेपार्थ ।

अहसुत्त सुत्तदेसा, कप्पो उ विधीय मग्ग णाणादी ।
तच्चं तु भवे तत्थं, सम्मं जं अपरितंतेणं ॥ ७६ ॥
फासिय जोगतिगेणं,पालिय मविराहिय सोहितेमेव ।
तीरियमंतं पाविय, किट्टिय गुरुकरण जिणमाणा ॥७७॥

यथासूत्रमिति सूत्रादेशात् यथाकल्पमित्यत्र कल्पो—विधिर्यथामार्गमित्यत्र मार्गो-ज्ञानादि, यथातथ्यमित्यत्र 'तच्चं'-नाम तथ्यं,यथासम्यगिति सम्यग् नाम यदपरिताम्यताकरणं स्पर्शिता योगत्रिकेण सेविता पालिता अविराधिता शोधिताऽप्येवमेव अविराधनेनैवेत्यर्थ , तीरिता-अन्तं प्रापिता कीर्तिता-गुरूणां कथनत. आज्ञा जिनस्य-तीर्थकृत., द्वितीया षष्ठ्यर्थे प्राकृतत्वात्।

पडिमाउ पुव्वभणिया, पडिवज्जइ कोतिसंघयणमादी ।
नवरं पुण णाणत्तं, कालच्छेए य भिक्खासु ॥ ७८ ॥

प्रतिपद्यते, प्रतिमा भिक्षो प्रतिमा पूर्वमाचारदशासु भणिता ता क प्रतिपद्यते तत आह-' निसंघयणं' ति-आद्येषु त्रिषु संहननेषु अन्यतरसंहननोपेत. चतुर्थादिषु संहननेषु वर्तमान न प्रतिपद्यते, आदिशब्दात्-सोऽपि सूत्रार्थतदुभयोपेतो गच्छेन् कृतपरिकर्मा सातिशयो न निरतिशय इति परिग्रह तृतीयं च संहननं यावदार्यरक्षितास्तावदनुवृत्त तत आरतो व्यवच्छिन्नम्। नवरं पुनर्नानात्वमत्र कालच्छेदे भिक्षासु च।

तत्र कालच्छेदमाह—

एगूणपन्ने चउम-ट्ठिगासीती य सयं च बोद्धव्वं ।
सव्वासिं पडिमाणं, कालो एसो त्ति तो होइ ॥ ७६ ॥

सप्तसप्तकिकाया कालम् एकोनपञ्चाशत् रात्रिन्दिवानि, अष्टाष्टकिकायाश्चतु षष्टि', नवनवकिकाया एकाशीति , दशदशकिकाया' शतं रात्रिन्दिवानां बोद्धव्यं, सर्वप्रतिमानामधिकृतसूत्रचतुष्टयोपेतानामेष एतावान् भवति काल.।

कथं पुन. सप्तकिका भवतीत्यत आह-

पढमाए सत्तगा सत्त, पढमे तत्थ सत्तए ।
एक्केक्कं गेरहई भिक्खं, बिइए दोषि दोषि तु ॥८०॥
एवमेकेकियं भिक्खं ,छुभिज्जेकेक सत्तगे ।
गेरहती अन्तिमो जाव, सत्त सत्त दिणे दिणे ॥८१॥

प्रथमायां प्रतिमायां सप्त सप्तका भवन्ति। तत्र प्रथमे सप्तके प्रतिदिवसमेकैका भिक्षां गृह्णाति, द्वितीये सप्तके प्रतिदिवसं द्वे द्वे भिक्षे, एव तृतीयादिषु सप्तकेष्वेकैकेषु एकैकां भिक्षामधिकां प्रक्षिपेत् यावदन्तिमे सप्तके दिने सप्त सप्त भिक्षा गृह्णाति। इयमत्र भावना-तृतीये सप्तके प्रतिदिवसं तिस्रस्तिस्रो भिक्षा गृह्णाति , चतुर्थे चतस्रश्चतस्र , पञ्चमे पञ्च पञ्च,षष्ठे षट् षट् ,सप्तमे सप्त सप्तेति।

अत्रैव प्रकारान्तरमाह—

अहवा एकिक्कियं दत्तिं, जा सत्तेकेक्कसत्तए ।
आदेसो अत्थि एसो वि, सीहविक्कमसन्निभो ॥८२॥

अथवा-एष द्वितीयोऽप्यादेशोऽस्ति,यथा एकैकस्मिन् सप्तके प्रत्येकं प्रथमदिनादारभ्य प्रतिदिवसमेकैका वर्द्धयेत् यावत्सप्तमे दिवसे। इयमत्र भावना-प्रथमे सप्तके प्रथमे दिवसे एकां भिक्षा गृह्णाति,द्वितीये द्वे, तृतीये तिस्र., चतुर्थे चतस्र , पञ्चमे पञ्च, षष्ठे षट् , सप्तमे सप्त.एव द्वितीये तृतीये चतुर्थे पञ्चमे षष्ठे सप्तमे च सप्तके द्रष्टव्यम्। एष आदेश सिंहविक्रमसन्निभ., यथा-सिंहो गत्वा गत्वा पृष्ठतः प्रलोकयते एवमेषोऽपि सप्तके पुनर्मूलत. परावर्त्तते। गत. कालच्छेद.।

सम्प्रति भिक्षापरिमाणमाह—

छन्नउयं भिक्खसयं, अट्ठासीया य दो सया हुंति ।
पंचुत्तरा य चउरो, अद्धच्छट्ठं सया चेव ॥८३॥

सप्तसप्तकिकाया भिक्षापरिमाणं षराणवतं शतम् १९६, अष्टाऽष्टकिकायामष्टाशीते द्वे शते २८८ भिक्षाणाम् , नवनवकिकाया पञ्चोत्तराणि चत्वारि शतानि ४०५ दशदशकिकायामर्द्धे षट् शतानि भिक्षाणामिति ।

सम्प्रत्यस्यैव भिक्षापरिमाणस्यानयनाय करणमाह—

उद्दिट्ठवग्गदिवसा, मूलगुणा संजया दुहा छिन्ना ।
मूलेणं संगुणिया, माणं दत्तीण पडिमासु ॥८४॥
पदगयसु वेयसु-त्तरसमाहयं दलियमादीणा ।
महियं गच्छगुणं पडि-माणं भिक्खमाणं मुणेयव्वं॥८५॥

उद्दिष्टा ये च वर्गा. सप्तसप्तकिकादयस्ते दिवसा मूलदिनसंयुक्ता, सप्तादिदिनसन्मिश्रा क्रियन्ते, तदनन्तरं द्विधाछिन्ना अर्धीक्रियन्ते इति भाव. । ततो मूलेन सप्तादिलक्षणेन संगुरयन्ते, संगुणिता प्रतिमासु दत्तीना मानं—परिमाणं भवति । तद्यथा-सप्तसप्तकवर्गदिवसा एकोनपञ्चाशत् ४९, ते मूलदिन स-

१-'अद्धछट्ठा सया चेव' इति पाठान्तरे। -दशदशकिकाया मध्यम्। नि(५५०)

प्तभिर्युता. क्रियन्ते जाता. षट्पञ्चाशत् ५६,ते अर्द्धीक्रियन्ते जाता अष्टाविंशतिः २८, सा मूलेन सप्तकेन गुण्यते आगत पण्णवतं शतम् १९६,तथा अष्टाष्टकवर्गेदिवसाश्चतु षष्टि ६४, ते मूलदिनैरष्टभि. संमिश्रयन्ते जाता द्वासप्तति. ७२, तस्या अर्द्धं क्रियते जाता षट्त्रिंशत् ३६, सा मूलेनाष्टकेन गुण्यते आगते द्वे शते अष्टाशीते २८८, एवं नवनवकिकायां दशद-शकिकाया च यथोक्तं भिक्षापरिमाणमानेतव्यम्।

अत्रैव करणान्तरमाह—

गच्छुत्तरसंविग्गे, उत्तरहीणम्मि पक्खिवे आदिं।
अंतिमधणमादिजुयं, गच्छद्धगुणं तु सव्वधणं ॥ ८६ ॥

गच्छे उत्तरेण सवर्गे संवर्ग्यते स संवर्गो गुणित इ-त्यर्थ., तस्मिन् उत्तरेण हीने कृते आदिं प्रक्षिपेत् ततः अन्तिमधनमागच्छति, तदन्तिमधनम् आदियुक्तं क्रियते, तदनन्तरं गच्छार्द्धगुणं तत. सर्वधनमागच्छति । तत्र स-प्तसप्तकिकायां सप्त आदि , सप्त उत्तरं, सप्त गच्छ', त-त सप्तकलक्षणो गच्छ उत्तरेण सप्तलक्षणेन गुण्यते। जा-ता एकोनपञ्चाशत् ४९ , सा उत्तरेण सप्तकेन हीना क्रियते , कृत्वा च पुनरादिना सप्तकेनैव युता कर्त्तव्या। इदं करणमन्यत्रापि व्यापक; तत एवमुक्तमन्यथा चोत्तर-हानावादिप्रक्षेपे च न कश्चिद्विशेषस्तस्या एव एकोन-पञ्चाशतो भावात्। एतत् अन्तिमधनं सप्तमे सप्तके भिक्षा-परिमाणमित्यर्थ , *तस्मिन् उत्तरेण हीने कृते आदिं प्रक्षि-पेत् , तत अन्तिमधनमागच्छति , तदन्तिमधनमादियुत क्रियते, तदनन्तरं गच्छार्द्धगुणं, तत' सर्वधनमागच्छति। तत्र सप्तसप्तकिकायां सप्त आदि, सप्त उत्तरं, सप्तग-च्छ , तत. सप्तकलक्षणो गच्छ उत्तरेण सप्तकलक्षणेन गु-ण्यते*। एतत् आदिना सप्तकेन युतं क्रियते । जाता'-षट्पञ्चाशत् स गच्छार्द्धेन गुण्यते, अत्र गच्छ सप्तक. स विषमत्वादर्द्धं न प्रयच्छति ततो गुणो राशि. षट्पञ्चा-शल्लक्षणोऽर्द्धीक्रियते, जाता अष्टाविंशति , सा परिपूर्णे-न सप्तकलक्षणेन गच्छेन गुण्यते जातं षण्णवतं शतम्'१९६। व्य० ९ उ०। औ०। स०। प्रव०। अन्त०।

सत्तसत्तमियं भिक्खुपडिमं उवसंपज्जित्ता णं विहरति , पढमे सत्तए एक्केक्क भोयणस्स दत्तिं पडिगाहेति एक्केक्कं पाणयस्स। दोच्चे सत्तए दो दो भोयणस्स दो दो पा-णयस्स पडिगाहेति। तच्चे सत्तते तिण्णि भोयणस्स तिण्णि पाणयस्स, चउत्थे सत्त० ४ पंचमे सत्त० ५ छट्ठे सत्तए ६सत्तमे सत्तते सत्त२दत्तीतो भोयणस्स पडिगाहेति सत्त पाणयस्स। एवं खलु एयं सत्तसत्तमियं भिक्खुपडिमं एगूणवण्णासे राइंदिएहिं एगेण य छन्नउएणं भिक्खासतेणं अहासुत्ता० जाव आराहेत्ता। अन्त० ८ वर्ग ३ अ०।

सत्तसत्तिकया-सप्तसप्तैकिका-स्त्री०। सप्ताध्ययनात्मिकायां द्वितीयश्रुतस्कन्धस्य द्वितीयचूडायाम्, आचा० १ श्रु० १ अ० १ उ०। प्रश्न०।

सत्तमरसमन्नागय-सप्तस्वरसमन्वागत-त्रि०। षड्जादिसप्त-स्वरान् सम्यगनुगत, ज० १ वक्ष०।

सत्तसार-सत्त्वसार-पुं०। द्वढाशे, "सत्तसारो दुविहो—बाह्यो गुरुत्तं अब्भंतरो णाणादी" आ० चू० १ अ०।

सत्तसीस-सप्तशीर्ष-पुं०। शिखरितलपर्वतकूटस्वामिनि ना-गकुमारदेवे द्वी०।

सत्तहत्तरि-सत्तसप्तति-स्त्री० सप्ताधिकायां सप्ततिसंख्या-याम्, स० ७७ सम०।

सत्ता-सत्ता-स्त्री०। सामान्ये, विशे०। अविशेषेण सद्बु-द्धिवेद्येष्वपि सर्वपदार्थेषु द्रव्यादिष्वेव त्रिषु सत्तासं-बन्ध. स्वीक्रियते, न सामान्यादित्रये इति महतीयं पश्य-तो हरता, यतः परिभाव्यता सत्ताशब्दार्थ.। अस्तीति सन् सतां भाव. सत्ता-अस्तित्व-तद्वस्तुस्वरूपं तच्च निर्वि-शेषमशेषेष्वपि पदार्थेषु त्वयाऽप्युक्तम्, तत्किमिदमर्द्धजर-तीयं यद् द्रव्यादित्रय एव सत्तायोगो नेतरत्रये इति, अनु-वृत्तिप्रत्ययाऽभावान्न सामान्यादित्रये सत्तायोग इति चेत्, न तत्राप्यनुवृत्तिप्रत्ययस्याऽनिवार्यत्वात्। पृथिवीत्वगोत्वघ-टत्वादिसामान्येषु सामान्य सामान्यमिति विशेषेष्वपि व-हुत्वादयमपि विशेषोऽयमपि विशेष इति, समवाये च प्रा-गुक्तयुक्त्या तत्तदवच्छेदकभेदाद्—एकाकारप्रतीतेरनुभवात् स्वरूपसत्त्वसाधर्म्येण सत्ताध्यारोपात्सामान्यादिष्वपि सत्स दित्यनुगम इति चेत्तर्हि मिथ्याप्रत्ययोऽयमापद्यते। अथ भिन्न स्वभावेष्वेकानुगमो मिथ्यैवेति चेद्, द्रव्यादिष्वपि सत्ताध्या-रोप. कृत एवास्तु प्रत्ययानुगम'। असति,मुख्येऽध्यारोपस्या-ऽसंभवाद्-द्रव्यादिषु मुख्योऽयमनुगत. प्रत्यय. सामान्यादि-षु तु गौण इति चेत्। न, विपर्ययस्यापि शक्यकल्पनत्वात् सामान्यादिषु बाधकसंभवान्न मुख्योऽनुगत. प्रत्यय , द्र-व्यादिषु तु तदभावान्मुख्य इति चेद्, ननु किमिदं बाधकम्?। अथ सामान्येऽपि सत्ताऽभ्युपगमेऽनवस्था विशेषेषु पुन सामान्यसद्भावे स्वरूपहानि ,समवायेऽपि सत्ताकल्पने तद्-वृत्त्यर्थं सम्बन्धान्तराभाव इति बाधकानीति चेत्। न, सामा न्येऽपि सत्ताकल्पने यद्यनवस्था तर्हि कथं न सा द्रव्या-दिषु तेषामपि स्वरूपसत्ताया प्रागेव विद्यमानत्वात्। वि-शेषेषु पुन सत्ताभ्युगमेऽपि न स्वरूपहानि स्वरूपस्य प्र-त्युतोत्तेजनात्, नि सामान्यस्य विशेषस्य क्वचिदप्यनुपल-म्भात्। समवायेऽपि समवायत्वलक्षणाया स्वरूपसत्ताया स्वीकारे उपपद्यत एवाऽविष्वग्भावात्मक सम्बन्ध. , अ-न्यथा तस्य स्वरूपाभावप्रसङ्ग., इति बाधकाभावात्तेष्वपि द्रव्यादिवन्मुख्य एव सत्तासम्बन्ध , इति व्यर्थं द्रव्यगुण-कर्मस्वेव सत्ताकल्पनम्। किं च-तैर्यादिभिर्यो द्रव्यादित्रये मुख्य सत्तासंबन्ध. कक्षीकृत. सोऽपि विचार्यमाणो वि-शीर्येत, तथा हि—यदि द्रव्यादिभ्योऽत्यन्तविलक्षणा स-त्ता तदा द्रव्यादीन्यसद्रूपाण्येव स्यु सत्तायोगात्सत्त्वम-स्त्येवेति चेद्, असता सत्तायोगेऽपि कुत सत्त्वं ?, सता तु निष्फल सत्तायोग। स्वरूपसत्त्वं भावानामस्त्येवेति चेत्तर्हि किं शिखण्डिना सत्तायोगेन?। सत्तायोगात् प्राग्भावो न सन्, नाप्यसन् सत्तायोगात्तु सन्निति चेद्वाङ्मात्रमेतत्; सदस-द्विलक्षणस्य प्रकारान्तरस्याऽसंभवात् तस्मात् 'सतामपि स्यात्क्वचिदेव सत्ता' इति तेषां वचन विदुषां परिषदि कथमिव नोपहासाय जायते ?। स्या०। द्रव्यगुणकर्मलक्षणेषु त्रिषु प

दार्थेषु सद्बुद्धिहेतु सत्ता । आ० म०१ अ० । स्या० । ("त्रि पदार्थसत्करी सत्ता" इति वचनात् सत्ताभ्युपगम. 'सामन्न' शब्देऽस्मिन्नेव भागे साधयिष्यते ) उत्पादव्ययध्रौव्ययुक्तं सत् । स्या० । ( अत्रत्या वक्तव्यता ' अणेगतवाय ' शब्दे प्रथमभागे ४२५ पृष्ठे गता ।) (अयमेवार्थ. अर्थक्रियाकारित्वलक्षणं सत्त्वमभ्युपगच्छतां क्षणिकवादिनां दूषणमुद्भाव्य-जातिलक्षणं सत्त्वं सम्मतितर्के प्रपञ्चेन साधितं तत एवावगन्तव्यम् ।) सम्म०। ('समवाय' शब्देऽस्मिन्नेव भागे तत्खण्डनावसरे सत्ताखण्डनमण्डने करिष्येते ) । द्रव्यगुणकर्मसु सत्ता परसामान्यम् । सूत्र० १ श्रु० १ अ० २ उ० । सद्भावे, सूत्र० १ श्रु० ८ अ० । आ० म० । सत्ताना यत्र ग्रामे नगरे वा भाजनानि सन्तीति प्राकरणिकोऽर्थः । वृ० ३ उ० । सद्भावः सत्ता । क० प्र० १ प्रक० । कर्म्मपुद्गलाना वन्धसंक्रमाभ्यां लब्धात्मलाभाना निर्जरणसंक्रमकृतस्वरूपप्रच्युत्यभावे सति सद्भावे, कर्म्म० ५ कर्म० । वन्धसमयात् संक्रमेणात्मलाभसमयादारभ्य यावत्ते कर्मपरमाणवो नान्यत्र संक्रम्यन्ते यावद्वा न क्षयमुपगच्छन्ति तावत्तेषां स्वरूपेण सद्भावे, कर्म्म०६ कर्म०।

सत्तालक्षणम्-सत्तामाश्रित्य गुणस्थानेषु कर्म्मक्षपणं च ।

अथ सत्तालक्षणकथनपूर्वकं यथा तेन भगवता त्रिलोकाधिपतिना श्रीमद्वर्द्धमानस्वामिना सत्तामाश्रित्य गुणस्थानेषु कर्माणि क्षपितानि तथा प्रतिपादयन्नाह—

सत्ता कम्माण ठिई, बंधाई लद्धअत्तलाभाणं ।
संते अडयालसयं, जा उवसमु विजिणु वियतइए ॥२५॥

सत्ता उच्यते इति शेष , किमित्याह--कर्म्मणां ज्ञानावरणादियोग्यपरमाणूना स्थितिरवस्थानं सद्भाव इति पर्याया । किं विशिष्टानां कर्मणामित्याह--वन्धादिलब्धात्मलाभाना, तत्र मिथ्यात्वादिभिर्हेतुभि' कर्मयोग्यपुद्गलैरात्मनो वह्न्ययःपिण्डवदन्योन्यानुगमाभेदात्मक. संवन्धो वन्ध' , आदिशब्दात्--संक्रमकरणादिपरिग्रह. । ततो वन्धादिभिर्लब्ध --प्राप्त आत्मलाभ-आत्मस्वरूपं यैस्तानि वन्धादिलब्धात्मलाभानि तेषां वन्धादिलब्धात्मलाभानां कर्मणां या स्थिति. सा सत्ता तस्याम् । 'संत' त्ति-सत्कर्मणि सत्तायामष्टाचत्वारिंशं शतं प्रकृतीनां भवति । कियन्ति गुणस्थानानि, यावदित्याह-' जा उवसमु ' त्ति यावदुपशममुपशान्तमोहम् । अयमर्थ , मिथ्यादृष्टिगुणस्थानात् प्रभृत्युपशान्तमोहगुणस्थानं यावदष्टाचत्वारिंशं शतं सत्तायां भवति, किमविशेषेणेत्याह-' विजिणुवियतइए ' त्ति-विगतं जिननाम यस्मात्तद्विजिनं--जिननामविरहितं तदेवाष्टाचत्वारिंशं शत भवति, केत्याह-द्वितीये सास्वादने तृतीये मिश्रदृष्टौ " सासणमिस्सरहिएसु वा तित्थमि " ति वचनात् सास्वादनमिश्रयो. सप्तचत्वारिंशं शतं भवतीत्यर्थ. । इदमत्र हृदयम्-इह मिथ्यादृष्टेरष्टचत्वारिंशमपि शतं सत्तायां यदा हि प्राग्बद्धनरकायु क्षायोपशमिकं सम्यक्त्वमवाप्य तीर्थकरनाम्नो वन्धमारभते, तदाऽसौ नारकेषूत्पद्यमान सम्यक्त्वमवश्यं वमतीति । मिथ्यादृष्टेस्तीर्थकरनाम्नोऽपि सत्ता सम्भवति, सास्वादनमिश्रयोस्तु तस्मिन्नेव जिननामरहितं सप्तचत्वारिंशं शतं सत्ताया जिननाम सत्कर्मणो जीवस्य तद्भावानवाप्तेस्तद्वन्धारम्भस्य च शुद्धसम्यक्त्वप्रत्ययत्वात्, यदुक्तं वृहत्कर्म्मस्तवभाष्ये-" तित्थयरेण विहीणं, सीयालसयं तु संतए होइ । सासायणम्मि उ गुणे-सम्मामीसे य पयडीणं ॥ १ ॥ " अविरतसम्यग्दृष्ट्यादीनामक्षिप्तदर्शनसप्तकानामष्टचत्वारिंशस्यापि शतस्य सत्ता सम्भवतीति ।

अप्पुव्वाइचउक्के, अणतिरिनिरया उ विणु विआलसयं ।
सम्माइचउसु सत्तग-खयम्मि इगचत्तसयमहवा ॥२६॥

गाथापर्यन्तवर्त्यथवाशब्दस्य संबन्धात् पूर्वं तावदष्टचत्वारिंशं शतं सत्तायामुक्तम् । अथवा-अयमपर. सत्तामाश्रित्य भेद., तथा हि—अपूर्वादिचतुष्के अपूर्वकरणानिवृत्तिवादरसूक्ष्मसंपरायोपशान्तमोहस्वरूपे ' अण ' त्ति-अनन्तानुवन्धिचतुष्कम् , ' तिरिनिरयाउ ' त्ति—आयु शब्दस्य प्रत्येकं योगात्तिर्यगायुर्नरकायुश्च विना द्विचत्वारिंशं शतं भवतीति । अयमाशय य. कश्चिद्विसंयोजितानन्तानुवन्धिचतुष्को वद्धदेवायुर्मनुजायुषि वर्त्तमान उपशमश्रेणिमारोहति, तस्य तिर्यगायुर्नरकायुरनन्तानुवन्धिचतुष्कलक्षणप्रकृतिषट्करहितं शेषं द्विचत्वारिंशं शतं सत्तायां प्राप्यते , यदुक्तं वृहत्कर्मस्तवभाष्ये—" अणतिरिनारयरहियं , वायालसयं विमाणसंतम्मि । उवसामगस्स पुव्वा, नियट्टि सुहमोवसंतम्मि ॥ १ ॥ " 'सम्माइचउसु' त्ति इत्यादि, सम्यक्त्वादि चतुर्षु अविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तेषु ' सत्तगखयम्मि त्ति अनन्तानुवन्धिचतुष्कमिथ्यात्वमिश्रसम्यक्त्वलक्षणसप्तकक्षये सत्येकचत्वारिंशं शतम् । अथवा-सत्तायां भवति । इहाप्यथवाशब्द आवृत्त्या योज्यते, यदुक्तं वृहत्कर्म्मस्तवसूत्रे—" अणमिच्छमीससम्मं, अविरयसम्माओ अप्पमत्तंता ।" इति ।

खवगं तु पप्प चउसु वि,पणयालं नरयतिरिसुरा उ विणा ।
सत्तगविणु अडतीसं, जा अनियट्टी पढमभागे ॥२७॥

क्षपकं तु पुनरर्थे, क्षपकं पुन. प्रतीत्य-आश्रित्य चतुर्ष्वपि अविरतदेशविरतप्रमत्ताप्रमत्तेषु 'पणयालं' ति-पञ्चचत्वारिंशं शतम् । अथवा-भवत्यथवाशब्द इहापि संवध्यते । कथमित्याह 'नरयतिरिसुराउ विणु' त्ति-आयु शब्दस्य प्रत्येकं योगान्नरकायु-स्तिर्यगायु.-सुरायुर्विनान्तरेण । इदमुक्तं भवति-यो जीवो नारकतिर्यक्सुरेषु चरमं तद्भवमनुभूय मनुष्यतयोत्पन्नस्तस्य नारकतिर्यक्सुरायूंषि स्वस्वभवे व्यवच्छिन्नसत्ताकानि जातानि पुनस्तदनवाप्ते. । उक्तं च—" सुरनरतिरिय आउं, नियभवे सव्वजीवाणमिति " इयं चैतेषु गुणस्थानेषु सामान्यजीवानां सम्भवमाश्रित्य सत्तावर्णिता न त्वधिकृतस्तवस्तुत्यस्य चरमजिनपरिवृढस्यत् , अस्या. सुरनारकतिर्यगायु.संभवापेक्षणीयत्वा जिनस्य च तदसंभवात् तस्यापि च प्राग्भवापेक्षया संभवो वाच्य , इदमेव पञ्चचत्वारिंशं शतं सप्तकमनन्तानुवन्धिमिथ्यात्वमिश्रसम्यक्त्वाख्यं विना अष्टात्रिंश शतं भवति । कियन्ति गुणस्थानानि, यावदित्याह-' जा अनियट्टी पढमभागु ' त्ति-इहानिवृत्तियादराद्धाया नव भागा क्रियन्ते,ततोऽविरते देशविरते प्रमत्तेऽप्रमत्ते निवृत्तियादरेऽनिवृत्तियादरस्य च प्रथमो भागस्तावदष्टात्रिंशं शतं भवति, उक्त च—" संते अडयालसय, खवग तु पडुच होइ पणयालं । आउतिगं न-

त्थि तर्हि, सत्तगखीणम्मि अडतीसं ॥ १ ॥ पणयालं अडतीसं, अविरयसम्माउ अप्पमत्तो त्ति । अ(पु)पुव्वे अडतीसं, नवरं खवगम्मि बोधव्व ॥ २ ॥ " इति ।

अथ क्षपकश्रेणिमधिकृत्यानिवृत्तिवादरादिषु प्रकृतिसत्ता वर्ण्यते, उपशमश्रेणिसत्तायास्त्विह नाधिकार इति—

थावरतिरिनिरया य व, दुगथीणतिगेगविगलसाहारं ।
सोल खओ दुवीससयं, वियंसि वियतियकसायंतो २८।

इहानिवृत्तिवादरस्य प्रथमे भागे अष्टात्रिंशं शतं सत्तायां भवति, तत्र च ' थावरतिरिनिरया य व दुग' त्ति–द्विकशब्दस्य प्रत्येकं योगात् स्थावरद्विकं–स्थावरसूक्ष्मलक्षणं तिर्यक्द्विकं–तिर्यग्गतितिर्यगानुपूर्वीरूपं नरकद्विकं–नरकगतिनरकानुपूर्वीलक्षणमातपद्विकमातपउद्योताख्यं 'थीणतिग'त्ति—स्त्यानर्द्धित्रिकं–निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धिलक्षणम् 'एग'त्ति–एकेन्द्रियजातिः, 'विगल'त्ति विकलेन्द्रियजातयो द्वीन्द्रियजातित्रीन्द्रियजातिचतुरिन्द्रियजातिलक्षणाः 'साहारं' ति–साधारणनामेत्येतासां षोडशानां प्रकृतीनां क्षयः सत्तामाश्रित्य भवति, ततोऽनिवृत्तिवादरस्य द्वयंशे–द्वितीयभागे द्विविंशं शतं भवति। तत्र'वियतियकसायं तु'त्ति–कषायशब्दस्य प्रत्येकं योगात् द्वितीयकषाया अप्रत्याख्यानावरणा चत्वारः तृतीयकषायाः प्रत्याख्यानावरणाश्चत्वार इत्येतासामष्टानां प्रकृतीनामन्तः क्षयस्ततस्तृतीयांऽशे चतुर्दश शत भवतीति ।

एतदेवाह—

तइयाइसु चउदसतेर बारछपणचउतिहियसयकमसो ।
नपुइत्थिहासछगपुं–संतुरियकोहमयमायखओ ॥२६॥

तृतीयादिषु भागेषु चतुर्दश च त्रयोदश च द्वादश च षट् च पञ्च च चत्वारि च त्रीणि चेति द्वन्द्वस्तैरधिकं शतं 'तिहियसय'इत्यत्राकारलोपो विभक्तिलोपश्च प्राकृतत्वात्, क्रमशः–क्रमेण सत्ताया भवति, कथमित्याह–' नपुंइत्थि' इत्यादि नपुं च–नपुंसकवेदः स्त्री च–स्त्रीवेदः हास्यषट्कं च–हास्यरत्यरतिशोकभयजुगुप्साख्यं पुमांश्च पुवेदः नपुंस्त्रीहास्यषट्कपुमांसः क्रोधश्च–कोपः मदश्च–मदो मानोऽहङ्कार इति पर्यायाः, माया च–निकृतिः क्रोधमदमायास्तुर्या –चतुर्थी सज्वलनाः क्रोधमदमाया ,तुर्यक्रोधमदमाया नपुंस्त्रीहास्यषट्कपुमांसश्च तुर्यक्रोधमदमायाश्च नपुंस्त्रीहास्यषट्कपुंतुर्यक्रोधमदमायास्तासां क्षयो नपुंस्त्रीहास्यषट्कपुंतुर्यक्रोधमदमायाक्षयः 'मायखओ' इत्यत्र ह्रस्वत्वं " दीर्घह्रस्वौ मिथोवृत्तौ " ८।१।४। इत्यनेन प्राकृतसूत्रेणेति गाथाक्षरार्थः।भावार्थस्त्वयम्–अनिवृत्तिवादरस्य तृतीये भागे द्वितीयतृतीयकषायाष्टकक्षये चतुर्दशाधिकं शतं चतुर्थभागे नपुंसकवेदक्षये त्रयोदशाधिकं शतं, पञ्चमे भागे स्त्रीवेदक्षये द्वादशाधिकं शतं, षष्ठे भागे हास्यषट्कक्षये षडधिकं शतं, सप्तमे भागे पुंवेदक्षये पञ्चाधिक शतम् ,अष्टमे भागे सज्वलनक्रोधक्षये चतुरधिक शत,नवमे भागे संज्वलनमानक्षये त्र्यधिक शत, संज्वलनमायाक्षये तु द्व्यधिकं शतं सत्ताया भवति, तच्च सूक्ष्मसपराये ।

तथा चाह—

सुहुमि दुसयलोहं तो, खीणदुचरिमेगसओ दुनिद्दखओ।
नवनवइ चरमसमए, चउदंसणनाणविग्घंतो ॥३०॥

'सुहुमि' त्ति–सूक्ष्मसंपराये द्विशत द्वाभ्यामधिकं शतं सत्तायां भवति, तत्र च लोभान्तः सज्वलनलोभस्य क्षयस्तत 'खीणदुचरिमेगसउ' त्ति—क्षीणमोहद्विचरमसमये एकशतमेकाधिकं शतं सत्तायां, तत्र च ' दुनिद्दखओ ' त्ति–निद्राप्रचलयोर्द्वयोः क्षयो भवति, ततो नवनवतिश्चरमसमये क्षीणमोहगुणस्थानस्येति शेष , तत्र चत्वारि च तानि दर्शनानि च चतुर्दर्शनानि चक्षुरचक्षुरवधिकेवलदर्शनावरणाख्यानि ज्ञानानि–ज्ञानावरणानि मतिश्रुतावधिमनःपर्यायकेवलज्ञानावरणलक्षणानि पञ्च विघ्नानि—दानलाभभोगोपभोगवीर्यविघ्नरूपाणि पञ्च तेषामन्तो भवति तत. ।

पणसीइ सजोगी अजो–गिदुचरिमे देवखगइगंधदुगं ।
फासट्ठवन्नरसतणु–बंधणसंघायपणनिमिणं ॥ ३१ ॥

पञ्चाशीतिः सयोगिकेवलिनि सत्तायां भवति, ततः ' अजोगि दुचरिमे ' त्ति—अयोगिकेवलिनि द्विचरमसमये इत्येतासां द्विसप्ततिप्रकृतीनां क्षयो भवति , ता एवाह—' देवखगइगंधदुगं ' त्ति—द्विकशब्दस्य प्रत्येकं योगात् देवद्विकं—देवगतिदेवानुपूर्वीरूपम् खगतिद्विकं–शुभविहायोगत्यशुभविहायोगतिरूप गन्धद्विकं सुरभिगन्धासुरभिगन्धाख्यं ' फासट्ठ ' त्ति–स्पर्शाष्टकं–गुरुलघुमृदुखरशीतोष्णस्निग्धरूक्षाख्यम् ' वन्नरसतणुबंधणसघायपण ' त्ति—पञ्चकशब्दस्य प्रत्येकं संबन्धात् वर्णपञ्चकं–कृष्णनीललोहितहारिद्रशुक्लाख्यम्, रसपञ्चकं–तिक्तकटुकषायाम्लमधुररूपम् , तनुपञ्चकम्–औदारिकवैक्रियाहारकतैजसकार्मणतनुलक्षणम्, एवं तनुनाम्ना बन्धनपञ्चकम् ,–संघातनपञ्चकं च वाच्यम् ' निमिण ' त्ति–निर्माणमिति ।

संघयणअथिरसंठा–णछक्क अगुरुलहु चउ अपज्जत्तं ।
सायं व असायं वा, परित्तुवंगतिगसुसरनियं ॥ ३२ ॥

षट्कशब्दस्य प्रत्येकं योगात् संहननषट्कं वज्रर्षभनाराचऋषभनाराचनाराचार्द्धनाराचकीलिकासेवार्त्तसंहननाख्यम्, अस्थिरषट्कमस्थिराशुभदुर्भगदु स्वरानादेयायश कीर्त्तिरूपं, संस्थानषट्कं–समचतुरस्रन्यग्रोधपरिमण्डलसादिवामनकुब्जहुण्डसस्थानाख्यम्, अगुरुलघुचतुष्कम् अगुरुलघूपघातपराघातोच्छ्वासाख्यमपर्याप्तं सातं वा असातं वा एकतरवेदनीयं यदनुदयावस्थं ' परित्तुवगतिग ' त्ति—त्रिकशब्दस्य प्रत्येकं सम्बन्धात् प्रत्येकत्रिकं–प्रत्येकस्थिरशुभाख्यम् उपाङ्गत्रिकम्–औदारिकवैक्रियाहारकाङ्गोपाङ्गरूपं सुस्वरम् , ' निय ' ति–नीचैर्गोत्रमिति ।

बिसयरिखओ य चरिमे, तेरसमणुय तसतिगजसाइज्जं ।
सुभगजिणुच्चपणिंदिय, सायासाएगयरछेओ ॥ ३३ ॥

इत्येतासां द्विसप्ततिप्रकृतीनामयोगिकेवलिद्विचरमसमये सत्तामाश्रित्य क्षयो भवति, तत पूर्वोक्तपञ्चाशीतेरिमा द्विसप्ततिप्रकृतयोऽपनीयन्ते, शेषास्त्रयोदश प्रकृतयोऽयोगिचरमसमये क्षीयन्ते । तथा चाह–' बिसयरिखओ ' त्ति–स्पष्टम् । च. पुनरर्थे, व्यवहितसवन्धश्च, चरमसमये पुनरयोगिकेवलिनस्त्रयोदशप्रकृतीनां क्षयो भवति, ' मणुयतसतिग ' त्ति—त्रिकशब्दस्य प्रत्येकं योगात् मनुजत्रिकं–मनुजगतिमनुजानुपूर्वीमनुजाऽऽयुर्लक्षणम् , त्रसत्रिकं त्रसवादरपर्याप्ताऽऽख्यम् । ' जसाइज्जति ' यश कीर्तिनाम आदेय–

नाम 'सुभगाजिणुच्च' त्ति—सुभगनाम जिननाम उच्चैर्गोत्रम् 'पणिंदिय' त्ति—पञ्चेन्द्रियजाति साताऽसातयोरेकतरं तस्य च्छेदः सत्तामाश्रित्य क्षय इति ।

अत्रैव मतान्तरमाह—

नर अणुपुव्वि विणा वा,वारस चरिमसमयम्मि जो खविउं।
पत्तो सिद्धिं देविं-दवंदियं नमह तं वीरं ॥ ३४ ॥

नरानुपूर्वी विना-मनुष्यानुपूर्वीमन्तरेण वाशब्दो मतान्तरसूचको, द्वादशप्रकृतिरयोगिकेवलिचरमसमये यः क्षपयित्वा सिद्धिं प्राप्तस्तं वीरं नमतेति संटङ्कः । अयमत्राभिप्रायः-मनुजाऽऽनुपूर्व्या अयोगिद्विचरसमये सत्ताव्यवच्छेदः उदयाभावात् । उदयवर्तीनां हि द्वादशानां स्तिवुकसंक्रमाभावात्स्वानुभवेन दलिकं चरमसमयेऽपि दृश्यते इति युक्तस्तासां चरमसमये क्षयः । आनुपूर्वीनाम्नां तु चतुर्णामपि क्षेत्रविपाकित्वाद्भवान्तरालगतावेवोदयस्तेन भवस्थस्य नास्ति तदुदयस्तदुदयाभावाच्चा—योगिद्विचरसमये मनुजानुपूर्व्या अपि सत्ताव्यवच्छेदः, तन्मते योगिकेवलिनो द्विचरमसमये त्रिसप्ततिप्रकृतीनां चरमसमये (च) द्वादशानां क्षय इति । ततो यो भगवान् मातापित्रोर्दिवंगतयोः संपूर्णनिजप्रतिज्ञो भक्तिसंभारभ्राजिष्णुरोचिष्णुलोकान्तिकत्रिदशसङ्घजन्मभिः पुष्पमाणवकैरिव "सव्वजगज्जीवहियं, भयवं तित्थं पवत्तेहि ।" इत्यादिवचोभिर्निवेदिते निष्क्रमणसमये संवत्सरं यावन्निरन्तरं स्थूरचामीकरधारासारैः प्रावृषेण्यधाराधर इवामुद्रदारिद्र्यसंतापप्रसरमवनीमण्डलस्योपशमय्य परस्परमहमहमिकया समायातसुरासुरनरोरगनायकनिकरैर्जय—जीवनन्द-क्षत्रियवरवृषभेत्यादिवचनरचनया स्तूयमानः संप्राप्य प्रातखण्डवनं प्रतिपन्ननिरवद्यचारित्रभारः साधिकां द्वादशसंवत्सरीं यावत्परीषहोपसर्गवर्गसंसर्गमुग्रमधिसह्य परमसितध्यानाकुण्ठकुठारधारया सकलघनघातिवनखण्डनमखण्डमाधाय निर्मलाविकलकेवलवलावलोकितनिखिललोकालोकः श्रीगौतमप्रभृतिमुनिपुङ्गवानां तत्त्वमुपदिश्य संसारसरितं सुखं—सुखेन समुत्तरणाय भव्यजनानां धर्मतीर्थमुपदर्श्यायोगिकेवलिचरमसमये त्रयोदशप्रकृतीर्द्वादशप्रकृतीर्वा क्षपयित्वा सिद्धिं परमानन्दरूपां प्राप्तस्तं नमत—प्रणमत वीरं-श्रीवर्द्धमानस्वामिनम् । किं विशिष्टं ? देवेन्द्रवन्दितम्-देवानां भवनपतिव्यन्तरज्योतिष्कवैमानिकानामिन्द्राः स्वामिनो देवेन्द्राः तैर्वन्दितः शशधरकरनिकरविमलतरगुणगणोत्कीर्त्तनेन स्तुतः, शिरसा च प्रणतः, 'वदुङ' स्तुत्यभिवादनयोरिति वचनात् । यद्वा-पदैकदेशे पदसमुदायोपचारात् देवेन्द्रेण-देवेन्द्रसूरिणा आचार्येण श्रीमज्जगच्चन्द्रसूरिचरणसरसीरुहचञ्चरीकेण वन्दितः सकलकर्मक्षयलक्षणमाधारणगुणसंकीर्तनेन स्तुतः कायेन च प्रणत इति, नमतेति प्रेरणायां पञ्चम्यन्तं, क्रियापदम्, तच्च श्रोतृणां कथञ्चिदनाभोगवशात प्रमादसंभवेऽप्याचार्येण नोद्विजितव्यम्, किं तु—मृदु-मधुरवचोभिः शिक्षानिवर्त्तनं श्रोतृणा मनासि प्रह्लाद्य यथा तेः सन्मार्गप्रवृत्तिरुपदेष्टव्येति ज्ञापनार्थम् । कर्म्म० २ कर्म० । (ध्रुवाध्रुवसत्ता 'संतकम्म' शब्देऽस्मिन्नेव भागे १३७ पृष्ठे दर्शिता ।) ('कम्म' शब्दे तृतीयभागे २६६ पृष्ठे बन्धोदयसत्तास्थानानां सम्वेधः उक्तः । तत्रैव सत्तास्थानानां कालमानम् ।) (गुणस्थानकेषु सत्तोदययोजना 'गुणट्ठाण' शब्दे तृतीयभागे ९२३ पृष्ठे उक्ता ।)

सर्वासां प्रकृतीनां सत्तामाश्रित्य भूयस्कारादिसत्तास्थानानि—

भूयप्पयरा इगिचउ-वीसं जन्नेइ केवली छउमं ।
अजओ य केवलित्तं, तित्थयरियराव अन्नोन्नं ॥ १६ ॥

व्याख्या-भूयस्काराः-भूयस्कारोदया एकविंशतिः, अल्पतरोदयाश्चतुर्विंशतिः,नोक्तसंख्यातो द्वयानामेकेऽप्यधिकाः,कुत इत्याह—यद्यस्मात्कारणान्न केवली छद्म-छद्मोदयान् याति, नाऽप्ययतोऽविरतोऽविरतसम्यग्दृष्टिः केवलित्वं केवलित्वनिबन्धनेषूदयस्थानेषु याति, नाप्यतीर्थकरतीर्थकरावन्योन्यमन्योन्यस्योदयेषु गच्छतः, तत उक्तसंख्याका एव भूयस्काराऽल्पतरोदयाः । इयमत्र भावना—न केवली छद्मस्थोदयेषु याति, न चाप्यतीर्थकरस्तीर्थकरोदयम् । उपलक्षणमेतत्, तेन नाप्ययोगी सयोगिकेवल्युदयम् । तत एकादशद्वादशत्रयोविंशतिचतुर्विंशतिचतुश्चत्वारिंशल्लक्षणानि पञ्च उदयस्थानानि भूयस्कारतया च प्राप्यन्ते,इत्येकविंशतिरेव भूयस्कारोदयाः । तथा अविरतसम्यग्दृष्टिर्मिथ्यादृष्टिर्वा न केवल्युदयस्थानमधिरोहति, ततश्चतुस्त्रिंशल्लक्षणोऽल्पतरोदयो न लभ्यते । आह-चतुस्त्रिंशदुदयः स्वभावस्थस्य तीर्थकृत केवलिनो भवति,ततो यदा तीर्थकरः केवलित्वमासादयति, तदा चतुश्चत्वारिंशदादीनामन्यतमस्मादुदयस्थानाच्चतुस्त्रिंशदुदयस्थाने संक्रामतीति भवति चतुस्त्रिंशदुदयोऽल्पतरः तदेतदसमीचीनं, सर्वथा वस्तुतत्त्वाऽपरिज्ञानात् । केवलित्वं हि नाम सर्वोऽपि समासादयति गुणस्थानकक्रमेण, नान्यथा; तत्र क्षीणमोहगुणस्थानके त्रयस्त्रिंशत्प्रकृत्यात्मकमेवोदयस्थानं, न शेषम् त्रयस्त्रिंशत्प्रकृतयश्चेमाः—मनुष्यगतिः पञ्चेन्द्रियजातिस्त्रसनाम बादरनाम पर्याप्तकनाम सुभगनाम आदेयं यशःकीर्त्तिस्तैजसकार्मणे स्थिरास्थिरे शुभाशुभे वर्णादिचतुष्टयमगुरुलघुनिर्माणमौदारिकद्विकं प्रत्येकनाम उपघातनाम अन्यतरविहायोगतिः पराघातनाम सुस्वरदुःस्वरयोरन्यतरत् उच्छ्वासनाम संस्थानषट्कान्यतममेकं संस्थानं वज्रर्षभनाराचसंहननं सातासतान्यतरवेदनीयं मनुष्यायुरुच्चैर्गोत्रमिति । ततः केवलज्ञानोत्पत्तौ सयोगिकेवलिगुणस्थनं प्राप्तः तीर्थकरनामकर्मणः उदयतश्चतुस्त्रिंशल्लक्षणमुदयस्थानं भूयस्कारतयैव प्राप्यते, नाल्पतरया । यद्यपि चैकोनषष्टिरूपमुदयस्थानं, तस्यापि नाल्पतरत्वसंभवः,ततोऽन्यस्य महत उदयस्थानस्याऽसंभवात् । यदि हि ततोऽपि महदन्यदुदयस्थानं भवेत्, ततस्तस्मात्तत्र संक्रान्तौ तदल्पतरं भवेत्, न च तदस्ति, तस्माच्चतुस्त्रिंशदेकोनषष्टिरूपौ द्वावुदयावल्पतरौ न भवतः, इति चतुर्विंशतिरल्पतराः । तदेवमुक्ताः सामान्यतः सर्वोत्तरप्रकृतीनामुदयस्थानेषु भूयस्कारादयः । संप्रति प्रत्येकं ज्ञानावरणीयाद्युत्तरप्रकृतीनां सामान्यतः सर्वोत्तरप्रकृतीनां च सत्तास्थानेषु वक्तव्याः । तत्र प्रत्येकं ज्ञानावरणीयाद्युत्तरप्रकृतीनां स्वयमेव ज्ञातव्याः, ते चैवं-ज्ञानावरणीयस्यान्तरायस्य च प्रत्येकं पञ्चपञ्चप्रकृत्यात्मकमेकं सत्तास्थानम् । अत्र द्वितीयं महदल्पं वा सत्तास्थानं न समस्तीति भूयस्काराऽल्पतरत्वसंभवः,नाप्यवक्तव्यसत्कर्मता ज्ञानावरणीयस्यान्तरा-

यस्य च प्रत्येकं सर्वस्वस्वोत्तरप्रकृतिसत्ताव्यवच्छेदे भूय' सत्तासंभवाऽभावात्। वेदनीयस्य द्वे सत्तास्थाने, तद्यथा—द्वे एका च। तत्र द्वे अयोग्यवस्थाया द्विचरमसमयं यावत् ,एका चरमसमये,अत्र न भूयस्कारसत्कर्मता,एकप्रकृत्यात्मकसत्तास्थानकाद् द्विप्रकृत्यात्मकसत्तास्थाने संक्रमाऽभावात्। एकमल्पतर,तच्चैकप्रकृत्यात्मकम्। एकं द्विप्रकृत्यात्मकमवस्थितम्, एकप्रकृत्यात्मकस्य समयमात्रावस्थायितया अवस्थितत्वाऽसंभवात्। गोत्रायुषोर्द्वे द्वे सत्तास्थानके, तद्यथा—द्वे एका च। तत्र यावत् द्वे अपि गोत्रप्रकृत्यौ सत्यौ तावद् द्वे, यदा पुनस्तेजोवायुभवगतेनोच्चैर्गोत्रमुद्वलितं भवति, नीचैर्गोत्रं वा अयोग्यवस्थाद्विचरमसमये क्षीणं, तदा एका। आयुषोऽपि यावन्नाद्यापि परभवायुर्बध्नाति तावदेका प्रकृति' सती, परभवायुर्बन्धे च द्वे। तत्र गोत्रस्यैकं द्विप्रकृत्यात्मकं भूयस्कारसत्कर्म, तत्र यदोच्चैर्गोत्रमुद्वल्य नीचैर्गोत्रैकसत्कर्मा सन् भूय उच्चैर्गोत्रमवबध्नाति तदा समवसेयम् एकमेकप्रकृत्यात्मकमल्पतर, तदपि चोच्चैर्गोत्रे उद्वलिते नीचैर्गोत्रे वा क्षीणे द्रष्टव्यं द्वे अवस्थितसत्कर्मणी द्वयोरपि सत्तास्थानयोश्चिरकालमवस्थानसंभवात्, नवरमेकप्रकृत्यात्मके सत्तास्थाने चिरकालमवस्थानमुद्वलितोच्चैर्गोत्रस्य नीचैर्गोत्ररूपे द्रष्टव्यम्।आयुषोऽप्येकं द्विप्रकृत्यात्मकं भूयस्कारसत्कर्म,तच्च परभवायुर्बन्धारम्भसमये,एकमेकप्रकृत्यात्मकमल्पतरसत्कर्म, तच्चानुभूयमानभवायुष' सत्ताव्यवच्छेदे, परभवायुष उदयसमये द्वे अवस्थितसत्कर्मणी, द्वयोरपि सत्तास्थानयोश्चिरकालमवस्थानात्। यत्त्ववक्तव्यं सत्कर्म, तदुभयत्रापि न विद्यते, उभयोरपि सर्वस्वस्वोत्तरप्रकृतिव्यवच्छेदे भूयः सत्ताया अयोगात्, दर्शनावरणीयस्य त्रीणि सत्कर्मस्थानानि, तद्यथा—नव षट् चतस्रः,तत्र क्षपकश्रेणिमधिकृत्याऽनिवृत्तिबादरसंपरायाद्धायाः संख्येयान् भागान् यावदुपशमश्रेणिमधिकृत्योपशान्तमोहगुणस्थानकं यावत् नव, क्षपकश्रेणावनिवृत्तिबादरसंपरायाद्धाया' संख्येयेभ्यो भागेभ्यः परत आरभ्य क्षीणमोहगुणस्थानकस्य द्विचरमसमयं यावत् षट्। चरमसमये चतस्र, अत्र द्वे अल्पतरे, तद्यथा—षट् चतस्र, द्वे अवस्थितसत्कर्मणी, तद्यथा—नव षट्, चतु प्रकृत्यात्मकं तृतीयं सत्तास्थानम् एकसामायिकमिति न तस्याऽवस्थितत्वसंभव' भूयस्कारमवक्तव्यं चात्र न समस्ति, द्वित्र्यादिप्रकृतिसत्ताव्यवच्छेदे सर्वस्वोत्तरप्रकृतिसत्ताव्यवच्छेदे वा भूय सत्तासंभवाऽभावात्। मोहनीयस्य पञ्चदश सत्तास्थानानि, तद्यथा—अष्टाविंशति सप्तविंशति' षड्विंशति' चतुर्विंशतिस्त्रयोविंशतिर्द्वाविंशतिरेकविंशतिस्त्रयोदश द्वादश एकादश पञ्च चतस्रस्तिस्रो द्वे एका च। तत्र सर्वप्रकृतिसमुदायोऽष्टाविंशति, तत सम्यक्त्वे उद्वलिते सप्तविंशति, सम्यग्मिथ्यात्वेऽप्युद्वलिते षड्विंशति'। अथवा-अनादिमिथ्यादृष्टे षड्विंशति अष्टाविंशतेरनन्तानुबन्धिचतुष्टये क्षीणे चतुर्विंशति, ततो मिथ्यात्वे क्षीणे त्रयोविंशति', तत' सम्यग्मिथ्यात्वे क्षीणे द्वाविंशति', सम्यक्त्वे क्षीणे एकविंशति', ततोऽष्टसु कषायेषु क्षीणेषु त्रयोदश, ततो नपुंसकवेदे क्षीणे द्वादश, ततोऽपि स्त्रीवेदे क्षीणे एकादश, तत' षट्सु नोकषायेषु क्षीणेषु पञ्च, तत पुरुषवेदे क्षीणे चतस्र', तत' संज्वलनक्रोधे क्षीणे तिस्र', ततः संज्वलनमाने क्षीणे द्वे, संज्वलनमायायामपि क्षीणायामेका। अत्र पञ्चदश अवस्थितसत्कर्माणि सर्वेष्वपि, सत्तास्थानेषु जघन्यतोऽप्यन्तर्मुहूर्त्तं यावदवस्थानसंभवात्, चतुर्दश अल्पतराणि, तानि चाष्टाविंशतिवर्जानि शेषाणि सर्वाण्यपि द्रष्टव्यानि; एकं भूयस्कारसत्कर्म,ततोऽष्टाविंशतिलक्षणमवसेयम्। तथाहि-चतुर्विंशतिसत्तास्थानात् षड्विंशतिसत्तास्थानाद्वा गच्छत्यष्टाविंशतिरूपं सत्तास्थानं, शेषाणि तु सत्तास्थानानि भूयस्कारतया न प्राप्यन्ते, अनन्तानुबन्धिसम्यक्त्वसम्यग्मिथ्यात्वव्यतिरेकेणान्यस्याः प्रकृतेः सत्ताव्यवच्छेदे भूयः सत्ताया अयोगात्, अवक्तव्यं तु न समस्ति, मोहनीयस्य सर्वोत्तरप्रकृतिव्यवच्छेदे पुन' सत्ताया असंभवात्। नाम्नो द्वादश सत्कर्मस्थानानि, तद्यथा-त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिरशीतिरेकोनाऽशीतिः षट्सप्ततिः पञ्चसप्तति' षडशीतिरष्टसप्ततिर्नव अष्टौ च। तत्र सर्वप्रकृतिसमुदायस्त्रिनवति', सैव तीर्थकररहिता द्विनवति', त्रिनवतिरेवाहारकाहारकाङ्गोपाङ्गाहारकबन्धनाहारकसंघातरूपाहारकचतुष्टयरहिता एकोननवतिः, द्विनवतिराहारकचतुष्टयहीना अष्टाशीति', इदमेकं प्रथमसंज्ञं सत्तास्थानचतुष्टयम्,अस्माच्च नामत्रयोदशके क्षयमुपगते क्रमेण द्वितीयं सत्तास्थानचतुष्टयं भवति, तद्यथा—अशीतिरेकोनाऽशीति' षट्सप्ततिः पञ्चसप्ततिश्च।इदं द्वितीयसंज्ञं सत्तास्थानचतुष्टयं, प्रथमसत्तास्थानचतुष्टयसत्काच्चतुर्थादष्टाशीतिलक्षणात्सत्तास्थानात् देवद्विके नरकद्विके वा उद्वलिते षडशीति',ततोऽपि देवद्विकसहिते नरकद्विकसहिते वा वैक्रियचतुष्टये उद्वलिते अशीति', ततोऽपि मनुष्यद्विके उद्वलिते अष्टसप्ततिः। एतानि च त्रीण्यपि सत्तास्थानानि चिरंतनग्रन्थेषु अध्रुवसंज्ञानि व्यवह्रियन्ते,नवप्रकृत्यात्मकं तीर्थकृतः,अतीर्थकृतस्त्वष्टप्रकृत्यात्मकमयोग्यवस्थाचरमसमये सुप्रतीतम् इहाशीतिलक्षण सत्तास्थानं द्विधा लभ्यते,तथापि संख्यातस्तुल्यमित्येकमेव गण्यते, ततो द्वादश सत्तास्थानानि भवन्ति। अत्र दश अवस्थितसत्कर्माणि, नवाष्टसत्तास्थानयोरेकसामयिकतयाऽवस्थितत्वाऽसंभवात्, दश अल्पतरस्थानानि,तद्यथा-प्रथमसत्तास्थानचतुष्टयाद् द्वितीयसत्तास्थानचतुष्टयगमनेन चत्वारि, द्वितीयसत्तास्थानचतुष्टयान्नवाष्टगमनेन द्वे, प्रथमसत्तास्थानचतुष्टयसत्कचतुर्थस्थानात्प्रथमा, ध्रुवसंज्ञसत्तास्थानगमने। ततोऽपि तृतीया ध्रुवसत्तास्थानगमने द्वे त्रिनवतिद्विनवतिभ्यामाहारकचतुष्टयोद्वलन एकोननवत्यष्टाशीतिसंक्रान्तौ द्वे, एवं सर्वसंख्यया दशाल्पतरसत्तास्थानानि भवन्ति, भूयस्कारसत्तास्थानानि षट् तद्यथा—भूयो मनुष्यद्विकबन्धनेनाष्टसप्ततेरशीतौ गमन, ततोऽपि नरकद्विके देवद्विके वा वैक्रियचतुष्टयसहिते भूयोऽपि बध्यमाने षडशीतौ, ततोऽपि देवद्विके नरकद्विके वा पुनरपि बध्यमानेऽष्टाशीतौ,ततोऽपि तीर्थकरनामबन्धे एकोननवत्यां गमनमिति चत्वारि, अष्टाशीतिरेवाहारकचतुष्टयबन्धनेन द्विनवतौ गमनं, ततोऽपि तीर्थकरनामबन्धे त्रिनवतौ, एव सर्वसंख्यया षट्,शेषात्सत्तास्थानादन्यस्मिन् प्रभूते सत्तास्थाने गमनसंभव, तेन षडेव भूयस्कारसत्कर्माणि, यत्त्ववक्तव्य सत्तास्थान तदिह न भवति,नाम्न सर्वोत्तरप्रकृतिसत्ताव्यव

च्छेदे भूय. सत्तोपादानाऽसंभवात् , तदेवमुक्ता. प्रत्येकं ज्ञानावरणीयाद्युत्तरप्रकृतीनां सत्तास्थानेषु भूयस्काराद्य' ॥ १६ ॥
संप्रति सामान्यत' सर्वोत्तरप्रकृतीना तानभिधित्सुः
प्रथमतः सत्तास्थानान्याह—

एक्कारबारसासीइ, इगि चउ पंचाहिया य चउणउई ।
एत्तो चउदहियसयं, पणवीसाओ य छायालं ॥२०॥
बत्तीसं नऽत्थि सयं, एवं अडयाल संत ठाणाणि ।
जोगिअघाइचउक्के, भण खिविउं घाइसंताणि ॥२१॥

सामान्यत. सर्वोत्तरप्रतीना सत्तास्थानानि अष्टचत्वारिंशत् , तद्यथा—एकादश, द्वादश, अशीति , 'इगि चउ पंचाहिया य' त्ति-अत्राऽशीति संबध्यते। ततोऽयमर्थ.—अशीतिरनन्तरमेकचतु.पञ्चाधिका अशीतिर्वक्तव्या, तद्यथा—एकाशीतिश्चतुरशीतिः, पञ्चाशीति', ततश्चतुर्नवति. 'एत्तो' इत्यादि अतश्चतुर्नवतेरूर्ध्वमेकोत्तरया वृद्धया निरन्तरं यावत्सत्तास्थानानि वाच्यानि, यावच्चतुर्दशाधिकं शतम् , तद्यथा—पञ्चनवति., षण्णवति , सप्तनवतिः, अष्टानवतिः, नवतिः, शतम् , एकोत्तरं शतं, द्व्युत्तरं शतं, त्र्युत्तरं शत, चतुरुत्तरं शतं, पञ्चोत्तरं शतं, षडुत्तरं शतं, सप्तोत्तरं शतम् , अष्टोत्तरं शतं, नवोत्तरं शत, दशोत्तरं शतम् , एकादशोत्तरं शतं, द्वादशोत्तरं शतं, त्रयोदशोत्तरं शतं,चतुर्दशोत्तरं शतम् ; अत ऊर्ध्वं पञ्चविंशाच्छतादारभ्य क्रमेणैकोत्तरया वृद्धया तावदभिधातव्यानि सत्तास्थानानि, यावत् षट्चत्वारिंशतं शतं, नवरं द्वात्रिंशं शतं नाऽस्ति; द्वात्रिंशशताऽऽत्मकसत्तास्थानवर्जितान्यभिधातव्यानीत्यर्थ , तद्यथा—पञ्चविंशं शतं, षड्विंशं शतं, सप्तविंशं शतम् , अष्टाविंशं शतम् , एकोनत्रिंशं शतं, त्रिंशं शतम् , एकत्रिंशं शतं, त्रयस्त्रिंशं शतं, चतुस्त्रिंशं शतं, पञ्चत्रिंशं शतं, षट्त्रिंशं शतं, सप्तत्रिंशं शतम् , अष्टात्रिंशं शतम् , एकोनचत्वारिंशं शतं,चत्वारिंशं शतम् ,एकचत्वारिंशं शतं, द्वाचत्वारिंशं शतं, त्रिचत्वारिंशं शतं, चतुश्चत्वारिंशं शतं, पञ्चचत्वारिंशं शतं, षट्चत्वारिंशं शतम् एवं सर्वसंख्यया अष्टाचत्वारिंशत्सत्तास्थानानि भवन्ति,तद्यथा—(११। १२। ८०। ८१। ८४। ८५। ९४। ९५। ९६। ९७। ९८। ९९।१००। १०१। १०२। १०३। १०४। १०५। १०६। १०७। १०८। १०९। ११०। १११। ११२। ११३। ११४। १२५। १२६। १२७। १२८। १२९। १३०। १३१। १३३। १३४। १३५। १३६। १३७। १३८। १३९। १४०। १४१। १४२। १४३। १४४। १४५। १४६।) अमीषा च सत्तास्थानाना यथापरिज्ञानमुपसंपद्यते तथोपदेशमाह—योगिना सयोगिकेवलिनां यदघातिप्रकृतिसत्कं सत्तास्थानचतुष्टयमशीत्यादिलक्षणं, तस्मिन् घातिकर्मसत्कानि सत्तास्थानानि क्रमेण क्षिप्त्वा अष्टचत्वारिंशदपि सत्तास्थानानि शिष्येभ्यो भण-प्रतिपादय। एतदत्र भाव्यते-अतीर्थकरकेवलिनोऽयोग्यवस्थाचरमसमये एकादशप्रकृत्यात्मकं सत्तास्थानं, तस्मिन्नेव समये तीर्थकृतो द्वादशप्रकृत्यात्मकं;ताश्च द्वादशप्रकृतय इमा', तद्यथा-मनुष्यायुर्मनुष्यगति. पञ्चेन्द्रियजातिस्त्रसनाम बादरनाम पर्याप्तनाम सुभगमादेयं यश कीर्त्तिस्तीर्थकरनाम अन्यतरवेदनीयमुच्चैर्गोत्रमिति। एता एव द्वादश प्रकृतयस्तीर्थकरनामरहिता एकादश सयोगिकेवल्यवस्थायामशीत्यादीनि चत्वारि सत्तास्थानानि, तद्यथा—अशीति., एकाशीति', चतुरशीति' पञ्चाऽशीति' (८०। ८१। ८४। ८५।) तत्राशीतिरियं-देवद्विकमौदारिकचतुष्टयं, तैजसकार्मणशरीरे , तैजसकार्मणबन्धने, तैजसकार्मणसंघाते, संस्थानषट्कं, संहननषट्कं, वर्णादिविंशति ,अगुरुलघु,पराघातम् ,उपघातनाम,त्रसनाम, विहायोगतिद्विकं, स्थिराऽस्थिरे, शुभाऽशुभे, सुस्वरदुःस्वरे, दुर्भगम् , अयश.कीर्त्ति', अनादेयं, निर्माणं, प्रत्येकम् , अपर्याप्तं, मनुष्यानुपूर्वी, नीचैर्गोत्रम् , अन्यतरवेदनीयमित्येकोनसप्तति., एकादश च प्रागुक्ता , तत. सर्वसंख्यया अशीतिर्भवति। सैव तीर्थकरनामसहिता एकाशीतिः, अशीतिरेव आहारकचतुष्टयसहिता चतुरशीति', सैव तीर्थकरनामसमन्विता पञ्चाशीति.। एतान्येवाऽशीत्यादीनि चत्वारि सत्तास्थानानि ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकसहितानि यथाक्रमं चतुर्नवत्यादीनि चत्वारि सत्तास्थानानि भवन्ति, तद्यथा-चतुर्नवति',पञ्चनवति.,अष्टानवति.,नवनवति (९४।९५।९८।९९)एतानि च क्षीणकषायचरमसमये नानाजीवानधिकृत्य प्राप्यन्ते, एतान्येव चतुर्नवत्यादीनि चत्वारि सत्तास्थानानि निद्राप्रचलासहितानि यथाक्रम षण्णवत्यादीनि चत्वारि सत्तास्थानानि भवन्ति, तद्यथा—षण्णवतिः, सप्तनवतिः,शतम् ,एकोत्तरं शतम् ( ९६। ९७। १००। १०१)एतानि क्षीणकषायगुणस्थानके द्विचरमसमयं यावत् नानाजीवापेक्षया प्राप्यन्ते; एतेष्वेव संज्वलनलोभप्रक्षेपेऽमूनि चत्वारि सत्तास्थानानि भवन्ति, तद्यथा—सप्तनवति., अष्टानवति., एकोत्तरं शतं, द्व्युत्तरं शतम् (९७। ९८। १०१। १०२।)एतानि सूक्ष्मसंपराये लभ्यन्ते, एतेष्वेव संज्वलनमायाप्रक्षेपादमूनि चत्वारि सत्तास्थानानि भवन्ति, तद्यथा—अष्टानवतिः, नवनवतिः, द्व्युत्तरं शतं, त्र्युत्तरं शतम् ( ९८। ९९। १०२। १०३।) एतान्यनिवृत्तिबादरसंपरायगुणस्थानकपर्यवसाने लभ्यन्ते,ततस्तस्मिन्नेव गुणस्थानके तेष्वेव चतुर्षु सत्तास्थानेषु संज्वलनमानप्रक्षेपादेतानि चत्वारि सत्तास्थानानि भवन्ति तद्यथा-नवनवति ,शतं,त्र्युत्तरं शतं,चतुरुत्तरं शतम् ,(९९। १००। १०३।१०४) तत एतेष्वेव चतुर्षु सत्तास्थानेषु तस्मिन्नेव गुणस्थानके संज्वलनक्रोधप्रक्षेपादमूनि चत्वारि सत्तास्थानानि भवन्ति, तद्यथा-शतम् , एकोत्तरं शतं, चतुरुत्तरं शतं, पञ्चोत्तरं शतम् , ( १००। १०१। १०४। १०५।) ततस्तस्मिन्नेव गुणस्थानके पुरुषवेदप्रक्षेपादमूनि चत्वारि सत्तास्थानानि, तद्यथा-एकोत्तरं शतं, द्व्युत्तरं शतं, पञ्चोत्तरं शतं , षडुत्तरं शतम् , ( १०१। १०२। १०५। १०६।) ततो हास्यादिषट्कप्रक्षेपे तस्मिन्नेव गुणस्थानके अमूनि चत्वारि गुणस्थानानि भवन्ति, तद्यथा-सप्तोत्तर शतम् , अष्टोत्तरं शतम् ,एकादशोत्तरं शतं, द्वादशोत्तर शतम् ,(१०७। १०८। १११। ११२) ततस्तस्मिन्नेव गुणस्थानके स्त्रीवेदप्रक्षेपादमूनि चत्वारि सत्तास्थानानि, तद्यथा-अष्टोत्तरं शतं, नवोत्तरं शतं, त्रयोदशोत्तर शतं, त्रयोदशोत्तरं शतम् , ( १०८। १०९। ११२। ११३) ततो नपुंसकवेदे तस्मिन्नेव गुणस्थानके प्रक्षिप्तेऽमूनि चत्वारि सत्तास्थानानि, तद्यथा-नवोत्तर शतं, दशोत्तरं शत, त्रयोदशोत्तरं शत, चतुर्दशोत्तरं शतम् , ( १०९। ११०। ११३। ११४।) तत एतेष्वेव चतुर्षु सत्तास्थानेषु तस्मिन्नेव गुणस्थानके नामत्रयोदशकस्त्यानर्द्धित्रिकरूपप्रकृतिषोडशकप्रक्षेपादिमानि चत्वारि सत्तास्थानानि भवन्ति,

तद्यथा-पञ्चविंशत्युत्तरं शतं, षड्विंशत्युत्तर शतम्, एकोनत्रिंशत शतं, त्रिंश शतम्, ( १२५ । १२६ । १२६ । १३० । ) ततोऽपि तस्मिन्नेव गुणस्थानके अप्रत्याख्यानावरणरूपकषायाष्टकप्रक्षेपेऽमूनि चत्वारि सत्तास्थानानि, तद्यथा—त्रयस्त्रिंशं शतं, चतुस्त्रिंशं शतं, सप्तत्रिंशं शतम्, अष्टात्रिंशं शतम्, (१३३ । १३४ । १३७ । १३८।) तथा यानि पूर्ववत्क्षीणमोहसत्कानि षण्णवतिः सप्तनवतिः शतमेकोत्तरं शतमिति चत्वारि सत्तास्थानानि प्रतिपादितानि, तेषु मोहनीयद्वाविंशतिस्त्यानर्द्धित्रिकनामत्रयोदशकप्रक्षेपादिमानि चत्वारि सत्तास्थानानि भवन्ति, तद्यथा-चतुस्त्रिंशं शतं, पञ्चत्रिंशं शतम्, अष्टात्रिंशं शतम्, एकोनचत्वारिंशं शतम्, ( १३४ । १३५ । १३८ । १३६ ) तेष्वेव क्षीणकषायसत्केषु षण्णवत्यादिषु चतुर्षु सत्तास्थानेषु मोहनीयत्रयोविंशतिनामत्रयोदशकस्त्यानर्द्धित्रिकप्रक्षेपेऽमूनि चत्वारि सत्तास्थानानि, तद्यथा-पञ्चत्रिंशं शतं, षट्त्रिंश शतम्, एकोनचत्वारिंशं शतं,चत्वारिंशं शतम् ( १३५ । १३६ । १३६ । १४० । ) तेष्वेव षण्णवत्यादिषु मोहनीयचतुर्विंशतिस्त्यानर्द्धित्रिकनामत्रयोदशकयोगादिमानि चत्वारि सत्तास्थानानि, तद्यथा-षट्त्रिंशं शतं, सप्तत्रिंशं शतं, चत्वारिंशं शतम्, एकचत्वारिंशम् ,शतम्, (१३६ ।१३७। १४० । १४१ ) तेष्वेव षण्णवत्यादिषु मोहनीयषड्विंशतिस्त्यानर्द्धित्रिकनामत्रयोदशकप्रक्षेपादेतानि चत्वारि सत्तास्थानानि, तद्यथा-अष्टात्रिंश शतम्, एकोनचत्वारिंशं शत, द्विचत्वारिंशं शतं, त्रिचत्वारिंशं शतम्, (१३८। १३६। १४२। १४३) तेष्वेव षण्णवत्यादिषु मोहनीयसप्तविंशतिनामत्रयोदशकस्त्यानर्द्धित्रिकप्रक्षेपेऽमूनि चत्वारि सत्तास्थानानि, तद्यथा--एकोनचत्वारिंशं शतं, चत्वारिंशं शतं, त्रिचत्वारिंश शतं, चतुश्चत्वारिंश शतम्, ( १३६ । १४० । १४३ । १४४ ) तेष्वेव षण्णवत्यादिषु मोहनीयाष्टाविंशतिनामत्रयोदशकस्त्यानर्द्धित्रिकप्रक्षेपेऽमूनि चत्वारि सत्तास्थानानि, तद्यथा-चत्वारिंश शतम्, एकचत्वारिंशं शतं, चतुश्चत्वारिंश शतं, पञ्चचत्वारिंशं शतम्, ( १४० । १४१ । १४४ । १४५ ) अमूनि च मोहनीयद्वाविंशत्यादिप्रक्षेपसंभवीनि चतुस्त्रिंशशतादीनि, पञ्चचत्वारिंशशतपर्यन्तानि सत्तास्थानान्यविरतसम्यग्दृष्ट्यादीनामप्रमत्तान्तानामवसेयानि,यच्चानन्तरमुक्तं पञ्चचत्वारिंशशतलक्षणं सत्तास्थानं, तदेव परभवायुर्बन्धे षट्चत्वारिंशशतात्मकं सत्तास्थानं भवति, तथा यदा जन्तोस्तेजोवायुभवे वर्त्तमानस्य नाम्नोऽष्टसप्ततिरेकमेव च नीचैर्गोत्रलक्षणं गोत्रं सत्, तदा तस्य ज्ञानावरणपञ्चकं दर्शनावरणनवकं वेदनीयद्विकं मोहनीयषड्विंशतिरन्तरायपञ्चकं तिर्यगायुर्नाम्नोऽष्टसप्ततिर्नीचैर्गोत्रमिति सप्तविंशं शतं सत्तास्थानं तदेव परभवतिर्यगायुर्बन्धे अष्टाविंशत्यधिकं शतं, तथा वनस्पतिकायिकेषु यदा स्थितिक्षयादेवद्विकनरकद्विकवैक्रियचतुष्टयरूपासु अष्टासु प्रकृतिषु क्षीणासु नाम्नोऽशीतिप्रकृतयः सत्ताया लभ्यन्ते, तदा नाम्नोऽशीतिर्द्वे वेदनीये, द्वे गोत्रे, अनुभूयमानं तिर्यगायुर्ज्ञानावरणपञ्चक, दर्शनावरणनवकं, मोहनीयषट्त्रिंशतिः, अन्तरायपञ्चक, इति त्रिंशदुत्तरशतात्मकं सत्तास्थानं, तदेव परभवायुर्बन्धे एकत्रिंशशतात्मकं सत्तास्थानम्-तदेव सत्तास्थानेषु परिभाव्यमानेषु द्वात्रिंशदुत्तरशतात्मक सत्तास्थान नाऽवाप्यते, इति सूत्रकृता तद्वर्जनमकारि । इह यद्यपि सप्तनवत्यादीनि सत्तास्थानान्युक्तप्रकारेण तत्तत्प्रकृतिप्रक्षेपादन्यथानेकधा प्राप्यन्ते, तथापि संख्यातस्तानि तुल्यानीत्येकान्येव विवक्ष्यन्ते, ततोऽष्टचत्वारिंशदेव सत्तास्थानानि, नाधिकानि । अत्राऽवक्तव्यसत्कर्म न विद्यते, सर्वप्रकृतिसत्ताव्यवच्छेदे भूयः सत्तासंभवाऽभावात्, अवस्थितानि चतुश्चत्वारिंशत्, एकादशद्वादशचतुर्नवतिपञ्चनवतिरूपाणां चतुर्णां सत्तास्थानानामेकसामायिकतया अवस्थितत्वाऽयोगात्, सप्तचत्वारिंशदल्पतराणि, सप्तदश भूयस्काराणि, यतस्तानि सप्तविंशतिशतादारभ्य परत एव प्राप्यन्ते, नार्वाक्, परतोऽपि यत् त्रयस्त्रिंशशतात्मकं सत्तास्थानं तदपि भूयस्कारतया न लभ्यते, कस्मादिति चेदुच्यते—इह सप्तविंशतिशतादर्वाक् यानि स्थानानि, यच्च त्रयस्त्रिंशदुत्तरशतात्मकं तानि क्षपकश्रेणावेव प्राप्यन्ते, न च क्षपकश्रेणेः प्रतिपातः, ततस्तेषां स्थानानां भूयस्कारत्वेनाऽसंप्राप्तेः सप्तदशैव भूयस्काराणि ॥ २० ॥ २१ ॥ प० सं० ५ द्वार १ प्रक० ।

सत्तागइय-सप्तागतिक-पुं० । सप्तभ्य एव-अण्डजयोनिभ्यः आगतिः-उत्पत्तिर्येषां ते सप्तागतयः । सप्तस्थानेषु उद्वर्त्तमानेषु, स्था० ७ ठा० ३ उ० ।

सत्ताठाण-सत्तास्थान-न० । सत्ताप्रकारे, कर्म० ६ कर्म० । ( बन्धोदयसत्ता आश्रित्य भङ्गाः ' कम्म ' शब्दे तृतीयभागे ३०६ पृष्ठे उदाहृता. । )

सत्ताणंदपर-सत्त्वानन्दपर-पुं० । असंप्रज्ञातसमाधौ, द्वा० २० द्वा० ।

सत्ताणवइ-सप्तनवति-स्त्री० । सप्ताधिकायां नवतिसंख्यायाम्, स० ६६ सम० ।

सत्ताणुग्गह-सत्त्वानुग्रह-पुं० जीवदयायाम्, सत्त्वानुग्रहस्य परम्परया मोक्षावाप्तिनिबन्धनत्वात् । उक्तं च-' सर्वज्ञस्योपदेशेन, यः सत्त्वानामनुग्रहम् । करोति योधयाद्यानां, स प्राप्नोत्यचिरात् शिवम् ॥ १ ॥ " ज्यो० १ पाहु० ।

सत्तामित्त-सत्तामात्र-न० । सद्भावमात्रे, पञ्चा० ४ विव० ।

सत्तावण्णा-सप्तपञ्चाशत्-स्त्री० । सप्ताधिकायां पञ्चाशत्संख्यायाम्, स० ५७ सम० ।

सत्तावीसा-सप्तविंशति-स्त्री० । " दीर्घह्रस्वौ मिथोवृत्तौ" ॥८। १ । ४ ॥ इति मध्याकारस्य दीर्घः । सप्ताधिकविंशतिसंख्यायाम्, प्रा० । जं० ।

सत्तासुय-सप्तासुक-पुं० उत्तरपूर्वस्या शुद्धविदिग्वाते, आ० म० १ अ० । आ० चू० ।

सत्ति-शक्ति-स्त्री० । स्ववीर्योल्लासे, द्वा० २० द्वा० । सामर्थ्ये, आ० म० १ अ० । आ० चू० । " समत्थं नि वा सत्ति त्ति वा एगट्ठा " आ० चू० १ अ० " सत्ति त्ति सामत्थं ति जे जोगस्स हवंति पज्जाया " । पं० सं० ५ द्वार । शक्तिर्द्विधा-धृति-संहननभेदात् । वृ० १ उ० २ प्रक० । धर्मे, स्था० ६ ठा० ३ उ० ।

गुणपर्याययोः शक्ति-मात्रमोघोद्भवाऽऽदिमा ।
आसन्नकार्ययोग्यत्वा—च्छक्तिः समुचिता परा ॥ ६ ॥

सर्वेषां द्रव्याणां निजनिजगुणपर्याययोः शक्तिमात्रम् ओघोद्भवा-ओघशक्तिः, आदिमा-प्रथमभेदरूपा कथ्यते। पुनः आसन्नं-निकटं शीघ्रभावि वा यत्कार्यं तस्य योग्यत्वात् व्यवहारयोग्यत्वात् समुचिता शक्तिरपरा द्वितीया समुचितशक्तिरुच्यत इति। (एतद्भेदप्रदर्शकदृष्टान्तः 'ओसत्ति' शब्दे तृतीयभागे १२६ पृष्ठे गतः।)

अथ द्रव्यशक्तिं व्यवहारनिश्चयनयाभ्यां दर्शयन्नाह—

**कार्यभेदाच्छक्तिभेदो, व्यवहारेण दृश्यते।**

**युगनिश्चयनयादेक-मनेकैः कार्यकारणैः ॥६॥**

एवम्-पूर्वोक्तप्रकारेण एकैकस्य कार्यस्य ओघशक्तिसमुचितशक्तिरूपा शक्तयोऽनेकश एकद्रव्यस्य प्राप्यन्ते,ताः पुनर्व्यवहारनयेन व्यवहृताः सत्यः कार्यकारणभेदं सूचयन्ति। कथं व्यवहारनयो हि कार्यकारणभेदमेवमनुते निश्चयनयो हि अनेककार्यकारणैर्युगपि द्रव्यमेकमेव स्वशक्तिस्वभावमस्ति इत्यवधारयति। कदापि इत्थं नावधार्यते तदा स्वभावभेदात् द्रव्यभेदोऽपि संपद्यते, तस्मात्तत्तद्देशकालादिकापेक्षया एकस्यानेककार्यकारणस्वभावमङ्गीकुर्वता न कोऽपि दोषपोषः, कारणान्तरापेक्षाऽपि स्वभावान्तर्भूता एवास्ति, तेन तस्यापि वैफल्यं न जायते। तथा शुद्धनिश्चयमताङ्गीकारे तु कार्यकारणकल्पनैव मिथ्या। यतः—'आदावन्ते च यन्नास्ति वर्त्तमानेऽपि तत्तथे'ति वचनात्। कार्यकारणकल्पनाविरहितं शुद्धमविकलमचलितस्वरूपं द्रव्यमस्तीति ज्ञेयम्। द्रव्या० २ अध्या०। शब्दस्यार्थप्रतिपादनसामर्थ्ये,रत्ना०४परि०।सम्म०। त्रिशूलरूपे (प्रश्न० ३ आश्र० द्वार।) प्रहरणविशेषे,संथा०। जं०। भ०। प्रश्न०। औ०। आचा०। त्रिशूलविशेषे, स०। आचा०। सूत्र०। शक्त्यादिषु प्रहरणेषु, सूत्र० १ श्रु० ५ अ० १ उ०। आत्मनः शक्तिरूपं कर्म्मेति केचित्— ये पुनरपरे प्राहुरात्मशक्तिरूपं कर्म्मेति ते एवं प्रष्टव्याः, सा शक्तिरात्मनः स्वाभाविकी उतान्यसंपर्कसमुद्भवा?। तत्र यद्याद्यः पक्षस्तदाभावप्रसङ्गः आत्मस्वरूपस्यैव तस्याः शक्तेरपनेतुमशक्यत्वात्। अन्यथा निरुपाधिकात्मानुपपत्तेरात्माख्यवस्तुधर्म्मस्वभावोक्तदोषानुषङ्गस्तदवस्थ एव। अथ द्वितीयः पक्षस्तथा च सति यस्योपाधेः संपर्कवशादात्मशक्तिरात्मनो नारकादिभवभ्रमणरूपा समुपादि तदेवास्माकं पौद्गलिकं कर्म्मेति न काचित् क्षतिः। आ० म०१अ०।

सत्तिकुमार-शक्तिकुमार-पुं०।सातवाहननृपपुत्रे,ती०३३कल्प।

सत्तिक्कय-सप्तैकक-पुं०। आचाराङ्गस्य द्वितीयश्रुतस्कन्धस्य द्वितीयचूडारूपेऽध्ययनसप्तके,"सत्त सत्तिक्कयं" स्था० ७ ठा० ३ उ०। आव०। आचा०। महापरिज्ञाऽध्ययने सप्तोद्देशकास्तेभ्य प्रत्येकं सप्तैकका निर्व्यूढाः। आचा० २ श्रु० १ चू०१ अ०१ उ०। प्रा०। तथा-'सत्तिक्कय त्ति-सप्त सप्तैककाः अनुद्देशकतयैकसरत्वेनैकका अध्ययनविशेषा आचाराङ्गस्य द्वितीयश्रुतस्कन्धे द्वितीयचूडारूपास्ते च समुदायतः सप्तेति कृत्वा सप्तैकका अभिधीयन्ते। तेषामेकोऽपि सप्तैकक इति व्यपदिश्यते, तथैव नामत्वात् एवं च ते सप्तेति। तत्र—प्रथमः स्थानसप्तैककः, द्वितीयो नैषेधिकीसप्तैककः, नैषेधिकी-स्वाध्यायभूमिः। तृतीय उच्चारप्रश्रवण(स्र)विधिसप्तैकक,चतुर्थः शब्दसप्तैककः, पञ्चमो रूपसप्तैककः,षष्ठः परक्रियासप्तैककः, सप्तमोऽन्योऽन्यक्रियासप्तैकक इति। पा०। पिण्डैषणाध्ययनादारभ्य अवग्रहप्रतिमाऽध्ययनं यावदेतानि सप्ताध्ययनानि। प्रथमा चूडा सप्तसप्तैकका, द्वितीया भावना, तृतीया विमुक्तिः, चतुर्थी आचारविकल्पः, निशीथः सा पञ्चमीचूडेति। आचा० २ श्रु० १ चू० १ अ० १ उ०।

सत्तितो-शक्तितस्-अव्य०। शक्तिमाश्रित्य यथाशक्तीत्यर्थे, पञ्चा० ८ विव०।

सत्तिम-शक्तिमत्-त्रि०। सामर्थ्ययुक्ते, स्था० ६ ठा० ३ उ०। समर्थे, पञ्चविधकृततुलने, स्था० ८ ठा० ३ उ०।

सत्तिय-सात्त्विक-पुं०। सत्त्वप्रधाने, सात्त्विको नाम यो महत्यप्युदये गर्वं नोपयाति, न च गरिष्ठेऽपि समापतिते व्यसने विषादम्। व्य० ३ उ०। "सुसमत्था व समत्था, कीरंति अप्पसत्तिया पुरिसा। दीसंति सूरवादी,णारोवसगाण ते सूरा॥१॥" सूत्र० १ श्रु० ४ अ० १ उ०।

सत्तिवएण-सप्तपर्ण-पुं०। सप्तच्छदे वृक्षविशेषे, जी० ३ प्रति० ४ अधि०। स्था०।

सत्तु-सक्तु-पुं०। भ्रष्टयवक्षोदे,वृ० १ उ० २ प्रक०। आव०।

शत्रु-पुं०। अगोत्रजे वैरिणि,औ०। "शत्रोरपि गुणा ग्राह्या, दोषास्त्यज्या गुरोरपी" ति। उत्त० १ अ०। पा०। ज०।

सत्तुंजय-सत्रुञ्जय-पुं०। विमलगिरौ, ही०। तथा श्रीशत्रुञ्जयस्योपरि पञ्चपाण्डवैः समं साधूनां विंशतिकोट्यः सिद्धा इति, श्रीशत्रुञ्जयमाहात्म्यादौ प्रोक्तमस्ति, सा कोटिर्विंशतिरूपा शतलक्षरूपा वेति, अत्र शतलक्षरूपा कोटिरवसीयते न तु विंशतिरूपेति बोध्यम्॥ ही० ३ प्रका०।

श्रीशत्रुंजयतीर्थस्य माहात्म्यम्—

"देवः श्रीपुण्डरीकाख्य—भूभृच्छिखरशेखरम्।
अलंकरिष्णुः प्रासादं, श्रीनाभेयः श्रियेऽस्तु वः॥१॥
श्रीशत्रुंजयतीर्थस्य, माहात्म्यमतिमुक्तकम्।
केवली यदुवाच प्राक्, नारदस्य ऋषेः पुरः॥२॥
तदहं लेशतो वक्ष्ये, स्वपरस्मृतिहेतवे।
श्रोतुमर्हन्ति भव्यास्त—त्पापनाशनकाम्यया॥३॥

युगलम्—

शत्रुञ्जये पुण्डरीक—स्तपोभृत्पञ्चकोटियुक्।
चैत्र्यां सिद्धस्ततः सोऽपि, पुण्डरीक इति स्मृतः॥४॥
सिद्धक्षेत्रं तीर्थराजो, मरुदेवो भगीरथः।
विमलाद्रिर्बाहुबली, सहस्रकमलस्तथा॥५॥
तालध्वजः कदम्बश्च, शतपत्रो नगाधिराट्।
अष्टोत्तरशतं कूट, सहस्रं यन्त्रकाण्यभि॥६॥
ढङ्को लोहित्यः कपर्दि—निवासः सिद्धिशेखरः।
शत्रुञ्जयस्तथा मुक्ति—निलयः सिद्धिपर्वतः॥७॥
पुण्डरीकश्चेति नाम—धेयानामेकविंशतिः।
गीयते तस्य तीर्थस्य, कृतासुरनरार्थिभिः॥८॥

कलापकम्—

ढङ्कादयः पञ्च कूटा—स्तत्र सन्ति सदैवताः।
रत्नपीतरसखानि—विविधौषधिराजिताः॥९॥

ङ्कः कदम्बो लोहित्य-स्तालध्वजकपर्दिनौ।
पञ्चेति ते कालवशात्, मिथ्यादृग्भिरुदीरिताः ॥ १० ॥
अशीतियोजनान्याद्ये, द्वितीयके तु सप्ततिम्।
षष्टिं तृतीये तुर्ये वा-ऽरके पञ्चाशतं तथा ॥ ११
पञ्चमे द्वादशैतानि, सप्तरत्नी तथान्तिमे।
इत्याद्यैरवसर्पिण्यां, विस्तरस्तस्य कीर्त्तितः ॥ १२ ॥
युग्मम्—
पञ्चाशतं योजनानि, मूलेऽस्य दश चोपरि।
विस्तार उच्छ्रयस्त्वष्टौ, युगादीशे तपत्यभूत् ॥ १३ ॥
अस्मिन् वृषभसेनाद्या, असंख्याः समवासरन्।
तीर्थाधिराजा' सिद्धाश्चा-ऽतीते काले महर्षयः ॥ १४ ॥
श्रीपद्मनाभप्रमुखा, भाविनो जिननायका।
अस्मिन् समवसर्त्तारः, कीर्त्तिप्रावितविष्टपाः ॥ १५ ॥
श्रीनाभेयादिवीरान्ताः, श्रीनेमीश्वरवर्जिताः।
त्रयोविंशतिरर्हन्त., समवासार्षुरेव च ॥ १६ ॥
हेमरूपा द्विजा द्वार्विं—शत्यर्हन्प्रतिमान्वितम्।
अङ्करत्नजनाभेय-प्रतिमालंकृतं महत् ॥ १७ ॥
द्वाविंशतिसुलसदेव, कुलिकायुक्तमुख्यकैः।
योजनं प्रमितं रत्न-मयमुत्पन्नकेवले ॥ १८ ॥
आदीश्वरे श्रीभरत-चक्री चैत्यमचीकरत्।
एतस्यामवसर्पिण्यां, पूर्वमत्र पवित्रधीः ॥ १९ ॥
द्वाविंशतिजिनेन्द्राणां, यथास्वं पादुकायुताः।
नान्यत्रायतनश्रेणी, लेप्यनिर्मितबिम्बयुक् ॥ २० ॥
अकारि चात्र समव—सरणेन सहोच्चकैः।
प्रासादो मरुदेवायाः, श्रीबाहुबलिभूभुजः ॥ २१ ॥
प्रथमोऽत्रावसर्पिण्या, गणभृत् प्रथमार्हतः।
प्रथमं प्रथमस्तत्र, सिद्ध. प्रथमचक्रिणः ॥ २२ ॥
अस्मिन्नमिविनम्याख्यौ, खेचरेन्द्रमहाऋषी।
कोटिद्वयैर्महर्षीणा, सहितौ सिद्धिमीयतु. ॥ २३ ॥
संप्रापुरत्र द्रविड-वालिखिल्यादयो नृपा'।
कोटिभिर्दशभियुक्ताः साधूनां परमं पदम् ॥ २४ ॥
जयरामादिराजर्षि—कोटित्रयमिहागमत्।
नारदादिमुनीना च, लक्षैको नवतिः शिवम् ॥ २५ ॥
प्रद्युम्नशाम्बप्रमुखा, कुमाराश्चात्र निर्वृतिम्।
प्रापवन्त. सार्द्धाष्ट-कोटिसाधुसमन्विताः ॥ २६ ॥
मनुप्रमितलक्षादि—संख्याभि. श्रेणिभिस्तथा।
असंख्याताभि. सर्वार्थ, सिद्धान्तरितमासदत् ॥ २७ ॥
पञ्चाशत्कोटिलक्षादीन्, यावन्नाभेयवंशजा.।
अत्रादित्ययशोमुख्या', सगरान्ताः शिवं नृपाः ॥ २८ ॥
भरतस्यापत्यापुत्र-श्रीशैलकशुकादय।
अत्र सिद्धा असंख्यात—कोटाकोटिभिरायता' ॥ २९ ॥
मुनीनां कोटिविंशत्या, कुन्त्या च सह निर्वृताः
कृतार्हत्प्रथमोद्धारा, अत्र ते पञ्च पाण्डवा ॥ ३० ॥
द्वितीयषोडशावत्र, जिनशान्तिजिनेश्वरौ।
वर्षारात्रचतुर्मासीं, तस्थतु स्थितिदेशिनौ ॥ ३१ ॥
श्रीनेमेर्वचनाद्यात्रा-गत. सर्वरुजापहम्।
नन्दिषेणगणेशोऽत्रा—जितशान्तिस्तवं व्यधात् ॥ ३२ ॥
याता असख्या उद्धारा, असख्या. प्रतिमास्तथा।
असंख्यानि च चैत्यानि, महातीर्थेऽत्र जज्ञिरे ॥ ३३ ॥
अर्चाः शुल्लतडागस्था—स्तथा भरतकारिताः।
गुहास्थाश्चानमन् भक्त्या, स्यादत्रैकावतारभाक् ॥ ३४ ॥
सम्प्रतिर्विक्रमादित्यः, शालिवाहनवाग्भटौ।
पादलिप्ताम्रदत्ताश्च, तस्योद्धारकृतः स्मृताः ॥ ३५ ॥
विदेहद्वीपवास्तव्याः, स्मरन्त्येनं सुदृष्टयः।
इति श्रीकालिकाचार्यः, पुरतः स किलाब्रवीत् ॥ ३६ ॥
अत्र श्री जावडेर्बिम्बो-द्धारजाते क्रमेण च।
अजितायतनस्थाने, बभूवानुपमं सर' ॥ ३७ ॥
अत्र श्रीमरुदेवायाः, श्रीशान्तेश्चोद्धरिष्यति।
मेघो घाघनृपः कल्कि-प्रपौत्रो भवने सुधीः ॥ ३८ ॥
अस्या. पश्चिममुद्धारं, राजा विमलवाहन'।
श्रीदुष्प्रसव (ह) सूरीणा-मुपदेशाद्विधास्यति ॥ ३९ ॥
तीर्थोच्छेदेऽपि ऋषभ—कूटाख्योऽयं सुरार्चित.।
यावत्पद्मनाभतीर्थे, पूजायुक्तो भविष्यति ॥ ४० ॥
प्रायः पापपरित्यक्ता—स्तिर्यञ्चोऽप्यत्र वासिनः।
प्रयान्ति सुगतिं तीर्थ—महात्म्याद् विशदाशयाः ॥ ४१ ॥
सिंहाग्निजलधिव्याल-भूपालविषयुग्वलम्।
चोरारिमारिजं चास्य, स्मृतेर्नश्येद्भयं नृणाम् ॥ ४२ ॥
भरतेशकृतेर्लेप्य-मयस्याद्यजिनेशतु'।
ध्यायन्नुत्सङ्गशय्यास्थं, स्व सर्वभयजिद्भवेत् ॥ ४३ ॥
उग्रेण तपसा-ब्रह्म-चर्येण ( च ) यदाप्नुयात्।
शत्रुञ्जये तन्निवेशात्, प्रयतः पुण्यमश्नुते ॥ ४४ ॥
प्रदद्यात्कामिकाहारं, तीर्थे कोटिव्ययेन य.।
तत्पुण्यमेकोपवासे-नाप्नोति विमलाचले ॥ ४५ ॥
भूर्भुव स्वस्त्रये तीर्थे, यत्किंचिन्नाम विद्यते।
तत्सर्वमेव दृष्टं स्यात्, पुण्डरीकेऽभिवन्दिते ॥ ४६ ॥
अत्राद्यापि विनारिष्टं, समपारिष्ट पक्षिणम्।
न जातु जायते सत्र-मारभोज्येषु सत्स्वपि ॥ ४७ ॥
भोज्यदानेऽत्र यात्रायै, याति कोटिं शुभाशुभम्।
यात्रायै चलितेनैव, अत्रानन्तगुणं पुन' ॥ ४८ ॥
प्रतिलाभयतः संघ-मदृष्टे विमलाचले।
कोटीगुणं भवेत् पुण्यं, दृष्टेऽनन्तगुणं पुन. ॥ ४९ ॥
केवलोत्पत्तिनिर्वाणे, यत्राभूता महात्मनाम्।
तानि सर्वाणि तीर्थानि, वन्दितानीह वन्दिते ॥ ५० ॥
जन्मनिष्क्रमणज्ञानो—त्पत्तिमुक्तिगमोत्सवा'।
वैयस्त्यात् क्वापि सामस्त्या-ज्जिनानां यत्र जज्ञिरे ॥ ५१ ॥
अयोध्या मिथिला-चम्पा-श्रावस्ती-हस्तिनापुरे।
कौशाम्बी-काशि-काकन्दी-काम्पिल्ये-भद्रिलाभिधे ॥५२॥
रत्नवाहे-शौर्यपुरे, कुण्डग्रामे ह्यपापया।
चन्द्रानना-सिंहपुरे तथा राजगृहे पुरे ॥ ५३ ॥
अरैवतकसम्मेत—वैभाराष्टापदादिषु।
यात्रा यस्मिंस्तेषु यात्रा—फलाच्छतगुणं फलम् ॥ ५४ ॥
चतुर्भिः कलापकम्।
पूजापुण्याच्छतगुणं, पुण्यं बिम्बविधापने।
चैत्ये सहस्रगुणं, पालनेऽनन्तशोगुणम् ॥ ५५ ॥
य. कारयेदस्य मौलौ, प्रतिमां चैत्यवेश्म वा।
भुक्त्वा भारतवर्षर्द्धिं, स स्वर्गश्रियमश्नुते ॥ ५६ ॥

नमस्कारादिसहित-तपांसि विदधन्नरः।
उत्तरोत्तरतपसां, पुण्डरीकस्मृतेर्लभेत् ॥ ५७ ॥
तीर्थमेतत्स्मरेन्मर्त्यः, करणत्रयशुद्धिमान्।
षष्ठादिमासिकान्तानां, तपसां फलमाप्नुयात् ॥ ५८ ॥
अद्यापि पुण्डरीकाऽद्रौ, कृत्वाऽनशनमुत्तमम्।
भूत्वा शीलविहीनोऽपि, सुखेन स्वर्गमृच्छति ॥ ५९ ॥
छत्रचामरभृङ्गार-ध्वजस्थालप्रदानतः।
विद्याधरो जायतेऽत्र, चक्री स्याद्रथदानतः ॥ ६० ॥
दशात्र पुत्रनामानि, ददानो भावशुद्धितः।
भुञ्जानोऽपि लभेच्चैव, चतुर्थतपसः फलम् ॥ ६१ ॥
द्विगुणानि तु पष्ठस्या—ष्टमस्य त्रिगुणानि तु।
चतुर्गुणानि दशम—स्येति तानि ददत्पुनः ॥ ६२ ॥
फलं भवेद् द्वादशस्य, ददत्पञ्चगुणानि तु।
तेषां यथोत्तरं वृद्धया, फलवृद्धिरपि स्मृता ॥ ६३ ॥
पूजास्नपनमात्रेण, यत्पुण्यं विमलाचले।
नान्यतीर्थेषु यत्स्वर्ण-भूमिभूषणदानतः ॥ ६४ ॥
धूपोत्क्षेपणतः पक्षो-पवासस्य लभेत्फलम्।
कर्पूरपूजया चात्र, मासक्षपणजं फलम् ॥ ६५ ॥
निर्दोषैरथ भक्ताद्यै-र्यः साधून् प्रतिलाभयेत्।
फलेन कार्तिके मासे, क्षपणस्य स युज्यते ॥ ६६ ॥
त्रिसंध्यं मन्त्रवाःस्नातो, मासान्तं चैत्यपूजया।
नमोऽर्हद्भ्यः फलं ध्याय-न्निहार्जेत्तीर्थकृत्पदम् ॥ ६७ ॥
पादलिप्तः पुरे यातः, प्रासादौ पार्श्ववीरयोः।
अधोभागे चास्य नेमि-नाथस्यायतनं महत् ॥ ६८ ॥
तिस्रः कोटीस्त्रिलक्षोना, व्ययित्वा वसु वाग्भटः।
मन्त्रीश्वरो युगाधीश—प्रासादमुददीधरत् ॥ ६९ ॥
दृष्ट्वैव तीर्थप्रथम—प्रवेशेऽत्रादिमार्हतः।
विशदा मूर्त्तिराधत्ते, दृशोरमृतपारणम् ॥ ७० ॥
अष्टोत्तरे वर्षशते-ऽतीते श्रीविक्रमादिह।
बहुद्रव्यव्ययाद्बिम्बं, जावडिः समचीकरत् ॥ ७१ ॥
भास्करद्युतिमम्माण—मणिशैलतटीस्थितम्।
ज्योतीरसाख्यं यद्रत्नं, तत्तेन घटितं किल ॥ ७२ ॥
मधुमत्या पुरि श्रेष्ठी, चास्तव्यो जावडिः पुरा।
श्रीशत्रुञ्जयमाहात्म्यं, श्रीवैरस्वामिनोऽतरत् ॥ ७३ ॥
गन्धोदकस्नात्ररुचि—र्लेप्यबिम्बं शुभोऽवशः।
स्मृत्वा चक्रेश्वरीं सैष, मम्माणाद्रिखनीमगात् ॥ ७४ ॥
निर्माप्येहाश्मनीं मूर्त्तिं, रथमारोप्य चाऽचलत्।
विमलाद्रिं सभार्योऽसौ, पद्यया हृद्यया दिने ॥ ७५ ॥
ययौ यावन्तमध्वानं, दिवसेऽप्रतिमो रथः।
रात्रौ तावन्तमेवासौ, पश्चाद् व्यावर्त्तते भुवः ॥ ७६ ॥
खिन्नः कपर्दिनं स्मृत्वा, स्पृष्ट्वा हेतुं च तद्विधौ।
रथमार्गेऽपतत्तिर्यग्, प्रयतः सह जायया ॥ ७७ ॥
तत्साहसप्रसन्नेन, दैवतेनाधिरोपितः।
रथः सबिम्बोऽद्रेः श्रृङ्गे, दुःसाधं सात्त्विकेषु किम् ? ॥ ७८ ॥
मूलनायकमुत्थाप्य, न्यस्ते बिम्बे तदास्पदे।
लेप्यबिम्बाररटितेन, पर्वतः खण्डशोऽदलत् ॥ ७९ ॥
तन्मुक्ताऽथ तडिच्छ्रेणी, बिम्बेन करमर्दिता।
सोपानानि छिद्रयन्ती, निर्ययौ शैलदेशभित् ॥ ८० ॥

आरुह्य चैष शिखरं, सकलत्रः प्रमोदतः।
जावडिर्नैरनिर्त्ति स्म, चञ्चद्रोमाञ्चकञ्चुकः ॥ ८१ ॥
अपतीर्थिकबोहित्था, नष्टाऽष्टादश आपतन्।
तद्द्रव्यव्ययतः श्रेष्ठी, तत्र चक्रे प्रभावनाम् ॥ ८२ ॥
इत्थं जावडिराद्यार्हत्-पुण्डरीककपर्दिनाम्।
मूर्त्तिं निवेश्य संजज्ञे, स्वर्विमानातिथिर्विभाक् ॥ ८३ ॥
दक्षिणाङ्के भगवतः, पुण्डरीक इहादिमः।
वामाङ्के दीप्यते तस्य, जावडिः स्थापिताऽपरः ॥ ८४ ॥
इक्ष्वाकुवृष्णिवंश्यानां—मसंख्याः कोटिकोटयः।
अत्र सिद्धाः कोटिकोटि—तिलकं सूचयत्यदः ॥ ८५ ॥
पाण्डवाः पञ्च कुन्ती च, तन्माता च शिवं ययुः।
ख्यापयन्तीति तीर्थेऽत्र, षडेषां लेप्यमूर्त्तयः ॥ ८६ ॥
राजादनश्चैत्यशाखी, श्रीसंघाद्भूतभाग्यतः।
दुग्धं वर्षति पीयूष—मिव चन्द्रकरोत्करः ॥ ८७ ॥
व्याघ्रीमयूरप्रमुखा—स्तिर्यञ्चो भक्तमुक्तिनः।
सुरलोकमिह प्राप्ताः, प्रणतादीशपादुकाः ॥ ८८ ॥
वामे सत्यपुरस्यास्य, द्वारे मूलजिनौकसः।
दक्षिणे शत्रुजिच्चैत्य पृष्ठे चाष्टापदः स्थितः ॥ ८९ ॥
नन्दीश्वरस्तम्भनको, जयता नाम कुच्छ्रतः।
भव्येषु पुण्यवृद्ध्यर्थ—मवतारा इहासते ॥ ९० ॥
आत्तासिना विनमिना, नेमिना च निषेवितः।
स्वर्गारोहणचैत्ये च, श्रीनाभेयः प्रभासते ॥ ९१ ॥
तुङ्गे शृङ्गे द्वितीये च, श्रेयांसः शान्तिनेमिनौ।
अन्येऽष्वृषभवीराद्या, अस्यालंकुर्वते जिनाः ॥ ९२ ॥
मरुदेवां भगवतीं, भवनेऽत्र भवच्छिदाम्।
नमस्कृत्य कृती स्वस्य, मन्यते कृतकृत्यताम् ॥ ९३ ॥
यक्षराजः कपर्दीह, कल्पवृक्षः प्रगेमुखः।
चित्रान् यात्रिकसंघस्य, विघ्नान् मर्दयति स्फुटम् ॥ ९४ ॥
श्रीनेम्यादेशतः कृष्णो, दिनान्यष्टावुपोषितः।
कपर्दियक्षमाराध्य, पर्वतान्तर्गुहान्तरम् ॥ ९५ ॥
अद्यापि पूजां शक्रेण, बिम्बत्रयमगोपयत्।
अद्यापि श्रूयते तत्र, किल शक्रसमागमः ॥ ९६ ॥
युग्मम्—
पाण्डवस्थापितश्रीम-द्वृषभोत्तरदिग्गता।
सगृहा विद्यतेऽद्यापि, यावत्सुल्लतडागिका ॥ ९७ ॥
यक्षस्यादेशतस्तत्र, दृश्यन्ते प्रतिमाः किल।
तत्रैवाजितशान्तीशौ, वर्षारात्रमवस्थितौ ॥ ९८ ॥
तयोश्चैत्यद्वयं पूर्वा—भिमुखं तत्र वाऽभवत्।
निकषाजितचैत्यं च, बभूवानुपमं सरः ॥ ९९ ॥
मेरुदेव्यन्तिके शान्ते-श्चैत्यं शैत्यकरीक्षणम्।
भवति स्म भवभ्रान्ति—भिदुरं भव्यदेहिनाम् ॥ १०० ॥
श्रीशान्तिचैत्यस्य पुरो, हस्तानां त्रिंशतां पुनः।
पुरुषैः सप्तभिरधः, खनी द्वे स्वर्णरूप्ययोः ॥ १०१ ॥
ततो हस्तशतं गत्वा, पूर्वद्वाराऽस्ति कूपिता।
अधस्तादष्टभिर्हस्तैः, श्रीसिद्धरसपूरिता ॥ १०२ ॥
श्रीपादलिप्ताचार्येण, तीर्थोद्धारकृते किल।
अस्ति संस्थापितं रत्नं, सुवर्णं तत्समीपगम् ॥ १०३ ॥
पूर्वस्यामृषभबिम्बा-द्धश्चार्धभकूटतः,।
धनूंषि त्रिंशतं गत्वो-पवासोंस्त्रीन् समाचरेत् ॥ १०४ ॥

कृते वलिविधानादौ, याराध्या स्वं प्रदर्शयेत् ।
तदाश्रयोद्धाख्य शिलां, रात्रौ मध्ये प्रविश्यते ॥१०५॥
तत्रोपवासतः सर्वाः, सपद्यन्ते च सिद्धयः ।
तत्रर्षभं वा नमता-द्भवेदेकावतारभाक् ॥ १०६ ॥
पुरो धनु पञ्चशत्या, आस्ते पाषाणकुण्डिका ।
ततः सप्तक्रमान् गत्वा, कुर्यात्तद्वलिविद्बुधः ॥ १०७ ॥
शिलोत्पाटनतस्तत्र, कस्यचित्पुण्यशालिनः ।
उपवासद्वयेन स्यात् , प्रत्यक्षा रसकूपिका ॥ १०८ ॥
कल्किपुत्रो धर्मदत्तो, भावीश परमार्हतः ।
दिने दिने जिनविम्बं, प्रतिष्ठाप्य च भोदयते ॥ १०६ ॥
श्रीमच्छत्रुञ्जयोद्धारं, कर्त्ताऽथ जितशत्रुराट् ।
द्वात्रिंशद्वर्षराजश्री-र्भविष्यति तदात्मजः ॥ ११० ॥
तत्सूनुर्मेघघोषाख्य , श्रीशान्तिमरुदेवयोः ।
कपर्दियक्षस्यादेशा-च्चैत्यमत्रोद्धरिष्यति ॥ १११ ॥
नन्दिः सूरिरथाश्चर्यं, श्रीप्रभोर्माणिभद्रकः ।
धनमित्रो यशोमित्र—स्तथा विकटधार्म्मिकः ॥११२॥
सुमङ्गल ( श्रृ ) रसेनः, इत्यस्योद्धारकारकाः ।
अवक् दुष्प्रसहोदन्तो, भावी विमलवाहनः ॥ ११३ ॥
यात्रिकान् येऽस्य बाधन्ते, द्रव्यं चापहरन्ति ये ।
पतन्ति नरके घोरे, सान्वयास्तेंऽहसा नराः ॥ ११४ ॥
यात्रां पूजा द्रव्यरक्षा, यात्रिकाणां च सत्कृतिम् ।
कुर्वाणो वत्सगोत्रोऽपि, स्वर्गलोके महीयते ॥ ११५ ॥
श्रीवस्तुपालोपज्ञानि, पीथडादिकृतानि च ।
वक्ता पारं नयत्येव, धर्म्मस्थानानि कीर्तयन् ॥ ११६ ॥
दुःखमासचिवात् म्लेच्छा-द्भङ्ग सम्भाव्य भाविनम् ।
मन्त्रीश श्रीवस्तुपाल—स्तेजपालाग्रजः सुधी ॥११७॥
मम्मणा ( म्मणो ) पलरत्नेन, निर्माप्यान्तस्तु निर्मले ।
न्यधाद्भूमिगृहे मूर्त्ती, आद्यार्हत्—पुण्डरीकयोः॥११८॥
युग्मम्-
द्वीप्रहर्त्तृक्रियास्थान—संख्ये विक्रमवत्सरे ।
जावडिस्थापितं विम्बं, म्लेच्छैर्भग्नं कलेर्वशात् ॥११६॥
वैक्रमे वत्सरे चन्द्र—हयाग्नीन्दुमिते ( १३७१ ) सति ।
श्रीमूलनायकोद्धारं, साधुः श्रीसमरो व्यधात् ॥१२०॥
तीर्थेऽत्र सघपतयो, ये बभूवुर्भवन्ति ये ।
ये भविष्यन्ति धन्यास्ते, नन्द्यासुस्ते चिरं श्रिया ॥१२१॥
कल्पप्राभृतत पूर्वं, कृतं श्रीभद्रबाहुना ।
श्रीवज्रेण ततः पाद—लिप्ताचार्यैस्ततः परम् ॥१२२॥
इतोऽप्युद्धृत्य संक्षेपात् ,प्रणीत कामितप्रद ।
श्रीशत्रुञ्जयकल्पोऽयं, श्रीजिनप्रभसूरिभि ॥१२३॥
कल्पेऽस्मिन् वाचिते ध्याते, व्याख्याते पठिते श्रुते ।
स्यात्तृतीयभवे सिद्धि-र्भव्याना शक्तिशालिनाम् ॥१२४॥
श्रीशत्रुञ्जयशैलेश ?-लेशतोऽपि गुणास्तव ।
कैर्व्यावर्णयितुं नाम, पार्यन्ते विबुधैरपि ॥ १२५ ॥
भवेद्यात्रोपनम्राणां, नृणां तीर्थानुभावतः ।
प्रायो मन परीणाम , शुभ एव प्रवर्त्तते ॥ १२६ ॥
यात्रायै प्रचलत्संघ-रथाश्वोष्ट्रनृपादज ।
रेणुरङ्गे लगन् भव्य-पुंसां पाप व्यपोहति ॥ १२७ ॥
यावान् कर्म्मक्षयोऽन्यत्र, मासक्षपणतो भवेत् ।
नमस्कारसहितादे-र्गपि तावान् कृतस्त्वयि ॥ १२८ ॥


श्रीनाभेयकृतावास-वासवस्तवनेन च ।
मनसा वचसा नत्वा, सिद्धिक्षेत्र ! नमोऽस्तु ते ॥ १२६ ॥
त्वत्कल्पमेतं निर्माय, निर्माय मनसा मया ।
यदार्जि पुण्य तेनास्तु, विश्वं वास्तवसौख्यवत् ॥ १३० ॥
पुस्तकन्यस्तमपि यः, कल्पमेनं महिष्यति ।
पक्षेण काङ्क्षितास्तस्य, सिद्धिमेष्यन्ति संपदः ॥ १३१ ॥
प्रारम्भेऽप्यस्य राजाधि—राज संधे प्रसन्नवान् ।
अतो राजप्रसादाख्य , कल्पोऽयं जयताच्चिरम् ॥ १३२ ॥
श्रीविक्रमाब्दे वाणाष्ट-विश्वदेवमिते शितौ ।
सप्तम्यां तपसः काव्य-दिवसेऽयं समर्पितः ॥ १३३ ॥
ती० १ कल्प । 'नार्हतः परमो देवो, न मुक्तेः परमं पदम् । न श्रीशत्रुञ्जयात्तीर्थं, श्रीकल्पान्न पर श्रुतम् ॥ १ ॥ ' कल्प० १ अधि० १ क्षण ।

अथ पण्डितडाहर्षिगणिकृतप्रश्नो यथा—

" दत्तेऽसौ सर्वसौख्यानि, त्रिशुद्धयाराधितो यतिः ।
विराधितश्च तैरश्च्य-नरकानल्पयातनाः ॥६०॥
चारित्रिणो महासत्त्वा, व्रतिनः सन्तु दूरतः ।
निष्क्रियोऽप्यगुणज्ञोऽपि,न विराध्यो मुनिः क्वचित् ।६१।
यादृशं तादृशं चापि, दृष्ट्वा वेषधरं मुनिम् ।
गृही गौतमवद्भक्त्या, पूजयेत्पुण्यकाम्यया ॥ ६२ ॥
वन्दनीयो मुनिर्वेषो, न शरीरं हि कस्यचित् ।
व्रतिवेषं ततो दृष्ट्वा, पूजयेत्सुकृती जनः ॥ ६३ ॥
पूजितो निष्क्रियोऽपि स्या-ल्लज्जया व्रतधारकः ।
अवज्ञातः सक्रियोऽपि, व्रतेऽस्याच्छिथिलादरः ॥६४॥
दानं दया क्षमा शक्तिः, सर्वमेवाल्पसिद्धिकृत् ।
तेषां ये व्रतिनं दृष्ट्वा, न नमस्यन्ति मानवाः ॥ ६५ ॥
आराधनीयास्तदमी, त्रिशुद्धया जैनलिङ्गिनः ।
न कार्या सर्वथा तेषां, निन्दा स्वार्थविघातिका ॥६६॥
कारणं तव कुष्ट(ष्ठा)नां, महीपाल ! स्फुटं ह्यदः ।
मा कदापि मुनीन् क्रुद्धा—नपि त्वं तु विराधयेः ॥६७॥"

इति वृद्धश्रीशत्रुञ्जयमाहात्म्यद्वितीयसर्गमध्यगतश्लोकास्तेषा मध्ये केवललिङ्गमात्रधरोऽपि मुमुक्षुर्वन्दनीयो गौतमवत्पूजनीयश्च तत्कथं केन हेतुनेति ?, । १ । अथैतस्य प्रश्नस्य प्रतिवचो यथा—' दत्तेऽसौ सर्वसौख्यानी ' त्यादि शत्रुञ्जयमाहात्म्यद्वितीयसर्गमध्यगतश्लोकास्तु कारणिकविधिमाश्रित्य तीर्थोद्धावनबुद्ध्या वा कृताः संभाव्यन्ते इति न कश्चिद्दोष इति ॥ १ ॥ ही० २ प्रका० । ' पच्चक्खाण ' शब्दे पञ्चमभागे ८८ पृष्ठे मूलगुणप्रत्याख्यानव्याख्या—नावसरे उदाहृते स्वनामख्याते साकेतराजे, । येन रत्नदृष्टिव्याजेन सामायिकादिषडध्ययनरूपाणि भावरत्नानि गृहीतानि । आव० १ अ० ।

सत्तुग-शक्तुक-पुं० । भ्रष्टयवक्षोदे, तद्दिवसकृता ण एय ज-

विक्रमसंवत् १३८४ माघ शुम सप्तम्यां गुरुवासरे ।

वा भुग्गा पासाणजंतग्गे दलिया महिणा सत्तुगा भगणंति। नि० चू० १ उ०।

सत्तुचुस–सक्तुचूर्ण–पुं०। यवसक्तुषु, दश० १ अ०।

सत्तुजण–शत्रुजन–पुं०। वैरिलोके, ति०।

सत्तुदाह–शत्रुदाह–पुं०। यत्र शत्रवो दह्यन्ते। तादृशे स्थाने, नि० चू० ३ उ०।

सत्तुमद्दन–शत्रुमर्दन–पुं०। तच्छरीरतत्सैन्यकदर्थनादिषु सहस्रमानमथने, स०।

सत्तुय–शक्तुक–पुं०। अग्र्यवक्तोदे,। उत्तरावहे सत्तुया अन्नेसु वा ज विसए दाऊण पच्छा अरोगमवक्खा पगारा दिज्जंति। नि० चू० १ उ०।

सत्तुसेण–शत्रुसेन–पुं०। नागस्य गृहपते· सुलसायां भार्यायामुत्पन्ने पुत्रे, अन्त० १ श्रु० २ वर्ग १ अ०। (स च अरिष्टनेमेरन्तिके प्रव्रज्य शत्रुञ्जये सेत्स्यतीत्यन्तकृद्दशाना तृतीये वर्गे षष्ठे अध्ययने सूचितम्।)

सत्तुस्सेह–सप्तोत्सेध–त्रि०। सप्तकुम्भादिषु स्थानेषून्नते, ज्ञा० १ श्रु० १ अ०। सप्तहस्तप्रमाणशरीरे,चं० प्र०१ पाहु०। सप्तहस्तप्रमाणशरीरोच्छ्रये, सू० प्र० १ पाहु०।

सत्थ–शस्त–त्रि०। प्रशस्ते, पो० ७ विव०।

शस्त्र–न०। शस्यन्ते-हिंस्यन्ते अनेन प्राणिन इति शस्त्रम्। आचा०१श्रु०१अ०३उ०। जीवशासनहेतौ,स्था० ६ठा०३ उ०। उपघातकारिणि, आचा०१श्रु०२अ० १ उ०। खड्गछुरिकाद्येष्यायुधे, प्रश्न० ५ संव० द्वार। प्रव०। व्य०। स्था०। प्रहरणे, सूत्र०१श्रु०८ अ०।ज्ञा०।दात्रादिके, सूत्र० १श्रु० ४ अ० १ उ०। जं जस्स विणासकारणं तं तस्स सत्थं भगणति। नि० चू० १ उ०। प्रच्छन्नके नापितोपकरणे, विपा० १ श्रु०६अ०। शस्त्रं द्रव्यभावभिन्नम्। तत्र द्रव्यशस्त्रं-स्वकायपरकायोभयरूपम्। भावशस्त्रं तु-असंयमो दुष्प्रणिहितमनोवाक्कायलक्षणः। आचा०१ श्रु० १ अ०२ उ०। द्रव्यशस्त्रमपि समासविभागभेदात् द्विधा-तत्र समासो द्रव्यशस्त्रमप्कायविषयकमुत्सेचन उपक्षेपणादि, विभागतस्तु किंचित्स्वकायं परकायं वा शस्त्रम्। आचा० १ श्रु० १ अ० ३ उ०।

शस्त्रनिक्षेप —

दव्वं सत्थग्गि विस–णेहंबिलखारलोणमादीयं।
भावो उ दुप्पउत्तो,वाया काओ अविरती य ॥३६॥

शस्त्रस्य निक्षेपो नामादिश्चतुर्धा-व्यतिरिक्तं द्रव्यशस्त्रं खड्गाद्यग्निविषस्नेहाम्लक्षारलवणादिकम्, भावशस्त्रं दुष्प्रयुक्तो भाव अन्त करणं, तथा वाक्कायावविरतिश्चेति जीवोपघातकारित्वादिति भाव। आचा०१ श्रु०१ अ०१ उ०। (अत्रत्या वक्तव्यता 'पुढवीकाइय' शब्दे पञ्चमभागे ६७२ पृष्ठे गता।) (पृथिव्यप्तेजोवायुवनस्पतिरसाना शस्त्राणि पृथिव्यादिशब्देषूक्तानि।)

अत्थि सत्थं परेण परं, णऽत्थि असत्थं परेण परं। (सू०१२४×)

तत्र द्रव्यशस्त्रं कृपाणादि तत्परेणापि परमस्ति, तीक्ष्णादपि तीक्ष्णतरमस्ति लोहकर्तृसंस्कारविशेषात्। यदि वा-शस्त्रमित्युपघातकारि; तत एकस्मात्पीडाकारिणोऽन्यत् पीडाकार्युत्पद्यते ततोऽप्यपरमिति।तद्यथा-कृपाणाभिघाताद्व्रातोत्कोपस्तत शिरोर्त्तिस्तस्या ज्वरस्ततोऽपि मुखशोषमूर्छादय इति। भावशस्त्रपारंपर्यं त्वेकसूत्रान्तरिते स्वत एव प्रत्याख्यानपरिज्ञाद्वारेण वक्ष्यति, यथा च शस्त्रस्य प्रकर्षगतिरस्ति पारपर्यं वा विद्यते अशस्त्रस्य तथा नास्तीति दर्शयितुमाह-'नत्थि' इत्यादि, नास्ति-न विद्यते किं तत्-शस्त्रं संयमस्तत्परेण परमिति प्रकर्षगत्यापन्नमिति। तथाहि-पृथिव्यादिनां सर्वतुल्यता कार्या, न मन्दतीव्रभेदोऽस्तीति, पृथिव्यादिषु समभावत्वात् सामायिकस्य। अथवा शैलेश्यवस्थासंयमादपि पर· संयमो नास्ति तदूर्ध्वं गुणस्थानाभावादिति भाव·, यो हि क्रोधमुपादानतो बन्धतः स्थितितो विपाकतोऽनन्तानुबन्धिलक्षणत· क्षयमाश्रित्य प्रत्याख्यानपरिज्ञया जानाति सोऽपमानादिदर्श्यपीति। आचा० १ श्रु० ३ अ० ४ उ०।

सत्थमेगे उ सिक्खंति। (सू० ४+)

शस्त्रम्-खड्गादिप्रहरणं शास्त्रं वा-धनुर्वेदायुर्वेदादिकं प्राण्युपमर्दकारि तत् सुष्ठु सातगौरवगृद्धा एके-केचन शिक्षन्ते उद्यमेन गृह्णन्ति, तच्च शिक्षितं सत् प्राणिनां-जन्तूनां विनाशाय भवति। तथाहि-तत्रोपदिश्यते एवंविधमालीढप्रत्यालीढादिभिर्जीवे व्यापादयितव्ये स्थानं विधेयं, तदुक्तम्-" मुष्टिनाऽऽच्छादयेल्लक्ष्यं, मुष्टौ दृष्टिं निवेशयेत्। हतं लक्ष्यं विजानीया-द्यदि मूर्धा न कम्पते ॥१॥" सूत्र० १ श्रु० ८ अ०। शस्त्रमिव शस्त्रम्। मृषावादादिके, प्राण्युपतापकारित्वात्तेषाम्। सूत्र० १ श्रु० ६ अ०।

शास्त्र–न०। शिष्यते शिक्ष्यते बोध्यतेऽनेनेति शास्त्रम्। विशे०। आ० म०। नं०। सूत्र०।

सासिज्जए तेण तहिं, व नेयमायावतो सत्थं ॥१३८४॥

'शासु' अनुशिष्टौ,शास्यते ज्ञेयमात्मा वाऽनेनास्मादस्मिन्निति वा शास्त्रम्, शास्यते-कथ्यते तदिति वा शास्त्रमिति गाथार्थः। विशे०। श्रुते, आ० चू० १ अ०। जैनागमे, अष्ट० २४ अष्ट०।

तस्मात्सदैव धर्मार्थी, शास्त्रयत्नः प्रशस्यते।
लोके मोहान्धकारेऽस्मिन्, शास्त्रालोकः प्रवर्त्तकः।२२४।

तस्माद्धर्मे विधानत· परानर्थभावात् सदैव-सर्वकालमेव धर्मार्थी-धर्माभिलाषुक· शास्त्रयत्न-शास्त्रादरपरः प्रशस्यते-श्लाघ्यते। कुत·-यत लोके-जगति मोह एवान्धकारस्तमो यत्र स तथा। तत्र शास्त्रालोक·-शास्त्रप्रकाश· प्रवर्त्तक·-प्रवर्त्तयिता परलोकक्रियासु।

अथ शास्त्रमेव स्तुवन्नाह–

पापामयौषध शास्त्रं, शास्त्रं पुण्यनिबन्धनम्।
चक्षुः सर्वत्रगं शास्त्रं, शास्त्रं सर्वार्थसाधनम्॥ २२५॥

पापामयौषध—पापव्याधिशमनीयं शास्त्रम्, तथा शास्त्रं पुण्यनिबन्धनम्-पवित्रकृत्यनिमित्तम्। चक्षु·-लोचनं सर्वत्रसूक्ष्मव्यवहितादावर्थे गच्छति यत्तत्सर्वत्रग शास्त्रम्। शास्त्रं सर्वार्थसाधनं—सर्वप्रयोजननिष्पत्तिहेतु।

ततः-

न यस्य भक्तिरेतस्मिं-स्तस्य धर्मक्रियाऽपि हि ।
अन्धप्रेक्षाक्रियातुल्या, कर्मदोषादसत्फला ॥ २२६ ॥

न यस्य-धर्मार्थिनो भक्तिर्बहुमानरूपा, एतस्मिन्-शास्त्रे तस्य धर्मक्रियाऽपि हि-देववन्दनादिरूपा, किं पुनरन्यरूपेत्यपि हिशब्दार्थः, अन्धप्रेक्षाक्रियातुल्या अन्धस्यावलोकनकृते या प्रेक्षणकक्रिया तत्तुल्या कर्मदोषात्तथाविधमोहोदयादसत्फला-अविद्यमानाभिप्रेतार्था संपद्यत इति ।

एतदपि कुतः ?, यतः-

यः श्राद्धो मन्यते मान्या-नहंकारविवर्जितः ।
गुणरागी महाभाग-स्तस्य धर्म्मक्रिया परा ॥ २२७ ॥

यः श्राद्धः-सन्मार्गश्रद्धालु, मन्यते-बहुमानविषयीकुरुते मान्यान्-देवतादीन्,अहंकारविवर्जितो-मुक्ताभिमानः, अत एव गुणरागी-गुणानुरागवान् महाभागः-प्रशस्याचिन्त्यशक्तिः, किमित्याह-तस्य-शास्त्रपरतन्त्रतया मान्यमन्तु, धर्मक्रिया-उत्कृष्टरूपा-परा प्रकृष्टेति ।

व्यतिरेकमाह-

यस्य त्वनादरः शास्त्रे, तस्य श्रद्धादयो गुणाः ।
उन्मत्तगुणतुल्यत्वा-न्न प्रशंसास्पदं सताम् ॥ २२८ ॥

यस्य त्वनादरः-अगौरवरूपः शास्त्रे तस्य श्रद्धादयः-श्रद्धासंवेगनिर्वेदादयो गुणाः । किमित्याह-उन्मत्तगुणतुल्यत्वात्-तथाविधग्रहावेशात् सोन्मादपुरुषशौर्यौदार्यादिगुणसदृशत्वान्न प्रशंसास्पदं-न श्लाघास्थानं सतां-विवेकिनामिति ।

एतदपि कथम् ? यतः-

मलिनस्य यथाऽत्यन्तं, जलं वस्त्रस्य शोधनम् ।
अन्तःकरणरत्नस्य, तथा शास्त्रं विदुर्बुधाः ॥ २२९ ॥

मलिनस्य-मलवतो यथाऽत्यन्तम्-अतीव जलं-पानीयम् वस्त्रस्य-प्रतीतरूपस्य शोधनं-शुद्धिहेतुः अन्तःकरणरत्नस्य अन्तःकरणं-मनः, तदेव रत्नं, तस्य चिन्तारत्नादिभ्योऽप्यतिशायिनः, तथा शास्त्रं विदुः-जानते शोधनं बुधाः-बुद्धिमन्तः ।

अत एव-

शास्त्रे भक्तिर्जगद्वन्द्यै-र्मुक्तेर्दूती परोदिता ।
अत्रैवेयमतो न्याय्या-तत्प्राप्त्यासन्नभावतः ॥ २३० ॥

शास्त्रे भक्तिरुक्तरूपा जगद्वन्द्यैर्जगत्त्रयपूजनीयैस्तीर्थकृद्भिर्मुक्तेर्दूती-अवशीभूतमुक्तियोषित् समागमविधायिनी पराप्रकृष्टा उदिता-निरूपिता । अत्रैव-शास्त्रे एवेयं भक्तिरतो मुक्तिदूतिभावादेव हेतोः न्याय्या-संगता । कुत इत्याह-तत्प्राप्त्यासन्नभावतः-मुक्तिप्राप्तेरासन्नभावात् । न हि मुक्तिप्राप्तेरनासन्नः शास्त्रभक्तिमान् संपद्यते अतः शास्त्रे एवेयं न्याय्येति । यो० बिं० । "सुत्तं ति वा तंतं ति वा गंथो त्ति वा पाठो त्ति वा सत्थं ति वा एगट्ठा" । आ० चू० १ अ० । आचा० । शास्त्रस्यादौ प्रयोजनादि उपन्यसनीयम् । आ० म० १ अ० । ( अन्यत्या व्याख्या 'आवस्सयनिज्जुत्ति' शब्दे द्वितीयभागे ४७६ पृष्ठे गता । ) ( 'मंगल' शब्दे पष्ठे भागे ५ पृष्ठे मङ्गलस्य शास्त्राङ्गता उक्ता । )

सत्थ-त्रि० । स्वस्मिन् तिष्ठतीति स्वस्थः । अनाबाधिते, द्वा० ३२ अष्ट० ।
सार्थ-त्रि० । अर्थयुक्ते, बृ० ।

भंडीवहिलगभरवह-ओदरिया कप्पडियसत्थो ।

सार्थः पञ्चविधस्तद्यथा-भण्डी-गन्त्री तदुपलक्षितः प्रथम सार्थः, वहिलकाः-करभीवेसरबलीवर्दप्रभृतयः तदुपलक्षितो द्वितीयः, भारवहाः-पोट्टलिकावाहकास्तेषां सार्थस्तृतीयः, औदरिका नाम-यत्रागतास्तत्र रूपकादिकं प्रक्षिप्य समुद्दिशन्ति समुद्देशनानन्तरं भूयोऽप्यग्रतो गच्छन्ति एष चतुर्थः, कार्प्पटिका-भिक्षाचरास्तैः सह भिक्षां भ्रमन्तो व्रजन्ति ते सार्थाः पञ्चमः । बृ० १ उ० ३ प्रक० । नि० चू० ।

स्वास्थ्य-न० । स्वस्थस्य भावः स्वास्थ्यम् । अनाबाधतायाम्, द्वा० ३२ अष्ट० । समाधौ, आ० म० १ अ० । ज्ञा० । आव० । स्था० ।

सत्थकोस-शस्त्रकोस-पुं० । शिरावेधादिशस्त्रसमुदाये, बृ० १ उ०३ प्रक० । ( अस्योपयोगवर्णनं 'राइभोयण' शब्दे षष्ठभागे ५१७ पृष्ठे गतम् । ) क्षुरनखरदनादिभाजने, ज्ञा०१ श्रु०१३ अ० । शस्त्रकोशो नखरदच्छेदनादिभाजनम् । विपा०१ श्रु० १ अ० ।

सत्थग्गहण-शस्त्रग्रहण-न० । शस्त्रं-खड्गादि तस्य ग्रहणं स्वीकरणम् । शस्त्रादिधारणे तेषां वधार्थं व्यापारणे, ग० २ अधि० ।

सत्थघायक-सार्थघातक-त्रि० । सार्थनाशके, प्रश्न०३ आश्र० द्वार ।

सत्थजत्त-शास्त्रयत्न-पुं० । शास्त्रे यत्नो यस्येति समासः । आगमे यतमाने, "पापामयौषधं शास्त्रं, शास्त्रं पुण्यनिबन्धनम् । चक्षु सर्वत्रगं शास्त्रं,शास्त्रं सर्वार्थसाधनम् ॥१॥" ध०१ अधि० ।

सत्थजाय-शस्त्रजात-न० । आयुधविशेषे, आचा०२ श्रु० १ चू० ३ अ० २ उ० ।

सत्थजुत्तिसय-शास्त्रयुक्तिशत-न० । शास्त्रस्य युक्तयः तेषां शतम् । अनेकागमरहस्यावबोधे, अष्ट० २६ अष्ट० ।

सत्थजोग-शास्त्रयोग-पुं० । शास्त्रोक्ते योगे,"यथाशक्त्यप्रमत्तस्य, तीव्रश्रद्धावबोधतः । शास्त्रयोगस्त्वखण्डार्था-राधनादुपदिश्यते ॥४॥" द्वा० १६ द्वा० । ( अन्यत्या व्याख्या 'जोग' शब्दे चतुर्थभागे १६२७ पृष्ठे गता । )

सत्थत्थबाहण-शास्त्रार्थबाधन-न० । आगमार्थविराधने प्राणातिपातादिरूपे, पञ्चा० १६ विव० ।

सत्थपणग-सार्थपञ्चक-न० । 'सत्थ' शब्दोक्तानां पञ्चानां सार्थानां पञ्चतय्याम्, नि० चू० १६ उ० ।

सत्थपत्थावणा-शास्त्रप्रस्तावना-स्त्री० । शास्त्रीयोपोद्घाते, स्था० १ ठा० ।

सत्थपरिणामिय-शस्त्रपरिणामित-त्रि० । शस्त्रेण स्वकायपरकायादिना निर्जीवीकृते वर्णगन्धरसादिभिश्च परिणामितम् । सूत्र० २ श्रु० १ अ० । वर्णादीनामन्यथाकरणेनाचित्तीकृते, भ०७ श०१ उ० । कृताभिनवपर्याये, भ० ५ श० २ उ० ।

सत्थपरिण्णा–शस्त्रपरिज्ञा–स्त्री०। शस्त्रं द्रव्यभावभेदादनेकविधं तस्य जीवशंसनहेतोः परिज्ञा–ज्ञानपूर्वकं प्रत्याख्यानं यत्रो-च्यते सा शस्त्रपरिज्ञा। षड्जीवनिकायस्वरूपरक्षणोपायगर्भे आचाराङ्गस्य प्रथमश्रुतस्कन्धस्य प्रथमाध्ययने, स्था० ६ ठा० ३ उ०। प्रश्न०। आचा०। आव०।

साम्प्रतमुद्देशार्थाधिकारः शस्त्रपरिज्ञाया अयम्—

जीवो छक्कायपरू–वणा य तेसिं वहे य बंधो त्ति।
विरईए अहिगारो, सत्थपरिण्णाएँ णायव्वो॥ ३५॥

तत्र प्रथमोद्देशके सामान्येन जीवास्तित्वं प्रतिपाद्यम्, शेषेषु षट्सु विशेषेण पृथिवीकायाद्यस्तित्वमिति सर्वेषां चावसाने वन्धविरतिप्रतिपादनमिति। एतच्चान्त उपात्तत्वात्प्रत्येकमुद्देशार्थेषु योजनीयम्। प्रथमोद्देशके जीवस्तद्वधे वन्धो विरतिश्चेत्येवमिति। तत्र शस्त्रपरिज्ञेति द्विपदं नाम। आचा० १ श्रु० १ अ० १ उ०।

सत्थवाह–सार्थवाह–पुं०। सार्थं वाहयतीति सार्थवाहः। नि० चू० ६ उ०। सार्थनायके, प्रश्ना० २० पद ५ द्वार। "गणिमं धरिमं मेज्जं, पारिच्छेज्जं च दव्वजायं तु। घेत्तूणं लाभत्थं, वच्चति जो अन्नदेसं तु॥ १॥ निववहुमओ पसिद्धो दीणाऽणाहाण वच्छलो पथे। सो सत्थवाहनामं, धणो व्व लोए समुव्वहइ॥ २॥" एतल्लक्षणयुक्ते, अनु०।

अथ यदुक्तमष्टौ सार्थवाहा आदियात्रिकाश्चेति तदेतद् व्याख्यानयति—

पुराणसावगसम्म–द्दिट्ठि अहाभद्ददाण सड्ढे य।
अणभिग्गहिए मिच्छे, अभिग्गहे अन्नतित्थी यँ॥६३३॥

पुराणः–पश्चात्कृतः१श्रावकः–प्रतिपन्नाणुव्रत.२, सम्यग्दृष्टिः चरितसदर्शनीयः ३, यथाभद्रकः–सामान्यतः दर्शनसाधुपक्षपाती४, दानश्राद्ध –प्रकृत्यैव दानरुचिमान्५, अनभिगृहीतामिथ्यादृष्टि ६अभिगृहीतमिथ्यादृष्टि ७अन्यतीर्थिक.८एते अयोऽपि प्रतीता, एवमष्टौ सार्थाधिपतय, आदियात्रिका अप्येवमेवाष्टौ भङ्गा भवन्ति। वृ०१ उ०३ प्रक०। स्था०। कल्प०। नि० चू०। आ० क०। रा०। आव०। ज्ञा०। यस्तु क्रयाणकजातं गृहीत्वा लोभार्थमन्यदेशं व्रजन् सार्थं वाहयति योगक्षेमचिन्तया पालयति स सार्थवाहः। वृ० १ उ० ३ प्रक०।

सत्थविहान–सार्थविधान–न०। गणिमादिभेदाच्चतुर्विधसार्थभेदे, वृ०। तत्र गणिमं यदेकद्व्यादिसंख्यया गणयित्वा दीयते यथा हरीतकीपूगफलादि, धरिमं—यत्तुलाया धृत्वा दीयते-यथा खण्डशर्करादि, मेयं–यत्पलादिना सेतिकादिना वा मीयते यथा घृतादिकं, परिच्छेद्य नाम—यच्चक्षुषा परीक्ष्यते यथा वस्त्ररत्नमौक्तिकादि। एतच्चतुर्विधमपि द्रव्यं भण्डीसार्थादिषु प्रत्युपेक्षणीयं यथा द्रव्यंक्षेत्रकालभावैरपि सार्थः प्रत्युपेक्षणीयः। वृ० १ उ० ३ प्रक०।

सत्थयुत्तणाय–शास्त्रोक्तन्याय–पुं०। अगमाभिहितनये, द्वा० २१ अष्ट०।

सत्थब्भास–शस्त्राऽभ्यास–पुं०। शस्त्रयुद्धकलाभ्यासे, कल्प० १ अधि० ७ क्षण।

सत्थसंवेदण–स्वार्थसंवेदन–न०। स्वं चार्थश्च स्वार्थौ तयोः संवेदनं स्वार्थसंवेदनम्। शब्दार्थज्ञाने, सम्म० २ काण्ड।

सत्थसच्च–स्वार्थसत्य–त्रि०। स्वस्य अर्थः स्वार्थः तस्मिन् सत्यः। स्वाभिमतस्थापनकुशले, अष्ट० १६ अष्ट०।

सत्था–शास्तृ–त्रि०। अनुशासितरि, सूत्र०१ श्रु० १ अ०१ उ०। आचा०। तीर्थंकरे, नि० चू० ११ उ०।

सत्थाइ–शास्त्रादि–पुं०। शास्त्रप्रारम्भे, सूत्र०१ श्रु०१ अ०१ उ०।

सत्थाईय–शस्त्रातीत–न०। शस्त्रादग्न्यादेरतीतमुत्तीर्णं शस्त्रातीतम्। औ०। शस्त्रमग्न्यादिकं तेनातीतं प्रासुकीकृतं शस्त्रातीतम्। सूत्र०२ श्रु०१अ०। अग्न्यादिप्रासुकीकृते, भ०५ श०३ उ०।

सत्था(त्थ)पारगय–शास्त्रपारगत–पुं०। चतुर्वेदादिशास्त्रपारगामिनि, अनु०।

सत्थि–स्वस्ति–अव्य०। माङ्गल्ये, स्था० ४ ठा० २ उ०।

सत्थिग–सार्थिक–पुं०। सार्थो विद्यते यस्येति व्युत्पत्त्या सार्थवाहे, वृ० १ उ० ३ प्रक०।

स्वास्तिक–पुं०। तस्यैव(जिन) कल्पस्य वस्त्रधारणे पूर्वोक्तरकरणे, हस्ताभ्यां गृहीत्वा द्वे अपि बाहुशीर्षे यावत्प्राप्येते तद्यथा–दक्षिणेन हस्तेन वामं बाहुशीर्षं, वामेन दक्षिणमेव द्वयोरपि कलाचिकयोर्हृदये यो विन्यासविशेषः स स्वस्तिकाकार इति कृत्वा स्वस्तिक इत्युच्यते। (वृ० ३ उ०।) इत्येवंरूपे विन्यासविशेषे, प्रव० २६ द्वार। महाग्रहे, कल्प० १ अधि० ६ क्षण। सू० प्र०।

सत्थिवारसम–स्वस्तिद्वादश–त्रि०। स्वस्ति द्वादशं यत्र तत्स्वस्तिद्वादशम्। द्वादशसंख्यापूरकस्वस्तिघटितसमुदाये, रा०।

सत्थुत्तगुण–शास्त्रोक्तगुण–त्रि०। ग्रन्थोदितधर्मके, पञ्चा० १४ विव०।

सत्थोवरय–शस्त्रोपरत–त्रि०। शस्त्रात् द्रव्यभावभेदादुपरते, 'एत्थ सत्थोवरए' आचा० १ श्रु० ३ अ० १ उ०।

सत्थोवाडण–शस्त्रावपाटन–न०। शस्त्रेणावपाटनं विदारणमात्मनः। शस्त्रेण विदारणे, ज्ञा० १ श्रु० १६ अ०। ('मरण' शब्दे षष्ठे भागे १०६ पृष्ठे अस्य व्याख्या।)

सत्थोवाडिय–शस्त्रावपाटित–पुं०। खड्गादिना विदारिते, विपा० १ श्रु० ६ अ०।

सदंसण–सदर्शन–पुं०। सह दर्शनेन वर्त्तते इति सदर्शनः। श्रद्दधाने, नि० चू०१ उ०। शोभनागमे, द्वा० ३ द्वा०।

सदक्खिण्ण–सदाक्षिण्य–पुं०। स्वकार्यपरिहारेण परकार्यैकरसैकरसिकान्तःकरणे, प्रव० २३६ द्वार। प्रार्थनागम्भीरके गुणवच्छ्रावके, ध० १ अधि०।

सदवच्चया–सदवाच्यता–स्त्री०। सच्चाऽवाच्यं च सदवाच्ये तयोर्भावौ सदवाच्यते। अस्तित्वावक्तव्यत्वयोः, स्या०।

सदस–सदस्–न०। सभायाम्, षो० १४ विव०।

सदसत्त–सदसत्त्व–न०। स्वपररूपाभ्यां विद्यमानाऽविद्यमानत्वे, नं०।

सदणुट्ठाण–सदनुष्ठान–न०। सुन्दराऽनुष्ठाने, षो० ४ विव०। शोभनानुष्ठाने, द्वा० २३ द्वा०।

सदा-सदा-अव्य० । सर्वस्मिन् काले, ध० २ अधि० । सर्वदा शब्दार्थे, सूत्र० १ श्रु० ३ अ० १ उ० ।

सदागम-सदागम-पुं० । आप्तोपदेशे, पञ्चा० १ विव० ।

सदागमविसुद्ध-सदागमविशुद्ध-त्रि० । सदर्थप्रतिपादकागमः सदागमस्तेन विशुद्धं निर्दोषम् । सदागमसम्मते,षो०२ विव०।

सदाजत-सदायत-त्रि० । अप्रमादिनि, आचा० १ श्रु० ३ अ० २ उ० ।

सदाजय-सदाजय-त्रि० । सदा सर्वकालं जयो येषु तानि सदाजयानि । सर्वकालं जयत्सु, जी० ३ प्रति० ३ अधि० ।

सदायार-सदाचार-पुं० । शोभनाचारे, षो० ५ विव० । सर्वोपकारप्रियवचनाकृतिमोचितस्नेहादिकायां सज्जनचेष्टायाम्, यो० बिं० ।

अथ सदाचारमाह—

लोकापवादभीरुत्वं, दीनाभ्युद्धरणाऽऽदरः ।
कृतज्ञता सुदाक्षिण्यं, सदाचारः प्रकीर्त्तितः ॥ १२६ ॥

लोकापवादभीरुत्वं—यतः कुतोऽपि लोकापवादान्मरणाभ्यधिकाद् विशिष्यमाणाद् भीतभावः, दीनाभ्युद्धरणादरः—उपलक्षणत्वाद्दीनानाथोपकारप्रयत्नः, कृतज्ञता-परकृतोपकारपरिज्ञानम्, सुदाक्षिण्यं-गम्भीरधीरचेतसा निर्मत्सरस्य च प्रकृत्यैव परकृत्याभियोगपरता । किमित्याह-सदाचारः-प्राग्गुपन्यस्यः प्रकीर्त्तित.—प्रज्ञप्त. ।

तथा—

सर्वत्र निन्दासंत्यागो, वर्णवादश्च साधुषु ।
आपद्यदैन्यमत्यन्तं, तद्वत्संपदि नम्रता ॥ १२७ ॥

सर्वत्र-जघन्यमध्यमोत्तमजनेषु निन्दासत्याग·—परिवादापनोदः, वर्णवादश्च-प्रशंसारूपः साधुषु-सदाचारेषु जनेषु,आपदि-व्यसनेऽदैन्यम्-अदीनभावोऽत्यन्तम्-अतीव तद्वदापद्यदैन्यवत्,संपदि-विभवसमागमे नम्रता औचित्येन नमनशीलता।

तथा—

प्रस्तावे मितभाषित्व-मविसंवादनं तथा ।
प्रतिपन्नक्रिया चेति, कुलधर्म्मानुपालनम् ॥ १२८ ॥

प्रस्तावे--भाषणावसरे उपलब्धे मितभाषित्वं--मितभाषणशीलता, अविसंवादन-विसंवादवत· स्ववचनस्याकरणं, तथा प्रतिपन्नक्रिया चेति-प्रतिपन्नस्य-व्रतनियमादेः क्रियानिर्वाहणम् । इति पदसमासौ, कुलधर्म्मानुपालनम्-अविरुद्धस्वकुलाचारानुवर्त्तनम् ।

असद्व्ययपरित्यागः, स्थाने चैतत्क्रिया सदा ।
प्रधानकार्ये निर्बन्धः, प्रमादस्य विवर्जनम् ॥ १२९ ॥

असद्व्ययपरित्याग -असतः पुरुषार्थानुपयोगित्वेनासुन्दरस्य व्ययस्य—वित्तवियोगरूपस्य परित्यागः स्थाने च-स्थाने एव देवपूजनादावेतत्क्रिया-व्ययक्रिया सदा--सर्वकालं प्रधानकार्ये--विशिष्टफलदायिनि प्रयोजने निर्बन्ध·—आग्रहः प्रमादस्य-मद्यमानादिरूपस्य विवर्जनम्-उज्झनम् ।

लोकाचारानुवृत्तिश्च, सर्वत्रौचित्यपालनम् ।
प्रवृत्तिर्गर्हिते नेति, प्राणैः कण्ठगतैरपि ॥ १३० ॥

लोकाचारानुवृत्तिश्च—बहुजनरूढा विरोधिलोकव्यवहारानुपालनरूपा सर्वत्र-स्वपदे परपदे चौचित्यपालनं-समुचिताचाररूपं प्रवृत्तिर्गर्हिते-कुत्सिते कुलदूषणादौ न—नैवेति प्राग्वत्, प्राणैरुच्छ्वासरूपैः कण्ठगतैरपि-गलस्थानप्राप्तैः किं पुन. स्वभावस्थैरित्यपिशब्दार्थः । यो० बिं० ।

सदायारसंग-सदाचारसङ्ग-पुं०। सम्-शोभनम् आचार इहपरलोकहिता प्रवृत्तिर्येषां ते सदाचारास्तै· सह सङ्गः-सङ्गति· । सज्जनैः सह सङ्गे, ध०। असत्सङ्गे हि सपदि शीलं विलीयेत । यदाह-"यदि सत्संगतिरतो, भविष्यसि भविष्यसि। अथाऽसज्जनगोष्ठीषु, पतिष्यसि पतिष्यसि ॥१॥" इति । तथा-"सङ्ग· सर्वात्मना त्याज्यः, स चेत् त्यक्तुं न शक्यते । स सद्भिः सह कर्त्तव्यः, सन्तः सङ्गस्य भेषजम् ॥ २ ॥ " इति । ध० १ अधि० ।

सदार-स्वदार-पुं० । आत्मीयभार्यायाम्, पञ्चा० १ विव० ।

सदार-पुं० । सपत्नीके, उत्त० १४ अ० ।

सदारमंतभेय-स्वदारमन्त्रभेद-पुं०। स्वदाराणां मन्त्रो विश्रम्भभाषितं तस्य भेदः—अन्यकथनम् । ध० र० २ अधि० । स्वदाराणां विश्रब्धविशिष्टावस्थाभाषितस्यान्यस्मै कथने, ध० २ अधि० । पञ्चा० । आ० । आव० ।

सदारसंतोस-स्वदारसन्तोष-पुं० । स्वदारैः सन्तोषः स्वदारसन्तोष· । स्वदारसन्तुष्टौ, उपा० १ अ० ।

एयमिह-मुणेयव्वं, सदारसंतोस मो एत्थ ॥ ११५ ॥

स्वस्य-आत्मनः स्वे वा आत्मिया दारा स्वदारा· स्वकलत्रै· संतोष·-संतुष्टि· मैथुनासेवन प्रति वेश्यादेरपि वर्जनमिति स्वदारसंतोष· स च चतुर्थाणुव्रतमिति योजितमेव । इह च प्रथमैकवचनलोपः प्राकृतत्वात् 'मो' इति निपात· पादपूरणार्थः, अत्रेति चतुर्थाणुव्रते वर्जयतीत्युत्तरेण योग इति गाथार्थ· । पञ्चा० १ विव० । आत्मीयकलत्रादन्यत्रेच्छानिवृत्तौ, स्था० ५ ठा० १ उ० । "स्वकीयदारसन्तोषो, वर्जनं चान्ययोषिताम् । श्रमणोपासकानां त-च्चतुर्थाणुव्रतं मतम् ॥ १ ॥ " ध० २ अधि० । ( 'आणंद' शब्दे द्वितीयभागे १०६ पृष्ठे व्याख्या गता । ) ( अस्यातिचारा· 'परदारगमन' शब्दे पञ्चमभागे ५२७ पृष्ठे व्याख्याता· ।

एतद्विषये प्रथमा कथा—

" सख्योऽत्र गिरिनगरे, तिस्र· सवयसोऽभवन् ।
उज्जयन्तं गता नन्तुं, गृहीतास्ता मलिम्लुचैः ॥ १ ॥
नीत्वा पारसकुलेऽथ, वेश्यानां ददिरेऽधमै· ।
आसंस्ताः प्रौढगणिका—स्तत्पुत्रा पितृभि पुन ॥ २॥
पालिता यौवनं प्राप्ता-स्तत्रैवागु पणायितुम् ।
तासां भाटिं ददुस्तेऽथ, स्वसंपत्त्या विभूषिता· ॥ ३ ॥
रात्रौ तन्मन्दिरे जग्मु—र्द्वौ रेमाते स्वमातरम् ।
एक· सुश्रावको रन्तुं, नैच्छत्तत्पप्रच्छ किं तु ताम् ॥ ४ ॥
कुत कथमिहायाता, सा स्वरूपं न्यरूपयत् ।
सोऽवदत्ते वयं युष्म—त्पुत्रा शिष्ट तदन्वयो· ॥ ५ ॥
सर्वे वैराग्यमापन्ना—स्तदम्बाश्च प्रवव्रजु· ।

द्वितीया कथा—

श्रेष्ठी हेमपुरे श्रीद· , प्रियासुन्मुच्य गुर्विणीम् ।
दिग्यात्रायां ययौ पश्चा-ज्जायते स्म सुताऽद्भुता ॥ १ ॥

स च व्यवहरन्याव—त्तावत् पुत्र्याप यौवनम् ।
दत्ताऽन्यनगरे साऽस्ति, तत्रैवागाच्च तत्पिता ॥ २ ॥
विनशन् मा क्रयाणानी—त्यस्थाद्वर्षाः स तत्र च ।
सार्द्धं संघटितं पुत्र्या, न भवत्किमजानताम् ॥ ३ ॥
वर्षारात्रे व्यतीते च, श्रीद स्वनगरं ययौ ।
आनायिता सुता मात्रा, पितरं वीक्ष्य लज्जिता ॥ ४ ॥
आत्मघातं व्यधात्पुत्री, पिता च व्रतमग्रहीत् ।

तृतीया कथा—

वेश्या कुबेरसेनाऽभूत्, मथुरायां तयाऽजनि ।
अपत्ययुग्मं तत्स्वस्य, यौवनापहमित्यतः ॥ १ ॥
कुबेरदत्त कुबेर-दत्ता नामाङ्कमुद्रया ।
विभूष्य न्यस्य पेटायां, यमुनायां प्रवाहितम् ॥ २ ॥
तच्च सौर्यपुरेभ्याभ्या, दृष्ट्वैकैकमुपाददे ।
तदेवोद्वाहितं युग्मं, दारकोऽपि गतोऽन्यदा ॥ ३ ॥
मथुरायां व्यधात्तत्र, स्वकीया जननीं जनिम् ।
दारिका तत्स्वसा दारा, धर्मं श्रुत्वाऽग्रहीद् व्रतम् ॥ ४ ॥
साऽपि जातावधिज्ञाना, तत्रैव विहरन्त्यगात् ।
तस्या एव गृहे तस्थौ, तस्याः पुत्रोऽस्ति पुत्रजः ॥ ५ ॥
बालं विलोक्य सा साध्वी, तान् बोधयितुमब्रवीत् ।
भ्राताऽसि तनुजन्माऽसि, वरस्यावरजोऽसि च ।
भ्रातृव्योऽसि पितृव्योऽसि, पुत्रपुत्रोऽसि चार्भक ! ।
यश्च ते बालक ! पिता, स मे भवति सोदरः ॥ ७ ॥
पिता पितामहो भर्त्ता, तनयः श्वशुरोऽपि च ।
या च बालक ! ते माता, सा मे माता पितामही ॥ ८ ॥
भ्रातृजाया वधूः श्वश्रूः, सपत्नी च भवत्यहो ।
इत्युक्त्वा ज्ञापयामास, स्वा कुबेराय मुद्रिकाम् ॥ ६ ॥
तां दृष्ट्वा ज्ञापितं सर्वं, जज्ञे संवन्धविप्लवम् ।
कुबेरदत्तः संवेग—मासाद्य प्राव्रजत्तदा ॥ १० ॥
कुबेरसेना श्राद्धाऽभू—दार्या च विहृताऽन्यतः ।"
(एतानैहिकान् दोषान् ज्ञात्वा परस्त्री परिहार्या ।)
आ० क० ६ अ० ।

सदारसंतोसिय—स्वदारसन्तोषिक—पुं० । स्वदारैः सन्तोषः स्वदारसन्तोषः, स एव स्वदारसन्तोषिकः, स्वदारसन्तोषो वा स्वदारसन्तुष्टिः । चतुर्थाणुव्रते, उपा० १ अ० ।

सदाहिण्ण—सदाक्षिण्य—त्रि० । सह दाक्षिण्येन वर्त्तते सदाक्षिण्यः । दाक्षिण्यगुणशालिनि, दर्श० २ तत्त्व ।

सदिव्व—सदिव्य—त्रि० । सह दिव्यैः सदिव्यम् । गन्धर्वनगरादिके दिव्योपद्रवे, आव० ४ अ० ।

सदुवाय—सदुपाय—पुं० । उपायाभासपरिहारे, यो० विं० ।

सदेव—सदेव—त्रि० । अर्हत्प्रतिमालक्षणे देवे, ध० २ अधि० ।

सदेवसूरि—सदेवसूरि—पुं० । वटगच्छप्रथमसूरौ, ग० ३ अधि० ।

सदेस—सदेश—पुं० । समानदेशजे, व्य० ३ उ० ।
स्वदेश—पुं० । स्वावासमण्डले, पिं० ।

सद्द—शब्द—पुं० । शब्द्यते—प्रतिपाद्यते वस्त्वनेनेति शब्दः । आ० म० १ अ० । शब्दयति—भाषत इति शब्दः । विशे० । "सर्वत्र लवरामचन्द्रे" ॥ ८।२।७६ ॥ इति वलोपः । प्रा० । शषोः सः ॥ ८।१।२६० ॥ इति शस्य सः । प्रा० । श्रोत्रेन्द्रियग्राह्यनियतक्रमवर्णात्मनि (द्वा० २६ द्वा० ।) ध्वनौ, दश० १ अ० । रा० ।

एगे सद्दे । (सू० ४७) स्था० १ ठा० । वाचके, स्था० ३ ठा० ३ उ० । उत्त० । पञ्चा० । औ० । कालादिभेदेन ध्वनेरर्थभेदं प्रतिपद्यमाने शब्दे, यथा बभूव-भवति—भविष्यति—स मेरुरित्यादि । स्था० । शब्दनिक्षेपः नामस्थापनाद्रव्यभावभेदात् चतुर्धा शब्दः । तत्र नामस्थापने सुगमे ।

द्रव्यनिक्षेपं दर्शयितुं निर्युक्तिकृत् गाथापश्चार्द्धेनाह—

दव्वं सद्दपरिणयं, भावो उ गुणा य कित्ती य ॥३२३॥

द्रव्यं नोआगमतो व्यतिरिक्तं शब्दत्वेन यानि भाषाद्रव्याणि परिणतानि तानीह गृह्यन्ते, भावशब्दस्त्वागमतः शब्दे उपयुक्तः, नोआगमतस्तु गुणाः अहिंसादिलक्षणा यतोऽसौ हिंसानृतादिविरतिलक्षणैः गुणैः श्लाघ्यते, कीर्त्तिश्च यथा भगवत एव चतुस्त्रिंशदतिशयाद्युपेतस्य सातिशयरूपसंपत्समन्वितस्येत्यर्हन्निति लोके ख्यातिरिति,

निर्युक्त्यनुगमादनन्तरं सूत्रानुगमे सूत्रं, तच्चेदम्—

से भिक्खू वा भिक्खुणी वा मुइंगसद्दाणि वा नंदीसद्दाणि वा झल्लरीसद्दाणि वा अन्नयराणि वा तहप्पगाराणि विरूवरूवाइं सद्दाइं विततांइं कन्नसोयपडियाए नो अभिसंधारिज्जा गमणाए । से भिक्खू वा भिक्खुणी वा अहावेगइयाइं सद्दाइं सुणेइ, तं जहा—वीणासद्दाणि वा विपंचीसद्दाणि वा पिप्पी (बद्धी) सगसद्दाणि वा तूणयसद्दाणि वा वणयसद्दाणि वा तुंबवीणियसद्दाणि वा ढंकुणसद्दाइं अन्नयराइं तहप्पगाराइं विरूवरूवाइं सद्दाइं विततांइं कन्नसोयपडियाए नो अभिसंधारिज्जा गमणाए । से भिक्खू वा भिक्खुणी वा अहावेगइयाइं सद्दाइं सुणेइ, तं जहा—तालसद्दाणि वा कंसतालसद्दाणि वा लत्तियसद्दाणि वा गोधियसद्दाणि वा किकिरियासद्दाणि वा अन्नयराणि तहप्पगाराइं विरूवरूवाइं सद्दाइं कण्णसोय० । से भिक्खू वा भिक्खुणी वा अहावेगइयाइं सद्दा० तं जहा—संखसद्दाणि वा वेणुसद्दाणि वा वंससद्दाणि वा खरमुहिसद्दाणि वा पिरिपिरियासद्दाणि वा अन्नयराणि वा तहप्पगाराइं विरूवरूवाइं सद्दाइं झुसिराइं कन्नसोय० (सू० १६८) से भिक्खू वा भिक्खुणी वा अहावेगइयाइं सद्दाइं सुणेइ, तं जहा—वप्पाणि वा फलिहाणि वा० जाव सराणि वा सागराणि वा सरसरपंतियाणि वा अन्नयराइं तहप्पगाराइं विरूवरूवाइं सद्दाइं कन्नसोय० । से भिक्खू वा भिक्खुणी वा अहावेगइयाइं सद्दा०, तं जहा—कच्छाणि वा णूमाणि वा गहणाणि वा वणाणि वा वणदुग्गाणि वा पव्वयाणि वा पव्वयदुग्गाणि वा अन्न० ॥ अहा० तहप्पगाराइं गामाणि वा नगराणि वा निगमाणि वा रायहाणाणि वा आसमपट्टणसंनिवेसाणि वा अन्नयराइं तहप्पगाराइं नो अभिसंधारिज्जा गमणाए । से भिक्खू० अहावेगइयाइं आरामाणि वा

उज्जाणाणि वा वणाणि वा वणसंडाणि वा देवकुलाणि वा सभाणि वा पवाणि वा अन्नयराइं तहप्पगाराइं सद्दाइं नो अभि०। से भिक्खू वा भिक्खुणी वा अहावेगइयाइं सद्दाइं अट्टाणि वा अट्टालयाणि वा चरियाणि वा दाराणि वा गोपुराणि वा अन्नयराइं तहप्पगाराइं सद्दाइं नो अभिसंधारे०। से भिक्खू वा भिक्खुणी वा अहावेगइयाइं०, तं जहा-तियाणि वा चउक्काणि वा चच्चराणि वा चउम्मुहाणि वा अन्नयराइं वा तहप्पगाराइं सद्दाइं नो अभिसंधारे०। से भिक्खू वा भिक्खुणी वा अहावेगइयाइं०, तं जहा-महिसकरणट्ठाणाणि वा वसभकरणट्ठाणाणि वा अस्सकरणट्ठाणाणि वा हत्थिकरणट्ठाणाणि०जाव कविंजलकरणट्ठाणाणि वा अन्नयराइं वा तहप्पगाराइं नो अभिसंधारे०। से भिक्खू वा भिक्खुणी वा अहावेगइयाइं०, तं जहा-महिसजुद्धाणि वा० जाव कविंजलजुद्धाणि वा अन्नयराइं वा तहप्पगाराइं नो अभिसंधारे०। से भिक्खू वा भिक्खुणी वा अहावेगइयाइं०, तं जहा-पुव्वजूहियट्ठाणाणि वा हयजूहियट्ठाणाणि वा गयजूहियट्ठाणाणि, अन्नयराइं वा तहप्पगाराइं नो अभिसंधारे०। से भिक्खू वा०जाव सुणेइ, तं जहा-अक्खाइयट्ठाणाणि वा माणुम्माणियट्ठाणाणि वा महता हयनट्टगीयवाइयतंतीतलतालतुडियपडुप्पवाइयट्ठाणाणि वा अन्नयराइं तहप्पगाराइं सद्दाइं नो अभिसंधारे०। से भिक्खू वा भिक्खुणी वा०जाव सुणेइ, तं जहा-कलहाणि वा डिंवाणि वा डमराणि वा दो रज्जाणि वा वेररज्जाणि वा विरुद्धरज्जाणि वा अन्नयराइं वा तहप्पगाराइं सद्दाइं नो अभिसंधारे०। से भिक्खू वा भिक्खु०जाव सद्दाइं सुणेइ खुड्डियं दारियं परिभुत्तमंडियं अलंकियं निवुज्झमाणिं पेहाए एगं वा पुरिसं वहाए नीणिज्जमाणं पेहाए अन्नयराणि वा तहप्पगाराइं नो अभिसंधारे०। से भिक्खू वा भिक्खुणी वा अन्नयराइं विरूवरूवाइं महोसवाइं एवं जाणेज्जा, तं जहा-बहुसगडाणि वा बहुरहाणि वा बहुमिलक्खूणि वा बहुपच्चंताणि वा अन्नयराइं वा तहप्पगाराइं विरूवरूवाइं महोसवाइं कन्नसोयपडियाए नो अभिसंधारिज्जा गमणाए। से भिक्खू वा भिक्खुणी वा अन्नयराइं विरूवरूवाइं महूसवाइं एवं जाणिज्जा, तं जहा-इत्थीणि वा पुरिसाणि वा थेराणि वा डहराणि वा मज्झिमाणि वा आभरणविभूसियाणि वा गायंताणि वा वायंताणि वा नच्चताणि वा हसंताणि वा रमंताणि वा मोहंताणि वा विपुलं असणं पाणं खाइमं साइमं परिभुंजंताणि वा परिभायंताणि वा विछड्डियमाणाणि वा विगोवयमाणाणि वा अन्नयराइं तहप्पगाराइं विरूवरूवाइं महुस्सवाइं कन्नसोयपडियाए नो अभिसंधारे०। से भिक्खू०इहलोइएहिं सद्देहिं नो परलोइएहिं सद्देहिं नो सुएहिं सद्देहिं नो असुएहिं सद्देहिं नो दिट्ठेहिं सद्देहिं नो अदिट्ठेहिं सद्देहिं नो कंतेहिं सद्देहिं सज्जिज्जा नो गिज्झिज्जा नो मुज्झिज्जा नो अज्झोववज्जिज्जा, एयं खलु० जाव जएज्जासि त्ति बेमि। (सू०१७०)

स—पूर्वाधिकृतो भिक्षुर्यदि विततततघनशुषिररूपांश्चतुर्विधानातोद्यशब्दान् शृणुयात्, ततस्तच्छ्रवणप्रतिज्ञया नाभिसन्धारयेद्गमनाय, न तदाकर्णनाय गमनं कुर्यादित्यर्थः। तत्र विततं—मृदङ्गनन्दीझल्लर्यादि, ततम्—वीणाविपञ्चीवद्धीसकादितन्त्रीवाद्य, वीणादीना च भेदस्तन्त्रीसंख्यातोऽवसेयः, घनं तु हस्ततालकंसालादिप्रतीतमेव, नवरं 'लत्तिका'—कंशि(सि)का गोहिका-भाण्डानां कक्षाहस्तगतातोद्यविशेषः. किरिकिरिका-तेषामेव वंशादिकम्बिकातोद्यं, शुषिरं तु शङ्खवेणवादीनि प्रतीतान्येव, नवरं खरमुही-तोहाडिका 'पिरिपिरिय' त्तिकोलियकपुटावनद्धा वंशादिनलिका, इत्येष सूत्रचतुष्टयसमुदायार्थः॥ किञ्च-स भिक्षुरथ कदाचिदेकतरान् कांश्चित् शब्दान् शृणुयात्, तद्यथा-'वप्पाणि वे' ति—वप्रः-केदारस्तदादिर्वा, तद्वर्णकाः शब्दा वप्रा एवोक्ताः, वप्रादिषु वा श्रव्यगेयादयो ये शब्दास्तच्छ्रवणप्रतिज्ञया वप्रादीन्न गच्छेदित्येवं सर्वत्रायोज्यम्। अपिच-यावन्महिषयुद्धानीति षडपि सूत्राणि सुबोध्यानि। किञ्च-स भिक्षुर्यूथमिति-द्वन्द्वं वधूवरादिकं तत्स्थानं वेदिकादि, तत्र श्रव्यगेयादिशब्दश्रवणप्रतिज्ञया न गच्छेत्, वधूवरवर्णनं वा यत्र क्रियते तत्र न गच्छेदिति, एवं हयगजयूथादिस्थानानि द्रष्टव्यानीति। तथा-स भिक्षु आख्यायिकास्थानानि—कथानकस्थानानि, तथा 'मानोन्मानस्थानानि' मानं-प्रस्थकादि उन्मानं-नाराचादि, यदिवा-मानोन्मानमित्यश्वादीनां वेगादिपरीक्षा तत्स्थानानि तद्वर्णनस्थानानि वा, तथा महान्ति च तानि आहतनृत्यगीतवादित्रतन्त्रीतलतालत्रुटितप्रत्युत्पन्नानि च तेषां स्थानानि-सभास्तद्वर्णनानि वा श्रवणप्रतिज्ञया नाभिसन्धारयेद्गमनायेति। किञ्च-कलहादिवर्णनं तत्स्थानं वा श्रवणप्रतिज्ञया न गच्छेदिति। अपि च-स भिक्षु क्षुल्लिकां—दारिकां डिक्करिकां—मण्डितालङ्कृतां बहुपरिवृतां 'णिवुज्झमाणिं' ति-अश्वादिना नीयमानां तथैकं पुरुषं वधाय नीयमानं प्रेक्ष्याहमत्र किञ्चिच्छ्रोष्यामीति श्रवणार्थं तत्र न गच्छेदिति। स भिक्षुर्यान्येव जानीयात्, महान्त्येतान्याश्रवस्थानानि-पापोपादानस्थानानि वर्त्तन्ते, तद्यथा-बहुशकटानि बहुरथानि बहुम्लेच्छानि बहुप्रात्यन्तिकानि, इत्येवंप्रकाराणि स्थानानि श्रवणप्रतिज्ञया नाभिसन्धारयेद् गन्तुमिति। किञ्च-स भिक्षुर्महोत्सवस्थानानि यान्येवंभूतानि जानीयात्, तद्यथा-स्त्रीपुरुषस्थविरबालमध्यवयांस्येतानि भूषितानि गायनादिका क्रिया यत्र कुर्वन्ति तानि स्थानानि श्रवणेच्छया न गच्छेदिति। इदानीं सर्वोपसंहारार्थमाह—स भिक्षु—ऐहिकामुष्मिकापायभीरुः नो—नैव ऐहलौकिकैः—मनुष्यादिकृतैः पारलौकिकैः—पारापतादिकृतैरैहिकामुष्मिकैर्वा शब्दैः, तथा श्रुतैरश्रुतैर्वा, तथा साक्षादुपलब्धैरनुपलब्धैर्वा 'न सङ्गं कुर्यात्'—न रागं गच्छेत् न गार्द्ध्यं प्रतिपद्येत न तेषु मुह्येत-

भाष्युपपन्नो भवेत्, एतत्तस्य भिक्षोः सामर्थ्यम्। शेषं पूर्ववत्। इह च सर्वत्रायं दोषः-अजितेन्द्रियत्वं स्वाध्यायादिहानी रागद्वेषसम्भव इति, एवमन्येऽपि दोषा ऐहिकामुष्मिकापायभूताः स्वधिया समालोच्या इति। [ चतुर्थसत्तैककाध्ययनमादित एकादशं समाप्तम्। ] आचा०२श्रु०२ चू०४अ०।

अत्र 'अपोह' शब्दार्थ इति पूर्वम् 'आगम' शब्दे २ भागे ६५ पृष्ठे उक्तम्।

अथेहापि किञ्चिदुक्तव्यशेषमभिधीयते। ]—भवतु वा सामान्यं तथापि तस्य स्वभेदेभ्योऽर्थान्तरत्वे भिन्ने स्वभेदाध्यवसायो भ्रान्तिरेव। नह्यन्येनान्ये समाना युक्तास्तद्वतो नाम स्युरनर्थान्तरत्वेऽपि सामान्यस्य सर्वमेव विश्वमेकं वस्तु परमार्थत इति। तत्र सामान्यप्रत्ययो भ्रान्तिरेव न ह्येकवस्तुविषयः समानप्रत्ययः भेदग्रहणपुरःसरत्वात्तस्य भ्रान्तत्वे च सिद्धे निर्विषयत्वमपि सिद्धं स्वाकारार्पणेन जनकस्य कस्यचिदर्थस्यालम्बनलक्षणस्य प्राप्तस्याभावात्। अन्यथा वा निर्विषयत्वं, तथाहि—यत्रैव कृतसमया ध्वनयस्त एव तेषामर्थो युक्तो नान्योऽतिप्रसङ्गात्। नच क्वचिद्वस्तुन्येषां परमार्थतः समयः संभवतीति निर्विषया ध्वनयः, प्रयोगः—ये यत्र भावतः कृतसमया न भवन्ति न ते परमार्थतस्तमभिदधति यथा सास्नादिमति पिण्डेऽश्वशब्दोऽकृतसमयः, न भवन्ति च भावतः कृतसमयाः सर्वस्मिन्वस्तुनि सर्व्वे ध्वनय इति व्यापकानुपलब्धिः, कृतसमयत्वेनाभिधायकत्वस्य व्याप्तत्वात्तस्य चेहाभावः।

[ संकेतासंभवसाधनाय स्वलक्षणाद्यर्थभेदेन विकल्पपञ्चविधानम् ]—

नचायमसिद्धो हेतुः। तथाहि—गृहीतसमयं वस्तु शब्दार्थत्वेन व्यवस्थाप्यमानं स्वलक्षणं वा व्यवस्थाप्येत, जातिर्वा, तद्योगो वा, जातिमान्वा पदार्थः,बुद्धेर्वा आकारः इति विकल्पाः। सर्वेष्वपि समयासंभवान्न युक्तं शब्दार्थत्वं तत्त्वतः; सांवृतस्य तु शब्दार्थत्वस्य न निषेध इति न स्ववचनविरोधः प्रतिज्ञायाः। एवं ह्यसौ स्यात्-स्वलक्षणादीन् शब्देनाऽप्रतिपाद्य न शक्यमशब्दार्थत्वमेषां प्रतिपादयितुं,तत्प्रतिपिपादयिषया च शब्देन स्वलक्षणादीनुपदर्शयता शब्दार्थत्वमेषामभ्युपेयं स्यात्। पुनश्च तदेव प्रतिज्ञया प्रतिषिद्धमिति स्ववचनव्याघातः ; नचासावभ्युपगम्यत इति। एतेन यदुक्तमुद्योतकरेण-भाष्यकारेण-"अवाचकत्वे शब्दानां प्रतिज्ञाहेत्वोर्व्याघातः,[अ०२,आ० २ सू०६७न्यायवा०]इति,तदपि प्रत्युक्तं भवति; नहि सर्वथा शब्दार्थापवादोऽस्माभिः क्रियते। आगोपालेभ्योऽपि प्रतीतत्वात्तस्य, किंतु-तात्त्विकत्वं धर्मः परैर्यस्तत्रारोप्यते तस्यैव निषेधो न तु धर्म्मिणः।

[ १ स्वलक्षणे संकेतासंभवसाधनम् ]—

तत्र—स्वलक्षणेन तावत् समयः संभवति, शब्दस्य समयो, हि व्यवहारार्थं क्रियते न व्यसनितया, तेन यत्रैव सङ्केतव्यवहारकालव्यापकत्वमस्ति तत्रैव स व्यवहर्तृणां युक्तो नान्यत्र, न च स्वलक्षणस्य संकेतव्यवहारकालव्यापकत्वमस्ति तस्मान्न तत्र समयः संकेतव्यवहारकालाऽव्यापकत्वं च शाबलेयादिव्यक्तीनां देशादि भेदेन परस्परतोऽत्यन्तव्यावृत्ततयाऽनन्वयात्तत्रैकत्र कृतसमयस्य पुंसोऽन्यैर्व्यवहारो न स्यादिति। तत्र समयाऽभावान्नासिद्धता हेतोः। नचाप्यनैकान्तिकत्वं, व्याप्तिसिद्धेः, तथाहि-यद्यगृहीतसंकेतमर्थं शब्दः प्रतिपादयेत्तदा गोशब्दोऽप्यश्वं प्रतिपादयेत्संकेतकरणानर्थक्यं च स्यात्, तस्मादतिप्रसङ्गापत्तिर्बाधकं प्रमाणमिति कथं न व्याप्तिसिद्धिः? अयमेव वा अकृतसमयत्वादिति हेतुराचार्यदिग्नागेन "न जातिशब्दो भेदानां वाचकःआनन्त्यात्"इत्यनेन निर्दिष्टः, तथाहि-"आनन्त्याद्" इत्यनेन समयाऽसंभव एव दर्शितः। तेन यदुक्तमुद्योतकरेण-"यदि शब्दाम्पश्यसि तदा-'आनन्त्याद्' इत्यस्य वस्तुधर्मत्वाद् व्यधिकरणो हेतुः अथ भेदा एव पक्षीक्रियन्ते तदा नान्वयी न व्यतिरेकी दृष्टान्तोऽस्तीत्यहेतुरानन्त्यम्।" (अ० २ आ० २ सू० ६७ न्यायवा०) इति, तत्प्रत्युक्तम्। यत्पुनः स एवाह—"यस्य निर्विशेषणाभेदाः शब्दैरप्यभिधीयन्ते तस्यायं दोषः, अस्माकं तु सत्ताविशेषणानि द्रव्यगुणकर्माण्यभिधीयन्ते। तथा हि-यत्र यत्र सत्तादिकं सामान्यं पश्यति तत्र तत्र सदादिशब्दं प्रयुङ्क्ते एकमेव च सत्तादिकं सामान्यम्, अतः सामान्योपलक्षितेषु भेदेषु समयक्रियासंभवादकारणमानन्त्यम्" (अ०२ आ०२ सू० ६७ न्यायवा० ) इति, असदेतत्; यतो न सत्तादिकं वस्तुभूतं सामान्यं तेभ्यो भिन्नमभिन्नं वाऽस्तीति भवतु वा तत्तथाप्येकस्मिन्भेदेऽनेकसामान्यसंभवादसाङ्कर्येण सदादिशब्दयोजनं न स्यात्। न च शब्देनानुपदर्श्य सत्तादिकं सामान्यं सत्तादिना भेदानुपलक्षयितुं समयकारः शक्नुयात्, न चाकृतसमयेषु सत्तादिषु शब्दप्रवृत्तिरस्तीति इतरेतराश्रयदोषप्रसक्तिः। अथापि स्यात्स्वयमेव प्रतिपत्ता व्यवहारोपलम्भादन्वयव्यतिरेकाभ्यां सदादिशब्दैः समयं प्रतिपद्यते, असदेतत् अनन्तभेदविषयनि शेषव्यवहारोपलम्भस्य कस्यचिदसंभवात्। एकदा सत्तादिमत्सु भेदेष्वसकृद्व्यवहारमुपलभ्याऽदृष्टेष्वपि तज्जातीयेषु तान् शब्दान्-प्रतिपद्यत इति चेत्, न; अदृष्टत्वात्, नह्यदृष्टेष्वतीतादिभेदभिन्नेष्वनन्तेषु भेदेषु समयः संभवत्यतिप्रसङ्गात्। विकल्पबुद्ध्या व्याप्त ( इत्य ) तेषु तत्प्रतिपत्त्याऽभ्युपगमे विकल्पसमारोपितार्थविषय एव शब्दसङ्केत प्राप्तः। तथा हि-अतीतानागतयोरसत्त्वेनासंनिहितत्वात्तत्र विकल्पबुद्धिर्भवन्ती निर्विषयैव, तत्र भवन्समयः कथं परमार्थवस्तुविषयो भवेदिति? सपक्षे भावान्नापि हेतोर्विरुद्धतेति सिद्धं स्वलक्षणाविषयत्वं शब्दानाम्। अथ स्थिरैकरूपत्वाद्धिमाचलादिभावानां देशादिभेदाभावात्, सङ्केतव्यवहारकालव्यापकत्वेन समयसंभवात्पक्षैकदेशाऽसिद्धताप्रकृतहेतोः, नैतत्; हिमाचलादीनामप्यनेकाणुप्रचयस्वभावतया उदयानन्तरापवर्गितया च नाशेषावयवपरिग्रहेण समयकालपरिदृष्टस्वभावस्य व्यवहारकालानुयायित्वेन च समयः संभवतीति नासिद्धता हेतोः। अत उक्तन्यायेन समयवैयर्थ्यप्रसङ्गान्न स्वलक्षणे समयः संभवति,अशक्यक्रियत्वाच्च न तत्र समयः। तथाहि-उदयानन्तरापवर्गिषु भावेषु समयः क्रियमाणः अनुत्पन्नेषु वा क्रियेत उत्पन्नेषु वा?, न तावदनुत्पन्नेषु परमार्थतः समयो युक्तः, असतः सर्वोपाख्यारहितस्याधारत्वानुपपत्तेः, अपारमार्थिकवस्तुजातेऽपि पुत्रादौ समय उपलभ्यत इति न दृष्टविरोधः, विकल्पनिर्मितार्थविषयत्वेन तस्याऽपारमार्थिकत्वात्। नाप्युत्पन्ने समयो युक्तः, तस्मिन्ननुभवोत्पत्तौ तत्पूर्वके च शब्दभेदस्मरणे सति समयः संभव-

ति नान्यथा-अतिप्रसङ्गात्-शब्दभेदस्मरणकाले च चिरनिरुद्धं स्वलक्षणमिति । अजातवज्ज्ञातेऽपि कथं समयः समयक्रियाकाले द्वयोरप्यसन्निहितत्वात् ? तथाहि-अनुभवावस्थायामपि तावत्तत्कारणतया स्वलक्षणं क्षणिकं न सन्निहितसत्ताकं भवति, किं पुनरनुभवोत्तरकालभाविनामभेदाभोगस्मरणोत्पादकाले भविष्यति ? नापि तज्जातीये तत्सामर्थ्यबलोपजाते समयक्रियाकालभाविनि क्षणे समयः संभवति तस्याऽन्यत्वात् । यद्यपि समयक्रियाकाले सन्निहितं क्षणान्तरमस्ति तथापि तत्र समयाभोगाऽसंभवान्न समयो युक्तः ; नह्यश्वमुपलभ्य तन्नामस्मरणोपक्रमपूर्वकं समयं कुर्वाणस्तत्कालसन्निहिते गवादावाभोगाविषयीकृते 'अश्व ' इति समयं समयकृत्करोति । अथापि स्यात्सर्वेषां स्वलक्षणानां सादृश्यमस्ति तेनैक्यमध्यवस्य समयः करिष्यते । असदेतत्, यतो विकल्पबुद्ध्याऽध्यारोपितं सादृश्यं, तस्य च ध्वनिभिः प्रतिपादने स्वलक्षणमवाच्यमेवेति न स्वलक्षणे समयः । नाऽपि शब्दस्वलक्षणस्य । तथाहि—स्वसमयकृतस्मृत्युपस्थापितमेव नामभेदमर्थेन योजयति, नच स्मृतिर्भावतोऽनुभूतमेवाभिलापमुपस्थापयितुं शक्नोति तस्य चिरनिरुद्धत्वात्, य चोच्चारयति तस्य पूर्वमननुभूतत्वान्न तत्र स्मृतिः, न चाविषयीकृतस्तया समुत्थापयितु शक्यः, अतः स्मृत्युपस्थापितमनुसंधीयमानं विकल्पनिर्निमित्तत्वेनास्वलक्षणमेवेति न स्वलक्षणत्वेऽस्य समयः । तस्मादव्यपदेश्यं स्वलक्षणमिति सिद्धम् । ( सम्म० ) नैयायिकास्तु-" व्यक्त्याकृतिजातयस्तु पदार्थः ( न्यायद० अ० २ आ० २ सू० ६५ ) इति, प्रतिपन्नाः । तत्र व्यक्तिशब्देन द्रव्यगुणविशेषकर्म्माण्यभिधीयन्ते ( सम्म० । ) ( ' गुणविसेसासय ' ' शब्दे तृतीयभागे ६४० पृष्ठेऽत्रत्या वक्तव्यता गता ),

तथा च सूत्रम्—" आकृतिर्जातिलिङ्गाख्या " ( न्यायद० अ० २ आ० २ सू० ६७ ) इति । अस्य भाष्यम्—" यया जातिर्जातिलिङ्गानि च व्याख्यायन्ते तामाकृतिं विद्यात् सा च सत्त्वावयवानाम् । तदवयवाना च नियतो व्यूहः " ( न्यायद० वात्स्या० भा० पृ० २२५ ) व्यूहशब्देन संयोगविशेष उच्यते, नियतग्रहणेन कृत्रिमसंयोगनिरासः, तत्र जातिलिङ्गानि प्राण्यवयवाः शिरः-पाण्यादय तैर्हि गोत्वादिलक्षणा जातिर्लिङ्ग्यते, आकृत्या तु कदाचित् साक्षाज्जातिर्व्यज्यते यदा शिर -पाण्यादिसन्निवेशदर्शनाद् गोत्वं व्यज्यते, कदाचिज्जातिलिङ्गानि यदा विषाणादिभिरवयवैः पृथक् पृथक् स्वावयवसन्निवेशाभिव्यक्तैर्गोत्वादिर्व्यज्यते; तेन जातेस्तल्लिङ्गाना च प्रख्यापिका भवत्याकृति । जातिशब्देनाभिन्नाभिधान-प्रत्ययप्रसवनिमित्तं सामान्याख्यं वस्तूच्यते । तथा च सूत्रम्-' समानप्रत्ययप्रसवात्मिका जाति ' ( न्यायद० अ० २ आ० २ सू० ६८) इति समानप्रत्ययोत्पत्तिकारणं जातिरित्यर्थः । तत्र व्यक्त्याकृत्योः एतेनैव स्वलक्षणस्य शब्दार्थत्वनिराकरणेन शब्दार्थत्वं निराकृतम् । तथाहि-यथा स्वलक्षणस्याकृतसमयत्वादशब्दार्थत्वं तथा तयोरपीति ' अकृतसमयत्वात् ' इत्यस्य हेतोर्नासिद्धि , नाप्यनैकान्तिकता । अपि च-व्यक्तिर्द्रव्य-गुणविशेष-कर्मलक्षणा, आकृतिश्च संयोगात्मिका, एते च द्रव्यादय प्रतिषिद्धत्वाद् असन्त कथं शब्दार्थतामुपयान्ति ?,



( २-४ जाति-तद्योग-तद्वत्सु सकेतासंभवप्रदर्शनम् )-

एवं स्वलक्षणवज्जाति-तद्योग—जातिमत्स्वपि-जात्यादेरसम्भवात्-समयासम्भव । यथा च जातेस्तद्योगस्य च समवायस्यासम्भवस्तथा प्रागेव प्रतिपादितम् , जाति-तद्योगयोश्चाभावे तद्वतोऽप्यसम्भव एव तत्कृतत्वात् तद्व्यपदेशस्य, तद्वतश्च स्वलक्षणात्मकत्वात् तत्पक्षभावी दोष समान एव । (पदवाच्यविषयाणि वाजप्यायन व्याडि पाणिनीना मतानि)-

"जाति पदार्थः" इति वाजप्यायनः। "द्रव्यम्" इति व्याडि । " उभयम् " पाणिनि । तदप्यनेनैव निरस्तम् जातेरयोगाद् द्रव्यस्य च स्वलक्षणात्मकत्वात् तत्पक्षभाविदोषानतिवृत्तेः ।

( बुद्ध्याकारे समयासंभवसाधनम् )—

बुद्ध्याकारेऽपि न समयः सम्भवति, तस्य बुद्धितादात्म्येन व्यवस्थितत्वाद् नासौ तद्बुद्धिस्वरूपवत् प्रतिपाद्यमर्थं बुद्ध्यन्तरं वाऽनुगच्छति, ततश्च सङ्केत-व्यवहारकालाव्यापकत्वात् स्वलक्षणवत् कथ तत्रापि समयः ? भवतु वा तस्य व्यवहारकालान्वयस्तथापि न तत्र समयो व्यवहर्तॄणां युक्तः । तथाहि—'अपि नामेतः शब्दादर्थक्रियार्थी पुमानर्थक्रियाक्षमानर्थान् विज्ञाय प्रवर्त्तिष्यते' इति मन्यमानैर्व्यवहर्तृभिरभिधायका ध्वनयो नियोज्यन्ते न व्यसनितया, न चासौ विकल्पो बुद्ध्याकारोऽभिमतशीताऽपनोदादिकार्यं तदर्थिनः सम्पादयितुमलम् तदनुभवोत्पत्तावपि तदभावात् , तेन तत्रापि समयाभावान्नासिद्ध ' अकृतसमयत्वात् ' इति हेतु ।

( ' अस्त्यर्थादय शब्दार्थाः ' इति वादिनां पक्षसप्तके निरूपयितव्ये प्रथमम् अस्त्यर्थवादिमतम् )—

अथ अस्त्यर्थादयोऽपरे शब्दार्थाः सन्ति, ततश्च तत्र समयसम्भवादसिद्धतैव हेतो । तथाहि-' अस्त्यर्थः ' इति यदेतत् प्रतीयते तदेव सर्वशब्दानामभिधेयं न विशेष , यथैव ह्यपूर्व-देवतादिशब्दा नार्थाकारं विशेषं बुद्धिषु सन्निवेशयन्ति केवल तत्रैतावत् प्रतीयते-' सन्ति केऽप्यर्थाः येष्वपूर्वादयः शब्दा प्रयुज्यन्ते ' तथा दृष्टार्थेष्वपि गवादिशब्देष्वेतत् तुल्यम् , यतस्तेभ्योऽप्येवं प्रतीतिरुपजायते-' अस्ति कोऽप्यर्थो यो गवादिशब्दाभिधेयो गोत्वादिः ' यस्तु तत्राकारविशेषपरिग्रहः केषाञ्चिदुपजायते स तेषा सिद्धान्तबलात् , न तु शब्दात् ।

( समुदायार्थवादिमतम् )—

अपरे " ब्राह्मणादिशब्दैस्तपो-जाति-श्रुतादिसमुदायो विना विकल्प-समुच्चायाभ्यामभिधीयते, यथा वनादिशब्दैर्धवादयः " इत्याहु । तथाहि—' वनम् ' इत्युक्ते ' धवो ( वो वा ) खदिरो वा ' इति न विकल्पेन प्रतीतिरुपजायते, नापि 'धवश्च खदिरश्च' इति समुच्चयेन, अपि तु-सामस्त्येन प्रतीयन्ते धवादयः तथा ' ब्राह्मण ' इत्युक्ते ' तपो वा जातिर्वा श्रुतं वा ' ' तपश्च जातिश्च श्रुतं च ' न प्रतिपत्तिर्भवति; अपि तु-साकल्येन सम्बन्ध्यन्तरव्यवच्छिन्नास्तपःप्रभृतय संहताः प्रतीयन्त इति । बहुष्वनियतैकसमुदायिभेदावधारणं विकल्प , एकत्र युगपदभिसम्बन्ध्यमानस्य नियतस्यैकस्य (नस्यानेकस्य ) स्वरूपभेदावधारणं समुच्चय , तद्व्यतिरेकेणात्र प्रतिपत्तिर्लोकप्रतीतैव ।

[ असत्यसंबन्धपदार्थवादिमतम् ]—

अपरे " द्रव्यत्वादिभिरनिर्धारितरूपैर्य सम्बन्धो द्रव्या-

ऽनुभूयते। नापीन्द्रियज्ञानेन व्यक्तेराकारद्वयं प्रतीयते, तत्र व्यक्ताकारस्यैव प्रतिभासनात्, न हि परिस्फुटप्रतिभासवेलायामविशदरूपाकारो व्यक्तिमारूढ प्रतिभाति; तत् कथं व्यक्तेरसावात्मा? अथ 'श्रुतं पश्यामि' इति व्यवसायाद् दृश्य-श्रुतयोरेकता, ननु किं दृश्यरूपतया श्रुतमवगम्यते, श्रुतरूपतया वा दृश्यम्? तत्राद्ये पक्षे दृश्यरूपावभास एव न श्रुतगतिर्भवेत्। द्वितीयेऽपि पक्षे श्रुतरूपावगतिरेव व्यक्ते न दृश्यरूपसम्भव, तस्मात् प्रतिभासरहितमभिमानमात्रमिन्द्रिय-शब्दार्थयोरध्यवसानम् न तत्त्वम्; अन्यथा दर्शनवच्छाब्दमपि स्फुटप्रतिभासं स्यात्। अथ तत्रेन्द्रियसम्बन्धाऽभावाद् व्यक्तिस्वरूपावभासेऽपि प्रतिपत्तिविशेष. स्यात्, नन्वक्षैरपि स्वरूपमुद्भासनीयम्, तत्र यदि शब्द—लिङ्गाभ्यामपि तदेव दर्श्यते तथा सति तस्यैवान्यूनातिरिक्तस्य स्वरूपस्याधिगमे कथ प्रतिपत्तिभेद? अन्यच्च, प्रत्यक्षेऽपि साक्षादिन्द्रियसम्बन्धोऽस्तीति न स्वरूपेण ज्ञातु शक्योऽसौ तस्यातीन्द्रियत्वात्, किन्तु-स्वरूपप्रतिभासात् कार्या (र्यात्)। तच्च वस्तुस्वरूपं यद्यनुमानेऽपि भाति तथा सति तत एवेन्द्रियसम्बन्ध समुन्नीयताम्। अथ तत्र परिस्फुटप्रतिभासाऽभावान्नाऽसावनुमीयते, ननु तदभावस्तत्राक्षसङ्गतिविरहात् प्रतिपाद्यते तदभावश्च स्फुटप्रतिभासाभावादिति सोऽयमितरेतराश्रयदोष। अथ व्यक्तिरूपमेकमेव नीलादित्वमुभयत्र प्रतीयते व्यक्ताऽव्यक्ताकारौ तु ज्ञानस्यात्मानौ, तत्रोच्यते-यदि तौ ज्ञानस्याकारौ कथं नीलप्रभृतिरूपतया प्रतिभात.? तद्रूपतया च प्रतिभासनान्नीलाद्याकारावेतौ; नहि व्यक्तरूपतामव्यक्तरूपता च मुक्त्वा नीलादिकमपरमाभाति, तदनवभासात् तस्याभाव एव। व्यक्ताव्यक्ताकारत्मनश्च नीलस्य व्यक्ताकारवद् भेद., नहि प्रतिभासभेदेऽप्येकता अतिप्रसङ्गात्। तन्नाक्ष-शब्दयोरेको विषय.। किञ्च-यदि व्यक्ति. शब्द-लिङ्गयोरर्थ तथा सति सम्बन्धवेदन विनैव ताभ्यामर्थप्रतीतिर्भवेत्; नहि तत्र तत् तयो. सम्भवति। व्यक्तिर्हि नियतदेशकालादशा (लदशा) परिगता न देशान्तरादिकमनुवर्तते नियतदेशादिरूपाया एव तस्या. प्रतीते., तथा चैकत्रैकदा सम्बन्धानुभवेऽन्यस्यार्थस्य कथं प्रतीति.? अथ व्यक्तीनामेकजात्युपलक्षिते रूपे सम्बन्धादन्तरा भविष्यति, तदपि न युक्तम्; यतो जात्युपलक्षितमरूपं तासा भिन्नमेव लिङ्गादिगोचर, तस्याभेदे पूर्वोक्तदोषात्, तथा च सम्बन्धाननुभव एव स्यात्। किञ्च—व्यक्तौ सम्बन्धवेदन प्रत्यक्षेण, अनुमानेन वा भवेत् प्रत्यक्षेण, तस्य पुर स्थितरूपमात्रप्रतिभासनात् शब्दस्य वचनयोर्वाच्यवाचकसम्बन्धस्तेन गृह्यते। अथेन्द्रियज्ञानारूढ एव रूपे सम्बन्धव्युत्पत्तिर्दृश्यते— इदमेतच्छब्दवाच्यम्' अस्य वेदमभिधानम्' इति, अत्र विचार—'अस्येदं वाचकम्' इति कोऽर्थ.—किं प्रतिपादकम्, यदि वा-कार्यम्, कारणं वेति? तत्र यदि प्रतिपादकम्, तत् किमधुनैव, यद्वाऽन्यदा? तत्र यद्यधुनोच्यते शब्दरूपमर्थस्य प्रतिपादक विशदेनाकारेणेति, तदयुक्तम्, अक्षव्यापारेणाधुना विशदाकारेण नीलादेरवभासनात्, ततश्चाक्षव्यापार एवाधुना प्रकाशकोऽस्तु न शब्दव्यापार, तस्य तत्र सामर्थ्यानधिगते। अथान्यदा लोचनपरिस्पन्दाभावे शब्दोऽर्थानुद्भासयति तदा किं

तेनैवाऽऽकारेणासौ तानर्थानवभासयति, यद्वा-आकारान्तरेणेति विकल्पद्वयम्। यदि विशदेनाकारेण प्रतिपादयतीत्युच्यते तदसत्, यतस्तदाप्यसौ चक्षुरादिभिरेव विशदेनाकारेणोद्भास्यते न शब्देन, तस्य तत्र सामर्थ्यादर्शनात् दर्शनाकाङ्क्षणाच्च। यदि तु शब्देनैव सोऽर्थ स्वरूपेणैव प्रतिपाद्यते तदाऽस्य सर्वथा प्रतिपन्नत्वात् किमर्थं प्रवृत्ति? नहि प्रतिपन्न एव तावन्मात्रप्रयोजना वृत्तिर्युक्ता, वृत्तेरविरामप्रसङ्गात्। अथ किञ्चिदप्रतिपन्न रूपं तदर्थं प्रवर्तनम्, ननु यदप्रतिपन्नं व्यक्तिरूपं प्रवृत्तिविषय तत् तर्हि न शब्दार्थ, तदेव च पारमार्थिकम् ततोऽर्थक्रियादर्शनात्, नाव्यक्तम् सर्वार्थक्रियाविरहात्। अथ कालान्तरे स्फुटतरेणाकारेण व्यक्तीरुद्द्योतयन्ति शब्दा., नन्वसावाकारस्तदा सम्बन्धव्युत्पत्तिकाले कालान्तरे वा नेन्द्रियगोचरस्तत् कथं तत्र शब्दाः प्रवर्तमाना नयनादिगोचरेऽर्थे वृत्ता भवन्ति? तन्नाध्यक्षतः सम्बन्धवेदनम्। नाप्यनुमानेन, तदभावे तदनवतारात्। अथाप्यर्थापत्त्या सम्बन्धवेदनम्। तथाहि-व्यवहारकाले शब्दार्थौ प्रत्यक्षे प्रतिभात., श्रोतुश्च शब्दार्थप्रतीतिं चेष्टया प्रतिपद्यन्ते व्यवहारिण तदन्यथानुपपत्त्या तयो सम्बन्धं विदन्ति। अत्रोच्यते-सिद्ध्यत्येवं काल्पनिक सम्बन्ध। तथाहि-श्रोतु. प्रतिपत्ति. सङ्केतानुसारिणी दृश्यते, कं(क)लिमाऽऽर्यादिशब्देभ्यो हि द्रविडाऽऽर्ययोर्विपरीततत्प्रतिपत्तिदर्शनान्न नियत. सम्बन्धो युक्त। सर्वगते च तस्मिन् सिद्धेऽपि न नियतार्थप्रतिपत्तिर्युक्ता। प्रकरणादिकमपि नियमहेतु. नियतार्थसिद्धौ सर्वमनुपपन्नम्। तथाहि-प्रकरणादय शब्दधर्म, अर्थधर्म, प्रतिपत्तिधर्मो वा? शब्दधर्मे तस्मिन् शब्दरूपं नियतार्थप्रतिपत्तिहेतुरिष्ट स्यात्, तच्च सर्वार्थान् प्रति तुल्यत्वात् न युक्तम्। अर्थोऽपि न नियतरूप सिद्ध इति न तद्धर्मोऽपि प्रकरणादि। प्रतिपत्तिधर्मस्तु यदीष्यतेऽसौ तदा काल्पनिक एवार्थनियम न तात्त्विक स्यात्। तस्मात् सर्वं परदर्शन ध्यान्ध्यविजृम्भितम् मनागपि विचाराक्षमत्वात्। तदेवमवस्थित विचारात् 'न वस्तु शब्दार्थ' इति, किन्तु-शब्देभ्य कल्पना बहिरर्थासंस्पर्शिन्य. प्रसूयन्ते, ताभ्यश्च शब्दा इति। शब्दाना च कार्यकारणभावमात्रं तत्त्वम् न वाच्यवाचकभाव। तथाहि-न जाति-व्यक्त्योर्वाच्यत्वम्, पूर्वोक्तदोषात्। नापि ज्ञान-तदाकारयो, तयोरपि स्वेन रूपेण स्वलक्षणत्वात् अभिधानकार्यत्वाच्च। शब्दाद् विज्ञानमुत्पद्यते न तु तत् तेन प्रतीयते, बहिरर्थाध्यवसायात्। कथं तर्ह्यन्यापोह शब्दवाच्य कल्प्यते? लोकाभिमानमात्रेण शब्दार्थोऽन्यापोह इष्यते, लौकिकाना हि शब्दश्रवणात् प्रतीति, प्रवृत्ति, प्राप्तिश्च बहिरर्थे दृश्यते। यदि लोकाभिप्रायोऽनुवर्त्यते बहिरर्थस्तर्हि शब्दार्थोऽस्तु तदभिमानात् नाऽन्याऽपोह तदभावात्। अत्रोच्यते-बहिरर्थ एवान्यापोह तथा चाह-"य एव व्यावृत्त सैव व्यावृत्ति" नन्वेव सति स्वलक्षण शब्दार्थः स्यात्, नैव विजातीयव्यावृत्तेन रूपेण शब्दभूमिरिष्यते—सजातीयव्यावृत्तस्य रूपस्य शाब्दे प्रतिभासाभावात्—यदि तर्हि विजातीयव्यावृत्त शब्दैर्विकल्पैश्चोल्लिख्यते तथा सति तदव्यतिरेकात् सजातीयव्यावृत्तमपि रूपमधिगत भवेत्, न; विकल्पानामविशास्वभावत्वान्न हि ते स्वलक्षणस्पर्शभाज. यतस्ते सर्वाऽऽकारप्रतीतिदोष —केवलमा. ग्रानमात्रम्

वहिरर्थाध्यवसायस्तदभिप्रायेण वाच्यवाचकभाव. शब्दार्थ-योन्त्यि(न्या)पोह' शब्दभूमिरिष्ट । परमार्थतस्तु शब्द-लिङ्गाभ्यां वहिरर्थसंस्पर्शव्यतीत प्रत्यय. केवलं क्रियत इति तत्संस्पर्श (र्शा) भावेऽपि च पारम्पर्येण वस्तुप्रतिवन्धाद्-विसंवाद । तथाहि-पदार्थस्यास्तित्वात् प्राप्ति न दर्शनात्, केशोन्दुकादेर्दर्शनेऽपि प्राप्त्यभावात् । अथ प्रतिभासमन्तरेण कथ प्रवृत्ति. ? ननु प्रतिभासेऽपि कथं प्रवृत्ति ? तस्मिन्नप्यनर्थित्वे तदभावात् अर्थित्वे च सति दर्शनविरहेऽपि भ्रान्तेः सद्भावात्, प्रतिवन्धाभावात्तु तत्र विसंवाद. । यदा तु विकल्पाना स्वरूपनिष्ठत्वान्नान्यत्र प्रतिवन्धसिद्धि-स्तदा स्वसंवेदनमात्रं परमार्थ(सत)त्वम्, तथापि कथ समयपरमाऽर्थविस्तर. । सम्म० १ काण्ड । ( अधिक 'सामरणविसेस' शब्दे वक्ष्यते । ) स्वार्थेनावगतसम्बन्ध शब्द स्वार्थं प्रतिपादयति । सम्म० १ काण्ड । (शब्दस्य पौद्गलिकत्वम् 'आगम' शब्दे द्वितीयभागे ७१ पृष्ठे गतम् । )

शब्दस्य वहिरर्थं प्रति प्रामाण्यम्-

एतेन यत्कैश्चित् शब्दस्य वहिरर्थं प्रति प्रामाण्यमपाक्रियते तदपास्तं द्रष्टव्यम्, तथाहि-त एवमाहु —प्रमेयं वस्तु परिच्छिन्न प्रापयत्प्रमाणमुच्यते, प्रमेय च विषयः प्रमाणस्येति प्रामाण्यं विषयवत्तया व्याप्तम्, ततो यद्विषयवन्न भवति न तत्प्रमाणं, यथा-गगनेन्दीवरज्ञानं, न भवति च विषयवत् शब्दं ज्ञानमिति, न चायमसिद्धो हेतु., यतो-द्विविधो विषय.—प्रत्यक्ष', परोक्षश्च । तत्र न प्रत्यक्ष. शाब्दज्ञानस्य विषयो, यस्य हि ज्ञानस्य प्रतिभासेन स्फुटाभनीलाद्याकाररूपेण योऽर्थोऽनुकृतान्वयव्यतिरेक. स तस्य प्रत्यक्ष, तस्य च प्रत्यक्षस्यार्थस्यायमेव प्रतिपत्तिप्रकार. संभवदशामश्नुते, नापर., तद्विषयं च तदन्वयव्यतिरेकानुविधायि स्फुटप्रतिभासं ज्ञान प्रत्यक्षम्, प्रत्यक्षज्ञेयत्वात् तन्न प्रत्यक्षोऽर्थोऽनेकप्रकारप्रतिपत्तिविषयो य शब्दाप्रमाणस्यापि विषयो भवेत् । नापि परोक्ष', तस्यापि हि निश्चिततदन्वयव्यतिरेकनान्तरीयकदर्शनात् प्रतिपत्ति., यथा धूमदर्शनात् वह्ने, अन्यथाऽतिप्रसङ्गात् । न च शब्दस्यार्थेन सह निश्चितान्वयव्यतिरेकता प्रतिवन्धाऽभावात् । तादात्म्यतदुत्पत्त्यनुपपत्ते, तथाहि-न वाह्यार्थो रूपं शब्दाना नापि शब्दा रूपमर्थानाम्, तथाप्रतीतेरभावात्, तत्कथमेषा तादात्म्यम् ?,येन व्यावृत्तिकृतव्यवस्थाभेदेऽपि नान्तरीयकता स्यात्, कृतकत्वानित्यत्ववत्, अपि च-यदि तादात्म्यमेषा भवत्तनोऽनलाचलक्षुरिकादिशब्दोच्चारणे वदनदहनपूरणपाटनादिदोष' प्रसज्येत । न चैवमस्ति, तन्न तादात्म्यं नापि तदुत्पत्ति, तत्रापि विकल्पद्वयप्रसक्ते । तथाहि-वस्तुन किं शब्दस्योत्पत्ति उत शब्दाद्वस्तुन ? तत्र वस्तुन शब्दोत्पत्तावकृतसंकेतस्यापि पुंस प्रथमपनसदर्शने तच्छब्दोच्चारणप्रसङ्ग, शब्दाद्वस्तूत्पत्तौ विश्वस्यादरिद्रताप्रसक्ति, तत एव कटककुण्डलाद्युत्पत्ते तदेवं प्रतिवन्धाभावान्न शब्दस्यार्थेन सह नान्तरीयकतानिश्चय, तदभावाच्च न शब्दान्निश्चितस्यार्थस्य प्रतिपत्ति, अपि तु-आनवर्त्तितशङ्कतया अस्ति न वेति विकल्पितस्य, न च विकल्पितमुभयरूपं वस्त्वस्ति, यत्प्राप्यं सद्विषय' स्यात्, प्रवर्त्तमानस्य तु पुरुषस्य तस्य तस्यार्थस्य पृथिव्याममज्जनादवश्यमन्यत् ज्ञानान्तरं प्राप्तिनिमित्तमुपजायते, यत किंचिदवाप्यते इति शाब्दज्ञानस्य विषयवत्त्वाभाव, तदसद्, विषयवत्त्वाभावासिद्धे, परोक्षस्य तद्विषयत्वाभ्युपगमात् । यत्पुनरुक्तं न शब्दस्यार्थेन सह—निश्चितान्वयव्यतिरेकता, प्रतिवन्धाभावादिति तदसमीचीनम्, वाच्यवाचकभावलक्षणेन प्रतिवन्धान्तरेण नान्तरीयकतानिश्चयात्, शब्दो हि वाह्यवस्तुवाचकस्वभावतया तन्नान्तरीयकः, ततस्तन्नान्तरीयकतायां निश्चितायां शब्दाद् निश्चितस्यैवार्थस्य प्रतिपत्तिर्न विकल्पितरूपस्य निश्चितं च प्रापयत् विषयवदेव शाब्द ज्ञानमिति । स्यादेतत्-यदि वास्तवसम्वन्धपरिकरितमूर्त्तय शब्दास्तर्हि समाश्रयतु निरर्थकतामिदानीं संकेत., स खलु सम्बन्धो यतोऽर्थप्रतीतिः, स चेद्वास्तवो निरर्थक संकेत', तत एवार्थप्रतीतिसिद्धे., तदेतदत्यन्तप्रमाणमार्गानभिज्ञत्वसूचकम्, यतो न विद्यमान इत्येव सम्बन्धोऽर्थप्रतीति निवन्धनम्, किंतु-स्वात्मज्ञानसहकारी, यथा प्रदीप., तथाहि-प्रदीपो रूपप्रकाशनस्वभावोऽपि यदि स्वात्मज्ञानसहकारिकृतसाहायकस्ततो रूप प्रकाशयति, नान्यथा, ज्ञापकत्वात्, न खलु धूमादिकमपि लिङ्गं वस्तुवृत्त्या वह्न्यादिप्रतिवद्धमपि सत्तामात्रेण वह्न्यादेर्गमकमुपजायते, यदुक्तमन्यैरपि-"ज्ञापकत्वाद्धि सम्वन्ध., स्वात्मज्ञानमपेक्षते । तेनासौ विद्यमानोऽपि, नागृहीत. प्रकाशकः" ॥१॥ सम्बन्धस्य च परिज्ञानं तदावरणकर्मक्षयक्षयोपशमाभ्याम्, तौ च संकेततपश्चरणभावनाद्यनेकसाधनसाध्यौ; तत. तपश्चरणभावनासंकेतादिभ्य. समुत्पन्नतदावरणकर्मक्षयक्षयोपशमानां शब्दादर्थाश्च केवलादप्यवैपरीत्येन वाच्यवाचकभावलक्षण' सम्बन्धोऽवगमपथमृच्छति, तथाहि—सर्व्वे एव सर्ववेदिन सुमेरुजम्बूद्वीपादीनर्थानगृहीतसंकेता अपि तत्तच्छब्दवाच्यानेव प्रतिपद्यन्ते, तैरेव तथाप्ररूपणात्, कल्पान्तरवर्तिभिरन्यैरेवं प्ररूपिता, इति तैरपि तथा प्ररूपिता इति चेत्, ननु तेषामपि कल्पान्तरवर्तिना तथा प्ररूपणे को हेतुरिति वाच्यम् ?, तदन्यैरेवं प्ररूपणादिचेत्, अत्रापि स एव प्रसङ्ग । समाधिरपि स एवेति चेत्, ननु तर्हि सिद्धः सुमेर्वाद्यर्थानां तदभिधायकाना च वास्तव सम्बन्ध' सर्वकल्पवर्तिभिरपि सर्ववेदिभिस्तेषां सुमेर्वादिशब्दवाच्यतया प्ररूपणात्, अनादित्वात्संसारस्य, कदाचित् कैश्चिदन्यथापि सा प्ररूपणा कृता भविष्यतीति चेत् न, अतीन्द्रियत्वेनात्र प्रमाणाभावात् सर्व्वैरपि तथैव सा प्ररूपणा कृतेत्यत्रापि न प्रमाणमिति चेन्न, अत्र प्रमाणोपपत्ते, तथाहि-शाक्यमुनिना संप्रति सुमेर्वादिकोऽर्थ सुमेर्वादिशब्देन प्ररूपित, सच सुमेर्वादौ सुमेर्वादिशब्दप्रयोग. संकेतद्वारेणाप्येतत् स्वभावनायां तयोर्नोपपद्यते, तत्स्वभावताभ्युपगमे च सिद्धं न समीहितम्, अनादावपि काले तयोस्तत्स्वभावत्वात्, तत्समानपरिणामस्य प्रवाहतो नित्यत्वात्, तत्र सम्बन्धाभ्युपगमात्, इत्यं चैतदङ्गीकर्त्तव्यम्, अन्यथा अनादित्वात्संसारस्य कदाचिदन्यतोऽपि धूमादेर्भावा, भविष्यतीत्येवं व्यभिचारशङ्का धूमधूमध्वजादिषु प्र-

सरन्ती दुर्निवारेत्यलं दुर्मतिविस्पन्दितेषु प्रयासेन। ननु यदि पारमार्थिकसम्बन्धनिबद्धस्वरूपत्वादिमे शब्दास्तात्त्विकार्थाऽभिधानप्रभविष्णवः तर्हि दर्शनान्तरनिवेशिपुरुषपरिकल्पितेषु वाक्येष्वेतेषां प्रवृत्तिर्नोपपद्येत, परस्परविरुद्धत्वेन तेषामर्थानां स्वरूपतोऽभावात् । यदपि च विनष्टमनुत्पन्नं वा तदपि स्वरूपेण न समस्तीति तत्राऽपि वाचो न प्रवर्त्तेरन् । अपि च-यदि वाचां सद्भूतार्थमन्तरेण न प्रवृत्ति तर्हि न कस्याश्चिदपि वाचोऽलीकता भवेत्, नचैतत् दृश्यते, तस्मात्सर्व्वमपि पूर्वोक्तं मिथ्या। तदप्ययुक्तम्, इह द्विधा शब्दाः—मृषाभाषावर्गणोपादानाः, सत्यभाषावर्गणोपादानाश्च। तत्र ये मृषाभाषावर्गणोपादाना. ते तु तीर्थान्तरीयपरिकल्पिता कुशास्त्रसंपर्कवशसमुत्थवासनासंपादितसत्ताका प्रधानरूपं जगत् ईश्वरकृतं विश्वम्, इत्येवमाकारास्तेऽनर्थका एवाभ्युपगम्यन्ते। ते हि वन्ध्याऽबला इव तदर्थप्राप्त्यादिप्रसवविकला केवलं तथाविधसंवेदनभोगफला इति न तैर्व्यभिचार'। अथ तेऽपि सत्याभिमतशब्दा इव प्रतिभासन्ते तत्कथमयं सत्यासत्यविवेको निर्धारणीय. ?, ननु प्रत्यक्षाऽऽभासमपि प्रत्यक्षमिवाऽऽभासते ततस्तत्रापि कथं सत्याऽसत्यप्रत्यक्षविवेकनिर्धारणम्?, स्वरूपविषयपर्यालोचनयेति चेत्, तथाहि—अभ्यासदशामापन्ना' स्वरूपदर्शनमात्रादेव प्रत्यक्षस्य सत्यासत्यत्वमवधारयन्ति, यथा मणिपरीक्षका मणे., अनभ्यासदशामापन्नास्तु विषयपर्यालोचनया यथा किमय विषय सत्य उताहो नेति ?, तथार्थक्रियासंवाददर्शनत. तद्गतस्वभावलिङ्गदर्शनतो वा सत्यत्वमवगच्छन्ति अन्यथा त्वसत्यत्वमिति। तदेतत् स्वरूपविषयपर्यालोचनया सत्यासत्यत्वविवेकनिर्धारणमिहापि समानम् । तथाहि—दृश्यन्ते एव केचित् प्रक्षातिशयसमन्विता' शब्दश्रवणमात्रादेव पुरुषाणा मिथ्याभाषित्वममिथ्याभाषित्व वा सम्यक् अवधारयन्त, विषयसत्यासत्यत्वपर्यालोचनायां तु किमेष वक्ता यथावदाप्त उत नेति। तत्र यदि यथावदाप्त इति निश्चितं ततो विषयसत्यत्वमितरथा त्वसत्यत्वम्। आप्तेतरविवेकोऽपि परिशीलनेन लिङ्गतो वा कुतश्चिदन्नसेयो निपुणेन हि प्रतिपत्त्रा भवितव्यम्। यदप्युक्तं यदपि च-विनष्टमनुत्पन्न वा तदपि न स्वरूपेण समस्तीत्यादि, तत्रापि यदि विनष्टानुत्पन्नयोर्वार्त्तमानिकविद्यमानरूपाभिधायक' शब्द प्रवर्त्तेत तर्हि स निरर्थकोऽभ्युपगम्यत एव, ततो न तेन व्यभिचार। यदा तु तेऽपि विनष्टानुत्पन्ने विनष्टानुत्पन्नतयाऽभिधत्ते शब्दस्तदा तद्विषयसार्व्वज्ञज्ञानमिव सद्भूतार्थविषयत्वात् सप्रमाणम् । इत्थं चैतदङ्गीकर्त्तव्यम् । अन्यथाऽतीतकल्पान्तरवर्त्तिपार्श्वादिसर्वज्ञदेशना भविष्यच्छ्रखचक्रवर्त्यादिदेशना च सर्व्वथा नोपपद्येत । तद्विषयज्ञाने शब्दप्रवृत्त्यभावात् । अथोच्येत, अनलेऽनलशब्द तदभिधानस्वभावतया यमभिधेयपरिणाममाश्रित्य प्रवर्त्तते, स जले नास्ति जलाऽनलयोरभेदप्रसङ्गात्। अथ च प्रवर्त्तते संकेतवशाज्जलेऽप्यनलशब्द तत्कथं शब्दार्थयोर्वास्तव सम्बन्ध ?, तदसत्, शब्दस्यानेकशक्तिसमन्वितत्वेनोक्तदोषाद्युपपत्तेः, तथाहि-नाऽनलशब्दस्याऽनलवस्तुगताभिधेयपरिणामापेक्षी तदभिधानविषय एवैक. स्वभाव', अपि तु—समयाधानतत्स्मरणपूर्व्वकत्वया विलम्बिनादिप्रतीतिनिबन्धनत्वेन जलवस्तुगताभिधेयपरिणामापेक्षी तदभिधानस्वभावोऽपि, तथा तस्यापि प्रतीतेः, अन्यथा निर्हेतुकत्वेन तत्प्रतीत्यभावप्रसङ्गात्। ननु कथमेते शब्दा वस्तुविषयाः प्रतिज्ञायन्ते ?, चक्षुरादीन्द्रियसमुत्थबुद्धाविव शाब्दे ज्ञाने वस्तुनोऽप्रतिभासनात्, यदेव चक्षुरादीन्द्रियबुद्धौ प्रतिभासते व्यक्त्यन्तराननुयायी प्रतिनियतदेशकाल तदेव वस्तु, तस्यैवार्थक्रियासमर्थत्वात्, नेतरत्परपरिकल्पितं सामान्यं विपर्ययात्, नच तदर्थक्रियासमर्थं वस्तु शाब्दे ज्ञाने प्रतिभासते, तस्मादवस्तुविषया एते शब्दा। तथा चात्र प्रमाणम्—योऽर्थ. शाब्दे ज्ञाने येन शब्देन सह संस्पृष्टो नावभासते न स तस्य शब्दस्य विषय, यथा गोशब्दस्याश्व.। नावभासते चेन्द्रियगम्योऽर्थ, शाब्दे ज्ञाने शब्देन संस्पृष्ट इति। यो हि यस्य शब्दस्यार्थः स तेन शब्देन सह संस्पृष्ट शाब्दे ज्ञाने प्रतिभासते, यथा गोशब्देन गोपिण्ड., एतावन्मात्रनिबन्धनत्वाद्वाच्यत्वस्येति। तदेतदसमीचीनम्, इन्द्रियगम्यार्थस्य शाब्दे ज्ञाने शब्देन सहानवभासासिद्धेः, तथाहि—कृष्णं महान्तमखण्डं मसृणमपूर्वमपवरकात् घटमानयेत्युक्त. कश्चित्तज्ज्ञानावरणक्षयोपशमयुक्त. तमर्थं तथैव प्रत्यक्षमिव शाब्दे ज्ञाने प्रतिपद्यते, तदन्यघटमध्ये तदानयनाय तं प्रतिभेदेन प्रवर्त्तनात्, तथैव च तत्प्राप्ते। अथ तत्राप्यस्फुटरूप एव वस्तुन प्रतिभासोऽनुभूयते, स्फुटाभश्च प्रत्यक्षम्, तत्कथ प्रत्यक्षगम्यं वस्तु शाब्दज्ञानस्य विषय ?, नैव दोष, स्फुटास्फुटरूपप्रतिभासभेदमात्रेण वस्तुभेदायोगात्, तथाहि-एकस्मिन्नेव नीलवस्तुनि दूरासन्नवर्त्तिप्रतिपत्तृज्ञाने स्फुटास्फुटप्रतिभासे उपलभ्येते, नच तत्र वस्तुभेदाभ्युपगम, द्वयोरपि प्रत्यक्षप्रमाणतयाऽभ्युपगमात्, तथेहाप्येकस्मिन्नपि वस्तुनीन्द्रियजशाब्दज्ञाने स्फुटास्फुटप्रतिभासे भविष्यत। नच तद्गोचरवस्तुभेद। अथ वस्त्वभावेऽपि शाब्दज्ञानप्रतिभासाविशेषात्, सत्यपि वस्तुनि शाब्दज्ञान न तद्याथात्म्यसंस्पर्शि तद्भावाभावयोरननुविधानात्, यस्य हि ज्ञानस्य प्रतिभासो यस्य भावाभावावनुविधत्ते तत्तस्य परिच्छेदकम्, नच शाब्दज्ञानप्रतिभासो वस्तुनो भावाभावावनुविधत्ते, वस्त्वभावेऽपि तदविशेषात्, तन्न वस्तुन परिच्छेदक शाब्दज्ञानम्, रसज्ञानमिव गन्धस्य । प्रमाणं चात्र, यज् ज्ञानं यदन्वयव्यतिरेकानुविधायि न भवति न तत्तद्विषयम्, यथा रूपज्ञानं रसविषयम्, न भवति चेन्द्रियगम्यार्थान्वयव्यतिरेकानुविधायि शाब्द ज्ञानमिति व्यापकानुपलब्धे, प्रतिनियतवस्तुविषयत्वं हि ज्ञानस्य निमित्तवत्तया व्याप्तम्, अन्वयव्यतिरेकानुविधानाभावे च निमित्तवत्त्वाभाव स्यात्, निमित्तान्तरासंभवात् तेन तद्विषयवत्त्व निमित्तवत्त्वाभावात् विपक्षाद् व्यापकानुपलब्ध्या व्यावर्त्यमानमन्वयव्यतिरेकानुविधानेन व्याप्यते इति प्रतिबन्धसिद्धे। तदयुक्तम्—प्रत्यक्षज्ञानेऽप्येवमविषयत्वप्रसक्ते, तथाहि—यथा जलवस्तुनि जलोल्लेखिप्रत्यक्षमुदयपदवीमासादयति, तथा जलाभावेऽपि मरौ मध्याह्नमार्तण्डमरीचिकास्वक्षूणजलप्रतिभासमुदयमा-

नमुपलभ्यते ततो जलाभावेऽपि जलज्ञानप्रतिभासाऽविशेषात् । सत्यपि जले जलप्रत्ययं प्रादुर्भवन्न तद्याथात्म्यसंस्पर्शि, तद्भावाभावयो अननुकारादित्यादि सर्व्वं समानमेव । अत्र देशकालस्वरूपपर्यालोचनया तत्प्राप्त्यभावादिना च मरुमरीचिकासु जलोल्लेखिन. प्रत्ययस्य भ्रान्तत्वमवसीयते, भ्रान्तं चाप्रमाणम् , ततो न तेन व्यभिचार , प्रमाणभूतस्य च वस्त्वन्वयव्यतिरेकानुविधायित्वात् व्यभिचार एव, तदेतदन्यत्रापि समानम् , तथा हि-यथार्थदर्शनादिगुणयुक्त पुरुष आप्तः, तत्प्रणीतशब्दसमुत्थं च ज्ञानं प्रमाणम् , नच तस्य वस्त्वन्वयव्यतिरेकानुविधायित्वव्यभिचारसंभव. । यत्पुनरनाप्तप्रणीतशब्दसमुत्थं ज्ञानं तदप्रमाणम् । अप्रमाणत्वाच्च न तेन व्यभिचार. । यदपि च प्रमाणमुपन्यस्तं तदपि हेतोरसिद्धत्वान्न साध्यसाधनायालम् , असिद्धता च हेतोराप्तप्रणीतशब्दस्य वस्तुव्यतिरेकेण प्रवृत्त्यसंभवात् । यत्पुनरिदमुच्यते—शब्द. श्रूयमाणो वक्त्रभिप्रायविषयं विकल्पप्रतिविम्बं तत्कार्यतया धूम इव वह्निमनुमापयति, तत्र स एव वक्ता विशिष्टार्थाभिप्रायशब्दयोराश्रयो धर्मी अभिप्रायविशेष. साध्यः, शब्दः साधनमिति । तदाह—"वक्तुरभिप्रेतं तु सूचयेयु" रिति स एव तथा प्रतिपद्यमान आश्रयोऽस्त्विति, तत्पापात्पापीय , तथा प्रतीतेरभावात् । न खलु कश्चिदिह धूमादिव वह्निं तत्कार्यतया शब्दादभिप्रायविषयं विकल्पप्रतिविम्बमनुमिमीते, अपि तु वाचकत्वेन बाह्यमर्थं प्रत्येति, देशान्तरे कालान्तरे च तथा प्रवृत्त्यादिदर्शनात् । नच देशान्तरादावपि तथा प्रतीतावन्यथा परिकल्पनं श्रेयः, अतिप्रसङ्गप्राप्त. नाग्निर्धूमं जनयति किं त्वदृष्ट. पिशाचादिरित्यस्या. अपि कल्पनाया. प्रसङ्गात् । अपिच-अर्थक्रियार्थी प्रेक्षावान् प्रमाणमन्वेषयति, नचाभिप्रायविषयं विकल्पप्रतिविम्बं विवक्षितार्थक्रियासमर्थम् , किंतु-बाह्यमेव वस्तु, नच वाच्यम्—अभिप्रायविषयं विकल्पप्रतिविम्बं ज्ञात्वा बाह्ये वस्तुनि प्रवर्त्तिष्यते तेनायमदोष इति, अन्यस्मिन् ज्ञातेऽन्यत्र प्रवृत्त्यनुपपत्ते. , नहि घटे परिच्छिन्ने पटे प्रवृत्तिर्युक्ता, एतेन विकल्पप्रतिविम्बकं शब्दवाच्यमिति यत्प्रतिपन्नं तदपि प्रतिक्षिप्तमवसेयम् । तत्रापि विकल्पप्रतिविम्बके शब्देन प्रतिपन्ने वस्तुनि प्रवृत्त्यनुपपत्ते' । दृश्यविकल्पावर्थावेकीकृत्य वस्तुनि प्रवर्तत इति चेत् , तथाहि-तदेव विकल्पप्रतिविम्बकं वही रूपतयाऽध्यवस्यति ततो बहि. प्रवर्त्तते, तेनायमदोष इति , न तयोरेकीकरणासिद्धेः. अत्यन्तवैलक्षण्येन साधर्म्यायोगात् , साधर्म्यं चैकीकरणनिमित्तम् , अन्यथाऽतिप्रसङ्गात् । अपि च कश्चितावेकीकरोतीति वाच्यम् , स एव विकल्प इति चेत् , न, तत्र बाह्यस्वरूपलक्षणानवभासात् , अन्यथा विकल्पत्वायोगादनवभासितेन चैकीकरणासंभवात् , अतिप्रसक्ते । अथ विकल्पादन्य एव कश्चिद्विकल्प्यमेवार्थं दृश्यमित्यध्यवस्यति, हन्त तर्हि स्वदर्शनपरित्यागप्रसङ्ग , एवमभ्युपगमे सति बलादात्मास्तित्वप्रसक्ते , तथाहि—निर्विकल्पिकम् न विकल्प्यमर्थं साक्षात् करोति तद्गोचरत्वात् , ततो न तत् दृश्यमर्थं विकल्पेन सहैकीकर्तुमलम् , नच देशकालस्वभावव्यवहितार्थविषयेषु शाब्दविकल्पेषु तद्विषये निर्विकल्पकसंभवः , तत्कथं तत्र तेन दृश्यविकल्पार्थैकीकरणम् ? , ततो विकल्पादन्यः सर्वत्र दृश्यविकल्पावर्थावेकीकुर्व्वन् बलादात्मैवोपपद्यते ? , नच सोऽभ्युपगम्यते , तस्माच्छब्दो बाह्यस्यार्थस्य वाचक इत्यकामेनापि प्रतिपत्तव्यम् । इतश्च प्रतिपत्तव्यम् , अन्यथा संकेतस्यापि कर्तुमशक्यत्वात् , तथाहि—येन शब्देन इदं तदित्यादिना सङ्केतो विधेय. तेन किं सङ्केतितेन उताऽसङ्केतितेन, न तावत्सङ्केतितेन अनवस्थाप्रसङ्गात् , तस्यापि हि येन शब्देन सङ्केतः कार्य. तेन किं सङ्केतितेन उतासंकेतितेनेत्यादि तदेवावर्त्तते । अथासंकेतितेन सिद्धस्तर्हि शब्दार्थयोर्वास्तव. सम्बन्ध इति । नं० । आचा० ।

**एगे सुब्भिसद्दे, एगे दुब्भिसद्दे । ( सू० ४७ × )**

' सुब्भिसद्दि ' त्ति शुभशब्दा मनोज्ञा इत्यर्थ ' दुब्भि ' त्ति अशुभो-मनोज्ञो यो न भवतीति । एवं च शब्दान्तरमत्रान्तर्भूतमवसेयम् । स्था० १ ठा० ।

द्विविध. शब्दः—

**दुविहे सद्दे पण्णत्ते, तं जहा–भासासद्दे चेव,नो भासासद्दे चेव । भासासद्दे दुविहे पण्णत्ते,तं जहा–अक्खरसंबद्धे चेव, णो अक्खरसंबद्धे चेव । णो भासासद्दे दुविहे पण्णत्ते , तं जहा–आउज्जसद्दे चेव , णो आउज्जसद्दे चेव । ( सू० ८१ + )**

' दुविहे ' त्यादि अस्य च पूर्वसूत्रेण सहायमभिसम्बन्धः । इहानन्तरोद्देशकान्त्यसूत्रे देवाना शरीरं निरूपित तद्वांश्च शब्दादिग्राहको भवतीत्यत्र शब्दस्तावन्निरूप्यते इत्येवं सम्बन्धायातस्यास्य व्याख्या, सा च सुकरैव-नवरं भाषाशब्दो—भाषापर्याप्तिनामकर्मोदयापादितो जीवशब्द.,इतरस्तु नोभाषाशब्द , अक्षरसम्बद्धो वर्णव्यक्तिमान् , नो अक्षरसंबन्धस्त्वितर इति । आतोद्यं-पटहादि तस्य यः शब्द. स तथा नोआतोद्यशब्दो—वंशस्फोटादिरवः । स्था० २ ठा० ३ उ० । ( आतोद्यशब्दभेदाः ' आउज्ज ' शब्दे द्वितीयभागे २६ पृष्ठे गता. । )

**दुविहा सद्दा पन्नत्ता, तं जहा–अत्ता चेव, अणत्ता चेव। एवमिट्ठा ० जाव मणामा । ( सू० ८३ × ) स्था० २ ठा० ३ उ० ।**

दशविध. शब्दः—

**दसविहे सद्दे पण्णत्ते, तं जहा–"नीहारि पिंडिमे लुक्खे, भिन्ने जज्जरिए इय। दीहे (र) हस्से पुहत्ते य, काकणी खिंखिणिस्सरे ॥ १ ॥" ( सू० ७०५ )**

' दसविहे ' त्यादि—' नीहारिसिलोगो ' । निर्हारी-घोषवान् शब्दो घण्टाशब्दवत् , पिण्डेन निर्वृत्तः पिण्डिमो घोषवर्जित., ढक्कादिशब्दवत् , रूक्ष. काकादिशब्दवत् , भिन्न. कुष्ठाद्युपहतशब्दवत् , झर्झरितो जर्जरितो वा सतन्त्रीककरटिकादिवाद्यशब्दवत् , दीर्घ.—दीर्घवर्णाश्रितो दूर-

श्रव्यो वा मेघादिशब्दवत्, ह्रस्वो-ह्रस्ववर्णाश्रयो विवक्षया लघुर्वा वीणादिशब्दवत्। 'पुहत्तेय' त्ति—पृथक्त्वे अनेकत्वे, कोऽर्थो? नानातूर्यादिद्रव्ययोगे यः स्वरो यमलशङ्खादिशब्दवत् स पृथक्त्व इति, 'काकणी' ति—सूक्ष्मकण्ठगीतध्वनिः काकलीति यो रूढः। 'खिंखिणी' ति—किङ्किणी क्षुद्रघण्टिका तस्याः स्वरो-ध्वनिः किङ्किणीस्वरः। स्था० १० ठा०३ उ०। (एकस्य शब्दस्य बहवोऽर्थाः ते च 'ववहार' शब्दे षष्ठभागे प्रतिपादिताः।) नो मनोज्ञान् शृणुयात् नो मनोज्ञेषु शब्देषु रज्येतेति परिग्रहविरतेः प्रथमा भावना। आचा० २ श्रु० ३ चू०। शब्दश्चाकाशस्य गुणो न भवति, तस्य पौद्गलिकत्वात् आकाशस्यामूर्त्तत्वात्। सूत्र० १ श्रु० १२ अ०। शब्दस्य हि गुणत्वसिद्धौ निराश्रयस्य गुणस्याऽसम्भवादाश्रयभूतेन गुणिना भवितव्यं पृथिव्यादेश्च तद्गुणत्वनिषेधात्, परिशेषादाकाशाश्रयः शब्दस्तस्य चैकत्वं शब्दलिङ्गाविशेषाद् विशेषलिङ्गाभावाच्च ततो गुणत्वसिद्धौ शब्दस्यैकद्रव्यत्वसिद्धिः। ततश्च यथोक्तविशेषणात् गुणत्वसिद्धिरितीतराश्रयत्वान्न शब्दस्य दृष्टान्तत्वसिद्धिः। (अथ नानेन प्रकारेणैकद्रव्यत्वं शब्दस्य साध्यते, किंतु—कादाचित्कत्वाच्छब्दः कार्यम्, कार्यस्य च क्षणिकत्वनिषेधे अनाधारस्यासंभवात् समवायिकारणेन भवितव्यम्, पृथिव्यादेश्च समवायिकारणत्वनिषेधे आकाशस्यैव समवायिकारणत्वं तस्यैकत्वं पूर्ववत् द्रष्टव्यम्। अत एकद्रव्यत्वं शब्दस्य सिद्धमिति प्रतिषिध्यमानकर्मत्वे एकद्रव्यत्वात् रूपादिवद् गुणः शब्दः सिद्ध इति न दृष्टान्तासिद्धिः। प्रतिषिध्यमानकर्मत्वं च शब्दः कर्म न भवति शब्दान्तरहेतुत्वादाकाशवत्-शब्दान्तरहेतुत्वं चाशब्दस्य कार्यत्वाव्यापकत्वाभ्यां सिद्धम् कार्यं हि पूर्ववत्, समवायिकारणापेक्षं पृथिव्यादेश्च समवायिकारणत्वनिषेधात्, व्योम्नस्तं प्रति समवायिकारणता शब्दस्य च प्रत्यक्षत्वान्यथानुपपत्त्या, सन्तानकल्पना सन्तानश्च शब्दान्तरहेतुत्वमन्तरेणानुपपन्न इति नासिद्धौ हेतुदृष्टान्तौ। प्रतिषिध्यमानकर्मत्वं चेच्छादीनां कर्मत्वानधिकरणतयाऽध्यक्षप्रतिपत्तित एव सिद्धम्। एकद्रव्यत्वं च यज्ञदत्तेच्छादीनां देवदत्तादावनुभवाभावतो व्यवस्थितमेव) असदेतत्। कार्यत्वस्य समवायिकारणप्रभवत्वेन शब्दादावसिद्धेर्न पूर्वोक्तप्रक्रिययाऽप्येकद्रव्यत्वसिद्धिः, अत एव शब्दान्तरहेतुत्वान्न कर्मत्वप्रतिषेधः शब्दस्य हेतुदृष्टान्तयोरसिद्धेः, नहि शब्दलक्षणस्य कार्यस्य निराधारस्य सम्भवे व्योम्नः समवायिकारणत्वेन शब्दान्तरहेतुत्वं शब्दस्य वा समवायिकारणत्वेन शब्दान्तरहेतुत्वं, तद्युक्तम्। न च शब्दप्रत्यक्षताऽन्यथाऽनुपपत्त्या सन्तानकल्पना युक्तिसङ्गता, तामन्तरेणापि शब्दप्रत्यक्षतोपपत्तेः प्रतिपादनात्, एकद्रव्यत्वस्य प्रतिषिध्यमानकर्मत्वस्य चेच्छादिष्वध्यक्षत एव सिद्धौ गुणसमवायात् गुणरूपताया अपि तत एव सिद्धेरनुमानोपपन्यासस्य वैयर्थ्यं स्यात्। न चाध्यक्षसिद्धेऽपि गुणत्वयोगे व्यवहारासाधनार्थं तदुपन्याससाफल्यं तद्गुणत्वस्य समवायस्य वाऽध्यक्षप्रतिपत्तौ कदाचिदप्यप्रतिभासनाद् एतेन 'गुणत्वयोगात् रूपादयो गुणाः' इति निरस्तम्। सम्म० २ काण्ड १ गाथाव्या०। अने०। "पोग्गलरूवा सद्दो, तहत्थपत्ता तहा पयइए उ। सधाइ चित्तधम्मा, तणिह ववहारसिद्धि त्ति ॥ १ ॥" अने० १ अधि०। नित्य शब्द। विशे०। (अत्रत्या वक्तव्यता 'णमुक्कार' शब्दे चतुर्थभागे १८८२ पृष्ठे गता।) (द्वाभ्यां स्थानाभ्यां शब्दा उत्पद्यन्ते इति 'सद्दुप्पाय' शब्दे वक्ष्यते।) अथवा—शब्दे पुष्पशालाद्धद्रा ननाश। आचा० १ श्रु० ३ अ० १ उ०। (प्रतिबद्धशय्यायां स्त्र्यादिशब्दं श्रुत्वा कस्यचिन्मोह उत्पद्येत इत्यतो न साधुस्तत्र तिष्ठेत् इति 'पडिबद्धसिज्जा' शब्दे पञ्चमभागे२२० पृष्ठे गतम्।) (शब्देषु राग इति 'इंदिय' शब्दे द्वितीयभागे ५६६ पृष्ठे उक्तम्।) "अनेकमेकात्मकमेव वाच्यं, द्वयात्मकं वाचकमप्यवश्यम्। अतोऽन्यथा वाचकवाच्यक्लृप्ता—वतावकानां प्रतिभाप्रमादः॥१४॥" इति सामान्यविशेषाभ्यात्मकस्य वस्तुनो वाच्यत्वम्। इति। स्या०। ('आगम' शब्दे ६६ पृष्ठे दर्शितम्।) (भाषाद्रव्यग्रहणनिसर्गौ 'भासा' शब्दे ५ भागे गतौ।) ('पुट्ठं सुणेइ सद्दं' इति 'इंदिय' शब्दे ५६५ पृष्ठे द्वितीयभागे व्याख्यातम्।)

छद्मस्थ आतोद्यमानान् शब्दान् शृणोति—

छउमत्थे णं भंते! मणूसे आउडिज्जमाणाइं सद्दाइं सुणेइ, तं जहा-संखसद्दाणि वा सिंगसद्दाणि वा संखियक खरमुहिय० पोया० पिरिपिरियासद्दाणि वा पणव० पडह० भंभा० होरंभसद्दाणि वा भेरि० झल्लरि० दुंदुभिसद्दाणि वा तयाणि वा वितयाणि वा घणाणि वा झुसिराणि वा?, हंता गोयमा!, छउमत्थेणं मणूसे आउडिज्जमाणाइं सद्दाइं सुणेइ, तं जहा-संखसद्दाणि वा ०जाव झुसिराणि वा। ताइं भंते! किं पुट्ठाइं सुणेइ?, अपुट्ठाइं सुणेइ?, गोयमा! पुट्ठाइं सुणेइ, नो अपुट्ठाइं सुणेइ ०जाव नियमा छद्दिसिं सुणेइ। तहा णं भंते! छउमत्थे णं मणूसे किं आरगयाइं सद्दाइं सुणेइ, पारगयाइं सद्दाइं सुणेइ?, गोयमा! आरगयाइं सद्दाइं सुणेइ, नो पारगयाइं सद्दाइं सुणेइ। जहा णं भंते! छउमत्थे मणूसे आरगयाइं सद्दाइं सुणेइ णो पारगयाइं सद्दाइं सुणेइ। तहा णं भंते! केवली मणूसे किं आरगयाइं सद्दाइं सुणेइ पारगयाइं सद्दाइं सुणेइ?, गोयमा! केवली णं आरगयं वा पारगयं वा सव्वदूरमूलमणंतियं सद्दं जाणइ पासइ, से केणट्ठेणं तं चेव केवली णं आरगयं वा पारगयं वा ०जाव पासइ?, गोयमा! केवली णं पुरच्छिमेणं मियं पि जाणइ अमियं पि जाणइ, एवं-दाहिणेणं पच्चत्थिमेणं उत्तरेणं उड्ढं अहे मियं पि जाणइ, अमियं पि जाणइ, सव्वं जाणइ केवली, सव्वं पासइ केवली, सव्वओ जाणइ पासइ, सव्वकालं जाणइ पासइ, सव्वभावे जाणइ केवली, सव्वभावे पासइ केवली, अणंते नाणे केवलिस्स, अणंते दंसणे केवलिस्स, निव्वुडे नाणे केवलिस्स निव्वुडे दंसणे केवलिस्स से तेणट्ठेणं० जाव पासइ। (सू० १८५)

'छउमत्थे णमि' त्यादि 'आउडिज्जमाणाइं' ति-जुड ब-न्धने इति वचनात् आजोड्यमानेभ्य —आसम्बन्ध्यमाने-भ्यो मुखहस्तदण्डादिना सह शङ्खपटहझल्लर्यादिभ्यो वा यद्विशेषेभ्य आकुट्यमानेभ्यो वा एभ्य एव ये जाता शब्दास्ते आजोड्यमाना आकुट्यमाना एव वा उच्यन्ते अतस्तानाजोड्यमानानाकुट्यमानान्वा शब्दान् शृणोति । इह च प्राकृतत्वेन शब्दशब्दस्य नपुंसकनिर्दे-श । अथवा—'आउडिज्जमाणाइं' ति—आकुट्यमानानि परस्परेणाभिहन्यमानानि, 'सद्दाइं' ति—शब्दानि—श-ब्दद्रव्याणि शङ्खादय प्रतीता नवरं 'संखिय' त्ति-शङ्खिका ह्रस्व शङ्ख 'खरमुहि' त्ति—काहला पोया—म-हती काहला, 'पिरिपिरिय' त्ति—कोलिकपुटकाव-नद्धमुखो वाद्यविशेष । 'पणव' त्ति—भाण्डपटहो लघु-पटहो वा तदन्यस्तु पटह इति, 'भंभ' त्ति-ढक्का, 'होरं-भ' त्ति-रूढिगम्या. 'भेरि' त्ति-महाढक्का, 'झल्लरि' त्ति-वलयाकारो वाद्यविशेष, 'दुंदुहि' त्ति—देववाद्यविशेष. । अथोक्तानुक्तसंग्रहद्वारेणाह—'तताणि वे' त्यादि त-तानि—वीणादिवाद्यानि तज्जनितशब्दा अपि तताः, एव-मन्यदपि पदत्रयं, नवरमय विशेषस्ततादीनाम्—" ततं वी-णादिकं ज्ञेय, विततं पटहादिकम् । घनं तु कांस्यतालादि, वंशादि शुषिरं मतम् " ॥ १ ॥ इति 'पुट्ठाइं सुणइ' इत्यादि तु प्रथमशते आहाराधिकारवदवसेयमिति 'आरगयाइं' ति—आराद्भागस्थितानिन्द्रियगोचरमागतानित्यर्थ, 'पार-गयाइं' ति—इन्द्रियविषयात्परतोऽवस्थितानिति, 'सव्व-दूरमूलमणंतिय' ति—सर्वथा दूरं विप्रकृष्टं मूल च निकट सर्वदूरमूलं तद्योगाच्छब्दोऽपि सर्वदूरमूलोऽतस्त-म् । अत्यर्थं दूरवर्तिनमत्यन्तासन्न चेत्यर्थ. । अन्तिकम्-आ-सन्न तन्निषेधादनन्तिकम्, नञोऽल्पार्थत्वात् नात्यन्तमन्ति-कम्-अदूरासन्नमित्यर्थ, तद्योगाच्छब्दोऽप्यनन्तिकोऽतस्तम् अथवा-'सव्व' त्ति, अनेन 'सव्वओ समंता' इत्युपलक्षितम्, 'दूरमूल' नि-अनादिकमिति हृदयम् 'अणंतियं' ति-अन-न्तिकमित्यर्थ 'मियं पि' त्ति-परिमाणवत् । गर्भजमनुष्य-जीवद्रव्यादि, 'अमियं पि' त्ति-अनन्तमसख्येय वा, वनस्प-तिपृथिवीजीवद्रव्यादि । 'सव्वं जाणइ' इत्यादि । द्रव्याद्यपे-क्षयोक्तम् । अथ कस्मात् सर्व जानाति केवलीत्याद्युच्यते । इत्यत आह-'अणंते' त्यादि, अनन्त ज्ञानमनन्तार्थविषयत्वात्, तथा-'निव्वुडे नाणे केवलिस्स' त्ति-निर्वृत-निरावरणं ज्ञान केवलिन क्षायिकत्वाच्छुद्धमित्यर्थ, वाचनान्तरे तु-'निव्वुडे वितिमिरे विसुद्धे' त्ति-विशेषणत्रय ज्ञानदर्शनयोरभिधीयते, तत्र च—निर्वृत-निष्ठागत वितिमिरं-क्षीणावरणमत एव वि शुद्धमिति । भ० ५ श० ४ उ० । ( वाग्द्रव्याणामादानम्, उत्सर्गो वा 'भाषा' शब्द पञ्चमभागे विस्तरो गतम् । ) 'आउट्टमाणे सद्देण घोसेण' आकुट्टयन् अयोघनघात-प्रभवेण ध्वनिना पुरुषहुङ्कृतिरूपेण वा तस्यैवानुनादन । भ० ६ श० १ उ० ।

सद्दाई अणेगरूवाई अहिआसए । ( सू०× )

शब्दा अनेकरूपा -वीणावेणुमृदङ्गादिजनिता । तथा क्रमे-लकारादिना...र्यापितास्ताश्चाविकृतमना अध्यासयति-अ-धिसहते । आचा० १ श्रु० ६ अ० २ उ० । सूत्र० । प्रश्न० । प्रसिद्धौ, ज्ञा० १ श्रु० १ अ० । एकदिग्व्यापिनि यशसि, स्था० १० ठा० ३ उ० । शब्द्यते—प्रतिपाद्यते वस्त्वनेनेति शब्द, शब्दस्य यो वाच्योऽर्थ स एव येन तत्त्वतो गम्यते स नय उपचारात् शब्द इत्युच्यते । नयभेदे, विशे० । ( शब्दनयमतमिहैवानुपदं 'सद्दणय' शब्दे वक्ष्यते । ) शाब्दमपि न सर्व प्रमाणम्, किं तर्हि ? आप्तप्रणीतस्यैवाग-मस्य प्रामाण्यात् । न चार्हद्व्यतिरेकेण अपरस्याप्तता युक्ति-युक्ता । सूत्र० १ श्रु० १२ अ० ।

**सद्दसण**–**सद्दर्शन**–न० । शोभनं दर्शनं सद्दर्शनम् । सम्यग्दर्श-ने, दर्श० २ तत्त्व ।

**सद्दकर**–**शब्दकर**–पुं० । रात्रौ महता शब्देनोल्लापे, स्वाध्या-यादिकारके गृहस्थभाषाभाषके, असमाधिस्थानप्राप्ते च । स० २० सम० । आ० चू० । सद्दं करेति असखडसद्दं करेति । आव० ४ अ० ।

**सद्दकरण**–**शब्दकरण**–न० । शब्द. क्रियते यस्मिन् तत् श-ब्दकरणम् । आ० म० १ अ० । उदात्ताऽऽदिस्वरविशेषे, विशे० । सद्दकरणं नाम-जं सद्देहिं पगडत्थं कीरति न पुण गोवितं संकेतिग, तं जधा—उप्पण्णे त्ति वा भूते त्ति वा विगते त्ति वा परिणते त्ति वा । उदात्ता अनुदाताश्च । णिसीहं पच्छण्णगोवितसंकेतित । आ० चू० १ अ० । आ० म० । शब्द क्रियते यस्मिन् तत्—शब्दकर-णम् । उक्तं च—' उत्ती उ सद्दकरणं, पगासपाढ व सरविसेसो वा । तं निशीथं ति निशीथं भवति । इयमत्र भावना—यत् उत्पादाद्यर्थप्रतिपादक । तथा महताऽपि शब्देन प्रतिपाद्यं तत् प्रकाशपाठात् प्रकाशोपदेशाच्च शब्द-करणं नाम । आ० म० १ अ० ।

**सद्दऽज्झयण**–**शब्दाध्ययन**–न० । शब्दशक्तिप्रतिपादके आ-चाराङ्गाध्ययनस्य द्वितीयश्रुतस्कन्धस्य चतुर्थसप्तैककाध्यय-ने, आचा० २ श्रु० २ चू० ४ अ० । आव० ।

**सद्दणय**–**शब्दनय**–पुं० । शप् आक्रोशे, शप्यते अवधीयते व-स्त्वनेनेति शब्द । तमेव गुणीभूतार्थमुख्यतया यो मन्यते स नयोऽप्युपचाराच्छब्द, स चासौ नयश्च । अनु० । श-पनं शपति वा असौ शप्यते वा तेन वस्त्विति शब्द, तस्या-र्थपरिग्रहादभेदोपचारात् नयोऽपि शब्द एव । स्था० ७ ठा० ३ उ० । रूढसु नयेषु अन्यतमं नय, नं० ।

शब्दनयं लक्षयति—

विशेषिततरः शब्दः, प्रत्युत्पन्नाश्रयो नयः ।
तरप्रत्ययनिर्देशा-द्विशेषिततमे गतिः ॥ ३३ ॥

'विशेषिततर' इति-विशेषिततरः प्रत्युत्पन्नाश्रय ऋजुसूत्रा-भिमतग्राही नय. शब्द इत्याख्यायते, यत्सूत्रम्-'इच्छइ विसे-सियतरं पच्चुप्पण्णं णओ सद्दो' त्ति । अत्र तरप्रत्ययनिर्दे-शाद्विशेषिततमाधोवर्त्तिविषयत्वलाभाद्विशेषिततमे समभि-रूढे एवंभूते वा गतिर्नातिव्याप्तिः ।

ऋजुसूत्राद्विशेषमस्य स्पष्टयति—

ऋजुसूत्राद्विशेषोऽस्य, भावमात्राभिमानतः ।
सप्तभङ्ग्यर्पणाल्लिङ्ग-भेदादेर्वाऽर्थभेदतः ॥३५॥

ऋजुसूत्रादिति- अस्य-शब्दनयस्य ऋजुसूत्राद्विशेषः-उत्कर्षो भावमात्रस्याभिमानात्,अयं हि पृथुबुध्नोदराद्याकारकेलित मृन्मय जलाहरणादिक्रियाक्षम प्रसिद्ध भावघटमेवेच्छति, शब्दार्थप्रधानत्वात्, 'घट' चेष्टायामिति शब्दार्थस्य भावघट एव योगात्तु नामस्थापनाद्रव्यरूपास्त्रींस्तत्रोक्तार्थयोगात् ।

तथा चैतत्संवाद्याह भाष्यकारः-

"णामादयो ण कुंभा, तक्कज्जा करणओ पडाइ व्व ।
पच्चक्खविरोहाओ, तल्लिंगाभावओ वाऽवि ॥ १ ॥"

नामस्थापनाद्रव्यघटा. घटत्वेन न व्यवहर्त्तव्या, घटार्थक्रियाकारित्वाभावादघटत्वेन प्रतीयमानत्वात्, घटव्यवस्थापकधर्माभावाच्चेत्येतदर्थः । यद्वा-सप्तभङ्ग्यर्पणादस्य विशेषः, ऋजुसूत्रस्य हि प्रत्युत्पन्नोऽविशेषित एव कुम्भोऽभिप्रेतः, शब्दनयस्य तु (स एव सद्भावादिभिर्विशेषिततरोऽभिमतइत्येवमनयोर्भेदः, तथाहि-स्वपर्यायैः पर ( विशेषा वश्यकवृत्तितः ) पर्यायैरुभयैर्वाऽर्पितोऽयं कुम्भाकुम्भावक्तव्योभयरूपादिभेदेन सप्तभङ्गी प्रतिपद्यत इति । यद्भाष्यम्-

"अहवा पच्चुप्पएणो, उजुसुत्तस्साविसेसिओ चेव ।
कुंभो विसेसिअतरो, सब्भावादीहि सद्दस्स ॥ १ ॥
सब्भावोसब्भावो—भयप्पिओ सपरपज्जवोभयओ ।
कुंभाकुंभावत्त—व्वोभयरूवाइभेवो सो ॥ २ ॥" त्ति ।

इह "कुभाकुंभे" त्यादि । गाथापश्चार्द्धेन षड् भङ्गाः साक्षादुपात्ताः सप्तमस्त्वादिशब्दात्, तद्यथा—कुम्भः १ अकुम्भः २ अवक्तव्य ३ ' उभय' त्ति संख्याऽसश्चेत्युभयम् ४ सन्नवक्तव्य इत्युभय ५ तथाऽसन्नवक्तव्य इत्युभयम् ६ आदिशब्दसंगृहीतस्तु सप्तम सन्नसन्नवक्तव्य इति ७, अत्रोभयपदस्य समभिव्याहृतपदार्थतावच्छेदकद्वयप्रकारकबुद्धिविषये शक्तावपि समभिव्याहारत्रैविध्यात् आवृत्त्या त्रिविधोभयबोध इति न्यायमार्गः । सामान्यशक्तावप्युभयपदादेकदैव, समभिव्याहारविशेषमहिम्ना त्रिविधविशेषप्रकारको बोध इत्यनुभवमार्ग, तदेवं स्याद्वादद्दष्टसप्तभेद घटादिकमर्थ यथाविवक्षितमेकेन केनापि भङ्गकेन विशेषिततरमसौ शब्दनयः प्रतिपद्यते, नयत्वादृजुसूत्राद्विशेषिततरवस्तुग्राहित्वाच्च । स्याद्वादिनस्तु संपूर्णसप्तभङ्ग्यात्मकमपि प्रतिपद्यन्त इति विशेषावश्यकवृत्त्यावुक्तम् । तत्रायं विचारावकाश -किमिय सप्तभङ्गी अर्थनयाश्रिता,उत शब्दनयाश्रिता ?। आद्ये तदेकतरभङ्गविशेषणे कथमृजुसूत्राच्छब्दस्य विशेषिततरत्वम् अर्थतयाऽऽश्रितभङ्गस्य शब्दस्य नयाविशेषकत्वादुभयोषा विषयविभागस्य दूरान्तरत्वात्। द्वितीयविकल्पे च ऋजुसूत्राभिमतार्थपर्यायाविषयत्वेनाशुद्धव्यञ्जनपर्यायग्राहिण कुत शब्दस्य विशेषिततरार्थत्वम्, नहि तदविषयविषयकत्वं विशेषितशब्दार्थ, किंतु—तद्विपयताव्याप्यविषयकत्वमिति । नच ऋजुसूत्राभिमतसत्त्वमुपमृद्यासत्त्वाख्यद्वितीयभङ्गोत्थापनाच्छब्दस्यर्जुसूत्राद्विशेषित तरत्व वक्तुं युक्तम् ,एव सति ऋजुसूत्राभिमत सत्त्वमुपमृद्यासत्त्वग्रहणव्यावृत्तस्य व्यवहारस्यापि ततो विशेषिततरार्थत्वापत्तेर्विशेष्यकभङ्गानिर्धारकवचनापत्तेश्चेति, तत्रायमसाकं मनीषोन्मेष यदर्थपर्यायाश्रिता सप्तभङ्गी सग्रहव्यवहारर्जुसूत्रैर्व्यञ्जनपर्यायाश्रिता शब्दसमभिरूढैवंभूतैः " सम्मतौ " ( ग्रन्थे ) सूचिता तथाऽप्येतत्प्रकारद्वयाभिधानमर्थव्यञ्जनसाधारणं पर्यायसामान्याश्रितसप्तभङ्ग्या अनुगलक्षणम्, सा च स्वपरपर्यायाणां क्रमयुगपद्विवक्षावशान्नयद्वयेन शुद्धशुद्धतरपर्यायविवक्षया त्र नयत्रयेणापि संभवतीति ऋजुसूत्रशब्दप्रयुक्तसप्तभङ्ग्यां द्वितीयादिना व्यवहारर्जुसूत्रप्रयुक्तायां च तस्यां तृतीयादिना भङ्गेनर्जुसूत्राच्छब्दस्य विशेषिततरार्थत्वं युक्तम् । नचैवम्-ऋजुसूत्रकृतसत्त्वापेक्षया सताग्राहिणो व्यवहारस्यापि ततो विशेषिततरार्थत्वप्रसङ्गदूषणानुद्धार, संप्रदायाविरुद्धभङ्गविषयीभूतेनार्थेन विशेषिततरत्वस्याभिधित्सितत्वात्, संप्रदायश्चोत्तरोत्तरभङ्गप्रवृत्तावुत्तरोत्तरनयावलम्बनेनैव दृष्टो नान्यथेति न कश्चिद्दोष इति । वाअथवा-लिङ्गभेदादेरर्थभेदाश्रयणादस्य-शब्दनयस्य ऋजुसूत्राद्विशेषः, तथाहि-( तटः तटी तटम् इत्यादौ ) अन्यलिङ्गवृत्तिशब्दस्य नान्यलिङ्गभेदलक्षणेन गुरुः गुरव इत्यादौ च वचनभेदलक्षणेन वैधर्म्येणार्थभेदः स्पष्ट एवानुभवात्, एवमन्यकारकयुक्तं यत्तदेवास्य मतेऽपरकारकसम्बन्धं नानुभवति इत्यधिकरणत्वाद् ग्रामोऽधिकरणाभिधानविभक्तिवाच्य एव न कर्माभिधानविभक्त्यभिधेय इति, ग्राममधिशेते इति प्रयोगोऽनुपपन्नः । तथा पुरुषभेदेऽपि नैकं वस्त्विति, एहि मन्ये रथेन यास्यसि नहि यास्यसि यातस्ते पितेति च प्रयोगो न युक्तोऽपि त्वेहि मत्यसे यथाहं रथेन यास्यामीत्येवं परभावेनैतन्निर्देष्टव्यम्, एवमुपग्रहणभेदोऽपि विरमतीत्यादिर्न युक्त आत्मार्थतया हि विरमत इत्यस्यैव प्रयोगस्य संगतेर्न चैव लोकशास्त्रविलोपः सर्वत्रैव नयमते तल्लोपस्य समानत्वादिति सम्मतिवृत्तौ व्यवस्थितम्, यद्यपि ग्राममधिशेते इत्यादौ ग्रामोत्तरद्वितीयादिपदादधिकरणत्वादिप्रकारकप्रतीत्यर्थमधिकरणत्वादिविशिष्टे लक्षणैव स्वीकार्या नाम्नि तन्निरूढत्वसमानार्थमेवं च विशेषानुशासनमिति वक्तुं शक्यते, तथाप्युक्तविपरीतप्रयोगप्रामाण्याय-' उपपदविभक्तेः कारकविभक्तिर्बलीयसी ' इत्यादिन्यायसाम्राज्यवानयं विशेष इति दिग् ।

उक्तयुक्त्या यथा अनेन ऋजुसूत्रमतं दूष्यते ।
तथाऽऽह—

सामानाधिकरण्यं चे-न्न विकारापरार्थयोः ।
भिन्नलिङ्गवचःसंख्या-रूपशब्देषु तत्कथम् ॥ ३५ ॥

सामानाधिकरण्यमिति चेत्-यदि विकारापरार्थयो विकाराविकारार्थकशब्दयो पलालं दहतीत्यादौ सामानाधिकरण्यमेकार्थान्वयजननयोग्यत्वं नेष्टमृजुसूत्रनये चेत् ? तर्हि भिन्नानि लिङ्गवच संख्यारूपाणि येषा तादृशेषु तटस्तटी तटं गुरु गुरुवः स च त्वं च यास्यथ कुरुते करोति इत्यादिषु कथं सामानाधिकरण्यं; न कथंचिदित्यर्थ । यथाहि-' त्वयाऽग्निष्टोमयाजी पुत्रोऽस्य जनिता ' इत्युक्ते स्वीक्रियते कालभेदात् तथा लिङ्गादिभेदादर्थभेद सुतरां स्वीकर्त्तव्य इत्युपदेश । नयो० । स्या० ।

शब्दनयमाह—

सवणं सपइ स तेणं, व सप्पए वत्थु जं तओ सद्दो ।
तस्सत्थपरिग्गहओ,नओ वि सद्दो त्ति हेउ व्व॥२२२७॥

'शप'आक्रोशे,शपनम्-आह्वानमिति शब्दः, शपतीति वा आह्वयतीति शब्दः, शप्यते वा आहूयते वस्त्वनेनेति शब्दः, तस्य शब्दस्य यो वाच्योऽर्थस्तत्परिग्रहात्तत्प्रधानत्वान्नयोऽपि शब्दः, यथा कृतकत्वादित्यादिकः पञ्चम्यन्त शब्दोऽपि हेतुः । अर्थरूपं हि कृतकत्वमनित्यगमकत्वान्मुख्यतया हेतुरुच्यते, उपचारतस्तु--तद्वाचकः कृतकत्वशब्दोऽपि हेतुरभिधीयते, एवमिहापि शब्दवाच्यार्थपरिग्रहादुपचारेण नयोऽपि शब्दो व्यपदिश्यत इति भावः । "इच्छइ विसेसियतरं, पच्चुप्पन्नं नओ सद्दो" इति निर्युक्तिगाथादलव्याख्यानमाह-

तं चिय रिउसुत्तमयं, पच्चुप्पन्नं विसेसिययरं सो ।
इच्छइ भावघडं चिय, जं न उ नामादओ तिन्नि ॥२२२८॥

तदेव ऋजुसूत्रनयस्य मतमभीष्टं प्रत्युत्पन्नं वर्त्तमानं वस्त्विच्छत्यसौ शब्दनयः । कथंभूतं तदित्याह--विशेषिततरम् । कुत इदं ज्ञायते ? इत्याह यद्-यस्मात्पृथुबुध्नोदराद्याकारकलितं मृन्मयं जलाऽऽहरणाऽऽदिक्रियाक्षमं प्रसिद्धघटरूपं भावघटमेवेच्छत्यसौ न तु शेषान् नामस्थापनाद्रव्यरूपांस्त्रीन् घटानिति शब्दप्रधानो ह्येष नयः, चेष्टालक्षणश्च घटशब्दस्यार्थः, घटचेष्टायाम्, घटते इति घटः इति व्युत्पत्तेः, ततश्च य एव जलाहरणादिक्रियार्थमाचष्टे प्रसिद्धो घटस्तमेव भावरूपं घटमिच्छत्यसौ शब्दार्थोपपत्तेर्नेतु नामादिघटान घटशब्दार्थानुपत्तेः । अतश्चतुरोऽपि नामादिघटानिच्छत ऋजुसूत्राद्विशेषिततरं वस्त्विच्छत्यसौ एकस्यैव भावघटस्यानेनाभ्युपगमादिति ।

नामादिघटनिराकरणार्थमेव प्रमाणयन्नाह--

नामादओ न कुंभा, तक्कज्जाकरणओ पडाइ व्व ।
पच्चक्खविरोहाओ, तल्लिंगाभावओ वाऽवि ॥ २२२९ ॥

नामस्थापना द्रव्यरूपा कुम्भा न भवन्तीति प्रतिज्ञा जलाहरणादितत्कार्याकरणात्पटादिवत्, तथा प्रत्यक्षविरोधात्, घटलिङ्गदर्शनाच्चेति । अघटरूपास्ते प्रत्यक्षेणैव दृश्यन्ते इति प्रत्यक्षविरोधः, जलाहरणादिकं घटलिङ्गं च तेषु न दृश्यते इति ततोऽनुमानविरोधोऽपीति ।

कथं ते नामादिघटव्यपदेशभाजो भवेयुरिति ऋजुसूत्रशिक्षणार्थमाह--

जइ विगयाऽणुप्पन्ना, पओयणाभावओ न ते कुंभा ।
नामादओ किमिट्ठा, पओयणाभावओ कुंभा ॥२२३०॥

यदि विगता अनुत्पन्नाश्च त्वयाऽहो ऋजुसूत्रकुम्भा नेष्टाः प्रयोजनाभावात्, तर्हि नामादयोऽपि कुम्भाः किमिष्टा, प्रयोजनाभावस्य समानत्वात्, न खलु तैरपि कुम्भप्रयोजनं किमपि विधीयत इति ।

तदेवमृजुसूत्राच्छब्दनयस्य विशेषिततरमुक्तम् । अथवाऽन्यथा तद् द्रष्टव्य कथमित्याह-

अहवा पच्चुप्पन्नो, रिजुसुत्तस्साविसेसिओ चेव ।
कुंभो विसेसियरो, सब्भावाईहिं सद्दस्स ॥ २२३१ ॥
सब्भावासब्भावो, भयप्पिओ सपरपज्जओभयओ ।
कुंभाकुभावत्त-व्वोभयरूवाइभेओ सो ॥ २२३२ ॥

अथवा प्रत्युत्पन्नः ऋजुसूत्रस्याविशेषित एव सामान्येन कुम्भोऽभिप्रेतः शब्दनयस्य तु स एव सद्भावादिभिर्विशेषिततरोऽभिमत इत्येवमनयोर्भेदः । तथाहि--स्वपर्यायैः परपर्यायैः उभयपर्यायैश्च सद्भावेन असद्भावेन, उभयेन चार्पितो विशेषितः कुम्भः-कुम्भाकुम्भाऽवक्तव्योभयरूपादिभेदो भवति-सप्तभङ्गी प्रतिपद्यत इत्यर्थः, तद्यथा-ऊर्ध्वग्रीवकपालकुक्षिबुध्नादिभिः स्वपर्यायैः सद्भावेनार्पितो विशेषितः कुम्भः कुम्भो भण्यते, ' सन् घटः ' इति प्रथमो भङ्गो भवतीत्यर्थः । तथा पटादिगतैस्त्वक्त्राणादिभिः परपर्यायैरसद्भावेनार्पितो विशेषितोऽकुम्भो भवति सर्वस्याऽपि घटस्य परपर्यायैरसत्त्वविवक्षायाम्, असन् घट इति द्वितीयो भङ्गो भवतीत्यर्थः । तथा-सर्वोऽपि घटः स्वपरोभयपर्यायैः सद्भावाऽसद्भावाभ्यां सत्त्वाऽसत्त्वाभ्यामर्पितो विशेषितो युगपद्वक्तुमिष्टोऽवक्तव्यो भवति, स्वपरपर्यायसत्त्वाऽसत्त्वाभ्यामेकेन केनाऽप्यसाकेतिकेन शब्देन सर्वस्यापि तस्य युगपद्वक्तुमशक्यत्वादिति । एते त्रयः सकलादेशाः । अथ चत्वारोऽपि विकलादेशाः प्रोच्यन्ते । तत्रैकस्मिन्देशे स्वपर्यायसत्त्वेनान्यत्र तु देशे परपर्यायासत्त्वेन विवक्षितो घटः संश्चासंश्च भवति घटो घटश्च भवतीत्यर्थः । तथा--एकस्मिन् देशे स्वपर्यायैः सद्भावेन सत्त्वेनार्पितो विशेषितोऽन्यत्र तु देशे स्वपरोभयपर्यायैः सद्भावासद्भावाभ्यां सत्त्वासत्त्वाभ्यां युगपदसांकेतिकेनैकेन शब्देन वक्तुं विवक्षितः कुम्भः संश्चावक्तव्यश्च भवति, घटोऽवक्तव्यश्च भवतीत्यर्थः, देशे तस्य घटत्वात्, देशे चावक्तव्यत्वादिति । तथा एकदेशे परपर्यायैरसद्भावनार्पितो विशेषितोऽन्यस्मिंस्तु देशे स्वपरपर्यायैः सद्भावासद्भावाभ्यां सत्त्वासत्त्वाभ्यां युगपत्साकेतिकेनैकेन शब्देन वक्तुं विवक्षितः कुम्भोऽसन्नवक्तव्यश्च भवति--अकुम्भोऽवक्तव्यश्च भवतीत्यर्थः, देशे तस्याकुम्भत्वात्, देशे चावक्तव्यत्वादिति । तथा एकदेशे स्वपर्यायैः सद्भावेनार्पितः एकस्मिंस्तु देशे परपर्यायैरसद्भावेनार्पितः, अन्यस्मिंस्तु देशे स्वपरोभयपर्यायैः सद्भावासद्भावाभ्यां युगपदेकेन शब्देन वक्तुं विवक्षितः कुम्भः संश्चासंश्चावक्तव्यश्च भवति घटोऽघटोऽवक्तव्यश्च भवतीत्यर्थः, देशे तस्य घटत्वात्, देशेऽघटत्वात्, देशे चावक्तव्यत्वादिति । इह च ' कुम्भे कुंम्भे ' त्यादिना गाथार्द्धेन षड् भङ्गाः साक्षादुपात्ताः सप्तमस्त्वादिशब्दाद्; तद्यथा--कुम्भः अकुम्भः अवक्तव्यः ' उभय ' त्ति सन्नसंश्चेत्युभयं, तथा सन्नवक्तव्यक इत्युभयं तथा असन्नवक्तव्यक इति चोभयम्, आदिशब्दसंग्रहीतस्तु सप्तमः सन्नसन्नवक्तव्यक इति । एवं सप्तभेदो घटः, एवं पटादिरपि द्रष्टव्य । तदेवं स्याद्वाददृष्टं सप्तभेदं घटादिकमर्थं यथाविवक्षमेकेन केनापि भङ्गकेन विशेषिततरमसौ शब्दनयः प्रतिपद्यते, नयत्वात्, ऋजुसूत्राद्विशेषिततरवस्तुग्राहित्वाच्च, स्याद्वादिनस्तु संपूर्णसप्तभङ्ग्यात्मकमपि प्रतिपद्यन्त इति । अलं विस्तरेणेति ।

अथवा लिङ्गवचने समाश्रित्य विशेषिततरं वस्त्विच्छति शब्दनय इति दर्शयन्नाह--

वत्थुमविसेसओ वा, जं भिन्नाऽभिन्नलिंगवयणं पि ।
इच्छइ रिउसुत्तनओ, विसेसिययरं तयं सद्दो ॥२२३३॥

'वा' इति—अथवा भिन्नाऽभिन्नलिङ्गवचनमप्यविशेषतो यद्वस्त्विच्छति ऋजुसूत्रनयः, तद्विशेषिततरमिच्छति शब्दनय इति ।

कुत· ? इत्याह—

धणिभेयाओ भेओ, थीपुल्लिंगाभिहाणवच्चाणं ।
पडकुंभाणं व जओ, तेणाभिन्नत्थमिट्ठं तं ॥ २२३४ ॥

यतो-यस्मात्कारणात् स्त्रीपुंनपुंसकलिङ्गाभिधानवाच्यानामर्थानां तटादीनां भेद एव न पुनरेकत्वं तटीत्यभिधानस्याऽन्योऽर्थो वाच्य·, तट इत्यभिधानस्य त्वन्य, तटमित्यभिधानस्य त्वपर· । कुत ?, ध्वनिभेदात्तथा गुरुर्गुरव इत्याद्येकवचनवहुवचनवाच्यानामर्थानां ध्वनिभेदादेव भेद । केषामिवेत्याह पटकुम्भाऽऽदिध्वनिभेदात्पटकुम्भाद्यर्थानामिव तेन तस्मात्कारणात्तल्लिङ्गं वचनं चाभिन्नार्थमेवेष्टं यादृशो ध्वनिस्तादृश एवार्थोऽस्येष्ट इत्यर्थ· । अन्यलिङ्गवृत्तेस्तु शब्दस्य नान्यलिङ्गमर्थवाच्यमिच्छत्यसौ नाप्यन्यवचनवृत्तेः शब्दस्यान्यवचनवाच्यं वस्त्वभिधेयमिच्छत्येष इति भाव· ।

अथ यदसौ मन्यते तत्सर्वमुपसहृत्य दर्शयति—

तो भावुच्चिय वत्थुं, विसेसियमभिन्नलिंगवयणं पि ।
बहुपज्जायं पि मयं, सद्दत्थवसेण सद्दस्स ॥ २२३५ ॥

तत· तस्मान्नामादिनिक्षेपे भावघटादिको भाव एव वस्त्विलत्यसाविच्छति,तदपि पूर्वोक्तनीत्या सद्भावादिभिर्विशेषितमभिन्नलिङ्गवचनं चाभ्युपैति, स्ववाचकध्वनीनामभिन्ने लिङ्गवचने यस्य तदभिन्नलिङ्गवचनं वस्त्वसावभ्युपगच्छति, न पुनरेकस्यैवार्थस्य लिङ्गत्रयवृत्तिशब्दवाच्यत्वम्, एकवचनवहुवचनवृत्तिशब्दवाच्यत्वं वा मन्यत इत्यर्थ । समभिरूढेन सहास्य मतभेद दर्शयति-इन्द्र· शक्र· पुरन्दर इत्यादि बहुपर्यायमप्येकमिन्द्रादिक शब्दनयस्य मतेन भवति । केन ? शब्दस्येन्द्रादेरिन्दनादिको योऽर्थस्तद्वशेन एकस्मिन्नपीन्द्रादिके वस्तुनि यावन्त इन्दनशकनपूर्दारणादयोऽर्था घटन्ते तद्वशेनेन्द्रशक्रादिबहुपर्यायमपि तद्वस्तु शब्दनयो मन्यत इत्यर्थ· । समभिरूढस्तु नैवं मन्यत इत्यनयोर्भेद इति । उक्त· शब्दनय· । विशे० । सम्म० । आ० म० । आ० चू० । सूत्र० । शब्द प्रधानो नयः शब्दनयः । शाकपार्थिवादिवत् समास । शब्दप्राधान्येन अर्थमस्तु, सूत्र० २ श्रु० ७ अ० । शब्दसमभिरूढैवभूतेषु नयेषु, उत्त० २ अ० । आ० म० । सम्म० । स्या० । अष्ट० । अनु० । विशे० । रत्ना० ।

सद्दत्थ–शब्दार्थ–पु० । वाच्यवाचकयो·, विशे० ।

सद्दव्वभेद–शब्दद्रव्यभेद–पुं० । शब्दद्रव्याणां भेदने, प्रज्ञा० ११ पद । ( व्याख्या 'भासा' शब्दे पञ्चमभागे गता । )

सद्दपरिणाम–शब्दपरिणाम–पुं० । शब्दतया पुद्गलानां परिणामे, स्था० १० ठा० ३ उ० । शब्दपरिणामस्ततविततघनशुषिरभेदाच्चतुर्द्धा । सूत्र० १ श्रु० १ अ० १ उ० ।

सद्दपरियारग–शब्दपरिचारक–पुं० । शब्दादेवोपशान्तवेदोपतापे, स्था० २ ठा० ४ उ० । ("दोसु कप्पेसु देवा सद्दपरियारगा" इति 'कप्प'शब्दे तृतीयभागे २३२ पृष्ठे गतम् । )

सद्दपरियारणा–शब्दपरिचारणा–स्त्री० । शब्दश्रवणात् वेदोपशमने, प्रज्ञा० ।

संप्रति शब्दपरिचारणां भावयितुकाम आह—

तत्थ णं जे ते सद्दपरियारगा देवा तेसिं णं इच्छामणे समुप्पज्जइ, इच्छामो णं अच्छराहिं सद्धिं सद्दपरियारणं करित्तए, तए णं तेहिं देवेहिं मणसीकए समाणे तहेव ० जाव उत्तरवेउव्वियाइं रूवाइं विउव्वंति विउव्वित्ता जेणामेव ते देवा तेणामेव उवागच्छंति उवागच्छित्ता तेसिं देवाणं अदूरसामंते ठिच्चा अणुत्तराइं उच्चावयाइं सद्दाइं समुदीरेमाणीओ समु० २ चिट्ठंति, तए णं ते देवा ताहिं अच्छराहिं सद्धिं सद्दपरियारणं करेंति सेसं तं चेव ०जाव भुज्जो भुज्जो परिणमंति । ( सू० ३२६ + )

'तत्थ णमि' त्यादि कण्ठ्यम्, नवरमदूरसमीपे स्थित्वा अनुत्तरान् सर्वमन·प्रह्लादजनकतया अनन्यसदृशान् उच्चावचान्—प्रबलप्रबलतरमन्मथोद्दीपकसभ्याऽसभ्यरूपान् शब्दान्, सूत्रे नपुंसकनिर्देश· प्राकृतत्वात्समुदीरयन्त्यस्तिष्ठन्ति, शेषं तथैव । प्रज्ञा० ३४ पद ।

सद्दबंभ–शब्दब्रह्मन्–न० । पद्भाषावाङ्मये ब्रह्मणि, अष्ट० २६ अष्ट० ।

सद्दबंभवाइ–शब्दब्रह्मवादिन्–पुं० । शब्दसन्मात्रमिच्छति वैयाकरणे,न०।सम्म०। अत्राऽऽह वैयाकरण·-न वाक्संस्पर्शरहिता काचित् प्रतिपत्तिरस्ति शब्दाऽनुविद्धायास्तस्या प्रतिभासनात् । यदि तु-तत्संस्पर्शविकला साऽभ्युपगम्येत प्रकाशरूपताऽपि तस्या हीयेत वाग्रूपता हि शाश्वती प्रत्यवमर्शिनी च तदभावे न तस्या· किंचिदपरं रूपमवशिष्यते । तदुक्तम्-"वाग्रूपता चेत् व्युत्क्रामे-दवबोधस्य शाश्वती । न प्रकाश प्रकाशेन, सा हि प्रत्यवमर्शिनी"(वाक्य० प्र०का० श्लो० १२५) इति । न च निरस्तोल्लेखं स्वसंवेदनं व्यवहारविरचनचतुरमिति सविकल्पमभ्युपगन्तव्यम् ।

असदेतत्, यतोऽध्यक्षं पुर संनिहितमेव भावात्मानमवभासयति तत्रैवाप्रवृत्तेर्वाग्रूपता च न पुर सन्निहितेति न सा तत्र प्रतिभाति । न च व्यापितया पदार्थात्मतया वा अर्थदेशे सन्निहिता वागिति तद्दर्शने साऽप्यवभाति, वाचामर्थदेशे सन्निधेरयोगात् । तथाहि-यदाऽक्षान्वये संवेदने पुरस्थो नीलादिराभाति न तदा तद्देश एव शब्दात्मा वक्त्रमुखदेशस्य तस्यावभासनात् । नचान्यदेशतयोपलभ्यमानोऽन्यदेशोऽभ्युपगन्तु युक्तो नीलादेरपि तथाभावप्रसक्ते । अतो वाग्विविक्तस्य नीलादेरवभासनान्नार्थदेशे वाक्सन्निधिरिति न तत्संस्पर्शवत्यध्यक्षमति । न च पदार्थात्मना वाचोयुक्ता,तत्त्वेनाप्रतिभासनात् । स्तम्भादिर्हि शब्दाऽऽकारविविक्त पुर प्रतिभाति शब्दोऽप्यर्थविविक्तस्वरूपेण श्रोत्रज्ञानेऽवभातीति,न तयोरैक्यं प्रतिभासभेदतो भेदात् । तथाऽप्यभेदे न क्वचित् भेदो भवेदित्यध्यक्ष शब्दविविक्तरूपादिविषय न वाग्रूपतासंस्पृष्टम् । तत्र तस्य-असंनिधानात्, व्यवहिताया अपि वाच प्रतिभासे सकलव्यवहितभावपरंपरा, प्रतिभासताम् अर्थसन्निधानेऽपि या वाचो लोचनमनावर्थप्रतिभासेन तस्या प्रतिभासमन्तदविषयत्वात्,नहि यो यदविषय स सन्निहितोऽपि तत्र प्रतिभाति,यथा आम्ररूपप्रतिपत्तौ तद्रस अविषयश्च लोचनबुद्धे

शब्द इति। लोचनबुद्धिर्वाऽर्थमनुसरन्ती स्वविषयमेवाऽवभासयति नेन्द्रियान्तरविषयं सन्निहितमपि, यथा रसनसमुद्भवा मधुरादिप्रतिपत्तिस्तदेव न परिमलादिकं, लोचनप्रभवप्रत्ययेनैव श्रुतिविषयशब्दप्रतिपत्तौ नयनबुद्धिरेव सर्वार्थविषयग्राहिका इतीन्द्रियान्तरपरिकल्पनावैयर्थ्यं शब्दात्मकेऽपि पदार्थेऽभ्युपगम्यमाने श्रुतिरेव शब्दपरिणतिमधिगच्छति लोचनं च रूपविवर्त्तं पर्येतीत्यभ्युपगन्तव्यम्, अन्यथैकमेवाक्षं विषयपञ्चकं विषयीकरोतीति तत्राप्यक्षपञ्चककल्पना विफलतामनुभवेत्। तत्सकलमक्षवेदनं वाचकविकलं स्वविषयमेवावलोकयतीति निर्विकल्पकम्। न चार्थे सन्निधानाद्वाच सन्निधावप्यक्षान्तरवैफल्यप्रसङ्गे—लोचनमतौ यदि नाम न शब्दसन्निधिजनिता शब्दाऽऽकारता तथाऽप्युपादानाद् बोधरूपतैव वाग्रूपताऽपि वाचकस्मृतिजनिता तत्र भविष्यति यतो यदि स्मरणजनितो वाग्रूपतोल्लेखस्तदा स्पष्टलोचनप्रभवदृशो भिन्न एव भवेत् कारणविषयभेदात्। तथाहि-लोचनव्यापारानुसारिणी दृग् वर्त्तमानकालं रूपमात्रं विशदतयाऽवभासति। विकल्पस्तु शब्दस्मरणप्रभवोऽसन्निहितां वाग्रूपतामध्यवस्यति कथं न हेतुविषयभेदात्तयोर्भेदः ? अथ वाक्परिष्वक्तं रूपमधिगच्छद् 'रूपमिदम्' इत्येकं संवेदनमध्यवस्यति जन इति कथं न तयोरैक्यम्?, नैतद्, यत.-" रूपमिदम् " इति ज्ञानेन वाग्रूपताऽऽपन्ना पदार्था गृह्येरन्, भिन्नवाग्रूपताविशेषणविशिष्टा वा?, प्रथमपक्षे लोचनं वाग्रूपतायां न प्रभवतीति तदनुसारिण्यध्यक्षमतिरपि न तत्र प्रवृत्तिमती ततः कथमसावर्थरूपापन्नां वाग्रूपतामधिगन्तुं क्षमेत्यन्यैवाक्षमतिर्नामोल्लेखात्। अथ द्वितीय पक्षस्तदापि नयनदृग् तद्विषये शुद्ध एव पुरो व्यवस्थिते प्रवर्त्तते न वाचि, तत्र चावर्त्तमाना कथं तद्विशिष्टं स्वविषयमुद्द्योतयितुं समर्था, न हि विशेषणं भिन्नमनवभासयति तद्विशिष्टतया विशेष्यमवभासयति दण्डाग्रहणे इव दण्डिनम्। न च यद्यपि वाक् दृशि न प्रतिभाति, तथापि स्मृतौ प्रतिभातीति विशेषणमर्थस्य भिन्नज्ञानग्राह्यस्यापि विशेषणत्वोपपत्तेरिति वक्तुं शक्यम् संविदन्तरप्रतीतस्य स्वातन्त्र्येण प्रतिभासनात्, तदन्तरप्रतीयमानविशेषणत्वानुपपत्ति.। यतो नैककालमनेककालं वा शब्दस्वरूपं स्वतन्त्रतया स्वग्राहिणि ज्ञाने प्रतिभासमानं विशेषणभावं प्रतिपद्यते सर्वत्र तस्य तद्भावापत्ते'। नच शब्दानुरक्तरूपाद्यध्यक्षमतिरुदेतीति शब्दस्य विशेषणत्वं रूपादेश्च विशेष्यत्वं, यतो यदि तदनुरक्तता तत्प्रतिभासस्तदा शब्दस्याक्षबुद्धावप्रतिभासनान्न तदनुरक्तता। अथ रूपादिदेशे शब्दवेदन तदनुरक्तता, तदपि न युक्तं, निरस्तशब्दसन्निधीना रूपादीना स्वज्ञाने प्रतिभासनात्। अथ तत्कालशब्दप्रतिभासस्तदनुराग', न, नयनदृशि रूपादिव्यतिरिक्तशब्दप्रतिभासाऽभावात्, यतो न तुल्यकालमपि शब्द लोचनसंविदवभासयितु क्षमा तस्य तदविषयत्वात्। अथ शब्दानुषक्तरूपस्मृतिदर्शनाद् तद्रूपस्य तस्य प्राक् दर्शनमुपेयते। तर्हि शब्दविविक्तमर्थरूप प्रत्यक्षमधिगच्छति, वाचक तु स्मृतिरुल्लिखतीति न तत्संस्पर्शमध्यक्षमनुभवतीति निर्विकल्पकमाम्नातम्, अन्यथा शब्दस्मरणासंभवादध्यक्षाभावो भवेत्। तथाहि-यदि वाक्संसृष्टस्य सकलार्थस्य संवेदनं तथा सत्यर्थदर्शने तद्वाक्स्मृतिस्तत्र च तत्परिकरितार्थदर्शनम् नच कश्चिद् वाक्संस्पर्शविकलमर्थमवगच्छति तमन्तरेण च न वाक्स्मृति. तां चान्तरेण न वागनुषक्तार्थदर्शनमित्यर्थदर्शनाऽभावो भवेत्। ततोऽर्थदर्शनान्निर्विकल्पकमेव तदभ्युपगन्तव्यम्। यदि च-वाक्संसृष्टस्यैवार्थस्य ग्रहणं तदाऽगृहीतसंकेतस्य बालकस्य तद्ग्रहणं न भवेत्। अथ तस्यापि 'किम्' इति वागुल्लेखोऽस्तीति तदनुषक्ततद्ग्रहणं सविकल्पकम्, नैतद्युक्तम्, तस्य किमपीति सामान्यस्यैव ग्रहणं भवेन्न विशेषस्येति न विशदावभासस्यार्थसंवेदनसम्भवः। यदा च अश्वं विकल्पयतो गोदर्शनं परिणमति तदा तदा तद्भागपरिच्छेदात् कथमवबोधस्य शाश्वती वाग्रूपता? नहि तदा गोशब्दोल्लेखस्तदवबोधस्य संभवति। तत्संवेदनाभावाद्युगपद्विकल्पद्वयानुपपत्तेश्च। ततोऽध्यक्षमर्थसाक्षात्करणान्न वाग्योजनामुपस्पृशतीति निराकृतम्। "वाग्रूपता चेत् व्युत्क्रामेत्" इत्यादि लोचनाद्यध्यक्षे वाक्संस्पर्शायोगात्। यतः श्रोत्रग्राह्या वैखरी वाचं न तावन्नयनजसंवेदनमुपस्पृशति तस्यास्तद्विषयत्वात्, नापि स्मृतिविषयां मध्यमा तामवगमयति। तामन्तरेणापि शुद्धसंविदो भावात्। संहृतशेषवर्णादिविभागा पश्यन्ती वागेव न भवति, बोधरूपता (पत्वात्) वर्णपदाद्यनुक्रमलक्षणत्वात् वाचः न तद्युक्ताप्रतिपत्तिर्विकल्पिका, अपि तु—निर्विकल्पिकैव श्रुतिस्मृतिविषयवर्णपदानुक्रमोल्लेखशून्यत्वात्। यदि-चाऽविकल्पकं संवेदनं किञ्चिन्नाभ्युपेयते तदा वाक्संस्मरणासंभवाद्विकल्पस्याप्यसंभव एव स्यात्। अथ प्रथमं संवेदनं तदा वाचकस्मृतेरभावादविकल्पकं तज्जनितवाचकस्मृतिसहकारीन्द्रियप्रभवं त्वभिधानाऽनुरक्तार्थावभासि द्वितीयं सविकल्पकम्, नैतदस्ति, यतः स्मृतिसचिवमपि लोचनं न वाचके तत् संकेतसमयभाविनि प्रवृत्तिमदिति कथं तदविषये स्मृतिदर्शितेऽपि वाचकानुषक्तेऽध्यक्षप्रवृत्ति., यतो न गन्धस्मृतिसहकारिलोचनमविषये परिमलादौ संवेदनं जनयत् दृष्टं किं तु—सन्निहित एव मलयजरूपे दर्शनं तु तत्सहचारिणि परिमलाऽऽदौ स्मृतिं जनयतीति न तत्तद्रूपसंविदो रूपं हेतुविषयभेदात्। तथाऽत्रापि नयनसंवेदनं रूपमात्रसाक्षात्कारिभिन्नं तद्दर्शनोपजनितं तु विकल्पज्ञानं वचनपरीताऽर्थाऽध्यवसायस्वभावभिन्नमेवेत्यविकल्पकमध्यक्षं सिद्धम्।

( नैयायिकादिसंमतं केवलसविकल्पकवादमुपन्यस्य निर्विकल्पकवादिना तस्याऽपि दूषणम् )—

स्यादेतत् यद्यपि वाचो नयनजप्रतिपत्त्यविषयत्वान्न तद्विशिष्टार्थदर्शनमध्यक्ष तथापि द्रव्यादेर्नयनादिविषयत्वात् तद्विशिष्टार्थाध्यक्षप्रतिपत्ति. सविकल्पिका भविष्यति। तथाहि नियतदेशादितया वस्तु परिदृश्यमान व्यवहारोपयोगि अन्यथा तदसंभवाद् देशादिसंसर्गरहितस्य च तस्य कदाचिदप्यननुभवात् यच्च देशादिविशिष्टतया नामोल्लेखाभावेऽपि वस्तु संगृह्णाति, तत्सविकल्पक विशेषणविशेष्यभावेन हि प्रतीतिः कल्पना देशादयश्च नीलादिवत् तदवच्छेदका दर्शने प्रतिभान्तीति न तत्र शब्दसंयोजनापक्षभावीदोष.। एतदप्यसत्, यत -अध्यक्षं पुरोवर्त्ति नीलादिकमवलोकयितुं समर्थन्न तदवष्टब्धं भूतल तदनवभासे च कथं तद्विशिष्टमर्थं तदवगन्तुं

भवेत्। तथा च-"अर्थेन घटयेदेनां,नहि मुक्त्वाऽर्थरूपताम्। तस्मात्प्रमेयाधिगतेः, प्रमाणं मेयरूपता" ॥ १ ॥ इत्यसंगतमभिधानम्। सम्म० २ काण्ड २ गाथाव्या० ।

अत्र च द्रव्यार्थिकमतावलम्बी शब्दब्रह्मवादाह भर्तृहरिः-
" अनादिनिधनं ब्रह्म, शब्दतत्त्वं यदक्षरम्।
विवर्त्ततेऽर्थभावेन, प्रक्रिया जगतो यतः ॥ "

(वाक्यप०श्लो०१ प्रथमका०) इति। अत्र च आदिरुत्पादः, निधनं विनाशः, तदभावाद् 'अनादिनिधनम्'। 'अक्षरम्'इत्यकाराद्यक्षरस्य निमित्तत्वादनेन च विवर्त्तोऽभिधानरूपतया निदर्शितः। 'अर्थभावेन' इत्यादिना त्वभिधेयो विवर्त्त.। 'प्रक्रिया' इति भेदानामेव संकीर्त्तनम् 'ब्रह्म' इति पूर्वापरादिदिग्विभागरहितम् अनुत्पन्नमविनाशि यच्छब्दमयं ब्रह्म ततश्चायं रूपादिभावग्रामपरिणाम इति श्लोकार्थः । एतच्च शब्दस्वभावात्मकं ब्रह्म प्रणवस्वरूपम्, स च सर्वेषां शब्दाना समस्तार्थानां च प्रकृति.। अयं च वर्णक्रमरूपो वेदस्तदधिगमोपायः प्रतिच्छन्दकन्यायेन तस्यावस्थितत्वात्, तच्च परमं ब्रह्म अभ्युदयनि.श्रेयसफलधर्मानुगृहीतान्तःकरणैरवगम्यते। अत्र च प्रयोगो—ये यदाकारानुस्यूतास्ते तन्मयाः, यथा घटशरावोदञ्चनादयो मृद्धीकारानुगता मृण्मयत्वेन प्रसिद्धाः शब्दाऽऽकारानुस्यूताश्च सर्वे भावा इति स्वभावहेतुः। प्रत्यक्षत एव सर्वभावानां शब्दकारानुगमोऽनुभूयते । तथाहि-अर्थेऽनुभूयमाने शब्दोल्लेखानुगता एव सर्वे प्रत्यया विभाव्यन्ते। उक्तं च—
" न सोऽस्ति प्रत्ययो लोके, यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं, सर्वं शब्देन भासते ॥ "
( वाक्यप० श्लो० १२४ प्रथमका० ) इति।

न च वाग्रूपताऽननुवेधे बोधस्य प्रकाशरूपताऽपि भवेत् तस्यापरामर्शरूपत्वात् तदभावे तु तस्याभावात् बोधस्याप्यभाव', परामर्शाभावे च प्रवृत्ता(स्या)दिव्यवहारोऽपि विशीर्येत इति। आह च—
" वाग्रूपता चेद् व्युत्क्रामे-दवबोधस्य शाश्वती।
न प्रकाश. प्रकाशेत, सा हि प्रत्यवर्शिनी ॥ "
( वाक्यप० श्लो० १२५ प्रथमका० ) इति।

ज्ञानाकारनिबन्धना च वस्तूनां प्रज्ञप्तिरिति नैषां शब्दाकारानुस्यूतत्वमसिद्धं, तत्सिद्धेश्च तन्मात्रभावित्वात्तन्मयत्वस्य तन्मयत्वमपि सिद्धमेव। अत एव 'अयं घट.' इत्यभेदेन शब्दार्थसंबन्धो वैयाकरणै.-' सोऽयमित्यभिसंबन्धाद्रूपमेकीकृतम् ' इत्यादिनाऽभिजल्पस्वरूपं दर्शयद्भि. प्रतिपादितः।

अत्र च पर्यायास्तिकमतेन प्रतिज्ञादिदोष उद्भाव्यते-किमत्र जगत शब्दपरिणामरूपत्वाच्छब्दमयत्वं साध्यते, उत शब्दात्तस्योत्पत्ते. शब्दमयत्वं यथा-' अन्नमयाः प्राणाः ' इति हेतौ ' मयट् ' विधानात्? न तावदाद्यः पक्ष' परिणामानुपपत्ते'। तथाहि—शब्दात्मकं ब्रह्म रूपाद्यात्मकतां प्रतिपद्यमानं स्वरूपपरित्यागेन वा प्रपद्येत, अपरित्यागेन वा ?। यदि परित्यागेनेति पक्ष आश्रीयते तदा ' अनादिनिधनम् ' इत्यनेन यदविनाशित्वमभ्युपगत तस्य हानिप्रसक्ति पौरस्त्यस्वभावध्वंसात्। अथाऽपरित्यागेनेति पक्षस्तदा रूपसंवेदनसमये बधिरस्य शब्दसंवेदनप्रसङ्गस्तदव्यतिरेकात् नीलादिवत्। तथाहि—यद् यदव्यतिरिक्तं तत्संवेदने संवेद्यते, यथा तत्स्वरूपम्, रूपाद्यव्यतिरिक्तश्च शब्दात्मेति स्वभावहेतुः। अन्यथा-भिन्नयोगक्षेमत्वात्तच्छब्दात्मकमेव न स्यादिति विपर्यये बाधकं प्रमाणम्। सम्म० १ काण्ड ६ गाथाव्या०।

अथ यदाकारं यदुत्पन्नं यदध्यवस्यति तत्र तत्प्रमाणं नन्वत्रापि यदाकारं यदुत्पन्नं विज्ञानमेवार्थाध्यवसायं जनयति, उत तत्तमेव, आहोस्विज्जनयत्येवेति कल्पनात्रयम्। आद्यकल्पनायां कारणान्तरनिषेधाद्विकल्पवासनाऽपि तत्कारणं न भवेत् एवं च निर्विकल्पकबोधाद् यथा सामान्याऽवभासी विकल्पस्तथाऽर्थादेव तथाभूताद् भविष्यतीति किमन्तरालवर्त्तिनिर्विकल्पदर्शनकल्पनया ?, नचाऽविकल्परूपताविशेषेऽपि दर्शनादेव विकल्पोत्पत्तिर्नार्थाद्वस्तुस्वाभाव्यादित्युत्तरं तस्य स्वरूपेणैवाऽसिद्धेः। किं च-यथा(थाऽ)विकल्पादर्थादविकल्पदर्शनप्रभवस्तथा दर्शनादपि तथाभूतात् तथाभूतस्यैवाविकल्पस्य प्रसव इति विकल्पवार्त्ताऽप्युपरतैव भवेत्। किं च-स्थिरस्थूराऽवभासि स्तम्भादिज्ञाने यद्यविकल्पकं कोऽपरो विकल्पो यस्तज्जन्यो भवेत्?। अथ 'स्तम्भः स्तम्भोऽयम् ' इत्यनुगताकारावभासि ज्ञानं विकल्पः सामान्यावभासित्वात् तर्ह्ययमप्यनेकावयवसाधारणस्थूलैकाकारस्तम्भावभासिविकल्पः किं न भवेत् सामान्यावभासस्याऽत्राऽपि तुल्यत्वात्? अस्यापलापेऽपरस्याऽप्रतिभासनात् प्रतिभासविकलं जगत्स्यात्। न च स्तम्भप्रतिभासात्प्राग् निरंशक्षणिकैकपरमाऽणुगोचरमविकल्पकं ज्ञानं पुरुषवत्प्रतिभाति तथाऽपि तत्कल्पने पुरुषपरिकल्पनाऽपि भवेदिति न सौगतपक्षस्यैव सिद्धि.। किं च-निरंशक्षणिकानेकस्तम्भादिपरमाण्वाकाराद्यनेकं तद्बिभर्त्ति स्वाऽऽत्मनि तदा सविकल्पकमासज्येत अनेकानुविधानस्य विकल्पनान्तरीयकत्वात्। अथ भिन्नं प्रतिपरमाऽणु तदिष्यते भवेदेवमविकल्पकम् किंतु-एकपरमाणुग्रहणव्यापारवन्नाऽपरपरमाणुग्रहणाय व्याप्रियत इति तेषां परलोकप्रख्यताप्रसक्तिः, तद्वेदनैश्च तस्यावेदनमिति तस्याप्यभावः। न चैकैकपरमाणुनियतभिन्नं वेदनमविकल्पकम् अन्यविविक्तैकपरमाणोरर्वाग् दृशि अप्रतिभासनाद्विवादगोचरस्य तज्ज्ञानस्य विकल्पजनकत्वासिद्धेः। तत्र प्रथमपक्षो युक्तिसगतः इतश्चायमसङ्गतो यतो येन स्वभावेनाविकल्पकं दर्शनं स्वजातीयमुत्तरं जनयति तेनैव यदि विकल्प तर्ह्यविकल्पो विकल्पः प्रसज्येत विकल्पो वाऽविकल्पः अन्यथा कारणभेदः कार्यभेदविधायी न भवेत्, स्वभावान्तरेण जनने सांशतापत्तिरिति। अथ तत्तमेव जनयति तथा सति धारावाहिनिर्विकल्पसंततिर्न भवेत्। अथ तत् तं जनयत्येवेति तृतीयपक्षाश्रयणं तथा सति क्षणभङ्गादावपि निश्चय इति न ज्ञानसन्ततौ सत्त्वसमारोपः नच रागादयस्तन्निबन्धना इति तदव्यवच्छेदार्थमनुमितिर्नैरर्थक्यमनुभवेत्। किं च-यदि व्यवसायवशात् विर्विकल्पकस्य प्रामाण्यव्यवस्था तर्हि तदुत्पत्तिसारूप्यार्थग्रहणमन्तरेणाध्यवसाय एव प्रमाणं भवेत्। अथ तथाभूतानुभवमन्तरेण विकल्प एव न भवेत्, असदेतत्, तस्य तज्जन्यत्वाऽसिद्धेरुक्तविकल्पदोषानतिक्रमात्। किं च-यदि तदाकाराद् दर्शनान्निर्णयप्रभवस्तदा स्वलक्षणगोचरो निर्णयो भवेत्, निर्णयवद्वा सामान्यविषयमविकल्पकमासज्येत अन्यथा स्मृतिसारूप्या-

दर्शनस्य सारूप्यसाधनमयुक्तं भवेत्। अथार्थलेशमात्रानुकारि स्मरणं तथापि स्वलक्षणविषयत्वं स्मरणस्य सर्वथा तदनुकारित्वमविकल्पकस्याप्यसिद्धम्, अन्यथा तस्य जडतापत्तिरिति प्रतिपादनात्। तथा च-'विकल्पो वस्तुनिर्भासा-द्विसंवादादुपप्लव' इत्ययुक्ततया व्यवस्थितम्। अथ न लेशतोऽपि परमार्थस्तदनुकारी विकल्प प्रतिपत्त्रभिप्रायवशात्तु तदभिधानमिति न स्वलक्षणगोचरत्वं निर्विकल्पकस्यापि व्यवहार्यभिप्रायवशात्तदनुकारित्व न परमार्थतः "सर्वमालम्बने भ्रान्तम्" इत्यभिधानात्।

ननु किमिति न परमार्थतोऽपि तदनुकारि तत्?, सामान्यावभासादिति चेत्, नन्वसावपि कुत.? अनाद्यसत्यविकल्पवासनात, नन्वेवं न दर्शनं विकल्पजनकमिति, "यत्रैव जनयेदेना, तत्रैवाऽस्य प्रमाणता" इत्यसंगत वचो भवेत्। नच तद्वासनाप्रबोधविधायकत्वेन तदपि तद्धेतु इन्द्रियार्थ सन्निधानस्यैव तत्प्रबोधहेतुत्वात्। नच वासनाप्रभवत्वेनाक्षजस्य भ्रान्ततैवं भवेत् अर्थस्यापि कारणत्वेनानुमानवत् प्रमाणत्वात्। नच निर्विपयत्वाद् व्यवसायस्याऽप्रामाण्यम् अनुमानस्यापि तत्प्रसङ्गे प्रत्यक्षप्रभवविकल्पवत् तस्याप्यवस्तुसामान्यगोचरत्वात्। न च तद्ग्राह्यविपयस्यावस्तुत्वेऽप्यध्यवसेयस्य स्वलक्षणत्वात्। दृश्यविकल्पा (ल्प्या) वर्थावेकीकृत्य ततः प्रवृत्तेरनुमानस्य प्रामाण्यं, प्रकृतविकल्पेऽप्यस्य समानत्वात्। अन्यथा-" पक्षधर्मतानिश्चयः प्रत्यक्षत. क्वचित्" इति कथं वचो युक्तं भवेत्?, न च गृहीतग्रहणाद्विकल्पोऽप्रमाण क्षणक्षयानुमानस्यापि तत्प्रसङ्ग', शब्दस्वरूपावभास्यध्यक्षावगतक्षणक्षयविषयत्वात्। नचाध्यक्षेण धर्मिस्वरूपग्राहिणा शब्दग्रहणेऽपि न क्षणक्षयग्रहणं विरुद्धधर्माध्यासतस्तदभेदप्रसङ्ग.। प्रज्ञाकराभिप्रायेण तु-लिङ्ग-लिङ्गिनो. साकल्येन योगिप्रत्यक्षतो व्याप्तिग्रहणे अनभ्यासदशाया प्राप्ये भाविन्यनधिगतार्थाधिगन्तृत्वाभावादनुमानं प्रमाणं न भवेत्। अथानिर्णीतमनुमेयं निश्चिन्वत् प्रमाणमनुमानं तर्ह्यनिश्चितं नीलं निश्चिन्वन् विकल्पस्तथाविध' किं न प्रमाणम्?। अथ समारोपव्यवच्छेदकरणादनुमानं प्रमाण तर्हि नीलविकल्पोऽपि तत एव प्रमाणं भवेत्। न च सादृश्यादेव समारोपो—येन तत्राऽनीलसमारोपो न भवेत् किं तु—स्वागमाहितविकल्पाभ्यासवासनातोऽपि यथा-'सर्व सर्वात्मकम्' इति साङ्ख्यस्य एव च नीलेऽनीलात्मकत्वसमारोपं व्यवच्छिन्दानो विकल्प क्षणक्षयानुमानवत् कथ न प्रमाणम्? दृश्यन्ते हि शुक्तिकारज्ज्वादिपु रजतसर्पादिसमारोपास्तथाभूतविकल्पवशाल्लिङ्गानुसरणमन्तरेणाऽपि निवर्त्तमाना।

अथ भवत्वसौ विकल्प' प्रमाणम्, न च प्रमाणान्तरम् अनुमानेऽन्तर्भावात्, न, अनभ्यासदशायां भाविनि प्रवर्त्तकत्वादनुमानं प्रमाणमिष्टम्, तच्च निश्चितत्रिरूपाल्लिङ्गादुपजायते, निश्चयस्य चानुमानान्तर्भावे त्रैरुप्यनिश्चयोऽप्यनुमान तदपि निश्चितत्रैरुप्याल्लिङ्गात्प्रवर्त्तेत इत्यनवस्थानात् अनुमानाप्रवृत्तिरेवेति कुतो विकल्पस्य तत्रान्तर्भाव? अथ पक्षधर्मान्वयव्यतिरेकनिश्चायकं लिङ्गस्य नानुमानं तर्हि प्रमाणान्तरस्याभावादध्यक्ष निर्णयात्मक पक्षधर्मत्वादिनिश्च

य सिद्ध.। अत एव-'अनभ्याशदशायामनुमानम् 'अभ्यासदशायां तु दर्शनमेव प्रमाणम् न च तृतीयादशा विद्यते यस्या विकल्प प्रमाणं भवेत्' इति निरस्तम् अनभ्यासदशायामनुमानस्यैवतमन्तरेणाऽप्रवृत्तेस्तदपेक्षस्यैव तस्य प्रमाणत्वात्। न च भवतु प्रत्यक्षानुमानव्यतिरिक्तो विकल्प तथापि न तदपेक्ष दर्शनं प्रमाणं स्वत एव तस्य प्रमाणत्वात्। अन्यथा विकल्पस्यापि विकल्पान्तरापेक्षया प्रमाणत्वादनवस्था दुष्परिहारा। अर्थविपर्यीकरणाद्विकल्पस्यान्यनिरपेक्षस्य प्रामाण्ये निर्विकल्पस्यापि तथैव प्रामाण्यं भविष्यतीति किं विकल्पापेक्षयेति वक्तव्यम्?, यत -संशयविपर्ययोत्पादकमपि दर्शनमेवं प्रमाण स्यात्। तथा च—तत्राप्यर्थक्रियार्थी प्रवर्त्तेत। अथ 'जले जलमेतत्' इति निर्णयविधायि प्रमाणं तर्हि सिद्धं विकल्पापेक्षण तस्येति वर विकल्प एव प्रमाणमभ्युगतस्तस्यैव प्रवृत्त्यादिव्यवहारसाधकतमत्वात्। यदपि 'अभ्यासदशाया दर्शनमेव विकल्पनिरपेक्षं प्रमाणम्' इति तत्र वक्तव्यं क्व तत्प्रमाणम्?, प्राप्ये भाविनि रूपादाविति चेत् तस्याविपर्यीकरणे तनाऽयुक्तम् अन्यथा नीलज्ञानं पीते प्रमाणं स्याद्विपर्यीकरणे भाविविपयत्वं तस्यैव भवेत् तथा च-'वर्त्तमानावभासि सर्व प्रत्यक्षम्' इति विरुध्येत। अथ वर्त्तमानविपयमपि भाविनि प्रवृत्तिविधानप्रमाणं, न, अविपर्यीकृते प्रवर्तकत्वासंभवात् प्रवर्त्तकत्वे वा, शाब्दमपि सामान्यमात्रविपयं विशेपे प्रवृत्तिं विधास्यतीति न मीमांसकमतप्रतिक्षेपो युक्त। यदि वा(चा)-विपयेऽपि कुतश्चिन्निमित्ताद् ज्ञानं प्रवर्त्तक तर्हि प्रत्यक्षपृष्ठभाविसामान्यमात्राध्यवसायिविकल्पस्य विशेपे प्रवर्त्तकत्वं भविष्यतीति न युक्तम् 'दृश्य-विकल्प(ल्प्य)योरर्थयोरेकीकरण तत्र प्रवृत्तिनिमित्तम्' इत्यभिधानम्। तत्र प्राप्ये तत्प्रमाणम्। दृश्य-प्राप्ययोरेकत्वे तत्प्रमाणमिति चेत्कुत एतत्? व्यवहारिणा तत्राऽविसंवादाभिप्रायाद् अविसंवादि च ज्ञान प्रमाणम्। तदुक्तम्-"प्रमाणमविसंवादि ज्ञानमर्थक्रियास्थितिरविसंवादनम्" इति चेत्; ननु तदेकत्वं कस्य विपय.? दर्शनस्येति चेत्, न, तस्य सामान्यविपयतया सविकल्पकत्वप्रसङ्गे। विकल्पस्येति चेत्, न, अभ्यासदशाया विकल्पस्याऽनभ्युपगमात्। कथं च दृश्यप्राप्ययोरेकत्व विकल्पस्यैव विपयो नाविकल्पस्य एकत्वस्यायोगादिति चेत् कथं विकल्पविपय? अवस्तुविपयत्वात्तस्येति चेत्, दर्शनस्य को विपय?, दृश्यमानक्षणमात्रमिति चेत् ननु यदि तत्संचितपरमाऽणुस्वभावं तत्र दर्शने प्रतिभाति तदा सविकल्पत्वमिति प्राक् प्रतिपादितम्। विविक्तैकैकपरमाणुरूपं चेत्सर्वशून्यताप्राप्तेर्न काचिदभ्यासदशा यस्या दर्शनं प्रमाणं विकल्पविकलं भवेत्। यथा चानेकपरमाण्वाकारमेकं ज्ञानं तथा-दृश्यप्राप्ययोर्घटादिकमेकमिति तद्विपयं परमार्थतोऽभ्यासदशायां सविकल्पमध्यक्षं किमिति नाभ्युपगम्यते? अथाऽशक्यविवेचनत्वाच्चित्रप्रतिभासाऽप्येकैव बुद्धि घटादिकन्तु चित्रो नैकस्तद्विपर्ययात्, ननु किमिदं बुद्धेरशक्यविवेचनत्वम्? यदि सहोत्पत्तिविनाशौ तदन्याननुभवो वा तदभ्युपगम्यते तदेकक्षणभाविसन्तानान्तरज्ञानेपु भिन्नरूपतयोपगतेष्वपि तस्य भावादित्यनैकान्तिको हेतु। अथ सन्तानान्तराण्यपि नाभ्युपगम्यन्ते कथमवस्थाद्वयाभ्युपगम.?, व्यवहारेण तदभ्युपगमे नैव सन्ताननानात्वोपगमादनैकान्तिकत्वं तदवस्थ-

मेव । न च प्रतिभासाऽद्वैतवादोपगमात्तान्यपि पक्षीक्रियन्त इति नाऽनैकान्तिक एकशाखाप्रभवत्वहेतोरपि विपक्षविषयपक्षीकरणादनैकान्तिकत्वाऽभावप्रसक्तेः । न चाऽत्राऽऽमताग्राह्यध्यक्षेण पक्षबाधनान्न पक्षीकरणसंभवः प्रकृतेऽपि युगपद्भाविना नानाचित्तसन्तानानां भेदाऽवभासिस्वसंवेदनाऽध्यक्षेण बाधनादस्य समानत्वात् । अथाऽनन्यवेद्यत्वमशक्यविवेचनत्व तदपि सुखादिभिः क्रमैकसन्तानभाविभिर्व्यभिचारि । अथैषामपि पक्षीकरणम् , नन्वेवं परिणाम्यात्मसिद्धेः 'यद्यथाऽवभासते' इत्याद्यनुमानमयुक्तं हेतोरसिद्धताप्राप्तेः । अथ भेदाऽभेदात्मकत्वेन प्रतिभासनं तदभिमत तर्हि दृश्यप्राप्ययोरपि तदस्तीति कथं नैकत्वम् ? , अथ नीलादिप्रतिभासानां नैकत्व चित्रप्रतिभासात् न नानात्व तदात्मकस्य(अतदात्मकस्य)वा तद्ग्राहकस्याभावात् , सर्वविकल्पातीतं तु तत्त्वमिति । अत्रापि यद्येकत्वस्यैकान्तेन निषेधः साध्यस्तदा सिद्धसाध्यता । अन्यथा चित्रप्रतिभासाऽभावात् कथंचिदेकत्वस्य तु निषेधेऽसिद्धश्चित्रप्रतिभासादिति हेतु , यत पीतादीनां नीलप्रतिभासेनाविषयीकरणे सन्तानान्तरवदवभासस्तथापि भावे न सन्तानान्तरनिषेधः, तेषां च क्षणक्षये साधने ग्राह्यग्राहकभाव इति न सर्वविकल्पाऽतीत तत्त्वम् । विषयीकरणे तदाकारेणापि तद्ग्राहकाभावात् नाऽपि नानात्वमित्यस्य विरोधः स्वपरग्राहकस्यैव तद्ग्राहकत्वात् , सर्वथा तदाकारत्वे नीलमात्रं पीतमात्रं वा भवेदिति न चित्रप्रतिभास । कथंचित्तदाकारत्वे सिद्धं सविकल्पदर्शनम् । अथ सर्वविकल्पाऽतीते तत्त्वे इदमप्यवक्तव्यं तर्हि न परस्याऽपि परतो गति , किं तु-'स्वरूपस्य स्वतो गतिः' इत्येतदपि न वक्तव्य तथा च-विज्ञानाद्वैतमपि कुतः ? , नचान्यग्रहणविमुखज्ञानसंवेदनादेवमुच्यते अन्यत्राप्यस्य समानत्वात् । तदेव चित्रप्रतिभासमभ्युपगच्छता चित्रमेकं ज्ञानमभ्युगन्तव्यमिति । अभ्यासदशायामपि व्यवसायात्मकमध्यक्षं सिद्धिमासादयेत् ।

यदपि-'यद्यर्थग्रहणं व्यवसायोऽविकल्प तथा नामकरणजात्यादिविशिष्टार्थग्रहण तत्पक्षे, संभवि' इत्युच्यते, तदपि निरस्तं द्रष्टव्यम्, अर्थग्रहणस्य विकल्पस्वभावनान्तरीयकत्वात् । यदि ह्येकैकपरमाणुनियतभिन्नदर्शने, तन्नाम क्रियेत तदा स्यादेतत् , न चैवं स्थूलैकप्रतिभासाभावप्रसक्तेः । यदपि जात्यादिविशिष्टग्रहणं प्रत्यक्षेऽसंभवि तदपि सदृशपरिणामसामान्याभ्युपमे सिद्धम् , तथाभूतस्य तस्याऽध्यक्षे प्रतिभाससंवेदनात् तथाभूतस्याऽपि तस्य निराकरणे "नो चेद् भ्रान्तिनिमित्त" इत्यादेस्तथा "अर्थेन घटयेदेनाम्" इत्यादेश्चाभिधानमसंगतं भवेत् । तथाहि-शुक्तिका-रजतयो कथंचित्सदृशपरिणामाभाव रूपसाधर्म्यदर्शनाभावाद् अन्यथातिप्रसङ्गात् । अथ मरीचिकासु यथा जलाभावेऽपि तद्दर्शनं तथा तयोर्भविष्यति न च तयोस्तद्दर्शनं सत्यं तत्परिणामस्य परमार्थतस्तत्राभावात् इतरेतराश्रयदोषप्रसक्तेः । तथाहि— तत्परिणामस्य परमार्थतस्तयोः सत्त्वे तद्दर्शनस्य सत्यता ततश्च तत्परिणामस्य पारमार्थिकत्वमिति व्यक्तमितरेतराश्रयत्वमिति चेत् ?, असदेतत् सर्वभावेष्वेवमव्यवस्थाप्रसङ्गात् । तथाहि—स्वसंवेदनमविकल्पमध्यक्षं तथा प्रतीतेर्यदि सिद्धिमासादयति तत एव सदृशपरिणामोऽपि सेत्स्यति अनवगतसम्बन्धस्यापि खण्डमुण्डादिषु समानप्रत्ययोत्पत्तेः, तस्य भ्रान्तत्वे संवेदनेऽपि तत्प्रसक्तेः । अथ सत्येव स्वसंवेदने तद्दर्शनमिति न भ्रान्तम् , न , इतरेतराश्रयदोषप्रसक्तेः । तथाहि-स्वसंवेदनस्य सत्यत्वे तद्दर्शनमभ्रान्तम् अतश्च तत्सत्यत्वमिति कथं नेतरेतराश्रयदोषः ?, अथ बाधकासद्भावान्नाऽयं दोष । सदृशपरिणामस्य किं बाधकमिति वक्तव्यम् ?, विशेषेभ्यस्तस्य भेदे सम्बन्धासिद्धि अभेदे विशेषा एव न तत्सद्भाव इति बाधकमिति चेत् , न, एकान्तभेदाऽभेदपक्षस्य तत्रानिष्टेस्त एव विशेषाः कथञ्चित् परस्परं समानपरिणतिभाजः इत्यसदभ्युपगमात् । नच चित्रैकविज्ञानवत् समानाऽसमानपरिणतिरेकत्वविरोधः 'यदेवाहमद्राक्ष तदेव स्पृशामि आस्वादयामि जिघ्रामि' इति प्रतीतेः, गुणिगुणिनोरेकत्वप्रतीतेः, न च यदेव रूप दृष्टं तदेव कथं स्पृश्यते ?, इन्द्रियविषयसङ्करप्रसक्तेरिति वक्तव्य चक्षुर्ग्राह्यतास्वभावस्यैकस्य स्पर्शनादिविषयता स्वभावाविरोधात् । तथाहि-दूरादिदेशे सहकारिणमासाद्यैकोऽपि भूरुहो विशदतयेन्द्रियजे प्रत्यये प्रतिभासति स एव निकटादिदेशसचिवो विशदतयेत्युपलब्धम् । न चाऽविशदं दर्शनमवस्तुविषय तस्य वस्तुविषयतया प्रतिपादितत्वात् । नच चक्षुःप्रभवे प्रत्यये रूपमेव चकास्ति नाऽपरस्तद्वानिति वक्तव्यं, यतोऽत्रापि स्तम्भव्यपदेशार्हं रूपं किमेकं प्रतिभाति, उताऽनेकाशपरमाणुसंचयमात्रम् ?, प्रथमपक्षे-अधोमध्ययोर्ध्वात्मकैकरूपवद्द्रव्यात्मकैकस्तम्भप्रसिद्धिः । द्वितीयपक्षेऽपि किमेकमनेकपरमाण्वाकारं चक्षुर्ज्ञानम् , उतैकैकपरमाण्वाकारमनेकम् ?, प्रथमपक्षे रूपाद्यात्मैकवस्तुसिद्धिप्रसक्तिः चित्रैकज्ञानवत् । द्वितीयेऽपि विविक्तज्ञानपरमाणुप्रतिभासस्यासंवेदनात् सकलशून्यताप्रसक्तिरिति प्रतिपादितम् । एतेन क्रियावतोऽपि भावस्याध्यक्षविषयताप्रतिपादिता । न चैकस्य देशाद्देशान्तरप्राप्तिहेतुः क्रिया न केनचित्प्रमाणेनावसातुं शक्येति वक्तव्य पूर्वपर्यायग्रहणपरिणाममुञ्चताऽध्यक्षेणोत्तरपर्यायग्रहणात्, यथा स्तम्भादावधोभागग्रहणमत्यजतोर्ध्वादिभागग्रहस्तेन अन्यथा सकलशून्यतेत्युक्तत्वात् यदपि—

"विशेषणं विशेष्यं च, संबन्धं लौकिकीं स्थितिम् ।
गृहीत्वा सकलस्यैतत् , तथा प्रत्येति नान्यथा ॥१॥"

इत्युक्त तदपि निरस्तं द्रष्टव्यम् , चित्रपतङ्गस्येवैकानेकात्मनो वस्तुनः प्रथमतयैव प्रतिभासनात् एवंकल्पनाया दूराऽपास्तत्वाद् । यदपि—

"सकेतस्मरणोपायं, दृष्टं संकल्पनात्मकम् ।
पूर्वापरपरामर्श-शून्ये तच्चाक्षुषे कथम् ॥१॥"

इत्यभिधानं तदप्यसंगतं, सकेतकालानुभूतशब्दस्मरणमन्तरेणापि व्यवसायात्मकस्य ज्ञानस्याक्षप्रभवस्य प्रतिपादनात् । अन्यथा विकल्पानुत्पत्तेरित्युक्तत्वात् । तस्मात्पुरोवर्त्तिस्थिरस्थूरस्वगुणपर्यायसाधारणस्तम्भादिप्रतिभासस्याक्षप्रभवस्य निर्णयात्मन स्वसंवेदनाध्यक्षतोऽनुभूते स्वार्थनिर्णयात्मकमध्यक्ष सिद्धम् । न चेदं मानसमेतद्व्यतिरेकेण निरंशैकपरमाणुग्राहिणो विकल्पस्य कदाचिदप्यननुभवात् । यदि चायं स्तम्भादिप्रतिभासो मानसो भवेद्विकल्पान्तरतोऽस्य निर्वृत्तिर्भवेत् । न चैवं क्षणक्षयित्वमनुमानाद्विश्चिन्वतोऽश्वादिक वा विकल्पयतस्तदैवास्य प्रतिभाससंवेदनात् ।

ततोऽध्यक्षप्रमाणसिद्धत्वान्न सविकल्पकत्वे साधकप्रमाणाभाव'। तथा अनुमानादपि सविकल्पकत्वमध्यक्षस्य नाऽसिद्धम्। तथाहि-यज्ज्ञान यद्विषयीकरोति तत्तन्निर्णयात्मकतया अनुमानमिवाग्न्यादिक विषयीकरोति च स्वार्थमध्यक्षमिति । न चास्याध्यक्षबाधितकर्मनिर्देशानन्तरप्रयुक्तत्वेन कालात्ययापदिष्टत्व पक्षस्य चाऽध्यक्षबाध साध्यविपरीतार्थोपस्थापकाध्यक्षस्य निषिद्धत्वात्। न च स्वार्थविपर्यीकरणं विज्ञानस्यासिद्धं प्राक् तस्य प्रसाधितत्वात् अतो नाऽसिद्धो हेतु.। न च सपक्षावृत्तित्वादसाधारणाऽनैकान्तिक. स्वार्थनिर्णयात्मकत्वेन प्रसिद्धेऽनुमानेऽस्य वृत्तिनिश्चयात्। न चानुमानस्याप्यर्थविषयीकरणमन्तरेण तन्निश्चयस्वरूपता संभवति समारोपव्यवच्छेदकत्वादे. प्रामाण्यनिमित्तस्य तत्र निषिद्धत्वात्। तदन्तरेण प्रामाण्यस्यैवायोगात्। न च निर्णयात्मकार्थविषयीकरणयोरनुमाने साहचर्यदर्शनेऽपि विपर्यये बाधकप्रमाणाभावत. । सदिग्धविपक्षव्यावृत्तिकत्वादनैकान्तिक. तदुत्पत्तिसारूप्यादेर्निर्णयस्वभावता व्यतिरिक्तस्यैकान्तवादे अर्थविषयीकरणनिबन्धनस्य विज्ञानेऽसंभवात्। तदसंभवस्य च प्राक् प्रतिपादितत्वात्। ततो न सदिग्धविपक्षव्यावृत्तिकोऽपि। अत एव न विरुद्ध. विपक्षवृत्तेरेव विरुद्धत्वात् । ततोऽसिद्धविरुद्धानैकान्तिकादिदोषविकलात् भवत्यत. साधनाद्विवक्षितसाध्यसिद्धिरिति न तत्साधकभावान्निर्णयात्मकाध्यक्षाऽभाव. ।

नाऽपि तद्बाधकप्रमाणसद्भावात्तस्यैवासिद्धे.। तथाहि—तद्बाधकमध्यक्षम् अनुमान वा प्रकल्पेत् प्रमाणाऽन्तरानभ्युपगमात्। न तावदध्यक्षं तद्बाधकं संभवति अविकल्पप्रसाधकस्य तस्य तद्बाधकत्वात्। न च निरंशक्षणिकैकपरमाणुसवेदनं स्वसंवेदनाध्यक्षत सिद्धमिति प्राक् प्रतिपादितमिति नाध्यक्षं तद्बाधकम् नाऽप्यनुमानं तद्बाधक संभवति अध्यक्षाप्रवृत्तौ तत्पूर्वकस्य तस्यापि तत्राऽप्रवृत्ते । यदपि यद् यथा प्रतिभाति तत्तथा सद्व्यवहृतिमवतरति इत्यादिनिर्विकल्पकाध्यक्षप्रसाधकमनुमानमुपन्यस्त, तत्रापि प्रत्येक्षानुमाननिराकृतत्व पक्षदोष ,नामादिविशेषणोल्लेखविविक्ततया नाऽक्षमतिरुद्भातीति हेतोरसिद्धता च जातिगुणक्रियाद्यनेकविशेषणविशिष्टस्थिरस्थूराकारस्तम्भादिविषयाक्षजप्रत्ययस्यैकानेकस्वभावस्य विशेषणविशिष्टतया स्वसंवेदनाध्यक्षतो निर्णयात्, अस्य च प्राक् प्रसाधितत्वात्। यदपि 'विशेषणपरिष्वक्तवपुष. संविदोऽध्यक्षत्वविरोधात् इत्युक्त तदपि प्रलापमात्र, स्वसवेदनाध्यक्षप्रसिद्धे स्वरूपे विरोधाऽयोगात्, अन्यथाऽतिप्रसङ्गात्। सम्म० २ काण्ड १ गाथाव्या०। स्था० । ('एगावाइ' शब्दे तृतीयभागे ३७ पृष्ठे शब्दो ब्रह्मेत्यस्मिन्विषये भर्तृहरिमतमुपदर्शितम्।) (पुनरधिक 'सामण्णविसेस' शब्दे वक्ष्यते।)

सद्दबुद्धि–शब्दबुद्धि–पुं०। शब्दनिश्चये , विशे०।

सद्दमहप्पगास–शब्दमहाप्रकाश–पु०। शब्दैर्महान् प्रकाश प्रसिद्धिर्यस्य स शब्दमहाप्रकाश.। शब्दात् प्रसिद्धे, सूत्र० १ श्रु० ६ अ०।

सद्दमुच्छिय–शब्दमूर्च्छित–त्रि०। शब्दगृद्धे, दश० ८ अ०।

सद्दल–शाद्वल–न० । हरिते , "हरिअ सद्दल " पाइ० ना० २३७ गाथा।

सद्दवनिक्खेवपरिहारि–सद्रवनिक्षेपपरिहारिन्–पुं०। सद्रवस्य निक्षेप सद्रवनिक्षेपस्तत् परिहर्तुं शीलं येषा ते सद्रवनिक्षेपपरिहारिण । द्रवाऽऽग्राहिषु, ओघ०।

सद्दवेहि–शब्दवेधिन्–पुं० । शब्द लक्षीकृत्य विध्यति य. स शब्दवेधी। शब्दमनुसृत्य लक्ष्यवेधके , ज्ञा० १ श्रु० १८ अ०। आचा०। 'तत्थ लग्ग आराहिउं कुलदेवय , भणिओ य कुलदेवयाए पुत्त! सद्दवेही भविस्ससि " द० शै० १ तत्त्व।

सद्दसत्तिक्कय–शब्दसप्तैकक–पुं०। शब्दशक्तिप्रतिपादके आचाराङ्गद्वितीयश्रुतस्कन्धस्य सप्तैककाना चतुर्थे आदितः पञ्चदशे अध्ययने , स्था० ७ ठा० ३ उ० । (तच्च 'सद्द' शब्देऽस्मिन्नेव भागे दर्शितम्।)

सद्दह–श्रद्धा–धा०। अस्तीत्यात्मन. परिणामे, " श्रदो धो दहः" ॥ ८। ४ । ६॥ श्रद' परस्य दधातेर्दह इत्यादेशो भवति। सद्दहइ। "सद्दहमाणो जीवो" श्रद्दधाति। श्रद्दधानो जीव'। प्रा० ४ पाद।

सद्दहण–श्रद्धान–न० । "स्वराणां स्वरा " ॥ ८। ४ २३८॥ धातुषु स्वराणां स्थाने स्वरा बहुल भवन्ति । सद्दहण। सद्दहाण। प्रा० सम्यक्त्वे, ध० २ अधि०। आ० म०। सामान्यत' (सूत्र० १ श्रु०१ अ० १ उ०।) प्रमाणीकरणे, संथा० । स्था० । अस्तीत्येवं प्रतिपत्तौ , ज्ञा० १ श्रु० १ अ० । सम्यग्दर्शने, पञ्चा० ११ विव०। नि० चू०। आ० म०। दशा०। विशे०।

सद्दहणाकप्प–श्रद्धानकल्प–पुं०। श्रद्धानसामाचार्याम् , पं० भा०। "सद्दहणा वि य दुविहा ओहनिसीहे तहा विभागे य" पं० भा० ५ कल्प। ('णिसीहकप्प' शब्दे चतुर्थभागे २१४१ पृष्ठे एष कल्प उक्त'।)

सद्दहमाण–श्रद्दधान–त्रि० । स्वमतावतिशयेन रोचयति, सूत्र० २ श्रु० १ अ०। प्रतीयमाने, आचा० २ श्रु० १ चू० २ अ० २ उ०। ध०। प्रतिपद्यमाने, ध० २ अधि० । आ० म०। सूत्र०।

सद्दहाण–श्रद्धधान–त्रि० । 'न श्रदुदो ' ॥ ८। १। १२॥ इत्यन्त्यव्यञ्जनस्य न लुक्। प्रा०। "स्वराणां स्वरा " ॥ ८। ४। २३८॥ इति दीर्घ । सम्यक्त्वे, प्रा० ४ पाद।

सद्दहाणसुद्धि–श्रद्धानशुद्धि–न० । अवितथमेतदिति श्रद्धाशुद्धे, आ० चू० ६ अ०।

अस्या' षड्विधत्वमुपदर्शयन्नाह—

सा पुण सद्दहणा जा–णणा य विणयाऽणुभासणा चेव।
अणुपालणा विसोही, भावविसोही भवे छट्ठा ।१५८६।

सा पुन शुद्धिरेवं षड्विधा, तद्यथा—श्रद्धानशुद्धि , ज्ञानशुद्धिश्च, विनयशुद्धि , अनुभाषणाशुद्धिश्चैव, तथा अनुपालनाविशुद्धिश्चैव भावशुद्धिर्भवति षष्ठी। पाठान्तरं वा– ' सोही सद्दहणे ' त्यादि, तत्र शुद्धिशब्दो द्वारोपलक्षणार्थ , निर्युक्तिगाथा चेयमिति गाथासमासार्थ । आव० ६ अ०।

सद्दहि–शब्दधि–पु०। कर्णे, दे०।

सद्दहिय-श्रद्धाय-अव्य० । सूत्रार्थाभ्यां सामान्येन प्रतिपद्ये-त्यर्थे, उत्त० २६ अ० ।

सद्दाऽऽउल-शब्दाकुल-त्रि०। शब्देनाकुलं शब्दाकुलम् । बृहच्छब्दे, स्था० १० ठा० ३ उ० । भ० । ध० ।

सद्दाणुरूववाय-शब्दाणुरूपपात-पुं० । शब्दाणूनां रूपस्य च पात. शब्दाणुरूपपात. । आह्वानीयस्य श्रोत्रे दृष्टौ च शब्दाऽणूनां रूपस्य च पातने, पञ्चा० १ विव० ।

सद्दाणुवाई-शब्दानुपातिन्-पुं० । शब्दं मन्मनभाषितादिकमभिप्वङ्गहेतुमनुपतत्यनुसरति इत्येवशील. शब्दानुपाती । शब्दानुपतनशीले, स्था० ६ ठा० ३ उ० । आव० ।

सद्दाणुवाय-शब्दानुपात-पुं० । शब्दस्य-श्रुतकाशितादेरनुपातनं-श्रोत्रेणावतारणं शब्दानुपातनम् । यथाविहितस्वगृहवृत्तिमाकारादिव्यवच्छिन्नभूप्रदेशाभिग्रहे, ध० २ अधि०। देशावकाशिकव्रतातिचारे, उपा० ' सद्दाणुवाए ' त्ति-स्वगृहवृत्तिप्राकाराद्यवच्छिन्नभूप्रदेशाभिग्रहे-वहि. प्रयोजनोत्पत्तौ, तत्र स्वयं गमनायोगात् वृत्तिप्राकारादिप्रत्यासन्नवर्त्तिनो बुद्धिपूर्वकं तमभ्युत्काशिनादिशब्दकरणेन समवसितकान् बोधयतः शब्दानुपात', शब्दस्यानुपातनमुच्चारणं तादृग् येन परकीयश्रवणविवरमनुपतत्यसाविति । उपा० १ अ० । (' देसावगासिय ' शब्दे चतुर्थभागे २६३३ पृष्ठे गतोऽयमभिग्रहः । )

सद्दाऽऽभास-शब्दाभास-पुं० शब्दनयाभासे, रत्ना०७ परि०। (एतदाभासवक्तव्यता ' णयाभास ' शब्दे चतुर्थभागे १६०३ पृष्ठे गता । ) यथा कालादिभेदेन ध्वनेरर्थभेदं प्रतिपद्यमानः शब्दः । यथा वभूव भवति भविष्यति सुमेरुरित्यादि', तद्भेदेन तस्य तमेव समर्थयमानस्तदाभास', यथा-वभूव भवति भविष्यति सुमेरुरित्यादयो भिन्नकालाः शब्दाभिन्नमेवार्थमभिदधति भिन्नकालशब्दत्वात्, तादृक् सिद्धान्यशब्दवत् इत्यादि' । स्या० ।

सद्दाऽऽययण-शब्दायतन-न० । बौद्धपरिभाषिते शब्दाश्रये, सूत्र० १ श्रु० १२ अ० ।

सद्दाल-शब्दाल-त्रि० । नूपुरे, " सद्दालं सिंजिरं कणिरं " पाइ० ना० १४० गाथा ।

सद्दालपुत्त-सद्दालपुत्र-पुं० । पोलासपुरवासिनि कुम्भकारे, स्था० । ' सद्दालपुत्ते ' त्ति-सद्दालपुत्र' पोलासपुरवासी कुम्भकारजातीयो गोशालकोपासको भगवता बोधित. पुनः स्वमतग्राहणोद्यतेन गोशालकेन ( अ ) क्षोभितान्त करण प्रतिपन्नप्रतिमश्च परीक्षकदेवेन भार्यामारणदर्शनतो भग्नप्रतिज्ञ. पुनरपि कृतालोचनस्तथैव दिवं गत इति वक्तव्यताप्रतिवद्ध सद्दालपुत्र इत्यध्ययनम् । स्था० १० ठा०३ उ० । उपा० ।

पोलासपुरे नामं नयरे, सहस्संववणे उज्जाणे, जियसत्तू राया । तत्थ णं पोलासपुरे नयरे सद्दालपुत्ते नामं कुम्भकारे आजीविओवासए परिवसइ । आजीवियसमयंमि लद्धऽट्ठे गहियट्ठे पुच्छियट्ठे विणिच्छियट्ठे अभिगयट्ठे अट्ठिमिंजपेमाणुरागरत्ते य अयमाउसो ! आजीवियसमए अट्ठे अयं परमट्ठे सेसे अणट्ठे, त्ति आजीवियसमएणं अप्पाणं भावेमाणे विहरइ । तस्स णं सद्दालपुत्तस्स आजीविओवासगस्स एक्का हिरण्णकोडी निहाणपउत्ता, एक्का वुड्ढिपउत्ता, एक्का पवित्थरपउत्ता, एक्के वए दस गोसाहस्सिएणं वएणं, तस्स णं सद्दालपुत्तस्स आजीविओवासगस्स अग्गिमित्ता नामं भारिया होत्था । तस्स णं सद्दालपुत्तस्स आजीविओवासगस्स पोलासपुरस्स नगरस्स वहिया पंच कुम्भकारावणसया होत्था । तत्थ णं बहवे पुरिसा दिण्णभइभत्तवेयणा कल्लाकल्लिं बहवे करए य वारए य पिहडए य घडए य अद्धघडए य कलसए य अलिञ्जरए य जंबूलए य उट्टियाओ य करेन्ति । अन्ने य से वहवे पुरिसा दिन्नभइभत्तवेयणा कल्लाकल्लिं तेहिं बहूहिं करएहि य० जाव उट्टियाहि य रायमग्गंसि वित्तिं कप्पेमाणा विहरन्ति । ( सू० ३६ )

सप्तमं सुगममेव । नवरम् ' आजीविओवासए ' त्ति-आजीविका.-गोशालकशिष्या. तेषामुपासकः आजीविकोपासकः, लब्धार्थ. श्रवणतो गृहीतार्थो बोधतः पृष्टार्थः संशये सति विनिश्चितार्थ उत्तरलाभे सति, ' दिण्णभइभत्तवेयण ' त्ति-दत्तं भृतिभक्तरूपं-द्रव्यभोजनलक्षण वेतनं--मूल्यं येषां ते तथा, ' कल्लाकल्लिं ' ति-प्रतिप्रभात बहून् करकान्-वार्घटिकाः वारकांश्च-गडुकान् पिठरका:-स्थाली' घटकान्-प्रतीतान् अर्द्धघटकांश्च-घटार्द्धमानान् कलशकान्-आकारविशेषवतो बृहद्घटकान् अलिञ्जराणि च-महदुदकभाजनविशेपान् जम्बूलकाश्च-लोकरूढ्यावसेयान् उष्ट्रिकांश्च-सुरातैलादिभाजनविशेषान् ।

तए णं से सद्दालपुत्ते आजीविओवासए अन्नया कयाइ पुव्वावरण्हकालसमयंसि जेणेव असोगवणिया तेणेव उवागच्छइ उवागच्छित्ता गोसालस्स मंखलिपुत्तस्स अन्तियं धम्मपण्णत्तिं उवसम्पज्जित्ता णं विहरइ । तए णं तस्स सद्दालपुत्तस्स आजीविओवासगस्स एगे देवे अन्तियं पाउब्भवित्था , तए णं से देवे अन्तलिक्खपडिवन्ने सखिंखिणियाइं ० जाव परिहिए सद्दालपुत्तं आजीविओवासयं एवं वयासी-एहिइ णं देवाणुप्पिया ! कल्लं इहं महामाहणे उप्पन्नणाणदंसणधरे तीयपडुप्पन्नमणागयजाणए अरहा जिणे केवली सव्वण्णू सव्वदरिसी तेलोक्कवहियमहियपूइए सदेवमणुयासुरस्स लोगस्स अच्चणिज्जे वन्दणिज्जे सक्कारणिज्जे संमाणणिज्जे कल्लाणं मङ्गलं देवयं चेइयं ० जाव पज्जुवासणिज्जे । तच्चकम्मसम्पयासंपउत्ते , तं णं तुमं वन्देज्जाहि ० जाव पज्जुवासेज्जाहि । पाडिहारिएणं पीढफलगसिज्जासंथारएणं उवनिमन्तेज्जाहि, दोच्चं पि तच्चं पि एवं वयइ एवं

वइत्ता जामेव दिसं पाउब्भूए तामेव दिसं पडिगए। तए णं तस्स सद्दालपुत्तस्स आजीविओवासगस्स तेणं देवेणं एवं वुत्तस्स समाणस्स इमेयारूवे अज्झत्थिए० ४ समुप्पन्ने-एवं खलु ममं धम्मायरिए धम्मोवएसए गोसाले मंखलिपुत्ते से णं महामाहणे उप्पन्नणाणदंसणधरे ० जाव तच्चकम्मसंपयासंपउत्ते से णं कल्लं इह हव्वमागच्छिस्सइ । तए णं तं अहं वंदिस्सामि ०जाव पज्जुवासिस्सामि पाडिहारिएणं ० जाव उवनिमन्तिस्सामि । ( सू० ४० )

'एहिइ' त्ति—एष्यति, 'इहं' ति—अस्मिन्नगरे, 'महामाहणे' त्ति—मा हन्मि-न हन्मीत्यर्थः, आत्मना वा हनननिवृत्त परं प्रति मा हन इत्येवमाचष्टे यः स माहनः, स एव मनःप्रभृतिकरणादिभिराजन्म सूक्ष्मादिभेदभिन्नजीवहनननिवृत्तत्वात् महान्माहनो महामाहान , उत्पन्ने—आवरणक्षयेणाविर्भूते ज्ञानदर्शने धारयति यः स तथा,अत एवातीतप्रत्युत्पन्नानागतज्ञायक 'अरहा' त्ति—अर्हन् , महाप्रातिहार्यरूपपूजार्हत्वात् , अविद्यमान वा रह —एकान्त सर्वज्ञत्वाद्यस्य सोऽरहा , जिनो रागादिजेतृत्वात् केवलानि—परिपूर्णानि शुद्धान्यनन्तानि वा ज्ञानादीनि यस्य सन्ति स केवली, अतीतादिज्ञानेऽपि सर्वज्ञान प्रति शङ्का स्यादित्याह सर्वज्ञ साकारोपयोगसामर्थ्यात् , सर्वदर्शी अनाकारोपयोगसामर्थ्यादिति, तथा 'तेलोक्कवहियमहियपूइए' त्ति—त्रैलोक्येन—त्रिलोकवासिना जनेन 'वहिय' त्ति—समग्रैश्वर्याद्यतिशयसन्दोहदर्शनसमाकुलचेतसा हर्षभरनिर्भरेण प्रबलकुतूहलबलादनिमिषलोचनेनावलोकित 'महिय' त्ति—सेव्यतया वाञ्छित ,-पूजितश्च—पुष्पादिभिर्य स तथा,एतदेव व्यनक्ति-सदेवा मनुजासुरा यस्मिन् सदेवमनुजासुरस्तस्य लोकस्य—प्रजाया अर्चनीय पुष्पादिभि , वन्दनीय स्तुतिभि , सत्करणीय —आदरणीय सन्माननीयोऽभ्युत्थानादिप्रतिपत्तिभि , कल्याण मङ्गल दैवतं चैत्यमित्येव बुद्ध्या पर्युपासनीय इति, 'तच्चकम्म' त्ति-तथ्यानि-सत्फलानि-अव्यभिचारितया यानि कर्माणि-क्रियास्तत्सम्पदा—तत् समृद्ध्या यः सम्प्रयुक्तो-युक्त स तथा, 'कल्लं' मित्यत्र यावत्करणात् 'पाउप्पभायाए रयणीए' इत्यादि 'जलन्ते सूरिए' इत्येतदन्त. प्रभातवर्णको दृश्य , स चोत्क्षिप्तज्ञातवद् व्याख्येय ।

तए णं कल्लं ०जाव जलन्ते समणे भगवं महावीरे० जाव समोसरिए, परिसा निग्गया ०जाव पज्जुवासइ , तए णं से सद्दालपुत्ते आजीविओवासए इमीसे कहाए लद्धट्ठे समाणे-एवं खलु समणे भगवं महावीरे ०जाव विहरइ, तं गच्छामि णं समणं भगवं महावीरं वन्दामि ०जाव पज्जुवासामि, एवं सम्पेहेइ संपेहेइत्ता ण्हाए० जाव पायच्छित्ते सुद्धप्पावेसाइं ०जाव अप्पमहग्घाऽऽभरणालङ्कियसरीरे मणुस्सवग्गुरापरिगए साओ गिहाओ पडिणिक्खमइ साओ गिहाओ पडिणिक्खमित्ता पोलासपुरं नयरं मज्झं मज्झेणं निग्गच्छइ णिग्गच्छित्ता जेणेव सहस्सम्बवणे उज्जाणे जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ उवागच्छित्ता तिक्खुत्तो आयाहिणं पयाहिणं करेइ करेइत्ता वन्दइ२त्ता नमंसइ नमंसइत्ता ०जाव पज्जुवासइ । तए णं समणे भगवं महावीरे सद्दालपुत्तस्स आजीविओवासगस्स तीसे य महइ ०जाव धम्मकहा समत्ता, सद्दालपुत्ताइ समणे भगवं महावीरे सद्दालपुत्तं आजीविओवासयं एवं वयासी-से नूणं सद्दालपुत्ता ! कल्लं तुमं पुव्वावरण्हकालसमयंसि जेणेव असोगवणिया ०जाव विहरसि । तए णं तुब्भ एगे देवे अन्तियं पाउब्भवित्था । तए णं से देवे अन्तलिक्खपडिवन्ने एवं वयासी-हं भो सद्दालपुत्ता ! तं चेव सव्वं ०जाव पज्जुवासिस्सामि, से नूणं सद्दालपुत्ता ! अट्ठे समट्ठे ? हंता अत्थि, नो खलु सद्दालपुत्ता ! तेणं देवेणं गोसालं मंखलिपुत्तं पणिहाय एवं वुत्ते, तए णं तस्स सद्दालपुत्तस्स आजीविओवासयस्स समणेणं भगवया महावीरेणं एवं वुत्तस्स समाणस्स इमेयारूवे अज्झत्थिए० ४ एस णं समणे भगवं महावीरे महामहाणे उप्पन्नणाणदंसणधरे ०जाव तच्चकम्मसंपयासम्पउत्ते, तं सेयं खलु ममं समणं भगवं महावीरं वन्दित्ता नमंसित्ता पाडिहारिएणं पीढफलग ०जाव उवनिमन्तित्तए, एवं सम्पेहेइ संपेहेइत्ता उट्ठाए उट्ठेइ उट्ठेइत्ता समणं भगवं महावीरं वन्दइ नमंसइ वंदइत्ता नमंसइत्ता एवं वयासी -एवं खलु भंते ! ममं पोलासपुरस्स नयरस्स वहिया पञ्चकुम्भकारावणसया, तत्थ णं तुब्भे पाडिहारियं पीढ० जाव संथारयं ओगिण्हित्ता णं विहरइ । तए णं समणे भगवं महावीरे सद्दालपुत्तस्स आजीविओवासगस्स एयमट्ठं पडिसुणेइ पडिसुणेइत्ता सद्दालपुत्तस्स आजीविओवासगस्स पंचकुम्भकारावणसएसु फासुएसणिज्जं पाडिहारियं पीढफलग० जाव संथारयं ओगिण्हित्ता णं विहरइ । ( सू० ४१ ) तए णं से सद्दालपुत्ते आजीविओवासए अन्नया कयाइ वायाहययं कोलालभण्डं अन्तोसालाहिंतो वहिया नीणेइ नीणेइत्ता आयवंसि दलयइ । तए णं समणे भगवं महावीरे सद्दालपुत्तं आजीविओवासयं एवं वयासी-सद्दालपुत्ता ! एस णं कोलालभण्डे कओ ?, तए णं से सद्दालपुत्ते आजीविओवासए समणं भगवं महावीरं एवं वयासी-एस णं भन्ते ! पुव्विं मट्टिया आसी , तओ पच्छा उदएणं निगिज्जइ निगिज्जइत्ता छारेण य करिसेण य एगयओ मीसिज्जइ मीसिज्जइत्ता चक्के आरोहिज्जइ , तओ बहवे करगा य० जाव उट्टियाओ य कज्जन्ति ।

तए णं समणे भगवं महावीरे सद्दालपुत्तं आजीविओवासयं एवं वयासी—सद्दालपुत्ता! एस णं कोलालभण्डे किं उट्ठाणेणं ०जाव पुरिसक्कारपरक्कमेणं कज्जति उदाहु अणुट्ठाणेणं ०जाव अपुरिसक्कारपरक्कमेणं कज्जति ?, तए णं से सद्दालपुत्ते आजीविओवासए समणं भगवं महावीरं एवं वयासी–भन्ते! अणुट्ठाणेणं ०जाव अपुरिक्कारपरक्कमेणं, नऽत्थि उट्ठाणे इ वा ०जाव परक्कमे इ वा , नियया सव्वभावा। तए णं समणे भगवं महावीरे सद्दालपुत्तं आजीविओवासयं एवं वयासी–सद्दालपुत्ता! जइ णं तुब्भं केइ पुरिसे वायाहयं वा पक्केल्लयं वा कोलालभण्डं अवहरेज्जा वा विक्खिरेज्जा वा भिन्देज्जा वा आच्छिन्देज्जा वा परिट्ठवेज्जा वा अग्गिमित्ताए वा भारियाए सद्धिं विउलाइं भोगभोगाइं भुञ्जमाणे विहरेज्जा , तस्स णं तुमं पुरिसस्स किं दण्डं वत्तेज्जासि ?, भन्ते! अहं णं तं पुरिसं आओसेज्जा वा हणेज्जा वा बन्धेज्जा वा महेज्जा वा तज्जेज्जा वा तालेज्जा वा निच्छोडेज्जा वा निब्भच्छेज्जा वा अकाले चेव जीवियाओ ववरोवेज्जा। सद्दालपुत्ता! नो खलु तुब्भं केइ पुरिसे वायाहयं वा पक्केल्लयं वा कोलालभण्डं अवहरइ वा ०जाव परिट्ठवेइ वा अग्गिमित्ताए वा भारियाए सद्धिं विउलाइं भोगभोगाइं भुञ्जमाणे विहरइ, नो वा तुमं तं पुरिसं आओसेज्जसि वा हणिज्जसि वा ०जाव अकाले चेव जीवियाओ ववरोवेज्जासि,जइ नत्थि उट्ठाणेइ वा०जाव परक्कमेइ वा नियया सव्वभावा।अहं णं तुब्भ केइ पुरिसे वायाहयं०जाव परिट्ठवेइ वा अग्गिमित्ताए वा० जाव विहरइ तुमं ता तं पुरिसं आओसेसि वा० जाव ववरोवेसि तो जं वदसि नऽत्थि उट्ठाणेइ वा० जाव नियया सव्वभावा तं ते मिच्छा, एत्थ णं सद्दालपुत्ते आजीविओवासए सम्बुद्धे। तए णं से सद्दालपुत्ते आजीविओवासए समणं भगवं महावीरं वन्दइ नमंसइ वंदित्ता नमंसित्ता एवं वयासी– इच्छामि णं भंते ! तुब्भं अन्तिए धम्मं निसामेत्तए। तए णं समणे भगवं महावीरे सद्दालपुत्तस्स आजीविओवासगस्स तीसे य० जाव धम्मं परिकहेइ। ( सू० ४२ )

'वायाहयगं' त्ति—वाताहतं वायुनपच्छोपमानीतमित्यर्थः 'कोलालभण्ड' त्ति—कुलालाः—कुम्भकारास्तेषामिदं कौलालं तच्च तद्भाण्डं च—पण्यं भाजनं वा कोलालभाण्डम्, एतत्किं पुरुषकारेणान्यथा वा क्रियेत इति भगवता पृष्टे स गोशालकमतेन नियतिवादलक्षणेन भावितत्वादपुरुषकारेणेत्युत्तरदाने च स्वमतक्षतिपरमताभ्युपगमलक्षणं दोषमालक्षयन् अपुरुषकारेण इत्यवोचत् । ततस्तदभ्युपगतनियतिमतनिरासाय पुनः प्रश्नयन्नाह— 'सद्दालपुत्त' इत्यादि, यदि तव कश्चित्पुरुषो वाताहतं वा आममित्यर्थ, 'पक्केल्लयं व' त्ति पक्कं वा अग्निना कृतपाकम् अपहरेद्वा–चोरयेत् विकिरेद्वा—इतस्ततो विक्षिपेत् भिन्द्याद्वा काणताकरणेन, आच्छिन्द्याद्वा हस्तादुद्दालनेन, पाठान्तरेण विच्छिन्द्याद्वा विविधप्रकारैश्छेदं कुर्यादित्यर्थः, परिष्ठापयेद्वा बहिर्नीत्वा त्यजेदिति 'वत्तेज्जासि' त्ति–निर्वर्त्तयसि 'आओसेज्जा व' त्ति—आक्रोशयामि वा मृतोऽसि त्वमित्यादिभिः शापैरभिशपामि हन्मि वा दण्डादिना बध्नामि वा रज्ज्वादिना, तर्जयामि वा ज्ञास्यसिरे दुराचार! इत्यादिभिर्वचनविशेषैः, ताडयामि वा चपेटादिना, निच्छोटयामि वा धनादित्याजनेन, निर्भर्त्सयामि वा परुषवचनैः, अकाल एव च जीविताद्वा व्यपरोपयामि, मारयामीत्यर्थः। इत्येवं भगवांस्तं सद्दालपुत्र स्ववचनेन पुरुषकाराभ्युपगमं ग्राहयित्वा तन्मतविघटनायाह—'सद्दालपुत्त' इत्यादि, न खलु तव भाण्डं कश्चिदपहरति न च त्वं तमाक्रोशयसि यदि सत्यमेव नास्त्युत्थानाऽऽदि। अथ कश्चित्तदपहरति त्वं च तमाक्रोशयसि तत एवमभ्युपगमे सति यद्वदसि—नास्त्युत्थानादि इति तत्ते मिथ्या; असत्यमित्यर्थः।

तए णं से सद्दालपुत्ते आजीविओवासए समणस्स भगवओ महावीरस्स अन्तिए धम्मं सोच्चा निसम्म हट्ठतुट्ठ० जाव हियए जहा आणंदो तहा गिहिधम्मं पडिविज्जइ, नवरं एगा हिरण्णकोडी णिहाणपउत्ता एगा हिरण्णकोडी वुड्ढिपउत्ता एगा हिरण्णकोडी पवित्थरपउत्ता एगे वए दसगोसाहस्सिएणं वएणं० जाव समणं भगवं महावीरं वन्दइ नमंसइ वंदित्ता नमंसित्ता जेणेव पोलासपुरे नयरे तेणेव उवागच्छइ उवागच्छित्ता पोलासपुरं नयरं मज्झं मज्झेणं जेणेव सए गिहे जेणेव अग्गिमित्ता भारिया तेणेव उवागच्छइ उवागच्छित्ता अग्गिमित्तं भारियं एवं वयासी–एवं खलु देवाणुप्पिए समणे भगवं महावीरे ०जाव समोसढे, तं गच्छाहि णं तुमं समणं भगवं महावीरं वन्दाहि ०जाव पज्जुवासाहि, समणस्स भगवओ महावीरस्स अन्तिए पंचाऽणुव्वइयं सत्तसिक्खावइयं दुवालसविहं गिहिधम्मं पडिवज्जाहि। तए णं सा अग्गिमित्ता भारिया सद्दालपुत्तस्स समणोवासमस्स तह त्ति एयमट्ठं विणएणं पडिसुणेइ। तए णं से सद्दालपुत्ते समणोवासए कोडुम्बियपुरिसे सद्दावेइ सद्दावेइत्ता एवं वयासी–खिप्पामेव भो देवाणुप्पिया! लहुकरणजुत्तजोइयं समखुरवालिहाणसमलिहियसिंगएहिं जंबूणयामयकलावजोत्तपइविसिट्ठएहिं रययामयघण्टसुत्तरज्जुगवरकञ्चणखइयनत्थापग्गहोग्गहियएहिं नीलुप्पलकयामेलएहिं पवरगोणजुवाणएहिं नाणामणिकणगघण्टिय.जालपरिगयं सुजायजुगजुत्तउज्जुगपसत्थसुविर–

इयनिम्मियं पवरलक्खणोववेयं जुत्तामेव धम्मियं जाणप्पवरं उवट्ठवेह उवट्ठवेहित्ता मम एयमाणत्तियं पच्चप्पिणह । तए णं ते कोडुम्बियपुरिसा ०जाव पच्चप्पिणन्ति । तए णं सा अग्गिमित्ता भारिया एहाया ०जाव पायच्छित्ता सुद्धप्पवेसाइं ०जाव अप्पमहग्घाभरणालंकियसरीरा चेडियाचक्कवालपरिकिण्णा धम्मियं जाणप्पवरं दुरूहइ दुरूहइत्ता पोलासपुरं नगरं मज्झं मज्झेणं निग्गच्छइ निग्गच्छित्ता जेणेव सहस्सम्बवणे उज्जाणे जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ उवागच्छित्ता धम्मियाओ जाणाओ पच्चोरुहइ पच्चोरुहित्ता चेडियाचक्कवालपरिवुडा जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ उवागच्छित्ता तिक्खुत्तो ०जाव वन्दइ नमंसइ वंदित्ता नमंसित्ता नच्चासन्ने नाइदूरे ०जाव पञ्जलीउडा ठि(इ)या चेव पज्जुवासइ । तए णं समणे भगवं महावीरे अग्गिमित्ताए तीसे य ०जाव धम्मं कहेइ । तए णं सा अग्गिमित्ता भारिया समणस्स भगवओ महावीरस्स अन्तिए धम्मं सोच्चा निसम्म हतुट्ठा समणं भगवं महावीरं वन्दइ नमंसइ वंदित्ता नमंसित्ता एवं वयासी-सद्दहामि णं भंते ! निग्गन्थं पावयणं ०जाव से जहेयं तुब्भे वयह, जहा णं देवाणुप्पियाणं अन्तिए बहवे उग्गा भोगा ०जाव पव्वइया नो खलु अहं तहा संचाएमि, देवाणुप्पियाणं अन्तिए मुण्डा भवित्ता ०जाव अहं णं देवाणुप्पियाणं अन्तिए पंचाणुव्वइयं सत्तसिक्खावइयं दुवालसविहं गिहिधम्मं पडिवज्जिस्सामि, अहासुहं देवाणुप्पिया ! मा पडिबन्धं करेह । तए णं सा अग्गिमित्ता भारिया समणस्स भगवओ महावीरस्स अन्तिए पंचाणुव्वइयं सत्तसिक्खावइयं दुवालसविहं सावगधम्मं पडिवज्जइ पडिवज्जित्ता समणं भगवं महावीरं वन्दइ नमंसइ वंदित्ता नमंसित्ता तमेव धम्मियं जाणप्पवरं दुरूहइ दुरूहित्ता जामेव दिसं पाउब्भूया तामेव दिसं पडिगया । तए णं समणे भगवं महावीरे अन्नया कयाइ पोलासपुराओ नयराओ सहस्सम्बवणाओ पडिनिग्गच्छइ पडिनिग्गच्छित्ता बहिया जणवयविहारं विहरइ । ( सू० ४३ )

'तए णं सा अग्गिमित्ता' इत्यादि, तत सा अग्निमित्रा भार्या सद्दालपुत्रस्य श्रमणोपासकस्य तथेति एतमर्थं विनयेन प्रतिशृणोति , प्रतिश्रुत्य च स्नाता ' कृतबलिकर्मा—बलिकर्म लोकरूढं, कृतकौतुकमङ्गलप्रायश्चित्ता—कौतुक-मषीपुण्ड्रादि मङ्गलं दध्यक्षतचन्दनादि एते एव प्रायश्चित्तमेव प्रायश्चित्त दु स्वप्नादिप्रतिघातकत्वेनावश्यंकार्यत्वादिति, शुद्धात्मा, वैषिकाणि-वेषार्हाणि मङ्गल्यानि प्रवरवस्त्राणि परिहिता , अल्पमहार्घाभरणालङ्कृतशरीरा चेटिकाचक्रवालपरिकीर्णा, पुस्तकान्तरे यानवर्णको दृश्यते , स चैव सव्याख्यानोऽवसेय.-' लहुकरणजुत्तजोइयं ' लघुकरणेन-दक्षत्वेन ये युक्ता· पुरुषास्तैर्योजितं यन्त्रयूपादिभिः सम्बन्धितं यत्तत्तथा , तथा—' समखुरवालिहाणसमलिहियसिंगएहिं ' समखुरवालिधानौ—तुल्यशफपुच्छौ समे लिखिते इव लिखिते शृङ्गे ययोस्तौ तथा ताभ्यां गोयुवभ्यामिति सम्बन्धः,'जम्बूणयामयकलावजोत्तपइविसिट्ठएहिं' जाम्बूनदमयौ कलापौ ग्रीवाभरणविशेषौ योक्त्रे च-कण्ठबन्धनरज्जू प्रतिविशिष्टे-शोभने ययोस्तौ तथा ताभ्या, ' रययामयघण्टसुत्तरज्जूगवरकञ्चणखइयनत्थापग्गहोग्गहियएहिं'रजतमय्यौ-रूप्यविकारौ घण्टे ययोस्तौ तथा सूत्ररज्जुके-कार्पासिकसूत्रमय्यौ ये वरकाञ्चनखचिते नस्ते—नासारज्जू तयोः प्रग्रहेण—रश्मिना अवगृहीतकौ च-बद्धौ यौ तौ तथा ताभ्याम् ,'नीलुप्पलकयामेलएहिं'नीलोत्पलकृतशेखराभ्याम्, ' पवरगोणजुवाणएहिं नाणामणिकणगघण्टियाजालपरिगयं सुजायजुगजुत्तउज्जुगपसत्थसुविरइयनिम्मिय' सुजातं-सुजातदारुमयं युगं-यूप. युक्त—सङ्गतम् ऋजुक—सरल ( प्रशस्तं ) सुविरचित—सुघटितं निर्मितं—निवेशितं यत्र तत्तथा, ' जुत्तामेव धम्मिय जाणप्पवरं उवट्ठवेह ' युक्तमेव-सम्बद्धमेव गोयुवभ्यामिति सम्बन्ध इति ।

तए णं से सद्दालपुत्ते समणोवासए जाए अभिगयजीवाजीवे ०जाव विहरइ । तए णं से गोसाले मंखलिपुत्ते इमीसे कहाए लद्धट्ठे समाणे-एवं खलु सद्दालपुत्ते आजीवियसमयं वमित्ता समणाणं निग्गंथाणं दिट्ठिं पडिवन्ने , तं गच्छामि णं सद्दालपुत्तं आजीविओवासयं समणाणं निग्गन्थाणं दिट्ठिं वामेत्ता पुणरवि आजीवियदिट्ठिं गेण्हावित्तए त्ति कट्टु एवं संपेहेइ संपेहेत्ता आजीवियसंघसम्परिवुडे जेणेव पोलासपुरे नयरे जेणेव आजीवियसभा तेणेव उवागच्छइ उवागच्छित्ता आजीवियसभाए भण्डगनिक्खेवं करेइ आजीवियसभाए भंडगणिक्खेवं करेइत्ता कयवएहिं आजीविएहिं सद्धिं जेणेव सद्दालपुत्ते समणोवासए तेणेव उवागच्छइ । तए णं से सद्दालपुत्ते समणोवासए गोसालं मखलिपुत्तं एज्जमाणं पासइ पासित्ता णो आढाई नो परिजाणाइ अणाढायमाणे अपरिजाणमाणे तुसिणीए सचिट्ठइ । तए णं से गोसाले मंखलिपुत्ते सद्दालपुत्तेणं समणोवासएणं अणाढाइज्जमाणे अपरिजाणिज्जमाणे पीढफलगसिज्जासंथारट्ठयाए समणस्स भगवओ महावीरस्स गुणकित्तणं करेमाणे सद्दालपुत्तं समणोवासयं एवं वयासी-आगए णं देवाणुप्पिया ! इहं महामाहणे ?, तए णं से सद्दालपुत्ते समणोवासए गोसालं मंखलिपुत्तं एवं वयासी-के णं देवाणुप्पिया ! महामाहणे ?, तए णं से गोसाले मंखलिपुत्ते सद्दालपुत्तं समणोवासयं एवं वयासी-समणे भगवं महावीरे महामाहणे । से केणऽट्ठेणं दे-

वाणुप्पिया ! एवं वुच्चइ-समणे भगवं महावीरे महामाहणे?, एवं खलु सद्दालपुत्ता! समणे भगवं महावीरे महामाहणे, उप्पन्नणाणदंसणधरे० जाव महियपूइए० जाव तच्चकम्मसम्पयासम्पउत्ते, से तेणऽट्ठेणं देवाणुप्पिया एवं वुच्चइ समणे भगवं महावीरे महामाहणे । आगए णं देवाणुप्पिया ! इहं महागोवे ?, के णं देवाणुप्पिया ! महागोवे ?, समणे भगवं महावीरे महागोवे । से केणट्ठेणं देवाणुप्पिया ! ०जाव महागोवे ?, एवं खलु देवाणुप्पिया ! समणे भगवं महावीरे संसाराडवीए बहवे जीवे नस्समाणे विणस्समाणे खज्जमाणे छिज्जमाणे भिज्जमाणे लुप्पमाणे विलुप्पमाणे धम्ममएणं दण्डेणं सारक्खमाणे संगोवेमाणे निव्वाणमहावाडं साहत्थिं सम्पावेइ , से तेणट्ठेणं सद्दालपुत्ता ! एवं वुच्चइ-समणे भगवं महावीरे महागोवे । आगए णं देवाणुप्पिया ! इहं महासत्थवाहे ?, के णं देवाणुप्पिया ! महासत्थवाहे ?, सद्दालपुत्ता ! समणे भगवं महावीरे महासत्थवाहे, से केणट्ठेणं० ?, एवं खलु देवाणुप्पिया ! समणे भगवं महावीरे संसाराऽडवीए बहवे जीवे नस्समाणे विणस्समाणे ०जाव विलुप्पमाणे धम्ममएणं पंथेणं सारक्खमाणे० निव्वाणमहापट्टणाभिमुहे साहत्थिं सम्पावेइ, से तेणट्ठेणं सद्दालपुत्ता एवं वुच्चइ समणे भगवं महावीरे महासत्थवाहे । (उपा०) (भगवान् महावीरः महाधर्मकथी इति 'महाधम्मकही' शब्दे षष्ठे भागे १६७ पृष्ठे उक्तम् ।) आगए णं देवाणुप्पिया ! इहं महानिज्जामए ?, के णं देवाणुप्पिया महानिज्जामए ?, समणे भगवं महावीरे महानिज्जामए , से केणऽट्ठेणं ०?,एवं खलु देवाणुप्पिया! समणे भगवं महावीरे संसारमहासमुद्दे बहवे जीवे नस्समाणे विणस्समाणे०जाव विलु० वुड्डमाणे निवुड्डमाणे उप्पियमाणे धम्ममईए नावाए निव्वाणतीराभिमुहे साहत्थिं सम्पावेइ से तेणट्ठेणं देवाणुप्पिया ! एवं वुच्चइ—समणे भगवं महावीरे महानिज्जामए । तए णं से सद्दालपुत्ते समणोवासए गोसालं मङ्खलिपुत्तं एवं वयासी—तुब्भे णं देवाणुप्पिया! इयच्छेया०जाव इय निउणा इय नयवादी इय उवएसलद्धा इय विण्णाणपत्ता, पभू णं तुब्भे मम धम्मायरिएणं धम्मोवएसएणं भगवया महावीरेण सद्धिं विवादं करेत्तए ?, नो तिणट्ठे समट्ठे । से केणट्ठेणं देवाणुप्पिया ! एवं वुच्चइ—नो खलु पभू तुब्भे मम धम्मायरिएण ०जाव महावीरेण सद्धिं विवादं करेत्तए ?, सद्दालपुत्ता ! से जहा नामए केइ पुरिसे तरुणे जुगवं- ०जाव निउणसिप्पोवगए एगं महं अयं वा एलयं वा सूयरं वा कुक्कुडं वा तित्तिरं वा वट्टयं वा लावयं वा कवोयं वा कविञ्जलं वा वायसं वा सेणयं वा हत्थंसि वा पायंसि वा खुरंसि वा पुच्छंसि वा पिच्छंसि वा सिङ्गंसि वा विसाणंसि वा रोमंसि वा जहिं जहिं गिण्हइ तहिं तहिं निच्चलं निप्फंदं धरेइ, एवामेव समणे भगवं महावीरे ममं बहूहिं अट्ठेहि य हेऊहि य० जाव वागरणेहि य जहिं जहिं गिण्हइ तहिं तहिं निप्पट्ठपसिणवागरणं करेइ, से तेणट्ठेणं सद्दालपुत्ता ! एवं वुच्चइ-नो खलु पभू अहं तव धम्मायरिएणं० जाव महावीरेणं सद्धिं विवादं करेत्तए । तए णं से सद्दालपुत्ते समणोवासए गोसालं मङ्खलिपुत्तं एवं वयासी—जम्हा णं देवाणुप्पिया ! तुब्भे मम धम्मायरियस्स ०जाव महावीरस्स संतेहिं तच्चेहिं तहिएहिं सब्भूएहिं भावेहिं गुणकित्तणं करेह तम्हा णं अहं तुब्भे पाडिहारिएणं पीढ० जाव संथारएणं उवनिमन्तेमि, नो चेव णं धम्मो त्ति वा तवो त्ति वा तं गच्छह णं तुब्भे मम कुम्भारावणेसु पाडिहारियं पीढफलग० जाव ओगिण्हित्ता णं विहरह । तए णं से गोसाले मंखलिपुत्ते सद्दालपुत्तस्स समणोवासयस्स एयमट्ठं पडिसुणेइ पडिसुणित्ता कुम्भारावणेसु पाडिहारियं पीढ० जाव ओगिण्हित्ता णं विहरइ । तए णं से गोसाले मंखलिपुत्ते सद्दालपुत्तं समणोवासयं जाहे नो संचाएइ बहूहिं आघवणाहि य पन्नवणाहि य सण्णवणाहि य विन्नवणाहि य निग्गन्थाओ पावयणाओ चालित्तए वा खोभित्तए वा विपरिणामित्तए वा ताहे सन्ते परितन्ते पोलासपुराओ नयराओ पडिणिक्खमइ पोलासपुराओ नगराओ पडिणिक्खमित्ता बहिया जणवयविहारं विहरइ । (सू० ४४)

'महागोवे' त्यादि, गोपो—गोरक्षकः स चेतरगोरक्षकेभ्योऽतिविशिष्टत्वान्महानिति महागोपः । 'नश्यत' इति सन्मार्गाच्च्यवमानान् 'विनश्यत' इत्यनेकशो म्रियमाणान् खाद्यमानान्—मृगादिभावे व्याघ्रादिभि छिद्यमानान्-मनुष्यादिभावे खड्गादिना भिद्यमानान् कुन्तादिना लुप्यमानान् कर्णनासादिच्छेदनेन विलुप्यमानान् बाह्योपध्यपहारतः गा इवेति गम्यते , 'निव्वाणमहावाडं' ति—सिद्धिमहागोस्थानविशेष 'साहत्थे' त्ति—स्वहस्तेनेव स्वहस्तेन, साक्षादित्यर्थः । महासार्थवाहालापकानन्तरं, पुस्तकान्तरे इदमपरमधीयते—"आगए णं देवाणुप्पिया ! इह महाधम्मकही ?, के णं देवाणुप्पिया ! महाधम्मकही?, समणे भगवं महावीरे महाधम्मकही । से केणट्ठेणं समणे भगवं महावीरे महाधम्मकही ?, एवं खलु सद्दालपुत्ता ! समणे भगवं महावीरे महइमहालयंसि संसारंसि बहवे जीवे नस्समाणे० जाव विलुप्पमाणे उम्मग्गपडिवन्ने सप्पहविप्पणट्ठे मिच्छत्तबलाभिभूए अट्ठविहकम्मतमपडलपडो-

च्छुभे बहूहिं अट्ठेहि य हेऊहि य पसिणेहि य कारणेहि य वागरणेहि य चाउरन्ताओ संसारकन्ताराओ साहत्थिं नित्थारेइ, से तेणट्ठेणं सद्दालपुत्ता ! समणे भगवं महावीरे महाधम्मकहि" त्ति, कण्ठ्योऽयं, नवरं जीवानां नश्यदादिविशेषणहेतुदर्शनायाह—' उम्मग्गे ' त्यादि, तत्रोन्मार्गप्रतिपन्नान्—आश्रितकुदृष्टिशासनान् सत्पथविप्रनष्टान्—त्यक्तजिनशासान्, एतदेव कथमित्याह—मिथ्यात्वबलाऽभिभूतान्—तथा अष्टविधकर्मैव तमःपटलम्—अन्धकारसमूहः तेन प्रत्यवच्छन्नानिति । तथा निर्यामकालापके ' बुड्डमाणे ' त्ति—निमज्जत. ' निबुड्डमाणे ' त्ति—नितरां निमज्जत. जन्ममरणादिजले इति गम्यते, ' उप्पियमाणे ' त्ति—उत्प्लाव्यमानान् । ' प्रभु ' त्ति—प्रभवः-समर्था, इतिच्छेका.—इति एवमुपलभ्यमानाद्भुतप्रकारेण, एवमन्यत्रापि छेका.—प्रस्तावज्ञा., कलापण्डिता इति वृद्धा व्याचक्षते, तथा इति दक्षाः—कार्याणामविलम्बितकारिण तथा इति प्रष्ठा.-दक्षाणां प्रधाना वाग्मिन-इति वृद्धैरुक्त, कचित्-'पत्तट्ठा' इत्यधीयते, तत्र प्राप्तार्था.—कृतप्रयोजना, तथा इति निपुणाः-सूक्ष्मदर्शिनः कुशला इति च वृद्धोक्तम्, इति नयवादिना-नीतिवक्तारः, तथा इत्युपदेशलब्धा लब्धाप्तोपदेशाः, वाचनान्तरे इति मेधाविन अपूर्वश्रुतग्रहणशक्तिमन्तः इति विज्ञानप्राप्ताः-अवाप्तसद्बोधा । 'से जहे' त्यादि, अथ यथा नाम कश्चित्पुरुषः ' तरुणे ' त्ति-वर्धमानवया वर्णादिगुणोपचित इत्यन्ये, यावत्करणादिदं दृश्यम्-' बलवं ' सामर्थ्यवान् ' जुगव ' युगं-कालविशेष. तत्प्रशस्तमस्याऽस्तीति युगवान्, दुष्कालस्य बलहानिकरत्वात्तद्व्यवच्छेदार्थमिदं विशेषणम्, ' जुवाणे ' त्ति—युवा-वय.प्राप्त, 'अप्पायङ्के' त्ति-नीरोग 'थिरग्गहत्थे' त्ति-सुलेखकवद् अस्थिराग्रहस्तो हि न गाढग्रहो भवतीति विशेषणमिदम् 'दढपाणिपाए' त्ति-प्रतीत 'पासपिट्ठन्तरोरुपरिणए, त्ति-पार्श्वौ च पृष्ठान्तरे च-तद्विभागौ-ऊरू-च परिणतौ-निष्पत्तिप्रकर्षावस्था गतौ यस्य स तथा, उत्तमसंहनन इत्यर्थ', 'तलजमलजुयलपरिघनिभबाहु-त्ति-तलयो-तालाभिधानवृक्षविशेषयो यमलयोः-समश्रेणिकयोर्यद्युगलं, परिघश्च-अर्गला तन्निभौ तत्सदृशौ बाहू यस्य स तथा, आयतबाहुरित्यर्थ., 'घणनिचियवट्टपालिखन्धे'-त्ति-घननिचित-अत्यर्थं निविडो वृत्तश्च-वर्तुल पालिवत्-तडागादिपालीव स्कन्धौ-अंशदेशौ यस्य स तथा, ' चम्मेट्ठगदुहणमोट्ठियसमाहयनिचियगायकाए ' त्ति चर्मेष्टका-इष्टकाशकलादिभृतचर्मकुतपरूपा यदाकर्षणेन धनुर्धरा व्यायामं कुर्वन्ति द्रुघणो-मुद्गरो मौष्टिको-मुष्टिप्रमाण प्रोतचर्मरज्जुक. पाषाणगोलकस्तै समाहतानि-व्यायामकरणप्रवृत्तौ सत्यां ताडितानि निचितानि गात्राणि-अङ्गानि यत्र स तथा स एवंविध कायो यस्य स तथा, अनेनाभ्यासजनितं सामर्थ्यमुक्तं, 'लङ्घणपवणजइणवायामसमत्थे ', त्ति-लङ्घण च-अतिक्रमण प्लवनं च-उत्प्लवनं जविनव्यायामश्च-तदन्य शीघ्रव्यापारस्तेषु समर्थो य स तथा, 'उरस्सबलसमागए' त्ति-अन्तरोत्साहवीर्ययुक्त इत्यर्थ ' छेए ' त्ति-प्रयोगज्ञ ' दक्खे ' त्ति-शीघ्रकारी 'पत्तट्ठे' त्ति-अधिकृतकर्मणि निष्ठाङ्गत. प्राप्तार्थ, प्रष्ठ इत्यन्ये, ' कुसले' त्ति-आलोचितकारी ' मेहावि ' त्ति-सकृद्-दृष्टश्रुतकर्मज्ञ, 'निउणे ' त्ति-उपायारम्भक ' निउणसिप्पोवगए' त्ति-सूक्ष्मशिल्पसमन्वित इति, अजं वा छगलम् एलकं वा-उरभ्रं शूकरं वा-वराहं कुर्कुटतित्तिरवर्तकलावककपोतकपिञ्जलवायसश्येनका पक्षिविशेषा लोकप्रसिद्धा., ' हत्थंसि य' त्ति-यद्यप्यजादीनां हस्तो न विद्यते तथाप्यग्रेतनपादौ हस्त इव हस्त इति कृत्वा हस्ते वेत्युक्तं, यथासम्भवं चैषा हस्तपादखुरपुच्छपिच्छशृङ्गविषाणरोमाणि योजनीयानि, पिच्छ -पक्षावयवविशेष, शृङ्गमिहाजैडकयो प्रतिपत्तव्यं, विषाणशब्दो यद्यपि गजदन्ते रूढस्तथाऽपीह शूकरदन्ते प्रतिपत्तव्य, साधर्म्यविशेषादिति, निश्चलम्-अचलं सामान्यतो निष्पन्दं—किञ्चिच्चलनेनापि रहितम्, ' आघवणाहि य ' त्ति आख्यानै प्रज्ञापनाभि—भेदतो वस्तुप्ररूपणाभि ' सञ्ज्ञापनाभि.-सञ्ज्ञानजननै विज्ञापनाभि -अनुकूलभणितै ।

तए णं तस्स सद्दालपुत्तस्स समणोवासयस्स बहूहिं सील ०जाव भावेमाणस्स चोद्दस संवच्छरा वइक्कन्ता, पण्णरसमस्स संवच्छरस्स अनन्तरा वट्टमाणस्स पुव्वरत्तावरत्तकाले ०जाव पोसहसालाए समणस्स भगवओ महावीरस्स अन्तियं धम्मपण्णत्तिं उवसम्पज्जित्ता णं विहरइ, तए णं तस्स सद्दालपुत्तस्स समणोवासयस्स पुव्वरत्तावरत्तकाले एगे देवे अन्तियं पाउब्भवित्था, तए णं से देवे एगं महं नीलुप्पल ०जाव असिं गहाय सद्दालपुत्तं समणोवासयं एवं वयासी—जहा चुलणीपियस्स तहेव देवो उवसग्गं करेइ, नवरं एक्केक्के पुत्ते नव मंससोल्लए करेइ०जाव कणीयसं घाएइ घायइत्ता ०जाव आयञ्चइ । तए णं से सद्दालपुत्ते समणोवासए अभीए ०जाव विहरइ । तए णं से देवे सद्दालपुत्तं समणोवासयं अभीयं ०जाव पासित्ता चउत्थं पि सद्दालपुत्तं समणोवासयं एवं वयासी-हं भो ! सद्दालपुत्ता ! समणोवासया अपत्थियपत्थिया० जाव न भञ्जसि तओ ते जा इमा अग्गिमित्ता भारिया धम्मसहाइया धम्मविइज्जिया धम्माणुरागरत्ता समसुहदुक्खसहाइया तं ते साओ गिहाओ नीणेमि नीणेमित्ता तव अग्गओ घाएमि घायइत्ता नव मंससोल्लए करेमि करेत्ता आदाणभरियंसि कडाहयंसि अद्दहेमि अद्दहेत्ता तव गायं मंसेण य सोणिएण य आयञ्चामि, जहा णं तुमं अट्टदुहट्ट० जाव ववरोविज्जसि । तए णं से सद्दालपुत्ते समणोवासए तेण देवेणं एव वुत्ते समाणे अभीए ०जाव विहरइ । तए णं से देवे सद्दालपुत्तं समणोवासयं दोच्चं पि तच्चं पि एवं वयासी-हं भो ! सद्दालपुत्ता ! समणोवासया ! तं चेव भणइ, तए णं तस्स सद्दालपुत्तस्स समणोवासयस्स तेणं देवेणं दोच्चं पि तच्चं पि एवं वुत्तस्स समाणस्स एयअज्झत्थिए०४ समुप्पन्ने एवं जहा चुलणीपिया तहेव चिन्तेइ जे णं ममं जेट्ठं पुत्तं

जे णं ममं मज्झिमयं पुत्तं जे णं ममं कणीयसं पुत्तं०जाव आयच्चइ जाऽवि य णं ममं इमा अग्गिमित्ता भारिया सम-सुहदुक्खसहाइया तं पि य इच्छइ साओ गिहाओ नीणे-त्ता ममं अग्गओ घाएत्तए, तं सेयं खलु ममं एयं पुरिसं गिण्हित्तए त्ति कट्टु उद्घाइए जहा चुलणीपिया तहेव सव्वं भाणियव्वं नवरं अग्गिमित्ता भारिया कोलाहलं सुणित्ता भणइ। सेसं जहा चुलणीपियावत्तव्वया, नवरं अरुणभूए विमाणे उववन्ने० जाव महाविदेहे वासे सि-ज्झिहिइ, निक्खेवओ। ( सू० ४५ ) उपा० ७ अ०।

सद्दालु-शब्दवत्-त्रि०। " आल्विल्लोल्लाल-वन्त-मन्तेत्तेर-मणा मतो: " ॥ ८। २। १५६ ॥ इति मतो: स्थाने आलु आ-देश। शब्दयुक्ते, प्रा०। औ०।

सद्दावाई-शब्दापातिन्-पुं०। हैमवतवर्षवृत्तवैताढ्यपर्वते, स्था० १० ठा० ३ उ०। भ०। देवविशेषे, स्था०।

दो सद्दावाती देवा। (सू०९२+) स्था०२ ठा०३ उ०।

सद्दावायवासी-शब्दापातिवासिन्-पुं०। देवविशेषे, स्था०।

दो सद्दावायवासी साती देवा।(सू०९२×)स्था०२ठा०३उ०।

सद्दिट्ठी-सद्दृष्टि-पुं०। सती-समीचीना-दृष्टिर्यस्यासौ सद्-दृष्टि। सम्यग्दृष्टौ, प्रति०। स्थिरादिषु योगदृष्टिषु, द्वा० २३ द्वा०।

सद्दिय-शब्दित-त्रि०। शब्द: प्रसिद्धि: संजातो यस्य तच्छ-ब्दितम्। प्रसिद्धे, आ० १ श्रु० १ अ०। औ०। आकारिते, आ० १ श्रु० १ अ०।

शाब्दिक-पुं०। शब्दज्ञे, अनु०।

जो जं जाणइ। तं जहा-सद्दं सद्दिओ, गणियं गणिओ। अनु०।

सद्दुण्णइय-शब्दोन्नतिक-त्रि०। उन्नतशब्दके, आ० १ श्रु० १ अ०। जी०।

सद्दुद्देसय-शब्दोद्देशक-पुं०। शब्दोपलक्षित उद्देशक शब्दो-द्देशक। द्विस्थानकस्य तृतीये उद्देशके,स्था० ५ ठा० १ उ०।

सद्दुप्पाय-शब्दोत्पाद-पुं०। शब्दोत्पत्तौ, स्था०।

दोहिं ठाणेहिं सद्दुप्पाए सिया। तं जहा-साहन्नं-ताणं चेव पोग्गलाणं सद्दुप्पाए सिया, भिज्जंताणं चेव पोग्गलाणं सद्दुप्पाए सिया। ( सू० ८१× )

'दोहीं' त्यादि द्वाभ्यां स्थानाभ्यां कारणाभ्यां श-ब्दोत्पाद स्याद्—भवेत् संहन्यमानाना च संघातमापद्य-मानानां सता कार्यभूत शब्दोत्पाद स्यात्पञ्चम्यर्थे वा षष्ठीति संहन्यमानेभ्य इत्यर्थ पुद्गलाना-बादरपरिणामाना यथा घण्टालालयोरेवं भिद्यमानानां वियुज्यमानाना च यथा वंशदलानामिति। स्था० २ ठा० ३ उ०।

सद्दूल-शार्दूल-पुं०। सिंहपर्याये आटव्ये पशौ, आव० १ अ०। "इल्ली पुल्ली वग्घो सद्दुलो पुंडरीओ य।" पाइ० ना० ४४ गाथा। व्याघ्रविशेषे, प्रश्न० १ आश्र० द्वार।

सद्ध-श्राद्ध-न०। पितृक्रियायाम्, जी० ३ प्रति० ४ अधि०। रा०। स्थालीपाकमृतपिण्डनिवेदने, जं० २ वक्ष०।

सद्धम्मजाण-सद्धर्मयान-न०। सद्धर्मरूपे यानपात्रे, पं० व० ५ द्वार।

सद्धम्मवुड्डिजणग-सद्धर्मवृद्धिजनक-त्रि०। सुन्दरधर्ममत्यु-त्पादके, पञ्चा० ६ विव०।

सद्धम्मपरंमुह-सद्धर्मपराङ्मुख-त्रि०। दुर्गतौ पतन्तमात्मानं धारयतीति धर्म:, संश्चासौ धर्मश्च सद्धर्म:। क्षान्त्यादिक-श्चरणकरणधर्मो गृह्यते, तत्पराङ्मुख:। धर्मविमुखे, आव० ४ अ०। जी०।

सद्धम्मपरिक्खा-सद्धर्मपरीक्षा-स्त्री०। सम्यग्धर्मपरीक्षा-याम्, षो० १ विव०। "बाल: पश्यति लिङ्गं, मध्यमबुद्धि-र्विचारयति सद्वृत्तम्। आगमतत्त्वं तु बुध:, परीक्षते स-र्वयत्नेन ॥१॥" इति। ध०१ अधि०। ('धम्म' शब्दे चतुर्थभागे २६ पृष्ठे व्याख्या गता।)

सद्धम्मपरिणाम-सद्धम्मपरिणाम-पुं०। सहजपरिणमने,अ-ष्ट० ८ अष्ट०।

सद्धा-श्रद्धा-स्त्री०। " श्रद्धर्द्धि मूर्धाऽर्धेऽन्ते वा " ॥ ८। २। ४१॥ इति संयुक्तस्य ढो वा। सड्ढा। पक्षे-सद्धा। श्रद्धा। प्रा०। " न श्रदुदो:" ॥ ८। १। १२॥ श्रद् उद् इत्येतयोरन्त्यव्यञ्जन-स्य लुग्। प्रा०। इच्छायाम्, "ईहा इच्छा वञ्छा सद्धा कामो य आसंसा" पाइ० ना० ७० गाथा। स्वकीयेऽभिला-षे, पञ्चा० २ विव०। प्रवर्धमानानुष्ठानकरणे, आचा० १ श्रु० १ अ० ३ उ०। विशुद्धचित्तपरिणामे, आव० ६ अ०। तत्सद्भाभिलाषे, दश० ६ अ०। मिथ्यात्वमोहनीयकर्मक्ष-योपशमादिजन्योदकप्रसादकमणिवच्चेतस: प्रसादजन्याम्, ध० २ अधि०। तत्त्वश्रद्धाने, संयमयोगविषये निजाभिला-षे, प्रश्न० १ संव० द्वार। धर्मकरणाभिलाषे, उत्त० ३ अ०।

अथ श्रद्धाप्रवरे धर्मे इति द्वितीयं भावसाधोर्लिङ्गमुपसंहरन् प्रज्ञापनीयलक्षणं तृतीयं भावसाधुलिङ्गं संबन्धयन्नाह—

एसा पवरा सद्धा, अणुवद्धा होइ भावसाहुस्स।
एईए सब्भावे, पन्नवणिज्जो हवइ एसो ॥ १०५ ॥

एषा-चतुरङ्गा प्रवरा—वरेण्या श्रद्धा—धर्माभिलाषोऽनु-बद्धा—अव्यवच्छिन्ना भवति—सम्पद्यते भावसाधो —प्र-स्तुतयते: एतस्या -श्रद्धाया: सद्भावे-सत्तायां प्रज्ञापनीय:-असद्ग्रहविकलो भवत्येष भावमुनिरिति।

ननु किं चरित्रवतोऽप्यसद्ग्रह सम्भवति? सत्यं संभ-वत्यपि मतिमोहमाहात्म्यात्—मतिमोहोऽपि कुत इति चेदुच्यते—

विहिउज्जमवन्नयभय, उस्सग्गववायतदुभयगयाइं।
सुत्ताइं बहुविहाइं, समए गंभीरभावाइं ॥ १०६ ॥

विधिश्च—उद्यमश्च—भयं चोत्सर्गश्चापवादश्च तदुभयं चेति द्वन्द्वस्तस्य च स्वपदप्रधानत्वाद्, गतानिति प्रत्येकम-भिसंबध्यते, सूत्राणि च विशेष्याणि ततश्चैव योज्यते—

कानिचिद्विधिगतानि सूत्राणि सन्ति, यथा—" संयते भिक्खकालम्मि, असंभंतो अमुच्छिओ । इमेण कमजोएण, भत्तपाणं गवेसए ॥ १ ॥" इत्यादीनि, कानिचिदुद्यमसूत्राणि यथा-"दुमपत्तए पंडुए जहा,निवडइ राइगणाण अच्चए। एवं मणुयाण जीवियं,समयं गोयम ! मा पमायए ॥१॥" इत्यादीनि, वर्णकसूत्राणि-'रिद्धत्थमियसमिद्धा'इत्यादीनि प्रायो ज्ञाताधर्मकथाद्यङ्गेषु, भयसूत्राणि-नरकेषु मांसरुधिरादिकथनरूपाणि,उक्तं च-"नरएसु मंसरुहिराइ-वण्णणं जं पसिद्धिमित्तेण। भयहेउ इहर तेसिं,वेउव्वियभावओ न तयं ॥१॥" इत्यादीनि,उत्सर्गसूत्राणि । यथा—"इच्चेसिं छण्हं जीवनिकायाणं नेव सयं दंडं समारंभिज्जा" इत्यादि षट्जीवनिकायरक्षाविधायकानि, अपवादसूत्राणि प्रायश्छेदग्रन्थगम्यानि, यथा—"नया लभिज्जा निउणं सहायं, गुणाहियं वा गुणओ समं वा । इक्को वि पावाइँ विवज्जयंतो, विहरिज्ज कामेसु असज्जमाणो ॥ १ ॥" इत्यादीनि, तदुभयसूत्राणि—येषूत्सर्गापवादौ युगपत्कथ्येते,यथा-"अट्टज्झाणाभावे, सम्मं-अहियासियव्वओ वाही । तब्भावम्मि उ विहिणा, पडियारपवत्तणं नेयं ॥ १ ॥ " इत्यादीनि एवं सूत्राणि बहुविधानि स्वसमय—परसमय-निश्चय—व्यवहार-ज्ञानक्रियादिना नयमतप्रकाशकानि समये-सिद्धान्ते गम्भीरभावानि-महामतिगम्याभिप्रायाणि सन्तीति शेषः ।

तत. किमित्याह—

तेसिं विसयविभागं, अमुणंतो नाणवरणकम्मुदया ।
मुज्झइ जीवा तत्तो, सपरेसिमसग्गहं जणई ॥ १०७ ॥

तेषां सूत्राणा विषयविभागमयमस्य सूत्रस्य विषयोऽयं चामुष्येत्येवंरूपममुणन्-अलक्षयन् ज्ञानावरणकर्मण उदयाद्धेतोर्मुह्यति—मोहमुपयाति जीव.-प्राणी तत स्वपरयोरात्मन परस्य च पर्युपासकस्यासद्ग्रहमसद्बोधं जनयति , जेमालिवत्। तत्कथा चातिप्रतीतत्वान्न वितन्यत इति ।

ततश्च—

तं पुण संविग्गगुरू, परहियकरणुज्जयाणुकंपाए ।
बोहिंति सुत्तविहिणा, पन्नवणिज्जं वियाणंता ॥१०८॥

तं मूढं पुन शब्दादर्थिनं विनीतं च संविग्ना —प्रतीतार्था गुरव —पूज्या. परहितकरणोद्यता -परोपकाररसिका अनुकम्पया-मा गमत् एष दुर्गतिमित्यनुग्रहबुद्ध्या प्रेरिता बोधयन्ति प्रज्ञापयन्ति सूत्रविधिना आगमोक्तयुक्तिभि. प्रज्ञापनीयं प्रज्ञापनोचितं विजानाना लक्षयन्तस्तदितरस्य सर्वज्ञेनापि बोधयितुमशक्यत्वादिति ।

तत —

सोऽवि असग्गहचाया, सुविसुद्धं दंसणं चरित्तं च ।
आराहिउं समत्थो, होइ सुहं उज्जुभावाओ ॥ १०९ ॥

सोऽपि प्रज्ञापनीयमुनि सुनन्दराजर्षिसदृशोऽसद्ग्रहत्यागान्निजपरिकल्पितबोधमोचनात् सुविशुद्धमतिनिर्मलं दर्शनं-सम्यक्त्व चारित्रं-संयमं चशब्दात्—ज्ञानतपसी चाराधयितु समर्थो भवति सुखं यथाभवत्येवमृजुभावादार्जवगुणादिति । ध० र० ३ अधि० ३ लक्ष० ।

१-'जमालि' शब्दे चतुर्थभागे सर्व वृत्तान्तम् ।

सद्धाजणण--श्रद्धाजनन--न० । श्लाघने , सद्धाजणणं ति वा सलाघणं ति वा एगट्ठा । नि० चू० १ उ० ।

सद्धाथिरया- श्रद्धास्थिरता--स्त्री०। श्रद्धास्थैर्ये, पं० व० १ द्वार।

सद्धाभंग-श्रद्धाभङ्ग-पुं० । भक्तिनाशे, जी० १ प्रति० ।

सद्धामेत्तत्त-श्रद्धामात्रत्व--न० । श्रद्धा-रुचि सैव सामान्यभावे श्रद्धा कार्यरहिता श्रद्धामात्रं तद्भावस्तत्त्वम् । केवलश्रद्धायाम् , पञ्चा० १३ विव०।

सद्धालु-श्रद्धालु-पुं० । धर्मानुष्ठानं निरन्तरं कार्यमेवेति श्रद्धासहिते, धर्मानुष्ठानं निरन्तरं कार्यमेव किंतु तत्कुर्वता सर्वशक्त्या विधौ यतनीयम् , इदमेव च श्रद्धालोर्लक्षणम्। आहुश्च-
" विहिसारं चिअ सेवइ, सद्धालू सत्तिमं अणुट्ठाणं ।
दव्वाइ दोस निहओ, वि पक्खवायं वहइ तम्मि ॥ १ ॥
धण्णाणं विहिजोगो, विहिपक्खाराहगा सया धण्णा ।
विहिबहुमाणी धण्णा, विहिपक्खअदूसगा धन्ना ॥ २ ॥
आसन्नसिद्धिआणं, विहिपरिणामो उ होइ सयकालं ।
विहिचाओ ऽविहिभत्ती, अभव्वजिअदूरभव्वाणं ॥ ३ ॥"
ध० २ अधि० ।

सद्धिं-सार्द्धम्-अव्य० । समानं युगपत्। एकत्रेत्यर्थे, नि० चू० २ उ० । सहेत्यर्थे, भ० २ श० ५ उ० । आचा० । ज्ञा० । औ०।

सद्धेअ-श्रद्धेय-त्रि० । नान्यथेत्यादीति भावनया ज्ञेये, आव० ४ अ० ।

सन्तमस-सन्तमस-न । अन्धकारे "सन्तमसं अंधयारं धंतं तिमिरं तमिस्सं च " । पाइ० ना० ४८ गाथा ।

सन्तय-सन्तत-न० । अविरामे , " सइ अविरयं अविरामं अणुवेलं संतयं सया निच्चं " । पाइ० ना० ८७ गाथा ।

सन्दण-स्यन्दन-पुं० । रथे , " संदणो रहो " । पाइ० ना० २२३ गाथा ।

सन्दाणिअ-सन्दानित-त्रि० । बद्धे, "बद्धं संदाणिअं निअलिअं च " । पाइ० ना० १९७ गाथा ।

सन्दिट्ठ-सन्दिष्ट-न० । आत्महिते, " सन्दिट्ठं अप्पाहिअं " । पाइ० ना० १८५ गाथा ।

सन्दिद्ध-सन्दिग्ध-त्रि० । संशयिते , " सन्दिद्धं संसइअं " । पाइ० ना० १८५ गाथा ।

सन्दुमिअ-प्रदीप्त-त्रि० । उद्दीपिते, " उद्दीविअं उज्जालिअं पलीविअं जाए सन्दुमिअं" । पाइ० ना० १६ गाथा ।

सन्दोह-सन्दोह-पुं० । गणे , संदोहो निउरम्बो । पाइ० ना० १८ गाथा ।

सन्धुक्किअ-प्रदीप्त-त्रि० । उज्ज्वालिते, " सन्धुक्किअं उद्दीविअं उज्जालिअं पलीविअं जाए " । पाइ० ना० १६ गाथा ।

सन्न-सन्न-त्रि० । क्लान्ते, " सन्नं किन्तं सुढिअं उव्वायं नीसहं किलंतं च" । पाइ० ना० ७६ गाथा ।

सन्ना-संज्ञा-स्त्री० । नामनि, " सन्ना गुत्तं च नामं अहिहाणं ' । पाइ० ना० १६१ गाथा ।

सन्नाम–आ–दृ–धा० आदरे, "आदृङेः सन्नामः" ॥८।४।८३॥ आद्रियते. सन्नाम इत्यादेशो वा भवति । सन्नामइ। आदरेइ। आद्रियते । प्रा० ४ पाद ।

सन्नुम–छाद–धा०।अपवारणे,'छदेर्णेर्णुम–नूम–सन्नुम–ढक्कौम्वाल–पव्वाला." ॥८।४।२१॥ छदेर्ण्यन्तस्यैते षडादेशा वा भवन्ति । सन्नुमइ । छादयति । प्रा० ४ पादे ।

सपएस–सप्रदेश–पुं० । सविभागे,भ० ६ श० ३ उ० । ('पएस' शब्दे तृतीयभागे २२ पृष्ठ सप्रदेशाऽप्रदेशत्वे दण्डक. ।)

सपंचचूल–सपञ्चचूड–पुं० । सह पञ्चभिश्चूडाभिर्वर्त्तते इति सपञ्चचूडः । चूडापञ्चकसहिते आचाराङ्गे, आचा० १ श्रु० १ अ० १ उ० ।

सपंसुलंक–सपांसुलंक–त्रि० । सपार्श्वास्थि, प्रश्न० ३ आश्र० द्वार ।

सपक्ख–सपक्ष–न० । समानाः पक्षाः पार्श्वा दिशो यस्मिन् तत् सपक्षम् । स्था० ४ ठा० ३ उ० । समानपक्षे , समपार्श्वे, यथा भवति समश्रेण्या गच्छतीत्यर्थः ॥ स० ३२ सम० । सर्वेषु पार्श्वेषु—पूर्वापरदक्षिणोत्तररूपेष्वित्यर्थः । सू० प्र० २० पाहु० । सम्म० ।

स्वपक्ष–पुं० । निह्नवपार्श्वस्थादिषु, वृ० १ उ० २ प्रक० ।

सपक्खि–सपक्ष–त्रि० । समाना. पक्षाः पार्श्वा दिशो यस्मिन् तत्सपक्षम्। इहेकार. प्राकृतप्रभव.। स्था०४ठा० ३ उ० । पक्षाणां दक्षिणवामादिपार्श्वानां सदृशता समता सपक्षमित्यव्ययीभाव. । समपार्श्वतया समे,स्था०३ ठा०१ उ० । महौषधिभेदे, स्त्री० । ती० ६ कल्प ।

संपच्चवाय–सप्रत्यपाय–पुं० । संभाव्यमानापाये , पिं० । स्था० ।

सपज्जवसिय–सपर्यवसित–त्रि० । शान्ते, सपर्यवसितो लोको जगत्प्रलये सर्वस्य विनाशसद्भावात् । आचा० १ श्रु० ८ अ० १ उ० ।

सपज्जाय–सपर्याय–त्रि० । नास्तिभावे, सपज्जाय त्ति वा णत्थिभावो त्ति वा अविज्जमाणभावो त्ति वा एगट्ठा । आ० चू० १ अ० ।

सपडाग–सपताक–त्रि० । सह पताकया वर्त्तत इति सपताकम् । पताकया सहिते, ज्ञा० १ श्रु० १ अ० ।

सप(प्प)डिकम्म–सप्रतिकर्म्मन्–न० । प्रतिकर्मसहितेऽनशने, "भत्तपरिण्णाऽणसणं तिच्चउविहाहारत्यागनिष्फन्नं । स(प्प)पडिकम्मं नियमा,जहा समाही विणिद्दिट्ठं ॥१॥" इति । स्था०२ ठा० ४ उ० ।

सपडिक्कमण–सप्रतिक्रमण–पुं० । उभयकालकरणीयप्रतिक्रमणसहिते, सह प्रतिक्रमणेनोभयसन्ध्यामावश्यकेन यः स तथा, अन्येषां तु कारणजातप्रतिक्रमणमिति । उक्तं च–"सपडिक्कमणो धम्मो, पुरिमस्स य पच्छिमस्स य जि(णस्स)णाणं।" स्था० ६ ठा० ३ उ० ।

सपडिदिसि–सप्रतिदिश्–स्त्री० । प्रतिदिशां विदिशां सद्भावनायाम् , समप्रतिदिक्कायाम् , स्था० ४ ठा० २ उ० ।

सपमज्जिय–सप्रमृज्य–अव्य० । सम्प्रमार्जनं कृत्वेत्यर्थे , प्र० अ० १ संव० द्वार ।

सपरक्कम–सपराक्रम–न० । पराक्रमः–सामर्थ्यं सह पराक्रमेण वर्त्तत इति सपराक्रम' । पराक्रमयुक्ते अनशने , आचा० १ श्रु० ८ अ० १ उ० । (इदं च 'मरण' शब्दे षष्ठभागे ११४ पृष्ठे व्याख्यातम् ।)

सपरसुय–स्वपरश्रुत–न० । स्वसमयपरसमययोः,द्वा० ६ द्वा० ।

सपरिग्गह–सपरिग्रह–त्रि० । सह परिग्रहेण—द्विपदचतुष्पदधनधान्याऽऽदिना वर्त्तत इति सपरिग्रहः ॥ सूत्र० २ श्रु० १ अ० । धनधान्यद्विपदचतुष्पदादिना वर्त्तमाने, तदभावेऽपि शरीरोपकरणादौ मूर्च्छावति च ॥ सूत्र० १ श्रु० १ अ० ४ उ० ।

सपरिमाण–सपरिमाण–त्रि० । सह परिमाणेन वर्त्तत इति सपरिमाणम् । सपरिच्छेदे, सूत्र० १ श्रु० १ अ० ४ उ० ।

सपरियण–सपरिजन–त्रि० । सह परिजनैर्वर्त्तत इति सपरिजनः । भृत्यादिवर्गसहिते, उत्त० २० अ० ।

सपरिया–सपर्या–स्त्री० । सेवायाम् , स्था० ।

सपरिवार–स्वपरिवार–त्रि० । स्वकीयपरिवारयोग्यासनारिकरिते, भ० २ श० ४ अ० ।

सपरिसाग–सपर्षत्क–त्रि० । सह पर्षदो यैर्येषां वा ते सपर्षत्काः । सदस्येषु, आ० म० १ अ० ।

सपरोवघाय–स्वपरोपघात–पुं० । आत्मन्यसंक्लेशे , जी० १ प्रति० ।

सपाउरण–सप्रावरण–त्रि० । सप्राच्छादने, ना० १ अधि० ।

सपाउगभंडधारि–सप्रादुकभाण्डधारिन्–पुं० । यावन्मात्रमुपकरणमुपयुज्यते तावन्मात्रं धरति शेषं परिष्ठापयति साधौ, व्य० ८ उ० ।

सपाण–सप्राण–त्रि० । सह प्राणैर्वर्त्तते इति सप्राणम् । सचित्ते, दशा० २ अ० ।

सपाय–स्वपात्र–न० । आत्मन. संज्ञामात्रके , अप्पणिज्जो सण्णमत्तओ सपायं भण्णति । नि० चू० ३ उ० ।

सपायच्छित्त–सप्रायश्चित्त–त्रि० । सह प्रायश्चित्तेन वर्त्तत इति सप्रायश्चित्तम् । प्रायश्चित्तयुक्ते, स्था० ५ ठा० २ उ० । व्य० ।

सपाव–सपाप–त्रि० । "क–ग–च–ज–त–द–प–य–वा प्रायो लुक्" ॥ ८ । १ । १७७ ॥ सपावं । अत्र प्रायोग्रहणान्न लुक् । पापसहिते, प्रा० १ पाद ।

सपासंडि–स्वपाष(ख)ण्डिन्–पुं० । जैनपाषण्डिनि, णाणदंसणचारित्ताणि परूवेति जिणवयणं चरंति सो सपासंडी चेव । नि० चू० १६ उ० ।

सपिसल्लय–सपि(शाच)सल्लय–त्रि० । सह पिसल्लयेण पिशाचेन वर्त्तन्त इति सपिसल्लयाः । पिशाचेन सहितेषु, प्रश्न० १ आश्र० द्वार ।

सपुरजणजाणवय–सपुरजनजानपद–त्रि० । सह पुरजनेन जानपदेन च जनपदसम्बन्धिजनेन वर्त्तते य. स तथा । पुरजनजनपदजनसमेते, भ० ११ श० ११ उ० ।

सपुरोहिय-सपुरोहित-पुं० । शान्तकर्म्मकारिसहिते , प्रश्न० ४ आश्र० द्वार ।

सपुव्वाऽवर-सपूर्वापर-त्रि० । सह पूर्वेण-पूर्वाह्णकर्त्तव्येन अपरेण वा अपराह्णकर्त्तव्येन । यदिवा-पूर्वं यत्क्रियते अन्नादिकं तथा अपरं यत्क्रियते विलेपनभोजनादिकं तेन सह वर्त्तत इति सपूर्वापरम् । दशा० १० अ० । पूर्वेणाऽपरेण च सहिते, चं० प्र० १६ पाहु० । सह पूर्वेण गङ्गादिना यदपरं महागङ्गादि तत्सपूर्वापरम् । गोशालकरीत्या पूर्वापरसहिते , भ० १५ श० ।

सपेहा-स्वप्रेक्षा-स्त्री० । स्वेच्छायाम् , भ० ३ श० ३ उ० ।

सपोग्गल-सपुद्गल-पुं० । कर्मादिपुद्गलवति जीवे ,स्था० २ ठा० १ उ० ।

सप्प-सर्प्प-पुं० । सर्प्पतीति सर्प्पः । भुजङ्गे , आ० म० १ अ० । विशे० । यथाऽसावेकदृष्टिर्भवत्येव गोचरगतेन संयमैकदृष्टिना भवितव्यम् । दश० १ अ० । ( सर्प्पवर्णक 'गोसालग' शब्दे तृतीयभागे १०१६ पृष्ठे गत । ) तथा सर्प इति यथाऽसावेकदृष्टिर्भवत्येवं गोचरगतेन संयमैकदृष्टिना भवितव्यमित्यर्थसूचकत्वादिति , अथवा—यथा द्राक् स्पृशन् सर्पो बिल प्रविशत्येवं साधुनाऽप्यनास्वादयता भोक्तव्यमिति। दश० १ अ० । अश्लेषानक्षत्राधिपतौ देवे, जं० ७ वक्ष० । चं० प्र० । अनु० । जी० ।

सप्पइण्णत्त-सत्प्रतिज्ञत्व-न० । प्रतिपन्नक्रियानिर्वाहणे, द्वा० १२ द्वार ।

सप्पकाल-स्वल्पकाल-पुं० । मुहूर्त्तप्रहरादिकेऽहोरात्रान्ते काले, धर्म० २ अधि० ।

सप्पच्छत्त-सर्प्पच्छत्र-न० । अहिच्छत्राके, आचा० १ श्रु० १ अ० ५ उ० ।

सप्पडक्क-सर्प्पदष्ट-त्रि० । सर्प्पदशनमारिते,सप्पडक्को मारितकोट्ठा विसेण भाविस्सति । नि० चू० १ उ० ।

सप्पडिदंड-सप्रतिदण्ड-पुं० । सद्वितीयदण्डे,प्रश्न०४ आश्र० द्वार ।

सप्पत्तदाणपुव्व-सत्पात्रदानपूर्व-न० । सत्पात्रं साध्वादि· तस्मिन् दानपूर्वम् । साध्वादिभ्यो दानं दत्त्वेत्यर्थे, (क्रियाविशेषणमिदम् ) ध० २ अधि० ।

सप्पदट्ठ-सर्पदष्ट-न० । सर्प्पदशने, बृ० ५ उ० । ( सर्पदशने मोकपानविधि· 'मोय' शब्दे षष्ठे भागे ४४१ पृष्ठे दर्शित· ।)

सप्पभ-सप्रभ-त्रि० । सप्रभावे, स० । प्रभायुक्ते, स० ।

स्वप्रभ-त्रि० । स्वेन—आत्मना प्रभान्ति-शोभन्ते-प्रकाशन्ते चेति स्वप्रभाणि । स्वस्वरूपत· प्रभावत्सु, स० ।

सत्प्रभ-त्रि० । सती-शोभना प्रभा-कान्तिर्यस्य स सत्प्रभ । स्वरूपत प्रभावति, दशा० ६ अ० । ज० । रा० । प्रज्ञा० । जी० । आ० म० । देवानन्दकत्वादिप्रभावयुक्ते , स्था० ४ ठा० २ उ० ।

सप्पभावसोहिच्च-स्वप्रभावसौहित्य-न० । स्वस्य—आत्मनो भाव·-तद्रूप सौहित्य तृप्ति । परमात्मतृप्तौ,द्रव्या०७ अध्या० ।

सप्पमाण-शप्यमान-त्रि० । स्याद्वादे, द्रव्या० ५ अध्या० । आक्रोश्यमाने, प्रश्न० २ आश्र० द्वार ।

सप्पलोद्धी-सर्प्पलुब्धिन्-पुं० । सर्प्पग्राहके, बृ०१ उ०३ प्रक० ।

सप्पविज्जा-सर्प्पविद्या-स्त्री० । सर्पप्रधानाया परिव्राजकविद्यायाम् , आ० म० १ अ० ।

अंतरंजिया नाम पुरी, तत्थ भूयगुहं नाम चेतियं, तत्थ सिरिगुत्ता नाम आयरिया ठिता । तत्थ बलसिरि नाम राया, तेसिं सिरिगुत्ताणं थेराणं सड्ढियरो रोहउत्तो नाम सीसो, अएणगामे ठितओ । ततो सो उवज्झायं वंदओ एति, एगो य परिव्वायओ पोट्टं लोहपट्टएण, बंधिउं जंबुडालं गहाय हिंडइ । पुच्छितो भणइ—नाणेण पोट्टं फुट्टइ, तो लोहपट्टेण बद्धं, जबुडालं च जहा एत्थ जंबूदीवे णत्थि मम पडिवादि त्ति, ततो तेण पडहतो णीणावितो—जहा सुएणा परप्पवादा, तस्य लोगेण पोट्टसालो चेव नामं कतं । सो पडहतो रोहगुत्तेण वारिओ, अहं वाद देमि त्ति । ततो सो पडिसेहित्ता गतो आयरियसगासं, आलोएइ—एवं मए पडहतो विणिवारिओ । आयरिया भणंति—दुट्ठु कय, जतो सो विज्जाबलिओ वादे पराजितोऽवि विज्जाहिं उवट्ठाइ त्ति तस्स इमाओ सत्त विज्जाओ, तं जहा-

विच्छुय सप्पे मूसग, मिई वराही य कायपोआई ।
एयाहिं विज्जाहिं,सो उ परिव्वायओ कुसलो१३७ (भा०)

व्याख्या—तत्र वृश्चिकेति वृश्चिकप्रधाना विद्या गृह्यते, सर्पेति सर्पप्रधाना, ' मूसग ' त्ति मूषकप्रधाना, तथा मृगी नाम विद्या, मृगीरूपेणोपघातकारिणी, एवं वाराही च, ' कागपोआइ ' ति-काकविद्या पोताकीविद्या च, पोताख्यः सकुनिका भएयन्ते, एतासु विद्यासु, एताभिर्वा विद्याभि· स परिव्राजक कुशल इति गाथार्थ ॥ आव० ४ अ० ।

सप्पवित्तिपयावहा-सत्प्रवृत्तिपदावहा-स्त्री० । प्रभाख्ययोगदृष्टौ, द्वा० ।

अस्यां व्यवस्थितो योगी, त्वयं निष्पादयत्यदः ।
ततश्चेयं विनिर्दिष्टा, सत्प्रवृत्तिपदावहा ॥ २५ ॥

अस्यामिति—अस्या प्रभाया व्यवस्थितो योगी त्वयमदो-निरोधसमाध्येकाग्रतालक्षणं निष्पादयति, सा वयति ततश्चेयं प्रभा सत्प्रवृत्तिपदावहा विनिर्दिष्टा सर्वैः प्रकारै प्रशान्तवाहिताया एव सिद्धे· । द्वा० २४ द्वा० ।

सप्पसुगंधा-सर्प्पसुगन्धा-स्त्री० । अनन्तजीववनस्पतिभेदे , प्रज्ञा० १ पद ।

सप्पह-सत्पथ-पुं० । सन्मार्गे , सूत्र० १ श्रु० ३ अ० ३ उ० ।

सप्पहविप्पणट्ठ-सत्प्रभविप्रनष्ट-न० । त्यक्तजिनशासने , उत्त० ४ अ० ।

सप्पाडिहेर-सत्प्रातिहार्य-न० । देवकृते तीर्थकृताना शोभनप्रातिहार्ये, " अशोकवृक्ष सुरपुष्पवृष्टि—र्दिव्यो ध्वनिश्चामरमासन च । भामण्डलं दुन्दुभिरातपत्र , सत्प्रातिहार्याणि जिनेश्वराणाम् " ॥ १ ॥ कर्म० १ कर्म० ।

सप्पि-सर्पिस्-न० । घृते , स्था० ८ ठा० १ उ० । सूत्र० ।

प्रश्न०। दश०। आचा०। औ०। आ० म०। विकृतिभेदे, स्था० ९ ठा० ३ उ०।

सप्पि-पुं०। देवे. पुनर्वसुनक्षत्रे स्था०।

दो सप्पी। (सू०९०+) स्था० २ ठा० ३ उ०।

सप्पिआसव-सर्पिराश्रव-पुं०। सर्पिरतिशायिगन्धादिघृतम् एतत्स्वादोपमानवचना वैरस्वाम्यादिवत्तदाश्रया। लब्धिमन्पुरुषविशेषेपु, पा०। औ०।

सप्पिवास-सतिपपास-त्रि०। "समासे वा" ॥ ८। २। ९७॥ शेषाऽऽदेशयो समासे द्वित्वं वा भवति। सपिवासो। सप्पिवासो। सतृष्णे, प्रा० २ पाद।

सप्पी-सर्पी-स्त्री०। सर्पस्त्रियाम्, दशा० १ अ०। स०।

सप्पुर-सत्पुर-न०। स्वनामख्याते पुरे, यत्र वीरजिनप्रतिमा पूज्यते। ती० ४३ कल्प।

सप्पुरिस-सत्पुरुष-पुं०। संश्चासौ पुरुषश्च सत्पुरुष.। आसपुरुषे, सूत्र० २ श्रु० ६ अ०। तीर्थकरादिके, व्य० १० उ०। महासत्त्वे. पं० व० १ द्वार। "तं तह दुल्लहलंभं, विज्जुलनाचंचलं मणुसत्तं। लद्धूण जो पमायइ, सो कापुरिसो न सप्पुरिसो।" आ० म० १ अ०। दाक्षिणात्याना किंपुरुषाणामिन्द्रे, स्था० २ ठा० ३ उ०। प्रज्ञा०। भ०।

सफल-सफल-त्रि०। सह फलेन कर्मबन्धेन वर्त्तत इति सफलम्। सकर्मणि, सूत्र० १ श्रु० ८ अ०। चरितार्थे, जी० १ प्रति०। फलवति, पं० ८ विव०।

सफाय-सफाय-न०। अनन्तजीववनस्पतिभेदे, प्रज्ञा० १ पद।

सफिह-सस्पृह-त्रि०। अभिलापासहिते, द्वा० २२ द्वा०।

सबर-शबर-त्रि०। अनार्यदेशभेदे, तद्देशवासिनि म्लेच्छे, प्रश्न० १ आश्र० द्वार। सूत्र०। ज्ञा०। प्रज्ञा०। आ० म०। प्रव०। आचा०। स्वनामख्याते जैमिनिप्रणीतसूत्रोपरिव्याख्याभाष्यकारके प्रधानमीमांसके, सम्म० २ काण्ड।

सबल-शबल-पुं०। परमाऽधार्मिके, सूत्र० १ श्रु० ५ अ० १ उ०। प्रायश्चित्तयुक्ते, दशा०।

सुयं मे आउसंतेणं भगवया एवमक्खायं इह-खलु थेरेहिं भगवंतेहिं एक्कवीसं सबला पण्णत्ता, कयरे खलु ते थेरेहिं भगवंतेहिं एक्कवीसं सबला पण्णत्ता, इमे खलु थेरेहिं भगवंतेहिं एक्कवीसं सबला पण्णत्ता, तं जहा- हत्थकम्मं करेमाणे सबले १ मेहुणं पडिसेवमाणे सबले २ रातीभोयणं भुंजमाणे सबले ३ आहाकम्मं भुंजमाणे सबले ४ रायपिंडं भुंजमाणे सबले ५ कीयं पामिच्चं अच्छिज्जं अणिसिट्ठं आहट्टु दिज्जमाणं भुंजमाणे सबले ६ अभिक्खणं अभिक्खणं पडियाइक्खित्ताणं भुंजमाणे सबले ७ अंतो छण्हं मासाणं गणातो गणं संकममाणे सबले ८ अंतो मासस्स तओ दगलेवे करेमाणे सबले ९ अंतो मासस्स तओ माइट्ठाणं करेमाणे सबले १० सागारियपिंडं भुंजमाणे सबले ११ आउट्टियाए पाणाइवायं करेमाणे सबले १२ आउट्टियाए मुसावायं करेमाणे सबले १३ आउट्टियाए अदिन्नादाणं गिण्हमाणे सबले १४ आउट्टिताए अणंतरहिताए पुढवीए ठाणं वा निसीहियं वा चेतेमाणे सबले १५ एवं ससणिद्धाए पुढवीए ससरक्खाए पुढवीए १६ एवं आउट्टियाए चित्तमंताए सिलाए चित्तमंताए लेलुए कोलावासंसि वा दारुए जीवपइट्ठिए सअंडे सपाणे सबीए सहरिए सउस्से सउत्तिंगे पणगदगमट्टियमक्कडासंताणए तहप्पगारं ठाणं वा सिज्जं वा निसीहियं वा चेतेमाणे सबले १७ आउट्टियाए मूलभोयणं वा कंदभोयणं वा खंधभोयणं वा तयाभोयणं वा पवालभोयणं वा पत्तभोयणं वा पुप्फभोयणं वा फलभोयणं वा बीयभोयणं वा हरियभोयणं वा भुंजमाणे सबले १८ अंतो संवच्छरस्स दस दगलेवे करेमाणे सबले १९ अंतो संवच्छरस्स दस माइट्ठाणाइं करेमाणे सबले २० आउट्टियाए सीतोदगरउग्घाइएणं हत्थेण वा पत्तेण वा दव्वीए वा भायणेण वा असणं वा पाणं वा खाइमं वा साइमं वा पडिगाहेत्ता भुंजमाणे सबले २१ एते खलु थेरेहिं भगवंतेहिं एक्कवीसं सबला पन्नत्ता त्ति बेमि ॥ २ ॥

असमाधिस्थानानि चाऽऽसेवमान. शबलो भवति। अथवा-शबलत्वस्थानेषु वर्त्तमानस्यासमाधिर्भवति अतोऽसमाधिस्थानपरिहरणाय शबलस्थानानि—शबलत्वकरणानि परिहर्त्तव्यानि इत्यनेन संबन्धेनाऽऽयातस्यास्य शबलाध्ययनस्य व्याख्या प्रस्तूयते-'सुयं मे आउसंतेणमि'त्यादि, व्याख्या प्राग्वत्। नवरं शबलं—कर्बुरं चारित्रं यैः क्रियाविशेषैर्निमित्तभूतैर्भवति ते शबलास्तद्योगात्साधवोऽपि शबला इति व्यपदिश्यन्ते। तत्र शबलो द्रव्यभावभेदाद् द्विधा, तत्र द्रव्यस्यानुपयुक्तत्वाद्भावशबलेनेहाधिकार, स चैवम्-एकैकस्मिन् अपराधपदे मूलगुणवर्जे आधाकर्मादौ अतिक्रमो-व्यतिक्रमोऽतिचारोऽनाचारश्च, तत सर्वैरप्येतै. शबलो भवति। तत्रातिक्रमादीनां स्वरूपमिदम्-यथाऽऽधाकर्मादिसदोषवस्तुपरिभोगनिमन्त्रणे कृते सति तत्प्रतिश्रवणे प्रथम, तदर्थं मार्गे गच्छति द्वितीय., तत्र गृहीते, तृतीय, भोजनार्थं कवलग्रहणे सति चतुर्थ, एवं यथार्हप्रतिसेवान्तरेष्वप्यूह्यम्, मूलगुणेषु तु आदिभङ्गैस्त्रिभि शबलो भवति। चतुर्थभङ्गेन तु सर्वभङ्ग. तत्रातिरिक्त एव भवति शुक्लपटदृष्टान्तवत्। यथा शुक्लपट एकस्मिन् देशे मलिनो भवति तदा तावन्मात्र एव धाव्यते, यदा च सर्वोऽपि मलिनो भवति तदा तु सर्वोऽपि स क्षारादिभि सन्मिश्र कृत्वा धाव्यते, यतो मलिन पट शोभतेऽपि न। अथ च शीतत्राणमपि न भवति, एवं चारित्रपटोऽपि देशसर्वमलिन सन्न मोक्षसाधको भवति, इति कृतं प्रसङ्गेन। प्रस्तुतमनुसराम, तद्यथा--'हत्थकम्मं करेमाणे सबले' त्ति-हस्तकर्म-वेदविकारविशेषमुपशमं कुर्वन् उपलक्षणत्वात्कारयन्ननुजानन् वा शबलो भवतीत्येक १। तथा—मैथुनं प्रतिसेवमानोऽ-

निक्रमव्यतिक्रमातिचारैस्त्रिभिः प्रकारैर्द्रव्यादित्रिविधं सेवमानः शवलो भवति ।२। अनाचारमालम्बनतस्तत्सेवी तु विराधक एव सालम्बनपरवशादिना यतनया सेवमानो भवति शवल , आलम्बनानि तु छेदग्रन्थटीकादिभ्योऽवसेयानि, परं तत्रापि ' न किंचिदणुन्नायं ' इति वचनात्सर्वोपदेशप्रवर्त्तकोऽत एव शवलः । तथा रात्रिभोजनं दिवा गृहीतं दिवा भुक्तमित्यादिभिश्चतुर्भङ्गकैरतिक्रमादिभिश्च भुञ्जान. शवल. एवं सालम्बनं यतनया सन्निध्यादिसेव्यपि शवल' ३। तथा—आधाकर्म्म आधाय साधुप्रणिधानेन यत्सचेतनमचेतनं क्रियते,अचेतनं वा पच्यते चीयते वा गृहादिक वैयते वा वस्त्रादिकं तदाधाकार्म भुञ्जान. शवलः४ ।तथा-'रायपिंडे' त्ति—राजपिण्डो-नृपाहार. ५ । 'कीतपामिच्चे' त्यादि क्रीतं द्रव्यादिना, साध्वर्थमुद्धारानीतं प्रामित्यम्, आच्छिद्यते ऽनिच्छतोऽपि पुत्रादेः सकाशात् साधुदानाय गृह्यते तदाच्छेद्य, नानुज्ञातं सर्वस्वामिभिः साधुदानाय इत्यनिसृष्टं भक्तम् आहृत्य दीयमानं स्वस्थानात् साध्वर्थमभिमुखमानीय दानं भक्तादेः, उपलक्षणत्वात् परिवर्त्तनादिकमपीह द्रष्टव्यं तद्भुञ्जान. ६ । तथा—' अभिक्खणं ' ति—अभीक्ष्णमसकृत्प्रत्याख्यायाऽशनादि भुञ्जानः ७ । तथा—' अंतो ' त्ति-अन्त. षण्णा मासानामकतो गणादन्यं गणं संक्रामन् शवलो निरालम्बन इत्यर्थ., सालम्बनस्तु ज्ञानादिपुष्टालम्बनयुक्तो गणान्तरं संक्रामेत् ८ । तथा—' अंतो ' त्ति-अन्तः मासस्य त्रीन् उदकलेपान् कुर्वन् उदकलेपश्च नाभिप्रमाणजलावगाहनमिति ९ । तथा-' अंतो ' त्ति-अन्तर्मध्ये मासस्य त्रीणि मायास्थानानि तथाविधप्रयोजनमन्तरेणातिगूढमातृस्थानानि ( स्थानभेदा' ) कुर्वन् १० । तथा-' सागारिय ' त्ति-सागारिको—वसतिदाता तत्पिण्डम् ११ । तथा 'आउट्टियाए पाणातिवायं करेमाणे सवले ' आकुट्टनमिति जानन् करोति आपद्रहितो वा यत्करोति पृथिवीगुण्डितेन हस्तादिना भिक्षा गृह्णाति उदकक्लिन्नाभ्या वा हस्ताभ्या भिक्षां गृह्णाति अग्निसंश्लिष्टं वाऽऽहारं गृह्णाति आत्मानं परं च वायुना वीजति सचित्तफलवीजं कन्दादिकं वा गृह्णाति द्वीन्द्रियादिससक्ते पथि व्रजति तन्मिश्रमाहारादिकं वा गृह्णाति, एवं सर्वत्र आकुट्या इत्युपेत्येति द्रष्टव्यम् १२ । तथा 'आउट्टि' त्ति-आकुट्या मृषावादं वदन् १३ । तथा-आकुट्या अदत्तादान गृह्णन् १४ । तथा-आकुट्या अनन्तरिताया पृथिव्यां स्थान वा नैषेधिकीं वा चेतयन् कायोत्सर्गे स्वाध्यायभूमिं वा कुर्वन्नित्यर्थ १५ । तथा-एवमाकुट्या सस्निग्धाया पृथिव्याम्,एव सरजस्काया पृथिव्या१६।तथा आकुट्या 'चित्तमंताए' त्ति-चित्त जीवलक्षणं तदस्त्यस्यामिति चित्तवती सचित्ता सजीवेत्यर्थ', तस्याम् एवंविधायां शिलाया , शिला नाम-महाप्रमाण पाषाण' , एवं सर्वत्र नवर 'लोलूइ'त्ति-कोष्ठो लोकप्रसिद्ध. स्त्रीत्वं प्राकृतत्वात् , 'कोलावाससि' त्ति-कोला-घुणास्तेषामावास कोलावासस्तस्मिन् कोलावासे दारौ-काष्ठे जीवप्रतिष्ठिते द्वीन्द्रियादिजीवाश्रयीभूते , ' सअंडे' त्ति-सह अण्डैर्वर्त्तत इति साण्डं तस्मिन् साण्डे अण्डानि कीटिकादीनाम् ,तथा-'सपाणे'त्ति-सह प्राणैर्वर्त्तत इति सप्राणं तस्मिन् सप्राणे प्राणा द्वीन्द्रियादय. , तथा-' सबीए ' त्ति-सह बीजैर्वर्त्तत इति सबीजं तस्मिन् सबीजे बीजानि-नीवारश्यामाकादीनि, तथा-सह हरितैर्वर्त्तत इति सहरितं तस्मिन् सहरितानि दूर्वाप्रवालादीनि 'सउसे' त्ति-सहावश्यायेन वर्त्तत इति सावश्यायं तस्मिन् सावश्याये अवश्यायो नाम-नीहार., तथा-'सउदगे'त्ति-सह उदकेन वर्त्तत इति सोदकं तस्मिन् सोदके उदकं भौमान्तरिक्षभेदादनेकप्रकारम् तथा-' सोत्तिंगे' त्यादि उत्तिङ्गपनकोदकमृत्तिकामर्कटसन्तानेन सह वर्त्तत इति सोत्तिङ्गपनकोदकमृत्तिकामर्कटसन्तानं तस्मिन सोत्तिङ्गपनकोदकमृत्तिकामर्कटसन्ताने , तत्र उत्तिङ्ग.-पिपीलिकासन्तानकः पनको-भूम्यादौ उल्लीविशेष. उदकमृत्तिका-अचिरादप्कायार्द्रीकृता मृत्तिका मर्कटसन्तानको—लूतातन्तुजालं तदेवंभूते स्थाने इति गम्यं तत्र स्थामकायोत्सर्ग उपवेशनं वा ' सिज्जं व त्ति-शयनम् ,'निसीहियं व' त्ति-स्वाध्यायस्थानं कुर्वन् शवल. १७ । तथा-' आउट्टियाए' त्ति मूलेत्यादि मूलानि प्रतीतानि तेषां भोजनं-भक्षण परिभोगो वा मूलभोजनम् , एवं कन्दभोजनं कन्दा उत्पलकन्दादय. , त्वक् पिप्पलादीना , प्रवालानि करीरादीना, पत्राणि ताम्बूलपत्राणि नागवल्ल्यादीनां, फलानि आम्रादीनां,बीजानि शाल्यादीनाम् , हरितानि पत्रशाकादीनाम् , ' भुंजमाणे ' त्ति—भोजन कुर्वन् शवल. १८ । तथा-' अंतो ' त्ति-अन्तर्मध्ये संवत्सरस्य दशोदकलेपान् कुर्वन् १९। तथा-'अतो'त्ति-अन्त. संवत्सरस्य दश मायास्थानानि कुर्वन् २० । तथा—'आउट्टिए'त्ति-आकुट्या सीतोदकव्याप्तेन हस्तेन गलद्बिन्दुना वा मात्रकेण वा दर्व्या वा भाजनेन वा ' असणं वा ' इति-अत्र वाशब्दोपादानात् अशनं वा इत्यनेन पदेन सह चतुष्टयस्य सूचनात्तानि चामूनि अशनं पानं खादिमं स्वादिमम् , तत्र अशनम् ओदनादि पानं द्राक्षापानादि खादिमं खर्जूरफलादि स्वादिमं सुण्ठ्यादि, वा सर्वत्र समुच्चये, प्रगृह्य भुञ्जानः शवल इत्येकविंशतितम. २१ । एव खल्वित्यादि निगमनवाक्यं पूर्ववदेव । इति ब्रह्मविरचिताया जनहिताया श्रीदशाश्रुतस्कन्धटीकाया शवलनामकं द्वितीयमध्ययन समाप्तम् । दशा० २ अ० ।

"वरिसंतो दस मास-स्स तिन्नि दगलेवमाइठाणाइं ।
आउट्टिया करेंतो, वहालियादिण्णमेहुण्णे ॥ १ ॥ "
निसि भक्तकम्मनिवपि-ड कीयमाई अभिक्खसंवरिए ।
कंदाई भुजंते , उदउ (डु) ल्लहत्थाइगहणं च ॥ २ ॥
सच्चित्तसिलाकोले, परविणिवाई (स) सिणिद्ध ससरक्खो ।
छम्मासंतो गणसं-कमं च करकम्ममिइ सबले ॥ ३ ॥
आव०४ अ० ।

सबालवच्छा-सबालवत्सा-स्त्री० । सह बालेन स्तनपायिना वत्सेन वर्त्तते इति सबालवत्सा । बालसहितायां स्त्रियाम् , ध० ३ अधि० ।

सबाहिरिय-सबाहिरिक-त्रि० । प्राकारबहिर्वर्त्तिगृहपङ्क्तिरूपया बाहिरिकया सहिते, बृ० १ उ० २ प्रक० ।

सबीय-सबीज-न० । बीजैः सह वर्त्तमाने, दशा० २ अ० । सह बीजै -शालिगोधूमादिभिर्वर्त्तन्त इति सबीजका. । एते सर्वेऽपि वनस्पतिकाया । सूत्र० १ श्रु० ११ अ० ।

सव्वोह-सद्बोध-पु० । निर्मलज्ञाने, षो० १३ विव० ।

सब्भत्ति-सद्भक्ति-स्त्री० । सतां चातुर्वर्ण्यस्थितानां भक्तिः । बाह्यप्रतिपत्तौ, प्रति० ।

सब्भाव-सद्भाव-पुं० । सतां भावः सद्भावः । आव० ३ अ० । विद्यमानभावे,नं०।अस्तित्वे,सम्म०१काण्ड । प्रज्ञा०। आव० । सत्त्वे सम्यग्दर्शने, ओघ० । परमार्थे, सूत्र०१ श्रु० १२ अ० । निद्रायाम्,आ० चू० १ अ० । पदार्थे, स्था० ६ ठा० ३ उ० । सन्मार्गे, सूत्र० १ श्रु० ३ अ० ३ उ०। सत एव विद्यमानस्यैव भाव. सद्भावः,स्थाप्यमानस्येन्द्रादेरनुरूपाङ्गोपाङ्गचिह्नवाहन-प्रहरणादिपरिकररूपो य आकारविशेषो यद्दर्शनात् साक्षात् विद्यमान इवेन्द्रादिर्लक्ष्यते स सद्भावः । पिं० । हार्दे , तं० । छान्दश्चित्ताभिप्राये , वं० । अन्तर्वासनायाम् , 'हुं साहुसु सब्भावं' । प्रा० ३ पाद ।

सब्भावट्ठावणा-सद्भावस्थापना-स्त्री० । काष्ठकर्मादिषु,आ-वश्यकक्रियां कुर्वत. पकादिसाध्वादिस्थापनायाम् ,अनु०।

सब्भावदंसण-सद्भावदर्शन-न० । सत्-जिनाभिहितं मवचनं तस्य भावः सद्भावस्तस्य दर्शनम्-उपलम्भः सद्भावदर्शन-म् । सम्यक्त्वे, विशे० ।

सब्भावण-सद्भावन-त्रि० । प्रतिव्रतं पञ्चभिरीर्यासमित्या-दिभिर्भावनाभिः सहिते, स्था० ८ ठा० ३ उ० ।

सब्भावदावण-सद्भावदापन-न० । शल्योद्धरणे, आलोच-नायाम् , ओघ० ।

सब्भावपडिसेह-सद्भावप्रतिषेध-पुं० । नास्त्यात्मा नास्ति पुण्यं पापं चेत्यादिरूपे मृषावादभेदे, दश० ४ अ० ।

सब्भाविक-सद्भाविक-त्रि० । पारमार्थिके, दश० १ अ० । सद्भावके, वृ० १ उ० २ प्रक० ।

सब्भितरबाहिरिय-साभ्यन्तरबाह्य-न० । सहाभ्यन्तरं बाह्यं यस्य येन वा तत्साभ्यन्तरबाह्यम् । अभ्यन्तरेण बाह्ये-न च सह वर्त्तमाने, सर्वाभ्यन्तरान् मण्डलात् परत-स्तावन्मण्डलेषु संक्रमणं यावत्सर्वबाह्यमण्डलं, सर्वबाह्या-च्च मण्डलादर्वाक् मण्डलेषु तावत् संक्रमणं यावत्सर्वा भ्यन्तरमिति । मण्ड० । सहाभ्यन्तरेण विभागेन बाह्येन च वर्त्तमाने, भ० १५ श० ।

सब्भिक्खु-सद्भिक्षु-पुं० । अन्त्यव्यञ्जनस्य ॥ ८ । १ । ११ । इति अन्त्यव्यञ्जनस्य लुक् । सद्भिक्षुः । सब्भिक्खू । उत्त-मसाधौ, प्रा० १ पाद ।

सब्भूकडक्ख-सद्भूकटाक्ष-पुं० । चक्षुर्दोषभेदे, महा० ३ अ०।

सब्भूय-सद्भूत-त्रि० । विद्यमाने वस्तुनि , विशे० । अनृते , आव० ४ अ० । आ० म० । उपा० । स० । सता प्रकारेण भूते, ज्ञा० १ श्रु० १३ अ० ।

सब्भूयगुणकित्तण-सद्भूतगुणकीर्त्तन-न० । संवेगात्सद्भूता-नां विद्यमानाना च गुणादीनां कीर्त्तने, पो० १ विव० । विद्यमानग्रहणस्वभावे, पञ्चा० ४ विव० ।

सभण्डमत्तोवगरण-सभाण्डमात्रोपकरण-न० । स्वकीयभा-ण्डमात्राभाजनरूपपरिच्छदे शय्यादि गृहीत्वेत्यर्थे, सह भा-ण्डमात्रया यदुपकरणं तत्तथा इति व्युत्पत्तेः । भ० १३ श० ६ उ० ।

सभय-सभय-पुं० । आशरहिते अरण्यप्रदेशे, सूत्र० १ श्रु० २ अ० ।

सभ(ह)री-शफरी-स्त्री० "फो भ-हौ ॥ ८ । १ । २३६ ॥ स्वरा-त्परस्यानादेः फस्य भ-हौ भवतः । सभरी । सहरी । म-त्स्ये, प्रा० १ पाद ।

सभ(ह)ल-सफल-त्रि० । "फो भ-हौ " ॥ ८ । १ । २३६ ॥ इ-ति फस्य भहौ । सभलं । सहलं । फलेन सहिते, प्रा०१ पाद ।

सभा-सभा-स्त्री० । सन्तः स्थानं सभा । नि० चू० १२ अ० । आस्थायिकायाम्, भ० ६ श० ३१ उ० । महाजनस्थाने, प्रश्न० ३ संव० द्वार । बहुजनोपवेशनस्थाने,प्रश्न० ५ संव० द्वार । चातुर्वैद्यादिशालायाम् , आचा० २ श्रु० १ चू० २ अ० २ उ० । भरतादिकथाविनोदेन यत्र लोकस्तिष्ठति सा सभा । अनु० । जनोपवेशनस्थाने, ज्ञा० १ श्रु० २ अ० । सूत्र० । सभा नाम ग्रामनगरादीनां तद्वासिलोकाऽऽस्थायिकार्थमागन्तुकार्थ-नार्थं च कुड्याद्याकृतिः क्रियते । आचा० १ श्रु० ८ अ० २ उ०। सन्तो भजन्ते तामिति सभा । पुस्तकवाचनभूमौ,बहुजनसमा-गमस्थाने च । अनु० ।

सभाव-स्वभाव-पुं० । स्वो भावः स्वभावः । सहजभावे , नि० चू० १ उ० । स्वभावस्यापर्यनुयोज्यत्वाद्विशेषस्याविनिग-मनात् उक्तम्-"अतोऽग्निः क्लेदयत्यम्बु, सन्निधौ दहतीति च । अवह्निसन्निधौ तत्स्वा-भाव्यादित्युदिते तयोः।" द्वा०२३द्वा०। "निर्माय एव भावेन, मायावांस्तु भवेत्कचित् । पश्येत्स्व-परयोर्यत्र, सानुबन्धहितोदयः ॥ १ ॥ " पं० सू० ३ सूत्र ।

सभावइ-सभापति-पुं० । प्रज्ञाश्चैश्वर्यक्षमामाधुर्यसंपन्ने सभेश्वरे, रत्ना० ८ परि० । ( 'वाद ' शब्दे षष्ठ भागे विस्त-रो गत. । )

सभावओ-सभावतस्-अव्य० । पुद्गलानां मूर्त्तत्ववत् स्वकी-यात्स्वाभावादित्यर्थे, भ० १२ श० २ उ० ।

सभावसंपण्ण-स्वभावसम्पन्न-त्रि० । स्वभावेन प्राक् बिना सम्पन्नः-सिद्धः । स्वभावसिद्धे द्वादशादौ, स्था० ४ ठा० २ उ०।

सभावहीण-स्वभावहीन-न० । यत्र स्वभावोऽन्यथा स्थि-तोऽन्यथाऽभिधीयते तत्स्वभावहीनम् । सूत्रदोषभेदे, अनु०। यस्य योऽयं चात्मीयः स्वभावस्तेन तच्छून्यमभिधीयते यथा स्थिरो वायुरिति । वृ० १ उ० १ प्रक० ।

सभिक्खुग-सभिक्षुक-न० । पञ्चदशे उत्तराध्ययने,स०३६सम०।

सम-शम-पुं० । रागादिनिग्रहे, विशे० । स०। अनन्तानुबन्धि-रियाद्युदयावस्थायाम् , कर्म० ४ कर्म० । अनन्तानुबन्धिनां कषायाणामनुदये, ध० ।

( १ ) समस्य स्वरूपनिरूपणम्-

शम.-प्रशमः अनन्तानुबन्धिनां कषायाणामनुदयः स च प्रकृत्या कषायपरिणतेः कटुफलावलोकनाद्वा भवति, यदाह-"पयईए कम्माणं, नाऊण वा विवागमसुहंति । अवरद्धे वि न कुप्पइ,उवसमओ सव्वकालं पि ॥१॥" इति । अन्ये तु क्रोधक-ण्डूविषयतृष्णोपशम शम इत्याहु' । अधिगतसम्यग्दर्शनो हि साधूपासनावान् कथं क्रोधकण्ड्वा विषयतृष्णया च तरली-क्रियेत । ननु क्रोधकण्डूविषयतृष्णोपशमश्चेच्छमस्तर्हि अ-

लिकक्रुष्णादीनां सापराधे निरपराधेऽपि च परे क्रोधवतां विषयतृष्णातरलितमनसां च कथं शमः ?, तदभावे च कथं सम्यक्त्वसम्भवः इति चेत्?, मैवम् ,लिङ्गिनि सम्यक्त्वे सति लिङ्गेनावश्यं भाव्यमिति नायं नियमः, दृश्यते हि धूमरहितोऽप्ययस्कारगृहेषु वह्निः, भस्मच्छन्नस्य वा वह्नेर्न धूमलेशोऽपीति । अयं तु नियमः सुपरीक्षितो लिङ्गे सति लिङ्गी भवत्येव । यदाह-" लिङ्गे लिङ्गी भवत्येव, लिङ्गिन्येवेतरत्पुनः । नियमस्य विपर्यासे, सम्बन्धो लिङ्गलिङ्गिनोः ॥ १ ॥" इति । संज्वलनकषायोदयाद्वा कृष्णादीनां क्रोधकण्डूविषयतृष्णे । संज्वलना अपि केचन कषायास्तीव्रतया अनन्तानुबन्धिसदृशविपाका इति सर्वमवदातम् ॥१॥ ध० २ अधि० । चं०प्र० ।

(२) अष्टकेन शमस्य गुणकथनम्-

ज्ञानी हि ज्ञानात् क्रोधादिभ्य उपशाम्यति, अतः शमाष्टकं विस्तार्यते, तत्र आत्मनः क्षयोपशमाद्याः परिणतयः स्वभावपरिणामेन परिणमन्ति न तप्तादिपरिणतौ स शमः, नामशमस्थापनाशमौ सुगमौ, द्रव्यशमः परिणत्यसमाधौ प्रवृत्तिसंकोचो द्रव्यशमः आगमतः; शमस्वरूपपरिज्ञानी अनुपयुक्तो नोआगमतः मायया लब्धिसिद्ध्यादिदेवगत्याद्यर्थम् उपकारापकारविपाकक्षमादिक्रोधोपशमत्वम् इत्यपि द्रव्यशमः । भावत उपशमस्वरूपोपयुक्त आगमतः; नोआगमतो मिथ्यात्वमपहाय यथार्थभासनपूर्वकचारित्रमोहोदयाभावात् क्षमादिगुणपरिणतिः—शमः; सोऽपि लौकिकलोकोत्तरभेदाद् द्विविधः। लौकिकं वेदान्तवादिनाम् , लोकोत्तरं जैनप्रवचनानुसारिशुद्धस्वरूपरमणैकत्वम् , आद्यनयचतुष्टये भावक्षमादिस्वरूपगुणपरिणमनहेतुः मनोवाक्कायसंकोच—विपाकचिन्तन—तत्त्वशम—भावनादिः, अन्त्यनयत्रये क्षयोपशमक्षमादि ; शब्दनयेन क्षपकश्रेणिमध्यवर्तिसूक्ष्मकषायवतः, समभिरूढनयेन क्रोधादिशमः क्षीणमोहादिषु एवंभूतनयेन कषायशमः । अत्र भावना—चिन्तास्मृतिविपाकभयादिकारणत । क्षयोपशमभावादिसाधनत क्षायिकशम साध्यः, एव शमपरिणतिः करणीया आत्मनो मूलस्वभावत्वात् , मूलधर्मपरिणमनं हि तेनैव कारणेन शुद्धात्मपदप्रवृत्तिः सङ्गत्यागात्मध्यानसवरीत्वञ्चैकत्वं करणीयम्-

विकल्पविषयोत्तीर्णः, स्वभावालम्बनः सदा ।
ज्ञानस्य परिपाको यः, स शमः परिकीर्तितः ॥ १ ॥

विकल्प इति—विकल्प—चित्तविभ्रम , तस्य विषयो विस्तारः, तेन उत्तीर्णो—निवृत्तः आत्मस्वादनतो वर्णादिषु निवृत्तविषयः स्वभावः अनन्तगुणपर्यायसम्यग्ज्ञानदर्शनचारित्रस्वरूपः, तस्य आलम्बन स्वभावालम्बन इत्यनेन आत्मस्वभावदर्शी , आत्मस्वभावज्ञानी , आत्मस्वभावरमणी , आत्मस्वभावविश्रामी , आत्मस्वभावाऽऽस्वादी, शुद्धतत्त्वपरिणत ,ज्ञानस्य आत्मोपयोगलक्षणस्य य परिपाक प्रौढावसरः स शम —शमभावलक्षणः परिकीर्तित । अत्र योगस्य पञ्चविधत्वं प्रोक्तं हरिभद्रपूज्यैः-अध्यात्मयोग १ भावनायोग २ ध्यानयोगः ३ समतायोग ४ वृत्तिक्षययोग ५ । तत्र अमादिपरभावम् औदयिकभावम्मरणीयतयाधर्मत्वेन निर्धार्य तत्पुष्टिहेतुक्रियां कुर्वन् अधर्मं धर्मवृत्त्या इच्छन् प्रवृत्त स एव निरामयः निस्सङ्ग शुद्धात्मभावनाभावितात् करणस्य स्वभाव एव धर्म इति योगवृत्त्या अध्यात्मयोगः १ । सर्वपरभावान् अनित्यादिभावनया विबुध्य अनुभवभावनया स्वरूपाभिमुखयोगवृत्तिमध्यस्थ आत्मानं मोक्षोपाये युञ्जन् भावनायोगः २ । स एव पिण्डस्थ-पदस्थ-रूपातीत-ध्यानपरिणतरूपैकत्वी ध्यानयोगी भण्यते ३ । ध्यानबलेन भस्मीभूतमोहकर्मा तत्तत्त्वादिपरिणतिरहितः समतायोगी उक्तः ४ । तथा योगाधीनकर्मोदयाधीना अनादिवृत्तिः जीवस्य संस्था स्वयं -अभावः स्वरूपवृत्तिः वृत्तिक्षययोगी उच्यते ५ । एवं पञ्चयोगेषु समतायोगी साधने परिष्ठ इति ज्ञानस्य पूर्वावस्था शमः ।

अनिच्छन् कर्मवैषम्यं, ब्रह्मांशेन शमं जगत् ।
आत्माऽभेदेन यः पश्ये-दसौ मोक्षङ्गमी शमी ॥ २ ॥

अनिच्छन् कर्मेति—कर्मवैषम्यम् ऊनाधिकत्वम् अनिच्छन् गतिजातिवर्णसंस्थानग्राहणक्षियादिवैषम्यं ज्ञानवीर्यक्षयोपशमकार्यवैषम्यम् अनिच्छन् उदयतः आवरणतः क्षयोपशमभेदे सत्यपि ब्रह्मांशेन चेतनालक्षणेन, अथवा-द्रव्यास्तिकाऽस्तित्ववस्तुत्वसत्त्वाऽगुरुलघुत्वप्रमेयत्वचेतनत्वाऽमूर्तत्वाऽसंख्येयप्रदेशत्वपरिणत्या जगत्-चराचरम् आत्माभेदेन-आत्मतुल्यवृत्त्या; समानत्वेन यः पश्येत् सर्वजीवेषु समत्वं कृत्वा अरक्तद्विष्टत्वेन वर्त्तमान असौ योगी मोक्षगामी सकलकर्मक्षयलक्षणावस्था गच्छतीत्येवंशीलो भवति । यो हि सर्वजीवेषु जीवत्वतुल्यवृत्त्या रागद्वेषपरिणतिमपहाय आत्मस्वभावानुपश्ची असौ योगी मोक्षङ्गमी भवति ।

आरुरुक्षुर्मुनिर्योगं, श्रयन् बाह्यक्रियामपि ।
योगारूढः शमादेव, शुद्ध्यत्यन्तर्गतक्रियः ॥ ३ ॥

आरुरुक्षुरिति-आरुरुक्षु -आरोढुमिच्छु मुनिः-भावसाधक , प्रीतिभक्तिवचनरूपशुभसकल्पेन अशुभसंकल्पान् वारयन् आराधको भवति , सिद्धयोगी तु रागद्वेषाभावेन उपशमी—कृतार्थ , बाह्यां क्रियां—बाह्याचारप्रतिपत्ति—श्रयन् अपि—अङ्गीकुर्वन् अपि शमादव शुद्ध्यति शमात्—क्रोधाभावात् शुद्ध्यति—निर्मलीभवति । कथंभूतो मुनिः ?-योगारूढ योगे-सम्यग्दर्शनज्ञानचारित्रे आत्मीयसाधनरत्नत्रयीलक्षणे आरूढ , पुन कथंभूतो मुनि ? अन्तर्गतक्रिय अन्तर्गता वीर्यगुणप्रवृत्तिरूपा क्रिया यस्य स अन्तर्गतक्रियः ; एवमभ्यन्तरक्रियावान् स्वैश्वर्यपरिणतः शमात्-क्षमाया मार्दवार्जवमुक्तिपरिणतिपरिणतो निर्मलो भवति ।

ध्यानवृष्टेर्दयानद्याः, शमपूरे प्रसर्पति ।
विकारतीरवृक्षाणां, मूलादुन्मूलनं भवेत् ॥ ४ ॥

ध्यानवृष्टेरिति-ध्यानवृष्टे ध्यानं-धर्मशुक्लाख्यम् , अन्तर्मुहूर्त्तं यावत् चित्तस्य एकाग्रावस्थानं ध्यानम् । उक्तं च"अंतोमुहुत्तमित्तं, चित्तावत्थाणमेगवत्थुम्मि । छउमत्थाणं झाणं, जोगनिरोहो जिणाणं तु " ॥ १ ॥ अत्र च निमित्तरूप

देवगुरुस्वरूपे श्रद्धानतादियुक्तचित्तैकत्वे , धर्मध्यानमाज्ञाऽपायविपाकस्थानाख्यं, तत्र आज्ञाया निर्धारः सम्यग्दर्शनम् आज्ञाया अनन्तत्वपूर्वापराविरोधित्वादिस्वरूपे च मत्कारपूर्वकचित्तविश्राम' आज्ञाविचयधर्मध्यानम् एवमपायादिकेष्वपि । निर्द्धारभासनपूर्वसानुभवचित्तविश्रान्ति' ध्यानम्, एवं शुक्लेऽपि ईदृग्ध्यानवृष्टे, मेघात् दया—स्वपरभावप्राणाघातनरूपा भावदया, तद्बुद्धितल्लक्षणहेतुत्वात् स्वपरद्रव्यप्राणरक्षणानिर्विषयत्वेन द्रव्यदयाऽपि दयात्वे न आरोपिता, श्रीविशेषावश्यके गणधरवादाधिकारे इति । अतो द्रव्यदया तु कारणरूपा, भावदया तु दयाधर्म एवंविधाया दयानद्या शमपूरे सकलकषायपरिणतिशान्ति—शमः रागद्वेषाभाव' वचनधर्मरूप –शम तस्य पूरः, तस्मिन् प्रसर्पति—वृद्धिमति सति विकारा.-कामक्रोधादय' अशुद्धात्मपरिणामाः त एव तीरवृक्षाः तेषां मूलात् उन्मूलनं भवेत् उच्छेदनं भवेत् । अभाव इत्यनेन ध्यानयोगतो दयानदीपूर प्रवर्द्धत, वर्द्धमानपूरश्च विकारवृक्षाणामुच्छेदनं करोत्येव । अयं हि आत्माविषयकषायविकारविप्लुतः स्वगुणावरककर्मोदयत' परिभ्रमति । स एव स्वरूपोपादानत तत्त्वैकत्वतया प्रवर्द्धमानशमपूरो विकारान् मूलात् उन्मूलयति ।

ज्ञानध्यानतपःशील–सम्यक्त्वसहितोऽप्यहो ।
तं नाऽऽप्नोति गुणं साधु–र्यमाप्नोति शमान्वितः ॥ ५ ॥

ज्ञानध्यानेति—ज्ञानं—तत्त्वावबोध., ध्यानं—परिणामस्थिरतारूपम्, तप.—इच्छानिरोधः, शीलं-ब्रह्मचर्यं सम्यक्त्वं-तत्त्वश्रद्धानम्, पदानाम् उत्क्रमता द्वन्द्वसमासात्, इत्यादिगुणोपेत साधु. साधयति रत्नत्रयकरणेन मोक्षं स साधु' तं निरावरणगुण केवलज्ञानादिगुणं नाप्नोति न प्राप्नोति यं गुण शमान्वितः—शमताचरित्रमय आप्नोति—प्राप्नोति, लभते इत्यर्थः । अत्र ज्ञानादयो गुणा निरावरणाऽमलकेवलज्ञानस्य परंपराकारणं शम कषायाभाव, यथाख्यातसंयम केवलज्ञानस्यासन्नकारणम् अस्वकरणसमीकरणकिट्टीकरणवीर्येण सूक्ष्मलोभं खण्डश कृत्वा क्षयं नीते सति निर्विकल्पसमाधौ अभेदरत्नत्रयीपरिणति क्षीणमोहावस्थायां यथाख्यातचारित्री परमशमान्वित ज्ञानावरणदर्शनावरणान्तरायक्षयं नयति, लभत च सकलामलकेवलज्ञानं केवलदर्शनं परमदानादिधी . अत एव क्षायोपशमिकज्ञानी यं न प्राप्नोति तं परमशमान्वित प्राप्नोति, अत अव धीरा दर्शनज्ञाननिपुणा अभ्यस्यन्ति पूर्वाभ्यासम्, आश्रयन्ति गुरुकुलवासं रमन्ते निर्जने वने तेन आत्मविशुद्ध्यर्थी शमपरेण उद्यतेत ॥५॥

स्वयम्भूरमणस्पर्धि–वर्द्धिष्णुशमतारसः ।
मुनिर्येनोपमीयेत, कोऽपि नासौ चराचरे ॥ ६ ॥

स्वयम्भू इति—स्वयम्भूरमण —अर्द्धरज्जुप्रमाण प्रान्त-समुद्र , तस्य स्पर्द्धी स्पर्धाकारी , वर्द्धिष्णु —वर्द्धमान शमतारस . शमता—रागद्वेषाभाव तस्या रसो यस्य स एवंविधो मुनि , त्रिकालाविषयी—अतीतकालरमणीयविषयस्मरणाभाववान् , वर्त्तमानेन्द्रियगोचरप्राप्तविषयरमणाभाववान् , अतीतकालपनोद्यविषयेच्छाऽभाववान् मुनि येन उपमानेन उपमीयेत चराचरे विश्वे असौ कोऽपि न जगति , यतस्तत्सर्वम् , अचेतनपुद्गलस्कन्धजं मूर्त च , तत् शमतारसेन सहजात्यन्तिकनिरुपमचरितशमभावस्वरूपेण कथमुपमीयेत, दुर्लभो हि शमतारसः विश्वविश्वशुभाशुभभावे परत्वेन अरक्तद्विष्टतया वृत्तिः शुद्धात्मानुभव. । उक्तं च–" वंदिज्जमाणा न समुल्लसति, हीलिज्जमाणा न समुज्जलंति । दतेण चित्तेन चलंति धीरा , मुणी समुग्घाइयरागदोसा ॥ १ ॥ 'बालाभिरामेसु दुहावहेसु, न तं सुहं कामगुणेसु रायं । विरत्तकामाण तवोधणाणं, जं भिक्खुणो सीलगुणे रयाणं ॥ २ ॥ " इति । शमतास्वादिनां नरेशभोगा रोगा. , चिन्तामणिसमूहा. कर्करव्यूहा. , 'वृन्दारका दारका इव भासन्ते अतः संयोगजा रतिर्दु खं , शमतैव महानन्द. ॥

शमसूक्तसुधासिक्तं, येषां नक्तंदिनं मनः ।
कदाऽपि ते न दह्यन्ते, रागोरगविषोर्मिभिः ॥ ७ ॥

शमसूक्त इति—येषां महात्मनां मनः—चित्तं शमः कषायाभावः चारित्रपरिणामः तस्य सूक्तानि—सुभाषितानि तान्येव सुधा—अमृतं तेन सिक्तम्—अभिषिक्त नक्तंदिनम्—अहोरात्र ते रागोरगविषोर्मिभि' रागः-अभिष्वङ्गलक्षण. स एव उरगः—सर्पः तस्य विषस्य ऊर्मयः तैः शमता सिक्ता न दह्यन्ते, जगद्जीवा रागाहिदष्टाः, विषोर्मिघूर्मिताः , भ्रमन्ति इष्टसंयोगानिष्टवियोगचिन्तया, विकल्पयन्ति बहुविधान् अग्रशौचादिकल्पनाकल्लोलान्, संगृह्णन्ति अनेकान् जगदुच्छिष्टान् पुद्गलस्कन्धान्, याचयन्ति अनेकान् धनार्जनोपायान्, प्रविशन्ति कूपेषु, विशन्ति यानपात्रेषु, द्रव्याद्यहितं हितवत् मन्यमाना., जगदुपकारितीर्थङ्करवाक्यश्रवणप्राप्तशमताधना. स्वरूपानन्दभोगिनः स्वभावभासनस्वभावरमणस्वभावानुभवेन सदा असङ्गमग्ना विचरन्ति आत्मगुणानन्दनवने, अतः सर्वपरभावैकत्वं विहाय रागद्वेषविभावमपहाय शमतावत्त्वेन भवनीयम् ।

गर्जज्ज्ञानगजोत्तुङ्ग–रङ्गद्ध्यानतुरङ्गमाः ।
जयन्ति मुनिराजस्य, शमसाम्राज्यसम्पदः ॥ ८ ॥

गर्जज्ज्ञानमिति-मुनिराजस्य शमसाम्राज्यसंपदो जयन्ति । कथंभूता. संपद' ?–गर्जज्ज्ञानगतोत्तुङ्गरङ्गद्ध्यानतुरङ्गमा गर्जत्—स्फुरद् ज्ञानं—स्वपरावभासनरूप तद्रूपा गजा. तै. उत्तुङ्गा-उन्नता रङ्गत्-नृ यत् ध्यानं तद्रूपास्तुरङ्गमा-अश्वा यासु ता. , इत्यनेन भासनगजध्यानाश्वशोभिता राज्यसंपदो निर्ग्रन्थस्वरूपभूपस्य जयन्ति, अतः शमतारूपदमुनीना महाराजत्वं सदैव जयति, अत. शमाभ्यासवता भवितव्यम् इत्युपदेश । अष्ट० ६ अष्ट० । " उपभोगोपायपरो, वाञ्छति य. शमयितुं विषयमृगतृष्णाम् । धावत्याक्रमितुमसौ, पुरोऽपराह्णे निजच्छायाम् ॥१॥ " आचा० १ श्रु०२अ० ४उ०।

श्रम–पुं० । खेदे,विशे० । रा० । अध्वादिखेदे, विपा० १ श्रु० ४ अ० ।

सम–पुं० । रागद्वेषरहिते,आतु० । दश० । विशे० । समो–रागद्वेषवियुक्तो य. सर्वभूतान्यात्मवत्पश्यति । आव० ६ अ० । मध्यस्थ, निन्दाया पूजायां च तुल्ये , स्था० ८ ठा० ३ उ० ।

-अरक्तद्विष्टतया मध्यस्थे, सूत्र० १ श्रु० १३ अ०। सर्वत्र मैत्रीभावतुल्ये, अनु०। प्रेक्षणीयतुल्यतृणमणिमुक्तारूपे, प्रश्न० ५ सव० द्वार। अष्टमीचन्द्रसदृशे, ज० २ वक्ष०। समभावोपेते, सूत्र० १ श्रु० २ अ० २ उ०। आ० चू०। विषमोन्नतिवर्जे, जी० ३ प्रति० १ अधि० २ उ०। औ०। आचा०। सर्वत्र तुल्यरूपेण वर्त्तने, विशे०। सदृशे, नं०। उत्त०। सूत्र०। तुल्ये, पञ्चा० १० विव०। विशे०। सूत्र०। स्था०। ज्ञा०। औ०।

(३) नैरयिकादीनां समाहारसमशरीरादिविषये पृच्छा—

नेरइया णं भन्ते ! सव्वे समाहारा सव्वे समसरीरा सव्वे समुस्सासनीसासा ?, गोयमा ! णोइणट्ठे समट्ठे। से केणऽट्ठेणं भंते ! एवं वुच्चइ नेरइया नो सव्वे समाहारा नो सव्वे समसरीरा नो सव्वे समुस्सासनिस्सासा ?, गोयमा ! नेरइया दुविहा पन्नत्ता, तं जहा महासरीरा य, अप्पसरीरा य। तत्थ णं जे ते महासरीरा ते बहुतराए पोग्गले आहारेन्ति बहुतराए पोग्गले परिणामेंति बहुतराए पोग्गले उस्ससंति बहुतराए पोग्गले नीससंति अभिक्खणं आहारेंति अभिक्खणं परिणामेंति अभिक्खणं ऊससंति अभिक्खणं नीससंति। तत्थ णं जे ते अप्पसरीरा ते णं अप्पतराए पोग्गले आहारेंति अप्पतराए पोग्गले परिणामेंति अप्पतराए पोग्गले उस्ससंति अप्पतराए पोग्गले नीससंति, आहच्च आहारेंति आहच्च परिणामेंति आहच्च उस्ससंति आहच्च नीससंति, से तेणट्ठेणं गोयमा ! एवं वुच्चइ-नेरइया नो सव्वे समाहारा ०जाव नो सव्वे समुस्सासनिस्सासा। नेरइया णं भंते ! सव्वे समकम्मा ?, गोयमा ! णो इणट्ठे समट्ठे। से केणट्ठेणं ?, गोयमा ! नेरइया दुविहा पण्णत्ता, तं जहा-पुव्वोववन्नगा य, पच्छोववन्नगा य। तत्थ णं जे ते पुव्वोववन्नगा ते णं अप्पकम्मतरागा, तत्थ णं जे ते पच्छोववन्नगा ते णं महाकम्मतरागा, से तेणट्ठेणं गोयमा ! एवं० नेरइया णं भंते ! सव्वे समवन्ना ?, गोयमा ! नो इणट्ठे समट्ठे, से केणट्ठेण, तहेव गोयमा ! जे ते पुव्वोववन्नगा ते णं विसुद्धवन्नतरागा, तत्थ णं जे ते पच्छोववन्नगा ते णं अविसुद्धवन्नतरागा तहेव से तेणट्ठेणं एवं०। नेरइया णं भंते ! सव्वे समलेस्सा ?, गोयमा ! नो इणट्ठे समट्ठे, से केणट्ठेणं० जाव नो सव्वे समलेस्सा ?, गोयमा ! नेरइया दुविहा पण्णत्ता, तं जहा-पुव्वोववन्नगा य, पच्छोववन्नगा य। तत्थ णं जे ते पुव्वोववन्नगा ते णं विसुद्धलेस्सतरागा, तत्थ णं जे ते पच्छोववन्नगा ते णं अविसुद्धलेस्सतरागा, से तेणट्ठेणं०। नेरइया णं भंते ! सव्वे समवेयणा ?, गोयमा ! नो इणट्ठे समट्ठे, से केणट्ठेणं ?, गोयमा ! नेरइया दुविहा पण्णत्ता, तं जहा-सन्निभूया य, असन्निभूया य। तत्थ णं जे ते सन्निभूया ते णं महावेयणा, तत्थ णं जे ते असन्निभूया ते णं अप्पवेयणतरागा, से तेणट्ठेणं गोयमा ! एवं वुच्चइ नेरइया नो सव्वे समवेयणा० जाव निस्सासा। नेरइया सव्वे समकिरिया ?, गोयमा ! णो इणट्ठे समट्ठे, से केणट्ठेणं ?, गोयमा ! नेरइया तिविहा पण्णत्ता। तं जहा-सम्मादिट्ठी मिच्छादिट्ठी सम्मामिच्छादिट्ठी, तत्थ णं जे ते सम्मादिट्ठी तेसि णं चत्तारि किरियाओ पण्णत्ताओ, तं जहा-आरंभिया १ परिग्गहिया २ मायावत्तिया ३ अप्पच० ४, तत्थ णं जे ते मिच्छादिट्ठी तेसि णं पंच किरियाओ कज्जंति-आरंभिया ०जाव मिच्छादंसणवत्तिया, एवं सम्मामिच्छादिट्ठीणं पि, से तेणट्ठेणं गोयमा ! ०। नेरइया णं भंते ! सव्वे समाउया सव्वे समोववन्नगा, गोयमा ! नो इणट्ठे समट्ठे, से केणट्ठेणं ? गोयमा ! नेरइया चउव्विहा पन्नत्ता, तं जहा-अत्थेगइया समाउया समोववन्नगा १ अत्थेगइया समाउया विसमोववन्नगा २ अत्थेगइया विसमाउया समोववन्नगा ३ अत्थेगइया विसमाउया विसमोववन्नगा ४ से तेणट्ठेणं गोयमा ! एवं०। असुरकुमारा णं भंते ! सव्वे समाहारा सव्वे समसरीरा, जहा नेरइया, तहा भाणियव्वा, नवरं कम्मवन्नलेस्साओ परिवत्तणेयव्वाओ, पुव्वोववन्नगा महाकम्मतरागा अविसुद्धवन्नतरागा अविसुद्धलेसतरागा, पच्छोववन्नगा पसत्था, सेसं तहेव, एवं० जाव थणियकुमाराणं। पुढविकाइयाणं आहारकम्मवन्नलेस्सा जहा नेरइयाणं। पुढविकाइया णं भंते ! सव्वे समवेयणा ?, हंता समवेयणा, से केणट्ठेणं भंते ! समवेयणा ?, गोयमा ! पुढविकाइया सव्वे असन्नी असन्नीभूया अणिदाए वेयणं वेदेंति से तेणट्ठेणं०। पुढविकाइया णं भंते ! सव्वे समकिरिया ?, हंता ! समकिरिया, से केणट्ठेणं ?, गोयमा पुढविकाइया सव्वे माई मिच्छादिट्ठी, ताणं णियइयाओ पंच किरियाओ कज्जंति, तं जहा—आरंभिया० जाव मिच्छादंसणवत्तिया, से तेणट्ठेणं समाउया समोववन्नगा, जहा नेरइया तहा भाणियव्वा, जहा पुढविकाइया तहा० जाव चउरिंदिया। पंचिंदियतिरिक्खजोणिया जहा नेरइया नाणत्तं किरियासु, पंचिंदियतिरिक्खजोणिया णं भंते ! सव्वे समकिरिया ?, गोयमा ! णो ऽतिणट्ठे समट्ठे। से केणट्ठेणं, गोयमा ! पंचिंदियतिरिक्खजोणिया तिविहा पन्नत्ता, तं जहा—सम्मादिट्ठी मिच्छादिट्ठी सम्मामिच्छादिट्ठी, तत्थ णं जे ते सम्मादिट्ठी ते दुविहा पन्नत्ता, तं जहा-अस्संजया य, संजयासंजया य। तत्थ णं जे ते संजयासंजया तेसि णं तिन्नि

किरियाओ कज्जंति,तं जहा-आरंभिया परिग्गहिया मायावत्तिया,असंजयाणं चत्तारि, मिच्छादिट्ठीणं पंच, सम्मामिच्छादिट्ठीणं पंच, मणुस्सा जहा नेरइया नाणत्तं जे महासरीरा ते बहुतराए पोग्गले आहारेंति आहच्च आहारेंति,जे अप्पसरीरा अप्पतराए आहारेंति अभिक्खणं आहारेंति सेसं जहा नेरइयाणं०जाव वेयणा। मणुस्सा णं भंते ! सव्वे समकिरिया ?, गोयमा ! णो इणट्ठे समट्ठे, से केणट्ठेणं ?, गोयमा ! मणुस्सा तिविहा पन्नत्ता, तं जहा-सम्मद्दिट्ठी मिच्छादिट्ठी सम्मामिच्छादिट्ठी । तत्थ णं जे ते सम्मद्दिट्ठी ते तिविहा पण्णत्ता, तं जहा-संजया, असंजया, संजयासंजया य। तत्थ णं जे ते संजया ते दुविहा पण्णत्ता,तं जहा-सरागसंजया य,वीयरागसंजया य। तत्थ णं जे ते वीयरागसंजया ते णं अकिरिया,तत्थ णं जे ते सरागसंजया ते दुविहा पण्णत्ता , तं जहा-पमत्तसंजया य, अप्पमत्तसंजया य। तत्थ णं जे ते अप्पमत्तसंजया तेसि णं एगा मायावत्तिया किरिया कज्जइ,तत्थ णं जे ते पमत्तसंजया तेसि णं दो किरियाओ कज्जंति,तं जहा-आरंभिया य,मायावत्तिया य। तत्थ णं जे ते संजयासंजया तेसिं णं आइल्लाओ तिन्नि किरियाओ कज्जंति, तं जहा-आरंभिया१ परिग्गहिया२ मायावत्तिया ३ । असंजयाणं चत्तारि किरियाओ कज्जंति-आरंभिया १ परिग्गहिया २ मायावत्तिया ३ अपच्च० ४, मिच्छादिट्ठीणं पंच-आरंभिया १ परिग्गहिया २ मायावत्तिया ३ अप्पच्च०४ , मिच्छादंसण० ५ , सम्मामिच्छादिट्ठीणं पंच किरियाओ ५ । वाणमंतरजोतिसवेमाणिया जहा असुरकुमारा , नवरं वेयणाए नाणत्तं-मायिमिच्छादिट्ठी उववन्नगा य अप्पवेदणतरा, अमायिसम्मदिट्ठी उववन्नगा य, महावेयणतरागा भाणियव्वा , जोतिसवेमाणिया । सलेस्सा णं भंते ! नेरइया सव्वे समाहारगा ?, ओहियाणं सलेस्साणं सुक्कलेस्साणं, एएसि णं तिण्हं एक्को गमो, कण्हलेस्साणं नीललेस्साणं पि एक्को गमो नवरं वेदणाए मायिमिच्छादिट्ठी उववन्नगा य अमायिसम्मद्दिट्ठी। उववन्नगा भाणियव्वा। मणुस्सा किरियासु सरागवीयरागपमत्तापमत्ता-णं भाणियव्वा। काउलेसाए वि एसेव गमो, नवरं नेरइए जहा ओहिए दण्डए तहा भाणियव्वा, तेउलेस्सा पम्हलेस्सा जस्स अत्थि जहा ओहिओ दण्डओ तहा भाणियव्वा । नवरं मणुस्सा सरागा वीयरागा य न भाणियव्वा। गाहा-"दुक्खाउए उदिन्ने, आहारे कम्मवन्नलेस्सा य । समवेयण समकिरिया, समाउए चेव बोद्धव्वा ॥ १ ॥" ( सू०-२१ )

'नेरइय' इत्यादि व्यक्तं, नवरं 'महासरीरा य अप्पसरीरा य' इत्यादि , इहाल्पत्वं महत्त्वं चापेक्षिकं, तत्र जघन्यम् अल्पत्वमङ्गुलासंख्येयभागमात्रत्वम् , उत्कृष्टं तु महत्त्वं पञ्चधनुःशतमानत्वम् , एतच्च भवधारणीयशरीरापेक्षया , उत्तरवैक्रियापेक्षया तु जघन्यमङ्गुलमसंख्यातभागमात्रत्वम् , इतरत्तु धनुस्सहस्रमानत्वमिति, एतेन च किं समशरीरा इत्यत्र प्रश्ने उत्तरमुक्तम् , शरीरविषमताऽभिधाने चाहारोच्छ्वासयोर्वैषम्यं सुखप्रतिपाद्यं भवतीति शरीरप्रश्नस्य द्वितीयस्थानोक्तस्यापि प्रथमं निर्वचनमुक्तम् । अथाहारोच्छ्वासप्रश्नयोर्निर्वचनमाह—'तत्थ णं' मित्यादि ये यतो महाशरीरास्ते तदपेक्षया बहुतरान् पुद्गलान् आहारयन्ति, महाशरीरत्वादेव, दृश्यते हि लोके बृहच्छरीरो बह्वाशी स्वल्पशरीरश्चाल्पभोजी, हस्तिशशकवत् , बाहुल्यापेक्षं चेदमुच्यते अन्यथा बृहच्छरीरोऽपि कश्चिदल्पमश्नाति अल्पशरीरोऽपि कश्चिद्भूरि भुङ्क्ते, तथाविधमनुष्यवत् , न पुनरेवमिह , बाहुल्यपक्षस्यैवाश्रयणात् , ते च नारका उपपातादिसद्वेद्यानुभवादन्यत्रासद्वेद्योदयवर्तित्वेनैकान्तेन च-था महाशरीरा दुःखितास्तीव्राहाराभिलाषाश्च भवन्तीति । 'बहुतराए पोग्गले परिणामेंति ' त्ति—आहारपुद्गलानुसारित्वात्परिणामस्य बहुतरानित्युक्तं, परिणामश्चापृष्टोऽप्याहारकार्यमिति कृत्वोक्तः। तथा 'बहुतराए पोग्गले उस्ससंति' त्ति-उच्छ्वासतया गृह्णन्ति, 'निस्ससंति' त्ति—निःश्वासतया विमुञ्चन्ति, महाशरीरत्वादेव, दृश्यते हि बृहच्छरीरस्तज्जातीयेतरापेक्षया बहूच्छ्वासनिःश्वास इति, दुःखितोऽपि तथैव दुःखिताश्च नारका इति बहुतरांस्तानुच्छ्वसन्तीति । तथाऽऽहारस्यैव कालकृतं वैषम्यमाह—'अभिक्खणं आहारेंति' त्ति—अभीक्ष्णं पौनःपुन्येन यो यतो महाशरीरः स तदपेक्षया शीघ्रशीघ्रतराहारग्रहण इत्यर्थः, ' अभिक्खणं ऊससंति अभिक्खणं नीससंति ' एते हि महाशरीरत्वेन दुःखिततरत्वात् अभीक्ष्णम्—अनवरतमुच्छ्वासादि कुर्वन्तीति । तथा '(तत्थ णं) जे ते ' इत्यादि ये ते, इह 'ये' इत्येतावतैवार्थसिद्धौ यत्ते इत्युच्यते तद्भाषामात्रमेवेति, 'अप्पसरीरा अप्पतराए पोग्गले आहारेंति ' त्ति-ये यतोऽल्पशरीरास्ते तदाहरणीयपुद्गलापेक्षयाऽल्पतरान् पुद्गलानाहारयन्ति, अल्पशरीरत्वादेव 'आहच्च आहारेंति ' त्ति—कदाचिदाहारयन्ति कदाचिन्नाहारयन्ति, महाशरीराहारग्रहणान्तरालापेक्षया बहुतरकालान्तरालतयेत्यर्थ , 'आहच्च ऊससंति नीससंति ' त्ति—एते ह्यल्पशरीरत्वेनैव महाशरीरापेक्षयाऽल्पतरदुःखत्वात् आहत्य कदाचित् सान्तरमित्यर्थः उच्छ्वासादि कुर्वन्ति , यच्च नारकाः सन्ततमेवोच्छ्वासादि कुर्वन्तीति प्रागुक्तं तन्महाशरीरापेक्षयेत्यवगन्तव्यमिति । अथवा—अपर्याप्तकालेऽल्पशरीराः सन्तो लोमाऽऽहारापेक्षया नाऽऽहारयन्ति अपर्याप्तकत्वेन च नोच्छ्वसन्ति, अन्यदा त्वाहारयन्ति उच्छ्वसन्ति चेत्यत आहत्याहारयन्ति आहत्योच्छ्वसन्ति इत्युक्तम् ; ' से तेणट्ठेणं गोयमा ! एवं वुच्चइ-नेरइया सव्वे नो समाहारे' त्यादि निगमनमिति । समकर्मसूत्रे—' पुव्वोववन्नगा य पच्छोववन्नगा य' त्ति-पूर्वोत्पन्नाः प्रथमतरमुत्पन्नास्तदन्ये तु पश्चादुत्पन्नाः, तत्र पूर्वोत्पन्नानामायुषस्तदन्य-

कर्मणां च बहुतरवेदनादल्पकर्मत्वम् , पश्चादुत्पन्नानां च नारकाणामायुष्कादीनामल्पतराणां वेदितत्वात् महाकर्मत्वम् , एतच्च सूत्रं समानस्थितिका ये नारकास्तानङ्गीकृत्य प्रणीतम् , अन्यथा हि रत्नप्रभायामुत्कृष्टस्थितेर्नारकस्य बहुन्यायुषि क्षयमुपगते पल्योपमावशेषे च तिष्ठति तस्यामेव रत्नप्रभायां दशवर्षसहस्रस्थितिर्नारकोऽन्यः कश्चिदुत्पन्न इति कृत्वा प्रागुत्पन्नं पल्योपमायुष्कं नारकमपेक्ष्य किं वक्तुं शक्यं महाकर्मेति ? । एवं वर्णसूत्रे पूर्वोत्पन्नस्याल्पं कर्म ततस्तस्य विशुद्धो वर्णः , पश्चादुत्पन्नस्य च बहुकर्मत्वादविशुद्धतरो वर्ण इति । एवं लेश्यासूत्रेऽपि , इह च लेश्याशब्देन भावलेश्या ग्राह्या, बाह्यद्रव्यलेश्या तु वर्णद्वारेणैवोक्तेति । ' समवेयण ' त्ति—समवेदनाः—समानपीडाः 'सन्निभूय ' त्ति—संज्ञा-सम्यग्दर्शनं तद्वन्तः संज्ञिनः संज्ञिनो भूताः-संज्ञित्वं गताः संज्ञिभूताः । अथवा—असंज्ञिनः संज्ञिनो भूताः संज्ञिभूताः , च्विप्रत्ययोगात् , मिथ्यादर्शनमपहाय सम्यग्दर्शनजन्मना समुत्पन्ना इति यावत् , तेषां च पूर्वकृतकर्मविपाकमनुस्मरतामहो महद्दुःखसङ्कटम् , इदमकस्मादस्माकमापतितं न कृतो भगवदर्हत्प्रणीतः सकलदुःखक्षयकरो विषयविषमविषपरिभोगविप्रलब्धचेतोभिर्धर्म इत्यतो महद् दुःखं मानसमुपजायते अतो महावेदनास्ते , असंज्ञिभूतास्तु मिथ्यादृष्टयः , ते तु स्वकृतकर्मफलमिदमित्येवमजानन्तोऽनुपतप्तमानसा अल्पवेदनाः स्युरित्येके , अन्ये त्वाहुः — संज्ञिनः—संज्ञिपञ्चेन्द्रियाः सन्तो भूताः—नारकत्वं गताः सन्निभूताः , ते महावेदनाः तीव्राशुभाध्यवसायेनाशुभतरकर्मबन्धनेन महानरकेषूत्पादात् , असंज्ञिभूतास्त्वनुभूतपूर्वासंज्ञिभवाः , ते चासंज्ञित्वादेवात्यन्ताशुभाध्यवसायाभावात् रत्नप्रभायामनतितीव्रवेदननरकेषूत्पादादल्पवेदनाः , अथवा—'सन्निभूताः ' पर्याप्तकीभूताः , असंज्ञिभूतास्तु अपर्याप्तकाः , ते च क्रमेण महावेदना इतरे च भवन्तीति प्रतीयत एवेति । ' समकिरिय ' त्ति—समा - तुल्या क्रियाः—कर्मनिबन्धनभूता आरम्भिक्यादिका येषां ते समक्रियाः , 'आरंभिय ' त्ति—आरम्भः—पृथिव्याद्युपमर्दः स प्रयोजनं—कारणं यस्याः साऽऽरम्भिकी १ , 'परिग्गहिय ' त्ति-परिग्रहो—धर्मोपकरणवर्जवस्तुस्वीकारो धर्मोपकरणमूर्च्छा च स प्रयोजनं यस्याः सा पारिग्रहिकी २, ' मायावत्तिय' त्ति-माया-अनार्जवम् उपलक्षणत्वात्क्रोधादिरपि च; सा प्रत्ययः—कारणं यस्याः सा मायाप्रत्यया ३ , ' अपच्चक्खाणकिरिय ' त्ति—अप्रत्याख्यानेन-निवृत्त्यभावेन क्रिया—कर्मबन्धादिकरणम् । अप्रत्याख्यानक्रियेति ४, 'पंच किरियाओ कज्जंति' त्ति—क्रियन्ते, कर्मकर्त्तरि प्रयोगोऽयं तेन भवन्तीत्यर्थः , ' मिच्छादंसणवत्तिय ' त्ति—मिथ्यादर्शनं प्रत्ययो—हेतुर्यस्याः सा मिथ्यादर्शनप्रत्यया । ननु मिथ्यात्वाविरतिकषाययोगाः कर्मबन्धहेतव इति प्रसिद्धिः, इह तु आरम्भादयस्तेऽभिहिता इति कथं न विरोधः ? , उच्यते-आरम्भपरिग्रहशब्दाभ्यां योगपरिग्रहो योगानां तद्रूपत्वात्, शेषपदैस्तु शेषबन्धहेतुपरिग्रहः प्रतीयत एवेति, तत्र सम्यग्दृष्टीनां चतस्र एव , मिथ्यात्वाभावात् शेषाणां तु पञ्चापि,सम्यग्मिथ्यात्वस्य मिथ्यात्वेनैवेह विवक्षितत्वादिति । ' सव्वे समाउया' इत्यादिप्रश्नस्य निर्वचनचतुर्भङ्ग्या भावना क्रियते, निबद्धदशवर्षसहस्रप्रमाणायुषो युगपच्चोत्पन्ना इति प्रथमभङ्गः १. केचिच्चैव दशवर्षसहस्रस्थितिषु नरकेष्वेके प्रथमतरमुत्पन्ना अपरे तु पश्चादिति द्वितीयः २, अन्यैर्विषममायुर्निबद्धं कैश्चिद्दशवर्षसहस्रस्थितिषु कैश्चिच्च पञ्चदशवर्षसहस्रस्थितिषु उत्पत्तिः पुनर्युगपदिति तृतीयः ३, केचित्सागरोपमस्थितयः केचिच्च दशवर्षसहस्रस्थितय इत्येवं विषमायुषो विषममेव चोत्पन्ना इति चतुर्थः ४, इह संग्रहगाथा—" आहाराईसु समा, कम्मे वन्ने तहेव लेसाए । वियणाए किरियाए, आउयउववत्ति चउभंगी ॥ १ ॥" ' असुरकुमाराणं भंते' इत्यादिना असुरकुमारप्रकरणमाहारादिपदनवकोपेतं सूचितं, तच्च नारकप्रकरणवज्ज्ञेयम् , एतदेवाह-' जहा नेरइया ' इत्यादि, तत्राहारकसूत्रे नारकसूत्रसमानेऽपि भावनाविशेषेण लिख्यते-असुरकुमाराणामल्पशरीरत्वं भवधारणीयशरीरापेक्षया जघन्यतोऽङ्गुलासंख्येयभागमानत्वं, महाशरीरत्वं तूत्कर्षतः सप्तहस्तप्रमाणत्वम् , उत्तरवैक्रियापेक्षया त्वल्पशरीरत्वं जघन्यतोऽङ्गुलसंख्येयभागमानत्वं महाशरीरत्वं तूत्कर्षतो योजनलक्षमानमिति, तत्रैते महाशरीरा बहुतरान् पुद्गलानाहारयन्ति, मनोभक्षणलक्षणाहारापेक्षया, देवानां ह्यसौ स्यात् प्रधानश्च, प्रधानापेक्षया च शास्त्रे निर्देशो वस्तूनां विधीयते, ततोऽल्पशरीरग्राह्याहारपुद्गलापेक्षया बहुतरास्ते तानाहारयन्तीत्यादि प्राग्वत् , अभीक्ष्णमाहारयन्ति अभीक्ष्णमुच्छ्वसन्ति च इत्यत्र ये चतुर्थादेरुपर्याहारयन्ति स्तोकसप्तकादेश्चोपर्युच्छ्वसन्ति तानाश्रित्याभीक्ष्णमित्युच्यते, उत्कर्षतो ये सातिरेकवर्षसहस्रस्योपरि आहारयन्ति सातिरेकपक्षस्य चोपर्युच्छ्वसन्ति तानङ्गीकृत्य एतेषामल्पकालीनाहारोच्छ्वासत्वेन पुनः पुनराहारयन्तीत्यादिव्यपदेशविषयत्वादिति, तथाऽल्पशरीरा अल्पतरान् पुद्गलानाहारयन्ति उच्छ्वसन्ति च अल्पशरीरत्वादेव, यत्पुनस्तेषां कादाचित्कत्वमाहारोच्छ्वासयोस्तन्महाशरीराहारोच्छ्वासान्तरालापेक्षया बहुतमान्तरालत्वात्, तत्र हि अन्तराले ते नाऽऽहारादि कुर्वन्ति तदन्यत्र कुर्वन्तीत्येवंविवक्षणादिति , महाशरीराणामप्याहारोच्छ्वासयोरन्तरालमस्ति, किन्तु-तदल्पमित्यविवक्षणादेवाभीक्ष्णमित्युक्तं, सिद्धं च महाशरीराणां तेषामाहारोच्छ्वासयोरल्पान्तरत्वम् , अल्पशरीराणां तु महान्तरत्वं, यथा सौधर्मदेवानां सप्तहस्तमानतया महाशरीराणां तयोरन्तरं क्रमेण वर्षसहस्रद्वयं पक्षद्वयं च, अनुत्तरसुराणां च हस्तमानतया अल्पशरीराणां त्रयस्त्रिंशद्वर्षसहस्राणि त्रयस्त्रिंशदेव च पक्षा इति । एषां च महाशरीराणामभीक्ष्णमाहारोच्छ्वासाभिधानेनाल्पस्थितिकत्वमवसीयते, इतरथा तु विपर्ययो वैमानिकवदेवेति, अथवा—लोमाहारापेक्षयाऽभीक्ष्णम्—अनुसमयमाहारयन्ति महाशरीराः पर्याप्तकावस्थायाम् , उच्छ्वासस्तु यथोक्तमानेनापि भवन् परिपूर्णभवापेक्षया पुनः पुनरित्युच्यते, अपर्याप्तकावस्थायां त्वल्पशरीरा लोमाहारतो नाहारयन्ति ओजआहारतः पर्याहरणात् इति कदाचित्ते आहारयन्तीत्युच्यते, उच्छ्वासापर्याप्तकावस्थायां च नोच्छ्वसन्त्यन्यदा तूच्छ्वसन्तीत्युच्यते आहत्योच्छ्व-

सन्तीति 'कम्मवन्नलेस्साओ (वि)परिवन्नेयव्वाओ' त्ति-कर्मादीनि नारकापेक्षया विपर्ययेण वाच्यानि । तथाहि-नारका ये पूर्वोत्पन्नास्तेऽल्पकर्मकशुद्धतरवर्णशुभतरलेश्या उक्ता, असुरास्तु ये पूर्वोत्पन्नास्ते महाकर्माणोऽशुद्धवर्णा अशुभतरलेश्याश्चेति । कथम् ? ये हि पूर्वोत्पन्ना असुरास्तेऽतिकन्दर्पदर्पाध्मातचित्तत्वान्नारकाननेकप्रकारया यातनया यातयन्त. प्रभूतमशुभं कर्म संचिन्वन्तीत्यतोऽभिधीयन्ते ते महाकर्माण, । अथवा-ये बद्धायुषस्ते तिर्यगादिप्रायोग्यकर्म्मप्रकृतिबन्धनान्महाकर्म्माण, तथा अशुभवर्णा अशुभलेश्याश्च ते, पूर्वोत्पन्ना हि क्षीणत्वात् शुभकर्माणः शुभवर्णादय शुभो वर्णो लेश्या च इत्यतीति, पश्चादुत्पन्नास्त्वबद्धायुषोऽल्पकर्माणो बहुतरकर्मणामबन्धनादशुभकर्म्मणामक्षीणत्वाच्च शुभवर्णादय स्युरिति । वेदनासूत्रं च यद्यपि नारकाणामिवासुरकुमाराणामपि तथापि तद्भावनाया विशेष, स चायम्-ये सञ्ज्ञिभूतास्ते महावेदना, चारित्रविराधनाजन्यचित्तसन्तापात्, अथवा-सञ्ज्ञिभूता. संज्ञिपूर्वभवा पर्याप्ता वा ते शुभवेदनामाश्रित्य महावेदना इतरे त्वल्पवेदना इति । एवं नागकुमारादयोऽपि ६ औचित्येन वाच्या ॥ 'पुढविक्काइया णं भंते ! आहारकम्मवन्नलेस्सा जहा नेरइया णं ति-चत्वार्यपि सूत्राणि नारकसूत्राणीव पृथिवीकायिकाभिलापेनाधीयन्त इत्यर्थ., केवलमाहारसूत्रे भावनैवम्—पृथिवीकायिकानामङ्गुलासंख्येय—भागमात्रशरीरत्वेऽप्यल्पशरीरत्वम् । इतरथेत आगमवचनादवसेयम् । 'पुढविक्काइयस्स ओगाहणट्ठयाए चउट्ठाणवडिए' त्ति-ते च महाशरीरा लोमाहारतो बहुतरान् पुद्गलानाहारयन्तीति उच्छ्वसन्ति च अभीक्ष्णं महाशरीरत्वादेव. अल्पशरीराणामल्पाहारोच्छ्वासत्वमल्पशरीरत्वादेव, कादाचित्कत्वं च तयो पर्याप्तकेतरावस्थापेक्षमवसेयम् ॥ तथा कर्मादिसूत्रेषु पूर्वपश्चादुत्पन्नानां पृथिवीकायिकाना कर्मवर्णलेश्याविभागो नारकै सम एव, वेदनाक्रिययोस्तु नानात्वमत एवाह-'असन्नि' त्ति-मिथ्यादृष्टयोऽमनस्का वा 'असन्निभूय' त्ति—असंज्ञिभूता असंज्ञिना या जायते तामित्यर्थ, एतदेव व्यनक्ति—'अणिदाए' त्ति—अनिर्द्धारणया वेदनां वेदयन्ति, वेदनामनुभवन्तोऽपि न पूर्वोपात्ताशुभकर्मपरिणतिरियमिति—मिथ्यादृष्टित्वादवगच्छन्ति, विमनस्कत्वाद्वा मत्तमूर्च्छितादिवदिति भावना । 'माईमिच्छादिट्ठि' त्ति—मायावन्तो हि तेषु प्रायेणोत्पद्यन्ते, यदाह-" उम्मग्गदेसओ मग्गणासओ गूढहिययमाइल्लो । सढसीलो य ससल्लो, तिरियाउं बंधए जीवो ॥ १ ॥ " त्ति, ततस्ते मायिन उच्यन्ते । अथवा-मायेहानन्तानुबन्धिकषायोपलक्षणम्, अतोऽनन्तानुबन्धिकषायोदयवन्तोऽत एव मिथ्यादृष्टयो—मिथ्यात्वोदयवृत्तय इति । 'ताण णियइयाओ' त्ति—तेषां पृथिवीकायिकाना नैयत्यिक्यो—नियता न तु विप्रभृतय इति, पञ्चवेत्यर्थ, 'से तेणट्टेण समकिरिय' त्ति-निगमनम्, 'जाव चउरिंदिय' त्ति—इह महाशरीरत्वमितरच्च स्वस्वावगाहनाऽनुसारेणावसेयम, आहारश्च द्वीन्द्रियादीनां प्रक्षेपलक्षणोऽपीति । 'पंचिंदियतिरिक्खजोणिया जहा नेरइय' त्ति—अयमर्थ, नवरमिह महाशरीरा अभीक्ष्णमाहारयन्ति उच्छ्व-सन्ति चेति यदुच्यते तत्संख्यातवर्षायुषोऽपेक्ष्येत्यवसेयं, तथैव दर्शनात्, नासंख्यातवर्षायुष', तेषां प्रक्षेपाहारस्य षष्ठस्योपरि प्रतिपादितत्वात्, अल्पशरीराणां त्वाहारोच्छ्वासयो. कादाचित्कत्वं वचनप्रामाण्यादिति, लोमाहारापेक्षया तु सर्वेषामप्यभीक्ष्णमिति घटत एव, अल्पशरीराणा तु यत्कादाचित्कत्वं तदपर्याप्तकत्वे लोमाहारोच्छ्वासयोरभवनेन पर्याप्तकत्वे च तद्भावेनावसेयमिति ॥ तथा कर्मसूत्रे यत्पूर्वोत्पन्नानामल्पकर्म्मत्वमितरेषां तु महाकर्मत्वं तदायुष्कादितद्भववेद्यकर्मापेक्षयाऽवसेयम् ॥ तथा वर्णलेश्यासूत्रयोर्यत्पूर्वोत्पन्नानां शुभवर्णाद्युक्तं तत्तारुण्यात् पश्चादुत्पन्नानां चाशुभवर्णादिबाल्यादवसेयम्, लोके तथैव दर्शनादिति । तथा 'संजयासंजय' त्ति—देशविरताः स्थूलात् प्राणातिपातादेर्निवृत्तत्वादितरस्मादनिवृत्तत्वाच्चेति । 'मणुस्साणं जहा नेरइय' त्ति—तथा वाच्या इति गम्यम्, 'नाणत्तं' ति—नानात्वं, भेद. पुनरयम्-तत्र 'मणुस्सा णं भंते ! सव्वे समाहारगा ?' इत्यादि प्रश्न, 'नो इणट्ठे समट्ठे' इत्याद्युत्तरं 'जाव दुविहा मणुस्सा पन्नत्ता, तंजहा-महासरीरा य, अप्पसरीरा य । तत्थ णं जे ते महासरीरा ते बहुतराए पोग्गले आहारेंति, एवं परिणामेंति ऊससंति नीससंति " इह स्थाने नारकसूत्रे 'अभिक्खणं आहारेंति' इत्यधीतम्, इह तु 'आहच्च' त्यधीयते, महाशरीरा हि देवकुर्वादिमिथुनका, ते च कदाचिदेवाहारयन्ति कावलिकाहारेण, 'अट्ठमभत्तस्स आहारो' त्ति वचनात्, अल्पशरीरास्त्वभीक्ष्णमल्पं च, बालाना तथैव दर्शनात् संमूर्च्छिममनुष्याणामल्पशरीराणामनवरतमाहारसम्भवाच्च, यच्चेह पूर्वोत्पन्नानां शुद्धवर्णादि तत्तारुण्यात् संमूर्च्छिमापेक्षया वेति । 'सरागसंजय' त्ति—अक्षीणानुपशान्तकषायाः 'वीयरागसंजय' त्ति—उपशान्तकषाया. क्षीणकषायाश्च, 'अकिरिय' त्ति—वीतरागत्वेनारम्भादीनामभावादक्रिया, 'एगा मायावत्तिय' त्ति—अप्रमत्तसंयतानामेकैव मायाप्रत्या 'किरिया कज्जइ' त्ति क्रियते—भवति कदाचिदुड्डाहरक्षणप्रवृत्तानामक्षीणकषायत्वादिति, 'आरम्भिय' त्ति-प्रमत्तसंयताना च 'सर्वं प्रमत्तयोग आरम्भ' इति कृत्वाऽऽरम्भिकी स्यात्, अक्षीणकषायत्वाच्च मायाप्रत्ययेति । 'वाणमंतरजोइसवेमाणिया जहा असुरकुमार' त्ति,-तत्र शरीरस्याल्पत्वमहत्त्वे स्वावगाहनानुसारेणावसेये । तथा वेदनायामसुरकुमारा 'सन्निभूया य असन्निभूया य, सन्निभूया महावेयणा असन्निभूया अप्पवेयणा' इत्येवमधीता, व्यन्तरा अपि तथैवाध्येतव्या, यतोऽसुरादिषु व्यन्तरान्तेषु देवेषु असञ्ज्ञिन उत्पद्यन्ते, यतोऽत्रैवोद्देशके वक्ष्यति-'असन्नीणं जहन्नेणं भवणवासीसु उक्कोसेण वाणमंतरेसु' त्ति, ते चासुरकुमारप्रकरणोक्तयुक्तेरल्पवेदना भवन्तीत्यवसेयं, यत्तु प्रागुक्तं सञ्ज्ञिन सम्यग्दृष्टयोऽसञ्ज्ञिनस्त्वितरे इति तद्वृद्धव्याख्यानुसारेणैवेति, ज्योतिष्कवैमानिकेषु त्वसञ्ज्ञिनो नोत्पद्यन्ते अतो वेदनापदे तेष्वधीयते-' दुविहा जोतिसिया-मायिमिच्छादिट्ठी उववन्नगा ये' त्यादि, तत्र मायिमिथ्यादृष्टयोऽल्पवेदना इतरे च महावेदना शुभवेदनामाश्रित्येति, एतदेव दर्शयन्नाह—न वरं 'वेयणाए इत्यादि । अथ चतुर्विंशतिदण्डकमेव ले-

श्याभेदविशेषणमाहारादिपदैर्निरूपयन् दण्डकसप्तकमाह- 'सलेस्साणं भंते ! नेरइया सव्वे समाहारग' त्ति-अनेनाहारशरीरोच्छ्वासकर्म्मवर्णलेश्यवेदनाक्रियोपपाताख्यपूर्वोक्तनवपदोपेतनारकादिचतुर्विंशतिपददण्डको लेश्यापदविशेषितः सूचितः, तदन्ये च कृष्णलेश्यादिविशेषिता । पूर्वोक्तनवपदोपेता एव यथासम्भवं नारकादिपदात्मकाः षड् दण्डकाः सूचिताः । तदेवमेतेषां सप्तानां दण्डकानां सूत्रसंक्षेपार्थं यो यथा अध्येतव्यस्तं तथा दर्शयन्नाह—' ओहियाणं ' मित्यादि, तत्रौघिकानां पूर्वोक्तानां निर्विशेषणानां नारकादीनां तथा सलेश्यानामधिकृतानामेव शुक्ललेश्यानां तु सप्तमदण्डकवाच्यानामेषा त्रयाणामेको गमः-सदृशः पाठः, सलेश्यः शुक्ललेश्यश्चेत्येवंविधविशेषणकृत एव तत्र भेदः, औघिकदण्डकसूत्रवदनयोः सूत्रमिति हृदयम् । तथा 'जस्सत्थि' इत्येतस्य वक्ष्यमाणपदस्येह सम्बन्धाद्यस्य शुक्ललेश्याऽस्ति स एव तद्दण्डकेऽध्येतव्यः, तेनेह पञ्चेन्द्रियतिर्यञ्चो मनुष्या वैमानिकाश्च वाच्या ,नारकादीनां शुक्ललेश्याया अभावादिति, ' किण्हलेस्सनीललेसाणं पि एगो गमो ' औघिक एवेत्यर्थः, विशेषमाह-नवरं ' वेयणा ' इत्यादि, कृष्णलेश्यादण्डके नीललेश्यादण्डके च वेदनासूत्रे-" दुविहा णेरइया पन्नत्ता-सन्निभूया य असन्निभूया य" त्ति, औघिकदण्डकाधीतं नाध्येतव्यम्, असंज्ञिनां प्रथमपृथिव्यामेवोत्पादात्, ' असण्णी खलु पढमम्मि' त्ति वचनात्, प्रथमायां च कृष्णनीललेश्ययोरभावात्, तर्हि किमध्येतव्यमित्याह-' मायिमिच्छादिट्ठि उववन्नगा य ' इत्यादि, तत्र मायिनो मिथ्यादृष्टयश्च महावेदना भवन्ति, यतः प्रकर्षपर्यन्तवर्त्तिनीं स्थितिमशुभां ते निर्वर्त्तयन्ति, प्रकृष्टायां च तस्यां महती वेदना संभवति, इतरेषां तु विपरीतेति । तथा मनुष्यपदे क्रियासूत्रे यद्यप्यौघिकदण्डके 'तिविहा मणुस्सा पन्नत्ता, तं जहा—सजया ३, तत्थ णं जे ते सजया ते दुविहा पन्नत्ता, तं जहा-सरागसंजया य, वीयरागसजया य। तत्थ णं जे ते सरागसंजया ते दुविहा पन्नत्ता, तं जहा-पमत्तसजया य अप्पमत्तसंजया य' त्ति पठितं, तथाऽपि कृष्णनीललेश्यादण्डकयोर्नाऽध्येतव्यं, कृष्णनीललेश्योदये संयमस्य निषिद्धत्वात्, यच्चोच्यते-' पुव्वपडिवन्नओ पुण अन्नयरीए उ लेस्साए ' त्ति, तत्कृष्णादिद्रव्यरूपां द्रव्यलेश्यामङ्गीकृत्य न तु कृष्णादिद्रव्यसाचिव्यजनितात्मपरिणामरूपां भावलेश्याम्, एतच्च प्रागुक्तमिति, एतदेव दर्शयन्नाह-' मणुस्से ' त्यादि, तथा कापोतलेश्यादण्डकोऽपि नीलादिलेश्यादण्डकवदध्येतव्यो, नवरं नारकपदे वेदनासूत्रे नारका औघिकदण्डकवदेव वाच्याः, ते चैवम्— ' नेरइया दुविहा पन्नत्ता , तं जहा—सन्निभूया य, असन्निभूया य त्ति , असंज्ञिनां प्रथमपृथिव्युत्पादेन कापोतलेश्यासम्भवादत आह—' काउलेस्साण वी ' त्यादि । तथा तेजोलेश्या पद्मलेश्या च यस्य जीवविशेषस्यास्ति तमाश्रित्य यथौघिको दण्डकस्तथा तयोर्दण्डकौ भणितव्यौ , तदस्तिता चैवम्—नारकाणां विकलेन्द्रियाणां तेजोवायूनां चाद्यास्तिस्र एव , भवनपतिपृथिव्यम्बुवनस्पतिव्यन्तराणामाद्याश्चतस्रः पञ्चेन्द्रियतिर्यग्मनुष्याणां षड् , ज्योतिषां तेजोलेश्या , वैमानिकानां तिस्रः प्रशस्ता इति ,

आह च—

" किण्हा नीला काऊ—तेऊलेसा य भवणवंतरिया ।
जोइससोहम्मीसा-ण तेउलेसा मुणेयव्वा ॥ १ ॥
कप्पे सणकुमारे , माहिंदे चेव बंभलोगे य ।
एएसु पम्हलेसा, तेण परं सुक्कलेस्सा उ ॥ २ ॥ "

तथा-

" पुढवीआउवणस्सइ-बायरपत्तेयलेस चत्तारि ।
गब्भयतिरियनरेसुं , छल्लेसा तिन्नि सेसाण ॥ ३ ॥ "

केवलमौघिकदण्डके क्रियासूत्रे मनुष्याः सरागवीतरागविशेषणा अधीताः , इह तु तथा न वाच्याः , तेजःपद्मलेश्ययोर्वीतरागत्वासम्भवात् शुक्ललेश्यायामेव तत्सम्भवात्, प्रमत्ताप्रमत्तास्तूच्यन्त इति, एतदेव दर्शयन्नाह—' तेउलेसा पम्हलेसे' त्यादि । 'गाह' त्ति-उद्देशकादित सूत्रार्थसङ्ग्रहगतार्थोऽपि सुखबोधार्थमुच्यते-दुःखमायुश्चोदीर्णं वेदयन्तीत्येकत्वबहुत्वाभ्यां दण्डकचतुष्टयमुक्तम् , तथा 'आहार' त्ति- ' नेरइया किं समाहारा ? ' इत्यादि, तथा 'किं समकम्मा ?' तथा ' किं समवन्ना ? ' तथा किं समलेसा ? तथा ' किं समवेयणा ?' तथा ' किं समकिरिया ? ' तथा किं समाउया समोववन्नग ' त्ति गाथार्थः । भ० १ श० २ उ० । ( सर्वे द्वीपकुमाराः समाहारा इति ' दीवकुमार ' शब्दे चतुर्थभागे २५४२ पृष्ठे गतम् । ) ( वाणमन्तराः सर्वे समाहाराः इति ' वाणमंतर शब्दे षष्ठे भागे गतम् । )

नैरयिकादीनां समाहारत्वादिपृच्छाविषयकाणि सूत्राणि भगवतीसूत्रवदवसेयानि तानि चेहैवोक्तानि , अथ प्रज्ञापनाटीकायां विशेष इति कृत्वा सा प्रदर्श्यते—

समशब्दः पूर्वार्द्धे प्रत्येकमपि सम्बध्यते, उत्तरार्द्धे प्रतिपदं साक्षात्सम्बन्धित एवास्ति, ततोऽयमर्थः—प्रथमोऽधिकारः सर्वे समाहाराः सर्वे समशरीराः सर्वे समोच्छ्वासा इति प्रश्नोपलक्षितः, द्वितीयः समकर्म्माण इति तृतीयः समवर्णा इति, चतुर्थः समलेश्याका इति, पञ्चमः समवेदनाका इति, षष्ठः समक्रिया इति, सप्तमः समायुष इति । अथ लेश्यापरिणामविशेषाधिकारे कथममीषामर्थानामुपन्यासोपपत्तिः ?, उच्यते-अनन्तरप्रयोगपदे उक्तम्-'कतिविहे णं भंते! गइप्पवाए पन्नत्ते, गोयमा ! पंचविहे गइप्पवाए पण्णत्ते तं जहा पयोगगई तत्तगई बंधणछेदणगई उववायगई विहायोगई । तत्थ जा सा उववायगई सा तिविहा-खित्तोववायगई भवोववायगई नोभवोववायगई, तत्थ भवोववायगई चउव्विहा-नेरइयभवोववायगई देवभवोववायगई तिरिक्खजोणियभवोववायगई मणुस्सभवोववायगई' इति । तत्र नारकत्वादिभवत्वेनोत्पन्नानां जीवानामुपपातसमयादारभ्य आहाराद्यर्थसम्भवोऽवश्यंभावी ततो लेश्याप्रक्रमेऽपि तेषामुपन्यासः सूत्रम् ' यथोद्देशं निर्देश ' इति न्यायात् , प्रथमं समाहारा इत्यादिप्रश्नोपलक्षितमर्थाधिकारमाह—' नेरइया णं भंते ' इत्यादि प्रश्नसूत्रं सुगमं, भगवानाह-' गोयमा ' इत्यादि नायमर्थः समर्थः -नायमर्थो युक्त्युपपन्न इति भावः , पुनः प्रश्नयति-'से केणट्ठेणमि त्यादि, सेशब्दोऽथशब्दार्थः । अथ केनार्थेन-केन प्रयोजनेन केन प्रकारेणेति भावः , भदन्त ! एवमुच्यते नैरयिकाः सर्वे समाहारा इत्यादि ?, भगवानाह-' गोयम '

त्यादि, इहाल्पत्वं महत्त्वं चापेक्षिकं, तत्र जघन्यमल्पत्वम् अङ्गुलासङ्ख्येयभागमात्रत्वम्, उत्कृष्टं महत्त्वं पञ्चधनु शतमानत्वम्, एतच्च भवधारणीयशरीरापेक्षया, उत्तरवैक्रियापेक्षया तु जघन्यमल्पत्वम् अङ्गुलसङ्ख्यातभागमात्रत्वम् इतरद् धनुःसहस्रमानत्वम्, एतावता च किं समशरीरा इत्यस्य प्रश्नस्योत्तरमुक्तम्। अथ शरीरप्रश्नो द्वितीयस्थानोक्तः तत्कथमस्य प्रथमत एव निर्वचनमुक्तम्?, उच्यते-शरीरविषमताभिधाने सति आहारोच्छ्वासयोर्वैषम्यं सुप्रतिपादितं भवतीति द्वितीयस्थानोक्तस्यापि शरीरप्रश्नस्य प्रथमं निर्वचनमुक्तम्। इदानीमाहारोच्छ्वासयोर्निर्वचनमाह-'तत्थ णं' मित्यादि, तत्र-अल्पशरीरमहाशरीररूपराशिद्वयमध्ये 'ण' मिति वाक्यालङ्कारे ये यतो महाशरीरास्ते तदपेक्षया बहुतरान् पुद्गलानाहारयन्ति महाशरीरत्वादेव, दृश्यते हि लोके बृहच्छरीरो बह्वाशी यथा हस्ती, अल्पशरीरोऽल्पभोजी शशकवत्, बाहुल्यापेक्षं चेदमुदाहरणमुपन्यस्यते, अन्यथा कोऽपि बृहच्छरीरोऽप्यल्पमश्नाति कश्चिदल्पशरीरोऽपि भूरि भुङ्क्ते तथाविधमनुष्यवत्, नारकाः पुनरुपपातादिसद्वेद्यानुभावादन्यत्रासद्वेद्योदयवर्त्तित्वादेकान्तेन यथा महाशरीराः दुःखितास्तीव्राहाराऽभिलाषाश्च भवन्ति तथा नियमाद् बहुतरान्पुद्गलानाहारयन्ति तथा बहुतरान् पुद्गलान् परिणामयन्ति, आहारपुद्गलानुसारित्वात् परिणामस्य, परिणामश्चापृष्टोऽप्याहारकार्यमित्युक्तः, तथा 'बहुतराए पुग्गले उस्ससंति' इति—बहुतरान् पुद्गलान् उच्छ्वासतया गृह्णन्ति 'नीससंति' इति-निःश्वासतया मुञ्चन्ति, महाशरीरत्वादेव, दृश्यन्ते हि बृहच्छरीरास्तज्जातीयेतरापेक्षया बहूच्छ्वासनिःश्वासा इति, दुःखिता अपि तथैव, दुःखिताश्च नारका इति। आहारस्यैव कालकृतवैषम्यमाह—'अभिक्खणं' मित्यादि, अभीक्ष्णं—पौनःपुन्येनाहारयन्ति, ये यतो महाशरीरास्ते तदपेक्षया शीघ्रशीघ्रतराहारग्रहणस्वभावा इत्यर्थः, अभीक्ष्णम् उच्छ्वसन्ति अभीक्ष्णं निःश्वसन्ति, महाशरीरत्वेन दुःखिततरत्वादनवरतमुच्छ्वासादि कुर्वन्तीति भावः, 'तत्थ णं जे ते' इत्यादि, 'जे ते' इति इह ये इत्येतावतैवार्थसिद्धौ ये ते इति (यद्) उच्यते तद्भाषामात्रमेव, अल्पशरीरास्ते अल्पतरान् पुद्गलानाहारयन्ति, ये यतोऽल्पशरीरास्ते तदाहारणीयपुद्गलापेक्षया अल्पतरान् पुद्गलानाहारयन्ति, अल्पशरीरत्वादेवेति भावार्थः, 'आहच्च आहारयन्ति' इति-कदाचिदाहारयन्ति कदाचिन्नाहारयन्ति, महाशरीराहारग्रहणान्तरालापेक्षया बहुतरकालान्तरतयेत्यर्थः, 'आहच्च ऊससंति आहच्च नीससंति' एतं हि अल्पशरीरत्वेनैव महाशरीरापेक्षया अल्पतरदुःखत्वात्, 'आहच्च' कदाचित् सान्तरमित्यर्थः, उच्छ्वासादि कुर्वन्तीति भावः, अथवा अपर्याप्तिकाले अल्पशरीरा सन्तो लोमाहारापेक्षया नाहारयन्ति उच्छ्वासापर्याप्तकत्वेन च नोच्छ्वसन्ति, अन्यदा त्वाहारयन्ति उच्छ्वसन्ति चेत्यत आह—'आहच्च आहारयन्ति आहच्च ऊससन्ति' इत्युक्तम्। 'से एएणट्ठेणमि' त्यादि निगमनवाक्यं सुगमम्। सम्प्रति समकर्मत्वाधिकारमाह—'नेरइयाणं' मित्यादि 'पुव्वोववन्नगा य पच्छोववन्नगा य' इति पूर्वं-प्रथमम् उपपन्ना पूर्वोपपन्नाः तत एव स्वार्थिकः क इति कप्रत्ययविधानात् पूर्वोपपन्नकाः, एवं पश्चादुपपन्नकाः, तत्र पूर्वोत्पन्नपश्चादुत्पन्नानां मध्ये ये पूर्वोत्पन्नास्तैर्नरकायुर्नरकगत्यसातवेदनीयादिकं प्रभूतं निर्जीर्णमल्पं स्थितम् इति अल्पकर्मतरकाः, इतरे तद्विपर्ययात् महाकर्मतरकाः, एतच्च समानस्थितिका ये नारकास्तानधिकृत्य प्रणीतमवसेयम्, अन्यथा हि रत्नप्रभायाम् उत्कृष्टस्थितेर्नारकस्य बहून्यायुषि क्षयमिते पल्योपमावशेषे च तिष्ठति तस्यामेव रत्नप्रभायां दशवर्षसहस्रस्थितिर्नारकोऽन्यः कश्चिदुत्पन्नः स किं प्रागुत्पन्नं पल्योपमावशेषायुषं नारकमपेक्ष्य वक्तुं शक्यो यथा महाकर्मेति?, वर्णसूत्रे—विशुद्धवर्णतरका' इति—विशुद्धतरवर्णा इत्यर्थः, कथमिति चेद्, उच्यते—इह यस्मान्नैरयिकाणामप्रशस्तवर्णनामकर्मणोऽशुभस्तीव्रोऽनुभागोदयो भवापेक्षः, तथा चोक्तम्-"कालभवखेत्तपेक्खो उदओ सविवागअविवागो।" नन्वायूंषि तत्र भवविपाकानि उक्तानि तत्कथमप्रशस्तवर्णनामकर्मण उदयो भवापेक्षो वर्ण्यते?, सत्यमेतत् तथाप्यसौ वर्णनामकर्मणोऽप्रशस्तस्योदयस्तीव्रानुभागोऽध्रुवश्च भवापेक्षः पूर्वाचार्यैर्व्यवहृतः, स पूर्वोत्पन्नैः प्रभूतो निर्जीर्णः स्तोकावशेषोऽवतिष्ठते, पुद्गलविपाकि च वर्णनाम, तेन पूर्वोत्पन्ना विशुद्धतरवर्णाः, पश्चादुत्पन्नैस्तु नाद्यापि प्रभूतो निर्जीर्ण इति ते अविशुद्धतरवर्णाः, एतदपि समानस्थितिनैरयिकविषयमवसेयम्, अन्यथा पूर्वोक्तरीत्या व्यभिचारसंभवात् 'एवं जहेव वन्ने भणिया' इत्यादि, एवम्—उक्तेन प्रकारेण यथैव वर्णे भणितास्तथैव लेश्यास्वपि वक्तव्याः, तद्यथा-"नेरइयाणं भंते! सव्वे समलेस्सा?, गोयमा! नो इणट्ठे समट्ठे' इत्यादि, सुगमं चैतत्, नवरं पूर्वोत्पन्ना विशुद्धलेश्याः यस्मात्पूर्वोत्पन्नैः प्रभूतान्यप्रशस्तलेश्याद्रव्याणि अनुभूय अनुभूय क्षयं नीतानि तस्मात्ते विशुद्धलेश्याः, इतरे पश्चादुत्पन्नतया विपर्ययादविशुद्धलेश्याः, एतदपि लेश्यासूत्र समानस्थितिकनैरयिकापेक्षमवसेयम्; समवेदनपदोपलक्षितार्थाधिकारप्रतिपादनार्थमाह-' नेरइया णं भंते!' इत्यादि, समवेदनाः-समानपीडाः 'सन्निभूया य' इति संज्ञिनः-संज्ञिपञ्चेन्द्रियाः सन्तो भूता-नारकत्वं गताः संज्ञिभूताः ते महावेदनाः तीव्राशुभाध्यवसायेनाशुभतरकर्मबन्धनेन महानरकेषूत्पादात्, असञ्ज्ञिन -असञ्ज्ञिपञ्चेन्द्रियाः सन्तो भूता असञ्ज्ञिभूताः, असञ्ज्ञिनो हि चतसृष्वपि गतिषूत्पद्यन्ते, तद्योग्यायुर्बन्धसंभवात्, तथा चोक्तम्-" कइविहे णं भंते! असन्निआउए पन्नत्ते?, गोयमा! चउव्विहे असन्निआउए पन्नत्ते?, तं जहा—नेरइयअसन्निआउए तिरिक्खजोणियअसन्निआउए मणुस्सजोणियअसन्निआउए देवअसन्निआउए, इति, तत्र देवेषु नैरयिकेषु च असञ्ज्ञ्यायुषो जघन्यतः स्थितिर्दश वर्षसहस्राणि उत्कर्षतः पल्योपमासंख्येयभागः, तिर्यक्षु मनुष्येषु च जघन्यतोऽन्तर्मुहूर्त्तम् उत्कर्षतः पल्योपमासंख्येयभागः, एवं चासञ्ज्ञिनः सन्तो ये नरकेषूत्पद्यन्ते तेऽतितीव्राशुभाध्यवसायाभावात् रत्नप्रभायामनतितीव्रवेदनेषु नरकेषूत्पद्यन्ते अल्पस्थितिकाश्चेत्यल्पवेदना, अथवा—सञ्ज्ञीभूताः-पर्याप्तकीभूतास्ते महावेदनाः पर्याप्तत्वादेव, असञ्ज्ञिनस्तु अल्पवेदना अपर्याप्ततया मायो वेदनाया असंभवात्। यदिवा-'सन्निभूय' त्ति सम्यग्-

सम्यग्दर्शनं सा एषामस्तीति संज्ञिनः संज्ञिनो भूता-याता' संज्ञीभूता., संज्ञित्वं प्राप्ता इत्यर्थ' ते महावेदना', तेषा हि यथावस्थितं पूर्वकृतकर्म्मविपाकमनुस्मरतामहो महद्दु.-खसंकटमिदमस्माकमापतितं न कृतो भगवदर्हत्प्रणीत' सकलदु खक्षयंकरोऽतिविषमविषयविषपरिभोगविप्रलुब्धचे-तोभिर्धर्म्म इत्येवं महद्दु.खं मनस्युपजायते, ततो महा वेदनाः, असंज्ञिनस्तु मिथ्यादृष्टयः, ते तु स्वकृतकर्म्मफ-लमिदमित्येवं न जानते, अजानानाश्चानुपतप्तमानसा अल्प-वेदना इति। अधुना समकिरिया इत्यधिकार विभावयिषुराह-' नेरइया ण भंते! सव्वे समकिरिया ' इत्यादि, समाः—तुल्याः क्रियाः-कर्म्मनिबन्धनभूता आरम्भिक्यादिका येषां ते समक्रियाः ' चत्तारि किरियाओ कज्जंति ' इति-क्रियन्ते इति कर्म्मकर्त्तरि प्रयोगः तेन भवन्तीत्यर्थः, आरम्भः—पृथिव्याद्युपमर्दनं स प्रयोजनं-कारणं यस्याः सा आरम्भिकी ' परिग्गहिय ' त्ति—परिग्रहो-धर्म्मोपकरणवर्जवस्तुस्वी-कार., धर्म्मोपकरणमूर्च्छा वा, स च प्रयोजनं यस्या. सा पारिग्रहिकी 'मायावत्तिया' इति-माया-अनार्जवमुपलक्षण-त्वात् क्रोधादिरपि स च प्रत्यय'-कारणं यस्यास्सा मायाप्रत्य-या 'अप्पच्चक्खाणकिरिया' इति-अप्रत्याख्यानेन-निवृत्त्यभा-वेन क्रिया-कर्मबन्धकारणम्, अप्रत्याख्यानक्रियेति, ''निय इयाओ' इति नैयतिक्यो,नियता इत्यर्थ. अवश्यंभावित्वात्, सम्यग्दृष्टीनां त्वनियता., संयतादिषु व्यभिचारात्, 'मिच्छादंसणवत्तिय ' त्ति—मिथ्यादर्शनं प्रत्यय —कार-णं यस्या. सा मिथ्यादर्शनप्रत्यया, ननु मिथ्यात्वा-विरतिकषाययोगा. कर्म्मबन्धहेतव इति प्रसिद्धि', इह तु आरम्भिक्यादयस्तेऽभिहिता इति कथं न विरोध ?, उच्यते-इहारम्भपरिग्रहशब्दाभ्यां योगः परिगृहीतो.योगानां तद्रूपत्वात्, शेषपदैस्तु शेषा बन्धहेतव इत्यदोष',' सव्वे स-माउआ ' इत्यादि प्रश्नस्य या निर्वचनचतुर्भङ्गी तद्भावना क्रियते-निबद्धदशवर्षसहस्रप्रमाणायुषो युगपच्चोत्पन्ना इति प्रथमो भङ्ग, तेषु एव दशवर्षसहस्रस्थितिषु नरकेषु एके प्रथमतरमुत्पन्ना. अपरे पश्चादिति द्वितीय, अन्यैर्विषम-मायुर्निबद्धं कैश्चिद्दशवर्षसहस्रस्थितिषु कैश्चिच्च पञ्चदश—वर्षसहस्रस्थितिषु, उत्पत्ति. पुनर्युगपदिति तृतीय, केचित् सागरोपमस्थितय., केचित्तु-दशवर्षसहस्रस्थितय इत्येवं वि-षमायुषो विषममेव चोत्पन्ना इति चतुर्थ.। संप्रति असुर-कुमारादिषु आहारादिपदनवक विभावयिषुरिदमाह—' अ-सुरकुमारा णं भंते!' सव्वे समाहारा ' इत्यादि, त-त्रास्मिन् सूत्रे नारकसूत्रसमानेऽपि भावना विशेषेण लि-ख्यते—असुरकुमाराणामल्पशरीरत्वं भवधारणीयशरीरा-पेक्षया जघन्यतोऽङ्गुलासंख्येयभागमानत्वं महाशरीरत्व तूत्कर्षत. सप्तहस्तप्रमाणत्वम्, उत्तरवैक्रियापेक्षया तु अ-ल्पशरीरत्वं जघन्यतोऽङ्गुलसंख्येयभागमानत्वम्, उत्कर्ष-तो महाशरीरत्व योजनलक्षमानत्वमिति। तत्रैत महाश-रीरा बहुतरान् पुद्गलानाहारयन्ति, मनोभक्षणलक्षणाहा-रापेक्षया, देवाना हि असौ सभवति, प्रधानश्च। प्रधा-नापेक्षया च शास्त्रे निर्देशो वस्तूना, ततोऽल्पशरीरग्राह्या-हारपुद्गलापेक्षया ये पुद्गला बहुतरास्ते तानाहारयन्ति, बहुतरान्परिणामयन्तीत्यादिपदत्रयव्याख्यानं प्राग्वत्, त-थाऽभीक्ष्णमाहारयन्ति अभीक्ष्णमुच्छ्वसन्ति, अत्र ये चतु-र्थादेरुपर्याहारयन्ति स्तोकसप्तकादेश्चोपर्युच्छ्वसन्ति ताना-श्रित्याभीक्ष्णमुच्यते, ये सातिरेकवर्षसहस्रस्योपर्याहारय-न्ति सातिरेकपक्षस्य चोपर्युच्छ्वसन्ति तानङ्गीकृत्यैतेषाम-ल्पकालीनाहारोच्छ्वासत्वेन पुन पुनराहारयन्तीत्यादि-व्यपदेशविषयत्वात्, तथाऽल्पशरीरा अल्पतरान् पुद्गला-नाहारयन्ति उच्छ्वसन्ति च अल्पशरीरत्वादेव, यत्पुनस्ते-षा कादाचित्कत्वमाहारोच्छ्वासयोस्तन्महाशरीराहारोच्छ्वा-सान्तरालापेक्षया बहुतमान्तरालत्वात्, तत्र हि अन्तरा-ले ते आहारादि न कुर्वन्ति तदन्यत्र ते कुर्वन्तीत्येवं वि-वक्षणान्महाशरीराणामप्याहारोच्छ्वासयोरन्तरालमस्ति किं तु तदल्पमित्यविवक्षितत्वादभीक्ष्णमित्युक्त, सिद्धं च महा-शरीराणा तेषामाहारोच्छ्वासयोरल्पान्तरत्वम्, अल्पशरी-राणां तु महान्तरत्वं, यथा सौधर्मादिदेवाना सप्तहस्त-मानतया महाशरीराणा तयोरन्तरं वर्षसहस्रद्वयं पक्षद्वयं च अनुत्तरसुराणां च हस्तमानतयाऽल्पशरीराणा त्रयस्त्रिंश-द्वर्षसहस्राणि त्रयस्त्रिंशदेव च पक्षा इति, एषां च महाश-रीराणामभीक्ष्णाहारोच्छ्वासाभिधानेनाल्पस्थितिकत्वमवसी-यते इतरेषा तु विपर्यय. वैमानिकवदेवेति, अथवा-लोमाहा-रापेक्षयाऽभीक्ष्णम्-अनुसमयमाहारयन्ति महाशरीरा. पर्या-प्तकावस्थायामुच्छ्वासस्तु यथोक्तमानेनापि भवन् परिपूर्णभवा-पेक्षया पुन. पुनरित्युच्यते, अपर्याप्तकावस्थायां त्वल्पशरी-रा लोमाहारतो नाहारयन्ति ओजा (उआ) हारत ए-वाहरणात् ततस्ते कदाचिदाहारयन्तीत्युच्यते, अपर्याप्त-कावस्थायां च नोच्छ्वसन्ति अन्यदा तूच्छ्वसन्ति तत उ-च्यते आहच्चोच्छ्वसन्तीति॥ कर्म्मसूत्रमाह—'असुरकुमा-रा णं भंते! सव्वे समकम्मा' इत्यादि, अत्र नैरयिकसूत्रा-पेक्षया विपर्यास., नैरयिका हि पूर्वोत्पन्ना अल्पकर्म्मा-ण उक्ता इतरे तु महाकर्म्माण. असुरकुमारास्तु ये पू-र्वोत्पन्नास्ते महाकर्म्माण. इतरेऽल्पकर्म्माण., कथमिति चेद्, उच्यते—इहासुरकुमारा. स्वभावादुदृत्तास्तिर्यक्षूत्प-द्यन्ते मनुष्येषु च, तिर्यक्षूत्पद्यमानाः केचिदेकेन्द्रियेषु पृथिव्यब्वनस्पतिषूत्पद्यन्ते केचित् पञ्चेन्द्रियेषु, मनुष्ये-ष्वपि चोत्पद्यमाना. कर्म्मभूमिकगर्भव्युत्क्रान्तिकमनुष्ये-षूत्पद्यन्ते न शेषेषु, षण्मासावशेषायुषश्च सन्तः पारभ-विकमायुर्बध्नन्ति, पारभविकायुर्बन्धकाले च या एका-न्ततिर्यग्योनिकयोग्या एकान्तमनुष्ययोग्या वा प्रकृतय-स्ता उपचिन्वन्ति, ततः पूर्वोत्पन्ना महाकर्म्मतरा, ये तु पश्चादुत्पन्नास्ते नाद्यापि पारभविकमायुर्बध्नन्ति नापि तिर्यग्मनुष्ययोग्या प्रकृतीरुपचिन्वन्ति ततस्तेऽल्पकर्म्म-तराः, एतदपि सूत्रं समानस्थितिकसमानभवपरिमिता-सुरकुमारविषयमवसेयं, पूर्वोत्पन्नका अपि बद्धपारभ-विकायुष पश्चादुत्पन्ना अपि अबद्धपारभविकायुष स्तो-ककालान्तरिता ग्राह्या, अन्यथा तिर्यग्मनुष्ययोग्यप्रकृति-बन्धेऽपि पूर्वोत्पन्नकात् पश्चादुत्पन्न उत्कृष्टस्थितिकोऽभि-नवोत्पन्नोऽनन्तसंसारिकश्च महाकर्म्मतर एव भवति। वर्णसूत्रे ये ते पूर्वोत्पन्नकास्ते अविशुद्धवर्णतरा, कथ-मिति चेदुच्यते—एतेषा हि भवापेक्ष प्रशस्तवर्णनाम्न शु-भस्तीव्रानुभाग उदय., स च पूर्वोत्पन्नाना प्रभूत. क्षय-

मुपगत इति ते अविशुद्धतरवर्णा, इतरे तु पश्चादुत्पन्नतया नाद्यापि प्रभूतो निर्जीर्ण इति विशुद्धवर्णाः, एतच्च समानस्थितिकासुरकुमारविषयं सूत्रम्, 'एवं लेस्साए वी' ति एवं वर्णसूत्रवत् लेश्यासूत्रमपि वक्तव्यं, पूर्वोत्पन्नाः अविशुद्धलेश्या वक्तव्या पश्चादुत्पन्ना विशुद्धलेश्या इति भावः, काऽत्र भावनेति चेदुच्यते—इह देवानां नैरयिकाणां च तथा भवस्वाभाव्यात् लेश्यापरिणाम उपपातसमयात् प्रभृत्याभवक्षयाद् भवति, यतो वक्ष्यति तृतीये लेश्योद्देशके—'से नूणं भंते! कण्हलेस्से नेरइए कण्हलेस्सेसु नेरइएसु उववज्जइ कण्हलेस्से उव्वट्टइ?' "जल्लेस्से उववज्जइ तल्लेस्से उव्वट्टइ?" इति। अस्यायं भावार्थः-पञ्चेन्द्रियतिर्यग्योनिको मनुष्यो वा नरकेषूत्पद्यमानो यथाक्रम तिर्यगायुषि मनुष्यायुषि वा क्षीणे नैरयिकायुःसंवेदयमान ऋजुसूत्रनयदर्शनेन विग्रहेऽपि वर्तमानो नारक एव लभ्यते तस्य च कृष्णादिलेश्योदयः पूर्वभवायुषि अन्तर्मुहूर्त्तावशेषायुष्के एव वर्त्तमानस्य भवति, तथा चोक्तम्-" अन्तमुहुत्तम्मि गए, अन्तमुहुत्तम्मि सेसए चेव। लेस्साहि परिणयाहिं, जीवा वच्चंति परलोयं ॥१॥" एवं देवेष्वपि भावनीय, तथा लेश्याध्ययने नैरयिकादिषु कृष्णादिलेश्यानां जघन्योत्कृष्टा च स्थितिरियमुक्ता-

" दसवाससहस्साइं, काऊए ठिई जहन्निया होइ।
उक्कोसा तिन्नुदही, पलियस्स असंखभागं च ॥ १ ॥
नीलाए जहन्नठिई, तिन्नुदही असखभागपलियं च।
दस उदही उक्कोसा, पलियस्स असंखभागं च ॥ २ ॥
कण्हाए जहन्नठिई, दस उदही असंखभागपलियं च।
तित्तीससागराइं, मुहुत्तअहियाइं उक्कोसा ॥ ३ ॥
एसा नेरइयाणं, लेसाण ठिई उ वन्निया होइ।
तेण परं वोच्छामि, तिरियाण मणुस्सदेवाणं ॥ ४ ॥
अन्तोमुहुत्तमद्धा, लेसाण ठिई जहिं जहिं जा उ।
तिरियाण नराणं वा, वज्जित्ता केवलं लेसं ॥ ५ ॥"

अस्या अक्षरगमनिका-अन्तर्मुहूर्त्तं कालं यावत् लेश्यानां स्थितिर्जघन्योत्कृष्टा च भवति, कासामित्याह-' जहिं जहिं जा उ' यस्मिन् यस्मिन्-पृथिवीकायिकादौ संमूर्च्छिममनुष्यादौ च या —कृष्णाद्या लेश्यास्तासाम्, एता हि कचित् काश्चिद् भवन्ति, पृथिव्यब्वनस्पतीना कृष्णनीलकापोततेजोरूपाश्चतस्रो लेश्या, तेजोवायुद्वित्रिचतुरिन्द्रियसंमूर्च्छिमतिर्यक्पञ्चेन्द्रियमनुष्याणां कृष्णनीलकापोतरूपास्तिस्रः, गर्भजतिर्यक्पञ्चेन्द्रियाणां गर्भजमनुष्याणां च षडपीति, नन्वेव शुक्ललेश्याया अपि अन्तर्मुहूर्तमेव स्थिति प्राप्तेति त्याशङ्कायामुक्तं—वर्जयित्वा केवलां शुद्धलेश्या-शुक्ललेश्यामिति भावः। तस्या इय स्थितिः-

" मुहुत्तऽद्ध तु जहन्ना, उक्कोसा होइ पुव्वकोडी उ।
नवहिं वरिसेहिं ऊणा, नायव्वा सुक्कलेस्साए ॥ १ ॥
एसा तिरियनराणं, लेसाण ठिई उ वन्निया होइ।
तेण पर वोच्छामि, लेसाण ठिई उ देवाण ॥ २ ॥
दसवाससहस्साइं, कण्हाए ठिई जहन्निया होइ।
पलिआसंखियभागो, उक्कोसा होइ नायव्वा ॥ ३ ॥
जा कण्हाए ठिई खलु, उक्कोसा चेव समय-मब्भहिया।
नीलाए जहन्नेणं, पलियासंखं च उक्कोसा ॥ ४ ॥
जा नीलाइ ठिई खलु, उक्कोसा चेव समयमब्भहिया।
काऊए जहन्नेणं पलियासंखं च उक्कोसा ॥ ५ ॥
तेण परं वोच्छामि, तेउल्लेस्सं जहा सुरगणाणं।
भवणवइवाणमंतर-जोइसवेमाणियाणं च ॥ ६ ॥
दसवाससहस्साइं, तेऊए ठिई जहन्निया होइ।
उक्कोसा दो उदही, पलियस्स असंखभागं च ॥ ७ ॥
जा तेऊए ठिई खलु, उक्कोसा चेव समयमब्भहिया।
पम्हाइ जहन्नेणं, दसमुहुत्तहियाइं उक्कोसा ॥ ८ ॥"

दशसागरोपमाण्यन्तर्मुहूर्त्ताभ्यधिकान्युत्कृष्टेति भावः, अन्तर्मुहूर्त्तं चाभ्यधिकं यत्प्राग्भवभाव्यन्तर्मुहूर्त्तं यच्चोत्तरभवभावि तद् द्वयमप्येकं विवक्षितवोक्तं, देवनैरयिकाणां हि स्वस्वलेश्या प्रागुत्तरभवान्तर्मुहूर्त्तद्वयनिजायुःकालप्रमाणावस्थाना भवति, तथा—"जा पम्हाइ ठिई खलु, उक्कोसा चेव समयमब्भहिया। सुक्काए जहन्नेणं, तेत्तीसुक्कोसमब्भहिया ॥१॥" इति। ततोऽस्माल्लेश्यास्थितिपरिमाणात् प्रागुक्ताच्च तृतीयलेश्योद्देशवक्ष्यमाणसूत्रादवसीयते देवानां नैरयिकाणां च लेश्याद्रव्यपरिणाम उपपातसमयादारभ्याऽऽभवक्षयात् भवति इति पूर्वोत्पन्नैश्चासुरकुमारैः प्रभूतानि तीव्रानुभागानि लेश्याद्रव्याणि अनुभूयानुभूय क्षयं नीतानि स्तोकानि मन्दानुभावान्यवतिष्ठन्ते, ततस्ते पूर्वोत्पन्ना अविशुद्धलेश्याः पश्चादुत्पन्नास्तु तद्विपर्ययाद्विशुद्धलेश्याः। 'वेयणाए जहा नेरइया' इति वेदनायां यथा नैरयिका उक्तास्तथा वक्तव्याः, तत्राप्यसञ्ज्ञिनोऽपि लभ्यमानत्वात्, तत्र यद्यपि वेदनासूत्रे पाठतो नारकाणामिवासुरकुमाराणामपि तथापि भावनायां विशेषः, स चायम्-ये सञ्ज्ञीभूतास्ते सम्यग्दृष्टित्वात् महावेदनाः चारित्रविराधनाजन्यचित्तसन्तापात्, इतरे तु-असञ्ज्ञीभूता मिथ्यादृष्टित्वादल्पवेदना इति, 'अवसेसं जहा नेरइयाणं' ति—अवशेषं क्रियासूत्रमायुःसूत्रं च यथा नैरयिकाणा तथा वक्तव्यम्, एतच्च सुगमत्वात् स्वयं परिभावनीयम्। 'एवमि' त्यादि, एवमसुरकुमारोक्तेन प्रमाणेन नागकुमारादयोऽपि तावद्वक्तव्याः यावत्स्तनितकुमाराः। 'पुढविकाइया' इत्यादि, पृथिवीकायिका आहारकर्मवर्णलेश्याभिर्यथा नैरयिका उक्तास्तथा वाच्याः, पृथिवीकायिकानामाहारादिविषयाणि चत्वारि सूत्राणि नैरयिकसूत्राणीव पृथिवीकायिकाभिलापेनाभिधातव्यानीति भावः,केवलमाहारसूत्रे भावनैवम्-पृथिवीकायिकानामङ्गुलासंख्येयभागमात्रशरीरत्वेऽप्यल्पशरीरत्वमहाशरीरत्वे आगमवचनादवसेये, स चायमागम —" पुढविकाइए पुढविकाइयस्स ओगाहणट्ठयाए चउट्ठाणवडिए" इत्यादि, तत्र महाशरीरा लोमाहारतो बहुतरान् पुद्गलानाहारयन्त्युच्छ्वसन्ति च अभीक्ष्णमाहारयन्त्यभीक्ष्णं चोच्छ्वसन्ति, महाशरीरत्वादेव, अल्पशरीराणामल्पाहारोच्छ्वासत्वम् अल्पशरीरत्वादेव, कादाचित्कत्व चाहारोच्छ्वासयोः पर्याप्तेतरावस्थापेक्षमिति। वेदनासूत्रमाह—' पुढविकाइया णं भंते! सव्वे समवेयणा,' इत्यादि, 'असण्णी' ति-मिथ्यादृष्टयोऽमनस्का वा 'असन्निभूयं' ति-असञ्ज्ञिभूता असञ्ज्ञिना या जायते तामित्यर्थः, एतदेव व्यनक्ति-' अणियत्तं' ति-अनियताम्-अनिर्धारितां वेदयन्ते, वेदनामनुभवन्तोऽपि न पूर्वोपात्ताशुभकर्मपरिणतिरियमि-

त्यवयारुच्छन्ति, मिथ्यादृष्टित्वादमनस्कत्वाञ्च मत्तमूर्च्छिता-दिवदिति भावः। क्रियासूत्रे-' माईमिच्छादिट्ठि ' त्ति-मायावन्तो हि तेषु प्रायेणोत्पद्यन्ते, यदाह—शिवशर्माचार्यः—" उम्मग्गदेसओ म—ग्गनासओ गूढहियमाइल्लो । सढसीलो य ससल्लो, तिरियाउ बंधई जीवो ॥ १ ॥ " ततस्ते मायिन उच्यन्ते। अथवा—माया इह समस्तानन्तानुबन्धिकषायोपलक्षणं ततो मायिन इति, किमुक्तं भवति ?—अनन्तानुबन्धिकषायोदयवन्तः, अत एव मिथ्यादृष्टयः, "ताणं णियइयाओ' इति—तेषां—पृथिवीकायिकानां नैयतिक्यो—नियताः पञ्चैव, न तु त्रिप्रभृतय इत्यर्थः। 'से एएणट्टेणं ' मित्यादि, निगमनम् ' जाव चउरिंदिया ' इति, इह महाशरीरत्वाल्पशरीरत्वे स्वस्वावगाहनानुसारेणावसेये, आहारश्च द्वीन्द्रियादीनां प्रक्षेपलक्षणोऽपीति, ' पंचिंदियतिरिक्खजोणिया जहा नेरइया ' इति प्रतीतं, नवरमिह महाशरीरा अभीक्ष्णमाहारयन्ति अभीक्ष्णमुच्छ्वसन्तीति यदुच्यते तत्संख्यातवर्षायुषोऽपेक्ष्य तथैव दर्शनात्, नासंख्यातवर्षायुषः, तेषां प्रक्षेपाहारस्य षष्ठस्योपरि प्रतिपादितत्वात्, अल्पशरीराणां त्वाहारोच्छ्वासयोर्यत् कादाचित्कत्वं तदपर्याप्तावस्थायां लोमाहारोच्छ्वासयोरभवनेन पर्याप्तावस्थाया तद्भवनेन चावसेयं, कर्म्मसूत्रे यत् पूर्वोत्पन्नानामल्पकर्म्मत्वम् इतरेषां तु महाकर्मत्वं तदायुष्कादि तद्भवेऽवधकर्म्मापेक्षं,वर्णलेश्यासूत्रयोरपि यत्पूर्वोत्पन्ना शुभवर्णाद्युक्तं तत्तारुण्यात् पश्चादुत्पन्नानां चाशुद्धवर्णादि बाल्यादवसेयं, लोके तथा दर्शनादिति। तथा 'सजयासजया' इति-देशविरता स्थूलात् प्राणातिपातादेर्निवृत्तत्वात् इतरस्मादनिवृत्तत्वात्। मनुष्यविषयं सूत्रमाह ' मणुस्सा णं भंते ! सव्वे समाहारा' इत्यादि, सुगमं नवरम् 'आहच्च आहारेंति आहच्च ऊससंति आहच्च नीससंति' इति—महाशरीरा हि मनुष्या देवकुर्वादिमिथुनकास्ते च कदाचिदेवाहारयन्ति कावलिकाहारेण"अट्ठमभत्तस्स आहारो" इति वचनात् उच्छ्वासनिःश्वासावपि तेषां शेषमनुष्यापेक्षया अतिसुखित्वात् कादाचित्कौ, अल्पशरीरास्त्वभीक्ष्णमल्पं चाहारयन्ति,बालानां तथादर्शनात्, संमूर्च्छिममनुष्याणामल्पशरीराणामनवरतमाहारसंभवाच्च, उच्छ्वासनिःश्वासावप्यल्पशरीराणामभीक्ष्णं प्रायो दुःखबहुलत्वात्, 'सेसं जहा नेरइयाणं' मिति-शेषं-कर्मवर्णादिविषयं सूत्रं यथा नैरयिकाणां तथाऽवसेयं, नवरमिह पूर्वोत्पन्ना शुद्धवर्णादित्वं तारुण्याद् भावनीयं, क्रियासूत्रे विशेषमाह—नवरम् ' किरियाहिं मणुया तिविहा ' इत्यादि, तत्र सरागसंयता—अक्षीणानुपशान्तकषाया वीतरागसंयता-उपशान्तकषायाः क्षीणकषायाश्च ' अकिरिया ' इति वीतरागत्वेनारम्भादीनां क्रियाणामभावात्, ' एगा मायावत्तिया ' इति—अप्रमत्तसंयतानामेकैव मायाप्रत्यया क्रिया ' कज्जइ ' त्ति—क्रियते भवति, कदाचिदुड्डाहरक्षणप्रवृत्तानाम् अक्षीणकषायत्वात् ' आरंभिया मायावत्तिया ' इति प्रमत्तसंयतानां हि सर्वं प्रमत्तयोग आरम्भ इति भवत्यारम्भिकी क्रिया अक्षीणकषायत्वाच्च मायाप्रत्ययेति, ' सेसं जहा नेरइयाणं ' मिति—शेषमायुर्विषयं सूत्रं यथा नैरयिकाणां तथा वक्तव्यं, तच्च सुगमत्वात् स्वयं भावनीयम्। ' वाणमंतराणं जहा असुरकुमाराणं ' मित्यादि, यथा ' असुरकुमारा सन्निभूया य असन्निभूया य तत्थ णं जे सन्निभूया ते महावेयणा असन्निभूया अप्पवेयणा ' इत्येवमधीता व्यन्तरा अपि तथैवाध्येतव्याः, यतोऽसुरादिषु व्यन्तरान्तेषु देवेष्वसंज्ञिन उत्पद्यन्ते, तथा चोक्तं व्याख्याप्रज्ञप्तौ प्रथमशते द्वितीयोद्देशके—" असन्नी णं जहन्नेणं भवणवासीसु उक्कोसेणं वाणमंतरेसु " इति-ते चासुरकुमारप्रकरणोक्तयुक्तेरल्पवेदना भवन्तीत्यवसेयं, यत्तु प्राग्व्याख्यानं कृतं संज्ञिनः सम्यग्दृष्टयोऽसंज्ञिनास्त्वितरे इति, तदेवमपि घटते इति वृद्धव्याख्यानुसरणतः कृतमित्यदोषः ' एवं ' मित्यादि, एवमसुरकुमारोक्तप्रकारेण ज्योतिष्कवैमानिकानामपि वक्तव्यं, नवरं ते वेदनायामेव—मध्येतव्याः—' दुविहा जोइसिया पन्नत्ता, तं जहा—माथिमिच्छद्दिट्ठी उववन्नगा य०' इत्यादि, अथ कस्मादेवमधीयते यावता असुरकुमारवत्, ' असन्निभूया य इति—किन्नाधीयते ?, उच्यते-तेष्वसंज्ञिन उत्पादाभावात्, एतदपि कथमवसेयम् इति चेत्? उच्यते-युक्तिवशात्,तथाहिअसङ्ख्यायुषः उत्कृष्टा स्थितिः पल्योपमासंख्येयभागः, ज्योतिष्काणां च जघन्याऽपि स्थितिः पल्योपमसंख्येयभागः, वैमानिकानां पल्योपमं, ततोऽवसीयते नास्ति तेष्वसंज्ञी, तदभावाच्चोपदर्शितप्रकारेणैवाध्येतव्या नासुरकुमारोक्तप्रकारेणेति, तत्र मायिमिथ्यादृष्टयोऽल्पवेदना इतरे महावेदनाः शुभवेदनामाश्रित्येति। अथ चतुर्विंशतिदण्डकमेव सलेश्यपदविशेषितमाहारादिपदैर्निरूपयति—'सलेसा णं भंते ! नेरइया ' इत्यादि, यथा अनन्तरमौघिको—विशेषणरहितः प्राक् गम उक्तस्तथा सलेश्यगमोऽपि निरवशेषो वक्तव्यो यावद्वैमानिकः—वैमानिकविषयं सूत्रं, सलेश्यपदरूपविशेषणमन्तरेणान्यस्य विशेषणस्य क्वचिदप्यभावात्। अधुना लेश्याभेदकृष्णादिविशेषितान् षड्दण्डकानाहारादिपदैर्विभणिषुराह—'कण्हलेसाणं भंते ! नेरइया ' इत्यादि, यथा औघिका-विशेषणरहिता आहारशरीरोच्छ्वासकर्मवर्णलेश्यावेदनाक्रियोपपाताख्यैर्नवभिः पदैः प्राग् नैरयिका उक्तास्तथा कृष्णलेश्याविशेषिता अपि वक्तव्याः, नवरं वेदनापदे नैरयिका एवं वक्तव्या ' माइमिच्छादिट्ठी उववन्नगा य अमायिसम्मादिट्ठी उववन्नगा य' इति,न चौघिकसूत्रे इव ' सन्निभूया य ' इति, कस्मादिति चेद्, उच्यते इहासंज्ञिनः प्रथमपृथिव्यामेवोत्पद्यन्ते " असन्नी खलु पढमं " मिति वचनात्, प्रथमायां च पृथिव्यां न कृष्णलेश्या, यत्र च पञ्चम्यादिषु पृथिवीषु कृष्णलेश्या न तत्रासंज्ञिन इति, तत्र मायिनो मिथ्यादृष्टयश्च महावेदना भवन्ति, यतः प्रकर्षपर्यन्तवर्तिनीं स्थितिमशुभां ते निर्वर्त्तयन्ति, प्रकृष्टायां च तस्यां महती वेदना इतरेषु विपरीतेति। असुरकुमारादयो यावत् व्यन्तरास्तावद्यथा औघिका उक्तास्तथा वक्तव्या, नवरं मनुष्याणां क्रियाभिर्विशेषः, तमेव विशेषं दर्शयति—'तत्थ णं जे ते ' इत्यादि तत्र तेषु सम्यग्दृष्ट्यादिषु मध्ये ये ते सम्यग्दृष्टयस्ते त्रिविधाः प्रज्ञप्ताः, तद्यथा-संयता असंयता संयतासंयताश्च, 'जहा ओहियाणं' मिति-एतेषां यथौघिकानामुक्तं तथा कृष्णलेश्यापदविशेषितानामपि वक्तव्यं, तद्यथा—संय-

तानां द्वे क्रिये-आरम्भिकी, मायाप्रत्यया च। कृष्णलेश्या हि प्रमत्तसंयतानां भवति नाप्रमत्तसंयतानां, तेषां तु यथोक्तरूपे एव द्वे क्रिये, संयतासंयतानां तिस्रः--आरम्भिकी, पारिग्रहिकी, मायाप्रत्यया च। असंयतानां चतस्र--आरम्भिकी, पारिग्रहिकी, मायाप्रत्यया, अप्रत्याख्यानक्रिया चेति। ज्योतिष्कवैमानिकास्तु आद्यासु तिसृषु लेश्यासु न पृच्छ्यन्ते, किमुक्तं भवति?--तद्विषयं सूत्रं न वक्तव्यं, तासां तेष्वभावात्, यथा च कृष्णलेश्याविषयं सूत्रमुक्तं तथा नीललेश्याविषयमपि वक्तव्यं, नानात्वाभावात्। एतदेवाह--'एवं जहा किण्हलेसा विचारिया तहा नीललेस्सा विचारियव्वा' नीललेश्याविषयोऽपि सूत्रदण्डक एवमेव, केवलं कृष्णलेश्यापदस्थाने नीललेश्यापदमुच्चरितव्यमिति भावः, 'काउलेस्सा' इत्यादि, कापोतलेश्या हि सूत्रतो नीललेश्येव नैरयिकेभ्य आरभ्य यावद्व्यन्तरास्तावद्वक्तव्या, नवरं कापोतलेश्यायां नैरयिकावेदनासूत्रे यथौघिकास्तथा वक्तव्या--'नेरइया दुविहा पन्नत्ता--सन्निभूया य असन्निभूया य' इत्येवं वक्तव्या इति भावः, असञ्ज्ञिनामपि प्रथमपृथिव्यामुत्पादात् तत्र च कापोतलेश्याभावात्, तेजोलेश्याविषयं सूत्रमाह--'तेउलेस्सा णं भंते! असुरकुमारा' इत्यादि, इह नारकतेजोवायुविकलेन्द्रियाणां तेजोलेश्या न सम्भवति ततः प्रथमत एवासुरकुमारविषयं सूत्रमुक्तम्, अत एव तेजोवायुविकलेन्द्रियसूत्रमपि न वक्तव्यम्, असुरकुमारा अपि यथा प्रागोघत उक्तास्तथा वक्तव्याः, नवरं वेदनापदे यथा ज्योतिष्कास्तथा वक्तव्या, 'सन्निभूया य असन्निभूया य' इति न वक्तव्या, किं तु 'माइमिच्छद्दिट्ठि उववन्नगा अमाइसम्मद्दिट्ठि उववन्नगा' इति वक्तव्या इति भावः, असञ्ज्ञिनां तेजोलेश्यावत्सूत्पादाभावात्, पृथिव्यब्वनस्पतयः तिर्यक्पञ्चेन्द्रिया मनुष्याश्च यथा प्रागोघिकास्तथा वक्तव्याः नवरं मनुष्याः क्रियाभिर्ये संयतास्ते प्रमत्ताश्चाऽप्रमत्ताश्च भणनीयाः, उभयेषामपि तेजोलेश्यायाः संभवात्, 'सरागा वीयरागा य नत्थि' त्ति 'सरागसंजया वीअरागसंजया य' इति न वक्तव्या इत्यर्थः, वीतरागाणां तेजोलेश्याया असंभवेन वीतरागपदोपन्यासस्य तेजोलेश्यायाः सरागत्वाव्यभिचारात् सरागपदोपन्यासस्य चायोगात्, 'वाणमंतरा तेउलेसाए जहा असुरकुमारा' इति तेऽपि 'माइमिच्छादिट्ठी उववन्नगा अमाइसम्मादिट्ठी उववन्नगा य' इत्येवं वक्तव्या न, तु-'सन्निभूया य असन्निभूया य' इति, तेष्वपि तेजोलेश्यावत्सु मध्येऽसंज्ञिनामुत्पादाभावात् 'एवं पम्हलेसा वि भाणियव्वा' इति, एव--तेजोलेश्योक्तप्रकारेण पद्मलेश्याऽपि वक्तव्या, किमविशेषेण सर्वेष्वपि?, नेत्याह--'नवरं जेसिं अत्थि' इति--नवरम्--अयं विशेषः येषां पद्मलेश्याऽस्ति तेष्वेव वक्तव्या, न शेषेषु तत्र पञ्चेन्द्रियतिरश्चां मनुष्याणां वैमानिकानां चास्ति न शेषाणामिति तद्विषयमेवैतस्याः सूत्रं, शुक्ललेश्याऽपि तत्रैव वक्तव्या यथा पद्मलेश्या, साऽपि येषामस्ति तेषां वक्तव्या सर्वमपि सूत्रं तथैव यथौघिकानां गम उक्तः, पद्मलेश्या शुक्ललेश्या च येषामस्ति तान् साक्षादुपदर्शयति--'नवरं पम्हलेससुक्कलेसाओ' इत्यादि सुगमम्। प्रज्ञा० १७ पद २ उ०।

समनुगते, रा०। सर्वशब्दार्थे, भ० १ श० ६ उ०। पदैरन्तरैश्च समे, स्था० ७ ठा० ३ उ०। पूर्णे, सू० प्र० १७ पाहु०। निम्नोन्नतत्वाभावात् समम्। आकाशे, भ० २० श० २ उ०। उत्त०। सहेत्यर्थे, उत्त० १६ अ०। आचा०।

विषयसूचना--

( १ ) शमस्य स्वरूपनिरूपणम्।
( २ ) अष्टकेन शमस्य गुणकथनम्।
( ३ ) नैरयिकादीनां समाहारसमशरीरादिविषये पृच्छा।

**समइक्कमंत-समतिक्रामत्**-त्रि०। नानाप्रदेशान् उल्लङ्घयति, उत्त० १४ अ०। कल्प०। भ०।

**समइमा-समतिमा**-स्त्री०। शुष्कमण्डके, बृ० १ उ० ३ प्रक०।

**समइय-समयिक**-न०। सम्यक्शब्दार्थे, समित्युपसर्गः सम्यगर्थे अयः समयः सम्यग्-दयापूर्वकं जीवेषु प्रवर्त्तनं सोऽस्यास्तीति। अतोऽनेकस्वरात् ॥७।२।६॥ ति इकप्रत्ययः। सामायिके, आ० म० १ अ०। विशे०।

"हस्तिनागपुरं तेन, परितः परिवेष्टितम्।
औत्पातिकाभ्रवलये-नेव मार्त्तण्डमण्डलम् ॥ ८ ॥
निर्यान्ति न वहिस्तेऽथ, दमदन्तोऽभ्यधत्त तान्।
भीरवः फेरव इव, शून्ये स्वैरचरा अहो ॥ ९ ॥
अस्ति जीवितमन्तश्चे-त्तन्नि:सरत संप्रति।
कर्षितुं विक्रमस्वर्णं, निकषोऽहं स एष व: ॥ १० ॥
निर्भर्त्सिता अपि न ते, निर्जीवा इव निर्ययुः।
दमदन्तो चलित्वाऽथ, निजं नगरमागमत् ॥ ११ ॥
अथान्यदा स निर्विद्य, कामभोगेऽग्रहीद् व्रतम्।
निर्ममत्वेन विहरं--श्चाययौ हस्तिनापुरे ॥ १२ ॥
तस्थौ वहिः प्रतिमया, सुमेरुरिव निश्चलः।
राजवाट्यागतैर्दृष्टः, पाण्डवैः पञ्चभिर्नतः ॥ १३ ॥
तत्र दुर्योधनोऽन्वागाद्, ज्ञापितः केनचिच्च सः।
स एष दमदन्तोऽह-न्मातुलिङ्गेन सोद्यतम् ॥ १४ ॥
सैन्यैरेकैकशः क्षिप्तै, सोऽश्मराशीकृतोऽश्मभिः।
राज्ञः कोऽप्याख्यन्माद्रेयो, दृषद्राशिममुं व्यधात् ॥ १५ ॥
राज्ञा विरूपं सोऽभाणि, प्रस्तरास्तेऽपनिन्यिरे।
मर्दितोऽभ्यज्य तैलेन, क्षमितश्चातिभक्तितः ॥ १६ ॥
भक्तेषु पाण्डुपुत्रेषु, धार्त्तराष्ट्रे च हन्तरि।
समो भावोऽभवत्तस्य, राजर्षेरुपरि द्वयोः ॥ १७ ॥
आ० क० १ अ०।

**समइविकप्प-समतिविकल्प**-पुं०। निजबुद्ध्युत्प्रेक्षणे, पञ्चा० १४ विव०।

**समउल्ल-समतुल्य**-त्रि०। सदृशार्थे, स्था० २ ठा० ३ उ०।

**समंजस-समञ्जस**-त्रि०। समीचीने, आचा० १ श्रु० २ अ० ३ उ०।

**समंतओ-समंततस्**-अव्य०। सर्वासु दिक्ष्वित्यर्थे, आ० म० १ अ०। जी०। सूत्र०। प्रश्न०। विपा०। रा०। ज्ञा०।

**समंतभद्द-समन्तभद्र**-पुं०। बुद्धे शाक्यसिंहे, स्वानामख्याते-विदुषि, द्वा० ४ द्वा०। स्या०।

**समंता-समन्तात्**-अव्य०। सर्वत इत्यर्थे, भ० ७ श० ६ उ०। विनिश्चितार्थे, स्था० १० ठा० ३ उ०।

समंस-समांश-पुं०। समच्छेदे, स० ६७ सम०।

चंदमंडले णं एगसट्ठिविभागविभाइए समंसे पण्णत्ते, एवं सूरस्स वि। ( सू०-६१+ )

'चन्द्रमण्डले' चन्द्रविमानं णमित्यलंकृतौ 'एगसट्ठि' त्ति-योजनस्यैकषष्टितमैर्भागैर्विभाजितं-विभागैर्व्यवस्थापितं समांशं-समविभागं प्रज्ञप्तं, न विषमांशं, योजनस्यैकषष्टिभागानां षट्पञ्चाशद्भागप्रमाणत्वात्तस्यावशिष्टस्य च भागस्याविद्यमानत्वादिति, 'एव सूरस्स वि' त्ति-एवं सूर्यस्यापि मण्डलं वाच्यम्, अष्टचत्वारिंशदेकषष्टिभागमात्रं हि तत् न चापरमंशान्तरं तस्याप्यस्तीति समांशतेति। स० ६१ सम०।

समंसु-श्मश्रु-न०। कूर्चरोमणि, प्रश्न० ३ आश्र० द्वार।

समकडग-समकटक-न०। स्वनामख्याते नगरे, उत्त० १३ अ०।

समकम्म-समकर्मन्-त्रि०। कर्मसमे, भ० १ श० २ उ०।

समकरण-समकरण-पुं०। क्षेपे, "झोसि त्ति वा समकरण त्ति वा एगट्ठा" व्य० १ उ०।

समकरणी-समकरणी-स्त्री०। तुल्यरेखाभेदे, यत्र प्रदेशे घरणकसहिता तुला ध्रियमाणा समा भवति तत्र प्रदेशे सम्मतापरिज्ञानार्थमेका रेखा भवतीत्यर्थः। ज्यो० २ पाहु०।

समकिरिय-समक्रिय-त्रि०। समानक्रिये, भ० १ श० २ उ०। (अत्र दण्डकः 'सम' शब्दे, अस्मिन्नेव भागे विस्तरतो गतः।)

समक्ख-समक्ष-त्रि०। सम्मुखे, आ० म० १ अ०। आव०। स्था०।

समक्खाय-समाख्यात-पुं०। कथिते, संथा०। प्रतिपादिते,

समिक्खिय-समीक्षित-पुं०। समीहिते, पूर्वं बुद्ध्या पर्यालोचिते, प्रश्न० २ संव० द्वार।

समखुर-समखुर-त्रि। तुल्यशफे, 'समखुरवालिहाणं' समखुरवालिधानौ तुल्यशफपुच्छौ। उपा० ७ अ०।

समखेत्त-समक्षेत्र-न०। समं-स्थूलं न्यायमाश्रित्य त्रिंशन्मुहूर्तभोग्यं क्षेत्रमाकाशलक्षणं येषां तानि। स्था० ६ ठा० ३ उ०। यावत्प्रमाणं क्षेत्रमहोरात्रेण गम्यते नक्षत्रैस्तावत्क्षेत्रप्रमाणं चन्द्रेण सह योग यान्ति गच्छन्ति तानि समक्षेत्राणि। च० प्र० १० पाहु०। सू० प्र०। इह यावत्प्रमाणं क्षेत्रमहोरात्रेण गम्यते सूर्येण तावत्प्रमाणं चन्द्रेण सह योगं यान्ति गच्छन्ति तानि समक्षेत्राणि। सममहोरात्रप्रमितं क्षेत्रं ( ज्यो० ६ पाहु०। ) चन्द्रयोगमधिकृत्याऽस्ति येषां तानि समक्षेत्राणि। तथाविधेषु ज्योतिश्चक्रचारक्षेत्रेषु, सू० प्र० १० पाहु०।

समग-समक-न०। सार्द्धशब्दार्थे,व्य० २ उ०। युगपदेककाले, दश० ४ अ०। प्रज्ञा०। ज्ञा०। आ० म०। पुं०। वैताढ्यपर्वतेषु विद्याधरमनुष्येषु, आ० चू० १ अ०।

समगवोच्छिज्जमाणबंधोदया-समकव्युच्छिद्यमानबन्धोदया-स्त्री०। समकं-समकालं व्यवच्छिद्यमाना बन्धोदयौ यासां ताः। युगपद्बन्धोदयशालिनीषु कर्मप्रकृतिषु पं० स० ३ द्वार।

समगब्भसत्थ-समगर्भशास्त्र-न०। प्रशमगर्भशास्त्रे, षो० ४ विव०।

समग्ग-समग्र-त्रि०। सम्पूर्णे, तं०। समस्ते, वृ० १ उ० १ प्रक०। परिपूर्णे, पञ्चा० १४ विव०। औ०। दश०। प्रव०। दर्श०। प्रश्न०। सू० प्र०। समन्विते, उत्त० ८ अ०। निरवशेषे, अनु०।

समचउरंस-समचतुरस्र-न०। समं-नाभेरुपर्यधश्च सकलपुरुषलक्षणोपेतावयवतया तुल्यम्, अन्यूनाधिकाश्चतस्रोऽस्रयो यस्य तच्चतुरस्रं, समं च तच्चतुरस्रं च समचतुरस्रम्। तं०। तुल्यारोहपरिणाहं,सम्पूर्णाङ्गावयवस्वाङ्गुलाष्टशतोच्छ्रयं, तुल्यारोहपरिणाहत्वेन समत्वात् पूर्णावयवत्वेन चतुरस्रत्वात्तस्य चतुरस्रं सङ्गतमिति पर्यायौ। भ० १४ श० ७ उ०। प्रज्ञा०। कर्म०। जी०। चं० प्र०। अनु०। समाः-शरीरलक्षणोक्तप्रमाणाविसंवादिन्यश्चतस्रोऽस्रयो यस्य तत्समचतुरस्रम्, अस्रयस्त्विह चतुर्दिग्विभागोपलक्षिताः शरीरावयवास्तत्श्च सर्वेऽप्यवयवाः शरीरलक्षणोक्तप्रमाणाव्यभिचारिणो यस्य न तु न्यूनाधिकप्रमाणाः। तुल्यशरीरलक्षणोपेतावयवयुक्तेषु, स्था० ६ ठा० ३ उ०।

समचउरंससंठाण-समचतुरस्रसंस्थान-न०। समाः-शास्त्रोक्तलक्षणाविसंवादिन्यश्चतस्रोऽस्रयो यस्य तत्संस्थानं पर्यङ्कासनोपविष्टस्य जानुनोरन्तरम्। संस्थानभेदे, कर्म० १ कर्म०। स०। च० प्र०। उत्त०।

समचउरंससंठाणसंठिय-समचतुरस्रसंस्थानसंस्थित-त्रि०। समचतुरस्रं च तत्संस्थानं च समचतुरस्रसंस्थानं तेन संस्थिता। समचतुरस्रसंस्थानवस्तु, जी० ३ प्रति० ४ अधि०। रा०। सू० प्र०।

समचक्कवालसंठिय-समचक्रवालसंस्थित-त्रि०। समचक्रवालं समचक्रवालरूपं संस्थितं संस्थानं यस्य स तथेति विग्रहः। वृत्त, चं० प्र० ४ पाहु०।

समच्छेय-समच्छेद-पुं०। भङ्गे, आचा०१ श्रु० १ अ० ५ उ०।

समज-श्रमज-न०। शरीरजले, प्रव० ४० द्वार।

समजोइभूय-समज्योतिर्भूत-पुं०। समः-तुल्यो ज्योतिषाऽग्निना भूतो जातो यः स तथा। अग्निकल्पीभूते,विपा० १श्रु० ६ अ०। भ०। विशे०।

समज्जिणिसु-समार्जिषत्-क्रिया। गृहीतवन्ति, भ० २८ श० १ उ०।

समज्जिणित्ता-समर्ज्य-अव्य०। शुभकर्मोपचयं कृत्वेत्यर्थे, सूत्र० १ श्रु० ५ अ० १ उ०।

समज्जिय-समर्जित-त्रि०। रागद्वेषाभ्यामुपागते, उत्त० २६ अ०। कचवरापनयने, भ० ११ श० १० उ०।

समट्ठ-समर्थ-त्रि०। प्रतिपत्तु योग्ये, सूत्र० २ श्रु० ४ अ०। च० प्र०। ज्ञा०। उपपन्ने, जी० ३ प्रति० १ अधि० २ उ०। भ०। सङ्गते, कर्मपुद्गलानां सातिशये ज्ञानगम्यत्वात्। औ०।

समट्ठिइ-समस्थिति-त्रि० । सममेवोत्पन्ने,भ० ३४ श० १ उ०।

समण-शमन-पुं० । चिकित्सायाम् , आव० ४ अ० । रोगप्रशमने, नि० चू० २० उ० । औषधे , व्य० ३ उ० ।

समण-पुं० । समिति समतया शत्रुमित्रादिषु अणति प्रवर्तत इति समण प्राकृततया सर्वत्र ' समण ' त्ति । स्था० ४ ठा० ४ उ० । अथवाऽनेकार्थत्वाद्धातूनां प्रवर्त्तते इति समणो निरुक्तिवशात् । सर्वत्र तुल्यप्रवृत्तिमति, भ० १ श० १ उ० । स्था० । सूत्र० । अनु० ।

जह मम ण पिअं दुक्खं, जाणिअ एमेव सव्वजीवाणं ।
न हणइ न हणावेइ अ, सममणई तेण सो समणो ॥३॥

यथा मम-स्वात्मनि हननादिजनित दुःखं न प्रियमेवमेव सर्वजीवाना तन्नाभीष्टमिति ज्ञात्वा—चेतसि भावयित्वा समन्तानपि जीवान्न हन्ति स्वयं, नाप्यन्यैर्घातयति , चशब्दात्—घ्नतश्चान्यान्न समनुजानीत इत्यनेन प्रकारेण ' सममणति ' त्ति—सर्वजीवेषु तुल्यं वर्त्तत यतस्तेनासौ समण इति गाथार्थः । अनु० ।

समनस्-पुं० । सह मनसा शोभनेन निदानपरिणामलक्षणतापरहितेन च वर्तते इति समनाः,तथा—समाने स्वजनपरजनादिषु तुल्यं मनो यस्य स. समना. । सर्वत्र समभावेषु, स्था० ४ ठा० ४ उ० ।

तदेवं सर्वजीवेषु समत्वेन समणतीति समण इत्येकः पर्यायो दर्शितः, एवं समं मनोऽस्येति समना इत्यन्योऽपि पर्यायो भवत्येवेति दर्शयन्नाह—

णत्थि य से कोइ वेसो,पिओ अ सव्वेसु चेव जीवेसु ।
एएण होइ समणो, एसो अन्नोऽवि पज्जाओ ॥ ४ ॥

नास्ति च 'से' तस्य कश्चिद् द्वेष्य प्रियो वा,सर्वेष्वपि जीवेषु सममनस्त्वाद् ,अनेन भवति समं मनोऽस्येति निरुक्तविधिना समना इत्येषोऽपि पर्याय इति गाथार्थ । अनु० ।

श्रमण-पुं० । श्राम्यतीति श्रमण । साधौ, स्था० ४ ठा० ४ उ० । श्राम्यन्ति-श्रममानयन्ति पञ्चेन्द्रियाणि मनश्चेति श्रमण । दर्श० ३ तत्त्व । पं०चू० । श्राम्यति—संसारविषयखिन्नो भवति तपस्यतीति वा नन्दादित्वात् कर्तर्यनट् । श्रमण । ध० २ अधि० । " कृत्यल्युटो बहुलमिति " वचनात् कर्त्तरि ल्युट् । दश० १ अ० । श्रमु तपसि खेदे च । आ० चू० ३ अ० । आव । श्राम्यतीति श्रमण । विशे० । उत्त० । स्था० । आचा० । सूत्र० ।

तदेवं पूर्वोक्तप्रकारेण सामायिकवत. साधोः स्वरूपं निरूप्य प्रकारान्तरेणापि तन्निरूपणार्थमाह—

उरगगिरिजलणसागर—नहतलतरुगणसमो अ जो होइ ।
भमरमियधरणिजलरुह—रविपवणसमो अ सो समणो॥५॥

स श्रमणो भवतीति सर्वत्र सम्बध्यते, य कथंभूतो भवतीत्याह-उरग —सर्पस्तत्सम परकृताश्रयनिवासादित्येवं समशब्दोऽपि सर्वत्र योज्यते, तथा गिरिसम. परीषहोपसर्गनिष्प्रकम्पत्वात् , ज्वलनसमस्तपस्तेजोमयत्वात् तृणादिष्विव सूत्रार्थेष्वतृप्ते , सागरसमो गम्भीरत्वात् ज्ञानादिरत्नाकरत्वात् स्वमर्यादानतिक्रमाच्च , नभस्तलसम. सर्वत्र निरालम्बनत्वात् , तरुगणसमः सुखदुःखयोरदर्शितविकारत्वात् , भ्रमरसमोऽनियतवृत्तित्वात् , मृगसम. संसारभयोद्विग्नत्वात् , धरणिसमः सर्वखेदसहिष्णुत्वात् , जलरुहसम. कामभोगोद्भवत्वेऽपि पङ्कजलाभ्यामिव तदूर्ध्वं वृत्तेः, रविसम. धर्मास्तिकायादिलोकमधिकृत्याविशेषेण प्रकाशकत्वात् , पवनसमश्च सर्वत्राप्रतिबद्धत्वात् , स एवंभूतः श्रमणो भवतीति गाथार्थः ।

यथोक्तगुणविशिष्टश्च श्रमणस्तदा भवति यदा शोभनं मनो भवेदिति दर्शयति—

सो समणो जइ सुमणो, भावेण जइ ण होइ पावमणो ।
सयणे अ जणे य समो, समो अ माणाऽवमाणेसु ॥६॥

ततः श्रमणो यदि द्रव्यमन आश्रित्य सुमना भवेत् , भावमनश्चाश्रित्य यदि न भवति पापमनाः । सुमनस्त्वचिह्नान्येव श्रमणगुणत्वेन दर्शयति-स्वजने च--पुत्रादिके जने च--सामान्ये समो--निर्विशेष. मानापमानयोश्च सम इति गाथार्थ. । अनु० । पञ्चा० । दश० । " यः समः सर्वभूतेषु , त्रसेषु स्थावरेषु च । तपश्चरति शुद्धात्मा , श्रमणोऽसौ प्रकीर्तित. " ॥ १ ॥ इति । दश० १ अ० ।

-श्रमणनिक्षेप.—

समणस्स उ निक्खेवो, चउक्कओ होइ आणुपुव्वीए ।
दव्वे सरीरभविओ, भावेण उ संजओ समणो ॥१५३॥

श्रमणस्य तु—तुशब्दोऽन्येषां च मङ्गलादीनामिह तु श्रमणेनाधिकार इति विशेषणार्थः, निक्षेपश्चतुर्विधो भवत्यानुपूर्व्या नामाऽऽदिक्रमेण । नामस्थापने पूर्ववत् । द्रव्यश्रमणो द्विधा-आगमतो , नोआगमतश्च । आगमतो ज्ञातानुपयुक्त', नोआगमतस्तु ज्ञशरीरभव्यशरीरतद्व्यतिरिक्ताऽभिलापभेदेन द्रुमवदवसेयस्त चानेनोपलक्षयति । 'दव्वे सरीरभविओ' त्ति—भावश्रमणोऽपि द्विविध एव—आगमतो ज्ञातोपयुक्त , नोआगमतस्तु चारित्रपरिणामवान् यति. । तथा चाह-भावतस्तु संयत श्रमण इति गाथार्थ ।

अस्यैव स्वरूपमाह--

जह मम न पियं दुक्खं, जाणिय एमेव सव्वजीवाणं ।
न हणइ न हणावेइ य,सममणई तेण सो समणो ॥१५४॥
नत्थि य से कोइ वेसो, पिओ व सव्वेसु चेव जीवेसु ।
एएण होइ समणो, एसो अन्नो वि पज्जाओ ॥ १५५ ॥
तो समणो जइ सुमणो, भावेण य जइ न होइ पावमणो ।
सयणे य जणे य समो, समो उ माणावमाणेसु ॥१५६॥
उरगगिरि जलण सागर-णहयलतरुगणसमो य जो होइ ।
भमरमिगधरणिजलरुह-रविपवणसमो जओ समणो१५७

( गाथाचतुष्टयं सुगमम् । )

विसमितिणिसव्वायवंजुल-कणियारुप्पलसमेण समणेणं ।
भमरुंदुरुनडकुक्कुड-अद्दागसमेण होयव्वं ॥ १ ॥ (प्र०)

श्रमणेन विषसमेन भवितव्यं भवति सर्वरसानुपातित्वमधिकृत्य तथा तिनिशसमेन मानपरित्यागतो नम्रेण वातसमेनेति पूर्ववत् । वञ्जुलो-वेतसस्तत्समेन क्रोधादिविषाभिभूतजीवानां तदपनयनेन । एवं हि श्रूयते—किल वेतसमवाप्य निर्विषा भवन्ति सर्पा इति । कर्णिकारसमेनेति तत्पुष्पवत्प्रकटेन अशुचिगन्धापेक्षया च निर्गन्धेनेति । उत्पलसदृशेन प्रकृतिधवलतया सुगन्धित्वेन च, भ्रमरसमेनेति पूर्ववत् । उन्दुरुसमेन उपयुक्तदेशकालचारितया, नटसमेन तेषु तेषु प्रयोजनेषु तत्तद्वेषकरणेन, कुर्कुटसमेन संविभागशीलतया, स हि किल प्राप्तमाहारं पादेन विक्षिप्यान्यैः सह भुङ्क्ते इति, आदर्शसमेन निर्मलतया तरुणाद्यनुवृत्तिप्रतिबिम्बभावेन च । उक्तं च—" तरुणम्मि होइ तरुणो, थेरो थेरेहिं डहरए डहरो । अद्दाओ विव रूवं, अणुयत्तइ जस्स ज सील " ॥ १ ॥ एवंभूतेन श्रमणेन भवितव्यमिति गाथार्थः ।

इयं किल गाथा भिन्नकर्तृकी अत एवनाऽऽदिषु न पुनरुक्तदोष इति । साम्प्रतं तत्त्वभेदपर्यायैर्व्याख्येति न्यायाच्छ्रमणस्यैव पर्यायशब्दानभिधित्सुराह—

पव्वइए अणगारे, पासंडे चरग तावसे भिक्खू ।
परिवाइए य समणे, निग्गंथे संजए मुत्ते ॥ १५८ ॥

प्रकर्षेण व्रजितो-गतः प्रव्रजित. । आरम्भपरिग्रहादिति गम्यते । अगारं-गृहं तदस्यास्तीत्यगारो गृही न अगारोऽनगार । द्रव्यभावगृहरहित इत्यर्थः । पाखण्डं—व्रतं तदस्यास्तीति पाखण्डी । उक्तं च-" पाखण्ड व्रतमित्याहु-स्तद्यस्यास्त्यमलं भुवि । स पाखण्डी वदन्त्यन्ये, कर्मपाशाद्विनिर्गत. ॥ २ ॥ " चरतीति चरकस्तप इति गम्यते । तपोऽस्यास्तीति तापस । भिक्षणशीलो भिक्षु , भिनत्ति वाऽष्टप्रकारं कर्मेति भिक्षु । परि समन्तात्पापवर्जनेन व्रजति—गच्छतीति परिव्राजक. । च. समुच्चये । श्रमण. पूर्ववत् । निर्गतो ग्रन्थान्निर्ग्रन्थ. बाह्याभ्यन्तरग्रन्थरहित इत्यर्थ. । समेकीभावेनाहिंसादिषु यत.—प्रयतनवान् संयत । मुक्तो बाह्याभ्यन्तरेण ग्रन्थेनैवेति गाथार्थ. ।

तिन्नेताई दविए, मुणी य खंते य दंतविरए य ।
लूहे तीरट्ठे वि य, हवंति समणस्स नामाइं ॥ १५६ ॥

तीर्णवास्तीर्ण संसारमिति गम्यते । त्रायत इति त्राता धर्मकथादिना ससारदु खेभ्य इति भाव , रागादिभावरहितत्वाद् । द्रव्यम्—द्रवति-गच्छति तास्तान् ज्ञानादिप्रकारानिति द्रव्यम् । मुनि, पूर्ववत् । च. समुच्चये । क्षाम्यतीति क्षान्त —क्रोधविजयी एवमिन्द्रियादिदमनाद्दान्त , विरत'—प्राणातिपातादिनिवृत्त', स्नेहपरित्यागाद् रूक्ष , तीरेणार्थोऽस्येति तीरार्थी ससारस्येति गम्यते । तीरस्थो वा सम्यक्त्वादिप्राप्ते संसारपरिमाणात् एतानि भवन्ति श्रमणस्य नामानि-अभिधानानीति गाथार्थ । निरूपित श्रवणशब्द । दश० २ अ० । स० । आ० म० । न० । उत्त० । सूत्र० । अनु० । स्था० । रा० । जं० । दर्श० । सर्वत्राऽरक्तद्विष्टचित्ते, उत्त०१२ अ० । स्था० । आचा० । सर्वत्र वासीचन्दनकल्पे, सूत्र० १ श्रु० १६ अ० । ' निग्गंथ सक्क तावस-गेरुय आजीव पंचहा समणा ।' इति वचनात् पञ्चपाखण्डान्याश्रिते साधौ, अनु० । सूत्र० । जं० । पिं० । प्रश्न० ।

इदानीं ' समण ' त्ति चतुर्नवतं द्वारमाह—

निग्गंथ सक्क तावस, गेरुय आजीव पंचहा समणा ॥
तम्मि य निग्गंथा ते,जे जिणसासणभवा मुणिणो ॥३८॥
सक्का य सुगयसिस्सा, जे जमिला ते उ तावसा गीया ।
जे धाउरत्तवत्था, तिदंडिणो गेरुया ते उ ॥ ३६ ॥
जे गोसालगमयमणु-सरंति भन्नंति ते उ आजीवा ॥
समणत्तणेण भुवणे, पंच वि पत्ता पसिद्धिमिमे ॥४०॥

निर्ग्रन्था. शाक्यास्तापसा गेरुक्या आजीवाश्च पञ्चधा पञ्चभेदा श्रमणा भवन्ति ' तम्मि ' त्ति प्राकृतत्वादेकवचन, ततस्तेषु निर्ग्रन्थानां मध्ये निर्ग्रन्थास्ते भण्यन्ते ये जिनशासनभवा.—प्रतिपन्नपारमेश्वरप्रवचना मुनय -साधव , तथा शाक्या. सुगतशिष्या बौद्धा इत्यर्थ , ये च जटिला-जटाधारिणो वनवासिपाखण्डिनस्ते तापसा गीता.-कथिता., ये धातुरक्तवस्त्रास्त्रिदण्डिनस्ते तु गेरुका -परिव्राजका इत्यर्थ., तथा ये गोशालकमतमनुसरन्ति भण्यन्ते ते तु आजीवका इति । एते पञ्चापि श्रमणत्वेन भुवने प्रशस्ति प्राप्ता इति । प्रव० ६४ द्वार । दश० । आचा० । तपस्विनि, सूत्र० १ श्रु० २ अ० । स्था० । अनु० ।

साम्प्रतं श्रमणशब्दस्य प्रवृत्तिनिमित्तमुद्भावयन्नाह—

एत्थ वि समणे अणिस्सिए अणियाणे आदाणं च अतिवायं च मुसावायं च बहिद्धं च कोहं च माणं च लोहं च पिज्जं च दोसं च इच्चेव । जओ जओ आदाणं अप्पणो पदोसहेऊ ततो तओ आदाणातो पुव्वं पडिविरते पाणाइवाया सिआ दंते दविए वोसट्ठकाए समणे त्ति वच्चे ॥२॥

अत्राप्यनन्तरोक्ते विरत्यादिके गुणसमूहे वर्त्तमानश्रमणोऽपि वाच्य । एतद्गुणयुक्तेनापि भाव्यमित्याह-निश्चयेनाधिक्येन वा श्रितो निश्रित', न निश्रितोऽनिश्रित क्वचिच्छरीरादावप्यप्रतिबद्धस्तथा न विद्यते निदानमस्येत्यनिदानो-निराकाङ्क्षोऽशेषकर्मक्षयार्थी संयमानुष्ठाने प्रवर्त्तेत, तथा दीयते-स्वीक्रियतेऽष्टप्रकारं येन तदादान कषाया परिग्रह सावद्यानुष्ठानं वा, तथाऽतिपातनमतिपात प्राणातिपात इत्यर्थ , तं च प्राणातिपातं ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया परिहरेदेवमन्यत्रापि क्रिया योजनीया । तथा मृषावादोऽलीकवादस्त च, तथा 'बहिद्धं ' ति-मैथुनपरिग्रहौ तौ च सम्यक् परिज्ञाय परिहरेत् । उक्ता मूलगुणा., उत्तरगुणानधिकृत्याह क्रोधम्-अप्रीतिलक्षण मान-स्तम्भात्मक मायां च परवञ्चनात्मिका लोभं-मूर्छात्मकभावं तथा प्रेम-अभिष्वङ्गलक्षणं तथा द्वेष-स्वगतमनोबाधारूपमित्यादिकं संसारावतरणमार्गं मोक्षाध्वनोऽपध्वंसकं सम्यक् परिज्ञाय परिहरेदिति । एवमन्यस्मादपि यतो यत कर्मोपादानाद्-इहामुत्र चानर्थहेतोरात्मनोऽपाय पश्यति प्रद्वेषहेतूंश्च ततस्तत प्राणातिपातादिकादनर्थदण्डादानात् पूर्वमेव-अनागतमेवात्महितमिच्छु-

न् प्रतिविरतो भवेत्—सर्वस्मादनर्थहेतुभूताडुभयलोकविरुद्धाद्वा सावद्यानुष्ठानान्मुमुक्षुर्विरतिं कुर्यात् । यश्चैवंभूतो दान्त शुद्धो द्रव्यभूतो निष्प्रतिकर्मतया व्युत्सृष्टकायः स श्रमणो वाच्य. । सूत्र० १ श्रु० १६ अ० । 'अहिंसा सत्यमस्तेयं, ब्रह्मचर्यमलुब्धता ।' इत्येतच्छ्रमणलक्षणम् । सूत्र०२ श्रु० ६ अ० । तीर्थिके, सूत्र० २ श्रु० ५ अ० । यतौ, सूत्र० २ श्रु० १ अ० । अनु० । स्था० । आ०म० । तपस्युद्युक्ते, निश्चलमनसि, आचा० १ श्रु० ६ अ० २ उ० । सूत्र० । द्वादशप्रकारतपोनिष्टप्तदेहे, सूत्र० २श्रु० ६अ० । कल्प० । जं० । स्था० । तप श्रीसमालिङ्गिते, स० । महातपस्विनि, औ० । परमसमाध्युपेते, आ०म० १ अ० । परिव्राजकविशेषे, सूत्र० १ श्रु०१ अ० २ उ० । त्रिदण्डिप्रभृतौ, सूत्र० १ श्रु० १ अ० ३ उ० । मुक्त्यर्थं विद्यमाने साधौ, सूत्र० १ श्रु० ४ अ० १ उ० । प्रव्रजिते, सूत्र० १ श्रु० २ अ० ३ उ० । आ० म० । कृतमहाव्रताङ्गीकारे, तप. संसारखेदरूपेण 'श्रमू' खेदतपसोरिति धात्वर्थेन युक्ते ( आतु० । ) साधौ, अनु० । सूत्र० । उत्त० । द्वा० । पञ्चा० । ग० । जी० । मुनौ, उत्त० १ अ० । ( पञ्चभि स्थानैः श्रमणो महानिर्जरो महापर्यवसानो भवतीति 'महाणिज्जर' शब्दे षष्ठ भागे १८८ पृष्ठे गतम् । ) तथाविधबहुलोकसम्मतया गृहस्थपर्यायेऽपि लब्धश्रमणाभिधाने वीरस्वामिनि, अने० १ अधि० । भ० । जं० । विशे० । कल्प० । "समणे भीमभयभेरवं ओरालं अचेलयं परीसहं सहइ त्ति कट्टु देवेहिं से णामं कयं समणे भगवं महावीरे ।" आचा० २ श्रु० ३ चू० । श्रमणनिक्षेप.—दव्वसमणा निन्हगादि भावसमणा जे सव्वविरएसु अहिंसादिसु यतन्ति । आ० चू० ४ अ० । स्वप्नपाठका इव चारणश्रमणादय. स्वप्नफल कथयन्ति नवेति ?प्रश्नः । अत्रोत्तरम्—यथा स्वप्नपाठका. स्वप्नफल कथयन्ति तथा चारणश्रमणा अपि, यथा—"मज्झिमउवरिमगेवि—ज्जगाउ तो चविअ नंदिसेणसुरो । अवयरिओ तगब्भे, तो सा चउदस निय इ सुमिणे ॥३५॥ एत्थंतरम्मि नाणी, चारणसमणो समागओ तत्थ । विहिणा पुट्ठो रएणा, सुमिणाण फलं कहइ एव ॥ ३६ ॥" इति ॥२४॥ सेन० ।

श्रवण–पुं० । विष्णुनक्षत्राके नक्षत्रभेदे, चं० प्र० १० पाहु० ।

समनस्–पुं० । मन पर्यायज्ञानसहिते, कर्म० ४ कर्म० । भावसहिते, प्रश्न० ४ संघ० द्वार ।

समणग–श्रमणक–पुं० । श्रमण एव श्रमणक. । साधौ, औ० ।

समणगपइ–श्रमणकपति–पुं० । साधुसंघाधिपतौ, औ० ।

समणगुण–श्रमणगुण–पुं० । श्रमणाना गुणा. श्रमणगुणाः । मूलगुणोत्तरगुणेषु, तत्र पञ्च महाव्रतानि मूलगुणा. उद्गमोत्पादनैषणादय अष्टादश शीलाङ्गसहस्राणि च उत्तरगुणा. । नि० चू० १६ उ० ।

समणगुणमुक्कजोगि–श्रमणगुणमुक्तयोगिन्–पुं० । श्रमणानां गुणा मूलोत्तरगुणरूपा श्रमणगुणास्तैर्मुक्ता. परित्यक्तास्तद्रहिता ये योगा मनोवाक्कायव्यापारास्ते यस्य सन्ति स श्रमणगुणमुक्तयोगी । संयमदुर्बले व्य० २ उ० ।

समणगुणविउ–श्रमणगुणविद्–पुं० । श्रमणगुणान् वेत्तीति, विद्—ज्ञाने, श्रमणगुणविद् । मूलोत्तरगुणज्ञातरि, नि० चू० १६ उ० ।

समणघाय–श्रमणघात–पुं० । साधुमारके, "एस समणघाए" श्रमणघातको ( गोशालकः ) श्रमणयोस्तेजोलेश्याक्षेपलक्षणघातदानात् । भ० १५ श० ।

समणच्छण्ण–श्रमणच्छन्न–पुं० । श्रमणवेषधारिणि अश्रमणे । नि० चू० १६ उ० ।

समणजोगमुक्कधुर–श्रमणयोगमुक्तधुर–पुं० । परित्यक्तश्रमणव्यापारे, बृ० १ उ० २ प्रक० ।

समणत्त–श्रमणत्व–न० । साधुत्वे, उत्त० १६ अ० ।

समणधम्म–श्रमणधर्म–पुं० । श्राम्यन्तीति श्रमणाः–साधवस्तेषां धर्मः क्षान्त्यादिलक्षणः श्रमणधर्मः । पा० । आव० । ध० । साधुधर्मे, आ० चू० ४ अ० । ओघ० ।

दसविहे समणधम्मे पण्णत्ते, तं जहा–खंती १ मुत्ती २ अज्जवे ३ मद्दवे ४ लाघवे ५ सच्चे ६ संयमे ७ तवे ८ चियाए ९ बंभचेरवासे १० । ( सू० १४ )

स० १० सम० । स्था० । नं० । पञ्चा० । ल० । दश० । भ० । ति० । संथा । प्रश्न० । ( 'समण' शब्देऽस्मिन्नेव भागे अनुपदमेव पञ्चविधः श्रमणधर्म उक्तः । )

समणपज्जुवासणा–श्रमणपर्युपासना–स्त्री० । श्रमण ( साधु ) शुश्रूषायाम्, भ० ।

तहारूवं भंते ! समणं वा माहणं वा पज्जुवासमाणस्स किं फला पज्जुवासणा ?, गोयमा ! समणफला, से णं भंते ! समणे किं फले ?, नाणफले, से णं भंते ! नाणे किं फले ? विण्णाणफले, से णं भंते ! विन्नाणे किंफले ?, पच्चक्खाणफले, से णं भंते ! पचक्खाणे किंफले ?, संजमफले, से णं भंते संजमे किंफले ? अणण्हयफले, एवं अणण्हए तवफले, तवे वोदाणफले, वोदाणे अकिरियाफले, से णं भंते ! अकिरिया किंफला ?, सिद्धिपज्जवसाणफला पण्णत्ता, गोयमा !, गाहा–"सवणे णाणे य विण्णाणे, पच्चक्खाणे य संजमे । अणण्हए तवे चेव, वोदाणे अकिरिया सिद्धी" ॥ १ ॥ ( सू० ११२ )

'तहारूव' मित्यादि तथारूपम्—उचितस्वभावं कञ्चन पुरुषं श्रमणं वा तपोयुक्तम्, उपलक्षणत्वादस्योत्तरगुणवन्तमित्यर्थं, माहनं वा–स्वयं हननविवृत्तत्वात्परं प्रति मा हनेति वादिनम्, उपलक्षणत्वादेव मूलगुणयुक्तमिति भाव', वाशब्दौ समुच्चये, अथवा—श्रमणः—साधु माहन —श्रावकः 'सवणफले'त्ति—सिद्धान्तश्रवणफला, 'णाणफले त्ति–श्रुतज्ञानफलम्, श्रवणाद्धि श्रुतज्ञानमवाप्यते, 'विण्णाणफले' त्ति—विशिष्टज्ञानफलं श्रुतज्ञानाद्धि हेयोपादेयविवेककारिविज्ञानमुत्पद्यत एव, 'पच्चक्खाणफले' त्ति—विनिवृत्तिफलम्, विशिष्टज्ञानो हि पापं प्रत्याख्याति, 'संजमफले'त्ति–कृतप्रत्याख्यानस्य हि संयमो भवत्येव, 'अणण्हयफले' त्ति—अनाश्रवफल, संयमवान् किल नवं कर्म-

नोपादत्ते, ' तवफले ' त्ति—अनाश्रवो हि लघुकर्मत्वात्तपस्यतीति, ' वोदाणफले ' त्ति—व्यवदानं कर्मनिर्जरणं तपसा हि पुरातनं कर्म निर्जरयति, ' अकिरियाफले ' त्ति—योगनिरोधफलं, कर्म निर्जरातो हि योगनिरोधं कुरुते, ' सिद्धिपज्जवसाणफले ' त्ति—सिद्धिलक्षणं पर्यवसानफलं—सकलफलपर्यन्तवर्त्ति फलं यस्यां सा तथा । ' गाह ' त्ति—संग्रहगाथा, एतल्लक्षणं चैतद्-" विप्रमाक्षरपादं वा " इत्यादि छन्द शास्त्रप्रसिद्धमिति । भ० २ श० ५ उ० ।

समणभद्द-श्रमणभद्र-पुं० । चम्पायां जितशत्रुनृपस्य पुत्रे युवराजे, उत्त० २ अ० । ( दंसमसगपरि(री)सह' शब्दे चतुर्थभागे २४३६ पृष्ठे कथा । )

समणभूय-श्रमणभूत-पुं० । श्रमणः—साधुः स इव य. सः श्रमणभूतो भूतशब्दस्योपमानर्थत्वाच्छ्रमणो निर्ग्रन्थस्तद्वद्यस्तदनुष्ठानकरणात् स श्रमणभूतः । साधुकल्पे, स० ११ सम० । एकादशीमुपासकप्रतिमां प्रतिपन्ने श्रावके, प्रश्न० ५ संव० द्वार । ध० । उपा० । आ० म० ।

समणमाहणपडिलाभ-श्रमणब्राह्मणप्रतिलाभ-पुं० । श्रमणेभ्यो ब्राह्मणेभ्यश्च प्रतिलाभने, भ० ७ श० १ उ० । ( तत्फलम् ' आउ ' शब्दे द्वितीयभागे १३ पृष्ठे उक्तम् । )

समणोवासगस्स णं भंते ! तहारूवं समणं वा माहणं वा फासुएसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेमाणस्स किं कज्जति ?, गोयमा ! एगंतसो निज्जरा कज्जइ, नत्थि य से पावे कम्मे कज्जति । समणोवासगस्स णं भंते ! तहारूवं समणं वा माहणं वा अफासुएणं अणेसणिज्जेणं असणपाण० जाव पडिलाभेमाणस्स किं कज्जइ ?, गोयमा ! बहुतरिया से निज्जरा कज्जइ अप्पतराए से पावे कम्मे कज्जइ । समणोवासगस्स णं भंते ! तहारूवं अस्संजयअविरयपडिहयपच्चक्खायपावकम्मं फासुएण वा अफासुएण वा एसणिज्जेण वा अणेसणिज्जेण वा असणपाण० जाव किं कज्जइ ?, गोयमा ! एगंतसो से पावे कम्मे कज्जइ नत्थि से काइ निज्जरा कज्जइ । ( सू० ३३२ )

' समणे ' त्यादि, ' किं कज्जइ ' त्ति—किंफलं भवतीत्यर्थ, 'एगंतसो' त्ति—एकान्तेन तस्य श्रमणोपासकस्य । ' नत्थि य से' त्ति—नास्ति चैतद् यत् 'से' तस्य पापं कर्म क्रियते-भवति अप्रासुकदाने इवेति. ' बहुतरिय ' त्ति—पापकर्म्मापेक्षया, ' अप्पतराए ' त्ति—अल्पतरं निर्जरापेक्षया, अयमर्थ —गुणवते पात्राय अप्रासुकादिद्रव्यदाने चारित्रकायोपष्टम्भो जीवघातो व्यवहारतस्तच्चारित्रबाधा च भवति, ततश्च—चारित्रकायोपष्टम्भान्निर्जरा जीवघातादेश्च पापं कर्म्म, तत्र च स्वहेतुसामर्थ्यात्पापापेक्षया बहुतरा निर्जरा निर्जरापेक्षया चाल्पतरं पापं भवति । इह च विवेचका मन्यन्ते, असंस्तरणादिकारणेन एवाप्रासुकादिदाने बहुतरा निर्जरा भवति नाकारणे, यत उक्तम्—' संथरणम्मि असुद्धं, दोण्ह वि गेण्हतदिंतयाण हियं । आउरदिट्ठंतेणं, तं चेव हियं असंथरणे ॥ १ ॥ " इति । अन्ये त्वाहु —अकारणेऽपि गुणवत्पात्रायाप्रासुकादिदाने परिणामवशाद्बहुतरा निर्जरा भवत्यल्पतरं च पापं कर्म्मेति, निर्विशेषणत्वात् सूत्रस्य परिणामस्य च प्रमाणत्वात् । आह च—"परमरहस्समिसीणं, समत्तगणिपिडगझरियसाराणं । परिणामियं पमाणं, निच्छयमवलंबमाणाणं " ॥ १ ॥ यच्चोच्यते—'संथरणम्मि असुद्ध ' मित्यादिनाऽशुद्धं द्वयोरपि दातृगृहीत्रोरहितायेति तद्ग्राहकस्य व्यवहारत. संयमविराधनात्, दायकस्य च लुब्धकदृष्टान्तभावितत्वेनाव्युत्पन्नत्वेन वा ददत. शुभाल्पायुष्कतानिमित्तत्वात्, शुभमपि चायुरल्पमहित विवक्षया, शुभाऽल्पायुष्कतानिमित्तत्वं चाप्रासुकादिदानस्याल्पायुष्कताफलप्रतिपादकसूत्रे प्राक् चर्चितं, यत्पुनरिह तत्त्वं तत्केवलिगम्यमिति । तृतीयसूत्रे ' अस्संजयअविरये ' त्यादिनाऽगुणवान् पात्रविशेष उक्त । ' फासुएण वा अफासुएण वा ' इत्यादिना तु प्रासुकाऽप्रासुकादेर्दानस्य पापकर्मफलता निर्जराया अभावश्चोक्त, असंयमोपष्टम्भस्योभयत्रापि तुल्यत्वात्, यच्च प्रासुकादौ जीवघाताभावेन अप्रासुकादौ च जीवघातसद्भावेन विशेष सोऽत्र न विवक्षित., पापकर्म्मणो निर्जराया अभावस्यैव च विवक्षितत्वादिति, सूत्रत्रयेणापि चानेन मोक्षार्थमेव यद्दानं तच्चिन्तितम्, यत्पुनरनुकम्पादानमौचित्यदानं वा तन्न चिन्तितम्, निर्जरायास्तत्रानपेक्षणीयत्वाद्, अनुकम्पौचित्ययोरेव चापेक्षणीयत्वादिति । उक्तञ्च—" मोक्खत्थं जं दाणं, तं पइ एसो विही समक्खाओ । अणुकंपादाणं पुण, जिणेहिं न कयाइ पडिसिद्धं " ॥१॥ इति । भ० ८श०६ उ० ।

समणलिंग-श्रमणलिङ्ग-न० । साधुलिङ्ग, आच० ३ अ० ।

समणवरगंधहत्थि-श्रमणवरगन्धहस्तिन्-न० । श्रमणगजकलभाना यूथाधिपत्यपदमुद्वहमाने बृ० १ उ० २ प्रक० ।

समणविंदपरिवद्धय-श्रमणवृन्दपरिवर्द्धक-पुं० । श्रमणा एव श्रमणकास्तेषा वृन्दस्य परिवर्द्धको—वृद्धिकारी श्रमणवृन्दपरिवर्द्धक । श्रमणसमुदायवर्द्धके, औ० ।

समणव्वय-श्रमणव्रत-न० । साधुमते, सूत्र० १ श्रु० ७ अ० ।

समणसंघ-श्रमणसंघ-पुं० । साधुसघे, स्था० ४ ठा० ४ उ० ।

समणसिज्जा-श्रमणशय्या-स्त्री०।साधुवसतौ,ध० २ अधि० ।

समणसीह-श्रमणसिंह-पुं० । मुनिपुंगवे,प्रश्न०४ संव० द्वार ।

समणी-श्रमणी-स्त्री० । व्रतिन्याम् ,प्रव० १ द्वार । नि०चू० । आर्यिकाया सयत्याम्, जी० १ प्रति० । " ईदूतोर्ह्रस्व. " ॥ ८ । ३ । ४२ ॥ आमन्त्रणे सौपरेऽनेनात्रेकारस्य ह्रस्व । हे समणि ॥ प्रा० ३ पाद ।

समणुजाणणा-समनुज्ञापना-स्त्री०। अनुमोदने,पा० । "समणुजाणमाणा " आचा० १ श्रु० ८ अ० १ उ० ।

समणुण्ण-समनोज्ञ-त्रि० । एकसामाचारीप्रतिबद्धे, औ० । आचा० ।व्य० । साभोगिके,नि० चू० ५ उ० । आचा० ।वृ० ।चारित्रवति संविग्ने, आचा० १ श्रु० ८ अ० २ उ० । अनुमोदिते, पा० । आचा० ।

स्वमनोज्ञ–पुं०। स्वमनोज्ञमात्मविशेषशब्दादिविषयं तत्साधनवस्तुनि।

समनुज्ञ–पुं०। संविग्नविहारिभाविते, आचा० १ श्रु० ८ अ० १ उ०। स्था०।

समणुएणया–समनुज्ञता–स्त्री०। परस्परोपसंपदि, व्य० ४ उ०।

समणुएणा–समनुज्ञा–स्त्री०। समिति संगता औत्सर्गिकगुणयुक्तत्वेनोचिता आचार्यादितया अनुज्ञा समनुज्ञा। आचार्यादित्वेन समनुज्ञापने, स्था० ३ ठा० ३ उ०।

तिविधा समणुन्ना पत्ता, तं जहा–आयरियत्ताते, उवज्झायत्ताते, गणित्ताते। ( सू० १७४ + )

'अणुन्न' त्ति–अनुज्ञानमनुज्ञा–अधिकारदानम्, आचर्यते–मर्यादावृत्तितया सेव्यत इत्याचार्यः, आचारे वा पञ्चप्रकारे साधुरित्याचार्य, आह च–"पंचविह आयारं, आयसमाणा तहा पयासंता। आयारं दंसेन्ता, आयरिया तेण वुच्चंति ॥ १ ॥" तथा "सुतत्थविऊ लक्खण–जुत्तो गच्छस्स मेढिभूओ य। गणतत्तिविप्पमुक्को, अत्थं वाएइ आयरिओ ॥ २ ॥" तद्भावस्तत्ता तया, उत्तरत्र गणाचार्यग्रहणादनुयोगाचार्यतयेत्यर्थ, तथा उपेत्याधीयतेऽस्मादित्युपाध्याय, आह च–'सम्मत्तनाणदंसण–जुत्तो सुत्तत्थतदुभयविहिन्नू। आयरियठाणजोग्गो, सुत्तं वाएइ उवज्झाओ ॥१॥" इति। तद्भाव उपाध्यायता तया, तथा गण–साधुसमुदायो यस्यास्ति स्वस्वामिस्वसम्बन्धेनासौ गणी–गणाचार्यस्तद्भावस्तत्ता तया, गणनायकतयेति भाव इति, तथा समिति–सङ्गता औत्सर्गिकगुणयुक्तत्वेनोचिता आचार्यादितया अनुज्ञा समनुज्ञा, तथाहि–अनुयोगाचार्यस्यौत्सर्गिकगुणा –" तम्हा वयसपन्ना' कालोचियगहियसयलसुत्तत्था। अणुजोगाणुणाए, जोगा भणिया जिर्णिदेहिं ॥१॥ इह पर ( रहा ) मोसावाओ, पवयणखिंसा य होइ लोयम्मि। सेसाण वि गुणहाणी, तित्थुच्छेओ य भावेणं ॥ २ ॥" इति, गणाचार्योऽप्यौत्सर्गिक एवम्–"सुत्तत्थे निम्माओ, पियदढधम्मोऽणुवत्तणाकुसलो। जाईकुलसंपन्नो, गंभीरो लद्धिमंतो य ॥ १ ॥ संगहुवग्गहनिरओ, कयकरणो पवयणाणुरागी य ॥ एवंविहो उ भणिओ, गणसामी जिणवरिंदेहिं ॥२॥" अथैवविधगुणाभावे अनुज्ञाया अप्यभावात् कथमन्या समनुज्ञा भविष्यतीति?, अत्रोच्यते–उक्तगुणाना मध्यात् अन्यतमगुणाभावेऽपि कारणविशेषात् सम्भवत्येवासौ, कथमन्यथा विधीयते–'जे या वि मंदि त्ति गुरुं विइत्ता, डहरे इमे अप्पसुए त्ति नच्चा। हीलंति मिच्छं पडिवज्जमाणा, करेंति आसायण ते गुरूणं ॥१॥" इति। अत कयाञ्चित् गुणानामभावेऽप्यनुज्ञा, समग्रगुणभावे तु समनुज्ञेति स्थितम्। अथवा–स्वस्य मनोज्ञा –समानसामाचारीकतया अभिरुचिता समनोज्ञा सह वा मनोज्ञैर्ज्ञानादिभिरिति समनोज्ञा–एकसाम्भोगिका साधव, कथं त्रिविधा इत्याह–'आचार्यतये' त्यादि भिक्षुक्षुल्लकादिभेदा सन्तोऽपि न विवक्षिता, त्रिस्थानकाधिकारादिति। स्था० ३ ठा० ३ उ०। मनोज्ञाऽऽहारतया लम्पटे, सू० १ उ० २ प्रक०।

समणुबद्ध–समनुबद्ध–न०। अनवच्छिन्ने, ओघ०। प्रश्न०। रा०।

समणुबद्धवेरि–समनुबद्धवैरिन्–त्रि०। अव्यवच्छिन्नवैरिभावे, भ० १३ श० ६ उ०।

समणुमणिय–समनुमान्य–अव्य०। संभाव्येत्यर्थे, नि० चू० १ उ०।

समणुवासणा–समनुवासना–स्त्री०। विधाने, आचा० १ श्रु० २ अ० १ उ०। सम्यग्विधाने, आचा० १ श्रु० २ अ० ४ उ०।

समणुसट्ठ–समनुसृष्ट–त्रि०। दत्ते, आचा० २ श्रु० १ चू० १ अ० १० उ०।

समणुसुविहिय–समनुसुविहित–त्रि०। शोभनं विहितमनुष्ठानं येषां ते सुविहिताः, श्रमणाश्च ते सुविहिताश्च श्रमणसुविहिताः। श्रमणशब्देन सह विशेषणसमासः। शोभनानुष्ठानवत्सु साधुषु, व्य० १ उ०। दश०।

समणोवासग–श्रमणोपासक–पुं०। श्रमणानुपास्ते सेवत इति श्रमणोपासकः। दशा० १ अ०। देशविरतेन सह यः श्रमणोपासनमहिम्ना प्रतिदिनप्रवर्द्धमानसंवेगो यावज्जीव सूक्ष्मवादरादिभेदपरिज्ञानवान् भवति। भ० ८ श० ५ उ०। सूत्र०। आव०। आ०। स्था०। श्रावके, स्था०।

चत्तारि समणोवासगा पण्णत्ता, तं जहा–रायणिए समणोवासए महाकम्मे तहेव ४। ( सू० ३२० )

श्रमणोपासकश्रमणोपासिकासूत्राणि 'चत्तारि गम' त्ति–त्रिष्वपि सूत्रेषु चत्वार आलापका भवन्तीति। स्था० ४ ठा० ३ उ०। ( शेषपदानां व्याख्या स्वस्वशब्दे। )

चत्तारि समणोवासगा पण्णत्ता, तं जहा–अम्मापिइसमाणे भाइसमाणे मित्तसमाणे सवत्तिसमाणे। ( सू० ३२१ )

'अम्मापिइसमाणे' त्ति–मातापितृसमान, उपचार विना साधुषु एकान्तेनैव वत्सलत्वात्, भ्रातृसमानः अल्पतरप्रेमत्वात्तत्त्वविचारादौ निष्ठुरवचनादप्रीतेः तथाविधप्रयोजने त्वत्यन्तवत्सलत्वाच्चेति मित्रसमान. सोपचारवचनादिना प्रीतिहेते, तत्क्षतौ चापद्युपेक्षकत्वादिति समान.–साधारणः पतिरस्या. सा सपत्नी, यथा सा सपत्न्या ईर्ष्यावशादपराधान् वीक्षते एवं य साधुषु दूषणदर्शनतत्परोऽनुपकारी च स सपत्नीसमानोऽभिधीयत इति। स्था० ४ ठा० ३ उ०।

चत्तारि समणोवासगा पत्ता, तं जहा–अद्दागसमाणे पडागसमाणे खाणुसमाणे खरकंटकसमाणे। ( सू० ३२१ × )

'अद्दाग' त्ति–आदर्शसमानो यो हि साधुभि. प्रज्ञाप्यमानानुत्सर्गापवादादीनागमिकान् भावान् यथावत्प्रतिपद्यते सन्निहितार्थानादर्शकवत् स आदर्शसमान, यस्यानवस्थितो बोधो विचित्रदेशना वायुना सर्वतोऽपहियमाणत्वात् पताकेव स पताकासमान इति, यस्तु कुतोऽपि कदाग्रहान्न गीतार्थदेशनया चाल्यते सोऽनमनस्वभाववोधत्वेनाप्रज्ञापनीय स्थाणुसमान इति, यस्तु प्रज्ञाप्यमानो न केवलं स्वाग्रहान्न चलति अपि तु प्रज्ञापकं दुर्वचनकण्टकैर्विध्यति स खरकण्टकसमान, खरा–निरन्तरा निष्ठुरा वा कण्टा.–कण्टका यस्मिंस्तत् खरकण्ट ब-

च्चूलादिडालं खरण्मिति लोके यदुच्यते तच्च विलग्नं चीवरं न केवलमविनाशितं न मुञ्चति अपि तु तद्विमोचकं पुरुषादिकं हस्तादिषु कण्टकैर्विध्यतीति । अथवा—खरण्टयति—लेपवन्तं करोतीति यत्तत्खरण्टम्-अशुच्यादि तत्समानो यो हि कुबोधापनयनप्रवृत्तं ससर्गमात्रादेव दूषणवन्तं करोति,कुबोधकुशीलता दुष्प्रसिद्धिजनकत्वेनोत्सूत्रप्ररूपकोऽयमित्यसद्दूषणोद्भावकत्वेन वेति । स्था० ४ ठा० ३ उ० । प्रति० । ध० ।

कहं णं भंते ! समणोवासगा आराहियपक्खा भविस्संति । जंबू ! चउव्विहा समणोवासगा बुइया-रायसमाणा पियसमाणा मायसमाणा सवत्तिसमाणा । जे रायसमाणा भविस्संति ते साहूणं साहुणीणं उवद्दवे आयबलेणं धणबलेणं कुडुंबलेणं णिवारणा भविस्संति, तंसिमवि साहुसाहुणीणं असमंजसायारे दट्ठूणं एगंते हक्कारिऊण महुराए भासाए कहिस्संति । भो भो महाणुभागा ! सिरिसुहम्मं सामिअपट्टपरंपरेणं अमुगे अमुगे एयारिसे छत्तीसगुणगणधारए पावभीरू आयरिए जाए । तेहिं एअस्स गणस्स ठवणा किं अप्पगणमज्झे वि एरिसे गुणसंपन्नो आयरिए उवज्झाए जाए तेहिं णियपदे तुमं पि आरोविया कहं एरिसपमायधरा जाया । सारणवारणचोयणाए कहमकुसला भवह , तुम्हेहिं पमायं वहंतेहिं अम्हाणं का गई भविस्सइ । तुम्हा णं जं किंचि वि लोयज्जइ तं अम्हाणं थेरे बहु अत्थि । असणपाणखाइमवत्थपडिग्गहंकंबलपायपुच्छणओसहभेजेणं । पीढफलगसिज्जासंथारएहिं अम्हे णियरिद्धिमणुदएणं पडिलाभिस्सामो पुण तुम्हारिसेहिं महाणुभागेहिं पमाओ ण कायव्वो । तहावि ते ण पडिबुज्झंति तओ महाणुभागा सावया णो णियगणस्स सामायारिं चइस्संति । अक्खए वराडए पमुहे दसविहे पुव्वायरियाणं भागाणं ठवणा काऊण आवस्सए करिस्संति, परपासंडीणं परगणस्स समायारिलोवगाणं किरियाए फडाडोयं दट्ठूण णो णियगणस्स समाचारीए चइस्संति । ते महाणुभागा समणोवासगा हविस्संति । भरहवासे थोवा चेव रायसमाणा सव्वत्थ उच्चियकरणसीला गुणाणुरागिणो अगुणे समजत्थभाविणो दीहदंमिणो सगणे परगणे वा साहुदिट्ठीए दट्ठूण बहुआनंदपूरिया समुस्ससियरोमकूवा हरिसवसविसप्पमाणहियया अभिगमणवंदणनमंसणेणं पडिपुच्छणं पज्जुवासणाए पज्जुवासिस्संति, परं णो णियगणसामायारीए लेसमवि चइस्संति ते महारायतुल्ला । जहा राया णियरज्जविचिंतेण चइति तहा ते समणोवासगा पुव्वायरियाणं गुणं संभरणंता एगंतसो आराहगा मत्तद्दमत्तग्गहाइं नाइक्कमिस्संति । मायपियसमाणा वि एरिसा चेव परं विसेसो-जे मायापियसमाणा ते गणवासियाणं आयरियाणं पासित्ता णिच्चमो अक्कोसिस्संति, पुत्तमिव असणपाणाइविहीए पोसणमवि करिस्संति परं णो णियकुलकमाऽऽगयं लंघिस्संति ते आराहिया णो विराहिया । अङ्ग० ।

( श्रमणोपासकनिर्जरा ' महाणिज्जरा ' शब्दे षष्ठभागे १८८ पृष्ठे व्याख्याता । ) श्रमणोपासका आनन्दादयः उपासकदशाभिहिता इति । स्था० ४ ठा० ३ उ० । दानाधिकारे तु श्रूयते द्विविधाः श्रमणोपासका -संविग्नभाविता', लुब्धकदृष्टान्तभाविताश्चेति । यथोक्तम्-'संविग्गभावियाणं, लुद्धयदिट्ठंतभावियाण च । मुत्तूण खेत्तकाले, भावं च कहिंति सुद्धुञ्छं " ॥१॥ इति । स्था० ३ ठा० १ उ० । (कृतसामायिकस्य श्रमणोपासकस्य प्रत्याख्यानभङ्गाः ' सामाइयकड ' शब्देऽस्मिन्नेव भागे वक्ष्यन्ते । )

समणोवासगधम्म-श्रमणोपासकधर्म-पुं० । श्रमणानुपासते सेवन्त इति श्रमणोपासकास्ते च श्रमणोपासनतोऽभिगतजीवाजीवस्वभावास्तथोपलब्धपुण्यपापास्तेषां धर्मः । श्रावकधर्मे, सूत्र० २ श्रु० २ अ० ।

समणोवासगपडिमा-श्रमणोपासकप्रतिमा-स्त्री० । श्रावकाभिग्रहविशेषेषु, पञ्चा० ।

अथ कियत्य किमादिकाश्च ता इत्यस्यामाशङ्कायामाह—

समणोवासगपडिमा, एक्कारस जिणवरेहिँ पण्णत्ता ।
दंसणपडिमादीया, सुयकेवलिणा जतो भणियं ॥ २ ॥

व्याख्या—श्रमणोपासकप्रतिमाः श्रावकाभिग्रहविशेषाः । एकादश संख्यया जिनवरैरर्हद्भिः —प्रज्ञप्ता—उक्ताः दर्शनप्रतिमादिकाः -सम्यक्त्वाभिग्रहप्रभृतिकाः । एतदेव भद्रबाहुस्वामिवचनेन समर्थयन्निदमाह—श्रुतकेवलिना—परिपूर्णश्रुतधरेण भद्रबाहुस्वामिनेत्यर्थः । यतो—यस्माद्भणितमुक्तम् , इति गाथार्थः ॥२॥ पञ्चा०१०विव० । (ताश्च स्वरूपत 'उवासगपडिमा ' शब्दे द्वितीयभागे १०१६ पृष्ठे उक्ताः । )

समणोवासिया-श्रमणोपासिका-स्त्री० । श्राविकायाम् ,स्था० ।

चत्तारि समणोवासियाओ पण्णत्ताओ,तं जहा-रायणिया समणोवासिया महाकम्मा तहेव चत्तारि गमा । ( सू० ३२० X ) स्था० ४ ठा० ३ उ० ।

समण्णागय-समन्वागत-पुं० । प्राप्तानां संयुक्ते,ग०१ अधि० । रत्ना० । नि० चू० । समनुप्राप्ते, रा० ।

समण्णाहार-समन्वाहार-पुं० । समागमने, स्था०४ ठा० २ उ० ।

समण्णिय-समन्वित-त्रि० । सहिते, आचा० १ श्रु० ३ अ० २ उ० । संयुक्ते, पो० १४ विव० । आव० । सूत्र० ।

समतल-समतल-न० । अविषमे, प्रश्न० ५ आश्र० द्वार । अविषमोन्नते, (पादादौ) वाने, जी० ३ प्रति० ४ अधि० ।

समतलपइया-समतलपादिका-स्त्री० । समतले द्वयोरपि भुवि विन्यस्तत्वात्पदे पादौ यस्या सा समतलपादिका । द्वाभ्यामपि पादाभ्यां भुवि लग्नायाम् , आ० १ श्रु० १ अ० ।

समता-समता-स्त्री० । इष्टानिष्टेषु वस्तुषु विवेकेन तत्त्वधियाम्, पं० व० १ द्वार । द्वा० ।

व्यवहारकुदृष्ट्योच्चै-रिष्टानिष्टेषु वस्तुषु ।
कल्पितेषु, विवेकेन, तत्त्वधीः समतोच्यते ॥ २२ ॥

व्यवहारकुदृष्ट्या अनादिमत्या वितथगोचरया कुव्यवहारवासनयाऽविद्यापराभिधानया उच्चैरतीव कल्पितेषु इष्टानिष्टेषु इन्द्रियमनःप्रमोदद्वायिषु तदितरेषु च वस्तुषु शब्दादिषु विवेकेन नानेवार्थान् क्षिपतस्तानेवार्थान् प्रलीयमानस्य निश्चयतो नानिष्टं न विद्यते किंचिदिष्टं वेत्यादि निश्चयालोचनेन तत्त्वधीरिष्टानिष्टत्वपरिहारेण तुल्यताधीरुपेक्षालक्षणा समतोच्यते । यदुक्तम्-"अविद्याकल्पितेषूच्चै-रिष्टानिष्टेषु वस्तुषु । संज्ञानात्तद्व्युदासेन, समता समतोच्यते ॥१॥" द्वा० १८ द्वा० ।

समताल-समताल-त्रि० । समशब्दः प्रत्येकं संबध्यते तेन समास्ताला-हस्तताला उपचारात्तद्ध्वोऽस्मिंस्तत्समतालम् । ताले समे, स्था० ७ ठा० ३ उ० । गीतादिमानकालिनानां समोऽन्यूनाधिकमात्रकत्वेन यस्माद् ज्ञायते तत्समतालविज्ञानम् । कलाभेदे, ज० २ वक्ष० । स० ।

समतिणमणिलेट्ठुकंचण -समतृणमणिलेष्टुकाञ्चन-त्रि० । समानि तुल्यानि तृणमणिलेष्टुकाञ्चनानि यस्य स तथा । निःस्पृहे, कल्प० १ अधि० ६ क्षण ।

समतिपवित्ति-स्वमतिप्रवृत्ति-स्त्री० । आत्मबुद्धिपूर्विकायां चेष्टायाम्, पञ्चा० ७ विव० ।

समतीरा-समतीरा-स्त्री० । समं-गर्त्ताभावात् अविषमं तीरं-तीरजलापूरितं स्थानं यासां ता. समतीरा. । अविषमतटासु नद्यादिषु, रा० । जी० ।

समत्त-समस्त-त्रि० । "स्तस्यथोऽसमस्त-स्तम्बे" ॥८।२।४५॥ अत्रासमस्तग्रहणात् समस्तशब्दस्य न स्तस्य थकार. स्यात् । समत्तो । सम्पूर्णे, प्रा० । आ० म० । उत्त० । प्रव० । प्रश्न० । संथा० । विशे० ।

समाप्त-त्रि० । सम्यक् प्रकारेण संपूर्णमधीतम् । पूर्णतां नीते, उत्त० २६ अ० । ध० । द्वा० । सूत्र० । संथा० ।

समत्तकप्प-समाप्तकल्प-पुं० । व्यवस्थाभेदे, ध० ३ अधि० । साधुपञ्चकविहारे, पं० व० ४ द्वार ।

समत्तकप्पिय-समाप्तकल्पित-त्रि० । पृथक्कल्पोपेते, व्य०४उ० ।

समत्तगणिपिडगब्भत्थसार-समस्तगणिपिटकाभ्यस्तसार-पुं० । परिपूर्णद्वादशाङ्गज्ञानतत्त्वे, जी० १ प्रति० ।

समत्तगोल-समस्तगोल-पुं० । संपूर्णगोले, भ० ११ श० ११ उ० ।

समत्तदंसि(ण्)-सम्यक्त्वदर्शिन्-त्रि० । रागद्वेषरहिते, आचा० १ श्रु० २ अ० ६ उ० ।

समत्तपइण्ण-समाप्तप्रतिज्ञ-त्रि० । समाप्ताभिग्रहे, भ० १५ श० ।

समत्थ-समर्थ-पुं० । शक्ते, आचा० १ श्रु० १ अ० ७ उ० । ज० । ग० । स्था० । स्था० । भ० । विशे० ।

समत्थणा-समर्थना-स्त्री० । विधौ, विशे० ।

समत्थिय-समर्थित-त्रि० । उपपादिते, प्रति० ।

समदंसि-समदर्शिन्-त्रि० । समानदृष्टौ, "विद्याविनयसंपन्ने, ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च, पण्डिताः समदर्शिनः ॥ १ ॥" सूत्र० २ श्रु० ५ अ० ।

समपत्थर-समप्रस्तर-पुं० । समपाषाणे, प्रश्न० ३ आश्र० द्वार ।

समपद-समपद-न० । द्वयोरपि पादयोः समत्वेन नैरन्तर्येण स्थापने योधस्थानभेदे, द्वावपि पादौ समौ नैरन्तर्येण स्थापयति । उत्त० ४ अ० ।

समपदुक्खेव-समप्र(तिक्षे)त्युत्क्षेप-न० । समः प्रत्युत्क्षेपः प्रतिक्षेपो वा मुरजकंसतालाद्यातोद्यानां यो ध्वनिस्तल्लक्षणो नृत्यपादक्षेपलक्षणो वा यस्मिंस्तत्समप्रत्युत्क्षेपं समप्रतिक्षेपञ्चेति । गेयभेदे, स्था० ७ ठा० ३ उ० ।

समपाद-समपाद-न० । युद्धस्थानभेदे, "समपादट्ठितो उज्झत्ति तं समपादं । अराणे भणंति जं एतेसिं चेव ठाणाणं जहासंभवं चलिय ठितो पासतो पिट्ठतो वा उज्झाति । नि० चू० १ उ० ।

समपायपुया-समपादपुता-स्त्री । यस्यां पादौ पुतौ च स्पृशत. सा समपादपुता । स्था० ५ ठा० १ उ० । समौ समतया भूलग्नौ पादौ च पुतौ च यस्यां सा । निषद्याभेदे, स्था० ५ ठा० १ उ० ।

समपासि-समदर्शिन्-पुं० । समम्-अविपरीतं पश्यतीत्येवं शीले, ग० १ अधि० ।

समप्पभ-समप्रभ-त्रि० । समा-सदृशी प्रभा दीप्तिर्यत्र तत्तथा । सनत्कुमारदेवलोके स्वनामख्याते विमाने, स० ७ सम० । प्रश्न० ।

समप्पिय-समर्पित-त्रि० । ढौकिते, प्रश्न० ३ आश्र० द्वार ।

समभंग-समभङ्ग-त्रि० । समो-दन्तुरो भङ्गश्छेदो यस्य भवति तत्समभङ्गम् । अदन्तुरच्छेदे पत्रादौ, प्रव० ४ द्वार ।

समभरघडता-समभरघटता-स्त्री० । समो न विषमो घटैकदेशमनाश्रितत्वेन भरो-जलसमुदायो यत्र स समभर. । सर्वथा भृतो वा समभरः । समशब्दस्य सर्वशब्दार्थत्वात्, समभरश्चासौ घटश्चेति समास । समभरघट इव समभरघटस्तद्भावस्तत्ता । सर्वथा भृतघटाकारतायाम्, भ० १ श० ६ उ० । जी० ।

समभाव-समभाव-पुं० । रागादिविहितवैषम्यविरहितपरिणामे, पञ्चा० ५ विव० । मध्यस्थाध्यवसाये, पञ्चा० ११ विव० । रागद्वेषमध्यवर्तिनि, आव० ५ अ० ।

समभिआवन्न-समभ्यापन्न-त्रि० । अभिमुखं समापन्ने, सूत्र० १ श्रु० ४ अ० २ उ० ।

समभिरणाण-समभिज्ञान-न० । सम्यगाभिमुख्येन परिच्छेदे, आचा० १ श्रु० ६ अ० ३ उ० । गुरुसाक्षिगृहीतप्रतिज्ञानिर्वाहे, आचा० १ श्रु० ३ अ० ३ उ० ।

समभिभूय-समभिभूत-त्रि० । परिभूते, प्रश्न० ४ आश्र० द्वार।

समभिरूढ-समभिरूढ-पुं० । वाचकं वाचकं प्रति वाच्यभेदं समभिरोहयत्याश्रयति य स समभिरूढः । स्था०३ ठा०३ उ०। पर्यायशब्देषु निरुक्तिभेदेन भिन्नमर्थं समभिरोहयन् समभिरूढः । स्था० । पर्यायशब्दानां प्रविभक्तार्थाभिमन्तरि नयभेदे, स्या० । विशे० ।

अथ समभिरूढनयमाह—

जं जं सण्णं भासइ, तं तं चिय समभिरोहए जम्हा ।
सण्णंतरत्थविमुहो, तओ तओ समभिरूढो त्ति ॥२२३६॥

या या संज्ञा घटादिलक्षणा भाषते—वदति ता तामेव यस्मात् संज्ञान्तरार्थविमुखः कुटकुम्भादिशब्दवाच्यार्थनिरपेक्षः समभिरोहति समध्यास्ते तत्तद्वाच्यार्थविषयत्वेन प्रमाणीकरोति , ततस्तस्माद् नानार्थसमभिरोहणात् समभिरूढो नयः । यो घटशब्दवाच्योऽर्थस्तं कुटकुम्भादिपर्यायशब्दवाच्यं नेच्छत्यसावित्यर्थः इति ।

यदुक्तं निर्युक्तिकृता 'वत्थुओ संकमणं,होइ अवत्थु-नए समभिरूढे' इति, तद्व्याख्यानार्थमाह—

दव्वं पज्जाओ वा, वत्थं वयणंतराभिधेयं जं ।
न तदन्नवत्थुभावं, संकमए संकरो मा भू ॥ २२३७ ॥
न हि सद्दंतरवच्चं, वत्थुं सद्दंतरत्थतामेइ ।
संसयविवज्जएग-त्तसंकराइप्पसंगाओ ॥ २२३८ ॥

द्रव्यं-कुटादि, पर्यायस्तु तद्गतो वर्णादिस्तल्लक्षणं प्रस्तुतघटादिवचनाद् यत्-कुटादि वचनान्तरं तदभिधेयं यद् वस्तु न तदन्यवस्तुभावं घटादिशब्दाभिधेयवस्तुभावं संक्रामति । कुतः ? , इत्याह—वस्तुनो वस्त्वन्तरसंक्रमे मा भूत् संकरादिदोष इति । एतदेव भावयति—नहि शब्दान्तरवाच्यं वस्तु शब्दान्तरवाच्यार्थरूपतामेति । एवं हि घटादौ पटाद्यर्थसंक्रमे किमयं घटः पटादिर्वा ? इति संशयः स्यात् , विपर्ययो वा भवेत् , घटादावपि पटादिनिश्चयात् , पटादौ वा घटाद्यध्यवसायादेकत्वं वा घट-पटाद्यर्थाना प्राप्नुयात् , मेचकमणिवत् संकीर्णरूपता वा घटपटाद्यर्थाना भवेदिति । इयमत्र भावना—घटः कुटः कुम्भ इत्यादिशब्दात् पटस्तम्भादिशब्दादिव भिन्नप्रवृत्तिनिमित्तत्वाद् भिन्नार्थगोचरानेव समभिरूढनयो मन्यते , तथाहि—घटनाद् घट इति विशिष्टचेष्टावानर्थो घट इति गम्यते , तथा 'कुट' कौटिल्ये, कुटनात् कौटिल्ययोगात् कुट , तथा 'उभ' 'उम्भ' पूरणे, कुम्भनात् कुत्सितपूरणात् कुम्भ इति भिन्ना. सर्वेऽपि घट—कुटाद्यर्था. । ततश्च यदा घटाद्यर्थे कुटादिशब्दः प्रयुज्यते तदा वस्तुतः कुटादेस्तत्र संक्रान्तिः कृता भवति, तथा च सति यथोक्तसंशयादिदोष इति ।

ततो घटकुटाद्यर्थाना भेदसाधनायैव प्रमाणयन्नाह-

घडकुडसद्दत्थाणं, जुत्तो भेओऽभिहाणभेआओ ।
घडपडसद्दत्थाण व, तओ न पज्जायवयणं ति ।२२६६।

घटकुटकुम्भादिशब्दवाच्यानामर्थाना भेद एव परस्परं युक्त इति प्रतिज्ञा । अभिधानभेदाद्—वाचकध्वनिभेदादिति हेतुः । घटपटस्तम्भादिशब्दवाच्यानामिवार्थानामिति दृष्टान्तः । तत एतदभिप्रायेण घटादेः कुटकुम्भकलशादिकं पर्यायवचनं नास्त्येव, एकस्मिन्नर्थेऽनेकशब्दप्रवृत्त्यनभ्युपगमादिति ।

अतिक्रान्तशब्दनयशिक्षणार्थमाह—

धणिभेयाओ भेओ, ऽणुमओ जइ लिंग वयणभिन्नाणं ।
घडपडवच्चाणं पिव,घटकुडवच्चाण किमणिट्ठो ।।२२४०।।

हन्त ! यदि लिङ्गवचनभिन्नाना घटपटस्तम्भादिशब्दवाच्यानामिवार्थाना ध्वनिभेदाद् भेदस्तवानुमत , तर्हि घटकुटकुम्भकलशादिशब्दवाच्यानामर्थाना किमिति भेदो नेष्ट , ध्वनिभेदस्यात्रापि समानत्वात् । तस्मादस्मत्पथवर्तित्वं भवतोऽपि बलादापतितमिति ।

वसतिप्रस्थकादिविचारेऽप्यस्य पूर्वनयेभ्यो भेद इति दर्शयन्नाह—

आगासे वसइ त्ति य, भणिए भणइ किह अन्नमन्नम्मि ।
मोत्तूणायसहावं, वसेज्ज वत्थुं विहम्मम्मि ? । २२४१ ।
वत्थुं वसइ सहावे, सत्ताओ चयणा व जीवम्मि ।
न विलक्खणत्तणाओ, भिन्ने छायातवे चेव ।२२४२।

'काऽसौ साध्वादिर्वसति ?' इति पृष्ठे 'लोकग्रामवसत्यादौ वसति' इति नैगमादिनयवादिनो वदन्ति । ऋजुसूत्रनयवादी तु वदति—' यत्रावगाढस्तत्राकाशखण्डे वसति' । ततश्च ऋजुसूत्रेणैवं भणिते भणति समभिरूढ — नन्वात्मस्वभावं मुक्त्वा कथमन्यद् वस्त्वन्यस्मिन् विधर्मके आत्मविलक्षणे वस्तुनि वसेत् ? न कथञ्चिदित्यर्थः । तर्हि क्व वसति ? इत्याह—सर्वमेव वस्त्वात्मस्वभावे वसति , सत्त्वात् , जीवे चेतनावत् । भिन्ने त्वात्मविलक्षणस्वरूपे वस्तुन्यन्यद् न वसति, यथा छायाऽऽतप इति । एष त्रयाणामपि शब्दनयानामभिप्राय इति ।

अथ प्रस्थकविचारमधिकृत्याह-

माणं पमाणमिट्ठं, नाणसहावो स जीवओऽणन्नो ।
कह पत्थयाइभावं, वएज्ज मुत्ताइरूवं सो ।।२२४३।।
नहि पत्थाइ पमाणं, घडो व्व भुवि चेयणाइ विरहाओ ।
केवलमिव तन्नाणं,पमाणमिट्ठं परिच्छेओ ।।२२४४।।

इह यद् मानं तत् प्रमाणमेवेष्टम् , प्रमीयते-परिच्छिद्यतेऽनेन वस्त्वनेनेति कृत्वा । प्रमाणं च परिच्छेदात्मकं जीवस्वभाव एव, स च जीवादनन्य , अत. कथं मूर्तादिस्वभावम् , आदिशब्दादचेतनस्वभावं प्रस्थकादिस्वभावं प्रजेदसौ , येन नैगमादय काष्ठमयं प्रस्थादिकमानमिच्छन्ति ? । तर्हि शब्दनयानां किं प्रस्थकादि प्रमाणम् किं वा न प्रमाणम् ? , इत्याह—नहि-नैव काष्ठघटितं प्रस्थादिकं प्रमाणम् , चेतनादिरहितत्वात् घटपटलोष्टादिवत् , किंतु-तस्य प्रस्थकस्य ज्ञानं तज्ज्ञानं तदुपयोगस्तत्परिच्छेद प्रमाणं मानमिष्टम् ,नैवं तत्त्वत प्रमीयमाणत्वात् । ' परिच्छेया ' इति पाठान्तरं वा, तत्रैव परिच्छेदान , केवलज्ञानवत् । तस्मात् प्रस्थकज्ञानमेव प्रस्थक इति स्थितम् ।

अत्र परमतमाशङ्क्य परिहरन्नाह—

पत्थादओ वि तक्का-रणं ति माणं मई न तं तेसु ।
जमसंतेसु वि बुद्धी,कासइ संतेसु वि न बुद्धी ॥२२४५॥
तक्कारण ति वा जइ, पमाणसिद्धं तओ पमेयं पि ।
सव्व पमाणमेवं, किमप्पमाणं पमाणं वा ॥२२४६॥

प्रस्थादयोऽपि मानमिति प्रतिज्ञा, तत्कारणात्—प्रस्थकज्ञानकारणत्वात्, यथा ' नड्वलं पादरोग ' इत्येवंभूता परस्य मति स्यात्। तदेतद् न,यतस्तेषु प्रस्थकादिष्वसत्स्वपि कस्यापि धान्यराश्यवलोकनमात्रेणापि कलनशक्तिसंपन्नस्य अतिशयज्ञानिनो वा प्रस्थकपरिच्छेदबुद्धिरुपजायते । कस्यापि पुनर्नालिकेरद्वीपाद्यायातस्य सत्स्वपि तेषु प्रस्थकपरिच्छेदबुद्धिर्न संपद्यते, इत्यनैकान्तिका एव काष्ठमयप्रस्थकादय प्रस्थकज्ञानजनने, इति कथं तत्कारणत्वात् ते प्रस्थकादिमानरूपा भवेयु ?, यदि वा-भवन्तु ते तत्कारणम् ,तथापि न तत्कारणत्वेन तेषा प्रस्थादिमानरूपता, अतिप्रसङ्गादिति दर्शयति-'तक्कारणं ति वे' त्यादि, यदि प्रस्थकज्ञानकारणतामात्रेणापि ते काष्ठमयप्रस्थकादय प्रमाणमिष्टा , तर्हि प्रमेयमपि प्रमाणं प्राप्नोति, प्रमाणज्ञानकारणत्वात् । एवं च सति दधिभक्षणादीनामपि परम्परया तत्कारणत्वेन प्रमाणत्वात् किं नामाप्रमाणं स्यात् ?। यदि च सत्यपि तत्कारणत्वेऽन्यत् सर्वं दधिभक्षणादिक न प्रमाणम् , तर्हि काष्ठमयप्रस्थकादयोऽपि न प्रमाणम्, अत कि नाम प्रमाणं भवेत् ?-न किञ्चित् । ततो विशीर्णा प्रमाणाप्रमाणव्यवस्था । तस्मात् प्रस्थकज्ञानमेव प्रस्थकप्रमाण त्रयाणामपि शब्दनयानामिति ।

तथा—पञ्चाना—धर्माऽधर्माऽऽकाशजीवपुद्गलास्तिकायानां देशप्रदेशकल्पनायामस्य षष्ठीसमासादि नेष्टम्। किं तर्हि ? देशी चासौ देशश्चेत्यादि कर्मधारयमेव मन्यतेऽसौ नय कुत ? इत्याह—

देसी चेव य देसो, नो वत्थुं वा न वत्थुणो भिन्नो ।
भिन्नो व न तस्स तओ,तस्स व जइ तो न सो भिन्नो२२४७
एत्तो चेव समाणा-ऽहिगरणया जुज्जए पयाणं पि ।
नीलुप्पलाइयाणं, न रायपुरिसाइसंसग्गो ॥२२४८॥

धर्मास्तिकायादिको देश एव हि देशो न पुनस्तस्माद् घटादिवारघट्टाऽत्यन्तभिन्न स्वतन्त्रवस्तुदेश । अथ न स्वतन्त्रवस्तुदेश , किन्तु तत्सबन्धित्वादस्वतन्त्रोऽपि देशितो भिन्नो देश इति चेत्। तदप्ययुक्तम्। कुत ? इत्याह—न वा देशिलक्षणाद् वस्तुनो भिन्नोऽसौ देश । अथ भिन्नस्तस्माद्दिष्येत स , तर्ह्यन्यस्यान्येन विन्ध्यहिमवदादीनामिव सर्वथा सबन्धायोगाद् न तस्य देशिनस्तकोऽसौ देश । यदि पुनस्तस्य देशिन सबन्धी देशोऽभ्युपगम्यते तर्हि घटादि स्वस्वरूपवद् न स देशस्तस्माद् देशिना भिन्न किन्तु तदात्मक एवेति । अत एव विशेषणविशेष्यभूताना सर्वेषा पदाना समानाधिकरणता—कर्मधारय एव समासो युज्यत इत्यर्थ यथा नीलोत्पलादीनाम् , उपलक्षण चेदम्—धवखदिरपलाशादीना द्वन्द्वोऽपि स्यात् , न तु राज्ञ पुरुषो राजपुरुष इति षष्ठ्यादिसमास , यतो भिन्नानामन्योन्यं संसर्ग संबन्धो न घटते , तथाहि—संबद्धवस्तुद्वयात् संबन्धो भिन्नो वा स्यादभिन्नो वा ?। यदि भिन्न , तर्हि संबद्धवस्तुद्वयाद् भिन्न स्वतन्त्र तृतीयमेव वस्तु तत् स्याद् नतु संबन्ध इति कथ तद्वशात् षष्ठ्यादिविभक्ति ?। नहि विन्ध्यहिमवदादिभ्यो भिन्नो घटादि संबन्धो भण्यते । नापि तद्वशात् तेषा षष्ठ्यादिविभक्ति प्रवर्तते । अथ संबद्धवस्तुद्वयादभिन्न संबन्ध , तर्हि नासौ षष्ठ्यादिहेतु , संबद्धवस्तुद्वयादव्यतिरिक्तत्वात् , तत्स्वरूपवत् , इत्यादि बह्वत्र वक्तव्यम् , तत्तु नोच्यते , ग्रन्थगहनताप्रसङ्गादिति ।

अपरमपि समभिरूढनयाभिप्रायभेदं दर्शयन्नाह—

घडकारविवक्खाए, कत्तुरणत्थंतरं जओ किरिया ।
न तदत्थंतरभूए, समवाओ तो मओ तीसे ॥२२४९॥
कुंभम्मि वत्थुपज्जा-यसंकराइप्पसंगदोसाओ ।
जो जेण जं व कुरुए, तेणाभिन्नं तयं सव्वं ॥२२५०॥

' घटं करोति ' इति घटकार इत्यस्या विवक्षायां प्ररूपणाया यस्मात् तस्य घटकर्तुरनर्थान्तरमव्यतिरिक्ता घटकरणक्रिया , कर्तर्येव घटकार तस्या समवायात्। 'तो' त्ति तस्माद् न तदर्थान्तरभूते कर्तुर्व्यतिरिक्ते कुम्भे घटे तस्या समवाय सश्लेषो मत । कुत ?। वस्तुपर्यायसंकरादिदोषप्रसङ्गात्—वस्तूना ये पर्याया—धर्मास्तेषा परस्परं संकर संकीर्णत्वमेकत्वं वा स्यात्, कर्तृगतक्रियायाः कुम्भेऽपि समवायाभ्युपगमात्। ततश्च य कुम्भकारादिर्येन क्रियाविशेषेण यत् कुम्भादिक कुरुते तेन क्रियाविशेषेण तत्क्रियारूपतयेत्यर्थ , सर्व तत् कर्तृकर्माद्यभिन्नं स्यात् तस्मात् कर्तृगतक्रियाया न कर्मणि संक्रमः , किन्तु कुर्वन् कारक , कुम्भनादिभ्य एव कुम्भादय इति मन्यते समभिरूढ इति । उक्त समभिरूढनय । विशे० । नं० । आ० चू०। आ०म० ।(समभिरूढनयव्याख्या 'णय' शब्देऽपि चतुर्थभागे १८५७ पृष्ठ गता।) ( एतदाभासव्याख्या ' णयाभास ' शब्दे चतुर्थभागे १९०३ पृष्ठ गता। ) दृष्टिवादस्य सूत्रभेदे, स० । अष्ट० । सूत्र० । अनु० । सम्म० । स्था० ।

समभूमि—समभूमि—स्त्री०। अविषमक्षितितले, आव० ५ अ०।

समय—समक—न० । सममेव समकम् । सरसविरसादिष्वभिष्वङ्गादिविशेषरहिते , उत्त० १ अ० । सहार्थे , उत्त० ४ अ० । युगपदर्थे, व्य० २ उ० । एककाले , प्रज्ञा० १ पद । विशे० । जं० । ज्ञा० । सम्यगीयते परिच्छिद्यते इति समय । सम्म० १ काण्ड । सम्यक् प्रमाणान्तराविसंवादित्वेनायते परिच्छिद्यत इति समयः। सम्म० २ काण्ड। सम्यगवैपरीत्येनायन्ते ज्ञायन्ते जीवादयोऽर्था अनेनेति समय , सम्यगयन्ति गच्छन्ति जीवादय पदार्था स्वस्मिन् रूपे प्रतिष्ठां प्राप्नुवन्ति अस्मिन्निति समय । स्था० । सूत्र० । आ० म० । आगमे, आचा० २ श्रु० २ चू० ५ अ० । सूत्र० । अनु० । सिद्धान्ते, न० । व्य० । विशे० । जैनागमे, विशे० । जिनादिसिद्धान्ते, स्था०३ ठा०४ उ०। सम्म०। जी० । संथा० । स्वसमयोऽर्हन्मतानुसारिशास्त्रात्मक ,परसमय कपिलाद्यभिप्रायानुवर्तिग्रन्थरूप , उभयसमयस्तूभयमतानुगतशास्त्रस्वभाव , तत्रास्य स्वसमयवक्तव्यतायामेवावतार ,स्वसमयपदार्थानामे

चात्र वर्णनात्, यत्रापि परोभयसमयपदार्थवर्णनं तत्रापि स्वसमयवक्तव्यतैव परोभयसमययोरपि सम्यग्दृष्टिपरिगृहीतत्वेन स्वसमयत्वात्, अत एव सर्वाध्ययनानामपि स्वसमयवक्तव्यतायामेवावतार' । उत्त० १ अ० । दर्श० । आत्मीयप्रवचने, द्य० ३ उ० । सांख्यादीनां सिद्धान्ते, स्था० ३ ठा० ३ उ० । अवसरे, आचा० १ श्रु० ८ अ० ६ उ० । कल्प० । रा० । ज्ञा० । विशिष्टकाले, आचा० २ श्रु० ३ चू० । चं० प्र० । निर्विभागे सर्वसूक्ष्मकालांशे, अनु० । विशे० । परमनिकृष्टे काले, आ० म० १ अ० । नं० । कालविशेष, नि० १ श्रु० १ वर्ग १ अ० । स्था० । विशे० । आ० म० । तं० । अहोरात्रादिकालस्य विशिष्टे भागे, भ० १ श० १ उ० । कल्प० । विपा० । सम्म० । च० प्र० । अनु० ।

समयप्ररूपणम्—

से किं तं समए ?, समयस्स णं परूवणं करिस्सामि, से जहानामए तुण्णागदारए सिया तरुणे बलवं जुगवं जुवाणे अप्पातंके थिरग्गहत्थे दढपाणिपायपासपिट्ठंतरोरुपरिणते तलजमलजुयलपरिघणिभबाहू चम्मेट्ठगदुहणमुट्ठिअसमाहतनिचित(य)गत्तकाए उरस्सबलसमण्णागए लघणपवणजइणवायामसमत्थे छेए दक्खे पत्तट्ठे कुसले मेहावी निउणे निउणसिप्पोवगए एगं महतीं पडसाडियं वा पट्टसाडियं वा गहाय सयराहं हत्थमेत्तं ओसारेज्जा, तत्थ चोअए पण्णवयं एवं वयासी—जेणं कालेणं तेणं समएणं तुण्णागदारएणं तीसे पडसाडिआए वा पट्टसाडिआए वा सयराहं हत्थमेत्ते ओसारिए से समए भवइ ?, नो इणट्ठे समट्ठे, कम्हा ?, जम्हा संखेज्जाणं तंतूणं समुदयसमितिसमागमेण एगा पडसाडिआ निप्फज्जइ, उवरिल्लम्मि तंतुम्मि अच्छिण्णे हिट्ठिल्ले तंतू न छिज्जइ, अण्णम्मि काले उवरिल्ले तन्तू छिज्जइ, अण्णम्मि काले हेट्ठिल्ले तन्तू छिज्जइ, तम्हा से समए न भवइ । एवं वयतं पण्णवयं चोयए एवं वयासी-जेणं कालेणं तेणं तुण्णागदारएणं तीसे पडसाडिआए वा पट्टसाडिआए वा उवरिल्ले तंतू छिण्णे से समए भवइ ?, न भवइ । कम्हा ?, जम्हा संखेज्जाणं पम्हाणं समुदयसमितिसमागमेणं एगे तंतू निप्फज्जइ, उवरिल्ले पम्हे अच्छिण्णे हेट्ठिल्ले पम्हे न छिज्जइ, अण्णम्मि काले उवरिल्ले पम्हे छिज्जइ, अण्णम्मि काले हेट्ठिल्ले पम्हे छिज्जइ, तम्हा से समए न भवइ । एवं वयंतं पण्णवयं चोअए एवं वयासी-जेणं कालेणं तेणं तुण्णागदारएणं तस्स तंतुस्स उपरिल्ले पम्हे छिण्णे से समए भवइ ?, न भवइ । कम्हा ?, जम्हा अणंताणं संघायाणं समुदयसमितिसमागमेणं एगे पम्हे निप्फज्जइ, उवरिल्ले संघाए अविसंघाइए हेट्ठिल्ले संघाए न विसंघाइज्जइ, अण्णम्मि काले उवरिल्ले संघाए विसंघाइज्जइ अण्णम्मि काले हिट्ठिल्ले संघाए विसंघाइज्जइ तम्हा से समए न भवइ । एत्तो वि अणं सुहुमतराए समए पण्णत्ते समणाउसो ! । ( सू० १३८× )

अथ कोऽयं समय इति पृष्टे सत्याह-समयस्य प्ररूपणां-विस्तरवर्ती व्याख्या करिष्यामि, सूक्ष्मत्वात् सङ्क्षेपेन कथितोऽपि नासौ सम्यक् प्रतीतिपथमवतरतीति भाव, तदेवाह—'से जहानामए' इत्यादि, स कश्चित् यथानामको-यत्प्रकारनामा देवदत्तादिनामेत्यर्थः, 'तुण्णागदारए' सूचिकइत्यर्थः, स्यात्—भवेत्, य', किमित्याह—तरुणादिविशेषणविशिष्टः पटसाटिकां पट्टसाटिका वा गृहीत्वा 'सयराहं' झटिति कृत्वा हस्तमात्रमपसारयेत्—पाटयेदिति सण्टङ्क, अथवा-'स' इति पूर्ववत् 'यथे' त्युपदर्शने, 'नामे' ति सम्भावनायाम्, 'ए' इति वाक्यालङ्कारे, ततश्च स कश्चिदेव तावत्सम्भाव्यते तुण्णागदारको यस्तरुणादिविशेषण', स्यात्—कदाचित् पटसाटिका पट्टसाटिका वा गृहीत्वा झटिति हस्तमात्रमपसारयेत्—पाटयेदिति तथैव सम्बन्ध, तत्र तरुण —प्रवर्द्धमानवया, आह—दारक. प्रवर्द्धमानवया. एव भवति, किं विशेषणेन ?, नैवम्, आसन्नमृत्यो. प्रवर्द्धमानवयस्त्वाभावात्, तस्य चासन्नमृत्युत्वेन विशिष्टसामर्थ्यानुपपत्ते, विशिष्टसामर्थ्यप्रतिपादनार्थश्चायमारम्भः अन्ये तु वर्णादिगुणोपचितोऽभिनवस्तरुण इति व्याचक्षते, बलं-सामर्थ्य तदस्यास्तीति बलवान्, युगं-सुषमदुष्षमादिकाल सोऽदुष्टो—निरुपद्रवो विशिष्टबलहेतुर्यस्यास्त्यसौ युगवान्, कालोपद्रवोऽपि सामर्थ्यविघ्नहेतुरितीत्थं विशेषणम्, 'जुवाणो' त्ति-युवा-यौवनस्थ' प्राप्तवया एव इत्येवम् अणति—व्यपदिशति लोको यमसौ निरुक्तिवशात् युवान, बाल्यादिकालेऽपि दारकोऽभिधीयते अतो विशिष्टवयोऽवस्थापरिग्रहार्थमेतद्विशेषणम्, अल्पशब्दोऽभाववचन, अल्प आतङ्को—रोगो यस्य स तथा, निरातङ्क इत्यर्थ, स्थिर --प्रकृतपट पाटयतोऽकम्पोऽग्रहस्तो हस्ताग्रं यस्य स तथा, दृढं पाणिपादं यस्य, पार्श्वौ पृष्ठ्यन्तरे च ऊरू च परिणते-परिनिष्ठिततां गत यस्य स तथा, सर्वावयवैरुत्तमसंहनन इत्यर्थ, 'तलजमलजुयलपरिघणिभबाहू' तलौ तालवृक्षौ तयोर्यमल—समश्रेणीक यद् युगलं—द्वय परिघश्च-अर्गला तन्निभौ-तत्सदृशौ दीर्घसरलपीनत्वादिना बाहू यस्य स तथा, आगन्तुकोपकरणजं सामर्थ्यमाह—चर्मेष्टकाद्रुघणमुष्टिकसमाहतनिचितगात्रकाय —चर्मेष्टकया द्रुघणेन मुष्टिकेन च समाहतानि प्रतिदिनमभ्यासप्रवृत्तस्य निचितानि-निविडीकृतानि गात्राणि स्कन्धपृष्ठादीनि यत्र स तथाविध कायो-देहो यस्य स तथा, चर्मेष्टकादयश्च लोकप्रतीता एव, औरस्यबलसमन्वागत —आन्तरोत्साहवीर्ययुक्त, व्यायामशक्ता दर्शयति—'लङ्घनप्लवनजवनव्यायामसमर्थ —जवनशब्द शीघ्रवचन छेक —प्रयोगज्ञ दक्ष —शीघ्रकारी प्राप्तार्थ —अधिकृते कर्मणि निष्ठां गत, प्राप्त इत्यन्ये, कुशल —आलोचितकारी मेधावी-सकृच्छ्रुतदृष्टकर्मज्ञ निपुण —उपायारम्भक निपुणशिल्पो-

पगन'—सूक्ष्मशिल्पसमन्वित., एवंविधो ह्यल्पेनैव कालेन साटिका पाटयतीति यद्वविशेषणोपादानम् स इत्थंभूत एका महती पटसाटिका पट्टसाटिकां वा पटसाटिकाया इयं स्थूलतरेति भेदेनोपादानम्, गृहीत्वा 'सयराह'मिति सकृत् झटिति कृत्वेत्यर्थ., हस्तमात्रमपसारयेत्—पाटयेदित्यर्थ., तत्रैव स्थिते प्रेरकः—शिष्यः प्रज्ञापयन्तीति प्रज्ञापको—गुरुस्तमेवमवादीत्, किम्?—येन कालेन तेन तुण्णागदारकेण तस्याः पटसाटिकायाः पट्टसाटिकाया वा सकृद्धस्तमात्रमपसारितं—पाटितमसौ समयो भवति?, प्रज्ञापक आह—नायमर्थः समर्थ.—नैतदेवमित्युक्तं भवति. कस्मादिति पृष्टे उपपत्तिमाह-यस्मात् संख्येयानां तन्तूना समुदयसमितिसमागमेनेति पूर्ववद्, एकार्था वा सर्वेऽप्यमी समुदायवाचका, पटसाटिका निष्पद्यते तत्र च 'उवरिल्ले' त्ति—उपरितने तन्तौ अच्छिन्ने—अविदारिते 'हेट्ठिल्ले' त्ति—अधस्त्यतन्तुर्न छिद्यते अतोऽन्यस्मिन् काले उपरितनस्तन्तु' छिद्यते अन्यस्मिन् काले अधस्त्य, तस्मादसौ समयो न भवति—एवं वदन्त प्रज्ञापकं प्रेरक एवमवादीत्—येन कालेन तेन तुन्नागदारकेण तस्या.—पटसाटिकाया उपरितनस्तन्तुश्छिन्न स समय.?, किं भवतीति शेष., अत्र प्रज्ञापक आह—न भवतीति, कस्मात्?, यस्मात्संख्येयाना पक्ष्मणां लोके प्रतीतस्वरूपाणा समुदायेत्यादि सर्वं तथैव यावत्तस्मादसौ समयो न भवति, एवं वदन्तं प्रज्ञापकमित्याद्युपरितनपक्ष्मसूत्रमपि तथैव व्याख्येयम्, नवरमनन्ताना परमाणूनां विशिष्टैकपरिणामापत्ति. सङ्घातः, तेषामनन्तानां य. समुदय.—संयोगस्तेषां समुदयानां या अन्योऽन्यानुगतिरसौ समितिः, तासा समागमेन—एकवस्तुनिवर्तनाय मीलनेन उपरितनपक्ष्मोत्पद्यते, समुदायवाचकत्वेनैकार्था वा समुदयादयः, तस्मादसावुपरितनैकपक्ष्मच्छेदनकाल. समयो न भवति, कस्तर्हि समय इत्याह—'एत्तोऽवि अएण' मित्यादि, एतस्माद् उपरितनैकपक्ष्मच्छेदनकालात् सूक्ष्मतर समय. प्रज्ञप्तो हे श्रमण! आयुष्मन्निति, अत्राह-ननु यद्यनन्तैः परमाणुसङ्घातैः पक्ष्म निष्पद्यते ते च सङ्घाता क्रमेण छिद्यन्ते, तदैकस्मिन्नपि पक्ष्मणि विदीर्यमाणे अनन्ता. समया लगेयु, एतच्चागमेन सह विरुध्येत, तत्रासंख्येयास्वप्युत्सर्पिण्यवसर्पिणीषु समयासंख्येयकस्यैव प्रतिपादनात्, यत उक्तम्—"असंखेज्जासु णं भंते! उस्सप्पिणीअवसप्पिणीसु केवइया समया पण्णत्ता?, गोयमा!, असंखेज्जा। अणंतासु णं भंते! उस्सप्पिणीअवसप्पिणीसु केवइया समया पण्णत्ता?, गोयमा!, अणंता" तदेतत्कथम्?, अत्रोच्यते-अस्त्येतत्, किन्तु-पाटनप्रवृत्तपुरुषप्रयत्नस्याचिन्त्यशक्तित्वात् प्रतिसमयमनन्ताना सङ्घातानां छेद. संपद्यते, एवं च सत्येकस्मिन् समये यावन्त. सङ्घाताश्छिद्यन्ते तैरनन्तैरपि स्थूलतर एक एव सङ्घातो विवक्ष्यते, एवम्भूता स्थूलतरसङ्घाता एकस्मिन्पक्ष्मणि असंख्येया एव भवन्ति, तेषां च क्रमेण छेदने असंख्येयैः समयैः पक्ष्म छिद्यते, अतो न कश्चिद्विरोध, इदं च विशेषत सर्वं अनुक्तमप्यवश्यं प्रतिपत्तव्यम्, अन्यथा ग्रन्थान्तरै सह विरोधप्रसङ्गात् सूत्राणां च सूचामात्रत्वादिति, ततोऽसंख्येयैरेव समयैर्यथोक्तपक्ष्मणो विदीर्यमाणत्वाच्छद्मस्थानुभवविषयस्य च समयप्रसाधकस्य विशिष्टक्रियाविशेषस्य कस्यचिद्दर्शयितुमशक्यत्वाद् 'एत्तोऽवि अण्ण सुहुमतराए समए' इति सामान्येनैवोक्तमित्यलं, एकस्मादुपरितनपक्ष्मच्छेदनकालादसंख्याततमोऽशः समय इति स्थितम् युगपदनन्तसङ्घातविदारणहेतुपूर्वोक्तप्रयत्नविशेषप्रसिद्धिश्च नगरादिप्रस्थितानवरतप्रवृत्तपुरुषादे. प्रयत्नविशेषात् प्रतिक्षणं बहुनभ.प्रदेशान् विलङ्घयाचिरेणैवेष्टदेशप्राप्तिर्भावनीया, यदि पुनरसौ क्रमेणैकैक व्योमप्रदेश लङ्घयेत् तदा असंख्येयोत्सर्पिण्यवसर्पिणीभिरेवेष्टदेशं प्राप्नुयाद् 'अंगुलसेढीमित्ते उस्सप्पिणीउ असंखेज्जा' इत्यादिवचनादिति भावः। नचातीन्द्रियेष्वर्थेषु एकान्तेन युक्तिनिष्ठैर्भाव्यम् सर्वज्ञवचनप्रामाण्याद्, उक्तं च—

"आगमश्चोपपत्तिश्च, संपूर्णं विद्धि लक्षणम्।
अतीन्द्रियाणामर्थानां, सद्भावप्रतिपत्तये ॥ १॥
आगमश्चाप्तवचन—माप्त दोषक्षयाद्विदु।
वीतरागोऽनृतं वाक्यं, न ब्रूयाद्धेत्वसम्भवात् ॥ २॥
उपपत्तिर्भवेद्युक्ति—र्या सद्भावप्रमाधिका।
साऽन्वयव्यतिरेकादि—लक्षणा सूरिभिः कृता ॥ ३॥"

इति, निदर्शितं चेदोभयमपीत्यलं विस्तरेण। अनु०। स्था०।

**एगे समए। (सू० ४४ ×)**

परमनिकृष्टकाल उत्पलपत्रशतव्यतिभेदहृष्टान्ताज्जरत्पटशाटिकापाटनदृष्टान्ताद्वा समयप्रसिद्धादवयोद्धव्य, स चैक एव वर्तमानस्वरूपोऽतीतानागतयोर्विनष्टानुत्पन्नत्वेनाभावात्। अथवा-असावेकस्वरूपेण निरंशत्वादिति। स्था० १ ठा०। आचा०। कल्प०। नि०। स०। जी०। तं०। राजनीतिशास्त्रे, बृ० ३ उ०। सङ्केते, आ० म० १ अ०। पं० व०। सू० प्र०। चं० प्र०। आ०। विशे०। कर्म०। समिति सम्यक्शब्दार्थे उपसर्ग., सम्यगय. समय.। सम्यग् दयापूर्वके जीवेषु विषये प्रवर्त्तने, विशे०। आचारे, अनुष्ठाने, आचा० १ श्रु० ३ अ० १ उ०। मुक्तिमार्गप्रवर्त्तने, विशे०। नास्तिकादिसमयप्रतिपादनपरमध्ययनं समय एवेति। स० १६ सम०। सूत्रकृताङ्गस्य प्रथमेऽध्ययने, आव० ४ अ०।

साम्प्रतं निक्षेपावसर, स च त्रिधा-ओघनिष्पन्नो, नामनिष्पन्न, सूत्रालापकनिष्पन्नश्च। तत्रौघनिष्पन्नेऽध्ययनम्, तस्य च निक्षेप आवश्यकादौ प्रबन्धेनाभिहित एव, नामनिष्पन्ने तु समय इति नाम, तन्निक्षेपार्थं निर्युक्तिकार आह—

**नामं ठवणा दविए, खेत्ते काले कुतित्थसंगारे।**
**कुलगणसंकरगंडी, बोधव्वो भावसमए य ॥ २९ ॥**

'नामं ठवणा' इत्यादि, नामस्थापनाद्रव्यक्षेत्रकालकुतीर्थसंगारकुलगणसङ्करगण्डीभावभेदात् द्वादशधा समयनिक्षेप., तत्र नामस्थापने क्षुण्णे, द्रव्यसमयो द्रव्यस्य सम्यगयनं-परिणतिविशेष स्वभाव इत्यर्थ., तद्यथा—जीवद्रव्यस्योपयोगः पुद्गलद्रव्यस्य मूर्तत्वं धर्माधर्माकाशानां गतिस्थित्यवगाहदानलक्षण। अथवा-यो यस्य द्रव्यस्यावसरो—द्रव्यस्योपयोगकाल इति, तद्यथा-'वर्षासु लवणममृतं, शरदि जलं गोपयश्च हेमन्ते। शिशिरे चामलकरसो, घृतं वसन्ते गुडश्चान्ते' ॥ १॥ क्षेत्रसमय.-क्षेत्रम्—आकाशं तस्य समय.-

स्वभाव', यथा 'एगेण वि से पुराणे, दोहि वि पुराणे सय पि माएज्जा। लक्खसएण वि पुराणे, कोडिसहस्सं पि माएज्जा' ॥१॥ यद्विा—देवकुरुप्रभृतीनां क्षेत्राणामीदृशोऽनुभावो यदुत तत्र प्राणिनः सुरूपा नित्यसुखिनो निर्वैराश्च भवन्तीति, क्षेत्रस्य वा परिकर्मणावसरः क्षेत्रसमय इति, कालसमयस्तु सुषमादेरनुभावविशेषः उत्पलपत्रशतभेदाभिव्यङ्ग्यो वा कालविशेषः कालसमय इति, अत्र द्रव्यक्षेत्रकालप्राधान्यविवक्षया द्रव्यक्षेत्रकालसमयता द्रष्टव्येति कुतीर्थसमयः पाखण्डिकानामात्मीय आगमविशेषः। तदुक्तं वाऽनुष्ठानमिति, सगारः-संकेतस्तद्रूपः समयः सगारसमयः यथा सिद्धार्थसारथिदेवेन पूर्वकृतसगारानुसारेण गृहीतहरिशवो—बलदेवः प्रतिबोधित इति, कुलसमय—कुलाचारो यथा शकाना पितृशुद्धिः, आभीरकाणां मन्थनिकाशुद्धिः, गणसमयो यथा मल्लानामयमाचारो—यथा यो ह्यनाथो मल्लो म्रियते स तैः संस्क्रियते, पतितश्चोद्ध्रियत इति सङ्करसमयस्तु संकरो—भिन्नजातीयानां मीलकस्तत्र च समयः—एकवाक्यता, यथा वाममार्गादावनाचारप्रवृत्तावपि गुप्तिकरणमिति, गण्डीसमयो-यथा शाक्याना भोजनावसरे गण्डीताडनमिति, भावसमयस्तु नोआगमत इदमेवाध्ययनम्, अननैवात्राधिकारः शेषाणां तु शिष्यमतिविकाशार्थमुपन्यास इति। सूत्र० १ श्रु० २ अ०।

समयंतर—समयान्तर—न०। परसमय, पं० व० ५ द्वार।

समयकप्प—समयकल्प—पुं०। सिद्धान्तविचारणायाम्, संथा०।

समयकयपिंडणाम—समयकृतपिण्डनामन्—न०। समयकृतपिण्डनाम्नि, पिं०। (व्याख्या 'पिंड' शब्दे पञ्चमभागे ९१७पृष्ठे।)

समयखेत्त—समयक्षेत्र—न०। समयः कालस्तद्विशिष्ट क्षेत्रं समयक्षेत्रम्। मनुष्यक्षेत्रे, स्था० ३ ठा० ४ उ०। मनुष्यलोके, स्था० ३ ठा० १ उ०। सू०।

किमिदं भंते! समयक्खेत्ते त्ति पवुच्चइ?, गोयमा! अड्ढाइज्जा दीवा दो य समुद्दा एस णं पव्वइए समयखेत्ते त्ति पवुच्चइ। तत्थ णं अयं जंबुद्दीवे सव्वदीवे सव्वदीवसमुद्दाणं सव्वभिंतरे एवं जीवाभिगमवत्तव्वया नेयव्वा ०जाव अन्तरपुक्खरद्धं जोइसविहूणं ॥ ६ ॥

'किमि'त्यादि। तत्र समयः कालस्तेनोपलक्षितं क्षेत्रं समयक्षेत्रं, कालो हि दिनमासादिरूपः सूर्यगतिसमभिव्यङ्ग्यो मनुष्यक्षेत्र एव न परतः, परतो हि नादित्याः सञ्चरिष्णव इति। 'एवं जीवाभिगमवत्तव्वया नेयव्व' त्ति। एषा चैवम्'एगं जोयणसयसहस्सं आयामविक्खंभेणमि'त्यादि 'जोइसविहूणं' ति-तत्र जम्बूद्वीपादिमनुष्यक्षेत्रवक्तव्यताया जीवाभिगमोक्ताया ज्योतिष्कवक्तव्यताऽप्यस्ति,ततस्तद्विहीन यथा भवत्येवं जीवाभिगमवक्तव्यता नेतव्येति, वाचनान्तरे तु—'जोइसअट्ठविहूणं' इत्यादि बहु दृश्यते, तत्र—जंबुद्दीवे णं भंते! कइ चंदा पभासिसु वा पभासिंति वा पभासिस्संति वा, कति सूरिया तविंसु वा० ३ कइ णक्खत्ता जोयं जोइंसुवा' इत्यादिकानि प्रत्येकं ज्योतिष्कसूत्राणि, तथा-'से केणट्ठेणं भंते! एवं वुच्चइ जंबुद्दीवे दीवे गोयमा! जंबूदीवेणं दीवे मंदरस्स पव्वयस्स उत्तरेणं लवणस्स दाहिणेणं० जाव तत्थ २ बहवे जंबुरुक्खा जंबुवणा० जाव उवसोभेमाणा चिट्ठंति से तेणट्ठेणं गोयमा! एवं वुच्चइ जंबुद्दीवे दीवे' इत्यादीनि प्रत्येकमर्थसूत्राणि च सन्ति, ततश्चैतद्विहीनं यथा भवत्येवं जीवाभिगमवक्तव्यतया नेयमस्योद्देशकस्य सूत्रम्। 'जाव इमा गाह' त्ति-सग्रहगाथा। सा च-'अरहंतसमयबायर-विज्जूथणिया बलाहगा अगणी।आगरनिहिनइउवरा-गनिग्गमे वुड्ढिवयणं च' ॥ १ ॥ अस्याश्चार्थस्तत्रानेन सम्बन्धेनायातो जम्बूद्वीपादीना मानुषोत्तरान्तानामर्थाना वर्णकस्यान्ते इदमुक्तम्-'जावं च णं माणुसुत्तरे पव्वए तावं च णं अस्सिं लोए त्ति पवुच्चइ'। मनुष्यलोक उच्यत इत्यर्थः। तथा 'अरहंते'त्ति जावं च णं अरहंता चक्कवट्टी ०जाव सावियाओ मणुया पगइभद्दया विणीया ताव च णं अस्सिं लोए त्ति पवुच्चइ, समय त्ति, जावं च णं समयाइ वा आवलियाइ वा०जाव लोए त्ति पवुच्चइ,एवं जावं च णं बायरे विज्जुयारे बायरे थणियसद्दे जाव च णं बहवे उराला बलाहया संसेय त्ति, अगणि त्ति,जाव च णं बायरे तेउयाए जावं च णं आगराइ वा निहीइ वा नईइ वा उवराग त्ति,चंदोवरागाइ वा सूरोवरागाइ वा,तावं च णं अस्सिं लोए त्ति पवुच्चइ। उपरागो-ग्रहणम्। 'निग्गमे वुड्ढिवयणं व'त्ति-यावन्निर्गमादीना वचनं प्रज्ञापनं तावन् मनुष्यलोक इति प्रकृतम्,तत्र-'जावं च णं चंदिमसूरियाण ०जाव ताराख्वाणं अइगमणं निग्गमणं वुड्ढिनिवुड्ढी आघविज्जइ,तावं च णं अस्सिं लोए त्ति पवुच्चइ अतिगमनमिहोत्तरायणं, निर्गमनं दक्षिणायनं, वृद्धिर्दिनस्य वर्द्धनं, निर्वृद्धिस्तस्यैव हानिः। भ० २ श० ६ उ०।

समयचज्जा—समयचर्या—स्त्री०। समयपरिभाषया उपक्रमे, विशे०।

समयज्झयण—समयाध्ययन—न०। समयाख्ये सूत्रकृताङ्गस्य प्रथमे अध्ययने, सूत्र० १ श्रु० १ अ० १ उ०। आ० चू०।

समयणा(णा)य—समयन्याय—पुं०। आगमप्रामाण्ये, पञ्चा० १२ विव०।

समयणिवद्ध—समयनिवद्ध—न०। मनसा निवद्धे सङ्केते, ज्ञा० १ श्रु० ६ अ०।

समकनिवद्ध—त्रि०।सहितैरुपात्ते ज्ञाताङ्गसूत्रे,ज्ञा०१श्रु०६अ०।

समयणीइ—समयनीति—स्त्री०। सिद्धान्तव्यवस्थायाम्, आव० १ अ०।

समयण्णु—समयज्ञ—त्रि०। सिद्धान्तविदि, पं० व० २ द्वार। आगमज्ञ, पं० १४ विव०। आचा०।

समयपरमत्थवित्थर—समयपरमार्थविस्तर—पुं०। सम्यगीयन्ते परिच्छिद्यन्तेऽनेनार्था इति समय आगमस्तस्य परमः अकल्पितश्चासावर्थश्च समयपरमार्थस्तस्य विस्तरो रचनाविशेषः। सिद्धान्तस्याकल्पितार्थस्य परमार्थरचनायाम्, सम्म० ३ काण्ड।

समयपरिसुद्ध—समयपरिशुद्ध—त्रि०। शिष्टव्यवहारविशुद्धे, पञ्चा० ४ विव०।

समयपाहुड–समयप्राभृत–न०। स्वनामख्याते ग्रन्थविशेषे, अष्ट० १३ अष्ट०।

समयभणिय–समयभणित–न०। सिद्धान्तप्रतिपादिते, दर्श० १ तत्त्व।

समयय–समयज–न०। अन्वर्थरहिते समय एव प्रसिद्धे नामनि, पिं०।

समयलुक्खया–समयरूक्षता–स्त्री०। कालरूक्षतायाम्, भ० ७ श० ६ उ०।

समयविउ–समयविद्–त्रि०। आगमवेदिनि, षो० १२ विव०, भद्रबाहुप्रभृतिषु सिद्धान्तवेदिषु, पञ्चा० ४ विव०।

समयविरुद्ध–समयविरुद्ध–त्रि०। स्वसिद्धान्तविरुद्धे, विशे०। यथा सांख्यस्यासत्कारणम्, कार्यं सद्वैशेषिकस्येत्यादि। आ० म० १ अ०। अनु०। यथा वैशेषिको ब्रूते प्रधानं कारणं जैनो वदति नास्ति जीव इत्यादि। बृ० १ उ० १ प्रक०।

समयविहाण–समयविधान–न०। सिद्धान्तनीतौ, पं० व० ४ द्वार।

समयसण्णा– समयसंज्ञा–स्त्री०। आगमपरिभाषायाम्, बृ० १ उ० ३ प्रक०।

समयसब्भाव–समयसद्भाव–पुं०। सिद्धान्तार्थे, आव० ४ अ०।

समयसागर–समयसागर–पुं०। समयः–आगमस्तस्य सागर इव रत्नाकरः। स्वनामख्याते ग्रन्थभेदे, स्था० २ ठा० ३ उ०।

समयसिद्ध–समयसिद्ध–त्रि०। आगमोक्ते, पञ्चा० १६ विव०।

समयसुन्दर–समयसुन्दर–पुं०। सकलचन्द्रगणिशिष्ये, येन १६८६ सम्वत्सरे गाथासाहस्री विचारशतकं दशवैकालिकटीका चेति ग्रन्था रचिता। जै० इ०।

समयसो–समयशस्–अव्य०। समयेनेत्यर्थे, क० प्र० १ प्रक०।

समया–समता–स्त्री०। समो रागद्वेषमध्यस्थस्तद्भावस्तत्ता। आ० म० १ अ०। समभावे, आचा० १ श्रु० ३ अ० १ उ०। सूत्र०। आ० चू०। आत्मपरतुल्यतायाम्, सूत्र० १ श्रु० २ अ० ३ उ०। अरक्ताद्विष्टतायाम्, अष्ट० १४ अष्ट०। सामायिके, रागद्वेषविरहे, सूत्र० १ श्रु० १४ अ०। आ० चू०। आचा०। माध्यस्थे, आचा० १ श्रु० ८ अ० २ उ०। या० त्रिं०।

समयाजोगि–समतायोगिन्–पुं०। ध्यानबलेन भस्मीभूतमोहकर्मातसत्त्वादिपरिणतिरहिते योगिनि, अष्ट० ६ अष्ट०।

समताणुपेहि(ण्)–समतानुप्रेक्षिन्–त्रि०। समतया प्रेक्षितुं शीलमस्येति समतानुप्रेक्षी। प्रियद्वेष्यरहिते, सूत्र० १ श्रु० १० अ०।

समयातीय–समयातीत–त्रि०। आगमादतिक्रान्ते, सूत्र० १ श्रु० ६ अ०।

समयाणुभाव–समतानुभाव–पुं०। कालविशेषसामर्थ्ये, भ० ७ श० ६ अ०।

समर–शबर–त्रि०। "शबरे बो मः" ॥ ८। १। २५८॥ इत्यनेनात्र बकारस्य मकारः। समरो। प्रा०। वन्यमनुष्यजातिभेदे, को०। अष्ट०।

समर–पुं०। जनमरकयुक्ते, प्रश्न० ३ आश्र० द्वार। संग्रामे, ज्ञा० १ श्रु० १ अ०। उत्त०।

सम–त्रि०। समत्वेन युक्ते, रकारः प्राकृतत्वात्। उत्त० २ अ०। शत्रुंजयपर्वतस्य मूलनायकोद्धारकर्त्तरि स्वनामख्याते साधौ, ती० १ कल्प।

समरवहिय–समरव्यथित–त्रि०। संग्रामे हते, भ० ७ श० ६ उ०।

समरभड–समरभट–पुं०। संग्रामभेदे, प्रश्न० ३ आश्र० द्वार।

समरसावत्ति–समरसापत्ति–स्त्री०। समे भावे रसोऽभिलाषो यस्यां सा समरसा सा चासावापत्तिश्च प्राप्तिरभिगतिरधिगम इत्यनर्थान्तरम्। षो० ६ विव०। समतापत्तौ, आगमाहितसर्वज्ञरूपोपयोगोपयुक्तस्य तपोयोगानन्यवृत्तेः परमार्थत. सर्वज्ञरूपत्ववाह्यालम्बनाकारोपयुक्तत्वेन मनसो ध्यानविशेषरूपायां तत्फलभूतायां वा समापत्तौ, षो० २ विव०।

समरसीह–समरसिंह–पुं०। स्वनामख्याते मेदपाट( मेवाड)देशाधिपतौ, ती० १६ कल्प।

समराइच्च–समरादित्य–पुं०। स्वनामख्याते राजनि, तच्चरित्रं श्रीहरिभद्रसूरिकृतं समरादित्यचरित्रादवसेयम्। ध० २ अधि०।

समरीइय–समरीचिक–त्रि०। बहिर्विनिर्गतकिरणजालसहिते, जीं० ३ प्रति०। स०। रा०। औ०।

समल्लीण–समालीन–त्रि०। आसन्ने, ज्ञा० १ श्रु० १ अ०। आ० म०।

समलेस्स–समलेश्य–त्रि०। लेश्यया तुल्ये, भ० १ श० २ उ०। (अत्र दण्डकः 'सम' शब्देऽस्मिन्नेव भागे गतः।)

समवण्ण–समवर्ण–त्रि०। वर्णतस्तुल्ये, भ० १ श० २ उ०। (अत्र दण्डकः 'सम' शब्देऽस्मिन्नेव भागे गतः।)

समवतार–समवतार–पुं०। सम्यगवतारके, नि० चू० १ उ०।

समवया–समवयस्–त्रि०। सवयस्ये, सूत्र० १ श्रु० १४ अ०।

समवसरण–समवसरण–न०। अवसरणकरणे, द्वी० २ प्रका०। औपपातिकदेवतानिमित्ते जिनधर्मदेशने, पञ्चा० २ विव०। ('समोसरण' शब्देऽस्मिन्नेव भागे व्याख्यां वक्ष्यामि।)

समवसरणबिंबरूव–समवसरणबिम्बरूप–न०। समवसरणे जिनधर्मदेशनार्थमौपपातिकदेवतानिर्मितानि तस्यैव बिम्बानि प्रतिकृतयस्तेषामिव रूपं स्वभावो यस्य स समवसरणबिम्बरूपः। विशिष्टरूपे चतुर्मुखे, पञ्चा० २ विव०।

समवाइकारण–समवायिकारण–न०। सम्–एकीभावे अव–शब्द अपृथक्त्वे, अय गतौ इण गतौ वा। तत एकीभावेन अपृथग्गमनं समवायः–सश्लेषः स विद्यते येषां ते समवायिनस्तन्तवः, यस्मात्तेषु पटः समवैति इति। समवायिनश्च त

कारणं च समवायिकारणम्, तन्तुसंयोगास्तु कारणरूपद्रव्यान्तरधर्मत्वेन परारब्धकार्यद्रव्यान्तरवर्त्तित्वात्समवायिनस्त एव कारणम्। कारणभेदे, विशे०। आ० चू० १। (' कारण ' शब्दे तृतीयभागे ४६५ पृष्ठे इदमुक्तम्।)

समवाय-समवाय-पुं०। समवयनं समवायः। वणिजादीनां मेलापके, पिं०। ओघ०। गोष्ठीनां मेलापके; आ० म० १ अ०। आचा०। समिति सम्यगवैसाधिक्येन अयनमयः परिच्छेदो जीवाजीवादिविविधपदार्थसार्थस्य यस्मिन्नसौ समवायः। समवयन्ति समवतरन्ति संमिलन्ति नानाविधा आत्मादयो भावा अभिधेयतया यस्मिन्नसौ समवायः चतुर्थेऽङ्गे, स० १ सम०। पा०। अनु०। नं०। स०।

से किं तं समवाए ?, समवाएणं ससमया सूइज्जंति परसमया सूइज्जंति ससमयपरसमया सूइज्जंति ० जाव लोयालोगा सूइज्जंति। समवाएणं एकाइयाणं एगट्ठाणं एगुत्तरियं परिवुड्ढीए दुवालसंगस्स य गणिपिडगस्स पल्लवग्गे समणुगाइज्जइ, ठाणगसयस्स य बारसविहवित्थरस्स सुयणाणस्स जगजीवहियस्स भगवओ समासेणं समायारे आहिज्जति, तत्थ य णाणाविहप्पगारा जीवाजीवा य वष्णिया वित्थरेण, अवरे वि अ बहुविहा विसेसा नरगतिरियमणुअसुरगणाणं आहारुस्सासलेसा आवाससंखआयप्पमाणउववायचवणउग्गहणोवहिवेयणाविहाणउवओगजोगा इंदियकसाया विविहा य जीवजोणी विक्खंभुस्सेहपरिरयप्पमाणं विहिविसेसा य मंदरादीणं महीधराणं कुलगरतित्थगरगणहराणं सम्मत्तभरहाहिवाणं चक्कीणं चेव चक्कहरहलहराण य वासाण य निगमा य समाए एए अ झे य एवमाइ एत्थ वित्थरेणं अत्था समाहिज्जंति। समवायस्स णं परित्ता वायणा०जाव से णं अंगट्ठयाए चउत्थे अंगे एगे अज्झयणे एगे सुयक्खंधे एगे उद्देसणकाले एगे समुद्देसनकाले एगे चउयाले पदसहस्से पदग्गेणं पण्णत्ता, संखेज्जाणि अक्खराणि० जाव चरणकरणपरूवणया आघविज्जंति। सेत्तं समवाए। ( सू० १३६ ) स०।

" समवायववच्छेदो, तस्स हि होहिति वासाणं। माढरगोत्तस्स इह, संभूतजतिस्स मरणम्मि " ति०। संबन्धविशेषे, आ० म० १ अ०। अयुतसिद्धानामकार्याधारभूतानाम् इहेति प्रत्ययहेतौ सम्बन्धे, सम्म० ३ काण्ड। सूत्र०। स्या०। ( अत्रत्या व्याख्या ' धम्म ' शब्दे चतुर्थभागे २६६४ पृष्ठतो द्रष्टव्या।)

समविसम-समविषम-त्रि०। अनुकूलप्रतिकूले शय्यासनादौ, सूत्र० १ श्रु० २ अ० २ उ०।

समवेयण-समवेदन-त्रि०। वेदनया तुल्ये, भ० १ श० २ उ०।

समसण्ण-समसंज्ञ-त्रि०। तुल्यबुद्धौ, आव० ४ अ०।

समसहाव-समस्वभाव-पुं०। समा-तुल्यः स्वभावः-स्वरूपं यस्य तथा। तुल्यरूपे, स० २३ सम०।

समसार-शमसार-त्रि०। समप्रधाने, द्वा० २३ द्वा०।

समसील-शमशील-त्रि०। समस्वभावे, अष्ट० ३ अष्ट०।

समसुहदुक्ख-समसुखदुःख-त्रि०। विगतरागे, पं० चू० ३ कल्प।

समसुहाकिरा-शमसुधाकिरा-स्त्री०। क्रोधादिपरित्यागः समस्तदेव सुधा-अमृत तस्या किरणं किरा-सेवनं यस्याः सा तथा। शमतामृतमय्यां दृष्टौ, अष्ट० २ अष्ट०।

समसेढि-समश्रेणि-स्त्री०। अविषमश्रेणौ, नं०।

समस्सा-समस्या-स्त्री०। समस्यते-संक्षिप्यतेऽनया। सम्-अस् क्यप्। संक्षेपेण उक्तस्य श्लोकपदादेः परकृतेन स्वकृतेन वा अवशेषेण भागान्तरेण संघटनार्थं कृते प्रश्ने, वाच०। आ० म० १ अ०।

समा-समा-स्त्री०। आत्मपरतुल्यतायाम्, दर्श० १ तत्त्व। संवत्सरात्मके कालविशेषे, व्य० ३ उ०। स्था०।

दो समाओ पन्नत्ताओ, तं जहा-उस्सप्पिणी समा चेव, ओसप्पिणी समा चेव। स्था० २ ठा० १ उ०।

('लोक' शब्दे षष्ठे भागे विस्तरो गतः।)

समाइण्ण-समाचीर्ण-त्रि०। भाद्रपदशुद्धचतुर्थीपर्युषणापर्वदाचरिते, जी० १ प्रति०।

समाउ-समायुष्-त्रि०। उदयापेक्षया समकालायुषि उदये, भ० २६ श० १ उ०।

समाउत्त-समायुक्त-त्रि०। युक्ते, सूत्र० १ श्रु० १ अ० ३ उ०। औ०।

समाउय-समायुष्क-न०। आयुषा तुल्ये, भ० ६ श० १ उ०। ( अत्र दण्डक 'सम' शब्देऽस्मिन्नेव भागे उक्तः।)

समाउल-समाकुल-त्रि०। संमिश्रे, जी० ३ प्रति० ४ अधि०। जं०। रा०। उत्त०।

समाओग-समायोग-पुं०। सम्यग् आयोगः समायोगः। आचा० १ अ०। तं०। स्थिरीभावे, स्था० ४ ठा० ४ उ०।

समागम-समागम-पुं०। परस्परं संबद्धतया विशिष्टैकपरिणामसमुदाये, अनु०। संयोगे, एकीभवने, समुदये, अनु०। संपर्के, व्य० ६ उ०। प्राप्तौ, सूत्र० १ श्रु० ७ अ०।

समागय-समागत-त्रि०। एकीभूते, पं० व० ३ द्वार। स्था०।

समाण-भुज-धा०। जेमने, " भुजो भुञ्ज-जिम-जेम-कम्माण्ह-समाण-चमढ-चड्डा " ॥ ८। ४। ११०॥ इति भुजेः समाणादेशः। समाणइ। भुङ्क्ते। प्रा० ४ पाद।

समाप्-धा०। समाप्तौ, " समापेः समाणः " ॥ ८। ४। १४२॥ इत्यनेनात्र समाप्नोतेर्वैकल्पिकः समाण आदेशः। समाणइ। समावेइ। प्रा० ४ पाद।

समान-त्रि०। समे, नि० चू० ४ उ०। उत्त०। रा०। सदृशे, उत्त० ३२ अ०। स्था०।

सत्-त्रि०। विद्यमाने, स्था० ३ ठा० १ उ०। ज्ञा०। आचा०। प्रश्न०। औत्तराहे आज्ञप्तिकेन्द्रे, स्था० २ ठा० ३ उ०।

समाणइत्ता-समाप्य-अव्य०।समाप्तिं नीत्वेत्यर्थे, आव०५अ०।

समाणकप्प-समाणकल्प-पुं०। तुल्याध्यवसाये, कल्प० १ अधि० ६ क्षण।

समाणी-सती-स्त्री०। विद्यमानायाम्, प्रज्ञा० १५ पद। जं०।

समाणु-समम्-अव्य०। "एवं-परं-समं-ध्रुवं-मा-मनाक्-एम्व-पर-समाणु ध्रुवु मं-मणाउं", ॥ ८। ४। ४१८॥ अनेन अपभ्रंशेऽर्थे समम: समाणु इत्यादेशः। सहार्थे, समाणु। समम्। प्रा० ४ पाद।

समादहमाण-समादहत्-त्रि०। शीतस्पर्शे सहमाने, आचा० १ श्रु० ६ अ० २ उ०।

समादाण-समादान-न०। ग्रहणे, सूत्र० २ श्रु० २अ०।

समादाय-समादाय-अव्य०। गृहीत्वेत्यर्थे, आचा० १ श्रु० ३ अ० १ उ०। सूत्र०।

समादेज्ज-समादेय-त्रि०। ग्राह्ये, विशे०।

समादेस-समादेश-पुं०। निर्ग्रन्थानां साधूनां कृते औद्देशिकभेदे, ध० ३ अधि०।

समाय-समवाय-पुं०। समवायनं समवायः, प्राकृतत्वेन वकारलोपः। सम्यक्परिच्छेदे सद्धेतौ, ग्रन्थे च। समो रागद्वेषरहित्वादयो-गमनं समायः। आ० म० १ अ०। समो रागद्वेपवियुक्तो य. सर्वभूतान्यात्मवत्पश्यति, अयो-लाभ.-प्राप्तिरिति पर्यायाः। समस्यायः समायः। समो हि प्रतिक्षणमपूर्वज्ञानदर्शनचरणपर्यायैर्निरुपमसुखहेतुभिः अधःकृतचिन्तामणिकल्पद्रुमैर्युज्यते स एव समायः, आव० ६ अ०। अनु०। सामायिके, आव० ६ अ०। सूत्र०।स्था०। चतुर्थेऽङ्गे, स० १३६ सूत्र। समा(म)क-न०। युगपदित्यर्थे, भ० २६ श० १ उ०। मृषावादे, सूत्र० १ श्रु० ८ अ०।

समायकरण-समायकरण-न०। समतासमागमपरिज्ञाननिमित्तरेखाकरणे, ज्यो० २ पाहु०।

समायरंत-समाचरत्-त्रि०। सेवमाने, पं० व० १ द्वार। कुर्वति, स्था० ६ ठा० ३ उ०।

समायरण-समाचरण-न०।करणे, सूत्र० १ श्रु० ३ अ० ३ उ०।

समायरित्ता-समाचर्य-अव्य०। कृत्वेत्यर्थे, विपा० १ श्रु० १अ०।

समायरियव्व-समाचरितव्य-त्रि०। सेव्ये, आव० ६ अ०।

समायाण-समादान-न०। ग्रहणे, आचा० १ श्रु० ५ अ० ३उ०।

समायार-समाचार-पुं०। समाचरणं समाचारः। अनुष्ठाने, आचा० १ श्रु० १ अ० ५ उ०। सूत्र०। स्था०। शिष्टाजनाचरिते क्रियाकलापे, अनु०। स्था०।

समायारग-समाचारक-त्रि०। समाचरतीति समाचारकः। कर्त्तरि, नं०। आ० म०।

समायारी-समाचारी-स्त्री०। समाचरणे, पं० व० ५ द्वार। व्य०। ती०। जी०। उत्त०। द्वा०। ('सामायारी' शब्दे अस्मिन्नेव भागे दशधा सामाचारी वक्ष्यते।)

समार-सम् आ रच्-धा०। निर्माणे, "समारचेरुवहत्थ-सारव-समार-केलायाः" ॥ ८। ४। ९५॥ अनेन समारचेः समारादेशः। समारइ। समारचयति। प्रा० ४ पाद।

समारंभ-समारम्भ-पुं०। उपादानहेतौ, आचा० १ श्रु० १ अ० १ उ०। परितापकरे व्यापारे, व्य० १ उ०। व्यापादने, सूत्र० १ श्रु० १ अ० २ उ०। परपीडाकरोच्चाटनादिनिबन्धनध्याने, दशा०। त्रिविधः समारम्भः मानसिकवाचिककायिकभेदात्, तत्र मानसिकः मन्त्रादिध्यानम्, परमारणहेतोः प्रथमः समारम्भः परपीडाकरोच्चाटनादिनिबन्धनध्यानम्। वाचिको यथा आरम्भः परव्यापदनसमर्थक्षुद्रविद्यादिपरावर्तनासंकल्पसूचको ध्वनिरेव समारम्भः। परपरितापकरमन्त्रादिपरावर्त्तनम्। कायिको यथा आरम्भोऽभिघाताय यष्टिमुष्टयादिकरणं, समारम्भः परितापकरो मुष्टयाद्यभिघातः। दशा०६ अ०। अङ्गारकर्मणि, पं० सू०१ सूत्र। "संकप्पो संरंभो, परितापकरो भवे समारंभो।" भ०३ श० ३ उ०। स्था०। नि० चू०। आचा०। उत्त०। सूत्र०। जीवोपमर्दे, सूत्र० १ श्रु० ११ अ०। प्रस्थापने,विशे०। सेवने, सूत्र०१ श्रु० ८ अ०। आचा०। ताडने, सूत्र० १ श्रु० ५ अ० २ उ०। आचा०। स्था०

समारंभमाण-समारम्भमाण-त्रि०। समारम्भं कुर्वति, स्था० १० ठा० ३ उ०। जीवानां विनाशके, औ०। व्यापादयति, स्था० ६ ठा० ३ उ०। संघट्टादीनां विषयीकुर्वति, स्था० ५ ठा० २ उ०।

समारंभावण-समारम्भण-न०। समनुज्ञाने, आचा० १ श्रु०१ अ० २ उ०।

समारंभि(न्)-समारम्भिन्-त्रि०। कृतसमारम्भे, कर्त्तरि, आचा० १ श्रु० १ अ० ५ उ०।

समारंभित्ता-समारभ्य-अव्य०। प्रज्वाल्येत्यर्थे, सूत्र० १ श्रु० ५ अ० १ उ०।

समारोव-समारोप-पुं०। अतस्मिन् तदध्यवसाये, अतत्प्रकारे पदार्थे तत्प्रकारतानिर्णये, (रत्ना०१ परि०।) यथा क्षणिके अक्षणिकज्ञानम्। सम्म० १ काण्ड।

समारोह-समारोह-पुं०। सम्यक् क्लेशेनोर्ध्वगमने,आव०४अ०।

समालवण-समालपन-न०। अतिविषमत्वादल्पाक्षरैरसम्यगवबोधे, सूत्र० १ श्रु० १४ अ०।

समाव-समाप-धा०। समाप्तिनयने, "समापेः समाणः" ॥ ८। ४। १४२॥ अनेन पाक्षिकः समाणादेश.। तत्पक्षे-समावेइ। समापयति। प्रा० ४ पाद।

समावडिय-समापतित-त्रि०। समापन्ने, औ०। प्रश्न०।

समावण्ण-समापन्न-त्रि०। निष्ठानयने, आव० ३ अ०। भ०। आचा०। समागते, सूत्र० १ श्रु० ३ अ० ३ उ०। सम्यगापन्ने, प्राप्ते, आचा० १ श्रु० ५ अ० ५ उ०।

समावत्ति-समापत्ति-स्त्री०। अवधानेन मनस्तादात्म्यापादने, द्वा० २२ द्वा०। प्रति०। षो०।

मनोबिम्बप्रतिच्छाया, समापत्तिं परात्मनः ।
क्षीणवृत्तिर्भवेद् ध्याना-दन्तरात्मनि निर्मितम् ॥ १ ॥
द्वा० २२ द्वा० ।
('जोग' शब्दे चतुर्थभागे १६३० पृष्ठे व्याख्यातमिदम्।)

समावयंत-समापतत्-त्रि० । एकीभावेनाभिमुखं पतति, दश० ६ अ० ३ उ० ।

समाविभाग-समाविभाग-पुं० । कालविभागे, ज्यो०६ पाहु०।

समास-समास-पुं० । असुक्षेपणे, असनमासः क्षेप इत्यर्थः, शोभनमसनं समासः । संसाराद्बहिर्जीवात् कर्मणो वा क्षेपणे, आ० म०१ अ० । संक्षेपे, सामान्ये, ओघ०। सामायिके, विशे० । सशब्दे प्रशसायाम्, असु क्षेपणे, शोभनमसनं ससाराद्बहिर्जीवस्य जीवात्कर्मणो वा क्षेपणं समासः । अथवा—संशब्दः सम्यगर्थे सम्यगासः समासः । रागद्वेषरहितस्य समस्य वा आस समासः । विशे० । 'अप्पक्खरं समासो' त्ति-महार्थत्वेऽल्पाक्षरत्वात्सामायिकं समास उच्यते । 'अहवाऽऽसो सणं' त्ति-अथवा-असु क्षेपणे इत्यस्य धातोर्व्युत्पाद्यते । आकारश्चेह प्रश्लिष्टो द्रष्टव्यः,ततश्च असनमासो जीवात्कर्मणः क्षेप इत्यर्थः । णकारस्यानुस्वारश्चेह लुप्तो दृश्य । समशब्दार्थमाह- महासणं सव्वे'त्ति-अव्ययानामनेकार्थत्वान्महत्कर्मणोऽसन समसन समासः। वा इति अथवा, सच्छोभनमसनं समासः कर्मक्षेपणस्य शोभनत्वादिति । अथवा--सम्यगर्थे समर्थे वा संशब्दः । तत्किमित्याह-'सम्म समस्स वाऽऽसो' त्ति-सम्यक् समस्य वा रागद्वेषरहितस्यासः कर्मक्षेप इति कृत्वा सामायिकं समासो भवति । विशे०। आ० चू०। (कथा 'चिलाईपुत्त' शब्दे तृतीयभागे ११८८ पृष्ठे गता । ) संक्षेपे, नं० । आतु० । आचा० । आ० म० । पञ्चा० । रा० । विशे०। उत्त० पा० । स्था० । अनु० । 'समास' त्ति-संशब्दः प्रशंसायामसु क्षेपणे । शोभनमसनम्-संक्षेपेण विस्तरवतः संकोचन समास । पदानामेकीकरणे , प्रश्न० २ संव० द्वार।

से किं तं समासिए ?, समासिए सत्त समासा भवंति, तं जहा-"दंदे अ बहुव्वीही,कम्मधारए-दिग्गू अ । तप्पुरिसे अव्वईभावे, एक्कसेसे अ सत्तमे" ॥ १ ॥ अनु० ।

द्वयोर्बहूना पदाना वा समसनं--संमीलनं समासः । अनु०। ( द्वन्द्वादिपदाना व्याख्या स्वस्वस्थाने । )

समासओ-समासतस्-अव्य० । संक्षेपेणेत्यर्थे , नि० चू० १ उ० । कर्म्म० ।

समासज्ज-समासाद्य-अव्य० । प्राप्येत्यर्थे , आचा० १ श्रु० ८ अ० ८ उ० ।

समासण-समासन-न० । समानोपवेशने, आव० ४ अ० ।

समासत्थ-समासार्थ-पुं० । संक्षिप्तार्थे, आ० म० १ अ० ।

समासदोस-समासदोष-पुं० । समासव्यत्यये , आ० म० १ अ० । यत्र समासविधि प्राप्तं समासं न करोति , व्यत्ययेन वा करोति, तत्र समासदोष । अनु० । विशे० ।

समासिय-समाश्रित-त्रि० । अभ्युपगतवति, आ० म० १ अ० ।

समासिक-न० । द्वयोर्बहूना वा पदाना समसनं—संलीन समासस्तन्निर्वृत्तं समासिकम् । समासजे नामनि, अनु० । यथा राजपुरुषोऽयमिति । अत्र तत्पुरुष समासे कर्तव्ये विशेषणसमासकरणं बहुव्रीहिसमासकरणम् । यद्वा-अत्र समासकरणं, यथा-राज्ञः पुरुषोऽयमिति । आ० म० १ अ० ।

समाहट्टु-समाहृत्य-अव्य० । सम्यगुपादायेत्यर्थे, सूत्र० १ श्रु० ८ अ० ।

समाहड-समाहृत-त्रि० । शुद्धे, आचा० २ श्रु० १ चू० १ अ० ३ उ० । अङ्गीकृते सूत्र० २ श्रु० २ अ० ।

समाहय-समाहत-त्रि० । परस्परेणोपहते , प्रश्न० ३ आश्र० द्वार। अभिभूत, प्रश्न० ४ आश्र० द्वार। रा० । अमनोज्ञे,प्रश्न० ३ आश्र० द्वार।

समाहरण-समाहरण-न० । गोपने, उपसंहरणे, सूत्र० १ श्रु० ८ अ० । विस्रोतसिकाराहित्येनादाने, सूत्र०१ श्रु०८ अ०।

समाहाण-समाधान-न०। विपर्ययौत्सुक्यनिवृत्तिलक्षणे स्वास्थ्ये, अनु० । आव० । सम्यगाख्याने, सूत्र० २ श्रु० २ अ० । अनादिकालात्संहत्यावस्थाने, धातूनामनेकार्थत्वात् । विशे० । चित्तसमाधाने आ० चू०

तत्रोदाहरणम्—

णयरं सुदंसणपुरं, सुसुणाए सुजस सुव्वए चेव ।
पव्वज्ज सिक्खमादी,एगविहारे य फासणया ॥१२६८॥

सुदंसणं पुरं नगर, सुसुणागो गाहावई, सुजसा से भज्जा, सड्ढाणि ताण सुव्वत्तो पुत्तो णाम सुहेण गब्भे अच्छितो, सुहेण जातो, एव वड्ढितो, एवं जाव जोव्वणत्थो सबुद्धो, आपुच्छित्ता पव्वइतो पढितो, एगल्लविहारपडिमं पडिवण्णो । सक्कपसंसा, देवेहिं परिक्खितो । अणुकूलेण धणेणो, कुमारबंभयारी एक्केण, विनिपण को एआओ कुलसंताणच्छेदगाओ अधण्णो- त्ति ?,सो भगव समो । एत्र मातापितीणि से विसयपसत्ताणि दरिसिताणि । पच्छा माहिज्जतगाणि कलुण कूवेंति, तहा वि समो । पच्छा सव्वे तुट्ठा विउव्वित्ता दिव्वाए इत्थिगाए सविब्भमं , पलोडय मुक्कदीहनीसासमवगूढो तहा वि सजमे समाहितनरो, जातो णाणं उप्पण्ण जाव सिद्धो । आ० चू० ४ अ० । आव० ।

समाहार-समाहार-पुं० । समानाहारे, प्रज्ञा० १७ पद १ उ० । ( अत्र दण्डक 'सम' शब्देऽस्मिन्नेव भागे गत । )

समाहारा-समाहारा-स्त्री० । द्वादश्या रात्रितिथौ, जं० ७ वक्ष० । ज्यो० । दक्षिणरुचकवास्तव्यायां दिक्कुमारीमहत्तरिकायाम् , आ० चू० १ अ० । आ० म० । द्वी० । जं० । आ० क० । स्था० । न० प्र० ।

समाहि समाधि-पुं० । समाधानं समाधि । सम्यग्मोक्षमार्गावस्थाने स० २० सम० । रागद्वेषपरित्यागरूपे धर्मध्याने, सूत्र० १ श्रु० २ अ० २ उ० । स्वास्थ्ये, आ० म० २ अ० ।

चेत. स्वास्थ्ये, स० ३२ सम०। आचा०। आ० चू०। आव०। ध०। नीरोगतायाम्, व्य० १ उ०। उत्त०। इन्द्रियप्रणिधाने, आचा० १ श्रु० ६ अ० ४ उ०। योगे, उत्त० २ अ०। धर्मध्यानादिके, सूत्र० १ श्रु० २ अ० ३ उ०। सम्यगवस्थाने. सूत्र० १ श्रु० १४ अ०। सम्यग्दर्शनादिकायां मोक्षपद्धतौ, सूत्र० १ श्रु० १३ अ०। प्रशमवाहितायां ज्ञानादौ च। स्था० ४ ठा० १ उ०। एकाग्रे निरुद्धे चित्ते समाधिरिति। द्वा० ११ द्वा०। ज्ञानदर्शनचारित्रात्मके चित्तस्वास्थ्ये, आचा० १ श्रु० ५ अ० ५ उ०। प्रशस्तभावे, स्था० २ ठा० ३ उ०। समाधानं समाधिः, स च द्रव्यभावभेदात् द्विविधः। तत्र द्रव्यसमाधिर्यदुपयोगात् स्वास्थ्यं भवति, येषां वा विरोध इति, भावसमाधिस्तु ज्ञानादिसमाधानमेव, तदुपयोगादेव परमस्वास्थ्ययोगादिति, यतश्चायमित्थं द्विधा, अतो द्रव्यसमाधिव्यवच्छेदार्थमाह-वरं-प्रधानं भावसमाधिमित्यर्थं, (ददतु)। आव० २ अ०। प्रव०। सन्मार्गानुष्ठाने, ध० ३ अधि०। द्वा०।

प्रशान्तवाहिता वृत्तेः, संस्कारात् स्यान्निरोधजात्।
प्रादुर्भाव-तिरोभावौ, तद्व्युत्थानजयोरयम् ॥ २३ ॥

प्रशान्तेति—प्रशान्तवाहिता परिहृतविक्षेपतया सदृशप्रवाहपरिणामिता, वृत्तेर्वृत्तिमयस्य चित्तस्य निरोधजात् संस्कारात् स्यात्, तदाह—"तस्य प्रशान्तवाहिता संस्कारात्" ( ३-१० )। कोऽयं ?, निरोध एवेत्यत आह—तद्व्युत्थानजयोर्निरोधजव्युत्थानजयो. संस्कारयोः प्रादुर्भावतिरोभावौ-वर्त्तमानाध्वाभिव्यक्तिकार्यकरणासामर्थ्यावस्थानलक्षणौ, अयं निरोध. चलत्वेऽपि गुणवृत्तस्योक्ताभयलयवृत्तित्वान्वयेन चित्तस्य तथाविधस्थैर्यमादाय निरोधपरिणामशब्दव्यवहारात्। तदुक्तम्—"व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्ता ऽन्वयो निरोधपरिणाम" इति ( ३—९ )।

सर्वार्थतैकाग्रतयोः, समाधिस्तु क्षयोदयौ।
तुल्यावेकाग्रताशान्तो-दितौ च प्रत्ययाविह ॥ २४ ॥

सर्वार्थतेति-सर्वार्थता-चलत्वान्नानाविधार्थग्रहणम्, चित्तस्य विक्षेपो-धर्म, एकाग्रता-एकस्मिन्नेवाऽऽलम्बने सदृशपरिणामिता तयोः क्षयोदयौ तु अत्यन्ताभिभवाभिव्यक्तिलक्षणौ, समाधिरुद्रिक्तसत्त्वचित्तान्वयितयाऽवस्थित., समाधिपरिणामोऽभिधीयते। यदुक्तम्—" सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणाम." इति ( ३—११ )। पूर्वत्र विक्षेपस्याभिभवमात्रम्, इह त्वत्यन्ताभिभवोऽनुत्पत्तिरूपोऽतीताध्वप्रवेश इत्यनयोर्भेद। इहाधिकृतदर्शने तुल्यावेकरूपालम्बनत्वेन सदृशौ शान्तोदितौ अतीताध्वप्रविष्टवर्त्तमानाध्वस्फुरितलक्षणौ च प्रत्ययौ एकाग्रता उच्यते समाहितचित्तान्वयिनी। तदुक्तम्-"शान्तोदितौ हि तु (तौ तु) ल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणाम." ( ३-१२ )। नचैवमन्वयव्यतिरेकवस्त्वसंभव, यतोऽन्यत्रापि धर्मलक्षणावस्थापरिणामा दृश्यन्ते। तत्र धर्मिण पूर्वधर्मनिर्वृत्तावुत्तरधर्मापत्तिर्धर्मपरिणाम., यथा—मृल्लक्षणस्य धर्मिण पिण्डरूपधर्मपरित्यागेन घटरूपधर्मान्तरस्वीकार। लक्षणपरिणामश्च यथा-तस्यैव घटस्यानागताऽध्वपरित्यागेन वर्त्तमानाध्वस्वीकार., तत्परित्यागेन वाऽतीताध्वपरिग्रह। अवस्थापरिणामश्च यथा-तस्य घटस्य प्रथमद्वितीययो. क्षणयोः सदृशयोरन्वयित्वेन चलगुणवृत्तीनां गुणपरिणामनं धर्मी च शान्तोदितेषु शक्तिरूपेण स्थितेषु सर्वत्र सर्वात्मकत्वव्यपदेशेषु धर्मेषु कथञ्चिद्भिन्नेष्वन्वयी दृश्यते, यथा—पिण्डघटादिषु मृदेव प्रतिक्षणमन्यान्यत्वात्तद्धिपरिणामान्यत्वम्। तत्र केचित्परिणामा. प्रत्यक्षेणैवोपलक्ष्यन्ते, यथा—सुखादय. संस्थानादयो वा। केचिच्चानुमानगम्या, यथा—कर्मसंस्कारशक्तिप्रभृतयः। धर्मिणश्च भिन्नाभिन्नरूपतया सर्वत्रानुगम इति न काचिदनुपपत्तिः। तदिदमुक्तम्-"एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याता." ( ३-१३ )। "शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी" ( ३-१४ ) "क्रमान्यत्वं परिणामान्यत्वे हेतुरिति" ( ३-१५ ) ॥२४॥ ( द्वा० ) ( २५ श्लोक. 'सापवित्तिपयावहा' शब्देऽस्मिन्नेव भागे गत। )
( २६ श्लोकः 'परा' शब्दे पञ्चमभागे ५४६ पृष्ठे गत'। )

स्वरूपमात्रनिर्भासं, समाधिर्ध्यानमेव हि।
विभागमनतिक्रम्य, परे ध्यानफलं विदुः ॥२७॥

स्वरूपेति-स्वरूपमात्रस्य' ध्येयस्वरूपमात्रस्य निर्भासो यत्र तत्तथा। अर्थाकारसमावेशेन भूतार्थरूपतया न्यग्भूतज्ञानस्वरूपतया च ज्ञानस्वरूपशून्यतापत्तेः ध्यानमेव हि समाधि.। तदुक्तम्—"तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधि" इति। (३-३) विभागमष्टाङ्गो योग इति प्रसिद्धमनतिक्रम्यानुल्लङ्घ्य परे ध्यानफलं समाधिरिति विदुः।

निराचारपदो ह्यस्या-मतः स्यान्नातिचारभाक्।
चेष्टा चास्याखिलाभुक्त-भोजनाभाववन्मता ॥२८॥

निराचारेति-अस्या दृष्टौ योगी नातिचारभाक् स्यात् तन्निबन्धनाभावात्। अतो निराचारपद प्रतिक्रमाद्यभावात्, चेष्टा चास्यैतद्दृष्टिमतोऽखिलाभुक्तभोजनाभाववन्मता आचारजेयकर्माभावात्, तस्य भुक्तप्रायत्वात्, सिद्धत्वेन तदिच्छाविघटनात्।

कथं तर्हि भिक्षाटनाद्याचारोऽत्रेत्यत आह-

रत्नशिक्षादृगन्या हि, तन्नियोजनदृग्यथा।
फलभेदात्तथाचार-क्रियाऽप्यस्य विभिद्यते ॥२९॥

रत्नेति-रत्नशिक्षादृशोऽन्या हि यथा शिक्षितस्य सतस्तन्नियोजनदृक्, तथाऽऽचारक्रियाऽप्यस्य भिक्षाटनादिलक्षण फलभेदाद्विभिद्यते। पूर्वं हि साम्परायिककर्मक्षय. फलम्, इदानीं तु भवोपग्राहिककर्मक्षय इति।

कृतकृत्यो यथा रत्न-नियोगाद्रत्नविद्भवेत्।
तथाऽयं धर्मसंन्यास-विनियोगान्महामुनिः ॥३०॥

कृतकृत्य इति-यथा रत्नस्य नियोगात् शुद्धदृष्ट्या यथेच्छव्यापाराद्गुणिग् रत्नवाणिज्यकारि कृतकृत्यो भवेत् तथाऽयमधिकृतदृष्टिस्थो धर्मसन्यासविनियोगात् द्वितीयापूर्वकरणे महामुनि. कृतकृत्यो भवति।

केवलश्रियमासाद्य, सर्वलब्धिफलान्विताम्।
परंपरार्थं संपाद्य, ततो योगान्तमश्नुते ॥ ३१ ॥

केवलेति-केवलश्रियं-केवलज्ञानलक्ष्मीमासाद्य-प्राप्य सर्वलब्धिफलान्विता सर्वौत्सुक्यनिवृत्त्या परंपरार्थं यथा भव्यं सम्यक्त्वादिलक्षण संपाद्य ततो योगान्त-योगपर्यन्तमश्नुते

प्राप्नोति।

तत्रायोगाद्योगमुख्या-द्भवोपग्राहिकर्मणाम्।
क्षयं कृत्वा प्रयात्युच्चैः, परमानन्दमन्दिरम् ॥ ३२ ॥

तत्रेति-तत्र योगान्ते शैलेश्यवस्थायाम् अयोगादव्यापारात् योगमुख्यात् भवोपग्राहिणा कर्मणां क्षयं कृत्वा उच्चैर्लोकान्ते परमाऽऽनन्दमन्दिर प्रयाति। द्वा० २४ द्वा०। साम्प्रतं समाधिरुच्यते तत्रापि नामस्थापने क्षुण्णत्वादनादृत्य द्रव्यादिसमाधिमाह-

दव्वं जेण व दव्वे-ण समाही आहिअं च जं दव्वं।
भावसमाहि चउव्विह-दंसणनाणे तवचरित्ते ॥३२७॥

द्रव्यमिति-द्रव्यमेव समाधि 'द्रव्यसमाधिर्यथा मात्रकम्, अविरोधि वा क्षीरगुडादि, तथा येन वा द्रव्येणोपयुक्तेन समाधिस्त्रिफलादिना तद् द्रव्यसमाधिरिति। तथा आहित वा यद् द्रव्य समतां करोति तुलारोपितपलशतादिवत् स्वस्थाने तत् द्रव्यं समाधिरिति। उक्तो द्रव्यसमाधि ॥ भावसमाधिमाह--भावसमाधि प्रशस्तभावविरोधलक्षणश्चतुर्विधः, चातुर्विध्यमेवाह-दर्शनज्ञानतपश्चारित्रेषु एतद्विषयो दर्शनादीना व्यस्ताना समस्तानां वा सर्वथा अविरोध इति गाथार्थ। दश० ६ अ० १ उ०। पा०। उत्त०।' मोक्षे, सम्यग्ध्याने, सदनुष्ठाने च। सूत्र० १ श्रु० ३ अ० ३ उ०। स्था०।

दसविहा समाही पएणत्ता, तं जहा-पाणाइवायवेरमणे मुसावायवेरमणे अदिएणादाणवेरमणे मेहुणवेरमणे परिग्गहवेरमणे इरियासमिई भासासमिई एसणासमिई आयाणउच्चारपासवणखेलसिंघाणगपारिट्ठावणियासमिई। ( सू० ११X )

समाधानं समाधिः, समता सामान्यतो रागाद्यभाव इत्यर्थ., स चोपाधिभेदात् दशधेति। स्था० १० ठा० ३ उ०। संथा०। अनुष्ठाने, सूत्र० १ श्रु० १४ अ०। सम्यग्मार्गानुष्ठाने, सूत्र० १ श्रु० १४ अ०। गुर्वादीनां कार्यकारणद्वारेण चित्तस्वास्थ्योत्पादने, ज्ञा०१ श्रु० ८ अ०। आ० क०। ('समाहाण' शब्दे अस्मिन्नेव भागे कथानकम्।) शुभलेश्याध्यवसाये, दश० २ चू०। भारते वर्षे उत्सर्पिण्या भविष्यति सप्तदशे तीर्थकरे, स० ८५ सम०। ति०। सत्तरसो रेवइजीवो समाही। ती० २ कल्प। समतायाम्, प्रश्न० १ संव०द्वार। धर्मे समाधि कर्त्तव्य, सम्यगाधीयते व्यवस्थाप्यते मोक्ष तन्मार्गे वा प्रति येनात्मा धर्मध्यानादिना स समाधि' धर्मध्यानादिक'। स च सम्यग् ज्ञात्वा स्पर्शनीय। नामनिष्पन्न तु निक्षेपमधिकृत्य निर्युक्तिकृदाह-

आयाणपदेणाऽऽघं, गोणं नामं पुणो समाहि त्ति।
णिक्खिविऊण समाहिं, भावसमाहीइ पगयं तु ॥१०३॥
णामं ठवणा दविए, खेत्ते काले तहेव भावे य।
एसो उ समाहीए, णिक्खेवो छव्विहो होइ ॥ १०४ ॥
पंचसु विसएसु सुभेसु, दव्वम्मि त्ता भवे समाहि त्ति।
खेत्तं तु जम्मि खेत्ते, काले कालो जहिं जो उ ॥१०५॥
भावसमाही चउव्विह, दंसणणाणे तवे चरित्ते य।
चउसु वि समाहियप्पा, सम्मं चरणट्ठिओ साहू ॥१०६॥

आदीयते-गृह्यते प्रथमम्-आदौ यत्तदादानम् आदानं च तत्पदं च सुबन्तं तिङन्तं वा तदादानपदं तेन 'आघं' ति नामास्याध्ययनस्य, यस्मादध्ययनादाविदं सूत्रम्-"आघं मईमं मणुवीइधम्मं" इत्यादि, यथोत्तराध्ययनेषु चतुर्थमध्ययनं प्रमादाप्रमादाभिधायकमप्यादानपदेन 'असंखय' मित्युच्यते, गुणनिष्पन्नं पुनरस्याध्ययनस्य नाम समाधिरिति, यस्मात्स एवात्र प्रतिपाद्यते, त च समाधि नामादिना निक्षिप्य भावसमाधिनेह प्रकृतम्-अधिकार इति। समाधिनिक्षेपार्थमाह-नामस्थापनाद्रव्यक्षेत्रकालभावभेदात्, एष तु समाधिनिक्षेप' षड्विधो भवति। तुशब्दो गुणनिष्पन्नस्यैव नाम्नो निक्षेपो भवतीत्यस्यार्थस्याविर्भावनार्थ इति। नामस्थापने सुगमत्वादनादृत्य द्रव्यादिकमधिकृत्याह-पञ्चस्वपि शब्दादिषु मनोज्ञेषु विषयेषु श्रोत्रादीन्द्रियाणां यथास्व प्राप्तौ सत्या यस्तुष्टिविशेष. स द्रव्यसमाधि., तदन्यथा त्वसमाधिरिति। यदिवा-द्रव्ययोर्द्रव्याणां वा सम्मिश्राणामविरोधिनां सता न रसोपघातो भवति, अपितु रसपुष्टि. स द्रव्यसमाधि.। तद्यथा-क्षीरशर्करयोर्दधिगुडचातुर्जातकादीना चेति, येन वा द्रव्येणोपभुक्तेन समाधिपानकादिना समाधिर्भवति तद् द्रव्यं द्रव्यसमाधि.। तुलादावारोपितं वा यद् द्रव्यं समतामुपैतीत्यादिको द्रव्यसमाधिरिति। क्षेत्रसमाधिस्तु यस्य यस्मिन् क्षेत्रे व्यवस्थितस्य समाधिरुत्पद्यते स क्षेत्रप्राधान्यात् क्षेत्रसमाधि। यस्मिन् वा क्षेत्रे समाधिर्व्यावर्ण्यत इति। कालसमाधिरपि यस्य य कालमवाप्य समाधिरुत्पद्यते तद्यथा-शरदि गवा नक्तमुलूकानामहनि बलिभुजा, यस्य वा यावन्तं काल समाधिर्भवति यस्मिन् वा काले समाधिर्व्याख्यायते स कालप्राधान्यात् कालसमाधिरिति। भावसमाधि त्वधिकृत्याह-भावसमाधिस्तु दर्शनज्ञानतपश्चारित्रभेदाच्चतुर्द्धा, तत्र चतुर्विधमपि भावसमाधि समासतो गाथापश्चार्धेनाह-मुमुक्षुणा चर्यत इति चरणं तत्र सम्यक् चरणे चारित्रे व्यवस्थित समुद्युक्त साधु-मुनिश्चतुर्ष्वपि भावसमाधिभेदेषु दर्शनज्ञानतपश्चारित्ररूपेषु सम्यगाहिता-व्यवस्थापित आत्मा येन स समाहितात्मा भवति। इदमुक्तं भवति-य सम्यक्चरणे व्यवस्थित -स चतुर्विधभावसमाधिसमाहितात्मा भवति। यो वा भावसमाधिसमाहितात्मा भवति, स सम्यक्चरणे व्यवस्थितो द्रष्टव्य इति। तथाहि-दर्शनसमाधौ व्यवस्थितो-जिनवचनभावितान्त करणो निवातशरणप्रदीपवन्न कुमतिवायुभिर्भ्राम्यते, ज्ञानसमाधिना तु यथा यथाऽपूर्वं श्रुतमधीते तथा तथाऽतीव भावसमाधावुद्युक्तो भवति। तथा चोक्तम्-
"जह जह सुयमवगाहइ, अइसयरसपसरसंजुयमउव्वं।
तह तह पल्हाइ मुणी, णवणवसंवेगसद्धाए ॥ १ ॥"
चारित्रसमाधावपि विषयसुखनि स्पृहतया निरिकञ्चनोऽपि परं समाधिमाप्नोति, तथा चोक्तम्-" तण संथारणिसण्णो, ऽवि मुणिवरो भट्टरागमयमोहो। जं पावइ मुत्तिसुहं, कत्तो तं चक्कवट्टी वि ? ॥ १ ॥ नैवास्ति राजराज-स्य तत्सुखं नैव देवराजस्य। यत्सुखमिहैव साधो-र्लोकव्यापाररहितस्य "॥ २ ॥ इत्यादि,

तप समाधिनाऽपि विकृष्टतपसोऽपि न ग्लानिर्भवति तथा क्षुत्तृष्णादिपरीषहेभ्यो नोद्विजते , तथा अभ्यस्ताभ्यन्तरतपोध्यानाश्रितमना. स निवार्णस्थ इव न सुखदु खाभ्यां वाध्यत इत्येवं चतुर्विधभावसमाधिस्थ. सम्यक्चरणव्यवस्थितो भवति साधुरिति ।

गतो नामन्निष्पन्नो निक्षेप. , साम्प्रतं सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चरणीयं , तच्चेदम्-

आघं मईमं मणुवीय धम्मं ,
अंजू समाहिं तमिणं सुणेह ।
अपडिन्न भिक्खू उ समाहिपत्ते ,
अणियाणभूतेसु परिव्वएज्जा ॥ १ ॥
उड्ढं अहेयं तिरियं दिसासु ,
तसा य जे थावर जे य पाणा ।
हत्थेहिं पाएहिं य संजमित्ता,
अदिन्नमन्नेसु य णो गहेज्जा ॥ २ ॥
सुयक्खायधम्मे वितिगिच्छतिण्णे ,
लाढे चरे आयतुले पयासु ।
आयं न कुज्जा इह जीवियट्ठी,
चयं न कुज्जा सुतवस्सि भिक्खू ॥ ३ ॥
सव्विंदियाभिनिव्वुडे पयासु,
चरे मुणी सव्वतो विप्पमुक्के ।
पासाहि पाणे य पुढो वि सत्ते,
दुक्खेण अट्टे परितप्पमाणे ॥ ४ ॥

अस्य चायमनन्तरसूत्रेण सह सम्बन्धः , तद्यथा--अशेषगारवपरिहारेण मुनिर्निर्वाणमनुसन्धयेदित्येतद्भगवानुत्पन्नदिव्यज्ञान. समाख्यातवान् , एतच्च वक्ष्यमाणमाख्यातवानिति , ' आघं ' ति--आख्यातवान् कोऽसौ ?-- मतिमान्--मननं मति --समस्तपदार्थपरिज्ञानं तद् विद्यते यस्यासौ मतिमान् केवलज्ञानीत्यर्थः , तत्रासधारणविशेषणोपादानात्तीर्थकृद् गृह्यते , असावपि प्रत्यासत्तेर्वीरवर्द्धमानस्वामी गृह्यते , किमाख्यातवान् ?--धर्मं--श्रुतचारित्राख्यं , कथम् ?--अनुविचिन्त्य--केवलज्ञानेन ज्ञात्वा-प्रज्ञापनायोग्यान् पदार्थानाश्रित्य धर्मं भाषते, यदि वा--ग्राहकमनुविचिन्त्य कस्यार्थस्यायं ग्रहणसमर्थ ?, तथा-कोऽयं पुरुष. ? कञ्च नतः ? किं वा दर्शनमापन्न. ? इत्येवं पर्यालोच्य, धर्मशुश्रूषको वा मन्यन्ते , यथा--प्रत्येकमस्मदभिप्रायमनुविचिन्त्य भगवान् धर्मं भाषते , युगपत्सर्वेषा स्वभाषापरिणत्या संशयापगमादिति , किं भूतं धर्मं भाषते ?--ऋजुम्--अवक्र यथावस्थितवस्तुस्वरूपनिरूपणतो, न यथा शाक्या सर्वं क्षणिकभ्युदगम्य कृतनाशाकृताभ्यागमदोषभयात्सन्तानाभ्युपगमं कृतवन्त , तथा वनस्पतिमचेतत्वेनाभ्युपगम्य स्वयं न छिन्दन्ति तच्छेदनादावुपदेशं तु ददति , तथा कार्षापणादिकं हिरण्यं स्वतो न स्पृशन्ति अपरेण तु तत्परिग्रहत. क्रयविक्रयं कारयन्ति , तथा सांख्या सर्वमप्रच्युतानुत्पन्नस्थिरैकस्वभावं नित्यमभ्युपगम्य कर्मबन्धमोक्षाभावप्रसङ्गदोषभयादाविर्भावनिरोभावावाश्रितवन्त इत्यादिकौटिल्यभावपरिहारेणावक्रं तथ्यं धर्ममाख्यातवान् , तथा सम्यगाधीयते-मोक्षं तन्मार्गं वा प्रत्यात्मा योग्यः क्रियते--व्यवस्थाप्यते येन धर्मेणासौ धर्मः समाधिस्तं समाख्यातवान् । यदिवा-धर्ममाख्यातवांस्तत्समाधिं च धर्मध्यानादिकमिति । सुधर्मस्वाम्याह--तमिमं--धर्मं समाधिं वा भगवदुपदिष्टं शृणुत यूयम् । तद्यथा न विद्यते ऐहिकामुष्मिकरूपा प्रतिज्ञा--आकाङ्क्षा तपोऽनुष्ठानं कुर्वतो यस्यासावप्रतिज्ञ, भिक्षणशीलो भिक्षुः तुर्विशेषणे भावभिक्षु', असावेव परमार्थत' साधुः, धर्मं धर्मसमाधिं च प्राप्तोऽसावेवेति । (' अणियाणभूतेसु परिव्वएज्जा ' अस्य पदस्य व्याख्या ' अणिदाणभूय ' शब्दे प्रथमभागे ३३९ पृष्ठे गता ।) तथा प्राणातिपातादीनि तु कर्मणो निदानानि वर्त्तन्ते, प्राणातिपातोऽपि द्रव्यक्षेत्रकालभावभेदाच्चतुर्धा ; तत्र क्षेत्रप्राणातिपातमधिकृत्याह-सर्वोऽपि प्राणातिपात. क्रियमाण प्रज्ञापकापेक्षयोर्ध्वमधस्तिर्यक् क्रियते । यदिवा--ऊर्ध्वाधस्तिर्यग्रूपेषु त्रिषु लोकेषु तथा प्राच्यादिषु दिक्षु विदिक्षु चेति, द्रव्यप्राणातिपातस्त्वयं--त्रस्यन्तीति त्रसा--द्वीन्द्रियादयो ये च स्थावरा पृथिव्यादय , चकारः स्वगतभेदसंसूचनार्थ., कालप्राणातिपातसंसूचनार्थो वा-दिवा रात्रौ वा प्राणा'--प्राणिन', भावप्राणातिपातं त्वाह-एतान् प्रागुक्तान् प्राणिनो हस्तपादाभ्यां संयम्य-बद्ध्वा उपलक्षणार्थत्वादस्यान्यथा वा कदर्थयित्वा यत्तेषां दुःखोत्पादनं तन्न कुर्यात् । यदिवा-एतान् प्राणिनो हस्तौ पादौ च संयतकायः सन्न हिंस्यात् । चशब्दादुच्छ्वासनि.श्वासकासितक्षुतवातनिसर्गादिषु सर्वत्र मनोवाक्कायकर्मसु संयतो भवन्-भावसमाधिमनुपालयेत् । तथा परैरदत्तं न गृह्णीयादिति तृतीयव्रतोपन्यास., अदत्तादाननिषधाच्चार्थतः परिग्रहो निषिद्धो भवति, नापरिगृहीतमासेव्यत इति मैथुननिषेधोऽप्युक्त. । समस्तव्रतसंरक्षणपालनोपदेशाच्च मृषावादोऽप्यर्थतो निरस्त इति ॥२॥ ज्ञानदर्शनसमाधिमधिकृत्याह--सुष्ठ्वाख्यात. श्रुतचारित्राख्यो धर्मो येन साधुनाऽसौ स्वाख्यातधर्मा, अनेन ज्ञानसमाधिरुक्तो भवति, न हि विशिष्टपरिज्ञानमन्तरेण स्वाख्यातधर्मत्वमुपपद्यत इति भाव । तथा विचिकित्सा--चित्तविप्लुतिर्विद्वज्जुगुप्सा वा ता[वि]तीर्ण'--अतिक्रान्तः ' तदेव च नि शङ्कं यज्जिनैः प्रवेदित ' मित्येवं नि.शङ्कतया न काञ्चिच्चित्तविप्लुतिं विधत्त इत्यनेन दर्शनसमाधि प्रतिपादितो भवति, येन केनाचित्प्रासुकाहारोपकरणादिगतेन विधिनाऽऽत्मानं यापयति--पालयतीति लाढ , स एवम्भूतः संयमानुष्ठानं चरेद्--अनुतिष्ठत् , तथा प्रजायन्त इति प्रजा --पृथिव्यादयो जन्तवस्तास्वात्मातुल्य , आत्मवत्सर्वप्राणिन पश्यतीत्यर्थ', एवम्भूत एव भावसाधुर्भवतीति । तथा चोक्तम्-" जह मम ण पियं दुक्खं, जाणिय एमेव सव्वजीवाणं । ण हणेइ ण हणावेइ य, सममणई तेण सो समणो ॥ १ ॥ " यथा च ममाऽऽक्रुश्यमानस्याभ्याःख्यायमानस्य वा दु खमुत्पद्यते एवमन्येषामपीत्येवं मत्वा प्रजास्वात्मसमो भवति । तथा इहासयमजीवितार्थी प्रभूतं कालं सुखेन जीविष्यामीत्येतदध्यवसायी वा ' आयं ' कर्माश्रवलक्षणं न कुर्यात् । तथा--चयम्-उपचयमाहारोपकरणादेर्धनधान्यद्विपदचतुष्पदादेर्वा परिग्रहलक्षणं सञ्चयमायत्यर्थं सुष्ठु तपस्वी सुतपस्वी-विकृष्टतपोनिष्टप्तदेहो भि-

कुर्न कुर्यादिति ॥ ३ ॥ ( गाथापूर्वार्द्धव्याख्या 'इत्थी' शब्दे द्वितीयभागे ६१४ पृष्ठे गता । ) स एवम्भूत सर्वबन्धनविप्रमुक्तः सन् पश्य-अवलोकय पृथक् पृथिव्यादिषु कायेषु सूक्ष्मबादरपर्याप्तकापर्याप्तकभेदभिन्नान् सत्त्वान्-प्राणिन. अपिशब्दाद्वनस्पतिकाये साधारणशरीरिणोऽनन्तानप्येकत्वमागतान् पश्य, किं भूतान् ?-दु खन-असातवेदनीयोदयरूपेण दुःखयतीति वा दु खम् अष्टप्रकारं कर्म तेनार्त्तान्-पीडितान् परिसमन्तात्ससारकटाहोदरे स्वकृतेनेन्धनेन परिपच्यमानान्-क्वथ्यमानान्, यदिवा—दुष्प्रणिहितेन्द्रियानार्त्तध्यानोपगतान्मनोवाक्कायै. परितप्यमानान् पश्येति सम्बन्धो लगनीय इति ।

अपि च—

एतेसु बाले य पकुव्वमाणे,
आवट्टती कम्मसु पावएसु ।
अतिवायतो कीरति पावकम्मं,
निउंजमाणे उ करेइ कम्मं ॥ ५ ॥
आदीणवित्तीव करेति पावं,
मंताउ एगंतसमाहिमाहु ।
बुद्धे समाही य रते विवेगे,
पाणातिवाता विरते ठियऽप्पा ॥ ६ ॥
सव्वं जगं तू समयाणुपेही,
पियमप्पियं कस्सइ णो करेज्जा ।
उट्ठाय दीणो य पुणो विसन्नो,
संपूयणं चेव सिलोयकामी ॥ ७ ॥
आहाकडं चेव निकाममीणे,
नियामचारी य विसण्णमेसी ।

एतेषु प्राग् निर्दिष्टेषु प्रत्येकसाधारणप्रकारेषूपतापक्रियया बालवत् बाल. अज्ञश्चशब्दादितरोऽपि संघट्टनपरितापनापद्रावणादिकेनानुष्ठानेन पापानि-कर्माणि प्रकर्षेण कुर्वाणस्तेषु च पापेषु कर्मसु सत्सु एतेषु वा पृथिव्यादिजन्तुषु गत सस्तेनैव संघट्टनादिना प्रकारेणानन्तश आवर्त्यते-पीड्यते दु खभाग्भवतीति । पाठान्तरं वा-एवं तु बाले—एवमित्युपदर्शने यथा चौर' पारदारिको वा असदनुष्ठानेन हस्तपादच्छेदान् बन्धवधादींश्चेहावाप्नोत्येवं सामान्यदृष्टेनानुमानेनान्योऽपि पापकर्मकारी इहामुत्र च दु खभाग्भवति, 'आउट्टति' त्ति क्वचित्पाठ , तत्राशुभान् कर्मविपाकान् दृष्ट्वा श्रुत्वा ज्ञात्वा वा तेभ्योऽसदनुष्ठानेभ्य 'आउट्टति' त्ति-निवर्त्तते , कानि पुन पापस्थानानि येभ्य पुन. प्रवर्त्तते निवर्त्तते वा इत्याशङ्क्य तानि दर्शयति-अतिपातत -प्राणातिपातत प्राणव्यपरोपणादितोऽस्तस्माश्रुभम्—ज्ञानावरणादिकं कर्म क्रियते-समादीयते, तथा परांश्च भृत्यादीन् प्राणातिपातादौ नियोजयन्—व्यापारयन् पापं कर्म करोति, तुशब्दान्मृषावादादिकं च कुर्वन् कारयंश्च पापकं कर्म समुच्चिनोतीति ॥ ५ ॥ किं चान्यत्—आ—समन्ताद्दीना—करुणास्पदा वृत्ति—अनुष्ठानं यस्य कृपणवनीपकादे स भवत्यादीनवृत्ति , एवम्भूतोऽपि पापं कर्म करोति, पाठान्तरं वा (आदीनभोज्यपि पापं करोतीति 'आईणभोइ' शब्दे द्वितीयभागे ७ पृष्ठे गतम् । ) द्रव्यसमाधयो हि स्पर्शादिसुखोत्पादका अनेकान्तिका अनात्यन्तिकाश्च भवन्ति , अन्ते चावश्यमसमाधिमुत्पादयन्ति, तथा चोक्तम्-" यद्यपि निषेव्यमाणा, मनस परितुष्टिकारका विषया. । किम्पाकफलादनवद्भवन्ति पश्चादतिदुरन्ता. ॥ १ ॥ " इत्यादि , तदेव बुद्ध -अवगततत्त्व स चतुर्विधेऽपि ज्ञानादिके रतो-व्यवस्थितो विवेके वा आहारोपकरणकषायपरित्यागरूपे द्रव्यभावात्मके रत संवृतभूतश्च स्यादित्याह-प्राणाना दशप्रकाराणामप्यतिपातो-विनाशस्तस्माद् विरत स्थित सम्यग्मार्गेषु आत्मा यस्य स , पाठान्तरं वा—'ठियच्चि' त्ति-स्थिता शुद्धस्वभावात्मना अर्चि -लेश्या यस्य स भवति स्थितार्चि., सुविशुद्धस्थिरलेश्य इत्यर्थ ॥ ६ ॥ किंच—सर्वं—चराचर जगत्—प्राणिसमूह समतया प्रेक्षितु शीलमस्य स समतानुप्रेक्षी समतापश्यको वा, न कश्चित्प्रियो नापि द्वेष्य इत्यर्थः तथा चोक्तम्-"नत्थि य सि कोइ वि(दि)स्सो, पिओ व सव्वेसु चेव जीवेसु ।" तथा-' जह मम ण पियं दु ख ' मित्यादि-समतोपेतश्च न कस्यचित्प्रियमप्रियं वा कुर्यान्नि सङ्गतया विहरेद् , एवं हि सम्पूर्णभावसमाधियुक्तो भवति । कश्चित्तु भावसमाधिना सम्यगुत्थानेनोत्थाय परीषहोपसर्गैस्तर्जितो दीनभावमुपगम्य पुनर्विषण्णो भवति, विषयार्थी वा कश्चिद्गार्हस्थ्यमप्यवलम्बते, रससातागौरवगृद्धो वा पूजासत्काराभिलाषी स्यात् , तदभावे दीन सन् पार्श्वस्थादिभावेन वा विषण्णो भवति, कश्चित्तया सम्पूजनं वस्त्रपात्रादिना प्रार्थयेत् , श्लोककामी च-श्लाघाभिलाषी च व्याकरणगणितज्योतिषनिमित्तशास्त्राण्यधीते कश्चिदिति ॥ ७ ॥ किंचान्यत्-साधूनाधाय—उद्दिश्य कृत निष्पादितमाधाकर्मेत्यर्थ , तदेवम्भूतमाहारोपकरणादिकं निकामम्—अत्यर्थ य प्रार्थयते स 'निकाममीणे' इत्युच्यते । तथा-निकामम्-अत्यर्थम् आधाकर्मादीनि तन्निमित्त निमन्त्रणादीनि वा सरति-चरति तच्छीलश्च स तथा, एवम्भूत पार्श्वस्थावसन्नकुशीलानां संयमोद्योगे विषण्णाना विषण्णभावमेषते. सदनुष्ठानविषण्णतया संसारपङ्कावमग्ना भवतीति यावत् , ('इत्थीसु' इत्यारभ्य ' परिग्गहे ' शब्दे पञ्चमभागे ५४६ पृष्ठे गतम् । ) तथा 'वेगणुविद्धे' इत्यादि 'धम्म' शब्दे ४ भागे २६७६ पृष्ठे गतम् । )

किंचान्यत्—

आयं ण कुज्जा इह जीवियट्ठी,
असज्जमाणो य परिव्वएज्जा ।
णिसम्मभासी य विणीय गिद्धिं,
हिंसन्नियं वा ण कहं करेज्जा ॥ १० ॥
आहाकडं वा ण णिकामएज्जा,
णिकामयंते य ण सथवेज्जा ।
धुणे उरालं अणुवेहमाणे,
चिच्चा ण सोयं अणवेक्खमाणो ॥ ११ ॥

आगच्छतीत्यायो-द्रव्यादेर्लाभस्तन्निमित्तं पादितोऽष्टप्रकार-

कर्म लाभो वा तम्, इह—अस्मिन् संसारे असंयमजीवितार्थी भोगप्रधानजीवितार्थीत्यर्थः । यदिवा—आजीविकाभयात् द्रव्यसञ्चयं न कुर्यात् । पाठान्तरं वा—'छन्दणं कुज्जा' इत्यादि, छन्द-प्रार्थनाभिलाष इन्द्रियाणां स्वविषयाभिलाषो वा तत् न कुर्यात्, तथा असजमानः—सङ्गमकुर्वन् गृहपुत्रकलत्रादिषु परिव्रजेत्-उद्युक्तविहारी भवेत्, तथा 'गृद्धिं—गार्ध्यं विषयेषु शब्दादिषु विनीय—अपनीय निशम्य—अवगम्य पूर्वोत्तरेण पर्यालोच्य भाषको भवेत्, तदेव दर्शयति-हिंसया-प्राण्युपमर्दरूपया अन्वितां-युक्तां कथां न कुर्यात्—न तत् ब्रूयात् यत्परात्मनोरुभयोर्वा बाधकं वच इति भावः । तद्यथा—अश्नीत पिबत खादत मोदत हत छिन्त प्रहरत पचतेत्यादिकथां पापोपादानभूतां न कुर्यादिति ॥ १० ॥ अपि च—साधूनाधाय कृतमाधाकृतमौद्देशिकमाधाकर्मेत्यर्थः, तदेवंभूतमाहारजातं निश्चयेनैव न कामयेत्—नाभिलषेत् तथाविधाहारादिकं च निकामयत—निश्चयेनाभिलषत पार्श्वस्थादींस्तत्सम्पर्कदानप्रतिग्रहसंवाससंभाषणादिभि न संस्थापयेत्—नोपबृंहयेत्, तैर्वा सार्धं संस्तवं न कुर्यादिति । किञ्च—'उरालं' ति-औदारिक शरीरं—विकृष्टतपसा कर्मनिर्जरामनुप्रेक्षमाणो धुनीयात्—कृशं कुर्यात् । यदि वा—'उरालं' ति बहुजन्मान्तरसञ्चितं कर्म तदुदारं मोक्षमनुप्रेक्षमाणो धुनीयाद्—अपनयेत्, तस्मिंश्च तपसा धूयमाने कृशीभवति शरीरके कदाचित् शोकः स्यात्, तं त्यक्त्वा याचितोपकरणवदनुप्रेक्षमाणः शरीरकं धुनीयादिति सम्बन्धः । सूत्र० १ श्रु० १० अ० ।

किञ्चाऽन्यत्—

इत्थीसु या आऽरय मेहुणाउ,
परिग्गहं चेव अकुव्वमाणे ।
उच्चावएसुं विसएसु ताई,
निस्संसयं भिक्खु समाहिपत्ते ॥ १३ ॥

दिव्यमानुषतिर्यग्रूपासु त्रिविधास्वपि स्त्रीषु विषयभूतासु यत् मैथुनम्—अब्रह्म तस्माद् आ—समन्तान्न रत —अरतो निवृत्त इत्यर्थः, तुशब्दात्प्राणातिपातादिनिवृत्तश्च, तथा परि-समन्ताद् गृह्यते इति परिग्रहो धनधान्यद्विपदचतुष्पदादिसंग्रहः तथाऽऽत्माऽऽत्मीयग्रहस्तं चैवाकुर्वाण सन्नुच्चावचेषु-नानारूपेषु विषयेषु यदिवोच्चा-उत्कृष्टा अवचा जघन्यास्तेष्वरक्तद्विष्ट त्रायी-अपरेषां च त्राणभूतो विशिष्टोपदेशदानतो नि संशय—निश्चयेन परमार्थतो भिक्षु —साधुरेवम्भूतो मूलोत्तरगुणसमन्वितो भावसमाधिं प्राप्तो भवति, नापरः कश्चिदिति । उच्चावचेषु वा विषयेषु भावसमाधिं प्राप्तो भिक्षुर्न संशयं याति नानारूपान् विषयान् न संश्रयतीत्यर्थः ॥ १३ ॥ ( १४ गाथा 'परिसह' शब्दे पञ्चमभागे ६४७ पृष्ठे उक्ता । )

किञ्चान्यत्—

गुत्तो वईए य समाहिपत्तो,
लेसं समाहट्टु परिव्वएज्जा ।
गिहं न छाए ण वि छायएज्जा,
संमिस्सभावं पयहे पयासु ॥ १५ ॥

वाचि वाचा वा गुप्तो वाग्गुप्तो-मौनव्रती सुपर्यालोचितधर्मसम्बन्धभाषी वेत्येवं भावसमाधिं प्राप्तो भवति, तथा शुद्धां लेश्यां तैजस्यादिकां समाहृत्य-उपादाय अशुद्धा च कृष्णादिकामपहृत्य परि—समन्तात्संयमानुष्ठाने व्रजेत् गच्छेदिति । किंचान्यत्—गृहम्—आवसथं स्वतोऽन्येन वा न छादयेदुपलक्षणार्थत्वादस्यापरमपि गृहादुरुगवत्परकृतबिलेनिवासित्वात्संस्कारं न कुर्यात् । अन्यदपि गृहस्थकर्त्तव्यं परिजिहीर्षुराह—प्रजायन्त इति प्रजास्तासु—तद्विषये येन कृतेन सम्मिश्रभावो भवति तत्प्रजह्यात् । एतदुक्तं भवति-प्रव्रजितोऽपि सन् पचनपाचनादिकां क्रियां कुर्वन् कारयँश्च गृहस्थैः सम्मिश्रभावं भजते । यदि वा—प्रजा —स्त्रियस्तासु ताभिर्वा यः सम्मिश्रीभावस्तमविकलसंयमार्थी प्रजह्यात्-परित्यजेदिति ॥ १५ ॥ ( 'जे केइ' इत्यादि १६—गाथा 'अकिरियाआय' शब्दे प्रथमभागे १२६ पृष्ठे गता । )

किंचान्यत्—

पुढो य छंदा इह माणवा उ,
किरियाकिरियं च पुढो य वायं ।
जायस्स बालस्स पकुव्व देहं,
पवड्ढती वेरमसंजतस्स ॥ १७ ॥

पृथक्—नाना छन्दः—अभिप्रायो येषां ते पृथक्छन्दा इह अस्मिन्मनुष्यलोके मानवा-मनुष्याः, तुरवधारणे, तमेव नानाभिप्रायमाह—क्रियाऽक्रिययोः पृथक्त्वेन क्रियावादमक्रियावादं च समाश्रिताः, तद्यथा-" क्रियैव फलदा पुंसां, न ज्ञानं फलदं मतम् । यतः स्त्रीभक्ष्यभोगज्ञो, न ज्ञानात्सुखितो भवेत् ॥ १ ॥ " इत्येवं क्रियैव फलदायित्वेनाभ्युपगताः क्रियावादमाश्रिताः, एवमेतद्विपर्ययेणाक्रियावादमाश्रिताः, एतयोश्चोत्तरत्र स्वरूपं न्यक्षेण वक्ष्यते ते च नानाभिप्राया मानवाः क्रियाऽक्रियादिकं पृथग्वादमाश्रिता मोक्षहेतुं धर्ममजानाना आरम्भेषु सक्ता इन्द्रियवशगा रससातागौरवाभिलाषिण एतत्कुर्वन्ति, तद्यथा- 'जातस्य-उत्पन्नस्य बालस्य—अज्ञस्य सदसद्विवेकविकलस्य सुखैषिणो देहम्—शरीरं 'पकुव्व' त्ति—खण्डशः कृत्वाऽऽत्मनः सुखमुत्पादयन्ति, तदेव परोपघातक्रियां कुर्वतोऽसयतस्य कुतोऽप्यनिवृत्तस्य जन्मान्तरशतानुबन्धि वैरं परस्परोपमर्दकारि प्रकर्षेण वर्धते । पाठान्तरं वा—'जायाए बालस्स पगब्भणाए' बालस्य—अज्ञस्य हिंसादिषु कर्म्मसु प्रवृत्तस्य निरनुकम्पस्य या जाता प्रगल्भता-धार्ष्ट्यं तया वैरमेव प्रवर्धत इति सम्बन्धः ॥ १७ ॥ ( १८- गाथा 'आउक्खय' शब्दे द्वितीयभागे २७ पृष्ठे गता । )

किंचान्यत्—

जहाहि वित्तं पसवो य सव्वं,
जे बंधवा जे य पिया य मित्ता ।
लालप्पवी सेऽवि य एइ मोहं,
अन्ने जणा तंसि हरंति वित्तं ॥ १९ ॥

सीहं जहा खुड्डमिगा चरंता ,
दूरे चरंती परिसंकमाणा ।
एवं तु मेहावि समिक्ख धम्मं ,
दूरेण पावं परिवज्जएज्जा ॥ २० ॥

वित्तं-द्रव्यजातं तथा पशवो-गोमहिष्यादयस्तान् सर्वान् जहाहि-परित्यज तेषु ममत्वं मा कृथा , ये बान्धवा मातापित्रादय. श्वशुरादयश्च पूर्वापरसंस्तुता ये च प्रिया मित्राणि सह पांसुक्रीडितादयस्ते एते मातापित्रादयो न किंचित्तस्य परमार्थत. कुर्वन्ति, सोऽपि च वित्तपशुबान्धवमित्रार्थी अत्यर्थं पुन पुनर्वा लपति लालप्यते तद्यथा-हे मात. ? हे पितरित्येवं तदर्थं शोकाकुल. प्रलपति , तदर्जनपरश्च मोहमुपैति । रूपवानपि कण्डरीकवत् , धनवानपि मम्मणवणिग्वत् धान्यवानपि तिलकश्रेष्ठिवद् , इत्येवमसावप्यसमाधिमान् मुह्यते (ति) यच्च तेन महता क्लेशेनापरप्राण्युपमर्देनोपार्जितं वित्तं तदन्ये जनाः ' से ' तस्यापहरन्ति जीवत एव मृतस्य वा , तस्य च क्लेश एव केवलं पापबन्धश्चेत्येवं मत्वा पापानि कर्माणि परित्यजेत्तपश्चरेदिति ॥ १९ ॥ तपश्चरणोपायमधिकृत्याह—यथा क्षुद्रमृगा —क्षुद्राटव्यपशवो हरिणजात्यादय. चरन्त.-अटव्यामटन्तः सर्वतो बिभ्यत परिशङ्कमाना. सिंहं व्याघ्रं वा आत्मोपद्रवकारिणं दूरेण परिहृत्य चरन्ति-विहरन्ति, एवं मेधावी-मर्यादावान् , तु-विशेषणे सुतरां धर्मं समीक्ष्य-पर्यालोच्य पापं कर्म-असदनुष्ठानं दूरेण मनोवाक्कायकर्मभि. परिहृत्य परि-समन्तात् व्रजेत् संयमानुष्ठायी तपश्चारी च भवेदिति, दूरेण वा पापं-पापहेतुत्वात्सावद्यानुष्ठानं सिंहमिव मृग. स्वहितमिच्छन् परिवर्जयेत्-परित्यजेदिति ॥ २० ॥

अपि च—

संबुज्झमाणे उ णरे मतीमं,
पावाउ अप्पाण निवट्टएज्जा ।
हिंसप्पसूयाइँ दुहाइँ मत्ता,
वेराणुबंधीणि महब्भयाणि ॥ २१ ॥
मुसं न बूया मुणि अत्तगामी,
णिव्वाणमेयं कसिणं समाहिं ।
सयं न कुज्जा न य कारवेज्जा,
करंतमन्नं पि य णाणुजाणे ॥२२॥

मनन मति. सा शोभना यस्यास्त्यसौ मतिमान् , प्रशंसाया मतुप् , तदेवं शोभनमतियुक्तो मुमुक्षुर्नर सम्यक् श्रुतचारित्राख्यं धर्मं भावसमाधिं वा बुध्यमानस्तु-विहितानुष्ठाने प्रवृत्तिं कुर्वाणस्तु पूर्वं तावन्निषिद्धाचरणात् निवर्तेत , अतस्तद्दर्शयति—पापात्—हिंसानृतादिरूपात्कर्मण आत्मानं निवर्तयेत् , निदानोच्छेदेन हि निदानिन उच्छेदो भवतीत्यतोऽशेषकर्मक्षयमिच्छन्नादावेव आश्रवद्वाराणि निरुन्ध्यादित्यभिप्राय. । किं चान्यत्-हिंसा-प्राणिव्यपरोपणं तया ततो वा प्रसूतानि—जातानि यान्यशुभानि कर्माणि तान्यत्यन्त नरकादिषु यातनास्थानेषु दु खानि-दु खोत्पादकानि वर्त्तन्ते, तथा वैरमनुबध्नन्ति तच्छीलानि च वैरानुबन्धीनि—जन्मशतसहस्रदुर्मोचानि, अत एव महद्भयं येभ्य. सकाशात्तानि महाभयानीति, एवं च मत्वा मतिमानात्मानं पापान्निवर्तयेदिति । पाठान्तरं वा 'निव्वाणभूए व परिव्वएज्जा' अस्यायमर्थ —यथाहि निर्वृतो निर्व्यापारत्वात्कस्यचिदुपघाते न वर्तते एव साधुरपि सावद्यानुष्ठानरहित. परि—समन्ताद् व्रजेदिति ॥२१॥ तथा आप्तो-मोक्षमार्गस्तद्गामी-तद्गमनशील आत्महितगामी वा, आप्तो वा प्रक्षीणदोष. सर्वज्ञस्तदुपदिष्टमार्गगामी मुनि.—साधु. मृषावादम्-अनृतमयथार्थं न ब्रूयात् सत्यमपि प्राण्युपघातकमिति, ' एतदेव मृषावादवर्जनम् ' कृत्स्नं-संपूर्णं भावसमाधिं निर्वाणं चाहु', सांसारिका हि समाधय -स्नानभोजनादिजनिता शब्दादिविषयसंपादिता वा अनैकान्तिका नात्यन्तिकत्वेन दु खप्रतीकाररूपत्वेन वा असंपूर्णा वर्तन्ते, तदेव मृषावादमन्येषां वा व्रतानामतिचारं स्वयमात्मना न कुर्यान्नाप्यपरेण कारयेत्तथा कुर्वन्तमप्यपरं मनोवाक्कायकर्मभिर्नानुमन्येत इति ॥२२॥ सूत्र० १ श्रु० १० अ० । आ० चू० । सामर्थ्ये, आव० ६ अ० । शीले , स्था० ४ ठा० १ उ० । ( आहारविषयकसमाधिवक्तव्यता ' आहार ' शब्दे द्वितीयभागे ५२२ पृष्ठे गता । ) ( समाधिद्वारं 'समाहाण ' शब्देऽस्मिन्भागे गतम् । )

समाहिइंदिय—समाहितेन्द्रिय—पु० । संयतेन्द्रिये,सूत्र० १ श्रु० २ अ० २ उ० ।

समाहिकाम—समाधिकाम—त्रि०।समाधिमभिलषति,व्य०१उ०।

समाहिजोय—समाधियोग—पु० । समाधि.—धर्मध्यानं तदर्थं तत्प्रधानो योग'—मनोवाक्कायव्यापार । मनोवाक्कायव्यापारेण धर्मध्याने, सूत्र० १ श्रु० ४ अ० १ उ० ।

समाहिट्ठाण—समाधिस्थान—न० । समाधे—रागादिरहितचित्तस्य स्थानानि—आश्रया समाधिस्थानानि । पा० । प्रशान्ताश्रयेषु, स० १० सम० । दशा० । चित्तसमाधिस्थानानि ' चित्तसमाहिट्ठाण ' शब्दे तृतीयभागे ११८३ पृष्ठे गतानि । ) ( ब्रह्मचर्यसमाधिस्थानान्यपि स्वस्वस्थाने । )

समाहिट्ठाय—समाधिष्ठातृ—त्रि० । प्रभौ, आचा० । गृहपतौ, आचा० २ श्रु० १ चू० ७ अ० १ उ० ।

समाहिपडिमा—समाधिप्रतिमा—स्त्री० । समाधि श्रुतचारित्रं च तद्विषया प्रतिमा-प्रतिज्ञाभिग्रह समाधिप्रतिमा । प्रतिमाभेदे , स्था० ३ ठा० १ उ० । समाधिप्रतिमा द्विधा, श्रुतस्कन्धोक्ता द्विभेदा-श्रुतसमाधिप्रतिमा, सामायिकादिचारित्रसमाधिप्रतिमा च । स्था० २ ठा० ३ उ० ।

चत्तारि पडिमाओ पण्णत्ताओ, तं जहा—समाहिपडिमा, उवहाणपडिमा, विवेगपडिमा, विउस्सग्गपडिमा । ( सू० २५१× )

( व्याख्या ' पडिमा ' शब्दे पञ्चमभागे ३३२ पृष्ठे गता । )

समाहिबहुल—समाधिबहुल—त्रि० । चित्तस्वास्थ्यप्रचुरे, प्रश्न० ३ सव० द्वार । समाधिस्तु प्रशमवाहिता ज्ञानादि वा । तत्प्रचुरे , स्था० ३ ठा० ४ उ० ।

समाहिमरण-समाधिमरण-न०। भक्तपरिज्ञेङ्गितमरणपादपो-ऽपगमनानामन्यतमस्मिन् मरणभेदे, आचा० १ श्रु० ८ अ० १ उ०।

समाहिय-समाधित-त्रि०। शोभने, बीभत्से, दुष्टे च। सूत्र० १ श्रु० ३ अ० १ उ०।

समाहित-त्रि०। सम्यगाहिते व्यवस्थापिते च। सूत्र०१ श्रु० ५ अ० १ उ०। समापिते, विशे०। शुभाध्यवसयासहिते, सूत्र० १ श्रु० १ अ० ४ उ०। सम्यगाख्याते, सूत्र० १ श्रु० ६ अ०। धर्मादिध्यानयुक्ते, सूत्र० १ श्रु० २ अ० २ उ०। उपयुक्ते, आचा० २ श्रु० ४ चू०। समाधिं प्राप्ते, सूत्र० १ श्रु० ३ अ० ४ उ०। आचा०। व्य०। आ०म०। समाधियुक्ते, संथा० १ अधि० १ प्रस्ता०।

समाहृत-त्रि०। गृहीत, आचा० १ श्रु० ८ अ० ५ उ०, सम्यग्व्यवस्थापिते, आचा० १ श्रु० ८ अ० ६ उ०। आ० म०

समाहियच्च-समाहितार्च-त्रि०। सम्यगाहिता—व्यवस्थापिता अर्चा-शरीरं येन स समाहितार्च। नियमितकायव्यापारे, अर्चा-लेश्या सम्यगाहिता लेश्या येन स समाहितार्च। अतिविशुद्धाध्यवसाये, यदि वा-अर्चा-क्रोधाध्यवसायात्मिका ज्वाला। समाहिता—उपशमिता अर्चा येन स तथा। अक्रोधने, आचा० १ श्रु० ८ अ० ६ उ०।

समाहियप्प-समाहितात्मन्-त्रि०। सम्यक्चरणे, चारित्रे व्यवस्थितः समुद्युक्तः साधुर्मुनिश्च चतुर्ष्वपि भावसमाधिभेदेषु दर्शनज्ञानतपश्चारित्ररूपेषु सम्यगाहितो व्यवस्थापित-आत्मा येन स समाहितात्मा। ध्यानापादकगुणेषु उपयुक्तात्मनि, दश० १० अ०।

समाहियमण-समाहितमनस्-त्रि०। समं-तुल्यं रागद्वेषाकलितमाहितमुपनीतमात्मनि मनो येन स तथा। समाहितात्ममनस्के, प्रश्न० १ संव० द्वार।

समाहिरय-समाधिरत-त्रि०। ऐकान्तिकात्यन्तिकसुखोत्पादके समाधौ रते, सूत्र० १ श्रु० १० अ०।

समाहिराय-समाधिराज-पुं०। सर्वयोगाग्रेसरत्वात् (बौद्धमतेन) नैरात्म्यदर्शने, द्वा० २४ द्वा०।

समाहिवीरिय-समाधिवीर्य-न०। मनआदीनां समाधाने, नि० चू० १ उ०।

समि-शमिन्-त्रि०। शमोऽस्यास्तीति शमी। जितमनोवेगे, आचा० १ श्रु० ५ अ० ३ उ०।

समिइ-समिति-स्त्री०। सम् पूर्वस्येण् गतावित्यस्य क्तिन्प्रत्ययान्तस्य समितिर्भवति। समेकीभावेनेति -समितिः। शोभनैकाग्रपरिणामस्य चेष्टायाम्, आव० ४ अ०। उत्त०। सूत्र०। दशा०। सम्यक् प्रवृत्तौ, प्रश्न० १ संव० द्वार। संथा०। समितिरिति पञ्चाना चेष्टाना तान्त्रिकी संज्ञा। ध० ३ अधि०। नि० चू०। प्रव०। दश०। चतुर्विंशतिसङ्ख्याके उत्तराध्ययने, स० ३६ सम०। उत्त०। सम्यग्वर्जने, प्राणातिपातवर्जने, ओघ०। स०। आचा०। स्था०। आव०। द्वा०। सम्यग्गमने, सम्यक् प्रवर्त्तने, उत्त० २५ अ०। समागमे, स०।

पंच समिईओ पण्णत्ताओ, तं जहा-इरियासमिई भासासमिई एसणासमिई आयाणभंडमत्तनिक्खेवणासमिई उच्चारपासवणखेलसिंघाणजल्लपारिट्ठावणियासमिई। (सू० ५+)

तथा समितयः—सङ्गताः प्रवृत्तयः, तत्रेर्यासमितिः—गमने सम्यक् सत्त्वपरिहारतः प्रवृत्तिः, भाषासमितिः—निरवद्यवचनप्रवृत्तिः, एषणासमितिः—द्विचत्वारिंशद्दोषवर्जनेन भक्तादिग्रहणे प्रवृत्तिः, आदाने—ग्रहणे भाण्डमात्रयोरुपकरणपरिच्छदस्य निक्षेपणे अवस्थापने समितिः—सुप्रत्युपेक्षितादिसाङ्गत्येन प्रवृत्तिश्चतुर्थी, तथोच्चारस्य—पुरीषस्य प्रश्रवणस्य—मूत्रस्य खेलस्य—निष्ठीवनस्य शिङ्घाणस्य—नासिकाश्लेष्मणो जल्लस्य—देहमलस्य परिष्ठापनायां—परित्यागे समितिः—स्थण्डिलादिदोषपरिहारतः प्रवृत्तिरिति पञ्चमी। स० ५ सम०।

अट्ठ समितितो पण्णत्ताओ, तं जहा-ईरियासमिती भासासमिती एसणासमिती आयाणभंडमत्तणिक्खेवणासमिती उच्चारपासवणखेलसिंघाणजल्लपारिट्ठावणियासमिती मणसमिती वइसमिती कायसमिती। (सू० ६०३)

'अट्ठ समिई' त्यादि, सम्यगितिः-प्रवृत्तिः समितिः, ईर्यायां-गमने समितिश्चक्षुर्व्यापारपूर्वतयेतीर्यासमितिः, एवं भाषायां निरवद्यभाषणतः, एषणायामुद्गमादिदोषवर्जनतः, आदाने—ग्रहणे भाण्डमात्रायाः—उपकरणमात्राया भाण्डस्य वा—वस्त्राद्युपकरणस्य मृन्मयादिपात्रस्य वा मात्रस्य च—साधुभाजनविशेषस्य निक्षेपणायां च समितिः सुप्रत्युपेक्षितसुप्रमार्जितक्रमेणेति, उच्चारप्रश्रवणखेलशिङ्घाणजल्लानां पारिष्ठापनिकायां समितिः स्थण्डिलविशुद्धादिक्रमेण, खेलो-निष्ठीवनं शिङ्घाणो-नासिकाश्लेष्मेति, मनसः कुशलताया समितिः, वाचोऽकुशलत्वनिरोधे समितिः, कायस्य स्थानादिषु समितिरिति। स्था० ८ ठा० ३ उ०।

अट्ठसु वि समिईसु अ, दुवालसंगं अमोअरइ जम्हा।
तम्हा पवयणमाया, अज्झयणं होइ नायव्वं ॥ ४५९॥

'अष्टास्वपि' अष्टसंख्यास्वपि समितिषु द्वादशाङ्गं-प्रवचनं समवतरति—संभवति यस्मात्, ताश्चेहाभिधीयन्त इति गम्यते, तस्मात्प्रवचनमाता प्रवचनमातरो वोपचारत इदमध्ययनं भवति ज्ञातव्यमिति गाथार्थः। गतो नामनिष्पन्नो निक्षेपः। उत्त०। (य. समितः स गुप्त इति 'अब्भुट्टाण' शब्दे, प्रथमभागे ६६३ पृष्ठे उक्तम्।)

एषणासमितिमाह—

गवेसणाए गहणे य, परिभोगेसणा य जा।
आहारमुवहिसिज्जाए, एए तिन्नि विसोहिए ॥ ११ ॥
उग्गमुप्पायणं पढमे, बिइए सोहेज्ज एसणं।
परिभोगम्मि चउक्कं तु, विसोहिज्ज जयं जई ॥ १२ ॥

गवेषणायाम्—अन्वेषणाया ग्रहणे च—स्वीकारे, उभयत्र प्राकृतत्वादेषणेति सबध्यते, ततो गवेषणायामेषणा ग्रहणे

चैषणा परिभोगं—आसेवनं तद्विषयैषणा परिभोगैषणा च या, 'आहारोवहिसिज्जाए' त्ति—वचनव्यत्ययात् आहारोपधिशय्यासु प्रतीतास्वैता-उक्तरूपा एषणा सूत्रत्वाल्लिङ्गव्यत्ययात्तिस्रो विशोधयेत्-निर्दोषा विदध्यात्, पठ्यते च-" गवेसणाए गहणेणं, परिभोगेसणाणि य। आहारमुवहिं सेज्जं, एए तिन्नि विसोहिय" ॥१॥ त्ति। इति अस्य च गवेषणादिभिराहारादीनि त्रीणि विशोधयेदिति सत्रार्थः, कथं विशोधयेत् ?, इत्याह-उद्गमश्चोत्पादना च उद्गमोत्पादनमिति, समाहारस्तत्किमित्याह-विशोधयेदित्युत्तरेण सम्बन्धः। किमुक्तं भवति-आधाकर्मादिदोषपरिहारेण उद्गमं धात्र्यादिदोषपरित्यागतश्चोत्पादनां शुद्धामादधीत 'पढमं' त्ति-प्रथमायां गवेषणायां 'बीए' त्ति-द्वितीयायां ग्रहणैषणायां शोधयेत् शङ्कितादिदोषत्यागत एषणा-ग्रहणकालभाविग्राह्यगतदोषान्वेषणात्मिका, परिभोगैषणायां चतुष्कं पिण्डशय्यावस्त्रपात्रात्मकम्, उक्तं हि-' पिंडं सेज्जं च वत्थं च, चउत्थं पायमेव य' त्ति-विशोधयेदिह चतुष्कशब्देन तद्विषय उपभोग उपलक्षित, ततस्तं विशोधयेदिति। कोऽर्थः ?, उद्गमादिदोषत्यागतः शुद्धमेव चतुष्कं परिभुञ्जीत, यदि वोद्गमादीनां दोषोपलक्षणत्वात्, 'उग्गमं' त्ति-उद्गमदोषान् 'उप्पायणं' त्ति-उत्पादनादोषान् 'एसणं' त्ति-एषणादोषान् विशोधयेत्, चतुष्कं च संयोजनाप्रमाणाङ्गारधूमकारणात्मकम्, अङ्गारधूमयोर्मोहनीयान्तर्गतत्वेनैकतया विवक्षितत्वाद् विशोधयेद्भुभयत्र शोधनमपनयनं 'जय' त्ति-यतमानो यतिस्तपस्वी। व्याख्याद्वयेऽपि च पुनस्तस्यास्य एव क्रियाया अभिधानमतिशयख्यापनार्थमिति सूत्रद्वयार्थः।

इदानीमादानानिक्षेपणसमितिमाह—

ओहोवहुवग्गहियं, भंडगं दुविहं मुणी।
गिण्हंतो निक्खिवंतो य, पउंजेज्ज इमं विहिं ॥१३॥
चक्खुसा पडिलेहित्ता, पमज्जिज्जा जयं जई।
आईए निक्खिविज्जा वा, दुहओ वि समिए सया॥१४॥

'ओहोवहुवग्गहियं' ति—उपधिशब्दो मध्यनिर्दिष्टत्वात् डमरुकमणिग्रन्थिवदुभयत्र संबध्यते, तत ओघोपधिमौपग्रहिकोपधिं च भाण्डकमुपकरणं रजोहरणदण्डकादि द्विविधम्-उक्तभेदतो द्विभेदं मुनिः गृह्णन्नाददानो निक्षिपंश्च क्वचित् स्थापयन् प्रयुञ्जीत व्यापारयेदिमं-वक्ष्यमाणं विधिन्यायम्। तमेवाह-चक्षुषा-दृष्ट्या 'पडिलेहित्त' त्ति-प्रत्युपेक्ष्यावलोक्य प्रमार्जयेत्-रजोहरणादिना विशोधयेत् यतमानो यतिस्ततः 'आईए' त्ति-आददीत-गृह्णीयात् निक्षिपेद् वा स्थापयेत् 'दुहओ व' त्ति-द्वावपि प्रक्रमादौघिकोपग्राहिकोपधी,यदिवा-द्विधाऽपि द्रव्यतो भावतश्च समित प्रक्रमादादाननिक्षेपणासमितिमान् सन् सदा-सर्वकालमिति सूत्रद्वयार्थः। उत्त० २४ अ०। नैरन्तर्येण मीलनायाम्, अनु०। समुदये, स्था० ३ ठा० १ उ०।

समिइजोग-समितियोग-पुं०। सत्प्रवृत्तिसम्बन्धे, प्रश्न० ४ संव० द्वार।

समिइमा-समितिमा-स्त्री०। समिता कणिका तया निष्पन्ना समितिमा। मण्डके, पूपलिकायां च। वृ०१ उ०२ प्रक०।

समिक्ख-समीक्ष्य-अव्य०। पर्यालोच्येत्यर्थे, आव० ४ अ०। सूत्र०। केवलज्ञानेनार्थान् परिज्ञायेत्यर्थे,सूत्र० १ श्रु० ६ अ०।

समिच्च समेत्य-अव्य०। ज्ञात्वेत्यर्थे, सूत्र० १ श्रु० १२ अ०। मिलित्वेत्यर्थे, आ० म० १ अ०। आचा०।

समि(द्ध)ड्ढ-समृद्ध-त्रि०। धनधान्यादिविभूतियुक्ते,चं० प्र० १ पाहु०।ज्ञा०। नि०। वृद्धिमुपगते,प्रश्न० १ पद। उत्त०। पा०। व्य०। रा०। प्रश्न०। आ० म०। चन्द्रगुप्तसमये पाटलिपुत्रे नगरे स्थितानां सुस्थिताभिधसूरीणां शिष्ये, पिं०। ('चुण्ण' शब्दे तृतीयभागे ११६६ पृष्ठे कथा।)

समिड्ढय-समृद्धक-पुं०। पक्षस्य षष्ठे दिवसे,ज्यो०४पाहु०।

समिड्ढयर-समृद्धतर-पुं०। विशिष्टतरसंपदि, स्था० ४ ठा० १ उ०।

समि(ड्ढि)द्धि-समृद्धि-स्त्री०। "अतः समृद्ध्यादौ वा" ॥८। १। ४४॥ अनेनादेरतः प्राकृते दीर्घादेशः। तदभावे-समिद्धी। प्रा०। "इत्कृपादौ" ॥८।१।१२८॥ अनेन ऋत इत्वम्। प्रा०। अहिंसायाम्,समृद्धिहेतुत्वेन समृद्धिरेवोच्यते। प्रश्न० १ संव०द्वार। सम्यक् प्रकारेण ऋद्धौ, सपदि, विभूतौ च। आव० ४ अ०। स्था०।

समिय-शमिक-पुं०। शम एव शमिकः। शमभावे, प्रश्न० ५ संव० द्वार।

समिय-समित-त्रि०। सम्यगितः-प्राप्तो ज्ञानादिकं मोक्षमार्गमसौ समितः। प्राप्तज्ञानादिके, सूत्र० १ श्रु० १६ अ०। समितिभिः सहिते,सदायत्ने,आचा० १ श्रु० ६ अ०४उ०। ज्ञा०। संयते, आचा० २ श्रु० १ चू० १ अ० १ उ०। शुभेतरेषु रागद्वेषरहिते, आव० १ अ०। सम्यक् प्राप्ते, आव० ४ अ०। युक्ते, आचा० १ श्रु० ५अ०४ उ०।सदाचारानुष्ठायिनि, सूत्र० १ श्रु० १४ अ०। समायुक्ते, वृ०६ उ०। उत्त०। प्रमाणोपेताङ्गे, पिं०। ज्ञा०। दशा०। भ०। 'समिया ण' ति-सम्यगिति प्रशंसार्थो निपातस्तेन सम्यक्त्वे व्याकर्तुं वर्त्तन्ते, अविपर्यासेन इत्यर्थः, सम्यञ्चः, समञ्चन्तीति वा समिता वा सम्यक् प्रवृत्तयः। भ०२श०५उ०। समिता णाम पंचहिं समितीहिं समिता। नि० चू० २ उ०। उपयुक्ते, जं० २ वक्ष०। प्रश्न०। सम्यग्या मोक्षमार्गं गते, आचा० १ श्रु० ३ अ० २ उ०। आव०। अष्टके, ध० ३ अधि०। वृ०। सप्रमाणे, भ० ३ श० ८ उ०। निरन्तरे, स्था०१०ठा० ३ उ०। पुं०। गवेषणायामुदाहृते उपशमं नीते (आचा०१ श्रु० ६ अ० ५ उ०।) स्वनामख्याते आचार्ये, पिं०। वज्रस्वामिना मातुलके, आ० म० १ अ०।

श्रमित-त्रि०। अभ्यासवस्तु, भ० २ श० ५ उ०।

समियदंसण-समितदर्शन-पुं०। सम्यग् इत-गतं दर्शनं यस्य स समितदर्शनः। सम्यग्दृष्टौ, आचा० १ श्रु० ६ अ० २ उ०।

समिया-शमिता-स्त्री०। उपशमनतायाम्, आचा० १ श्रु० ५ अ० ५ उ०। सम्यक् समशमे, आचा०१ श्रु० ६ अ० २ उ०। (अत्रत्या वक्तव्यता 'असमिय' शब्दे प्रथमभागे ८४४ पृष्ठे। तथा 'लोगसार' शब्दे षष्ठे भागे गता।)

शमिता-स्त्री०। शमिनो भावः शमिता। शमे, आचा० १ श्रु० ८ अ० ८ उ०।

साम्य-न० सर्वत्र समरूपतायाम्, आचा०१श्रु०८अ०८उ०।

स(श)मि(ता)का-स्त्री०। उत्तमत्वेन स्थिरप्रकृत्या समवर्ती स्वप्रभार्या कोपौत्सुक्यादिभावान् शमयत्युपादेयवचनतयेति शमिका। शमिता वा। सर्वेषामिन्द्राणामभ्यन्तरपर्षदि, भ० ३ श० १० उ०।

समियाचार-सम्यगाचार-पुं०। सम्यग्-स्वशास्त्रविहितानुष्ठानादविपरीत आचार:-अनुष्ठानं येषां ते सम्यगाचाराः। सदाचारेषु साधुषु, सूत्र० २ श्रु० ५ अ०।

समिताचार-पुं० सम्यग् वा इतो व्यवस्थित आचारो येषां ते समिताचाराः। सदाचारेषु भिक्षुषु, सूत्र० २ श्रु० ५ अ०।

समियापरियाय-शमितापर्याय-पुं०। शमिता शमोऽस्यास्तीति शमी, तद्भाव: शमिता, पर्याय:-प्रव्रज्या शमितया पर्याय: प्रव्रज्याऽस्येति बहुव्रीहि:। तथाविधे सुश्रमणे, आचा०१श्रु०।

सम्यक्पर्याय-पुं०। सम्यक् पर्यायोऽस्येति सम्यक्पर्याय:। साधुपर्यायवति साधौ, आचा० १ श्रु०।

समिला-समिला-स्त्री०। शकटोपकरणभेदे, आ० म० १ अ०।

समिसंगलिया-शमीसङ्कलिका-स्त्री०। शमी वृक्षविशेषस्तस्य सङ्कलिका-फलिका। शमीवृक्षफलिकायाम्, अणु०।

समिहा-समिधा-स्त्री० काष्ठखण्डे पिं०। काष्ठिकायाम्, भ० ११ श० ६ उ०। इन्धनभूते काष्ठे, अन्त०१ श्रु० १ वर्ग ८ अ०। आचा०। नि०। आ० म०।

समी-शमी-स्त्री०। वृक्षविशेषे, अणु०।

समीकत-समीकृत-त्रि०। सम्यग् व्यवस्थापिते, सुदेयत्वेन व्यवस्थापिते, सूत्र० १ श्रु० ३ अ० २ उ०।

समीकरण-समीकरण-न०। समानतानयने, विशे०।

समीखल्लय-शमीखल्लक-न०। शमीसम्बन्धिनि पत्रपुटे, बृ० १ उ० ३ प्रक०।

समीर-समीर-पुं०। वायौ, को०।

समीरण-समीरण-न०। सम्यगीरणं समीरणम्। प्रेरणे, आचा० १ श्रु० ८ अ० ८ उ०।

समीरिय-समीरित-त्रि०। प्रेरिते, आचा० १ श्रु० ८ अ० ८ उ०। पापेन कर्मणा चोदिते, सूत्र० १ श्रु० ५ अ० २ उ०।

समीव-समीप-पुं०। सन्निधाने, पो० १६ विव०।

समीहा-समीहा-स्त्री०। सम्यगुद्यमे, सूत्र० १ श्रु० ८ अ०।

समीहिय-समीहित-त्रि०। इष्टे, सूत्र० १ श्रु० १४ अ०। मीमांसिते, व्य० ३ उ०।

समुउ-समुद्-पुं०। स्वभावे, व्य० ७ उ०।

समुइं-देशी-अभ्यासकरणे, बृ० १ उ० २ प्रक०।

समुइय-समुदित-त्रि०। समुदायाङ्गतामाप्ते, विशे०।

समुइयसत्ति-समुदितशक्ति-स्त्री०। अनन्तरकारणमध्ये विद्यमानाया द्वितीयाया सामान्यशक्तौ, द्रव्या०१ अध्या०। (समुदितशक्ति 'सत्ति' शब्देऽस्मिन्नेव भागे गता।)

समुक्करिसण-समुत्कर्षण-न०। उत्सेके, सूत्र० १ श्रु० २ अ० २ उ०। आ० म०। उत्कृष्टताविधाने, स्था० ३ ठा० १ उ०। मनने, व्य० ४ उ०। स्था०।

समुक्कित्तण-समुत्कीर्त्तन-न०। समुच्चारणे, अनु०। आ० चू०। संशब्दने, विशे०।

समुक्खित्त-समुत्क्षिप्त-त्रि०। निसर्गार्थे समुत्क्षिप्ते, व्यासे, त्रि-पा० १ श्रु० ३ अ०।

समुक्खियया-समुत्क्षिका-स्त्री०। प्रातर्गृहाङ्गणे जलच्छटकदायिकायाम्, ज्ञा० १ श्रु० ८ अ०।

समुग्ग-समुद्ग-पुं०। पात्रविशेषे, जी० ३ प्रति० २ उ०। पक्षिविशेषे जी० ३ प्रति० ४ अ०।

समुग्गनिमग्गगूढजाणु-समुद्गनिमग्नगूढजानु-त्रि०। समुद्गस्येव समुद्गकपक्षिण इव निमग्ने-अन्तःप्रविष्टे गूढे मांसलत्वादनुद्धते जानुनी अष्ठीवन्तौ येषां ते तथा। समुद्गकपक्षिण इव निगूढजानुनि पुरुषादौ, जी० ३ प्रति० ४ अधि०।

समुग्गपक्खि-समुद्गपक्षिन्-पुं०। समुद्गकवत्पक्षौ येषां ते समुद्गकपक्षिणः। समासान्त इन्प्रत्यय। पक्षिभेदे, स्था०४ ठा० ४ उ०। प्रज्ञा०। सूत्र०। जी०। "से किं तं समुग्गपक्खी ?, समुग्गपक्खी एगागारा पण्णत्ता, नेणं णऽत्थि इहं बाहिरएसु दीवसमुद्देसु भवंति। सेत्तं समुग्गपक्खी।" जी०टी०१ प्रति०।

समुग्गय-समुद्गक-न०। अभिन्नावस्थे कार्पासीफले, ज्ञा० १ श्रु० १७ अ०। समुद्गक इव, समुद्गकाः। सूतिकागृहे, जी० ३ प्रति० ४ अधि०। जं०। रा०। तैलाद्याधारविशेषे, उक्तं च जीवाभिगममूलटीकायाम्-तैलसमुद्गकौ सुगन्धितैलाधारौ। रा०।

समुग्घाय-समुद्घात-पुं०। वेदनादिभिः सह एकीभावेन प्राबल्यतया निर्जरणे, प्रज्ञा०।

विषयसूचना-

(१) गतिपरिणामविशेषः संग्रहणिगाथया चिन्त्यते।

(२) संग्रहणिगाथोक्तमर्थं स्पष्टयन् प्रथमतः समुद्घातसंख्याविषयं प्रश्नसूत्रम्।

(३) चतुर्विंशतिदण्डकमधिकृत्य एकैकस्य जीवस्य कति वेदनादयः समुद्घाता अतीताः कति भाविन इति चिन्तनम्।

(४) नैरयिकादेः प्रत्येकसमुदायरूपेण समुद्घातचिन्तनम्।

(५) चतुर्विंशतिदण्डकसूत्रे कषायसमुद्घातं चिन्तयति।

(६) मारणान्तिकसमुद्घातचिन्तनम्।

(७) नैरयिकाणां वेदनासमुद्घातचिन्तनम्।

(८) समुद्घातानां परस्परमल्पबहुत्वम्।

(९) कषायसमुद्घातगता विशेषवक्तव्यता।

(१०) क्रोधादिसमुद्घातैः शेषसमुद्घातैश्च समवहतानामसमवहतानां च परस्परमल्पबहुत्वचिन्तनम्।

(११) यस्मिन् समुद्घाते वर्तमाना यावत् क्षेत्रं समुद्घातवशतो ये पुद्गलैर्व्याप्नोति तन्निरूपणम्।

(१२) वैक्रियसमुद्घातविषयचिन्तनम्।

(१३) समुद्घातद्वारविस्तरः।

(१) गतिपरिणामविशेष एव समुद्घातश्चिन्त्यते, तत्र समुद्घातवक्तव्यताविषये इयमादौ संग्रहणिगाथा—

वेयणकसायमरणे, वेउव्वियतेयए य आहारे ।
केवलिए चेव भवे, जीवमणुस्साण सत्तेव ॥ १ ॥

'वेयणे'त्यादि, इह समुद्घाता सप्त भवन्ति, तद्यथा-'वेयणकसायमरणे' इति,वेदनं च कषायाश्च मरणं च वेदनकषायमरणं समाहारो द्वन्द्वस्तस्मिन् विषये त्रयः समुद्घाता भवन्ति,तद्यथा-वेदनासमुद्घातः कषायसमुद्घातो मरणसमुद्घातश्च, 'वेउव्विय'त्ति-वैक्रियविषयश्चतुर्थः समुद्घातः, तैजसः पञ्चमः समुद्घातः, षष्ठ आहार इति—आहारकशरीरविषयः, सप्तमः केवलिकः-केवलिए भवति, 'जीवमणुस्साण सत्तेव' त्ति-सामान्यतो जीवचिन्तायां मनुष्यद्वारचिन्तायां सप्तैव-सप्तपरिमाणा समुद्घाता वक्तव्याः, न न्यूनाः, सप्तानामपि तत्र सम्भवात्, 'सत्तेव' त्ति-एवकारोऽत्र परिमाणे,वर्त्तते च परिमाणे एवशब्दः,यदाह शाकटायनन्यासकृत्-'एवोऽवधारणपृथक्त्वपरिमाणेष्विति, शेषद्वारचिन्तायां तु यथासम्भवं वाच्याः,ते चाग्रे स्वयमेव सूत्रकृताऽभिधास्यन्ते इत्येष संग्रहणिगाथासंक्षेपार्थः । अथ समुद्घात इति कः शब्दार्थः?,उच्यते-समिति-एकीभावे,उत्प्राबल्ये, एकीभावेन प्राबल्येन घातः समुद्घातः किन सह एकीभावगमनमिति चेत् ,उच्यते-अर्थाद्वेदनादिभिः, तथाहि-यदाऽऽत्मा वेदनादिसमुद्घातगतो भवति तदा वेदनाद्यनुभवज्ञानपरिणत एव भवति, नान्यज्ञानपरिणतः, प्राबल्येन कथं घात इति चेत्, उच्यते-इह वेदनादिसमुद्घातपरिणतो बहून् वेदनीयादिकर्मप्रदेशान् कालान्तरानुभवयोग्यानुदीरणाकरणेनाकृष्योदयावलिकायां प्रक्षिप्यानुभूय च निर्जरयति, आत्मप्रदेशैस्सह संश्लिष्टान् शातयतीति भावः, 'पुव्वकयकम्मसाडणं तु निज्जरा' इति वचनात्, तथाहि—वेदनासमुद्घातोऽसद्वेद्यकर्माश्रयः कषायसमुद्घातः कषायाख्यचारित्रमोहनीयकर्माश्रयः, मारणान्तिकसमुद्घातः अन्तर्मुहूर्त्तशेषायुः कर्माश्रयः, वैकुर्विकतैजसाहारकसमुद्घाता यथाक्रमं वैक्रियशरीरतैजसशरीराहारकशरीरनामकर्माश्रयाः, केवलिसमुद्घातः सदसद्वेद्यशुभाशुभनामोच्चनीचैर्गोत्रकर्माश्रयः, (प्रज्ञा०) ( तत्र वेदनासमुद्घातगताऽऽत्मवक्तव्यता 'वेयणासमुग्घाय' शब्दे षष्ठे भागे गता ।) कषायसमुद्घातसमुद्घातः कषायाख्यचारित्रमोहनीयकर्मपुद्गलपरिशातं विधत्ते, तथाहि-कषायोदयसमाकुलो जीवः प्रदेशान् बहिर्विक्षिपति तैः प्रदेशैर्वदनोदरादिरन्ध्राणि कर्णस्कन्धाद्यन्तरालानि चापूर्यायामतो विस्तरतश्च देहमात्रं क्षेत्रमभिव्याप्य वर्त्तते,तथाभूतश्च प्रभूतान् कषायकर्मपुद्गलान् परिशातयति । (प्रज्ञा०) (इतोऽग्रे 'मारणंतियसमुग्घाय' शब्दे षष्ठे भागे २५४-२५५ पृष्ठे गतम् ।)(वैक्रियसमुद्घातवक्तव्यता 'वेउव्वियसमुग्घाय' शब्दे षष्ठे भागे गता । ) एवं तैजसाहारसमुद्घातावपि भावनीयौ, नवरं तैजससमुद्घातस्तेजोलेश्याविनिर्गमकाले तैजसनामकर्मपुद्गलपरिशातहेतुः, आहारकसमुद्घातगतस्त्वाहारशरीरनामकर्मपुद्गलान् परिशातयतीति, केवलिसमुद्घातगतः केवली सदसद्वेद्यादिकर्मपुद्गलपरिशातं करोति, स च यथा कुरुते तथा विनेयजनानुग्रहाय भाव्यते इति, केवलिसमुद्घातोऽष्टसामयिकः, तं च कुर्वन् केवली प्रथमसमये बाहल्यतः स्वशरीरप्रमाणमूर्ध्वमधश्च लोकान्तपर्यन्तम् आत्मप्रदेशानां दण्डमारचयति, द्वितीयसमये पूर्वापरं दक्षिणोत्तरं वा कपाटं, तृतीये मन्थानं, चतुर्थेऽवकाशान्तराणां पूरणं, पञ्चमेऽवकाशान्तराणां संहारं, षष्ठे मन्थः, सप्तमे कपाटस्य, अष्टमे स्वशरीरस्थो भवति, वक्ष्यति च—" पढमे समये दंडं करेइ, बीए कवाडं करेइ " इत्यादि, तत्र दण्डसमयात् प्राक् या पल्योपमासङ्ख्येयभागमात्रा वेदनीयनामगोत्राणां स्थितिरासीत् तस्या बुद्ध्या असंख्येयभागाः क्रियन्ते, ततो दण्डसमये दण्डं कुर्वन् असंख्येयान् भागान् हन्ति, एकोऽसंख्येयो भागोऽवतिष्ठते, यश्च प्राक्कर्मत्रयस्यापि रसस्तस्याप्यनन्ता भागाः क्रियन्ते, ततस्तस्मिन् दण्डसमये असातवेदनीय १ प्रथमवर्जसंस्थान६ संहननपञ्चका ११ऽप्रशस्तवर्णादिचतुष्टयो १५ पघाता १६ऽप्रशस्तविहायोगति १७ दु स्वर १८ दुर्भगा १९ ऽस्थिरा २०ऽपर्याप्तका २१ऽशुभा २२ऽनादेया २३ऽयश कीर्त्ति २४ नीचैर्गोत्ररूपाणा २५ पञ्चविंशतिप्रकृतीनामनन्तान् भागान् हन्ति,एकोऽनन्तभागोऽवशिष्यते, तस्मिन्नेव च समये सातवेदनीय १ देवगति २ मनुष्यगति ३ देवानुपूर्वी ४ मनुष्यानुपूर्वी ५ पञ्चेन्द्रियजाति ६ शरीरपञ्चको ११ पाङ्गत्रय १४ प्रथमसंस्थान १५ संहनन १६ प्रशस्तवर्णादिचतुष्टया २० ऽगुरुलघु २१ पराघातो २२ च्छ्वास २३ प्रशस्तविहायोगति २४ त्रसं २५ बादर २६ पर्याप्त २७ प्रत्येकाऽऽतपो २९ द्योत ३० स्थिर ३१ शुभ ३२ सुभग ३३ सुस्वरा ३४ ऽऽदेय ३५ यश कीर्त्ति ३६ निर्माण ३७ तीर्थकरो ३८ च्चैर्गोत्ररूपाणा ३९ मेकोनचत्वारिंशतः प्रकृतीनामनुभागोऽप्रशस्तप्रकृत्यनुभागमध्यप्रवेशनेनोपहन्यते, समुद्घातमाहात्म्यमेतत् । तस्य चोद्धरितस्य स्थितेरसंख्येयभागस्यानुभागस्य चानन्तभागस्य पुनर्यथाक्रममसंख्येया अनन्ताश्च भागा क्रियन्ते, ततो द्वितीये कपाटसमये स्थितेरसंख्येयान् भागान् हन्ति एकोऽवशिष्यते, अनुभागस्य चानन्तान् भागान् हन्ति एकं मुञ्चति । अत्राप्यप्रशस्तप्रकृत्यनुभागमध्यप्रवेशनेन प्रशस्तप्रकृत्यनुभागघातो द्रष्टव्यः, पुनरप्येतत् समयेऽवशिष्टस्य स्थितेरसंख्येयभागस्यानुभागस्य चानन्ततमभागस्य पुनर्बुद्ध्या यथाक्रममसंख्येया अनन्ताश्च भागा क्रियन्ते ततस्तृतीये समये स्थितेरसंख्येयान् भागान् हन्ति, एकं मुञ्चति, अनुभागस्य चाऽनन्तान भागान् हन्ति, एकमनन्तभागं मुञ्चति । अत्रापि प्रशस्तप्रकृत्यनुभागघातोऽप्रशस्तप्रकृत्यनुभागमध्यप्रवेशनेनावसेयः । ततः पुनरपि तृतीयसमयावशिष्टस्य स्थितेरसंख्येयभागस्यानुभागस्य चानन्ततमभागस्य बुद्ध्या यथाक्रममसंख्येया अनन्ताश्च भागा क्रियन्ते, ततश्चतुर्थसमये स्थितेरसंख्येयान् भागान् हन्ति, एकस्तिष्ठति, अनुभागस्याप्यनन्तान् भागान् हन्त्येकोऽवशिष्यते, प्रशस्तप्रकृत्यनुभागघातश्च पूर्ववदवसेयः । एवं च स्थितिघातादि कुर्वतश्चतुर्थसमये स्वप्रदेशापूरितसमस्तलोकस्य भगवतः केवलिनो वेदनीयादिकर्मत्रयस्थितिरायुषः संख्येयगुणा जाता, अनुभागस्त्वद्याप्यनन्तगुणः, चतुर्थसमयावशिष्टस्य च स्थितेरसंख्येयभा-

गस्यानुभागस्य चानन्ततमभागस्य भूयोऽपि बुद्धया यथाक्रमं संख्यया अनन्ताश्च भागाः क्रियन्ते , ततोऽवकाशान्तर-संहारसमये स्थितेः संख्येयभागान् हन्ति, एकं संख्येय-भागं शेषीकरोति , अनुभागस्यानन्तान् भागान् हन्ति एकं मुञ्चति । एवमन्तेषु पञ्चसु दण्डादिसमयेषु प्रत्येकं सामयिकं कण्डकमुत्कीर्णं , समये समये स्थितिकण्डकानु-भागकण्डकघातनात्, अत.परं षष्ठसमयादारभ्य स्थितिक-ण्डकमनुभागकण्डकं चान्तर्मुहूर्त्तेन कालेन विनाशयति , प्रयत्नमन्दीभावात्, षष्ठादिषु च समयेषु कण्डकस्य प्र-तिसमयमेकैकं शकलं तावदुत्किरति यावदन्तर्मुहूर्त्तचरम-समये सकलमपि तत्कण्डकमुत्कीर्णं भवति । एवमान्त-र्मौहूर्तिकानि स्थितिकण्डकान्यनुभागकण्डकानि च घातयन् तावद्वेदितव्यः यावत् सयोग्यवस्थाचरमसमय. , सर्वा-ण्यपि चामूनि स्थित्यनुभागकण्डकान्यसंख्येयान्यवगन्त-व्यानीति कृतं प्रसङ्गेन । प्रकृत प्रस्तुम. ।

( २ ) तत्र संग्रहणिगाथोक्तमर्थं स्पष्टयन् प्रथमतः समु-द्धातसंख्याविषयं प्रश्नसूत्रमाह—

कति णं भंते ! समुग्घाया पराणत्ता, गोयमा ! सत्त समुग्घा-या पन्नत्ता, तं जहा-वेदणासमुग्घाते १ कसायसमुग्घाते २ मारणंतियसमुग्घाते ३ वेउव्वियसमुग्घाते ४ तेयासमुग्घाते ५ आहारसमुग्घाते ६ केवलिसमुग्घाते ७ । वेदणासमुग्घाए णं भंते ! कति समइए पराणत्ते ?, गोयमा ! असंखेज्जसमइए अंतोमुहुत्तिते पराणत्ते, एवं०जाव आहारसमुग्घाते । केवलि-समुग्घाए णं भंते ! कति समइए पराणत्ते ?, गोयमा ! अट्ठ समइए पराणत्ते । नेरइया णं भंते ! कति समुग्घाया पराणत्ता ?, गोयमा ! चत्तारि समुग्घाया पराणत्ता , तं जहा-वेदणासमुग्घाए कसायसमुग्घाए मारणंतियसमु-ग्घाए वेउव्वियसमुग्घाए । असुरकुमाराणं भंते ! कति समुग्घाया पराणत्ता ?, गोयमा ! पंच समुग्घाया पन्नत्ता, तं जहा—वेदणासमुग्घाए कसायस-समुग्घाए मारणंतियसमुग्घाए वेउव्वियसमुग्घाए तेयासमु-ग्घाए एवं जाव थणियकुमारा णं । पुढविकाइया णं भंते ! कति समुग्घाया पराणत्ता ?, गोयमा ! तिरिण समुग्घाया पन्नत्ता, तं जहा-वेदणासमुग्घाए कसायसमुग्घाए मारणं-तियसमुग्घाए, एवं०जाव चउरिंदियाणं, नवरं वाउकाइ-याणं चत्तारि समुग्घाया पन्नत्ता, तं जहा—वेदणासमु-ग्घाए कसायसमुग्घाए मारणंतियसमुग्घाए वेउव्विय-समुग्घाए पंचिंदियतिरिक्खजोणियाणं ०जाव वेमा-णिया णं भंते ? कति समुग्घाया पन्नत्ता ?, गोयमा ! पंच समुग्घाया पन्नत्ता, तं जहा-वेयणासमुग्घाए कसायसमुग्घाए मारणंतियसमुग्घाए वेउव्वियसमुग्घाए तेयासमुग्घाए नवरं मणुस्साणं सत्तविहे समुग्घाए पन्नत्ते, तं जहा-वेदणास-मुग्घाए कसायसमुग्घाए मारणंतियसमुग्घाए वेउव्विय-समुग्घाए तेयासमुग्घाए आहारसमुग्घाए केवलिसमुग्घाए । ( सू० ३३१ )

' कइ णं ' मित्यादि , कति-किंपरिमाणा णमिति वाक्याऽ-लंकारे , ' भदन्ते ' ति-भगवतो वर्द्धमानस्वामिन आम-न्त्रणं , भदन्तत्वं च भगवतः परमकल्याणयोगित्वात्, यदिवा-भवान्तेति , द्रष्टव्यं , सकलसंसारपर्यन्तवर्त्तित्वात्, अथवा—भयान्त ! इहपरलोकादिभेदभिन्नसप्तप्रकारभयवि-नाशकत्वात् . समुद्घाता.—उक्तशब्दार्थाः प्रज्ञप्ता', भगवा-नाह—' गोयमे ' त्यादि , गौतम ! सप्त समुद्घाता' प्र-ज्ञप्ता. , तद्यथा—वेदनासमुद्घात इत्यादि, वेदनायाः समुद्घातो वेदनासमुद्घातः, एवं यावदाहारकसमु-द्घात इति , केवलिसमुद्घात इति—केवलिन' समु-द्घात. केवलिसमुद्घातः । सम्प्रति क' समुद्घात. , कि-यन्तं कालं यावद्भवतीत्येतन्निरूपणार्थमाह—' वेयणे ' त्यादि , सुगमं , नवरं ' जावे ' त्यादि , एवमुक्तप्रकारेणा-भिलापेनान्तर्मुहूर्त्तप्रमाणतया च समुद्घाता. क्रमेण ताव-द्वाच्याः यावदाहारकसमुद्घातः , एते षडप्याद्या आन्त-र्मुहूर्तिका , केवलिसमुद्घातस्त्वष्टसामायिक , स चानन्त-रमेव भावितः , एतानेव समुद्घातान् चतुर्विंशतिदण्डक-क्रमेण चिचिन्तयिषुराह—' नेरइयाणं ' मित्यादि , नै-रयिकाणामाद्याश्चत्वार. , तेषां तेजोलब्ध्याऽऽहारकलब्धि-केवलित्वाभावतः शेषसमुद्घातत्रयासम्भवात्, असुरकु-मारादीनां दशानामपि भवनपतीनां तेजोलेश्यालब्धिभावात्, आद्याः पञ्च समुद्घाताः, पृथिवीकायिकाप्कायिकतैजस्का-यिकवनस्पतिकायिकद्वित्रिचतुरिन्द्रियाणामाद्यास्त्रय. , ते-षां वैक्रियादिलब्ध्यभावत. उत्तरेषां चतुर्णामपि समुद्घा-तानामसम्भवात्, वायुकायिकानामाद्याश्चत्वारस्तेषां वैक्रि-यलब्धिसंभवेन वैक्रियसमुद्घातस्यापि सम्भवात्, पञ्चेन्द्रि-यतिर्यग्योनिकानामाद्याः पञ्च , केषाञ्चित्तेषां तेजोलब्धेरपि भावात्, मनुष्याणां सप्त मनुष्येषु सर्वसम्भवात् व्यन्तर-ज्योतिष्कवैमानिकानामाद्या. पञ्च , वैक्रियतेजोलब्धिभावात् उत्तरौ तु द्वौ न सम्भवत. आहारकलब्धिकेवलित्वाऽयो-गात् ।

( ३ ) सम्प्रति चतुर्विंशतिदण्डकमधिकृत्य एकैकस्य जीव-स्य कति वेदनादयः समुद्घाता, अतीता कति भाविन इति चिचिन्तयिषुराह—

एगमेगस्स णं भंते ! नेरइयस्स केवइया वेदणास-मुग्घाया अतीता ?, गोयमा ! अणंता , केवइया पुरेक्खडा ?, गोयमा ! कस्सइ अत्थि, कस्सइ नऽत्थि । जस्सऽत्थि तस्स जहराणेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं संखेज्जा वा असंखेज्जा वा अणंता वा एवं असुरकुमारस्स वि निरंतरं०जाव वेमाणियस्स, एवं ०जा-व तेयगसमुग्घाए एवमेते पंच चउवीसा दंडगा । ए-गमेगस्स णं भंते ! नेरइयस्स केवइया आहारसमु-ग्घाया अतीता ?, कस्सइ अत्थि कस्सइ नऽत्थि, जस्स अत्थि तस्स जहराणेणं एक्को वा दो वा उ-

कोसेणं तिण्णि, केवइया पुरेक्खडा, कस्सइ अत्थि कस्सइ नऽत्थि, जस्सऽत्थि जहण्णेणं एक्को वा दो वा तिण्णि वा उक्कोसेणं चत्तारि, एवं निरंतरं ०जाव वेमाणियस्स, नवरं मणूसस्स अतीता वि पुरेक्खडा वि जहा नेरइयस्स पुरेक्खडा। एगमेगस्स णं भंते! नेरइयस्स केवतिया केवलिसमुग्घाया अतीता ?, गोयमा! नऽत्थि, केवइया पुरेक्खडा ?, गोयमा! कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि एक्को, एवं ०जाव वेमाणियस्स, नवरं मणूसस्स अतीता कस्सइ अत्थि, कस्सइ नत्थि, जस्सत्थि एक्को, एवं पुरेक्खडा वि। (सू०३३२ X)

'एगमेगस्स णं भंते!' इत्यादि, एकैकस्य सूत्रे णकारोऽलाक्षणिकः, भदन्त! नैरयिकस्य सकलमतीत कालमधिकृत्य 'केवइय' त्ति—कियन्तो वेदनासमुद्घाता अतीता—अतिक्रान्ता ?, भगवानाह—गौतम! अनन्ताः, नारकादिस्थानानामनन्तशः प्राप्तत्वादेकैकस्मिंश्च नारकादिस्थानप्राप्तिकाले प्रायोऽनेकशो वेदनासमुद्घातानां भावात्, एतच्च बाहुल्यापेक्षयोच्यते, बहवो हि जीवा अनन्तकालमसंव्यवहारराशेरुद्वृत्ता वर्त्तन्ते, ततस्तदपेक्षया एकैकस्य नैरयिकस्यानन्ता अतीता वेदनासमुद्घाता उपपद्यन्ते। ये तु स्तोककालमसंव्यवहारराशेरुद्वृत्तास्तेषां यथासम्भवं संख्येया असंख्येया वा प्रतिपत्तव्याः, केवलं ते कतिपये इति न विवक्षिताः। 'केवइया पुरेक्खड' त्ति इदं सूत्रं पाठसूचामात्रं, सूत्रपाठस्त्वेवम्—'एगमेगस्स णं भंते! नेरइयस्स केवइया वेयणासमुग्घाया पुरेक्खडा' इति, सुगमं, नवरं पुरे अग्रे कृताः—तत्परिणामप्राप्तियोग्यतया व्यवस्थापिताः, सामर्थ्यात् तत्कर्तृजीवेनेति गम्यते, पुरस्कृता अनागतकालभाविन इति तात्पर्यार्थः। अत्र भगवानाह—कस्यापि सन्ति कस्यापि न सन्ति, यस्यापि सन्ति, तस्यापि जघन्यत एको द्वौ वा त्रयो वा, उत्कर्षतः सङ्ख्येया वा असंख्येया वा अनन्ता वा। इयमत्र भावना—यो नाम विवक्षितप्रश्नसमयानन्तरं वेदनासमुद्घातमन्तरेणैव नरकादुद्वृत्यानन्तरमनुष्यभवे वेदनासमुद्घातमप्राप्त एव सेत्स्यति तस्य पुरतो वेदनासमुद्घात एकोऽपि नास्ति, यस्तु विवक्षितप्रश्नसमयानन्तरमायुःशेषे कियत्कालं नरकभवे स्थित्वा तदनन्तरं मनुष्यभवमागत्य सेत्स्यति तस्य एकादिसम्भवः, संख्यातकालसंसारावस्थायिनः संख्याताः, असङ्ख्यातकालसंसारावस्थायिनोऽसङ्ख्याताः, अनन्तकालसंसारावस्थायिनोऽनन्ताः, 'एवं' मित्यादि, एवं नैरयिकोक्तप्रकारेणासुरकुमारस्यापि यावत् स्तनितकुमारस्य वाच्यम्, ततश्चतुर्विंशतिदण्डकक्रमेण निरन्तरं तावद्वाच्यं यावद्वैमानिकस्य। किमुक्तं भवति ?—सर्वेष्वपि असुरकुमारादिषु स्थानेषु अतीता वेदनासमुद्घाता अनन्ता वाच्याः, पुरस्कृतास्तु कस्यापि सन्ति कस्यापि न सन्ति, यस्यापि सन्ति तस्यापि जघन्यत एको द्वौ वा त्रयो वा उत्कर्षतः संख्येया असंख्येया अनन्ता वा इति वाच्याः। भावनाऽपि पूर्वोक्तानुसारेण स्वयं परिभावनीया, एवं चतुर्विंशतिदण्डकक्रमेण कषायसमुद्घातो मारणान्तिकसमुद्घातो वैक्रियसमुद्घातस्तैजससमुद्घातश्च प्रत्येकं, तत एव पञ्चचतुर्विंशतिदण्डकसूत्राणि भवन्ति। तथा चाह—'एवं जाव तेयगसमुग्घाए' इत्यादि, एवं वेदनासमुद्घातप्रकारेण शेषसमुद्घातेष्वपि प्रत्येकं तावद्वक्तव्यं यावत्तैजससमुद्घातः, शेषं सुगमम्, 'एगमेगस्स णं' मित्यादि, एकैकस्य भदन्त! नैरयिकस्य पाश्चात्यं सकलमतीत कालमपेक्ष्य कियन्त आहारकसमुद्घाता अतीताः ?, भगवानाह—गौतम! कस्यापि 'अत्थि' त्ति—अस्तीति निपातः सर्वलिङ्गवचनो, यदाह शाकटायनन्यासकृत्—"अस्तीति निपातः सर्वलिङ्गवचनेष्वि" ति, ततोऽयमर्थः—कस्यापि अतीता आहारकसमुद्घाताः सन्ति कस्यापि न सन्ति, येन पूर्वं मानुष्यं प्राप्य तथाविधसामग्र्यभावतश्चतुर्दशपूर्वाणि नाधीतानि, चतुर्दशपूर्वाधिगमे वा आहारकलब्ध्यभावतः तथाविधप्रयोजनाभावतो वा आहारकशरीरं न कृतं तस्य न सन्तीति, यस्यापि सन्ति तस्यापि जघन्यत एको वा द्वौ वा उत्कर्षतस्तु त्रयो, न तु चत्वारः, चतुष्कृत्वः कृताहारकशरीरस्य नरकगमनाभावात्, आह च मूलटीकाकारः—"आहारसमुग्घाया उक्कोसेणं तिन्नि, तदुवरि नियमा नरगं न गच्छइ जस्स चत्तारि भवन्ति" इति, पुरस्कृता अपि कस्यापि सन्ति कस्यापि न सन्ति, तत्र यो मानुष्यं प्राप्य तथाविधसामग्र्यभावतश्चतुर्दशपूर्वाधिगममाहारकसमुद्घातं चान्तरेण सेत्स्यति तस्य न सन्ति, शेषस्य तु यथासम्भवं जघन्यत एको द्वौ वा त्रयो वा उत्कर्षतश्चत्वारः, तत ऊर्ध्वमवश्यं गत्यन्तरासङ्क्रमेणाहारकसमुद्घातमन्तरेण च सिद्धिगमनभावात्, 'एवं' मित्यादि, एवं नैरयिकोक्तेन प्रकारेण चतुर्विंशतिदण्डकक्रमेण निरन्तरं तावद्वाच्यं यावद्वैमानिकस्य सूत्रम्, नवरं मनुष्यस्यातीता अपि पुरस्कृता अपि यथा—नैरयिकस्य पुरस्कृतास्तथा वाच्याः, अतीता अपि चत्वारः पुरस्कृता अपि चत्वारः उत्कर्षतो वाच्या इत्यर्थः। सूत्रपाठश्चैवम्—'एगमेगस्स णं मणूसस्स भंते! केवइया आहारसमुग्घाया अतीता ?, गोयमा! कस्सइ अत्थि कस्सइ नत्थि, जस्स अत्थि जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं चत्तारि, केवइया पुरेक्खडा ?, गोयमा! कस्सइ अत्थि कस्सइ नत्थि जस्स अत्थि जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं चत्तारि' अत्र भावना—इह यश्चतुर्थवेलमाहारकशरीरं करोति स नियमात् तद्भव एव मुक्तिमासादयति, न गत्यन्तरं, कथमेतदवसीयत इति चेत् ?, उच्यते—सूत्रपौर्वापर्यपर्यालोचनात्, तथा—यदि चतुर्थवेलमप्याहारकशरीरं कृत्वा गत्यन्तरं संक्रामेत ततो नैरयिकादावन्यतरस्यां गतौ उत्कर्षतश्चत्वारोऽप्याहारकस्य समुद्घाता उच्येरन्, न चोच्यन्ते, ततोऽवसीयते—चतुर्थवेलमाहारकशरीरं कृत्वा नियमात् तद्भव एव मुक्तो भवति, न गत्यन्तरगामी, तत्र यः प्रागाहारकशरीरं कदाचनापि न कृतवान् तस्यातीतमाहारकसमुद्घातो नास्ति, ततस्तदपेक्षयोक्तं 'कस्सइ नत्थि' त्ति—यस्यापि सन्ति सोऽपि यदि पूर्वमेकवारमाहारकशरीरं कृतवान्

तस्यैकोऽतीत आहारकस्य समुद्घातः द्वौ वारौ कृतवतो द्वौ, त्रीन् वारान् कृतवतस्त्रयो, यश्चतुर्थवेलमाहारकशरीरं कृत्वा आहारकसमुद्घाताच्चतुर्थात्प्रतिनिवृत्तो वर्त्तते न चाद्यापि मनुजभवं विजहाति तस्य चत्वारः, पुरस्कृता अपि समुद्घाताः कस्यापि सन्ति कस्यापि न सन्ति । तत्र यश्चतुर्थवेलमाहारकशरीरं कृत्वा आहारकसमुद्घातात् प्रतिनिवृत्तो, यदिवा-पूर्वमकृताहारकशरीरोऽपि, अथवा-एकवारकृताहारकशरीरोऽपि, यदिवा-द्विष्कृत्व कृताहारकशरीरोऽपि, यदिवा-त्रिष्कृत्वः कृताहारकशरीरोऽपि तथाविधसामग्र्यभावात् उत्तरकालमाहारकशरीरमकृत्वैव मुक्तिमवाप्स्यति तस्य पुरस्कृता आहारकसमुद्घाता न सन्ति, यस्यापि सन्ति तस्यापि जघन्यत एको वा द्वौ वा, त्रयो वा उत्कर्षतश्चत्वारः तत्र एकादिसम्भवः पूर्वोक्तभावनानुसारेण स्वयं भावनीयः यस्तु पूर्वकालमेकवारमपि आहारकशरीरं न कृतवान्, अथ चोत्तरकाले तथाविधसामग्रीभावतो यावत्सम्भवमाहारकशरीरकर्त्ता तस्य चत्वारो न शेषस्य । सम्प्रति केवलिसमुद्घातविषयं दण्डकसूत्रमाह-' एगमेगस्स णं ' -मित्यादि, एकैकस्य भदन्त ! नैरयिकस्य निरवधिकमतीतं कालमधिकृत्य कियन्तः केवलिसमुद्घाता अतीताः ?, भगवानाह—' नत्थि ' त्ति—नास्त्यतीत एकोऽपि केवलिसमुद्घातः, केवलिसमुद्घातानन्तरं ह्यन्तर्मुहूर्त्तेन नियमतो जीवा परमपदमश्नुवते, ततो यद्यभविष्यत्केवलिसमुद्घातस्तर्हि नरकमेव नागमिष्यद्, अथ च सम्प्रति नरकगामिनो वर्त्तन्ते तस्मान्नास्त्येकस्याप्यतीतः केवलिसमुद्घातः, ' केवइया पुरेक्खडा ' त्ति—कियन्तः पुरस्कृताः केवलिसमुद्घाता इति प्रश्नः, भगवानाह-' गोयमा ! कस्सइ अत्थि कस्सइ नत्थि ' त्ति—इह केवलिसमुद्घात एकस्य प्राणिन आकालमेक एव भवति, न द्वित्राः, ततोऽस्तीति निपातोऽत्र एकवचनान्तो वेदितव्यः, ततश्चायमर्थः—कस्यापि केवलिसमुद्घातः पुरस्कृतोऽस्ति, यो दीर्घतरेणापि कालेन मुक्तिपदप्राप्त्यवसरे विषमस्थितिकर्मा इति, कस्यापि नास्ति, यो मुक्तिपदमवाप्तुमयोग्यो योग्यो वा केवलिसमुद्घातमन्तरेणैव मुक्तिपदं गन्ता, तथा च वक्ष्यति—" अगंतूण समुग्घाय—मणंता केवली जिणा । जरमरणविप्पमुक्का, सिद्धिं वरगइं गया ॥ १ ॥ " इति, इह अस्तीति निपातः सर्वलिङ्गवचन इत्यविदितसिद्धान्तस्य बहुत्वाशङ्कापि कस्यचित् स्यात् तत्तदपनोदार्थमाह-' जस्स अत्थि ' एको यस्यास्ति पुरस्कृतः केवलिसमुद्घातस्तस्य एको, भूयः संसाराभावात्, ' एवं जाव वेमाणियस्स ' त्ति एवं—नैरयिकगताभिलापप्रकारेण चतुर्विंशतिदण्डकक्रममनुसृत्य तावद् वक्तव्यं यावद्वैमानिकस्य सूत्रम्, तच्चेदम्—एगमेगस्स णं भंते ! वेमाणियस्स केवइया केवलिसमुग्घाया अतीता ?, गोयमा ! नत्थि, केवइया पुरेक्खडा ?, गोयमा ! कस्सइ अत्थि, कस्सइ नत्थि, जस्सत्थि एक्को ' इति, तत्रैव विशेषमाह-' नवरं ' मित्यादि नवरमयं विशेषः—मनुष्यस्य केवलिसमुद्घातस्य चिन्तायामतीतः कस्याप्यस्ति कस्यापि नास्तीति वक्तव्य, तत्र य केवलिसमुद्घातात् प्रतिनिवृत्तो वर्त्तते न चाद्यापि मुक्तिपदमवाप्नोति तस्यास्त्यतीतः केवलिसमुद्घातः, ते च सर्वसंख्यया उत्कर्षपदे शतपृथक्त्वप्रमाणा वेदितव्या, कस्यापि नास्ति अतीतः केवलिसमुद्घातो, यो न समुद्घातं गतवान्, ते च सर्वसंख्यया असङ्ख्येया द्रष्टव्या, शतपृथक्त्वव्यतिरेकेणान्येषां सर्वेषामप्यसंप्राप्तकेवलिसमुद्घातत्वात्, अत्राप्यस्तीति निपातस्य सर्वलिङ्गवचनत्वात्, ' कस्सइ अत्थि कस्सइ नत्थि ' इत्युक्ते बहुत्वाशङ्का स्यात्, ततस्तद्व्यवच्छेदार्थमाह—यस्य मनुष्यस्यातीतः केवलिसमुद्घातस्तस्य नियमादेको न द्वित्राः एकेनैव केवलिसमुद्घातेन प्रायः समस्तघातिकर्मणां निर्मूलकार्षकषितत्वात्, ' एवं पुरेक्खडा वि ' त्ति—एवम्—अतीतगतेन प्रकारेण पुरस्कृता अपि केवलिसमुद्घाता वाच्या, ते चैवम्-' कस्सइ अत्थि, कस्सइ नत्थि जस्सत्थि एक्को ' इति । अत्र भावना पूर्वोक्तानुसारेण स्वयं भावनीया ।

(४) तदेवमतीतमनागतं च कालमधिकृत्य एकैकस्य नरयिकादेर्वेदनादिसमुद्घातचिन्ता कृता, सम्प्रति नैरयिकादेः प्रत्येक समुदायरूपस्य तच्चिन्तां चिकीर्षुराह—

नेरइयाणं भंते ! केवइया वेदणासमुग्घाया अतीता ?, गोयमा ! अणंता, केवइया पुरेक्खडा ? गोयमा ! अणंता, एवं ०जाव वेमाणियाणं, एवं० जाव तेयगसमुग्घाए, एवं एते वि पंच चउवीसदंडगा, नेरइयाणं भंते ! केवइया आहारगसमुग्घाया अतीता ?, गोयमा ! असंखेज्जा, केवइया पुरेक्खडा ?, गोयमा ! असंखेज्जा, एवं० जाव वेमाणियाणं, णवरं वणस्सइकाइयाणं मणूसाणं य इमं णाणत्तं—वणस्सइकाइयाणं भंते ! केवइया आहारसमुग्घाया अईया ?, गोयमा ! अणंता मणूसाणं भंते ! केवइया आहारसमुग्घाया अईया ?, गोयमा ! सिय संखेज्जा सिय असंखेज्जा, एवं पुरेक्खडा वि । नेरइयाणं भंते ! केवइया केवलिसमुग्घाया अईया ? गोयमा ! णत्थि, केवइया पुरेक्खडा ?, गोयमा ! असंखेज्जा, एवं० जाव वेमाणियाणं, णवरं वणस्सइमणूसेसु इमं णाणत्तं—वणस्सइकायाणं भंते ! केवइया केवलिसमुग्घाया अतीता ?, गोयमा ! णत्थि, केवइया पुरेक्खडा ?, गोयमा ! अणंता, मणूसा णं भंते ! केवइया केवलिसमुग्घाया अतीता ?, गोयमा ! सिय अत्थि सिय नत्थि, जइ अत्थि जहण्णेणं एक्को वा दो वा तिण्णि वा, उक्कोसेणं सत्तपुहुत्तं, केवतिया पुरेक्खडा ?, सिय संखेज्जा सिय असंखेज्जा । ( सू० ३३२ )

' नेरइयाणं ' मित्यादि, नैरयिकाणां विवक्षितप्रश्नसमयभाविनां सर्वेषां समुदायेन भदन्त ! कियन्तो वेदनासमुद्घाता अतीता ?, भगवानाह—गौतम ! अनन्ता, बहूनामनन्तकालसव्यवहारराशेरुद्वृत्तत्वात्, कियन्तः पुरस्कृता ?, अत्रापि प्रश्नसूत्रपाठः परिपूर्ण एवं द्रष्टव्यः—' नेरइयाणं भंते ! केवइया वेयणासमुग्घाया पुरेक्खडा ' इति, भगवानाह—गौतम ! अनन्ता, बहूनामनन्त-

कालभाविसंसारावस्थानभावात्, एवं चतुर्विंशतिदण्डकक्रमेण तावद् वक्तव्यं यावद्वैमानिकानां यथा च वेदनासमुद्घातश्चतुर्विंशतिदण्डकक्रमेण चिन्तित तथा कषायमरणवैक्रियतैजससमुद्घाता अपि चिन्तनीयाः, तथा चाह—' एव जाव तेयगसमुग्घाए ' एवं च सति—एतान्यपि बहुत्वविषयाणि पञ्च चतुर्विंशतिदण्डकसूत्राणि भवन्ति, एतदेवाह—'एवमेए वि य पंच ' चउव्वीसदंडगा' इति, आहारकसमुद्घातचिन्तां कुर्वन्नाह—'नेरइयाण'मित्यादि, अत्र प्रश्नसूत्र सुगमं, भगवानाह—गौतम! असंख्येयाः। इयमत्र भावना-इह नैरयिकाः सर्वेदाऽपि प्रश्नसमयभाविन सर्वसङ्ख्ययाऽप्यसंख्येया ,तेषामपि मध्ये कतिपयाः संख्यातीता कृतपूर्वाहारकसमुद्घातास्ततोऽसख्येया एव तेषामतीताहारकसमुद्घाता घटन्ते, नानन्ता नापि संख्येया, एवं पुरस्कृता अपि भावनीयाः। एवं चतुर्विंशतिदण्डकक्रमेण तावद्वाच्यं यावद्वैमानिकानाम्, आह च—'एवं जाव वेमाणियाण' अत्रैव यो विशेषस्तं दिदर्शयिषुराह—'नवर'मित्यादि, नवरं वनस्पतिकायिकचिन्तायां मनुष्यचिन्तायां च नैरयिकापेक्षया नानात्वमवसेयम्, तदेव नानात्वमाह—'वणप्फइकायाण' मित्यादि, अत्र प्रश्नसूत्रं सुगमम्, भगवानाह—गौतम! अनन्ताः, अनन्तानामधिगतचतुर्दशपूर्वाणा कृताहारकसमुद्घातानां प्रमादवशतः उपचितसंसाराणां वनस्पतिषु भावात्, पुरस्कृता अनन्ताः अनन्तानां वनस्पतिकायादुद्धृत्य चतुर्दशपूर्वाधिगमपुरस्सरं कृताहारकसमुद्घातानां आसिसिद्धिगमनभावात्, 'मणुस्सा ण भंते !' इत्यादि, अत्रापि प्रश्नसूत्र प्रतीतम्, भगवानाह-गौतम! स्यादिति निपातोऽनेकान्तद्योती, ततोऽयमर्थ —कदाचित् सख्येयाः, कदाचिदसंख्येयाः, कथमिति चेत्, उच्यते—इह सम्मूर्च्छिमगर्भव्युत्क्रान्तसमुदायचिन्तायाम् उत्कृष्टपदे मनुष्या अङ्गुलमात्रक्षेत्रे यावान् प्रदेशराशिस्तस्य यत्प्रथमं वर्गमूल तत् तृतीयवर्गमूलेन गुणितं सत् यावत्प्रमाण भवति एतावत्प्रदेशप्रमाणानि खण्डानि घनीकृतस्य लोकस्य एकप्रादेशिक्या श्रेण्यां यावन्ति भवन्ति एतावत्प्रमाणा एकहीना, ते चातीव शेषनारकादिजीवराश्यपेक्षया स्तोका, तत्रापि ये पूर्वभवेषु कृताहारकशरीरास्ते कतिपया, ते च कदाचित् विवक्षितप्रश्नसमये संख्येयाः, कदाचिदसंख्येयाः, तत उक्तम्—'सिय संखेज्जा सिय असंखेज्जा' इति, अनागतेऽपि काले विवक्षितप्रश्नसमयभाविनां मध्ये कति संख्या एवाहारकशरीरमारप्स्यन्ति तेऽपि कदाचित् संख्येया कदाचिदसंख्येया, तत आह—' एवं पुरेक्खडा वि त्ति एवं अतीतगतेन प्रकारेण वनस्पतिकायिकानां मनुष्याणां च पुरस्कृता अपि आहारकसमुद्घाता वदितव्या, ते चैवम्—' वणप्फइकाइया णं भंते ! केवइया आहारगसमुग्घाया पुरेक्खडा ? गोयमा ! अणंता । मणुस्सा णं भंते ! केवइया आहारसमुग्घाया पुरेक्खडा ? , गोयमा ! सिय संखेज्जा सिय असंखेज्जा' इति केवलिसमुद्घातविषय प्रश्नसूत्रमाह—' नेरइयाणं भंते ! ' इत्यादि सुगमम्, भगवानाह-गौतम! न सन्ति केचनातीता नैरयिकाणां केवलिसमुद्घाता, कृतकेवलिसमुद्घातानां नारकादिगमनासम्भवात्, कियन्त पुरस्कृता इति प्रश्नः, भगवानाह—गौतम ! असंख्येयाः, सर्वदा विवक्षितप्रश्नसमयभाविनां मध्येऽसंख्यातानां भाविकेवलिसमुद्घातत्वात्, तथा केवलवेदसोपलब्धे, एवं चतुर्विंशतिदण्डकक्रमेण निरन्तरं तावद्वाच्यं यावद् वैमानिकाना सूत्रं, तथा चाह—' एवं जाव वेमाणियाणं ' अत्रैव विशेषमाह—' नवर ' मित्यादि, नवरं—वनस्पतिकायिकेषु मनुष्येषु चेदं वक्ष्यमाणलक्षणं नानात्वम्, तदेवाह—' वणप्फइकाइयाण ' मित्यादि, अत्र प्रश्नसूत्रं सुप्रतीतम्, उत्तरसूत्रे निर्वचनम्-अनन्ताः, अनन्तानां भाविकेवलिसमुद्घातानां तत्र भावात्, ' मणुस्साण ' मित्यादि, अत्रापि प्रश्नसूत्र सुगमं, भगवानाह—गौतम ! स्यात् सन्ति स्यान्न सन्ति। किमुक्तं भवति ?-यदा प्रश्नसमये समुद्घातान्निवृत्ताः प्राप्यन्ते तदा सन्ति, शेषकाले न सन्ति, तत्र ' जइ अत्थि ' त्ति—यदि प्रश्नसमये कृतकेवलिसमुद्घाता मनुष्यत्वमनुभवन्त प्राप्यन्ते तदा जघन्येन एको द्वौ त्रयो वा उत्कर्षत शतपृथक्त्वम्, एतावतामेककालमुत्कृष्टपदे केवलिनां केवलिसमुद्घातासादनात् ' केवइया पुरेक्खड ' त्ति—कियन्तो मनुष्याणां केवलिसमुद्घाता पुरस्कृताः ?, भगवानाह—स्यात् संख्येया स्यादसंख्येयाः, मनुष्या हि सम्मूर्च्छिमा गर्भव्युत्क्रान्ताश्च सर्वसमुदिता उत्कृष्टपदे प्रागुक्तप्रमाणास्तत्रापि विवक्षितप्रश्नसमयभाविनां मध्ये कदाचित्केवलिसमुद्घाता संख्येया, बहूनामभव्याना भावात्, कदाचिदसंख्येयाः, बहूनां भाविकेवलिसमुद्घातानां भावात्।

(४) सम्प्रति एकैकस्य नैरयिकत्वादिभावेषु वर्तमानस्य प्रत्येकं कति वेदनासमुद्घाता अतीता कति भाविन इति निरूपयितुकाम आह—

एगमेगस्स णं भंते ! नेरइयस्स नेरइयत्ते केवइया वेदणासमुग्घाया अतीता ?, गोयमा ! अणंता, केवइया पुरेक्खडा ?, गोयमा ! कस्सइ अत्थि कस्सइ नत्थि, जस्स अत्थि जहन्नेणं एको वा दो वा तिण्णि वा, उक्कोसेणं संखेज्जा वा असंखेज्जा वा अणंता वा, एवं असुरकुमारत्ते ०जाव वेमाणियत्ते । एगमेगस्स णं भंते ! असुरकुमारस्स नेरइयत्ते केवइया वेदणासमुग्घाया अतीता ?, गोयमा ! अणंता, केवइया पुरेक्खडा ?, गोयमा ! कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि तस्स सिय संखेज्जा सिय अणंता । एगमेगस्स णं भंते ! असुरकुमारस्स असुरकुमारत्ते केवइया वेदणासमुग्घाया अतीता?, गोयमा ! अणंता, केवइया पुरेक्खडा?, गोयमा ! कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि जहन्नेणं एको वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा वा असंखेज्जा वा अणंता वा, एवं नागकुमारत्ते वि ०जाव वेमाणियत्ते, एवं जहा० वेयणासमुग्घाएणं असुरकुमारे नेरइयाऽऽदिवेमाणियपज्जवसाणेसु भणितो तहा नागकुमाराऽऽदिया अवसेसेसु सट्ठाणेसु परट्ठाणेसु भाणितव्वा ०जाव

वेमाणियस्स वेमाणियत्ते । एवमेते चउव्वीसा–चउव्वीसं दंडगा भवंति । ( सू० ३३३ ) ।

' एगमेगस्स णं ' मित्यादि , एकैकस्य भदन्त ! नैरयिकस्य सकलमतीतकालमवधीकृत्य तदा तदा नैरयिकत्वे वृत्तस्य सतः सर्वसंख्यया कियन्तः वेदनासमुद्घाता अतीताः ? भगवानाह—गौतम ! अनन्ताः, नरकस्थानस्यानन्तशः प्राप्तत्वादेकैकस्मिंश्च नरकभवे जघन्यपदेऽपि संख्येयानां वेदनासमुद्घातानां भावात् , ' केवइया पुरेक्खडा ' त्ति–कियन्तो भदन्त ! एकैकस्य नैरयिकस्याऽऽसंसारमोक्षमनागतं कालमवधीकृत्य नैरयिकत्वे भाविनः सतः सर्वसंख्यया पुरस्कृता वेदनासमुद्घाताः ?, भगवानाह–'गौतम ! कस्सइ अत्थि' इत्यादि, तत्र य आसन्नमृत्युर्वेदनासमुद्घातमप्राप्यान्तिकमरणेन नरकादुद्वृत्य सेत्स्यति तस्य नास्ति, नैरयिकत्वे भावी एकोऽपि पुरस्कृतो वेदनासमुद्घातः शेषस्य तु सन्ति , तस्यापि जघन्यत एको द्वौ वा त्रयो वा, एतच्च क्षीणशेषायुषां तद्भवजानामनन्तरं सेत्स्यतां द्रष्टव्यम् , न भूयो नरकेषूत्पत्स्यमानानां, भूयो नरकेषूत्पत्तौ जघन्यपदेऽपि संख्येयानां प्राप्यमाणत्वात् । यदाह मूलटीकाकारः—" नरकेषु जघन्यस्थितिषूत्पन्नस्य नियमतः संख्येया एव वेदनासमुद्घाता भवन्ति , वेदनासमुद्घातप्रचुरत्वान्नारकाणामिति, उत्कर्षतः संख्येया असंख्येया वा अनन्ता वा , तत्र सकृत् नरकेषु जघन्यस्थितिषूत्पत्स्यमानस्य संख्येयाः, अनेकशो दीर्घस्थितिषु असकृद्वा उत्पत्स्यमानस्य असंख्येयाः , अनन्तशः उत्पत्स्यमानस्य अनन्ताः । 'एव' मित्यादि, एवम्–नैरयिकगतेनाभिलापप्रकारेणासुरकुमारत्वेन तदनन्तरं चतुर्विंशतिदण्डकक्रमेण निरन्तरं तावद्वाच्यं यावद्वैमानिकत्वे; तच्चैवम्—' एगमेगस्स णं भंते ! नेरइयस्स असुरकुमाराओ केवइया वेयणासमुग्घाया अतीता ? , गोयमा ! अनन्ता , केवइया पुरेक्खडा ?, गोयमा ! कस्सइ अत्थि कस्सइ नत्थि, जस्स अत्थि जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं संखेज्जा वा असंखेज्जा वा अणंता वा ' तत्रातीतसूत्रेऽनन्तशोऽसुरकुमारत्वस्य प्राप्तत्वादुपपद्यते तद्भावमापन्नस्यानन्ता अतीता वेदनासमुद्घाता , पुरस्कृतचिन्तायां योऽनन्तरभवेन नरकादुद्वृत्तो मानुष्यं प्राप्य सेत्स्यति प्राप्तो वा परम्परया सकृदसुरकुमारभवं न वेदनासमुद्घातं गमिष्यति तस्य नास्त्येकोऽपि पुरस्कृतोऽसुरकुमारत्वेन वेदनासमुद्घातः । यस्तु सकृदसुरकुमात्वं प्राप्त सन् सकृदेव वेदनासमुद्घातं गन्ता तस्य जघन्यत एको द्वौ वा त्रयो वा शेषस्य शेषस्यसङ्ख्येयान् वारान् असुरकुमारत्वं यास्यतः संख्येयाः , असंख्येयान् वारान् असंख्येया, अनन्तान् वारान् अनन्ता । एवं चतुर्विंशतिदण्डकक्रमेण नागकुमारत्वादिषु स्थानेषु निरन्तरं सूत्रपाठस्तावद् वक्तव्यो यावद्वैमानिकत्वविषयं सूत्रम् , 'एगमेगस्स णं ' मित्यादि, एकैकस्य भदन्त ! असुरकुमारस्य पूर्वं नैरयिकत्वेन वृत्तस्य सतः सकलमतीतं कालमपेक्ष्य सर्वसंख्यया कियन्तो वेदनासमुद्घाता अतीता ? , भगवानाह—गौतम ! अनन्ता अतीताः, अनन्तशो नैरयिकत्वस्य प्राप्तत्वात् , एकैकस्मिंश्च नैरयिकस्य भवे जघन्यपदेऽपि संख्येयानां वेदनासमुद्घातानां भावात् , कियन्तः पुरस्कृताः ? , स्यात् सन्ति स्यान्न सन्ति , कस्यचित्सन्ति कस्यचिन्न सन्ति इति भावः । अत्रापीयं भावना–योऽसुरकुमारभवादुद्वृत्तो न नरके यास्यति किन्त्वनन्तरं परम्परया वा मनुजभवं प्राप्य सेत्स्यति तस्य नैरयिकत्वावस्थाभाविनः पुरस्कृता वेदनासमुद्घाता न सन्ति, नैरयिकत्वावस्थाया एवासम्भवात् । यस्तु तद्भवादूर्ध्वं पारम्पर्येण नरके गमिष्यति तस्य सन्ति, तत्रापि कस्यचित्संख्येयाः,कस्यचिदसंख्येयाः , कस्यचिदनन्ताः । तत्र यः सकृज्जघन्यस्थितिषु मध्ये समुत्पत्स्यते तस्य जघन्यपदेऽपि संख्येयाः , सर्वजघन्यस्थितावपि नरकेषु संख्येयाना वेदनासमुद्घातानां भावात् । वेदनाबहुलत्वान्नारकाणाम् । असकृद् जघन्यस्थितिषु, दीर्घस्थितिषु सकृदसकृद्वा गमने असंख्येयाः , अनन्तशो नरकगमने अनन्ताः । तथा एकैकस्य भदन्त ! असुरकुमारस्यासुरकुमारत्वे स्थितस्य सतः सकलमतीतकालमधिकृत्य कियन्तो वेदनासमुद्घाता अतीताः ? , भगवानाह—गौतम ! अनन्ताः , पूर्वमप्यनन्तशस्तद्भावस्य प्राप्तत्वात् , प्रतिभवं च वेदनासमुद्घातस्य प्रायो भावात् , पुरस्कृतचिन्तायां कस्यचित् सन्ति कस्यचिन्न सन्ति , यस्य प्रश्नसमयादूर्ध्वमसुरकुमारत्वेऽपि वर्त्तमानस्य न भावी वेदनासमुद्घातो नापि तत उद्वृत्य भूयोऽप्यसुरकुमारत्वं प्राप्स्यति तस्य न सन्ति , यस्तु सकृत् प्राप्स्यति तस्य जघन्यपदे एको द्वौ वा त्रयो वा उत्कर्षतः संख्येया असंख्येया अनन्ता वा , संख्येयान् वारान् उत्पत्स्यमानस्य संख्येयाः , असंख्येयान् वारान् असंख्येयाः, अनन्तान् वारान् अनन्ताः, एवं चतुर्विंशतिदण्डकक्रमेण नागकुमारत्वादिषु स्वस्थानेष्वसुरकुमारस्य निरन्तरं तावद्वक्तव्यं यावद्वैमानिकत्वे, तथा चाह—' एवं नागकुमारत्ते वि' इत्यादि, तदेवमसुरकुमाराणां वेदनासमुद्घातश्चिन्तितः, सम्प्रति नागकुमारादिष्वतिदेशमाह—' एव ' मित्यादि, उपदर्शिताभिलापेन यथा चतुर्विंशतिदण्डकक्रमेण असुरो नैरयिकादिषु वैमानिकपर्यवसानेषु भणितस्तथा नागकुमारादयोऽवशेषेषु समस्तेषु स्वस्थानपरस्थानेषु भणितव्या यावद्वैमानिकस्य वैमानिकत्वे, एव चैतानि नैरयिकचतुर्विंशतिदण्डकसूत्रादीनि वैमानिकचतुर्विंशतिदण्डकसूत्रपर्यवसानानि चतुर्विंशतिः सूत्राणि भवन्ति । तदेवं चतुर्विंशत्या चतुर्विंशतिदण्डकसूत्रैर्वेदनासमुद्घातश्चिन्तितः ।

(५) सम्प्रति चतुर्विंशत्यैव चतुर्विंशतिदण्डकसूत्रैः कषायसमुद्घातं चिचिन्तयिषुरिदमाह—

एगमेगस्स णं भंते ! नेरइयस्स नेरइयत्ते केवइया कसायसमुग्घाया अतीता ?, गोयमा ! अणंता, केवइया पुरेक्खडा ?, गोयमा ! कस्सइ अत्थि कस्सइ नत्थि जस्सत्थि एगुत्तरियाते० जाव अणंता । एगमेगस्स णं भंते ! नेरइयस्स असुरकुमारत्ते केवइया कसायसमुग्घाया अतीता ?, गोयमा ! अणंता, केवइया पुरेक्खडा ? , गोयमा ! कस्सइ अत्थि कस्सइ नत्थि, जस्स अत्थि सिय संखेज्जा सिय असंखेज्जा सिय अणंता, एवं० जाव

नेरइयस्स थणियकुमारत्ते, पुढविकाइयत्ते एगुत्तरियाए नेतव्वं, एवं० जाव मणुयत्ते, वाणमंतरत्ते जहा असुरकुमारत्ते, जोइसियत्ते अतीता अणंता, पुरेक्खडा कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि सिय असंखेज्जा सिय अणंता। एवं वेमाणियत्ते वि सिय असंखेज्जा सिय अणंता, असुरकुमारस्स नेरइयत्ते अतीता अणंता , पुरेक्खडा कस्सइ अत्थि कस्सइ नत्थि जस्सत्थि सिय संखेज्जा सिय असंखेज्जा सिय अणंता । असुरकुमारस्स असुरकुमारत्ते अतीता अणंता पुरेक्खडा एगुत्तरिया, एवं नागकुमारत्ते० जाव निरंतरं वेमाणियत्ते जहा नेरइयस्स भणितं तहेव भाणितव्वं, एवं० जाव थणियकुमारस्स वि वेमाणियत्ते, नवरं सव्वेसिं सट्ठाणे एगुत्तरियाए परट्ठाणे जहेव असुरकुमारस्स, पुढविकाइयस्स नेरइयत्ते० जाव थणियकुमारत्ते अतीता अणंता, पुरेक्खडा कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि सिय संखेज्जा सिय असंखेज्जा सिय अणंता । पुढविकाइयस्स पुढविकाइयत्ते० जाव मणूसत्ते अतीता अणंता पुरेक्खडा कस्सइ अत्थि कस्सइ नत्थि जस्स अत्थि एगुत्तरिया, वाणमंतरत्ते जहा णेरइयत्ते । जोइसियवेमाणियत्ते अतीता अणंता, पुरेक्खडा कस्सइ अत्थि कस्सइ नत्थि, जस्स अत्थि सिय असंखेज्जा सिय अणंता, एवं० जाव मणूसत्ते वि नेयव्वं । वाणमंतरजोइसियवेमाणिया जहा असुरकुमारा, णवरं सट्ठाणे एगुत्तरियाए भाणितव्वे० जाव वेमाणियस्स वेमाणियत्ते, एवं एते चउवीसं चउवीसा दंडगा । ( सू० ३३४ )

'एगमेगस्स णं' मित्यादि, तत्र नैरयिकस्य नैरयिकत्वविषयं प्रश्नसूत्रं सुगमम् , पुरस्कृतचिन्तायां तु कस्यचित्सन्ति कस्यचिन्न सन्ति, तत्र यः क्षीणशेषायुः प्रश्नसमये भवपर्यन्ते वर्तमानः कषायसमुद्घातमप्राप्त एव नरकभवादुद्वृत्त्यानन्तरं पारम्पर्येण वा सेत्स्यति न भूयो नरकवासगामी तस्य न सन्ति पुरस्कृता नैरयिकत्वे कषायसमुद्घाताः, शेषस्य तु सन्ति, तस्यापि जघन्यत एको द्वौ वा त्रयो वा, ते च क्षीणायुःशेषाणां तद्भवभाजामवसेयाः । उत्कर्षतः संख्येया असंख्येया वा अनन्ता वा, तत्र संख्येयवर्षायुःशेषाणां संख्येया , असंख्येयवर्षायुःशेषाणामसंख्येयाः । यदि वा-सकृद् जघन्यस्थितौ उत्पत्स्यमानानां संख्येयाः, असकृत् जघन्यस्थितौ सकृदसकृद्दीर्घस्थितावुत्पत्स्यमानानामसंख्येयाः, अनन्तश उत्पत्स्यमानानामनन्ताः, तथा नैरयिकस्यैवासुरकुमारत्वविषयेऽतीतसूत्रं, तथैव पुरस्कृतसूत्रे ' कस्सइ अत्थि कस्सइ नत्थि' त्ति—यो नरकादुद्वृत्तोऽसुरकुमारत्वं न प्राप्स्यति तस्य न सन्ति पुरस्कृता असुरकुमारत्वविषयाः कषायसमुद्घाताः , यस्तु प्राप्स्यति तस्य सन्ति, ते च जघन्यपदे संख्येया जघन्यस्थितावप्यसुरकुमाराणां संख्येयानां कषायसमुद्घातानां भावात् , लोभादिकषाय-



बहुलत्वात् तेषाम् , उत्कृष्टपदेऽसंख्येया अनन्ता वा, तत्र सकृद् दीर्घस्थितावसकृज्जघन्यस्थितिषु वा उत्पत्स्यमानानामसंख्येयाः, अनन्तश उत्पत्स्यमानानामनन्ताः । एवं नैरयिकस्य नागकुमारत्वादिषु स्थानेषु निरन्तरं तावद्वक्तव्यं यावत् स्तनितकुमारत्वे, तथा चाह—' एवं जाव ' इत्यादि , पृथिवीकायिकत्वेऽतीतसूत्रं तथैव, पुरस्कृतचिन्तायां तु कस्यचित् सन्ति कस्यचिन्न सन्ति , तत्र यो नरकादुद्वृत्तो न पृथिवीकायभवगामी तस्य न सन्ति , योऽपि गन्ता तस्यापि जघन्यपदे एको द्वौ वा त्रयो वा उत्कर्षतः संख्येया असंख्येया वा अनन्ता वा, ते चैवं—तिर्यक्पञ्चेन्द्रियभवान् मनुष्यभवाद्देवभवाद्वा कषायसमुद्घातसमुद्घतः सन् यद्येकवारं पृथिवीकायिकेषु गन्ता तस्य एको द्वौ वारौ गन्तुर्द्वौ, त्रीन् वारान् त्रयः, संख्येयान् वारान् संख्येयाः, असंख्येयान् वारान् असंख्येयाः, अनन्तान् वारान् अनन्ताः । तथा चाह—' पुढविकाइयत्ते एगुत्तरियाए नेयव्वं ' ति— तथा—' एवं ताव मणूसत्ते ' इति—एवं पृथिवीकायिकगतेनाभिलापप्रकारेण तावद् वक्तव्यं यावन्मनुष्यत्वे, तच्चैवम्—' एगमेगस्स णं भंते ! नेरइयस्स आउकाइयत्ते केवइया कसायसमुग्घाया अईया ?, गोयमा ! अणंता, केवइया पुरेक्खडा ?, गोयमा ! कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि जहण्णेणं एक्को ( वा ) दो वा तिण्णि वा उक्कोसेणं संखेज्जा असंखेज्जा वा अणंता वा ' एवं यावन्मनुष्यसूत्रं , तत्राप्कायादिवनस्पतिपर्यन्तसूत्रभावना पृथिवीकायसूत्रवत् , द्वीन्द्रियसूत्रे पुरस्कृतचिन्तायां जघन्येन एको द्वौ वा त्रयो वेति सकृत् जघन्यस्थितिकं द्वीन्द्रियभवं प्राप्तुकामस्य संख्येयान् वारान् प्राप्तुकामस्य संख्येयाः, असंख्येयानसंख्येयाः, अनन्तान् अनन्ताः । एवं त्रीन्द्रियचतुरिन्द्रियसूत्रे अपि भावनीये, तिर्यक्पञ्चेन्द्रियमनुष्यसूत्रविषया त्वेवं भावना—सकृत्पञ्चेन्द्रियभवं प्राप्तुकामस्य स्वभावत एवाल्पकषायस्य जघन्यत एको द्वौ त्रयो वा शेषस्य संख्येयान् वारान् तिर्यक्पञ्चेन्द्रियभवं प्राप्तुकामस्य संख्येयाः , असंख्येयान् वारान् असंख्येयाः , अनन्तान् वारान् अनन्ताः । मनुष्यसूत्रे तु पुरस्कृतविषया भावनैवम्—यो नरकभवादुद्वृत्तोऽल्पकषायः सन् मनुष्यभवं प्राप्य कषायसमुद्घातमप्राप्त एव सिद्धिपुरं गन्ता तस्य न सन्ति, शेषस्य सन्ति, तस्यापि एकं द्वौ त्रीन् वारान् कषायसमुद्घातान् प्राप्य सेत्स्यत एको द्वौ त्रयो वा संख्येयान् भवान् , यदि वा-एकस्मिन्नपि भवे संख्येयान् कषायसमुद्घातान् गन्तुः संख्येयाः, असंख्येयान् भवान् प्राप्तुकामस्यासंख्येयाः , अनन्तान् अनन्ताः । ' वाणमंतरत्ते जहा-असुरकुमारत्ते ' प्रागुक्तम् । किमुक्तं भवति ?- पुरस्कृतचिन्तायाम् एवं वक्तव्यम्—' जस्सत्थि सिय संखेज्जा सिय असंखेज्जा सिय अणंता वा ' इति नत्वेकोत्तरिका वक्तव्या , व्यन्तराणामप्यसुरकुमाराणामिव जघन्यस्थितावपि संख्येयानां कषायसमुद्घातानां लभ्यमानत्वात् , असंख्येयानन्तभावनाऽप्यसुरकुमारवत् , 'जोइसियत्ते' इत्यादि, ज्योतिष्कत्वेऽतीता अनन्ता वक्तव्याः , पुरस्कृतास्तु कस्यापि सन्ति कस्यापि न सन्ति, एतदपि प्राग्वद् भावनीयं. यस्यापि सन्ति तस्यापि कस्यचिदसंख्येयाः कस्यचिदनन्ताः , न तु स्यात् संख्येया इति वक्तव्यम् । कुत इति

चेत् ? , उच्यते—ज्योतिष्काणां जघन्यपदेऽप्यसंख्येयकालायुष्कतया जघन्यतोऽपि असंख्येयानां कषायसमुद्धातानां लभ्यमानत्वात्, अनन्तशस्तत्र जिगमिषूणामनन्ता', एवं वैमानिकत्वेऽपि पुरस्कृतचिन्तायां स्यादसंख्येयाः स्यादनन्ता इति वक्तव्यम् । भावना प्राग्वत् । तदेवं नैरयिकस्य स्वस्थाने परस्थाने च कषायसमुद्धाताश्चिन्तिताः, सम्प्रत्यसुरकुमारेषु तान् चिचिन्तयिषुराह—'एगमेगस्स णं' मित्यादि, एकैकस्य असुरकुमारस्य नैरयिकत्वे कषायसमुद्धाता अतीता अनन्ता भाविनः कस्यचित्सन्ति कस्यचिन्न सन्ति, तत्र योऽसुरकुमारभवादुद्वृत्तो नरकं न यास्यति तस्य न सन्ति, यस्तु यास्यति तस्य सन्ति । तस्यापि जघन्यतः संख्येयाः, जघन्यस्थितावपि संख्येयानां कषायसमुद्धातानां नरकेषु भावात्, उत्कर्षतोऽसंख्येया अनन्ता वा, तत्र जघन्यस्थितिषु सकृद्दीर्घस्थितिषु सकृदसकृद्वा जिगमिषोरसंख्येया, अनन्तशो जिगमिषोरनन्ताः; असुरकुमारस्यासुरकुमारत्वे अतीता अनन्ताः । 'पुरेक्खडा एगुत्तरिया' इत्यादि, पुरस्कृतास्तु कस्यापि सन्ति कस्यापि न सन्ति, तत्र योऽसुरकुमारभवे पर्यन्तवर्त्ती न च कषायसमुद्धातं याता, नापि तत्र प्रभ्रष्टो भूयोऽसुरकुमारभवं लब्धा किन्त्वनन्तरं पारम्पर्येण वा सेत्स्यति तस्य सन्ति, शेषस्य तु न सन्ति । यस्यापि सन्ति तस्यापि जघन्यत एको द्वौ वा त्रयो वा उत्कर्षेण संख्येया असंख्येया अनन्ता वा । तत्र एकादयः क्षीणायुःशेषाणां तद्भवभाजां भूयस्तत्रैवानुत्पत्स्यमानानामवगन्तव्याः, संख्येयादयो नैरयिकत्वे इव भावनीयाः । एवमित्यादि, एवम्—उक्तेन प्रकारेण नागकुमारत्वे तत ऊर्ध्वं चतुर्विंशतिदण्डकक्रमेण निरन्तरं यावद्वैमानिकत्वे वैमानिकत्वविषयं सूत्रं, यथा नैरयिकस्य भणितं तथैव भणितव्यम् । किमुक्तं भवति ?,–नागकुमारत्वादिषु स्तनितकुमारपर्यवसानेषु पुरस्कृतचिन्तायां ' कस्सइ अत्थि कस्सइ नत्थि, जस्स अत्थि सिय संखेज्जा सिय असंखेज्जा सिय अणंता' पृथिवीकायिकत्वादिषु मनुष्यत्वपर्यवसानेषु 'जस्स अत्थि जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं संखेज्जा वा असंखेज्जा वा अणंता वा ' व्यन्तरत्वे ' जस्स अत्थि सिय संखेज्जा सिय असंखेज्जा सिय अणंता ' ज्योतिष्कत्वे—' जस्स अत्थि सिय असंखेज्जा सिय अणंता ' वैमानिकत्वेऽप्येवमेवेति वक्तव्यमिति, ' एवं जावे ' त्यादि, एवम्—उक्तेन प्रकारेण असुरकुमारवन्नागकुमारस्य यावत्स्तनितकुमारस्य प्रत्येकं यावद् वैमानिकत्वे—वैमानिकत्वविषयं सूत्रं तावद्वक्तव्यम् । अत्रैव विशेषमाह—नवरं सर्वेषां नागकुमारादीनां स्तनितकुमारपर्यवसानानां स्वस्थाने नियमतः पुरस्कृता एकोत्तरिका, परस्थाने यथैवासुरकुमारस्य तथैव वक्तव्याः, ' पुढविकाइयस्स नेरइयत्ते ' इत्यादि, पृथिवीकायिकस्य नैरयिकत्वे यावत् स्तनितकुमारत्वे अतीता अनन्ता । अत्र भावना प्रागिव, पुरस्कृताः कस्यापि सन्ति कस्यापि न सन्ति, तत्र य पृथिवीकायभवादुद्वृत्तो नरकेष्वसुरकुमारेषु यावत् स्तनितकुमारेषु न गमिष्यति किन्तु मनुष्यभवं प्राप्य सिद्धिं गन्ता तस्य न सन्ति, शेषस्य तु सन्ति, यस्यापि सन्ति तस्यापि जघन्यतः संख्येयाः, जघन्यस्थितावपि नरकादिषु संख्येयानां कषायसमुद्धातानां भावात्, उत्कर्षतोऽसंख्येया अनन्ता वा , ते च प्राग्वद् भावयितव्याः, पृथिवीकायिकत्वे यावन्मनुष्यत्वेऽतीतास्ते तथैव, भाविन एकोत्तरिकया वक्तव्याः, ते चैवम्–'कस्सइ अत्थि कस्सइ नत्थि जस्स अत्थि जहण्णेणं एक्को वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा वा असंखेज्जा वा अणंता वा ' ते च नैरयिकस्य पृथिवीकायिकत्व इव भावनीयाः, ' वाणमंतरत्ते जहा नेरइयत्ते ' इति, व्यन्तरत्वे यथा नैरयिकत्वे तथा वक्तव्यम् । किमुक्तं भवति ?–एकोत्तरिका न वक्तव्या—किन्तु ' सिय संखेज्जा सिय असंखेज्जा सिय अणंता ' इति वक्तव्यं, ' जोइसिय ' इत्यादि, ज्योतिष्कत्वे वैमानिकत्वे चातीतास्तथैव, पुरस्कृता यदि सन्ति ततो जघन्यपदे असंख्येयाः उत्कृष्टपदे अनन्ताः , एवमप्कायिकस्य यावन्मनुष्यत्वे नेतव्यं , व्यन्तरज्योतिष्कवैमानिकानां यथा असुरकुमारस्य , नवरं पुरस्कृतचिन्तायां सर्वे स्वस्थाने एकोत्तरिकया वक्तव्यम् , परस्थाने यथा असुरकुमारस्य सूत्रम् । सूत्रपर्यन्तं दर्शयति– 'जाव वेमाणियस्स वेमाणियत्ते' इति–यावद्वैमानिकस्य वैमानिकत्वे—वैमानिकत्वविषयं सूत्रम् ,एवमेते कषायसमुद्धातगताश्चतुर्विंशति –चतुर्विंशतिसंख्याश्चतुर्विंशतिदण्डकाः— २४ भणितव्याः । तदेवमुक्ताश्चतुर्विंशत्या चतुर्विंशतिदण्डकसूत्रैः कषायसमुद्घातः ।

( ६ ) सम्प्रति चतुर्विंशत्यैव चतुर्विंशतिदण्डकसूत्रैर्मारणान्तिकसमुद्घातमाह—

मारणंतियसमुग्घाओ सट्ठाणे वि परट्ठाणे वि एगुत्तरियाए नेयव्वो० जाव वेमाणियस्स वेमाणियत्ते, एवमेते चउवीसं चउवीसा दंडगा भाणियव्वा । ( प्रज्ञा० ) तेयगसमुग्घाए जहा मारणंतियसमुग्घाए , णवरं जस्सऽत्थि एवं एते वि चउवीसं चउवीसा दंडगा भाणितव्वा । एगमेगस्स णं भंते ! नेरइयस्स नेरइयत्ते केवइया आहारसमुग्घाया अतीता ? , गोयमा ! णत्थि, केवइया पुरेक्खडा ? , गोयमा ! णत्थि, एवं० जाव वेमाणियत्ते,नवरं मणूसत्ते अतीता कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि जहन्नेणं एक्को वा दो वा उक्कोसेणं तिन्नि, केवइया पुरेक्खडा ?, गोयमा कस्स अत्थि कस्सइ नत्थि, जस्सत्थि जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं चत्तारि, एवं सव्वजीवाणं मणुस्साणं भाणियव्वं,मणूसस्स मणूसत्ते अतीता कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं चत्तारि, एवं पुरेक्खडा वि, एवमेते चउवीसं चउवीसा दंडगा० जाव वेमाणियत्ते । एगमेगस्स णं भंते ! नेरइयस्स नेरइयत्ते केवइया केवलिसमुग्घाया अतीता ? , गोयमा ! णत्थि , केवइया पुरेक्खडा ?, गोयमा ! नत्थि, एवं० जाव वेमाणियत्ते , णवरं मणूसत्ते अतीता नत्थि, पुरेक्खडा कस्सइ अत्थि कस्सइ नत्थि,

—जस्सत्थि इक्को , मणूसस्स मणूसत्ते अतीता कस्सइ अत्थि कस्सइ नत्थि , जस्सत्थि एक्को , एवं पुरेक्खडा वि । एवमेते चउवीसं चउवीसा दंडगा । (सू०३३५)

'मारणंतिए' त्ति—मारणान्तिकसमुद्घात. पुरस्कृतचिन्तायां स्वस्थाने परस्थाने वा एकोत्तरिकया नेतव्यो यावद्वैमानिकस्य वैमानिकत्वे—वैमानिकत्वविषय सूत्रम्—तच्चैवम्—'एगमेगस्स णं भंते ! नेरइयस्स नेरइयत्ते केवइया मारणंतियसमुग्घाया अतीता ?, गोयमा ! अणंता , केवइया पुरेक्खडा ? , गोयमा ! कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि जहन्नेणं एक्को वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा वा असंखेज्जा वा अणंता वा ' तत्र यो मारणान्तिकसमुद्घातमन्तरेण कालं कृत्वा नरकादुद्वृत्त. अनन्तरं पारम्पर्येण वा मनुष्यभवं प्राप्य सेत्स्यति न भूयो नरकगामी तस्य न सन्ति पुरस्कृता मारणान्तिकसमुद्घाता , यः पुनस्तद्भवे वर्त्तमानो मारणान्तिकसमुद्घातेन कालं कृत्वा नरकादुद्वृत्त सेत्स्यति, तस्यैक पुरस्कृतो मारणान्तिकसमुद्घात ,य पुनर्भूयोऽपि नरकमागत्य सर्वसंख्यया द्वौ मारणान्तिकसमुद्घातौ गन्ता तस्य द्वौ, एवं त्रिप्रभृतयोऽपि भावनीया', संख्येयान् वारान् नरकमागन्तु संख्येया' , असंख्येयान् वारान् असंख्येया , अनन्तान् वारान् अनन्ता , एवमसुरकुमारत्वे आलापको वाच्यः, नवरमत्रैवं भावना-यो नरकादुद्वृत्तो मनुष्यभव प्राप्य सेत्स्यति, यदिवा-तस्मिन् भवे मारणान्तिकसमुद्घातमगत्वा मृत्युमासाद्य ततोऽन्यभवे सिद्धिं गन्ता तस्यैव न सन्ति, शेषस्य त्वेकादिभावना प्रागिव, व्यन्तरज्योतिष्कवैमानिकेषु यथा नैरयिकस्य , ( यथानैरयिकस्य ) नैरयिकादिषु चतुर्विंशतिस्थानेषु चिन्ता कृता तथा असुरकुमारादीना वैमानिकपर्यवसानाना चतुर्विंशतिदण्डकक्रमेण कर्त्तव्या, तदेवमन्यान्यपि चतुर्विंशतिर्दण्डकसूत्राणि भवन्ति । तथा चाह--'एव एए चउवीसं चउवीसा दंडगा भाणियव्वा' इति, उक्तो मारणान्तिकसमुद्घातश्चतुर्विंशतिदण्डकसूत्रैः । ( वैकुर्विकसमुद्घातवक्तव्यता 'वेउव्वियसमुग्घाय' शब्दे षष्ठ भागे गता । ) सम्प्रति तैजससमुद्घातमतिदेशत आह--'तेयगे' त्यादि, तैजससमुद्घातो यथा मारणान्तिकसमुद्घातस्तथा वक्तव्य । किमुक्तं भवति ?--स्वस्थाने परस्थाने च एकोत्तरिकया स वक्तव्य इति , नवरं यस्य नास्ति--न सम्भवति तैजसमुद्घातस्तस्य न वक्तव्य , तत्र नैरयिकपृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुरिन्द्रियेषु न सम्भवतीति न वक्तव्य , शेषेषु तु वक्तव्यः , स चैवम्--'एगमेगस्स णं भंते ! नेरइयस्स नेरइयत्ते केवइया तेउसमुग्घाया अतीता ?, गोयमा ! नत्थि, केवइया पुरेक्खडा ?, गोयमा ! नत्थि, एगमेगस्स णं भंते ! नेरइयस्स असुरकुमारत्ते केवइया तेयगसमुग्घाया अतीता ? , गोयमा ! अणंता , केवइया पुरेक्खडा ?, गोयमा ! कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि जहन्नेणं एक्को वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा वा असंखेज्जा वा अनन्ता वा'इत्यादिसूत्रोक्त विशेषमुपजीव्य स्वयं परिभावनीयम् , अत्रापि सूत्रसंख्यामाह--'एव ' मित्यादि, एवम्-मारणान्तिकसमुद्घातगतेन क्वचित् सर्वथा निषेधरूपेण च प्रकारेण एतेऽपि—तैजससमुद्घातगता अपि चतुर्विंशति चतुर्विंशतिका—दण्डका भणितव्या । सम्प्रत्याहारकसमुद्घातं चिन्तयन्नाह—'एगमेगस्स ण ' मित्यादि , इह सर्वेष्वपि स्थानेषु मनुष्यत्वचिन्तायामतीता जघन्यत—एको द्वौ वा उत्कर्षतस्त्रयश्च , पुरस्कृता जघन्यत एको वा द्वौ वा त्रयो वा उत्कर्षतश्चत्वार , शेषेषु स्थानेषु अतीताः पुरस्कृताश्च प्रतिषेद्धव्या', मनुष्यस्य मनुष्यत्वचिन्ताया-मतीता पुरस्कृताश्च जघन्यत एको वा द्वौ वा त्रयो वा उत्कर्षतश्चत्वारः । अत्रार्थे च कारण प्रागेवोक्तम् ,अत्रापि सूत्रसंख्यामाह—'एव ' मित्यादि , एवम्—उपदर्शितेन प्रकारेण एते आहारकसमुद्घातविषयाश्चतुर्विंशतिसंख्याका दण्डका वक्तव्या , कियद् दूर यावदित्याह-यावद्वैमानिकस्य वैमानिकत्वे—वैमानिकत्वविषय सूत्रम् , तच्चैवम्—'एगमेगस्स ण भंते ! वेमाणियस्स वेमाणियत्ते केवइया आहारगसमुग्घाया अतीता ? , गोयमा ! नत्थि, केवइया पुरेक्खडा ?, गोयमा ! नत्थि ' इति । अधुना केवलिसमुद्घातमभिधित्सुराह—'एगमेगस्स णं भंते ! ' इत्यादि , अत्राप्ययं तात्पर्यार्थ —' सर्वेष्वपि स्थानेषु मनुष्यत्वचिन्ताव्यतिरेकेणातीता पुरस्कृताश्च प्रतिषेद्धव्या , मनुष्यवर्जेषु मनुष्यत्वचिन्तायामतीता प्रतिषेद्धव्या , पुरस्कृतस्तु कस्याप्यस्ति कस्यापि नास्ति, यस्याप्यस्ति तस्याप्येक एवेति वक्तव्य , मनुष्यस्य मनुष्यत्वचिन्तायामतीत कस्यापि अस्ति कस्यापि नास्ति, यस्याप्यस्ति तस्याप्येक एव एतच्च प्रश्नसमये केवलिसमुद्घातादुत्तीर्णं केवलिनमधिकृत्य , पुरस्कृतोऽपि कस्यापि अस्ति कस्यापि नास्ति , यस्याप्यस्ति तस्याप्येक इति वक्तव्यम् । अत्रापि सूत्रसंख्यामाह-'एवमित्यादि एवम्—उपदर्शितेन प्रकारेण एते केवलिसमुद्घातविषयाश्चतुर्विंशतिश्चतुर्विंशतिसंख्याका दण्डका भवन्ति । तदेवं सर्वसंख्यया एकत्वविषयाणां चतुर्विंशतिदण्डकसूत्राणामष्टषष्ठ्यधिकं शतं जातम् । एतावत्संख्याकान्येव बहुत्वविषयाण्यपि सूत्राणि भवन्ति ।

(७) तान्युपदिदर्शयिषुराह—

नेरइयाणं भंते ! नेरइयत्ते केवइया वेदणासमुग्घाया अतीता ? , गोयमा ! अणंता , केवइया पुरेक्खडा ? , गोयमा ! अणंता , एव०जाव वेमाणियत्ते, एवं सव्वजीवाणं भाणितव्वं०जाव वेमाणियाणं वेमाणियत्ते,एवं०जाव तेयगसमुग्घाए . णवरं उवउज्जिऊण नेयव्वं जस्सत्थि—वेउव्वियतेयगा । नेरइयाणं भंते ! नेरइयत्ते केवइया आहारगसमुग्घाया अतीता ? , गोयमा ! नत्थि, केवइया पुरेक्खडा ? , गोयमा ! नत्थि, एवं जाव०वेमाणियत्ते , णवरं मणूसत्ते अतीता असंखेज्जा पुरेक्खडा असंखेज्जा एवं०जाव वेमाणियाणं । णवरं वणस्सइकाइयाणं मणूसत्ते अतीता अणंता पुरेक्खडा अणंता,मणूसाणं मणूसत्ते अतीता सिय संखेज्जा सिय असंखेज्जा, एवं पुरेक्खडा वि , सेसा सव्वे जहा नेरइया, एव एते चउवीसं चउवीसा दंडगा। नेरइयाणं भंते ! नेरइयत्ते केवइया केवलिसमुग्घाया अ—

तीता ?, गोयमा ! नत्थि, केवइया पुरेक्खडा ? गोयमा ! नत्थि, एवं ० जाव वेमाणियत्ते, णवरं मणूसत्ते अतीता णत्थि, पुरेक्खडा असंखेज्जा, एवं० जाव वेमाणिया, नवरं वणस्सइकाइयाणं मणूसत्ते अतीता नत्थि, पुरेक्खडा अणंता, मणूसाणं मणूसत्ते अतीता सिय अत्थि सिय नत्थि, जइ अत्थि जहएणेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं सतपुहुत्तं, केवइया पुरेक्खडा ?, गोयमा ! सिय संखेज्जा सिय असंखेज्जा, एवं एते चउव्वीसं चउव्वीसा दंडगा सव्वे पुच्छाए भाणितव्वा ०जाव वेमाणियाणं वेमाणियत्ते । ( सू० ३३६ )

'नेरइयाण' मित्यादि, नैरयिकाणां विवक्षितप्रश्नसमयभाविनां सर्वेषां भदन्त ! पूर्वं सकलमतीत कालमवधीकृत्य यथासम्भवं नैरयिकत्वे वृत्तानां सतां समुदायेन सर्वसंख्यया कियन्तो वेदनासमुद्घाता अतीताः ?, भगवानाह—गौतम ! अनन्ताः, बहूनामनन्तकालमसंव्यवहारराशेरुद्वृत्तत्वात्, कियन्त पुरस्कृताः ?, एतच्च सूत्रं सूचामात्रं, परिपूर्णस्तु पाठ एवम्—' नेरइयाणं भंते ! नेरइयत्ते केवइया वेयणासमुग्घाया पुरेक्खडा ? ' इति । भगवानाह—गौतम ! अनन्ताः, बहूनामनन्तशो भूयोऽपि नरकेष्वागमनसम्भवात्, 'एव' मित्यादि, एवमुक्तेन प्रकारेणासुरकुमारत्वादिषु स्थानेषु क्रमेण तावद् वक्तव्यं यावद्वैमानिकत्वे—वैमानिकत्वविषयं सूत्रम् । तच्चेदम्—'नेरइयाणं भंते ! वेमाणियत्ते केवइया वेयणासमुग्घाया अतीता ?, गोयमा ! अणंता, केवइया पुरेक्खडा ?, गोयमा ! अणंता' इति, अत्र अतीता अनन्ताः सुप्रतीताः, सर्वेषां व्यवहारिकजीवैः प्रायोऽनन्तशो वैमानिकत्वस्य प्राप्तत्वात्, पुरस्कृतास्त्वनन्ताः, प्रश्नसमयभाविनां नैरयिकाणां मध्ये बहुभिरनन्तशो वैमानिकत्वस्य प्राप्स्यमानत्वात्, एवमपान्तरालवर्त्तिष्वपि असुरकुमारत्वादिषु स्थानेषु भावना भावनीया, तथा च नैरयिकाणां नैरयिकत्वादिषु चतुर्विंशतिदण्डकक्रमेणातीताः पुरस्कृताश्च वेदनासमुद्घाता भणिताः, एवं सर्वजीवानामसुरकुमारादीनां भणितव्याः, कियद् दूरं यावदित्याह—यावद्वैमानिकानां वैमानिकत्वे—वैमानिकत्वविषयाः, ते चैवम्—' वेमाणियाणं भंते ! वेमाणियत्ते केवइया वेयणासमुग्घाया अतीता ?, गोयमा ! अणंता, केवइया पुरेक्खडा ?, गोयमा ! अणंता' इति, एवं कषायमरणवैक्रियतैजससमुद्घाता अपि नैरयिकादीनां वैमानिकपर्यवसानानां सर्वेषु नैरयिकत्वादिषु स्थानेषु चतुर्विंशतिदण्डकक्रमेण वक्तव्याः, तथा चाह—' एवं जाव ' त्यादि, एवं—वेदनासमुद्घातगतेन प्रकारेण कषायादिसमुद्घाता अपि तावद्वक्तव्या यावत्तैजससमुद्घात', किमविशेषेण वक्तव्याः ?, नेत्याह—' नवर ' मित्यादि, नवरमुपयुज्य—उपयोगं कृत्वा सर्वं सूत्रं बुद्ध्या नेतव्यम् । किमुक्तं भवति ?,—ये यत्र समुद्घाता घटन्ते ते तत्रातीताः पुरस्कृताश्च अनन्ता वक्तव्याः, शेषेषु च स्थानेषु प्रतिषेद्धव्याः । एतदेव वैविक्त्येनाह—' जस्स अत्थी ' त्यादि, यस्य जीवराशेर्नैरयिकादेरसुरकुमारादेश्च सन्ति वैक्रियतैजससमुद्घातास्ते तस्य वक्तव्याः' शेषेषु पृथिव्यादिषु स्थानेषु प्रतिषेद्धव्या इति सामर्थ्यलभ्यम्, कषायमारणान्तिकसमुद्घाताः पुनः सर्वत्रापि वेदनासमुद्घातवदविशेषेणातीताः, पुरस्कृताश्चानन्ता वक्तव्याः, नतु क्वापि निषेद्धव्याः । सम्प्रति आहारसमुद्घातविषयं सूत्रमाह—'नेरइयाण' मित्यादि, आहारकसमुद्घातो ह्याहारकलब्धौ सत्यामाहारकशरीरारम्भकाले भवति, अन्यथा आहारकलब्धिश्चोपजायते, चतुर्दशपूर्वाधिगमे तेषां चतुर्दशानां पूर्वाणामधिगमो मनुष्यत्वावस्थायां न शेषास्ववस्थास्विति मनुष्यत्ववर्जासु शेषास्ववस्थास्वतीतानां पुरस्कृतानां चाहारकसमुद्घातानां प्रतिषेधः, मनुष्यत्वावस्थायामपि पूर्वमतीता असंख्येयाः, प्रश्नसमयभाविनां नारकाणां मध्ये बहूनामसंख्येयानां नारकाणां पूर्वं तदा तदा मनुष्यत्वमवाप्य अधिगतचतुर्दशपूर्वाणां प्रत्येकं सकृद् द्विस्त्रिर्वा कृताहारकसमुद्घातत्वात्, पुरस्कृता अपि असंख्येयाः । प्रश्नसमयभाविनां नारकाणां मध्ये बहुभिरसंख्येयैर्नारकैर्नरकादुद्वृत्त्यानन्तर्येण पारम्पर्येण वा तदा मनुष्यत्वावाप्तौ चतुर्दश पूर्वाण्यधीत्य प्रत्येकमाहारकसमुद्घातानामेकशो द्विस्त्रिश्चतुर्वा करिष्यमाणत्वात्, ' एवं जाव वेमाणियाण ' मिति, नैरयिकाणां चतुर्विंशतिदण्डकक्रमेण चिन्ता कृता, एवमसुरकुमारादीनामपि प्रत्येकं चतुर्विंशतिदण्डकक्रमेण तावद्वक्तव्या यावद्वैमानिकानां, केवलं यत्रास्ति विशेषस्तं दर्शयति—' नवर ' मित्यादि, नवरं वनस्पतिकायिकानां मनुष्यत्वचिन्तायामतीताः पुरस्कृताश्च प्रत्येकमनन्ता वक्तव्याः, अनन्तानां पूर्वमधिगतचतुर्दशपूर्वाणां यथायोगमेकशो द्विस्त्रिर्वा कृताहारकसमुद्घातानां वनस्पतिष्ववस्थानात् अनन्तरमेव वनस्पतिकायादुद्वृत्त्यानन्तर्येण पारम्पर्येण वा मानुषत्वमवाप्य यथायोगमेकशो द्विस्त्रिश्चतुर्वाऽऽहारकसमुद्घातानां निर्वर्त्तयिष्यमाणत्वात्, मनुष्याणां मनुष्यत्वावस्थायामतीताः पुरस्कृताश्च स्यात्संख्येयाः स्यादसंख्येयाः, कथमिति चेत्, उच्यते—ते हि प्रश्नसमयभाविनः उत्कर्षपदेऽपि सर्वस्तोकाः, श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणत्वात्, ततो विवक्षितप्रश्नसमयभाविनां मध्ये कदाचिदसंख्येयाः—यथायोगं प्रत्येकमेकशो द्विस्त्रिश्चतुर्वा कृतकरिष्यमाणाहारकसमुद्घाताः प्राप्यन्ते । उपसंहारमाह—'एव' मित्यादि, एवम्—उक्तेन प्रकारेण एते आहारकसमुद्घातविषयाश्चतुर्विंशतिश्चतुर्विंशतिसंख्याका दण्डका वक्तव्याः । सम्प्रति केवलिसमुद्घातं चिन्तयति—' नेरइयाण ' मित्यादि, केवलिसमुद्घातोऽपि मनुष्यत्वावस्थाया भवति, न शेषास्ववस्थासु, नच कृतकेवलिसमुद्घातः संसारं पर्यटति, केवलिसमुद्घातानन्तरमन्तर्मुहूर्तेनावश्यं निःश्रेयसपदाधिगमात्, ततो नारकाणां मनुष्यत्ववर्जासु शेषास्ववस्थास्वतीताः पुरस्कृताश्च केवलिसमुद्घाताः प्रतिषेद्धव्याः, मनुष्यत्वावस्थायामप्यतीताः प्रतिषेद्धव्याः, कृतकेवलिसमुद्घातानां नरके गमनाभावात्, भाविनश्च भविष्यन्ति, प्रश्नसमयभाविनां मध्ये बहूनामसंख्येयानां नारकाणां मुक्तिपदगमनयोग्यत्वात्, अतः पुरस्कृता असंख्येया इत्युक्तम्, 'एव ' मित्यादि, यथा नैरयिकाणां केवलिसमुद्घातचिन्ता कृता एवमसुरकुमारादीनामपि कर्त्तव्या, सा च तावत् यावत् वैमानिकानाम् । अत्रैव विशेषमाह—' नवर ' मि-

स्यदि, नवरं वनस्पतिकायिकानां मनुष्यत्वावस्थाचिन्तायामतीताः प्रतिषेद्धव्याः, कृतकेवलिसमुद्धातानां संसाराभावात्, पुरस्कृतास्त्वनन्ता वाच्याः, प्रश्नसमयभाविनां वनस्पतिकायिकानां मध्ये बहूनामनन्तानां वनस्पतिकायिकानां वनस्पतिकायादुद्वृत्त्यानन्तर्येण पारम्पर्येण वा कृतकेवलिसमुद्धातानां सेत्स्यमानत्वात्, मनुष्याणां मनुष्यत्वावस्थाचिन्तायामतीताः कदाचित्सन्ति कदाचिन्न सन्ति, कृतकेवलिसमुद्धातानां सिद्धत्वभावादन्येषां चाद्यापि केवलिसमुद्धातप्रतिपत्तेः, यदाऽपि सन्ति तदाऽपि जघन्यत एको द्वौ वा त्रयो वा उत्कर्षेत शतपृथक्त्वं, पुरस्कृताः स्यात्संख्येयाः स्यादसंख्येयाः, प्रश्नसमयभाविनां मनुष्याणां मध्ये कदाचित्संख्येयानां कदाचिदसंख्येनां यथायोगमानन्तर्येण पारम्पर्येण कृतकेवलिसमुद्धातानां सेत्स्यमानत्वात् । सूत्रसर्वसंख्यामाह—एवमुक्तेन प्रकारेण एते केवलिसमुद्धातविषयाश्चतुर्विंशतिश्चतुर्विंशतिदण्डकाः, ते च सर्वेऽपि पृच्छायां पृच्छापुरस्सरं भणितव्याः, कियद्दूरं यावदित्याह—वैमानिकानां वैमानिकत्वविषयं सूत्रम् । तच्चेदम्—'वेमाणियाणं भंते ! वेमाणियत्ते केवइया केवलिसमुग्घाया अतीता ?, गोयमा ! नत्थि, केवइया पुरेक्खडा ?, गोयमा ! नत्थि' इति । तदेवमुक्ता नैरयिकादिषु वैमानिकपर्यवसानेष्वेकत्वविशिष्टेषु बहुत्वविशिष्टेषु च भूतभाविवेदनादिसमुद्धातसम्भवाऽसम्भवपुरस्सरं संख्याप्रमाणप्ररूपणा ।

(८) सम्प्रति तेन तेन समुद्घातेन यावत् केवलिसमुद्घातेन समुद्घातानामसमुद्घातानां च परस्परमल्पबहुत्वमभिधित्सुराह—

एतेसि णं भंते ! जीवाणं वेदणासमुग्घाएणं कसायसमुग्घाएणं मारणंतियसमुग्घाएणं वेउव्वियसमुग्घाएणं तेयगसमुग्घाएणं आहारगसमुग्घाएणं केवलिसमुग्घाएणं समोहयाणं असमोहयाण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा जीवा आहारगसमुग्घाएणं समोहया केवलिसमुग्घाएणं समोहया संखेज्जगुणा तेयगसमुग्घाएणं समोहया असंखेज्जगुणा वेउव्वियसमुग्घाएणं समोहया असंखेज्जगुणा मारणंतियसमुग्घाएणं समोहया अणंतगुणा कसायसमुग्घाएणं समोहया असंखिज्जगुणा वेदणासमुग्घाएणं विसेसाहिया असमोहया असंखिज्जगुणा । (सू० ३३७) एतेसि णं भंते ! नेरइयाणं वेदणासमुग्घाएणं कसायसमुग्घाएणं मारणंतियसमु० वेउव्वियस० समोहयाणं असमोहयाण य कयरे कयरेहिंतो अप्पा वा० ४ ?, गोयमा ! सव्वत्थोवा नेरइया मारणंतियसमुग्घाएणं समोहया वेउव्वियसमुग्घाएणं समोहया असंखिज्जगुणा, कसायसमुग्घाएणं समोहया संखिज्जगुणा, वेदणासमुग्घाएणं समोहया संखिज्जगुणा असमोहया संखेज्जगुणा । एतेसि णं भंते ! असुरकुमाराणं वेदणासमुग्घाएणं कसायसमुग्घाएणं मारणंतियसमुग्घाएणं वेउव्वियसमुग्घाएणं तेयगसमुग्घाएणं समोहयाणं असमोहयाण य कयरे कयरेहिंतो अप्पा वा० ४ ?, गोयमा ! सव्वत्थोवा असुरकुमारा तेयगसमुग्घाएणं समोहया मारणंतियसमुग्घाएणं समोहया असंखेज्जगुणा वेदणासमुग्घाएणं समोहया असंखिज्जगुणा कसायसमुग्घाएणं समोहया संखिज्जगुणा वेउव्वियसमुग्घाएणं समोहया संखेज्जगुणा असमोहया असंखिज्जगुणा एवं० जाव थणियकुमारा । एएसि णं भंते ! पुढविकाइयाणं वेदणासमुग्घाएणं कसायसमुग्घाएणं मारणंतियसमुग्घाएणं समोहयाणं असमोहयाण य कयरे कयरेहिंतो अप्पा वा० ४ ?, गोयमा ! सव्वत्थोवा पुढविकाइया मारणंतियसमुग्घाएणं समोहया कसायसमुग्घाएणं समोहया संखिज्जगुणा वेदणासमुग्घाएणं समोहया विसेसाहिया असमोहया असंखिज्जगुणा, एवं० जाव वणस्सइकाइया, णवरं सव्वत्थोवा वाउकाइया वेउव्वियसमुग्घाएणं समोहया मारणंतियसमुग्घाएणं समोहया असंखेज्जगुणा कसायसमुग्घाएणं समोहया संखिज्जगुणा वेदणासमुग्घाएणं समोहया विसेसाहिया असमोहया असंखेज्जगुणा । बेइंदिया णं भंते ! वेदणासमुग्घाएणं कसायसमुग्घाएणं मारणंतियसमुग्घाएणं समोहयाणं असमोहयाण य कयरे कयरेहिंतो अप्पा वा० ४ ?, गोयमा ! सव्वत्थोवा बेइंदिया मारणंतियसमुग्घाएणं समोहया वेदणासमुग्घाएणं समोहया असंखेज्जगुणा कसायसमुग्घाएणं समोहया असंखेज्जगुणा असमोहया संखेज्जगुणा, एवं० जाव चउरिंदिया । पंचिंदियतिरिक्खजोणियाणं भंते ! वेदणासमुग्घाएणं समोहया कसायसमुग्घाएणं मारणंतियसमुग्घाएणं वेउव्वियसमुग्घाएणं तेयासमुग्घाएणं समोहयाणं असमोहयाण य कयरे कयरेहिंतो अप्पा वा० ४ ?, गोयमा ! सव्वत्थोवा पंचिन्दियतिरिक्खजोणिया तेयासमुग्घाएणं समोहया वेउव्वियसमुग्घाएणं समोहया असंखिज्जगुणा मारणंतियसमुग्घाएणं समोहया असंखिज्जगुणा वेदणासमुग्घाएणं समोहया असंखिज्जगुणा कसायसमुग्घाएणं समोहया संखेज्जगुणा असमवहता संखेज्जगुणा । मणुस्साणं भंते ! वेदणासमुग्घाएणं समोहयाणं कसायसमुग्घाएणं मारणंतियसमुग्घाएणं वेउव्वियसमुग्घाएणं तेयगसमुग्घाएणं आहारगसमुग्घाएणं केवलिसमुग्घाएणं समोहयाणं असमोहयाण य कयरे कयरेहिंतो अप्पा वा० ४ ?, गोयमा ! सव्वत्थोवा मणुस्सा आहारगसमुग्घाएणं समोहया केवलिसमुग्घाएणं समोहया संखिज्जगुणा तेयगसमुग्घाएणं समोहया संखेज्जगुणा वेउव्वियसमुग्घाएणं समोहया

संखेज्जगुणा म.रणंतियसमुग्घाएणं समोहया असंखेज्जगुणा वेदणासमुग्घाएणं समोहया असंखेज्जगुणा कसायसमुग्घाएणं समोहया संखेज्जगुणा असमोहया असंखेज्जगुणा वाणमंतरजोइसियवेमाणियाणं जहा असुरकुमाराणं। (सू० ३३८)

'एएसि णं' मित्यादि एतेषां प्राक् समवहताऽसमवहतत्वेन निरूपितानां भदन्त ! सामान्यतो जीवानां वेदनासमुद्घातेन यावत् केवलिसमुद्घातेन समवहतानामसमवहतानां च मध्ये कतरे कतरेभ्योऽल्पाः कतरे कतरेभ्यो बहुकाः-संख्येयाऽसंख्येयादिगुणतया प्रभूताः,कतरे कतरैस्तुल्या समसंख्याका। अत्रार्थे सूत्रे विभक्तिपरिणाम स्वयं योजनीयः , कतरे कतरेभ्यो विशेषाधिका—मनागधिकाः , वाशब्दा सर्वेऽपि विकल्पार्था , भगवानाह—गौतम ! सर्वस्तोका जीवा आहारकसमुद्घातेन समुद्घताः , आहारकशरीरिणो हि कदाचिदिहलोके षण्मासान् यावन्न भवन्त्यपि यदापि भवन्ति तदापि जघन्येन एको द्वौ त्रयो वा उत्कर्षतः सहस्रपृथक्त्वं , केवलमाहारकसमुद्घात आहारकशरीरप्रारम्भकाले न शेषकाल ततः स्तोका एव युगपदाहारकसमुद्घाताः प्राप्यन्ते इति सर्वस्तोका आहारकसमुद्घातेन समुद्घता , तेभ्यः केवलिसमुद्घातेन समुद्घता संख्येयगुणा , तेषामेककालं शतपृथक्त्वेन प्राप्यमाणत्वात् , यद्यप्याहारकशरीरिण सत्तया समकालम् एको द्वौ वा त्रयो वा उत्कर्षतः सहस्रपृथक्त्वमाना प्राप्यन्ते तथाप्या ( पि स्तोकानामा ) हारकसमुद्घातसम्भवात् एककालमतिस्तोका प्राप्यन्ते इति न तेभ्यः केवलिसमुद्घातसमुद्घतानां संख्येयगुणत्वविरोधः , केवलिसमुद्घातसमुद्घतेभ्यः तैजससमुद्घातेन समवहता ? असंख्येयगुणा , पञ्चेन्द्रियतिर्यग्योनिकानां मनुष्याणां देवानामपि च तैजससमुद्घातसम्भवात् , तेभ्योऽपि वैक्रियसमुद्घातेन समुद्घताः असंख्येयगुणाः नारकवातकायिकानामपि वैक्रियसमुद्घातसम्भवात् , वातकायिकाश्च वैक्रियलब्धिमन्तो न स्तोका किन्तु देवेभ्योऽप्यसंख्येयगुणाः। कथमेतदिति चेत् , उच्यते—इह बादरपर्याप्तवायुकायिका स्थलचरपञ्चेन्द्रियेभ्योऽसंख्येयगुणा ,महादण्डके तथा पठितत्वात् , स्थलचरपञ्चेन्द्रियाश्च देवेभ्योऽप्यसंख्येयगुणा , ततो यद्यपि बादरपर्याप्तवायुकायिकानां संख्येयभागमात्रस्य वैक्रियलब्धिसम्भव । यत उक्तम्—"तिण्ह ताव रासीणं वेउव्वियलद्धी चेव नत्थि, बायरपज्जत्ताणं पि संखेज्जइभागमेत्ताणं" ति , तथापि संख्येयभागमात्रा वैक्रियलब्धिमन्तो देवेभ्योऽप्यसंख्येयगुणा भवन्ति, ततो नैरयिकाणां वायुकायिकानां च वैक्रियसमुद्घातसम्भवाद्युपपद्यन्ते तैजससमुद्घातसमुद्घतेभ्यो वैक्रियसमुद्घातेन समुद्घता असंख्येयगुणा , तेभ्योऽपि मारणान्तिकसमुद्घातेन समुद्घता अनन्तगुणा , कथम् ?, उच्यते, इह निगोदजीवानामनन्तानामसंख्येयो भाग सदा विग्रहगतौ वर्त्तमान प्राप्यते, ते च प्रायो मारणान्तिकसमुद्घातसमुद्घता इति पूर्वेभ्योऽनन्तगुणा , तेभ्योऽपि कषायसमुद्घातसमुद्घता असंख्येयगुणा' ,निगोदजीवानामेवानन्तानां विग्रहगत्यापन्नेभ्योऽसंख्येयगुणानां कषायसमुद्घातसमुद्घतानां सदा प्राप्यमाणत्वात् , तेभ्योऽपि वेदनासमुद्घातेन समुद्घता विशेषाधिकाः , तेषामेव निगोदजीवानामनन्तानां कषायसमुद्घातसमुद्घतेभ्यो मनाक् विशेषाधिकानां सदा वेदनासमुद्घातेन समुद्घततयाऽवाप्यमानत्वात् , तेभ्योऽपि एकेनापि समुद्घातेनासमुद्घता असंख्येयगुणाः , वेदनाकषायमरणसमुद्घातसमुद्घतेभ्यो निगोदजीवानामेवासंख्येयगुणानामसमवहतानां सदा लभ्यमानत्वात् । सम्प्रत्येतदेवाल्पबहुत्वं जीवविशेषेषु नैरयिकादिषु चतुर्विंशतिदण्डकक्रमेण यथायोगं चिचिन्तयिषुराह—' नेरइयाणं ' मित्यादि प्रश्नसूत्रं , भगवानाह—सर्वस्तोका नैरयिका मारणान्तिकसमुद्घातेन समुद्घता ,मारणान्तिको हि समुद्घातो मरणकाले भवति, मरणं च शेषजीवनारकराश्यपेक्षयाऽतिस्तोकानां , न च सर्वेषां म्रियमाणानामविशेषेण मारणान्तिकसमुद्घातः , किन्तु कतिपयानाम् , ' समोहया वि मरंति असमोहया वि मरंती ' ति वचनात् । अतः सर्वस्तोका मारणान्तिकसमुद्घातसमुद्घताः , तेभ्योऽपि वैक्रियसमुद्घातेन समुद्घताः असंख्येयगुणाः , सप्तस्वपि पृथिवीषु प्रत्येकं बहूनां परस्परवेदनोदीरणाय निरन्तरमुत्तरवैक्रियसमारम्भसम्भवात् तेभ्योऽपि कषायसमुद्घातेन समुद्घताः संख्येयगुणाः, कृतोत्तरवैक्रियाणामकृतोत्तरवैक्रियाणां च सर्वसंख्ययोत्तरवैक्रियारम्भकेभ्योऽसंख्येयगुणानां कषायसमुद्घातसमुद्घतत्वेन प्राप्यमाणत्वात् , तेभ्योऽपि वेदनासमुद्घातेन समुद्घता संख्येयगुणाः , यथायोगं क्षेत्रजपरमाधार्मिकोदीरितपरस्परोदीरितवेदनाभि प्रायो बहूनां सदा समुद्घतत्वेन प्राप्यमाणत्वात् , तेभ्योऽप्येकेनापि समुद्घातेनासमवहताः संख्येयगुणाः, वेदनासमुद्घातमन्तरेणाप्यतिबहूनां सामान्यतो वेदनामनुभवतां सम्भवात् । सम्प्रत्यसुरकुमाराणामल्पबहुत्वमाह—' एएसि णं ' मित्यादि प्रश्नसूत्रं सुगमं , भगवानाह—गौतम ! सर्वस्तोकाः असुरकुमारास्तैजससमुद्घातेन समुद्घताः , तैजसो हि समुद्घातो महति कोपावेशे क्वचित् कदाचित्केषाञ्चिद्भवति , ततस्तेन समुद्घातेन समुद्घताः सर्वस्तोकाः , तेभ्यो मारणान्तिकसमुद्घातेन समुद्घता असंख्येयगुणा , तेभ्यो वेदनासमुद्घातेन समुद्घताः असंख्येयगुणाः , परस्परं युद्धादौ बहूनां वेदनासमुद्घातेन समुद्घतानां प्राप्यमाणत्वात् , तेभ्योऽपि कषायसमुद्घातेन समुद्घताः संख्येयगुणाः , येन तेन वा कारणेन बहूनां कषायसमुद्घातगमनसम्भवात् , तेभ्योऽपि वैक्रियसमुद्घातेन समुद्घता संख्येयगुणा , परिचारणाद्यनेकनिमित्तमतिबहूनामुत्तरवैक्रियकरणारम्भसम्भवात् , तेभ्योऽप्यसमवहता असंख्येयगुणाः बहूनामुत्तमजातीनां सुखसागरावगाढानां पूर्वोक्तेभ्योऽसंख्येयगुणानां केनापि समुद्घातेनासमवहतानां सदा लभ्यमानत्वात् । ' एव ' मित्यादि, यथा असुरकुमाराणामल्पबहुत्वमुक्तमेवं सर्वेषां भवनपतीनां द्रष्टव्य, यावत् स्तनितकुमाराणामिति ॥ सम्प्रति पृथिवीकायिकगतमल्पबहुत्वमाह—' एएसि णं मित्यादि, अत्र कषायसमुद्घातसमुद्घताना

वेदनासमुद्धातसमुद्धतानां च संख्येयगुणत्वे असमवहतानां चासंख्येयगुणत्वे भावना स्वयं भावनीया सुगमत्वात्, 'एव' मित्यादि, पृथिवीकायिकगतेन प्रकारेणाल्पबहुत्वं तावद्वक्तव्यं यावद् वनस्पतिकायिकाः, वायुकायिकान् प्रति विशेषमभिधित्सुराह-'नवर' मित्यादि, नवरं वातकायिकानामल्पबहुत्वचिन्तायामेवं वक्तव्य सर्वस्तोका वातकायिका वैक्रियसमुद्धातेन समुद्धता, बादरपर्याप्तसंख्येयभागस्य वैक्रियलब्धेः सम्भवात्, तेभ्योऽपि मारणान्तिकसमुद्धातेन समुद्धता असंख्येयगुणाः, पर्याप्तापर्याप्तसूक्ष्मबादरभेदभिन्नाना सर्वेषामपि वातकायिकानां मरणसमुद्धातसम्भवात् तेभ्योऽपि कषायसमुद्धातेन समुद्धता संख्येयगुणा, तेभ्योऽपि वेदनासमुद्धातेन समुद्धता विशेषाधिका, तेभ्योऽसमवहता असंख्येयगुणा, सकलसमुद्धातगतवातकायिकापेक्षया स्वभावस्थाना वातकायिकाना स्वभावत एवासंख्येयगुणतया प्राप्यमाणत्वात्। द्वीन्द्रियसूत्र सर्वस्तोकाः द्वीन्द्रिया मारणान्तिकसमुद्धातेन समुद्धता., प्रतिनियतानामेव प्रश्नसमये मरणसद्भावात्, तेभ्यो वेदनासमुद्धातेन समुद्धता असंख्येयगुणा', शीतातपादिसम्पर्कतोऽतिप्रभूतानां वेदनासमुद्धातभावात्, तेभ्य' कषायसमुद्धातेन समुद्धता असंख्येयगुणाः, अतिप्रभूततराणा लोभादिकषायसमुद्धातभावात्, तेभ्योऽप्यसमवहता संख्येयगुणा', 'एव' मित्यादि, एवं द्वीन्द्रियगतेन प्रकारेण तावद्वक्तव्य यावच्चतुरिन्द्रिया। तिर्यक्पञ्चेन्द्रियसूत्रे सर्वस्तोकास्तैजससमुद्धातेन समुद्धता, कतिपयानामेव तेजोलब्धिभावात्, तेभ्यो वेदनासमुद्धातेनासमवहता असंख्येयगुणा, तेभ्योऽपि वैक्रियसमुद्धातेन समवहता. असंख्येयगुणा, प्रभूताना वैक्रियलब्धेर्भावात्, तेभ्योऽपि मारणान्तिकसमुद्घातेन समवहता असंख्येयगुणा', सम्मूर्च्छिमजलचरस्थलचरखचराणामपि सर्वेषां वैक्रियलब्धिरहिताना प्रत्येकं पूर्वोक्तेभ्योऽसंख्येयगुणाना केषाञ्चित् गर्भजानामपि वैक्रियलब्धिरहिताना वैक्रियलब्धिमता च मरणसमुद्घातसम्भवात्, तेभ्योऽपि वेदनासमुद्घातेन समुद्धता असंख्येयगुणा, म्रियमाणजीवराश्यपेक्षया अपि अम्रियमाणानामसंख्येयगुणानां वेदनासमुद्घातभावात्, तेभ्य कषायसमुद्घातेन समुद्धता संख्येयगुणा, तेभ्योऽप्यसमवहता संख्येयगुणा'। अत्र भावना प्रागिव मनुष्यसूत्रे सर्वस्तोका आहारकसमुद्घातेन समुद्धता', अतिस्तोकानामेककालमाहारकशरीरप्रारम्भसंभवात्, तेभ्य केवलिसमुद्घातेन समुद्धता संख्येयगुणा, शतपृथक्त्वसंख्यया प्राप्यमाणत्वात्, तेभ्यस्तैजससमुद्धातेन समवहता' संख्येयगुणा., शतसहस्रसंख्यया तेषा प्राप्यमाणत्वात्, तेभ्योऽपि वैक्रियसमुद्घातेन समुद्धता संख्येयगुणा., कोटिसंख्यया लभ्यमानत्वात्, तेभ्योऽपि मारणान्तिकसमुद्धातेन समवहता असंख्येयगुणा संमूर्छिममनुष्याणामपि तद्भावात् तेषा चासंख्येयत्वात्. तेभ्योऽपि वेदनासमुद्धातेन समुद्धताः असंख्येयगुणा म्रियमाणराश्यपेक्षया असंख्येयगुणानामम्रियमाणाना तद्भावसम्भवात्, तेभ्य कषायसमुद्धातेन समुद्धता. संख्येयगुणा, प्रभूततया तेषा प्राप्यमाणत्वात्, तेभ्योऽप्यसमवहता असंख्येयगुणा', सम्मूर्च्छिममनुष्याणामल्पकषायाणामुत्कटकषायिभ्योऽसंख्येयगुणानां सदा लभ्यमानत्वात्। व्यन्तरज्योतिष्कवैमानिका यथा असुरकुमारास्तथा वक्तव्या। तदेवमुक्तं समुद्धताऽसमुद्धतविषयमल्पबहुत्वम्।

(६) अधुना कषायसमुद्धातगता विशेषवक्तव्यतामभिधित्सुराह-

कति णं भंते ! कसायसमुग्घाया पण्णत्ता ?, गोयमा ! चत्तारि कसायसमुग्घाया पण्णत्ता, तं जहा-कोहसमुग्घाए माणसमुग्घाए मायासमुग्घाए लोहसमुग्घाए। नेरइयाणं भंते ! कति कसायसमुग्घाया पण्णत्ता, गोयमा ! चत्तारि कसायसमुग्घाया पण्णत्ता, एवं०जाव वेमाणियाणं। एगमेगस्स णं भंते ! नेरइयस्स केवइया कोहसमुग्घाया अतीता ? गोयमा ! अणंता, केवइया पुरेक्खडा ?, गोयमा ! कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि जहण्णेणं एक्को वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा वा असंखेज्जा वा अणंता वा, एवं० जाव वेमाणियस्स, एवं जाव ०लोभसमुग्घाए एते चत्तारि दंडगा। नेरइयाणं भंते ! केवइया कोहसमुग्घाया अतीता ?, गोयमा ! अणंता, केवइया पुरेक्खडा ?, गोयमा ! अणंता, एवं०जाव वेमाणियाणं एवं०जाव लोभसमुग्घाए, एवं एए वि चत्तारि दंडगा। एगमेगस्स णं भंते ! नेरइयस्स नेरइयत्ते केवइया कोहसमुग्घाया अतीता ?, गोयमा ! अणंता एवं जहा वेदणासमुग्घाओ भणितो तहा कोहसमुग्घातो वि निरवसेसं ०जाव वेमाणियत्ते। माणसमुग्घाए मायासमुग्घाए वि निरवसेसं जहा मारणंतियसमुग्घाए, लोहसमुग्घातो जहा कसायसमुग्घातो नवरं सव्वजीवा असुरादिनेरइएसु लोहकसाएणं एगुत्तरियाए नेयव्वा। नेरइयाणं भंते ! नेरइयत्ते केवइया कोहसमुग्घाया अतीता ?, गोयमा ! अणंता, केवइया पुरेक्खडा ?, गोयमा ! अणंता, एवं ०जाव वेमाणियत्ते, नवं सट्ठाण-परट्ठाणेसु सव्वत्थ भाणियव्वा, सव्वजीवाणं चत्तारि वि समुग्घाया ०जाव लोभसमुग्घाओ ०जाव वेमाणियाणं वेमाणियत्ते। ( सू० ३३६ )।

'कइ ण' मित्यादि, इद सामान्यत कषायसमुद्धातविषयं चतुर्विंशतिदण्डकक्रमगतं च सूत्र सुप्रतीतं, सम्प्रत्येकैकस्य नैरयिकादेश्चतुर्विंशतिदण्डकक्रमेण वैमानिकपर्यवसानस्य तद्वक्तव्यतामाह—' एगमेगस्स णं भंते !' इत्यादि, अत्रातीतसूत्रं सुप्रतीतम्, पुरस्कृतसूत्रे—' कस्सइ अत्थि कस्सइ नत्थि' त्ति—यो नरकभवप्रान्ते वर्त्तमान स्वभावत एवाल्पकषाय कषायसमुद्धातमन्तरेण कालं कृत्वा नरकादुद्वृत्तो मनुष्यभवं प्राप्य कषायसमुद्धातमगत एव सेत्स्यति तस्य नास्ति पुरस्कृत एकोऽपि कषायसमुद्धातो, यस्यापि सन्ति तस्यापि जघन्यत एको द्वौ त्रयो वा, ते च प्रागुक्तस्वरूपस्य सकृत्कषायसमुद्घातगामिनो वेदितव्या, उत्कर्षत संख्येया असंख्येया

संखेज्जगुणा मारणंतियसमुग्घाएणं समोहया असंखेज्जगुणा वेदणासमुग्घाएणं समोहया असंखेज्जगुणा कसायसमुग्घाएणं समोहया संखेज्जगुणा असमोहया असंखेज्जगुणा वाणमंतरजोइसियवेमाणियाणं जहा असुरकुमाराणं । ( सू० ३३८ )

'एएसि णं' मित्यादि. एतेषां प्राक् समवहताऽसमवहतत्वेन निरूपितानां भदन्त ! सामान्यतो जीवानां वेदनासमुद्घातेन यावत् केवलिसमुद्घातेन समवहतानामसमवहतानां च मध्ये कतरे कतरेभ्योऽल्पाः कतरे कतरेभ्यो बहुकाः-संख्येयाऽसंख्येयादिगुणतया प्रभूताः कतरे कतरैस्तुल्याः समसंख्याकाः । अत्रार्थे सूत्रे विभक्तिपरिणामः स्वयं योजनीयः, कतरे कतरेभ्यो विशेषाधिकाः—मनागधिकाः, वाशब्दाः सर्वेऽपि विकल्पार्थाः. भगवानाह—गौतम ! सर्वस्तोका जीवा आहारकसमुद्घातेन समुद्धताः, आहारकशरीरिणो हि कदाचिदिहलोके षण्मासान् यावन्न भवन्त्यपि यदापि भवन्ति तदापि जघन्यत एको द्वौ त्रयो वा उत्कर्षतः सहस्रपृथक्त्वं, केवलमाहारकसमुद्घात आहारकशरीरप्रारम्भकाले न शेषकाले ततः स्तोका एव युगपदाहारकसमुद्घाताः प्राप्यन्ते इति सर्वस्तोका आहारकसमुद्घातेन समुद्धताः, तेभ्यः केवलिसमुद्घातेन समुद्धताः संख्येयगुणाः, तेषामेककालं शतपृथक्त्वेन प्राप्यमाणत्वात्, यद्यप्याहारकशरीरिणः सत्तया समकालमेको द्वौ वा त्रयो वा उत्कर्षतः सहस्रपृथक्त्वमानाः प्राप्यन्ते तथाप्या ( पि स्तोकानामा ) हारकसमुद्घातसम्भवात् एककालमतिस्तोकाः प्राप्यन्ते इति न तेभ्यः केवलिसमुद्घातसमुद्धतानां संख्येयगुणत्वविरोधः, केवलिसमुद्घातसमुद्धतेभ्यः तैजससमुद्घातेन समवहताः ? असंख्येयगुणाः, पञ्चेन्द्रियतिर्यग्योनिकानां मनुष्याणां देवानामपि च तैजससमुद्घातसम्भवात्, तेभ्योऽपि वैक्रियसमुद्घातेन समुद्धता असंख्येयगुणाः नारकवातकायिकानामपि वैक्रियसमुद्घातसम्भवात्, वातकायिकाश्च वैक्रियलब्धिमन्तो न स्तोकाः किन्तु देवेभ्योऽप्यसंख्येयगुणाः । कथमेतदिति चेत्, उच्यते—इह बादरपर्याप्तवायुकायिकाः स्थलचरपञ्चेन्द्रियेभ्योऽसंख्येयगुणाः, महादण्डके तथा पठितत्वात्, स्थलचरपञ्चेन्द्रियाश्च देवेभ्योऽप्यसंख्येयगुणाः, ततो यद्यपि बादरपर्याप्तवायुकायिकानां संख्येयभागमात्रस्य वैक्रियलब्धिसम्भवः । यत उक्तम्—"तिण्हं ताव रासीणं वेउव्वियलद्धी चेव नत्थि, बायरपज्जत्ताणं पि संखेज्जइभागमेत्ताणं" ति, तथापि संख्येयभागमात्रा वैक्रियलब्धिमन्तो देवेभ्योऽप्यसंख्येयगुणा भवन्ति, ततो नैरयिकाणां वायुकायिकानां च वैक्रियसमुद्घातसम्भवादुपपद्यन्ते तैजससमुद्घातसमुद्धतेभ्यो वैक्रियसमुद्घातेन समुद्धता असंख्येयगुणाः, तेभ्योऽपि मारणान्तिकसमुद्घातेन समुद्धता अनन्तगुणाः, कथम् ?, उच्यते, इह निगोदजीवानामनन्तानामसंख्येयो भागः सदा विग्रहगतौ वर्त्तमानः प्राप्यते, ते च प्रायो मारणान्तिकसमुद्घातसमुद्धता इति पूर्वेभ्योऽनन्तगुणाः, तेभ्योऽपि कषायसमुद्घातसमुद्धता असंख्येयगुणाः, निगोदजीवानामेवानन्तानां विग्रहगत्यापन्नेभ्योऽसंख्येयगुणानां कषायसमुद्घातसमुद्धतानां सदा प्राप्यमाणत्वात्, तेभ्योऽपि वेदनासमुद्घातेन समुद्धता विशेषाधिकाः, तेषामेव निगोदजीवानामनन्तानां कषायसमुद्घातसमुद्धतेभ्यो मनाक् विशेषाधिकानां सदा वेदनासमुद्घातेन समुद्धततयाऽवाप्यमानत्वात्, तेभ्योऽपि एकेनापि समुद्घातेनासमुद्धता असंख्येयगुणाः, वेदनाकषायमरणसमुद्घातसमुद्धतेभ्यो निगोदजीवानामेवासंख्येयगुणानामसमवहतानां सदा लभ्यमानत्वात् । सम्प्रत्येतदेवाल्पबहुत्वं जीवविशेषेषु नैरयिकादिषु चतुर्विंशतिदण्डकक्रमेण यथायोगं चिचिन्तयिषुराह—'नेरइयाणं' मित्यादि प्रश्नसूत्रं, भगवानाह—सर्वस्तोका नैरयिका मारणान्तिकसमुद्घातेन समुद्धताः, मारणान्तिको हि समुद्घातो मरणकाले भवति, मरणं च शेषजीवराशिनारकराश्यपेक्षयाऽतिस्तोकानां, न च सर्वेषां म्रियमाणानामविशेषेण मारणान्तिकसमुद्घातः, किन्तु कतिपयानाम्, 'समोहया वि मरंति असमोहया वि मरंती' ति वचनात् । अतः सर्वस्तोका मारणान्तिकसमुद्घातसमुद्धताः, तेभ्योऽपि वैक्रियसमुद्घातेन समुद्धताः असंख्येयगुणाः, सप्तस्वपि पृथिवीषु प्रत्येकं बहूनां परस्परवेदनोदीरणाय निरन्तरमुत्तरवैक्रियसमारम्भसम्भवात् तेभ्योऽपि कषायसमुद्घातेन समुद्धताः संख्येयगुणाः, कृतोत्तरवैक्रियाणामकृतोत्तरवैक्रियाणां च सर्वसंख्ययोत्तरवैक्रियारम्भकेभ्योऽसंख्येयगुणानां कषायसमुद्घातसमुद्धतत्वेन प्राप्यमाणत्वात्, तेभ्योऽपि वेदनासमुद्घातेन समुद्धताः संख्येयगुणाः, यथायोगं क्षेत्रजपरमाधार्मिकोदीरितपरस्परोदीरितवेदनाभिः प्रायो बहूनां सदा समुद्धतत्वेन प्राप्यमाणत्वात्, तेभ्योऽप्येकेनापि समुद्घातेनासमवहताः संख्येयगुणाः, वेदनासमुद्घातमन्तरेणाप्यतिबहूनां सामान्यतो वेदनामनुभवतां सम्भवात् । सम्प्रत्यसुरकुमाराणामल्पबहुत्वमाह—'एएसि णं' मित्यादि प्रश्नसूत्रं सुगमं, भगवानाह—गौतम ! सर्वस्तोका असुरकुमारास्तैजससमुद्घातेन समुद्धताः, तैजसो हि समुद्घातो महति कोपावेशे क्वचित् कदाचित्केषाञ्चिद्भवति, ततस्तेन समुद्घातेन समुद्धताः सर्वस्तोकाः, तेभ्यो मारणान्तिकसमुद्घातेन समुद्धता असंख्येयगुणाः, तेभ्यो वेदनासमुद्घातेन समुद्धताः असंख्येयगुणाः, परस्परं युद्धादौ बहूनां वेदनासमुद्घातेन समुद्धतानां प्राप्यमाणत्वात्, तेभ्योऽपि कषायसमुद्घातेन समुद्धताः संख्येयगुणाः, येन तेन वा कारणेन बहूनां कषायसमुद्घातगमनसम्भवात्, तेभ्योऽपि वैक्रियसमुद्घातेन समुद्धताः संख्येयगुणाः, परिचारणाद्यनेकनिमित्तमतिबहूनामुत्तरवैक्रियकरणारम्भसम्भवात्, तेभ्योऽप्यसमवहता असंख्येयगुणाः बहूनामुत्तमजातीनां शुद्धसागरावगाढानां पूर्वोक्तेभ्योऽसंख्येयगुणानां केनापि समुद्घातेनासमवहतानां सदा लभ्यमानत्वात् । 'एवं' मित्यादि, यथा असुरकुमाराणामल्पबहुत्वमुक्तमेवं सर्वेषां भवनपतीनां द्रष्टव्यं, यावत् स्तनितकुमाराणामिति ॥ सम्प्रति पृथिवीकायिकगतमल्पबहुत्वमाह—'एएसि णं' मित्यादि, अत्र कषायसमुद्घातसमुद्धतानां

वेदनासमुद्धातसमुद्धतानां च संख्येयगुणत्वे असमवहतानां चासंख्येयगुणत्वे भावना स्वयं भावनीया सुगमत्वात्, 'एव' मित्यादि, पृथिवीकायिकगतेन प्रकारेणाल्पबहुत्वं तावद्वक्तव्यं यावद् वनस्पतिकायिकाः, वायुकायिकान् प्रति विशेषमभिधित्सुराह-' नवरं' मित्यादि, नवरं वातकायिकानामल्पबहुत्वचिन्तायामेवं वक्तव्य सर्वस्तोका वातकायिका वैक्रियसमुद्धातेन समुद्धता, बादरपर्याप्तसंख्येयभागस्य वैक्रियलब्धे सम्भवात्, तेभ्योऽपि मारणान्तिकसमुद्धातेन समुद्धता असंख्येयगुणा, पर्याप्तापर्याप्तसूक्ष्मबादरभेदभिन्नाना सर्वेषामपि वातकायिकानां मरणसमुद्धातसम्भवात् तेभ्योऽपि कषायसमुद्धातेन समुद्धता संख्येयगुणा, तेभ्योऽपि वेदनासमुद्धातेन समुद्धता विशेषाधिका, तेभ्योऽसमवहता असंख्येयगुणा, सकलसमुद्धातगतवातकायिकापेक्षया स्वभावस्थाना वातकायिकानां स्वभावत एवासंख्येयगुणतया प्राप्यमाणत्वात्। द्वीन्द्रियसूत्रे सर्वस्तोकाः द्वीन्द्रिया मारणान्तिकसमुद्धातेन समुद्धता, प्रतिनियतानामिव प्रश्नसमये मरणसद्भावात्, तेभ्यो वेदनासमुद्धातेन समुद्धता असंख्येयगुणा, शीतातपादिसम्पर्कतोऽतिप्रभूतानां वेदनासमुद्धातभावात्, तेभ्य कषायसमुद्धातेन समुद्धता असंख्येयगुणा, अतिप्रभूततराणा लोभादिकषायसमुद्धातभावात्, तेभ्योऽप्यसमवहता सख्येयगुणा, 'एव' मित्यादि, एवं द्वीन्द्रियगतेन प्रकारेण तावद्वक्तव्य यावच्चतुरिन्द्रिया। तिर्यक्पञ्चेन्द्रियसूत्रे सर्वस्तोकास्तैजससमुद्धातेन समुद्धता, कतिपयानामेव तेजोलब्धिभावात्, तेभ्यो वेदनासमुद्धातेनासमवहता असंख्येयगुणा, तेभ्योऽपि वैक्रियसमुद्धातेन समवहता असंख्येयगुणा, प्रभूताना वैक्रियलब्धेर्भावात्, तेभ्योऽपि मारणान्तिकसमुद्घातेन समवहता असंख्येयगुणा, सम्मूर्च्छिमजलचरस्थलचरखचराणामपि सर्वेषा वैक्रियलब्धिरहिताना प्रत्येकं पूर्वोक्तेभ्योऽसंख्येयगुणानां केषाञ्चित् गर्भजानामपि वैक्रियलब्धिरहिताना वैक्रियलब्धिमता च मरणसमुद्घातसम्भवात्, तेभ्योऽपि वेदनासमुद्घातेन समुद्धता असंख्येयगुणा, म्रियमाणजीवराश्यपेक्षया अपि अम्रियमाणानामसंख्येयगुणानां वेदनासमुद्घातभावात्, तेभ्य कषायसमुद्घातेन समुद्धता संख्येयगुणा, तेभ्योऽप्यसमवहता संख्येयगुणा। अत्र भावना प्रागिव मनुष्यसूत्रे सर्वस्तोका आहारकसमुद्घातेन समुद्धताः, अतिस्तोकानामेककालमाहारकशरीरप्रारम्भसंभवात्, तेभ्य केवलिसमुद्घातेन समुद्धता संख्येयगुणा, शतपृथक्त्वसंख्यया प्राप्यमाणत्वात्, तेभ्यस्तैजससमुद्धातेन समवहता संख्येयगुणा, शतसहस्रसंख्यया तेषा प्राप्यमाणत्वात्, तेभ्योऽपि वैक्रियसमुद्घातेन समुद्धता संख्येयगुणा, कोटिसंख्यया लभ्यमानत्वात्, तेभ्योऽपि मारणान्तिकसमुद्धातेन समवहता असंख्येयगुणाः संमूर्छिममनुष्याणामपि तद्भावात् तेषां चासंख्येयत्वात्, तेभ्योऽपि वेदनासमुद्धातेन समुद्धताः असंख्येयगुणा म्रियमाणराश्यपेक्षया असंख्येयगुणानाममम्रियमाणानां तद्भावसम्भवात्, तेभ्य कषायसमुद्धातेन समुद्धता संख्येयगुणा, प्रभूततया तेषा प्राप्यमाणत्वात्, तेभ्योऽप्यसमवहता असंख्येयगुणाः, सम्मूर्च्छिममनुष्याणामल्पकषायाणामुत्कटकषायिभ्योऽसंख्येयगुणानां सदा लभ्यमानत्वात्। व्यन्तरज्योतिष्कवैमानिका यथा असुरकुमारास्तथा वक्तव्या। तदेवमुक्तं समुद्धताऽसमुद्धतविषयमल्पबहुत्वम्।

(६) अधुना कषायसमुद्धातगतां विशेषवक्तव्यतामभिधित्सुराह-

कति णं भंते! कसायसमुग्घाया पण्णत्ता?, गोयमा! चत्तारि कसायसमुग्घाया पण्णत्ता, तं जहा-कोहसमुग्घाए माणसमुग्घाए मायासमुग्घाए लोहसमुग्घाए। नेरइयाणं भंते! कति कसायसमुग्घाया पण्णत्ता, गोयमा! चत्तारि कसायसमुग्घाया पण्णत्ता, एवं०जाव वेमाणियाणं। एगमेगस्स णं भंते! नेरइयस्स केवइया कोहसमुग्घाया अतीता? गोयमा! अणंता, केवइया पुरेक्खडा?, गोयमा! कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि जहन्नेणं एको वा दो वा तिष्णि वा उक्कोसेणं संखेज्जा वा असंखेज्जा वा अणंता वा, एवं० जाव वेमाणियस्स, एवं जाव ०लोभसमुग्घाए एते चत्तारि दंडगा। नेरइयाणं भंते! केवइया कोहसमुग्घाया अतीता?, गोयमा! अणंता, केवइया पुरेक्खडा?, गोयमा! अणंता, एवं०जाव वेमाणियाणं एवं०जाव लोभसमुग्घाए, एवं एए वि चत्तारि दंडगा। एगमेगस्स णं भंते! नेरइयस्स नेरइयत्ते केवइया कोहसमुग्घाया अतीता?, गोयमा! अणंता एवं जहा वेदणासमुग्घाओ भणितो तहा कोहसमुग्घातो वि निरवसेसं ०जाव वेमाणियत्ते। माणसमुग्घाए मायासमुग्घाए वि निरवसेसं जहा मारणंतियसमुग्घाए, लोहसमुग्घातो जहा कसायसमुग्घातो नवरं सव्वजीवा असुरादिनेरइएसु मोहकसाएणं एगुत्तरियाए नेयव्वा। नेरइयाणं भंते! नेरइयत्ते केवइया कोहसमुग्घाया अतीता?, गोयमा! अणंता, केवइया पुरेक्खडा?, गोयमा! अणंता, एवं ०जाव वेमाणियत्ते, नवं सट्ठाणपरट्ठाणेसु सव्वत्थ भाणियव्वा, सव्वजीवाणं चत्तारि वि समुग्घाया ०जाव लोभसमुग्घाओ ०जाव वेमाणियाणं वेमाणियत्ते। (सू० ३३६)।

'कइ ण' मित्यादि, इद सामान्यत कषायसमुद्धातविषय चतुर्विंशतिदण्डकक्रमगतं च सूत्र सुप्रतीतं, सम्प्रत्येकैकस्य नैरयिकादेश्चतुर्विंशतिदण्डकक्रमेण वैमानिकपर्यवसानस्य तद्वक्तव्यतामाह-' एगमेगस्स णं भंते!' इत्यादि, अत्रातीतसूत्र सुप्रतीतम्, पुरस्कृतसूत्रे-' कस्सइ अत्थि कस्सइ नत्थि' त्ति-यो नरकभवप्रान्ते वर्तमान स्वभावत एवाल्पकषायः कषायसमुद्धातमन्तरेण कालं कृत्वा नरकादुद्वृत्तो मनुष्यभवं प्राप्य कषायसमुद्धातमगत एव सेत्स्यति तस्य नास्ति पुरस्कृत एकोऽपि कषायसमुद्धातो, यस्यापि सन्ति तस्यापि जघन्यत एको द्वौ त्रयो वा, ते च प्रागुक्तस्वरूपस्य सकृत्कषायसमुद्घातगामिनो वेदितव्या, उत्कर्षत सख्येया असंख्येया

अनन्ता वा, तत्र संख्येयं कालं संसारावस्थायिन संख्येयाः, असंख्येयं कालमसंख्येयाः, अनन्तकालमनन्ताः। एवमसुरकुमारादिक्रमेण तावद् वाच्यं यावद्वैमानिकस्य, 'एव' मित्यादि, एवं—चतुर्विंशतिदण्डकक्रमेण मानादिकषायसमुद्घातसमुद्घातास्तावद्वक्तव्या यावल्लोभसमुद्घातः। एवमेते चत्वारः चतुर्विंशतिदण्डका भवन्ति, एते चैकैकनैरयिकादिविषया उक्ताः। सम्प्रत्येतानेव चतुश्चतुर्विंशतिदण्डकान् सकलनारकादिविषयानाह—'नेरइयाण' मित्यादि, अतीतसूत्रं सुप्रतीत, पुरस्कृता अनन्ताः, प्रश्नसमयभाविनां नारकाणां मध्ये बहूनामनन्तकालमवस्थायित्वात्। एवं—नैरयिकोक्तेन प्रकारेण तावद्वक्तव्य यावद्वैमानिकानां यथा चैष क्रोधसमुद्घातश्चतुर्विंशतिदण्डकक्रमेणोक्त· एवं मानादिसमुद्घाता अपि तावद् वक्तव्या यावल्लोभसमुद्घातः। एवमेतेऽपि सकलनारकादिविषयाश्चत्वारश्चतुर्विंशतिदण्डका भवन्ति। साम्प्रतमेकैकस्य नैरयिकादेर्नैरयिकादिषु भावेषु वर्तमानस्य कति क्रोधसमुद्घाता अतीता· कति भाविन इति निरूपयितुकाम आह—'एगमेगस्स ण' मित्यादि, एकैकस्य भदन्त! नैरयिकस्य विवक्षितप्रश्नसमयकालात् पूर्वं सकलमतीतं कालमवधीकृत्य तदा तदाऽस्य नैरयिकत्वं प्राप्तस्य सत· सर्वसंख्यया कियन्तः क्रोधसमुद्घाता अतीताः?, भगवानाह—गौतम! अनन्ता·, नरकगतेरनन्तश· प्राप्तत्वात्, एकैकस्मिँश्च नरकभवे जघन्यपदेऽपि संख्येयानां क्रोधसमुद्घातानां भावात्, 'एवं जहे' त्यादि, एवमुपदर्शितेन प्रकारेण यथा वेदनासमुद्घात· प्राग् भणितस्तथा क्रोधसमुद्घातोऽपि भणितव्य·, कथं भणितव्यः?, इत्याह—निरवशेषं, क्रियाविशेषणमेतत्, सामस्त्येनेत्यर्थः। कियद्दूरं यावद् भणितव्यमित्याह—यावद् वैमानिकत्वे, वैमानिकस्य वैमानिकत्व इत्यालापकम्। यावदित्यर्थः, स चैवम्—'केवइया पुरेक्खडा?, गोयमा! कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि जहण्णेणं एक्को वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा वा असंखेज्जा वा, अणंता वा, एवमसुरकुमारत्ते० जाव वेमाणियत्ते, 'एगमेगस्स णं भंते! असुरकुमारस्स नेरइयत्ते केवइया कोहसमुग्घाया अतीता?, गोयमा! अणंता, केवइया पुरेक्खडा?, गोयमा! कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि तस्स सिय संखेज्जा सिय असंखेज्जा सिय अणंता। एवमेगस्स णं भंते! असुरकुमारस्स असुरकुमारत्ते केवइया कोहसमुग्घाया अतीता?, गोयमा! अणंता, केवइया पुरेक्खडा?, गोयमा! कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि जहण्णेणं एक्को वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा वा असंखेज्जा वा अणंता वा, एवं नागकुमारत्ते० जाव वेमाणियत्ते, एवं जहा असुरकुमारेसु नेरइया वेमाणियपज्जवसाणेसु भणिया तहा णागकुमारादिया सट्ठाणपरट्ठाणेसु भाणियव्वा० जाव वेमाणियत्ते' इति, अस्यार्थ—कियन्तो भदन्त! एकैकस्य नारकस्या संसारमोक्षमनन्तं काल मर्यादीकृत्य नैरयिकत्वे भाविनः स(न्त·)त· सर्वसंख्यया पुरस्कृता· क्रोधसमुद्घाता?, भगवानाह—'कस्सइ अत्थि' इत्यादि, य आसन्नमरण क्रोधसमुद्घातमनासाद्यात्यन्तिकमरणेन नरकादुद्वृत्त· सेत्स्यति तस्य नास्ति नैरयिकत्वभाविन एकोऽपि पुरस्कृत· क्रोधसमुद्घातः, शेषस्य तु सन्ति। यस्यापि सन्ति तस्यापि जघन्यत एको द्वौ त्रयो वा, एतच्च क्षीणशेषायुषां तद्भवस्थानां भूयो नरकेषु उ(त्पत्स्य)त्पद्यमानानां वेदितव्यं, भूयो नरकेषूत्पत्तौ हि जघन्यपदेऽपि संख्येयाः प्राप्यन्ते, नैरयिकाणां क्रोधसमुद्घातप्रचुरत्वात्, उत्कर्षतः संख्येया वा असंख्येया वा अनन्ता वा। तत्र सकृन्नरकेषु जघन्यस्थितिकेषूत्पत्स्यमानस्य संख्येया अनेकश·, यदि वा—दीर्घस्थितिकेषु सकृदपि उत्पत्स्यमानस्यासंख्येयाः, अनन्तश उत्पत्स्यमानस्यानन्ता·, 'एव' मित्यादि, एवं नैरयिकोक्तप्रकारेणासुरकुमारत्वे तदनन्तरं चतुर्विंशतिदण्डकक्रमेण, तावद्वक्तव्यं यावद्वैमानिकत्वविषयं सूत्रम्, तच्चैवम्—'एगमेगस्स णं भंते! नेरइयस्स वेमाणियत्ते केवइया कोहसमुग्घाया अईया?, गोयमा! अणंता, केवइया पुरेक्खडा?, गोयमा! कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि जहण्णेणं एक्को वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा वा, असंखेज्जा वा अणंता वा' अत्राप्ययं भावार्थः—अतीतचिन्तायामनन्ताः, अनन्तशो वैमानिकत्वस्य प्राप्तत्वात्, पुरस्कृतचिन्तायां योऽनन्तरभवे नरकादुद्वृत्तो मानुषत्वमवाप्य सेत्स्यति, प्राप्तो वा परम्परया सकृद्वैमानिकभवं न क्रोधसमुद्घातं गन्ता, तस्यैकोऽपि पुरस्कृतः क्रोधसमुद्घातो वैमानिकत्वे न विद्यते, यस्त्वसकृद्वैमानिकत्वं प्राप्तः सन् सकृदेव क्रोधसमुद्घातं याता तस्य—जघन्यत एको द्वौ वा त्रयो वा, शेषस्य संख्यातान् वारान् वैमानिकत्वं प्राप्स्यतः संख्येयाः, असंख्येयान् वारान् असंख्येयाः, अनन्तान् वारान् अनन्ता·। 'एगमेगस्स ण' मित्यादि प्रश्नसूत्रं सुगमं, 'गोयमा! अणंता' इति, अनन्तशो नैरयिकत्वं प्राप्तस्य, एकैकस्मिंश्च नैरयिकभवे जघन्यपदेऽपि संख्येयानां क्रोधसमुद्घातानां भावात्, पुरस्कृता· कस्यचित्सन्ति कस्यचिन्न सन्ति। किमुक्तं भवति?,—योऽसुरकुमारभवादुद्वृत्तो, न नरकं यास्यति, किन्त्वनन्तरं परम्परया वा मनुष्यभवमवाप्य सेत्स्यति तस्य नैरयिकावस्थाभाविनः पुरस्कृताः क्रोधसमुद्घाताः न सन्ति नैरयिकत्वावस्थाया एवासम्भवात्, यस्तु तद्भवादूर्ध्वं पारम्पर्येण नरकगामी तस्य सन्ति, तस्यापि कस्यचित्संख्येया·, कस्यचिदसंख्येया·, कस्यचिदनन्ताः। तत्र यः सकृज्जघन्यस्थितिकेषु नरकेष्वेषु समुत्पत्स्यते तस्य जघन्यपदेऽपि संख्येया दशवर्षसहस्रप्रमाणायामपि स्थितौ संख्येयानां क्रोधसमुद्घातानां भावात् क्रोधबहुलत्वान्नारकाणाम्, असकृद्दीर्घस्थितिषु सकृद्वा गमनेऽसंख्येयाः, अनन्तशो नरकगमनेऽनन्ता·। तथा एकैकस्य भदन्त! असुरकुमारस्य असुरकुमारत्वे स्थितस्य, सतः सकलमतीतकालमधिकृत्य कियन्तः क्रोधसमुद्घाता अतीता·?, भगवानाह—अनन्ता· अनन्तशोऽसुरकुमारभावस्य प्राप्तत्वात्, प्रतिभवं च क्रोधसमुद्घातस्य प्रायो भावात्, पुरस्कृतचिन्तायां कस्यापि सन्ति कस्यापि न सन्ति, यस्य प्रश्नकालादूर्ध्वमसुरकुमारत्वेऽपि वर्त्तमानस्य न भावी क्रोधसमुद्घातो नापि तत उद्वृत्तो भूयोऽप्यसुरकुमारत्वं याता तस्य न सन्ति, यस्तु सकृदसु-

रकुमारत्वमागामी तस्य जघन्यपदे एको वा द्वौ वा त्रयो वा उत्कर्षत संख्येया असख्येया अनन्ता वा, संख्येयान् वारान् आगामिन सख्येया, असंख्येयान् वारान् असंख्येया., अनन्तान् वारान् अनन्ता। एवं चतुर्विंशतिदण्डकक्रमेण नागकुमारत्वादिपु स्थानेपु असुरकुमारस्य निरन्तरं तावद्वक्तव्यं यावद्वैमानिकत्वे, तथा चाह—' एव नागकुमारत्ते वी ' त्यादि, तदेवमसुरकुमारेपु क्रोधसमुद्धातश्चिन्तित ॥ सम्प्रति नागकुमारादिष्वतिदेशमाह—' एव ' मित्यादि, एवमुक्तेनाभिलापगतेन प्रकारेण यथा चतुर्विंशतिदण्डकक्रमेण असुरकुमारो नैरयिकादिपु वैमानिकपर्यवसानेषु भणित. तथा नागकुमाराद्य. समस्तेपु स्वस्थानपरस्थानेपु भणितव्या यावद्वैमानिकस्य वैमानिकत्वे आलापक, एवमेतानि नैरयिकचतुर्विंशतिदण्डकादिसूत्राणि वैमानिकचतुर्विंशतिदण्डकपर्यवसानानि चतुर्विंशति. सूत्राणि वेदितव्यानि। तदेवं चतुर्विंशतिदण्डकसूत्रै क्रोधसमुद्घातश्चिन्तित. ॥ सम्प्रति चतुर्विंशत्यैव चतुर्विंशतिदण्डकसूत्रैर्मानसमुद्घात मायासमुद्घातं चाभिधित्सुरतिदेशमाह— माणसमुग्घाए मायासमुग्घाए निरवसेसं जहा मारणंतियसमुग्घाए ' इति— यथा—प्राक् मारणान्तिकसमुद्घातेऽभिहित सूत्र तथा मानसमुद्घाते मायासमुद्घाते च निरवशेषमभिधातव्यम्। नवरमेवम्—' एगमेगस्स ण भंते! नेरइयस्स नेरइयत्ते केवइया माणसमुग्घाया अईया?, गोयमा! अणंता, केवइया पुरेक्खडा?, गोयमा! कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि जहण्णेणं एको वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा वा असंखेज्जा वा अणंता वा, एवमसुरकुमारत्ते ०जाव वेमाणियत्ते, एगमेगस्स णं भंते! असुरकुमारस्स नेरइयत्ते केवइया माणसमुग्घाया अतीता?, गोयमा!, अणंता, केवइया पुरेक्खडा?, गोयमा! कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि जहण्णेणं एको वा दो वा तिण्णि वा उक्कोसेणं सखेज्जा वा असखेज्जा वा अणंता वा, एव नागकुमारत्ते ०जाव वेमाणियत्ते, एवं जहा असुरकुमारे नेरइया वेमाणियपज्जवसाणेसु भणिया तहा नागकुमाराइया सट्ठाणपरट्ठाणेसु भाणियव्वा ०जाव वेमाणियस्स वेमाणियत्ते ' अस्यायमर्थ —अतीतेपु सूत्रेपु सर्वत्राप्यनन्तत्वं सुप्रतीतं, नैरयिकत्वादिस्थानानि प्रत्यक्मनन्तश. प्राप्तत्वात्, पुरस्कृतचिन्तायां त्वेव नैरयिकस्य नैरयिकत्वे भावना—यो नैरयिक प्रश्नकालादूर्ध्वं मानसमुद्घातमन्तरेण कालं कृत्वा नरकादुद्वृत्तोऽनन्तर पारम्पर्येण वा मनुष्यभवमवाप्य सेत्स्यति न भूयो नरकमागन्ता तस्य न सन्ति पुरस्कृता मानसमुद्घाता, य पुनस्तद्भवे वर्त्तमानो भूयो वा नरकमागत्यैक वार मानसमुद्घातं गत्वा कालकरणेन नरकादुद्वृत्त सेत्स्यति तस्यैक पुरस्कृतो मानसमुद्घातः। एवमेव कस्यापि द्वौ कस्यापि त्रय सख्येयान् वारान् नरकमागन्तु संख्येया, असख्येयान् वारान् असंख्येया, अनन्तान् वारान् अनन्ता। नैरयिकस्यैवासुरकुमारत्वे पुरस्कृतचिन्तायामिय भावना-यो नरकादुद्वृत्तो असुरकुमारत्व न यास्यति तस्य न सन्ति पुरस्कृता मानसमुद्घाता, यस्त्वेकं वारं गन्ता तस्य एको द्वौ त्र्यादयो वा संख्येयान् वारान् गन्तु संख्येया, असंख्येयान् वारान् असंख्येया, अनन्तान् वारान् अनन्ता.। एव तावद् भणनीय यावत् तिर्यक्पञ्चेन्द्रियत्वे पुरस्कृतचिन्ता, मनुष्यचिन्तायां चैव भावना-यो नरकादुद्वृत्तो मनुष्यभव प्राप्य मानसमुद्घातमगत्वा सेत्स्यति तस्य नास्त्येकोऽपि पुरस्कृतो मानसमुद्घात, यस्तु मनुष्यत्वं गत सन्नेक वारं मानसमुद्घात गन्ता तस्यैकोऽपरस्य द्वावन्यस्य त्र्यादय सख्येयान् वारान् गन्तुः संख्येया, असख्येयान् वारान् असंख्येया, अनन्तान् वारान् अनन्ता.। व्यन्तरज्योतिष्कवैमानिकत्वेपु भावना यथा असुरकुमारत्वे यथा च नैरयिकस्य नैरयिकत्वादिपु चतुर्विंशतिस्थानेपु भावना कृता तथा असुरकुमारादीनामपि वैमानिकपर्यवसानाना चतुर्विंशतिदण्डकक्रमेण कर्त्तव्या, यथा च मानसमुद्घातस्य चतुर्विंशति सूत्राणि चतुर्विंशतिदण्डकक्रमेणोक्तानि तथा मायासमुद्घातस्यापि चतुर्विंशतिसूत्राणि चतुर्विंशतिदण्डकक्रमेण वक्तव्यानि, तुल्यगमकत्वात् ॥ अधुना लोभसमुद्घातमतिदेशत आह— ' लोभसमुग्घाओ जहा कसायसमुग्घाओ, नवरं सव्वजीवा असुराई नेरइएसु लोभकसाएणं एगुत्तरियाए नेतव्वा ' इति। यथा प्राक् कषायसमुद्घात उक्तस्तथा लोभकषायोऽपि वक्तव्य, नवरं तत्रासुरकुमारादीना नैरयिकत्वे पुरस्कृतचिन्तायां स्यात् सख्येया, स्यादसंख्येया, स्यादनन्ता इत्युक्तम्, अत्र तु सर्वे जीवा असुरकुमारादयो नैरयिकेपु पुरस्कृतचिन्तायां चिन्त्यमाना एकोत्तरिकया ज्ञातव्या, एकोत्तरस्य भाव एकोत्तरिका 'द्वन्द्वचुरादिभ्यो वुञि'ति चौरादेराकृतिगणतया वुञिति, एको द्वौ त्रय इत्यादिरूपा तया, एकोत्तरतया इत्यर्थ। नैरयिकाणां निरतिशयदु खवेदनाभिभूततया नित्यमुद्विग्नाना प्रायो लोभसमुद्घातासम्भवात्, सूत्रालापकश्चैवम्-'एगमेगस्स ण भंते! नेरइयस्स नेरइयत्ते केवइया लोभसमुग्घाया अतीता?, गोयमा! अणंता, केवइया पुरेक्खडा?, गोयमा! कस्सइ अत्थि कस्सइ नत्थि, जस्स अत्थि ( जहण्णेण ) एको वा दो वा तिण्णि वा उक्कोसेणं सखेज्जा वा असखेज्जा वा अनंता वा। एगमेगस्स णं भंते! नेरइयस्स असुरकुमारत्ते केवइया लोभसमुग्घाया अतीता?, गोयमा! अणंता, केवइया पुरेक्खडा?, गोयमा! कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि सिय संखेज्जा सिय असखेज्जा सिय अणंता, एवं० जाव नेरइयस्स थणियकुमारत्ते। एगमेगस्स णं भंते! नेरइयस्स पुढविकाइयत्ते केवइया लोभसमुग्घाया अतीता?, गोयमा! अणंता, केवइया पुरेक्खडा?, गोयमा! कस्सइ अत्थि कस्सइ नत्थि जस्स अत्थि जहण्णेणं एक्को वा दो वा तिण्णि वा उक्कोसेणं सखेज्जा वा असखेज्जा वा अणंता वा, एवं० जाव मणुसत्ते वाणमंतरत्ते जहा असुरकुमारत्ते। एगमेगस्स ण भंते! नेरइयस्स जोइसियत्ते केवइया लोभसमुग्घाया अतीता?, गोयमा! अणंता, केवइया पुरेक्खडा?, गोयमा! कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि जहण्णेणं एक्को वा दो वा तिण्णि वा उक्कोसेणं सिय संखेज्जा सिय असंखेज्जा सिय अणंता, एवं० जाव वेमाणियत्तेऽवि भाणियव्व। एगमेगस्स णं भंते! असुरकुमारस्स नेरइयत्ते

केवइया लोभसमुग्घाया अतीता ?, गोयमा ! अणंता, केवइया पुरेक्खडा ?, गोयमा ! कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं संखेज्जा वा असंखेज्जा वा अणंता वा । एगमेगस्स णं भंते ! असुरकुमारस्स असुरकुमारत्ते केवइया लोभसमुग्घाया अतीता ? गोयमा ! अणंता केवइया पुरेक्खडा ?, गोयमा ! कस्सइ अत्थि कस्सइ नत्थि जस्सत्थि जहन्नेणं एक्को वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा वा असंखेज्जा वा अणंता वा । एगमेगस्स णं भंते ! असुरकुमारस्स नागकुमारत्ते पुच्छा ?, गोयमा ! अणंता. केवइया पुरेक्खडा ?, गोयमा ! कस्सइ अत्थि कस्सइ नत्थि जस्सत्थि सिय संखेज्जा सिय असंखेज्जा सिय अणंता, एवं ०जाव थणियकुमारत्ते । पुढविकाइयत्ते ०जाव वेमाणियत्ते जहा नेरइयस्स भणितं तहेव भाणियव्वं, एवं ०जाव थणियकुमारस्स वेमाणियत्ते । एगमेगस्स णं भंते ! पुढविकाइयस्स नेरइयत्ते केवइया लोभसमुग्घाया अतीता ?, गोयमा ! अणंता, केवइया पुरेक्खडा ?, गोयमा ! कस्सइ अत्थि कस्सइ नत्थि जस्सत्थि जहण्णेणं एक्को वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा वा असंखेज्जा वा अणंता वा । पुढविकाइयस्स असुरकुमारत्ते अतीता अणंता, केवइया पुरेक्खडा ?, गोयमा ! कस्सइ अत्थि कस्सइ नत्थि, जस्सत्थि सिय संखेज्जा वा सिय असंखेज्जा वा सिय अणंता, एवं०जाव थणियकुमारत्ते पुढविकाइयत्ते अतीता अणंता, पुरेक्खडा कस्सइ अत्थि कस्सइ नत्थि. जस्सत्थि जहण्णेण एक्को वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा वा असंखेज्जा वा अणंता वा, एवं ०जाव मणूसत्ते । वाणमंतरत्ते जहा असुरकुमारत्ते, जोइसियत्ते वेमाणियत्ते अतीता अणंता पुरेक्खडा, कस्सइ अत्थि कस्सइ नत्थि जस्सत्थि सिय संखेज्जा सिय असंखेज्जा सिय अणंता । एवं ०जाव मणूसस्स वेमाणियत्ते । वाणमंतरस्स जहा असुरकुमारस्स एवं जोइसियवेमाणियाणं पि' अस्यायमर्थ —नैरयिकस्य नैरयिकत्वे अतीता लोभसमुद्घाता अनन्ता अनन्तशो नैरयिकत्वस्य प्राप्तत्वात्, पुरस्कृतचिन्तायां कस्यचित्सन्ति कस्यचिन्न सन्ति, तत्र यः प्रश्नसमयादूर्ध्वं लोभसमुद्घातमप्राप्त एव नरकभवादुद्वृत्त्यानन्तरं पारम्पर्येण वा सेत्स्यति नच भूयो नरकमागामी नचागतोऽपि लोभसमुद्घातं गन्ता तस्य नैकोऽपि पुरस्कृतो लोभसमुद्घात, शेषस्य तु भावी तस्यापि कस्यचिदेकः कस्यचिद् द्वौ, कस्यचित् त्रयः। एतच्च प्रश्नसमयादूर्ध्वमपि तद्भवभाजा सकृन्नरकभवगामिनां वा वेदितव्यम्, उत्कर्षत संख्येया वा असंख्येया वा अनन्ता वा । तत्र संख्येयान् वारान् नरकभवमागामिन संख्येया, असंख्येयान् वारान् असंख्येयाः, अनन्तान् वारान् अनन्ताः । तथा नैरयिकत्वस्यासुरकुमारत्वविषयेऽतीतसूत्रं तथैव भावनीयम्, पुरस्कृतसूत्रे-' कस्सइ अत्थि कस्सइ नत्थि ' त्ति-यो नरकभवादुद्वृत्तो नासुरकुमारत्वं प्राप्स्यति तस्य न सन्त्यसुरकुमारत्वविषयाः पुरस्कृता लोभसमुद्घाता, यस्तु प्राप्स्यति तस्य सन्ति । ते च जघन्यपदे संख्येया, जघन्यस्थितावप्यसुरकुमाराणां संख्येयानां लोभसमुद्घातानां भावात् लोभबहुलत्वाच्चैषाम्, उत्कृष्टपदेऽसंख्येया अनन्ता वा तत्र सकृद्दीर्घस्थिनावसकृज्जघन्यस्थितिषु दीर्घस्थितिषु वा उत्पत्स्यमानानामवसेयम्, अनन्तश उत्पत्स्यमानानामनन्ताः, एवं नैरयिकस्य नागकुमारत्वादिषु स्थानेषु निरन्तरं तावद्वक्तव्यं यावत्स्तनितकुमारत्वे, तथा चाह-'एवं जाव थणियकुमारत्ते ' पृथिवीकायिकत्वेऽतीतसूत्र तथैव । पुरस्कृतचिन्तायां तु कस्यापि सन्ति कस्यापि न सन्ति, तत्र नरकादुद्वृत्तो यो न पृथिवीकायिकत्वं प्राप्स्यति तस्य न सन्ति, योऽपि गन्ता तस्य जघन्यपदे एको द्वौ वा त्रयो वा उत्कर्षतः संख्येया असंख्येया अनन्ता वा । न चैवम्-तिर्यक्पञ्चेन्द्रियभवात् मनुष्यभवाद्वा लोभसमुद्घातेन समुद्धत सन् य एकं वारं पृथिवीं गन्ता तस्य एकः द्वौ वारौ गन्तुर्द्वौ, त्रीन् वारान् गन्तुस्त्रय, संख्येयान् वारान् संख्येयाः, असंख्येयान् वारान् असंख्येया, अनन्तान् वारान् अनन्ता, ' एवं० जाव मणूसत्ते ' इति, एवं—पृथिवीकायिकगतेनाभिलापप्रकारेण तावद्वक्तव्यम्, यावन्मनुष्यत्वे । तच्चैवम्—' एगमेगस्स णं भंते ! नेरइयस्स आउकाइयत्ते ' इत्यादि, यावन्मनुष्यसूत्रं, तत्राप्कायिकादिवनस्पतिपर्यन्तसूत्रभावना पृथिवीकायसूत्रवत्, द्वीन्द्रियसूत्रे पुरस्कृतचिन्ताया जघन्येन एको द्वौ वा त्रयो वेति, एतत् सकृत् द्वीन्द्रियभवं प्राप्तुकामस्य वेदितव्यम्, उत्कर्षेण संख्येया असंख्येया अनन्ता वा, तत्र संख्येयान् वारान् द्वीन्द्रियभवं प्राप्तुकामस्य संख्येयाः, असंख्येयान् वारान् असंख्येया, अनन्तान् वारान् अनन्ताः । एवं त्रीन्द्रियचतुरिन्द्रियसूत्रे अपि भावनीये, तिर्यक्पञ्चेन्द्रियसूत्रविषया त्वेवं भावना-सकृत्पञ्चेन्द्रियभवं गन्तुकामस्य स्वभावत एवाल्पलोभस्य जघन्यत एको द्वौ त्रयो वा, शेषस्य तूत्कर्षत संख्येयान् वारान् तिर्यक्पञ्चेन्द्रियभवं गन्तुः संख्येयाः, असंख्येयान् वारान् असंख्येयाः, अनन्तान् वारान् अनन्ता । मनुष्यसूत्रे तु पुरस्कृतविषया भावना मूलत एवम्-यो नरकभवादुद्वृत्तोऽल्पलोभकषायः सन् मनुष्यभवं प्राप्य लोभसमुद्घातमगत्वा सिद्धिपुरं यास्यति तस्य न सन्ति पुरस्कृता लोभसमुद्घाता, शेषस्य तु सन्ति। यस्य सन्ति तस्यापि जघन्यत एको द्वौ वा त्रयो वा, ते च एकं द्वौ त्रीन् वा लोभसमुद्घातान् प्राप्य सेत्स्यतो वेदितव्याः । संख्येयादय प्राग्वद् भावनीया । ' वाणमंतरत्ते जहा असुरकुमारा' इति यथा नैरयिकस्यासुरकुमारत्वे पुरस्कृतविषयं सूत्रमुक्तं तथा व्यन्तरत्वेऽपि वक्तव्यम् । किमुक्तं भवति-पुरस्कृतचिन्तायामेव वक्तव्यम् 'कस्सइ अत्थि कस्सइ नत्थि, जस्स अत्थि सिय संखेज्जा सिय असंखेज्जा सिय अणंता' इति, न त्वेकोत्तरिका वक्तव्या, व्यन्तराणामप्यसुरकुमाराणामिव जघन्यस्थितावपि संख्येयानां लोभसमुद्घातानां भावात् । ' जोइसियत्ते ' इत्यादि ज्योतिष्कत्वे अतीता अनन्ताः, अनन्तशो ज्योतिष्कत्वस्य प्राप्तत्वात्, पुरस्कृताः कस्यापि सन्ति कस्यापि न सन्ति, एतद् प्राग्वद् भावनीयम् । यस्यापि सन्ति तस्यापि कस्यचिदसंख्येयाः, कस्यचिदनन्ताः, न तु जातुचित् संख्येया, ज्योतिष्काणां जघन्यपदेऽप्यसंख्येयवर्षायुष्कतया जघन्यतोऽप्यसंख्येयानां लोभसमुद्घातानां भावात् लोभबहुलत्वात्तज्जाते । एवं वैमानिकत्वेऽपि पुरस्कृतचिन्तायां वक्तव्यम्, तदेवं स्वस्थाने परस्थाने च लोभसमुद्घातश्चिन्तित । सम्प्रत्यसुरकुमारस्य तं विचिन्तयिषुरिदमाह—' एगमेग-

स्स णं ' मित्यादि एकैकस्य असुरकुमारस्य नैरयिकत्वे लोभसमुद्घाता अतीता अनन्ताः, नैरयिकत्वस्यानन्तशः प्राप्तत्वात्, पुरस्कृता. कस्यचित्सन्ति कस्यचिन्न सन्ति, तत्र योऽसुरकुमारभवादुद्वृत्तो न नरकं याता नापि सकृद् गतोऽपि लोभसमुद्घातं गन्ता तस्य न सन्ति, यस्तु यास्यति तस्य जघन्यत एको द्वौ त्रयो वा उत्कर्षेत. संख्येया असंख्येया अनन्ता.। तत्र सकृन्नरकगामिन. एकादयो नैरयिकाणामिष्टद्रव्यसंयोगाभावत. प्रायो लोभसमुद्घातस्यासंभवात्। उक्तं च मूलटीकायाम्—" नेरइयाणं लोभसमुग्घाया थोवा चेव भवन्ति, तेसिमिट्ठदव्वसंजोगाभावाओ एगादिसंभव " इति। संख्येयान् वारान् नरकं गन्तु. संख्येया., असंख्येयान् वारान् असंख्येया', अनन्तान् वारान् अनन्ता.। असुरकुमारस्यासुरकुमारत्वे अतीता अनन्ता सुप्रतीता., पुरस्कृता कस्यापि सन्ति कस्यापि न सन्ति, तत्र योऽसुरकुमारभवे पर्यन्तवर्ती न च लोभसमुद्घातं याता नापि तत उद्वृत्तो भूयोऽप्यसुरकुमारत्वं याता किन्त्वनन्तरं पारम्पर्येण वा सेत्स्यति तस्य न सन्ति, यस्य तु सन्ति तस्यापि जघन्यत एको द्वौ वा त्रयो वा उत्कर्षतः संख्येया असंख्येया अनन्ता। तत्र एकादय क्षीणायु शेषाणां तद्भवभाजां भूयस्तथैवानुत्पद्यमानानामवगन्तव्या, संख्येयादयो नैरयिकस्येव भावनीया। असुरकुमारस्य नागकुमारत्वेऽतीता प्राग्वत्। पुरस्कृता कस्यापि सन्ति कस्यापि न सन्ति, तत्र योऽसुरकुमारभवादुद्वृत्तो न नागकुमारभवं गन्ता तस्य न सन्ति, शेषस्य तु सन्ति यस्यापि सन्ति तस्यापि स्यात् संख्येया, स्यादसंख्येया, स्यादनन्ता। तत्र सकृन्नागकुमारभवं प्राप्तुकामस्य संख्येया., जघन्यस्थितावपि संख्येयानां लोभसमुद्घातानां भावात्, असंख्येयान् वारान् प्राप्तुकामस्य असंख्येया, अनन्तान् वारान् अनन्ता। एवं यावत् स्तनितकुमारत्वे, पृथिवीकायिकत्वे यावद्वैमानिकत्वे यथा नैरयिकस्य भणितं तथैव भणितव्यम्। एवमसुरकुरस्येव नागकुमादेरपि तावद्वक्तव्यं यावत्स्तनितकुमारस्य। वैमानिकत्वे-वैमानिकत्वविषयं सूत्रम्, तच्चैवम्—' एगमेगस्स णं भंते! थणियकुमारस्स वेमाणियत्ते केवइया लोभसमुग्घाया अतीता ?' इत्यादि, एव एगमेगस्स णं भंते! पुढविकाइयस्स नेरइयत्ते ' इत्याद्यपि सूत्रं पूर्वोक्तभावनानुसारेण स्वयं भावनीयम्, तदेवं नैरयिकादेरेकत्वविषया क्रोधादिसमुद्घाता प्रत्येकं चतुर्विंशत्या चतुर्विंशतिदण्डकसूत्रैर्विचिन्तिता ॥ सम्प्रति तानेव नैरयिकादिबहुत्वविषयान् चिचिन्तयिषुरिदमाह—' नेरइयाणं भंते!' इत्यादि, नैरयिकाणां भदन्त! नैरयिकत्वे कियन्त. क्रोधसमुद्घाता अतीता ?, भगवानाह—गौतम! अनन्ता, अनन्तशो नैरयिकत्वस्य सर्वजीवै प्राप्तत्वात्, कियन्त पुरस्कृता.?, गौतम! अनन्ता, प्रश्नसमयभाविना मध्ये बहूनामनन्तशो नैरयिकत्वं प्राप्तुकामत्वात्, ' एव ' मित्यादि, एवं—नैरयिकगतेनाभिलापप्रकारेण चतुर्विंशत्या चतुर्विंशतिदण्डकसूत्रैर्निरन्तरं तावद्वक्तव्यं यावद्वैमानिकस्य वैमानिकत्वे—वैमानिकविषयं सूत्रम्, तच्चैवम्—' वेमाणियाणं भंते! वेमाणियत्ते केवइया कोहसमुग्घाया अतीता ?, गोयमा! अणंता, केवइया पुरेक्खडा ?, गोयमा! अणंता ' भावना प्राग्वद्। यथा च क्रोधसमुद्घाताः सर्वेषु जीवेषु स्वस्थाने परस्थाने चातीता पुरस्कृताश्चानन्तत्वेनाभिहिता तथा मानादिसमुद्घाता अपि वाच्या, तथा चाह—'एव' मित्यादि, एव—क्रोधसमुद्घातगतेन प्रकारेण चत्वारोऽपि समुद्घाता. सर्वत्रापि स्वस्थानपरस्थानेषु वाच्या, यावल्लोभसमुद्घातो वैमानिकत्वविषय उक्तो भवति। स चैवम्—' वेमाणियाणं भंते! वेमाणियत्ते केवइया लोभसमुग्घाया अतीता ?, गोयमा! अणंता, केवइया पुरेक्खडा ?, गोयमा! अणंता ' सुगमम्। तदेवं नैरयिकादिबहुत्वविषया अपि क्रोधादिसमुद्घाता प्रत्येक चतुर्विंशत्या चतुर्विंशतिदण्डकसूत्रैश्चिन्तिता।

(१०)सम्प्रति क्रोधादिसमुद्घातैः शेषसमुद्घातैश्च समवहतानामसमवहतानां च परस्परमल्पबहुत्वमभिधित्सुः प्रथमत. सामान्यतो जीवविषयं तावदाह—

एतेसि णं भंते! जीवाणं कोहसमुग्घाएणं माणसमुग्घाएणं मायासमुग्घाएणं लोभसमुग्घाएण य समोहयाणं अकसायसमुग्घाएणं समोहयाणं असमोहयाण य कयरे कयरेहिंतो अप्पा वा०४ ?, गोयमा! सव्वत्थोवा जीवा अकसायसमुग्घाएणं समोहयाणं माणसमुग्घाएणं समोहया अणंता०, कोहसमुग्घाएणं समोहया विसेसाहिया मायासमुग्घाएणं समोहया विसेसाहिया लोभसमुग्घाएणं समोहया विसेसाहिया असमोहया संखेज्जगुणा। एतेसि णं भंते! नेरइयाणं कोहसमुग्घाएणं माणसमुग्घाएणं मायासमुग्घाएणं लोभसमुग्घाएणं समोहयाणं असमोहयाण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा! सव्वत्थोवा नेरइया लोभसमुग्घाएणं समोहया, मायासमुग्घाएणं समोहया संखेज्जगुणा वा, माणसमुग्घाएणं समोहया संखेज्जगुणा, कोहसमुग्घाएणं संखेज्जगुणा, असमोहया संखेज्जगुणा। असुरकुमाराणं पुच्छा, गोयमा! सव्वत्थोवा असुरकुमारा णं,कोहसमुग्घायाएणं समोहया माणसमुग्घाएणं समोहणया संखेज्जगुणा,मायासमुग्घाएणं समोहया संखेज्जगुणा। लोभसमुग्घाएणं समोहया संखेज्जगुणा असमोहया संखेज्जगुणा, एवं सव्वदेवा० जाव वेमाणिया। पुढविकाइयाणं पुच्छा, गोयमा! सव्वत्थोवा पुढविकाइया माणसमुग्घाएणं समोहया, कोहसमुग्घाएणं समोहया, विसेसाहिया मायासमुग्घाएणं समोहया विसेसाहिया लोभसमुग्घाएण य समोहणया विसेसाहिया असमोहणया संखेज्जा, एवं० जाव पंचिंदियतिरिक्खजोणिया, मणुस्सा जहा जीवा, णवरं माणसमुग्घाएणं समोहणया असंखेज्जा। ( सू० ३४० )

'एएसि णं' मित्यादि, एतेषां भदन्त ! जीवानां क्रोधसमुद्घातेन मानसमुद्घातेन मायासमुद्घातेन लोभसमुद्घातेन च समवहतानाम् अकषायेणेति—कषायव्यतिरेकेण शेषेण समुद्घातेन समवहतानामसमवहतानाना च कतरे कतरेभ्य' अल्पा वा बहवो वा ? , 'अर्थवशाद्विभक्तिपरिणाम' इति न्यायात् पञ्चम्या स्थाने तृतीयापरिणामनात्तु कतरे कतरैस्तुल्या वा, तथा कतरे कतरेभ्यो विशेषाधिका., एव गौतमेन पृष्टे भगवानाह—गौतम ! सर्वस्तोका जीवा अकषायसमुद्घातेन कषायव्यतिरिक्तेन शेषवेदनादिसमुद्घातषट्केन समवहता., कषायव्यतिरिक्तसमुद्घातमुद्धता हि कचित् कदाचित् केचिदेव प्रतिनियता लभ्यन्ते, ते चोत्कर्षपदेऽपि कषायमुद्घातसमवहतापेक्षया अनन्तभागे वर्तन्ते, तत. स्तोका , तभ्यो मानसमुद्घातसमवहता अनन्तगुणा , अनन्ताना वनस्पतिजीवाना पूर्वभवसंस्कारानुवृत्तितो मानसमुद्घाते वर्त्तमानाना प्राप्यमाणत्वात् , तेभ्य. क्रोधसमुद्घातेन समवहता विशेषाधिका.,मानापेक्षया क्रोधिना प्रचुरत्वात्, तेभ्यो मायामुद्घातेन समवहता विशेषाधिका , क्रोधापेक्षया मायाविना प्रचुरत्वात्, तेभ्योऽपि लोभसमुद्घातेन समवहता विशेषाधिका., मायाविभ्यो लोभवतामतिप्रभूतत्वात् , तेभ्योऽपि केनाप्यसमवहता. संख्येयगुणा , चतसृष्वपि गतिषु प्रत्येक समवहतेभ्योऽसमवहतानां सदा संख्येयगुणतया प्राप्यमाणत्वात्। सिद्धास्त्वेकेन्द्रियापेक्षयाऽनन्तभागवर्त्तिन इति ते सन्तोऽपि न विवक्षिता. । एतदेवाल्पबहुत्वं चतुर्विंशतिदण्डकक्रमेण चिन्तयन्नाह—'एएसि णं ' मित्यादि सुगम, नवरं सर्वस्तोका नैरयिका लोभसमुद्घातेन समवहता इति , नैरयिकाणामिष्टद्रव्यसंयोगाभावात् प्रायो लोभसमुद्घातस्तावन्नोपपद्यते, येषामपि च केषाञ्चिद्भवति ते कतिपया इति शेषसमुद्घातसमवहतापेक्षया सर्वस्तोका ,असुरकुमारविषयाल्पबहुत्वचिन्ताया सर्वस्तोका क्रोधसमुद्घातसमुद्धता इति, देवा हि स्वभावतो लोभबहुलास्ततोऽल्पतरा मानादिमन्त , ततोऽपि कदाचित्कतिपये क्रोधवन्त इति शेषसमुद्घातसमवहतापेक्षया सर्वस्तोका , 'एवं सव्वदेवा०जाव वेमाणिया' इति,एवम्-असुरकुमारगतेनाल्पबहुत्वप्रकारेण सर्वे देवा नागकुमारादयस्तावद्वक्तव्या यावद्वैमानिका. । पृथिवीकायिकचिन्ताया सामान्यतो जीवपदे इव भावना भावनीया , समानत्वात्। 'एवं जावे ' त्यादि, एव-पृथिवीकायिकोक्तेन प्रकारेण तावद्वक्तव्यं यावत् तिर्यक्पञ्चेन्द्रिया., मनुष्या यथा जीवा. ,नवरमकषायसमुद्घातसमवहतापेक्षया मानसमुद्घातेन समवहता असंख्येयगुणा वक्तव्या । (छाद्मस्थिकसमुद्घातवक्तव्यता 'छाउमत्थियसमुग्घाय' शब्दे तृतीयभाग १३५४ पृष्ठे गता। )

(१८) सम्प्रति यस्मिन् समुद्घाते वर्तमानो यावत् क्षेत्र समुद्घातवशतस्तैस्तैः पुद्गलैर्व्याप्नोति तदेतन्निरूपयति—

जीवे णं भंते ! वेदणासमुग्घाएणं समोहते समोहणित्ता जे पोग्गले निच्छुभति तेहिं णं भंते ! पोग्गलेहिं केवइए खेत्ते अफुसे केवतिते खेत्ते फुडे ?, गोयमा ! सरीरप्पमाणमेत्ते विक्खंभबाहल्लेणं नियमा छद्दिसिं एवतिते खेत्ते अफुसे एवतिते खेत्ते फुडे । से णं भंते ! खेत्ते केवतिकालस्स अप्फुडे केवइए फुडे ?, गोयमा ! एगसमइएण वा दुसमइएण वा तिसमइएण वा विग्गहेणं एवतिकालस्स अफुसेणे एवइयकालस्स फुडे । ते णं भंते ! पोग्गले केवइकालस्स निच्छुभति ?, गोयमा ! जहन्नेणं अंतोमुहुत्तस्स उक्कोसेणं वि अंतोमुहुत्तं । ते णं भंते ! पोग्गला निच्छूढा समाणा जातिं तत्थ पाणातिं भूयातिं जीवातिं सत्तातिं अभिहणंति वत्तेंति लेसेंति संघाएंति संघट्टेंति परितावेंति किलामेंति उद्दवेंति तेहिंतो णं भंते ! से जीवे कतिकिरिए ? गोयमा ! सिय तिकिरिए सिय चउकिरिए सिय पंचकिरिए । ते णं भंते ! जीवा तातो जीवाओ कतिकिरिया?,गोयमा ! सिय तिकिरिया सिय चउकिरिया सिय पंचकिरिया । से णं भंते ! जीवे ते य जीवा अण्णेसिं जीवाणं परंपराघाएणं कतिकिरिया ? , गोयमा ! तिकिरिया वि चउकिरिया वि पंचकिरिया वि । नेरइए णं भंते ! वेदणासमुग्घाएणं समोहते, एवं जहेव जीवे, णवरं णेरइयाभिलावो, एवं निरवसेसं ०जाव वेमाणिते एवं कसायसमुग्घाओ वि भाणितव्वो । जीवे णं भंते ! मारणंतियसमुग्घाएणं समोहणइ समोहणित्ता जे पोग्गले णिच्छुभति तेहिं णं भंते ! पोग्गलेहिं केवतिते खेत्ते अप्फुसे केवतिते खेत्ते फुडे ?, गोयमा ! सरीरप्पमाणमेत्ते विक्खंभबाहल्लेणं आयामेणं जहण्णेणं अंगुलस्स असंखेज्जइभागं उक्कोसेणं असंखेज्जाइं जोयणाइं एगदिसिं एवति खेत्ते अफुसे एवतिते खेत्ते फुडे । से णं भंते ! खेत्ते केवइकालस्स अफुसे केवइकालस्स फुडे ?, गोयमा ! एगसमइएण वा दुसमइएण वा तिसमइएण वा चउसमइएण वा विग्गहेणं एवतिकालस्स अफुसे एवतिकालस्स फुडे, सेसं तं चेव ०जाव पंचकिरियाओ । एवं नेरइए वि, णवरं आयामेणं । जहन्नेणं साइरेगं जोयणसहस्सं उक्कोसेणं असंखेज्जाइं जोअणाइं, एगदिसिं एवतिते खेत्ते अफुसे एवतिते खित्ते फुडे । विग्गहेणं एगसमइएण वा दुसमइएण वा तिसमइएण वा चउसमइएण वा भन्नति, सेसं तं चेव० जाव पंचकिरिया वि । असुरकुमारस्स जहा जीवपदे, णवरं विग्गहो तिसमइओ जहा नेरइयस्स, सेसं तं चेव जहा असुरकुमारे एवं० जाव वेमाणिए, णवरं एगिंदिए जहा जीवे निरवसेसं । ( सू० ३४२ )

'जीवे णं भंते ! ' इत्यादि, जीवो णमिति वाक्यालङ्कारे, वेदनासमुद्घाते वर्त्तमान तस्मिन् समवहतो भवति, समवहत्य च यान् पुद्गलान् वेदनायोग्यान् स्वशरीरान्तर्गतान्

'निच्छुभइ' इति—विक्षिपति आत्मविश्लिष्टान् करोतीत्यर्थ, 'तेहिं णं'मिति—तैः पुद्गलैः कियत् क्षेत्रमापूर्णम्, आपूर्णत्व-मपान्तराले कियदाकाशप्रदेशाः संस्पर्शनेऽपि व्यवहारत उच्यते, तत आह—कियत् क्षेत्रं स्पृष्टं—प्रतिप्रदेशापूरणेन व्याप्तम्, एवं गौतमेन प्रश्ने कृते सति भगवानाह—'सरीरे' त्यादि नियमात्—नियमेन 'छद्दिसिं' ति—षड्दिशो यत्रापूरणे स्पर्शने वा षड्दिक् तद्यथा भवति एव विष्कम्भतो—विस्तरेण बाहल्यत.—पिण्डतः शरीरप्रमाणमात्रं, यावत्प्रमाणः स्वशरीरस्य विष्कम्भो यावत् प्रमाणं च बाहल्यम् एतावन्मात्रमापूर्णं स्पृष्टं चेति वाक्यशेष, तदेव निगमनद्वारेणाह-'एवइए खेत्ते अफुण्णे एवइए खेत्ते फुडे' इति,इह वेदनासमुद्घातो वेदनातिशयात्, वेदनातिशयश्च लोकनिष्कुटेषु जीवानां न भवति,निरुपद्रवस्थानवर्तित्वात् तेषां, किन्तु-त्रसनाड्या अन्त., तत्र परोदीरणसम्भवात्, तत्र च षड्दिक्सम्भव इति नियमाच्छद्दिसिमित्युक्तम्, अन्यथा 'सिय तिदिसिं सिय चउदिसिं सिय पंचदिसिं'मित्याद्युच्येत। अथ स्वशरीरप्रमाणविष्कम्भबाहल्यमेव क्षेत्रमापूर्णं स्पृष्टं च विग्रहगतौ जीवस्य गतिमधिकृत्य कियद्दूरं यावद्भवति कियन्त च कालमित्येतन्निरूपणार्थमाह—'से णं भंते!' इत्यादि, नपुंसकत्वे पुंस्त्वं प्राकृतत्वात्, तत्—अनन्तरोक्तप्रमाणं णमिति प्राग्वद्, भदन्त! क्षेत्र कालस्य इति—प्राकृतत्वात् तृतीयार्थे षष्ठी, कियता कालेन पूर्णं कियता कालेन स्पृष्टम्। किमुक्तं भवति?,—कियन्त काल यावत् स्वशरीरप्रमाणविष्कम्भबाहल्यं क्षेत्रं निरन्तरं विग्रहगतौ जीवस्य गतिमधिकृत्यापूर्णं स्पृष्टं च लभ्यते इति?, भगवानाह-गौतम! एकसमयेन वा द्विसमयेन वा त्रिसमयेन वा विग्रहेण। किमुक्तं भवति?—एकसमयेन वा द्विसमयेन वा त्रिसमयेन वा विग्रहेण यावन्मात्रं क्षेत्रं व्याप्यते इयद्दूरं यावत् स्वशरीरप्रमाणविष्कम्भबाहल्यं क्षेत्रं वेदनाजननयोग्यैः पुद्गलैरापूर्णं भृतं जीवस्य गतिमधिकृत्यावाप्यते,तत एतद्गतमुत्कृष्टतस्त्रिसामयिकेन विग्रहेण यावन्मात्र क्षेत्रमभिव्याप्यते एतावदात्मविश्लिष्टैर्वेदनाजननयोग्यैः पुद्गलैरापूर्णं लभ्यते। इह चतुःसामयिक. पञ्चसामयिकश्च विग्रहो यद्यपि सम्भवति तथापि वेदनासमुद्घातः प्रायः परोदीरितवेदनावशत उपजायते परोदीरिता च वेदना त्रसनाड्या व्यवस्थितस्य न बहि, त्रसनाडीव्यवस्थितस्य च विग्रह उत्कर्षतोऽपि त्रिसामयिक इति उत्कर्षतोऽपि त्रिसामयिकेन विग्रहेणेत्युक्तं,न चतु.सामयिकेन पञ्चसामयिकेन चेति। उपसंहारवाक्यमाह—'एवइयकालस्स अफुण्णे एवइयकालस्स फुडे' एतावता उत्कर्षतोऽपि त्रिसमयप्रमाणेनेत्यर्थः, कालेनापूर्णमेतावता कालेन स्पृष्टम्। किमुक्तं भवति?—विग्रहगतावुत्कर्षत त्रीन् समयान् यावत् त्रिभिश्च समयै. यावन्मात्रं व्याप्यते, इयन्तीं सीमामभिव्याप्य स्वशरीरप्रमाणविष्कम्भबाहल्यं क्षेत्रं वेदनाजननयोग्यै पुद्गलैरापूर्णं भृतं च जीवस्य गतिमधिकृत्य व्याप्यते। अथवा—'केवइयकालस्स' त्ति—षष्ठ्येव व्याख्येया, तत स्वशरीरप्रमाणविष्कम्भबाहल्यं क्षेत्र वेदनाजननयोग्यै. पुद्गलैरापूर्णं भृतं च जीवस्य विग्रहगतिमधिकृत्य कियत कालस्य सम्बन्धि, कियन्तं कालं यावदवाप्यते इत्यर्थ। भगवानाह—एकसमयेन द्विसमयेन त्रिसमयेन वा विग्रहेणाऽपूर्णं स्पृष्टं च लभ्यते इति वाक्यशेष, तत एतावता उत्कर्षतः—त्रिसमयप्रमाणस्य कालस्य सम्बन्धि यथोक्तप्रमाणं क्षेत्रं वेदनाजननयोग्यैः पुद्गलैरापूर्णमेतावता कालस्य सम्बन्धि स्पृष्टमिति॥ सम्प्रति यावन्तं कालं वेदनाजननयोग्यान् पुद्गलान् विक्षिपति तावत्कालप्रमाणप्रतिपादनार्थमाह-'ते णं भंते!' इत्यादि, तान् वेदनाजननयोग्यान् पुद्गलान्, णमिति वाक्यालङ्कारे, भदन्त! परमकल्याणयोगिन्! परमसुखयोगिन्! वा पुद्गलान् कियतः कालस्य सम्बन्धिनो विक्षिपति?, कियत्कालं वेदनाजननयोग्यान् विक्षिपतीति भाव.। भगवानाह—जघन्येनाप्यन्तर्मुहूर्त्तस्य सम्बन्धिन उत्कर्षतोऽप्यन्तर्मुहूर्त्तस्य, केवलं मनाक् बृहत्तरस्य सम्बन्धिनः विक्षिपति। किमुक्तं भवति-ये पुद्गला जघन्यत उत्कर्षतश्चान्तर्मुहूर्त्तं यावद्वेदनाजननसमर्थाः तान् तथा तथा वेदनार्त्त सन् स्वशरीरगतान्-स्वशरीराद्बहिरात्मप्रदेशेभ्योऽपि विश्लिष्टान् विक्षिपति, यथाऽत्यन्तदाहज्वरपीडित सन् सूक्ष्मपुद्गलान्, प्रत्यक्षसिद्धं चैतदिति, 'ते णं भंते!' इत्यादि, ते णमिति पूर्ववत्,भदन्त! पुद्गला विक्षिप्ता. सन्तः शरीरसम्बद्धा असम्बद्धा वा 'जाइं तत्थे' त्यादि प्राकृतत्वात् पुंस्त्वेऽपि नपुंसकता, यान् तत्र वेदनासमुद्घातगतपुरुषसस्पृष्टे क्षेत्रे प्राणान्-द्वित्रिचतुरिन्द्रियान् शङ्खकीटिकामक्षिकादीन् भूतान् वनस्पतीन् जीवान्—पञ्चेन्द्रियान् गृहगोधिकासर्पादीन् सत्त्वान्-शेषपृथिवीकायिकादीन् अभिघ्नन्ति-अभिमुखमागच्छन्तो घ्नन्ति वर्त्तयन्ति आवर्त्तपतितान् कुर्वन्ति लेशयन्ति—मनाक् स्पृशन्ति सङ्घातयन्ति-परस्परं तान् संघातमापन्नान् कुर्वन्ति सङ्घट्टयन्ति-अतीव सङ्घातविशेषमापादितान् कुर्वन्ति परितापयन्ति-पीडयन्ति क्लमयन्ति-मूर्च्छापन्नान् कुर्वन्ति अपद्रावयन्ति—जीवितात् व्यपरोपयन्ति तेभ्य. पुद्गलेभ्यः तेषा प्राणादीनां विषये भदन्त! स—अधिकृतो वेदनासमुद्घातगतो जीव कतिक्रिय. प्रज्ञप्त?, भगवानाह—गौतम!'सिय तिकिरिए' इति, स्यात् शब्दः कथञ्चित्पर्याय, कथञ्चित् कदाचित् काँश्चिच्च जीवानधिकृत्येत्यर्थ त्रिक्रिय.। किमुक्तं भवति?—यदा न केषाञ्चित् सर्वथा परितापनं जीविताद् व्यपरोपणं वा करोति तदा सर्वथा त्रिक्रिय एव, यदापि केषाञ्चित्परितापं मरणं वा आपादयति तदापि येषा नाबाधामुत्पादयति तदपेक्षया त्रिक्रिय, 'सिय चउकिरिए' इति—केषांचित्परितापकरणे तदपेक्षया चतुष्क्रिय इति, केषांचिदपद्रावणे तदपेक्षया पञ्चक्रिय इति॥ सम्प्रति तमेवाधिकृत वेदनासमुद्घातगतं जीवमधिकृत्य तेषा वेदनासमुद्घातगतपुरुषपुद्गलस्पृष्टाना जीवाना क्रिया निरूपयति—'ते णं भंते!' इत्यादि, ते—वेदनासमुद्घातगतपुद्गलस्पृष्टा णमिति पूर्ववद्, भदन्त! जीवास्ततो—वेदनासमुद्घातपरिगतान् जीवान् अत्र 'स्थानियप कर्माधारयो' इति स्थानिन यपमधिकृत्य पञ्चमीयम्, अयमर्थ—तं वेदनासमुद्घातपरिगत जीवमधिकृत्य कतिक्रिया. प्रज्ञप्ता?, भगवानाह—गौतम! स्यात् त्रिक्रिया, यदा न काञ्चित्तस्याबाधामापादयितुं प्रभविष्णव, स्याच्चतुष्क्रिया, यदा तं परितापयन्ति। दृश्यन्ते शरीरेण स्पृश्यमाना. परिताप-

यन्तो वृश्चिकादय , स्यात् पञ्चक्रिया ये तं जीवितादपि व्यपरोपयन्ति , सिद्धाश्च प्रत्यक्षत शरीरेण स्पृश्यमाना जीविताच्च्यावयन्त सर्पादय इति। सम्प्रति तेन वेदनासमुद्धातगतेन जीवेन व्यापाद्यमानैर्जीवैर्येऽन्ये जीवा व्यापाद्यन्ते ये चान्यैर्जीवैर्व्यापाद्यमाना वेदनासमुद्धातगतेन जीवेन व्यापाद्यन्ते तानधिकृत्य तस्य वेदनासमुद्धातपरिगतस्य तेषां च समुद्धातगतजीवसम्बन्धिपुद्गलस्पृष्टानां जीवानां क्रियानिरूपणार्थमाह—' से णं भंते ! जीवे ते य जीवा ' इत्यादि, स —अधिकृतो वेदनासमुद्धातगतो जीव , ते च वेदनासमुद्धातपरिगतजीवसम्बन्धिपुद्गलस्पृष्टा अन्येषा जीवानामपदर्शिनेन प्रकारेण य परम्पराघातस्तेन परम्पराघातेन कतिक्रिया प्रज्ञप्ता ?, भगवानाह—गौतम ! स्यात् त्रिक्रिया इत्यादि पूर्ववत् भावयितव्य , एनमेव वेदनासमुद्धातमुक्तेन प्रकारेण नैरयिकादिषु चतुर्विंशतिस्थानेषु चिन्तयन्नाह—' नेरइए णं भंते ! ' इत्यादि , एवम्—उक्तेन प्रकारेण यथैव प्राक् सामान्यतो जीवो वेदनासमुद्धातमधिकृत्य चिन्तित तथा नैरयिकोऽपि चिन्तयितव्य , नवरं जीवाभिलापस्थाने नैरयिकाभिलाप कर्तव्य. । यथा ' नेरइए णं भंते ! वेयणासमुग्घाएणं समोहए समोहणित्ता जे पोग्गले निच्छुभइ ' इत्यादि , ' एव निरवसेसं ०जाव वेमाणिए ' इति—एव—नैरयिकोक्तेन प्रकारेण शेषेष्वपि स्थानेषु स्वस्वाभिलापपूर्वक निरवशेषं तावद्वक्तव्यं यावद्वैमानिका -वैमानिकाभिलाप । तदेवमुक्तो वेदनासमुद्धात ॥ सम्प्रति कषायसमुद्धात समानवक्तव्यत्वादतिदेशतोऽभिधित्सुराह—' एव कसायसमुग्घाओ वि भाणियव्वो ' इति एव—वेदनासमुद्धातगतेन प्रकारेण सामान्यतो जीवपदे चतुर्विंशतिदण्डकक्रमेण च कषायसमुद्धातोऽपि वक्तव्य , स चैवम्—' जीवे णं भंते ! कसायसमुग्घाएणं समोहए समोहणित्ता जे पोग्गले निच्छुभइ ' यान् पुद्गलान् शरीरान्तर्गतान् कषायसमुद्धातवशसमुत्थप्रयत्नविशेषत स्वशरीराद् बहिरात्मप्रदेशेभ्योऽपि विश्लिष्टान् करोति , ' तेहिं णं भंते ! पोग्गलेहिं केवइए खेत्ते अप्फुण्णे केवइए खेत्ते फुडे ?, गोयमा ! सरीरप्पमाणमेत्ते विक्खंभवाहल्लेणं नियमा छद्दिसिं एवइए खेत्ते अप्फुण्णे एवइए खेत्ते फुडे ' कषायसमुद्धाता हि प्रथममुद्धर्वति त्रसजीवाना, तेषामेव तीव्रतराध्यवसायसम्भवाद् , एकेन्द्रियाणां तु पूर्वभवानुवृत्तित , त्रसजीवाश्च त्रसनाड्यां न ततो बहि. , त्रसनाड्यां च व्यवस्थित. स्वशरीरप्रमाणं विष्कम्भवाहल्यं क्षेत्रमात्मविश्लिष्टैः पुद्गलै. भृतं षड्दिक्त्वमवश्यमुपपद्यते इति ' नियमा छद्दिसिं ' मित्युक्तम् , ' एवइए खेत्ते अफुण्णे एवइए खेत्ते फुडे ' इत्याद , सर्वं समानम् ॥ सम्प्रति मरणसमुद्धातमभिधित्सुराह—'जीवे णं भंते ! मारणंतियसमुग्घाएणं मित्यादि, इति पूर्ववत् . भदन्त ! कश्चिन्मारणान्तिकसमुद्धातेन समवहत. समवहत्य च यान् पुद्गलान् तैजसादिशरीरान्तर्गतान् ' निच्छुभइ ' इति—विक्षिपति, आत्मप्रदेशेभ्यो विश्लिष्टान् करोति तैर्भदन्त ! पुद्गलै कियत् क्षेत्रमापूर्णं कियत् क्षेत्रं भृतम् ? , भगवानाह—गौतम ! विष्कम्भवाहल्यतः शरीरप्रमाणमायामतो जघन्यत स्वशरीरातिरेकाङ्गुलासंख्येयभागमात्रं यदा तावन्मात्रे क्षेत्रे उत्पद्यते उत्कर्षतोऽसंख्येयानि योजनानि एतच्च यदा तावति क्षेत्रे अन्यथा वा द्रष्टव्यम् । एकदिशि-एकस्या दिशि न तु विदिशि स्वभावता जीवप्रदेशानां दिशि गमनसम्भवात् , एतावत् क्षेत्रमापूर्णमेतावत् क्षेत्रं स्पृष्ट, जघन्यतः उत्कर्षतो वा आत्मप्रदेशैरपि एतावत् क्षेत्रस्य पूरणसम्भवात् ॥ सम्प्रति विग्रहगतिमधिकृत्यापूरणविषयं स्पर्शनविषयं च कालप्रमाणमाह—' से ण भंते ! ' इत्यादि, तत उत्कर्षेणायामतोऽनन्तरोक्तप्रमाणं भदन्त ! क्षेत्रं विग्रहगतिमधिकृत्य ' केवइयकालस्स ' त्ति—तृतीयार्थे षष्ठ्या भावात् कियता कालेनापूर्णं कियता कालेन स्पृष्टम् । किमुक्तं भवति ?—विग्रहगतिमधिकृत्य कियता कालेनोत्कर्षतोऽसंख्येययोजनप्रमाण क्षेत्रमायामत. पुद्गलैरापूर्णं स्पृष्टं भवतीति, भगवानाह—गौतम ! एकसमयेन वा द्विसमयेन वा त्रिसमयेन वा चतु समयेन वा विग्रहेणापूर्ण स्पृष्टम् , इह पञ्चसामयिकोऽपि विग्रह सम्भवति परं स कादाचित्क एव इति न विवक्षितः । इयमत्र भावना—उत्कृष्टपदे आयामतोऽसंख्येययोजनप्रमाणे क्षेत्रे विग्रहगतिमधिकृत्योत्कर्षत चतुर्भि समयैरापूर्णं स्पृष्टं वा भवतीति । अथ कथ चतु सामयिक पञ्चसामयिको वा विग्रहः सम्भवति ?, उच्यते—त्रसनाड्या बहिरधस्तनभागादुपरितने भाग, यद्वा—उपरितनभागादधस्तने भागे समुत्पद्यमानो जीवो विदिशो वा दिशि दिशो वा विदिशि यदोत्पद्यते तदा एकेन समयेन त्रसनाडीं प्रविशति, द्वितीयेनोपरि अधो वा गमन , तृतीयेन बहिर्निःसरणं, चतुर्थेन दिशि उत्पत्तिदेशप्राप्ति. अथ चतु सामयिको विग्रह । एवं पञ्चसामयिकस्तु त्रसनाड्या बहिरेव विदिशो विदिशि उत्पत्तौ लभ्यते, तद्यथा—प्रथमसमये त्रसनाड्या बहिरेव विदिशो दिशि गमन , द्वितीये त्रसनाड्या मध्ये प्रवेश , तृतीये उपर्यधो वा गमन, चतुर्थे बहिर्निस्सरण, पञ्चमे विदिग्युत्पत्तिदेशगमनमिति । उपसंहारमाह—' एवइयकालस्स अप्फुण्णे एवइयकालस्स फुडे ' इति—एतावता कालेनापूर्णमेतावता कालेन स्पृष्टमिति , ' सेसं तं चेव जाव पचकिरिए ' इति—अत ऊर्ध्वं शेष तदेव सूत्रम्—' ते णं भंते ! पुग्गला निच्छूढा समाणा जाइं तत्थ पाणाइं ' इत्यादि यावत् ' पञ्चकिरिया ' इति पदम् । तदेवं सामान्यतो जीवपदे मारणान्तिकसमुद्धातश्चिन्तित , सम्प्रति एनमेव चतुर्विंशतिदण्डकक्रमेण चिन्तयन् प्रथमतो नैरयिकातिदेशमाह—' एव ' मित्यादि, एव सामान्यतो जीवपद इव नैरयिकेऽपि वक्तव्यं नवरमयं विशेष., सामान्यतो जीवपदे क्षेत्रमायामतो जघन्येनाङ्गुलासंख्येयभागमात्रमुक्तम्, इह तु जघन्यत सातिरेक योजनसहस्रम् । किमत्र कारणमिति चेत् ? , उच्यते—इह नैरयिका नरकादुद्वृत्ता स्वभावत एव पञ्चेन्द्रियतिर्यक्षु मध्य उत्पद्यन्त मनुष्येषु वा नान्यत्र, सर्वजघन्यचिन्ता चात्र क्रियते, ततो यदा पातालकलशसमीपवर्ती नैरयिक. पातालकलशमध्ये द्वितीये तृतीये वा त्रिभागे मत्स्यतयोत्पद्यते तदा पातालकलशठिक्करिकाया योजनसहस्रमानत्वात्, यथोक्त

जघन्यमानं नातोऽपि न्यूनतरं कथंचनेति, उत्कर्षतोऽसंख्येयानि योजनानि, तानि सप्तमपृथिवीगतनारकापेक्षया भावनीयानि । अत्रैवोपसंहारमाह-'एगदिसिं एवइए ' इत्यादि, एकस्यां दिशि जघन्यत उत्कर्षतश्च एतावत् अनन्तरोक्तप्रमाणं क्षेत्रमापूर्णमेतावत् क्षेत्रं स्पृष्टं, विग्रहगतिमधिकृत्य विशेषमाह—' विग्गहेणे ' त्यादि, विग्रहेणापूर्णं स्पृष्टं वा वक्तव्यमेकसामयिकेन द्विसामयिकेन त्रिसामयिकेन वा, नन्वेतत् सामान्यतो जीवपदेऽप्युक्तं तत्कोऽत्र विशेषस्तत आह—'नवरं चउसमइएण वा ण भण्णइ ' इति—नवरमत्र सामान्यजीवपद इव चतुःसामयिकेनेति न भण्यते, नैरयिकाणामुत्कर्षेणोऽपि विग्रहस्य त्रिसामयिकत्वात्, ते च त्रय समया एवं भवन्ति, इह कश्चिन्नैरयिको वायव्यां दिशि वर्त्तमानो भरतक्षेत्रे पूर्वस्या दिशि तिर्यक्पञ्चेन्द्रियतया मनुष्यतया वोत्पित्सुः प्रथमसमये ऊर्ध्वमागच्छति, द्वितीयसमये वायव्या दिशः पश्चिमदिशं तृतीये तत पूर्वदिशमिति । एवमसुरकुमारादिष्वपि यथायोगं त्रिसमयविग्रहभावना कार्या । ' सेसं तं चेव जाव पंचकिरिया वि ' इति—शेषं सूत्रं तदेव वेदनासमुद्घातगतं, ' ते णं भंते ! पोग्गला केवइया कालस्स निच्छुभंति ?, गोयमा ! जहन्नेणं वि अंतोमुहुत्तस्स उक्कोसेण अंतोमुहुत्तस्से' त्यादि तावद्वक्तव्यं यावदन्तिमं पदं ' पंचकिरिया वि ' इति । असुरकुमारविषये अतिदेशमाह—' असुरकुमारस्स जहा जीवपदे ' इति, यथा सामान्यतो जीवपदेऽभिहितं तथा असुरकुमारस्याप्यभिधातव्यम् । एतावता किमुक्तं भवति ?—यथा जीवपदे आयामतः क्षेत्रं जघन्यतोऽङ्गुलासंख्येयभागमात्रम्, उत्कर्षतोऽसंख्येयानि योजनानि तथा अत्रापि वक्तव्यम् । कथं जघन्यतोऽङ्गुलासंख्येयभागमात्रमिति चेत्, उच्यते—इहासुरकुमारादय ईशानदेवपर्यन्ताः पृथिव्यम्बुवनस्पतिष्वप्युत्पद्यन्ते, ततो यदा कोऽप्यसुरकुमारः संक्लिष्टाध्यवसायी स्वकुण्डलाद्येकदेशे पृथिवीकायिकत्वेनोत्पित्सुर्मरणसमुद्घातमादधाति तदा जघन्येनायामतः क्षेत्रमङ्गुलासंख्येयभागप्रमाणमवाप्यते इति यथा जीवपदे इत्युक्तं, ततोऽत्रापि विग्रहगतिश्चतुःसामायिकी प्राप्नोति, तत आह—नवरं विग्रहस्त्रिसामयिको यथा नैरयिकस्य । शेषं सूत्रं तदेव यत् सामान्यतो जीवपदे । नागकुमारादिष्वतिदेशमाह—' जहा असुरकुमारे ' इत्यादि, यथा असुरकुमारेऽभिहितमेव नागकुमारादिषु तावद् वक्तव्यं यावद्वैमानिकविषयं सूत्रम्, नवरमेकेन्द्रिये पृथिव्यादिरूपे यथा जीवे सामान्यतो जीवपदे तथा निरवशेषं वक्तव्यम् । किमुक्तं भवति ?–यथा जीवपदे चतुःसामयिकोऽपि विग्रह उक्तः तथा पृथिव्यादिष्वपि पञ्चसु स्थानेषु वक्तव्य शेषं तथैवेति । तदेवमुक्तो मारणान्तिकसमुद्घातः ।

(१२) साम्प्रतं वैक्रियसमुद्घातमभिधित्सुराह—

जीवे णं भंते ! वेउव्वियसमुग्घाएणं समोहये समोहणित्ता जे पुग्गले निच्छुभति तेहिं णं भंते ! पोग्गलेहिं केवतिते खेत्ते अफुण्णे केवतिते खित्ते फुडे ?, गोयमा ! सरीरप्पमाणमेत्ते विक्खंभबाहल्लेणं आयामेणं जहन्नेणं अंगुलस्स संखेज्जतिभागं उक्कोसेणं संखिज्जाइं जोअणाइं एगदिसिं विदिसिं वा एवइए खित्ते अफुण्णे एवतिते खेत्ते फुडे । से णं भंते ! केवतिकालस्स अफुण्णे केवतिकालस्स फुडे ?, गोयमा ! एगसमइएण वा दुसमइएण वा तिसमइएण वा विग्गहेणं एवतिकालस्स अफुण्णे एवतिकालस्स फुडे, सेसं तं चेव० जाव पंचकिरिया वि, एवं नेरइए वि, णवरं आयामेणं जहण्णेणं अंगुलस्स असंखेज्जतिभागं उक्कोसेणं संखिज्जाइं जोअणाइं एगादिसिं, एवतिते खेत्ते, केवतिकालस्स ?, तं चेव जहा जीवपदं, एवं जहा नेरइयस्स तहा असुरकुमारस्स, नवरं एगदिसिं विदिसिं वा, एवं०जाव थणियकुमारस्स । वाउकाइयस्स जहा जीवपदे, णवरं एगदिसिं पंचिंदियतिरिक्खजोणियस्स निरवसेसं जहा नेरइयस्स, मणूसवाणमंतरजोइसियवेमाणियस्स निरवसेसं जहा असुरकुमारस्स । जीवे णं भंते ! तेयगसमुग्घाएणं समोहते समोहणित्ता जे पोग्गले निच्छुभति तेहि णं भंते! पोग्गलेहिं केवतिते खित्ते अफुण्णे केवइए खेत्ते फुडे, एवं जहेव वेउव्विते समुग्घाते तहेव, णवरं आयामेणं जहण्णेणं अंगुलस्स असंखेज्जतिभागं सेसं तं चेव एवं०जाव वेमाणियस्स, णवरं पंचिंदियतिरिक्खजोणियस्स एकदिसिं एवतिते खेत्ते अफुण्णे एवइखित्तस्स फुडे । जीवे णं भंते ! आहारगसमुग्घातेणं समोहते समोहणित्ता जे पोग्गले निच्छुभति तेहि णं भंते ! पोग्गलेहिं केवइए खित्ते अफुण्णे केवइए खेत्ते फुडे ?, गोयमा ! सरीरप्पमाणमेत्ते विक्खंभबाहल्लेणं आयामेणं जहण्णेणं अगुलस्स असंखेज्जतिभागं उक्कोसेणं संखेज्जाइं जोयणाइं एगदिसिं एवतिते खेत्ते एगसमइएण वा दुसमइएण वा तिसमइएण वा विग्गहेणं एवतिकालस्स अफुण्णे एवतिकालस्स फुडे, ते णं भंते ! पोग्गला केवतिकालस्स निच्छुभति ?, गोयमा ! जहण्णेणं अंतोमुहुत्तस्स उक्कोसेणं अंतोमुहुत्तस्स, ते णं भंते ! पोग्गला निच्छूढा समाणा जातिं तत्थ पाणातिं भूयातिं जीवातिं सत्तातिं अभिहणंति०जाव उद्दवेंति, ते णं भंते ! जीवे कतिकिरिए ?, गोयमा ! सिय तिकिरिए सिय चउकिरिए सिय पंचकिरिए ते णं भंते ! जीवाओ कतिकिरिया गोयमा ! एवं चेव, से णं भंते! ते य जीवा अण्णेसिं जीवाणं परंपराघाएणं कतिकिरिया ?, गोयमा ! तिकिरिया वि चउकिरिया वि पंचकिरिया वि, एवं मणूसे वि । (सू० २४३)

' जीवे णं भंते ! वेउव्विए' इत्यादि प्राग्वत्, नवरमायामत उत्कर्षतः संख्येयानि योजनानि । एतच्च वायुकायिकवर्ज्जनैरयिकाद्यपेक्षया द्रष्टव्य, ते हि वैक्रियसमुद्घातमारभमाणास्तथाविधप्रयत्नविशेषभावतः सख्येयान्येव योजनान्युत्कर्षतोऽप्यात्मप्रदेशानां दण्डमारचयन्ति, नासंख्येयानि योज–

नानि । वायुकायिकास्तु जघन्यतो वा उत्कर्षतो वा अङ्गुलासंख्येयभागं, तावत्प्रमाणं चोत्कर्षतो दण्डमारचयन्तेस्तावति प्रदेशे तैजसादिशरीरपुद्गलान् आत्मप्रदेशेभ्यो विक्षिपन्ति, ततस्तैः पुद्गलैर्भृतं क्षेत्रमायामत उत्कर्षतोऽपि संख्येयान्येव योजनान्यवाप्यन्ते । एतच्चैवं क्षेत्रप्रमाणं केवलं वैक्रियसमुद्घातसमुद्भवं प्रयत्नमधिकृत्योक्तम्, यदा तु कोऽपि वैक्रियसमुद्घातमधिरूढो मरणमुपश्लिष्टः कथमप्युत्कृष्टदेशेन त्रिसामयिकेन विग्रहेणोत्पत्तिदेशमभिगच्छति तदा संख्यातीतान्यपि योजनानि यावदायामक्षेत्रमवसेयम् तावत्प्रमाणं क्षेत्रापूरणं मरणसमुद्घातप्रयत्नसमुद्भवमिति सदपि न विवक्षितम् । 'एकदिसिं विदिसिं वा' इतितत जघन्यत उत्कर्षतो वा यथोक्तप्रमाणमायामक्षेत्रमेकस्यां दिशि विदिशि वा द्रष्टव्यम्, तत्र नैरयिकाणां पञ्चेन्द्रियतिरश्चां वायुकायिकानां च नियमादेकदिशि नैरयिका हि परवशा अल्पर्द्धयश्च तिर्यक्पञ्चेन्द्रियाश्चाल्पर्द्धय एव वायुकायिका विशिष्टचेतनाविकलास्ततस्तेषां वैक्रियसमुद्घातमारभमाणाना यदि परं तथा स्वाभाव्यादेवात्मप्रदेशदण्डविनिर्गमस्तेभ्यश्चात्मप्रदेशेभ्यो विश्लिष्य पुद्गलानां च स्वभावतोऽनुश्रेणिगमनं न तु विश्रेणितः ततो दिश्येव नैरयिकतिर्यक्पञ्चेन्द्रियवायुकायिकानामायामत क्षेत्रं द्रष्टव्यम्, न तु विदिशि,ये तु भवनपतिव्यन्तरज्योतिष्कवैमानिका मनुष्याश्च ते स्वेच्छाचारिणो विशिष्टलब्धिसम्पन्नाश्च भवन्ति ततस्ते कदाचित्प्रयत्नविशेषतो विदिश्यप्यात्मप्रदेशानां दण्डं विक्षिपन्तस्तत्र तेभ्य आत्मप्रदेशेभ्यः पुद्गलान् विक्षिपन्तीति तेषामेकस्यां दिशि विदिशि वा प्रत्येतव्यम् । वैक्रियसमुद्घातगतश्च कोऽपि कालमपि करोति, विग्रहेण चोत्पत्तिदेशमभिसर्प्पति ततो विग्रहगतिमधिकृत्य कालनिरूपणार्थमाह—' से णं भंते ! ' इत्यादि, तत् भदन्त ! क्षेत्रं विग्रहगतिमधिकृत्योत्पत्तिदेशं यावत् ' केवइकालस्स ' त्ति-तृतीयार्थे षष्ठी, कियता कालेनापूरणं कियता कालेन स्पृष्टम्, ?, भगवानाह-गौतम ! एकसामयिकेन वा द्विसामयिकेन वा त्रिसामयिकेन वा विग्रहेण आपूर्णं स्पृष्टमिति गम्यते । किमुक्तं भवति ?,-विग्रहगतिमधिकृत्य मरणदशाया आरभ्य उत्पत्तिदेशं यावत् क्षेत्रस्यापूरणमुत्कर्षतः त्रिभिः समयैरवाप्यते न चतुर्थेनापि समयेन, वैक्रियसमुद्घातगतो हि वायुकायिकोऽपि प्रायस्त्रसनाड्यामेवोत्पद्यते, त्रसनाड्या च विग्रह उत्कर्षतोऽपि त्रिसामयिक इति । उपसंहारमाह-' एवइकालस्स ' इत्यादि सुगमम्, ' सेसं तं चेवे त्यादि अत ऊर्ध्वं शेषं सूत्रं तदेव यत्प्राक् वेदनासमुद्घाते उक्तम्, तच्च तावत् यावदन्तिमपदं ' पंचकिरिया वि ' इति ' एव नेरइएण वि ' इत्यादि सूत्रं तु स्वयं भावनीयम् । यस्तु दिग्विदिगपेक्षया विशेषः स प्रागेव दर्शितः ॥ सम्प्रति तैजससमुद्घातमभिधित्सुराह-' जीवे णं भंते ! तेयगसमुग्घाएणं ' मित्यादि, सुगमं, नवरमयं तैजससमुद्घातश्चतुर्देवनिकायतिर्यक्पञ्चेन्द्रियमनुष्याणां सम्भवति न शेषाणां, ते च महाप्रयत्नवन्त इति तेषां तैजससमुद्घातमारभमाणानां जघन्यतोऽपि क्षेत्रमायामतोऽङ्गुलासंख्येयभागप्रमाणं भवति, न तु संख्येयभागमानम्, उत्कर्षतः संख्येययोजनप्रमाणम् । तच्च जघन्यत उत्कर्षतो वा यथोक्तप्रमाणं क्षेत्रं तिर्यक्पञ्चेन्द्रियवर्जानामेकस्यां दिशि विदिशि वा वक्तव्यम्, तिर्यक्पञ्चेन्द्रियाणां तु दिश्येव । अत्र युक्तिः प्रागुक्तैवानुसर्त्तव्या, तथा चाह—' एवं जहा वेउव्वियसमुग्घाए ' इत्यादि । एवदेवमुक्तस्तैजससमुद्घातः ॥ साम्प्रतमाहारकसमुद्घातं प्रतिपिपादयिषुराह—' जीवे णं भंते ! ' इत्यादि, एतच्च सूत्रं तैजससमुद्घातवद्भावनीयं, नवरमयमाहारकसमुद्घातो मनुष्याणां तत्राप्यधीतचतुर्दशपूर्वाणां तत्रापि केषाञ्चिदेवाहारकलब्धिमतां न शेषाणां, ते चाहारकसमुद्घातमारभमाणा जघन्यत उत्कर्षतो वा यथोक्तप्रमाणमायामतः क्षेत्रमात्मप्रदेशविश्लिष्टैः पुद्गलैरापूरयन्त्येकस्यां दिशि, न तु विदिशि । विदिशि तु प्रयत्नान्तरविशेषादात्मप्रदेशदण्डविक्षेपः पुद्गलैरापूरणं च । नच ते प्रयत्नान्तरमारभते प्रयोजनाभावात्, गम्भीरत्वाच्चेति । आहारकसमुद्घातगतोऽपि च कोऽपि कालं करोति विग्रहेण चोत्पद्यते विग्रहश्चोत्कर्षतस्त्रिसामयिक इति ' एगदिसिं एवइए खेत्ते फुडे ' तथा ' एगसमइएण वा दुसमइएण वा ' इत्याद्युक्तम् । तथा मनुष्याणामेवायमाहारकसमुद्घात इति चतुर्विंशतिदण्डकचिन्तोपक्रमे ' एवं मणूसे वि ' इत्युक्तम्, अस्यायमर्थः-एवं सामान्यतो जीवपदे इव मनुष्येऽपि—मनुष्यचिन्तायामपि सूत्रं वक्तव्यम्, जीवपदे मनुष्यानेवाधिकृत्य सूत्रस्य प्रवृत्तत्वात्, अन्येषामाहारकसमुद्घातासम्भवात् । तदेवं षण्णामपि छाद्मस्थिकानां समुद्घातानामारम्भे जघन्यत उत्कर्षतो वा यावत्प्रमाणं क्षेत्रमात्मविश्लिष्टैः पुद्गलैर्यथायोगमौदारिकादिशरीराद्यन्तर्गतैरापूरितं भवति तावत्प्रमाणमावेदितम् । प्रज्ञा० ३६ पद । विशे० । भ० । स० । आ० चू० । आ० म० । पं० सं० ।

(१३) अधुना समुद्घातद्वारविस्तरः—

तेसि णं भंते ! जीवाणं कति समुग्घाया पण्णत्ता ?, गोयमा ! तओ समुग्घाया पण्णत्ता, तं जहा-वेयणासमुग्घाए कसायसमुग्घाए मारणंतियसमुग्घाए । (सू० १३+)

तत्र समुद्घाताः सप्त, तद्यथा—वेदनासमुद्घातः १ कषायसमुद्घातः २ मारणसमुद्घातः ३ वैक्रियसमुद्घातः ४ तैजससमुद्घातः ५ आहारकसमुद्घातः ६ केवलिसमुद्घातश्च ७ । तत्र वेदनायाः समुद्घातो वेदनासमुद्घातः, स चासातवेदनीयकर्माश्रयः १, कषायेण—कषायोदयेन समुद्घातः कषायसमुद्घातः, स च कषायचारित्रमोहनीयकर्माश्रयः २, मरणे भवो मारणः, चासौ समुद्घातश्च मारणसमुद्घातः ३, वैक्रिये प्रारभ्यमाणे समुद्घातो वैक्रियसमुद्घातः, स च वैक्रियशरीरनामकर्माश्रयः ४, ( तैजसेन हेतुभूतेन समुद्घातस्तैजससमुद्घातः तैजसशरीरनामकर्माश्रयः ) ५, आहारके प्रारभ्यमाणे समुद्घातः आहारकसमुद्घातः, स चाहारकशरीरनामकर्माश्रयः ६, केवलिनि अन्तर्मुहूर्त्तभाविपरमपदे समुद्घातः केवलिसमुद्घातः ७।(जी०)तत्र वेदनासमुद्घातगत आत्मा वेदनीयकर्मपुद्गलपरिशातं करोति,तथाहि-वेदनाकरालितो जीवः स्वप्रदेशाननन्तानन्तकर्मपरमाणुवेष्टितान् शरीराद्बहिरपि विक्षिपति,तैश्च प्रदेशैर्वदनजघनादिरन्ध्राणि कर्णस्कन्धाद्यन्तरालानि, चापूर्यायामतो विस्तरतश्च शरीरमात्रं क्षेत्रमभिव्याप्यान्तर्मु-

हूर्त्ते यावदवतिष्ठते, तस्मिश्चान्तर्मुहूर्त्ते प्रभूतासातवेदनीयकर्म पुद्गलपरिशातं करोति, कषायसमुद्घातसमुद्धत कषायाख्य-चारित्रमोहनीयकर्मपुद्गलपरिशातं करोति। तथाहि-कषायोदयसमाकुलो जीवः स्वप्रदेशान् बहिर्विक्षिप्य तैर्वदनोदरादिरन्ध्राणि कर्णरन्ध्राद्यन्तरालानि चापूर्यायामविस्तराभ्यां देहमात्र क्षेत्रमभिव्याप्य वर्त्तते तथाभूतश्च प्रभूतकषायकर्मपुद्गलपरिशातं करोति, एवं मरणसमुद्घातगत आयुः कर्मपुद्गलपरिशातं करोति। वैक्रियसमुद्घातगतः पुनर्जीवः स्वप्रदेशान् शरीराद्बहिर्निष्काश्य शरीरविष्कम्भबाहल्यमानमायामत संख्येययोजनप्रमाणं दण्डं निसृजति, निसृज्य च यथास्थूलान् वैक्रियशरीरनामकर्मपुद्गलान् प्राग्बद्धान् शातयति। तथा चोक्तम्—" वेउव्वियसमुग्घाएणं समोहणइ समोहणित्ता संखिज्जाइं जोयणाइं दंडं निसिरइ, निसिरित्ता अहाबायरे पुग्गले परिसाडेइ" इति, तैजसाहारकसमुद्घातौ वैक्रियसमुद्घातवद्व्याख्यातव्यौ, केवलं तैजससमुद्घातगतस्तैजसशरीरनामकर्मपुद्गलपरिशातं करोति, आहारकसमुद्घातगत आहारकशरीरनामकर्मपुद्गलपरिशातं करोति, केवलिसमुद्घातसमुद्धतस्तु केवली सदसद्वेदनीयशुभाशुभनामोच्चनीचैर्गोत्रकर्मपुद्गलपरिशातं (करोति), केवलिसमुद्घातवर्जाः शेषाः षडपि समुद्घाताः प्रत्येकमान्तर्मौहूर्त्तिकाः, केवलिसमुद्घातः। पुनरष्टसामयिकः, उक्तं च प्रज्ञापनायाम्—"वेयणासमुग्घाएणं कइसमइए पण्णत्ते?, गोयमा! असंखेज्जसमइए अंतमुहुत्ते, एवं ०जाव आहारगसमुग्घाए। केवलिसमुग्घाए णं भंते! कइसमइए पण्णत्ते?, गोयमा! अट्ठसमइए पण्णत्ते।" इति, तदेवमनेकसमुद्घातसम्भवे सूक्ष्मपृथिवीकायिकानां, तान् पृच्छति—'तेसि णं भंते!', इत्यादि सुगमं, नवरं वैक्रियाहारकतैजसकेवलिसमुद्घाताभावो वैक्रियादिलब्ध्यभावात्। जी० १ प्रति०। विशे०। भ०।

**समुग्घायकम्म-समुद्घातकर्मन्**-न०। समुद्घात एव कर्म्म समुद्घातकर्म्म। समुद्घातरूपक्रियायाम्, विशे०।

**समुच्चय-समुच्चय**-पुं०। द्वयोः कोट्योरेकत्रान्वये, " अयं न संशयः कोटि-रेकत्राऽन्वये च समुच्चयः।" नयो०।

**समुच्चयबंध-समुच्चयबन्ध**-पुं०। सगत उच्चयोपचयतया विशिष्टतर उच्चयः समुच्चयः स एव बन्धः समुच्चयबन्धः। आलिकापनबन्धभेदे, भ० ८ श० ६ उ०।

**समुच्छलिय-समुच्छलित**-त्रि०। ऊर्ध्वमुत्थिते, आ० म० १ अ०। रा०।

**समुच्छिन्न-समुच्छिन्न**-त्रि०। क्षीणे, स्था० ४ ठा० १ उ०।

**समुच्छिन्नकिरिय-समुच्छिन्नक्रिय**-त्रि०। समुच्छिन्ना-क्षीणा क्रिया-कायिकक्यादिका शैलेशीकरणे निरुद्धयोगत्वेन यस्मिंस्तत्तथा। तथाविध शैलेशीकरणे, स्था० ४ ठा० १ उ०। ग०। भ०।

**समुच्छेय-समुच्छेद**-पुं०। उत्पत्त्यनन्तरं स—सामस्त्येन उत्-प्राबल्येन प्रकर्षेण छेदो—विनाशः समुच्छेदः। सर्वथा विनाशे, आ० म० १ अ०।

**समुच्छेयवाइ-समुच्छेदवादिन्**-पुं०। समुच्छेदं प्रतिक्षणं निरन्वयनाशं वदति यः स समुच्छेदवादी। अक्रियावादिभेदे, स्था०। तथाहि-वस्तुनः सत्त्वं कार्यकारित्वं कार्याकारित्वेऽपि वस्तुत्वे खरविषाणस्यापि सत्त्वप्रसङ्गात्, कार्यं च नित्यं वस्तु क्रमेण न करोति नित्यस्यैकस्वभावतया कालान्तरभाविसकलकार्यभावप्रसङ्गात्, न चेदेवं प्रतिक्षणं स्वभावान्तरोत्पत्त्या नित्यत्वहानिरिति। यौगपद्येनापि न करोति अध्यक्षसिद्धत्वाद्यौगपद्याकरणस्य। तस्मात् क्षणिकमेव वस्तु कार्यं करोतीति। एवं च-अर्थक्रियाकारित्वात्क्षणिकं वस्त्विति। अक्रियावादी चायमित्थमवसेयः, निरन्वयनाशाभ्युपगमे हि परलोकाभावः प्रसजति, फलार्थिना च क्रियास्वप्रवृत्तिरिति, तथा सकलक्रियासु प्रवर्त्तकस्यासंख्येयसमयसंभव्यनेकवर्णोल्लेखवतो विकल्पस्य प्रतिसमयक्षयित्वे एकाभिसन्धिप्रत्ययाभावात् सकलव्यवहारोच्छेदः स्यात्, अत एवैकान्तक्षणिकात्कुलालादेः सकाशादर्थक्रिया न घटत इति। तस्मात्पर्यायतो वस्तुसमुच्छेदवत् द्रव्यतस्तु न तथेति। स्था० ८ ठा० ३ उ०। सू०।

**समुज्जलण-समुज्ज्वलन**-न०। कोपाग्निप्रकटने, आ० म०१अ०।

**समुज्जाय-समुद्यात**-त्रि०। निर्गते, विशे०। सम्यक् च पुनरावृत्त्या ऊर्ध्वं याते, कल्प० १ अधि० ६ क्षण। जं०।

**समुट्ठाइ(न्)-समुत्थायिन्**-पुं०। सम्यगुत्थातुमभ्युद्यन्तुं, शीलमस्येति समुत्थायी। सम्यगुद्यते, आचा० १ श्रु० २ अ० १ उ०।

**समुट्ठाण-समुत्थान**-न०। सम्यक् संगतं चोत्तिष्ठतेऽस्मादिति समुत्थानम्। निमित्ते, विशे०। समुट्ठाणं नाम—सम्म उट्ठाणं सममाचार्यादीनामुपस्थापनम्। आ० चू० १ अ०। समुपस्थापने भूयस्तत्रैवाऽऽवासने, नं०।

**समुट्ठाणसुय-समुत्थानश्रुत**-न०। सम्यगुत्थानं समुत्थानं-समुपस्थापनं भूयस्तत्रैवाऽऽवासनं तद्धेतुः श्रुतमुपस्थापनश्रुतम्। समुत्थानहतौ श्रुतभेदे, पा०। नं०। तत कार्ये निष्पन्ने समुत्थानश्रुतं परावर्त्यमानं ते कुलग्रामदेशादयः स्वस्थीभूय पुनर्निविशन्ते। व्य० १० उ०।

**समुट्ठाय-समुत्थाय**-अव्य०। सम्यक्—संयमानुष्ठानेनोत्थायेत्यर्थे, आचा० १ श्रु० ६ अ० ४ उ०। अभ्युपगम्येत्यर्थे, आचा० १ श्रु० ९ अ० ४ उ०।

**समुट्ठिय-समुत्थित**-त्रि०। आश्रिते, जं०४वक्ष०। रा०। उत्पन्ने, स्था० ३ ठा० ३ उ०। सम्यक्—सत्संयमानुष्ठानेनोत्थिताः समुत्थिताः। सत्साधुषु उद्युक्तविहारिषु, सूत्र० १ श्रु० १४ अ०। सम्यगारम्भपरित्यागेनोत्थिते, सूत्र० १ श्रु० २ अ० २ उ०। अनुष्ठिते, सूत्र० १ श्रु० २ अ० २ उ०। प्रश्न०। प्राप्ते, सूत्र० १ श्रु० ३ अ०२ उ०। संयमक्रियानुष्ठानं प्रत्युद्यते, उत्त० १६ अ०। आचा०। सम्यक्—सततं संगतं वा संयमानुष्ठानेनोत्थितः। नानाविधशास्त्रकर्मसमारम्भोपरते, आचा० १ श्रु० २ अ० ५ उ०। सम्यग्योगत्रिकेणोत्थिते, आचा० १ श्रु० ३ अ० २ उ०।

समुएणइय-समुन्नयित-त्रि० । गर्विते, पि० ।

समुत्तजालाकुलाभिराम-समुक्तजालाकुलाभिराम-पुं० । मुक्ताफलयुक्तं यज्जालं गवाक्षस्तेन आकुलो व्याप्तोऽभिरामश्च । तस्मिन्, कल्प० १ अधि० ३ क्षण ।

समुत्थ-समुत्थ-त्रि० । उद्भूते, आव० ४ अ० ।

समुत्थिय-समुत्थित-त्रि० सम्यगुत्थिते समुत्थितः । चारित्रस्थे, पं० चू० १ कल्प ।

समुदय-समुदय-पुं० । उदयवर्त्तितत्वे, प्रश्न० ३ आश्र० द्वार।

समुदाय-पुं० । परिवारोदितसमुदाये, औ०। पौरादिर्मीलने, ज्ञा० १ श्रु० १ अ० । समूहे, स० ५५ सम० । त्रिचतुरादिमेलके, ज्यो० २ पाहु० । भ० । विशे० ।

समुदाण-समुदान-न० । प्रयोगक्रियैकरूपतया गृहीतानां कर्मवर्गणानां सम्यक् प्रकृतिबन्धादिभेदेन देशसर्वोपघातिरूपतया च आदानं-स्वीकरणं समुदानं निपातनात्साधु । स्था० ३ ठा० ३ उ० । स्पृष्टनिधत्तनिकाचितावस्थया स्वीकरणे, आचा०१श्रु०२अ०१उ० । आव० । भिक्षाटने, नि०१श्रु०३ वर्ग ४ अ० । उच्चावचकुलेषु भिक्षाचरणे, बृ० १ उ० २ प्रक० । भिक्षासमूहे, सूत्र० २ श्रु० १ अ० । बृ० । अणु० । आचा० । भिक्षायाम्, सूत्र० २ श्रु० १ अ० ।

समुदाणकम्म-समुदानकर्मन्-न०।स्पृष्टनिधत्तनिकाचितावस्थया स्वीकरणं समुदानं तदेव कर्म समुदानकर्म, संपूर्वाद्दाङ्पूर्वाच्च दाधातोर्ल्युडन्तात्पृषोदरादिपाठेन आकारस्योकारादेशेन रूपम् । कर्मभेदे, आचा० १ श्रु० २ अ० १ उ० ।

समुदाणकिरिया-समुदानक्रिया-स्त्री० । कर्मोपादाने क्रियाभेदे, स्था० । ( 'किरिया' शब्दे तृतीयभागे ५३३ पृष्ठे वक्तव्यता गता ) सम्यगुपादानं समुदाणं समुदाओ-अट्ठ कम्माणि तेसिं जं उपादाणं कज्जइ,सा समुदाणकिरिया,सा दुविहा-देसोवघाया समुदाणकिरिया, सव्वोवघाया समुदाणकिरिया । आव० ४ अ० । समुदानक्रिया तु यत्कर्मप्रयोगगृहीतं समुदायावस्थं सत्प्रकृतिस्थित्यनुभावप्रदेशरूपतया यया व्यवस्थाप्यते सा समुदानक्रिया, सा च मिथ्यादृष्टेरारभ्य सूक्ष्मसंपरायं यावद्भवति । सूत्र० २ श्रु० २ अ० ।

समुदाणचरग-समुदानचरक-पुं० । समुदानेन भिक्षया तथाविधाभिग्रहग्रहिले साधौ, सूत्र० २ श्रु० २ अ० ।

समुदाणिय-सामुदानिक-पुं० । समुदानं नाम-उच्चावचकुलेषु भिक्षाग्रहणं तत्र लब्धः सामुदानिकः । 'अध्यात्मादिभ्य इकण्' ॥६। ३। ७८॥ (सू० सि०) इति इकण् प्रत्ययः । बृ०१ उ० २ प्रक०। आ० चू० । भैक्षणे-याञ्चायां भवः सामुदानिकः । स्था० ४ ठा० २ उ० । इतस्ततो भिक्षाग्रहणे, भ० ७ श० १ उ० ।

समुदाय-समुदाय-पुं० । स्वामियोग्यादिसमस्तपरिवारे, रा० । समूहे, आ० चू० १ अ० । स्था० । इतस्ततो भिक्षायाम्, भ० ७ श० १ उ० ।

समुदायार-समुदाचार-पुं० । यतिकृत्यानुष्ठाने, विपा० १ श्रु० ३ अ० । ज्ञा० । सूत्र० । औ० ।

समुदिएण-समुदीर्ण-न० । सम्यगुदयं प्राप्ते, व्य० ६ उ० । विशे० ।

समुद्द-समुद्र-पुं० । सह मुद्रया मर्यादया वर्तत इति समुद्रः । अनु० । स० । 'द्रेरो न वा'' ॥ ८।२। ८०॥ अस्य पाक्षिकत्वादत्र रेफस्य लोपनिषेधो न । प्रा० । लवणादिके सागरे, को० । स० । प्रज्ञा० । जी० । सूत्र० । जलधौ, उत्त० ७ अ० । जलराशौ । अनु० ।

समुद्रद्विस्थानकमाह—

अंतोमणुस्सखेत्तस्स दो समुद्दा पण्णत्ता, तं जहा-लवणे चेव कालोदे चेव । (सू० १११) । स्था० २ ठा० ४ उ० ।

त्रयः समुद्राः—

तत्रो समुद्दा पगईए उदगरसेणं पण्णत्ता, तं जहा-कालोदे पुक्खरोदे सयंभुरमणे । तत्रो समुद्दा बहुमच्छकच्छभाऽऽइन्ना पण्णत्ता,तं जहा-लवणे कालोदे सयंभुरमणे । ( सू० १४६ )

प्रकृत्या स्वभावेनोदकरसेन युक्ता इति, क्रमेण चैते द्वितीयतृतीयान्तिमाः प्रथमद्वितीयान्तिमाः समुद्रा बहुजलचराः, अन्ये त्वल्पजलचरा इति । उक्तं च—

" लवणे उदगरसेसु य, महोरया मच्छकच्छहा भणिया ।
अप्पा सेसेसु भवे, न य ते निम्मच्छया भणिया ॥ १ ॥ "

अन्यत्र—

" लवणे कालसमुद्दे सयंभुरमणे य हुंति मच्छाओ ।
अवसेससमुद्देसुं न हुंति मच्छा य मयरा वा ॥ १ ॥
नत्थि त्ति पउरभावं, पडुच्च न उ सव्वमच्छपडिसेहो ।
अप्पा सेसेसु भवे न य ते निम्मच्छया भणिया ॥ २ ॥ "

इति । स्था० ३ ठा० १ उ० ।

चत्वारः समुद्राः —

चत्तारि समुद्दा पत्तेयरसा पण्णत्ता,तं जहा-लवणोदए १ वारुणोदे २ खीरोदे ३ घत्रोदे ४ । ( सू० ३८४ )

समुद्रसूत्रं व्यक्तं, नवरं एकमेकं प्रति भिन्नो रसो येषां ते प्रत्येकरसाः, असदृशरसा इत्यर्थः, लवणरसोदकत्वाल्लवणः । पाठान्तरे तु लवणमिवोदकं यत्र स लवणोदः, निपातनादिति प्रथमः । वारुणी-सुरा तया समानं वारुणं वारुणमुदकं यस्मिन् स वारुणोदः चतुर्थः, क्षीरवत्तथा घृतवदुदकं यत्र स क्षीरोदः पञ्चमः, घृतोदः षष्ठः, कालोदपुष्करोदस्वयम्भूरमणा उदकरसाः, शेषास्तु इक्षुरसा इति । उक्तञ्च—
" वारुणिवरखीरवरो, घयवर लवणो य होंति पत्तेया ।
कालो पुक्खरउदही, सयंभुरमणो य उदगरसा ॥ १ ॥ "
इति । स्था० ४ ठा० ४ उ० ।

सप्त समुद्राः—

णंदीसरवरस्स णं दीवस्स अंतो सत्त समुद्दा पण्णत्ता,

तं जहा-लवणे कालोदे पुक्खरोदे वारुणोदे खीरोदे घओदे खोतोदे । ( सू० ५८०× ) स्था० ७ ठा० ३ उ० ।

सर्वद्वीपसमुद्राणामभ्यन्तरवर्ती जम्बूद्वीपस्तत्परिक्षेपी लवणसमुद्रस्तदनन्तरं धातकीखण्डाभिधानो द्वीपस्तत कालोद समुद्र तदनन्तर पुष्करवरो द्वीप, अत ऊर्ध्व द्वीपसदृशनामान समुद्रा, तत पुष्करवरसमुद्र', तदनन्तरं वरुणवरो द्वीपो वरुणवर समुद्र, क्षीरवरो द्वीप क्षीरोद समुद्र, घृतवरो द्वीपो घृतोद समुद्र, इक्षुवरो द्वीपो इक्षुवर समुद्र, नन्दीश्वरो द्वीपो नन्दीश्वर' समुद्र, एतेऽष्टावपि च समुद्रा एकप्रत्यवतारा:, एकैकरूपा इति भाव । अत ऊर्ध्वं द्वीपा' समुद्राश्च त्रिप्रत्यवतारा, तद्यथा—अरुण इति—अरुणोऽरुणवर अरुणवरावभास' कुण्डल कुण्डलवर कुण्डलवरावभासः, रुचको रुचकवरो रुचकवरावभास इत्यादि । एष चात्र क्रम'—नन्दीश्वरसमुद्रानन्तरम् अरुणो द्वीपोऽरुण समुद्र', ततोऽरुणवरो द्वीपोऽरुणवर समुद्र इत्यादि, कियन्त' खलु नामग्राहं द्वीपसमुद्रा वक्तु शक्यन्ते ?, ततस्तन्नामसंग्रहमाह—' आभरणवत्थ ' त्यादि गाथाद्वयम्, यानि कानिचिदाभरणनामानि—हारार्द्धहाररत्नावलिकनकावलिप्रभृतीनि, यानि च वस्त्रनामानि-चीनांशुकप्रभृतीनि, यानि च गन्धनामानि—कोष्ठपुटादीनि, यानि चोत्पलनामानि-जलरुहचन्द्रोद्द्योतप्रमुखानि, यानि च तिलकप्रभृतीनि वृक्षनामानि, यानि च पद्मनामानि—शतपत्रसहस्रपत्रप्रभृतीनि, यानि च पृथिवीनामानि-पृथिवीरत्नशर्करावालुकेत्यादीनि यानि च नवानां निधीनां चतुर्दशानां चक्रवर्तिरत्नानां क्षुल्लहिमवदादिकानां वर्षधरपर्वतानां पद्मादीनां ह्रदानां गङ्गासिन्धुप्रभृतीनां नदीनां कच्छादीनां विजयानां माल्यवदादीनां वक्षस्कारपर्वतानां सौधर्मादीनां कल्पानां शक्रादीनामिन्द्राणां देवकुरूत्तरमन्दराणामावासानां-शक्रादिसम्बन्धिनां मेरुप्रत्यासन्नादीनां कूटानां क्षुल्लहिमवदादिसम्बधिनां नक्षत्राणां कृत्तिकादीनां चन्द्राणां सूर्याणां च नामानि तानि सर्वाण्यपि द्वीपसमुद्राणां त्रिप्रत्यवताराणि वक्तव्यानि । तद्यथा—हारो द्वीपो हारः समुद्र, हारवरो द्वीपो हारवर समुद्र, हारवरावभासो द्वीपो हारवरावभास समुद्र इत्यादिना प्रकारेण त्रिप्रत्यवतारास्तावद् वक्तव्या यावत् सूर्यो द्वीप सूर्यस्समुद्र, सूर्यवरो द्वीपः सूर्यवरस्समुद्र सूर्यवरावभासो द्वीपो सूर्यवरावभास समुद्रः । उक्तं च जीवाभिगमचूर्णौ—' अरुणाई दीवसमुद्दा तिपडोयारा " यावत् सूर्यवरावभास समुद्र, तत सूर्यवरावभासपरिक्षेपी देवो द्वीपस्ततो देव समुद्र, तदनन्तर नागो द्वीपो नाग समुद्र, ततो यक्षो द्वीपो यक्ष समुद्र, ततो भूतो द्वीपो भूत समुद्र, स्वयम्भूरमणो द्वीपः स्वयम्भूरमण समुद्र, एते पञ्च देवादयो द्वीपा पञ्च देवादय समुद्रा एकरूपा', न पुनरेषा प्रत्यवतार, उक्तं च जीवाभिगमचूर्णौ-एते पञ्च द्वीपा पञ्च समुद्रा एकप्रकारा इति, जीवाभिगमसूत्रेऽप्युक्तम्—" देवे नागे जक्खे भूए सयभूरमणे य एकेको चेव भाणियव्वो, तिपडोयारं नत्थि त्ति " इति । प्रज्ञा० १५ पद १ उ० । अष्टमबलदेववासुदेवयो रामनारायणयो पूर्वभवधर्माचार्ये, स० । ति० । अन्धकवृष्णिधारिणीकुक्षिजे पुत्र, स्था० १० ठा० ३ उ० ।( स चारित्रमनर्गलं प्रव्रज्य शत्रुञ्जयेऽनशनेन मृत्वा शत्रुञ्जये सिद्ध इत्यन्तकृद्दशाना प्रथमवर्गे द्वितीयाध्ययने सूचितम् । ) स्वनामख्याते शाण्डिल्यशिष्ये, नं० । नेमिनाथस्य पितरि, पूर्ण नामास्य समुद्रविजय इति । कल्प० १ अधि० ७ क्षण ।

समुद्दघोस-समुद्रघोष-पुं० । स्वनामख्याते सूरौ, पिं० ।

समुद्दजाणी-समुद्रयानी-स्त्री० । अब्धिगायां नावि, समुद्दजाणीए चेव णावाए । नि० चू० १ उ० ।

समुद्दतरण-समुद्रतरण-न० । समुद्रलङ्घने, " तव प्रसादाद्वचस प्रसादा-द्भर्तुश्च ते देवि ! तव प्रसादात् । साधुप्रसादाच्च पितु प्रसादा-त्तीर्णो मया गोपदवत्समुद्र ॥१॥ " ग०२ अधि० ।

समुद्ददगपूरग-समुद्रदकपूरक-पुं० । जलधिवेलावर्धके चन्द्रे, कल्प० १ अधि० ३ क्षण ।

समुद्ददत्त-समुद्रदत्त-पुं० । शौर्यपुरनगरवासिनि शौर्यदत्तपितरि स्वनामख्याते मत्स्यबन्धके, विपा० १ श्रु० ८ अ० । चतुर्थवासुदेवस्य पूर्वभवे जीवे, ति० । स० । ' माया ' शब्द उदाहृत स्वनामख्याते सर्वाङ्गसुन्दरीभ्रातरि, आ० क० १ अ० । आ० म० । आ० चू० । धातकीखण्डभरते हरिषेणस्य राज्ञो भार्यायाः समुद्रदत्ताया सुते, उत्त० ६ अ० ।

समुद्दपाल-समुद्रपाल-पुं० । स्वनामख्याते पालितपुत्रे, उत्त० २१ अ० ।

समुद्रपालनिक्षेपाभिधानायाह निर्युक्तिकृत्—

समुद्देण पालियम्मि अ, निक्खेवो चउक्कओ दुहा दव्वे ।
आगमनोआगमओ,नो आगमओ य सो विविहो।४२३।
समुद्दपालियाऊ, वेयंतो भावओ उ नायव्वो ।
तत्तो समुट्ठियमिणं, समुद्दपालिज्जमज्झयणं ॥ ४२४ ॥

गाथाद्वय प्रतीतार्थमेव नवर समुद्रपालनिक्षेपप्रस्तावे यत्समुद्रेण पालित इत्युक्तं तत्समुद्रपाल इत्यत्र समुद्रेण पाल्यते स्मेति समुद्रपाल इति व्युत्पत्तिख्यापनार्थमिति गाथाद्वयार्थ । गतो नामनिष्पन्ननिक्षेप ।

सम्प्रति सूत्रालापकनिक्षेपावसर स च सति ' सूत्र ' इति सूत्रानुगमे सूत्रमुच्चारणीयम् । तच्चेदम्—

चंपाए पालिए नामं, सावए आसि वाणिए ।
महावीरस्स भगवओ, सीसो सो उ महप्पणो ॥ १ ॥
निग्गंथे पावयणे, सावए से वि कोविए ।
पोएण ववहारंते, पिहुंडं नगरमागए ॥ २ ॥
पिहुडे ववहरंतस्स, वाणिओ देइ धूअरं ।
तं ससत्तं पइगिज्झ, सदेसं अह पत्थिए ॥३॥
अह पालियस्स घरिणी, समुद्दम्मि पसवई ।
अह दारए तहिं जाए, समुद्दपालि त्ति णामए ॥ ४ ॥
खेमेण आगए चंपं, सावए वाणिए घरं ।
संवड्ढइ घरे तस्स, दारए से सुहोइए ॥ ५ ॥

बावत्तरी कलाओ, सिक्खिए नीइकोविए ।
जोव्वणेण य अप्फुण्णे, सुरूवे पियदंसणे ॥६॥
तस्स रूववइं भज्जं, पिया आणेइ रूविणिं ।
पासाए कीलए रम्मे, देवो दोगुंदओ जहा ॥ ७ ॥
अह अण्णया कयाइं, पासायालोयणे ठिओ ।
वज्झमंमणसोभागं, वज्झं पासइ वज्झगं ॥ ८ ॥
तं पासिऊण संविग्गे, समुद्दपालो (इ) णमब्बवी ।
अहोऽसुभाण कम्माणं, निज्जाणे पावए इमं ॥ ९ ॥
संबुद्धो सो तहिं भगवं, परं संवेगमागओ ।
आपुच्छ अम्मापियरो, पव्वइए अणगारियं ॥ १० ॥

सूत्राणि दश इदमुत्तरं चाध्ययनं क्वचित्सोपस्कारतया व्याख्यास्यते-चम्पायां-चम्पाभिधानायां पुरि पालितो नाम सार्थवाह श्रावक श्रमणोपासकः आसीद्-अभूद् । वणिगेव वाणिजो-वणिग्जातिर्महावीरस्य भगवतः शिष्यो—विनेयः 'स' इति सः तुर्विशेषणे, महात्मन —प्रशस्यात्मनः स च कीदृग् ? इत्याह-'निग्गंथ' त्ति-नैर्ग्रन्थे-निर्ग्रन्थसम्बन्धिनि 'पावयणे' त्ति-प्रवचने श्रावकः 'स' इति-पालितो विशेषेण कोविद -परिडतो विकोविद , कोऽर्थः , विदितजीवादिपदार्थः पोतेन व्यवहरन् प्रवहणवाणिज्यं कुर्वन् 'पिहुंडं' पिहुण्डनामकं नगरमागत -प्राप्त , तत्र च पिहुण्डे व्यवहरते तद्गुणाकृष्टचेता कश्चिद्वाणिजो ददाति-यच्छति 'धूयरं' ति-दुहितरमुद्दूढवांश्च तामसौ स्थित्वा च तत्र कियन्तमपि कालं ना ससत्त्वामित्यापन्नसत्त्वां परिगृह्य-आदाय स्वदेशमथानन्तर प्रस्थित —चलित , तत्र चागच्छतोऽथ पालितस्य गृहिणी समुद्रे-जलधौ प्रसूत—गर्भ विमुञ्चति स्मेति शेषः । 'अथ' त्युपन्यासे, दारक सुतस्तस्मिन्निति प्रसवने जातः- उत्पन्न 'समुद्रपाल' इति नामतो नामाश्रित्य क्रमेण चागच्छन् क्षेमेण-कुशलेनागतश्चम्पायां श्रावको वणिजो 'घरं' ति घस्य गम्यमानत्वाद् गृहं च स्वकीयं कृतं च तत्र वर्द्धापनकादि संवर्द्धते च गृहे-वेश्मनि तस्येति पालिताभिधानवणिजा दारकः स सुखोचितः सुकुमारः, एवं च प्राप्तः कलाग्रहणयोग्यता द्विसप्ततिकलाश्च शिक्षित शिक्षते वा पाठान्तरतः । जातश्च नीतिकोविदो—नयाभिज्ञ 'जोव्वणेण य अप्फुण्णे' त्ति-चस्य भिन्नक्रमत्वात् यौवनेनापूर्णश्च परिपूर्णशरीरश्च, पठ्यते च-'जोव्वणेण य संपन्ने' त्ति-तत्र च संपन्नो-युक्तोऽत एव सुरूप सुसंस्थान प्रियदर्शनः-सर्वस्यैवानन्ददाता परिणयनयोग्यता च तस्य विज्ञाय रूपवतीं-विशिष्टाकृतिं भार्यां पत्नीं पिता पालितवणिगानयति तथाविधरूपिणीं कुलादागमयति, रूपिणीनाम्नीं परिणायितश्च तामसौ प्रासादे क्रीडति—रमते तया सह रम्ये-(अ) रतिहेतौ देवो दुगुन्दको यथा, अथ अन्यदा कदाचित् प्रासादालोकने उक्तरूपे स्थित सन् वधमर्हतीति वध्यस्तस्य मण्डनानि-रक्तचन्दनकरवीरादीनि तैः शोभा—तत्कालोचितपरभागलक्षणा यस्यासौ वध्यमण्डनशोभाकस्तं वध्यं-वधार्हं कञ्चन तथाविधाकार्यकारिणं पश्यति वाह्यं-नगरवहिर्वर्त्तिप्रदेशं गच्छतीति वाह्यगस्तं कोऽर्थो वहिर्निष्क्रामन्तम् , यद्वा-वध्यगमिह वध्यशब्देनोपचाराद्वध्यभूमिरुक्ता तथाविधं वध्यं दृष्ट्वा सवेगः संसारवैमुख्यतो मुक्त्यभिलाषस्तद्धेतुत्वात्, सोऽपि सवेगस्तं समुद्रपाल इदम्-वक्ष्यमाणमब्रवीत् , यथा-अहो अशुभानां कर्मणां-पापानामनुष्ठानानां निर्याणम्-अवसानं पापकम् अशुभमिदं-प्रत्यक्षं यदसौ वराको यथार्थमित्थं नीयते इति भाव , एवं परिभावयन् सबुद्धः-अवगततत्त्वः स वणिक्पुत्रस्तत्रेति तस्मिन्नेव प्रासादालोकने भगवान्माहात्म्यवान् माहात्म्येऽपि भगवच्छब्दस्य दर्शनात्परं-प्रकृष्टं संवेगमागतस्ततश्चापृच्छ्य मातापितरौ 'पव्वए' त्ति-प्राव्राजीत्—प्रकर्षेण गतवान् , कोऽर्थः ?, प्रतिपन्नवान् ,अनगारितां—निःसङ्गतामिति सूत्रदशकार्थः ।

सम्प्रत्यनुवादोऽपि स्पष्टताहेतुर्व्याख्याङ्गमिति ख्यापनार्थैवां क्रमेवार्थमनुवदन् विशेषं च वदन्नाह निर्युक्तिकृत्—

चंपाए सत्थवाहो, नामेणं आसि पालगो नामं ।
वीरवरस्स भगवओ, सो सीसो खीणमोहस्स ॥४२५॥
अह अन्नया कयाई, पोएणं गणिमधरिम-भरिएणं ।
तो नगरं संपत्तो, पे ( पि ) हुंडं नामनामेणं ॥ ४२६॥
ववहरमाणस्स तहिं, पेहुंडे देइ वाणिओ धूयं ।
तं पि य पत्तिं घेत्तू-ण णिग्गओ सो सदेसस्स ॥४२७॥
अह सा सत्थाहसुया, समुद्दमज्झम्मि पसवई पुत्तं ।
पियदंसणसव्वंगं, नामेण समुद्दपालि त्ति ॥ ४२८ ॥
खेमेणं संपत्तो, सो पालिय सावओ घरं निययं ।
धाइदसद्धपरिवुडो, अह वड्ढइ सो उदहिनामो ॥४२९॥
बावत्तरिं कलाओ, य सिक्खिओ नीइकोविदो जाहे ।
तो जोव्वणमप्फुन्नो,जाओ पियदंसणो अहियं ॥४३०॥
अह तस्स पिया पत्तिं, आणेई रूविणि त्ति नामेणं ।
चउसट्ठिगुणोवेयं, अमरवहूणं सरिसरूवं ॥ ४३१ ॥
अह रूविणी य सहितो,कीलइ सो भवणपुंडरीयम्मि ।
दोगुंदगु व्व देवो, किंकरपरिवारिओ निच्चं ॥४३२ ॥
अह अन्नया कयाई, ओलोयणसंठिओ सदेवीओ ।
वज्झं नीणिज्जंतं, अन्निज्जंतं जणसएहिं ॥४३३॥
अह भणइ सन्निनाणी, भीओ संसारियाण दुक्खाणं ।
नीयाण पावकम्मा-ण हा जहा पावगं इणमो॥४३४॥
संबुद्धो सो भगवं, संवेगमणुत्तरं च संपत्तो ।
आपुच्छिऊण जणए, निक्खंतो खायजसकित्ती ।४३५।

गाथा एकादश व्याख्यातप्राया एव, नवरं 'वीरवरस्स' त्ति—नामतोऽन्येऽपि वीरा सम्भवन्ति , स तु भगवान् भावतोऽपि 'वीर' इति प्राधान्यख्यापकं वरग्रहणम् , अनेन भगवत्समकालतामप्यस्य दर्शयति—'गणिमधरिमभरिएणं' ति-गणिमं-पूगफलादि धरिमं-सुवर्णादि प्रियदर्शनानि-सकलजनाभिमतावलोकनानि सर्वाण्यङ्गानि शिरउरःप्रभृतीन्यस्येति प्रियदर्शनसर्वाङ्गस्तं 'धाईदसद्धपरिवुड' त्ति-दशार्द्धधात्रीपरिवृतो दशार्द्धं च पञ्च ताश्च क्षीरमज्जनम-

एडनक्रीडनाङ्का धात्र्यः उदधिनामा उदधिसमानार्थसमुद्रप-दोपलक्षिताभिधान समुद्रपालनामेति यावत् 'जोव्वणम-णुपत्ते' त्ति—मकारोऽलाक्षणिक. जात. प्रियदर्शनोऽधिक-मित्यतिशयेन सविशेषलावण्यहेतुत्वाद् यौवनस्य चतु-षष्टिगुणा-अश्वशिक्षादिकलाष्टकरहिता कला एव विज्ञा-नापरनामिका उच्यन्ते, भवनपुण्डरीके-भवनप्रधान पुण्ड-रीकशब्दस्येह प्रशंसावचनत्वात् वध्य पश्यन्तीति शेष । 'नी-णिज्जंत' त्ति—नीयमानं 'अणिज्जंत' त्ति—अन्वीय-मानम्—अनुगम्यमान जनशतैर्सर्वविवेकिभिरिति गम्यते, प-ठन्ति च-'वज्झं नीणिज्जंत, पेच्छति तो सो जणवएहिं' ति स्पष्टम् संवी-सम्यगृदृष्टि' स चासौ ज्ञानी च संज्ञिज्ञानी भीतस्त्रस्त. सन् संसारिकेभ्यो दुःखेभ्य इति- आर्षत्वाच्च सुब्व्यत्यय, किं भणति, इत्याह—नीचानां-निकृष्टाना, पापकर्मणां-पापहेत्वनुष्ठानाना चौर्यादीना 'हा' इति खेदं यथा पापकं फलमिति गम्यते, 'इणमो' त्ति—इद—प्रत्य-क्षम्, किमुक्तं भवति—यथाऽस्य चोरस्यानिष्टं फलं पापकर्म-णा तथाऽस्माद्दृशामपीति निर्युक्तिगायैकादशकार्थ. ।

प्रव्रज्य च यदसौ कृतवाँस्तदाह सूत्रकृत्—

जहाय सङ्गत्थमहाकिलेसं,
महंतमोहं कसिणं भयाणगं ।
परियायधम्मं च भिरोयएज्जा,
वयाइँ सीलाइँ परिस्सहे य ॥ ११ ॥
अहिंस सच्चं च अतेणगं च,
तत्तो अबंभं अपरिग्गहं च ।
परिवज्जिया पंच महव्वयाई,
चरिज्ज धम्मं जिणदेसियं विऊ ॥ १२ ॥
सव्वेहि भूएहिं दयाणुकंपे,
खंतिक्खमे संजय बंभचारी ।
सावज्जजोगं परिवज्जयंतो,
चरिज्ज भिक्खू सुसमाहि इंदिए ॥ १३ ॥
कालेण कालं विहरिज्ज रट्ठे,
बलाबलं जाणिय अप्पणो य ।
सीहो व सद्देण ण संतसेज्जा,
वयजोग सोच्चा ण असब्भमाहु ॥ १४ ॥
उवेहमाणो उ परिव्वएज्जा,
पियमप्पियं सव्व तितिक्खएज्जा ।
ण सव्व सव्वत्थ ऽभिरोयएज्जा,
न यावि पूय गरिहं च संजए ॥ १५ ॥
अणेगछंदा मिहमाणवेहिं,
जे भावओ से पकरेति भिक्खू ।
भय भेरवा तत्थ उविंति भीमा,
दिव्वा मणुस्सा अदुवा तिरिच्छा ॥ १६ ॥
परिस्सहा दुव्विसहा अणेगे,
सीयंति जत्था बहुकायरा नरा ।
से तत्थ पत्ते न वहिज्ज भिक्खू,
संगामसीसे इव नागराया ॥ १७ ॥
सीयोसिणा दंसमसगा य फासा,
आतंका विविहा फुसंति देहं ।
अक्कुक्कुओ तत्थ हि अहियासएज्जा,
रयाइ खेवेज्ज पुरा कडाइं ॥ १८ ॥
पहाय रागं च तहेव दोसं,
मोहं च भिक्खू सययं वियक्खणो ।
मेरु व्व वाएण अकंपमाणे,
परीसहे आयगुत्ते सहेज्जा ॥ १९ ॥
अणुन्नए नावणए महेसी,
नेआ वि पूयं गरहं च संजए ।
से उज्जुभावं पडिवज्ज संजए,
णिव्वाणमग्गं विरए उवेइ ॥ २० ॥
अरइरइसहे पहीणसंथवे,
विरए आयहिए पहाणवं ।
परमट्ठपहे हि चिट्ठइ,
छिन्नसोए अममे अकिंचणे ॥ २१ ॥
विवित्तलयणाइँ भइज्जताइं,
निरोवलेवाइँ असंथडाइं ।
इसीहि चिण्णाइँ महाजसेहिं,
काएण फासेज्ज परीसहाइं ॥ २२ ॥
सण्णाणणाणोवगए महेसी,
अणुत्तरं चरिउं धम्मसंचयं ।
अणुत्तरे णाणधरे जसंसी,
ओहासई सूरिए वंतलिक्खे ॥ २३ ॥

त्रयोदश सूत्राणि प्राय सुगमान्येव, नवरं हित्वा-त्यक्त्वा संश्चासौ ग्रन्थश्च सद्ग्रन्थ प्राकृतत्वाद् विन्दुलोपस्तं, पठ-न्ति च-'जहित्तु संगं च' त्ति 'जहाय सग च' त्ति वा उभयत्र हित्वा सङ्गं स्वजनादिप्रतिबन्ध च पूरणे निपात., महान् क्लेशो यस्माद्यस्मिन् वा तं महाक्लेशम् 'महंतमोहं' ति—महान्मोह -अभिष्वङ्गो यस्मिन् यतो वा तं तथाविधं 'कसिणं' ति—कृत्स्न कृष्णं वा कृष्णलेश्यापरिणामहेतुत्वेन भयानकं महाक्लेशादिरूपत्वादेव विवेकिनां भयावहम् । 'परियाय' त्ति-प्रक्रमात्प्रव्रज्यापर्यायस्तत्र धर्म पर्यायधर्मस्त, चशब्द पाद-पूरणे, 'अभिरोयएज्ज' त्ति-आर्षत्वाद् ह्यस्तन्यर्थे सप्तमी-तताऽभ्यरोचत-अभिरुचितवाँस्तदनुष्ठानविषया प्रीतिं कृ-तवान् उपदेशरूपता च तन्त्र न्यायेन व्यापयितुमित्थ प्रयोग यद्वा-आत्मानमेवायमनुशास्ति यथा हे आत्मन्! सङ्ग त्य-क्त्वा प्रव्रज्याधर्ममभिरोचयेद् भवानेवमुत्तरक्रियास्वपि य-थासम्भव भावनीयम् । प्रव्रज्यापर्यायधर्ममेव विशेषत आह-

व्रतानि-महाव्रतानि शीलानि पिण्डविशुद्ध्याद्युत्तरगुणरूपा-णि परीषहांश्चेति भीमसेनन्यायेन परिग्रहसहनानि च । एत-दभिरुच्य तदनन्तरं च यत्कृतवांस्तदाह-अहिंसा सत्यमस्तै-न्यकं च ' तत्तो य बंभं अपरिग्गहं च ' त्ति—ततश्च ब्रह्मचर्य-मपरिग्रहं च प्रतिपद्य-अङ्गीकृत्य ' अबंभपरिग्गहं च ' इति तु पाठे परिवर्ज्य चेत्यध्याहार्य पञ्च महाव्रतानि-उक्तरूपाणि 'चरिज्ज ' त्ति-प्राग्वद्चरत् नाङ्गीकृत्यैव तिष्ठेदिति भाव धर्म श्रुतचारित्ररूपं जिनदेशित ' विउ ' त्ति—विद्वान् जानान. । 'सव्वेहिं भूतेहिं ' सुवव्यत्यात् सर्वेष्वशेषेषु प्राणिषु दयया-हितोपदेशादिदानात्मिकया रक्षणरूपया वा अनुकम्पनशीलो दयानुकम्पी पाठान्तरतो दयानुकम्पो वा क्षान्त्या न त्वशक्त्या क्षमते प्रत्यनीकाद्युदीरितदुर्वचनादिकं सहत इति क्षान्तिक्षम , संयत इति संयत ,स चासौ ब्रह्मचारी च संयतब्रह्मचारी पूर्व ब्रह्मप्रतिपत्त्यागत्वेऽपि ब्रह्मचारीत्यभिधानं ब्रह्मचर्यस्य दुरनु-चरत्वख्यापनार्थम् ,अनेन च मूलगुणरक्षणोपाय उक्त.।'काले-ण कालं ' ति-रूढित. काले-प्रस्तावे , यद्वा—कालेन-पा-दोनपौरुष्यादिना कालमिति कालोचितं प्रत्युपेक्षणादि कु-र्वन्निति शेष. , राष्ट्रे-मण्डले बलाबल सहिष्णुत्वासहिष्णु-त्वलक्षण ज्ञात्वाऽऽत्मनो यथा यथा संयमयोगहानिर्न जाय-ते तथा तथेत्यभिप्राय , अन्यच्च सिंहवच्छब्देन—प्रस्तावा-द्भयोत्पादकेन न समत्रस्यन्नैवं सत्त्वाद्यचलितवान् , सिंह-दृष्टान्ताभिधान च तस्य सात्त्विकत्वेनातिस्थिरत्वादत एव वाग्योगम्-अर्थाद् दु खोत्पादक 'सोच्च' त्ति--श्रुत्वा न-नैवा-सभ्यमश्लीलरूपम् आहु त्ति-उक्तवान् । तर्हि किमयमकरो-दित्याह-उपेक्षमाणस्तमवधीरयन् पर्यव्रजत् तथा प्रियमनुकू-लमप्रियमननुकूलं ' सव्वं तितिक्खएज्ज ' त्ति—सर्व-मतितिक्षत-सोढवान् । किञ्च ' न सव्व ' त्ति—सर्वं वस्तु सर्वत्र स्थानेऽभ्यरोचयत न यथा दृष्टाभिलाषुकोऽभूदिति भाव । यदि वा-यदेकत्र पुद्गलस्वनत सेवित न तत्सर्वमभि मताहारादि सर्वत्राभिलषितवान् , नचापि पूजां गर्हां वा ऽभ्यरोचयतेति सम्बन्ध., इह च गर्हातोऽपि कर्मक्षय इति केचिदतस्तन्मतव्यवच्छेदार्थं गर्हाग्रहणं , यद्वा-गर्हा-परा-पवादरूपा, ननु भिक्षोरपि किमन्यथाभाव सम्भवति?, येन त्थमित्थं च तद्गुणाभिधानमित्याह-' अणेग ' त्ति-वृत्तार्द्धे तत्र च ' अणेग ' त्ति—अनेके छन्दा -अभिप्राया सम्भव-न्तीति गम्यते, ' मिह ' त्ति-मकारोऽलाक्षणिक , इह जगति 'माणवेहिं' ति-सुव्यत्ययात् मानवेषु ' ये ' इति याननेकान् छन्दानुभावतस्तत्त्वतृत्यौदयिकादिभावतो वा स प्रकरो-ति भृश विधत्ते भिक्खु ' त्ति—अपिशब्दस्य गम्य मानत्वात् भिक्षुरपि-अनगारोऽपि सन् अत इत्थमित्थ च तद्गुणभिधानमिति भाव. । अपरं च-' भयभेरवा ' भयोत्पादकत्वेन भीषणास्तत्रेति ब्रह्मप्रतिपत्तौ ' उइंति ' त्ति-उद्यन्ति उदय यान्ति पट्यते च-' उवेंति ' त्ति-उपयान्ति भयभैरवा इत्यनेनापि गते-भीमा इति पुनरभिधानमतिरौ द्रताख्यापनायोक्तं दिव्या इत्याद्युपसर्गा इति गम्यते । 'ति-रिच्छ'त्ति तैरश्चा तथा 'परीसह त्ति-परीषहाश्च उद्यन्तीति सम्बन्ध ,सीदन्ति-सयम प्रति शिथिलीभवन्ति 'जत्थ त्ति-यत्र येषूपसर्गेषु परीषहेषु च सत्सु 'से' इति-स तत्र तेषु'पत्ते' त्ति-वचनव्यत्ययात्, प्राप्तेषु,प्राप्ता वानुभवनद्वारेणागतो न (व्यथेत् ,स्यात् )व्यथाभीतश्चलितो वा सत्त्वाद् भिक्षु सन्, सग्रामशीर्षे-युद्धप्रकर्षे इव नागराजो-हस्तिराज. स्पर्शास्तृ-णस्पर्शादय. आतङ्का -रोगा स्पृशन्ति-उपतापयन्ति'अकुक्क-य'त्ति आर्षत्वात् कुत्सितं कूजति-पीडित सन्नाक्रन्दति कु-कूजो न तथेत्यकुकूज', पठ्यते च-'अककरि'त्ति-कदाचिद्वैद-नाकुलितोऽपि न कर्कशरायितकारी, अनेन चानन्तरसूत्रोक्त ए-वार्थो विस्पष्टतार्थमन्वयनोक्त.,एवंविधश्च स रजांसीव रजासि जीवमालिन्यहेतुतया कर्माणि ' खवज्ज ' त्ति-अक्षिपत् परी-षहसहनादिभि. क्षिप्तवान् , 'मोह '( म् ) इति-मिथ्यात्वहा-स्यादिरूपोऽज्ञानं वा गृह्यते, आत्मना गुप्त आत्मगुप्त कूर्म-वत् संकुचितसर्वाङ्ग. अनेन परीषहसहनोपाय उक्त., किञ्च-' न यावि पूयं गरिहं च संजये ' त्ति-न चापि पूजा गर्हां च प्रतीति शेष. असजत्-सङ्गं विहितवान् , तत्र च अनुन्नतत्व मनवनतत्वं च हेतुर्भावत उन्नतो हि पूजा प्रति अवनतश्च ग-र्हां प्रति सङ्गं कुर्यान्नत्वन्यथेति भाव. , पूर्वत्राभिरुचिर्निषेध उक्त. इह तु सक्तस्येति पूर्वस्माद्विशेष., स इति-स एवंगुण. ऋजुभावम्-आर्जवं प्रतिपद्य-अङ्गीकृत्य संयतो निर्वाणमार्गं सम्यग्दर्शनादिरूपं विरतः सन्गुणैति विशेषण प्राप्नोति. व-र्तमाननिर्देश इहोत्तरत्र च प्राग्वसत स तदा कीदृश किं करोतीत्याह-अरतिरती संयमासंयमविषये सहते न ताभ्यां बाध्यत इत्यगतिरतिसहः 'पहीणसंथवे' त्ति-प्रहीणसंस्तवः संस्तवप्रहीणो वा संस्तवश्च पूर्वपश्चात्संस्तवरूपो वचनसवा-सरूपो वा गृहिभि सह, प्रधान स च संयमो मुक्तिहेतुत्वा-त् यस्यास्त्यसौ प्रधानवान् परम प्रधानोऽर्थः पुरुषार्थो वा-ऽनयो. कर्मधारये परमार्थो मोक्ष ,स पद्यते-गम्यते यैस्तानि-परमार्थपदानि सम्यग्दर्शनादीनि सुव्यत्ययात् तेषु तिष्ठति अविराधकतयाऽऽस्ते ' छिन्नसोय ' त्ति छिन्नशोक छिन्ना-नि वा श्रोतांसीव श्रोतांसि—मिथ्यादर्शनादीनि येनासौ छिन्नश्रोता , अत एव अममो—ऽकिञ्चन', इह च संयमवि-शेषाणामानन्त्यात्तदभिधायिपदाना पुन पुनर्वचनेऽपि न पौनरुक्त्य , तथा विविक्तलयनानि—स्त्र्यादिविरहितोपाश्र-यरूपाणि विविक्तत्वादेव च ' निरोवलेवाइं ' ति-निरुपलेपा-नि-अभिष्वङ्गरूपोपलेपवर्जितानि भावतो द्रव्यतस्तु तदर्थं नोपलिप्तानि असंसृतानि—बीजादिभिरव्याप्तानि अत एव च निर्दोषतया ऋषिभि —मुनिभिश्चीर्णान्यासेवितानि , चीर्णशब्दस्य तु सुचीर्णं प्रोषितव्रतमितिवत्साधुता ' फा-सिज्ज ' त्ति—अस्पृशत्—सोढवानित्यर्थ पुन पुन प-रीषहस्पर्शनाभिधानमतिशयख्यापनार्थम् , तत स कीदृग-भूदित्याह ' स ' इति समुद्रपालनामा मुनिर्ज्ञानमिह श्रुत-ज्ञानं तेन ज्ञानम्-अवगम. प्रक्रमाद्यथावत् क्रियाकलाप-स्य तेनोपगतो युक्तो ज्ञानज्ञानोपगतः , पाठान्तरत स-न्ति-शोभनानि नानल्पनकरूपाणि ज्ञानानि सक्त्यागपर्यो-यधर्माभिरुचितत्वाद्यवबोधात्मकानि तैरुपगत सन् आ-नाज्ञानोपगत धर्मसञ्चयं-क्षान्त्यादियतिधर्मसमुदयम् 'अणु-त्तरे णाणधरि' त्ति-एकारस्यालाक्षणिकत्वादनुत्तरज्ञानं-के-वलाख्य तद्धारयत्यनुत्तरज्ञानधर , पठ्यते च-'गुणुत्तरे णा-णधरि'त्ति—तत्र च गुणोत्तरो-गुणप्रधानो ज्ञानं प्रस्तावात् केवलज्ञानं तद्धर ,एकारस्यालाक्षणिकत्वाद् गुणोत्तरं यज्ज्ञानं तद्धरो वाऽत एव यशस्वी 'ओभासइय'त्ति—अवभासते-प्र-

काशते सूर्यवदन्तरिक्षे यथा नभसि सूर्योऽवभासते तथा असावप्युत्पन्नकेवलज्ञान इति त्रयोदशसूत्रार्थः ।

सम्प्रत्यध्ययनार्थमुपसंहरंस्तस्यैव फलमाह—

दुविहं खवेऊण य पुन्नपावयं,
निरंजणे सव्वत्रो विप्पमुक्के ।
तरित्ता समुद्दं व महाभवोघं,
समुद्दपाले अपुणागमं गए ॥ २४ ॥

द्विविधं—द्विभेदं घातिकर्मभवोपग्राहिभेदेन पुण्यपापं-शुभाशुभप्रकृतिरूपं निरञ्जनः-कर्मसङ्गरहितः पठ्यते च-'निरंगणे' त्ति—अगेर्गत्यर्थत्वान्निरङ्गन —प्रस्तावात् संयमं प्रति निश्चलः शैलेश्यवस्थाप्राप्त इति यावत्, अत एव सर्वत इति बाह्यादान्तराच्च प्रक्रमादभिष्वङ्गहेतोस्तीर्त्वा-उल्लङ्घ्य समुद्रमिव अतिदुस्तरतया महाश्चासौ भवौघश्च देवादिभवसमूहस्तं शेषं स्पष्टमिति सूत्रार्थः ।

अमुमेवार्थं स्पष्टयितुमाह निर्युक्तिकृत्—

काऊण तवचरणं, बहूणि वासाणि सो धुयकिलेसो ।
तं ठाणं संपत्तो, जं संपत्ता न सोयंति ॥ ३५ ॥

सुगममेव, 'इति' परिसमाप्तौ, ब्रवीमीति पूर्ववत् । उक्तोऽनुगम, संप्रति नयास्तेऽपि प्राग्वद् । उत्त० २१ अ० ।

**समुद्दवभूय-समुद्रवभूत**-त्रि० । जलधिशब्दप्राप्ते, विपा० १ श्रु० ३ अ० । भ० ।

**समुद्दलिक्खा-समुद्रलिक्षा**-स्त्री० । द्वीन्द्रियजीवभेदे, प्रज्ञा०१पद।

**समुद्दवायग-समुद्रवाचक**-पुं० । वाचकवरे समुद्राख्ये आचार्ये, आ० चू० १ अ० ।

**समुद्दवायस-समुद्रवायस**-पुं० । चर्मपक्षिभेदे, जी० १ प्रति० ।

**समुद्दविजय-समुद्रविजय**-पुं० । सौर्यपुरे दशदशाराणां मध्ये ज्येष्ठे दशारे नेमिनाथस्वामिन पितरि, उत्त० २२ अ० । आ० चू० । स० । आव० । आ० म० । अन्त० । आ० क० । दश० ।

अट्ठारसयसहस्सा, सीसाणं आसि रिट्ठनेमिस्स ।
कण्हेण पणमियम्मि य, सिवा समुद्देण तणयस्स ॥८८॥

ति० । प्रव० । कल्प० । वासुदेवपितरि, आव० १ अ० ।

**समुद्दवीइ-समुद्रवीचि**-स्त्री० । सागरतरङ्गे, तं० ।

**समुद्दसूरि-समुद्रसूरि**-पुं० । स्वनामख्याते कस्यचित्प्रतिष्ठाकल्पविशेषस्य कर्त्तरि आचार्ये,जीवा०१ अधि०१३ गाथा टी० ।

**समुद्दिस्स-समुद्दिश्य**-अव्य० । सम्यगुद्दिश्य प्रतिज्ञायेत्यर्थे, आचा० २ श्रु० १ चू० २ अ० १ उ० । अधिकृत्येत्यर्थे, (आचा०) आश्रित्येत्यर्थे, आचा० १ श्रु० ८ अ० २ उ० ।

**समुद्दिसित्तए-समुद्देष्टुम्**-अव्य० । योगसामाचार्यैव स्थिरपरिचित कुर्विदमित वक्तुमित्यर्थे, स्था० २ ठा० १ उ० ।

**समुद्देस-समुद्देश**-पुं० । व्याख्यायाम्, व्य० १ उ० । आ० म० । जीत० । शिष्येण हीनादिलक्षणोपेते अधीते गुरोर्निवेदिते स्थिरपरिचितं कुर्विदमिति गुरुवचनविशेषे, अनु० । समुद्देशविधि.-अङ्गादिसमुद्देशेऽप्ययमेव विधिर्यद्नयो नवरं पूर्वं प्रवेदिते योगं कुर्वित्युक्तमत्र तु स्थिरपरिचितं कुर्विति वदति योगोत्क्षेपकायोत्सर्गो नन्द्याकर्षणं प्रदक्षिणात्रयविधिश्च न क्रियते, शेष सप्तवन्दनकादिको विधिस्तथैव । अनु० । दश० । (अधिकं 'जोगविहि' शब्दे चतुर्थभागे १६४५ पृष्ठे उक्तम् ) भोजने,ग० ।

जत्थ समुद्दे( द्दे )सकाले, साहूणं मंडलीइ अज्जाओ ।
गोअम ! ठवेंति पाए, इत्थीरज्जं न तं गच्छं ॥९६॥

यत्र-गणे समुद्देशकाले—भोजनसमये साधूनां मण्डल्याम् आर्या —संयत्य पादौ स्थापयन्ति मण्डल्यां समागच्छन्तीत्यर्थ, हे इन्द्रभूते ! तत् स्त्रीराज्यं जानीहि, न तं गच्छम् । अत्र समुद्देशशब्देन भोजनमुच्यते, यत उक्तमोघनिर्युक्तिवृत्तौ । तथाहि-

" जइ पुण वित्रालपत्ता, य एव पत्ता उवस्सया ण लभे ।
सुन्नघरे देउले वा, उज्जाणे वा अपरिभोगे " ॥ १ ॥

यदि पुनर्विकाल एव प्राप्तास्ततश्च तेषां विकालवेलायां वसतौ प्रविशतां प्रमादकृतो दोषो न भवति, ' य एव पत्त त्ति-ये चैवाप्रत्यूषस्येव प्राप्ता किं तु उपाश्रयं न लभन्ते तत क्व समुद्दिशन्तु ? शून्यगृहे देवकुले वा उद्याने वा अपरिभोगे लोकपरिभोगरहिते समुद्दिशन्तीति क्रिया वक्ष्यति

"आवायचिलिमिलाए, रंखे वा णिब्भए समुद्दिसणं ।
सभए पच्छन्नाऽसइ, कमढगकुरुया य संतरिया ॥१॥ "

अथ शून्यगृहादौ सागारिकाणामापातो भवति तत आपाते सीत चिलिमिली जवनी च दीयते, 'रखे व ' त्ति—अथ शून्यगृहादि सागारिकाक्रान्तं ततोऽरण्ये निर्भये समुद्दिशनं क्रियते, सभये अरण्ये प्रच्छन्नस्य वा असति-अभावे ततो वसतिसमीप एव कमठकेषु शुष्केन लेपेन सबाह्याभ्यन्तरेषु लिप्तेषु भुक्तोऽकुरुकुचा पादप्रक्षालनादि क्रियते, सान्तरा -सावकाशा वृहदन्तराला उपविश्य इदानीं भुक्त्वा बहिः पुनर्विकाले वसतिमन्विपन्तीत्यादि गाथाच्छन्दः ॥९६॥ ग० २ अधि० ।

**समुद्धिय-समुद्धृत**-त्रि०।सम्-एकीभावेनाविप्रतिपत्त्या उद्धृता समुद्धृता. । षो०१६विव० । उत्क्षिप्तेषु, प्रश्न०४ आश्र० द्वार ।

**समुपविट्ठ-समुपविष्ट**-त्रि० । सम्यक् परस्परानावाधया उपविष्टाः समुपविष्टाः । सम्यक्स्थितेषु,जी० ३ प्रति०४ अधि० ।

**समुपेहिय-समुपेक्ष्य**-अव्य० ।सम्यग् दृष्ट्वेत्यर्थे, दश० ७ अ० ।

**समुप्पण्ण-समुत्पन्न**-त्रि० । जाते, सूत्र० १ श्रु० १ अ० ३उ० । नि० । सिद्धे, प्रव० ३५ द्वार । प्राप्त,कल्प० १ अधि० १ क्षण ।

**समुप्पत्तुकाम-समुत्पत्तुकाम**-त्रि० । उत्पत्तुमिच्छौ , स्था० ४ ठा० २ उ० । भवितुकामे, स्था० ५ ठा० १ उ० ।

**समुप्पाय-समुत्पाद**-पुं०।प्रादुर्भावे, सूत्र०१ श्रु०१ अ० ३ उ० ।

**समुप्पेक्खमाण-समुत्प्रेक्षमाण**-त्रि० । निरूपयति , आ० १ श्रु० १ अ० ।

**समुवगय-समुपगत**-त्रि० । समीपमुपगते, व्य० ४ उ० ।

**समुब्भव-समुद्भव**-पु० । उत्पत्तौ, विशे० । दशा० ।

**समुब्भूय-समुद्भूत**-त्रि०।अतिप्रबलतयोत्पन्ने,स्था०४ठा०१उ० ।

**समुयाण-समुदान**-न०।भैक्षे,याञ्चायाम्,स्था० ४ठा०२उ० ।

**समुयाय-समुदाय**-पुं० । वृन्दे, अनु० ।

समुल्लाव-समुल्लाप-पुं० । जल्पे, ज्ञा० १ श्रु० ३अ०। प्रमाणिते, विपा० १ श्रु० ७ अ० । आ० म० ।

समुवट्ठिय-समुपस्थित-त्रि० । सम्यगुपस्थिते, उत्त०२४ अ० ।

समुवसंपण्ण-समुपसंपन्न-त्रि० । समिति-सम्यग्गृहवृत्त्या सर्वथा समर्पणरूपया उपपन्न. । सम्यक् सामीप्यमागते,ध०३अधि०।

समुवागय-समुपागत-त्रि० । समायाते, भ० ११ श० १२ उ०।

समुवेहमाण-समुपेक्षमाण-त्रि०। पश्यति,आचा०१ श्रु०५ अ०।

समुसरण-समवसरण-न० । तीर्थकृता सदेवमनुजासुराणां पर्षदि, पिं० । ( अत्रत्या वक्तव्यता ' पिंड ' शब्दे पञ्चमभागे गता । )

समुस्सय-समुच्छ्रय-पुं० । काये, आव० ५ अ० । सूत्र० । कर्मोपचये, आचा० १ श्रु० ४ अ० ४ उ० ।

समुस्सिय-समुत्सृत-त्रि० । सम्यगूर्ध्वीकृते, रा० ।

संमुह-सन्मुख-न० । "मांसादेर्वा" ॥ ८।१।२६ ॥ इत्यनुस्वारस्य पाक्षिको लोप. । संमुहं । समुहं । प्रा० । अभिमुखे, रा० ।

समुहा-श्वमुखिका-स्त्री० । शुनो मुखं श्वमुखं, तस्येवाचरणं श्वमुखिका । कौलेयकस्येव भषणे, ' समुहिं-तुरियं चवलं धमत त्ति ' शुनो मुखं श्वमुखं तस्यैवाचरणं श्वमुखिका-कौलेयकस्येव भषणं त्वरितचपलम्-अतिचटुलतया धमन् शब्दं कुर्वन्नित्यर्थ. । ज्ञा० १ श्रु० ७ अ० ।

समुहागय-समुखागत-त्रि० । उद्धटवेषवति, " समुहागयं आसरिअं " पाइ० ना० १८५ गाथा ।

समूसिय-समुच्छ्रित-त्रि० । सम्यगूर्ध्वं श्रित. समुच्छ्रितः । ऊर्ध्वं व्यवस्थिते, सूत्र० २ श्रु० ३ अ० ।

समूसियरोमकूव-समुच्छ्रितरोमकूप-त्रि० । समुच्छ्रितानि रोमाणि कूपेषु यस्येति समुच्छ्रितरोमकूपः । रोमाञ्चिते, ज्ञा०१ श्रु० १ अ० । कल्प०।

समूह-समूह-पुं० । द्वित्रादिपरमाणूनां संयोगे, आ० म० १ अ०. । समुदाये, विशे० । स्कन्धे, अनु० । संहे, स्था० ३ ठा० ४ उ० । समूहीभूतानि बहूनीत्यर्थ । कल्प०१ अधि०३ क्षण।

समेच्च-समेत्य-अव्य०। ज्ञात्वेत्यर्थे, आचा०१ श्रु०६ अ०१ उ०।

समेमाण-समयत्-त्रि०। समागच्छति, आचा० १ श्रु०८ अ०।

समेय-समेत-त्रि० । मिलिते, विशे० ।

समोडहमाण-समुपदहत्-त्रि० । भस्मसात्कुर्वति, भ०८ श० ।

समोणय-समवनत-त्रि० । ईषदवनते,आ० म०१ अ० । रा०।

समोयरंत-समवतरत्-त्रि० । सर्वतो विस्तरति, तं० ।

समोयार-समवतार-पुं० । सम्यग् अविरोधेन वर्त्तनं समवतार. । अविरोधवृत्तितायाम् , अनु० । ( ' आणुपुव्वी ' शब्दे द्वितीयभागे १३४ पृष्ठे गता वक्तव्यता । )

समवतारं निरूपयितुकाम आह—

से किं तं समोयारे ?, समोयारे छव्विहे पण्णत्ते, तं जहा-णामसमोयारे ठवणासमोयारे दव्वसमोयारे खेत्तसमोयारे कालसमोयारे भावसमोयारे । नामठवणाओ पुव्वं वण्णिआओ०जाव से तं भविअसरीरदव्वसमोयारे । से किं तं जाणगसरीरभविअसरीरवइरित्ते दव्वसमोयारे ?, दव्वस०तिविहे पण्णत्ते,तं जहा-आयसमोयारे परसमोयारे तदुभयसमोयारे । सव्वदव्वा वि णं आयसमोआरेणं आयभावे समोयरंति, परसमोयारेणं जहा कुंडे बदराणि, तदुभयसमोयारेणं जहा घरे खंभो आयभावे अ, जहा घडे गीवा आयभावे अ । अहवा जाणगसरीरभविअसरीरवइरित्ते दव्वसमोयारे दुविहे पण्णत्ते,तं जहा-आयसमोयारे अ, तदुभयसमोयारे अ । चउसट्ठिआ आयसमोयारेणं आयभावे समोयरइ , तदुभयसमोतारेणं बत्तीसिआए समोअरइ, आयभावे अ बत्तीसिआ आयसमोतारेणं आयभावे समोतरइ, तदुभयसमोतारेणं सोलसिआए समोअरइ आयभावे अ, सोलसिआ आयसमोआरेणं आयभावे समोअरइ, तदुभयसमोतारेणं अट्ठभाइआए समोअरइ आयभावे अ, अट्ठभाइया आयसमोआरेणं आयभावे समोअरइ तदुभयसमोआरेणं चउभाइआए समोअरइ आयभावे अ, चउभाइया आयसमोआरेणं आयभावे समोअरइ, तदुभयसमोआरेणं अद्धमाणीए समोअरइ आयभावे अ, अद्धमाणी आयसमोआरेणं आयभावे समोअरइ, तदुभयसमोयारेणं माणीए समोअरइ आयभावे अ,से तं जाणगसरीरभविअसरीरवइरित्ते दव्वसमोआरे । से तं णोआगमओ दव्वसमोयारे। से तं दव्वसमोयारे । से किं तं खेत्तसमोयारे?, खेत्तसमोयारे दुविहे पण्णत्ते, तं जहा-आयसमोयारे अ, तदुभयसमोयारे य । भरहे वासे आयसमोयारे य आयभावे समोयारे अ,तदुभयसमोयारेणं जंबुद्दीवे समोयारेणं आयभावे य, जंबुद्दीवे आयसमोयारेणं आयभावे समोतरइ, तदुभयसमोतारेणं तिरियलोए समोतरइ आयभावे अ, तिरियलोए आयसमोतारेणं आयभावे समोअरइ तदुभयसमोतारेणं लोए समोतरइ आयभावे अ । से तं खेत्तसमोया( आ)रे । से किं तं कालसमोयारे ? कालस० दुविहे पन्नत्ते, तं जहा-आयसमोयारे अ, तदुभयसमोयारे य । समए आयसमोयारेणं आयभावे समोयरइ, तदुभयसमोयारेणं आवलिआए समोयरइ आयभावे अ, एवमाणापाणू थोवे लवे मुहुत्ते अहोरत्ते पक्खे मासे ऊऊ अयणे संवच्छरे जुगे वाससते वाससहस्से वाससतसहस्से वा पुव्वंगे पुव्वे तुडिअंगे तुडिए अडडंगे अडडे अववंगे अववे हूहूअंगे हूहूए उप्पलंगे उप्पले पउमंगे पउमे णलिणंगे णलिणे अत्थनिउरंगे अत्थनिउरे अउअंगे अउए नउअंगे नउए पउअंगे पउए चूलिअंगे चूलिया सीसपहेलिअंगे सीसपहेलिया पलिओवमे सागरोवमे आयसमोयारेणं आयभावे समोअरइ

तदुभयसमोतारेणं ओसप्पिणीउस्सप्पिणीसु समोतरइ आयभावे अ,ओसप्पिणीउस्सप्पिणीओ आयसमोयारेणं आयभावे समोयारेणं तदुभयसमोतारेणं पोग्गलपरिअट्टे समोअरइ आयभावे अ, पोग्गलपरिअट्टे आयसमोयारेणं आयभावे समोतरइ तदुभयसमोतारेणं तीतद्धाअणागतद्धासु समोअरइ आयभावेणं । तीतद्धा अणागतद्धाओ आयसमोआरेणं आयभावे समोअरेणं तदुभयसमोतारेणं सव्वद्धाए समोतरइ आयभावे अ । से तं कालसमोयारे । से किं तं भावसमोयारे ?, भावसमोयारे दुविहे पण्णत्ते, तं जहा- आयसमोयारेणं तदुभयसमोतारेणं कोहे आयसमोतारेणं आयभावे समोयारेणं तदुभयसमोतारेणं माणे समोतारेणं आयभावे अ, एवं माणे, माया, लोभे, रागे, मोहणिज्जे, अट्ठ कम्मपयडीओ आयसमोयारेणं आयभावे समोअरइ, तदुभयसमोयारेणं छव्विहे भावे, समोतरइ आयभावे अ । एवं छव्विहे भावे, जीवे जीवत्थिकाए आयसमोयारेणं आयभावे समोअरइ तदुभयसमोयारेणं सव्वदव्वेसु समोअरइ आयभावे य । एत्थ संगहणीगाहा-"कोहे माणे माया,लोभे रागे य मोहणिज्जे अ । पगडीभावे जीवे, जीवत्थिकायदव्वा य" ॥ १ ॥ से तं भावसमोयारे । से तं समोतारे । ( सू० १५३× )

'से किं तं समोयारे' त्यादि, समवतरणं वस्तूनां स्वपरोभयेष्वन्तर्भावचिन्तनं समवतार., स च नामादिभेदात्षोढा, तत्र नामस्थापने सुचर्चिते, एवं द्रव्यसमवतारोऽपि द्रव्यावश्यकादिवदभ्यूह्य वक्तव्य , यावज्ज्ञशरीरभव्यशरीरव्यतिरिक्तो द्रव्यसमवतारस्त्रिविध. प्रज्ञप्त , तद्यथा-आत्मसमवतार इत्यादि, तत्र सर्वद्रव्याण्यप्यात्मसमवतारेण चिन्त्यमानान्यात्मभावे स्वकीयस्वरूपे समवतरन्ति-वर्त्तन्ते, तदव्यतिरिक्तत्वात्तेषा व्यवहारतस्तु परसमवतारेण परभावे समवतरन्ति यथा कुण्डे बदराणि, निश्चयत सर्वाण्यपि वस्तूनि प्रागुक्तयुक्त्या स्वात्मन्येव वर्त्तन्ते, व्यवहारतस्तु स्वात्मनि आधारे च कुण्डादिके वर्त्तन्त इति भाव , तदुभयसमवतारेण तदुभये वस्तूनि वर्त्तन्ते, यथा कटकुड्यदेहलीपट्टादिसमुदायात्मके गृहे स्तम्भो वर्त्तते आत्मभावे च तथैव दर्शनादिति । एवं बुध्नोदरकपालात्मके घटे ग्रीवा वर्त्तते आत्मभावे चेति, आह-यद्येवमशुद्ध तदा परसमवतारो नास्त्येव, कुड्यादौ वृत्तानामपि बदरादीना स्वात्मनि वृत्तेर्विद्यमानत्वात्सत्य, किं तु- तत्र स्वात्मनि वृत्तिविवक्षामकृत्वैव तथोपन्यास कृतो; वस्तुवृत्त्या तु द्विविध एव समवतार ,अत एवाह, अथवा-ज्ञशरीरभव्यशरीरव्यतिरिक्तो द्रव्यसमवतारो द्विविध प्रज्ञप्त', तद्यथा-आत्मसमवतारस्तदुभयसमवतारश्च, अशुद्धस्य परसमवतारस्य क्वाप्यसम्भवात्, न हि स्वात्मन्यवर्त्तमानस्य वान्ययस्यैव परस्मिन् समवतारो युज्यत इति भाव . पूर्वं चात्मवृत्तिविवक्षामात्रेणैव त्रैविध्यमुक्तमित्यभिहितम् 'चउसट्ठिया आयसमोयारेण'मित्यादि सुबोधमेव,नवरं चतु- पष्टिका चतुष्पलमाना पूर्वं निर्णीता ततश्चैषा लघुप्रमाणत्वादष्टपलमानत्वेन बृहत्प्रमाणाया द्वात्रिंशतिकायां समवतरतीति प्रतीतमेव, एवं द्वात्रिंशतिकाऽपि षोडशपलमानायां षोडशिकायां षोडशिकाऽपि द्वात्रिंशत्पलमानायामष्टभागिकायामष्टभागिकाऽपि चतु षष्टिपलमानायां चतुर्भागिकाया चतुर्भागिकाऽप्यष्टाविंशत्यधिकशतपलमानायामर्द्धमाणिकायाम्, एषाऽपि षट् पञ्चाशदधिकपलशतद्वयमानाया माणिकाया समवतरति,आत्मसमवतारस्तु सर्वत्र प्रतीत एव। समाप्तो द्रव्यसमवतार ॥ अथ क्षेत्रसमवतार विभणिषुराह-'से किं तं खेत्तसमोयारे' इत्यादि, इह भरतादीनां लोकपर्यन्ताना क्षेत्रविभागानां यथा पूर्वं लघुप्रमाणस्य यथोत्तरं बृहत्क्षेत्रे समवतारो भावनीयः । एवं कालसमवतारेऽपि समयादे. कालविभागस्य लघुत्वादावलिकादौ बृहति कायविभागे समवतार सुबोध एव। आत्मसमवतारस्तु सर्वत्र स्पष्ट एव ॥ अथ भावसमवतारं विवक्षुराह- 'से किं तं भावसमोयारे' इत्यादि , इहौदयिकभावरूपत्वात्क्रोधादयो भावसमवतारेऽधिकृतास्तत्राहङ्कारमन्तरेण कोपासम्भवान्मानवानेव किल कुप्यतीति कोपस्य माने समवतार उक्त ,क्षपणकाले च मानदलिकं मायायां प्रक्षिप्य क्षपयतीति मानस्य मायाया समवतार., मायादलिकमपि क्षपणकाले लोभे प्रक्षिप्य क्षपयतीति मायाया लोभे समवतार.,एवमन्यदपि कारण परस्परान्तर्भावेऽभ्यूह्य सुधिया वाच्यं लोभात्मकत्वात्तु रागस्य लोभो रागे समवतरति, रागोऽपि मोहभेदत्वान्मोहे, मोहोऽपि कर्मप्रकारत्वादष्टसु कर्मप्रकृतिषु, कर्मप्रकृतयोऽप्यौदयिकौपशमिकादिभाववृत्तित्वात्षट्सु भावेषु, भावा अपि जीवाश्रितत्वाज्जीवे, जीवोऽपि जीवास्तिकायभेदत्वात् जीवास्तिकाये, जीवास्तिकायोऽपि द्रव्यभेदत्वात्समस्तद्रव्यसमुदाये समवतरतीति , तदेष भावसमवतारो निरूपित. । अत्र च प्रस्तुते आवश्यके विचार्यमाणे सामायिकाद्यध्ययनमपि क्षायोपशमिकभावरूपत्वात्पूर्वोक्तेष्वानुपूर्व्यादिभेदेषु क्व समवतरतीति निरूपणीयमेव, शास्त्रकारप्रवृत्तेरन्यत्र तथैव दर्शनात्, तच्च सुखावसेयत्वादिकारणात्सूत्रेण निरूपितं सोपयोगत्वात्स्थानाशून्यत्वार्थं किंचिद्वयमेव निरूपयाम. । तत्र सामायिकं चतुर्विंशतिस्तव इत्याद्युत्कीर्त्तनविषयत्वात्सामायिकाध्ययनमुत्कीर्त्तनानुपूर्व्यां समवतरति, तथा गणनानुपूर्व्यां च । तथा हि-पूर्वानुपूर्व्या गण्यमानमिद प्रथमम्,पश्चानुपूर्व्या तु षष्ठम्, अनानुपूर्व्यां तु द्व्यादिस्थानवृत्तित्वादनियतमिति प्रागेवोक्तम् , नाम्नि च औदयिकादिभावभेदात्षण्णामपि प्रागुक्तम्। तत्र सामायिकाऽध्ययनं श्रुतज्ञानरूपत्वेन क्षायोपशमिकभाववृत्तित्वात् क्षायोपशमिकभावनाम्नि समवतरति , आह च भाष्यकार -" छव्विहनामे भावे, खओवसमिए सुयं समोयरइ । जं सुयनाणावरण-क्खओवसमयं तयं सव्वं ॥ १ ॥" प्रमाणे च द्रव्यादिभेदे प्राङ्निर्णीत जीवभावरूपत्वाद् भावप्रमाणे इदं समवतरतीति। उक्त च-"दव्वाइचउब्भेय, पमीयए जेण त पमाणं ति । इणमज्झयण भावो-त्ति भावमाणे समोयरइ ॥१॥" भावप्रमाणं च गुणनयसंख्याभेदतस्त्रिधा प्रोक्तम् , तत्रास्य गुणसंख्याप्रमाणयोरेवावतारो नयप्रमाणे तु यद्यपि-'आसज्ज उ सोयारं, नए नयविसारओ बूया।' इत्यादि वचनात् क्वचि-

क्षयसमवतार उक्त, तथाऽपि साम्प्रतं तथाविधनयविचाराभावाद्वस्तुवृत्त्याऽनवतार एव, यत इदमप्युक्तम्-' मूढनइयं सुयं कालियं तु न नया समोयरंति ' इहमित्यादि महामतिनाऽप्युक्तम्-'मूढनय तु न संपइ नयप्पमाणावश्रारो से' त्ति-गुणप्रमाणमपि जीवाजीवगुणभेदतो द्विधा प्रोक्तं, तत्रास्य जीवोपयोगरूपत्वाज्जीवगुणप्रमाणे समवतारस्तस्मिन्नपि ज्ञानदर्शनचारित्रभेदतस्त्र्यात्मके अस्य ज्ञानरूपतया ज्ञानप्रमाणेऽवतारस्तत्रापि प्रत्यक्षानुमानोपमानागमभेदाच्चतुर्विधे प्रकृताध्ययनस्याप्तोपदेशरूपतया आगमेऽन्तर्भावस्तस्मिन्नपि लौकिकलोकोत्तरभेदभिन्ने परमगुरुप्रणीतत्वेन लोकोत्तरिके तत्रापि आत्मागमानन्तरागमपरम्परागमभेदतस्त्रिविधेऽप्यस्य समवतार, संख्याप्रमाणेऽपि नामादिभेदभिन्ने प्रागुक्त परिमाणसंख्यायामस्यावतार, वक्तव्यतायामपि स्वसमयवक्तव्यतायामिदमवतरति, यत्रापि परोभयसमयवर्णनं क्रियते तत्रापि निश्चयत स्वसमयवक्तव्यैव परोभयसमययोरपि सम्यग्दृष्टिपरिगृहीतत्वेन स्वसमयत्वात्, सम्यग्दृष्टिर्हि परसमयमपि विषयविभागेन योजयति न त्वेकान्तपक्षनिक्षेपेणेत्यत· सर्वोऽपि तत्परिगृहीतः स्वसमय एव, अत एव परमार्थत· सर्वाध्ययनानामपि स्वसमयवक्तव्यतायामेवावतार, तदुक्तम्—"परसमश्रो उभयं वा, सम्मद्दिट्ठिस्स ससमश्रो जेण। तो सव्वज्झयणाइं, ससमयवत्तव्वनिययाइं" ॥ १॥ एवं चतुर्विंशतिस्तवादिष्वपि वाच्यमित्यलमतिविस्तरेणेति समास· समवतार । अनु० ।

उस्सग्गं सव्वसुयं, ससमयवत्तव्वयं समोयरइ ।
अहिगारो कप्पणाए, समोयारो जो जहिं एस ॥२७१॥

उत्सर्गे—सर्वकाले सर्वश्रुतं स्वसमयवक्तव्यताया समवतरति, अथाधिकारो मूलगुणेषूत्तरगुणेषु वा अपराधमापन्नानां प्रायश्चित्तकल्पनायाम् ।

सम्प्रति यदुक्तं स्वसमयवक्तव्यतायां समवतरति तदिदानीं सिंहावलोकितेनापपदति—

परपक्खं दूसित्ता, जम्हा उ सपक्खसाहणं कुणइ ।
णो खलु अदूसियम्मि,परे सपक्खंजसा सिद्धी ॥२७२॥

परसमयवक्तव्यतायामप्यवतरति, यस्मात् परपक्षं दूषयित्वा स्वपक्षसाधनं करोति, न खल्वदूषिते परपक्षे स्वपक्षस्याञ्जसा व्यक्ता प्रधाना वा सिद्धिर्भवति । ततः परसमयवक्तव्यतायामवतार, तदेवमिदं कल्पाध्ययनमुपक्रमे आनुपूर्व्यादौ यत्र यत्र समवतरति तत्र तत्र समवतारितम् । बृ०१ उ०१ प्रक० ।

समति निक्षेपमाह—

इक्किक्कं तं चउहा, णामाऽऽईयं विभासितुं ओहे ।
भावे तत्थ उ चउसु वि,कप्पज्झयणं समोयरइ ॥२७४॥

एकैकमध्ययनादिकं यथाऽनुयोगद्वारं नामादीनां भेदतश्चतुर्धा विभाष्य चतुर्ष्वपि तत्र तेष्वध्ययनादिषु भावे भावविषये तु कल्पाध्ययनमिदं समवतरति । बृ० १ उ० १ प्रक० ।

समोववएणग–समोपपन्नक–पुं० । विवक्षितायुष्कक्षये, समकमेव भवान्तरे उपपन्ना· समोपपन्नकाः । ( भ० ) विषमकालायुष्कोदयसमकालभवान्तरोत्पत्तिमत्सु, भ० २६ श० १ उ० ।

समोसढ–समवसृत–त्रि० । स्थिते , धर्मदेशनार्थं प्रवृत्ते , दश० ५ अ० २ उ० । सू० प्र० । आ० म० ।

समोसरण–समवसरण–न० । सृ-गतौ सम्यगेकत्र गमनं समवसरणम् । निचये,सङ्घे, ओघ० । समवसरन्त्यवतरन्त्येष्विति समवसरणानि । विविधमतमीलकेषु , स्था० ४ ठा० ४ उ० । सूत्र० । समवसरन्ति नाना परिणामा जीवाः कथञ्चित्तुल्यतया येषु तानि समवसरणानि । समवसृतयो वाऽन्योऽन्यभिन्नेषु क्रियावादादिमतेषु कथंचित्तुल्यत्वेन क्वचित्केषाचिद्वादिनामवताराः समवसरणानि । भ० ३० श०१ उ० । ( चत्वारि वादिसमवसरणानि 'वाइसमवसरण' शब्दे षष्ठभागे गतानि । )

विषयसूचना—

( १ ) नामनिष्पन्ने तु निक्षेपे समवसरणमित्येतन्नाम तन्निक्षेपार्थं निर्युक्ति· ।
( २ ) समवसरणविषये सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रम् ।
( ३ ) समवसरणवक्तव्यताद्वारगाथा ।
( ४ ) यत्र भगवान् धर्ममाचष्टे तत्र समवसरणं नियमतो भवति उत नेत्याशङ्कापनोदमुखेन प्रथमद्वारव्याख्यानम् ।
( ५ ) यत्र समवसरणं भवति तत्र सर्वत्रापि पूर्वोक्त एव नियोग उत न ? इत्येतच्छङ्कासमाधानम् ।
( ६ ) समवसरणे भुवनगुरुरूपस्य त्रैलोक्यगतरूपेभ्यः सुन्दरतरत्वात् त्रिदशकृतप्रतिरूपकाणां किं सामान्यासामान्य ( न्यत्वं वेत्या ) चेत्याशङ्कानिरास· ।
( ७ ) समवसरणे स्थितानां देवनराणां मर्यादाप्रतिपादनम् ।
( ८ ) समवसरणविषये द्वितीयद्वारप्रतिपादनम् ।
( ९ ) समवसरणे कियन्ति सामायिकानि मनुष्यादयः प्रतिपद्यन्ते ।
( १० ) कृतकृत्यो भगवान् समवसरणे तीर्थप्रणामं करोतीति किमिति शङ्कानिरास· ।
( ११ ) क केन साधुना कियतो वा भूभागात्समवसरणे आगन्तव्यम् ? अनागच्छतो वा किं प्रायश्चित्तम् ?।
( १२ ) समवसरणे रूपपृच्छाद्वारप्रकटनम् ।
( १३ ) असातावेदनीयाद्या प्रकृतयो नाम्नो वाऽप्रशस्ताः कथं भगवत तु खदा न भवन्ति ? इति शङ्कोच्छेदः ।
( १४ ) समवसरणे युगपत्सर्वशङ्कोच्छेदे गुणनिदर्शनम् ।
( १५ ) समवसरणे सर्वसंशयिनां पारमेश्वरीवागशेषसंशयोन्मूलनेन स्वभाषया परिणमते ।
( १६ ) भगवान् येषु ग्रामनगरादिषु विहरति तेभ्यो वार्ता ये आनयन्ति तेभ्यो यत्प्रयच्छन्ति वृत्तिदानं प्रीतिदानं च चक्रवर्त्यादयस्तदुपदर्शनम् ।
( १७ ) समवसरणे भगवान् प्रथमा सम्पूर्णपौरुषीं धर्ममाचष्टे, अत्रान्तरे बलि· प्रविशति , कस्तं करोति ? इति निदर्शनम् ।

(१८) समवसरणे भगवत्युत्थिते द्वितीयस्यां पौरुष्यामाद्यगणधरोऽन्यो वा गणधरो धर्ममाचष्टे स्यान्मतिः किं कारणं द्वितीयस्यामपि पौरुष्यां तीर्थकर एव धर्मं न कथयतीति ? शङ्का तत्समाधाननिरूपणम्।

(१९) समवसरणकल्पः।

(२०) समवसरणरचनानिदर्शनम्।

(२१) समवसरणस्तवनिदर्शनम्।

(२२) समवसरणे रचनाभूमिप्रमाणम्।

(२३) प्रकीर्णकवार्ता।

(१) नामनिष्पन्ने तु निक्षेपे समवसरणमित्येतन्नाम तन्निक्षेपार्थं निर्युक्तिकृदाह—

**समवसरणे वि छक्कं, सच्चित्ताचित्तमीसगं दव्वे।**
**खेत्तम्मि जम्मि खेत्ते, काले जं जम्मि कालम्मि ॥११६॥**

'समवसरण' मित्यादि, समवसरणमिति सृगताविति तस्य धातोः समवोपसर्गपूर्वस्य ल्युडन्तस्य रूपम्, सम्यगेकीभावेनावसरणमेकत्र गमनं-मेलापकः समवसरणं तस्मिन्नपि न केवलं समाधौ षड्विधौ नामादिको निक्षेपस्तत्रापि नामस्थापने क्षुण्णे द्रव्यविषयं पुनः समवसरणं नोआगमतो ज्ञशरीरभव्यशरीरव्यतिरिक्तं सचित्ताचित्तमिश्रभेदात् त्रिविधम्। सचित्तमपि द्विपदचतुष्पदाऽपदभेदाद् त्रिविधमेव,तत्र द्विपदानां साधुप्रभृतीनां तीर्थकृज्जन्मनिष्क्रमणप्रदेशादौ मेलापकः, चतुष्पदानां गवादीनां निपानप्रदेशादौ, अपदानां तु वृक्षादीनां स्वतो नास्ति समवसरणं विवक्षया तु काननादौ भवत्यपि, अचित्तानां तु द्व्यणुकाभ्रादीनां तथा मिश्राणां सेनादीनां समवसरणसद्भावोऽवगन्तव्य इति क्षेत्रसमवसरणं तु परमार्थतो नास्ति, विवक्षया तु यत्र द्विपदादयः समवसरन्ति व्याख्यायते वा समवसरणं यत्र तत्क्षेत्रप्राधान्यादेवमुच्यते। एवं कालसमवसरणमपि द्रष्टव्यमिति।

इदानीं भावसमवसरणमधिकृत्याह—

**भावसमोसरणं पुण, णायव्वं छव्विहम्मि भावम्मि।**
**अहवा किरियअकिरिया, अन्नाणी चेव वेणइया ॥११७॥**

'भावसमवसरण' मित्यादि, भावानामौदयिकादीनां समवसरणम्--एकत्र मेलापको भावसमवसरणम्। तत्रौदयिको भावः एकविंशतिभेदः, तद्यथा--गतिश्चतुर्धा--कषायाश्चतुर्विधा एवं लिङ्गं त्रिविधं, मिथ्यात्वाज्ञानाऽसंयतत्वाऽसिद्धत्वानि प्रत्येकमेकैकविधानि, लेश्याः कृष्णादिभेदेन षड्विधा भवन्ति, औपशमिको द्विविधः, सम्यक्त्वचारित्रोपशमभेदात्। क्षायोपशमिकोऽष्टादशभेदभिन्नः, तद्यथा-ज्ञानं मतिश्रुतावधिमनःपर्यायभेदाच्चतुर्धा, अज्ञानम्-मत्यज्ञानश्रुताज्ञानविभङ्गभेदात् त्रिविधं, दर्शन-चक्षुरचक्षुरवधिदर्शनभेदात् त्रिविधमेव,लब्धिर्दानलाभभोगोपभोगवीर्यभेदात्पञ्चधा, सम्यक्त्वचारित्रसंयमासंयमाः प्रत्येकमेकप्रकारा इति। क्षायिको नवप्रकारः, तद्यथा--केवलज्ञानं केवलदर्शनं दानादिलब्धयः पञ्च सम्यक्त्वं चारित्रं चेति। जीवत्वभव्यत्वाभव्यत्वादिभेदात्पारिणामिकस्त्रिविधः, सान्निपातिकस्तु द्वित्रिचतुःपञ्चकसंयोगैर्भवति, तत्र द्विकसंयोगः सिद्धस्य क्षायिकपारिणामिकभावद्वयसद्भावादवगन्तव्यः, त्रिकसंयोगस्तु मिथ्यादृष्टिसम्यग्दृष्ट्यविरतानामौदयिकक्षायोपशमिकपारिणामिकभावसद्भावादवगन्तव्यः, तथा भवस्थकेवलिनोऽप्यौदयिकक्षायिकपारिणामिकभावसद्भावाद्विज्ञेय इति, चतुष्कसंयोगोऽपि क्षायिकसम्यग्दृष्टीनामौदयिकक्षायिकक्षायोपशमिकपारिणामिकभावसद्भावात्तथौपशमिकसम्यग्दृष्टीनामौदयिकौपशमिकक्षायोपशमिकपारिणामिकभावसद्भावश्चेति, पञ्चकसंयोगस्तु क्षायिकसम्यग्दृष्टीनामुपशमश्रेण्यां समस्तोपशान्तचारित्रमोहानां भावपञ्चकसद्भावाद्विज्ञेय इति। तदेवं भावानां द्विकत्रिकचतुष्कपञ्चकसंयोगात्सम्भविनः सान्निपातिकभेदाः षड् भवन्ति, अत एव त्रिकसंयोगचतुष्कसंयोगगतिभेदात्पञ्चदशधा प्रदेशान्तरेऽभिहिता इति, तदेवं षड्विधे भावे भावसमवसरणं भावमीलनमभिहितम्। अथवा अन्यथा भावसमवसरणं निर्युक्तिकृदेव दर्शयति, क्रिया जीवादिपदार्थोऽस्तीत्यादिका वदितुं शीलं येषां ते क्रियावादिनः,एतद्विपर्यस्ता अक्रियावादिनः, तथा अज्ञानिनो ज्ञाननिह्नववादिनस्तथा वैनयिका विनयेन चरन्ति तत्प्रयोजना वा वैनयिकाः, एषां चतुर्णामपि सप्रभेदानामापेक्षं कृत्वा यत्र विक्षेपः क्रियते तद्भावसमवसरणमिति, एतच्च स्वयमेव निर्युक्तिकारोऽन्त्यगाथया कथयिष्यति।

साम्प्रतमेतेषामेवाभिधानान्वर्थतादर्शनद्वारेण स्वरूपमाविष्कुर्वन्नाह—

**अत्थि त्ति किरियवादी, वयंति णत्थि अकिरियवादी य।**
**अण्णाणी अण्णाणं, विणइत्ता वेणइयवादी ॥ ११८ ॥**

'अत्थि त्ती' त्यादि, जीवादिपदार्थसद्भावोऽस्त्येवेत्येवं सावधारणक्रियाभ्युपगमो येषां ते अस्तीति क्रियावादिनस्ते चैव वादित्वान्मिथ्यादृष्टय,तथाहि-यदि जीवोऽस्त्येवेत्येवमभ्युपगम्यते ततः सावधारणत्वान्न कथंचिन्नास्तीत्यतः स्वरूपसत्तावत्पररूपापत्तिरपि स्यात्, एवं च नानेकं जगत् स्यान्न चैतद् दृष्टमिष्टं वा। तथा नास्त्येव जीवादिकः पदार्थ इत्येवं वादिनोऽक्रियावादिनः, तेऽप्यसद्भूतार्थप्रतिपादनान्मिथ्यादृष्टय एव,तथा ह्येकान्तेन जीवास्तित्वप्रतिषेधे कर्तुरभावान्नास्तीत्येतस्यापि प्रतिषेधस्याभावः, तदभावाच्च सर्वास्तित्वमनिवारितमिति तथा न ज्ञानमज्ञानं तद्विद्यते येषां तेऽज्ञानिनः, ते ह्यज्ञानमेव श्रेय इत्येवं वदन्ति, एतेऽपि मिथ्यादृष्टय एव, तथा 'ह्यज्ञानमेव श्रेय' इत्येतदपि न ज्ञानमृते भणितुं पार्यते, तदभिधानाच्चावश्यं ज्ञानमभ्युपगतं तैरिति। तथा वैनयिका विनयादेव केवलात्स्वर्गमोक्षावाप्तिमभिलपन्तो मिथ्यादृष्टयो यतो न ज्ञानक्रियाभ्यामन्तरेण मोक्षावाप्तिरिति। एषां च क्रियावाद्यादीनां स्वरूपं तन्निराकरणं चाऽऽचाराटीकायां विस्तरेण प्रतिपादितमिति नेह प्रतन्यते।

साम्प्रतमेतेषां भेदसंख्यानिरूपणार्थमाह—

**असियसयं किरियाणं, अकिरियाणं च होइ चुलसीति।**
**अन्नाणी सत्तट्ठी, वेणइयाणं च वत्तीसा ॥ ११९ ॥**

'असिये' त्यादि, क्रियावादिनामशीत्यधिकं शतं भवति, तच्चानया प्रक्रियया, तद्यथा--जीवादयो नव पदार्थाः स-

रिपाट्या स्थाप्यन्ते, तदधः स्वतः परत इति भेदद्वयं, ततोऽप्यधो नित्यानित्यभेदद्वयं,ततोऽप्यधस्तात्परिपाट्या कालस्वभावनियतीश्वरात्मपदानि पञ्च व्यवस्थाप्यन्ते, ततश्चैवं चारणिकाप्रक्रम., तद्यथा-अस्ति जीवः स्वतोऽनित्य. कालतः, तथा अस्ति जीव स्वतोऽनित्य. कालत एव, एवं परतोऽपि भङ्गकद्वयं सर्वेऽपि च चत्वारः कालेन लब्धा., एवं स्वभावनियतीश्वरात्मपदान्यपि प्रत्येकं चतुर एव लभन्ते, तत. पञ्चाऽपि चतुष्कका विंशतिर्भवन्ति, साऽपि जीवपदार्थेन लब्धा, एवमजीवादयोऽप्यष्टौ प्रत्येकं विंशतिं लभन्ते, ततश्च नव विंशतयो मीलिता. क्रियावादिनामशीत्युत्तरं शतं भवतीति। इदानीमक्रियावादिनां न सन्त्येव जीवादय. पदार्था इत्येवमभ्युपगमवतामनेनोपायेन चतुरशीतिरवगन्तव्या, तद्यथा—जीवादीन् पदार्थान् सप्ताभिलिख्य तदध. स्वपरभेदद्वयं व्यवस्थाप्यं, ततोऽप्यध. कालयदृच्छानियतिस्वभावेश्वरात्मपदानि षड् व्यवस्थाप्यानि।भङ्गकानयनोपायस्त्वयम्-नास्ति जीव. स्वत. कालतः, तथा नास्ति जीवः परत. कालत, एवं यदृच्छानियतिस्वभावेश्वरात्मभिः प्रत्येकं द्वौ द्वौ भङ्गकौ लभ्येते,सर्वेऽपि द्वादश,तेऽपि च जीवादिपदार्थसप्तकेन गुणिताश्चतुरशीतिरिति। तथा चोक्तम्—'कालयदृच्छानियति-स्वभावेश्वरात्मतश्चतुरशीति.। नास्तिकवादिगणमते, न सन्ति भावा. स्वपरसंस्था.' ॥ १ ॥ साम्प्रतमज्ञानिकानामज्ञानादेव विवक्षितकार्यसिद्धिमिच्छतां ज्ञानं तु सदपि निष्फलं बहुदोषवच्चेत्येवमभ्युपगमवतां सप्तषष्टिरनेनोपायेनावगन्तव्या ,जीवाजीवादीन् नव पदार्थान् परिपाट्या व्यवस्थाप्य तदधोऽमी सप्त भङ्गका. संस्थाप्या., सत् असत् सदसद् अवक्तव्यम् सदवक्तव्यम् असदवक्तव्यं सदसदवक्तव्यमिति। अभिलापस्त्वयम्—सन् जीव. को वेत्ति ?, किं वा तेन ज्ञातेन ? १, असन् जीव., को वेत्ति ?,-किं वा तेन ज्ञातेन २, सदसन् जीव, को वेत्ति ? किं वा तेन ज्ञातेन ? ३, अवक्तव्यो जीव, को वेत्ति ?, किं वा तेन ज्ञातेन ? ४, सदवक्तव्यो जीवः, को वेत्ति ?,-किं वा तेन ज्ञातेन ? ५, असदवक्तव्यो जीवः को वेत्ति ?,- किं वा तेन ज्ञातेन ? ६, सदसदवक्तव्यो जीव., को वेत्ति ?,-किं वा तेन ज्ञातेन ? ७, एवमजीवादिष्वपि सप्त भङ्गका., सर्वेऽपि मिलितास्त्रिषष्टि.। तथाऽपरेऽमी चत्वारो भङ्गका, तद्यथा—सती भावोत्पत्ति. को वेत्ति ?,-किं वा अनया ज्ञातया? १, असती भावोत्पत्ति. को वेत्ति ?,- किं वा अनया ज्ञातया ? २, सदसती भावोत्पत्ति. को वेत्ति ?, किं वा अनया ज्ञातया ? ३, अवक्तव्या भावोत्पत्ति को वेत्ति ?, किं वा अनया ज्ञातया ? ४, सर्वेऽपि सप्तषष्टिरिति। उत्तर भङ्गकत्रयमुत्पन्नभावावयवापेक्षमिह भावोत्पत्तौ न सम्भवतीति नोपन्यस्तम्, उक्त च-'अज्ञानिकवादिमतं, नव जीवादीन् सदादि सप्तविधान्। भावोत्पत्ति. सदसद्, द्वेधा वाच्या च को वेत्ति ॥ १ ॥' इदानीं वैनयिकाना विनयादेव, केवलात् परलोकमपीच्छतां द्वात्रिंशदनेन प्रक्रमेण योज्या-तद्यथा—सुरनृपतियतिज्ञातिस्थविराधममातृपितृपु मनसा वाचा कायेन दानेन चतुर्विधो विनयो विधेय., सर्वेऽप्यष्टौ चतुष्कका मिलिता द्वात्रिंशदिति। उक्तं च-'वैनयिकमतं विनय—श्चेतोवाक्कायदानतः कार्यः। सुरनृपतियतिज्ञाति—स्थविराधममातृपितृपु सदा'।१। सर्वेऽप्येते क्रियाक्रियाज्ञानिवैनयिकवादिभेदा एकीकृतास्त्रीणि त्रिषष्ठ्यधिकानि प्रावादुकमतशतानि भवन्ति। ( सूत्र० ) ( क्रियावादिनां विषयः गाथाद्वयेन 'किरियावाइ' शब्दे तृतीयभागे ५५६ पृष्ठे उक्तः। )

(२) साम्प्रतं सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारयितव्यं, तच्चेदम्-

चत्तारि समोसरणाणि माणी,
पावाणिया जाइँ पुढो वयंति।
किरियं अकिरियं विणियंति तइयं,
अन्नाणमाहंसु चउत्थमेव ॥ १ ॥

'चत्तारि' इत्यादि, अस्य च प्राक्तनाध्ययनेन सहाऽयं सम्बन्धः, तद्यथा-साधुना प्रतिपन्नभावमार्गेण कुमार्गाश्रिताः परवादिन. सम्यग् परिज्ञाय परिहर्त्तव्याः, तत्स्वरूपाविष्करणं चानेनाध्ययनेनोपदिश्यते इति, अनन्तरसूत्रस्यानेन सूत्रेण सह संबन्धोऽयं, तद्यथा—संवृत्तो महाप्राज्ञो धीरो दत्तैषणां चरन्नभिनिर्वृत्तः सन् मृत्युकालमभिकाङ्क्षेदेतत्केवलिनो भाषितं, तथा परतीर्थिकपरिहारं च कुर्यात्, एतच्च केवलिनो मतम्, अतस्तत्परिहारार्थं तत्स्वरूपनिरूपणमनेन क्रियते 'चत्वारी' ति संख्यापदमपरसंख्यानिवृत्त्यर्थं समवसरणानि परतीर्थिकाभ्युपगमसमूहरूपाणि यानि प्रावादुकाः पृथक् पृथग्वदन्ति, तानि चामूनि अन्वर्थाभिधायिभि. संज्ञापदैर्निर्दिश्यन्ते, तद्यथा—क्रियामस्तीत्यादिकां वदितुं शीलं येषा ते क्रियवादिनस्तथाऽक्रियां नास्तीत्यादिकां वदितुं शीलं येषा तेऽक्रियावादिन', तथा तृतीया वैनयिकाश्चतुर्थास्त्वज्ञानिका इति। सूत्र० १ श्रु० १२ अ०। ( अज्ञानिन 'अण्णाणिय' शब्दे प्रथमभागे ४८६ पृष्ठे उक्ता। ) ( वैनयिकवादिनो 'वेणइय' शब्दे षष्ठभागे उक्ता'। ) (अक्रियावादिनः 'अकिरियवाइ' शब्दे प्रथमभागे १२८ पृष्ठे गता.। ) ( आदित्यवक्तव्यता 'आइच्च' शब्दे द्वितीयभागे ३ पृष्ठे गता।) ( अष्टाङ्गनिमित्तवक्तव्यता 'अट्ठंगणिमित्त' शब्दे प्रथमभागे २३६ पृष्ठे उक्ता। ) ( क्रियावक्तव्यता 'किरिया' शब्दे तृतीयभागे ५५६ पृष्ठेऽस्ति। ) ( प्रत्यक्षवक्तव्यता 'पयत्थ' शब्दे पञ्चमभागे ५०४ पृष्ठे प्रतिपादिता। ) ( मनसो वक्तव्यता 'मण' शब्दे षष्ठभागे ७४ पृष्ठे उक्ता। ) ( हेतुवक्तव्यता 'हेउ' शब्दे वक्ष्यते। ) ( द्रव्यवक्तव्यता 'दव्व' शब्दे चतुर्थभागे २४६५ पृष्ठे उक्ता। ) ( अस्मिन् विषये बौद्धमतप्रतिपादनम् 'बुद्ध' शब्दे पञ्चमभागे गतम् ) तीर्थकृता सदेवमनुजासुराया पर्षदि, पिं०। भ०। समवसरणं नाम पुष्पफलासवागरत्त्याादिभिर्भगवतो विभूती। आ० चू० १ अ०। तद्विधिश्चैवम्—

(३) साम्प्रतं समवसरणवक्तव्यतां प्रपञ्चत. प्रतिपिपादयिषुरिमां द्वारगाथामाह—

समोसरणे केवइया, रूव पुच्छ वागरण सोयपरिणामे।
दाणं च देवमल्ले, मल्लाणयणे उवरि तित्थं ॥ ५४३ ॥

प्रथम समवसरणविषयो विधिर्वक्तव्य., ये देवा यत्प्राकारादि यद्विधं यथा कुर्वन्ति तथा वक्तव्यमिति भाव', 'केवइय' त्ति-कियन्त' सामायिकानि भगवति कथयति मनु-

ष्यादय' प्रतिपद्यन्ते , कियतो वा भूभागादपूर्वे समवसरणे दृष्टपूर्वे वा साधुना आगन्तव्यम् , 'रूव' त्ति-भगवतो रूप व्यावर्णनीयं 'पुच्छ' त्ति-किमुत्कृष्टरूपतया भगवन प्रयोजनमिति पृच्छा कार्या, उत्तर च वक्तव्य , कियन्तो वा इहत संशय पृच्छन्तीति 'वागरण' त्ति—व्याकरणं भगवतो वक्तव्यम् ,यथा युगपदेव सख्यातीतानामपि पृच्छातां व्याकरोतीति 'पुच्छवागरण' त्ति-एक वा द्वार पृच्छायों व्याकरण तद्वक्तव्यम् 'सोयपरिणामो' त्ति-श्रोतृपु परिणाम श्रोतृपरिणाम ,स च वक्तव्यो, यथा सर्वश्रोतृणा भागवती वाक् स्वभापया परिणमते, 'दान च' त्ति-वृत्तिदान प्रीतिदानं च कियत्प्रयच्छन्ति चक्रवर्त्यादयस्तीर्थकरप्रवृत्ति—कथकेभ्य इति वक्तव्यम् । 'देवमल्ले' त्ति-गन्धप्रक्षेपाद्वाना सम्बन्धिमाल्य देवमाल्यं वल्यादिक करोति, कियत्परिमाणं चेत्यादि । 'मल्लाणयणे' त्ति—माल्यानयने यो विधि असौ वक्तव्य', 'उवरि तित्थं' त्ति-उपरि-पौरुष्याः, किमुक्तं भवति-पौरुष्यामनिक्रान्ताया तीर्थमिति प्रथमगणधरोऽन्यो वा तदभावे देशनां करोतीत्येष द्वारगाथासमासार्थं । विस्तरार्थ प्रतिद्वार वक्ष्याम. । तत्र ।

(४) नन्विद समवसरण यत्र भगवान् धर्ममाचष्टे तत्र नियमतो भवत्युत नेत्याशङ्कापनोदमुखेन प्रथम द्वारं व्याचिख्यासुरिदमाह—

जत्थ अपुव्वोसरणं, जत्थ व देवो महिड्ढिश्रो एइ ।
वाउदयपुप्फवद्दल-पागारतियं च अभिओगा ॥५४४॥

यत्र क्षेत्रे ग्रामे नगरे वा अपूर्वमभूतपूर्व समवसरणं भवति, तथा यत्र वा भूतपूर्वसमवसरणे क्षेत्रे देवो महर्द्धिको एति-आगच्छति, तत्र किमित्याह-वात रेरवाद्यपनोदाय उदकवार्द्दल भाविरेणुसन्तापोपशान्तये, पुष्पवार्द्दल पुष्पवृष्टिनिमित्त तत्क्षितिविभूषणाय , वार्दलशब्द उदकपुष्पयो प्रत्येकमभिसंवध्यते । तथा प्राकारत्रिक च सर्वमेतत् अभियोगमर्हन्तीत्याभियोग्या देवा , कुर्वन्तीति वाक्यशेप । अन्यत्र त्वनियमः । एव तावत् सामान्येन समवसरणविधिरुक्त. ।

सम्प्रति विशेषण प्रतिपादयति—

मणिकणगरयणचित्तं, भूमीभागं समंतओ सुरभिं ।
आयोयणंतरेणं, करेंति देवा विचित्त तु ॥ ५४५ ॥

इह यत्र समवसरण भवति तत्र योजनपरिमण्डलक्षेत्रमाभियोग्या देवा. संवर्तकवात विकुर्वित्वा तेन विशुद्धरज. कुर्वति, तत सुरभिगन्धोदकवृष्ट्या निहतरजस्तत आयोजनान्तरेण योजनपरिमाण भूमिभार्ग मणयश्चन्द्रकान्तादय कनक—द्रवकाञ्चनं रत्नानि—इन्द्रनीलादीनि , अथवा—स्थलसमुद्भवा मणयो जलसमुद्भवानि—रत्नानि , तैश्चित्रं समन्ततः-सर्वासु दिक्षु सुरभि-सुगन्धिगन्धयुक्तं मणीना सुरभिगन्धोदकस्य पुष्पाणा वाऽतिमनोहारिगन्धयुक्तत्वात् विचित्रम्-अपूर्वं देवा -आभियोग्या कुर्वन्ति ।

विंटट्ठाइं सुरभिं, जलथलयं दिव्वकुसुमनीहारिं ।
पइरंति समंतेणं, दसद्धवण्ण कुसुमवासं ॥ ५४६ ॥

आभियोग्या देवा प्रकिरन्ति समन्तत. सर्वासु दिक्षु विदिक्षु च दशार्द्धवर्णं कुसुमवर्षं, किंविशिष्टमित्याह-वृन्तस्थायि वृन्तमधोभागे पत्राण्युपरि इत्येव स्थानशील सुरभिगन्धोपेतत्वात् दिव्यकुसुमनिर्हारि-दिव्य -प्रधान -कुसुमानां निर्हारी प्रवलो गन्धप्रसरो यस्मात्तद्दिव्यकुसुमनिर्हारि ।

मणिकणगरयणचित्ते, चउद्दिसिं तोरणे विउव्वंति ।
सच्छत्तसालभंजिय-मकरद्धयचिंधसंठाणे ॥५४७॥

चतसृष्वपि दिक्षु मणिकरत्नविचित्राणि तोरणानि व्यन्तरदेवा विकुर्वन्ति । किं विशिष्टानीत्याह—छत्रं प्रतीत, शालभञ्जिका -स्तम्भपुत्तलिका 'मकर' त्ति मकरमुखोपलक्षणं ध्वजा. प्रतीता. चिह्नानि-स्वस्तिकादीनि संस्थानमत्यद्भुतो रचनाविशेष. सन्ति-शोभनानि छत्रशालभञ्जिकामकरध्वजचिह्नसस्थनानि येपु तानि तथोच्यन्ते ।

तिन्नि य पागारवरे, रयणविचित्ते तहिं सुरगणिंदा ।
मणिकंचणकविसीसग-विभूसिए ते विउव्वेंति॥५४८॥

तत्र समवसरणे ते वक्ष्यमाणा सुरगणेन्द्रास्त्रीन् प्रकारवरान् रत्नविचित्रान् मणिकाञ्चनकपिशीर्पकविभूपितान् विकुर्वन्ति । भावार्थं उत्तरगाथाया व्याख्यास्यते ।

सा चेयम्—

अब्भिंतर मज्झ बहिं, विमाणजोइभवणाहिवकयाओ ।
पागारा तिन्नि भवे, रयणे कणगे य रयए य ॥५४६ ॥

अभ्यन्तरे मध्ये वहिर्विमानज्योतिर्भवनाधिपकृता. प्राकारास्त्रयो भवन्ति, रत्ने कनके रजते च । यथाक्रमं रत्नमय कनकमयो रजतमय इत्यर्थ. । एप भावार्थ. । अभ्यन्तरप्राकारो रात्नस्तं विमानाधिपतय. कुर्वन्ति, मध्यम. कनकेभव. कानकस्त ज्योतिर्वासिनः कुर्वन्ति, वाह्यो रातजस्त भवनपतय. कुर्वन्ति ।

मणिरयणहेमया वि य, कविसीसा सव्वरयणिया दारा ।
सव्वरयणमय च्चिय, पडागधयतोरणविचित्ता ॥५५०॥

यथाक्रमं मणिरत्नहेममयानि कापिशीर्पकाणि , तद्यथा—प्रथमप्राकारे पञ्चवर्णमणिमयानि कपिशीर्पकाणि तानि वैमानिका. कुर्वन्ति , द्वितीये रत्नमयानि तानि ज्योतिष्का विदधते, तृतीये हेममयानि तानि भवनपतय कुर्वन्ति, तथा सर्वरत्नमयानि द्वाराणि तानि भवनपतयः कुर्वन्ति, तथा सर्वरत्नमयान्येव मूलदलापेक्षया पताकाध्वजप्रधानानि तोरणानि विचित्राणि कनकस्वस्तिकादिभिश्चित्ररूपाणि तानि व्यन्तरदेवा कुर्वन्ति ।

तत्तो य समंतेणं, कालागुरुकुंदुरुक्कमीसेणं ।
गंधेण मणहरेणं, धूवघडीओ विउव्वन्ति ॥ ५५१ ॥

तत. समन्तत -सर्वासु दिक्षु कृष्णागरुकुन्दुरुक्कमिश्रेण गन्धेन मनोहारिणा युक्ता. किं धूपघटिका विकुर्वन्ति, व्यन्तरदेवा. ।

उक्किट्ठिसीहनायं, कलयलसद्देण सव्वओ सव्वं ।
तित्थयरपायमूले, करेंति देवा निवयमाणा ॥ ५५२ ॥

तीर्थकरपादमूले निपतन्तो देवा उत्कृष्टिसिंहनाद कुर्वन्ति , उत्कृष्टिर्हर्पविशेपप्रेरितो ध्वनिविशेपस्तत्प्रधान सिंहनाद उत्कृष्टिसिंहनादस्त तथा कलकलशब्देन समन्तत —सर्वासु दिक्षु युक्त सर्वमशेप कुर्वन्ति ।

चेइदुमपीढछन्दग, आसणछत्तं च चामराओ य।
जं चऽण्णं करणिज्जं, करेंति तं वाणमंतरिया ॥ ५५३ ॥

अभ्यन्तरप्राकारस्य रत्नमयस्य बहुमध्यदेशभागे अशोकवरपादपो भवति, स च भगवतः प्रमाणात् द्वादशगुणस्तस्याधस्तात्सर्वरत्नमयं पीठं तस्य पीठस्योपरि चैत्यवृक्षस्याधो देवच्छन्दकं तस्य अभ्यन्तरे सिंहासनं सपादपीठं स्फटिकमयं तस्योपरि छत्रातिच्छत्रम्। चशब्दः समुच्चये,चामरे च उभयोः पार्श्वयो यक्षहस्तगते, चशब्दात्—धर्मचक्रं पद्मप्रतिष्ठितं यच्चान्यद्गातोदकादि करणीय तद् व्यन्तरदेवा कुर्वन्ति, एष सर्वतीर्थकृता सर्वसमवसरणन्यायोऽस्मिंस्तु-भगवतः समवसरणे अशोकपादपं छत्रातिच्छत्रमीशानो विकुर्वितवान्, चामरे चामरधारौ बलिचमराविति सम्प्रदाय.,

(५) आह यत् (त्र) यत् समवसरणं भवति तत्र सर्वत्रापि-
पूर्वोक्त एव नियोग उत नेत्यत आह—

साहारण ओसरणे, एवं जत्थिड्डिमं तु ओसरइ।
एक्को चिय तं सव्वं, करेइ भयणा उ इयरेसिं ॥ ५५४ ॥

साधारणे सामान्ये यत्र सर्वे देवेन्द्रा आगच्छन्ति तस्मिन् साधारणसमवसरणे एवम्-उक्तप्रकारेण नियोगः (नियम) यत्र पुनः ऋद्धिमान् इन्द्रसामानिकादि. समवतरति तत्र एक एव तत् प्राकारादि सर्वं करोति 'भयणाउ इयरेसिं' ति—यदि इन्द्रा इन्द्रसामानिका वा केचिन्महर्द्धिका नायान्ति ततो भवनवास्यादय इतरे समवसरणं कुर्वन्ति, वा नवेत्येवं भजना इतरेषाम्।

सूरुदयपच्छिमाए, ओगाहंतीए पुव्वओ एइ।
दोहि पउमेहि पाया, मग्गेण य होन्ति सत्तन्ने ॥५५५॥

एवं देवैर्निष्पादिते समवसरणे सूर्योदये प्रथमायां पौरुष्याम् अन्यदा पश्चिमायाम् 'ओगाहंति'त्ति–अवगाहमानायामागच्छन्त्यामिति भाव', पूर्वत'-पूर्वद्वारेण एति-आगच्छति; प्रविशतीत्यर्थ', कथमित्याह—द्वयो पद्मयो सहस्रपत्रयोर्देवैपरिकल्पितयो पादौ स्थापयन्निति वाक्यशेष., 'मग्गेण य होन्ति सत्तन्ने' त्ति—मार्गत' पृष्ठतो भगवत. सप्तान्यानि पद्मानि भवन्ति, तेषा च यत् पश्चिमं तद् पादन्यासं कुर्वतो भगवत. पुरतस्तिष्ठतीति।

आयाहिणपुव्वमुहो, तिदिसिं पडिरूवगा उ देवकया।
जेट्ठगणी अन्नो वा, दाहिणपुव्वे अदूरम्मि ॥ ५५६ ॥

स एवं भगवान् पूर्वद्वारेण प्रविश्य 'आयाहिण 'त्ति—चैत्यद्रुमप्रदक्षिणा कृत्वा पूर्वाभिमुख उपविशति, शेषास्तु तिसृषु दिक्षु प्रतिरूपकाणि तीर्थकराकृतीनि सिंहासनादियुक्तानि देवकृतानि भवन्ति। शेषदेवादीनामप्यस्माकं कथयतीति प्रतिपत्त्यर्थं भगवतश्च पादमूलमेकेन गणधरेणाविरहितमेव। स च ज्येष्ठोऽन्यो वा? प्रायो ज्येष्ठ इति भाव.,स च ज्येष्ठगणी अन्यो वा दक्षिणपूर्वे दिग्भागे अदूरे प्रत्यासन्ने भगवतो भगवन्तं प्रणम्य निषीदति इति क्रियाध्याहार, शेषा गणधरा अप्येवमेव भगवन्तमभिवन्द्य तीर्थकरस्य मार्गतः पार्श्वतश्च निषीदन्ति।

(६) भुवनगुरुरूपस्य त्रैलोक्यगतरूपेभ्यः सुन्दरतरत्वात्
त्रिदशकृतप्रतिरूपकाणां किं साम्यमसा-
म्यं वेत्याशङ्कानिरासार्थमाह—

जे ते देवेहि कया, तिदिसिं पडिरूवगा जिणवरस्स।
तेसिं पि तप्पभावा, तयाणुरूवं हवइ रूवं ॥ ५५७ ॥

यानि तानि देवै कृतानि जिनवरस्य तिसृषु दिक्षु प्रतिरूपकाणि तेषामपि तत्प्रभावात्तीर्थकरप्रभावात्तदनुरूप तीर्थङ्कररूपानुरूपं भवति रूपमिति।

तित्थातिसेससंजय-देवीवेमाणियाण समणीओ।
भवणवइवाणमंतर-जोइसियाणं च देवीओ ॥ ५५८ ॥

तीर्थं गणधरः पूर्वद्वारेण प्रविश्य तीर्थकरं त्रिकृत्वो वन्दित्वा दक्षिणपूर्वे दिग्भागे निषीदति, एव शेषगणधरा अपि, नवरं ते तीर्थस्य मार्गतः पार्श्वेषु च निषीदन्ति। तदनन्तरं अतिशेषसयता अतिशायिन—केवल्यादयः संयता एव निषीदन्ति। किमुक्तं भवति—ये केवलिनस्ते पूर्वद्वारेण प्रविश्य भगवन्तं त्रिकृत्वः प्रदक्षिणीकृत्य नमस्तीर्थायेति भणित्वा तीर्थस्य प्रथमगणधरस्य शेषगणधराणा च पृष्ठतो निषीदन्ति, येप्यवशेषा अतिशायिनो मन पर्यवज्ञानिनोऽवधिज्ञानिनश्चतुर्दशपूर्वधरास्त्रयोदशपूर्वधरा यावद्दशपूर्वधरा. नवपूर्वधरा. खेलौषधय आमर्षौषधयो जल्लौषध्यादयश्च तेऽपि पूर्वद्वारेण प्रविश्य भगवन्तं प्रदक्षिणीकृत्य वन्दित्वा नमस्तीर्थाय प्रथमगणधररूपाय नम केवलिभ्य इत्युक्त्वा केवलिनः पृष्ठतो यथाक्रमं निषीदन्ति, ये चाऽवशेषा अनतिशायिनः सयतास्तेऽपि पूर्वद्वारेणैव प्रविश्य त्रिकृत्वो भगवन्तं प्रदक्षिणीकृत्य वन्दित्वा नमस्तीर्थाय नमः केवलिभ्यो नमोऽतिशायिभ्य इत्युक्त्वा अतिशायिना पृष्ठतो निषीदन्ति। वैमानिकानां देव्य. पूर्वद्वारेण प्रविश्य भगवन्तं त्रिकृत्व प्रदक्षिणीकृत्य वन्दित्वा नमस्तीर्थाय नम. केवलिभ्यो नमोऽतिशायिभ्यो नम साधुभ्य इति भणित्वा निरतिशायिनां पृष्ठतस्तिष्ठन्ति, न तु निषीदन्ति। श्रमण्यः पूर्वद्वारेण प्रविश्य तीर्थकर त्रिकृत्व. प्रदक्षिणीकृत्य वन्दित्वा नमस्तीर्थाय नम केवलिभ्यो नमोऽतिशायिभ्यो नम शेषसाधुभ्य इति इत्युक्त्वा वैमानिकदेवीनां पृष्ठतस्तिष्ठन्ति न तु निषीदन्ति। भवनवासिन्यो व्यन्तर्यो ज्योतिष्क्यश्च दक्षिणद्वारेण प्रविश्य त्रिकृत्व. तीर्थकर प्रदक्षिणीकृत्य वन्दित्वा दक्षिणपश्चिमाया दिशि नैर्ऋतकोणे इत्यर्थ, तिष्ठन्ति न तु निषीदन्ति, भवनवासिनीनां पृष्ठतो ज्योतिष्कदेव्यस्तासा पृष्ठतो व्यन्तर्य.।

एतदेव सविशेषं प्रतिपिपादयिषुरिदमाह—

केवलिणो तिउण जिणं,तित्थपणामं च मग्गओ तस्स।
मणमाई वि नमंता, वयंति सट्ठाणसट्ठाणं ॥ ५५९ ॥

केवलिनस्त्रिगुणं त्रि' प्रदक्षिणीकृत्य जिन-तीर्थकरं तीर्थप्रणाम च कृत्वा तस्य गणधरस्य मार्गत' पृष्ठतो निषीदन्ति क्रियाध्याहार, 'मणमाई वी' त्यादि, मन आदयोऽपि मनः-पर्यायज्ञान्यवधिज्ञानिचतुर्दशपूर्वधरा यावन्नवपूर्वधराः खेलौषध्यादिनिरतिशयसंयतवैमानिकदेवीश्रमण्यस्तथा ज्योतिष्कभवनपतिव्यन्तरदेव्य. पूर्वक्रमेण तीर्थकरादीन् नमन्त्यो व्रजन्ति स्वस्थानं-स्वं स्व स्थानमित्यर्थ.,भावार्थ. प्रागेवोक्त.।

भवणवई जोइसिया, ओधव्वा वाणमंतरसुरा य ।
वेमाणिया य मणुया, पयाहिणं जं च निस्साए ॥५६०॥

भवनपतयो ज्योतिष्का व्यन्तरसुरा एते पश्चिमद्वारेण प्रविश्य भगवन्तं त्रि प्रदक्षिणीकृत्य वन्दित्वा नमस्तीर्थाय नम. केवलिभ्यो नमोऽतिशायिभ्यो नम शेषसाधुभ्य इति भणित्वा यथोपन्यासमुत्तरपश्चिमे दिग्भागे निषीदन्ति, तद्यथा-भवनपतीना पृष्ठतो ज्योतिष्कास्तेषामपि पृष्ठतो व्यन्तरा इति, तथा वैमानिका मनुष्याश्चशब्दात् स्त्रियश्च । अस्य चशब्दस्य व्यवहित उपन्यास , किं 'पयाहिणं' ति-उत्तरद्वारेण प्रविश्य प्रदक्षिणा. कृत्वा तीर्थकरादीनभिवन्द्य उत्तरपूर्वे दिग्भागे यथोपन्यासं निषीदन्ति , तद्यथा-वैमानिकानां पृष्ठतो मनुष्यास्तेषामपि पृष्ठतो मनुष्यस्त्रिय । इहैवं सम्प्रदायः-देव्य सर्वा एव न निषीदन्ति देवा मनुष्या मनुष्यस्त्रियश्च निषीदन्ति इति , तथा विवृत, ' जं च निस्साए ' य परिवारो या च निश्रां कृत्वा समायात. स तत्पार्श्वे एव तिष्ठति नान्यत्र । आ० म० १ अ० ।

अत्रान्तरे भाष्यादर्शेषु केषुचिदेता गाथा दृश्यन्ते-

अणगारा वेमाणिणिं, वरं गणी सो गणी य पुव्वेणं ।
पविसंति विविहमणिरय-णकिरणनिकरेण दारेणं ॥१॥
जोइसियभवणवणयर-दयितालायत्तरूवकलियाओ ।
पविसंति दक्खिणेणं, पडायकयपंति कलिएणं ॥ २ ॥
जोइसियभवणवणयर-ससंभमा ललियकुंडलाहरणा ।
पविसंति पच्छिमेणं, वितुंगदिप्पंतसिहरेणं ॥ ३ ॥
समहिंदा कप्पोवग-देवा राया नरा य नारीओ ।
पविसंति उत्तरेणं. परमणियओहओहेणं ॥ ४ ॥

एताश्च द्वयोरपि चूर्ण्योरगृहीतत्वात्प्रक्षेप ( प्रक्षिप्त ) गाथाः सम्भाव्यन्ते । उक्तार्था । बृ० १ उ० २ प्रक० ।

साम्प्रतमभिहितमेवार्थं भाष्यकार पूर्वद्वारादि-
प्रवेशविस्पष्टं स्पष्टतरं प्रतिपादयति—

संजय वेमाणित्थी, संजयपुव्वेण पविसिउं वीरं ।
काउं पयाहिणं पु-व्वदक्खिणे ठंति दिसिभागे ॥११६॥

संयता वैमानिकस्त्रिय संयत्य पूर्वेण-पूर्वद्वारेण प्रविश्य वीर प्रदक्षिणं कृत्वा पूर्वदक्षिणे दिग्भागे तिष्ठन्तीति ।

जोइसियभवणवंतर-देवीओ दक्खिणेण पविसंति ।
चिट्ठंति दक्खिणावर-दिसिम्मि तिगुणं जिणं काउं ॥११७॥

ज्योतिष्कभवनव्यन्तरदेव्यो दक्षिणेन द्वारेण प्रविश्य त्रिगुणं प्रदक्षिणं जिनं कृत्वा दक्षिणापरदिग्भागे पूर्वक्रमेण तिष्ठन्ति ।

अवरेण भवणवासी, वंतरजोइससुरा य अतिगंतुं ।
अवरुत्तरदिसिभागे, चिट्ठंति जिणं नमंसित्ता ॥ ११८ ॥

अपरेण-पश्चिमद्वारेण भवनवासिन्यो व्यन्तरज्योतिष्कसुराश्च अभिगत्य--प्रविश्य जिनं नमस्कृत्यापरोत्तरदिग्भागे वायव्यकोणे इत्यर्थ , पूर्वक्रमेण तिष्ठन्ति ।

समहिंदा कप्पसुरा, राया नरनारिओ उदिण्णेणं ।
पविसित्ता पुव्वुत्तर-दिसाएँ चिट्ठंति पंजलिया ॥११६॥

समहेन्द्रा महर्द्धिभिरिन्द्रै' सहिता कल्पोपपन्ना देवो राजानो नरा' सामान्यपुरुषा नार्यश्च उदीच्येनोत्तरेण द्वारेण प्रविश्य भगवन्तं प्रणम्य प्राञ्जलय' पूर्वोत्तरदिग्भागे तिष्ठन्ति ।

अभिहितार्थोपसंग्रहमाह-

एक्केकिए दिसाए, तिगं तिगं होइ सन्निविट्ठं तु ।
आइचरमे विमिस्सा, थीपुरिसा सेसपत्तेयं ॥ ५६१ ॥

एकैकस्यां पूर्वदक्षिणादिकाया दिशि त्रिकं २ भवति सन्निविष्टं ' तद्यथा-पूर्वदक्षिणस्या संयतवैमानिकदेवीश्रमणीरूप , दक्षिणापरस्या भवनवासिज्योष्कव्यन्तरदेवीरूपम् , अपरोत्तरस्या भवनपतिज्योतिष्कव्यन्तरदेवरूपम् ,उत्तरपूर्वस्यां वैमानिकमनुष्यमनुष्यस्त्रीरूपमिति । आदिमे च त्रिके पूर्वदक्षिणदिग्गते चरमे च त्रिके पूर्वोत्तरदिग्गते विमिश्रा भवन्ति , स्त्रिय पुरुषाश्च तिष्ठन्तीति भाव' । शेषे त्रिकद्वये प्रत्येक भवति, अपरादक्षिणे दिग्भागे केवलां स्त्रिय एव अपरोत्तरे च दिग्भागे पुरुषा एवेति भावार्थ ।

(७) तेषां चेत्थं स्थितानां देवनराणामिय मर्यादा-

एंतं महिड्डियं पणि-वयंति ठियमवि वयंति पणमंता ।
ण वि जंतणा न विकहा,न परोप्परमच्छरो न भयं ॥५६२॥

ये अल्पर्द्धयो भगवत समवसरणे पूर्वनिषण्णास्ते आगच्छन्तं महर्द्धिकं प्रणिपतन्ति । अथ महर्द्धिका. प्रथमं समवसरणे निषण्णास्तत. पश्चात् ये अल्पर्द्धिका समागच्छन्ति ते तान् पूर्वस्थितान् महर्द्धिकान् प्रणिपतन्तो व्रजन्ति । तथा तेषा स्थितानां नापि यन्त्रणा , अस्यत्तता नापि विकथा, न च परस्परं मत्सरो,नापि विरोधिनामपि सत्त्वाना परस्परं भयं भगवतोऽनुभावात् । एतत् सर्वं प्रथमप्राकारान्तरे व्यवस्थितम् ।

अथ द्वितीयप्राकारान्तरे तृतीयप्राकारान्तरे च किं-
व्यवतिष्ठते इत्याह-

बिइयम्मि होंति तिरिया, तइए पागारमंतरे जाणा ।
पागारजढे तिरिया, वि होंति पत्तेयमीसा वा ॥ ५६३ ॥

द्वितीये प्राकारान्तरे भवन्ति तिर्यञ्चस्तथा तृतीये प्राकारान्तरे यानानि, प्राकाररहिते; बहिरित्यर्थ । तिर्यञ्चोऽपि भवन्ति, अपिशब्दात्-मनुष्यदेवा अपि । ते च प्रत्येकं कदाचिद्भवन्ति कदाचित्तिर्यञ्च एव,कदाचिन्मनुष्या एव, कदाचिद्देवा एव, तथा कदाचिन्मिश्रा वा । एते च प्रत्येकं , मिश्रा वा प्रविशन्तो निर्गच्छन्तश्च वेदितव्या । गतं समवसरणद्वारम् ।

(८) अधुना द्वितीयद्वारप्रतिपादनार्थमाह-

सव्वं च देसविरतिं, सम्मं घेच्छइ व होइ कहणा उ ।
इहरा अमूढलक्खो, न कहेइ भविस्सइ न तं च । ५६४ ।

विरतिशब्द उभयत्रापि सम्बध्यते , सर्वं सर्वविरतिं देशविरतिं सम्यक्त्वं वा ग्रहीष्यति । वाशब्दस्य व्यवहित सम्बन्ध , तत कथना—कथनं भगवत प्रवर्तते 'इहर' त्ति इतरथा अमूढलक्ष्या समस्तज्ञेयाविपरीतवेदना किं न कथयति? आह-यद्येवं समवसरणकरणप्रयासो विबुधानामनर्थकं , नैनऽपि नियमतो कथनादित्यत आह—भविष्यति न तद्धि यद्भगवति कथयति अन्यतमोऽप्यन्यतमत्सामायिकं न प्रतिपद्यत इति भविष्यत्कालनिर्देशस्त्रिकालोपलक्षक. ।

(९) अथ कियन्ति सामायिकानि मनुष्यादयः प्रतिपद्यन्ते ?, इत्येतदाह—

मणुए चउमन्नयरं, तिरिए तिन्नि व दुवे व पडिवज्जे ।
जइ नत्थि नियमसो च्चिय, सुरेसु सम्मत्तपडिवत्ती ५६५

मनुष्ये प्रतिपत्तरि चतुर्णा सामायिकानामन्यतरत्-अन्यतरसामायिकप्रतिपत्तिर्भवति, पाठान्तर-' मणुओ चउमन्नयर ' तत्र मनुष्यश्चतुर्णामन्यतरत् प्रतिपद्यते इति व्याख्येयम् , तिर्यङ् त्रीणि वा सर्वविरतिवर्जानि द्वे वा सम्यक्त्वश्रुतसामायिके प्रतिपद्यते इति । यदि नास्ति मनुष्यतिरश्चां कश्चित्प्रतिपत्ता ततो नियमत एव सुरेषु सम्यक्त्वप्रतिपत्तिर्भवति ।

स च भगवानित्थं धर्म्ममाचष्टे—

तित्थपणामं काउं, कहेइ साहारणेण सद्देणं ।
सव्वेसिं सन्नीणं, जोयणणीहारिणा भयवं ॥ ५६६ ॥

नमस्तीर्थाय प्रवचनरूपायेत्यभिधाय प्रणामं च कृत्वा कथयति प्रतिपत्तिमङ्गीकृत्य साधारणेन शब्देन अर्द्धमागधभाषात्मकेन । केषा साधारणेनेत्याह-सर्वेषाममरनरतिरश्चा संज्ञिनाम् । किं विशिष्टेन योजननिर्हारिणा-योजनव्यापिना भगवान् , किमुक्तं भवति-भगवतो ध्वनिरशेषसमवसरणस्थसंज्ञिजिज्ञासितार्थप्रतिपत्तिनिवन्धनं भवति भगवतः सातिशयत्वादिति ।

(१०) ननु कृतकृत्यो भगवान् तत. किमिति तीर्थप्रणामं करोति ?,उच्यते—

तप्पुव्विया अरहया, पूइयपूया य विणयकम्मं च ।
कयकिच्चो वि जह कहं, कहए नमए तहा तित्थं ।५६७।

तत्पूर्विका—प्रवचनरूपतीर्थपूर्विका अर्हता—तीर्थकरता प्रवचनविषयाभ्यासवशतस्तीर्थकरत्वप्राप्ते. । यश्च यत उपजायते स तं प्रणमतीति भगवान् तीर्थं प्रणमति । तथा पूजितेन पूजा पूजितपूजा, सा चास्य कृता भवति । पूजितपूजको हि लोक. भगवांश्च भुवनत्रयेऽपि पूज्यस्ततो यदि भगववता पूजितं भवति तत. सकलेऽपि जगति तत्पूजितं भवतीति प्रणमति, तथा विनयकर्म्म च वक्ष्यमाणवैनयिकधर्ममूलं कृतं भवति । किमुक्तं भवति ?-विनयमूलो धर्मो भगवता प्रज्ञापनीयस्तद्यदि प्रथमं स्वयमेव भगवान् विनयं प्रयुङ्क्ते ततो लोक. सम्यग् विनयं प्रज्ञाप्यमानं श्रद्धत्ते करोति । अथवा—यथा कृतकृत्योऽपि भगवान् कथां कथयति तथा तीर्थमपि नमति । आह-नन्विदमपि धर्मकथन भगवतः कृतकृत्यस्यायुक्तमेव,न, तस्य तीर्थकरनामकर्म्मविपाकप्रभावत्वात् । उक्तं च प्राक्—' तं च कहं वेइज्जइ ' इत्यादि ।

(११) क केन साधुना कियतो वा भूभागात्समवसरणे खल्वागन्तव्यम् ? अनागच्छतो वा किं प्रायश्चित्तमित्यत आह-

जत्थ अपुव्वोसरणं, न दिट्ठपुव्वं च जेण समणेणं ।
वारसहिं जोयणेहिं, सो एइ अणागए लहुगा ॥५६८॥

यत्र तत्तीर्थकरापेक्षया अपूर्वम्-अभूतपूर्वं समवसरणं न दृष्टपूर्वं वा येन श्रमणेन स द्वादशभ्यो योजनेभ्य. आगच्छति । अथ नागच्छति अवज्ञया ततोऽनागते सति ' लहुय ' त्ति—चतुर्लघव. प्रायश्चित्तम् । गतं ' केवइय ' त्ति-द्वारम् ।

(१२) अधुना रूपपृच्छाद्वारप्रकटनार्थमाह—

सव्वसुरा जइ रूवं, अंगुट्ठपमाणयं विउव्वेज्जा ।
जिणपादंगुट्ठं पइ, न सोहए तं जहिंगालो ॥ ५६९ ॥

अथ कीदृग् भगवतो रूपम् ?, उच्यते-सर्वे सुरा अशेषखुन्दरूपनिर्माणशक्त्या यदि अङ्गुष्ठप्रमाणकं रूपं विकुर्वीरन् तथापि तज्जिनपादाङ्गुष्ठं प्रति न शोभते यथा अङ्गार ।

साम्प्रतं प्रसङ्गतो गणधरादीनां रूपसंपदमभिधित्सुराह-

गणहर आहार अणु-त्तरा य जाव वणचक्किवासुवला ।
मंडलिया जा हीणा, छट्ठाणगया भवे सेसा ॥ ५७० ॥

तीर्थकररूपाद्गणधराणा रूपमनन्तगुणहीनं भवति,तीर्थकरेभ्यो गणधरा रूपेणान्तगुणहीना भवन्तीति भाव । गणधरेभ्यो रूपेण खल्वाहारकदेहा अनन्तगुणहीना आहारकदेहेभ्यो रूपेणानन्तगुणहीना -'अणुत्तरा' अनुत्तरवैमानिका , एव ग्रैवेयकाऽच्युतारणप्राणतानतसहस्रारमहाशुक्रलान्तकब्रह्मलोकमाहेन्द्रसनत्कुमारेशानसौधर्मभवनवासिज्योतिष्कव्यन्तरचक्रवर्त्तिवासुदेववलदेवमहामाण्डलिकानामनन्तरानन्तरापेक्षया रूपेणानन्तगुणहीना अवगन्तव्या । तथा चाह—' जाव वणचक्किवासुवला । मंडलिया जाहीण ' त्ति—यावद् व्यन्तरचक्रवर्तिवासुदेवबलदेवमाण्डलिका. तावदनन्तगुणा हीनाः , ' छट्ठाणगया भवे सेस ' त्ति—शेषा राजानो जनपदलोकाश्च षट्स्थानगता भवन्ति । अनन्तभागहीना वा असंख्येयभागहीना वा संख्येयभागहीना वा संख्येयगुणहीना वा असंख्येयगुणहीना वा अनन्तगुणहीना वा इति ।

उत्कृष्टरूपतायां भगवत. प्रतिपादयितुं प्रक्रान्तायामिदं प्रासङ्गिकं रूपसौन्दर्यनिवन्धनं संहननादिप्रतिपादयन्नाह-

संघयणरूपसंठा-णवण्णगइ सत्तसारऊसासा ।
एमाइऽणुत्तराइं, भवंति नामोदया तस्स ॥ ५७१ ॥

संहननं-वज्रर्षभनाराचं रूपमुक्तलक्षणं संस्थानं-समचतुरस्रं वर्णो-देहच्छाया गति-र्गमन सत्त्वं-वीर्यान्तरायकर्मक्षयोपशमादिजन्य आत्मपरिणाम , सारो द्विधा—वाह्य., आन्तरश्च । वाह्यो गुरुत्वम्., आन्तरो ज्ञानादि, उच्छ्वास. प्रतीत , तत एतेषां पदाना द्वन्द्वमेवमादीनि वस्तूनि आदिशब्दाद्रुधिरं गोक्षीराभमित्यादिपरिग्रह , अनुत्तराणि तस्य भगवतो नामोदयान्नामकर्मोदयाद् भवन्ति ।

आह-अन्यासा प्रकृतीनां वेदना गोत्रादयो नाम्नो वा ये इन्द्रियादय. प्रशस्ता उदया भवन्ति ते किमनुत्तरा भगवत. छद्मस्थकाले केवलिकाले वा भवन्ति किं वा नेति ?, उच्यते-

पयडीणं अन्नासु वि, पसत्थउदया अणुत्तरा होंति ।
खयउवसमे वि य तहा,खयम्मि अविकप्पमाहंसु॥५७२॥

'अन्नासु वि' त्ति-षष्ठ्यर्थे सप्तमी,अन्यासामपि प्रकृतीनाम् अपिशब्दान्नाम्नोऽपि प्रशस्ता उदया वा उच्चैर्गोत्रादयो भवन्ति, किम् इतरजनस्येव ? नेत्याह अनुत्तरा-अनन्यसदृशा इत्यर्थ.। ' खओवसमे वि य ' त्ति—क्षयोपशमे सति ये दानलाभादयः कार्यविशेषा अपिशब्दादुपशमेऽपि ये केचन तेऽपि अनुत्तरा

भवन्तीति क्रियायोगस्तथा कर्मणः क्षये आत्यन्तिककर्मक्षये सति क्षायिकज्ञानादिगुणसमुदयमविकल्प—ख्यावर्णनादिक ल्पनातीत सर्वोत्तममाख्यातवन्तस्तीर्थकरगणधराः।

(१३) आह-असातवेदनीयाद्या प्रकृतयो नाम्नो वाऽप्रशस्ता कथं तस्य तु खदा न भवन्ति ?, उच्यते—

**अस्सायमाइयाओ, जा वि य असुभा हवंति पयडीओ।**
**निंबरसलवो व्व पए,न होंति ता असुहया तस्स ॥५७३॥**

असाताद्या या अपि च प्रकृतयोऽशुभा भवन्ति, अपि निम्यरसलव इव लवो बिन्दु पयसि क्षीरे न भवन्ति ता असुखदास्तस्य भगवतस्तीर्थकृत.। उक्तमानुषङ्गिकम्।

प्रकृतं द्वारमधिकृत्य प्रोच्यते। तत्र कश्चिदाह उत्कृष्टरूपतया भगवतः किं प्रयोजनमत आह—

**धम्मोदएण रूवं, करेंति रूवस्सिणो वि जइ धम्मं।**
**गिज्झवतो य सुरूवो, पसंसिमो तेण रूवं तु ॥५७४॥**

धर्मस्योदयो धर्मोदयस्तेन रूपं भवतीति श्रोतारोऽपि धर्मे प्रवर्त्तन्ते, तथा कुर्वन्ति रूपस्विनोऽपि-रूपवन्तो यदि धर्मं तत स शेष. सुतरां कर्त्तव्य इति श्रोतृबुद्धि. प्रवर्त्तते। तथा ग्राह्यवाक्यश्च सुरूपो भवति, चशब्दात् श्रोतृणां रूपाद्यभिमानापहारी अत एतै कारणैर्भगवतो रूप प्रशंसाम.।

अथवा-पृच्छेति भगवान् देवनरतिरश्चा प्रभूतसशयिनां कथं व्याकरण कुर्वन् संशयव्यवच्छित्तिं करोतीत्युच्यते—युगपत्। किमित्याह—

**कालेण असंखेण वि, संखाईयाण संसईणं तु।**
**मा संसयवोच्छित्ती, न होज्ज कमवागरणदोसा ॥५७५॥**

यदि एकैकस्य परिपाट्या एकैक सशयं छिन्द्यात् तत. संख्यातीतानां देवाना संशयिना संख्येयेनापि कालेन सशयव्यवच्छित्तिर्न स्यात्, कुत इत्याह-क्रमेण व्याकरणं क्रमव्याकरण स एव दोष क्रमव्याकरणदोषस्तस्मात्ततो युगपद् व्याकरोति।

( १४ ) युगपद्व्याकरणे गुणमुपदर्शयति—

**सव्वत्थ अवि समत्तं, रिद्धिविसेसो अकालहरणं च।**
**सव्वण्णुपच्चओ वि य,अचिंतगुणभूइओ जुगवं ॥५७६॥**

सर्वत्र-सर्वसत्त्वेषु समत्वम्-अविषमत्वं युगपत्कथनेन भगवता रागद्वेषरहितस्य प्रथित भवति, अन्यथा तुल्यकालसशयिना युगपज्जिज्ञासुतयोपस्थितानां कालभेदकथने रागतरगोचरचित्तवृत्तिप्ररूढ, सामान्यकेवलिना तत्प्रसङ्ग इति चेन्न तेषामित्थं देशनाकरणायोगात्। तथा ऋद्धिविशेष एव तावत् प्रथितो भवति यत् युगपत्सर्वेषामेव सशयिनामशेषसशयव्यवच्छित्तिं करोति। तथा अकालहरणं भवति भगवता युगपत् संशयोपनोदात्। क्रमेण कथने तु कस्यचित् सशयिनोऽनिवृत्तसशयस्यैव मरणं स्यात्, न च भगवन्तमप्यवाप्य सशयानिवृत्त्यादिफलरहिता प्राणिनो भवन्तीति युक्तम्। सर्वज्ञप्रत्ययोऽपि तेषामेवमुपजायते,यथा स र्वज्ञोऽय इहताऽशेषसंशयापनोदात्। न खल्वसर्वज्ञ एककालमशेषसंशयापनोदायालमिति। क्रमव्याकरणे तु कस्यचिदनपगतसंशयस्य सर्वज्ञप्रतीत्यभाव स्यात्। तथा अचिन्त्यगुणभूतिरचिन्त्या गुणसम्पद्भगवत स्वभाविकी, ततो यस्मादेते गुणा अतो युगपत्कथयति, गत पृच्छा द्वारम्।

(१५) अधुना श्रोतृपरिणामः पर्यालोच्यते, तत्र यथा सर्वसंशयिनां सा पारमेश्वरी वागशेषसशयोन्मूलनन स्वभाषया परिणमते तथा प्रतिपादयति—

**वासोदयस्स व जहा, वन्नाई होंति भायणविसेसा।**
**सव्वेसिं वि सभासा, जिणभासापरिणमे एवं ॥५७७॥**

वर्षोदकस्य—वृष्ट्युदकस्य वाशब्दादन्यस्य वा यथैकरूपस्य सतो भाजनविशेषात् वर्णादयो भवन्ति, कृष्णसुरभिमृत्तिकाया स्वच्छं सुगन्धि रसवच्च भवति ऊपरं तु विपरीतम्। एवं सर्वेषामपि श्रोतृणा स्वभाषया जिनभाषापरिणमते।

तीर्थकरवाच. सौभाग्यगुणप्रतिपादनार्थमाह—

**साहारणासवत्ते, तदुवओगो उ गाहगगिराए।**
**न य निव्विज्जइ सोया,किढिवाणियदासिओहरणा॥५७८॥**

साधारणा भगवतो वाणी अनेकप्राणिषु स्वभाषात्वेन परिणमनात्, नरकादिभयरक्षणपरत्वात् असपत्ना—असदृशी-अद्वितीया, साधारणा चासौ असपत्ना साधारणाऽसपत्ना तस्यामुपयोगस्तदुपयोग एव भवति श्रोतु. तुशब्दस्यावधारणार्थत्वात् कस्याम् ?, ग्राहयतीति ग्राहका सा चासौ गीश्च ग्राहकगीस्तस्यां ग्राहकगिरि, उपयोगे सत्यपि अन्यत्र निर्वेदो दृश्यते, तत आह-न च निर्विद्यते श्रोता,कथमयमर्थ खल्ववगन्तव्य इत्याह-किढिवणिग्दास्युदा(को)दाहरणात्, तच्चेदम्-'एगस्स वाणियस्स एगा किढी दासी, किढी नामथेरी, सा गोसे कट्ठाणं गया, तण्हाछुहाकिलंता मज्झण्हे आगया। अतिथोवाणि कट्ठाणि आणियाणि त्ति पिट्टिता, भुक्खियतिसिया पुणो पट्ठविया। सा य बहु कट्ठभारं गहाय आगाहतीए पोरिसीए आगच्छति, कालो य जेट्ठमासो, अह ताए थेरीए कट्ठभाराओ एगं कट्ठ पडियं, ताहे ताए ओणमित्ता तं गहियं। तं समयं च जोयणनीहारिणा सरेण भयवं तित्थयरो धम्मं कहेइ। सा थेरी तं सद्दं सुणंती तहेव ओणतासोउमाढत्ता, उण्हं खुहं पिवासं परिस्समं च न विंदइ। सूरत्थमणे तित्थयरो धम्मं कहेउमुट्ठितो, थेरी गया। एव—

**सव्वाउयं पि सोया, खिवेज्ज जइ हु सययं जिणो कहए।**
**सीउण्हखुप्पिवासा, परिस्समभए अविगणंतो॥५७९॥**

भगवति कथयति भगवत्समीपवर्त्त्येव सन् सर्वायुष्कमपि श्रोता क्षपयेत्, यदि हु सततमनवरतं जिन कथयेत्, किं विशिष्ट सन् इत्याह—शीतोष्णक्षुत्पिपासापरिश्रमभयान्यविगणयन्। गत श्रोतृपरिणामद्वारम्।

(१६)सम्प्रति दानद्वार भाव्यते, तत्र भगवान् येषु ग्रामनगरादिषु विहरति तेभ्यो वार्ता ये खल्वानयन्ति तेभ्यो यत्प्रयच्छन्ति वृत्तिदान प्रीतिदानं चक्रवर्त्यादयस्तदुपदर्शयन्नाह—

**वित्ती उ सुवण्णस्स, वारसअद्धं च सयसहस्साइं।**
**तावइयं चिय कोडी, पीईदाणं तु चक्कीणं ॥ ५८० ॥**

वृत्तिस्तु वृत्तिरेव नियुक्तपुरुषस्य सुवर्णस्य द्वादशशतसहस्राणि अर्द्धं च अर्द्धत्रयोदशसुवर्णलक्षा इत्यर्थ, चक्रवर्तिना दीयते तथा एतावत्य एव कोटय प्रीतिदानं चक्रवर्तिन.।

तत्र वृत्तिर्या कालमानेन परिभाषिता नियुक्तपुरुषेभ्यो दीयते, प्रीतिदानं यद्भगवदागमन निवेदिते परमहर्षाभियुक्तेनेभ्यो दीयते, तथा वृत्ति'-सवत्सरनियता प्रीतिदानमनियतमिति ।

एयं चेव पमाणं, नवरं रययं तु केसगा देंति ।
मंडलियाण सहस्सा,वित्ती पीइ(दाणं)सयसहस्सा ।५८१।

एतदेव प्रमाणं वृत्तिप्रीतिदानयो केशवाना नवरं रजतं-रूप्य केशवा-वासुदेवा ददति, तथा-माण्डलिकाना राज्ञामर्द्धत्रया-दशसख्यानि सहस्राणि रूप्यस्य वृत्तिदानं प्रीतिदानं शत-सहस्राणि लक्षाणि अर्द्धत्रयोदशलख्यानि ।

किमेते एव महापुरुषा प्रयच्छन्ति नेत्याह—

भत्तिविहवाणुरूवं, अन्ने वि य देंति इब्भमाईया ।
सोऊण जिणागमणं, नियुत्तमणिओइएसुं वा ॥ ५८२ ॥

इभ्या महाधनपतिरादिशब्दान्नगरग्रामभोगिकादिपरिग्रह·, अन्येऽपि च इभ्यादयो भक्तिविभवानुरूपं श्रुत्वा जिनागमन ददति, केभ्य· ?, इत्याह-नियुक्तेभ्योऽनियोजितेभ्यो वा ।

अथ तेषामित्थं प्रयच्छता के गुणा ?, उच्यते—

देवाणुवित्तिभत्ती, पूया थिरकरणसत्तअणुकंपा ।
सातोदयदाणगुणा, पभावणा चेव तित्थस्स ॥५८३॥

देवानुवृत्ति कृता भवति, देवा अप्यनुवर्त्तिता भवन्ति, कथम्?,यतो,देवा भगवत्पूजा कुर्वन्ति,प्रवृत्तिकथकेभ्यश्च दानं ददति, अतस्तेऽनुवर्तिता भवन्ति, तथा भक्तिर्भगवतः कृता भवति, पूजा च । तथा अभिनवश्रावकाणां स्थिरकरणं, तथा वार्त्तानिवेदकस्य सत्त्वस्यानुकम्पा कृता भवति, तथा सातोदयं सातावेदनीयं कर्म एवमुपचीयते एते वृत्तिप्रीतिदानगुणा भवन्ति, तथा प्रभावना तीर्थस्यैव कृता भवतीति, गत दानद्वारम् ।

(१७)अधुना माल्यद्वारमधिकृत्य प्रोच्यते,तत्र भगवान् प्रथमां सपूर्णपौरुषीं धर्ममाचष्टे, अत्रान्तरे देवमाल्यं प्रविशति, वलिरित्यर्थ । अथ कस्तं वलिं करोतीत्यत आह—

राया व रायमच्चो, तस्साऽसइ पउरजणवओ वा वि ।
दुब्बलिखंडियवलिछडिय-तंदुलाणाढयं कलमा ।५८४।

राजा—चक्रवर्त्तिमाण्डलिकादि· राजामात्यो वा अमात्यो-मन्त्री तस्य राज्ञोऽमात्यस्य वा असति—अभावे नगरनिवासिविशिष्टलोकसमुदाय पौरं तत् करोति । ग्रामादिषु जनपदो वा । अत्र जनपदशब्देन तन्निवासी लोक परिगृह्यते, स वलि· किंविशिष्ट किंपरिमाणो वा क्रियते ? इत्याह-'दुर्वलि' इत्यादि, दुर्वलिकया ख(क)ण्डिताना वलीति वलिकया छटिताना तन्दुलाना, ' कलमा ' इति—प्राकृतशैल्या कलमानाम् आढक चतु प्रस्थप्रमाणं करोति ।

किंविशिष्टानामित्याह—

भाइय पुणाऽऽणियाणं, अखंडफुडियाण फलगसरियाण।
कीरइ वली सुरा वि य, तत्थेव छुहंति गंधाई ॥ ५८५ ॥

भाजिता—ईश्वरादिगृहेषु वीननार्थमर्पिता स्तेभ्य प्रत्यानीता पुनरानीता भाजिताश्च ते पुनरानीताश्च , तेषा किंविशिष्टानाम्? इत्याह-अखण्डा -सम्पूर्णावयवा अस्फुटिता-राजीरहिता अखण्डाश्च ते अस्फुटिताश्चेति विशेषणस-मासस्तेषाम् , 'फलकसरिताए' ति-फकवीनितानाम् एव-भूतानामाढक· क्रियते । वलि सिद्ध·, सुरा अपि च तत्रैव वलौ प्रक्षिपन्ति गन्धादीन् । गतं देवमाल्यद्वारम् । आ० म० १ अ० ।

अधुना माल्यानयनद्वारम् ,तमित्थं तन्दुलाढकपरिमाण सिद्धं वलिमुपादाय राजादिस्त्रिदशगणपरिवृतो महता पटुपटहादितूर्यनिनादेन सकलमपि दिग्मण्डलमापूरयन्नागत्य पूर्वद्वारेण प्रवेशयति । आह च चूर्णिकृत्—"त आढगं तंदुलाण सिद्धं देवमल्लं राया वा रायमच्चो वा गामो वा जणवओ वा गहाय महया तूरियरवेणं देवपरिवुडो पुरच्छिमिल्लेणं दारेण पविसइ" त्ति । बृ० १ उ० २ प्रक० ।

तस्मिंश्च प्रवेश्यमाने भगवानपि धर्मदेशना-मुपसंहरतीत्याह—

वलिपविसणसमकालं, पुव्वद्दारेण ठाइ परिकहणा ।
तिगुणं पुरओ पाडण, तस्सद्धं अवडियं देवा ॥५८६॥

पूर्वद्वारेण वलेरभ्यन्तरे-प्राकाराभ्यन्तरे प्रवेशनं वलिप्रवेशनं तत्समकाल तिष्ठति-उपरमते धर्मकथना-धर्मकथा । किमुक्तं भवति-अभ्यन्तरे प्राकाराभ्यन्तरे यदा वलिः प्रविशति तदा भगवान् धर्मकथामुपसंहृत्य तूष्णीकोऽवतिष्ठते तत· स राजादिर्वलिव्यग्रहस्तो देवपरिवृतो भगवन्तं तीर्थकरं त्रिः कृत्वा प्रदक्षिणीकृत्य तं वलिं तत्पादान्तिके पुरत· पातयति तस्यार्द्धमपतितं देवा गृह्णन्ति ।

अद्धऽद्धं अहिवइणो, अवसेसं होइ पागयजणस्स ।
सव्वामयप्पसमणी, कुप्पइ नन्नो य छम्मासे ॥ ५८७ ॥

शेषस्य अर्द्धस्यार्द्धमर्द्धार्द्धं तत् अधिपतेर्भवति, राज्ञ इत्यर्थ , अवशेषं यद्वलेरास्ते तद्भवति कस्य? प्रकृतिषु भव· प्राकृत स चासौ जनस्तस्य,स चैवंरूपसामर्थ्यः, यदेकमपि सिक्थं तत्सं वन्धि यस्य शिरसि प्रक्षिप्यते तस्य पूर्वोत्पन्नो व्याधिः खलूपशमं याति, अपूर्वश्च षण्मासान् यावद् न भवति । तथा चाह-सर्वामयप्रशमन , सूत्रे स्त्रीलिङ्गनिर्देश· प्राकृतत्वात् कुप्यति नान्यश्च षण्मासान् यावदित्थ वलौ प्रक्षिप्ते भगवान् प्रथमप्रकारादुत्तरद्वारेण निर्गत्य द्वितीये प्राकारान्तरे पूर्वस्या दिशि देवच्छन्दके यथासुखं समाधिना व्यवतिष्ठते ।

(१८) सम्प्रति 'उवरि तित्थं' ति द्वारमभिधीयते । भगवत्युत्थिते द्वितीयस्या पौरुष्यामाद्यगणधरोऽन्यो वा गणधरो धर्ममाचष्टे स्यान्मति किं कारणं द्वितीयस्यामपि पौरुष्या तीर्थकर एव धर्मं न कथयति ?, तथा आह—

खेयविणोओ सीसगु-णदीवणा पच्चओ उभयओ वि ।
सिस्सायरियकमो वि य,गणहरकहणे गुणा होंति ।५८८

खेदविनोद· परिश्रमविनाशो भगवतो, भवति, तथा शिष्य-गुणदीपना-शिष्यगुणप्रख्यापना च कृता भवति, तथा प्रत्यय उभयतोऽपि श्रोतृणमुपजायते, यथा भगवताऽभ्यधायि तथा गणधरेणापि, यदिवा—गणधरे तदनन्तरं तदुक्तानुवादिनि प्रत्यय· श्रोतृणां भवति, यथा नान्यथावादयमिति, तथा शिष्याचार्यक्रमोऽपि दर्शितो भवति आचार्यादुपश्रुत्य योग्य-शिष्येण तदर्थान्वाख्यानं कर्त्तव्यमिति । एते गणधरकथने गुणा भवन्ति ।

आह स गणधरः क निषण्णः कथयति ? उच्यते-

राओवणीयसीहा-सणे णिविट्ठो व पायपीढे ।
जेट्ठो अन्नयरो वा, गणहारी कहेइ बीयाए ॥५८६॥

राज्ञा उपनीतं—राजोपनीतं तच्च तत् सिंहासनं च राजोपनीतसिंहासनं तत्र तदा उपविष्टस्तदभावे तीर्थंकरपादपीठे वा उपविष्ट स च ज्येष्ठ अन्यतरो वा गणम्-साध्वादिसमुदायलक्षणं धारयितुं शीलमस्येति गणधारी द्वितीयायां पौरुष्याम् कथयति ।

आह-स कथयन् कथं कथयतीति ?, उच्यते-

संखातीते वि भवे, साहइ जं वा परो उ पुच्छिज्जा ।
नयणं अणाइसेसी, वियाणई एस छउमत्थो ॥५६०॥

संख्यातीतानपि असंख्येयानपीत्यर्थः, भवान् 'साहेइ' इति देशीवचनमेतत् कथयति, किमुक्तं भवति ?,—असंख्येयेषु भवेषु यदभवत् भविष्यति; यद्वा-वस्तुजातं परः पृच्छेत् तत्सर्वं कथयति, अनेनाशेषाभिलाप्यपदार्थप्रतिपादनशक्तिरावेदिता किं बहुना ?, नच—नैव णमिति वाक्यालंकारे, 'अनतिशेषी' अनतिशयी अवध्याद्यतिशयरहित इत्यर्थः, विजानाति यथा एष गणधरश्छद्मस्थ इति अशेषप्रश्नोत्तरप्रदानसमर्थत्वात्तस्य । एवं तावत्समवसरणवक्तव्यता सामान्येनोक्ता । आ० म० १ अ० । वृ० । आव० ।

( १६ ) समवसरणकल्पः ।

नमिऊण जिणं वीरं, कप्पं सिरिसमवसरणरयणाए ।
पुव्वायरियकयाहिं, गाहाहिं चेव जंपेमि ॥ १ ॥
वाऊ मेहा कमसो, जोअणभूमीहि सुरहिजलवुट्ठिं ।
मुणिरयणभूमिरयणं, कुणंति पुण कुसुमवुट्ठिवणा ॥२॥
पायारेति अ कमसो, कुणंति वररुप्पकणयरयणमयं ।
कंचणवसुमणिकविसी-ससोहिअभवणजोइवणा ॥३॥
गाउयमेगं छस्सय-धणुहपरिछिन्नमंतरं तेसिं ।
अट्ठंगुलिकरयणी, तित्तीसं धणुहबाहल्लं ॥ ४ ॥
पंचसयधणुच्चत्तं, चउदारविराइयाण वप्पाणं ।
सव्वप्पमाणमेयं, नियनिअहत्थेण य जिणाणं ॥ ५ ॥
सोवाणदससहस्सा, भूमीओ गंतु पढमपायारो ।
पण्णासधणुहपयरो, पुणो वि सोवाणपणसहस्स ॥ ६ ॥
तत्थ वि बीओ वप्पो, पुव्वुत्तविही तयंतरे नेया ।
तत्तो तइओ एवं, वीससहस्सा य सोवाणो ॥ ७ ॥
दस पंच पँच सहस्सा, सव्वे हत्थु व्व हत्थवित्थिण्णा ।
बाहिरमज्झब्भिंतर, वप्पाण कमेण सोवाणं ॥ ८ ॥
तम्मज्झे मणिपीढं, भूमीओ सड्ढदुन्नि कोसुच्चं ।
दोधणुसयवित्थिन्नं, चउदारं धणुजिणधणुसमुद्दं ॥६॥
सिंहासणाइचउरो, मणिपडिछिन्नाइ तेसु चउरूवो ।
पुव्वमहे ठाइ सयं, छत्तत्तयभूमिओ भव्वं ॥ १० ॥
समहिअजोयणपिहुलो, तहा असोगो दुसोलसधणुच्चो ।
पडिबिंबत्तयपमुहं, किच्चं तु कुणंति वंतरिया ॥ ११ ॥
परिसाअग्गे आइसु, मुणिवरवेमाणिणीउ समणीओ ।
भवणवइजोइदेवी, देवा वेमाणियनरित्थी ॥ १२ ॥
जोअणसहस्सदंडो, धम्मझओ फुडइ केउसंकिन्नो ।
दो जक्खचामरधरा, जिणपुरओ धम्मचक्क च ॥१३॥
ऊसिअधयमणितोरण-अडमंगलपुन्नकलसदामाइं ।
पंचालिअछत्ताइं, पइदारं धूवघडियाओ ॥१४॥
हेमसिअरत्तसामल-वणासरत्तयणजोइभवणवइ ।
पइदारं वसुवप्पे, पव्वाइ सुणंति पडिहारा ॥१५॥
जयविजयाऽऽदि अ अवरा, जिअगोरा रत्तकणयनीलाभा ।
देवी पुव्वकमेणं, सत्थकरा वंतिकप्पयमए ॥१६॥
जडमउडमंडिआ तह, तुंबरुखंडंगपुरिससिरिमाली ।
बहिवप्पदारदोसु वि, पासेसुं ठंति पइवप्पं ॥ १७ ॥
बहिवप्पे जाणाइं, बीए स तु विभिन्नभावगया ।
तिरिआगमणमयत्थं, देइ स पुण रयणवप्पबहिं ॥१८॥
बहिवप्पयारमज्झे, दो दो वावी वि हुंति वट्टंति ।
चउरससमोसरणे, इग इग वावीउ कोणेसुं ॥ १६ ॥
उक्किट्ठिसीहनायं, कलयलसद्देण सव्वओ सव्व ।
तित्थयरपायमूले, करेंति देवा निवयमाणा ॥२०॥
चेइदुमपीढछंदग, आसणछत्तं च चामराओ य ।
जं च ऽण्णं करणिज्जं, करेंति ते वाणमंतरिया ॥२१॥
साहारणचउसरणे, एवं जच्छिड्ढिमंत ओसरइ ।
इक्कुच्चिअ तं सव्वं, करेइ भयणा उ इअरेसिं ॥२२॥
सूरुदय पच्छिमाए, उग्गाहंतीइ पुव्वओ एइ ।
दोहि पउमेहि पाया, मग्गेण य हुंति सचन्ने ।.२३।
आदाहिण पुव्वमुहो, तिदिसिं पडिरुवगाउ देवकाया ।
जिट्ठगणी अन्नो वा, दाहिणिपुव्वे अदूरम्मि ॥२४॥
जे ते देवेहि कया, तिदिसिं पडिरूवगा जिणवरस्स ।
तेसिं च तप्पभावा, तयाणुरूवं हवइ रूवं ॥२५॥
इड्ढि महड्ढिय पडिवयं-ति विअमवि जंति पणमंता ।
नं वि जंतणा न विकहा,न परुप्परमच्छरो न भयं॥२६॥
तित्थपणाम काउं, कहेइ साहारणेण सद्देणं ।
सव्वेसिं सन्नीणं, जोअणनीहारिणा भयवं ॥ २७ ॥
जत्थ अपुव्वोसरणं, अदिट्ठपुव्वं व जेण समणेणं ।
वारमहि जोयणेहिं, सो एइ अणागमो लहुआ ॥२८॥
साहारणासवंते, तदुवओगो अ गाहगगिराए ।
न य निव्विज्जइ सोया,किढिवाणिअदासिआहरणा॥२६॥
सव्वाउअपि सोआ, भविज्ज जइ हु सयय जिणो कहइ ।
सीउण्हखुप्पिवासा, परीसहे अविगणंतो य ॥ ३० ॥
वित्तिउ सवण्णस्स, वारस अद्धं च सयमहस्साइं ।
तावइयं चिय कोडि, पीइदाणं तु चक्किस्स ॥३१॥

एयं चेव पमाणं, नवरं रयणं तु केसवा देंति ।
मंडलिआण सहस्सा, पीइदाणं सयसहस्सा ॥ ३२ ॥
भत्तिविभवाणुरूवं, अन्नेऽवि य देंति इब्भमाईया ।
सोऊण जिणागमणं, निउत्तमणिओइएसुं वा ॥ ३३ ॥
राया य रायमच्चो, तस्सासइ पवरजणवओ वावि ।
दुब्बलिखंडिअबलिछडिअ–तंदुलाणाढगं कलमा ॥३४॥
भाइअमुणाणिआणं,अखंड फुडिआण फलगसरियाणं ।
कीरइ बलिं सुरा वि अ, तत्थेव छुभंति गंधाई ॥ ३५ ॥
बलिपविसणसमकालं, पुव्वद्दारेण ठाइ परिकहणा ।
तिगुणं पुरओ पाडण, तस्सद्धं अवडिअं देवा ॥ ३६ ॥
अद्धद्धं अहिवइणो, अवसेसं होइ पागयजणस्स ।
सव्वामयप्पसमणी, कुप्पइ नऽन्ने अ छम्मासा ॥ ३७ ॥
राओवणीअसीहा–सणोववितुो व पायपीढम्मि ।
जिट्ठो अन्नयरो वा, गणहारी करेइ वीआए ॥ ३८ ॥
इअ समवसरणरयणा, कप्पो सुत्ताणुसारओ लिहिओ ।
लेसुद्देसेण इमो, जिणपहसूरीहिं पढिअव्वो ॥ ३९ ॥

ती० ४४ कल्प । आ० चू० । वृ० । जिनप्रतिमाऽग्रे तत्प्रतिकृत्यनुकरणे, पञ्चा० ।

( २० ) स च समवसरणादिरचनादिरूपः, अतः समवसरणरचना तावद्दर्शयन्नाह—

वाउकुमाराईणं, आहवणं णियणिएहि मंतेहिं ।
मुत्तासुत्तीए किल, पच्छा तक्कम्मकरणं तु ॥ १२ ॥

वायुकुमारादीनामागमप्रसिद्धदेवविशेषाणामादिशब्दान्मेघकुमारादिपरिग्रहः, आह्वानं-संशब्दनं कार्यमिति शेषः । कैरित्याह-निजनिजैः स्वकीयस्वकीयैर्मन्त्रैः प्रणवनम पूर्वकस्वाह्वान्ततन्नामरूपैर्यथासम्प्रदायमागतैः, मुक्ताशुक्त्या मुक्ताफलयोन्याकारया हस्तविन्यासमुद्रया , किलेत्याप्तसम्प्रदायसूचकमाह्वानस्य वा अताविकत्वसूचकं, तदताविकं चाह्वानेऽपि तेषां प्रायः आगमनासम्भवात् तत्संस्मरणस्यैवेह विधेयत्वादिति । पश्चादाह्वानानन्तरं तत्कर्मकरणे तु तेषां प्रायः वायुकुमारमेघकुमारादिदेवाना यत्कर्म भूप्रमार्जनोदकसेचनादिरूपो व्यापारस्तस्य विधानमेव । तुशब्द एवकारार्थः , पुनः शब्दार्थो वा । स चैवं दृश्यः पश्चात्पुनः । इति गाथार्थः ।

एतदेव दर्शयितुमाह—

वाउकुमाराहवणे, पमज्जणं तत्थ सुपरिसुद्धं तु ।
गंधोदगदाणं पुण, मेहकुमाराहवणपुव्वं ॥ १३ ॥

वायुकुमाराह्वाने-मरुत्कुमारदेवसंशब्दने कृते सतीति गम्यं प्रमार्जनं-भूमिशुद्धिरूपं कर्त्तव्यं भवतीति गम्यम् । 'तत्र' ति समवसरणभूमौ, सुपरिशुद्धं तु सर्वकचवराद्यपहरणेनातिशुद्धमेव, एते किल मयाऽऽहूता वायुकुमारदेवा भगवत्समवसरणभुवं शोधयन्तीति कल्पनयेति हृदयम् । गन्धोदकदानं सुरभिजलवर्षणं पुनः शब्दः पूर्ववाक्यार्थापेक्षयोत्तरवाक्यार्थस्य विलक्षणताप्रतिपादनार्थः मेघकुमाराह्वानपूर्वं मेघकारिदेवसशब्दनपुरस्सरं स्वयमेव कार्यं, भगवत्समवसरणे हि वायुकुमारैर्भूमिशुद्धौ कृतायां रजःप्रशमनार्थं मेघकुमारा गन्धोदकवर्षं कुर्वन्तीति स्थितिः । कल्पना तु पूर्ववदेवेति गाथार्थः ।

तथा—

उउदेवीणाहवणे, गंधड्ढा होइ कुसुमवुट्ठि त्ति ।
अग्गिकुमाराहवणे, धूवं एगे इहं बेंति ॥१४॥

ऋतुदेवीना वसन्तग्रीष्मवर्षाशरद्धेमन्तशिशिराभिधानदेवतानामाह्वाने-संकीर्त्तने कृते सति गन्धाढ्या-सद्गन्धगुणसमृद्धा, भवति-वर्त्तते विधेयेति गम्यं, कुसुमवृष्टिर्देशार्द्धवर्णपुष्पवर्षः । इतिशब्दः समाप्त्यर्थे । ततश्च कुसुमवर्षकरणेनैव ऋतुदेवीकर्म परिसमाप्तं भवतीति भणितं भवति । अग्निकुमाराह्वाने तैजसदेवसंकीर्त्तने कृते सति धूपं-कालागुरुप्रभृतिकम् । एके-केचन आचार्या इह—समवसरणव्यतिकरे, ब्रुवते-अग्निभाजनप्रक्षेप्यतया प्रतिपादयन्ति, अन्ये तु सामान्यतो देवाह्वाने यत आवश्यकटीकाकृतोक्तं धूपघटिका विकुर्वन्ति त्रिदशा एवेति गाथार्थः ।

तथा—

वेमाणियजोइसभव–णवासिया ह्वणे पुव्वगं तत्तो ।
पागारतिगण्णासो, मणिकंचनरुप्पवण्णाणं ॥१५॥

वैमानिकाश्च—सौधर्मिकादयो ज्योतींषि च—चन्द्रादयो भवनवासिनश्चासुरादयस्तेषामाह्वानं-सशब्दनं पूर्वं—प्रथमं यत्र प्राकारत्रयन्यासकरणं तत्तथा, क्रियाविशेषणमिदं, ततो धूपदानानन्तरं प्राकाराणां-शालाना त्रिकस्य-त्रयस्य न्यासो न्यसनं प्राकारत्रिकन्यासः,कर्त्तव्यो भवतीति शेषः । किंभूताना प्राकाराणाम् ?,इत्याह-मणिकाञ्चनरूप्याणामिव-रत्नस्वर्णकलधौतानामिव वर्णश्छाया येषां ते तथा तेषाम् ,भगवतो हि समवसरणे वैमानिकादयो देवा अन्तर्मध्ये बहिश्च क्रमेण मणिमयादीन् त्रीन् प्राकारान् कुर्वन्तीति । इह च प्राकार इत्यस्य पदस्य समासान्तर्भूतस्याप्यन्तर्वर्त्तिषष्ठ्यन्तताभाश्रित्य मणिकाञ्चनरूप्यवर्णानामित्येतत्पदं विशेषणतया संबध्यते । अथवा-मणिकाञ्चनरूप्यवर्णानां द्रव्याणा सत्कः प्राकारत्रयन्यास इति गाथार्थः ।

तथा—

वंतरगाहवणाओ, तोरणमाईण होइ विण्णासो ।
चितितरुसीहासणछ–त्तचक्कधयमाइयाणं च ॥१६॥

व्यन्तरा एव व्यन्तरकास्तदाह्वानात्—संशब्दनात् , 'तोरणमाईण' त्ति-इह मकारः प्राकृतशैलीप्रभवस्तेन तोरणादीना द्वारावयवविशेषप्रभृतीनाम् आदिशब्दात्-पीठदेवच्छन्दकपुष्करिण्यादिपरिग्रहो भवति-जायते-विन्यासो-रचना,तथा चैत्यतरुसिंहासनच्छत्रचक्रध्वजादीनां च,तत्र चैत्यतरुरशोकवृक्ष ,अथवा-अचैत्यानि जिनप्रतिबिम्बानि तरुरशोकवृक्षः सिंहासनं-सिंहाकृतियुक्ताविष्टरं छत्राण्यातपत्रयं चक्रंधर्मचक्रं, ध्वजा —सिंहध्वजचक्रध्वजमहेन्द्रध्वजगोपुरादिध्वजाश्च,आदिशब्दात्-पञ्चचामरपरिग्रहः ,एतानि हि व्यन्तराः समवसरणे विदधति । यदाह-चेइदुमपीढछंदग,आसणछत्तं च चामराओ य । जं चऽन्नं करणिज्जं, करेंति तं वाणमंतरिया' ॥ १ ॥ इति गाथार्थः ।

तथा—

भुवनगुरुणो य ठवणा, सयलजगपियामहस्स तो सम्मं ।
उकिट्ठवसगोवरि, समवसरणबिंबरूवस्स ॥ १७ ॥

भुवनगुरोश्च-त्रिभुवननायकस्य पुनः स्थापना-अर्हत. स्थापनान्यास. कर्त्तव्य इति शेष. । किंभूतस्य लोके पिता पूज्य. पितामहस्तु पूज्यतर. पितुरपि पूज्यत्वात्तत. सकलजगत.-समस्तभुवनजनस्य पितामह इव पितामह. सकलजगत्पितामह' । अथवा-सकलजगतो धर्म. पिता पालनाभियुक्तत्वात्तस्यापि भगवान् पिता भगवत्प्रभवत्वाद्धर्मस्येति, पितु पिता पितामह , सकलजगत. पितामह इति विग्रह., अतस्तस्य 'तो' त्ति-ततश्चैत्यतरुसिंहासनादिन्यासानन्तरं सम्यग्—अवैपरीत्येन, क स्थापना कार्या ?, इत्याह-उत्कृष्टवर्णकस्य प्रधानचन्दनस्योपरि उपरिष्टात्—उत्कृष्टवर्णकोपरि, किंभूतस्य भुवनगुरो' ? समवसरणे जिनधर्मदेशनाभूमौ यानि देवतानिर्मितानि तस्यैव बिम्बानि-प्रतिकृतयस्तेषामिव रूपं स्वभावो यस्य स समवसरणबिम्बरूपोऽतस्तस्य चतुर्मुखस्य विशिष्टरूपस्यैवेति गाथार्थ ।

तथा—

एयस्स पुव्वदक्खिण-भागेणं मग्गओ गणधरस्स ।
मुणिवसभाणं वेमा-णिणीण तह साहुणीणं च ॥१८॥

एतस्य-भुवनगुरो पूर्वदक्षिणाया आग्नेयदिशो भाग. एकदेश पूर्वदक्षिणदिग्भागस्तेन करणभूतेन—हेतुभूतेन वा मार्गत -पृष्ठतो गणधरस्य-गणनायकस्य मुनिवृषभाणा सातिशयर्द्धियतिपुङ्गवानाम्, तथा विमानिकदेवास्तेषामेता वैमानिन्य अतस्तासा वैमानिनीनां देवीना, तथेति समुच्चयार्थस्तेन स्थापना कार्येति संवध्यते । साध्वीना—तपस्विनीना चशब्द. समुच्चयार्थ इति गाथार्थ. ।

तथा—

इय अवरदक्खिणेणं, देवीणं ठावणा मुणेयव्वा ।
भवणवइवाणमंतर-जोइससंबंधिणीणं ति ॥ १९ ॥

इति-एवमेव यथा मुनिवृषभादित्रयस्यासकीर्णतया स्थापना कृता एव भवनपत्यादिदेवीत्रयस्यापि सा कार्येत्यर्थ , अपरदक्षिणेन अपरदक्षिणस्या दिशि सप्तम्यर्थे ह्ययमनप्रत्यय , देवीना-सुरवधूना स्थापना-न्यास' 'मुणेयव्व' त्ति-ज्ञातव्या कर्त्तव्यतयेति शेष , भवनपतयो-देवालयविशेषनाथा असुराद्य , 'वाणमंतर' त्ति-वनानाम्-उद्यानानामन्तराणि कुहराणि विशेषा वा वनान्तराणि तेषु भवा मकारवर्णागमाद्वानमन्तरा व्यन्तरा , ज्योतिषि ज्योतिश्चक्रे भवा ज्योतिषा ज्योतींषि वा ज्योतिष्कदेवा , एतेषां द्वन्द्वोऽतस्तेषा सम्बन्धिन्य सत्कायास्तास्तथा तासाम्, इतिशब्दो द्वितीयपर्षद समाप्तिप्रदर्शनार्थ इति गाथार्थ ।

तथा—

भवणवइवाणमंतर-जोइसियाणं व एत्थ देवाणं ।
अवरुत्तरेण णवरं, निद्दिट्ठा समयकेऊहिं ॥ २० ॥

भवनपतिवानमन्तरा उक्तनिर्वचना 'जोइसिय' त्ति-ज्योतिषि-ज्योतिश्चक्रे जाता ज्योतिषिजा ज्योतिषि वा भवा ज्योतिषास्त एव ज्योतिषिका एषा द्वन्द्वोऽतस्तेषा भवनपतिवानमन्तरज्योतिषिकाणा वा, वाशब्द समुच्चये, तद्भावना चैवम्-भवनपत्यादिदेवीनां स्थापना मन्तव्या, भवनपतिवानमन्तरज्योतिषिजाना च । अत्र समवसरणे देवाना—सुराणा किंविशिष्टेयमुभयेषामपीत्यत आह—अपरोत्तरेणापरोत्तरस्या दिशि । नवरं केवलं निर्दिष्टा अभिहिता. । समयकेतुभि -प्रवचनचिह्नभूतैरिति गाथार्थ. ।

तथा—

वेमाणियदेवाणं, णराण णारीगणाण य पसत्था ।
पुव्वुत्तरेण ठवणा, सव्वेसिं णियगवण्णेहिं ॥२१॥

विमानेषु भवा वैमानिकास्ते च ते देवाश्च सुरा इति समासोऽतस्तेषाम्, तथा नराणाम् नृणा, नारीगणाना मनुष्यस्त्रीसमूहानामिह च गणशब्दोपादानं पुरुषापेक्षया स्त्रीजनस्य बहुत्वख्यापनार्थ, चशब्द समुच्चये, प्रशस्ता-मङ्गल्या पूर्वोत्तरेण-पूर्वोत्तरस्यां दिशि स्थापना—न्यास. कार्येति शेषः । स्थापनाया एव विशेषार्थमाह-सर्वेषा—समस्तानां मनुष्येषु वर्णविशेषाभावाद्भवनपत्यादिदेवाना निजवर्णै. स्वकीय २ शरीरच्छायाभि तत्र भवनपतिव्यन्तरा पञ्चवर्णाज्योतिष्का-रक्तवर्णा., वैमानिका पुना रक्तपीतसितवर्णाः, विशेषः पुन , काला—असुरकुमारा इत्यादरागमादवसेयम् । इति गाथार्थ. ।

तथा—

अहिणउलमयाहिव-पमुहाणं तह य तिरियसत्ताणं ।
बितियंतरम्मि एसा, तइए पुण देवजाणाणं ॥२२॥

अहिनकुलमृगमृगाधिपप्रमुखाणा—भुजगवभ्रुहरिणसिंहप्रभृतिकाना, प्रमुखग्रहणादश्वमहिषादिपरिग्रह 'तहय' त्ति-समुच्चये , अथवा—तथैव तेनैव प्रकारेण देवानामिव निजवर्णविशिष्टतालक्षणेन, परस्परविरोधलक्षणेन वा तिर्यक्सत्त्वानां तिर्यग्योनिजन्तूना द्वितीयान्तरे—द्वितीयप्रकारमध्ये एषा स्थापना कार्येति शेष , तृतीये-तृतीयप्राकारान्तरे पुन -शब्दो विलक्षणताख्यापनार्थ , देवयानाना—देववाहनाना करिमकरकेसरिकलपिकलहंसाद्याकारधारिणामिति गाथार्थ ।

अथ समवसरणविधिं निगमयन् शेषदीक्षाविधिं दर्शयन्नाह-

रइयम्मि समोसरणे, एवं भत्तिविहवाणुसारेणं ।
सुइभूओ उ पदोसे, अहिगयजीवो इहं एइ ॥२३॥

रचिते—स्थापिते समवसरणे-समयसिद्धे, एवम्-उक्तनीत्या भक्तिविभवानुसारेण—बहुमानद्रव्यानुरूप्येण शुचिभूतस्तु शौचप्राप्त एव द्रव्यतो भावतश्च, तत्र द्रव्यत स्नात श्रीचन्दनानुलिप्तगात्र सितवसननिवसन शुचिविद्याक्लृप्तगात्रश्च, भगवतस्तु विशुद्ध्यमानमानस । प्रदोषे-दिवसाऽवसाने उपलक्षणात्वादस्य प्रशस्ततिथिकरणवारनक्षत्रयोगचन्द्रबललग्नादौ अधिकृतजीव प्रस्तुतसत्त्वो दीक्षणीय इत्यर्थ, इहाधिकृतसमवसरणदेशे एति—आगच्छतीति गाथार्थः ।

ततश्च—

भुवणगुरुगुणक्खाणं, तम्मीसं जायतिव्वसद्धस्स ।
विहिसासणमोहेणं, तओ पवेसो तहिं एवं ॥२४॥

भुवनगुरो -त्रिभुवनबान्धवस्य जिनस्य ये गुणा रागादिवैरिवारविदारकत्वसमस्तवस्तुस्तोमविषयविज्ञायकत्वनिखिलना किनिकायकाभिनम्यत्वरूद्भूतपदार्थप्रकाशकारी वाग्वादित्वशिवसुखनायकत्वतद्दानसामर्थ्यादयस्तेषा यदाख्यानम्-अभिधानं तत्तथा तस्माद्भुवनगुरुगुणाख्यानाद्धेतोः । तस्मिन्

भुवनगुरौ संजाततीव्रश्रद्धस्य समुत्पन्नोत्कटगुरुरुचेर्देवतान्वेन प्रतिपत्ति प्रतीति गम्यते अधिकृतजीवस्येति । प्रकृतं विधिसाधनमनुष्ठानप्रकाशनं, यदुत जिनदीक्षायां प्रतिपन्नाया न तव कल्पते अन्यतीर्थिकदेवानामन्यतीर्थिकानां च वन्दनादि, कल्पते च जिनानां जैनमुनीनां जैनागमस्य च वन्दनादि कर्तुमित्याद्द । अथवा-तवाञ्जलौ पुष्पाणि दास्यन्ते अक्षिस्थगनं च वस्त्रेण करिष्यते, तानि च पुष्पाणि त्वया अक्षुभितेन समवसरणमध्यस्थापितजिनाभिमुखं निक्षेप्तव्यानि, आत्मा च ससुतधनादिर्गुरवे निवेदनीय इति, विधिः, श्रोघेन—सामान्येन विशेषतस्तु दीक्षादानावसरात्पूर्वमेव तद्विषयविधेराख्यातत्वात् । ततो विधिसाधनानन्तरं प्रवेशः—प्रवेशनं तस्मिन् समवसरणे, एव वक्ष्यमाणन्यायेनेति गाथार्थः ।

ततश्च—

वरगंधपुप्फदाणं, सियवत्थेणं तह च्छिठयणं च ।
आगइगइविण्णाणं, इम्मस्स तह पुप्फपाएण ॥२५॥

वरगन्धपुष्पदान सुगन्धिकुसुमानाम्, अथवा प्रधानानां वासानां पुष्पाणां च दानं वितरणं वरगन्धपुष्पदानमञ्जलौ कर्त्तव्यमस्येति योगः । तथा सितवस्त्रेण शुक्लवाससा । तथा तेन प्रकारेण अपीडोत्पादनलक्षणेन विद्वत्प्रसिद्धेन वाक्योपक्षेपमात्रो वा तथाशब्द, अक्षिस्थगनं लोचनावरणं कार्यं, चशब्दः समुच्चये, ततश्चासौ तानि कुसुमान्यावृताक्ष एव जिननाथाभिमुखं प्रक्षेपयितव्यः, गुरुणा चाधिकृतपुष्पपातलक्षणनिमित्तानुसारेण यथासम्प्रदायं शुभादितरस्माद्वा भवादागतोऽयं, तथा दीक्षाराधनविराधनाभ्यां शुभेतरा वा गतिरस्य भविष्यतीति दीक्षादानार्थं तत्परिहारार्थं च परिज्ञानं विधेयम् । एतदेवाह-आगतिगतिविज्ञानं शुभाशुभपूर्वजन्मानागतजन्मना निर्णयनं कार्यम् । अथवा-गत्या-गमनेनास्खलितेतरादियुक्तेन गतिविज्ञानमागामिभवज्ञानमागतिगतिविज्ञानम् । इह व्याख्याने समासितमपि गतिविज्ञानमित्येतत्पदं प्राकृतत्वेनोत्तरत्र सम्बन्धनीयमिति, 'इमस्स'त्ति-अस्य दीक्षाधिकृतजीवस्य, तथेति समुच्चये । अथवा-तथा-तत्प्रकारेण साम्प्रदायिकेन पुष्पपातेन—कुसुमपतनेन दीक्षणीयनरविहितेन । एतदर्थमेव पूर्वं पुष्पदानं तदञ्जलौ कृतमासीतिदि । इह च समवसरणमध्ये पुष्पपाताद्दीक्षाराधनाजनिता सुगतिस्तद्बहिः पाताच्च तद्विराधनाजनिता कुगतिरस्येत्येतावन्मात्रमतो ग्रन्थादवसीयते । शेषं तु ग्रन्थान्तराद्विशिष्टसम्प्रदायाद्वाऽवसेयमिति गाथार्थः ।

अथ शुभाशुभगतिविज्ञानविषये मतान्तरं दर्शयन्नाह—

अभिवाहरणा अपणे, णियजोगपवित्तिश्रो य केइ त्ति ।
दीवाइजलणभेया, तहुत्तरसुजोगश्रो चेव ॥ २६ ॥

अभिव्याहरणात्-संशब्दनात् दीक्षणीयेनान्येन वा दीक्षावसरे विहितात् शुभाशुभार्थसंसूचकात् सिद्धिवृद्धीत्यादिरूपात्, अथवा— इच्छाकारेण तुम्हे अम्हं दंसणपडिमं सम्मत्तसामाइयं वा आरोवेह' इत्यादि, दीक्षणीयाभिव्याहारात् 'आरोवेमि खमासमणाणं हत्थेण आरोवियं'मित्यादेर्वाऽचार्याभिव्याहारादस्खलितादिगुणदोषानुगताद्, अन्ये-अपरे सूरयो दीक्षाराधनविराधनाजन्यशुभाशुभगतिपरिज्ञानमस्याधिकृतस्य कर्त्तव्यमित्याहुरिति गम्यम्, तथा निजयोगानामाचार्यसत्कमन प्रभृतीनां प्रवृत्ति -प्रवर्त्तनं निजयोगप्रवृत्तिस्ततो निजयोगप्रवृत्तितः, चशब्दः समुच्चये, इतिशब्दस्योत्तरस्येह दर्शनादिति, एतत् केचिदपरे प्राहुरिति गम्यम् । इदमुक्तं भवति-तदा यद्याचार्यस्य क्रोधलोभमोहभयादिभिरव्याकुलं मनो यद्यदा वाच्य तद्विषयाव्यक्तत्वादिगुणा च वाक् साध्वसाद्यनुपहतश्च कायः प्रवर्त्तते तदा शुभा गतिरिति । अन्यथा-चाशुभा गतिरस्य ज्ञायत इति । तथा दीपादीनां दीपचन्द्रतारकादीनां यज्ज्वलन-दीपनं तस्य यो भेदो—विशेषः, स तथा तस्मात् । इदमुक्तं भवति-यदि तदा दीपादयः प्रवृद्धतेजसो भवन्ति तदाऽस्य शुभम्, अन्यथा त्वशुभमिति । तथेति समुच्चये, उत्तरे—दीक्षोत्तरकालभाविनो ये सुयोगाः-शुभव्यापारा दीक्षितगतास्ते उत्तरसुयोगास्तेभ्य एव चैवशब्दस्यावधारणार्थत्वात्केचिदिति प्रकृतमिति गाथार्थः । पञ्चा० २ विव० । सूत्रार्थयोर्मेलने, अङ्गे श्रुतस्कन्धे, अध्ययने, नि०चू० ।

जे भिक्खू उद्देसे हेट्ठिल्लाइं समोसरणाइं अवाइत्ता उवरिमं सुयं वाएइ वायंतं वा साइज्जइ ॥१७॥ नि०चू० १९ उ० ।

जिनस्तवनरथानुयानपट्टयात्रादिषु बहूना साधूनां मेलने, स० १२ सम० । ( समवसरणे सम्भोगविसम्भोगौ 'संभोग' शब्देऽस्मिन्नेव भागे २०६ पृष्ठे उक्तौ । ) ('अणुयाण'शब्दे प्रथमभागे ३७५ पृष्ठे साधूना संमेलक उक्तः । ) समवसरणं नाम कुलसमवायो गणसमवायः संघसमवायो वा । बृ० १ उ० १ प्रक० ।

(२१) अथ समवसरणप्रस्तावात्समवसरणस्तवमाह—

थुणिमो केवलिवत्थं, वरविज्जाणंदधम्मकित्तिऽत्थं ।
देविंदनयपयत्थं, तित्थयरं समवसरणत्थं ॥ १ ॥

अवचूरिः—वयं 'थुणिमो' स्तुमः । कम् ? तीर्थङ्करं, केवलिनाऽवस्था यस्य स केवल्यवस्थस्तम् । वरा—प्रधाना विद्यानन्दधर्मकीर्त्तिरूपा अर्था यस्य स वरविद्यानन्दधर्मकीर्त्त्यर्थस्तम् । अथवा—किमर्थं स्तुमः ? वरविद्यानन्दधर्मकीर्त्त्यर्थम् । पुनः कथंभूतम् ? देवेन्द्रैर्नतं यत्पदं तीर्थंकरपदवीरूपं तत्र तिष्ठतीति देवेन्द्रनतपदस्थस्तम् । समवसरणं तिष्ठतीति समवसरणस्थस्तम् । अथवा-समवसरणे आस्था स्थितिर्यस्य स समवसरणस्थस्तम् तथा ।

पयडिअसमत्थभावो, केवलिभावो जिणाण जत्थ भवे ।
सोहंति सव्वओ तहिँ, महिमाजोयणमनिलकुमरा ॥२॥

अवचूरिः—प्रकटिताः—समस्ता भावास्त्रिभुवनान्तर्वर्त्तिनः स्तम्भकुम्भाम्भोरुहादिपदार्था येन स तथा । केवलिभावः—केवलित्वं जिनानां यत्र स्थाने भवेत् तस्मिन् स्थाने शोधयन्ति सर्वतः महीं—पृथिवीम् आयोजनं—योजनमभिव्याप्य अनिलकुम(मा)राः—वायुकुमाराः ।

वरिसंति मेहकुमरा, सुरहिजलं उउसुरा कुसुमपसरं ।
विरयंति वणा माणिकण-गरयणचित्तं महिअलं तो ॥३॥

अवचूरिः-मेघकुमारास्तत्र सुरभिजलं वर्षन्ति । 'उउसुरा' इति-ऋतुसुराः षण्णामृतूनामधिष्ठातारः सुराः—व्यन्तरा इत्यर्थः कुसुमप्रसरं वर्षन्ति, अधोमुखवृन्तान्

पुष्पप्रकरान् कुर्वन्तीत्यर्थः । ततः ' वणा ' इति—वानमन्तराः मणयश्चन्द्रकान्ताद्याः, इन्द्रनीलादीनि रत्नानि। अयं भावः—मणिकनकरत्नैश्चित्रं महीतलं रचयन्ति—पीठबन्ध कुर्वन्तीत्यर्थः ।

( २२ ) समवसरणरचनामाह—

अब्भितरमज्झ बहिं, तिवप्प मणि-रयण कणय-कविसीसा
रयणज्जुणरुप्पमया, वेमाणिअजोइभवणकया ॥४॥

अवचूरिः—अथ भावः—अभ्यन्तरो वप्रो वैमानिककृतो रत्नमयो मणिकपिशीर्षकः १ । मध्यमः प्राकारो ज्योतिष्ककृतोऽर्जुनसंज्ञसुवर्णमयो रत्नकपिशीर्षकः २ । बहिर्वप्रो भवनपतिकृतो रूप्यमयः कनककपिशीर्षकः ३ ।

वट्टम्मि दुतीसंगुल, तित्तीसधणुपिहुल पणसयधणुचा ।
छद्धणुसयइगकोसं—तरा य रयणमयचउदारा ॥ ५ ॥

अवचूरिः—अथ समवसरणं द्विधा स्यात्, वृत्तं चतुरस्रं वा। तत्र वृत्ते समवसरणे वप्रत्रयभित्तयः प्रत्येकं त्रयस्त्रिंशद् ( ३३ )धनुर्द्वात्रिंश ( ३२ ) दङ्गुलपृथुला भवन्ति । तथा त्रयाणामपि वप्राणामन्तराणि उभयपार्श्वान्तरमिलनेन एककोश ( १ ) षट्शत ( ६०० ) धनुःप्रमाणानि भवन्ति । अत्र च चतुर्विंशत्याऽङ्गुलैर्हस्तो ज्ञेयः । चतुर्भिर्हस्तैर्धनुः। धनुःसहस्रद्वयेन क्रोशः । क्रोशैश्चतुर्भिस्तु योजनम् । तथा बहिर्वर्त्तीनि सोपानानि दशसहस्र ( १०००० ) मितानि योजनमध्ये न गण्यन्ते । ततः प्रथमवप्रादग्रे पञ्चाशद् ( ५० ) धनुःप्रतरः । ततोऽग्रे पञ्चसहस्र ( ५००० ) सोपानानि तेषां च हस्तमानत्वाच्चतुर्भिर्भागे लब्धानि पञ्चाशदधिकानि द्वादशशतानि ( १२५० ) धनूंषि । ततो द्वितीयवप्रात् पञ्चाश ( ५० ) द्धनुः प्रतरः, ततः पुनः पञ्चसहस्र ( ५००० ) सोपानानां पञ्चाशदधिकानि द्वादश शतानि धनूंषि भवन्ति । ततस्तृतीयो वप्रः, ततः त्रयोदश शतानि ( १३०० ) धनूंषि गत्वा पीठमध्यम् । अथ तिसृणामपि वप्रभित्तयः प्रत्येकं त्रयस्त्रिंशद् ( ३३ ) धनुरेक- ( १ ) हस्ताऽष्टाङ्गुल ( ८ ) पृथुला भवन्ति । तत्र सर्वेषां धनुषां मिलने नवनवत्यधिकानि एकोनचत्वारिंशच्छतानि ( ३९९९ ) धनूंषि जातानि । तथा शेषाणि द्वात्रिंशदङ्गुलानि त्रिगुणीक्रियन्ते भित्तित्रयभावात्, षण्णवत्य ( ९६ ) ङ्गुलानि जातानि । षण्णवत्याऽङ्गुलैश्चैकं धनुर्भवति, हस्तचतुष्टयमितत्वाद्धनुषः । एवं चत्वारि सहस्राणि ( ४००० ) धनुषां जातानि । इत्थमेकस्मिन् पार्श्वे क्रोशद्वयमेवं द्वितीयेऽपि क्रोशद्वयमिति मिलितं वृत्तसमवसरणे योजनम् ॥ ५ ॥

चउरंसे इगधणुसय-पिहुवप्पा सड्ढकोसअंतरिया ।
पढमबिआ बिअतइआ, कोसंतरपुव्वमिव सेसं ॥६॥

अवचूरिः—चतुरस्रे समवसरणे वप्रत्रयभित्तयः प्रत्येकं शतधनुःपृथुला ज्ञेयाः, तथा—'सड्ढ' त्ति—प्रथमद्वितीयवप्रयोरन्तरमुभयपार्श्वमिलनेन सार्द्धक्रोशः । ' बिअतइय'त्ति-द्वितीयतृतीययोश्चान्तरमुभयपार्श्वमिलनेन क्रोशः । पुव्वमिव सेसं' ति—शेषं मध्यभित्तयोरन्तरमेक ( १ ) क्रोशषट्शत- ( ६०० ) धनुःप्रमाणं पूर्ववद् वृत्तसमवसरणवद् ज्ञेयम् । अत्रापि एकपार्श्वे योजनार्द्धं मील्यते। तद्यथा—चतुरस्रे बाह्यवप्रभित्तिर्योजनमध्ये न गण्यते । ततश्च बाह्यवप्रमध्यवप्रयोरन्तरं दश शतानि ( १००० ) धनूंषि । द्वितीयवप्रभित्तिः शत ( १०० ) धनूंषि । अभ्यन्तरवप्रमध्यवप्रयोरन्तरं पञ्चदशशत ( १५०० ) धनुर्मानम् । अभ्यन्तरवप्रभित्तिः शत ( १०० ) धनुर्मानम् । अभ्यन्तरवप्रात् त्रयोदशशतानि ( १३०० ) धनूंषि गत्वा पीठमध्यम्, एवम् एतन्मिलने चतुस्सहस्राणि धनूंषि जातानि। तथा च क्रोशद्वयं भवति । एवं यथैकत्र पार्श्वे क्रोशद्वयं भवति तथा द्वितीयेऽपि । एवं चतुरस्रसमवसरणेऽपि योजनं मिलति स्म ॥ ६ ॥

सोवाणसहसदस कर-पिहुच्च गंतुं भुवो पढमवप्पो ।
तो पन्नाधणुपयरो, तओ अ सोवाण पणसहसा ॥ ७ ॥

अवचूरिः—सोपानानि दश सहस्राणि करपृथुलानि उच्चानि च हस्तमात्रपृथुलोच्चानीत्यर्थः । भुवो—भूमितो गत्वा प्रथमो वप्रः । ततः पञ्चाशद् (५०) धनूंषि प्रतरो रमणभूमिः, समा भूमिरित्यर्थः । शेषं सुगमम् ॥ ७ ॥

तो बियवप्पो पन्न(न्ना)ध-णुपयरसोवाणसहसपण तत्तो ।
तइओ वप्पो छस्सय-धणुइगकोसेहिं तो पीढं ॥ ८ ॥

अवचूरिः—ततस्तृतीयो वप्रस्तस्य चान्तः षड्धनुःशतेनाधिकैकक्रोशेन प्रमितमिति गम्यम् । एक ( १ ) क्रोशषट्शत ( ६०० ) धनुःप्रमाणमित्यर्थः । पीठं समाभूमिरस्ति ॥ ८ ॥

चउदार तिसोवाणं, मज्झे मणिपीढयं जिणतणुच्चं ।
दोधणुसयपिहुदीहं, सड्ढदुकोसेहिं धरणिअला ॥ ९ ॥

अवचूरिः—चतुर्द्वारं त्रिसोपानं सोपानत्रयान्वितम् । समवसरणस्य मध्ये मणिमयं पीठं जिनदेहपरिमाणेनोच्चं द्विशत ( २०० ) धनूंषि पृथुलं दीर्घं च, तच्च धरणितलात् सार्द्धक्रोशद्वयेन भवति ॥ ९ ॥

जिणतणुबारगुणुच्चो, समहिअ जोयणपिहू असोगतरू ।
तयहो य देवछंदो, चउसीहासणसपयपीढा ॥ १० ॥

अवचूरिः—"तिन्नेव गाऊआइं, चेइअरुक्खो जिणस्स पढमस्स । सेसाण बारसगुणो, वीरे बत्तीस य धणूणि ॥ १ ॥" वीराद् द्वादशगुण एकविंशतिधनुःप्रमाणो (२१) भवति केवलोऽशोकस्तदुपरि शालवृक्ष एकादश ( ११ ) धनूंषि । एवमुभयोर्मिलने द्वात्रिंशद्धनूंषि ( ३२ ) चैत्यद्रुमो भवति, वीरस्येति सम्प्रदायः । अत्र शालश्च श्रीवीरस्वामिनोऽभूत् । अन्येषां तीर्थकृतां न्यग्रोधादयः । उक्तं च समवायाङ्गे-" चउवीसाए तित्थयराणं चउवीसं चेइअरुक्खा हुत्था । तं जहा-

" निग्गोह सत्तवन्ने, साले पिअए पिअंगु छत्ताहो ।
सरसे अ नागरुक्खे, माली अ पिअंगुरुक्खे अ ॥ १ ॥
तंदुग पाडल जंबू, आसत्थे खलु तहेव दधिवन्ने ।
नंदीरुक्खे तिलओ, अवंगरुक्खे असोगे अ ॥ २ ॥
चंपय बउले अ तहा, वेडसरुक्खे तहेव धवरुक्खे ।

सालो अ वद्धमाणस्स, चेइअरुक्खा जिणवराणं ॥ ३ ॥"
" बत्तीसं धणुआइं, चेइअरुक्खो अ वद्धमाणस्स ।
निच्चोअगो, उच्छन्नो सालरुक्खेणं ॥ १ ॥
सच्छत्ता सपडागा, सवेइया तोरणेहि उववेआ ।
सुरअसुरगरुलमहिया, चेइअरुक्खा जिणवराणं ॥ २ ॥"

इदं प्रवचनसारोद्धारे सविस्तरमभिहितमस्ति । नित्यमृतुरेव पुष्पादिकालो यस्येति नित्यर्तुकः । अवच्छन्नशालवृक्षेणेति वचनादशोकोपरि शालवृक्षोऽपि कथंचिदस्तीति ज्ञायत इति । तथाऽशोकवृक्षस्याधस्तादेवच्छन्दके चत्वारि सिंहासनानि सपादपीठानि ॥ १० ॥

तदुवरि चउ छत्ततिआ, पडिरूवतिगं तहट्ठचमरधरा ।
पुरओ कणयकुसेसय-ठिअफालिअधम्मचक्कचऊ ॥११॥

अवचूरिः—तेषामुपरि चत्वारि छत्रत्रिकाणि छत्रातिच्छत्ररूपाणि । तथा प्रतिरूपत्रिकं च व्यन्तरेन्द्रकृतं प्रभुप्रभावान्मुख्यरूपतुल्यमेव भवति । तथाऽष्टौ चामरधरा भवन्ति । एकैकरूपं प्रति द्वयोर्द्वयोश्चामरधारकयोः सद्भावात् । तथा कनककुशेशयस्थितानि स्फाटिकानि धर्म्मचक्राणि चत्वारि सिंहासनपुरतो भवन्ति ॥११ ॥

झयछत्तमयरमंगल--पंचालीदामवेइवरकलसे ।
पइदारं मणितोरण--तिअधूवघडी कुणंति वणा ।१२।

अवचूरिः—वप्रेषु प्रतिद्वारं ध्वजच्छत्रमकरमुखमङ्गलपाञ्चालीपुष्पदामवेदिपूर्णकलशान्, मणिमयतोरणत्रिकाणि धूपघटीश्च कुर्वन्ति वानव्यन्तरा—व्यन्तरसुराः ॥ १२ ॥

जोयणसहस्सदंडा, चउज्झया धम्ममाणगयसीहा ।
ककुभाइजुया सव्वं, माणमिणं निअनिअकरेणं ॥१३॥

अवचूरिः—धर्म्मध्वज १ मानध्वज २ गजध्वज ३ सिंहध्वज ४ नामानश्चत्वारो ध्वजाश्चतुर्दिक्षु चतुर्ग-(चत्वारो ग) जसिंहलाञ्छिता इत्यर्थः । 'ककुभाइजुय' त्ति—लघुलघुतरध्वजादियुता । ककुपशब्देन घण्टिकापताकिकाद्युच्यते । सर्वं चैतन्मानं निजनिजहस्तेन ॥ १३ ॥

पविसिअ पुव्वाइ पहू, पयाहिणं पुव्वआसण निविट्ठो ।
पयपीढठवियपाओ, पणमिअतित्थो कहइ धम्मं ॥ १४ ॥

अवचूरिः--प्रदक्षिणया प्रविश्य 'पणमिअतित्थो' त्ति-'नमो तित्थस्स' इत्यादि जीतमर्यादया प्रणमित तीर्थं चतुर्विधः सङ्घो येन सः,प्रभोर्वाणी योजन यावत्प्रसरति यतो वप्राणामधस्तादुच्छन्तो जनाः शृण्वन्ति ॥ १४ ॥

मुणि वेमाणिणि समणी, सभवणजोइवणदेविदेवतिअं ।
कप्पसुरनरित्थितिअं, ठंति गैयाइविदिसासु ॥ १५ ॥

अवचूरिः-आग्नेयीनैर्ऋतीवायवीशानीविदिक्षु यथोक्तं सभात्रयं यथाक्रमं पूर्वस्या दक्षिणाया (णस्या) पश्चिमायमुत्तरायां प्रविश्य प्रदक्षिणा दत्त्वा तिष्ठति ॥१५॥

चउदेविसमणि उद्ध-ट्ठिआ निविट्ठा नरित्थिसुरसमणा ।
इय पण ५ सग ७ परिस सुणं-ति देसणं पढमवप्पंतो ।१६।
इय आवस्सयवित्ती-वुत्तं चुन्नीइ पुण मुणि निविट्ठा ।
दो वेमाणिणिसमणी, उड्ढा सेसा ठिआ उ नव ॥१७॥

अवचूरिः—गाथाद्वयं स्पष्टम् । (नवरं) मुनयो नि विष्टा उत्कुकुकासनेनेति शेषः । वैमानिका देवी श्रमणीद्वयमूर्ध्वस्थिताः शेषा नव सभास्थिता उपविष्टाः । तथा चैतयो (गाथयोः) रक्षराणि (णयेवम्)-" अवसेसा संजया निरइसेसिआ पुरच्छिमेणं चेव दारेण पविसित्ता भयवंतं तिपयाहिण काउं वंदित्ता नमो अइसेसिआणं ति भणित्ता अइसेसिआणं पिट्ठओ निसीअति । वेमाणिआ (णी) देवीओ पुरच्छिमेण चेव दारेणं पविसित्ता भयवंतं तिपयाहिणीकरित्ता नमो तित्थस्स नमो अइसेसिआणं नमो साहूणं ति भणित्ता निरइसेसिआणं पिट्ठओ ठायति न निसीयति । समणीओ पुरिच्छिमेणं चेव दारेणं पविसित्ता तित्थयरं तिपयाहिणं करित्ता वंदित्ता नमो तित्थस्स नमो अइसेसिआणं नमो साहूणं ति भणित्ता वेमाणिआणं देवीणं पिट्ठओ ठायति न निसीयंति । भवणवासिणीओ देवीओ जोइसिणीओ वंतरीओ दाहिणदारेण पविसित्ता तित्थयर तिपयाहिणीकरित्ता दाहिणपच्छिमेण ठायंति भवणवासिणीणं पिट्ठओ जोइसिणीओ तासिं पिट्ठओ वंतरीओ । भवणवासिदेवा जोइसिआ देवा वाणवतरा देवा एए अवरदारेणं पविसित्ता न चेव विहिं काउ उत्तरपच्छिमेण ठायंति जहासंख पिट्ठओ । वेमाणिआ देवा मणुस्सा मणुस्सीओ अ उत्तरेणं दारेण पविसित्ता उत्तरपुरच्छिमेण ठायंति जहासंख पिट्ठओ"। एषा चूर्णिः । अथ वृत्तिः । अत्र च मूलटीकाकारेण भवनपतिप्रभृतीनां स्थानं निषीदनं वा स्पष्टाक्षरैर्नोक्तम्, अवस्थानमेव प्रतिपादितम् । पूर्वाचार्योपदेशेन लिखितपट्टिकादिचित्रकर्मबलेन तु सर्वाश्चतस्त्र एव देव्यो न निषीदन्ति, देवाश्चत्वार पुरुषाः स्त्रियश्च निषीदन्तीति प्रतिपादयन्ति केचनेत्यलं प्रसङ्गेन ॥ १३।१७ ॥

बीअंतो तिरि ईसा-णि देवछंदो अ जाण तइअंतो ।
तह चउरंसे दु दु वा-वी कोणओ वट्टि इक्किका ॥१८॥

अवचूरिः—द्वितीयवप्रान्तस्तिर्यञ्चः तत्रैवेशानकोणे प्रभोर्विश्रामार्थं देवच्छन्दको रत्नमयः 'जाण' त्ति-यानानि वाहनानि भवन्ति तृतीयवप्रान्तः । तथा चतुरस्रे समवसरणे कोणे कोणे द्वे द्वे वाप्यौ । वृत्ते च समवसरणे कोणे कोणे एकैका वापी । 'वट्टिवप्पदारमज्झे, दो दो वावी अ हुति कोणेसु ।' इति च स्तोत्रान्तरे पाठः ॥ १८ ॥

पीअ-सिअ-रत्त सामा, सुर-वण-जोइ-भवणा रयणवप्पे ।
धणु दड-पास-गयह-त्थ सोम-जम-वरुण-धणयक्खा १६

अवचूरिः—अथ रत्नमये प्रथमवप्रे पूर्वादिद्वारचतुष्केऽपि क्रमेण द्वारपालदेवानां नामानिकमाह—सोम १ यम २ वरुण ३ धनदाख्याः ४ । यथाक्रम पीतादिवर्णाः । सुरादयः । धनुर्दण्डपाशगदाहस्ता द्वारपालाः ॥ १६ ॥

जय-विजया-ऽजिय-अपरा-
जिअ त्तिसिय अरुणा-पीअ नीलाभा ।
बीए देवी जुअला,
अभयंकुस-पास-मगरकरा ॥ २० ॥

तइअ बहि सुरा तुं(तु)बरु, खट्टंगि-कवालजडमउडधारी ।

पुव्वाइदारवाला, तंबरुदेवो अ पडिहारो ॥ २१ ॥
सामन्नसमोसरणे, एस विही एइ जइ महिड्ढिसुरो ।
सव्वमिणं एगोऽविहु, स कुणइ भयणेयरसुरेसु ॥२२॥

अवचूरिः—गाथाद्वयं स्पष्टम् । 'सामन्नसमोसरणे'त्ति-एष विधिः सामान्यसमवसरणे ज्ञेयः॥ यदि महर्द्धिकः कश्चिद्देव एति-आगच्छति तदा स एकोऽपि सर्वमिदं करोति, यदीन्द्रा नागच्छन्ति तदा भवनपत्यादयः समवसरणं कुर्वन्ति वा न वा ? इत्याह—'भयणेयरसुरेसु' त्ति-इतरसुरेषु भजना, कोऽर्थः ? कुर्वन्त्यपि न कुर्वन्त्यपीत्यर्थः ॥२०।२१।२२॥

पुव्वमजायं जत्थ उ, जत्थेइ सुरो महिड्ढिमघवाई ।
तत्थोसरणं नियमा, सययं पुण पाडिहेराइं ॥ २३ ॥

अवचूरिः—यत्र च तत्तीर्थङ्करापेक्षयाऽभूतपूर्वं समवसरणं यत्र च महर्द्धिको देव इन्द्रादिर्वा समेति समागच्छति तत्र समवसरणरचना नियमान्निश्चयाद्भवति । अष्टमहाप्रातिहार्यादिकं पुनः सततं भवत्येवेत्यर्थः । तथा येन च श्रमणेन समवसरणमदृष्टपूर्वं तेन तत्र द्वादशयोजनेभ्य आगन्तव्यं स्यात् । अनागमने तु तस्य चतुर्लघवः प्रायश्चित्तं भवति । तदुक्तम्—" जत्थ अपुव्वोसरणं, अदिट्ठपुव्वं च जेण समणेणं । वारसहिं जोअणेहिं, स एइ अणागए लहुआ ॥ १ ॥ " तथा प्रभुः प्रथमपौरुषीं संपूर्णां यावद्धर्ममाचष्टे । अत्रान्तरे बलिं प्रविशन्ति, तं च बलिं प्रक्षिप्यमाणं देवादयः सर्वेऽपि यथोचितं गृह्णन्ति, सर्वामयप्रशमनश्च सः, तेन च षण्मासान्तरं नान्यः प्रकुप्यति रोगः । बलिक्षेपादनु प्रभुरायव्ययप्राडुत्तरेण निर्गत्येशानदिशि देवच्छन्दकमेति, गणधरश्च द्वितीयपौरुष्यां धर्ममाचष्टेऽसंख्येयभवकथयिता इत्यादिविस्तरः श्रीआवश्यकादौ प्रोक्तोऽस्तीति ॥ २३ ॥

दुत्थिअसमत्थअत्थिअ-जणपत्थिअअत्थसत्थसुसमत्थो ।
इत्थं थुओ लहु जणं, तित्थयरो कुणउ सुपयत्थं ॥ २४ ॥

अवचूरिः—दुःस्थिता-दुःखिता ये समस्ता अर्थिकजना-याचकलोकास्तेषां ये प्रार्थिता अर्थास्तेषां सार्थाः समूहास्तेषु समर्थः, सर्वमनोरथपूरकत्वात् । इत्थं स्तुतो लघु-शीघ्रं जनं भव्यलोकं तीर्थकरः सुपदस्थं मोक्षपदस्थं स्वपदस्थं वा करोत्वित्यर्थः ॥२४॥ इति श्रीसमवसरणस्तवस्यावचूरिः समाप्ता॥

(२३) श्रीतीर्थकृतां समवसरणाभावे व्याख्यानावसरे चतुर्मुखत्वं स्यान्नवेति प्रश्नः, अत्रोत्तरम्-'तीर्थकृता दानशीलतपोभावे' ति श्लोकवृत्त्यनुसारेण समवसरणे देशनावसरे चतुर्मुखत्वं संभाव्यत इति ॥ ५६ ॥ सेन० २ उल्ला० । ' वारसजोअणउसहे ' इत्येतद्गाथानुसारेण श्रीवृषभादितीर्थकृतां समवसरणमानमुत्सेधाङ्गुलनिष्पन्नयोजनैरुच्यतेऽन्यथा वेति प्रश्नः, अत्रोत्तरम्—' वारसजोअणउसहे ' इत्यनया गाथयोत्सेधाङ्गुलयोजनैर्वृषभादितीर्थकृतां समवसरणमानं मतान्तरेणोक्तं दृश्यते, परमस्या गाथायाः पारम्पर्यं न ज्ञायते इति समवसरणावचूर्णाविति ॥ २६ ॥ सेन० ३ उल्ला० । श्रीवर्द्धमानजिनस्य प्रथमसमवसरणे सालवृक्ष ऊर्ध्वमभूत्किं वा सर्वदाऽपि सार्थेऽचलदिति ? प्रश्नः, अत्रोत्तरम्-यत्र भगवन्तस्तिष्ठन्ति यत्र च निषीदन्ति तत्र देवा अशोकवृक्षं विकुर्वन्तीति समवायाङ्गादावभिप्रायोऽस्ति, तेन



तदुपरिवर्तिनः सालवृक्षस्यापि तथैव सम्भावना, न तु सार्द्धं चलनं प्रथमसमवसरण एव वा तद्विधानमिति ॥१७६॥ सेन० ३ उल्ला० । तीर्थकृतां समवसरणाभावे चतुर्मुखत्वाभावे च कथं द्वादशपर्षदां व्यवस्थितिरिति, प्रश्नः—अत्रोत्तरम्—समवसरणाभावेऽपि तीर्थकृतां द्वादशपर्षदामवस्थितिर्यथा समवसरणे तथैवेत्यवसीयते ॥१८१॥ सेन० ३ उल्ला० ।

समोसरणतव-समवसरणतपस्-न० । भाद्रपदषोडशभिरेकाशननिर्विकृतिकाचाम्लोपवासैर्यथाशक्तिकृतैः समवसरणपूजान्विते तपोभेदे, पञ्चा० १६ विव० ।

समोसवेऽत्ता-समवसृत्य-अव्य० । खण्डशः कृत्वेत्यर्थे, सूत्र० १ श्रु० ५ अ० २ उ० ।

समोहय-समवहत-त्रि० । कृतसमुद्घाते, भ०१७श०६उ० । स्था० । ( अविशुद्धलेश्यं समवहता देवा विशुद्धलेश्यं जानाति न वा इति 'विभंगणाण' शब्दे षष्ठभागे उक्तम् । )

सम्पक्खालि-सम्प्रक्षालिन्-त्रि० । सम्प्रक्षालयति कर्मरजः शोधयति इत्येवं शील सम्प्रक्षाली कर्ममलशोधके, पा० ।

सम्म-शर्मन्-न० । क्षेमे, नि० १ श्रु० १ वर्ग १ अ० । समदाम-शिषे नन ॥८।१।३२॥ इति पुस्त्वं बाहुलकादत्र न । प्रा० ।

सम्यच्-त्रि० । समञ्चतीति सम्यक् । अविपरीते, स्था० ३ ठा० ४ उ० । सुसाधुनि, सूत्र० २ श्रु० २ अ० । उत्त० । शोभने, युक्तिसंगते, सूत्र० २ श्रु० ४ अ० । आचा० । उत्त० । अविपर्यासे, आचा० १ श्रु० ४ अ० २ उ० । प्रशंसायाम्, प्रव० ६ द्वार । विशे० । न० । आव० । आ० म० । औचित्ये, स्था० ५ ठा० १ उ० । यथावस्थिते, कल्प० ३ अधि० ६ क्षण ।

तिविहे सम्मे पएणत्ते, तंजहा—णाणसम्मे दंसणसम्मे चरित्तसम्मे । (सू० १६४×)

सम्यग्—अविपरीतं मोक्षसिद्धिं प्रतीत्यानुगुणमित्यर्थः । स्था० ३ ठा०४ उ० । रा० । अष्ट० । जं० । ( 'जं सम्मं ति पासह तं मोणं ति पासह' त्ति 'मुणि' शब्दे षष्ठभागे व्याख्यातम् । )

साम्य-न० । समस्य भावः साम्यम् । समतायाम्, आतु० । आ० म० । इष्टानिष्टतारहिते तुल्यत्वे, अष्ट० २१ अष्ट० ।

सात्म्य-न० । " पानाहारादयो यस्या-विरुद्धा प्रकृतेरपि ।
सुखित्वाय च कल्पन्ते, तत्सात्म्यमिति गीयते " ॥१॥ इत्युक्तलक्षणे भोजनादौ, ध० १ अधि० ।

सम्मअ-सम्मत-त्रि० । इष्टे, स० ।

सम्मअणणुपालणा-सम्यगननुपालना-स्त्री० । पोषधव्रतस्य सम्यगनासेवने, आव० ६ अ० ।

सम्मइ-सम्मति-पुं० । स्वनामख्याते सिद्धसेनदिवाकररचिते अभयदेवसूरिकृतवृत्तिसंवलिते प्रकरणग्रन्थे, आचा० । " स्फुरद्बोधांशुविध्वस्त—मोहान्तस्तमसोदयम् । वर्द्धमानार्कमभ्यर्च्य, यते सम्मतिवृत्तये ॥ १ ॥ " सम्म० १ काण्ड । मिथ्यात्वकलङ्करहितायां शोभनायां मत्याम्, स्त्री० । आचा० । प्रश्न० । विशिष्टाभिनिबोधिकज्ञाने, श्रुतज्ञाने, अवधिज्ञाने च । सूत्र० १ श्रु० ८ अ० । 'पामिच्च'-शब्दे पञ्चमभागे ८७४ पृष्ठे उदाहृताया देवराजकुटुम्बिनो दारिकायाम्, पिं० ।

सम्मग्ग-सन्मार्ग-पुं० । सम्यगविपरीते मार्गे, सूत्र० १ श्रु० ११ अ० ।

"ब्रह्मा लूनशिरा हरिर्दृशि सरुग् व्यालुप्तशिश्नो हरः,
सूर्योऽप्युल्लिखितोऽनलोऽप्यखिलभुक् सोमः कलङ्काङ्कितः ।
स्वर्नाथोऽपि विसंस्थुलः खलु वपुः संस्थैरुपस्थैः कृतः,
सन्मार्गस्खलनाद्भवन्ति विपदः प्रायः प्रभूणामपि ॥ १ ॥"

सूत्र० २ श्रु० ६ अ० ।

सम्मग्गपइट्ठिय-सन्मार्गप्रतिष्ठित-त्रि० । आप्तोक्तमार्गप्रवृत्ते, ग० १ अधि० ।

सम्मचरणाट्ठिय-सम्यक्चरणास्थित-त्रि० । सम्यक्चरणे चारित्रे व्यवस्थितः समुद्युक्तः । संयमसमुत्थिते, सूत्र० १ श्रु० १० अ० ।

सम्मड्ड-सम्मर्द-पुं० । "सम्मर्द वितर्दि विच्छर्द छर्दि कपर्द-मर्दिते र्दस्य" ॥ ८ । २ ३६ ॥ अनेन र्दस्य डकारः । सम्मड्डो । जनसंकुलत्वे' प्रा० २ पाद ।

सम्मड्डिअ-सम्मर्दित-त्रि० । "सम्मर्द-वितर्दि०"-॥८।२।३६॥ इत्यादिना डकारः । सम्यग् मर्दिते, प्रा० २ पाद ।

सम्मणोरह-सन्मनोरथ-पुं० । उद्यतविहारविशेषसूत्राध्ययनाद्यभिलाषे, ध० ३ अधि० ।

सम्मत्त-सम्यक्त्व-न० । सम्यगित्यस्य भावः सम्यक्त्वम् । सम्यक् शब्दः प्रशंसार्थोऽविरुद्धार्थो वा । सम्यग्-जीवः तद्भावः सम्यक्त्वम् । कर्म० ४ कर्म० । विशे० । आचा० । दर्श० । 'सम्म' त्ति सम्यक् शब्दः प्रशंसार्थोऽविरुद्धार्थो वा । सम्यग्जीवस्तद्भावः सम्यक्त्वं प्रशस्तो मोक्षाविरोधी वा । प्रशमसंवेगादिलक्षण आत्मधर्म इति यावत् । यदाहुः श्रीभद्रबाहुस्वामिपादाः — "सेयं सम्मत्ते पसत्थसम्मत्तमोहणीयकम्माणुवेयणोवसमक्खयसमुत्थो ( त्थे ) पसमसंवेगाइलिंगे सुहे आयपरिणामे ॥" इत्यादि । कर्म० ४ कर्म० । दर्श० । सम्यग्भावे, भ० ६ श० ३१ उ० । तत्त्वार्थश्रद्धाने, आव० ६ अ । तत्त्वप्रीतौ, ध० ३ अधि० । सम्यग्दर्शने, प्रश्न० ५ संव० द्वार । स्था० । मिथ्यात्वमोहनीयक्षयोपशमादिसमुत्थे जीवपरिणामे, प्रश्न० ४ संव० द्वार । स्था० । प्रति० । उत्त० । आव० । अष्ट० । ज्ञानदर्शनचारित्राणां यत्परस्पर प्रयोजनं तदात्मकत्वात् सामयिके, आ० म० ९ अ० । आचा० । "तत्तत्थसद्दहाणं सम्मत्तं" तत्त्वार्थानां सर्वविदुपदिष्टतया पारमार्थिकानां जीवादिपदार्थानां श्रद्धानम् एतदेव सम्यक्त्वम् । पञ्चा० १ विव० ।

विषयसूचना—



[ १ ] इदानीम् 'एगविहाइदसविहं सम्मत्तं' ति एकोनपञ्चाशदधिकशततमं द्वारमाह—

एकविह दुविह तिविहं, चतुहा पंचविह दसविहं सम्मं ।
दव्वाइकारगाई, उवसमभेएहि वा सम्मं ॥ ९५६ ॥

एकविधं द्विविधं त्रिविधं चतुर्धा पञ्चविधं दशविधं सम्यक्त्वं भवतीति शेषः । तत्र एकविधं तत्त्वार्थश्रद्धानलक्षणं सम्यक्त्वम्, एतच्चानुक्तमप्यविवक्षितोपाधिभेदत्वेन सामान्यरूपत्वादवसीयते इत्यस्यां गाथायां न विवृतं, द्विविधादि तु न ज्ञायते इत्युल्लेखमाह—'दव्वाइ' इत्यादि, द्विविधं द्रव्यादिभेदतः, तत्र च 'दव्वं' त्ति सूत्रमात्रत्वाद् द्रव्यतो भावतश्च । द्रव्यतो विशोधिविशेषेण विशुद्धिकृता मिथ्यात्वपुद्गला एव, भावतस्तु तदुपष्टम्भोपजनितो जीवस्य जिनोक्ततत्त्वरुचिपरिणामः । आदिशब्दः प्रकारान्तरैरपि द्विविधत्वदर्शनार्थः, तेन नैश्चयिकव्यावहारिकभेदतः पौद्गलिकाऽपौद्गलिकभेद-

तो नैसर्गिकाधिगमिकभेदतोऽपि च द्विविधमिति । तत्र यद्देशकालसंहननानुरूपं यथाशक्ति यथावत्संयमानुष्ठानरूपं मौनम्-अविकलं मुनिवृत्तं तन्निश्चयिकं सम्यक्त्वं व्यावहारिकं तु सम्यक्त्वं न केवलमुपशमादिलिङ्गगम्यः शुभात्मपरिणाम, किं तु-सम्यक्त्वहेतुरपि । अर्हच्छासनप्रीत्यादि कारणे कार्योपचारात्सम्यक्त्वं तदपि हि पारंपर्येण शुद्धचेतसामपवर्गप्राप्तिहेतुर्भवतीति. उक्तं च—" जं मोणं तं सम्मं, तम्मिह होइ मोणं तु । निच्छयओ इयरस्स तु. सम्मं सम्मत्तहेऊ वि ॥ १ ॥" व्यवहारनयमतमपि च प्रमाणं तद्बलेनैव तीर्थप्रवृत्ते अन्यथा तदुच्छेदप्रसङ्गात् ,तदुक्तम्-' जई जिणमयं पवज्जह,ता मा ववहारनिच्छयं मुयह । ववहारनयाच्छेए, तित्थुच्छेओ हु ओवस्सं' ।१। इति तथा अपनीतमिथ्यास्वभावसम्यक्त्वपुञ्जगतपुद्गलवेदनस्वरूपं क्षायोपशमिकं पौद्गलिकं सर्वथा मिथ्यात्वमिश्रसम्यक्त्वपुञ्जपुद्गलानां क्षयोपशमाज्जातं केवलजीवपरिणामरूपं क्षायिकमौपशमिकं चापौद्गलिक. नैसर्गिकाधिगमिके पुनरग्रे वक्ष्येते तथा त्रिविधं कारकादि कारकरोचकदीपकभेदेन 'उवसमभेएहिं व' त्ति—वाशब्द त्रैविध्यस्यैव प्रकारान्तरप्रदर्शनार्थं बहुवचनं च गुणार्थं, ततस्त्रिविधं चतुर्विधं दशविधं सम्यक्त्वमुपशमादिभेदैर्भवतीति,इदमुक्तं भवति—औपशमिकक्षायिकक्षायोपशमिकभेदात् त्रिविधम् ,औपशमिकक्षायिकक्षायोपशमिकसास्वादनभेदाच्चतुर्विधम् , औपशमिकक्षायिकक्षायोपशमिकसास्वादनवेदकभेदात्पञ्चविधम् ; एतदेव प्रत्येकं निसर्गाधिगमभेदाद्दशविधमिति । कथं पुनर्द्विविधादिभेदं सम्यक्त्वमित्याह-सम्यग्-अवैपरीत्येन आगमोक्तप्रकारेण न तु स्वमतिपरिकल्पितभेदैरिति भाव ।

अथैनामेव गाथां स्फुटतरं व्याख्यानयन्नाह—

एगविहं सम्मरुई, निसग्गभिगमेहि तं भवे दुविहं ।
तिविहं तं खइयाई, अहवा वि हु कारगाई य ॥६५७॥

एकविधम्-एकप्रकारमुपाधिभेदाविवक्षया निर्भेदमित्यर्थ , सम्यग्रुचि सम्यगज्ञानसंशयविपर्यासनिरासेन इदमेव तत्त्वमिति निश्चयपूर्विका जिनोदितजीवादिपदार्थेष्वभिप्रीति जिनोक्तानुसारितया तत्त्वार्थश्रद्धानरूपमेकविधं सम्यक्त्वमिति भाव. । तथा निसर्गाधिगमाभ्यां तत्सम्यक्त्वं भवेद् द्विविध. तत्र निसर्ग स्वभावो गुरूपदेशादिनिरपेक्षस्तस्मात्सम्यक्त्वं भवति, यथा नारकादीनामधिगमो गुरूपदेशादिस्तस्मात्सम्यक्त्वं भवतीति प्रतीतमेव । अयमभिप्राय - तीर्थकराद्युपदेशदानमन्तरेण स्वत एव जन्तोर्यत्कर्मोपशमादिभ्यो जायते तन्निसर्गसम्यक्त्वम् । यत्पुनस्तीर्थकराद्युपदेशाज्जिनप्रतिमादर्शनादिबाह्यनिमित्तोपष्टम्भेन कर्मोपशमादिना प्रादुर्भवति तदधिगमसम्यक्त्वमिति,तथा त्रिविधं तत्सम्यक्त्वं क्षायिकादि, अथवा-त्रिविधं कारकादि ।

तत्र क्षायिक-क्षायोपशमिके व्याख्यातुमाह—

सम्मत्तमीसमिच्छ-त्तकम्मखयओ भणंति तं खइयं ।
मिच्छत्तखओवसमा, खाओवसमं ववइसंति ॥५८॥

सम्यक्त्वमिश्रमिथ्यात्वकर्मक्षयाद्भणन्ति तीर्थकरगणधरा । क्षायिकं सम्यक्त्वं त्रिविधस्यापि ,दर्शनमोहनीयस्य क्षयेण-निर्मूलोच्छेदेन निर्वृत्तं क्षायिकम् , अयमर्थः-अनन्तानुबन्धिकषायचतुष्टयानन्तरं मिथ्यात्वमिश्रसम्यक्त्वपुञ्जलक्षणे त्रिविधे दर्शनमोहनीयकर्मणि सर्वथा क्षीणे क्षायिकं सम्यक्त्वं भवनीति, तथा मिथ्यात्वमोहनीयकर्मण उदीर्णस्य क्षयादनुदीर्णस्य चोपशमात्सम्यक्त्वरूपतापत्तिलक्षणाद्विष्कम्भितोदयस्वरूपाच्च क्षायोपशमिकसम्यक्त्वं व्यपदिशन्ति-कथयन्ति । इदमुक्तं भवति—यदुदीर्णमुदयमागतं मिथ्यात्वं तद्विपाकोदयेन वेदितत्वात् क्षीणं—निर्जीर्णं यच्च शेषसत्तायामनुदयागतं वर्तते तदुपशान्तम् । उपशान्तं नाम-विष्कम्भितोदयमपनीतमिथ्यास्वभावं च । मिथ्यात्वमिश्रपुञ्जावाश्रित्य विष्कम्भितोदयं, शुद्धपुञ्जमाश्रित्य पुनरपनीतमिथ्यात्वस्वभावमित्यर्थ । तदेवमुदीर्णस्य मिथ्यात्वस्य क्षयेण, अनुदीर्णस्य चोपशमेन निवृत्तत्वात् त्रुटितरसं शुद्धपुञ्जलक्षणं मिथ्यात्वमपि क्षायोपशमिकं सम्यक्त्वमुच्यते । शोधिता हि मिथ्यात्वपुद्गला अतिस्वच्छवस्त्रमिव दृष्टेर्यथावस्थिततत्त्वरुच्यध्यवसायरूपस्य सम्यक्त्वस्यावारका न भवन्ति अतस्तेऽप्युपचारतः सम्यक्त्वमुच्यन्ते इति । प्रव० १४६ द्वार । आ० ।

( २ ) अथ तत्सम्यग्दर्शनं कतिविधमेत आह—

उवसामग सासायण, खओवसमियं च वेदगं खइयं ।
सम्मत्तं पंचविहं, जह लब्भइ तं तहा वोच्छं ॥ ६४ ॥

सम्यक्त्व , पञ्चविधम् , तद्यथा—औपशमिकं सासादनं क्षायोपशमिकं वेदकं क्षायिकं च । एतत्पञ्चप्रकारमपि यथा लभ्यते तथा वक्ष्यामि । वृ० १ उ० १ प्रक० ।

( ३ ) सम्प्रति पञ्चविधं सम्यक्त्वमाह-

वेययसम्मत्तं पुण, एयं चिय पंचहा विणिद्दिट्ठं ।
सम्मत्तचरिमपोग्गल-वेयणकाले तयं होइ ॥ ६६२ ॥

एतदेव-पूर्वोक्तं चतुर्विधं सम्यक्त्वं वेदकसंयुक्तं पुन पञ्चधा-पञ्चविधं विनिर्दिष्ट-विशेषत कथितं वीतरागै । तच्च वेदकसम्यक्त्वं सम्यक्त्वपुञ्जस्य बहुतरक्षपितस्य चरमपुद्गलानां वेदनकाल-ग्राससमये भवति । वेदयति-अनुभवति सम्यक्त्वपुद्गलानीति वेदकोऽनुभविता तदनर्थान्तभूतत्वात्सम्यक्त्वमपि वेदकम् , यथा आह्रियते इत्याहारकं तथा वेद्यत इति वेदकम् । इदमत्र तात्पर्यं-क्षपकश्रेणिं प्रतिपन्नस्यानन्तानुबन्धिकषायचतुष्टयमपि क्षपयित्वा मिथ्यात्वमिश्रपुञ्जेषु सर्वथा क्षपितेषु सम्यक्त्वपुञ्जमप्युदीर्योदीर्यानुभवेन निर्जरयता निष्ठितोदीरणीयस्य चरमग्रासेऽवतिष्ठमानेऽपि सम्यक्त्वपुञ्जपुद्गलानां कियतामपि वेद्यमानत्वाद्वेदक सम्यक्त्वमुपजायते इति । अत्राह--नन्वेव सति क्षायोपशमिकेन सहास्य को विशेष ? सम्यक्त्वपुञ्जपुद्गलानुभवस्योभयत्रापि समानत्वात्. सत्यं, किन्त्वेनदशेषोदितपुद्गलानुभूतिमत्प्रोक्तम् . इतरत्तु उदितानुदितपुद्गलस्येत्येतन्मात्र प्रकृतो विशेष, परमार्थतस्तु क्षायोपशमिकमेवेदं चरमग्रासशेषाणां पुद्गलानां क्षयाच्चरमग्रासवर्तिना तु मिथ्यास्वभावापगमलक्षणस्योपशमस्य सद्भावादिति ।

अथ दशविधं सम्यक्त्वमाह—

एयं चिय पंचविहं, निस्सग्गाभिगमभेयओ दसहा ।
अहवा निस्सग्गरुई, इच्चाइ जमागमे भणिअं ॥६६३ ॥

एतदेवानन्तरोदितं पञ्चविधं सम्यक्त्वं निसर्गाधिगमभेदाभ्या दशधा भवति । क्षायिकक्षायोपशमिकौपशमिकसास्वादनवेदकानां प्रत्येकं निसर्गतोऽधिगमतश्च जायमानत्वाद्दशविधत्वमित्यर्थ । अथवेति प्रकारान्तरोपदर्शनार्थ । निसर्गरुचिरुपदेशरुचिरित्यादिरूपतया यदागमे प्रज्ञापनादौ प्रतिपादितं तेन च दशविधत्वमवगन्तव्यम् ।

तदेवाह—

निस्सग्गुवएसरुई, आणारुइसुत्त-बीय-रुइमेव ।
अहिगमवित्थाररुई, किरियासंखेवधम्मरुई ॥ ६६४ ॥

अत्र रुचिशब्द. प्रत्येकं योज्यते , ततो निसर्गरुचिरुपदेशरुचिरिति द्रष्टव्यम् । अत्र निसर्ग.-स्वभावस्तेन रुचिर्जिनप्रणीततत्त्वाभिलापरूपा यस्य स निसर्गरुचि., उपदेशो-गुर्वादिभिर्वस्तुतत्त्वकथनं , तेन रुचिरुक्तस्वरूपा यस्य स उपदेशरुचि , आज्ञा—सर्वज्ञवचनात्मिका, तस्यां रुचिरभिलाषो यस्य स आज्ञारुचि., 'सुत्तवीयरुइमेव त्ति-अत्रापि रुचिशब्द. प्रत्येकमभिसंबध्यते, सूत्रमाचाराद्यङ्गप्रविष्टम् , अङ्गबाह्यं चावश्यकदशवैकालिकादि , तेन रुचिर्यस्य स सूत्ररुचि. , बीजमिव बीजं-यदेकमप्यनेकार्थप्रबोधोत्पादकं वच. , तेन रुचिर्यस्य स बीजरुचि., अनयोश्च पदयो समाहारद्वन्द्व., तेन नपुंसकनिर्देश । एवेति समुच्चये । ' अहिगमवित्थाररुइ ' त्ति अत्रापि रुचिशब्दस्य प्रत्येकमभिसंबन्ध , ततोऽधिगमरुचिर्विस्ताररुचिश्च । तत्राधिगमो—विशिष्टं परिज्ञानं तेन रुचिर्यस्यासावधिगमरुचि , विस्तारो—व्यास. सकलद्वादशाङ्गस्य नयै. पर्यालोचनमिति भाव. , तेनोपबृंहिता रुचिर्यस्य स विस्ताररुचि.,'किरियासंखेवधम्मरुइ' त्ति-रुचिशब्दस्यात्रापि प्रत्येकमभिसंबन्धात् क्रियारुचि. , संक्षेपरुचिर्धर्मरुचिरिति द्रष्टव्यम् । तत्र क्रिया-सम्यक्संयमानुष्ठान, तत्र रुचिर्यस्य स क्रियारुचि., संक्षेप.—संग्रहस्तत्र रुचिर्यस्य , विस्तरार्थापरिज्ञानात् संक्षेपरुचि , धर्मेऽस्तिकायधर्मे श्रुतधर्मादौ वा रुचिर्यस्य स धर्मरुचि., यदिह सम्यक्त्वस्य जीवानन्यत्वेनाभिधानं तद्गुणगुणिनो. कथंचिदनन्यत्वख्यापनार्थमिति गाथासंक्षेपार्थ । प्रव०६३ द्वार। सघा०। सम्म०। ( वेदकसम्यक्त्वं ' वेदग ' शब्दे षष्ठभाग ऽस्ति । )

( ४ ) सम्प्रति क्षायिकदर्शनमाह—

दंसणमोहे खीणे, खयदिट्ठी होइ निरवसेसम्मि ।
केण उ सम्मो मोहो, पडुच्च पुव्वं तु पण्णवणं ॥१२६॥

दर्शनमोहे निरवशेष विप्रकारेऽपि क्षीणे क्षयदृष्टि. क्षायिकं सम्यग्दर्शनं भवति आह—यन्मिथ्यात्वदर्शनं तन्मोह स्यात्तस्य सम्यग्दर्शनमोहकत्वात् , यत्सम्यग्दर्शन तत्केन कारणेन मोह ?, सूरिराह-पूर्वा प्रज्ञापना प्रतीत्य । किमुक्तं भवति—यथा मदनकोद्रवाणा निर्मदनीकृतानामप्योदन स एष मदनकोद्रवौदन इति व्यपदिश्यते तेषा पूर्व समदनत्वादेवं तेऽपि सम्यक्त्वपुद्गला , पूर्वं मिथ्यात्वपुद्गला आसीरन् ते च दर्शनमोहका , अत पूर्वभावप्रज्ञापनामाधिकृत्य तेऽपि दर्शनमोह इति व्यपदिश्यन्ते । वृ० १ उ० १ प्रक० । सम्यग्दर्शनयुक्तोऽयमिति । अत्र च पञ्चलक्षणप्रदर्शनेन तत्सहचारिता सप्तषष्टिरपि भेदा सूचिता , सम्यक्त्वं च तैर्विशुद्धं स्याद् , यदाहु.—

चउसद्दहणतिलिंगं, दसविणयतिसुद्धिपंचगयदोसं ।
अट्ठपभावणभूसण-लक्खणपंचविहसंजुत्तं ॥ १ ॥
छव्विहजयणाऽऽगारं, छब्भावणभाविअं च छट्ठाणं ।
इयसत्तसट्ठिदंसण-भेअविसुद्धं तु सम्मत्तं ॥ २ ॥

" चउसद्दहण " त्ति—

परमत्थसंथवो खलु,सुमुणिअपरमत्थजइजणनिसेवा ।
वावन्नकुदिट्ठीण य, वज्जणा सम्मत्तसद्दहणा । ३ ॥

' तिलिंग ' त्ति--

सुस्सूसधम्मराओ, गुरुदेवाणं जहा समाहीए ।
वेयावच्चे नियमो, सम्मद्दिट्ठिस्स लिंगाइं ॥ ४ ॥

' दसविणयं ' ति—

अरिहंत१सिद्ध चेइअ३, सुए अ४धम्मे अ५साहुवग्गे अ६।
आयरिअ१उवज्झाएद,पवयणे९दंसणे१०विणओ ॥ ५ ॥
भत्तीपूआवन्न, ( स्स ) जणणं नासणमवन्नवायस्स ।
आसायणपरिहारो, दंसणविणओ समासेणं ॥ ६ ॥

' तिसुद्धि ' त्ति—

मुत्तूण जिणं मुत्तूण, जिणमयं जिणमयट्ठिए मुत्तुं ।
संसारकत्तवारं, चिंतिज्जत जग सेसं । ७ ॥

' पंचगयदोस ' ति--

संका१कंखर२विगिच्छा ३, पसंस ४ तह संथवो५कुलिंगीसुं ।
सम्मत्तस्सऽइयारा, परिहरिअव्वा पयत्तेणं ॥ ८ ॥

' अट्ठपभावण ' त्ति--

पावयणी धम्मकही २, वाई नेमित्तिओ ४ तवस्सी अ ५ ।
विज्जा ६ सिद्धो अ ७ कई ८, अट्ठेव पभावगा भणिआ ॥ ६ ॥

' भूसण' त्ति-

जिणसासणे कुसलया१, पभावणा२तित्थसेवणा३थिरया४।
भत्तीअ ५ गुणा सम्म—त्तदीवया उत्तमा पंच । १० ॥

'लक्खणपंचविहसंजुत्त त्ति-लक्षणान्युक्तान्येवात्र गाथाऽपि ।

संवेगो चिअ १ उवसम २, निव्वेओ३तह य होइ अणुकंपा४।
अत्थिक्कं चिअ एए, सम्मत्ते लक्खणा पच ॥ ११ ॥

' छव्विहजयण ' त्ति—

नो अन्नतित्थिए अ-न्नतित्थिदेवे २ य तह सदेवाइं । -
गहिए कुतित्थिएहिं , वदामि १ न वा नमंसामि २ ॥ १२ ॥
नेव अणालत्तो आ-लवेमि ३ नो संलवेमि ४ तह तेसिं ।
देमि न असणाईअं ५, पेसमि न गंधपुप्फाई ६ ॥ १३ ॥

' छ आगारं ' ति—

रायाभिओ य गणाभिओगो,वलाभिओगो अ सुराभिओगो।
कंतारवित्ती गुरुनिग्गहो अ, छ छिंडिआऊ जिणसासणम्मि॥

'छब्भावणभाविअ' ति—

मूलं १ दारं२ पइट्ठाणं३, आहारो ४भायण ५निही ६।
दुछक्कसाविधम्मस्स, सम्मत्त परिकित्तिअ ॥ १५ ॥

'छट्ठाणं' ति—

अत्थिअ१ णिच्चो२कुणई३, कयच वेएइ४अत्थि णिव्वाणं५ ।
अत्थिअ अ मुक्खो वाओ३,छस्सम्मत्तस्स ठाणाइं ॥ १६॥

अथैतासा विषमपदार्थो यथा—

परमार्था जीवादयस्तेषां संस्तव.-परिचय ?, सुमुनितपरमार्था यतिजना आचार्यादय , तेषा सेवन २, व्यापन्नदर्शना-निह्नवादयः ६ कुदर्शना -शाक्यादय ४ तेषां वर्जन—त्याग ' सम्मत्तसद्दहणा ' इति—सम्यक्त्वं श्रद्धी-

स्त्यस्तीति प्रतिपद्यतेऽनेनेति सम्यक्त्वश्रद्धान, न चाङ्गारमर्दकादेरपि परमार्थसंस्तवादिसम्भवाद् व्यभिचारिता शङ्क्या तात्त्विकानामेवेषाम् इहाधिकृतत्वात्, तस्य च तथाविधानामेषामसंभवादिति । इह प्राकृतत्वाल्लिङ्गमतन्त्रमिति स्त्रीत्वं ? मूलद्वारगाथाया च चतु.श्रद्धानादिशब्दाना,चतुर्विधं श्रद्धानं चतु श्रद्धानं,त्रिविधं लिङ्गं त्रिलिङ्गम्, दशविधो विनयो दशविनय., त्रिविधा शुद्धिस्त्रिशुद्धिरित्यादि व्युत्पत्तिर्ज्ञेया । त्रिलिङ्गं श्रोतुमिच्छा शुश्रूषा,सद्बोधावन्ध्यनिबन्धनधर्मशास्त्रश्रवणवाञ्छेत्यर्थ. । सा च वैदग्ध्यादिगुणवत्तरुणनरकिन्नरगानश्रवणरागादप्यधिकतमा सम्यक्त्वे सति भवति । यदाह–
" यूनो वैदग्ध्ययुक्तस्य, कान्तायुक्तस्य कामिनोऽपि दृढम्। किन्नरगेयश्रवणा–दधिको धर्मश्रुतौ राग. ॥ १ ॥ " इति १ ।
तथा धर्मे–चारित्रलक्षणे राग, श्रुतधर्मरागस्य तु शुश्रूषापदेनैवोक्तत्वात्, । स च कर्मदोषात्तदकरणेऽपि कान्तारातीतदुर्गतबुभुक्षाक्षामकुक्षिब्राह्मणघृतभोजनाभिलाषादप्यतिरिक्तो भवति । २ । तथा गुरवो–धर्मोपदेशका देवा–अर्हन्तस्तेषा वैयावृत्त्ये तत्प्रतिपत्तिविश्रामणाभ्यर्चनादौ नियमोऽवश्य कर्तव्यताङ्गीकार., स च सम्यक्त्वे सति भवतीति । तानि सम्यग्दृष्टेः धर्मधर्मिणोरभेदोपचारात् सम्यक्त्वस्य लिङ्गानि, एभिस्त्रिभिर्लिङ्गैः सम्यक्त्वं समुत्पन्नमस्तीति निश्चीयत इति भाव. । वैयावृत्त्यनियमस्य च तपोभेदत्वेन चारित्रांशरूपत्वेऽपि सम्यक्त्वे सत्येवावश्यंभावित्वेऽपि नाविरतसम्यग्दृष्टिगुणस्थानकाऽभावप्रयोजकता-द्धाव्यम्, एतद्रूपचारित्रस्याल्पतमत्वेनाचारित्रतया विवक्षितत्वात् । समूर्छनजाना संज्ञाभावात्सद्भावेऽपि विशिष्टसंज्ञाऽभावादसंज्ञित्वव्यपदेशवदिति । उपशान्तमोहादिषु तु कृतकृत्यत्वादेषा साक्षादभावेऽपि फलतया सद्भावान्न तेष्वप्येतेषां व्यभिचार. । वैयावृत्त्यनियमश्चोपरिष्टाद् श्राद्धविधिपाठेन दर्शयिष्यत इति ततोऽवसेय । दशविनय चैत्यान्यर्हत्प्रतिमा ,प्रवचनं-जीवादितत्त्व,दर्शन–सम्यक्त्व तदभेदोपचारात्तद्वानपि दर्शनमुच्यते । एतेषु दशसु भक्तिरभिमुखागमनासनप्रदानपर्युपास्त्यञ्जलिबन्धाद्या,पूजा–सत्काररूपा वर्ण.–प्रशंसा, तज्जननमुद्भासनम्, अवर्णवादस्याश्लाघाया वर्जन–परिहार. । आशातना–प्रतीपवर्त्तन तस्या परिहार. । एष दशस्थानविषयत्वाद्दशविधो दर्शनविनय , सम्यक्त्वे सत्यस्य भावात् सम्यक्त्वविनय. । त्रिशुद्ध्या–जिन वीतरागं जिनमत स्यात्पदलाञ्छित जिनमतस्थितांश्च साध्वादीन् मुक्त्वा शेषमेकान्तग्रस्त जगदपि ससारमध्ये कचवरप्रायम्, असारमित्यर्थ , इति चिन्तया सम्यक्त्वस्य विशोध्यमानत्वादेतास्तिस्र. शुद्धय इति । पञ्च दोषा अग्रे मूल एव वक्ष्यमाणा ; अष्टप्रभावनायां–प्रभवति जैनेन्द्रं शासन, तस्य प्रभवत प्रयोजकत्व प्रभावना सा चाष्टधा प्रभावकभेदेन । तत्र प्रवचनं द्वादशाङ्गं गणिपिटक, तदस्यास्तीति प्रावचनी युगप्रधानागम १, धर्मकथा प्रशस्ताऽस्यास्तीति धर्मकथी, " शिखादित्वादिन् " ( शिखादिभ्य इन् ) ( श्री सि० ७-२-४) आक्षेपणी १ विक्षेपणी २ संवेगजननी ३ निर्वेदनी४ लक्षणा चतुर्विधा जनितजनमन प्रमोदा धर्मकथा कथयति स -२, वादिप्रतिवादिसभ्यसभापतिरूपाया चतुरङ्गाया परिषदि प्रतिपक्षक्षेपपूर्वकं स्वपक्षस्थापनार्थमवश्यं वदतीति वादी ३, निमित्त–त्रैकालिकलाभालाभप्रतिपादकं शास्त्र, तद्वेत्त्यधीते वा नैमित्तिक ४, तपो–विकृष्टमष्टमाद्यस्यास्तीति तपस्वी ५, विद्या –प्रज्ञप्त्यादयस्तद्वान् विद्यावान् ६, सिद्धयोऽञ्जनपादलेपतिलकगुटिकाकर्षणवैक्रियत्वभृतयस्ताभि. । सिद्धयति स्म सिद्ध:७, कवते गद्यपद्यादिभि प्रबन्धैर्वर्णनामिति कविर्गद्यपद्यप्रबन्धरचकः ८। एते प्रवचन्याद्योऽष्टौ, प्रभवतो भगवच्छासनस्य यथायथ देशकालाद्यौचित्येन साहाय्यकरणात् प्रभावका , प्रभवन्तं स्वत प्रकाशकस्वभावमेव प्रेरयन्तीति व्युत्पत्ते. तेषां कर्म प्रभावना इत्थं च मूलद्वारगाथायामष्टौ प्रभावना यत्रेति समास । भूषणपञ्चके–जिनशासनेऽर्हद्दर्शनविषये कुशलता–नैपुण्यं १, प्रभावना–प्रभावनमित्यर्थ । सा च प्रागष्टधाऽभिहिता, यत्पुनरिहोपादानं तदस्याः स्वपरोपकारित्वेन तीर्थकरनामकर्मनिबन्धनत्वेन च प्राधान्यख्यापनार्थम् । ध०१ अधि० १३ गुण ।



( ५ ) अधुना नामनिष्पन्ननिक्षेपायातस्य सम्यक्त्वाभिधानस्य निक्षेपं चिकीर्षुराह–

नामं ठवणं सम्मं, दव्वसम्मं च भावसम्मं च ।
एसो खलु सम्मस्स, निक्खेवो चउव्विहो होइ ॥२१७॥

अक्षरार्थ. सुगम., भावार्थं तु सुगम नामस्थापनाव्युदासेन द्रव्यभावगत निर्युक्तिकार. प्रतिपिपादयिषुराह–

अह दव्वसम्म इच्छा–णुलोमियं तेसु तेसु दव्वेसु ।
कयसंखयसंजुत्तो, पउत्तजढभिण्णछिण्णं वा ॥ २१८ ॥

अथेति–आनन्तर्ये, ज्ञशरीरभव्यशरीरव्यतिरिक्त द्रव्यसम्यक्त्वमित्याह; ऐच्छानुलोमिकम्–इच्छा–चेत.प्रवृत्तिरभिप्रायस्तस्यानुलोमम्–अनुकूलं तत्र भवमैच्छानुलोमिकं तच्च तेषु तेष्विच्छाभावानुकूल्यनाभाक्षु द्रव्येषु कृताद्युपाधिभेदेन सप्तधा भवति, तद्यथा–कृतम्–अपूर्वमेव निर्वर्त्तितं रथादि, तस्य यथाऽवयवलक्षणनिष्पत्तेर्द्रव्यसम्यक्त्वंस्तन्निमित्तचित्तस्वास्थ्यात्पत्ते , यदर्थं वा कृत तस्य शोभनाशुक्रमणतया समाधानहेतुत्वाद्वा द्रव्यसम्यग् १, एवं संस्कृतेऽपि योज्यं, तस्यैव रथादेर्भग्नजीर्णापोढापरावयवसंस्कारादिति २, तथा ययोर्द्रव्ययो सयोगो गुणान्तराधानाय नापमर्दाय उपभोक्तुर्वा मन प्रीत्यै पय शर्करयोरिव तत्संयुक्तद्रव्यसम्यक् ३, तथा यत्प्रयुक्तं द्रव्य लाभहेतुत्वादात्मन समाधानाय प्रभवति तत्प्रयुक्तद्रव्यसम्यक् ४, पाठान्तरं वा–'उवउत्त' त्ति यदुपयुक्तम्–अभ्यवहृतं द्रव्यं मन समाधानाय प्रभवति तदुपयुक्तद्रव्यसम्यक् ४, तथा जढ–परित्यक्त यद्भारादि तत्त्यक्तद्रव्यसम्यक् ५, तथा दधिभाजनादि भिन्नं सत् काकादिसमाधानोत्पत्तेर्भिन्नद्रव्यसम्यक् ६, तथाऽधिकमांसादिच्छेदाच्छिन्नसम्यक् ७, सर्वमप्येतत्समाधानकारणत्वाद् द्रव्यसम्यक्, विपर्ययादसम्यगिति गाथार्थ ।

( ६ ) भावसम्यक्प्रतिपादनायाह–

तिविहं तु भावसम्मं, दंसण नाणे तहा चरित्ते य ।
दंसणचरणे तिविहं, नाणे दुविहं तु नायव्वं ॥ २१९ ॥

त्रिविधं भावसम्यक्–दर्शनज्ञानचारित्रभेदात् , पुनरप्येकैक भवत आचष्टे–तत्र दर्शनचरणे प्रत्येक त्रिविधे, तद्यथा–

अनादिमिथ्यादृष्टेरकृतत्रिपुञ्जस्य यथाप्रवृत्तकरणक्षीणशेषकर्म्मणो देशोनसागरोपमकोटिकोटिस्थितिकस्यापूर्वकरणभिन्नग्रन्थेर्मिथ्यात्वानुदयलक्षणमन्तरकरणं विधायानिवृत्तिकरणेन प्रथमं सम्यक्त्वमुत्पादयत औपशमिकं दर्शनम् १, उक्तं च—" ऊसरदेसं दड्ढे-ल्लय व विज्झाइ वणदवो पप्प । इय मिच्छत्ताणुदए, उवसमसम्मं लहइ जीवो ॥ १ ॥ " उपशमश्रेण्यां चौपशमिकमिति २. तथा सम्यक्त्वपुद्गलोपष्टम्भजनिताध्यवसाय क्षायोपशमिकं २, दर्शनमोहनीयक्षयात् क्षायिकं ३, चारित्रमप्युपशमश्रेण्यामौपशमिकं १, कषायक्षयोपशमात् क्षायोपशमिकं चारित्रं २, चारित्रमोहनीयक्षयात्क्षायिकं ३ ज्ञाने तु भावसम्यग् द्विधा ज्ञातव्य. तद्यथा-क्षायोपशमिकं क्षायिकं च । तत्र चतुर्विधज्ञानावरणीयक्षयोपशमात् मत्यादि चतुर्विधं क्षायोपशमिकं ज्ञानं, समस्तक्षयात्क्षायिकं केवलज्ञानमिति । तदेवं त्रिविधेऽपि भावसम्यक्त्वे दर्शिते सति परश्चोदयति—यद्येवं त्रयाणामपि सम्यग्वादसम्भवे कथं दर्शनस्यैव सम्यक्त्ववादो रूढो ? यदिहाध्ययने व्यावर्ण्यते. उच्यते-तद्भावभावित्वादितरयो , तथाहि—मिथ्यादृष्टेस्ते न स्त , अत्र च सम्यक्त्वप्राधान्यख्यापनाय अन्धेतरराजकुमारद्वयेन बालाङ्गनाद्यवबोधार्थं दृष्टान्तमाचक्षते—तद्यथा—उदयसेनराजस्य वीरसेनसूरसेनकुमारद्वयं, तत्र वीरसेनोऽन्ध , स च तद्योग्या गान्धर्वादिका कला ग्राहित , इतरस्त्वभ्यस्तधनुर्वेदो लोकश्लाघ्यां पदवीमगमत्. एतच्च समाकर्ण्य वीरसेनेनापि राजा विज्ञप्तो यथाऽहमपि धनुर्वेदाभ्यासं विदधे, राज्ञाऽपि तदाग्रहमवगम्यानुज्ञात । ततोऽसौ सम्यगुपाध्यायोपदेशात् प्रज्ञातिशयादभ्यासविशेषाच्च शब्दवेधी संवृत्त । तेन चारूढयौवनेन स्वभ्यस्तधनुर्वेदविज्ञानक्रियेणागणितचक्षुर्दर्शनसद्भावेन शब्दवेधित्वावष्टम्भात्परबलोपस्थाने सति राजा युद्धायादेशं याचित. । तेनापि याच्यमानेन वितेर । वीरसेनेन च शब्दानुवेधितया परानीकं जजृम्भे, परैश्चावगतकुमारान्धभावैर्मूकतामालम्ब्यासौ जगृहे, सूरसेनेन च विदितवृत्तान्तेन राजानमापृच्छ्य निशितशरशतजालावष्टब्धपरानीकेन मोचित. । तदेवमभ्यस्तविज्ञानक्रियोऽपि चक्षुर्विकलत्वान्नालमभिप्रेतकार्यसिद्धये इति ।

एतदेव निर्युक्तिकारो गाथयोपसंहर्त्तुमाह—

कुणमाणो वि य किरियं, परिच्चयंतो वि सयणधणभोए ।
दिंतो वि दुहस्स उरं, न जिणइ अंधो पराणीयं ॥१६॥

कुर्वन्नपि क्रिया परित्यजन्नपि स्वजनधनभोगान् ददर्दपि दु खस्योर. न जयत्यन्ध परानीकमिति गाथार्थ. ।

(७) तदेव दृष्टान्तमुपदर्श्य दार्ष्टान्तिकमाह-

कुणमाणो वि निवत्तिं, परिच्चयंतो वि सयणधणभोए ।
दिंतो वि दुहस्स उरं,मिच्छद्दिट्ठी न सिज्झइ उ॥२५१॥

कुर्वन्नपि निवृत्तिम्-अन्यदर्शनाभिहितां, तद्यथा-पञ्च यमा; पञ्च नियमा इत्यादिकां तथा परित्यजन्नपि स्वजनधनभोगान् पञ्चाग्नितपआदिना ददर्दपि दु खस्योर. मिथ्यादृष्टिर्न सिध्यति । तुरवधारणे, नैव सिध्यति, दर्शनविकलत्वाद् , अन्धकुमारवत् असमर्थ कार्यसिद्धये । आचा० १ श्रु० ४ अ० १ उ० । कर्म० । तदेव येन कर्मणा मुनिर्नैव नश्यति श्रद्धाति तत् सम्यक्त्वं, किंविशिष्टं ? 'खइयाइबहुभेयं' ति-क्षायिकमादौ येषां ते क्षायिकादयो बहवो भेदा-प्रकारा यस्य तत्क्षायिकादि बहुभेदम् । इहादिशब्दाद्वेदकौपशमिकसास्वादनक्षायोपशमिकग्रहणम् । एतद्व्याख्यानगाथा.-

' खीणे दंसणमोहे, तिविहम्मि वि खाइयं भवे सम्मं ।
वेयगमिह सव्वोदय, चरमिल्लयपुग्गलग्गासं ॥ १ ॥
उवसमसेढिगयस्स उ, होइ हु उवसामियं तु सम्मत्तं ।
जो वा अकयतिपुंजो, अखवियमिच्छो लहइ सम्मं ॥ २ ॥
उवसमसम्मत्ताउ, चइउं मिच्छं अपावमाणस्स ।
सासायणसम्मत्तं, तयंतरालम्मि छावलियं ॥ ३ ॥
मिच्छत्त जमुइन्नं, तं खीणं अणुइय च उवसंतं ।
मीसीभावपरिणयं, वेइज्जंतं खओवसमं ॥ ४ ॥ "

इत्युक्त सम्यक्त्वम् । कर्म० १ कर्म० । दर्श० । आ० म० । त्रिविध सम्यक्त्व क्षायिकं क्षायोपशमिकमौपशमिकं च । कल्प० १ अधि० ३ क्षण । कर्म० ।

[ ८ ] यत एवं तत. किं कर्तव्यमत आह—

तम्हा कम्माणीयं, जे तु मणो दंसणम्मि पयएज्जा ।
दंसणवओ हि सफला-णि होंति तवनाणचरणाइं २२२।
सम्मत्तुप्पत्ती सा-वए य विरए अणंतकम्मंसे ।
दंसणमोहक्खवए, उवसामंते य उवसंते ॥ २२३ ॥
खवए य खीणमोहे, जिणे य सेढी भवे असंखेज्जा ।
तव्विवरीओ कालो, संखिज्जगुणाइसेढीए ॥ २२४ ॥
आहारउवहिपूआ-इड्ढीसु य गारवेसु कइतविये ।
एमेव वारसविहे, तवम्मि न उ कइतवे समणो ॥२२५॥

यस्मात्सिद्धिमार्गमूलास्पदं सम्यग्दर्शनमन्तरेण न कर्मक्षय स्यात्तस्मात्कारणात् कर्मानीकं जेतुमनाः सम्यग्दर्शने प्रयतेत, तस्मिंश्च सति यद्भवति तद् दर्शयति-दर्शनवतो हिर्हेतौ, यस्मात् सम्यग्दर्शनिन सफलानि-भवन्ति तपोज्ञानचरणान्यतस्तत्र यत्नवता भाव्यमिति गाथार्थ । प्रकारान्तरेणापि सम्यग्दर्शनस्य तत्पूर्वकाणां च गुणस्थानकाना गुणमाविर्भावयितुमाह-'सम्मत्तुप्पत्ति' त्ति सम्यक्त्वस्योत्पत्ति. सम्यक्त्वोत्पत्तिस्तस्यां विवक्षितायामसंख्येयगुणश्रेणिर्भवेदित्युत्तरगाथार्द्धान्ते क्रियामपदय संबन्धो लगयितव्य. । कथमसंख्येयगुणा श्रेणिर्भवेदिति ?, अत्रोच्यते-इह मिथ्यादृष्टय. देशोनकोटिकोटिकर्मस्थितिकाग्रन्थिकसत्त्वास्ते कर्म्मनिर्जरामाश्रित्य तुल्या. धर्मप्रच्छुर्वोपपन्नसंज्ञास्तेभ्योऽसंख्येयगुणनिर्जरका. ततोऽपि पिपृच्छिषु सन् साधुसमीपं जिगमिषुस्तस्मादपि क्रियाविष्ट. प्रच्छंस्ततोऽपि धर्मं प्रतिपित्सुरस्मादपि क्रियाविष्ट प्रतिपद्यमानस्तस्मादपि पूर्वप्रतिपन्नोऽसंख्येयगुणनिर्जरक इति सम्यक्त्वोत्पत्तिर्व्याख्याता,तदनन्तरं विरताविरतिं प्रतिपित्सु प्रतिपद्यमानपूर्वप्रतिपन्नानामुत्तरोत्तरस्यासंख्येयगुणा निर्जरा योज्या, एवं सर्वविरतावपीति ततोऽपि पूर्वप्रतिपन्नसर्वविरते सकाशात् 'अणंतकम्मंसे' त्ति पदैकदेशे पदप्रयोग इति , यथा भीमसेनो भीम सत्यभामा भामा, एवमनन्तशब्दोपलक्षिता अनन्तानुबन्धिन । ते हि मोहनीयस्यांशाः भागा , तांश्चिक्षपयिषुरसंख्येयगुणनिर्जरक ततोऽपि क्षपक ,तस्मादपि क्षीणानन्तानुबन्धिक-

षाय । एतदेव दर्शनमोहनीयत्रयेऽभिमुखक्रियारूढापवर्गत्रयमायोज्यं, ततोऽपि क्षीणसप्तकात् क्षीणसप्तक एवोपसमश्रेण्यारूढोऽसंख्येयगुणनिर्जरकस्ततोऽप्युपशान्तमोहस्तस्मादपि चारित्रमोहनीयक्षपकस्ततोऽपि क्षीणमोह , अत्र चाभिमुखादि त्रयं यथासंभवमायोजनीयमस्मादपि जिनो भवस्थकेवली तस्मादपि शैलेश्यवस्थोऽसंख्येयगुणनिर्जरकस्तदेवं कर्मनिर्जरायै असंख्येयलोकाकाशप्रदेशप्रमाणनिष्पादितसंयमस्थानप्रचयोपात्तश्रेणि सोत्तरोत्तरेणामसंख्येयगुणा,उत्तरोत्तरप्रवर्द्धमानाध्यवसायकण्डकोपपत्तेरिति । कालस्तु तद्विपर्ययेणायोगिकेवलिन आरभ्य प्रतिलोमतया संख्येयगुणया श्रेण्या ज्ञेय ,इदमुक्तं भवति-यावत्कालेन यावत्कर्मायोगिकेवली क्षपयति तावन्मात्रं कर्म सयोगिकेवली संख्येयगुणेन कालेन क्षपयति, एवं प्रतिलोमतया यावद्धर्मपिपृच्छिपुस्तावन्नेयमिति गाथाद्वयार्थ ।

एवमनन्तरोक्तया नीत्या दर्शनवत. सफलानि तपोज्ञानचरणान्यभिहितानि, यदि पुन केनचिदुपाधिना विदधाति तत सफलत्वाभाव । कश्चासावुपाधिस्तमाह—

आहारउवहिपूआ, इड्डीसु य गारवेसु कइतवियं ।
एमेव वारसविहे, तवम्मि न हु कइतवे समणो ॥२२५॥

आहारश्च उपधिश्च पूजा च ऋद्धिश्चामर्षौषध्यादिका आहारोपधिपूजर्द्धयस्तासु निमित्तभूतासु ज्ञानचरणक्रिया करोति । तथा गारवेषु त्रिषु प्रतिबद्धो यत्करोति तत् कृत्रिममित्युच्यते, यथा च ज्ञानचरणयोराहाराद्यर्थमनुष्ठानं कृत्रिमं सन्न फलवद्भवत्येवं सबाह्याभ्यन्तरे द्वादशप्रकारे तपस्यपीति । न च कृत्रिमानुष्ठायिन श्रमणभावो न चाश्रमणस्यानुष्ठानं गुणवदिति । तदेवं निरुपधेर्दर्शनवतस्तपोज्ञानचरणानि सफलानीति स्थितमतो दर्शने यतितव्यम् । दर्शनं च तत्त्वार्थश्रद्धान, तत्त्व चोत्पन्नापगतकलङ्काशेषपदार्थसत्ताव्यापिज्ञानैस्तीर्थकृद्भिर्यदभाषि । आचा० १ श्रु० ४ अ० १ उ० । कर्म० । प्रति० ।

( ६ ) साम्प्रतं विशेषतो गृहिधर्मव्याख्यानावसर., स च सम्यक्त्वमूलक इति प्रथमं सम्यक्त्व प्रस्तूय तदेव लक्षयति—

न्याय्यश्च सति सम्यक्त्वे-ऽणुव्रतप्रमुखग्रहः ।
जिनोक्ततत्त्वेषु रुचिः, शुद्धा सम्यक्त्वमुच्यते ॥२१॥

सति-विद्यमाने सम्यक्त्वे-सम्यग्दर्शने चकारोऽवधारणार्थो भिन्नक्रमश्च , तत सम्यक्त्वे सत्येवेत्यर्थो लभ्यते । अणुव्रतगुणव्रतशिक्षाव्रतानां ग्रहोऽभ्युपगमो न्याय्य -उपपन्नः , नत्वन्यथा—सम्यक्त्वेऽसति , निष्फलत्वप्रसङ्गात् , यथोक्तम्—" सस्यानीवोषरक्षेत्रे, निक्षिप्तानि कदाचन । न व्रतानि प्ररोहन्ति , जीवे मिथ्यात्ववासिते ॥ १ ॥ सयमा नियमा सर्वे , नाश्यन्ते तेन पावना । क्षयकालानलेनेव , पादपा फलशालिन ॥ २ ॥ " इति । सम्यक्त्वमेव दर्शयति—' जिनोक्ते ' इत्यादि , जिनोक्तेषु तत्त्वेषु जीवाजीवादिपदार्थेषु या शुद्धा—अज्ञानसंशयविपर्यासनिराकरणेन निर्मला रुचि —श्रद्धानं सा ' सम्यक्त्वमुच्यते ' जिनैरिति शेष । तद्विशेषतो गृहिधर्म इति , पूर्वप्रतिज्ञात सर्वत्र योज्यम् । नन्विदं तत्त्वार्थश्रद्धान सम्यक्त्वमिति पर्यवसन्नम् , तत्र श्रद्धानं च तथेति प्रत्यय' , स च मानसोऽभिलाष. । नचायमपर्याप्तकाद्यवस्थायामिष्यते, सम्यक्त्व तु तस्यामपीष्टं , षट्षष्टिसागरोपमरूपाया. साद्यपर्यवसितकालरूपायाश्च तस्योत्कृष्टस्थिते. प्रतिपादनादिति कथ नागमविरोध. ? इत्यत्रोच्यते—तत्त्वार्थश्रद्धान सम्यक्त्वस्य कार्यं, सम्यक्त्व तु मिथ्यात्वक्षयोपशमादिजन्य शुभ आत्मपरिणामविशेष । आह च—" से अ समत्ते, पसत्थसंमत्तमोहणीअकम्माणुवेअणोवसमक्खयसमुत्थे पसमसंवेगाइलिङ्गे सुहे आयपरिणामे पणत्ते । " इदं च लक्षणममनस्केषु सिद्धादिष्वपि व्यापकम् । इत्थं च सम्यक्त्वे सत्येव यथोक्तं श्रद्धानं भवति , यथोक्तश्रद्धाने च सति सम्यक्त्वं भवत्येवेति श्रद्धानवतां सम्यक्त्वस्यावश्यम्भावित्वोपदर्शनाय कार्ये कारणोपचारं कृत्वा तत्त्वेषु रुचिरित्यस्य तत्त्वार्थश्रद्धानमित्यर्थपर्यवसानं न दोषाय । तथा चोक्तम्—" जीवाइनवपयत्थे , जो जाणइ तस्स होइ सम्मत्तं । भावेण सद्दहंते, अयाणमाणे वि सम्मत्तं ॥ १ ॥ " ति । नन्वेवमपि शास्त्रान्तरे—तत्त्वत्रयाध्यवसाय. सम्यक्त्वमित्युक्तम् । यत.—" अरिहं देवो गुरुणो , सुसाहुणो जिणमयं पमाणं च । इच्चाइसुहो भावो, सम्मत्तं बिंति जगगुरुणो ॥ १ ॥ " [ इति ] कथं न शास्त्रान्तरविरोध ? इति चेन्न, अत्र प्रकरणे जिनोक्ततत्त्वेषु रुचिरिति यतिश्रावकाणा साधारणं सम्यक्त्वलक्षणमुक्तं , शास्त्रान्तरे तु गृहस्थानां देवगुरुधर्मेषु पूज्यत्वोपास्यत्वानुष्ठेयत्वलक्षणोपयोगवशाद्देवगुरुधर्मतत्त्वप्रतिपत्तिलक्षणं सम्यक्त्वं प्रतिपादितं, तत्रापि देवा गुरवश्च जीवतत्त्वे , धर्मः शुभाश्रवे संवरे चान्तर्भवतीति न शास्त्रान्तरविरोधः । सम्यक्त्वं चार्हद्धर्मस्य मूलभूतं यतो द्विविधं त्रिविधेनेत्यादिप्रतिपत्त्या आद्यद्वादशवर्ती सम्यक्त्वोत्तरगुणरूपभेदद्वययुतामाश्रित्य त्रयोदशकोटिशतानि चतुरशीतिकोट्य. सप्तविंशतिः सहस्राणि द्वे शतं च द्व्युत्तरे भङ्गा. स्युः । एषु च [ केवलं ] सम्यक्त्वं विना च नैकस्यापि भङ्गस्य संभव , अत एव ' मूलं दार ' मित्यादि, एतद्भावना वक्ष्यमाणा युक्ता एवेति । ध० २ अधि० ।

[ १० ] एतस्य फल चैवमाहु —

अंतोमुहुत्तमित्तं, पि फासिअं हुज्ज जेहि सम्मत्तं ।
तेसिं अवड्डपुग्गल-परिअट्टो चेव संसारो ॥ १ ॥
सम्मद्दिट्ठी जीवो, गच्छइ नियमा विमाणवासीसु ।
जइ न विगयसम्मत्तो, अहव न बद्धाउओ पुव्विं ॥२॥
जं सक्कइ तं कीरइ, जं च न सक्कइ तयम्मि सद्दहणा ।
सद्दहमाणो जीवो, वच्चइ अयरामरं ठाणं ॥ ३ ॥

शिष्यव्युत्पादनार्थं चेत्थमुपाधिभेदेन सम्यक्त्वभेदनिर्देश , तन्न क्वचित्केषाञ्चिदन्तर्भावेऽपि न क्षतिरित्युत्तराध्ययनवृत्तौ । यथा च नान्तर्भावस्तथोक्तमस्माभि , तथापि नैतदन्यतरत्वं सम्यक्त्वलक्षण, रुचीना तत्तद्विषयभेदेन परिगणनस्याशक्यत्वात् , रुचे प्रीतिरूपत्वेन वीतरागसम्यक्त्वेऽव्याप्तेश्च । 'दसविहे सरागसम्मत्तदंसणे पण्ण-

ते ' इति स्थानाङ्गसूत्रस्य स्वारस्येन सरागसम्यक्त्वस्यैव लक्ष्यत्वेन च सरागस्यानुगतत्वेन, लक्ष्यभेदाल्लक्षणभेदो ऽवश्यमनुसरणीय इति । वस्तुतो लक्षणमिह लिङ्गं व्यञ्जकमिति यावत् व्यञ्जकस्य च वह्निव्यञ्जकधूमालोकवदननुगमे ऽपि न दोष । अत एव च-'नाणं च दंसणं चेव' इत्यादिना ज्ञानदर्शनचारित्रतपःप्रभृतीनामननुगतानामेव जीवस्वरूपव्यञ्जकत्वरूपजीवलक्षणत्वम् । उक्तलिङ्गं विना ऽपि लैङ्गिकसद्भावे ऽप्यविरोधश्च । यदाहुरध्यात्ममतपरीक्षायामुपाध्यायश्रीयशोविजयगणयः-' जं च जिअलक्खणं तं, उवइट्ठं तत्थ लक्खणं लिङ्गं । तेण विणा सो जुज्जइ, धूमेण विणा हुआसु व्व ॥ १ ॥ " त्ति । एवं च रुच्यभावे ऽपि वीतरागसम्यक्त्वसद्भावान्न क्षतिः । व्यङ्ग्यं त्वेकमनाविलसकलज्ञानादिगुणैकरसस्वभावं शुद्धात्मपरिणामरूपं परमार्थतो ऽनाख्येयमनुभवगम्यमेव सम्यक्त्वम् । तदुक्तं धर्मबीजमधिकृत्योपदेशपदे-" पायमणक्खेअमिणं, अणुहवगम्मं तु सुद्धभावाणं । भवखयकरं ति गरुअं, बुहेहिं सयमेव विण्णेयं ॥ १ ॥" ति । स्वयमिति तत्तद्योगयोगतः, इक्षुक्षीरादिरसमाधुर्यविशेषाणामिवानुभवे ऽप्यनाख्येयत्वात् । उक्तं च-" इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् । तथापि न तदाख्यातुं, सरस्वत्या ऽपि पार्यते ॥ १ ॥ " इति । यदि च धर्मबीजस्याप्येवमनुभवैकगम्यत्वं, का वार्त्ता तर्हि भवशतसहस्रदुर्लभस्य साक्षान्मोक्षफलस्य चारित्रैकप्राणस्य सम्यक्त्वस्य ? इति शुद्धात्मपरिणतिस्वरूपे हि तत्र नातिरिक्तप्रमाणानां प्रवृत्तिः । उक्तं च शुद्धात्मस्वरूपमधिकृत्याचारसूत्रे-"सव्वे सराणि अट्टंति, तक्का जत्थ ण विज्जइ, मई तत्थ ण गाहिआ" इत्यादि; तदेतद् ज्ञानादिगुणसमुदायाद्भेदाभेदादिना विवेचयितुमशक्यमनुभवगम्यमेवेति स्थितम् । अत्र पद्यं-" न भिन्नं नाभिन्नं त्युभयमपि नो नाप्यनुभयं, न वा शाब्दन्यायाद्भवति भजनाभाजनमपि । गुणासीनं लीनं निरवधिविविध्यञ्जनपदे, यदेतत्सम्यक्त्वं तदनुकुरुते पानकरसम् ॥ १ ॥ न केनाप्याख्यातं न च परिचितं नाप्यनुमितं, न चार्थादापन्नं क्वचिदुपमितं नापि विबुधैः । विशुद्धं सम्यक्त्वं न च हृदि न नालिङ्गितमपि स्फुरत्यन्तर्ज्योतिर्निरुपधिसमाधौ समुदितम् ॥ २ ॥" इत्यलं प्रसङ्गेन । प्रकृतमनुसरामः । निसर्गाधिगमयोरुभयोरप्येकमन्तरङ्गं कारणमाह-मिथ्यात्वपरिहारेणैव-मिथ्यात्वं जिनप्रणीततत्त्वविपरीतश्रद्धानलक्षणं, तस्य परिहारेणैव सर्वथा त्यागे त्रिविधं त्रिविधेन प्रत्याख्यानेनेति यावत् । आह च-' मिच्छत्तपडिक्कमणं तिविहं तिविहेण नायव्वं ' ति । ध० २ अधि० ।

देवो दुर्लभः सम्यक्त्वपरिणाम इह इत्युक्तं तद्भावश्च यत्प्रतिपत्त्या मनागसन्नपि भवति तत्प्रतिपत्तावाश्च येषां प्रतिपत्तिविधेया तद्धि बन्धकत्वेन वाबयुध्य हेयास्तानुपदिदर्शयिषुः सर्वस्यास्य शास्त्रस्य मूलबीजकल्पां देवादिद्वारपञ्चकप्रतिपादिकामिमां गाथामाह-

देवो धम्मो मग्गो, साहू तत्ताणि चेव सम्मत्तं ।
तव्विवरीयं मिच्छं-त्तदंसणं देसियं समए ॥ ५ ॥

दीव्यते-स्तूयते च कश्चित्पूर्वभवशुभपरंपरोपात्ततीर्थकृन्नामकर्मोदयतो नमन् ; त्रिविष्टपाधिपसुरेश्वरमर्त्याधिपति-भिरिति देवः, सम्यक्त्वमिति पूर्वपदस्येह संबन्धादेवकारस्य च पूर्वपदस्थस्य, ततश्च भण्यमानविशेषणकदम्बकयुक्त एव सम्यक्त्वं भवतीति गम्यते, इत्थंभूतदेवताविशेषप्रतिपत्तौ च प्रायः सम्यक्त्वमुदेत्यत, कारणे कार्योपचारादित्थमुपन्यास इत्येवं सर्वपदेष्वपि भावनीयम् । दुर्गतिगर्त्तादिप्रपतन्तं धारयतीति धर्मः, सर्वविदप्रणीतो हिंसादिलक्षणः सो ऽपि सम्यक्त्वमिति-मोक्षलक्षणमहानगरस्य मार्ग इव पन्था इव मार्गः सम्यग्ज्ञानादि, सो ऽपि सम्यग्ज्ञानदर्शनचरित्रैर्मोक्षं, साधयन्तीति साधवः ते ऽपि च सर्वविदुपदिष्टत्वेन यथावस्थितवस्तुस्तोमस्वरूपाविर्भावकानि तत्कानि जीवादीनि तानि च सम्यक्त्वं भवतीति योज्यम् । सर्वत्र चकारो ऽनुक्तसमुच्चयार्थः । एवकारो ऽवधारणार्थस्तौ च योजितावेव । तद्विपरीतं मिथ्यात्वदर्शनमिति-इत्थंभूतदेवधर्ममार्गसाधुतत्त्वविपरीतं-विपर्ययत्वं, स चाप्रणीतत्वेन शिवसौख्यसाधन प्रत्यनर्हत्वात्, मिथ्यादर्शनं-विपरीतदर्शनमिति यावदिति, दर्शितं समय-सिद्धान्ते तीर्थकृद्गणधरादिभिरिति आद्यद्वारगाथासमासार्थः । दर्श० ४ तत्त्व । पं० स० । कर्म० ।

औपशमिकसम्यक्त्वं तूपशमश्रेण्यां प्रथमसम्यक्त्वलाभे वा भवति जीवस्य । उक्तं च-"उवसामगसेढिगय-स्स होइ उवसामियं तु सम्मत्तं । जो वा अकयतिपुंजो, अखवियमिच्छो लहइ सम्मं ॥ १ ॥" ननु क्षायोपशमिकौपशमिकसम्यक्त्वयोः कः प्रतिविशेषः ? उच्यते, क्षायोपशमिके मिथ्यात्वदलिकवेदनं विपाकतो नास्ति प्रदेशतः पुनर्विद्यते, औपशमिके तु प्रदेशतो ऽपि नास्तीति विशेषः । कर्म० २ कर्म० । सूत्र० । ( 'किरियावाइ' शब्दे तृतीयभागे ५५६ पृष्ठे कालादिवादिनो वक्तव्यता गता । )

( ११ ) कर्मलेश्यादिप्रपञ्चसारविचारपरित्यागेन सम्यक्त्वस्वरूपस्यैव प्रकाशनं हेतुमाह-

सुयसायरो अपारो, आउं थोवं जिया य दुम्मेहा ।
तं किं पि सिक्खियव्वं, जं कज्जकरं च थोवं च ॥ ३ ॥

श्रुतमङ्गादिभेदभिन्नं जिनागमः तदेव सागरः श्रुतसागरः, अपारो ऽपर्यन्तो ऽतिबहुत्वात् आयुर्जीवितं स्तोकं-स्वल्पम्, जीवाः-प्राणिनः चशब्दः पुनरर्थस्ततः किमित्याह-तत्किमपि शिक्षितव्यमभ्यसनीयं यत् कार्यकरमभ्युप्यवकृत्यैव प्रयोजननिष्पादकं तत्, अयमर्थः-श्रुतसागरो ऽपारो निःसीमा आयुरपि तदधिगमहेतुकं स्वल्पं, सांप्रतपुरुषापेक्षया प्रायो वर्षशतान्तर्गतत्वात्, जीवाश्च पुनस्तदवतारे दुर्मेधसः तदवगमहेतुबुद्धिविकला पूर्वपुरुषापेक्षया ऽल्पमतित्वात्तदेतद्भाव्य यदेवार्थक्रियाकारि अल्पं च तदेवाभ्यसनीयं कार्यमिति गाथार्थः ।

सम्यक्त्वस्यैव दुर्लभत्ववर्णनद्वारेणैकान्ततः कार्यकारितामाह-

मिच्छत्तमहामोहऽ-न्धयारमूढाण एत्थ जीवाणं ।
पुण्णेहिं कह वि जायइ, दुलहं सम्मत्तपरिणामा ॥ ४ ॥

महाश्चासौ मोहश्च महामोहो मिथ्यात्वमेव महामोहः तस्मात्तेन चा ऽन्धकारं सम्यक्त्वस्यावरणं तस्मिन् तेन च मूढाः मिथ्यात्वमहामोहान्धकारमूढास्तेषाम्, अत्रेत्यस्मिन् जिनशासने चतुर्दशरज्ज्वात्मके वा लोके जीवानां भव्यप्राणिनां पु-

रथैः सम्यग्दर्शनावरणक्षयोपशमसमुत्थैः कथमपि महता कष्टेन जायते-समुत्पद्यन दुर्लभो-दुराप एव सम्यक्त्वपरिणामो मिथ्यात्वापगमेन यथावस्थितवस्तुस्वरूपानुष्ठानलक्षण, अयमभिप्राय -अनाद्यनन्तके पर्यटतां भव्यप्राणिनामपि मिथ्यात्वमोहमोहितानां सकलमलकलङ्कविकलशिवसुखतरुबीजं तत. सम्यक्त्वपरिणाम एव दुर्लभ', यत -"राजन्ति भूतिविपुलं सुरसंपदश्च, नागेन्द्रचन्द्रपदमुत्तमसौख्यहेतु । मातङ्गतुरगारथसन्ततिश्च, नार्यो वराश्च कुचकुम्भभरावनिम्रा. ॥ ६ ॥ अन्यच्च चारु यदिहास्ति शुभं शुभानां, संसारगारगमनैककर विमुच्य । सद्दर्शनं जिनगुरुप्रतिपत्तिहेतु, नैवास्ति दुर्लभमहो भुवनेऽखिलेऽपि ॥७॥" दर्श० ४ तत्त्व ।

इदमेव निदर्शनमङ्गीकृत्योपदिशन्नाह—

इय सव्वेण वि सम्मं, सक्कं अप्पत्तियं सइ जणस्स ।
नियमा परिहरियव्वं,इयरम्मि सतत्तचिंता तु ॥ १७ ॥

इति—श्रीमद्वीरवर्द्धमानस्वामिना चेत्यर्थ. सर्वेणापि-समस्तेनापि जिनभवनानि विधानार्थिना—सयमार्थिना वा न कतरेणेवेत्यर्थ. अप्रीतिक परिहर्त्तव्यमिति योग , कथ सम्यग्भावशुद्ध्या,किंमूलं तदित्याह-शक्यं शक्यपरिहारमेव न त्वशक्यमपि तस्य परिहर्तुमशक्यत्वादेवाशक्यानुष्ठानापदेशरूपत्वात् 'अप्पत्तियं'-ति अप्रीतिरेवाप्रीतिकं सकृत् सदा सर्वकाल जनस्य-लोकस्य नियामाच्च तथा परिहर्तव्यं वर्जनीयमितरस्मिन्नशक्यपरिहारे प्रीतिके स्वतत्त्वचिन्ता तु स्वस्वभावपर्यालोचनमेव विधेयम् । दर्श०१ तत्त्व ।

इदानीं सम्यक्त्व एक आदराधानाय दृष्टान्तदार्ष्टान्तिकोपदर्शनपूर्वकं सम्यक्त्वमाहात्म्यवर्णनद्वारेणोपदिशन्निमां गाथामाह—

कुव्वमाणो विहिकिरियं, परिच्चयंतो वि सयणधणभोए ।
दिंतो वि दुहस्स उरं, न जयइ अंधो पराणीयं ॥ १८ ॥

व्याख्या—कुर्वन्नपि—विदधानोऽपि क्रियां-प्राणापहारकारिप्रहरणप्रक्षेपादिकां परित्यजन्नपि स्वजनधनभोगान्-तत्प्रतिबन्धे हि सम्यग्व्यापारासंभवान्न साध्यसिद्धि संभवति , ततस्तत्प्रतिहार इहोच्यते , ददपि दु खस्योर' न जयत्यन्धः परानीकं परसैन्यं परम्पराभवकारि समरसूलकारणनयनरहितत्वात्तस्येत्यक्षरार्थ. । दर्श० ४ तत्त्व ।

( १२ ) सम्यक्त्वं मोक्षबीजम्—

सम्मं च मोक्खबीअं, तं पुण भूअत्थसद्दहणरूवं ।
पसमाइलिंगगम्मं, सुहाय परिणामरूव तु ॥ १०२८ ॥

सम्यक्त्वं च मोक्षबीज वर्त्तते ,तत्पुन स्वरूपेण भूतार्थश्रद्धानरूप तथा प्रशमादिलिङ्गगम्यमेतत् । शुभात्मपरिणामरूपं जीवधर्म्म इति गाथार्थ.॥

तम्मि सइ सुहं नेअ , अकलुसभावस्स हंदि जीवस्स ।
अणुबंधो य सुहो खलु, धम्मपवत्तस्स भावेण ॥१०२९॥

तस्मिन् सति सुख ज्ञेय-सम्यक्त्वे कलुषभावस्य हन्दि जीवस्य शुद्धाशयस्य, अनुबन्धश्च शुभ खलु तस्मिन् सति धर्मप्रवृत्तस्य भावेन—परमार्थेनेति गाथार्थ ।

भूअत्थसद्दहाणं, च होइ भूयत्थवायगा पायं ।
सुअधम्माओ सो पुण, पहीणदोसस्स वयणं तु ।१०३०॥

भूतार्थश्रद्धानं च सम्यक्त्वं भवति भूतार्थवाचकात् प्राय इति श्रुतधर्म्माद्-आगमात् । स पुन प्रक्षीणदोषस्य वचनमेवेति गाथार्थ । पं० व०४ द्वार। (नयेषु मिथ्यात्वसम्यक्त्वं 'णय' शब्दे चतुर्थभागे १८६७ पृष्ठे उक्तम् ।) अनभिक्रान्तसंयोगस्य भावतमसि वर्त्तमानस्य सम्यक्त्वलाभो नास्तीत्युक्तम् ।

( १३ ) तदेव सूत्रानुगमायातेन सूत्रेण दर्शयति—

सव्वे पाणा सव्वे भूया सव्वे जीवा सव्वे सत्ता न हंतव्वा न अज्जावेयव्वा न परिघित्तव्वा न परियावेयव्वा न उद्वेयव्वा, एस धम्मे सुद्धे निइए समिच्च लोयं खेयन्नेहिं पवेइए, तं जहा—उट्ठिएसु वा अणुट्ठिएसु वा उवट्ठिएसु वा अणुवट्ठिएसु वा उवरयदंडेसु वा अणुवरयदंडेसु वा सोवहिएसु वा अणोवहिएसु वा संजोगरएसु वा असंजोगरएसु वा, तच्चं चेयं तहा चेयं अस्सिं चेयं पवुच्चइ। (सू०१२६४)

सर्वेऽपि प्राणिन. पर्यायशब्दाभिहिता न हन्तव्याः दण्डकशादिभि नाज्ञापयितव्या. प्रसह्याभियोगदानतः , न परिग्राह्या भृत्यदासदास्यादिममत्वपरिग्रहत. , न परितापयितव्या शारीरमानसपीडोत्पादनत", नापद्रावयितव्याः प्राणव्यपरोपणत. एष —अनन्तरोक्तो धर्म्मः , दुर्ग—स्वर्गलासुगतिसोपानदेश्य. । अस्य च प्रधानपुरुषार्थत्वाद्विशेषण दर्शयति—शुद्ध.—पापानुबन्धरहित. न शाक्यधिग्जातीनामिवैकेन्द्रियपञ्चेन्द्रियवधानुमतिकलङ्काङ्कित. तथा नित्यः—अप्रच्युतिरूप , पञ्चस्वपि विदेहेषु सद्भावनात् , तथा शाश्वतः शाश्वतगतिहेतुत्वात् , यदिवा नित्यत्वाच्छाश्वतो , न तु नित्यं भूत्वा न भवति , भव्यत्ववत् , अभूत्वा च नित्य भवति घटाभाववदिति, अयं तु त्रिकालवस्थायीति , अमु च लोकं—जन्तुलोकं दु खसागरावगाढ समेत्य—ज्ञात्वा तदुत्तरणाय खेदज्ञै.—जन्तुदु खपरिच्छेत्तृभि प्रवेदित.—प्रतिपादित इति, एतच्च गौतमस्वामी स्वमनीषिकापरिहारेण शिष्यमतिस्थैर्यार्थं वभाषे ।

एतमेव सूत्रोक्तमर्थं निर्युक्तिकार सूत्रसंस्पर्शकेन गाथाद्वयेन दर्शयति—

जे जिणवरा अईया, जे संपइ अणागए काले ।
सव्वे वि ते अहिंसं,वदिंसु वदिहिंति वि वदिंति ॥२२६॥

छप्पिय जीवनिकाए, णो वि हणे णोऽवि अ हणाविज्जा ।
नोऽवि अ अणुमन्निज्जा, सम्मत्तस्सेस निज्जुत्ती॥२२७॥

गाथाद्वयमपि कण्ठ्यम् । तीर्थकरोपदेशश्च परोपकारितया तत्स्वाभाव्यादेव प्रवर्त्तमानो भास्करोदय इव प्रबोध्य विशेषनिरपेक्षतया प्रवर्त्तते,तद्यथेत्यादिना दर्शयति—' तं जहा-उट्ठिएसु वा ' इत्यादि, धर्म्मचरणायोद्यता उत्थिता-ज्ञानदर्शनचारित्राद्यागवन्त , तद्विपर्ययेणानुत्थिता , तेषु निमित्तभूतेषु तानुद्दिश्य भगवता सर्वविदा त्रिजगत्पतिना धर्म्मः प्रवेदितः , एव सर्वत्र लगयितव्यम् , यदिवा-उत्थि-

तानुत्थितेषु द्रव्यतो निषरणानिषरणेषु, तत्रैकादशसु गणधरेषूत्थितेष्वेव वीरवर्द्धमानस्वामिना धर्मः प्रवेदितः, तत उपस्थिता धर्मं शुश्रूषवो जिघृक्षवो वा तद्विपर्ययेणानुपस्थितास्तेष्विति। निमित्तसप्तमी चेयम्-यथा 'चर्मणि द्वीपिनं हन्ती' ति, ननु च भावोपस्थितेषु चिलातिपुत्रादिष्विव धर्म्मकथा युक्तिमती अनुपस्थितेषु तु कं गुणं पुष्णाति ?, अनुपस्थितेष्वपीन्द्रनागादिषु विचित्रत्वात्कर्म्मपरिणतेः क्षयोपशमापादनाद् गुणवत्येवेति यत्किञ्चिदेतत्, प्राणिन आत्मानं वा दण्डयतीति दण्ड, स च मनोवाक्कायलक्षण, उपरतो दण्डो येषां ते तथा, तद्विपर्ययेणानुपरतदण्ड, तेषूभयरूपेष्वपि। तत्रोपरतदण्डेषु तत्स्थैर्यगुणान्तराधानार्थं देशना, इतरेषु तूपरतदण्डत्वार्थमिति। उपधीयते—संगृह्यत इत्युपधि, द्रव्यतो हिरण्यादि, भावतो माया। सह उपधिना वर्त्तन्त इति सोपधिकास्तद्विपर्ययेणानुपधिकास्तेष्विति, संयोग—सम्बन्ध पुत्रकलत्रमित्रादिजनितस्तत्र रता. संयोगरतास्तद्विपर्ययेणैकत्वभावनाभाविता असंयोगरतास्तेष्विति, तदेवमुभयरूपेष्वपि यद्भगवता धर्मदेशनाऽकारि तत् तथ्यं—सत्यमेतदिति, चशब्दो नियमार्थ, तथ्यमेवैतद्भगवद्वचनम्। यथाप्ररूपितवस्तुसद्भावात्तथ्यता वचसो भवतीत्यतो वाच्यमपि तथैवेति दर्शयति-तथा चैतद्वस्तु यथा भगवान् जगाद। यथा-सर्वे प्राणा न हन्तव्या इत्यादि, एवं सम्यग्दर्शनं श्रद्धानं विधेयम्, एतच्चास्मिन्नेव मौनीन्द्रप्रवचने सम्यग्मोक्षमार्गविधायिनि समस्तदम्भप्रपञ्चोपरते प्रकर्षेणोच्यते प्रोच्यत इति, न तु यथा अन्यत्र 'न हिंस्यात्सर्वभूतानी' त्यभिधायान्यत्र वाक्यं यज्ञपशुवधाभ्यनुज्ञानात् पूर्वोत्तरबाधेति।

(१४) तदेव सम्यक्त्वस्वरूपमभिधाय तदवाप्तौ यद्विधेयं तद्दर्शयितुमाह—

**तं आइत्तु न निहे न निक्खिवे जाणित्तु धम्मं जहा तहा, दिट्ठेहिं निव्वेयं गच्छिज्जा, नो लोगस्सेसणं चरे।(सू० १२७)**

तत्—तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनमादाय—गृहीत्वा तत्कार्याकरणतो 'न निहे' ति—न गोपयेत् तथाविधसंसर्गादिनिमित्तोत्थापितमिथ्यात्वोऽपि जीवसामर्थ्यगुणाञ्च त्यजेदपि, यथा वा शैवशाक्यादीनां गृहीत्वा व्रतानि पुनरपि यज्ञेश्वरयागादिविधिना गुरुसमीपे निक्षिप्योत्प्रव्रजनम्, एवं गुर्वादेः सकाशादवाप्य सम्यग्दर्शनं न निक्षिपेत्—न त्यजेत्, किं कृत्वा ?—यथा तथाऽवस्थितं धर्मं ज्ञात्वा श्रुतचारित्रात्मकमवगम्य, वस्तुनो वा धर्मं—स्वभावमवबुध्येति। तदवगमे तु किं चापरं कुर्यादित्याह—'दिट्ठेहिं' इत्यादि दृष्टैरिष्टानिष्टरूपैर्निर्वेदं गच्छेद्—विरागं कुर्यादित्यर्थः, तथाहि-शब्दैः श्रुतैः रसैरास्वादितैर्गन्धैराघ्रातैः स्पर्शैः स्पृष्टैः सद्भिरेव भावयेत्—यथा शुभेतरतापरिणामवशाद्भवतीत्यत कस्तेषु रागो द्वेषो वेति। किं च-'नो लोयस्स' इत्यादि, लोकस्य—प्राणिगणस्यैषणा-अन्वेषणा इष्टेषु-शब्दादिषु प्रवृत्तिरनिष्टेषु तु द्वेषबुद्धिस्तां न चरेत्—न विदध्यात्।

(१५) यस्य चैषा लोकैषणा नास्ति तस्यान्याप्यप्रशस्ता मतिर्नास्तीति दर्शयति—

**जस्स नत्थि इमा जाई अण्णा तस्स कओ सिया ? दिट्ठं सुयं मयं विण्णायं जं एयं परिकहिज्जइ, समेमाणा पलेमाणा पुणो पुणो जाइं पकप्पंति। ( सू० १२८ )**

यस्य मुमुक्षोरेषा ज्ञाति—लोकैषणाबुद्धि नास्ति—न विद्यते, तस्यान्या सावद्यारम्भप्रवृत्ति कुतः स्यात् ?, इदमुक्तं भवति-भोगेच्छारूपा लोकैषणां परिजिहीर्षोर्नैव सावद्यानुष्ठानप्रवृत्तिरुपजायते, तदर्थत्वात्तस्या इति, यदिवा-इमा—अनन्तरोक्तत्वात् प्रत्यक्षा सम्यक्त्वज्ञाति प्राणिनो न हन्तव्या इति वा यस्य न विद्यते तस्यान्या अविवेकिनी बुद्धि कुमार्गसावद्यानुष्ठानपरिहारद्वारेण कुतः स्यात् ?। शिष्यमतिस्थैर्यार्थमाह—'दिट्ठं' मित्यादि, यदेतन्मया परिकथ्यते तत्सर्वैः केवलज्ञानावलोकेन दृष्टं,तत् शुश्रूषुभि श्रुतं, लघुकर्म्मणा भव्यानां मतं, ज्ञानावरणीयक्षयोपशमाद्विशेषेण ज्ञात विज्ञातम्, अतो भवताऽपि सम्यक्त्वादिके मत्कथिते यत्नवता भवितव्यमिति। ये पुनर्यथोक्तकारिणो न स्यु ते कथम्भूता भवेयुरित्याह—'समेमाणा' इत्यादि, तस्मिन्नेव मनुष्यादिजन्मनि शाम्यन्तो-गार्ध्येनात्यर्थमासेवां कुर्वन्तः, तथा प्रलीयमानाः—मनोज्ञेन्द्रियार्थेषु पौन पुन्येनैकेन्द्रियद्वीन्द्रियादिकां जातिं प्रकल्पयन्ति-संसाराविच्छित्तिं विदधतीत्यर्थः।

यद्येवमविदितवेद्याः साम्प्रतेक्षिणो यथा जन्मकृतरतय इन्द्रियार्थेषु प्रलीनाः पौन पुन्येन जन्मादिकृतसन्धाना जन्तवस्ततः किं कर्त्तव्यमित्याह—

**अहो अ राओ य जयमाणे धीरे सया आगयपण्णाणे पमत्ते वहिया पास अप्पमत्ते सया परिक्कमिज्जासि त्ति बेमि। ( सू० १२९ )**

अहश्च रात्रिं च यतमान एव यत्नवानेव मोक्षाध्वनि धीरः—परीषहोपसर्गाक्षोभ्य सदा—सर्वकालम् आगत—स्वीकृत प्रज्ञानं-सदसद्विवेको यस्य स तथा, प्रमत्तान्-असयतान् परतीर्थिकान्वा धर्म्माद्बहिर्व्यवस्थितान् पश्य, तांश्च तथाभूतान् दृष्ट्वा किं कुर्यादित्याह—' अप्पमत्ते ' इत्यादि, अप्रमत्त सन् निद्राविकथादिप्रमादरहितोऽक्षिनिमेषोन्मेषादावपि सदोपयुक्तः पराक्रमेथाः कर्म्मरिपून् मोक्षाध्वनि वा। इतिरधिकारसमाप्तौ, ब्रवीमीति पूर्ववत्। इति सम्यक्त्वाध्ययने प्रथमोद्देशकटीका परिसमाप्ता। उक्तः प्रथमोद्देशक।

साम्प्रतं द्वितीयव्याख्या प्रतन्यते, अस्य चायमभिसम्बन्धः—इह अनन्तरोद्देशके सम्यग्वाद प्रतिपादित, स च प्रत्यनीकमिथ्यावादव्युदासेनात्मलाभं लभते, व्युदासश्च न परिज्ञानमन्तरेण, परिज्ञानं च न विचारमृते,अतो मिथ्यावादभूततीर्थिकमतविचारणायेदमुपक्रम्यते, अनेन सम्बन्धेनायातस्यास्योद्देशकस्येदमादिसूत्रम्-' जे आसवा ' इत्यादि, यदिवेह सम्यक्त्वमधिकृत, तच्च सप्तपदार्थश्रद्धानात्मकम्,तत्र मुमुक्षुणाऽवगतशस्त्रपरिज्ञाजीवाजीवपदार्थेन संसारमोक्षकारणे निर्णेतव्ये, तत्र संसारकारणमास्रवस्तद्ग्रहणाच्च बन्धग्रहणं, मोक्षकारण तु निर्जरा तद्ग्रहणाच्च संवरस्तत्कार्यभूतश्च मोक्ष मचिरेणा भव-

तीत्यत आश्रवनिर्जरे संसारमोक्षकारणभूते सम्यक्त्वविचारायाते दर्शयितुमाह—

**जे आसवा ते परिस्सवा जे परिस्सवा ते आसवा,जे अणासवा ते अपरिस्सवा जे अपरिस्सवा ते अणासवा, एए पए संबुज्झमाणे लोयं च आणाए अभिसमिच्चा पुढो पवेइयं। ( सू० १३० )**

'य' इति सामान्यनिर्देश, आश्रवत्यष्टप्रकारं कर्म्म यैरारम्भैस्ते आस्रवा, परि—समन्तात्स्रवति-गलति यैरनुष्ठानविशेषैस्ते परिस्रवा, य एवास्रवा—कर्म्मबन्धस्थानानि त एव परिस्रवा -कर्म्मनिर्जरास्पदानि। इदमुक्तं भवति-यानि इतरजनाचरितानि स्रगङ्गनादीनि सुखकारणतया तानि कर्म्मबन्धहेतुत्वादास्रवा, पुनस्तान्येव तत्त्वविदा विषयसुखपराङ्मुखानां नि सारतया संसारसरणिदेश्यानीति कृत्वा वैराग्यजनकानि अत परिस्रवा -निर्जरास्थानानि। सर्ववस्तूनामनैकान्तिकतां दर्शयितुमेतदेव विपर्ययेणाह-'जे परिस्सवा' इत्यादि, य एव परिश्रवा -निर्जरास्थानानि—अर्हत्साधुतपश्चरणदशविधचक्रवालसामाचार्यनुष्ठानादीनि तान्येव कर्म्मोदयावष्टब्धशुभाध्यवसायस्य दुर्गतिमार्गप्रवृत्तसार्थवाहस्य जन्तोर्महाशातनावतः सातर्द्धिरसगारवप्रवणस्यास्रवा भवन्ति—पापोपादानकारणानि जायन्ते। इदमुक्तं भवति—यावन्ति कर्म्मनिर्जरार्थं संयमस्थानानि तद्बन्धनायासंयमस्थानान्यपि तावन्त्येव, उक्तं च-"यथाप्रकारा यावन्त,संसारावेशहेतव । तावन्तस्तद्विपर्यासा-न्निर्वाणसुखहेतव ॥१॥" तथाहि-रागद्वेषवासितान्त करणस्य विषयसुखोन्मुखस्य दुराशयत्वात्सर्वं संसाराय, पिचुमन्दरसवासितास्यस्य दुग्धशर्करादिकटुकत्वापत्तिवदिति। सम्यग्दृष्टेस्तु विदितससारोदन्वत. न्यक्कृतविषयाभिलाषस्य सर्वमशुचि दु खकारणमिति च भावयत. सञ्जातसंवेगस्येतरजनसंसारकारणमपि मोक्षायेति भावार्थ। पुनरेतदेव गतप्रत्यागतसूत्र सप्रतिषेधमाह-'जे अणासवा' इत्यादि, प्रसज्यप्रतिषेधस्य क्रियाप्रतिषेधपर्यवसानतया परिस्रवा इत्यनेन, सह सम्बन्धाभावात् पर्युदासोऽयम्, आस्रवेभ्योऽन्येऽनास्रवा.—व्रतविशेषा, तेऽपि कर्म्मोदयादशुभाध्यवसायिनोऽपरिस्रवा कर्म्मण, कोङ्कणार्यप्रभृतीनामिवेति, तथाऽपरिस्रवा —पापोपादानकारणानि केनचिदुपाधिना प्रवचनोपकारादिना क्रियमाणा. कणवीरलताभ्रामकक्षुल्लकस्येवानास्रवा —कर्म्मबन्धनानि न भवन्ति, यदिवा-आस्रवन्तीत्यास्रवा, पचाद्यच् एवं परिस्रवन्तीति परिस्रवा, अत्र चतुर्भङ्गिका—तत्र मिथ्यात्वाविरतिप्रमादकषाययोगैर्य एव कर्म्मणामास्रवा —बन्धका त एवापरेषा परिस्रवा —निर्जरका, एते च प्रथमभङ्गपतिता सर्वेऽपि ससारिणश्चतुर्गतिका, सर्वेषा प्रतिक्षणमुभयसद्भावात्, तथा ये आस्रवास्तेऽपरिस्रवा इति शून्योऽयं द्वितीय भङ्गको, बन्धस्य शाटाविनाभावित्वाद्, एव येऽनास्रवास्ते परिस्रवा; एते चायोगिकेवलिनस्तृतीयभङ्गपतिता, चतुर्थभङ्गपतितास्तु सिद्धा, तेषामनास्रवत्वादपरिस्रवत्वाच्चेति, अत्र चाद्यन्तभङ्गकौ सूत्रोपात्तौ, तदुपादाने च मध्योपादानस्यावश्यभावित्वात् मध्यभङ्गकद्वयग्रहण द्रष्टव्यमिति। यद्येव तत किमित्याह-'एए पए' इत्यादि, एतानि-अनन्तरोक्तानि पद्यते—गम्यते येभ्योऽर्थस्तानि पदानि, तद्यथा—ये आस्रवा इत्यादीनि, परस्य चार्थावगत्यर्थं शब्दप्रयोगादितत्पदवाच्यानर्थांश्च सम्यग्—अविपर्यासेन बुध्यमानस्तथा लोकं- जन्तुगणमास्रवद्वारायातेन कर्म्मणा बध्यमान तपश्चरणादिना च मुच्यमानमाज्ञया—तीर्थकरप्रणीतागमानुसारेणाभिसमेत्य—आभिमुख्येन सम्यक् परिच्छिद्य चशब्दो भिन्नक्रम पृथक् प्रवेदितं चाभिसमेत्य पृथगास्रवोपादान निर्जरोपादानं चेत्येतच्च ज्ञात्वा को नाम धर्म्मचरण प्रति नोद्यच्छेदिति?, कथ प्रवेदितमिति चेत्? तदुच्यते, आस्रवस्तावज्ज्ञानप्रत्यनीकतया ज्ञाननिह्नवेन ज्ञानान्तरायेण ज्ञानप्रद्वेषेण ज्ञानात्याशातनया ज्ञानविसंवादेन ज्ञानावरणीयं कर्म्म बध्यते, एव दर्शनप्रत्यनीकतया यावद्दर्शनाविसंवादेन दर्शनावरणीय कर्म्म बध्यते, तथा प्राणिनामनुकम्पनतया भूतानुकम्पनतया जीवानुकम्पनतया सत्त्वानुकम्पनत्वेन बहूना प्राणिनामदु खोत्पादनतया अशोचनतया अजूरणतया अपीडनतया अपरितापनतया सातावेदनीय कर्म्म बध्यते, एतद्विपर्ययाच्चासातावेदनीयमिति। तथाऽनन्तानुबन्ध्युत्कटतया तीव्रदर्शनमोहनीयतया प्रबलचारित्रमोहनीयसद्भावान्मोहनीय कर्म्म बध्यते, महारम्भतया महापरिग्रहतया पञ्चेन्द्रियवधात् कुणिमाहारेण नरकायुष्क बध्यते, मायावितया अनृतवादेन कूटतुलाकूटमानव्यवहारात्तिर्यगायुर्बध्यते, प्रकृतिविनीतनया सानुक्रोशतया अमात्सर्यान्मनुष्यायुष्क. सरागसंयमेन देशविरत्या बालतपसा अकामनिर्जरया देवायुष्कामिति, कायर्जुतया भावर्जुतया भाषर्जुतया अविसंवादनयोगेन शुभनाम बध्यते, विपर्ययाच्च विपर्यय इति, जातिकुलबलरूपतप श्रुतलाभैश्वर्यमदाभावादुच्चैर्गोत्र, जात्यादिमदात् परपरिवादाच्च नीचैर्गोत्र, दानलाभभोगोपभोगवीर्यान्तरायविधानादान्तरायिक कर्म्म बध्यते। एते ह्यास्रवा ॥ साम्प्रत परिश्रवा प्रतिपाद्यन्ते-अनशनादि सबाह्याभ्यन्तर तप इत्यादि, एवमास्रवकनिर्जरका. सप्रभेदा जन्तवो वाच्या, सर्वेऽपि च जीवादय पदार्था मोक्षावसाना वाच्या। एतानि च पदानि सम्बुध्यमानैस्तीर्थकरगणधरैर्लोकमभिसमेत्य पृथक् पृथक् प्रवेदितम्।

(१५)अन्योऽपि तदाज्ञानुसारी चतुर्दशपूर्वविदादि सत्त्वहिताय परेभ्य आवेदयतीत्येतद्दर्शयितुमाह—

**आघाइ नाणी इह माणवाणं संसारपडिवन्नाणं संबुज्झमाणाणं विन्नाणपत्ताणं, अट्टावि संता अदुवा पमत्ता अहा सच्चमिणं ति बेमि। ( सू० १३१ )**

ज्ञान सकलपदार्थाविर्भावकं विद्यते यस्यासौ ज्ञानी स आख्याति—आचष्ट इहेति प्रवचने केषा?-मानवाना, सर्वसंवरचारित्रार्हत्वात्तेषाम्, अथवोपलक्षणं चैतद्देवादीना, तत्रापि केवल्यादिव्युदासाय विशेषणमाह-'संसार' इत्यादि, संसार-चतुर्गतिलक्षणं प्रतिपन्ना ससारप्रतिपन्ना, तत्रापि ये धर्म्मं भोत्स्यन्ते अहीग्यन्त च मुनिसुव्रतस्वामिघोटकदृष्टान्तेन तेषामेवाख्यातीत्येतद्दर्शयति-'सम्बुध्यमानाना' यथोपदिष्ट धर्म्मं सम्यगवबुध्यमानानां, छद्मस्थेन त्वक्षातबुध्यमानेतरविशेषेण यादृग्भूताना कथयितव्य तान् सूत्रेणैव दर्शयति-'विज्ञानप्राप्ताना' हिताहितप्राप्तिपरिहाराध्यवसायो-विज्ञानं तत्प्राप्ता विज्ञानप्राप्ता, समस्त-

सर्वार्थसिद्धि. पर्याप्ताः, संक्षिप्त इत्यर्थः, नागार्जुनीयास्तु पठन्ति—"आयरइधम्मं खलु से जीवाणं, तं जहा-संसारपडिवन्नाणं माणुसभवत्थाणं आरंभविणईणं दुक्खुव्वेयसुहेसगाणं धम्मसवणगवेसयाण सुस्सूसमाणाणं पडिपुच्छमाणाणं विण्णाणपत्ताणं" एतच्च प्रायो गतार्थमेव, नवरमारम्भविनयिनामित्यारम्भाविनयः-आरम्भाभावः स विद्यते येषामिति मत्वर्थीयस्तेषामिति । यथा च ज्ञानी धर्ममाचष्टे तथा दर्शयति—' अट्टा वि ' इत्यादि, विज्ञानं प्राप्ता धर्मं कथ्यमानं कुतश्चिन्निमित्तादार्त्ता अपि सन्तः शालिभद्रादय इव तथाविधकर्मक्षयोपशमापन्नाः प्रतिपद्यन्ते तथाऽऽर्त्ताः—यदिवाऽऽर्त्ताः—दुःखिनः प्रमत्ताः-सुखिनः, तेऽपि प्रतिपद्यन्ते धर्मं किं पुनरपरे ?, अथवा-आर्त्ताः-रागद्वेषोदयेन प्रमत्ता विषये, ते च तीर्थिका गृहस्था वा संसारकान्तारं विशन्तः कथं भवतां विज्ञातक्षेत्रे थानां करुणास्पदानां रागद्वेषविषयाभिलाषोन्मूलनाय न प्रभवन्ति । एतच्चान्यथा मा मंस्था इति दर्शयितुमाह-' अहासच्च 'मित्यादि, इदं यन्मया कथितं कथ्यमानं च तदथासत्यं याथातथ्यमित्यर्थः इत्येतदहं ब्रवीमि, यथा दुर्लभमवाप्य सम्यक्त्वं चारित्रपरिणामं वा प्रमादो न कार्यः । आचा० १ श्रु० ४ अ० २ उ० । ( धर्मविषयवक्तव्यता 'धम्म' शब्दे चतुर्थभागे २६८७ पृष्ठे उक्ता । )

(१३) परमतव्युदासद्वारेण सम्यक्त्वमविचलं प्रतिपादयता तत्सहचरितं ज्ञानं तत्फलभूता च विरतिरभिहिता, सत्यपि चास्मिंस्त्रये न पूर्वोपात्तकर्मणो निरवद्यतपोऽनुष्ठानमन्तरेण क्षयो भवतीत्यतस्तदधुना प्रतिपाद्यत इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्यादि सूत्रम्—

उवेहि णं बहिया य लोगं, से सव्वलोगम्मि जे केइ विण्णु, अणुवीए पास निक्खित्तदंडा, जे केइ सत्ता पलियं चयंति, नरा मुयच्चा धम्मविउ त्ति अंजू ,आरंभजं दुक्खमिणंति णच्चा, एवमाहु सम्मत्तदंसिणो, ते सव्वे पावाइया दुक्खस्स कुसला परिण्णमुदाहरंति इय कम्मं परिण्णाय सव्वसो । ( सू० १३४ )

योऽयमनन्तरं प्रतिपादितः पाषण्डिलोक एनं धर्माद्बहिर्व्यवस्थितमुपेक्षस्व—तदनुष्ठाने मा अनुमंस्थाः, चशब्दोऽनुक्तसमुच्चयार्थे , तदुपदेशमभिगमनपर्युपासनदानसंस्तवादिकं च मा कृथा इति । य पाषण्डलोकोपेक्षकः स कं गुणमवाप्नुयादित्याह—' से सव्वलोए ' इत्यादि, य. पाषण्डिलोकमनार्यवचनमवगम्य तदुपेक्षां विधत्ते स सर्वस्मिँल्लोके मनुष्यलोके ये केचिद्विद्वांसस्तेभ्योऽग्रणीर्विद्वत्तम इति स्यात्, लोके कचन विद्वांसः सन्ति ? येभ्योऽधिकः स्यादित्यत आह— ' अणुवीइ ' इत्यादि, ये केचन लोके निक्षिप्तदण्डाः—निश्चयेन क्षिप्तो निक्षिप्तः—परित्यक्तः कायमनोवाङ्मयः प्राण्युपघातकारी दण्डो यैस्ते विद्वांसो भवन्त्येव एतदनुविचिन्त्य—पर्यालोच्य पश्य—अवगच्छ । के चोपरतदण्डा इत्यत आह— ' जे केइ ' इत्यादि, ये केचनावगतधर्माणः सत्त्वाः—प्राणिनः ' पलित ' मिति कर्म तत्त्यजन्ति, ये चोपरतदण्डा भूत्वाऽष्टप्रकारं कर्म

त्यजन्ति ते विद्वांस इत्येतदनुविचिन्त्य—अविज्ञिमीलकेन पर्यालोच्य पश्य—विवेकिन्या मत्याऽवधारय । के पुनरशेषकर्मक्षयं कुर्वन्ति ? इत्यत आह—' नरे ' इत्यादि, नराः—मनुष्यास्त एवाशेषकर्मक्षयायालं नान्ये, तेऽपि न सर्वे अपि तु मृतार्चाः-मृतेव मृता संस्काराभावादर्चा शरीरं येषां ते तथा, निष्प्रतिकर्मशरीरा इत्यर्थः, यदिवा—अर्चा-तेजः, स च क्रोधः, स च कषायोपलक्षणार्थः, ततश्चायमर्थो-मृता-विनष्टा अर्चा कषायरूपा येषां ते मृतार्चाः, अकषायिण इत्यर्थः, किं च-धर्मम्—श्रुतचारित्राख्यं विदन्तीति धर्मविदः, इति हेतौ, यत एव धर्मविदोऽत एव ऋजवः-कौटिल्यरहिताः । स्यादेतत्—किमालम्ब्यैतद्विधेयमित्यत आह-' आरंभज 'मित्यादि, सावद्यक्रियानुष्ठानमारम्भस्तस्माज्जातमारम्भजं , किं तत् ?-दुःखमिदमिति सकलप्राणिप्रत्यक्षं, तथाहि-कृषिसेवावाणिज्याद्यारम्भप्रवृत्तो यच्छारीरमानसं दुःखमनुभवति तद्वाचामगोचरमित्यत. प्रत्यक्षाभिधायिनेदमुक्तम् । ' इति ' उपप्रदर्शने, इत्येतदनुभवसिद्धं दुःखं ज्ञात्वा मृतार्चा धर्मविद ऋजवश्च भवन्तीति । एतच्च समस्तवेदिनो भाषन्त इति दर्शयति-' एव ' मित्यादि, एवम्-पूर्वोक्तप्रकारेण आहुः-उक्तवन्तः, के एवमाहुः ?-समत्वदर्शिनः-सम्यक्त्वदर्शिनः समस्तदर्शिनो वा, यदुद्देशकादेरारभ्योक्तं तदेवमूचुरित्यर्थः, कस्मात्त ऊचुरित्याह-' ते सव्वे ' इत्यादि, यस्मात्ते सर्वेऽपि सर्वविदः ' प्रावादिकाः ' प्रकर्षेण मर्यादया वदितुं शीलं येषां ते प्रावादिनः त एव प्रावादिकाः—यथावस्थितार्थस्य प्रतिपादनाय वावदूकाः , दुःखस्य-शारीरमानसलक्षणस्य तदुपादानस्य वा कर्मणः कुशला-निपुणास्तदपनोदोपायवेदिनः सन्तः ते सर्वेऽपि ज्ञपरिज्ञया परिज्ञाय हेयार्थस्य प्रत्याख्यानपरिज्ञामुदाहरन्ति, ' इति ' उपप्रदर्शने, इत्येवं पूर्वोक्तनीत्या कर्मबन्धोदयसत्कर्मताविधानतः परिज्ञाय सर्वशः—सर्वैः प्रकारैः कुशलाः प्रत्याख्यानपरिज्ञामुदाहरन्ति, यदिवा-मूलोत्तरप्रकृतिप्रकारैः सर्वैः परिज्ञायेति मूलप्रकारा अष्टौ उत्तरप्रकृतिप्रकारा अष्टपञ्चाशदुत्तरं शतम् , अथवा-प्रकृतिस्थित्यनुभावप्रदेशप्रकारैः, यदिवा उदयप्रकारैर्बन्धसत्कर्मताकार्यभूतैरागामिबन्धसत्कर्मताकारणैश्च कर्म परिज्ञायेति, ते चामी उदयप्रकाराः, तद्यथा—मूलप्रकृतीनां त्रीण्युदयस्थानानि, अष्टविधं सप्तविधं चतुर्विधमिति, तत्राष्टापि कर्मप्रकृतीर्यौगपद्येन वेदयतोऽष्टविधं, तच्च कालतोऽनादिकमपर्यवसितमभव्यानां, भव्यानां त्वनादिसपर्यवसितं सादिसपर्यवसितं चेति, मोहनीयोपशमे क्षये वा सप्तविधं, घातिक्षये चतुर्विधमिति ॥ साम्प्रतमुत्तरप्रकृतीनामुदयस्थानान्युच्यन्ते—तत्र ज्ञानावरणीयान्तराययोः पञ्चप्रकारं एकमुदयस्थानं, दर्शनावरणीयस्य द्वे, दर्शनचतुष्कस्योदयाच्चत्वारि अन्यतरनिद्रया सह पञ्च, वेदनीयस्य सामान्येनैकमुदयस्थानं सातमसातं वेति, विरोधाद्यौगपद्योदयाभावः, मोहनीयस्य सामान्येन नवोदयस्थानानि, तद्यथा—दश नव अष्टौ सप्त षट् पञ्च चत्वारि द्वे एकं चेति, तत्र—दश मिथ्यात्वं १ अनन्तानुबन्धी क्रोधोऽप्रत्याख्यानः प्रत्याख्यानावरणः संज्व-

लनश्चैत्येतत्क्रोधचतुष्टयम् ५ एवं—मानाऽऽदिचतुष्टयमपि योज्यम् अन्यतरो वेद ६ हास्यरतियुग्मम् अरतिशोकयुग्मं वा ८ भयं ९ जुगुप्सा १० चेति , भयजुगुप्सयोरन्यतरभावे नव , द्वयाभावेऽष्टौ, अनन्तानुबन्ध्यभावे सप्त, मिथ्यात्वाभावे षट्, अप्रत्याख्यानोदयाभावे पञ्च, प्रत्याख्यानावरणाभावे चत्वारि, परिवर्त्तमानयुगलाभावे संज्वलनान्यतरवेदोदये सति द्वे, वेदाभावे एकमिति, आयुषोऽप्येकमेवोदयस्थानं चतुर्णामायुषामन्यतरदिति, नाम्नो द्वादशोदयस्थानानि, तद्यथा—विंशति एकविंशति चतुर्विंशति पञ्चविंशति षड्विंशति सप्तविंशति अष्टाविंशति एकोनत्रिंशत् त्रिंशत् एकत्रिंशत् नव अष्टौ चेति, तत्र संसारस्थाना सयोगिना जीवाना दशोदयस्थानानि नाम्नो भवन्ति अयोगिना तु चरमद्वयमिति। अत्र च द्वादश ध्रुवोदया कर्मप्रकृतय., तद्यथा–तैजसकार्म्मणे शरीरे १–२ वर्णगन्धरसस्पर्शचतुष्टयम्, ६ अगुरुलघु ७ स्थिरम् ८ अस्थिरं ९ शुभम् १० अशुभ ११ निर्माण १२ मिति। तत्र विंशतिरतीर्थकरकेवलिन समुद्घातगतस्य कार्मणशरीरयोगिनो भवति, तद्यथा– मनुष्यगति. १ पञ्चेन्द्रियजाति २ त्रसं ३ बादरं ४ पर्याप्तकं ५ सुभगम् ६ आदेय ७ यश.कीर्त्तिरिति ८ ध्रुवोदय १२ सहिता विंशति २०, एकविंशत्यादीनि तूदयस्थानानि एकत्रिंशत्पर्यन्तानि जीवगुणस्थानभेदादनेकभेदानि भवन्ति, तानि चेह ग्रन्थगौरवभयात् प्रत्येकं नोच्यन्त इत्यत एकैकभेदावेदनं क्रियते, तत्रैकविंशति गति. १ जाति २ आनुपूर्वी ३ त्रस ४ बादरं ५ पर्याप्तापर्याप्तयोरन्यतरत् ६ सुभग दुर्भगयोरन्यतरत् ७ आदेयानादेययोरन्यतरत् ८ यश कीर्त्ययश.कीर्त्त्योरन्यतरत् ९, एताश्च नव ध्रुवोदय १२ सहिता एकविंशति २१, चतुर्विंशतिस्तु तिर्यग्गति. १ एकेन्द्रियजाति. २ औदारिकं ३ हुण्डसंस्थानम् ४ उपघातं ५ प्रत्येकसाधारणयोरन्यतरत् ६ स्थावर ७ सूक्ष्मबादरयोरन्यतरत् ८ दुर्भगम् ९ अनादेयम् १० अपर्याप्तकं ११ यश कीर्त्त्ययश कीर्त्त्योरन्यतर १२ दिति। तत्रैवापर्याप्तकापनयने पार्याप्तकपराघाताभ्या प्रक्षिप्ताभ्या पञ्चविंशति २५, षड्विंशतिस्तु याऽसौ केवलिनो विंशतिरभिहिता सैवौदारिकशरीराङ्गोपाङ्गद्वयान्यतरसंस्थानाद्यसंहननोपघातप्रत्येकसहिता वेदितव्या मिश्रकाययोगे वर्त्तमानस्य २६, सैव तीर्थकरनामसहिता केवलिसमुद्घातवतो मिश्रकाययोगिन एव सप्तविंशतिः २७, सैव प्रशस्तविहायोगतिसमन्विताऽष्टाविंशति २८ तत्र तीर्थकरनामापनयने उच्छ्वास १ सुस्वर २ पराघात ३ प्रक्षेपे सति त्रिंशद्भवति ३० तत्र सुस्वरं निरुद्धे एकोनत्रिंशत् २९ सैव त्रिंशत्तीर्थकरनामसहिता एकत्रिंशत् ३१, नवोदयस्तु मनुष्यगति १ पञ्चेन्द्रियजाति २ त्रस ३ बादर ४ पर्याप्तकं ५ सुभगम् ६ आदेयं ७ यश कीर्त्ति ८ तीर्थकरमिति ९, एता अयोगितीर्थकरकेवलिन, एता एव तीर्थकरनामरहिता अष्टाविति ८, गोत्रस्यैकमेव सामान्येनोदयस्थानम्, उच्चनीचयोरन्यतरद् यौगपद्येनोदयाभावो विरोधादिति। तदेवमुदयभेदैरनेकप्रकारता कर्म्मण परिज्ञाय प्रत्याख्यानपरिज्ञामुदाहरन्तीति।

(१७)यदि नाम कर्म्मपरिज्ञामुदाहरन्ति तत किं कार्यमित्याह–

इह आणाकंखी पंडिए अणिहे, एगमप्पाणं संपेहाए धुणे सरीरं, कसेहि अप्पाणं, जरेहि अप्पाणं,—जहा जुन्नाइं कट्ठाइं हव्ववाहो पमत्थइ। एवं अत्तसमाहिए अणिहे, विगिंच कोहं अविकंपमाणे। (सू० १३५)

इह—अस्मिन् प्रवचने आज्ञामाकाङ्क्षितुं शीलमस्येति आज्ञाकाङ्क्षी—सर्वज्ञोपदेशानुष्ठायी, यश्चैवम्भूत स पण्डितो विदितवेद्य अस्निहो भवति, स्निह्यते— श्लिष्यतेऽष्टप्रकारेण कर्म्मणेति स्निहो न स्निहोऽस्निह, यदिवा–स्निह्यतीति स्निहो रागवान् यो न तथा सोऽस्निह उपलक्षणार्थत्वाच्चास्य रागद्वेषरहित इत्यर्थ.। अथवा-निश्चयेन हन्यत इति निहत. भावरिपुभिरिन्द्रियकषायकर्म्मभि., यो न तथा सोऽनिहत इह प्रवचने आज्ञाकाङ्क्षी पण्डितो भावरिपुभिरनिहतो, नान्यत्र, यश्चानिहत स परमार्थत. कर्म्मण परिज्ञाता। यश्चैवम्भूत स किं कुर्यादित्याह—'एगमप्पाण', मित्यादि, सोऽनिहताऽस्निहो वा आत्मानमेकं धनधान्यहिरण्यपुत्रकलत्रशरीरादिव्यतिरिक्तं संप्रेक्ष्य—पर्यालोच्य धुनीयाच्छरीरक, सम्भावनाया लिङ्, सर्वस्मादात्मान व्यतिरिक्त पश्यन्त सम्भाव्यन एतच्छरीरविधूननमिति। तच्च कुर्वता संसारस्वभावैकत्वभावनैवंरूपा भावयितव्येति—

"ससार एवायमनर्थसार',
क. कस्य कोऽत्र स्वजन. परो वा ?।
सर्वे भ्रमन्त. स्वजना पर च,
भवन्ति भूत्वा न भवन्ति भूय. ॥ १॥
विचिन्त्यमेतद्भवताऽहमेको,
न मेऽस्ति कश्चित्पुरतो न पश्चात्।
स्वकर्मभिर्भ्रान्तिरियं ममैव,
अह पुरस्तादहमेव पश्चात्॥ २॥
सदैकोऽहं न मे कश्चित्, नाहमन्यस्य कस्यचित्।
न तं पश्यामि यस्याहं, नासौ भावीति यो मम ॥ ३॥"

तथा—

"एकः प्रकुरुते कर्म्म, भुनक्त्येकश्च तत्फलम्।
जायते म्रियते चैक, एको याति भवान्तरम्॥ १॥"

इत्यादि, किं च—'कसेहि अप्पाणं जरेहि अप्पाणं' परव्यतिरिक्त आत्मा शरीरं तत् कष्टतपश्चरणादिना कृश कुरु, यदिवा—कष—कस्मै कर्म्मणेऽलमित्येवं पर्यालोच्य यच्छक्तोषि तत्र नियोजयेदित्यर्थ, तथा जरशरीरकं जरीकुरु, तपसा तथा कुरु यथा जराजीर्णमिव प्रतिभासते, विकृतिपरित्यागद्वारेणात्मान नि सारतामापादयेदित्यर्थ, किमर्थमित्येतदिति। चेदाह—'जहा' इत्यादि, यथा जीर्णानि-नि साराणि काष्ठानि हव्यवाहो हुतभुक्प्रमथ्नाति—शीघ्र भस्मसात् करोति, दृष्टान्तं प्रदर्श्य दार्ष्टान्तिकमाह—'एवं अत्तसमाहिए' एवम्-अनन्तरोक्तदृष्टान्तप्रकारेणात्मना समाहित आत्मसमाहित, ज्ञानदर्शनचारित्रोपयोगेन सदोपयुक्त इत्यर्थ, आत्मा वा समाहितोऽस्येत्यात्मसमाहित, सदा शुभव्यापारवानित्यर्थ, आहिताग्न्यादिदर्शनादार्षत्वाद्वा निष्ठान्तस्य परनिपात, यदिवा– प्राकृते पूर्वोत्तरनिपातोऽतन्त्र, समाहितात्मेत्यर्थ। अस्निह.– स्नेहरहित सस्तपोऽग्निना कर्मकाष्ठ दहतीति भावार्थ.।

(१८) एतदेव दृष्टान्तदार्ष्टान्तिकगतमर्थं निर्युक्तिकारो गाथयोपसंजिघृक्षुराह—

जह खलु झुसिरं कट्ठं, सुचिरं सुकं लहुं डहइ अग्गी ।
तह खलु खवंति कम्मं, सम्मचरणे ठिया साहू ॥२३४॥

गतार्था । अत्र चास्मिहपदेन रागनिवृत्तिं विधाय द्वेषनिवृत्तिं विधित्सुराह—'विगिंच कोहं' मित्यादि, कारणेऽकारणे वाऽतिक्रूराध्यवसायः क्रोधः तं परित्यज, तस्य च कार्यं कम्पनं तत्प्रतिषेधं दर्शयति—अविकम्पमानः ।

(१६) किं विगणय्यैतत्कुर्यादित्याह—

इमं निरुद्धाउयं संपेहाए, दुक्खं च जाण अदु आगमेस्सं, पुढो फासाइं च फासे, लोयं च पास विफंदमाणं, जे निव्वुडा पावेहिं कम्मेहिं अणियाणा ते वियाहिया, तम्हा अतिविज्जो नो पडिसंजलिज्जासि त्ति बेमि । ( सू० १३६ )

इदं-मनुष्यत्वं निरुद्धायुष्कं—निरुद्धं—परिगलितमायुष्कं सम्प्रेक्ष्य-पर्यालोच्य क्रोधादिपरित्यागं विदध्यात्, किं च-'दुक्ख' मित्यादि क्रोधादिना दन्दह्यमानस्य यन्मानसं दुःखमुत्पद्यते तज्जानीहि, तज्जनितकर्म्मविपाकापादितं चागामि दुःखं सम्प्रेक्ष्य क्रोधादिकं प्रत्याख्यानपरिज्ञया जानीहि, परित्यजेरित्यर्थः, आगामिदुःखस्वरूपमाह-'पुढो' इत्यादि, पृथक् सप्तनरकपृथिवीसम्भवशीतोष्णवेदनाकुम्भीपाकादियातनास्थानेषु स्पर्शान्—दुःखानि, च. समुच्चये, न केवलं क्रोधाध्मातस्तस्मिन्नेव क्षणे दुःखमनुभवतीत्यगामीनि पृथक् दुःखानि च स्पृशेद्—अनुभवेत्, तेन चातिदुःखेनापरोऽपि लोको दुःखित इत्येतदाह—'लोयं च' इत्यादि, न केवलं क्रोधादिविपाकादात्मा दुःखान्यनुभवति, लोकं च शारीरमानसदुःखापन्नं विस्पन्दमानमस्वतन्त्रमितश्चेतश्च दुःखप्रतीकाराय धावन्तं पश्य—विवेकचक्षुषाऽवलोकय । ये त्वेवं न ते किम्भूता भवन्तीत्यत आह—'जे निव्वुडा' इत्यादि, ये तीर्थंकरोपदेशवासितान्तःकरणा विषयकषायाग्न्युपशमान्निर्वृताः—शीतीभूताः पापेषु कर्म्मसु अनिदानाः—निदानरहितास्ते परमसुखास्पदतया व्याख्याताः, औपशमिकसुखभाक्त्वेन प्रसिद्धा इत्यर्थः, यत एव ततः किमित्याह—'तम्हा' इत्यादि, यस्माद्रागद्वेषाभिभूतो दुःखभाग्भवति तस्मादतिविद्वान्-विदितागमसद्भावः सन्न प्रतिसञ्ज्वलेः—क्रोधाग्निनाऽऽत्मानं नोद्दीपयेः, कषायोपशमं कुर्वित्यर्थः । इतिरधिकारपरिसमाप्तौ, ब्रवीमीति पूर्ववत्, सम्यक्त्वाध्ययने तृतीयोद्देशकटीका समाप्तेति । उक्तस्तृतीयोद्देशकः ।

साम्प्रतं चतुर्थ आरभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तरोद्देशके निरवद्यं तपोऽभिहितं, तच्चाविकलं सत्संयमव्यवस्थितस्य भवतीत्यतः संयमप्रतिपादनाय चतुर्थोद्देशक इत्यनेन सम्बन्धेनायातस्यास्योद्देशस्यादि सूत्रम्—

आवीलए पवीलए निप्पीलए जहित्ता पुव्वसंजोगं हिच्चा उवसमं, तम्हा अविमणे वीरे, सारए समिए सहिए सया जए, दुरणुचरो मग्गो वीराणं अनियट्टगामिणं, विगिंच मंससोणियं, एस पुरिसे दविए वीरे, आयाणिज्जे वियाहिए, जे धुणाइ समुस्सयं वसित्ता बंभचेरंसि । ( सू० १३७ )

आङीषदर्थे, ईषत्पीडयेद् अविकृष्टेन तपसा शरीरकमापीडयेद्, एतच्च प्रथमप्रव्रज्याऽवसरे, तत ऊर्ध्वमधीतागमः परिणतार्थसद्भावः सन् प्रकर्षेण विकृष्टतपसा पीडयेत्प्रपीडयेत्, पुनरध्यापितान्तेवासिवर्गः संक्रामितार्थसारः शरीरं तितिक्षुर्मासार्द्धमासक्षपणादिभिः शरीरं निश्चयेन पीडयेन्निष्पीडयेत्, स्यात्—कर्म्मक्षयार्थं तपोऽनुष्ठीयते । स च पूजालाभख्यात्यर्थेन तपसा न भवत्यतो निरर्थक एव शरीरपीडनोपदेश इत्यतोऽन्यथा व्याख्यायते—कर्म्मैव कार्म्मणशरीरं वा आपीडयेत्प्रपीडयेन्निष्पीडयेत्, अत्रापीपदर्थादिका प्रकर्षगतिरवसेया, यदिवा—आपीडयेत्कर्म्म अपूर्वकरणादिकेषु सम्यग्दृष्ट्यादिषु गुणस्थानकेषु, ततोऽपूर्वकरणानिवृत्तिबादरयोः प्रपीडयेत्, सूक्ष्मसम्परायावस्थायां तु निष्पीडयेत्, अथवा-आपीडनमुपशमश्रेण्यां,प्रपीडनं क्षपकश्रेण्यां, निष्पीडनं तु शैलेश्यवस्थायामिति । किं कृत्वैतत्कुर्यादित्याह-'जहित्ता' इत्यादि, पूर्वः संयोगः पूर्वसंयोगो-धनधान्यहिरण्यपुत्रकलत्रादिकृतस्तं त्यक्त्वा, यदिवा-पूर्वः असंयमोऽनादिभवाभ्यासात्तेन संयोगः पूर्वसंयोगस्तं त्यक्त्वा 'आवीलये' दित्यादिसम्बन्धः, किं च-'हिच्चा' इत्यादि, हि गतावित्यस्मात् पूर्वकाले क्त्वा हित्वा—गत्वा किं तत् ?-उपशमम्-इन्द्रियनोइन्द्रियजयरूपं संयमं वा गत्वा-प्रतिपद्यापीडयेदिति वर्त्तते । इदमुक्तं भवति—असंयमं त्यक्त्वा संयमं प्रतिपद्य तपश्चरणादिनाऽऽत्मानं कर्म्म वाऽऽपीडयेत् प्रपीडयेन्निष्पीडयेदिति, यतः कर्म्मापीडनार्थमुपशमप्रतिपत्तिस्तत्प्रतिपत्तौ चाविमनस्कतेत्याह-'तम्हा' इत्यादि, यस्मात्कर्म्मक्षयायासंयमपरित्यागस्तत्परित्यागे चावश्यंभावी संयमस्तत्र च न चित्तवैमनस्यमिति, तस्मादविमना विगतं भोगकषायादिष्वरतौ वा मनो यस्य स विमना, यो न तथा सोऽविमना, कोऽसौ ?, वीरः-कर्म्मविदारणसमर्थः, । अविमनस्कत्वाच्च यत्स्यात्तदाह-'सारए' इत्यादि, सुष्ठु—जीवनमर्यादया संयमानुष्ठाने रतः स्वारतः, पञ्चभिः समितिभिः समितः, सह हितेन सहितो ज्ञानादिसमन्वितो वा सहितः, सदा—सर्वकालं सकृदारोपितसंयमभारः संस्तत्र यतेत—यत्नवान् भवेदिति । किमर्थं पुनः-पौनःपुन्येन संयमानुष्ठानं प्रत्युपदेशो दीयते ? इत्याह-'दुरनुचरो' इत्यादि, दुःखेनानुचर्यत इति दुरनुचरः, कोऽसौ ?—मार्गः—संयमानुष्ठानविधिः, केषां ?-वीराणाम्-अप्रमत्तयतीनां, किम्भूतानामित्याह-'अणियट्ट' इत्यादि, अनिवर्त्तो—मोक्षस्तत्र गन्तुं शीलं येषां ते तथा तेषामिति, यथा च तन्मार्गानुचरणं कृतं भवति तद्दर्शयति-'विगिंच' इत्यादि, मांस-शोणितं-दर्पकारि विकृष्टतपोऽनुष्ठानादिना विवेचय—पृथक्कुरु, तन्नाशय विधेहीति यावत्, एवं वीराणां मार्गोनुचरणं कृतं भवतीति भावः । यश्चैवम्भूतः स कं गुणमवाप्नुयादित्याह-'एस' इत्यादि, एष-मांसशोणितयोरपनेता पुरि शयनात् पुरुषः द्रवः-संयमः स विद्यते यस्यासौ द्रविकः मत्वर्थीयष्ठन्,

द्रव्यभूतो वा मुक्तिगमनयोग्यत्वात्, कर्म्मरिपुविदारणसहिष्णुत्वाद्वीर इति, मांसशोणितापचयप्रतिपादनाच्च तदनुसारेणामपि मेदआदीनामपचय उक्त एवं द्रष्टव्य, तद्भावभावित्वात्तेषामिति । किं च—'आयाणिज्जे' इत्यादि, स धीरो या मार्गं प्रतिपन्न मांसशोणितयोरपनेता मुमुक्षूणामाद्रणीयो—ग्राह्य आदेयवचनश्च व्याख्यात इति । कश्चैवम्भूत इत्याह—'जे धुणाई' इत्यादि, 'ब्रह्मचर्ये' संयमे मदनपरित्यागे वोषित्वा य समुच्छ्रयं-शरीरकं कर्म्मोपचयं वा तपश्चरणादिना धुनाति-कृशीकरोति स आदानीय इति विविधमाख्यातो व्याख्यात इति सम्बन्ध ।।

(२०)उक्ता अप्रमत्ताः, तद्विधर्म्मणस्तु प्रमत्तानभिधित्सुराह

**नित्तेहिं पलिच्छिन्नेहिं आयाणसोयगढिए बाले, अव्वोच्छिन्नबंधणे अणभिक्कंतसंजोए तमंसि अवियाणओ आणाए लंभो नत्थि त्ति बेमि । ( सू० १३८ )**

नयत्यर्थदेशम्—अर्थक्रियासमर्थमर्थमाविर्भावयन्तीति नेत्राणि—चक्षुरादीनीन्द्रियाणि तैः परिच्छिन्नैः—यथास्वं विषयग्रहणं प्रति निरुद्धैः सद्भिरादानीयोऽपि भूत्वोषित्वा ब्रह्मचर्ये पुनर्मोहोदयादादानस्रोतो गृद्धः—आदीयते-सावद्यानुष्ठानेन स्वीक्रियत इत्यादान-कर्म्म संसारबीजभूत तस्य स्रोतांसि-इन्द्रियविषया मिथ्यात्वाविरतिप्रमादकषाययोगा वा तेषु गृद्ध -अध्युपपन्नः स्यात्, कोऽसौ ?-'बाल.' अज्ञ रागद्वेषमहामोहाभिभूतान्तःकरण । यश्चादानस्रोतोगृद्ध स किम्भूत स्यादित्याह-'अव्वोच्छिन्नबंधणे' इत्यादि, अव्यवच्छिन्न जन्मशतानुवृत्ति बन्धनम्-अष्टप्रकारं कर्म्म यस्य स तथा, किं च-'अणभिक्कंत' इत्यादि, अनभिक्रान्तः—अनतिलङ्घितः संयोगो—धनधान्यहिरण्यपुत्रकलत्रादिकृतोऽसंयमसंयोगो वा येनासावनभिक्रान्तसंयोगः तस्य चैवम्भूतस्येन्द्रियानुकूल्यरूप मोहात्मके वा तमसि वर्त्तमानस्यात्महित मोक्षोपाय वाऽविजानत आज्ञाया—तीर्थकरोपदेशस्य लाभो नास्तीत्येतदहं ब्रवीमि तीर्थकरवचनोपलब्धसद्भाव इति, यदि वा आज्ञा—बोधि सम्यक्त्वम्, अस्तिशब्दश्चायं निपातस्त्रिकालविषयी, तेनायमर्थ —तस्यानभिक्रान्तसयोगस्य भावतमसि वर्त्तमानस्य बोधिलाभो नासीन्नास्ति न भावीति ।

एतदेवाह—

**जस्स नत्थि पुरा पच्छा मज्झे तस्स कुओ सिया ?, से हु पन्नाणमंते बुद्धे आरंभोवरए, सम्ममेयं ति पासह, जेण बंधं वहं घोरं परियावं च दारुणं पलिछिंदिय बाहिरगं च सोयं, निक्कम्मदंसी इह मच्चिएहिं, कम्माणं सफलं दट्ठूण तओ निज्जाइ वेयवी । ( सू० १३९ )**

यस्य कस्यचिदविशेषितस्य कर्म्मादानस्रोतोगृद्धस्य बालस्याव्यवच्छिन्नबन्धनस्यानभिक्रान्तसंयोगस्य अज्ञानतमसि वर्त्तमानस्य पुरा—पूर्वजन्मनि बोधिलाभो नास्ति—सम्यक्त्वं नासीत् 'पश्चादपि' पश्चेऽपि जन्मनि न भावि मध्ये—मध्यजन्मनि तस्य कुत स्यात् इति ?, एतदुक्तं भवति—यस्यैव पूर्वं बोधिलाभः सम्वृत्तो भविष्यति वा तस्यैव वर्त्तमानकाले भवति, येन हि सम्यक्त्वमासादितं पुनर्मिथ्यात्वोदयात्तत्प्रच्यवते तस्यापार्द्धपुद्गलपरावर्त्तेनापि कालेनावश्य तत्सद्भावात्, न त्वस्य सम्भवोऽस्ति प्रच्युतस्य सम्यक्त्वस्य पुनरसम्भव एवेति । अथवा—निरुद्धेन्द्रियोऽपि आदानस्रोतो गृद्ध इत्युक्त, तद्विपर्ययभूतस्य त्वतिक्रान्तसुखस्मरणमकुर्वत आगामि च दिव्याङ्गनाभोगमनभिकाङ्क्षतो वर्त्तमानसुखाभिष्वङ्गोऽपि नैव स्यादिस्येतद्दर्शयितुमाह—' जस्स नत्थि ' इत्यादि, यस्य भोगविपाकवेदिन. पूर्वभुक्तानुस्मृतिर्नास्ति नापि पाश्चात्यकालभोगाभिलाषिता विद्यते तस्य व्याधिचिकित्सारूपान् भोगान् भावयतो मध्ये—वर्त्तमानकाले कुतो भोगेच्छा स्यात् ?, मोहनीयोपशमान्नैव स्यादित्यर्थ । यस्य तु त्रिकालविषया भोगेच्छा निवृत्ता स किम्भूत, स्यादित्याह—'से हु' इत्यादि, 'हु' यस्मादर्थे, यस्मान्निवृत्तभोगाभिलाषस्तस्मात्स प्रज्ञानवान्—प्रकृष्ट ज्ञानं प्रज्ञानं—जीवाजीवादिपरिच्छेत्तृ तद्विद्यत यस्यासौ प्रज्ञानवान्, यत एव प्रज्ञानवानत एव बुद्ध.—अवगततत्त्वो, यत एवम्भूतोऽत एवाह—' आरंभोवरए ' सावद्यानुष्ठानमारम्भस्तस्मादुपरत आरम्भोपरत. । एतच्चारम्भोपरमणं शोभनमिति दर्शयन्नाह—' सम्म ' मित्यादि, यदिदं सावद्यारम्भोपरमणं सम्यगेतत्—शोभनमेतत् सम्यक्त्वकार्यत्वाद्वा सम्यक्त्वमेतदित्येवं पश्यत—एवं गृहीत यूयमिति । किमित्यारम्भोपरमण सम्यगिति चेदाह—' जेण ' इत्यादि, येन कारणेन सावद्यारम्भप्रवृत्तो बन्धं निगडादिभिः वधं कशादिभि. घोरं—प्राणसंशयरूपं परितापं—शारीरमानसं दारुणम्—असह्यमवाप्नोत्यत आरम्भोपरमणं सम्यग्भूतं कुर्यात् । किं कृत्वेत्याह—' पलिच्छिन्दि ' इत्यादि, परिच्छिन्द्य—अपनीय, किं तत् ?—स्रोत-पापोपादानं, तच्च बाह्य धनधान्यहिरण्यपुत्रकलत्रादिरूप हिंसाद्याश्रवद्वारात्मकं वा, चशब्दादान्तरं च रागद्वेषात्मक विषयपिपासारूप वेति, किं च—' णिक्कम्मदंसी ' त्यादि, निष्क्रान्त. कर्मणो निष्कर्म्मा—मोक्ष संवरो वा तं द्रष्टुं शीलमस्येति निष्कर्म्मदर्शी, इहेति—ससारे मर्त्येषु मध्ये य एव निष्कर्मदर्शी स एव बाह्याभ्यन्तरस्रोतसश्छेत्तेति स्यात् । किमभिसन्ध्य स बाह्याभ्यन्तरसंयोगस्य छेत्ता निष्कर्मदर्शी वा भवेत् इत्यत आह—' कम्माणं ' इत्यादि, मिथ्यात्वाविरतिप्रमादकषाययोगै. क्रियन्ते—बध्यन्त इति कर्माणि-ज्ञानावरणीयादीनि तेषा सफलत्व दृष्ट्वा स वा निष्कर्मदर्शी वेदविद्वा कर्मणां फलं दृष्ट्वा; तेषा च फलं—ज्ञानावरणी—यस्य ज्ञानावृति दर्शनावरणस्य दर्शनाच्छादनं वेदनीयस्य विपाकोदयजनिता वेदनेत्यादि, ननु च न सर्वेषां कर्म्मणा विपाकोदयमिच्छन्ति, प्रदेशानुभवस्यापि सद्भावात् तपसा च क्षयोपपत्तेरित्यत कथ कर्मणां सफलत्वं ?, नैष दोषो, नात्र प्रकारकार्त्स्न्यमभिप्रेतम्, अपितु द्रव्यकार्त्स्न्यं, तच्चास्त्येव, तथाहि—यद्यपि प्रतिबन्धव्यक्ति न विपाकोदयस्तथाप्यष्टानामपि कर्म्मणा सामान्येन सोऽस्त्येवेत्यत कर्म्मणा सफलत्वमुपलभ्यते, तस्मात्--कर्म्मणस्तदुपादानादास्रवाद्वा निश्चयेन याति निर्यात-निर्गच्छति, तत्र विधस इति यावत्, कोऽसौ ?-'वेदविद्' वे-

यते सकलं चराचरमनेनेति वेदः—आगमस्तं वेत्तीति वेदवित्, सर्वज्ञोपदेशवर्त्तीत्यर्थ ।

[२१] न केवलस्य ममैवायमभिप्राय., सर्वेषामेव तीर्थकराणामयमाशय इति दर्शयितुमाह—

जे खलु भो ! वीरा ते समिया सहिया सयाजया संघडदंसिणो आओवरया अहातहं लोयं उवेहमाणा पाईणं पडीणं दाहिणं उईणं इय सच्चंसि परि ( चिए ) चिट्ठिंसु, साहिस्सामो नाणं वीराणं समियाणं सहियाणं सयाजणाणं संगडदंसीणं आओवरयाणं अहातहं लोयं समुवेहमाणाणं किमत्थि उवाही ?, पासगस्स न विज्जइ नत्थि त्ति-बेमि । ( सू० १४० )

यदिवा उक्त. सम्यग्वादो निरवद्यं तपश्चारित्रं च,अधुना तत्फलमुच्यते—' जे खलु ' इत्यादि, खलुशब्दो वाक्यालङ्कारे, ये कचनातीतानागतवर्त्तमाना. 'भो' इत्यामन्त्रणे , वीरा.—कर्मविदारणसहिष्णव. समिता. समितिभिः सहिता ज्ञानादिभि. सदा यता सत्संयमेन 'सघडदसिणो' त्ति–निरन्तरदर्शिनः शुभाशुभस्य आत्मोपरता. पापकर्मभ्यो यथा तथा अवस्थितं लोकं चतुर्दशरज्ज्वात्मकं कर्मलोकं वोपेक्षमाणा.—पश्यन्त. सर्वासु प्राच्यादिषु दिक्षु व्यवस्थिता इत्येवप्रकारा. ' सत्य ' मिति—ऋतं तप. संयमो वा तत्र परिचित—स्थिरे तस्थु -स्थितवन्त., उपलक्षणार्थत्वात् त्रिकालविषयता, द्रष्टव्या तत्रातीते काले अनन्ता अपि सत्ये तस्थु , वर्त्तमाने पञ्चदशसु कर्मभूमिषु सङ्ख्येयास्तिष्ठन्ति अनागते अनन्ता अपि स्थास्यन्ति , तेषां चातीतानागतवर्त्तमानाना सत्यवता यज्ज्ञानं-योऽभिप्रायस्तदह कथयिष्यामि भवता शृणुत यूयं , किम्भूतानां तेषां ?-वीराणामित्यादीनि विशेषणानि गतार्थानि । किम्भूतं ज्ञानमिति चेदाह-किं प्रश्ने आस्त- विद्यत ?, कोऽसौ ?-उपाधि.-कर्मजनितं विशेषण, तद्यथा—नारकस्तिर्यग्योन सुखी दु खी सुभगा दुर्भग. पर्याप्तकोऽपर्याप्तक इत्यादि, आहोस्विन्न विद्यत इति परमतमाशङ्क्य त ऊचु. पश्यकस्य—सम्यग्वादादिकमर्थ पूर्वोपात्त पश्यतीति पश्य. स एव पश्यकस्तस्य कर्मजानतोपाधिर्न विद्यत , इत्येतदनुसारेणाहमपि ब्रवीमि न स्वमनीषिकयेति । गत. सूत्रानुगम । तद्गतौ च समाप्तश्चतुर्थोद्देशको नयविचारातिदेशात् समाप्तं सम्यक्त्वाध्ययन चतुर्थमिति । आचा० १ श्रु० ४ अ० ४ उ० । [ 'तए ण से आणंदे गाहावई ' इत्यारभ्य पाठ. ' आणंद ' शब्द द्वितीयभागे ११० पृष्ठे गत. । ] [ पसत्थे मित्ते ' इत्यादि पाठ. ' अणुव्वय ' शब्द प्रथमभागे ४१७पृष्ठे गत । ] [ 'अहाछंद' शब्दे प्रथमभागे ८६५ पृष्ठे यथाछन्दाचरणसम्यक्त्वफलमुक्तम् । ]

[२२] यस्मात् श्रावकधर्मस्य तावत् मूलं सम्यक्त्वं तस्मात् तद्गतमेव विधिमभिधातुकाम आह-

तत्थ समणोवासओ पुव्वामेव मिच्छत्ताओ पडिक्कमइ, सम्मत्तं उवसंपज्जइ । ( आव० ) नन्नत्थ रायाभिओगेणं गणाभिओगेणं बलाभिओगेणं देवयाभिओगेणं गुरुनिग्गहेणं वित्तिकंतारेणं से अ सम्मत्ते पसत्थसम्मत्तमोहणीअकम्माणुवेअणोवसमखयसमुत्थे पसमसंवेगाइ-लिंगे सुहे आयपरिणामे पन्नत्ते ।

श्रमणानुपासक. श्रमणोपासकः श्रावक इत्यर्थ , श्रमणोपासकः पूर्वमेव आदावेव श्रमणोपासको भवन्-मिथ्यात्वात् तत्त्वार्थाश्रद्धानरूपात्प्रतिक्रामति-निवर्त्तते न तन्निवृत्तिमात्रमत्राभिप्रेतं ' किं तर्हि ? तन्निवृत्तिद्वारेण सम्यक्त्वं तत्त्वार्थश्रद्धानरूपम् , उप-सामीप्येन प्रतिपद्यते , सम्यक्त्वमुपसंपन्नस्य सत न ' से ' तस्य कल्पते-युज्यते अद्यप्रभृति सम्यक्त्वप्रतिपत्तिकालादारभ्य किं न कल्पते अन्यतीर्थिकांश्चरकपरिव्राजकभिक्षुभौतादीन् अन्यतीर्थिकदैवतानि रुद्रविष्णुसुगतादीनि अन्यतीर्थिकपरिगृहीतानि वा अर्हत् ' चैत्यानि वा अर्हत्प्रतिमालक्षणानि यथा भौतपरिगृहीतानि वीरभद्रमहाकालादीनि वन्दितुं वा नमस्कर्तुं वा । तत्र वन्दनम्-अभिवादन नम.करणं-प्रणामपूर्वकं प्रशस्तध्वनिभिर्गुणोत्कीर्त्तनं को दोषः स्यात् ?,अन्येषा तद्भक्ताना मिथ्यत्वादिस्थिरीकरणादिरिति,तथा पूर्वम्-आदावनालप्तेन सता अन्यतीर्थिकैस्तानेवालप्तुं वा संलप्तुं वा , तत्र सकृत् संभाषणमालापन पौन पुन्येन संलपनम् । को दोष स्यात्ते हि तप्ततरायोगोलककल्पा. खल्वासनादिक्रियायां नियुक्ता भवन्ति तत्प्रत्यय' कर्मबन्ध. , तथा तेन वा प्रणयेन गृहागमनं कुर्युः अथ च श्रावकस्य स्वजन परिजनो वा अगृहीतसमयसारस्तैस्सह संबन्ध यायादित्यादि प्रथमालप्तेन त्वसभ्रम लोकापवादभयात्कीदृशस्त्वमित्यादि वाच्यमिति,तथा तेषामन्यतीर्थिकानामशन—घृतपूर्णादि पानं—द्राक्षापानादि खादिमं त्रपुषफलादि स्वादिमं-कक्कोललवङ्गादि दातुं वा अनुप्रदातु वा-न कल्पते इति । तत्र सकृत् दानं पुन पुनरनुप्रदानमिति, किं स र्वथैव न कल्पत इति ? , न अन्यथा राजाभियोगेनेति-राजाभियोगं मुक्त्वा बलाभियोगं मुक्त्वा देवताभियोगं मुक्त्वा गुरुनिग्रहेण गुरुनिग्रहं मुक्त्वा ' वित्तिकंतारे , त्ति—वृत्तिकान्तारं मुक्त्वा । एतदुक्तं भवति—राजाभियोगादिना ददन्नपि न धर्ममतिक्रामति इह चोदाहरणानि ' कहं रायाभियोगेण देंतो नातिचरति धम्मं ' तत्रोदाहरणम्—' हत्थिणापुरे नयरे जियसत्तू राया कत्तिओ सेट्ठी नेगमसहस्सपढमासणिओ सावगवन्नगो एवं कालो वच्चइ,तत्थ य परिव्वायगो मासं मासेण खमति तं सव्वलोगो आढइ ,कत्तिओ नाढाइ । ताहे से सो गेरुओ पओसमावन्नो छिद्दाणि मग्गइ, अन्नया रायाए निमंतिओ पारणए नेच्छइ । बहुसो राया निमंतेइ ताहे भणइ-जइ नवरं मम कत्तिओ परिवेसेइ तो नवरं जेमेमि । राया भणइ एवं करेमि । राया समणूसो कत्तियस्स घर गओ । कत्तिओ भणइ संदिसह , राया भणइ—गेरुयस्स परिवेसेहि । कत्तिओ भणइ न वट्टइ अम्हं तुमं विसयवासि त्ति करेमि चिंतेइ य-जइ पव्वइओ हौं तो तो न एव भवंत पच्छाऽणेण परिवेसियं । सा परिवेसिज्जते अंगुली चालेइ । किह ते ?,पच्छा कत्तिओ तेण निव्वेएण पव्वइओ । नेगमसहस्सपरिवारो मुणिसुव्वयसमीवे बारस अंगाणि

पडिओ वारस वरिसाणि परियाओ सोहम्मे कप्पे सक्को जाओ सो परिव्वायगो तेण अभिओगेण आभिओगिओ एरावणो जाओ । ओहिं पउंजइ सक्कं पलाइओ, गहिउं सक्को विलग्गो । दो सीसाणि कयाणि । सक्का वि दो जाया । एवं जाव इयाणि सीसाणि विउव्वइ तावइयाणि सक्को वि सक्करूवाणि विउव्वइ । ताहे नासिउमारद्धो सक्केणाहओ पच्छा ठिओ । एवं रायाभिओगेणं देंतो नाइक्कमइ,कित्तिया एयारिसया होहिंति जं पव्वइस्संति तम्हा न दायव्वं । गणाभिओगेण घरुणो रहमुसले निउत्तो एवं को वि सावगो गणाभिओगेण भत्तं दवाविज्जा देंतो वि सो नातिचरइ धम्मं बलाभिओगो वि एवमेव, देवयाभिओगेणं देंतो नाइक्कमइ । जहा-एगो गिहत्थो सावगो जाओ,तेण वाणमंतराणि चिरपरिचियाणि उज्झियाणि एगा तत्थ वाणमंतरी पओसमावन्ना गावीरक्खगो पुत्तो तीए वाणमंतरीए गावीहिं समं अवहरिओ । ताहे उइण्णा साहइ तज्जंती-किं ममं उज्झसि न व त्ति । सावगो भणति-नवरि मा मम धम्मविराहणा भवउ । सा भणइ ममं अच्चेहि । सो भणइ-जिणपडिमाए अवसाणे ठाहिं आम ठामि । तेण ठविया । नाहे दारगो गावीओ य आणीयाओ एरिसा केत्तिया होहिंति तम्हा न दायव्वं । दवाविज्जंतो नाइचरति । गुरुनिग्गहेण भिक्खुवासगपुत्तो सावगं धूय मग्गइ । ताहे ताणि न देंति सो कवडसड्ढत्तणेण साधू सेवइ । तस्स भावतो उवगयं पच्छा साहेइ । एएण कारणेण पुव्वं दुक्कमि इयाणिं सब्भावो सावगो । साहू पुच्छइ तेहिं कहियं, ताहे दिन्ना धूया । सो सावगो जुयगं घरं करेइ । अन्नया तस्स मायापियरो भत्तं भिक्खुगाण करेंति । ताइ भणंति अज्ज एक्कसि वच्चाहि । सो गतो भिक्खुएहिं विज्जाए अभिमंतिऊण फलं दिन्नं । ताए वाणमंतरीए अधिट्ठिओ घर गओ तं सावगधूयं भणइ-भिक्खुगाण भत्तं देमो । सा नेच्छइ, वासाणि सयणे य आरद्धो सज्जेतुं । साविया आयरियाण गंतु केहेइ तेहिं जोगपडिभेओ दिन्नो, सो से पाणिएण दिन्नो सा वाणमंतरी नट्ठा । साभाविओ जाओ पुच्छइ, कह व त्ति ? कहिए पडिसेहेइ । अन्ने भणंति-तीए मयणमिंजाए सो पाविओ तो साभावितो जाओ । भणइ-अम्मापिउच्छिन्नेण मना विवेचितुत्ति किर फासुयं साहूणं दिन्नं एरिसया केत्तिया आयरिया होहेंति तम्हा परिहरेज्जा । वित्तिकतारेणं देज्जा-सोरट्ठगो सड्ढो उज्जेणिं वच्चइ दुक्काले तच्चन्निएहिं समं तस्स पत्थयणं खीणं । भिक्खुगेहिं भन्नइ-अम्ह एहिं वहाहि पत्थायणं तो तुज्झ वि दिज्जिहिति तेण पडिवन्नं अन्नया तस्स पोट्टसरणी जाया । सो चीवरेहिं वेढिओ तेहिं अणुकंपाए सो भट्टारगाणं नमोक्कारं करेंतो कालगओ देवो वेमाणिओ जाओ । ओहिणा तच्चनियसरीरं पेच्छइ ताहे स भूसणेण हत्थेण पविसेइ, सड्ढाणोहावणा आयरियाण आगमणं कहणं च, तेहिं भणियं जाह अग्गहत्थं गेण्हिऊण भणह नमो अरहंताणं ति बुज्झबुज्झगा २ तेहिं गंतूण भणियो सबुद्धो वंदित्ता लोगस्स कहेइ जहा नत्थि एत्थ धम्मो तम्हा परिहरेज्जा । आव० ६ अ० । आव० । दर्श० ।

(२३) अधुना प्रकृतं योजयति--

एयमिह सद्दहंतो, सम्मद्दिट्ठी तओ अ नियमेण ।
भवणिव्वेयगुणाओ, पसमाइगुणासओ होइ ॥८४॥

एतदनन्तरोदितं जीवाजीवादीह लोके प्रवचने वा श्रद्दधान एवमेवेदमित्याद्रान्तःकरणतया प्रतिपद्यमानः सम्यग्दृष्टिरभिधीयते अविपरीतदर्शनादिति तकश्च नियमेनावश्यन्तया भवनिर्वेदगुणात्-संसारनिर्वेदगुणात् प्रशमादिगुणाश्रयो भवति, उक्तलक्षणानां प्रशमादिगुणानामाधारो भवति । भवति चेत्थं ज्ञान संसारनिर्वेदगुणस्तसाच्च प्रशमादयः प्रतीतमेतदिति ।

(२४) अस्यैव व्यतिरेकमाह--

विवरीयसद्दहाणे, मिच्छाभावाउ णत्थि केइ गुणा ।
अणभिणिवेसो तु कया-इ होइ संमत्तहेऊ वि ॥ ८५ ॥

विपरीतश्रद्धाने उक्तलक्षणाना जीवादिपदार्थानामन्यथा श्रद्धाने मिथ्याभावान्न सन्ति केचन गुणाः सर्वत्रैव विपर्ययादिति भावः,विपरीतश्रद्धानेऽप्यनभिवेशस्तु एवमेवैतदित्यनध्यवसायस्तु कदाचित्कस्मिंश्चित्काले यद्वा कदाचिन्न नियमेनैव भवति-सम्यक्त्वहेतुरपि जायते,सम्यक्त्वकारणमपि यथेन्द्रनागादीनामिति । श्रा० ।

(२५) पञ्चातिचाराः--

सम्मत्तस्स समणोवासएणं इमे पंच अइआरा जाणिअव्वा न समायरियव्वा, तं जहा-संका १ कंखा २ वितिगिच्छा ३ परपासंडपसंसा ४ परपासंडसंथवे ५ ।

'सम्मत्तस्स समणोवासएणं' इत्यादि सूत्रम् । अस्य व्याख्या-सम्यक्त्वस्य प्राग्निरूपितस्वरूपस्य श्रमणोपासकेन--श्रावकेण एते वक्ष्यमाणलक्षणा , अथ वा-अमी ये प्रक्रान्ताः पञ्चेति संख्यावाचकः, अतिचारा-मिथ्यात्वमोहनीयकर्मोदयादात्मनोऽशुभाः परिणामविशेषा इत्यर्थः । यैः सम्यक्त्वमतिचरति ज्ञातव्या ज्ञपरिज्ञया,न समाचरितव्याः-नासेव्या इति भावार्थः । तद्यथेत्युदाहरणप्रदर्शनार्थः । शङ्का काङ्क्षा विचिकित्सा परपाषण्डप्रशंसा परपाषण्डसंस्तवश्चेति । आव० ६ अ० । ध० । ( शङ्कादयो स्वस्वस्थाने व्याख्याताः । )

(२६) श्रावकधर्मस्य सम्यक्त्वं मूलम्--

समणोवासगधम्मस्स मूलवत्थुं सम्मत्तं ।

श्रमणोपासकधर्मस्य किं पुनर्मूलवस्तु इति ?, अत्रोच्यते सम्यक्त्वं, तथा चाह ग्रन्थकारः--'एयस्स ' त्यादि सूत्रम् अस्य पुनः श्रमणोपासकधर्मस्य पुनः शब्दोऽवधारणार्थः, अस्यैव शाक्यादिश्रमणोपासकधर्मे सम्यक्त्वाभावात् न मूलवस्तु सम्यक्त्वं,वसन्त्यस्मिन्नणुव्रतादयो गुणास्तद्भावभावित्वेनेति वस्तु मूलभूतं द्वारभूतं च तद्वस्तु च मूलवस्तु,तथा चोक्तम्-"द्वारं मूलं प्रतिष्ठान-माधारो भाजनं निधिः । द्विषट्कस्यास्य धर्मस्य, सम्यक्त्वं परिकीर्त्तितम् ॥१॥" सम्यक्त्वं प्रशमादिलक्षणम् । उक्तं च "प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणं सम्यक्त्व" मिति (तत्त्वा० भाष्य १ अ० २ सू०)

(२७) कथं पुनरिदं भवतीत्यत आह--

तन्निसग्गेणं वा, अविगमेण वा इमं च सम्मत्तं ।

'तन्निसग्गेणं वा अधिगमेण वे' त्ति सूत्रम् , अस्य व्याख्या-तन्मूलवस्तुभूतं सम्यक्त्वं निसर्गेण वा अधिगमेन वा भवति इति क्रिया । तत्र निसर्गः--स्वभावः अधिगमस्तु यथावस्थितपदार्थपरिच्छेद इति, आह-मिथ्यात्वमोहनीयक-

क्षयोपशमादेरिदं भवति, कथमुच्यते निसर्गेण वेत्यादि ?, उच्यते-स एव क्षयोपशमादिर्निसर्गाधिगमजन्मेति न दोषः उक्तं च-"ऊसरदेसं दड्डिं-क्षयं च विज्झाइ वणदवो पप्प। इय मिच्छत्तस्स अणुदए,उवसमसम्मं लहइ जीवो ॥१॥ जीवादीणमधिगमो, मिच्छत्तस्स तु खओवसमभावे। अधिगमसम्मं जीवो, पावेइ विसुद्धपरिणामो ॥२॥" इति । अलं प्रसङ्गेनेति। इह भवोदधौ दुष्प्रापं सम्यक्त्वादिभावरत्नावाप्तिः विज्ञायोपलब्धजिनप्रवचनसारेण श्रावकेण नितरामप्रमादपरेणानिचात्प्रसिद्धिरवता भवितव्यमित्यस्यार्थस्योक्तस्यैव विशेषख्यापनायानुक्तशेषस्य चाभिधानायेदमाह ग्रन्थकारः-' पञ्चातिचारविशुद्ध ' मित्यादि सूत्रम् , इदं च सम्यक्त्वं प्राग् निरूपितशङ्कादिपञ्चातिचारविशुद्धमनुपालनीयमिति शेषः। आव० ६ अ०। आ० चू०। ति०।

(२८) क्षीणदर्शनोऽपि सम्यग्दृष्टिः। प्रेरकः प्राह-

खीणम्मि दंसणतिए, किं होइ तओ ति दंसणाईओ ।
भण्णइ सम्मद्दिट्ठी, सम्मत्तखए कओ सम्मं ॥ १३१८॥

ननु मिथ्यात्वादिकदर्शनत्रिके क्षीणे किं तकोऽसौ क्षपकश्रेणिदर्शनातीतो भवति ?, न मिथ्यादृष्टिः,मिथ्यात्वस्य क्षीणत्वात्;न मिश्रः सम्यग्मिथ्यादृष्टिः सम्यग्मिथ्यात्वाभावात्, न च सम्यग्दृष्टिः सम्यक्त्वासत्वादित्येवं प्राप्नोति? इत्यर्थः। आचार्य आह-भण्यतेऽत्रोत्तरम्-दर्शनत्रिके क्षीणे विशुद्धसम्यग्दृष्टिः भवत्यसौ। पुनरपि परः प्राह-ननूक्तं मया सम्यक्त्वक्षये सति कुतोऽयं सम्यग्दृष्टिः ? न घटत एवेत्यर्थः ।

सूरिराह--

निव्वलियमयणकोद्दव-रूवं मिच्छत्तमेव सम्मत्तं ।
खीणं न तु जो भावो,सद्दहणालक्खणो तस्स॥१३१९॥
सो तस्स विसुद्धयरो, जायइ सम्मत्तपोग्गलक्खणओ ।
दिट्ठि व्व सण्हसुद्ध-ब्भपटलविगमे मणूसस्स॥१३२०॥
जह सुद्धजलाणुगयं, वत्थं सुद्धं जलक्खए सुतरं ।
सम्मत्तसुद्धपोग्गल-परिक्खए दंसणं चेवं ॥ १३२१ ॥

हन्त ! यः सम्यक्त्वतत्त्वार्थश्रद्धानुरूपो जीवस्य भावः-परिणामः स एव तावन्मुख्यतः सम्यक्त्वमुच्यते, यस्तु शोधितमिथ्यात्वपुद्गलपुञ्जः स तत्त्वतो मिथ्यात्वमेव केवलं सम्यक्तत्त्वश्रद्धानरूपस्य जीवभावस्याशुद्धमिथ्यात्वपुञ्जवदनावारकत्वादुपचारतः सम्यक्त्वमुच्यते। एवं च सति मदनकोद्रवरूपं मिथ्यात्वमेव सदुपचारतः सम्यक्त्वं प्रसिद्धम्, तदेव तस्य क्षपकस्य क्षीणं न तु यस्तत्त्वश्रद्धानलक्षणो जीवस्य भावः। स च तस्य तत्त्वश्रद्धानभाव औपचारिकसम्यक्त्वरूपे सम्यक्त्वपुद्गलपुञ्जे क्षपिते प्रत्युत विशुद्धतरो जायते, यथा श्लक्ष्णशुद्धाऽभ्रपटलविगमे मनुष्यस्य लोचनद्वयरूपा दृष्टिः, स्वच्छाभ्रपटलसदृशो हि सम्यक्त्वपुद्गलपुञ्जः, स च क्षपितोऽभ्रपटलमिव दृष्टेर्यच्च यावच्च तत्त्वश्रद्धानपरिणामस्य विघातक एव,ततोऽनर्थरूपे तस्मिन् क्षपितेऽभ्रपटलविगमे लोचनद्वयीव तत्त्वश्रद्धानपरिणतिर्निर्मलतरैव भवति। दृष्टान्तान्तरमाह-' जहे.' त्यादि। यथा शुद्धं गुरुं निर्मलीकृतं जलानुगतं किञ्चिदार्द्रं वस्त्रम् आतपशोषात्समस्तजलक्षये सुतरामेव शुद्धं भवति; एवमौपचारिकसम्यक्त्वरूपा ये शुद्धपुद्गलास्तत्परिक्षयात्पारमार्थिकरुचिरूपं सम्यग्दर्शनमपि सुतरां निर्मलं भवति।

अपरमपि दृष्टान्तमाह—

सेसआवरणावगमे, सुद्धयरं केवलं जहा नाणं ।
तह खाइयसम्मत्तं, खओवसमसम्मविगमम्मि॥१३२२॥

यथेह शेषस्य क्षायोपशमिकस्य मत्यादिज्ञानचतुष्टयस्यापगमेऽप्यन्यत् क्षायिकं शुद्धतरं केवलज्ञानलक्षणं ज्ञानान्तरं प्रादुरस्ति न पुनरज्ञो भवति जीव ,तद्वत् क्षायोपशमिकसम्यक्त्वविगमेऽप्यपरं विशुद्धतरं क्षायिकं सम्यग्दर्शनान्तरमुपजायते, नत्वदर्शनी भवति जीवः ।

(२९) ननु कथं पुनः क्षायिकं सम्यक्त्वं विशुद्धतरं,क्षायोपशमिकं त्वविशुद्धमित्याह—

निव्वलियमयणकोद्दव-भत्तं तिम्माइ मीसियं मदए।
न तु सोऽवाओ निव्वलि-यमीसियकोद्दवक्खाए॥१३२३॥

तह सुद्धमिच्छसम्म-त्त पुग्गलामिच्छमीसिया मिच्छं ।
होज्ज परिणामओ वा,सोऽवाओ खाइए नत्थि॥१३२४॥

इह निर्वलिता-निर्मदनीकृताः शोधिता ये मदनकोद्रवास्तन्निर्वृत्तं यद्भक्तमोदनस्तत्तैलादिविरुद्धद्रव्यमिश्रितं भुज्यमानं मदयेदपि क्रियां गमयेदेव भोक्तारम्। न पुनः सोऽपायोऽस्ति क्षयसति? निर्वलितमिश्रमदनकोद्रवस्याग्रे सति। इदमुक्तं भवति—यः शोधितानां शुद्धाशुद्धस्वरूपाणां वा मदनकोद्रवाणां भुक्तेः तस्योक्तस्वरूपो मदमलक्षणोऽपायो न भवत्येव, तथा तत्रैव प्रकारेण शुद्धं च तन्मिथ्यात्वं शुद्धमिथ्यात्वम् अपूर्वकरणाध्यवसायेनापनीतमिथ्यात्वभावमित्यर्थः । तदेवोपचारतः सम्यक्त्वं शुद्धमिथ्यात्वसम्यक्त्वं तस्य पुद्गलाः शुद्धमिथ्यात्वसम्यक्त्वपुद्गलाः शोधितमदनकोद्रवस्थानीयाः विरुद्धतैलादिद्रव्यकल्पेन मिथ्यात्वेन मिश्रिताः सन्तस्तद्रूपा एव मिथ्यात्वं भवति, कुतीर्थिकसंसर्गतद्वचःश्रवणादिजनितपरिणामाद्वा क्लिष्टवस्तुनीकृता मिथ्यात्वरूपतां प्रतिपद्यन्ते। ततस्तथैव मिथ्यादृष्टिर्भूत्वा पुनः संसारमविधि यं भ्रमतीति। स चैवभूतोऽपायः क्षायिकसम्यक्त्वे नास्ति, सर्वानर्थमूलानां शुद्धानामशुद्धानां वा मिथ्यात्वपुद्गलानां क्षपितत्वेनासत्त्वात्। तस्मात् शुद्धतरं क्षायिकसम्यक्त्वम्,मलीमसं च क्षायोपशमिकम्। अत एतदपगमेऽपि क्षायिकसम्यक्त्वभावान्नादर्शनी जीवः किं तु प्रत्युत विशुद्धसम्यग्दर्शनीति स्थितम्। विशे० १ अ०।

(३०) अथ तस्य चोत्पादे द्वयी गतिर्निसर्गोऽधिगमश्चेति। तांस्तद्भेदांश्चाह—

निसर्गाद्वाऽधिगमतो , जायते तच्च पञ्चधा ।
मिथ्यात्वपरिहारेणैव , प्रज्वलचरणाञ्चितम् ॥ २२ ॥

निसर्गादधिगमाद्वा तत् सम्यक्त्वं जायते—उत्पद्यते, तत्र निसर्गः-स्वभावो गुरूपदेशादिनिरपेक्ष इति भावः। अधिगमः-गुरूपदेशः यथावस्थितपदार्थपरिच्छेद इति यावत्।

तथाहि—योगशास्त्रवृत्तौ—

" अनाद्यनन्तसंसारा-ऽऽवर्त्तवर्त्तिषु देहिषु ।
ज्ञानदृष्ट्यावृतिवेद्य-नीयान्तरायकर्मणाम् ॥ १ ॥
सागरोपमकोटीनां, कोट्यस्त्रिंशत्परा स्थितिः ।
विंशतिर्गोत्रनाम्नोश्च, मोहनीयस्य सप्ततिः ॥ २ ॥
ततो गिरिसरिद्ग्राव-घोलनान्यायतः स्वयम् ।
एकाब्धिकोटिकोटयूना, प्रत्येकं क्षीयते स्थितिः ॥ ३ ॥
शेषाब्धिकोटिकोटयन्त, स्थितौ सकलजन्मिनः ।
यथाप्रवृत्तिकरणा-द्ग्रन्थिदेशं समीयुषि ॥ ४ ॥
रागद्वेषपरीणामो, दुर्भेदो ग्रन्थिरुच्यते ।
दुरुच्छेदो दृढतरः, काष्ठादेरिव सर्वदा ॥ ५ ॥
ग्रन्थिदेशं तु संप्राप्ता, रागादिप्रेरिताः पुनः ।
उत्कृष्टबन्धयोग्याः स्यु-श्चतुर्गतिजुषोऽपि च ॥ ६ ॥

युग्मम्—

तेषां मध्ये तु ये भव्या, भाविभद्राः शरीरिणः ।
आविष्कृत्य परं वीर्य—मपूर्वकरणे कृते ॥ ७ ॥
अतिक्रामन्ति सहसा, तं ग्रन्थिं दुरतिक्रमम् ।
अतिक्रान्तमहाऽध्वानो, घट्टभूमिमिवाध्वगाः ॥ ८ ॥
अथानिवृत्तिकरणा-दन्तरकरणे कृते ।
मिथ्यात्वं विरलं कुर्यु-र्वेदनीयं यदग्रतः ॥ ९ ॥
आन्तर्मुहूर्त्तिकं सम्य—ग्दर्शनं प्राप्नुवन्ति यत् ।
निसर्गहेतुकमिदं, सम्यग्श्रद्धानमुच्यते ॥ १० ॥
गुरूपदेशमालम्ब्य, सर्वेषामपि देहिनाम् ।
यत्तु सम्यक्त्वश्रद्धानं, तत्स्यादधिगमं परम् ॥ ११ ॥
यमप्रशमजीवातु-र्बीजं ज्ञानचरित्रयोः ।
हेतुस्तपःश्रुतादीनां, सद्दर्शनमुदीरितम् ॥ १२ ॥
श्लाघ्यं हि चरणज्ञान-विमुक्तमपि दर्शनम् ।
न पुनर्ज्ञानचारित्रे, मिथ्यात्वविषदूषिते ॥ १३ ॥
ज्ञानचारित्रहीनोऽपि, श्रूयते श्रेणिकः किल ।
सम्यग्दर्शनमाहात्म्या-त्तीर्थकृत्त्वं प्रपत्स्यते ॥ १४ ॥

इति अत्राह-मिथ्यात्वमोहनीयकर्मक्षयोपशमादिदं भवति, कथमुच्यते निसर्गादधिगमाद्वा तज्जायत इति?, अत्रोच्यते—स एव क्षयोपशमादिर्निसर्गाधिगमजन्मेति न दोषः । उक्तं च—" ऊसरदेसं दड्डिल्लयं च विज्झाइ वणदवो पप्प । इय मिच्छस्साणुदए, उवसमसम्मं लहइ जीवो ॥ १ ॥ जीवादीणमधिगमो, मिच्छत्तस्स उ खओवसमभावे । अधिगमसम्मं जीवो, पावइ विसुद्धपरिणामो " ॥ २ ॥ इति । कृतं प्रसङ्गेनेति । ध० २ अधि० । प० स० । आ० म० ।

(३१) सप्तमनरकपृथिव्या सम्यक्त्विनो गमनागमने निषिद्धे—

आगमणं पि निसिद्धं, चरिमा उ एइ जं तिरिक्खेसु ।
सुरनारगो य सम्म-द्दिट्ठी जं यन्ति मणुएसु ॥ ४२१ ॥

चरमायाः—सप्तमपृथिव्या न केवलं गमनमपित्वागमनमपि गृहीतसम्यक्त्वस्यागमे निषिद्धम्, यतस्तस्या उद्धृत्य सर्वोऽप्यत्यागच्छति तिर्यक्ष्वेव न मनुष्येषु "सत्तममहिनरइया तेऊ वाऊ अणंतरुव्वट्टा । न य पावे माणुस्सं" इति वचनादिति सुरनारकाश्च सम्यक्त्वसहिता यस्मान्मनुष्येष्वेवायान्ति अतः सामर्थ्यात्तिर्यग्गतिगामिनः सप्तमपृथ्वीनारका मिथ्यात्वसहिता एवागच्छन्तीति गाथार्थः । विशे० । ध० ।

(३२) सम्यक्त्वादिश्रावकधर्मं वक्ष्य इत्युक्तं, तत्र—सम्यक्त्वं तावत् स्वरूपतः फलतश्च निरूपयन्नाह—

तत्तत्थसद्दहाणं, सम्मत्तमसग्गहो ण एयम्मि ।
मिच्छत्तखओवसमा, सुस्सूसाई उ होंति दढं ॥ ३ ॥

व्याख्या—तत्त्वार्थानां सर्वविदुपदिष्टतया पारमार्थिकानां जीवादिपदार्थानां श्रद्धानमेतदेवमेवेतिप्रत्ययः । तत्त्वेन वा भावतोऽर्थानां श्रद्धानं तत्त्वार्थश्रद्धानम् । तत्किमित्याह—सम्यगिति प्रशंसार्थो निपातः, समञ्चतीति वा सम्यक्, तद्भावः सम्यक्त्वमित्यस्य स्वरूपमभिहितम् । अथास्यैव दोषविशेषनिवृत्तिरूपं फलमाह—अथवा तत्त्वार्थश्रद्धानं निह्नवानामप्यस्तीति तेषामपि सम्यक्त्वं स्यादित्याशङ्क्याह—असद्ग्रहोऽशोभनाभिनिवेश आप्तवचनबाधितार्थपक्षपात इत्यर्थः । न नैव, यथोक्तश्रद्धानविरुद्धत्वात् असद्ग्रहस्य भवतीति गम्यते । एतस्मिन्ननन्तराभिहितलक्षणे सम्यक्त्वे सति । ततो निह्नवानां कथं तदिति । अथ कस्मादयमिह सति न भवतीत्याह—मिथ्यात्वस्य मिथ्यात्वमोहनीयकर्मदलिकस्य क्षयेणोदीर्णस्य विनाशेन सहोपशमो विपाकोदयापेक्षया विष्कम्भितोदयत्वं मिथ्यात्वक्षयोपशमस्तस्माद्धेतोः । उपलक्षणत्वादस्य क्षयादुपशमाच्चेत्यपि द्रष्टव्यम् । मिथ्यात्वोदयो ह्यसद्ग्रहहेतुः । मिथ्यात्वाकर्मोदयश्च सम्यक्त्वे सति नास्तीत्यसद्ग्रहाभावोऽत्रेति भावः । के पुनरिह सति गुणा भवन्तीत्याह—शुश्रूषादयो धर्मशास्त्रश्रवणेच्छाप्रभृतयो वक्ष्यमाणाः । तुशब्दः पुनःशब्दार्थः । भवन्ति जायन्ते । मिथ्यात्वक्षयोपशमादित्यनेनापि सम्यक्त्वस्य फलमभिहितम् । ननु मिथ्यात्वोदयेऽपि ते केचन संभवन्तीत्याह—दृढमतिशयेन यादृशैस्तैः सम्यक्त्वमभिव्यज्यत इति भावः । अतिशायिता च तेषां दर्शयिष्यामः । ननु तत्त्वार्थश्रद्धानं सम्यक्त्वमित्युक्तम् । श्रद्धानं च तथेति प्रत्ययः । स च मानसोऽभिलाषः । न चायमपर्याप्तकाद्यवस्थायामिष्यते । सम्यक्त्वं तु तस्यामभीष्टं, षट्षष्टिसागरोपमरूपायाः साद्यपर्यवसितकालरूपायाश्च तस्योत्कृष्टस्थितेः प्रतिपादनादिति कथं नागमविरोधः ? इत्यत्रोच्यते—तत्त्वार्थश्रद्धानं सम्यक्त्वस्य कार्यं, सम्यक्त्वं तु मिथ्यात्वक्षयोपशमादिजन्यो रुचिरूप आत्मपरिणामविशेषः । आह च—" से य सम्मत्ते पसत्थसम्मत्तमोहणीयकम्माणुवेयणोवसमक्खयसमुत्थे पसमसंवेगाइलिंगे सुहे आयपरिणामे पण्णत्ते"। अत एवामनस्कानां सिद्धादीनां तदिष्यते । इह च सम्यक्त्वे सत्येव यथोक्तं श्रद्धानं भवति, यथोक्तश्रद्धाने च सति सम्यक्त्वं भवत्येवेति श्रद्धानवता सम्यक्त्वस्यावश्यंभावित्वोपदर्शनाय कार्ये कारणोपचारं कृत्वा तत्त्वार्थश्रद्धानं सम्यक्त्वमिति । ननु मिथ्यात्वोदयजन्यत्वेनासद्ग्रहस्य सम्यक्त्वे सति तत्क्षयोपशमाद्युक्तोऽसद्ग्रहाभावः, शुश्रूषादिगुणानां तु ज्ञानचारित्रांशरूपत्वेन ज्ञानावरणीयचारित्रमोहनीयवीर्यान्तरायकर्मक्षयोपशमलभ्यत्वान्न युक्तः सम्यक्त्वसद्भावमात्रे तद्भाव इति । अत्रोच्यते—सम्यक्त्वहेतोर्मिथ्यात्वक्षयोपशमस्यावसरे ज्ञानावरणानन्तानुबन्धिकषायलक्षणचारित्रमोहनीयादिकर्मणामपि क्षयोपशमोऽवश्यमेव भवतीति कृत्वा सम्यक्त्वे सति ते भवन्तीत्यभिधीयते यथा केवलज्ञानोत्पत्ते-

द्यवलस्यमपि केवलज्ञान कषायक्षयं लभ्यत इत्यभिधीयते। आह च-"केवलियनाणलभो नएणत्थखए कसायाणं" यथा वा मिथ्यात्वक्षयोपशमलब्धमपि सम्यक्त्वमनन्तानुबन्धिरूपचारित्रमोहनीयोदये न लभ्यत इत्यभिधीयते । आह च-"पढमिल्लुयाण उदए, नियमा संजोयणा कसायाणं । सम्मद्दंसणलंभं, भवसिद्धिया वि न लहंति ॥ १ ॥" ननु वैयावृत्त्यनियमस्य तपोभेदत्वेन चारित्ररूपत्वात् सम्यक्त्वसद्भावे चावश्यंभावित्वादविरतसम्यग्दृष्टिगुणस्थानकाभाव प्राप्नोतीति । नैवम्, वैयावृत्त्यनियमरूपचारित्रस्याल्पतमत्वेनाचारित्रतया विवक्षितत्वात् । यथा समूर्छनजानां संज्ञामात्रसद्भावेऽपि विशिष्टसंज्ञाया अभावादसंज्ञित्वमिष्टम् । विरतत्वं हि महाव्रताणुव्रतादिरूपानल्पचारित्रसद्भाव एवेष्यते । यतो न कार्षापणमात्रधनेन धनवान्, एकगवेन वा गोमानिति । ननु सम्यक्त्वे सति शुश्रूषादयो भवन्तीति न युक्तं व्यभिचारित्वात् । तथाहि-उपशान्तमोहादीनां सम्यक्त्वसद्भावेऽपि न शुश्रूषादयो भवन्ति, सकलविकल्पकल्लोलमालाविकलत्वेन निस्तरङ्गमहासमकराकरान्तःकरणस्येति । अत्रोच्यते-यद्यपि शुश्रूषादय उपशान्तमोहादीनां साक्षान्न भवन्ति, कृतकृत्यत्वादिति, तथापि फलतो भवन्ति, तद्भावस्य तत्फलत्वादिति कुतो व्यभिचारः ? श्रावकधर्माधिकाराद्वा, यच्छ्रावकावस्थाया सम्यक्त्वं तदाश्रित्य शुश्रूषादयस्तु भवन्ति इदमित्यभिहितमतो न दोष इति गाथार्थः ॥ ३ ॥

शुश्रूषादयस्तु भवन्तीत्युक्तम्, अथ तानेवाह—

**सुस्सूस धम्मराउ, गुरुदेवाणं जहासमाहीए ।**
**वेयावच्चे णियमो, वयपडिवत्तीए ( इ ) भयणा उ ॥४॥**

व्याख्या—श्रोतुमिच्छा शुश्रूषा । ह्रस्वत्वं तु प्राकृतशैलीवशात् । सद्बोधावन्ध्यनिबन्धनधर्मशास्त्रश्रवणवाञ्छेत्यर्थः । सा च वैदग्ध्यादिगुणवत्तरुणनरकिंनरगानश्रवणरागादप्यधिकतमा सम्यक्त्वे सति भवति । यदाह-" यूनो वैदग्ध्यवत, कान्तायुक्तस्य कामिनोऽपि दृढम् । किन्नरगेयश्रवणा-दधिको धर्मश्रुतौ रागः ॥ १ ॥" तथा धर्मः श्रुतचारित्रलक्षणः । तत्र श्रुतधर्मरागस्य शुश्रूषापदेनैवोक्तत्वादिह धर्मरागश्चारित्रधर्मरागोऽभिप्रेतः । स च कर्मदोषात्तदकरणेऽपि कान्तारातीतदुर्गतबुभुक्षाक्षामकुक्षिक्षणघृतपूर्णभोजनाभिलाषादप्यतिरिक्तोऽत्र भवति । तथा गुरवो धर्मोपदेशका आचार्यादयः, देवाश्चाराध्यतमा अर्हन्तो गुरुदेवास्तेषाम् । इह च गुरुपदस्य पूर्वनिपातो विवक्षया गुरूणां पूज्यतरत्वख्यापनार्थः । न हि सद्गुरूपदेशं विना सर्वविद्वबोधगम इति भावः । यथासमाधि-यथासमाधानानतिक्रमेण । इह चाव्ययीभावसमासादपि तृतीयाया अलोप प्राकृतत्वात्, असमासाद्वा । व्यावृत्तस्य भाव कर्म वा वैयावृत्त्यं तस्मिन् तत्प्रतिपत्तिविश्रामणाभ्यर्चनादौ । नियमोऽवश्यकर्तव्यताङ्गीकार । स च सम्यक्त्वे सति भवतीति प्रक्रमः । एतेषां च शुश्रूषादीनां यथोत्तरं हेतुफलभावोऽवसेयः । अथ यथा शुश्रूषादयोऽत्र भवन्ति, तथा किं व्रतान्यपि भवन्तीत्याशङ्क्याह-व्रतानाम्-अणुव्रतादीनां प्रतिपत्तिरङ्गीकरणं व्रतप्रतिपत्ति । तुशब्दस्य पुनरर्थत्वेह सम्बन्धात्तस्यां व्रतप्रतिपत्तौ तु पुनर्भजना-विकल्पना भवति । सम्यक्त्वे सति व्रतानि कदाचिद्भवन्ति, कदाचिन्नेति भाव इति गाथार्थः ॥ ४ ॥

( ३३ ) भजनाकारणमेवाह-

**जं सा अहिगयराओ, कम्मखओवसमओ ण य तओ वि ।**
**होइ परिणामभेया, लहुं ति तम्हा इहं भयणा ॥ ५ ॥**

यद्-यस्मात्कारणात्सा व्रतप्रतिपत्तिः अधिकतरात् सम्यक्त्वप्राप्तिनिमित्तभूतकर्मक्षयोपशमापेक्षया समर्गलतरात् कर्मक्षयोपशमतः चारित्रमोहनीयकर्मक्षयोपशमाद्भवति, ननु सम्यक्त्वलाभावसर एवासौ कुतो न भवतीत्याह-न च नैव । तको वि' त्ति-तकोऽपि सोऽपि यदैव सम्यक्त्वप्रतिपत्तिहेतुः कर्मक्षयोपशमो भवति न तदैव व्रतप्रतिपत्तिहेतुभूतस्तदधिकतरोऽपीत्यपिशब्दार्थः । अन्ये तु-' तओ उ ' इति पठन्ति, तत्र व्याख्या-न च-नैव तकः पुनर्भवति जायते । कुतः पुनरेवमित्याह-परिणामभेदात्तथा भव्यत्वहेतुकात्माध्यवसायविशेषाद्विशिष्टतरपरिणामनिबन्धनत्वात्तस्येति भावः 'लहुंति ' त्ति-लघ्विति शीघ्रमेव । सम्यक्त्वनिबन्धनक्षयोपशमानन्तरमेवेत्यर्थः । तस्मात्-ततः कारणादिह व्रतप्रतिपत्तौ भजना-विकल्पना । शुश्रूषादिषु पुनर्नियमः, इयमत्र भावना-यद्यपि ग्रन्थिभेदादेव सम्यक्त्वमुदेति, तत्र च व्रतप्रतिपत्तिमेवोपादेयतरामध्यवस्यति, तथापि यावत्यां कर्मस्थितौ सत्यां सम्यक्त्वलाभो भवति, न तावत्यामेव व्रतप्रतिपत्तिरपि तत्त्वतो भवतीति गाथार्थः ।

इदमेवाह—

**सम्मापलियपुहुत्तेऽवगए कम्माण भावओ होंति ।**
**वयपभितीणि भवण्णव-तरंडतुल्लाणि णियमेण ॥ ६ ॥**

' सम्म ' त्ति-सूचनात्सूत्रमिति न्यायात् सम्यक्त्वलब्धादनन्तरं पल्योपमानामागमप्रसिद्धानां कालपरिमाणविशेषलक्षणानां पृथक्त्वं द्विप्रभृतिनवान्तसङ्ख्यालक्षणं पल्योपमपृथक्त्वं तस्मिन् । अपगते-अपेते वेदित इत्यर्थः । केषां पल्योपमपृथक्त्वमित्याह—कर्मणां ज्ञानावरणादीनाम् । इह च कर्मस्थितेरिति वाच्ये स्थितेः-स्थितिमता चाभेदविवक्षया कर्मणामित्युक्तम् । यतो मोहनीयादिकर्मणां सागरोपमकोटीकोटीसप्तत्यादिकायाः स्थितेर्मध्यात्कोटीकोट्यादिकां स्थितिं यथाप्रवृत्तिकरणेन क्षपयति तावद्यावदेका पल्योपमासङ्ख्येयभागोना सागरोपमकोटीकोटीशेषा । ततो ग्रन्थिभेदेन सम्यक्त्वं लभते । ततः शेषकर्मस्थितेः पल्योपमपृथक्त्वे क्षपिते सत्यणुव्रतानि लभत इत्यागममुद्रा । ततः किमित्याह-भावतः परमार्थवृत्तिमाश्रित्य, द्रव्यत पुनरतिदीर्घतरायामपि कर्मस्थितौ महाव्रतान्यपि भवन्ति । तदुक्तम्-' सव्वजियाणं जम्हा, सुत्ते गेविज्जगेसु उववाओ । भणिओ जिणेहि सो न य, लिंगं मोत्तुं जओ भणियं ॥ १ ॥ जे दंसणवावण्णा, लिंगग्गहणं करिंति सामन्ने । तेसिं पि य उववाओ, उक्कोसो जाव गेविज्जा ॥ २ ॥" ' होंति ' त्ति-भवन्ति-जायन्ते । कानीत्याह-व्रतप्रभृतीन्यणुव्रतादीनि । सकलव्रतः किंविधानि तानीत्याह-भवार्णवतरण्डतुल्यानि-संसारसागरोत्तरणद्रोण्यादिकल्पानि । नियमेनावश्यंभावेन ।

तदुक्तम्—

"सम्मत्तम्मि उ लद्धे, पलियपुहुत्तेण सावओ होज्जा।
चरणोवसमखयाणं, सागरसखंतरा होंति ॥ १ ॥"

पल्योपमपृथक्त्वादिवेद्यस्य च कर्मणो ह्रासोऽनुक्रमेण स्याक्षीर्योल्लासात्करणान्तरप्रवृत्तेरतिशीघ्रकालेन वा । तदुक्तम्—"एवं अप्परिवडिए, सम्मत्ते देवमणुयजम्मेसु । अन्नयरसेढिवज्जं, एगभवेण च सव्वाइं ॥ १ ॥" ननु यदा सम्यक्त्वयुक्त एव नवपल्योपमातिरिक्तस्थितिकदेवेषूत्पद्यते, तदा देवभवे विरतेरभावात्, कथं 'सम्मत्तम्मि उ लद्धे, पलियपुहुत्तेण सावओ होज्जा' इत्येतद् घटते ?, अत्रोच्यते-तस्यामवस्थायां यावतीं स्थितिं क्षपयति यावतीमन्यां बध्नाति, ततो देशोनसागरोपमकोटीकोटीरूपाया अधिकृतकर्मस्थितेः पल्योपमपृथक्त्वस्य नापगमो भवतीति न देवभवादौ देशविरतिलाभः स्यादिति न विरोधः । तदेवं सम्यक्त्वलाभेऽपि व्रतप्रतिपत्तौ भजनेति स्थितमिति गाथार्थः । पञ्चा० १ विव० । ध० । ( सम्यग्दृष्टेर्न्यूनार्द्धपुद्गलपरावर्तः संसारः 'संसार' शब्देऽस्मिन्नेव भागे गतः । )

इदानीं "सम्मत्ताईगुत्तम-गुणाण लाहंतरं तु उक्कोसमि" स्येकोनपञ्चाशदधिकद्विशततमं द्वारमाह—

सम्मत्तम्मि उ लद्धे, पलियपुहुत्तेण सावओ होज्जा ।
चरणोवसमखयाणं, सायरसंखंतरा होंति ॥ १३६८ ॥

यावत्या कर्मस्थितौ सम्यक्त्वं लब्धं तन्मध्यात्पल्योपमपृथक्त्वलक्षणे स्थितिखण्डे क्षपिते श्रावको देशविरतो भवेत्ततश्चरणोपशमक्षयाणामन्तरा संख्यातानि सागरोपमाणि भवन्ति । इयमत्र भावना-देशविरतिप्राप्त्यनन्तरं संख्यातेषु सागरोपमेषु क्षपितेषु चारित्रमवाप्नोति, ततोऽपि संख्यातेषु सागरोपमेषु क्षपितेषु उपशमश्रेणिं प्रतिपद्यते, ततोऽपि संख्यातेषु सागरोपमेषु क्षपकश्रेणिर्भवति, ततस्तद्भवे मोक्ष इति । एवमप्रतिपतितसम्यक्त्वस्य देवमनुष्यजन्मसु संसरणं कुर्वतः अन्योन्यमनुष्यभवे देशविरत्यादिलाभो भवति । यदिवा—तीव्रशुभपरिणामवशात् क्षपितबहुकर्मस्थितेरेकस्मिन्नपि भवेऽन्यतरश्रेणिवर्जान्येतानि सर्वाण्यपि भवन्ति, श्रेणिद्वयं त्वेकस्मिन् भवे सैद्धान्तिकाभिप्रायेण न भवत्येव किं त्वेकैवोपशमश्रेणिः क्षपकश्रेणिर्वा भवतीति । उक्तं च-"एवं अप्परिवडिए, सम्मत्ते देवमणुअजम्मेसु । अन्नयरसेढिवज्जं, एग भवेण च सव्वाइं ॥१॥" प्रव० २४६ द्वार । श्रा० । नं० । सम्यक्त्वे सम्यक्त्विनः । 'जात्यन्धस्य यथा पुंस-श्चक्षुर्लाभे शुभोदये । सद्दर्शनं तथैवास्य, सम्यक्त्वे सति जायते॥१॥आनन्दो जायतेऽत्यन्तं,सात्त्विकोऽस्य महात्मनः । सद्व्याध्यपगमे यद्वद्, व्याधितस्य सदौषधम्॥२॥" कर्म० ४ कर्म० । श्रा० ।

(३४) इदं च सम्यक्त्वमात्मपरिणामरूपत्वाच्छद्मस्थेन दुर्लक्ष्यमिति लक्षणमाह—

तं उवसमसंवेगा-इएहिं लक्खिज्जई उवाएहिं ।
आयपरिणामरूवं, बज्झेहिं पसत्थजोगेहिं ॥ ५३ ॥

तत्सम्यक्त्वमुपशमसंवेगादिभिरिति उपशान्तिः-उपशम संवेगो—मोक्षाभिलाषः आदिशब्दान्निर्वेदानुकम्पास्तिक्यपरिग्रहः,लक्ष्यते-चिह्नयते एभिरुपशमादिभिर्बाह्यैः प्रशस्तयोगैरिति संबन्धः, बाह्यवस्तुविषयत्वाद्बाह्या प्रशस्तयोगाः-शोभनव्यापारास्तैः, किं विशिष्टं तत्सम्यक्त्वम् ? आत्मपरिणामरूपम्—जीवधर्मरूपमिति ;

तथा चाह-

इत्थ य परिणामो खलु, जीवस्स सुहो उ होइ विन्नेओ ।
किं मलकलंकमुक्कं, कणगं भुवि सामलं होइ ॥५४॥

अत्र च सम्यक्त्वे सति किं परिणामोऽध्यवसायः खलुशब्दोऽवधारणार्थः, जीवस्य शुभ एव भवति-विज्ञेयो नत्वशुभः । अथवा-किमत्र चित्रमिति । प्रतिवस्तूपमामाह-किं मलकलङ्करहितं कनकं भुवि श्यामलं भवति, न भवतीत्यर्थः । एवमत्रापि मलकलङ्कस्थानीयं प्रभूतं क्लिष्टं कर्म श्यामलत्वतुल्यस्त्वशुभपरिणामः, स प्रभूते क्लिष्टे कर्मणि क्षीणे जीवस्य न भवति ।

प्रशमादीनामेव बाह्ययोगत्वमुपदर्शयन्नाह—

पयईं वा कम्माणं, वियाणिओ वा विवागमसुहं ति ।
अवरद्धे वि न कुप्पइ,उवसमओ सव्वकालं पि ॥५५॥

प्रकृत्या वा सम्यक्त्वाणुवेदकजीवस्वभावेन वा कर्मणां कषायनिबन्धनानां विज्ञाय वा विपाकमशुभमिति । तथाहि-कषायाविष्टोऽन्तर्मुहूर्तेन यत्कर्म बध्नाति तदनेकाभिः सागरोपमकोटाकोटिभिरपि दुःखेन वेदयतीत्यशुभो विपाकः । एतत् ज्ञात्वा किम् अपराद्धेऽपि न कुप्यति ?, अपराध्यत इति अपराद्धः-प्रतिकूलकारी तस्मिन्नपि कोपं न गच्छत्युपशमतः-उपशमेन हेतुना सर्वकालमपि यावत्सम्यक्त्वपरिणाम इति ।

तथा—

नरविबुहेसरसुक्खं, दुक्खं चिय भावओ य मन्नंतो ।
संवेगओ न मुक्खं, मुत्तूणं किंचि पत्थेइ ॥५६॥

नरविबुधेश्वरसौख्यं, चक्रवर्तीन्द्रसौख्यमित्यर्थः, अस्वाभाविकत्वात् कर्मजनितत्वात्सावसानत्वाच्च दुःखमेव भावतः परमार्थतो मन्यमानः संवेगतः संवेगेन हेतुना न मोक्षं स्वाभाविकजीवरूपमकर्मजमपर्यवसानं मुक्त्वा किंचित्प्रार्थयते-अभिलषतीति ।

नारयतिरियनरामर-भवेसु निव्वेयओ वसइ दुक्खं ।
अकयपरलोयमग्गो, ममत्तविसवेगरहिओ वि ॥५७॥

नारकतिर्यङ्नरामरभवेषु सर्वेष्वेव निर्वेदतो—निर्वेदेन कारणेन वसति दुःखम् । किं विशिष्टः सन्? अकृतपरलोकमार्गः-अकृतसदनुष्ठान इत्यर्थः । अयं हि जीवलोके परलोकानुष्ठानमन्तरेण सर्वभवासारं मन्यते इति । ममत्वविषवेगरहितोऽपि तथा ह्ययं प्रकृत्या निर्ममत्व एव भवति विदिततत्त्वत्वादिति ।

तथा-

दट्ठूण पाणिनिवहं, भीमे भवसागरम्मि दुक्खत्तं ।
अविसेसओऽणुकंपं, दुहा वि सामत्थओ कुणइ॥५८॥

दृष्ट्वा प्राणिनिवहं-जीवसंघातं क भीमे-भयानके भवसा-

गेरे—संसारसमुद्रे दुःखार्त्ते—शारीमानसैर्दुःखैरभिभूतमित्यर्थः; अविशेषतः-सामान्येनात्मीयेतरविचाराभावेनेत्यर्थः । अनुकम्पाम्—दयां द्विधापि-द्रव्यतो, भावतश्च । द्रव्यतः प्राशुकपिण्डादिदानेन, भावतो-मार्गयोजनया सामर्थ्यतः स्वशक्त्यनुरूपं करोतीति ।

मन्नइ तमेव सच्चं, निस्संकं जं जिणेहिँ पन्नत्तं ।

सुहपरिणामो सव्वं, कंखाइविसुत्तियारहिओ ॥ ५६ ॥

मन्यते-प्रतिपद्यते तदेव सत्यं निःशङ्कं-शङ्कारहितं यज्जिनैः प्रज्ञप्तं-यत्तीर्थकरैः प्रतिपादितं शुभपरिणामः सन् साक-ल्येनापन्तरोदितसमस्तगुणान्वित सर्वं-समस्तं मन्यते, न तु किंचिन्मन्यते किंचिन्नेति भगवत्स्वविश्वसामान्यायोगात् । पुनरपि स एव विशिष्यते । किंविशिष्टः सन्? काङ्क्षादिविश्रोतसिका रहितः काङ्क्षा अन्योन्यदर्शनग्राह इत्युच्यते, आदिशब्दाद्विचिकित्सापरिग्रह, विश्रोतसिका तु संयमशस्यमञ्जीकृत्याध्यवसायसलिलस्य विश्रोतो—गमनमिति ।

उपसहरन्नाह—

एवंविहपरिणामो, सम्मद्दिट्ठी जिणेहिँ पन्नत्तो ।

एसो य भवसमुद्दं, लंघइ थोवेण कालेणं ॥ ६० ॥

एवंविधपरिणाम इत्यनन्तरोदितप्रशमादिपरिणामः सम्यग्दृष्टिर्जिनैः प्रज्ञप्त इति प्रकटार्थं । अस्यैव फलमाह-एष च भवसमुद्रं लङ्घयति-अतिक्रामति स्तोकेन कालेन । प्राप्तबीजत्वादुत्कृष्टतोऽप्यपार्धपुद्गलपरावर्तान्त-सिद्धिप्राप्तेरिति । (आ० ।) [ एवंविधमेव सम्यक्त्वम् इत्येतत्प्रतिपादितम् 'मउण' शब्दे षष्ठ भागे । ] "जइ जिणमयं पवज्जह, ता मा ववहारनिच्छए मुयह । ववहारनयुच्छेए, तित्थुच्छेओ जओऽवस्सं ॥१॥" इत्यादीनि । वाचकमुख्येनोक्तम्—" तत्त्वार्थश्रद्धानं सम्यग्दर्शनं " [ तत्त्वार्थाधिगमसूत्रम् १—२ ]।

( ३५ ) तदपि प्रशमादिलिङ्गमेवेति दर्शयन्नाह—

तत्तत्थसद्दहाणं, सम्मत्तं तम्मि पसममाईया ।

पढमकसाओवसमा-दविक्खया हुंति नियमेण ॥६२॥

तत्त्वार्थश्रद्धानं—सम्यक्त्वं तस्मिन्प्रशमादयोऽनन्तरोदिताः प्रथमकषायोपशमाद्यपेक्षया भवन्ति नियमेन । अयमत्र भावार्थ —न ह्यनन्तानुबन्धिक्षयोपशमादिमन्तरेण तत्त्वार्थश्रद्धानं भवति । सति च तत्क्षयोपशमे तदुदयघद्द्रव्यः सकाशादपेक्षयाऽस्य प्रशमादयो विद्यन्त एवेति तत्त्वार्थश्रद्धानं सम्यक्त्वमित्युक्तम् । श्रा० । तच्च सम्यक्त्वं शुभात्मपरिणामरूपमस्मदीयानामप्रत्यक्षं केवलं लिङ्गैर्लक्ष्यते । अत आह—सम्यक्त्वं कीदृशं भवति ?, पञ्चेति—पञ्चभि शमसंवेगनिर्वेदानुकम्पास्तिक्यरूपैर्लक्षणैर्लिङ्गैर्लक्षितम्-उपलक्षितं भवति एभिर्लक्षणैः परस्थ परोक्षमपि सम्यक्त्वं लक्ष्यत इति भाव । ध०२ अधि० । सम्यक्त्वद्वारं निश्चयव्यवहारनयाभ्यां विचारस्तत्र व्यवहारनयो मन्यते मिथ्यादृष्टिरज्ञानी च सम्यक्त्वज्ञानयो प्रतिपद्यमानको भवति, नतु सम्यक्त्वज्ञानसहित निश्चयनयस्तु मृत सम्यग्दृष्टिर्ज्ञानी च । सम्यग्ज्ञाने प्रतिपद्यते न तु मिथ्यादृष्टिरज्ञानी च । आ० म० १ अ० । ( केषु द्रव्येषु मध्ये पर्यायेषु वा सम्यक्त्वमिति 'सामाइय' शब्दे व क्ष्यते । ) सद्दर्शनं तथैवास्य सम्यक्त्वे सति जायते । कर्म० ५ कर्म० । याः प्रथमसम्यक्त्वस्य लाभकाले अन्तरकरणप्रविष्टस्यावस्थिताध्यवसायस्य सम्यक्त्वादिलब्धयो भवन्ति ता अनाकारोपयोगेऽपि भवन्ति । विशे० । ( सम्यक्त्वपालनाद् दृष्टान्तीकृतसंप्रतिनृपाख्यानकं 'संपइ' शब्देऽस्मिन्नेव भागे उक्तम् । )

मिच्छत्तं दमिऊणं, सम्मत्तम्मि धणिअं अहिगारो ।

कायव्वो बुद्धिमया, मरणसमुग्घायकालम्मि ॥८० प०॥

सम्यक्त्वं च दयादानक्रियामूलं प्रकीर्तितम् । द्वा० ६ अध्या० । "सम्यक्त्वशीलतुम्बाया, भवाब्धिस्तीर्यते सुखम् । तं दधानो मुनिर्जम्बुः, क्षीनदीषु कथं ब्रुडेत् ॥ १ ॥ " कल्प० २ अधि० ८ क्षण । ( सम्यक्दृष्टिमिथ्यादृष्टित्वे दण्डकः 'दिट्ठि' शब्दे चतुर्थभागे २५११ पृष्ठ गतः । ) दर्शनमोहनीयकर्मभेदे, यदुदयात्पुनः सम्यग्जिनप्रणीतं तत्त्वं श्रद्धत्ते तदिति । कर्म० ६ कर्म० । पं० स० । सम्यक्त्वमचलं विधेयम्, न तापसादीनां कष्टतप सेविनामष्टगुणैश्वर्यमुद्वीक्ष्य दृष्टिमोहः कार्य इति प्रतिपादनपरे (स्था०) आचारप्रथमश्रुतस्कन्धस्य चतुर्थेऽध्ययने, स्था० ६ ठा०३ उ० । स० । आव० । यथा सिद्धपञ्चाशिकायामनन्तकालच्युतसम्यक्त्वादिविशेषणविशिष्टा एवैकस्मिन् समयेऽष्टोत्तर शतं सिध्यन्तीत्युक्तं, तथा च सति ऋषभादयः सर्वेऽष्टोत्तरशतमनन्तकालच्युतसम्यक्त्वादिविशेषणविशिष्टा एव अन्यथापि वा ?, विशिष्टा एव चेत्तदा ऋषभदेवस्यानन्तकालच्युतसम्यक्त्वमन्यथा वा ? अनन्तकालच्युतसम्यक्त्वं चेत्तदा ऋषभदेवस्य त्रयोदश भवा एव कथं ? पूर्वमपि सम्यक्त्वलाभात्, अन्यथापि वेति पक्षश्चेत्तदा सिद्धपञ्चाशिकादिग्रन्थैस्सह कथं संवादः ? आश्चर्यकृत्त्वेन चेत्तदा तदाश्चर्यं किमुत्कृष्टावगाहनया तीर्थकृत्त्वेन वा सङ्ख्यातकालपतितत्वादिना वा ? त्रिधाऽपि वेति व्यक्त्या प्रसाद्यमिति, प्रश्नः ?, अत्रोत्तरम्-एकस्मिन् समयेऽष्टोत्तरं सिध्यन्तस्सर्वेऽप्यनन्तकालच्युतसम्यक्त्वादिविशेषणविशिष्टा एव सिध्यन्तीत्यक्षराणि यदि सिद्धपञ्चाशिकादिषु भवन्ति तदा बाहुबलेः पञ्चलक्षपूर्वप्रमाणायुषोऽपवृत्तिरिव श्रीऋषभदेवस्यापि सिद्धिराश्चर्यकरत्वेन समर्थनीया, एवं तदधिकारे यद्यदसंभवि तत्सर्वमाश्चर्यं एवान्तर्भावनीयम् ॥ १६३ ॥ सेन० २ उल्ला० । सिद्धाना ज्ञानदर्शनचारित्रवीर्याण्यनन्तानि प्रोक्तानि तत्कथं घटते तेषा पृथक् पृथगेकैकसद्भावात् तद्व्यक्त्या प्रसाद्यमिति प्रश्न ?, अत्रोत्तरम्—ज्ञानादीनां चतुर्णां तदावरणकर्मपुद्गलानामनन्ताना क्षयात्तेषामप्यानन्त्य घटत एव, यदुक्तम्—

"ज्ञानादयस्तु भावा, प्राणमुक्तोऽपि जीवति स तैर्हि ।
तस्मात्तज्जीवत्वं, नित्यं सर्वस्य जीवस्य ॥ १ ॥
अनन्तं केवलज्ञानं ज्ञानावरणसंक्षयात् ।
अनन्तं दर्शनं चापि, दर्शनावरणक्षयात् ॥ २ ॥
क्षायिके शुद्धसम्यक्त्व—चारित्रे मोहनिग्रहात् ।
अनन्तसुखवीर्ये च, वेद्यविघ्नक्षयात् क्रमात् ॥ ३ ॥
आयुष क्षीणभावत्वात्, सिद्धानामक्षया स्थितिः ।
नामगोत्रक्षयादेवा-ऽमूर्त्ताऽनन्ताऽवगाहना ॥ ४ ॥ "

इति ॥ ५७ ॥ सेन० ३ उल्ला० । दर्शनसम्यक्त्वयोः कः प्रतिविशेषः ? येन द्वयोरप्यतीचाराः, परमार्थेनः परस्परं कश्चन सदृशा एव दृश्यन्ते, तेन तयोरैक्यतया भेद प्रसाद्य इति प्रश्नः ?, अत्रोत्तरम्-दर्शनसम्यक्त्वयोर्वस्तुगत्याऽभेदेऽपि कथञ्चित्-शङ्कित्वाद्यभाव एव सम्यक्त्वातिचार उच्यते, शङ्कादिसद्भावस्तु दर्शनातिचार इति व्यक्तं प्रवचनसारोद्धारवृत्तौ षष्ठ द्वारे ॥ २८० ॥ सेन० ३ उल्ला० ।

**सम्मत्तंग**-सम्यक्त्वाङ्ग-न० । सम्यक्त्वप्रधानस्याङ्गीभूते सम्यक्त्वफलनैव फलवति, प्रति० ।

**सम्मत्तकारण**-सम्यक्त्वकारण-त्रि० । सम्यक्त्वं कारणमस्येति । सम्यक्त्वजन्ये, पं० सं० १ द्वार ।

**सम्मत्तकिरिया**-सम्यक्त्वक्रिया-स्त्री० । सम्यक्त्वं-तत्त्वश्रद्धानं तदेव जीवव्यापारत्वात्क्रिया सम्यक्त्वस्य क्रिया सम्यक्त्वक्रिया । सम्यग्दर्शने वा सति क्रिया सम्यक्त्वक्रिया । स्था० २ ठा० १ उ० । क्रियाभेदे, यया सम्यग्दर्शनयोग्याः कर्मप्रकृतीः सप्तसप्ततिसङ्ख्याः बध्नाति सा सम्यक्त्वक्रिया अभिधीयते । सूत्र० २ श्रु० २ अ० ।

**सम्मत्तणाणचरणाणुवाई**-सम्यक्त्वज्ञानचरणानुपातिन्-त्रि० । सम्यक्त्व-सद्दर्शनं ज्ञान-सद्बोधरूप चरणम्-आगमानुसारि क्रियानुष्ठानं सम्यक्त्वं च ज्ञानं चेति एकवद्भावस्तान्यनुपततीत्येवं शील सम्यक्त्वज्ञानचरणानुपाती । मोक्षमार्गानुगे, दश० ४ तस्य ।

**सम्मत्तदंसि(ण्)**-सम्यक्त्वदर्शिन्-त्रि० । सम्यक् तत्त्व सम्यक्त्व तद्दर्शी । परमार्थदर्शिनि, आचा० १ श्रु० २ अ० ६ उ० ।

**सम्मत्तपज्जव**-सम्यक्त्वपर्यव-पु० । सम्यक्त्वपरिणामविशेष, ज्ञा० १ श्रु० १३ अ० ।

**सम्मत्तपरक्कम**-सम्यक्त्वपराक्रम-न० । सम्यक्त्वे सति वर्द्धमानगुणैः कर्मशत्रुजयलक्षणः पराक्रमो-बलं यस्मिंस्तत् सम्यक्त्वपराक्रमम् । उत्तराध्ययनानामेकोनत्रिंशेऽध्ययने, उत्त० १८ अ० ।

ज्ञानादीनि मुक्तिमार्गत्वेनोक्तानि संवेगादिमूलानि अकर्मतावसानानि तानीहोच्यन्ते । अस्याध्ययनस्य चत्वार्यनुयोगद्वाराणि व्यावर्ण्य नामनिष्पन्ननिक्षेपोऽभिधेय, स च नामपूर्वक इत्येतन्नामनिर्देशायाह निर्युक्तिकृत्-

आयाणपएणेयं, सम्मत्तपरक्कमंति अज्झयणं
गुणणं तु अप्पमायं, एगे पुण वीयरागसुयं ॥ ५०३ ॥

आदीयत इत्यादानम्-आदि प्रथममित्यर्थः, तच्च तत्पदं च-निराकाङ्क्षतयाऽर्थगमकत्वेन वाक्यमेवादानपदं तेन, उपचारतश्चेह तदभिहितमपि तथोक्तं' तत आदानपदाभिहितेन प्रक्रमान्नाम्ना 'इद'मिति प्रस्तुत सम्यक्त्वपराक्रमम् इति-उपप्रदर्शने, उच्यत इति शेष, 'अध्ययनं' प्राग्युक्तनिरुक्त, वक्ष्यति हि- इह खलु सम्मत्तपरक्कमे णामऽज्झयणे पण्णत्ते" त्ति, गुणैर्हि निर्वृत्त गौणम्, तु -अवधारणे गौणमेव, अप्रमाद इत्युपलक्षणत्वाद् अप्रमादश्रुतम्, एके पुनर्वीतरागश्रुतं, कोऽर्थ ?—संवेगादयोऽत्र वर्ण्यन्ते, तद्रूप एव च तत्त्वतोऽप्रमाद इति तदभिधायि श्रुतरूपत्वादप्रमादश्रुतमिति ब्रुवते, अन्ये त्वप्रमादोऽपि वीतरागताफल इति तत्प्राधान्याश्रयणतो वीतरागश्रुतमिति गाथार्थः । अत्र चादानपदनाम्नः सूत्रान्तर्गतत्वात्सूत्रस्पर्शिकनिर्युक्तेरेव तत्र व्यापार इति तदुपेक्ष्य वीतरागश्रुतनाम च तस्य कैश्चिदेवाभिमतत्वात् 'मध्यग्रहणे आद्यन्तौ गृहीतावेव भवत' इति न्यायतो वा द्वयमप्यनादृत्याप्रमादश्रुतनिक्षेपमभिधातुमाह—

निक्खेवो अपमाए, चउव्विहो दुविहो उ होइ दव्वम्मि ।
आगम नोआगमतो, नोआगमतो य सो तिविहो ॥ ५०४ ॥
जाणगभवियसरीरे, तव्वइरित्ते अमित्तमाईसु ।
भावे अन्नाणअसं-वराईसु होइ नायव्वो ॥ ५०५ ॥
निक्खेवो अ सुअम्मि, चउक्कओ दुविहो य होइ दव्वम्मि ।
आगम नोआगमतो, नोआगमतो य सो तिविहो ॥ ५०६ ॥
जाणगभवियसरीरे, तव्वइरित्ते अ सो उ पंचविहो ।
अंडयबोंडयवालय-वागय तह कीडए चेव ॥ ५०७ ॥
भावसुअं पुण दुविहं, सम्मसुअ चेव होइ मिच्छसुयं ।
अहियारो सम्मसुए, इहमज्झयणम्मि नायव्वो ॥ ५०८ ॥

गाथापञ्चकं प्रायः प्रतीतार्थमेव, नवरम् 'अमित्तमाईसु'त्ति-अमित्रा-शत्रव आदिशब्दाद्-व्यालादिपरिग्रहस्तेषु योऽप्रमाद स तद्व्यतिरिक्तोऽप्रमाद उच्यते, द्रव्यत्वं चास्य तथाविधाप्रमादकार्याप्रसाधकत्वात् द्रव्यविषयत्वाद्वा, भाव इति-भावे विचार्ये अज्ञान—मिथ्याज्ञानमसंवरः-अनिरुद्धाश्रवता, आदिशब्दात्-कषायपरिग्रह, एतेषु प्रक्रमादप्रमाद - एतज्जयं प्रति सदा सावधानतारूपो भवति ज्ञातव्यः । तथा 'सो उ पंचविधो' त्ति—स इति तत्—तद्व्यतिरिक्तसूत्रं तु-पुनरर्थे पञ्चविधं—पञ्चप्रकारं, पञ्चविधत्वमेवाह—अण्डजं-हंसाद्यण्डकेभ्यो यज्जायते यथा कचित्पट्टसूत्रं, पौण्डकं (बोण्डजं) यद्वमनितिन्दुकोद्भव यथा कर्पाससूत्रम्, वालजं यदूरणकादिकेशोत्पन्नं यथोर्णासूत्रम्, वाकजं सनाऽतस्यादिवाकेभ्यो यज्जायते यथा सनसूत्रम्, कीटजं च यत्तथाविधकीटेभ्यो लालात्मकं प्रभवति यथा पट्टसूत्रम्, तथा सम्यक्श्रुतम्—अङ्गप्रविष्टादि मिथ्याश्रुतं—कनकसप्तत्यादि, अधिकार—प्रकृतं सम्यक्श्रुतेन, सुब्व्यत्ययात्तृतीयार्थे सप्तमी, इह—अध्ययने ज्ञातव्य—अवबोद्धव्य, तद्रूपत्वादस्येति गाथापञ्चकार्थः ।

सम्प्रति गौणतामेवास्य नाम्नो वक्तुमाह—

सम्मत्तमप्पमाओ, इहमज्झयणम्मि वण्णिओ जेणं ।
तम्हेयं अज्झयणं, णायव्वं अप्पमायसुअं ॥ ५०९ ॥

'सम्मत्तं'ति-सुब्व्यत्ययात्सम्यक्त्वे उपलक्षणत्वाज्ज्ञानादिषु चाप्रमाद उक्तन्यायेन संवेगादिफलोपदर्शनतः कार्यो तदनुष्ठानं प्रत्युद्यमदर्शनेन वा 'इहमज्झयणम्मि' त्ति इहाध्ययने वर्णितो येन तस्मादेतदध्ययनं ज्ञातव्यम्, अप्रमादश्रुतम्-अप्रमादश्रुतनामकमिति गाथार्थः । गतो नामनिष्पन्ननिक्षेप ।

सम्प्रति सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

सुयं मे आउसंतेणं भगवया एवमक्खायं-इह खलु सम्मत्तपरक्कमे नामज्झयणे समणेणं भगवया महावीरेणं कासवेणं पवेइयं जं सम्मं सद्दहित्ता पत्तइत्ता रोयइत्ता फासित्ता पाल-

इत्ता तीरित्ता कित्तइत्ता सोहइत्ता आराहित्ता आणाए अणुपालइत्ता बहवे जीवा सिज्झंति बुज्झंति मुचंति परिनिव्वायंति सव्वदुक्खाणमंतं करेंति ॥ १ ॥

श्रुतम्—आकर्णितं मे—मया आयुष्मन्निति शिष्यामन्त्रणम्, एतच्च सुधर्मस्वामी जम्बूस्वामिनं प्रत्याह, तेनेति—य सर्वजगत्प्रतीत, तेनापि कीदृशनेत्याह-भगवता—समग्रैश्वर्यादिमता प्रक्रमान्महावीरेण एवमिति—वक्ष्यमाणप्रकारेण आख्यातं—कथितं, तमेव प्रकारमाह—इह—अस्मिन् जगति जिनप्रवचने वा, खलु—निश्चितं सम्यक्त्वमिति गुणगुणिनोरनन्यत्वात्सम्यक्त्वगुणान्वितो जीवस्तस्य सम्यक्त्वे वाक्षरूपे सति पराक्रमः-उत्तरोत्तरगुणप्रतिपत्त्या कर्मारिजयसामर्थ्यलक्षणो वर्ण्यतेऽस्मिन्निति सम्यक्त्वपराक्रम नामाध्ययनमस्तीति गम्यते। नन्वेवमिदमपि गौणमेव नाम तत्किमिति निर्युक्तिकृताऽऽदानपदेनैतदुक्तम्?, इतरे तु गौणे इति, सत्यमेतत्; किन्तु नाम्नाऽनेकविधत्वसूचनाथ निर्युक्तिकृतेत्थमुक्तं न त्वस्य गौणत्वव्यवच्छेदार्थम्, तच्च केन प्रणीतमित्याह—श्रमणेन—श्रामण्यमनुचरता धर्मकायावस्थामाश्रितनेत्यर्थः, भगवता महावीरेण काश्यपेन प्रवेदितं-स्वत. प्रवेदितमेव भगवता ममेदमाख्यानमित्युक्तं भवति। अनेन वक्तृद्वारेण प्रस्तुताध्ययनस्य माहात्म्यमाह। ननु सुधर्मस्वामिनाऽपि श्रुतकेवलित्वात्तद्द्वारेणाप्यस्य प्रामाण्यं सिध्यत्येव तत्किमेवमुपन्यास.?, उच्यते—लब्धप्रतिष्ठैरपि गुरूपदिष्टं गुरुमाहात्म्यं च ख्यापयद्भिः सूत्रमर्थश्चाख्येय इतिख्यापनार्थमेवमुपन्यास। इत्थं वक्तृद्वारेणास्य माहात्म्यमभिधाय संप्रति फलद्वारेणाह—यदिति—प्रस्तुताध्ययनं सम्यग्-अवैपरीत्येन श्रद्धाय—शब्दार्थोभयरूपं सामान्येन प्रतिपद्य प्रतीत्य—उक्तरूपमेव विशेषेण इत्थमेवेति निश्चित्य यद्वा—संवेगादिजननफलानुभवलक्षणेन प्रत्ययेन प्रतीतिपथमवतार्य, रोचयित्वा—तदभिहितार्थानुष्ठानविषयं तदध्ययनादिविषयं वाऽभिलाषमात्मन उत्पाद्य, संभवति हि कश्चिद् गुणवत्तयाऽवधारितेऽपि कदाचिदरुचिरित्येवमभिधानं, 'फासित्त' त्ति-तदुक्तानुष्ठानत. स्पृष्ट्वा पालयित्वा—तद्विहितानुष्ठानस्यातीचाररक्षणेन तीरयित्वा—तदुक्तानुष्ठानं पारं नीत्वा कीर्त्तयित्वा—स्वाध्यायविधानत. सशुद्ध्य—शोधयित्वा तदुक्तानुष्ठानस्य तत्तद्गुणस्थानावाप्तित उत्तरोत्तरशुद्धिप्रापणेन आराध्य—यथावदुत्सर्गापवादकुशलतया यावज्जीवं तदर्थासेवनेन, एतत् सर्वं स्वमनीषिकातोऽपि स्यादत आह—आज्ञया—गुरुनियोगात्मिकया अनुपाल्य—सततमासेव्य, यद्वा—स्पृष्ट्वा योगत्रिकेण मनोवाक्कायलक्षणेन, तत्र मनसा—सूत्रार्थोभयचिन्तनेन वचसा-वचनादिना कायेन-भङ्गकरचनादिना, एवं पालनाराधनयोरपि योगत्रयं वाच्यम्, पालयित्वा—परावर्त्तनादिनाऽभिरक्ष्य तीरयित्वा—अध्ययनादिना परिसमाप्य कीर्त्तयित्वा—गुरोर्विनयपूर्वकमिदमित्थं मयाऽधीतमिति निवेद्य शोधयित्वा—गुरुवदनुभाषणादिभि शुद्धं विधाय आराध्य-उत्सूत्रप्ररूपणादिपरिहारेणायाधयित्वा शेष प्राग्वन्नवरम् आज्ञयेति जिनाज्ञया, उक्तं हि—"फासिय जोगतिएणं, पालयमविराहियं च एमेय। तीरियमंतं पाविय, कीट्टिय गुरुकहए जिणमाणा ॥ १ ॥"
एवं च कृत्वा किमित्याह—बहवः-अनेक एव जीवा—प्राणिनः सिद्ध्यन्ति-इहैवागमसिद्धत्वादिना, बुध्यन्ते—घातिकर्मक्षयेण, विमुच्यन्ते—भवोपग्राहिकर्मचतुष्टयेन, ततश्च परिनिर्वान्ति—कर्मदावानलोपशमेन अत एव सर्वदु खानां—शारीरमानसानाम् अन्तं-पर्यन्तं कुर्वन्ति मुक्तिपदावाप्त्येति सूत्रार्थ.। उत्त० पाई० २९ अ०।

सम्प्रति विनेयानुग्राहार्थं सम्बन्धाभिधानपुरस्सरं प्रस्तुताध्ययनार्थमाह—

तस्स णं अयट्ठे एवमाहिज्जइ, तं जहा-संवेगे १ निव्वेए २ धम्मसद्धा ३ गुरुसाहम्मियसुस्सूसणया ४ आलोअणया ५ निंदणया ६ गरहणया ७ सामाइए ८ चउवीसत्थए ९ वंदणे १० पडिक्कमणे ११ काउस्सग्गे १२ पच्चक्खाणे १३ थयथुइमंगले १४ कालपडिलेहणया १५ पायच्छित्तकरणे १६ खमावणे १७ सज्झाए १८ वायणया १९ पडिपुच्छणया २० परियट्टणया २१ अणुप्पेहा २२ धम्मकहा २३ सुत्तस्सआराहणया २४ एगग्गमणसंनिवेसणया २५ संजमे २६ तवे २७ वोदाणे २८ सुहसाए २९ अपडिबद्धया ३० विवित्तसयणासणसेवणया ३१ विणियट्टणया ३२ संभोगपच्चक्खाणे ३३ उवहिपच्चक्खाणे ३४ आहारपच्चक्खाणे ३५ कसायपच्चक्खाणे ३६ जोगपच्चक्खाणे ३७ सरीरपच्चक्खाणे ३८ सहायपच्चक्खाणे ३९ भत्तपच्चक्खाणे ४० सब्भावपच्चक्खाणे ४१ पडिरूवणया ४२ वेयावच्चे ४३ सव्वगुणसंपुन्नया ४४ वीयरागया ४५ खंती ४६ मुत्ती ४७ मद्दवे ४८ अज्जवे ४९ भावसच्चे ५० करणसच्चे ५१ जोगसच्चे ५२ मणगुत्तया ५३ वयगुत्तया ५४ कायगुत्तया ५५ मणसमाहारणया ५६ वयसमाहारणया ५७ कायसमाहारणया ५८ नाणसंपन्नया ५९ दंसणसंपन्नया ६० चरित्तसंपन्नया ६१ सोइंदियनिग्गहे ६२ चक्खिदियनिग्गहे ६३ घाणिंदियनिग्गहे ६४ जिब्भिंदियनिग्गहे ६५ फासिंदियनिग्गहे ६६ कोहविजए ६७ माणविजए ६८ मायाविजये ६९ लोभविजए ७० पिज्जदोसमिच्छादंसणविजए ७१ सेलेसि ७२ अकंमया ७३।

एतस्य सम्यक्त्वपराक्रमाध्यनस्य श्रीमहावीरेण यथानुक्रममर्थो व्याख्याते, -तद्यथा—संवेगो मोक्षाभिलाष. १, निर्वेद संसाराद्विरक्तता २, धर्मे श्रद्धा धर्मे रुचि. ३, गुरुस्तत्त्वोपदेष्टा, तस्य गुरोः, साधर्मिण समानधर्मकर्तुश्च शुश्रूषणा-सेवा ४, आलोचना-गुरोरग्रे पापानां प्रकाशनम् ५, निन्दना-आत्मसाक्षिकमात्मनो निन्दा ६, गर्हणा-अपर लोकानां पुरत' स्वदोषप्रकाशनम् ७, सामायिकं-शत्रौ मित्रे साम्यम् ८, चतुर्विंशतिस्तवो 'लोगस्सुज्जोयगरे' इत्यादि चतुर्विंशतिजिननामपठनम् ९, वन्दनं-द्वादशावर्त्तवन्दनेन गुरो·

वन्दना १०, प्रतिक्रमणं-पापान्निवर्त्तनम् ११, कायोत्सर्गोऽतीचारशुद्धयर्थं कायस्य व्युत्सर्जनं कायममत्ववर्जनम् १२, प्रत्याख्यानं-मूलगुणोत्तरगुणधारणम् १३, स्तवस्तुतिमङ्गल, स्तव शक्रस्तवपाठ , स्तुतिरूर्ध्वीभूय जघन्येन चतुष्टयस्तुतिकथनं, मध्यमेनाष्टस्तुतिकथन, उत्कृष्टेन १०८ अष्टोत्तरशतस्तुतिकथनम् , स्तवश्च स्तुतयश्च स्तवस्तुतय , स्तवस्तुतय एव मङ्गलं स्तवस्तुतिमङ्गलम् १४, कालप्रतिलेखना कालस्य व्याघातिप्रभृतिकालचतुष्टयस्य प्रतिलेखना प्ररूपणा कालग्रहणरूपा कालप्रतिलेखना १५, प्रायश्चित्तकरणं—लग्नस्य पापस्य निवृत्त्यर्थं तपस' करणम् १६, क्षमापना अपराधक्षामणम् १७, स्वाध्यायश्चतुर्विधो वाचनादिक १८, वाचना—गुरुसमीपे सूत्राक्षराणां ग्रहणम् १९, प्रतिपृच्छना—गुरो पुरत संदेहस्य पृच्छनम् २०, परिवर्तना सूत्रपाठस्य मुहुर्मुहुर्गुणनम् २१, अनुप्रेक्षा-सूत्रस्य चिन्तनम् २२,धर्मकथा-धर्मसंबद्धाया वार्त्ताया कथनम् २३, श्रुताराधना-सिद्धान्तस्याराधना २४, एकाग्रमन सन्निवेशना, चित्तस्यैकस्मिन् प्रधाने ध्येयवस्तुनि स्थिरीकरणम् २५, संयम—आश्रवाद्विरतिरूप. २६, तपो—द्वादशविधम् २७, व्यवदान-विशेषणावदान कर्मशुद्धिर्व्यवदानं कर्मणा निर्जरा २८, सुखशात—सुखस्य विषयसुखस्य शात-शातनं स्पृहानिवारणम् २९, अप्रतिबद्धता-नीरागत्वम् ३०, विविक्तशयनासनसेवना—स्त्रीपशुपण्डकादिरहितशयनासनानामासेवना ३१, विनिवर्त्तना—पञ्चेन्द्रियाणां विषयेभ्यो विशेषेण निवर्त्तनम् ३२, संभोगप्रत्याख्यान—संभोग एकमण्डलीभोक्तृत्वं, तस्य प्रत्याख्यानं, गीतार्थावस्थाया जिनकल्पाचारग्रहणेन परिहारः सभोगप्रत्याख्यानम् ३३ , उपधिप्रत्याख्यान—रजोहरणमुखवस्त्रिका विहायाऽन्योपधिपरिहार ३४, आहारप्रत्याख्यानं-सदोषाहारपरिहार. ३५, कषायप्रत्याख्यान—क्रोधादिपरिहार ३६, योगप्रत्याख्यानं-मनोवाक्कायाना व्यापारो योगस्तस्य 'प्रत्याख्यान परिहार. ३७, शरीरप्रत्याख्यान—प्रस्तावे समागते शरीरस्यापि व्युत्सर्जनम् ३८, साहाय्यप्रत्याख्यान—साहाय्यकारिणा परिहार ३९, भक्तपानप्रत्याख्यानमनशनग्रहणम् ४०, सद्भावप्रत्याख्यानं-सद्भावेन पुनरकरणेन परमार्थवृत्त्या प्रत्याख्यानं सद्भावप्रत्याख्यानम् ४१, प्रतिरूपता-प्रति सादृश्ये, तत. प्रति स्थविरकल्पिमुनिसदृशो रूपं वेषो यस्य स प्रतिरूप., प्रतिरूपस्य भाव प्रतिरूपता, स्थविरकल्पिसाधुयोग्यवेषधारित्वम् ४२, वैयावृत्त्यंव्यावृतो गुर्वादिकार्येषु व्यापारवान्, तद्भावो वैयावृत्त्यं साधूनामाहाराद्यानयनसाहाय्यम् ४३, सर्वगुणसंपन्नता-ज्ञानादिगुणसहितत्वम् ४४, वीतरागता-रागद्वेषनिवारणम् ४५, क्षान्ति.-क्षमा ४६, मुक्तिर्निर्लोभता ४७, मार्दव-मानपरिहार ४८, आर्जवं—सरलत्व ४९, भावसत्यमन्तरात्मन शुद्धत्वम् ५०, करणसत्य-प्रतिलेखनादिक्रियाविषये निरालस्यम् ५१, योगसत्यं-मनोवाक्काययोगेषु सत्यं योगसत्यम् ५२, मनोगुप्तित्वं-मनसोऽशुभपदार्थेभ्योऽपनम् ५३, वचोगुप्तित्व-वचसोऽशुभपदार्थाद्गोपनम् ५४, कायगुप्तित्वं-कायस्याशुभव्यापाराद्गोपनम् ५५, मनःसमाधारणा-मनस' शुभस्थाने स्थिरत्वेन स्थापनम् ५६, वच समाधारणा-वचनस्य शुभकार्ये स्थापनम् ५७,कायसमाधारणा-कायस्य शुभकार्ये स्थापनम् ५८, ज्ञानसंपन्नता श्रुतज्ञानसहितत्वम् ५९दर्शनसपन्नत्वं सम्यक्त्वसहितत्वम् ६०, चारित्रसंपन्नत्व यथाख्यातचारित्रयुक्तत्वम् ६१, श्रोत्रेन्द्रियनिग्रह ६२,चक्षुरिन्द्रियनिग्रह ६३,घ्राणेन्द्रियनिग्रह. ६४, जिह्वेन्द्रियनिग्रह. ६५, स्पर्शेन्द्रियनिग्रह ६६ क्रोधविजय. ६७, मानविजय ६८, मायाविजय ६९ , लोभविजय' ७०, प्रेय्यद्वेषमिथ्यादर्शनविजय , प्रेय्य-प्रेमरागरूपं, द्वेषोऽप्रीतिरूप., मिथ्यादर्शन-साशयिकादि, तेषां विजय., प्रेय्यं च द्वेषश्च मिथ्यादर्शनं च प्रेय्यद्वेषमिथ्यादर्शनानि, तेषां विजय. प्रेय्यद्वेषमिथ्यादर्शनविजय. ७१ , शैलेशी चतुर्दशगुणस्थानस्थायित्वम् ७२, अकर्मता-कर्मणामभाव. ७३ । उत्त० २९ अ० ।

अथ संवेगादिधर्मान् फलतोऽभिधित्सुरिदमाह-

अह भंते ! संवेगे निव्वेए गुरुसाहम्मियसुस्सूसणया आलोयणया निंदणया गरहणया खमावणया सुयसहायता विउसमणया भावे अप्पडिबद्धया विणिवट्टणया विवित्तसयणासणसेवणया सोइंदियसंवरे ० जाव फासिंदियसंवरे जोगपच्चक्खाणे सरीरपच्चक्खाणे कसायपच्चक्खाणे संभोगपच्चक्खाणे उवहिपच्चक्खाणे भत्तपच्चक्खाणे खमाविरागया भावसच्चे जोगसच्चे करणसच्चे मणसमण्णाहरणया वयसमन्नाहरणया कायसमन्नाहरणया कोहविवेगे ०जाव मिच्छादंसणसल्लविवेगे णाणसंपन्नया दंसणसंप० चरित्तसंप०वेदणअहियासणया मारणंतियअहियासणया एए णं भन्ते ! पया किंपज्जवसाणफला पण्णत्ता ?, समणाउसो ! गोयमा ! संवेगे निव्वेगे ०जाव मारणंतियअहियासणया एए णं सिद्धिपज्जवसाणफला पण्णत्ता , समणाउसो ! । ( सू० ६०० )

'अह' त्यादि, अथेति परिप्रश्नार्थ 'संवेए'त्ति संवेजनं संवेगो. मोक्षाभिलाष. ' निव्वेए ' त्ति-निर्वेद --ससारविरक्तता गुरुसाहम्मियसुस्सूसणय ' त्ति-गुरूणा--दीक्षाद्याचार्याणा साधर्म्मिकाणा च--सामान्यसाधूना या शुश्रूषणता-सवा स। तथा ' आलोयण ' त्ति-आ--अभिविधिना सकलदोषाणा लोचना--गुरुपुरत प्रकाशना आलोचना सैवालोचनता ' निंदणय ' त्ति--निन्दनम्-आत्मनैवात्मदोषपरिकुत्सन ' गरहणय ' त्ति-गर्हण--परसमक्षमात्मदोषोद्भावनं ' खमावणय ' त्ति परस्यासन्तोषवत क्षमोत्पादनम् विउसमणय ' त्ति-व्यवशमनता--परस्मिन् क्रोधान्निवर्त्तयनि सति क्रोधोज्झनम् , एतच्च क्वचिन्न दृश्यते, 'सुयसहायय ' त्ति-श्रुतमेव सहायो यस्यासौ श्रुतसहायस्तद्भावस्तत्ता, ' भावे अप्पडिबद्धय' त्ति-भावे--हासादावप्रतिबद्धता--अनुबन्धवर्जन ' विणिवट्टणय' त्ति-विनिवर्त्तन-विरमणमसयमस्थानेभ्य. ' विवित्तसयणासणसेवणय ' त्ति-विविक्तानि-स्त्र्याद्यससक्तानि यानि शयनासनानि उपलक्षणत्वादुपाश्रयश्च तेषां या सेवना सा तथा श्रोत्रेन्द्रियसंवरादय प्रतीता 'जोगपच्चक्खाणे ' त्ति-कृतकारितानुमतिलक्षणाना मन प्रभृतिव्यापाराणा प्राणातिपातादिषु प्रत्याख्यान--निरोधप्रतिज्ञान योगप्रत्याख्यान , ' सरीरपच्चक्खाण ' त्ति-शरीरस्य प्रत्याख्या-

नम्-अभिष्वङ्गप्रतिवर्जनपरिज्ञानं शरीरप्रत्याख्यानम्,'कसायपच्चक्खाणे' त्ति-क्रोधादिप्रत्याख्यानं—तान् न करोमीति प्रतिज्ञानम् 'संभोगपच्चक्खाणे' त्ति-समिति—संकरेण स्वपरलाभमीलनात्मकेन भोगं सम्भोग.-एकमण्डलीभोक्तृकत्वमित्येकोऽर्थः तस्य यत् प्रत्याख्यान-जिनकल्पादिप्रतिपत्त्या परिहारस्तत्तथा,'उवहिपच्चक्खाणे' त्ति-उपधेरधिकस्य नियम भक्तप्रत्याख्यानं व्यक्तम्, 'खम' त्ति-क्षान्तिः 'विरागय' त्ति वीतरागता—रागद्वेषापगमरूपा 'भावसच्चे' त्ति-भावसत्यं-शुद्धान्तरात्मतारूपं पारमार्थिकावितथत्वमित्यर्थः 'जोगसच्चे' त्ति-योगा -मनोवाक्कायास्तेषा सत्यम्-अवितथत्व योगसत्यम्,'करणसच्चे'त्ति-करणे-प्रतिलेखनादौ सत्यं-यथोक्तत्वं करणसत्यम्, 'मणसमन्नाहरणय' त्ति-मनस समिति—सम्यक् अन्विति-स्वावस्थानुरूपेण आङिति-मर्यादया आगमाभिहितभावाभिव्याप्त्या वा हरण-सङ्क्षेपणं मन समन्वाहरण तदेव मन समन्वाहरणता, एवमितरे अपि, 'कोहविवेगे' त्ति—क्रोधविवेक.-कोपत्याग. तस्य दुरन्ततादिपरिभावनेनोदयनिरोध 'वेयणअहियासणय' त्ति—क्षुधादिपीडासहनम् 'मारणंतियअहियासणय' त्ति—कल्याणमित्रबुद्ध्या मारणान्तिकोपसर्गसहनमिति। भ० १७ श० ३ उ०।

एस खलु सम्मत्तपरकमस्स अज्झयणस्स अट्ठे समणेणं भगवया महावीरेणं आघविए पन्नविए परूविए दंसिए निदंसिए उवदंसिए त्ति बेमि। सम्मत्तपरकमज्झयणं सम्मत्तं।

एष—अनन्तरोक्त. खलु—निश्चये—सम्यक्त्वपराक्रमस्याध्ययनस्य अर्थ—अभिधेय श्रमणेन भगवता महावीरेण 'आघविए' त्ति-आर्षत्वाद् आख्यात.—सामान्यविशेषपर्यायाभिव्यापिकथनेन प्रज्ञापित -हेतुफलादिप्रकाशनात्मकप्रकर्षप्रज्ञापनेन प्ररूपित—स्वरूपकथनेन दर्शित—नानाविधभेददर्शनेन निदर्शित -दृष्टान्तोपन्यासेन उपदर्शित उपसंहारद्वारेण, इदमपि चूर्णिमाश्रितमेव। इति—परिसमाप्तौ: ब्रवीमीति पूर्ववत्, गतोऽनुगम, सम्प्रति नया, तेऽपि तथैव। उत्त० पाई० २९ अ०।

सम्मत्तवाय-सम्यक्त्ववाद-पु०। परस्परसव्यपेक्षकालादिरूपे सम्यग्वादे, सूत्र० १ श्रु० १२ अ०।

सम्मत्तविसुद्धया-सम्यक्त्वविसुद्धता-स्त्री०। स्थिरत्वे, सम्यक्त्वविसुद्धौ स०।

सम्मत्तसद्दहण-सम्यक्त्वश्रद्धान--न०। सम्यक्त्वं श्रद्धीयतेऽस्तीति प्रतिपद्यतेऽनेनेति सम्यक्त्वश्रद्धानम्। सम्यक्त्वास्तित्वे, ध० २ अधि०।

सम्मत्तसामाइय-सम्यक्त्वसामायिक--न०। सम्यक्त्वमुक्तरूपमेव सामायिकं सम्यक्त्वसामायिकम्। सामायिकभेदे,विशे०।

इमे च तत्पर्याया —

सम्मद्दिट्ठि अमोहो, सोही सब्भावदंसणं बोही।
अविवज्जओ सुदिट्ठी-एवमाई निरुत्ताइं॥ २७८४॥

विशे०। (एषां पदानां व्याख्या तत्तच्छब्देषु।) (अस्य सर्वा वक्तव्यता 'सामाइय' शब्दे वक्ष्यामि।)

सम्मत्तसुद्धि-सम्यक्त्वशुद्धि-स्त्री०। सम्यक्त्वशौचे, आव०।

योगा' संगृह्यन्ते तत्थ उदाहरणगाहा—

सागेयम्मि महाबले, विमलपहे, चेव चित्तकम्मे य।
निप्फत्ति छट्ठमासे, भूमीकम्मस्स करणं च॥१२६७॥

अस्या व्याख्या कथानकादवसेया, साएए महबलो राया अत्थाणीए दूओ पुच्छिओ-किं नत्थि मम ज अन्नेसिं रायाणं अत्थि त्ति?, चित्तसभ त्ति, कारिया, तत्थ दो वि चित्तकरावप्रतिमौ चित्रकारौ-विमल.,प्रभाकरश्च। तेसिं अद्धद्धेणं अप्पिया, जवणियतरिया चित्तेइ, एगेण निम्मविय, एगेण भूमी कया,राया तस्स तुट्ठो, पूइयो य पुच्छिओ य। प्रभाकरो पुच्छिओ भणइ—भूमी कया, न ताव चित्तेमि त्ति, राया भणइ—केरिसया भूमी कय त्ति?, जवणिया अवणीया, इयरं चित्तकम्म निम्मलयर दीसइ, राया कुविओ, विन्नविओ—पभा एत्थ संकंत त्ति, तं छाइयं, नवरं कुड्डं तुट्ठेण एवं चेव अच्छउ त्ति भणिओ, एवं सम्मत्त विसुद्ध कायव्व, तेनैव योगा. सगृहीता भवन्ति १२। आव० ४ अ०। आ० क०।

सम्मत्तोवरि-सम्यक्त्वोपरि-अव्य०। सम्यक्त्वलाभकालस्योर्ध्वे, पञ्चा० १० विव०।

सम्मद्द-सम्मर्द-पु०। संघर्षे, स्था० ३ ठा० ४ उ०। भ०।

सम्मद्दंसण-सम्यग्दर्शन-दर्शनमोहनीयभेदानां क्षयजसम्यक्त्वलक्षणे दर्शनभेदे, स्था० ७ ठा० ३ उ०। मिथ्यात्वमोहनीयकर्माणुवदनोपशमक्षयक्षयोपशमसमुत्थे आत्मपरिणामे, भ० ८ श० २ उ०। आ० म०। ('दंसण' शब्दे चतुर्थभागे २४२६ पृष्ठे अस्य भेदद्वय गतम्।) तत्त्वार्थश्रद्धाने, स्था०।

स्वप्नदर्शनकाले भगवान् सरागसम्यग्दर्शनीति सरागसम्यग्दर्शन निरूपयन्नाह—

दसविधे सरागसम्मद्दंसणे पन्नत्ते,तं जहा-"निसग्गु १वते सरुई २, आणरुती ३ सुत्त४बीतरुतिमेव ५। अभिगम ६ वित्थाररुती ७, किरिया ८ संखेव ९ धम्मरुती १०॥१॥"
(सू० ७५१)

'दसविहे' त्यादि, सरागस्य—अनुपशान्ताक्षीणमोहस्य यत्सम्यग्दर्शन—तत्त्वार्थश्रद्धानं तत्तथा, अथवा—सराग च तत्सम्यग्दर्शन चेति विग्रह., सरागं सम्यग्दर्शनमस्यति वेति, 'निसग्ग' गाहा रुचिशब्द प्रत्येकं योज्यते, ततो निसर्ग --स्वभावस्तेन रुचि --तत्त्वाभिलापरूपाऽस्येति निसर्गरुचिर्निसर्गतो वा रुचिरिति निसर्गरुचि', यो हि जातिस्मरणप्रतिभादिरूपया स्वमत्याऽवगतान् सद्भूतान् जीवादीन् पदार्थान् श्रद्दधाति स निसर्गरुचिरिति भाव, यदाह--"जो जिणदिट्ठे भावे, चउव्विहे (द्रव्यादिभि·) सद्दहाइ सयमेव। एमेव नन्नहत्ति य, निसग्गरुइ त्ति नायव्वो

॥ १ ॥ " इति । तथोपदेशो-गुर्वादिना कथनं तेन रुचिर्यस्ये त्युपदेशरुचिः तत्पुरुषपदं स्वयमूह्य' सर्वत्रेति, यो हि जिनोक्तानेव जीवादीनर्थान् तीर्थकरशिष्यादिनोपदिष्टान् श्रद्धत्ते स उपदेशरुचिरिति भाव' । यत आह—" एए चेव उ भावे, उवइट्ठे जो परेण सद्दहइ । छउमत्थेण जिणेण व, उवएसरुई मुणेयव्वो ॥ १ ॥ " इति । तथाऽऽज्ञा—सर्वज्ञवचनात्मिका तया रुचिर्यस्य स तथा, यो हि प्रतनुरागद्वेषमिथ्याज्ञानतयाऽऽचार्यादीनामाज्ञयैव कुग्रहाभावाज्जीवादि तथेति रोचते माषतुषादिवत् स आज्ञारुचिरिति भाव , भणित च—" रागा दोसो मोहो, अन्नाणं जस्स अवगयं होइ । आणाए रोयंतो, सो खलु आणारुई होइ ॥ १ ॥ " इति । 'सुत्तवीयरुईमेव' त्ति-इहापि रुचिशब्दस्य प्रत्येकमभिसम्बन्धात् सूत्रेण—आगमेन रुचिर्यस्य स सूत्ररुचि , यो हि सूत्रागममधीयानस्तेनैवाङ्गप्रविष्टादीनां सम्यक्त्व लभते गोविन्दवाचकवत् स सूत्ररुचिरिति भाव , अभिहित च—" जो सुत्तमहिज्जंतो, सुएण ओगाहई उ सम्मत्त । अंगण बाहिरेण व, सो सुत्तरुइ त्ति नायव्वो ॥ १ ॥ " इति । तथा बीजमिव, बीज यदेकमप्यनेकार्थप्रतिबोधोत्पादक वचस्तेन रुचिर्यस्य स बीजरुचि , यस्य ह्येकेनापि जीवादिना पदेनावगतेनानेकेषु पदार्थेषु रुचिरुपैति स बीजरुचिरिति भाव', गदित च—" एगपएणेगाइ पयाइ, जो पसरई उ सम्मत्त । उदए व्व तिल्ल बिंदू, सो बीयरुइ त्ति नायव्वो ॥ १ ॥ " इति, 'एव' ति समुच्चये, । तथा 'अभिगमवित्थारुइ' त्ति—इहापि प्रत्येक रुचिशब्द सम्बन्धनीय , तत्राभिगमो—ज्ञान ततो रुचिर्यस्य सोऽभिगमरुचि', येन ह्याचारादिक श्रुतमर्थतोऽधिगत भवति सोऽभिगमरुचि , अभिगमपूर्वकत्वात्तद्रुचेरिति भाव , गाथाऽत्र—" सो होइ अभिगमरुई, सुअनाणं जस्स अत्थओ दिट्ठं । एक्कारस अंगाइ, पइन्नय दिट्ठिवाओ य ॥ १ ॥ " इति, तथा विस्तारो—व्यासस्तता रुचिर्यस्य स तथेति, येन हि धर्मास्तिकायादिद्रव्याणा सर्वपर्याया सर्वैर्नयप्रमाणैर्ज्ञाता भवति स विस्ताररुचि , ज्ञानानुसारिरुचित्वादिति, न्यगादि च—" दव्वाण सव्वभावा, सव्वपमाणेहि जस्स उवलद्धा । सव्वाहि नयविहीहिं, वित्थाररुई मुणेयव्वो ॥ १ ॥ " इति । तथा क्रिया—अनुष्ठानं रुचिशब्दयोगात् तत्र रुचिर्यस्य स क्रियारुचि । इदमक्त भवति—दर्शनाद्याचारानुष्ठाने यस्य भावतो रुचिरस्तीति स क्रियारुचिरिति, उक्तं च—" नाणेण दसणेण य, तव चरित्ते य समिइगुत्तीसु । जो किरियाभावरुई, सो खलु किरियारुई होइ ॥ १ ॥ " इति । तथा सक्षेप —सग्रहस्तत्र रुचिरस्येति संक्षेपरुचि , यो ह्यप्रतिपन्नकपिलादिदर्शनो जिनप्रवचनानभिज्ञश्च सक्षेपेणैव चिलातिपुत्रवदुपशमादिपदत्रयेण तत्त्वरुचिमवाप्नोति स सक्षेपरुचिरिति भाव । आह च—" अणभिग्गहियकुदिट्ठी, संखेवरुइ त्ति होइ नायव्वो । अविसारओ पवयणे, अणभिग्गहिओ य सेसेसु ॥ १ ॥ " इति । तथा धर्मे—श्रुतादौ रुचिर्यस्य स तथा, यो हि धर्मास्तिकाय श्रुतधर्मं चारित्रधर्मं च जिनोक्त श्रद्धत्ते स धर्मरुचिरिति ज्ञेय', यदगादि—" जो अत्थिकायधम्म, सुयधम्मं खलु चरित्तधम्मं च । सद्दहइ जिणाभिहिय, सो धम्मरुइ त्ति नायव्वो ॥ १ ॥ " इति । स्था० १० ठा० ३ उ० । सूत्र० । नं० । आ० म० । ( ' सम्मत्त ' शब्देऽस्मिन्नेव भागे भेदा उक्ताः । ) "द्वारमूलं प्रतिष्ठान--माधारो भाजन निधि । पद्कस्यास्य च धर्मस्य , सम्यग्दर्शनमिष्यते ॥ १ ॥ " आ० चू० ६ अ० । आचा० ।

दृष्ट्वा ज्ञात्वा च सम्यक् पन्थानमासेव्य च कृतं नान्यथा, तथा चाऽऽह—

सम्मदंसणदिट्ठो, नाणेण य सुट्ठु तेहिं उवलद्धो ।
चरणकरणेण पहओ, निव्वाणपहो जिणिंदेहिं ॥६१०॥

व्याख्या--सम्यग्दर्शनेन--अविपरीतदर्शनेन दृष्ट , ज्ञानेन च सुष्ठु--यथाऽवस्थित. तैरर्हद्भिर्ज्ञात , चरण च करण चत्येकवद्भावस्तेन प्रहत.--आसेवित. निर्वाणपथ.--मोक्षमार्गो जिनेन्द्रै । तत्र व्रतादि-चरणं, पिण्डविशुद्ध्यादि च करणं , यथाक्रम्--" वयसमणधम्मसंजम—वेयावच्चं च बभगुत्तीओ । णाणादितिय तव को-व निग्गहाई चरणमेय ॥ १ ॥ पिंडविसोही समिई, भावण पडिमा य इंदियनिरोहो । पडिलेहणगुत्तीओ, अभिग्गहा चेव करणं तु ॥ २ ॥" इति गाथार्थ । आव० १ अ० ।

सम्यग्दर्शनप्राप्त्युपायमाह--

बंधट्ठितीपमाणं, सामित्तं चेव सव्वपगडीणं ।
को केवइयं बंधइ, खवेइ वा केत्तियं होइ ॥ ६५ ॥

सम्यक्त्व कर्मणा क्षयत उपशमत. क्षयोपशमतश्चोपजायते , क्षयादयश्च त्रय. प्रकारा बद्धाना कर्मणा नाबद्धानामिति प्रथमतो बन्धनस्थितिप्रमाणं जघन्यत उत्कर्षतश्च वक्तव्यम् । तच्चेवम्-ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणा त्रिंशत्सागरोपमकोटीकोट्या उत्कृष्ट स्थितिपरिमाण मोहनीयस्य सप्ततिसागरोपमकोटाकोट्य ,नामगोत्रयोर्विंशतिसागरोपमकोटीकोट्य. आयुषस्त्रिंशत्सागरोपमाणि तथा जघन्यं वेदनीयस्य द्वादशमुहूर्ता नामगोत्रयोरष्टौ शेषाणामन्तर्मुहूर्तम् , तथा सर्वप्रकृतीना सत्तामधिकृत्य स्वामित्व वक्तव्य, तच्चेवम्—मिथ्यादृष्टिसास्वादनमिश्राविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तापूर्वकरणानिवृत्तिबादरसूक्ष्मसपरायोपशान्तमोहा अष्टानामपि प्रकृतीना स्वामिन मोहनीयवर्ज्याना सप्ताना क्षीणमोहावेद्यायुर्नामगोत्राणा सयोग्ययोगिकेवलिन. तथा क कियत् बध्नातीति वक्तव्य तत्र मिथ्यादृष्ट्योऽप्रमत्तान्ता सप्तविधबन्धका वा अष्टविधबन्धका वा अपूर्वकरणानिवृत्तिबादरा सप्तविधबन्धका , सूक्ष्मसंपराया षड्विधबन्धका उपशान्तमोहक्षीणमोहसयोगिकेवलिन सातावेदनीयैकबन्धका अबन्धका अयोगिकेवलिन , तथा को वा कियान् क्षपयतीति वक्तव्य तत्र मिथ्यादृष्ट्य उपशान्तमोहपर्यन्ता अक्षीणाष्टप्रकृतिका , क्षीणमोहा क्षीण मोहनीयमिति अक्षीणसप्तप्रकृतिका सयोग्ययोगिकेवलिन क्षीणघातिकर्माण ।

अथ कस्य कर्मण उत्कृष्टाया स्थितौ कस्य नियमन उत्कृष्टा स्थिति कस्य वा भजनयेत्यत आह—

आउयवज्जा तु ठिई, मोहोक्कोसम्मि होइ उक्कोसा ।

मोहविवज्जुकोसो,मोहो सेसो उ भइयव्वो ॥९६॥

मोहोत्कर्षे मोहनीयस्योत्कृष्टायां स्थितौ सत्यां नियमत. आयुर्वर्जत्वात् शेषाणां कर्मणामुत्कृष्टा स्थितिर्भवति.मोह विवर्जस्य ज्ञानावरणीयादेरुत्कर्षे-उत्कृष्टाया स्थितौ मोहो-मोहनीयं शेषाश्च प्रकृतयो भक्ता.-विकल्पिता. कदाचिदुत्कृष्टस्थितिका भवन्ति कदाचिन्नेति भाव. ।तत्र सर्वेषा कर्मणामुत्कृष्टस्थितौ वर्त्तमान प्रबलमोहाऽऽच्छादितत्वान्न किमपि सम्यग्दर्शनं लभते, उक्तं च-"अट्ठण्ह वि पगडीणं, उक्कोसठिईए उ वट्टमाणो उ। न लभति सम्मद्दसण--मिच्छत्तेणं त्ति मोहा उ॥१॥" किंतु सप्तानामायुर्वर्जानामभ्यन्तरकोटीकोट्या वर्त्तमाना. ।

तथा चाह--

अंतिमकोडाकोडी-ए होइ सव्वासि कम्मपगडीणं ।
पलियामसंखभागे,खीणे सेसे हवइ गंठी ॥९८॥

आयुर्वर्जानां सर्वासा कर्म्मप्रकृतीनामन्तिमायां कोटीकोट्यां स्थितायां तत्रापि पल्योपमस्यासख्येयतमे भागे क्षीणे शेषे स्थितिदलिके सति सम्यग्दर्शनलाभो भवति, केवल तत्रार्नी सम्यग्दर्शनलाभान्तरायात्तत कर्कशघनरूढगुपिलवक्रग्रन्थिरिव दुर्भेदो घनरागद्वेषपरिणामरूपो ग्रन्थिर्भवति। ततस्तस्मिन् भिन्ने प्रतिपत्तव्यं, तस्य च भेद करणवशात् ।

अथ करणवक्तव्यतामाह--

तिविहं च होइ करणं, अहापवत्तं तु भव्वभव्वाणं ।
भवियाण इमे अन्ने, अपुव्वकरणा नियत्ती य ॥९९॥

करणं नाम परिणामविशेषस्तत्त्रिविधं-त्रिप्रकार भवति। तद्यथा-प्रथमं यथाप्रवृत्ताख्यं भव्यानाम् ,अभव्याना च साधारणम्। भव्यानां पुनरिमे द्वे अन्ये करणे अपूर्वकरणमनिवृत्तिश्चानिवृत्तिकरणं च ।

साम्प्रतमेतेषामेव त्रयाणां करणानां कालविभागमाह-

जा गंठी तप्पढमं, गंठीसमतित्थतो भवे वीयं ।
अनियट्टी करणं पुण, सम्मत्तपुरक्खडे जीवे ॥१००॥

यावद् ग्रन्थिस्तावत् प्रथमं यथाप्रवृत्ताख्यं करण ग्रन्थि समतिक्रामतो भिन्दनस्येत्यर्थ पुनरपूर्वकरणम् .अनिवृत्तिकरणं तु सम्यक्त्वपुरस्कृतं येन सम्यक्त्वपुरस्कृतस्तस्मिन् जीवे सम्यक्त्वाभिमुखे इत्यर्थ । अथ यावत् ग्रन्थिस्तावन्निर्गुणस्य सत कथं कर्मशराश क्षपणम्?उच्यते गिरिसरित्प्रस्तरदृष्टान्तात् ।

ततस्तमेव दृष्टान्तं तत्प्रसक्त शेषकरणयोरपि ।
दृष्टान्तानभिधित्सुर्द्वारगाथामाह—

नदिपहजरवत्थजले, पिपीलिया पुरिसकोद्दवा चेव ।
सम्मद्दंसणलंभे, एते अट्ठ उ उदाहरणा ॥१०१॥

करणवशात्सम्यग्दर्शनलाभे एतान्यष्टावुदाहरणानि तद्यथा-'नदि' त्ति-गिरिनदीप्रस्तरोदाहरणं पथदृष्टान्त ज्वरोदाहरणं वस्त्रोदाहरणं जलोदाहरण पिपीलिकोदाहरणं पुरुषोदाहरणं कोद्रवोदाहरणम् ।

तत्र प्रथमतो गिरिसरित्प्रस्तरोदाहरणं भावयति-

गिरिसरियपत्थरेहिं, आहरणं होइ पढमए करणे ।
एवमणाभोगियकरण-सिद्धितो खवण जा गंठी॥१०२॥

गिरिसरित्प्रस्तरैरुदाहरण--दृष्टान्तः प्रथमे यथाप्रवृत्ताख्ये करणे भवति, तच्चैवम्-यथा गिरिसरित्प्रस्तरा-गिरिसदुपला-वेगतो घर्षणघोलनादिना केचिद्वर्तुला भवन्ति केचित्त्र्यस्रा एवमनाभोगकरणसिद्धितो यथाप्रवृत्तकरणप्रभावत सुदीर्घाया अपि कर्मस्थितेस्तावत् क्षपणं यावत् ग्रन्थिरिति । अथानिवृत्तिकरणं सम्यक्त्वपुरस्कृते जीवे भवतीत्युक्तम् , तत्सम्यक्त्वं कथं लभते ?, उच्यते-उपदेशतः स्वयं वा ।

तथा चात्र पथदृष्टान्तः--

उवएसेण सयं वा, नट्ठपहो कोइ मग्गमोतरति ।
जरितो य ओसहेहिं, पउणइ कोई विणा तेहिं ॥१०३॥

नष्टपथ कोऽपि पुरुष उपदेशेनान्यं दृष्ट्वा तस्योपदेशेन मार्गमवतरति कश्चिन्मार्गानुसारी प्रज्ञतया स्वयमेवोहापोहं कृत्वा, एवमिहापि सम्यग्दर्शनमाचार्यादीनामुपदेशतो लभते। कश्चित् स्वयमेव जातिस्मरणादिना अत्रैव ज्वरदृष्टान्तमाह-ज्वरितोऽपि कश्चिदोषधे. प्रगुणति-प्रगुणीभवति कश्चित्पुनस्तैरौषधैर्विना एवमेव । एवमत्रापि कस्यचिद्दर्शनमोह आचार्याद्युपदेशतोऽपगच्छति , कस्यचित्पुनरेवमेव मार्गानुसारितया तत्त्वपर्यालोचनत । इह ज्वरस्थानीयो दर्शनमोह औषधस्थानीय आचार्याद्युपदेश. । इह यस्तत्प्रथमतया क्षायोपशमिकसम्यक्त्वदृष्टिरुपजायते सोऽपूर्वकरणवशात् मिथ्यात्वदलिकं त्रिधा करोति, तद्यथा-मिथ्यात्वम् , सम्यग्मिथ्यात्वम् , सम्यक्त्वं च ।

अथ वस्त्रदृष्टान्तं जलदृष्टान्तं चाह—

मइलदरसुद्धसुद्धं, जह वत्थं होइ किंचि सलिलं च ।
एसेव य दिट्ठंतो, दंसणमोहम्मि तिविहम्मि ॥ १०४ ॥

यथा किंचिद्वस्त्रं सलिलं वा मलिन भवति, किंचिद् दरशुद्धमीषद्विशुद्धं, किंचित् शुद्धम् , एष एव दृष्टान्तो दर्शनमोहे त्रिविधे भावनीय । तदप्यपूर्वकरणवशात्किंचित् शुद्ध सम्यक्त्वरूपं, किंचिदीषद्विशुद्ध सम्यग्मिथ्यात्वरूप, किंचित्तथैव मलिन मिथ्यात्वरूपं स्थितमिति भाव ।

अत्राह कथमभव्यास्तस्मिन् पथि देशेऽवतिष्ठन्ते कथं वा तत प्रतिपतन्ति, भव्या वा कथं ग्रन्थि विभिद्य ततः परतो गच्छन्ति उच्यते। पिपीलिकादृष्टान्तात् तमेवाह—

अहभावेण पसरिया, अपुव्वकरणेण खाणुमारूढा ।
चिट्ठंति तत्थ काइ, पिवीलिया काइ उड्डुंति ॥ १०५ ॥
पच्चोरुहणट्ठा खाणु, आतो चिट्ठन्ति तत्थ एवावि ।
पक्खविहू णतो पिवी-लियाउ उड्डुंति उ सपक्खा॥१०६॥

काश्चित्पिपीलिका यथाभावेन अनाभोगत प्रसरिता—बिलान्निर्गत्य इतस्ततो गन्तुं प्रवृत्ता । काश्चित्पुनरपूर्वकरणेन स्थाणुमारूढास्तामार्मापि मध्ये काश्चित्तत्र स्थाने चैव तिष्ठन्ति या पक्षविहीना । काश्चित्सञ्जातपक्षास्तत उड्डुयन्ते-ऊर्ध्वमाकाशेन गच्छन्ति। उत्तरार्द्धस्यैव व्याख्यानार्थमनन्तरगाथा 'पच्चोरुहणट्ठा' इत्यादि, काश्चित्पक्षविहीना.,

पिपीलिकाः स्थाणौ प्रत्यवरोहणार्थं तत्रैव स्थाणावेव तिष्ठन्ति,अपिपक्षत्वात्प्रत्यवरोहन्ति च । यास्तु सपक्षास्ता उड्डीयन्ते । इह पिपीलिकानामितस्ततः प्रसरणं यथा प्रवृत्तकरणतः, स्थाणवारोहणमपूर्वकरणतः, उड्डयनमनिवृत्तकरणात् । एवमत्रापि ग्रन्थिदेशगमनं यथाप्रवृत्तिकरणेन,ग्रन्थिभेदनमपूर्वकरणतः , सम्यग्दर्शनमनिवृत्तिकरणेन । यथा च काश्चित् पिपीलिका पक्षविहीनत्वात् स्थाणावेव स्थिता, स्थित्वा च ततः प्रत्यवतीर्णास्तथा कोऽपि मन्दाध्यवसायतया तीव्रविशोधिरहितोऽपूर्वकरणेन ग्रन्थिभेदमाधातुमुद्यतः समुच्छलितघनरागद्वेषपरिणामस्तत्रैव तिष्ठति स्थित्वा च पुनः पश्चात्ततः प्रतिनिवर्त्तते ।

अस्मिन्नेवार्थे पुरुषदृष्टान्तमाह—

जह वा तिन्नि मणूसा, सभयं पंथं भएण वच्चंता ।
वेलाइक्कमतुरिया, वयंति पत्ता य दो चोरा ॥ १०७ ॥
तत्थेगो उ नियत्तो, एगो बद्धो अ तितिथितो एको ।
कमगतिअहापवत्तं, भिन्नतरं धावणं तइए ॥ १०८ ॥

वाशब्दो दृष्टान्तान्तरसमुच्चये, यथा त्रयो मनुष्या सभयं पन्थानं भयेन पाठान्तरक्रमेण व्रजन्तो वेलातिक्रमत्वरिता संध्यासमापतनेन गमने वेलातिक्रमतस्त्वरमाणा व्रजन्ति । अत्रान्तरे चोभयपार्श्वतः प्राप्तौ पाणिकृपाणकरालौ द्वौ चौरौ तौ च हक्कयन्ताविवमाक्षिपत कक यास्यथ यूयं मरणमेव युष्माकमिदानीं समापतितमिति । तत्रैकः पुरुषस्तौ समापतन्तौ दृष्ट्वा प्रथमत एव निवृत्तः,एकः पुनर्द्वितीयो हक्काश्रवणत उद्गीर्णकृपाणदर्शनतश्च भयेन शोचंस्तत्रैव स्थितः ,एकस्तृतीयः पुनः परमसाहसिकः प्रत्युद्गीर्णखड्गस्तौ द्वावपि चोरौ पश्चात्कृत्य तत्स्थानमतिक्रान्तौ । इह या त्रयाणामपि पुरुषाणां प्रथमतः क्रमेण गतिः सा यथाप्रवृत्तिकरणं यत्पुनस्तद्द्वयं भिन्न तत इतरदपूर्वकरणादपूर्वकरणम् ,यत्तु तत्परतो धावनं तत् तृतीये निवृत्ताख्ये करणे द्रष्टव्यम् ।

तदेव दृष्टान्तद्वयमपि विधाय सांप्रतमुपनयमाह—

एवं संसारीणं, जोएअव्वाई तिन्नि करणाई ।
भवसिद्धिसलद्धीण य,पक्खालपिपीलिया उवमा ।१०९।

एवम्-अमुना दृष्टान्तगतेन प्रकारेण यानि त्रीणि करणानि प्रागभिहितानि तानि सर्वाणि संसारिणा योजयितव्यानि तत्र पिपीलिकादृष्टान्तमधिकृत्य प्रागेव योजिताः,नवरं या पक्षवत्यः पिपीलिका उक्तास्ताभिरुपमा भवसिद्धिसलब्धिका ना द्रष्टव्या । भवे सिद्धिर्येषां ते भवसिद्धिकाः कतिपयभवमोक्षगामिन इत्यर्थ ,तेऽपि कदाचित्प्रतिपतन्ति, तत आह-सलब्धि –उत्तरोत्तरविशुद्धाध्यवसायप्राप्तिर्येषां त सलब्धिकास्ततो विशेषणसमासस्तेषाम् । किमुक्तं भवति-सपक्षपिपीलिका इव केचित्संसारिणो भवसिद्धिका सलब्धिकाः स्थाणोरिव ग्रन्थिदेशादपि परतो गच्छन्ति, केचित्पुनरभव्या भव्या वा केचन पक्षविहीनपिपीलिका इव स्थाणोरिव ग्रन्थिदेशात्प्रतिपतन्ति । पुरुषदृष्टान्तमधिकृत्यैवं योजना—पुरुषस्थानीयाः संसारिजीवाः,कर्मस्थितिस्थानीयः पन्था , भयस्थानीयो ग्रन्थिः, द्वौ चोरौ रागद्वेषौ, यस्तु मन्दपराक्रमो न पुरतो न मार्गतः किं तु भयेन तत्रैव स्थितस्तत्सदृशे ग्रन्थिदेशे वर्त्तमानो भव्योऽभव्योऽन्यो । स च तत्र संख्येयमसंख्येयं वा कालं तिष्ठति । तत्र स्थितस्य को लाभ इति चेत् ? उच्यते-श्रुतलाभः ।

तथा चाह—

दट्ठूण जिणवराणं, पूअं अन्नेण वावि कज्जेण ।
सुयलंभो उ अभव्वे, हविज्ज गंथेण उवणीतं ॥ ११० ॥

यस्तम्भेन उपनीतं उपनयं प्रापितस्तस्मिन् अभव्ये सुशब्दाद्भव्ये च भवति श्रुतलाभो द्रव्यश्रुतलाभः । कथमिति चेदत आह—' दट्ठूणे ' त्यादि, स हि ग्रन्थिकसत्त्वो भव्योऽभव्यो वा भगवता जिनवराणां पूजा दृष्ट्वा अहो कीदृशं तपसः फलमिति परिभाव्य तदर्थिकतया अन्येन वा कार्येण स्वर्गसुखार्थित्वादिना प्रव्रज्यामभ्युपगच्छति, ततः सामायिकादिद्रव्यश्रुतलाभः, ग्रन्थौ चैव कियन्तं कालं स्थित्वा पुनः पश्चात्प्रतिनिवर्त्तते , येनाप्यनिवृत्तिकरणतः सम्यक्त्वमासादितं तस्यापि द्वौ प्रकारौ केचित्परिणामतो वर्द्धन्ते केचित् हानिमुपगच्छन्ति । तत्र ये हानिं गच्छन्ति ते प्रतिपतन्ति, इतरे श्रावकत्वादीनि लभन्ते । तत्र जघन्यतः समकमेव, यत उक्तम्—" सम्मत्तचरित्ताइं जुगवं पुव्वं व सम्मत्तं " ।

उत्कर्षतः पुनरेवम्—

सम्मत्तम्मि उ लद्धे, पलियपुहत्तेण सावओ होज्जा ।
चरणोवसमखयाणं, सागरसंखंतरा होंति ॥ १११ ॥
एवं अप्पडिवडिए, सम्मत्ते देवमणुयजम्मेसु ।
अन्नयरसेढिवज्जं, एगभवेणं च सव्वाइं ॥ ११२ ॥

सम्यक्त्वे लब्धे पल्यपृथक्त्वेन-पल्योपमपृथक्त्वेन श्रावको देशविरतो भवति, ततश्चरणोपशमक्षयाणामन्तराणि संख्यातानि सागरोपमाणि भवन्ति । इयमत्र भावना—देशविरतिप्राप्त्यनन्तरं संख्यातेषु सागरोपमेषु गतेषु चरणलाभस्तदनन्तरं भूयः संख्यातेषु सागरोपमेषु गतेषूपशमश्रेणिलाभस्ततोऽपि परतः संख्येयेषु सागरोपमेष्वतिक्रान्तेषु क्षपकश्रेणिस्ततस्तद्भवे मोक्षः, एवममुना प्रकारेणाप्रतिपतितसम्यक्त्वे देवमनुजजन्मसु वर्त्तमानस्य प्रतिपत्तव्यम् । यद्वा-अन्यतरश्रेणिवर्जमुपशमश्रेणिवर्जं क्षपकश्रेणिवर्जं वा एकभवेन सर्वाणि देशविरत्यादीनि प्रतिपद्यते । श्रेणिद्वयप्रतिपत्तिस्त्वेकस्मिन् भवे न भवति, यत उक्तम् "मोहोपशम एकस्मिन् , भवे द्विः स्यादसंततः । यस्मिन् भवे तूपशमं , क्षयो मोहस्य तत्र न " ॥ १ ॥

संप्रति यदुक्तं प्राक् मिथ्यात्वमपूर्वकरणेन त्रिधा करोति तत्र कोद्रवदृष्टान्तमाह—

अप्पुव्वेण तिपुंजं, मिच्छं काऊण कोद्दवोवमया ।
तिन्नि वि अवेदयंतो, उवसामगसम्मदिट्ठीउ ॥ ११३ ॥

कोद्रवोपमया-कोद्रवदृष्टान्तेन अपूर्वकरणेन मिथ्यात्वं त्रिपुञ्जं कृत्वाऽनिवृत्तिकरणेन तत्-प्रथमतया क्षायोपशमिक सम्यक्त्वमासादयति, ततः परिणामवशतः कालान्तरेण मिश्रं मिथ्यात्वं वा गच्छति, यत्पूर्वकरणमारूढोऽपि मन्दाध्यवसायतया मिथ्यात्वं त्रिपुञ्जीकर्तुमसमर्थः स निवृत्तिक-

रणमुपगतोऽन्तरकरणं कृत्वा तत्र प्रविष्टो न किंचिदपि वेद्यते, स च त्रीण्यपि त्रयाणामन्यतमदप्यवेदयमाने उपशमकः। सम्यग्दृष्टिरुच्यते कोद्रवोपमयेत्युक्तम्।

अनन्तामेव कोद्रवोपमां भावयति—

जह मयणकोद्दवा उ, दरनिव्वलिया य निव्वलीया य।
एमेव मिच्छ मीसं, सम्मं वा होति जीवाणं ॥ ११४ ॥

यथा कोद्रवास्त्रिविधा भवन्ति, तद्यथा-मदनकोद्रवा दरनिर्वलिता-ईषदपगतमदनभावानिर्वलिता -सर्वथापगतमदनभावा, एव जीवानां मिथ्यात्वं त्रिधा भवति-मिथ्यात्वम्, मिश्रम्-सम्यग्मिथ्यात्वं, सम्यक्त्वं वा।

कालेणुवक्कमेण व, जह नासति कोद्दवाण मदभावो।
अहिगमसम्मं नेस-ग्गियं च तह होइ जीवाणं ॥११५॥

यथा कोद्रवाणां मदनभावः कषाचित्कालेन एवमेवापगच्छति केषांचित् गोमयादिभिरुपक्रमत, एव केषांचित् जीवानामुपक्रमसदृशमधिगमसम्यक्त्वं भवति, केषांचित् कालेन स्वत एवापगतमदनभावे कोद्रवाणां सदृशं नैसर्गिकसम्यक्त्वम्, किमुक्तं भवति—केषांचिदधिगमतो मिथ्यात्वपुद्गलाः सम्यक्त्वीभवन्ति, केषाचित् स्वत एव तथापरिणामविशेषभावत।

एतदेव स्पष्टयति—

सोऊण अहिसमेचा, करेइ सोवट्टमाणपरिणामो।
मिच्छे सम्मामिच्छे, मीसे वि य पोग्गले समयं ॥११६॥

श्रुत्वा केवलिप्रभृतीनां वाचोऽभिसमेत्य वा जातिस्मरणादिना सम्यक्त्वमवगम्य सोऽपूर्वकरणे वर्तमानो वर्द्धमानपरिणाम समकम्—एककाल मिथ्यात्वपुद्गलान् त्रिधा करोति। तद्यथा—'मिच्छे' इति—मिथ्यात्वपुद्गलान्, सम्यग्मिथ्यात्वपुद्गलान्, सम्यक्त्वपुद्गलानिति। अथैषां पुद्गलानां परस्परं सक्रमो भवति किं वा नेति?, उच्यते—भवति इति ब्रूमः।

तथा चाह—

मिच्छत्ताओ मीसो, मीसस्स उ होज्ज संकमो दोसुं।
सम्मे मिच्छे वामं, सम्मामिच्छं च पुण मीस ॥११७॥

मिथ्यात्वात्—मिथ्यात्वदलिकात् सम्यग्दृष्टिः प्रवर्द्धमानपरिणाम पुद्गलानाकृष्य मिश्रे उपलक्षणमेतत् सम्यक्त्वे च संक्रमयति मिश्रस्य पुद्गलानां संक्रमो द्वयोर्भवति, तद्यथा-सम्यक्त्वे मिथ्यात्वे च। तत्र सम्यग्दृष्टिः सम्यक्त्वे संक्रमयति, मिथ्यादृष्टिर्मिथ्यात्वे सम्यक्त्वात्-सम्यक्त्वदलिकात् पुन पुद्गलान् मिथ्यात्वे संक्रमयति। न पुनः मिश्रमिति।

सांप्रतममुमेवार्थं प्रकारान्तरेणाह—

मिच्छत्ताओ अहवा, मीसं सम्मं च कोइ संकमति।
मीसाओ वा सम्मं, गुणवुड्ढी हायतो मिच्छं ॥ ११८ ॥

अथवेत्युक्तस्यैवार्थस्य भणनप्रकारान्तरद्योतनं मिथ्यात्वात्-मिथ्यात्वदलिकात् पुद्गलानाकृष्य कश्चिन्मिश्रं सम्यक्त्वं च संक्रमयति। यदिवा-कश्चिद् गुणैर्वृद्धिर्यस्य स गुणवृद्धिः प्रवर्द्धमानपरिणामः सम्यग्दृष्टिरित्यर्थः, मिश्रात्-मिश्रदलिकात् पुद्गलानादाय सम्यक्त्वं संक्रमयति, हायको-हीनपरिणामो मिथ्यादृष्टिरित्यर्थः, मिश्रात् पुद्गलानाकृष्य मिथ्यात्वं संक्रमयति।

मिच्छत्ता संकंती, अविरुद्धा होंति सम्ममीसे तु।
मीसातो वा दुन्नि वि, ण उ सम्मा परिणमे मीसं ॥११९॥

मिथ्यात्वात् पुद्गलसंक्रान्तिः सम्यक्त्वमिश्रयोरविरुद्धा, मिश्रतो वा सम्यग्मिथ्यात्वतो वा पुद्गलानादाय द्वावपि संक्रमयति, तद्यथा—मिथ्यात्वं सम्यक्त्वं च यथोक्तमनन्तरं सम्यक्त्वात्सम्यक्त्वदलिकात्पुनः पुद्गलानादाय न मिश्रं मिश्रभाव परिणमति।

हायंते परिणामे, ते पुण मीसे उ पोग्गले सम्मा।
न य सोहिया सि विज्जति, केई जे दाणि वेएज्जा ॥१२०॥
सम्मत्तपोग्गलाणं, न च देउं सो य अंतिमं गासं।
पच्छाकडसम्मत्तो, मिच्छत्तं चेव संकमति ॥ १२१ ॥

यस्य तु सम्यग्दर्शनलाभे हीयमानपरिणामः स तस्मिन् हीयमाने परिणामे न मिश्रान् पुद्गलान् तुशब्दात्-मिथ्यात्वपुद्गलांश्च सम्यक्त्वपुद्गलान् करोति, न च 'से' तस्य शोधिताः केचिदन्ये पुद्गला विद्यन्ते यानिदानीमधिकृतसम्यक्त्वपुञ्जनिष्ठाकाले वेदयेत, ततः सम्यक्त्वपुद्गलानामन्तिमग्रास वेदयित्वा पश्चात्कृतसम्यक्त्वोऽपि मिथ्यात्वमेव संक्रामति।

मिच्छत्तम्मि अखीणे, ते पुंजी सम्मदिट्ठिणो नियमा।
खीणम्मि उ मिच्छत्ते, दुएकपुंजोवखवगो वा ॥१२२॥

अक्षीणे मिथ्यात्वे ये सम्यग्दृष्टयस्ते नियमात् त्रिपुञ्जिनः क्षीणे तु मिथ्यात्वे द्विपुञ्जी मिथ्यात्वपुञ्जस्य क्षीणत्वात्, एकपुञ्जी वा मिश्रपुञ्जक्षये, यदिवा—क्षपकः सम्यक्त्व पुञ्जस्यापि क्षये तदेवं त्रयाणामपि पुञ्जानां दृष्टान्तेन निर्णयः स्वतः स्वरूपं च व्यावर्ण्यताम्।

साम्प्रत पुञ्जत्रयस्याप्यवेदनतः औपशमिकसम्यग्दृष्टिमाह—

उवसमसेढिगयस्स, होंति उ उवसामियं तु सम्मत्तं।
जो वा अकयतिपुंजो, अखवियमिच्छो लहइ सम्मं ॥१२३॥

उपशमकश्रेणिगतस्य भवति सम्यक्त्वमौपशमिकम्, यो वा अकृतत्रिपुञ्ज —अपूर्वकरणे पुञ्जत्रयकरणतस्तत्र क्षपकोऽपि दर्शनसप्तकस्यापूर्वकरणमारूढ पुञ्जत्रयं न करोति। ततस्तद्व्यवच्छेदार्थमाह-अक्षपितमिथ्यात्वो यल्लभते सम्यक्त्वं तदौपशमिक सम्यक्त्वमिति। एतौ द्वावप्यौपशमिकसम्यग्दृष्टी सम्यक्त्वमौपशमिकमन्तर्मुहूर्त्तमनुभूय तदनन्तरमवश्यं प्रतिपतत।

तत्र दृष्टान्तद्वयमाह—

वाही असव्वछिन्नो, कालावेक्खंऽकुरु व्व दड्ढुमो।
उवमामगाण दोण्ह वि, एते खलु होंति दिट्ठंता ॥१२४॥

यथा व्याधिरसर्वच्छिन्नः कालापेक्ष क्रियाविशेषणमेतत् कालमपेक्ष्येत्यर्थ, पुनरुद्भवति। दग्धो वा द्रुम कालापेक्ष यथा-

रूर मुञ्चति । एवमुपशमितमपि मिथ्यात्वं कालमपेक्ष्य पुन रुदितं भवतीति द्वयोरपि प्रतिपात । तथा चाह—द्वयोरप्यु- पशमिकयोरेतौ भवतो दृष्टान्तौ, तत्रोपशमश्रेणिगत औप शमिकसम्यग्दर्शनी देशप्रतिपातेन वा प्रतिपतति सर्वप्र- पितातेन वा, इतरोऽवश्यमेव सर्वप्रतिपातेन प्रतिपतति,मि- थ्यात्व गच्छति इत्यर्थ ।

तत्र दृष्टान्तमाह—

आलंबणमलहंति, जह सट्ठाणं न मुंचए इलिया ।

एवं अकयतिपुंजो, मिच्छं चिय उवसमी एति ॥ १२५ ॥

इह या तृणादिषु सुखप्रदेशेन सर्वतोऽग्रेतनं स्थानं प्रति- क्रमवतोऽग्रेतनं स्थान संक्रामति, अन्यथा प्रश्चाद्वलते, स इलिका यथा परत आलम्बनमलभमाना स्वस्थानं न मु ञ्चति एवमकृतत्रिपुञ्जो गत्यन्तराभावात् मिथ्यात्वमेवोपश- मयति । इयमत्र भावना—द्विविधस्तत्प्रथमतया सम्यग्दर्शन- प्रतिपत्ता अतिविशुद्धो मन्दविशुद्धश्च । तत्र य अतिवि- शुद्ध सोऽपूर्वकरणमारूढो मिथ्यात्वं त्रिपुञ्जीकरोति कृ- त्वा चानिवृत्तिकरणे प्रविष्टस्तत्प्रथमतया क्षायोपशमिकं सम्यग्दर्शनमासादयति सम्यक्त्वपुञ्जोदयात् । यस्तु मन्द- विशुद्धः सोऽपूर्वकरणमप्यारूढस्तीव्राध्यवसायाभावात् न मिथ्यात्व त्रिपुञ्जीकर्तुमलम्, ततो निवृत्तिकरणमुपगतोऽत्र करणं कृत्वा तत्र प्रविष्टस्तत्प्रथमतया औपशमिकसम्यग्द र्शनं तु भवति, अन्तरकरणं चान्तर्मुहूर्त्तप्रमाणमतस्तदद्धा- क्षये अन्येषां पुद्गलानामभावतो मिथ्यात्वमेति ।

एतदेवाह—

खीणम्मि उदिन्नम्मि, अणुइज्जं ते य सेसम्मिच्छत्ते ।

अंतोमुहुत्तकालं, उवसमसम्मं लहइ जीवो ॥ १२६ ॥

अनिवृत्तिकरणे प्रविष्टस्य यत् मिथ्यात्वमुदीर्णमुदयाव लिकाप्रविष्टं तस्मिन् क्षीणे शेषे च मिथ्यात्वेऽपान्तराले उत्तरकरणतोऽनुदीयमानेऽन्तर्मुहूर्तकालमौपशमिकं सम्य- क्त्व जीवो लभते मिथ्यात्वदर्शनवेदनाभावात् ।

सोऽपि कथमित्यत आह—

ऊसरदेसं दड्डिल्लयं च विज्झाइ वणदवो पप्प ।

इय मिच्छत्त(स्स)अणुदए, उवसमसम्मं मुणेयव्वं॥१२७॥

यथा वनदव ऊपर देश-तृणादिरहितं प्रदेशं दग्ध वा प्राप्य विध्मापयति, इति-एवमन्तरकरणे प्रविष्टस्य मि- थ्यात्वपुद्गलाभावान्मिथ्यात्वस्य-मिथ्यादर्शनस्याऽनुदयावे- दनं ततस्तस्मिन्सत्यौपशमिक सम्यक्त्व ज्ञातव्यम् ।

किंच—

जिल्ली(म्ही)भवंति उदया,कम्माणं अत्थि सुत्तउवदेसो ।

उववायादी सायं, जह नेरइया अणुभवंति ॥ १२८ ॥

द्विविधेऽप्यौपशमिकसम्यग्दृष्टौ शेषाणामपि कर्मणामुदयात् जिल्लीभवन्ति न चैतद्वचनमात्रं यतोऽस्त्येव तत्र ग्रन्थान्तर रूप साक्षादुपदेशो यथा-नैरयिका उपपातादौ सातमनुभ- वन्तीति ।

एतामेव दर्शयति—

उववाएण व सायं, नेरइओ देवकम्मुणा वावि ।

अज्झवसाणनिमित्तं, अहवा कम्माणुभावेणं ॥१२९॥

नैरयिक उपपातेन सातमनुभवति, किमुक्तं भवति-उपपात- काले सात वेदयते तदानीं हि न तस्य क्षेत्रजा वेदना न पर- स्परोदीरितानपि परमाधार्मिकोदीरितेति । अथवा-देवकर्म- मणा-देवक्रियया सातमनुभवति, देवो हि कश्चित् महर्द्धिक पूर्वभवस्नेहत तत्र गत्वा कस्यापि किंचित्काल वेदनामु- पशमयति तत सात वेदयते । अथवा-अध्यवसाननिमित्त त- थाविधशुभाध्यवसायप्रवृत्तिनिमित्त सातमासादयति यथा सम्यग्दर्शनं लभमान , सम्यग्दर्शनलाभे हि जात्यन्धस्य चक्षुर्लाभ इव जायते महान् प्रसाद इति । 'अहवा कम्माणु- भावेण ' ति, अथवा—तीर्थकरजन्माद्यधिकृत्य यः कर्मणां सातवेदनीयप्रभृतीनां शुभानामनुभव-अनुभवनमुदयेन वे- दनं तेन सातमनुभवति, तथाहि-भगवता तीर्थकृता जन्मनि दीक्षादिने च तत्प्रभावतो नरकेऽप्यालोको जायते, नैरयि- काणामपि शुभकर्मोदय प्रसरति सातमिति ॥ अथ मिथ्या- दृष्टिर्यदा सम्यक्त्व संक्रामति तदा स तत्समय कतिज्ञाना- नि लभत-उच्यते द्वे त्रीणि वा ।

तथा चाह—

विब्भंगी उ परिणमं, सम्मत्तं लहति मतिसुतोहीणि ।

तयभावम्मि मतिसुते, सुतलंभे केइ उभयं ति ॥१३०॥

विभङ्गी-विभङ्गज्ञानी सम्यक्त्वं परिणमयन् तत्समये मति- श्रुतावधीन् लभते, तदभावे-तस्य विभङ्गस्याभावे मिथ्याद- र्शनी सम्यक्त्व परिणमयन् तत्कालं मतिश्रुते-मतिज्ञानश्रुत- ज्ञाने लभते, केचित्पुन श्रुतलाभे भजन्ति-विकल्पयन्ति य- स्याधीतं श्रुतं स लभते श्रुतज्ञानमितरो न लभते इत्याचक्ष- ते इति भाव । तथाहि—ये स्वयंभूरमणसमुद्रे मत्स्यास्ते प्रतिमास्थितान् मत्स्यान् उत्पलानि वा दृष्ट्वेहापोहादि कुर्वन्तो जातिस्मरणतः सम्यक्त्वमासादयन्ति आभिनिबो- धिकज्ञान च, ये तु श्रुतज्ञानं तत्रासादयन्त्यनधीतश्रुतत्वात् ये त्वधीतश्रुतास्त त्रीण्यपि युगपदासादयन्ति ।

एतद् दूषयितुमाह—

अन्नाणमती मिच्छे, जढम्मि मतिणाण तं जहा एति ।

एमेव य सुयलंभो, सुयअन्नाणे परिणयम्मि ॥ १३१ ॥

यथा मिथ्यात्वे त्यक्ते मतिरज्ञानस्वरूपा मतिज्ञाननामेति एवमेव श्रुतज्ञाने परिणतोपगते श्रुतलाभो भवति । किं च ते प्रष्टव्या सम्यक्त्वलाभसमये श्रुतज्ञानमस्ति किं वा न ? तत्र यद्याद्य पक्षस्तर्हि तस्याज्ञानित्वान्मिथ्यादृष्टित्वप्रसङ्ग । अथ नास्ति तर्हि श्रुताज्ञानमपि केवलमाभिनिबोधिकज्ञान स्यान्न चैतदुपपन्न श्रुतज्ञानमन्तरेण केवलस्याभिनिबोधिक- ज्ञानस्याभावात् "जत्थ मतिनाणं तत्थ सुयनाणं जत्थ सुय नाणं तत्थ मतिणाणं । दो वि एयाइं अणोन्नसमणुगयाइं' इति वचनादिति । तदेवमुक्तमौपशमिक सम्यक्त्वम् । बृ० १ उ० १ प्रक० । आ० चू० ।

सम्मदंसणजोग–सम्यग्दर्शनयोग–पुं० । तत्त्वार्थश्रद्धानसंब- न्धे, पो० ११ विव० ।

सम्मद्दा–सम्मर्दा–स्त्री० । दुष्प्रत्युपेक्षणाभेदे, यत्र च यत्रस्य मध्यप्रदेश सवलिता कोणा भवन्ति यत्र वा प्रत्युपेक्षणीयो- पधिवेगिटकायामेवोपविश्य प्रत्युपेक्षते सा सम्मर्देति । स्था० ६ ठा० ३ उ० । ध० । पं० व० । उत्त० ।

सम्मदिट्ठि-सम्यग्दृष्टि-पुं०। सम्यगिति प्रशंसार्थे. दर्शनम्-दृष्टिः पदार्थपरिच्छित्तिः। सूत्र०१ श्रु०१२अ०। स्था०। प्रज्ञा०। आव०। सम्यग्-अविपरीता दृष्टि-र्जिनप्रणीतवस्तुप्रतिपत्ति र्यस्य स सम्यग्दृष्टिः। नं०। सम्यग्दर्शनधरे, पञ्चा० ८ विव०। आतु०। प्रति०। सम्यग्दर्शनिनि, प्रश्न० ५ संव० द्वार।

सम्यग्दृष्टिस्वरूपं लिङ्गत आह—

सुस्सूसधम्मराओ, गुरुदेवाणं जहासमाहीए।
वेयावच्चे णियमो, सम्मद्दिट्ठिस्स लिंगाइं॥ ५॥

श्रोतुमिच्छा शुश्रूषा धर्मशास्त्रविषया गेयरागिनरकिन्नरगेयशुश्रूषाधिका जिज्ञासोत्तरकालभाविनी। इह च ह्रस्वता प्राकृतत्वात्। तथा धर्मरागः-कुशलानुष्ठानानुरागः सामग्रीवैकल्येऽपि तदकरणेऽपि चेतसोऽनुबन्ध कान्तारातीतदरिद्रब्राह्मणहवि.पूर्णभोजनाभिलाषातिरिक्त। तथा गुरुदेवानां-धर्माचार्यपरमाराध्यानाम्, यथासमाधि—स्वसमाधानानतिक्रमेण न पुनरसद्ग्रहणेन वैयावृत्त्ये व्यापृ (पृ) तभावे तत्कर्मणि वा नियमो नियोगोऽवश्यं मयैतद् गुरुकार्यं देवकार्यं वा कर्तव्यमित्यभिनिवेशलक्षणो गुणरत्नजालमनुष्यचिन्तामणिवैयावृत्त्यनियमोऽधिक.। इह चशब्दो लुप्तो द्रष्टव्य.। किमित्याह-सम्यग्दृष्टेरविरतसम्यग्दर्शनिनो जीवस्य लिङ्गानि—लक्षणानि भवन्ति ग्रन्थिभेदेन तत्त्वे तीव्रभावात्। इति गाथार्थ.। पञ्चा० ३ विव०।

संप्रति सम्यग्दृष्टे स्वरूपमाह—

सम्मद्दिट्ठी जीवो, उवइट्ठं पवयणं तु सद्दहइ।
सद्दहइ असब्भावं, अजाणमाणो गुरुनियोगा॥ २४॥

'सम्मद्दिट्ठि' त्ति-सम्यग्दृष्टिर्जीवो गुरुभिरुपदिष्टं प्रवचनं नियमात्-यथावत् श्रद्धत्ते, एवं तुरेवकारार्थो;भिन्नक्रमश्च। च. पुन. सम्यग्दृष्टिरपि असद्भावम्-असद्भूतं प्रवचनं श्रद्दधाति सोऽवश्यमजानन् स्वयं सम्यक्परिज्ञानविकलः सन्। यदा-गुरोस्तथाविधसम्यक्परिज्ञानविकलस्य मिथ्यादृष्टेर्वा जमालिप्रख्यस्य नियोगादाज्ञापारतन्त्र्यात्, नान्यथा। क० प्र० ६ प्रक०।

अपुनर्बन्धकोत्तरं सम्यग्दृष्टिर्भवतीति तत्स्वरूपमाह—

लक्ष्यते ग्रन्थिभेदेन, सम्यग्दृष्टिः स्वतन्त्रतः।
शुश्रूषाधर्मरागाभ्यां, गुरुदेवादिपूजया॥ १॥

लक्ष्यते इति—ग्रन्थिभेदेन—अतितीव्ररागद्वेषपरिणामविदारणेन स्वतन्त्रत.—सिद्धान्तनीत्या सम्यग्दृष्टि लक्ष्यते। सम्यग्दर्शनपरिणामात्मना प्रत्यक्षोऽप्यनुमीयते। शुश्रूषाधर्मरागाभ्यां तथा गुरुदेवादिपूजया त्रिभिरेतैर्लिङ्गै., यदाह— " शुश्रूषाधर्मरागश्च, गुरुदेवादिपूजनम्। यथाशक्ति विनिर्दिष्टं, लिङ्गमस्य महात्मभि॥ १॥ "

भोगिकिन्नरगेयादि-विषयाधिक्यमीयुषी।
शुश्रूषाऽस्य न सुप्तेश-कथार्थविषयोपमा॥ २॥

भोगीति—भोगिना—यौवनवैदग्ध्यकान्तासन्निधानवत. कामिन. किन्नरादीना गायकविशेषाणा गेयादौ—गीतवर्णपरिचर्ताभ्यासकथाकथनादौ विषये —श्रवणरसास्वादाधिक्यम्-अतिशयम् ईयुषी-प्राप्तवती किन्नरगेयादिभिनोक्त्योर्द्वैतत्वात्तुच्छत्वमहत्त्वाभ्यामतिभेदोपलम्भात्। अस्य सम्यग्दृष्टेः शुश्रूषा भवति। न परं सुप्तेशस्य सुप्तनृपस्य कथार्थविषय. समुग्धकथार्थश्रवणाभिप्रायलक्षणः तदुपमा तत्सदृशी-असंबद्धत्वतदज्ञानलवफलायास्तस्या दौर्विदग्ध्यबीजत्वात्।

अप्राप्ते भगवद्वाक्ये, धावत्यस्य मनो यथा।
विशेषदर्शिनोऽर्थेषु, प्राप्तपूर्वेषु नो तथा॥ ३॥

अप्राप्त इति—अस्य-सम्यग्दृशः अप्राप्ते—पूर्वमश्रुते भगवद्वाक्ये—वीतरागवचने यथा मनो धावति—श्रोतुमनुपरतेच्छं भवति। यथा विशेषदर्शिन सत. प्राप्तपूर्वेष्वर्थेषु धनकुटुम्बादिषु न धावति। विशेषदर्शनेनापूर्वत्वभ्रमस्य दोषस्य चोच्छेदात्।

धर्मरागोऽधिको भावा द्भोगिनः स्त्र्यादिरागतः।
प्रवृत्तिस्त्वन्यथापि स्या-त्कर्मणो बलवत्तया॥ ४॥

धर्मराग इति—धर्मरागश्चारित्रधर्मस्पृहारूप. अधिकः-प्रकर्षवान् भावत —अन्त करणपरिणत्या भोगिनो-भोगशालिन स्त्र्यादिरागतो भामिन्याद्यभिलाषात्। प्रवृत्तिस्तु-कायचेष्टा तु अन्यथापि—चारित्रधर्मप्रातिकूल्येनापि व्यापारादिना स्यात्। कर्मणश्चारित्रमोहनीयस्य बलवत्तया नियतप्रबलविपाकतया।

तदलाभेऽपि तद्राग-बलवत्त्वं न दुर्वचम्।
पूयिकाद्यपि यद्भुङ्क्ते, घृतपूर्णप्रियो द्विजः॥ ५॥

तदिति—तदलाभेऽपि कथचिदन्यथाप्रवृत्त्या चारित्राप्राप्तावपि। तद्रागबलवत्त्वं चारित्रेच्छाप्राबल्यं स्वहेतुसिद्धम्। न-नैव दुर्वचं-दुरभिधानम्। यद्-यस्मात्तथाविधविषमप्रघट्टकवशात्। पूयिकाद्यपि पूयं-नाम कुथितो रसस्तद्स्यास्तीति पूयिकम्। आदिशब्दाद्-रूक्षं पर्युषितं च बल्लचनकादि। किं पुनरितरदित्यपिशब्दार्थ। घृतपूर्णाः प्रिया-वल्लभा यस्य स तथा। द्विजो—ब्राह्मणो भुङ्क्ते—अश्नाति यदत्र द्विजग्रहणं कृतं तदस्य जातिप्रत्ययादेव अन्यत्र भोक्तुमिच्छाया अभावादिति। अन्येच्छाकालेऽपि प्रबलेच्छाया वासनात्मना न नाश इति तात्पर्यम्।

गुरुदेवादिपूजाऽस्य, त्यागात्कार्यान्तरस्य च।
भावसारा विनिर्दिष्टा, निजशक्त्यनतिक्रमात्॥ ६॥

गुर्विति—अस्य सम्यग्दृशः गुरुदेवादिपूजा च कार्यान्तरस्य—त्यागभोगादिकरणीयस्य त्यागात्—परिहारात् निजशक्ति स्वसामर्थ्यस्यानति (क्रमात्) लङ्घनादनिगूहनात्। भावसारा भोक्तृ श्रीरत्नगोचरगौरवादनन्तगुणेन बहुमानेन प्रधाना विनिर्दिष्टा प्ररूपिता परमपुरुषै.।

स्यादिदं करणे चान्त्ये, सत्त्वानां परिणामतः।
त्रिधा यथाप्रवृत्तं त-दपूर्वं चानिवर्ति च॥ ७॥

स्यादिति—ईदृगुपदर्शितलक्षणं सम्यक्त्वं चान्त्ये करणे " जाते सतीति " गम्यम्। स्याद्-भवेत् तत् करणं सत्त्वाना—प्राणिनां परिणामत. त्रिधा—त्रिप्रकारं यथाप्रवृत्तम् अपूर्वम् अनिवर्ति चेति।

ग्रन्थिं यावद्भवेदाद्यं, द्वितीयं तदतिक्रमे।
भिन्नग्रन्थेस्तृतीयं तु, योगिभिनाथैः प्रदर्शितम्॥ ८॥

ग्रन्थिमिति—आद्यं यथाप्रवृत्तकरणं ग्रन्थिं यावद्भवेत्,

द्वितीयमपूर्वकरणस्य तदतिक्रमे—ग्रन्थिमुल्लङ्घने क्रियमाणे, तृतीयं त्वनिवर्तिकरणं भिन्नग्रन्थेः कृतग्रन्थिभेदस्य योगिना—धीरैस्तीर्थकरै प्रदर्शितम्।

पतितस्यापीति नामुष्य, ग्रन्थिमुल्लङ्घ्य वन्धनम्।
स्वाशयो बन्धभेदेन, सतो मिथ्यादृशोऽपि तत् ॥ ९ ॥

पतितस्यापीति—अमुष्य-भिन्नग्रन्थेः प्रतितस्यापि तथाविधसंक्लेशात् सम्यक्त्वात् परिभ्रष्टस्यापि । न—नैव ग्रन्थिं ग्रन्थिभेदकालभाविनीं कर्मस्थितिम् उल्लङ्घ्यातिक्रम्य सप्ततिकोटीकोट्यादिप्रमाणस्थितिकतया वन्धनं—ज्ञानावरणादिपुद्गलग्रहणं तत्तस्मान्मिथ्यादृशोऽपि सतो भिन्नग्रन्थेः बन्धभेदेनाल्पस्थित्या कर्मबन्धविशेषेण । स्वाशयः शोभनः परिणाम. वाह्यासदनुष्ठानस्य प्राय साम्येऽपि वन्धाल्पत्वस्य सुन्दरपरिणामनिबन्धनत्वादिति भाव. ।

तदुक्तम्—

" भिन्नग्रन्थेस्तृतीयं तु, सम्यग्दृष्टेरतो हि न ।
पतितस्याप्यतो वन्धो, ग्रन्थिमुल्लङ्घ्य देशित. ॥ १ ॥
एवं सामान्यतो ज्ञेय, परिणामोऽस्य शोभनः ।
मिथ्यादृष्टेरपि सतो, महावन्धविशेषत ॥ २ ॥
सागरोपमकोटीना, कोट्यो मोहस्य सप्तति ।
अभिन्नग्रन्थिबन्धोऽयं न त्वेकोऽपीतरस्य तु ॥ ३ ॥
तदत्र परिणामस्य, भेदकत्व नियोगत ।
बाह्यं त्वसदनुष्ठान, प्रायस्तुल्यं द्वयोरपि ॥ ४ ॥ "

" बंधेण न वोलइ कयाइ " इत्यादिवचनानुसारिणां सैद्धान्तिकाना मतमेतत् । कार्मग्रन्थिका पुनरस्य मिथ्यात्वप्राप्तावुत्कृष्टस्थितिवन्धमपीच्छन्ति, तेषामपि मते तथाविधरसाभावात्तस्य शोभनपरिणामत्वे न विप्रतिपत्तिरिति ध्येयम् ।

एवं च यत्परैरुक्तं, बोधिसत्त्वस्य लक्षणम् ।
विचार्यमाणं सन्नीत्या, तदप्यत्रोपपद्यते ॥ १० ॥

एवं चेति—एव च—भिन्नग्रन्थेर्मिथ्यात्वदशायामपि शोभनपरिणामत्वे च यत् परै—सौगतै बोधिसत्त्वस्य लक्षणमुक्तं, तदपि सन्नीत्या—मध्यस्थवृत्त्या विचार्यमाणम् अत्र सम्यग्दृष्टावुपपद्यते ।

तप्तलोहपदन्यास-तुल्या वृत्तिः क्वचिद्यदि ।
इत्युक्तेः कायपात्येव, चित्तपाती न स स्मृतः ॥ ११ ॥

तप्तेति—तप्तलोहे य पदन्यासस्तत्तुल्याऽतिसकम्पत्वात् वृत्तिः—कायचेष्टा क्वचिद् गृहारम्भादौ यदि परम् इत्युक्ते इत्थं वचनात्, कायपात्येव स सम्यग्दृष्टि न चित्तपाती स्मृत । इत्थं च '. कायपातिन एव बोधिसत्त्वा ' इति लक्षणमत्रोपपन्नं भवति । तदुक्तम्—" कायपातिन एवेह, बोधिसत्त्वा परोदितम् । न चित्तपातिनस्तावदेतदत्रापि युक्तिमत् ॥ १ ॥ "

परार्थरसिको धीमान्, मार्गगामी महाशयः ।
गुणरागी तथेत्यादि, सर्वं तुल्यं द्वयोरपि ॥ १२ ॥

परार्थेति-परार्थरसिक-परोपकाररचित्त धीमान्—बुद्ध्यनुगत मार्गगामी-कल्याणप्रापकपथयायी महाशय-स्फीतचित्त गुणरागी-गुणानुरागवान् तथेति—बोधिसत्त्वगुणान्तरसमुच्चयार्थं । इत्यादि शास्त्रान्तरोक्तम् सर्वं तुल्यं-समम् द्वयोरपि-सम्यग्दृष्टिबोधिसत्त्वयोः ।

अन्वर्थतोऽपि तुल्यतां दर्शयति-

बोधिप्रधानः सत्त्वो वा, सद्बोधिर्भावितीर्थकृत् ।
तथाभव्यत्वतो बोधि-सत्त्वो हन्त सतां मतः ॥ १३ ॥

बोधीति—बोधि-सम्यग्दर्शनं तेन प्रधान सत्त्वो वा । सताम्-साधूनाम्, हन्तेत्यामन्त्रणे, बोधिसत्त्वो मत-इष्ट । यदुक्तम्-" यत्सम्यग्दर्शन बोधि-स्तत्प्रधानो महोदय. । सत्त्वोऽस्तु बोधिसत्त्वस्त-त्स्वसाद्धन्तेति पूर्ववत् ॥ १ ॥ " वा-अथवा सद्बोधि -तीर्थकरपदप्रायोग्यसम्यक्त्वसमेतः । तथा भव्यत्वतो-भावितीर्थकृद्-यस्तीर्थकृद्भविष्यति स बोधिसत्त्व । तदुक्तम्-" वरबोधिसमेतो वा, तीर्थकृद्यो भविष्यति । तथा भव्यत्वतोऽसौ वा, बोधिसत्त्व सतां मतः ॥ १ ॥ " भव्यत्वं नाम-सिद्धिगमनयोग्यत्वम् अनादिपारिणामिको भावः । तथा भव्यत्वं चैतदेव कालनै—त्यत्यादिना प्रकारेण वैचित्र्यमापन्न एतद्भेद एव च बीजसाध्यादि ( सिद्ध्यर्थादि ) फलभेदोपपत्तिः । अन्यथा तुल्याया योग्यताया सहकारिणोऽपि तुल्या एव भवेयु तुल्ययोग्यतासामर्थ्याक्षिप्तत्वात्तेषामिति सद्बोधेर्योग्यताभेद एव पारंपर्येण तीर्थकरत्वनिबन्धनमिति भावनीयम् ।

तत्तत्कल्याणयोगेन, कुर्वन् सत्त्वार्थमेव सः ।
तीर्थकृत्त्वमवाप्नोति, परं कल्याणसाधनम् ॥ १४ ॥

तत्तदिति—तस्य तस्य कल्याणस्य परिशुद्धप्रवचनाधिगमातिशायिधर्मकथाऽविसंवादिनिमित्तादिलक्षणस्य योगेन-व्यापारेण कुर्वन्—विदधान. । सत्त्वार्थमेव मोक्षबीजाधानादिरूपं नत्वात्मम्भरिरपि स सद्बोधिमान् तीर्थकृत्त्वमवाप्नोति-लभते परं-प्रकृष्टम् कल्याणसाधनं भव्यसत्त्वशुभप्रयोजनकारि स्वजनादिभवोद्विधीर्षणया सद्बोधिप्रवृत्तिस्तु गणधरपदसाधनं भवतीति द्रष्टव्यम् । यत उक्तम्—" चिन्तयत्येवमेवैत—त्स्वजनादिगतं तु य । तथाऽनुष्ठानत. सोऽपि, धीमान् गणधरो भवेत् ॥ १ ॥ "

संविग्नो भवनिर्वेदा-दात्मनिःसरणं तु यः ।
आत्मार्थसंप्रवृत्तोऽसौ, सदा स्यान्मुण्डकेवली ॥ १५ ॥

संविग्न इति—संविग्नं " तथ्ये धर्मे ध्वस्तहिंसाप्रबन्धे, देवे रागद्वेषमोहादिमुक्ते । साधौ सर्वग्रन्थसदर्भहीने, संवेगोऽसौ निश्चलो योऽनुराग ॥ १ ॥ " इति काव्योक्तलक्षणसंवेगभाक् । भवनिर्वेदात्—संसारवैरस्यात् । आत्मनिःसरण तु—जन्मजरामरणादिदारुणदहनात्स्वनिष्कासनं पुन यश्चिन्तयतीति गम्यते । आत्मार्थसंप्रवृत्त स्वप्रयोजनमात्रप्रतिबद्धचित्तोऽसौ सदा—निरन्तरं स्याद् भवेत् । मुण्डकेवली-द्रव्यभावमुण्डनप्रधानस्तथाविधबाह्यातिशयशून्य केवली पीठमहापीठवत् । ( द्वा० ) ( सम्यग्दृष्टावेव शिष्टत्वमिति 'सिट्ठ ' शब्देऽस्मिन्नेव भागे वक्ष्यते । )

एतदेवाह—

मिथ्यादृष्टिगृहीतं हि, मिथ्यासम्यगपि श्रुतम् ।
सम्यग्दृष्टिगृहीतं तु, सम्यग्मिथ्येति नः स्थितिः ॥२९॥

मिथ्यादृगीति-मिथ्यादृग्गृहीतं हि सम्यगपि श्रुतमाचाराद्विकं मिथ्या भवति, तं प्रति तस्य विपरीतबोधनिमित्तत्वात् । सम्यग्दृग्गृहीतं तु मिथ्यापि श्रुतं वेदपुराणादिकं सम्यक्, तं प्रति तस्य यथार्थबोधनिमित्तत्वात् । इति न—अस्माकं स्थितिः—सिद्धान्तमर्यादा । प्रमानिमित्तत्वमात्रमेतदभ्युपगतं न तु प्रमाकरणत्वमिति चेन्न, त्वदुक्तं प्रमाकरणत्वमेव प्रमाणत्वमिति सर्वेषां प्रमातॄणामनभ्युपगमात् ।

तात्पर्यं वः स्वसिद्धान्तो-पजीव्यमिति चेन्मतिः ।
ननु युक्त्युपजीव्यत्वं, द्वयोरप्यविशेषतः ॥ ३० ॥

तात्पर्यमिति-वो—युष्माकं स्वसिद्धान्तोपजीव्यं—स्वसिद्धान्तपुरस्कारि तात्पर्यम्, तथा चान्यागमानुपजीव्यतात्पर्ये सकलवेदप्रामाण्याभ्युपगमनिवेशान्न दोष इति चेद् यदि तव मति, ननु तदा द्वयोरप्यावयोरविशेषतो युक्त्युपजीव्यत्वम्, अथ भाव:-अन्यागमानुपजीव्यत्वं ह्यन्यागमा-(म) संवादित्वं चेत्तत्संवादिनि स्वाभिप्रायेऽव्याप्तिरयौक्तिका तदसंवादित्वं चेदस्माकमपि तात्पर्यमयौक्तिकागमासंवाद्येव, सर्वस्यैव भगवद्वचनस्य युक्तिप्रतिष्ठितत्वात् मिथ्याश्रुततात्पर्यस्यापि स्याद्वादसंगयुक्त्यैव गृह्यमाणत्वात् ।

यत -

उद्भावनमनिग्राह्यं, युक्तेरेव हि यौक्तिके ।
प्रमाण्ये च न वेदत्वं, सम्यक्त्वं तु प्रयोजकम् ॥ ३१ ॥

उद्भावनमिति-यौक्तिके ह्यर्थे युक्तेरेवोद्भावनमनिग्राह्यम्-निग्रहस्थानम् अन्यथा निग्रहाभिधानात् । यद्वादी—" जो हेउवायपक्खम्मि हेउओ आगमे अ आगमिओ। सो समयपण्णवओ, सिद्धंतविराहगो अन्नो ॥१॥" इति अथ वेदत्वमेव प्रामाण्यप्रयोजकमित्यभ्युपगमे यावद्वेदप्रामाण्याभ्युपगम: स्यादित्यत आह—प्रमाण्ये च वेदत्वं न प्रयोजकं किं तु सत्यत्वमेव, लोकशब्दस्याप्यविसंवादिन: प्रमाणत्वादिति श्रद्धामात्रमेतदिति न किंचिदेतत् ।

शिष्टत्वमुक्तमत्रैव, भेदेन प्रतियोगिनः ।
तमानुभविकं बिभ्रत्, परमानन्दवत्यतः ॥ ३२ ॥

शिष्टत्वमिति-अतः परोक्तशिष्टलक्षणनिरासात् । अत्रैव सम्यग्दृष्टावेव उक्तम् अंशतः क्षीणदोषत्वम् । शिष्टत्वम् । परमानन्दवति दुर्भेदमिथ्यात्वमोहनीयभेदसमुत्थनिरतिशयानन्दभाजने । शिष्टत्वलिङ्गाभिधानमेतत् । प्रतियोगिनो दोषस्य क्षीयमाणस्य भेदेन तं भेदमानुभाविकं सकलजनानुभवसिद्धं बिभ्रत् । भवति हि अयमस्मात् शिष्टतरोऽयमस्माच्छिष्टतम इति सार्वजनीनो व्यवहारः । स चाधिकृतापेक्षयाऽ—धिकतराधिकतमदोषक्षयविषयतयाऽनुपपद्यते । परेषां तु न कथंचित् सर्वेषां वेदप्रामाण्याभ्युपगमादौ विशे—षाभावात् । एतेन वेदविहितार्थानुष्ठातृत्वं शिष्टत्वमित्यपि निरस्तम् । यावत्तदेकदेशविकल्पाभ्यामसंभवाव्याप्त्यो प्रसङ्गाच्च । यत्त्विष्टसाधनताविषयकमिथ्याज्ञानाभाववत्त्वं शिष्टलक्षणमुच्यते तत्त्वसमदुक्तशिष्टत्वव्यञ्जकमेव, युक्तमाभाति, न तु परनीत्या स्वतन्त्रलक्षणमेव । गङ्गाजले कूपजलत्वारोपानन्तरमिदं कूपजलं नादृष्टसाधनमिति भ्रमवतः कूपजल एव गङ्गाजलत्वारोपानन्तरमिदं गङ्गाजलमदृष्ट (ष्ट) साधनमिति भ्रमवतो गङ्गाजले उच्छिष्टत्वारोपानन्तरं नादृष्टसाधनमिति भ्रमवतश्चाशिष्टत्ववारणायादृष्टसाधनतावच्छेदकरूपपुरस्कारेण निषेधमुखेनादृष्टसाधनताविरोधिरूपापुरस्कारेण चादृष्टसाधनताविषयकत्वविवक्षायामपि स्वापादिदशायां बौद्धादावतिव्याप्तेरेतावदग्रहेऽपि सर्वत्र शमादिलिङ्गेन शिष्टत्वव्यवहाराच्चेति किमनया कुसृष्ट्या । द्वा० १५ द्वा० । यो० विं० । दर्श० ।

सम्प्रति सम्यग्दृष्टिस्वरूपमाविर्भावयंस्तस्य फलमाह—

एवंविहपरिणामो, सम्मद्दिट्ठी जिणेहिं पन्नत्तो ।
एसो उ भवसमुद्दं, लंघइ थोवेण कालेण ॥ ५१ ॥

एवंविधपरिणाम —उपशमादिलिङ्गयुक्त तया—विशुद्धबुद्धितया सम्यग्दृष्टिर्जिनैः प्रज्ञप्त:—प्ररूपित:, एष एव च भवसमुद्रं—संसारार्णवं लङ्घयति स्तोकेनापि कालेनेति गाथार्थ: ।

एवं सम्यक्त्वस्याप्येकस्य शिवसुखसाधनाबन्धवर्णनायां कस्यचिदत्यन्तप्रमादवत एकान्तेनात्रैवास्थाबन्धो मा भवत्विति बुद्ध्या सम्यग्दृष्टेरपि तपसोऽबहुफलत्वप्रतिपादनाय गाथाद्वयमाह—

सम्मद्दिट्ठिस्स वि अवि-रयस्स न तवो बहूफलो होइ ।
हवइ हु हत्थिन्हाणं, बुंदं छियं व तं तस्स ॥ ५२ ॥

सम्यग्दृष्टेरपि न केवलं मिथ्यादृष्टेरित्यपिशब्दार्थ:, अविरतस्य—विरतिरहितस्य तेनेव तपो बहुफलं भवति—जायते । हिशब्दश्चैवार्थ:, ततो हस्तिस्नानमिव—बुन्दां छितमिव वा । यथाहि-हस्ती प्रथमं जलेन स्नानं विधाय पुनर्धूल्याबगुण्ठति बुन्दाछितं पुनरकेन देशेनाकृष्य पुनर्द्वितीयेन पूर्यते एवं सम्यग्दृष्टेरपि विरतिरहितस्यैकतस्तपसोपार्जितं शुभमन्यतोऽविरत्या सावद्यचरणरूपया हार्यते जीवोपमर्दादिगुरुकर्मबन्धहतुत्वादिति ।

तथा च—

चरणकरणेहिँ रहिओ, न सिज्झई सुद्धसम्मदिट्ठी वि ।
जेणागमम्मि सिट्ठो, रहंधपंगूण दिट्ठंतो ॥ ५३ ॥

चरणकरणाभ्यां-वक्ष्यमाणस्वरूपाभ्यां रहितस्त्यक्तो न सिध्यति-न कर्माभावं करोति.सुष्ठु-अतिशयेन सम्यग्दृष्टिरपि येन कारणेनागमे भगवदावश्यकनिर्युक्तौ शिष्ट-प्रतिपादित, रथान्धपङ्ग्वादिदृष्टान्त-उदाहरणम् । दर्श० ५ तत्त्व । सम्यगिति प्रशंसायाम्, सम्यक्-प्रशस्ता मोक्षाविरोधित्वात् दर्शन दृष्टिरर्थाना जीवादीनामिति गम्यते सम्यग्दृष्टि:। आ० म०१ अ० । सम्यगिति प्रशंसार्थ, दर्शन-दृष्टि: सम्यग्-अविपरीता दृष्टि सम्यग्दृष्टि: । सम्यक्त्वे, औ० । विशे० । स्था० ।

सम्मद्दिट्ठिगुणट्ठाण-सम्यग्दृष्टिगुणस्थान-न० । द्वितीयगुणस्थाने, अविरतसम्यग्दृष्टिगुणस्थानत्वेनेदं व्याख्यातम् । आचा० १ श्रु० २ अ० ४ उ० ।

सम्मद्दिट्ठिदेव-सम्यग्दृष्टिदेव-पुं० । सम्यग्दृष्टयश्च देवाश्च देव्यश्चेत्येकशेषाद्देवा. । यक्षाम्बाप्रभृतिषु अर्हत्पाक्षिकेषु देवेषु, ध० २ अधि० ।

सम्मद्दिट्ठिय-सम्यग्दृष्टिक-पुं० । सम्यग्-अविपरीता दृष्टि - दर्शनं रुचिस्तत्त्वानि प्रति येषां ते सम्यग्दृष्टिका । मिथ्यात्वमोहनीयक्षायोपशमजसम्यग्दृष्टौ, स्था० १ ठा० ।

सम्मप्पणीयमग्ग-सम्यक्प्रणीतमार्ग-पुं० । सम्यग्दृष्टिभिर्गणधरादिभि. सम्यग्वा यथावस्थितवस्तुनया च निरूपणया प्रणीते सम्यग्ज्ञानं दर्शन चारित्रं चेति त्रिविधे भावमार्गे, "तवसंजमप्पहाणा,गुणधारी जे वयंति सब्भावं। सव्वजगजीवहियं, तमाहु सम्मप्पणीयमिणं ॥१॥" सूत्र १ श्रु० ११ अ० ।

सम्मब्भावाणुगत-सम्यग्भावानुगत-त्रि० । अविपरीततत्त्वैदंपर्यसगते, पञ्चा० १६ विव० ।

सम्मामिच्छद्दिट्ठि-सम्यग्मिथ्यादृष्टि-पुं० । सम्यक् च मिथ्या च दृष्टिर्येषां ते सम्यग्मिथ्यादृष्टय । येषामेकस्मिन्नपि वस्तुनि तत्पर्याये वा मतिदौर्बल्यादिना एकान्तेन सम्यक्परिज्ञानमिथ्याज्ञानाभावतो न सम्यक् श्रद्धानं तथैकान्ततो विप्रतिपत्तिस्तेषु , न० । शतकबृहच्चूर्णौ—" जहा नालिकेरदीववासिस्स खुहाइयस्स वि एत्थ समागयस्स ओयणाइए अणेगविहे ढोइए, तस्स उवरिं न रुई न य निंदा, जओ तेण सो ओअणाइओ आहारो न कयावि दिट्ठो नावि सुओ एवं सम्मामिच्छद्दिट्ठिस्स वि जीवाइपयट्ठाणं उवरिं न य रुई नावि निंद " त्ति । नं० । स० । स्था० । आव० ।

सम्मय-सम्मत-त्रि० । अप्रतिषिद्धे, आचा० १ श्रु० ८ अ० १ उ० । तेषु तेषु कार्येषु प्रयोजनेषु इष्टे, व्य० ३ उ० । तत्कृतकार्यस्य सम्मतत्वात् , नि० १ श्रु० १ वर्ग १ अ० । भ० । जी० । ' पामिच्च ' शब्दे पञ्चमभागे ८५४ पृष्ठे उक्तस्य देवराजनाम्न कुटुम्बिनो भार्यायाः सारिकाया पुत्र, पिं० ।

सम्मयसच्चा-सम्मतसत्या-स्त्री० । सकललोकसम्मततया प्रसिद्धे भाषाभेदे , ध० ३ अधि० । प्रज्ञा० । सम्मतसत्या या सकललोकसामत्येन सत्यतया प्रसिद्धा, कुमुदकुवलयोत्पलतामरसाना समानेऽपि पङ्कसंभवत्वे आगोपालजना अरविन्दमेव पङ्कजं मन्यते न शेषमित्यरविन्दे पङ्कजमिति । प्रज्ञा० ११ पद ।

सम्मरुइ-सम्यग्रुचि-स्त्री० । सम्यग्ज्ञाने, संशयविपर्यासनिरासेन इदमेव तत्त्वमिति निश्चयपूर्विकायां जिनोदितजीवादिपदार्थेष्वभिप्रीतौ, जिनोक्तानुसारितया तत्त्वार्थश्रद्धानरूपे सम्यक्त्वे , प्रव० १४६ द्वार ।

सम्मसुद्ध-सम्यक्शुद्ध-त्रि० । तत्त्वतो निर्मले , पञ्चा० २ विव० ।

सम्मसुय-सम्यक्श्रुत-न० । सम्यग्दृष्टिपरिगृहीते यथावस्थितार्थे वा श्रुतज्ञान, विशे० ।

अंगाणंगपविट्ठं, सम्मसुय लोइयं तु मिच्छसुयं।
आसज्ज उ सामित्तं, लोइए लोउत्तरे भयणा ॥५२७॥

इहाङ्गप्रविष्टमाचारादि श्रुतम् अनङ्गप्रविष्टं चावश्यकादि श्रुतम् , एतत् द्वितयमपि स्वामिचिन्तानिरपेक्ष स्वभावेन सम्यक्श्रुतम् । लौकिकं तु भारतादि प्रकृत्या मिथ्याश्रुतम् । स्वामित्वमासाद्य स्वामित्वचिन्तायां पुनर्लौकिके भारतादौ लोकोत्तरे चाचारादौ भजना-विकल्पनाऽवसेया । सम्यग्दृष्टिपरिगृहीतं भारताद्यपि सम्यग्श्रुतं सावद्यभीरुत्वभवहेतुत्वादि यथावस्थितनस्वस्वरूपबोधतो विषयविभागेन योजनात् , मिथ्यादृष्टिपरिगृहीतं त्वाचाराद्यपि मिथ्याश्रुतम् अयथावस्थितबोधतो वैपरीत्येन योजनादिति भावार्थ इति । विशे० । कर्म० । आ० चू० । सू० । नं० ।

से किं तं सम्मसुयं ? २, जं इमं अरहंतेहिं भगवंतेहिं उप्पण्णणाणदंसणधरेहिं तेलुक्कनिरिक्खियमहियपूइएहिं तीयपडुप्पण्णमणागयजाणएहिं सव्वण्णूहिं सव्वदरिसीहिं पणीयं दुवालसंगं गणिपिडगं, तं जहा-आयारो १ सूयगडो २ ठाणं ३ समवाओ ४ विवाहपन्नती ५ नायाधम्मकहाओ ६ उवासगदसाओ ७ अंतगडदसाओ ८ अणुत्तरोववाइयदसाओ ९ पण्हावागरणाइं १० विवागसुयं ११ दिट्ठिवाओ य १२ इचेअं दुवालसंगं गणिपिडगं चोद्दसपुव्विस्स सम्मसुयं अभिण्णदसपुव्विस्स सम्मसुयं तेण परं भिण्णेसु भयणा सेत्तं सम्मसुयं । ( सू० ४० )

अथ किं तत्सम्यक्श्रुतम्?,आचार्य आह-सम्यक्श्रुतं यदिदमर्हद्भि' अशोकाद्यष्टमहाप्रातिहार्यरूपां पूजामर्हन्तीत्यर्हन्त तीर्थकराः तैरर्हद्भि ते चार्हन्त' केचित् शुद्धद्रव्यास्तिकनयमतानुसारिभिरनादिसिद्धा एव मुक्तात्मानोऽभ्युपगम्यन्ते । तथा च ते पठन्ति-" ज्ञानमप्रतिघं यस्य, वैराग्यं च जगत्पते । ऐश्वर्यं चैव धर्मश्च,सह सिद्ध चतुष्टयम् ॥१॥" इत्यादि एवरूपाश्चापि ते बहव इष्यन्ते-स्थापनादिद्वारेण च विशिष्टां पूजामर्हन्ति ततोऽर्हन्तोऽप्युच्यन्ते ततस्तद्व्यवच्छेदार्थं विशेषणान्तरमाह-भगवद्भि भग -समग्रैश्वर्यादिरूप' । उक्तं च-"ऐश्वर्यस्य समग्रस्य रूपस्य यशस श्रिय'। धर्मस्याऽथ प्रयत्नस्य, षण्णां भग इतीङ्गना ॥ १॥" भगो विद्यते येषा ते भगवन्त' तैर्भगवद्भि । इह्यनादिसिद्धाना रूपमात्रमपि नोपपद्यते किं पुन समग्र रूपम् अशरीरत्वात् , शरीरस्य च रागादिकार्यतया तेषा रागादिरहितानामसंभवात् , ततो भगवद्भिरित्यनेन परपरिकल्पितानादिसिद्धार्हद्व्यवच्छेदमाह । अथ मन्येथा अनादिशुद्धा अप्यर्हन्तो यदा स्वेच्छया समग्ररूपादिगुणोपेत शरीरमारचयन्ति तदा तेऽपि भगवन्तो भवन्ति, तत. कथं तेषा व्युदास इत्याशङ्कापनोदनार्थं भूयोऽपि विशेषणान्तरमाह-उत्पन्नज्ञानदर्शनधरै -उत्पन्न ज्ञानं--केवलज्ञान दर्शन--केवलदर्शन धरन्तीत्युत्पन्नज्ञानदर्शनधरा , " लिहादिभ्य " इत्यच् प्रत्यय । न च येऽनादिविशुद्धा ते उत्पन्नज्ञानदर्शनधरा भवन्ति, " ज्ञानमप्रतिघं यस्य " इत्यादि वचनविरोधात् , तत उत्पन्नज्ञानदर्शनधरैरितिविशेषणेन तेषा व्यवच्छेदो भवति, ननु यद्येव तर्हि उत्पन्नज्ञानदर्शनधरैरित्येतावदवास्तामल भगवद्भिरिति विशेषणोपादानेन तदयुक्तम्-उत्पन्नज्ञानदर्शनधरा हि सामान्यकेवलिनोऽपि भवन्ति, न च तेषामवश्यं समग्ररूपादिसंभवस्ततस्तत्कल्पानर्हता मा प्रासिसुरमी विनेयजना इति समग्ररूपादिगुणप्रतिपत्त्यर्थं भगवद्भिरिति विशेषणोपादानम , नदेवं शुद्-

सयधणु-शतधनुष्-पुं०। जम्बूद्वीपे ऐरवते वर्षे आगामिन्यामुत्सर्पिण्यां भविष्यति अष्टमे कुलकरे, स०। ति०। जम्बूद्वीपे भारते वर्षे उत्सर्पिण्यां भविष्यति नवमे कुलकरे। स्था० १० ठा० ३ उ०। बलदेवस्य रेवत्यां जाते पुत्रे, नि० १ श्रु० ५ वर्ग १० अ०। ( स चारित्रमनुपाल्यान्ते प्रव्रज्य सिद्ध इति निरयावलिकायाः पञ्चमे वर्गे दशमेऽध्ययने सूचितम्।)

सयपइया-शतपदिका-स्त्री०। स्वेदजजन्तुभेदे, आचा० १ श्रु० १ अ० ५ उ०।

सयपत्त-शतपत्र-न०। पत्रशतसंख्योपेते पद्मे। चं० प्र० १ पाहु०। आ० म०। ती०। जं०। रा०। ओघ०। प्रज्ञा०। शत्रुञ्जये, ती० १ कल्प। सू० प्र०। प्रज्ञा०। स०। औ०। रा०।

सयपव्व-शतपर्वन्-न०। बहुपर्वे वंशजातीये वनस्पतौ, आचा० १ श्रु० १ अ० ५ उ०।

सयपाग-शतपाक-न०। शतकृत्वो यत्पक्वं परावर्तैषधैः रसेन सह शतेन वा कार्षापणानां पक्विमे, ज्ञा० १ श्रु० १ अ०। औ०। शतं पाकानामौषधिक्वाथानां वा पाको यस्य, औषधिशतेन वा सह पच्यते यत् शतकृत्वः पाको यस्य, शतेन वा रूपकाणां मूल्यतः पच्यते यत्र तच्छतपाकम्। स्था० ४ ठा० १ उ०। शतवारं नवनवौषधरसेन पक्वानि। अथवा—यस्य पाके शतं सौवर्णा लगन्ति तत्। शतद्रव्यैः पक्वे तैलादौ, कल्प० १ अधि० ३ क्षण।

सयपोरगकिमिय-शतपर्वककृमिक-पुं०। इक्षुपर्वकृमिषु, जी० ३ प्रति० १ अधि० २ उ०।

सयबल-शतबल-पुं०। ऋषभपूर्वभवजीवस्य वैताढ्यपर्वते गान्धारविषये जातस्य महाबलस्य राज्ञः पितामहे, आ० चू० १ अ०। आतु०। आ० म०।

सयभिसय-शतभिषज्-स्त्री०। शततारे वरुणदेवताके स्वनामख्याते नक्षत्रभेदे, ज० ७ वक्ष०। स्था०। सू० प्र०। स०।

सयमाण-स्वपत्-त्रि०। शयाने, "अजयं सयमाणो य पाणभूयाई हिंसइ"। दश० ४ अ०। आचा०।

सयमारंभवज्जण—स्वयमारम्भवर्जन—न०। अष्टम्यां प्रतिमायां श्रावककर्त्तव्ये, साक्षादारम्भनिषेधे, 'वज्जइ सयमारंभं सावज्जं कारवेति पेसेहिं। वित्तिणिमित्तं सुव्वयगुणजुत्तो अट्ठ जा मासा" इति। उपा० १ अ०।

सयमास-स्वकमास-पुं०। स्वकीयमासे, नि० चू० २० उ०।

सयमुह--शतमुख--न०। स्वनामख्याते नगरे, यत्र गुणचन्द्रः श्रेष्ठी चन्द्रिकया भार्यया सहासीत्। पिं०।

सयय-शतत-न०। अनवरते, आचा० १ श्रु० ८ अ० ४ उ०। उत्त०।

शतक-पुं०। उत्सर्पिण्यां भविष्यतो दशमतीर्थकृतः पूर्वभवजीवे स्वनामख्याते श्रावके, स० ८४ सम०। ति०।

सययबंध-सततबन्ध-पु०। शतत बन्ध सततबन्ध। नामनामवतोरैकार्थ्ये समासो बहुलमिति समासः। यथा विस्पष्ट पट्ठ विस्पष्टपट्ठुरित्यादौ। निरन्तरबन्धकाले बन्धे, कर्म० ५ कर्म०।

सययब्भास-सतताभ्यास-पुं०। नित्यमेव मातापित्रविनयादिवृत्तौ ध० १ अधि०।

सयरह-शतरथ-पुं०। भारते वर्षेऽतीतायामवसर्पिण्यां जाते दशमे कुलकरे, स०।

सयराह-देशी-युगपदर्थे, त्वरिते च। आ० म० १ अ०। झटित्यर्थे, अनु०। आ० म०। प्रश्न०।

सयरि-सप्तति-स्त्री०। सप्तावृत्तदशसंख्यायाम्, 'सयरिं मासाणं' महा० १ चू०।

सयरिसह-शतवृषभ-पुं०। त्रयोविंशतितमे अहोरात्रमुहूर्ते, चं० प्र० १० पाहु०।

सयल शकल-त्रि०। सम्पूर्णे, विशे० 'सयलजगजीवहियं।' कल्प० १ अधि० ५ क्षण।

सयलजगप्पियामह-सकलजगत्पितामह-पुं०। सकलजगत समस्तभुवनजनस्य पितामह इव पितामहः सकलजगत्पितामहः। अथवा-सकलजगतो धर्मः पिता पालनानियुक्तत्वात्तस्यापि भगवान् पिता भगवत्प्रभवत्वाद्धर्मस्येति पितुः पितापितामहः। सकलजगतः पितामह इति विग्रहः। तीर्थकृति, 'भुवणगुरुणो य ठवणा सयलजगपियामहस्स तो सम्मं" पं० सं०।

सयलसमाहियसिद्धि-सकलसमाहितसिद्धि-स्त्री०। निखिलेप्सितार्थनिष्पत्तौ, पञ्चा० ६ विव०।

सयलादेश-सकलादेश-पुं०। समग्ररूपतया प्रतिपादने, रत्ना० ४ परि०। ( सकलादेशस्वरूपम् 'सत्तभंगी' शब्देऽस्मिन्नेव भागे गतम्।)

सयलिंदियविसयभोगपज्जंत-सकलेन्द्रियविषयभोगप्रत्यन्त-पु०। अशेषभोगपर्यन्ते, आ०।

सयवसह-शतवृषभ-न०। अहोरात्रस्य त्रयोविंशे मुहूर्त्ते, कल्प० १ अधि० ६ क्षण। ज०। ज्यो०।

सयवार-शतवार-पुं०। शतश इत्यर्थे, 'तं किहिं वंकेहिं लोअणेहिं जोइज्जउ सयवार' प्रा० ४ पाद।

सयसहस्स शतसहस्र-न०। लक्षे, ज्ञा० १ श्रु० ५ अ०। स्था०। ज्ञा०। ज०। अनु०।

सयसहस्सपत्त-शतसहस्रपत्र-न०। लक्षदलोपेते पद्मे, औ०।

सयसामत्थाणुरूव-स्वकसामर्थ्यानुरूप-त्रि०। निजशक्त्यनुसारे, पञ्चा० १८ विव०।

सयसाहस्सिय-शतसाहस्रिक-त्रि०। लक्षप्रमाणे, कल्प० १ अधि० ५ क्षण।

सया-सदा-अव्य०। सर्वकाले, आचा० १ श्रु० १४ अ० १ उ०। स्था०। दश०। सूत्र०। आव०। नित्यं शब्दार्थे, भ० ३ श० ३ उ०। स्था०। सातत्य, च० प्र० २० पाहु०। प्रवाहतोऽपर्यवसिते काले, स्था० १० ठा० ३ उ०।

सयाउ-शतायुष्-पु०। जम्बूद्वीपे भारते क्षेत्रे अतीतायामुत्सर्पिण्यां जाते द्वितीये कुलकरे, स्था० १० ठा० ३ उ०।

नि०। स०। सुराविशेषे शनयाऽऽनपि शोधिनाऽपि या स्व-रूपं न जहाति। जी० ३ प्रति० ४ अधि०। ज०।

सयागुत्त-सदागुप्त-त्रि०। सर्वकालं प्रहरणादिभी रक्षिते. जी० ३ प्रति० ३ अधि०।

सयाज(ज)य-सदायत-त्रि०। सर्वकालं प्रयत्नपरे, दश० ४ अ०। आचा०। दश०। आचा०।

सयाजला-सदाजला-स्त्री०। सदा-सर्वकालं जलम् उदकं यस्यां सा तथा। सदा जलाभिधानायां नरकनद्याम्. "सयाजला नाम नदी भिदुग्गा पविज्जला लोहविलीणतत्ता।" सूत्र० १ श्रु० ५ अ० २ उ०।

सयाणिय-शतानीक-पुं०। कौशाम्ब्या नगर्या स्वनामख्याते राजनि उदयनपितरि, विपा०१श्रु०५ अ०। आचा०। विशे०। अत्रैव भरतक्षेत्रे यमुनानदीकूले पूर्वदिग्वधूकण्ठनिवेशित-मुक्ताफलकण्ठिकेव कौशाम्बी नाम नगरी। तत्र च सहस्रानी-कराजसूनुः स्वकुलमहासरः सरसि जायमानः शतानीको नाम राजा। तस्य च चेटकराजदुहिता श्रीमहावीरजिनक्र-मकमलमधुकरी च भुवनातिशायिरूपा मृगावतीनाम-पट्टमहादेवी। अन्यदा च शतानीकनृपतिना निजमनः कु-विकल्पसंभाविताऽलीकापराधेन स्वनगरीनिवासिनस्तो-षितसाकेतपुरप्रतिष्ठितसुरप्रियाभिधानयक्षावाप्तवरस्य नि-रपराधस्यैवैकस्य चित्रकरस्याङ्गुष्ठप्रदेशिन्योरग्रं छेदि-तम्। ततस्तेन 'निरर्थकमपमानितोऽहम्' इति गाढं प्र-कुपितेनोपायं विमृश्य स्त्रीलोलत्वादतिबलिष्ठत्वाच्चोज्जयि-नीनिवासिनश्चण्डप्रद्योतनरनाथस्य चित्रफलके वरलब्ध-तया यथावस्थितं मृगावतीरूपं प्रदर्शितम्। ततस्तेनाति-मदनपरवशेन तद्याचनाय शतानीकान्तिकं दूतः प्रेषितः। स च शतानीकेन वाढमपमान्य निर्भर्त्स्य च विसर्जितः ततस्तद्वचनाकर्णनप्रकुपितश्चण्डप्रद्योतो महाबलैरनेकभट-कोटिस्वामिभिर्बद्धमुकुटैश्चतुर्दशभिर्भूपालैः, महता स्वबलेन च सह प्रचलितः शतानीकस्योपरि। तं च तथा महाबल-भरेणाऽऽगच्छन्तं श्रुत्वा, आत्मानं चाल्पसामग्रीकं ज्ञात्वा हृदयसङ्घट्टेन सजातातीसाररोगः पञ्चत्वमुपगतः शतानी-कः। ततो मृगावत्या चिन्तितम्—धिङ् मम रूपम्, यदर्थं मद्भर्तुस्तावद् मरणमागतम्। न चैतावता स्थास्यतीदम्, किन्तु भवकोटीष्वप्यतिदुरवापं श्रीमन्महावीरोपदेशतः सु-चिरमनुपालितं मम शीलाभरणमपि विलुप्येत लग्नम्। त-स्मादुपायमत्र चिन्तयामि, इति विमृशन्त्या स्वबुद्धिल-ब्धसम्यगुपायया चण्डप्रद्योतस्यागच्छतो दूरस्थितस्यैव निरूपितः सम्मुखो दूतः। तेन च गत्वा मृगावतीवच-नात् प्रोक्तम्, यथा—राजन्! मृगावतीर्भणयति-यद् भ-र्तरि मृते स्वाधीनैव तावत् तवाहम्, परं किन्त्वद्यापि राजा बाल एवायमुदायननामा मत्पुत्रः। ततो यद्यस्य सुस्थमकृत्वैवाऽहं त्वया सह गच्छामि, तदा सीमालरा-जादिभिरसौ परिभूयते। तस्मादिहैव दूरे स्थितोऽमुं सु-स्थं कुरु। अथास्मत्कृतेऽप्येवमेवाऽर्वाग् मद्देशसीमायां स-मेष्यसि, तदा विषादिप्रयोगतो मरिष्यामि। ततश्चण्डप्र-द्योतेनोक्तम्—मयि विद्यमाने न कोऽप्यस्य संमुखमप्यवलो-कयिष्यति। ततो दूतेनोक्तम्—नैवम्, यत उच्छीर्षस्थित-विषधरस्य योजनशतस्थायि वैद्यः किं कुरुते?, त-स्माद् सुस्थं कुरु। तेनोक्तम्--कथं पुनरेतत् संपद्य-ते?। ततो दूतेनोक्तम्--उज्जयिनीनगरीसत्का बलिष्ठा इष्टका भवन्ति, ताभिः कौशाम्ब्याः प्राकारः कार्यः। उज्जयिन्याश्चातिदूरे कौशाम्बी, ततो गन्त्र्यादिवाहनैरिष्टका आनेतुं न शक्यन्ते। अतः पदातिपुरुषप्राचुर्याच्चण्डप्र-द्योतेन तान् परम्परया व्यवस्थाप्य हस्ताद् हस्तसंचारे-णेष्टका आनाय्य कारितः कौशाम्ब्याः प्राकारः। ततो मृगा-वत्या प्रोक्तम्—धान्यजलतृणादिकं यथा नगरीमध्ये प्रचुरं भवति तथा कार्यम्। ततः रागान्धत्वेन नष्टबुद्धिना तेन सर्वं तत् तथैव कारितम्। ततो रोधकशय्याया तस्यां नगर्यां संजातायां व्यभिचरिता मृगावतीनिश्चण्डप्रद्योतस्य। ततो नगरीद्वारं समायातो विलक्षीभूतस्तिष्ठत्यसौ। ततो मृगा-वत्या चिन्तितम्--पुत्रराज्योपद्रवव्यतिकरे निश्चिन्ता सं-जाताऽहं तावत्, ततो धन्यास्ते ग्रामनगरादिप्रदेशा येषु भगवान् महावीरो विचरति, धन्यश्च स एव लोको यस्त-त्पादरजोऽरञ्जितभालतलः सततं तदन्तिकोपासीनस्तद्वच — पीयूषवृष्टिभिर्निर्वाप्यमानः कालं निर्वाहयति, तद् यद्यत्र कथमपि भगवान् समागच्छति, ततोऽवलोकितातिदुरन्त-संसारवैरस्याऽहमप्येतस्य करोमि प्रव्रज्यां चाऽभ्युपगच्छा-मि। एतच्च तदाकूतं विज्ञाय समागतस्तत्र भगवान्। मृगा-वतिश्चण्डप्रद्योतश्च तत्र वन्दनार्थमुपगतः। धर्मकथावसाने च मृगावत्या व्रतग्रहणार्थं चण्डप्रद्योतो मुत्कलापितः। ते-नापि भगवन्नाज्ञया तस्याश्च सदेवमर्त्याऽसुरायाः परिषदो लज्जमानेन सा मुत्कलिता, प्रव्रजिता च। विशे०। भ०। कल्प०। ती०। आ० क०। वासजनपदे कौशाम्ब्या राज्ञः शतानीकस्य जयन्तीनाम भगिन्यासीत्। वृ० २ उ०। सथा०। आव०। आ० चू०।

सयाथिमिय-सदास्तिमित-स्त्री०। अविरहितं प्रशान्ते, पं० सू० ४ सूत्र।

सयामग-श्यामक-पुं०। गर्दभिल्लराजादनन्तरशकराजाच्च पूर्वमभिषिक्ते भारतप्रधानराजे, ति०।

सयालि-सदालि-पुं०। भारते आगमिष्यन्त्यामुत्सर्पिण्यां भविष्यतोऽष्टादशतीर्थकरस्य सर्वरस्य पूर्वभवजीवे, ती० २० कल्प। स०।

सयावरी-शतावरी-त्रि०। वल्लीभेदे, ध० ३ अधि०। प्रव०। त्रीन्द्रियजीवभेदे, उत्त० ३६ अ०।

सयावियडभाव-सदाविकटभाव-पुं०। सर्वकालं प्रकटभावे, 'सयावियडभावे असंसत्ते जिइदिए।' दश० ८ अ०।

सयासव-सदाश्रव-त्रि०। आश्रवतीपरत्क्षरति जलं यैस्ते आश्रवाः-सूक्ष्मरन्ध्राणि सन्तो विद्यमानाः सदा वा-सर्वदा वा आश्रवा यस्य स सदाश्रवः। आश्रवैः सदा सहिते, भ० १ श० ६ उ०।

शताश्रव-त्रि०। शतसंख्या आश्रवा यस्य स.। शतसंख्य-काश्रवोपेते. भ० १ श० ६ उ०।

सयासिव-सदाशिव-पुं०। न०। सदा शिवमस्येति सदाशि-वम्। ल०। पो०। परब्रह्मणि,शैवोपास्ये परतत्त्वे, द्वा० २द्वा०।

सयासोक्ख-सदासौख्य-न० । नित्यसुखे, अपवर्गे, आव०६ अ० । पञ्चा० ।

सयह-सह्य-त्रि० । 'ह्य ह्यः' ॥ ८।२।१२४ ॥ इति ह्यशब्दे-ह्कारयकारयोर्व्यत्ययो वा । सहनीये , प्रा० २ पाद ।

सयोग-सयोग-पुं० । योगेन सहितः। संसारी जीवभेदे, स्था० २ ठा ४ उ० ।

सर-शर-पुं० । वाणे, सूत्र० १ श्रु० ३ अ० १ उ० । अस्त्रे,प्रव० द्वार । ध० । संथा० । आ० म० । औ० । सूत्र० । स० ।

सरस्-न० । स्वयं सम्भूते जलाशये, अनु० । स्था० । प्रश्न० । नि० चू० । भ० । औ० । रा० । प्रश्न० । उत्त० । ज्ञा० । बहूनि केवलानि पुष्पावकीर्णानि सरांसीत्युच्यन्ते, प्रश्न० २ पद ।

स्वर्-अव्य० । स्वर्लोके , देवलोके , गा० ।

स्वर-पुं० । शुद्धेष्वकाराद्यक्षरेषु, पुं० "अक्खरसरणेण सरा" 'स्वृ' शब्दोपतापयो , अक्षराणां व्यञ्जनानां स्वरणेन संशब्दनेन स्वरा अकारादयः प्रोच्यन्ते । अथवा—अक्षरस्य चैतन्यस्य स्वरणात् संशब्दनात् स्वराः, शब्दोच्चारणमन्तरणाऽन्तर्विज्ञानस्य बोद्धुमशक्यत्वात् , शब्दे च स्वरसद्भावादिति । विशे० ।

सुद्धा वि सरंति सयं,सारंति य वंजणाइँ जं तेणं ।
होंति सरा न कयाइ वि,तेहिँ विणा वंजणं सरइ ॥४६२॥
वंजिज्जइ जेणत्थो,घडो व्व दीवेण वंजणं तो तं ।
अत्थं पायेण सरा, वंजंति न केवला जेणं ॥ ४६३ ॥

शुद्धाः केवला व्यञ्जनरहिता अपि अकारादयः स्वराः स्वयमेव स्वरन्ति-शब्दयन्ति विष्णुप्रमुखं वस्तु , व्यञ्जनानि चैते संयुक्ता सन्तः स्वरयन्ति उच्चारणयोग्यानि कुर्वन्ति यतः, तेन कारणेन स्वरा भवन्त्येते । न हि क्वापि तैः स्वरैर्विना व्यञ्जनस्य स्वरणम्-अर्थप्रतिपादनं दृश्यते । नापि परगमने पिण्डीभूतानि व्यञ्जनानि स्वरैर्विनोच्चारयितुं शक्यन्ते,अतो व्यञ्जनस्वरणाद्प्येते स्वरा उच्यन्त इति भावः । व्यज्यते प्रकटीक्रियते प्रदीपेनेव घटादिरर्थोऽनेनेति कृत्वा व्यञ्जनमभिधीयते व्यञ्जनसाहाय्यविरहिता यतः केवलाः स्वरा प्रायो न कदाचिद् वाह्यमर्थं व्यञ्जयन्ति, अपनीतव्यञ्जनं हि वाक्यं न विवक्षितार्थप्रतिपादनायाऽलं दृश्यते, यथा—'सम्यग्दर्शनज्ञानचारित्राणि ' इत्यत्र वाक्ये व्यञ्जनापगमे एते स्वरा समवतिष्ठन्ते-'अ-अ-अ-अ-अ-आ-अ-आ-इ-आ-इ' । न चैते विवक्षितमर्थं प्रतिपादयितुं समर्था । अकारेकारादयः केवला अपि विष्णुमन्मथादिकमर्थं प्रतिपादयन्तीति प्रायोग्रहणम् । अत्राह-नन्वकारादयो विष्णुप्रभृतीनां संज्ञा एव । एवं च सति यथा केवलेन स्वरेण संज्ञा, तथा संकेतवशात् केवलेन व्यञ्जनेनाप्यसौ भविष्यति तत्कथं पूर्वगाथायामुक्तम्—'न कयाइवि तेहिँ विणा वंजणं सरइ'इति ? सत्यम् , तत्राऽयमभिप्रायः-स्वरैः केवलैरपि काचित् काचित् संज्ञा दृश्यते , व्यञ्जनैस्तु सर्वथा तद्रहितैर्न काचित् संज्ञा वक्ष्यत इति । तदेवमक्षरं वर्ण इति पर्यायौ सामान्यवर्णवाचकौ, स्वरो व्यञ्जनमित्येतौ तु प्रत्येकं वर्णविशेषवाचकाविति।विशे०। सकलजनाह्लादकत्वप्रकृतिगम्भीरतादिगुणायलकृते ध्वनौ , अनु० । विशे० । सूत्र० । स्था० । नं० । रा० । जं० । 'स्वृ' शब्दोपतापयोः, स्वरणं स्वरः । ध्वनिविशेषे, अनु० ।

स्वराः—

सत्त सरा पण्णत्ता,तं जहा-"सज्जे रिसभे गंधारे, मज्झिमे पंचमे सरे । धेवते चेव णिसाते,सरा सत्त वियाहिता ॥१॥"
एएसि णं सत्तण्हं सराणं सत्त सरट्ठाणा पण्णत्ता, तं जहा—
सज्जं तु अग्गजिब्भाते, उरेण रिसभं सरं ।
कंठुग्गतेण गंधारं, मज्झजिब्भा तु मज्झिमं ॥ २ ॥
णासाए पंचमं बूया, दंतोट्ठेण य धेवतं ।
मुद्धाणेण य णिसातं, सरट्ठाणा वियाहिता ॥ ३ ॥
सत्त सरा जीवनिस्सिता पण्णत्ता, तं जहा—
सज्जं रवति मयूरो, कुक्कुडो रिसहं सरं ।
हंसो णदति गंधारं, मज्झिमं तु गवेलगा ॥४॥
अह कुसुमसंभवे काले, कोइला पंचमं सरं ।
छट्ठं च सारसा कोंचा,णिसायं सत्तमं गता ॥५॥
सत्त सरा अजीवनिस्सिता पण्णत्ता, तं जहा—
सज्जं रवति मुइंगो, गोमुही रिसभं सरं ।
संखो णदति गंधारं, मज्झिमं पुण झल्लरी ॥ ६ ॥
चउचलणपतिट्ठाणा, गोहिया पंचमं सरं ।
आडंबरो रेवतितं, महाभेरी य सत्तमं ॥ ७ ॥
एतेसि णं सत्तसराणं सत्त सरलक्खणा पण्णत्ता,तं जहा—
सज्जेण लभति वित्तिं, कतं च ण विणस्सति ।
गावो मित्ता य पुत्ता य, णारीणं चेव वल्लभो ॥८॥
रिसभेण उ एसज्जं, सेणावच्चं धणाणि य ।
वत्थगन्धमलंकारं, इत्थिओ सयणाणि य ॥ ९ ॥
गंधारे गीतजुत्तिण्णा, वज्जवित्ती कलाहिता ।
भवंति कतिणो पन्ना, जे अन्ने सत्थपारगा ॥ १० ॥
मज्झिमस्सरसंपन्ना, भवंति सुहजीविणो ।
खायती पीयती देती, मज्झिमं सरमस्सितो ॥ ११ ॥
पंचमस्सरसंपन्ना, भवंति पुढवीपती ।
सूरा संगहकत्तारो, अणेगगणणातगा ॥ १२ ॥
रेवतस्सरसंपन्ना, भवन्ति कलहप्पिया ।
साउणिता वग्गुरिया, सोयरिया मच्छबन्धा य ॥१३ ॥
चंडाला मुट्ठिया सेवा, जे अन्ने पावकम्मिणो ।
गोघातगा य जे चोरा, णिसायं सरमस्सिता ॥१४॥
एतेसिं सत्तण्हं सराणं तओ गामा पण्णत्ता,तं जहा-सज्जगामे मज्झिमगामे गंधारगामे । सज्जगामस्स णं सत्त मुच्छणातो पण्णत्ताओ, तं जहा—
मंगी कोरव्वीया, हरी य रयणी य सारकंता य ।
छट्ठी य सारसी णाम, सुद्धसज्जा य सत्तमा ॥ १५ ॥
मज्झिमगामस्स णं सत्त मुच्छणातो पण्णत्ताओ,तं जहा—
उत्तरमंदा रयणी, उत्तरा उत्तरासमा ।

आसोकंता य सोवीरा , अभीरु हवति सत्तमा ॥ १६ ॥
गंधारगामस्स णं सत्त मुच्छणातो पणत्ताओ तं जहा–
णंदीति खुड्डिमाँ पूरि–मा य चउत्थी य सुद्धगंधारा।
उत्तरगंधारा तित्त , पंचमिता हवति मुच्छा उ ॥ १७ ॥
सुट्ठुत्तरमायामा, सा छट्ठी णियमसो उ णायव्वा।
अह उत्तरायता को–डिमातसा सत्तमी मुच्छा॥ १८ ॥
सत्त सराओ कओ सं–भवंति? गेयस्स का भवति जोणी?।
कति समता उस्सासा ?, कति वा गेयस्स आगारा? ।१६।
सत्त सरा णाभीतो. भवंति गीतं च रू(रु) यजोणीतं।
पादसमा ऊसासा, तिन्नि य गीयस्स आगारा॥ २० ॥
आइमिउ आरभंता, समुव्वहंता य मज्झगारम्मि।
अवसाणे वज्झ विंतो,तिन्नि य गेयस्स आगारा ॥ २१ ॥
छद्दोसे अट्ठगुणे , तिन्नि य वित्ताई दो य भणितीओ।
जाणाहि ति सो गाहिइ, सुसिक्खिओ रंगमज्झम्मि॥२२॥
भीतं दुतं रहस्सं , गायंतो मा तगाहि एत्तालं।
काकस्सरमणुनासं च होंति गेयस्स छद्दोसा ॥ २३ ॥
पुन्नं१ रत्तं२ चअलं–कियं ३ च वत्तं ४ तहा अविग्घुट्ठं ५।
मधुरं ६ सम७ सुकुमारं८,अट्ठ गुणा होंति गेयस्स ।२४।
उरकंठसिरपसत्थं, च गेज्जते मउ रिभिअपदबद्धं।
समतालपडुक्खेवं, सत्त सरसीहरं गीयं ॥ २५ ॥
निद्दोसं सारवंतं च, हेउजुत्तमलंकियं।
उवणीयं सोवयारं च,मियं मधुरमेव य॥ २६ ॥
सममद्धसमं चेव, सव्वत्थ विसमं च जं।
तिन्नि वित्तप्पयाराइं, चउत्थं नापलब्भती॥ २७ ॥
सकता पागता चेव, दुहा भणितीउ आहिया।
सरमंडलम्मि गिज्जंते , पसत्था इसिभासिता ॥ २८ ॥
केसी गायति मधुरं , केसी गायति खरं च रुक्खं च॥
केसी गायति चउरं, केसि विलंबं दुतं केसी ॥ २६ ॥
विस्सरं पुण केरिसि ?।
सामा गायइ मधुरं , काली गायइ खरं च रुक्खं ज।
गोरी गायति चउरं, काण विलंबं दुतं अंधा॥ ३० ॥
विस्सरं पुण पिंगला।
तंतिसम तालसमं , पादसमं लयसमं गहसमं च।
नीससिऊससियसमं, संचारसमा सरा सत्त॥ ३१ ॥
सत्त सरा य ततो गामा, मुच्छणा एकवीसती।
ताणा एगूणपण्णासा , सम्मत्तं सरमंडलं ॥ ३२ ॥
( सू० ५५३ ) इति सरमंडलं समत्तं ॥
सुगमं चेद , नवरं स्वरणानि स्वरा·–शब्दविशेषा , ' सज्जे ' त्यादि श्लोका· , षड्भ्यो जात षड्ज , उक्तं हि– "नासा कण्ठमुरस्तालु , जिह्वा दन्तांश्च संश्रित । षड्भि सञ्जायते यस्मा–त्तस्मात् षड्ज इति स्मृत ॥ १ ॥" तथा ऋषभो–वृषभस्तद्वद् यो वर्तते स ऋषभ इति । आह च–" वायु समुत्थितो नाभे , कण्ठशीर्षसमाहतः, नर्दत्यृषभवद् यस्मात् , तस्मादृषभ उच्यते ॥ १ ॥ " तथा गन्धो विद्यते यत्र स गन्धार. स एव गान्धारो , गन्धवाहविशेष इत्यर्थ । अभाणि हि–" वायु· समुत्थितो नाभे , कण्ठशीर्षसमाहत । नानागन्धावह· पुण्यो, गान्धारस्तेन हेतुना ॥ १ ॥ " तथा मध्ये कायस्य भवो मध्यमः , यदवाचि– " वायु· समुत्थितो नाभे–रुरोहृदि समाहत । नाभि प्राप्तो महानादो , मध्यमत्वं समश्नुत ॥ १ ॥ " तथा पञ्चानां षड्जादिस्वराणां निर्देशक्रममाश्रित्य पूरण पञ्चम । अथवा––पञ्चसु नाभ्यादिस्थानेषु मातीति पञ्चम स्वर , यदभ्यधायि–" वायु समुत्थितो नाभे–रुर (हृत्)कण्ठशिराहत । पञ्चस्थानोत्थितस्याऽस्य, पञ्चमत्व विधीयते ॥ १ ॥ तथा अभिसन्धयते––अनुसन्धयति शेषस्वरानिति निरुक्तिवशाद् धैवतः, यदुक्तम्– " अभिसन्धयते यस्मा–देतान् पूर्वोत्थितान् स्वरान् । तस्मादस्य स्वरस्यापि , धैवतत्वं विधीयते ॥ १ ॥ " पाठान्तरेण रैवतश्चेवेति , तथा निषीदन्ति स्वरा यस्मिन् स निषाद , यतोऽभिहितम्–" निषीदन्ति स्वरा यस्मान्निषादस्तेन हेतुना । सर्वांश्चाभिभवत्येष , यदादित्योऽस्य दैवतम् ॥ १ ॥ " इति, तदेव स्वराः सप्त ' वियाहिय ' त्ति––व्याख्याता । ननु कार्यं हि कारणायत्त जिह्वा च स्वराणां कारणं सा चासंख्येयरूपा तत. कथं स्वराणां संख्यातत्वमिति , उच्यते–असख्याता अपि विशेषत स्वरा· सामान्यत सर्वेऽपि सप्तस्वन्तर्भवन्ति । अथवा–स्थूलस्वरान् गीत––चाऽऽश्रित्य सप्त उक्ता , आह च–"कज्ज करणायत्तं, जीहा य सरस्स ता असखेज्जा । सरसंखमसंखेज्जा, करणस्सासंखयत्ताओ ॥१॥ सत्त य सुत्तनिवद्धा, कह न विरोहो ? तओ गुरू आह । सत्तणुवाई सव्वे, वायरगहणं च गेयं वा ॥ २ ॥ " इति । स्वरानामताऽभिधाय कारणतस्तन्निरूपणायापक्रमते–'एएसि णं' मित्यादि , तत्र नाभिसमुत्थ स्वरोऽविकारी आभोगेन अनाभोगेन वा य प्रदेशं प्राप्य विशेषमासादयति तत्स्वरस्योपकारकमिति स्वरस्थानमुच्यते , 'सज्ज' मित्यादि श्लोकद्वयं ब्रूयादिति सर्वत्र क्रिया, षड्जं तु प्रथमस्वरमेव अग्रभूता जिह्वा अग्रजिह्वा जिह्वाग्रमित्यर्थ , तया यद्यपि षड्जभणने स्थानान्तराण्यपि व्याप्रियन्ते अग्रजिह्वा वा स्वरान्तेषु व्याप्रियते तथापि सा तत्र बहुतरव्यापारवतीति कृत्वा तया तमेव ब्रूयादित्यभिहितम् , उरो––वक्षस्तेन ऋषभस्वरं, ' कठुग्गएणं ' ति––कण्ठश्चासावुग्रकश्च––उत्कट कण्ठोग्रकस्तेन कण्ठस्य वोग्रत्व यस्तेन कण्ठोग्रत्वेन कण्ठाद्वा यदुद्गतम्–उद्गति स्वरोद्गमलक्षण क्रिया तेन कण्ठोद्गतेन गन्धार, जिह्वाया मध्यो भागो मध्यजिह्वा तया मध्यमं, तथा दन्ताश्च ओष्ठौ च दन्तोष्ठ तेन धैवत रैवतं चेति । 'जीवनिस्सिय' त्ति–जीवाश्रिता. जीवेभ्यो वा नि सृता–निर्गता. , 'सज्ज' मित्यादि श्लोक , 'नदति–रौति 'गवेलग' त्ति–गावश्च एलकाश्च–ऊरणका गवेलका , अथवा––गवेलका ऊरणका एव इति, 'अह कुसुम' इत्यादिरूपकं गाथाभिधानम् , ' विषमाक्षरपादं वा, पादैरसम दशध–

मेवत् । तन्त्रेऽस्मिन् यदसिद्धं. गाथेति तत् पण्डितैर्ज्ञेयम् ॥ १ ॥' इति वचनात्, 'अथे' ति—विशेषार्थे, विशेषार्थता चैवम्—यथा गवेलका अविशेषेण मध्यमं स्वरं नदन्ति न तथा कोकिला पञ्चमम्, अपि तु कुसुमसम्भवे काल इति, कुसुमाना बाहुल्यतो वनस्पतिषु सम्भवो यस्मिन् स तथा तत्र, मधाविल्यर्थे । 'अजीवनिस्सिय' त्ति—तथैव नवरं जीवप्रयोगादेत इति । 'सज्ज' मित्यादि श्लोक, मृदङ्गो-मर्दल. गोमुखी—काहला यतस्तस्या मुखे गोशृङ्गमन्यद्वा क्रियत इति, 'चउ' इत्यादि श्लोका चतुर्भिश्चरणैः प्रतिष्ठानं भुवि यस्याः सा तथा, गोधा चर्मणा अवनद्धेति गोधिका वाद्यविशेषा दर्द्दरिकेति यत्पर्याय. आडम्बर.-पटह. सप्तमूमिति निषादम् । 'एएसि ण मि' त्यादि, 'सत्त' त्ति—स्वरभेदात् सप्तस्वरलक्षणानि यथा स्व फलं प्रति प्रापणाव्यभिचारीणि स्वररूपाणि भवन्ति, तान्येव फलत आह—'सज्जेणे' त्यादि श्लोका सप्त, षड्जेन लभते वृत्तिम्' अयमर्थ —षड्जस्येदं लक्षणं—स्वरूपमस्ति येन वृत्ति—जीवनं लभते षड्जस्वरयुक्त प्राणी, एतच्च मनुष्यापेक्षया लक्ष्यते, मनुष्यलक्षणत्वादस्येति, कृतं च न विनश्यति तस्येति शेष निष्फलारम्भो न भवतीत्यर्थ, गावो मित्राणि च पुत्राश्च भवन्तीति शेष. । 'एसज्जं' ति—ऐश्वर्यं गन्धारे गीतयुक्तिज्ञा वर्यवृत्तय.—प्रधानजीविका कलाभिरधिका. कवय —काव्यकारिणः प्राज्ञा --सद्बोधा, ये च उक्तेभ्यो गीतयुक्तिज्ञादिभ्योऽन्ये- शास्त्रपारगा -धनुर्वेदादिपारगामिनस्ते भवन्तीति, शकुनेन-श्येनलक्षणेन चरन्ति—पापर्द्धिं कुर्वन्ति शकुनान् वा घ्नन्ति शाकुनिका., वागुरा—मृगबन्धनं तया चरन्तीति वागुरिका, शूकरेण शूकरवधार्थं चरन्तीति शूकरान् वा घ्नन्तीति शौकरिका, मौष्टिका मल्ला इति, 'एतेषा' मित्यादि, तत्र व्याख्यानगाथा—'सज्जाइ तिहा गामो, ससमूहो मुच्छणाण विन्नेओ । ता सत्त एक्कमेक्के, तो सत्त सराण इगवीसा ॥ १ ॥ अन्नन्नसरविसेसे, उप्पायंतस्स मुच्छणा भणिया । कत्ता व मुच्छिओ इव, कुणई मुच्छं व सो व त्ति ॥ २ ॥' कर्त्ता वा मूर्छित इव करोति, मूर्च्छामिव वा स कर्त्तेत्यर्थ, इह च मङ्गीप्रभृतीनामेकविंशतिमूर्च्छनाना स्वरविशेषा पूर्वगते स्वरप्राभृते भणिता, अधुना तु तद्विनिर्गतेभ्यो भरतवैशाखिलादिशास्त्रेभ्यो विज्ञेया इति । 'सत्त सरा कओ' गाहा, इह चत्वार प्रश्ना., तत्र कुत इति स्थानात् का योनिरिति का जाति तथा कति समया येषु ते कतिसमया, उच्छ्वासा किंपरिमाणकाला इत्यर्थ, तथाऽऽकाराः आकृतय स्वरूपाणीत्यर्थ, 'सत्तसरा गाहा प्रश्ननिर्वचनार्था स्पष्टा. नवरं रुदितं योनि -जाति समानरूपतया यस्य तद् रुदितयोनिक पादसमया उच्छ्वासा यावद्भि समयै पादो वृत्तस्य नीयते तावत्समया उच्छ्वासा गीते भवन्तीत्यर्थे । आकारानाह- आई' गाहा आदौ-प्राथम्ये मृदु कोमलमादिमृदु गीतमिति गम्यते, आरभमाणा',इह समुदितत्रयापेक्ष बहुवचनमन्यथा एक एव आकारो द्वयमन्यद् वक्ष्यमाणलक्षणमिति, तथा समुद्वहन्तश्च महता गीतध्वनेरिति गम्यते,मध्यकारे-मध्यभागे, तथा अवसाने च क्षपयन्तो गीतध्वनिं मन्द्रीकुर्वन्तस्त्रयो गीतस्याकारा भवन्ति,आदिमध्या-

वसानेषु गीतध्वनि मृदुतारमन्द्रस्वभाव क्रमेण भवतीति भाव । किं चान्यत्— छद्दोसे' दारगाहा. षट् दोषा वर्जनीया, तानाह-'भीयं' गाहा भीतं-त्रस्तमानसं १ द्रुत-त्वरितं २ 'रहस्सं' ति—ह्रस्वस्वरं लघुशब्दमित्यर्थ', पाठान्तरेण 'उप्पिच्छं' श्वासयुक्तं त्वरितं चेति उत्तालम्-उत्प्राबल्यार्थे इत्यतितालमस्थानताल वा, तालस्तु कंसिकादिशब्दविशेष इति ४ । काकस्वरं—श्लक्ष्णाश्रव्यस्वरम् अनुनासं च—सानुनासिक नासिकाकृतस्वरमित्यर्थ., किमित्याह—गायन् गानप्रवृत्तस्त्व हेगायन ! मा गासी, किमिति ?. यत एते गेयस्य षट् दोषा इति । अष्टौ गुणानाह—"पुन्नं" गाहा—पूर्णं स्वरकलाभिः १ रक्तं गेयरागेणानुरक्तस्य २ अलङ्कृतमन्यान्यस्वरविशेषाणा स्फुटशुभाना करणात् ३ व्यक्तमक्षरस्वरस्फुटकरणत्वात् ४ 'अविघुट्ठं' विक्रोशनमिव यन्न विस्वर ५ मधुरं—मधुरस्वरं कोकिलारुतवत् ६ सम—तालवंशस्वरादिसमनुगतं ७ सुकुमारं ललितं ललतीव यत् स्वरघोलनाप्रकारेण शब्दस्पर्शनेन श्रोत्रेन्द्रियस्य सुखोत्पादनाद्वेति ८, एभिरष्टाभिर्गुणैर्युक्तं गेयं भवति । अन्यथा विडम्बना । किंचान्यत्— 'उर' गाहा-उर.कण्ठशिर.सु प्रशस्तं-विशुद्धम्, अयमर्थो-यद्युरसि स्वरो विशालस्तत उरो विशुद्धं, कण्ठ यदि स्वरो वर्त्तितोऽस्फुटितश्च तत कण्ठविशुद्धं, शिरसि प्राप्तो यदि नानुनासिकस्तत शिरोविशुद्धम्, अथवा—उर. कण्ठ शिर. सुश्लेष्मणा अव्याकुलेषु विशुद्धेषु—प्रशस्तेषु यत्तत्तथेति चकारो गेयगुणान्तरसमुच्चये, गीयते उच्चार्यते गेयमिति सम्बध्यते, किं विशिष्टमित्याह ?-मृदुकं-मधुरस्वरं रिभितं-यत्राक्षरेषु घोलनया संचरन् स्वरो रङ्गतीव घोलनाबहुलमित्यर्थ., पदबद्ध—गेयपदैर्निबद्धमिति, पदत्रयस्य कर्मधारय., 'समतालपडुक्खेवं' ति—समशब्द. प्रत्येकं सम्बध्यते तेन समास्ताला-हस्तताला उपचारात् तद्ध्वनो यस्मिंस्तत्समतालं, तथा समः प्रत्युत्क्षेप प्रतिक्षेपो वा—मुरजकंशिकाद्यातोद्याना यो ध्वनिस्तल्लक्षण नृत्यत्पादक्षेपलक्षणो वा यस्मिंस्तत्समप्रत्युत्क्षेप समप्रतिक्षेपं चेति, तथा-'सत्तसरसीभरं' ति—सप्तस्वरा. 'सीभरं' ति-अक्षरादिभि. समा यत्र तत् सप्तस्वरसीभरं, ते चामी-'अक्खरसमं १ पयसमं २ तालसमं ३ लयसमं४गहसमं च ५।नीससिऊससियसमं ६ सञ्चारसमं ७ सरा सत्त ॥१॥" त्ति, इयं च गाथा स्वरप्रकरणोपान्ते 'तंतिसम' मित्यादिरधीताऽपि इहाक्षरसममित्यादि व्याख्यायते, अनुयोगद्वारटीकायामेवमेव दर्शनादिति, तत्र दीर्घे अक्षरे दीर्घ स्वर. क्रियते, ह्रस्वे ह्रस्व ,प्लुते प्लुत ,सानुनासिके सानुनासिकः तदक्षरसमं, तथा यद्गेयपद—नामिकादिकमन्यतरबन्धेन बद्ध यत्र स्वरे अनुपाति भवति तत्तत्रैव यत्र गीते गीयते तत्पदसममिति, यत्परस्पराहतहस्ततालस्वरानुवर्त्ति भवति तत्तालसमं, शृङ्गदार्वाद्यन्यतरमयेनाङ्गुलिकोशकेनाहतायास्तन्त्र्या. स्वरप्रकारो लयस्तमनुसरतो गातुर्यद्गेयं तल्लयसम, प्रथमतो वंशतन्त्र्यादिभिर्य. स्वरो गृहीतस्तत्समं गीयमानं ग्रहसम निःश्वसितोच्छ्वसितमानमनतिक्रामतो यद्गेय तन्निःश्वसितोच्छ्वसितसम, तैरेवं वंशतन्त्र्यादिभिर्यदङ्गुलिसञ्चारसमं गीयते तत्सञ्चारसमं, गेयं च सप्त स्वरास्तदात्मकमित्य-

र्थ"। यो गेये सूत्रबन्धः स एवमष्टगुण एव कार्य इत्याह-'निद्दोसं सिलोगो'—तत्र निर्दोषम्— 'अलियमुवघायजणयं' इत्यादि द्वात्रिंशत्सूत्रदोषरहितं १ सारवद् अर्थेन युक्तं हेतुयुक्तम् अर्थगमककारणयुक्तम् ३ अलङ्कृतं—काव्यालङ्कारयुक्तम् ४ उपनीतम्—उपसंहारयुक्तं ५ सोपचारम्-अनिष्ठुर-विरुद्धा लज्जनीयाभिधानं सोत्प्रासं वा ६ मितं पदपादाक्षरैः नापरिमितमित्यर्थः ७ मधुरं त्रिधाशब्दार्थाभिधानतो ८ गेयं भवतीति शेषः। ' तिन्नि य वित्ताइं ' ति—यदुक्तं तद्व्याख्या—' समं ' सिलोगो, तत्र—समं पादैरक्षरैश्च , तत्र पादैश्चतुर्भिरक्षरैस्तु—गुरुलघुभिः अर्द्धसमं त्वेकतरसमं, विषमं तु सर्वत्र पादाक्षराणपेक्षयेत्यर्थः , अन्ये तु व्याचक्षते—समं—यत्र चतुर्ष्वपि पादेषु समान्यक्षराणि , अर्द्धसमं यत्र प्रथमतृतीययोर्द्वितीयचतुर्थयोश्च समत्वं, तथा सर्वत्र—सर्वपादेषु विषमं च-विषमाक्षरं—यद् यस्माद् वृत्तं भवति ततस्त्रीणि वृत्तप्रजातानि—पद्यप्रकाराः, अत एव चतुर्थं नोपलभ्यत इति। दोन्नि य भणिइओ ' त्ति—अस्य व्याख्या-' सक्कया ' सिलोगो , भणिति —भाषा ' आहिया '-आख्याता स्वरमण्डले-षड्जादिस्वरसमूहे, शेषः कण्ठ्यम् । कीदृशी स्त्री कीदृशं गायतीति प्रश्नमाह—' केसी ' गाहा—' केसि ' त्ति-कीदृशी ' खर ' ति—खरस्थानं रूक्षं—प्रसिद्धं चतुरं-दक्षं विलम्ब-परिमन्थरं द्रुतं-शीघ्रमिति, विस्सरं पुण ' केरिसि ' त्ति-गाथाधिकामिति , उत्तरमाह-' सामा ' गाहा कण्ठ्या . पिंगल ' त्ति—कपिला , ' तंति ' गाहा तन्त्रीसमं-वीणादितन्त्रीशब्देन तुल्यं मिलितं च, शेषं प्राग्वत् . नवरं पादो—वृत्तपादः , तन्त्रीसममित्यादिषु गेयं सम्बन्धनीयं तथा गेयस्य स्वरान्थान्तरत्वादुक्तम् सचारसमा सरा सत्त '. त्ति—अन्यथा सञ्चारसममिति वाच्यं स्यात् , 'तंतिसमा तालसमे' त्यादि धीः अयं च स्वरमण्डलसङ्क्षेपार्थः , 'सत्त सरा' सिलोगो, तता तन्त्री तानो भण्यते, तत्र षड्जादिः स्वरः प्रत्येकं सप्तभिस्तानैर्गीयत इत्येवमेकोनपञ्चाशत्ताना सप्ततन्त्रिकाया वीणाया भवन्तीति,एवमेकतन्त्रीकाया त्रितन्त्रिकाया च कण्ठेनापि गीयमाना एकोनपञ्चाशदेवेति । स्था० ७ ठा० ३ उ० । उत्त० । आ० म० । प्रव० । जी० । तं० । प्रश्ना० । जीवाजीवविनस्वरस्वरूपफलाभिधायके शास्त्रे, नपुं० । स० ३१ सम० ।

स्मर—पुं० । "पक्ष्म-श्म-ष्म-स्म-ह्मा म्हः " ॥८।२।७४॥ इति क्वाचित्कत्वादत्र न । समरः । सरो ।प्रा०।' अधो म-न-याम्" ॥८।२।७८॥ इति मलोपः । प्रा० । कन्दर्पे , अष्ट० २२ अष्ट० ।

सृ—धा० । गतौ, "ऋवर्णस्यारः " ॥८।४।२३४॥ इति सृधातोः ऋवर्णस्यारः । सरइ । प्रा० ४ पाद ।

स्मृ—धा० । आध्याने, ' स्मरेर्भर भूर० " ॥ ८।४। ७४ ॥ इत्यस्य पक्षे । सरइ । स्मरसि । प्रा० ४ पाद ।

सरअ—पुं०स्त्री०।शरद्—स्त्री० । "शरदादेरत्" ॥८।१।१८॥ इति अन्त्यव्यञ्जनस्य अत् । प्रा० । ' प्रावृट्-शरत्तरणय पुंसि " ॥ ८ । १ । ३१ ॥ इति वा पुंस्त्वम् । आश्विनकार्तिकमासात्मके ऋतौ, प्रा० १ पाद ।

सरउ—सरयु—स्त्री० । जम्बूद्वीपे मन्दरस्य दक्षिणस्यां भारते वर्षे गङ्गासङ्गतायां महानद्याम् । स्था० १० ठा० ३ उ० । या अयोध्याया सन्निकटे वहति । स्था० ५ ठा० ३ उ० ।

सरक्ख—सरजस्क—त्रि० । सक्षार, बृ० ३ उ० । रजसोपगुण्ठित, उत्त० १७ अ० । सभस्मनि, ओघ० ।

सरक्ष—त्रि० । रक्षा-भस्म, सह रक्षया वर्तत इति सरक्षम् । सभस्मनि , पिं० । आ० म० ।

सरक्खधूलि—सरक्षधूलि—स्त्री० । सह रजसा श्लक्ष्णधूलिरूपेण वर्तत इति सरजस्का,सा चासौ धूलिश्चेति।रजःसहितधूलौ,

सरक्खामोस—सरजस्कामर्श—पुं० । सह पृथिव्यादिरजसा युक्तं यद्वस्तु तस्य आमर्शः-तत्संस्पर्शः । रजोयुक्तवस्तुस्पर्शे , आव० ४ अ० ।

सरग—शरक—पु०। अग्निनिर्मन्थनदारुणि, ज्ञा०१ श्रु० १६ अ० । शरिकाभिः कृते शूर्पादौ, आचा०२ श्रु०१ चू०१ अ०११ उ० ।

सरगय—स्वरगत—न०। गीतमूलभूतानां षड्जऋषभादिस्वराणां ज्ञाने, जं० २ वक्ष० । ज्ञा० । स० ।

सरघ—सरघ—पु० । मधुमक्षिकायाम् , सूत्र० २ श्रु० ३ अ० ।

सरट्ठाण—स्वरस्थान—न० । नाभितमुत्थस्वरोऽधिकारी आभोगेन अनाभोगेन वा यं प्रदेशं प्राप्य विशेषमासादयति तत् स्वरस्योपकारकमिति स्वरस्थानम् । स्वराणां विशेषापादके स्थाने, स्था० ८ ठा० ३ उ० । अनु० । ' नासाए पंचमं बूया, दंतोट्ठेण य धेवयं । मुद्धाणेण य णेसायं , सरट्ठाणा वियाहिया ( इतीयं ' सर ' शब्देऽस्मिन्नेव भागे व्याख्याता ।)

सरड—शरट—पुं० । कृकलाशे, ओघ० । प्रज्ञा० । आ० क० । प्रश्न० । सरडकयमालियाए' शरटैः कृकलाशैः कृता माला स्रग् मुण्डे वक्षसि वा यन तत्तथा । उपा० २ अ० ।

सरडुअ—सरडुक—न० । अबद्धास्थिक फले, आचा० २ श्रु० १ चू० १ अ० ८ उ० । बृ० ।

सरडुफल- सरडुफल—न० । अबद्धास्थिकफले, ध० २ अधि० । आचा० । नि० । चू० ।

सरण—शरण—न० । आश्रये,उत्त०१ अ० । रागादिपरिभूताश्रितसत्त्ववात्सल्ये, आचा० २ श्रु० १ चू० ३ अ० ३ उ० । तं० । प्रश्न० । नानाविधोपद्रवोपद्रुतानां रक्षास्थाने, त्राणे , भ० १ श० १ उ० । कल्प० । प्रश्न० । सूत्र० । संसारकान्तारगताना-मतिप्रबलरागादिपीडितानां समाश्वासनस्थानकल्पे तत्त्वचिन्तारूपेऽध्यवसाने , रा० । आचा० । ' जन्मजरामरणभयैरभिभूते व्याधिवेदनाग्रस्ते । जिनवरवचनादन्यन्नास्ति शरणं क्वचिल्लोके ॥१॥ ' स्था० ४ ठा० १ उ० । जी० । तृणमयवासरिकादौ, अनु० । भ० । प्रश्न० । गृहे, आचा०१ श्रु० ५ अ०५ उ० । सूत्र० ।

सरण—न० । गमने, उत्त० १६ अ० । आचा० ।

स्मरण—न० । पूर्वोपलब्धार्थानुस्मृतौ , द्वा० १६ अष्ट० । सूत्र० । मनसि धारणे, पञ्चा० १ विव० द्वा० ।

सरणय—शरणद—पुं० । शरणं भयार्त्तानामुपद्रवोपद्रुतानां तद्रक्षा—स्थानं तच्च परमार्थतो निर्वाणं तद्ददातीति शरणदः ।

तीर्थकृति , स० १ सम० । रा० । भ० । जी० । ध० । 'शरण-देभ्य ' इह शरणं-भयार्त्तत्राणं तच्च संसारकान्तारगताना-मतिप्रबलरागादिपीडितानां तु खपरंपरासंक्लेशविदोभत' समाश्वासनस्थानकल्पं तत्त्वचिन्तारूपमध्यवसानम् , विवि-दिषेत्यन्ये , अस्मिश्च सति तत्त्वगोचराः शुश्रूषाश्रवण-ग्रहणधारणाविज्ञानेहापोहतत्त्वाभिनिवेशा. प्रज्ञागुणा भ-वन्ति, तत्त्वचिन्तामन्तरेण तेषामभावात् । संभव-न्ति तामन्तरेणापि तदाभासाः न पुन. । स्वार्थसाध-कत्वेन भावसारा । तत्त्वचिन्तारूपं च शरणं भगवद्भ्य एव भवतीति शरणं ददतीति शरणदा. । ध० २ अधि० ।

सरणिज्ज-स्मरणीय-त्रि० । क्षुद्रोपद्रवविद्रावणादिकृते तद्-गुणानुचिन्तनादिनोपबृंहणीये , संघा० १ अधि० १ प्रस्ता० । आ० म० ।

सरणी-सरणी-स्त्री० । मार्गे, " पंथो मग्गो सरणी " पाइ० ना० ५२ गाथा ।

सरण्ण-शरण्य-त्रि० । शरणे साधु शरण्यः । शरणदातरि , ध० ३ अधि० ।

सरतल-सरस्तल-न० । पानीयेन भृतं तडागं सरस्तस्य तं-सम्-उपरितनोभागः सरस्तलम् । जी० ३ प्रति० ४ अ-धि० । उपरिभागावच्छिन्ने सरसि, भ० ६ श० ७ उ० , ' पुक्खरेइ वा सरतलेइ वा करतलेइ वति " वृत्तवर्णकः । अत्र व्याख्यानतो विशेषप्रतिपत्तिरिति निर्वातं जलपूर्णं सरो ग्राह्यमन्यथा वातोद्धूयमाना वा जलत्वेन विवक्षित. समभावो न स्यादित्यर्थ । जं० १ वक्ष० । रा० ।

सरद्-पु० ।-शरद्-स्त्री० । प्राकृते पुंस्त्वम् । कार्तिकमार्गशी-र्षयो., भ० ७ श० ३ उ० । अनु० । ज्ञा० । आश्विनकार्तिक-मासात्मके ऋतौ, वाच० । प्राकृ० । ८ । १ । ३१ । प्रा०१ पाद ।

सरदहतलायसोसणया-सरोहृदतडागशोषणता-स्त्री० । सर-स -स्वयं सम्भूतजलाशयविशेषस्य ह्रदस्य-नद्यादिषु नि-म्नतरप्रदेशलक्षणस्य तडागस्य-कृत्रिमजलाशयविशेषस्य परिशोषणं यत्तत्तथा तदेव प्राकृतत्वात् स्वार्थिकताप्रत्यये सरोहृदतडागपरिशोषणता । श्रा० । उपा० । भ० । गोधू-मादिवापनार्थं सरआदिशोषणरूपे करणेन उपभोगपरिभो-गव्रतातिचारलक्षणे कर्मादाने, आव० ६ अ० । ध० । सरस. शोष. सर.शोष. धान्यादिवपनार्थं सारणीकर्षणं, सरोग्रहणं जलाशयान्तराणामुपलक्षण तेन सिन्धुह्रदतडागादिपरि-ग्रह. । यत. सर.शोष. सर.सिन्धुह्रदादरम्बुसंप्लवस्तत्र अखातं सर , खातं तु तडागमित्यनयोर्भेद. । इह हि जलस्य तद्गताना त्रस।०। तत्प्लाविताना च षण्णा जीवनिकायानां वध इति दोष. । ध० २ अधि० । पञ्चा० । ध० र० ।

सरपंति-सरःपङ्क्ति-स्त्री० । एकपङ्क्त्या व्यवस्थितेषु बहुषु सर सु, रा० । आचा० । भ० । प्रज्ञा० । सरसां पद्धतौ, नं० । यत्रैकस्मात् सरसोऽन्यस्मिन् अन्यस्मादन्यत्र संचारकपा-टकेनोदकं संचरति सा सर पङ्क्तिः । प्रश्न० ५ संव० द्वार । नि० चू० । जी० । जं० । अनु० । स्था० । ज्ञा० ।

सरपण्णी-शरपर्णी-स्त्री० । मुञ्जे, स्था० ५ ठा० ३ उ० ।

सरपाय-शरपात-पुं० । शरा--इषव. पात्यन्ते-क्षिप्यन्ते येन इति शरपात । धनुषि, सूत्र० १ श्रु० ४ अ० २ उ० ।

सरपाहुड-स्वरप्राभृत-न० । पूर्वगते स्वराधिकारप्रतिपादके-ऽधिकारविशेषे, स्था० ७ ठा० ३ उ० ।

सरप्पमाण-सरःप्रमाण-न० । सर एवोक्तलक्षणं प्रमाणं महा-कल्पादर्मानं सर प्रमाणम् । गोशालकमतप्रसिद्धे कालमान-भेदे, भ० १५ श० । ( ' गोसालग ' शब्दे तृतीयभागे १०२३ पृष्ठे वक्तव्यतोक्ता । )

सरभ-शरभ-पुं० । परासरेति पर्याये अष्टापदे महाकायाट-व्यपशुविशेषे, यो हस्तिनमपि पृष्ठे समारोपयति । प्रश्न० १ आश्र० द्वार । रा० । जं० । प्रश्न० । कल्प० । भ० । ज्ञा० । ज्य० ।

सरभस-सरभस-त्रि० । सहर्षे, प्रश्न० ३ आश्र० द्वार ।

सरमंडल-स्वरमण्डल-न० । षड्जादिस्वरसमूहे, अनु० । स्था० । ( 'सर' शब्देऽस्मिन्नेव भागेऽस्य स्वरूपं गतम् । )

सरमह-सरोमह-पुं०। विशिष्टे काले सरस. पूजायाम् ,आचा० २ श्रु० १ चू० १ अ० ३ उ० ।

सरमाण-स्मरत्-त्रि० । अयमीदृश इति जानाने, व्य०४ उ० । आचा० ।

सरय-सरक-पुं० । गुडधातकीसिद्धे मद्ये, प्रश्न०५ संव०द्वार ।

शरक-पु० । निर्मन्थनकाष्ठ, नि० १ श्रु० ३ वर्ग ३ अ० ।

शरद्-स्त्री० । कार्तिकमार्गशीर्षयो , ज्ञा० १ श्रु० ६ अ० । ज्यो० । भ० । स्था० । सू० प्र० । सरयरयणीकरसो-मवयणा ' कल्प० १ अधि० ३ क्षण ।

सररुह-सरोरुह-न० । " ओतोऽद् वाऽन्योन्यप्रकोष्ठातोद्यशि-रोवेदनामनोहरसरोरुहे क्तोश्च व' ॥८।१।१५६॥ इति ओतोऽत्त्वं वा । सररुहं सरोरुहं । कमले, प्रा० १ पाद ।

सरल-सरल-त्रि० । देवदारुवृक्षे, जं० २ वक्ष० । आचा० । प्रज्ञा० । भ० । अवक्रे, आ० क० १ अ० । " सरलास्तत्र छि-द्यन्ते, कुब्जास्तिष्ठन्ति पादपा. । " ध० र० २ अधि० ।

सरलक्खण-स्वरलक्षण-न० । यथास्वरफलं प्रति प्रापणाव्य-भिचारिणि स्वरस्वरूपे, स्था० ६ ठा० ३ उ० । (तानि च सप्त 'सर' शब्देऽस्मिन्नेव भागे दर्शितानि । )

सरवण-शरवन-न० । स्वनामख्याते शरप्रधाने सन्निवेशे, यत्र गोबहुलस्य ब्राह्मणस्य गोशालायां गोशालको जन्म लेभे । भ० १५ श० । सथा० । आ० म० । आ० चू० । स्था० ।

सरवत्त-शरपत्र-न० । बृहदिषिकायाम् , आचा० १ श्रु० १ अ० ५ उ० ।

सरवर-सरोवर-न० । महति सरसि, "सरिहिं न सरवरेहिं न वि उज्जाणवणेहिं, " प्रा० ढुं० ४ पाद ।

सरविजय-स्वरविजय-पुं० । स्वरः पादकीशिवादीकृतरूपस्त-स्य विजयस्तत्सम्बन्धी शुभाशुभनिरूपणाभ्यासः । स्वरवि-द्यायाम् , यथा-" गतिस्ताराम्वरो वाम., पादक्याः शुभदः स्मृत । विपरीत प्रदेशे तु, स एवाभीष्टदायक ॥१॥" इत्यादि, तथा "दुर्गास्वरत्रयं स्यात् ,ज्ञातव्यं शाकुनेन नैपुण्यात् । चलि-चिलशब्द सकल , सुमध्यमो वर्चलो विफल ॥१॥" इत्यादि । सरस्स विजयं जो विज्जाहिं न जीवइ से भिक्खू ।' उत्त०१५ अ० । आव० ।

सरण्ण-शरण्य-त्रि०। शरणदये, द्वा० २७ द्वा०। उत्त०। औ०।

सरस-सरस-त्रि०। रुधिरादियुक्ते, प्रश्न० ३ आश्र० द्वार। रा०। रसोपेते, स०। रक्तचन्दनविशेषे, ज्ञा० १ श्रु० १ अ०। "सरसचंदणाणुलित्तगत्ते," सरसेन सुरभिणा च गोशीर्षचन्दनेन च अनुलिप्तं गात्रं यस्य स तथा। कल्प० १ अधि० ३ क्षण। सद्यस्के, कल्प० १ अधि० १ क्षण। आव०। 'सरसरुहिरमंसावलित्तगत्ते' सरसाभ्यां रुधिरमांसाभ्याम-वलिप्तं गात्रं यस्य तत्तथा। उत्त० २० अ०।

सरसंचित-शरसञ्चित-त्रि०। शरजालसंचिते, शरशताकुले, सूत्र० १ श्रु० ३ अ० १ उ०।

सरसपारिजायग-सरसपारिजातक-न०। अम्लानसुरद्रुमविशेषकुसुमे, अन्त० १ श्रु० २ वर्ग ८ अ०।

सरसय-शरशत-त्रि०। शराणां शतं प्रत्येकं येषु तें शरशतानि। प्रत्येकं शराणां शतेन परिपूर्णेषु, रा०। 'सरसयबत्तीसतोरणपरिमंडिया' शराणां शतं प्रत्येकं येषु तानि शरशतानि तानि च तानि द्वात्रिंशत्तोरणाणि च वोणाश्रया· शरशतद्वात्रिंशत्तोरणानि तैर्मण्डिता. शरशतद्वात्रिंशत्तो-रणमण्डिता। जी० ३ प्रति० ४ अधि०। भ०।

सरसर-सरसर-पुं०। सर्पगतेरनुकरणे, भ० १५ श०। ज्ञा०। लौकिकानुकरणभाषायाम्, उपा० २ अ०।

सरसरपंति-सरःसरःपङ्क्ति-स्त्री०। परस्परं संलग्नेषु बहुषु सरस्सु, आचा० २ श्रु० १ चू० ३ अ० ३ उ०। येषु सरस्सु पङ्क्त्या व्यवस्थितेषु एकस्मात् सरसोऽन्यस्मिन् तस्मादन्यत्रैवं संचारकपाटकेनोदकं सञ्चरति। जं०१ वक्ष०। जी०। नि० चू०। प्रज्ञा०। अनु०। भ०।

सरसी-सरसी-स्त्री०। महति सरसि, औ०। महान्ति सरांसि सरसीत्युच्यते। औ०। पिं०। "पुक्खरिणी दीहिया सरसी" पाइ० ना० १३० गाथा।

सरस्सई-सरस्वती-स्त्री०। भद्रनन्दीकुमारमातरि, ऋषभपुर-नगरराजस्य धनवाहस्य भार्यायाम्, विपा० २ श्रु० २ अ०। भारत्याम्, को०। भणितौ, उपा० २ अ०। दश०। "यस्याः संस्मृतिमात्राद्, भवन्ति मतयः सुदृष्टपरमार्थाः। वाचश्च बोधविकला, सा जयतु सरस्वती देवी ॥१॥" पो० १ विव०। स्था० ४ ठा० १ उ०। भ०। "सव्वसुयसमुद्दमती, वामकरे गहियपोत्थया देवी। जक्खकुडुंडीसहिया, देतु अविग्घं मम नाणं।" पं० भा० ५ कल्प। गीतरतेर्नामगन्धर्वेन्द्रस्याग्रमहिष्याम्, "नमः श्रीवर्द्धमानाय, श्रीपार्श्वप्रभवे नमः। नमः श्रीमत्सरस्वत्यै, सहायेभ्यो नमो नमः"। ॥१॥ ज्ञा० १ श्रु० ४ वर्ग १ अ०। स्वनामख्याते नदीभेदे, ती० २५ कल्प।

सरस्सईकंठाभरण-सरस्वतीकण्ठाभरण-न०। विंशतिर्व्याकरणेष्वन्यतमे व्याकरणे, कल्प०१ अधि०१ क्षण। इन्द्रभूतिसद्दगते विदुषि, पुं०। कल्प० १ अधि० ६ क्षण।

सरस्सईलद्धप्पसाय-सरस्वतीलब्धप्रसाद-पुं०। इन्द्रभूतिसद्दगते पण्डिते, कल्प० १ अधि० ६ क्षण।



सरसोस-सरःशोष-पुं०। जलाश्रयशोषणे, ध० २ अधि०। ('सरदहतलावसोसणया' शब्दे इहैव व्याख्यातम्।)

सरहस्स-सरहस्य-त्रि०। रहस्ययुक्ते, 'सरहस्साण वेयाणं' कल्प० १ अधि० १ क्षण।

सरहा-सरघा-स्त्री०। मधुमक्षिकायाम्, "अल्पमधर्मं पणस्त्रीं, क्रूरं सरघा नटीश्च षट् क्षुद्रान्।" इति। स्था० ६ ठा० ३ उ०।

सरहि-शरधि-पुं०। तूणीरे, ज्ञा० १ श्रु० १८ अ०।

सराग-सराग-पुं०। सह रागेणाभिष्वङ्गलक्षणेन यः स सरागः। स्था० ८ ठा० ३ उ०। अनुपशान्तक्षीणमोहे, स्था० १० ठा० ३ उ०। मायालोभलक्षणेन रागेण सहिते, भ० १७ श० २ उ०। अपरिपाकप्राप्तयोगे, ध० २ अधि०। सूत्र०।

सरागत्थ-सरागस्थ-पुं०। सह रागेण वर्त्तत इति सराग-स्वभावस्तस्मिन् तिष्ठतीति तत्तथा। स्वभावस्थे, सूत्र० १ श्रु० ३ अ० ३ उ०।

सरागदंसणाऽऽरिय-सरागदर्शनार्य-पुं०। सह रागेणाभिष्वङ्गलक्षणेन यः स सरागः, स एव संयमः सरागस्य वा साधोः संयमो यः स तथा कर्मधारयः। स्था० ६ ठा० ३ उ०। सरागदर्शनिनि, प्रश्न० १ आश्र० द्वार।

सरागसंजम-सरागसंयम-पुं०। सकषायचारित्रे, स्था० ४ ठा० ४ उ० (सरागसंयमं द्विविधमिति 'चरित्तधम्म' शब्दे तृतीयभागे ११४६ पृष्ठे गतम्।)

सरागसम्मद्दंसण-सरागसम्यग्दर्शन-सरागस्य अनुपशान्ताक्षीणमोहस्य यत्सम्यग्दर्शनं तत्त्वार्थश्रद्धानं तत्तथा। अथवा सरागं च तत्सम्यग्दर्शनं चेति विग्रहः। सरागं सम्यग्दर्शनमस्येति वेति। सम्यग्दर्शनभेदे, स्था० १० ठा० ३ उ०। ('सम्मद्दंसण' शब्देऽस्मिन् भागे दशविधत्वमस्य गतम्।)

सराव-शराव-पुं०। मल्लके, बृ० ३ उ०। आव०।

सरासण-शरासन-पुं० न०। शरा अस्यन्ते क्षिप्यन्ते अस्मिन्निति शरासनम्। इषुधौ, जी० ४ प्रति० १ उ०। धनुषि, रा०। औ०। जं० "कोयंडं गंडीवं धम्मं धणुहं सरासणं चावं।" पाइ० ना० ३७ गाथा।

सरासणपट्टिया-शरासनपट्टिका-स्त्री०। धनुर्यष्टौ, बाहुपट्टिकाया च। विपा० १ श्रु० २ अ०।

सरिआ-सरित्-स्त्री०। नद्याम्, 'स्त्रीयामादविद्युतः' ॥८।१। १५॥ इति अन्ते आत्वम्। प्रा०। नद्याम्, 'सरिआ तरंगिणी णिण्णया णई" पाइ० ना० २८ गाथा।

सरिउं-स्मृत्वा-अव्य०। अनुचिन्त्येत्यर्थे, पञ्चा० ५ विव०। जं०। नि० चू०।

सरिकप्प-सदृक्कल्प-पुं०। समानस्थितिकल्पस्थापनाकल्पादि-विविधकल्पकर्त्तरि, बृ० ६ उ०।

आहारउवहिभेज्जा, उग्गमउप्पादणेसणा सुद्धा।
जो परिगिण्हति णिययं,उत्तरगुणकप्पिओ स खलु३६६

य आहारोपधिशय्या उद्गमोत्पादनैषणाशुद्धा-नियत निश्चितं परिगृह्णाति स खलु उत्सग्गगुणकल्पिको मन्तव्य ।
एतेषु सदृशकल्पेनेह किं कर्तव्यमित्याह—

सरिकप्पे सरिछंदे, तुल्लचरित्ते विसिट्ठतरए वा ।
साहुहि संथवँ कुज्जा, णाणीहि चरित्तगुत्तेहिं ।३६७।

सदृक्कल्प -स्थितकल्प स्थापनाकल्पादिर्विविध . कल्प-कर्ता सदृक्छन्द·-समानसामाचारीक तुल्यचारित्र· समानसामायिकादिसंयम , विशिष्टतरो वा-तीव्रतरशुभाध्यवसायविशेषणोत्कृष्टतरेषु संयमस्थानकण्डकेषु वर्तमाना ईदृशा ये ज्ञानिनश्चारित्रगुप्ताश्च तै संस्तवं—सूत्रपरिचयमेकत्र सधास्यादिक कुर्यात् ।

सरिकप्पे सरिछंदे, तुल्लचरित्ते विसिट्ठतरए वा ।
आदिज्ज भत्तपाणं, सतेण लाभेण वा तुज्झे ।३६८।।

य सदृशकल्प सदृक्छन्दस्तुल्यचारित्रो विशिष्टतरो वा तैरेवंविधेन साधुना आनीतं भक्तपानम् आददीत । स्वकीयेन वा आत्मीयलाभेन तुष्येत् हीनतरसत्क न गृह्णीयात् । तदेव-मुक्ता छेदोपस्थापनीयकल्पस्थिति । बृ० ६ उ० ।

सरिच्छ-सदृक्ष-त्रि० । ' दृश. क्विप्टक्सक " ॥ ८।१। १४२॥ इति दृशधातो· ऋवर्णस्य रिरादेश· । प्रा० । " छोऽक्ष्यादौ " ॥ ८ । २ । १७ ॥ इति क्षस्य छत्वम् , प्रा० ।" अत समृद्ध्यादौ वा" ॥८।१।४४॥ इति आदेरकारस्य दीर्घो वा । सारिच्छो । सरिच्छो । समान , प्रा० । " सरिसो समो सरिच्छो " पाइ० ना० ७४ गाथा ।

सरिच्छंद-सदृक्छन्द-पु० । समानसामाचारीके, बृ० ६ उ० ।

सरित्तय-सदृक्त्वच्-त्रि० । सदृशी-सदृग्वर्णा त्वग् येषान्ते तथा । रा० । सदृशच्छविषु , भ० ११ श० ११ उ० । सदृग्छविषु , अन्त० १ श्रु० ३ वर्ग ८ अ० ।

सरित्ता-स्मर्तृ-त्रि० । चिन्तयितरि, " नो पुव्वरयं पुव्विन्दकीलियं सरित्ता भवइ । " स्था० १० ठा० ३ उ० ।

सरिरूप-सदृग्रूप-त्रि० । " दृश क्विप् " ति ऋत इत्वम् । समानरूप , प्रा० १ पाद ।

सरिवण्ण-सदृग्वर्ण-त्रि० । " दृश क्विप्-टक्सक " ॥ ८ । १ । १४२ ॥ इति दृशधातो ऋतो रिगादेश । समानवर्णे , प्रा० ।

सरिव्वय-सदृग्वयस्-त्रि० । सदृक्-समान वयो येषां ते तथा । रा० । सवयस्के, अन्त० १ श्रु० ३ वर्ग १ अ० ।

सरिस-सदृश-त्रि० । समान , सूत्र० २ श्रु० ५ अ० । विशे० । भ० । पञ्चा० । नि० चू० । औ० । समानाकारे , ग० । तुल्ये , उत्त० १ अ० । अनु० । वृत्तिहेतुसामान्यरूपे , स्था० २ ठा० २ उ० । ज० । ' सरिसभण्डमत्तोवगरणे ' सदृशी भण्डमात्रा प्रहरणा शोकादिरूपा उपकरण च कङ्कटादिक यस्य स तथा । भ० ७ श० ६ उ० । ' सरिसो समो " पाइ० ना० ७४ गाथा० ।

सरिसय-सदृशक-पु० । समाने, भ० ७ श० ८ उ० । अन्त० ।

सरिसव-सरीसृप-पु० । उर परिसर्पभुजपरिसर्पभेदाद् द्विविधे पञ्चेन्द्रियतिर्यश्च, स० ३४ सम० ।

सर्षप-पु० । सिद्धार्थके, भ० ६ श० ७ उ० । स्था० । ज्ञा० । प्रज्ञा० । नि० । प्रव० ।

सरिसवमाणचलण-सदृशोपमानचरण-त्रि० । सदृश युक्त-मुपमान ययास्तौ सदृशोपमानौ. एवंविधौ चरणौ यस्य स तथा । तुल्योपमानपदे, कल्प० १ अधि० २ क्षण ।

सरिसवय-सर्षपक-पु० । सिद्धार्थके. ज्ञा० ।

' सरिसवया णं भंते ! किं भक्खेयव्वा, अभक्खेयव्वा ?।
गोयमा ! भक्खेयव्वा वि अभक्खेयव्वा वि ।

एकत्र सदृशवयस·-समानवयसः अन्यत्र—सर्षपा —सिद्धार्थका· । ज्ञा० १ श्रु० ५ अ० । शुकशब्दे, अनु० ।

सरिसिया-सदृशी-स्त्री० । समानायाम्, भ० ११ श० ११ उ० ।

सरिसु—देशी-पु० । वृक्षविशेष. कल्प० १ अधि० ३ क्षण ।

सरिहा-सरिका-स्त्री० । मुक्तावल्याम्. प्रश्न० ४ आश्र० द्वार ।

शरिका-स्त्री० । लघुशरपत्रे, शरपत्राग्रे च । आचा० २ श्रु० १ चू० १ अ० ११ उ० ।

सरीर-शरीर-न० । शीर्यते प्रतिक्षण विशरारुभावं बिभर्त्तीति शरीरम् । प्रज्ञा० २१ पद । " शृशपृपृभाभञ्जिकुटिपटिकण्डिशौण्डिभ्य ईर. " इति ईरप्रत्यय । आ० म० १ अ० । देहे, आ० म० १ अ० । काये, आ० चू० ५ अ० । शरीरपर्याया - शरीरं वपु कायो देह· कलेवरमित्यादय । विशे० । बोन्दिरस्तनु शरीरमित्यनर्थान्तरम् । आ० म० १ अ० । प्रश्न० । कर्म० । पं० स० । प्रज्ञा० । आव० ।

विषयसूची—

( २१ ) शरीराधिकारात् दण्डकेन शरीरोत्पत्तिनिरूपणम् ।
( २२ ) लोकश्च शरीरिशरीराणां सर्वत आश्रयस्वरूप ।
( २३ ) शरीरबन्धनप्रकार. ।
( २४ ) शरीरनिर्माणस्वरूप तत्र नाड्यादिसंख्या वेदनानुभवप्रकारश्च ।
( २५ ) शरीरस्यासुन्दरत्वम् ।
( २६ ) विशेषतः शरीराशुभत्वम् ।
( २७ ) शरीराणां वर्णादि ।
( २८ ) आत्मा शरीरं स्पृष्ट्वा निर्यातीति ।

( १ ) कथं कति शरीराणि—

कति णं भंते ! सरीरा पण्णत्ता ?, गोयमा ! पंच सरीरा पण्णत्ता, तं जहा-ओरालिए वेउव्विए आहारए तेयए कम्मए । ( सूत्र०-१७६ × )

'कइ णं भंते ! सरीरा पण्णत्ता,' इत्यादि उत्पत्तिसमयादारभ्य प्रतिक्षणं शीर्यन्ते इति शरीराणि तानि भदन्त ! कति-कियत्संख्याकानि, णमिति वाक्यालङ्कारे, प्रज्ञप्तानि, भगवानाह-पञ्च शरीराणि प्रज्ञप्तानि तान्येव नामत आह— ' ओरालिए ' इत्यादि, अमीषां शब्दार्थमात्रमग्रे वक्ष्यामस्तथाऽपि स्थानाशून्यार्थं किञ्चिदुच्यते—उदारं प्रधानं प्राधान्यं चास्य तीर्थकरगणधरशरीरापेक्षया, ततोऽन्यस्यानुत्तरसुरशरीरस्याप्यनन्तगुणहीनत्वात् । अथवा—ओरालं नाम विस्तरवत्, विस्तरवत्ता चास्यावस्थितस्वभावस्य सातिरेकयोजनसहस्रमानत्वात्, वैक्रियं चैतावदवस्थितप्रमाणं न लभ्यते, उत्कर्षतोऽप्यवस्थितप्रमाणस्य पञ्चधनुःशतप्रमाणत्वात्, तच्च तावत्प्रमाणं सप्तम्यां नान्यत्र, यत्पुनरुत्तरवैक्रियं योजनलक्षप्रमाणं न तदवस्थितमाभवर्वर्त्तित्वाभावात्, ततो न तदपेक्षा आह च चूर्णिकृत्—" ओरालं नाम वित्थरालं विसालं ति जं भणियं होइ, कहं ? साइरेगजोयणसहस्समवट्ठियप्पमाणमोरालियं अन्नमेद्दहमेत्तं नत्थि त्ति, विउव्वियं होज्जा , तं तु अणवट्ठियप्पमाणं , अवट्ठियं पुण पंचधणुसयाइं अहे सत्तमाए , इमं पुण अवट्ठियप्पमाणं साइरेगं जोयणसहस्सं " वनस्पतीनामिति । अथवा-उरलं-विरलप्रदेशं न तु घनं स्वल्पप्रदेशोपचितत्वात् बृहत्त्वाच्च भेण्डवत् । यदिवा ओरालं—समयपरिभाषया मांसास्थिस्नाय्वाद्यवबद्धं, सर्वत्र स्वार्थिक इकप्रत्ययः । इहोदारमेव औदारिकं पृषोदरादित्वादिष्टरूपनिष्पत्तिः। प्राकृतत्वात्- ओरालियं' मिति । उक्तं च—

" तत्थोदारमुरालं उरलं ओरालमेव विण्णेयं ।
ओरालियं ति पढमं, पडुच्च तित्थेसरसरीरं ॥ १ ॥
भण्णइ य तहोरालं, वित्थरवत वणस्सइं पप्प ।
पगईए नत्थि अन्नं, एद्दहमित्तं विसालं ति ॥ २ ॥
उरलं थवपएसो-वचियं ति महल्लगं जहा भिंडं ।
मंसट्ठिण्हारुवद्धं , ओरालं समयपरिभासा ॥ ३ ॥ "

तथा विविधा विशिष्टा वा क्रिया विक्रिया तस्यां भवं वैक्रियम् । उक्तं च—" विविहा विसिट्ठगा वा, किरिया तीए उ जं भवं तमिह । वेउव्वियं तयं पुण, नारगदेवाण पगईए ॥१॥ ' अथवा-वैकुर्विकमिति शब्दसंस्कारः,तत्र विकुर्व इति सिद्धान्तप्रसिद्धोऽयं धातुः विकुर्वणं विकुर्वः । विविधा क्रिया इत्यर्थः । तेन निर्वृत्तं वैकुर्विकम् २, तथा-चतुर्दशपूर्वविदा कार्योत्पत्तौ योगबलेनाह्रियते इत्याहारकम् ३, तेजसो विकारस्तैजसम् ४, कर्मणो जातं कर्मजमिति ५ । नन्वौदारिकादीनां शरीराणामित्थमुपन्यासे किञ्चिदस्ति प्रयोजनमुत यथाकथञ्चिदेष प्रवृत्त इति ?, उच्यते—अस्तीति ब्रूमः । किं तदिति चेत् ?, उच्यते-परम्परप्रदेशसौक्ष्म्यं परम्परं वर्गणासु प्रदेशबाहुल्यं च, तथा हि-औदारिकाद् वैक्रियस्य प्रदेशसौक्ष्म्यं, वैक्रियादप्याहारकस्य, आहारकादपि तैजसस्य, तैजसादपि कार्मणस्य , तथा-औदारिकाद् वैक्रियस्य वर्गणासु प्रदेशबाहुल्यं, वैक्रियादाहारकस्याहारकादपि तैजसस्य, तैजसादपि कार्मणस्येति ।

( २ ) एतान्येव शरीराणि नैरयिकादिषु सम्भवतश्चिन्तयति—

नेरइयाणं भंते ! कति सरीरया पण्णत्ता ?, गोयमा ! तओ सरीरया पण्णत्ता, तं जहा-वेउव्विए तेयए कम्मए , एवं असुरकुमाराण वि० जाव थणियकुमाराणं । पुढविकाइयाणं भंते ! कति सरीरया पण्णत्ता ?, गोयमा ! तओ सरीरया पण्णत्ता, तं जहा-ओरालिए तेयए कम्मए, एवं वाउकाइयवज्जं० जाव चउरिंदियाणं । वाउकाइयाणं भंते ! कति सरीरया पण्णत्ता ?, गोयमा ! चत्तारि सरीरया पण्णत्ता ?, तं जहा-ओरालिए वेउव्विते तेयए कम्मए । एवं पंचिंदियतिरिक्खजोणियाण वि । मणुस्साणं भंते ! कति सरीरया पण्णत्ता ?, गोयमा ! पंच सरीरया पण्णत्ता , तं जहा-ओरालिए वेउव्विते आहारए तेयए कम्मए, वाणमंतरजोइसियवेमाणियाणं, जहा नारगाणं । ( सू० १७६ × )

' नेरइयाणं भंते ! केवइया सरीरा पण्णत्ता' इत्यादि, पाठसिद्ध, शरीराणि च जीवानां द्विविधानि, तद्यथा-बद्धानि , मुक्तानि च । तत्र यानि चिन्ताकाले जीवैः परिगृहीतानि वर्त्तन्ते तानि बद्धानि, यानि च पूर्वभवेषु परित्यक्तानि तानि मुक्तानि, तेषां बद्धानां मुक्तानां च परिमाणमिदानीं द्रव्यक्षेत्रकाले प्ररूपणीयम् , तत्र द्रव्यैरभव्यादिभिः क्षेत्रेण श्रेणिप्रतरादिना कालेनावलिकादिना ।

( ३ ) तत्रौदारिकशरीरमधिकृत्याह—बद्धानि मुक्तानि सरीराणि—

केवइया णं भंते ! ओरालियसरीरया पण्णत्ता ? , गोयमा ! दुविहा पण्णत्ता ?,तं जहा-बद्धिल्लया, य मुक्किल्लया य । तत्थ णं जे ते बद्धेल्लगा ते णं असंखेज्जा असंखेज्जाहिं उस्सप्पिणीओसप्पिणीहिं अवहीरंति कालतो, खेत्ततो असंखेज्जा लोगा, तत्थ णं जे ते मुक्केल्लया ते णं अणंता अणंताहिं उस्सप्पिणीओसप्पिणीहिं अवहीरंति कालतो, खेत्ततो अणंता लोगा अभवसिद्धिएहिंतो अणंतगुणा सिद्धा ( ण ) णंतभागो । ( सू० १७७ × )

'केवइया णं भंते ! ओरालियसरीरया ; पणत्ता' इत्यादि , इहं- प्राकृतलक्षणवशादिल्लप्रत्ययः कप्रत्ययश्च स्वार्थे , ततः 'बद्धिल्लया'-इति बद्धानीत्यर्थः , 'मुक्किल्लया' इति—मुक्तानीत्यर्थः, तत्र बद्धान्यसङ्ख्येयानि । असङ्ख्येयत्वमेव प्रथमतः कालतो निरूपयति—'असखिज्जाहिं' इत्यादि , प्रतिसमयमेकैकशरीरापहारेण असङ्ख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरनवयवशोऽपह्रियन्ते । किमुक्तं भवति ? —असङ्ख्येयासु उत्सर्पिण्यवसर्पिणीषु यावन्तः समयास्तावत्प्रमाणानि बद्धान्यौदारिकशरीराणि वर्त्तन्ते । इदं कालतः परिमाणम् । क्षेत्रत आह—' खेत्तओ असंखेज्जा लोगा, इति-क्षेत्रतः परिसङ्ख्यानमसंख्येया लोकाः । एतदुक्तं भवति—सर्वाण्यपि बद्धान्यौदारिकशरीराणि आत्मीयात्मीयावगाहनाभिराकाशप्रदेशेषु परस्परमपिण्डीभावेन क्रमेण स्थाप्यन्ते , तदानीं तैरेवमास्तीर्यमाणैरसंख्येया लोका अवाप्यन्ते । इह एकैकस्मिन्नप्याकाशप्रदेशे एकैकौदारिकशरीरस्थापनया असंख्येया लोका व्याप्यन्ते परं पूर्वाचार्या आत्मीयावगाहनास्थापनया प्ररूपणां कुर्वन्ति , ततोऽपसिद्धान्तदोषो मा प्रापदित्यस्माभिरपि तथैव प्ररूपणा क्रियते । आह च चूर्णिकारोऽपि—' जइ वि इक्केक्के पएसे सरीरमेगं ठविज्जइ तोऽवि असंखेज्जा लोगा भवंति किन्तु अवसिद्धतदोसपरिहरणत्थमप्पणियाहिं ओगाहणाहिं ठविज्जंति'' इति, आह—ननु अनन्ता जीवास्ततः कथमसंख्येयान्यौदारिकशरीराणि ? , उच्यते—इह द्विविधा जीवाः -प्रत्येकशरीरिणः ,अनन्तकायिकाश्च । तत्र ये ते प्रत्येकशरीरिणस्तेषां प्रतिजीवमेकैकौदारिकशरीरमन्यथा प्रत्येकशरीरत्वायोगात् ,ये त्वनन्तकायिकास्तेषामनन्तानामनन्तानामेकैकमौदारिकशरीरमतः सर्वसंख्ययाऽपि असंख्येयान्यौदारिकशरीराणि , मुक्तान्यौदारिकशरीराणि अनन्तानि । तेषामनन्तत्वं कालक्षेत्रद्रव्यैर्निरूपयति—'अणन्ताहिं ' इत्यादि, कालतः परिमाणं प्रतिसमयमेकैकशरीरापहारेऽनन्ताभिरुत्सर्पिण्यवसर्पिणीभिः सर्वात्मनाऽपह्रियन्ते ।किमुक्तं भवति ?—अनन्तासु उत्सर्पिण्यवसर्पिणीषु यावन्त समयास्तावत्प्रमाणानीति , क्षेत्रतः परिमाणमनन्ता लोकाः , अनन्तेषु लोकप्रमाणेष्वाकाशखण्डेषु यावन्तः आकाशप्रदेशास्तावत्प्रमाणानीत्यर्थः , द्रव्यतः परिमाणमभवसिद्धिकेभ्य —अभव्येभ्योऽनन्तगुणानि । यद्येवं तर्हि सिद्धराशिप्रमाणानि भविष्यन्ति, तत आह—सिद्धानामनन्तभागः अनन्तभागमात्राणि । ननु द्वयोरपि राश्योरभवसिद्धिकसिद्धिरूपयोर्मध्ये पठ्यन्ते प्रतिपतितसम्यग्दृष्टय तत् किं तद्राशिप्रमाणानि भवेयुः ? , उच्यते-यदि तत्प्रमाणानि स्युस्तर्हि तथैव निर्देशः क्रियेत , सुखप्रतिपत्तिकृतप्रतिज्ञा हि भगवन्तः आर्यश्यामाः , ततस्तथा निर्देशाभावादवसीयते—न तद्राशिप्रमाणानि । ननु तर्हि तेषां प्रतिपतितसम्यग्दृष्टीनामधस्तादुपरि भवेयुरुपरि वा ? , उच्यते-कदाचिदधस्तात्कदाचिदुपरि, कदाचित्तुल्यान्यपि अनियतप्रमाणत्वात् , न तु सर्वकालं तत्प्रमाणानीति । आह च चूर्णिकृत्—" तो किं परिवडिय सम्मद्दिट्ठिरासिप्पमाणाइं होज्जा ? , तेसिं दोण्ह वि रासीणं , मज्झे पढिज्जंति त्ति काउं ? , भण्णइ—जइ तप्पमाणाइं होंताइं तो तेसिं चेव निद्देसो होंतो तम्हा न तप्पमाणाइं , तो किं तेसिं हिट्ठा होज्जा उवरिं होज्जा ? , भण्णइ-कयाइ हेट्ठा कयाइ उवरिं होंति कयाइ तुल्लाइ न निच्चकालं तप्पमाणाइं " इति । अपरः प्राह-कथं मुक्तानि यथोक्तानन्तसंख्यापरिमाणान्युपपद्यन्ते ? , यतो यदि तावदौदारिकादिशरीराणि यावदविकलानि तावद् गृह्यन्ते , ततस्तेषामनन्तकालमवस्थानाभावादनन्तत्वं न घटते , यदि अनन्तमपि कालमवस्थानं भवेत् ततोऽनन्तेन कालेन तत्तच्छरीरगणनादनन्तानि भवेयु यावताऽनन्तं कालमवस्थानं नास्ति , पुद्गलानामुत्कर्षतोऽप्यसंख्येयकालावस्थानाभिधानात् । अथ च ये पुद्गला जीवैरौदारिकत्वेन गृहीत्वा मुक्ता अतीताद्धायां तेषां ग्रहणं तर्हि सर्वेऽपि पुद्गलाः सर्वैरपि जीवैः प्रत्येकमौदारिकत्वेन गृहीत्वा मुक्ता इति सर्वपुद्गलग्रहणमापद्यम् , तथा च सति यदुक्तम्—अभवसिद्धिकेभ्योऽनन्तगुणानि सिद्धानामनन्तभागमात्राणीति तद् विरुध्यते , सर्वजीवेभ्योऽनन्तानन्तगुणकारेणानन्तगुणत्वस्य प्रसक्तत्वादिति चेत्? उच्यते—इह मुक्तानामौदारिकशरीराणां नाविकलानामेव केवलानां ग्रहणं नाप्यौदारिकत्वेन गृहीत्वा मुक्ताः पुद्गलाः , तेषामुक्तदोषप्रसङ्गात् , किं तु यच्छरीरमौदारिकं जीवेन गृहीत्वा मुक्तं तत् विशरारुभावं विभ्राणमनन्तभेदभिन्नं भवति ते चानन्ता भेदा भवन्तो यावत्ते पुद्गला औदारिकपरिमाणं न जहति तावत्प्रत्येकमौदारिकशरीरव्यपदेशं लभन्ते , ये पुनरौदारिकपरिणामं त्यक्तवन्तस्ते न गण्यन्ते , तत एवमेकस्यापि शरीरस्यानन्तानि शरीराणि जातानि , एवं सर्वशरीरेष्वपि भावनीयम् । तथा च सत्येकैकस्य शरीरस्यानन्तभेदभिन्नत्वादेकस्मिन्नपि समये प्रभूतान्यनन्तानि शरीराण्यवाप्यन्ते , तेषां चासंख्येयकालमवस्थानम् , तत चासंख्येयेन कालेनान्यानि जीवैर्विप्रमुक्तान्यसंख्येयान्यवाप्यन्ते , तान्यपि च प्रत्येकमनन्तभेदभिन्नानि, तेषु च मध्ये तावता कालेन यान्यौदारिकशरीरपरिणामं विजहति तानि परित्यज्यन्ते शेषाणि गण्यन्ते । तत एवं मुक्तानि यथोक्तप्रमाणानन्तसंख्याकान्यौदारिकशरीराण्युपपद्यन्ते इति । न चैतत्स्वमनीषिकाविजृम्भितं, यत आह चूर्णिकृत्—" न वि अविगलाणमेव केवलाण पि गहणं एवं न य ओरालियगहणमुक्काणं सव्वपुग्गलाणं, किन्तु जं सरीरमोरालिक जीवेण मुक्कं तं चेव अणतभेयभिन्नं च होइ जाव ते पुग्गला तं जीवनिव्वत्तियं ओरालियसरीरकायप्पओगं न मुंचंति न ताव अण्णपरिणामेणं परिणमंति ताइं पत्तेय सरीराइं भण्णन्ति एवमेक्केक्कस्स ओरालियसरीरस्स अणंतभेयभिन्नत्तणओ अणंताइ चेव ओरालियसरीराइ भवंति"इत्यादि आहकथमेकैकशरीरद्रव्यदेशः शरीरत्वेन व्यवह्रियते ?, उच्यतेलवणदृष्टान्तेन, तथाहि-खार्यपि लवणमुच्यते द्रोणोऽपि लवणमाढकोऽपि लवणं यावदेकाऽपि शर्करा लवणम् , एवमिहापि सकलमप्यौदारिकशरीरमुच्यते तदर्द्धमपि तदेकदेशोऽपि यावदनन्तभागोऽपि शरीरमिति । कोऽत्राभिप्राय इति चेत् ?, उच्यते-इह यथा लवणपरिणामपरितः स्तोको बहुर्वा पुद्गलसंघातो लवणमुच्यते तथौदारिकशरीरयोग्यपुद्गलसंघातोऽपि औदारिकत्वेन परिणतः स्तोको वा बहुर्वा औदारिकशरीरव्यपदेशं लभते । अथवा-भवति स-

मुदायैकदेशेऽपि समुदायशब्दोपचारः, यथा—अङ्गुल्यग्रे स्पृष्टे स्पृष्टो मया देवदत्त इत्यादौ, तत उपचाराच्च काश्चदोषः। ननु यद्येवं कथं तान्यनन्तलोकाकाशप्रदेशप्रमाणान्यौदारिकशरीराण्येकस्मिन् लोकेऽवगाढानि ?, उच्यते—प्रदीपप्रकाशवत्, तथाहि—यथैकस्यापि प्रदीपस्यार्चींषि सकलभवनावभासीनि भवन्ति, अन्येषामनेकेषां प्रदीपानामर्चींषि तत्रैवानुप्रविशन्ति, परस्परमविरोधात्, तथौदारिकाण्यपि एवं शेषशरीरेष्वपि मुक्तेष्वायोज्यम्। ननु द्रव्यक्षेत्रे विहाय किमिति प्रथमत कालेन प्ररूपणा कृता ?, उच्यते—कालान्तरावस्थायितया पुद्गलेषु शरीरोपचारो नान्यथा तत कालो गरीयान् इति प्रथमतस्तेन प्ररूपणा। उक्तान्यौदारिकाणि।

(४) सम्प्रति वैक्रियसूत्रमाह—

केवतिया णं भंते ! वेउव्वियसरीरया पण्णत्ता ?, गोयमा ! दुविहा पण्णत्ता, तं जहा—बद्धेल्लया य, मुक्केल्लगा य। तत्थ णं जे ते बद्धेल्लगा ते णं असंखेज्जा असंखेज्जाहिं उस्सप्पिणीओसप्पिणीहिं अवहीरंति कालतो, खेत्ततो असंखेज्जातो सेढीओ पयरस्स असंखेज्जतिभागो। तत्थ णं जे ते मुक्केल्लगा ते णं अणंता अणंताहिं उस्सप्पिणीओसप्पिणीहिं अवहीरंति कालतो जहा ओरालियस्स मुक्केल्लया तहेव वेउव्वियस्स वि भाणियव्वा। (सू०-१७७+)

'केवतिया णं भंते !' इत्यादि, बद्धान्यसंख्येयानि, तत्र कालत परिमाणं प्रतिसमयमेकैकशरीरापहारे सामस्त्येनासंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरपह्रियन्ते। किमुक्तं भवति ?—असख्येयासूत्सर्पिण्यवसर्पिणीषु यावन्त समयास्तावत्प्रमाणानीति, क्षेत्रतोऽसख्येयाः श्रेणयस्तासां श्रेणीना परिमाणं प्रतरस्यासंख्येयो भाग। किमुक्तं भवति ?—प्रतरस्यासख्येयतमे भागे यावत्य श्रेणयस्तासु च श्रेणिषु यावन्त आकाशप्रदेशास्तावत्प्रमाणानि बद्धानि वैक्रियशरीराणीति। अथ श्रेणिरिति किमभिधीयते ?, उच्यते—घनीकृतस्य लोकस्य सर्वत सप्तरज्जुप्रमाणस्यायामत सर्वरज्जुप्रमाणा मुक्तावलिरिवैकाकाशप्रदेशपङ्क्तिः। कथ पुनर्लोको घनीक्रियते ? कथं वा सप्तरज्जुप्रमाणो भवति इति चेत् ?, उच्यते—इहलोके ऊर्ध्वाधश्चतुर्दशरज्जुप्रमाणोऽधस्ताद्विस्तरतो देशोनसप्तरज्जुप्रमाण एकरज्जुर्मध्यभागे ब्रह्मलोकप्रदेशे बहुमध्यदेशभागे पञ्चरज्जुरुपरि एका रज्जुर्लोकान्ते, रज्जोश्च परिमाणं स्वयम्भूरमणसमुद्रस्य पूर्ववेदिकान्तादारभ्यापरवेदिकान्तं यावत्, एवं प्रमाणस्य लोकस्य वैशाखस्थानस्थकटिस्थकरयुग्मपुरुषाकारस्य बुद्ध्या त्रसनाड्या दक्षिणभागवर्त्यधोलोकखण्डमधोदेशोनत्रिरज्जुविस्तारमतिरिक्तसप्तरज्जूच्छ्रयं परिगृह्य त्रसनाड्या उत्तरपार्श्वे ऊर्ध्वाधोभागविपर्यासेन सङ्घात्यते, ऊर्ध्वभागोऽध क्रियते अधोभागश्चोर्ध्वमिति सङ्घात्यते इति। तत ऊर्ध्वलोके त्रसनाड्या दक्षिणभागवर्त्तिनी ये द्वे खण्डे कूर्पराकारसंस्थिते प्रत्येकं देशोनार्द्धतृतीयरज्जूच्छ्रये ते बुद्ध्या समादाय वैपरीत्येनोत्तरपार्श्वे सङ्घात्येते, एवं च किं जातम् ?, अधस्तनं लोकार्धं देशोनचतूरज्जुविस्तारं सातिरेकसप्तरज्जूच्छ्रयम्। उपरितनमर्द्धं त्रिरज्जुविस्तारं देशोनसप्तरज्जूच्छ्रय. तेन उपरितनमर्द्धं बुद्ध्या गृहीत्वाऽधस्तनस्यार्द्धस्योत्तरपार्श्वे सङ्घात्यते, तथा च सति सातिरेकसप्तरज्जूच्छ्रयो देशोनसप्तरज्जुविस्तारो घनो जात, अत सप्तरज्जूनामुपरि यदधिकं तत्परिगृह्य ऊर्ध्वाध आयतमुत्तरपार्श्वे सङ्घात्यते, ततो विस्तरतोऽपि परिपूर्णा सप्त रज्जवो भवन्ति, एवमेष लोको घनीक्रियते, घनीकृतश्च सप्तरज्जुप्रमाणो भवति। यत्र च क्वचन घनत्वेन सप्तरज्जुप्रमाणता न पूर्यते तत्र बुद्ध्या परिपूरणीयम् एतच्च पट्टिकादौ लिखित्वा दर्शयितव्यम्। सिद्धान्ते च यत्र क्वचनापि श्रेणेः प्रतरस्य वा ग्रहणं तत्र सर्वत्राप्येवं घनीकृतस्य लोकस्य सप्तरज्जुप्रमाणस्यावसातव्यं, मुक्तान्यौदारिकवद् भावनीयानि।

(५) कति आहारकशरीराणि—

केवतिया णं भंते ! आहारगसरीरया पण्णत्ता ?, गोयमा ! दुविहा, पण्णत्ता, तं जहा—बद्धेल्लया य, मुक्केल्लया य। तत्थ णं जे ते बद्धेल्लगा ते णं सिय अत्थि सिय नत्थि, जइ अत्थि जहण्णेणं एक्को वा दो वा तिण्णि वा उक्कोसेणं सहस्सपुहुत्तं। तत्थ णं जे ते मुक्केल्लया ते णं अणंता जहा ओरालियस्स मुक्किल्लया तहेव भाणियव्वा। (सू० १७७+)

आहारकविषय सूत्र 'केवतिया णं भंते ! आहारगसरीरगा' इत्यादि, 'बद्धानि 'सिय अत्थि सिय नत्थि' इति अस्तीति निपातो बहुवचनगर्भः कदाचित् सन्ति! कदाचित् न सन्तीत्यर्थ। यस्मादन्तरमाहारकशरीरस्य जघन्यत एक समय उत्कर्षत षण्मासा, उक्तं च—" आहारगाइँ लोए, छम्मासे जा न होंति वि कयाइ। उक्कोसेण नियमा, एक्क समयं जहन्नेणं ॥ १ ॥" इति। यदाऽपि भवन्ति तदाऽपि जघन्यत एकं द्वे वा उत्कर्षत सहस्रपृथक्त्वं, मुक्तान्यौदारिकवत्।

(६) तैजसशरीरविषय सूत्रमाह—

केवतिया णं भंते ! तेयगसरीरया पण्णत्ता ?, गोयमा !, दुविहा पण्णत्ता, तं जहा—बद्धेल्लगा य, मुक्केल्लगा य। तत्थ णं जे ते बद्धेल्लगा ते णं अणंता अणंताहिं उस्सप्पिणिओसप्पिणीहिं अवहीरंति कालतो, खेत्तओ अणंता लोगा, दव्वओ सिद्धेहिंतो अणंतगुणा सव्वजीवाणंतभागूणा। तत्थ णं जे ते मुक्केल्लगा ते णं अणंता अणंताहिं उस्सप्पिणीओसप्पिणीहिं अवहीरंति कालतो, खेत्ततो अणंता लोगा, दव्वओ सव्वजीवेहिंतो अणंतगुणा जीववग्गस्साणंतभागे। एवं कम्मगसरीराणि वि भाणितव्वाणि।

'केवइया णं भंते ! तेयगसरीरया' इत्यादि, तत्र बद्धान्यनन्तानि, अनन्तत्वं कालक्षेत्रद्रव्यैर्निरूपयति—'अणंताहिं' इत्यादि, कालत परिमाणमनन्तोत्सर्पिण्यवसर्पिणीसमयप्रमाणानि क्षेत्रतोऽनन्तलोकप्रमाणाकाशखण्डप्रदेश-

परिमाणानि. द्रव्यत परिमाणं सिद्धेभ्योऽनन्तगुणानि । तै-जसं हि शरीरं सर्वसंसारिजीवानां प्रत्येकं संसारिणश्च जीवा सिद्धेभ्योऽनन्तगुणा , ततस्तैजसशरीराण्यपि सि-द्धेभ्योऽनन्तगुणानि भवन्ति । सव्वजीवअणतभागूणा' इति सर्वजीवानां योऽनन्ततमो भागस्तेनोनानि '। इयमत्र भाव-ना-सिद्धानां तैजसशरीरं न विद्यते सर्वशरीरातीतत्वात् तेषाम् . सिद्धाश्च सर्वजीवानामनन्तभागे ततस्तैनोनानि सर्वजीवानामनन्तभागोनानि भवन्ति । मुक्तानि अनन्तानि । तदेवानन्तत्वं कालक्षेत्रद्रव्यै प्ररूपयति-'अणतांहिं' इत्यादि कालक्षेत्रसूत्रं प्राग्वत् द्रव्यत परिमाणं सर्वजीवेभ्योऽन-न्तगुणानि । कथमिति चेत् ?. उच्यते—इह एकैकस्य स-सारिजीवस्य एकैकं तैजसशरीरं, तानि च जीवैर्विप्रमु-क्तानि सन्ति प्रागुक्तयुक्तेरनन्तभेदभिन्नानि भवन्ति , तथा चासख्येयं कालं यावदवस्थानं तावता च कालेन जीवैर्वि-प्रमुक्तान्यन्यानि तैजसशरीराणि प्रतिजीवमसंख्येयानि अ-वाप्यन्ते, तेषामपि प्रत्येकं प्रागुक्तयुक्त्या अनन्तभेदभिन्न-तेति भवन्ति सर्वजीवेभ्योऽनन्तगुणानि । तत्कि जीववर्ग-प्रमाणानि भवेयुरत आह—' जीववग्गस्स अणंतभागे ' इति- जीववर्गस्यानन्तभागप्रमाणानि, जीववर्गप्रमाणानि कस्मान्न भवन्तीति चेत् ? उच्यते--यदि एकैकस्य जीवस्य सर्वजीवराशिप्रमाणानि किञ्चित्समधिकानि वा भवेयुर्न सिद्धानन्तभागपूरणं भवति ततो जीववर्गप्रमाणानि भव-न्ति, वर्गो हि तेनैव राशिना तस्य राशेर्गुणने भवति, यथा चतुष्कस्य चतुष्केन गुणने षोडशात्मको वर्ग इति । न चैकैकस्य जीवस्य सर्वजीवप्रमाणानि किञ्चित्समधि-कानि वा तैजसशरीराणि किन्त्वतिस्तोकानि, तान्यपि असंख्येयकालावस्थायीनीति तावता कालेन यान्यन्यान्यानि भवन्ति तान्यपि स्तोकानि; कालस्य स्तोकत्वात् . ततो जीववर्गप्रमाणानि न भवन्ति ; किन्तु जीववर्गस्यानन्त-भागमात्राणि । अनन्तभागप्रमाणतायां च पूर्वाचार्यप्रदर्शि-तमिदं निदर्शनम्—सर्वजीवास्तत्त्ववृत्त्या अनन्ता अपि अस-त्कल्पनया दशसहस्राणि , तथा च दशसहस्राणां वर्गो दश कोटय , तैजसशरीराणि च मुक्तान्यसत्कल्पनया द-शलक्षप्रमाणानि , तत सर्वजीवेभ्य किल शतगुणा-नीति सर्वजीवेभ्योऽनन्तगुणान्युक्तानि । जीववर्गस्य च शततमे भागे वर्त्तन्ते , ततो जीववर्गस्यानन्तभागमात्रा-णि । एवं कार्मणशरीराण्यपि बद्धानि मुक्तानि च भावनी-यानि, तैजसेन सह समानसंख्यत्वात् । उक्तान्यौधिकानि पञ्चापि शरीराणि ।

(७) संप्रति नैरयिकादिविशेषणविशेषितानि शरीराणि चिन्त्यन्ते—

नेरइयाणं भंते ! केवतिया ओरालियसरीरा पण्ण-त्ता ?, गोयमा ! दुविहा पण्णत्ता, तं जहा-बद्धेल्लगा य, मुक्केल्लगा य । तत्थ णं जे ते बद्धेल्लगा ते णं णa-त्थि , तत्थ णं जे ते मुक्केल्लगा ते णं अणंता ज-हा ओरालियमुक्केल्लगा तहा भाणियव्वा । नेरइयाणं भंते ! केवइया वेउव्वियसरीरा पण्णत्ता ?, गोयमा ! दुविहा पण्णत्ता , तं जहा-बद्धेल्लगा य, मुक्केल्लगा य । तत्थ णं जे ते बद्धेल्लगा ते णं असंखेज्जा , असं-खेज्जाहिं उस्सप्पिणीओसप्पिणीहिं अवहीरंति कालतो , खेत्ततो असंखिज्जाओ सेढीओ पयरस्स असंखेज्जइ-भागो । तासि णं सेढीणं विक्खंभसूई अंगुलपढमवग्गमूलं बितियवग्गमूलपडुप्पन्नं अहं व णं अंगुलबितियवग्गमूलघ-णप्पमाणमेत्ताओ सेढीतो । तत्थ णं जे ते मुक्केल्लगा ते णं जहा ओरालियस्स मुक्केल्लगा तहा भाणियव्वा । नेरइयाणं भंते ! केवइया आहारगसरीरा पण्णत्ता ?, गोयमा ! दुविहा पण्णत्ता, तं जहा-बद्धेल्लया य, मुक्केल्लया य । एवं जहा ओरालिए बद्धेल्लगा मुक्केल्लगा य भणिया त-हेव आहारगा वि भाणियव्वा तेयाकम्मगाइं जहा एएसिं चेव वेउव्वियाइं । ( सू० १७८)

' नेरइयाणं भंते ! ' इत्यादि नैरयिकाणां बद्धान्यौदारिक-शरीराणि न सन्ति, भवप्रत्ययतस्तेषामौदारिकशरीरास-म्भवात् मुक्तान्यौदारिकमुक्तौदारिकशरीरवत् । वैक्रियाणि बद्धानि यावन्तो नैरयिकास्तावत्प्रमाणानि तानि चासं-ख्येयानि । तदेवासंख्येयत्वं कालक्षेत्राभ्यां प्ररूपयति-' असं-खेज्जाहिं' इत्यादि, कालत परिमाणं प्रतिसमयमेकैकशरी-रापहारे सामस्त्येनासंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरप-ह्रियन्ते । किमुक्तं भवति?-असंख्येयास्तूत्सर्पिण्यवसर्पिणीषु यावन्त समयास्तावत्प्रमाणानि क्षेत्रतोऽसंख्येया श्रेणय , असंख्येयासु श्रेणिषु यावन्त आकाशप्रदेशास्तावत्प्रमाणा-नीति भाव । अथ प्रतरेऽपि सकले असंख्येया श्रेणयो भवन्ति प्रतरस्यार्द्धभागे त्रिभागादौ च । तत कियत्संख्या-कास्ता श्रेणय इत्याशङ्कायां विशेषनिर्द्धारणार्थमाह—प्रत-रस्यासंख्येयभाग । किमुक्तं भवति ?-प्रतरस्यासंख्येयतमे भागे यावत्यः श्रेणयस्तावत्य परिगृह्यन्ते, इदमन्यद्विशेष-तरपरिमाणम्—' तासि णं सेढीणं विक्खंभसूई ' इत्यादि, तासां श्रेणीनां विष्कम्भतो—विस्तारमधिकृत्य सूचि -एक-प्रादेशिकी श्रेणिरङ्गुलप्रथमवर्गमूलं द्वितीयवर्गमूलगुणितम् । इयमत्र भावना—इह प्रज्ञापकेन घनीकृत सप्तरज्जुप्रमाणो लोक पट्टिकादौ स्थापनीय , श्रेणिश्च रेखाकारेण दर्शनीया, दर्शयित्वा चैवं प्रमाणं वक्तव्यम्—अङ्गुलप्रमाणमात्रस्य प्रदे-शस्य क्षेत्रस्य यावान् प्रदेशराशिस्तस्यासंख्येयानि वर्ग-मूलानि भवन्ति , तद्यथा—प्रथमं वर्गमूलं, तस्यापि यद्वर्ग-मूलं तद् द्वितीयं वर्गमूलं, तस्यापि यद् वर्गमूलं तत् तृतीय वर्गमूलम्—एवमसंख्येयानि वर्गमूलानि भवन्ति । तत्र प्रथमं यद्वर्गमूलं तद् द्वितीयेन वर्गमूलेन गुण्यते , गुणिते च सति यावन्त प्रदेशा भवन्ति तावत्प्रदेशात्मिका सूचिर्बु-द्ध्या क्रियते , कृत्वा च विष्कम्भतो दक्षिणोत्तरायतताग्रा स्थापनीया, तया च स्थाप्यमानया यावत्य श्रेणय स्पृश्य-न्ते ता तावत्य परिगृह्यन्ते । तत्रेदं निदर्शनम्—अङ्गुलमात्रक्षे-त्रप्रदेशराशिस्तत्त्वतोऽसंख्यातोऽप्यसत्कल्पनया षट्पञ्चा-शदधिकं द्वे शते कल्प्येते , तयो प्रथमं वर्गमूलं षोडश द्वितीयं चत्वारस्तृतीयं द्वौ । तत्र द्वितीयेन वर्गमूलेन चतु-

ष्कलक्षणेन प्रथम वर्गमूल षोडशलक्षणं गुण्यते जाता चतुःषष्टिः, एतावत्य श्रेण्यः परिगृह्यन्ते। अमुमेवार्थं प्रकारान्तरेण कथयति—"अहव णं" मित्यादि अथवेति प्रकारान्तरे, णमिति वाक्यालङ्कारे, अङ्गुलमात्रक्षेत्रप्रदेशराशेर्द्वितीयस्य वर्गमूलस्यासत्कल्पनया चतुष्कलक्षणस्य यो घनस्तावत्प्रमाणा इह यस्य राशेर्यो वर्गः स तेन राशिना गुण्यते ततो घनो भवति, श्रत्यार्द्धक्रमश्रेण्यौ। तथाहि-द्विकस्य वर्गश्चत्वारस्तं द्विकेन गुण्यन्ते जाता अष्टाविति एवमिहापि चतुष्कस्य वर्गः षोडश ते चतुष्केण गुण्यन्त ततश्चतुष्कस्य घनो भवति। तत्रापि सैव चतुःषष्टिरिति, प्रकारद्वयेऽप्यभेदः। इहायं गणितधर्मो यद्बहु स्तोकेन गुण्यते, तन सूत्रकृता प्रकारद्वयमेवोपदर्शितम्, अन्यथा तृतीयोऽपि प्रकारोऽस्ति 'अङ्गुलबिइयवग्गमूल पढमवग्गमूलपडुप्पण्णा' मिति। अन्ये त्वाभदधति-अङ्गुलमात्रक्षेत्रप्रदेशराशेः स्वप्रथमवर्गमूलेन गुणने यावान् प्रदेशराशिर्भवति तावत्प्रमाणाया सूच्या यावत्य स्पृष्टा श्रेणयस्तावतीषु श्रेणिषु यावन्त आकाशप्रदेशास्तावत्प्रमाणानि नैरयिकाणा बद्धानि वैक्रियशरीराणीति मुक्तान्यौदारिकवत्। आहारकाणि बद्धानि न सन्ति तेषां तल्लब्ध्यसम्भवात्। मुक्तानि पूर्ववत्, तैजसकार्मणानि बद्धानि वैक्रियवत् मुक्तानि पूर्ववत्।

( ८ ) असुरकुमाराणां पृथिवीकायिकानां च शरीराणि—

असुकुमाराणं भंते! केवइया ओरालियसरीरा पण्णत्ता? गोयमा! जहा नेरइयाणं ओरालियसरीरा भणिता तहेव एतेसिं भणितव्वा। असुकुमाराणं भंते! केवइया वेउव्वियसरीरा पण्णत्ता? गोयमा! दुविहा पण्णत्ता, तं जहा-बद्धेल्लगा य, मुक्केल्लगा य। तत्थ णं जे ते बद्धेल्लगा ते णं असंखेज्जा असंखेज्जाहिं उस्सप्पिणी-ओसप्पिणीहिं अवहीरंति कालतो, खेत्ततो असंखेज्जाओ सेढीतो पयरस्स असंखेज्जतिभागो तासि णं सेढीणं विक्खंभसूई अंगुलपढमवग्गमूलस्स संखेज्जतिभागो। तत्थ णं जे ते मुक्केल्लगा ते णं जहा ओरालियस्स मुक्केल्लगा तहा भाणियव्वा, आहारगसरीरगा जहा एतेसिं चेव ओरालिया तहेव दुविहा भाणियव्वा। तेयाकम्मगसरीरा दुविहा वि जहा एतेसिं चेव विउव्विया, एवं० जाव थणियकुमारा। (सू० १७९)

पुढविकाइयाणं भंते! केवइया ओरालियसरीरगा पण्णत्ता?, गोयमा! दुविहा पण्णत्ता, तं जहा-बद्धेल्लगा य, मुक्केल्लगा य। तत्थ णं जे ते बद्धेल्लगा ते णं असंखेज्जा असंखेज्जाहिं उस्सप्पिणीओसप्पिणीहिं अवहीरंति कालतो, खेत्ततो असंखेज्जा लोगा। तत्थ णं जे ते मुक्केल्लगा ते णं अणंता अणंताहिं उस्सप्पिणीओसप्पिणीहिं अवहीरंति कालतो, खेत्ततो अणंता लोगा, अभवसिद्धिएहिंतो अणंतगुणा सिद्धाणं अणंतभागे। पुढविकाइयाणं भंते! केवतिया वेउव्वियसरीरगा पण्णत्ता?, गोयमा! दुविहा पण्णत्ता, तं जहा-बद्धेल्लगा य मुक्केल्लगा य। तत्थ णं जे ते बद्धेल्लगा ते णं णत्थि। तत्थ णं जे ते मुक्केल्लगा ते णं जहा—एएसिं चेव ओरालिया तहेव भाणियव्वा। एवं आहारगसरीरा वि। तेयाकम्मगा जहा एएसिं चेव ओरालिया। एवं आउकाइयतेउकाइया वि। वाउकाइयाणं भंते! केवतिया ओरालियसरीरा पण्णत्ता?, गोयमा! दुविहा पण्णत्ता, तं जहा-बद्धेल्लगा य मुक्केल्लगा य, दुविहा वि जहा पुढविकाइयाणं ओरालिया। वेउव्वियाणं पुच्छा, गोयमा! दुविहा पण्णत्ता, तं जहा—बद्धेल्लगा य, मुक्केल्लगा य। तत्थ णं जे ते बद्धेल्लगा ते णं असंखेज्जा समए समए अवहीरमाणा अवहीरमाणा पलिओवमस्स असंखेज्जइभागमेत्तेणं कालेणं अवहीरंति नो चेव णं अवहिया सिया। मुक्केल्लगा जहा पुढविकाइयाणं, आहारयतेयाकम्मा जहा पुढविकाइयाणं। वणप्फइकाइयाणं जहा पुढविकाइयाणं णवरं तेयाकम्मगा जहा ओहिया तेयाकम्मा। बेइंदियाणं भंते! केवइया ओरालिया सरीरगा पण्णत्ता?, गोयमा! दुविहा पण्णत्ता, तं जहा-बद्धेल्लया य, मुक्केलया य। तत्थ णं जे ते बद्धेल्लगा ते णं असंखेज्जा असंखेज्जाहिं उस्सप्पिणीओसप्पिणीहिं अवहीरंति कालतो, खेत्ततो असंखेज्जाओ सेढीओ पयरस्स असंखेज्जइभागो, तासि णं सेढीणं विक्खंभसूई असंखेज्जाओ जोयणकोडीकोडीओ असंखेज्जाइं सेढिवग्गमूलाइं। बेइंदियाणं ओरालियसरीरेहिं बद्धेल्लगेहिं पयरो अवहीरति, असंखेज्जाहिं उस्सप्पिणीओसप्पिणीहिं कालतो, खेत्ततो अंगुलपयरस्स आवलियाते य असंखेज्जतिभागपलिभागेणं। तत्थ णं जे ते मुक्केल्लगा ते जहा ओहिया ओरालियमुक्केल्लगा, वेउव्विया आहारगा य बद्धिल्लगा णत्थि। मुक्किल्लगा जहा ओहिया ओरालियमुक्केल्लगा, तेयाकम्मगा जहा एतेसिं चेव ओहिया ओरालिया, एवं ०जाव चउरिंदिया। पंचिंदियतिरिक्खजोणियाणं एवं चेव, नवरं वेउव्वियसरीरएसु इमो विसेसो। पंचिंदियतिरिक्खजोणियाणं भंते! केवइया वेउव्वियसरीरया पण्णत्ता?, गोयमा! दुविहा पण्णत्ता, बद्धेल्लया य, मुक्केल्लया य। तत्थ णं जे ते बद्धेल्लया ते णं असंखिज्जा, जहा असुरकुमाराणं, णवरं तासि णं सेढीणं विक्खंभसूई अंगुलपढमवग्गमूलस्स असंखेज्जइभागो, मुक्केल्लगा तहेव।

मणुस्साणं भंते ! केवइया ओरालियसरीरगा पण्णत्ता ?, गोयमा ! दुविहा पण्णत्ता, तं जहा-बद्धेल्लगा य,मुक्केल्लगा य। तत्थ णं जे ते बद्धेल्लगा ते णं सिय संखिज्जा सिय असंखिज्जा। जहएणपदे संखेज्जा संखेज्जाओ कोडाकोडीओ तिजमलपयस्स उवरिं चउजमलपयस्स हिट्ठा, अहव णं छट्ठो वग्गो अहव णं छण्णउईछेयणगदाइरासी, उकोसपए असंखिज्जा। असंखिज्जाहिं उस्सप्पिणीओसप्पिणीहिं अवहीरंति कालतो,खेत्ततो रूवपक्खित्तेहिं मणुस्सेहिं सेढी अवहीरइ। तीसे सेढीए आकासखेत्तेहिं अवहारो मग्गिज्जइ असंखेज्जा असंखेज्जाहिं उस्सप्पिणीओसप्पिणीहिं कालतो,खेत्ततो अंगुलपढमवग्गमूलं तइयवग्गमूलपडुप्पण्णं, तत्थ णं जे ते मुक्केल्लगा ते जहा ओरालिया ओहिया मुक्केल्लगा। वेउव्वियाणं भंते ! पुच्छा,गोयमा ! दुविहा पण्णत्ता,तं जहा-बद्धेल्लगा,मुक्केल्लगा। तत्थ णं जे ते बद्धेल्लगा ते णं संखिज्जा, समए समए अवहीरमाणे २ संखेज्जेणं कालेणं अवहीरंति, नो चेव णं अवहीरिया सिया, तत्थ णं जे ते मुक्केल्लगा ते णं जहा ओरालिया ओहिया, आहारगसरीरा जहा ओहिया, तेयाकम्मगा जहा एतेसिं चेव ओरालिया। वाणमंतराणं जहा नेरइयाणं ओरालिया आहारगा य। वेउव्वियसरीरगा जहा नेरइयाणं, नवरं तासि णं सेढीणं विक्खंभसूई असंखेज्जजोअणसयवग्गपलिभागो पयरस्स, मुक्केल्लया जहा ओरालिया, आहारगसरीरा जहा असुरकुमाराणं तेयाकम्मया जहा एतेसि णं चेव वेउव्विता। तासि णं सेढीणं विक्खंभसूई वि छप्पन्नंगुलसयवग्गपलिभागो पयरस्स, वेमाणियाणं एवं चेव, नवरं तासि णं सेढीणं विक्खंभसूई अंगुलबितियवग्गमूलं तइयवग्गमूलपडुप्पन्नं अहव णं अंगुलतइयवग्गमूलघणप्पमाणमेत्ताओ सेढीओ, सेसं तं चेव। ( सू०-१८० × ) सरीरपयं सम्मत्तं ॥ १२ ॥

असुरकुमाराणामौदारिकशरीराणि नैरयिकवत्, वैक्रियाणि बद्धान्यसंख्येयानि, तदेवासंख्येयत्वं कालक्षेत्राभ्यां प्ररूपयति—तत्र कालसूत्रं प्राग्वत्, क्षेत्रतोऽसंख्येयाः श्रेणयः, असंख्येयासु श्रेणिषु यावन्त आकाशप्रदेशास्तावत्प्रमाणानीत्यर्थः, ताश्च श्रेणयः प्रतरस्यासंख्येयो भागः, प्रतरासंख्येयभागप्रमिता इत्यर्थः, तत्र नारकचिन्तायामपि प्रतरासंख्येयभागप्रमिता उक्ताः। ततो विशेषतरं परिमाणमाह-'तासि णं' मित्यादि, तासां श्रेणीनां परिमाणाय या विष्कम्भसूचिः सा अङ्गुलमात्रक्षेत्रप्रदेशराशेः संबन्धिनः प्रथमवर्गमूलस्य संख्येयो भागः। किमुक्तं भवति ?—अङ्गुलमात्रक्षेत्रप्रदेशराशेरसत्कल्पनया पदपञ्चाशदधिकशतद्वयप्रमाणस्य यत्प्रथमवर्गमूलं षोडशलक्षणं तस्य संख्येयतमे भागे यावन्त आकाशप्रदेशा असत्कल्पनया पञ्च पञ्च वा तावत्प्रदेशात्मिका श्रेणिः परिमाणाय विष्कम्भसूचिरवसातव्या, एवं च नैरयिकापेक्षयाऽमीषां विष्कम्भसूचिरसंख्येयगुणहीना। तथाहि—नैरयिकाणां श्रेणिपरिमाणाय विष्कम्भसूचिरङ्गुलप्रथमवर्गमूलं द्वितीयवर्गमूलप्रत्युत्पन्नं यावद् भवति तावत्प्रदेशात्मिका द्वितीयं च वर्गमूलं तत्त्वतोऽसंख्यातप्रदेशात्मकं ततोऽसंख्येयगुणप्रथमवर्गमूलप्रदेशात्मिका। नैरयिकाणां च सूचिरमीषां त्वङ्गुलप्रथमवर्गमूलसंख्येयभागप्रदेशात्मिकेति, युक्तं चैतत्, यस्मान्महादण्डके सर्वेऽपि भवनपतयो रत्नप्रभानैरयिकेभ्योऽप्यसंख्येयगुणहीना उक्तास्ततः सर्वनैरयिकापेक्षया सुतरामसंख्येयगुणहीना भवन्ति, मुक्तान्यौधिकमुक्तवत्, आहारकाणि नैरयिकवत्, तैजसकार्मणानि बद्धानि बद्धवैक्रियवत्, मुक्तान्यौधिकमुक्तवत्, यथा चासुरकुमाराणामुक्तं तथा शेषाणामपि भवनपतीनां वाच्यं, यावत्स्तनितकुमाराणाम्। पृथिव्यप्तेजःसूत्रेषु बद्धान्यौदारिकशरीराणि असंख्येयानि, तत्रापि कालतः परिमाणचिन्तायां प्रतिसमयमेकैकशरीरापहारे सामस्त्येनासंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरपह्रियन्ते, क्षेत्रतः परिमाणचिन्तायामसंख्येया लोकाः—आत्मीयावगाहनाभिरसंख्येया लोका व्याप्यन्ते, मुक्तान्यौधिकमुक्तवत्, तैजसकार्मणानि बद्धानि बद्धौदारिकवत्, मुक्तान्यौधिकमुक्तवत्, वायुकायस्याप्यौदारिकशरीराणि पृथिव्यादिवत्, वैक्रियाणि बद्धान्यसंख्येयानि, तानि च प्रतिसमयमेकैकशरीरापहारे पल्योपमासंख्येयभागेन निःशेषतोऽपह्रियन्ते। किमुक्तं भवति ?—पल्योपमासंख्येयभागे यावन्तः समयास्तावत्प्रमाणानीति न पुनरभ्यधिकानि स्युः, तथाहि-वायुकायिकाश्चतुर्विधाः, तद्यथा-सूक्ष्माः, बादराश्च एकैके द्विधा-पर्याप्ताः, अपर्याप्ताश्च। तत्र बादरपर्याप्तव्यतिरिक्ताः शेषास्त्रयोऽपि प्रत्येकमसंख्येयलोकाकाशप्रदेशप्रमाणाः, ये तु बादरपर्याप्तास्ते प्रतरासंख्येयभागप्रमाणाः, तत्र त्रयाणां राशीनां वैक्रियलब्धिरेव नास्ति, बादरपर्याप्तानामपि संख्येयभागमात्राणां लब्धिः न शेषाणाम्। आह च चूर्णिकृत्—" तिण्हं ताव रासीणं वेउव्वियलद्धी चेव नत्थि, बायरपज्जत्ताणं पि संखेज्जइभागमेत्ताणं लद्धी अत्थि " त्ति। ततः पल्योपमासंख्येयभागसमयप्रमाणा एव पृच्छासमये वायवो वैक्रियवर्त्तिनोऽवाप्यन्ते नाधिका इति। इह केचिदाचक्षते-सर्वे वायवो वैक्रियवर्त्तिन एव, अवैक्रियाणां चेष्टाया एवासम्भवात्, तदसमीचीनं, वस्तुगतेरपरिज्ञानात्, वायवो हि स्वभावाच्चलास्ततोऽवैक्रिया अपि ते वान्ति इति प्रतिपत्तव्यं वाताद्वायुरिति व्युत्पत्तेः। आह च चूर्णिकृत्-' जेण सव्वेसु चेव लोगागासेसु चला वायवो वायंति तम्हा अवेउव्विया वि वाया वायंतीति घित्तव्वं " मिति, मुक्तानि वैक्रियाण्यौधिकमुक्तवत्, तैजसकार्मणानि बद्धानि बद्धौदारिकवत् मुक्तान्यौधिकमुक्तवत्, वनस्पतिकायिकचिन्तायामौदारिकाणि पृथिव्यादिवत्, तैजसकार्मणान्यौधिकतैजसकार्मणवत्। द्वीन्द्रियसूत्रे बद्धान्यौदारिकशरीराणि असंख्येयानि, ततः कालतः परिमाणचिन्तायामसंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरपह्रियन्ते-असंख्यातासूत्सर्पिण्यवसर्पिणीषु यावन्तः समयास्तावत्-

प्रमाणानीति भावः । ततोऽसंख्येयाः श्रेणयोऽसंख्यातासु श्रेणिषु यावन्त. आकाशप्रदेशास्तावत्प्रमाणानीत्यर्थ, तासां श्रेणीनां परिमाणविशेषनिर्द्धारणार्थमाह—प्रतरासंख्येयभाग. प्रतरस्यासंख्येयभागप्रमिता असंख्येया. श्रेणय परिगृह्यन्त इति भाव. । प्रतरासंख्येयभागो नैरयिकभवनपतीनामपि प्रतिपादितस्ततो विशेषतरपरिमाणनिरूपणार्थं सूचीमानमाह—' तासि णं सेढीण ' मित्यादि, तासां श्रेणीनां परिमाणावधारणाय या विष्कम्भसूची सा असंख्येयायोजनकोटीको(टय )टी असंख्येयायोजनकोटीकोटिप्रमाणा इत्यर्थ । अथवेदमन्यद्विशेषतः परिमाणम्—' असंखेज्जाइ सेढिवग्गमूलाइं ' इति—एकस्या' परिपूर्णाया श्रेणर्य प्रदेशराशिस्तस्य प्रथमं वर्गमूलं द्वितीय तृतीय च वर्गमूलं यावदसंख्येयतमं वर्गमूलम् । एतानि सर्वाण्यप्येकत्र सङ्कल्प्यन्ते, तेषु च सङ्कलितेषु यावान् प्रदेशराशिर्भवति तावत्प्रदेशात्मिका विष्कम्भसूचिरवसेया । अत्र निदर्शनम्—श्रेणौ किल प्रदेशा असंख्याता अप्यसत्कल्पनया पञ्चषष्टि सहस्राणि पञ्चशतानि षट्त्रिंशदधिकानि ६५५३६, तेषां प्रथम वर्गमूल द्वे शते षट्पञ्चाशदधिके २५६ द्वितीयं षोडश १६ तृतीयं चत्वार ४ चतुर्थं द्वौ २, एतेषां च सङ्कलने जाते द्वे शते अष्टसप्तत्यधिके २७८, एतावन्ता किलासत्कल्पनया प्रदेशाना सूचिरिति । अथैते द्वीन्द्रिया किं प्रमाणाभिरवगाहनाभिरास्तीर्यमाणा. कियता कालेन सकलं प्रतरमापूरयन्ति ?, उच्यते-अङ्गुलासंख्येयभागप्रमाणाभिरवगाहनाभि प्रत्यावलिकाऽसंख्येयभागमेकैकावगाहनारचनेनासंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरापूर्यन्ते । इयमत्र भावना—एकैकस्मिन्नावलिकायाः असंख्येयतमे भाग एकैका अङ्गुलासंख्येयप्रमाणा अवगाहना रच्यते, ततोऽसंख्येयाभिरुत्सर्पिण्यवसर्पिणीभि सकलमपि प्रतर द्वीन्द्रियशरीरैरापूर्यते । एतदेवापहारद्वारेण सूत्रकृदाह-' वेइंदियाण ' मित्यादि द्वीन्द्रियाणां सम्बन्धिभिरौदारिकशरीरैर्बद्धैः प्रतरमसंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरपह्रियते, अत्र प्रतरमिति क्षेत्रत परिमाणम्, उत्सर्पिण्यवसर्पिणीभिरिति कालत. । किंप्रमाणेन पुन क्षेत्रेण कालेन वा अपहरणमत आह-' अंगुलपयरस्स आवलियाए य असंखेज्जइभागपलिभागेणं ' ति अङ्गुलमात्रस्य प्रतरस्य-एकप्रादेशिकश्रेणिरूपस्य असंख्येयभागप्रतिभागप्रमाणेन खण्डेन, इदं क्षेत्रविषय परिमाणम् । कालपरिमाणमावलिकाया असंख्येयभागप्रतिभागेनासंख्येयतमेन प्रतिभागेन । किमुक्तं भवति ?-एकेन द्वीन्द्रियेणाङ्गुलासंख्येयभागप्रमाणं खण्डमावलिकाया असंख्येयतमेन भागेनापह्रियते, द्वितीयेनापि तावत्प्रमाणं खण्डं तावता कालेन, एवमपह्रियमाण प्रतरं द्वीन्द्रियै. सर्वैरसंख्येयाभिरुत्सर्पिण्यवसर्पिणीभि सकलमपह्रियते इति, मुक्तान्यौघिकमुक्तवत्, तैजसकार्मणानि बद्धानि बद्धौदारिकवत्, वैक्रियाणि पुनर्बद्धानि तेषां न सन्ति, मुक्तान्यौघिकमुक्तवत्, एव त्रिचतुरिन्द्रियाणामपि तिर्यक्पञ्चेन्द्रियाणा बद्धानि मुक्तानि चौदारिकाणि द्वीन्द्रियवत् वैक्रियाणि बद्धानि असंख्येयानि । तत्र कालत. परिमाणचिन्तायामसंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरपह्रियन्ते, क्षेत्रतोऽसंख्येयासु श्रेणिषु यावन्त. आकाशप्रदेशास्तावत्प्रमाणानि, तासां च श्रेणीनां परिमाण प्रतरस्यासंख्येयो भागः । तथा चाह-'जहा असुरकुमाराण' मिति. यथा असुरकुमाराणां तथा वक्तव्य, नवरं विष्कम्भसूचिपरिमाणचिन्तायां तत्राङ्गुलप्रमाणवर्गमूलस्य संख्येयो भाग उक्त, इह त्वसंख्येयो भागो वक्तव्यः । किमुक्तं भवति ?-अङ्गुलमात्रक्षेत्रप्रदेशराशे. यत् प्रथमं वर्गमूलं तस्यासंख्येयतमे भागे यावन्त आकाशप्रदेशास्तावत्प्रदेशात्मिका सूचिः परिगृह्यते, तावत्या च सूच्या या श्रेणय. स्पृष्टास्तासु श्रेणिषु यावन्तः आकाशप्रदेशास्तावत्प्रमाणानि तिर्यक्पञ्चेन्द्रियाणा बद्धानि वैक्रियशरीराणि । उक्तं च—अङ्गुलमूलासङ्ख—भागप्पमिया उ होंति सेढीओ । उत्तरविउव्वियाण, तिरियाणं सन्निपज्जाणं ॥ १ ॥ " मुक्तान्यौधिकमुक्तवत्, तैजसकार्मणानि बद्धानि बद्धौदारिकवत्, मुक्तान्यौघिकमुक्तवत् । मनुष्याणा बद्धान्यौदारिकशरीराणि स्यात्—कदाचित् संख्येयानि कदाचिदसंख्येयानि । कोऽत्राभिप्रायः इति चेत्?, उच्यते-इह द्वये मनुष्या -गर्भव्युत्क्रान्तिका, सम्मूर्च्छिमाश्च । तत्र गर्भव्युत्क्रान्तिकाः सदावस्थायिनो, न स कश्चित्कालोऽस्ति यो गर्भव्युत्क्रान्तिकमनुष्यरहितो भवति, सम्मूर्च्छिमाश्च कदाचिद्विद्यन्ते कदाचित्सर्वथा तेषामभावो भवति, तेषामुत्कर्षतोऽन्तर्मुहूर्त्तायुष्कत्वात्, उत्पत्त्यन्तरस्य चोत्कर्षतश्चतुर्विंशतिमुहूर्त्तप्रमाणत्वात्, ततो यदा सर्वथा सम्मूर्च्छिममनुष्या न विद्यन्ते किन्तु केवला गर्भव्युत्क्रान्तिका एव तिष्ठन्ति तदा स्यात् संख्येया, सख्येयानामेव गर्भव्युत्क्रान्तिकानां भावात्, महाशरीरत्वे प्रत्येकशरीरत्वे च सति परिमितक्षेत्रवर्त्तित्वात् । यदा तु सम्मूर्च्छिमास्तदा असंख्येया., सम्मूर्च्छिमानामुत्कर्षत. श्रेण्यसंख्येयभागवर्त्तिनभ.प्रदेशराशिप्रमाणत्वात्, तथा चाह—' जहन्नपदे संखेज्जा ' इत्यादि, जघन्यपदं नाम-यत्र सर्वस्तोका. मनुष्या प्राप्यन्ते, आह—किमत्र सम्मूर्च्छिमाना ग्रहणमुत गर्भव्युत्क्रान्तिकानाम् ?, उच्यते गर्भव्युत्क्रान्तिकानाम्, तेषामेव सदाऽवस्थायितया सम्मूर्च्छिमविरहे सर्वस्तोकतया प्राप्यमाणत्वात्, उत्कृष्टपदे तूभयेषामपि ग्रहणं, यदाह मूलटीकाकार —" इतराणा ग्रहणमुत्कृष्टपदे, जघन्यपदे गर्भव्युत्क्रान्तिकानामेव केवलाना ग्रहण " मिति, अस्मिन् जघन्यपदे संख्येया मनुष्या. तत्र संख्येयक संख्येयभेदभिन्नमिति न ज्ञायते कियन्तस्ते इति विशेषसंख्या निर्द्धार्यते—संख्येया' कोटीकोट्य, अथवा—इदमन्यत् विशेषतर परिमाणम् ' तिजमलपयस्स उवरिं चउजमलपयस्स हेट्ठा ' इति, इह मनुष्यसंख्याप्रतिपादकान्येकोनत्रिंशदङ्कस्थानानि, वक्ष्यमाणानि, तत्र समयपरिभाषया अष्टानामष्टानामङ्कस्थानाना यमलपदमिति संज्ञा । चतुर्विंशत्या चाङ्कस्थानै. त्रीणि यमलपदानि लब्धानि, उपरि पञ्चाङ्कस्थानानि तिष्ठन्ति । अथ च यमलपदमष्टभिरङ्कस्थानैस्ततश्चतुर्थं यमलपदं न प्राप्यते तत उक्तं त्रयाणां यमलपदानामुपरि पञ्चभिरङ्कस्थानैर्वर्त्तमानत्वात् चतुर्थस्य च यमलपदस्याधस्तात्—त्रिभिरङ्कस्थानैर्हीनत्वात् । अथवा—द्वौ द्वौ वर्गौ समुदितौ एकं यमल, चत्वारो वर्गा समुदिता द्वे यमले षड् वर्गा समुदितास्त्रीणि यमलपदानि, अष्टौ वर्गा' समुदिताश्चत्वारि

तस्या प्रथमं चतुष्कं द्वात्रिंशत्, द्वितीयं षोडश, तृतीयमष्टौ, चतुर्थे चत्वारः पञ्चमे द्वौ षष्ठम् एक इति । एवमन्यत्रापि भावनीयम् । तत्र पञ्चमवर्गो द्वात्रिंशच्छेदनकानि षष्ठं वस्तु षष्ठि । तत पञ्चमवर्गेण षष्ठे वर्गे गुणिते षण्णवतिच्छेदनकानि प्राप्यन्ते । अथवा-एक रूपं स्थापयित्वा तत षण्णवतिवारान् द्विगुणद्विगुणीक्रियते कृते च सत् यदि तावत्प्रमाणो राशिर्भवति ततोऽवसानव्यम् एष षण्णवतिच्छेदनकदायी राशिरिति । तदेव जघन्यपदमभिहितम् । इदानीमुत्कृष्टपदमाह—' उक्कोसपए असंखेज्जा ' इत्यादि, उत्कृष्टपदे ये मनुष्या भवन्ति ते असंख्येयाः तत्रापि कालतः मार्गणायां क्रियमाणायां प्रतिसमयमेकैकमनुष्यापहारे सामस्त्येनासंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरपह्रियन्ते, क्षेत्रतो रूपे प्रक्षिप्ते मनुष्यैरेका श्रेणिः परिपूर्णाऽपहियते । किमुक्तं भवति ?—उत्कृष्टपदे ये मनुष्यास्तेषु मध्ये एकस्मिन्नसत्कल्पनया रूपे प्रक्षिप्ते सकलाऽपि श्रेणिरेकाऽपह्रियते, तस्याश्च श्रेणेः कालाभ्यामपहारमार्गणा कालतस्तावदसंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिः क्षेत्रतोऽङ्गुलप्रथमवर्गमूलं तृतीयवर्गमूलप्रत्युत्पन्नम् । किमुक्तं भवति ?—अङ्गुलमात्रक्षेत्रप्रदेशराशिरसत्कल्पनया षट्पञ्चाशदधिकशतद्वयप्रमाणस्तस्य यत्प्रथमं वर्गमूलमसत्कल्पनया षोडशलक्षणम्, तत्तृतीयेन वर्गमूलेनासत्कल्पनया द्विकलक्षणेन गुण्यते, गुणिते च सति यावान् प्रदेशराशिर्भवति असत्कल्पनया द्वात्रिंशत् एतावत्प्रमाणैः खण्डैरपह्रियमाणा यावत् श्रेणिर्निष्ठामियर्ति तावत् मनुष्या अपि निष्ठामुपयान्ति । आह—कथमेकस्याः श्रेणेरङ्गुलप्रमाणैः खण्डैरपह्रियमाणाया असंख्येया उत्सर्पिण्यवसर्पिण्यो लगन्ति ?, उच्यते—क्षेत्रस्यातिसूक्ष्मत्वात्, उक्तं च सूत्रेऽपि—" सुहुमो य होइ कालो तत्तो सुहुमयरं हवइ खेत्तं । अंगुलसेढीमेत्ते उस्सप्पिणीओ असंखेज्जा ॥ १ ॥" इति मुक्तान्यौधिकमुक्तवत् वैक्रियाणि बद्धानि संख्येयानि गर्भव्युत्क्रान्तिकानामेव केषाञ्चित् वैक्रियलब्धिसंभवात् मुक्तान्यौधिकमुक्तवत् आहारकाण्यौधिकाहारकवत्, तैजसकार्मणानि बद्धानि बद्धौदारिकवत्, मुक्तान्यौधिकमुक्तवत्, व्यन्तराणामौदारिकाणि यथा नैरयिकाणां वैक्रियाणि बद्धान्यसंख्येयानि । तत्र कालतः परिमाणचिन्तायां प्रतिसमयमेकैकापहारे असंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरपह्रियन्ते, क्षेत्रतोऽसंख्येयाः श्रेणयः असंख्यातासु श्रेणिषु यावन्त आकाशप्रदेशास्तावत्प्रमाणानीति भावः । ताश्च श्रेणयः कियत्य इति चेत् ? उच्यते—प्रतरस्यासंख्येयो भागः, प्रतरासंख्येयभागप्रमिता इत्यर्थः, तथा चाह—' वेउव्वियसरीरा जहा नेरइयाणं ' मिति—वैक्रियशरीराणि व्यन्तराणां यथा नैरयिकाणाम्, केवलं सूच्या विशेषः । तथा चाह—' नवरं ' मित्यादि, नवरं तासां श्रेणीनां विष्कम्भसूचिर्वक्तव्येति शेषः, सा च सुप्रसिद्धत्वान्नोक्ता । कथं सुप्रसिद्धेति चेत् ? उच्यते-इह महादण्डके पञ्चेन्द्रियतिर्यग्नपुंसकेभ्योऽसंख्येयगुणहीना व्यन्तराः पठ्यन्ते, तत एषा विष्कम्भसूचिरपि तिर्यक्पञ्चेन्द्रियविष्कम्भसूचेरसंख्येयगुणहीना वक्तव्या इति, आह च मूलटीकाकारोऽपि—' जम्हा महादंडए पंचिंदियतिरियनपुंसएहिंतो असंखेज्जगुणहीणा वाणमंतरा पढिज्जंति, तम्हा विक्खंभसूई वि तेहिंतो असंखेज्जगुणहीणा चेव भाणियव्वा ' इति, सम्प्रति प्रतिभाग उच्यते—प्रतिभागो नाम खण्डम् ' संखेज्जजोयणसयवग्गपलिभागो पयरस्स ' इति संख्येययोजनशतवर्गप्रमाणः प्रतिभागः प्रतरस्य पूरणे अपहरणे वा इति वाक्यशेषः । इयमत्र भावना—असंख्येययोजनशतवर्गप्रमाणे श्रेणिखण्डे यदि एकैको व्यन्तरः स्थाप्यते ततस्ते सकलमपि प्रतरमापूरयन्ति, यदि वा—यद्येकैकव्यन्तरापहारे एकैकं संख्येययोजनशतवर्गप्रमाणं श्रेणिखण्डमपह्रियते तत एकत्र व्यन्तरा निष्ठां यान्ति परत्र सकलं प्रतरमिति । मुक्तान्यौधिकमुक्तवत् आहारकाणि नैरयिकवत्, तैजसकार्मणानि बद्धानि बद्धवैक्रियवत्, मुक्तान्यौधिकमुक्तवत् । ज्योतिष्काणामौदारिकाणि नैरयिकवत्, वैक्रियाणि बद्धान्यसंख्येयानि । तत्र कालतो मार्गणायां प्रतिसमयमेकैकापहारे सामस्त्येनासंख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरपह्रियन्ते । क्षेत्रतोऽसंख्येयाः श्रेणयः ताश्च श्रेणयः प्रतरासंख्येयभागप्रमिताः । तथा चाह—' जोइसियाणं एवं चेव ' इति, नवरमित्यादिना विशेषं दर्शयति—नवरं तासां श्रेणीनां विष्कम्भसूचिर्वक्तव्येति शेषः । इयमपि सुप्रसिद्धत्वान्नोक्ता, कथमियं सुप्रसिद्धेति चेत् ? उच्यते—यस्मान्महादण्डके व्यन्तरेभ्यो ज्योतिष्काः संख्येयगुणा उक्तास्तत एषा विष्कम्भसूचिरपि तेषां विष्कम्भसूचेः संख्येयगुणा द्रष्टव्या । तथा चाह—मूलटीकाकारः—' जम्हा वाणमंतरेहिंतो जोइसिया संखिज्जगुणा पढिज्जंति, तम्हा विक्खंभसूई वि तेसिं तेहिंतो संखेज्जगुणा चेव भवति, ' इति नवरं प्रतिभागे स्पष्टतरो विशेषस्तमेवाह—' बिछप्पन्नंगुलसयवग्गपलिभागो पयरस्स ' इति षट्पञ्चाशदधिकशतद्वयाङ्गुलवर्गप्रमाणः प्रतिभागः प्रतरस्य पूरणेऽपहरणे च । अत्रापीयं भावना—षट्पञ्चाशदधिकशतद्वयाङ्गुलवर्गप्रमाणे श्रेणिखण्डे यद्येकैको ज्योतिष्कोऽवस्थाप्यते ततस्ते सकलमपि प्रतरमापूरयन्ति, यदि वा—यद्येकैकज्योतिष्कापहारेण एकैकं षट्पञ्चाशदधिकशतद्वयाङ्गुलवर्गप्रमाणं श्रेणिखण्डमपह्रियते तत एकत्र ज्योतिष्काः परिसमाप्तिमुपयान्ति अपरत्र सकलं प्रतरमिति, एवं च ज्योतिष्काणां व्यन्तरेभ्यः संख्येयगुणहीनः प्रतिभागः संख्येयगुणाभ्यधिका सूचिः । पञ्चसङ्ग्रहे पुनः षट्पञ्चाशदधिकशतद्वयप्रमाणः एव प्रतिभाग उक्तो न तु षट्पञ्चाशदधिकशतद्वयवर्गप्रमाणः, तथा च तद्ग्रन्थः "छप्पन्नदोसयंगुल-सूइपएसेहिं भाइयं पयरं । जोइसिएहिं हीरइ" इति, मुक्तान्यौधिकमुक्तवत्, आहारकाणि नैरयिकवत्, तैजसकार्मणानि बद्धानि वैक्रियवत्, मुक्तान्यौधिकमुक्तवत् । वैमानिकानामौदारिकाणि नैरयिकवत् वैक्रियाणि बद्धानि असंख्येयानि, तत्र कालतो मार्गणा ज्योतिष्कवत्, क्षेत्रतो मार्गणाऽसंख्येयाः श्रेणयः किमुक्तं भवति ?—असंख्येयासु श्रेणिषु यावन्त आकाशप्रदेशास्तावत्प्रमाणानीति, तासां च श्रेणीनां परिमाणं प्रतरस्यासंख्येयो भागः, प्रतरासंख्येयभागप्रमिता ग्राह्या इत्यर्थः । तत्र प्रतरासंख्येयभागो नैरयिकादिमार्गणायामपि गृहीत इति विशेषतरं परिमाणं प्रतिपादयति—' तासि णं ' मित्यादि,

तासां श्रेणीनां विष्कम्भसूचिरङ्गुलद्वितीयवर्गमूलं तृतीयवर्गमूलप्रत्युत्पन्नम् । एतदुक्तं भवति-अङ्गुलमात्रक्षेत्रप्रदेशराशेरसत्कल्पनया षट्पञ्चाशदधिकशतद्वयप्रमाणस्य यद् द्वितीयं वर्गमूलम्, असत्कल्पनया चतुष्कलक्षणं, तत्तृतीयेन वर्गमूलेन, असत्कल्पनया द्विकरूपेण गुणयते गुणिते च सति यावान् प्रदेशराशिर्भवति, असत्कल्पनया अष्टौ तावत्प्रदेशात्मिकया विष्कम्भसूच्या परिमिता. श्रेणय. परिग्राह्याः । तत्रापि ता एव अष्टौ श्रेणय इति प्रकारद्वयेऽप्यर्थाभेदः । आहारकाणि नैरयिकवत्, तैजसकार्मणानि बद्धानि बद्धवैक्रियवत्, मुक्तान्यौधिकमुक्तवत् । प्रज्ञा० १२ पद । भ० ।

( ९ ) संग्रहः—

विहिसंठाणपमाणे, पोग्गलचिणणा सरीरसंजोगो ।
दव्वपएसऽप्पबहुं, सरीरओगाहणाऽप्पबहुं ॥ १ ॥

'विहिसंठाणपमाणे' इत्यादि प्रथमं विधया—भेदाः शरीराणां वक्तव्या, तदनन्तरं संस्थानानि ततः प्रमाणानि, तदनन्तरं, कतिभ्यो दिग्भ्यः शरीराणां पुद्गलोपचयो भवतीत्येवं पुद्गलचयनं वक्तव्यं, ततः कस्मिन् शरीरे सति किं शरीरमवश्यंभावीत्येवंरूपः परस्परसंयोगो वक्तव्यः, ततो द्रव्याणि च प्रदेशाश्च द्रव्यप्रदेशा ते च द्रव्याणि च प्रदेशाश्च द्रव्यप्रदेशा । 'समानानामेकशेष' इत्येकशेषस्तैरल्पबहुत्वं वक्तव्यम् । किमुक्तं भवति ?—द्रव्यार्थतया प्रदेशार्थतया द्रव्यार्थप्रदेशार्थतया च पञ्चानामपि शरीराणामल्पबहुत्वमभिधातव्यमिति, ततः पञ्चानामपि शरीराणामवगाहनाविषयमल्पबहुत्वं वाच्यमिति गाथासंक्षेपार्थः ।

(१०) तत्र यथोद्देशं निर्देश इति प्रथमतो विधिद्वारमभिधित्सुरादौ शरीरमूलभेदान् प्रतिपादयति—

कति णं भंते ! सरीरया पण्णत्ता ? गोयमा ! पंच सरीरया पण्णत्ता, तं जहा-ओरालिए १ वेउव्विए २ आहारए ३ तेयए ४ कम्मए ५ । ( २६७ × )

'कइ णं भंते !' इत्यादि, कति—किंपरिमाणानि णमिति वाक्यालङ्कारे, भदन्त ! शीर्यन्ते—प्रतिक्षणं विशरारुभावं बिभ्रतीति शरीराणि शरीराण्येव शरीरकाणि, सेथा स्वार्थे कप्रत्ययः, भगवानाह-गौतम ! पञ्च शरीराणि प्रज्ञप्तानि मया अन्यैश्च शेषैः तीर्थकृद्भिः, तान्येव नामत आह—'ओरालिए' इत्यादि उदारं प्रधानं, प्राधान्यं चास्य तीर्थकरगणधरशरीराण्यधिकृत्य, ततोऽन्यस्यानुत्तरशरीरस्याप्यनन्तगुणहीनत्वात्, यद्वा-उदार सातिरेकयोजनसहस्रमानत्वात् शेषशरीरापेक्षया बृहत्प्रमाणं, बृहत्ता चास्य वैक्रियं प्रति भवधारणीयसहजशरीरापेक्षया द्रष्टव्या, अन्यथा उत्तरवैक्रियं योजनलक्षमानमपि लभ्यते । उदारमेव औदारिकं विनयादिपाठादिकण्, तथा विविधा विशिष्टा वा क्रिया विक्रिया तस्यां भवं वैक्रियम् । तथाहि—तदेकं भूत्वा अनेकं भवति, अनेकं भूत्वा एकं, तथा अणु भूत्वा महद्भवति महच्च भूत्वा अणु, तथा खचरं भूत्वा भूमिचरं भवति भूमिचरं भूत्वा खचरं, तथा दृश्यं भूत्वा अदृश्यं भवति अदृश्यं भूत्वा दृश्यमित्यादि, तच्च द्विविधम्—औपपातिकं, लब्धिप्रत्ययं च । तत्रौपपातिकमुपपातजन्मनिमित्तं तच्च देवनारकाणां, लब्धिप्रत्ययं तिर्यग्मनुष्याणां, तथा 'आहारए' इति—आहारकं चतुर्दशपूर्वविदा तीर्थकरस्फातिदर्शनादिकं तथाविधप्रयोजनोत्पत्तौ सत्यां विशिष्टलब्धिवशादाह्रियते-निर्वर्त्यते इत्याहारकम्, 'कृद्बहुल' मिति वचनात् कर्मणि वुञ्, यथा पादहारक इत्यत्र । उक्तं च—" कज्जम्मि समुप्पन्ने, सुयकेवलिणा विसिट्ठलद्धीए । जं एत्थ आहरिज्जइ, भणिंति आहारगं तं तु ॥ १ ॥ " कार्यं चेदम्—" पाणिदयारिद्धिदंसण-सुहुमपयत्थावगहणहेउं वा । संसयवोच्छेयत्थं, गमणं जिणपायमूलम्मि ॥ २ ॥ " तच्च वैक्रियशरीरापेक्षया अत्यन्तशुभं स्वच्छस्फटिकशिलेव शुभ्रपुद्गलसमूहघटनात्मकं, तेजस इति—तैजसं तेजसः—तेजःपुद्गलानां विकारस्तैजसं 'विकार' इत्यण्, तत ऊष्मलिङ्गं भुक्ताहारपरिणमनकारणं, तद्वशाच्च विशिष्टतपःसमुत्थलब्धिविशेषस्य पुंसस्तेजोलेश्याविनिर्गमः । उक्तं च—" सव्वस्स उम्हसिद्धं, रसाइआहारपाकजणणं च । तेयगलद्धिनिमित्तं, च तेयगं होइ नायव्वं ॥ १ ॥ " 'कम्मए' इति—कर्मणो जातं कर्मजम् । प्रज्ञा० २१ पद ।

(११) जीवस्पृष्टानि वैक्रियादीनि शरीराणि—

चत्तारि सरीरगा जीवफुडा पण्णत्ता, तं जहा-वेउव्विए आहारए तेयए कम्मए ।

'चत्तारी' त्यादि व्यक्तं, किन्तु जीवेन स्पृष्टानि—व्याप्तानि जीवस्पृष्टानि, जीवेन हि स्पृष्टान्येव वैक्रियादीनि भवन्ति, न तु यथा औदारिकं जीवमुक्तमपि भवति मृतावस्थायां तथैतानीति । स्था० ४ ठा० ३ उ० ।

(१२) कति महालयानि पृथ्वीशरीराणि—

के महालए णं भंते ! पुढविसरीरे पन्नत्ते ?, गोयमा ! अणंताणं सुहुमवणस्सइकाइयाणं जावइया सरीरा से एगे सुहुमवाउसरीरे, असंखेज्जाणं सुहुमवाउसरीराणं जावतिया सरीरा से एगे सुहुमतेउसरीरे, असंखेज्जाणं सुहुमतेउकाइयसरीराणं जावतिया सरीरा से एगे सुहुमे आउसरीरे, असंखेज्जाणं सुहुमआउकाइयसरीराणं जावइया सरीरा से एगे सुहुमे पुढविसरीरे, असंखेज्जाणं सुहुमपुढविकाइयसरीराणं जावइया सरीरा से एगे बादरवाउसरीरे, असंखेज्जाणं बादरवाउकाइयाणं जावइया सरीरा से एगे बादरतेउसरीरे, असंखेज्जाणं बादरतेउकाइयाणं जावतिया सरीरा से एगे बादरआउसरीरे, असंखेज्जाणं बादरआउसरीरे जावतिया सरीरा से एगे बादरपुढविसरीरे, एमहालए णं गोयमा ! पुढविसरीरे पन्नत्ते । ( सू० ६५२× )

'के महालए णं' मित्यादि, 'अणंताणं सुहुमवणस्सइकाइयाणं जावइया सरीरा से एगे सुहुमवाउसरीरे' त्ति-इह यावद्ग्रहणेनासंख्यातानि शरीराणि ग्राह्याणि अनन्तानामपि वनस्पतीनामेकाद्यसंख्येयान्तशरीरत्वाद् अनन्तानां च तच्छरीराणामभावात् प्राक्च सूक्ष्मवनस्पत्यवगाहनापेक्षया सूक्ष्मवाय्ववगाहनाया असंख्यातगुणत्वेनोक्तत्वादिति, 'असंखेज्जाणं' मि-

त्यादि; 'सुहुमवाउसरीरा'त्ति-वायुरेव शरीरं येषां ते तथा सूक्ष्माश्च ते ,वायुशरीराश्च-वायुकायिकाः सूक्ष्मवायुशरीरास्तेषामसंख्येयानां "सुहुमवाउक्काइयाणं"ति-क्वचित्पाठः, स च प्रतीत एव, 'जावइया सरीरं'त्ति-यावन्ति शरीराणि प्रत्येकशरीरत्वात्तेषामसंख्येयान्येव 'से एगे सुहुमे तेउसरीरे'त्ति-तदेकं सूक्ष्मतेजः शरीरं तावच्छरीरप्रमाणमित्यर्थः। भ० १६ श० ३ उ०।

(१३) सप्रत्यौदारिकशरीरस्य जीवजातिभेदतो-ऽवस्थाभेदतश्च भेदानभिधित्सुराह—

ओरालियसरीरे णं भंते ! किंसंठिते पन्नत्ते ?, गोयमा ! णाणासंठाणसंठिते पएणत्ते, एगिंदियओरालियसरीरे किंसंठिते पएणत्ते ?, गोयमा ! णाणासंठाणसंठिते पएणत्ते, पुढविक्काइयएगिंदियओरालियसरीरे किंसंठिते पएणत्ते ?, गोयमा ! मसूरचंदसंठाणसंठिते पएणत्ते, एवं सुहुमपुढवीकाइयाण वि, बादराण वि एवं चेव, पज्जत्ताऽपज्जत्ताण वि एवं चेव। आउक्काइयएगिंदियओरालियसरीरे णं भंते ! किंसंठिते पएणत्ते ?, गोयमा ! थिवुकबिंदुसंठाणसंठिते पएणत्ते, एवं सुहुमबादरपज्जत्तापज्जत्ताण वि, तेउक्काइयएगिंदियओरालियसरीरे णं भंते ! किंसंठिते पएणत्ते ? गोयमा ! सूईकलावसंठाणसंठिते पएणत्ते ?, एवं सुहुमबादरपज्जत्तापज्जत्ताणं वि, वाउक्काइयाण वि, पडागासंठाणसंठिते, एवं सुहुमबादरपज्जत्तापज्जत्ताण वि, वणप्फइकाइयाण णाणासंठाणसंठिते पएणत्ते, एवं सुहुमबादरपज्जत्तापज्जत्ताण वि। बेइंदियओरालियसरीरे णं भंते ! किंसंठाणसंठिते पण्णत्ते?, गोयमा ! हुंडसंठाणसंठिते पण्णत्ते, एवं पज्जत्तापज्जत्ताण वि, एवं तेइंदियचउरिंदियाण वि। पंचिंदियतिरिक्खजोणियपंचिंदियओरालियसरीरे णं भंते ! किंसंठाणसंठिते पण्णत्ते, ?, गोयमा ! छव्विहसंठाणसंठिते पण्णत्ते, तं जहा-समचतुरंससंठाणसंठिते० जाव हुंडसंठाणसंठिते वि, एवं पज्जत्तापज्जत्ताण वि ३, संमुच्छिमतिरिक्खजोणियपंचिंदियओरालियसरीरे णं भंते ! किंसंठाणसंठिते पण्णत्ते ?, गोयमा ! हुंडसंठाणसंठिते पण्णत्ते, एवं पज्जत्तापज्जत्ताण वि, गब्भवक्कंतियतिरिक्खजोणियाणं वि पंचिंदियतिरिक्खजोणियओरालियसरीरे णं भंते ! किंसंठाणसंठिते पण्णत्ते ?, गोयमा ! छव्विहसंठाणसंठिते पण्णत्ते, तं जहा-समचउरंसे० जाव हुंडसंठाणसंठिते, एवं पज्जत्तापज्जत्ताण वि ३, एवमेते तिरिक्खजोणियाणं ओहियाणं णव आलावगा जलयरपंचिंदिय-तिरिक्खजोणियाणं ओरालियसरीरे णं भंते ! किंसंठाणसंठिते पण्णत्ते ?, गोयमा ! छव्विहसंठाणसंठिते पएणत्ते, तं जहा-समचउरंसे ०जाव हुंडे, एवं पज्जत्तापज्जत्ताण वि, संमुच्छिमजलयरा हुंडसंठाणसंठिता, एतेसिं चेव पज्जत्ता वि अपज्जत्तगा वि, एवं चेव गब्भवक्कंतियजलयरा छव्विहसंठाणसंठिता, एवं पज्जत्तापज्जत्ताण वि, एवं थलयराण वि णव सुत्ताणि, एवं चउप्पयथलयराण वि, उरपरिसप्पथलयराण वि, भुयपरिसप्पथलयराण वि, एवं खहयराण वि णव सुत्ताणि, नवरं सव्वत्थ सम्मुच्छिमा हुंडसंठाणसंठिता भाणितव्वा, इयरे छसु वि। मणूसपंचिंदियओरालियसरीरे णं भंते ! किंसंठाणसंठिते पएणत्ते ?, गोयमा ! छव्विहसंठाणसंठिते पण्णत्ते, तं जहा-समचउरंसे ० जाव हुंडे, पज्जत्तापज्जत्ताण वि एवं चेव, गब्भवक्कंतियाण वि एवं चेव, पज्जत्तापज्जत्ताण वि एवं चेव। सम्मुच्छिमाणं पुच्छा गोयमा ? हुंडसंठाणसंठिता पण्णत्ता। ( सू० २६८ )

'ओरालियसरीरे णं भंते !' इत्यादि, नानासंस्थानसंस्थितं जीवजातिभेदतः संस्थानभेदभावात्, एकेन्द्रियौदारिकशरीरे नानासंस्थानसंस्थितता पृथिव्यादिषु प्रत्येकं संस्थानभेदात्, तत्र पृथिवीकायिकानां सूक्ष्माणां बादराणां पर्याप्तानामपर्याप्तानां चौदारिकशरीराणि मसूरचन्द्रसंस्थानसंस्थितानि, मसूरो—धान्यविशेषः तस्य चन्द्रः—चन्द्राकारमर्द्धदलं तस्येव यत्संस्थानं तेन संस्थितानि, अप्कायिकानां सूक्ष्मादिभेदतः चतुर्भेदानामौदारिकशरीराणि स्तिवुकबिन्दुसंस्थानसंस्थितानि, स्तिवुकाकारो यो बिन्दुर्न पुनरितस्ततो वातादिना विक्षिप्तः स्तिवुकबिन्दुस्तस्येव यत्संस्थानं तेन संस्थितानि, तैजसकायिकानां सूक्ष्मादिभेदतश्चतुर्भेदानामौदारिकशरीराणि सूचिकलापसंस्थानसंस्थितानि,वायुकायिकानां सूक्ष्मादिभेदतश्चतुर्भेदानामौदारिकशरीराणि पताकासंस्थानसंस्थितानि, वनस्पतिकायिकानां सूक्ष्माणां बादराणां पर्याप्तानामपर्याप्तानां च प्रत्येकमौदारिकशरीराणि नानासंस्थानसंस्थितानि, देशकालजातिभेदतः तेषां संस्थानानामनेकभेदभिन्नत्वात्, द्वित्रिचतुरिन्द्रियाणां प्रत्येकं पर्याप्तानामपर्याप्तानामौदारिकशरीराणि हुण्डसंस्थानसंस्थितानि, तिर्यक्पञ्चेन्द्रियौदारिकशरीरं सामान्यतः षड्विधसंस्थानसंस्थितम्, तदेवोपदर्शयति—' समचउरंससंठाणसंठिए ' इत्यादि, यावत्करणात्—' नग्गोहपरिमंडलसंठाणसंठिए साइसंठाणसंठिए वामणसंठाणसंठिए खुज्जसंठाणसंठिए हुंडसंठाणसंठिए ' इति परिग्रहः, तत्र समाः—सामुद्रिकशास्त्रोक्तप्रमाणलक्षणाविसंवादिन्यश्चतस्रोऽस्रयः —चतुर्दिग्विभागोपलक्षिताः शरीरावयवा यस्य तत्समचतुरस्रं, समासान्तोऽच्प्रत्ययः, समचतुरस्रं च तत्संस्थानं च समचतुरस्रसंस्थानं तेन संस्थितं समचतुरस्रसंस्थानसंस्थितं, तथा न्यग्रोधवत्परिमण्डलं यस्य तत् न्यग्रोधपरिमण्डलं, यथा न्यग्रोध उपरि सम्पूर्णप्रमाणोऽधस्तु हीनः तथा यत्संस्थानं नाभेरुपरि सम्पूर्णप्रमाणम् अधस्तु न तथा तत् न्यग्रोधपरिमण्डलम्, तथा आदिरिहोत्सेधाख्यो नाभेरधस्तनो देहभागो-

गृह्यते, ततः सह आदिना—नाभेरधस्तनभागेन यथोक्तप्रमाणलक्षणेन वर्त्तते इति सादि, यद्यपि सर्वं शरीरमादिना सह वर्त्तते तथापि सादित्वविशेषणान्यथानुपपत्त्या विशिष्ट एव प्रमाणलक्षणोपपन्न आदिरिह लभ्यते, तत उक्तं यथोक्तप्रमाणलक्षणेनेति। इदमुक्तं भवति-यत् संस्थानं नाभेरधःप्रमाणोपपन्नमुपरि च हीन तत्सादिरिति, अपरे तु साचीति पठन्ति, तत्र साची प्रवचनवेदिना शाल्मलीतरुमाचक्षते, ततः साचीव यत्संस्थानं तत्साचिसंस्थानं, यथा शाल्मलीतरो स्कन्धः काण्डमतिपुष्टमुपरितना तदनुरूपा न महाविशालता तद्वदस्यापि संस्थानस्याधोभाग परिपूर्णो भवति उपरितनभागस्तु नेति। तथा यत्र शिरो ग्रीवं हस्तपादादिकं च यथोक्तप्रमाणलक्षणोपेतम् उरउदरादि च मडभं तत्कुब्जसंस्थानं, यत्र पुनरुरउदरादिप्रमाणलक्षणोपेतं हस्तपादादिक हीन तद्वामनसंस्थानं, यत्र तु सर्वेऽप्यवयवा प्रमाणलक्षणपरिभ्रष्टास्तद् हुण्डसंस्थानं, समासः सर्वत्रापि पूर्ववत्, एवं 'पज्जत्तापज्जत्ताण वि' इति, एवम्-उक्तप्रकारेण सामान्यतस्तिर्यक्पञ्चेन्द्रियाणामिव पर्याप्तानामपर्याप्ताना च प्रत्येकं सूत्रं वक्तव्यं, तदेवमेतानि त्रीणि सूत्राणि, एवमेव च सामान्यतः सम्मूर्च्छिमतिर्यक्पञ्चेन्द्रियाणामपि त्रीणि सूत्राणि वक्तव्यानि, नवरं तेषु त्रिष्वपि सूत्रेषु हुण्डसस्थानसंस्थितमिति वक्तव्यम्, सम्मूर्च्छिमाणामविशेषेण सर्वेषामपि हुण्डसंस्थानभावात्। त्रीणि सामान्यतो गर्भजतिर्यक्पञ्चेन्द्रियाणामपि, नवरं तेषु त्रिष्वपि सूत्रेषु "छव्विहसंठाणसंठिए पण्णत्ते' इत्यादि वक्तव्यम्। गर्भजेषु समचतुरस्रादिसंस्थानानामपि सम्भवात्, तदेवमेते सामन्यतस्तिर्यक्पञ्चेन्द्रियविषया नव आलापकाः, अनेनैव क्रमेणैव जलचरतिर्यक्पञ्चेन्द्रियाणां सामान्यतः स्थलचराणां चतुष्पदस्थलचराणामुरःपरिसर्पस्थलचराणां भुजपरिसर्पस्थलचराणां खचरतिर्यक्पञ्चेन्द्रियाणां च प्रत्येकं नव २ सूत्राणि वक्तव्यानि। सर्वसंख्यया तिर्यक्पञ्चेन्द्रियाणां त्रिषष्टिः ६३ सूत्राणि मनुष्याणां नव सर्वत्र सम्मूर्च्छिमेषु हुण्डसंस्थानं च वक्तव्यमितरत्र षडपि संस्थानानि। तदेवमुक्तान्यौदारिकभेदानां संस्थानानि। प्रज्ञा० २१ पद ( अवगाहना 'ओगाहणा' शब्दे प्रथमभागे ६०२ पृष्ठ गता। )

( १४ ) सम्प्रति क्रमेण वैक्रियस्य शरीरस्याभिधित्सुराह-

वेउव्वियसरीरे णं भंते! कतिविधे पण्णत्ते?, गोयमा! दुविधे पण्णत्ते, तं जहा-एगिंदियवेउव्वियसरीरे य, पंचिंदियवेउव्वियसरीरे य। जति एगिंदियवेउव्वियसरीरे किं वाउकाइयएगिंदियवेउव्वियसरीरे, अवाउकाइयएगिंदियवेउव्वियसरीरे?। गोयमा! वाउकाइयएगिंदियवेउव्वियसरीरे नो अवाउकाइयएगिंदियवेउव्वियसरीरे। जइ वाउकाइयएगिं०वेउव्वियसरीरे किं सुहुमवाउकाइयए०वेउव्वियसरीरे बायरवाउकाइयए०वेउव्वियसरीरे?, गोयमा! नो सुहुमवाउकाइय-एगिंदिय-वेउव्वियसरीरे बादरवाउकाइय-एगिंदिय-वेउव्वियसरीरे। जइ बादरवाउकाइय-एगिंदिय-वेउव्वियसरीरे किं पज्जत्त-बादरवाउकाइय-एगिंदिय-वेउव्वियसरीरे, अपज्जत्तबादरवाउकाइय एगिंदिय—वेउव्वियसरीरे?, गोयमा! पज्जत्तबादरवाउकाइय-एगिंदिय-वेउव्वियसरीरे नोअपज्जत्तबादरवाउकाइय—एगिंदिय-वेउव्वियसरीरे, जति पंचेंदियवेउव्वियसरीरे किं नेरइयपंचिंदियवेउव्वियसरीरे ०जाव किं देवपंचिंदियवेउव्वियसरीरे?, गोयमा! नेरइयपंचिंदियवेउव्वियसरीरे ०जाव देवपंचिंदियवेउव्वियसरीरे वि, जइ नेरइयपंचिंदियवेउव्वियसरीरे किं रयणप्पभापुढविनेरइयपंचिंदियवेउव्वियसरीरे वि ०जाव किं अधेसत्तमापुढवि-नेरइय-पंचिंदिय-वेउव्वियसरीरे?, गोयमा! रयणप्पभापुढविनेरइयपंचिंदियवेउव्वियसरीरे वि ०जाव अधेसत्तमापुढविनेरइयपंचिंदियवेउव्वियसरीरे वि, जइ रयणप्पभापुढविनेरइय-वेउव्वियसरीरे किं पज्जत्तगरयणप्पभापुढविनेरइयवेउव्वियसरीरे अपज्जत्तगरयणप्पभापुढविनेरइयपंचिंदियवेउव्वियसरीरे?, गोयमा! पज्जत्तगरयणप्पभापुढविनेरइय—पंचिंदिय—वेउव्वियसरीरे अपज्जत्तगरयणप्पभापुढविनेरइयपंचिंदियवेउव्वियसरीरे, एवं ०जाव अधेसत्तमाए दुगतो भेदो भाणितव्वो। जइ तिरिक्खजोणियपंचिंदियवेउव्वियसरीरे किं संमुच्छिमपंचिंदियतिरिक्खजोणियवेउव्वियसरीरे गब्भवक्कंतियपंचिंदियतिरिक्ख०वेउव्वियसरीरे?, गोयमा! नो संमुच्छिमपंचिंदियतिरिक्ख०वेउव्वियसरीरे गब्भवक्कंतियपंचिंदियतिरिक्ख०वेउव्वियसरीरे, जति गब्भवक्कंतियपंचिंदियतिरिक्ख०वेउव्वियसरीरे किं संखेज्जवासाउयगब्भवक्कंतियपंचिंदियवेउव्वियसरीरे असंखिज्जवासाउयगब्भवक्कंतियपंचिंदियतिरिक्ख०वेउव्वियसरीरे?, गोयमा! संखेज्जवासाउयगब्भवक्कंतियपंचिंदियतिरिक्ख०वेउव्वियसरीरे, नो असंखिज्जवासाउयगब्भवक्कंतियपंचिंदियतिरिक्ख० वेउव्वियसरीरे। जइ संखिज्जवा० गब्भवक्कंतियपंचिंदियतिरिक्ख० वेउव्वियसरीरे किंपज्जत्तगसंखि०गब्भवक्कंतियपंचिंदियतिरिक्ख० वेउव्वियसरीरे अपज्जत्तगसंखिज्ज० गब्भवक्कंतियपंचिंदियतिरिक्ख० वेउव्वियसरीरे?, गोयमा! पज्जत्तगसंखिज्ज० गब्भवक्कंतियपंचिंदियतिरिक्ख० वेउव्वियसरीरे नो अपज्जत्तगसंखिज्ज०गब्भवक्कंतियपंचिंदियतिरिक्ख० वेउव्वियसरीरे, जइ संखेज्जवासा० किं जलयरगब्भवक्कंतियपंचिंदियतिरिक्ख० वेउव्वियसरीरे थलयरसंखिज्ज० गब्भवक्कंतियपंचिंदियतिरिक्ख० वेउव्वियसरीरे खहयरसंखिज्जवा० गब्भवक्कंतियपंचिंदियतिरिक्खजो० वेउव्वियसरीरे?, गोयमा! जलयरसंखिज्ज० गब्भवक्कंतियपंचिंदि-

यतिरिक्ख० वेउव्वियसरीरे वि थलयरसंखिज्ज० गब्भवक्कंतियपंचिंदियतिरिक्ख० वेउव्वियसरीरे वि खहयरसंखिज्ज०गब्भवक्कंतियपंचिंदियतिरिक्ख० वेउव्वियसरीरे वि, जइ जलयरसंखिज्जवासाउयग० किंपज्जत्तगजलयरसंखिज्ज० गब्भवक्कंतियपंचिंदियतिरिक्खजो० वेउव्वियसरीरे अपज्जत्तगजलयरसंखिज्जवा० गब्भवक्कंतियपंचिंदियतिरिक्ख० वेउव्वियसरीरे य ?, गोयमा ! पज्जत्तगजलयरसंखिज्ज० गब्भवक्कंतियपंचिंदियतिरिक्ख० वेउव्वियसरीरे नो अपज्जत्तगसंखिज्ज० जलयरगब्भवक्कंतियपंचिंदियतिरिक्ख० वेउव्वियसरीरे । जति थलयरपंचिंदिय०जाव सरीरे किं चउप्पय०जाव सरीरे किं परिसप्प० जाव सरीरे ?,गोयमा ! चउप्पय०जाव संखिज्ज०परिसप्प० जाव सरीरे, एवं सव्वेसिं णेयव्वं० जाव खहयराणं पज्जत्ताणं नो अपज्जत्ताणं । जति मणूसपंचिंदियवेउव्वियसरीरे किं संमुच्छिममणूसपंचिंदियवेउव्वियसरीरे गब्भवक्कंतियमणूसपंचिंदियवेउव्वियसरीरे ?, गोयमा ! णो संमुच्छिममणूसपंचिंदियवेउव्वियसरीरे गब्भवक्कंतियमणूसपंचिंदियवेउव्वियसरीरे । जइ गब्भवक्कंतियमणूसपंचिंदियवेउव्वियसरीरे किं कम्मभूमगगब्भवक्कंतियमणूसपंचिंदियवेउव्वियसरीरे अकम्मभूमग०गब्भवक्कंतिमणूसपंचिंदियवेउव्वियसरीरे अंतरदीवगगब्भवक्कंतियमणूसपंचिंदियवेउव्वियसरीरे ?,गोयमा! कम्मभूमगगब्भवक्कंतियमणूसपंचिंदियवेउव्वियसरीरे णो अकम्मभूमग० णो अंतरदीवग०जइ कम्मभूमगगब्भवक्कंतियमणूसपंचिंदियवेउव्वियसरीरे किं संखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसवेउव्वियसरीरे, असंखिज्ज०कम्मभूमगगब्भवक्कंतियमणूसपंचिंदियवेउव्वियसरीरे ?,गोयमा! संखेज्ज०कम्मभूमगगब्भवक्कंतियमणूसपंचिंदियवेउव्वियसरीरे नो असंखेज्ज०कम्मभूमगगब्भवक्कंतियमणूसपंचिंदियवेउव्वियसरीरे, जति संखेज्ज०कम्मभूमगगब्भवक्कंतियमणूसपंचिंदियवेउव्वियसरीरे, किं पज्जत्तयसंखेज्ज ०कम्मभूम० मणूसपंचिंदियवेउव्वियसरीरे अपज्जत्तगसंखिज्ज०कम्मभूमगगब्भवक्कंतियमणूसपंचिंदियवेउव्वियसरीरे ?, गोयमा ! पज्जत्तगसंखिज्ज०कम्मभूमगगब्भवक्कंतियमणूसपंचिंदियवेउव्वियसरीरे नो अपज्जत्तगसंखेज्ज०कम्मभूमगगब्भवक्कंतियमणूसपंचिंदियवेउव्वियसरीरे। जइ देवपंचिंदियवेउव्वियसरीरे किं भवणवासिदेवपंचिंदियवेउव्वियसरीरे० जाव वेमाणियदेवपंचिंदियवेउव्वियसरीरे ?, गोयमा ! भवणवासिदेवपंचिंदियवेउव्वियसरीरे वि० जाव वेमाणियदेवपंचिंदियवेउव्वियसरीरे वि । जइ भवणवासिदेवपंचिंदियवेउव्वियसरीरे किं असुरकुमारभवणवासिदेवपंचिंदियवेउव्वियसरीरे० जाव थणियकुमारभवणवासिदेवपंचिंदियवेउव्वियसरीरे ?, गोयमा !' असुरकुमार० जाव थणियकुमारवेउव्वियसरीरे वि । जइ असुरकुमारदेवपंचिंदियवेउव्वियसरीरे किं पज्जत्तगअसुरकुमारभवणवासिदेवपंचिंदियवेउव्वियसरीरे अपज्जत्तगअसुरकुमारभवणवासिदेवपंचिंदियवेउव्वियसरीरे ?, गोयमा ! पज्जत्तगअसुरकुमारभवणवासिदेवपंचिंदियवेउव्वियसरीरे वि अपज्जत्तगअसुरकुमारभवणवासिदेवपंचिंदियवेउव्वियसरीरे वि, एवं० जाव थणियकुमाराण दुगतो भेदो, एवं वाणमंतराणं अट्ठविहाणं जोतिसियाणं पंचविहाणं । वेमाणिया दुविहा–कप्पोवगा, कप्पातीता य । कप्पोवगा वारसविहा तेसिं पि एवं चेव दुहतो भेदो, कप्पातीता दुविहा गेवेज्जगा य, अणुत्तरोववाइया य । गेवेज्जगा णवविहा अणुत्तरोववाइया पंचविहा, एतेसिं पज्जत्तापज्जत्ताभिलावेणं दुगतो भेदो भाणियव्वो। ( सू०–२७० )

'वेउव्वियसरीरे णं भंते !' इत्यादि, वैक्रियशरीरं मूलतो द्विभेदम्—एकेन्द्रियपञ्चेन्द्रियभेदात्, तत्रैकेन्द्रियस्य वातकायस्य तत्रापि बादरस्य तत्रापि पर्याप्तस्य, शेषस्य वैक्रियलब्ध्यसम्भवात्। उक्तं च—" तिण्हं ताव रासीण वेउव्वियलद्धी चेव नत्थि, बायरपज्जत्ताण पि संखेज्जइभागमेत्ताणं " अत्र 'तिण्हं' ति—त्रयाणां पर्याप्तापर्याप्तसूक्ष्मापर्याप्तबादररूपाणाम्। पञ्चेन्द्रियचिन्तायामपि जलचरचतुष्पदोरःपरिसर्पभुजपरिसर्पखचरान् मनुष्यांश्च गर्भव्युत्क्रान्तिकान् सख्येयवर्षायुषो मुक्त्वा शेषाणां प्रतिषेधो, भवस्वभावतया तेषां वैक्रियलब्ध्यसम्भवात्। उक्ता भेदाः ।

( १५ ) संस्थानान्यभिधित्सुराह—

वेउव्वियसरीरे णं भंते ! किंसंठिते पण्णत्ते ?, गोयमा ! णाणासंठाणसंठिते पण्णत्ते, वाउकाइयएगिंदियवेउव्वियसरीरे णं भंते ! किंसंठाणसंठिते पण्णत्ते?, गोयमा ! पडागासंठाणसंठिते पण्णत्ते, नेरइयपंचिंदियवेउव्वियसरीरे णं भंते ! किंसंठाणसंठिते पण्णत्ते ?, गोयमा ! नेरइयपंचिंदियवेउव्वियसरीरे दुविधे पण्णत्ते, तं जहा–भवधारणिज्जे य, उत्तरवेउव्विए य । तत्थ णं जे से भवधारणिज्जे से णं हुंडसंठाणसंठिते पण्णत्ते, तत्थ णं जे से उत्तरवेउव्विते से वि हुंडसंठाणसंठिते पण्णत्ते । रयणप्पभापुढविनेरइयपंचिंदियवेउव्वियसरीरे णं भंते ! किं संठाणसंठिते पण्णत्ते ?, गोयमा ! रयणप्पभापुढविनेरइयाणं दुविधे सरीरे पण्णत्ते, तं जहा–भवधारणिज्जे य, उत्तरवेउव्विए य । तत्थ णं जे से भवधारणिज्जे से णं हुंडसंठाणसंठिते, जे से उत्तरवेउव्विते से वि हुंडे, एवं ०जाव

अधेसत्तमापुढविनेरइयवेउव्वियसरीरे । तिरिक्खजोणियपंचिंदियवेउव्वियसरीरे णं भंते ! किं संठाणसंठिते पएणत्ते ?, गोयमा ! णाणासंठाणसंठिते पएणत्ते, एवं जलयरथलयरखहयराण वि, थलयराण वि चउप्पयपरिसप्पाण वि उरपरिसप्पभुयपरिसप्पाण वि। एवं मणूसपंचिंदियवेउव्वियसरीरे वि। असुरकुमारभवणवासिदेवपंचिंदियवेउव्वियसरीरे णं भंते ! किंसंठिते पएणत्ते ?, गोयमा ! असुरकुमाराणं देवाणं दुविहे सरीरे पएणत्ते, तं जहा-भवधारणिज्जे य, उत्तरवेउव्विते य। तत्थ णं जे से भवधारणिज्जे से णं समचउरंसंसंठाणसंठिते पएणत्ते, तत्थ णं जे से उत्तरवेउव्विते से णं णाणासंठाणसंठिते पएणत्ते एवं ०जाव थणियकुमारदेवपंचिंदियवेउव्वियसरीरे। एवं वाणमंतराण वि, णवरं ओहिया वाणमंतरा पुच्छिज्जंति, एवं जोतिसियाण वि ओहियाणं, एवं सोहम्मे कप्पे ०जाव अच्चुयदेवसरीरे, गेवेज्जकप्पातीतवेमाणियदेवपंचिंदियवेउव्वियसरीरे णं भंते ! किंसंठिते पएणत्ते ?, गोयमा ! गेवेज्जगदेवाणं एगे भवधारणिज्जे सरीरे, से णं समचउरंससंठाणसंठिते पएणत्ते, एवं अणुत्तरोववाइयाण वि। ( सू० २७१ )

'वेउव्वियसरीरे णं भंते !' इत्यादि सुगमं, नवरं नैरयिकाणां भवधारणीयमुत्तरवैक्रियं च हुण्डसंस्थानमत्यन्तक्लिष्टकर्मोदयवशात्, तथाहि-तेषां भवधारणीयं शरीरं भवस्वाभवत एव निर्मूलविलुप्तपक्षोत्पाटितसकलग्रीवादिरोमपक्षिसंस्थानवदतीव बीभत्सं हुण्डसंस्थानं, यदप्युत्तरवैक्रियं तदपि वयं शुभं करिष्याम इत्यभिसन्धिना कर्तुमारब्धमपि तथाविधात्यन्ताशुभनामकर्मोदयवशादतीवाशुभतरमुपजायते इति हुण्डसंस्थानम्। तिर्यक्पञ्चेन्द्रियाणां मनुष्याणां च वैक्रियं नानासंस्थानसंस्थितमिच्छावशतः प्रवृत्तेः। दशविधभवनपतिव्यन्तरज्योतिष्कसौधर्माद्यच्युतपर्यवसानवैमानिकानां भवधारणीयं भवस्वभावतया तथाविधशुभनामकर्मोदयवशात् प्रत्येकं सर्वेषां समचतुरस्रसंस्थानम्, उत्तरवैक्रियं त्विच्छानुरोधतः प्रवृत्तेर्नानासंस्थानसंस्थितं, ग्रैवेयकाणामनुत्तरोपपातिनां चोत्तरवैक्रियं न भवति, प्रयोजनाभावात्। उत्तरवैक्रियं ह्यत्र गमनागमननिमित्तं परिचारणानिमित्तं वा क्रियते, न चैतेषामेतदस्ति। यत्तु भवधारणीयमेतेषां तत्समचतुरस्रसंस्थानसंस्थितमिति। उक्तानि स्थानानि। (वैक्रियशरीरस्यावगाहना 'ओगाहणा' शब्दे ३ भागे ७८ पृष्ठे गता।

(१६) संप्रत्याहारकशरीरस्य प्रतिपिपादयिषुराह—

आहारगसरीरे णं भंते ! कतिविधे पन्नत्ते ?, गोयमा ! एगागारे पएणत्ते, जइ एगागारे किं मणूसआहारगसरीरे, अमणूसआहारगसरीरे ?, गोयमा ! मणूसआहारगसरीरे नो अमणूसआहारगसरीरे जइ मणूसआहारगसरीरे किं सम्मुच्छिममणूसआहारगसरीरे गब्भवक्कंतियमणूसआहारगसरीरे ?, गोयमा ! नो सम्मुच्छिममणूसआहारगसरीरे, गब्भवक्कंतियमणूसआहारगसरीरे। जइ गब्भवक्कंतियमणूसआहारगसरीरे किं कम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे अकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे अंतरदीवगगब्भवक्कंतियमणूसआहारगसरीरे ?, गोयमा ! कम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे नो अकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे, नो अंतरदीवगगब्भवक्कंतियमणूसआहारगसरीरे, जइ कम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे, किं संखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे, असंखेज्जवासाउयकम्मभूमग-गब्भवक्कंतियमणूसआहारगसरीरे, गोयमा ! संखिज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे, नो असंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे, जति संखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे, किं पज्जत्तसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे ?, अपज्जत्तसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे ?, गोयमा ! पज्जत्तसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे, नो अपज्जत्तकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे, जइ पज्जत्तगसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे ? किं सम्मद्दिट्ठिपज्जत्तगसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे मिच्छद्दिट्ठिपज्जत्तगसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे, सम्मामिच्छद्दिट्ठिपज्जत्तगसंखेज्जवासाउय-कम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे ?, गोयमा ! सम्मद्दिट्ठिपज्जत्तगसंखेज्जवासाउय-कम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे, मिच्छद्दिट्ठिपज्जत्तसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे नो सम्मामिच्छद्दिट्ठिपज्जत्तगसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे जइ सम्मद्दिट्ठिपज्जत्तगसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे, किं संजयसम्मद्दिट्ठिपज्जत्तगसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे, संखेज० कम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे, असंजतसम्मद्दिट्ठिपज्जत्तसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे संजयासंजयसम्मद्दिट्ठिपज्जत्तसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे ?, गोयमा ! संजयसम्मद्दिट्ठिपज्जत्तगसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे, नो असंजतसम्मद्दिट्ठिपज्जत्तगसंखेज्जवासाउयमणूसआहारगसरीरे, नो संजतासंजतसम्मद्दिट्ठिआहा-

रगसरीरे जइ संजतसम्मद्दिट्ठिपज्जतगसंखेज्जवासाउयकम्म-भूमगगब्भवक्कंतियमणूसआहारगसरीरे, किं पमत्तसंजतसम्मद्दिट्ठिमणूसआहारगसरीरे, अप्पमत्तसंजतसम्मद्दिट्ठिसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे ?, गोयमा ! पमत्तसंखेज्जवासाउयसम्मद्दिट्ठिपमत्तसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे, नो अप्पमत्तसंखेज्जवासाउयसम्मद्दिट्ठिपमत्तसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे, जइ अप्पमत्तसंखेज्जवासाउयसम्मद्दिट्ठिपमत्तसंखेज्जवासाउयकम्मभूमगमणूसआहारगसरीरे, किं इड्डिपत्तप्पमत्तसंखेज्जवासाउयसम्मद्दिट्ठिकम्मभूमगसंखेज्जवासाउयगब्भवक्कंतियमणूसआहारगसरीरे, अणिड्डिपत्तपमत्तसंखेज्जवासाउयकम्मभूमगसंखेज्जवासाउयगब्भवक्कंतियआहारगसरीरे, गोयमा ! इड्डिपत्तप्पमत्तसंखेज्जवासाउयसम्मद्दिट्ठिपमत्तसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे, नो अणिड्डिपत्तपमत्तसंखेज्जवासाउयसम्मद्दिट्ठिपमत्तसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसआहारगसरीरे, आहारगसरीरे णं भंते ! किं संठिते पण्णत्ते । गोयमा ! समचउरससंठाणसंठिते पण्णत्ते । ( सू० २७३+ )

'आहारगसरीरे णं भंते ! कइविहे पन्नत्ते ' इत्यादि सुगमं, नवरं ' संजय ' त्ति—' यम् ' उपरमे , सम्यच्छन्ति स्म सर्वसावद्ययोगेभ्यः सम्यगुपरमन्ति स्मेति संयताः , ' गत्यर्थनित्याकर्मका ' दिति कर्त्तरि क्तप्रत्ययः , सकलचारित्रिणः , असंयता-अविरतसम्यग्दृष्टयः संयतासंयता—देशविरतिमन्तः , तथा ' पमत्त ' त्ति—प्रमाद्यन्ति स्म मोहनीयादिकर्मोदयप्रभावतः सञ्ज्वलनकषायनिद्राद्यन्यतमप्रमादयोगतः संयमयोगेषु सीदन्ति स्म प्रमत्ताः , पूर्ववत्कर्त्तरि क्तप्रत्ययः , ते च प्रायो गच्छवासिनस्तेषां क्वचिदनुपयोगसम्भवात् , तद्विपरीता अप्रमत्ताः , ते च प्रायो जिनकल्पिकपरिहारविशुद्धिकयथालन्दकल्पिकप्रतिमाप्रतिपन्नास्तेषां सततोपयोगसम्भवात् । इह जिनकल्पिकादयो लब्धिं नोपजीवन्ति , तेषां तथाकल्पत्वात् , येऽपि च गच्छवासिन आहारकशरीरं कुर्वन्ति तेऽपि तदानीं लब्ध्युपजीवनेनौत्सुक्यभावतः प्रमादवन्तो , मोचनेऽपि च प्रमादवन्तः , आत्मप्रदेशानामौदारिकशरीरे सर्वात्मनोपसंहरणेन व्याकुलीभावात् । आहारकशरीरे चान्तर्मुहूर्त्तावस्थानं ,ततो यद्यपि तन्मध्यभागे कियत्कालं मनाक् विशुद्धिभावतः कार्मग्रन्थिकैरप्रमत्ततोपवर्ण्यते तथापि सलब्ध्युपजीवनेन प्रमत्त एवेत्यप्रमत्तस्य 'नो अपमत्तसंजए' इत्यादिना प्रतिषेधः कृतः । ' इड्ढिपत्त ' त्ति—ऋद्धी —आमर्षौषध्यादिलक्षणा प्राप्ता ऋद्धिप्राप्तस्तद्विपरीतोऽनृद्धिप्राप्तः , ऋद्धीश्च प्राप्नोति प्रथमतो विशिष्टमुत्तरोत्तरमपूर्वापूर्वार्थप्रतिपादकं श्रुतमवगाहमानः श्रुतसामर्थ्यतस्तीव्रतीव्रतरशुभभावनामधिरोहन् अप्रमत्तः सन् । उक्तं च—

"अवगाहते च स श्रुत-जलधिं प्राप्नोति चावधिज्ञानम् ।
मानसपर्यायं वा , ज्ञानं कोष्ठादिबुद्धिर्वा ॥ १ ॥
चारणवैक्रियसर्वौ—षधिताद्या वाऽपि लब्धयस्तस्य ।
प्रादुर्भवन्ति गुणतो , बलानि वा मानसादीनि ॥ २ ॥"

अत्र ' स ' इति—अप्रमत्तसंयतः , मानसपर्यायमिति—मानसाः —मनसः सम्बन्धिनः पर्यायाः—विषया यस्य तन्मानसपर्यायं मनःपर्यायज्ञानमित्यर्थः , कोष्ठादिबुद्धिर्वा इत्यत्रादिशब्दात् पदानुसारिबीजपरिग्रहः । तिस्रो हि बुद्धयः परमातिशयरूपाः प्रवचने प्रतिपाद्यन्ते , तद्यथा—कोष्ठबुद्धिः १ , पदानुसारिबुद्धिः २ , बीजबुद्धिः ३ च । तत्र कोष्ठक इव धान्यं या बुद्धिराचार्यमुखाद्विनिर्गतौ तदवस्थावेव सूत्रार्थौ धारयति न किमपि तयोः कालान्तरे गलति सा कोष्ठबुद्धिः १ , या पुनरेकमपि सूत्रपदमवधार्य शेषमश्रुतमपि तदवस्थमेव श्रुतमवगाहते सा पदानुसारिणी २, या पुनरेकमर्थपदं तथाविधमनुसृत्य शेषमश्रुतमपि यथावस्थितं प्रभूतमर्थमवगाहते सा बीजबुद्धिः ३, सा च सर्वोत्तमप्रकर्षप्राप्ता भगवतां गणभृताम् । ते हि उत्पादादिपदत्रयमवधार्य सकलमपि द्वादशाङ्गात्मकं प्रवचनमभिसूत्रयन्ति तथा , चारणाश्च वैक्रियं च सर्वौषध्यश्च तद्भावश्च चारणवैक्रियसर्वौषधिता , तत्र चरणं—गमनं तद्विद्यते येषां ते चारणाः ' ज्योत्स्नादिभ्योऽण् ' इति मत्वर्थीयोऽण्प्रत्ययः , तत्र गमनमन्येषामपि मुनीनां विद्यते ततो विशेषणान्यथानुपपत्त्या चरणमिह विशिष्टं गमनमभिगृह्यते , अत एव चातिशायने मत्वर्थीयः , यथा—रूपवती कन्या इत्यत्र । ततोऽयमर्थः —अतिशायिचरणसमर्थाश्चारणाः , आह च भाष्यकृत् स्वकृतभाष्यटीकायाम्—" अतिशयचरणाच्चारणाः । अतिशयगमनादित्यर्थः , " ते च ( ते ) द्विविधाः-जङ्घाचारणाः , विद्याचारणाश्च । तत्र ये चारित्रतपोविशेषप्रभावतः समुद्भूतगमनविषयलब्धिविशेषास्ते जङ्घाचारणाः , ये पुनर्विद्यावशतः समुत्पन्नगमनलब्ध्यतिशयास्ते विद्याचारणाः , जङ्घाचारणाश्च रुचकवरद्वीपं यावत् गन्तुं समर्थाः, विद्याचारणाः नन्दीश्वरम् । तत्र जङ्घाचारणा यत्र कुत्रापि गन्तुमिच्छवस्तत्र रविकरानपि निश्रीकृत्य गच्छन्ति , विद्याचारणास्त्वेवमेव । जङ्घाचारणश्च रूचकवरद्वीपं गच्छन् एकेनैवोत्पातेन गच्छति , प्रतिनिवर्त्तमानस्त्वेकेनोत्पातेन नन्दीश्वरमायाति द्वितीयेन स्वस्थानम् , यदि पुनर्मेरुशिखरं जिगमिषुस्तर्हि प्रथमेनैवोत्पातेन पण्डकवनमधिरोहति प्रतिनिवर्त्तमानस्तु प्रथमेनोत्पातेन नन्दनवनमागच्छति द्वितीयेन स्वस्थानमिति, जङ्घाचारिणो हि चारित्रातिशयप्रभावतो भवन्ति , ततो लब्ध्युपजीवनेन औत्सुक्यभावतः प्रमादसम्भवाच्चारित्रातिशयनिबन्धना लब्धिः परिहीयते , तेन प्रतिनिवर्त्तमानो द्वाभ्यामुत्पाताभ्यां स्वभुवमायाति, विद्याचारणः पुनः प्रथमेनोत्पातेन मानुषोत्तरं पर्वतं गच्छति द्वितीयेन तु नन्दीश्वरं, प्रतिनिवर्त्तमानस्त्वेकेनैवोत्पातेन स्वस्थानमायातीति।तथा स एवोर्ध्वं गच्छन् प्रथमोत्पातेन नन्दनवनं गच्छति द्वितीयेनोत्पातेन पण्डकवनं, प्रतिनिवर्त्तमानस्त्वेकेनैवोत्पातेन स्वस्थानमायातीति विद्याचारणो विद्यावशतो भवति,विद्या च परिशील्यमाना स्फुटा स्फुटतरोपजायते,अत प्रतिनिवर्त्तमानस्य शक्त्य-

तिशयसम्भवादेकेनोत्पातेन स्वस्थानाऽऽगमनमिति । उक्तं च-

" अइसयचरणसमत्था, जंघाविज्जाहि चारणा मुणओ ।
जंघाहि जाइ पढमो, नीसं काउ रविकरे वि ॥ १ ॥
एगुप्पाएण गओ, रुयगवरम्मि उ तओ पडिनियत्तो ।
विइएणं नंदीसर—मिहं तओ एइ तइएणं ॥ २ ॥
पढमेणं पंडगवणं. विइउप्पाएण नंदणं एइ ।
तइउप्पाएण तओ, इह जंघाचारणो एइ ॥ ३ ॥
पढमेण माणुसोत्तर-नग स नंदिस्सरं तु बिइएण ।
एइ तओ तइएण, कयचेइयवंदणो इहइं ॥ ४ ॥
पढमेणं नंदणवणे, वियउप्पाएण पंडगवणम्मि ।
एइ इहं तइएणं, जो विज्जाचारणो होइ ॥ ५ ॥ "

तथा सर्वे-विण्मूत्रादिकमौषधं यस्य स सर्वौषधः । किमुक्तं भवति ?-यस्य * मूत्रं विट् श्लेष्मा शरीरमलो वा रोगोपशमसमर्थो भवति स सर्वौषध , आदिशब्दादामर्षौषध्यादिलब्धिपरिग्रह. । एताश्च ऋद्धीरप्रमत्त. सन् प्राप्य पश्चात् प्रमत्तो भवति,तेनैवेह प्रयोजनम् ,तत उक्तम् ' इड्डिपत्तपमत्तसंजये'त्यादि,आह-मनुष्यस्याहारकशरीरमित्युक्ते सामर्थ्यादमनुष्यस्य नाहारकशरीरमित्यवसीयते तत. कस्मादुच्यते ' नो अमणुस्साहारगसरीरे'इत्यादि ? निरर्थकत्वात्, उच्यते इह त्रिविधा विनेया.,तद्यथा—उद्घटितज्ञा,मध्यमबुद्धय ,प्रपञ्चितज्ञाश्च । तत्र ये उद्घटितज्ञा मध्यमबुद्धयो वा ते यथोक्तं सामर्थ्यमवबुध्यन्ते,ये पुनरद्याप्यव्युत्पन्नत्वात् न यथोक्तसामर्थ्यावगमकुशलास्ते प्रपञ्चितमेवावगन्तुमीशते नान्यथा, ततस्तेषामनुग्रहाय सामर्थ्यलब्धस्यापि विपक्षनिषेधस्याभिधानं,महीयांसो हि परमकरुणापरीतत्वात् अविशेषेण सर्वेषामनुग्रहाय प्रवर्तन्ते, ततो न कश्चिद्दोषः । (प्रज्ञा०) (आहारकशरीरस्य कतिमहालयाऽवगाहनेति 'ओगाहणा' शब्दे तृतीयभागे ८१ पृष्ठे उक्तम् ।) *(अत्रार्थे 'मोयपडिमा' शब्दो द्रष्टव्यः ।)

( १७ ) सम्प्रति तैजसस्य तान्यभिधित्सुराह—

तेयगसरीरे णं भंते ! कतिविधे पण्णत्ते ? , गोयमा ! पंचविहे पण्णत्ते, त जहा—एगिंदियतेयगसरीरे ०जाव पंचिंदियतेयगसरीरे । एगिंदियतेयगसरीरे णं भंते ! कइविहे पण्णत्ते ?, गोयमा ! पंचविधे पण्णत्ते, तं जहा—पुढविकाइय० जाव वणस्सइकाइय-एगिंदियसरीरे , एवं जहा ओरालियसरीरस्स भेदो भणितो तहा तेयगस्स वि० जाव चउरिंदियाणं । पंचिंदियतेयगसरीरे णं भंते ! कतिविधे पण्णत्ते ? , गोयमा ! चउव्विहे पण्णत्ते , तं जहा-नेरइयतेयगसरीरे० जाव देवतेयगसरीरे । नेरइयाणं दुगतो भेदो भाणितव्वो , जहा वेउव्वियसरीरे । पंचिंदियतिरिक्खजोणियाणं मणूसाण य जहा ओरालियसरीरे भेदो भाणितो तहा भाणियव्वो । देवाणं जहा वेउव्वियसरीरभेदो भाणितो तहा भाणितव्वो, ०जाव सव्वट्ठसिद्धदेव त्ति । तेयगसरीरे णं भंते ! किंसंठिए पण्णत्ते ?, गोयमा ! णाणासंठाणसंठिए पण्णत्ते , एगिंदियतेयगसरीरे णं भंते ! किंसंठिए पण्णत्ते ? , गोयमा ! णाणासंठाणसंठिए पण्णत्ते , पुढविकाइयएगिंदियतेयगसरीरे णं भंते ?, किंसंठिए पण्णत्ते गोयमा ! मसूरचंदसंठाणसंठिते पण्णत्ते, एवं ओरालियसंठाणाणुसारेण भाणितव्वं ०जाव चउरिंदियाण वि । नेरइयाणं भंते ! तेयगसरीरे किं संठिते पण्णत्ते ?, गोयमा ! जहा वेउव्वियसरीरे , पंचिंदियतिरिक्खजोणियाणं मणूमाणं जहा एतेसिं चेव ओरालियं ति, देवाणं भंते ! किंसंठिते तेयगसरीरे पण्णत्ते ?, गोयमा ! जहा वेउव्वियस्स० जाव अणुत्तरोववाइय त्ति । ( सू० २७४ )

'तेयगसरीरे णं भंते ! ' इत्यादि , इह तैजसशरीरं सर्वेषामवश्यं भवति ततो यथा एकद्वित्रिचतुरिन्द्रियगत औदारिकशरीरभेदो भणितस्तथा चतुरिन्द्रियान् यावत् तैजसशरीरभेदोऽपि वक्तव्यः पञ्चेन्द्रियतैजसशरीरचिन्तायां चतुर्विधं पञ्चेन्द्रियतैजसशरीरम् , नैरयिकतिर्यग्मनुष्यदेवभेदात् , तत्र नैरयिकतैजसशरीरचिन्तायां यथा प्राक् वैक्रियशरीरे पर्याप्ताऽपर्याप्तविषयतया द्विगतो भेद उक्तस्तथाऽत्रापि वक्तव्य ,स चैवम्-'जइ नेरइयपंचिंदियतेयगसरीरे किं रयणप्पभापुढविनेरइयपंचिंदियतेयगसरीरे० जाव किं अहेसत्तमापुढविनेरइयपंचिंदियतेयगसरीरे ? , गोयमा ! रयणप्पभापुढविनेरइयपंचिंदियतेयगसरीरे वि० जाव अहेसत्तमापुढविनेरइयपंचिंदियतेयगसरीरे वि, जइ रयणप्पभापुढविनेरइयपंचिंदियतेगसरीरे किं पज्जत्तगरयणप्पभे ' त्यादि, पञ्चेन्द्रियतिर्यग्योनिकानां मनुष्याणां च यथा प्रागौदारिकशरीरभेद उक्तस्तथा अत्रापि वक्तव्य.,स चैवम्—'तिरिक्खजोणियपंचिंदियतेयगसरीरे णं भंते ! कइविहे पण्णत्ते ? ' इत्यादि, देवाना यथा वैक्रियशरीरभेद उक्तस्तथा भणितव्य. , स चैवम्—' जइ देवपंचिंदियतेयगसरीरे किं भवणवासिदेवपंचिंदियतेयगसरीरे' इत्यादि, यावत् सर्वार्थसिद्धदेवसूत्रम् । उक्तो भेदः ॥ सम्प्रति संस्थानप्रतिपादनार्थमाह—' तेयगसरीरे णं भंते ! किंसंठिए पण्णत्ते ? ' इत्यादि , सुगमम् , इह जीवप्रदेशानुरोधितैजसं शरीरं ततो यदेव तस्या २ योनावौदारिकशरीरानुरोधेन वैक्रियशरिरानुरोधेन च जीवप्रदेशानां संस्थानं तदेव तैजसशरीरस्यापि इति प्रागुक्तमेकद्वित्रिचतुरिन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यगतमौदारिकसंस्थानं नैरयिकदेवेषु वैक्रियसंस्थानमनिर्दिष्टमिति । गत संस्थानम् । ( तैजसानामवगाहनामानम् ' ओगाहणा ' शब्दे तृतीयभागे ८१ पृष्ठे गतम् । ) ( कति कार्मणशरीराणि इति ' कम्मय ' शब्दे तृतीयभागे ३४० पृष्ठे गतम् । )

(१८) सम्प्रति पुद्गलचयनमाह—

ओरालियसरीरस्स णं भंते ! कतिदिसिं पोग्गला चिज्जंति ? , गोयमा ! निव्वाघाएणं छद्दिसिं वाघायं पडुच्च सिय तिदिसिं सिय चउद्दिसिं सिय पंचदिसिं । वेउव्वियसरीरस्स णं भंते ! कतिदिसिं पोग्गला चिज्जंति ? , गोयमा ! णियमा छद्दिसिं । एवं आहारगसरीरस्स वि । तेयाकम्मगाणं जहा ओरालियसरीरस्स । ओरालियसरीरस्स

णं भंते ! कतिदिसिं पोग्गला उवचिज्जंति ? , गोयमा ! एवं चेव० जाव कम्मगसरीरस्स , एवं उवचिज्जंति, अवचिज्जंति । जस्स णं भंते ! ओरालियमरीरं तस्स वेउव्वियसरीरं , जस्स वेउव्वियसरीरं तस्स ओरालियसरीर ? , गोयमा ! जस्स ओरालियसरीरं तस्स वेउव्वियसरीरं सिय अत्थि सिय नत्थि, जस्स वेउव्वियसरीरं तस्स ओरालियसरीरं सिय अत्थि सिय नत्थि । जस्स णं भंते ! ओरालियसरीरं तस्स आहारगसरीरं,जस्स आहारगसरीरं तस्स ओरालियमरीरं ? , गोयमा ! जस्स ओरालियसरीरं तस्स आहारगसरीरं सिय अत्थि सिय नत्थि, जस्स पुण आहारगसरीरं तस्स ओरालियसरीरं णियमा अत्थि । जस्स णं भंते ! ओरालियसरीरं तस्स तेयगसरीरं जस्स तेयगसरीरं तस्स ओरालियसरीरं ? , गोयमा ! जस्स ओरालियसरीरं तस्स तेयगसरीरं नियमा अत्थि, जस्स पुण तेयगसरीरं तस्स ओरालियसरीरं सिय अत्थि सिय णत्थि, एवं कम्मगमरीरं पि । जस्स णं भंते ! वेउव्वियसरीरं तस्स आहारगसरीरं, जस्स आहारगसरीरं तस्स वेउव्वियसरीरं ? , गोयमा ! जस्स वेउव्वियसरीरं तस्स आहारगसरीरं णत्थि, जस्स वि आहारगसरीरं तस्स वि वेउव्वियसरीरं णत्थि । तेयाकम्माणं जहा ओरालिएण समं तहेव आहारगसरीरेण वि समं तेयाकम्मगाणं चारेयव्वाणि । जस्स णं भंते ! तेयगसरीरं, तस्स कम्मगसरीरं, जस्स कम्मगसरीरं तस्स तेयगसरीरं ? , गोयमा ! जस्स तेयगसरीरं तस्स कम्मगसरीरं णियमा अत्थि, जस्स वि कम्मगसरीरं तस्स वि तेयगसरीरं णियमा अत्थि । ( सू० २७६ )

'ओरालियसरीरस्स णं भंते !' इत्यादि , औदारिकशरीरस्य ' ण' मिति वाक्यालङ्कारे , भदन्त ! 'कइ दिसिं' इति पञ्चम्यर्थे द्वितीया बहुवचने चैकवचनं प्राकृतत्वात् , ततोऽयमर्थः-कतिभ्यो दिग्भ्य समागत्य पुद्गलाश्चीयन्ते ; कर्मकर्त्तर्ययं प्रयोग , स्वयं चयनमागच्छन्तीत्यर्थ । भगवानाह—निर्व्याघातेन-व्याघातस्याभावो निर्व्याघातमव्ययीभाव. ' तेन वा तृतीयाया' इति विकल्पेनाम्विधानाभावात्राम्भावः ' छद्दिसिं ' ति-षड्भ्यो दिग्भ्य. । किमुक्तं भवति ?-यत्र त्रसनाड्या मध्ये बहिर्वा व्यवस्थितस्यौदारिकशरीरिणो नैकापि दिग् अलोकेन व्याहता वर्त्तते तत्र निर्व्याघाते व्यवस्थितस्य नियमात् षड्भ्यो दिग्भ्य. पुद्गलानामागमनं व्याघातम् अलोकेन प्रतिस्खलनं प्रतीत्य ' सिय तिदिसिं ' ति-स्यात्-कदाचित्त्रिसृभ्यो दिग्भ्य स्याच्चतसृभ्य स्यात् पञ्चभ्य., कथमिति चेत् ?, उच्यते-सूक्ष्मजीवस्यौदारिकशरीरिणो यत्रोर्ध्वं लोकाकाशं न विद्यते नापि तिर्यक् पूर्वदिशि नापि दक्षिणदिशि तस्मिन् सर्वोर्ध्वप्रतरे आग्नेयकोणरूपे लोकान्ते व्यवस्थितस्याध पश्चिमोत्तररूपाभ्यस्तिसृभ्यो दिग्भ्यः पुद्गलोपचय , शेषदिक्त्रयस्यालोकेन व्याहतत्वात् , पुन. स एव सूक्ष्मजीव औदारिकशरीरी पश्चिमां दिशमनुसृत्य तिष्ठति तदा पूर्वदिगस्याधिका जातेति चतसृभ्यो दिग्भ्यः पुद्गलानामागमनम् । यदा पुनरधो द्वितीयादिप्रतरे गत. पश्चिमदिशमवलम्ब्य तिष्ठति तदा ऊर्ध्वदिगप्यधिका लभ्यते केवला दक्षिणैव दिगलोकेन व्याहतेति पञ्चभ्यो दिग्भ्य. पुद्गलानामागमनं, वैक्रियशरीरमाहारकशरीर च त्रसनाड्या मध्य एव सम्भवति नान्यत्रेति तयोरपि पुद्गलचयो नियमात् षड्भ्यो दिग्भ्य । तैजसकार्मणे सर्वसंसारिणां ततो यथौदारिकस्य निर्व्याघातेन षड्भ्यो दिग्भ्यो व्याघातं प्रतीत्य पुनः स्यात् त्रिदिग्भ्यः स्याच्चतुर्दिग्भ्यः स्यात् पञ्चदिग्भ्य. तथा तैजसकार्मणयोरपि द्रष्टव्य. । यथा चयस्तथा उपचयोऽपचयश्च वक्तव्य । तत्र उपचय —प्राभूत्येन चय अपचयो—ह्रास शरीरेभ्य. पुद्गलाना विचटनमिति यावत् । उक्तं पुद्गलचयनम् । इदानीं शरीरसंयोगमाह—' जस्स णं भंते ! ' इत्यादि यस्यौदारिक तस्य वैक्रिय स्यादस्ति स्यान्नास्ति । य औदारिकशरीरी सन् वैक्रियलब्धिमान् वैक्रियमारभ्य तत्र वर्त्तते तस्यास्ति, शेषस्य नास्तीति भाव । यस्य वैक्रियशरीरं तस्यौदारिकशरीरं स्यादस्ति स्यान्नास्ति , देवनारकाणा वैक्रियशरीरवतामौदारिकशरीरं नास्ति , तिर्यग्मनुष्याणां तु वैक्रियशरीरवतामस्तीति भावार्थ., आहारकशरीरेणापि सह चिन्तायां यस्यौदारिकशरीरं तस्याहारकशरीर स्यादस्ति स्यान्नास्ति, य औदारिकशरीरी चतुर्दशपूर्वधर आहारकलब्धिमान् आहारकशरीरमारभ्य वर्त्तते तस्यास्ति शेषस्य नास्तीत्यर्थ. । यस्य पुनराहारकशरीरं तस्यौदारिकशरीरं नियमादस्ति , औदारिकशरीरविरहे आहारकलब्धेरप्यसम्भवात् । तैजसशरीरेण सह चिन्तायां यस्यौदारिकशरीरं तस्य नियमात्तैजसशरीरं, तैजसशरीरविरहे औदारिकशरीरासम्भवात् । यस्य पुनस्तैजसशरीरं तस्यौदारिकं स्यादस्ति स्यान्नास्ति, देवनैरयिकाणा नास्ति तिर्यग्मनुष्याणामस्तीति भाव'। एवं कार्मणशरीरेणापि सह चिन्ता कर्त्तव्या, तैजसकार्मणयो' सहचारित्वात् ॥ सम्प्रति वैक्रियशरीरस्याहारकशरीरादिभि सह संयोगचिन्तां कुर्वन्नाह-'जस्स णं भंते ! ' इत्यादि. यस्य वैक्रियशरीरं न तस्याहारकशरीरं यस्याहारकशरीरं न तस्य वैक्रियशरीरं , समकालमनयोरेकस्यासम्भवात् , तैजसकार्मणे यथौदारिकशरीरेण सह चिन्तिते तथा वैक्रियशरीरेणापि सह चिन्तयितव्ये , आहारकशरीरेणापि सह तथैव । तैजसकार्मणयोस्तु परस्परमविनाभावित्वात् , यस्य तैजसं तस्य नियमात् कार्मणं यस्य कार्मणं तस्य नियमात् तैजसम् । गतं संयोगद्वारम् ।

(१६) इदानीं द्रव्यप्रदेशोभयैरल्पबहुत्वमभिधित्सुराह—

एतेसि णं भंते ! ओरालियवेउव्वियआहारगतेयगकम्मगसरीराणं दव्वट्टयाए पदेसट्टयाए दव्वट्ठपएसट्ठयाए कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ? , गोयमा ! सव्वत्थोवा आहारगसरीरा दव्वट्ठयाते वेउव्वियसरीरा दव्वट्ठयाए अ-

संखेज्जगुणा, ओरालियसरीरा दव्वट्ठयाए असंखेज्जगुणा तेयाकम्मगसरीरा दो वि तुल्ला दव्वट्ठयाते अणंतगुणा, पदेसट्ठयाए सव्वत्थोवा आहारगसरीरा पदेसट्ठयाए वेउव्वियसरीरा पदेसट्ठयाए असंखेज्जगुणा, ओरालियसरीरा पदेसट्ठयाए असंखेज्जगुणा, तेयगसरीरा पदेसट्ठयाए अणंतगुणा, कम्मगसरीरा पदेसट्ठयाए अणंतगुणा, दव्वट्ठपदेसट्ठयाए सव्वत्थोवा आहारगसरीरा दव्वट्ठयाते वेउव्वियसरीरा दव्वट्ठयाए असंखेज्जगुणा। ओरालियसरीरा दव्वट्ठयाए असंखेज्जगुणा ओरालियसरीरेहिंतो दव्वट्ठयाएहिंतो आहारगसरीरा पदेसट्ठयाए अणंतगुणा वेउव्वियसरीरा पदेसट्ठयाए असंखेज्जगुणा,ओरालियसरीरा पदेसट्ठयाए असंखेज्जगुणा। तेयाकम्मा दो वि तुल्ला दव्वट्ठयाए अणंतगुणा, तेयगसरीरा पदेसट्ठयाए अणंतगुणा,कम्मगसरीरा पदेसट्ठयाए अणंतगुणा। (सू० २७७) एतेसि णं भंते ! ओरालियवेउव्वियआहारगतेयगकम्मगसरीराणं जहण्णियाए ओगाहणाए उक्कोसियाए ओगाहणाए जहण्णुक्कोसियाए ओगाहणाए कतरे कतरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा ओरालियसरीरस्स जहण्णिया ओगाहणा, तेयाकम्मगाणं दोण्ह वि तुल्ला जहण्णिया ओगाहणा विसेसिया वेउव्वियसरीरस्स जहण्णिया ओगाहणा असंखेज्जगुणा, आहारगसरीरस्स जहण्णिया ओगाहणा असंखेज्जगुणा, उक्कोसियाए ओगाहणाए सव्वत्थोवा आहारगसरीरस्स उक्कोसिया ओगाहणा ओरालियसरीरस्स उक्कोसिया ओगाहणा संखेज्जगुणा, वेउव्वियसरीरस्स उक्कोसिया ओगाहणा संखेज्जगुणा, तेयाकम्मगाणं दो वि तुल्ला उक्कोसिया ओगाहणा असंखेज्जगुणा, जहण्णुक्कोसियाते ओगाहणाते सव्वत्थोवा ओरालियसरीरस्स जहण्णिया ओगाहणा तेयाकम्माणं दोण्ह वि तुल्ला जहण्णिया ओगाहणा विसेसिया वेउव्वियसरीरस्स जहण्णिया ओगाहणा असंखेज्जगुणा । आहारगसरीरस्स जहण्णियाहिंतो ओगाहणाहिंतो तस्स चेव उक्कोसिया ओगाहणा विसेसिया, ओरालियसरीरस्स उक्कोसिया ओगाहणा संखेज्जगुणा, वेउव्वियसरीरस्स णं उक्कोसिया ओगाहणा संखेज्जगुणा, तेयाकम्माणं दोण्ह वि तुल्ला उक्कोसिया ओगाहणा असंखिज्जगुणा। (सू० २७८)

'एएसि णं भंते ! ' इत्यादि , सर्वस्तोकान्याहारकशरीराणि द्रव्यार्थतया, शरीरमात्रद्रव्यसंख्यया इत्यर्थः, उत्कृष्टपदेऽपि तेषां सहस्रपृथक्त्वस्य प्राप्यमाणत्वात्, 'उक्कोसेणं उ जुगवं पुहुत्तमेत्तं सहस्साणं ' मिति वचनात् तेभ्योऽपि वैक्रियशरीराणि द्रव्यार्थतया असंख्येयगुणानि, सर्वेषां नैरयिकाणां सर्वेषां च देवानां कतिपयतिर्यक्पञ्चेन्द्रियमनुष्यबादरवायुकायिकानां च वैक्रियशरीरसम्भवात् , तेभ्योऽप्यौदारिकशरीराणि द्रव्यार्थतया असंख्येयगुणानि , पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुरिन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्याणामौदारिकशरीरभावात्, पृथिव्यप्तेजोवायुवनस्पतिशरीराणां च प्रत्येकमसंख्येयलोकाकाशप्रदेशप्रमाणत्वात् , तेभ्योऽपि तैजसकार्मणशरीराणि द्रव्यार्थतयाऽनन्तगुणानीति , सूक्ष्मबादरनिगोदजीवानामनन्तानन्तानां प्रत्येकं तैजसकार्मणशरीरभावात्, स्वस्थाने तु परस्परं तुल्यानि , परस्पराविनाभावित्वादेकस्याभावेऽन्यस्याप्यभावात् । प्रदेशार्थचिन्तायां सर्वस्तोकान्याहारकशरीराणि सहस्रपृथक्त्वमात्रशरीरप्रदेशानामल्पत्वात्, तेभ्योऽपि वैक्रियशरीराणि प्रदेशार्थतया असंख्येयगुणानि। इह यद्यपि वैक्रियशरीरयोग्यवर्गणाभ्यः आहारकशरीरवर्गणा परमाण्वपेक्षया अनन्तगुणास्तथापि स्तोकाभिर्वर्गणाभिराहारकशरीरं निष्पद्यते हस्तमात्रत्वादतिप्रभूताभिर्वैक्रियशरीरवर्गणाभिर्वैक्रियम् उत्कर्षेण सातिरेकलक्षयोजनप्रमाणत्वात्, अतिस्तोकानि चाहारकशरीराणि सहस्रपृथक्त्वेन प्राप्यमाणत्वात् अतिप्रभूतानि वैक्रियशरीराणि असंख्येयश्रेणिगताकाशप्रदेशराशिप्रमाणत्वात् तत उपपद्यन्ते आहारकशरीरेभ्यः प्रदेशार्थतया वैक्रियशरीराण्यसंख्येयगुणानि , तेभ्योऽप्यौदारिकशरीराणि प्रदेशार्थतया असंख्येयगुणानि', असंख्येयलोकाकाशप्रदेशप्रमाणतया तेषां लभ्यमानत्वेन तत्प्रदेशानामतिप्रभूतानां सम्भवात्, तेभ्योऽपि तैजसशरीराणि प्रदेशार्थतया अनन्तगुणानि , द्रव्यार्थतयाऽपि तेभ्यस्तेषामनन्तगुणत्वात्, तेभ्योऽपि कार्मणशरीराणि प्रदेशार्थतया अनन्तगुणानि , तैजसवर्गणाभ्यः कार्मणवर्गणाना परमाण्वपेक्षयाऽनन्तगुणत्वात्। द्रव्यार्थप्रदेशार्थचिन्तायां 'सव्वत्थोवा आहारगसरीरा दव्वट्ठयाए वेउव्वियसरीरा दव्वट्ठयाए असंखेज्जगुणा ओरालियसरीरा दव्वट्ठयाए असंखेज्जगुणा' इत्यत्र भावना प्रागुक्ताऽनुसर्त्तव्या , तेभ्यो द्रव्यार्थतयौदारिकशरीरेभ्य आहारकशरीराणि प्रदेशार्थतयाऽनन्तगुणानि, औदारिकशरीराणि सर्वसंख्ययाऽप्यसंख्येयलोकाशप्रदेशप्रमाणानि , आहारकशरीरयोग्यवर्गणायां त्वेकैकस्यामप्यभव्येभ्योऽनन्तगुणाः परमाणव इति, तेभ्योऽपि वैक्रियशरीराणि प्रदेशार्थतया असंख्येयगुणानि , तेभ्योऽप्यौदारिकशरीराणि प्रदेशार्थतया असंख्येयगुणानि। अत्र भावना प्रागेव कृता , तेभ्योऽपि तैजसकार्मणानि द्रव्यार्थतया अनन्तगुणानि अतिप्रभूतानन्तसंख्योपेतत्वात् , तेभ्योऽपि तैजसशरीराणि प्रदेशार्थतयाऽनन्तगुणानि , अनन्तपरमाण्वात्मिकाभिरनन्ताभि (र्व- र्गणाभि) रेकैकस्य तैजसशरीरस्य निष्पाद्यत्वात् , तेभ्योऽपि कार्मणशरीराणि प्रदेशार्थतयाऽनन्तगुणानि। अत्र कारणं प्रागेवोक्तम् । तदेवं पञ्चानामपि शरीराणां द्रव्यप्रदेशोभयैरल्पबहुत्वमुक्तम्॥ इदानीं जघन्योत्कृष्टोभयावगाहनाविषयमल्पबहुत्वमाह— 'एएसि णं ' मित्यादि सर्वस्तोका औदारिकशरीरस्य जघन्याऽवगाहना; अङ्गुल-

संख्येयभागमात्रप्रमाणत्वात् , तैजसकार्मणयोर्जघन्यावगाहना द्वयोरपि परस्परं तुल्या । औदारिकजघन्यावगाहनातो विशेषाधिका । कथमिति चेत् ?, उच्यते-इह मारणान्तिकसमुद्घातेन समवहतस्य पूर्वशरीरात् यद्बहिर्विनिर्गतं तैजसशरीरं तस्याऽऽयामबाहल्यविस्तारैरवगाहना चिन्त्यते इत्युक्तं प्राक्, तत्र यस्मिन् प्रदेशे उत्पत्स्यन्ते सोऽपि प्रदेश औदारिकशरीरावगाहनाप्रमाणतोऽङ्गुलासंख्येयभागप्रमाणो व्याप्त , यदप्यपान्तरालमतिस्तोकं तदपि व्याप्तमित्यौदारिकजघन्यावगाहनातो विशेषाधिका , ततोऽपि वैक्रियशरीरस्य जघन्यावगाहना असंख्येयगुणा , अङ्गुलासंख्येयभागस्यासंख्येयभेदभिन्नत्वात् , ततोऽप्याहारकशरीरस्य जघन्यावगाहनाऽसंख्येयगुणा , देशोनहस्तप्रमाणत्वात्। उत्कृष्टावगाहनाचिन्तायां सर्वस्तोका आहारकशरीरस्योत्कृष्टाऽवगाहना हस्तमात्रत्वात् , ततोऽप्यौदारिकशरीरस्य उत्कृष्टावगाहना संख्येयगुणा , सातिरेकयोजनसहस्रप्रमाणत्वात् , ततोऽपि वैक्रियशरीरस्योत्कृष्टावगाहना संख्येयगुणा सातिरेकयोजनलक्षमानत्वात् , तैजसकार्मणयोरुत्कृष्टावगाहना द्वयोरपि परस्परं तुल्या वैक्रियशरीरोत्कृष्टावगाहनातोऽसंख्येयगुणा , चतुर्दशरज्ज्वात्मकत्वात् . जघन्योत्कृष्टावगाहनाचिन्तायाम्—आहारकशरीरस्य ' जहण्णियाहिंतो ओगाहणाहिंतो तस्स चेव उक्कोसिया ओगाहणा विसेसाहिया' इति, देशेन समधिकत्वात् , शेषं सुगमम् , अनन्तरमेव भावितत्वात्। प्रज्ञा० २१ पद। ( अल्पबहुत्वम् 'अप्पाबहुय' शब्दे प्रथमभागे २७१ पृष्ठे गतम्। ) ( शरीरमेवात्मेति ' तज्जीवतच्छरीरवाइ ( ण् ) ' शब्दे चतुर्थभागे २१७२ पृष्ठे उक्तम्। ) ( शरीरमाश्रित्याहारकत्वानाहारकत्वचिन्तनम् ' आहार ' शब्दे द्वितीयभागे ५१५ पृष्ठे गतम्। )

( २० ) नैरयिकादीनां शरीरोत्पत्ति.—

णेरइयाणं चउहिं ठाणेहिं सरीरुप्पत्ती सिता, तं जहा-कोहेणं माणेणं मायाए लोभेणं, एवं ०जाव वेमाणियाणं। णेरइयाणं चउहिं ठाणेहिं निव्वत्तिते सरीरे पण्णत्ते, तं जहा-कोहनिव्वत्तिए ०जाव लोभनिव्वत्तिए, एवं ०जाव वेमाणियाणं। ( सू० ३७१ )

शरीरस्योत्पत्तिनिर्वृत्तिसूत्राणां दण्डकद्वयं , कण्ठ्यं चैतत् , नवरं क्रोधादय कर्मबन्धहेतव., कर्म्म च शरीरोत्पत्तिकारणमिति कारणकारणे कारणोपचारात् क्रोधादय· शरीरोत्पत्तिनिमित्ततया व्यपदिश्यन्त इति । ' चउहिं ठाणेहिं सरीरे' त्याद्युक्तम् , क्रोधादिजन्यकर्मनिर्वर्तितत्वात् क्रोधादिभिर्निर्वर्त्तितं शरीरमित्युपदिष्टम् , इह चोत्पत्तिरारम्भमात्रं , निर्वृत्तिस्तु निष्पत्तिरिति। स्था० ४ ठा० ४ उ०।

( २१ ) शरीराधिकारात् शरीरोत्पत्तिं दण्डकेन निरूपयन्नाह—

नेरइयाणं दोहिं ठाणेहिं सरीरुप्पत्ती सिया. तं जहा-रागेणं चेव, दोसेण चेव ० जाव वेमाणियाणं, नेरइयाणं दुट्ठाणनिव्वत्तिए, सरीरगे पण्णत्ते , तं जहा-रागनिव्वत्तिए चेव, दोसनिव्वत्तिए चेव० जाव वेमाणियाणं। (सू०७५×)

'नेरइयाण' मित्यादि, कण्ठ्य. किन्तु या रागद्वेषजनितकर्मणा शरीरोत्पत्ति. सा रागद्वेषाभ्यामेवेति व्यपदिश्यते, कार्ये कारणोपचारादिति, ' जाव वेमाणियाण ' ति दण्डक सूचित । शरीराधिकाराच्छरीरनिर्वर्त्तनसूत्रं, तदप्येवं; नवरमुत्पत्ति आरम्भमात्रं निर्वर्त्तना तु निष्ठानयनमिति। स्था० २ ठा० १ उ०। ( कथं शरीराणां कतिविधं करणमित्युक्तम् ' करण ' शब्दे तृतीयभागे ३६० पृष्ठे। ) ( शरीरतया द्रव्यग्रहणं ' दव्व ' शब्दे चतुर्थभागे २४६८ पृष्ठे गतम्। ) ( ' जीव '' शब्दे चतुर्थभागे १५२६ पृष्ठे सुरा नैरयिकाश्च त्रिसृषु शरीरेषु वर्तन्ते इत्युक्तम्। )

(२२) लोकश्च शरीरिशरीराणां सर्वेन आश्रयस्वरूप इति नारकादिशरीरिदण्डकेन शरीरप्ररूपणायाह-

णेरइयाणं दो सरीरगा पण्णत्ता , तं जहा-अब्भंतरगे चेव, बाहिरगे चेव। अब्भंतरए कम्मए, बाहिरए वेउव्विए। एवं देवाणं भाणियव्वं। पुढविकाइयाणं दो सरीरगा पण्णत्ता, तं जहा--अब्भंतरगे चेव,बाहिरगे चेव। अब्भंतरगे कम्मए, बाहिरगे ओरालियगे , ०जाव वणस्सइकाइयाणं। बेइंदियाणं दो सरीरा पण्णत्ता, तं जहा-अब्भंतरए चेव, बाहिरए चेव। अब्भतरगे कम्मए, अट्ठिमंससोणितबद्धे, बाहिरए, ओरालिए ०जाव चउरिंदियाणं। पंचिंदियतिरिक्खजोणियाणं दो सरीरगा पण्णत्ता, तं जहा-अब्भंतरगे चेव , बाहिरगे चेव। अब्भंतरगे कम्मए , अट्ठिमंससोणियण्हारुछिराबद्धे, बाहिरए ओरालिए। मणुस्साण वि एवं चेव। विग्गहगइसमावन्नगाणं नेरइयाणं दो सरीरगा पण्णत्ता, तं जहा-तेयए चेव, कम्मए चेव। निरंतरं ० जाव वेमाणियाणं। ( सू० ७५× )

'णेरइयाण' मित्यादि, प्राय· कण्ठ्यं , नवरं शीर्यते—अनुक्षणं चयापचयाभ्यां विनश्यतीति शरीरं तदेव शटनादिधर्मतयाऽनुकम्पितत्वात् शरीरकं ते च द्वे प्रज्ञप्ते जिनैः, अभ्यन्त —मध्ये भवमाभ्यन्तरम् , आभ्यन्तरत्वं च तस्य जीवप्रदेशै सह क्षीरनीरन्यायेन लोलीभवनात्। भवान्तरगतावपि च जीवस्यानुगतिप्रधानत्वादपवरकाद्यन्त प्रविष्टपुरुषवदनतिशायिनामप्रत्यक्षत्वाच्चेति , तथा बहिर्भवं बाह्यम् , बाह्यता चास्य जीवप्रदेशै कस्यापि केषुचिदवयवेष्वव्याप्तभवान्तराननुयायित्वाच्चिरनिशयानामपि प्राय प्रत्यक्षत्वाच्चेति। तत्राभ्यन्तरं ' कम्मए ' त्ति—कार्मणशरीरनामकर्मोदयनिर्वर्त्यमशेषकर्मणां प्ररोहभूमिराधारभूतम् , तथा संसारिणात्मना गत्यन्तरसंक्रमणे साधकतमं तत् कार्मणवर्गणास्वरूपम् , कर्मैव कार्मकमिति , कार्मकग्रहणे च तैजसमपि गृहीतं द्रष्टव्यम् , तयोरव्यभिचारित्वेनैकत्वस्य विवक्षितत्वादिति। 'एव देवाण भाणियव्वं' ति-अयमर्थो-यथा नैरयिकाणां शरीरद्वयं भणितमेवं देवानाम् असुरादीनां वैमानिकान्तानां भणितव्यम् , कार्मणवैक्रिययोरेव तेषां भावात् चतुर्विंशतिदण्डकस्य च विन्यास-

तत्वादिति । 'पुढवी' त्यादि पृथिव्यादीनां तु बाह्यमौदारिकम्--औदारिकशरीरनामकर्मोदयाद्धार पुद्गलनिर्वृत्तमौदारिकं केवलमेकेन्द्रियाणामस्थ्यादिविरहितम् वायूनां वैक्रियं यत्तन्न विवक्षितं प्रायिकत्वात् तस्येति । 'बेइंदियाण' मित्यादि. अस्थिमांसशोणितैर्बद्ध-नद्धं यत्तत्तथा, द्वीन्द्रियादीनामौदारिकत्वेऽपि शरीरस्यायं विशेष. । 'पंचेंदिए' त्यादि. पञ्चेन्द्रियतिर्यङ्मनुष्याणां पुनरयं विशेषो यदस्थिमांसशोणितस्नायुशिरावद्धमिति । अस्थ्यादयस्तु प्रतीता इति, प्रकारान्तरेण चतुर्विंशतिदण्डकेन शरीरप्ररूपणामेवाह-'विग्गह' त्यादि विग्रहगति —वक्रगतिर्यदा विश्रेणिव्यवस्थितमुत्पत्तिस्थानं गन्तव्यं भवति तदा या स्यात्तां समापन्ना विग्रहगतिसमापन्नास्तेषां द्वे शरीरे, इह तैजसकार्मणयोरभेदेन विवक्षति, एवं दण्डक. शरीराधिकारात् । स्था० २ ठा० १ उ० । अनु० ।

( २३ ) शरीरबन्धनप्रकारः—

नेरइयाणं तओ सरीरगा पण्णत्ता,तं जहा--वेउव्विते तेयए कम्मए । असुरकुमाराणं तओ सरीरगा पण्णत्ता, तं जहा-एवं चेव, एवं सव्वेसिं देवाणं, पुढवीकाइयाणं ततो सरीरगा पण्णत्ता, तं जहा-ओरालिते तेयए कम्मते, एवं वाउकाइयवज्जाणं ०जाव चउरिंदियाणं । ( सू० २०७ )

'नेरइयाण' मित्यादि, दण्डक कण्ठ्य, किन्तु एवं 'सव्वदेवाणं' ति—यथा असुराणां त्रीणि शरीराणि एवं नागकुमारादिभवनपतिव्यन्तरज्योतिष्कवैमानिकानाम्, 'एव वाउकाइयवज्जाणं' ति—वायूनां हि आहारकवर्जानि चत्वारि शरीराणीति तद्वर्जनमेव पञ्चेन्द्रियतिरश्चामपि चत्वारि मनुष्याणां तु पञ्चापीति त इह न दर्शिता. । स्था० ३ ठा० ४ उ० ।

( २४ ) शरीरनिर्माणस्वरूपं तत्र नाड्यादिसंख्या शरीरापेक्षया दर्शयन्नीत्याह—

आउसो ! जं पि य इमं सरीरं इट्ठं कंतं पियं मणुन्नं मणामं मणाभिरामं थिज्जं वेसासियं संमयं बहुमयं अणुमयं भंडकरंडगसमाणं रयणकरंडओ विव सुसंगोवियं चेलपेडा विव सुसंपरिवुडं तिल्लपेडा विव सुसंगोवियं मा णं उण्हं मा णं सीयं मा णं वाला मा णं खुहा मा णं पिवासा मा णं चोरा मा णं दंसा मा णं मसगा मा णं वाइयपित्तियसंनिवाइयविविहा रोगायंका फुसंति त्ति कट्टु एवं पियाइं अधुवं अनिययं असासयं चयावचइयं विप्पणासधम्मं पच्छा व पुरा व अवस्स विप्पचइयव्वं । एयस्स वि याइं आउसो ! आणुपुव्वेणं अट्ठारस य पिट्ठकरंडगसंधीओ बारस पंसलिया करंडा छप्पंसुलिए कडाहे विहत्थिया कुच्छी चउरंगुलिया गीवा चउपलिया जिब्भा दुप्पलियाणि अच्छीणि चउकवालं सिरं बत्तीसं दंता सत्तंगुलिया जीहा अद्धुट्ठपलियं हिययं पणवीसं पलाइं कालिज्जं दो अंता पंच वामा पण्णत्ता, तं जहा–थूलंते य तणुयंते य । तत्थ णं जे से थूलंते ते णं उच्चारे परिणमइ, तत्थ णं जे से तणुयंते ते णं पासवणे परिणमइ । दो पासा पण्णत्ता, तं जहा–वामे पासे य, दाहिणे पासे य । तत्थ णं जे से वामे पासे से सुहपरिणामे, तत्थ णं जे से दाहिणे पासे से दुहपरिणामे । आउसो ! इमम्मि सरीरए सट्ठि संधिसयं सत्तुत्तरं धम्मसयं तिन्नि अट्ठ दामसयाइं नव ण्हारुसयाइं सत्त सिरासयाइं पंच पेसीसयाइं नव धमणीओ नवनउइं च रोमकूवसयसहस्साइं विणा केसमंसुणा सह केसमंसुणा अद्धुट्ठाओ रोमकूवकोडीओ आउसो ! इमम्मि सरीरए सट्ठिं सिरासयं नाभिप्पभवाणं उड्ढगामिणीणं सिरमुवगयाणं जाओ रसहरणीओ त्ति वुच्चंति, जाणंसि निरुवघाएणं चक्खुसोयघाणजीहाबलं च भवइ, जाणं सि उवघाएणं चक्खुसोयघाणजीहाबलं उवहम्मइ । आउसो ! इमम्मि सरीरए सट्ठिसिरासयं नाभिप्पभवाणं अहोगामिणीणं पायतलमुवगयाणं जाणं सि निरुवघाएणं जंघाबलं भवइ, ताणं चेव से उवघाएणं सीसवेयणा अद्धसीसवेयणा मत्थयसूले अच्छीणि अंधिज्जंति ॥ ( सू० २४ )

'आउसो ! जं' इत्याद्यालापकसूत्रम्, हे आयुष्मन् ! यदपि च इदं शरीरं-वपु इष्टम् इच्छाविषयत्वात् कान्तं कमनीयत्वात् प्रियं प्रेमनिबन्धनत्वात् मनसा ज्ञायते-उपादीयत इति मनोज्ञम् मनसा अम्यते गम्यत इति मनोमं मनसोऽभिरामं मनोभिरामं सनत्कुमारचक्रिवत् स्थैर्यं स्थैर्यगुणयोगात् वैश्वासिक-विश्वासस्थानं संमतं तत्कृतकार्याणां संमतत्वात् बहुमतं बहुष्वपि कार्येषु बहुर्वाऽनल्पतयाऽस्तोकतया मतं बहुमतं अनु विप्रियकरणात् पश्चान्मतमनुमत भाण्डकरण्डकसमानम्-आभरणभाजनतुल्यमादेयमित्यर्थ । रत्नकरण्डक इव सुसंगोपित वस्त्रादिभि चेलपेटेव-वस्त्रमञ्जूषेव सुष्ठु सपरिवृत निरुपद्रवे स्थाने निवेशित गृहस्थावस्थायांशालिभद्रवपुर्वत्, तैलपेटेव-तैलगोलिकेव सुसंगोपितं भङ्गभयात् 'तेल्लकेला इव सुसंगोविय' ति—पाठान्तर तैलकेला-तैलाश्रयो भाजनविशेष —सौराष्ट्रप्रसिद्ध. सा च सुष्ठु संगोप्या संगोपनीया भवत्यन्यथा लुठति ततश्च हानि स्यादिति, सूत्रेणैव हेतून् दर्शयतीत्याह-'मा णं' माशब्दो निषेधार्थ, णं वाक्यालङ्कार । अथवा-'मा णं ति मा इद शरीरमिति व्याख्ययम्, तत सर्वेऽपि उष्णादयो मा स्पृशन्तु छुपन्तु, भवन्त्वित्यर्थ 'त्ति कट्टु' इति कृत्वा.अथवा-इत्यभिसन्धाय पालितमिति शेष, तत्रोष्णत्वं ग्रीष्मादावुष्णत्व शीत-शीतकाल शीतत्वं व्याला:-श्वापदा सर्पा वा क्षुधा-बुभुक्षा पिपासातृषा चौरा-निशाचरा. दंशा.-मशका. एते विकलेन्द्रियज-

न्तुविशेषाः, वातिकपैत्तिकश्लैष्मिकसांनिपातिका विविधाः रोगातङ्काः रोगाः-कालसहा व्याधयः आतङ्कास्त एव सद्योघातिनः 'एवं पियाइं' ति-एवम्-उक्तप्रकारेण अपि चेति अभ्युच्चये, 'आइं' ति-वाक्यालङ्कारे, इदं शरीरं न ध्रुवम् अध्रुवं सूर्योदयवन्न प्रतिनियतकालऽवश्यभावि, अनियतं सुरूपादेरपि कुरूपादिदर्शनात् हरितिलकराजसुतविक्रमकुमारशरीरवत्, अशाश्वतं क्षणं क्षणं प्रति विनश्वरत्वात् सनत्कुमारशरीरवत्, 'चयावचइयं' ति—इष्टाहारोपभोगतया धृत्युपष्टम्भादौदारिकवर्गणापरमाणूपचयाच्चयः त-दभावे तद्विघटनादपचयः चयापचयौ विद्येते यस्य तच्चयापचयिकं, पुष्टिगलनस्वभावमित्यर्थः । करकण्डूप्रत्येकबुद्धवैराग्यहेतुवृषभशरीरवत्, विप्रणाशो—विनश्वरः धर्मः-स्वभावो यस्य तद् विप्रणाशधर्म्मम् 'पच्छा व' त्ति-पश्चाद्विवक्षितकालात् परतः 'पुरा व' त्ति-विवक्षितकालात् पूर्वञ्च, यद्वा-'पच्छा पुरा य' त्ति पाठे तु विवक्षितकालस्य पश्चात्पूर्वं च, सर्वदैवेत्यर्थः, अवश्यम् 'विप्पचइयव्व, ति-विप्रत्यक्तव्यः त्याज्यमित्यर्थः । 'एयस्स वि याइं' ति-एतस्य एतस्मिन्नपि च वा वपुषः वपुषि वा 'आइं' ति-वाक्यालकारे 'आउसो' हे आयुष्मन्! आनुपूर्व्या-अनुक्रमेण अष्टादशपृष्ठिकरण्डकस्य-पृष्ठिवंशस्य संधयो ग्रन्थिरूपा भवन्ति, यथा वंशस्य पर्व्वाणि तेषु चाष्टादशसु सन्धिषु मध्ये द्वादशभ्य सन्धिभ्यो द्वादश पांशुलका निर्गत्योभयपार्श्वावावृत्य वक्षःस्थलमध्योर्ध्ववर्त्यस्थीनि लगित्वा पल्लकाकारतया परिणमन्ति, अत आह-'बारस०' शरीरे द्वादश पांशुलिकारूपाः करण्डका—वंशका भवन्ति, तथा 'छप्पसु०' तस्मिन्नेव पृष्ठिवंशे शेषषट्सन्धिभ्यः षट् पांशुलिका निर्गत्य पार्श्वद्वयमावृत्य हृदयस्योभयतो वक्षःपञ्जरादधस्तात्कुक्षिपिलकुचेस्तूपरिष्टात्परस्परगासमिलितास्तिष्ठन्ति । अयं च कटाह इत्युच्यते द्वे वितस्ती कुक्षिर्भवति चतुरङ्गुलप्रमाणा ग्रीवा भवति, तौल्येन—मगधदेशप्रसिद्धपलेन चत्वारि पलानि जिह्वा भवति, अक्षिमांसगोलका द्वे पले भवतः, चतुर्भिः कपालैरस्थिखण्डरूपैः शिरो भवति, मुखऽशुचिपूर्णे प्रायो द्वात्रिंशद्दन्ता-अस्थिखण्डानि भवन्ति,'सत्तगु०' जिह्वा मुखाभ्यन्तरवर्तिमांसखण्डरूपा दैर्घ्येणात्माङ्गुलतः सप्ताङ्गुला भवति, अद्धट्ठ हृदयान्तरवर्तिमांसखण्ड सार्द्धपलत्रयं भवति, 'पणवि' कालिज्ज.वक्षोऽन्तर्गूढमांसविशेषरूपं पञ्चविंशति पलानि स्युः, द्वे अन्त्रे प्रत्येकं पञ्चपञ्चवामप्रमाणे प्रज्ञप्ते, तद्यथा-स्थूलान्त्रं तन्वन्त्रं (च)। तत्र यत् स्थूलान्त्रं तेनाऽऽहार परिणमति, तत्र च यत् तन्वन्त्रं तेन प्रश्रवण-मूत्र परिणमति,'दो पा ० द्वे पार्श्वे प्रज्ञप्ते तद्यथा–वामपार्श्वं दक्षिणपार्श्वं च। तत्र तयोर्मध्ये यत् वामपार्श्वं तत् शुभपरिणामं भवति। तत्र च यत् दक्षिणपार्श्वं तद् दु खपरिणामं भवति। तथा 'आउसो' हे आयुष्मन्! अस्मिन् शरीरे षष्टि सधिशतं ज्ञातव्यं, तत्र सधयः-अङ्गुलाद्यस्थिखण्डमेलापकस्थानानि 'सत्तुरे' सप्तोत्तरं मर्मशतं भवति, तत्र—मर्माणि शङ्खानि कावियरकादीनि तिन्नि त्रीणि अस्थि दामशतानि हड्डमालाशतानि भवन्ति नवन्हारुयसयाइं' ति-स्नायूनाम् अस्थिबन्धनशिराणां नव शतानि 'सत्त०' सप्त शिराशतानि-रसहराशतानि, पञ्च पेसीशतानि 'नव ध०' नव धमन्यो रसहनाडयः 'नव०' नवनवतिः रोमकूपे शतसहस्राणि रोम्णां-तनूरुहाणां कूपा इव कूपा रोमकूपाः, रोमरन्ध्राणीत्यर्थः तेषां नवनवतिर्लक्षा इति विना केशश्मश्रुभिः, केशश्मश्रुभिः सह पुनः सार्द्धास्तिस्रो रोमकूपकोट्यो भवन्ति मनुष्यशरीरे इति । अथ पूर्वोक्तानि शिरासप्तशतानि कथं भवन्ति इति सूत्रेणैवाह-'आयुसो०'! हे आयुष्मन्! शरीरे 'सट्ठि०' इह पुरुषशरीरे नाभिप्रभवाणि शिराणां रसहराणां सप्त शतानि भवन्ति, तत्र षष्ट्यधिकं शतं शिराणां नाभिप्रभवाणाम् ऊर्ध्वगामिनीनां शिरस्युपागतानां भवन्ति,यास्तु रसहरिण्य इत्युच्यन्ते 'जाणंसि'त्ति यासामूर्ध्वगामिनीनां शिराणां 'से' तस्य जीवस्य निरुपघातेनानुग्रहेण चक्षु १श्रोत्र२घ्राण३ जिह्वा४ बलं च भवति,यासां 'से' तस्य उपघातेन-विघातेन चक्षु श्रोत्रघ्राणजिह्वाबलमुपहन्यते। तथा 'आउसो'० हे आयुष्मन्! अस्मिन् शरीरे षष्ठ्यधिकं शतं१६०शिराणां नाभिप्रभवाणां,नाभेरुत्पन्नानामित्यर्थः।अधोगामिनीनां पादतले उपगतानां प्राप्तानां भवति यासां निरुपघातेन जङ्घाबलं भवति तासां चैव 'से' तस्य जीवस्य उपघातेन विकारप्राप्तेन शीर्षवेदना-सर्वमस्तकपीडा अर्द्धशीर्षवेदना मस्तकशूलं च भवति अ-च्छिणि, त्ति—अक्षिणी—लोचने 'अंधिज्जंति' त्ति—अन्धीभवत इत्यर्थः ।

आउसो! इमम्मि सरीरए सट्ठिसिरासयं नाभिप्पभवाणं तिरियगामिणीणं हत्थतलमुवगयाणं जाणं सि निरुवघाएणं बाहुबलं हवइ ताणं चेव से उवघाएणं पासवेयणा पुट्ठिवेयणा कुच्छिवेयणा कुच्छिसूलं हवइ। आउसो! इमस्स जंतुस्स सट्ठिसिरासयं नाभिप्पभवाणं अहोगामिणीणं गुदपविट्ठाणं जाणं सि निरुवघाएणं मुत्तपुरीसवाउकम्मं पवत्तइ ताणं चेव उवघाएणं मुत्तपुरीसवाउनिरोहेणं अरिसा खुब्भंति पंडुरोगो भवइ। आउसो! इमस्स जंतुस्स पणवीसं सिराओ पित्तधारिणीओ सिंभधारिणीओ दस सिराओ सुक्कधारिणीओ सत्त सिरासयाइं पुरिसस्स तीसूणाइं इत्थियाए वीसूणाइं पंडगस्स, आउसो! इमस्स जंतुस्स रुहिरस्स आढयं वसाए अद्धाढयं मत्थुलिंगस्स पत्थो मुत्तस्स आढयं पुरीसस्स पत्थो पित्तस्स कुडओ सिंभस्स कुडवो सुक्कस्स अद्धकुडवो जं जाहे दुट्ठं भवइ तं ताहे अइप्पमाणं भवइ, पंचकोट्ठे पुरिसे छक्कोट्ठा इत्थिया नवसोए पुरिसे इक्कारससोया इत्थीया, पंचपेसीसयाइं पुरिसस्स तीसूणाइं इत्थीयाए वीसूणाइं पंडगस्स। (सू० १६)

तथा 'आउसो०!' हे आयुष्मन् अस्मिन् प्रत्यक्षे शरीरे षष्ट्यधिकं शतं शिराणां नाभिप्रभवाणां तिर्यग्गामिनीनां हस्ततलं उपागतानां भवति यासां निरुपघातेन-निरुपद्रवेण बाहुबलं भवति, तासां चैव 'से' तस्य उपघातेन-उपद्रवेण पार्श्ववेदना पृष्ठिवेदना कुक्षिवेदना कुक्षिशूलं च भवति, तथा 'आउसो०' हे आयुष्मन्! अस्य जन्तोः षष्ट्यधिकं शतं

शिराणां नाभिप्रभवाणाम् अधोगामिनीनां गुदं प्रविष्टानां भवति, यासां निरुपघातेनोपद्रवाभावेन मूत्रपुरीषवातकर्म्म प्रश्रवणकर्म्म विष्ठाकर्म्म वायुकर्म्म प्रवर्त्तते,मूत्रादिकं सुखेन कर्तुं शक्यत इत्यर्थः , तासां चैव गुदप्रविष्टशिराणामुपघातेन मूत्रपुरीषवातनिरोधो भवति, निरोधेन अर्शांसि गुदाङ्कुरा'ह्वरस' इति लोकोक्तिः क्षुभ्यन्ति-क्षोभं यान्ति;परमपीडाकरं रुधिरं मुञ्चन्तीत्यर्थः भवभावनोक्तकालर्पिवत् पाण्डुरोगश्च भवति, तथा 'आउसो०' हे आयुष्मन् ! अस्य जन्तोः पञ्चविंशतिः शिराः 'सिंभधारिणि' त्ति-श्लेष्मधारिण्यो भवन्ति, 'पंच०'पञ्चविंशतिं शिराः पित्तधारिण्य , दश शिराः शुक्रधारिण्य , 'सत्त सि०' पुरुषस्योक्तप्रकारेण सप्तशिराशतानि भवन्ति. कथं ? शरीरे ऊर्ध्वे गामिन्य १६० अधोगामिन्य १६० तिर्यग्गामिन्य. १६० अधोगामिन्यो गुदप्रविष्टाः १६० श्लेष्मधारिण्य. २५ पित्तधारिण्यः २५ शुक्रधारिण्य १० एव सर्वा ७०० शिरा भवन्ति पुरुषाणां शरीरे इति । 'तीसू० ' पुरुषोक्ता यास्ता त्रिंशदूना. स्त्रिया भवन्ति; सप्तत्यधिकानि षट्शतानि भवन्तीत्यर्थः ६७० 'वीसू०' पुरुषोक्ता यास्ता विंशत्यूना. पण्डकस्य, अशीत्यधिकानि षट्शतानि भवन्तीत्यर्थः ६८० ॥ अथ शरीरे रुधिरादिमानमाह-' आउ० ' हे आयुष्मन् ! अस्य जन्तोः रुधिरस्याढकं भवति, वसाया अर्द्धाढकं,'मत्थुलिंगस्स' त्ति-मस्तकभेजकस्य फिप्फिसादेर्वा प्रस्थः मूत्रस्याढकं पुरीषस्य प्रस्थः पित्तस्य कुडवः श्लेष्मणः कुडवः शुक्रस्यार्द्धकुडवो भवति; एतच्चाढकप्रस्थादिमानं बालकुमारतरुणादीनाम् ' दो असईओ पसई, दो पसईओ य सेइया होइ,चत्तारि सेइयाओ कुलओ चत्तारि कुलआ पत्थो चत्तारि पत्था आढगं इत्यात्मीयात्मीयहस्तेनानेनव्यमिति.'जं जाहे०'यत् रुधिरादिकं यदा दुष्टं भवति तत्तदाऽतिप्रमाणं भवति । अयमाशयः —उत्क्रमानस्य शुक्रशोणितादेर्हीनाधिक्यं स्यात्तत्त्व वातादिदूषणत्वेनावसेयमिति । 'पंच०'पञ्च कोष्ठः पुरुषः ,पुरुषस्य पञ्च कोष्ठका भवन्तीत्यर्थः, षट्कोष्ठा स्त्री, कोष्ठकस्वरूपं सम्प्रदायादवगन्तव्यमिति । नव श्रोत्रे पुरुषे तत्र कर्णद्वयं२चक्षुर्द्वयं२ घ्राणद्वयं२ मुखं७ पायू८ पस्थं९ लक्षणेन पुरुषः स्यात् । एकादशश्रोत्रा स्त्री भवति पूर्वोक्तानि नव स्तनद्वययुक्तानि एकादश श्रोत्राणि स्त्रीणां भवन्तीति एतन्मानुषीणामुक्तं गवादीनां तु चतुस्तनीनां त्रयोदश १३शूकर्यादीनामष्टस्तनीनां सप्तदश निर्व्याघाते, एवं व्याघाते पुनरेकस्तन्या अजाया दशे० त्रिस्तन्याश्च गोर्द्वादशेति, "पंच०' पुरुषस्य पञ्चपेशीशतानि भवन्ति ५०० त्रिंशदूनानि स्त्रियाः ४७० विंशत्यूनानि पञ्चपेशीशतानि नपुंसकस्य ४८०। उक्तं शरीरस्वरूपम् ।

( २५ ) अथास्यैवासुन्दरत्वं दर्शयन्नाह—

अब्भिंतरंसि कुणिमं, जो परियत्तेउ बाहिरं कुज्जा ।
तं असुइं दट्ठूणं, सया वि जणणी दुगुंछिज्जा ॥१॥(८३)

'अब्भितरसी'ति-शरीरमध्यप्रदेशे 'जो' त्ति-यत् कुणिमम्-अपवित्र मांस वर्त्तते तन्मांसं परियत्तेउ' त्ति-परावर्त्य पराधर्नं कृत्वा यदि बहि:-बहिर्भागे कुर्यात् ;तदा तन्मांसम् 'असुइं ' अशुचि—अपवित्रं दृष्ट्वा स्वका अपि—आत्मीया अपि अन्या, आस्तां स्वजननी-स्वाम्बा,' दुगुंछिज्ज' त्ति—जुगुप्सां कुर्यात् हा ! किं मयाऽपवित्रं दृष्टमिति ।

माणुस्सयं सरीरं, पूइयमं मंससुक्कहड्डेणं ।
परिसंठवियं सोहइ,अच्छायणगंधमल्लेणं ॥२॥ (८४)

' माणुस्सयं ' मानुष्यकं—मनुष्यसंबन्धि शरीरं-वपुः 'पूइयमं' ति-पूतिमत् , अपवित्रमित्यर्थः । ' परि० ' परि-समन्तात् सर्वत्र सम्यग् स्थापितं-रचितं केन मांसशुक्रहड्डेन हड्डं देश्यमस्थियाचीति ' परिसंठवियं' ति-विभूषितं सत् ' सोहइ ' इति—शोभते , केन आच्छादनगन्धमाल्येन-तत्राच्छादनं-वस्त्रादि गन्धः-कर्पूरादि माल्यं-पुष्पमालादि ।

इमं चेव य सरीरं सीसघडीमेयमज्जमंसट्ठियमत्थुलुंगसोणियवालुंडयचम्मकोसनासियसिंघाणयधीमलालयं अमणुन्नगं सीसघडीभंजियं गलतनयणं कन्नुट्ठगंडतालुयं अवालुयाखिल्लचिक्कणं चिलिचिलियं दंतमलमइलं बीभच्छदरिसणिज्जं असलगबाहुलगअंगुली अंगुट्ठगनहसंधिसंघायसंधियमिणं बहुरसियागारं नालखंधच्छिराअणेगण्हारुबहुधमणिसंधिनद्धं पागडउदरकवालं कक्खनिक्खुडं कक्खगकलियं दुरंतं अट्ठिधमणिसंताणसंतयं सव्वओ समंता परिसवंतं च रोमकूवेहिं सयं असुइं सभावओ परमदुग्गंधि कालिज्जयअंतपित्तजरहिययफोप्फसफेफसपिलिहोदरगुज्झकुणिमनवच्छिड्डधिविधिवंतहियियं दुरहिपित्तसिंभमुत्तोसहाययणं सव्वओ दुरंतं गुज्झोरुजाणुजंघापायसंघायसंधियं असुइ कुणिमगंधिं , एवं चिंतिज्जमाणं बीभच्छदरिसणिज्जं अधुवं अनिययं असासयं सडणपडणविद्धंसणधम्मं पच्छा य पुरा व अवस्स चइयव्वं निच्छयओ सुट्ठु जाणएणं आइनिहणं एरिसं सव्वमणुयाण देहं एस परमत्थओ सभावो । ( सू०-१७ )

'इमं चेव य'इत्यादि गद्यम् इदमेव च मनुजशरीर-वपुः शीर्षघटीव मस्तकहड्डु मेदश्च अस्थिकृत् चतुर्थो धातुरित्यर्थः । मज्जा च शुक्रकर. षष्ठो धातुरित्यर्थः , मांसं च पललं तृतीयो धातुरित्यर्थः अस्थि च कल्पं पञ्चमो धातुरित्यर्थः , मस्तुलुङ्गश्च मस्तकस्नेहः शोणितं च रुधिरं द्वितीयो धातुरित्यर्थः; वालुण्डकश्च अन्तरशरीरावयवविशेषः चर्म्मकोशश्च छविकाशः नासिकासिङ्घाणश्च घ्राणमलविशेषः धिग्मलं च अन्यदपि शरीरोद्भवं निन्द्यमलं तानि तथामालयं गृहमित्यर्थः ;अमनोज्ञकं मनोज्ञभाववर्जितं शीर्षघटीकरोटिका तया भञ्जितम्—आक्रान्तमित्यर्थः , गलन्नयने यत्र तद् गलन्नयनं कर्णौष्ठगण्डतालुकम् 'अवालुया इति-लोकोक्त्या अवालुखिल्लश्च ' खील ' इति जनोक्तिः ताभ्यां चिक्कणं पिच्छिलमित्यर्थः , ' चिलिचिलियमि ' ति-चिगचिगायमानं घर्मावस्थादौ दन्तानां मलं दन्तमलं तेन ' मइलं ' त्ति—मलिनं मलीमसमित्यर्थः , बीभत्सं-भयंकरं दर्शनमाकृतिरवलोक-

म वा रोगादिना कृशावस्थाया यस्य वपुषस्तद् बीभत्स-दर्शनम् ' अंसलग ' त्ति—अंसयोः स्कन्धयोः 'बाहुलग' त्ति दाहोर्भुजयोः अङ्गुलीना-करशाखानाम् ' अङ्गुट्ठग' त्ति-अ ङ्गुष्ठयोरङ्गुलयोर्नखाना महाराजाना य संधयस्तेषा सघातेन समूहेन सन्धितमिदं वपु ,'बहु०' बहुरसिकागारम् 'नालख०' नालेन स्कन्धशिराभि.-अंसधमनीभि.'अरोगण्हारु त्ति-अन कस्नायुभि अस्थिबन्धनशिराभि' बहुधमनिभिरनेकशिराभिः संधिभिरस्थिमेलापकस्थानैश्च, ' नद्ध ' ति-नियन्त्रितं प्रकट सर्वजनदृश्यमानम् उदरकपालं जठरकडहल्लक यत्र तत् प्रव टोदरकपालं कक्षैव दार्मूलमेव निष्कुटम्—कोटरं जीर्ण-शुष्कवृक्षवद् यत्र तत्कक्षनिष्कुट कक्षाया गच्छन्तीति कक्षागा अधिकारात्तद्वनकुत्सितवालास्तै. कलितं सदा स—हितं कक्षागकलितम् , यद्वा-कक्षायां भवाः कक्षकास्तद्वत्केशलतास्ताभि कलितं, ' दुरतं ' ति-दुष्टोऽन्तो विनाश प्रान्ता वा यस्स तद् दुरन्तं दुष्पूर वा अस्थिधमन्यो सन्तानेन परपरया ' संतयं ' ति-व्याप्त यत्तदस्थिधमनिसन्तानसन्ततं,सर्वन -सर्वप्रकारै समन्तत -सर्वत्र रोमकूपै -रोमरन्ध्रै परिश्रवत् गलगलत् सर्वत्र सच्छिद्रघटवत् चशब्दादन्यैरपि नासिकादिरन्ध्रै परिश्रवत् , ' सयं ' ति-स्वयमेव अशुचि-अपवित्रं ' सभावउ' त्ति-स्वभावेन परमदुष्टगन्धीति 'कलिज्जयअंतपित्तजरहिययफोप्फसफेफसपिलिह ' त्ति-प्लीहा-गुल्म ' उदर ' त्ति—जलोदर गुह्यकुणिमं मांसं-नवछिद्राणि यत्र तत्तथा(थि)धिवि थि)धिवत त्ति-द्रिगद्रिगायमान हियय' त्ति—हृदय यत्र तत्,परम-यावत् हृदयं,नव छिद्राणि तु-न यनद्वयकर्णद्वयनासिकाद्वयजिह्वाशिश्नापानलक्षणानि'दुरहि' त्ति-दुर्गन्धाना पित्तसिम्भमूत्रलक्षणानामौषधानामायतनगृहं सर्वौषधायननं रोगादावस्मिन् सर्वौषधप्रक्षेपात् ,सर्वत्र-सर्वभागे दुष्टोऽन्तो विनाश प्रान्तो यस्य तत् सर्वतो दुरन्तम् ' गुज्झो०' गुह्योरुजानुजङ्घापादसघातसंधितमुपस्थसकृथिन लकीलनलकिनीक्रमणपरस्परमीलनसमृद्धसीविनम् अशुचि-कुणिमस्य-अपवित्रमासस्य गन्धो यत्र तदशुचिकुणिमगन्धि, ' एवं चिं० ' एवम्—पूर्वोक्तप्रकारेण चिन्त्यमानं बीभत्स—दर्शनीय-भयंकररूपम् ' अधुव अनियय असासय चे ' ति-पदत्रयव्याख्या पूर्ववत् . ' सडण० ' शटनपतनविध्वंसनधर्मम् तत्र शटन कुष्ठादिनाऽङ्गुल्यादे , पतनं बाह्वादे खड्गछेदादिना विध्वमन सर्वथा क्षय एते धर्मा —स्वभावा यस्य तत्तथा 'पच्छा व पुरा व अवस्स चइयव्वं ' ति-पूर्ववत् ' निच्छ० ' निश्चयत सुष्ठु भृश त्वं ' जाण' त्ति—जानीहि एतन्मनुष्यशरीरम् ' आइनिहणं ' ति-आदिनिधनं सादिसान्तमित्यर्थ ईदृश पूर्ववर्णित वक्ष्यमाणं वा सर्वमनुजाना समस्तमनुष्याण देह —शरीरम् एष पूर्वोक्त. शरीरस्य परमार्थत.—तत्त्वत. स्वभाव ।

( २६ ) अथ विशेषत शरीरादे अशुभत्व दर्शयति—

सुक्कम्मि सोणियम्मि य ,
संभूओ जणणिकुच्छिमज्झम्मि ।
तं चेव अमिज्झरसं ,
नवमासे घुंटियं संतो ॥८५ ॥

'सुक्कम्मि ' इत्यादि ' सुक्क० ' जननीकुक्षिमध्ये-मातृजठरान्तरे शुक्रे वीर्ये शोणिते लोहिते चशब्दादेकत्र मिलिते सति प्रथम संभूतः उत्पन्नः तदेवामध्यरस—विष्टारसं ' घुटियं ' ति-पिबन् सन् नव मासान् यावत् स्थित इति।

जोणीमुहनिप्फिडिओ, थणगच्छीरेण वड्ढिओ जाओ ।
पगई अमिज्झमइओ, कह देहो धोइउं सक्को ॥८६॥

योनिमुखनिष्फिटित -स्मरमन्दिरकुण्डनिर्गत. थणग' ति-प्राकृतत्वादनुस्वार स्तनकक्षीरेण वर्द्धित -पयोधरदुग्धेन वृद्धि गत प्रकृत्याऽमेध्यमयो जात., एवंविधो देह. कथं 'धोइउं' ति-धातुं-क्षालयितुं शक्य ? । तं० । ( शपवकृत्यता ' इत्थी ' शब्दे द्वितीयभाग ६०४ पृष्ठ गता । ) ' रसासृग्मांसमेदोऽस्थि-मज्जाशुक्रान्त्रवर्चसाम् । अशुचीनां पदं-काय , शुचित्वं तस्य तत् कुत. ॥ १ ॥ अष्ट १६ अष्ट० ।

नारकादिशरीराणि बीभत्सान्युदाराणि च दृष्टापि न केवलदर्शन स्कम्भातीति शरीरप्ररूपणाय ' नेरइयाण ' मि—त्यादिसूत्रप्रपञ्च —

णेरइयाणं सरीरगा पंचवण्णा पंचरसा पण्णत्ता , तं जहा—किण्हा० जाव सुक्किल्ला, तित्ता० जाव मधुरा, एवं निरंतरं० जाव वेमाणियाणं । सू० (३९५×)

'णेरइयाण' मित्यादि, कण्ठ्य नवरं पञ्चवर्णत्वं नारकादि-वैमानिकान्ताना शरीराणा निश्चयनयात् , व्यवहारतस्तु एकवर्णप्राचुर्यात् कृष्णादिप्रतिनियतवर्णनैवेति ' ०जाव सुक्किल्ल' त्ति किण्हा नीला लोहिया हालिद्दा सुक्किल्ला य० जाव महुर ' त्ति 'तित्ता कडुया कसाया अंबिला महुरा ०जाव वेमाणियाणं ' ति । चतुर्विंशतिदण्डकसूत्राणि । स्था० ५ ठा० १ उ० ।

( २७ ) शरीराणा वर्णादि—

ओरालियसरीरे पंचवन्ने पंचरसे पण्णत्ते , तं जहा—किण्हे० जाव सुकिल्ले, तित्ते० जाव महुरे एवं० जाव कम्मगसरीर सव्वे वि णं बादरबोंदिधरा कलेवरा पंचवण्णा पंचरसा दुगंधा अट्ठफासा । ( सू० ३९५+ )

तथा सर्वाण्यपि बादरबोन्दिधराणि पर्याप्तकत्वेन स्थूराकारधारीणि कलेवराणि शरीराणि मनुष्यादीनां पञ्चादिवर्णादीन्यवयवभेदेनेति अक्षिगोलकादिषु तथैवोपलब्धे ।'दो गंध त्ति सुरभिदुरभिभेदात् ।'अट्ठफास'त्ति-कठिनमृदुशीतोष्णगुरुलघुस्निग्धरूक्षभेदादिति, अबादरबोन्दिधराण तु न नियतवर्णादिव्यपदेशयानि , अपर्याप्तत्वेनावयवविभागाभावादिति । स्था० ५ ठा० १ उ० । ( कस्मादौदारिकाद् शरीरात्कति क्रिया इति'किरिया ' शब्दे तृतीयभागे ५३६ पृष्ठे गतम् । ) " पाणीयसत्थगिसमंहि च देहतरसकमणं करेइ जीवो मुहुत्तेण । " महा० ६ अ०।( ओदनादयो वनस्पतयोऽग्निकायत्वेन वक्तव्या स्युरिति 'अगणिजीवसरीर' शब्दे प्रथमभागे १५६ पृष्ठे गतम् । ) (निर्ग्रन्थाना शरीरद्वारम् 'णियंठ' शब्दे चतुर्थभागे २०२६ पृष्ठे गतम् । ) ('सम' शब्देऽस्मिन्नेव भागे ३६३ पृष्ठे नैरयिकादय समाहारा समशरीरा इत्युक्रम । ) ( पृथिवीकायस्य सूक्ष्मबादरशरीराणि 'पुढवी-

काइय' शब्दे पञ्चमभागे उक्तानि । ) "शरीर धर्मसंयुक्तं, रक्षणीयं प्रयत्नतः । शरीराच्छ्रवते धर्मः, पर्वतात्सलिलं यथा ॥ १ ॥" इति शरीरस्य धर्मोपग्राहिता । स्था० ५ ठा० ३ उ० । सूत्र० । ध० । आचा० । ( शरीराश्रयेण जीवभेद 'जीव' शब्दे चतुर्थभागे १५२४ पृष्ठे उक्तः । )

( २८ ) आत्मा शरीरं स्पृष्ट्वा निर्याति निर्जरणे च कर्मणो देशत सर्वथा वा भवान्तरं सिद्धौ वा गच्छतः शरीरान्निर्याणं भवतीति सूत्रपञ्चकेन तदाह—

**दोहिं ठाणेहिं आता सरीरं फुसित्ता णं णिज्जाति, तं जहा–देसेण वि आता सरीरं फुसित्ता णं णिज्जाति, सव्वेण वि आया सरीरगं फुसित्ता णं णिज्जाति एवं फुरित्ता, एवं फुडित्ता,एवं संवट्टतित्ता,एवं निव्वट्टतित्ता। (सू०६७)**

'दोहीं' त्यादिकं कण्ठ्य. नवरं द्वाभ्यां प्रकाराभ्यां'देसेण–वि'त्ति—देशेनापि कतिपयप्रदेशलक्षणेन केषाञ्चित्प्रदेशानां मिलिकागत्योत्पादस्थानं गच्छता जीवेन शरीराद्बहि क्षिप्तत्वात्, आत्मा-जीव,—शरीर-देहं स्पृष्ट्वा—श्लिष्ट्वा निर्याति शरीरान्मरणकाले नि सरतीति, 'सव्वेण वि' त्ति-सर्वेण-सर्वात्मना सर्वैर्जीवप्रदेशै कन्दुकगत्योत्पादस्थानं गच्छता शरीराद् बहि प्रदेशानामप्रक्षिप्तत्वादिति, अथवा-देशेनापि-देशतोऽप्यपिशब्द सर्वेणापीत्यपेक्ष, आत्मा-शरीरं कोऽर्थ ? शरीरदेश पादादिकं स्पृष्ट्वाऽवयवान्तरेभ्य प्रदेशसंहारान्निर्याति, स च संसारी, 'सर्वेणापि' सर्वतयाऽपि, अपिर्देशेनापीत्यपेक्ष, सर्वमपि शरीरं स्पृष्ट्वा निर्यातीति भाव, स च सिद्ध, वदयन्ति च—'पायणिज्जाण णिरएसु उववज्जंती' त्यादि.यावत्' सव्वंगणिज्ज.सिद्धेसु'त्ति—आत्मना शरीरस्य स्पर्शने सति स्फुरणं भवतीत्यत उच्यते-'एव'मित्यादि 'एवमिति—दोहिं ठाणेहीं त्याद्यभिलापसंसूचनार्थ ,तत्र देशेनापि कियद्भिरप्यात्मप्रदेशैर्गिलिकागतिकाले 'सव्वेण वि'त्तिसर्वैरपि गन्दुकगतिकाले शरीरं 'फुरित्ता णं' ति—स्फोरयित्वा सस्पन्दं कृत्वा.नियाति, अथवा—शरीरकं देशत शरीरदेशमित्यर्थ , स्फोरयित्वा पादादिनिर्याणकाले,सर्वत -सर्वं शरीरं स्फोरयित्वा सर्वाङ्गनिर्याणावसर इति । स्फोरणा च सात्मकत्वे स्फुट भवतीत्याह-'एव'मित्यादि, 'एव' मिति—तथैव देशेन-आत्मदेशेन शरीरकं 'फुडित्ता णं'ति-सचेतनया स्फुरणलिङ्गेन स्फुटं कृत्वा इलिकागतौ, सर्वेण सर्वात्मना स्फुटं कृत्वा गन्दुकगतावित्ति । अथवा—शरीरक देशत —सात्मकतया स्फुटं कृत्वा पादादिना निर्याणकाले-सर्वत. सर्वाङ्गनिर्याणप्रस्ताव इति । अथवा—' फुडित्ता ' स्फाटयित्वा विशीर्णं कृत्वा. तत्र देशतोऽक्ष्यादिविघातेन. सर्वत सर्वविशरणेन देवदीपादिजीववदिति । शरीरं सात्मकतया स्फुटीकुर्वंस्तत्संवर्त्तनमपि कश्चित्करोतीत्याह-'एव ' मित्यादि 'एव ' मिति-तथैव ' संवट्टइत्ता णं' ति-सवर्त्य-सङ्कोच्य शरीरकं देशेनेलिकागतौ शरीरस्थितप्रदेशै , सर्वेण सर्वात्मना गन्दुकगतौ सर्वात्मप्रदेशाना शरीरस्थितत्वान्निर्यातीति । अथवा-शरीरकं शरीरिणमुपचाराद्दण्डयोगाद्दण्डपुरुषवत्, तत्र देशत. संवर्चनं संसारिणो म्रियमाणस्यं पादादिगतजीवप्रदेशसंहारात्, सर्वतस्तु निर्वाणं गन्तुरिति । अथवा-शरीरक देशेन संवर्त्य-हस्तादिसङ्कोचनेन, सर्वत सर्वशरीरसङ्कोचनेन पिपीलिकादिवदिति आत्मनश्च संवर्त्तनं कुर्वन् शरीरस्य निवर्त्तनं करोतीत्याह-एवं 'निव्वट्टयित्ता णं' ति-तथैव निवर्त्य-जीवप्रदेशेभ्यः शरीरकं पृथक्कृत्यत्यर्थ , तत्र देशेनेलिकागतौ, सर्वेण गेन्दुकगतौ । अथवा-देशेनः शरीरं निर्वर्त्यात्मन पादादिनिर्याणवान्, सर्वतः सर्वाङ्गनिर्याणवानिति । अथवा-पञ्चविधशरीरसमुदायापेक्षया देशतः शरीरम् औदारिकादि निवर्त्य तैजसकार्मणे त्वादायैव, तथा सर्वेण सर्वं शरीरसमुदायं निवर्त्य निर्याति, सिध्यतीत्यर्थः । स्था० २ ठा० ४ उ० ।

**पुव्विं पेयं पच्छा पेयं भिउरधम्मं विद्धंसणधम्मं अधुवं अणितियं असासयं चयोवइयं विपरिणामधम्मं पासह । ( सू० १४७ + )**

आचा० १ श्रु० ५ अ० २ उ० । ( इदं 'लोगसार' शब्दे षष्ठे भागे व्याकृतम् । ) " आत्मानं सर्वतो रक्षेत्, प्राहुर्धर्मविदो जना । यदिदं चैव शरीरं, धर्मस्याद्यं हि साधनम् ॥ १ ॥ जीवन् भद्राण्यवाप्नोति, जीवन् पुण्यं करोति च । मृतस्य देहनाशोऽस्ति, धर्म—व्युपरमस्तथा ॥२॥' संघा० १ अधि० १ प्रस्ता० । वर्त्तमानचतुर्विंशतितीर्थकृता 'पउमाऽऽभा वासुपुज्जा रत्ते' ति रक्तादिवर्णविभाग. किं शरीरेषु दृश्यमान उत ध्यानार्थं कल्पनामात्रमिति प्रश्न ?,अत्रोत्तरम्-एतद्गाथोक्तवर्णविभागस्तीर्थकृता शरीरगतो ज्ञेय इति ॥ ३४६ ॥ सेन० ३ उल्ला० ।

**सरीरकाय**–शरीरकाय–पुं० । कायभेदे, आव० १ अ०। ( स च 'काय' शब्दे तृतीयभागे ४४५ पृष्ठे औदारिकादिभेदात्पञ्चधोक्त । )

**सरीरग**–शरीरक–न० । शरीरमेव शरीरकं स्वार्थे कः । आत्मनो भोगायतने, स्था० १ ठा० । ( पञ्चधा शरीराणि 'सरीर' शब्दे अस्मिन्नेव भागे उक्तानि । ) अनुकम्पितादिधर्मोपेते शरीरे, स्था० १ ठा० । भ० । अनु० ।

**सरीरजड्ड**–शरीरजड–पुं० । शरीरक्रियायामनिपुणे, व्य० १० उ० । आव० । भ० । अनु० । ( 'जड्ड' शब्दे चतुर्थभागे १३८६ पृष्ठेऽयं विस्तरेणोक्त । )

**सरीरणाम**–शरीरनामन्–न० । शरीरनिबन्धने नामकर्मभेदे, यदुदयादौदारिकादिशरीरं करोति । तच्च पञ्चधा औदारिकवैक्रियाहारकतैजसकार्मणशरीरभेदात् । प्रव० २१६ द्वार । श्रा० । कर्म० । स० । शरीरपर्याप्त्यैव सिद्ध, स० । ( एतत्प्रयोजनं 'णामकम्म' शब्दे चतुर्थभागे १९९९ पृष्ठे उक्तम् । )

**सरीरणिव्वत्ति**–शरीरनिर्वृत्ति–स्त्री० । औदारिकादिपञ्चविधशरीरनिष्पत्तौ, भ० १६ श० ८ उ० । ( चतुर्थभागे २१२० पृष्ठे उक्तैषा । )

**सरीरथामावहारविजढ**–शरीरस्थामापहाररहित–त्रि० । शरीरस्य स्थाम-प्राणस्तथाऽपहारोऽपलपन तेन विजढो-रहितः शरीर स्थामापहाररहितः । दैहिकबलवियुक्ते, व्य०३ उ० ।

**सरीरदोब्बल्ल**–शरीरदौर्बल्य–न० । वपुषो दौर्बल्यं, दर्श० ३ तत्त्व ।

सरीरदोस-शरीरदोष-पुं०। ज्वरशूलादिभिः शरीरदौष्ट्ये, द्वा० २७ द्वा०।

सरीरपओगबंध-शरीरप्रयोगबन्ध-पुं०। औदारिकादिशरीराणां वीर्यान्तरायक्षयोपशमादिजनितव्यापारेण शरीरपुद्गलोपादाने 'शरीरप्रयोगस्य बन्धे च। भ० ८ श० ६ उ०।

सरीरपच्चक्खाण-शरीरप्रत्याख्यान-न०। शरीरस्याभिष्वङ्गपरिवर्जनप्रतिज्ञाने, भ० १७ श० ३ उ०। प्रस्तावे समागते शरीरस्यापि व्युत्सर्जने, उत्त०।

सरीरपच्चक्खाणेणं भंते! जीवे किं जणयइ?, सरीरपच्चक्खाणेणं सिद्धाइं मयगुणत्तं निव्वत्तेइ। सिद्धाइमयगुणसंपन्नेणं जीवे लोगग्गमुवगए परमसुही भवइ ॥ ३८ ॥

हे भगवान्! शरीरप्रत्याख्यानेन-शरीरव्युत्सर्जनेन जीवः किं लाभं जनयति?, गुरुराह-शरीरप्रत्याख्यानेन सिद्धातिशयगुणत्वं निर्वर्त्तयति-कोऽर्थः? सिद्धानां ये अतिशयगुणाः-सर्वोत्कृष्टगुणास्तेषां भावः सिद्धातिशयगुणत्वं यतो हि सिद्धा न नीला न लोहिताः न हारिद्रा न शुक्ला इत्यादयः एकत्रिंशद्गुणास्तद्भावं प्राप्नोतीत्यर्थः, प्राप्तसिद्धातिशयगुणो जीवो लोकाग्रं मोक्षमुपगतः सन् सुखी भवति। यद्यपि योगप्रत्याख्यानेन शरीरप्रत्याख्यानं समागतं तथापि मनोवाक्कायोगशरीरस्य प्राधान्यख्यापनार्थं पृथक् उपादानम्। उत्त० २९ अ०। (एतत्फलम् 'मरण' शब्दे षष्ठभागे ११ पृष्ठे विस्पष्टीकृतम्।)

सरीरपज्जत्ति-शरीरपर्याप्ति-स्त्री०। यया शीतीभूतमाहारं रसासृग्मांसमेदोऽस्थिमज्जाशुक्रलक्षणसप्तधातुरूपतया परिणमयति, प्रव० २३१ द्वार। प्रज्ञा०। कर्म०। पं० सं०। न०।

सरीरबंध-शरीरबन्ध-पुं०। समुद्घाते सति विस्तारितसङ्कोचितजीवप्रदेशसम्बन्धविशेषवशात्तैजसादिशरीरप्रदेशानां बन्धविशेषे, भ० ८ श० ६ उ०।

सरीरबन्धणाम-शरीरबन्धनामन्-न०। औदारिकशरीरपुद्गलानां पूर्वबद्धानां बध्यमानानां च सम्बन्धकारणे नामकर्मभेदे, स० ४२ सम।

सरीरभेय-शरीरभेद-पुं०। शरीरस्य-भेदो विनाशः। (तस्मिन्) शरीरविनाशे, उत्त० ३६ अ०। आचा०।

सरीरवक्कंति-शरीरव्युत्क्रान्ति-स्त्री०। दिव्यशरीरत्यागे, "भववक्कंतीए सरीरवक्कंतीए कुच्छिंसि गब्भत्ताए वक्कंते" कल्प० १ अधि० १ क्षण।

सरीरवग्गणा-शरीरवर्गणा-स्त्री०। औदारिकादिशरीरप्रायोग्यवर्गणायाम्, प० सं० ५ द्वार। ('वग्गणा' शब्दे षष्ठभागे साऽदर्शि।)

सरीरविउस्सग्ग-शरीरव्युत्सर्ग-पुं०। नारकायुष्कादिहेतूनां मिथ्यादृष्टित्वादीनां त्यागे, औ०।

सरीरवोच्छेयण-शरीरव्यवच्छेदन-न०। देहत्यागे, स्था० ६ ठा० ३ उ०।

सरीरसंघायण-शरीरसंघातन-न०। औदारिकादिशरीरपुद्गलानां गृहीतानां शरीररचनायाम्, स० ४२ सम०।

सरीरसंपया-शरीरसंपद्-स्त्री०। विशिष्टशरीरतारूपे गणिसंपद्भेदे, स्था० ८ ठा० ३ उ०। ('गणिसंपया' शब्दे तृतीयभागे ८२६ पृष्ठे गता वक्तव्यता।)

सरीरसक्कार-शरीरसत्कार-पुं०। देहविभूषायाम्, पञ्चा० ६ विव०।

सरीरसक्कारपोसह-शरीरसत्कारपौषध-पुं०। देशतः शरीरसत्कारस्यैकतरस्याकरणे, सर्वतस्तु सर्वस्यापि तस्याकरणे, ध० २ अधि०। आव०।

सरीरसक्कारसंगय-शरीरसत्कारसङ्गत-त्रि०। देहविभूषानुगते, पञ्चा० ६ विव०।

सरीराणुगय-शरीरानुगत-त्रि०। व्यजनादिजन्ये शरीराश्रये वायुकाये स्था० ५ ठा० ३ उ०।

सरीरि-शरीरिन्-पुं०। शरीरमस्यास्तीति शरीरी। संसारिजीवभेदे, स्था० २ ठा० ४ उ०।

सरीरोगाहणा-शरीरावगाहना-स्त्री०। शरीराणामाधारभूतैकत्वे, स्था० ४ ठा० १ उ०। येषु प्रदेशेषु शरीरमवगाढम्। स०। भ०।

प्रकारान्तरेण पृथिवीकायिकावगाहनाप्रमाणमाह-

पुढविकाइयस्स णं भंते! केमहालिया सरीरोगाहणा पन्नत्ता?, गोयमा! से जहानामए रन्नो चाउरंतचक्कवट्टिस्स वन्नगपेसिया तरुणी बलवं जुगवं जुवाणी अप्पायंका वन्नओ०जाव निउणसिप्पोवगया नवरं चम्मेट्ठदुहणमुट्ठियसमाहयणिचियगत्तकाया न भण्णति सेसं तं चेव ०जाव निउणसिप्पोवगया तिक्खाए वइरामईए सण्हकरणीए तिक्खेणं वइरामएणं वट्टावरएणं एगं महं पुढविकाइयं जतुगोलासमाणं गहाय पडिसाहरिय २ पडिसंखिविय पडिसंखिविय ०जाव इणामेव त्ति कट्टु तिसत्तक्खुत्तो उप्पीसेज्जा तत्थ णं गोयमा! अत्थेगतिया पुढविकाइया आलिद्धा अत्थेगइया पुढविकाइया नो आलिद्धा अत्थेगइया संघट्टि (ट्टि) या अत्थेगइया नो संघट्टि (ट्टि)या अत्थेगइया परियाविया अत्थेगइया नो परियाविया अत्थेगइय उद्दविया अत्थेगइया नो उद्दविया अत्थेगइया पिट्ठा अत्थेगइया नो पिट्ठा, पुढविकाइयस्स णं गोयमा! एमहालिया सरीरोगाहणा पण्णत्ता। (सू०-६५३ ×)

'पुढवी' त्यादि, 'वन्नगपेसिय' त्ति चन्दनपेषिका तरुणीति प्रवर्द्धमानवयाः 'बलवं' ति सामर्थ्यवती 'जुगवं' ति सुषमदुष्षमादिविशिष्टकालवती 'जुवाणि' त्ति वयःप्राप्ता 'अप्पायंक' त्ति नीरोगा 'वन्नओ' त्ति अनेनेदं सूचितम्-'थिरग्गहत्था दढपाणिपायपिट्ठन्तरोरुपरिणया' इत्यादि, इह वर्णके 'चम्मेट्ठदुहण' इत्याद्यधीतं तदिह न वाच्यम्, एतस्य विशेषणस्य स्त्रिया असम्भवात्, अत एवाह-'चम्मेट्ठदुहणमुट्ठियसमाहयनिचियगत्तकाया न भन्नइ' त्ति, तत्र च चर्मेष्टकादीनि व्यायामक्रियायामुपकरणानि तैः स-

माहतानि व्यायामेप्रवृत्तावेव एव निचितानि च—घनीभूतानि गात्राणि—अङ्गानि यत्र स तथा; तथाविधः कायो यस्याः सा तथेति; 'तिक्खाए' त्ति परुषायां 'वइरामईए' त्ति वज्रमयया सा हि नीरन्ध्रा कठिना च भवति 'सण्हकरणीए' त्ति श्लक्ष्णानि—चूर्णरूपाणि द्रव्याणि क्रियन्ते यस्या सा श्लक्ष्णकरणी—पर्पटशिला तस्यां 'वट्टावरएण' ति वर्त्तकवरेण—लोष्टकप्रधानेन 'पुढविकाइयं' ति पृथिवीकायिकसमुदयं 'जतुगोलासमाणं' ति डिम्भरूपक्रीडनकजतुगोलकप्रमाणं, नातिमहान्तमित्यर्थः, 'पडिसाहरिए'त्यादि इह प्रतिसंहरणं शिलाया शिलापुत्रकाच्च संक्षिप्य पिण्डीकरणं प्रतिसंक्षेपणं तु शिलायाः पतन संरक्षणम् । 'अत्थेगइय' त्ति सन्ति एके—केचन 'आलिद्ध' त्ति आदिग्धा शिलायां शिलापुत्रके वा लग्ना 'संघट्टिय' त्ति सङ्घर्षिता 'परिताविय' त्ति पीडिता 'उद्दविय' त्ति मारिता., कथम् ?, यत 'पिट्ठ' त्ति पिष्टा 'एमहालिय' त्ति एवं महनीति महती चानिमूहमेति भाव., यता विशिष्टायानपि पेषणसामग्र्या केचिन्न पिष्टा नैव च छुप्ता अपीति । 'अत्थेगइया संघट्टिय' त्ति प्रागुक्तम् । भ० १६श० ३उ० ।

सरीरोवहि-शरीरोपधि-पुं० । शरीररूपायामुपधौ, स्था० १ ठा० ।

सरीसिव-शरीसृप-पुं० । गोधादिषु भुजोरुभ्यां सर्पणशीलेषु तिर्यक्षु, ज्ञा० १ श्रु० १ अ० । आचा० । सूत्र० ।

सरूप-स्वरूप-त्रि० । आत्मरूपे, द्वा० ३१ अष्ट० । स्वभावे,पञ्चा० १६ विव० ।

सरूवि(ण्)-सरूपिन्-पुं० । सह रूपेण मूर्त्या वर्त्तत इति समासान्त इन्नत्यये सरूपी । संस्थानवर्णादिमति सशरीरे जीवे, स्था० २ ठा० १ उ० । भ० ।

सरोरुह-सरोरुह-कमले, "सरोरुहं पुंडरीअं" पाइ० ना० १० गाथा ।

सरोस-सरोष-त्रि० । क्रुद्धे, सूत्र० १ श्रु० ५ अ० २ उ० ।

सलक्खण-स्वलक्षण-न० । लक्ष्यते तदन्यव्यपोहेनावधार्यते वस्त्वनेनेति लक्षणम् । स्वञ्च तल्लक्षणं च स्वलक्षणम् । असाधारणधर्मे, यथा जीवस्योपयोग., यथा वा प्रमाणस्य स्वपरावभासकज्ञानत्वम् । स्था० १० ठा० ३ उ० ।

सलक्खण-पुं० । लक्षणज्ञ कवौ, दश० २ अ० ।

सलक्खणकारणहेउदोस-स्वलक्षणकारणहेतुदोष-पुं० । हेतुदोषविशेषे, स्था० ।

सलक्खणकारणहेउदोसे । ( सू० ७३ × )

तथा लक्ष्यते तदन्यव्यपोहेनावधार्यते वस्त्वनेनेति लक्षणम्, स्वं च तल्लक्षणं च स्वलक्षणं यथा जीवस्योपयोगो यथा वा प्रमाणस्य स्वपरावभासकज्ञानत्वम् ५, तथा करोति कारणं परोक्षार्थनिर्णयनिमित्तमुपपत्तिमात्रं यथा निरुपमसुख. सिद्धो ज्ञानानाबाधप्रकर्षात्, नात्र किल सकललोकप्रतीत साध्यसाधनधर्मानुगतो दृष्टान्तोऽस्तीत्युपपत्तिमात्रता. दृष्टान्तसद्भावेऽस्यैव हेतुव्यपदेश स्यात् । तथा—हिनोति गमयतीति हेतुः साध्यसद्भावभावतदभावाभावलक्षण. , ततश्च स्वलक्षणादीनां द्वन्द्वः, तेषां दोषः, स्वलक्षणकारणहेतुदोषः । इह कारणशब्दः छन्दोऽर्थ द्विविद्यो ध्येयः । अथवा—सह लक्षणेन यो कारणहेतु तयोर्दोष इति विग्रहः । तत्र लक्षणदोषोऽव्याप्तिरतिव्याप्तिर्वा, तत्राव्याप्तिर्यथा-यस्यार्थस्य सन्निधानासन्निधानाभ्यां ज्ञानप्रतिभासभेदस्तत्स्वलक्षणमिति इदं स्वलक्षणलक्षणम्, इद चेन्द्रियप्रत्यक्षमेवाश्रित्य स्यात् न योगिज्ञानम्; योगिज्ञाने हि न सन्निधानासन्निधानाभ्यां प्रतिभासभेदोऽस्तीत्यनस्तदपेक्षया न किञ्चित्स्वलक्षणं स्यादिति । अतिव्याप्तिर्यथा अर्थोपलब्धिहेतु प्रमाणमिति प्रमाणलक्षणम्, इह चार्थोपलब्धिहेतुभूतानां चक्षुर्दध्योदनभोजनादीनामानन्त्येन प्रमाणप्रसक्ता न स्यात् । अथवा-दार्ष्टान्तिकोऽर्थो लक्ष्यतेऽनेनेति लक्षणं-दृष्टान्तस्तद्दोष.-साध्यविकलत्वादि , तत्र साध्यविकलता यथा-नित्य. शब्दो मूर्त्तत्वाद् ,घटवद् । इह घटे नित्यत्वं नास्तीति कारणदोषः । साध्यं प्रति तद्व्यभिचारो यथा-अपौरुषेयो वेदो वेदकारणस्याश्रूयमाणत्वादिति , अश्रूयमाणत्वं हि कारणान्तरादपि सम्भवतीति । हेतुदोषोऽसिद्धविरुद्धानैकान्तिकत्वलक्षण , तत्रासिद्धो यथाऽनित्य. शब्दश्चाक्षुषत्वाद् घटवदिति, अत्र हि चाक्षुषत्वं शब्दे न सिद्धं, विरुद्धो यथा-नित्य शब्द. कृतकत्वात् घटवद् , इह घटे कृतकत्वं नित्यत्वविरुद्धमनित्यत्वमेव साधयतीति, अनैकान्तिको यथा-नित्य शब्दः प्रमेयत्वादाकाशवद् । इह हि प्रमेयत्वमनित्येष्वपि वर्त्तते तत. सशय एवेति । स्था० १० ठा० ३ उ० ।

सलद्धिजोग-स्वलब्धियोग-पुं० । स्वकीयाया. प्राप्तेऽर्हे, ध० ।

अथ स्वलब्धियोग्यतामाह—

दीक्षावयःपरिणतो, धृतिमाननुवर्त्तकः ।
स्वलब्धियोग्यः पीठादि-ज्ञाता पिण्डैषणादिवित् ॥१३६॥

दीक्षावयोभ्यां परिणत. संप्राप्तस्थिरप्रव्रजित पूर्णपर्यायश्च स्यर्थ.। धृतिमान् संयमे सुस्थ अनुवर्त्तकः सर्वमनोऽनुवृत्तिकर्त्ता पीठादिज्ञाता कल्पपीठनिर्युक्तिज्ञाता पिण्डैषणादिवित् प्रतीतार्थ. ईदृश स्वलब्धियोग्य. स्वस्य स्वकीया लब्धि.-प्राप्तिस्तस्या योग्य.-अर्हो भवति, पूर्वं गुरुपरीक्षिता वस्त्रादिलब्धिरासीत् इदानीं स्वयं वस्त्रादिपरीक्षितु योग्यो जात इति भाव. ।

अस्यैव विहारविधिमाह—

एषोऽपि गुरुणा सार्द्धं, विहरेद्वा, पृथग्गुरोः ।
तद्दत्तार्हपरीवारो-ऽन्यथा वा पूर्णकल्पभाक् ॥ १४० ॥

एषोऽपि--स्वलब्धिमान् आस्ता गुरुलब्धिपरतन्त्र इत्यपिशब्दार्थ , गुरुणा--स्वलब्ध्यनुज्ञाचार्येण सार्द्धम्-समा विहरेत्--ग्रामाद्ग्रामान्तरं गच्छेत् । अत्रापवादमाह-गुरो. पूर्वोक्ताद् वेति पक्षान्तरे पृथक् भिन्नतया विहरेत्, कीदृश सन्नित्याह-तद्दत्तार्हपरीवारस्तेन--गुरुणा दत्त—अर्पित अर्हो—योग्य परीवार —परिच्छदो यस्य स तथा, तत्रापवादमाह—अन्यथेति गुरुदत्तयोग्यपरिवाराभावे, वेति पक्षान्तरे , पूर्णकल्पभाक् पूर्णं—समासं कल्पं व्यवस्थाभेदं भजतीति तथा समासकल्पेन विहरतीत्यर्थः । ध० ३ अधि० ।

सलभ-शलभ-पुं० । पतङ्गे, स्था० ६ ठा० ३ उ० । आचा० ।

सलभपईववाइ(ण्)-शलभप्रदीपवादिन्-पुं० । वादिनि, शलभतुल्यान् कुर्वाते प्रदीपकल्प प्रतिवादिनि. यथैक पतङ्गमिन्द्रभूतिना सह गत' । कल्प० १ अधि० ६ क्षण ।

सललिय-सललित-न० । यत् स्वरघोलनाप्रकारेण ललतीव तत् सह ललितेनेति सललितम् । यदिवा-यत् श्रोत्रेन्द्रियस्य शब्दस्पर्शनमतीव सूक्ष्ममुत्पादयति सुकुमारमिव च प्रतिभासते तत् सललितम् । जी० ३ प्रति०४ अधि० । रा० । स माधुर्ये, ( त्रि० ) ओघ० । लालित्योपेते, औ० । सुप्रसन्नतोपेते, विपा० १ श्रु० २ अ० ।

सलह-शलभ-पुं० । पतङ्गे, पाइ० ना० २६२ गाथा ।

सलागा-शलाका-स्त्री० । नेत्रादौ ( नि० चू० १ उ० । सुवर्णरक्तद्रुघटिता सलागा । ग० २ अधि० । स० । नि० चू० । ) अञ्जनार्थवर्त्तौ, सूत्र० १ श्रु० ४ अ० २ उ० । शल्ये, 'पढमा सलागा पक्खिविज्जइ' प्रथमा शलाका-एक सर्षप प्रक्षिप्यते । अनु० । कस्यचिद् वस्तुनोऽनेकभेदज्ञापनार्थ कोष्ठकरेखासु २४ तीर्थकरा १२ चक्रिण ६ बलदेवा ६ वासुदेवा ६ प्रतिवासुदेवाश्चेति त्रय षष्टि शलाकापुरुषा । ती० २० कल्प ।

सलाघण-श्लाघन-न० । प्रशंसायाम्, 'उववूहण त्ति वा पसंस त्ति वा सद्धाजणण त्ति वा सलाघण त्ति वा पगट्ठा' नि० चू० १ उ० ।

सलाहा-श्लाघा-स्त्री० । "क्ष्मा-श्लाघा-रत्नेऽन्त्यव्यञ्जनात्" ॥ ८ । २ । १०१ ॥ इति लकारात् पूर्वोऽकार । प्रशंसायाम्, प्रा० २ पाद ।

सलाहणिज्ज-श्लाघनीय-त्रि० । श्लाघ्ये, प्रशस्ये, विपा० १ श्रु० ६ अ० ।

सलिंग-स्वलिङ्ग-न० । रजोहरणगोच्छकादिधारित्वे, श्रा० । रयहरणमुहपुत्तियापडिग्गहादिधारणं सलिंगं भण्णति । नि० चू० १ उ० ।

सलिंगसिद्ध-स्वलिङ्गसिद्ध-पुं० । स्वलिङ्गे-रजोहरणादिरूपे व्यवस्थिता सन्तो ये सिद्धास्ते स्वलिङ्गसिद्धा । नं० । प्रज्ञा० । द्रव्यलिङ्गं प्रतीत्य रजोहरणगोच्छकादिधारिषु सिद्धेषु, पा० । ध० ।

सलिल-सलिल-न० । उदके, सूत्र० १श्रु० १२ अ० । पाइ० ना० । जल, ज्ञा० १ श्रु० ४ अ० । पो० । प्रश्न० । दर्श० । औ० । 'लो ल" ॥ ८ । ४ । ३०८ ॥ इति पैशाच्यामपि लस्य ल एव । सलिलं । प्रा० ४ पाद ।

सलिलकुंड-सलिलाकुण्ड-न० । षष्ठीतत्पुरुष, गङ्गादिनदीनां प्रपातकुण्डेषु, प्रभवकुण्डेषु च । स्था० ।

सव्वे वि णं सलिलकुंडा दस जोयणाइं उव्वेहेणं पण्णत्ता । ( सू० ७७६× )

'सलिलकुंड' त्ति-सलिलानां-गङ्गादिनदीनां कुण्डानि-प्रपातकुण्डानि प्रभवकुण्डानि च सलिलाकुण्डानीति । स्था० १० ठा० ३ उ० ।



सलिलरासि-सलिलराशि-पुं० । समुद्रे, "रयणायरो सलिलरासि ।" पाइ० ना० ८ गाथा ।

सलिलविल-सलिलविल-न० । निर्झरे, भ० ७ श० ६ उ० ।

सलिला-सलिला-स्त्री० । गङ्गादिमहानदीषु, स० १३८ सम० । ( जम्बूद्वीपे यावत्य सलिलास्तावत्य. 'जम्बूदीव' शब्दे चतुर्थभागे १३७५ पृष्ठे दर्शिता. । )

सलिलावई-सलिलावती-स्त्री० । जम्बूद्वीपे मन्दरस्य पश्चिमे सीतोदाया महानद्या दक्षिणे चक्रवर्तिविजये, स्था०८ठा० ३ उ० । जम्बूद्वीपे अपरविदेहे सलिलावतीविजये वीतशोकायां राजधान्या महाबलाभिधानो राजा । स्था० ७ ठा० ३ उ० । ज्ञा० । आ० म० ।

सलिलुच्छय-सलिलोत्सव-पुं० । प्लाविते, "पव्वालिअं आउंवालिअं च सलिलुच्छयं जाण" पाइ० ना० ७८ गाथा ।

सलिलोद्गवासि-सलिलोदकवर्षि-पुं० । सलिला' शीतादिमहानद्यस्तासामिव यदुदक रसादिगुणसाधर्म्यात् तस्य वर्ष । महानदीजलकल्पे वृष्ट्युदके, 'दिव्वं सलिलोदगं वासं वासइ ।' भ० १५ श० ।

सलेस-सलेश्य-त्रि० । लेश्यया सहित. । संसारिणि, स्था० २ ठा० ४ उ० ।

सल्ल-शल्य-न० । शल्यते-बाध्यतेऽनेनेति शल्यम् । द्रव्यतस्तामरादौ, भावतो मायादौ, स्था० ।

तओ सल्ला पण्णत्ता, तं जहा-मायासल्ले णियाणसल्ले मिच्छादंसणसल्ले । ( सू० १४२× )

शल्यते-बाध्यते अनेनेति शल्य द्रव्यतस्तोमरादि, भावतस्तु इदं त्रिविध-माया-निकृति. सैव शल्यं मायाशल्यम्, एवं सर्वत्र नवरं नितरा दीयते-लूयत मोक्षफलमनिन्द्यब्रह्मचर्यादिसाध्यं कुशलकर्मकल्पतरुवनमनेन देवद्धर्यादिप्रार्थनपरिणामनिशितासिनेति निदान, मिथ्या-विपरीत दर्शन मिथ्यादर्शनमिति । स्था० ३ ठा० ३ उ० । ( 'मरण' शब्दे षष्ठ भागे १३६ पृष्ठे १४२ पृष्ठे च एतद्विस्तर उक्त । ) पापानुष्ठाने, तज्जनिते कर्मणि, सूत्र० १ श्रु० १५ अ० । उत्त० । अपराधलक्षणे मोक्षगमनव्याघातकारिजाते कर्मणि च । व्य० १ उ० ।

शल्यभेदा —

अत्थेगे गोयमा ! पाणी, जेरिसमवि कोडिं गए ।
ससल्ले चरती धम्मं, आयहियं नावबुज्झइ ॥ १६ ॥
ससल्लो जइ वि कट्ठुग्गं, घोरवीरं तवं चरे ।
दिव्वं वाससहस्सं पि, ततो वी तं तस्स निप्फलं ॥१६॥
सल्लं पि भन्नई पाव, जन्नालोइयनिंदियं ।
न गरहियं न पच्छित्तं, कयं जं जह य भाणियं ॥ १७ ॥
मायाडंभमकत्तव्व, महापच्छन्नपावया ।
अजयमाणायारं च, सल्लं कम्मट्ठमंगहो ॥ १८ ॥
असंजमं अहम्मं च, निसीलव्वतभावियं ।
सकलुससत्तमसुद्धी य, सुकयनासो तहेव य ॥ १९ ॥

दुग्गइगमणमणुत्तारं, दुक्खे सारीरमाणसे ।
अन्नोन्नच्छिन्ने य संसारे, विगोवणाया महंतिया ॥२०॥
केसिं विरूवरूवत्तं, दारिदं दोग्गइं गया ।
हाहा भूयं सवेयणया, पारेभूयं पि जीवियं ॥ २१ ॥
निग्घिणत्तं सकूरत्तं, निद्दयनिक्किमिया वि य ।
निल्लज्जं गूढदहियत्तं, वंकविवरीयचित्तया ॥ २२ ॥
रागदोसो य मोहो य, मिच्छत्तं घणचिक्कणं ।
संमग्गणासो य तहा, एगे संसित्तमेव य ॥ २३ ॥
आणाभंगमबोही य, ससल्लत्तं भवे भवे ।
एवमादी य सल्लस्स, नामे एगट्ठिए बहु ॥ २४ ॥
जेणं सल्लियहियस्स, एगस्सि बहु भवंतरे ।
सव्वंगोवंगसंधीओ, पसल्लंती पुणो पुणो ॥ २५ ॥
से य दुविहे समक्खाए, सल्ले सुहुमे य बायरे ।
एक्केक्के तिविहे णेए, घोरग्गुग्गतरे तहा ॥ २६ ॥
घोरा चउव्विहा माया, घोरग्गं माणसंजुयं ।
माया लोभे य कोहे य, घोरग्गुग्गतरे मुणे ॥ २७ ॥
सुहुमबायरभेएणं, सप्पभेयं पि तं मुणी ।
अइं समुद्धरे खिप्पं, ससल्लो णेव सो खणं ॥ २८ ॥
खुड्डलगि त्ति अहिपोए, सिद्धत्थतुल्ले सिही ।
संपलग्गे खयं णेइ , णरपुरे विज्झाडई ॥ २९ ॥
एवं तणु तणुयरं , पावसल्लमणुद्धियं ।
भवभवंतरकोडीओ , बहुसंतावपदं भवे ॥ ३० ॥
भयवं ! सुदुद्धरे एस, पावसल्ले दुहप्पए ।
उद्धरियं पि ण याणंती, बहवे जह उद्धरिज्जई ॥३१॥
गोयम ! निम्मूलमुद्धरणं, नियमे तस्स भासियं ।
सुदुद्धरिस्स वि सल्लस्स, सव्वंगोवंगभेदिणो ॥ ३२ ॥
सम्मद्दंसणं पढमं, सम्मन्नाणं विइज्जियं ।
तइयं च सम्मचारित्त-मेगभूयमिमं तिगं ॥३३॥
खेत्तीभूते वि जे जित्ते, जे गूढे दंसणं गए ।
जे अट्ठीसुं ठिए केई, जे त्थिमज्झंतरं गए ।
सव्वंगोवंगसंखुत्ते, जे अब्भिंतरबाहिरे ।
सल्लंती जेण सल्लंती,तं निम्मूलं समुद्धरे ॥३५॥ (महा०)
ताणि सल्ले भवित्ताणं, सव्वसल्लं विवज्जिए ।
जे धम्ममणुचिट्ठेज्जा, सव्वभूयप्पकंपिया ॥३६॥
तस्स तं सफल होज्ज, जम्मजम्मंतरेसु वि ।
विउला संपयरिद्धी य, लभेज्जा सासयं सुहं ॥ ४० ॥
महा० १ अ० ।
तिन्नि सल्ल महाराय !, अस्सिं देहे समुट्ठिया ।
वायमुत्तपुरीसाणं, पत्त वेगं न धारए ॥ ओघ० ।

"त्रय शल्या महाराज !, अस्मिन् देहे समुत्थिता । वायु-मूत्रपुरीषाणां, प्राप्तं वेगं न धारयेत् ॥ १ ॥ पं० चू० १ कल्प । "उद्धरियसव्वसल्लो, सिज्झइ जीवो धुयकिलेसो " द० प० नि० चू० । ( 'मरण' शब्दे षष्ठभागे १३५ पृष्ठे विस्तरः । )

सल्लइ-सल्लकी-स्त्री० । स्कन्धबीजवनस्पतिभेदे , सूत्र० १ श्रु० १ अ० ३ उ० । स्था० । आचा० । आ० म० । उत्त० । गजप्रियाख्ये वृक्षविशेषे, प्रज्ञा० १ पद ।

सल्लइपत्त-सल्लकीपत्र-न० । शल्लक्याख्यवृक्षविशेषदले, ज्ञा० १ श्रु० ७ अ० ।

सल्लकत्तण-शल्यकर्त्तन-न० । कृन्ततीति कर्त्तनं शल्यानि-मायाशल्यादीनि तेषां कर्त्तनं शल्यकर्त्तनम् । मायादिशल्यच्छेदके, आव० ४ अ० । तद्भावितानां हि भावशल्यानि व्युच्छेदमायान्तीति । औ० । आ० म० । भ० । ज्ञा० । उपा० । ध० । शल्यं—पापानुष्ठानं तज्जनितं वा कर्म तत्कर्त्तयति-छिनत्ति तच्छल्यकर्त्तनम् । सूत्र० १ श्रु० १४ अ० ।

सल्लग-सल्लग-न० । रगे लगे संवरणे । शोभनं लगनं संवरणमिन्द्रियसंयमरूपं सल्लगस्तद्भावः । इन्द्रियसंवरणे, सूत्र० २ श्रु० २ अ० ।

शल्यग-न० । शल्यवच्छल्यं मायानुष्ठानकार्यं गायति-कथयति शल्यगम् । मायापरिज्ञाने, सूत्र० २ श्रु० २ अ० । आ० म० । प्रश्न० ।

सल्लगहत्त-शल्यकहत्य-न० । शल्यस्य हत्या—हननमुद्धार-इत्यर्थः शल्यहत्या तत्प्रतिपादकम् शल्यहत्यम् । शल्योद्धारवैद्यकशास्त्रे, विपा० १ श्रु० ७ अ० । स्था० ।

सल्लुद्धरण-शल्योद्धरण-न० । शल्यानां मायाशल्यादीनां समुद्धरणकरणत्वाच्छल्योद्धरणम् । पा० । शल्यकर्त्तने, कण्टकाद्युद्धारे.पञ्चा०१६विव०ग० । आलोचनायाम् , ओघ०।

आलोयणा वियडणा, सोही सब्भावदायणा चेव ।
निंदण गरिह विउट्टण, सल्लुद्धरणं ति एगट्ठा ॥७९१॥

आलोचना विकटना शुद्धिः सद्भावदायणा णिंदण गरहणा विउट्टणं सल्लुद्धरणं चेत्येकार्थिकानीति ।

एत्तो सल्लुद्धरणं, वुच्छामि धीरपुरिसपन्नत्तं ।
जं नाऊण सुविहिया,करेंति दुक्खक्खयं धीरा७९२ओघ०।

( अत्रत्या वक्तव्यता ' आलोयणा ' शब्दे द्वितीयभागे ४०५ पृष्ठे गता । ) ( कण्टकोद्धरणम् ' कंटयाइउद्धरण ' शब्दे तृतीयभागे १७० पृष्ठे गतम् । ) ( अन्यथाकरणे प्रायश्चित्तं पच्छित्त' शब्दे पञ्चमभागे १३० पृष्ठे प्रतिपादितम् । ) ( प्रतिसेवना कृत्वाऽऽलोचयेत् इति ' पडिसेवणा ' शब्दे पञ्चमभागे ३६२ पृष्ठे गतम् । )

भोगो अणेसणाणीए, सभियत्तं भावणाए भावणया ।
जह सत्ति चाकरणं, पडिमाणं पडिग्गहाणं च ॥२३॥

भोगो भोजनम् अनेषणीये कल्पेऽशनादौ विषयभूते इत्यप पिण्डविशुद्धिलक्षण उत्तरगुणेऽतिचारः । तथा असमितत्वमप्रयत्न इति शेषसमितिचतुष्टये भावनानां महाव्रतरक्षणोपायभूताना पञ्चविंशतेरनुप्रेक्षाणां वा द्वादशानां किमित्याह-अभावनता प्राकृतत्वेन ताप्रत्ययस्य स्वार्थिक-

स्वादभावना अभावनस्य वाऽविद्यमानभावनस्य भावोऽभावनताऽनासेवनमिति भावनातिचार । तथा यथाशक्ति च यथाबलं च अकरणमेवा, प्रतिमाना भिक्षुप्रतिमाना मासिक्यादीनाम् अभिग्रहाणां च द्रव्यादिनियमानां च-शब्दाद्विविधतपश्चेति तत प्रतिमाभिग्रहाणामतिचार इति ।

एते इत्थऽइयारा, ऽसद्दहणादी य गुरुयभावाणं ।
आभोगाणाभोगा-दि सेविया तह य ओहेणं ॥ ३४ ॥

एतेऽनन्तरोक्ता. 'एत्थ' त्ति-एतेषु यथाक्रमं मूलगुणोत्तरगुणेषु अतिचारा-अतिक्रमा., तथा अश्रद्धानादयश्च-अश्रद्धान-विपरीतप्ररूपणादयश्च भावाना जीवादिपदार्थानाम् अतिचारा इति प्रकृतम् । किंविधा इत्याह-'गुरुग' त्ति-गुरुका. पृथिवीसंघट्टनादिभ्यः सकाशान्महान्त., सद्धर्मम-हाद्रुममूलकल्पसम्यक्त्वदूषकत्वादेषाम् । एते च सर्वेऽपि आभोगानाभोगादिसेविता आभोगानाभोगादिकृता, त-त्राभोगोऽकर्त्तव्यमिदमिति ज्ञानम्, अनाभोगस्त्वज्ञानम्, आदिशब्दात्सहसाकारभयरागद्वेषादिपरिग्रह । तथा चेति समुच्चये । ओघेनाभोगानाभोगादिविशेषाभावेनापयुक्तगमनागमनादिना । अथवा-ओघेन-लोकप्रवाहेण । अथवा—त-था चेत्यवस्थित., ओघेन—सामान्येन सामस्त्येनेति यावत् आलोचयेदिति योग इति गाथार्थ ।

तत. किमित्याह—

संवेगपरं चित्तं, काऊणं तेहिँ तेहिँ सुत्तेहिं ।
सल्लाणुद्धरणविवा-गदंसगादीहिँ आलोए ॥ ३५ ॥

संवेगपरं-भवभयप्रधान, मोक्ष प्रति प्रचलनवद्वा चित्तं-मन कृत्वा-विधाय । कैरित्याह—तैस्तै प्रवचनप्रसिद्धै । सूत्रै-र्वाक्यविशेषै । किंविधैः? शल्यानुद्धरणऽकृत्यकरण-भावशल्याप्रकाशने यो विपाको—दुष्टपरिणामस्त दर्शयन्ति यानि तानि तथा, तदादिभि —तत्प्रभृतिभि. आदिशब्दा-च्छल्योद्धरणगुणसंदर्शकसूत्रपरिग्रह आलोचयेद् गुरव निवेदयेत् । आलोचकोऽतिचारानिति प्रकृतम्, अथवा-आलोचयेदिति आलोचयेद् गुरु शिष्यमिति गाथार्थ. ।

अथ शल्यस्यैव लक्षणमाह—

सम्मं दुच्चरितस्स, परसक्खिगमप्पगासणं जं तु ।
एयमिह भावसल्लं, पणत्तं वीयरागेहिं ॥ ३६ ॥

सम्यग्भावत दुश्चरितस्य-दुष्कृतस्य परसाक्षिकं-गीतार्थाध्यक्षम् अप्रकाशनम्-अप्रकटनम्, यत्तु यत्पुन. एतद् दुश्चरिताप्रकाशनम् इह शल्यविचारे भावशल्यं द्रव्यशल्येतरत् प्रज्ञप्तं—प्ररूपितं वीतरागै.—जिनैरिति गाथार्थ ।

शल्यानुद्धरणविपाकदर्शकादिभि सूत्रैरित्युक्तमथ तद्दर्शनाय गाथाद्वयमाह—

ण वि तं सत्थं व विसं, दुप्पउत्तो व कुणति वेतालो ।
जं तं व दुप्पउत्तं, सप्पो व पमादिओ कुद्धो ॥ ३७ ॥
जं कुणइ भावसल्लं, अणुद्धितं उत्तिमट्ठकालम्मि ।
दुल्लहबोहीयत्तं, अणंतसंसारियत्तं च ॥ ३८ ॥

नापि-नैव तत्पाप करोतीति योगः । शस्त्र वा खड्गादि कवभूतम् विषं वा हलाहलं दुष्प्रयुक्तो वा दु साधितो वा करोति—विधत्ते । वेताल —पिशाचः यन्त्रं वा शतघ्न्यादि दुष्प्रयुक्तं—दुर्व्यापारितम्, सर्पो वा भुजङ्गः प्रमादितोऽवगीत क्रुद्ध —कुपित सन्निति वाशब्दा विकल्पार्थः । यमपायं करोति—विधत्ते भावशल्यं—दुश्चरितम् । अनुद्धृतमनाकृष्ट जीवदेहात् उत्तमार्थ.-प्रधानप्रयोजन-पण्डितमरणं समस्तानुष्ठानशखरकल्पत्वात्तस्य काल -अवसर उत्तमार्थकालस्तस्मिन् । शस्त्रादीनि ह्येकभविकमेव मरणं कुर्वन्ति, एतच्चानन्तजन्ममरणपरम्परम्, अत एवाह-दुर्लभबोधित्वमसुलभजिनधर्मताम् । अनन्तसंसारिकत्वमनन्तभवभाक्त्वम् च समुच्चये । सम्यक्त्वचरणभ्रष्टा ह्युत्कर्षेणापार्धपुद्गलपरावर्तप्रमाणसंसारभाजनं भवन्तीति, भावशल्योद्धारगुणसदर्शकसूत्राणि पुनरेवम्—" आलोयणापरिणओ सम्म काऊण सुविहिओ कालं । उक्कोस तिरिण भवे गंतूण लभेज्ज निव्वाणं॥१॥" इत्यादीनीति गाथाद्वयार्थ । पञ्चा०१५ विव० ।

सल्लमुद्धरिउकामेणं, सुपसत्थे य सोहणे दिणे ।
तिहिकरणमुहुत्तनक्खत्ते, जोगे लग्गे ससीबले ॥४१॥
कायव्वायंबिलक्खमणं, दस दिणे पञ्च मङ्गलं ।
परिजवियव्वं अट्ठसयं, सयहा तदुवरिं अहयं करे ।४२।
अट्ठमभत्तेण पारित्ता, काऊणायंबिलं ततो ।
चेइयसाहू य वंदित्ता, करिज्ज क्खंतमरिसियं ॥ ४३ ॥
जे केइ दुट्ठु संलत्ते, जस्सुवरिं दुट्ठु चिंतियं ।
जस्स य दुट्ठु कयं जेण, परिदुट्ठ व कयं भवे ॥ ४४ ॥
तस्स सव्वस्स तिविहेणं, वाया मणसा य कम्मुणा ।
णीसल्लं सव्वभावेणं, दाउं मिच्छा मि दुक्कडं ॥ ४५ ॥
पुणो वि वीयरागाणं, पडिमाओ चेइयालए ।
पत्तेयं संथुणे वंदे, एगग्गो भत्तिनिब्भरो ॥ ४६ ॥
वंदितुं चेइए सम्मं, छट्ठभत्तेण परिजवे ।
इमं सुयदेवयं विज्जं, लक्खहा चेइया लहे ॥ ४७ ॥
उवसंतो सव्वभावेणं, एगचित्तो सुनिच्छओ ।
आउत्तो अव्ववक्खित्तो, रागरइअरइवज्जिओ ॥ ४८ ॥
महा० १ अ० ।

सव—शव—न० । मृतशरीरे, 'कुणवं सवं च मडयं' पाइ० ना० १५८ गाथा ।

सवण—शपन—न० । अभिधाने, आक्रोशे, स्था० ३ ठा० ३ उ० ।

श्रवण—न० । वाच्यवाचकभावपुरस्सरीकारेण शब्दसंसृष्टार्थग्रहणरूपे उपलब्धिविशेषे आ० म० १ अ० । अभिलापप्लाविताऽर्थग्रहणस्वरूप उपलब्धिविशेषे, अनु० । आ० म० । कर्णे, 'सवणा करणा' पाइ० ना० २५१ गाथा । ( द्वाभ्यां स्थानाभ्यामात्मा शब्द शृणोति इति 'हाणं' शब्दे द्वितीयभाग ५५६ पृष्ठे गतम् । ) श्रवणविपर्यीकरणे, द्रव्या० १० अध्या० । आकर्णने, पञ्चा० १ विव० । साधुसमीपे जिनागमाकरर्णने, पञ्चा० १ विव० । ध० । सूत्र० । उत्त० ।

सम्प्रति श्रवणविधिप्रतिपादनार्थमाह—

निद्दाविगहापरिव-ज्जिएहिँ गुत्तेहिँ पंजलिउडेहिँ।
भत्तिबहुमाणपुव्वं, उवउत्तेहिँ सुणेयव्वं ॥ ७०७ ॥
अभिकंखेहिँ सुभा-सियाइँ वयणाइँ अत्थसाराइं।
विम्हियमुहेहिँ हरिसा-गएहिँ हरिसं जणंतेहिँ ॥ ७०८॥

निद्राविकथापरिवर्जितैः; परिवर्जितनिद्राविकथैरित्यर्थः, गुप्तैः-मनोवाक्कायगुप्तैः पंजलिउडेहिँ' इति-निष्ठान्तस्य प्राकृतत्वात् परनिपात इति कृतप्राञ्जलिभिः भक्तिः यथोचिता बाह्या प्रतिपत्तिर्बहुमानम्-आन्तरः प्रीतिविशेषस्तत्पूर्वम् उपयुक्तैः श्रवणैकनिष्ठैस्ततो गुरुमुखाद्विनिर्गतानि वचनानि 'सुभाषितानि शब्दार्थदोषरहितानि तथा अर्थसाराणि विपुलार्थसमन्वितानि अभिकाङ्क्षद्भिरपूर्वापूर्वश्रवणतो हर्षागतैरागतहर्षैरित्यर्थः, हर्षोत्कर्षवशादेव विस्मितमुखैस्तथा अन्येषां संवेगकरणादिना हर्षं जनयद्भिः श्रोतव्यम्। एवं च तैः श्रृण्वद्भिर्गुरोरतीव परितोषप्रकारेण प्रकृष्टेनं आपाद्यते।

ततः किमित्याह—

गुरुपरितोसगएणं, गुरुभत्तीए तहेव विणएणं।
इच्छियसुत्तत्थाणं, खिप्पं पारं समुवयंति ॥ ७०९ ॥

गुरुपरितोषगतेन-गुरुपरितोषप्रकारेण प्रकृष्टेन गुरुपरितोषेणेत्यर्थः, सोऽपि कथमित्याह-गुरुभक्त्या—आन्तरप्रीतिविशेषरूपया तथैव विनयेन च देशकालाद्यपेक्षया यथोचितप्रतिपत्तिकरणलक्षणेन। किमित्याह—सम्यक् सद्भावप्ररूपणया ईप्सितसूत्रार्थयोः क्षिप्रं-शीघ्रं पारं समुपयान्ति। आ० म० १ अ०। स्था०। पं० व०। विशे०।

श्रवणविधिमाह—

मूयं हुंकारं वा, बाढक्कारपडिपुच्छवीमंसा।
तत्तो पसंगपारा-यणं च परिणिट्ठसत्तमए ॥ ५६५ ॥

मूकमिति-मूकं शृणुयात्। इदमुक्तं भवति-प्रथमवाराश्रवणे संयतगात्रः सन् तूष्णीमाश्रित्य सर्वमवधारयेत्। द्वितीयवारया तु हुंकारं दद्याद् वन्दनं कुर्यादित्यर्थः, तृतीये श्रवणे वाढंकारं कुर्यादेवमेतन्नान्यथेति ब्रूयादित्यर्थः, चतुर्थे तु गृहीतपूर्वापरसूत्राऽभिप्रायो मनाक् प्रतिपृच्छां कुर्यात्कथमेतत्? इति, पञ्चमे तु मीमांसा विदध्यात्तत्र मातुमिच्छा मीमांसा प्रमाणजिज्ञासेति यावत्, ततः षष्ठे तदुत्तरोत्तरगुणप्रसङ्गः पारगमनं चाऽस्य भवति, सप्तमे श्रवणे परिनिष्ठा भवति। एतदुक्तं भवति-गुरुवन्दनभाषित एव सप्तमवारायामिति। तदेवं शिष्यगतः श्रवणविधिरुक्तः' । विशे०। न०। चं० प्र०।

जिनवचनश्रवणस्य सारतामुपदर्शयन्नाह—

न वि तं करेइ देहो, ण य सयणो णेय वित्तसंघाओ।
जिणवयणसवणजणिया,जं संवेगाइया लोए ॥ ४ ॥

नापि तत्करोति देहो न च स्वजनो न च वित्तसघात जिनवचनश्रवणजनिता यत्संवेगादयो लोके कुर्वन्ति। तथा ह्यशाश्वतः प्रतिक्षणभङ्गुरो देहः शोकायासकारणं क्षणिकसंगमश्च स्वजनः अनिष्ठितायासव्यवसायास्पदं च वित्तसंघात इत्यमारतो तीर्थकरभाषितार्कर्णनोद्भवाश्च संवेगादयो जातजरामरणरोगशोकाद्युपद्रवव्रातरहितापवर्गहेतव इति सारता, अतः श्रोतव्यं जिनवचनमिति

अथवा—

होइ दढं अणुरागो, जिणवयणे परमनिव्वुइकरम्मि।
सवणाइँ गोयरो तह, सम्मद्दिट्ठिस्स जीवस्स ॥ ५ ॥

यद्वा-किमनेन निर्गतः एव भवति-जायते दृढम्-अत्यर्थमनुरागः-प्रीतिविशेषः क्व? जिनवचने-तीर्थकरभाषिते किंविशिष्टे परमनिर्वृत्तिकरे-उत्कृष्टसमाधिकरणशीले किं गोचरोऽनुरागो भवति इत्यत्राह—श्रावणादिगोचरः—श्रवणश्रद्धानानुष्ठानविषय इत्यर्थः, तथा तेन प्रकारेण कस्येत्यत्राह—सम्यग्दृष्टेः जीवस्य प्रक्रान्तत्वात् श्रावकस्येत्यर्थः, अतोऽसौ श्रवणे प्रवर्त्तत एव, ततश्च शृणोति इति श्रावक इति युक्तमिति गाथाभिप्रायः। श्रा०। द० शा०। आचा०। 'सवणे नाणफले' प्रव० २ द्वार। कर्णे, श्रोत्रोपलब्धिरूपे निर्वृत्तिरूपे च शब्दग्रहणेन्द्रिये, ग० ३ अधि०। औ०। स्वनामख्याते विष्णुदेवताके (अनु०) त्रितारे नक्षत्रभेदे, स्था० ३ ठा० ४ उ०। ज्यो०। सूत्र०। जं०। स०। सू० प्र०।

सवन—न०। कर्मसु प्रेरणे, 'षू' प्रेरणे इति वचनात्। सू० प्र० १० पाहु०।

सवणया—श्रवणता—स्त्री०।श्रूयतेऽनेनेति श्रवणमेकसामयिकः। सामान्यार्थावग्रहरूपोऽर्थावग्रहरूपो बोधपरिणामस्तद्भावश्च श्रवणता। श्रवणभावे, श्रवणार्थे, भ० ६ श० ३१ उ०। स्था०। औ०।

सवणसंवच्छर—सवनसंवत्सर—पुं०। सवनं कर्मसु प्रेरणम् 'षू' प्रेरणे इति वचनात्,। तत्प्रधानः संवत्सरः सवनसंवत्सरः। कर्मसंवत्सरापरनामके संवत्सरभेदे, 'कम्मो त्ति सावणो त्ति य, उउ त्ति य तस्स नामाणि"। सू० प्र० १० पाहु०'

सवण्ण—सवर्ण—त्रि०। सदृशे, स्था० १० ठा० ३ उ०।

सवत्ती—सपत्नी—स्त्री०। समानः—साधारणः पतिरस्याः सा सपत्नी। स्वपत्युर्द्वितीयभार्यायाम्, स्था० ४ ठा० ३ उ०।

सवध—सपथ—पुं०। इदमित्थमेव करिष्यामि इति निश्चितवाक्ये, प्रा० ४ पाद।

सवयणणिराकय—स्ववचननिराकृत—त्रि०। आत्मीयवचनैरेव खण्डिते वाक्ये, यथा यदहं वच्मि तन्मिथ्येति। स्था० १० ठा० ३ उ०।

सवस—स्ववश—त्रि०। स्वतन्त्रे, प्रश्न० १ आश्र० द्वार।

सवसयण—शवशयन—न०। श्मशाने, नि० चू० १२ उ०।

सवह—शपथ—पुं०। पो व" ॥ ८। १। २३१ ॥ इति पस्य वः। प्रा०। "नावर्णात्पः" ॥८।१।१७९॥ इति पस्य लुक् न भवति। सवहो। प्रा०। वाक्यविशेषे, ज्ञा० १ श्रु० १ अ०।

सवहसाविय—शपथश्रा(शा)पित—त्रि०। शपथान् देवगुरुद्रोहिका भविष्यसि त्वं यदि विकल्पं नाख्यासीत्यादिकान् वाक्यविशेषान् श्रापिता श्रोत्रेन्द्रियोपसमभिहिता, शपथैर्वा शापिता शपथश्रापिता, शपथशापिता वा। शप्तेषु आक्रुष्टेषु, ज्ञा० १ श्रु० १ अ०।

सवाय-सवाद-पुं०। सह वादेन सवाद । वादसहिते, सू-त्र० २ श्रु० ७ अ०।

सद्वाद-पुं०। शोभनभारत्याम्, सूत्र० २ श्रु० ७ अ०।

सद्वाच्-स्त्री०। शोभनवचने, सूत्र० २ श्रु० ७ अ०।

सवार-सवार-न०। प्रभाते, वृ० १ उ० २ प्रक०।

सवित-शपयत्-त्रि०। इद चेदं परुत्परारि वा भविष्यति इत्थभूतवचांसि श्रावयति, औ०।

सविज्जविज्जाणुगय-स्वविद्यविद्यानुगत-पुं०। स्वा आत्मीया विद्या स्वविद्या परलोकोपकारिणी केवलश्रुतरूपा तया स्वविद्यया अनुगता युक्ता न पुन परविद्यया इहलोकोपकारिण्येति। लोकोत्तरागमयुक्तेपु, 'सओवसंता अममा अकिंचणा सविज्जविज्जाणुगया जसंसिणो।' दश० ६ अ०।

सविट्ठा-श्रविष्ठा-स्त्री०। धनिष्ठापरपर्याये नक्षत्रभेदे, चं० प्र० १० पाहु०। सू० प्र०।

सवित्तिय-सवृत्तिक-त्रि०। चैत्यप्रतिबद्धगृहक्षेत्रादिवृत्तिभागिषु, वृ० १ उ० २ प्रक०।

सवियप्पसमाहि-सविकल्पसमाधि-पुं०। संप्रज्ञातसमाधौ, द्वा० २० द्वा०। ('जोग' शब्दे चतुर्थभागे १६२६ पृष्ठे विस्तरो गत।)

सविया-सवितृ-पुं०। आदित्ये, आ० म० १ अ०। (आदित्यादित्यदिग्भाग इति 'दिसा' शब्दे चतुर्थभागे २५२३ पृष्ठे दर्शितम्।) हस्तनक्षत्रे, हस्तनक्षत्रस्य सविता देव इति हस्तोऽपि सविता। अनु०।

दो सविया। (सू० ९० +) स्था० २ ठा० ३ उ०।

सवियार-सविचार-पुं०। विचरण विचार। अर्थाद् व्यञ्जने व्यञ्जनादर्थे मनःप्रभृतियोगानां चान्यस्मादन्यस्मिन् विचरणम्। भ० २५ श० ७ उ०। आव०। सह विचारेण वर्तत इति सविचार। अर्थव्यञ्जनयोगसंक्रमे, आव० ४ अ०। दर्श०। सविस्तरे, आह च चूर्णिकृत्-सवियारो त्ति वित्थरओ' वृ० १ उ० २ प्रक०।

सविकार-त्रि०। भ्रूचेष्टादिसहिते, तं०।

सवियारवयणवज्जण-सविकारवचनवर्जन-न०। सश्रृङ्गारभणितानां वर्जने, ध०।

सवियारजंपियाइं, नूणमुईरंति रागग्गिं ॥ ४० ॥

सविकारजल्पितानि-सश्रृङ्गारभणितानि नूनं-निश्चितमुदीरयन्त्युद्दीपयन्ति रागाग्निमतस्तानि न ब्रूत इति शेष। उक्तं च-"ज सुणमाणस्स कह, सुदठुयरं जलइ माणसे मयणो। समणेण सावएण वि, न सा कहा होइ कहियव्वा ॥ १॥" उपलक्षणं चैतत् इत्यानलमप्युद्दीपयन्ति केपाञ्चिदित्यतोऽनर्थदायकानि मित्रसेनस्येव सविकारजल्पितानि न भाषणीयानि। ध० र० २ अधि० २ लक्ष०। (मित्रसेनकथा 'मित्तसण' शब्दे षष्ठभागे गता।)

सवियारसमाहि-सविचारसमाधि-पुं०। सावच्छेदवस्त्वालम्बने समाधौ, द्वा०। (स च 'जोग' शब्दे चतुर्थभागे १६२६ पृष्ठे।)

सवियारि(ण्)-सविचारिन्-न०। सविचारेण वर्तत इति सविचारि। सर्वधनादित्वादिन् समासान्तः। अर्थव्यञ्जनयोगसङ्क्रान्ते, स्था० ४ ठा० १ उ०। ग०।

सविसाण-सविषाण-त्रि०। सशृङ्गे, निर्ग्रन्थीभि सविषाणे आसने नोपवेष्टव्यम्। तत्र सविषाणं नाम, यथा कपाटस्योभयत शृङ्गे भवत. यत्र भिसिकादौ पीठफलके वा विषाणं शृङ्गे भवति। वृ० ५ उ०।

सविसेस-सविशेष-त्रि०। सह विशेषेण वर्तते इति सविशेषम्। सोत्तरगुणे, उत्त० ७ अ०। नि० चू०।

सविसेतर-सविशेषतर-त्रि०। बृहत्तरे, नि० चू० १ उ०।

सविहोड-सविहोढ-त्रि०। सजुगुप्सनीये, वृ० १ उ २ प्रक०।

सवीरिय-सवीर्य-त्रि०। वीर्यशक्त्युपेते, सूत्र० १ श्रु० ८ अ०।

सवेंटय-सवृन्तक-त्रि०। नालयुक्ते, वृ० ५ उ०।

सवेयग-सवेदक-पुं०। स्त्र्यादिवेदयुक्ते, भ० १७ श० २ उ०। स्त्रीवेदाद्युदयवति, स्था० २ ठा० ३ उ०। संसारिणि, स्था०२ ठा० ४ उ०।

सव्व-शर्व-पुं०। शिवे रुद्रे, वाच०।

सर्व-त्रि०। सृ गतौ स्रियतेऽसौ स्रियतेऽनेनेति वा सर्वम्, विशे०। "सर्वत्र लवरामचन्द्रे" ॥८।२।७९॥ इति। रलोपे द्वित्वम्। प्रा०। अशेषे, सूत्र० १ श्रु० ११ अ०। उत्त०। अपरिशेषे, नि० चू० १ उ०। आचा०। समस्ते, पा०। पञ्चा०। दश०। औ०। प्रश्न०। आ० म०। दर्श०। सकले, आ० चू० १ अ०। विश्वशब्दार्थे, स्था० १० ठा० ३ उ०।

चत्तारि सव्वा पण्णत्ता, तं जहा-णामसव्वए ठवणसव्वए आएससव्वए णिरवसेससव्वए। स्था०४ठा०१उ०।

(व्याख्या 'सर' शब्दे) सर्वत्र ककार. स्वार्थिको द्रष्टव्य। विशे०।

अथ सर्वशब्दं व्याचिख्यासुराह—

किं पुण तं सामइयं, सव्वसावज्जजोगविरइ त्ति।

सिय एस तेण सव्वो, तं सव्वं कइविह सव्वं ? ॥३४८४॥

किं पुनस्तद् यथोक्तशब्दार्थं सामायिकम्, इत्यत्राह—सर्वसावद्ययोगविरतिरिति। अथ सर्व इति क शब्दार्थ ? उच्यते—'सृ गतौ' इत्यस्य धातो स्रियते स इति स्रियतेऽनेनेति औणादिके वप्रत्यये सर्व पदार्थो वस्तूनि तु वाच्यं तत् सर्वं वाऽस्यति भवति कतिविधं पुनरिदं सर्वं भवति ? इति गाथार्थ।

अथ 'कतिविध सर्वम्' इति प्रश्नोत्तरमाह—

नामं ठवणा दविए, आएसे चेव निरवसेसे य।

तह सव्वधत्ता सव्वं, च भाव सव्वं च सत्तमयं ॥३४८५॥

नामसर्वम्, स्थापनासर्वम्, द्रव्यसर्वम्, आदेशसर्वम् निरवशेषसर्वम्, तथा सर्वधत्तासर्वम्, भावसर्वं च सप्तमकम्, इति नियुक्तिगाथार्थ।

तत्र नामस्थापनासर्वे सुगमम् , द्रव्यसर्वे तु ज्ञभव्यशरीरव्यतिरिक्तं व्यतिरिक्तमाह—

कसिणं दव्वं सव्वं, तद्देसो वा विवक्खयाऽभिमओ ।
दव्वे तद्देसम्मि य, सव्वा सव्वे चउब्भंगा ॥ ३४८६ ॥
सव्वामव्वे दव्वे, देसम्मि य नायमंगुलीदव्वं ।
संपुण्णं देसोणं, पव्वं पव्वेगदेसो य ॥ ३४८७ ॥

इहाङ्गुल्यादिद्रव्यं यदा कृत्स्नं सर्वैरपि निजावयवैः परिपूर्णं विवक्ष्यते तदा सर्वमुच्यते । एवं तस्याङ्गुल्यादिद्रव्यस्य पर्वादिको देशो निजावयवपरिपूर्णत्वविवक्षया सर्वोऽभिमत । वाशब्दाऽत्रापिशब्दार्थे व्याख्यात । एतदेव चाङ्गुल्यादिद्रव्यं तद्देशो वा यदाऽपरिपूर्णतया विवक्ष्यते तदा प्रत्येकमसर्वत्वं द्रष्टव्यम् । ततश्च द्रव्ये तद्देशे च सर्वासर्वत्वेन विवक्षिते चतुर्भङ्गी—भङ्गचतुष्टयं भवति , तद्यथा-द्रव्यसर्वं देशोऽपि सर्वः , द्रव्य सर्वं देशोऽसर्वः , देशः सर्वो द्रव्यमसर्वम् , देशोऽसर्वो द्रव्यमप्यसर्वमिति । अत्र द्रव्यस्य सर्वत्वेऽसर्वत्वे च देशस्यापि सर्वत्वेऽसर्वत्वे च यथाक्रमं ज्ञातमुदाहरणम् , तद्यथा-अङ्गुलिद्रव्यं संपूर्णं विवक्षितं द्रव्यसर्वमुच्यते , तदेव देशोन विवक्षितं द्रव्यासर्वमभिधीयते , पर्वं पुन सपूर्णं विवक्षित देशसर्वं विवक्षितम् , पर्वैकदेशस्तु देशासर्वमिति । उक्तं द्रव्यसर्वम् । ( विशे० । ) ( आदेशवक्तव्यता ' आएससव्वय ' शब्दे द्वितीयभागे ४७ पृष्ठे उक्ता । )

निरवशेषसर्वमाह—

दुविहं तु निरवसेसं, सव्वासेसं तदेकदेसो य ।
सव्वासेसं सव्वे, अणिमिसनयणा जहा देवा ॥३४८८॥
तद्देसापरिसेसं , सव्वे असुरा जहा असियवण्णा ॥
जह जोइमालया वा, सव्वे किर तेउलेस्सागा ।३४६०।

निरवशेषं पुनर्द्विविधम्—विवक्षितसर्ववस्तुनिरवशेषं , तद्देशनिरवशेषं च । तत्र सर्वनिरवशेषं यथा-सर्वेऽनिमिषनयना देवा । इहानिमिषनयनत्वमपरिशेषेष्वपि देवेषु वर्त्तत' सनिमिषत्वस्य तेष्वभावादिति । तद्देशापरिशेषं तु यथा सर्वेऽप्यसितवर्णा -कृष्णा असुराः , यथा वा ज्योतिष्कालया देवाः सर्वे किल तेजोलेश्याका । इहासुरा ज्योतिष्कालयाश्च देवा समस्तदेवानां प्रत्येकमेकदेशे वर्तन्त , तेषु सर्वेषु यथासंख्यं कृष्णवर्णत्वं तेजोलेश्यायुक्तत्वं च वर्तत इति देशापरिशेष मन्तव्यमिति ।

अथ सर्वधत्तासर्वमाह—

जीवाजीवा सव्वं, तं धत्ते तेण सव्वधत्त त्ति ।
सव्वे वि सव्वधत्ता, सव्वं जमओ परं णत्थं ॥ ३४६१ ॥

इह सर्वस्मिन्नपि लोके यदस्ति तत् सर्वं जीवाश्चाऽजीवाश्च , तत् सर्वं धत्ते धारयति येन करणेन तेन सा विवक्षा निपातनात् सर्वधत्ता , सैव चेह जीवाजीवरूपा विवक्षा सर्वधत्ता सर्वमुच्यते । यस्मादेतो जीवाजीवराशिद्वयात् परं नान्यत् किञ्चिदस्तीति ।

आह—ननु द्रव्यसर्वस्यादेशसर्वस्य निरवशेषसर्वस्यसर्वधत्ता सर्वस्य च क प्रतिविशेष ? इत्याह—

मह दव्वसव्वमेगं, दव्वाधारं ति भिन्नमन्नेहिं ।
एगाणेगाधारो-वयारभेएण चादेसं ॥ ३४६२ ॥
भिन्नमसेसं जमिहे-गजाइविसयं ति सव्वधत्ताओ ।
भिन्ना य सव्वधत्ता, सव्वाधारो त्ति सव्वेसिं ।३४६३।

अथ ' द्रव्यसर्वादीनां भेद उच्यते ' इति शेष । तत्र द्रव्यसर्वं तावदेकद्रव्याधारमुक्तमित्यन्येभ्यो भिन्नम् , तेषां तद्रूपत्वाभावात् । आदेशसर्वं त्वेकानेकद्रव्याधारमिति कृत्वा तथापचारभेदेन च ' भिन्नमन्येभ्यः ' इति वर्तत इति । अशेषसर्वमपि सर्वधत्ता सर्वस्मात् पूर्वोक्ताभ्यां च भिन्नम् , यस्मादेकजातिविषय तदिति । सर्वधत्ताऽपि सर्वेभ्यः पूर्वेभ्यो भिन्ना सर्ववस्त्वाधारत्वादिति ।

अथ भावसर्वमाह—

कम्मोदयस्सहावो, सव्वो असुहो सुहो य ओदइओ ।
मोहोवसमसहावो, सव्वो उवसामिओ भावो ।३४६४।
कम्मक्खयस्सहावो,खइओ सव्वो य मीसओ मीसो ।
अह सव्वदव्वपरिणइ-रूवो परिणामिओ सव्वो ३४६५

ननु सप्तविधसर्वमध्यात् केनात्राधिकार ? इत्याह—

अहिगयमसेससव्वं, विसेसओ सेसयं जहाजोगं ।
गरहियमवज्जमुत्तं, पावं सह तेण सावज्जं ॥ ३४६६ ॥

'इह सर्वसावद्यं योग प्रत्याख्यामि' इति संबन्धाद् निरवशेषसर्वं विशेषतोऽधिकृतम् ,शेषकं तु षड्विधं सर्वं यथायोगं यद् यत्र युज्यते तत् तत्र योजनीयमिति । तदेवं ' करणे भए य अंते सामाइयसव्वए' इत्यादि । विशे० । आचा० । आ० म० । आ० चू० । नं० । स्था० ।

सव्वअंजणगमय–सर्वाञ्जनकमय–त्रि० । अञ्जनक कृष्णरत्नविशेषस्तन्मया. सर्वे एवानन्यमयत्वेन सर्वथैवाञ्जनमयाः सर्वाञ्जनमया. । परमकृष्णेषु, स्था० ४ ठा० २ उ० ।

सव्वउय–सर्वर्तुक–त्रि० । सर्वर्तुसम्भवे , औ० । स० ।

सव्वओ–सर्वतस्–अव्य० । सर्वैः प्रकारैरित्यर्थे, स्था० ३ ठा० ४ उ० । आचा० । सूत्र० । जी० । दशा० । कल्प० । रा० । विपा० । 'सव्वओ समन्ता सपरिक्खुत्ते ' सर्वत· सर्वासु दिक्षु समन्तात् सर्वैरेवात्मप्रदेशै सर्वैर्वा विशुद्धस्पर्द्धकैः, उक्तं च चूर्णौ-'सव्वओ त्ति सव्वासु दिसि विदिसासु समंता इति ' सव्वायप्पपदेसु सव्वेसु वा विसुद्धफड्डगेसु ' इति अत्र तृतीयार्थे सप्तमी । नं० ।

सव्वओगुत्त सर्वतोगुप्त–त्रि० । सर्वप्रकारतयेन्द्रियनोइन्द्रियरूपयो गुप्तागुप्ते, आचा० १ श्रु० ५ अ० ५ उ० ।

सव्वओभद्द–सर्वतोभद्र–न० । सर्वावस्थसुखे, "यद्दणि सव्वओ इह परलोए भद्दं वो सव्वओ भद्दो" पं० चू० १ कल्प । दशमदेवकल्पेन्द्रस्याच्युतस्य पारियानिके विमाने, स्था० १० ठा० ३ उ० । प्रव० । जं० । औ० । महाशुक्रदेवलोके स्वनामख्याते ( स० १३ सम० । ) यक्षभेदे, पुं० । प्रज्ञा० १ पद । दृष्टिवादस्य स्वनामके सूत्रे , न० । सर्वतो भद्राणि मुखानि यस्य । चतुर्द्वारयुक्ते गृहभेदे, न० । प्रतिष्ठादौ पूज्यदेवताना मण्डलभेदे ज्योतिषोक्ते शुभाऽशुभ-

ज्ञानार्थे चक्रभेदे. अलङ्कारोक्तबन्धभेदात्मके चित्रकाव्ये च । सर्वतोभद्रमस्य । निम्बवृक्षे, पुं० । नाम्नार्यां तटयांपिति स्त्री० । शुभाशुभज्ञानार्थे चक्रभेदे, न० । आ० म० १ अ० । स्वनामख्याते भारतवर्षीये पुरे यत्र बृहस्पतिदत्तनामा ब्राह्मणकुमार आसीत् । विपा० १ श्रु० ५ उ० ।

सव्वओ(तो)भद्दपडिमा–सर्वतोभद्रप्रतिमा–स्त्री०। दशसु दिक्षु प्रत्येकमहोरात्रकायोत्सर्गे अहोरात्रदशकप्रमाणे, प्रतिमाभेदे. स्था० २ ठा० ३ उ० । औ० ( सा च ' महासव्वओभद्दपडिमा ' शब्दे षष्ठे भागे उपपादिता । )

पडिमाए सव्वभद्दाए, पणछसत्तट्ठनवदसेक्कारा ।
तह अड नव दस एक्का-रस पण छ सत्त य तहेक्कारा १५५१
पण छ सत्तग अडनव, दस तहग सत्तट्ठ नव दसेक्कारा ।
पण छ तह दस एक्कार-पण छ सत्त ट्ठ नव व य तहा १५५२
छ ग सत्त ड नव दसगं, एक्कारस पंच तह नवग दसगं ।
एक्कारस पण छक्कं, सत्त ट्ठ य इह तवे हुंति ॥ १५५३ ॥
तिन्नि सया वा णउया, इत्थुववासाण होंति संखाए ।
पारणया गुणवन्ना, भद्दाइतवा इमे भणिआ ॥ १५५४ ॥

प्रतिमायां सर्वभद्रायां; सर्वतोभद्रतपसीत्यर्थ , पञ्च षट् सप्त अष्टौ नव दश एकादश उपवासा इति प्रथमलता , अष्टौ नव दश एकादश पञ्च षट् सप्तेति द्वितीया, एकादश पञ्च षट् सप्त अष्टौ नव दशेति तृतीया सप्त अष्टौ नव दश एकादश पञ्च षडिति चतुर्थी , दश एकादश पञ्च षट् सप्त अष्टौ नवेति पञ्चमी , षट् सप्त अष्टौ नव दश एकादश पञ्चेति षष्ठी , नव दश एकादश पञ्च षट् सप्त अष्टाविति सप्तमी । स्थापना चेयम्—

| स | र्व | ता | भ | द्र | स्था | पना |
|---|---|---|---|---|---|---|
| ५ | ६ | ७ | ८ | ९ | १० | ११ |
| ८ | ९ | १० | ११ | ५ | ६ | ७ |
| ११ | ५ | ६ | ७ | ८ | ९ | १० |
| ७ | ८ | ९ | १० | ११ | ५ | ६ |
| १० | ११ | ५ | ६ | ७ | ८ | ९ |
| ६ | ७ | ८ | ९ | १० | ११ | ५ |
| ९ | १० | ११ | ५ | ६ | ७ | ८ |

अत्र च सर्वसंख्यया त्रीणि शतानि द्विनवत्युत्तराणि उपवासानां भवन्ति एकानपञ्चाशच्च पारणकानामुभयमीलने चत्वारि शतान्येकचत्वारिंशदधिकानि दिनानां भवन्तीति तदेवमेतानि भद्रादीनि भद्रमहाभद्रभद्रोत्तरसर्वतोभद्ररूपाणि चत्वारि तपांसि भणितानि । ग्रन्थान्तरे पुनरमून्यन्यथाऽपि दृश्यन्ते , एते ष्वपि चतुर्षु तपस्सु प्राग्वत्पारणकभेदत. प्रत्येकं चातुर्विध्य द्रष्टव्यं दिनसर्वसंख्या च यथायथमानेतव्येति । प्रव० २७१ द्वार ।

सव्वओमहाययण–सर्वौषधायतन–न० । देहे, रोगादावसिन् सर्वौषधप्रक्षेपात् । तं० ।

सव्वंकम–सर्वङ्कष–त्रि । सर्वङ्कषति कष–खच् । पापे, आव० १ अ० ।

सव्वंग–सर्वाङ्ग–न० । सर्वशरीरे, 'सव्वंगओ दाहो' सर्वाङ्गः, सर्वशरीरव्यापी दाहः । तं० ।

सव्वंगसुंदर–सर्वाङ्गसुन्दर–न० । निखिलावयवप्रधाने, स० । सर्वाङ्गानि सुन्दराणि यतस्तयोर्विशेषात्सर्वाङ्गसुन्दर. । चित्रतपोविशेषे, पुं० । पञ्चा० ।

अथ सर्वाङ्गसुन्दरादितपोविशेषान् वित्रृण्वन्नाह–

अट्ठोवासा एगं–तरेण विहिपारणं च आयामं ।
सव्वंगसुन्दरो सो, होइ तवो सुक्कपक्खम्मि ॥ ३० ॥
खमयादाभिग्गहो इह, सम्मं पूया य वीयरागाणं ।
दाणं च जहासत्ति, जइदीणाईण विण्णेयं ॥ ३१ ॥

अष्टावुपवासा प्रसिद्धा कथमेकेन पारणकदिनेनानन्तरं व्यवधानमेकान्तरं तेनैकान्तरेण । विधिपारणं च प्रत्याख्यानस्पर्शनादिविधानयुक्तं भोजनं च आयाममाचामाम्लमागमसिद्धं यत्र तपोविशेषे सर्वाङ्गसुन्दरोऽसौ भवति । 'तवो' त्ति–तपोविशेष शुक्लपक्षे भवति इति । तथा क्षाम्यतीति क्षमस्तद्भाव. क्षमता क्षान्तिस्तदादौ क्षान्तिमार्दवार्जवादावभिग्रहो नियम. क्षमताद्यभिग्रह इह तपसि विधेयो भवति । तथा सम्यग्भावतः पूजा चाभ्यर्चनं वीतरागाणां, दानं च यथाशक्ति यतिदीनादीनां विधेयमिति व्यक्तामिति गाथाद्वयार्थः । पञ्चा० १९ विव० ।

सव्वंगसुंदरी–सर्वाङ्गसुन्दरी–स्त्री० । सर्वेष्वङ्गेषु सुन्दरीति । गजपुरे शङ्खश्राद्धस्य सुतायाम् , आ० म०१ अ०। आ० चू०। ( 'माया' शब्दे षष्ठ भागे एतद्वक्तव्यतोक्ता । )

सव्वंगिय–सर्वाङ्गीण–त्रि० । सर्वाङ्गाणि व्याप्नोति । सर्वावयवव्यापके , ' तत्थ य सव्वंगिओ पुरिसो दीसइ ' । आ० म० १ अ० । अत्र–" सर्वाङ्गादीनस्येक " ॥ ८ । २ । १५१ ॥ सर्वाङ्गात् सर्वादे पथ्यङ्गेत्यादिना विहितस्येनस्य स्थाने इक इत्यादेश । सर्वाङ्गीणम् । सर्वगात्रे, प्रा० २ पाद ।

सव्वब्भंतरय–सर्वाभ्यन्तरक–पुं० । सर्वात्मना—सामस्त्येनाभ्यन्तर. सर्वाभ्यन्तर. । स एव सर्वाभ्यन्तरक प्राकृतलक्षणात् स्वार्थे कप्रत्यय । सर्वात्मनाऽभ्यन्तरे, " एस णं जंबूदीवे सव्वदीवसमुद्दाणं सव्वब्भंतरए । " जी० ३ प्रति० ४ अधि० ।

सव्वकणगामय–सर्वकनकमय–त्रि० । सर्वात्मना कनकमये , जी० ३ प्रति० ४ अधि० ।

सव्वकम्म–सर्वकर्मन्–पु० । पक्षस्य सप्तमतिथिदिवसे , जं० १ वक्ष० ।

सव्वकम्मक्खयउवसम–सर्वकर्मक्षयोपशम–पुं० । निखिलज्ञानावरणादिघातिकर्मणा विगमविशेषे , पञ्चा० २ विव० ।

सव्वकम्मावह–सर्वकर्मावह–पुं० । सर्वपापोपादानभूते , आचा० १ श्रु० ६ अ० १ उ० ।

सव्वकाम–सर्वकाम–त्रि० । सर्वाभिलाषे, आ० चू० १ अ०।

सव्वकामगुणिय–सर्वकामगुणित–त्रि० । सर्वे कामगुणा – कमनीयपर्याया विकृत्यादयो विद्यन्ते यत्र तत्तथा । रूपरसगन्धस्पर्शलक्षणा सन्त संजाता वा यत्र तत्सर्वकामगु—

णिनम्। ज्ञा० १ श्रु० ८ अ०। सर्वे कामगुणा—अभिलाषविषयभूता रसादयः संजाता यत्र तत्सर्वकामगुणितम्। भ० १५ श० । आ० म० । आ० क०। सर्वाभिलषणीयरसादिसम्पन्ने, "जहा सव्वकामगुणियं पुरिसो भोत्तूणं भोयणं कोइ" औ०।

सव्वकामविरत्तया—सर्वकामविरक्तता—स्त्री०। सर्वाभिलाषनिवर्त्तने, आ० चू० १ अ०। समस्तविषयवैमुख्ये, स० ३२ सम०। आव०।

सर्वकामविरक्तनामाह—

उज्जेणी देवलासुय, अणुरत्तालोअणा य पउमरहो।
संगयओ मणुमइआ, असिअगिरिअद्धसंकासा ॥१३०६॥

अभूदुज्जयिनीपुर्यां भूपतिर्देवलासुतः।
तस्याग्रमहिषी राज्ञो, नाम्नाऽनुरक्तलोचना ॥ १ ॥
केशान विन्यस्तयन्ती सा, राज्ञः पलितमन्यदा।
वीक्ष्य साऽऽख्यमाचख्यौ, स्वामिन्! दूत समागतः ॥ २ ॥
राजा ससंभ्रमः स्माह, क्वासौ पश्याम्यहं न किम्?।
साऽवदद्धर्मदूतोऽयं, पालताख्यो निवेदयताम् ॥ ३ ॥
तं निरीक्ष्याधृतिं चक्रे, राजाऽस्मत्पूर्वजाः पुरा।
अदृष्टपलिताः प्रापु—र्दीक्षां धिग्मां प्रमद्वरम् ॥ ४ ॥
सुतं पद्मरथं राज्ये, न्यस्याभूत्तापसः स्वयम्।
देवी संगतको दासः, प्रेष्याऽनुमतिका तथा ॥ ५ ॥
सर्वाण्यप्यसितगिरिं, प्रययुस्तापसाश्रमम्।
दासो दासी च कालेन, तावुत्प्रव्रज्य जग्मतुः ॥ ६ ॥
गर्भं सन्नपि नाख्यातो, देव्या वृद्धिं गतोऽथ सः।
अयशोभीरुणा राज्ञा, प्रच्छन्नं धारिताऽथ सा ॥ ७ ॥
प्रसुवाना मृता देवी, जाता तु दुहिताऽद्भुता।
पिबन्ती स्तन्यमन्यासां, तापसीनामवर्द्धत ॥ ८ ॥
सोक्ता नाम्नाऽर्द्धसंकाशा, क्रमाद्यौवनमासदत्।
विश्राम्यति स्म पितरं, साऽब्रवीत् सदागतम् ॥ ९ ॥
यौवनेऽस्याः स रक्तोऽथ, विषमा विषया खलु।
दध्यावन्येद्युराश्लेष्टुं, चस्खालोटजदारुणि ॥ १० ॥
पतिताऽचिन्तयत्पाप—मत्रैव फलितं हहा।
नामुष्मिकं ज्ञायते स्म, प्रबुद्धो जातिमस्मरत् ॥ ११ ॥
सर्वकामविरक्ताख्य, यभाषेऽध्ययनं तथा।
दत्ता सुताऽपि साध्वीनां, स सिद्धः साऽपि निर्वृता ॥१२॥
एवं सर्वविरक्तैर्योगाः संगृह्यन्ते। आ० क० ४ अ०। प्रश्न०।

सव्वकामविरय—सर्वकामविरत—त्रि०। समस्तशब्दादिविषयेभ्यो निवृत्ते, औ०।

सव्वकामसमिद्ध—सर्वकामसमृद्ध—त्रि०। पक्षस्य पञ्चदशानां दिवसानां षष्ठे दिवसे, जं० ७ वक्ष०। रुचकपर्वतदेवे, चं० प्र० १० पाहु०। द्वी०।

सव्वकामसमप्पिय—सर्वकामसमर्पित—पुं०। सर्वे कामा अभिलाषा अर्पिताः सम्पन्ना यस्य स सर्वकामसमर्पितः। इच्छामात्रेऽभिलषितोपार्जके, न हि यान्यान् कामान् कामयते तस्य सर्वे सिद्ध्यन्तीति यावत्। सूत्र० १ श्रु० १ अ० ३ उ०।

सव्वकाल—सर्वकाल—पुं०। अतीतानागतवर्तमानकालेषु, रा०। प्रश्न०।

सव्वकालिया—सार्वकालिका—स्त्री०। सर्वकालेषु भवा सार्वकालिका। ध० २ अधि०। अतीतादिना कालेन निर्वृत्तायाम्, आव० ३ अ०।

सव्वकिरिया—सर्वक्रिया—स्त्री०। धर्मलोकाश्रिते समस्तव्यापारे "चित्तिव्वोच्छेयम्मि य, गिहिणो सीयंति सव्वकिरियाओ।" पञ्चा० ४ विव०।

सव्वक्कसुद्धि—सद्वाक्यशुद्धि—स्त्री०। शोभनायामात्मीयायां वाक्यशुद्धौ, दश० ८ अ०। "सव्वक्कसुद्धिं समुपेहिया मुणी, गिर तु दुट्ठं परिवज्जए सया।" दश० ७ अ०।

सव्वक्खरसण्णिवाइ—(ण्)—सर्वाक्षरसन्निपातिन्—पुं०। सर्वे च ते अक्षरसन्निपाताश्च तत्संयोगाः, सर्वेषां वाऽक्षराणां सन्निपाताः सर्वाक्षरसन्निपाताः ते अनन्ताः अभिलापानन्त्यात् यस्य ज्ञेयतया सन्ति स सर्वाक्षरसन्निपाती। सर्वाक्षरसयोगविदि, भ० १ श० १ उ०।

श्रव्याक्षरसन्निवादिन्—पुं०। श्रव्याणि—श्रवणसुखकारीणि अक्षराणि साकल्येन नितरां वदितुं शीलमस्येति श्रव्याक्षरसन्निवादी। भ० १ श० १ उ०। स्था०। अक्षरादिसंयोगा विद्यन्ते यस्य ते तथा स्वार्थिक इन्प्रत्ययोपादानात्। विदितसकलवाङ्मये, स्था० ८ ठा० ३ उ०। सकलप्रज्ञापनीयभावपरिज्ञानकुशले, जं० १ वक्ष०। रा०। औ०।

सव्वक्खरसण्णिवाइया—सर्वाक्षरसन्निपातिका—स्त्री०। सर्वाक्षराणां सन्निपाताऽवतारा यस्यामस्ति, सर्वे वाऽक्षरसन्निपाताः संयोगाः सन्ति यस्यां सा सर्वाक्षरसन्निपातिका। सकलवाङ्मयश्रीजिनवाण्याम्, उपा० २ अ०। औ०।

सव्वखुड्डाय—सर्वक्षुद्रक—त्रि०। सर्वेभ्यः क्षुद्रकः सर्वक्षुद्रकः। दीर्घस्य प्राकृतत्वात्। सर्वलघौ, "अयं च णं जंबुद्दीवे सव्वखुड्डाए"। औ०। जीं०।

सव्वग—सर्वग—त्रि०। सर्वं गच्छति—जानातीति सर्वगः। सर्वज्ञे, सर्वे गत्यर्था ज्ञानार्था इति वचनात्। स्था०।

सव्वगुणपसाहण—सर्वगुणप्रसाधन—न०। सकलगुणावहे तपोविशेषे, पञ्चा० १ विव०। ('तव' शब्दे चतुर्थभागे ००३ पृष्ठे गता वक्ष्यते।)

सव्वगुणसंपण्णया—सर्वगुणसम्पन्नता—त्रि०। ज्ञानादिगुणसहितत्वे, उत्त० २६ अ०।

सव्वगुणसमिद्ध—सर्वगुणसमृद्ध—स्त्री०। शौर्योपशमादिभिः सर्वैर्गुणैः स्फीते, रा०।

सव्वगा—सर्वगा—स्त्री०। उत्तररुचकवरपर्वतस्य रुचकोत्तमकूटवास्तव्यायां दिक्कुमार्याम्, स्था० ८ ठा० ३ उ०।

सव्वगोत्तावगय—सर्वगोत्रापगत—त्रि०। सदस्यातुर्वैर्गोत्रादपगते, सूत्र० १ श्रु० १३ अ०।

सव्वग्ग—सर्वाग्र—न०। सर्वसंख्यायाम्, ज्यो० २ पाहु०। आचा०।

सवग्घ—सर्वघ्न—न०। सर्वघातिनि, तद्यथा, केवलज्ञानावरणे केवलदर्शनावरणे च। पं० सं० ३ द्वार।

सव्वघाइ–सर्वघातिन् -त्रि० । सर्वघात्यं केवलज्ञानादिलक्षण गुणं सर्वथा घातयन्तीत्येवं शीलानि सर्वघातीनि णिन् । ज्ञानदर्शनावरणीयरसस्पर्द्धकेषु, पं० सं० ५ द्वार । सं० ।

सव्वघाइणी–सर्वघातिनी–स्त्री० । सर्वस्वविषयघातिनीषु कर्मप्रकृतिषु, कर्म० ५ कर्म० । ( एताश्च 'कम्म' शब्दे तृतीयभागे २६५ पृष्ठे सप्रपञ्चमभिहिता । )

सव्वघाइरस–सर्वरसघाति–त्रि० । स्वविषयं ज्ञानादिकं सकलमपि घातयति स्वकार्यसाधन प्रत्यसमर्थं करोति इति सर्वरसघाति । ज्ञानादिगुणनाशके, पं० सं० ३ द्वार ।

सव्वजंबूणयामय–सर्वजाम्बूनदमय–त्रि० । सर्वात्मना जाम्बूनदमय, जी० ३ प्रति० ४ अधि० ।

सव्वजगवच्छल–सर्वजगद्वत्सल–त्रि० । पृथिव्यादीनां सर्वभूताना रक्षणादना वात्सल्यकर्त्तरि, प्रश्न० ५ संव० द्वार ।

सव्वजगहिय–सर्वजगद्धित–पुं० । सर्वस्मिन् जगति ये जीवास्तेभ्यो हित पथ्यम् तद्रक्षणतस्तदुपदेशदानतो वा । सूत्र० १ श्रु० ११ अ० । उपदेशनात् सर्वप्राणिलोकस्य हितकारिणि, षो० १४ विव० ।

सव्वजगुज्जोयग–सर्वजगदुद्द्योतक–पुं० । सर्वं समस्तं जगत् लोकाऽलोकात्मकमुद्द्योतयति-प्रकाशयति केवलज्ञानदर्शनाभ्यामिति सर्वजगदुद्द्योतक । जिने, नं० ।

सव्वजगुज्जोयगस्स । ( ३ )

" सर्वजगदुद्द्योतकस्य " सर्वं—समस्तं जगत्—लोकालोकात्मकमुद्द्योतयति—प्रकाशयति केवलज्ञानदर्शनाभ्यामिति सर्वजगदुद्द्योतक , तस्य ' भद्रायुष्यक्षेमसुखहितार्थहितैराशिषी ' ति विकल्पेन चतुर्थीविधानात् षष्ठ्यपि भवति , यथा आयुष्यं देवदत्ताय आयुष्यं देवदत्तस्य, अनेन ज्ञानातिशयमाह । ननु विशेषणं तदुपादीयते यत्सम्भवति , ' सम्भवे व्यभिचारे च विशेषणं' मिति वचनात्, न च सर्वजगदुद्द्योतकत्वं सम्भवति प्रमाणेनाग्रहणात् । तथाहि-सर्वजगदुद्द्योतकत्वं भगवत किं प्रत्यक्षेण प्रतीयते ?, उतानुमानेन, आहोस्विदागमेन, उताहो उपमानेन, अथवा-अर्थापत्त्या ? , तत्र न तावत्प्रत्यक्षेण—भगवतश्चिरगतीतत्वात् । अपि च—परविज्ञान सदैव प्रत्यक्षाविषय , अतीन्द्रियत्वात् . ततस्तद्वत्त्वेऽपि न प्रत्यक्षेण ग्रहणम् । नाप्यनुमानेन-तद्धि लिङ्गलिङ्गिसम्बन्धग्रहणपुरस्सरमेव प्रवर्त्तते । लिङ्गलिङ्गिसम्बन्धग्रहणं च किं प्रत्यक्षेण उतानुमानेन ? , तद्धि लिङ्गलिङ्गिसम्बन्धग्रहणपुरस्सरमेव प्रवर्त्तते, लिङ्गलिङ्गिसम्बन्धग्रहण च किं प्रत्यक्षेणानुमानेन वा ? , तत्र न प्रत्यक्षेण, सर्ववेदनस्यात्यन्तपरोक्षतया प्रत्यक्षेण तस्मिन्नगृहीते तेन सह लिङ्गस्याविनाभावनिश्चयायोगात् । न चानिश्चितविनाभाव लिङ्ग लिङ्गिनो गमकम् . अतिप्रसङ्गात्, यत कुतश्चिद्यस्य तस्य वा प्रतिपत्तिप्रसक्तेः, नाप्यनुमानेन लिङ्गलिङ्गिसम्बन्धग्रहणम्, अनवस्थाप्रसङ्गात् । तथाहि—तदप्यनुमान लिङ्गलिङ्गिसम्बन्धग्रहणतो भवेत्, ततस्तत्रापि लिङ्गलिङ्गिसम्बन्धग्रहणमनुमानान्तरात्कर्त्तव्यम् तत्रापि चेयमेव वार्त्तेत्यनवस्था । नाप्यागमत सर्ववेदनविनिश्चय , स हि पौरुषेयो वा स्यादपौरुषेयो वा ? , पौरुषेयोऽपि सर्वज्ञकृतो, रथ्यापुरुषकृतो वा ? । तत्र न तावत् सर्वज्ञकृत , सर्वज्ञासिद्धौ सर्वज्ञकृतत्वस्यैवाविनिश्चयात् । अपि च—एवमभ्युपगमे सतीतरतराश्रयदोषप्रसङ्ग , तथाहि—सर्वज्ञसिद्धौ तत्कृतागमसिद्धि , तत्कृतागमसिद्धौ च सर्वज्ञसिद्धि । अथ रथ्यापुरुषप्रणीत इति पक्षस्तर्हि न स प्रमाणम्—उन्मत्तकप्रणीतशास्त्रवत्, अप्रमाणाच्च तस्मान्न सुनिश्चितसर्वज्ञसिद्धि , अप्रमाणात्प्रमेयासिद्धे , अन्यथा प्रमाणपर्येषणं विशीर्येत । अथापौरुषेय इति पक्षस्तर्हि ऋषभ सर्वज्ञो वर्द्धमानस्वामी सर्वज्ञ इत्यादिरर्थवाद प्राप्नोति , ऋषभाद्यभावेऽपि भावात् । तथाहि—सर्वकालस्थायी आगम , ऋषभादयस्त्वधुनातनकल्पवर्तिन तत ऋषभाद्यभावेऽपि पूर्वमप्यस्यागमस्यैवमेव भावात्कथमेतेषामृषभादीनामभिधान तत्र परमार्थसत् ? , तस्मादर्थवाद एव , न सर्वज्ञप्रतिपादनमिति । अपि च—यद्यपौरुषेयागमाभ्युपगमस्तर्हि किमिदानीं सर्वज्ञेन ? , आगमादेव धर्माधर्मादिव्यवस्थासिद्धे , तस्मात् नागमगम्य सर्ववेदी , नाप्युपमानगम्य , तस्य प्रत्यक्षपूर्वकत्वात् । तथाहि—प्रत्यक्षप्रसिद्धगोपिण्डस्य यथा गौ तथा गवय इत्यागमाहितसंस्कारस्याटव्या पर्यटतो गवयदर्शनानन्तरं तन्नामप्रतिपत्तिरुपमान प्रमाणं वर्ण्यते , न चैकोऽपि सर्वज्ञ प्रत्यक्षसिद्धो येन तत्सादृश्यावष्टम्भेनान्यस्य विवक्षितपुरुषस्योपमानप्रमाणत सर्वज्ञ इति प्रतीतिर्भवेत् । नाप्यर्थापत्तिगम्य , सा हि प्रत्यक्षादिप्रमाणगोचरीकृतार्थान्यथानुपपत्त्या प्रवर्त्तते , न च कोऽप्यर्थ सर्वज्ञमन्तरेण नोपपद्यत , तत्कथमर्थापत्तिगम्य ? , तदेवं प्रमाणपञ्चकावृत्तेरभावप्रमाणमेव सर्वज्ञं क्रोडीकरोति । उक्त च— ' प्रमाणपञ्चक यत्र , वस्तुरूपे न जायते । वस्त्वसत्तावबोधार्थं, तत्राभावप्रमाणता ॥ १ ॥ " अपि च—सर्वं वस्तु जानाति भगवान् केन प्रमाणेन ? , किं प्रत्यक्षेण उत यथासम्भवं सर्वैरेव प्रमाणै , तत्र न तावत्प्रत्यक्षेण , देशकालविप्रकृष्टेषु सूक्ष्मेष्वमूर्त्तेषु च तस्याप्रवृत्ते , इन्द्रियाणामगोचरत्वात् । यदि पुनस्तत्रापीन्द्रिय व्याप्रियेत तर्हि सर्व सर्वज्ञा भवेत् , अथेन्द्रियप्रत्यक्षादन्यदतीन्द्रियं प्रत्यक्षं तस्यास्ति तेन सर्वं जानातीति मन्येथा , तदप्ययुक्तम् , तस्यास्तित्वे प्रमाणाभावात् । न च प्रमाणमन्तरेण प्रमेयसिद्धि , सर्वस्य सर्वेष्टार्थसिद्धिप्रसक्ते । अथवा—अस्तु तदपि तथापि सर्वमेतावदेव जगति वस्तु इति न निश्चय , न खल्वतीन्द्रियमप्यवधिज्ञानं सर्ववस्तुविषय सिद्धम् , तदपरिच्छिन्नानामपि धर्माधर्मास्तिकायादीनां सम्भवात्, एव केवलज्ञानापरिच्छिन्नमपि किमपि वस्तु भविष्यतीत्याशङ्काऽनतिवृत्तेर्न सर्वविषयं केवलज्ञानं वक्तुं शक्यम् । तथा च कुत सर्वज्ञस्यापि स्वयमात्मन सर्वज्ञत्वविनिश्चय ? , अथ यथायथं सर्वैरेव प्रमाणै सर्वं वस्तु जानातीति पक्ष , नन्वेवं सति य एवागमे कृतपरिश्रम स एव सर्वज्ञत्वं प्राप्नोति , आगमस्य प्राय सर्वार्थविषयत्वात्, तथा च क प्रतिविशेषो वर्द्धमानस्वाम्यादौ ? येन स एव प्रमाणमिष्यते न जैमिनिरिति । अन्यच्च—यथाऽवस्थितसकलवस्तुवेदी सर्वज्ञ इष्यते ततोऽशुच्यादिरस्मानामपि यथावस्थिततया संवेदनादशुच्यादिर-

सास्वादप्रसङ्ग , आह च-"अशुच्यादिरसास्वादप्रसङ्गश्चानिवारित." किं च—कालतोऽनाद्यनन्त. संसार., जगति च सर्वदा विद्यमानान्यपि वस्तून्यनन्तानि, तत. संसारं वस्तूनि च क्रमेण विदन् कथमनन्तेनापि कालेन सर्ववेदी भविष्यति ?,उक्तं च—'क्रमेण वेदन कथ' मिति, अत्र प्रनिविधीयते-तत्र यत्तावदुक्तम्-'सर्वजगदुद्योतकत्व भगवत. केन प्रमाणेन प्रतीयते ?'इत्यादि, तत्रागमप्रमाणादिति सूम । स चागम. कथञ्चिन्नित्यः प्रवाहतोऽनादित्वात् , तथाहि यामेव द्वादशाङ्गीं कल्पलताकल्पां भगवान् ऋषभस्वामी पूर्वभवेऽधीतवान् , अधीत्य च पूर्वभवे इहभवे च यथावत्पर्युपास्य फलभूतं केवलज्ञानमवाप्तवान् , तामेवोत्पन्नकेवलज्ञान. सन् शिष्येभ्य उपदिशति, एव सर्वतीर्थकरेष्वपि द्रष्टव्यम् ,ततोऽसावागमोऽर्थरूपापेक्षया नित्यः । तथा च वक्ष्यति—"एसा दुवालसङ्गी न कयावि नासी न कयावि न भवइ न कयावि न भविस्सइ, धुवा नीया सासया अक्खया अव्वया अव्वावाहा अवट्ठिया निच्चा" इति, अस्मिश्चागमे यथा संसारी संसारं पर्यटति यथा कर्मणामभिसमागम । यथा च तप.संयमादिना कर्मणामपगमे केवलाभिव्यक्ति' तथा सर्व प्रतिपाद्यते , इति सिद्ध आगमात्सर्वज्ञ. । यदप्युक्तम्—' स पौरुषेयो वा' इत्यादि, तत्रार्थतोऽपौरुषेय , स च न सर्वज्ञप्रकाशितत्वादेव प्रमाणं, किन्तु कथञ्चित् स्वतोऽपि, निश्चिताविपरीतप्रत्ययोत्पादकत्वात् , तनो नेतरेतराश्रयदोषप्रसङ्ग , सर्वज्ञप्रणीतत्वावगमाभावेऽपि निश्चिताविपरीतप्रत्ययोत्पादकतया तस्य प्रामाण्यनिश्चयात् , तत. सर्वज्ञसिद्धि , अथैवमागमात् सर्वज्ञ सामान्यत सिद्ध्यति न विशेषनिर्देशेन यथाऽयं सर्वज्ञ इति, तत' कथं सर्वज्ञकालेऽपि सर्वज्ञोऽयमिति व्यवहारः ?, उच्यते—पृष्टाचिन्तितसकलपदार्थप्रकाशनात् । तथाहि—यद् यद् भगवान् पृच्छ्यते यच्च यच्च स्वचेतसि पृष्टा चिन्तयति तत्तत्सर्वं प्रत्ययपूर्वमुपदिशति, ततोऽसौ ज्ञायते यथा सर्वज्ञ इति । तेन यदुच्यते भट्टेन—'सर्वज्ञोऽसाविति ह्येतत् , तत्कालेऽपि बुभुत्सुभि । तज्ज्ञानज्ञेयविज्ञान-रहितैर्गम्यते कथम् ? ॥ १ ॥ इति, तदपास्त द्रष्टव्यम् , पृष्टचिन्तितसकलपदार्थप्रकाशनेन तस्य सर्वज्ञत्वनिश्चयात् । नन्वेव व्यवहारतो निश्चयो न निश्चयत , निश्चयतो हि तदा सर्ववेदी विदितो भवति यदा तज्ज्ञेयं सर्वं विदित्वा सर्वत्र संवादो गृह्यते, न चैतत्कर्तुं शक्यम् । अथैकत्र संवाददर्शनादन्यत्रापि संवादी द्रष्टव्य , एवं तर्हि मायावी बहुजल्पाक सर्वोऽपि सर्वज्ञ प्राप्नोति, तस्याप्येकदेशसंवाददर्शनाद् । आह च-" एकदेशपरिज्ञानं, कस्य नाम न विद्यते ? । न ह्येकं नास्ति सत्यार्थं, पुरुषे बहुजल्पिनि ॥ १ ॥" तदयुक्तम् ,व्यवहारतोऽपि निश्चयस्य सम्यगनिश्चयत्वात् , वैयाकरणादिनिश्चयवत् । तथाहि—वैयाकरण कतिपयपृष्टशब्दव्याकरणादय सम्यग्वैयाकरण इति निश्चीयते, एव पृष्टाचिन्तितार्थप्रकाशनात् सर्वज्ञोऽपि । न चैव मायाविनोऽपि सर्वज्ञत्वप्रसङ्ग , मायाविनि सर्वेषु पृष्टेषु चिन्तितेषु चार्थेषु संवादायोगात् , निपुणेन च प्रतिपत्त्रा भवितव्यम् । अथ वैयाकरणोऽन्यन वैयाकरणेन सकलव्याकरणशास्त्रार्थसंवादनिश्चयतोऽपि ज्ञातुं शक्यते । ननु सर्वज्ञोऽप्यन्येन सर्वज्ञेन यथावत् ज्ञातुं शक्यत एवेति समानम् । अथ तदानीमन्येन सर्वज्ञेन निश्चयतो विज्ञायताम् इदानीं तु स कथं ज्ञायत ?, उच्यते—इदानीं तु सम्प्रदायादव्याहतप्रवचनार्थप्रकाशनात् । यदप्यवादीत्—ऋषभ सर्वज्ञो वर्द्धमानस्वामी सर्वज्ञ इत्यादिरर्थवाद. प्राप्नोतीत्यादि तदप्यसारम् , आगमो ह्यय कल्प'—यो य' सर्वज्ञः उत्पद्यते तेन तेन तत्तत्कल्पवर्त्तिनां तीर्थकृतां सर्वेषामप्यवश्यं चरितानि वक्तव्यानि, ततो, न ऋषभाद्यभिधानमर्थवादः । यदप्यभिहितम्-' नाप्युपमानप्रमाणगम्य ' इत्यादि, तदप्ययुक्तम् , एकं सर्वज्ञ यदा व्यवहारतो यथावद्विनिश्चित्यान्यमपि सर्वज्ञं व्यवहारतः परिज्ञाय एषोऽपि सर्वज्ञ इति व्यवहरति तदा कथं नोपमानप्रमाणविषय. ?, अर्थापत्तिगम्योऽपि भगवान् , अन्यथाऽऽगमार्थस्य परिज्ञानासम्भवात् , न खल्वतीन्द्रियार्थदर्शनमन्तरेणागमस्यार्थोऽतीन्द्रियः पुरुषमात्रेण यथावदवगन्तुं शक्यते , तत आगमार्थपरिज्ञानान्यथाऽनुपपत्त्या सर्वज्ञोऽवश्यमभ्युपगन्तव्यः । एतेन यदुक्तं प्राक्—' किमिदानीं सर्वज्ञेन ?, आगमादेव धर्म्माधर्म्मव्यवस्थासिद्धे' रिति, तत्प्रतिक्षिप्तमवसेयं सर्वज्ञमन्तरेणागमार्थस्यैव सम्यक् परिज्ञानासम्भवात् । यच्चोक्तम्—' सर्व वस्तु जानाति भगवान् केन प्रमाणेन ' त्यादि , तत्र प्रत्यक्षेणेति पक्ष , तदपि च प्रत्यक्षमतीन्द्रियमवसेयम् , ननु तत्राप्युक्तम्—' तस्यास्तित्वे प्रमाणाभावादि ' ति , उक्तमिदमयुक्त तूक्तम् , तदस्तित्वेऽनुमानप्रमाणसद्भावाद् , तच्चानुमानमिदं-यत्तारतम्यवत् तत्सर्वान्तिमप्रकर्षभाक् यथा परिमाणं, तारतम्यवच्चेदं ज्ञानमिति । न चायमसिद्धो हेतु , तथाहि—दृश्यते प्रतिप्राणिप्रज्ञामेधादिगुणपाटवतारतम्य ज्ञानस्य , ततोऽवश्यमस्य सर्वान्तिमप्रकर्षेण भवितव्यम् , यथा परिमाणस्याकाशे, सर्वान्तिमप्रकर्षश्च ज्ञानस्य सकलवस्तुस्तोमप्रकाशकत्वम् । अथ यद्विषय. तरतमभाव. सर्वान्तिमप्रकर्षोऽपि तद्विषय एव युक्त., तरतमभावश्चेन्द्रियाश्रितस्य ज्ञानस्योपलब्ध', तत. सर्वान्तिमप्रकर्षोऽपि तस्यैवेति कथमतीन्द्रियज्ञानसम्भव ?, इन्द्रियाश्रितस्य च ज्ञानस्य प्रकर्षभावेऽपि न सर्वविषयता , तस्य सूक्ष्मादावप्रवृत्ते. । अथोच्यते—मनोज्ञानमप्यतीन्द्रियज्ञानमुच्यते, तस्य च तरतमभाव शास्त्रादौ दृष्ट एव । तथाहि—तदेव शास्त्रं कश्चित् झटित्येव पठति अवधारयति च , अपरस्तु मन्दं , बोधतोऽपि कश्चिन्मुकुलितार्थावबोधपरो विशिष्टावबोधः एवमन्यास्वपि कलासु यथायोगं मनोविज्ञानस्य तारतम्यं परिभाव्यते , तत. तस्य सर्वान्तिम. प्रकर्ष. सर्वविषयो भविष्यति । तदसद् , यतो मनोविज्ञानस्यापि तरतमभावः शास्त्राद्यालम्बन एवोपलब्ध , तत. प्रकर्षभावोऽपि तस्य शास्त्राद्यालम्बन एव युक्त्योपपद्यते न सर्वविषयः, न खल्वन्यविषयोऽभ्यासोऽन्यविषयं प्रकर्षभावमुपजनयति, तथाऽनुपलब्ध. । उक्तं च—" शास्त्राद्यभ्यासत शास्त्र—प्रभृत्येवावगच्छत. । साकल्यवेदनं तस्य, कुत एवागमिष्यति ? ॥ १ ॥ " अत्रोच्यते—इह तावदिन्द्रियज्ञानाश्रित. तरतमभावो न ग्राह्य., अतीन्द्रियप्रत्यक्षसाधनाय हेतोरुपन्यासात् , तथाहि—सकलवस्तुविषयमतीन्द्रियप्रत्यक्षमिदानीं

साधयितुमिष्टं, ततः तरतमभावोऽपि हेतुत्वेनोपन्यस्तोऽतीन्द्रियज्ञानस्यैव वेदितव्यः, अन्यथा भिन्नाधिकरणस्य हेतोः पक्षधर्मत्वायोगात्, साक्षाच्चातीन्द्रियग्रहणं न कृतं, प्रस्तावादेव लब्धत्वात्। अतीन्द्रियं च ज्ञानमिन्द्रियानाश्रित सामान्येन द्रष्टव्यम्, तेन मनोज्ञानमपि गृह्यते। यदप्युक्तम्—'मनोज्ञानस्यापि तरतमभावः शास्त्राद्यालम्बन एवेति प्रकर्षभावोऽपि तद्विषय एव युक्त' इति, तदप्यसमीचीनं, शास्त्राद्यनिक्रान्तस्यापि तरतमभावस्य सम्भवात्। तथाहि—योगिनः परमयोगमिच्छन्तः प्रथमतः शास्त्रमभ्यसितुमुद्यतन्ते, यथाशक्ति च शास्त्रानुसारेण सकलमप्यनुष्ठानमनुतिष्ठन्ति, मा भूत्किमपि क्रियावैगुण्यं प्रमादाद्योगाभ्यासयोग्यताहानिर्वेति कृत्वा, ततो निरन्तरमेव यथोक्तानुष्ठानपुरस्सरं शास्त्रमभ्यस्यतां शुद्धचेतसा प्रतिदिवसमभिवर्द्धन्ते प्रज्ञामेधादिगुणा, ते चाभ्यासादभिवर्द्धमाना अद्यापि स्वसंवेदनप्रमाणेनानुभूयन्ते ततो नासिद्धा, ततः शनैः शनैरभ्यासप्रकर्षे जायमाने शास्त्रसन्दर्शितोपायाः वचनगोचरातीता शेषप्राणिगणसंवेदनागम्या सिद्धिपदसम्पद्धेतवः सूक्ष्मसूक्ष्मतरार्थविषया मनाक् समुल्लसत्स्फुटप्रतिभासा ज्ञानविशेषा उत्पद्यन्ते, ततः किञ्चिदूनात्यन्तप्रकर्षसम्भवे मनसोऽपि निरपेक्षमत्यादिज्ञानप्रकर्षपर्यन्तोत्तरकालभावि केवलज्ञानादर्वाक्तनं सवितुरुदयात् प्राक् तदालोककल्पमशेषरूपादिवस्तुविषयं प्रातिभं ज्ञानमुदयते, तच्च स्पष्टाभतयेन्द्रियप्रत्यक्षादधिकतरं, न चेदमसिद्धं, सर्वदर्शनेष्वप्यध्यात्मशास्त्रेषु तस्याभिधानात्। अथ प्रथमतो मनःसापेक्षमभ्यासमारब्धवान्, अभ्यासप्रकर्षे तूपजायमाने कथं मनोऽपि नालम्बते ?, उच्यते—अत्यन्ताभ्यासप्रकर्षवशतो मनोनिरपेक्षमपि शक्तत्वात्। तथाहि—तरणं शिक्षितुकामः प्रथमं तरण्डमपेक्षते, ततोऽभ्यासप्रकर्षयोगतः तरणनिष्णातस्तरण्डमपि परित्यजति, एवं योग्यपि वेदितव्यः। ततः सर्वोत्कृष्टप्रकर्षसम्भवेऽतीव स्फुटप्रतिभासं सकललोकालोकविषयमनुपममबाध्यं केवलज्ञानमुदयते, ततो यदुक्तम्—'शास्त्राद्यभ्यासतः शास्त्र—प्रभृत्येवावगच्छत' इत्यादि, तदत्यन्तमध्यात्मशास्त्रयाथात्म्यवेदिगुरुसम्पर्कबहिर्भूतत्वसूचकमवसेयम्। स्यादेतत् तारतम्यदर्शनादेस्तु ज्ञानस्य प्रकर्षसम्भवानुमानं, स तु प्रकर्षः सकलवस्तुविषय इति कथं श्रद्धेयम् ?, न खलु लङ्घनमभ्यासतः तारतम्यवदप्युपलभ्यमानं सकललोकविषयमुपलभ्यते, तदसद्, दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्। तथाहि—न लङ्घनमभ्यासादुपजायते, किन्तु बलविशेषत, तथाहि—समानेऽपि गरुत्मच्छाखामृगशावकयोरभ्यासे न समानं लङ्घनम्, उक्तं च—"गरुत्मच्छाखामृगयो—र्लङ्घनाभ्याससम्भवे। समानेऽपि समानत्वं, लङ्घनस्य न विद्यते ॥ १ ॥" अपि च—पुरुषयोरपि द्वयोः समानप्रथमयौवनयोरपि समानेऽप्यभ्यासे एकः प्रभूतं लघयितुं शक्नोति, अपरस्तु स्तोकम्, तस्माद्बलमपेक्ष्य लङ्घनं नाभ्यासमात्रहेतुकम्, अभ्यासस्तु केवलं देहवैगुण्यमात्रमपनयति, तच्च बलं वीर्यान्तरायकर्मक्षयोपशमात्, क्षयोपशमश्च जातिभेदापेक्षी द्रव्यक्षेत्राद्यपेक्षी च। ततो यस्य यावद्बलं तस्य तावदेव लङ्घनमिति तन्न सकललोकविषयं, जीवस्तु शशाङ्क वद् स्वरूपेण सकलजगत्प्रकाशनस्वभावः, केवलमावरणघनपटलनिरस्कृतप्रभावत्वात् न तथा प्रकाशते। उक्तं च—"स्थितः शीतांशुवज्जीव, प्रकृत्या भावशुद्धया। चन्द्रिकावच्च विज्ञानं, तदावरणमभ्रवत् ॥ १ ॥" ततो यथा प्रचण्डमैत्र्यनपवनप्रहता घनपटलपरमाणवः शनैः शनैर्विरलीभूयापगच्छन्ति, तदपगमनानुसारेण च चन्द्रस्य प्रकाशो जगति वितनुते, तथा जीवस्यापि रागादिभ्यः चित्तं विनिवर्त्य कायवाक्चेष्टासु संयतस्य सम्यक्शास्त्रानुसारेण च यथावस्थितं वस्तु परिभावयतो ज्ञानादिभावनाप्रभावतो ज्ञानावरणीयादिकर्मपरमाणवः शनैः शनैर्विरलीभूयात्मनः प्रच्यवन्ते, कथमेतत्प्रत्येयमिति चेत् ?, उच्यते—इहाज्ञानादिनिमित्तकं ज्ञानावरणीयादि कर्म, ततः तत्प्रतिपक्षज्ञानाद्यासेवनेऽवश्यं तदात्मनः प्रच्यवते। उक्तं च—"यथइ जहेव कम्म, अन्नाणाईहिं कलुसियमणो उ। तह चेव तविवक्खे, सहावओ मुच्चई जेण ॥१॥" ज्ञानावरणीयकर्मपरमाणुप्रच्यवनानुसारेण चात्मनः शनैः शनैर्ज्ञानमधिकमधिकतरमुल्लसति, यदा तु ज्ञानादिभावनाप्रकर्षवशेनाशेषज्ञानावरणीयादिकर्मपरमाण्वपगमः तदा सकलाभ्रपटलविनिर्मुक्तशशाङ्क इव आत्मा लब्धयथावस्थितात्मस्वरूपः सकलस्यापि जगतोऽवभासकः, ततो ज्ञानस्य प्रकर्षः सकललोकविषय। अथवा-सर्वं वस्तु सामान्येन शास्त्रेऽपि प्रतिपाद्यते यथा पञ्चास्तिकायात्मको लोकः, आकाशास्तिकायात्मकश्चालोक, किञ्चिद्विशेषतश्च ऊर्ध्वाधस्तिर्यग्लोकाकाशाना सविस्तरं तत्राभिधानात्, शास्त्रानुसारेण च ज्ञानाभ्यास। ततः तरतमभावोऽपि ज्ञानस्य सकलवस्तुविषय एवेति प्रकर्षभावः तद्विषयो न विरुध्यते, लङ्घनं तु सामान्यतोऽपि न सकललोकविषयमिति कथमभ्यासतः तत्प्रकर्षः सकललोकविषयो भवेत् ?। स्यादेतद्-यद्यपि सामान्यतः शास्त्रानुसारेण सकलवस्तुविषयं ज्ञानमुपजायते तथाऽप्यभ्यासतः तत्प्रकर्षः सकलवस्तुगताशेषविशेषविषय इति कथं ज्ञायते?, न ह्यत्र किञ्चित् प्रमाणमस्ति, न चाप्रमाणकं वचो विपश्चितः प्रतिपद्यन्ते, विपश्चित्ताक्षितिप्रसङ्गात्। तदसत्, अनुमानप्रमाणसद्भावात्, तच्चानुमानमिदम्-जलधिजलपलप्रमाणादयो विशेषाः कस्यचित्प्रत्यक्षा, ज्ञेयत्वात् घटादिगतरूपादिविशेषवत्, ज्ञेयत्वं हि ज्ञानविषयतया व्याप्तम्, न च जलधिजलपलप्रमाणादिरूपेषु विशेषेषु प्रत्यक्षमन्तरेण शेषानुमानादिज्ञानसम्भवः, तथाहि—न ते विशेषा अनुमानप्रमाणगम्याः, लिङ्गाभावात्। नाप्यागमगम्याः, तस्य विधिप्रतिषेधमात्रविषयत्वात्। नाप्युपमानगम्याः, तस्य प्रत्यक्षपुरस्सरत्वाद्। उक्तं च—'न चागमेन यदसौ, विध्यादिप्रतिपादक। अप्रत्यक्षत्वतो नैवोपमानस्यापि सम्भव ॥ १ ॥" नाप्यर्थापत्तिविषयाः, सा हि दृष्टः श्रुतो वाऽर्थो यदन्तरेण नोपपद्यते यथा काष्ठस्य भस्मविकारोऽग्नेर्दाहकशक्तिमन्तरेण तद्विषया वर्ण्यते, न च दृष्टः श्रुतो वा कोऽप्यर्थः तान् विशेषान्तरेण नोपपद्यते, ततो नार्थापत्तिगम्या। न चैते विशेषाः स्वरूपेण न सन्ति, विशेषान् विना सामान्यस्यैवासम्भवात्, न च घाच्यमत एव सामान्यस्यान्यथानुपपत्तेरर्थापत्तिगम्याः, नियतरूपतयाऽनवगमात्, प्रातिनैयत्यमेव च विशेषाणां स्वस्वरूपम्, अन्यथा विशेषहानेः सामान्यरूपताप्रसङ्गात्। न च

तेषां ज्ञेयत्वमेवासिद्धमिति वाच्यम् , अभावप्रमाण-व्यभिचारप्रसङ्गात्। तथाहि-यदि केनापि प्रमाणेन न ज्ञायन्ते तर्हि-'प्रमाणपञ्चकं यत्र, वस्तुरूपे न जायते। वस्त्वसत्तावबोधार्थं, तत्राभावप्रमाणता ॥ १ ॥' इति वचनादभावप्रमाणविषया. स्युः, अभावाख्यं च प्रमाणमभावसाधनमिष्यते । अथ च ते विशेषा. स्वरूपेणैवावतिष्ठन्ते, ततोऽभावप्रमाण-व्यभिचारप्रसङ्ग , तस्माद्विपक्षव्यापकानुपलब्ध्या विशेषाणां ज्ञेयत्वं प्रत्यक्षविषयतया व्याप्यत इति प्रतिबन्धसिद्धि । स्यादेतत्—ज्ञेयत्वादिति हेतुर्विशेषविरुद्ध , तथाहि-घटादिगता रूपादिविशेषा इन्द्रियप्रत्यक्षेण प्रत्यक्षा उपलब्धा., तत. तज्ज्ञेयत्वमिन्द्रियप्रत्यक्षविषयतया प्रत्यक्षत्वेन व्याप्तं निश्चितं सत् जलधिजलपलप्रमाणादिष्वपि विशेषेषु प्रत्यक्षत्वमिन्द्रियप्रत्यक्षविषयतां साधयति , तच्चानिष्टमिति । तदयुक्तम् , विरुद्धलक्षणासम्भवात् , तथाहि—विरुद्धो हेतु. तदा भवति यदा बाधकं नोपजायते, 'विरुद्धोऽसति बाधके' इति वचनाद् , अत्र च बाधकं विद्यते, यदि हि इन्द्रियप्रत्यक्षविषयतया प्रत्यक्षत्वं भवेत् ततोऽस्मादृशामपि ते प्रत्यक्षा भवेयु., न च भवन्ति, तस्मादस्मादृशै. प्रत्यक्षत्वेनासंवेदनमेव तेषामिन्द्रियप्रत्यक्षविषयत्वसाधने बाधकमिति न विशेषविरुद्ध. । अन्य. प्राह—न विशेषविरुद्धता हेतोर्दूषणम् , अन्यथा सकलानुमानोच्छेदप्रसङ्गात् , तथाहि—यथा धूमोऽग्निं साधयति , अग्निप्रतिबद्धतया महानसे निश्चितत्वात् , तथा तस्मिन् साध्यधर्मिण्यग्न्यभावमपि साधयति , तेनापि सह महानसे प्रतिबन्धनिश्चयात् , तद्यथा-नात्रत्येनाग्निना अग्निमान् पर्वतो धूमवत्त्वात् , महानसवत् , ततश्चैवं न कश्चिदपि हेतु. स्यात् , तस्मात् न विशेषविरुद्धता हेतोर्दोष. । आह च प्रज्ञाकरगुप्तोऽपि-" यदि विशेषविरुद्धतया क्षितिः-ननु न हेतुरिहास्ति न दूषितः । निखिलहेतुपराक्रमरोधिनी, न हि न सा सकलेन विरुद्धता ॥ १ ॥ " यच्चोक्तम्—' अथवा अस्तु तदपि तथापि, सर्व्वमेतावदेव जगति वस्त्विति न निश्चय ' इत्यादि तदप्यसार , यतोऽवधिज्ञानं तदावरणकर्मदेशक्षयोत्थ ततोऽतीन्द्रियमपि तन्न सकलवस्तुविषय , केवलज्ञान तु निर्मूलसकलज्ञानावरणकर्मपरमाणवपगमसमुत्थं तत कथमिव तन्न सकलवस्तुविषय भवेत् ?, न ह्यतीन्द्रियस्य देशादिविप्रकर्षा प्रतिबन्धका , न च केवलप्रादुर्भावे आवरणदेशस्यापि सम्भव', ततो यद्वस्तु तत्सर्वं भगवत प्रत्यक्षमेवेति भवति सर्वज्ञस्यैवमात्मनो निश्चय —एतावदेव जगति वस्त्विति । यदप्युक्तम्—'अशुच्यादिरसास्वादप्रसङ्ग' इति, तदपि दुरन्तदीर्घपापोदयविजृम्भितम् , अज्ञानतो भगवत्यधिक्षेपकरणात् , यो हि यादृग्भूतोऽशुच्यादिरसो येषां च प्राणिना यादृग्भूता प्रीतिमुत्पादयति येषां च विद्विष तत्सर्वं तद्वस्थतया भगवान् वेत्ति , तत कथमशुच्यादिरसास्वादप्रसङ्ग ? । अथ यदि तटस्थतया वेत्ति तर्हि न सम्यक् , सम्यक् चेत् यथास्वरूपं वेत्ता तर्हि नियमात् तदास्वादप्रसक्ति. । उक्तं च—" तटस्थत्वेन वेद्यत्वे , तत्त्वेनाऽवेदनं भवेत् । तदात्मना तु वेद्यत्वेऽशुच्यास्वाद प्रसज्यत ॥ १ ॥ " तदसत् , भवान् हि सकर्म्मा करणाधीनज्ञान ततो रस यथावस्थितमवश्य जिह्वेन्द्रियव्यापारपुरस्सरमास्वादत एव जानाति, भगवांस्तु करणव्यापारनिरपेक्षोऽतीन्द्रियज्ञानी ततो जिह्वेन्द्रियव्यापारसम्पाद्यास्वादमन्तरेणैव रसं यथावस्थितं तटस्थतया सम्यग् वेत्तीति न कश्चिद्दोषः । एतेन परागादिवेदने रागित्वादिप्रसङ्गापादनमप्यपास्तमवसेयं , परागादीनामपि यथावस्थिततया तटस्थेन सत्त्वावेदनात् । यदप्युक्तम्-'कालतोऽनादिरनन्त. संसार ' इत्यादि तदप्यसम्यग् ,युगपत्सर्ववेदनाद् , न च युगपद् सर्ववेदनमसम्भवि, दृष्टत्वात् । तथाहि—सम्यग्जिनागमाभ्यासप्रवृत्तस्य बहुशो विचारितधर्म्माधर्म्मास्तिकायादिस्वरूपस्य सामान्यत. पञ्चास्तिकायविज्ञानं युगपदपि जायमानमुपलभ्यते, एवमशेषविशेषकलितपञ्चास्तिकायविज्ञानमपि भविष्यति । तथा चायमर्थोऽन्यैरप्युक्त —"यथा सकलशास्त्रार्थं , स्वभ्यस्तः प्रतिभासते । मनस्यैकक्षणेनैव, तथाऽनन्तादिवेदनम् ॥ १ ॥" यदप्युच्यते—'कथमतीतं भावि वा वेत्ति ?, विनष्टानुत्पन्नत्वेन तयोरभावा' दिति, तदपि न सम्यक् , यतो यद्यपीदानीन्तनकालापेक्षया ते असती, तथापि यथाऽतीतमतीते कालेऽवर्त्तिष्ट यथा च भावि ( वार्त्स्यति ) वर्त्तिष्यते तथा ते साक्षात्करोति ततो न कश्चिद्दोषः । स्यादेतत्—यथा भवद्भिर्ज्ञानस्य तारतम्यदर्शनात्प्रकर्षसम्भवोऽनुमीयते तथा तीर्थान्तरीयैरपि, ततो यथा भवत्सम्मततीर्थकरोपदर्शिता. पदार्थराशय. सत्यतामश्नुवते तथा तीर्थान्तरीयसम्मततीर्थकरोपदर्शिता अपि सत्यतामश्नुवीरन् ,विशेषाभावाद् , अन्यथा ,भवत्सम्मततीर्थकरोपदर्शिता अपि असत्यतामश्नुवीरन् । अथ तीर्थान्तरीयसम्मततीर्थकरोपदिष्टा. पदार्थराशयोऽनुमानप्रमाणेन बाध्यन्ते ततो न ते सत्या., तदयुक्तम् , अनुमानप्रमाणेनातीन्द्रियज्ञानस्य बाधितुमशक्यत्वात् , आह च—" अतीन्द्रियानसंवेद्यान् , पश्यन्त्यार्षेण चक्षुषा । ये भावान् वचन तेषा, नानुमानेन बाध्यते ॥ १ ॥ " अथ सम्भवति जगति प्रज्ञालवोन्मेषदुर्विदग्धा. कुतर्कशास्त्राभ्याससम्पर्कतो वाचाला. तथाविधाद्भुतेन्द्रजालकौशलवशन दर्शितदेवागमनभायानचामरादिविभूतय. कीर्त्तिपूजादिलब्धुकामा. स्वयमसर्वज्ञा अपि सर्वज्ञा वयमिति ब्रुवाणा ,तत एतावदेव न ज्ञायते यदुत—तेषां सर्वोत्तमप्रकर्षरूपमतीन्द्रियज्ञानमभूत् , यदि पुनर्यथोक्तस्वरूपमतीन्द्रियज्ञानमभविष्यत् तर्हि वचनमपि तेषा नाबाधिष्यत, अथ च दृश्यते बाधा ततस्ते कैतवभूमयो न सर्वज्ञा इति प्रतिपत्तव्यम् । तदेतदर्हत्यपि समानम् ,न समानम्,अर्हद्वचसि प्रमासंवाददर्शनात् । उक्त च-' जैनेश्वरे हि वचसि , प्रमासंवाद इष्यते । प्रमाणबाधा त्वन्येषा—मतो द्रष्टा जिनेश्वरः ॥ १ ॥ " अथ पुरुषमात्रसमुत्थं प्रमाणमतीन्द्रियविषये न साधकं नापि बाधकमविषयत्वात् , समानकक्षताया हि बाध्यबाधकभाव , तथा चोक्तम्—" समानविषया यस्मा-द्बाध्यबाधकसंस्थिति. । अतीन्द्रिये च संसारी, प्रमाणं न प्रवर्त्तते ॥ १ ॥ " तत कथमुच्यते—अर्हतो वचसि प्रमासंवाददर्शन प्रमाणबाध्यत्वमन्येषामिति ?, तदपि न सम्यक् , यतो न भगवान् केवलमतीन्द्रियमस्मादृशामशक्यपरिच्छेदमेवोपदिशति, यदि पुन. तथाभूतमुपदिशेत् तर्हि न कोऽपि तद्वचनतः प्रवर्तेत, अतीन्द्रियार्थे वच.

सर्वेषामेव विद्यते परस्परविरुद्धं च, ततः कथं तद्वचनतः प्रेक्षावतो प्रवृत्तिः ?, ततोऽवश्यं परान् प्रतिपादयता भगवता परैः शक्यपरिच्छेदमप्युपदेष्टव्य, शक्यपरिच्छेदेषु चार्थेषु भगवदुक्तेषु यस्तथाप्रमाणेन संवदनं तत्तद्विषयं साधकं प्रमाणमुच्यते, विपरीतं तु बाधकम् । अस्ति च भगवदुक्तेषु शक्यपरिच्छेदेष्वर्थेषु प्रमासंवाद. । तथाहि-घटादय पदार्था अनेकान्तात्मका उक्ता , ते च तथैव प्रत्यक्षतोऽनुमानतो वा निश्चीयन्ते मोक्षोऽपि च परमानन्दरूपशाश्वतिकसौख्यात्मक उक्त , तत सोऽपि युक्त्या सङ्गतिमुपपद्यते, यत संसारप्रतिपक्षभूतो मोक्ष संसारे जन्मजरामरणादिदुःखहेतवो रागादय ते च निर्मूलमपगता मोक्षावस्थायामिति न मोक्षे दु खलेशस्यापि सम्भव. । न च निर्मूलमपगता रागादयो भूयोऽपि जायन्ते, तत. तत्सौख्यं शाश्वतिकमुपवर्ण्यते, ननु यदि न तत्र रागादयस्तर्हि न तत्र मत्तकामिनीगाढालिङ्गनपीनस्तनापीडनवदनचुम्बनकराघातादिप्रभवं रागनिबन्धनं सुखं, नापि द्वेषनिबन्धनं प्रबलवैरितिरस्कारापादनप्रभव , नापि मोहनिबन्धनमहङ्कारसमुत्थमात्मीयविनीतपुत्रभ्रातृप्रभृतिबन्धुवर्गसहवाससम्भवं च; तत. कथमिव स मोक्षो जन्मिनामुपादेयो भवति ? । आह च—
"वीतरागस्य न सुखं, योषिदालिङ्गनादिजम् । वीतद्वेषस्य च कुतः, शत्रुसेनाविमर्द्दजम् ? ॥ १ ॥ वीतमोहस्य न सुखमात्मीयाभिनिवेशजम् । तत किं तादृशा तेन, कृत्यं मोक्षेण जन्मिनाम् ?॥२॥" अपि च-क्षुदादयोऽपि तत्र सर्वथा निवृत्ता इष्यन्ते, ततोऽत्यन्तबुभुक्षाक्षामकुक्षेर्यद् विशिष्टाहारभोजनेन यद्वा ग्रीष्मादौ पिपासापीडितस्य पाटलाकुसुमादिवासितसुगन्धिशीतसलिलपानेनोपजायते सुखं तदपि तत्र दूरतोऽपास्तप्रसरमिति न कार्यं तेन,तदेतदवीवासमीचीनम् ,यतो यद्यपि रागादय प्रथमत क्षणमात्रसुखदायितया रमणीया प्रतिभासन्ते तथापि ते परिणामपरम्परयाऽनन्तदु खसहननरकादिदु खसम्पानहेतव , तत. पर्यन्तदारुणतया विषान्नभोजनसमुत्थमिव न रागादिप्रभव सुखमुपादेय प्रेक्षावतां भवति । प्रेक्षावन्तो हि बहुदु खमपहाय यदेव बहुसुखं तदेव प्रतिपद्यन्ते । यस्तु स्तोकसुखनिमित्तं बहुदु खमाद्रियते स प्रेक्षावानेव न भवति, किन्तु कुबुद्धि', रागादिप्रभवमपि च सुखमुक्तनीत्या बहुदु खहेतुकम् , अपवर्गसुख चैकान्तिकात्यन्तिकपरमानन्दरूप, तत तदेव तत्त्ववेदिनामुपादेयं, न रागादिप्रभवमिति । यदि पुनर्यदपि तदपि सुखमभिलषणीय भवत. तर्हि पानशौण्डाना यत् मद्यपानप्रभवं यच्च गर्त्ताशूकराणा पुरीषभक्षणसमुत्थं यच्च रक्षसा मानुषमांसाभ्यवहारसम्भवं यच्च दासस्य सत. स्वामिप्रसादादिहेतुकं यदपि च पारसीकदेशवासिनो मात्रादिश्रोणीसङ्गमनिबन्धनं तत्सर्वं भवतो द्विजातिभवे सति न सम्पद्यत इति पानशौण्डाद्यप्यभिलषणीयम् । अपि च-नरकदु खमप्राप्तस्य न तद्वियोगसम्भव सुखमुपजायते ततो नरकदु खमप्यभिलषणीयम् । ( अथ—विशिष्टमेव सुखमभिलषणीयमिति 'मोक्खमग्ग' शब्दे षष्ठभागे गतम् । ) तदेवं भगवदुपदिष्टेषु शक्यपरिच्छेदेष्वनुमेयेषु च यथाक्रमं प्रत्यक्षाऽनुमानसंवाददर्शनात् मोक्षाऽदिषु च युक्त्योपपद्यमानत्वाद्भगवानेव सर्वज्ञो न सुगतादिरिति स्थितम् । नं०।



सव्वजिण-सर्वजिन-पुं० । सर्वतीर्थकृति, दर्श० ४ तत्त्व ।

सव्वजिणसासणग-सर्वजिनशासनक-त्रि० । सर्वैर्जिनैः शिष्यन्ते प्रतिपाद्यन्ते यानि तानि सर्वजिनशासनानि तान्येव सर्वजिनशासनकानि । सर्वतीर्थकरप्रशस्तेषु , प्रश्न० १ संव० द्वार ।

सव्वजिणाणाविमुह-सर्वजिनाज्ञाविमुख-त्रि० । सकलसर्वविदुपदेशविराधके, दर्श० ४ तत्त्व ।

सव्वजोग-सर्वयोग-पुं० । समस्तव्यापारे, पञ्चा० ७ विव० ।

सव्वजोणिय-सर्वयोनिक-त्रि० । सर्वा योनय उत्पत्तिस्थानानि येषा सत्त्वाना ते सर्वयोनिका । सर्वगतिभाक्षु, आचा० १ श्रु० ६ अ० १ उ० । सर्वा हि योनय -संवृतविवृतोभयशीतोष्णोभयसचित्ताचित्तोभयरूपा. । सूत्र०२श्रु०४ अ०।

सव्वज्ज-सर्वज्ञ-त्रि० । "ज्ञो ञ " ॥ ८ । २ । ८३ ॥ इति ञस्य लुक् । केवलज्ञानिनि, प्रा० २ पाद ।

सव्वज्जुइ-सर्वद्युति-स्त्री० । आभरणादिसम्बन्धिन्यां समस्तद्युतौ, विपा० १ श्रु० ६ अ० ।

सर्वयुक्ति-स्त्री० । उचितेष्टवस्तुघटनायाम् , विपा० १ श्रु० ६ अ० । कल्प० । रा० । म० ।

सव्वज्जुय-सर्वर्जुक-पुं० । सर्वै प्रकारैः ऋजु प्रगुणो विवक्षितमोक्षगमन प्रत्युन्कुटिलः। सर्वर्जुसंयमे, सद्धर्मे च । सूत्र० १ श्रु० १ अ० २ उ० ।

सव्वट्ठ-सर्वार्थ-पुं० । सर्वे च तेऽर्थाश्च सर्वार्था । आचा० १ श्रु० ८ अ० ८ उ० । अशेषप्रयोजनेषु, आचा० २ श्रु० २ चू०। बाह्याभ्यन्तरे धनधान्यकलत्रममत्वादौ अशेषप्रयोजनीयवस्तुनि, सूत्र० १ श्रु० २ अ० २ उ० । एकोनत्रिंशत्तमेऽहोरात्रमुहूर्त्ते, ज्यो० २ पाहु० । ज० । सू० प्र० । कल्प० ।

सव्वट्ठसिद्ध-सर्वार्थसिद्ध-पुं० । पञ्चानामनुत्तरविमानानां मध्यमे,अणु० । स० । स्था० । प्रज्ञा० । एकोनत्रिंशेऽहोरात्रमुहूर्त्ते, स० ३० सम० । कल्प० ।

सव्वट्ठसिद्धिय-सर्वार्थसिद्धिक-पुं० । सर्वार्थसिद्धविमानवासिनि देवे, स० । औ० । ऐरवते वर्षे भविष्यति षष्ठे तीर्थकरे, प्रव० ७ द्वार ।

सव्वट्ठाण-सर्वस्थान-न० । शय्याभोजनमन्त्रादिस्थानेषु , विशे० ।

सव्वणट्ठ-सर्वनष्ट-त्रि० । सर्वप्रकारैर्विनाशमापन्ने, विशे० ।

सव्वणय-सर्वनय-पुं० । सर्वेषु नैगमादिनयेषु, उत्त० २ अ० ।

सव्वणयमय-सर्वनयमत-न० । द्रव्यास्तिकपर्यायास्तिकज्ञाननयक्रियानयसंमते, पञ्चा० १२ विव० ।

सव्वणयविसुद्ध-सर्वनयविशुद्ध-त्रि० । सर्वे निरवशेषास्ते च ते नयाश्च सर्वनयास्तेषा विशुद्धं निर्दोषतया संमतम् । उत्त० । २ अ० । सर्वनयसम्मते, दश० १ अ० । 'तं सव्वणयविसुद्धं, जं चरणगुणट्ठिओ साहू' आव० ६ अ० ।

सव्वणयसमूहमय-सर्वनयसमूहमय-त्रि० । द्रव्यास्तिकादिनयसंघानात्मके, दर्श० ४ तत्त्व ।

सव्वणाडय-सर्वनाटक-पुं० । समस्तनाटयकर्तृषु, कल्प० १ अधि० ५ क्षण ।

सव्वणाण-सर्वज्ञान-न० । सर्वं जानातीति सर्वज्ञानम् । केवलज्ञाने, विशे० । सर्वपरिपूर्णज्ञानम् । क्षायिकज्ञाने केवलज्ञाने, विशे० ।

सव्वणाणावरणिज्ज-सर्वज्ञानावरणीय-न० । सर्वज्ञानं केवलाख्यमावृणोतीति सर्वज्ञानावरणीयम् । केवलज्ञानावरणे, आदित्यकल्पकेवलज्ञानरूपस्य जीवस्याच्छादकतया सान्द्रमेघवृन्दकल्पं हि तत् । स्था० २ ठा० ४ उ० ।

सव्वणास-सर्वनाश-पुं० । सर्वात्मना नाशे, विशे० । प्रश्न० ।

सव्वणीइ-सर्वनीति-स्त्री० । समस्तनैगमादिनये, द्वा० १ अष्ट० ।

सव्वण्णु-सर्वज्ञ-पुं० । सर्वं जानातीति सर्वज्ञः । ल० । पं० सं० १ द्वार । ध० । सर्वे-समस्तं; द्रव्यप्रदेशपर्यायरूपं वस्तु जानाति विशेषग्रहणेन. समस्तावरणक्षयाविर्भूतकेवलं संवेदनेनावबुध्यत इति सर्वज्ञः । ल० । " ज्ञो णत्वेऽभिज्ञादौ " ॥ ८ । १ । ५६ ॥ इति कृतणत्वस्य ज्ञस्य अत उत्वम् । प्रा० । अनु० । वस्तुस्तोमस्य विशेषतयाऽनुज्ञापके, भ० १ श० १ उ० । विशे० । सूत्र० । उपा० । आव० । स्था० । ( एतद्विषये ' अतिथवाय ' शब्दे प्रथमभागे ५२२ पृष्ठे ' अत्त ' शब्दे च ४६६ पृष्ठे गता वक्तव्यता । ) " रागाद्वा द्वेषाद्वा, मोहाद्वा वाक्यमुच्यते ह्यनृतम् । यस्य तु नैते दोषा-स्तस्यानृतकारणं किं स्यात् ॥१॥" इति वचनात् । प्रणेतुश्च निर्दोषत्वमुपपादितमेवेति सिद्ध आगमादप्यात्मा । "एगे आया" इत्यादिवचनात्, तदेवं प्रत्यक्षानुमानागमैः सिद्धः प्रमाता प्रमेयं चानन्तरमेव बाह्यार्थसाधने साधितम्, तत्सिद्धौ च 'प्रमाणं ज्ञानम्' तच्च प्रमेयाभावे कस्य ग्राहकमस्तु निर्विषयत्वात्, इति प्रलापमात्रम् कारणमन्तरेण क्रियासिद्धेरयोगाद्, लवनादिषु तथादर्शनात् । यच्च अर्थसमकालमित्याद्युक्तम् तत्र विकल्पद्वयमपि स्वीक्रियत एव । असदादिप्रत्यक्षं हि समकालार्थाऽऽकलनकुशलं स्मरणमतीतार्थस्य ग्राहकम् शब्दानुमाने च त्रैकालिकस्याऽऽप्यर्थस्य परिच्छेदके निराकारं चैतद् द्वयमपि । नचातिप्रसङ्गः स्वज्ञानावरणवीर्यान्तरायक्षयोपशमविशेषवशादेवास्य नैयत्येन प्रवृत्ते शेषविकल्पानामस्वीकार एव तिरस्कारः । प्रमितिस्तु प्रमाणस्य फलं स्वसंवेदनसिद्धैव । नह्यनुभवेऽप्युपदेशापेक्षा फलं च द्विधा, आनन्तर्यपारम्पर्यभेदात्, तत्राऽऽनन्तर्येण सर्वप्रमाणानामज्ञाननिवृत्ति फलम्, पारम्पर्येण केवलज्ञानस्य तावत्फलमौदासीन्यम्, शेषप्रमाणानां तु हानोपादानोपेक्षाबुद्धय । इति सुव्यवस्थितं प्रमात्रादिचतुष्टयम् । ततश्च-'नासन्नसन्नसदस-न्नचाप्यनुभयात्मकम् । चतुष्कोटिविनिर्मुक्तं, तत्त्वमाध्यात्मिका विदुः ॥ १ ॥' इत्युन्मत्तभाषितम् । किञ्च-इदं प्रमात्रादीनामवास्तवत्वं शून्यवादिना वस्तुवृत्त्या तावदेष्टव्यम् । तच्चासौ प्रमाणात् अभिमन्यते, अप्रमाणाद्वा ? । न तावदप्रमाणात्, तस्याऽकिञ्चित्करत्वात् । अथ प्रमाणात्, तत्र । अवास्तवत्वग्राहकं प्रमाणं सांवृतम्, असांवृतम् वा स्यात् ? । यदि सांवृतम्, कथं तस्मादवास्तवाद् वास्तवस्य शून्यवादस्य सिद्धिः ?, तथा तदसिद्धौ च वास्तव एव समस्तोऽपि प्रमात्रादिव्यवहारः प्राप्तः । अथ तद् ग्राहकं प्रमाणं स्वयमसांवृतम्, तर्हि क्षीणा प्रमात्रादिव्यवहाराऽवास्तवत्वप्रतिज्ञा, तेनैव व्यभिचारात् । तदेवं पक्षद्वयेऽपि ' इतो व्याघ्र इतस्तटी ' इति न्यायेन व्यक्त एव परमार्थतः स्वाभिमतसिद्धिविरोधः । स्या० । स्था० । नं० । वीर एव सर्वज्ञः-सुगतादयोऽपि सौगतादिभिः सकलवस्तुस्तोमसाक्षात्कारिण इष्यन्ते, तत्किं सुगतादिः सकलवस्तुस्तोमसाक्षात्कारीति प्रतिपद्यतामस्माभिः, किं वा भगवद्वर्द्धमानस्वामीति तदवस्थ एव निश्चयाभावः ?, स्यादेतत्-किमत्र संशयेन ?, यस्य पादारविन्दयुगलं प्रणिनंसवो दिवौकसः परस्परमहमहमिकया विशिष्टविशिष्टतरविभूतिद्युतिपरिकलिताः शतसहस्रसङ्ख्येन विमाननिवहेन सकलमपि नभोमण्डलमाच्छादयन्तो महीमवतीर्य पूजादिकमातन्वन्ति स स. भगवान् वर्द्धमानस्वामी सर्वज्ञो न शेषाः सुगतादयः, मनुष्या हि मूढमनस्का अपि सम्भाव्यन्ते न देवाः, ततो यदि शेषा अपि सुगतादयः सर्वज्ञा अभविष्यन् तर्हि तेषामपि देवाः पूजामकरिष्यन्, न च कृतवन्तस्तस्मान्न ते सर्वज्ञाः । तदेतत्स्वदर्शनानुरागतरलितमनस्कतासूत्रकम्, यतो वर्द्धमानस्वामिनो दिवः समागत्य देवास्तथा पूजां कृतवन्त इत्येतदपि कथमवसीयते ?, भगवतश्चिरातीतत्वेनेदानीं तद्ग्राहकप्रमाणाभावात् । सम्प्रदायादवसीयते इति चेत्, ननु सोऽपि सम्प्रदायो न धूर्त्तपुरुषप्रवर्त्तितः-किन्तु सत्यपुरुषप्रवर्त्तित एवेति कथमवगन्तव्यम् ?, तद्ग्राहकप्रमाणाभावात्, नचाप्रमाणकं वयं प्रतिपत्तुं क्षमाः, मा प्रापदप्रेक्षावत्ताप्रसङ्गः । अन्यच्च मायाविनः स्वयमसर्वज्ञा अपि जगति स्वस्य सर्वज्ञभावं प्रचिकटयिषवस्तथाविधेन्द्रजालवशाद्दर्शयन्ति देवानितस्ततः सञ्चरतः, स्वस्य च पूजादिकं कुर्वतः, ततो देवागमदर्शनादपि कथं तस्य सर्वज्ञत्वनिश्चयः ? । तथा चाह भावत्क एव स्तुतिकारः समन्तभद्रः-' देवागमनभोयान-चामरादिविभूतयः । मायाविष्वपि दृश्यन्ते, नातस्त्वमसि नो महान् ॥ १ ॥ ' भवतु वा वर्द्धमानस्वामी सर्वज्ञः तथापि तत्सत्कोऽयमाचारादिक उपदेशो न पुनः केनापि धूर्त्तेन स्वयं विरचय्य प्रवर्त्तित इति कथमवसेयम् ?, अतीन्द्रियत्वेनैतद्विषये प्रमाणाभावात् । अथवा-भवत्वेषोऽपि निश्चयो यथा अयमाचारादिक उपदेशो वर्द्धमानस्वामिन इति, तथापि तस्योपदेशस्यायमर्थो नान्य इति न शक्यः प्रत्येतुम्, नानार्था हि शब्दा लोके प्रवर्त्तन्ते, तथादर्शनात्, ततोऽन्यथाऽप्यर्थसम्भावनायां कथं विवक्षितार्थनियमनिश्चयः ?, अथ मन्येथास्तदात्वे तत एव सर्वज्ञात् साक्षाच्छृण्वतो गौतमादेरर्थनियमनिश्चयोऽभूत् ततः आचार्यपरम्परयेदानीमपि भवतीति, तदप्ययुक्तम्, यतो नाम गौतमादिरपि छद्मस्थः, छद्मस्थस्य च परचेतोवृत्तिरप्रत्यक्षा, तस्या अतीन्द्रियत्वेनैतद्विषये चक्षुरादीन्द्रियप्रत्यक्षप्रवृत्तेरभावात्, अ-

प्रत्यक्षायां च सर्वज्ञस्य विवक्षायां कथमिदं ज्ञायते एष सर्वज्ञस्याभिप्रायोऽनेन चाभिप्रायेण शब्द प्रयुक्तो नाभिप्रायान्तरेण ? , तत एवं सम्यक् परिज्ञानाभावात् यामेव वर्णावलीमुक्तवान् भगवान् तामेव केवला पृष्ठतो लग्नो गौतमादिरभिभाषते , न पुन. परमार्थतस्तस्योपदेशस्यार्थमवबुध्यते । न० । ( प्रपञ्चत सार्वज्ञाक्षेपप्रतिक्षेपौ ' केवलणाण ' शब्दे तृतीयभागे ६४३ पृष्ठे प्रतिपादितौ । ) " वीतरागादि सर्वज्ञा, न मिथ्या ब्रुवते तत । यस्मात्तस्माद् वचस्तेषा, तथ्यभूतार्थदर्शनम् ॥१॥ " । बृ० १ उ० १ प्रक० । तथा च तद्वचनम्- " सर्वं पश्यतु वा मा वा , तत्त्वमिष्ट तु पश्यतु । कीटसंख्यापरिज्ञानं, तस्य न क्वोपयुज्यते ॥ १ ॥ " तथा—"तस्मादनुष्ठानगतं, ज्ञानमस्य विचार्यताम् । प्रमाण दूरदर्शी चे—देते गृध्रानुपास्महे ॥ १ ॥ " तन्मतव्यपोहार्थमनन्तविज्ञानमित्यदुष्टमेव । विज्ञानान्त्यं विना एकस्याऽप्यर्थस्य यथावत्परिज्ञानाऽभावात् । तथा चार्षम्—" जे एगं जाणइ से सव्वं जाणइ । जे सव्वं जाणइ से एगं जाणइ । " तथा " एको भाव· सर्वथा येन दृष्ट , सर्वे भावा· सर्वथा तेन दृष्टाः । सर्वे भावा· सर्वथा येन दृष्टा, एको भाव सर्वथा तेन दृष्ट· ॥ १ ॥ " इति । ननु तर्हि अबाध्यसिद्धान्तमित्यपार्थकं यथोक्तगुणयुक्तस्याव्यभिचारिवचनत्वेन तदुक्तसिद्धान्तस्य बाधाऽयोगात् । न । अभिप्रायाऽपरिज्ञानात् । निर्दोषपुरुषप्रणीत एव अबाध्य· सिद्धान्तो नापरेऽपौरुषेयाद्याः , असम्भवादिदोषाघ्रातत्वात् इति ज्ञापनार्थम् , आत्ममात्रतारकमूकाऽन्तकृत्केवल्यादिरूपमुण्डकेवलिनो यथोक्तसिद्धान्तप्रणयनाऽसमर्थस्य व्यवच्छेदार्थं वा विशेषणमेतत् । स्या० । ( " सर्वज्ञो मुख्य एवैकस्तत्प्रतीतिश्च यावताम् । सर्वेऽपि ते तमापन्ना , मुख्यं , सामान्यतो बुधाः ॥ १ ॥ " इति सर्वतीर्थिकसमतया सार्वज्ञ्यं ' कुतक्क ' शब्दे तृतीयभागे ५८२ पृष्ठे साधितम् । ) सर्वं सर्वतत्त्वस्वरूपाभिन्नमात्मानं जानाति वेत्तीति सर्वज्ञः । आत्मज्ञानि , अष्ट० ४ अष्ट० ।

अथ सर्वज्ञतां साधयति—

तथाहि-ये देशकालस्वभावविप्रकर्षवन्तः सदुपलम्भकप्रमाणविषयभावमनापन्ना भावा न ते प्रेक्षावता सद्व्यवहारपथावतारिण· यथा नाकपृष्ठादयस्तथात्वेनाभ्युपगमविषया· । तथा च समस्तवस्तुविस्तारव्यापिज्ञानसंपत्समन्वित पुरुष इति सद्व्यवहारप्रतिषेधफलानुपलब्धि· । नचासिद्धो हेतु· । तथाहि—सकलपदार्थसाक्षात्कारिज्ञानाऽङ्कनाऽऽलिङ्गित पुरुष प्रत्यक्षसमधिगम्यो वा अभ्युपगम्यत, अनुमानादिसंवेद्यो वा ? , न तावदध्यक्षगोचरः , प्रतिनियतसंनिहितरूपादिविषयनियमितसाक्षात्करणस्वभावा हि चक्षुरादिकरणव्यापारसमासादितात्मलाभा ज्ञप्तयो न परस्थं संवेदनामात्रमपि तावदालम्बितुं क्षमा किमिङ्ग ! पुनरनाद्यनन्तातीतानागतवर्त्तमानसूक्ष्मादिस्वभावसकलपदार्थसाक्षात्कारि संवेदनविशेष , तदध्यासितं वा पुरुषम् । अविषये चक्षुरादिकरणप्रवर्त्तितस्य ज्ञानस्य प्रवृत्त्यसम्भवात् ? , सम्भवे वाऽन्यतमकरणप्रवर्त्तितस्यापि ज्ञानस्य रूपादिसकलविषयग्राहकत्वेन संभवात् , शेषेन्द्रियपरिकल्पना व्यर्था । नच सूक्ष्मादिसमस्तपदार्थग्रहणमन्तरेण प्रत्यक्षेण तत्साक्षात्करणप्रवृत्तज्ञानग्रहणम् । ग्राह्याग्रहणे तद्ग्राहकत्वस्यापि तद्गतस्य तेनाग्रहणात् । तदग्रहे च तद्धर्माध्यासितसंवेदनसमन्वितस्यापि न प्रत्यक्षत· प्रतिपत्ति· । नाप्यनुमानत· सकलपदार्थज्ञप्रतिपत्तिः , अनुमानं हि निश्चितस्वसाध्यधर्म—धर्मिसंबन्धाद् हेतोरुदयमासादयत्प्रमाणतामाप्नोति ; प्रतिबन्धश्च समस्तपदार्थज्ञसत्त्वेन स्वसाध्येन हेतो· किं प्रत्यक्षेण गृह्यते, उतानुमानेन । न तावदध्यक्षेण, अध्यक्षस्यात्यक्षज्ञानवत्सत्त्वसाक्षात्करणाक्षमत्वेन तदवगतिनिमित्तहेतुप्रतिबन्धग्रहणेऽप्यक्षमत्वात् । नह्यनवगतसंबन्धिना तद्गतसंबन्धावगमो विधातुं शक्य· । नाप्यनुमानेन तद्गतसंबन्धावगम । तथाभ्युपगमेऽनवस्थेतरेतराश्रयदोषद्वयानतिवृत्ते· । नचागृहीतप्रतिबन्धाद्धेतोरुपजायमानमनुमानं प्रमाणतामासादयति । तथा धर्मिसंबन्धावगमोऽपि न प्रत्यक्षत· । अनक्षज्ञानवत्प्रत्यक्षेऽक्षप्रभवस्याध्यक्षस्याप्रवृत्तेः । प्रवृत्तौ वाऽध्यक्षेणैव सर्वविदः संवेदनात् , अनुमाननिबन्धनहेतुव्यापारणं व्यर्थम् । नचानुमानतोऽप्यनक्षज्ञानवतोऽवगमः । हेतुपक्षधर्मतावगममन्तरेणानुमानस्यैव धर्मिग्राहकस्याप्रवृत्ते· । नचाप्रतिपन्नपक्षधर्मत्वो हेतु प्रतिनियतसाध्यप्रतिपत्तिहेतुरिति नानुमानतोऽपि सर्वज्ञप्रतिपत्ति । किंच—सर्वज्ञसत्ताया साध्यायां त्रयीं दोषजातिं हेतुर्नातिवर्त्तते असिद्धविरुद्धानैकान्तिकलक्षणाम् । तथाहि—सकलज्ञसत्त्वे साध्ये किं भावधर्मो हेतु· , उताभावधर्म· , आहोस्विदुभयधर्म । तत्र यदि भावधर्म· , तदाऽसिद्ध· । अथाभावधर्म· तदा विरुद्ध । भावे साध्ये अभावधर्मस्याभावाव्यभिचारित्वेन विरुद्धत्वात् । अथोभयधर्म , तदोभयाव्यभिचारित्वेन सत्तासाधनेऽनैकान्तिकत्वमिति न सकलज्ञसत्त्वसाधने कश्चित् सम्यग् हेतु· सम्भवति । अपि च—यद्यनियत· कश्चित् सकलपदार्थज्ञ· साध्योऽभिप्रेत· , तदा तत्कृतप्रतिनियतागमाश्रयणं नोपपन्नं भवताम् । अथ प्रतिनियत एक एवार्हन् सर्वज्ञोऽभ्युपगम्यते, तदा तत्साधने प्रयुक्तस्य हेतोरपरसर्वज्ञस्याभावेन दृष्टान्तानुवृत्त्यसंभवादसाधारणानैकान्तिकत्वादसाधकत्वम् । किंच—यत एव हेतो प्रतिनियतोऽर्हन् सर्वज्ञ· तत एव बुद्धोऽपि स स्यादिति कुत· प्रतिनियतसर्वज्ञप्रणीतागमाश्रयणमुपपत्तिमत् ? इति न कश्चित् सर्वज्ञसाधको हेतु । अथ सर्वे पदार्था कस्यचित्प्रत्यक्षाः प्रमेयत्वादग्न्यादिवदिति तत्साधनहेतुसद्भाव· तदसत् ; यतोऽत्र किं सकलपदार्थसाक्षात्कार्येकज्ञानप्रत्यक्षत्वं सर्वपदार्थानां साध्यत्वेनाऽभिप्रेतम् , आहोस्वित् प्रतिनियतविषयानेकज्ञानप्रत्यक्षत्वमिति कल्पनाद्वयम् । यद्याद्य· पक्ष ; स न युक्त ; प्रतिनियतरूपादिविषयग्राहकानेकप्रत्ययप्रत्यक्षत्वेन व्याप्तस्याग्न्यादिदृष्टान्तधर्मिणि , प्रमेयत्वलक्षणस्य हेतोरुपलम्भाद्धेतुविरुद्धत्वसाध्यविकलदृष्टान्तदोषद्वयाघ्रातत्वात् । अथ द्वितीय , सोऽप्यसङ्गत , सिद्धसाध्यतादोषप्रसङ्गात् । तथा प्रमेयत्वमपि हेतुत्वेनोपन्यस्यमानं, किमशेषज्ञेयव्यापिप्रमाणप्रमेयत्वव्यक्तिलक्षणमभ्युपगम्यते, उत अस्मदादिप्रमाणप्रमेयत्वव्यक्तिस्वरूपम् , आहोस्वित् उभयव्यक्तिसाधारणसामान्यस्वभावमिति, विकल्पा । तत्र यदि प्रथम· पक्ष , स न युक्त ; विवादाध्या-

सितपदार्थेषु तथाभूतप्रमाणप्रमेयत्वस्यासिद्धत्वात्। सिद्धत्वे वा साध्यस्यापि हेतुवत् सिद्धत्वात् व्यर्थं हेतूपादानम्; तथाभूतप्रमाणप्रमेयत्वस्य दृष्टान्तऽन्यादिलक्षणेऽसिद्धे संदिग्धान्वयश्च हेतुः स्यात्। अथास्मदादिप्रमाणप्रमेयत्वं हेतुः, तदा तथाभूतप्रमाणप्रमेयत्वस्य विवादगोचरेष्वतीन्द्रियेष्वसंभवादसिद्धो हेतुः। सिद्धौ वा ततस्तथाभूतप्रत्यक्षत्वसिद्धिरेव स्यात्; तत्र चाविवाद इति न हेतूपन्यासः सफलः। अथोभयप्रमेयत्वव्यक्तिसाधारणं प्रमेयत्वसामान्यं हेतुरिति पक्षः, सोऽप्यसङ्गतः; अत्यन्तविलक्षणातीन्द्रियेन्द्रियविषयप्रमाणप्रमेयत्वव्यक्तिद्वयसाधारणस्य सामान्यस्यासम्भवात्; नहि शावलेयकर्कव्यक्तिद्वयसाधारणमेकं गोत्वसामान्यमुपलब्धमिति प्रमेयत्वसामान्यलक्षणो हेतुरसिद्ध इति नानुमानादपि सर्वज्ञसिद्धिः। नापि शब्दात्। यतः शब्दोऽपि तत्प्रतिपादकोऽभ्युपगम्यमानः किं नित्यः, उतानित्य इति कल्पनाद्वयम्। न तावत् नित्यः, सर्वज्ञबोधकस्य नित्यस्यागमस्याभावात्। भावेऽपि तत्प्रतिपादकत्वेन तस्य प्रामाण्यासम्भवात्, कार्येऽर्थे तत्प्रामाण्यस्य व्यवस्थापितत्वात्। अथानित्यस्तत्प्रतिपादक इति पक्षः, सोऽपि न युक्तः। यतोऽनित्योऽपि किं तत्प्रणीतः स तदवबोधकः, अथ पुरुषान्तरप्रणीत इति विकल्पद्वयम्। तत्र न सर्वज्ञप्रणीतः स तदवबोधक इति पक्षो युक्तः इतरेतराश्रयदोषप्रसङ्गात्। तथाहि—तत्प्रणीतत्वे तस्य प्रामाण्यम्, ततः तस्य तत्प्रतिपादकत्वमिति व्यक्तमितरेतराश्रयत्वम्। नापि पुरुषान्तरप्रणीतस्तदवबोधकः तस्योन्मत्तवाक्यवदप्रमाणत्वात्। तन्न शब्दादपि तस्य सिद्धिः। नाप्युपमानात् तत्सिद्धिः। यत उपमानोपमेययोरध्यक्षत्वे सादृश्यालम्बनं तदभ्युपगम्यते। नचोपमानभूतः कश्चित् सर्वज्ञत्वेन प्रत्यक्षतः सिद्धः, येन तत्सादृश्यादन्यस्य सर्वज्ञत्वमुपमानात् साध्यते। सिद्धौ वा प्रत्यक्षत एव सर्वज्ञस्य सिद्धत्वान्नोपमानादपि तत्सिद्धिः। सर्वज्ञसद्भावमन्तरेणानुपपद्यमानस्य प्रमाणषट्कविज्ञातस्यार्थस्य कस्यचिदभावात् नार्थापत्तेरपि सर्वज्ञसत्त्वसिद्धिः। नचागमप्रामाण्यलक्षणस्यार्थस्य तमन्तरेणानुपपद्यमानस्य तत्परिकल्पकत्वम्। अतीन्द्रिये स्वर्गाद्यर्थे तत्प्रणीतत्वनिश्चयमन्तरेण तस्य प्रामाण्यानिश्चयात्। अपौरुषेयत्वादपि तत्प्रामाण्यसम्भवात् कुतस्तस्य तमन्तरेणानुपपद्यमानता, तन्नार्थापत्तितोऽपि तत्सिद्धिः। अभावाख्यस्य तु प्रमाणस्याभावसाधकत्वेन व्यापारात् न तत्सद्भावसाधकत्वम्। न चोपमानार्थापत्त्यभावप्रमाणाना भवता प्रामाण्यमभ्युपगम्यते इति न तेभ्यस्तत्सिद्धिः। तदुक्तम्—

"सर्वज्ञो दृश्यते ताव-न्नेदानीमस्मदादिभिः।
दृष्टो न चैकदेशोऽस्ति, लिङ्गं वा योऽनुमापयेत्॥ ११७॥
न चागमविधिः कश्चि-न्नित्यः सर्वज्ञबोधकः।
नच मन्त्रार्थवादाना, तात्पर्यमवकल्पने॥ ११८॥
नचागमेन सर्वज्ञ-स्तदीयेऽन्योन्यसंश्रयात्।
नरान्तरप्रणीतस्य, प्रामाण्यं गम्यते कथम्॥ ११९॥"
( श्लो० वा० सू० २ )

इत्यादि। ततो 'ये देशकाल' इत्यादिप्रयोगे नासिद्धो हेतुः। सद्व्यवहारनिषेधश्च, अनुपलम्भमात्रनिमित्तः। अनेकधाऽनेन अन्यत्र प्रवर्त्तित इत्यत्रापि तन्निमित्तसद्भावात् प्रवर्त्तयितुं युक्तः। अथ 'यथाऽस्माकं तत्सद्भावावेदकं प्रमाणं नास्ति तथा भवतां तदभावावेदकमपि नास्तीति सद्व्यवहारवदभावव्यवहारोऽपि न प्रवर्त्तयितव्यः। तथाहि—सर्वविदोऽभावः किं प्रत्यक्षसमधिगम्यः, प्रमाणान्तरगम्यो वा?। तत्र न तावत्प्रत्यक्षसमधिगम्यः' यतः प्रत्यक्षं सर्वज्ञाभावावेदकमभ्युपगम्यमानम्, 'किं सर्वत्र सर्वदा सर्वः सर्वज्ञो न' इत्येवं प्रवर्त्तते, उत 'क्वचित्कदाचित् कश्चित् सर्वज्ञो नास्ती'त्येवमिति कल्पनाद्वयम्। तत्र यदि सर्वत्र सर्वदा सर्वः सर्वज्ञो नेति प्रत्यक्षस्य प्रवृत्तिः, तर्हि न सर्वज्ञाभावः, तज्ज्ञानवत एव सर्वज्ञत्वात्। नहि सकलदेशकालव्यवस्थितपुरुषपरिषत्साक्षात्करणमन्तरेण तदाधारमसर्वज्ञत्वमवगन्तुं शक्यम्। तत्साक्षात्करणे च कथं न तज्ज्ञानवतः सर्वज्ञत्वमिति, नाद्यः पक्षः। द्वितीयेऽपि पक्षे न सर्वथा सर्वज्ञाभावसिद्धिरिति न प्रत्यक्षात् सर्वज्ञाभावसिद्धिः। अथ न प्रवर्त्तमानं प्रत्यक्षं सर्वज्ञाभावसाधकम् किंतु निवर्त्तमानम्। ननु यदि निखिलदेशकालाधारसकलपुरुषपरिषदाश्रितानन्तपदार्थसंविद्व्यापकम्, कारणं वा तत् स्यात्, तदा तन्निवर्त्तमानं तथाभूतं सर्वज्ञत्वं व्यावर्त्तयेत्, नान्यथा। तथाभूतनिवृत्तौ तन्निवृत्तेरसिद्धेः। तथाभ्युपगमे वा स एव सर्वज्ञ इति न तेन तन्निषेधः। किंच-प्रत्यक्षनिवृत्तिर्यदि प्रत्यक्षमेव, तदा स एव दोषः। अथ प्रत्यक्षादन्या तदाऽसौ प्रमाणमप्रमाणं वा। अप्रमाणत्वे, नातः सर्वज्ञाभावसिद्धिः। प्रमाणत्वे नानुमानत्वम्; सर्वात्मसंबन्धिन्याः तन्निवृत्तेर्यथासख्यमसिद्धानैकान्तिकत्वदोषद्वयसद्भावात्। नच तुच्छा तन्निवृत्तिः तदभावज्ञापिका। तुच्छायाः केनचित् सहप्रतिबन्धाभावेन सर्वसामर्थ्यविरहेण च ज्ञापकत्वासम्भवात्। तन्न प्रवर्तमानं, निवर्त्तमानं वा प्रत्यक्षं तदभावं साधयति। प्रमाणान्तरगम्यत्वेऽपि तदभावो न तावदनुमानगम्यः। तदभावसाधकानुमानाभावात्। अथ विवादाध्यासितः पुरुषः सर्वज्ञो न भवति, वक्तृत्वात्, रथ्यापुरुषवदित्यमानं तदभावसाधकम्। नन्वत्र किं प्रमाणान्तरसंवादिनोऽर्थस्य वक्तृत्वं हेतुः, उत तद्विपरीतस्य, आहोस्वित् वक्तृत्वमात्रमिति वक्तृत्रयम्। यदि प्रमाणान्तरसंवाद्यर्थस्य वक्तृत्वादिति हेतुः, तदा विरुद्धो हेतुः। तथाभूतवक्तृत्वस्य सर्वज्ञ एव भावात्। अथ प्रमाणान्तरविसंवादिनोऽर्थस्य वक्तृत्वादिति हेतुः, तदा सिद्धसाधनम्। तथाभूतस्य वक्तुरसर्वज्ञत्वेनास्माभिरभ्युपगमात्। अथ वक्तृत्वमात्रं हेतुः। न। तस्य साध्यविपर्ययेण सर्वज्ञत्वेनानुपलब्धेन सहानवस्थानलक्षणस्य तदव्यवच्छेदस्वभावेन च परस्परपरिहारस्वरूपस्य च विरोधस्याभावात् न ततो व्यावृत्तिसिद्धिरिति न स्वसाध्यनियतत्वम्, तदभावान्न स्वसाध्यसाधकत्वम्। अथ सर्वज्ञो वक्ता नोपलब्ध इति ततो व्यावृत्तिसिद्धिः, न, सर्वसंबन्धिनोऽनुपलम्भस्यासम्भवात्। सर्वज्ञ एव वक्तृत्वमात्मन्युपलप्स्यते, सर्वज्ञान्तरेण वा तत्तत्र संवेदिष्यते इति न सम्भवः सर्वसंबन्धिनोऽनुपलम्भस्य। अथ सर्वज्ञस्य कस्यचिदभावात् सर्वसंबन्धिनोऽनुपलम्भस्य संभवः। ननु सर्वज्ञाभावः कुतः सिद्धः। अन्यतः प्रमाणात् चेत्। तत एव तदभावसिद्धेरस्य वैयर्थ्यम्। 'अत

एवानुमानादिति न वक्तव्यम् । इतरेतराश्रयदोषप्रसङ्गात् । सिद्धेऽतोऽनुमानात् सर्वज्ञाभावे, सर्वसंबन्ध्यनुपलम्भसंभवसामर्थ्यात् हेतोर्विपक्षतो व्यावृत्तिः स्यात् तस्य च विपक्षाद्व्यावृत्तस्य तत्साधकत्वमिति व्यक्तमितरेतराश्रयत्वम् । भवतु वा सर्वसंबन्ध्यनुपलम्भसंभव, तथापि सकलपुरुषचेतोवृत्तिविशेषाणामसर्वज्ञेन ज्ञातुमशक्तेरसिद्ध. सर्वसंबन्ध्यनुपलम्भ इति न ततो विपक्षव्यावृत्तिनिश्चयो वक्तृत्वस्येति कुत. संदिग्धविपक्षव्यावृत्तिकाद् हेतोस्तदभावसिद्धि । नापि स्वसंबन्धिनोऽनुपलम्भात् तद्व्यतिरेकनिश्चय. , तस्य स्वपितृव्यपदेशहेतुनाऽप्यनैकान्तिकत्वात् । नचैवंभूतादपि हेतो. साध्यसिद्धि तथाऽभ्युपगमे न कश्चित्सर्वज्ञाभावमवबुध्यते वक्तृत्वात्, रथ्यापुरुषवदिति तदभावावगमाभावस्यापि सिद्धि. स्यात् । अथान्यत्रापि हेतावय दोष. समान इति सर्वानुमानोच्छेद । तदयुक्तम् । अन्यत्र विपक्षव्यावृत्तिनिमित्तस्यानुपलम्भव्यतिरेकेण बाधकप्रमाणस्य सद्भावात् । नचात्रापि तस्य सद्भाव इति शक्य वक्तुम् । तदभावस्य हेतुलक्षणप्रस्तावे वक्ष्यमाणत्वात् । किंच—सर्वज्ञप्रतिपादकप्रमाणाभावे तस्यासिद्धत्वात् तदभावसाधनायोपन्यस्यमान. सर्वोऽपि हेतुराश्रयासिद्ध इति न तस्मादभावसिद्धिः । अथ तद्ग्राहकत्वेन प्रमाणं प्रवर्त्तेत इत्याश्रयासिद्धत्वाभाव, तर्हि तत्साधकप्रमाणबाधितत्वात् पक्षस्य न तत्साधनाय हेतुप्रयोगसाफल्यमिति नानुमानावसेय. सर्वज्ञाभाव । अपौरुषेयत्वस्य प्राक्तनन्यायेनासिद्धत्वात्, सर्वज्ञप्रणीतत्वानभ्युपगमे शब्दस्य पुरुषदोषसङ्क्रान्त्याऽप्रामाण्यात् न ततोऽपि तदभावसिद्धि । नच तदभावाभिधायक किञ्चिद्वेदवाक्यं श्रूयते, केवल तद्भावावेदकवेदवचनोपलब्धिरविगानेन समस्ति—

‘ अपाणिपादो जवनो ग्रहीता, पश्यत्यचक्षु स शृणोत्यकर्ण ।
स वेत्ति विश्व नहि तस्य वेत्ता, तमाहुरग्र्यं पुरुष महान्तम् ’।
( श्वेताश्व० ३ । १६ )

तथा हिरण्यगर्भं प्रकृत्य “सर्वज्ञ ” इत्यादि । नच स्वरूपेऽर्थे तस्याप्रामाण्यम्, तत्र तत्प्रामाण्यस्य प्रतिपादयिष्यमाणत्वात्, तन्न शब्दादपि तदभावसिद्धि । नाप्युपमानात्तदभावावगम । यत उपमानमुपमानोपमेययोरध्यक्षत्वे सादृश्यालम्बनमुदेति, अन्यथा—

“ तस्माद्यत् स्मर्यते तत्स्यात्, सादृश्येन विशेषितम् ।
प्रमेयमुपमानस्य, सादृश्य वा तदन्वितम् ”॥
( श्लो० वा० सू० ५ उपमान० श्लो ३७ )

इत्यभिधानात् प्रत्यक्षेणोपमानोपमेययोरग्रहणे उपमेये सस्मरणासंभवात्, कथ स्मर्यमाणपदार्थविशिष्टं सादृश्यं, सादृश्यविशिष्ट वा स्मर्यमाणं वस्तु उपमानविषय स्यात् । तस्मादिदानींतनोपमानभूताशेषपुरुषप्रत्यक्षत्वम्, उपमेयाशेषान्यकालमनुष्यवर्गसाक्षात्करणं चावश्यमभ्युपगमनीयम् । तदभ्युपगमे च स एव सर्वज्ञ इति कथ उपमानात् तदभावावगमो युक्त । अतो यदुक्तम्—

“ यज्जातीयै. प्रमाणैस्तु, यज्जातीयार्थदर्शनम् ।
दृष्टं सप्रति लोकस्य, तथा कालान्तरेऽप्यभूत् ”॥ इति ।
( श्लो० वा० सू० २ श्लो० ११३ )

तन्निरस्तम् । उपमानस्योक्तन्यायेनात्र वस्तुन्यप्रवृत्ते. । नाप्यर्थापत्तितस्तदभावावगम , तस्याः प्रमाणत्वेऽनुमानेऽन्तर्भूतत्वात् । तथाहि—‘दृष्ट श्रुतो वाऽर्थोऽन्यथा नोपपद्येत ’ इत्यदृष्टार्थकल्पनाऽर्थापत्ति । नचासावर्थोऽन्यथानुपपद्यमानत्वानवगमे अदृष्टार्थपरिकल्पनानिमित्तम् । अन्यथा स येन विनोपपद्यमानत्वेन निश्चितस्तमपि परिकल्पयेत्, येन विना नोपपद्यते तमपि वा न कल्पयेत् । अनवगतस्यान्यथाऽनुपपन्नत्वेनार्थापत्त्युत्थापकस्यार्थस्यान्यथाऽनुपपद्यमानत्वे सत्यप्यदृष्टार्थपरिकल्पकत्वासंभवात् । सभवे वा लिङ्गस्याप्यनिश्चितनियमस्य परोक्षार्थानुमापकत्वं स्यादिति, तदपि नार्थापत्त्युत्थापकादर्थाद्भिद्येत । स चान्यथाऽनुपपद्यमानत्वावगम , तस्यार्थस्य न भूयो दर्शननिमित्त सपक्षे । अन्यथा लोहलेख्यं वज्रं पार्थिवत्वात्, काष्ठवदित्यत्रापि साध्यसिद्धि स्यात् । नापि विपक्षे तस्यानुपलम्भनिमित्तोऽसौ । व्यतिरेकनिश्चायकत्वेनानुपलम्भस्य पूर्वमेव निषिद्धत्वात्, किन्तु—विपर्यये तद्बाधकप्रमाणनिमित्त. । तच्च बाधकं प्रमाणमर्थापत्तिप्रवृत्त प्रागेवानुपपद्यमानस्यार्थस्य तत्र प्रवृत्तिमदभ्युपगन्तव्यम् । अन्यथाऽर्थापत्त्या तस्यान्यथाऽनुपपद्यमानत्वावगमेऽभ्युपगम्यमाने यावत्तस्यान्यथाऽनुपपद्यमानत्व नावगतम्, न तावदर्थापत्तिप्रवृत्ति , यावच्च न तत्प्रवृत्ति , न तावदर्थापत्त्युत्थापकस्यार्थस्यान्यथाऽनुपपद्यमानत्वावगम इतीतरेतराश्रयत्वान्नार्थापत्तिप्रवृत्ति. । अत एव यदुक्तम्—

“ अविनाभाविता चात्र, तदैव परिगृह्यते ।
न प्रागवगतेत्येव, सत्यप्येषा न कारणम् ॥
तेन सबन्धवेलायां, संबन्ध्यन्यतरो ध्रुवम् ।
अर्थापत्त्यैव मन्तव्य , पश्चादस्त्वनुमानता ” ॥
( श्लो० वा० सू० ५ अर्थापत्ति० श्लो० ३० । ३३ ) इत्यादि ।

तन्निरस्तम् । एवमभ्युपगमेऽर्थापत्तेरनुत्थानस्य प्रतिपादितत्वात् । स च तस्य पूर्वमन्यथाऽनुपपद्यमानत्वावगम. किं दृष्टान्तधर्मिप्रवृत्तप्रमाणसंपाद्य , आहोस्वित् स्वसाध्यधर्मिप्रवृत्तप्रमाणसपाद्य इति । तत्र यद्याद्य पक्ष. तदाऽत्रापि वक्तव्यम् । किं तत् दृष्टान्तधर्मिणि प्रवृत्त प्रमाणम्, साध्यधर्मिण्यपि साध्यान्यथाऽनुपपन्नत्वं तस्यार्थस्य निश्चाययति, आहोस्वित् दृष्टान्तधर्मिण्येव । तत्र यद्याद्य. पक्ष तदाऽर्थापत्त्युत्थापकस्यार्थस्य, लिङ्गस्य वा स्वसाध्यप्रतिपादनव्यापार प्रति न कश्चिद्विशेष. । अथ द्वितीय स न युक्त । नहि दृष्टान्तधर्मिणि निश्चितस्वसाध्यान्यथाऽनुपपद्यमानत्वोऽर्थोऽन्यत्र साध्यधर्मिणि तथा भवति । नच तथात्वेनानिश्चित स साध्यधर्मिणि स्वसाध्यं परिकल्पयतीति युक्तम्, अतिप्रसङ्गात् । अथ लिङ्गस्य दृष्टान्तधर्मिप्रवृत्तप्रमाणत्ववशात्सर्वोपसंहारेण स्वसाध्यनियतत्वनिश्चय., अर्थापत्त्युत्थापकस्य त्वर्थस्य स्वसाध्यधर्मिण्येव प्रवृत्तात्प्रमाणात्सर्वोपसंहारेणादृष्टार्थान्यथाऽनुपपद्यमानत्वनिश्चय इति लिङ्गार्थापत्त्युत्थापकयोर्भेद । नास्माद्भेदादर्थापत्तेरनुमानभेदमासादयति । अनुमानेऽपि स्वसाध्यधर्मिण्येव विपर्ययाद्धेतुव्यावर्त्तकत्वेन प्रवृत्त प्रमाणं सर्वोपसंहारेण स्वसाध्यनियतत्वनिश्चायकमभ्युपगन्तव्यम् । अन्यथा सर्वमनेकान्तात्मकं सत्त्वादित्यस्य हेतो पक्षीकृतवस्तुव्यतिरेकेण दृष्टान्तधर्मिणोऽभावात्कथ तत्र प्र-

१—( मीमा० शाबर० सू० ५ ।

वर्त्तमानं बाधकं प्रमाणमनेकान्तात्मकत्वानियततत्वमवगमयेत्
सत्त्वस्य ?। नच साध्यधर्मिणि दृष्टान्तधर्मिणि च प्रवर्त्तमानेन
प्रमाणेनार्थापत्त्युत्थापकस्यार्थस्य, लिङ्गस्य च यथाक्रमं प्रति-
बन्धो गृह्यत इत्येतावन्मात्रेणार्थापत्त्यनुमानयोर्भेदोऽभ्युपग-
न्तुं युक्त । अन्यथा पक्षधर्मत्वसहितहेतुसमुत्थादनुमानात्त-
द्रहितहेतुसमुत्थमनुमानं प्रमाणान्तरं स्यादिति प्रमाणषट्कवा-
दो विशीर्येत । नियमवतो लिङ्गात्परोक्षार्थप्रतिपत्तेरविशेषात्
न ततस्तद्भिन्नमित्यभ्युपगमे, स्वसाध्याविनाभूतादर्थादर्थप्र-
तिपत्तेरविशेषादनुमानादर्थापत्तेः कथं नाभेद ?। तदेवं प्रमा
णत्वेऽर्थापत्तेरनुमानेऽन्तर्भावात्, अनुमानस्य च सर्वज्ञाभा
वप्रतिपादकस्य निषेधात्तन्निषेधे चार्थापत्तेरपि तदभावग्रा-
हकत्वेन निषेधान्नार्थापत्तिसमधिगम्योऽपि सर्वज्ञाभाव. ।
अभावाख्यं तु प्रमाणमप्रमाणत्वादेव न तदभावसाधकम् ।
प्रमाणत्वेऽपि किमात्मनोऽपरिणामलक्षणं तत्, आहोस्विद-
न्यवस्तुविज्ञानलक्षणमिति । तत्र यद्यात्मनोऽपरिणामलक्षणं
तदभावसाधकमिति पक्ष स न युक्त, तस्य सत्त्वेना-
भ्युपगते परचेतोवृत्तिविशेषेऽपि सद्भावेनानैकान्तिकत्वात् ।
अथान्यविज्ञानलक्षणमिति पक्ष, सोऽप्यसंबद्धः । यतः सर्व-
ज्ञत्वादन्यद्यदि किञ्चिज्ज्ञत्वं तद्विषयज्ञानं तदन्यज्ञान, तदाऽ-
त्रापि वक्तव्यम्, किं सकलदेशकालव्यवस्थितपुरुषाधारं कि-
ञ्चिज्ज्ञत्वम् अभ्युपगम्यते, आहोस्वित् कतिपयपुरुषव्यक्ति-
समाश्रितमिति ?। तत्र यदि समस्तदेशकालाश्रितपुरुषाधारं
किञ्चिज्ज्ञत्वं तद्विषयं ज्ञान तदन्यज्ञान तत्सर्वज्ञाभावप्रसाध-
कम्, तदयुक्तम् । सकलदेशकालव्यवस्थितपुरुषपरिषत्-
साक्षात्करणव्यतिरेकेण तदाधारस्य किञ्चिज्ज्ञत्वस्य विषयी-
कर्तुमशक्तेर्न तद्विषयस्य तदन्यज्ञानस्य सर्वज्ञाभावावगमनि-
मित्तत्वं युक्तम् । सर्वदेशकालव्यवस्थिताशेषपुरुषसाक्षात्क-
रणे च स एव सर्वदर्शीति न तदभावाभ्युपगम श्रेयान् ।
अथ कतिपयपुरुषव्यक्तिव्यवस्थितं किञ्चिज्ज्ञत्वं तदन्यत् त-
द्विषयं ज्ञानं तदन्यज्ञानं सर्वज्ञाभावावेदकम्, तदप्ययुक्तम् ।
तज्ज्ञानात् तदभावावगमे कतिपयपुरुषव्यक्तिव्यवस्थितस्यैव
सर्वज्ञत्वस्याभाव सिद्ध्येत्, न सर्वत्र सर्वदा सर्वपुरुषेषु ।त-
था च सिद्धसाधनम् । अस्माभिरपि कुत्रचित्कस्यचिद्रथ्या-
पुरुषादेरसर्वज्ञत्वेनाभ्युपगमात् । अथ सर्वज्ञत्वादन्यस्तद-
भावस्तद्विषयं ज्ञान तदन्यज्ञानम्, तदाऽत्रापि किं सर्वदा
सर्वत्र सर्व सर्वज्ञो न इत्येव तत्प्रवर्त्तते, उत कुत्रचित्कदा-
चित्कश्चित् सर्वज्ञो न इत्येवम् । तत्र नाद्य पक्ष । सक-
लदेशकालपुरुषासाक्षात्करणे तदाधारस्य तदभावस्याव-
गन्तुमशक्यत्वात्, प्रदेशाप्रत्यक्षीकरणे तदाधारस्य घटा-
भावस्येव, तत्साक्षात्करणे च तदेव सर्वज्ञत्वमिति न
तदभावसिद्धि. । अथ द्वितीय. पक्ष । तदा न सर्वत्र सर्व-
दा सर्वज्ञाभावसिद्धिरिति तदेव सिद्धसाधनम् । प्रमाणप-
ञ्चकनिवृत्तेस्तदभावज्ञानमित्यादि सर्व प्रतिविहितमिति ना-
भावप्रमाणादपि तदभावावगमोऽभ्युपगन्तुं युक्त इत्यादि
यत्, तदप्यविदितपराभिप्रायस्य सर्वज्ञवादिनोऽभिधानम् ।
यतो नास्माकमतीन्द्रियसर्वज्ञादिपदार्थबाधकं प्रत्यक्षादिप्र-
माण स्वतन्त्रं प्रवर्त्तत इत्यभ्युपगम । अतीन्द्रियेषु स्वत-
न्त्रस्य प्रत्यक्षादिप्रमाणस्य भवदभिहितप्राक्तनदोषदुष्टत्वेन
प्रवृत्त्यसंभवात् । किन्तु-प्रसङ्गसाधनाभिप्रायेण सर्वमेव स-
र्वज्ञप्रतिक्षेपप्रतिपादकं युक्तिजालमभिहितं यथार्थमभिधान-
मुद्वहद्भिर्मीमांसकैः । अत एव तदभिप्रायप्रकाशनपरं भग-
वतो जैमिनेः सूत्रम्—'सत् सम्प्रयोगे पुरुषस्येन्द्रियाणां बु-
द्धिजन्म तत्प्रत्यक्षम्॥४॥' इति । यतो नाननापि सूत्रेण स्वात-
न्त्र्येण प्रत्यक्षलक्षणमभ्यधायि भगवता । किन्तु-लोकप्रसि-
द्धलक्षणलक्षितप्रत्यक्षानुवादेन तस्य धर्मं प्रत्यनिमित्तत्वं
विधीयते । नचैतदत्रापि वक्तव्यम्, कतरस्य प्रत्यक्षस्य धर्मं
प्रत्यनिमित्तत्वं विधीयते, अस्मदादिप्रत्यक्षस्य, सर्वज्ञप्रत्य-
क्षस्य वा । अस्मदादिप्रत्यक्षस्य तदनिमित्तत्वप्रतिपादने
सिद्धसाधनम् । सर्वज्ञप्रत्यक्षस्य भवन्मतेनाप्रसिद्धत्वाच्छश
विषाणस्येव कथं न प्रत्यनिमित्तताविधि । अथापि स्यात्
परेण तस्याभ्युपगतत्वात्, न प्रत्यनिमित्तत्वं तत्प्रसिद्धयैवो-
च्यते । तदयुक्तम् । परीक्षापूर्वकत्वेनाभ्युपगमस्य स्थितत्वा-
त् । तत्पूर्वकश्चेत् परस्याभ्युपगम., तदा भवतोऽपि तस्य
तद्भाव., परीक्षाया. प्रमाणरूपत्वात् । प्रमाणसिद्धं च न प-
रस्यैव सिद्धम् । प्रमाणसिद्धस्य सर्वैरेवाभ्युपगमनीयत्वात् ।
अथ प्रमाणव्यतिरेकेण परेण सर्वज्ञप्रत्यक्षमभ्युपगतम्,
तदाऽसौ प्रमाणाभावादेव नाभ्युपगमो युक्तः । नच प्रमा-
णाभ्युपगतस्यास्मदादिप्रत्यक्षविलक्षणस्य सर्ववित्प्रत्यक्षस्य
त प्रत्यनिमित्तत्वं विधातुं युक्तम् 'यतोऽस्मदादिप्रत्यक्षवि-
लक्षणत्वं सर्ववित्प्रत्यक्षस्य धर्मादिग्राहकत्वेनैव, तच्चेत्प्र-
माणतोऽभ्युपगतं, कथ तस्य तं प्रत्यनिमित्तत्वमुपपद्येत ।
तद्ग्राहकप्रमाणबाधितत्वात् । किञ्चाय परस्परविरुद्धोऽपि
वाक्यार्थ. स्यात्, प्रमाणतो धर्मादिग्राहकं सर्ववित्प्रत्यक्ष
यत्प्रसिद्धं तद् धर्मादिग्राहकं न भवतीति । यतो न प्रस-
ङ्गसाधने आश्रयासिद्धत्वादिदूषणं क्रमते । नहि प्रमाणमू-
लपराभ्युपगमपूर्वकमेव प्रसङ्गसाधनं प्रवर्त्तते । किं तर्हि य-
द्यर्थाभ्युपगमदर्शनपूर्वकम् । अत एव प्रसङ्गसाधनस्य वि-
पर्ययफलत्वम् । विपर्ययस्य च अतीन्द्रियपदार्थविषयप्रत्यक्ष-
निषेधफलत्वम्, तन्निषेधे च किं प्रत्यक्षस्य धर्मिणो निषेधः,
अथ तद्धर्मस्य प्रत्यक्षत्वस्येति?। पूर्वस्मिन् पक्षे हेतूनामाश्रया-
सिद्धतेति प्रतिपादितम्, उत्तरत्र प्रत्यक्षत्वनिषेधे प्रमाणा-
न्तरत्वप्रसक्ति., विशेषप्रतिषेधस्य शेषाभ्यनुज्ञानलक्षणत्वा-
त्, इति न प्रेर्यम् । यतो विशेषनिषेधे तस्य विशेषरूपत्वेन
सत्त्वस्यैव प्रतिषेध. । नच धर्म्यसिद्धत्वादिदोष । यद्यर्थ-
स्याभ्युपगतत्वात् । कथ पुनरत्र प्रसङ्ग., विपर्ययो वा क्रिय-
ते इति चेत् । तदुच्यते—सार्वज्ञं प्रत्यक्षं यद्यभ्युपगम्यते
तदा तत् धर्मग्राहक न भवति, विद्यमानोपलम्भनत्वात् ।
नचासिद्धो हेतु । तथाहि—विद्यमानोपलम्भनमतीन्द्रिया-
र्थजप्रत्यक्षं, सत्संप्रयोगजत्वात्, अस्याप्यसिद्धतोद्भावने एव
वक्तव्यम् । विवादगोचरं प्रत्यक्ष सत्संप्रयोगजं, प्रत्यक्षत्वा-
त् । तच्छब्दवाच्यत्वाद्वाऽस्मदादिप्रत्यक्षं सर्वत्र दृष्टान्त इति
प्रसङ्ग । विपर्ययस्त्वेवम्—तद्धर्मग्राहकं चेत् न विद्यमानो-
पलम्भनम्, अविद्यमानत्वात् धर्मस्य । अविद्यमानोपलम्भ-
नत्वं न सत्संप्रयोगजम् । असत्संप्रयोगजत्वे न प्रत्यक्ष, नापि
तच्छब्दवाच्यम् । प्रसङ्गसाधनाभिप्रायेणैव यद्यर्थापक्षेपेण
वार्त्तिककृताऽप्यभिहितम्—

"यदि षड्भि प्रमाणै स्यात्, सर्वज्ञ केन वार्यते ॥
एकेन तु प्रमाणेन, सर्वज्ञो येन कल्प्यते ।
नूनं स चक्षुषा सर्वान्, रसादीन् प्रतिपद्यते ॥

त् । यदप्यभ्यधायि । अथ युगपत्सर्वपदार्थवेदकं तज्ज्ञानमभ्युपगम्यते तदा परस्परविरुद्धानां शीतोष्णादीनामेकज्ञाने प्रतिभासासंभवात्; संभवेऽपीत्यादि । तदप्ययुक्तम् । यतः परस्परविरुद्धानां किमेकदाऽसंभवः, किंवा संभवेऽप्येकज्ञानेऽप्रतिभासनं भवता प्रतिपादयितुमभिप्रेतम् । तत्र यद्याद्य पक्षः स न युक्तः । जलाऽनलादीनां छायाऽऽतपादीनां चैकदा विरुद्धानामपि संभवात् । अथैकत्र विरुद्धानामसंभवः, तदाऽसंभवादेव नैकत्र ज्ञाने तेषां प्रतिभासो, न पुनर्विरुद्धत्वात् । विरुद्धानामपि तेषामेकज्ञाने प्रतिभाससंवेदनात् । एतेन विरुद्धार्थग्राहकस्य च तज्ज्ञानस्य न प्रतिनियतार्थग्राहकत्वं स्यादित्याद्यपि निरस्तम् । छायाऽऽतपादिविरुद्धार्थग्राहिणोऽपि ज्ञानस्य प्रतिनियतार्थग्राहकत्वसंवेदनात् । यच्चोक्तम्—यदि युगपत्सर्वपदार्थग्राहकं तज्ज्ञानं तदैकक्षण एव सर्वपदार्थवेदनात् द्वितीयादिक्षणे किञ्चिज्ज्ञ एव स स्यादित्यादि । तदप्यत्यन्तासंबद्धम् । यतो यदि द्वितीयक्षणे पदार्थानां तज्ज्ञानस्य चाभावः स्यात्, तदा स्यादप्येतत्, नचैतत्संभवति तथाऽभ्युपगमे द्वितीयक्षणे सर्वपदार्थाभावात्सकलसंसारोच्छेदः स्यात् । यदप्यभ्यधायि । अनाद्यनन्तपदार्थसंवेदने तत्संवेदनस्यापरिसमाप्तिरित्यादि । तदप्ययुक्तम् अत्यन्ताभ्यस्तशास्त्रार्थज्ञानस्येव युगपदनाद्यनन्तार्थग्राहिणस्तज्ज्ञानस्यापि परिसमाप्तिसंभवात् । अन्यथा भूतभविष्यत्सूक्ष्मादिपदार्थग्राहिणः प्रेरणाजनितज्ञानस्यापि कथं परिसमाप्तिः । तत्राप्यपरिसमाप्त्यभ्युपगमे, 'चोदना भूतं भवन्तं भविष्यन्तम्' इत्यादिवचनस्य नैरर्थक्यं स्यादिति । यदपि, परस्थरागादिसंवेदने सरागः स्यादित्यादि । तदप्यसङ्गतम् । नहि परस्थरागादिसंवेदनाद्रागादिमान् भवति । अन्यथा श्रोत्रियद्विजस्यापि स्वप्नज्ञानेन मद्यपानादिसंवेदनान्मद्यपानदोषः स्यात् । अथाप्यरसनेन्द्रियजं तज्ज्ञानमिति नायं दोषः, तर्हि सर्वज्ञज्ञानमपि नेन्द्रियजमिति कथमशुचिरसास्वाददोषस्तत्रासज्येत । नच रागादिसंवेदनाद्रागीति लोके व्यवहारः, किन्त्वङ्गनाकामनाद्यभिलाषस्वसंविदितस्याशिष्टव्यवहारकारिणः स्वात्मस्वभावस्योत्पत्तेः । नचासौ तत्रेति कथं स रागादिमान् । यदपि, अथ शक्तियुक्तत्वेन सर्वपदार्थवेदनमित्यादि । तदप्यचारु । यथोपलब्धिलक्षणप्राप्तं सन्निहितदेशादावनुपलब्धेरपरमत्र नास्तीति इदानींतनानामियत्ता निश्चयः, तथा सर्वज्ञस्यापि स्वशक्तिपरिच्छेदात् । अन्यथा घटादीनामपि क्वचित् प्रदेशेऽभावनिश्चयेऽपरप्रकारासंभवात्सकलव्यवहारविलोपः स्यात् अथ यावदुपयोगिप्रधानपदार्थजातमित्याद्यप्ययुक्तम् । सकलपदार्थज्ञत्वप्रतिपादनात् । अत एव-

"ज्ञो ज्ञेये कथमज्ञः स्या-दसति प्रतिबन्धरि ।
सत्येव दाह्ये नह्यग्नि, क्वचित् दृष्टो न दाहकः ॥१॥" इति ।

अत्र यदुक्तम्, किं सर्वज्ञत्वात्, अथ किञ्चिज्ज्ञत्वादिति, नोभयथापि हेतुः । यदि तावत् सर्वज्ञत्वादिति हेत्वर्थः परिकल्प्यते, तदा प्रतिज्ञार्थैकदेशो हेतुरसिद्ध एव । कथं हि तदेव साध्यं तदेव हेतुः । अथ किञ्चिज्ज्ञत्वादिति हेतुः, तदा विरुद्धता स्यात् । कथं हि किञ्चिज्ज्ञत्वं सर्वज्ञत्वेन विरुद्धं सर्वज्ञत्वं साधयेत् । अथ ज्ञत्वमात्रं हेतुः, तदाऽनैकान्तिकः । ज्ञत्वमात्रस्य किञ्चिज्ज्ञत्वेनाप्यविरोधादिति । तदपि निरस्तम् । सामान्येन सर्वज्ञत्वादित्यस्य हेतुत्वात्, विशेषेण तज्ज्ञत्वस्य साध्यत्वात्, सामान्यविशेषयोश्च भेदस्य कथञ्चित्प्रतिपादयिष्यमाणत्वात् । सामान्येन सर्वज्ञत्वस्य चानुमानव्यवहारिणं प्रति साधितत्वात् एतेन सूक्ष्मान्तरितदूरार्थाः कस्यचित् प्रत्यक्षाः प्रमेयत्वादित्यत्र प्रयोगे प्रमेयत्वहेतोर्यद् दूषणमुपन्यस्तं पूर्वपक्षवादिना तदपि निरस्तम् । सर्वसूक्ष्मान्तरितपदार्थानां व्याप्तिप्रसाधकेनानुमानप्रमाणेन वा एकेन सामान्यतः प्रमेयत्वस्य प्रसाधितत्वात् । यच्च प्रधानपदार्थपरिज्ञानं न सकलपदार्थज्ञानमन्तरेण संभवतीति तत् सर्वज्ञवचनामृतलवास्वादसंभवो भवतोऽपि कथञ्चित्संपन्न इति लक्ष्यते । तथाहि तद्वचः-"जो एगं जाणइ" (आचा० १ श्रु० ३ अ० ४ उ० १२२ सू०) इत्यादि । तन्मतानुसारिभिः पूर्वाचार्यैरप्ययमर्थो न्यगादि—

"एको भावस्तत्त्वतो येन दृष्टः, सर्वे भावाः सर्वथा तेन दृष्टाः।
सर्वे भावाः सर्वथा येन दृष्टाः, एको भावस्तत्त्वतस्तेन दृष्टः"॥१॥

अस्यायमर्थः-नह्यसर्वविदा कश्चिदेकोऽपि पदार्थस्तत्त्वतो द्रष्टुं शक्यः । एकस्यापि पदार्थस्यानुगतव्यावृत्तधर्मद्वारेण साक्षात्पारंपर्येण वा सर्वपदार्थसंबन्धिस्वभावत्वात् । तत्स्वभावावेदने च तस्यावेदनमेव परमार्थतः ततस्तज्ज्ञानं स्वप्रतिभासमेव वेत्तीति नार्थो विदितः स्यात्, केवलं तत्राभिमानमात्रमेव लोकस्य । अथ संबन्धिस्वभावता पदार्थस्य स्वरूपमेव न भवति, यत्केवलं प्रत्यक्षप्रतीतं सन्निहितमात्रं स एव वस्तुस्वभावः । संबन्धिता तु तत्र परिकल्पितैव पदार्थान्तरदर्शनसंभवतया । तथा चोक्तम्—

"निष्पत्तेरपराधीन—मपि कार्यं स्वहेतुना ।
संबध्यते कल्पनया, किमकार्यं कथञ्चन ?" ॥१॥ इति ।

तदेतदयुक्तम् । एवं हि परिकल्प्यमाने स्वरूपमात्रसंवेदनादद्वैतमेव प्राप्तम् ततः सर्वपदार्थाभावे व्यवहाराभावः । अथ व्यवहारोच्छेदभयात् पदार्थसद्भावोऽभ्युपगम्यते, तर्हि सर्वपदार्थसंबन्धिताऽपि साक्षात् पारंपर्येण च पदार्थस्वभावोऽभ्युपगन्तव्यः । अन्यथा साक्षात्पारंपर्येण वाऽन्यपदार्थजन्यजनकतालक्षणसंबन्धिताऽभ्युपगमे, तद्व्यावृत्त्यनुगतिसंबन्धिताऽनभ्युपगमे च पदार्थस्वरूपस्याप्यभावः तत्पदार्थपरिज्ञाने च तद्विशेषणभूता तत्संबन्धिताऽपि ज्ञातैव । अन्यथा तस्य तत्परिज्ञानमेव न स्यात्, तत्परिज्ञाने च सकलपदार्थपरिज्ञानमस्मदादीनामनुमानतः, सर्वज्ञस्य च साक्षात् तज्ज्ञानेन सकलपदार्थज्ञानम् । लोकस्तु प्रत्यक्षेण कथञ्चित् कस्यचित् प्रतिपत्ता । तथाहि—धूमस्याप्यग्निजन्यतया प्रतिपत्तौ वाष्पादिव्यावृत्तधूमस्वरूपप्रतिपत्तिः, अन्यथा व्यवहाराभावः । तथा नीलादिप्रतिभासस्य बाह्यार्थसंबन्धितयाऽप्रतिपत्तौ बाह्यार्थाप्रतिपत्तौ बाह्यार्थाप्रतिपत्तिरेव स्यात् । तस्मात् संबन्धितयैव पदार्थस्वरूपप्रतिपत्तिः । तच्च संबन्धित्वं प्रमेयमनुमानेन प्रतीयतेऽभ्यासदशायामस्मदादिभिः, यत्र क्षयोपशमलक्षणोऽभ्यासस्तत्र तस्य प्रत्यक्षतोऽपि प्रतिपत्तिरिति कथं न प्रधानभूतपदार्थवेदने सकलपदार्थवेदनम् । एकवेदनेऽपि सकलवेदनस्य प्रतिपादितत्वात् । विकल्पाभावेऽपि मन्त्राविष्टकुमारिकादिवचनवन्नित्यसमाहितस्यापि वचनसंभवाद्, विकल्पाभावे कथं वचनमित्यादि निरस्तम् । दृश्यते ह्यत्यन्ताभ्यस्ते

विषये व्यवहारिणां विकल्पनमन्तरेणापि वचनप्रवृत्तिरिति कथं ततः सर्वज्ञस्य छाद्मस्थिकज्ञानासञ्जनं युक्तम् । यदप्युक्तम्-अतीतादेरसत्त्वात् कथं तज्ज्ञानेन ग्रहणम् , ग्रहणे वाऽसदर्थग्राहित्वात् तज्ज्ञानवान् भ्रान्तः स्यादित्यादि । तदप्ययुक्तम् । यतः किमतीतादेरतीतादिकालसंवन्धित्वेनासत्त्वम् , उत तज्ज्ञानकालसंवन्धित्वेन । यद्यतीतादिकालसंवन्धित्वेनेति पक्षः । स न युक्तः । वर्त्तमानकालसंवन्धित्वेन वर्त्तमानस्येव तत्कालसंवन्धित्वेनातीतादेरपि सत्त्वसंभवात् । अथातीतादेः कालस्याभावात् तत्संवन्धिनोऽप्यभावः , तदसत्त्वं च प्रतिपादितं पूर्वपक्षवादिनाऽनवस्थेतरेतराश्रयादिदोषप्रतिपादनेन । सत्यं प्रतिपादितं नच सम्यक् । तथाहि-नास्माभिरपरातीतादिकालसंवन्धित्वादस्यातीतादित्वमभ्युपगम्यते , येनानवस्था स्यात् , नापि पदार्थानामतीतादित्वेन कालस्यातीतादित्वम् , येनेतरेतराश्रयदोषः , किं तु—स्वरूपत एवातीतादिसमयस्यातीतादित्वम् । तथाहि—अनुभूतवर्त्तमानत्वसमयोऽतीत इत्युच्यते , अनुभविष्यद्वर्त्तमानत्वश्चानागतः , तत्संवन्धित्वात् पदार्थस्याप्यतीतानागतत्वे अविरुद्धे । अथ यथाऽतीतादेः समयस्य स्वरूपेणैवातीतादित्वं तथा पदार्थानामपि तद्भविष्यतीति व्यर्थस्तदभ्युपगमः । एतच्चाऽत्यन्तासङ्गतम् । नह्येकपदार्थधर्मस्तदन्यत्राप्यासञ्जयितुं युक्तः । अन्यथा निम्बादेस्तिक्तता गुडादावप्यासञ्जनीया स्यात् , नच साऽत्रैव प्रत्यक्षसिद्धेत्यन्यत्रासञ्जने तद्विरोध इत्युत्तरम् । प्रकृतेऽप्यस्योत्तरस्य समानत्वात् । भवतु पदार्थधर्म एवातीतादित्वं, तथापि नास्माकमभ्युपगमक्षतिः । विशिष्टपदार्थपरिणामस्यैवातीतादिकालत्वेनेष्टेः, ' परिणामवर्त्तनादि ( वर्तना विधि )परापरत्व"(प्रश० मर० प्र० श्लो०२१८) इत्याद्यागमात् । तथाहि-स्मरणविषयत्वं पदार्थस्यातीतत्वमुच्यते । अनुभवविषयत्वं वर्त्तमानत्वं, स्थिरावस्थादर्शनलिङ्गवलोत्पद्यमानकालान्तरस्थायिपदार्थ इत्यनुमानविषयत्वं धर्मोऽनागतकालत्वमिति । तेन यदुच्यते-यदि स्वत एव कालस्यातीतादित्वं , पदार्थस्यापि तत् स्वत एव स्यादिति परेण तत्सिद्धं साधितम् । तदतीतादिकालस्य सत्त्वान्न तत्कालसंवन्धित्वेनातीतादेः पदार्थस्याऽसत्त्वम् । वर्त्तमानकालसंवन्धित्वेन त्वतीतादेरसत्त्वप्रतिपादनेऽभिमतमेव प्रतिपादितं भवति । नह्यतीतकालसंवन्धित्वसत्त्वमेवैतज्ज्ञानकालसंवन्धित्वमस्माभिरभ्युपगम्यते । नचैतत्कालसंवन्धित्वेनासत्त्वं स्वकालसंवन्धित्वेनाप्यतीतादेरसत्त्वं भवति । अन्यथैतत्कालसंवन्धित्वस्याप्यतीतादिकालसंवन्धित्वेनासत्त्वात् सर्वाभावः स्यादिति सकलव्यवहारोच्छेदः । अथापि स्यात् , भवत्वतीतादेः सत्त्वं, तथापि सर्वज्ञज्ञाने न तस्य प्रतिभासः , तज्ज्ञानकाले तस्यासन्निहितत्वात् । सन्निधाने वा तज्ज्ञानावभासिन इव वर्त्तमानकालसंवन्धिनोऽतीतादेरपि वर्त्तमानकालसंवन्धित्वप्राप्तेः । नहि वर्त्तमानस्यापि सन्निहितत्वेन तत्कालज्ञानप्रतिभासित्वं मुक्त्वाऽन्यद्वर्त्तमानकालसंवन्धित्वम् । एवमतीतादेस्तज्ज्ञानावभासित्वे वर्त्तमानत्वमेवेति वर्त्तमानमात्रपदार्थज्ञानवानस्मदादिवन्न सर्वज्ञः स्यात् । किंच—अतीतादेस्तज्ज्ञानकालेऽसन्निहितत्वेन तज्ज्ञानेऽप्रतिभासः । प्रतिभासे वा स्वज्ञानसंवन्धित्वेन तस्य ग्रहणात् तज्ज्ञानस्य विपरीतख्यातिरूपताप्रसक्तिः । एतदसंवद्धम् । यतो यथाऽस्मदादीनामसन्निहितकालोऽप्यर्थः सत्यस्वप्नज्ञाने प्रतिभाति । नचासन्निहितस्य तस्यातीतादिकालसंवन्धिनो वर्त्तमानकालसंवन्धित्वं , नापि स्वकालसंवन्धित्वेन सत्यस्वप्नज्ञाने तस्य प्रतिभासनात् तद्ग्राहिणो ज्ञानस्य विपरीतख्यातित्वम् । यत्र ह्यन्यदेशकालोऽर्थोऽन्यदेशकालसंवन्धित्वेन प्रतिभाति सा विपरीतख्यातिः । अत्र त्वतीतादिकालसंवन्ध्यतीतादिकालसंवन्धित्वेनैव प्रतिभातीति न तत्प्रतिभासिनोऽर्थस्य तत्कालसंवन्धित्वेन वर्त्तमानत्वं , नापि तद्ग्राहिणो विज्ञानस्य विपरीतख्यातित्वम् । तथा सर्वज्ञज्ञानेऽपि यदाऽतीतादिकालोऽर्थोऽतीतादिकालसंवन्धित्वेन प्रतिभाति, तदा कथं तस्यार्थस्य वर्त्तमानकालसंवन्धित्वम् , कथं वा तज्ज्ञानस्य विपरीतख्यातित्वमिति । यथा वा विशिष्टमन्त्रसंस्कृतचक्षुषामङ्गुष्ठादिनिरीक्षणेनान्यदेशा अपि चौरादयो गृह्यमाणा न तद्देशा भवन्ति, नापि तज्ज्ञानं तद्देशादिसंवन्धित्वमनुभवति, तथा सर्वविद्विज्ञानमप्यसन्निहितकालं यद्यर्थमवभासयति, स्वात्मना तत्कालसंवन्धित्वमननुभवदपि , तदा को विरोधः , कथं वा तस्यातीतादेरर्थस्य तज्ज्ञानकालत्वमिति । नच सत्यस्वप्नज्ञानेऽप्यतीताद्यर्थप्रतिभासे समानमेव दूषणमिति न तद्दृष्टान्तद्वारेण सर्वज्ञज्ञानमतीताद्यर्थग्राहकं व्यवस्थापयितुं युक्तमिति वक्तुं युक्तम् । अविसंवादवतोऽपि ज्ञानस्य विसंवादविषये विप्रतिपत्त्यभ्युपगमे , स्वसंवेदनमात्रेऽपि विप्रतिपत्तिसद्भावादतिसूक्ष्मेक्षिकया तस्यापि तत्स्वरूपत्वासंभवात्सर्वशून्यताप्रसङ्गात् ; तन्निषेधस्य च प्रतिपादयिष्यमाणत्वादतो न युक्तमुक्तम् , अथ प्रतिपाद्यापेक्षयेत्यादि न भ्रान्तज्ञानवान् सर्वज्ञः कल्पयितुं युक्त इति पर्यन्तम् । यदप्युक्तम्-भवतु वा सर्वज्ञस्तथाप्यसौ तत्कालेऽप्यसर्वज्ञैर्ज्ञातुं न शक्यत इत्यादि । तदप्यसंगतम् । यतो यथा शकलशास्त्रार्थापरिज्ञानेऽपि व्यवहारिणा सकलशास्त्रज्ञ इति कश्चित्पुरुषो निश्चीयते , तथा सकलपदार्थापरिज्ञानेऽपि यदि केनचित् कश्चित् सर्वज्ञत्वेन निश्चीयते , तदा का विरोधः । युक्तं चैतत् । अन्यथा युष्माभिरपि सकलवेदार्थापरिज्ञाने कथं जैमिनिरन्यो वा वेदार्थज्ञत्वेन निश्चीयते । तदनिश्चये च कथं तद्व्याख्यातार्थानुसरणादग्निहोत्रादावनुष्ठाने प्रवृत्तिरिति यत्किञ्चिदेतत् 'सर्वज्ञोऽयमिति ह्येतत् ' इत्यादि । तदेव सर्वज्ञसद्भावग्राहकस्य प्रमाणस्य ज्ञत्वप्रमेयत्ववचनविशेषत्वादेर्दर्शितत्वात् तदभावप्रसाधकस्य च निरस्तत्वात् , ये वाधकप्रमाणगोचरतामापन्नास्तेऽसदिति व्यवहर्त्तव्या इति प्रयोगहेतोरसिद्धत्वात् , ये तु निश्चितासंभवद्वाधकप्रमाणत्वे सति सदुपलम्भकप्रमाणगोचरास्ते सदिति व्यवहर्त्तव्या , यथोभयवाद्यप्रतिपत्तिविषया घटादयः, तथाभूतश्च सर्ववित् इति भवत्यतः प्रमाणात्सर्वज्ञव्यवहारप्रवृत्तिरिति । अथापि स्यात् स्वविषयाविसंवादिवचनविशेषस्य तद्विषयाविसंवादिज्ञानपूर्वकत्वमात्रमेव भवता प्रसाधितम् । नचैतावतानन्तार्थसाक्षात्कारिज्ञानवान् सर्वज्ञः सिद्धिमासादयति । सकलसूक्ष्मादिपदार्थसार्थसाक्षात्कारिज्ञानविशेषपूर्वकत्वे हि वचनविशेषस्य सिद्धे तज्ज्ञानवतः सर्वज्ञत्वसिद्धिः स्यात् । नच

तथाभूतज्ञानपूर्वकत्वं वचनविशेषस्य सिद्धम्। अनुमानादिज्ञानादपि स्वविषयाविसंवादिवचनविशेषस्य संभवात्। नच तथाभूतज्ञानवान् सर्वज्ञो भवद्भिरभ्युपगम्यत इत्येतद् हृदि कृत्वाऽऽह सूरिः—"कुसमयविसासण" इति। सम्यक् प्रमाणान्तराविसंवादित्वेनेयन्ते-परिच्छिद्यन्ते इति समयाः, नष्टमुष्टिचिन्तालाभालाभसुखासुखजीवितमरणग्रहोपरागमन्त्रौषधशक्त्यादयः पदार्थाः, तेषां विविधमन्यपदार्थकारणत्वेन कार्यत्वेन चानेकप्रकारं शासनं प्रतिपादकम्; यत् शासनं कु.-पृथ्वी तस्या इव।

अयमभिप्राय —ज्ञत्वप्रमेयत्वादेरनेकप्रकारस्य प्रतिपादितन्यायेन सर्वज्ञसत्त्वप्रतिपादकस्य हेतोः सद्भावेऽपि तत्कृतत्वेन शासनप्रामाण्यप्रतिपादनार्थं सर्वज्ञोऽभ्युपगम्यते, तस्य चान्यतो हेतोः प्रतिपादनेऽपि तदागमप्रणेतृत्वं हेत्वन्तरगम्यं पुनः प्रतिपादनीयं स्यादिति हेत्वन्तरमुत्सृज्य प्रतिपादनगौरवपरिहारार्थं वचनविशेषलक्षण एव हेतुस्तत्सद्भावावेदक उपन्यसनीयः। स चानेन गाथासूत्रावयवेन सूचितः। अत एव संस्कृत्य हेतुः कर्त्तव्यः। तथाहि—यो यद्विषयाविसंवाद्यलिङ्गानुपदेशान्वयव्यतिरेकपूर्वको वचनविशेषः, स तत्साक्षात्कारिज्ञानविशेषप्रभवः। यथाऽस्मदादिप्रवर्त्तितः पृथ्वीकाठिन्यादिविषयस्तथाभूतो वचनविशेषः। नष्टमुष्टिविशेषादिविषयाविसंवाद्यलिङ्गानुपदेशान्वयव्यतिरेकपूर्वकवचनविशेषश्चायं शासनलक्षणोऽर्थ इति।

न चात्राविसंवादित्वं वचनविशेषत्वलक्षणस्य हेतोर्विशेषणमसिद्धम्। नष्टमुष्ट्यादीनां वचनविशेषप्रतिपादितानां प्रमाणान्तरतस्तथैवोपलब्धेरविसंवादसिद्धेः। योऽपि क्वचिद्वचनविशेषस्य तत्र विसंवादो भवता परिकल्प्यते, सोऽपि तदर्थस्य सम्यगपरिज्ञानात् सामग्रीवैकल्याच्च पुनर्वचनविशेषस्यासत्यार्थत्वात्। नच सामग्रीवैकल्यादेकत्रासत्यार्थत्वे सर्वत्र तथात्वं परिकल्पयितुं युक्तम्। अन्यथा प्रत्यक्षस्यापि द्विचन्द्रादिविषयस्य सामग्रीवैकल्येनोपजायमानस्यासत्यत्वसंभवात् समग्रसामग्रीप्रभवस्याप्यसत्यत्वं स्यात्। अथाविकलसामग्रीप्रभवं प्रत्यक्षं विकलसामग्रीप्रभवात्तस्माद्विलक्षणमिति नायं दोषः। तदत्रापि समानम्। तथाहि—सम्यग्ज्ञाततदर्थाद्वचनाद् यन्नष्टमुष्ट्यादिविषयं विसंवादिज्ञानमुत्पद्यते तत्सम्यगवगततदर्थवचनोद्भवाद्विलक्षणमेव। यथा च विशिष्टसामग्रीप्रभवस्य प्रत्यक्षस्य न क्वचिद् व्यभिचार इति तस्याविसंवादित्वम् तथाऽवगतसम्यगर्थवचनोद्भवस्यापि नष्टमुष्ट्यादिविषयविज्ञानस्येति सिद्धमत्राविसंवादित्वलक्षणं विशेषणं प्रकृतहेतोः।

नाप्यलिङ्गपूर्वकत्वं विशेषणमसिद्धम्। नष्टमुष्ट्यादीनामसदादीन्द्रियाविषयत्वेन तल्लिङ्गत्वेनाभिमतस्याप्यर्थस्यासदाद्यक्षाविषयत्वान्न तत्प्रतिपत्तिः। प्रतिपत्तौ वाऽस्मदादीनामपि तल्लिङ्गदर्शनाद्वचनविशेषमन्तरेणापि ग्रहोपरागादिप्रतिपत्तिः स्यात्। नहि साध्यव्याप्तलिङ्गनिश्चयेऽग्न्यादिप्रतिपत्तौ वचनविशेषापेक्षा दृष्टा, न भवति चास्मदादीनां वचनविशेषमन्तरेण कदाचनापि प्रतिनियतदिक्प्रमाणफलाद्यविनाभूतग्रहोपरागादिप्रतिपत्तिरिति तथाभूतवचनप्रणेतुरतीन्द्रियार्थविषयं ज्ञानमलिङ्गमभ्युपगन्तव्यमित्यलिङ्गपूर्वकत्वमपि विशेषणं प्रकृतहेतोर्नासिद्धम्।

नाप्ययमुपदेशपरम्परयाऽतीन्द्रियार्थदर्शनाभावेऽपि प्रमाणभूत प्रबन्धेनानुवर्तत इत्यनुपदेशपूर्वकत्वविशेषणासिद्धिरिति वक्तु युक्तम्। उपदेशपरम्पराप्रभवत्वे नष्टमुष्ट्यादिप्रतिपादकवचनविशेषस्य वक्तुरज्ञानदुष्टाभिप्रायवचनाकौशलदोषैः श्रोतुर्वा मन्दबुद्धित्वविपर्यस्तबुद्धित्वगृहीतविस्मरणैः प्रतिपुरुषं हीयमानस्यानादौ काले मूलतश्चिरोच्छेद एव स्यात्। तथाहि—इदानीमपि केचित् ज्योतिःशास्त्रादिकमज्ञानदोषादन्यथोपदिशन्त उपलभ्यन्ते, अन्ये सम्यगवगच्छन्तोऽपि दुष्टाभिप्रायतया, अन्ये वचनदोषादव्यक्तमन्यथा चेति। तथा श्रोतारोऽपि केचिन्मन्दबुद्धित्वदोषादुक्तमपि यथावन्नावधारयन्ति, अन्ये विपर्यस्तबुद्धय सम्यगुपदिष्टमप्यन्यथाऽवधारयन्ति, केचित् पुनः सम्यक्परिज्ञातमपि विस्मरन्तीत्येवमादिभिः कारणैः प्रतिपुरुषं हीयमानस्य, एतावन्तं कालं यावदागमनमेव न स्याच्चिरोच्छिन्नत्वे नागच्छति च। तस्मादन्तराऽन्तरा विच्छिन्न सूक्ष्मादिपदार्थसाक्षात्कारिज्ञानवता केनचिदभिव्यक्त इयन्तं काल यावदागच्छतीत्यभ्युपगमनीयमिति नानुपदेशपूर्वकत्वविशेषणासिद्धिः।

नाप्यन्वयतिरेकाभ्यां नष्टमुष्ट्यादिकं ज्ञात्वा तद्विषयवचनविशेषप्रवर्त्तनं कस्यचित् संभवति, येनानन्वयव्यतिरेकपूर्वकत्वविशेषणासिद्धिः स्यात्। यतो नान्वयव्यतिरेकाभ्यां ग्रहोपरागौषधशक्त्यादयो ज्ञातुं शक्यन्ते। प्रावृट्समये शिलीन्ध्रोद्भेदवत् ग्रहोपरागादीनां दिक्प्रमाणफलकालादेषु नियमाभावात्। द्रव्यशक्तिपरिज्ञानाभ्युपगमेऽन्वयव्यतिरेकाभ्यां यावन्ति जगति द्रव्याणि तान्येकत्र मीलयित्वा एकस्य रसकल्कादिभेदेन, कर्षादिमात्राभेदेन, बालमध्यमाद्यवस्थाभेदेन, मूलपत्राद्यवयवभेदेन, प्रक्षेपोद्धाराभ्यामेकोऽपि योगो युगसहस्रेणापि न ज्ञातुं पार्यते, किमुतानेक इति कुतस्ताभ्यामौषधशक्त्यवगमः। तेन नानन्वयव्यतिरेकपूर्वकत्वविशेषणस्यासिद्धिः। नापि नष्टमुष्ट्यादिविषयवचनविशेषस्यापौरुषेयत्वात् विशिष्टज्ञानपूर्वकत्वस्यासिद्धेरसिद्धः प्रकृतो हेतुः। अपौरुषेयस्य वचनस्य पूर्वमेव निषिद्धत्वात्। नाप्यसाक्षात्कारिज्ञानपूर्वकत्वेऽपि प्रकृतवचनविशेषस्य संभवादनैकान्तिकः। सविशेषणस्य हेतोर्विपक्षे सत्त्वस्य प्रतिषिद्धत्वात्। अत एव न विरुद्धः। विपक्ष एव वर्त्तमानो विरुद्धः। नचास्य पूर्वोक्तप्रकारेणावगतस्वसाध्यप्रतिबन्धस्य विपक्षे वृत्तिसंभवः। अथ भवतु ग्रहोपरागाभिधायकवचनस्य तत्पूर्वकत्वसिद्धिः, अतो हेतोः। तत्र तस्य संवादात्। धर्मादिपदार्थसाक्षात्कारिज्ञानपूर्वकत्वसिद्धिस्तु कथम्?, तत्र तस्य संवादाभावात्। न। तत्रापि तस्य संवादात्। तथाहि-ज्योतिःशास्त्रादिर्ग्रहोपरागादिकं विशिष्टवर्णप्रमाणदिग्विभागादिविशिष्टं प्रतिपद्यमानः प्रतिनियतानां प्रतिनियतदेशवर्त्तिनां प्राणिनां प्रतिनियतकाले प्रतिनियतकर्मफलसंसूचकत्वेन प्रतिपद्यते। उक्तं च तत्र-

"नक्षत्रग्रहपञ्जर—महर्निशं लोककर्मविक्षिप्तम्।
भ्रमति शुभाशुभमखिल, प्रकाशयत् पूर्वजन्मकृतम्॥१॥"

अतो ज्योतिःशास्त्रं ग्रहोपरागाऽऽदिकमिव धर्माऽधर्मावपि

प्रमाणान्तरसंवादतोऽवगमयति। तेन ग्रहोपरागादिवचनविशेषस्य धर्माऽधर्मसाक्षात्कारिज्ञानपूर्वकत्वमपि सिद्धम्, तत्सिद्धौ सकलपदार्थसाक्षात्कारिज्ञानपूर्वकत्वमपि सिद्धिमासादयति। नहि धर्माधर्मयोः सुखदुःखकारणत्वसाक्षात्करणं सहकारिकारणाशेषपदार्थतदाधारभूतसमस्तप्राणिगणसाक्षात्करणमन्तरेण संभवति। सर्वपदार्थानां परस्परप्रतिबन्धादेकपदार्थसर्वधर्मप्रतिपत्तिश्च सकलपदार्थप्रतिपत्तिनान्तरीयका प्राक् प्रतिपादिता। अतो भवति सकलपदार्थसाक्षात्कारिज्ञानपूर्वकत्वसिद्धिरतो हेतोर्वचनविशेषस्य। तत्सिद्धौ च तत्प्रणेतुः सूक्ष्मान्तरितदूरानन्तार्थसाक्षात्कार्यतीन्द्रियज्ञानसम्पत्समन्वितस्य कथं न सिद्धिः। नाप्येतद्वक्तव्यम्। साध्योक्तितदावृत्तिवचनयोरनभिधानात् न्यूनतानामाऽत्र साधनदोषः। प्रतिज्ञावचनेन प्रयोजनाभावात्। अथ विषयनिर्देशार्थं प्रतिज्ञावचनम्। ननु स एव किमर्थं। साधर्म्यवत्प्रयोगादिप्रतिपत्त्यर्थं। तथाहि—असति साध्यनिर्देशे यो वचनविशेषः स साक्षात्कारिज्ञानपूर्वक इत्युक्ते किमयं साधर्म्यवान् प्रयोगः, उत वैधर्म्यवानिति न ज्ञायेत। उभयं ह्यत्राशङ्क्येत वचनविशेषत्वेन साक्षात्कारिज्ञानपूर्वकत्वे साध्ये साधर्म्यवान्, असाक्षात्कारिज्ञानपूर्वकत्वेन वचनाविशेषत्वे साध्ये वैधर्म्यवानिति हेतुविरुद्धानैकान्तिकप्रतीतिश्च न स्यात्। प्रतिज्ञापूर्वके तु प्रयोगे शब्दविशेषः साक्षात्कारिज्ञानपूर्वकः शब्दविशेषत्वादिति हेतुभावः प्रतीयते। असाक्षात्कारिज्ञानपूर्वको वचनविशेषत्वादिति विरुद्धता। चक्षुरादिकरणजनितज्ञानपूर्वको वचनविशेषत्वादित्यनैकान्तिकत्वम्। हेतोश्च त्रैरूप्यं न गम्येत। तस्य साध्यापेक्षया व्यवस्थितेः। सति प्रतिज्ञानिर्देशेऽवयवे समुदायोपचारात् साध्यधर्मी इति पक्ष इति तत्र प्रवृत्तस्य वचनविशेषत्वस्य पक्षधर्मत्वम्, साध्यधर्मसामान्येन च समानोऽर्थः सपक्ष इति तत्र वर्तमानस्य सपक्षे सत्त्वम्, न सपक्षोऽसपक्ष इत्यसपक्षेऽप्यसत्त्वं प्रतीयते तदिदमनलोचिताभिधानम्। तथाहि-यो वचनविशेषः स साक्षात्कारिज्ञानपूर्वक इति एतावन्मात्रमभिधाय नैव कश्चिदास्ते, किन्तु हेतोर्धर्मिण्युपसंहारं करोति। तत्र यदि वचनविशेषश्चायं नष्टमुष्टयादिविषयो वचनसंदर्भ इति ब्रूयात्, तदा साधर्म्यवत्प्रयोगप्रतीतिः। अथासाक्षात्कारिज्ञानपूर्वकश्चेत्यभिदध्यात्, तदा वैधर्म्यवत् इति सम्बन्धवचनपूर्वकात्पक्षधर्मत्ववचनात् प्रयोगद्वयावगतिः, विवक्षितसाध्यावगतिश्च। हेतुविरुद्धानैकान्तिका अपि पक्षधर्मत्ववचनमात्रेण न प्रतीयन्ते, तदा तु सम्बन्धवचनमपि क्रियते तदा कथमप्रतीतिः। तथाहि-यो वचनविशेषः स साक्षात्कारिज्ञानपूर्वक इत्युक्ते हेतुरवगम्यते विधीयमानेनानूद्यमानस्य व्याप्तेः। यो वचनविशेषः सोऽसाक्षात्कारिज्ञानपूर्वक इत्युक्ते विरुद्धः। विपर्ययव्याप्तेः यो वचनविशेषः स चक्षुरादिजनितज्ञानपूर्वक इति अनैकान्तिकाध्यवसायः व्यभिचारात्। तथा त्रैरूप्यमपि हेतोर्गम्यत एव। यतो व्याप्तिप्रदर्शनकाले व्यापको धर्मः साध्यतया अवगम्यते। यत्र तु व्याप्यो धर्मो विवादास्पदीभूते धर्मिण्युपसंह्रियते स समुदायैकदेशतया पक्ष इति तत्रोपसंहृतस्य व्याप्यधर्मस्य पक्षधर्मत्वावगतिः। सा च व्याप्तिर्यत्र धर्मिण्युपदर्श्यते स साध्यधर्मसामान्येन समानोऽर्थः सपक्षः प्रतीयत इति सपक्षे सत्त्वमप्यवगम्यते। सामर्थ्यात् (च) हि व्यापकनिवृत्तौ व्याप्यनिवृत्तिर्यत्रावसीयते सोऽसपक्ष इति असपक्षेऽप्यसत्त्वमपि निश्चीयते इति नार्थः प्रतिज्ञावचनेन। तदाह धर्मकीर्त्तिः यदि प्रतीतिरन्यथा न स्यात् सर्वं शोभेत, दृष्टा च पक्षधर्मसंबन्धवचनमात्रात् प्रतिज्ञावचनमन्तरेणापि प्रतीतिरिति कस्तस्योपयोगः। यदा च प्रतिज्ञावचनं नैरर्थक्यमनुभवति तदा तदावृत्तिवचनस्य निगमनलक्षणस्य सुतरामनुपयोग इति न प्रतिज्ञाद्यवचनमपि प्रस्तुतसाधनस्य न्यूनतादोषः, केवलं तत्प्रतिपाद्यस्यार्थस्य स्वसाध्याविनाभूतस्य हेतोः स्वसाध्यधर्मिण्युपसंहारमात्रादेव सिद्धत्वात्। अर्थादापन्नस्य स्वशब्देन पुनरभिधानं निग्रहस्थानमिति प्रतिज्ञादिवचनं वादकथायां क्रियमाणं तद्वक्तुर्निग्रहमापादयति उपनयवचनं तु हेतोः पक्षधर्मत्वप्रतिपादनादेव लब्धमिति तस्यापि ततः पृथक् प्रतिपादने पुनरुक्ततालक्षण एव दोष इति न तदनभिधानेऽपि न्यूनं साधनवाक्यम्; ततः सर्वदोषरहितत्वात् साधनवाक्यस्य भवत्यतः प्रकृतसाध्यसिद्धिः। स्वसाध्याविनाभूतश्च हेतुः साध्यधर्मिण्युपदर्शयितव्यो वादकथायामित्यभिप्रायवता आचार्येण गाथासूत्रावयवेन तथाभूतहेतुप्रदर्शनं कृतमिति। तथाहि—'समयविश्वासनम्' इत्यनेन गाथासूत्रावयववचनेन स्वसाध्यव्याप्तस्य हेतोः साध्यधर्मिण्युपसंहारः सूचितः। हेतोश्च स्वसाध्यव्याप्तिः प्रमाणतः सर्वोपसंहारेण प्रदर्शनीया। तच्च प्रमाणं व्याप्तिप्रसाधकं कदाचित् साध्यधर्मिण्येव प्रवृत्तं तां तस्य साधयति, कदाचिद् दृष्टान्तधर्मिणि। यत्र हि सर्वमनेकान्तात्मकं सत्त्वादित्यादौ प्रयोगे न दृष्टान्तधर्मिसद्भावः, तत्र व्याप्तिप्रसाधकं प्रमाणं प्रवर्त्तमानं साध्यधर्मिण्येव सर्वोपसंहारेण हेतोः स्वसाध्यव्याप्तिं प्रसाधयति। यत्र तु प्रकृतप्रयोगादौ दृष्टान्तधर्मिणोऽपि सत्त्वं तत्र दृष्टान्तधर्मिण्यपि प्रवृत्तं तत्प्रमाणं सर्वोपसंहारेणैव तस्याः प्रसाधकमभ्युपगन्तव्यम्। अन्यथा दृष्टान्तधर्मिणि हेतोः स्वसाध्यव्याप्तावपि साध्यधर्मिणि तस्य तद्व्याप्तौ न ततस्तत्र तत्प्रतिपत्तिः स्यात्। दृष्टान्तधर्मिण्येव तेन तस्य व्याप्तत्वात्, बहिर्व्याप्तेर्विद्यमानाया अपि साध्यधर्मिणि साध्यप्रतिपत्तावनुपयोगात् सादृश्यमात्रस्याकिञ्चित्करत्वात्। अन्यथा शुक्लः सुवर्णः सत्त्वाद्रजतवदित्यत्रापि शुक्लत्वप्रतिपत्तिः स्यात्। अथात्र पक्षस्य प्रत्यक्षबाधनं, प्रत्यक्षबाधितकर्मनिर्देशानन्तरप्रयुक्तत्वेन हेतोः कालात्ययापदिष्टत्वं वा दोषः। तदयुक्तम्। बाधाऽविनाभावयोर्विरोधात्। तथाहि—सत्यत्र साध्यधर्मिणि साध्ये हेतुर्वर्त्तत इति तस्य तदविनाभावः, तत्प्रतिपादितसाध्यधर्माभावश्च प्रमाणतो बाधा। साध्यधर्मभावाऽभावयोश्चैकत्र धर्मिण्येकदा विरोध इति नैतद्दोषादस्य साधनस्य दुष्टत्वम्, किन्तु साध्यधर्मिणि साध्यधर्माविनाभूतत्वेनानिश्चयः। स च बहिर्व्याप्तिमात्रेण हेतोः साध्यसाधकत्वाभ्युपगमेऽन्यत्रापि समान इति नानुमानात् क्वचिदपि साध्यनिश्चयः स्यात्। अतो दृष्टान्तधर्मिणि प्रवृत्तेन प्रमाणेन व्याप्त्या हेतोः स्वसाध्याविनाभावो निश्चेयः। स च निश्चिताविनाभावो यत्र धर्मिण्युपलभ्यते तत्र

स्वसाध्यमविद्यमानप्रमाणान्तरबाधनं निश्चाययन्ति, यथाऽत्रैव सर्वज्ञमात्रलक्षणे साध्ये वचनविशेषलक्षणे साध्यधर्मिणि तद्विशेषत्वलक्षणो हेतु । प्रतिबन्धप्रसाधकं चास्य हेतोः प्रागेव दृष्टान्तधर्मिणि प्रमाणं प्रदर्शितमित्यभिप्रायवत्तैवाचार्येणापि 'कुसमयविसासणं' इति सूत्रे कुरित्यनेन दृष्टान्तसूचनं विहितम्, न च पक्षवचनाद्युपक्षेपः सूचितः । ननु भवत्वस्माद्धेतोर्यथोक्तप्रकारेण सर्वज्ञमात्रसिद्धिर्न पुनस्तद्विशेषसिद्धि । तथाहि—यथा नष्टमुष्ट्यादिविषयवचनविशेषस्यार्हत्सर्वज्ञप्रणीतत्व वचनविशेषत्वात् सिध्यन्ति, तथा बुद्धादिसर्वज्ञपूर्वकत्वमपि तत एव सेत्स्यन्तीति कुतस्तद्विशेषसिद्धि । नच नष्टमुष्ट्यादिप्रतिपादको वचनविशेषोऽर्हच्छासन एवेति वक्तुं युक्तम् । बुद्धशासनादिष्वपि तस्योपलम्भादित्याशङ्क्याह सूरिः—"सिद्धत्थाणं" इति अस्यायमभिप्रायः—प्रत्यक्षानुमानादिप्रमाणविषयत्वेन प्रतिपादिता शासनेन ये ते तद्विषयत्वेनैव तैर्निश्चिता इति सिद्धास्ते च-अर्थ्यन्त इत्यर्था उच्यन्ते, तेषां शासनं प्रतिपादकमर्हत्सर्वज्ञशासनमेव, न बुद्धादिशासनम् । अतो वचनविशेषत्वलक्षणस्य हेतोस्तेष्वसिद्धत्वात् कुतस्तेषामपि सर्वज्ञत्वम्; येन विशेषसर्वज्ञत्वसिद्धिर्न स्यात् । यथा चागमान्तरेण प्रत्यक्षादिविषयत्वेन प्रतिपादितानामर्थाना तद्विषयत्वं न संभवति, तथाऽत्रैव यथास्थानं प्रतिपादयिष्यते । अथवा—सिद्धार्थानामित्यनेन हेतुसंसूचनं विहितमाचार्येण । सिद्धा प्रमाणान्तरसंवादतो निश्चिता येऽर्था नष्टमुष्ट्याद्यस्तेषां शासनं प्रतिपादकम्, यतो द्वादशाङ्गं प्रवचनमतो जिनाना कार्यत्वेन संबन्धि, तेनाय प्रयोगार्थं सूचितः । प्रयोगश्च प्रमाणान्तरसंवादि यथोक्तनष्टमुष्ट्यादिसूक्ष्मान्तरितदूरार्थप्रतिपादकत्वान्यथाऽनुपपत्तेर्जिनप्रणीत शासनम् । अत्र च सूक्ष्माद्यर्थप्रतिपादकत्वान्यथाऽनुपपत्तिलक्षणस्य हेतोर्जिनप्रणीतत्वलक्षणेन स्वसाध्येन व्याप्ति साध्यधर्मिण्येव निश्चितेति तन्निश्चायकप्रमाणविषयस्येह दृष्टान्तस्य प्रदर्शनमाचार्येण न विहितम् । तदर्थस्य तद्व्यतिरेकेणैव सिद्धत्वात् । यथा चार्थापत्तेः साध्यधर्मिण्येव व्याप्तिनिश्चयाद् दृष्टान्तव्यतिरेकेणापि तदुत्थापकादर्थादुपजायमानाया सर्वज्ञप्रतिक्षेपवादिभिर्मीमांसकैः प्रामाण्यमभ्युपगम्यते, तथा प्रकृतादन्यथाऽनुपपत्तिलक्षणाद्धेतोरुपजायमानस्याऽस्याऽनुमानस्य तत् किं नेष्यते ? । प्रतिपादितश्चार्थापत्तेरनुमानेऽन्तर्भावः प्रागिति भवत्यतो हेतोः प्रकृतसाध्यसिद्धिः । अत एव पूर्वाचार्यैर्हेतुलक्षणप्रणेतृभिरेकलक्षणो हेतुः—

"अन्यथाऽनुपपन्नत्वं, यत्र तत्र त्रयेण किम् ।
नाऽन्यथाऽनुपपन्नत्वं, यत्र तत्र त्रयेण किम् ॥ १ ॥"

इत्यादिवचनसंदर्भेण प्रतिपादितम् इति मत्वानेनाचार्येणापि न दृष्टान्तसूचनं विहितमत्र प्रयोगे । 'कुसमयविशासनमिति' चात्र व्याख्याने बुद्धादिशासनानामसर्वज्ञप्रणीतत्वप्रतिपादकत्वेन व्याख्येयम् । तथाहि—कुत्सिताः प्रमाणबाधितैकान्तस्वरूपार्थप्रतिपादकत्वेन, समया कपिलादिप्रणीतसिद्धान्तास्तेषां "सन्ति पञ्च महब्भूया०"[1] इत्यादिवचनसंदर्भेण दृष्टेष्टविषये विरोधाद्युद्भावकत्वेन विशासनं विध्वंसकं यतोऽतो द्वादशाङ्गमेव जिनानां शासनमिति भवत्यतो विशेषणात् सर्वज्ञविशेषसिद्धिरिति । सम्म० १ काण्ड ।

सव्वण्णुत्त–सर्वज्ञत्व–न० । सर्वेषां शान्तोदिताव्यपदेश्यधर्मत्वेन स्थितानां यथावद्विवेकजज्ञाने, तदुक्तम्—"सत्त्वपुरुषान्यथाख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञत्वम्" । सत्त्वपुरुषान्यथाख्यातिमात्रस्वभावाधिष्ठातृत्वे, द्वा० २६ द्वा० ।

सव्वण्णुदंसण–सर्वज्ञदर्शन–न० । सर्वज्ञागमे, सूत्र० १ श्रु० २ अ० ३ उ० ।

सव्वण्णुप्पवाय–सर्वज्ञप्रवाद–पुं० । सर्वज्ञवाक्ये, आचा० १ श्रु० ५ अ० ६ उ० ।

सव्वण्णुभासिय–सर्वज्ञभाषित–त्रि० । समस्तवित्प्रणीते, द्वा० २१ अष्ट० । तीर्थकराभिहिते, द्वा० १७ द्वा० ।

सव्वण्णुमय–सर्वज्ञमत–न० । सर्ववेदिप्रवचनविषये, पञ्चा० ७ विव० । जिनशासनविषये, पञ्चा० ६ विव० ।

सव्वण्णुवयण–सर्वज्ञवचन–न० । सत्यवक्तृवीतरागवचने, दश० ४ अ० ।

सव्वतंतसिद्धंत–सर्वतन्त्रसिद्धान्त–पुं० । सर्वतन्त्राऽविरुद्धे स्वतन्त्रेऽधिकृतेऽर्थे, सूत्र० १ श्रु० १२ अ० । यथा स्पर्शनादीनीन्द्रियाणि स्पर्शादय इन्द्रियार्थाः प्रमाणैः प्रमेयस्य ग्रहणं समानम् । तथा चोक्तम्—

"संति पमाणाइँ पमे–यसाहगाइं तु सव्वतंतो उ ।
थेज्जवई वसुमई, आपा य दवा चलो वाऊ ॥ १ ॥"

सन्ति प्रमाणानि-प्रत्यक्षादीनि प्रमेयसाधकानि यथा-स्थैर्यवती पृथ्वी, आपो द्रवाः, चलो वायुरेष सर्वतन्त्रसिद्धान्तः सर्वेषु तन्त्रेषु अस्यार्थस्य सिद्धत्वात् । बृ० १ उ० १ प्रक० ।

सव्वतवणिज्जमय–सर्वतपनीयमय–त्रि० । सर्वात्मना तपनीयरूपसुवर्णमये, जी० ३ प्रति० ४ अधि० । रा० । दशा० ।

सव्वतुरियसद्दसण्णिणाय–सर्वतूर्यशब्दसन्निनाद–पुं० । सर्वतूर्यशब्दाना मीलने-महाघोषे, भ० १ श० १ उ० ।

सव्वतूवर–सर्वतूवर–पुं० । समस्तकषायद्रव्ये, रा० ।

सव्वत्तया–सर्वात्मता–स्त्री० । सर्वेष्वात्मनः परिणामेषु, उपा० २ अ० । सर्वसामर्थ्ये, सूत्र० २ श्रु० १ अ० ।

सव्वत्थ–सर्वत्र–अव्य० । समस्तदेशे इत्यर्थे, पञ्चा० ६ विव० । समस्तकाले, सर्वस्यामवस्थायामपीत्यर्थे, सूत्र० १ श्रु० ३ अ० ४ उ० । समस्तेषु द्रव्यक्षेत्रादिषु, पञ्चा० ६ विव० ।

सव्वत्थया–सर्वार्थता–स्त्री० । चलत्वाज्ज्ञानाविधार्थग्रहणे "सर्वार्थतैकाग्रतयोः, समाधिस्तु क्षयोदयौ ।" द्वा० २४ द्वा० ।

सव्वत्थविसम–सर्वत्रविषम–न० । सर्वपादेषु त्रिषमाक्षरे वृत्ते, स्था० ७ ठा० ३ उ० ।

सव्वदंसण–सर्वदर्शन–न० । सर्वं-सम्पूर्णं दर्शनं सर्वदर्शनम् । क्षायिकसम्यक्त्वे, विशे० ।

[1]—सूत्र० सु० १ अ० १ उ० ।

[2]—पृथ्व्या चलाऽचलत्वविचार 'भूगोल' शब्दे षष्ठे भागे गत । 'लोक' शब्दे च पञ्चमे भागे गोलक कल्पना च ।

सव्वदंसि(ण्)-सर्वदर्शिन्-पुं०। सर्वं जगत् चराचरं सामान्येन द्रष्टुं शीलमस्येति सर्वदर्शी। सूत्र० १ श्रु० ६ अ०। भ०। रा०। अनाकारोपयोगासामर्थ्यात्। (उपा०७ अ०। सर्वस्य वस्तुस्तोमस्य सामान्यरूपतया द्रष्टरि, भ० १ श० १ उ०। स्था०। कल्प०। केवलदर्शनेन एकेन्द्रियद्वीन्द्रियजीवादिज्ञातरि, अनु०। सूत्र०। सर्व प्राणिगणमात्मवत्पश्यतीति सर्वदर्शी। आत्मसाम्यदर्शिनि, उत्त० १५ अ०।

सव्वदरिसि-सर्वदर्शिन्-पुं०। सर्वज्ञे, ध० २ अधि०।

सव्वदव्व-सर्वद्रव्य-न०। धर्मास्तिकायादिषु भ०१२श०५उ०।

सव्वदा-सर्वदा-स्त्री०। सर्वकाल इत्यर्थे, ल०। भ०।

सव्वदिसाग-सर्वदिक्क-त्रि०। सर्वा दिशो यत्र तत्सर्वदिक्कम्। सर्वदिगवच्छिन्ने, विशे०।

सव्वदी(दी)वसमुद्द-सर्वद्वीपसमुद्र-पुं०। अशेषद्वीपसमुद्रेषु, सू० प्र० १ पाहु०।

सव्वदुक्ख-सर्वदुःख-त्रि०। समस्तशारीरमानसादिभेदभिन्नेषु असातेषु, ध० ३ अधि०।

सव्वदुक्खप्पहीण-सर्वदुःखप्रहीण-पुं०। प्राकृतत्वात्प्रकर्षेण हीनानि-हानिं गतानि प्रक्षीणानि वा सर्वदुःखानि यस्मिन्, यद्वा—सर्वदुःखाना प्रहीणं प्रक्षीणं वा यस्मिंस्तत्तथा। सिद्धक्षेत्रे, उत्त० २८ अ०। दुःखानि शरीरमानसानि तानि प्रहीणानि यस्य स तथा। कल्प० १ अधि० ६ क्षण। मुक्ते, मोक्षे च। ध० ३ अधि०। आतु०। जं०।

सव्वदुक्खप्पहीणमग्ग-सर्वदुःखप्रहीणमार्ग-पुं०। सर्वदुःखप्रहीणा मोक्षस्तत्कारणं मार्गः-पन्थाः। ध० ३ अधि०। आव०। औ०। सकलाशर्मक्षयोपाये, भ० ३३ श० १ उ०।

सव्वदुक्खविमोक्ख-सर्वदुःखविमोक्ष-पुं०। सर्वाण्यशेषाणि बहुभिर्भवैरुपचितानि दुःखकारणत्वाद् दुःखानि कर्माणि तेभ्यो विमोक्षो-विमोक्षणं, विमोचनम्। सूत्र० १ श्रु० ११ अ०। निर्वाणे, सूत्र० १ श्रु० ३ अ० २ उ०। कर्मक्षये, स०।

सव्वदुक्खहर-सवदुःखहर-त्रि०। मोक्षहेतौ, प० व० ४ द्वार।

सव्वदुह-सर्वदुःख-न०। समस्तशारीरमानसदुःखे, दश० २ चू०।

सव्वदूरमूल-सर्वदूरमूल-न०। सर्वथा दूरं-विप्रकृष्टं मूलं च निकटं सर्वदूरमूलं तद्योगाच्छब्दोऽपि सर्वदूरमूलं। अत्यर्थदूरवर्तिनि अत्यर्थासन्ने च। 'सव्वदूरमूलमणंतिय सव्वं जाणइ पासइ'। भ० ७ श० ४ उ०।

सव्वदेवसूरि-सर्वदेवसूरि-पुं०। वृद्धगच्छप्रथमसूरौ, ग० ३ अधि०।

सव्वदेसघाइणी-सर्वदेशघातिनी-स्त्री०। सर्वं-समस्तं देशं स्वावार्यगुणं घ्नन्तीत्येवंशीला सर्वदेशघातिन्यः। तथाविधासु कर्मप्रकृतिषु, कर्म० ४ कर्म०।

सव्वद्धा-सर्वाद्धा-स्त्री०। अतीतानागतवर्त्तमानकालस्वरूपे अद्धाकालभेदे, अनु०।



सव्वधत्ता-सर्व(हिता)धत्ता-स्त्री०। सर्वजीवाजीवाख्यं वस्तु धत्तं निहितमस्या विवक्षायामिति सर्वहिता। ननु दधातेर्हीति शब्दादेशाद् हितं भवितव्यं कथं धत्तमित्युच्यते प्राकृते देशीपदस्याविरुद्धत्वान्न दोषः। अथवा-धत्त इति डित्थवदव्युत्पन्न एव यदृच्छाशब्दः। अथवा—सर्वं दधातीति सर्वधः निरवशेषवचनं सर्वधमात्तमागृहीतं यस्या विवक्षाया सा सर्वधत्ता। एवमपि निष्ठान्तस्य न पूर्वनिपातः। " जातिकालसुखादिभ्यः परवचनम् " इति परनिपात एव। सर्वग्राहके, सर्वग्रहीतरि, आव० १ अ०।

सर्वधात्तृ-त्रि०। सर्वधमात्ता सर्वधात्ता। निरवशेषे,आव०१ अ०। आ० म०।

सव्वधत्तासव्व-सर्वधत्तासर्व-पुं०। जीवाजीवविवक्षारूपे सर्वशब्दार्थे, विशे०। आ० म०।

सव्वधम्म-सर्वधर्म-पुं०। समस्तेषु अनुष्ठानरूपेषु स्वभावेषु, सूत्र० १ श्रु० ८ अ०। सर्वेषु क्षान्त्यादिषु धर्मेषु,उपा० १ अ०।

सव्वधम्मपरिब्भट्ठ-सर्वधर्मपरिभ्रष्ट-त्रि०। सर्वधर्मेभ्यः-क्षान्त्यादिभ्य आसेवितेभ्योऽपि यावत् प्रत्यनुपालनात् लौकिकेभ्योऽपि गौरवादिभ्यः परिभ्रष्ट-सर्वतश्च्युतः। कृतधर्मात्परिच्युते, दश० १ चू०।

सव्वधम्माणुवत्तण-सर्वधर्मानुवर्त्तन-त्रि०। सर्वे धर्मं क्षान्त्यादिरूपमनुवर्त्तेव इति तदनुकूलाचारतया स्वीकुरुत इत्येवंशीलो यः स तथा। समस्तक्षमादिधर्माऽऽचरणशील, उत्त० ७ अ०।

सव्वपगइ-सर्वप्रकृति-स्त्री०। राज्ञोऽष्टादशसु नैगमादिनगरवास्तव्यप्रजायाम्, कल्प० १ अधि० ५ क्षण।

सव्वपत्थार-सर्वप्रस्तार-पुं०। समस्तसद्बोपद्रवीभूते,व्य०१उ०।

सव्वपरिणाचारि(ण्)-सर्वपरिज्ञाचारिन्-पुं०। सर्वत्र सर्वकालं सर्वपरिज्ञया द्विविधयापि चरितुं शीलमस्येति सर्वपरिज्ञाचारी। विशिष्टज्ञानान्विते, सर्वसंवरचारित्रोपेते च। आचा० १ श्रु० २ अ० ६ उ०।

सव्वपाणभूयजीवसत्तसुहावह-सर्वप्राणभूतजीवसत्त्वसुखावह-त्रि०। सर्वे विश्वे ते प्राणाश्च द्वीन्द्रियादयो भूताश्च तरवो जीवाश्च पञ्चेन्द्रिया सत्त्वाश्च पृथिव्यादय इति द्वन्द्वे सति कर्मधारयस्ततस्तेषा सुखं शुभं वा आवहन्तीति सर्वप्राणभूतजीवसत्त्वसुखावहम्। सर्वेषां प्राणादीना संयमप्रतिपादकत्वात्सुखहेतौ, आव० ४ अ०। स्था०।

सव्वपावणिवित्ति-सर्वपापनिवृत्ति-स्त्री०। अशेषावद्यानुष्ठानव्युपरतौ, द्वा० २५ अष्ट०।

सव्वपावपरिवज्जिय-सर्वपापपरिवर्जित-त्रि०। सर्वाऽमङ्गलैः रहिते, कल्प० १ अधि० ३ क्षण।

सव्वपुप्फवत्थगंधमल्लालङ्कार-सर्वपुष्पवस्त्रगन्धमाल्यालङ्कार-पुं०। गन्धाः-वासाः माल्यानि-पुष्पदामानि अलङ्काराः आभरणविशेषाः ततः समाहारे द्वन्द्वस्ततः सर्वशब्देन सह विशेषणसमासः। समस्तपुष्पादौ, रा०।

सव्वप्पग-सर्वात्मक-पुं०। सर्वत्राप्यात्मा यस्यासौ सर्वात्मकः। लोभे, सूत्र० १ श्रु० १६ अ०। सर्वस्वरूपे, सूत्र० १ श्रु० १ अ० २ उ०।

सव्वप्पगुण-सर्वात्मगुण-पुं०। येषां परमाणूनां समस्तानां परमाण्वपेक्षया अल्प गुणाः स्तोका अंशा विभागास्तेषु परमाणुषु. क० प्र० १ प्रक०।

सव्वप्पभा-सर्वप्रभा-स्त्री०। उत्तररुचकपर्वतवास्तव्यायां दिक्कुमार्याम्, आ० क० १ अ०। जं०। आ०चू०। आ० म०।

सव्वफलिहमय-सर्वस्फटिकमय-त्रि०। सर्वात्मना स्फटिकमये, जी० ३ प्रति० ४ अधि०।

सव्वफाससह-सर्वस्पर्शसह-त्रि०। परीषहरूपाणां सर्वेषां शीतोष्णदंशमशकतृणादिस्पर्शानां सहिष्णौ, सूत्र० १ श्रु० ४ अ० २ उ०।

सव्वबंध-सर्वबन्ध-पुं०। सर्वात्मना बन्धे, यथा क्षीरनीरयोः॥ भ० ७ श० १ उ०।

सव्वबल-सर्वबल-न०। समस्तहस्त्यादिसैन्ये, जी० ६ प्रति० ४ अधि०। भ०। रा०। कल्प०। विपा०।

सव्वबाहाविणिम्मुक्क-सर्वबाधाविनिर्मुक्त-त्रि०। एकान्तसुखसंगते, द्वा० ३१ अष्ट०।

सव्वबुद्ध-सर्वबुद्ध-त्रि०। सर्वतीर्थकरे, दश० ६ अ०।

सव्वब्भन्तर-सर्वाभ्यन्तर-त्रि०। सर्वमध्यवर्त्तिनि, सू० प्र० १ पाहु०। औ०। नं०।

सव्वभत्ति-सर्वभक्ति-स्त्री०। सर्ववस्तुप्रकारे, सर्वा भक्तयः-प्रकारा येषां तानि तथा। सर्वप्रकाररूपेषु, स्था० ६ ठा० ३ उ०।

सव्वभाव-सर्वभाव-पुं०। सर्वपरिणामे, स्था० ६ ठा० ३ उ०। शक्त्यनुरूपे स्वरूपसंरक्षणादौ, दश० ८ अ०। सर्वप्रकारे स्पर्शरसगन्धरूपज्ञाने, "सव्वभावेणं जाणइ पासइ" स्था० १० ठा० ३ उ०। केवलज्ञानसाक्षात्कारे, भ० ८ श० २ उ०। स्था०।

सव्वभावविउ-सर्वभाववित्-पुं०। भारते वर्षे आगमिष्यन्त्यामुत्सर्पिण्यां भविष्यति द्वादशे तीर्थकरे, स०।

सव्वभावाहिट्ठाइत्त-सर्वभावाधिष्ठायित्व-न०। सर्वेषां गुणपरिणामानां स्वामिवदाक्रमणे, सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्व सर्वज्ञत्वं च। द्वा० २६ द्वा०।

सव्वभासाणुगामि(ण्)-सर्वभाषानुगामिन्-त्रि०। सर्वभाषा आर्याऽनार्या अमरवाचोऽनुगच्छन्ति-अनुकुर्वन्ति तद्भाषाभावित्वात् स्वभावेनैव वा लब्धिविशेषात् तथाविधप्रत्ययजननात्। अथवा-सर्वभाषा संस्कृतप्राकृतमागध्याद्या अनुगमयन्ति-व्याख्यान्तीत्येवं शीला ये ते तथा। समस्तभाषाविशारदेषु, औ०। रा०।

सव्वभियार-सव्यभिचार-त्रि०। सह व्यभिचारेण वर्तते इति सव्यभिचार। व्यभिचाराख्यहेतुदोषसहिते, दश० १ अ०।

सव्वभूइ-सर्वभूति-स्त्री०। सर्वसम्पदि, विपा० १ श्रु० ६ अ०।

सव्वभूमिया-सर्वभूमिका-स्त्री०। सर्वप्रासादभूमिकासु, विपा० १ श्रु० ६ अ०।

सव्वभूय-सर्वभूत-पु०। सर्वेषु त्रसेषु स्थावरेषु च जीवेषु, उ-स० २० अ०। आतु०।

सव्वभूयप्पभूय-सर्वभूतात्मभूत-त्रि०। सर्वभूतेष्वात्मभूत. सर्वभूतात्मभूतः। सर्वभूतानामात्मवद्दर्शके, दश० ४ अ०।

सव्वभूयसुहावह-सर्वभूतसुखावह-त्रि०। सर्वप्राणिहिते, दश० ६ अ०।

सव्वभोम-सार्वभौम-पुं०। सर्वासु क्षिप्राद्यासु चित्तभूमिषु सम्भवन्ति इति सार्वभौमाः। तदुक्तम् एते तु जातिदेशकालसमयानवच्छिन्नाः। सार्वभौमा महाव्रतेषु यमादिषु, द्वा० २१ द्वा०।

सव्वमंगलभेय-सर्वमङ्गलभेद-पु०। सकलकल्याणप्रकारे, कल्प० १ अधि० ३ क्षण।

सव्वमिच्छोवयारा-सर्वमिथ्योपचारा-स्त्री०। सर्व एव मिथ्योपचारा मातृस्थानगर्भाः क्रियाविशेषा यस्यां सा सर्वमिथ्योपचारा। सर्वांशेन मिथ्योपचारयुक्तायामाशातनायाम्, ध० २ अधि०।

सव्वमित्त-सर्वमित्र-पुं०। अपश्चिमदशपूर्वधरे साधौ, ति०।

सव्वय-सद्व्यय-पुं०। पुरुषार्थोपयोगिनि वित्तविनियोगे, द्वा० १२ द्वा०।

सद्व्रत-पुं०। शोभनव्रते, स्था० ३ ठा० २ उ०।

सव्वरयण-सर्वरत्न-पुं०। महानिधिभेदे, स्था० ६ ठा० ३ उ०। जं०। प्रव०। आ० चू०। दर्श०। (रयणाइं सव्वरयणे चउद्दसपवराइं चक्कवट्टिस्स उप्पज्जंति य एगिंदियाइं पंचिंदियाइं ति तल्लक्षणं 'णिहि' शब्दे चतुर्थभागे २१५१ पृष्ठे व्याख्यातम्।)

सव्वरयणकूड-सर्वरत्नकूट-न०। मानसोत्तरपर्वतस्य स्वनामख्याते तृतीये कूटे, स्था० ४ ठा० २ उ०।

सव्वरयणा-सव्वरत्ना-स्त्री०। उत्तरपाश्चात्यस्य रतिकरपर्वतस्य पश्चिमदिशि ईशानाग्रमहिष्या वसुमित्रायाः राजधान्याम्, स्था० ४ ठा० २ उ०। ती०। जी०। द्वी०।

सव्वरयणामय-सर्वरत्नामय-त्रि०। सर्वरत्नाः सामस्त्येन रत्नमया नत्वेकदेशे इति सर्वरत्नमयाः। समस्तरत्नमयेषु, जी० ३ प्रति० ४ अधि०। सर्वात्मना रत्नमये, जी० ३ प्रति० ४ अधि०। दर्श०।

सव्वरस-सर्वरस-न०। सविकृतिके, पञ्चा० १६ विव०।

सव्वराग-सर्वराग-पुं०। समस्तविषयाभिमुख्यहेतुभूतात्मपरिणामविशेषे, औ०।

सव्वरी-सर्वरी-स्त्री०। रात्रौ, बृ० १ उ० ३ प्रक०।

सव्वल-पड्वल-पुं०। भल्ले, प्रश्न० १ आश्र० द्वार।

सव्वलोय-सर्वलोक-पुं०। सर्व-खल्वधस्तिर्यगूर्ध्वभेदभिन्न. सर्वश्चासौ लोकश्च सर्वलोकः। त्रैलोक्ये, ल०। ध०। आव०। त्रसस्थावरभेदैर्भिन्ने प्राणिगणे, सूत्र० १ श्रु० ५ अ० २ उ०। सर्वजने, स० ३० सम०।

सव्वलोयपर-सर्वलोकपर-पुं०। सर्वजनात्प्रकृष्टे, 'सव्वलोयपरे तेणे महामोहं पकुव्वइ' स० ३० सम०।

सव्वलोयपरियावण्ण–सर्वलोकपर्यापन्न–त्रि०। उपपातसमुद्घातस्वस्थानैः सर्वलोके वर्तमाने, भ० ३४ श० १ उ०।

सव्वलोयसारग–सर्वलोकसारङ्ग–न०। सर्वस्मिन्नपि लोके सारमङ्ग स्वरूप यस्य तत् सर्वलोकसारङ्गम्। चतुरङ्गे,तस्य सर्वलोकसाररूपत्वात्। " नासेइ अगीयत्थो,चउरंगं सव्वलोयसारंग।" व्य० ३ उ०।

सव्ववइरामय–सर्ववज्रमय–त्रि०। सर्वात्मना वज्रमये,जी० ३ प्रति० ४ अधि०।

सव्ववाइ–सर्ववादिन्–पुं०। कपिलकणादाक्षपादसौद्धोदनिजैमिनिप्रभृतिमतानुसारिषु समस्तवादिषु, सूत्र० १ श्रु० १ अ० १ उ०।

सव्ववाय–सर्ववाद–पुं०। सर्वस्मिन् बौद्धादिके वादे, सूत्र० १ श्रु० ६ अ०।

सव्ववार–सर्ववार–न०। बहुश शब्दार्थे, सूत्र० १ श्रु० ६ अ०।

सव्वविग्गहिय–सर्वविग्रहिक–पुं०। विग्रहो वक्रत्र लघु इत्यर्थस्तदस्यास्तीति विग्रहिक.। सर्वथा विग्रहिक. सर्वविग्रहिक.। सर्वसंक्षिप्त, भ० १३ श० ४ उ०।

सव्ववित्थाराणंतय–सर्वविस्तारानन्तक–न०। सर्वाकाशास्तिकायरूपेऽनन्तकभेदे, स्था० १० ठा० ३ उ०।

सव्वविभूइ–सर्वविभूति–स्त्री०। समस्तस्वस्वाभ्यन्तरवैक्रियकरणादिबाह्यरत्नादिसंपदि, रा०। कल्प०। भ०। जी०। समस्तशोभायाम्, कल्प० १ अधि० ५ क्षण।

सव्वविभूसा–सर्वविभूषा–स्त्री०। यावच्छक्तिस्फारोदारशृङ्गारकरणे, रा०।

सव्वविमुक्क–सर्वविमुक्त–पुं०। सिद्धे, आचा० २ श्रु० ४ चू०।

सव्वविरइ–सर्वविरति–स्त्री०। सर्वसंयमे, कर्म० १ कर्म०।

सव्वविरइवाइ–सर्वविरतिवादिन्–पुं०। आत्मानं सर्वविरतिमत्त्वेन ख्यापके, विशे०।

एतदेवाह—

सव्वं ति भाणिऊणं, विरई खलु जस्स सव्विया नत्थि।
सो सव्वविरइवाई, चुकति देसं च सव्वं च ॥२६८४॥

'सव्वं' ति—अस्योपलक्षणत्वात्सर्वं सावद्ययोगं प्रत्याख्यामि त्रिविधं त्रिविधेनेत्येवं भणित्वा—अभिधाय विरति—सावद्ययोगान्निवृत्तिः खलु यस्य सर्विका सर्वा नास्ति प्रवृत्तकर्मारम्भानुमतिसद्भावात्सर्वविरतिवादी 'चुक्कइ' त्ति नाशयति देशं च 'सव्वं च' त्ति–देशविरतिं सर्वविरतिं च प्रतिज्ञाताकरणादिति निर्युक्तिगाथार्थः। विशे०।

सव्वविरइसामाइय–सर्वविरतिसामायिक–न०। सर्वविरतिरेव सामायिकमिति। सामायिकभेदे, विशे०।

तत्पर्याया—

सामाइयं समइयं, सम्मावाओ समासससेवो।
अणवज्जं च परिन्ना, पच्चक्खाणं च ते अट्ठा॥ विशे०।

(वक्ष्यते एषा पदाना तत्तच्छब्देषु व्याख्या। सर्वैव यक्षयता 'सामाइय' शब्दे वक्ष्यते।)

सव्वविसनिवारणी–सर्वविषनिवारणी–स्त्री०। सर्वप्राणातिपातविरतिप्रभृतिसंपूर्णपापनिवारिण्यां विद्यायाम्, " सव्वं पाणाइवायं पच्चक्खाइ अलियवयणं च। सव्वमदिन्नादाणं, अव्वंभपरिग्गहं स्वाहा ॥ १२७० ॥ " इति तन्मन्त्रः; आव० ४ अ०। (अस्य मन्त्रस्य व्याख्या 'पडिक्कमण' शब्दे पञ्चमभागे २६७ पृष्ठे गता।)

सव्ववेइ(ण्)–सर्ववेदिन्–पुं०। सर्वज्ञे, नं०।

सव्ववेरामय–सर्ववज्रमय–त्रि०। सर्वात्मना वज्रमये, रा०।

सव्वस–सर्वस्व–न०। सर्वसारे, पिं० २ विव०। नि० चू०।

सव्वसंकम–सर्वसंक्रम–पुं०। 'चरमट्ठिईए रइयं, पइसमयमसंखिय पएसग्गं। ताबुभेइ अंतपगइं, जाव त्ति य सव्वसंकमओ' इत्युक्तलक्षणे संक्रमभेदे, पं० स० ५ द्वार।

सव्वसंका–सर्वशङ्का–स्त्री०। सर्वविषये शङ्काभेदे, यथाऽस्ति वा धर्मो नास्ति वा यथा वा सर्वमिदं प्राकृतनिबद्धत्वात्सर्वमिदं शास्त्रमसमञ्जसमित्यादि। प्रव० ६ द्वार। नि० चू०। ('संका' शब्देऽस्मिन्नेव भागे ३५ पृष्ठेऽस्य वर्णनमुक्तम्।)

सव्वसंगम–सर्वसङ्गम–पुं०। समस्तस्वजनमेलापके, कल्प० १ अधि० ५ क्षण।

सव्वसंगातीत–सर्वसङ्गातीत–त्रि०। वीतरागे, औ०।

सव्वसंगावगय–सर्वसङ्गापगत–त्रि०। अपगतद्रव्यभावसङ्गे, दश० १ अ०।

सव्वसंजम–सर्वसंयम–पुं०। सर्वात्मना मनोवाक्कायसंयमने, रा०। "सव्वसंजमतवसुचरियफलनिव्वाणमग्गेणेति" सर्वसंयम सर्वात्मना—मनोवाक्कायसंयमनं तस्य सुचरितस्य वा आशंसादिदोषरहितस्य तपसो यत्फल निर्वाणं तन्मार्गेण। किमुक्त भवति–सर्वसंयमेन सुचरितेन च तपसा निर्वाणग्रहणमनयो निर्वाणफलत्वख्यापनार्थम्। रा०।

सव्वसंपया–सर्वसम्पत्–स्त्री०। समस्तसम्पद्विधात्र्या देव्याम्, यत्तदर्थ तप क्रियते रूढितो तत् गम्यम्। पञ्चा० १९ विव०।

सव्वसंपयाकरी–सर्वसम्पत्करी–स्त्री०। भिक्षाचर्याभेदे, द्वा०।

यतिर्ध्यानादियुक्तो यो, गुर्वाज्ञायां व्यवस्थितः।
सदानारम्भिणस्तस्य, सर्वसम्पत्करी मता॥ २॥

यति—साधुस्तस्य सर्वसम्पत्करी मतेति क्रिया, तदा तस्मिन् काले भिक्षाकाले इत्यर्थः। उपयोग कालोचितप्रशस्तव्यापार कृत्वा–विधाय निर्दोषा गवेषणैषणादिदोषरहिता सर्वसंपत्करीत्यर्थः। द्वा० ५ अष्ट०। ध०। पञ्चा०।

सव्वसंभम–सर्वसम्भ्रम–पुं०। सर्वोत्कृष्टे सम्भ्रमे, सर्वोत्कृष्टसम्भ्रमश्च स्वनायकविषयबहुमानख्यापनपरा स्वनायकसपादनाय यावच्छक्तिप्रत्वरिता त्वरितमभृति। जी० ३ प्रति० ४ अधि०। रा०। समस्तप्रमोदकृतौत्सुक्ये, भ० ८ श० ३३ उ०। कल्प०।

सव्वसत्त–सर्वसत्त्व–पुं०। सर्वप्राणिषु, ध० ३ अधि०। समस्तदेहिषु, पञ्चा० ६ विव०।

सव्वसत्तेवंभाववाइ-सर्वसत्त्वैवंभाववादिन्-पुं०। नास्तीह कश्चिद् भाजनं सत्त्व इति वचनात्सर्वजीवानां मोक्षयोग्यतावादिषु, ल०।

सव्वसमरणागयपरणाण-सर्वसमन्वागतप्रज्ञान-पुं०। सर्वाणि समन्वागतानि प्रज्ञानानि यस्यात्मनः स सर्वसमन्वागतप्रज्ञान.। सर्वाववोधविशेषानुगतें सर्वेन्द्रियज्ञानैः पटुभिर्यथावस्थितविषयग्राहिभिरविपरीतैरनुगते, आचा० १ श्रु० १ अ० ७ उ०। रा०।

सव्वसमाहिवत्तियागार-सर्वसमाधिप्रत्ययाकार-पुं०। पौरुषीप्रत्याख्यानापवादे, ध०। कृतपौरुषीप्रत्याख्यानस्य समुत्पन्नतीव्रशूलादिदु खतया संजातयोरार्त्तरौद्रध्यानयोः सर्वथा निरास· सर्वसमाधिस्तस्य प्रत्यय कारणं स एवाकारः—प्रत्याख्यानापवाद· सर्वसमाधिप्रत्ययाकार·। समाधिनिमित्तमौषधपथ्यादिप्रवृत्तावपूर्णायामपि पौरुष्यां भुङ्क्ते तदा न भङ्ग इत्यर्थ·,वैद्यादिर्वा कृतपौरुषीप्रत्याख्यानोऽन्यस्यातुरस्य समाधिनिमित्तं यदा अपूर्णायामपि पौरुष्या भुङ्क्ते तदा न भङ्गः, अर्द्धभुक्ते त्वातुरस्य समाधौ मरणे चोत्पन्ने सति तथैव भाजनस्य त्याग· सार्द्धपौरुषीप्रत्याख्यानं पौरुषीप्रत्याख्यान एवान्तर्भूतम्। ध० २ अधि०। पञ्चा०।

सव्वसमिद्धि-सर्वसमृद्धि-स्त्री०। परब्रह्मत्वप्राप्तौ, अष्ट०। सर्वा-समग्रा समृद्धिः—संपदा सर्वसमृद्धि·। तत्र नामसमृद्धिः उल्लापनरूपा जीवस्याजीवस्य । स्थापनासमृद्धिः शक्तिरूपा। द्रव्यसमृद्धिः धनधान्यादिरूपा। शक्रचक्रत्यादीना लौकिका, लोकोत्तरा पुन· मुनिलब्धिसमृद्धिरूपा ।

"आमोसहिविप्पोसहि,खेलोसहिजल्लमोसही चेव। संभिन्नसोयउजुमई, सव्वोसहि चेव वोधव्वा ॥ १॥ चारणआसीविसके-वला य मणनाणिणो व पुव्वधरा। अरिहन्ता चक्कधरा, बलदेवा वासुदेवा य॥ २॥" इत्यादिलब्धयः-ऋद्धय· तत्र केवलज्ञानादिशक्तिलोकोत्तरा भावर्द्धि·, स—सम्यक् प्रकारेण ऋद्धि· समृद्धि· सर्वा चासौ समृद्धिश्च सर्वसमृद्धि। अत्र साधनानवच्छिन्नात्मतत्त्वसंपन्नमग्नाना या तादात्म्यानुभवयोग्या समृद्धि· अवसर· नयाश्च प्रस्थकदृष्टान्तभावनया तत्कारणेषु तद्योग्येषु तदुच्यते ; तेषु तपोयोगिषु आद्या , तद्गुणेषु सापेक्षेषु अन्त्या इति । अत्र प्रथमम् आत्मनि समृद्धिपूर्णत्व भासत तथा कथयति—

बाह्यदृष्टिप्रचारेषु, मुद्रितेषु महात्मनः।
अन्तरेवावभासन्ते, स्फुटाः सर्वाः समृद्धयः॥ १॥

बाह्यदृष्टिप्रचारेषु इति—महात्मन·—स्वरूपपररूपभेदज्ञानपूर्वकशुद्धात्मानुभवलीनस्य सर्वसमृद्धय स्फुटा·—प्रकटा· अन्तरेव—आत्मान्त एव—स्वरूपमध्ये एव भासन्ते, यत स्वरूपानन्दमयोऽहं, निर्मलाऽखण्डसर्वप्रकाशकज्ञानवानहम् इन्द्राद्यर्द्धय औपचारिका अक्षयानन्तपर्यायसपत्पात्रोऽहम्, इति स्वसत्ताज्ञानोपयुक्तस्य स्वात्मनि भासन्ते । कीदृशेषु सत्सु ? बाह्यदृष्टिप्रचारेषु—मुद्रितेषु सत्सु, बाह्या दृष्टि—विषयसचारात्मिका तस्या प्रचारा—विस्तारा—मुद्रितेषु—रोधितेषु न हि इन्द्रियप्रचारचलोपयोगे· कमलपटलावगुण्ठनान्यात्मसंपद् ज्ञायत इत्यनेन बहिर्गमनमुपयोगस्य न कर्त्तव्यमिति।

समाधिनन्दनं धैर्यं, दम्भोलिः समता शची।
ज्ञानं महाविमानं च, वासवश्रीरियं मुनेः॥ २॥

समाधिरिति-मुने -स्वरूपज्ञानानुभवलीनस्य साधो इयम्—उच्यमाना वासवस्य-इन्द्रस्य श्री —लक्ष्मी , शोभा वर्तते। अत्र मुने· पवित्ररत्नत्रयीपात्ररूपेन्द्रस्य समाधिः—ध्यानध्याताध्येयैकत्वेन निर्विकल्पानन्दरूप· समाधि· स एव नन्दनं वनं,हरेः नन्दनवनक्रीडा सुखाय उक्ता, साधो· समाधिक्रीडा सुखाय, तत्राप्यौपाधिकात्मीयकृतो महान् भेदः। स च अध्यात्मभावनाख्य·। अस्य धैर्यं वीर्याकम्पता औदयिकभावाक्षुब्धतालक्षण वज्रं-दम्भोलि· पुन· समता-इष्टानिष्टेषु संयोगेषु अरक्तद्विष्टता सर्वेऽपि पुद्गला· कर्करचिन्तामण्यादिपरिणता· जीवाश्च भक्ताऽभक्ततया परिणता· ते सर्वे न मम भिन्ना ,एतेषु का रागद्वेषपरिणतिरित्यवलोकनेन समपरिणति·-समता सा शची स्वधर्मपत्नी ज्ञान-स्वपरभावयथार्थावबोधरूपं विमानं-सर्वाववोधकरं महाविमानम्, इत्यादिपरिवृतः मुनि· वज्रीव भासते। उक्तं च योगशास्त्रे-"पुसामयत्नलभ्य, ज्ञानवतामव्यय पदं भूतम्। यद्यात्मन्यात्मज्ञा-न मात्रमेतत्समाधिहितम् ॥१॥ श्रयते सुवर्णभावं, सिद्धिरसस्पर्शतो यथा लोहम्। आत्मध्यानादात्मा, परमात्मत्वं तथाऽऽप्नोति ॥२॥"

विस्तारितक्रियाज्ञान-चर्मच्छत्रो निवारयन्।
मोहम्लेच्छमहावृष्टिं, चक्रवर्त्ती न किं मुनिः॥ ३॥

विस्तारितेति—मुनि·—समस्ताश्रवविरतः द्रव्यभावसंवररत· किं चक्रवर्त्ती न ? अपि तु अस्त्येव। किं भूत· ? विस्तारितक्रियाज्ञानचर्मच्छत्र·, क्रिया च ज्ञानं च क्रियाज्ञाने चर्म च छत्रं च चर्मच्छत्रे क्रियाज्ञाने एव चर्मच्छत्रे क्रियाज्ञानचर्मच्छत्रे विस्तारिते क्रियाज्ञानचर्मच्छत्रे येन स , विस्तारित इत्यनेन सत्क्रियोद्यत·—सम्यग्ज्ञानोपयुक्त । मोह एव म्लेच्छ तस्य महती वृष्टि· तां निवारयन् मोहम्लेच्छा उत्तरखण्डाद्यास्तत्प्रयुक्तमिथ्यात्वदैत्यकृता कुवासनावृष्टि स्वशुद्धसम्यग्दर्शननिवारितकुवासनाचय· मुनि भावचक्रवर्तीव भासते।

नवब्रह्मसुधाकुण्ड-निष्ठाधिष्ठायको मुनिः।
नागलोकेशवद्भाति, क्षमां रक्षन् प्रयत्नतः॥ ४॥

नवब्रह्मेति—मुनि —भेदज्ञानगृहीतात्मध्यान , नाग—लोकेशवत्—उरगपतिवत् भाति। किं कुर्वन् ? क्षमा—पृथ्वी-क्रोधापहरणपरिणति· वचनधर्मात्मिका क्षमा ता रक्षन् धारयन् इति। उरगपतेः क्षमाधारकत्वं लोकोपचारत·, नहि रत्नप्रभाद्या भूमय केनचित् धृता, उपमा तु महत्त्वज्ञापिका सामर्थ्यज्ञापिका च । पुन कथंभूतो मुनि ? नवं यद् ब्रह्मज्ञानं तदेव सुधा तस्या· कुण्ड·, निष्ठा—स्थिति· तस्या अधिष्ठायक· , इत्यनेन तत्त्वज्ञानामृतकुण्डस्थैर्यरक्षक इति।

मुनिरध्यात्मकैलाशे, विवेकवृषभस्थितः।
शोभते विरतिज्ञप्ति-गङ्गागौरीयुतः शिवः॥ ५॥

मुनिरध्यात्मेति—अत्र श्लोकत्रय महादेवकृष्णब्रह्मोपमानम् औपचारिकम्।नहि ते कैलाशगङ्गावृष्टिकरणोद्यता·

किंतु लोकोक्तिरेषा, तेन श्लेषालंकारार्थं हि वाक्यपद्धति, न सत्या। मुनिः—तत्त्वज्ञानी अध्यात्मम्-आत्मस्वरूपैकत्वं तद्रूपे कैलाशे आस्थाने, विवेकः—स्वपरविवेचनं स एव वृषभः—बलीवर्दः, तत्र स्थितः, विरतिः—चारित्रफलास्रवनिवृत्तिः, अपि-ज्ञानकला शुद्धोपयोगता एव गङ्गागौरी,ताभ्यां युतः शिवः-निरुपद्रवः, उपचारात्-शिवः—रुद्रो भासते, रुद्रस्य गङ्गायुतत्वं विद्याधरत्वे पार्वतीमनोरञ्जनाय विक्रियाकाले ख्यातम्।

ज्ञानदर्शनचन्द्रार्क-नेत्रस्य नरकच्छिदः ।
सुखसागरमग्नस्य, किं न्यूनं योगिनो हरेः ॥ ६ ॥

ज्ञानदर्शनेति—योगिनः—रत्नत्रयपरिणतस्य हरेः—कृष्णात् किं न्यूनं ?, न किमपि। किंभूतस्य योगिनः ?-ज्ञानदर्शनचन्द्रार्कनेत्रस्य, ज्ञानं—सामान्यविशेषात्मके वस्तुनि विशेषावबोधः, सामान्यविशेषात्मके वस्तुनि सामान्यावबोधः दर्शनं, ते एव चन्द्रार्कौ नेत्रे यस्य स तस्य। हरे चन्द्रार्कनेत्रत्वं तु लोकोक्तिरेव। पुनः किंभूतस्य योगिनः ?—नरकच्छिदः—नरकगतिनिवारकस्य. हरेस्तु—नरकाभिधानशत्रुविद्रावकस्य,सुखसागरमग्नस्य-कृष्णार्थे इन्द्रियजसुखलीलासमुद्रमग्नत्वं, योगिनः सुखं सम्यग्ज्ञानदर्शनचारित्रसमाधिनिष्पन्नं तस्य सागरः तत्र मग्नस्य, आध्यात्मिकसुखपरिणामभाजनस्य साधोः केन सह न्यूनता ?, न केनापि इति।

या सृष्टिर्ब्रह्मणो बाह्या, बाह्यापेक्षावलम्बिनी।
मुनेः परानपेक्षान्त-र्गुणसृष्टिस्ततोऽधिका ॥ ७ ॥

या सृष्टिर्ब्रह्मण इति—या सृष्टिः—रचना ब्रह्मणो विधातुः सा बाह्या—लोकोक्तिरूपा असत्या, पुनः बाह्या वा अपेक्षा तस्या अवलम्बिका, मुनेः—स्वरूपसाधनसिद्धिमग्नस्य अन्तः—मध्ये आत्मनि व्यापकरूपा, गुणानां सृष्टिः—रचना गुणप्रागभावप्रवृत्तिपरिणतिरूपा, बाह्यभावतः अधिका। कथंभूता गुणसृष्टिः ? परानपेक्षा, परेषाम् अनपेक्षा अपेक्षारहिता पराश्रयालम्बनविमुक्ता स्वरूपावलम्बनपरा गुणरचना सा सर्वतोऽधिका इति।

रत्नैस्त्रिभिः पवित्रा या, स्रोतोभिरिव जाह्नवी।
सिद्धयोगस्य साऽप्यर्ह-त्पदवी न दवीयसी ॥ ८ ॥

रत्नैस्त्रिभिरिति- सिद्धयोगस्याष्टाङ्गयोगसाधनसिद्धस्य साधोः, साऽपि अर्हत्पदवी ज्ञानाद्यनन्तचतुष्टयात्मिकाष्टप्रातिहार्यान्विता जगद्धर्मोपकारिणी न दवीयसी, न दूरा इत्यर्थः। किंभूता पदवी ?—त्रिभिः रत्नैः सम्यग्ज्ञानदर्शनचारित्रैः पवित्रा। का इव ? स्रोतोभिः—प्रवाहैः जाह्नवी—गङ्गा इव, इति त्रैलोक्याद्भुतपरमाश्चर्यत्वाद्यतिशयोपेता अर्हत्पदवी साधकपुरुषस्य यथार्थमार्गोपेतस्य न दवीयसी, आसन्ना एव इति। एवं सर्वमपि औपाधिकं अपहाय स्वीयरत्नत्रये साधना विधेया, येन सर्वा ऋद्धयो निष्पद्यन्ते। अष्ट० २० अष्ट०।

सव्वसमुदय-सर्वसमुदय-पुं०। स्वस्वाभियोग्यादिसमस्तपरिवारे, जी० ३ प्रति० ४ अधि०। रा०। पौरादिमीलने, भ० ६ श० ३३ उ०। महाजनमेलके, कल्प० १ अधि० ५ क्षण। विपा०।

सव्वसरीरगय-सर्वशरीरगत-त्रि०। सर्वदेहव्यापके, दर्श० ४ तत्त्व।

सव्वसव्वण्णुसंमय-सर्वसर्वज्ञसंमत-त्रि०। सर्वेषां सर्वज्ञानां सम्मतम्-इष्टं सर्वसर्वज्ञसम्मतम्, सर्वं च तत् सर्वज्ञसम्मतं च सर्वसर्वज्ञसम्मतम्। प्रवचनतत्त्वे, स०।

सव्वसह-सर्वसह-त्रि०। परिषहोपसर्गसहिष्णौ, आचा० २ श्रु० ४ चू०।

सव्वसावज्जविरय-सर्वसावद्यविरत-त्रि०। सर्वसपापयोगनिवृत्ते, पं० सू० १ सूत्र।

सव्वसाहणणाबंध-सर्वसंहननाबन्ध-पुं०। सर्वेषु सर्वस्य ग्रा क्षीरक्षीरादीनामिव बन्धे, भ० ८ श० ६ उ०।

सव्वसाहु-स(सा)(अव्व)(व्व)र्वसाधु-पुं०। स्थविरकल्पिकादिभेदभिन्नेषु मोक्षसाधकेषु मुनिषु, ध० २ अधि०।

नमो लोए सव्वसाहूणं।

'साहूण' ति-साधयन्ति ज्ञानादिशक्तिभिर्मोक्षमिति साधवः समतां वा सर्वभूतेषु ध्यायन्तीति निरुक्तिन्यायात्साधवः', यदाह-'निव्वाणसाहए जोए, जम्हा साहेंति साहुणो। समा य सव्वभूएसु, तम्हा ते भावसाहुणो ॥ १ ॥' सहायकं वा संयमकारिणो धारयन्तीति साधवो निरुक्तेरेव, सर्वे च ते सामायिकादिविशेषणाः प्रमत्तादयः पुलाकादयो जिनकल्पिकप्रतिमाकल्पिकयथालकन्दकल्पिकपरिहारविशुद्धिकल्पिकस्थविरकल्पिकस्थितकल्पिकस्थितास्थितकल्पिककल्पातीतभेदाः प्रत्येकबुद्धस्वयंबुद्धबुद्धबोधितभेदाः भारतादिभेदाः सुखमदुःखमादिविशेषिता वा साधवः सर्वसाधवः। सर्वग्रहणं च सर्वेषां गुणवतामविशेषनमनीयताप्रतिपादनार्थम्, इदं चार्हदादिपदेष्वपि बोद्धव्यं न्यायस्य समानत्वादिति। अथवा-सर्वेभ्यो जीवेभ्यो हिताः सार्वास्ते च ते साधवश्च, सार्वस्य वाऽर्हतो न तु बुद्धादेः साधवः सार्वसाधवः, सर्वान् वा शुभयोगान् साधयन्ति-कुर्वन्ति सार्वान्वाऽर्हतः साधयन्ति तदाज्ञाकरणादाराधयन्ति प्रतिष्ठापयन्ति वा दुर्नयनिराकरणादिति सर्वसाधवः सार्वसाधवो वा। अथवा—श्रव्येषु श्रवणार्हेषु वाक्येषु। अथवा—सव्यानि-दक्षिणान्यनुकूलानि यानि कार्याणि तेषु साधवो निपुणाः श्रव्यसाधवः सव्यसाधवो वाऽतस्तेभ्यः "नमो लोए सव्वसाहूणमिति" क्वचित्पाठः तत्र सर्वशब्दस्य देशसर्वतायामपि दर्शनादपरिशेषसर्वतोपदर्शनार्थमुच्यते, लोके-मनुष्यलोके न तु गच्छादौ ये सर्वसाधवस्तेभ्यो नम इति। एषां च नमनीयता मोक्षमार्गसाहायककरणेनोपकारित्वात्। आह च-" असहाए सहायत्तं, करेंति मे संजमं करेंतस्स। एएण कारणेणं, नमामि हं सव्वसाहूणं ॥ १ ॥" इति। भ० १ श० १ उ०। दशा०।

सव्वसाहुवंदण-सर्वसाधुवन्दन-न०। समस्तसाधुवन्दने, पर्युषणायां सर्वसाधुवन्दनं कर्तव्यम्। कल्प० १ अधि० १ क्षण।

सव्वसिणेह-सर्वस्नेह-पुं०। मात्रादिसम्बन्धहेतौ स्नेहे, औ०।

सव्वसिद्ध-सर्वसिद्ध-पुं०। सर्वे च ते सिद्धाश्च, सर्वं वा सिद्धं साध्यं येषां ते सर्वसिद्धाः। तीर्थसिद्धातीर्थसिद्धादिभेदभिन्नेषु सिद्धेषु, आव० ४ अ०। आ० चू०। ल०। दश०। जं०। ध०। आचा०। सू० प्र०।

सव्वसिद्धा–सर्वसिद्धा–स्त्री० । पञ्चम्यां दशम्यां च रात्रि–तिथौ, ज्यो० ४ पाहु० । चं० प्र० ।

सव्वसिरी–सर्वश्री–स्त्री० । वीरतीर्थे अपश्चिमश्राविकायाम्, "दुप्पसहो सूरी, फग्गुसिरी अज्जा,नाइलो सावओ, सव्वसिरी साविया, एस अपच्छिमो सङ्घो।" ती० २० कल्प । ति० ।

सव्वसुइ–सर्वशुचि–त्रि० । सर्वत. शुचौ, ( पवित्रे सर्वशुचिः श्रावक (आ० क० ४ अ० । ) 'सुइ' शब्दे उदाहरिष्यते । )

सव्वसुण्णया–सर्वशून्यता–स्त्री० । सर्वेषां भावानामभावे, सा च बौद्धानां संमता । अनु० ।

सव्वसुविण–सर्वस्वप्न–पुं० । समस्तस्वप्नमहास्वप्नोभयेषु,

कइ णं भंते ! सव्वसुविणा पण्णत्ता, गोयमा ! बावत्तरिं सव्वसुविणा पण्णत्ता । ( सू०–५७८× )

द्वाचत्वारिंशत्स्वप्ना, त्रिंशन्महास्वप्ना, सम्मिलिता द्वासप्तति. सर्वस्वप्ना' । भ० १६ श० ६ उ० । कल्प० ।

सव्वसुहप्पभव- सर्वसुखप्रभव–पुं० । सर्वस्य सुखस्योत्पादकारणे, व्य० १० उ० ।

सव्वसूयग-सर्वसूचक–पुं० । सूचकानुसूचकादिकथितस्य स्वयमुपलब्धस्य च अमात्यकथके सामन्तराजपुरुषे, व्य० १ उ० ।

सव्वसुहुम–सर्वसूक्ष्म त्रि० । सर्वथा सूक्ष्मे,भ० १६ श०३ उ० ।

सव्वसुहुमतर–सर्वसूक्ष्मतर–त्रि० । सर्वेषां मध्ये अतिशयेन सूक्ष्मे, स्वार्थिककप्रत्यये सूक्ष्मतरकोऽप्यत्र । भ०१६ श०३ उ० ।

सव्वसेट्ठ–सर्वश्रेष्ठ–त्रि० । सर्वप्रधाने, सूत्र० १ श्रु० ६ अ० ।

सव्वसेय–सर्वश्वेत–त्रि० । सर्वात्मना श्वेते, रा० ।

सव्वसो–सर्वशस्–अव्य० । सर्वै. प्रकारैरित्यर्थे, उत्त० ६ अ० । नि० चू० । आचा० । सूत्र० ।

सव्वसोक्ख–सर्वसौख्य–त्रि० । आनन्दे,प्रश्न०३ आश्र० द्वार ।

सव्वसोक्खा–सर्वसौख्या–स्त्री० । समस्तसौख्यदात्र्या स्वनामख्याताया देव्याम्,यस्या समस्तगृहिसौख्यविवृद्ध्यर्थं तप क्रियते तच्च रूढिगम्यम् । पञ्चा० १६ विव० ।

सव्वस्स–सर्वस्व–न० । समस्तद्रव्ये, स्था० ३ ठा० १ उ० । सव्वस्सहरणं कयं । नि० चू० १ उ० ।

सव्वहा–सर्वथा–अव्य० । सर्वै प्रकारैरित्यर्थे,पञ्चा० ६ विव० । द्वा० । विशे० । प्रश्न० । 'सव्वहि' इत्यपि भवति । सर्वथा । सर्वसिद्धिरिति वा तदर्थ. । क० प्र० २ प्रक० ।

सव्वहाकयकिच्च–सर्वथाकृतकृत्य–पुं० । सर्वथा सर्वै. प्रकारै. कृतं कृत्यं येन स तथा । निष्ठितार्थे । पं० सू० २ सूत्र ।

सव्वागास–सर्वाकाश–पुं० । सर्वं च तदाकाशं च सर्वाकाशम् । लोकाऽलोकाऽऽकाशे, विशे० । नं० ।

सव्वागासपएसग्ग–सर्वाकाशप्रदेशाग्र–न० । सर्वाकाशस्य–लोकालोकाकाशस्य प्रदेशा.—निर्विभागा भागाः सर्वाकाशप्रदेशा' तेषामग्र—परिमाणं सर्वाकाशप्रदेशाग्रम् । सर्वाकाशप्रदेशैरनन्तशो गुणिते, नं० ।

सव्वागाससेढि–सर्वाकाशश्रेणि–स्त्री० । सर्वाकाशस्य बुद्धया चतुरस्रप्रतरीकृतस्य प्रदेशपङ्क्तौ, भ० १२ श० १ उ० ।

सव्वाणुभूइ–सर्वानुभूति–स्त्री० । भारते वर्षे भविष्यति पञ्चमे तीर्थकरे, ति० । "पढमो दढाउजीवो सव्वाणुभूई" ती० २० कल्प । प्रव० । गोशालेन भस्मसात्कृते श्रीवीरजिनशिष्ये, स्था० १० ठा० ३ उ० । ( 'गोसालग' शब्दे तृतीयभाग १०२४ पृष्ठे वक्तव्यता गता । )

सव्वाणुलोमया–सर्वानुलोमता–स्त्री० । गुरोः सर्वेषूपदेशेषु अप्रतिकूलतायाम्, व्य० १ उ० । ( 'विणय' शब्दे षष्ठे भागे ११५२ पृष्ठे गता वक्तव्यता । )

सव्वाणुवत्तय–सर्वानुवर्त्तक–पुं० । सर्वाननुवर्तयतीति सर्वानुवर्त्तक. । सर्वमनोऽनुवृत्तिकर्त्तरि, ध० २ अधि० ।

सव्वातिहि–सर्वातिथि–पुं० । साधौ, अनु० ।

सव्वादर–सर्वादर–पुं० । समस्तयावच्छक्तितोलले, रा० । जी० । सर्वोचितकृत्यकरणे, विपा० १ श्रु० १ अ० ।

सव्वादि-सर्वादि-पुं० । समस्तवस्तुस्तोममूले,नि० चू०११ उ० ।

सद्वादिन्–पुं० । सन् शोभनो वादी सद्वादी । आत्मास्तित्ववादिनि, नि० चू० ११ उ० ।

सव्वाबाहारहिय–सर्वाबाधारहित–त्रि० । शारीरमानसाबाधामुक्ते, पं० १५ विव० ।

सव्वामगंध–सर्वामगन्ध–पुं० । आमं च गन्धश्च आम—गन्धं समाहारद्वन्द्व' सर्वं च तदामगन्धं च सर्वामगन्धम् । कार्त्स्न्येनापरिशुद्धे, पूतिदोषेण दुष्टे च । "सव्वामगंधं परिण्णाय णिरामगंधे परिव्वएज्जा ।" आचा० १ श्रु० २ अ० ५ उ० । ( 'आमगंध' शब्दे द्वितीयभागे २८६ पृष्ठे व्याख्या गता । )

सव्वामरपूइय—सर्वामरपूजित—त्रि० । सकलदेवमहिते,ध० २ अधि० ।

सव्वाय-सद्वाद-पुं० । सन्-शोभनो वाद. सद्वाद' । परैः सह शोभने वादे, "काऊण पोतणम्मि सव्वाय णिवुत्तो भगवं" सू० ६ उ० ।

सव्वारक्खिय–सर्वारक्षिक–पुं० । सर्वा' प्रकृतयो रक्षति य. स सर्वारक्षिक' । राज्ञ कुम्भकारादीनां प्रकृतीनां रक्षके, नि० चू० ४ उ० ।

सव्वा(वंति)वत्ति–सर्वापत्ति–स्त्री० । सर्वेणात्मनापत्ति–र्व्याप्तिर्यस्य क्षेत्रस्य सा सर्वापत्ति. । सर्वातपव्याप्ते, सर्वापत्तिं स्पृशन् किं क्षेत्रं स्पृशति । भ० ।

से नूणं भंते ! सव्वंति सव्वावंति फुसमाणकालसमयंसि जावतियं खेत्तं फुसइ तावतियं फुसमाणे पुट्ठे त्ति वत्तव्वं सिया ?, हंता गोयमा ! सव्वंति० जाव वत्तव्वं सिया । तं

भंते ! किं पुट्ठं फुसइ अपुट्ठं फुसइ ? , ०जाव नियमा छद्दिसिं । ( सू० ५० × )

'से णूण'मित्यादि'सव्वंति'त्ति-प्राकृतत्वात् ,सर्वत.-सर्वासु दिक्षु ।'सव्वावंति'त्ति-प्राकृतत्वादेव सर्वात्मना सर्वेण वाऽऽतपेनापत्ति.-व्याप्तिर्यस्य क्षेत्रस्य तत्सर्वापत्ति । अथवा-सर्वं क्षेत्रम् , इतिशब्दो विषयभूत क्षेत्रं सर्व न तु समस्तमेवेत्यस्यार्थस्योपप्रदर्शनार्थः तथा सर्वेणाऽऽतपेनापो-व्याप्तिर्यस्य क्षेत्रस्य तत्सर्वापम् , इतिशब्दः सामान्यत. सर्वेणातपेन व्याप्तिर्न तु प्रतिप्रदेशं सर्वेणेत्यस्यार्थस्योपप्रदर्शनार्थः । अथवा—सह व्यापेन—आतपव्याप्त्या यत्तत्सव्यापम् ,इतिशब्दस्तु तथैव 'फुसमाणकालसमयं'ति-स्पृश्यमानक्षणे । अथवा—स्पृशत —सूर्यस्य स्पर्शनाया. कालसमय. स्पृशत्कालसमयस्तत्र आतपेनेति गम्यते, यावत्क्षेत्रं स्पृशति सूर्य इति प्रकृतं तावत्क्षेत्रं स्पृश्यमानं स्पृष्टमिति वक्तव्य स्यादिति प्रश्न ,हन्तेत्याद्युत्तरम् ,स्पृश्यमानस्पृष्टयोश्चैकत्वं प्रथमसूत्रादवगन्तव्यमिति । भ० १ श० ६ उ० ।

सव्वावत्था-सर्वावस्था-स्त्री० । सरागवीतरागादिसमस्तपर्यायेषु, पञ्चा० १६ विव० ।

सव्वाऽवरोह-सर्वाऽवरोध-पुं० । सर्वान्त पुरे, औ० । कल्प० ।

सव्वासि(ण्)-सर्वाशिन्-पुं० । सर्वमश्नाति इत्येवशील सर्वाशी । बहुभक्षके, व्य० १ उ० ।

सव्वाहिवइ-सर्वाधिपति-पुं० । स्वदेशेऽन्यत्र वा सर्वत्र प्रभवति । सार्वभौमे, स्था० ४ ठा० ४ उ० ।

सव्विंदियकायजोगजुंजणया-सर्वेन्द्रियकाययोगयोजनता-स्त्री० । सर्वेन्द्रियाणां काययोगस्य च योजनता-प्रयोजनव्यापारणं सर्वेन्द्रियकाययोगयोजनता । कायविनयभेदे, ग० १ अधि० ।

सव्विंदियगायपल्हायणिज्ज-सर्वेन्द्रियगात्रप्रह्लादनीय-त्रि० । सर्वाणीन्द्रियाणि गात्रं च प्रह्लादयतीति -सर्वेन्द्रियगात्रप्रह्लादनीयम् । वैशद्यहेतौ,ज० २ वक्ष० । जी० । समस्तेन्द्रियशरीरव्यापारकारिणि, कल्प० १ अधि० ३ क्षण ।

सव्विंदियजोगजुंजणया—सर्वेन्द्रिययोगयोजनता—स्त्री० । सर्वेषामिन्द्रियाणां योगा व्यापारा सर्वे वा ये इन्द्रिययोगास्तेषां योजनता करणं सर्वेन्द्रिययोगयोजनता । कायविनयभेदे, स्था० ७ ठा० ३ उ० । सर्वेषामिन्द्रियाणां प्रयोगे, भ० ३५ श० १ उ० ।

सव्विंदियणिव्वत्ति-सर्वेन्द्रियनिर्वृत्ति-स्त्री० । सर्वेषामिन्द्रियाणां निष्पत्तौ, भ० १६ श० ८ उ० । ('णिव्वत्ति' शब्दे चतुर्थभागे २१२० पृष्ठे वक्तव्यता गता । )

सव्विंदियसमाहिय-सर्वेन्द्रियसमाहित-त्रि० । शब्दादिभिरनाक्षिप्ते, दश० ५ अ० १ उ० । शब्देषु रागद्वेषावगच्छति , दश० ८ अ० ।

सव्विंदियाभिणिव्वुड-सर्वेन्द्रियाभिनिर्वृत-पुं० । सर्वाणि च तानि इन्द्रियाणि च स्पर्शानादीनि तैरभिनिर्वृत्त । संवृतेन्द्रिये, जितेन्द्रिये च । सूत्र० १ श्रु० १० अ० ।

सव्विड्ढि-सर्वर्द्धि-स्त्री० । समस्तच्छत्रादिराजचिह्नरूपायामाभरणादिसंबन्धिन्यां वा कान्तौ , कल्प० ५ अधि० ५ क्षण । भ० । रा० । औ० ।

सव्विया-सर्विका-स्त्री० । सर्वा स्वार्थेऽकच् । सर्वाशब्दार्थे, विशे० ।

सव्वुक्कड-सर्वोत्कट-पुं० । प्रकृष्टदण्डराज्यस्तेनदेशादिके सर्वोत्तमे, स्था० ५ ठा० ३ उ० ।

सव्वुक्किट्ठ-सर्वोत्कृष्ट-त्रि० । स्वभावेन सुन्दरे, दश० ७ अ० ।

सव्वुत्तमट्ठाण-सर्वोत्तमस्थान-न० । परमपदे,पं० व० १ द्वार ।

सव्वुत्तमपुण्णणिम्माण-सर्वोत्तमपुण्यनिर्माण-न० । निर्मीयतेऽनेनेति निर्माणम् । सर्वोत्तमं पुण्यनिर्माणमस्येति । सर्वोत्तमपुण्यनिर्मिते, षो० १५ विव० ।

सव्वुत्तमपुण्णसंजुत्त-सर्वोत्तमपुण्यसंयुक्त-त्रि० । अत्यन्तप्रकृष्टतीर्थकरनामादिलक्षणशुभकर्मसयुक्ते, पञ्चा० ७ विव० ।

सव्वेय-सर्वैजस्-त्रि० । सर्वतश्चले, भ० २५ श० ४ उ० ।

सव्वेसणा-सर्वैषणा-स्त्री० । सर्वाहाराद्युद्गमोत्पादनग्रासैषणायाम् , आचा० १ श्रु० ६ अ० २ उ० ।

सव्वोउय-सर्वर्तुक-न० । कुसुमसंछन्ने, विपा० १ श्रु० १ अ० । " सव्वोउयसुरभिकुसुमपरिवरियसिरया " सर्वर्तुकसुरभिकुसुमैर्वृता वेष्टिता शिरोजा यस्याः सा तथा । भ० ६ श० ३ उ० । जी० । प्रश्न० ।

सव्वोदग-सर्वोदक-न० । सर्वतीर्थनद्याद्युदके, जी० ३ प्रति० ४ अधि० । सर्वतीर्थसम्भवे जले, ज्ञा० १ श्रु० १ अ० ।

सव्वोवयार-सर्वोपचार-पुं० । सर्वेषु प्रकारेषु, षो० ६ विव० ।

सव्वोसह-सर्वौषध-न० । सर्वस्मिन् विण्मूत्रादिके औषधे,नं० ।

सव्वोसहि-सर्वौषधि-पुं० । सर्वे विण्मूत्रकेशनखादय उच्चाऽनुच्चाश्च औषधयो यस्य स तथा । ग० २ अधि० । सर्व एव विण्मूत्रकेशनखाद्योऽवयवा. सुरभयो व्याध्यपनयनसमर्थत्वादौषधयो यस्यासौ सर्वौषधि. । अथवा—सर्वा आमर्षौषध्यादिका औषधयो यस्यैकस्यापि साधो स तथा । ऋद्धिविशेषशालिनि, विशे० । आ० म० । प्रव० । आ० चू० ।

सस-शश-पुं० । शशनं शश । घञि प्रत्यये तथारूपम् । चं० प्र० २० पाहु० । सू० प्र० । आटव्ये चतुष्पदजातिविशेषे , प्रश्न० २ आश्र० । द्वार । रा० । ज्ञा० ।

ससंक-शशाङ्क-पुं० । चन्द्रे, सू० १ उ० ३ प्रक० ।

ससंकिय-सशङ्कित-त्रि० । शङ्कनं शङ्कितं सह शङ्कितं यस्य येन वा स तथा । किं व्रजामि किं वा नेत्येवंरूपशङ्कोपेते, व्य० २ उ० ।

ससंधिय-ससंधित-त्रि० । उपहते सीविते , कृतथिग्गले वस्त्र, आ० म० १ अ० ।

१–' मोय ' शब्दे षष्ठभागस्थो द्रष्टव्यः ।

ससंभमोवत्तिया-ससम्भ्रमोपवर्तिका-स्त्री०। ससंभ्रमं व्याकुलचित्ततया प्रवर्त्ततयाऽपवर्त्तयति क्षिपति या सा तथा। सत्वरकार्यकारिण्यां चेटयाम्, भ० ६ श० ३३ उ०।

ससंकसारा-सशङ्कसारा-स्त्री०। रतिकरपर्वतानां मध्यगस्य वैश्रवणप्रभस्य पर्वतस्य उपरि दक्षिणदिग्वर्त्तिन्यां राजधान्याम्, द्वी०।

ससग-शशक-पुं०। खरगोश इति ख्याते आटव्यपशौ, प्रज्ञा० १ पद। अस्मिन् भरतार्द्धे वनवासिन्यां नगर्यां जितशत्रोः राज्ञः पुत्रे सुकुमालिकाभ्रातरि, वृ० ४ उ०। नि० चू०।

ससण-श्वसन-पुं०। श्वसिति प्राणित्यनेनेति। श्वसनः। वायौ, न०। निश्वासे, न०। नाशिकायाम्, स्त्री०। औ०।

ससणिद्ध-सस्निग्ध-त्रि०। शीतोदकादिस्तिमिते, आचा० २ श्रु० १ चू० १ अ० ६ उ०। विन्दुरहिते आर्द्रे हस्तादौ, औ०। ईसिं उल्ला ससणिद्धा। नि० चू० १३ उ०।

ससत्ति-स्वशक्ति-स्त्री०। स्वसामर्थ्ये, ध० २ अधि०। पञ्चा०।

ससबिन्दु-शशबिन्दु-पुं०। वल्लीवनस्पतिभेदे, प्रज्ञा० १ पद।

ससमय-स्वसमय-पुं०। अर्हन्मतानुसारिशास्त्रात्मके (उत्त० १ अ०।) सिद्धान्ते, सम्म० २ काण्ड। अनु०।

ससमयकुसल-स्वसमयकुशल-पुं०। स्वसिद्धान्तनिपुणे, प्रश्न० ५ संव० द्वार।

ससमय(ण्णु)ण्ण-स्वसमयज्ञ-पुं०। स्वसमयं जानातीति स्वसमयज्ञः। गीतार्थे, तादृशेनैव भिक्षायां प्रविष्टेन गोचरप्रदेशादौ पृष्टः सन् सुखेनैव भिक्षादोषानाचष्टे। आचा० १ श्रु० २ अ० ५ उ०।

ससमयपण्णवग-ससमयप्रज्ञापक-पुं०। जैनसिद्धान्तप्रज्ञापके, पं० व० ४ द्वार। (अस्य वक्तव्यता 'वक्खाण' शब्दे षष्ठभागे गता।)

ससमयपरसमइय-स्वसमयपरसमयिक-पुं०। स्वसिद्धान्तपरसिद्धान्तौ यत्र स्तः स स्वसमयपरसमयिकः। स्वपरसमयनिबद्धे, स्था० १० ठा० ३ उ०। रा०।

ससमयपरसमयविय-स्वसमयपरसमयवित्-पुं०। स्वसमयं परसमयं वेत्ति इति स्वसमयपरसमयवित्। स्वपरशास्त्रज्ञे, स हि परेणाक्षिप्तः सुखेन स्व पक्षं परपक्षं च निर्वाहयति। आचा० १ श्रु० १ अ० १ उ०।

ससमयपय-स्वसमयपद-न०। जीवाद्यर्थप्रतिपादके पदे, अनु०।

ससमयवज्ज-स्वसमयवर्ज-त्रि०। स्वसिद्धान्तशून्ये, दश० ३ अ०।

ससय-शशक-पुं०। लोमटकाकृतौ आटव्यजीवे, प्रज्ञा० १० पद। विपा०। सुकुमालिकाभ्रातरि जराकुमारपौत्रे जितशत्रोः स्वनामख्याते पुत्रे, नि० चू० ७ उ०।

ससरक्ख-ससरजस्क-त्रि०। सचित्तरजोयुक्ते, आचा० २ श्रु० १ चू० १ अ० ६ उ०। तापसविशेषे, जी० १ प्रति०।

ससरक्खपाणिपाय ससरजस्कपाणिपाद-पुं०। सचेतनादिरजोगुण्ठितपादे, दशा० १ अ०। आव०। "ससरक्खपाणिपाओ भवइ। ससरक्खपाणिपाए सह सरक्खेणं ससरक्खे अथंडिल्ला थंडिल्लं संकमतो ण पमज्जइ थंडिल्लाओ वि अथंडिल्लं करइभोमादिसु विभासा। ससरक्खपाणिपाए ससरक्खेहिं हत्थेहिं भिक्खं गेण्हइ। अहवा-अणंतरहियाए पुढवीए निसीयणाइ करेंतो ससरक्खपाणिपादो भवति"। आव० ४ अ०।

ससरक्खमोस-ससरजस्कामर्ष-पुं०। अप्रमृज्य रजोयुक्तस्य स्पर्शने, आव० ४ अ०। (व्याख्याऽस्य 'आमोस' शब्दे द्वितीयभागे ४६५ पृष्ठे गता।)

ससरीरि(ण्)-सशरीरिन्-पुं०। सह यथासम्भवं पञ्चविधशरीरेण ये ते। इन् समासान्तविधेः सशरीरिणः। संसारिषु, स्था० २ ठा० ४ उ०। भ०।

ससलोमय-शशलोमज-न०। शशलोम्नि जाते सूत्रे, स्था० ४ ठा० ३ उ०।

ससल्ल-सशल्य-त्रि०। शल्यसहिते, 'अहो भयवं सव्वलक्खणसम्पन्नो किं तु ससल्लो पलोयतेण दिट्ठो कयंसु तेण भाणिपण भवइ"। आ०म० १ अ०।

ससहर-शशधर-पुं०। चन्द्रे, पाइ० ना०।

ससा-स्वसृ-स्त्री०। "स्वस्रादेर्डा" ॥ ८। ३। ३५॥ इति डाप्रत्ययः। प्रा०। भगिन्याम्, सूत्र० १ श्रु० ३ अ० २ उ०।

ससागरंता-ससागरान्ता-स्त्री०। समुद्रान्तायाम्, प्रश्न० ५ आश्र० द्वार।

ससागरिय-ससागारिक-त्रि०। सस्त्रीके, आचा०२ श्रु०१ चू० २ अ० ३ उ०।

ससार-ससार-त्रि०। सञ्जातसारे, 'ससाराओ ओसहीओ' इत्यालपेत्। ससराः संजातसत्त्वादिसारा इत्येवमालपेत्। दश० ७ अ०। ज्ञानदर्शनचारित्रसारवति, ओघ०।

ससि(ण्)-शशिन्-पुं०। "शषोः सः" ॥ ८। ४। २०६॥ इति शशयोः सः। प्रा०। चन्द्रे, आ० म० १ अ०। प्रश्न०। दश०। स्था०। ज्ञा०। औ०।

सम्प्रति चन्द्रस्य लोके शशीति यदभिधानं प्रसिद्धं तस्यान्वर्थतावगमनिमित्तं प्रश्नं करोति—

ता कहं ते चंदे ससी आहितेति वदेज्जा? ता चंदस्स णं जोतिसिंदस्स जोतिसरण्णो मियंके विमाणे कंता देवा कंताओ देवीओ। कंताइं आसणसयणखंभभंडमत्तोवगरणाइं अप्पणा वि णं चंदे देवे जोतिसिंदे जोतिसराया सोमे कंते सुभे पियदंसणे सुरूवे ता एवं खलु चंदे ससी चंदे ससी आहितेति वदेज्जा। (सू० १०५ ×)

'ता कहं ते' इत्यादि, ता इति पूर्ववत्, कथं-केन प्रकारेण केनान्वर्थेनेति भाव, चन्द्र शशीत्याख्यात इति वदेत्? भगवानाह- 'ता चंदस्स णं' मित्यादि, ता इति पूर्ववत्। चन्द्रस्य ज्योतिषेन्द्रस्य ज्योतिषराजस्य मृगाङ्के मृगचिह्ने

विमाने अधिकरणभूते कान्ताः कमनीयरूपा देवा कान्ता देव्य कान्तानि च आसनशयनस्तम्भभाण्डमात्रोपकरणानि आत्मनाऽपि चन्द्रो देवो ज्योतिरिन्द्रो-ज्योतिषराज सौम्य.· अरौद्राकार. कान्त.—कान्तिमान् सुभग.—सौभाग्ययुक्तत्वात् वल्लभो जनस्य प्रियं—प्रेमकारि दर्शनं यस्य स प्रियदर्शन. शोभनम्-अतिशायिरूपम् अङ्गप्रत्यङ्गावयवसन्निवेषविशेषो यस्य स सुरूप.। 'ता' तत. एवं खलु अनेन कारणेन चन्द्र शशी चन्द्र. शशीत्याख्यात इति वदेत्। किमुक्तं भवति ?-सर्वात्मना कमनीयत्वलक्षणमन्वर्थमाश्रित्य चन्द्र शशीति व्यपदिश्यते। कया व्युत्पत्त्येति,उच्यते-इह'शश' कान्ताविति धातुरदन्तश्चौरादिकोऽस्ति,चुरादयो हि धातवोऽपरिमिता न तेषामियत्ताऽस्ति, केवल यथालक्ष्यमनुसर्त्तव्या। अत एव चन्द्रगोमी चुरादिगणस्यापरिमिततया परमार्थतो यथालक्ष्यमनुसरणमवगम्य कतिपयानेव चुरादिधातून् पठितवान् न भूयस। ततो णिगन्तस्य शशनं शश इति घञ् प्रत्यये शश इति भवति। शशोऽस्यास्तीति शशी स्वविमानवास्तव्यदेवदेवीशयनासनादिभि सह कमनीयकान्तिकलित इति भाव। अन्ये तु व्याचक्षते—शशीति सह श्रिया वर्त्तते इति सश्री. प्राकृतत्वाच्च शशीति रूपम्। चं० प्र० २० पाहु०। सू० प्र०। औ०। आ० चू०। भ०। स्था०। चान्द्रमासे, नि० चू० २० उ०।

ससिकूड-शशिकूट-न०। जम्बूद्वीपे दक्षिणरुचकवरपर्वतस्य पञ्चमं कूटे, स्था० ६ ठा० ३ उ०।

ससिणिद्ध-सस्निग्ध-त्रि०। सह स्निग्धेन वर्त्तत इति सस्निग्ध.। स्निग्धता चेह विन्दुरहिता ननु रोहितोदकमेण सम्मिश्रिता। दश० ४ अ०। अगलदुदकविन्दुके, आचा० २ श्रु० १ चू० १ अ० ७ उ०।

ससित्थ-ससिक्थ-त्रि०। भक्तपुलकोपेते, पञ्चा० ५ विव०।

ससिभूसण-शशिभूषण-पुं०प्रभासतीर्थे श्रीचन्द्रप्रभप्रतिमायाम्, प्रभासे शशिभूषण श्रीचन्द्रप्रभश्चन्द्रकान्तिमणिमय। ती० ४३ कल्प।

ससिया-शशिका-स्त्री०। शशस्त्रियाम्, प्रश्न० १ संव० द्वार।

ससिराय-शशिराज-पुं०। स्वनामख्याते राजनि, यो हि मनोवाक्कायै खेद कृत्वा नरकं गत। नं०। चन्द्रे, औ०।

ससिरिय-सश्रीक-त्रि०। सशोभे, ज्ञा० १ श्रु० १ अ०। जी०। जं०। रा०। सू० प्र०। स०।

ससिसयल-शशिशकल-न०। चन्द्रखण्डे, औ०। तं०। जी०।

ससिसोमाकार-शशिसौम्याकार-त्रि०। शशिवत् सौम्याकारे, भ० ११ श० ११ उ०। ज्ञा०। शशिवदरौद्राकार, 'ससिसोमाकारकन्तपिय' शशीवत् सौम्य आकार. कान्त-कमनीय प्रिय—प्रेमावहं च दर्शन च यया ते तथा। तं०।

ससिह-सशिख-पुं०। केशाना धारके, व्य० ४ उ०। अमुण्डितशिरस्के, व्य० १ उ०। पिं०।

ससुइय-सश्रुतिक-पुं०। हेयोपादेयपरिहारप्रवृत्तिक्षे, आचा० १ श्रु० ५ अ० ३ उ०।



ससुय-ससुत-त्रि०। पुत्रसहिते, उत्त० १४ अ०।

ससुर-श्वशुर-पुं०। पत्नीपितरि, पतिपितरि च। अनु०।

ससुरकुलरक्खिया-श्वशुरकुलरक्षिता-स्त्री०। श्वशुरकुले पालिताया स्त्रियाम्, औ०।

ससोहग्गगुणसमूसिय-ससौभाग्यगुणसमुच्छ्रित-त्रि०। ससौभाग्यं गुणसमुच्छ्रितं च ससौभाग्यगुणसमुच्छ्रितम्। सौभाग्यगुणयुक्ते, भ० ६ श० ३३ उ०।

सस्स-शस्य-न०। खलकवर्त्तिनि शालिव्रीह्यादिधान्ये, सूत्र० २ श्रु० २ उ०। वृ०। स्था०।

सस्सवई-शस्यवती-स्त्री०। शस्य यस्यां भूमौ विद्यते सा शस्यवती। शस्यसंपन्नाया धरित्र्याम्, नि० चू० २० उ०।

सस्सामिवायण-स्वस्वामिवाचन-न०। स्वम्—आत्मीय सचित्तादि स्वामी-राजा तयोर्वचनम्। स्वस्वामिनोः सम्बन्धप्रतिपादने, "छट्ठी सस्सामिवायणे" अनु०। स्था०।

सस्सिय-सास्यिक-पुं०। सस्येन चरतीति सास्यिक.। कृषीवले, वृ० ३ उ०।

सस्सिरीय-सश्रीक-त्रि०। सह श्रिया वचनार्थशोभया यत्तत्सश्रीकम्। स्था०८ ठा० ३ उ०। शोभायुक्ते, भ०६ श० ३३ उ०। औ०। ज्ञा०। जी०। कल्प०। अनुप्रासाद्यलङ्कारोपेतत्वात्सशोभे, जं० २ वक्ष०। अन्त०।

सस्सिरीयरूवग-सश्रीकरूपक-त्रि०। सश्रीकाणि रूपकाणि यत्र तानि सश्रीकरूपकाणि। जी० ३ प्रति०२ अधि०। सशोभरूपकेषु, भ० ६ श० ३३ उ०।

सह-सह-अव्य०। सार्द्ध शब्दार्थे, पो० ८ विव०। उत्त०। आचा०। आव०। स्था०। जी०। युगपच्छब्दार्थे, स०। सम्बन्धेन सहशब्द सम्बन्धवाची। आचा० १ श्रु० १ अ० १ उ०। त्रि०। सर्वप्रकारे समर्थे, जीत०। सूत्र०। औ०। युगलिकमनुष्यजातिभेदे, भ० ६ श० ७ उ०। जं०।

सहआसित-सहासित-न०। स्त्रीभि. सहैकासने निषदने, नि० चू० १ उ०।

सहकर-सहकर-पुं०। संघाते, रा०।

सहकार-सहकार-पुं०। चूते, कल्प० १ अधि० ३ क्षण।

सहकारि( ण् )-सहकारिन्-पुं०। कारणसहायके, सम्म० २ काण्ड। आव०।

सहज-सहज-त्रि०। स्वाभाविके, द्वा०।

सहजप्पमलत्त-सहजाल्पमलत्व-न०। सहज—स्वाभाविकं यदल्पमलत्व तदिति। गाढतरमिथ्यात्वे, द्वा० १२ द्वा०।

सहजबुद्धिपरिणाम-सहजबुद्धिपरिणाम-पुं०। स्वभावसम्पन्नेऽकुसमयश्रवणसंपन्ने मनिस्वभावे, स०। सहजात्-स्वभावसम्पन्नाच्च कुसमयश्रवणसम्पन्नाद् बुद्धिपरिणामान्मतिस्वभावात् सशयो जातो येषां ते सहजबुद्धिपरिणामसंशयिना, सन्देहजाताश्च सहजबुद्धिपरिणामसंशयिताश्च ये ते तथा। तेषा श्रमणानामिति प्रक्रम। स० १३७ सम०।

सहजभाव–सहजभाव–पुं० । स्वभावे, द्रव्या० १२ अध्या० ।

सहण–सहन–न० । भयाभावान्मर्षणे, ज्ञा० १ श्रु० १ अ० ।

सहत्थ–स्वहस्त–पुं० । स्वकीये करे, स्था० २ ठा० १ उ० ।

सहत्थपाणाइवायकिरिया–स्वहस्तप्राणातिपातक्रिया–स्त्री० । स्वहस्तेन स्वप्राणानिर्वेदादिना परप्राणान् वा क्रोधादिना निपातयत स्वहस्तप्राणातिपातक्रिया । स्वहस्तेन प्राणिघातक्रियायाम्, स्था० २ ठा० १ उ० ।

सहत्थपारियावणिया–स्वहस्तपरितापनिकी–स्त्री० । स्वहस्तेन स्वस्य परस्य तदुभयस्य वा परितापना दशा योदीरणाया क्रिया परितापनाकारणमेव वा सा स्वहस्तपारितापनिकी । भ० । स्वहस्तेन स्वदेहस्य परदेहस्य वा पारितापनं कुर्वतः स्वहस्तपारितापनिकी । पारितापनिक्याः क्रियाया भेदे, भ० ३ श० ३ उ० । स्था० । आ० चू० ।

सहदेव–सहदेव–पुं० । माद्र्या जाते पाण्डुपुत्रे, ज्ञा० १ श्रु० १६ अ० ।

सहदेवी–सहदेवी–स्त्री० । औषधिभेदे, ती० ६ कल्प । अवसर्पिण्या जातस्य चतुर्थचक्रिणः सनत्कुमारस्य मातरि, स० । आव० ।

सहभुत्त–सहभुक्त–न० । स्त्रीभिः सहैकभाजने भुक्ते, नि० चू० १ उ० ।

सहमाण–सहमान–त्रि० । गुरुके, अनतिप्रातिनि च । ' सहमाणेसु य कमेण कायव्वं ' । व्य० १ उ० ।

सहम्म–सधर्म–पुं० । समानधर्मशीलतायाम्, व्य० ५ उ० ।

सहय–सहज–त्रि० । स्वभावसम्पन्ने, म० । उत्पत्त्या सहैव जाते, आचा० १ श्रु० २ अ० ३ उ० । ज्ञा० ।

सहयर–सहचर–पुं० । सहाये, स्था० ४ ठा० ३ उ० । स्त्रियाम् सहचरी । ज्ञा० १ श्रु० ६ अ० ।

सहरिय–सहरित–त्रि० । सह हरितैर्वर्तत इति सहरितम् । दूर्वाप्रवालादिसहिते, दशा० २ अ० । आचा० ।

सहरिस–सहर्ष–त्रि० । सप्रमोदे, पञ्चा० ६ विव० ।

सहवासिय–सहवासिक–त्रि० । एकगृहवासिनि, सूत्र० २ श्रु० २ अ० ।

सहसंऽववण–सहस्राम्रवन–न० । समस्तचूतवृक्षसमुदाये, मथुराया नगर्या बहि सहस्राऽऽम्रवनमुद्यानम्, ज्ञा० २ श्रु० १६ अ० । नागपुरस्य बहिः सहस्राम्रवनमुद्यानम् । ज्ञा० २ श्रु० ५ वर्ग १६ अ० । 'काम्पिल्लपुरं सहसंऽववणे उज्जाणे' उपा० ६ अ० । 'पोलासपुरं णाम नगरं सहसंऽववणं उज्जाणं' उपा० ७ अ० । अन्त० । वीरजिनवर्जाः सर्वे तीर्थकरा सहस्राम्रवने उद्याने निष्क्रान्ता । आ० म० १ अ० । आ० चू० ।

सहसंबुद्ध–सहसंबुद्ध–पुं० । सह आत्मनैव सार्द्धमनन्योपदेशत इत्यर्थ, सम्यक्–यथावद् बुद्धः । हेयोपादेयापेक्षणीयवस्तुतत्त्वविदितवादिनि जिने, भ० १ श० १ उ० ।

सहसंमइ–सहसंमति–स्त्री० । सहात्मना या संगता मतिः सा सहसंमतिः । परोपदेशनिरपेक्षायां जातिस्मरणप्रतिभादिरूपायां मतौ, प्रश्ना० २ पद । "सह संमइयाए" आचा० १ श्रु० १ अ० १ उ० ।

सहसंमइ–सहसंमति–पुं० । आकस्मिकक्रियायाम्, भ० २५ श० ८ उ० । अविमृश्य कारित्वे, ' पुव्विं अपासिऊणं ' छूढे पायम्मि जं पुणो पासे । न य तरइ निअत्तेउं, पायं सहसाकरणमेयं ' ॥१॥ इति तल्लक्षणात् । ध० २ अधि० । व्य० । स्था० । ( सहसाकारप्रतिसेवनावक्तव्यता ' मूलगुणपडिसेवणा ' शब्दे षष्ठे भागे पञ्चसु समितेषु समितिषु भाविता । ) ( सहसानाभोगादिषु प्रायश्चित्तम् "पडिकमणारिह" शब्दे पञ्चमभागे ३२० पृष्ठ उक्तम् । )

सहसक्कारपडिसेवणा–सहसाकारप्रतिसेवना–स्त्री० । प्रतिसेवनाभेदे, नि० चू० १ उ० । ( सहसाकारप्रतिसेवनावक्तव्यता ' मूलगुणपडिसेवणा ' शब्दे षष्ठे भागे गता । )

सहसब्भक्खाण–सहसाभ्याख्यान–न० । सहसाऽनालोच्य अभ्याख्यानम् । असद्दोषाध्यारोपणं चौरोऽयमित्याद्यभिधानं सहसाभ्याख्यानम् । ध० २ अधि० । आव० । ध० र० । अविमृश्य कलङ्करूपे मृषावादविरतेर्द्वितीयेऽतिचारे, ध० २ अधि० । उपा० । पञ्चा० ।

सहसा–सहसा–अव्य० । अकस्मादर्थे, ज्ञा० १ श्रु० ६ अ० । ग० । प्रव० । स्था० । अनुपयोगे । व्य० १ उ० । पूर्वापरमपर्यालोच्येत्यर्थे, व्य० १ उ० ।

सहसाकलंकण–सहसाकलङ्कन–न० । सहसाऽनालोच्य कलङ्कनं कलङ्कस्य करणम् । सहसाऽभ्याख्याने असद्दोषस्यारोपणे, प्रव० ६ द्वार ।

सहसागर–सहसाकार–पुं० । सहसा करणं सहसाकारः । अतिप्रवृत्तयोगानिवर्त्तने, पं० व० २ द्वार । अकस्मात्करणे, स्था० १० ठा० ३ उ० । आव० । आ० । ' आलुंपसहसाकारे विणिविट्ठचित्ते एत्थ सत्थे पुणो पुणो ' आचा० १ श्रु० ३ अ० १ उ० । ( एतद्व्यता ' लोगविजय ' शब्दे षष्ठभागे गता । )

सहसासव–सहसाश्रव–न० । स्वनामख्याते उज्जयन्तशैलोपरिशैले, 'सहसासवं ति तित्थं करं जरुक्खेण मणहरं सम्मं । तत्थ य तुरयायारा, पाहाणा तेसि दो भाया ' ॥१॥ ती० ३ कल्प ।

सहसुद्दाह–सहसोद्दाह–पुं० । सहसा–अकस्मादुद्दाह प्रकृष्टोद्दाह सहसोद्दाह । सहस्राणां वा लोकस्योद्दाहः सहस्रोद्दाह । अकस्मादुत्पन्न बहुलाकादाहे, स्था० १० ठा० ३ उ० ।

सहस्स–सहस्र–न० । दशशतसंख्यायाम्, तत्संख्येयेषु च । अनु० । नि० चू० । प्रश्ना० । ज० । प्राचुर्ये, स्था० ८ ठा० ३ उ० । कल्प० । सहस्रात्परं यावदनन्तसंख्यायाम्, आ० म० १ अ० ।

सहस्संतरिय–सहस्रान्तरित–त्रि० । सहस्रेण कृतान्तरे, स० ष० १ श्रु० १ अ० ३ उ० ।

सहस्सकमल–सहस्रकमल–पुं० । विमलगिरौ, ती० १ कल्प ।

सहस्सक्ख-सहस्राक्ष-पुं० । सहस्रमक्ष्णां यस्यासौ सहस्राक्षः । शक्रे, इन्द्रे, इन्द्रस्य हि किल मन्त्रिणां पञ्च शतानि सन्ति तदीयाना चाक्ष्णामिन्द्रप्रयोजनं व्याप्तत्वया इन्द्रसम्बन्धित्वेन विवक्षणात् सहस्राक्षत्वमिन्द्रस्य । प्रज्ञा० २ पद । आ० म० । कल्प० । भ० । उपा० ।

सहस्सजोहि-सहस्रयोधिन्-पुं० । मल्लानां सहस्रेण सहैकाकिन्येव युद्धकारके, आव० ४ अ० ।

सहस्सपत्त-सहस्रपत्र-न० । सहस्रदलकलिते महापद्मे, जं० १ वक्ष० । रा० । कल्प० । आ० म० । जी० । प्रज्ञ० । औ० । शत्रुञ्जयपर्वते, ती० १ कल्प ।

सहस्सपाग-सहस्रपाक-न० । सहस्रं कृत्वो ऽपरापरौषधीरसेन सह शतेन वा कार्षापणानां पक्के तैलघृतादौ, औ० । उपा० ।

सहस्सफणि(ण्)-सहस्रफणिन्-पुं० । वैकारपर्वते फणसहस्रकलिते पार्श्वनाथे, ती० ४३ कल्प ।

सहस्सरस्सि-सहस्ररश्मि-पुं० । यद्यपि सहस्रशब्दो दशशतसङ्ख्याया वर्त्तते तथापीहानन्तसंख्यायां वर्त्तते । आ० म० १ अ० । सहस्रं रश्मयो यस्य स । सूर्ये, अनु० । ज्ञा० । रा० ।

सहस्सहुत्त-सहस्रकृत्वस्-अव्य० । "कृत्वसो हुत्तं" ॥ ८ । २।१५८॥ इति वारार्थस्य कृत्वसुच् प्रत्ययस्य स्थाने हुत्तादेश । सहस्रवारे, प्रा० २ पाद ।

सहस्साउल-सहस्राकुल-त्रि० । सहस्रेषु मन्मथभावेन परिभ्रममाण, तं० ।

सहस्साणीय-सहस्रानीक-पुं० । स्वनामख्याते कौशाम्बीनगरीराजे, विशे० ।

सहस्सार-सहस्रार-पुं० । सहस्रमुखे, आ० चू० ६ अ० । स्थानशब्दोक्तसमस्तवक्तव्यताके अष्टमदेवलोके, स्था० १० ठा० ३ उ० । तदिन्द्रे च । विशे० । प्रज्ञा० । उत्तराहाणा सहस्रारकल्पस्येन्द्रे, स्था० २ ठा० ३ उ० । अनु० । औ० ।

सहस्सारवडिंसय-सहस्रारावतंसक-न० । अष्टमदेवलोकस्थे स्वनामख्याते विमाने, स० १८ सम० ।

सहस्सिक-साहसिक-पुं० । सहसा-अवितर्क्य भाषणे ये वर्त्तन्ते ते साहसिका । अविमृश्य कारिषु, प्रश्न० २ आश्र० द्वार ।

सहा-सभा-स्त्री० । "ख-घ-थ-ध-भाम्" ॥ ८ । १ । १८७ ॥ इति भस्य हः । प्रा० । ग्रामजनसमवायस्थाने, व्य० १ उ० । ( अस्य वर्णक 'लवणसमुद्द' शब्दे पष्ठभागे गत. । )

सखा-सखिन् सुविभक्ति । बालवयस्ये , स्था० ३ ठा० ४ उ० । समानभोजनपाने गाढतमस्नेहे, जी० ३ प्रति० ४ अधि० । सखिशब्दो नान्त. सुविभक्तौ सखेति रूपम् । तत स्वस्य ह्रस्वे । "टा-ङस्-ङेरदादिदेद्वा तु ङसे." ॥८। ३ । २९॥ इति-स्त्रिया वर्त्तमानान्नाम्न परेषा टाङसङीना स्थाने प्रत्येकम् अत् आत् इत् एत् इत्येते चत्वार आदेशा भवन्ति । सहीअ । सहीआ । सहीइ । सहीए । प्रा० ३ पाद ।

स्वधा-अव्य० । पितृभ्यो दाने, प्रति० ।

सहाय-सहाय-त्रि० । शिष्ये, उत्त० ३२ अ० । सहचारिणि, ज्ञा० १ श्रु० २ अ० । परलोकसाधनद्वितीये, दश० २ चू० ।

सहायकिच्च-सहायकृत्य-न० । मित्रादिकृते सहायकर्मणि , ज्ञा० १ श्रु० १५ अ० ।

सहायग-सहायक-पुं० । परस्परेण साहाय्यकारिणि, भ० १०-श० ४ उ० ।

सहायपच्चक्खाण-सहायप्रत्याख्यान-न० । साहाय्यकारिणां परिहारे, उत्त २९ अ० ।

तत्फलम्—

सहायपच्चक्खाणेणं भंते ! जीवे किं जणयइ ? । सहायपच्चक्खाणेणं एगीभावं जणयइ । एगीभावभूए य णं जीवे एगत्तं भावेमाणे अप्पसद्दे अप्पझंझे अप्पकलहे अप्पकसाए अप्पतुमंतुमे संजमबहुले संवरबहुले समाहिए यावि भवइ ॥ ३९ ॥

सहाया —साहाय्यकारिण स्तद्धाटकस्य साधवस्तेषां प्रत्याख्यानं साहाय्यप्रत्याख्यानं तेन साहाय्यप्रत्याख्यानेन हे भगवान् ! जीव किं फलं जनयति । गुरुराह—हे शिष्य ! साहाय्यप्रत्याख्यानेन एकीभावं जनयति एकीभावभूतश्चैकत्व प्राप्तो जीव एकाग्रं भावयन् एकावलम्बनत्व चाभ्यस्यन् अल्पशब्द अल्पजल्पको भवति । अल्पभञ्भो भवति-अविद्यमानभञ्भोऽविद्यमानवाक्कलहो भवति । पुनरल्पकषायो भवति, अल्पकलहो ऽविद्यमानरोपशून्यकवचनो भवति , तथा—अल्पतुमंतुमो भवति—अविद्यमानं तुमन्तुमम् इति त्वं त्वम् इति वाक्यं यस्य स अल्पतुमंतुम , त्वम् एव एतत्कार्यं कृतवान् त्वम् एव सदा अकृत्यकारी वर्त्तसे इत्यादि प्रलपनं न करोति । पुन साहाय्यप्रत्याख्यानेन संयमबहुलो भवति । संयम सप्तदशविध स बहुल प्रचुरो यस्य स सम्वरबहुलस्तादृशो भवति । स च पुन. समाधिबहुलो भवति समाधिश्चित्तस्वास्थ्यं तेन बहुल. समाधिबहुल' समाधिप्रधानो भवति । पुन. समाहितश्चापि भवति ज्ञानदर्शनबोधश्च भवतीत्यर्थ. । उत्त० २९ अ० ।

सहाव-स्वभाव-पुं० । स्वो भाव । आत्मीये भावे, नं० । सूत्र० । नि० चू० । धम्मो त्ति सहावो त्ति एगट्ठा । नि० चू० २० उ० । यो० विं० । अनु० । धर्मे, स्था० ६ ठा० ३ उ० । आव० । विशे० । स्वकीयोत्पत्तौ, सूत्र० १ श्रु० १ अ० ३ उ० । उत्पादव्ययध्रौव्यपरिणामे, विशे० । अने० । निसर्गे, स्था० २ ठा० १ उ० । पं० व० । सूत्र० । सहभावे धर्मे, द्रव्या० ११ अध्या० । स्था० । द्रव्याणां प्रकृतौ, द्रव्या० १२ अध्या० । 'वत्थु वसइ सहावे, सत्ताओ वयण व्व जीवम्मि । न विलक्खणम्मि तणओ, भिन्ने छायानवं चेव ॥१॥ स्था० ३ ठा० ३ उ० । (स्वभावादेव जगत् इति 'किरियावाइ' शब्दे तृतीयभागे ५५५ पृष्ठे दर्शितम् । यो० विं० ।

अत्रैव परमतमाशङ्क्य परिहरन्नाह—

स्वभाववादापत्तिश्चे—दत्र को दोष उच्यताम् ।
तदन्यवादाभावश्चे—न्न तदन्यानपोहनात् ॥ ७८ ॥

स्वभाववादापत्ति —" क कण्टकानां प्रकरोति तैक्ष्ण्यं , विचित्रभावं मृगपक्षिणां च । स्वभावत सर्वमिदं प्रवृत्त, न कामचारोऽस्ति कुत प्रयत्न ॥ १ ॥ '

एवंलक्षणो य. स्वभाववादस्तस्यापत्तिः प्रसङ्गस्तत्स्वभावात्कार्योत्पत्त्यभ्युपगमे चेद्यदि ब्रूषे आचार्य ! अत्र—स्वभाववादापत्तौ को दोष ?, उच्यताम्—भण्यताम्। तदन्यवादाभाव.—कालादिशेषकारणापलापः चेत्—यदि ब्रूषे आचार्य !, न—नैव, तत्—परोक्तम्। कुत इत्याह-तदन्यानपोहनात्-तस्मात्तत्स्वाभाव्याद्येऽन्ये कालादयस्तेषामनपोहनाद्—अनिराकरणात्, तेषामपि कारणत्वेनाभ्युपगमात्।

एतदेव भावयन्नाह--

कालादिसचिवश्चाय-मिष्ट एव महात्मभिः।
सर्वत्र व्यापकत्वेन, न च युक्त्या न युज्यते ॥ ७६ ॥

कालादिसचिवश्च-कालादिसहाय. पुन. अयम्--स्वभाव. इष्ट एव-संमत एव महात्मभि-सिद्धसेनमल्लवादिप्रभृतिभिरस्मत्स्वयूथ्यैः। कथमित्याह-सर्वत्र कार्ये व्यापकत्वेन कार्त्स्न्यवृत्त्या सम्मतिप्रभृतिशास्त्रेषु न चेष्टमाग्रमेवेदं किं तु युक्तियुक्तमपीत्याह-नच--नैव युक्त्या-उपपत्त्या न युज्यते किन्तु युज्यत एव।

तथाहि--

तथात्मपरिणामात्तु, कर्मबन्धस्ततोऽपि च।
तथा दुःखादि कालेन, तत्स्वभावादृते कथम् ॥ ८० ॥

तथात्मपरिणामात्तु--तत्प्रकारात्मपरिणतेरेव कर्मबन्धः-कर्मोपादानं संपद्यते ततोऽपि च--कर्मबन्धाच्च तथा दु खादि-तत्प्रकारसुखदु खलक्षणं कार्यमुज्जृम्भते। कालेन-ग्रीष्मवर्षादिरूपेण तत्स्वभावादृते--तत्स्वभावं विना कथम्--केन प्रकारेण ?, नैवेत्यर्थ.। तत्स्वाभाव्ये तु सति स्वपरिणामादेवोपात्तकर्मतथाविधकालबलेन सुखदु.खभागात्मा भवतीति।

एव च तत्स्वाभाव्याधीने सति सर्वस्मिन् कार्ये—

वृथाकालादिवादश्चे-न्न तद्बीजस्य भावतः।
अकिंचित्करमेतच्चे-न्न स्वभावोपयोगतः ॥ ८१ ॥

वृथा--विफल. कालादिवादस्तत्स्वाभाव्यविलक्षणकारणाभ्युपगम चेद्-यदि ब्रूषे, न--नैव एतद्यदुक्तं परेण। कुत इत्याह--तद्बीजस्य--कालादिबीजस्य तच्छक्तिरूपस्य भावत. सत्त्वात् तत्स्वाभाव्याधीनतायामपि कार्याणाम् अकिंचित्करम्--कार्याकारि। एतत्कार्यादिबीजं चेत्-यद्युच्यते परेण न-नैव। एतत्कुत इत्याह--स्वभावोपयोगतः--स्वभावे सर्वभावाना कार्येषु स्वत एव प्रवर्त्तमाने उपयोगत कालादिबीजानां सहकारित्वेन व्यापारान्मृद इव घटपरिणतौ चक्रचीवरादीनामिति।

एतदेव भावयति--

सामग्र्याः कार्यहेतुत्वं, तदन्याभावतोऽपि हि।
तदभावादिति ज्ञेयं, कालादीनां नियोगतः ॥८२॥

सामग्र्या --समग्रसंयोगलक्षणायाः कार्यहेतुत्वं सामान्येन घटादिसाध्यनिमित्तत्वम्। तदन्याभावतोऽपि हि तस्य परिणामिकारणस्य यान्यन्यानि सहकारिकारणानि तेषामभावतोऽभावात् किंपुन परिणामिहेतोरभाव इत्यपि हि शब्दार्थः। तदभावात्-कार्याभावात् इति—अस्मात्कारणात् ज्ञेयम्—अवगन्तव्यम्, प्रस्तुतमपि कार्यं कालादीनां सहकारिणां नियोगतो-व्यापारात् तत्स्वाभाव्ये सत्यपि न पुनरन्यथेति।

प्रस्तुतमेवाश्रित्याह—

एतच्चान्यत्र महता, प्रपञ्चेन निरूपितम्।
नेह प्रतन्यतेऽत्यन्तं, लेशतस्तूक्तमेव हि ॥ ८३ ॥

एतच्च-एतत्पुनः सामग्र्या.-कालादिकाया. कार्यहेतुत्वम्। अन्यत्र-शास्त्रवार्तादिसमुच्चयादिषु महता-बृहता प्रपञ्चेन निरूपितं-चर्चितं यतः; ततो न नैवेह शास्त्रे प्रतन्यते-विस्तार्यते अत्यन्तमतीव। लेशतस्तु संक्षेपेण पुनरुक्तमेव हि-दर्शितमेव हि। यो० विं०।

**सहावफुल्ल**--स्वभावफुल्ल--त्रि०। स्वभावसिद्धे विकसिते, द० श० १ अ०।

**सहाववाइ**--स्वभाववादिन्--पुं०। अस्ति स्वभावः कारणत्वेनाशेषस्य जगत. स्वभावः, स्वभाव इति कृत्वा, तेन हि जीवाजीवभव्यत्वमूर्त्तत्वादीना स्वरूपानुविधानात् इत्येवं स्वभावकारणिकवादिषु, सूत्र० १ श्रु ११ अ०। स्था०। (पुण्यपापे अनभ्युपगच्छतः स्वभाववादिनो मतं 'तज्जीवतच्छरीरवाइ (ण)' शब्दे ४ भागे २१७२ पृष्ठे विस्तरतो गतम्।) इह सर्वे भावा' स्वभाववशादुपजायन्ते, तथाहि-मृद. कुम्भो भवति न पटादिः, तन्तुभ्योऽपि पट उपजायते न कुम्भादिः, एतच्च प्रतिनियतभवनं न तथा स्वभावतामन्तरेण घटाकोटीसएटङ्कमाटीकते, तस्मात् सकलमिद स्वभावकृतमवसेयम्। अपिच-आस्तामन्यत् कार्यजातम् इह मुद्गपक्तिरपि न स्वभावमन्तरेण भवितुमर्हति, तथाहि-स्थाली-धनकालादिसामग्रीसम्भवेऽपि न काङ्कटुकमुद्गानां पक्तिरुपलभ्यते, तस्माद्-यद् यद्भावे भवति यदभावे च न भवति तत्तदन्वयव्यतिरेकानुविधायि तत्कृतमिति स्वभावकृता मुद्गपक्तिरप्येष्टव्या। ततः सकलमेवेदं वस्तुजातं स्वभावहेतुकमवसेयमिति। नं०।

यदाहुः स्वभाववादिन'—

इह सर्वे भावा स्वभाववशादुपजायन्ते इति, तदपि प्रतिक्षिप्तमवगन्तव्यम्, उक्तरूपाणां प्रायस्तत्रापि समानत्वात्, तथाहि-स्वभावो भावरूपो वा स्यादभावरूपो वा ?, भावरूपोऽप्येकरूपोऽनेकरूपो वेत्यादि सर्वं तदवस्थमेवात्रापि दूषणजालमुपढौकते। अपि च-य. स्वो भाव. स्वभाव., आत्मीयो भाव इत्यर्थः, स च कार्यगतो वा हेतुर्भवेत् कारणगतो वा ?। न तावत्कार्यगतो, यतः कार्ये परिनिष्पन्ने सति स कार्यगत. स्वभावो भविष्यति, नानिष्पन्ने, निष्पन्ने च कार्ये कथं स तस्य हेतु.?, यो हि यस्यालब्धलाभसम्पादनाय प्रभवति स तस्य हेतु, कार्यं च परिनिष्पन्नतया लब्धात्मलाभम्, अन्यथा तस्यैव स्वभावस्याभावप्रसक्तात्, तत. कथं स कार्यस्य हेतुर्भवति ?। कारणगतस्तु स्वभावः कार्यस्य हेतुरस्माकमपि सम्मत., स च प्रतिकारणं विभिन्नस्तेन मृद कुम्भो भवति न पटादि., मृद. पटादिकरणस्वभावाभावात्। तन्तुभ्योऽपि पट एव भवति न घटादि, तन्तूना घटादिकरणे स्वभावाभावात्। ततो यदुच्यते—'मृद. कुम्भो भव-

---

१-'काल' शब्दो द्रष्टव्य.।

'ति न पटादि' रित्यादि तत्सर्वं कारणगतस्वभावाभ्युपगमे सिद्धसाध्यतामध्ययासीनमिति न नो बाधामादधाति। यदपि चोक्तम्—'आस्तामन्यत्कार्यजात' मित्यादि, तदपि कारणगतस्वभावाङ्गीकारेण समीचीनमेवावसेयम्। तथाहि—ते काङ्कटुकमुद्गा स्वकारणवशतस्तथारूपा एव जाता ये स्थालीन्धनकालादिसामग्रीसम्पर्केऽपि न पाकमश्नुवते इति। स्वभावश्च कारणादभिन्न इति सर्वं सकारणमेवेति स्थितम्। उक्तं च—"कारणगओ उ हेऊ,केण व निट्ठो त्ति नियकज्जस्स?। न य सो तओ वि भिन्नो,सकारणं सव्वमेव तओ" ॥१॥ नं०। सूत्र०। ('णियई' शब्देऽपि चतुर्थभागे २०८५ पृष्ठे वक्तव्यता।)

सहावसुह–स्वभावसुख–न०।सहजात्यन्तिकैकान्तानन्दे,अष्ट० २ अष्ट०।

सहावहीण–स्वभावहीन–न०। वस्तुनः प्रत्यक्षादिप्रसिद्धे स्वभावमतिरिच्यान्यथावचने, यथा शीतोऽग्निर्मूर्त्तिमदाकाशमित्यादि। आ० म० १ अ०। विशे०।

सहावावेयगामि(ण्)–स्वाभावाद्वैतगामिन्–त्रि०। स्वभावस्य यत् अद्वैतमेकत्वं स्वभावाद्वैतम्। तत्र गमनशीले, अष्ट० १७ अष्ट०।

सहिण–श्लक्ष्ण–त्रि०। सूक्ष्मे, नि० चू० ७ उ०। आचा०। मसृणे, नि० चू० २० उ०।

सहिणकल्लाण–श्लक्ष्णकल्याण–न०। श्लक्ष्णानि—सूक्ष्माणि च तानि वर्णच्छव्यादिभिश्च कल्याणानि शोभनानि वा सूक्ष्मकल्याणानि। सूक्ष्मे शोभने च वस्त्रे, आचा० २ श्रु० १ चू० ५ अ० १ उ०।

सहिण्हु–सहिष्णु–पुं०।सोढुं समर्थे,नि० चू० ४ उ०। आव०।

सहिय–सहित–त्रि०। मिलिते,आचा० १ श्रु० ६ अ० १ उ०। समन्विते, आचा० १ श्रु० ५ अ० ४ उ०। ज्ञा०। आचा०। युक्त,सूत्र० १ श्रु० १३ अ०। स्था०। भ०। सह हितेन वर्त्तत इति सहित।परमार्थभूतैर्हितै (सूत्र०१श्रु० १६ अ०।)ज्ञानादिभि समन्विते,सूत्र० २ श्रु० १ अ०। आचा०। आ० चू०। इन्द्रियचतुष्टयोपेते,प्रश्न०१ आश्र० द्वार। आचा०। त्रयोदशे महाग्रहे, स्था०। चं० प्र०। कल्प०। सू० प्र०। जं०। सूत्र०।

दो सहिया, स्था० २ ठा० ३ उ०।

स्वहित–त्रि०। स्वस्मै हित स्वहित। परमार्थानुष्ठानविधायिनि, सूत्र० १ श्रु० ४ अ० १ उ०। आत्महिते,सूत्र० १ श्रु० २ अ० २ उ०।

सहियव्व–सोढव्य–त्रि०। मर्षणीये,आचा०१श्रु० २अ०६उ०।

सहिवाय–सखिवाद–पुं०। सखेत्येवंवादे,सूत्र०१ श्रु० ६ अ०।

सहिहेउ–सखिहेतु–पुं०। मित्रनिमित्ते, स० ३० सम०।

सहु–सह–त्रि०। समर्थे, नि० चू० १ उ०।

सहेउ–सहेतु–त्रि०। सह हेतुनाऽन्वयव्यतिरेकरूपेण वर्त्तत इति सहेतु। सूत्र० २ श्रु० १ अ०। सकारणे, नि० चू० २० उ०।

सहेउं–सहित्वा–अव्य०। समर्थो भूत्वेत्यर्थे, दश० ३ अ०।

सोढुम्–अव्य०। समर्थो भवितुमित्यर्थे, 'सक्का सहेउं' दश० ६ अ० ३ उ०।

सहोढ–सहोढ–त्रि०। सदृशे, नि० चू० १५ उ०। समीपे, ज्ञा० १ श्रु० २ अ०। वृ०।

सहोयर–सहोदर–पुं०। समातृके भ्रातरि, जी० ३ प्रति० ४ अधि०। अन्त०। आ० म०।

सहोयरी–सहोदरी–स्त्री०। समातृकायां भगिन्याम्, जी० ३ प्रति० ४ अधि०।

सा–श्रा–पुं०। श्राति–पचति तत्त्वार्थश्रद्धानं निष्ठां नयतीति–श्रा। श्राद्धिनि, "श्रद्धालुता श्राति पदार्थचिन्तना–द्धनानि पात्रेषु वपत्यनारतम्।" स्था० ४ ठा० ४ उ०।

स्वा–स्त्री०। स्वकीयायाम्, ज्ञा० १ श्रु० १ अ०।

श्वन्–पुं०। कुक्कुरे, श्वन्शब्दस्य सा साणौ इति प्रयोगौ भवत, प्रा०।

साअड्ड–कृप–धा०। विलेखने, "कृषेः कड्ड–साअड्डाञ्चाण–च्छायञ्छाइञ्छा।"॥८। ४।१८७॥ इति कृषेः साअड्डाऽऽदेश.। साअड्डइ। कर्षति। प्रा० ४ पाद।

साअर–सागर–पुं०। समुद्रे, 'साअरो व्व खीरोओ।" प्रा०।

साइ–साति–पुं०। सातिशयेन द्रव्येण परस्य हीनगुणस्य द्रव्यस्य सयोगे, सूत्र० २ श्रु० २ अ०। भ०।

सादि–न०। आदिरिहोत्सेधाख्यनाभेरधस्तनो देहभागो गृह्यते। सहादिना नाभेरधस्तनकायलक्षणेन वर्त्तते इति सादि। अनु०। उत्सेधवहुले संस्थानभेदे, नं०। स्था०। यद्धि नाभितोऽधश्चतुरस्त्रलक्षणयुक्तमुपरि च तदनुरूपं न भवति। भ० १४ श० ७ उ०। इह यद्यपि सर्वशरीरमादिना सह वर्त्तते तथाऽपि सादित्वविशेषणान्यथाऽनुपपत्त्या विशिष्ट एव प्रमाणलक्षणोपपन्न आदिरिह लभ्यते, तत उक्तम्—उत्सेधवहुलमिति। इदमुक्तं भवति–यत्सस्थानं नाभेरध प्रमाणोपपन्नमुपरि च हीन तत्सादीति। जी० १ प्रति०। पं० सं०।

साचि–न०। अपरं तु साचीति पठन्ति, तत्र साचीति प्रवचनवेदिन शाल्मलीतरुमाचक्षते, तत साचीव यत्संस्थानम्, यथा शाल्मलीतरो स्कन्धकाण्डमतिपुष्टमुपरि च न तदनुरूपा महाविशालता तद्वदस्यापि सस्थानस्याधोभाग. परिपूर्णो भवति उपरितनभागस्तु हीन इति। जी० १ प्रति०। पं० सं०।

स्वाति–पुं०। वायुदेवताके (जी०१प्रति०।) नक्षत्रभेदे, स्था० २ ठा० ३ उ०। हारीतगोत्रे वलिसहशिष्ये श्यामार्यगुरौ,"हारियगोत्तं साइं च वंदामो" वलिसहस्यापि शिष्यं हारीतगोत्रं स्वातिनामानं वन्दे। नं०। हैमवतनामकर्मभूमिवृत्तवैताढ्यपर्वतस्य श्रद्धावतीनाम्नोऽधिष्ठायके देवे, स्था० ३ ठा० १ उ०।

साइजोग–सातियोग–पुं०। अविश्रम्भसम्बन्धे सातिशयेन वा द्रव्येण निरतिशयस्य योगे तत्प्रतिरूपकरणे, भ० १२ श० ५ उ०।

साइज्जणा–स्वादना–स्त्री०। सेवायाम, स्था० ३ ठा० ३ उ०।

अभिव्यञ्जने, प्रतिबन्धविधाने, विशे०। अभ्युपगमे, आचा०२ श्रु० १ चू० १ अ० ३ उ०। कर्मबन्धास्वादने; सातिज्जणा दुविहा-अणुमोयणे, कारावणे, य। नि० चू० १ उ०।

साइज्जित्तए-स्वादयितुम्-अव्य०। भोक्तुमित्यर्थे, औ०,

सइज्जमाण-स्वादमान-त्रि०। अनुमनने व्य० १ उ०।

सइज्जिया-स्वादि(साइज्जि)ता-स्त्री०। साइज्ज धातुरास्वादने, तत उपभुज्यमानो यस्तत्सम्बन्धिन्यां प्रमार्जनायाम्, "साइज्जिया पमज्जण" त्ति। कल्प० ३ अधि० ६ क्षण।

साइणी-शाकिनी- स्त्री०। व्यन्तरीभेदे, प्रति०। सूत्र०।

साइदत्त-स्वातिदत्त-पुं०। चम्पावास्तव्ये स्वनामख्याते ब्राह्मणे, आ० म० १ अ०। आ० चू०। ('वीर' शब्दे षष्ठभागे स्वातिदत्तब्राह्मणवक्तव्यता गता।)

साइपुत्त-स्वातिपुत्र-पुं०। शौद्धोदनिं ध्वजीकृत्यासन्मार्गप्रकाशके आचार्ये, आचा० १ श्रु० २ अ० ५ उ०।

साइबंध-सादिबन्ध-पुं०। य. पूर्वं व्यवच्छिन्न पश्चात्पुनरपि भवति सः सादिबन्धः। कर्मबन्धभेदे, कर्म० ५ कर्म०।

साइबहुल-सातिबहुल-त्रि०। सातिशयेन द्रव्येण परस्य हीनगुणस्य द्रव्यसंयोग सातिस्तद्बहुल.। तत्करणप्रचुरे, सूत्र० २ श्रु० २ अ०।

साइबुद्ध-सातिबुद्ध-पुं०। भरतवर्षे उत्सर्पिण्यां भविष्यति चतुर्विंशे तीर्थकरे, स०।

साइम-स्वादिम-त्रि०। स्वद आस्वादन इत्यस्य च स्वाद्यते इति स्वादिमम्। आव०६अ०। स्वदनं स्वादस्तेन निर्वृत्तं तथैवेदमिति स्वादिमम्। एलाफलकर्पूरलवङ्गपूगीफलहरीतकीनागरादिके आहारभेदे, प्रव० ४ द्वार। पिं०। स्था०। आचा०। आ० चू०। पञ्चा० (स्वादिमस्वरूपं 'पच्चक्खाण' शब्दे पञ्चमभागे १०५ पृष्ठे गतम्।)

साइय-सादिक-न०। सहाऽऽदिना वर्त्तत इति सादिकम्। आदिना सहिते, उत्त० ४ अ०। सादिको लोक इति प्रपञ्चना। तथा चाहु-"आसीदिदं तमोभूत—मप्रज्ञातमलक्षणम्। अप्रतर्क्यमविज्ञेयं, प्रसुप्तमिव सर्वत.॥१॥ तस्मिन्नेकार्णवीभूते, नष्टे स्थावरजङ्गमे।" इत्यादि। आचा० १ श्रु० ८ अ० १ उ०।

साइरेग-सातिरेक-त्रि०। साधिके, स्था० ६ ठा० ३ उ०।

साइसंठाण-सादिसंस्थान-न०। सह आदिना नाभेरधस्तनभागरूपेण यथोक्तप्रमाणयुक्तेन वर्त्तत इति सादि। सर्वमपि हि शरीरं सादि, तत सादित्वविशेषणान्यथानुपपत्तेरादिरिह विशिष्टो ज्ञातव्य। तच्च संस्थानं चेति। संस्थानभेदे, यन्नाभेरधो यथोक्तप्रमाणयुक्तमुपरि च हीनं तत्सादिसंस्थानम्। कर्म० १ कर्म०। पं० सं०।

साइसंपओग-सातिसंप्रयोग-पुं०। सातिशयेन द्रव्येण कस्तूरिकादिना अपरस्य द्रव्यस्य सम्प्रयोग। रा०। महातिशयेन सम्प्रयोगा—योग। यदिवा—सातिशयेन द्रव्येण कस्तूरिकादिनाऽपरस्य द्रव्यस्य संप्रयोग सातिसम्प्रयोग। दशा० ६ अ०। ज्ञा०। लोकवञ्चनार्थे द्रव्यान्तरसंयोगे, 'सो होइ साइजोगो, दव्वं जं छुहिय अण्णदव्वेसु। दोसगुणा वयणेसु य, अत्थविसंवायण कुणइ'॥१॥ रा०। दशा०।

साइसपज्जवसिय-सादिपर्यवसित-त्रि०। सहादिना वर्त्तत इति सादि। तथा पर्यवसानं पर्यवसितं भावे क्त प्रत्यय। सह पर्यवसितेन वर्त्तन्त इति सपर्यवसितम्। नं०। आद्यन्तसहिते श्रुतभेदे, नं०।

साइसुय-सादिश्रुत-न०। पर्यायास्तिकनयमते सादिसहिते श्रुतभेदे, विशे०।

साउ-स्वादु-त्रि०। रसनासुखदे, उत्त० ३२ अ०।

साउणिय-शाकुनिक-पुं०। शकुनैश्चरति शाकुनिकः। प्रति०। शकुनान् हन्तीति शाकुनिकः। शकुनिवधोपजीविनि, अनु०। प्रश्न०। स्था०।

साउफल-स्वादुफल-त्रि०। स्वादूनि फलानि येषां ते स्वादुफला। रा०। मिष्टफलेषु, ज्ञा० १ श्र० १ अ०। औ०। जी०।

साउय-स्वादुक-त्रि०। स्वादुभोजनवति, सूत्र० १ श्रु० ७ अ०। अनु०।

सायुष्-पुं०। सहायुषा वर्त्तन्त इति सायुषः। ससारिजीवेषु, स्था० २ ठा० १ उ०।

साएय-साकेत-पुं०। अयोध्यायाम्, स्था० १० ठा० ३ उ०। 'कोसलासु साकेयं नाम नगरं'। प्रज्ञा० १ पद। आ० क०। आ० म०। साकेतं नगरं कोशलाजनपद.। प्रव० २७५ द्वार। आ० म०। सूत्र०। ('अउज्झा' शब्दे प्रथमभागे ३४ पृष्ठे कल्प उक्तः।)

सक्खिण्-साक्षिन्-पुं०। गौणादित्वाद्रूपनिष्पत्तिः। आ०। अनुभवकारिणि, पाइ० ना०।

साग-शाक-पुं०। पूर्वदेशप्रसिद्धे पक्ववस्तुलादिके, सूत्र० १ श्रु० ४ अ० २ उ०। स्था०। नि० चू०। सू० प्र०। शाकस्तक्रसिद्ध इति। भ० ७ श० १० उ०।

सागडायण-शाकटायन-पुं०। शकटर्षिगोत्रापत्ये, नं०। कल्प०। ('आगम' शब्दे द्वितीयभागे ५३ पृष्ठे विस्तरो गत।)

सागडि-शाकटि-पुं०। शकटनन्दने स्थूलभद्रे, वृ० १ उ० ३ प्रक०।

सागडिय-शाकटिक-पुं०। शकटानां गन्त्रीविशेषाणां समूहे, भ० १५ श०। शकटैश्चरति शाकटिक। शकटवहनोपजीविनि, आ० चू० ६ अ०। गन्त्रीवाहके, उत्त० ५ अ०। स्था०।

सागणिउवस्सय-साग्निकोपाश्रय-पुं०। अग्निसहिते उपाश्रये, आचा० २ श्र० १ चू० २ अ० ३ उ०।

सागपत्त-शाकपत्र-न०। वृक्षविशेषपत्रे, प्रश्न० १ आश्र० द्वार।

सागपाग-शाकपाक-पुं०। मूलादिशाकपचने, "सुफणिं च सागपागाए,आमलगाइं दगाहरणं।" सूत्र०१श्र०१ अ०१ उ०।

सागमापेक्ख–स्वागमापेक्ष–त्रि०। स्वागमानुकारिणि, ध०१ अधि०।

सागय–स्वागत–न०। शोभनमागमने, भ०२ श०१ उ०। आ० म०। आ० चू०।

सागर–सागर–पुं०। समुद्रे,तं०। औ०। प्रश्न०। दर्श०। द्वी०। अन्त०। ओघ०। आव०। ' एगं च णं मह सागरम्मि वीई–सहस्सकलिय। स्था० १० ठा० ३ उ०। अन्धकवृष्णेर्धारण्या जाते पुत्रे, अन्त०। स्था०। ( स च अरिष्टनेमेरन्तिके प्रव्रज्य शत्रुञ्जये सिद्ध इत्यन्तकृद्दशाना प्रथमवर्गस्य तृतीयेऽध्ययने सूचितम्। ) धातकीखण्डभरतक्षेत्रजे हरिषेणस्य राज्ञः समुद्रदत्तासम्भवे पुत्रे, उत्त० ६ अ०। जिनदत्तस्य भद्राया भार्याया जाते आत्मजे, ज्ञा०१ श्रु०१६ अ०। ऐरवत वर्षे भविष्यति पञ्चमे तीर्थकरे, प्रव०७ द्वार। जम्बूद्वीपे माल्यवद्वक्षस्कारपर्वतस्य पञ्चमकूटे, जं० ४ वक्ष०। सप्तमबलदेववासुदेवयोः पूर्वभवधर्माचार्ये, स०। ति०।

सागरकूड–सागरकूट–न०। जम्बूद्वीपे मन्दरपर्वतस्य नन्दनवनस्य सप्तमे माल्यवतश्च पञ्चमे कूटे, स्था० १० ठा० ३ उ०।

सागरचंद–सागरचन्द्र–पुं०। द्वारवत्या नगर्यां निषधस्य पुत्रे बलदेवपौत्रे, विशे०। आ० म०। दर्श०। आ० चू०। रा०। साकेतनगरे चन्द्रावतंसकस्य राज्ञः सुदर्शनागर्भजे पुत्रे, आ० म० १ अ०। दर्श०। (' अणुओग ' शब्दे प्रथमभागे २८८ पृष्ठे कथा गता।) मुनिचन्द्रपुत्रे स्वनामख्याते साधौ, स्था० ४ ठा० ४ उ०।

सागरदत्त–सागरदत्त–पुं०। चम्पायां नगर्यामुदुम्बरदत्तस्य पितरि स्वनामख्याते सार्थवाहे, विपा०१ श्रु०७ अ०। स्था०। कौशाम्ब्यां कुर्कुटयुद्धदर्शके स्वनामख्याते श्रेष्ठिपुत्रे, उत्त० १३ अ०। ( ' बंभदत्त ' शब्दे पञ्चमभागे कथोक्ता। ) जिनदत्तसार्थवाहमित्रे स्वनामख्याते सार्थवाहे, ज्ञा० १ श्रु० २ अ०। ( ' अंड ' शब्दे प्रथमभागे ५१ पृष्ठे कथोक्ता।) सुकुमालिकापतौ श्रेष्ठिनि, पिं०। ( ' उद्देसिय ',शब्दे द्वितीयभागे ८१८ पृष्ठे कथोक्ता। ) भारते वर्षे पद्मिनीखण्डनगरे स्वनामख्याते सार्थवाहे, ती० ६ कल्प। ('अस्सावबोहि'शब्दे प्रथमभागे ८६०पृष्ठे कल्पोऽयं दर्शित।)साकेते नगरेऽशोकदत्तस्य स्वनामख्याते पुत्रे, आ० क०१ अ०। ( 'माया' शब्दे षष्ठभागे २५१ पृष्ठे कथोक्ता। ) तृतीयबलदेवस्य पूर्वभवजीवे, स०।

सागरदत्ता–सागरदत्ता–स्त्री०। पञ्चदशस्य तीर्थकरस्य निष्क्रमणशिविकायाम्, स०।

सागरपविभत्ति–सागरप्रविभक्ति–न०। सागराकारप्रविभागदर्शके नाट्यभेदे, रा०।

सागरपोय–सागरपोत–पुं०। ' पच्चक्खाण ' शब्दे पञ्चमभागे ११७ पृष्ठे उदाहृते स्वनामख्याते सार्थवाहे, आव० ६ अ०। आ० चू०।

सागरमह–सागरमह–पुं०। सागरोद्देशके उत्सवे, आचा० १ श्रु० १ अ० १ उ०।

सागरय–सागरक–पुं०। 'तितिक्खा' शब्दाङ्के चतुर्थभागे२४१ पृष्ठे अग्निकपर्वतनकसहचरदारके, आव० ४ अ०। आ० चू०।

सागरवट–सागरवड–पुं०। मत्स्यविशेषे, जी० १ प्रति०।

सागरवर–सागरवर–पुं०। स्वयम्भूरमणे, आव० २ अ०।

सागरवरगंभीर–सागरवरगम्भीर–पुं०। सागरवर — स्वयम्भूरमणाख्यसमुद्रः परीषहोपसर्गाद्यक्षोभ्यत्वात्तस्मादपि गम्भीरे। परीषहाद्यक्षोभ्ये सागरवद्गम्भीरे, ' सागरवरगंभीरा, सिद्धा सिद्धिं मम दिसंतु। ' ध० २ अधि०। दश०।

सागरवरमेहलाहिवइ–सागरवरमेखलाधिपति–पुं०। सागर एव वरा मेखला काञ्ची यस्या सा सागरवरमेखला पृथ्वी तस्या अधिपतयो ये ते तथा। राजसु, भ० १२ श० ६ उ०।

सागरसेण–सागरसेन–पुं०। मुनिसेनभ्रातरि स्वनामके मुनौ, आ० चू० १अ०। (' उसभ' शब्दे तृतीयभागे ११३७ पृष्ठे ललिताङ्गदेववक्तव्यतायामुक्ताऽस्य वक्तव्यता। )

सागरोपम–सागरोपम–न०। सागरेणोपमाऽस्यास्तत्। स्था० २ ठा० ४ उ०। दशभिः कोटिकोटिभिर्गुणिते पल्योपमकाले, आ० म० १ अ०। अनु०। विशे०। स्था०। प्रव०। जी०। प्रश्न०। जं०। "एएसि य पल्लाणं, कोडाकोडी हवेज्ज दसगुणिआ। तं सागरोवमस्स उ, एगस्स भवे परीमाणं॥१॥" जं०२ वक्ष०। उद्धाराऽद्धाक्षेत्रभेदात् त्रिधा। ति०। ज्यो०। भ०। अनु०। स्था०। ( पल्योपमस्वरूपं ' पलिओवम '-शब्दे पञ्चमभागे ७२३ पृष्ठे गतम्। )

सागवच्च–शाकवर्चस्–न०। यत्र शाकः शटित्वा वर्चोरूपं बिभर्ति तस्मिन् स्थाने, नि० चू० ३ उ०। आचा०।

सागविहि–शाकविधि–पुं०। शाकप्रकारे,उपा० १ अ०।('आणंद' शब्दे द्वितीयभागे ११० पृष्ठेऽस्य सूत्रम्।)

सागार–साकार–न०। सह आकारैर्ग्राह्यभेदैर्वर्त्तत इति साकारम्।सविशेषे ज्ञाने,सम्म०१काण्ड।विशेषग्रहणप्रवणे ज्ञाने, 'सागारे से णाणे अणागारे दसणे' सम्म०२काण्ड। भ०। दर्श०। कर्म०। सहाकारेण जातिवस्तुप्रतिनियतग्रहणपरिणामरूपेण "आगारो उ विसेसो" इति वचनाद्विशेषेण वर्तन्त इति साकाराणि। अयमर्थः — वक्ष्यमाणानि चत्वारि दर्शनान्यनाकाराणि, अमूनि च पञ्च ज्ञानानि साकाराणि। तथाहि–सामान्यविशेषात्मकं हि सकलं ज्ञेयं वस्तु, कथमिति चेदुच्यते–दूरादेव हि शालतमालतालबकुलाशोकचम्पककदम्बजम्बूनिम्बादिविशिष्टव्यक्तिरूपतयाऽनवधारितं तरुनिकरमवलोकयत सामान्येन वृक्षमात्रप्रतीतिजनकं यदपरिस्फुटं किमपि रूपं चकास्ति तत्सामान्यरूपमनाकारं दर्शनमुच्यते। "निर्विशेषं विशेषाणामग्रहो दर्शनमुच्यते" इति वचनप्रामाण्यात्। यत्पुनस्तस्यैव निकटीभूतस्य तालतमालशालादिव्यक्तिरूपतयाऽवधारितं तमेव महीरुहनमूहमुत्पश्यतो विशिष्टव्यक्तिप्रतीतिजनकं परिस्फुटं रूपमाभाति तद्विशेषरूपं साकारं ज्ञानम्। अप्रमेयप्रभावपरमेश्वरप्रवचनप्रवीणचेतस प्रतिपादयन्ति, सह विशिष्टाकारेण वर्तन इति कृत्वा। तदेवं प्रतिप्राणिप्रसिद्धप्रमाणाबाधितप्रतीतिवशात् सर्वमपि वस्तुजातं सामान्यविशेषरूपद्वयात्मकं भावनीयमिति ॥३॥ कर्म० ४ कर्म०।

साकारमिदानीमाह—

महतरयागाराई, आगारेहिं जुअं तु सागारं ।
आगारविरहिअं पुण, भणियमणागारनामं ति ॥१६७॥
किं तु अणाभोगो इह,साऽऽगारो अहव दुन्नि भणिअव्वो।
जेण तिणाइ खिविज्जा,मुहम्मि निवडिज्ज वा कहवि।१६८।
इय कयआगारदुगं, पि सेसआगाररहिअमणाँगारं ।
दुब्भिक्खवित्तिकंता--र गाढरोगाइए कुज्जा ॥ १६६ ॥

आ-मर्यादया मर्यादाख्यापनार्थमित्यर्थ , क्रियन्ते—विधीयन्ते इत्याकारा , अनाभोगसहसाकारमहत्तराकारादयः , अयं महानयमतिशयेन-महान्महत्तरः अतिशये तरप्तमपाविति । महत्तर एवाकारो महत्तराकार.; स आदिर्येषां, ते च ते आकाराश्च, तैर्युक्तं साकारमभिधीयते । कोऽर्थ. ? भुजिक्रिया प्रत्याख्यानेन मया निषिद्धा, परमन्यत्र महत्तराकारादिभिर्हेतुभूतैरेतेभ्योऽन्यत्रेत्यर्थ. । एतेषु सत्सु भुजिक्रियामपि कुर्वता न भङ्ग इति । यत्र भक्तपरित्याग करोति तत् साकारमिति । प्रव०४ द्वार । आ० चू० । ऋषभदेवस्य एकादशे पुत्रे, कल्प० १ अधि० ७ क्षण ।

सागार-पुं० । सह अगारेण गृहेण वर्तत इति सागारः । गृहस्थे, आ० म० १ अ० । प्रव० । स्था० । सर्वोत्तरगुणप्रत्याख्यानभेदे, भ० ७ श० २ उ०।

सागारकड--साकारकृत–त्रि० । प्रत्याख्यानभेदे, आव० ।

साम्प्रत साकारद्वारं व्याचिख्यासुराह—

मयहरगागारेहिं, अन्नत्थ वि कारणम्मि जायम्मि ।
जो भत्तपरिचायं, करेइ सागारकडमेयं ॥ १५७४ ॥

अय च महानयं च महान् अनयोरतिशयेन महान् महत्तर , आक्रियन्त इत्याकारा. । प्रभूतैर्वंविधाकारसत्ताख्यापनार्थे वहुवचनमतो महत्तराकारैर्हेतुभूतैरन्यत्र वा—अन्यस्मिश्चानाभोगादौ कारणजाते सति भुजिक्रियां करिष्येऽहमित्येव यो भक्तपरित्याग करोति साकारकृतमेतदिति गाथार्थ । "अवयवत्थो पुण-सह आगारेहिं सागारं,आगारा उवरिं सुत्ताणुगमे भणिहिति । तत्थ महत्तरागारेहिं महल्लपयोयणेहिं, तेण अभत्तट्ठो पच्चक्खातो । ताहे आयरिएहिं भण्णति-अमुग गाम गतव्वं । तेण निवेइयं जथा मम अज्ज अब्भत्तट्ठो , जति ताव समत्थो करेतु जातु य । ण तरति अण्णो भत्तट्ठितो अभत्तट्ठितो वा , जो तरति सो वच्चतु । णत्थि अण्णो तस्स वा कज्जस्स अ समत्थो ताहे तस्स चव अभत्तट्ठियस्स गुरू विसज्जयन्ति । परिसस्स तं जेमंतस्स अणभिलासस्स अभत्तट्ठितणिज्जरा जा सा से भवति गुरुणिओएण । एवं उस्सूरलंभे वि विणस्सति अचंत विभासा । जति योव तावं जे णमोकारइत्ता पोरुसिइत्ता वा तेसिं विसज्जेज्जा, जेण वा पारणइत्ता जे वा असहू विभासा । एव गिलाणकज्जेसु अण्णतरे वा कारणे कुलगणसहकज्जादिविभासा । एवं जो भत्तपरिच्चागं करेंति सागारकडमेतं" ति । गत साकारद्वारं। आव०६ अ०। यस्त्वया नात्मार्थीकृतं किन्त्वाचार्या एतस्य विज्ञायका इति बुद्धया परिगृहीतं तत्साकारकृतम् । व्य० ७ उ० ।

सागारिओग्गह-सागारिकावग्रह–पुं०। सहागारेण गेहेन वर्त्तत इति सागारः स-एव सागारिकः, तस्यावग्रहः । वसतिदातुर्गेहे, भ० १६ श० ३ उ० । प्रति० । आचा० ।

सागारिय-सागारिक-पुं० । अगारं—गृहं सह तेन वर्त्तते, स सागारिकः । शय्यातर, स्था० ५ ठा० ३ उ० । नि० चू० । 'नामस्थापनाद्रव्यभावभेदाच्चतुर्विध. सागारिकनिक्षेप., स च सागारिकनिक्षेप. ' वसहि ' शब्दे षष्ठभागे सागारिकोपाश्रयवसतिप्रस्तावे दर्शितः । ) मैथुने, आचा० १ श्रु० ६ अ० ३ उ० ।

सागारिकेन भाटकप्रदानेन क्रीतेऽवग्रहः—

सागारिए उवस्सयं वक्कएणं पउंजेज्जा, से य वक्कइयं वएज्जा-इमम्मि य इमम्मि य ओवासे समणा णिग्गंथा परिवसंति । से सागारिए पारिहारिए,से य णो वएज्जा, वक्कइए वएज्जा इमम्मि य २ ओवासे समणा निग्गंथा परिवसंति । से सागारिए पारिहारिए दो वि ते वदेज्जा-अयंसि अयंसि ओवासे समणा णिग्गंथा परिवसंतु । दो वि ते सागारिया परिहारिया ॥१८॥ सागारिए उवस्सयं विक्किणिज्जा। से य वक्कइयं वदेज्जा—इमम्मि य इमम्मि य ओवासे समणा निग्गंथा परिवसंति । से सागारिए परिहारिए, से य नो एवं वएज्जा, वक्कइए य वएज्जा–अयंसि अयंसि ओवासे समणा णिग्गंथा परिवसंतु, से सागारिए परिहारिए । दो वि ते वएज्जा–अयंसि अयंसि ओवासे समणा णिग्गंथा परिवसंतु दो वि ते सागारिए परिहारिए ॥ १६ ॥ व्य० ७ उ० ।

सागारिकः शय्यातर उपाश्रयमवक्रयेण कियत्काल भाटकप्रदानेन प्रयुञ्जीत–व्यापारयेत् । स च सागारिकोऽवक्रयिक भाटकेन प्रतिग्राहिक वदेत्–अस्मिन् अस्मिन् अवकाशे श्रमणा निर्ग्रन्था. परिवसन्ति,तस्मादेतत्परिहारेण त्वया भाटकेन ग्रहीतव्यम् , एवमुक्ते-स सागारिकतया परिहार्य' परिहर्तव्यः । अथ तेन पूर्वस्वामिना सागारिकेण सर्वमपि भाटकेन प्रदत्त ततो न किमपि वदेत् , केवलमवक्रयिको वदेत्-अस्मिन् अस्मिन् अवकाशे श्रमणा-निर्ग्रन्था. वसन्तु तदा अवक्रयिक' सागारिक'-शय्यातर इति परिहार्य.-परिहर्त्तव्य । अथ द्वावपि वदेतां यथा पूर्वस्वामिनोक्तमेतावत्येकदेशे श्रमणा वसन्तु तावत्प्रगत साधून् दृष्ट्वाऽवक्रयिको ब्रूयादेतावति मदीयेऽपि प्रदेशे तिष्ठन्तु । एवमवक्रयिकसूत्रमपि भावनीय तदा द्वावपि भावनीय । तदा द्वावपि तौ सागारिकौ-शय्यातराविति परिहार्याविति सूत्रद्वयाक्षरार्थः ।

सम्प्रति भाष्यकार.—

वक्कइयसालठाणे, चउरो मासा हवंतऽणुग्घाया ।
दियरातो असिवा पुण,भिक्खगते भुंजणगिलाणे।४७७।

वैक्रयेण-कियत्कालं भाटकप्रदानेन निर्वृत्ता वैक्रयिकी सा चासौ शाला च वैक्रयिकशाला तद्रूप स्थाने । शालाग्रहणमुपलक्षणं तनापद्वारिकास्थानं वा गृहे वा इत्यपि द्रष्टव्यम् । यदि तिष्ठन्ति साधवस्तदा तेपा प्रायश्चित्त चत्वारो मासा अनुद्घाता-गुरवो भवन्ति । यतस्तत्र इमे दोषा —सा शाला अपद्वारिका वा पूर्व संयताना दत्त्वा पश्चात्कोऽपि प्र-

हणाय रूपकान् ददाति । ममेमा शालामपद्वारिकां गृहं वा कियत्काल भाटकेन प्रयच्छ । तत स रूपकलोभेन सयतान् निष्काशयेत्, यदि वा-रात्रौ वा उभयत्रापि निष्काशने स्पर्द्धकयतेराचार्यस्य वा प्रत्येकं प्रायश्चित्त चतुर्गुरुकम्, रात्रौ निष्काशने च श्वापदद्विविधस्तेनतोऽशिवापन्नं-विनाशप्राप्तिरित्यर्थ, अन्यां च वसतिं मार्गयतामप्यलभमानाता जनगर्हा, यद्येतेषा शुभं कर्म्म तत पूर्वोपाश्रयादपि न निष्काशयेरन्, अन्या वा वसतिं लभेरन् । 'भिक्खगय' त्ति—संयता एकं वसतिपालं मुक्त्वा शेपा भिक्षार्थं गता. पश्चात् स एकाकी वसतिपालो निष्काश्यत 'भुंजण' त्ति--भोक्तुकामा वा निष्काश्येरन्, तत्र चोभयत्रापि जनगर्हा । ग्लाना वा कोऽपि वर्त्तते सोऽकाण्डे निष्काशित कथं क्रियेत । तदेवं शालामधिकृत्योक्तम् ।

इदानीमुपलक्षणव्याख्यानसूचितापद्वारिकां गृहं च क्रयिकमधिकृत्योक्तदोपयोजना साक्षादाह—

ओवरिं व गिहं वा, विक्कएण पउंजए ।
पउत्ते तत्थ वाघातो, विणासगरहा धुवा ॥ ४७८ ॥

अपद्वारिकां सागारिकगृहं वा यत् शय्यातरो विक्रयेण प्रयोजयति तत्र स्थाने तदेव पूर्वोक्तं प्रायश्चित्तम्, यतो विक्रयेण प्रयुक्ते तत्र गृहादौ बलादकाण्डनिष्काशने सूत्रार्थव्याघातौ । रात्रौ निष्काशने श्वापदस्तेनैर्विनाश अन्यवसत्यलाभे भिक्षागतादिनिष्काशने वा ध्रुवा लोके गर्हा । एतच्च सर्वं प्रागेव भावितमिति न भूयो भाव्यते ।

एगदेसम्मि वा दिन्ने, तन्निस्सा होज्ज तेणगा ।
रसालओ व्व गिद्धा वा, सेहमादी उ जं करे ॥४७९॥

शालाया अपद्वारिकाया गृहस्य वा एकदेशे दत्ते अन्तरा कट्के प्रक्षिप्ते यदि तिष्ठन्ति तदा तन्निश्रया -संयतनिश्रया स्तेनका -चौरा भवेयु । सयतेपु कायिकभूमिगतेपु स्तेना प्रविश्य गृहस्थाना भाण्डकमपहरेयु. । अथवा-रसाल रसवत् यत् तत्र द्रव्यं तद्गृद्धा शैक्षकादयो वा यत्कुर्यु तत्कुर्यु', ततो गृहस्थेन सयता वा शक्यन्ते, यथा-नूनमेतैरस्मद्भाण्डमपहृतम् । अथवा-एतेषा द्वारेण स्तेनैरपहृतम्, यदि वा-एतैरेव-संयतै कस्यापि दु स्थितस्य सम्प्रदत्तमिति एवं शङ्कार्था स विनाशं वा कुर्यात् । यदि वा—राजकुले अन्यत्र वा नीत्वा ग्रामवृद्धपुरुषपार्श्वे कर्पण तत्र भूयसी जनगर्हेति ।

पेहावियारसज्झादि, जे य दोसा उदाहिया ।
अच्छते ते भवे तत्थ, वयए भिष्णकप्पता ॥ ४८० ॥

ये दोषा पूर्वं कल्पाध्ययने-मद्योदकधान्यशालादिपु सागारिके वा उपाश्रये प्रेक्षाया विचारभूमौ स्वाध्यायादौ वा अभिहितास्ते तत्र शालादीनामेकदेशे तिष्ठति भवेयु । अथै तद्दोषभयादन्यत्र व्रजति तर्हि भिन्नकल्पतादोषो मासकल्पे वर्षाकालकल्पे वा अपरिपूर्णे एव सति निर्गमात् ।

सम्प्रति भिक्षागतेष्वेतद्व्याख्यानार्थमाह—

भिक्खं गतेसु वा तेसु, निग्गते वेंति णीह मे ।
णीणिए वावि पाले ण,उवहि स्साऽसियावणा ॥४८१॥

भिक्षा गतेपु वा तेपु साधुपु अवक्रयी भाटकेन ग्रहीतशालादिको ब्रूते यथा निर्गच्छत यूय मम गृहात्तदा भिक्षाटनव्याघात, तत्कालमन्यवसत्यलाभे गर्हा, सूत्रार्थव्याघातश्च । भिक्षा गतेपु पश्चादागत्य वसतिपालं निष्काशयन्ति, तस्मिन् निष्काशने णमिति वाक्यालङ्कारे, उपधे स्याद्-शिवपातं-स्तेनैरपहरण विस्मरणता वाऽनशनमिति ।

अहवा भरियभाणा उ, आगते जइ णिच्छुभे ।
भत्तपाणविणासो उ, भुंजाणे मागते इमे ॥ ४८२ ॥

अथ भक्तभृतभाजनान् आगतान् यदि निष्काशयति तदा गृहीतभक्तपानविनाश । गत भिक्षागतद्वारम् । अधुना भाजनद्वारमाह । अथ भुञ्जानेपु स विक्रयी समागतस्तदा इमे वक्ष्यमाणा दोषा. ।

तानेवाह—

जिता अट्ठिमरक्खा वि, लोगो सव्वो विवोहितो ।
एगासि से य अन्नेसिं, हीला होइ पवयणे ॥ ४८३ ॥

साधून् साधुक्रियया भुञ्जानान् दृष्ट्वा स विपरिणतभावो ब्रूते--जिता एतैरस्थिसरजस्का अपि कापालिकास्तेभ्योऽप्यमी हीनाचारा इति भाव । तथा लोक सर्वोऽप्येतै. पारणकैरेकत्र भुञ्जानैर्वाटिनो विट्टालितो न केवल स एव तत्र ब्रूते किं त्वन्येपामपि जनाना स प्रकाशयति । प्रकाशिते चाऽन्येपा प्रवचनस्य हीला भवति । तदेवम् 'भुंजण' त्ति-व्याख्यातम् ।

अधुना ग्लानद्वारमाह—

सीयवायाभितविहिं, गिलाणो जं तु पावई ।
अमंगलं मउक्खित्ते, ठाणमण्णे वि नो दए ॥ ४८४ ॥

शीतेन वातेन अभितापन वा ग्लानो यत् आगाढादिपरितापनं प्राप्नोति तन्निष्पन्नम् स्पर्धकपतेराचार्यस्य वा प्रायश्चित्तम् । तथा तैर्निष्काशितैर्ग्लान उत्क्षिप्तस्तस्मिन् उत्क्षिप्ते वदतिमन्या मार्गयता मृताऽयमित्यमङ्गलमिति कृत्वा मारिस्पृष्टोऽयमिति भयेन वा अन्योऽपि कश्चित् स्थानं न ददाति ।

गहिते उत्थाणरोगेणं, अच्छंते णीणियम्मि वा ।
वोसिरंतम्मि उड्डाहो, धरणे चाऽऽतविराहणा ॥४८५॥

तथा ग्लान उत्थानरोगेण—अतीसाररोगेण गृहीते तिष्ठति निष्काशिते वाऽनीसारदोप । तथा चाह-- व्युत्सृष्टे उड्डाह. । धरणे चात्मविराधना—मरण गाढतरग्लानस्य वा भवत् ।

उपसंहारमाह—

एए दोसा जम्हा, तहिं यं होंति उ ठायमाणाणं ।
तम्हा नो ठायव्वं, वक्कयसालाएँ समणेहिं ॥ ४८६ ॥

यस्मात्तत्र वक्रयशालादौ तिष्ठतामेते-अनन्तरोदिता दोषा भवन्ति तस्मात्तस्या वक्रयशालायामुपलक्षणमेतत् वक्रयापद्वारिकाया वक्रयगृहे वा श्रमणैर्न स्थातव्यम् ।

अत्र परस्यावकाशमाह—

एवं सुत्तं अफलं, सुत्तनिवातो उ असति वसहीए ।
वहिया वि य असिवादी, कारणे तो न वचंति ॥४८७॥

यदि नाम वक्रयशालादा न स्थातव्यं तर्हि सूत्रमधिकृतमफलम् । सूत्रं वक्रयऽपि श्रमणानामवस्थानानुज्ञानात् । सूरिराह-नेद सूत्रमफल यतोऽस्य सूत्रस्य निपातोऽवकाशो

वसतेरन्यस्या अभावे बहिरपि निर्गच्छनामशिवादिकं कारणं ततो न व्रजन्ति किं तु-तत्रैव वक्रयशालादौ तिष्ठन्ति ।

तत्र यतनामाह—

एएहिँ कारणेहिं, ठायंताणं इमो विही तत्थ ।
छिंदंति तत्थ कालं, उदुबद्धे वासवासे वा ॥ ४८८ ॥

एतैः—अनन्तरोदितैरन्यवसत्यलाभे बहिरशिवादिलक्षणैस्तत्र वक्रयशालादौ तिष्ठतामयं वक्ष्यमाणो विधिः । तमेवाह-तत्र कालं छिन्दन्ति ऋतुबद्धे वर्षावासे वा । इयमत्र भावना-ऋतुबद्धे शय्यातरं प्रति भण्यते—यदि सपूर्णं मासं ददासि, वर्षाकाले भण्यते-यदि चतुरो मासान् ददासि तर्हि तिष्ठामोऽथ न ददासि तर्हि न तिष्ठाम ।

एतदेवाह—

मासचउमासियं वा,न वि निच्छोढव्वो अम्ह नियमेणं ।
एवं छिन्नठियाणं, वक्कइतो आगतो हुज्जा ॥ ४८९ ॥

ऋतुबद्धे काले मासं, वर्षाकाले चतुर्मासं नियमेन वयं न निष्काशयितव्याः । एवं छिन्नकाले शय्यातरेण तथैव प्रतिपन्ने तिष्ठन्ति । तया च तथा तिष्ठतो वक्रयिकः—क्रयेण ग्राही आगतो भवति ।

दिन्नो व सूतएणं, अहवा लोभा सयं पि देज्जाहि ।
अणुलोमिज्जइ ताहे,अदेंति अणुलोमे वक्कइत ॥४९०॥

शय्यातरो वसतिं दत्त्वा प्रवसितः, पश्चात्पुत्रस्य समीपे वक्रयी समागतः । स ब्रूते—यत्र संयतास्तिष्ठन्ति ता भाटकेन प्रयच्छ, सा वसतिर्दत्ता सूतकेन—पुत्रेण । अथवा—शय्यातरः प्रभूतभाटकलोभेन स्वयमपि वैक्रयिणो दद्यात्, दत्त्वा च निष्काशयेत् । तत्र यद्यन्या वसतिर्लभ्यते तर्हि न तत्र स्थातव्यम् । अन्यत्र स धर्मकथया अनुलोम्यते-अनुकूलः क्रियते । अथ स धर्मकथयाऽनुलोमो न भवति,तर्हि यस्तस्याऽर्हतो गरीयान् पितामहमातामहप्रभृतिकस्तेनानुलोमीक्रियते । अथैवमपि स न ददाति स्थातुं तर्हि तां सन्नदर्ति वैक्रयिकमुक्तप्रकारेणानुलामयेत् ।

तम्मि वि अदेंति ताहे, छिन्नमछिन्ने व यंति उडुबद्धे ।
वासासु य ववहारे, उदुबद्धे कारणे जाते ॥ ४९१ ॥

तस्मिन्नप्यवक्रयिणि पूर्वप्रकारेणानुलोम्यमानेऽप्यददति ऋतुबद्धे काले छिन्ने वा परिपूर्णे अपरिपूर्णे वा अवधौ निर्गच्छन्ति । वर्षाकाले यद्यन्यः कोऽपि साधूनामनुकम्पको न विद्यते यो वसतिं प्रयच्छति तर्हि गत्वा राजकुले व्यवहारः कर्त्तव्यः न केवलं वर्षासु किं तु ऋतुबद्धेऽपि कारणे जाते सति कर्त्तव्यः ।

कारणजातमेव पृच्छति—

किं पुण कारणजातं, असिवोमादी उ वाहि होज्जाहि ।
एएहिँ कारणेहिं, अणुलोमऽणुमट्ठिपुव्वं तु ॥ ४९२ ॥

किं पुनः कारणजातं यद्वशात् ऋतुबद्धेऽपि काले व्यवहारं आश्रीयते ? अशिवौमौदर्यादिकमादिशब्दात्-म्लेच्छप्रत्यन्तादिभयपरिग्रहः, यदि कारणजातं भवेत् । ततः एतैः कारणैः ऋतुबद्धेऽपि काले पूर्वमनुशिष्ट्याऽप्यनुलोमनं क्रियते ।

कथं क्रियते इत्याह—

सगिं जंपंति रायाणो, सगिं जंपंति धम्मिया ।
सगिं जंपंति देवा वि, तुं पि ताव सगिं वद ॥ ४९३ ॥

सकृज्जल्पन्ति राजानः, सकृज्जल्पन्ति धार्मिकाः, सकृज्जल्पन्ति देवा अपि, त्वमपि तावत्सकृद्वद । ततः स्वयमुक्त्वा कथमकस्मादस्मान् निष्काशयसि ।

अणुलोमिए समाणे, तं वा अन्नं व जइ उ देज्जाहि ।
अन्नो वऽणुकंपाए, देज्जाही वक्कयं तस्स ॥ ४९४ ॥

एवमुक्तप्रकारेणानुलोमिते सति तामन्या वा यदि वसतिं दद्यात् । यदि वा-अन्योऽनुकम्पया तस्य वक्रयं-भाटकं दद्यात् ।

अन्नं व देज्ज वसहिं, सुद्धमसुद्धं च तत्थ ठायंति ।
असती फरुसा विज्जइ,न णिमो दाऊण को तंसि॥४९५॥

अन्या वा वसतिमन्योऽनुकम्पया दद्यात् किं विशिष्टामित्याह-शुद्धामशुद्धां वा शुद्धा विशुद्धश्च विशुद्धिकोटिरहिताम् शुद्धां विशुद्धश्च विशुद्धिकोटिर्दूषितां वा तत्र तिष्ठन्ति अथ स तामन्यां वा वसतिं न ददाति, नापि कोऽप्यन्यो भाटकं शुद्धामशुद्धां वसतिम, तदा असति एकस्याप्युक्तरूपस्य प्रकारस्याभावे स परुष्यते परुषीक्रियते । कथमित्याह-त्वं छिन्नकाला वसतिं दत्त्वा सम्प्रत्यसंपूर्ण एव काले अस्मान्निष्काशयसि न निर्गच्छाम कस्त्वं वसतिं दत्त्वा साम्प्रतमसि ? "दत्त्वा दानमनीश्वरः" इति वचनात् । अथ किञ्चित्कृत्यं तर्हि राजकुले गच्छाम, एवं परुषितो यदि तिष्ठति ततः सुन्दरम् । अथ न तिष्ठति तदा राजकुले गन्तव्यम् ।

तथा चाह--

रायकुले ववहारे, चाउम्मासं तु दाउ निच्छुभति ।
पच्छाकडो य तहियं, दाऊणमणीसरो होति ॥४९६॥

राजकुले गत्वा व्यवहारः क्रियते । कथमित्याह-चातुर्मासं दत्त्वा पश्चाऽस्मान्निष्काशयति । तत्र राजपुरुषैः "दत्त्वा दानमनीश्वरो भवति" इति न्यायमनुसरद्भिः पश्चात्कृतः ।

पच्छाकडो भणेज्जा, अच्छउ भंडउ इहं निवायम्मि ।
अह यं करेसि अण्णं, तुब्भ अहवा वि तेसिं तु ॥४९७॥

स उक्तप्रकारेण राजकुले पश्चात्कृतः सन् ब्रूयात्-इह यत्र यूयं तिष्ठथ तत्र निवाते भाण्डक्रयाणकं तिष्ठतु, अन्यथा कोपिष्यति, युष्माकं पुनरन्यां वसतिं करोमि । अथवा-तेषां क्रयाणकानां योग्यमन्यत् स्थानं करोमि ।

असती असाते जं, ताहे उवेहा न पच्चणीयत्तं ।
ठायंति जत्थ जंपति,चोए कम्मादि तहि दोसा॥४९८॥

एवमुक्ते यदाऽन्या वसतिः प्राप्यते तदा तत्र गन्तव्यम् । अथान्या वसतिर्नास्ति तदा अन्यस्या वसतेरभावे उपेक्षा कर्त्तव्या । किमुक्तं भवति-तदन्या वसतिं क्रीत्वा ददाति अविशोधिकोटिकृता वा तदा तत्रापि स्थातव्यं, न पुनस्तत्रैवास्माभिः स्थातव्यमित्याग्रहपरतया तस्य प्रत्यनीकत्वमुत्पादनीयम् । स हि प्रत्यनीकीकृतः सन् साधूनामन्यवसतिदायकस्य वा प्रतिकूलमाचरेत् । अत्र चोदकः जल्पतियत्र तिष्ठन्ति साधवस्तत्र कर्मादयः-आधाकर्मादयो दोषाः, आदिशब्दान्मिश्रक्रीतादिदोषपरिग्रहः ।

अत्र सूरिराह—

भणइ निताण बहिं, वहिया दोसा बहुतरा हुंति ।

वासासु हरियपाणा,संजमे आयादकंठादी ॥ ४९९ ॥

भदयत—अत्रोत्तर दीयते-ऋतुबद्धे काले निर्गच्छता तत्र यदि बहिर्बहुतरा दोषा अशिवाद्युपद्रवलक्षणा भवन्ति । वर्षाकाले निर्गच्छता संयमविराधना, आत्मविराधना । स तत्र यत् हरितकायोपमर्दन द्वीन्द्रियादिप्राणाक्रमण वा सा संयमे संयमस्य विराधना । कण्टकादिभिरात्मविराधना । तदेव छिन्न काले तिष्ठता विधिरुक्त' । अथ कालच्छेदो न कृत , अथ च वर्षाकालो वर्त्तते, अथवा-ऋतुबद्धे काले व-हिरशिवादि आगाढ कारण तदा अन्यस्यां वसतौ गन्तव्य, न पुन शय्यातर प्रति किमपि वक्तव्यम् । अथान्या शुद्धा वस-तिर्न प्राप्यते तदा विशोधिकोटिदूषिताया स्थातव्यम्, तस्या अप्यलाभे अविशोधिकोटिदूषितायामपि स्थातव्यमिति ।

सम्प्रति सागारिकावक्रयिकयोश्शय्यातरत्वचिन्ता कुर्वन्नाह-

सो चेव होइ इतरो,तेसिं वा गंतु मोत्तु जइ दिन्नो ।

अह पुण सव्वं दिन्नं,तो देंतो वक्कयी इतरो ॥ ५०० ॥

उच्यते—शालगृहस्य वा अपद्वारिकाया वा अर्द्धत्रिभागो वा विक्रयेण दत्तशेष संयताना दत्तम् ,यथा-अत्र यूयं तिष्ठ-थेति,तत्र च साधव सर्वेऽपि, मान्ति स एव स्वामी शय्या-तरो भवति । अथ पुन तेन पूर्वस्वामिना सर्वमपि शाला-दि भाटकेन प्रदत्तं तदा निर्गच्छत साधून् दृष्ट्वा यदि व-क्रयी ब्रूते मा निर्गच्छत यूयमह युष्माकमवकाश दास्यामि तर्हि सोऽवकाशं ददानो वक्रयी इतर -शय्यातर ।

अह पुण एगपदेसे, भणेज्ज अच्छह तर्हि न मायंति ।

वक्कति उ वेंति इत्थं, अच्छह नो खित्तभंडेणं ॥५०१॥

अथ त पूर्वस्वामी भणेत् ,यथा-यूयमस्मिन्नेक प्रदेशे तिष्ठथ तत्र च साधवो न मान्ति, ततोऽमात· साधून् दृष्ट्वा तत्र वक्रयिकोऽनुकम्पया ब्रूते-अत्र तिष्ठत यूयं न किमपि न - अस्माक भाण्डेन क्षिप्तेन प्रयोजनम् ।

तहियं दो वितराऊ, अहवा गेण्हेज्ज णागयं कोइ ।

दुल्लह अग्घतरं, णाउ तहिं सकमइ तस्स ॥५०२॥

तत्रानन्तरोक्ते प्रकारे द्वावपि शय्यातरौ । अथवा—को-ऽपि चिन्तयति यदा भाण्डमेष्यति तदा बहव क्रयिका भविष्यन्ति, ततोऽत्यर्घतरा महार्घशाला भविष्यति । यदि बहुकेनाऽपि अर्थेन दु खेन लप्स्यते ततो दुर्लभामत्यर्घ-तरा च शाला ज्ञात्वा अनागते साधूनामनागमनकाले एव भाटकप्रदानेन गृह्णाति।एतच्च साधुभिरागतैर्ज्ञातम् ,यथा-शाला भाटकनामुकस्यायत्ता जाता । ततस्त गत्वायाच-न्त, सोऽपि ब्रूयात्—

जाव नागच्छते भंडं, ताव अच्छह साहवो ।

एवं वक्कडतो साहू, भणंतो होइ सारितो ॥ ५०३ ॥

यावन्नागच्छति भाण्ड तावत्साधवो यूय तिष्ठथ, एव व-क्रयिकशय्यातरो भवति ।

देसं दाऊण गतो, गलमाणं जइ छएज्ज वक्कडतो ।

अत्रो अणुकंपाए, तहे सागारितो सो सिं ॥५०४॥

पूर्वस्वामी शालादेर्देशमेक दत्त्वा क्वाप्यन्यत्र गत , वर्षा-काले च स देशो गलति । ततस्त गलन्त प्रदेशं वक्रयिका-ऽन्यो वाऽनुकम्पया छादयति तदा स तेषा साधूना सा-गारिक —शय्यातर ।

एतदेव सविस्तरं भावयति—

मुत्तूणं साधूणं, गहियत्थो वा गहिउ पउसियम्मि ।

हेट्ठा उवरिम्मि ठिते, मीसम्मि पडालिववहारो ॥ ५०५ ॥

साधूनामवकाशं मुक्त्वा तेन पूर्वस्वामिना शय्यातरेण व-क्रयो-भाटकं गृहीत , गृहीत्वा च प्रोषित । तस्मिन् प्रोषि-ते अधस्ताद्वक्रयिकस्य भाण्डमुपरिमाले साधव , अथ-वा अधस्तात् शालाया स्थिता साधव उपरिमाले वक्रयि-कस्य दत्तम् एतन्मिश्रमुच्यते । एव मिश्रे रूपे मिश्र स्थिताना यदा अधस्तात् शालाया साधव उपरिमाले वक्रयिकस्य भा-ण्ड तदा पडाली गलति, भाण्डस्योपरीति न काचित्साधूना क्षति. । अथ वक्रयिकस्य भाण्डमधस्तात् शालायाम् , उप-रिमाले तिष्ठन्ति साधव पडाली च गलति तदा वक्रयिक-श्चिन्तयति उपरिमाले पडाली गलति तत्र साधूना कष्टम् , मम तु भाण्डमधस्तात् शालाया ततो न विनश्यतीति एवं चिन्तयित्वा पडालीं न छादयति । तत्र यद्यन्योऽपि कश्चित् न छादयति तदा व्यवहार· कर्त्तव्य । व्यवहारेण छादयि-तव्या इति ।

एतदेवाह—

हेट्ठाकय वक्कइएण भंडं,

तस्सोवरिं वावि वसंति साहू ।

भंडं न मे उल्लइ मालबद्धे,

नो तं छयंतम्मि भवे विवातो ॥ ५०६ ॥

अधस्तात् शालाया कृत वक्रयिकेण भाण्ड, तस्य भाण्ड-स्योपरि माले वसन्ति साधव , ततो न मे भाण्डमस्मिन् मालबद्धे आर्द्रयेत तेनेति गम्यते इति विचिन्त्य न ता पडालीं छादयतीति भवद्विवादो-व्यवहारो जायते ।

कथमित्याह—

वक्कइयछएयव्वे, ववहारकयम्मि वक्कइं वेंति ।

अकयम्मि य साहीणं, वेति तरं दाइयं वावि ॥ ५०७ ॥

यदि पूर्व वक्रयकाले एव वारान्तिको व्यवहार कृत य वक्रयिकेण छादयितव्यमिति तदा वक्रयिकं साधवोऽनुकू-लेन प्रतिकूलेन वा वचसा ब्रुवते, यथा-त्वया छादयितव्या पडालीति । अथ न कृतस्तथारूपो वारान्तिकव्यवहारस्त-त्राह-अकृते यथोक्तरूपे वारान्तिके व्यवहारे स्वाधीन श-य्यातर ब्रुवते, यथा—छादयत पडालीमिति । अथ स श-य्यातर क्वापि प्रोषितो भवेत् तदा तस्य शय्यातरस्य दा-याद वा गोत्रिण ब्रुवते—

मज्जयंते (अच्छज्जंते) च दाऊणं, सयं मेज्झायरे घरं ।

अणुमट्ठ्ई अणिच्छंतं, ववहारेण छायए ॥ ५०८ ॥

अथ शय्यातर स्वायत न छादयति तदा अन्य यदिदमभ्य-र्थ्यते,ततो येन सा पडाली छादिता सोऽपि शय्यातरो भवति। अथान्य कश्चित् छादयिता न विद्यते तदा शय्यातर स्वय गृह दत्त्वा प्रमादेन नाच्छादयतीति अनुशिष्टमनुशासन क्रिय-

ते, आदिशब्दात्-धर्म्मकथा च। तथापि छादयितुमनिच्छन्तं व्यवहारेण येन गृहं दत्तं तेन छादनमपि कर्तव्यम्। न च पूर्वमाच्छादनं विचारितं न चास्माकमकिञ्चनाना किंचिदस्ति येन छादयाम इत्येवं राजकुलेऽपि गत्वा व्यवहारकरणेन छादयेत्। तदेवमवक्रयसूत्रं भावितम्।

इदानीं क्रयिकसूत्रमतिदिशन्तो व्याख्यानयति—

एसेव कमो नियमा, कइयम्मि वि होइ आणुपुव्वीए।
नवरं पुण णाणत्तं, उव्वत्ता गेण्हती सो उ ॥ ५०६ ॥

य एव क्रमोऽवक्रयिकेऽभिहित स एव क्रमो नियमात् क्रयिके,यथाऽवक्रयिकशय्यातरत्वचिन्ता कृता तथा तयैव रीत्या क्रयिकेऽपि कर्त्तव्येति,नवरं पुनर्वक्रयकात् क्रयिकस्य नानात्वमिदम्—वक्रयिक कियत्कालं मूल्यप्रदानतो गृह्णाति,स तु क्रयिक पुनरुच्चत्वेन गृह्णाति यावज्जीवं मूल्यप्रदानत आत्मसत्ताकीकरोति। व्य० ७ उ०।

सागारियपिंड–सागारिकपिण्ड–पुं०। सह अगारेण—गृहेण वर्त्तत इति साऽगार, स एव सागारिक.; सागारिक —शय्यातरस्तस्य पिण्ड आहार। शय्यातरपिण्डे, सूतकगृहपिण्डे च। सूत्र० १ श्रु० ६ अ०। "सागारियं च पिण्ड च, तं विज्ज परिजाणिया।"सागारिक शय्यातर तस्य पिण्डं जुगुप्सित हीन वर्णयितु वा तदेतत्सर्वं विद्वान् परिहरेत्। सूत्र० १ श्रु० ६ अ०। "सागारियपिंडं भुंजमाणे अणुग्घाइओ भवइ"। स्था० ५ ठा० १ उ०। स०।

यत्र बहव सागारिकास्तत्रैक कल्पाकत्वेन स्थापनीयः—

एगे सागारिए पारिहारिए दो तिन्नि चत्तारि पंच सागारिया पारिहारिया, एगं तत्थ कप्पागं ठवइत्ता अवसेसे निव्विसेज्जा ॥१३॥

अथास्य सूत्रस्य क संबन्ध इत्याह निर्युक्तिकार.—

जहुत्तदोसेहिँ विवज्जिया जे,
उवस्सगा तेसु जता वसंता।
एगं अणेगे व अणुन्नवित्ता,
वसंति सामिं अह सुत्तजोगे ॥ २४३ ॥

यथोक्तै -बीजविकटादिभिरआवकाशतापर्यन्तैर्दोषैर्विवर्जिता ये उपाश्रयास्तेषु यतयो वसन्त एक वा अनेकान् वा गृहस्वामिनोऽनुज्ञाप्य वसन्तीत्यनेन सूत्रेण प्रतिपाद्यते। अथाय पूर्वसूत्रे. सहास्य सूत्रस्य योग -सबन्ध। अनेन संबन्धेनायातस्यास्य(१३सूत्रस्य)व्याख्या-एक सागारिको-वसतिस्वामी परिहारं परित्यागमर्हतीति व्युत्पत्त्या पारिहारिको भिक्षाग्रहणेन परिहर्त्तव्य इत्यर्थ। यथा चैक सागारिक पारिहारिकस्तथा द्वौ त्रयश्चत्वार पञ्च सागारिका पारिहारिका न तेषां बहूनामपि गृहेषु प्रवेष्टव्यमिति भाव। अथ सूत्रेणैव सूत्रमपवदति-"एगं तत्थ कप्पाग"इत्यादि बहुजनसाधारणे देवकुलादौ स्थिता. सूत्रे तेषु बहुषु सागारिकेषु मध्ये, येन सागारिकतया स्थापितेन शेषगृहेषु प्रवेष्टुं कल्पते, तमेकं कल्पाकं स्थापयित्वा शेषेषु सागारिककुलेषु निर्विशेयुरिति सूत्रसंक्षेपार्थ।

विस्तरार्थं भाष्यकृद्विभणिषुराह—

सागारिओ त्ति को पुण, काहे वा कतिविहो व से पिंडो।
असिज्जायरो व काहे, परिहरियव्वो व से तस्स ।२४३।
दोसा वा के तस्स, कारणजाए व कप्पती कम्मि।
जयणाए वा काए, एगमणेगेसु घेत्तव्वो ॥ २४४ ॥

सागारिक इति पदमेकार्थिकनामभि. प्ररूपणीयम्। कः पुन. सागारिको भवतीति चिन्तनीयम्?। कदा वा शय्यातरो भवति?, कतिविधो वा 'से' तस्य पिण्ड अशय्यातरो भवति?। कदा भवति?। कस्य वा संयतस्य संबन्धी स सागारिक. परिहर्त्तव्य.?।, के वा तस्य सागारिकपिण्डस्य ग्रहणे दोषा?। कस्मिन् वा कारणजातेऽसौ कल्पते?। कया वा यतनया स पिण्ड एकस्मिन् वा सागारिके अनेकेषु वा द्वित्र्यादिषु सागारिकेषु ग्रहीतव्य इति द्वारगाथाद्वयसमासार्थ।

सागारिकस्य नामादिप्ररूपणा। अथ व्यासार्थं प्रतिद्वारमभिधित्सुराह—

सागारियस्स णामो, एगट्ठा णाणवज्जणा पंच।
सागारिय सेज्जायर-दाता य तरे धरे चेव ॥ २४५ ॥

सागारिकस्य नामानि—शक्रेन्द्रपुरन्दरादिवदेक कार्याणि नानाव्यञ्जनानि पृथगक्षराणि पञ्च भवन्ति,तद्यथा-१सागारिक., २शय्याकर', ३शय्यादाता, ४शय्यातर, ५शय्याधरश्चेति।

अथैतेषामेव व्याख्यानमाह—

अगम करणादगारं, तस्स ह जोगेण होइ साऽगारी।
सेज्जाकरणा सेज्जा--करो उ दाता तु तद्दाणा ॥२४६॥
गोवाइऊण वसहिं, तत्थ वि तेणाइरक्खिओ तरइ।
तद्दाणेण भवोघं, तरति य सेज्जातरो तम्हा ॥ २४७ ॥
जम्हा धारइ सिज्जं, पडमाणिं छज्जलेपमाईहिं।
जं वा तीएँ धरंती-तरगा आयंधरो तम्हा ॥ २४८ ॥

न गच्छन्तीत्यगमा वृक्षास्तै कृतमगारं पृषोदरादित्वात् रूपनिष्पत्ति.। तेनाऽगारेण सह यस्य योगो विद्यते स सागारिक.।, सर्वधनादेराकृतिगणत्वान्मत्वर्थीय इकप्रत्यय। यतश्चासौ शय्या प्रतिश्रय करोति अत. शय्याकर.। तस्या शय्याया दानाच्च शय्यादाता भण्यते। यतश्च अशिवे सति गोपायितुं-संरक्षितुं तरति शक्नोति तत. शय्यातर। यथा-तत्र तस्या शय्यायां स्थितान् साधून् स्तेनादिप्रत्यपायात् रक्षितुं तरति ततोऽसौ शय्यातर। अथवा—तस्या शय्याया दानेन भवौघं-संसारं प्रवाहन्ति अतः शय्यातर उच्यते। यस्माच्च शय्यां पतन्तीं छादनलेपनाभ्यामादिशब्दात्—स्थूणादानादिभि. धारयति अत शय्याधर, यद्वा—तया शय्यया साधूना वितीर्णया नरकादात्मानं धारयतीति शय्याधर। गतं सागारिकद्वारम्।

अथ क पुन. साऽगारिको भवतीति प्रश्नस्य निर्वचनमाह-

सेज्जायरो पभू वा, पभुसंदिट्ठो व होइ कायव्वो।
एगमणेगे च पभू, पभुसंदिट्ठो वि एमेव ॥ २४९ ॥

शय्यातर प्रभुर्वा प्रभुसंदिष्टो वा कर्त्तव्यो भवति। तत्र प्रभुरुपाश्रयस्वामी प्रभुसंदिष्टस्तु तेनैव प्रभुणा य कृत प्रमाणतया निर्दिष्टो य. प्रभु स एको वा स्यादनेको वा भवति।

अमुमेवार्थं विशेषत आह—

सागारियसंदिट्ठे , एगमणेगे चउक्कभयणा तु ।
एगमणेगे वज्जा, णेगेसु उ वज्जए एक्कं ॥ २५० ॥

सागारिके संदिष्टे च एकानेकपदनिष्पन्ना चतुष्कभजना कर्त्तव्या । सा चैवम्-एक प्रभुरेकं सन्दिशति एष प्रथमो भङ्ग । एक. प्रभुरनेकान् संदिशति इति द्वितीय , अनेके प्रभव एक संदिशन्ति इति तृतीय , अनेके प्रभवोऽनेकान् संदिशन्ति इति चतुर्थ ।अत्र चैतेषु वा अनेके वा शय्यातरा वर्ज्या , अपवादपदे पुनरनेकेषु शय्यातरेष्वेकं सागारिकं स्थापयित्वा वर्जयेत् , शेषेषु तु प्रविशेत् । एतदुपरिष्टाद्व्यक्तीकरिष्यते ।

अथ कदा सागारिको भवतीति प्रश्नस्य प्रतिवचनमाह—

अणुन्नविय उवग्गहं, गुरुपायगयस्स अतिगते विन्ने ।
सज्झाए भिक्खत्ते, खिक्खित्ते भाणे एक्केको ॥ २५१ ॥

अत्र नैगमनयाश्रिता बहव आदेशा , सूत्रके आचार्यदेशी ब्रूते । क्षेत्रे प्रत्युपेक्षित सति यदाऽवग्रहाऽनुज्ञापितस्तदा सागारिको भवति । अपरो ब्रूते-यदा गुरूणा पार्श्वे उपयोग कृत्वा भिक्षा पर्यटितुं लग्ना , अपरो ब्रूते-यदा भोक्तुमारब्धम् , अन्यो भणति-भाजनेषु विक्षिप्तेषु एको ब्रूते यदा दैवसिकमावश्यकं कृतम् ।

पढमे बितिए ततिए, चउत्थ जामे य होज्ज वाघातो ।
निव्वाघाए भयणा, सो वा इतरो व उभयं वा ॥२५२॥

अपरो भणति रात्रौ प्रथमे यामे गते सति शय्यातरो भवति, तदपरो द्वितीये यामे गते, अन्यस्तृतीये यामे गते, अपरोऽभिधत्ते चतुर्थे यामे गते सति । आचार्य प्राह-एते सर्वेऽप्यनादेशा कुत इत्याह-अनुज्ञापितावग्रहा निक्षिप्ता तेषु दिवस एव व्याघातो भवेत् , व्याघाताच्चान्या वसतिम् अन्यत्र क्षेत्रे गता कस्यासौ शय्यातरो भवतु ? । आवश्यकादिषु चतुर्थयामपर्यन्तेषु वसतिव्याघातेन चोधिकस्तेनादिभयेन वा अन्यत्र सङ्क्रामत. क. शय्यातरो भवितुमर्हति ? । आदेश. पुनरयम्-निर्व्याघाताभावे यद्यन्या वसतिं न गता. तत्रैव रात्रावुषिता. ततो भजना कर्त्तव्या । स च शय्यातरो भवेत् , इतरा वा, अन्यतरो वा, उभय वा ।

इदमेव भावयति—

जइ जग्गंति सुविहिया, करेंति आवासगं च अन्नत्थ ।
सेज्जातरेण होती, सुत्ते व कए व सो होती ॥ २५३ ॥

यदीत्यभ्युपगमे एताश्चतुरोऽपि प्रहरान् सुविहिता -शोभनानुष्ठाना. साधवो यदि जाग्रति प्राभातिक चावश्यकमन्यत्र गत्वा कुर्वन्ति तदा स मूलोपाश्रयस्वामी शय्यातरो न भवति किंतु सुप्त वा शयने कृते सति,कृते वा प्राभातिकावश्यके शय्यातरा भवति । अथ शय्यातरगृह रात्रौ सुप्त्वा प्राभातिकप्रतिक्रमण तत्रैव कुर्वन्ति तदा परिस्फुटं स एव शय्यातर इति ।

अन्नत्थ वसेऊणं, आवासगचरममण्णहिं तु करे ।
दोन्नि वि तरा भवंति, सत्थादिसु इहरहा भयणा ॥२५४॥

अन्यत्र स्थानेषु सुप्त्वा चरम-प्राभातिकप्रतिक्रमणमन्यत्र कुर्वन्ति तदा यस्यावग्रहे रात्रौ सुप्ता यदवग्रहे च प्राभातिकप्रतिक्रमणं कृतं तौ द्वावपि शय्यातरौ भवतः । इदं प्राय सार्थादिषु प्रभवति आदिशब्दाच्चौराऽवस्कन्दभयादिपरिग्रह । इतरथा तु ग्रामादिषु वसता भजना—विकल्पना ।

तामेवाह—

असइ वसहीएँ वीसुं, वसमाणाणं तहिं तु भयितव्वा ।
तत्थ ण तत्थ व वासे,छत्तच्छायं तु वज्जंति ॥२५५॥

यत्र संकीर्णायां वसतौ सर्वेऽपि साधवो न मान्ति तत्र विष्वग् अन्यस्या वसतौ वसता साधूना शय्यातरा भक्तव्या. । तत्र हि साधव पृथक् वसतौ उषित्वा द्वितीयदिने सूत्रपौरुषीं कृत्वा समागच्छन्ति, ततो द्वावपि शय्यातरौ । अथ मूलवसतिमागम्य तत्र पौरुषीं कुर्वन्ति, तत एक एव मूलवसतिदाता शय्यातर. । लाढाचार्याभिप्रायः पुनरयम्-शेषा साधव. तथा मूलवसतौ,अन्यत्र वा प्रतिवसन्तु न तेषां संबन्धिना सागारिकेनेहाधिकार ,किन्तु सकलगच्छस्य छत्रकल्पस्त्वाचार्यस्तस्य छाया वर्जयन्ति मौलशय्यातरगृहमित्यर्थ , इति विशेषचूर्णिनिशीथचूर्ण्योरभिप्राय. । मूलचूर्ण्यभिप्रायस्तु पुनस्तत्र विस्तीर्णाया वसतेरभावे विष्वक् वसतौ वसता शय्यातरा भजनीया ,यदि संस्तरन्ति तत सर्वेऽपि शय्यातरा.,परं ह्रियन्ताम् । अथ न संस्तरन्ति तत एक शय्यातरकुल निर्विशन्ति,शेषाणि परिहरन्ति । तत्राप्यसंस्तरणे द्वित्र्यादिक्रमेण तावद्वक्तव्यं यावदस्य वसतावाचार्यः स एको वर्जनीय , शेषा सर्वेऽपि निवेशनीया । तथा—'तत्थ व वासे ' इत्यादि किलैकस्याचार्यस्य बहव आचार्या श्रुत्यर्थमुपसंपन्नास्तत्रैकस्या वसतावमाना पृथक् पृथक् वसतिषु स्थिता सन्तस्तत्र मूलाचार्यसमीपे अन्यत्र वा आत्मीयासु वसतिषु वसन्ति, सर्वेषामपि शय्यातरा परिहर्त्तव्या । असंस्तरणे तु पूर्वोक्तप्रकारेण तावद्वक्तव्यं यावच्छत्रच्छाया वर्जयन्ति मूलाचार्या. शय्यातरमित्यर्थ । गत कदा सागारिक इति द्वारम् ।

अथ कतिविध शय्यातरपिण्ड इति द्वारमाह—

दुविह चउव्विह छव्विह,अट्ठविहो होति बारसविहो उ ।
सिज्जातरस्स पिंडो, तव्विवरीतो अपिंडो अ ॥ २५६ ॥

द्विविधो वा चतुर्विधो वा षड्विधो वा अष्टविधो वा द्वादशविधो वा शय्यातरस्य पिण्डो भवति । तद्विपरीत शय्यातरपिण्डो न भवति ।

अथैनामेव गाथा विवृणोति—

आहारोवहि दुविहो, विदु अन्न पाणओ उवग्गहिओ ।
असणादी चउरो ओ-हुवग्गहे छव्विहो एसो ॥२५७॥
असणे पाणे वत्थे, पादे सेज्जादिया य चउरट्ठ ।
असणादि वत्थदोसुं, वादिचउक्काति बारसगं ॥२५८॥

द्विविध शय्यातरपिण्डो भवति, तद्यथा—आहार , उपधिश्च । ' विदुन्नि ' द्विगुणितौ चत्वारो भवन्तीति कृत्वा चतुर्विध शय्यातरपिण्ड पुनरयम्—अन्न पानम् औपग्रहिकोपकरणं चेति । तथा—अशनादयश्चत्वार औघिकोपधिरौपग्रहिकोपधिश्चेति षड्विध । अन्नं पानं वस्त्र पात्र शय्यादय शूचीपिप्पलकनखरदनिकाकर्णशोधनरूपा-

श्चत्वार इत्यष्टविधास्तथा अशनादीनि वस्त्रादीनि सूच्यादीनि चेति त्रीणि चतुष्कानि द्वादश भवन्ति । त द्यथा-अशन १ पान २ खादिम ३ स्वादिम ४, वस्त्र ५ पात्रं ६ कम्बलं ७ पादप्रोञ्छनं ८ सूची ९ पिप्पलको १० नखच्छेदनकं ११ कर्णशोधनकं १२ चेति।

तणडगलखारमल्लग-सेज्जासंथारपीढलेवादी ।
सिज्जातरपिंडो सो ण होति सेहो य सो अहिओ ॥२५९॥

तृणडगलक्षारमल्लकशय्यासंस्तारकपीठलेपादिशब्दात्—तत्प्रमुखादिकं च एष शय्यातरपिण्डो न भवति । यदि शय्यातरस्य पुत्रादि शैक्षो वस्त्रपात्रसहितः प्रव्रजितुमुपतिष्ठते तदा सागारिकपिण्डो न भवति । अपर आह-यदा निर्गन्तुकामैः पात्राद्युपकरणमुद्ग्राहितं तदा अशय्यातरः । अन्यो ब्रूते—यदा वसतेर्निर्गता भवन्ति तदा, परो भणति—यदा सागारिकस्यावग्रहा निर्गता, एको ब्रूते-सूर्योद्गमे निर्गतानां प्रथमपौरुष्यां गतायाम्, अपरो ब्रूते-तृतीयस्याम्, तदन्य आह यावद्दिवसं दिवससत्काश्चतस्रः पौरुष्यस्तावत, कालादूर्ध्वमशय्यातर । एते सर्वेऽप्यनादेशा ।

सिद्धान्तः पुनरयम्—

आपुच्छिय उग्गाहिय, वसहीओ निग्गतोगगहे एगो ।
पढमादीया दिवसं, वुच्छे वज्जेज्जऽहोरत्तं ॥२६०॥

'वुच्छे वज्जेज्ज होरत्तं' ति—यस्यां वसतौ उषितास्ततो यस्यां वेलायां निर्गताः ततः ऊर्ध्वमहोरात्रं यावद् गृहे अशनादिकं वर्जयेयुः ततः परन्तु कल्पते, आपृच्छादिषु तु सागारिकावग्रहनिर्गता तेष्वादेशेषु यदि कथमपि गमनविघ्नमुत्पन्नं ततो भूयोऽपि तस्यामेव वसतौ स्थितेषु कथमशय्यातरो भवितुमर्हति ?, ये पुनः प्रथमादिप्रहरविभागेनाशय्यातरमिच्छन्ति तेषां सूर्यास्तमनविनिर्गतानां रात्रौ प्रथमादिपौरुषीविभागेनाशय्यातरः प्राप्नोति, तच्च न प्रयुज्यते ।

कुत इति चेदुच्यते—

अग्गहणं जेण णिसि, अणंतरंगतरे दुहिं च ततो ।
गहणं तु पोरिसीहिं, चोदग एते अणादेसा ॥ २६१ ॥

येन हेतुना निशि रजन्यामस्माकं भक्तपानादेरग्रहणं, तथा किंचिदनन्तरमेकान्तरादिभिर्वा पौरुषीभिः शय्यातरपिण्डस्य ग्रहणमिच्छन्ति । हे नोदक ! ते एते सर्वेऽप्यनादेशाः । आदेशः पुनरयम्-संध्यायां दिवा निर्गतानां रजन्याश्चतुरो यामान् शय्यातरस्ततः परं सूर्योद्गमे अशय्यातरः । एवं जघन्यत उक्तम् ।

उत्कर्षेण पुनरित्थम्--

सूरत्थमनगयाणं, दो एहं रयणीण अट्ठ जाम भवे ।
दिवसियमज्झे चउ दिण-णिग्गते बितियम्मि सा वेला २६२

सूर्यास्तमनसमये रात्रौ निर्गतानामेषां परं यं चाहोरात्रं शय्यातरो भवति, ततो द्वयो रजन्योरष्टौ यामा द्वैवसिकाश्च, रजनीद्वयमध्यवर्तिनश्चत्वारो यामाः, एवं द्वादशानां यामानामन्ते उत्कर्षतः अशय्यातरो भवति । एष एक आदेशः । द्वितीयः पुनरयम्-'दिणनिग्गए बितियम्मि सा वेल' त्ति-सूर्योदये दिवा यदि निर्गतास्तथा द्वितीये दिने तस्यामेव वेलायां शय्यातर एवमहोरात्रं वर्जितं भवति । गतं शय्यातरः कदेति द्वारम् ।

अथ शय्यातरः कस्य परिहर्त्तव्य इति द्वारनिरूपणायाह—

लिंगत्थस्स उ वज्जो, तं परिहरतो व भुंजतो वा वि ।
जुत्तस्स अजुत्तस्स व, रसावणो तत्थ दिट्ठंतो ॥२६३॥

लिङ्गस्थस्य-साधुलिङ्गधारिणस्तं शय्यातरपिण्डं परिहरतो वा भुञ्जानस्य वा साधुगुणैर्युक्तस्य वा अयुक्तस्य वा शय्यातरो वर्ज्यो-वर्जनीयः, तत्र रसापणो मद्यहट्टो दृष्टान्तः। यथा-महाराष्ट्रदेशे रसापणे मद्यं भवतु वा मा वा तथापि तत्परिज्ञानार्थं तत्र ध्वजो मध्ये आरोप्यते त ध्वजं दृष्ट्वा सर्वे भिक्षाचरादय परिहरन्ति । एवमस्माकमपि साधुगुणैर्युक्तो वा भवतु मा वा परं रजोहरणध्वजो दृश्यते इति कृत्वा लिङ्गस्थस्यापि शय्यातरः परिह्रियते ।

अथ के दोषा इति द्वारमाह—

तित्थंकरपडिकुट्ठो, आणा अन्नायउग्गमें न सुज्झे ।
अविमुत्ति अलाघवया, दुल्लभसिज्जाएँ वुच्छेओ ॥२६४॥

तीर्थङ्करैः प्रतिकुष्टो निषिद्धः शय्यातरपिण्डः । अथ त गृह्णातीति तेषामाज्ञा न कृता भवति 'अन्नाय' त्ति-आज्ञातोऽथ मास निवासवशात् आज्ञा-स्वरूपतया न शुद्ध्यति प्रत्यासन्नतया तत्रैव पुनः पुनः भैक्षपानादिनिमित्तं प्रविशत उद्गमोऽपि न शुद्ध्यति । अविमुक्तिर्नाम-स्वाध्यायश्रवणादिना आवर्जितः शय्यातरो दुग्धदध्यादिप्रणीतं द्रव्यं ददाति, तद्ग्रहणलोलुपतया तद्गृहं न विमुञ्चति । अलाघवता तु विशिष्टाहारलाभेनोपचितगलकपोलतया शरीरलाघवं प्रचुरवस्त्रादिलाभेनोपकरणलाघवं च न भवत्, दुर्लभा च शय्या भवति । येन किल शय्या दत्ता तेनाहाराद्यपि देयमिति भया द्भूय शय्यामगारिणो न प्रयच्छन्तीति भाव । व्यवच्छेदश्चविनाशः शय्याया क्रियते । अथवा-भक्तपानादिप्रतिषेध इह व्यवच्छेदशब्देनोच्यते, एष निर्युक्तिगाथासमासार्थः ।

अथैनामेव प्रतिपदं विवृणोति—

पुरपच्छिमवज्जेहिं, अविकम्मं जिणवरेहि लेसेणं ।
भुत्तं विदेहपच्छिय, ण य सागरियस्स पिंडो उ ॥२६५॥

पूर्वस्तीर्थकर ऋषभस्वामी पश्चिम श्रीमन्महावीरस्तद्वर्जैः अजितादिभिर्मध्यमजिनवरैर्विदेहजैः तीर्थकरैराधाकर्मादिलेशेन सूत्रादेशेना मुक्तं भोक्तुमनुज्ञातमिति भाव । नच-नैव सागारिकस्यानुज्ञातम् । इयमत्र भावना-मध्यमतीर्थकृता च ये साधवस्तेषां यस्यैव योग्यमाधाकर्म कृतं तस्यैव न कल्पते, शेषाणां तु कल्पते इति, तेराधाकर्म भोजनमपि कथंचिदनुज्ञातं न पुनः शय्यातरपिण्ड "सेज्जायरपिंडं वा, उभामं वा य पुरिसजिट्ठं य । किइकम्मस्स य करणं, चत्तारि अनाहिया कप्पा ॥१॥" इति तैर्वचनात् ।

अथाज्ञाद्वारमज्ञातद्वारं चाह—

मज्झेमिं तम्मिं आणा, तप्परिहारी ण गेण्हती ण कया ।
अणायं च ण जुञ्जति, नहिं वि तो गेण्हती तत्थ ॥२६६॥

सर्वेषामपि तेषां तीर्थकृतां तत्परिहारिणां शय्यातरपिण्ड-प्रतिषेधकारिणामाज्ञा तत्पिण्डं गृह्णता न कृता भवति। तथा यत्रैव गृहे स्थितस्तत्रैव भिक्षां गृह्णतो न युज्यते-न घटते,न शुद्ध्यतीत्यर्थः। अज्ञातस्य तस्य यदुञ्छं भैक्षग्रहणं तदज्ञातमिति व्युत्पत्तेः।

अथ शुद्धिद्वारमाह-

बाहुल्ला गच्छस्स उ, पढमालियपाणगादिकज्जेसु।
सज्झाय करण आउ-ट्टियाकरण उग्गमेगतरे ॥२३७॥

गच्छस्य यद् बाहुल्य-साधूनां प्राचुर्यं तस्माद्धेतोः प्रथमालिकापानकौषधादिकार्येषु पुनः पुनः प्रविशन्तस्तथा स्वाध्यायश्रवणेन करणेन च यथोक्तक्रियाकलापानुष्ठानेन आवर्तिता आवर्जिता उद्गमदोषाणामेकतरान् कुर्युः। (वृ०)

अथ दुर्लभशय्याद्वारमाह—

भिक्खापयरणगहणं,दोगच्चं अण्ण आगमे ण देमो उ।
पयरणं णत्थि ण कप्पति,असाहु तुच्छे य पण्णवणा॥२७१॥

यस्यापि श्रेष्ठिनो गृहे पञ्चशतिको गच्छो वर्षासु स्थितः। स च शय्यातरो गृहमनुष्याणामादिशति-यदि साधवो गृहात्तुच्छैर्भाजनैर्निर्गच्छन्ति ततो महदमङ्गलं स्यात्, अतो दिने दिनेऽमीषां प्रथममेव भिक्षा दातव्या, ततस्ते साधवः सर्वेऽपि तस्मिन् गृहे प्रतिदिनं प्रथमतः प्रतरणभिक्षां गृह्णन्ति, ततस्तत्र शय्यातरस्य कालान्तरेण दौर्गत्यं—दरिद्रता। अन्येषां च साधूनां तत्र गमनं श्रेष्ठिनम्,वदन्ति-याचन्ते।स प्राह-विद्यते वसतिः परं न प्रयच्छामि। साधुभिरुक्तम्-किं कारणं न प्रयच्छसि, स प्राह—प्रतरणं प्रथमदातव्यभिक्षारूपं नास्ति। साधवो ब्रुवते-न कल्पते अस्माकमप्रतरणं ग्रहीतुम्। स प्रतिब्रुवते—असाधु-अमङ्गलमिदं यन्मम गृहात्तुच्छैर्भाजनैर्निर्गच्छन्ति। ततस्तस्य साधुभिः प्रज्ञापना कृता आयुष्मन्निदमेव भवतः परममङ्गलं यदेव साधूनां वसतिरुपयुज्यते अनया हि दत्तया भवता सर्वमपि भक्तपानादिकं दत्तमेव भवति। इत्थं प्रज्ञापितः स तेषां वसतिं प्रदत्तवान्, एवं दुर्लभा शय्या भवति।

अथ व्यवच्छेदद्वारमाह—

थल देउलिया ठाणं,सति कालं दट्ठु दट्ठु तहिं गमणं।
निग्गए वसही भजणं,अण्णे उब्भामगा उद्धा॥२७२॥

कस्यापि ग्रामस्य मध्ये स्थलम्, तत्र ग्रामे मिलित्वा देवकुलिका कारिता, तत्र साधवः सन्ति। ते च तत्रोक्तरे देवकुले स्थितास्तत्कालं भिक्षाया देवकुलं दृष्ट्वा दृष्ट्वा तत्र तेषु कुलेषु भिक्षार्थं गच्छन्ति तत्रैकमपि कुलं ते ता भिक्षा गृह्णन्ति समुद्धरन्ति, एवं च निर्विघ्ना सर्वेऽपि गृहस्था। ततो निर्गतेषु साधुषु वसनेर्देवकुलिकायास्तैर्भञ्जनं क्रियते,माम् अन्येऽप्यागतास्तापयिष्यन्तीति। इतश्चान्यस्मिन्नीदृशे स्थलग्रामे अनेके साधवो देवकुलिकाया स्थिता, ते च भगवन्तो निस्पृहा बहिर्ग्रामे चोद्भ्रामकभिक्षाचर्या गच्छन्ति स्वाध्यायपराश्च तिष्ठन्ति। ततस्ते गृहस्था आवृत्ताः संभूय तान् साधूंन्निमन्त्रयन्ति। साधवो ब्रुवते—बालवृद्धादीनां कार्ये ग्रहीष्याम,एवं घृतादिदुर्लभद्रव्यमपि सुलभं भवति। नच शय्याया व्यवच्छेदो जायते।गत दोषा वा के तस्येति द्वारम्।

अथ कारणजाते कस्मिन् कल्पते इति द्वारगाथामाह—

दुविहे गेलण्णम्मी, निमंतणे दव्वदुल्लभे असिवे।
ओमोयरियपओसे, भये य गहणं अणुन्नायं ॥ २७३॥

द्विविधे—आगाढे, अनागाढे च १ ग्लानत्वे,तथा निमन्त्रणे २ दुर्लभद्रव्ये ३ अशिवे ४ अवमौदर्ये ५ प्रद्वेषे वा राजद्विष्टे ६ भये वा बोधिकस्तेनादिसमुत्थे ७ एव सप्तसु कारणेषु शय्यातरपिण्डस्य ग्रहणमनुज्ञातम्। एष निर्युक्तिगाथार्थः।

साम्प्रतमेनामेव विवृणोति—

तिपरिरयमणागाढे, आगाढे खिप्पमेव गहणं तु।
कज्जम्मि वंदिया जे, छिणंति ण य विंति उ अकप्पं।२७४।

त्रिपरिरयं—त्रीन् वारान् परिभ्रमणं तदनागाढे अग्लानत्वे कर्त्तव्य,यदि तथापि ग्लानप्रायोग्य न लभ्यते ततः परमेकपरिहाण्या मासलघुप्राप्ताः शय्यातरपिण्डं गृह्णन्ति। आगाढे तु ग्लानत्वे क्षिप्रमेव ग्रहणं कार्यम्। तथा शय्यातरेण भक्तपानमस्मद्गृहे गृह्णीत एवं वन्दिता—निमन्त्रिताः सन्तो भणन्ति कार्ये समुत्पन्ने ग्रहीष्यामः न च ब्रुवते युष्मदीयं भक्तपानमस्माकं न कल्पते।

जं वा असहीणं तं, भणंति तं देहि तेण णे कज्जं।
णिब्बंधे चेव सयं, घेत्तूण पसंगं वारेंति ॥ २७५ ॥

यद्वा यद्द्रव्यं तस्य गृहे अस्वाधीनं नास्तीत्यर्थः, तद्भणन्ति, याचन्ते इत्यर्थः। यथा अमुकं द्रव्यं प्रयच्छत तेनास्माकं गुरुतरं कार्यम्। अथ शय्यातरो निर्बन्धमतीवाग्रहं करोति ततः सकृद्-एकवारं गृहीत्वा भूयः प्रसङ्गं निवारयन्ति।

दुल्लभदव्वं च सिया, संभारघयादि घेप्पती तं तु।
ओमसिवे पणगादिसु, जतिऊणमसंथरे गहणं॥ २७६ ॥

दुर्लभद्रव्यं वा सभारघृतादिकं शय्यातरगृहे स्यात्, सभारो बहुद्रव्यसंयोगस्तत्प्रधानं घृतं सभारघृतम्। आदिशब्दात्-शतपाकतैलादि, तच्च ग्लानादिनिमित्तं शय्यातरगृहे गृह्णन्ति अवमौदर्याऽशिवयोरसंस्तरणे पञ्चकहान्या यतित्वा मासलघुप्राप्ता शय्यातरकुले ग्रहणं कुर्वन्ति।

उवसमणट्ठं पदुट्ठे, सत्थो जा लब्भते व ताणं व।
अच्छंता पच्छण्णं, गेण्हंति भये वि एमेव ॥ २७७ ॥

प्रद्विष्टस्य राज्ञ उपशमनार्थं तिष्ठन्तो, यद्वा-राज्ञा निर्विषया आज्ञप्ता सन्तो यावत्तत्र सार्थो न लभ्यते तावत्प्रच्छन्नं तिष्ठन्त शय्यातरकुले भक्तपानं गृह्णन्ति; मा पर्यटतो राजा वा राजकीया वा ईक्षिष्यन्तीति कृत्वा, भयं बोधिकस्तेनादिप्रभवं तत्र बहिर्ग्रामेषु भिक्षां गन्तुं न शक्यते,स्वग्रामे च न लभ्यते। अत एवमेव शय्यातरकुलं गृह्णन्ति।

अथ कया यतनया ग्रहीतव्यम् इति द्वारमाह—

तिक्खुत्तो सक्खेत्ते, चउद्दिसिं मग्गिऊण कडयोगी।
दव्वस्स य दुल्लभया, सागारियसेवणा दव्वे॥ २७८ ॥

स्वक्षेत्रे सक्रोशयोजनाभ्यन्तरे स्वग्रामपरग्रामयोस्त्रिकृत्वःत्रीन् वारान् चतसृष्वपि दिक्षु 'पुट्ठ' ति भैक्षं दुर्लभद्रव्यं वा मार्गयित्वा यदि न प्राप्नोति ततः कृतयोगी गीतार्थो द्रव्यस्य शुद्धभक्तपानाद् दुर्लभता मत्वा सागारिकद्रव्यस्य सेवना—शय्यातरविषयो विधिः।

अथानेकशय्यातरविषयं विधिमाह-

एगेगेसु पियापुत्ता, सवत्ति वणिए घडो वए चेव ।
एएसिं णाणत्तं, वोच्छामि अहाणुपुव्वीए ॥ २७९ ॥

अनेकेषु शय्यातरेष्वमी भेदाः- पितापुत्रौ सपत्न्यौ वा वणिजो वा घटोवा- गोष्ठी व्रजो वा- गोकुलम् एतेषां द्वाराणां नानात्वं विभागं वक्ष्यामि- प्ररूपयिष्यामि यथानुपूर्व्या ।

प्रतिज्ञातमेव निर्वाहयति—

पितपुत्ते थेरया य, अप्पभुदोसा य तम्मि उ पउसिए ।
जेट्ठाइअणुण्णवणा, पाहुणए जं विधिग्गहणं ॥ २८० ॥

यदि पिता पुत्रश्च द्वावपि प्रभू तत उभावप्यनुज्ञापयितव्यौ । अथ पिता स्थविर इति कृत्वा चशब्दात्पुत्रोऽप्यतिबाल इति कृत्वा यदाऽप्रभुस्तदा नानुज्ञापनीय । दोषाश्चाननुज्ञापनायां निष्काशनादय. प्रभुकृता भवन्ति । अथ स प्रभु प्रोषितस्ततस्तस्यैव यो ज्येष्ठादि. आदिशब्दादनुज्येष्ठादयो वा तेषामनुज्ञापना कर्त्तव्या । प्राघूर्णको वा यस्तस्याभ्यर्हित सोऽनुज्ञापनीयः सर्वत्र । यद्विधिना ग्रहणं तदेवानुज्ञात भगवद्भिर्नाविधिनेति

अथैनामेव व्याख्यानयति—

दुप्पभिइपिया पुत्ता, जहिँ होंति पभू ततो भणइ सव्वे ।
णातिक्कमंति जं वा, अपभुं व पभु च तं पुव्वं ॥ २८१ ॥

द्विप्रभृतय. अनियता. पिता पुत्रा यत्र प्रभवो भवन्ति तत्र सर्वेऽपि तान् मिलितान् भणन्ति अनुज्ञापयन्ति । यं वा प्रभुमप्रभुं वा नातिक्रामन्ति—प्रमाणयन्ति तं पूर्वमनुज्ञापयन्ति ।

अप्पहु लहुओ दियणिसि, पभुणिच्छूढे विणासगरिहा य ।
असहीणम्मि पभुम्मि उ, साहीणजेट्ठादणुण्णवणा ॥ २८२ ॥

यद्यप्रभुमनुज्ञापयन्ति ततो मासलघु प्रभुश्च समागतो दिवा निष्काशयति चतुर्गुरु, रात्रौ निष्काशिता स्तेनश्वापदादिभिर्विनाशं प्राप्नुवन्ति, अन्यत्र वसतिमलभमाना लोकतो गर्हामासादयन्ति । तथा किं यूयं शोभनै कर्मभिर्निर्धाटिता प्रथममपि न प्रयच्छाम इति । प्रभु पिता न स्वाधीन' किंतु प्रोषितस्ततो य स्वाधीनो ज्येष्ठादिपुत्र. आदिशब्दादनुज्येष्ठादिकोऽपि य प्रभु स अनुज्ञापयितव्यः । अथ सर्वे प्रभव ततो युगपत्ते सर्वेऽप्यनुज्ञापनीया.

पाहुणयं च पउत्थे, भणंति मित्तं व णातगं वा मे ।
तं पि य आगतमेत्तं, भणंति अमुएण णे दत्तं ॥ २८३ ॥

प्रभौ प्रोषिते सति प्राघूर्णको यस्तस्याभ्यर्हित' समायात स च मित्र वा तदीयं ज्ञातकं वा- स्वजनं भणन्ति-अनुज्ञापयन्ति । तं च प्रभुमागनमात्रमेव भणन्ति—अमुकेन युष्मन्मित्रादिना अस्माकमिदं प्रदत्तम् । स चाभीष्टनामग्रहणं एतेन निर्घाटयति ।

अप्रभुविषय विधिमाह-

अप्पभुणा उवदिट्ठे, भणति अच्छामु जा पभू एति ।
पत्ते उ तम्मि कहणं, णो उ पमाणं न ते इतरे ॥ २८४ ॥

अप्रभुणाऽनुज्ञापितो भणति- अहं न जानामि, तत साधवो भणन्ति यावत्प्रभुरागच्छति तावद्वयं तिष्ठामः, एवमनुज्ञापितेनाप्रभुणा वितीर्णे प्रतिश्रये यदा प्रभु प्राप्तो भवति तदा तस्याप्ययथाभूतं कथयितव्यम् । कथिते च स ददाति वा निष्काशयति, एवमत्र प्रमाणं न ते पूर्वानुज्ञापिता इतरे अप्रभव । एवमुक्तेन स्वामिना यद्वसतेर्ग्रहणं तदेवानुज्ञातमिति ।

इय एसाऽणुण्णवणा, जतणा पिंडो पभुस्स उत्तवज्जे ।
सेसाणं तु अपिंडो, सो वि य वज्जो दुविहदोसा ॥ २८५ ॥

सा चैवमुक्तप्रकारेण एषा प्रतिश्रयानुज्ञापनायां यतना प्रोक्ता अथ शय्यातरपिण्डपरिहारेण यतनाऽभिधीयते- य. प्रभु शय्यातर इति कृत्वा तद्गृहे पिण्डो वर्ज्य., शेषाणामप्रभूणाम् अपिण्ड -शय्यातरपिण्डो न भवति परं सोऽपि द्विविधदोषात् भद्रकप्रान्तकृतदोषपरिहारार्थं वर्जनीय. । गतं पितापुत्रद्वारम् ।

अथ सपत्नीद्वारमाह—

एगे महाणसम्मि, एक्कतो उक्खित्त सेसपडिणीए ।
जेट्ठाएँ अणुण्णवणा, पउत्थेसुँ य जेट्ठ जाव पभू ॥ २८६ ॥

शय्यातरे प्रोषिते सति यास्तदीया. पत्न्यस्तासां यद्भोजनं तत्र चतुर्भङ्गी एकत्र राद्धमेकत्र भुक्तम् १ एकत्र राद्धं विष्वक् भुक्तम् २ विष्वक् राद्धमेकत्र भुक्तम्, ३ विष्वक् राद्धं विष्वक् भुक्तम् । ४ तत्र ' एगे महाणसम्मी एकतो ' त्ति-एकस्मिन् महानसे एकतो भुक्तमिति प्रथमभङ्गो गृहीत', ' उक्खित्तं ' त्ति-एकत इति पदमनुवर्त्तते एकत -एकस्मिन् स्थाने उत्क्षिप्तं भोजनभूमिका नीत भुक्तमिति यावत् अर्थादापन्न विष्वक् राद्धम्, एतेन तृतीयभङ्ग उपात्त' । द्वितीयचतुर्थभङ्गौ पुनरवर्जनीयाविति कृत्वा न गृहीतौ । ' सेसपडिणीए ' त्ति-यदेकत्र राद्धमेकत्र भुक्त तत्र भुक्तशेषं यद्यपि शेषसपत्नीभिः स्वगृहे प्रत्यानीतं तथापि भद्रकप्रान्तदोषपरिहारार्थं वर्जनीयम् । प्रभौ प्रोषिते मदीया ज्येष्ठभार्या वसतिमनुज्ञापयते । अथ सा न सुतमती ततो ज्येष्ठा प्रिया पुत्रवती, द्वयोर्वा पुत्रवत्योर्या ज्येष्ठपुत्रा य पुत्रो वा प्रभुर्या वा स्वयं गृहे प्रभु - प्रामाण्यभूता सा अनुज्ञापनीया । एषा चिरंतनगाथा ।

अथैनामेव विवृणोति—

तम्मि य अस्साहीणे जेठपु(त्त)तमाया व जा व से इट्ठा ।
अह पुत्त माय सव्वा, वी(इ)ट्ठो जेट्ठो पभू वा वि ॥ २८७ ॥

तस्मिन् गृहस्वामिन्यस्वाधीनेऽसंनिहिते ज्येष्ठा भार्या पुत्रमाता वा या वा 'से' तस्य गृहपतेरिष्टा वल्लभा सा वसतिमनुज्ञापनीया । अथ सर्वा अपि पुत्रमातर अभीष्टाश्च ततो यस्या पुत्रो ज्येष्ठस्तामनुज्ञापयन्ति । अथ ज्येष्ठपुत्रो न प्रभु. तत कनिष्ठोऽपि यस्या पुत्र प्रभु. सा अनुज्ञापयितव्या ।

पिण्डग्रहणे विधिमाह-

असहीणे पभुपिंडं, वज्जिंती सेसए तु भद्दादी ।
साहीणे जहिँ भुंजइ, सेसेसु वि भद्दपंतेहिं ॥ २८८ ॥

अस्वाधीने गृहस्वामिनि या पत्नी प्रभुस्तस्या पिण्ड साधवो वर्जयन्ति । शेषसपत्नीगृहेषु न शय्यातरपिण्ड परं भद्रकप्रान्तकृता दोषा भवन्ति; अतस्तासामपि पिण्ड परिहर्त्तव्य । अथ स्वाधीन शय्यातर ततो यस्या गृहे भु-

इक्के तत्र शय्यातरपिण्ड इति कृत्वा वर्जयन्ति, शेषाण्यपि सपत्नीगृहाणि भद्रकप्रान्तदोषपरिहारार्थं वर्जयन्ति।

एगत्थ रंधणे भुं-जणे य वज्जेंति भुत्तसेसं पि।
एमेव वीसु रद्धे, भुंजंति जहिं तु एगट्ठा ॥ २८६ ॥

एकत्र रन्धनम् एकत्र भुक्तमित्यादि चतुर्भङ्गया यत्रैकत्र रन्धनं भोजनं वा तत्र भुक्तशेषमपि वर्जयन्ति। प्रथमभङ्ग इत्यर्थः, एवमेव विष्वक् राद्धेऽपि यत्रैकत्र भुञ्जते तत्र भुक्तशेषमपि न गृह्णन्ति तृतीयभङ्ग इति भावः। एवमस्वाधीनभर्तृकाणां विधिरुक्तः।

अथ स्वाधीनभर्तृकाणां यो विधिस्तमाह—

णियय च अणियय वा, जहिं तरो भुंजती उ तं वज्जं।
सेसासु वि ण य गिण्हति, मा छोभगमादि भद्दाई ॥२९०॥

नियत वा यत्र शय्यातरो भुङ्क्ते तद्गृहं वर्जनीयम्, नियतं नाम-यदेकस्य एव गृहे प्रतिदिनं भुङ्क्ते अनियतं तु वारकेण सर्वासामपि गृहे भुङ्क्ते शेषपत्नीगृहेषु यद्यपि शय्यातरपिण्डो न भवति तथापि न गृह्णन्ति। मा भद्रकप्रान्तकृताश्छोभकादयो दोषा भवेयुः स च प्रज्ञापकः भोजनं शेषपत्नीगृहे न भद्रकशय्यातरः कुर्यात्। मम गृहं तावदमी न गृह्णन्ति अत एवमपि दत्त्वा पुण्यमुपार्जयामीति बुद्ध्या, यस्तु प्रान्तः स द्वेषं यायात् अहो दुष्टधर्माण इमे, यदि मदीयगृहे न कल्पते तत एतासां मदीयपत्नीनां गृहे कथं कल्पत इति प्रद्विष्टश्च प्रतिश्रयात् निष्काशयेत्। गतं सपत्नीद्वारम्।

अथ वणिग्द्वारमाह—

दोसु वि अव्वोच्छिसे, सव्वं जं तम्मि जं च पाउग्गं।
खंधे संखडि अडवी, असती य घरम्मि सो चेव ॥२९१॥

कोऽपि शय्यातरो देशान्तरं गन्तुकामो नगराद्बहिः स्थितो वर्त्तते, तस्य च द्वयोरपि गृहयोरन्तर्गृहाद्बहिर्गृहे बहिर्गृहाद् वाह्याभ्यन्तरगृहे भक्तादिकमव्यवच्छिन्नं यदानीयते तत् न कल्पते। अथासौ शय्यातरस्ततः स्थानात् प्रस्थितः ततो यो निर्गच्छति तस्मिन् सर्वं तद्दिवसनीतमन्यदिवसनीतं च भक्तपानं कल्पते। सर्वस्मिन्नपि त्यक्ते मा भूदतिप्रसङ्ग इत्याशङ्कयाह—यच्च प्रायोग्य-प्रान्तजनयोग्यं तत्प्रापणीयं प्रासुकं चेत्यर्थः, 'खंधे' त्ति-स्कन्धप्रदेशयोर्ग्यं कृत्वा बहिर्ग्रामेषु व्यवहरन् शय्यातरः साधूनां दधिदुग्धादिकं दद्यात्, 'संखडि' त्ति—संखडिं कुर्वन् साधूनामपि दद्यात्। 'अडवि' त्ति—अटवीं वा काष्ठच्छेदनादिनिमित्तं गृहीतशम्बलो गच्छन् साधून् दृष्ट्वा तन्मध्यात् तेषामपि दद्यात्, एतेषु त्रिष्वपि न कल्पते। 'असई य घरम्मि सो चेव' त्ति-यदि शय्यातरः सपुत्रपशुबान्धवो गृहे नास्ति किं तु देशान्तरं प्रोषितः तदा देशान्तरस्थितोऽपि स एव तत्र शय्यातरो नान्य इति निर्युक्तिगाथासमासार्थः।

अथैनामेव विवरीपुराह—

निग्गमणाद, वहिट्ठिए, अंतोखेत्तस्स वज्जए सव्वं।
वाहिं तद्दिणणीए, ममेसु पसंगदोसेण ॥ २९२ ॥

शय्यातरो वाणिज्येन देशान्तरं गन्तुकामो निर्गमकं प्रस्थानं च शुभमुहूर्त्ते क्रियते, इत्यादिकारणेन नगराद्बहिर्गत्वा सक्रोशयोजनक्षेत्रस्याभ्यन्तरे बहिर्वा स्थितो भवेत्। यद्यसौ क्षेत्राभ्यन्तरे स्थितः तदा सर्वं तद्दिवसान्यदिवसनीतं शय्यातरपिण्ड इति कृत्वा वर्जयेत्। अथासौ क्षेत्राद्बहिः स्थितः ततस्तद्दिवसनीतं शय्यातरपिण्डः शेषदिवसनीतं तु यत्परिवासितम्, यद्वा-तत्रैवापस्कृतं तच्च शय्यातरपिण्डः परं तदपि प्रसङ्गदोषेण मा भद्रकप्रान्तकृतदोषाणां प्रसङ्गो भवेदिति कृत्वा न ग्रहीतव्यम्।

ठिते जया खेत्तवहिं सगारो,
भत्तादियं तस्स दिणे दिणे य।
अच्छिन्नमाणिज्जति णिज्जती य,
गिहा तदा होति तहिं वि वज्जे ॥ २९३ ॥

यदा क्षेत्राद्बहिः स्थितस्तदा तस्य भक्तादिकमव्यवच्छिन्नं दिने दिने गृहाद्बहिरानीयते, बहिः स्थानाच्च गृहं नीयते, तत्सर्वमपि सागारिकपिण्डो भवति तत्र स्थितस्य वर्जनात्।

बहिट्ठिएँ पट्ठिओ य, सयं व संपत्थिया उ गेण्हंति।
तत्थ उ भद्दगदोसा, ण होंति ण य पंतदोसाओ ॥२९४॥

शय्यातरः क्षेत्राद्बहिः स्थितो यस्यां वेलायामग्रतो गन्तुं प्रस्थितः स्वयं वा साधु, पूर्णे मासकल्पे सम्प्रस्थिताः न द्विवसात् यद्यन्यत्र वसन्ति तदा सर्वमपि प्रायोग्यं भक्तपानं गृह्णन्ति। कुत इत्याह—तत्र तस्यां वेलायां गृह्यमाणे भद्रकदोषाः प्रान्तदोषाश्च न भवन्ति। पुनर्ग्रहणाभावादिति भावः।

अथ स्कन्धपदं संखडिपदमटवीपदं च व्याख्याति—

अंतो वहि कच्छउडिया-दि ववहरंतो पसंगदोसाओ।
देउल जन्नगमादी, कट्ठा दउं विवज्जते ॥ २९५ ॥

क्षेत्रस्यान्ते बहिर्वा शय्यातरः कक्षापुटिकादिः-कक्षा प्रदेशे पुटा यस्य स कक्षापुटिको-गृहीतोभयमादकः इत्यर्थः। आदिशब्दात्—कौतुकिकादिर्वा, बहिर्ग्रामेषु व्यवहरन् साधूनां दधिदुग्धादिकं दापयति। तत्र क्षेत्रस्यान्तस्तद्दिननीतमन्यदिननीतं च शय्यातरपिण्डः। बहिः पुनस्तद्दिवसनीतं शय्यातरपिण्डः, शेषदिवसनीतं न शय्यातरपिण्डः परं भूयः प्रसङ्गदोषाच्च गृह्यते। एवं तद् देवकुलतडागयज्ञादिकं संखडीं कुर्वन् काष्ठादिनिमित्तं शम्बलं गृहीत्वा अटवीं व्रजन, क्षेत्रान्तर्दीयमानं शय्यातरपिण्डः। क्षेत्रबहिस्तद्दिवसानीतं शय्यातरपिण्डः; न द्वितीयदिवसानीतं, परं तदपि न ग्रहीतव्यम्, मा भूय संखडीकरणमटवीगमनं वा साधूनां दानार्थं कुर्यादिति कृत्वा।

अथ गृहे असन् स एव शय्यातर इति पदं व्याचष्टे—

मुत्तूण गेहं तु सपुत्तदारो,
वाणिज्जमातिज्जति कारणेहिं।
सयं च अण्णं च वएज्ज देसं,
सेज्जातरो तत्थ स एव होति ॥ २९६ ॥

मुक्त्वा-परित्यज्य गृहं साधूनामर्पयित्वेत्यर्थः, सपुत्रदारः शय्यातरो वाणिज्यादिभिः कारणैर्यदि स्वकमन्यद्वा देशं व्रजति तत्रापि स एव शय्यातरो भवति न पुनर्द्देशान्तरस्थितस्य शय्यातरत्वमपगच्छतीति। गतं वाणिग्द्वारम्।

घटाद्वारमाह—

महत्तरअणुमहत्तरए, ललियासणकडुयदंडपतिए य।
एतेहिं परिग्गहिया, होंति घडा तो तदा काले ॥२९७॥

महत्तरोऽणुमहत्तरको ललितासनिक कटुको दण्डपतिक-श्चेति, एतैः पञ्चभिः परिगृहीतास्तदा पूर्वकाले गोष्ठ्यो भवन्ति बभूवुरित्यर्थः।

अथामूनेव महत्तरादीन् व्याख्यानयति—

सव्वत्थ पुच्छणिज्जो, महत्तरो जिट्ठमासणधुरे य।
ठइयं तु असन्निहिए, ऽणुमहत्तरतो धुरे वाति ॥२९८॥

सर्वत्र सर्वेषु गोष्ठिकार्येषूत्पद्यमानेषु सर्वैरपि गोष्ठिकपुरुषैः प्रच्छनीयः, यस्य च ज्येष्ठं महत्तरत्वमासीनानां धुरि च सर्वैरेव स्थाप्यन्ते स महत्तरस्तनस्तस्मिन् मूलमहत्तरे असंनिहिते यस्तत्र सर्वैरपि प्रच्छनीयः धुरि च प्रथमं तिष्ठति, स अणुमहत्तरः। (बृ०) ('ललिअासण' शब्दे षष्ठे भागे गता ललितासनवक्तव्यता।)

एतेषां महत्तरादीनां यद्देवकुले सत्तादिकं तस्य कथमनुज्ञापना विधेयेत्याह—

उल्लोमाणुण्णवणा, अप्पभदोसा य एकओ पढमं।
जिट्ठादिअणुण्णवणा, पाहुणए ज विहिग्गहणं ॥३००॥

महत्तरक्रममुल्लङ्घ्य यद्युल्लामं व्यतिक्रमेणानुज्ञापनां करोति तदा मासलघु. प्रभुदोषाश्च निष्काशनादयो भवेयुः। अतः सर्वेऽप्येकतो मिलिताः प्रथममनुज्ञापनीयाः। अथ सर्वे मिलिता नावाप्यन्ते ततो ज्येष्ठमहत्तरस्य, तदभावे यथाक्रमं महत्तरादीनामनुज्ञापना विधेया। अथ महत्तरादीनामेकोऽपि गृहे न प्राप्यते ततो यस्तेषामभ्यर्हितः प्राघूर्णकस्तमनुज्ञापयन्ति। एवंविधेन हि विधिना यदुपाश्रयस्य ग्रहणं तदेवानुज्ञापना विधिग्रहणम्।

अमुमेवार्थं स्पष्टनरमाह—

उल्लोम लहु यदि पणम्मि, तेणेकहिं पिंडिए अणुण्णवणा।
असहीणे जिट्ठादि व, जइ व समाणा महतरं वा ॥३०१॥

यदि महत्तरादिकमव्यत्यासेनानुज्ञापयति तदा मासलघु, तेनैकत्र पिण्डितानां मिलितानां पञ्चानामप्यनुज्ञापना कर्त्तव्या। अथ सर्वेऽप्येकतो मिलिता अस्वाधीना न प्राप्यन्ते इत्यर्थः, ततो ज्येष्ठमहत्तरादेर्गृहे तु गत्वा अनुज्ञापना विधेया। यदि वा—यास्त्रिप्रभृतीन् तत्र समस्वाधीनान् पश्यन्ति तावत्तेषामनुज्ञापना कुर्वन्ति। महत्तरं वा एकमप्यनुज्ञापयन्ति, अस्य प्रमाणभूततया सर्वेषामनतिक्रमणीयत्वात्। गतं घटाद्वारम्।

व्रजद्वारमाह—

बाहिं दोहणवाडग, दुद्धदहीसप्पितक्कणवणीति।
आसन्नम्मि ण कप्पति, पंचयए उप्परिं वुच्छं ॥३०२॥

कस्यचिद्धि शय्यातरस्य सत्कं बहिर्ग्रामाद्बहिर्वा दोहनवाटकं भवेत्, तस्मिन् दुग्धदधिसर्पिस्तक्रनवनीताख्यानि पञ्चकानि द्रव्याणि भवन्ति। एतत्पञ्चकमासन्ने क्षेत्राभ्यन्तरे दीयमानं न कल्पते शय्यातरपिण्डत्वात्। अथैनामि दुग्धादीनि क्षेत्रस्योपरि यदिर्यन्ते ततस्तद्विषयं ग्रहणविधिमहं वक्ष्यामि।

प्रतिज्ञातमेव निर्वाहयति—

निज्जंतं मोत्तूणं, वारगभयदिवसए भवे गहणं।
छिण्णं भती य कप्पति, असती य घरम्मि सो चेव ॥३०३॥

गोकुलात्ति दधिदुग्धादिपञ्चकं शय्यातरगृहं यन्नीयते स शय्यातरपिण्डो भवति। अतस्तद् दुग्धादि नीयमानमुक्त्वा यदन्यत्तत्रैव गोकुले परिभुज्यते तन्न भवति शय्यातरपिण्डः, परं तद्धि भद्रकप्रान्तदोषपरिहारार्थिना गृह्यते, यस्मिन् पुनर्दिवसे भृतकस्य—गोपालस्य वारकस्तस्मिन् दुग्धादिकं शय्यातरस्यापश्यतो ग्रहणं भवेत्, न पश्यतः। तथा भृतिर्नाम गोपालकस्य दुग्धचतुर्थभागादिपरिभाषितादि च सदैव दैवसिकी वृत्तिः. तथा छिन्नं—विभक्तं यद् दुग्धादिकं तद्गोपालसत्कमिति कृत्वा कल्पते ग्रहीतुं यदि शय्यातरो न पश्यति। तथा यदि साधूनां शय्यां समर्प्य शय्यातरः सपुत्रदारो व्रजिकायां गच्छेत् ततो गृहे अविद्यमानोऽपि स एव शय्यातरो भवति।

अथास्या एव विषमपदानि विवृणोति—

बाहिरखेत्ते छिण्णे, वारगदिवसे सती य छिण्णे य।
सो व ण सागारियपिण्डो, वज्जो पुण दिट्ठिभद्दादि ॥३०४॥

स क्रोशयोजनक्षेत्रस्य बहिर्यव्यवच्छिन्नो विभागः शय्यातरगृहे न नीयते, गोपालकवारकदिवसे वा यः सर्वोऽपि गोपसत्कः प्रतिदिवसलभ्यो वा वृत्त्या छिन्नो यो दुग्धचतुर्थभागादिरूपो विभागः स एष सर्वोऽपि सागारिकपिण्डो न भवति, परं भद्रकप्रान्तदोषा दृष्टे सति मा भूत्तदिति शय्यातरस्य पश्यतः सोऽपि वर्जनीयः।

अथ यदुक्तं सूत्रे 'एगं तत्थ कप्पागं ठवइत्ता अवसेसे निव्विसेज्जा' तद्विभावयिषुराह—

एगं ठवेंति विसए, दोसा पुण भद्दिए य पंते य।
णिस्साए वा छुभणं, विणासगरहं च पावंति ॥ ३०५ ॥

यद्यनेकेषु शय्यातरेषु इतरेण एकं सागारिकं स्थापयन्ति शेषान्निर्विशन्ति—उपभुञ्जते ततो भद्रकप्रान्तविषया दोषा भवन्ति। भद्रको निर्दिश्यमानशय्यातरस्य निश्रया तदीयभक्तपानमध्ये प्रक्षेपयति, मम गृहे तावदमी न गृह्णन्ति अतो मदीयमिदं भवद्भिः संयताय दातव्यमिति कृत्वा। यस्तु प्रान्तः स एक एव अस्थाप्यमानः प्रद्वेषं यायात्, प्रद्विष्टश्च वसतेर्निष्काशनं कुर्यात्। निष्काशिताश्च स्तेनश्वापदादिभिर्विनाशं लोकाद्वा गर्हामासादयन्ति। कारणे पुनरेकमपि स्थापयन्तो निर्दोषाः।

कथमित्याह—

सदेहि वा वि भणिया, एगट्ठ वि ताण निविसेमाणं।
गणदेउलमादीसु तु, दुक्खं खु विवज्जिउं बहुगा ॥३०६॥

'वा' शब्द उत्सर्गपदे तावन्न कल्पते एकः सागारिकः स्थापयितुम्, द्वितीयपदे तु कल्पते। अपिशब्दः पदान्तरस्य सूचनार्थः। य श्राद्धा साधुसमाचारीकोविदास्तैः साधवो भणिताः, 'आर्याः! एकं शय्यातरं स्थापयित्वा शेषान्निर्विशत, मा सर्वानपि परिहरत, एवमुक्ताः एकं स्थापयित्वा शेषान्निर्विशन्ति। अथवा—गणं बहुजनसमूहं गत्वा सामान्याद् देवकुलसभादौ स्थिताः अनुक्ता अप्येकं

स्थापयित्वा शेषाश्विशन्ति। कुत इत्याह—' दुक्खं ' दुष्करं तत्र बहून् वर्जयितुम्।

गिराहंति वारएणं, अणुग्गहत्थीसु जहरुई तेसिं।
एक्केऽत्थ परीमाणं, संतमसंते य से दव्वे ॥ २०७ ॥

यद्वा—ते सर्वेऽपि शय्यातरा अनुग्रहार्थिन ततो यथा तेषां रुचिरुपजायते तथा वारके गृह्णन्ति, तत्र च एके उपस्कृते अत्र परिमाणं ज्ञातव्यम्। किं परिमितायामुपस्क्रियते उतापरिमितायामिति। तदपि द्रव्यं तस्य गृहे तत्र देशे वा सद्-विद्यमानं यदि पूर्वपरिणामेण द्रव्यमुपस्कुर्वन्ति तदा कल्पते अन्यथा भजनीयम्। एवं तस्य शय्यातरस्य द्रव्ये सम्यगुपयोगो दातव्य। वृ० २ उ०।

सागारिकपिण्ड गृह्णाति भुङ्क्ते च—

जे भिक्खू वा भिक्खुणी वा सागारियपिंडं गिराहइ गिराहंतं वा साइज्जइ ॥ ४५॥ जे भिक्खू वा भिक्खुणी वा सागारियपिंडं भुंजइ भुंजंतं वा साइज्जइ ॥ ४६ ॥

'सागारिओ सज्जातरो तस्स पिंडो ण भोत्तव्वो, जो वा भुंजति तस्स मासलहुं।' नि० चू० २ उ०।

सागारिककुलमज्ञात्वाऽनुप्रविशति—

जे भिक्खू वा भिक्खुणी वा सागारियकुलं अजाणिय अपुच्छिय अगवेसिय पुव्वामेव पिण्डवायपडियाए अणुपविसइ अणुपविसंतं वा साइज्जइ ॥ ४८ ॥ जे भिक्खू वा भिक्खुणी वा सागारियणीसाए असणं वा पाणं वा खाइमं वा साइमं वा, ओभासिय जाइय जायंतं वा साइज्जइ ॥ ४९ ॥

'सागारिओ पुव्ववरिणओ कुलं—कुलकुडुंबं भिक्खा—कालाओ पुव्वं—पुव्वदिट्ठे पुच्छा अपुव्वगवेसणं तं साहुसमीवे अपुच्छिऊण पविसन्तस्स मासलघु। नि० चू०२ उ०।

सागारिकपिण्डो बहिर्निर्हृत संसृष्ट—

नो कप्पइ निग्गंथाण वा निग्गंथीण वा सागारियपिंडं बहिया अनीहडं असंसट्ठं वा पडिगाहित्तए ॥ १४ ॥ नो कप्पइ निग्गन्थाण वा निग्गन्थीण वा सागारियपिण्डं बहिया अनीहडं संसट्ठं पडिगाहित्तए ॥ १५ ॥

अथास्य ( सूत्रद्वयस्य १४-१५ ) सम्बन्धमाह—

अंतो नूणं न कप्पइ, णिक्कासिओ कप्पई उ मा एवं।
पत्तेयविमिस्सं वा, पिंडे गेण्हेज्ज तो सुत्तं ॥ २०८ ॥

नूनमन्तर्गृहाभ्यन्तरे पिण्डो न कल्पते, गृहाद्बहिर्निष्काशितस्तु कल्पते, एवं विचिन्त्य मा प्रत्येक संसृष्टविमिश्रं वा संसृष्टं पिण्ड गृह्णीयात्। अत एतत्सूत्रमारभ्यते। वक्ष्यमाणसूत्रद्वयस्याप्ययमेव संबन्धो द्रष्टव्य, अनेन संबन्धेनायातस्यास्य (सू०१४-१५) व्याख्या। नो कल्पते निग्रन्थीनां वा निर्ग्रन्थीनां वा सागारिकपिण्ड बहिर्वाटकादनिर्हृतमनिष्काशितमसंसृष्टं वा अन्यदीयपिण्डै सहामीलित, संसृष्टम्-अन्यदीयपिण्डैः संमीलितं प्रतिग्रहीतुमिति सूत्रार्थ ।

१—' साइज्ज' आस्वादने धातु.।

अथ भाष्यविस्तर—

वाडगदेउलियाए, इच्छादत्तम्मि गहणं तहिं चेव।
णीसट्ठमणीसट्ठे, गहणागहणे इमे दोसा ॥ २०९ ॥

शय्यानरवाटकस्य मध्ये काचिद्दवकुलिका, तस्यां यद्वानमन्तर तदर्थं वाटकवास्तव्या अगारिणः संखडीं कुर्वन्ति। तत्र च भिक्षाचरेभ्यो दातुं तयामिच्छा समजनि. ततो वाटकवास्तव्यजने ददति दातुमुपस्थित ग्रहणं तथैव मन्तव्यं यथा पूर्वसूत्रे अभिहितम्। तथा निसृष्टं नाम-यद् वल्यादिकं वानमन्तरस्य निवेदितम्। अनिसृष्टं तु तद्विपरीतं तयोर्ग्रहणे अग्रहणे चामी वक्ष्यमाणा दोषा भवन्तीति संग्रहगाथासमासार्थ.।

अथैनामेव विवृणोति—

उप्पत्तियं वा वि धुवं च भोज्जं,
तस्सेव मज्झम्मि उवागडस्स।
समस्सिते सागारचोलगम्मि,
अणेहिं सो चेव उ तस्स पिंडो ॥ २१० ॥

तस्यैव--सागारिकस्य वाटकस्य मध्ये वानमन्तरमुद्दिश्य भोज्यं-संखडिर्भवेत्, तच्चौत्पत्तिकं वा स्यात् ध्रुवं वा। औत्पत्तिकं नाम-पर्वतिथिमन्तरेणाकस्मिकम् ध्रुव तु पर्वतिथिभावि-। अथ नवम्यां दशम्यां वा तत्रान्यैश्चोल्लकं सममपि श्रितो य. सागारिकश्चोल्लकस्तस्मिन् संखड्यां दीयमाने स एव शय्यातरस्य पिण्डो भवति।

अस्य निवेदितस्य वा ग्रहणे तावदिमे दोषा —

भद्दो तन्नीसाए, पंतो घेप्पति दट्ठूण भणइ।
अंतोघरे ण इच्छह, ऽहो गमणं दुट्ठधम्मो त्ति ॥२११॥

य सागारिको भद्रक स तन्निश्रया वानमन्तरानिवेदनाव्याजेनान्यदप्यात्मीयमाहारजातं तत्र प्रक्षिपेत्। यस्तु प्रान्त स तथा गृह्यमाण दृष्ट्वा भणति-अन्तर्गृहे-गृहाभ्यन्तरे दीयमानं तदीय पिण्ड नेच्छथ, इह पुनरेवं दीयमानस्य ग्रहणं कुरुध्वम्, अहो दुष्टधर्म्माणो यूयमिति तथैतद्दोषभयाच्च गृह्णन्ति।

तत. किं भवतीत्याह—

तेसु अगिराहंतेसु य, चिंता परिसाएँ से समुप्पेज्जा।
को जाणइ किं एते, साहू घेत्तुं ण इच्छंते ॥ २१२ ॥

तेषु साधुषु तं शय्यातरभक्तं--निवेदनापिण्डमगृह्णमाणेषु तस्या संखडीकारिण्या पर्षदि चिन्ता समुत्पद्येत, यथा को जानाति-को नामामुमर्थं सम्यग् वेत्ति किमेते साधव इदं शय्यातरसत्कमाहारजात ग्रहीतुं नेच्छन्ति।

नूणं से जाणंति कुलं व गोत्तं,
आगंतुओ सो य तहिं सागारो।
भूणग्घ सोयं च ततो घण्णए,
जं अम्ह इच्छंति ण सेज्ज दातुं ॥ २१३ ॥

नूनं 'से' तस्य शय्यास्वामिनो जानन्त्यमी कुलं वा गोत्रं वा, यथायं नीचकुलोत्पन्नो हीनगोत्रो वेति। स च सागारिकस्तत्र ग्रामादावागन्तुक. अतो न तदीयं कुलादि तत्र कोऽपि वेत्ति।

यद्वा ते गृहस्थाश्चिन्तयेयुः-भ्रूणघ्नो बालमारकोऽयं शुभं वा शुचि समाचरता रूपमस्य नास्ति ततः एव तदीयं पिण्डं त्यक्त्वा यदमी अस्माकं चोल्लकं ग्रहीतुमिच्छन्ति न शय्यादातुः सम्बन्धि तत् ।

ततः सागारिक इत्थं चिन्तयेत्—

ओभासिओ णहि स वासमज्झे,
चंडालभूतो य कतोऽहमेहिं ।
गृहे वि खिच्छंति असाधुधम्मा,
अतो परं किं च करेज्ज अण्णं ॥ ३१४ ॥

अपभ्राजितोऽहममीभिः श्रमणकैः स्ववासमध्ये-स्वकीयसहवासिजनमध्ये चण्डालभूतश्च कृतोऽहममीभिः मुण्डैः ,गेहेऽपि च मदीये नेच्छन्त्यमी असाधुधर्माणः पिण्डं ग्रहीतुम्, अतः परं किंवान्यदपरं कुर्युः । यत्कर्तुं योग्यं तदमीभिः कृतमिति भावः ।

ततश्च—

रात्रो दिया साहू वि निग्गसेज्जा,
एगस्स णेगाण व सेज्जछेदं ।
अद्धाण खिंतिं व अलभे ज तु,
पावेज्ज तं वा वि अणिण्हमाणो ॥ ३१५ ॥

रात्रौ दिवा वा साधून् प्रतिश्रयान्निष्काशयेत्, एकस्य वा तस्यैव गच्छस्य अनेकेषां वा बहूनां गच्छानां शय्यादानस्य व्यवच्छेदं कुर्यात् । ततोऽध्वनि वहमाना निर्गच्छन्तो वा साधवस्तदीयदोषेण वसतिमलभमाना यत् परितापनादिकं प्राप्नुयुः ततस्ते शय्यातरचोल्लकमगृह्णाना यत्परितापनादि प्राप्नुवन्ति, तन्निष्पन्नं तेषां प्रायश्चित्तमिति भावः । एवमसंसृष्टपिण्डविपर्ययेऽप उक्तः ।

अथ संसृष्टपिण्डविषयानाह—

संसट्ठस्स ग्गहणे, तदियं दोसा इमे पसज्जंति ।
तन्नीसाए अभिक्खं, संखडिकारावणं होज्जा ॥३१६॥

यद्यन्यदीयचोल्लकैः संसृष्टं सागारिकपिण्डं गृह्णन्ति तदा तत्रैते दोषाः प्रसज्जन्ति । तन्निश्रया यद्यन्यदीयपिण्डसंसृष्टो मदीयपिण्डोऽमीषां कल्पते ततः इत्थं कृत्वा भूयो दापयिष्यामीत्यालम्बनेन वाटकवास्तव्यजनैरभीक्ष्णं सखडीकारापणं भवेत् ।

अल म्ह पिंडेण इमेण अज्जा !,
भुंजेण अणेति जहा स इत्थ ।
साहू वि नेच्छंति इमस्स दोसा,
अम्हे वि वज्जेमु ण को वि एमो ॥३१७॥

अथ भूयो यथैव सागारिकः अत्र पिण्डमानयतीत्येवमर्थे साधवो गृहस्थान् ब्रुवते-आर्य ! अलमस्माकमनेन संसृष्टपिण्डेनेति, ततस्ते अगारिणश्चिन्तयेयुः—अस्य सागारिकस्य दोषाः, यदि साधवोऽमुं पिण्डं नेच्छन्ति ततो वयमपि दानग्रहणादिव्यवहारमनेन सह वर्जयामः ; यतो न कोऽप्येष विशेषतो मायेन आगन्तुकत्वात् ।

अगम्मगामी किलयोऽहवाऽयं,
चोंदी व हुज्जा नि सुणादिणा वा ।
दोसा बहू तेण जहिं सगारा,
पिंडं णए तत्थ उ णाभियच्छे ॥ ३१८ ॥

अथवा योऽगम्यगामी क्लीबो वा नपुंसको वा भविष्यति वोन्दी-कायादिपालना से[1]तस्य शय्यातरपिण्डस्य शुनकादिना कृता भवेत् , एवमादयो बहवो दोषा यतो भवन्ति ; ततः यत्र संखडीकरणे सागारिकः स्वकीयं पिण्डं नयति तत्र प्रथमत एव नैवाभिगच्छेत् ।

बहिर्निर्गतः सागारिकपिण्डः बहिर्निर्हृतोऽसंसृष्टः—

नो कप्पइ निग्गंथाणं वा निग्गंथीणं वा सागारियपिण्डं बहिया नीहडं असंसट्ठं पडिग्गाहित्तए ॥ १६ ॥ कप्पइ निग्गंथाणं वा निग्गंथीणं वा सागारियपिंडं बहिया नीहडं संसट्ठं पडिग्गाहित्तए ॥ १७ ॥

अस्य व्याख्या प्राग्वत् नवरं सागारिकपिण्डो वाटकाद्बहिर्निष्काशितोऽसंसृष्टोऽन्यपिण्डेन सममसमीलितो न कल्पते, संसृष्टस्तु कल्पते इति ।

अथ भाष्यम्—

बहिया उ असंसट्ठे, दोसा न हु चेव मोत्तु संसट्ठे ।
संसट्ठमणुन्नायं, पच्छउ सागारिओ मा वा ॥ ३१९ ॥

सागारिकवाटकाद्बहिर्निष्काशिते असंसृष्टे गृह्यमाणे त एव पूर्वसूत्रोक्ता भद्रकप्रान्तदोषाः, परं मुक्त्वा संसृष्टं, तत्र दोषा न भवन्तीति भावः । अत एव यद्वाटकाद्बहिर्निष्काशितं तदत्र सूत्रे अनुज्ञातम् , सागारिकः पश्यतु वा मा वा इदं पुरस्ताद्व्यक्तीकरिष्यते ।

नीसट्ठमसंसट्ठो, वि य पिंडो किमु परेहिं संसट्ठो ।
अप्पत्तियपरिहारी, सॉगारदिट्ठं परिहरंति ॥ ३२० ॥

निसृष्टो नाम—बहिर्निष्काश्य वानमन्तरस्य निवेदितः, यस्य वा याचकादेरर्थाय निष्काशितस्तस्मै प्रदत्तः, स यद्यप्यन्यैश्चोल्लकैरसंसृष्टस्तथाऽप्यपिण्डो न सागारिकपिण्डः किं पुनः परैरन्यैश्चोल्लकैः समं संसृष्टः, स सुतरां सागारिकपिण्डो न भवतीत्यर्थः । परम् अप्रीतिकपरिहारिणः सन्तः सागारिकदृष्टं परिहरन्ति ।

इदमेव सापवादमाह—

अदिट्ठस्स उ गहणं, असती तव्वज्जितेण दिट्ठस्स ।
दिट्ठे वि पत्थियाणं, गहणं अंतो व बाहिं वा ॥ ३२१ ॥

प्रथमं सागारिकेण सकुटुम्बेनादृष्टस्य ततोऽसंस्त्रिसस्तरणाभावे तद्वर्जितेन तमेकं सागारिकं वर्जयित्वा शेषकुटुम्बेन दृष्टस्य संसृष्टस्य पिंडस्य ग्रहणमनुज्ञातम् । अथ ते साधवो ग्रामान्तरं प्रस्थितास्ततः सागारिकेणापि दृष्टस्य संसृष्टस्य वा तस्यान्तर्बहिर्वा सर्वत्र ग्रहणमनुज्ञातम् । पुनर्ग्रहणाभावेन भद्रकप्रान्तदोषाणामभावात् ।

पाहुणगा वा बाहिं, घेत्तुमसंसट्ठगं च वच्चंति ।
अंतो वा उभयं पी, तत्थ पसंगादओ णत्थि ॥ ३२२ ॥

अथवा प्राघूर्णका साधवः केचित्तत्र समायाताः, न च त ग्रामं व्यतीत्याग्रतो गन्तुकामा वाटकाद्बहिर्निष्काशितं

१- 'निष्काशित' इति दन्त्यान्तोऽपि धातुः ।

निसृष्टमसंसृष्टमपि गृहीत्वा समुद्दिश्य च व्रजन्ति, तदभावे अन्तर्वाटकाभ्यन्तरे वर्त्तमानमुभयमपि प्राघूर्णका साधवो गृह्णन्ति । प्रथमं संसृष्ट तदप्राप्तौ च असंसृष्टमपीत्यर्थ । कुत इत्याह-तथैवविधे प्राघूर्णकानां ग्रहणे प्रसङ्गादयो दोषा. भद्रकप्रान्तकृता पुनर्ग्रहणाभावाच्च सन्ति । तन्निश्रया भूयः सखडीकारापणम् आदिशब्दात्-निष्काशनादिपरिग्रह ।

अथ 'संसट्ठमसंसट्ठं' इत्यादिपदाना भावार्थ गाथात्रयेणाह-

जो उ महाजणपिंडे-ण मेलितो बाहि सागारियपिंडो ।
तस्स तहिं अपभुत्ता,ण होति दिट्ठे वि अवियत्तं॥३२३॥
जं पुण तेमिं चिय भा-यणेसु अविमिस्सियं भवे दव्वं।
तं दिस्समाणगहियं, करेज्ज अप्पत्तियं पहुणो ॥३२४॥
जं पुण तेण अदिट्ठे, दुघाय गहणं तु होति संसट्ठे ।
तहियं ताणि कहेज्जा,ण यावि ण य आयरो तत्थ॥३२५॥

यस्तु सागारिकपिण्डा महाजनपिण्डेन सह वाटकाद् वहि र्मीलित. स साधूना कल्पते । कुत इत्याह—तस्य सागारिकस्य तत्राप्रभुत्वात्, महाजनस्यैव च प्रभुत्वात्। दृष्टेऽपि सागारिकस्य नाप्रीतिकं भवति । यत्पुनर्द्रव्य तेषामेव शय्यातरमानुषाणा भाजनेष्वपि मिश्रितमसंसृष्ट भवति तत् दृश्यमानं गृही संस्थापयेदिति भाव । यद्वा-साधुभिरिद पवित्रीकृतमिति मत्वा भद्रकास्तस्यान्नादं स्वगृह स्थापन कुर्यु । अथ ते प्रान्ता ततो घातं वा वन्धं वा कुपिता सन्त संयताना कुर्यु । एते तावत् स्वयंकरणे दोषा अभिहिता ।

अथ स्वयं संसृष्टं कर्तुमसमर्था अन्यै. कारयन्ति, यो वा कोऽप्यन्यत्प्रक्षिपति तमनुमोदयन्ति तत इमे दोषा —

कारावणमन्नेहिं, अणुमोदणउग्गमादिणो दोसा ।
दुविहे वतिक्कमम्मि, पायच्छित्तं भवे तिविहं ॥३२६॥

अन्यै कारापणे कुर्वता वा अनुमोदने ऊष्मादयो दोषा भवन्ति, ऊष्मा नाम-तनात्युष्णद्रव्येण तस्य रागिणो हस्तादौ परिताप. । आदिशब्दाद्यदि द्रव्यमसौ तत्र प्रक्षिपति स तेन सहासखडं कुर्यात्, तस्मात् मदीयं स्पृशत्येवमादयो दोषा । अत्र च द्विविधे व्यतिक्रम लौकिकलोकोत्तरिकमर्यादातिक्रमरूप प्रायश्चित्त त्रिविध भवति । तत्रैकं स्वयं करणे, द्वितीय कारापणे, तृतीयमनुमतावि ति ।

इदमेवोत्तरार्द्ध व्याचष्टे—

लोउत्तरं च मेरं, अतिचरई लोइयं च मेलेत्ता ।
अहवा सयं परेहि य,दुविहा उ वतिक्कमो होति॥३२७॥
पढमिल्लुगम्मि ठाणे, दोहि वि गुरुगा तवेण कालेणं।
वितियम्मि य तव गुरुगा,कालगुरू होंति ततियम्मि३२८

सागारिकचोल्लकमितरेषा चोल्लकै सम मीलयन् लोकोत्तरिकीं मर्यादाम् " न कल्पत सागारिकपिण्डोऽसंसृष्ट कर्तुमिति भगवदालक्षणा ' लौकिकीं च न मीलनीया अस्माक चोल्लका इत्येवरूपा मर्यादामतिचरति-अतिक्रामतीत्यर्थ । अथवा-स्वयंकरणं परैश्च क्रियमाणस्य स्वादनमित्येवं द्विविधो व्यतिक्रमो भवति तत्र प्रथमस्थाने स्वयकरणलक्षणे चत्वारो गुरुका, द्वाभ्यामपि गुरुका, तपसा-कालेन च । द्वितीये कारापणे त एव चत्वारो गुरवस्तपोगुरुका', तृतीये अनुमोदनालक्षणस्थाने त एव चतुर्गुरुकाः कालगुरवो भवन्ति ।



किंच—

अम्हच्चयं छूढमिणं किमट्ठा ,
तं केण उत्ते कहिते जतीहिं।
ते चेव तोयादिपवत्तणया ,
असिट्ठतेणेव अ संखडादी ॥ ३२९ ॥

अस्मदीय तदिद द्रव्य किमर्थ केनान्यत्र प्रक्षिप्तम , इत्थं सखडिकारारंभे सांजपमुक्तो रक्षपालो ब्रवीति-यतिभिरिद मेकत्र मीलितम् , एवं कथिते सति त एव स्पर्शादय उदकस्पर्शनभण्डनादयो दोषा । अथ ते भद्रकास्तत' साधुहस्तेन पवित्रीभूतमिदमिति मत्वा प्रवर्त्तन कुर्यु । अथासौ रक्षपालो न कथयति ततोऽशब्दे—अकथिते तेनैव रक्षपालेन मम सखड कुर्यु । आदिशब्दाद् वधो वा वन्धं वा ते तस्य कुर्वन्ति । यत एते दोषा तता नासंसृष्ट कर्त्तव्यं कारयितव्यं क्रियमाणमनुमोदयितव्य चेति ।

अथ द्वितीयपदमाह—

अद्धाणणिग्गयादी, पविसंता वावि अहव ओमम्मि ।
अणुमोदणकारावण, पभुणिक्खंतस्स वा करणं ।३३०।

अध्वनो निर्गता. आदिशब्दाद्-अशिवादिनिर्गता , अध्वनि वा प्रविशन्त अथवा-अवमौदर्ये वर्तमाना संसृष्टं पिण्ड कुर्वत अनुमोदने तत कारापणमपि प्रतिसेवन्त । यो वा प्रभुर्वलवान् राजगणसम्मतो वा निष्क्रान्त --प्रतिपन्नदीक्षितस्तस्तत स्वयमपि करणं भवतीति संग्रहगाथासमासार्थ । अथ विस्तरार्थोऽभिधीयते-साधवो विप्रकृष्टादध्वनो निर्गतास्त वा प्रविशन्तोऽवमौदर्ये वा अन्यत्र पर्याप्तमलभमानास्तत्सागारिकसत्क द्रव्य स्निग्ध शरीरोपष्टम्भक मत्वा प्रथमं तावदन्य संसृष्टं कुर्वन्तमनुमोदयन्ति । अथान्य संसृष्ट कुर्वन्न प्राप्यते तत कारयेयुरपि ।

कथमित्याह—

पुराण साग च महत्तरं वा ,
अन्न व गाहेंति तहिं च वोढुं ।
सागारिओ वा वि विगोवितो जा ,
सपिंडमण्णेसु तु संदधाति ॥ ३३१ ॥

पुराण—पश्चात्कृत, तदप्राप्तौ प्रतिपन्नाणुव्रत श्रावक, तदभावे यस्तत्र महत्तरस्तमन्य वा प्रमाणभूत तत्रान्यपिण्डेषु सागारिकपिण्ड प्रक्षेप्तु ग्राहयन्ति-प्रज्ञापयन्तीत्यर्थ । यो वा सागारिका विकोविदा--विशेषेण साधुसमाचारीकुशलस्स स्वकीय पिण्डमन्येषु संदधाति—मिश्रयतीत्यादि ।

समिस्सियं वाऽवि अमिस्सियं वा ,
गिण्हंति गीता इतरे विमिस्सं ।
कारेंतदिट्ठ च अगोवितेसु ,
दिट्ठं व तप्पच्चयकारि गीता ॥ ३३२ ॥

यदि सर्वेऽपि गीतार्था तत सन्मिश्रित सागारिकपिण्ड गृह्णन्ति नामसृष्टम् । अथवा—संसृष्टं न प्राप्यते विकोविदाश्च गीतार्थास्तत्र न सन्ति ततोऽदृष्ट-यथा

ते न पश्यन्ति तथा पुराणादिना संसृष्टं कारयन्ति । अथाऽदृष्टे कार्यमाणे तेषामप्रत्यय उत्पद्यते, यथैते सागारिकपिण्डं एवाऽसंसृष्टं आनीत ततस्तत्प्रत्ययकारिणो गीतार्थास्तैर्दृष्टमपि संसृष्टं कारयन्ति ।

अथ 'पभुनिक्खंतस्स वा करणं' मिति पदं व्याख्याति—

जो उज्झिओ आसि य भूतपुव्वं,
तप्पक्खिओ रायगणच्छिओ वा ।
सवीरिओ पक्खिवती इमं तु,
वोत्तूण किं अच्छइ एस वीसुं ॥३३३॥

यस्तत्र ग्रामे पूर्वमूर्जितो-बलवान् प्रभुर्ग्रामाऽधिपतिरासीत्, तत्पाक्षिको वा—तस्य हितैषी राजगणान्वितो वा राजसंमतो मल्लादिगणसम्मतो वा आसीत्; एवंविधोऽपि य. सवीर्य -शक्तिमान् भाजनभेदादयो दोषास्तस्य न भवन्तीति भाव, स एव सागारिकपिण्डमन्यपिण्डेषु प्रक्षिपति । परमिदं वचनमेवमुक्त्वा यथा किमेष पृथक् पृथक् तिष्ठतीति ।

सागारिकपिण्डाहृतिकासूत्रम्—

सागारियस्स आहडिया सागारिएणं पडिग्गाहित्ता तम्हा दावए नो से कप्पइ पडिग्गहेत्तए ॥ १९ ॥ सागारियस्स आहडिया सागारिएणं अपडिग्गहित्ता, तम्हा दावए एवं से कप्पइ पडिग्गहेत्तए ॥ २० ॥

अथास्य सूत्रस्य क संबन्ध इत्याह—

नीहडसागारिपिंड-स्स विवक्खो आहडो अहउ जोगो।
णीहडसुत्ते पुणरवि,जोगो ससड्डओ णाम ॥ ३३४ ॥

'नीहड'नाम-पूर्वसूत्रे निर्हृत सागारिकपिण्ड उक्त., इह तु तद्विपक्ष आहृत उच्यते-अयमेव प्रस्तुतसूत्रस्य योग -संबन्ध, तथा इत सूत्रादनन्तर पुनरपि निर्हृतसूत्रं भविष्यति, ततोऽयं सूत्रत्रयस्य संबन्ध संदंशको नाम मन्तव्य । किमुक्तं भवति-आहृडो निर्हृतस्तत्र अवसाने भूयोऽपि निर्हृतसूत्रम् । एष ईदृश संबन्ध. संदंश पूर्वापरसूत्रद्वयेन संदंशकेन च गृहीतत्वात् संदंशक इत्यभिधीयते । अनेन वक्ष्यमाणसूत्रस्याप्ययमेव संबन्धोऽभिहित इत्यनेन संबन्धेन आयातस्यास्य (१९-२०) व्याख्या-आहृतिका प्राहणक सागारिकस्य गृहे कुतोऽपि गृहान्तरादागता सा च सागारिकेण प्रतिगृहीता-स्वीकृता । ततस्तस्या मध्याद् दद्यात् नो'से तस्य साधो कल्पते प्रतिग्रहीतुम ॥१९॥ सागारिकस्याहृतिस्सागारिकेणा प्रतिगृहीता न स्वीकृता तस्या मध्याद्दद्यादेव 'से' तस्य कल्पते प्रतिग्रहीतुमिति सूत्र ( २० ) संक्षेपार्थ ।

साम्प्रत निर्युक्तिविस्तर —

आहडिया उ अभिघर,कुलपुत्तगभगिणिमट्टियालित्ते ।
दव्वे खेत्ते काले, भावम्मि य होइ आहडिया ॥३३५॥

अभिशब्द पृथगर्थवाचक ततश्चाभिगृहादपरस्माद्गृहादागता यदि शिष्टं स्वाधिकद्रव्यमागत सा आहृतिका भण्यते । सा चैव संभवति—कश्चित् कुलपुत्रक कचिद् ग्रामे परिवसति । तस्य चान्यदा प्राघूर्णक समायात ,तदर्थं विविधम्-अतिशायि द्रव्यमुपस्कृतम् । कुलपुत्रस्य च भगिनी तत्रैव ग्रामे परिणीता तदर्थं स्वकीयभार्याहस्ते घृतपूरादिकं प्रेषयति, सा च भगिनी तदानीं मृत्तिकालिप्तहस्ता ततस्तां भ्रातृजाया ब्रवीति स्थापय त्वमिदममुकत्र प्रदेशेऽहमिदानीमक्षणिका तिष्ठामीति । सा चाहृतिका चतुर्धा, तद्यथा-द्रव्याहृतिका क्षेत्राहृतिका कालाहृतिका भावाहृतिका चेति ।

अथैनामेव निर्युक्तिगाथा विवरीपुराह—

आएसट्ठविसेसे, सति काले भगिणि संभरित्ता णं ।
भज्जि भज्जाहत्थे, कुलओ पेसेति भगिणीए ॥ ३३६ ॥

आदेश -प्राघूर्णकस्तदर्थं घृतपू(र)पलपनश्रीप्रभृते खाद्यकद्रव्यस्य विशेषे संजाते काले-भोजनदेशकाले भगिनीं स्वसार स्मृत्वा भार्याहस्तैर्भर्जिका प्राघूर्णकं कुलज -कुलपुत्रको भगिनीनिमित्त प्रेषयति, एषा आहृतिकोच्यते । अस्या च चत्वारो भङ्गास्तद्यथा—द्रव्यत' प्रतिगृहीता न भावत , भावत. प्रतिगृहीता न द्रव्यत , द्रव्यतोऽपि भावतोऽपि प्रतिगृहीता, नापि द्रव्यता नापि भावतः प्रतिगृहीता ।

अथ यथाक्रम भावनामाह—

उच्छंगे अणिच्छाए, ठविया दव्वगहिताण पुण भावे ।
एत्थ पुण भद्दपंता, अवियत्तं चेव घेप्पंते ॥ ३३७ ॥
वावारमट्टियऽसुई, लित्ते हत्थे उ बिइयओ भंगो ।
दोसु वि गहिए तइओ, चउत्थभंगे उ पडिसेहो ॥३३८॥

यदर्थं सा भर्जिका प्रेषिता सा भगिनी तत्रान्तरमपि केनापि कारणेन च रुष्टा सती भ्रातृजायया समर्प्यमाणामर्पितां न गृह्णाति , ततस्तया तदुत्सङ्गे अनिच्छयापि सा भर्जिका स्थापिता, एषा द्रव्यत प्रतिगृहीता न पुनर्भावत , इय च शय्यातरपिण्डो न भवति, भावतोऽत्र अगृहीतत्वात् . परमत्र भद्रकप्रान्तदोषा भवन्ति । भद्रकस्तन्निश्रया प्रक्षेप, प्रान्तस्तु निष्काशनं वसतिव्यवच्छेदादि कुर्यादिति भाव. । अप्रीतिकं चैव गृह्यमाणे भवति, किमेष मदीय पिण्डो न भवति येनैव मम इदं गृह्णन्ति । तथा सा भगिनी यदा कमपि दलनपेषणादिव्यापार कुर्वाणा मृत्तिकया वा अशुच्या वा लिप्तहस्ता भवति , तदा ब्रवीति स्थापय त्वममुकत्र प्रदेशे एषा भावत' प्रतिगृहीता, न द्रव्यत इति द्वितीयो भङ्ग । तृतीये तु भङ्गे द्वाभ्यामपि द्रव्यभावाभ्या प्रतिगृहीता। चतुर्थभङ्गे द्वाभ्यामपि द्रव्यभावाभ्या प्रतिषेध.। किमुक्तं भवति—सा भगिनी रुष्टा सती बलादर्प्यमाणामपि तां भर्जिका हस्ताभ्यामपि न स्पृशतीति । सा चाहृतिका द्रव्यक्षेत्रकालभावभेदाच्चतुर्विधा। पुनरेकैका द्विविधा-छिन्ना, अच्छिन्ना च ।

अथैता एव भावयति—

संकप्पियं च दव्वं, दिट्ठा खेत्तेण कालतो छिन्नं ।
दोसु उ पसंगदोसा, सागारिए भावतो दुविहो ॥३३९॥

यद् द्रव्य सकल्पित यथा अमुकं घृतपूरादिक तत्र गृहे नेतव्यम् , वाशब्दस्यानुक्तप्रकारान्तरद्योतकत्वात्तत्र गृहं यतनार्थं पृथक् स्थापितं तदुभयमपि द्रव्यतश्छिन्नम् । या पुनराहृतिका स्वगृहमानीयमाना सागारिकेन दृष्टा सा क्षेत्रतश्छिन्ना । तथा

अमुकस्यां वेलाया नेतव्यमिति निर्दिष्टं द्रव्यं कालतश्छिन्नम्। उपलक्षणमिदं तत नेष्यामीति तत्र भावा निवृत्तस्तद्भावच्छिन्नम्। अच्छिन्ना त्वाहृतिका चतुर्धाप्यनद्विपरीता। तथा द्वयोर्भङ्गयो -द्रव्यत प्रतिगृहीता न भावत , नापि द्रव्यतो नापि भावत प्रतिगृहीतेत्येवंलक्षणयोर्न सागारिकपिण्ड , पर प्रसङ्गदोपाश्च गृह्यते। 'भावश्रो' त्ति भावत. प्रतिगृहीता न द्रव्यत इत्येवरूपो यो भङ्ग , पश्चाद् द्रव्यतोऽपि भावतोऽपि प्रतिगृहीता इत्येवंलक्षणो द्विविध प्रतिगृहीतो भङ्ग — एतयो. सागारिकपिण्ड इति कृत्वा न कल्पते।

अथैनामेव निर्युक्तिगाथा व्याचष्टे—

संकप्पियं वा अहवेगपासे,
सागारिदिट्ठं अमुगं तु वेलं।
नियट्टभावेन मुगं अदिट्ठ,
काले न निद्देसें अछिन्नभावे ॥ ३४० ॥

यत् घृतपूरादि तत्र गृहे नयनाय सङ्कल्पितम्। अथवा-यदेकपार्श्वे विष्वक् स्थापितं तदेतत् द्रव्यतश्छिन्नम्। सागारिकेण स्वगृहमानीयमान यत् दृष्टं तत् क्षेत्रतश्छिन्नम्। अमुकस्यां मध्याह्नादिलक्षणाया वेलाया नेतव्यमिति निर्दिष्ट कालतश्छिन्नम्। यत्र न तेपामिति भावो निवृत्तस्तद्भावतश्छिन्न व्याख्यानम्। अथाच्छिन्नं व्याख्याति-'अमुग' इत्यादि, यद् द्रव्यममुकं नेतव्यमिति न संकल्पित न वा पृथक् स्थापित तद् द्रव्यतोऽच्छिन्नम्। या चाऽऽहृतिका सागारिकेण नीयमाना न दृष्टा तत्क्षेत्रतोऽच्छिन्नम्। काले अच्छिन्नं यत् प्रतिनियतायां वेलाया निर्देशा नास्ति। भावे अच्छिन्नं तु यदद्यापि नेष्यामीति भाव अव्यवच्छिन्नो न निवर्त्तते इत्यर्थ ।

अथात्रैव ग्रहणविधिमाह

भावो जाव न छिन्नइ,विपरिणतो गेण्हमो त्ति खेत्तं तु।
खेत्ते वि होति गहणं,अदिट्ठे वि विप्परिणतम्मि॥३४१॥

भावो यावदद्यापि न व्यवच्छिद्यते, तावन्न कल्पते, यदा तु न नेष्यामीति भावो विपरिणत। व्यवच्छिन्नस्तदा क्षेत्रच्छिन्न तु न कल्पते इति भाव । अथैतदेव भावयति-' खेत्ते वि' इत्यादि क्षेत्रच्छिन्नस्यापि ग्रहण भवति , यदि स तद् द्रव्य नयन्नपान्तराले न नेष्यामीति परिणतो भवति , तत्सागारिकेणादृष्टमदृश्यमान ग्रहीतव्यम्।

तत -

पुरतो पसंगपंता, अचियत्तं चेव पुव्वभणियं तु।
वितियततियाउ पिंडो, पढमचउत्था पसंगेहिं ॥३४२॥

अथ सागारिकस्य पुरतो गृह्णन्ति ततो भद्रक प्रसङ्ग तन्निश्रया तत्र प्रक्षेपं, प्रान्तश्च निष्काशनादिकं कुर्यात्। अप्रीतिकं च पूर्वभणित तस्य तथा पश्यतो गृह्यमाणे भवति. तत पुरतो न ग्रहीतव्यम्। तथा द्वितीयतृतीयौ भङ्गौ शय्यातरपिण्ड इति कृत्वा परिहर्त्तव्यौ. प्रथमचतुर्थौ तु शय्यातरपिण्ड पर प्रसङ्गदोपभयात्तावपि परिहर्त्तव्यौ।

अथाचार्यो विनेयवर्गव्युत्पादनार्थमाक्षेपपरिहारौ निरूपयितुकाम इदमाह-

कप्पइ अपरिग्गहिया, णिक्खेवे चउदुगं अजाणंता।
जाणता वि य केई, संमोहं कातु लोभा वा ॥ ३४३ ॥

केचिदाचार्या निक्षेपचतुष्कस्य द्रव्यत प्रतिगृहीता न भावत इत्यादिलक्षण भङ्गचतुष्टयस्य द्विक प्रथमचतुर्थभङ्गद्वयमाश्रित्य इदं सूत्रप्रवृत्तमित्येवंविधमवजानतोऽपि तदर्थं केचिदगीतार्थानां संमोहं कृत्वा लोभात् ब्रुवते कल्पते सागारिकेणापरिगृहीता आहृतिका।

इदमेव स्पष्टयति—

जं आहडं होइ परस्स हत्थे ,
जं नीहडं वावि परस्स दिन्नं।
तं सुत्तछंदेण वयंति केई,
कप्पं ण मे सुत्तमसुत्तमेवं ॥ ३४१ ॥

यदाहृतं प्राघूर्णक शय्यातरगृहमानीय परस्य हस्ते भवति, एतेन प्रस्तुतमेव सूत्र गृहीत सागारिकगृहान्निष्काशितं परस्य दत्तम्। अनेन वक्ष्यमाणसूत्रमुपात्तम्। तदेवंविध द्रव्यं सूत्रच्छन्देन-सूत्राभिप्रायेण कल्प्य-कल्पनीयं न—नैव, चेद्यदि आचार्य एवमस्मदुक्तं मन्यसे तत. सूत्रमसूत्रमेव प्राप्नोति अप्रमाणमित्यर्थ , एवं केचिदाचार्यदेशीया वदन्ति।

अत्र सूरि प्रतिवचनमाह—

सुत्तं पमाणं जति इच्छितं ते,
ण सुत्तमत्थं अतिरिच्च जाति।
अत्थो जहा पस्सति भूतमत्थं ,
तं सुत्तकारीहिँ तहा णिबद्धं ॥३४२॥

यदि ते तव सूत्रं प्रमाणत्वेनेष्टमनुमत तत इदमप्यक्षिणी निमील्य विचारयन्तु देवानांप्रिया सूत्र तावदर्थ—व्याख्यानमतिरिच्य न याति-न प्रवर्त्तते,तावदुच्यते इत्यर्थ.। एष एवार्थो निर्युक्तिभाष्यादिरूपो यथा-येन प्रकारेण भूतं-सद्भूतमर्थमभिधेयं पश्यति, सूत्रकारिभिरपि गणधरस्थविरै. सूत्रं तथा-तेनैवाभिप्रायेण निबद्धमवसातव्यम्।

अमुमेवार्थं दृढयति—

छाया जहा छायवतो णिबद्धा,
संपट्ठिए जाति ठिते य ठाति।
अत्थो जहा गच्छति पज्जवेसु,
सुत्तं पि अत्थाणुचरं तहेव ॥ ३४३ ॥

छाया प्रतीता सा यथा छायावत पुरुषादेर्निबद्धा परतन्त्रा सती तस्मिन् संप्रस्थिते याति, स्थित च तस्मिन् साऽपि तिष्ठति , यथाऽत्रापि। पुरुषस्थानीयोऽर्थो येषु भङ्गादिविपर्ययेषु प्रकारेषु गच्छति। सूत्रमपि छायास्थानीय तस्यैवार्थस्यानुचर सत्तथैव तेषु तेषु पर्यायेषु गच्छति।

इदमेव स्पष्टतरमाह—

जं केणई इच्छइ पज्जवेणं ,
अत्थेण मेमेहिँ उ पज्जवेहिं।
विहीय सुत्ते तहि वारणा वि,
उभे य इच्छंति विकोवगट्ठा ॥ ३४४ ॥

अर्थो—व्याख्यानविधिर्येन केनचित् पर्यायेण परसूत्रग्रहीतुमिच्छति न शेषैरपरै पर्यायैस्तम् स एव प्रमाणयितव्यो

न शेया इति वाक्यशेषः। यथेहैव सूत्रे यथा भावेन परिणते आनेतरि यदि सागारिको न पश्यति ततः कल्पते प्रतिग्रहीतुं द्रव्यम्। एतेन पर्यायणार्थम्—आहृतिकामिच्छति न शेषैरपि परिणतक्षेत्रच्छिन्नतादिभिः पर्यायैः। एवमत्रापीप्सितेऽनीप्सिते च वस्तुनि सूत्रकारः कथं सूत्रं बध्नीयादित्याह—विधिर्वा तत्र सूत्रे वक्तव्यः। यथात्रैवाहृतिकासूत्रे द्वितीये आलापके वारणा वा प्रतिषेध यथैवेह वधबन्धे आलापके उभयं वा विधिप्रतिषेधरूपं क्वचिदेकत्रापि सूत्रे शिष्यमतिविकाशनार्थं सूरय इच्छन्ति। यथा-'कप्पइ निग्गथीणं पक्कं तालपलंबं भिन्नं पडिग्गाहित्तये से वि विहिभिन्ने, नो चेव णं अविहिभिन्ने'॥ ५॥ (बृ) (सूत्रस्यास्य व्याख्या 'पलंब' शब्दे पञ्चमभागे ७१४पृष्ठे गता।)

अपि च—

उस्सग्गओ गेव सुतं पमाणं,
ण वाऽपमाणं कुसला वयंति।
अंधो हि पंगुं वहते स वावि,
कहेइ दोराहं पि हिताय पंथं॥ ३४५॥

तत्र उत्सर्गतः-सामान्येन श्रुतं-सूत्रं नैव प्रमाणं न वा अप्रमाणम्, किंतु-पूर्वापराविरुद्धवृद्धसंप्रदायागतेनार्थेन युक्तं प्रमाणम्, अन्यथा पुनरप्रमाणमित्येवं कुशलास्तीर्थङ्करगणधरा वदन्ति। तथाहि-यथा किल कश्चिदन्धो देशान्तरं गन्तुमनाः स्वयं मार्गमपश्यन् पङ्गुं गन्तुमशक्तं चक्षुष्मत्तया स्कन्धे विन्यस्य वहति, स चापि पङ्गुर्द्वयोरप्यात्मनस्तस्य वा हिताय गर्त्ताप्रपाताद्युपद्रवरक्षणाय पन्थानं मार्गं कथयति। एवमर्थेनाप्रबोधितं सदन्धस्थानीयं सूत्रम्, तद्यदि पङ्गुस्थानीयमर्थमात्मन उपरि कृतं वहति, तदा सोऽप्यर्थं सूत्रनिश्रयागतान् सम्यग् विषयविभागदर्शनतया निष्प्रत्यपायं मुक्तिमार्गमुपदिशति। इत्यतोऽर्थमव्यपेक्षमेव सूत्रं प्रमाणमिति स्थितम्।

अथ 'जाणंता वि य केई, संमोहं कातु लोभा वा' इति पश्चार्द्धं व्याचष्टे—

अप्पसुया जे अविकोविया वा,
ते मोहइत्ता इमिणा सुएणं।
तेसिं पगासो वि तमंतमेति,
निसाविहंगेसु व सूरपादा॥ ३४६॥

ये अल्पश्रुता अधीतस्वल्पसूत्रा ये वा अविकोविदा अगीतार्थास्तान् अनेन सूत्रेण मोहयित्वा विजानन्तोऽपि लोभबहुलतया सागारिकस्याहृतिकापिण्डं ग्राहयन्तीति वाक्यशेषः। तेषां चैव मोहितानां प्रकाशप्रस्तुतसूत्रार्थः कथ्यमानोऽपि तमस्तमायते प्रबलान्धकारतया परिणमते, यथा निशाविहगा-उलूकादयस्तेषु सूर्यस्य पादाः-किरणाः प्रकाशरूपा अतिमहान्धकारीभवन्ति। आह-यद्येव तत कल्पते सागारिकेणापरिगृहीता आहृतिकेति प्रस्तुतसूत्रं कथं नीयते?।

अत्रोच्यते—

अह भावविपरिणए, अदिट्ठं सुयं तु तम्मि उ पउत्थे।
नीहडियाए पुरओ, संछोभगमाइणो दोसा॥ ३४७॥

यस्मैवाहृतिका प्रहिणोति—नयति वा तस्मिन् भावं स्वयमेव विपरिणते न प्रदास्यामि न नेष्यामीति वा विपरिणाम-मापन्ने कल्पते। यद्वा-तेन तथा गच्छता श्रुतं यस्य सकाशमहमिदं नयामि स प्रोषितो ग्रामान्तरं गतः, ततस्तस्मिन् प्रोषिते सति स नेता न नयामीति परिणत, अत्रान्तरे साधवः समायाताः, ततः सागारिकेणादृष्टं कल्पते प्रतिग्रहीतुम्। अत्र सूत्रनिपातः। तथा वक्ष्यमाणसूत्रे भणिष्यमाणाया निर्हृतिकाया सागारिकस्य पुरतो गृह्यमाणाया संछोभकः प्रक्षेपक आदिशब्दान्निष्काशनशय्याव्यवच्छेदादयश्च दोषा भवन्ति, अतः सागारिकस्य पुरतः सा न ग्रहीतव्या।

अथ कथं स तत्राहृतिकानयने विपरिणमतीत्युच्यते—

नीयं पि से ण घेच्छिति, धम्मो य जतीण होति दिंतस्स।
वसणब्भुदओ वा सिं, भंडणकम्मे य अद्भुणा॥ ३४८॥

मया तत्र नीतमप्येतत् घृतपूरादिकं स न ग्रहीष्यति, यद्वा—यतीनामेवंविधं द्रव्य ददतो मम धर्मो महान् भवति। अथवा-येषां समीपे तन्नीयते तेषां स्वजनमरणधनहरणादिकं व्यसनं शोककारणमजनिष्ट, अभ्युदयो वा कोऽप्युत्सवविशेषस्तेषां वर्त्तते, भण्डनं—वाक्कलह इदानीं महता भरेण वर्तते। कर्मणि कृष्यादौ ते अध (न्या) नाः—अक्षणिकाः सन्ति, ततो नीतमपि नामी ग्रहीष्यन्ति।

इति भावम्मि णियत्ते, तेहिं अदिट्ठस्स कप्पती गहणं।
छेत्तादिणिग्गतेसु व, कप्पति गहणं जहिं सुत्तं॥ ३४९॥

इत्यनन्तरोक्तप्रकारेण भावे निवृत्ते सति येषां समीपे तन्नीयते तैः शय्यातरमानुषैरदृष्टस्य कल्पते ग्रहणम्। यद्वा-क्षेत्रकालादौ निर्गतेषु ग्रहणं कल्पते, एव यत्र सूत्रमवतरति स एव विषयस्तूक्त इति।

सागारियस्स नीहडिया परेण-अपरिग्गहित्ता तम्हा दावए नो से कप्पइ पडिग्गाहित्तए॥ २१॥ सागारियस्स नीहडिया परेण पडिग्गहिता तम्हा दावए एवं से कप्पइ पडिग्गहित्तए॥२२॥

अस्य संबन्धस्य प्रागेवोक्तत्वात् व्याख्याऽपि प्राग्वत्, नवरं सागारिकद्रव्यं यदन्यत्र नीयते सा निर्हृतिकेत्युच्यते। सा यस्य समीपे प्रेषिता तेन प्रतिगृहीता न कल्पते।

अथ भाष्यविस्तरः—

पढमचउत्थो पिंडो, वितिओ ततिओ य होति तु अपिंडो।
पुरतो वि विवज्जेज्जा, भद्दगपंतेहिं दोसेहिं॥ ३५०॥

निर्हृतिकायामपि द्रव्यतः प्रतिगृहीता न भावत इत्यादयश्चत्वारो भङ्गाः, नवरमत्र प्रथमचतुर्थौ भङ्गौ शय्यातरपिण्डः, एकत्र भावतोऽपरत्र तु द्रव्यतो भावतश्च प्रतिगृहीतत्वात्। द्वितीयस्तृतीयश्च भङ्गो न भवति शय्यातरपिण्ड, सागारिकस्य पुरस्तादपि द्वितीयतृतीयभङ्गौ भद्रकप्रान्तकभयात् वर्जयेयुः। तत्र भद्रकस्तन्निश्रया प्रक्षेपं कुर्यात्।

यस्तु प्रान्तकः स इद ब्रूयात्—

केणावि अभिप्पाए-ण दिज्जमाणं पि गेच्छियं पुव्विं।
अम्हे ओभावेंता, पुरओ वि य णे पडिच्छंति॥३५१॥
किं तं न होति अम्हं, रेत्तंतरियं व किंचि मम दोसं।

सुव्वत्तसोत्तिगादि व,चरेंति जतिणो वि डंभेणं ॥३५२॥

किमेवमिदानीमस्माक सत्कं न भवति क्षेत्रान्तरमागतमिति कृत्वा कल्पते, तदप्यसङ्गतम् , यत् क्षेत्रान्तरितमपि सदोषं भवति , तदमी सुव्यक्तश्रोत्रिया इव—धिग्जातीया इव यतयोऽपि सन्तो दम्भेन चरन्ति । किमुक्तं भवति—धिग्जातीयाश्च अशूद्रान्नव्रतमिति कृत्वा शूद्रगृहे न समुद्दिशन्ति पर तन्दुलादीनि गृह्णन्ति , तथा तेषामशूद्रान्नव्रत दम्भ , एवममीषामपि शय्यातरपिण्डपरिहारादेर्व्रत न भद्रकं लक्ष्यते ।

अथाहृतिका निर्हृतिका वा पापकारणेन गृह्यते इत्याह-

दुविहे गेलण्णम्मि, णिमंतणा दव्वदुल्लभे असिवे ।
ओमोदरिएँ पओसे, भए य गहणं अणुण्णायं ॥ ३५३ ॥

अस्य व्याख्या प्राग्वत् ।

अत्र निमन्त्रणापद विशेषतो भावयति—

णिब्बंधणिमंतंते, भणति भज्जि दलाहि जा एसा ।
तं पुण अविगीतेसु, गीया इतरं पि गेण्हंति ॥ ३५४ ॥

शय्यातर महता निर्बन्धन निमन्त्रयमाण साधवो भणन्ति,यत्ते चैषा भर्जिका प्रहेणका आहृतिका वा तां प्रयच्छ तत्पुनराहृतिकाया निर्हृतिकायाः वा ग्रहणमगीतार्था कुर्वन्ति । ये तु गीतार्थास्ते इतरमपि—सागारिकपिण्डमपि गृह्णन्ति ।

णेच्छंतमगीतं ते-णेव य सुत्तेण पत्तिए बेंति ।
सच्छंदेण ण भणिमो,फुडवियडमिणं भणति सुत्तं।३५५।

अथ गीतार्था आहृतिका निर्हृतिका वा नेच्छन्ति ग्रहीतुं तत तेनैव सूत्रेण प्रत्ययं ब्रुवन्ति । अथ आचार्या वयं स्वच्छन्देन-स्वाभिप्रायेण न भणाम किं तु स्फुटविकटमतीव व्यक्ताक्षर-मिदमेव सूत्रं भणति । यथा कल्पते सागारिण प्रतिगृहीता आहृतिका परेण च प्रतिगृहीता निर्हृतिकेति ।

अपि च—

जं तं जगप्पदीवे-हिँ पणीयं सव्वभावपण्णवणं ।
ण कुणति सुतं पमाणं,ण सो पमाणं पवयणम्मि ॥३५६॥

तत सकलत्रिलोकीप्रसिद्धं जगत्प्रदीपैर्भगवद्भिस्तीर्थकरैः प्रणीतं सर्वेषामुत्सर्गापवादनिश्चयव्यवहारादीना भावप्रज्ञापना—प्ररूपणा । यत्तथाविधं श्रुत य. कश्चित्प्रमाण न करोति नासौ प्रवचने चतुर्वर्णसङ्घमध्ये प्रमाण भवति ।

अमुमेवार्थमन्योक्तिभङ्ग्या दृढयति—

जस्सेव पभावुम्मि-ल्लिताइं तं चेव हयकतग्घाइं ।
कुमुदाइँ अप्पसंभा-वियाइँ चंदं उवहसंति ॥ ३५७ ॥

यस्यैव प्रभावेणोन्मीलितानि-प्रबुद्धानि तमेव चन्द्रं कुमुदान्युपहसन्ति इति संटङ्क । कथंभूतानीत्याह-हतकृतघ्नानि, हतशब्दो निन्दावाचक , कृतघ्नतया पापानीत्यर्थ । आत्मानं संभावयन्ति,वयमेव शोभनानि नामीत्यभिमन्यन्ते तच्छीलानि च यानि तान्यात्मसभावितानि,एवविधानि परमोपकारिणमपि चन्द्र वयमतीवावदातानि भवांस्तु सकलङ्कत्वान्न तथेति स्वकीयश्वेतप्रभापटलेनोपहसन्तीत्युच्यते । एव मार्या भवन्तोऽपि यस्यैव प्रभावेणोन्मीलितविवेकलोचना सञ्जाता तदेव श्रुतं सांप्रतमप्रमाणयन्तो हतकृतघ्ना इव लक्ष्यन्ते । ते एवं प्रज्ञापिता सन्त प्रतिपद्यन्ते, सूत्राशातनापातकतया अगीतार्था ।

अथाहृतिकादिग्रहणसूत्रम्--

सागारियस्स अंसियाओ अविभत्ताओ अव्वोच्छिन्नाओ अव्वोगडाओ अनिज्जूढाओ तम्हा दावए, नो से कप्पइ पडिग्गाहित्तए ॥ २३ ॥ सागारियस्स अंसियाओ विभत्ताओ वोच्छिन्नाओ वोगडाओ निज्जूढाओ तम्हा दावए, एवं से कप्पइ पडिग्गाहित्तए ॥ २४ ॥

अथास्य सम्बन्धमाह--

छिन्नममत्तो कप्पति,अच्छिन्न ण कप्पति अह तु जोगे ।
पत्तेगं वा भणितो, इयाणि साहारणं भणिमो॥ ३५८ ॥

आहृतिका निर्हृतिका पिण्डवदंशिका पिण्डोऽपि सागारिकेण छिन्नममत्वो न ममायमिति न भावान्निर्वर्त्तित कल्पते अच्छिन्नममत्वस्तु न कल्पते । अयेष योग संबन्ध । यद्वा-प्रत्येकमेकैकस्यैव सागारिकस्य सत्कं पिण्डमाश्रित्य विधिर्भणित , इदानीं तु सागारिकस्यान्येषां च साधारणं पिण्डमधिकृत्य विधिं भणाम , अनेन संबन्धेनायातस्यास्य (२३-२४)व्याख्या-सागारिकस्य या अंशिका तस्या अन्येषामंशिकाभ्योऽविभक्ताया अव्यवच्छिन्नाया अव्याकृताया अनिर्यूढाया मध्यात्कश्चिद्भक्तपानं दद्यात्, नो 'से' तस्य साधोः कल्पते प्रतिग्रहीतुम् ॥ सागारिकस्य अंशिकादिभक्तव्यवच्छिन्ना व्याकृता निर्यूढा च यस्माद्राशेर्भवति तस्माद् दद्यात् एवं 'से' तस्य कल्पते प्रतिग्रहीतुमिति सूत्रसंक्षेपार्थ ।

अथ निर्युक्तिविस्तर —

सागारियस्स अंसिय, अविभत्ता खेत्तज वतो जेसु ।
खीरे मालाकारे, सागारदिट्ठ परिहरंति ॥ ३५९ ॥

सागारिकस्यांशिका अविभक्ता न कल्पते । सा च क्षेत्रे वा भोज्येषु वा क्षीरे वा मालाकारे वा संभवति । अत्र सागारिकदृष्टे सर्वत्रापि परिहरन्तीति निर्युक्तिगाथासमासार्थ ।

अथैनामेव विवरीषु सूत्रस्य विषमपदानि तावद्विवृणोति-

अंसो त्ति व भागो त्ति व, एगट्ठं पुंज एव अविभत्तं ।
कयभागो वि ण सव्वो,विच्छिज्जति सा अवोच्छिन्ना३६०

अंश इति वा भाग इति वा एकार्थपदौ अंश एवांशिका स्वार्थे क प्रत्यय । तत्र यावान् सागारिकादीना साधारणमोदकैरुपस्कृत तावानद्याप्यखण्डपुञ्ज एव । अथांशेन भागादिविवक्षा कृता सा अंशिका—अविभक्तेत्युच्यते । यत्र सुभागा परं मूलराशिकृतो भागोऽपि न सर्वो व्यवच्छिद्यते सा व्यवच्छिन्ना ।

अव्वगडाओ तुब्भे, ममं तु वा जा ण ताव णिद्दिसति ।
तत्थेव अच्छगुमाणी, होति अणिच्छूढिया असा ।३६१।

सर्वेषामपि भागा स्थापिता. परमेष भागस्तव एष पुनर्ममेत्येव यत्र भाग न निर्दिशति सा अव्याकृताऽभिधीयते । या

तु निर्दिष्टा प्रसाद्यापि न ततोऽन्यत्र नीयते सा अंशिका, तत्रैव तिष्ठन्ती अनिगूढा भवति। एवंविधा न कल्पते प्रतिग्रहीतुमिति।

अथ क्षेत्रद्वारं व्याचष्टे—

सीताइजन्नो पहुगादि मा वा,
जे कप्पणिज्जा जतिणो भवति।
सालीफलादीण य विक्कयम्मि,
पडेज्ज तेल्लं लवणं गुलो वा ॥३६२॥

सागारिकस्यान्यैः पञ्च साधारणे क्षेत्रे सीतायाः—हलपद्धति—देवताया यज्ञः—पूजा भवेत्, तत्र शाल्यादिद्रव्यं यदुपस्कृतं पृथुकादयो वा ये तत्र क्षेत्रे ते यतीनां कल्पनीया भवन्ति। यद्वा—तत्र शालीनां—कलमादीनां फलादीनां—चिर्भटादीनाम्, आदिशब्दात्—गोधूमादिप्रभृतीनां धान्यानां विक्रीयमाणानां विक्रये तैलं वा लवणं गुडो वा पतेत् एषा सर्वाऽपि क्षेत्रविषया सागारिका।

अथाशिकायन्त्रद्वारमाह—

जंते रसो गुलो वा, तेल्लं चक्कम्मि तेसु वा जं तु।
विक्किज्जंते पडितं, पवत्तणंते य पगयं वा ॥३६३॥

यन्त्रमपि सागारिकस्यान्यैः सह साधारणं स्यात्, तच्च द्विधा इक्षुयन्त्रं तैलयन्त्रं च। तत्र च इक्षुयन्त्रे काले कांस्यरसो गुडो वा भवेत्, तिलयन्त्रं चक्रमुच्यते, तत्र तैलं तिलातसीसर्षपादीनां भवेत्। तैरनयोः रसादिषु विक्रीयमाणेषु यत् तन्दुलघृतवस्त्रादिकमापतति। अथवा—यन्त्रस्य प्रवर्त्तते प्रथमप्रारम्भे अन्ते वा—परिसमाप्तौ यत्ते संभूय प्रकृतं—प्रकरणं कुर्वन्ति एषा यन्त्रविषया अंशिका।

अथ भोज्यक्षीरद्वारे व्याख्यानयति—

गणगोट्ठिमादिभोज्जा, भोत्तुव्वरितं च तत्थ जं किंचि।
भातुगमादीण पओ, अविभत्तं जं च गोवेणं ॥३६४॥

गणो—मल्लादिगणरूपः गोष्ठी—महत्तरादिपुरुषपञ्चकपरिगृहीता यज्ञः—यागः आदिशब्दाद्—अन्यस्यापि महाजनस्य साधारणानि यानि भोज्यानि संखडयः, यद्वा—किंचित् मोदकप्रभृतिकं तत्र भुक्तोद्धरितं द्रव्यम् एषा भोज्यविषया सागारिकांऽशिका। तथा सागारिकसंबन्धिनां भ्रातृव्यादीनां पयो—दुग्धं यावदद्यापि सागारिकेण सहाविभक्तम्, यद्वा—दुग्धं वृत्त्यच्छिन्नं सागारिकदुग्धमध्यादद्यापि गोपेनाविभक्तम्। एषा क्षीरविषया सागारिकांशिका।

मालाकारद्वारमाह—

पुप्फपणिएण आरा—मिगाण पडियेण जाव उ विरिकं।
पक्खेवगादिसंमुहं, अवियत्तादी य पुव्वुत्ता ॥३६५॥

पुष्पाणां पणितेन—विक्रयेण यदारामिकाणां मालिकानां घृतादिकं पतितं तदारामस्वामिना सागारिकेण यावदद्यापि न विरिक्तं भवेदेषा अपि सागारिकांशिका। अथवा—क्षेत्रादिमालाकारान्तरेषु द्वारेषु यदि सागारिकस्य समुख पश्यतस्तदीयायामंशिकायामविभक्तायां साधवो भक्तादिकं गृह्णन्ति, तदा भद्रकृता प्रक्षेपकादयः, प्रान्तकृता पुनरप्रीतिकादयः पूर्वोक्ता दोषा मन्तव्याः।

मालाकारद्वारे प्रकारान्तरेणाऽऽह—

अहवा वि मालकार—स्स अंसियं अविणयंति भोज्जेसुं।
सो य सागारो तेसिं, तं पि ण इच्छंति अविभत्तं ॥३६६॥

अथवा—मालाकारस्य पुष्पावचयमादिभिर्यनिष्ठामशिकां भोज्येषु शालिदालयादिषु यावत्तस्याभाव्यं तावन्मात्रमगारिणः प्रागेवापनयति, स च मालाकारस्तेषां साधूनां सागारिकोऽतो यावदसौ मालाकारांशिका अविभक्ता तावत्तामपि ग्रहीतुं नेच्छन्ति।

द्वितीयपदमाह—

गेलन्नमाईसु उ कारणेसु,
मादिप्पसंगो ण य सव्वे गीता।
गिण्हंति पुंजा अवरेडियातो,
तस्सऽण्णतो वा वि विरेडियाओ ॥ ३६७ ॥

ग्लानत्वावमौदर्यादिषु कारणेषु संस्तरणाभावे मा प्रथमत एव शय्यातरपिण्डग्रहणे अतिप्रसङ्गः भवदिति कृत्वा न चैते सर्वेऽपि गीतार्था अतः प्रथममविरक्तादन्यैः समं साधारणान्पुञ्जान् ततोऽन्यस्मादपि विरक्तात्तस्य सागारिकस्य सत्कान् पुञ्जान् गृह्णन्ति। बृ० २ उ०। ( चैत्यवक्तव्यता 'पूया' शब्दे पञ्चमभागे गता। )

शय्यातरपिण्डस्तीर्थकृद्भिः प्रतिकुष्ट इति शय्यातरपिण्डद्वारमाह—

तित्थंगरपडिकुट्ठो, आणाअण्णात उग्गमो ण सुज्झे।
अविमुत्ति अलाघविता, दुल्लभसेज्जा विउच्छेदो ॥३०१॥

आद्यन्तवर्जैर्मध्यमैर्विदेहजैश्च तीर्थकरैराधाकर्म कथंचित्कर्तुमनुज्ञातम्, पुनः शय्यातरपिण्डस्तु तैरपि प्रतिकुष्ट इति कृत्वा वर्जनीयोऽयम् 'आण' त्ति तं गृह्णता तीर्थकृतामाज्ञा कृता न भवति 'अण्णाये' त्ति—यत्र स्थितस्तत्रैव भिक्षां गृह्णता आज्ञा तेषां सेविता न स्यात्, 'उग्गमो न सुज्झे' त्ति—आसन्नादिभावतः पुनः पुनस्तत्रैव भैक्षपानकादिनिमित्तं प्रविशतः उद्गमदोषा न शुद्ध्येयुः, स्वाध्यायश्रमणादिना च प्रीतः शय्यातरः क्षीरादिस्निग्धद्रव्यं ददाति। तच्च गृह्णताऽविमुक्तिर्गार्द्ध्याभावो न कृतः स्यात्, शय्यातरतत्पुत्रभ्रातृबन्धुतादिभ्यो बृहत्करणं स्निग्धाहारं च गृह्णतः उपकरणशरीरयोर्लाघवं न स्यात्, तत्रैव वाऽऽहारादि गृह्णतः शय्यातरवैमनस्यादिकरणात् शय्या दुर्लभा स्यात्, सर्वथा तद्व्यवच्छेदो वा स्यात्, ततस्तत्पिण्डो वर्जनीयः।

अथ द्वितीयपदमाह—

दुविहे गेलण्णम्मि, निमंतणे दव्वदुल्लभे असिवे।
ओमोदरियपओसे, भए य गहणं अणुण्णातं ॥ ३०२ ॥

द्विविधे—आगाढानागाढग्लानत्वे शय्यातरपिण्डोऽपि ग्राह्यः। तत्रागाढे, क्षिप्रमेव, अनागाढे पञ्चकपरिहाण्या मासलघुके प्राप्ते सति निमन्त्रणे शय्यातरनिर्बन्धे सकृत् गृहीत्वा पुनः पुनः प्रसङ्गो निवारणीयः। दुर्लभे च क्षीरादिद्रव्ये अन्यत्रालभ्यमाने, तथा अशिवे अवमौदर्ये राजप्रद्वेषे तस्करादिभये च शय्यातरपिण्डस्य ग्रहणमनुज्ञातम्।

अत्र दुर्लभद्रव्यग्रहणविधिमाह—

तिक्खुत्तो सक्खेत्ते, चउद्दिसिं जोयणम्मि कडजोगी।

दव्वस्स य दुल्लभता, सागारिणिवेसणा ताहे ॥३०३॥

त्रिकृत्वः स्वक्षेत्रे चतुर्षु दिक्षु सक्रोशयोजने गवेषितस्यापि घृतादेर्द्रव्यस्य अथवा-दुर्लभता भवति तदा सागारिकपिण्डनिषेवणं कर्त्तव्यम्। गतं सागारिकपिण्डद्वारम्। वृ० ६ उ०। ध०। पञ्चा०।

सागारिकस्य आदेशादन्तर्वगडायां विधिमाह—

सागारियस्स आएसे अंतोवगडाए भुंजइ णिट्ठिए णिसिट्ठे पाडिहारिए; तम्हा दावए, णो से कप्पति पडिगाहित्तए ॥१॥ सागारियस्स आएसे अंतोवगडाए भुंजइ णिट्ठिए णिसिट्ठे अपाडिहारिए; तम्हा दावाए, एवं से कप्पति पडिग्गाहित्तए॥२॥ सागारियस्स आएसे बाहिं वग्गडाए भुंजइ णिट्ठिए णिसिट्ठे पाडिहारिए, तम्हा दावाए, एवं से नो कप्पति पडिग्गाहित्तए ॥ ३ ॥ सागारियस्स आएसे बाहिं वगडाए भुंजइ णिट्ठिए णिसिट्ठे अपाडिहारिए तम्हा दावाए एवं से कप्पति पडिग्गाहित्तए ॥ ४ ॥ सागारियस्स दासेइ वा पेसेइ वा भयएइ वा भतिणए वा अंतोवगडाए भुंजइ णिट्ठिए णिसिट्ठे पाडिहारिए तम्हा दावाए णो से कप्पति पडिगाहित्तए ॥ ५ ॥ सागारियस्स दासेइ वा पेसेइ वा भयएइ वा अंतोवगडाए भुंजइ णिट्ठिए णिसिट्ठे अप्पाडिहारिए तम्हा दावए से कप्पति पडिग्गाहित्तए ॥ ६ ॥ सागारियस्स दासेइ वा पेसेइ वा भयएइ वा बाहिं वगडाए भुंजति णो णिट्ठिए णिसिट्ठे पाडिहारिए तम्हा दावए णो से कप्पति पडिगाहित्तए ॥ ७ ॥ सागारियस्स दासेइ वा पेसेइ वा भयएइ वा बाहिं-वगडाए वा भुंजइ णिट्ठिए णिसिट्ठे अप्पाडिहारिए तम्हा दावए एवं से कप्पति पडिगाहित्तए ॥ ८ ॥ व्य० ६ उ०।

सागारिको नाम शय्यातरस्तस्यादेश आयासकर आवेश। यदि वा-आदिशति इति आदेश। अथवा-आदेशत इति शब्दसंस्कारस्तस्य व्युत्पत्तिमग्रे वक्ष्याम। स च नायको मित्र प्रभु परतीर्थिको वा द्रष्टव्य। वगडा नाम परिक्षेपस्तस्यान्तर्मध्ये भुङ्क्ते पदार्थान्-ओदनादीन्; किंविशिष्टानित्याह-निष्ठितान्-निष्ठा नीतान् निसृष्टान्-प्रातिहारिकान् सागारिकान्-सागारिकभुक्तशेषान् तस्मात्-परिनिष्ठितादिमध्यात् दापयति न 'से' तस्य कल्पते प्रतिग्रहीतुम् ॥१॥ एवं शेषाण्यपि त्रीणि सूत्राणि भावनीयानि एव चत्वार्यादेशविषयाणि चत्वारि दासादिविषयाणि। इह यत्र यत्र प्रातिहारिक तत्र तत्र सागारिकपिण्ड इति न कल्पते। यत्र यत्र पुनरप्रातिहारिक तत्र तत्र न सागारिकपिण्ड इति कल्पते। प्रथमतृतीयपञ्चमसप्तमसूत्रेषु सागारिकपिण्ड इति कृत्वा न कल्पते। द्वितीयचतुर्थषष्ठाष्टमसूत्रेषु न भवति सागारिकपिण्ड इति कल्पते। केवल भद्रकप्रान्तदोषतो वर्ज्यते इति सूत्राष्टकभावार्थ। व्य०६उ०। ('आएस' शब्दे द्वितीयभागे ४६ पृष्ठे भाष्यकृत्कृता विषमपदव्याख्या गता।)

१-निसट्टे इति पुस्तकान्तरे।

सम्प्रति निर्युक्तिविस्तर:—

आएसदासभइए, अट्ठहिं सुत्तेहिं मग्गणा जत्थ।
सागारियदोसेहिं, पसंगदोसेहि य अगज्झो॥ २ ॥

आदेशा-यथोक्तरूप दास-आजन्मावधि किंकर, भृतक-कियत्काल मूल्येन धृत। आदेशश्च दासश्च भृतकश्च आदेशदासभृतकं तत्र च पिण्डस्याष्टभि सूत्रै मार्गणा कृता। यत्र सागारिकदोषै प्रसङ्गदोषैश्च भद्रकप्रान्तककृतैरग्राह्यो भवति।

साम्प्रतमष्टानामपि सूत्राणां विभागमाह—

तत्थादिमाइँ चउरो, आएसे सुत्तमादिया।
दो चेव पाडिहारी, अपाडिहारी भवे दोन्नि॥ ४ ॥

तत्र तेषामष्टाना सूत्राणा मध्ये आदिमानि चत्वारि सूत्राणि आदेशे प्रागुक्तस्वरूपे आख्यातानि। तत्रापि द्वे सूत्रे प्रातिहारिणि द्रष्टव्ये द्वे च सूत्रे अप्रातिहारिणि। प्रथमतृतीये प्रातिहारिणि, द्वितीयचतुर्थे अप्रातिहारिणि।

अन्तो बहिं वा पि निवेसणस्स,
आवस्सएणं ठविए सगारो।
भत्तं न एयस्स विसेसजुत्तं,
तम्मी दलंते खलु सुत्तबंधो॥ ५ ॥

निवेशनं—गृहं तस्यान्तर्बहिर्वा स्थिते सागारिके—शय्यातरे यदि आदेश एव आदेशक—प्राघूर्णकस्तेन वा सह स्थिते यद्भक्तं विशेषयुक्तं—विशेषतो निष्ठा नीतं तन्न एतस्य प्राघूर्णकस्य संबन्धि, किंतु सागारिकस्य-तनस्तस्मिन् ददति सूत्रसबन्ध—सूत्रोपनिपात। प्रातिहारिकभोजितया तस्मिन् ददति प्रथमे तृतीये च सूत्रे न कल्पते सागारिकपिण्डत्वात्, द्वितीये चतुर्थे चाप्रातिहारिकभोजितया कल्पते। तदायत्वात्केवलं भद्रकप्रान्तदोषप्रसङ्गतो न गृह्यते।

एतदेवाह—

दोण्ह सागायरियस्स, दोसा दोण्हं पसंगतो दोसा।
भद्दगपंतादीया, होन्ति य इमे उ मुणेयव्वा॥ ५ ॥

द्वयो प्रथमतृतीययो सूत्रयो सागारिकस्य दोषान् शय्यातरपिण्डत्वान्न कल्पते इति भाव। द्वयोर्द्वितीयचतुर्थयो प्रसङ्गतो दोषा भद्रकप्रान्तादिका आदिशब्दादतिभद्रकातिप्रान्तादिपरिग्रह, ते च इमे-वक्ष्यमाणा भवन्ति।

तानेवाह—

एएण उवाएणं, गेण्हंति भद्दे उग्गमेगतरं।
पंतो दुदिट्ठधम्मा, विणासगरिहादि य निसिं वा॥ ६ ॥

भद्रकश्चिन्तयति-साधव एतेनोपायेन मदीय पिण्ड गृह्णन्ति। तत एवं चिन्तयित्वा उद्गमदोषाणामेकतरं दोषं कुर्यात्। यस्तु प्रान्तः स पापीयान् दुर्दृष्टधर्म्मा तद्गृह पिण्डग्रहणतो दिवा निशि वा कोपावशतो विनाशं कुर्यात्, गर्हा वा दिवानिशमिति।

सुत्तम्मि कप्पइ त्ति य, वुत्ते किं अत्थतो निसेहेह।
एगयरदोसे कालिय, सुत्तनिवातो इमेहिं तु॥ ७ ॥

सूत्रे कल्पते इत्युक्ते किं यूयमर्थतो निषेधयत ?, सूरिरा-

इ-पकतरदोषात्-भद्रकदोषात्,प्रान्तदोषप्रसङ्गाद्वा इत्यर्थः। यद्येवं सूत्रे कस्मात्कल्पते इत्युक्तमत आह-अधिकृतस्य-कालिकसूत्रस्य निपातः प्रवर्त्तमानमेभिर्वक्ष्यमाणैः कारणैः एतञ्च ज्ञायते व्याख्यानात् कालिकसूत्रं च व्याख्यानप्रधानम्।

तथा चाऽऽह—

जं जह सुत्ते भणियं, तहेव तं जइ विआलणा नत्थि।
किं कालियाणुओगो, दिट्ठो दिट्ठप्पहाणेहिं ॥ ८ ॥

यद्यथा सूत्रे कालिके भणितम्। तद्यदि तथैव प्रतिपत्तव्यं न पुनर्विचारणा काचिदस्ति तर्हि दृष्टिप्रधानैः युगप्रधानैरित्यर्थः, किं कस्मात्कालिकानुयोगो दृष्टः, तस्मादस्ति विचारणा, सा चात्र प्रागुक्तस्वरूपेति।

तत्र यदुक्तोऽस्माभिः कारणैः कालिकसूत्रनिपात इति तानि कारणान्याह—

अदिट्ठस्स उ गहणं, अहवा सागारियं तु वज्जेत्ता।
अन्नो पेच्छउ मा वा,पेच्छंते वावि वच्चंता ॥ ६ ॥

यदि केनापि सागारिकसत्केन तत् दीयमानं न दृश्यते तदस्यादृश्यस्य ग्रहणं भवति। अथवा-सागारिकं-शय्यातरं वर्जयित्वा अन्यो दीयमानं प्रेक्षतां वा मा वा। अथवा-सागारिके प्रेक्षमाणे व्रजन्तो न तिष्ठन्ति, केवलं दानवेलायां तद्दृष्टिः परिह्रियते। तत उक्तं सूत्रे कल्पते इति।

तदेवमादेशविषयं सूत्रचतुष्टयं भावयति—

दासभइगाण दिज्जइ, उक्खित्तं जत्थ भत्तयं नियमं।
तम्मि वि सो चेव गमो, अंतोबाहिं वदे तम्मि ॥ १० ॥

दासभृतिकादिसूत्रचतुष्टयेऽपि प्रथमसूत्रे तृतीयसूत्रे च प्रातिहारिकभजना तस्मिन् दापयति सागारिकपिण्ड इति कृत्वा न कल्पते। यत्र पुनर्द्वितीये चतुर्थे च सूत्रे दासभृतकानामुत्क्षिप्तं हस्तोत्पाटितं नियतं भक्तकं दीयते दत्तं च तैः स्वगृहं नीयते, तस्मिन्नपि दासभृतकादौ निवेशनस्यान्तर्बहिर्वा ददति तत्र सूत्रे स एव गमः—प्रकारः कल्पते वस्तुनः, परं भद्रकप्रान्तादिदोषप्रसङ्गतो न गृह्यते। यदा तु केनापि सागारिकसत्केन दृश्यते, यदि वा सागारिकं मुक्त्वा अन्यः प्रेक्षतां वा तदा गृह्यते। यद्येवं तर्हि 'सागारियस्स आदेसे वा (पेसे वा) दासे वा भयगे वा'' इत्यनेन प्रकारेण चत्वार्येव सूत्राणि कस्मान्न कृतानि।

उच्यन्ते—

निययाऽनियय विसेसो, आएसो होइ दासभयगाणं।
अच्चियमणच्चिए वा, विमिमकरणं पयत्तो वा ॥ ११ ॥

आदेशदासभृतकानां भवति नियतानां नियतकृतो विशेषः। तथा ह्यादेशः कोऽपि कदाचिदागच्छति, ततस्तस्यानियतं दीयते, दासभृतकानां नियतम्। तथा आदेशस्यार्चितं—सत्कारपुरस्कृतं दीयते, दासभृतकानां सत्कारकरणेनाऽनर्चितम्, तथा आदेशस्य भोजनविधिसंपादनाय महाप्रयत्नः सम्भ्रमगर्भो विधीयते, दासभृतकानां तु न तादृशः प्रयत्न इति, दासभृतकसूत्रचतुष्टयादेशसूत्रचतुष्टयाद्विशेषकरणम्—पृथक्करणम्।

सागारिकस्य एकचुल्ल्यां पक्वान्नग्रहणे विधिमाह—

सागारियणायए सिया सागारियस्स एकवगडाए अंतो एगपयाए सारियं चोपजीवइ तम्हा दावए,नो से कप्पइ पडिगाहित्तए ॥६॥ सागारियनायए सिया सागारियस्स एगवगडाए अंतो अभिनिपयाए सागारियं च उवजीवइ तम्हा, दावए णो से कप्पति पडिग्गाहित्तए ॥ १० ॥ सागारियणायए सिया सागारियस्स एगवगडाए बाहिं सागारियस्स एगपयाए सागारियं च उवजीवइ तम्हा दावए णो से कप्पति पडिगाहित्तए ॥ ११ ॥ सागारियणायए सिया सागारियस्स एगवगडाए बाहिं सागारियस्स अभिनिपयाए सागारियं च उवजीवइ, तम्हा दावए णो से कप्पति पडिगाहित्तए ॥१२॥ सागारियस्स णायए सिया सागारियस्स अभिणिव्वगडाए एगदुवाराए एगनिक्खमणपवेसाए अंतो सागारियस्स एगपयाए सागारियं च उवजीवइ, तम्हा दावए, णो से कप्पति पडिगाहित्तए ॥ १३ ॥ सागारियस्स णायए सिया सागारियस्स अभिणिव्वगडाए एगदुवाराए एगणिक्खमणपवेसाए सागारियस्स अभिनिपयाए सागारियं च उवजीवइ, तम्हा दावए णो से कप्पति पडिगाहित्तए ॥ १४ ॥ सागारियस्स णायए सिया सागारियस्स अभिणिव्वगडाए एगदुवाराए एगनिक्खमणपवेसाए बाहिं एगपयाए सारियं चोवजीवइ, तम्हा दावए नो से कप्पइ पडिगाहित्तए ॥ १५ ॥ सागारियस्स णायए सिया सागारियस्स अभिनिव्वगडाए एगदुवाराए एगनिक्खमणपवेसाए बाहिं अभिणिप्पयाए सागारियं च उवजीवइ, तम्हा दावए, नो से कप्पति पडिगाहित्तए ॥ १६ ॥

'सागारियस्से' त्यादि अस्य संवन्धप्रतिपादनार्थमाह—

नीसट्ठ अपडिहारी, समणुण्णाओ त्ति मा अइपसंगा।
एगपए परपिंडं, गेण्हे परसुत्तसंबंधो ॥ १२ ॥

निसृष्टो-दत्तोऽप्रातिहारिपिण्डः, समनुज्ञात इति विचिन्त्य मा अतिप्रसङ्गत एकस्या चुल्ल्यां शय्यातराद्यतिरिक्तस्यापिण्डं गृह्णीयादिति परसूत्रस्य-परविषयसूत्राष्टकस्य संवन्धः। अनेन सबन्धेनायातस्यास्य (६) व्याख्या—सागारिकज्ञातकः—सागारिकस्वजनः स्यात्, सागारिकस्य 'एगवगडाए' एकस्मिन् गृहे सागारिकस्यान्तरे तस्या प्रजायां-चुल्ल्यां सागारिकं चोपजीवति तस्माद्दापयेत् न 'से' तस्य साधोः कल्पते प्रतिग्राहयितुं सागारिकासत्कचुल्ल्याद्वारलवणाद्युपजीवनतस्तस्य शय्यातरपिण्डस्य शय्यातरसत्कत्वात् ॥ ६ ॥ एवं शेषाण्यपि सप्त सूत्राणि भावनीयानि।

पाठः पुनस्तेषामेवम्—

"सागारियनायए सिया सागारियस्स एगवगडाए अन्तो एगपयाए सागारियं चावजीवइ,तम्हा दावए, ना से कप्पइ प-

१-२८ सूत्रसप्तकं मूले उक्तमपि टीकाकारानुरोधात्पुनरुच्यते।

डिगाहित्तए ९ । सागारियनायए सिया सारियस्स एगवगडाए अन्तो अभिनिपयाए सारियं चोवजीवइ, तम्हा दावए, नो से कप्पइ पडिगाहित्तए १० । सागारियनायए सिया सारियस्स एगवगडाए बाहिं एगपयाए सारियं चोवजीवइ, तम्हा दावए, नो से कप्पइ पडिगाहित्तए ११ । सारियनायए सिया सारियस्स एगवगडाए बाहिं अभिनिपयाए सारियं चोवजीवइ, तम्हा दावए, नो से कप्पइ पडिगाहित्तए १२ । सारियनायए सिया सारियस्स अभिनिव्वगडाए एगदुवाराए एगनिक्खमणपवेसाए अन्तो एगपयाए सारियं चोवजीवइ, तम्हा दावए, नो से कप्पइ पडिगाहित्तए १३ । सारियनायए सिया सारियस्स अभिनिव्वगडाए एगदुवाराए एगनिक्खमणपवेसाए अभिनिपयाए सारियं चोवजीवइ, तम्हा दावए, नो से कप्पइ पडिगाहित्तए १४ । सारियनायए सिया सारियस्स अभिनिव्वगडाए एगदुवाराए एगनिक्खमणपवेसाए बाहिं एगपयाए सारियं चोवजीवइ, तम्हा दावए, नो से कप्पइ पडिगाहित्तए १५ । सारियनायए सिया सारियस्स अभिनिव्वगडाए एगदुवाराए एगनिक्खमणपवेसाए बाहिं अभिनिपयाए सारियं चोवजीवइ, तम्हा दावए, नो से कप्पइ पडिगाहित्तए १६ । अत्र अभिनिव्वगडाए पृथग्गृहे एकद्वारे एकनिष्क्रमणप्रवेशे एकनिवेशनान्तर्वर्तित्वात्तथा । 'अभिनिपयाए' इति अभि—प्रत्येक नियता—विविक्ता प्रजा—चुल्ली अभिनिप्रजा तस्यां शेषं सुगमम् ।

संप्रति भाष्यविस्तरः—

पुरपच्छासंथुतो वा, वि नायगो उभयसंथुतो वावि ।
एगवगडाएँ घरं तु, पयाउ चुल्ली समक्खाया ॥ १४ ॥

ज्ञातको नाम-पूर्वसंस्तुतः, यदि वा-पश्चात्संस्तुतः । अथवा-उभयसंस्तुतः स्वजनपूर्वसंस्तुतः, स्वजनपूर्वसंस्तुतो नाम-मातापितृपक्षवर्ती पश्चात्संस्तुतो भार्यापक्षगत उभयसंस्तुतः—तथाविधेनात्रासंबन्धविशेषभावतः उभयपक्षवर्ती एकवगडा नाम-एकं गृहं प्रजा तु-चुल्ली समाख्याता प्रकर्षेण जायते पाकनिष्पत्तिरस्यामिति प्रजेति व्युत्पत्तेः ।

एगपए अभिनिपए,अट्ठहिँ सुत्तेहिँ मग्गणा जत्थ ।
सागारियदोसेहिं, पसंगदोसेहि य अगहणं ॥१५॥

एकस्यां प्रजायामभिनिप्रजायां प्रत्येकं विविक्तायां प्रजायामष्टभिः सूत्रैः पिण्डस्य मार्गणा यत्र येषु सूत्रेषु प्रथमतृतीयपञ्चमसप्तमरूपेषु सागारिकदोषैर्द्वितीयचतुर्थषष्ठाष्टमरूपेषु अथ प्रसङ्गदोषैर्भक्तपानमग्राह्यम् ।

आइल्ला चउरो सुत्ता, चउरसालगविक्कतो ।
पिहुगेरेसुं चत्तारि, सुत्ता एक्कनिवेसणे ॥ १६ ॥

आदिमानि चत्वारि सूत्राणि एकगृहविषयाणि चतुःशाल्याद्यपेक्षानि चतुःशालादाविव द्वयोः कुटुम्बयोरवस्थानघटनात्, अन्तिमानि चत्वारि सूत्राणि पृथग्गृहेषु तान्यप्येकस्मिन् निवेशने एकस्मिन्परिक्षेपे ।

सागारियस्स दोसा, चउसु चउसुं पसंगदोसा य ।
भद्दगपंतादीया, चउसुं पि कमेण नायव्वा ॥ १७ ॥

चतुर्षु प्रथमतृतीयपञ्चमसप्तमरूपेषु सूत्रेषु सागारिकस्य दोषाः शय्यातरपिण्डग्रहणे ते दोषास्तत्र ज्ञातव्या इत्यर्थः । चतुर्षु द्वितीयचतुर्थषष्ठाष्टमादिरूपेषु सूत्रेषु प्रसङ्गदोषाश्चतुर्ष्वपि सूत्रेषु यथोक्तक्रमेण ज्ञातव्या ,भद्रकप्रान्तादिका -भद्रकप्रान्तादिकृता आदिशब्दस्तरतमविशेषपरिग्राहकः ।

अथ कथं प्रथमतृतीयादिषु चतुर्षु सूत्रेषु शय्यातरदोषाः कथं वा अत्र प्रसङ्गदोषास्तत्र आह—

दारुगलोणे गोरस, सूवोदगअंबिले य सागफले ।
उवजीवइ जं सागा-रि एगपएँ वा वि अभिनियए॥१८॥

दारु—काष्ठं लवणं गोरसं च प्रतीतं सूपोदकं मुद्गाद्युदकमाम्लशाकफलानि च प्रतीतानि च , यस्मात् सागारियमिति षष्ठ्यर्थे द्वितीया प्राकृतत्वात्, सागारिकस्य सत्कां अनेकस्यां प्रजायां प्रत्येकं विविक्तायां वा प्रजायामुपजीवति तेन कारणेन सागारिकदोषाश्च प्रसजन्ति । एतेन 'सागारियं च उवजीवति' इति व्याख्यानम् ।

कस्मादेका चुल्ली प्रतिपद्यन्ते तत आह—

भीयाई करभयस्स,अंतो बाहिं च होज एगपया ।
अभिनियए वि न कप्पइ,पक्खेवगमादिणो दोसा ॥१९॥

भीतानि चुल्लीकरणभयात् गाथायां षष्ठी पञ्चम्यर्थे संबन्धविवक्षायां वा षष्ठी यस्माच्चुल्लीकरणभयात्तानि तेन कारणेनान्तर्बहिर्वा तेषामेका प्रजा-चुल्ली भवति । अभिनिप्रजायां तु सत्यां यद्यपि सागारिकसत्कमुपजीव्यते तथापि निर्भिन्नचुल्लीकतया यत् गृह्णन्ते तत्तेषामेव भवतीति सागारिकदोषा न भवन्ति । तथा प्रसङ्गदोषतो न कल्पते । तथा च आह-अभिनिप्रजायामपि न कल्पते, यतो भद्रकप्रान्तकृता प्रक्षेपादयो दोषाः भद्रकः प्रक्षेपादीन् दोषान् कारयेत्, प्रान्तो-विनाशप्रभृतीन् दोषान् कारयेत् ।

तानेवाह—

जं देसी तं देमो, एए घेत्तुं न इच्छते अम्हं ।
अहवा वि अकुलजो त्ति य, गेण्हंति अदिट्ठमादीयं।२०।

भद्रका ब्रुवते-त्वं साधुभ्यः प्रभूतं देहि यद्ददासि तद्वयं तथ दास्यामः।यत एतेऽस्माकं गृहं नेच्छन्ति ग्रहीतुम् ,गाथायामेकवचनं प्राकृतत्वात् । एवं भद्रककृता प्रक्षेपादयो दोषाः । अथवा-प्रान्तो ब्रूते-अकुलजा एते इति कृत्वा अदृष्टादिकं गृह्णन्ति एवं गर्हां करोति प्रान्तो विनाशमपि ।

अत्रैवापवादमुपदर्शयति—

बिइयपदे ऽदिट्ठगहणं, असती तं वज्जिएण दिट्ठस्स ।
दिट्ठे वि पत्थियाणं, गहणं अन्तो व बाहिं वा ॥२१॥

द्वितीयपदेन-अपवादपदेन यदि न केनापि दीयमानं दृष्टं तदाऽस्य दृष्टस्य ग्रहणम् । अथ सर्वथा केनाप्यदृष्टं न प्राप्यते तदा तदभावे तद्वर्जितेन दृष्टस्य ग्रहणम् । तथा प्रस्थितानां गन्तुं चलितानां सागारिकेण दृष्टेऽपि दर्शनेऽपि अन्तर्बहिर्वा ग्रहणं भवति ।

सागारिकस्य चक्रिकादिशालाविषयमाह—

सागारियस्स चक्कियासाला साहारणवक्कयपउत्ता, तम्हा दावए, णो से कप्पति पडिगाहित्तए ॥१७॥ सागारियस्स चक्कियासाला णिस्साहारणवक्कयपउत्ता दावए

१-पुस्तकान्तरे सागा.रिए इति पाठः ।

एवं से कप्पति पडिगाहित्तए ॥१८॥सागारियस्स गोलियसाला साहारणवक्कयपउत्ता तम्हा दावए, नो से कप्पति पडिगाहित्तए॥१९॥सागारियस्स गोलियसाला निस्साहारणवक्कयपउत्ता तम्हा दावए, एवं से कप्पति पडिगाहित्तए॥२०॥सागारियस्स बोधियसाला साहारणवक्कयपउत्ता तम्हा दावए,नो से कप्पति पडिगाहित्तए॥२१॥सागारियस्स बोधियसाला निस्साहारणवक्कयपउत्ता तम्हा दावए,एवं से कप्पइ पडिगाहित्तए ॥ २२ ॥ सागारियस्स दोसियसाला साहारणवक्कयपउत्ता तम्हा दावए, नो से कप्पइ पडिगाहित्तए॥२३॥सागारियस्स दोसियसाला निस्साहारणवक्कयपउत्ता तम्हा दावए,एवं से कप्पइ पडिगाहित्तए॥२४॥ सागारियस्स सोत्तियसाला साहारणवक्कयपउत्ता तम्हा दावए, नो से कप्पइ पडिगाहित्तए ॥ २५ ॥ सागारियस्स सोत्तियसाला निस्साहारणवक्कयपउत्ता तम्हा दावए, एवं से कप्पइ पडिगाहित्तए ॥२६॥ सागारियस्स बोडियसाला साहारणवक्कयपउत्ता तम्हा दावए. नो से कप्पइ पडिगाहित्तए ॥ २७ ॥ सागारियस्स बोडियसाला निस्साहारणवक्कयपउत्ता तम्हा दावए,एवं से कप्पइ पडिगाहित्तए॥२८॥ सागारियस्स गंधियसाला साहारणवक्कयपउत्ता तम्हा दावए,नो से कप्पइ पडिगाहित्तए॥२९॥सागारियस्स गंधियसाला निस्साहारणवक्कयपउत्ता तम्हा दावए, एवं से कप्पइ पडिगाहित्तए ॥ ३० ॥ सागारियस्स सोंडियसाला निस्साहारणवक्कयपउत्ता तम्हा दावए, नो से कप्पइ पडिगाहित्तए ॥३१॥ सागारियस्स सोंडियसाला निस्साहारणवक्कयपउत्ता तम्हा दावए, एवं से कप्पति पडिगाहित्तए॥६२॥सागारियस्स चक्कियसाला साहारणवधुयपउत्ता तम्हा दावए,नो से कप्पइ पडिगाहित्तए॥३३॥सागारियस्स चक्कियसाला निस्साहारणवधुयपउत्ता तम्हा दावए, एवं से कप्पति पडिगाहित्तए ॥ ३४ ॥

अस्य सूत्रस्य संबन्धमाह—

साधारणमेगपय—त्ति किच तहियं निवारियं गहणं ।
इदमवि समासं चिय,साहारणसालसुयजोगो ॥ २२ ॥

अनन्तरसूत्रेष्वेकस्यां प्रजाया साधारणमिति कृत्वा तच्च ग्रहणं निवारितम् . इदमपि च वक्ष्यमाणं साधारणशालासु सामान्यशालासु सामान्यं—साधारणमतो निषिध्यते अनेन संबन्धेनायातस्यास्य (सू०-१७)व्याख्या-सागारिकस्य शय्यातरस्य चाक्रिकाशाला—तैलविक्रयशाला इत्यर्थः , सागारिकेनात्मना सह साधारणा वक्रयप्रयुक्ता यत्तस्या शालाया प्रक्षिप्यते , यच्च तस्य लाभात्सागारिकस्य साधारण इत्यर्थः । तस्मात्—शालाया मध्यात् यत्साधूचितं तैलादिरमन्यो दापयति तत् 'से' तस्य साधोर्न कल्पते इति प्रथमसूत्रार्थः ॥१७॥ तथा सागारिकस्य चक्रिकाशाला—तैलयन्त्रशाला सा निस्साधारणवक्रयप्रयुक्ता न किमपि सागारिकसाधारणं तत्र भाण्डं प्रक्षिप्तमस्तीति भाव. , तस्मात् निस्साधारणवक्रयशालामध्यात् दापयति एवं 'से' तस्य साधो कल्पते प्रतिग्रहीतुम् , एष द्वितीयसूत्रार्थ. ॥१८॥एवं कोलिकशाला बोधिकशाला-दौषिकशाला-सौत्रिकशालागन्धिकशालासूत्राण्यपि भावनीयानि । ( व्य० । )

संप्रति चक्रिकादिशब्दव्याख्यानार्थमाह—

तिल्लियगोलियलोणिय,दोसिय सुत्तियबोहिय कप्पासे ।
गंधिय सोंडियसाला, जा अण्णा एवमादीओ ॥ २३ ॥

चक्रिका नाम—तैलिकास्तैलविक्रयकारिण., एवं गोलिका लावणिका दौषिका. सौत्रिका. बोधिका कार्प्पासा ।गन्धिकाशाला शौण्डिकशाला अन्या अपि च या एवमादिका गन्धप्रधाना सा गन्धिकशालेत्युच्यते ।

ववहारे उद्देस—म्मि नवमए जत्तिया भवे साला ।
तासि परिपिंडियाणं, साहारणवज्जिए गहणं ॥ २४ ॥

व्यवहारे नवमे उद्देशके यावत्य. शाला.-शालासूत्राणि भवन्ति-विद्यन्ते तासां सर्वासा परिपिण्डितानामयं तात्पर्यार्थ., यत्र साधारणमविभक्तं क्रयाणकं तत्र प्रतिषेध. साधारणवर्जिते तु ग्रहणम् ।

संप्रति साधारणशब्दशालाशब्दव्याख्यानार्थमाह—

साहारणसामन्नं, अविभत्तमछिन्न संघडेगट्ठं ।
साल त्ति आवणो त्ति य,पणियगिहं चेव एगट्ठं ॥२५॥

साधारणं-सामान्यम्-अविभक्तमच्छिन्नं संस्कृतमिति एकार्थम् , एते सर्वेऽपि शब्दा एकार्थिका इत्यर्थ , शाला इति वा आपण इति वा पणितगृहमिति वा एकार्थ. ।

साहारणा उ साला, दव्वे मीसम्मि आवणे भंडे ।
साहारणओ पत्ते,छिन्नं वोच्छं अछिन्नं वा ॥२३॥

साधारणा तु शाला भण्यते, मिश्रे द्रव्ये सति । किमुक्तं भवति—अन्यस्यापि तिला एकत्र मिश्रयित्वा पीलयन्त पीलयित्वा च एकत्र विक्रीडन्ति । अथवा—साधारणेनावक्रयेण युक्ते आपणे भाण्डं वा क्रयाणके साधारणशाला भवति । तथा छिन्नमछिन्नं वा वक्ष्ये एष गाथासंक्षेपार्थ ।

सांप्रतमेनामेव विवरीषु प्रथमतो द्रव्यमिश्रे इति व्याख्यानयति—

पीलंति एकतो वा, विक्कंति य एकतो करिय तेल्लं ।
अहवा वि वक्कएणं, साहारणवक्कयं जाण ॥ २७ ॥

अन्यस्यान्यस्य तिलान् एकत्र समीलयित्वा पीलयन्ति ततो विक्रीणन्ति । अथवा-पृथक् पृथक् तिलान् पीलयित्वा—तैलं कृत्वा एकत्र विक्रीणन्ति , तदेवं द्रव्ये मिश्रे साधारणवक्रयप्रयुक्ता शाला व्याख्याता। अथवा-अन्यथा साधारणवक्रयप्रयुक्तेति व्याख्यानयति। अथवा—वक्रयेण-भाटकेन या साधारणशाला प्रयुक्ता-व्यापरिता तत्र तल्लभ्यते भाण्डक-

तत् शय्यातरस्यान्येषां च साधारणमिति साधारणव-क्रयप्रयुक्तं जानीहि।

अत्र यथा कल्पते यथा वा न कल्पते तथा प्रतिपादयति—

पीलिय वेरेडियम्मि, पुव्वगमेणं तु गहणमदिट्ठे।
एगत्थ विक्कयम्मी, अमेलिया दिट्ठमन्नत्थ ॥ २८ ॥

अन्यस्यान्यस्य तिलानेकत्र मीलयित्वा पीलयित्वा च तैले विरेचिते-विभक्तीकृते पूर्वगमेन-पूर्वप्रकारेण शय्यातरेणादृष्टे ग्रहणं भवति, दृष्टे तु न कल्पते। मा प्रक्षेपकं कुर्यादिति हेतो, अन्यत्र ज्ञातं तु कल्पत एव, तथा पृथक् तिलान् पीलयित्वा च एकत्र विक्रीणन्ति तत एकत्र विक्रये यावन्मूल्यं मिलितम्-अविभक्तमित्यर्थस्तावन्न कल्पते इत्यर्थः। अमीलिते मूल्यकरणेन विभक्तीकृते सागारिकेण अदृष्टे स तु कल्पते। दृष्टे प्रक्षेपदोषसंभवात्। अन्यत्र पुनः स्वयोगेन नीतं निःशङ्कं कल्पते।

साम्प्रतमापणं साधारणवक्रयप्रयुक्तं व्याख्यानयति—

जो उ लाभगभागेण, पउत्तो होति आवणो।
सो उ साहारणो होइ,तत्थ घेत्तुं न कप्पइ॥२६॥

यस्तु सागारिकेण लाभभागेन त्रिभागादिना आपण प्रयुक्तो भवति साधारणो भवत्यापणस्ततस्तत्र ग्रहीतु न कल्पते।

साम्प्रतं भाण्डं साधारणं वक्रयप्रयुक्तं व्याख्यानयति—

छेदे वा लाभे वा, सागारितो जत्थ होइ आभागी।
तं तु साधारणं जाण, सेसमसाहारणं होइ ॥ ३० ॥

यत्र भाण्डच्छेदे लाभे वा सागारिकोऽर्द्धेन त्रि—भागादिना वा आभागी भवति। तत् भाण्डं साधारण—साधारणवक्रयप्रयुक्तं जानीयात्, एतद्व्य—तिरिक्तं शेषं भाण्डमसाधारणं भवति। साधारणे वा भाण्डे यावत् तं न विभज्यते तावत्सागारिकपिण्ड, विभक्ते तु कल्पते। तत्रापि प्रक्षेपदोषप्रसङ्गतो दृष्टे न कल्पते, अदृष्टे तु कल्पते।यदा तु सा शाला भाटकप्रदानेन गृहीता कालेन मया तवैतावत् दातव्य नच भाण्डं शय्यातरेण सहच्छन्दे लाभे वा त्रिभागादिना साधारणम्। तत्राप्यसाधारणे अदृष्टे कल्पते, दृष्टे तु प्रक्षेपदोषप्रसङ्गतो नेति।

सम्प्रति 'छिन्न वोच्छं अछिन्नं वे' ति व्याख्यानार्थमाह—

सचित्ते अचित्ते, मीसेण य जा पउंजए साला।
तं दव्वमन्नदव्वे-ण होइ साहारणं तं तु ॥ ३१ ॥

सचित्तेन अचित्तेन गाथायां सप्तमी तृतीयार्थे प्राकृतत्वेन मिश्रेण च प्रयुज्यते शाला। किं विशिष्टेन सचित्तादिनेत्यत आह-द्रव्येण, तावद् द्रव्यं नाम-यत् शालाया प्रक्षिप्तमस्ति। अन्यत् द्रव्य-तद्व्यतिरिक्तं द्रव्यम्। इयमत्र भावना—यत् शालाया प्रक्षिप्त सचित्त मिश्र वा कर्पासादि तस्य त्रिभागादि दातव्यम्। यदि वा—यन्निष्पद्यते कर्पासादिभ्यो वस्त्रादिकमन्यत्तस्य त्रिभागादि दातव्यमिति तद् भवति साधारणमच्छिन्न द्रव्यम्, तन्न कल्पते। सम्प्रति छिन्नं द्रव्यं तत् कल्पते।

सम्प्रति छिन्नमाह—

तद्व्वमन्नदव्वे-ण वा वि छिन्ने वि गहणमदिट्ठो।
मा खलु पसंगदोसा, संछोभभयं व मुंचेज्जा ॥ ३२ ॥

तद् द्रव्यं यत् शालायां प्रक्षिप्तम्, अन्यद्रव्य-तद्व्यतिरिक्तम् एतावता कालेन द्रव्यं मयैतावद्दातव्यमित्येवं तद् द्रव्येण अन्यद्रव्येण छिन्नेऽपि-विभक्तीकृतेऽपि ग्रहणमदृष्टे शय्यातरेण कल्पते, न तु दृष्टे। कुत इत्याह-मा खलु प्रसङ्गदोषाः स्युरिति कृत्वा। एतदेव संछोभो नाम-प्रक्षेपस्तं कुर्यात्, भृतिं वा मूल्यं मुञ्चेत् यावदुपयुज्यते साधूनां तावद् दत्त्व द्रव्यं भृतिमध्यात् पातनीयमिति।

जं पि य न एइ गहणं, फलकप्पासो सुरादि वा लोणं।
फासं पि उ सामन्नं, न कप्पए जं तहिं पडियं ॥ ३३ ॥

यदपि चाप्रासुकतया ग्रहणं नागच्छति,तद्यथा-फलमाम्रादि। कर्पास सुरादिरादिशब्दात्सरजस्कादिग्रहणं लवणम्, एतान्यप्राशुकान्यपि कदाचित्कारणे गृह्यन्ते। तत एवमुक्तं प्राशुकमपि तु वस्त्रादि यत्तत्र शालायां शय्यातरेण सह साधारणं तत् तु कल्पते।

तदेव दौषिकशालामधिकृत्य दर्शयति—

अंडजबोंडजवालज, वागज तह कीडजाण वत्थाणं।
नाणादिसागयाणं, साधारणवज्जिते गहणं ॥ ३४ ॥

अण्डजानां-अण्डजसूत्रमयाणां बोण्डजाना-कर्पासिकसूत्रमयाणां वालजाना—कम्बलानां वल्कलजाना—शणत्वग्मयानां कीटजानां वस्त्राणां नानादेशागताना प्रयोजने समापतिते साधारणवर्जिते सागारिकेण सह साधारणरहिते आपणे ग्रहणं भवति दोषाभावात्। दृष्टादृष्टविभाषा प्राग्वत्। (व्य०)

सागारिकस्यौषधय—

सागारियस्स ओसहीओ संथडाओ तम्हा दावए, णो से कप्पति पडिगाहित्तए ॥ २७ ॥ सागारियस्स ओसहीओ असंथडाओ तम्हा दावए, एव से कप्पति पडिगाहित्तए ॥ २८ ॥ ( व्य० )

सागारिकस्य-शय्यातरस्य औषधयो गोरसवल्ला संस्तृता साधारणास्तस्य तन्मध्याद्दापयति सूपकारो नो कल्पते 'से' तस्य साधोः प्रतिग्रहीतुम् ॥२७॥ तथा सागारिकस्यौषधयः असंस्तृता असाधारणास्तस्माद्दापयति एवं 'से' तस्य कल्पते प्रतिग्रहीतुमेवमाम्रफलसूत्रद्वयमपि भावनीयम्।

संप्रति भाष्यप्रपञ्चस्तत्रौषधिप्रतिपादनार्थमाह—

गोरसगुलतेल्लघता-दिओसहीतो व होंति जा अण्णा।
सूयस्स कट्ठलेण तु, ता संथडऽसंथडा हुंति ॥ ३६ ॥

सूतस्य काष्ठलयेन इन्धनगृहे ये गोरसगुडतैलघृताद्या औषधयोऽन्या वा या सन्ति ता द्विविधा सागारिकेण सह संस्तृता साधारणा असंस्तृता वा असाधारणा वा भवन्ति।

कथं पुनः साधारणास्तत आह—

धुव आवाह विवाहे, जण्णे मड्ड य करडुगे चेव।
विविहाओ ओसहीओ, उवणीता भत्तमूलम्म ॥ ३७ ॥

जं दड्ढविदड्ढं वा, जो वा तह भत्तसेस उद्धारो ।
लभइ जइ सूवकारो, अविरिक्कं तं पि हु न लद्धा ॥३८॥

ध्रुव-सर्वकालमुपस्करं करोति सूपकारो भोजिकानाम्, आवाहो दारकपत्तिणा वीवाहो वधूपत्तिणां यज्ञो नाग—यज्ञादि। श्राद्ध-पितृजानिजनप्रतीत करडुक-मृतकभक्तम् इन्द्रमहादिरेतेपु सूपकार आनीयते। तस्य भक्तमनस्य सूपकारस्य वि विधा औपधय पूर्वभणिता उपनीता-ढौकितास्तत्र यत् दग्धमीषत् दग्धं विदग्ध वा-प्रभूत दग्ध यो वा तत्र भक्तशेषस्योद्धारो भक्तशेषं यत्तत्रोद्धरितमित्यर्थ, तद्यदि लभते सूपकारस्ततस्तत्कल्पते। अविरिक्तम्-अविभक्तीकृतं तदपि दग्धविदग्धादि हु-निश्चितं ग्रहीतुं दातु वा न लभते ततस्तद् न कल्पते

एतदेवाह—

अविरिक्को खलु पिंडो, सो चेव विरेइतो अपिंडो उ ।
भद्दगपंतादीया, धुवा उ दोसा विरिक्के वि ॥ ३९ ॥

अविरिक्त-अविभक्तीकृत खलु भवति पिण्ड सागारिकपिण्ड, स चैव विरेचित -विभक्तीकृत भवति अपिण्ड -सागारिकपिण्डो न भवति, इति भाव । यद्येव तर्हि स ग्राह्य, तत आह-विरिक्तेऽपि, ध्रुवा भद्रकप्रान्तादिका दोपास्तस्मात्तत्रापि सागारिकसत्का असागारिकेण सह संस्तृतास्ता खलु न कल्पन्ते, (२७सू० व्या०)। यास्त्वसंस्तृता सूतस्य सूपकारस्य संबन्धितया जातास्ता कल्पन्ते। तदवमोपधिसूत्रद्वयं भावितम्।

अधुना आम्रफलसूत्रद्वयं भावयति—

सागारियस्स अंबफला संथडाओ तम्हा दावए, णो से कप्पति पडिगाहित्तए ॥३१॥ सागारियस्स अंबफला असंथडाओ तम्हा दावए, एवं से कप्पति पडिगाहित्तए ॥३२॥

वल्ली वा रुक्खो वा, सागारियसंतिओ भइज्ज परं ।
तेसिं परिभोगकाले, समणाण तहिं कहं भणियं ॥४०॥

वल्ली वा सागारिकसत्को वृक्षो वा सागारिकसंबन्धी परस्यावग्रहं भजेत। तत्र तया वल्लीवृक्षाणा फलपरिभोगकाले श्रमणाना कथं भणितम्? किं कल्पते किं वा न कल्पते? इति एप गाथासंक्षेपार्थ ।

साम्प्रतमेनामेव व्याचिख्यासु प्रथमतो वृक्षवल्लीव्याख्यानमाह—

फणमंबचिंचतलना-लिकेरमादी हवंति फलरुक्खा ।
लोममिय तउसमुद्दिय, तंबोलादी य वल्लीतो ॥४१॥

पनस आम्रश्चिञ्चा—चिञ्चनिका 'ऑविली' इत्यर्थ ततस्तालो नालिकेरी इत्येवमादिका भवन्ति फलवृक्षा । लोमसिका त्रपुपिका ताम्बूलिका इत्येवमादिका वल्ल्य । तदेवं वृक्षा वल्ल्यश्चोक्ता ।

संप्रति परिमितस्य व्याख्यानमाह—

परोग्गह तु मालेणं, अक्कमेज्ज महीरुहो ।
छिंदामि त्ति य तेणुत्ते, ववहारो तहिं भवे ॥४२॥

महीरुहो—वृक्ष आम्रादिसागारिकस्य शालया—शाखया, गाथायां पुंस्त्व प्राकृतत्वात्। विवर्द्धमान परगृहमाक्रमेत्, तत्र परोब्रूते—इयं शाखा मदीयं गृहमाक्रामति ततश्छिनद्मि एवं तेनोक्ते व्यवहारस्तत्र भवेत्।

कथमित्याह—

सागारियस्स कहियं, केवतिओ उग्गहो मुणेयव्वो ।
ववहारो तह छिन्नो, पासायगडे विती तिरिए ॥ ४३ ॥

सागारिकस्य-शय्यातरस्य कियान् अवग्रहो ज्ञातव्य इति व्यवहारकारिभिश्चिन्तितम्, ततः शास्त्रं परिभाव्य व्यवहारे ऊर्ध्वाधस्तिर्यग्भेदतश्छिन्न., तत ऊर्ध्वतोऽवग्रहस्य परिमाणे प्रासादो यावत्प्रमाणमूर्ध्वं प्रासादस्योक्तं तावदूर्ध्वमवग्रह इत्यर्थ. अधोऽवग्रहप्रमाण पालनीयं प्रमाणमित्यर्थ., तिर्यग् वृत्ति.।

एतदेवाह—

उड्ढं अहो य तिरियं, परिमाणं तु वत्थूणं ।
खायमूसिय मीसं वा, तं वत्थु तिविहोदियं ॥ ४४ ॥

ऊर्ध्वमधस्तिर्यक्परिमाणं वास्तूनां भवति, तत्र वास्तु त्रिधोदितम्। तद्यथा-खातमुच्छ्रितं मिश्रं च—खातोच्छ्रितम्। (व्य०) (अत्रत्या व्याख्या 'पासाय' शब्दे पञ्चमभागे गता।)

एवं छिन्ने उ ववहारे, परो भणइ सारियं ।
कप्पेमि हंते सालाई, ततो भणइ सारिते ॥ ४७ ॥

एवम्—उक्तेन प्रकारेण व्यवहारे छिन्ने पर. सागारिक भणति-कल्पयामि छिनद्मि अहं तवाम्रादिवृक्षसत्क शाखादि आदिशब्दात्—प्रशाखापल्लवादिपरिग्रह ।

तत आह सागारिक:—

मा मे कप्पेहि सालाई, दाहं ते फलनिक्कयं ।
तत्थ छिन्ने अच्छिन्ने वा, सुत्तसाफल्लमाहितं ॥ ४८ ॥

ममाम्रवृक्षस्य शाखादि मा कल्पयन ते फलानि निष्क्रयं दास्यामि। तत्र एतावन्ति फलानि दातव्यानीति छिन्न सामान्यत. फलानि दातव्यानि इत्यछिन्नं तत्र छिन्ने अच्छिन्ने वा यथायोगं सूत्रद्वयस्य साफल्यमाख्यातम्।

तत्र पर आह—

साहूणं व न कप्पइ, सुत्तमाहु निरत्थयं ।
गेलन्नाणओमेसु, गहणं तेसि देसियं ॥ ४९ ॥

केचिदाहु सूत्रद्वयमिदं निरर्थकं यत साधूनामाम्राणि सचित्तत्वान्न कल्पन्ते। आचार्य आह-तेषामाम्रफलानां ग्लानत्वे अध्वनि शेषभिक्षाया अलाभे अवमौदार्ये च ग्रहणं देशितं-कथित महर्षिभिरतो न निरर्थकमिति ।

अविरिक्कसारिपिंडो, विरिक्का वि य सारिदिट्ठ न वि कप्पे।
अदिट्ठसारिएणं, कप्पंति य ताहे घेत्तुं जे ॥ ५० ॥

अविरिक्तान्यपि च सागारिकेण दृष्टानि न वैकल्पन्ते ततो दृष्टानि सागारिकेण ग्रहीतु कल्पन्ते 'जे' इति पादपूरणे।

उपसंहारमाह—

एवं अत्तट्ठाए; सयं परूढाण वा वि भणियमिणं ।
इणमण्णो आरंभो; समणट्ठा वा वि एतम्मि ॥ ५१ ॥

एवमुक्तप्रकारेणात्मार्थमारोपितानां स्वयं वा प्ररूढानामिदमनन्तरोक्तं भणितम्। व्य० ६ उ०। (अत्रत्या विशेपवक्तव्यता 'आधाकम्म' शब्दे द्वितीयभागे ७४० पृष्ठे गता।)

१-वर्धितः।

सागारियागार-सागारिकाकार-पुं० । सहागारेण-गृहेण वर्त्तत इति सागार स एव सागारिको गृहस्थ । स एवाकार प्रत्याख्यानहेतु सागारिकाकार । सागारिक वर्जयित्वेत्यर्थे, पञ्चा० ५ विव० । ' सागारियागारेण ' सहागारेण वर्तत इति सागार , स एव सागारिको गृहस्थ , स एवाकार प्रत्याख्यानापवाद सागारिकाकारस्तस्मादन्यत्र, गृहस्थसमक्ष हि साधूना भोक्तु न कल्पते, प्रवचनोपघातसम्भवात्। यत उक्तम्—" छक्कायदयावतो. वि सजओ दुल्लहं कुणइ वोहिं । आहारे नीहार, दुग(गु)छिए पिंडगहणे य ॥ १ ॥ " ततश्च भुञ्जानस्य यदि सागारिक कश्चिदायाति, स च यदि चलस्तदा क्षण प्रतीक्षते, अथ स्थिरस्तदा स्वाध्यायादिव्याघातो मा भूदिति तत स्थानादन्यत्रोपविश्य भुञ्जानस्यापि नैकाशनभङ्ग । गृहस्थस्यापि यत दृष्टं भोजनं न जीर्यति तत्प्रमुखः सागारिको ज्ञातव्य । प्रव० ४ द्वार । ध० ।

सागारोवओग-साकारोपयोग-पुं० । आकारसहिते, प्रज्ञा० । २८ पद । (व्याख्या ' उवओग ' शब्दे २ भागे ८६० पृष्ठे गता ।)

साडग-शाटक-न० । परिधानवस्त्रे, ज्ञा० १ श्रु० १६ अ० । वस्त्रमात्रे, विपा० १ श्रु० ७ अ० । भ० । ज्ञा० ।

साडण- सातन-न० । अङ्गोपाङ्गानां विशरणे, सूत्र० १ श्रु० ५ अ० १ उ० ।

साडणा-साटना -स्त्री० । उत्सर्गे त्याजने, आव० ५ अ० ।

साडिया-साटिका-स्त्री० । परिधानवस्त्रे, अनु० ।

साडी-शाटी-स्त्री० । शटति गच्छति इति शाटी । पयसि, प्रव० ४ द्वार ।

साडीकम्म-शाकटिककर्मन्-न० । शकटानां घटनविक्रयवाहनरूपे, उपा० १ अ० । भ० । शाकटिकत्वेन जीवनं , तत्र गवादीना वन्धवधादयो दोषा इति कर्म न उपभोगपरिभोगव्रतातिचारत्वं तस्य । पञ्चा० १ विव० । भ० । था० । आव० । शकटानां तदङ्गाना चक्रोर्ध्व्यादीनां स्वयं परेण वा वृत्तिनिमित्त निष्पादने, विक्रयवाहने च । ध०२अधि० । ' शकटाना तदङ्गाना, घटन खेटनं तथा । विक्रयश्चेति शकट-जीविका परिकीर्तिता ॥ १ ॥ " प्रव० ६ द्वार ।

साडोल्लय-शाटोल्लक-न० । उत्तरीयवस्त्रे, ज्ञा० १ श्रु० १८अ० ।

साण-श्वन्-पु० । श्वन्शब्दस्य साणादेश । कुक्कुरे,उत्त०१अ० । आचा० । अनु० । उत्त० । दश० । नि० चू० । भ० । आचा० ।

साण-पुं० । छुरिकादितैक्ष्ण्योत्तेजके मसृणपाषाणे , अष्ट० १५ अष्ट० । आ० म० । पाइ० ना० ।

साणंदसमाहि-सानन्दसमाधि-पु० । सुखप्रकाशमयस्य सत्त्वस्योद्रेकाधिकयात्तथाविधे समाधौ. द्वा० २० द्वा० ।

साणय-शाणक-न० । शणवल्कनिष्पन्ने, आचा० २ श्रु० १ चू० ५ उ० १ उ० । स्था० । वृ० ।

साणि-शाणी-स्त्री० । शणसूत्रमय्या शाटिकायाम् , दश० ४ अ० १ उ० ।

साणुक्कोस-सानुक्रोश-त्रि० । सहानुक्रोशेन वर्त्तत इति सानुक्रोश । सदये उत्त० २२ अ० ।

साणुक्कोसया-सानुक्रोशता-स्त्री० । सदयतायाम् , औ० । स्था० । सानुकम्पतायाम् , भ० ८ श० ६ उ० । विशे० ।

साणुणाय-सानुनाद-पु० । यत्र जल्पता प्रतिशब्द उत्तिष्ठते तस्मिन् प्रदेश, विशे० ।

साणुदयबंधिणी-स्वानुदयवन्धिनी-स्त्री० । स्वस्यानुदय एव वन्धो विद्यते यासा ता स्वानुदयवन्धिन्य । ' कम्म ' शब्दे तृतीयभागे २७४ पृष्ठ दर्शितासु तथाविधकर्मप्रकृतिषु, प० स० ३ द्वार ।

साणुप्पग-सानुप्रग-न० । प्रत्यूषवेलायाम् , वृ० १ उ० २ प्रक० । चतुर्भागावशेषचरमाया पौरुष्याम् ,नि० चू० १० उ० ।

साणुप्पगभिक्खा-सानुप्रगभिक्षा-स्त्री०। सानुप्रगे-प्रत्यूषवेलाया या लभ्यते भिक्षा सा सानुप्रगभिक्षा । प्रात.कालिक्यां भिक्षायाम् ,वृ० १ उ० २ प्रक० ।

साणुप्पास-सानुप्रास-त्रि० । अनुप्राससहिते, अनु० ।

साणुवध-सानुवन्ध-त्रि० । निरुपक्लिष्टे कर्मणि, "अमायोऽपि हि भावन,मायव तु भवेत् कचित्। पश्येत्स्वपरयोर्यत्र,सानुवन्धहितोदयम् ॥१॥ " ध० ३ अधि० ।

साणुवंधदोस-सानुवन्धदोष-पुं० । निरुपक्लिष्टकर्मलक्षणे दोषे, पो० १२ विव० ।

साणुभव-स्वानुभव-पुं० । स्वीयज्ञानप्रसरे, " स्वकीयश्रुतचिन्तोत्तरोत्पन्नभावनाज्ञाने, "श्रुताच्च सम्प्रदायाच्च, ज्ञात्वा स्वानुभवादपि । " ध० १ अधि० ।

साणुराग-सानुराग-पुं० । अनुरक्ते, तथाविधानुरागयुक्तत्वेनाप्रशस्तदृष्टौ, महा० ३ अ० ।

साणुलट्ठियागाम-सानुयष्टिकाग्राम-पुं०।स्वनामख्याते ग्रामे, यत्र छद्मस्थविहारेण विहरन् वीरजिन भद्रप्रतिमया तस्थौ । आ० म० १ अ० । आ० चू० ।

सात-सात-न० । सौख्ये, चं० प्र० २० पाहु० । सू० प्र०। सुखे, उत्त० १ अ० । सुखहेतौ, उत्त० २ अ० । प्रश्न० ।

सातत्त-सातत्य-न० । नैरन्तर्ये , स्था० १० ठा० ३ उ० ।

सातवाहण-सातवाहन-पुं० । स्वनामख्याते नृपभेदे, ती० ५२ कल्प । आ० चू० । तच्चरित्रं त्वेवम्-अथ प्रसङ्गत. परसमयलोकप्रसिद्ध सातवाहनचरित्रलेशमपि किञ्चिदुच्यते श्रीसातवाहने क्षितिं रक्षति पञ्चाशतवीरा प्रतिष्ठाननगरान्तस्तथा वसन्ति स्म पञ्चाशद्वहिः । इतश्च तत्रैव पुरे एकस्य द्विजस्य सूनुर्दर्पाढ्य शूद्रकाख्य समजनि। स च युद्धश्रम दर्पेण कुर्वाण पित्रा स्वकुलानुचितमिति प्रतिषिद्धो नास्थात्। अन्येद्यु --सातवाहननृपति वापला-मृदलादिपुरान्तर्वर्तिवीरपञ्चाशदन्वितः पञ्चाशद्धस्तप्रमाणा शिला श्रमार्थमुत्पाटयन् दृष्ट पित्रा सम गच्छता द्वादशाब्ददेशीयेन शूद्रकेण केनापि वीरेणाङ्गुलचतुष्टय , केनचित्षडङ्गुलान्यपरेण त्वङ्गुलान्यष्टौ शिला भूमितस्तत्रोत्पाटिता महीजानिना त्वाजानुनीता इत्यवलोक्य शूद्रक स्फूर्जितदर्जित·

मवादीत्-भो भो भवत्सु मध्ये किं शिलामिमां मस्तकं न कश्चिदुद्धर्तुमीष्टे। तेऽपि सदर्पमवादिपुर्यथा त्वमेवोत्पाटय यदि समर्थस्त्वमन्योऽसि। शूद्रकस्तदाकर्ण्य शिलां वियति तथोच्छालयांचकार यथा सा दूरमूर्द्ध्वमगमत्–पुनरवादि शूद्रकेन यो भवत्स्वलभूष्णु स खल्विमां निपतन्तीं बिभर्तु। सातवाहनादिवीरैर्भयोद्भ्रान्तलोचनैरूचे स एव सानुनयम्। यथा भो महाबल! रक्ष रक्षास्माकीनान् प्राणानिति। स पुनस्तां पतयालुं तथा मुष्टिप्रहारेण प्रहतवान् यथा सा त्रिखण्डतामन्वभूत्। तत्रैकं शकलं योजनत्रयोपरि न्यपतत्, द्वैतीयिकं च खण्डं नागह्रदे तृतीयं तु प्रतोलीद्वारे, चतुष्पथमध्ये न पतितमद्यापि तथैव वीक्ष्यमाणास्ते जनाः, तद्बलविलसितचमत्कृतचेता क्षोणिनेता शूद्रकं सुतरां सत्कृत्य पुराऽऽरक्षकमकरोत्। शस्त्रान्तरेण प्रतिषिध्य दण्डधारकस्य तस्य दण्डमेवायुधमन्वाज्ञासीत्। न च शूद्रको वहिश्चरान् पुरमध्ये प्रवेष्टुमपि न दत्तवान्, अनर्थनिवारणार्थम्। अन्यदा स्वसौधस्योपरितले शयानः सातवाहनः क्षितिपतिर्मध्यरात्रे शरीरचिन्तार्थमुत्थितः, पुराद्बहिः परिसरे करुणं रुदितमाकर्ण्य तत्प्रवृत्तिमुपलब्धुं कृपाणपाणिः परदुःखितहृदयतया गृहान् निरगमत्। अन्तराले शूद्रकेणाऽवलोक्य सप्रश्रयं प्रणतः पृष्टश्च महानिशायां निर्गमनकारणम् धरणीपतिरवादीत्-अयं वहिः पुरःपरिसरं करुणक्रन्दितध्वनिः श्रवणध्वनिपथिकीभावमनुभवन्नस्ति, तत्कारणं ज्ञातुं व्रजन्नस्मीति राज्ञोक्ते शूद्रको व्यजिज्ञपत्–देव! प्रतीच्यपादैस्त्वसौधालंकरणाय पादाववधार्यतामहमेव तत्प्रवृत्तिमानेष्यामीत्याभिधाय वसुधानायकं व्यावृत्य स्वयं रुदितध्वन्यनुसारेण पुराद्बहिर्गन्तुं प्रवृत्तः। पुरस्ताद् व्रजन् दत्तकर्णो गोदावर्याः स्रोतसि तद् रुदनमश्रौषीत्। ततः परिकरबन्धं विधाय शूद्रकस्तीर्त्वा यावत्सरितां मध्यं प्रयाति तावत्पयःपूरप्लाव्यमानं नरमेकं रुदन्तं वीक्ष्य बभाषे-भोः कस्त्वं किमर्थं च रोदिषीत्यभिहितः। स नितरां रुदति निबन्ध केनापि यादसा विधृतोऽयं भवेदित्याशङ्क्य सद्यः कृपाणिकामिवाऽऽह्वयामास शूद्रकः। तदनु शिरोमात्रमेवं शूद्रकस्योद्धर्तुं करतलमारोहत्। लघुतया तच्छिरः प्रक्षरद्रुधिरधारमिवालोक्य शूद्रको विषादमापन्नश्चिन्तयति स्म। धिग्मामप्रहर्त्तारं प्रहर्तारं शरणागतरक्षकं चेत्यात्मानं निन्दन् वज्राहत इव क्षणं मूर्छितस्तस्थौ। तदनु समधिगतचैतन्यश्चिरमचिन्तयत्कथमिदं तत् स्वदुश्चेष्टितमवनिपतये निवेदयिष्यामि इति लज्जितमनास्तथैव काष्ठश्चितां विरचय्य तत्र ज्वलनं प्रज्वाल्य तच्छिरः सह गृहीत्वा यावदर्चिषि प्रवेष्टुं प्रवृत्ते तावत्तेन मस्तकेन निजगदे-भो महापुरुष! किमर्थमित्थं व्यवसीयते, भवता यावदहं शिरोमात्रमवास्मि, सैंहिकेयवत्सदा तद् वृथा मा विषीद, प्रसीद मां राज्ञः समीपमुपनयेति तद्वचनं निशम्य चमत्कृतचित्तः प्राणित्ययमिति प्रहृष्टः शूद्रकस्तच्छिरः पट्टांशुकवेष्टितं विधाय प्रातस्सातवाहनमुपानयत्, अपृच्छदथ पृथ्वीनाथः। शूद्रक! किमिदम्? सोऽप्यवोचत् देव! सोऽयं यस्य क्रन्दितध्वानैर्देवेन गतो गुश्रुवे इत्युक्त्वा तस्य प्रागुक्तं वृत्तं सकलमावेदयत्। पुना राजा तमेव मस्तकमप्राक्षीत्। भोः कस्त्वम्? किमर्थं चात्र भवदागमनमिति? तेनाभिदधे–महाराज! भवतः कीर्त्तिं समाकर्ण्य करुणरुदितव्याजेनात्मानं ज्ञापयित्वा त्वामहमुपागमम्, दृष्टश्च भवान् कृतार्थे मेऽद्य चक्षुषी जाते, इति। का कला सम्यग् वेत्सीति राज्ञा पृष्टे तेनोक्तम्-देव! गीतकलां वेद्मि। ततो राज्ञ आज्ञया निरवगीतं गीतं गातुं प्रचक्रमे। क्रमेण तद्गानकलया मोहिता सकलाऽपि नृपतिप्रमुखा परिषत्। स च मायासुरनामकोऽसुरस्तां मायां निर्माय महीपतेर्महिषीं महनीयरूपधेयां अपाजिहीर्षुरुपागतो बभूव। न च विदितचरमेतत्कस्यापि। लोकैस्तु शीर्षमात्रदर्शनात्तस्य प्राकृतभाषया 'सीसुला' इति व्यपदेशः कृतः। तदनु प्रतिदिनं तस्मिन्नपि तुम्बुरौ मधुरतरं गायति सति श्रुतं तत् स्वरूपं महादेव्या,दासीमुखेन भूपं विज्ञाप्य तच्छीर्षं स्वान्तिकमानायितम्,प्रत्यहं तमजिज्ञपत् राज्ञी। दिनान्तरे रात्रौ प्रस्तावमासाद्य सद्य एवापहरति स्म तां मायासुरः, आरोपयामास च ताम्। घण्टावलम्बिनामनि स्वविमाने। राज्ञी च करुणं क्रन्दितुमारेभे। अहोऽहं केनाप्यपाह्रिये। अस्ति कोऽपि वीरः पृथिव्यां यो मां मोचयति। तच्च खूंदलाभिख्येन चोरेण श्रुत्वा धावित्वा समुत्पत्य च तद्विमानघण्टा पाणिना गाढमवधार्यत। ततस्तत् पाणिनावष्टब्धं विमानं पुरस्तान्न प्राचालीत्। तदनु चिन्तितं मायासुरेण। किमर्थं विमानमेतन्न सर्पति। यावद्द्राक्षीत्तं वीरं हस्तावलम्बितघण्टाम्। ततः खड्गेन तद्धस्तमच्छिन्दत्, पतितः स पृथिव्याम्। स चासुरः पुरः प्राचलत्। ततो विदितदेव्यपहारवृत्तान्तः क्षितिकान्तः पञ्चाशतमेकोनां वीरानादिशत्, यत्पट्टदेव्याः शुद्धिः क्रियतां, केनेयमपहृतेति। ते प्रागपि शूद्रकं प्रत्यसूयापराः प्रोचुः–महाराज! शूद्रक एव जानीते। तेनैव तच्छीर्षकमानीतं, तेनैव च देवी जह्रे, ततो नृपतिस्तस्मै कुपितः शूलारोपणमाज्ञापयत्। तदनु देशरीतिवशात्तं रक्तचन्दनानुलिप्ताङ्गं शकटेशायित्वेन सह गाढं बध्वा शूलायै यावद्राजपुरुषाश्चेलुस्तावत्पञ्चाशदपि वीराः संभूय शूद्रकमवोचन्। भो महावीर! किमर्थमेवं दिदण्डेव म्रियते भवान्, 'अशुभस्य कालहरणमि'ति न्यायात् मार्गय नरेन्द्रात् कतिपयदिनावधिम्, शोधय सर्वत्र देव्यपहारिणम्। किमकाण्ड एव स्वकीयां वीरत्वकीर्त्तिमपनयसि। ततोक्तम्–गम्यतां तर्हि उपराज,विज्ञपयतामेतमर्थं राजा। तैरपि तथाकृते प्रत्यानायितः शूद्रकः क्षितीन्द्रेण। तेनापि स्वमुखेन विज्ञप्तिः कृता-महाराज। दीयताम् अवधिः,येन विचिनोमि प्रतिदिशं देवीम्,तदपहारिणं च। राज्ञा दिनदशकमवधिर्दत्तः शूद्रकगृहे च सारमेयद्वयमासीत्तत्सहचारि, नृपतिरवदत्-एतद्भषणयुगलं प्रतिभूयमस्मत् पार्श्वे मुञ्च स्वयं पुनर्भवान् देव्युदन्तोपलब्धये हिण्डतां महीमण्डलम्,सोऽप्यादेशः प्रमाणमित्युदीर्यवान् प्रतस्थे। भूचक्रशक्रस्तत्कौलेयकद्वन्द्वं शृङ्खलाबद्धं स्वशय्यापादयोरबध्नात्। शूद्रकस्तु परितः पर्यटन्नमानोऽपि यावत् प्रस्तुतार्थस्य वार्त्तामात्रमपि क्वापि नोपलेभे तावदचिन्तयत्, अहो ममेदमपयशः प्रादुरभूद्यदयं स्वामिद्रोही मध्ये भूत्वा देवीमुपाजीहरदिति। न च क्वापि सिद्धिशुद्धिर्लब्धा तस्मात्स्मरणमेव मम शरणमिति विमृश्य दारुभिश्चितामरचयत्, ज्वलनं चाज्वालयत्,यावन्मध्ये प्राविशत्,तावत्ताभ्यां शुनका

भ्या देवताधिष्ठिताभ्यां ज्ञातम्। यदस्मदधिपतिर्निधनापन्नो-ऽस्तीति। ततो दैवतशक्त्या शृङ्खलानिर्गतौ गतौ तत्र, यत्रासीद् शूद्रकरचिता चिता। दृष्टेन काष्ठमाकृष्य शूद्रकं बहिर्निष्काशयामासतु। तेनाप्यकस्मात् तौ विलोक्य विस्मितमनसा निजगदे—रे पापीयांसौ !, किमेतत् कृत भवद्भ्याम् ?, यत् राज्ञो मनसि विश्वासनिरासो भविष्यति यत्प्रतिभुवावपि तेनात्मना सह नीताविति। भषणाभ्यां बभाषे। धीरो भव, अस्मद्दर्शितां दिशमनुसर सरभसम्। का चिन्ता तवेत्यभिधाय पुरोभूय प्रस्थितौ, तेन सार्द्धं क्रमात् प्राप्तौ कोल्लापुरम्। तत्रस्थ महालक्ष्मीदेव्या भवनं प्रविष्टौ। तत्र शूद्रकस्तां देवीमभ्यर्च्य कुशस्रस्तरासीनस्त्रिरात्रमुपावसत्। अनुप्रत्यक्षीभूय भगवती महालक्ष्मीस्तमवोचत्-वत्स ! किं मृगयसे ?, शूद्रकेणोक्तम्-स्वामिनि ! सातवाहनमहीपालमहिष्या शुद्धिम्। वद—काऽऽस्ते केनेयमपहृता ?। श्रीदेव्योदित—सर्वान् यक्षराक्षसभूतादिदेवगणान् समील्य तत्प्रवृत्तिमह निवेदयिष्यामि, परं तेषां कृते त्वया बल्युपहारादि प्रगुणीकृत्य धार्यम्। यावच्च ते कणेहत्य बलादुपभुज्य प्रीता न भवेयुस्तावत् त्वया विस्तरेण क्षेणीया, तत शूद्रकस्तेषां देवानां तर्पणार्थं कुण्डं विरचय्य होममारेभे। मिलिता सकलदैवतगणा स्वां स्वां भुक्तिमग्निमुखेन जगृहे, तावत्तद्धोमधूम प्रसृमर प्राप्तत् स्थानं यत्र मायासुरोऽभूत्। तेनापि परिज्ञातलक्ष्म्यादिष्टशूद्रकहोमस्वरूपेण प्रेषित स्वभ्राता कोल्लासुरनामा होमप्रत्यूहकरणाय। समागतश्च वियति कोल्लासुर स्वसेनया सम। दृष्टश्च दैवतगणैश्चकितंभूतै ततो भषणौ दिव्यशक्त्या युयुधाते दैत्यै सह। क्रमात् मारितौ च तौ दैत्यै। तत शूद्रक स्वयं योद्धुं प्रावृतत्। क्रमेण दण्डव्यतिरिक्तप्रहरणान्तराभावाद्दण्डेनैव बहून् निधनं नीतवानसुरान्। ततो दक्षिणबाहु दैत्यास्तस्य चिच्छिदु। पुनर्वामहस्तेन दण्डयुद्धमकरोत्तस्मिन्नपि छिन्ने दक्षिणाङ्घ्रिणोपात्तदण्डो योद्धुं लग्न। साऽपि दैत्यैर्लून ततो वामपदधृतयष्टिरयुध्यत, तमपि क्रमादच्छिन्दन्नसुरा। ततो दन्तैर्दण्डमादाय युयुधे ततस्तैर्मस्तकमच्छेदि। अथ कबन्धतृप्ता दैवगणास्त शूद्रक भूमिपतितशिरस्क दृष्ट्वा, अहो अस्मद्भुक्तिदातुर्वराकस्य किं जातमिति परितप्य योद्धुं प्रवृत्ता। कोल्लासुरममारयन् तत श्रीदेव्या अमृतेनाभिषिच्य पुनरनुसहितानाङ्गश्चक्रे शूद्रक, प्रत्युज्जीवितश्च, सारमेयावपि पुनर्जीवितौ, देवी च प्रसन्ना सति तस्मै खड्गरत्नं प्रददौ। अनेन त्वमजेयो भविष्यसीति च वरं व्यतरत्। ततो महालक्ष्म्यादिदैवतगणै सह सातवाहनदेव्या शुद्ध्यर्थं समग्रमपि भुवनं परिभ्राम्यन् प्राप्त शूद्रको महार्णवम्। तत्र चैक वटतरुमुच्चैस्तरं निरीक्ष्य विश्रमार्थमारुरोह, यावत्पश्यति तच्छाखाया लम्बमानमध शिरस्क काष्ठकीलिकाप्रवेशितोर्ध्वपाद पुरुषमेकम्। स च मदोन्मादिष्णुर्मदग्रज प्रतिष्ठानाधिपते सातवाहनस्य महिषीं रिरंसुरपाहरत् सीतामिव दशवदन। सा च पतिव्रता तं नेच्छति, तदनु मया प्रोक्तोऽग्रजन्मा-न युज्यते परदारापहरणं तव। "विक्रमाक्रान्तविश्वोऽपि, परस्त्रीषु रिरंसया। कृत्वा कुलक्षयं प्राप, नरकं दशकन्धर ॥ १ ॥" इत्यादिवाग्भिर्निषिद्ध क्रुद्धो मह्य मायासुरोऽस्या वटशाखाया टङ्कित्वा मामित्थं व्यडम्बयत्, अहं च प्रमागितरसनसमुद्भ्रान्त सञ्चरतो जलचरादीन् व्यवहरन् प्राणयात्रां करोमि, इति श्रुत्वा शूद्रकोऽप्यभाणीत्, अहं तस्यैव महीभृतो भृत्य शूद्रकनामा, तामेव देवीमन्वेष्टुमागतोऽस्मि। तेनोक्तमेव चेत्तर्हि मा मोचयत। यथाऽहं सह भूत्वा त दर्शयामि तां च देवीम्। तेन स्वस्थाने परितो जातुषं दुर्गं कारितमस्ति तच्च निरन्तरं प्रज्वलदेवास्ते ततस्तदुल्लङ्घ्य मध्ये प्रविश्य तं निपात्य देवी प्रत्याहर्त्तव्या, इत्याकर्ण्य शूद्रकस्तेन कृपाणेन तत् काष्ठबन्धनानि छित्वा तं पुरोधाय दैवतगणपरिवृत प्रस्थाय प्राकारमुल्लङ्घ्य तत्स्थानान्त प्राविशत्। दैवतगणाश्चावलोक्य मायासुर स्वसैन्यं युद्धाय प्राहिणोत्। तस्मिन् पञ्चतामञ्चिते स्वयं योद्धुमुपतस्थे। तत क्रमेण शूद्रकस्तेनासिना तमवधीत्। ततो घण्टावलम्बविमानमारोप्य देवीं, दैवतगणैस्सह प्रस्थित प्रतिष्ठानं प्रति, इतश्च दशदिनमवधीकृतमनागतमवगत्य जगत्यधिपतिर्व्याहृतवान् अहो न मम महादेवी, न च शूद्रकवीरो नापि च तौ रसनालिहौ, सर्वं मयैव कुबुद्धिना विनाशितमिति शोचन् सपरिच्छद एव प्राणत्यागं चिकीर्षु पुराद्बहिश्चितामरच्चयच्चन्दनादिदारुभिः। यावत् क्षणादाशुशुक्षणि क्षेप्स्यति परिजनश्चितौ तावद्धर्षाधायक एको देवगणमध्यात् समयासीत्, व्यजिज्ञपत्स प्रश्रयम्। देव ! दिष्ट्या वर्द्धसे महादेव्यागमनेन। तन्निशम्य श्रवणरम्यं नरेश्वर स्फुरदानन्दकन्दलितहृदय ऊर्द्धमवलोकयन्नालुलोके नभसि दैवतगणं शूद्रकं च। अयमपि विमानादुत्तीर्य राज्ञ, पादावपतत्, महादेवी च। अभिनन्द्य सानन्दं मेदिनीन्दु शूद्रकम्, राज्यार्द्धं चैव तस्मै प्रादित। सोत्सवमन्तर्नगरं प्रविश्य श्रुतशूद्रकचारुचरित सह महिष्या राज्यश्रियमुपबुभुजे महाभुज। इत्थंकारं नानाविधान्यवदातानि सातक्षितिपालस्य कियन्ति नाम व्यावर्णयितुं पार्यन्ते। स्थापिता चानेन गोदावरीसरित्तीरे महालक्ष्मीप्रासाद, अन्यान्यपि यथार्हं दैवतानि निवेशितानि तत्तत्स्थानेषु। राज्यं चिरं भुञ्जति जगतीजानावन्यदा कश्चिद्दारुभारहारक कस्यचिद्वणिज वीथ्यौ प्रत्यहं चारूणि दारूण्याहृत्य विक्रीणीते स्म। दिनान्तरे च तस्मिन्ननुपेयुषि वणिजा तद्भगिनी पृष्टा भवद्भ्राताऽद्य नागतो महीथ्याम्, तया बभाणे, श्रेष्ठिन् ? भ्रातसोदर्य स्वर्गिषु संप्रति प्रतिवसति। वणिग् अभाणीत्, कथमिव साऽवदत्कङ्कणबन्धादारभ्य विवाहप्रकरणे दिनचतुष्टयं नर स्वर्गिष्विव वसन्तमात्मानं मन्यते। तत्तदुत्सवालोकनकौतूहलात्प्रयाकर्ण्य राजाप्यचिन्तयत्, अहो अहं किमु स्वर्गिषु वसामि, चतुर्ष्वपि दिनेष्वनवरत विवाहोत्सवमय एव स्यास्यामीति विचार्य चातुर्वर्ण्ये या यां कन्या युवतिं वा रूपशालिनीं पश्यति गृणाति स्म वा ता ता सोत्सवं पर्यणैषीत्। एवं च भूयस्यंनेहसि गच्छति लोकैश्चिन्तितमहो कथं भाव्यमनपत्यैरेव सर्ववर्गैः स्थेयम्, सर्वकन्यास्तावद्राज्ञैव विवोढा। योषिदभावे च कुत संततिरिति। एवं प्रतिपद्मेषु लोकेषु विवाहवाटिकानाम्नि ग्रामे वास्तव्य एको द्विज पीठजादेवीमाराध्य व्यजिज्ञपद्भगवति। विवाहकर्म्मास्मदपत्यानां कथं भावीति। देव्योक्तम्-त्वद्वचनेऽहमात्मानं कन्यारूपं कृत्वाऽवतरिष्यामि। यदा मां राजा प्रार्थयते तदा तस्मै दर्शयिष्यामि लभिष्ये। तथैव राजा

तां रूपवतीं श्रुत्वा विप्रमयाचत। सोऽपि जगाद। दत्ता मया परं महाराज! तत्रागत्य मत्कन्योद्वोढव्या। प्रतिपन्नं राज्ञा। गणकदत्ते लग्ने क्रमाद्विवाहाय प्रचलितः, प्राप्तश्च तं ग्रामं स्वकुलं च नृपतिः, देशाचारानुरोधाद्वधूवरयोरन्तराले जवनिका दत्ता। अञ्जलीर्युगंधरीलाजैर्नृपतिर्लग्नवेलायां तिरस्करणीमपनीय यावदन्योन्यस्य शिरसि लाजान् विकरीतुं प्रवृत्तौ तदनु किल हस्तलेपो भविष्यति तावद्राजा तां रौद्ररूपा राक्षसीमिवैक्षिष्ट। ते च लाजा कठिनपाषाणकर्कररूपा राज्ञः शिरसि लगितुं लग्ना। क्षितिपतिरपि किमपि वैकृतमिदमिति विभावयन् पलायत। तावत्सा पृष्ठलग्नाश्मशकलानि वर्षन्ती प्राप्ता। ततो नरपतिर्नागहृदं प्राविशन्निजजन्मभूमिम्, तत्रैव च निधनमानशे इति। अद्यापि सा पीठजा देवी प्रतोल्या वहिरास्ते निजप्रासादस्था। शूद्रकोऽपि क्रमेण कालिकादेव्या स्वरूपं विकृत्य वापीं प्रविष्टया करुणरसितेन विप्रालभ्यत, निष्कामणार्थं प्रविशन् पतितस्य तस्य कृपाणस्य कूपद्वारे तिर्यक्पतनाच्छिन्नाङ्गः पञ्चतामानञ्च। महालक्ष्या हि वरवितरणावसरोऽस्मादेव कौक्षेयकात्पदिष्टात्प्राप्तिर्भविष्त्रीन्यादिष्टमासीत्। तत शक्तिकुमारो राज्येऽभिषिक्तः सातवाहनायतौ, तदनन्तरमद्यापि राजा न कश्चित्प्रतिष्ठाने प्रविशति वीरक्षेत्रे इति। अत्र च यदसंभाव्यं क्वचिद्भवेत् तत्र परसमय एव मन्तव्यो हेतुः यन्नासंगतवाग् जनो जैनः। इति प्रतिष्ठानकल्पः। सातवाहनचरित्रलेशश्च। विरचितः श्रीजिनप्रभसूरिभिः। "चक्रे प्रतिष्ठानकल्पं श्रीजिनप्रभसूरिभिः। सातवाहनभूपस्य, कथाशश्च प्रसङ्गतः ॥१॥" तीं० ३३ कल्प। आ० चू०। (सातवाहन कथा 'दित्तचित्त' शब्दे चतुर्थभागे २५१८ पृष्ठे गता।)

सातर-साता-स्त्री०। सुखरूपायां वेदनयाम्, प्रज्ञा० ३५ पद।

साताकम्म-सातकर्म्मन्-न०। बन्धदशानां दशमेऽध्ययने, स्था० १० ठा० ३ उ०। तच्च विच्छिन्नमिदानीं नोपलभ्यते स्था० १० ठा० ३ उ०।

सातागारव-सातगौरव-न०। सुखशीलतायाम्, सूत्र०१श्रु०८अ०।

सातागारवणिहुय-सातगौरवनिभृत-त्रि०। सुखशीलतार्थमनुद्युक्ते, सूत्र० १ श्रु० ८ अ०।

सातासाता-सातासाता-स्त्री०। सुखदुःखात्मिकायां वेदनायाम्, प्रज्ञा० ३५ पद।

सातासायपरितावणमय-सातासातपरितापनमय-त्रि०। सातं च सुखमसातं परितापनं च दुःखजनितोपतापः एतन्मयमेनदात्मकम्। सुखदुःखमये, प्रश्न० ३ आश्र० द्वार।

सातासोक्ख-सातसौख्य-न०। आह्लादरूपे सौख्ये, जी० ४ प्रति० ३ उ०।

साति-साति-अविश्रम्भे, प्रश्न० २ आश्र० द्वार।

स्वाति-स्त्री०। नक्षत्रभेदे, सू० प्र० १० पाहु०।

सातिजोग-सातियोग-पुं०। मायाविशेषे, स०।

सातिजोगजुत्त-सातियोगयुक्त-त्रि०। अशुभमनोयोगयुक्ते, आव० ४ अ०।

सातिज्जणा-स्वादना-स्त्री०। कर्मबन्धास्वादे, नि०चू०१ उ०।

सातिणक्खत्त-स्वातिनक्षत्र-न०। वायुदेवताके नक्षत्रभेदे,स०।

स्वातिनक्षत्रं कतितारकम्—

सातिणक्खत्ते एगतारे पण्णत्ते। (सू०१×) स० १ सम०।

सातोवभोग-सातोपभोग-त्रि०। सातस्य—सातवेदनीयस्य कर्मणो भोगो यत्र तत्सातोपभोगम्। सुखस्थाने, कल्प० १ अधि० ३ क्षण।

सादंडी-सादण्डी-स्त्री०। कन्दविशेषे, भ० ७ श० ३ उ०।

सादि-सादि-त्रि०। आदियुक्ते, उत्त० १ अ०।

सादिय-सादिक-त्रि०। सहादिना-मायया वर्त्तत इति सादिकम्। समाये, सूत्र० १ श्रु० ८ अ०।

सादिवीससाकरण-सादिविश्रसाकरण-न०। रूपिद्रव्याणां च द्व्यणुकादिप्रक्रमेण भेदसंघाताभ्यां स्कन्धत्वापत्तौ, सूत्र० १ श्रु० १ अ० १ उ०।

सादिव्व-सादिव्य-न०। देवताप्रयुक्ते अस्वाध्यायिके, प्रव० २५४ द्वार।

सादीणगंगा-सादीनगङ्गा-स्त्री०। गोशालकपरिभाषिते सप्तमहागङ्गात्मके परिमाणभेदे, भ० १५ श०।

साधग-साधक-त्रि०। निर्वर्त्तके, पं० सू० १ सूत्र।

सापाणि-स्वकपाणि-पुं०। स्वहस्ते, 'सापाणिणा असिणा छिंदित्ता कमडलुं पक्खिवित्तए'। भ० १४ श० ८ उ०।

साबर-शाबर-पुं०। शबररूपधारिशिवप्रोक्ते मन्त्रे,आ०म०१अ०।

साबाधा-साबाधा-स्त्री०। सह आबाधया। अनुदयकालेन सह वर्त्तमाने, प्रव० १ द्वार।

साभरग साभरक-देशीवचनात्,(वृ०१उ० १प्रक०) सुराष्ट्राया दक्षिणस्यां दिशि समुद्रद्वीपे प्रचलिते रूपके, द्वावुत्तरापथे एको रूपकः। वृ० ३ उ०।

साभाविय-स्वाभाविक-त्रि०। स्वस्मिन् भावे भवः स्वाभाविकः। प्राकृते, सूत्र० १ श्रु० १ अ० १ उ०। अकैतवकृते, ज्ञा० १ श्रु० १६ अ०। आ० म०।

साभिग्गह-साभिग्रह-त्रि०। अभिग्रहे, अभिगृह्यन्त इत्यभिग्रहाः प्रतिज्ञाविशेषा, सहाभिग्रहेण वर्त्तन्त इति साभिग्रहाः। गृहीताभिग्रहेषु,। आव० ६ अ०। नि० चू०।

साम-सामन्-न०। सर्वेषामपि जीवानां प्रिये,विशे०।आ०म०। प्रियवचनादौ,स्था०३ ठा० ३ उ०। ज्ञा०। विपा०। प्रेमोत्पादने, विपा०१ श्रु०३ अ०। साम मित्ती। सर्वजीवेषु मैत्री साम भण्यते। विशे०। स्था०। सामनि, स्था०। "परस्परोपकाराणां, दर्शनं १ गुणकीर्त्तनम् २। सम्बन्धस्य समाख्यानं ३-मायत्याः सम्प्रकाशनम्४॥१॥" अस्मिन्नेवं कृतेऽस्मावयोर्भविष्यतीत्याशायोजनमायतेः सम्प्रकाशनमिति। 'वाचा पेशलया साधु, तवाहमिति चार्पणम्। इति सामप्रयोगज्ञैः, साम पञ्चविधं स्मृतम्' ॥२॥ स्था० ३ ठा० ३ उ०। आ० म०।

सामनिक्षेप —

निक्खेवो सामम्मि य, चउव्विहो दुव्विहो य होइ दव्वम्मि।
आगम नोआगमओ, नोआगमओ य सो तिविहो॥४८०॥
जाणगसरीरभविए, तव्वइरित्ते अ सक्कराईसुं ।
भावम्मि दसविहं खलु, इच्छा मिच्छाइयं होइ ॥४८१॥
इच्छा मिच्छा तहक्कारो, आवस्सिआ अ निसीहिआ ।
आपुच्छणा य पडिपुच्छा, छंदणा य निमंतणा ॥४८२॥
उवसंपया य काले, सामायारी भवे दसविहा उ ।
एएसिं तु पयाणं, पत्तेयपरूवणं वुच्छं ॥ ४८३ ॥
आयारे निक्खेवो, चउक्कओ दुविहो य होइ नायव्वो ।
आगम नोआगमतो, नोआगमतो य सो तिविहो ॥४८४॥
जाणगसरीरभविए, तव्वइरित्ते य नामणाईसुं ।
भावम्मि दसविहाए, सामायारीइ आयरणा ॥ ४८५ ॥

'निक्खेवो' इत्यादि गाथा षट् प्रायः प्रतीतार्था । सूत्रव्याख्याने च काश्चिद्व्याख्यास्यन्ते, नवरं तद्व्यतिरिक्ते च ' ज्ञशरीरभव्यशरीरव्यतिरिक्ते च । द्रव्यसाम-शर्करादिषु, आदिशब्दात्क्षीरादिपरिग्रहः, ततश्च शर्कराक्षीरदधिगुडादीनां यत्परस्परमविरोधेन व्यवस्थानम्, भावे साम दशविधं ' खलु ' अवधारणे, दशविधमेवेच्छामिथ्यादिकं सामाचारीस्वरूपमिति गम्यते, भावसामत्वं चास्य तात्त्विकस्य क्षायोपशमिकादिभावरूपत्वात् परस्परमविरोधेन चावस्थानात् तथा प्रत्येकप्ररूपणा वक्ष्ये इति प्रतिज्ञामभिधाय यत् प्ररूपणानभिधानं तदावश्यकनिर्युक्तौ कृतत्वात्, तद्गाथयोरेव चैककर्तृकत्वेनेह लिखितत्वान्न दुष्टमिति भावनीयम्। सूत्रक्रमोल्लङ्घनं तु यथाविधि सर्वेषां सदा कृत्यत्वेन पूर्वापरभावस्याभावप्रदर्शनार्थम् । उत्त० २६ अ० । आ० म० ।

सामं समं च सम्मं, इगमवि सामाइअस्स एगट्ठा ।
नामं ठवणा दविए, भावम्मि अ तेसि निक्खेवो ।१०३०।
महुरपरिणाम सामं, सम्म तुला सम्म खीरखंडजुई ।
दोरे हारस्स चिई, इगमेआई तु दव्वम्मि ॥ १०३१ ॥

इह साम समं च सम्यक् ' इगमवि ' देशीपदं क्वापि प्रदेशार्थे वर्तते, सम्पूर्णशब्दावयवमेवाधिकृत्याऽऽह सामायिकस्यैकार्थिकानि । अमीषां निक्षेपमुपदर्शयन्नाह-नामस्थापनाद्रव्येषु, भावे च नामादिविषय इत्यर्थः, तेषां—सामप्रभृतीनां निक्षेपः, कार्य इति गम्यते । स चायम्-नामसाम स्थापनासाम, द्रव्यसाम, भावसाम च । एवं समसम्यक्पदयोरपि द्रष्टव्य । तत्र नामस्थापने सुगमे एव, द्रव्यसामप्रभृतींश्च प्रतिपादयन्नाह-' महुर ' त्यादि,—इहौघतो मधुरपरिणामं द्रव्य-शर्करादि द्रव्यसाम समं ' तुला ' इति भूनार्थालोचनायां समं तुलाद्रव्यं, सम्यक् क्षीरखण्डयुक्ति-क्षीरखण्डयोजनं द्रव्यसम्यगिति, तथा ' दोरे ' इति सूत्रदवरके मौक्तिकान्येवाधिकृत्य भावपर्यायापेक्षया, हारस्य-मुक्ताकलापस्य चयनं चिति -प्रवेशनं द्रव्येक(द्रव्यैक)म्,अत एवाह- एयाइं तु दव्वम्मि' त्ति-एतान्युदाहरणानि द्रव्यविषयाणीति गाथाद्वयार्थः ।

साम्प्रतं भावसामादि प्रतिपादयन्नाह—

आओवमाइ परदु-क्खमकरणं १ रागदोसमज्झत्थं २ ।
नाणाइतिगं ३ तस्सा-इ पोअणं ४ भावसामाई १०३२

आत्मोपमया-आत्मोपमानेन परदुःखाकरणं भावसामेति गम्यते, इह चानुस्वारोऽलाक्षणिकः । एतदुक्तं भवति-आत्मनीव परदुःखाकरणपरिणामो भावसाम, तथा ' रागद्वेषमाध्यस्थ्यम् ' अनासेवनया रागद्वेषमध्यवर्तित्वं समं, सर्वत्राऽऽत्मनस्तुल्यरूपेण वर्तनमित्यर्थः । तथा ज्ञानादित्रयमेकत्र सम्यगिति गम्यते, तथाहि—ज्ञानदर्शनचारित्रयोजनं सम्यगेव, मोक्षप्रसाधकत्वादिति भावना, तस्य इति सामादि सम्बध्यते.आत्मनि प्रातनम्-आत्मनि प्रवेशनम् इकम् उच्यते, अत एवाऽऽह-'भावसामाई' भावसामादावेतान्युदाहरणानीति गाथार्थः । आव० १ अ० । आ० चू० । सामवेदे, विपा० १ श्रु०५अ०। सप्तमदेवलोकविमानभेदे, स०।

श्याम--त्रि० । कृष्णे, आचा० १ श्रु० २ अ० ३ उ० । प्रज्ञा० । श्यामवर्णत्वाच्छ्यामम् । आकाशे, भ० २० श० २ उ० । परमाधार्मिकविशेषे, यो हि रज्जुहस्तप्रहारादिभिः शातनपातनादि करोति, वर्णतश्च श्याम इति । स० १४ सम० ।

साडण पाडण तोडण, बंधण रज्जुलयप्पहारेहिं ।
सामा णेरइयाणं, पवत्तयंती अपुण्णाणं ॥ ७२ ॥

तथा अपुण्यवताम्-तीव्रासातोदये वर्तमानानां नारकाणां सामाख्याः परमाधार्मिका एतच्चैतच्च प्रवर्तयन्ति । तद्यथा-शातनम्—अङ्गोपाङ्गानां छेदनम् ,तथा पातनं-निष्कुटादधोवज्रभूमौ प्रक्षेपः, तथा प्रतोदनम्—शूलादिना तोदनं—व्यधनं—सूच्यादिना नासिकादौ वेधः,तथा रज्ज्वादिना क्रूरकर्मकारिणः बध्नन्ति, तथा तादृग्विधलताप्रहारैस्ताडयन्त्येव दुःखोत्पादनं दारुणं शातनपातनवेधनबन्धनादिकं बहुविधं प्रवर्तयन्ति-व्यापारयन्तीति । सूत्र० १ श्रु० ५ अ० १ उ० । प्रश्न० ।

सामइय—सामयिक—पुं० । समयः—सांख्यादीनां सिद्धान्तस्तदाश्रितः सामयिकः । समयसिद्धान्तिते,स्था० ३ ठा० ३ उ० । मगधजनपदे वसन्तपुरग्रामे स्वनामख्याते कुटुम्बिनि, सूत्र० २ श्रु० ६ अ० ।

सामइयसण्णा—सामयिकसंज्ञा—स्त्री० । सिद्धान्तसङ्केतितभाषायाम्, नि० चू० १ उ० ।

सामंत—सामन्त—पुं० । न० । समीपे, स्था० १०ठा०३उ० । ज्ञा० । नि० । संनिकृष्टे, च० प्र० १ पाहु० । भ० ।

सामंतकिरिया—समन्तक्रिया—स्त्री० । सामन्तोपनिपातिन्यां क्रियायाम् ,सा च द्विधा-देशसामन्तक्रिया, सर्वसामन्तक्रिया चेति । प्रेक्षकान् प्रति यत्रैकदेशेनागमो भवति असंयतानां सा देशसामन्तक्रिया। सर्वसामन्तक्रिया यत्र सर्वत -समन्तात् प्रेक्षकाणामागमो भवति सा सर्वसामन्तक्रिया। आ० चू०४अ०।अहवा समन्तादनुपतन्ति प्रमत्तसंजयाणं अन्नपाणं प्रति अवंगुरिते संपातिमा सत्ता विणस्सन्ति। आतु० ४अ० ।

सामंतभद्दसूरि-सामन्तभद्रसूरि-पुं० । चन्द्रकुलमूलस्य चन्द्रसूरेः शिष्ये, 'पूर्वगतश्रुतजलधिस्तस्मात् चन्द्रगुरोः सामन्तभद्रसूरीन्द्रः ।' ग० ३ अधि० ।

सामंतसिंह-सामन्तसिंह-पुं० । अणहिलपट्टननगरस्य सप्तमे चौलुक्यवंशीये राजनि, ती० २५ कल्प ।

सामंतोवनिवाइय-सामन्तोपनिपातिक-न० । अभिनयभेदे, रा० । स्था० ।

सामंतोवणिवाइया-सामन्तोपनिपातिकी-स्त्री० । समन्तात् सर्वत उपनिपातो जनमीलकस्तस्मिन् भवा सामन्तोपनिपातिकी । क्रियाभेदे, स्था० २ ठा० १ उ० । आ० चू० । सामन्तोवनिवाइया किरिया दुविहा पण्णत्ता, तं जहा—जीवसामंतोवनिवाइया, अजीवसामंतोवनिवाइया । सामंतोवणिवाइया सम्मंताद्गुणगतनीति सामन्तोवणिवाइया सा द्विविधा अजीवजीवसामन्तोवणिवाइया । जधा एगस्स सडो तं जणो पलोएति । जधा जधा पलोएति, तहा तहा सो हरिसं गच्छति, एवं अजीवे विरहकम्मादिसु । आ० चू० ४ अ० । आव० ।

सामकंति-श्यामकान्ति-त्रि० । श्यामा कान्तिर्यस्येति । श्यामले, प्रव० २६ द्वार ।

सामकरील्ल-श्यामकरील-न० । प्रियङ्गोः प्रत्यग्रे कन्दले, अणु० ।

सामकोह-श्यामक्रोध-पुं० । नमिजिनसमकालिकैरवतजिने, 'नमिजिणचंदो भरहे, एरवए सामकोहजिणचंदो । एगसमएण आया, दस वि जिणा अस्सिणी जोगा' । ति० ।

सामग-श्यामक-त्रि० । ( सॉमा ) धान्ये, आचा० १ श्रु० ८ अ० ६ उ० । सूत्र० ।

सामग्ग-श्लिष्-धा० । आलिङ्गने, "श्लिषेः सामग्गावयास-परिअन्ताः" ॥ ८ । ४ । १९० ॥ इति श्लिष्यतेः सामग्गादेशः । सामग्गइ । श्लिष्यति । प्रा० ४ पाद ।

सामग्गिय-सामग्र्य-न० । समग्रतायाम्, 'तस्स भिक्खुस्स भिक्खुणीए वा सामग्गियं जं सव्वट्ठेहिं समिते सया जए' त्ति । आचा०२ श्रु०१ चू०१ अ०१ उ० । सामग्र्यं समग्रता यदुद्गमोत्पादनग्रहणैषणासंयोजनाप्रमाणाङ्गारधूमकारणैः सुपरिशुद्धस्य पिण्डस्योपादानं सम्पूर्णो भिक्षुभावः । आचा०२ श्रु० १ चू० १ अ० १ उ० ।

सामचंद्र-श्यामचन्द्र-पुं० । भरतजसुपार्श्वजिनसमकालिके ऐरवतजे तीर्थकरे, ति० ।

सामच्छ-सामर्थ्य-न० । "सामार्थ्योत्सुकोत्सवे वा" ॥ ८ । २ । २२ ॥ इति संयुक्तस्य च्छो वा । प्रा० । शक्तौ, वीर्ये, आ० चू० १ अ० ।

सामच्छण-देशी-पर्यालोचने, वृ० १ उ० ३ प्रक० । आ० म० । नि० चू० ।

सामज्ज-श्यामार्य-पुं० । स्वातिशिष्ये हारीतगोत्रे स्थविरे, "हारियगुत्तं साइं च वंदामो हारियं च सामज्जं ।" नं० । अयमेव प्रज्ञापनाकारकः कालिकाचार्यः । जै० इ० ।

सामण-श्रामण-त्रि० । श्रमणानामयं श्रामणः । श्रमणसंबन्धिनि, आव० १ अ० । आ० म० ।

सामणि-श्रामणि-पुं० । श्रमणस्यापत्यं श्रामणिः । श्रमणेन परस्त्रियामुत्पादिते पुत्रे, सूत्र० १ श्रु० ४ अ० २ उ० ।

सामणिय-श्रामणिक-त्रि० । श्रमणानां सम्बन्धिनि, दश० १ अ० ।

सामण्ण-श्रामण्य-न० । श्रमणस्य भावः श्रामण्यम् । संपूर्णसंयमे, सूत्र० २ श्रु० ६ अ० । चारित्रे, उत्त० १८ अ० । दश० । षड्जीवनिकायरूपे श्रमणभावे, दश० ४ अ० । श्रमणत्वे, कल्प०३अधि० ६ क्षण । सकलयतिसमाचारे, दश० ५ तत्त्व । उत्त० । साधुत्वे, उत्त० २ अ० । व्रते, अवद्यहेतुत्यागो हि व्रतम् । रागद्वेषावेव तत्त्वतस्तद्धेतू उक्तनीतितश्च न स्त्रीभ्यः परं तन्मूलमिति । उत्त० २ अ० । ( ' सव्वुत्तमलाभाणं सामन्नं चेव लाभमन्नंति । " 'संथार' शब्देऽस्मिन्नेव भागे १५३ पृष्ठे व्याख्यानम् । ) " श्रामण्यस्य फलं मोक्षः, प्रधानमितरत्पुनः । तत्त्वतोऽफलमेवेह, ज्ञेयं कृषिपलालवत् ॥ १ ॥" पं० सू० ४ सूत्र ।

निक्षेप —

सामण्णपुव्वगस्स उ, निक्खेवो होइ नामनिप्फन्नो ।
सामण्णस्स चउक्को, तेरसगो पुव्वयस्स भवे ॥१५२॥

श्राम्यतीति श्रमणः, श्राम्यति-तपस्यति तद्भावः श्रामण्यं, तस्य पूर्व-कारणं श्रामण्यपूर्वं तदेव श्रामण्यपूर्वकमिति संज्ञायां कन् । श्रामण्यकारणं च धृतिः, तन्मूलत्वात्तस्य, तत्प्रतिपादकं चेदमध्ययनमिति भावार्थः । अतः श्रामण्यपूर्वकस्य तु निक्षेपो भवति नामनिष्पन्नः, कोऽसौ ?—अन्यस्याश्रुतत्वात् श्रामण्यपूर्वकमित्ययमेव । तुशब्दः सामान्यविशेषवन्नाम विशेषणार्थः । श्रामण्यपूर्वकमिति सामान्यम् । श्रामण्यं पूर्वं चेति विशेषः, तथा चाह—श्रामण्यस्य चतुष्ककस्त्रयोदशकः पूर्वकस्य भवेन्निक्षेप इति गाथार्थः । दश० २ अ० । समानस्य भावः सामान्यम् । साम्ये, विशे० । ( साम्यविषयो विस्तरः 'णाण' शब्दे चतुर्थभागे १९४० पृष्ठे गतः । ) अविकल्पाया सत्तायामत्र सामान्यम् । विशे० । ( 'तच्च जाइ' शब्दे चतुर्थभागे १४३७ पृष्ठे प्रतिपादितम् । ) अत्यन्तव्यावृत्तानां पिण्डानां यतः कारणाद् अन्योऽन्यस्वरूपानुगमः प्रतीयते तदनुवृत्तिप्रत्ययहेतुः सामान्यम् । तच्च द्विविधम् परमपरं च । तत्र परं सत्ता, भावो, महासामान्यमिति चोच्यते, द्रव्यत्वाद्यवान्तरसामान्याऽपेक्षया महाविषयत्वात् । अपरसामान्यं च द्रव्यत्वादि एतच्च सामान्यविशेष इत्यपि व्यपदिश्यते । तथाहि-द्रव्यत्वं नवसु द्रव्येषु वर्त्तमानत्वात् सामान्यम्, गुणकर्मभ्यो व्यावृत्तत्वात् विशेषः, ततः कर्मधारये सामान्यविशेष इति । एवं द्रव्यत्वाद्यपेक्षया पृथिवीत्वादिकमपरं, तदपेक्षया घटत्वादिकम् । एवं चतुर्विंशतौ गुणेषु वृत्तेर्गुणत्वं सामान्यं, द्रव्यकर्मभ्यो व्यावृत्तेश्च विशेषः । एवं गुणत्वापेक्षया रूपत्वादिकम्, तदपेक्षया नीलत्वादिकम् । एवं पञ्चसु कर्मसु वर्तनात्

कर्मत्वं सामान्यम्, द्रव्यगुणेभ्यो व्यावृत्तत्वाद् विशेषः। एवं कर्मत्वापेक्षया उत्क्षेपणत्वादिकं ज्ञेयम्। तत्र सत्ता-द्रव्यगुणकर्मभ्योऽर्थान्तरं कया युक्त्या ?, इति चेद्, उच्यते—न द्रव्यं सत्ता, द्रव्यादन्येत्यर्थः; एकद्रव्यवत्त्वाद्-एकैकस्मिन् द्रव्ये वर्त्तमानत्वादित्यर्थः, द्रव्यत्ववत्-यथा द्रव्यत्वम्-नवसु द्रव्येषु प्रत्येकं वर्त्तमानं द्रव्यं न भवति, किन्तु सामान्यविशेषलक्षणं द्रव्यत्वमेव; एवं सत्ताऽपि वैशेषिकाणां हि अद्रव्यं वा द्रव्यम्, अनेकद्रव्यं वा द्रव्यम्। तत्राऽद्रव्यं द्रव्यम्-आकाशः, कालो, दिग्, आत्मा, मनः, परमाणवः अनेकद्रव्यं तु—द्व्यणुकादिस्कन्धाः, एकद्रव्यं तु द्रव्यमेव न भवति एकद्रव्यवती च सत्ता, इति द्रव्यलक्षणविलक्षणत्वाद् न द्रव्यम्। एवं न गुणः सत्ता; गुणेषु भावाद्, गुणत्ववत्। यदि हि सत्ता गुणः स्याद् न तर्हि गुणेषु वर्त्तेत, निर्गुणत्वाद् गुणानाम्। वर्त्तते च गुणेषु सत्ता, सन् गुण इति प्रतीतेः। तथा सत्ता-कर्म, कर्मसु भावात् कर्मत्ववत्। यदि च सत्ता कर्म स्याद् न तर्हि कर्मसु वर्त्तेत, निष्कर्मत्वात् कर्मणाम्, वर्त्तते च कर्मसु भावः, सत् कर्मेति प्रतीतेः, तस्मात् पदार्थान्तरं सत्ता। स्या०। जात्यादिकल्पनारहिते वस्तुमात्रे, विशे०। वस्तुनः समाने परिमाणे, स्था० १ ठा०। एकप्रकारे, आ० चू० १ अ०। द्रव्यत्वजीवत्वाजीवत्वादिके, सूत्र० २ श्रु० ७ अ०। विशे०। आ० चू०। आ० म०। (सामान्यलक्षणम् अर्पितम्, अनर्पितं 'लक्खण' शब्दे षष्ठभागे गतम्।)

तत्र सामान्यं द्विविधम्—परम्, अपरं च। परं च सत्ताख्यम्, तच्च त्रिषु द्रव्यगुणकर्मसु पदार्थेष्वनुवृत्तिप्रत्ययस्यैव कारणत्वात् सामान्यमेव न विशेषः। अपरं तु द्रव्यत्वगुणत्वकर्मत्वादिलक्षणम्, तच्च स्वाश्रयेषु द्रव्यादिष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यमित्युच्यते स्वाश्रयस्य च विजातीयेभ्यो व्यावृत्तप्रत्ययहेतुतया विशेषणात् सामान्यमपि सद्विशेषसंज्ञां लभते तथाहि-द्रव्यादिषु 'अगुण' इत्यादिका येयं व्यावृत्तबुद्धिरुत्पद्यते तां प्रत्येषामेव हेतुत्वं नान्यस्य न ह्यगुणत्वादिकमपरमस्ति। अपेक्षाभेदाच्चैकस्य सामान्यविशेषभावो न विरुध्यते। यद्वा-सामान्यरूपता मुख्यतो विशेषसंज्ञा तूपचारतो विशेषाणामिव द्रव्यत्वादीनामपि व्यावृत्तबुद्धिनिबन्धनत्वात् सामान्यस्य चेन्द्रियान्वयव्यतिरेकानुविधाय्यनुगताकारप्रत्ययग्राह्यत्वादध्यक्षतः प्रसिद्धिः। तथा-अनुमानाच्च। तथाहि-व्यावृत्तेषु खण्डमुण्डशाबलेयादिष्वनुगताकारः प्रत्ययस्तद्व्यतिरिक्तानुगताकारनिमित्तनिबन्धनः, व्यावृत्तेष्वनुगताकारप्रत्ययत्वात्। यो यो व्यावृत्तेष्वनुगताकारः प्रत्ययः स तद्व्यतिरिक्तानुगतनिबन्धनो यथा चर्मचीरकम्बलेषु नीलप्रत्ययः, तथा चायं शाबलेयादिषु गौर्गौरिति प्रत्ययस्तस्मात्तद्व्यतिरिक्तानुगतनिमित्तनिबन्धन इति। तथाहि—नेदमनुस्यूताकारज्ञानं पिण्डेषु निर्हेतुकं कादाचित्कत्वात्। न शाबलेयादिपिण्डनिबन्धनं तेषां व्यावृत्तरूपत्वात् अस्य चाऽनुगतरूपत्वात्। यदि चेत् पिण्डमात्रप्रभवं स्यात् तदा शाबलेयादिष्विव कर्कादिष्वपि 'गौर्गौः' इत्युल्लेखेनोत्पद्येत पिण्डरूपतायास्तेष्वप्यविशेषात्। अथवा—इह दोहाद्यर्थक्रियानिबन्धनेष्वेव तेषु 'गौर्गौः' इति प्रत्ययहेतुता न तदर्थक्रियाभावेऽपि वत्सादौ गोबुद्धिप्रवृत्तेः, महिष्यादौ तत्सद्भावेऽपि चाप्रवृत्तेः। न च दुष्टकारणप्रभवत्वं विशदं, किं चार्थक्रियाया अपि प्रतिव्यक्तिभेदे कुतोऽनुगताकारज्ञानहेतुता अभेदे सिद्धमनुगतनिमित्तनिबन्धनत्वमस्य ज्ञानस्य। नचास्य बाधितत्वं सर्वदा सर्वत्र सर्वप्रमातॄणां शाबलेयादिष्वनुस्यूतप्रत्ययोत्पत्तेः। नच दुष्टकारणप्रभवत्वं, विशदेनाक्षाणामप्यनुस्यूताकारस्याक्षजप्रत्यये प्रतिभासनात्। नच संशयविपर्ययानध्यवसायरूपतयाऽस्योत्पत्तिः तद्वैपरीत्येनास्य प्रतिभासनात्। नचैवंभूतस्यापि प्रत्ययस्याप्रमाणता स्वलक्षणविषयस्यापि तस्याऽप्रमाणताप्रसक्तेः। न च प्रतीयमानस्याप्यनुगतप्रत्ययस्यापलापः शक्यते कर्तुं सर्वप्रत्ययापलापप्रसक्तेः। तस्मादनुगतप्रत्ययनिमित्तत्वात् सामान्यसद्भावः सिद्धः। अत्र प्रतिविधीयते—यत्तावदुक्तमध्यक्षप्रत्ययादेव सामान्यं प्रतीयत इति तदयुक्तम्, शाबलेयादिव्यतिरेकेणापरस्यानुगताकारस्याक्षजप्रत्यये सामान्यस्याप्रतिभासनात्, नह्यक्षव्यापारेण शाबलेयादिषु व्यवस्थितं सूत्रकण्ठे गुण इव भिन्नमनुगताकारं सामान्यं केनचिल्लक्ष्यते 'गौः' 'गौः' इति विकल्पज्ञानेनापि न एव समानाकाराः शाबलेयादयो बहिर्व्यवस्थिता अवसीयन्ते अन्तश्च शब्दोल्लेखः, न पुनस्तद्भिन्नमपरं गोत्वं, तन्न निर्विकल्पकेन सविकल्पकेन वाऽध्यक्षेण सामान्यं व्यवस्थापयितुं शक्यम्। यदपि कार्यभूतानुगतप्रत्ययेनानुमानतः सामान्यव्यवस्थापनं तदप्यसङ्गतं तस्य प्रत्ययहेतुत्वेन प्रमाणतो निश्चयात्। तथाहि-अनुगताकारज्ञानस्य निमित्तस्यासंभवात्केनचित् निमित्तेन भाव्यम्, इत्येतावन्मात्रं सिध्यति। तच्च सामान्यमन्यद्वेति न निश्चयो भवताम्। कार्यान्वयव्यतिरेकाभ्यां च कारणत्वावधारणं, पिण्डानां च विज्ञानजन्मनि ततः सामर्थ्यं विशेषप्रत्यये सिद्धमिति। इहापि तेषामेव सामर्थ्यप्रकल्पनं, न सामान्यस्य तस्य क्वचिदपि सामर्थ्यानवधारणात्। तथाहि-पिण्डसद्भावे अनुगताकारज्ञानमुपलभ्यते तदभावे न इति वरमध्यक्षप्रत्ययावसेयानां तेषामेव तन्निमित्तता कल्पनीया। यदपि 'पिण्डानामविशिष्टत्वात् प्रतिनियमो न स्यात् तज्जन्मनि' इत्यभिधानं, तदप्यसङ्गतम्, यतो यथा पिण्डादिरूपतयाऽविशेषेऽपि तन्तूनामेव पटजन्मनि हेतुत्वं न कपालादीनां, तथा शाबलेयादीनामेव 'गौः' 'गौः' इति ज्ञानोत्पादने सामर्थ्यं भविष्यति, न कयाचिद् युक्त्या न कर्कादीनाम्। यथा वा गुडूच्या एव ज्वरादिशमने सामर्थ्यं प्रतीयते न दध्यादेः वस्तुरूपतयाऽविशेषेऽपि तथा प्रकृतेऽपि भविष्यतीति न पर्यनुयोगो युक्तः। किञ्च-सामान्यं परेण मूर्त्तमभ्युपगम्यते अमूर्त्तं वा ?। यद्यमूर्त्तं, न सामान्यं स्यात् रूपवत्, अथ मूर्त्तं तथा च न सामान्यं घटादिवत्। तथा यदि अनंशं सामान्यमभ्युपगम्यते, तर्हि न सामान्यमनंशत्वात् परमाणुवत्। सांशत्वेऽपि न सामान्यं घटवत्। किं च—यदि पिण्डेभ्यो भिन्नं सामान्यं भेदेनैवोपलभ्यते घटादिभ्य इव पटः। न चैकान्ततो व्यक्तिभ्यः सामान्यस्य भेदे 'गोर्गोत्वम्' इति व्यपदेशोपपत्तिः सम्बन्धाभावात्, समवायस्य तत्सम्बन्धत्वेन निषेत्स्यमानत्वात् व्यक्तिभ्यस्तस्याभेदे अन्यत्राननुयायित्वान्न सामान्यरूपता पिण्डस्वरूपवत्। न च भेदेन व्यक्तिभ्यस्तस्यानुपलक्षणं

भिन्नप्रतिभासविषयत्वादसिद्ध, बुद्धिभेदस्य व्यक्तिनिमित्तत्वेन प्रतिपादनात् । किञ्च यदि सामान्यबुद्धिर्व्यक्तिभिन्नसामान्यनिबन्धना भवेत् तदा व्यक्त्यग्रहणेऽपि भवेत्, अश्वबुद्धिवद्वा पिण्डाग्रहणेन च कदाचित्तथा भवेत्, ततो न व्यक्तिव्यतिरिक्तसामान्यसद्भाव । अथ आधारप्रतिपत्तिमन्तरेणाधेयप्रतिपत्तिर्न भवतीति तद्ग्रह एव, तदग्रहो नाभावात् अन्यथा कुण्डाद्याधारप्रतिपत्तिमन्तरेण बदराधेयस्य अप्रतिपत्तेः' तस्याऽप्यभाव एव स्यात्, न बदराऽऽदे प्रतिनियताधारमन्तरेणापि स्वरूपेणोपलब्धेर्नाभाव गोत्वादेस्तु प्रतिनियतपिण्डोपलम्भमन्तरेण स्वरूपेण कदाचनाप्यनुपलब्धेरभाव एव । तेन तदग्रहे तद्बुध्यभावादित्यत्र सामान्याभिव्यञ्जकपिण्डग्रहण एव तदभिव्यङ्ग्यसामान्यबुद्धिसद्भावात् प्रकाशग्रहण एव गृह्यमाणघटादिसत्त्ववत्, सामान्यस्यापि सत्त्वमिति यदुक्तं तन्निरस्तं भवति । सम्म० ३ काण्ड । ( 'णेगम' शब्दे चतुर्थभागे २१५७ पृष्ठे सामान्यस्यैवैकस्य सत्त्वम । ) सामान्यविशेषौ वक्ष्यमाणलक्षणावादिर्यस्य सदसदाद्यनेकान्तस्य तत्तदात्मकं तत् स्वरूपं वस्त्विति । एव च केवलस्य, सामान्यस्य विशेषस्य तदुभयस्य वा स्वतन्त्रस्य प्रमाणविषयत्वं प्रतिक्षिप्त भवति । अथैतदाकर्ण्य कर्णाम्रेडिपीडिता इव यौगा संगिरन्ते । नन्वहो जना ! केनेदं सुहृदा कर्णपुटविटङ्कितमकारि युष्माकम्, स्वतन्त्रौ सामान्यविशेषौ न प्रमाणभूमिरिति । सर्वगत हि सामान्य गोत्वादि, तद्विपरीतास्तु शबलशाबलेयबाहुलेयादयो विशेषा, तत कथमेषामैक्यमाकर्णयितुमपि सकर्णैः शक्यम्? । तथा च सामान्यविशेषावत्यन्तभिन्नौ, विरुद्धधर्माध्यस्तत्वात्, यावेव तावेवम्, यथा पाथःपावकौ तथा चैतौ, तस्मात्तथा, ततो न सामान्यविशेषात्मकत्वं घटादेर्घटते । तदेतत्परमप्रणयपरायणप्रणयिनीप्रियालापप्रायं वासवश्मान्तरेव राजते । तथाहि—यदिद सर्वगतत्वं सामान्यस्य न्यरूपि, तत् किं व्यक्तिसर्वगतत्वम्?, सर्वसर्वगतत्वं वा स्वीकृत्य?, यदि प्राक्तनम्, तदा तदेकोत्पाददेशे तदाविद्यमानं वर्णनीयम् अन्यथा व्यक्तिसर्वगतत्वव्याघातात् । तत्रोत्पन्नाया च व्यक्तौ कुतस्तत् तत्र भवेत्? किं व्यक्त्या सहैवोत्पद्येत व्यक्त्यन्तराद्वा समागच्छेत्? । नाद्य पक्ष । नित्यत्वेनास्य स्वीकृतत्वात् । द्वितीयपक्षे तु ततस्तदागच्छेत् पूर्वव्यक्तिं परित्यज्यागच्छेत्?, अपरित्यज्य वा? । प्राचिकविकल्पे प्राक्तनव्यक्तेर्निःसामान्यताऽऽपत्ति । द्वितीयपक्षे तु किं व्यक्त्या सहैवागच्छेत्? केनचिदंशेन वा? । आद्ये शाबलेयेऽपि बाहुलेयोऽयमिति प्रतीति स्यात् । द्वितीयपक्षे तु सामान्यस्य सांशताऽऽपत्ति, सांशत्वे चास्य व्यक्तिवदनित्यत्वप्राप्ति । अथ विचित्रा वस्तूना शक्ति यथा मन्त्रादिसंस्कृतमन्त्रमुदरस्थ व्याधिविशेष छिनत्ति, नोदरम, तद्वदिहापि सामान्यस्येदृशी शक्ति, यथा-स्वहेतुभ्य समुत्पद्यमानेऽर्थे पूर्वस्थानादचलदेव तत्र वर्त्तत इति चेत्, स्यादेतदेवम्, यद्येकान्तनैकस्य सामान्यस्य प्रमाणेन प्रसिद्धं स्यात्, न चैवम्, तस्यैव तत्त्वतो विचारयितुमुपक्रान्तत्वात् । तथाहि—यद्यस्यैकान्तैकस्य कीर्त्यते तदा भिन्नदेशकालासु व्यक्तिषु वृत्तिर्न स्यादिति । यदि तु स्वभाववादालम्बनमात्रेणैवेयमुपपाद्यते, तदा किममुना सामान्येन?, श्रितेन वाऽन्येनापि भूयसा वस्तुना परिकल्पितेन?, एकैव काचित् पदमनि धीयमाना व्यक्तिरभ्युपगम्यताम् । सा हि तथास्वभावत्वात् तथा तथा प्रथिष्यत इति लाभाभिलापुकस्य मूलोच्छेद । तन्न व्यक्तिसर्वगतत्वमेतस्य सङ्गतिगोचरीभावमभजत् । नापि सर्वसर्वगतत्वम्, खण्डमुण्डादिव्यक्त्यन्तरालेऽपि तदुपलम्भप्रसङ्गात् । अव्यक्तत्वात्तत्र तस्यानुपलम्भ इति चेत्, व्यक्तिष्वात्मनोऽप्यनुपलम्भोऽत एव तत्रास्तु । अन्तराले व्यक्त्यात्मन सद्भावावेदकप्रमाणाभावात्, असत्त्वादेवानुपलम्भे सामान्यस्यापि सोऽसत्त्वादेव तत्रास्तु विशेषाभावात् । किञ्च—प्रथमव्यक्तिसमाकलनवेलायां तदभिव्यक्तस्य सामान्यस्य सर्वात्मनाऽभिव्यक्तिर्जातैव, अन्यथा व्यक्ताव्यक्तस्वभावभेदेनानेकत्वानुषङ्गादसामान्यस्वरूपताऽऽपत्ति । तस्मादुपलब्धिलक्षणप्राप्तस्य स्वव्यक्त्यन्तराले सामान्यस्यानुपलम्भादसत्त्वम्, व्यक्तिस्वात्मवत् । अपि च—अव्यक्तत्वात् तत्र तस्यानुपलम्भस्तदा सिध्येद्, यदि व्यक्त्यभिव्यङ्ग्यता सामान्यस्य सिद्धा स्यात्, न चैवम्—नित्यैकरूपस्यास्याभिव्यक्तेरेवानुपपत्ते । तथाहि—व्यक्तिरुपकार कञ्चित्कुर्वती सामान्यमभिव्यञ्जयेत्, इतरथा वा । कुर्वती चेत्, कोऽनया तस्योपकार क्रियते । तज्ज्ञानोत्पादनयोग्यता चेत्, सा ततो भिन्ना, अभिन्ना वा विधीयेत । भिन्ना चेत्, तत्करणे सामान्यस्य न किञ्चित्कृतमिति तदवस्थाऽस्यानभिव्यक्तिः । अभिन्ना चेत्, तत्करणे सामान्यमेव कृतं स्यात्, तथा चानित्यत्वप्राप्ति । तज्ज्ञान चेदुपकार तर्हि कथं सामान्यस्य सिद्धि?, अनुगतज्ञानस्य व्यक्तिभ्य एव प्रादुर्भावात् । तत्सहायस्यास्यैवात्र व्यापार इत्यपि श्रद्धामात्रम्, यतो यदि घटोत्पत्तौ दण्डाद्युपेतकुम्भकारवद् व्यक्त्युपेतं सामान्यमनुगतज्ञानोत्पत्तौ व्याप्रियमाणं प्रतीयेत, तदा स्यादेतत्, तच्च नास्त्येव । न किञ्चित् कुर्वत्याश्च व्यञ्जकत्वे विजातीयव्यक्तेरपि व्यञ्जकत्वप्रसङ्ग । तन्नाव्यक्तत्वात् तत्र तस्यानुपलम्भ, किन्त्वसत्त्वादेव, इति न सर्वसर्वगतमप्येतद् भवितुमर्हति, किन्तु-प्रतिव्यक्ति कथञ्चिद्विभिन्नम्, कथञ्चित्तदात्मकत्वाद्, विसदृशपरिणामवत् । यथैव हि काचित् व्यक्तिरुपलभ्यमानाद् व्यक्त्यन्तराद्विशिष्टा विसदृशपरिणामदर्शनादवतिष्ठते, तथा सदृशपरिणामात्मकसामान्यदर्शनात् समानेति, तेनायं समानो गौ, सोऽनेन समान इति प्रतीते । नच व्यक्तिस्वरूपादभिन्नत्वात् सामान्यरूपताव्याघातोऽस्य, रूपादेरप्येत एव गुणरूपताव्याघातप्रसङ्गात् । कथञ्चिद् व्यतिरेकस्तु रूपादेरिव सदृशपरिणामस्याप्यस्त्येव । ननु प्रथमव्यक्तिदर्शनवेलायां कथं न समानप्रत्ययोत्पत्ति?, तत्र सदृशपरिणामस्य भावादिति चेत्, तथापि विशिष्टप्रत्ययोत्पत्तिस्तदानीं कस्मान्न स्याद्?, वैसदृश्यस्यापि भावात् । परापेक्षत्वात् तस्याप्रसङ्गोऽन्यत्रापि तुल्य । समानप्रत्ययोऽपि हि परापेक्ष, परापेक्षामन्तरेण क्वचित् कदाचिदप्यभावात्, अणुमहत्त्वादिप्रत्ययवत् । विशेषा अपि नैकान्तेन सामान्याद् विपरीतधर्माणो भवितुमर्हन्ति यतो यदि सामान्यं सर्वगत सिद्धं भवेत् तदा तेषामव्यापकत्वेन ततो विरुद्धधर्माध्यास स्यात्, न चैवम्-सामान्यस्य विशेषाणां च कथञ्चित्परस्पराव्यतिरेकेणानेकरूपतयाऽवस्थितत्वात् । विशेषेभ्यो व्यतिरिक्तत्वाद्धि

सामान्यमप्यनेकमिष्यते, सामान्यात्तु विशेषाणामव्यतिरेकात्तेऽप्येकरूपा इति । एकत्वं च सामान्यस्य सग्रहनयार्पणात् सर्वत्र विज्ञेयम् । रत्ना० ५ परि० । सम्म० ।

सामान्यविशेषयोरन्योन्यानुविद्धस्वरूपत्वदर्शनम्—

सामस्मिम्मि विसेसो, विसेसपक्खे य वयणविणिवेसो ।
दव्वपरिणाममन्नं, दाएइ तयं च णियमेइ ॥ १ ॥

सामान्येऽस्तीत्येतस्मिन् विशेषो द्रव्यमित्यय,तथा विशेषपक्षे च घटादावस्तीत्येतस्य वचनस्य नाम-नामवतोरभेदात्सत्तासामान्यस्य विनिवेश —प्रदर्शनं द्रव्यपरिणतिमन्या सत्ताख्यस्य द्रव्यस्य पृथिव्याख्यां परिणतिमन्या सत्तारूपापरित्यागेनैव वृत्ता दर्शयति—विशेषाभावे सामान्यस्याप्यन्यथाभावप्रसक्ते, यद् यदात्मक तत्तदभावे न भवति, घटाद्यन्यतमविशेषाभावे मृद्विशेषात्मक च सामान्यमिति तदभावे तस्याप्यभाव , तथा- तक च विशेषम्, द्वितीयपक्षे सामान्यात्मनि नियमयति विशेष सामान्यात्मक एव तदभावे तस्याप्यभावप्रसङ्गाद् यत सामान्यात्मकस्य विशेषस्य सामान्याभावे घटादेरिव मृदभावे न भावो युक्त ।

( सामान्यविशेषयोरेकान्तभेदं वदतो दोषाऽऽपत्तिप्रकटनम् ) न च विशेषाद् व्यतिरिक्तं सामान्यमेकान्तत , तस्माद्वा विशेषाश्चयमता भिन्न इत्यभ्युपगन्तव्यम् । अध्यक्षादिप्रमाणविरोधादित्याह—

एगंतणिव्विसेसं, एगंत विसेसियं च वयमाणो ।
दव्वस्स पज्जवे प-ज्जवा य दविय णियत्तेइ ॥ २ ॥

एकान्तेन निर्गता विशेषा यस्मात्सामान्यात् तद्विशेषविकलं सामान्यं वदन् तद् द्रव्यस्य पर्यायानृजुत्वादीन् निवर्तयति ऋजु-वक्रतापर्यायाक्रान्ताङ्गुल्यादिद्रव्यस्याध्यक्षादिप्रमाणप्रतीयमानस्य विनिवृत्तिप्रसक्तेरध्यक्षादिप्रमाणबाधापत्ति तथैकान्तविशेषसामान्यरहितं वदन् पर्यायेभ्यो विशेषभ्यो द्रव्य निवर्तयति एव चाङ्गुल्यादिद्रव्यव्यतिरिक्त ऋजु-वक्रतादिविशेषस्य प्रत्यक्षस्याप्यवगतस्य निवृत्तिप्रसक्ति । नचाबाधितप्रमाणविषयीकृतस्य तथाभूतस्य तस्य निवृत्तिर्युक्ता, सर्वभावनिवृत्तिप्रसक्ते अन्याभावाभ्युपगमस्यापि तन्निबन्धनत्वात् तत्प्रतीतस्याप्यभावे सर्वव्यवहाराभाव इति प्रतिपादितम् । अत्राह-'सामाणम्मि' इत्यादिकाण्ड नारब्धव्यम् मुक्तार्थत्वात् यतो न तावदनेन वस्त्वनेकान्तात्मकं प्रतिपाद्यते " एगदवियम्मि ' ( प्र० का० गा० ३१ ) इत्यादिना ' इहरा समूहसिद्ध' (प्र० का० गा०२७) इत्यादिना च तस्य प्रतिपादितत्वात् , तथा-'उप्पायट्ठिइभगा, हदि दवियलक्खणं एयं ।' (प्र० का० गा० २) इत्यनेन लक्षणद्वारेण सर्वस्य सत अनेकान्तात्मकत्व प्रदर्शितमेव अर्थप्रमाणविषयवाक्यनिरूपणार्थमिदं प्रस्तूयते तदपि न सम्यक्, 'सवियप्पणिवियप्पमि' (प्र० का० गा० ३५) इत्यादिना तस्यापि निरूपितत्वात् , वाक्यस्य च वस्तुत्वात् तन्निरूपणे तस्यापि निरूपितत्वात् न तन्निरूपणार्थमप्येतत् पुनरुक्तम् एवमतत् किन्तु प्रमेयप्राधान्येन तद्ग्राहकस्य प्रमाणस्यापि निरूपणमित्येतत्प्रदर्शनद्वारेण तत्प्रतिपादकवाक्यावतार' प्राग् विहित ; इह त्वविद्यमानप्रमेयस्य प्रमाणस्य प्रमाणत्वासम्भवात् प्रमाणनिरूपणद्वारेण प्रमेयनिरूपणमिति प्रदर्शनद्वारेणैतद्वाक्यावतार, इत्यदोष' । यद्वा—अनेकान्तपक्षोक्तदोषपरिहारोऽनेकधा व्यवस्थाप्यत इति न कश्चिद्दोष । 'सामन्नम्मी ' त्यादिसूत्रसंदर्भविरचने ।

सामान्यविशेषाऽनेकान्तात्मकवस्तुप्रतिपादकं वचनमाप्तस्य इतरस्येत्येतदेव दर्शयन्नाह—

पच्चुप्पन्नं भावं, विगयभविस्सेहिं जं समाणेइ ।
एयं पडुच्च वयणं, दव्वंतरणिस्सियं जं च ॥ ३ ॥

प्रत्युत्पन्नं भाव वस्तु वर्त्तमानपरिणामं विगतभविष्यद्भ्यां पर्यायाभ्यां यत्समानरूपतया नयति—प्रतिपादयति वच तत्प्रतीत्य वचनं-समीचिना र्थवचनं, सर्वज्ञवचनमित्यर्थ , अन्यच्चानाप्तवचनम् । ननु वर्त्तमानपर्यायस्य प्रागपि सद्भावे कारकव्यापारवैफल्य क्रियागुणव्यपदेशाना च प्रागप्युपलम्भप्रसङ्गश्च,उत्तरकाल च सद्भावे विनाशहेतुव्यापारनैरर्थक्यम् उपलब्ध्यादिप्रसङ्गश्च । तता यदैवोपलम्भादि कार्यकृत्तदैव, न, प्राग् न पश्चात् तदर्थक्रियालक्षणसत्त्वविरहे वस्तुनोऽभावात् असदेतत्, तस्य प्रागसत्वे दलस्येत्ययोगत् न चात्मादि द्रव्यं विज्ञानादिपर्यायोत्पत्तौ दल तस्य निष्पन्नत्वात् न च निष्पन्नस्यैव पुनर्निष्पत्ति अनवस्थाप्रसङ्गात् न च तत्र विद्यमान एव ज्ञानादिकार्योत्पत्तिस्तत्रेति सम्बन्धाभावतोऽव्यपदेशाभावप्रसङ्गात्, समवायसम्बन्धप्रकल्पनाया तस्य सर्वत्राविशेषात्तद्वदाकाशादावपि तत् स्यात् । अथात्मादि द्रव्यमेव तेनाकारेणोत्पद्यत इति नादलोत्पत्ति कार्यस्य भवत्येवमुत्पत्ति, किं त्वात्मद्रव्य पूर्वमप्यासीत् पश्चादपि भविष्यति, तत्सर्वावस्थासु तादात्म्यप्रतीतिरन्यथा पूर्वोत्तरावस्थयोस्तत्प्रतिभासा न भवेत् । न चैकत्वप्रतिभासा भ्रान्तो बाधकाभावे भ्रान्त्यसिद्धे । नचार्थक्रियाविरोधो नित्यत्व बाधक , अनित्यत्वे एव तस्य बाधकत्वेन प्रतिपादनात् । नचोत्पादविनाशयोरपि तत्र प्रतिपत्तावेकान्ततो नित्यत्वमेव, परिणामनित्यतया तस्य नित्यत्वात्, अन्यथा खरविषाणवत् तस्याभावप्रसङ्गात् । न चैव तस्य विकारित्वप्रसङ्गो दोषाय, अभीष्टत्वात् न च नित्यत्वविरोधस्तथैव तत्तत्त्वप्रतीते, न च तस्य तथात्वप्रतिपत्तिर्भ्रान्ति बाधकाभावादित्युक्तत्वात् । अथ ज्ञानपर्यायादात्मनो व्यतिरेके भेदेनोपलम्भ स्यादव्यतिरेके पर्यायमात्र द्रव्यमात्रं वा भवेत् व्यतिरेकाव्यतिरेकपक्षस्तु विरोधाघ्रात , अनुभयपक्षस्त्वन्योन्यव्यवच्छेदरूपाणामेकनिषेधेनापरविधानादसङ्गत , असदेतत्-व्यतिरेकाव्यतिरेकपक्षस्याभ्युपगमात् नच व्यतिरेकपक्षभावी तद्व्यतिरेकेणोपलब्धिप्रसङ्गो दोष , एकज्ञानव्यतिरेकेण ज्ञानान्तरेऽपि तस्य प्रतीतेर्व्यतिरेकेणोपलम्भस्य सद्भावात् । अव्यतिरेकोऽपि ज्ञानात्मकत्वेन तस्य प्रतीते , नच व्यतिरेकाव्यतिरेकयोरन्योन्यपरिहारेणावस्थानाद् विरोधोऽबाधितप्रमाणविषयीकृते वस्तुतत्त्व विरोधासंभवात् , अन्यथा संशयज्ञानस्यैकानेकरूपस्य वैशेषिकेण ग्राह्यग्राहकसंवित्तिरूपस्य बुद्ध्यात्मनश्चैकानेकस्वभावस्य सौगतेन कथ प्रतिपादनमुपपत्तिमद् भवेत् , यदि प्रमाणप्रतिपन्ने वस्तुतत्त्वे विरोध सगच्छतेत्यादि पूर्वमेव प्रतिपादितम्, वत्तमानपर्यायस्यान्वयिद्रव्यद्वारेण त्रिकालास्तित्वप्रतिपादक प्रतीत्य वचनमिति सिद्ध ' परमाण्वारम्भकद्रव्यात् कार्यद्रव्य द्व्यणुकादि ' द्रव्यान्तर ' वैशेषिकाभिप्रायतस्तेन नि सृत संबन्धं

कारणं परमाणवादि यत्प्रतिपादयति तदपि प्रतीत्य वचनम्, तथाहि—व्यणुकरूपा ये परमाणव प्रादुर्भूता द्व्यणुकतया अध्युना परमाणुरूपतया अविचलितस्वरूपा अभ्युपगन्तव्या, अन्यथा तद्रूपतयाऽनुत्पादिप्राक्तनरूपताऽपगमो न स्यात् परमाणववस्थावत् प्राक्तनरूपानपगमे वा नोत्तररूपतयेतपत्तिस्तदवस्थावत्। परमाणुरूपतयाऽपि विनाशोत्पत्त्यभ्युपगमे पूर्वोत्तरावस्थयो निराधारविगमप्रादुर्भावप्रसक्तिः न च तदवस्थयोरेवाधारत्वम्, तयोस्तदानीमसत्त्वात्। न च 'पूर्वोत्तरावस्थयोर्द्रव्यविनाशप्रादुर्भावयो' कारणस्याऽविनाशप्रादुर्भावौ ततस्तस्यैकान्ततो हिमवद्विन्ध्ययोरिव भेदप्रसक्तेः। न च कारणाश्रितस्य कार्यद्रव्यस्योत्पत्तेर्नायं दोष, तयोर्युतसिद्धि कुण्डवदरवत् पृथगुपलब्धिप्रसक्तेः। अयुतसिद्धावपि कार्योत्पत्तौ कारणस्याप्युत्पत्तिप्रसक्ति; अन्यथाऽयुतसिद्धयनुपपत्ते। अथायुताश्रयसमवायित्वमयुतसिद्धि, सा च कार्योत्पत्तौ कारणानुत्पत्तावपि भवत्येव न समवायासिद्धावयुतसिद्धयसिद्धे. नचायुतसिद्धित एव समवायसिद्धि, इतरेतराश्रयदोषप्रसक्तेः। नचाध्यक्षतः समवायसिद्धेर्नायं दोष',नन्त्वात्मकपटप्रतिभासमन्तरेणाध्यक्षप्रतिपत्तावपरसमवायाप्रतीते –'इह तन्तुषु पट 'इत्यत्रापि प्रत्यये 'इह तन्तुषु' इति प्रतिपत्तिस्तन्त्वालम्बना 'पट' इति प्रतिपत्ति पटालम्बनासंवेद्यत इति नापरसमवायप्रतिभास। न च 'इह तन्तुषु पट' इति लौकिकी प्रतिपत्ति' किं तु 'पटे तन्तव' इति। नचान्यथाभूतप्रतिपत्त्याऽन्यथाभूतार्थव्यवस्था। नचानुमानादपि समवायप्रसिद्धि, प्रत्यक्षाभावे तत्पूर्वकस्य तस्य तत्राऽप्रवृत्ते। अनुमानपूर्वकस्य तु तस्यानवस्थादिदोषाघ्रातत्वात् तत्राप्रवृत्तिरित्यनेकश प्रतिपादित न पुनरुच्यत इति व्यवस्थितमेतत्। तथाभूतवस्तुप्रतिपादकमेवापूर्वंवचनमेकान्तप्रतिपादकं तु नाप्तवचनम्॥ अथवा-एकद्रव्यादन्यत् द्रव्य द्रव्यान्तरं तस्मिन्नि सूतमवद्धं संबद्धं यत्तदपि प्रतीत्य वचनम्, यथा-दीर्घतरमङ्गुलिद्रव्यमपेक्ष्य ह्रस्वतरमङ्गुष्ठकद्रव्यमिति वच। ह्रस्वदीर्घादिकस्तु स्वधर्म एव द्रव्यान्तरविषयाभिव्यङ्ग्य. पितेव पुत्रादिना॥ यद्वा—गोत्वलक्षणपरिणतियुक्तात् शावलेयद्रव्याद् तत्सदृशपरिणतियुक्तं बाहुलेयादि द्रव्यान्तरम्, तस्मिन्निश्रितं—संबद्धं वाचकत्वेन 'गौ' इ ति यद्वचन तदपि प्रतीत्य वचनम्। न पुन केवलतिर्यक्सामान्य-विशेष-तदुभयादिप्रतिपादकमसद्भूतार्थप्रतिपादकत्वादुन्मत्तवाक्यवत्। ननु प्रत्युत्पन्नपर्यायस्य स्वकालवदतीतानागतकालयो सत्त्वे अतीतानागतकालयोर्वर्त्तमानकालताऽऽपत्ते. अन्यथा तद्रूपतया तयास्तत्सत्त्वासंभवात् त्रैकाल्यायोगात् तस्य तद्विशिष्टतानुपपत्ते.।

तथाभूतार्थप्रतिपादकं वचनमप्रतीत्य वचनमेवेत्याशङ्क्याह—

दव्वं जहा परिणयं,तहेव अत्थि त्ति तम्मि समयम्मि।
विगयभविस्सेहिँ हि उप्प-ज्जवेहिँ भयणा विभयणा वा॥४॥

द्रव्यम्-चेतनाचेतनं,यथा तदाकाराथग्रहणरूपतया,घटादिरूपतया वा परिणतं वर्त्तमानसमये तथैवास्ति। विगतभविष्यद्भिस्तु पर्यायैर्भजना-कथंचित् तैस्तस्यैकत्वं,विभजना-विगमा भजना नानात्वं,वाशब्दस्य कथंचिदर्थस्य तत् त प्रत्युत्पन्नपर्यायस्य विगतभविष्यद्भ्यां न सर्वथैकत्वमिति कथं तत्प्रतिपादकवचस्याप्रतीत्यैव वचनतेति भाव'।

ननु घटादेरर्थस्य कै पर्यायैरस्तित्वमनस्तित्वं चेत्याह—

परपज्जवेहि असरिस-गमेहि णियमेण णिच्चमवि नत्थि।
सरिसेहिँ वि वंजणओ, अत्थि ण पुणऽत्थपज्जाए॥५॥

वर्त्तमानपर्यायव्यतिरिक्तभूतभविष्यत्पर्याया' परपर्यायास्तैर्विसदृशगमैर्विजातीयज्ञानग्राह्यैर्नियमेन—निश्चयेन नित्य-सर्वदा नास्ति तद् द्रव्यम्,तैरपि तदा तस्य सद्भावे अवस्थासंकीर्णताप्रसक्तेः। सदृशैस्तु व्यञ्जनत. सामान्यधर्मैः सद्द्रव्यपृथिवीत्वादिभि. विशेषात्मकैश्च शब्दप्रतिपाद्यैरस्ति सामान्यविशेषात्मकस्य शब्दवाच्यत्वात्। सामान्यमात्रस्य तद्वाच्यशब्दादप्रवृत्तिप्रसक्तेः, अर्थक्रियासमर्थस्य तेनानुक्तत्वात्,सामान्यमात्रस्य च तदुक्तस्यार्थक्रियाया अनिवर्त्तकत्वात्,विशेषमन्तरेण सामान्यस्यासंभवात्। सामान्यप्रतिपादनद्वारेण लक्षणया विशेषप्रतिपादनमपि शब्दात् न संभवति,क्रमप्रतिपत्तरसवेदनात्,विशेषाणा त्वानन्त्यात्, संकेतासम्भवतः शब्दावाच्यत्वम् परस्परव्यावृत्तसामान्यविशेषयोरप्यवाच्यत्वमुभयदोषप्रसङ्गात्। तत उभयात्मकवस्तुगुणप्रधानभावेन शब्देनाभिधीयत इति सदृशैर्व्यञ्जनतोऽस्तीत्युपपन्नं,न पुनर्नैवार्थपर्यायै. ऋजुसूत्राभिमतार्थपर्यायेण तदस्ति अन्योन्यव्यावृत्तवस्तुस्वलक्षणग्राहकत्वात् तस्य। अयं चार्थः पूर्वसूत्र एव प्रदर्शित इत्यन्यथा गाथासूत्र व्याख्येयम्—अन्यवस्तुगता. पर्याया विसदृशसदृशतया द्विप्रकारा, तत्र विसदृशैर्विवक्षितो घटादिर्नैवास्ति। सदृशैस्तु कैश्चिदुक्तवदस्ति, कैश्चिन्नेति तात्पर्यार्थ।

ननु प्रत्युत्पन्नपर्यायेण भावस्यास्तित्वनियमे एकान्तवादापत्तिरित्याह—

पच्चुपण्णम्मि वि पज्जयम्मि भयणागइं पडइ दव्वं।
जं एगगुणाईया, अणंतकप्पागमविसेसा॥६॥

वर्त्तमानेऽपि परिणामे स्वपररूपतया—सदसदात्मरूपतां अधोमध्योर्ध्वादिरूपेण च भेदाऽभेदात्मकतां च भजनागतिमासादयति द्रव्यं, यत् एकगुणकृष्णत्वादयोऽनन्तप्रकारास्तत्र गुणविशेषा तेषा च मध्ये केनचिद् गुणविशेषेण युक्तं तत्, तथाहि-कृष्ण द्रव्यं तद् द्रव्यान्तरेण तुल्यमधिकं ऊन वा भवेत् प्रकारान्तराभावात् प्रथमपक्षे सर्वथा तुल्यत्वे तदेकत्वापत्ति., उत्तरपक्षयो. सङ्ख्येयादिभागगुणवृद्धिहानिभ्या षट्स्थानकप्रतिपत्तिरवश्यंभाविनी। स्यादेतत्-पुद्गलद्रव्यस्य तादृग्भूतापरपुद्गलद्रव्यापेक्षया अनेकान्तरूपता युक्ता प्रत्युत्पन्ने त्वात्मद्रव्यपर्याये कथमनेकान्तरूपता? न आत्मपर्यायस्यापि ज्ञानादेस्तत्तद्ग्राह्यार्थापेक्षयाऽनेकान्तरूपता पुद्गलवन्न विरुध्यते, तथा द्रव्यकषाययोगोपयोगज्ञानदर्शनचारित्रवीर्यप्रभेदात्मकत्वादात्मन' पुद्गलवदनेकान्तरूपता आर्षे प्रतिपादितैव। 'कइविहे ण भंते! आया पण्णत्ते? गोयमा! अट्ठविहे,तं जहा—दविए आया' (भगवती सू० श० १२, उ० १०।) इत्यादि।

इतश्चानेकान्तात्मकता आत्मन. प्रतिपत्तव्येत्याह—

कोवं उप्पायंतो, पुरिसो जीवस्स कारओ होई।

तत्तो वि य भइयव्वो, परम्मि सयमेव भइयव्वो ॥ ७ ॥

कोपपरिणतिमुदयं पुरुषो जीवस्य परभवप्रादुर्भावे निवर्त्तको भवति, तन्निमित्तस्य कर्मण उपादानात्। कोपपरिणामं समासाद्यमानश्च पुरुष ततः परभवजीवाद्विभजनीयो भिन्नो व्यवस्थापनीयः,कार्यकारणयोर्मृत्पिण्डघटवत्कथंचिद्भेदात्.अन्यथा कार्यकारणभावाऽभावप्रसङ्गात् न चासौ ततो भिन्न एव परस्मिन्भवे स्वयमेव पुरुषो भजनीयः, आत्मरूपतया अभेदेन व्यवस्थाप्यत इति भाव, घटाद्याकारपरिणतमृद्द्रव्यवत्कदाचिदभिन्न, कदाचिद्भिन्न इत्यनेकान्त.। यद्वा-कोपपरिणतिमन्यस्मिन् जीव उत्पादयन्पुरुष कारको भवति। ततोऽसौ कोपकारकत्वेन विभजनीय, कोपपरिणतियोग्यजीवे कारकोऽन्यत्राऽकारक इति।

द्रव्यं गुणादिभ्योऽनन्यत् तेऽपि द्रव्यादनन्य एवेत्येतदनेकान्तं मृष्यमाणा आहु —

रूपरसगन्धफासा, असमाणग्गहणलक्खणा जम्हा।
तम्हा दव्वाणुगया, गुण त्ति ते केइ इच्छंति ॥ ८ ॥

रूपरसगन्धस्पर्शा असमानग्रहणलक्षणा यस्मात्ततो द्रव्याश्रिता गुणा इति केचन वैशेषिकाद्या स्वयूथ्या वा सिद्धान्तानभिज्ञा अभ्युपगच्छन्ति। तथाहि-गुणा द्रव्याद् भिन्ना., भिन्नप्रमाणग्राह्यत्वात् भिन्नलक्षणत्वाच्च, स्तम्भात् कुम्भवत्। नचासिद्धो हेतु, द्रव्यस्य 'यमहमद्राक्षं तमेव स्पृशामि' इत्यनुसंधानाध्यक्षग्राह्यत्वाद्रूपादीना, च प्रतिनियतेन्द्रियप्रभवप्रत्ययावसेयत्वात् 'दार्शनं स्पार्शनं च द्रव्यम्' इत्याद्यभिधानादसमानग्रहणता द्रव्यगुणयो. सिद्धा। तथा-विभिन्नलक्षणत्वमपि "क्रियावत् गुणवद् समवायिकारणं द्रव्यम्" (वैशेषिकद० १-१-१५) "द्रव्याश्रयगुणवान् संयोगविभागेष्वकारणमनपेक्ष' (वैशेषिक द० १-१-१६)इति वचनात् सिद्धम्। सम्म० ३ काण्ड। बहूना प्राणिना साधारणे, पञ्चा० ६ विव०।

सामण्णओविणिवाइय-सामान्यतोविनिपातित-न०। अभिनयभेदे, आ० म० १ अ०। ज०।

सामण्णकिरिया-सामान्यक्रिया-स्त्री०। अस्ति भवति विद्यते इत्यादिरूपाया क्रियायाम्, आचा० १ श्रु० २ अ० १ उ०।

सामण्णगुण-सामान्यगुण-पुं०। सर्वद्रव्यवर्तिषु गुणेषु, अथ रूपरसगन्धस्पर्शा रूपिद्रव्यवृत्तेर्विशेषगुणास्तथा संख्यापरिमा (णानि) णे पृथक्त्व संयोगविभागौ परत्वापरत्वे इत्येते सामान्यगुणा। सूत्र० १ श्रु० १२ अ०।

सामण्णगुणपसंसा-सामान्यगुणप्रशंसा-स्त्री०। लोके लोकोत्तराविरुद्धविनयदाक्षिण्यसौजन्यादिगुणस्तुतौ, पञ्चा० ६ विव०।

सामण्णग्गहण-सामान्यग्रहण-न०। सामान्यमेव वस्तु तदेव गृह्यतेऽनेनेति ग्रहणम्। दर्शने, सम्म० २ काण्ड।

सामण्णच्छल-सामान्यच्छल-न०। न्यायप्रसिद्धे छलभेदे, यथाऽहो नु खल्वसौ ब्राह्मणो विद्याचरणसंपन्न इति ब्राह्मणस्तुतिप्रसङ्गे कश्चिद् वदति, संभवति ब्राह्मणे विद्याचरणसंपदिति। तच्छलवादी-ब्राह्मणत्वस्य हेतुतामारोप्य निराकुर्वन्नभियुङ्क्ते-यदि ब्राह्मणे विद्याचरणसपद् भवति तर्हि व्रात्येऽपि सा भवेत्। व्रात्योऽपि ब्राह्मण एवेति औपचारिके प्रयोगे मुख्यप्रतिषेधेन प्रत्यवस्थानम्। स्या०।

सामण्णणय-सामान्यनय-पुं०। नामात्मादिपदार्थानामेकत्वस्याभिमन्तरि सामान्यवादिनि नये,स्या०। तदुक्तम्-"निर्विशेषं हि सामान्यं, भवेत् खरविषाणवत्। सामान्यरहितत्वेन, विशेषास्तद्वदेव हि ॥ १ ॥" तत सिद्धे सामान्यविशेषाऽऽत्मन्यर्थे प्रमाणविषये कुत एवैकस्य परमब्रह्मण प्रमाणविषयत्वम्? । यच्च प्रमेयत्वादित्यनुमानमुक्तम्, तदप्येतेनैवापास्तं बोद्धव्यम्; पक्षस्य प्रत्यक्षबाधितत्वेन हेतो कालात्ययापदिष्टत्वात्। यच्च तत्सिद्धौ प्रतिभासमानत्वं साधनमुक्तम्, तदपि साधनाऽऽभासत्वेन न प्रकृतसाध्यसाधनायाल,प्रतिभासमानत्वं हि निखिलभावाना स्वत ,परतो वा ?। न तावत् स्वत., घटपटमुकुटशकटादीना स्वत' प्रतिभासमानत्वेनासिद्धे। परत. प्रतिभासमानत्वं च-परं विना नोपपद्यते, इति। यच्च परमब्रह्मविवर्तवर्तित्वमखिलभेदानामित्युक्तम्, तदप्यन्वयव्यन्वीयमानद्वयाविनाभावित्वेन पुरुषाद्वैतं प्रतिबध्नात्येव। नच घटादीनां चैतन्यान्वयोऽप्यस्ति मृदाद्यन्वयस्यैव तत्र दर्शनात्। ततो न किञ्चिदेतदपि,अताऽनुमानादपि न तत्सिद्धि.। किञ्च-पक्षहेतुदृष्टान्ता अनुमानोपायभूता परस्परं भिन्ना, अभिन्ना वा ?। भेदे—द्वैतसिद्धि.। अभेदे त्वेकरूपताऽऽपत्तिः। तत् कथमेतेभ्योऽनुमानमात्मानमासादयति ?। यदि च हेतुमन्तरेणापि साध्यसिद्धि. स्यात्, तर्हि द्वैतस्यापि वाङ्मात्रत कथं न सिद्धि. ?। तदुक्तम्—"हेतोरद्वैतसिद्धिश्चेद्, द्वैतं स्याद् हेतुसाध्ययो। हेतुना चेद् विना सिद्धि-र्द्वैतं वाङ्मात्रतो न किम्? ॥ १ ॥" "पुरुष एवेदं सर्वम्" इत्यादे, सर्वं वै खल्विद ब्रह्म" इत्यादेश्चागमादपि न तत्सिद्धि., तस्यापि द्वैताविनाभावित्वेन अद्वैतं प्रति प्रामाण्यासम्भवात्, वाच्यवाचकभावलक्षणस्य द्वैतस्यैव तत्रापि दर्शनात्। तदुक्तम्—'कर्मद्वैतं फलद्वैतं, लोकद्वैत विरुध्यते। विद्याऽविद्याद्वयं न स्याद्, बन्धमोक्षद्वयं तथा ॥ १ ॥' ततः कथमागमादपि तत्सिद्धि. ? । ततो न पुरुषाऽद्वैतलक्षणमेकमेव प्रमाणस्य विषय। इति सुव्यवस्थित प्रपञ्च। स्या०।

सामण्णणिसेह-सामान्यनिषेध-पुं०। निर्विशेषतया निवारणायाम्, पञ्चा० ११ विव०।

सामण्णपरियाग-श्रामण्यपरिपाक-पुं०। सर्वचारित्रपरिपाके, औ०।

सामण्णपुव्विया-श्रामण्यपूर्विका-स्त्री०। श्रामण्यस्य पूर्वे कारण श्रामण्यपूर्वं तदत्र श्रामण्यपूर्वकमिति संज्ञाया कन्। श्रामण्यकारणं च धृतिस्तन्मूलत्वात्तस्य तत्प्रतिपादकं चेदमध्ययनम्, दश०। दशवैकालिकस्य द्वितीयेऽध्ययने, दश०।

अत्र वक्तव्यता—

कहं नु कुज्जा सामण्णं, जो कामे न निवारए।
पए पए विसीदंतो, संकप्पस्स वसंगओ ? ॥ १ ॥

इह च संहितादिक्रमेण प्रतिसूत्र व्याख्याने ग्रन्थगौरवमिति तत्परिज्ञाननिबन्धनं भावार्थमात्रमुच्यते—तत्रापि कत्यहं कदाऽहं कथमहमित्याद्यदृश्यपाठान्तरपरित्यागेन दृश्यं व्याख्यायते—कथं नु कुर्याच्छ्रामण्य य. कामान्न निवारयति ?, कथ—केन प्रकारेण , नु क्षेप , यथा कथं नु स राजा यो न रक्षति ?, कथं नु स वैयाकरणो योऽपशब्दान् प्रयुङ्क्ते, एवं कथं नु स कुर्यात् श्रामण्य—श्रमणभावं य कामान् न निवारयति—न प्रतिषेधते ? , किमिति न करोति ? . तत्र " निमित्तकारणहेतुषु सर्वासां विभक्तीना प्रायो दर्शनम् " इति वचनात्, कारणमाह—पदे पदे विषीदन् संकल्पस्य वशङ्गत कामानिवारणे—नेन्द्रियाद्यपराधपदापेक्षया पदे पदे विषीदनात्सकल्पस्य वशङ्गतत्वात् (अप्रशस्ताध्यवसाय संकल्प.) इति सूत्रसमासार्थ । दश० २ अ० । ( कामादीनां स्वरूपं स्वस्वस्थाने । )

आयावयाहि चय सोगमल्लं,
कामे कमाही कमियं खु दुक्खं ।
छिंदाहि दोसं विलज्जए रागं,
एवं सुही होहिसि संपराए ॥ ५ ॥

संयमगेहान्मनसोऽनिर्गमनार्थम् आतापय-आतापनां कुरु 'एकग्रहणे तज्जातीयग्रहण' मिति न्यायाद् यथानुरूपमूनोदर तादेरपि विधि , अनेनात्मसमुत्थदोषपरिहारमाह-तथा त्यज सौकुमार्य—परित्यज सुकुमारत्वम् , अनेन तूभयसमुत्थदोषपरिहारम् , तथाहि-सौकुमार्यात्कामेच्छा प्रवर्त्तते योषिता च प्रार्थनीयो भवति, एवमुभयासेवनेन कामान्-मागिनरूपितस्वरूपान् क्राम—उल्लङ्घय , यतस्तै क्रान्तै. क्रान्तमेव दु खं भवति, इति शेष , कामनिबन्धनत्वाद् दु खस्य । खुशब्दोऽवधारणे । अधुनाऽन्तरकामक्रमणविधिमाह-छिन्धि द्वेषं व्यपनय राग सम्यग्ज्ञानबलेन विपाकालोचनादिना, क ?, कामेष्विति गम्यते । शब्दादयो हि विषया एव कामा इति कृत्वा । एव कृते फलमाह—एवम्—अनेन प्रकारेण प्रवर्त्तमान , किम् ? सुखमस्यास्तीति सुखी भविष्यसि, क ?-सपराये-संसार, यावदपवर्ग न प्राप्स्यसि तावत्सुखी भविष्यसि , संपराये-परीषहोपसर्गसंग्राम इत्यन्ये । कृत प्रसङ्गेनेति सूत्रार्थ ।

किं च संयमगेहान्मनस एवानिर्गमनार्थमिदं चिन्तयेत् यदुत—

पक्खंदे जलियं जोइं, धूमकेउं दुरासयं ।
नेच्छन्ति वंतयं भोत्तुं, कुले जाया अगंधणे ॥ ६ ॥

प्रस्कन्दन्ति-अध्यवस्यन्ति ज्वलितम्-ज्वालामालाकुलं न मुर्मुरादिरूपम् , कम् ?, ज्योतिषम्-अग्नि-धूमकेतुम्-धूमचिह्नं धूम ध्वजं नोल्कादिरूपं दुरासदम्-दु खेनासाद्यतेऽभिभूयत इति दुरासदस्तं , दुरभिभवमित्यर्थ । चशब्दलोपात्-नेच्छन्ति-नच वाञ्छन्ति वान्त भोक्तुं परित्यक्तमादातुं , विपर्ममितिगम्यते । के ? नागा इति गम्यते । किं विशिष्टा इत्याह-कुले जाता -समुत्पन्ना अगन्धने । नागाना हि भेदद्वयं गन्धनाश्च, अगन्धनाश्च । तत्थ गन्धणागामजे डसिए संतेहि श्रोफिंडिया न विसं तरामुहाओ आवियंति , अगंधणाओ अवि मरणमज्झवस्संति ण य वंतमावयंति । उदाहरणं द्रुमपुष्पिकायामुक्तमेव । उपसंहारस्त्वेवं भावनीय'-यदि नाम तिर्यञ्चोऽप्यभिमानमात्रादपि जीवितं परित्यजन्ति , न च वान्तं भुञ्जते तत्कथमहं जिनवचनाभिज्ञो विपाकदारुणान् विषयान् वान्तान् भोक्ष्ये ? इति सूत्रार्थ । अस्मिन्नेवार्थे द्वितीयमुदाहरणम्-"यदा किल अरिट्ठणेमी पव्वइओ तया रहणेमी तस्स जेट्ठो भाउओ राइमई उवयरइ , जइ णाम एसा ममं इच्छिज्जा , सा वि भगवई निव्विण्णकामभोगा , णायं च तीए-जहा एसो मम अज्झोववण्णो, अण्णया य तीए महुघयसंजुत्ता पेज्जा पीया, रहनेमी आगओ, मयणफलं मुह काऊण य तीए वंतं, भणिय च—एयं पेज्जं पियाहि । तेण भणियं—कहं वन्तं पिज्जइ ? , तीए भणिओ-जइ न पिज्जइ वन तओ अह पि अरिट्ठनेमिसामिणा वता कहं पिविउमिच्छसि ? ।

तथा ह्यधिकृतार्थसंवाद्येवाह—

धिरत्थु ते जसो कामी, जो तं जीवियकारणा ।
वंतं इच्छसि आवेउं, सेयं ते मरणं भवे ॥ ७ ॥

तत्र राजीमति किलैवमुक्तवती-धिगस्तु-धिक्शब्द. कुत्सायाम् , अस्तु—भवतु त—तव , पौरुषमिति गम्यते. हे-यशस्कामिन्निति सासूय क्षत्रियामन्त्रणम् । अथवा-अकारप्रश्लेषादयशस्कामिन् धिगस्तु तव, यस्त्वं जीवितकारणात्-असंयमजीवितहेतो वान्तमिच्छस्यापातु परित्यक्तां भगवता अभिलषसि भोक्तुम् , अत उत्क्रान्तमर्यादस्य श्रेयस्ते मरणं भवेत् शोभनतरं तव मरणं , न पुनरिदमकार्यासेवनमिति सूत्रार्थ. । तओ धम्मो से कहिओ , संवुद्धो पव्वइओ य । राईमई वि तं बोहेऊणं पव्वइया । पच्छा अन्नया कयाइ सो रहनेमी वारवईए भिक्खं हिंडिऊणं सामिसगासमागच्छन्तो वासवद्दलएण अब्भाहओ एक्क गुहं अणुप्पविट्ठो । राईमई वि सामिणो वदणाए गया । वंदित्ता पडिस्सयमागच्छइ । अंतरे य वरिसिउमाढत्तो, भिताय ( भिन्ना ) तमेव गुहमणुप्पविट्ठा—जत्थ सो रहनेमी , वत्थाणि य पविसारियाणि, ताहे तीए अगपच्चंग दिट्ठं, सा रहणमी तीए अज्झोववन्नो , दिट्ठो अणाए इंगयागारकुसलाए य णाओ असो भावो एयस्स ।

ततोऽसाविदमवोचत—

अहं च भोगरायस्स, तं चऽसि अंधगवण्हिणो ।
मा कुले गंधणा होमो, संजमं निहुओ चर ॥ ८ ॥
जइ तं काहिसि भावं, जा जा दिच्छसि नारीओ ।
वायाविद्धु व्व हडो, अट्ठिअप्पा भविस्ससि ॥ ९ ॥
तीसे सो वयणं सोचा, संजयाइ सुभासियं ।
अंकुसेण जहा नागो, धम्मे संपडिवाइओ ॥ १० ॥
एवं करंति संबुद्धा, पंडिया पवियक्खणा ।
विणियट्टंति भोगेसु,जहा से पुरिसुत्तमो ॥ ११॥ त्ति बेमि ।

अहं च भोगराज्ञ —उग्रसेनस्य , दुहितेति गम्यते, त्वं च भवसि अन्धकवृष्णे -समुद्रविजयस्य, सुत इति गम्यत, अतो मा एकैकप्रधानकुले आवा गन्धनौ भूव , उक्तं च-' जह

न सप्पतुल्ला होमु त्ति भणियं होइ ' अत संयमं निभृतश्चर—सर्वदु स्वनिवारणं क्रियाकलापमव्याक्षिप्त कुर्विति सूत्रार्थ.। किञ्च-यदि त्वं करिष्यसि भावम्—अभिप्रायं; प्रार्थनामित्यर्थ , क्व ?—या या द्रक्ष्यसि नारी.—स्त्रिय , तासु तासु एताः शोभना एताश्चाशोभना अनः सेवे का—ममित्येवंभूतं भावं यदि करिष्यसि ततो वाताविद्ध इव हड.—वातप्रेरित इवावद्धमूलो वनस्पतिविशेष अस्थितात्मा भविष्यसि, सकलदु खत्तयनिबन्धनेषु संयमगुणेष्व—( प्रति ) वद्धमूलत्वात् ससारसागरे प्रमादपवनप्रेरित इतश्चेतश्च पर्यटिष्यसीति सूत्रार्थ' । तस्याः—राजीमत्या. असौ—रथनेमि. वचनम्—अनन्तरोदितं श्रुत्वा—आकर्ण्य, किंविशिष्टायास्तस्या ?—संयताया —प्रव्रजिताया इत्यर्थ , किंविशिष्टं वचनम्। सुभाषितम्—संवेगनिवन्धनम् , अङ्कुशेन यथा नागो—हस्ती एव धर्मे संप्रतिपादित.—धर्मे स्थापित इत्यर्थ , केन ? अङ्कुशतुल्येन वचनेन । 'अङ्कुसेन जहा नागो' त्ति-एत्थ उदाहरणं-वसंतपुरं नयरं, तत्थ एगा इब्भएहुया नदीए एहाइ, अन्नो य तरुणो तं दट्ठूण भणइ-' सुएहाय ते पुच्छइ, एसा नइपवरसोहियतरङ्गा। एए य नदीरुक्खा, अहं च पाएसु ते पडिओ ॥ १ ॥ ताहे सा पडिभणइ-' सुहया होउ नई ते, चिरं च जीवतु जे नईरुक्खा । सुएहाय पुच्छयाणं, घत्तीहामो पियं काउं ॥ १ ॥ ' सो य तीसे घरं वा दारं वा ण याणइ, तीसे य विडिल्लियाणि चेडरूवाणि रुक्खे पलोयताणि अच्छति, तेण ताण पुप्फफलाणि सुवहूणि दिएणाणि पुच्छियाणि—य–का एसा ?, ताणि भणन्ति—अमुगस्स सुएहा, सो य तीए विरहं न लहति, तओ परिव्वाइयं ओलग्गिउमाढत्तो, भिक्खा दिन्ना । सा तुट्ठा भणइ—किं करेमि ओलग्गाए फलं ?, तेण भणिया—अमुगस्स सुएहं मम कए भणाहि, तीए गन्तूणं भणिया, अमुगो ते एवं गुणजातीओ पुच्छई, ताए रुट्ठाए पउन्नगाणि धोवन्तीए मसिलित्तएण हत्थेण पिट्ठीए आहया, पचंगुलियं उट्ठियं, अवदारेण निच्छूढा, गया तस्स साहइ—णामं पि सा तव ण सुणेइ, तेण णाय—कालपंचमीए अवदारेण अइगंतव्वं । अइगओ य, असोगवणियाए मिलियाणि सुत्ताणि य जाव पच्चूसावरागपएण ससुरेण दिट्ठाणि, तेण णाय—ण एस मम पुत्तो, पारदारिओ कोइ । पच्छा पायाओ तेण णेउरं गहिय, चेइयं च तीए सो भणिओ--णास लहु, आवइकाले साहेज्जं करेज्जासि, इयरी गतूण भत्तार भणइ--एत्थ घम्मो असोयवणिय वच्चामो, गंतूण सुत्ताणि,' खणमेत्त सुविऊणं भत्तार उट्ठवेइ भणइ य—एय तुज्झ कुलाणुरूवं ? ज णं मम पायाओ ससुरो णेउर कड्ढइ, सो भणइ—सुवसु पभाए लब्भिहिति । पभाए, थेरेणं सिट्ठ, सो य रुट्ठो भणइ विवरीओ थेरो त्ति । थेरो भणइ--मया दिट्ठो अन्नो पुरिसो, विवाए जाए सा भणइ--अहं अप्पाण सोहयामि एव करेहि, तओ एहाया कयवलिकम्मा गया जक्खघरं। तस्स जक्खस्स अतरेण गच्छंतो जो कारगारी सो लग्गइ, अकारगारी नीसरइ, तओ सो विड्डपियनमो पिसायरूवं काऊण णिरतरं घणं कंठे गिण्हइ, तओ सा गंतूणं तं जक्ख भणइ--जो मम मायापिउदिन्नओ भत्तारो तं च पिसायं मोत्तूण जइ अन्नं पुरिसं जाणामि तो मे तुमं जाणिज्जसि त्ति, जक्खो विलक्खो चिंतेइ--एस य ( पास ) केरिसाइं धुत्ती मंतेइ ?, अहग पि वाचओ तीए, णत्थि सइत्तणं खु धुत्तीए, जाव जक्खो चिंतइ ताव सा णिप्फिडया । तओ सो थेरो सव्वलोगेण विलक्खीकओ, हीलिओ य तओ थेरस्स तीए अधिईए णिद्दा णट्ठा, रन्नो य कन्ने गयं, रन्ना सद्दाविऊण अतेउरवालओ कओ, अभिसेक्क च हत्थिरयणं वासघरस्स हेट्ठा वद्धं अच्छइ । इओ य एगा देवी हत्थिमिंठे आसत्ता , णवरं हत्था चोवालयाओ हत्थेण अवतारेइ, पभाए पडिणीणेइ एवं वच्चइ कालो । अन्नया य एगाए रयणीए चिरस्स आगया हत्थिमिंठेण रुट्ठेण हत्थिसंकलाए आहया । मा, भणइ-एयारिसो तारिसा य ण सुव्वइ, मा मज्झ रूसह, तं थेरा पिच्छइ, चिंतियं य णण-एवं पि रक्खिज्ज—माणीओ एयाओ एवं ववहरंति, किं पुण ताओ सदा सच्छंदाओ त्ति ? सुत्तो, पभाए सव्वलोगो उट्ठिओ, सो ण उट्ठेइ, रन्नो कहियं, रन्ना भणिय-सुवउ । चिरस्स य उट्ठिआ पुच्छिओ य, कहिय सव्व, भणइ-जहा एगा देवी ण याणामि कयरा वि । तओ राइणा भएडहत्थी कारविओ, भणियाओ-एयस्स अच्चणियं काऊणं ओलएडेह, तओ सव्वाहि ओलंडिओ एगा णेच्छइ, भणइ य-अहं वीहेमि, तओ रन्ना उप्पलेण आहया, मुच्छिया पडिया , रन्ना जाणिय-एसा कारि त्ति । भणियं च 'णेण-मत्तगयंआरुहंतीए, भंडमयस्स गयस्स वीहीहि । तत्थ न मुच्छियसकलाहया, एत्थ मुच्छियउप्पलाहया ॥ १ ॥' तओ सरीरं जोइयं जाव संकलापहारो दिट्ठो तओ परुट्ठेण रएणा देवी मिंठो हत्थी य तिणि वि छिन्नकडए चडावियाए, भणिओ य मिंठो-एत्थ वाहेहि हत्थिं, दोहि य पासेहिं ते (वे)लुग्गाहा उट्ठिया, जाव एगो पाओ आगासे ठविओ, जणो भणइ-किं एस तिरिओ जाणइ ?, एयाणि मारियव्वाणि, तह वि राया रोसं न मुयइ, जाव तिणि पाया आगासे कया, एगेण ठिओ, लोगेण कओ अकन्दो किमयं हत्थिरयणं विणासिज्जइ ?, रएणा मिंठो भणिओ—तरसि णियत्तेउ ?, भणइ—जइ दुयगाण पि अभयं देसि, दिन्नं,तओ तेण अकुसेण नियत्तिओ हत्थि' त्ति । दार्ष्टान्तिकयोजना कृतैवेति सूत्रार्थ. ॥ १० ॥ एव कुर्वन्ति संवुद्धा—वुद्धिमन्तो वुद्धा. सम्यग् दर्शनसाहचर्येण-दर्शनैकीभावेन वा वुद्धा. सवुद्धा-विदितविषयस्वभावा सम्यग्दृष्टय इत्यर्थ. , त एव विशेष्यन्ते पण्डिता. प्रविचक्षणा । तत्र पण्डिता सम्यग्ज्ञानवन्त. प्रविचक्षणा. चरणपरिणामवन्त. । अन्ये तु व्याचक्षत—संवुद्धा. सामान्येन वुद्धिमन्त. पण्डिता वान्तभोगासेवनदोषज्ञा. प्रविचक्षणा अवद्यभीरव इति, किं कुर्वन्ति ?-विनिवर्तन्ते भोगेभ्य. विविधम्—अनेकै प्रकारैरनादिभवाभ्यासवलेन कदर्थ्यमाना अपि मोहोदयेन ( वि ) निवर्त्तन्ते भोगेभ्यो-विषयेभ्य , यथा क इत्यत्राह—यथाऽसौ पुरुषोत्तम —रथनेमि । आह-कथं तस्य पुरुषोत्तमत्वम् ?,यो हि प्रव्रजितोऽपि विषयाभिलाषीति उच्यते—अभिलाषेऽप्यप्रवृत्ते. , कापुरुषस्त्वभिलाषानुरूपं चेष्टत एवेति । अपरस्त्वाह—दशवैकालिकं नियतश्रुतमेव, यत उक्तम्—" गायज्झयणाइएणा , इसिभासियमो

पइन्नयसुया य । एए होंति आणियया, णियय पुण सेसमुस्सन्नं ॥ १ ॥ " तत्कथमभिनवोत्पन्नमिदमुदाहरणं युज्यत इति?, उच्यते—एवम्भूतार्थस्यैव नियतश्रुतेऽपि भावाद्, उत्पन्नग्रहणाच्चादोषः, प्रायो-नियतं न तु सर्वथा नियतमेवेत्यर्थः । ब्रवीमीति न स्वमनीषिकया किन्तु तीर्थकरगणधरोपदेशेन । उक्तोऽनुगमः, नयाः पूर्ववदिति । दश०-८अ०।

सामण्णभाव–सामान्यभाव–पुं०। सामान्यरूपतायाम्, विशे०।

सामण्णलक्खण–सामान्यलक्षण–न०। लक्षणभेदे, विशे०। (तत्स्वरूपम 'लक्खण' शब्दे षष्ठभागे गतम्।)

सामण्णविसेस–सामान्यविशेष–पुं०। पृथिवीत्वं जलत्वं कृष्णत्वं नीलत्वमित्याद्यवान्तरसामान्यरूपे, आ० म० १ अ०। सामान्यानि विजातीयेभ्यो व्यावर्त्तनाच्च विशेषा इति सामान्यविशेषाः। स्वस्वाधाराविशेषेषु अनुगताकारप्रत्ययवचनहेतुषु द्रव्यत्वादिषु, आ० म० १ अ०। सूत्र०। अनुवृत्तव्यावृत्तावबोधहेतुभूते सामान्ये, स्था० ७ ठा० ३ उ०।

यच्चोक्तं-( कैश्चित् ) एतेन सामान्यविशेषरूपमपि प्रतिक्षिप्तमवगन्तव्यमित्यादि । तदप्ययुक्तम्-सामान्यविशेषरूपस्य वस्तुनोऽनुभवसिद्धत्वात्, तथाहि-घटादिषु घटो घट इति सामान्याकारा बुद्धिरुत्पद्यते, मार्तिकस्ताम्रो राजत इति विशेषाकारा च, पटादिर्वा न भवतीति । न चार्थसद्भावोऽर्थसद्भावादेव निश्चीयते, सर्वसत्त्वानां सर्वज्ञत्वप्रसङ्गात्, सर्वार्थानामेव सद्भावस्याविशेषात् । किं तर्हि ? अर्थज्ञानसद्भावात् । ज्ञानं च सामान्यविशेषाकारमेवोपजायत इति अतोऽनुभवसिद्धत्वात् सामान्यविशेषरूपं वस्त्विति ।

अधिकारान्तरमधिकृत्याह—यच्चोक्तमित्यादिना । यच्चोक्तं पूर्वपक्षग्रन्थे—एतेन सामान्यविशेषरूपमपि प्रतिक्षिप्तमवगन्तव्यमित्यादि । तदप्ययुक्तम् । कुत इत्याह—सामान्यविशेषरूपस्य वस्तुनोऽनुभवसिद्धत्वात् । एतदेवाह-तथाहीत्यादिना, तथाहि—घटादिषु पदार्थेषु, घटो घट इत्येवं सामान्याकारा बुद्धिरुत्पद्यते तथा मार्तिको मृदादिनिर्वृत्तो मार्तिकः, ताम्रविकारस्ताम्रः, रजतविकारो राजतः, इति विशेषाकारा च बुद्धिरुत्पद्यते, पटादिर्वा न भवतीत्येवम् । इय च-वस्तुतत्त्वव्यवस्थानिबन्धनमित्यधिकृत्याह—न चेत्यादि । न-चाऽर्थसद्भावोऽर्थसद्भावादेव कारणात्, निश्चीयते । कुत-इत्याह-सर्वसत्त्वानां सर्वज्ञत्वप्रसङ्गात्, प्रसङ्गश्च सर्वार्थानामेव भुवनोदरवर्तिनां सद्भावस्याविशेषात्, किं तर्हि ? अर्थज्ञानसद्भावाद् अर्थसद्भावो निश्चीयते । यदि नामैवं, ततः किमित्याह—ज्ञानं च सामान्यविशेषाकारमेवोपजायत इति निदर्शितम् । अतोऽनुभवसिद्धत्वात् कारणात्, सामान्यविशेषरूपं वस्त्विति ।

न चैतद्विज्ञानं भ्रान्तमिति युज्यते, घटादिसन्निधावविकलतदन्यकारणानां सर्वेषामेवाविशेषेणोपजायमानत्वात् । भ्रान्तमेतत्, विकल्पकत्वादिति चेत् । अभ्रान्तं तर्हि कीदृग् ? इति वाच्यम् । निर्विकल्पकमिति चेत् । न । तस्यापि निर्विकल्पकत्वेन भ्रान्ततापत्तेः । अर्थसामर्थ्यजन्यत्वादनापत्तिरिति चेत् । न अस्य विकल्पकेऽपि तुल्यत्वात् । क्वचिद्व्यभिचारदर्शनादतुल्यत्वमिति चेत् । न तस्य निर्विकल्पकेऽपि भावात् । न तन्नः प्रमाणं, तदाभासत्वादिति चेत् । विकल्पकेऽपि तुल्यः परिहारः । अर्थधर्मातिरिक्तशब्दभावतोऽस्यार्थसामर्थ्यजन्यत्वानुपपत्तिरिति चेत् । न । बोधनियतार्थतादिभिर्व्यभिचारात् । न ते, अर्थादन्यतो भावादिति चेत् । शब्दोऽपि तद्योग्यद्रव्येभ्यः, इति समानः समाधिः ।

न चेत्यादि । न चैतद्विज्ञानमनन्तरोदितं, भ्रान्तमिति युज्यते । कुत इत्याह—घटादिसन्निधौ सति, अविकलतदन्यकारणानां सपूर्णालोकादिकारणानामित्यर्थः । सर्वेषामेव 'प्रमातृणाम्' इति सामर्थ्यगम्यम्, अविशेषेण सामान्येन भिक्षूपासकादीनामपि, उपजायमानत्वात् कारणात् । भ्रान्तमेतदधिकृतज्ञानम् । कुत इत्याह—विकल्पकत्वादिति चेत् । एतदाशङ्क्याह—अभ्रान्तं तर्हि कीदृगिति एतद् वाच्यम् । निर्विकल्पकमिति चेत् अभ्रान्तम् । एतदाशङ्क्याह—न, तस्यापि निर्विकल्पकस्य, निर्विकल्पकत्वेन हेतुना, भ्रान्ततापत्तेः, स्वरूपमेव भ्रान्तिनिबन्धनम्, एतच्चास्यापि विद्यत एवेत्यभिप्रायः । अर्थसामर्थ्यजन्यत्वाद् निर्विकल्पकस्य, अनापत्तिरिति चेद् भ्रान्ततायाः इति प्रक्रमः । एतदाशङ्क्याह—न, अस्य अर्थसामर्थ्यजन्यत्वस्य, विकल्पकेऽपि तुल्यत्वात्, एतदप्यर्थसामर्थ्यजन्यमेवेत्यर्थः । क्वचिच्छात्रमनोराज्यविकल्पादौ, व्यभिचारदर्शनात् कारणात्, अतुल्यमिति चेद् न ह्यसावर्थसामर्थ्यजन्य इति । एतदाशङ्क्याह-न, तस्य क्वचिद् व्यभिचारस्य, निर्विकल्पकेऽपि भावात् । न हि तदपि सर्वमर्थसामर्थ्यजन्यम् । न तत्-अर्थसामर्थ्याजन्यम्, नोऽस्माकं, प्रमाणम्, कुत इत्याह-तदाभासत्वात् प्रमाणाभासत्वात्, इति चेत् । एतदाशङ्क्याह-विकल्पकेऽपि तुल्यः परिहारः अर्थसामर्थ्याजन्यं विकल्पकमपि न नः प्रमाणं तदाभासत्वादेवेति । अर्थधर्मातिरिक्तश्चासौ शब्दश्चेति विग्रहः, तद्भावतः कारणात्, अस्य विकल्पस्य, अर्थसामर्थ्यजन्यत्वानुपपत्तिरसम्भव एवेति चेत्—उक्तं च धर्मकीर्तिना-" न ह्यर्थे शब्दाः सन्ति तदात्मानो वा, येन तस्मिन् प्रतिभासेरन्" इति । एतदाशङ्क्याह-न । बोधनियतार्थतादिभिः आदिशब्दात्-कुशलतादिपरिग्रहः व्यभिचारात्—अर्थसामर्थ्यजन्यत्वानुपपत्तेरिति । न, ते बोधादयः, अर्थादन्यतः समनन्तरादेर्भावादिति चेत् । एतदाशङ्क्याह—शब्दोऽपि तद्योग्यद्रव्येभ्यः शब्दप्रायोग्यद्रव्येभ्योऽन्येभ्य एव, इत्येवं, समानः-तुल्यः, समाधिः-परिहारः । अनेन च " अयमर्थासंस्पर्शी संवेदनधर्मोऽर्थेषु तन्नियोजनात् " इत्यपि प्रत्युक्तम्, अनभ्युपगमादिति ।

न चैतदभ्युपगममात्रम्, तावत्संघातजस्यैव तथार्थग्रहणस्वभावत्वात्, अविगानकस्तथानुभवसिद्धेः, एवमेव व्यवहारदर्शनादिति; तथाहि-एतदिन्द्रियद्वारानुसार्येव विज्ञानमा-

विष्टाभिलापम् ' अहिरहिः ' इति योजकं दर्शकं च धारावाहि तथा व्यवहारबीजं प्रतिप्राण्यनुभवसिद्धमेव । न चेहान्यदेवदर्शनम् , अन्य एव च विकल्पः, विकल्पेनाऽदर्शनात् , दर्शनेन चाविकल्पनात् , तयोरसहवृत्तेरुपादानादिभावात् । इत्येकमेवेदमिति ॥

न चेत्यादि । न चैतत्—शब्दोऽपि नयोग्यद्रव्येभ्य इति यदुक्तमेतत्, अभ्युपगममात्रम् . अपि तु सोपपत्तिकमित्यभिप्राय । कुत इत्याह—तावदित्यादि । तावत्संघातजस्यैव रूपालोकमनस्कारचक्षु शब्दसंघातजस्यैव ' विकल्पज्ञानस्य ' इति प्रक्रम , तथा तेन निश्चितप्रकारेणाऽर्थग्रहणस्वभावत्वात् । एतच्चैवमर्थग्रहणस्वभावत्वम् , अविगानत -अविगानेन, तथा-तेन प्रकारेणाऽनुभवसिद्धे , अनुभवसिद्धिश्चैवमेव व्यवहारदर्शनादिति । एतदेव निदर्शनेनाह-तथाहीत्यादि । तथाहीत्युपदर्शने,एतद्-वक्ष्यमाणम् , इन्द्रियद्वारानुसार्येव तद्व्यापाराऽभावऽभावात् ,विज्ञानम् । किंविशिष्टमित्याह-अभिष्टाभिलापं प्रविष्टशब्दं शब्दसन्मिश्रमित्यर्थ' किंविशिष्टमित्याह-अहिरहि.-सर्प. सर्प इत्यवं योजक शब्दस्य,दर्शक चार्थस्येन्द्रियव्यापारेण, धारावाहि तथासन्तानप्रवृत्तम् । एतदेव विशेष्यते व्यवहारबीजमिति । ततस्तथाविधव्यवहारसिद्धे ,प्रतिप्राण्यनुभवसिद्धमेव प्राणिन प्राणिनं प्रति तत्तद्द्रष्टृपत्तया प्रतिप्राणि, प्रतिग्रामभिक्षालाभवत् , अनुभवसिद्धमेव नेह कस्यचिद् विगानमिति । न चेहेत्यादि । न चेह प्रस्तुत ज्ञानं, अन्यदेव दर्शन निर्विकल्पकम् ,अन्य एव च विकल्पो निश्चयात्मक. । कुत इत्याह—विकल्पनादर्शनात् । कान्तादिविकल्पे तथानुभवसिद्धमतत् , दर्शनेन चाविकल्पनात् , अनभिप्रेततृणादिदर्शने एतदपि सिद्धमेव । तथा , तयोर्दर्शनविकल्पयो , असहवृत्तेर्युपदवृत्तेरित्यर्थ. । कुत इत्याह-उपादानादिभावात् , अवग्रहादिक्रमेणोपादानोपादेयभावादित्यर्थ ,इत्येवम ,एकमेवेदमधिकृत विज्ञानमिति।

स्यादेतत् , सविकल्पाविकल्पयोर्विज्ञानयोः स्वभावभेदेऽपि प्रतिभासभेदेन युगपद्वृत्तेर्विमूढः प्रतिपत्ता तमपश्यन्नैक्यं व्यवस्यति, न तु तथा तत् , अन्यत्रानयोर्यौगपद्येऽपि भेददर्शनात् , अतीताद्यर्थगतविकल्पेनापीन्द्रियज्ञानतो रूपादिग्रहणसिद्धेः । न च स विकल्पो रूपाद्येव गृह्णातीति शक्यं कल्पयितुम् , तस्यातीताद्यर्थाभिधायकत्वत्यागतो वर्तमानार्थयोजनेन प्रवृत्तिप्राप्तेः । नापि वर्तमानार्थाभिधानसंसर्गी तदाऽपरो विकल्पः समस्ति, द्वयोर्विकल्पयोः सममप्रवृत्तेः, अविगानेन तथाऽनुभवाभावात् । अतोऽत्र प्रत्युत्पन्नविषयग्रहणकाले दृश्यमानार्थनामाऽग्रहः स्पष्ट एव । तन्नामग्रहणसम्भूता च कल्पना , तन्नामग्रहाभावे कल्पनाऽभावः । इति सिद्धमविकल्पकमिन्द्रियज्ञानम् , अतोऽन्य एव च विकल्प इति न क्वचिदनयोरैक्यम् , न्यायानुपपत्तेः, भिन्नजातीयत्वादिति । इतश्चैतदेवम् । अन्यथा स्वाभिधानविशेषणापेक्षा एवार्था विज्ञानैर्व्यवसीयन्त इति प्राप्तम् ॥

परभिप्रायमाह-स्यादेतदित्यादिना । स्यादेतदथैवं मन्यसे, सविकल्पाविकल्पयोर्विज्ञानयो. सामान्येन स्वभावभेदेऽपि सति,प्रतिभासभेदेन हेतुना युगपद् वृत्ते कारणात् ,विमूढ प्रतिपत्ता पुरुषः,तमपश्यन्स्वभावभेदम् ,एक्य व्यवस्यति तयो सविकल्पाविकल्पयो , न तु तथा तत् न पुनस्तदैक्यमेव । कुत इत्याह—अन्यत्र जातिभेदे , अनयो. सविकल्पाविकल्पया , यौगपद्येऽपि सति , भेददर्शनात् । एतदेवाह—अतीताद्यर्थगतविकल्पेनापि प्रमात्रा, इन्द्रियज्ञानत.-इन्द्रियज्ञानेन, रूपादिग्रहणसिद्धे. । कस्येत्याह—अन्यस्याश्रुतत्वात् तस्यैव प्रमातु । न चेत्यादि । न च स विकल्पोऽतीताद्यर्थगत , रूपाद्येव गृह्णाति ' वार्तमानिकम् ' इति प्रक्रम. , इत्येवं, शक्यं कल्पयितुम् । कुतो न शक्यमित्याह-तस्येत्यादि । तस्यातीताद्यर्थगतविकल्पस्य , अतीताद्यभिधायकत्वत्यागतोऽतीतादिवाचकशब्दादित्यागत. । वर्तमानार्थयोजनेनेति । वर्तमानाऽर्थोऽभिधयो यस्य ' अभिधायकस्य ' इति प्रक्रम स वर्तमानार्थस्तद्योजनेन प्रवृत्तिप्राप्त. कारणात् । नापीत्यादिना । नापि वर्तमानार्थाभिधानेन संसृज्यते तच्छीलश्चेति विग्रह., तदा तस्मिन्नेव काले, अपरो विकल्प. समस्ति-विद्यते । कुत इत्याह-द्वयोर्विकल्पयो. सम युगपत् , अप्रवृत्ते. कारणात् । अप्रवृत्तिश्चाविगानेनाऽविप्रतिपत्त्या , तथा तेन समकालभावेनाऽनुभवाभावात् । अत इत्यादि । अत. स्थितमेतत् , प्रत्युत्पन्नविषयग्रहणकाले दृश्यमानार्थनामाऽग्रह. स्पष्ट एव । यदि नामैव तत. किमित्याह—तन्नामग्रहणेन सभूता तन्नामग्रहणसभूता , एवंभूता च कल्पना । ततः किमित्याह-तन्नामग्रहाभाव कल्पनाभाव इति कृत्वा, सिद्धमविकल्पकमिन्द्रियज्ञानम् । अत इन्द्रियज्ञानात् ,अन्य एव च विकल्प इत्येव, न क्वचित् सजातीयादौ , अनयोर्दर्शनविकल्पयो , ऐक्यम्-एकभाव., न्यायानुपपत्ते , इयं चोक्तैव । सर्वगर्भं त्वाह—भिन्नजातीयत्वात् । सामान्येनैव दर्शनविकल्पयोरिति ' इतश्चैतदेवमङ्गीकर्तव्यम् ' इति शेष । अन्यथैवमनभ्युपगमे , स्वाभिधानविशेषणापेक्षा एवार्था विज्ञानैर्व्यवसीयन्त इति प्राप्त , व्यवसीयन्ते; प्रतीयन्त इत्यर्थ. । कीदृशा इत्याह-स्वाभिधानेत्यादि । स्वाभिधानमेव विशेषण व्यवच्छेदकत्वात् तस्मिन्नपेक्षा येषामर्थानामिति विग्रह. ।

अस्त्वेवमपि को दोष इति चेत् । निवृत्तेदानीमिन्द्रियज्ञानवार्ता, अभिधानविशेषस्मृतेरयोगात्, सति ह्यर्थदर्शनेऽर्थसन्निधौ दृष्टे शब्दे ततः स्मृतिः स्यात् , अग्निधूमवत् । न चायमशब्दमर्थं पश्यति , अपश्यन् न शब्दविशेषमनुस्मरति, अननुस्मरन्न योजयति, अयोजयन्न प्रत्येति, इत्यायातमान्ध्यमशेषस्य जगतः । अभिपतन्नेवार्थः प्रबोधयत्यान्तरं संस्कारं, तेन स्मृतिः , नार्थदर्शनादिति चेत् । न । तत्संबन्धस्यास्वाभाविकत्वात् , समयादर्शनेऽभावात् , पुरुषेच्छातोऽर्थानां स्वभावापरावृत्तेर्न समयकालोत्पत्तिः , स्वभावस्य परावृत्तौ च तस्य तादात्म्यात् , अन्यस्यासमयदर्शिनोऽपि स्यात् , न हि प्रतिपुरुषमर्थाना-

मात्मभेदः, नैरात्म्यप्रसङ्गात् , आत्मस्थितेरभावात् । तस्मादयमशब्दसंयोजनमेवार्थं पश्यति दर्शनादिति ।

अस्तु—भवत्वेतत्, एवमपि को दोष इति चेत् । एतदा शङ्कयाह--निवृत्तेत्यादि । निवृत्तेदानीमिन्द्रियविज्ञानवार्ता । कस्माद् निवृत्तेत्याह--अभिधानविशेष इत्यादि। अभिधानविशेषो योऽर्थस्तदानीं ग्राह्यस्तस्य यो वाचकः शब्दस्तत्र स्मृतिस्तस्या. स्मृतेरयोगात् । कथमयोग इत्याह--सति ह्यर्थदर्शन इत्यादि । यस्माद् व्यवहारकाले सत्यभिधेयार्थदर्शने तदभिधायिन्यभिधान स्मरणं भवति । तत्रापि न सर्वस्य शब्दस्येत्याह—अर्थसंनिधौ संकेतकाले, दृष्टे शब्द इति, तत इत्यर्थदर्शनात् , स्मृतिः स्याद् नान्यथा । निदर्शनमाह—अग्निधूमवत् । यथाऽग्निधूमयोः संबन्धज्ञस्याग्निदर्शने धूमे स्मृतिर्भवति, धूमदर्शने चाग्नौ स्मृति , तद्वदत्राप्यवसेयम् । स्यान्मतम्-अर्थं तर्हि दृष्ट्वा शब्दं स्मरिष्यतीत्याह । न चायमित्यादि । न खल्वयं सविकल्पकप्रत्यक्षवादी, शब्दरहितमर्थं पश्यति, स्वाभिधानविशेषणापेक्षा एवार्था विज्ञानैर्व्यवसीयन्त इति नियमात् । ततः को दोष इत्याह—अपश्यन् न शब्दविशेषमनुस्मरति ' नियमेन ' इति शेषः, यस्मादर्थदर्शनं शब्दविशेषस्मृतेर्हेतुः, सा च तेन व्याप्ता, कारणं निवर्तमानं कार्यं निवर्तयति । भवतु नामैवं तत को दोष इति आह--अननुस्मरन्न योजयति अत्रापि शब्दविशेषानुस्मरणं स्मृतियोजनाया. कारणं, तदभावात् कार्याभाव. । अत्रापि को दोष इति चेदाह—अयोजयन्न प्रत्येति योजनं ह्यर्थप्रतीते. कारणमित्यत्रापि कारणानुपलब्धिरेवेति । तस्मादायातमान्ध्यमशेषस्य जगत , न चेष्यते । तस्मान्नेन्द्रियज्ञाने शब्दकल्पना संभवतीति । अथापि स्याद् नार्थदर्शनात् स्मृति', किं तर्हि ?, योग्यदेशावस्थितादेवार्थात् स्मृतिरित्याह-अभिपतन्नेवेत्यादि । अभिपतन्नभिमुखीभवन् । काऽसावित्याह—अर्थो रूपादिको विषय । किं करोति ?, प्रबोधयति--कार्यनिर्वर्तन प्रत्यनुकूलयति । कं प्रबोधयति ?, आन्तर संस्कारं शब्दस्मृतिवासनाख्यं, तेन अर्थाभिपातमात्रेण, सा स्मृतिः, तेन वा कारणेन, स्मृति', नार्थदर्शनादिति चेत्, तथा च नान्ध्यं, जगत , विकल्पकत्वं चेन्द्रियज्ञानस्योपपन्नमिति मन्यते । अर्थाभिपातस्य स्मृतिजनकत्वं निराकुर्वन्नाह—न । तत्संबन्धस्येत्यादि । यदेतदुक्तम्-अभिपतन्नेवार्थ प्रबोधयत्यान्तरं सस्कारमिति । तन्न । कुत इत्याह—तत्संबन्धस्य तयो. शब्दार्थयो सबन्धस्तत्संबन्धस्तस्य, अस्वाभाविकत्वात् पौरुषेयत्वादित्यर्थ । कथमवसेयमित्याह--समयादर्शन सकेतस्याग्रहणे सति, अभावात् स्मृतिसंस्कारप्रबोधस्य, अर्थप्रतीतेर्चेति वाक्यशेष । एतदुक्त भवति--ययो स्वाभाविक सबन्धो न तयो' समय प्रति काचिदपेक्षा, यथा चक्षूरूपयो , विपर्ययस्त्वत्र, इति नाकृत्रिमत्वं संबन्धस्येति ' नन्वेतत् स्यात् समयादुत्तरकालं स्वाभाविक शब्दार्थसंबन्धो न पूर्वम् , अत' कृतसमयस्याभिपतन्नेवार्थ प्रबोधयत्यान्तरं सस्कारमित्याह-पुरुषच्छात' सकाशात् , अर्थाना स्वभावपरावृत्ते पूर्वस्वभावपरित्यागेन विशिष्टस्वभावान्तरानुत्पत्ते कारणात् , न समयकालोत्पत्ति'--न समयकाले स्व भाविकत्वेन शब्दार्थसंबन्धस्य प्रादुर्भाव इत्यर्थ. । दोषान्तराभिधित्सयाऽभ्युपगम्यापि स्वभावान्तरपरावृत्तिमाह—स्वभावस्य परावृत्तौ च सत्याम् , अन्यस्यासमयदर्शिनोऽपि स्यात् स्मृतिसस्कारप्रबोधः , अर्थप्रतीतिर्वेति शेष., न केवलं समयदर्शिन इत्यपिशब्दार्थः । कस्मादित्याह—तस्यतादात्म्यात् । स स्मृतिसंस्कारप्रबोधकः, अर्थप्रतीतिहेतुको वा आत्मा स्वभावाऽस्येति तदात्मा, तदात्मनो भावस्तादात्म्यं, ब्राह्मणादेराकृतिगणत्वात् ष्यञ् । अथोच्यते-समयदर्शिनं प्रति स्वभाव. , न पुनरदृष्टसमयं प्रति , इत्यत आह—न हीत्यादि । न हि पुरुषं पुरुष प्रति , अर्थानाम् , आत्मभेद.—स्वभावभेदः, भवति । कुत इत्याह—नैरात्म्यप्रसङ्गात् । अयमभिप्राय —पुरुषेच्छानामानन्त्यात् , तदनुवर्तिनश्च यद्यर्था. स्युस्तदा तेषां नैस्वभाव्यमेव स्यात् , एकस्यानेकस्वभावाभावात् । स्याद् मतम्—भवतु सामयिकस्वभावस्याभावः, अन्योऽपि तद्व्यतिरिक्तो वस्तुसत्स्वभावोऽस्यास्त्येव, अतो नैरात्म्यप्रसङ्गो न भविष्यतीत्याह-आत्मस्थितेरभावादिति । उपलब्धिलक्षणप्राप्तस्य तद्व्यतिरेकेणान्यस्य स्वभावस्यानुपलम्भादित्यभिप्राय. । अथवा नन्वेव सति बहुतरस्वभावसिद्धिरेव , तत्किमुच्यते—नैरात्म्यप्रसङ्गात् ?, इत्याह-आत्मस्थितेरभावात् । पुरुषाणा स्वाभिप्रायवशेनैकत्र विरुद्धस्यापि स्वभावस्याऽभ्युपगमसंभवात् , न चैकस्य विरुद्धानेकस्वभावो युक्त इति मन्यते तदेवं स्मृत्यसंभवेन निर्विकल्पता प्रतिपाद्योपसंहरन्नाह—तस्मादित्यादि । यस्मादेवमनन्तरोक्तेन प्रकारेण शब्दविशेषस्मृतिर्न संभवति, तस्मादयं प्रतिपत्ता, अशब्दसयोजनमेवार्थं पश्यति , अविद्यमानं शब्दसयोजन यस्यार्थस्येति-विग्रह । कुत इत्याह—दर्शनात् । अयमस्यार्थो यस्मादयं प्रतिपत्ताऽर्थमुपलभते, तस्मादशब्दसंयोजनमेवार्थं पश्यतीति। निश्चीयते ।

किञ्च-विकल्पात्मकत्वेऽस्य निश्चयात्मकमिदमित्यनेकप्रमाणवादहानिः, तेनैव वस्तुनो निश्चयात् नित्यत्वादौ भ्रान्त्यनुपपत्तेः । अनेकधर्मके वस्तुन्यन्यतरधर्मनिश्चयात् तदन्यनिश्चयाय प्रमाणान्तरसाफल्यमिति चेत् । एकधर्मविशिष्टस्यापि निश्चये सर्वधर्मवत्तया निश्चयात् , प्रमाणान्तरस्य निश्चितमेव विषयीकुर्वतः स्मृतिरूपानतिक्रमात् , एकधर्मद्वारेणापि तद्वतो निश्चयात्मना प्रत्यक्षेण विषयीकरणे सकलधर्मोपकारकशक्त्याभिन्नात्मनो निश्चयात् । न ह्यन्य एवान्योपकारको नाम । ततो यदेवास्यैकोपकारकत्वेन निश्चयनम् , तदेव तदन्योपकारकत्वेनापि न चासत्युपकार्योपकारकभावे तद्व्यवस्थाऽतिप्रसङ्गतो युक्ता ।

किञ्चेत्यादि । किञ्च अयमपरो दोष.-विकल्पात्मकत्वेऽस्य प्रत्यक्षस्य,निश्चयात्मकमिदमित्येवं विकल्पात्मकत्वेन हेतुना । यदि नामैवं तत किमित्याह—अनेकप्रमाणवादहानि.—प्रत्यक्षानुमानागमप्रमाणवादहानि । कुत इत्याह—तेनैव नि-

श्चयात्मना प्रत्यक्षेण, वस्तुनो निश्चयात् कारणात्। यथा-ऽनिश्चयेऽपि किमित्याह—नित्यत्वादौ धर्मे, भ्रान्त्यनुपपत्तेरिति। पराभिप्रायमाह—अनेकधर्मके वस्तुनि नित्यत्वादिधर्मापेक्षया, अन्यतरधर्मनिश्चयाद् यथोचितप्रत्यक्षेण, तदन्यनिश्चयाय-धर्मान्तरनिश्चयार्थं, प्रमाणान्तरसाफल्यमनुमानादिसाफल्यमिति चेत्। एतदाशङ्क्याह—नैकेत्यादि। न-नैतदेवम्। कुत इत्याह—एकधर्मविशिष्टस्यापि 'वस्तुन' इति प्रक्रमः। निश्चये सति किमित्याह—सर्वे च ते धर्माश्च सर्वधर्मास्तेऽस्य वस्तुनो विद्यन्त इति सर्वधर्मवत् तद्भावः सर्वधर्मवत्ता तया, निश्चयात्। एव च प्रमाणेत्यादि। प्रमाणान्तरस्याऽनुमानादेः, निश्चितमेव 'धर्मान्तरम्' इति प्रक्रमः, विषयीकुर्वतः सत, स्मृतिरूपानतिक्रमात्, 'अनेकप्रमाणवादहानि' इति वर्तते, एकधर्मविशिष्टस्यापि निश्चये सर्वधर्मवत्तया 'निश्चयादिति यदुक्तं तदुपदर्शयन्नाह—एकधर्मेत्यादि। एकधर्मद्वारेणापि तद्वतो—धर्मवतो वस्तुन, निश्चयात्मना प्रत्यक्षेण सविकल्पकेन, विषयीकरणे सति। किमित्याह—सकलाश्च ते धर्माश्च तेषामुपकारिकाश्च ताः शक्तयश्चेति विग्रह, ताभ्योऽभिन्नश्चासावात्मा चेति समासस्तस्य, निश्चयात् कारणात्, सर्वधर्मवत्तया निश्चय। एतत्समर्थनायैवाह-नहि इत्यादि। न यस्मात्, अन्य एव 'धर्मी वस्त्वात्मा' इति प्रक्रम, अन्योपकारको नाम धर्मान्तरापकारको नाम, किं तर्हि?, स एव, धर्मिण एकत्वादिति हृदयम्। ततो यदेवाऽस्य वस्तुनो धर्मिण, एकापकारकत्वेनान्यतरधर्मापेक्षया, निश्चयन तदेवान्योपकारकत्वेन धर्मान्तरोपकारकत्वेनापि, निश्चयनम्, अन्यथा तदेकत्वहानिरिति गर्भः। न चासत्युपकार्योपकारकभावे तद्व्यवस्था वस्तुनो धर्मधर्मिव्यवस्था अतिप्रसङ्गतः कारणात्, युक्ता। अतिप्रसङ्गश्च नद्वद् धर्मान्तराद्यपेक्षयाऽपि धर्म्यादिभावप्रसङ्ग, निमित्ताभावाविशेषादिति।

न चोपकारिकाः शक्तयस्ततो भेदमनुभवन्ति, असत्युपकारेऽस्येमाः शक्तय इति संबन्धायोगात्, आधाराधेयंभावस्यापि तन्निबन्धनत्वात्, अन्यथा कल्पनामात्रं स्यात्, तथा च शक्तीनामनवस्था। ततः स्वात्मैवाऽस्याशेषधर्मोपकारिकाः शक्तयः, तस्य सर्वधर्मोपकारकत्वेन निश्चये तदुपकार्या अपि धर्मा निश्चिता एव, तन्निश्चयनान्तरीयकत्वादुपकारकनिश्चयस्य, न हि ये यदपेक्षस्थितयस्ते तदनिश्चये तथा निश्चीयन्ते, स्वस्वामित्ववदिति। एवमपि सविकल्पकप्रत्यक्षानुपपत्तिरिति।

न चेत्यादि। न चोपकारिका शक्तय उपकारकसंबन्धिन्य, तत उपकारकाद् धर्मिण, भेदमनुभवन्ति। कुत इत्याह—असत्युपकारे उपकारकसंबन्धिनि, अस्योपकारकस्य धर्मिण, इमा शक्तय, इत्येव, संबन्धाऽयोगात्, अयोगश्च निमित्ताभावेन। आधाराधेयभाव सवन्धो भविष्यतीत्याशङ्कापोहायाऽऽह-आधाराधेयभावस्यापि कुण्डबदराद्युदाहरणादिसिद्धस्य, तन्निबन्धनत्वाद्—उपकारनिबन्धनत्वात्, तथाहि पतनधर्मणा बदराणामपतनस्वभावाधानेनोपकारकं कुण्डं बदराणामिति भावनीयम्। इत्थ चैतदङ्गीकर्तव्यमित्याह—अन्यथेत्यादि। अन्यथैवमनभ्युपगमे, कल्पनामात्रं स्याद् आधाराधेयभाव। न चैतदर्थमित्युपकारसिद्धिः। तथाचेत्यादि। तथाचैव चोपकारसिद्धौ सत्या, शक्तीनामनवस्था—यकाभिः शक्तीभि शक्तीनामुपकरोति ता अपि ततो भिन्ना इति तत्राप्ययमेव वृत्तान्त इत्यनवस्था। ततस्तस्मात्, स्वात्मैवास्योपकारकस्य धर्मिणः, अशेषधर्मोपकारिका शक्तय इति। यतश्चैवम्, अतस्तस्योपकारकस्य धर्मिण, सर्वधर्मोपकारकत्वेन निश्चये सति। किमित्याह—तदुपकार्या अपि विवक्षितोपकारकोपकार्या अपि, धर्मा निश्चिता एव। कुत इत्याह—तन्निश्चयनान्तरीयकत्वात् उपकार्यधर्मनिश्चयनान्तरीयकत्वात्, उपकारकनिश्चयस्य तदपेक्षमस्योपकारकत्वमित्यर्थ। एतत्स्पष्टनायैवाह—न हीत्यादि। न यस्मात्, ये भावा यदपेक्षस्थितयः प्रकृत्या ते भावा, तदनिश्चयेऽपेक्षाऽनिश्चये, तथा निश्चीयन्ते तदपेक्षकत्वेन निश्चीयन्ते नहि। निदर्शनमाह—स्वस्वामित्ववत्। स्वं च स्वामी च स्वस्वामिनौ तद्भाव स्वस्वामित्वं तद्वत्' स्वमस्य, अस्य स्वामी' इतीतरेतरप्रतिपत्तिनान्तरीयकी स्वस्वामिप्रतिपत्ति। उपसंहरन्नाह—एवमपि अनेकप्रमाणवादहानितोऽपि, सविकल्पकप्रत्यक्षानुपपत्तिरिति।

अत्रोच्यते-यदुक्तम्-सविकल्पाविकल्पयोर्विज्ञानयोः स्वभावभेदेऽपि प्रतिभासभेदेन युगपद्वृत्तेरित्यादि' तदयुक्तम्, एकविषययोः सविकल्पाविकल्पयोर्युगपद् वृत्त्यसिद्धेः, तदविकल्पपूर्वकत्वात् तद्विकल्पस्य, अन्यथाऽस्याहेतुकत्वापत्तिः, तथा च सदा सदसत्त्वप्रसङ्गः। सोऽपि तत्पूर्वक एवेति चेत्। कथमनयोर्युगपद् वृत्तिः?। प्रबन्धापेक्षयेति चेत्। कथमाद्याविकल्पादुभयजन्म? तत्तत्स्वभावत्वादिति चेत्। कथं कारणभेदो भेदहेतुः?। यदि न, ततः को दोष इति चेत्। प्रधानादीनामनिषेधप्रसङ्गः। ते तथाभावजनका इति चेत् ततः को दोष इति वाच्यम्। नैकस्मादनेकजन्म इति चेत्। कथ न?। तत्तत्स्वभावत्वेन संक्रान्त्या तदयुक्तेरिति चेत्। तदभावे तद्युक्तिरित्यद्भुतम्। ततोऽसद्भावादनद्भुतमिति चेत्। तत्तथाभावतोऽभवदसद् भवति, इत्यद्भुतमेव इति परिभाव्यतामेतत्।

एतदाशङ्क्याह—अत्रोच्यते-यदुक्तम्—सविकल्पाविकल्पयोर्ज्ञानयो स्वभावभेदेऽपि प्रतिभासभेदेन युगपद्वृत्तेरित्यादि पूर्वपक्षे तदयुक्तम्। कुत इत्याह-एकविषययो सविकल्पाविकल्पयोः। किमित्याह-युगपद् वृत्त्यसिद्धे। असिद्धिश्च तदविकल्पपूर्वकत्वाद् विवक्षितैकविषयाविकल्पपूर्वकत्वात्, तद्विकल्पस्य सामान्येन विवक्षितैकविषयविकल्पस्य। अन्यथा अतत्पूर्वकत्वे, अस्य विकल्पस्य अहेतुकत्वापत्तिस्तदपरहेत्वयोगात्। तथा च सदा सर्वकालं, सदसत्त्वप्रसङ्गोऽधिकृतविकल्पस्य, "नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्" इति वचनात्। सोऽप्यधिकृतविकल्प तत्पूर्वक

एव, विवक्षितैकविषयाविकल्पपूर्वक एव इति चेत् । एतदाशङ्क्याह—कथमनयो अविकल्पविकल्पयो', युगपद्वृत्ति. । प्रयन्यापत्त्येति चेद् युगपद्वृत्ति' । एतदाशङ्क्याह-कथमित्यादि । कथं—केन प्रकारेण, आद्यं च तदविकल्प चेति विग्रहस्तस्मात्, उभयजन्म—सविकल्पाविकल्पजन्म । नत्तदित्यादि । तस्याद्याविकल्पस्य, तत्स्वभावत्वात् सविकल्पाविकल्पजननस्वभावत्वादुभयजन्म, इति चेत् । एतदाशङ्क्याह—कथ कारणभेदो भेदहेतु. कार्याणामिति शेष', नैव, तदभावेऽपि तद्भेदसिद्धेरित्यभिप्राय. । यदि न कारणभेदो भेदहेतु, ततः को दोष इति चेत् । एतदाशङ्क्याह—प्रधानादीनाम् । आदिशब्दात्—परमपुरुषग्रह, अनिषेधप्रसङ्गो दोष, ते प्रधानादयः, तथाभावजनकास्तथाभावेन—तत्तथाभवनलक्षणेन जनका महदादेरिति चेत् । एतदाशङ्क्याह ततः को दोष इति वाच्यम् । नैकस्मादनेकजन्म तत्तद्भावेन दोष इति चेत् । एतदाशङ्क्याह—कथं न एकस्मादनेकजन्म तत्तत्स्वभावत्वेन तस्य प्रधानादेस्तत्स्वभावत्वेन, तथाभावतोऽनेकजन्मस्वभावत्वेनेत्यर्थः, संक्रान्त्या हेतुभूतया, तत्तद्भावेन तदयुक्तेस्तत्तत्स्वभावत्वायुक्तेर्नैकस्मादनेकजन्मेति चेन् । एतदाशङ्क्याह—तदभावे-संक्रान्त्यभावे, तदेकान्तनिवृत्त्या तद्युक्तिस्तत्तत्स्वभावत्वयुक्ति, इत्यद्भुतमाश्चर्यमेतत् । तत कारणात्, असद्भावाद्—असतो भावेन. अनद्भुतमनाश्चर्यमिति चेत् । एतदाशङ्क्याह-तत्तथाभावत तस्य कारणस्य तथाभावेन कार्यभावेन, अभवदेकस्मादनेकमसद् भवति तुच्छातुच्छप्रतिपत्त्या. इत्यद्भुतमेवेति परिभाव्यतामेतत्, न ह्यसत् सद् भवति अतिप्रसङ्गादित्यभिप्राय' ।

न चानयोः स्वभावभेद एव, तत्त्वत एकविषयत्वात्, विकल्पस्यापि पारम्पर्येण तद्वस्त्वालम्बनत्वात्, तदुत्थज्ञानोपादानत्वात्, तत्स्वभावानुकारातिरेकेण तदुपादानत्वायोगात् । न च तदतीतमित्यनालम्बनम्, अविकल्पस्यालम्बनत्वात् । न च तद्भावकाले तद्भावः, तदसदुदयाभ्युपगमात् । न चैवमपि न तदतीतता, तदा तदसत्त्वेन तदुपपत्तेः । न च तदाकारतादिना भेदः, द्वयोरपि तदाकारतासिद्धेः, तस्य प्रतिभावानियमात्, बोधामूर्तत्वरूपतया तत्तुल्याकारताऽयोगात्, स्वाकारस्य तु विकल्पेऽपि भावात्, तस्यापि तन्निश्चयात्मकत्वेन तदनुगुणत्वात् । इति व्यवहारतः स्वभावभेदाभावः ।

न चेत्यादि । न चानयो —प्रक्रमात् सविकल्पाविकल्पयो प्रस्तुतयोरनयो, स्वभावभेद एवैकान्तेन । कुत इत्याह—तत्त्वत.-परमार्थेन, एक विषयत्वात् । कथमनेकमित्याह—विकल्पस्यापि पारम्पर्येण तद्वस्त्वालम्बनत्वात् । एतच्च परदर्शने विकल्पस्य गृहीतग्राहित्वाभ्युपगमेन स्वदर्शने त्ववग्रहापायभावेन, इति सामान्येनैव तद्वस्त्वालम्बनत्वमाह । तदुत्थज्ञानोपादानत्वात् विवक्षितविषयोत्थाऽविकल्पज्ञानोपादानत्वाद् विकल्पस्य । यदि नामैव तत किमित्याह-तत्स्वभावेत्यादि । तत्स्वभावानुकारातिरेकेण तदुत्थज्ञानस्वभावानुकारातिरेकेण, विकल्पस्येति प्रक्रम., तदुपादानत्वायोगात् तदुत्थज्ञानोपादानत्वायोगाद् विकल्पस्य । न ह्यमृत्स्वभावमुदकं मृदुपादानम्, अपि तु घट एव. तत्स्वभावानुकारादिति भावनीयम् । दोषान्तरपरिजिहीर्षयाऽऽह—न चेत्यादि । न च तद्विषयवस्तु अतीतमिति कृत्वा क्षणिकत्वेन, अनालम्बनं प्रक्रमाद्विकल्पस्य, किन्त्वालम्बनमेव । कुत इत्याह-अविकल्पस्यालम्बनत्वात् अतीतत्वेऽपीत्यभिप्राय' । न च तद्भावकाले—अविकल्पभावकाले, तद्भावो विषयवस्तुभावः । कुत इत्याह—तदसदुदयाभ्युपगमात् तस्मिन् विषयवस्तुन्यसत्युदयाभ्युपगमात्, प्रक्रमादविकल्पस्य । न चैवमपि तदसदुदयेऽपि, न तदतीतता-न विषयवस्त्वतीतता । कुत इत्याह तदा विकल्पोदयकाले, तदसत्त्वेन-विषयवस्त्वसत्त्वेन, तदुपपत्तेः—अतीततोपपत्तेः । न च तदाकारतादिना-विषयवस्त्वाकारतादिना, आदिशब्दादानन्तर्यादिग्रह. भेद. सविकल्पाविकल्पयोरिति प्रक्रम. । कुत इत्याह—द्वयोरपि अनयोः तदाकारताऽसिद्धेर्विषयवस्त्वाकारताऽसिद्धेः, तस्याकारस्य प्रतिभावानियमाद्, भावं भावं प्रति नियमात् । न ह्यन्यभावाऽऽकारोऽन्यभावे भवति, तदेकत्वप्रसङ्गादित्यर्थ. । तत्तुल्याकारतैव तदाकारता, इत्यप्यसदित्यावेदयन्नाह—बोधेत्यादि । बोधाऽमूर्तत्वरूपेण हेतुनाऽविकल्पज्ञानस्य, तत्तुल्याकारताऽयोगाद्-विषयवस्तुतुल्याकारतायोगात् । स्वाकार एव तदाकारतेत्यप्ययुक्तमित्याह—स्वाकारस्य तु विकल्पेऽपि भावात् । नह्यविकल्प एव स्वाकार., अपि तु-विकल्पेऽपि । तदनुगुणत्वतदाकारतेत्यपि समानमित्यावेदयन्नाह—तस्यापीत्यादि । तस्यापि विकल्पस्य, तन्निश्चयात्मकत्वेन-विषयवस्तुनिश्चयात्मकत्वेन, तदनुगुणत्वाद् बोधापेक्षया विषयवस्त्वनुगुणत्वात्, इत्येवं व्यवहारतः स्वभावभेदाभाव. । निश्चयतस्तु प्रतिव्यक्ति अयं विद्यत एवेति ।

यच्चोक्तम्—विमूढः प्रतिपत्ता तमपश्यन्नैक्यं व्यवस्यति, न तु तथा तदिति । एतदप्ययुक्तम्, अनालोचिताभिधानत्वात् विचाराक्षमत्वात्, तथाहि—कः पुनरत्र प्रतिपत्ता, यस्य तत्स्वभावभेदादर्शनाद् विमोहः, ऐक्यव्यवसायो वा । न तावदेक उभयद्रष्टा, अनभ्युपगमात् । न च सविकल्पाविकल्पे विज्ञाने एव, तयोर्विमोहासिद्धेः, स्वसंवेदनरूपत्वेन स्वस्वभावदर्शनात्, इत्थमपि विमोहे तदनुच्छेदापत्तिः, उपायाभावात् । न चानयोरैक्यव्यवसायः, मिथोभेदाभ्युपगमात्, स्वविषयनियतत्वेन तथाप्रतिभासानुपपत्तेः, एवमपि तदभ्युपगमेऽतिप्रसङ्गात् ।

यच्चोक्तं पूर्वपक्षग्रन्थे—विमूढ प्रतिपत्ता तमपश्यन्नैक्यव्यवस्यति. न तु तथा तदिति । एतदप्ययुक्तम् । कुत इत्याह-अनालोचिताभिधानत्वात् । अनालोचिताभिधानत्वं च विचाराक्षमत्वात् । विचाराक्षमत्वमुपदर्शयन्नाह-तथाहीत्यादि । तथाहि क पुनरत्र प्रतिपत्ता भवतोऽभिप्रेत, यस्य तत्स्वभावभेदादर्शनाद् हेतो, विमोह, ऐक्यव्यवसायो वा ? । न तावदेक आत्मा, उभयो. सविकल्पाविकल्पयोर्द्रष्टा । कुत इत्याह—अनभ्युपगमात् एवंविधकस्य । न च सविकल्पा-

विकल्पे ज्ञाने एव प्रतिपत्तृणां कुत इत्याह—तयो -सविकल्पाविकल्पज्ञानयो', विमोहासिद्धे , असिद्धिश्च स्वसंवेदनरूपत्वेन हेतुना ताभ्यां स्वस्वभावदर्शनादिति । इत्थमपि-स्वस्वभावदर्शनेऽपि सति, विमोहे तदनुच्छेदापत्ति'-मोहानुच्छेदापत्ति' । कुत इत्याह—उपायाभावात्। न हि स्वसवेदनरूपे कदाचिदन्यथा भवत इत्युपायाभाव' । नचेत्यादि। न चानयो· सविकल्पाविकल्पयोर्विज्ञानयो ,ऐक्यव्यवसाय·। कुत इत्याह—मिथ'-परस्परं , भेदाभ्युपगमात्। यदि नामैवं तत किमित्याह-स्वविषयनियतत्वेन हेतुना , तथाप्रतिभासानुपपत्ते·-ऐक्यप्रतिभासानुपपत्ते·। प्रतिभासश्च व्यवसाय इति । एवमपि-तथाप्रतिभासानुपपत्तावपि, तदभ्युपगमे ऐक्यव्यवसायाभ्युपगमे अतिप्रसङ्गात् शशविषाणादि—व्यवसायापत्तेः ।

स्यादेतत् , एक्यव्यवसायस्तदपरो विकल्प एव ,व्यवसायस्य परिच्छेदात्मकत्वात् । स किंविषय इति वाच्यम् । तदुभयविषय इति चेत् । कथमेतत्प्रतिभासी तद्विषयः ?, तत्प्रतिभासित्वे वा कथमैक्यं व्यवस्यति ?, न चात्यन्तभिन्नयोस्तथाव्यवसाये निमित्तम्। भ्रान्त एवाऽयमिति चेत्। तदन्यैवंविधभावे कथं नेतरयोर्भेदव्यवसायः ? । व्यवसाय एवेति चेत्। न, तथाऽयुक्त्यनुभवाभावेन वाङ्मात्रत्वात् । एतेन ' अन्यत्राऽनयोर्यौगपद्येऽपि भेददर्शनात्,इत्यादि प्रत्युक्तम् ,तत्त्वतस्तुल्ययोगक्षेमत्वात्।

स्यादेतदित्यादि। स्यादेतत् , ऐक्यव्यवसायोऽधिकृत· , ताभ्यां सविकल्पाविकल्पविज्ञाभ्यामपर·—अन्यो विकल्प एव । कुत इत्याह—व्यवसायस्य परिच्छेदात्मकत्वात् । एतदाशङ्क्याह—स किंविषयो विकल्पः , इति वाच्यम्। तदुभयविषय'-सविकल्पाविकल्पविज्ञानोभयविषय इति चेत्। एतदाशङ्क्याह-कथमेतत्प्रतिभासी-सविकल्पाविकल्पविज्ञानाऽप्रतिभासी सन् , तद्विषय· सविकल्पाविकल्पज्ञानविषयः ?। तत्प्रतिभासित्वे वा-सविकल्पाविकल्पविज्ञानप्रतिभासित्वे वा सति , कथमैक्य व्यवस्यति परिच्छिनत्ति ? तद्भेदव्यवसायरूपत्वादित्यर्थ । न चेत्यादि। न चात्यन्तभिन्नयोर्जातिभेदेन, सविकल्पाविकल्प विज्ञानयोरिति प्रक्रम·, तथाव्यवसाय , ऐक्येन व्यवसाये निमित्त नीलपीतयोरिव भ्रान्त एवायमपरो विकल्प इति चेत्। एतदाशङ्क्याह—तदन्येत्यादि। तस्माद् भ्रान्तादन्योऽभ्रान्त एवंविध उभयविषयस्तस्य भावे सति कथं न इतरयो सविकल्पाविकल्पविज्ञानयो', भेदव्यवसायस्तदन्येन?; न ह्यन्यस्मिन् सत्यरूपेऽसत्यस्य भ्रान्ततेति हृदयम्। व्यवसाय एवेति चेत् अन्येनेतरयो । इत्येतदाशङ्क्याह—नेत्यादि। न-नैतदेवम् , तथायुक्त्यनुभवाभावेन हेतुना , वाङ्मात्रत्वादर्थशून्यत्वादधिकृतवचस। युक्त्यभावश्चेह स्वलक्षणसामान्यलक्षणयोरेकप्रतिभासनात् , अनुभवस्य चासंकीर्णोभयग्राहिणोऽभावादिति। एतेनेत्यादि। एतेनानन्तरोदितेन दूषणजातेन ' अन्यत्राऽनयोर्यौगपद्येऽपि भेददर्शनात् ' इत्यादि पूर्वपक्षोक्तं,प्रत्युक्तम्-निराकृतम्। कुत इत्याह तत्त्वत -परमार्थत , तुल्ययोगक्षेमत्वादिति ।

किञ्च-अनयोर्भिन्नविषयत्वेन तथापि जन्माऽयुक्तम् ,अन्यदर्शनस्यान्यविकल्पानिमित्तत्वात् , निमित्तत्वे वाऽतिप्रसङ्गात् , नीलदर्शनादपि पीतादिविकल्पापत्तेः,तदभावप्रसङ्गात्, निश्चयबलाद्धि, तद्भावसिद्धिः स चेदन्यदर्शनादप्यन्यविषयः, अप्रमाणिकाऽन्यसत्तेति विश्वस्य नीलमात्रतापत्तिः । भिन्नदर्शनविषयाः,पीतादय इति चेत् । न । तेषामनिश्चयात्मकत्वेन तथातानधिगतेः. न च तन्निश्चयात् तदधिगतिर्युक्ता, तस्यान्यतोऽपि भावेन तत्प्रतिबन्धासिद्धेः । स पारम्पर्येण तद्दर्शनसामर्थ्योद्भूत एव,सदाऽतद्दर्शिनोऽभावादिति चेत्। न। इत्थं सर्वत्राऽनाश्वासेनाऽसमञ्जसत्वापत्तेः, सन्निहितार्थदर्शनबलोत्पन्ननिश्चयादपि पारम्पर्येणार्थान्तरदर्शनशक्तिजत्वाऽऽरेकातः प्रवृत्त्याद्ययोगात्। समानविषययोः पुनरनयोर्भावस्तथा भवन्नपि न नो बाधायै, अक्रमेणाऽप्रवृत्तेः। एवं च ' अतीताद्यर्थगतविकल्पेनापीन्द्रियज्ञानतो रूपादिग्रहणसिद्धेः' इत्यादि यावद् 'भिन्नजातीयत्वात्' इत्येतद् व्युदस्तमवसेयम्,अक्रमप्रवृत्तावतीतादिविकल्परूपादिग्रहणयोरस्य साफल्योपपत्तेः, अन्यथा वाङ्मात्रत्वात्।

किञ्चेत्यादिनाऽभ्युच्चयमाह-किञ्च, अनयो सविकल्पाविकल्पज्ञानयोरुदाहृतयो· , भिन्नविषयत्वेन हेतुना , जातिभेदतः, तथापि प्रक्रमात्-क्रमेणापि यथैकजातीययोस्तथापि, जन्मायुक्तमघटमानकम् ।कुत इत्याह—अन्यदर्शनस्य—रूपादिदर्शनस्य, अन्यविकल्पानिमित्तत्वाद्-अतीताद्यर्थगतविकल्पानिमित्तत्वात् , निमित्तत्वे वाऽतिप्रसङ्गात्। एनमेवाह—नीलदर्शनादपि सकाशात् , पीतादिविकल्पापत्ते । यदि नामैवं तत· किमित्याह-तदभावप्रसङ्गात्-पीताद्यभावप्रसङ्गात्। एतदेव स्पष्टयति-निश्चयेत्यादिना। निश्चयबलाद् यस्मात् , तद्भावसिद्धि —पीतादिभावसिद्धि , स चेद् निश्चय , अन्यदर्शनादप्यन्यविषयो भवति , अप्रमाणिकाऽन्यसत्ता, इह तावत्प्रक्रमादन्यत् पीतादि , ततश्चाप्रमाणिका पीतादिसत्तेति कृत्वा , विश्वस्य सर्वस्य नीलमात्रतापत्ति·,यावत् किञ्चित् सत् तत्सर्वं नीलमिति पीतादिनिश्चयस्तु नीलदर्शनादेवेति न्यायोपपत्ते , भिन्नदर्शनविषया -पीतादिदर्शनविषया , पीतादय इति चेत्। एतदाशङ्क्याह-नेत्यादि। न-नैतदेवं, तेषां दर्शनानाम् , अनिश्चयात्मकत्वेन हेतुना, तथा तानधिगते पीतादिरूपतया भिन्नताऽनधिगते·। न चेत्यादि। न च तन्निश्चयात्-पीतादिनिश्चयात् , तदधिगतिर्दर्शनाना तथा भिन्नताधिगतिर्युक्ता। कुत इत्याह-तस्य सामान्येन निश्चयस्य , अन्यतोऽपि-दर्शनान्तरादपि , भावेन-हेतुना , तत्प्रतिबन्धासिद्धे पीतादिदर्शनभेदेन सह पीतादिनिश्चयस्य प्रतिबन्धासिद्धे । स पीतादिनिश्चय ,पारम्पर्येण तद्दर्शनसामर्थ्योद्भूत एव-पीतादिदर्शनसामर्थ्योद्भूत एव। कुत इत्याह—सदाऽतद्दर्शिन —पीताद्यदर्शिन ; अभावादिति चेत्। एतदाशङ्क्याह—नेत्यादि। न-नैतदेवम् इत्थमेवं, सर्वत्रानाश्वासेन हेतुना। किमित्याह—असम-

अनन्त्वापत्ते. । एतामेवाह-सन्निहितार्थदर्शनबलोत्पन्ननिश्चयादपि सकाशात्, पारम्पर्येणार्थान्तरदर्शनशक्तिजत्वाऽऽरेफान.-आशङ्कान. कारणात्, प्रवृत्त्याद्ययोगात्, आदिशब्दात्-प्राप्तिपरिग्रह । एवं तावद् भिन्नविषययो सविकल्पाविकल्पज्ञानयोर्यागपद्यमसंभव्यैव निदर्श्य साम्प्रतमिदमाह—समानेत्यादि । समानविषययो' पुनरनयो स्वविकल्पाविकल्पज्ञानयोर्भाव , तथा हेतुफलभावेन , भवन्नपि ' अहिरहि ' इत्यादौ, न नो बाधायै—नास्माकं बाधार्थम् । कुत-इत्याह—अक्रमेणाप्रवृत्त —अवग्रहकल्पादविकल्पादवायकरसविकल्पभावन क्रमेण प्रवृत्तेरित्यर्थ. । एवं चेत्यादि । एव सति ' अतीनाद्यर्थगतविकल्पनापि प्रमात्रा, इन्द्रियज्ञानतो रूपादिग्रहणसिद्ध. ' इत्यादि पूर्वपक्षाङ्कं यावद् ' भिन्नजातीयत्वात् ' इत्येतद्, व्युदस्तमपाकृतमवसेयम् । कुत इत्याह-अक्रमप्रवृत्तौ सत्याम्, अतीतादविकल्परूपादिग्रहणयोरस्य-पूर्वपक्षाङ्कस्य, साफल्योपपत्तेः अन्यथाऽक्रमप्रवृत्तिमन्तरेण बाध्यमानत्वादिति ।

आह-यद्यत्र क्रमः, कथं न संलक्ष्यत इति ? । उच्यते-उत्पलपत्रशतव्यतिभेदवत् कालसौक्ष्म्यात्, छद्मस्थप्रमातुरनाभोगबहुलत्वात्, अदृष्टप्रतिबन्धात्, वस्तुनोऽनेकधर्मत्वात्, यथाक्षयोपशममवबोधप्रवृत्तेः, तस्य च तत्तद्धेतुभेदतो वैचित्र्यादिति ।

आह—यद्यत्र सविकल्पाविकल्पविज्ञानद्वये, क्रमः, कथं न संलक्ष्यते ? इति । उच्यते उत्पलपत्रशतव्यतिभेदवत् कालसौक्ष्म्याद् न संलक्ष्यत इति । किमतदेवमित्याह—छद्मस्थप्रमातुरनाभोगबहुलत्वात् । अनाभोगबहुलत्वं चादृष्टकर्मप्रतिबन्धात्, तथा, वस्तुन. प्रमेयस्यानेकधर्मकत्वात्, तथा विभ्रमादिनिबन्धनत्वेन यथाक्षयोपशमं यस्य यथा क्षयोपशमस्तथाऽवबोधप्रवृत्त', तस्य च क्षयोपशमस्य, तत्तद्धेतुभेदतो द्रव्यादिभेदेन, वैचित्र्यात्, क्रमो न संलक्ष्यत इति ।

आह-यदि कालसौक्ष्म्यादत्र क्रमाऽलक्षणम् । एवं तर्हि 'सरः' इत्येवमादिकयोर्वर्णयोरुच्चारणे नितरां कालसौक्ष्म्यमित्यक्रमग्रहणं स्यात् । तथाच क्रमालक्षणात् श्रुतिभेदो न भवेत्, यथा सरो रस इति । इतश्च न भवेद्-युगपदगोचरीभूतविषयेन्द्रियवतोऽविच्छेदेन सर्वोपलब्धौ क्रमपक्षेऽप्यक्रमस्यैव दर्शनात्, स हि वंशादिवादयितूरूपं पश्यति, तदैव ततः शब्दं शृणोति, नीलोत्पलादिगन्धं जिघ्रति, कर्पूरादे रसमास्वादयति आसनादिस्पर्शं स्पृशति, चिन्तयति च किञ्चित्, इति तत्त्वतोऽस्यानवरतं सर्वपरिच्छित्तिः । एवं यावदत्राप्ययुगपत्पक्षेऽपि समाश्रीयमाणे पञ्चभिर्विज्ञानैर्व्यवधानेऽपि क्रमभावि सत् तेषामेकैकं विज्ञानमविच्छिन्नमिव प्रतिभाति, तथानुभूतः । यद्येतदेवम्, तदा कथमन्यविज्ञानावृत्तौ वर्णयोर्न सकृच्छ्रुतिः इत्यविच्छिन्नमेकघनीभूतायतवर्णाकारं दर्शनं न भवति;न च भवति तथाऽप्रतीतेः, इति यत्र क्रमस्तत्र कालसौक्ष्म्येऽप्युपलभ्यत एव । न च प्रतीतिं विहाय पदार्थतत्त्वव्यवस्थापनोपायः, इति यथाप्रत्ययं युगपद्विज्ञानप्रवृत्तिर्न्यायविदाऽङ्गीकर्तव्या, अन्यथोक्तवद् न्यायोच्छेदप्रसङ्गादिति ।

आह—यदि कालसौक्ष्म्यादत्र अधिकृते सविकल्पाविकल्पज्ञानद्वये, क्रमालक्षणम्, एव तर्हि ' सर ' इत्येवमादिकयोर्वर्णयो', आदिशब्दाद्—रसादिग्रह, उच्चारणे नितरां कालसौक्ष्म्यम्, अव्यवधानेनोच्चारणात्, इत्यक्रमग्रहणं सरवर्णयो स्यात् । तथा चेत्यादि । तथा च सति क्रमालक्षणात् कारणात्, श्रुतिभेद -श्रवणभेदो भवेत्, यथा सरो रस इति द्विवर्णविषयः । इतश्च न भवेच्छ्रुतिभेद. । कुत इत्याह—युगपदित्यादि । युगपदेकदैव, गोचरीभूतविषयाणि च तानीन्द्रियाणि चेति विग्रह', तान्यस्य विद्यन्त इति तद्वान्, तस्याऽविच्छेदेन प्रबन्धवृत्त्या, सर्वेषा. प्रक्रमाद्विषयाणामुपलब्धि', सर्वोपलब्धि., अस्यां सर्वोपलब्धौ सत्याम् । किमित्याह—क्रमपक्षेऽपि विज्ञानविषये, अक्रमस्यैव दर्शनात् एतदेवाक्रमदर्शनमाह—स हीत्यादिना । सहि युगपद्गोचरीभूतविषयेन्द्रियवान्, वंशादिवादयितू रूपं पश्यति, तदैव तत वंशादिवादयितु. सकाशात्, शब्द शृणोति, तथा, नीलोत्पलादिगन्ध जिघ्रति, तथा, कर्पूरादे रसमास्वादयति, एवमासनादिस्पर्शं स्पृशति, चिन्तयति च किञ्चिन्मनसा, इत्येवं, तत्त्वतोऽस्य युगपद्गोचरीभूतविषयेन्द्रियवतः प्रमातु. । किमित्याह—अनवरत सर्वपरिच्छित्तिः अनवरतसर्वपरिच्छित्तिरेव, युगपदेवन्द्रियविषयसम्बन्धासिद्धे. । एवं तत्त्वव्यवस्थिते सति, यावदत्रापि युगपदनुभवेऽपि तात्त्विके, अयुगपत्पक्षेऽपि समाश्रीयमाणे किमित्याह पञ्चभिर्विज्ञानैर्व्यवधानेऽपि सति अधिकृतन्यायेन, क्रमभावि सद् भवत्, तेषां पराणां विज्ञानानाम्, एकैकं विज्ञानं शब्दादिगोचरादि, अविच्छिन्नमिव—युगपदिव, प्रतिभाति । कुत इत्याह—तथानुभूते --अविच्छेदेनानुभूत. । प्रकृतयोजनामाह-यदेत्यादि । यदेतदेवमनन्तरोदितम्, तदा कथमन्यविज्ञानावृत्तावपान्तराले, वर्णयोः सरादिरूपयो., न सकृच्छ्रुतिर्न युगपच्छ्रवणमिति । एतदेवाह-अविच्छिन्नम्-एकदैव एकघनीभूतश्चासावायतवर्णश्चेति विग्रह, तदाकारं दर्शनं न भवति । स्यादेतद् भवत्येव, इत्याशङ्कानिरासार्थमाह-न च भवति । कुत इत्याह--तथाऽप्रतीत । इत्येवं, यत्र क्रमस्तत्र कालसौक्ष्म्येऽप्युपलभ्यत एव यथाऽधिकृतवर्णयो । न च प्रतीतिं विहाय-परित्यज्य, पदार्थतत्त्वव्यवस्थापनोपाय, इत्येव, यथाप्रत्यय--यथानुभवं, युगपद्विज्ञानप्रवृत्ति षडपेक्षया प्रस्तुतद्वयापेक्षया वा, न्यायविदा प्रमात्रा, अङ्गीकर्तव्या, अन्यथैवमनभ्युपगमे, उक्तवद् यथाक्त तथा न्यायोच्छेदप्रसङ्गात् प्रतीतिबाधन न्यायानुपपत्तेस्तस्यापि प्रतिबीजत्वादित्यभिप्राय इति ।

अत्रोच्यते-यत्किञ्चिदेतत्, वर्णयोः सावयवत्वेनोक्तदोषानुपपत्तेः, सराऽऽदयो हि वर्णाः सावयवत्वेनानेकक्षणलब्धवृत्तयः, तथोपलब्धितस्तत्तत्स्वभावत्वात्, अन्यथा तदनुपपत्तेः, न क्षणिकज्ञानग्राह्याः, तस्य परमाणुव्य-

तिक्रान्तिमात्रत्वेनात्यन्तसूक्ष्मत्वात्, तदनुभवस्य तत्त्वेनैवार्वाग्दर्शिनाऽनुपलक्षणात्, तथाऽप्रतीतेः इति पूर्ववर्णज्ञानेनोत्तरवर्णज्ञानस्य मिश्रणाभावात्, उभयोः प्रदीर्घस्थूरोपयोगरूपत्वात्; तथा, आलम्बनजातिभेदात्, तत्तत्स्वाभाव्यात्, तथाक्षयोपशमयोगात्, दृढानुभवसिद्धेः, अविगानेन तथावेदनात् कोटिसङ्गस्याप्रयोजकत्वात्, तद्वीर्यतिरस्करणात्, इत्थमपि तथापादनेऽतिप्रसङ्गात्, नीलपीतज्ञानयोरपि तद्भावेन क्वचिन्मिश्रणप्रसङ्गात्। इति कथं सकारादाविवाविच्छिन्नमेकधर्माभूतायतवर्णाकारं दर्शनं भवेत्? । सकारादौ तु कालादिभेदेऽपि प्रभूततरधर्मप्रत्यासत्तेर्भवति, तथानुभवादिति। एतेनाऽलातचक्रादिदर्शनं प्रत्युक्तम्, प्रत्यवयवं प्रदीर्घस्थूरोपयोगादिविपर्ययात्, अन्यथा तत्रापि तथादर्शनानुपपत्तेः।

अत्रोच्यते—यत्किञ्चिदेतत्, असारमित्यर्थः। कुत इत्याह—वर्णयोः-स-राऽऽदिलक्षणयोः, सावयवत्वेन हेतुना, उक्तदोषानुपपत्तेः। एतदेव प्रकटयति—सरादय इत्यादिना। सरादयो हि वर्णाः सावयवत्वेन जातिभेदेन, अनेकलक्षणलब्धवृत्तयो वर्तन्ते। कुत इत्याह—तथोपलब्धितः अनेकक्षणवृत्तित्वेनोपलब्धेः, उपलब्धिश्च तत्तत्स्वभावत्वात् तयोरुपलब्धवर्णयोस्तत्स्वभावत्वात् अनेकक्षणवृत्तित्वेनोपलब्धिस्वभावात्। इत्थं चैतदङ्गीकर्तव्यमित्याह—अन्यथा तदनुपपत्तेः एवमनभ्युपगमे, वर्णोपलब्ध्ययोगादित्यर्थः। यत एवम्; अ सौ न क्षणिकज्ञानग्राह्यः। कुत इत्याह—तस्य क्षणस्य, परमाणुमात्रव्यतिक्रान्तिमात्रत्वेन परमाणुव्यतिक्रान्तिकाल एकः क्षणो मत इति न्यायेनाऽत्यन्तसूक्ष्मत्वात्। तदनुभवस्य—क्षणानुभवस्य, तत्त्वेनैव—क्षणानुभवत्वेनैव, अर्वाग्दर्शिना प्रमात्रा, अनुपलक्षणात्, अनुपलक्षणं च तथा तत्त्वेनैवाऽप्रतीतेः। इत्येवं पूर्ववर्णज्ञानेन—सकारादिज्ञानेन, उत्तरवर्णज्ञानस्य—रेफादिज्ञानस्य, मिश्रणाऽभावात् कारणात्, कथं सकारादाविवाविच्छिन्नमेकघनीभूतायतवर्णाकारदर्शनं भवेदिति योगः। मिश्रणाभावश्च उभयोर्ज्ञानयोः सकारादिगोचरयोः, प्रदीर्घस्थूरोपयोगरूपत्वात् तथालम्बनजातिभेदात्, भिन्नजातीयौ सकाररेफाविति कृत्वा, तथा तत्तत्स्वाभाव्यात् तयोर्वर्णोपयोगयोस्तत्स्वाभाव्याद्-मिश्रणस्वाभाव्यात्। एतच्च तथाक्षयोपशमयोगात् तेन मिश्रणाभावज्ञानजनकत्वप्रकारेण, क्षयोपशमयोगात्। एतद्योगश्च दृढानुभवसिद्धेः, इयमप्यविगानेन तथावेदनाद् दृढानुभवरूपेण वेदनात्। कोटिसङ्गस्य वर्णज्ञानसम्बन्धिनः, प्रयोजकत्वात्। प्रभूततराऽसंख्येन तद्वीर्यतिरस्करणात् तयोर्वर्णज्ञानयोर्वीर्यं प्रदीर्घस्थूरोपयोगलक्षणं सामर्थ्यं तेन तिरस्करणात् कोटिसङ्गस्य। इत्थमप्येवमपि कोटिसङ्गस्य तद्वीर्यतिरस्करणेऽपि, तदापादने—प्रक्रमाद् मिश्रणापादनेऽतिप्रसङ्गात्। एतमेवाह—नीलपीतज्ञानयोरपि तद्भावेन-कोटिसङ्गभावेन, क्वचिच्चित्रपटादौ, मिश्रणप्रसङ्गात् न-चैनदेवम्, इत्येव, कथं सकारादाविव सजातीयव्यक्तिरूपम् अविच्छिन्नमेकदैव एकघनीभूतायतवर्णाकारं दर्शनं भवेत् नैव भवति, निमित्ताभावात्। सकारादौ तु सजातीये सर्वथैकावयववृत्तित्वेन कालादिभेदेऽपि, आदिशब्दादजातिग्रहः। प्रभूततरधर्मप्रत्यासत्तेस्तथैकारम्भकत्वेन भवत्येकघनीभूतायतवर्णाकारदर्शनम्। कुत इत्याह—तथानुभवात्। एकघनीभूतायतवर्णाकारदर्शनत्वेनाऽनुभवादिति। एतेनानन्तरोदितेन, अलातचक्रदर्शनं प्रत्युक्तम्। कथमित्याह—प्रत्यवयवम् अवयवमवयवं प्रति अलातचक्रसंबन्धिनं, प्रदीर्घस्थूरोपयोगादिविपर्ययात् अप्रदीर्घसूक्ष्मोपयोगभावात्; एवं च तत्र भवति तन्मिश्रणमित्यर्थः। अन्यथैवमनभ्युपगमे, तत्राप्यलातचक्रे, तथादर्शनानुपपत्तेः प्रत्यवयवं प्रदीर्घस्थूरोपयोगभावेन तन्मिश्रणाभावेनेति भावः।

न चैवं सर्वक्रमोपलम्भनिबन्धनं सविकल्पाविकल्पयोः, अविकल्पे क्षणिकत्वेन जात्यादिभेदेऽपीहादेस्तदितरवैकल्यादिति। या च युगपद्गोचरीभूतविषयेन्द्रियवतोऽविच्छेदेन सर्वोपलब्धिरुक्ता, साऽसिद्धा,द्रव्येन्द्रियविषययोगेऽप्यर्वाग्दर्शिनः प्रतिबन्धकसामर्थ्येन तावतां विज्ञानानामेकदाऽनुदयात्, तथाऽननुभूतेः, प्रतीत्यभावात्, युक्त्यनुपपत्तेः, उपादानायोगात्, एकोपादानतोऽनेकासिद्धेः, भिन्नोपादानत्वे तदत्यन्तभेदेनानुसन्धानायोगात्, अस्य चानुभवसिद्धत्वात्। एवं च क्रमपक्षेऽप्यक्रमस्यैव दर्शनादित्ययुक्तम्, तथाननुभवात्, एकदैकज्ञानसंवेदनात्, कालसौक्ष्म्याविभ्रमतस्तथाऽप्रतीतेः।

प्रकृतयोजनायाह—न चैवं यथाधिकृतवर्णयोः, सर्वनिरवशेषं सावयवत्वादि, क्रमोपलम्भनिबन्धनम्। कयोरित्याह—सविकल्पाविकल्पयोः प्रस्तुतविज्ञानयोः। कुत इत्याह—अविकल्पे क्षणिकत्वेन अवग्रहस्य क्षणिकत्वात्। जात्यादिभेदेऽपीहादेः, सविकल्पत्वेन आदिशब्दात्—प्रतिभासग्रहः, तदितरवैकल्यात् प्रदीर्घस्थूरोपयोगरूपवैकल्यादिति। या चेत्यादि। या च युगपद्गोचरीभूतविषयेन्द्रियवतः प्रमातुः, अविच्छेदेन सर्वोपलब्धिरुक्ता पूर्वपक्षग्रन्थे, साऽसिद्धा। कुत इत्याह—द्रव्येन्द्रियविषययोगेऽपि निर्वृत्त्युपकरणरसादिसम्बन्धेऽपि, अर्वाग्दर्शिनः प्रमातुः, प्रतिबन्धकसामर्थ्येन हेतुना कर्मसामर्थ्येन, तावतां विज्ञानानां परेणाम्, एकदैकस्मिन् काले, अनुदयात्-अनुत्पादात्, अनुदयश्च तथाननुभूतेः एकदाभावेनाननुभूतेः। अननुभूतिश्च प्रतीत्यभावात्। प्रतीत्यभावश्च युक्त्यनुपपत्तेः। युक्त्यनुपपत्तिश्च उपादानायोगात्। उपादानायोगश्च एकोपादानतोऽनेकासिद्धेः स्वतः परतश्च। भिन्नोपादानत्वे तेषां परेणामत्यन्तभेदेन सन्तानान्तरवदनुसन्धानायोगात् 'मया रूपं दृष्टं, शब्दः श्रुतः' इत्यनुसंधानायोगात्। अस्य चानुसन्धानस्यानुभवसिद्धत्वात्। यदि नामैवं ततः किमित्याह—एवं च 'क्रमपक्षेऽप्यक्रमस्यैव दर्शनात्' इत्ययुक्तं पूर्वपक्षोक्तम्। कुत इत्याह-तथाननुभवात्। अक्रमदर्शनेनाऽननुभवात्। अननुभवश्च एकदैकज्ञान-

संवेदनात्, इति कल्पनान्तरबाधिका युक्तिः । अत एवाह—कालसौक्ष्म्याद्विभ्रमतः कारणात्, तथाऽप्रतीते—एकदैकज्ञानसंवेदनत्वेनाऽप्रतीते, विभ्रमाद् युगपत्प्रवृत्तेरित्यर्थः ।

किञ्च–कुतोऽयममीषामत्यन्तभेदे युगपत्सर्वानुभव इत्यवगमः ? , न तेभ्य एव, प्रत्यर्थनियतत्वात् इतरेतरानवगमात्, अवगमे स्वरूपहानिप्रसङ्गात्, ज्ञानान्तरालम्बनत्वापत्तेः, तस्यापि चायोगात्, युगपद्भावात्, प्रतिबन्धविरहात्, इतरेतरालम्बनत्वानुपपत्तेः, युक्तिभिरयोगात्, स्वभावभेदप्रसङ्गात्, तथा च तदयोगादिति । न चान्यतः, एकस्य तदालम्बनत्वाभावात्, तेषां भिन्नजातीयत्वात् । अत एवैकाकरणादतदुत्पन्नात् तत्परिच्छित्त्यसिद्धेः, तदाकारत्वायोगात्, योगेऽपि मेचकरूपतापत्तेः, तत्सारूप्याभावात्, तेषामसङ्कीर्णत्वात्, एवमप्यवगमेऽतिप्रसङ्गात्, तत एव सर्वार्थावगमापत्तेः, तथाऽनुभवाभावात्, इत्यनवगताभिधानमेतद् । यदुत–'युगपत्सर्वानुभवः' इति । चित्रज्ञानवत्परामर्शविकल्पात् तदवगम इति चेत् । न । अस्याप्ययोगात् । तथानुभवसिद्धत्वात् कथमयोग इति चेत् स्वकृतान्तप्रकोपात् । कथमत्र तत्प्रकोप इति चेत् । यथोक्तं प्राक् । परामर्शविकल्पोऽन्य एवेति चेत् । न । ततस्तदवगम इति यत्किञ्चिदेतत् । क्रमानुभवोऽपि कथं गम्यते ? इति चेत् । अन्वयिन्यात्मनि सुखेनैव, तस्यैव तथाभावात्, चित्रस्वभावत्वात्, बोधान्वयोपपत्तेः, तदावरणविगमात्, क्रमानुभवाविरोधात्, तथामनोवृत्तेः । इति न युगपत्सर्वथा सविकल्पाविकल्पज्ञानभावः ।

दूषणान्तरमाह—किञ्चेत्यादिना । किञ्चायमपरो दोषः—कुतोऽयममीषां षण्णां विज्ञानानाम्, अत्यन्तभेदे सति, युगपत्सर्वानुभव इत्येवंभूतः, अवगमः—परिच्छेदः । न तेभ्य एव षड्भ्यो विज्ञानेभ्यः । कुत इत्याह—प्रत्यर्थनियतत्वात् तेषाम्, तथाहि–रूपादिविषयत्वेन नियतानि तानि । यदि नामैवं ततः किमित्याह—इतरेतरानवगमात् । न रूपज्ञाने रसादिज्ञानमवगम्यते, नापि तैस्तत्, इतीतरेतरानवगमः । इत्थं चैतदङ्गीकर्तव्यमित्याह—अवगमे स्वरूपहानिप्रसङ्गात् । यदैव रूपज्ञानं रसादिज्ञानान्यवैति तदैव तदालम्बनत्वात् तदाकारतया रूपज्ञानता परित्यज्यान्यथा तदवगमः, एवं रसादिज्ञानेष्वपि योजनीयम्, इत्यवगमे स्वरूपहानिप्रसङ्गः । एतदेवाह—ज्ञानान्तरालम्बनत्वापत्तेः न ह्यतदालम्बनं तदवगमयतीति भावः । यदि नामैवं ततः किमित्याह—तस्यापि चायोगात् तस्यापि च ज्ञानान्तरालम्बनत्वस्य, अयोगात् । अयोगश्च युगपद्भावात् । रूपरसादिज्ञानानां युगपद्भावे दोषमाह—प्रतिबन्धविरहात् तादात्म्यतदुत्पत्त्ययोगेन । दोषान्तरमाह–इतरेतरालम्बनत्वानुपपत्तेः रूपज्ञानस्य रसान्तरालम्बनत्वानुपपत्ते, रसादिज्ञानस्य च रूपज्ञानान्तरालम्बनत्वानुपपत्ते । अनुपपत्तिश्च युक्तिभिरयोगात् । युक्त्ययोगश्च स्वभावभेदप्रसङ्गात् । रूपज्ञानं हि रसादिज्ञानान्तरालम्बनमालम्ब्य च । न चैतदुभयं स्वभावाभेदे इति स्वभावभेदः । यदि नामैवं ततः किमित्याह—तथा च तदयोगादिति । स्वभावभेदे च रूपादावज्ञानायोगात्, ततस्तद्व्यतिरिक्तेतरविकल्पद्वारेण, इति 'न तेभ्य एवाऽमीषां युगपत्सर्वानुभव' इत्यवगमः, इत्येतत् स्थितम् । अन्यतो भविष्यतीत्याशङ्कापनोदायाह—न चान्यत इत्यादि । न चान्यतोऽमीषां युगपत्सर्वानुभव इत्यवगमः । कुत इत्याह—एकस्येत्यादि । एकस्यान्यस्य, तदालम्बनत्वाभावात् अधिकृतषड्विज्ञानालम्बनत्वाभावात् । अभावश्च तेषां भिन्नजातीयत्वात् षण्णां विज्ञानानाम् । यदि नामैवं ततः किमित्याह—अत एवैककारणात् । न हि भिन्नजातीया रूपादय एकं पृथग्जनज्ञानं कुर्वन्ति । न चैतदुत्पन्नं तत्परिच्छेदकमित्येतदाह—अतदुत्पन्नादित्यादि । तेभ्यः षड्भ्यो विज्ञानेभ्यः, उत्पन्नं तदुत्पन्नं, न तदुत्पन्नमतदुत्पन्नं तस्मात्, एकस्मादिति प्रक्रमः । तत्परिच्छित्त्यसिद्धेः षड्ज्ञानपरिच्छित्त्यसिद्धेः असिद्धिश्च तदाकारत्वायोगात् । उपचयमाह–योगेऽपि कथञ्चित्, तदाकारत्वस्य मेचकरूपतापत्तेरधिकृतग्राहकज्ञानस्य । यदि नामैवं ततः किमित्याह–तत्सारूप्याभावात् । तैर्ज्ञेयज्ञानैः षड्भिः सारूप्याभावात्, मेचकरूपस्य ग्राहकज्ञानस्य । अभावश्च तेषामसंकीर्णत्वात् ज्ञेयज्ञानानाम् । न च सारूप्याभावे तदवगमो न्याय्य इत्येतदाह–एवमपीत्यादि । एवमपि सारूप्याभावेऽपि ज्ञानज्ञेययोरवगमेऽभ्युपगम्यमाने अतिप्रसङ्गात् । अतिप्रसङ्गश्च तत एव सर्वार्थावगमानुभवाच्च, इत्येवम्, अनवगताभिधानमेतत् पूर्वपक्षवचनं, यदुत 'युगपत्सर्वानुभवः' उक्तवत्तद्यौगपद्याज्ञानादिति । चित्रज्ञानवदित्यादि । चित्रज्ञानवदिति निदर्शनम्, यथा चित्रज्ञानं सामर्थ्याच्चित्रावगमः, तथा परामर्शविकल्पात्–षड्ज्ञानगतात्, तदवगमः; प्रक्रमादमीषां युगपत्सर्वानुभवावगम इति चेत् । एतदाशङ्क्याह—नाऽस्याऽप्ययोगात् चित्रज्ञानस्य । तथेत्यादि । तथा चित्रज्ञानत्वेनानुभवसिद्धत्वात् कारणात्, कथमयोग इति चेत् चित्रज्ञानस्य । एतदाशङ्क्याह—स्वेत्यादि । स्वकृतान्तप्रकोपात्–स्वसिद्धान्तविरोधादयोगः । कथमत्र तथानुभवसिद्धौ, तत्प्रकोप इति चेत् । एतदाशङ्क्याह—यथोक्तं प्राक्–पूर्वम् 'एकस्यानेकालम्बनत्वाभावात्, इत्यादिना परामर्शविकल्पोऽनन्तरप्रस्तुतः, अन्य एव तथाविधानुभवनिमित्तो न षड्ज्ञानगत इति चेत् । एतदाशङ्क्याह–न तत्, परामर्शविकल्पादन्यस्मात्, तदवगमः प्रक्रमादमीषां युगपत्सर्वानुभवावगमः, इत्येवं, यत्किञ्चिदेतदनन्तरोदितम्; सर्वमेवासारमित्यर्थः । क्रमानुभवोऽपि रूपादिज्ञानगत इति प्रक्रमः, कथं गम्यत इति चेत्, तत्क्रमग्राह्यान्यद् विज्ञानान्तरं न विद्यत एवेत्यभिप्रायः । एतदाशङ्क्याह–अन्वयिन्यात्मनि सुखेनैव गम्यते, एतदेवाह–तस्यैव प्रक्रमाद्रूपादिज्ञानानुभवितुरात्मनः, तथाभावाद्–रसादिज्ञानरूपेण भावात्, तत्तथाभावश्च चित्रस्वभावात्; अनुवृत्तिव्यावृत्तिस्वभावत्वादित्यर्थः । एतच्च बोधान्वयोपपत्तेः, न व्यावृत्तिमन्तरेणान्वय इत्युपपत्तिः । युक्त्यन्तरमाह–तदावरणविगमात्–क्रमानुभवज्ञानावरणविगमात् । न चायमसिद्ध इत्याह–क्रमानुभवाविरोधात् कारणसाकल्येने-

स्यर्थ । अविरोधश्च तथामनोवृत्ते युगपज्ज्ञानानुपपत्तित्वेन मनोवृत्ते कारणात् । प्रक्रान्तोपसंहारमाह--इति न युगप दित्यादिना । इत्यवं, न युगपत्सविकल्पाविकल्पज्ञानभाव ।

परमाप्तवचनविरुद्धश्चायम्, "अस्थानमेतम्, यद् द्वे चित्ते युगपदुत्पद्येयाताम्" इति वचनप्रामाण्यात् । अन्यार्थमेतदिति चेत् । कोऽस्यार्थ इति वाच्यम् । भिन्नजातीयेनेति चेत् । न । अधिकृतज्ञानयोरपि तत्त्वात् । भिन्नालम्बनेनेति चेत् । न । तयोरपि त्वन्मते भावात् । कथं पुनर्भाव इति चेत् । रसादिगतचित्तस्यापि रूपदर्शनाभ्युपगमादिति । न चाविकल्पकेनेति, पञ्चानां प्ररूपणात् । न चात एव न द्वे, छलमात्रत्वात् । न चेहैव न्याय्यो भरः, अस्थानप्रयासत्वात् । न च नास्थानप्रयासः, द्वयोरुपलक्षणत्वात्, अन्यथा यत्र पञ्च न तत्र द्वे इत्यतिकौशलमाप्तस्य, त्र्यादीनामपि प्रतिषेधापत्तेः ।

उपचयमाह-परमाप्तवचनविरुद्धश्चायं परमाप्तो-भगवान् वृद्धस्तद्वचनविरुद्धश्च, अयं युगपत्सविकल्पाविकल्पज्ञानभाव.। एतदेवाह-अस्थानमित्यादिना । अस्थानमिति-एतन्न न्यायस्थानं यद् द्वे चित्ते द्वे ज्ञाने, युगपदेकदा,उत्पद्येयाताम्, इत्येवं वचनप्रामाण्यात् कारणात् परमाप्तवचनविरुद्ध इति । अन्यार्थमेतत् परमाप्तवचनमिति चेत् । एतदाशङ्क्याह-कोऽस्य परमाप्तवचनस्यार्थ इति वाच्यम् । भिन्नजातीये न द्वे चित्ते युगपदुत्पद्येयातामिति चेत् । एतदाशङ्क्याह-न, अधिकृतज्ञानयोरपि-सविकल्पाविकल्पयो , तत्त्वात्-भिन्नजातीयत्वात् । भिन्नालम्बने न द्वे चित्ते युगपदुत्पद्येयातामिति चेत् । एतदाशङ्क्याह-न । तयोरपि भिन्नालम्बनयोरपि, त्वन्मते-त्वत्पक्ष, भावात् । कथ पुनर्भावो भिन्नालम्बनयोर्मतपक्षे, इति चेत् । एतदाशङ्क्याह-रसादिगतचित्तस्यापि प्रमातु, रूपदर्शनाभ्युपगमात् । अभ्युपगमश्च " अतीताद्यर्थगतविकल्पेनापि रूपादिग्रहणसिद्ध " इति वचनात् । न चाविकल्पकेनेति द्वे चित्ते युगपदुत्पद्येयातामिति । कुत इत्याह--पञ्चाना प्ररूपणात् । स हि वंशादिवादयितु रूपं पश्यतीत्यादिना ग्रन्थेन, नचात एव--पञ्चप्ररूपणादेव, न द्वे । कुत इत्याह-छलमात्रत्वात् । यत्र पञ्च तत्र द्वे अपि भवत इति कृत्वा । न चेहैव प्रक्रमाच्छलादौ, न्याय्यो भरस्तथाविधाऽऽस्थारूप । कुत इत्याह--अस्थानप्रयासत्वात् । न च नास्थानप्रयास एष, किन्त्वस्थानप्रयास एव । कुत इत्याह-द्वयोरुपलक्षणत्वात् पञ्चादीनाम् । इत्थ चैतदङ्गीकर्तव्यमित्याह--अन्यथा उपलक्षणत्वानभ्युपगमे, यत्र पञ्च न तत्र द्वे इत्यतिकौशलमाप्तस्य, इत्युपहासवचनम् । अत एव आह-त्र्यादीनामपि प्रतिषेधापत्त कारणात् ।

स्यादेतत्, अलमनेन वाग्जालेन, सविकल्पेनोत्पद्येते इति वचनार्थात् । न, अत्र प्रमाणाभावात्, तद्विवक्षाया अत्यक्षत्वात् बाधकवचनाभावात्, भावेऽपि तदर्थनिश्चयायोगात्, विनेयानुगुण्यतोऽन्यथापि तद्वचनप्रवृत्तेः । साऽऽभिप्रायिक्येवेति चेत्, कस्तस्याभिप्राय इति क एतद्वेद ?। यो युक्तिबाधितो न स स इति चेत् । कः पुनरसौ भवतोऽभिप्रेतः ?। विकल्पद्वयायुगपद्भाव इति चेत् । का खल्वन्यथा युक्तिबाधा ? इति कथनीयम् । तथानुभव एवेति चेत् । सोऽविकल्पकद्वयेऽपि तुल्य एवेत्युक्तम् । न च विकल्पयोरसदंशानुवेधताश्चित्ततैव युक्ता । न च तत्स्वसंविदो वस्तुत्वेनाथमनपराधः, तत्तद्व्यतिरिक्तेतरविकल्पदोषापत्तेः अन्यथा तदयोगात् । इति यत्किञ्चिदेतत् । अतः सामान्येनैवोभयचित्तप्रतिषेधोपपत्तेः, आप्तवचनप्रामाण्यात्, तथानुभवभावतः सिद्धमिन्द्रियद्वारानुसार्येव विज्ञानमाविष्टाभिलापम् 'अहिरहिः' इत्येवमादि ।

स्यादेतदलमनेन वाग्जालेनान्तरोदितेन, सविकल्पे न उत्पद्येते द्वे चित्ते युगपदिति वचनार्थात्, कारणात् अलमनेन । एतदाशङ्क्याह-न अत्र वचनार्थे. प्रमाणाभावात् । अभावश्च तद्विवक्षाया अत्यक्षत्वात्--अतीत्याक्षमिन्द्रिय वर्तत इत्यत्यक्षा तद्भावस्तस्मात् परोक्षत्वादित्यर्थ । अत्यक्षापि वचनान्तरावसेया भविष्यतीत्याह--बाधकवचनाभावात् । अविकल्पयौगपद्याभिधायि बाधकं वचनम्, अत्र न च तदस्तीति गर्भ.। उपचयमाह-भावेऽपीत्यादिना । भावेऽपि बाधकवचनस्य 'पञ्च बाह्यविज्ञानानि भिक्षव ! युगपदुत्पद्यन्ते' इत्यादे । किमित्याह-तदर्थनिश्चयायोगात् । अविकल्पज्ञानाना युगपद्भावस्तदर्थस्तन्निश्चयायोगात्, अयोगश्च विनेयानुगुण्यत -शिष्यानुगुण्येन, अन्यथापि श्रौतं शब्दार्थं विहायाऽपि. तद्वचनप्रवृत्ते -आप्तवचनप्रवृत्ते .ब्राह्मणमृतजायाऽमृतवचनवत् । सेत्यादि । सा तद्वचनप्रवृत्ति, आभिप्रायिक्येव अभिप्रायेण निर्वृत्ता आभिप्रायिकी अभिप्रायस्तथार्थदर्शनमिति चेत् । एतदाशङ्क्याह-कस्तस्य आप्तस्याऽभिप्राय अर्थयाथात्म्यमधिकृत्य किमविकल्पयौगपद्यमेव, उत विकल्पयौगपद्यमिति ?। क एतद्वेद--क एतज्जानाति ?, न ह्यसौ पृथग्जनप्रज्ञाविषय इत्यर्थ । य इत्यादि । योऽभिप्रायो युक्तिबाधितो--युक्तिविरहित, न स स इति-नासौ तदभिप्राय, अर्थयाथात्म्यमधिकृत्येति प्रक्रम, इति चेत् । एतदाशङ्क्याह--क पुनरसौ अभिप्राय, भवतोऽभिप्रेत ?। विकल्पेत्यादि । विकल्पद्वयायुगपद्भावोऽभिप्राय 'अस्थानमेतत्' इत्यादिसूत्र इति चेत् । एतदाशङ्क्याह--का खल्वन्यथा विकल्पद्वययुगपद्भावे, युक्तिबाधा ?, इत्येतत् कथनीयम् । तथा विकल्पद्वययौगपद्येन, अनुभव एव युक्तिबाधेति चेत् । एतदाशङ्क्याह-सोऽविकल्पद्वयेऽपि यौगपद्येनाऽननुभव, तुल्य एवेत्युक्तं प्राक् । किंच-कुतोऽयममीषामत्यन्तभेद युगपत् सर्वानुभव इत्यवगम.?, इत्यादिना सूत्रेण । उपचयमाह--न चेत्यादिना । न च विकल्पयोरसदंशानुवेधत कारणात्, अविद्यमानप्रतिभासित्वाभ्युपगमेन, चित्ततैव युक्ता, यदसत्प्रतिभासि तदसदेवेति भावनीयम् । पराभिप्रायमाह--न चेत्यादिना । न च तत् स्वसंविदो विकल्पस्य स्वसंविद, वस्तुत्वेन हेतुना, अयमसदंशानुवेधताश्चित्ततायोगलक्षण, अनपराधोऽदोषो न च । कुत इत्याह-तत्तद्व्यतिरिक्तेतरविकल्पदोषापत्ते तस्या स्वसंवि-

दस्तद्व्यतिरिक्तेतरविकल्पदोषापत्तेः-असदंशव्यतिरिक्ताव्यतिरिक्तविकल्पदोषप्रसङ्गात्—सा हि स्वसंविदसदंशाद् विकल्पानुवेधकाद् व्यतिरिक्ता वा स्यादव्यतिरिक्ता वा ? । व्यतिरिक्तत्वे तस्येति सम्बन्धायोगः । अव्यतिरिक्तत्वे तस्यापि वस्तुता, स्वसंविदो वाऽवस्तुतेत्यादि । अन्यथैवमनभ्युपगमे, तदयोगात्-तत्स्वसंविदोऽयोगात्, तथाहि-यदि सा ततो न व्यतिरिक्ता, नाप्यव्यतिरिक्ता, न विकल्प एवेति कुतस्तत्स्वसंवित् ? इत्यालोचनीयम् । इत्येवं, यत्किंचिदसारमेतद् यदुक्त-' तत्स्वसंविदो वस्तुत्वेनायमनपराधः ' इति । अपान्तरालपूर्वपक्षमधिकृत्योपसंहारमाह—अत इत्यादिना । अतोऽस्मात् कारणात्, सामान्येनैवोभयचित्तप्रतिषेधोपपत्तेः, । प्रक्रमादधिकृतसूत्रे ' अस्थानमेतत्-' इत्यादौ सविकल्पाविकल्पोभयचित्तप्रतिषेधोपपत्तेः । किमित्याह-आप्तवचनप्रामाण्यात् कारणात् । तथा, अनुभवभावत एकचित्तरूपत्वेनानुभवभावत, सिद्धं—प्रतिष्ठितम् । किमित्याह-इन्द्रियद्वारानुसार्येव विज्ञानम्, ईहादिक्रमेणाऽऽविष्टाभिलापम् ' अहिरहिः ' इत्येवमादि । आदिशब्दात्तदन्यैवंविधपरिग्रहः, तदपि सिद्धमित्यर्थः ।

न चेदं नेन्द्रियनिमित्तं, तद्भावभावित्वानुविधानात्, अन्धादेरनुत्पत्तेः । इन्द्रियादविकल्पजन्म तत इदमिति तदनुत्पत्तिरिति चेत् । न । आद्यविद्युत्संपातादौ तद्भावेऽपि तदभावात् । स मानसाभावतोऽभावो नाक्षव्यापाराभावत इत्यतोऽदोष इति चेत् । नात्र किञ्चिदुभयसिद्धं प्रमाणात् । इति यत् किञ्चिदेतत् । तथाविधविकल्पानुत्पत्तिरेव प्रमाणमिति चेत् । न । अस्या एव विवादगोचरापन्नत्वात् । अत एवैतन्निर्णीतेरयमदोष इति चेत् । न । चक्षुर्व्यापाराभावेऽप्यस्याः समानत्वादिति ।

इहैवोपचयमभिधातुमाह-न चेत्यादि। न चेदं नेन्द्रियनिमित्तं किं तर्हि, इन्द्रियनिमित्तमेव । कुत इत्याह-तद्भावभावित्वानुविधानात् इन्द्रियभावभावित्वानुकरणात् । तदेवाह-अन्धादेरनुत्पत्तेः । आदिशब्दाद्-अव्यापृतेन्द्रियग्रहः । इन्द्रियादित्यादि। इन्द्रियात् सकाशात्, अविकल्पजन्मा-अविकल्पोत्पाद, ततोऽविकल्पात्, इद विज्ञानमाविष्टाभिलापम, इत्येवं तदनुत्पत्तिरन्धादेर्विषयज्ञानानुत्पत्तिरिति चेत् । एतदाशङ्क्याह-आद्यविद्युत्संपातादौ । आदिशब्दात्—तदन्याद्भुतदर्शनग्रहः । तद्भावेऽपि-इन्द्रियादविकल्पजन्मभावेऽपि तदभावात्—आविष्टाभिलापविज्ञानाभावात् । स मानसाभावतः स्वविषयानन्तरावधयसहकारीन्द्रियज्ञानजनितमानसाभावेन, अभाव, आविष्टाभिलापविज्ञानाभावः । नाक्षव्यापाराभावतो-नेन्द्रियव्यापाराभावेन इत्यतोऽस्मात् कारणात्, अदोष. ' आद्यविद्युत्संपातादौ तद्भावेऽपि तदभावात् ' इत्ययमनपराध इति चेत् । एतदाशङ्क्याह—नात्र 'स मानसाभावत' इत्यादौ. किञ्चिदुभयसिद्धं वादिप्रतिवादिप्रतिष्ठितम्, प्रमाणमक्षव्यापारापोहेन मानसनिबन्धनत्वव्यवस्थापकम् . इत्येवं, यत्किञ्चिदेतदसारमित्यर्थः । तथाविधेत्यादि । तथाविधविकल्पानुत्पत्तिरेवाविष्टाभिलापविज्ञानानुत्पत्तिरेवेत्यर्थः । प्रमाणमक्षव्यापाराभावेन मानसनिबन्धनत्वव्यवस्थापकमिति चेत् । एतदाशङ्क्याह—न । अस्या एव तथाविधविकल्पानुत्पत्तेरेव, विवादगोचरापन्नत्वात् विप्रतिपत्तिविषयत्वादिति योऽर्थः । अत एवेत्यादि । अत एव तथाविधविकल्पानुत्पत्तेरेव सकाशात्, एतन्निर्णीतेः ' स मानसाभावतोऽभावो नाक्षव्यापाराभावतः ' इत्येतन्निश्चयात् कारणात्, अयमनन्तरोदितः ' न, अस्या एव विवादगोचरापन्नत्वात् ' इत्यदोषोऽनपराध इति चेत् । एतदाशङ्क्याह-न, चक्षुर्व्यापाराभावेऽप्यस्याः, अत एव तन्निर्णीते, समानत्वात्—तुल्यत्वादिति । तथाहि—अत एव तथाविधविकल्पानुत्पत्तेरेव सकाशात्, एतन्निर्णीतेः सोऽक्षव्यापाराभावतोऽभावो न मानसाभावत इत्येतन्निश्चयात् कारणात्, इत्यपि वक्तुं शक्यत्वात् तुल्यत्वमिति भावनीयम् ।

किञ्च-इदमपि मानसं तद्विषयमात्रग्राहकत्वेन न तद्भिन्नशक्तिकमिति । किञ्चानेन, निरंशैकस्वभावत्वाच्च वस्तुनोऽनुभवोऽपि न पटीयानपटीयांश्च युज्यते अत्यन्ताऽसत उत्पादेन सर्वथा हेत्वनन्वयतोऽभ्यासवासने च; अन्यथाऽसंपूर्णवस्तुग्रहणमपि स्यात्, तथा च न निरंशैकस्वभावमेवैतत् । न चान्यथाऽपटीयस्त्वादि, अनुभवस्य तन्मात्रग्रहणत्वात्, तदतिरिक्तरूपान्तराभावात्, अन्येनोपकाराद्ययोगादिति । एवमभ्यासवासनोपगमाद् नात्यन्तासत एवोत्पादः, सत्यस्मिंस्तयोर्वाङ्मात्रत्वात्, तदात्मातिरेकेणाऽऽकालं तदभावात्, पूर्वस्मादत्यन्तभिन्नत्वात् तथापि तदभ्यासादावतिप्रसङ्गात् । इतीन्द्रियजमेवैतत् ।

अभ्युच्चयमाह—किञ्चेत्यादिना । किञ्च—इदमपि मानसं स्वविषयानन्तरत्यादिलक्षणवत्, तद्विषयमात्रग्राहकत्वेन-प्रक्रमादक्षज्ञानविषयमात्रग्राहकत्वेन हेतुना. स्वलक्षणमात्रग्राहकत्वेनेत्यर्थ, न तद्भिन्नशक्तिकं नाक्षज्ञानभिन्नशक्तिकमिति । किञ्चानेन परिकल्पितेन, तथाविधविकल्पोत्पत्तौ समानमेतदक्षज्ञानेनेति भावः । पक्षान्तरपरिजिहीर्षयाह-निरंशैकस्वभावत्वाच्च कारणात्, वस्तुन. अनुभवोऽपि-प्रक्रमात्तदनुभव, न पटीयानपटीयांश्च युज्यते, निरंशैकस्वभावाद् वस्तुनस्तथाविधैकस्वभावस्यैवास्य भावात्; तदेतद्भेदोऽपि न तथाविधविकल्पोत्पत्त्यनुत्पत्तिनिमित्तमिति प्रक्रतयोजना । तथा, अत्यन्तासत उत्पादेन हेतुना, अनुभवस्य सर्वथा हेत्वनन्वयत. कारणात्, तत्तथाभावाभावेनाऽभ्यासवासने च ' अनुभवस्य न युज्यते ' इति वर्त्तते, पौन पुन्यकरणमभ्यासः, पूर्वानुभूतसंस्कारानुवेधश्च वासना, नैते अत्यन्तासत उत्पादे भवत इति भावनीयम् । इत्थं चैतदङ्गीकर्तव्यमित्याह-अन्यथा एवमनभ्युपगमे, असंपूर्णवस्तुग्रहणमपि स्यात् अनुभवापटीयस्त्वादिभावेन । यदि नामैव तत' किमित्याह-तथा च न निरंशैकस्वभावमेवैतद् वस्तु, किन्तु-सांशानेकस्वभावमिति । न चान्यथोक्तप्रकारं विहाय, अपटीयस्त्वादि, आदिशब्दात्पटीयस्त्वग्रहः,

अनुभवस्याधिकृतस्य । कुत इत्याह-तन्मात्रग्रहणत्वाद् वस्तुमात्रग्रहणस्वरूपत्वात्, अनुभवस्य, तदतिरिक्तरूपान्तराभावात् तन्मात्रग्रहणतत्त्वातिरिक्तरूपान्तराभावात् । अभावश्चान्येन वस्तुव्यतिरिक्तेनोपकाराद्ययोगात् ततश्च वस्तुग्रहणभेदकृतमेवापटीयस्त्वाद्यस्येति साशानेकस्वभावमेतदिति स्थितम् । एवमभ्यासवासनोपगमात् कारणात् । किमित्याह—नात्यन्तासत एवोत्पाद । कुत इत्याह—सत्यस्मिन् अत्यन्तासत उत्पादे, नयोरभ्यासवासनयो , वाङ्मात्रत्वात् । वाङ्मात्रत्वमेवाह—तदात्वातिरेकेण तदाभावातिरेकेण, आकाल—यावदपि कालस्तावदपि , तदभावादत्यन्तासत उत्पद्यमानस्याभावात्, अभावश्च पूर्वस्मादत्यन्तभिन्नत्वात् अत्यन्तासत उत्पद्यमानस्य, तथाप्येवमपि, तदभ्यासादौ तस्यानुभवस्याभ्यासवासनाभावे ; अतिप्रसङ्गादनुभवान्तरस्याप्यभ्यासादिशून्यस्य तद्भावप्रसङ्गात् । इतीन्द्रियजमेवैतद् विज्ञानमाविष्टाभिलापम् ' अहिरहि.' इत्येवमादीत्यधिकारोपसंहार. ।

एतच्चानेकधर्मके वस्तुनि ज्ञानावरणाच्छादितस्य प्रमातुस्तथाविधक्षयोपशमभावत उभयोस्तथास्वभावत्वेनावग्रहेहावायधारणारूपं प्रवर्तत इति । अनेकधर्मकत्वं च वस्तुनोऽनेकविज्ञानजनकत्वात्, योग्ययोगिभिर्भेदेनोपलब्धेः, अन्यथा तदभेदप्रसङ्गात्, द्वयोरपि तत्तन्निमित्तत्वात्, तद्भावभावित्वानुविधानात् । मरावल्पभावे महद्दर्शनमनिमित्तमिति चेत् । न । अल्पस्यैव तन्निमित्तत्वात्, तदभावेऽभावात्, विप्रकर्षाद्युपप्लवात्, तत्तत्स्वभावत्वात्, अन्यथा तदनुपपत्तेः, ततस्ततोऽन्यत्वाच्च, स्वभावभेदेन व्यावृत्तेः, अन्यथा तदेकत्वप्रसङ्गात्, तदन्यत्वहेतुत्वेनाविशेषात्, अन्यत्वस्य चाकल्पितत्वात्, कल्पितत्वे तत्वतस्तदभावापत्तेः ।

एतच्चेत्यादि । एतच्चाधिकृतज्ञानम्, अनेकधर्मके वस्तुनि घटरूपादौ, ज्ञानावरणाच्छादितस्य प्रमातुर्जीवस्य, तथाविधक्षयोपशमभावतो द्रव्यादिनिमित्तचित्रक्षयोपशमभावात्, उभयो. प्रमातृविषययो , तथास्वभावत्वेन चित्रग्राह्यग्राहकस्वभावत्वेन हेतुना, अवग्रहेहावायधारणारूपं प्रवर्तत इति ग्रहणकवाक्यसमुदायार्थ' । अवयवार्थं तु स्वयमेवाह ग्रन्थकार —अनेकधर्मकत्व च वस्तुन इत्यादिना ग्रन्थेन । अनेकधर्मकत्व च वस्तुनो घटरूपादे । कुत इत्याह—अनेकविज्ञानजनकत्वात्—अनेकेषा विज्ञानजनकमनेकविज्ञानजनकं तद्भावस्तस्मात् । एकेनैव स्वभावेनैव भविष्यतीत्याह—योग्ययोगिभि प्रमातृभि , भेदेनोपलब्धे संपूर्णाऽसपूर्णधर्मसाक्षात्करणेन दर्शनादित्यर्थ । अन्यथैवमनभ्युपगमे, तदभेदप्रसङ्गाद्-योग्ययोगिनोरभेदप्रसङ्गात् । प्रसङ्गश्च द्वयोरपि योग्ययोगिनो , तत्तन्निमित्तत्वात्-तस्या उपलब्धेस्तन्निमित्तत्वात् अधिकृतवस्तुनिमित्तत्वात् । तन्निमित्तत्व च तद्भावभावित्वानुविधानात्—अधिकृतवस्तुभावभावित्वानुकरणात् । अतन्त्रमेतदर्वाग्दृशामित्येतदेवाह—मरावित्यादिना । मरौ विषये, अल्पभावेऽल्पस्य छगणादे सत्तायां, महद्दर्शन महतो वत्सादेरिव दर्शनम्, अनिमित्तम्, अल्पस्याप्रतिभासनेन निमित्तत्वायोगादिति चेत् । एतदाशङ्क्याह—न, अल्पस्यैव छगणाद, तन्निमित्तत्वाद्-महद्दर्शनानिमित्तत्वात् । तन्निमित्तत्वं च तदभावेऽभावात्, अल्पाऽभावेऽभावाद्, महद्दर्शनस्य । कथमिदमतत्प्रतिभासीत्याह—विप्रकर्षाद्युपप्लवात् विप्रकर्षो—देशविप्रकर्ष', आदिशब्दात्—तथाविधज्ञानावरणक्षयोपशमपरिग्रह, ताभ्यामुपप्लवाद् भ्रान्ते । उपप्लवश्च तत्तत्स्वभावत्वात् तस्य विप्रकर्षादे· तत्स्वभावत्वादुपप्लवजननस्वभावत्वात् । इत्थं चैतदङ्गीकर्त्तव्यमित्याह—अन्यथा तदनुपपत्ते., अन्यथैवमनभ्युपगमे, तदनुपपत्तेरुपप्लवानुपपत्तेः, न ह्यमावन्यनिमित्तोऽनिमित्तो वेति भावनीयम् । मूलसाध्य एव हेत्वन्तरमाह-ततस्ततोऽन्यत्वाच्च । ततस्तत· सजातीयतरादेर्विचित्राद् वस्तुन, अन्यत्वाच्च—भिन्नत्वाच्च कारणात्, अनेकधर्मकं वस्त्विति । यदि नामैव तत किमित्याह—स्वभावभेदेन व्यावृत्तेः ततस्तत । किमित्येतदेवमित्याह—अन्यथा एवमनभ्युपगमे, स्वभावभेदमन्तरेण ततस्ततो व्यावृत्त्यभ्युपगम इत्यर्थ, तदेकत्वप्रसङ्गाद्-व्यावर्त्यमानैकत्वप्रसङ्गात् । प्रसङ्गश्च तदन्यत्वहेतुत्वेनाविशेषात् तस्य वस्तुनो व्यावृत्तिमत अन्यत्वहेतुत्वेन अविशेषाद् व्यावर्त्यमानानाम्, तद्धि तेभ्योऽन्यत्, तदन्यत्वस्य च त एव हेतव., यदेव चैकमपेक्ष्य तदन्यत्व तदेवापरमपि, न चैतत् तद्भेदमन्तरेणेति हृदयम् । किमनेन कल्पितेनेत्याशङ्कानिरासायाह-अन्यत्वस्य चाकल्पितत्वात् तस्य व्यावृत्तिमतो व्यावर्त्यमानेभ्य । इत्थं चैतदङ्गीकर्त्तव्यमित्याह—कल्पितत्वे तदन्यत्वस्य तेभ्य, तत्त्वत —परमार्थत, तदभावापत्तेस्तस्य व्यावृत्तिमतोऽभावापत्ते, व्यावर्त्यमानाऽनन्यत्वेन ।

स्वहेतुत एव तत्तदन्येभ्योऽन्यत्वैकस्वभावं भवतीति चेत् । न । पटान्यत्वैकस्वभावान्यत्वे पटवत् कटादीनां तद्भावापत्तेः, तथास्वभावादन्यस्वभावत्वात्, अचित्रस्यानेकान्यत्वैकत्वायोगे तच्चित्रतयैकान्तैकत्वाभावात्, पारम्पर्येणानेकजन्यजनकत्वाच्च, अन्यथा सद्भावासिद्धेः, परम्पराहेतुतोऽपि भावात् तथाविधतद्भावभावित्वोपपत्तेः पुष्कलस्य चानन्तरेणाप्ययोगात् तदा तद्भावाभावादिति । अनन्तरजन्यत्वमेव परम्पराजन्यत्वमिति चेत् । न । परम्पराजनकानामनन्तरजनकत्वायोगात्, तत्स्वभावादिभेदात् तद्भेदेन च तत्तज्जनकत्वे न तदेव तत् ।

पराभिप्रायमाह-स्वहेतुत एव तद् वस्तु प्रस्तुतम्, तदन्येभ्यो व्यावर्त्यमानेभ्य, अन्यत्वैकस्वभावम् । अन्यत्वमेवैक स्वभावो यस्य तत्तथा भवतीति चेत् । एतदाशङ्क्याह-नेत्यादि । नैतदेवम् । कुत इत्याह—पटान्यत्वैकस्वभावान्यत्वे पटान्यत्वमेवैक स्वभावो यस्य वस्तुनोऽधिकृतस्य तत्पटान्यत्वैकस्वभावं तस्मादन्यत्वं पटान्यत्वैकस्वभावान्यत्व तस्मिन् पटान्यत्वैकस्वभावान्यत्वे सति पटवदिति निदर्शनम्, कट-

शकटादीनां भावानां तद्भावापत्तेः-पटभावापत्तेः,आपत्तिश्च तथास्वभावात् पटान्यत्वैकस्वभावादधिकृतवस्तुनः, अन्यस्वभावत्वात् कटादीना पटभावापत्ति ,पटकटादिसमुदायान्यत्वैकस्वभावं कथ पटान्यत्वैकस्वभावमुच्यत इत्युच्यते-अचित्रस्यानेकान्यत्वैकत्वायोगात् । तथा चाह-अचित्रस्येत्यादि । अचित्रस्य विवक्षितवस्तुनः, एकस्वभावस्य अनेकान्यत्वैकत्वायोगे , अनेकेभ्यः पटादिभ्य अन्यत्वमनेकान्यत्वं तस्यैकत्वमनेकान्यत्वैकत्वम् , तस्यायोगे, उक्तवत्तदेकत्वप्रसङ्गेन तस्मिन् सति तच्चित्रतया विवक्षितवस्त्वेकस्वभावस्य चित्रतया । किमित्याह-एकान्तैकत्वाभावात् । विवक्षितवस्तुनः, एकस्वभावस्येति प्रक्रमः । हेत्वन्तरमाह—पारम्पर्येणानेकजन्यजनकत्वाच्च अनेकधर्मकत्वं वस्तुन इति । पारम्पर्येणैकादिव्यवधानापेक्षया, जन्यश्च जनकश्च जन्यजनकः अनेकेषां जन्यजनक , अनेकजन्यजनकस्तद्भावस्तस्मात् । इत्य चैतदङ्गीकर्तव्यमित्याह—अन्यथा एवमनभ्युपगमे, तद्भावासिद्धेरधिकृतवस्तुभावासिद्धेः । असिद्धिश्च परम्पराहेतुतोऽपि सकाशात् , भावादधिकृतवस्तुनः, न हि पितामहाद्यभावेऽपि पौत्रादिभाव इति भावनीयम् । इहैव युक्तिमाह—तथाविधतद्भावभावित्वापत्तेः । तथाविधमेकादिव्यवधानवच्च तत् तद्भावभावित्वं च परम्पराकारणभावभावित्वं चैतदेवोपपत्तिस्तस्मा । एतदप्यङ्गीकर्तव्यमित्याह-पुष्कलस्य च तद्भावभावितस्य , अनन्तरेणापि कारणेन , सहायोगात् । अयोगश्च तदा कारणादिकाले , तद्भावाभावात्—कार्यादिभावाभावात्; अन्यथा जन्यजनकत्वाभावः सव्येतरगोविषाणवदिति । अनन्तरजन्यत्वमेव कार्यस्य परम्पराजन्यत्वमिति चेत् । एतदाशङ्क्याह-न परम्पराजनकानां हेतूनाम् , अनन्तरजनकत्वायोगात् । अयोगश्च स्वभावादिभेदात् , स्वभावभेद प्रतीतः, आदिशब्दात्-कालभेदपरिग्रह । तद्भेदेन च-स्वभावादिभेदेन च, तत्तज्जनकत्वे तेषामनन्तरपरम्पराहेतूनां, तज्जनकत्वे-प्रक्रमाद् विवक्षितकार्यजनकत्वे । किमित्याह-न तदेव तत् नानन्तरजन्यत्वमेव परम्पराजन्यत्वमिति निगमनम् ।

एवं जनकत्वेऽपि योजनीयमिति तच्चित्रस्वभावता; सुखदुःखादिहेतुत्वाच्च, स्वभावभेदेन सुखादिजनकत्वात् , तेषां चाह्लादादिरूपत्वेन ज्ञानादन्यत्वात् , तत्स्वरूपेण बाह्यवेदनात् , ज्ञानभावेऽपि क्वचित्तदभावात् , तथानुभवसिद्धत्वात् । अज्ञानत्वे कथममीषामनुभवः ?, इति चेत् । सत्त्वादिवत्कथञ्चिज्ज्ञानाभेदात् , तदुदग्रत्वेन तथा तज्ज्ञानरञ्जनात् ; उभयोस्तत्स्वभावत्वात् , युगपत्प्रवृत्त्यविरोधात् , सुखादिज्ञाने तथानुभवसिद्धत्वात् , तत्तद्वचनसिद्धेश्च ' आविर्भावतिरोभावधर्मकं वस्तु न कृतार्थे प्रकृतिप्रवृत्तिः , तद्विरागात् तद्वृत्तिसंक्षयाच्च ' इति वचनप्रामाण्यात् । तथा ' अनित्यता सर्वसंस्कृतानां, दुःखता सर्वसाश्रवाणां, शून्यानात्मकते सर्वधर्माणाम् , अविकारिणी तथता ' इति वचनप्रामाण्याच्चेत्यनेकधर्मकं वस्तु ।

एवमित्यादि । एवम्-उक्तनीतया, जनकत्वेऽपि योजनीयम् । पारम्पर्येणानेकजनकत्वादधिकृतवस्तुनः, अन्यथा तद्भावासिद्धेः—ततोऽनेकभावासिद्धेः परम्पराहेतुतोऽपि भावादनेकेषाम् । एवं शेषमपि स्वधिया योजनीयम् । इत्येवं , तच्चित्रस्वभावता—तस्य वस्तुनश्चित्रस्वभावता । अनेकधर्मकत्वमित्यर्थः । हेत्वन्तरमाह-सुखदुःखादिहेतुत्वाच्च अनेकधर्मकं वस्तु । कथमेतदेवमित्याह-स्वभावभेदेन सुखादिजनकत्वाद् वस्तुनः।आदिशब्दाद्-दुःखमोहज्ञानादिग्रहः । न ते तत्कृतज्ञानतोऽन्ये.इत्याशङ्कापोहायाह-तेषां च सुखादीनामाह्लादादिरूपत्वेन हेतुना,आह्लादरूपं सुखम् , परितापरूप दुःखम् ,असंवित्स्वभावो मोह इति कृत्वा । किमित्याह-ज्ञानादन्यत्वात् । इत्थं चैतदङ्गीकर्तव्यमित्याह-तत्स्वरूपेण आह्लादादिलक्षणेन ज्ञानेनैव,बाह्यवेदनात् । इतश्चैतदेवम्-ज्ञानभावेऽपि क्वचिद्विरक्ताऽऽदौ, तदभावादाह्लादाद्यभावात् , अभावश्च तथाऽनुभवसिद्धत्वात् , आह्लादाद्यभावेनापि भाववेदनादित्यर्थः । अज्ञानत्वे सति, कथममीषां सुखादीनाम् , अनुभव इति चेत् । एतदाशङ्क्याह—सत्त्वादिवत् । इति निदर्शनम् । आदिशब्दाद्-ज्ञेयत्वादिग्रहः,कथञ्चित् ज्ञानाभेदात् ,तथाहि-न सत्त्वमेव ज्ञानम् ,सत्त्वमात्रत्वे ज्ञानस्य सर्वत्र ज्ञानप्रसङ्गः । अथ च ज्ञाने न तदात्मीयमनुभूयत इति । युक्त्यन्तरमाह—तदुग्रत्वेन-सुखाद्युदग्रत्वेन, तथैकलोलीभावेन, तज्ज्ञानरञ्जनात्-सुखादिज्ञानरञ्जनात् । एतच्चैवमित्थमित्याह—उभयोः सुखादिज्ञानयोः, तत्स्वभावत्वात् रञ्ज्यरञ्जकस्वभावत्वात् । अत एव युगपत्प्रवृत्त्यविरोधात् , सुखादीनां ज्ञानस्य चेति प्रक्रमः । अविरोधश्च सुखादिज्ञाने , तथा कथञ्चिद्भिन्नसुखादिवेदकत्वेन , अनुभवसिद्धत्वात् कारणात् अमीषामनुभव इति योगः । हेत्वन्तरमाह—तत्तद्वचनसिद्धेश्च हेतोः । अनेकधर्मकं वस्तु । तस्मिंस्तस्मिन् सांख्यादिवचने यथासिद्धं तत् तथाभिधातुमाह—आविर्भावेत्यादि । आविर्भावः-प्रकटभावः, तिरोभावस्त्वप्रकटभाव ,एतद्धर्मक वस्तु प्रधानाख्यम् , इत्यनेकधर्मकता । तथा न कृतार्थे पुंसि प्रकृतिप्रवृत्तिर्महदादिभावेन, तद्विरागात्-पुरुषविरागात् , तद्वृत्तिसंक्षयाच्च-प्रकृतिवृत्तिसंक्षयाच्च ततश्चाविरक्ते प्रवृत्तिः, विरक्ते वृत्तिसंक्षयश्च, पुरुषोऽपि विरक्तश्चाविरक्तश्चेत्यनेकधर्मकता, इति वचनप्रामाण्यात् । तथा,अनित्यता नश्वरता,सर्वसंस्कृतानां सर्वकृतकानां, दुःखता बाधायुक्तता, दुःखपरिणाम-दुःखसंस्कार-दुःखापेक्षया-यथासंभव सर्वसाश्रवाणां सर्वरागादिक्लेशवताम् , शून्यानात्मकते तत्त्वतस्तुच्छरूपे, सर्वधर्माणां व्यावृत्तिद्वारपरिकल्पितानामनित्यदुःखादिधर्मतोऽनेकधर्मकता, तथा, अविकारिणी उपादाननिमित्तकृतविकारशून्या, तथता-बुद्धता तथाभावरूपा प्राग्विकारभावेनानेकधर्मता,इति वचनप्रामाण्याच्च इत्येवम् ,अनेकधर्मक वस्तु । एते च सर्व एव वस्तुनोऽनेकविज्ञानाद्युपाधिभेदभिन्नाः स्वभावहेतुभेदा इति गमकाः, तथाहि—अनेकविज्ञानजनकत्व तत्स्वभाव , स च कथञ्चित् तद्भिन्नतयाऽनेकधर्मकतया व्याप्तः, अन्यथा ततस्ततोऽन्यत्वाभावः । एवं शेषेष्वपि हेतुषु भावनीयमिति ।

इह च ज्ञानावरणाद्याच्छादितश्छद्मस्थः प्रमाता, बोध—

विशेषदर्शनात्, तस्याहेतुकत्वेऽप्ययोगात्, सदाभावादिप्रसङ्गात्, बोधमात्रस्याहेतुत्वात्, भेदकाभावे विशिष्टत्वाभावात्, न्यायतोऽतिप्रसङ्गात्; तद्भावे च तस्यैवावरणत्वात्; इति तथाविधनयनपटलादिकल्पं तज्ज्ञानविशेषकारि विरुद्धचेष्टादिनिमित्तं ततोऽन्यत् तदिति तत्त्ववाद–क्षयोपशमभावश्चास्य कालपरिणत्या विशिष्टानुष्ठानतश्च तत्तत्स्वभावतया नयनपटलादिह्रासरूपः प्रतिप्राण्येव यथोचितं तथाविधचित्रावबोधलिङ्गावसेयः। तस्मिंश्च सति तत्सामर्थ्यत एव विषयस्स तज्ज्ञेयत्वपरिणतिभावात्, विषयिणोऽपि तज्ज्ञातृत्वपरिणत्युपपत्तेः, उभयोस्तथास्वभावत्वात्, अन्यथा तदनुपपत्तेः, अतिप्रसङ्गात्, नयनपटलादिह्रास इव स्थूरावबोधादि, तदानुरूप्यत आविद्वदङ्गनासिद्धं तथाविधवस्तुग्राह्येवाऽवग्रहेहावायधारणारूपं मतिज्ञानसंज्ञितमिन्द्रियज्ञानमुपजायते, "तदिन्द्रियानिन्द्रियनिमित्तम्" इति वचनात्।

इह चेत्यादि। इह चानेकधर्मके वस्तुनि, जगति वा। किं, मित्याह–ज्ञानावरणाद्याच्छादित तत्पुद्गलप्रतिबद्धसामर्थ्य, छद्मस्थ प्रमाता प्राणी। कुत एतदेवमित्याह–बोधविशेषदर्शनात्–बोधभेदोपलब्धे, इह वस्तुनि तस्य बोधविशेषस्य, अहेतुकत्वे सति, अयोगात्, अयोगश्च सदाभावादिप्रसङ्गात्। आदिशब्दाद्–अभावग्रह.। बोधमात्रस्याऽहेतुत्वाद् बोधाविशेषं प्रति, भेदकाभावे–तदन्यवस्त्वभावे, विशिष्टत्वाभावाद् बोधमात्रस्य, न्यायतोऽतिप्रङ्गात् सर्वबोधविशिष्टत्वापत्त्या। तद्भावे च भेदकभावे च तस्यैव भेदकस्य, आवरणत्वात् इत्येवं, तथाविधनयनपटलाऽऽदिकल्पं तथाविधं स्वच्छं नैकान्ततो बोधविघातकारि, नयनपटलं प्रतीतम्, आदिशब्दात्–श्रोत्रादिमलग्रह, एतत्कल्पम्–एतत्तुल्यं, तज्ज्ञानविशेषकारि–तस्य छद्मस्थप्रमातु बोधविशेषकरणशीलं क्षयोपशमतो भावाभावाभ्याम्, इति ज्ञानावरणव्यापार उक्तो वेदितव्य। विरुद्धचेष्टादिनिमित्तमित्यनेन तु आदिशब्दात्–क्लिष्टचारित्रमोहनीयादिव्यापार इति, ततश्छद्मस्थप्रमातु, तद्बोधादेर्वा, अन्यदर्थान्तरभूतं, तत् ज्ञानावरणादिकर्म, इति तत्त्ववाद। क्षयोपशमभावश्चास्य कर्मण, कालपरिणत्या मन्दानुभावस्य, विशिष्टानुष्ठानतश्च तीव्रविपाकस्य। अथवा–कालपरिणत्या विशिष्टानुष्ठानतश्चेति समुच्चयपक्ष.। तत्स्वभावतया तस्य कर्मण, तत्स्वभावतया–कालपरिणत्यादिक्षयोपशमस्वभावतयेत्यर्थ, नयनपटलादिह्रासरूप. क्षयोपशमभाव, तदेकान्तानिवृत्ते, इत्थं निदर्शनमिति भावनीयम्, प्रतिप्राण्येव प्राणिनं प्राणिनं प्रति प्रतिप्राण्येव, यथोचितमिति क्रियाविशेषणम्, यस्य य उचितस्तथाविधचित्रावबोधलिङ्गावसेय, तथाविध उच्चावचादिभेदेन चित्रावबोधस्तत्तद्विषयभेदत एतल्लिङ्गावसेय क्षयोपशमभाव। तस्मिंश्च सति क्षयोपशमभावे, तत्सामर्थ्यत एव–क्षयोपशमभावसामर्थ्यत एव, अवग्रहादिरूपमिन्द्रियज्ञानमुपजायत इति योग.। कथमित्याह–विषयस्य घटरूपादे, तज्ज्ञेयत्वपरिणतिभावाद्–विवक्षितेनेन्द्रियज्ञानज्ञेयत्वपरिणतिभावात्, विषयिणोऽप्यधिकृतेनेन्द्रियज्ञानस्य, तज्ज्ञातृत्वपरिणत्युपपत्तेः–प्रस्तुतविषयज्ञातृत्वपरिणत्युपपत्ते। उपपत्तिश्च उभयोर्विषयज्ञानयो, तथास्वभावत्वात्–तज्ज्ञेयत्वतज्ज्ञातृत्वभवनस्वभावत्वात्, अन्यथा तत्तत्स्वभावत्वमन्तरेण, तदनुपपत्ते.–विषयविषयिणोस्तज्ज्ञेयत्वतज्ज्ञातृत्वपरिणत्यनुपपत्ते.। अनुपपत्तिश्चातिप्रसङ्गात् तत्तत्स्वभावतामन्तरेण तज्ज्ञेयत्वतज्ज्ञातृत्वभावे तद्वत्तदन्तरापत्त्याऽतिप्रसङ्ग इति भावनीयम्। नयनपटलादिह्रास इवेति निदर्शनम्। स्थूरावबोधादि, आदिशब्दात्–तथाविधचेष्टाग्रह। तदानुरूप्यत–प्रक्रमात् क्षयोपशमभावानुरूप्येण, आविद्वदङ्गनादिसिद्धमविप्रतिपत्त्या, तथाविधवस्तुग्राह्येव–तज्ज्ञेयत्वपरिणतवस्तुग्राह्येव, न त्वविषयं सदाभावादिप्रसङ्गेन, अवग्रहेहावायधारणारूपं परिस्थूरजातिभेदेन, मतिज्ञानसंज्ञितं स्वतन्त्रे, इन्द्रियज्ञानमुपजायते, सविकल्पमेव इन्द्रियज्ञानता चाऽस्य "तदिन्द्रियानिन्द्रियनिमित्तम्" इति वचनात्। तन्मतिज्ञानम्, इन्द्रियानिन्द्रियनिमित्तम्। अनिन्द्रियं मनः। एतन्निमित्तम्। इति सविकल्पकमेतत्।

अवग्रहस्वरूपाभिधित्सयाऽऽह–

तत्राव्यक्तं यथास्वमिन्द्रियैर्विषयाणामालोचनावधारणमवग्रहः। अवगृहीते विषयार्थैकदेशात् शेषानुगमनेन निश्चयविशेषजिज्ञासाचेष्टा ईहा। अवगृहीते विषये सम्यगसम्यगिति गुणदोषविचारणाऽध्यवसायापनोदोऽवायः। धारणा–प्रतिपत्तिः, यथास्वं मत्यवस्थानम्, अवधारणं च न चैकत्वाद् बोधस्येह चातुर्विध्याभावः, सर्वथैकत्वासिद्धेः क्रमेण भावात्, संपूर्णभवनेऽनियमात् दृश्यत एवेहाद्यभावेऽपि क्वचिदवग्रहमात्रम्, तथा निरवायेहा, अनिर्धारणश्चावायः, तथा तदनुभवसिद्धेः। अत एवैकत्वमपि कथञ्चिदेकाधिकरणत्वात् तत्रैव प्रवृत्तेः तद्वेद्यधर्माणामितरेतरानुवेधात् तथा च यदिदं तदा दृष्टमपि नोपलक्षितम्, ईषल्लक्षितमपि न सम्यग्ज्ञातम् तदिदानीमवधारितम्, इत्यस्ति व्यवहारः। न चायं भ्रान्तः, अविगानेन प्रवृत्तेः। अत इदमेकाऽनेकमन्वयव्यतिरेकवद् दीर्घमपि कालसौक्ष्म्यात् तथावभासत इति।

तत्राव्यक्तमित्यादि तत्रेति पूर्ववत्, अव्यक्तमस्फुटम्, आलोचनावधारणमिति योग। तदेव विशिष्यते यथास्वमिति यथात्मीयम् इन्द्रियै स्पर्शनादिभि विषयाणां–स्पर्शादीनां, यथात्मीयं यो यस्य विषय इत्यर्थ, आलोचनावधारणमिति–आङ्मर्यादाया, लोचनं–दर्शनम्। एतदुक्तं भवति–मर्यादया सामान्यस्यानिर्देश्यस्य स्वरूपनामादिकल्पनारहितस्य, दर्शनम्–आलोचनं तदेवावधारणमालोचनावधारणम्, एतदवग्रहोऽभिधीयते, अवग्रहणमवग्रह इत्यन्वर्थयोगादिति। एवमवग्रहं कथयित्वा ईहास्वरूपं कथयन्नाह–अवगृहीत इत्यादि। अवगृहीत इत्यनेन क्रम दर्शयति।

अवगृहीते सामान्ये, ईहा प्रवर्तते । तामाह—विषयार्थैकेत्यादि । विषय -स्पर्शादि , स एवाऽर्थ(र्य)माणत्वादर्थो विषयार्थ., तस्यैकदेश सामान्यमनिर्देश्यादिरूपम् , तस्माद् विषयार्थैकदेशात् परिच्छिन्नादनन्तरं स्पर्शमात्रग्रहे तस्य सर्पमृणालस्पर्शसाधर्म्याच्छुपानुगमनेन सद्भूतासद्भूतोष्णत्वादिविशेषत्यागोपादानाभिमुख्यरूपेण, न संशय इव सर्वात्मपरिकुण्ठचित्तभावतोऽननुगमनेन । किमित्याह—निश्चयविशेषजिज्ञासाचेष्टेति । निश्चीयतेऽसाविति निश्चय. मृणालस्पर्शादि , स एव विशेष्यतेऽन्यस्मादिति विशेष. , तस्य ज्ञातुमिच्छा जिज्ञासा तया चेष्टा-वोधः स्वतत्त्वात्मव्यापाररूपा , ईहोच्यते । एवमीहामभिधायाऽवायमभिधातुमाह-अवगृहीत इत्यादि । अनेनापि क्रममाचष्टे । अवगृहीते विषये स्पर्शसामान्यादौ, तत. सम्यगसम्यगिति, मृणालस्पर्श इत्येवमादानाभिमुख्यं सम्यक्, तत्र तद्भावानुगुण्यात्, न अहिस्पर्श इत्येवं परित्यागाभिमुख्यमसम्यक्, तत्र तद्भाववैगुण्यात् । इति एवमीहायां प्रवृत्तायां सत्याम् , ततः किमित्याह-गुणदोषविचारणाव्यवसायापनोद -अवाय इति। इह मृणाले, साधारणो धर्मो गुण , तत्रासंभवी तु दोष , तयोर्विचारणा—मार्गणा तया व्यवसायो-विमलतरबोध. स एवापनोद -मृणालस्पर्श एवेति निश्चयादपनुदति तत्रेहामिति कृत्वाऽवाय इत्ययमेवंविधोऽपनोदोऽवाय इति, अवैतीत्यवाय -निश्चयेन परिच्छिनत्तीत्यर्थ । एवमवायमभिधायाधुना धारणामभिधित्सयाऽऽह-धारणेत्यादि।धारणेति लक्ष्य, प्रतिपत्तिरुपयोगाप्रच्युति. । यथास्वमिति । यथाविषय यो य. स्पर्शादिविषय. मृणालस्पर्शानुभवस्याऽनाश इत्यर्थ , तथा मत्यवस्थानमित्युपयोगान्तरेऽपि शक्तिरूपाया मते. क्वचिदवस्थानम् , तथाऽवधारणं चेति कालान्तरानुभूतविषयगोचरं स्मृतिज्ञानमिति भाव । एवमेतनाविच्युतिवासना-स्मरणरूपा त्रिविधा धारणेत्युक्तं भवति। न चेत्यादि । न चैकत्वादवबोधस्याऽवबोधसामान्यापत्तया, इह मतिज्ञाने इन्द्रियप्रत्यक्षे, चातुर्विध्याभावोऽवग्रहादिभेदेन। कुत इत्याह—सर्वथैकत्वासिद्धे अवबोधस्य । असिद्धिश्च क्रमेण भावादवग्रहादीनाम् , तथा संपूर्णभवनेऽवग्रहादारभ्य धारणान्तभवने, अनियमात् कारणात् । अधिकृतोपदर्शनायाह—दृश्यत इत्यादि । दृश्यत एव लोके, ईहावमात्रेऽपि , आदिशब्दादवायादिग्रह. , क्वचिद्देवदत्तादौ , अवग्रहमात्रम् तथा निरवायेहा दृश्यते क्वचित् , निर्धारणश्चावायो दृश्यते क्वचित् , तथा तदनुभवसिद्ध. केवलत्वेनाऽवग्रहादीनामनुभवसिद्धे कारणात् , न चातुर्विध्याभाव.। अत एव तथा तदनुभवसिद्धेरेव, एकत्वमप्यवग्रहादीनाम् । युक्तिमाह—कथञ्चिदेकाधिकरणत्वात् । तत्तद्धर्मग्रहणेन । अत एव आह—तथैव प्रवृत्ते अवग्रहादिगृहीत एवेहादिप्रवृत्ते , कथञ्चिदिति वर्तते । एतत्स्पष्टनार्थेवाह—तद्धर्माणाम्-अवग्रहादिविषयस्वभावानाम् ,इतरेतरानुवेधात्-अन्योन्यानुवेधात् । एतदेव भावयति-यथाचेत्यादिना । तथाच यदिद तदा—तस्मिन् काले, दृष्टमपि सदिति, अनेनावग्रहव्यापारमाह । नोपलक्षितं न सामीप्येन तदितरधर्मालोचनया लक्षितम् , अनेनहाव्यापारनिषेधमाह । तथरम्यक्ततमपीहया, न सम्यग्ज्ञातमवायरूपेण, तदिदानीं यद् मे सम्यग ज्ञातं तत्सांप्रतम् , अवधारित सम्यग्विज्ञाय चेतसि स्थापितम् , इत्यस्ति व्यवहारस्तद्धेयधर्माणामितरेतरानुवेधव्यवस्थापक. । न चायं व्यवहारो भ्रान्त. । कुत इत्याह अविगानेन प्रवृत्तेः कारणात् । प्रकृतयोजनया निगमनमाह-अत इत्यादिना । अतोऽस्मात् कारणात् , इदं मतिज्ञानसंज्ञितमिन्द्रियज्ञानम् , एकानेकमवग्रहादिसमुदायात्मकत्वेन , अन्वयव्यतिरेकवदनुवृत्तिव्यावृत्तिस्वभावं दीर्घमप्यवग्रहादिक्रमभावित्वेन, कालसौक्ष्म्याद्धेतो तथावभासते प्रक्रमाद् युगपदिवावभासते, न तु युगपदेवेत्यर्थ ।

आह–एवमपि तत्तद्धर्मावग्रहणादेः सर्वेषामवग्रहादित्वप्रसङ्गः । न, स्थूरेतरधर्मालम्बनावरणभेदतः क्रमभवनेन तथाप्ररूपणात् , तत्त्वतस्त्वयमदोष एव । एवं चावग्रहादिभावे तत्तद्धर्मबोधात् केषाञ्चित् तथास्वभावत्वेनाक्षरानुगतबोधबोध्यत्वात् , तेष्वन्यथा नीलादाविव पीतादित्वेन बोधाप्रवृत्तेः , क्षयोपशमसामर्थ्यतोऽक्षरप्रायोग्यद्रव्यग्रहणाविरोधात् , तथाविधानुभवस्यान्यथाऽनुपपत्तेः , स्वसंवेद्यत्वेन प्रतिक्षेपायोगात् सन्न्यायत एव सिद्धं सविकल्पकं प्रत्यक्षमिति ।

आह—एवमप्यवग्रहादिभावे, तत्तद्धर्मावग्रहणादे ,आदिशब्दात्-तत्तद्धर्मासमर्थपर्यालोचनादिग्रह', सर्वेषामवग्रहादीना मतिभेदानाम् , अवग्रहादित्वप्रसङ्गोऽन्वर्थयोगेन, आदिशब्दादीहादिग्रह. । एतदाशङ्क्याह—नेत्यादि । न-नैतदेवम् । कुत इत्याह—स्थूरेतरधर्मालम्बनावरणभेदत. कारणात् , स्थूरेतराश्च ते धर्माश्च स्थूरेतरधर्मा , इतरे—सूक्ष्मा', ते एवालम्बनम् , एतच्चावरणं चेति विग्रह , तयोर्भेदस्तस्मात् , क्रमभवनेन तथाप्ररूपणादवग्रहादित्वेन प्ररूपणात्; तथाहि—स्थूरधर्मालम्बनाऽवग्रह , सूक्ष्मधर्मालम्बना ईहादय , एवमन्यदवग्रहावरणम् , अन्यदीहादे , इह चावरणग्रहणं क्षयोपशमोपलक्षणमवसेयम् । इत्थमुपन्यासस्तु भिन्नमेव तद् बोधावारकमिति निदर्शनार्थम् , क्रमभवनं तु प्रसाधितमेव, इत्यतस्तथाप्ररूपणं न्याय्यमेवेति भावनीयम् । तत्त्वतस्त्वयं सर्वेषामवग्रहादित्वप्रसङ्ग , अदोष एवान्वर्थयोगतस्तथाघटनादिति । एवं चोक्तनीत्या, अवग्रहादिभावे सन्न्यायत एव सिद्धं सविकल्पकं प्रत्यक्षमिति योग' । कुत इत्याह-तत्तद्धर्मबोधात्-वस्तुसत्त्वादिधर्मबोधात् । तथा, केषाञ्चिद्धर्माणा, तथास्वभावत्वेन हेतुना, अक्षरानुगतबोधबोध्यत्वादीहादिगोचराणा , विशिष्टमनोऽनुगतत्वोपलक्षणमेतत् । यदि नामैव तत किमित्याह—तेषु अक्षरानुगतबोधबोध्येषु धर्मेषु, अन्यथा नीलाऽऽदाविव वस्तुनि पीतादित्वेन रूपेण, बोधाऽप्रवृत्ते कारणात् । कुतस्तत्राक्षरप्रायोग्यद्रव्यग्रहणमित्याशङ्कानिरासायाह-क्षयोपशमेत्यादि । क्षयोपशमसामर्थ्येन कारणात् , अक्षरप्रायोग्यद्रव्यग्रहणाविरोधात्; स हि क्षयोपशम एव तादृशो यो भाषाद्रव्याणि ग्राहयतीत्यर्थ । इत्थं चैतदङ्गीकर्तव्यमित्याह—तथाविधानुभवस्य अक्षरानुगतबोधरूपस्य, अन्यथाक्षरप्रायोग्यद्रव्यग्रह-

रणमन्तरेण, अनुपपत्ते कारणात्। अस्य च स्वसंवेद्यत्वेन हेतुना, प्रतिक्षेपायोगात्। किमित्याह—सम्यगायत एव-उक्तनीत्या सिद्ध सविकल्पक प्रत्यक्षमिति।

एतेन यत्परेणाभ्यधायि-'इतश्चैतदेवम्, अन्यथा स्वाभिधानविशेषणापेक्षा एवार्था विज्ञानैर्व्यवसीयन्त इति प्राप्तम्, अस्त्वेवमपि को दोष इति चेत्, एतदाशङ्क्य निवृत्तेदानीमिन्द्रियज्ञानवार्ता अभिधानविशेषस्मृतेरयोगात्, इत्यादि। तदपि परिहृतमवगन्तव्यम्, अभिधानविशेषयोजनासिद्धेः वाच्यतद्बोधयोरेव तत्स्वभावत्वात्। न हि सर्वत्रैव स्मृत्यपेक्षो वाच्ये वाचकप्रयोगः, तथाऽननुभवात्, अन्तर्जल्पाकारबोधोपलब्धेः, प्रयोगे उच्चार्यमाणस्य शब्दान्तरत्वात्, तस्यापि तद्बलेनैव प्रवृत्तेः, तदसंपृक्तबोधवताऽनुच्चारणात्। प्रष्ट्रा व्यभिचार इति चेत्। न, तस्यापि प्रश्नाभिलापसंपृक्तबोधवत्त्वात्, अन्यथा प्रश्नाभावात् वस्तुनश्चानेकस्वभावत्वेन तस्याप्यभिधेयत्वात्, सर्ववस्तूनामेव प्रायस्तथा तथा सर्वशब्दवाच्यस्वभावत्वात्, तत्तद्द्रव्याद्यपेक्षक्षयोपशमभेदतस्ततस्ततस्तत्र तत्राविलम्बितादिप्रतीतिभावात्, अविगानेन तथा व्यवहारसिद्धेः, अस्य चान्यथाऽयोगात्, निमित्तानुपपत्तेः।

एतेन—अनन्तरोदितेन न्यायेन. यत्परेण-पूर्वपक्षवादिना, अभ्यधायि—अभिहित पूर्वपक्षग्रन्थे। यदभ्यधायि तदाह—' इतश्चैतदेवम् अन्यथा स्वाभिधानविशेषणापेक्षा एवार्था विज्ञानैर्व्यवसीयन्त इति प्राप्तम्, अस्त्वेवमपि को दोष इति चेत्, एतदाशङ्क्य निवृत्तेदानीमिन्द्रियज्ञानवार्ता अभिधानविशेषस्मृतेरयोगादित्यादि ' व्याख्यानमवैतदिति न व्याख्यायते। तदपि परिहृतमवगन्तव्यम्। कथमित्याह-अभिधानविशेषयोजनाऽसिद्ध कारणात्। असिद्धिश्च वाच्य तद्बोधयोरेव-अर्थतज्ज्ञानयोरेव, तत्स्वभावत्वात् प्रक्रमात् स्मृत्यनपेक्षाभिधानविशेषप्रवर्त्तनस्वभावत्वात्। अमुमेवार्थं स्पष्टयन्नाह-न हीत्यादि। न यस्मात्सर्वत्रैव वाच्य इति योग, स्मृत्यपेक्षो वाचकप्रयोग। कुतो नेत्याह—तथा स्मृत्यपेक्षप्रयोगरूपत्वेन, अननुभवात् कारणात्। कथमननुभव इत्याह-अन्तर्जल्पाकारबोधोपलब्धे। इह प्रक्रम तत्त्वतोऽस्यैव स्मृतित्वादित्यर्थ। तथा चाह—प्रयोगे—भाषाविषये, उच्चार्यमाणस्य शब्दस्य, शब्दान्तरत्वात्, अन्तर्जल्पाऽऽकारबोधशब्दमधिकृत्य, तस्याऽपि प्रयोगे उच्चार्यमाणस्य शब्दान्तरस्य, तद्बलेनैवाऽन्तर्जल्पाकारबोधशब्दसामर्थ्येनैव, प्रवृत्ते। कुत एतदेवमित्याह—तदसंपृक्तबोधवता—शब्दासंपृक्तबोधवता, अविकल्पबोधवतेत्यर्थ, भाणकेनेति प्रक्रम। किमित्याह—अनुच्चारणात् कारणात्, प्रष्ट्रा पुरुषेण व्यभिचार, स हि तदसंपृक्तबोधवान् तत्पृच्छन् समुच्चारयति, अन्यथा प्रश्नायोगस्तदज्ञानादेवेति चेत्। एतदाशङ्क्याह—न। तस्यापि प्रष्टु, प्रश्नाभिलापसंपृक्तबोधवत्त्वात्। इत्थं चैतदङ्गीकर्तव्यमित्याह—अन्यथा एवमनभ्युपगमे, अविकल्पबोधवतः प्रश्नाभावात् तस्मात्किञ्चिज्जानन् किञ्चिदजानानस्तत्रैव पृच्छतीति भावनीयम्। वस्तुनश्च वाच्यस्य, अनेकस्वभावत्वेन हेतुना, तस्यापि प्रश्नशब्दस्य अभिधेयत्वात् कारणात्। अभिधेयत्वं च सर्ववस्तूनामेव, प्रायो बाहुल्येन, अनभिलाप्यधर्मान् विहाय, तथा चित्रसमयादियोगेन, सर्वशब्दवाच्यस्वभावत्वात्। एतदेव लेशतः प्रकटयति—तत्तदित्यादिना। तच्च तत् तद्द्रव्यं च तत्तद्द्रव्यमुदकादि, आदिशब्दात्—क्षेत्रकालादिग्रह, तत्तद्द्रव्याद्यपेक्षत इति तत्तद्द्रव्याद्यपेक्ष, तत्तद्द्रव्याद्यपेक्षश्चासौ क्षयोपशमभेदश्च भेदो—विशेष इति विग्रहस्तस्मात्। ततस्तत. प्रक्रमाच्छब्दान्नीरोदकादेः, तत्र तत्रोदकादौ वस्तुनि, अविलम्बितादिप्रतीतिभावात्, अविलम्बिता—अव्यवहिता, यथा नीरशब्दाद्दाक्षिणात्यस्योदकार्थे 'वत्प्रतीति'; विलम्बिता तु तस्यैवान्यदेशमागतस्य अन्यथा समयग्रहणे उदकशब्दात् तत्रेति, इयमादिशब्देन गृह्यते। अन्या च चित्रा सत्यतरादिरूपेति प्रतीतिभावश्च, अविगानेन तथाविलम्बितादित्वेन, व्यवहारसिद्धे कारणात्, अस्य च व्यवहारस्य, अन्यथा सर्ववस्तूनामेव प्रायस्तथा सर्वशब्दवाच्यस्वभावतामन्तरेण, अयोगात्। अयोगश्च निमित्तानुपपत्ते, तथाहि-किमत्रान्यन्निमित्तम्, तत्तत्स्वभावतामन्तरेण?, अनिमित्तस्य च सदाभावादिदोष इति भावनीयम्।

एवं च सर्वशब्दानामपि प्रायो यथोक्तं सर्ववस्तुवाचकत्वमिति। क्षयोपशमानुरूपा च छद्मस्थानां प्रतीतिः। इति न समं सर्वथा वा तदवगमः। न ह्यनेकप्रदीपावभासितेऽपीन्द्रनीलादौ मन्दलोचनादीनां सर्वाकारं समो वा तद्बोधः, तथाऽननुभवात्, निमित्तभेदात्। न चासौ न तन्निमित्तः, तद्भावे भावात्, तदभावे चाभावादिति। दीपमण्डलादिदर्शनाद् व्यभिचार इति चेत्। न। तस्य तन्निमित्तत्वेऽपि भ्रान्तत्वात्, आन्तरदोषवैगुण्येनोत्पत्तेः, तद्विकलेनादर्शनात्; इन्द्रनीलादिधर्माणां तु तदन्यवेदिनाऽपि वेदनात्, सूक्ष्मधर्मद्रष्ट्राऽपि स्थूराणां ग्रहणात्, तथाप्रतीतेः। न चैवं दीपादिद्रष्ट्रा तद् गृह्यते, इति दोषविजृम्भितमेतत्।

एवं च सर्वशब्दानामपि नीरोदकादीनां, यथोक्तम्—प्रायस्तथा सर्ववस्तुवाचकस्वभावत्वेन, इह प्रायोग्रहणाद् मृषाभाषावर्गणान्यवन्ध्यशब्दव्यवच्छेद, एवं यथोक्तम्, सर्ववस्तुवाचकत्व सर्वशब्दानामपि। क्षयोपशमानुरूपा च छद्मस्थानां विशेषणान्यथानुपपत्त्या प्रमातॄणां, प्रतीतिरिति कृत्वा, न सम—न युगपत्, सर्वथा वा सर्वैर्वा प्रकारैरविलम्बितादिभि, तदवसाय प्रक्रमाद् वाच्यवस्तुस्वभावावसाय। अमुमेवार्थं दृष्टान्तद्वारेणोपदर्शयन्नाह—न हीत्यादिना। न यस्मादनेकप्रदीपावभासितेऽपीन्द्रनीलादौ रत्नविशेष, मन्दलोचनादीनां प्रमातॄणाम् आदिशब्दाद्-अमन्दलोचनादिग्रह। सर्वाकारं तत्प्रदीपावभासापेक्षया, समो वा तुल्यो वा, तद्बोध.-इन्द्रनीलादिबोध। कुतो नेत्याह—

तथाऽननुभवात् सर्वाकारसमन्वेनाऽननुभवात्। अननुभवश्च निमित्तभेदात् प्रदीपावभासितेन्द्रनीलादेश्चयस्यभेदादित्यर्थः। न चासावसर्वाकारेऽसमञ्जिवस्तद्धोध, न तन्निमित्तो-नेन्द्रनीलादिनिमित्त। कुत इत्याह—तद्भावे—प्रस्तुतेन्द्रनीलादिभावे, भावात्, तदभावे चाभावादिति। न तद्भावभावित्वमात्रं नियमेन तन्निमित्तत्वे निमित्तमित्याह-दीपमण्डलादिदर्शनात् आदिशब्दाद्—गुञ्जादिग्रह. व्यभिचारस्तद्भावभावित्वस्य नियमनिमित्तत्वे, उक्तं च— "मयूरचन्द्रकाकार, नीललोहितसंनिभम। संपश्यन्ति प्रदीपादि-मण्डलं मन्दचक्षुष ॥ १॥" इत्यादीति चेत्। एतदाशङ्कयाह—न, तस्य मण्डलादिदर्शनस्य, तन्निमित्तत्वेऽपि-प्रदीपनिमित्तत्वेऽपि, भ्रान्तत्वात् कारणात्। भ्रान्तत्व चान्तरदोषाद् नयनरोगाद् वैगुण्यम्-आन्तरदोषवैगुण्यं तेन प्रधानहेतुना उत्पत्ते। एतच्चैवमेवेति द्रढयन्नाह—तद्विकलत—आन्तरदोषविकलत द्रष्टरि सामर्थ्यात्. अदर्शनाद् दीपे सत्यपि दीपमण्डलादे., इत्यान्तरदोषवैगुण्यस्य प्रधानता। मा भूदिन्द्रनीलादावप्येवमिति व्यतिरेकमाह—इन्द्रनीलादिधर्माणां तु अनेकदीपावभासितानां. तदन्यवेदिनापि—धर्मान्तरवेदिनापि प्रमात्रा, वेदनात्। एतदेवाह—सूक्ष्मधर्मद्रष्टाऽपि प्रमाता. स्थूरेण ग्रहणात्। ग्रहण च तथाप्रतीते, सत्संस्थानादिधर्मग्रहणसगतैव तत्कान्त्यादिप्रतीतिरिति भावनीयम्। न चैवं दीपादिद्रष्टा पुरुषेण, अविशेषत एव तद् दीपमण्डलादि गृह्यते। इति दोषविजृम्भितमेतद् दीपमण्डलादिदर्शनमिति।

दोषादसद्दर्शनसिद्धेः सर्वधर्मदर्शनमेव दोषजमस्त्विति चेत्। अदोषजं तर्हि कीदृक्?। निर्विकल्पेन निरंशवस्तुग्रहणम्। न तत्राप्युक्तवत्तदाशङ्काऽनिवृत्तेः। एकस्यानेकस्वभावत्वविरोधात्, तस्यान्याय्यत्वात् तन्निवृत्तिरिति चेत्। किं तदेकमेकस्वभावम्?। किमत्रोच्यते?, वस्तुस्वलक्षणमेव। न, तस्य स्थूराकारप्रतिभासिनोऽसत्त्वात्, अणूनां चाप्रतिभासनात्, समूहस्याद्रव्यसत्त्वात्, तेषामेव तत्त्वे तद्वदनुपलम्भात्, समुदायदृश्यस्वभावत्वेनैकस्वभावत्वप्रसङ्गात्, प्रत्येकमदृश्यस्वभावत्वात्, तत्त्वभेदे तदनणुत्वप्रसङ्गात् समुदायदृश्यस्वभावतया अन्यथा योगिभिरप्यदर्शनात्, तथापि तदणुत्वकल्पनेऽतिप्रसङ्ग त्, अन्याणूनां समुदायादर्शनेऽपि तद्भावप्रसङ्ग त्, तत्त्वभेददर्शने चानेकस्वभावतापत्तेः, तेषामेवायोगिभिरन्यथा दर्शनात् अन्यथाऽन्यतरविज्ञानस्याविषयत्वप्रसङ्ग त्, दृष्टेष्टविरोधात्, भिन्नसंस्थानबुद्ध्यसिद्धेः, तत्त्वतोऽणुसमुदायाविशेषतस्तदयोगात्' अभ्यासानुभवासिद्धत्वात् प्रतिक्षेपायोगात्, सर्वत्रानाश्वासप्रसङ्गात्, विशेषहेत्वभावात्, तत्तत्त्वव्यवस्थानुपपत्तेः। इति बाह्यालम्बनवादिनैकानेकस्वभावमेव तदङ्गीकर्तव्यम्। तत्राप्यनुपप्लुतप्रमात्रविगानसंवेद्य: स्वभावाः वस्तुसन्तः, तदन्ये पुनर्नेति. तथालोकतुभयसिद्धेः.अन्यथा तद्बाधया सर्वसमासमञ्जसम्,अनिबन्धनत्वात्,इत्ययुक्तैकान्ततः शुष्कतर्कानुसारिणी सूक्ष्मेक्षिका, अनया हि भवदभ्युपगतलक्षणमप्यसंभव्येवेति वक्ष्यामः।

दोषादित्यादि। दोषात् सकाशात्, असद्दर्शनसिद्धे. कारणात्, सर्वधर्मदर्शनमेव; सत्त्वादिदर्शनमित्यर्थ, दोषजमस्त्विति चेत्। एतदाशङ्कयाह—अदोषज तर्हि कीदृग् दर्शनम्; यदपेक्षयैतद्दोषजमित्यर्थः। निर्विकल्पेन ज्ञानेन. निरंशवस्तुग्रहणमदोषजं दर्शनमित्यभिप्राय"। एतदाशङ्कयाह—न तत्रापि यथोदिते दर्शने उक्तवद् यथोक्तम्-दोषादसद्दर्शनसिद्धेरित्यादि तदाशङ्काऽनिवृत्ते -दोषजाशङ्कानिवृत्ते। एकस्य वस्तुन. अनेकस्वभावत्वविरोधात् कारणात्, तस्याऽन्याय्यत्वादनेकस्वभावत्वस्य. तन्निवृत्तिर्निर्विकल्पेन—निरंशवस्तुग्रहणे दोषजाशङ्कानिवृत्ति., तद्भावसंभवादिति चेत्। एतदाशङ्कयाह—किं तदेकमेकस्वभावं निरंशं, यद्भावसंभवेन तद्दर्शनमदोषजं स्यादिति। किमत्रोच्यते, व स्तुस्वलक्षणमेवैकमेकस्वभावम्। एतदाशङ्कयाह—न, तस्य स्वलक्षणस्य, स्थूराकारेणोर्ध्वादिलक्षणेन प्रतिभासते तच्छीलं चेति विग्रहस्तस्य घटादेरित्यर्थ., असत्त्वात् कारणात्, संचयात्मकत्वेनाऽणूना चाप्रतिभासनात्, इत्यादि—र्बाह्यालम्बनवादिनैकानेकस्वभावमेतदङ्गीकर्तव्यमिति योगः। तथा, अणूना चाप्रतिभासनादिति सिद्धमेव। न ह्यणवः पृथग्जनविज्ञाने प्रतिभासन्ते, तत्समूहः प्रतिभासत इत्येतन्निरासायाह—समूहस्य प्रक्रमादणुसमूहस्य, अद्रव्यसत्त्वादपरमार्थसत्त्वात्। तद्व्यतिरिक्ताऽद्रव्यसन्, त एव तु सन्त इत्येतद्व्यपोहायाह—तेषामेव अणूनां, तत्त्वे—समूहत्वे, तद्वदणुवत्, अनुपलम्भात्, तथाहि—अणव एव समूह, ते चाऽदृश्या इति। समुदायदृश्यस्वभावा इति समूहे उपलभ्यन्त इत्यप्यसदित्याह-समुदायदृश्यस्वभावत्वे प्रक्रमादणूनाम्। किमित्याह—अनेकस्वभावत्वप्रसङ्गात्। प्रसङ्गश्च प्रत्येकमदृश्यस्वभावत्वात्। अणूनां तेभ्य एव समुदितेभ्यो भेद इत्यत्रापि दोषमाह—तत्त्वभेदे तेभ्य -प्रत्येकमदृश्यस्वभावेभ्य., तद्भेदे समुदायदृश्यस्वभावाऽणुभेदेऽभ्युपगम्यमाने, तदनणुत्वप्रसङ्गात् तेषां समुदायदृश्यस्वभावानामनणुत्वप्रसङ्गात्। प्रसङ्गश्च समुदायदृश्यस्वभावतया कारणेन। अन्यथा प्रत्येकत्वेनादृश्यस्वभावतया, योगिभिरप्यदर्शनात्। ततश्च समुदायदृश्यस्वभावा अपर एवैते भावा. नाणव इति भावार्थ। आह च—तथापि-योगिभिरप्यदर्शनेऽपि, तदणुत्वकल्पन-समुदायदृश्यस्वभावानामणुत्वकल्पने। किमित्याह-अतिप्रसङ्गात्। प्रसङ्गश्च अन्याणूना प्रत्येकमदृश्यस्वभावानाम्. समुदायादर्शनेऽपि सति, तद्भावप्रसङ्गात्-समुदायभावप्रसङ्गात्। तैरित्यादि। तै. योगिभिरिति प्रक्रम, तत्त्वभेददर्शने च तेषां समुदायदृश्यस्वभावानामेव भेददर्शने च प्रत्येकदर्शने चाभ्युपगम्यमाने. अनेकस्वभावतापत्तेस्तेषाम्। आपत्तिश्च तेषामेव योगिभिर्दर्शनगोचरत्वेन, अयोगिभिरन्यथादर्शनात्, समुदायत्वेन दर्शनादित्यर्थ। इत्थ चैतदङ्गीकर्तव्यमित्याह-अन्यथा एवमनभ्युपगमे, अन्यतरविज्ञानस्य योगिविज्ञानस्यायोगिविज्ञानस्य वा, अविषयत्वप्रसङ्गात् तदालम्बनस्वभा

वाभावेन । न चायं न्यायस्य प्रसङ्ग इत्याह—दृष्टविरोधात् । अयोगिज्ञानाविषयत्वे दृष्टावरोधः, योगिज्ञानाविषयत्वे चाभ्युपगमविरोध इति भावः । दोषान्तरमाह—भिन्नसंस्थानबुद्ध्यसिद्धेः अणुसमुदायाविशेषेण घटशरावादिबुद्ध्यसिद्धेरित्यर्थः । अमुमेवार्थं स्पष्टयन्नाह-तत्त्वेन -परमार्थेन, अणुसमुदायाविशेषेन कारणात्, तद्योगाद् भिन्नसंस्थानायोगेन तद्बुद्ध्ययोगात् । यदि नामैवं ततः किमित्याह—अस्याश्च भिन्नसंस्थानबुद्धेः, अनुभवसिद्धत्वात्, अत एव प्रतिक्षेपायोगात्, अयोगश्च सर्वत्रानाश्वासप्रसङ्गात्, अनुभवप्रतिक्षेपे सति । न चासावनुभवमात्रविषय इत्याह-विशेषहेत्वभावात् अनुभवस्याणुसमुदायमात्रालम्बनत्वेन । सर्वत्रानाश्वासे च तत्त्वव्यवस्थानुपपत्तेर्विसंवादिबाधाशङ्कया, इति-एव, बाह्यालम्बनवादिना सर्वेण, एकानेकस्वभावमेव तदालम्बनम्, अङ्गीकर्तव्यमित्याह—तत्रापि एवंभूते आलम्बने, अनुपप्लुतप्रमातृविगानसंवेद्याः स्वभावा धर्माः, वस्तुसन्त-परमार्थसन्तः, इन्द्रनीलादौ स्थूलादिधर्मवत् तदन्ये पुनर्न-उपप्लुतप्रमातृविगानसंवेद्या दीपमण्डलादिवदिति । कुत एतदेवमित्याह—तथालोकानुभवसिद्धेः कारणात् । अन्यथैवमनभ्युपगमे, तद्बाधया-लोकानुभवबाधया, सर्वमेवासमञ्जसम् । कुत इत्याह—अनिबन्धनत्वाद् नियामकाभावात् । इत्येवमयुक्तैकान्तत शुष्कतर्कानुसारिणी जातिवादप्रधाना सूक्ष्मेक्षिका । किमित्ययुक्तेत्याह—अनया यस्माच्छुष्कतर्कानुसारिण्या सूक्ष्मेक्षिकया, भवदभ्युपगतलक्षणमपि—भवतोऽभ्युपगतलक्षणं 'प्रत्यक्षं कल्पनापोढम्" इत्याद्यपि, असंभव्येवेति वक्ष्यामः ।

अतोऽनेकस्वभावे वस्तुनि क्षयोपशमानुरूपप्रतिपत्तावुक्तवदन्तर्जल्पाकारबोधसिद्धेरभिधानविशेषस्मृत्ययोगोऽबाधक एव । यदपि क्वचिद् वाच्योपलब्धौ तद्वाचकविशेषास्मरणं तदप्यनेकवाचकवाच्यत्वेऽस्य तथाविधावरणभावाद् विकल्पबोधवत एव, अभिलापाद्यसंसृष्टबोधेनाननुस्मरणात् तथाप्रतीतेरिति । एवं च ' सति ह्यर्थदर्शनेऽर्थसन्निधौ दृष्टे शब्दे ततः स्मृतिः स्यात्, अग्निधूमवत्' इति नैकान्तसुन्दरम्, तदर्थस्याभिलापासंसृष्टबोधेनादर्शनात्, तथास्वभावत्वात्, शब्दान्तरस्मृतौ चोक्तवददोषात् । एवं च ' न चायमशब्दमर्थं पश्यति ' इति विचारणीयम् । यदि शब्दानास्कन्दितमिति । तदसिद्धम्, केवलस्यैव दर्शनात् । अथाविकल्पज्ञानेन ततः सिद्धसाध्यता, शब्दार्थस्य तेनादर्शनात् । एवं च ' अपश्यंश्च न शब्दविशेषमनुस्मरति ' इत्येतदपि विचारास्पदमेव । यदि येनैव संसृष्टविज्ञानस्तमेव नानुस्मरतीति सिद्धसाध्यता तस्य तदा तेनैव वेद्यमानत्वात् । अथ तत्प्रतिबद्धं शब्दान्तरमिति । तदसिद्धम्, तस्य सति क्षयोपशमे तद्दर्शनात् स्मरणोपपत्तेः । एवम् 'अननुस्मरन्नयोजयति' इत्यप्ययुक्तम्, तद्विज्ञानसंसृष्टस्य तथा योजनात्, इतरस्यापि तत्संभवाविरोधात् । एवम् 'अयोजयन्न प्रत्येति ' इत्यप्यसांप्रतमेव, शब्दान्तरमधिकृत्यायोजयतोऽपि प्रतीतिः, तद्व्यतिरिक्तेन तूक्तवद्योग एव 'इत्यायातमान्ध्यमशेषस्य जगतः' इत्युक्तिमात्रम्, विवादिताभिधेयार्थशून्यत्वात्, उक्तवत्तदयोगादिति ।

एवं प्रासङ्गिकमभिधाय प्रकृतमुपक्रमते—अत इत्यादिना । अतोऽनेकस्वभावे वस्तुन्युक्तनीत्या व्यवस्थिते, क्षयोपशमानुरूपप्रतिपत्तौ सत्याम्, उक्तवद् यथोक्तं तथा, अन्तर्जल्पाकारबोधसिद्धेः कारणात्, अभिधानविशेषस्मृत्ययोगोऽबाधक एव, स्मृतेरेवान्तर्जल्पाकारबोधरूपतयाऽप्रवृत्तिप्रसङ्गादिति हृदयम् । दोषान्तरपरिजिहीर्षयाह—यदपि क्वचिद् वाच्योपलब्धौ सत्यां, तद्वाचकविशेषास्मरणं किमिदमित्यादि सामान्यवाचकप्रवृत्तावेव, तदप्यनेकवाचकवाच्यत्वेऽस्य वस्तुनः, तथाविधावरणभावाद्-वाचकविशेषस्मरणावरणभावात् विकल्पबोधवत एव-अस्मृतिपूर्वकशब्दसंपृक्तबोधवत एवेत्यर्थः । कुत इत्याह—अभिलापाद्यसंसृष्टबोधेन आदिशब्दाद् विशिष्टमतेः परिग्रहः, अननुस्मरणात् कारणात् ' अननुस्मरणं च तथाप्रतीतेः, न ह्यवग्रहमात्रात् स्मृतिः, एवं च कृत्वा सति ह्यर्थदर्शने-अर्थसन्निधौ दृष्टे शब्दे ततः स्मृतिः स्यादग्निधूमवदिति पूर्वपक्षोदितम्, नैकान्तसुन्दरम् । कुत इत्याह-तदर्थस्य-शब्दार्थस्य, अभिलापासंसृष्टबोधेनादर्शनात् । अदर्शने च तथास्वभावत्वात्-अभिलापासंसृष्टबोधेनादर्शनस्वभावत्वात् । शब्दान्तरस्मृतौ च-वाचकविशेषस्मृतौ च उक्तवद् यथोक्तम्—तथाविधावरणभावादित्यादि तथा, अदोषात् । एवं च कृत्वा न चायमशब्दमर्थं पश्यतीत्येतत् पूर्वपक्षोदितं विचारणीयम् । किमुक्तं भवति-अशब्दमिति ?, यदि शब्दानास्कन्दितमिति । तदसिद्धम् । कुत इत्याह-केवलस्यैव तच्छब्दानास्कन्दितस्य, दर्शनात् । अथाविकल्पज्ञानेनाशब्दमर्थं पश्यति । एतदाशङ्क्याह-ततः सिद्धसाध्यता । कुत इत्याह-शब्दार्थस्य तेन अविकल्पज्ञानेनादर्शनात् । ततश्च विकल्पज्ञानेन सशब्दमर्थं पश्यतीति भवति । अयमेव च शब्दार्थ इति भावः । एवं चापश्यंश्च न शब्दविशेषमनुस्मरतीत्येतदपि पूर्वपक्षोपन्यस्तं, विचारास्पदमेव । किमुक्तं भवति—न शब्दविशेषमनुस्मरति ?, यदि येनैव शब्दविशेषेण संसृष्टविज्ञानः प्रमाता तमेव शब्दविशेषं नानुस्मरतीति, एवं सिद्धसाध्यता । कुत इत्याह—तस्य शब्दविशेषस्य, तदा तेनैव ज्ञानेन, वेद्यमानत्वात् तद्बोधाविनिर्भागेन । अथ तत्प्रतिबद्धम्-प्रक्रमाद् दृश्यवस्तुप्रतिबद्धं शब्दान्तरम्, न शब्दविशेषमनुस्मरतीति । एतदधिकृत्याह—तदसिद्धम् । तस्य-शब्दान्तरस्य, सति क्षयोपशमे तज्ज्ञानावरणकर्मणः, तद्दर्शनाद्—न्यायप्रापितशब्दार्थदर्शनात्, स्मरणोपपत्तेः—स्मरणसंभवात् । एवमननुस्मरन्न योजयतीत्यपि पूर्वपक्षोक्तम्, अयुक्तम् । कुत इत्याह—तद्विज्ञानसंसृष्टस्य—शब्दस्येति प्रक्रमः । तथा—वाचकत्वेन, योजनात्, इतरस्यापि—तत्प्रतिबद्धशब्दान्तरस्य तत्संभवाविरोधात्—योजनासंभवाविरोधात् । ' एवमयोजयन् न प्रत्येतीत्यपि ' पूर्वपक्षवच, असांप्रतमेव-अशोभनमेव । कुत इत्याह-शब्दान्तरमधिकृत्य तत्प्रतिबद्धम्, अयोजयतोऽपि प्रतीतेः, प्रकृताद्

वस्तुन, इति तद्व्यतिरिक्तेन तु प्रक्रमाद् विज्ञानसंस्पर्शेन, उक्तवद्-यथोक्तम् तथा, योग एव, इत्येवम्-, आयातमान्ध्यमशेषस्य जगत इत्युक्तिमात्रम्—वचनमात्रम्। कुत इत्याह—विवक्षिताभिधेयाऽयशून्यत्वात् । शून्यत्वं चोक्तवद्—यथोक्तं तथा, तदयोगाद्-विवक्षिताऽयोगादिति ।

यत्पुनरेतदाशङ्कितम्—'अभिपतन्नेवार्थः प्रबोधयत्यान्तरं संस्कारं, तेन स्मृतिर्नार्थदर्शनात्' इति । एतदर्थतः साध्वेव, क्षयोपशमस्य द्रव्यादिनिमित्तत्वाभ्युपगमात्, तदनुसारेण तत्प्रवृत्तिसंभवात् । यत्पुनरिदमुक्तम्—'न, तत्संबन्धस्याऽस्वाभाविकत्वात्' इति । एतदसाधु, उक्तवदस्वाभाविकत्वासिद्धेः, वक्ष्यमाणत्वाच्चापोहाधिकारे । अतः समयाऽदर्शनेऽभावादित्ययुक्तम् । तस्य क्षयोपशमव्यञ्जकत्वात्, तद्भावे तु तदभावेऽपि भावात्, क्वचित् तथोपलब्धेः, अन्यथा सदा तदपेक्षा स्यात् । एवं च पुरुषेच्छातोऽर्थानां स्वभावापरावृत्तेरित्यादि यावदशब्दसंयोजनमेवार्थं पश्यति दर्शनात् । इति । एतन्निर्विषयमेव,अत्र ह्यनेकस्वभावतापत्त्या वस्तुनो नैरात्म्यमिति परं दूषणम् । एतच्चैकानेकस्वभावतयाऽस्य तत्त्वतोऽदूषणमेव, अन्यथा तदसत्त्वप्रसङ्गादित्युक्तप्रायम् । अतो विरोधिशब्दवाच्यत्वेऽपि तत्तत्स्वभावतया तथोपलब्धेर्न कश्चिद् दोषः ।

यत्पुनरित्यादि । यत्पुनरेतदाशङ्कितं परेण । किमित्याह—'अभिपतन्नेवार्थः प्रबोधयत्यान्तरं संस्कारं, तेन स्मृतिर्नार्थदर्शनादिति' । एतदर्थत अर्थमधिकृत्य, साध्वेव—शोभनमेव । कथमित्याह-तदनुसारेण—अर्थाभिपतनानुसारेण, तत्प्रवृत्तिसंभवात्-क्षयोपशमप्रवृत्तिसंभवादिति । यत् पुनरिदमुक्तं पूर्वपक्षग्रन्थ एव—न तत्संबन्धस्याऽस्वाभाविकत्वात् इति । एतदसाधु—अशोभनम् । कुत इत्याह-उक्तवद् यथोक्तं प्राक् 'सर्ववस्तूनामेव प्रायस्तथा तथा सर्वशब्दवाच्यस्वभावत्वादित्यादिना' तथा, अस्वाभाविकत्वासिद्धेस्तत्संबन्धस्य वक्ष्यमाणत्वाच्चापोहाधिकारे, तदसाध्विति । अत. समयादर्शनेऽभावादिति यदुक्तम्, तदयुक्तम् । कुत इत्याह—तस्य समयस्य, क्षयोपशमव्यञ्जकत्वात्, तद्भावे तु-क्षयोपशमभावे तु तदभावेऽपि-समयाभावेऽपि, भावाद्--शब्दविशेषस्मृतेरिति प्रक्रम. । शब्दविशेषस्मृतिग्रहणं चाऽत्र प्रतिपत्त्युपलक्षणं वेदितव्यम् । भावश्च क्वचिद् विशिष्टक्षयोपशमवति प्रमातरि, तथोपलब्धे समयाभावेऽपि शब्दविशेषस्मृत्युपलब्धे । इत्थं चैतदङ्गीकर्त्तव्यमित्याह-अन्यथेत्यादि । अन्यथा—क्षयोपशमभावेऽपि, समयापेक्षाभ्युपगमे, सदा--सर्वकाल, तदपेक्षा स्यात्--समयापेक्षा स्यात्, ततश्च सदा संकेताकरणाप्त्या व्यवहाराभाव । एवं च 'पुरुषेच्छातोऽर्थाना स्वभावाऽपरावृत्तेरित्यादि पूर्वपक्षवचन यावदशब्दसंयोजनमेवार्थं पश्यति दर्शनात्' इत्येतत् निर्विषयमेव । कुत इत्याह-अत्रेत्यादि । अत्र यस्माद्. अनेकस्वभावतापत्त्या वस्तुनो नैरात्म्यमिति परं दूषणमुक्तम् । एतच्च दूषणमेकानेकस्वभावतयाऽस्य वस्तुनस्तत्त्वतोऽदूषणमेव, अन्यथैवमनभ्युपगमे, तदसत्त्वप्रसङ्गाद् वस्तुनोऽसत्त्वप्रसङ्गात्, 'इत्युक्तप्राय प्रायेणोक्तम्, अतो विरोधिशब्दवाच्यत्वेऽपि सति, वस्तुन इति प्रक्रम', तत्तत्स्वभावतया कारणेन. तथोपलब्धेः-विरोधिशब्दवाच्यत्वेनोपलब्धे, नित्यानित्यादिशब्दप्रवृत्तितया न कश्चिद् दोष इति प्रस्तुताधिकारनिगमनम् ।

स्यादेतत्, अनलशब्दो ह्यनले तदभिधानस्वभावतया यमभिधेयपरिणाममाश्रित्य प्रवर्त्तते, स जले नास्ति, जलानलयोरभेदप्रसङ्गात्, प्रवर्त्तते च समयाज्जलेऽनलशब्दः, तथाप्रतीतेः । इति कथमनयोर्वास्तवो योगः ? इति । उच्यते-शब्दस्यानेकस्वभावत्वात्, न ह्यनलशब्दस्याऽनलगताभिधेयपरिणामापेक्षी तदभिधानस्वभाव एवैकः स्वभावः, अपि तु तथाविलम्बितादित्वेन जलगताभिधेयपरिणामापेक्षी तदभिधानस्वभावोऽपि, तथा तत्प्रतीतेः, तद्वैचित्र्येण दोषाभावात्, क्षयोपशमवैचित्र्यतस्तथाप्रवृत्तेः, अन्यथा अहेतुकत्वेन तदभावप्रसङ्गादिति । एतेन तथाऽनुभवसिद्धेन शब्दार्थक्षयोपशमस्वभाववैचित्र्येण, एतदपि प्रत्युक्तम्, यदुक्तम्—'शब्देन्द्रियार्थयोर्भेद एव, अव्यापृतेन्द्रियस्याऽन्यत्राङ्मात्रेणैवेन्द्रियार्थाविभावनात्, इन्द्रियादेव च शब्दार्थाप्रतीतेः' इत्यादि । न खल्वव्यापृतेन्द्रियोऽपि तत्क्षयोपशमयुक्तः, अन्यत्राङ्मात्रेण न विभावयत्येवेन्द्रियार्थम्, तद्वर्णमानाचिह्नादिनिश्रितेः, तदन्यतुल्यजातीयमध्येऽपि भेदेन प्रवर्त्तनात्, क्वचित्तत्प्राप्तेस्तथा निवेदनात्, तथाऽस्पष्टं तु तत्साक्षात्कारेणाक्षव्यापारवैकल्यात्, न त्वतद्विषयत्वेन । एवमिन्द्रियादपि कश्चित्तथाविधक्षयोपशमभावे, सङ्केतमन्तरेणापि भवति शब्दार्थविभावनम्, तथाऽन्तर्जल्पाकारादिबोधसिद्धेः, लोकानुभवप्रामाण्यादिति ।

स्यादेतदित्यादि । स्यादेतत्, अनलशब्दो ह्यनलेऽभिधेये तदभिधानस्वभावतया—अनलाभिधानस्वभावत्वेन, यमभिधेयपरिणाममाश्रित्य प्रवर्त्तते, वास्तवं स जले नास्ति परिणामः । कुत इत्याह—जलानलयोरभेदप्रसङ्गात् तदेकाभिधेयपरिणामभावेन । यदि नामैव ततः किम् ?, इत्याह—प्रवर्त्तते च समयात्-सङ्केतेन, जले अनलशब्द. । कुत इत्याह—तथाप्रतीते समयद्वारेण प्रवृत्तिप्रतीते, इत्येवं कथमनयो. प्रक्रमाद् वस्तुवाचकयो, वास्तवो योगस्तात्त्विक सम्बन्धः ?, इति । एतदाशङ्क्याह-उच्यते तत्र परिहार, शब्दस्यानेकस्वभावत्वात् शब्दग्रहण वस्तूपलक्षणम्, उभयोरनेकस्वभावत्वात्. अनयोर्वास्तवो योग इति । अमुमेवार्थं प्रकटयन्नाह—न ह्यनलेत्यादि । न यस्माद्, अनलशब्दस्याऽनलगताभिधेयपरिणामापेक्षी अनलगतमभिधेयपरिणाममपेक्षते तच्छीलश्च इति विग्रह, तदभिधानस्वभाव एव—अनलाभिधानस्वभाव एव, एक-

स्वभाव, अपि तु तथाविलम्बितादित्वेन समयापेक्षित—स्मृतिपूर्वकत्वेन, जलगताभिधेयपरिणामापेक्षी. तदभिधानस्वभावोऽपि—जलाभिधानस्वभावोऽपि। कुत इत्याह—तथा तत्प्रतीते—तथाविलम्बितादित्वेन जलप्रतीतेरिति। तद्वैचित्र्येण-प्रक्रमादनलशब्दस्वभाववैचित्र्येण, दोषाभावात् पूर्वोक्तदोषानिवृत्तेरित्यर्थ.। क्षयोपशमवैचित्र्यतः कारणात्, तथाप्रवृत्ते -जलेऽनलशब्दसमयप्रवृत्ते'। अन्यथैवमनभ्युपगमे, अहेतुकत्वेन, तदभावप्रसङ्गात्—तथा प्रवृत्त्यभावप्रसङ्गादिति। एतेनाऽनन्तरोदितेन तथानुभवसिद्धेनोक्तनीत्या, समयाद् जलेऽप्यनलशब्दात्, प्रतीतिभावत' संवेदनसिद्धेन शब्दार्थक्षयोपशमाना स्वभाववैचित्र्येण, किमित्याह—एतदपि प्रत्युक्तम्। यदुक्तं परैः, किं तदित्याह—शब्देन्द्रियार्थयो शब्दश्चन्द्रिय च शब्देन्द्रिये, तयोरर्थौ—विषयौ तयोर्भेद एव। कुत इत्याह-अव्यापृतेन्द्रियस्य पुंस, अन्यवागमात्रेणैव—अन्यस्माद् वाग्मात्रं तेनैव, इन्द्रियार्थोऽविभावनात्—इन्द्रियार्थोऽदर्शनाद्, विभावनं-दर्शनं, तथाहि-प्रतीतमेतत्, न शब्दादेवं पश्यतीति। तयेन्द्रियादेव च सकाशात्, शब्दार्थप्रतीतिर्नहि पनसं पश्यन्नप्यकृतसमयो वाह्लीक· पनसमित्यवैतीत्यादि। आदिशब्दात्—" अन्यदेवेन्द्रियग्राह्य--मन्य शब्दस्य गोचर । शब्दात् प्रत्येति भिन्नाक्षो, न तु प्रत्यक्षमीक्षते "॥ १॥ इत्याद्येतत् समानं गृह्यते, इत्येतदपि प्रत्युक्तम्। यथा प्रत्युक्तम्, तथा मन्दमतिहिताय मनागुपप्रदर्शयन्नाह—न खल्वित्यादिना। न खलु—नैव, अव्यापृतेन्द्रियोऽपि पुमान्। किं विशिष्ट इत्याह-तत्क्षयोपशमयुक्त--प्रक्रमात्, इन्द्रियज्ञानावरणक्षयोपशमयुक्त, अन्यवाङ्मात्रेण हेतुना, न विभावयत्येव--न पश्यत्येव, मत्याभोगेनेन्द्रियार्थम्, " द्वौ प्रतिषेधौ प्रकृतमर्थं गमयत ' इति कृत्वा, किं तु विभावयत्येव। कुत इत्याह-तद्वर्णमानचिह्नादिनिश्चिते तस्येन्द्रियार्थस्य, वर्ण -कृष्णादि, मान--प्रमाणं महद्दलपादि चिह्नं खण्डादि, आदिशब्दात्-मसृणत्वादिग्रह. एतन्निश्चिते। तथाहि-कृष्णं महान्तं खण्ड मसृणमपूर्वमपवरकाद् घटमानयेत्युक्ते तज्ज्ञानावरणक्षयोपशमयुक्त पुमानध्यक्षमिव मत्या तथैव प्रतिपद्यते। कथमेतदेवम् ?, इत्याह—तदन्यतुल्यजातीयमध्येऽपि तदाऽऽनयनाय त प्रति भेदेन प्रवर्त्तनात्। न ह्यसौ तथा भोगशून्य प्रवर्त्तत इति भावनीयम्। तथा क्वचित् प्रतिबन्धाभावे, तत्प्राप्ते प्रक्रमात् तस्यान्यवाङ्मात्रोक्तस्य प्राप्ते, तथा निवेदनात्-तथाऽन्यवाङ्मात्रबाधितत्वेन निवेदनात्, नैव--न विभावयति, इन्द्रियार्थमिति। तथाऽस्पष्टं तु तद्विभावनम्, साक्षात्कारेणाऽक्षव्यापारवैकल्यात्, तत्त्वतद्विषयत्वेन-न- पुनरिन्द्रियार्थाविषयत्वेन, प्रणिधानव्यापारेण तत्रेन्द्रियव्यापारादिति। एवमिन्द्रियादपि सकाशात् क्वचित् न सर्वत्र, तथाविधक्षयोपशमभावे सङ्केतानपेक्षशब्दार्थविभावनफलक्षयोपशमभावे, सङ्केतमन्तरेणाऽपि, किमित्याह—भवति शब्दार्थविभावनम्। कुत इत्याह-तथाऽन्तर्जल्पाकारादिबोधसिद्धे किमिदमित्यालोचयतस्तदिद पूर्वोक्तलिङ्गवत् पनसमिति बोधसिद्धेरित्यर्थ, सिद्धिश्च लोकानुभवप्रामाण्यादिति।

स्यादेतत्, इत्थमनेकस्वभावत्वे वस्तुनोऽनेकस्यैवाऽनेकप्रमातृभिरवसायः, तथाहि-यदि य एव तत्स्वभाव एकावसायस्य निमित्तं स एवापरावसायस्य, ततस्तयोरैक्यं सर्वथैकनिमित्तत्वात्, इतरेतरस्वात्मवत्, तदभेदेऽपि-तदवसायभेदे, तदेकस्वभावतापत्तिः, तदन्यकार्याणामपि तत्तथातयाऽविरोधादिति। अत्रोच्यते-एकान्तवादिन एवायं दोषः नानेकान्तवादिनः; तस्य ह्यचित्रमेवैकम्। न चानेककार्यजननैकस्वभावतां विहाय ततोऽनेकं भवति, अनेककार्यजनने च नाचित्रमेकत्वं, तद्भावेऽपि कार्त्स्न्येनैकेन तद्ग्रहात् तदपरावसायग्रहणप्रसङ्गः, तस्य तज्जननस्वतत्त्वस्य।ऽन्यथा ग्रहणायोगात्, तत्सावधिकत्वात् न निरवधिकं ग्रहणं तद्ग्रहणमिति भावनीयम्। मलसामर्थ्यात्, तदग्रहणं, तदग्रहणमेव, सर्वथैकत्वात्, अन्यथाऽस्य ग्रहणाग्रहणप्रसङ्गः, तथा च सत्यसमन्मतानुवाद एव गृह्यमाणागृह्यमाणयोरेकत्वविरोधादिति। तच्चित्रतथैव कथंचित् तद्ग्रहणादेकस्याप्यनेकप्रमातृभिरवसायः,नान्यथा, इत्युक्तदोषानिवृत्तेरित्यलं प्रसङ्गेन।

स्यादेतत्,इत्थम्-उक्तनीत्याऽनेकस्वभावत्वे,वस्तुनः-इन्द्रियार्थादे, नैकस्यैवाऽनेकप्रमातृभिरवसाय। एतदेव भावयति-तथाहीत्यादिना। तथाहि-यदि य एव तत्स्वभावो-वस्तुस्वभाव,एकावसायस्येति-एकस्य प्रमातुरिति प्रक्रम,अवसाय एकावसायस्तस्य, निमित्तं स एवाऽपराऽवसायस्य प्रमात्रन्तरावसायस्य, ततस्तयोरवसाययोरैक्यम्। कुत इत्याह-सर्वथैकनिमित्तत्वात्, अविकृतवस्तुस्वभावैकत्वेन इतरेतरस्वात्मवदिति निदर्शनम्। एतच्च ' यत स्वभावतो जातमेकम् ' इत्यादिना त्वयाऽभ्युक्तमेव। तदभेदेऽपि-तत्स्वभावाभेदेऽपि,तदवसायभेदे—एकाऽपरप्रमात्रवसायभेदे, तदेकस्वभावतापत्ति—तस्य वस्तुन एकस्वभावतापत्ति। कुत इत्याह—तदन्यकार्याणामपि—तस्माद् विवक्षितस्वभावादन्ये तदन्ये स्वभावा इति प्रक्रम, तेषां कार्याणि—सदादिविज्ञानादीनि तत्कार्याणि तेषामपि, तत्तथा तया—तस्य वस्तुन, तथाता एकजातीयविज्ञानापेक्षया एकस्वभावा अनेककार्यजननैकस्वभावता, तया, सामान्येनाऽप्येकस्वभावापेक्षया सदाद्यनेकविज्ञानादिकार्यजननैकस्वभावतया, अविरोधात् तदेकस्वभावतापत्तिरिति। एतदाशङ्क्याह—अत्रोच्यते-एकान्तवादिन एवायमनन्तरोदित —' ततस्तयोरैक्यम्' इत्यादिलक्षणो दोष, नानेकान्तवादिन। कुत एतदित्याह-तस्येत्यादि। तस्य एकान्तवादिन, यस्मात्, चित्रमेवैकमेकान्तैकरूपम्। यदि नामैव तत किमित्याह-न चानेककार्यजननैकस्वभावता विहाय तत एकस्मात्, इह प्रक्रमे, अविकृतैकस्वभावात्, अनेक भवत्येकापरविज्ञानादि। यदि नामैवं तत किमित्याह-अनेककार्यजनने चा नाऽचित्रमेकत्वम्। अनेकगर्भैकत्वस्य सर्वथैकत्वविरोधात्। दोषान्तरमाह—तद्भावेऽपीत्यादिना। तद्भावेऽपि-अचित्रैकस्वभावेऽपि, कार्त्स्न्येन—सामस्त्येन एकेन प्र-

मात्रा, तद्ग्रहात्-अधिकृतस्वभावग्रहात्, तदपरावसायग्रहणप्रसङ्ग —तस्मात्-एकस्मात् प्रमातुरपरे प्रक्रमात्, प्रमातार एव तदपरं तेषामवसाया -ज्ञानानि तेषां ग्रहणम्-अवगमस्तत्प्रसङ्ग इति समास । कुत इत्याह—तस्येत्यादि । तस्याऽधिकृतस्वभावस्य, किं विशिष्टस्येत्याह—तज्जननस्वतत्त्वस्य अपरावसायजननस्वभावत्वस्य, अन्यथा तदपराऽवसायग्रहणमन्तरेण, ग्रहणाऽयोगात्, अयोगश्च तत्सावधिकत्वात्,—तदपरावसायजननस्वभावो ह्यमाविति तत्सावधिक.। यदि नामैवं ततः किमित्याह—न निरवधिक ग्रहणं तदपराऽवसायजननस्वभावविकलं ग्रहणम्, तद्ग्रहणं तदपरावसायजननस्वभावग्रहणमिति भावनीयमेतत्। पराभिप्रायमाह—मलसामर्थ्याद् हेतोः तदग्रहणम्-अपरावसायाख्यावध्यग्रहणम्। एतदाशङ्क्याऽऽह-तदग्रहणमेव-तस्याधिकृतस्वभावस्याऽग्रहणमेव। कुत इत्याह-सर्वथैकत्वात् एक एव ह्यसौ तदपराऽवसायजननस्वभाव इति, तदग्रहणेऽग्रहणमिति गर्भ.। इत्थं चैतदङ्गीकर्त्तव्यमित्याह—अन्यथा एवमनभ्युपगमे—तदवधिग्रहणानभ्युपगमे, अस्य स्वभावस्य, ग्रहणाऽग्रहणप्रसङ्ग.। समान्येन ग्रहणात् अवधिमत्तयाऽग्रहणात्। यदि नामैव तत. किमित्याह—तथा च सति एवं च सति, असन्मतानुवाद एव तच्चित्रताविधानेन,अत एवाह-गृह्यमाणाऽगृह्यमाणयोर्धर्मयो., एकत्वविरोधादिति। एव तच्चित्रतयैव-स्वभावचित्रतयैव, कथंचित् केनचित् प्रकारेण, तद्ग्रहणात्-अधिकृतस्वभावग्रहणात्, एकस्याऽपि वस्तुन, सामान्येन अनेकप्रमातृभिरवसाय, नान्यथा। कुत इत्याह—उक्तदोषानतिवृत्ते. 'ततस्तयोरैक्यम्' इत्याद्युक्तदोषानतिवृत्तेः, इत्यलं प्रसङ्गेनेति।

यच्चोक्तम्-किञ्च विकल्पात्मकत्वेऽस्य 'निश्चयात्मकमिदम्' इत्यनेकप्रमाणवादहानिः, तेनैव वस्तुनो निश्चयात्, नित्यत्वादौ भ्रान्त्यनुपपत्तेः, अनेकधर्मके वस्तुन्यन्यतरधर्मनिश्चयात्, तदन्यनिश्चयाय प्रमाणान्तरसाफल्यमिति चेत्, इत्याशङ्क्य-' नैकधर्मविशिष्टस्यापि निश्चये सर्वधर्मवत्तया निश्चयात्, प्रमाणान्तरस्य निश्चितमेव विषयीकुर्वतः स्मृतिरूपानतिक्रमात्, एकधर्मद्वारेणाऽपि तद्वतो निश्चयात्मना प्रत्यक्षेण विषयीकरणे सकलधर्मोपकारकशक्त्यभिन्नात्मनो निश्चयात्' इत्यादि, तदप्ययुक्तम्। छद्मस्थज्ञानस्येत्थमप्रवृत्तेः, ज्ञेयतज्ज्ञानक्षयोपशमानां तथास्वभावत्वादित्युक्तप्रायम्, केवलिनां तु तथानिश्चयः, प्रमाणान्तराभावश्च, इति न कश्चिद्दोषः। आह-एवमप्यनेकस्वभावतया ततस्तथानियतात् कथमनन्तानां केवलिनां तदविकलात्मग्राहकज्ञानभावः, एकत्र कार्त्स्न्योपयोगित्वेन तत्तज्जननस्वभावत्वात्, अपरस्यापि तद्भावापत्तेर्हेत्वविशेषादिति, न, हेत्वविशेषासिद्धेः, ज्ञानिनोऽन्यत्वात्, अधिकृतवस्तुनश्च विचित्रत्वात्, तत्तज्ज्ञान्यपेक्षया तत्र तत्र तदा तदाऽविकलात्मग्राहकज्ञानाभिव्यञ्जकात्मकत्वेनैकत्र कार्त्स्न्योपयोगित्वादिति। न चैवमपरस्यापि तद्भावापत्तिः, अधिकृतवस्तुनस्तथात्वविरोधादिति सूक्ष्मधिया भावनीयम्। एकान्तैकस्वभाववस्तुवादिनस्त्वेष दोषोऽनिवारितप्रसर एव, तद्भेदनिबन्धनाधिकृतवस्तुवैचित्र्यानुपपत्तेरिति। किञ्च-निर्विकल्पकेनाऽपि प्रत्यक्षेणैकस्वभावे वस्तुनि परिच्छिन्ने कथं नाऽनेकप्रमाणवादहानिरिति चिन्त्यम्?। प्रत्यक्षस्यानिश्चयरूपत्वाच्चिन्तितमेवैतत्।

यच्चोक्तं पूर्वपक्षे—किञ्च विकल्पात्मकत्वेऽस्येत्यादि। यावदेकधर्मद्वारेणाऽपि तद्वतो निश्चयात्मना प्रत्यक्षेण विषयीकरणे सकलधर्मोपकारकशक्त्यभिन्नात्मनो निश्चयादित्यादि, तदप्ययुक्तम्। कुत इत्याह—छद्मस्थज्ञानस्येत्थमप्रवृत्ते' कारणात्, अप्रवृत्तिश्च ज्ञेयतज्ज्ञानक्षयोपशमानां त्रयाणामपि, तथास्वभावत्वात् चित्रतया-असर्वधर्मवत्तया निश्चयनिबन्धनस्वभावत्वात्, इत्युक्तप्रायं प्रायेणोक्तम्। केवलिनां तु क्षीणसकलावरणाना, तथानिश्चय —सकलधर्म्मवत्तया निश्चय., प्रमाणान्तराभावश्च केवलिनामनुमानाद्यभावश्चेति। न कश्चिद् दोष। आह--एवमपि केवलिना तु तथानिश्चयेऽपि सति, अनेकस्वभावतया. ततो वस्तुन, तथानियतात्—समग्रानेकस्वभावतया नियतात्, एकस्वभावत्वविकल्पादित्यर्थ। कथमनन्तानां प्रमातॄणां केवलिना वृषभादीनाम्, तद्विकलात्मकग्राहकज्ञानभाव. तस्यानेकस्वभावतया तथानियतस्य वस्तुनोऽविकलो य आत्मा, तद्ग्राहकज्ञानोत्पादस्तत. कथम्?, नैवेत्यर्थ'। कथं नेत्याह—एकत्रेत्यादि। एकत्र—ऋषभादिज्ञाने, कार्त्स्न्योपयोगित्वेन हेतुना, तत्तज्जननस्वभावत्वात्—अधिकृतवस्तुन ऋषभादिज्ञानजननस्वभावत्वात्, नान्यथा तत—स्तथा तदुत्पाद इति भावनीयम्। यदि नामैवं ततः किमित्याह-अपरस्यापि वर्द्धमानादिज्ञानस्य. तद्भावापत्ते'-ऋषभादिज्ञानापत्ते.। कथमित्याह—हेत्वविशेषादिति। ऋषभादिज्ञानजननस्वभावं ह्यधिकृतं वस्तु तद्धेतुस्ततस्तस्याऽपि तद्वत्तद्भावापत्ते, अतो न ततोऽनन्तानां तदविकलात्मग्राहकज्ञानभाव इति। उक्तं च यत—'स्वभावतो जातम्' इत्यादि, असर्वज्ञता वा सर्वेषामन्योन्यमधिकृतवस्तुनोऽनुत्पत्तितस्तदनधिगमादिति पराभिप्राय.। एतदाशङ्क्याह—नेत्यादि। न—नैतदेवम्, यदभ्यधायि परेण, कुत इत्याह—हेत्वविशेषासिद्ध.। कथमसिद्धिरित्याह—ज्ञानिनोऽन्यत्वाद् वर्द्धमानादे', द्वयमिह ज्ञानहेतु —जीव, अधिकृतवस्तु च। न चैतदप्येकरूपमेवेत्याह—अधिकृतवस्तुनश्च अनेकस्वभावतया तथानियतस्य विचित्रत्वात्। तत' किमित्याह-तत्तज्ज्ञान्यपेक्षया—ऋषभवर्द्धमानादिज्ञान्यपेक्षया, तत्र तत्र सिद्धार्थवनऋजुपालिकानीरादौ क्षेत्रे, तदा तदा सुषमदुःषमादुःषमसुषमान्तादौ काले, अविकलात्मग्राहकज्ञानाभिव्यञ्जकात्मकत्वेन एवंभूतेनात्मना, एकत्र ऋषभादिज्ञाने, कार्त्स्न्योपयोगित्वात्—सामस्त्येनोपयोगित्वादिति। न चेत्यादि। न चैवम्--उक्तेन प्रकारेण, अप-

रस्याऽपि वर्धमानादिज्ञानस्य, तद्भावापत्ति -ऋषभादिज्ञानत्वापत्ति । कुत इत्याह—अधिकृतवस्तुन अनेकस्वभावतया तथानियतस्य उक्तवद् विचित्रस्य , तथात्वविरोधात् तत्तज्ज्ञान्यपेक्षया इत्यादित्वविरोधात् । तथाहि--ऋजुपालिकातीरादौ दुष्षमसुषमान्ते च वर्धमानादिज्ञान्यपेक्षया , अविकलात्मग्राहकज्ञानाभिव्यञ्जकात्मकत्वेन एव एकत्र ऋषभादिज्ञाने , अस्य कार्त्स्न्योपयोग इति वर्धमानादिज्ञानाऽभावे तथात्वविरोध. । एवमन्यापेक्षयाऽप्यतिसूक्ष्मधिया भावनीयमेतद् अतिगहनत्वादिति । एकान्तेत्यादि । एकान्तैकस्वभाववस्तुवादिनस्तु बौद्धादेः , एष दोष -अनन्तानां तदविकलात्मग्राहकज्ञानाऽभावलक्षण अनिवारितप्रसर एव । कथमित्याह--तद्भेदनिबन्धना--अनन्तज्ञानभेदनिबन्धना , अधिकृतवस्तुवैचित्र्यानुपपत्ते , उक्तवद् अधिकृतवस्तुवैचित्र्यमेवाऽत्र कारणमिति । दूषणान्तरमाह—किञ्चेत्यादिना । किञ्च—निर्विकल्पकेनाऽपि प्रत्यक्षेण भवदभिमतेन, एकस्वभावे—एकान्तैकस्वभावे , वस्तुनि भवदभिमते परिच्छिन्ने सति कथ नाऽनेकप्रमाणवादहानिरिति चिन्त्यम् । प्रमेयान्तराभावेन प्रमाणान्तराभावाद् हानिरेवेत्यर्थ. । पराभिप्रायमाह—प्रत्यक्षस्य निर्विकल्पकस्य, अनिश्चयरूपत्वात् कारणाद् चिन्तितमेवैतद् ।

यदुक्त भवता न च एतद् अपूर्वमिति उपदर्शयन्नाह—

आह च न्यायवादी–न प्रत्यक्षं कस्याचिद् निश्चायकम्, तद् यमपि गृह्णाति तं न निश्चयेन , किं तर्हि ? , तत्प्रतिभासेन । तच्च यत्रांशे पाश्चात्यं निश्चयं जनयितुं शक्नोति तत्रैव प्रमाण्यमात्मसात्कुरुते,यत्र तु भ्रान्तिकारणसद्भावाद् अशक्तं तत्र प्रमाणान्तरं व्याप्रियते, समारोपव्यवच्छेदार्थमिति भ्रान्तिव्युदासाय प्रमाणान्तरप्रवृत्तिरिति ।

आह च न्यायवादी धर्मकीर्तिर्वार्तिके, किमाह ? , इत्याह-न प्रत्यक्षं कस्यचित् पदार्थस्य निश्चायकम् , तद् यमपि पदार्थं गृह्णाति त न निश्चयेन ' एवमेतद् ' इत्येवरूपेण , किं तर्हि ? , तत्प्रतिभासेन आदर्शवत् गृह्यमाणाऽऽकारेण तच्च एवभूतं प्रत्यक्षम् , यत्रांशे वस्तुगते , पाश्चात्यं निश्चयं जनयितु शक्नोति नीलादौ , तत्रैवांऽशे प्रामाण्यमात्मसात्कुरुते नीलादौ । यत्र तु अंशेऽनित्यादौ , भ्रान्तिकारणसद्भावात् कारणात् , अशक्त पाश्चात्यं निश्चयं जनयितुम् , तत्रांशे प्रमाणान्तरं व्याप्रियतेऽनुमानम् । किमर्थमित्याह—समारोपव्यवच्छेदार्थ -परिकल्पितसमारोपव्यवच्छेदार्थम् , इत्येव भ्रान्तिव्युदासाय-समारोपव्युदासाय, प्रमाणान्तरप्रवृत्ति.-अनुमानप्रवृत्ति. ।

इत्येवं पूर्वपक्षमाशङ्क्याह—

अत्रोच्यते-यदुक्तम्- "न प्रत्यक्षं कस्याचिद् निश्चायकम्" इति , अत्र कोऽयं निश्चयो नाम ?, स्वालम्बनाऽध्यवसाय एवेति चेत् , नाऽयं तदाकारोत्पत्तिव्यतिरेकेण । अस्त्वेवं ततः को दोषः ? , इति चेत् , नासौ–न प्रत्यक्षेऽपि , कथमनिश्चायकं तत् ?, वस्तुमात्रप्रतिभासनाद् इति चेत् , अवस्तुप्रतिभासी तर्हि निश्चयः । न। तत्रैव दृढः प्रत्यय इति चेत् , कथं तदाकारशून्यस्तत्रेति । किञ्च-किं पुनरस्य दार्ढ्यम्, किं निर्विकल्पकसमनन्तरत्वम् ? , किं वा वासनाजन्म ? , उताऽध्यवसिततद्भावता ? , आहोस्वित् ध्वनियोगः ? । न तावद् निर्विकल्पकसमनन्तरत्वम् , तदपरनिर्विकल्पकेन व्यभिचारात् निर्विकल्पकसमनन्तराद् निर्विकल्पकोत्पत्तेः । नाऽपि वासनाजन्म, निर्विकल्पकस्याऽपि तत उत्पत्तेः , तत्–तत्समनन्तराऽव्यतिरेकात् । नापि अध्यवसिततद्भवता, अतदाभेन तत्परिच्छेदायोगात् तत्त्वतस्तदनुपपत्तेः । नाऽपि ध्वनियोगः , तत्तादात्म्याद्ययोगतस्तदसिद्धेः , तद्युक्तस्यापि तदाकारोत्पत्तिप्रधानत्वादिति । न च सैव केवला अनिश्चयः, स्वालम्बनपरिच्छेदात्. न च न सोऽपि, तत्त्वतः तत्स्वभावतया ततस्तद्बोधोपपत्तेः । न च मूककल्पत्वाद् नेति , बोधस्याऽनिश्चयत्वविरोधात् । न चाऽस्पष्टतया नेति , तस्याः स्पष्टताऽभ्युपगमादिति ।

अत्रोच्यते—यदुक्तमित्यादि । यदुक्तमादौ—'न प्रत्यक्षं कस्यचिद् निश्चायकम्' इति । अत्र व्यतिकरे कोऽय निश्चयो नाम ?, स्वाऽऽलम्बनाध्यवसाय -स्वविषयपरिच्छेद एवेति चेत् । एतदाशङ्क्याह—नाय यथोदिताध्यवसाय , तदाकारोत्पत्तिव्यतिरेकेण-स्वालम्बनाऽऽकारोत्पत्तिव्यतिरेकेण,अस्त्वेवम्-भवतु स्वालम्बनाकारोत्पत्तिरेव निश्चय , तत को दोष इति चेत् ? । एतदाशङ्क्याह—नासौ स्वालम्बनाकारोत्पत्ति', न प्रत्यक्षेऽपि, किं तर्हि अस्त्येव । अत कथमनिश्चायकं तत् प्रत्यक्षम् ?, भवदभिप्रेतनिश्चयलक्षणोपपत्तेर्निश्चायकमेव इत्यर्थ. । वस्तुमात्रप्रतिभासनाद् अनिश्चायक तद् इति चेत् । एतदाशङ्क्याऽऽह—अवस्तुप्रतिभासी तर्हि निश्चय. ततोऽनिश्चय इति गर्भ । नाऽवस्तुप्रतिभासी, किंतु तत्रैव वस्तुनि, दृढ. प्रत्ययो निश्चय' इति चेत् । एतदाशङ्क्याह—कथ तदाकारशून्यो—वस्त्वाकारशून्यस्तन्मात्रप्रतिभासनेन तत्रेति–वस्तुनीति । अभ्युच्चयमाह—किञ्चेत्यादिना । किं पुनरस्य प्रत्ययस्य दार्ढ्यम् ?, किं निर्विकल्पकसमनन्तरत्वम् , निर्विकल्पक समनन्तरा यस्येति विग्रहस्तद्भावो निर्विकल्पकसमनन्तरत्व तत् ? । किंवा-वासनाजन्म वासनातो जन्म तत् ? । उताऽध्यवसिततद्भावता-अध्यवसित.-परिच्छिन्नः तद्भावोऽवस्तुभावो येनेति विग्रहस्तद्भावोऽध्यवसिततद्भावता ?। अहोस्वित् ध्वनियोग.-शब्दसम्बन्ध प्रत्ययदार्ढ्यमिति? एव विकल्पचतुष्टयमुपन्यस्याऽऽह–न तावद् निर्विकल्पकसमनन्तरत्वं प्रत्ययदार्ढ्यम् । कुत इत्याह-तदपरनिर्विकल्पकेन व्यभिचारात् , तस्माद्-अधिकृतप्रत्ययाद् अपरं च तन्निर्विकल्पकं च तेनाऽनैकान्तिकत्वात् । एतत्प्रकटनायैवाऽऽह—निर्विकल्पकसमनन्तरात् सकाशात् , प्रबन्धेन निर्विकल्पकोत्पत्ते । नाऽपि वासनाजन्म प्रत्ययदार्ढ्यम् । कुत इत्याह-निर्विकल्पकस्यापि ततो वासनात , उत्पत्ते कारणात् उत्पत्तिश्च तत्—तत्समनन्तराऽव्यतिरेकात् तस्या—वासनाया तत्समनन्तराऽव्यतिरेकात् निर्विकल्पकसमन-

न्तराद्व्यतिरेकात् समनन्तराच्च अविकल्पकजन्मेति भावना। नाऽप्यध्यवसितनद्भावना प्रत्ययदार्ढ्यम्। कुत इत्याह—अनदाभेन-अवस्त्वाकारेण ज्ञानेन, तत्परिच्छेदाऽयोगाद्-वस्तुपरिच्छेदाऽयोगात्, अयोगश्च तत्त्वत -परमार्थत तदनुपपत्त -अध्यवसितनद्भावनानुपपत्तं नाऽतदाभ तत्परिच्छेदकम्, नचाऽतो न, अध्यवसितनद्भावनेति भावनीयम्। नाऽपि ध्वनियोग —प्रत्ययदार्ढ्यम्। कुत इत्याह—तत्तादात्म्याद्यऽयोगत तस्य-प्रत्ययस्य, तेन-ध्वनिना,तादात्म्याद्ययोगत —तादात्म्यमेकत्वम् आदिशब्दात्—तदुत्पत्तिग्रह तदसिद्धे —ध्वनियोगासिद्धे, तथा तद्युक्तस्याऽपि ध्वनियुक्तस्याऽपि प्रत्ययस्येति प्रक्रम, तदाकारोत्पत्तिप्रधानत्वाद् विषयाकारोत्पत्तिप्रधानत्वादिति। न चेत्यादि। न च सा एव—तदाकारोत्पत्ति, केवला ध्वनियोगरहिता, अनिश्चय -अपरिच्छेद। कुत इत्याह—स्वालम्बनपरिच्छेदात्—स्वविषयपरिच्छेदात्, केवलयाऽपि न च-न सोऽपि-स्वालम्बनपरिच्छेद, तत्त्वत -परमार्थेन। कुत इत्याह-तत्स्वभावतया स्वालम्बनपरिच्छेदस्वभावतया,तत स्वालम्बनात्, तद्बोधोपपत्त —विवक्षितालम्बनबोधोपपत्ते, अन्यथा तदुत्तरक्षणवत् ततो भावेऽपि अबोधरूपतैवेति हृदयम्। न चेत्यादि। न च मूककल्पत्वात् केवलायास्तदाकारोत्पत्तेरिति प्रक्रम, नेति-न निश्चयरूपता। कुत इत्याह—बोधस्याऽनिश्चयत्वविरोधात्,बोधो निश्चयोऽवगम इति तुल्यार्था। न चेत्यादि। न चाऽस्पष्टतया कारणेन, नेति-न निश्चयरूपता, केवलायास्तदाकारोत्पत्तेरिति प्रक्रम। कुत इत्याह—तस्या —तदाकारोत्पत्ते, स्पष्टताऽभ्युपगमादिति।

यच्चोक्तम्—" तच्च यत्रांऽशे पाश्चात्यं निश्चयं जनयितुं शक्नोति तत्रैव प्रामाण्यमात्मसात्कुरुते "। एतदप्ययुक्तम्, तस्य निरंशत्वाभ्युपगमात्, अन्यथा परसिद्धान्तापत्तिः। व्यावृत्तयोंऽशा इति चेत्। न। तासां परमार्थतस्तदव्यतिरिक्तत्वेन तन्मात्ररूपत्वात्, तस्यैव त्रैलोक्यव्यावृत्त्येकस्वभावत्वादिति। कथं च निश्चयस्य विकल्पात्मकत्वात् तत्त्वतो निर्विषयत्वात् तद्विषयता युक्ता ?, येनोच्यते " यत्रांशे पाश्चात्यं निश्चयं जनयितुं शक्नोति " इति। स ततो भवतीति तन्निश्चय इति चेत्। न। अतिप्रसङ्गात् नीलादि पश्यतः क्वचित् भिन्नजातीयविकल्पाभ्युपगमात्, तस्य च ततो भावात्, अन्यथा अहेतुकत्वापत्तेः। संवादको निश्चय इति चेत्। न। अप्राप्यदेशगतजलादिनिश्चयेन व्यभिचारात्। न च संवादनशक्तिरेव सवादनमित्यदुष्टम्, शक्तेरप्रत्यक्षत्वात् कार्यमन्तरेण तद्भावानवगतेः, न च ततोऽनन्या शक्तिरिति तदवगमेव तदवगतिः, तदाभासतोऽप्रवृत्तिप्रसङ्गात् तच्छक्त्यवगमापत्तेः, न च तदाभासत्वतो न तच्छक्त्यवगमः, तनाऽपि आत्मवेदनात् तस्याश्च तदनन्यत्वात्, न च सम्यग् निश्चयशक्तेरेवाऽवगतिरिति युक्तम्, तत्त्वतो वचनमात्रत्वात् तथाप्रतीत्यभावात्, इति। एवं च तत्रैव प्रामाण्यमात्मसात्कुरुत इति वचनमात्रम्।

यच्चोक्तं पूर्वपक्षग्रन्थे एव-'तच्च यत्रांशे पाश्चात्यं निश्चयं जनयितु शक्नोति तत्रैव प्रामाण्यमात्मसात्कुरुत '। एतदप्ययुक्तम्। कुत इत्याह-तस्य प्रक्रमात् प्रमेयवस्तुनः, निरंशत्वाऽभ्युपगमात्, अन्यथा एवमनभ्युपगमे, परसिद्धान्तापत्तिस्ततसांशतापत्त्या इत्यर्थः। व्यावृत्तयोंऽशा इति चेत्, तथाहि-त्रैलोक्यव्यावृत्त तदिति। एतदाशङ्क्याह-न। तासां व्यावृत्तीनाम्, परमार्थतस्तदव्यतिरिक्तत्वेन—वस्त्वव्यतिरिक्तत्वेन हेतुना, तन्मात्ररूपत्वाद्—वस्तुमात्ररूपत्वात्। एतदेव स्पष्टयन्नाह-तस्यैव वस्तुन, त्रैलोक्यव्यावृत्तिरेव एकः स्वभावो यस्य तत् तथेति विग्रहस्तद्भावस्तस्मादिति। दोषान्तरमाह—कथञ्चेत्यादिना। कथं च निश्चयस्य विकल्पात्मकत्वात् कारणात्, तत्त्वत -परमार्थेन निर्विषयत्वात्, तद्विषयता-वस्तुविषयता युक्ता, येनोच्यते 'यत्रांशे पाश्चात्यं निश्चयं जनयितुं शक्नोति " इति, नहि एतद्-अतद्विषयत्वे चारु। स तत इत्यादि। स-निश्चय, ततो वस्तुन भवतीति कृत्वा तन्निश्चयो-वस्तुनिश्चय इति चेत्। एतदाशङ्क्याह-न। अतिप्रसङ्गात्। एतमेवाह-नीलादि पश्यत प्रबन्धेन क्वचिद् अर्थान्तरावगमे, भिन्नजातीयविकल्पाभ्युपगमात्—स्मार्त्तपीतादिविकल्पाभ्युपगमात्, तस्य च विकल्पस्य, ततो नीलादिदर्शनाद् भावात्। अन्यथा एवमनभ्युपगमे, अहेतुकत्वापत्तेस्तस्याऽनिप्रसङ्ग इति। निश्चयमेवाऽधिकृत्य, प्रकारान्तरमाह-संवादको निश्चय इति चेत। एतदाशङ्क्याह-न। अप्राप्यदेशगतजलादिनिश्चयेन व्यभिचारात्, स हि निश्चयोऽसंवादकश्च। न च संवादनशक्तिरेव संवादनमित्यदुष्टम्, किं तु दुष्टमेव। कुत इत्याह-शक्तेरप्रत्यक्षत्वात्। यदि नामैवं तत किमित्याह-कार्यमन्तरेण संवादनादिरूपम्, तद्भावानवगते —शक्तिभावानवगते। न चेत्यादि। न च ततो निश्चयात्, अनन्या शक्तिरिति कृत्वा तदवगतावेव-निश्चयावगतावेव,तदवगति -शक्त्यवगति। कुत इत्याह-तदाभासतो-निश्चयाभासत। किमित्याह-अप्रवृत्तिप्रसङ्गात्। प्रसङ्गश्च-तच्छक्त्यवगमापत्ते —तदाभासशक्त्यवगमापत्त। न चेत्यादि। न च तदाभासत्वत कारणात्, न तच्छक्त्यवगमो-न तदाभासशक्त्यवगम, किन्तु अवगम एव। कुत इत्याह-तेनाऽपि तदाभासेन, आत्मवेदनात् कारणात्। यदि नामैवं तत किमित्याह-तस्याश्च तदाभासशक्ते, तदनन्यत्वात्-तदाभासाऽनन्यत्वात्। न चेत्यादि। न च सम्यग् निश्चयशक्तेरेवाऽवगतिरिति युक्तम्। कुत इत्याह-तत्त्वतो वचनमात्रत्वाद्, वचनमात्रत्वं च तथा सम्यग् निश्चयशक्त्यवगमरूपेण प्रतीत्यभावादिति। एव च यथोक्तनीत्या, तत्रैव प्रामाण्यमात्मसात्कुरुते इति वचनमात्रं निरर्थकमित्यर्थ।

इतश्च वचनमात्रम्—"यत्र तु भ्रान्तिकारणसद्भावाद् अशक्त तत्र प्रमाणान्तरं व्याप्रियते" इत्याद्युपन्यासात्। तथाहि यदि तत्क्वचिद् अशक्तं पाश्चात्यं निश्चयं जनयितुमेवं तर्हि अशक्तमेव, सर्वथैकत्वात् एकस्य चैकस्वभावत्वेन शक्तत्वाऽ-

शक्तत्वविरोधात्, कथञ्चिद् अविरोधेऽप्यभ्युपगमविरोधात्, भिन्नांशविषयनिश्चयभावाभावयोस्तु न तस्य किञ्चिद् इति कथं क्वचिद् प्रामाण्यमात्मसात्कुरुत इति ?। नैवं समारोपव्यवच्छेदार्थमपि प्रमाणान्तरप्रवृत्तिः, न्यायतः समारोपस्यैवाऽयोगात्, सजातीयेतरविविक्तैकस्वभावस्य वस्तुन इन्द्रियज्ञाने प्रतिभासनात्, रूपादिनिश्चयज्ञानवत् तन्निबन्धननिश्चयज्ञानानां तमन्तरेणैव प्रवृत्तिसम्भवात्। तथाहि-यद् रूपादिदर्शनानन्तरमलिङ्गं निश्चयज्ञानं भवति तत्कथमसति समारोपे भवत् तद्व्यवच्छेदविषयम् ?।

इतश्च वचनमात्रम्—" यत्र तु भ्रान्तिकारणसद्भावाद् अशक्त तत्र प्रमाणान्तरं व्याप्रियते " इत्याद्युपन्यासात् पूर्वपक्षग्रन्थ एव। इहैव भावनार्थमाह-तथाहीत्यादिना। तथाहि—यदि तत् प्रक्रमाद् अविकल्पम्, क्वचिदशक्तं पाश्चात्यं निश्चयं जनयितुम्, एवं तर्हि अशक्तमेव एकान्तेन। कुत इत्याह—सर्वथैकत्वात् कारणात्, एकस्य च वस्तुन, एकस्वभावत्वेन हेतुना, शक्तत्वाऽशक्तत्वविरोधात्। तथाहि-एकमेकस्वभाव यदि शक्तं शक्तमेव, अथाऽशक्तमशक्तमेवेति भावनीयम्। कथञ्चिद् अविरोधेऽपि निमित्तभेदेन शक्तत्वाऽशक्तत्वस्य, अभ्युपगमविरोधाद् अनेकान्तवादापत्त्या। अथ भिन्ना अस्याऽशा इति। एतद् व्यपोहायाऽऽह—भिन्नांशेत्यादि। भिन्नौ च तौ प्रत्यक्षादिति प्रक्रम, अंशौ च भिन्नांशौ, तौ विषयौ ययोस्तौ भिन्नांशविषयौ भिन्नांशविषयौ च तौ निश्चयौ चेति विग्रह, तयोर्भावाऽभावौ, तयो, पुनर्न तस्य प्रत्यक्षस्य, किञ्चिद् इति एवम्, कथ क्वचित् प्रामाण्यमात्मसात्कुरुत-इति। नैवमित्यादि। नैवम्-उक्तेन प्रकारेण, समारोपव्यवच्छेदार्थमपि प्रमाणान्तरप्रवृत्तिः। कुत इत्याह—न्यायतो-न्यायेन, समारोपस्यैव अयोगात्, अयोगश्च सजातीयेतरविविक्तैकस्वभावस्य वस्तुन इन्द्रियज्ञाने प्रतिभासनात् कारणात्, रूपादिनिश्चयज्ञानवदिति निदर्शनम्। तन्निबन्धननिश्चयज्ञानानाम्-अधिकृतवस्तुनिबन्धननिश्चयज्ञानानाम्, तमन्तरेण-समारोपमन्तरेणैव, प्रवृत्तिसंभवात् कारणात्, न समारोपव्यवच्छेदार्थमपि प्रमाणान्तरप्रवृत्ति, अनित्यत्वादेनिश्चयानामपि सामारोपव्यवच्छेदमन्तरेणैव भावप्रसङ्गादित्यर्थ। अधिकृतार्थभावनायैवाऽऽह—तथाहीत्यादि। तथाहि इति—उपप्रदर्शने। यद् रूपादिदर्शनाऽनन्तरम्-अव्यवधानेन, अलिङ्गम्-लिङ्गराहतम्, निश्चयज्ञानं भवति प्रक्रमाद् रूपादिविषयमेव, तत्कथमसति समारोप अरूपादिविषये भवद्—उत्पद्यमानम्, तद्व्यवच्छेदविषय—समारोपव्यवच्छेदविषयम्, नैव समारोपाभावेन तद्व्यवच्छेदाऽयोगादिति।

स्यादेतद्, असमारोपविषये भावात् तद्व्यवच्छेदविषयम्, यत्र हि अस्य समारोपो भवति यथा स्थिरः सात्मक इति वा, न तत्र निश्चयो भवति, तद्विविक एव चान्यापोह इति तदपि तन्मात्राऽपोहगोचरमेव, न वस्तुस्वभावनिश्चयात्मकमिति। एतदपि यत्किञ्चित्, वाङ्मात्रत्वात्।

स्यादेतद् असमारोपविषये भावात् तद्व्यवच्छेदविषयमिति-समारोपस्य विषय. समारोपविषय न समारोपविषयोऽसमारोपविषय तस्मिन् समारोपशून्य इत्यर्थ. भावाद्-उत्पत्ते कारणाद् अधिकृतनिश्चयज्ञानस्य, तद्व्यवच्छेदविषयमिति। एतद्भावनायैवाह—यत्र पदार्थे, 'हि'शब्दोऽवधारणे, अस्य पुरुषस्य, समारोपो भवति, यथा स्थिरः सात्मक इति वाय पदार्थ। न तत्र निश्चयो भवति अनित्यत्वादिनिश्चयस्तद्याथात्म्यविषय, तद्विवेक एव च—समारोपविवेक एव च, अन्यापोह तद्व्यवच्छेद, इति—एवम्, तदपि अधिकृतनिश्चयज्ञानम्, तन्मात्रापोहगोचरमेव, समारोपापोहमात्रगोचरमित्यर्थ। न वस्तुस्वभावनिश्चयात्मक—न स्वलक्षणनिश्चायकमिति योऽर्थ। एव पूर्वपक्षमाशङ्क्याह—एतदपि यत् किञ्चिद्-असारम्, कुत इत्याह-वाङ्मात्रत्वात, वाच्याऽर्थशून्यत्वात्।

यत्तावदुक्तम्-"असमारोपविषये भावाद्" इत्यत्र समारोपाभावेऽस्य वृत्तिरुक्ता, अयं च समारोपाभावो यदि प्रसज्ज्यप्रतिषेधरूपः, न क्वजिदस्य वृत्तिस्तस्य तुच्छत्वात्, तत्त्वत इत्थमेव इदमिति चेत् कथमतुच्छप्रतिभासं रूपादिनिश्चयज्ञानम् ?, तुच्छप्रतिभासमेव तद इति चेत्, अनुभवविरोधः—रूपादिप्रतिभासस्य वेद्यमानत्वात्, अन्यथा तदनाकारत्वेन वेदनाऽयोगादिति। अथ पर्युदासरूपः, कथं न वस्तुस्वभावनिश्चयात्मकं तत् ?, तत्रैव प्रवृत्तेर्न तत् तदा इति चेत्, कथमसमारोपविषयेऽस्य भावः?, अयमस्यैव आत्मा न त्वन्य इति चेत्, स्वात्मन एव तदितरविकलस्य तत्त्वकल्पनायामतिप्रसङ्गः—स्वलक्षणज्ञानस्याऽपि तत्त्वेन तद्भावापत्तेरिति।

एतदेव दर्शयति-यत्तावदुक्तमित्यादिना। तत्र यत्तावदुक्तम्-पूर्वपक्षग्रन्थे " असमारोपविषये भावाद् " इत्यत्र ग्रन्थे, समारोपाभावे अस्य निश्चयस्य वृत्तिरुक्ता, एतद् ऐदंपर्यम्। यदि नामैव तत किमित्याऽऽह—अयं च समारोपाऽभावो यदि प्रसज्ज्यप्रतिषेधरूप समारोऽपाभवनमात्रलक्षण। तत किमित्याह-न क्वचित् अस्य निश्चयस्य, वृत्ति। कुत इत्याह-तस्य प्रसज्ज्यप्रतिषेधरूपस्य समारोपाऽभावस्य, तुच्छत्वात्—असत्त्वादित्यर्थ। तत्त्वत इत्यादि। तत्त्वत -परमार्थेन, इत्थमेवेद न क्वचित् अस्य वृत्ति, इति चेत्। एतदाशङ्क्याह—कथमतुच्छप्रतिभासं रूपादिवस्त्वाऽऽकार रूपादिनिश्चयज्ञानम् ?। तुच्छेत्यादि। तुच्छप्रतिभासमेव, तत्-रूपादिनिश्चयज्ञानम्, इति चेत्। एतदाशङ्क्याह-अनुभवविरोध। एव कथमित्याह—रूपादिप्रतिभासस्य—रूपादिनिश्चयज्ञान वेद्यमानत्वात्, अन्यथा एवमनभ्युपगमे, तस्य-रूपादिनिश्चयज्ञानस्य, अनाकारत्वेन हेतुना। किमित्याह—वेदनाऽयोगाद्, नहि अनाकारस्य वेदनम् ?, इति भावनीयम्। एवं प्रसज्ज्यपक्षे दोषम-

भिधाय पक्षान्तरे दोषमभिधातुमाह—अथ पर्युदासरूपः प्रस्तुतः समारोपाभाव। एतदाशङ्क्याह—कथं न वस्तुस्वभावनिश्चयात्मकं तद् रूपादिनिश्चयज्ञानम् ?, तत्रैव-रूपादावेव प्रवृत्ते, न तद् रूपादि, तदा निश्चयज्ञानकाले-इति चेत्। एतदाशङ्क्याह—कथमसमारोपविषये-समारोपाभावे पर्युदासात्मके, अस्य-रूपादिनिश्चयज्ञानस्य, भावः ?। अयमित्यादि। अयम्-असमारोपविषयः, अस्यैव अधिकृतनिश्चयज्ञानस्य आत्मा, न तु अन्यो-व्यतिरिक्तः, इति चेत्। एतदाशङ्क्याह—स्वात्मन एव ज्ञानसम्बन्धिनः, तदितरविकल्पस्य-विषयविकल्पस्य, तत्त्वकल्पनायां-विषयत्वकल्पनायाम्, उक्तनीत्या। किमित्याह—अतिप्रसङ्गः। कथमित्याह—स्वलक्षणज्ञानस्याऽपि तत्त्वेन तदितरविकलत्वेन हेतुना, तद्भावापत्तेः-असमारोपविषयभावापत्तेः-निश्चयज्ञानत्वापत्तेरित्यर्थः।

यच्चोक्तम्-"यत्र हि अस्य समारोपो भवति यथा स्थिरः सात्मक इति वा, न तत्र निश्चयो भवति" एतदप्ययुक्तम्, परमार्थेन तस्याऽस्थिरानात्मकस्यैव ग्रहणात् तत्र रूपादाविव समारोपप्रवृत्त्ययोगात्। स्यादेतत्, नहि तथा गृहीतोऽपि भावस्तथैव प्रत्यभिज्ञायते, क्वचिद्भेदे व्यवधानसंभवात् यथा शुक्तेः शुक्तित्वे। यत्र तु प्रतिपत्तुर्भ्रान्तिनिमित्तं नास्ति तत्रैव अस्य दर्शनाऽविशेषेऽपि स्मार्त्तो निश्चयो भवति, समारोपनिश्चययोर्बाध्यबाधकभावाद् इति। एतदप्यसत्, निरंशे तथा गृहीते क्वचिद् व्यवधानं क्वचित् न इत्यपन्यायत्वात् भेदाभावेन तत्त्वत एकनिश्चयज्ञानप्रसङ्गात्, न खलु रूपे एव तदेकस्वभावनिबन्धनानि भूयांसि निश्चयज्ञानानि।

यच्चोक्तम्—अधिकृतपूर्वपक्षग्रन्थे—"यत्र हि अस्य समारोपो भवति यथा स्थिरः सात्मक इति वा, न तत्र निश्चयो भवति" एतदपि अयुक्तम्। कथमित्याह—परमार्थेन-वस्तुस्थित्या, तस्य पदार्थस्य, अस्थिराऽनात्मकस्यैव ग्रहणाद्, नान्यत् तस्य रूपमिति कृत्वा। ततः किमित्याह—तत्र अस्थिरत्वादौ, रूपादाविव समारोपप्रवृत्त्ययोगाद्, नहि रूपे रूपतया गृहीते समारोपः। स्यादेतदित्यादि। स्यादेतद्, नहि तथा स्वरूपेण, गृहीतोऽपि भावः पदार्थः तथैव प्रत्यभिज्ञायते-निश्चयज्ञानेन गम्यते। कथमित्याह—क्वचिद् भेदे भावविशेषे, व्यवधानसंभवात् प्रत्यभिज्ञानस्य समारोपेण इति भावः। निदर्शनमाह—यथा शुक्तेः—शुक्तिकद्रव्यस्य, शुक्तित्वे व्यवधानसंभवः प्रत्यभिज्ञानं प्रति रजतसमारोपेण, यत्र तु भावभेदे पदार्थे, प्रतिपत्तुः पुरुषस्य, भ्रान्तिनिमित्तं सादृश्यं नास्ति, तत्रैव-भावभेदे, अस्य-पुरुषस्य, दर्शनाऽविशेषेऽपि—उभयत्र यत् तत्त्व तद् दृश्यते इति दर्शनाऽविशेषस्तस्मिन्नपि सति, स्मार्तो निश्चयो भवतीति गृहीतग्राही। किमेतदेवमित्याह—समारोपनिश्चययोर्बाध्यबाधकभावात्, समारोपो बाध्यः, निश्चयो बाधक इति। पूर्वपक्षमाशङ्क्याह—एतदपि-अनन्तरोदितम्, असद्-अशोभनम्। कुत इत्याह—निरंश इत्यादि। निरंशे वस्तुनि, तथा निरंशतया गृहीते, क्वचिद् व्यवधानं क्वचिद् न इति अपन्यायत्वाद्; एतद् अपि असत्, अपन्यायत्वं च भेदाऽभावेन हेतुना निरंशत्वेन, तत्त्वतः-परमार्थेन, एकनिश्चयज्ञानप्रसङ्गात् निबन्धनैकत्वेन। एतद्भावनायैवाह—न खल्वित्यादि। न खलु-नैव, रूपे एव आलम्बने, तदेकस्वभावनिबन्धनानि तद् रूपमेव एकः स्वभावो निबन्धनं येषां तानि तथा, भूयांसि-प्रभूतानि, प्रक्रमाद् जातिभेदमाधिकृत्य निश्चयज्ञानानि रूपरसादिलक्षणानि, किं तर्हि प्रभूतानि अपि व्यक्तिभेदाऽपेक्षया रूपज्ञानानि एव ?, एवं भेदाऽभावेन तत्त्वतः एकनिश्चयज्ञानप्रसङ्ग।

दूषणान्तरमाह—

किंच-असौ भावः स्वप्रत्यभिज्ञानजनने व्यवधानसम्भवस्वभावो वा स्याद्, न वा ?, उभयथाऽपि क्वचिद् भेदे व्यवधानसंभावाद्, इत्यपि अयुक्तम्, यथाक्रमं सर्वत्रैव तत्सम्भवाऽसम्भवापत्तेः, अन्यथा एकस्वभावत्वविरोधात् अतन्निबन्धनत्वे च निश्चयानां न तेभ्यस्तत्तत्त्वव्यवस्था, इत्यफला तत्कल्पना, एवं च "यथा शुक्तेः शुक्तित्वे" इत्यनुदाहरणमेव, भवन्नीत्या तदयोगात् शुक्तिकाया अपि अक्षज्ञानेन नीलादिवत् तत्त्वेनैव ग्रहणात्।

किंच, असौ भावः-पदार्थः, स्वप्रत्यभिज्ञानजनने-स्वनिश्चयज्ञानजनने, व्यवधानसंभवस्वभावो वा स्याद् न वा ?, इति द्वयी गतिः। उभयथाऽपि पक्षद्वयेऽपि क्वचिद् भेदे व्यवधानसंभावाद् इति अयुक्तम्। कुत इत्याह—यथाक्रमम्-यथासंख्यम्, सर्वत्रैव क्वचिद् इत्येतद् व्युदासेन सर्वत्रैव वस्तुनि, तत्संभवाऽसंभवापत्तेः—तस्य व्यवधानस्य, संभवश्चासंभवश्च तत्संभवासंभवौ, तयोरापत्तिः, ततः एतदुक्तं भवति—यदि असौ भावः स्वप्रत्यभिज्ञानजनने व्यवधानसंभवस्वभावस्ततस्तत् संभवत्येव सर्वत्र व्यवधानम्, न चेद्, न संभवत्येव इति हृदयम्। इत्थं चैतदङ्गीकर्तव्यमित्याह-अन्यथा एकस्वभावत्वविरोधात्, एकस्वभावो हि स्वप्रत्यभिज्ञानजनने व्यवधानसंभवैकस्वभावः, तदसंभवैकस्वभावो वा, अन्यथा तच्चित्रस्वभावता एव इति भावनीयम्। अतन्निबन्धनत्वे च—विवक्षितभावानिबन्धनत्वे च निश्चयानाम्। किमित्याह—न तेभ्यो निश्चयेभ्यः, तत्तत्त्वव्यवस्था-विवक्षितभावतद्भावव्यवस्था, इति एवम् अफला-निष्प्रयोजना, तत्कल्पना-प्रक्रमाद् व्यवधानसंभवकल्पना, एवं च सति "यथा शुक्तेः शुक्तित्वे" इत्यनुदाहरणमेव। कथमित्याह—भवन्नीत्या-त्वद्दर्शनाऽनुसारेण, तदयोगात्-प्रक्रमाद् व्यवधानसंभवायोगात्, अयोगश्च शुक्तिकाया अपि अक्षज्ञानेन—इन्द्रियज्ञानेन, नीलादिवद् इति निदर्शनम्, तत्त्वेन एव—शुक्तिकात्वेन एव ग्रहणात्।

इत्थमेव इदमिति चेत्, कथं व्यवधानसम्भवः ?, ततस्तन्निश्चयानुत्पत्तेरिति चेत्, सैव तावत्किमिति चिन्त्यम् ?, निश्चयान्तरोत्पादाद् इति चेत्, कथमनुभवान्तराद् निश्चयान्तरोत्पादः ?, तत्-तत्स्वभावत्वाद् इति चेत्, अनु-

भवान्तरवद् न तस्य तत्त्वम्, तत्त्वे वा ततस्तदुत्पादे व्यवहारानियमोच्छेदः, एवं हि नीलाऽनुभवजन्योऽपि तन्निश्चयः पीताद्यनुभवस्य तत्स्वभावतया तज्जन्योऽपि सम्भाव्यत एव। एवमन्यत्राऽपि इति न न्यायविदस्ततो व्यवहारे नियमतः प्रवृत्तिर्युक्ता सर्वत्राऽऽशङ्कानिवृत्तेरिति, न अनिवृत्तिः सर्वत्र बीजाभावाद् वैधर्म्येण साधर्म्याऽसिद्धेः, साधर्म्याच्च समारोप इति।

इत्थमेव इदमिति चेत्। तत्त्वेनैव ग्रहणमित्यर्थः। एतदाशङ्क्याह—कथ व्यवधानसंभव ?; नहि तस्य व्यवधानजनकत्वमित्यर्थ। तत शुक्तिकाज्ञानाद् इन्द्रियजात्, तन्निश्चयाऽनुत्पत्ते -शुक्तिकानिश्चयाऽनुत्पत्ते, व्यवधानसंभव इति चेत्। एतदाशङ्क्याह—सैव तावद् निश्चयाऽनुत्पत्ति, किं केन कारणेन ?, इति चिन्त्यम्, निश्चयान्तरोत्पादाद्-रजतनिश्चयोत्पादात् इति चेत्, तन्निश्चयाऽनुत्पत्ति। एतदाशङ्क्याह-कथमनुभवान्तरात्, शुक्तिकानुभवरूपात् निश्चयान्तरोत्पादो रजतनिश्चयोत्पादः ?, तस्य शुक्तिकाऽनुभवस्य, तत्स्वभावत्वाद्—रजतनिश्चयोत्पादनस्वभावत्वात्, इति चेत्। एतदाशङ्क्याह—अनुभवान्तरवद्—रजतानुभववद् इत्यर्थ, न तस्य—शुक्तिकाऽनुभवस्य, तत्त्वं—शुक्तिकानुभवतत्त्वम्, तत्त्वे वा—शुक्तिकाऽनुभवतत्त्वे वा, तत शुक्तिकाऽनुभवात्, तदुत्पादे—निश्चयान्तरोत्पादे। किमित्याह—व्यवहारानियमोच्छेद। एतमेव भावयन्नाह—एवं हीत्यादि। एवं यस्मात्, नीलानुभवजन्योऽपि तन्निश्चयो—नीलनिश्चय पीताद्यनुभवस्य, तत्स्वभावतया नीलनिश्चयजननस्वभावतया, तज्जन्योऽपि-पीताद्यनुभवजन्योऽपि सम्भाव्यत एव, विजातीयशुक्तिकाऽनुभवाद्—विजातीयरजतनिश्चयोपपत्ते, एवमन्यत्रापि रक्तादिनिश्चये, इति एवम्, न न्यायविद पुरुषस्य, ततो निश्चयात्, व्यवहारे प्रस्तुते, नियमतो-नियमेन, प्रवृत्तिर्युक्ता। कुतो न युक्ता इत्याह-सर्वत्र विकल्पे, उत्थापकं प्रति आशङ्कानिवृत्ते कारणात्, न अनिवृत्तिराशङ्काया इति प्रक्रम। कुत इत्याह—सर्वत्र बीजाभावात् आशङ्काबीजाभावात्, किन्तु निवृत्तिरेव। प्रस्तुतमेवाऽऽह—वैधर्म्येण हेतुना, साधर्म्यासिद्धे सर्वत्र। यदि नामैव तत किमित्याह—साधर्म्याच्च-समारोप इति। अस्ति च शुक्तिका-रजतयो तद् इत्यभिप्राय।

यद्येवम्, स्थिरेतरादीनां किं साधर्म्यम् ?, क्व वा तेषां ग्रहणम् ?, येन अस्थिरादिषु तत्समारोपः। सदृशाऽपराऽपरोत्पत्तिविप्रलम्भात् अयमिति चेत्, किमिदं सजातीयेतरविविक्तैकस्वभावानां भावानां सादृश्यम् ?, कथं वा सदपि एतत् तदेकग्राहिणा ज्ञानेन गम्यते ?। तेषामेव तत्स्वभावतया तथा ग्रहणेन इति चेत्। आकालं तदेकग्रहणे कुतोऽयं नभस आस्रवादः ?, अनेकभिन्नकालभावग्रहणे च एकेन अपैति क्षणिकता। तथाविधभावाऽनुभवसामर्थ्यजनिश्चयात् तदवगम्यत इति चेत्, न युक्तमस्य इमामक्रमागतामवगमश्रियं प्रतिपत्तुम्, तत्पूर्वक्षणानां च न्यायतस्तद्बीजाभाव उक्तः। तथानुभवसिद्धत्वात् सर्वं भद्रकमिति चेत्, न खलु अनुभव इत्येव तत्त्वव्यवस्थाहेतुः, न्यायबाधितस्य तदनुपपत्तेः, अस्य च उक्तवत् न्यायबाधितत्वात्, क्षणिकत्वेन तथाऽसम्भवाच्च। एतेन "यत्र तु प्रतिपत्तुर्भ्रान्तिनिमित्तं नास्ति तत्रैव अस्य दर्शनाविशेषेऽपि पाश्चात्यो निश्चयो भवति समारोप-निश्चययोर्बाध्यबाधकभावात्" इति यदुक्तम्, तदपि प्रत्युक्तमेव, सर्वथैकस्वभावत्वे वस्तुनो दर्शने चेत्थमभिधानाऽयोगात्, एकत्र भ्रान्तिनिमित्तसम्भवे सर्वत्र तदापत्तेः तत्तदेकस्वभावत्वतत्त्वात्, अन्यथा यत्र भ्रान्तिनिमित्तं न यत्र च अस्ति, अनयोः कथञ्चिद्भेद इति बलात् तदनेकस्वभावता, शुक्तिकादावपि तन्नियमाऽभावाच्च, अतन्निबन्धनत्वे च निश्चयानां न तेभ्यस्तत्तत्त्वव्यवस्था इत्युक्तम्।

एतदाशङ्क्याह—यद्येवम्, स्थिरेतरादीना-नित्याऽनित्यादीनाम् 'किं साधर्म्यम् ?, लक्षणभेदाद् न किञ्चिद् इत्यर्थ। क्व वा तेषा ग्रहणम् ?, नित्यानामभावेन तदयोगात्, येनाऽस्थिरादिषु भावेषु आदिशब्दाद्-अनात्मादिग्रह, तत्समारोपो-नित्याऽऽत्मादिसमारोप, सदृशाऽपराऽपरोत्पत्तिप्रलम्भात् कारणात्, अयमिति-आत्मादिसमारोप, इति चेत्। एतदाशङ्क्याह—किमिद सजातीयेतरविविक्तैकस्वभावानां भावानाम्—अत्यन्तविलक्षणानामित्यर्थ, सादृश्यम् ?, न किञ्चित्। कथं वा सद् अपि एतत् सादृश्यम्, तदेकग्राहिणा तेषा भावानामेकग्रहणशीलं तदेकग्राहि तेन ज्ञानेन गम्यते ?, तदनेकग्रहणनान्तरीयकत्वात् तदवगमस्य न गम्यते इत्यर्थ। तेषामेवेत्यादि। तेषामेव भावानाम्, तत्स्वभावतया-सदृशस्वभावतया तथाग्रहणेन-सदृशग्रहणेन, इति चेद् गम्यते। एतदाशङ्क्याह—आकाल यावदपि कालस्तावदपि—सर्वकालमित्यर्थ', एकग्रहणे सति कुतोऽयं "तेषामेव तत्स्वभावतया" इत्यादिलक्षण, नभस -आकाशात् आस्रवाद ?, अनेकभिन्नकालभावग्रहणे च एकेन प्रक्रमाद् ज्ञानेन। किमित्याह—अपैति क्षणिकता भावानामिति। तथाविधेत्यादि। तथाविधभावानुभवसामर्थ्यजनिश्चयात्—संतानप्रवृत्तान्त्यक्षणभावानुभववीर्योत्पन्ननिश्चयाद् इति भाव, तत्-सादृश्यम्, अवगम्यते इति चेत्। एतदाशङ्क्याह—न युक्तमस्य निश्चयस्य, इमामक्रमाऽऽगतामन्वयाभावेन, अवगमश्रियं पदार्थतया विसदृशबोधरूपा प्रतिपत्तुम्, यदाह कश्चित्—"असत्सङ्गाद् दैन्यात् प्रस्खलन्निरितैर्वा बहुविधैः-रसद्भूतैर्भूतिर्यदि भवति भूतेरभवनि। सहिष्णो सद्बुद्धे परहितरतस्योन्नतिमत, परा भूषा पुंसः स्वविधिविहितं वल्कलमपि ॥१॥" स्वविधिश्च क्षणिकस्य परतो निरपेक्षिता इति भावनीयम्। तत्पूर्वक्षणाना च—विवक्षितक्षणभावानुभवपूर्वक्षणाना च, न्यायतो-न्यायेन, निरन्वयनश्वरतया, तद्बीजाभावो-विवक्षितक्षणबीजाभाव, उक्त प्राग् 'नित्यानित्यवस्तुनिरूपणाधिकारे एकान्त' इत्यादिना ग्रन्थेन। तथेत्यादि। तथाऽनुभवसिद्धत्वात्-सदृशत्वेनानुभवसिद्धत्वात् कारणात्, स-

र्वमसदुक्तम् , भद्रकमिति चेत् । एतदाशङ्कयाह—न खलु-नैव, अनुभव इत्येव एतावता अंशेन, तत्त्वव्यवस्थाहेतु । कथं न ?, इत्याह—न्यायबाधितस्य अनुभवस्य, तदनुपपत्तेः-तत्त्वव्यवस्थाहेतुत्वानुपपत्ते. , नीत्या द्विचन्द्रानुभवादौ तथाऽभ्युपगमादिति । यदि नामैवं ततः किमित्याह—अस्य च प्रक्रान्तसदृशानुभवस्य उक्तवद् यथोक्तं तथा न्यायबाधितत्वात् , क्षणिकत्वेन हेतुना, तथा पदार्थबोधानुभवरूपेणासम्भवाच्च . तथाहि—निश्चयानुभवोऽपि क्षणिक एव इति भावना । एतेन इत्यादि । एतेन-अनन्तरोदितेन वस्तुजातेन, "यत्र-तु प्रतिपत्तुर्भ्रान्तिनिमित्तं नास्ति तत्रैव अस्य दर्शनाविशेषेऽपि पाश्चात्यो निश्चयो भवति , समारोप—निश्चययोर्बाध्यबाधकभावाद्" इति यदुक्तम् । तत् किमित्याह—तदपि प्रत्युक्तमेव । कथमित्याह—सर्वथैकस्वभावत्वे वस्तुनो बाह्यस्य दर्शने च तस्य इत्थं यथोक्तं तथा अभिधानाऽयोगात् , अयोगश्च एकत्र वस्तुनि. भ्रान्तिनिमित्तसम्भवे सति, सर्वत्र तदापत्तेः—भ्रान्तिनिमित्तसम्भवापत्ते', आपत्तिश्च तत्तदेकस्वभावत्वतत्त्वात्-तस्य वस्तुनो भ्रान्तिनिमित्तसम्भवैकस्वभावत्वरूपत्वात् । अन्यथेत्यादि । अन्यथा-एवमनभ्युपगमे,-यत्र वस्तुनि भ्रान्तिनिमित्तम् , न घटपटादौ,यत्र च अस्ति शुक्तिकारजतादौ; अनयोः-वस्तुनो , कथञ्चित् स्वभावभेद , वस्त्वभेदेऽपि स्वसत्ताभेद , इति-एवम् , बलात् तदनेकस्वभावता; तस्य-वस्तुन , सामान्येनाऽनेकस्वभावता, तदेकान्तैकस्वभावत्वे तु न एतद् उत्पद्यते इति । उपपत्त्यन्तरमाह-शुक्तिकादावपि-शुक्तिकारजतादौ अपि, तन्नियमाऽभावाच्च-प्रक्रमाद् भ्रान्तिनिमित्तसम्भवस्वभावत्वनियमाऽभावाच्च, बलाद् तदनेकस्वभावता इति वर्तते । तथाहि—न शुक्तिकादौ, अपि सर्वस्य समारोप एव कस्यचिद् दर्शनाद् अनन्तरं शुक्तिकानिश्चय , अपरस्य तदा-तत्रैव समारोप इति न एतद् एकान्तैकस्वभावत्वे वस्तुन इति भावनीयम् । अतद्-इत्यादि । तद्-वस्तु, निबन्धनं-कारणम् ,येषा ते तन्निबन्धना न तन्निबन्धना अतन्निबन्धनास्तद्भावस्तस्मिन् , अतन्निबन्धनत्वे च-अवस्तुनिबन्धनत्वे इत्यर्थ. । केषामित्याह-निश्चयानां न तेभ्यो-निश्चयेभ्यः, तत्तत्त्वव्यवस्था-वस्तुनस्तत्त्वव्यवस्था, इति उक्तं प्राक् ।

एवं च यत्र स्वत एव निश्चयः स प्रत्यक्षः, यत्र तु न सोऽनुमेय इति सन्न्यायप्राप्तिः, अन्यथाऽसमञ्जसत्वात् । न चैवं सविकल्पकप्रत्यक्षवादिनोऽपि अनेकस्वभावत्वाद् वस्तुनः क्षयोपशमवैचित्र्येण तथानिश्चयप्रवृत्तौ कश्चिद् दोषः, निरुपचरिततन्निबन्धनभावात् । दृश्यते च कथञ्चिद् एकत्र एव एकाऽनेकप्रमातृपक्षः शब्दलिङ्गाऽध्यक्षैः प्रतीतिभेदः, तथाहि-अत्र निकुञ्जे वह्निरस्तीति शब्दतस्तथाविधदेशमात्रावच्छिन्नमग्निसामान्यं प्रतीयते , धूमदर्शनात् तु विशिष्टदेशावच्छिन्नस्तद्विशेषः , अध्यक्षतस्तु विशिष्टतरो ज्वालादिरित्याऽऽगोपालाङ्गनाप्रसिद्धत्वाद् अत्याज्य एष इति । एवं च सन्न्यायसिद्धे प्रमाणानां वस्तुविषयत्वे यदुक्तं पुरस्तात् "नहि अन्य एव अन्योपकारको नाम" इत्यादि, तदयुक्तमेव । परमार्थतो निर्विषयत्वात् । न च वस्तु अपि तदेकमनेकधर्मोपकारकशक्तिमद् इष्यते जैनैः, एकाऽनेकस्वभावत्वाऽभ्युपगमात् पृथग्भूतधर्म्यसिद्धेः । इति कृतमत्र प्रसङ्गेन ।

एवं च यत्राऽस्य वस्तुज्ञानसंबन्धिनि नीलादौ, स्वत एव निश्चय समारोपव्यवच्छेदमन्तरेण , स प्रत्यक्षोऽर्थ , यत्र तु अनित्यत्वादौ, सोऽनुमेय इति सन्न्यायप्राप्ति । कुत इत्याह—अन्यथाऽसमञ्जसत्वात् इत्येतच्च निदर्शितमसकृत् । यदि नामैवं ततः किमित्याह—न चैवं सविकल्पकप्रत्यक्षवादिनोऽपि वादिन., अनेकस्वभावत्वाद् वस्तुन , क्षयोपशमवैचित्र्येण हेतुना, तथानिश्चयप्रवृत्तौ अनन्तरोदितक्रमेण कश्चिद् दोष , कथं न दोष ? । इत्याह-निरुपचरिततन्निबन्धनभावाद्-वास्तवप्रवृत्तिनिबन्धनभावादित्यर्थ । अमुमेवाऽर्थमुपदर्शयति—दृश्यते चेत्यादिना । दृश्यते च कथञ्चिद् एकत्रैव वस्तुनि, एकाऽनेकप्रमातृपक्ष. शब्दलिङ्गाऽध्यक्षै -आगमानुमानप्रत्यक्षै. प्रतीतिभेद , तथाहि-'अत्र निकुञ्जे वह्निरस्ति' इति शब्दत -शब्दात् तथाविधदेशमात्राऽवच्छिन्नं सद् अग्निसामान्यं प्रतीयते , धूमदर्शनात् तु विशिष्टदेशावच्छिन्नस्तद्विशेष -अग्निविशेष पूर्वसामान्यापेक्षया , अध्यक्षतस्तु प्रत्यक्षेण पुन , विशिष्टतरा ज्वालादिः प्रतीयते इति, आगोपालाङ्गनाप्रसिद्धत्वात् कारणात् , अत्याज्य एष प्रतीतिभेद इति । एवं च सन्न्यायसिद्धे सति, प्रमाणाना-प्रत्यक्षादीनां वस्तुविषयत्वे यदुक्तं पुरस्तात् पूर्वपक्षग्रन्थे—"नहि अन्य एव-अन्योपकारको नाम" इत्यादि । तत् किमित्याह—तदयुक्तमेव परमार्थतो निर्विषयत्वात् तस्य उक्तस्य । न चेत्यादि । न च-वस्त्वपि तद्-एकं सद्-अनेकधर्मोपकारकशक्तिमद् इष्यते वैशेषिकैरिव जैनै । कुत इत्याह—एकानेकस्वभावत्वाभ्युपगमात् कारणात्, पृथग्भूतधर्म्यऽसिद्धे-धर्मधर्मिस्वभावत्वाद् वस्तुन , इति कृतमत्र प्रसङ्गेन ।

यच्चोक्तम्-" समारोपनिश्चययोर्बाध्यबाधकभावाद् " इति, एतदप्ययुक्तम् । परनीत्या समारोपनिश्चययोर्भेदाऽसिद्धेः समारोपस्यापि निश्चयत्वात् , तदभावभावित्वस्य च उभयत्राविशेषात् , पौर्वापर्यस्य च अनियामकत्वात् क्वचित् तस्याऽपि तुल्यत्वात् । अनित्यादिप्रतिपत्तावपि पुनर्नित्यादिनिश्चयोपलब्धेः वस्तुन एव पारम्पर्येण तद्भावाद् , तदन्यतराऽपरनिमित्तत्वे तदितरत्र तन्निमित्तत्वानाश्वासात् , विशेषहेत्वभावात् अनित्यस्यापि अर्थक्रियायोगादिति निर्लोठयिष्यामः ।

यच्चोक्तमधिकृतपूर्वपक्षे—' समारोपनिश्चययोर्बाध्यबाधकभावाद् ". इत्येतदपि अयुक्तम् । कथमित्याह—परनीत्या समारोपनिश्चययोर्भेदासिद्धे , असिद्धिश्च—समारोपस्याऽपि शुक्तिकादौ रजतादिरूपस्य निश्चयत्वात् , तथाहि—शुक्तिकाया रजतनिश्चय एव समारोप , तदभावभावित्वस्य च-शुक्ति-।द्यभावभावित्वस्य चशब्दात्-तदनुभवोपादानत्वस्य च , उभयत्र समारोपे निश्चये चाविशेषात् , नहि

अत्र अन्यत् समारोपस्यापि उपादानम् , अपि तु—अधिकृतानुभव एव पौर्वापर्यस्य च पूर्वे समारोप. पश्चान्निश्चय इत्येवभावस्य च अनियामकत्वाद् भेदं प्रति, तथा क्वचिद् तस्यापि पौर्वापर्यस्य तुल्यत्वात् । एतदेवाह—अनित्यादिप्रतिपत्तावपि सत्या तथागतवचनादे. , पुनर्नित्यादिनिश्चयोपलब्धे. कपिलादिवचनादे: , वस्तुन एव सकाशात् तस्या नित्यादिनिश्चयोपलब्धेः पारम्पर्येण भावात् , तदाश्रयत्वाद् वचनप्रवृत्ते. । यद्वा-वचनमन्तरेणाऽपि स्वत एव क्वचिदेवभावात् , तर्थाहि-–वस्तुनि अनित्यत्वविकल्पोऽपि भवति , नित्यत्वविकल्पोऽपि भवतीति लौकिकमतत् । एवं च सति तदन्यतरापरनिमित्तत्वे तयो --समारोपनिश्चययोरन्यतरस्य-समारोपस्य , अपरनिमित्तत्वे अभ्युपगम्यमाने , तदितरत्र अपि निश्चये, तन्निमित्तत्वानाश्वासात्-अधिकृतवस्तुनिमित्तत्वानाश्वासात् । इह तावद् अनित्यादिप्रतिपत्तिर्वस्तुनिमित्ता इति भवतो मतम् , इहापि अनाश्वासः, तत्तुल्ययोगक्षेमात्रा नित्यादिनिश्चयोपलब्धे. अतन्निमित्तत्वाभ्युपगमाद् इति भाव. । अनाश्वासश्च--विशेषहेत्वभावाद् द्वयोरपि, तथा--तद्दर्शनानन्तरभावित्वेन नित्यस्य सत्ता एव असंभविनी, क्रमयौगपद्याभ्यामर्थक्रियायोगाद् इति । विशेषहेतुनिराचिकीर्षया आह--अनित्यस्यापि निरन्वयक्षणस्थितिधर्मिण , अर्थक्रियाऽयोगाद् इत्येतद् निर्लोठयिष्याम पुरस्ताद् ,अत एतद् अपि अयुक्तमिति स्थितम् ।

किञ्च—समारोपव्यवच्छेदमात्राविशेषाद् अनुमानविकल्पवत् कथं रूपादिविकल्पो न प्रमाणम् ?, समुद्भूतसमारोपव्यवच्छेदेन अभावादिति चेत् । न । क्वचित् तथाऽपि भावदर्शनेन अविरोधात् , शुक्तिकाशकलादौ रजतादिसमारोपव्यवच्छेदेन तद्भावात् , न च-न सोऽपि रूपादिविकल्पः तन्मात्रहेतुत्वात् ,न च तत्त्वत एकस्याऽपि तदितरनाशनेन प्रवृत्तिः , नाशस्य निर्हेतुकत्वाऽभ्युपगमात् तदभाव एव तद्भावोपपत्तेः । लिङ्गलिङ्गिसम्बन्धस्मरणादिनाऽप्रवृत्तेरिति चेत् , कोऽयं गुणे भवतो दोषाभिनिवेशः ?, वस्तुसमारोपाभावेऽस्य उपयोगात् , न च-नाऽसौ रूपादिविकल्पस्याऽपि तदभावे तत्प्रवृत्त्यनुपपत्तेः इति नानयोर्विशेषः । स खलु गृहीतग्राही एव, प्रत्यक्षप्रतिभासिनोऽर्थस्य परामर्शात् , नहि अनुमानविकल्पोऽपि नैवमिति परिभाव्यतामेतत् ।

अभ्युच्चयमाह--किञ्चेत्यादिना । किंच-समारोपव्यवच्छेदमात्राविशेषात् , कारणात् , अनुमानविकल्पवद् इति दृष्टान्त., कथं रूपादिविकल्पो न प्रमाणं प्रमाणलक्षणयोगेऽपि ?। एतदाशङ्क्याह-समुद्भूतसमारोपव्यवच्छेदेन अभावाद् इति चेत् । न हि अयमनुमानविकल्पवत् समुद्भूतसमारोपव्यवच्छेदेन भवति । एतदाशङ्क्याह--न, इत्यादि । न , क्वचिद्-वस्तुनि, तथापि-समुद्भूतसमारोपव्यवच्छेदेनाऽपि भावदर्शनेन-उत्पाददर्शनेन हेतुना, रूपादिविकल्पस्य अविरोधात् प्रमाणत्वस्य । एतदेवाऽऽह-शुक्तिकाशकलादौ-वस्तुनि, रजतादिसमारोपव्यवच्छेदेन तद्भावात्-शुक्तिकादिविकल्पभावात् । नचेत्यादि । न च-न सोऽपि-शुक्तिकाविकल्पो रूपादिविकल्प ,किन्तु रूपादिविकल्प एव । कुत इत्याह-तन्मात्रहेतुत्वाद्-रूपादिमात्रहेतुत्वात् , न च तत्त्वत.-परमार्थेन, एकस्याऽपि-अनुमानविकल्पस्य रूपादिविकल्पस्य वा, तदितरनाशनेन—समुद्भूतसमारोपनाशनन, अञ्जसा प्रवृत्ति. । कुतो न इत्याह—नाशस्य निर्हेतुकत्वाऽभ्युपगमात् तथा तदभावे एव-समारोपाऽभावे एव, तद्भावोपपत्ते'-अनुमानादिविकल्पभावोपपत्ते. । इहैव परिहारान्तरमुपन्यस्यन्नाह—लिङ्गलिङ्गिसम्बन्धस्मरणादिना प्रकारेण, अप्रवृत्ते. कारणाद् इति चेत्, रूपादिविकल्पो न प्रमाणमिति प्रक्रम. । एतदाशङ्क्याह—कोऽयं गुणे भवतो दोषाभिनिवेश' ?, ननु लिङ्गलिङ्गिसम्बन्धस्मरणादिप्रवृत्तिमन्तरेण तद्भवनं गुण. । प्रस्तुतसमर्थनाय आह-वस्तुसमारोपाऽभावे अस्य अनुमानविकल्पस्य उपयोगात् , न च--नासौ रूपादिविकल्पस्यापि वस्तुसमारोपाभावे उपयोग., किन्तु अस्त्येव । कुत इत्याह-तदभावे-वस्तुसमारोपाभावोपयोगाभावे समारोपभावेन, तत्प्रवृत्त्यनुपपत्ते -रूपादिविकल्पप्रवृत्त्यनुपपत्ते , अस्ति च प्रवृत्तिरिति नानयोरनुमानविकल्परूपादिविकल्पयोर्विशेष , अत कथमनुमानविकल्पवद् रूपादिविकल्पो न प्रमाणमित्याख्येयमेतत् । प्रस्तुतमाचिख्यासुराह-स खल्वित्यादि । स खलु-प्रक्रमाद् रूपादिविकल्प । किमित्याह-गृहीतग्राही एव । कुत इत्याह-प्रत्यक्षप्रतिभासिनोऽर्थस्य रूपादे , परामर्शात् कारणात् , स हि तमेव स्पृशति नाधिकं परिच्छिनत्ति, अतो न प्रमाणमिति । एतदाशङ्क्याह-नहीत्यादि । नहि अनुमानविकल्पोऽपि-नैवम् , किं तर्हि एवमेव--गृहीतग्राही एव, इत्यादि परिभाव्यतामेतत् । स्वभावहेतौ सुज्ञानमेव कृतकस्य एव अनित्यत्वात् , कार्यहेतौ अपि वह्निजन्यस्वभावो धूमः , तत्त्वेन प्रत्यक्षेण प्रतिभासते , अन्यथा तत्प्रतिभासाभाव एवेति भावनीयम् ।

नहि प्रत्यक्षं भागश उत्पद्यते, निरंशत्वात् , सत्यं न उत्पद्यत इति । अनुमानविकल्पपरामर्शालम्बनमपि तत्र गृहीतमेव केवलं गृहीतेऽपि येष्वाकारेषु , न तदनन्तरमेव निश्चयोत्पत्तिर्भूयसा व्याप्तिदर्शनात्तु भवति, तद्विषय एव अनधिगतार्थाऽधिगन्तृत्वात् , प्रमाणमनुमानविकल्पो नेतर इति, यत्किञ्चिदेतत् , अनालोचिताभिधानत्वात् । अनालोचिताभिधानत्वं च ग्राह्ये आकाराभावात् सर्वथा एकस्वभावत्वाभ्युपगमात् परिकल्पितानामसत्त्वात् तत्त्वेन, तत्सत्त्वे नियमतोऽतिप्रसङ्गात् , तथा युक्तितो व्याप्त्यसिद्धेः अतद्भावस्य कथञ्चिद् भेदनिमित्तत्वात् , अन्यथा तदयोगात् । नहि अभेदत एव अनित्यत्वस्य स्वात्मना व्याप्तिः, न च भिन्नयोरेव हिमवद्विन्ध्ययोः तथाऽनधिगतार्थाधि–

गन्तृत्वाभावात् , वस्तुरूपस्य अध्यक्षत एव अभिगमात् , स्वाधिगमस्य च इतरत्रापि भावात् , तदन्यस्य च इतरत्रापि अभावादिति । एवं प्रवर्त्तकत्वादि अपि अस्य समानमितरेण, तत्रापि रूपादिनिश्चयादेव प्रवृत्तेः । व्यवहारं प्रमाणमेवाऽयमिति चेत् , क्व तर्हि अप्रमाणमिति ?, रूपादावेव इति चेत् , कुतोऽयं तत्राऽकारणो द्वेषः ?, प्रागेव तदधिगमादिति चेत् , समानोऽयं त्वन्नीत्या अनित्यत्वादौ, तथापि न तद्वत् तद्दर्शनमिति चेत् , न तर्हि प्राक् तद्वत् तदधिगमोऽन्यथा रूपादिनिश्चयवत् स्यात् तदा एवाऽयं निमित्ताविशेषात् , तदधिगमस्यैव तत्त्वतस्तन्निमित्तत्वात् बाधकानुपपत्तेः विशेषेण भावात् एकान्तिकत्वात् , अन्यथा तदनुपपत्तेः ।

तथा च आह—न हि प्रत्यक्षं भागशो—भागेन उत्पद्यते, कुत इत्याह—तस्य निरंशत्वात् सुलक्षणमेतद् इति निरंशम् , सत्यं नोत्पद्यते भागशः प्रत्यक्षम् , इति—अस्मात् अनुमानविकल्पपरामर्शाऽऽलम्बनम् अपि , तत्र—वस्तुनि , गृहीतमेव—अक्रमाद् प्रत्यक्षेण, केवलं गृहीतेऽपि—सति , येषु आकारेषु-अनित्यत्वादिषु, न तदनन्तरमेव—न दर्शनाऽनन्तरमेव,निश्चयोत्पत्ति , भूयसा—बाहुल्येन, व्याप्तिदर्शनात्-अविनाभावदर्शनेन पुनर्भवति , तद्विषय एव—अनित्यत्वादिविषय एव , अनधिगतार्थाधिगन्तृत्वात् कारणात् , प्रमाणमनुमानविकल्पो नेतरो—रूपादिविकल्प इति । एतदाशङ्क्याह—यत् किञ्चिदेतत्-अनन्तरोदितमसारमित्यर्थः । कुत इत्याह—अनालोचिताभिधानत्वात् कारणात् , अनालोचिताभिधानत्वं च आह—वस्तुनि आकाराभावात् , अभावश्च सर्वथा-एकान्तेन , एकस्वभावत्वाभ्युपगमाद् वस्तुन इति , परिकल्पितास्ते इति । एतदपोहाय आह—परिकल्पितानाम्—आकाराणाम् असत्त्वात् तत्त्वेन, तत्सत्त्वे—परिकल्पिताऽऽकारसत्त्वे, नियमतो—नियमेन , अतिप्रसङ्गात् परिकल्पनया विरोध्याऽऽकारभावेन-तथा युक्तितो न्यायतः , व्याप्त्यसिद्धेः कारणात् , असिद्धिश्च तद्भावस्य-व्याप्तिभावस्य, कथञ्चिद भेदनिमित्तत्वात् व्याप्यव्यापकयोरिति प्रक्रमः । किमित्येतदेवमित्याह—अन्यथा-एवमनभ्युपगमे, व्याप्यव्यापकयो एकान्ताभेदादौ इत्यर्थः , तद्योगात्—व्याप्तिभावायोगात् । एतदेव भावयति—नहीत्यादिना न यस्मात् , अभेदवत एव एकान्तैकस्य एव इत्यर्थ , अनित्यत्वस्य स्वात्मना अनित्यत्वेन एव व्याप्ति , अनित्यत्वस्य अनित्यत्वेन व्याप्तिरिति व्यवहाराऽयोगाद् । न च भिन्नयोरेव एकान्तेन हिमवद्विन्ध्ययोरिति भावनीयम् । तथा अनधिगतार्थोऽधिगन्तृत्वाऽभावाद् अनुमानविकल्पस्य । अभावश्च वस्तुरूपस्य अध्यक्षत एव-प्रत्यक्षेण एव इत्यर्थ , अधिगमात् , ततश्च आत्मानमेव अधिगच्छति अनुमानविकल्प इति पराभ्युपगम : एतमेवाधिकृत्य आह—स्वाधिगमस्य च इतरत्रापि रूपादिविकल्पे भावात् , तदन्यस्य च अनधिगतस्य, इतरत्राऽपि-अनुमानविकल्पेऽपि अभावात् . इति अनालोचिताऽभिधानत्वमिति । एवं प्रवर्त्तकत्वादि अपि अस्य प्रक्रमाद् अनुमानविकल्पस्य समानम् , इतरेण रूपादिविकल्पेन । कुत इत्याह-तत्राऽपि-रूपादिविकल्पे सति, रूपादिनिश्चयादेव प्रवृत्तेरिति, व्यवहारे—प्रवृत्त्यादिरूपे, प्रमाणमेवाऽयं रूपादिविकल्प इति चेत् । एतदाशङ्क्याह—क्व तर्हि अप्रमाणमिति ?, रूपादौ एव इति चेत् अप्रमाणम् , कुतोऽयं तत्र रूपादौ, अकारणो द्वेषः ?, प्रागेव अविकल्पेन, तदधिगमात्-रूपाद्यधिगमात् इति चेत् । एतदाशङ्क्याह—समानोऽयम्—अधिगमः, त्वन्नीत्या अनित्यत्वादौ अनुमेये तथाऽपि-एवमपि, न तद्वद्-रूपादिवद् तद्दर्शनम्-नित्यत्वादिदर्शनमिति चेत् । एतदाशङ्क्याह—न तर्हि प्राग् अविकल्पेन, तद्वद्-रूपादिवत् , तदधिगमः-अनित्यत्वाद्यधिगमः, अन्यथा यदि स्यात् , ततो रूपादिनिश्चयवत् , स्यात् , तदा एवायं नित्यत्वादिनिश्चयः । कुत इत्याह—निमित्ताऽविशेषात् अविशेषश्च तदधिगमस्य एव अविकल्पेन रूपाद्यधिगमस्य एव, तत्त्वतः—परमार्थेन, तन्निमित्तत्वात्-अनित्यादिनिश्चयनिमित्तत्वात् , बाधकानुपपत्तेः रूपादिनिश्चयानुमानेन, तथा च आह-अविशेषेण भावात् रूपाद्यधिगमवद् अनित्यत्वाद्यधिगमत्वेन भावात् , भावश्च एकान्तैकत्वात् अधिकृताधिगमस्य । इत्थं च एतदङ्गीकर्तव्यमित्याह-अन्यथा तदनुपपत्तेः । एकान्तैकत्वाऽनुपपत्तेरधिकृतानुभवस्य रूपादिनिश्चयवत् स्यात् तदा एव अयमिति स्थितम् ।

दूषणान्तरमभिधातुमाह-

किञ्च-अयमधिकृताधिगमः किं स्वगृहीतनिश्चयजननस्वभावः ?, उत-समारोपजननस्वभावः ?, आहोस्विद्-उभयजननस्वभावः ?. उताहो-अनुभयजननस्वभाव इति ?। यदि स्वगृहीतनिश्चयजननस्वभावः, निरवकाशः समारोपः, न चासौ अन्यनिमित्तोऽनिमित्तो वा । अथ समारोपजननस्वभावः, कुतोऽस्माद् निश्चयजन्म, अतत्स्वभावभावे अतिप्रसङ्गात् । उभयजननस्वभावत्वे विरोधः, न्यायाऽविरोधेऽपि अभ्युपगमबाधा । अनुभयजननस्वभावत्वे तदुभयाभावः, तथा च प्रतीतिविरोध इति । एकान्तेन च निर्विकल्पकप्रत्यक्षवादिनो न न्यायतो रूपादिनिश्चयाऽनुमाननिश्चययोर्भेद इति सूक्ष्मधिया भावनीयम् ।

किञ्चेत्यादि । किञ्च—अयमधिकृताधिगम अविकल्परूप , किं स्वगृहीतनिश्चयजननस्वभाव ?, उत-समारोपजननस्वभाव ?, आहोस्विद् उभयजननस्वभाव ?, उताहो-अनुभयजननस्वभाव इति ? । किञ्चात ?, सर्वथाऽपि दोष इति । आह च—यदि स्वगृहीतनिश्चयजननस्वभाव । ततः किमित्याह-निरवकाशः समारोपः तन्निमित्ताधिगमस्य स्वगृहीतनिश्चयजननस्वभावत्वात् , न च असौ-समारोप अन्यनिमित्तोऽनिमित्तो वा, किं तर्हि ?, अधिकृताधिगमनिमित्त एव, तदा अन्यस्य अभावात् । अथ समारोपजनन-

स्वभावोऽधिकृताधिगम, कुतोऽस्माद् निश्चयजन्म ?, कथं च न स्याद् ?, इत्याह-अतत्स्वभावात्-अधिकृताधिगमात्, समारोपजननस्वभावत्वेन भावनिश्चयजन्मन अतिप्रसङ्गात्, तद्वद् निश्चयान्तरभावेन। उभयजननस्वभावत्वे-स्वगृहीतनिश्चयसमारोपोभयजननस्वभावत्वे विरोध, न्यायाविरोधेऽपि तत्तथाचित्रस्वभावतया अभ्युपगमबाधा-अनेकान्तवादापत्ते.। अनुभयजननस्वभावत्वे अधिकृताधिगमस्य। किमित्याह-तदुभयाऽभावो-निश्चयसमारोपोभयाभावोऽस्तु इति आरेकाऽपोहायाऽऽह-तथा च एवं च सति प्रतीतिविरोधः, तदुभयस्य तथावेदनात्, इति-एवमुक्तनीत्या, एकान्तेन निर्विकल्पप्रत्यक्षवादिनो वादिन, न न्यायतः-उक्तनीत्या, रूपादिनिश्चयाऽनुमाननिश्चययोर्भेद इति-एतद्, सूक्ष्मधिया भावनीयम्।

कथं तर्हि अनुमानविकल्पो नाऽनन्तरम् ?, सन्न्यायतोऽध्यज्ञानेन तद्विषयानधिगतेः। वस्तुनोऽनेकधर्मत्वात् क्षयोपशमवैचित्र्याद् इत्युक्तप्रायम्। अतो न निर्विकल्पकमेव प्रत्यक्षम्।

आह-यदि एवम्, कथं तर्हि अनुमानविकल्पो न अनन्तरं-दर्शनस्य इति प्रक्रम ?। एतदाशङ्क्याह-सन्न्यायत -तत्त्वनीत्या, अध्यज्ञानेन-अविकल्पेन, तद्विषयानधिगते -अनुमानविकल्पविषयानधिगते, कथं कस्यचिद् अधिगति., कस्यचिद् न इत्येतदपि युक्तिमदिति ?। एतदाशङ्क्याह-वस्तुनोऽनेकधर्मत्वात्, एतदपि युगपदेव प्रायश इत्याह-क्षयोपशमवैचित्र्याद् इत्येतद् उक्तप्रायम्। प्रायेण उक्तम्, अतो न निर्विकल्पकमेव प्रत्यक्षमिति निगमनम्।

लक्षणायोगाच्च, "प्रत्यक्षं कल्पनापोढमभ्रान्तम्" इति लक्षणम्, न चैतद् न्याय्यं परनीत्याऽनेकदोषापत्तेः, कल्पनापोढत्वस्य अव्यापकत्वात्, कल्पनायामपि स्वसंविदः प्रत्यक्षत्वाभ्युपगमात्, तस्याश्च तदव्यतिरिक्तत्वात्, व्यतिरिक्तत्वेऽधिकृतविशेषणायोगात्, तत्त्वतो व्यवच्छेद्यानुपपत्तेः अवस्तुत्वात् कल्पनायाः। स्वसंविदा तत्त्वेतरविकल्पाभ्यां दोषापादनमयुक्तमिति चेत्। न। तदवस्तु तत्त्वेन विकल्पधियोऽभावप्रसङ्गात्, स्वसंविन्मात्रस्यैव भावात्, असत्योपरागायोगात् क्लिष्टताऽसिद्धेरिति।

तथा लक्षणाऽयोगाच्च न निर्विकल्पकमेव प्रत्यक्षमिति। लक्षणाऽयोगमाह-"प्रत्यक्षं कल्पनापोढमभ्रान्तम्" इति लक्षणं परकीयम्, न च एतद् न्याय्यम्। कुत इत्याह-परनीत्या अनेकदोषापत्ते अस्य लक्षणस्य, आपत्तिश्च कल्पनापोढत्वस्य लक्षणत्वेन उपन्यस्तस्य अव्यापकत्वात्। अव्यापकत्व च कल्पनायामपि स्वसंविद परेण प्रत्यक्षत्वाभ्युपगमात्, कल्पनाऽपि स्वसंवित्ताऽधिष्ठानार्थे विकल्पनाद् इति। तस्याश्च कल्पनाया, तदव्यतिरिक्तत्वात्-स्वसंविदव्यतिरिक्तत्वात्। इत्थं चैतत् अङ्गीकर्तव्यमित्याह-व्यतिरिक्तत्वे कल्पनाया, स्वसंविदोऽभ्युपगम्यमाने। किमित्याह-अधिकृतविशेषणाऽयोगात्, अयोगश्च तत्त्वत -परमार्थेन, व्यवच्छेद्यानुपपत्ते सर्वस्या एव स्वसंविद. कल्पनापोढत्वात्। अत्राह-अवस्तुत्वात् कल्पनाया. स्वसंविदा सह तत्त्वेनरविकल्पाभ्यां-तत्त्वाऽन्यत्वविकल्पाभ्यामित्यर्थं, दोषापादनमनन्तरोदितमयुक्तमिति चेत्। एतदाशङ्क्याह-न-नैतद् एवम्, तदवस्तुत्वेन तस्या -कल्पनाया अवस्तुत्वेन हेतुना। किमित्याह-विकल्पधिय कल्पनाबुद्धे अभावप्रसङ्गात्, प्रसङ्गश्च स्वसंविन्मात्रस्य एव भावात्, सर्वत्र "इयमेव कल्पना उपरक्ता विकल्पधी." इत्यपि असद्। इति आविदयन्नाह-असत्या कल्पनाया अवस्तुत्वेन। किमित्याह-उपरागायोगात् स्वसंविदेव क्लिष्टा विकल्पधी, इत्यपि अयुक्तिमद्, इत्याह-क्लिष्टताऽसिद्धेरिति स्वसंविन्मात्रत्वेन, अत. स्थितमेतत्, न च एतद् न्याय्यमिति।

किञ्च-एकान्तवादिनः सर्वथा कल्पनाऽपोढत्वे कल्पनाऽपोढकल्पनातोऽपि अपोढत्वात् कल्पनाऽपोढत्वलक्षणायोगः। प्रत्यक्षसामान्यं लक्षणविषय इति चेत्। न। तस्य ततो व्यतिरिक्तेतरविकल्पायोगात्, व्यतिरिक्तत्वे न तदध्यक्षलक्षणम्, अव्यतिरिक्तत्वे तु उक्तवल्लक्षणायोगः। निरूपणाऽनुस्मरणविकल्पाभ्यामविकल्पकं स्वभावविकल्पेन तु सविकल्पकमिति चेत्। न। विरोधात्, अन्यथा अनेकान्तापत्तेः स्वाभ्युपगमपरित्यागादिति।

दूषणान्तरमाह-किञ्चेत्यादिना। किञ्च, एकान्तवादिनो वादिन. एकान्तेन कल्पनापोढमेतत्, ततश्च सर्वथा कल्पनापोढत्वे सति। किमित्याह-कल्पनापोढकल्पनातोऽपि अपोढत्वात् कारणात्, कल्पनापोढत्वलक्षणाऽयोग', तत्र तद्योग्यताऽभावादिति। प्रत्यक्षसामान्यम् अप्रत्यक्षव्यावृत्तिरूपम् लक्षणविषय इति चेत् तत्र तद्योगता इति भाव। एतदाशङ्क्याह-न, तस्य-प्रत्यक्षसामान्यस्य, तत.-प्रत्यक्षात्। किमित्याह-व्यतिरिक्तेतरविकल्पाभ्यामयोगात्। आह च-व्यतिरिक्तत्वे प्रत्यक्षात् तत्सामान्यस्य न तदध्यक्षलक्षणं तद्व्यतिरिक्ततत्सामान्यलक्षणत्वात्, अव्यतिरिक्तत्वे तु प्रत्यक्षात् तत्सामान्यस्य, उक्तवद् यथोक्तं तथा। किमित्याह-लक्षणाऽयोग. तत्र तद्योग्यताऽभावाद् इति। अत्राह-निरूपणाऽनुस्मरणविकल्पाभ्याम्-एवंभूतमेतद् इति, तदात्वे आयत्यां चैतद्गोचराभ्यामविकल्पकमेतत्, स्वभावविकल्पेन तु कल्पनापोढस्वभावत्वलक्षणेन सविकल्पकमेव इति चेत्। एतदाशङ्क्याह-न, विरोधात् 'अविकल्पकं सविकल्पक च' इति विरोध, अन्यथा निमित्तभेदतो विरोधमन्तरेण। किमित्याह-अनेकान्तवादापत्ते। तत किमित्याह-स्वाभ्युपगमपरित्यागाद् नेति योग।

एवमभ्रान्तत्वविशेषणमपि असङ्गतमेव, परनीतितो व्यवच्छेद्याऽयोगात्। इन्दुद्वयादिज्ञानं व्यवच्छेद्यमिति चेत्। न। तस्याऽभ्रान्तत्वात्, एतच्च लक्षणोपपत्तेः तस्याऽपि तत्प्रकाशकस्वभावहेतुजत्वतश्च भ्रान्तताऽसिद्धेः, अन्यथा तदयोगात्, तस्य चाऽनुभवसिद्धत्वात्, न च बहिस्तद्विषयानुपलब्ध्या तत्सिद्धिः, तदग्रहणस्वभाव-

धिया तद्विषयानुपलब्ध्यसिद्धेः, अन्यथाऽनुपलब्धौ तद्भावाऽसिद्धेरतिप्रसङ्गात् । न चाऽतैमिरिकस्याऽपि तत्प्रत्ययप्रसङ्गः, तस्य तिमिरतदन्यहेतुजन्यस्वभावत्वात्, अतैमिरिकाणां च तदभावात् तथा लोकप्रसिद्धेः । न च बाधातोऽस्य भ्रान्तता, बाधाऽसिद्धेः भिन्नकालविषयप्रत्ययेन तदभ्युपगमेऽतिप्रसङ्गात्, क्वचिद् अभ्रान्तस्याऽपि असर्पादौ तदन्यतो बाधोपलब्धेश्च । न चाऽनर्थक्रियाकरणतः, अप्राप्यदेशगतजलादिज्ञानेन व्यभिचारात्, संविन्मात्रार्थक्रियाविधाने चास्य इतरत्रापि तद्भावात् तथाप्रतीतेः, न च लोकप्रतीतितः, अभ्युपगमविचाराद् तेन च तदप्राप्तेः, तस्य च इहाधिकृतत्वादिति अलमनया लोकागमानुभवविरुद्धया अतिसूक्ष्मेक्षिकया उक्तवत् सर्वत्र असमञ्जसतापत्तेः । यस्तु लोकादिसापेक्षः तस्यैव तद्भेदस्य विद्धदङ्गनादिलोकप्रतिष्ठितत्वात् अविगानतस्तथाऽप्रतीतेः तद्व्यवस्थाकारिसदागमभावाद् उक्तदोषाभाव इति ।

एवं यथा कल्पनापोढत्वविशेषणम्, तथा अभ्रान्तत्वविशेषणमपि असङ्गतमेव । कुत इत्याह—परनीतितो व्यवच्छेद्याऽयोगात् । इन्दुद्वयादिज्ञानम्-आदिशब्दाद्—वियत्केशज्ञानादिग्रह, व्यवच्छेद्यमिति चेत् । एतदाशङ्क्याह—न, तस्य इन्दुद्वयादिज्ञानस्य अभ्रान्तत्वात्, एतच्चाऽभ्रान्तत्वं तल्लक्षणोपपत्ते —अभ्रान्तलक्षणोपपत्तेः, उपपत्तिश्च तस्याऽपि इन्दुद्वयादिज्ञानस्य, तत्प्रकाशकस्वभावत्वेन-इन्दुद्वयादिप्रकाशकस्वभावत्वेन, तादृक्फलजननस्वभावहेतुजत्वतश्च इन्दुद्वयादिज्ञानजननस्वभावहेतूत्पन्नत्वेन च अस्य भ्रान्तताऽसिद्धेः, अन्यथा—एवमनभ्युपगमे, तदयोगात्—इन्दुद्वयादिज्ञानाऽयोगात्, तस्य च इन्दुद्वयादिज्ञानस्य अनुभवसिद्धत्वात् । न च बहिर्वियदादौ, तद्विषयाऽनुपलब्ध्या—इन्दुद्वयादिज्ञानविषयाऽनुपलब्ध्या-कारणेन, तत्सिद्धि -भ्रान्ततासिद्धि । कुत इत्याह—तद्ग्रहणस्वभावधिया—बहिस्तद्विषयग्रहणस्वभावधिया; इन्दुद्वयादिग्रहणस्वभावबुद्ध्या इत्यर्थः, तद्विषयानुपलब्ध्यसिद्धे -इन्दुद्वयादिज्ञानविषयानुपलब्ध्यसिद्धेः, तद्ग्रहणस्वभावा हि तद् गृह्णात्येव, अन्यथा तत्स्वभावताऽयोग । अन्यथेत्यादि । अन्यथा—अतद्ग्रहणस्वभावया धिया इति प्रक्रम, अनुपलब्धि बहिस्तद्विषयस्य इति प्रक्रम एव इत्यन्यथानुपलब्धिस्तस्याम् । किमित्याह—तद्भावाऽसिद्धे -बहिस्तद्विषयाऽभावाऽसिद्धे ; इन्दुद्वयाद्यभावानिर्द्धारित्यर्थः । कुत इत्याह—अतिप्रसङ्गात्—पटादिग्रहणस्वभावया धिया घटो न गृह्यत इति तस्यापि अभावप्रसङ्गाद् इत्यर्थः । न चेत्यादि । न च अतैमिरिकस्याऽपि प्रक्रमात् प्रमातु- तत्प्रत्ययप्रसङ्ग -इन्दुद्वयादिप्रत्ययप्रसङ्ग, तदस्ति इति कृत्वा । कुत इत्याह—तस्येत्यादि । तस्य-इन्दुद्वयादिप्रत्ययस्य तिमिरसहायतदन्यहेतुजन्यस्वभावत्वात् तिमिरसहायचक्षुरादिजन्यस्वभावो हि इन्दुद्वयादिप्रत्यय । यदि नामैवं ततः किमित्याह-अतैमिरिकाणां च प्रमातॄणाम्, तदभावात्-तिमिराऽभावात्, ततश्च कारणवैकल्यात् कार्याऽभाव इति स्थितम् । इत्थं च एतदङ्गीकर्तव्यमित्याह-तथा लोकप्रसिद्धे- अतैमिरिकाणा तिमिराऽभावेन न इन्दुद्वयादिप्रत्यय इति लोकप्रसिद्धे- । न चेत्यादि । न च बाधात कारणात्, अस्य इन्दुद्वयादिज्ञानस्य इति प्रक्रम- भ्रान्तता । कुत इत्याह--बाधासिद्धे- तस्यैव तिमिराऽपगमे एकेन्द्वादिज्ञानभावतो बाधा । इत्याशङ्कानिरासाय आह--भिन्नेत्यादि । भिन्नौ कालविषयौ यस्य स भिन्नकालविषय , एवंभूतश्चासौ प्रत्ययश्च इति विग्रहस्तेन, तदभ्युपगमे--बाधाऽभ्युपगमे । किमित्याह--अतिप्रसङ्गात्-सर्व एवंभूत- तदन्यस्य बाधक इति अतिप्रसङ्ग- । दोषान्तरमाह—क्वचिदित्यादिना । क्वचिद् मन्दमन्दप्रकाशादौ, अभ्रान्तस्याऽपि प्रक्रमाद् ज्ञानस्य, असर्पादौ--असर्पादिविषयस्य, तदन्यतो भ्रान्ताद् ज्ञानाद् इति प्रक्रम एव । किमित्याह-बाधोपलब्धेश्च तथा रज्जुचलनादे- सर्पज्ञाने न तदसर्पज्ञानस्य, इति नाऽलौकिकमेतद् अतो भावनीयमिति । दोषान्तरमभिधातुमाह--न चेत्यादि । न च अनर्थक्रियाकरणतोऽस्य भ्रान्तता इति वर्तते । कुत इत्याह--अप्राप्यदेशगतजलादिज्ञानेन व्यभिचाराद् इति भावितार्थमेतत् । संविन्मात्राऽर्थक्रियाविधाने च अस्य-अनन्तरोदितज्ञानस्य । किमित्याह--इतरत्राऽपि प्रक्रमाद् इन्दुद्वयादिज्ञानेऽपि, तद्भावात्-संविन्मात्राऽर्थक्रियाविधानभावाद्, भावश्च तथाप्रतीते- । न चेत्यादि । नच--लोकप्रतीतितोऽस्य भ्रान्तता इति प्रक्रमः । कुत इत्याह-अभ्युपगमविचारात् । यदि नामैवं तत किमित्याह--तेन च-अभ्युपगमेन, तदप्राप्ते-–उक्तवद् भ्रान्तताऽप्राप्ते-, तस्य च-अभ्युपगमस्य, इह-प्रक्रमे अधिकृतत्वात्, ततश्च-ततो यत् सिद्ध्यति तत् तत्त्वम्, अतोऽन्यद् अतत्त्वमित्यलमनया एवंभूतया, लोकाऽऽगमाऽनुभवविरुद्धया अतिसूक्ष्मेक्षिकया । किमित्यत आह—उक्तवद्—यथोक्तं तथा, सर्वत्र असमञ्जसतापत्ते, अतो जातिरियमिति प्रतिपत्तव्या सर्वत्र तत्त्वेन । यस्तु लोकादिसापेक्षो-लोका-ऽऽगमा-ऽनुभवसापेक्षो वादी इति गम्यते, तस्य उक्तदोषाऽभाव इति संबन्ध- । कथमित्याह-एतद्भेदस्य--प्रक्रमाद् भ्रान्ततरज्ञानभेदस्य, आविद्धदङ्गनादिलोकप्रतिष्ठितत्वात् कारणात्, एतत्-प्रतिष्ठितत्वं च अविगानतस्तथा भ्रान्तेतरत्वेन प्रतीते, तथा तद्व्यवस्थाकारिसदागमभावाद्--अधिकृतैतद्भेदव्यवस्थाकारिसर्वज्ञप्रणीतागमभावादित्यर्थ-, उक्तदोषाऽभाव- जातियुक्तिभिर्भ्रान्तेतरज्ञानयो- समत्वाऽऽपादनमुक्तो दोषस्तदभाव-, उपन्यस्तहेत्वन्यथानुपपत्तिरिति ।

दूषणान्तराभिधित्सयाऽऽह—

किञ्च—निर्विकल्पकं प्रत्यक्षमित्यत्र न प्रमाणं, तेनैव तदनधिगतेः अर्थविषयत्वात् तस्य च ततोऽन्यत्वात्, तथाहि—न तन्निर्विकल्पकत्वमेव तदर्थः, न चानर्थो विषयः, न चाऽविषयेऽधिगतिरिति न तत्रास्य प्रमाणता, अतिप्रसङ्गात् । उभयं विषय इति चेत् । न । उभयोस्तल्लक्ष-

णायोगात् स्वनिर्विकल्पकत्वस्य तदकारणत्वात्, अकारणस्य चाऽविषयत्वात्, अन्यथा अभ्युपगमविरोधात्। एतेन स्वसंविदितत्वं प्रत्याख्यातम्।

किञ्चेत्यादि। किंच--निर्विकल्पकं प्रत्यक्षम् इति-अर्थे न प्रमाणम्। कुत इत्याह--तनैव--प्रत्यक्षेण, तदनधिगते-तस्य निर्विकल्पकस्य अनधिगतेः, अनधिगतिश्च अर्थविषयत्वात् प्रत्यक्षस्य, तस्य च-अर्थस्य, ततः--प्रत्यक्षाद् अन्यत्वात्, प्रस्तुतैदंपर्यमाह-तथाहीत्यादिना। तथाहि-न तद् निर्विकल्पकत्वमेव-अधिकृतप्रत्यक्षनिर्विकल्पकत्वमेव, तदर्थे-प्रत्यक्षाऽर्थः, न च अनर्थो विषयः-" रूपाऽऽलोकमनस्कार-चक्षुर्भ्यः सम्प्रवर्त्तते। विज्ञानं मणिसूर्याऽंशु-गोशकृद्भ्य इवाऽनलः ॥१॥" इति वचनात्, न च अविषये अधिगतिः, अपन्यायाद्, इति-एवम्, न तत्र-निर्विकल्पकत्वे, अस्य-प्रत्यक्षस्य प्रमाणता। कुत इत्याह-अतिप्रसङ्गात्-विषयलक्षणाऽयोगेन प्रमाणताभ्युपगमे सर्वत्र प्रमाणतापत्तिरिति अतिप्रसङ्गः, उभयम्-स्वनिर्विकल्पकत्वार्थोभयम्, विषयः प्रत्यक्षस्य इति चेत्। एतदाशङ्क्याह-न। उभयोः-स्वनिर्विकल्पकत्वार्थयोः, तल्लक्षणाऽयोगात्--विषयलक्षणाऽयोगात्, अयोगश्च स्वनिर्विकल्पकत्वस्य तदकारणत्वात्-प्रत्यक्षाऽकारणत्वात्, अकारणस्य च अविषयत्वात्। इत्थं चैतद्-अङ्गीकर्तव्यमित्याह-अन्यथाऽभ्युपगमविरोधात्। विरोधश्च "नाऽकारणं विषयः" इति वचनप्रामाण्यात्, तदेव नोभयं विषय इति। एतेनेत्यादि। एतेन-अनन्तरोदितेन, स्वसंविदितत्वं प्रत्याख्यातं प्रत्यक्षस्य इति प्रक्रमः।

अनेन विषयाऽवेदनप्रसङ्गात् सर्वथैकस्वभावत्वाद्, निर्विषयतापत्तेः। न च स्वसंवेदनमेव विषयवेदनम्। तयोः कालादिभेदात्, तद्वेदनस्यैकत्वाभावात् तच्चित्रताप्रसङ्गादित्येकस्वभावत्ववस्तुवादिनः, अन्याऽवेदनप्रसङ्ग एव। एवं च सति स्वनिर्विकल्पकत्ववेदनात्, तत्सामर्थ्यतस्तत्पृष्ठभावी विकल्पः स्वतस्तद्विषय एव स्यात् रूपादिविकल्पवत्, न च भवति तथाऽप्रतीतेः, न च तमन्तरेण, तत्तथाताव्यवस्थितिरतिप्रसङ्गादिति, एतेन यदाह न्यायवादी—

"प्रत्यक्षं कल्पनापोढं, प्रत्यक्षेणैव सिद्ध्यति।
प्रत्यात्मवेद्यः सर्वेषां, विकल्पो नाम संश्रयः ॥ १ ॥
संहृत्य सर्वतश्चिन्तां, स्तिमितेनाऽन्तरात्मना।
स्थितोऽपि चक्षुषा रूप-मीक्षते साऽक्षजा मतिः ॥ २ ॥
पुनर्विकल्पयन् किञ्चि-दासीन्मे कल्पनेदृशी।
इति वेत्ति न पूर्वोक्ता-वस्थायामिन्द्रियाद् गतौ ॥ ३ ॥"

इत्यादि, तदपाकृतमवसेयम्, उक्तवत्प्रत्यक्षेणैव असिद्धेः तदेकस्वभावत्वविरोधादिति।

इहैव उपचयमाह-अनेन-स्वसंविदितेन प्रत्यक्षेण। किमित्याह-विषयाऽवेदनप्रसङ्गात्, प्रसङ्गश्च सर्वथा एकस्वभावत्वाद् अस्य। एवमपि को दोष इत्याह-निर्विषयतापत्तेः स्वसंविदितत्वेन। न चेत्यादि। न च स्वसंवेदनमेव विषयवेदनम्। कुत इत्याह-तयोः-स्वविषययोः, कालादिभेदात् आदिशब्दात्-स्वरूपग्रहः। यदि नामैवं ततः किमित्याह-तद्वेदनस्य-तयोः स्वविषययोर्वेदनं तद्वेदनं तस्य। किमित्याह-एकत्वाऽभावात् उभयवेदनेन, अत एव तच्चित्रताप्रसङ्गाद् इत्येवमेकस्वभावत्ववस्तुवादिनो वादिनः। किमित्याह-अन्याऽवेदनप्रसङ्ग एव-स्वव्यतिरिक्तविषयाऽवेदनप्रसङ्ग एव इत्यर्थः, एवं च सति-स्वनिर्विकल्पकत्ववेदनात् कारणात्, तत्सामर्थ्येन -स्वनिर्विकल्पकत्ववेदनसामर्थ्येन हेतुना, तत्पृष्ठभावी विकल्पः--प्रक्रमात् सामान्येन प्रत्यक्षपृष्ठभावी विकल्पः, स्वतः-आत्मना एव समारोपव्यवच्छेदमन्तरेण, तद्विषय एव स्यात्-स्वनिर्विकल्पकत्ववेदनविषय एव भवेत् रूपादिविकल्पवद् इति, निदर्शनम्। न च भवति स्वत एव, तथाऽप्रतीतेः कारणात्, न च तमन्तरेण विकल्पम्, तत्तथाताव्यवस्थितिः-तस्य प्रत्यक्षस्य तथाताव्यवस्थितिः-स्वनिर्विकल्पकत्ववेदनभावव्यवस्थितिः; स्वसंविदितत्वव्यवस्थितिरित्यर्थः। कथं न इत्याह-अतिप्रसङ्गात्--विषयान्तरविषयवेदनाऽभावप्रसङ्गादिति, एतेन-अनन्तरोदितेन, यदाह न्यायवादी धर्मकीर्तिर्वार्तिके-"प्रत्यक्षमित्यादि" तदपाकृतमवसेयमिति योगः-प्रत्यक्षं प्रस्तुतम्, कल्पनापोढमित्येतत् प्रत्यक्षेणैव सिध्यति। कथमित्याह-प्रत्यात्मवेद्या यस्मात् सर्वेषां प्रमातॄणाम्, विकल्पो नाम—संश्रयः शब्दानुविद्ध इत्यर्थः ॥१॥ तथा संहृत्य सर्वतश्चिन्ता विकल्परूपाम्, स्तिमितेन अन्तराऽऽत्मना-प्रसन्ननिर्व्यापारेण, स्थितोऽपि सन्, चक्षुषा रूपमीक्षते—पश्यति, यया बुद्ध्या सा अक्षजा मतिः ॥२॥ ईक्षित्वा पुनर्विकल्पयन् किंचित् पश्चाद् आसीद् मे कल्पना ईदृशी एवंभूता इति वेत्ति, न पूर्वोक्तावस्थायां चक्षुषा रूपेक्षणलक्षणायाम्, इन्द्रियाद् गतौ ॥ ३ ॥ इत्यादि यदाह न्यायवादी तद् अपाकृतम्-अपास्तमवसेयम्। कथमित्याह-उक्तवत्-यथोक्तं तथा, प्रत्यक्षेण एव असिद्धेः—प्रत्यक्षेणैव सिध्यति इत्यस्य असिद्धेः, असिद्धिश्च तदेकस्वभावत्वविरोधात् तस्य प्रत्यक्षस्य—एकस्वभावत्वविरोधात् स्वविषयपरिच्छेदकत्वेन इति भावितार्थमेतदिति।

सामान्यसिद्धावनुमानप्रामाण्यं निरस्यति—

न चानुमानमत्र प्रमाणम्, अस्य स्वलक्षणत्वात् अनुमानस्य च सामान्यलक्षणालम्बनत्वात्, न चेदं परपक्षे चारु, गमकलिङ्गाऽसम्भवात् स्वभावकार्याऽसिद्धेः, स्वभावस्य तादात्म्येन तत्त्वात् तद्वत् तदग्रहणात्, तद्ग्रहे साध्यप्रतिपत्तेः, तदप्रतिपत्तौ तद्ग्रहणाऽयोगात् एकान्तैकत्वात्, तथाग्रहे मोहाऽभावात्, भावे वा निवृत्त्यनुपपत्तेः उपायाऽभावादिति। अनेन शिंशपादिप्रतिपत्तौ वृक्षाऽप्रतिपत्तिः प्रत्युक्ता, तुल्ययोगक्षेमत्वात्, अन्यथा कथञ्चित् तद्भेदापत्तेः। व्यावृत्तिभेदोऽभ्युपगम्यत एव इति चेत्, न तर्हि तदेकस्वभावता। सोऽपारमार्थिक इति चेत्, किमर्थमस्योप-

न्यासः ?, व्यवहारार्थमिति चेत् कीदृशोऽसता व्यवहारः ?, परमार्थतो भ्रान्त इति चेत्, न तत्त्वतः साध्यसाधनभाव इति । एतेन " सर्व एव अयमनुमानाऽनुमेयव्यवहारो बुद्ध्यारूढेन धर्मधर्मिन्यायेन " इत्येतदपि प्रत्युक्तम्, अस्य तावदर्थाऽप्रतिबद्धत्वात्, तस्य एकत्वेन अतथाभूतत्वात् नीलात् नीलपीतबुद्ध्याकारतुल्यत्वात् परप्रतिपादनोपायत्वानुपपत्तेरतिप्रसङ्गादिति न स्वभावहेतोस्तदवगतिः ।

न चेत्यादि । न च अनुमानमत्र–प्रक्रमाद् निर्विकल्पकत्वे प्रत्यक्षस्य प्रमाणम् । कुत इत्याह–अस्य–प्रत्यक्षस्य, स्वलक्षणत्वात् । यदि नामैव तत· किमित्याह–अनुमानस्य च सामान्यलक्षणाऽऽलम्बनत्वात् . तत् कथम् अन्याऽऽलम्बनमन्यत्र प्रमाणं भवति ? । दूषणान्तरमाह–न चेदमित्यादि । न च इदम् अनुमानम्, परपक्षे–एकान्तैकस्वभाववादिपक्षे, चारु–शोभनम्, गमकलिङ्गाऽसंभवात्, असंभवश्च स्वभावकार्याऽसिद्धेः–स्वभावश्च कार्यं च स्वभावकार्ये लिङ्गे इति प्रक्रम तयोरसिद्धेः, असिद्धिश्च स्वभावस्य सत्त्वादेः तादात्म्येन–साध्यात्म्येन हेतुना, तत्त्वात्–साध्यत्वात् । यदि नामैवं तत· किमित्याह–तद्वत्–साध्यवत्, तदग्रहणात्–स्वभावाऽग्रहणात् । इत्थं चैतत् अङ्गीकर्तव्यमित्याह–तद्ग्रहे–स्वभावग्रहे, साध्यप्रतिपत्तेः । नान्यथा इदमित्याह–तदप्रतिपत्तौ–साध्याऽप्रतिपत्तौ, तद्ग्रहणाऽयोगात्–स्वभावग्रहणाऽयोगात्, अयोगश्च एकान्तैकत्वात् प्रक्रमात् साध्यहेत्वो· । मोहव्यावृत्त्यर्थमपि अस्य प्रवृत्तिरयुक्ता इत्याह–तथाग्रहे–एकत्वेन ग्रहे मोहाऽभावात्, भावे वा तथाग्रहेऽपि मोहस्य । किमित्याह–निवृत्त्यनुपपत्ते·, अनुपपत्तिश्च उपायाऽभावात्, तत्स्वरूपग्रहेऽपि तन्मोहस्य निवृत्तौ क उपाय इति ?, अनेन अनन्तरोदितेन, शिंशपादिप्रतिपत्तौ सत्यां वृक्षाऽप्रतिपत्ति· प्रत्युक्ता । कुत इत्याह–तुल्ययोगक्षेमत्वात्–शिंशपात्वस्य एव वृक्षत्वाद् इत्यर्थ । अन्यथेत्यादि । अन्यथा एवमनभ्युपगमे, कथंचित् तद्भेदापत्ते· शिंशपात्ववृक्षत्वयोर्भेदापत्ते·, व्यावृत्तिभेदोऽभ्युपगम्यत तव शिंशपात्ववृक्षत्वयो· शास्त्राऽधिकृताऽनित्यत्वकृतकत्वयोर्वा इति चेत् । एतदाशङ्क्याह–न तर्हि तदेकस्वभावता–शिंशपादे एकस्वभावता, स–व्यावृत्तिभेद·, अपारमार्थिक इति चेत् । एतदाशङ्क्याह–किमर्थमस्य अपारमार्थिकस्य उपन्यासः ?, व्यवहारार्थमिति चेत् । एतदाशङ्क्याह–कीदृशोऽसता व्यवहार· ? परमार्थतो भ्रान्त इति चेद् व्यवहारः । एतदाशङ्क्याह–न तत्त्वत·–परमार्थेन, साध्यसाधनभावो भ्रान्तव्यवहारविषयत्वादिति । एतेन इत्यादि । एतेन–अनन्तरोदितेन, ' सर्व एव अयमनुमानाऽनुमेयव्यवहारो बुद्ध्यारूढेन धर्मधर्मिन्यायेन " इत्येतदपि भवता उक्त प्रत्युक्तम् । कुत इत्याह––अस्य तावद् बुद्ध्याऽऽरूढस्य धर्मधर्मिभावस्य, अर्थाऽप्रतिबद्धत्वाद्––वस्त्वप्रतिबद्धत्वात्, अप्रतिबद्धत्वं च तस्य अर्थस्य, एकत्वेन–एकस्वभावत्वेन हेतुना, अतथाभूतत्वात् धर्मधर्मितया अतथाभूतत्वात् । यदि नामैवं तत· किमित्याह–नीलात् सकाशात्, नीलपीतबुद्ध्याऽऽकारतुल्यत्वात् बुद्ध्याऽऽरूढधर्मधर्मिभावस्य ततोऽभावादित्यर्थ·, ततश्च परप्रतिपादनोपायत्वाऽनुपपत्तेः, तदसद्रूपतया नाऽसत उपायत्वम् । इत्याह–अतिप्रसङ्गात्–असत उपायत्वे सर्वसिद्ध्यापत्त्या अतिप्रसङ्गः, इत्येवमुक्तनीतेः असिद्धेर्न स्वभावहेतोः सकाशात्, तदवगतिः–प्रक्रमात् प्रत्यक्षनिर्विकल्पकत्वाऽवगतिः ।

सामान्यसिद्धौ कार्यहेतुनां निरस्यति–

एवं न कार्यहेतोरपि, तन्निर्विकल्पकत्वकार्यत्वेन कस्यचिद् असिद्धेः, सदा एकेन एकवेदनात्, तत्कार्यत्वस्य च तदवधिकत्वात् तदग्रहणे तथा अग्रहणात्, अन्यथा न्यायाऽयोगात् । तत्तत्स्वभावत्वतः तथाग्रहणेऽतिप्रसङ्गात्, अन्यतरदर्शनात् अन्यतराऽवगमापत्तेः तथा विशिष्टस्य ग्रहणात्, अभ्युपगमे अनुभवविरोधात्, अविनाभावग्रहणमन्तरेण तदयोगात्, लोके तथोपलब्धेः तस्य च परपक्षेऽभावात्, ज्ञानानां प्रतिनियतार्थत्वात् तत्तथाऽभावतोऽनुसन्धानाऽयोगात्, तथाविधविकल्पकस्याऽपि असिद्धेः, तस्याऽपि क्षणिकत्वात्, तथा तत्तन्निश्चयाऽनुपपत्तेरित्यत्राऽपि–बुद्ध्यारूढधर्मधर्मिन्यायतोऽपि अधिकृतव्यवहाराऽभावः, उक्तवद् न्यायतस्तदयोगात्, योगेऽपि अभिलपितार्थाऽसिद्धिरेव । अर्थस्याऽर्थगमकत्वाऽभ्युपगमात् तत्तथातायां च निश्चयाऽभावात्, तस्य तद्विषयत्वाऽनभ्युपगमात्, पारम्पर्यतस्तत्तद्भावे प्रमाणाऽभावात्, परनीतितस्तदसिद्धेरिति । एतेन धूमात् अग्न्यनुमानं निषिद्धम्, समानयुक्तित्वादिति । यस्य पुनरन्वयव्यतिरेकवत् एकाऽनेकस्वभावं निश्चयात्मकमेव प्रत्यक्षं तस्य उक्तदोषाऽभावः, सर्वत्रानुपचरितनिबन्धनभावात्, प्रतीतिसचिवतच्चित्रस्वभावतया तदविरोधात् इत्यलं प्रसङ्गेन ।

एवमित्यादि । एवं न कार्यहेतोरपि सकाशात् तदवगतिरिति प्रक्रमः । कुतो न इत्याह––तन्निर्विकल्पकत्वकार्यत्वेन–प्रत्यक्षनिर्विकल्पकत्वकार्यत्वेन कस्यचित् पदार्थस्य, असिद्धे कारणात्, असिद्धिश्च सदा–सर्वकालम्, एकेन ज्ञानेन इति सामर्थ्यम्, एकवेदनाद्–एकाऽनुभवात् । यद्येवं तत· किमित्याह–तत्कार्यत्वस्य च प्रक्रमात् प्रत्यक्षनिर्विकल्पकत्वकार्यत्वस्य च । किमित्याह–तदवधिकत्वात्––अधिकृतप्रत्यक्षाऽवधिकत्वात् । एवमपि किमित्याह–तदग्रहणे–विवक्षिताऽवध्यग्रहणे सति । किमित्याह–तथा तदवधिकत्वेन अग्रहणात् । इत्थं च एतदङ्गीकर्तव्यमित्याह–अन्यथा–एवमनभ्युपगमे, न्यायाऽयोगात्, अयोगश्च तत्तत्स्वभावत्वत·, तस्य–विवक्षितकारणकार्यत्वस्य तत्स्वभावत्वत–तदवधिकस्वभावत्वत· तज्जन्यत्वेन, तथा तदवधिकत्वेन ग्रहणे सति । किमित्याह–अतिप्रसङ्गात् । तत· किमित्याह–अन्यतरदर्शनाद् हेतुफलयो· । किमित्याह–

अन्यतराऽवगमापत्तेः हेतुफलयोरेव, आपत्तिश्च तथा इतरेतराऽवधिकत्वेन, विशिष्टस्य तत्स्वभावतया ग्रहणात्। अस्त्वेवमित्यधिकृत्य आह—अभ्युपगमे-अधिकृतग्रहणस्य अनुभवविरोधात्, विरोधश्च अविनाभावग्रहणमुभयगतमन्तरेण, तदयोगात्-तथाविशिष्टस्य ग्रहणाऽयोगात्, अयोगश्च लोके तथोपलब्धेः अविनाभावग्रहणमन्तरेण संबन्धिनः संबन्ध्यन्तरविशिष्टतया अग्रहणोपलब्धेः। अविनाभावग्रहणात्, एतदेवं भविष्यति इत्याह—तस्य च-अविनाभावग्रहणस्य परपक्षे अभावात्, अभावश्च ज्ञानानां प्रतिनियताऽर्थत्वात् क्षणिकत्वेन,, यथोक्तम्-"एकमर्थं विजानाति, न विज्ञानद्वयं यथा। विजानाति न विज्ञान-मेकमर्थद्वयं तथा ॥ १ ॥" इत्यादि। तत्तथेत्यादि। तस्य-हेतुज्ञानस्य, तथा फलज्ञानत्वेन, अभावत कारणात्। किमित्याह-अनुसन्धानाऽयोगात् 'अत इदम्' इत्यनुसन्धानम्, तथाविधविकल्पस्याऽपि तत्पृष्ठभाविनः असिद्धेः, असिद्धिश्च तस्याऽपि-विकल्पस्याऽपि, क्षणिकत्वात् स्वसंविन्निष्ठितत्वेन, ततश्च तथा इतरेतराऽवध्यनुसन्धानत्वेन, तन्निश्चयाऽनुपपत्ते. प्रक्रमात् तस्य कस्यचित्, तन्निश्चय तन्निर्विकल्पकत्वकार्यत्वनिश्चयः तत्तन्निश्चय तस्य अनुपपत्तिः ततः, न कार्यहेतोरपि तदवगतिरिति क्रियायोगः। अत्राऽपि-कार्यहेतौ अपि, बुद्ध्यारूढधर्मधर्मिन्यायतोऽपि अधिकृतव्यवहाराऽभाव.-अनुमानाऽनुमेयव्यवहाराऽभाव। कुत इत्याह-उक्तवत् यथोक्तं तथा, न्यायतो-न्यायेन, तदयोगात्-अधिकृतव्यवहाराऽयोगात्, योगेऽपि बुद्ध्यारूढधर्मधर्मिन्यायेन अधिकृतव्यवहारस्य अभिलषिताऽर्थाऽसिद्धिरेव। कुत इत्याह—अर्थस्य अर्थगमकत्वाऽभ्युपगमात्। यदि नामैवं ततः किमित्याह-तत्तथातायां च अर्थाद् अर्थगमकतायां च निश्चयाऽभावात्, अभावश्च तस्य—अर्थस्य, तद्विषयत्वाऽनभ्युपगमाद्-विकल्पविषयत्वाऽनभ्युपगमात्, पारम्पर्यत—पारम्पर्येण, तत्तद्भावे तस्य विकल्पस्य-तस्माद्—अर्थाद् भावे। किमित्याह-प्रमाणाऽभावात्, अभावश्च परतीतित—परतीत्या, तदसिद्धे-प्रमाणासिद्धे, स्वलक्षणात्—स्वलक्षणज्ञातं ततो विकल्प इति। नहि एवं स्वलक्षणसामान्यलक्षणाऽऽलम्बनं परतीत्या प्रमाणमस्ति, इति भावनीयम्, एवमभिलषिताऽर्थाऽसिद्धिरेव इति। एतेनेत्यादि। एतेन—अनन्तरोदितेन, धूमाद् अग्न्यनुमानं निषिद्धम्। कुत इत्याह—समानयुक्तित्वाद् धूमाद् अग्न्यनुमानस्य। न च अयं सर्वस्यैव वादिनो दोष इत्याह—यस्य पुनरित्यादि। यस्य पुनर्वादिन', अन्वयव्यतिरेकवद् नित्याऽनित्यमित्यर्थ, अत एव एकाऽनेकस्वभावं निश्चयात्मकमेव प्रत्यक्षम्—'इदम्—इत्थमिति' तस्य उक्तदोषाऽभाव", निर्विकल्पक प्रत्यक्षमित्यत्र न प्रमाणं तेनैव तदनधिगते:, अर्थविषयत्वाद् इत्येवमादय., उक्ता दोषा. तदभाव। कथमित्याह—सर्वत्र—सविकल्पकादौ निरूप्य। किमित्याह—अनुपचरितनिबन्धनभावात्—तात्त्विकनिबन्धनभावादित्यर्थ। अत एव आह—प्रतीत्यादि। तस्य प्रत्यक्षस्य, चित्रस्वभावता स्वविषयग्रहणरूपाविच्छिन्नार्थग्रहणस्वभावसंवेदनवेदनेन तच्चित्रस्वभावता, प्रतीतिसचिवा चासौ तथाप्रतीते तच्चित्रस्वभावता च इति विग्रह', तया प्रतीतिसचिवतच्चित्रस्वभावतया कारणेन, तदविरोधात्-प्रक्रमाद् उक्तदूषणविपक्षत., सविकल्पकत्वादौ तेनैव तदनधिगत्याद्यविरोधात्, अविरोधश्च पूर्वपक्षग्रन्थाऽनुसारतः प्रतिपक्षोपन्यासेन स्वतन्त्रनीत्या स्वयमेव भावनीय इति अलं प्रसङ्गेन।

अस्तु वा निर्विकल्पकमपि प्रत्यक्षम्, तत्र असाधारणमेव वस्तु प्रतिभासते इत्येतद् अयुक्तम्, न्यायाऽनुभवविरोधात्। तत्प्रतिभासो हि निश्चयबलेन व्यवस्थाप्यते, अन्यथा तदयोगात्, भावतस्तेनैव तदनधिगतेस्तथा अनुभवाऽभावात्, एवमपि तत्कल्पने अतिप्रसङ्गापत्तेः नियामकाऽभावादिति। न च द्राग्दर्शनात् तन्निश्चयः अपि तु सदादिमात्रस्य, अतः प्रथमाऽक्षसन्निपाते तदेव प्रतिभासत इति एतत् युक्तम्, सितेतरादिषु अपि क्षिप्रादिदर्शने तावन्मात्रनिश्चयात्, न च तत्र तदग्रहणमेव, तथा अनुभवविरोधात्, न च अन्यथाग्रहणेऽन्यथानिश्चयोत्पादः प्रमाणाऽभावात्। न च सन्नपि अयं न्याय्यः असमञ्जसत्वापत्तेः, न च वैभ्रमिक एव अयम्, तद्भावभावित्वोपलब्धेः। अवग्रहादपि अयमयुक्त इति चेत्। सत्यम्, अदोषस्तु तन्मात्राऽनभ्युपगमात्। एवमपि दृष्टबाधा इति चेत्। न। अन्तरालाऽवायत एव तद्भावात्। कथमेतत् अवगम्यत इति चेत्?, अवग्रहबोधस्य अल्पत्वात्। यदि नामैवं ततः किमिति चेत्?, नाऽसौ विशिष्टाध्यवसायबीजम्, यस्तु भवति सोऽवान्तराऽवायरूपः, अवायबहुत्वात्। एवं सद्द्रव्याद्यनेकस्वभावं वस्तु तदितरधर्माऽऽलोचनेन समानधर्मव्यवच्छेदतः तद्बोधपूर्वकत्वात्, तदितरबोधस्य तथाऽनुभवतस्तत्तथास्वभावत्वाऽवगमात्, प्रथममेव विशेषाऽग्रहणात् इन्द्रियद्वारेणैव तथाऽर्थविशेषप्रतिपत्तिः, सकललोकसिद्धत्वात्, अन्यथा तदनुपपत्तेः, द्राग्दर्शने क्वचिदभावात् शीघ्राऽवगमस्याऽपि दीर्घत्वात् कालसौक्ष्म्यादिति। वस्तुनोऽनेकस्वभावात् सर्वेषां सदा भावात्, अन्यथा तदनुपपत्तेश्चित्राऽऽस्तरणवद् एकदैव किं नाऽर्थविशेषप्रतिपत्तिः?, येन 'एतदेवम्' इति ग्रहीतुः क्षयोपशमाऽभावादित्युक्तप्रायम्।

इहैव उपचयमाह—अस्तु वा इत्यादिना। अस्तु वा-भवतु वा, निर्विकल्पकमपि प्रत्यक्षम्, तत्र निर्विकल्पके प्रत्यक्षे, असाधारणमेव—सजातीयेतरविविक्तमेव, वस्तु-रूपादि, घटादि, प्रतिभासते। इति-एतद् अयुक्तम्—अघटमानकम्। कुत इत्याह—न्यायाऽनुभवविरोधात्—न्यायप्रधानोऽनुभवो न्यायाऽनुभव तेन विरोधात्। अथवा न्यायो-युक्ति, अनुभव-प्रत्यक्षम्, ताभ्यां विरोधात्। एतमेवाऽऽह—तत्प्रतिभासो हि इत्यादिना। तत्प्रतिभासो हि

प्रत्यक्षाऽऽकारो यस्माद् निश्चयबलेन व्यवस्थाप्यते, अन्यथा निश्चयबलमन्तरेण, तदयोगाद् व्यवस्थाऽयोगात्. अयोगश्च भावत परमार्थेन, तेनैव-निर्विकल्पकप्रत्यक्षेण, तदनधिगते-प्रत्यक्षाऽऽकारस्याऽनधिगते, अनधिगतिश्च तथा स्वाऽऽकारग्रहणतया अनुभवाऽभावात्, एवमपि-अनुभवाऽभावेऽपि; तत्कल्पने-तनैव तदधिगतिकल्पने, अतिप्रसङ्गापत्ते. प्रतिभासान्तरकल्पनया इति भाव । इत्थं चैतद् अङ्गीकर्तव्यमित्याह—नियामकाऽभावादिति, अत. स्थितमेतद् अयुक्तमिति । न चेत्यादि । न च द्रागदर्शनात्-शीघ्रदर्शनात्, तन्निश्चय.-प्रक्रमाद् असाधारणवस्तुनिश्चयः अपि तु-सदादिमात्रस्य निश्चय, अत-अस्मात् कारणात्, प्रथमाऽक्षसन्निपाते अवग्रहणकाले तदेव सामान्यं प्रतिभासते इति एतद् युक्तम् । उपपत्त्यन्तरमाह—सिततरादिष्वपि क्षिप्रादिदर्शने आदिशब्दाद्-मन्ददर्शनग्रह. तावन्मात्रनिश्चयात्-सदादिमात्रनिश्चयात्, न च तत्र क्षिप्रादिदर्शने; तदग्रहणमेव-सदादिमात्राग्रहणमेव । कुत इत्याह—तथा सदादिमात्रनिश्चयत्वेन अनुभवविरोधात्, न च अन्यथाग्रहणे-सिततरादित्वेन ग्रहणे इत्यर्थ, अन्यथा सदादिमात्रत्वेन निश्चयोत्पाद. । कुत इत्याह—प्रमाणाऽभावात् । न च संज्ञापि अयम् अन्यथा ग्रहणे अन्यथा निश्चयोत्पादो न्याय्यः । कुत इत्याह—असमञ्जसत्वापत्ते सिततरादिव्यवस्थाऽभावेन, न च वैभ्रमिक एव अयं-प्रक्रमाद् द्रागदर्शनेन निश्चय सदादिमात्रस्य । कुत इत्याह—तद्भावभावित्वोपलब्धे -सदादिमात्रभावभावित्वोपलब्धे, अवग्रहाद् अपि अनिर्देश्यसदादिमात्रगोचराद् । अयं सदादिनिश्चय, न शब्दाऽरूपितत्वेन युक्त इति चेत्, एतदाशङ्क्याह—सत्यम्, एवमेतत्, अदोषस्तु तन्मात्राद्-अवग्रहमात्रात् अनिर्देश्यसदादिमात्रगोचरात्, अनभ्युपगमात् सदादिमात्रनिश्चयस्य । एवमपि दृष्टबाधा इति चेत्—तदनन्तरमेव भावाद् अधिकृतनिश्चयस्य, इत्यभिप्राय । एतदाशङ्क्याह—न, अन्तरालाऽवायत एव गेयत्वाद्यपेक्षया-सदसदीहोत्तरकालभाविन सकाशात्, तद्भावात् सदादिमात्रनिश्चयभावात्, शब्दाऽरूपितबोधाऽनन्तरभावी एव अयं निश्चय इत्यर्थ । कथमेतद्-अनन्तरोदितमवगम्यते इति चेत्? । एतदाशङ्क्याह—अवग्रहबोधस्य प्रक्रमाद् नैश्चयिकाऽवग्रहसंबन्धिन । किमित्याह—अल्पत्वाद् अनवबोधव्यावृत्तिमात्ररूपत्वेन । यदि नामैवं तत किमिति चेत्? । एतदाशङ्क्याऽऽह-नाऽसौ अल्पबोधरूप सन् विशिष्टाऽव्यवसायबीजम्, नहि अणुमात्राद् द्व्यणुकादिभाव, यस्तु भवति विशिष्टाऽध्यवसायबीज सोऽवान्तराऽवायरूप शब्दाऽरूपितबोधस्वलक्षण । कुत एतद् एवमित्याऽऽह—अवायबहुत्वात् कालक्षयोपशमादिभेदेन, अत प्रथमाऽक्षसन्निपाते तदेव प्रतिभासते इति युक्तमिति स्थितम एवम्-उक्तनीत्या, सद्द्रव्याद्यनेकस्वभावे वस्तुनि इन्द्रियद्वारेण एव तथाऽर्थविशेषप्रतिपत्तिरिति योग । कथमित्याह-सद्द्रव्याद्यनेकस्वभाव वस्तु प्रायशो निदर्शितमेव. तथा निदर्शयिष्याम, ततश्च सद्द्रव्याद्यनेकस्वभावे वस्तुनि सति । किमित्याह-तदितरधर्माऽऽलोचनेन, ते-अन्वयिन, इतरे-व्यतिरेकिण, ते च इतरे च तदितरे, तदितरे च ते धर्माश्च तेषामालोचनं-स्वरूपनिरीक्षणमिति विग्रहः, तेन समानधर्मव्यवच्छेदतो गेयत्वादिव्यवच्छेदेन व्यवच्छेदश्च तद्बोधपूर्वकत्वात्-समानधर्मबोधपूर्वकत्वात्, तदितरबोधस्य सत्त्वादिविशेषधर्मबोधस्य, एतच्च अस्य तथाऽनुभवत. इत्थं क्रमाऽनुभवेन, तथास्वभावत्वाऽवगमाद् वस्तुन. । इत्थं चैतद् अङ्गीकर्तव्यमित्याह-प्रथममेव-आदौ एव, विशेषाग्रहणात् सर्वत्र । किमित्याह-इन्द्रियद्वारेण एव तथा समानधर्मग्रहणपुरस्सरा अर्थविशेषप्रतिपत्ति. । इत्थं चैतद् अङ्गीकर्तव्यमित्याह-सकललोकसिद्धत्वात् कारणात्, अन्यथा उक्तप्रकारव्यतिरेकेण, तदनुपपत्ते -अर्थविशेषप्रतिपत्त्यनुपपत्ते., अनुपपत्तिश्च द्रागदर्शने क्वचिद् विद्युत्संपातादौ, अभावाद् अर्थविशेषप्रतिपत्ते । अन्यत्र भविष्यति इत्याशङ्कानिरासाय आह-शीघ्राऽवगमस्याऽपि लोकदृष्ट्या दीर्घत्वात् तत्त्वदर्शनेन, दीर्घत्वं च कालसौक्ष्म्यात्, इति इन्द्रियद्वारेण एव तथाऽर्थविशेषप्रतिपत्तिरिति क्रिया । आह-वस्तुनोऽनेकस्वभावत्वाद् भवन्नीत्या सर्वेषां स्वभावानां सदा भावात् त्वन्नीत्या एव, अन्यथा तस्य वस्तुनः, तदनुपपत्ते—अनेकस्वभावत्वाऽनुपपत्ते. । किमित्याह—चित्राऽऽस्तरणवद् इति निदर्शनम्, एकदा एव—एकस्मिन् एव काले, किं न अर्थविशेषप्रतिपत्ति सन्निधानाऽविशेषेऽपि इति गर्भ ?, येन एतद्—अनन्तरोदितम्, एव तदितरधर्माऽऽलोचनादित्वेन इति । एतदाशङ्क्याऽऽह—ग्रहीतु क्षयोपशमाऽभावाद् एतद्—एवमित्युक्तप्रायं प्रायेण उक्तं प्राक् ।

एवम्, ईहादेः-कथञ्चिद् अनधिगताऽर्थाऽधिगन्तृत्वात्, एकाऽधिकरणत्वात्, बोधवृद्ध्युपपत्तेः, अलोचिताऽधिगमात्, तत्स्थैर्यसिद्धेः तथाऽनुभवभावात्, प्रतिक्षेपाऽयोगात्, बाधकानुपपत्तेः न्यायत एव व्यवस्थितं प्रामाण्यम् ।

एवमित्यादि । एवम्-उक्तनीत्या, ईहादे.-मतिविशेषजातस्य न्यायत एव व्यवस्थितं प्रामाण्यमिति योग. । हेतुनाह—कथंचिद् अनधिगताऽर्थाऽधिगन्तृत्वाद्-अवग्रहबोधाऽपेक्षया, तथा एकाऽधिकरणत्वात्-तद्वस्तुतत्त्वाऽपेक्षया, तथा बोधवृद्ध्युपपत्तेः—अर्थाऽनुभवभावेन, तथा आलोचिताऽधिगमाद्—दृष्टपरिच्छेदेन, तथा तत्स्थैर्यसिद्धे —बोधाऽवस्थानेन, तथा अनुभवभावात्-अविच्युतिरूपधारणाया, तथा प्रतिक्षेपाऽयोगात्—अधिकृतानुभवस्य, अयोगश्च बाधकाऽनुपपत्ते कथंचिद् ग्रहणमपि यथायोगं योजनीयम् । एवं न्यायत एव व्यवस्थितं प्रामाण्यम्-ईहादेरिति प्रक्रम. ।

तथा सद्द्रव्याद्यनेकस्वभावता च वस्तुनस्तथाऽनुभवसिद्धत्वादिति । किं हि सत्त्वाद् अन्यद् द्रव्यादि इति चेत्? प्रतीतमेतद् ;यत् तस्मिन् गृहीतेऽपि कथञ्चिद् गृह्यत इति । नैवविधं किञ्चिद् अवगच्छाम इति चेत्, किं न भवति भवतः क्वचिद् घटादौ सन्मात्रग्रहेऽन्याग्रहः ? । किं तद् यद् भूयो गृह्यत इति चेत् ?, ननु बालादिसिद्धं तदनुविद्धमेव विशिष्टं मृद्रूपादि । न तत् तत्सत्त्वतोऽन्यद् एव इति

चेत्, सत्यमेतत्, किन्तु तन्मात्रमपि न भवतीति। तथाऽ, प्रतीतेर्निश्चयाऽनुभवेन अविगानत एव एकत्र सन्मृद्रूपाऽऽकारवेदनात्, सन्मात्राद् एव एतदनुपपत्तेरतिप्रसङ्गात्, रूपमात्राद् रूपरसादिनिश्चयापत्तेः। न च सत्त्वाऽऽकारयोरपि अभेद एव, अनेकदोषप्रसङ्गात्, तथाहि-घटसत्त्वं तावद् एकं तस्य मृद्रूपाद्यात्मकत्वे एकत्वहानिः, तदनभ्युपगमे प्रतीतिबाधा। तथा एकत्वेऽपि कस्य असौ आकार इति वाच्यम्?, न रूपसत्त्वस्य, त्वगिन्द्रियेणाऽपि ग्रहणात्, तस्य च रूपाऽविषयत्वात् तथाऽप्रतीतेः, तत्सत्त्वस्य च तत्त्वात् न स्पर्शसत्त्वस्य, चक्षुषाऽपि उपलब्धेः स्पर्शात् तत्सत्त्वभेदप्रसङ्गात् रूपेऽपि अनुगमोपपत्तेः, अन्यथा अनुभवविरोधात्, न च उभयसत्त्वस्य तदेकत्वाऽयोगात् इन्द्रियसङ्करप्रसङ्गात्, लोकविरोधापत्तेः असमञ्जसत्वादिति। न च तयोराकारयोर्भेद एव तथा प्रतीत्यभावात्, तत्त्वत उभयाऽयोगात् तत्सत्त्वैकत्वक्षतेः, तथा च अभ्युपगमविरोधादिति।

तथा सद्द्रव्याद्यनेकस्वभावता च वस्तुनो—न्यायेन एव व्यवस्थिता। कथमित्याह—तथाऽनुभवसिद्धत्वाद् अवग्रहादिप्रकारेण अनुभवसिद्धत्वादिति। किं हि सत्त्वाद् अन्यद्-अर्थान्तरभूत, द्रव्यत्वादि इति चेत्?। एतदाशङ्क्याह—प्रतीतमेतद् यत् तस्मिन्—सत्त्वे, गृहीतेऽपि सति कथंचिद् न गृह्यते इति, नवविधं किञ्चिद् यत् तस्मिन् गृहीतेऽपि कथञ्चिद् न गृह्यत इति, तद् अवगच्छाम इति चेत्। एतदाशङ्क्याह-किं न भवति भवत. क्वचिद् घटादौ वस्तुनि, सन्मात्रग्रहे सति, अन्यऽग्रहो-वस्त्वन्तराऽग्रह ? किं तद्-वस्तु, यद् भूयः-पुनः- सन्मात्रग्रहोत्तरकालं गृह्यत इति चेत्। एतदाशङ्क्याऽऽह-ननु इति-अक्षमायाम्, बालादिसिद्ध तदनुविद्धमेव-सन्मात्राऽनुविद्धमेव विशिष्टं मृद्रूपादि, न तद् मृद्रूपादि, तत्सत्त्वत -सन्मात्रसत्त्वाद्, अन्यद् एव इति चेत्। एतदाशङ्क्याह—सत्यमेतद्, अन्यद् एव न किन्तु तन्मात्रमपि—सन्मात्रमपि न भवति। कुत इत्याह—तथा--सन्मात्रत्वेन अप्रतीतेः, अप्रतीतिश्च निश्चयाऽनुभवेन अवग्रहोत्तरकालम्, अविगानत अविगानेन एव, एकत्र वस्तुनि। किमित्याह—सन्मृद्रूपाऽऽकारवेदनात्। यदि नामैव तत किमित्याह—सन्मात्राद् एव एकस्वभावात्, एतदनुपपत्ते—सन्मृद्रूपाकारवेदनाऽनुपपत्ते अनुपपत्तिश्च अतिप्रसङ्गात्, अतिप्रसङ्गश्च रूपमात्रात् सकाशात्, रूपरसादिनिश्चयापत्ते सन्मात्राद् इव विजातीयनिश्चयन्यायेन इहैव-दोषान्तरमधिकृत्य आह—न चेत्यादि न च सत्त्वाऽऽकारयो अपि इह अधिकृतयो, अभेद एव एकान्तेन। कुत इत्याह—अनेकदोषप्रसङ्गात्। एतमेव आह—तथाहि इत्यादिना। तथाहि- घटसत्त्व तावद् एक निरंशं स्वलक्षणम्' इत्यविचारितरमणीयेन भवदभ्युपगमेन, तस्य मृद्रूपाद्यात्मकत्वे सकललोकाऽनुभवसिद्धे अभ्युपगम्यमाने एकत्वहानि मृदादिशाबल्येन, तदनभ्युपगमे मृद्रूपाद्यात्मकत्वाऽनभ्युपगमे, प्रतीतिबाधा मृद्रूपादिप्रतीतेः, तथा एकत्वेऽपि सत्त्वाऽऽकारयोरिति प्रक्रम, कस्य असौ आकार रूपादिसत्त्वाऽपेक्षया इति वाच्यम्?, किञ्च अत?, सर्वथा अपि दोष इत्याह—न रूपसत्त्वस्य असौ आकार.। कुत इत्याह—त्वगिन्द्रियेण अपि ग्रहणात् कारणात्। यद्येवं तत किमित्याह-तस्य च त्वगिन्द्रियस्य रूपाऽविषयत्वात्, अविषयत्वं च तथा त्वगिन्द्रियस्य रूपविषयत्वेन अप्रतीतेः, तत्सत्त्वस्य च रूपसत्त्वस्य च, तत्त्वात् रूपत्वात् एवं न स्पर्शसत्त्वस्य असौ आकार इति गम्यते। कुत इत्याह—चक्षुषा अपि उपलब्धे. कारणात्। तत. किमित्याह-स्पर्शात् सकाशात्, तत्सत्त्वभेदप्रसङ्गात् स्पर्शसत्त्वभेदप्रसङ्गात्, प्रसङ्गश्च रूप अपि अनुगमोपपत्ते। इत्थं च एतत् इत्याह—अन्यथा एवमनभ्युपगमे अनुभवविरोधात्, चक्षुषा तदुपलब्धिरिति अनुभव, न च उभयसत्त्वस्य रूपस्पर्शसत्त्वस्य, असौ आकार इति प्रक्रम.। कुत इत्याह-तदेकत्वाऽयोगात् तस्य आकारस्य एकत्वाऽयोगात्, उभयाऽव्यतिरेकेण योगे अपि इन्द्रियसंकरप्रसङ्गात् विषयसाङ्कर्येण, सङ्करे च लोकविरोधाऽऽपत्ते, एवमसमञ्जसत्वादिति। न च इत्यादि। न च तयोराकारयो चक्षुस्त्वग्ग्राह्ययो, भेद एव एकान्तेन। कुत इत्याह-तथा भेदगर्भतया, प्रतीत्यभावात् स्पर्शनात् अपि 'सोऽयं यो दृष्ट' इत्यवगमात् तथा तत्त्वत उभयाऽयोगात् तदभ्युपगमेन तथा च आह-तत्सत्त्वैकत्वक्षतेः घटसत्त्वैकत्वक्षतेरित्यर्थ, तथा च एवं च, अभ्युपगमविरोधात् वस्तुनोऽनेकस्वभावत्वाऽऽपत्त्या न च तयोराकारयो भेद एव इति स्थितम्। एव बौद्धमतवक्तव्यतामधिकृत्य एतत् उक्तम्।

अधुना वैशेषिकमतमुररीकृत्य आह-

न च एतेभ्योऽन्य एव घटः, अग्रहणप्रसङ्गात् अरूपाद्यात्मकत्वात्, तत्तद्वृत्तौ अपि तत्तद्रूपताऽनापत्तेः, इत्थमपि तद्ग्रहणे इन्द्रियाणां स्वधर्माऽतिक्रमात्। कथमतिक्रम इति चेत्?, चक्षुरादेररूपादिग्रहणात्। एवमपि को दोष इति चेत्?, ननु रसादिग्रहणापत्तिः, प्रतीतिबाधिता इयमिति चेत्, तदतिरिक्तद्ग्रहे का प्रतीतिः?। न तेभ्य एकत्वबुद्धिरिति चेत्, ततः किमिति वाच्यम्?। अस्ति इयमिति चेत्, न खलु अस्यां विगानम्, य एतन्निमित्तः (ग) स तेभ्योऽन्य इति चेत्, संख्यायाः तद्भावप्रसङ्गः। न सा तदनाश्रिता इति चेत्, एवमपि तत्त्वतोऽन्या एव। यदि नामैवं ततः किमिति चेत्?, तन्निमित्तैकबुद्धिः सा तद्विशेषणभूता इति चेत्, कथमेतत् विनिश्चीयत इति ?, एकोऽयमिति व्यवसायादिति चेत्, न असौ मृदादिभिन्नप्रतिभासीति तथाऽननुभवात्। एवमपि तत्कल्पनेऽतिप्रसङ्गात् तदन्तरापत्तेर्निराकरणाऽयोगात्, अननुभवाऽविशेषादिति तदेकत्वपरिणामनिबन्धन एव अयम्। तेषामेव एकोऽने-

-कात्मकत्वाद् भेदाऽभेदभावात्, तथास्वभावत्वाद्विरोधाऽनुपपत्तेः, प्रतीतिसिद्धत्वाद् बाधाभावादिति । सद्द्रव्याद्यनेकस्वभावे वस्तुनि वस्तुमात्रग्राहि एव अवग्रहकल्पमविकल्पकमङ्गीकर्त्तव्यम्, अन्यथा उक्तदोषाऽनतिवृत्तिः । एवंभूते च अस्मिन् आवयोरविवाद एव, एवंविधाऽवग्रहस्य अस्माभिरप्यभ्युपगतत्वात्, न च अत्र कश्चिद्दोषः, अपि तु शुक्तिकादौ अपि क्वचिद् रजतादिनिश्चयस्य न्यायत एव आपत्त्या गुणः,तस्य हि अवग्रहोत्तरकालमीहाप्रवृत्तस्य तथाविधसमानधर्मोपलब्धुरेव असत्त्वयोपशमभावतो भावाद्, अन्यथा उक्तवत् तदयोगादिति ।

न चेति-नच एतेभ्यः सन्मृद्रूपाकारेभ्य अन्य एव घट एकान्तेन । कुत इत्याह-अग्रहणप्रसङ्गाद् घटस्य,प्रसङ्गश्च अरूपाद्यात्मकत्वात्, एतच्च सन्मृद्रूपाकारेभ्योऽन्यत्वाऽभ्युपगमेन, उपन्यासश्च एवम्—चक्षुर्ग्रहणाऽऽनुगुण्येन । तत्तद्वृत्तौ अपि इत्यादि । तेषां सन्मृद्रूपाऽऽकाराणां तस्मिन् घटे वृत्तौ अपि सामान्यद्रव्यगुणानां यथासंभवं तद्वृत्त्यभ्युपगमेन द्रव्यवृत्तौ कारणद्रव्येषु स एव वर्त्तते इति कृत्वा । किमित्याह—तत्तद्रूपताऽनापत्तेः-तस्य घटस्य तद्रूपताऽनापत्ते सन्मृद्रूपाऽऽकाररूपताऽनुपपत्ते । इत्थमपि इत्यादि । इत्थमपि—एवमपि तत्तद्रूपताऽनापत्तौ अपि, तद्ग्रहणे—घटग्रहणे अभ्युपगम्यमाने । किमित्याह-इन्द्रियाणां स्वधर्माऽतिक्रम —स्वमर्यादापरित्याग, कथमतिक्रम. इति चेत्? । एतदाशङ्क्याह—चक्षुरादे. आदिशब्दात्-त्वगिन्द्रियग्रह अरूपादिग्रहणाद्; घटादिग्रहणाद् इत्यर्थ. । एवमपि को दोष इति चेत्?, द्विविधं हि द्रव्यम्—दार्शनं, स्पार्शनं च । रूपादिप्रतीति तद्धामित्वेन तदवसानत्वाद् इत्यभिप्राय. । एतदाशङ्क्याह—ननु रसादिग्रहणाऽऽपत्तिः रसादेरपि घटवद् अरूपादित्वात्, सार्वेन्द्रियं च एवं द्रव्यं प्राप्नोति, रसादिप्रतीतिरपि तद्धामित्वेन तदवसानत्वाद् इति भावनीयम् । प्रतीतिबाधिता इयं रसादिग्रहणाऽऽपत्ति इति चेत् । एतदाशङ्क्याह-तदतिरिक्तग्रहे प्रक्रमाद् रूपादिव्यतिरिक्तघटग्रहे का प्रतीति. ?, ननु किमनया ?, न तेभ्यो रूपादिभ्य. एकत्वबुद्धि., अनेकत्वाद् अमीषामिति चेत् । एतदाशङ्क्याऽऽह—तत किमिति वाच्यम् ?, किमपि, अत्राऽस्ति च इयमेकत्वबुद्धिरिति चेत् । एतदाशङ्क्याह-न खलु अस्यामेकत्वबुद्धौ विगानम्, य कश्चित्; एतन्निमित्तम्-एतस्या एकत्वबुद्ध. आलम्बनम्, (स) स इति स घट, तेभ्यो रूपादिभ्याऽन्य इति चेत् । एतदाशङ्क्याह-संख्याया -एकसंख्याया., एकत्वबुद्धिनिमित्तत्वेन तद्भावप्रसङ्ग -घटभावप्रसङ्ग, न सा संख्या, तदनाश्रिता-घटाऽनाश्रिते इति चेत् । एतदाशङ्क्याह-एवमपि-तदाश्रितत्वेऽपि, तत्त्वत —परमार्थेन, अन्या एव सन्मृद्रूपाऽऽकारेभ्य इति । यदि नामैवं तत किमिति चेत् । एतदाशङ्क्याह-तन्निमित्ता-सदादिभिन्नसंख्यानिमित्ता एकत्वबुद्धि., सा सख्या, तद्विशेषणभूता प्रस्तुता एकाऽवयवविशेषणभूता, इति चेत् । एतदाशङ्क्याह-कथमेतद् विनिश्चीयते यदुत सा तद्विशेषणभूता इति ?, एकोऽयमिति व्यवसायाद् इति, चेद् विनिश्चीयते इति । एतदाशङ्क्याह-नाऽसौ व्यवसाय', सदादिभिन्नप्रतिभासी इति । कुत इत्याह-तथा सदादिभिन्नप्रतिभासित्वेन अननुभवात्, एवमपि तथा अननुभवेऽपि तत्कल्पने—सदादिभिन्नाऽवयविकल्पने अतिप्रसङ्गात्, अतिप्रसङ्गश्च तदन्तरापत्ते —तत्रैव अवयव्यन्तरापत्ते., आपत्तिश्च निराकरणाऽयोगात् तदन्तरस्य, अयोगश्च अननुभवाऽविशेषाद् द्वयोरपि इति, इत्येव तदेकत्वपरिणामनिबन्धन एव अयं प्रक्रमात् सन्मृद्द्रव्याऽऽकारैकत्वपरिणामनिबन्धन एवायम्, एकोऽयमिति व्यवसाय । तेषामेव सदादीनामेकाऽनेकात्मकत्वात्, एतच्च भेदाऽभेदभावात्, अयं च तथास्वभावत्वात्. तथास्वभावत्वं च विरोधाऽनुपपत्ते.; अनुपपत्तिश्च प्रतीतिसिद्धत्वात् । नहि प्रतीतिरेव सिद्धौ निमित्तमित्याशङ्काऽपोहाय आह-बाधाभावादिति तदेकत्वपरिणामनिबन्धन एव अयम्, इति एवं सद्द्रव्याद्यनेकस्वभावे वस्तुनि । किमित्याह-वस्तुमात्रग्राहि एव अवग्रहकल्पमविकल्पकमङ्गीकर्त्तव्यम् । किमित्याह-अन्यथा उक्तदोषाऽनतिवृत्ति, उक्तदोषा –" न्यायाऽनुभवविरोधाद् " इत्येवमादय तदनतिवृत्ति., एवं भूते च अस्मिन् अविकल्पके । किमित्याह—आवयो –तव मम च, अविवाद एव । कुत इत्याह—एवंविधाऽवग्रहस्य अविकल्पकस्य अस्माभि. अभ्युपगतत्वात्, न चाऽत्र अभ्युपगमे कश्चिद् दोष', अपि तु शुक्तिकादौ अपि, आदिशब्दाद् मरीचिकाग्रहः, क्वचिद् रजतादिनिश्चयस्य आदिशब्दाद् जलनिश्चयग्रह, न्यायत एव आपत्त्या गुण' । न्यायत एव आपत्तिमाह-तस्य इत्यादिना । तस्य हि शुक्तिकादौ रजतादिनिश्चयस्य, अवग्रहोत्तरकालमीहाप्रवृत्तस्य सत' । कस्य इत्याह-तथाविधसमानधर्मोपलब्धुरेव शुक्तिकादि-रजतादिसमानधर्मोपलब्धुरेव प्रमातुर्नान्यस्य, असत्त्वयोपशमभावत -असत्त्वयोपशमभावेन भावात्, अन्यथा एवमनभ्युपगमे, उक्तवत् यथाक्रम्—' शुक्तिकाया अपि अत्वमानेन नीलादिवत् तत्त्वेन एव ग्रहणाद् " इत्यादि तथा अयोगाद् इति ।

यच्च उच्यते—" गृहीतग्राहित्वाद्विकल्पोऽप्रमाणम् " इति, एतदपि अयुक्तम् । स्वमतविरोधात्, निर्विकल्पकज्ञानेन स्वलक्षणस्य गृहीतत्वाद्विकल्पस्य तद्ग्राहित्वानुपपत्तेः, तत्प्रतिभासशून्यत्वात्, एवमपि तत्तथाताऽभ्युपगमे अतिप्रसङ्गात्, नीलविकल्पस्य पीतग्राहित्वापत्तेः पारम्पर्येण तत्तज्जनकत्वाविशेषात्, उपलब्धपीत-नीलद्रष्टुरपि तद्भावादिति ।

यच्च उच्यते परैः-' गृहीतग्राहित्वाद् विकल्प. अप्रमाणम् ' इति एतदपि अयुक्तम् । कथमित्याह--स्वमतविरोधाद् विरोधश्च निर्विकल्पकज्ञानेन स्वलक्षणस्य गृहीतत्वात्, विकल्पस्य तद्ग्राहित्वाऽनुपपत्ते -स्वलक्षणग्राहित्वाऽनुपपत्ते., अनुपपत्तिश्च तत्प्रतिभासशून्यत्वात्; स्वलक्षणाऽऽकारशून्यत्वादित्यर्थ । एवमपि तत्प्रतिभास-

शून्यत्वेऽपि सति , तत्तथानाऽभ्युपगमे-विकल्पस्य तद्ग्राहित्वाभ्युपगमे अतिप्रसङ्गात् , अतिप्रसङ्गश्च नीलविकल्पस्य पीतग्राहित्वाऽऽपत्तेः । नासौ पारम्पर्येण अपि तज्जन्य. इत्याशङ्काऽपोहाय आह-तत्सज्जनकत्वाऽविशेषात्,तस्य पीतस्य नीलविकल्पजनकत्वाऽविशेषात् । एतद्भावनाय एव आह-उपलब्धपीतनीलद्रष्टुरपि प्रमातुः , तद्भावात् नीलविकल्पभावात्, तदपि अयुक्तमिति स्थितम् ।

न च गृहीतग्राहि ज्ञानमप्रमाणमेव , एकत्र नीलादौ अनेकप्रमातृज्ञानानां प्रमाणत्वाऽभ्युपगमात्, तेषां चान्योऽन्यं गृहीतग्राहित्वात्, अन्यथा तद्ग्रहणानुपपत्तेः, तथा अगृहीतग्राहिज्ञानाऽसम्भवात् सर्ववस्तूनां सर्वबुद्धैस्सदा ग्रहणात्, तेषां सर्वज्ञत्वादन्यथा तत्त्वायोगात्, एकसन्तानाऽपेक्षया च गृहीतग्राहिज्ञानाऽसम्भव एव, सर्वेषां सर्वदा अगृहीतग्रहणादिति ।

दूषणान्तरमाह-नच इत्यादिना । न च गृहीतग्राहि ज्ञानमप्रमाणमेव एकान्तेन भवतः । कुत इत्याह—एकत्र नीलादौ अनेकप्रमातृज्ञानाना प्रमाणत्वाऽभ्युपगमात् परेणापि, तेषा च अधिकृतज्ञानानाम् अन्योऽन्यं परस्पर गृहीतग्राहित्वात् । इत्थं च एतदङ्गीकर्तव्यमित्याह अन्यथा तद्ग्रहणाऽनुपपत्ते -अधिकृतनीलादिग्रहणाऽनुपपत्ते । तथा इत्यादि । तथा अगृहीतग्राहिज्ञानाऽसभवात् , असंभवश्च सर्ववस्तूनां नीलादीनाम् , सर्वबुद्धैः सदा ग्रहणात् , ग्रहण च तेषा बुद्धाना सर्वज्ञत्वादिति , अन्यथा तत्त्वाऽयोगात्-तेषां सर्वज्ञत्वाऽयोगात्। एकसन्तानेत्यादि । एकसन्तानाऽपेक्षया अवगृहीतग्राहिज्ञानाऽसंभव एव तस्य अर्थस्य च क्षणिकत्वात्, सर्वेषां ज्ञानानाम् ,सर्वदा सर्वकालम् , अगृहीतग्रहणात् द्वयोरपि क्षणिकत्वेन इति, यद्वा तदभावे भावात् अभिधानमात्र ग्रहणमिति अग्रहीतग्रहणमिति ।

स्यादेतद् , न तत्त्वतो गृहीतग्राहित्वेन अस्य अप्रामाण्यम्, अपि तु अविषयत्वेन इति । कथमयमविषय इति वाच्यम् ?,यदनेन वेद्यते न तदस्तीति चेत् , क तन्नास्तीति ? । किं तत्रैव उच्यते , उताहो बहिरिति ? । यदि तत्रैव कथं वेद्यते, वेद्यमानं वा कथं न तत्रेति चिन्त्यम् ?, अथ बहिः, अविकल्पकेऽपि समानः प्रसङ्गः , तेनाऽपि वेद्यमानस्य बहिरभावात् स्वरूपस्यैव वेदनात् ' तद्बहिस्थतुल्यरूपमित्यदोष इति चेद् , केयं तत्तुल्यरूपतेति वाच्यम् ?, किं तत्साधारणरूपभावः ?, उताहो तत्तद्ग्रहणस्वभावता इति । न तावत् साधारणरूपभावः , चेतनाऽचेतनत्वेन तद्वैलक्षण्यसिद्धेः , सामान्यवेदनेन तदप्रामाण्यप्रसङ्गाच्च । तत्तद्ग्रहणस्वभावतातदङ्गीकरणे च विकल्पज्ञानेऽपि तुल्यः परिहारः , तस्यापि तद्ग्रहणस्वभावताऽभ्युपगमात् । तथाविधग्राह्याभावादस्य कुतस्तद्ग्रहणस्वभावतेति चेत् । न , तथाविधग्राह्याभावे प्रमाणाभावात् , प्रत्यक्षस्य स्वलक्षणविषयत्वेन तत्राप्रवृत्तेः , अनुमानस्याप्युपलब्धिलक्षणप्राप्तार्थविषयत्वात् तस्य च तदभावाभ्युपगमात् । न हि साधारणं रूपमुपलब्धिलक्षणप्राप्तमिष्यते भवद्भिः, तदवस्तुत्वप्रतिज्ञानात्, अनीदृशानुपलब्धेश्चाभावनिश्चायकत्वानुपपत्तेः । एतेन तद्बाधकप्रमाणप्रवृत्तिः प्रत्युक्ता, उक्तवत्प्रत्यक्षादेस्तद्बाधकत्वायोगात् । युक्त्या, तदयोगो बाधक इति चेत् । न । विकल्पानुपपत्तेः । युक्तिर्हि प्रमाणमप्रमाणं वा स्यात् ?। प्रमाणं चेत् । न प्रत्यक्षादेरन्यदिति, अत्र चोक्तो दोषः । अप्रमाणत्वे तु तद्बाधकत्वानुपपत्तिः, अतिप्रसङ्गात् ।

स्यादेतद् न तत्त्वतो गृहीतग्राहित्वेन हेतुना, अस्य विकल्पस्याप्रामाण्यम्, अपि त्वविषयत्वेनेति । एतदाशङ्कयाह-कथमयं विकल्पोऽविषय इति वाच्यम् ? । यदनेन वेद्यते विकल्पेन न तदस्तीति अविषय इति चेत् । एतदाशङ्कयाह-क तद् नास्ति यदनेन वेद्यते, किं तत्रैव विकल्प, उत बहिरिति ? । यदि तत्रैव विकल्प एव नास्ति , कथं तेन वेद्यते ?, वेद्यमानं वा कथं न तत्र विकल्पे इति चिन्त्यम् । द्वितीयं विकल्पमधिकृत्याह—अथ बहि' यदनेन वेद्यते न तदस्तीति । एतदाशङ्कयाह—अविकल्पकेऽपि समान' प्रसङ्गोऽविषयत्वप्रसङ्ग । कथमित्याह-तेनापि अविकल्पकेन वेद्यमानस्य बहिरभावात्, अभावश्च स्वरूपस्यैव वेदनात् । तदित्यादि । तदविकल्पकं वेद्यमानबहिःस्थतुल्यरूपं विषयतुल्यरूपम्, इत्यस्माददोष इति चेत् । एतदाशङ्कयाह—केयं तत्तुल्यरूपता बहिःस्थतुल्यरूपता ? इति वाच्यम् । किं तत्साधारणरूपभावो बहिःस्थसामान्यरूपभावोऽविकल्पकस्य, उत तद्ग्रहणस्वभावता-बहिःस्थग्रहणस्वभावतेति ?, किञ्चातः ? उभयथाऽपि दोष', तथा चाह—न तावत् साधारणरूपभावः तत्तुल्यरूपता । कुत इत्याह—चेतनाचेतनत्वेन हेतुना तद्वैलक्षण्यसिद्धेः तयोरविकल्पकबहिःस्थयोर्वैलक्षण्यसिद्धेः । दोषान्तरमाह—सामान्यवेदनेन हेतुना साधारणरूपभावतः तदप्रामाण्यप्रसङ्गाच्च अविकल्पकस्याप्रामाण्यप्रसङ्गाच्च न तत्साधारणरूपभावस्तत्तुल्यरूपतेति । तत्तद्ग्रहणस्वभावतानदङ्गीकरणे च-तस्याविकल्पकस्य तद्ग्रहणस्वभावता-बहिःस्थग्रहणस्वभावता तस्यास्तदङ्गीकरण-तत्तुल्यरूपताङ्गीकरणमिति विग्रह , तस्मिन् । किम् ? इत्याह-विकल्पज्ञानेऽपि तुल्य' परिहारः तत्तद्बहिःस्थतुल्यरूपमित्ययम् । कुत ? इत्याह-तस्यापि विकल्पज्ञानस्य तद्ग्रहणस्वभावताभ्युपगमात्-बहिःस्थग्रहणस्वभावताभ्युपगमात् । तथाविधेत्यादि । तथाविधग्राह्याभावात्-विकल्पज्ञानग्राह्याभावादस्य--विकल्पज्ञानस्य कुतस्तद्ग्रहणस्वभावता-बहिःस्थग्रहणस्वभावतेति चेत् । एतदाशङ्कयाह-न, तथाविधग्राह्याभावे-विकल्पज्ञानग्राह्याभावे प्रमाणाभावात् । अभावश्च प्रत्यक्षस्य तावत् स्वलक्षणविषयत्वेन हेतुना तत्र तथाविधग्राह्याभावेऽप्रवृत्ते , अनुमानस्याप्यनुपलब्धिरूपस्योपलब्धिलक्षणप्राप्तार्थविषयत्वात् । तत किम् ? इत्याह—तस्य तथाविधग्राह्यस्य तद-

भावाभ्युपगमाद्-उपलब्धिलक्षणप्राप्तार्थविषयत्वाभावाभ्युपगमात्। एतद्भावनायैवाह—नहि साधारणं रूपं विकल्पग्राह्यमुपलब्धिलक्षणप्राप्तमिष्यते भवद्भिः। कुत इत्याह—तदवस्तुत्वप्रतिज्ञानात्-तस्य साधारणरूपस्यावस्तुत्वप्रतिज्ञानात्,अनीदृशानुपलब्धेस्त्वनुपलब्धिलक्षणप्राप्तानुपलब्धेश्च। किमित्याह-अभावनिश्चायकत्वानुपपत्तेः तथाभ्युपगमात्। एतेनेत्यादि। एतेन—अनन्तरोदितेन तथाविधग्राह्याभावे प्रमाणाभावेन। किमित्याह—तद्बाधकप्रमाणप्रवृत्तिः—प्रत्युक्ता तस्मिंस्तथाविधग्राह्ये बाधकप्रमाणप्रवृत्तिर्निराकृता। कुत इत्याह—उक्तवत् यथोक्तं तथा प्रत्यक्षादेः प्रत्यक्षानुमानद्वयस्य तद्बाधकत्वायोगात्-तथाविधग्राह्यबाधकत्वायोगात्। युक्त्या तदयोगस्तथाविधग्राह्यायोग. साधारणरूपयोग इत्यर्थः ' बाधक इति चेत्। एतदाशङ्क्याह—न· विकल्पानुपपत्तेः। अनुपपत्तिश्च युक्तिर्हि प्रमाणमप्रमाणं वा स्यात्?। किञ्चातः?, उभयथापि दोष इत्याह—प्रमाणं चेत्। न प्रत्यक्षादेरन्यदिति, अत्र चोक्तो दोष, प्रत्यक्षस्य स्वलक्षणविषयत्वेन तत्राप्रवृत्तेरित्यादि.। अप्रमाणत्वे तु युक्तेः, किमित्याह—तद्बाधकत्वानुपपत्तिः—तथाविधग्राह्यबाधकत्वानुपपत्तिः। कुत इत्याह-अतिप्रसङ्गात् स्वलक्षणस्यापि युक्तिबाधितत्वोपपत्तेः, अविषयेऽपीयं प्रवर्त्तत इति भावना। एवं विकल्पज्ञानस्यापि कस्यचित् प्रामाण्यमङ्गीकर्त्तव्यमित्यैदंपर्यम्।

इत्थमनभ्युपगमे दोषमाह—

अखिलविकल्पज्ञानभ्रान्ततावादिनश्च तत्सामर्थ्योत्थं वचनमपि तादृगेवेति सुस्थिता तत्तत्त्वनीतिः। न हि भ्रान्तमात्मनो भ्रान्ततामवैति, द्विचन्द्रज्ञानादावात्मनि भ्रान्तताधिगमव्यपोहेन चन्द्रद्वयाद्यधिगतिदर्शनात्, तत्स्थानोपजातवचसोऽपि स्वभ्रान्तताभिधानपरित्यागेन चन्द्रद्वयाद्यभिधानात्, इति सकलमेव शास्त्रज्ञानाभिधानं भ्रान्तिमात्रम्, इति कथं ततस्तत्त्वनिश्चय इति चिन्त्यम्?, तथाहि—अस्य नित्या-ऽऽत्मादिविकल्पवत् कृतकत्वादिलिङ्गद्वारायाता अनित्याऽनात्मादिविकल्पा अपि भ्रान्ता एव, इति कथं तेभ्यस्तन्निश्चितिः?। निश्चितौ वा कथं न नित्यादावपि, तद्विकल्पानामपि ततो भावात्?।

अखिलविकल्पज्ञानभ्रान्ततावादिनश्च किमित्याह-तत्सामर्थ्योत्थं—निःशेषविकल्पज्ञानभ्रान्ततासामर्थ्योत्थं वचनमपि तादृगेव-भ्रान्तमेव इति-एवं सुस्थिता तत्तत्त्वनीतिस्ताभ्यां भ्रान्तविकल्पज्ञानवचनाभ्यां तत्त्वनीतिरित्युपहसति न सुस्थितेत्यर्थः। कथमित्याह—न हीत्यादि। न यस्मात् भ्रान्तं ज्ञानमात्मनि प्रक्रम, आत्मनो भ्रान्ततामवैति। कुत इत्याह—द्विचन्द्रज्ञानादौ आदिशब्दात्-मायाजलज्ञानग्रह, आत्मनि स्वरूपे भ्रान्तताधिगमव्यपोहेन चन्द्रद्वयाद्यधिगतिदर्शनात्. आदिशब्दात्-मायाजलग्रह. तत्स्थानोपजातवचसोऽपि-भ्रान्तज्ञानसामर्थ्योपजातवचनस्यापि स्वभ्रान्तताभिधानपरित्यागेन चन्द्रद्वयाद्यभिधानात्. इत्येवं सकलमेव शास्त्रज्ञानाभिधानं भ्रान्तिमात्रमिति कृत्वा कथं ततः शास्त्रज्ञा-

नाभिधानात् तत्त्वनिश्चय इति चिन्त्यम्?—नैव तत्त्वनिश्चय इति। एतद्भावनायैवाह—तथाहीत्यादि। तथाह्यस्याखिलविकल्पज्ञानभ्रान्ततावादिनो नित्याऽऽत्मादिविकल्पवदिति निदर्शनम्, कृतकत्वादिलिङ्गद्वारायाताऽनित्याऽनात्मादिविकल्पा अपि भ्रान्ता एव नाभ्रान्ताः, इत्येवं कथं तेभ्यो भ्रान्तविकल्पेभ्यस्तन्निश्चितिरनित्याऽनात्मादिनिश्चितिः?। निश्चितौ वा तेभ्योऽनित्याऽनात्मादेः कथं न नित्यादावपि निश्चिताः?। कुत इत्याह—तद्विकल्पानामपि नित्यात्मादिविकल्पानामपि ततो वस्तुनो भावात्।

स्यादेतत्स्वलक्षणदर्शनाहितवासनाकृतविप्लवरूपाः सर्व एव विकल्पाः, तथापि केषाञ्चिदेव तत्प्रतिबद्धजन्मनां विकल्पानामतत्प्रतिभासित्वेऽपि वस्तुन्यविसंवादः, मणिप्रभायामिव मणिभ्रान्तेः, नान्येषाम्, तद्भेदप्रसवे सत्यपि यथादृष्टविशेषानुसरणं परित्यज्य किञ्चित्सामान्यग्रहणेन विशेषान्तरसमारोपात्, दीपप्रभायामिव मणिबुद्धेः, इति संवादिभ्य एव तन्निश्चितिर्नासंवादिभ्यः।

स्यादेतदित्यादि। स्यादेतदथैवं मन्यसे-स्वलक्षणदर्शनेनाहिता या वासना तया कृतं विप्लवरूपं येषा ते तथाविधा सर्व एव विकल्पा. सामान्येन, तथाप्येवमपि व्यवस्थिते सति केषाञ्चिदेवानित्याऽनात्मादिरूपाणां तत्प्रतिबद्धजन्मनां-वस्तुप्रतिबद्धजन्मना विकल्पानामतत्प्रतिभासित्वेऽपि—वस्त्वप्रतिभासित्वेऽपीत्यर्थः, किमित्याह-वस्तुन्यविसंवादः। निदर्शनमाह—मणिप्रभायामिव विषयभूतायां मणिभ्रान्तेः कुञ्चिकादिविवरोपलम्भेन, नान्येषां नित्याऽऽत्मादिविकल्पानाम्, तद्भेदप्रसवे सत्यपि वस्तुभेदादुत्पादे सत्यपीत्यर्थः, यथादृष्टविशेषानुसरणं परित्यज्य; कथमित्याह—किञ्चित्सामान्यग्रहणेन सदृशापरापरहेतुना विशेषान्तरसमारोपाद् हेतो, ' नान्येषाम् ' इति वर्त्तते। निदर्शनमाह-दीपप्रभायामिव विषयभूतायां मणिबुद्धेः कुञ्चिकादिविवरोपलम्भेनेव, इत्येवं संवादिभ्य एव विकल्पेभ्यस्तन्निश्चितिरभिप्रेततत्त्वनिश्चितिर्नासंवादिभ्य.।

इत्थं पूर्वपक्षमाशङ्क्याह—

एतदप्यसत्, अविचारितरमणीयत्वात्। तत्र यत्तावदुक्तम् 'स्वलक्षणदर्शनाहितवासनाकृतविप्लवरूपाः सर्व एव विकल्पाः' इति। अत्र किमिदं स्वलक्षणदर्शनं नाम?, का वा तदाहिता वासना, यत्कृतविप्लवरूपाः? सर्व एव विकल्पाः इति। वस्त्वनुभवः स्वलक्षणदर्शनम्, तदाहितवासना तु तथाविधविकल्पजननशक्तिः?। यद्येवम्, कथं निरंशवस्तुविषयात् निरंशानुभवात् तथाविधविकल्पजननशक्तीनां प्रभूतानां सम्भवः?, कथं चैकस्या एवानेकविकल्पजन्म?। समुत्पद्यन्ते च स्वलक्षणदर्शनानन्तरं नित्याऽनित्यादिविकल्पाः, क्रमेणैकस्य, अक्रमेण चानेकप्रमातॄणाम् न चैते शक्तिभेदेनानेकजनकत्वे विना। न च भूयसामपि निरंशवस्तुविषयनिरंशानुभवानां तत्त्वतस्तत्त्वे विशेषः, रूपादिस्वलक्षणा-

नामिव । तत्र तेषामिवैकस्य बहूनां वाऽनन्तरं पारम्पर्येण वा तथाविधफलभेदोऽमीषां न्याय्य इति भाव्यमेतत् । का चेयं तथाविधविकल्पजननशक्तिः, किं तदुत्तरं मानमम्, उतान्यैव काचित् ? । यदि मानसम्, कथं स्वलक्षणादस्वलक्षणजन्म ? । अस्वलक्षणं च विकल्पः, असदाकाररूपत्वात् । न स्वसंवित्तिस्तत्रास्वलक्षणम्, अपि तु बहिर्मुखावभास एवेति चेत् । न खलु सा ततोऽन्या, इति कथं नास्वलक्षणम् ? । अमन्नसौ,सा तु सती, स्वसंविदितत्वादेवेति चेत् । कथमसौ तन्मात्रतत्त्वा विकल्प इति चिन्त्यम् ? । असदाकारानुवेधादिति चेत् । कथमसताऽनुवेधो नाम ? । स निर्विषयत्वादसत्, न तु तथाप्रतिभासेनेति चेत् । न स्वसंवित्तिस्तथाप्रतिभासनादन्या, इत्यस्वलक्षणत्वमेव ।

एवं पूर्वपक्षमाशङ्क्याह-एतदपि-असत्-अशोभनम् । कुत इत्याह—अविचारितरमणीयत्वात् कारणात् । एतदेवाह—तत्रेत्यादिना । तत्र यत्तावदुक्तमादौ ' स्वलक्षणदर्शनाहितवासनाकृतविप्लवरूपा सर्व एव विकल्पाः' इति-एतत् । अत्र किमिदं स्वलक्षणदर्शनं नाम ? । का वा तदाहिता-स्वलक्षणदर्शनाहिता वासना, यत्कृतविप्लवरूपाः सर्व एव विकल्पा इति ? । अत्राह वस्त्वनुभव शुद्धः स्वलक्षणदर्शनम्, तदाहितवासना तु तथाविधविकल्पजननशक्ति , तथाविधस्य संवादिनोऽसंवादिनश्च । एतदाशङ्क्याह-यद्येवम् ,कथं निरंशवस्तुविषयाद् निरंशानुभवात् तथाविधविकल्पजननशक्तीना प्रभूताना सम्भवः सामान्येन ? । कथ वैकस्या एव शक्तेरनेकविकल्पज म ? । को वा किमाह ? न चैतदेवम्, इत्याशङ्कानिरासायाह-समुत्पद्यन्ते च स्वलक्षणदर्शनानन्तर नित्यानित्यादिविकल्पा क्रमेणैकस्य प्रमातुः साख्यादेर्बौद्धादिमतप्रतिपत्त्या, अक्रमेण चानेकप्रमातॄणा सांख्यबौद्धादीना नित्यानित्यादिविकल्पाः । शक्तिभेदश्चैकानेकजनकत्व चेति विग्रह , ते चैत, एत विना, क्रमाक्रमपक्षद्वयेऽपीति । एतदेवाह—न चेत्यादि । न च भूयसामपि क्रमपक्षे । केषामित्याह—निरंशवस्तुविषयनिरंशानुभवाना तुल्यस्वलक्षणानुभवानामित्यर्थः । किमित्याह—तत्त्वत -परमार्थेन; तत्त्व-तद्भावे रूपादिस्वलक्षणानुभवत्व इत्यर्थः, विशेषो भेद । किं तर्हि ? सर्व एवैते—रूपादिस्वलक्षणानुभवा एवेति । इहैव निदर्शनमाह—रूपादिस्वलक्षणानामिव 'एकस्य प्रमातु ' इति प्रक्रम, तथाविधानुभवनिबन्धनानामिति , तथाहि—क्रमेणापि रूपादिस्वलक्षणानि स्वाकारमनुभव कुर्वाणानि न रूपादिस्वलक्षणत्वेन विशिष्यन्त इति । प्रकृतयोजनामाह—तत्—तस्माद् न तेषामिव-रूपादिस्वलक्षणानामिव 'एकस्य प्रमातु, इति प्रक्रम ,बहूना वा प्रमातॄणामनन्तरं बहूना पारम्पर्येण वैकस्य तथाविधफलभेदो भिन्नजातीयविज्ञानादिकार्यभेदोऽमीषा निरंशवस्तुविषयनिरंशानुभवाना न्याय्य इति भाव्यमेतद्-भावनीयमेतत् । एतदुक्तं भवति-यथा तेषां रूपादिस्वलक्षणाना न रसादिफलभेदो न्याय्य , एवमनित्याऽनात्मकवस्त्वनुभवानामपि न नित्या ऽऽत्मादिविकल्पजननशक्त्याख्य फलभेदो न्याय्य । इहैवाभ्युच्चयमाह—का चेयमित्यादिना । का चेय तथाविधविकल्पजननशक्तिर्भवतोऽभिप्रेता ? किं तदुत्तरं प्रक्रमादविकल्पप्रत्ययोत्तरं मानसं स्वविषयानन्तरेत्यादिलक्षणम् , उतान्यैव काचिदालयगता ?, उभयथापि दोषमाह-यदि मानसम् , कथ स्वलक्षणाद् मानसात् स्वलक्षणजन्म विकल्पोत्पाद ?।विकल्पास्वलक्षणत्वमाह-अस्वलक्षण च विकल्पो भवद्भीत्या । कुत इत्याह-असदाकाररूपत्वात्—असदाकारो विकल्पबुद्धिप्रतिभासोऽस्वलक्षणत्वाभ्युपगमात् स एव रूपं यस्य स तथा तद्भावस्तस्मात् न स्वसंवित्तिस्तत्र विकल्पेऽस्वलक्षणम् , अपि तु बहिर्मुखावभास एवास्वलक्षणमिति चेत् । एतदाशङ्क्याह-न खलु सा स्वसंवित्तिस्ततो बहिर्मुखावभासादन्या , इत्येवं कथं नास्वलक्षणम् ?-अस्वलक्षणमेव । अमन्नसौ बहिर्मुखावभास , सा तु स्वसंवित्ति सती-विद्यमाना, स्वसंविदितत्वादेव कारणादिति चेत् । एतदाशङ्क्याह-कथमसौ स्वसंवित्तिस्तन्मात्रत्वा-स्वसंवित्तिमात्रतद्भावा विकल्प इति चिन्त्यम्,न तत्र स्वलक्षणविशिष्टोऽश इति कृत्वा।असदाकारानुवेधादसौ विकल्प इति चेत् । एतदाशङ्क्याह-कथमसता आकारेणानुवेधो नाम स्वसंविद ?-नैवेत्यर्थ । स आकारो निर्विषयत्वात् कारणादसंस्तुच्छ , न तु तथाप्रतिभासनेन—न पुनर्बहिर्मुखावभासप्रतिभासनेनासन्निति चेत् । -एतदाशङ्क्याह—न स्वसंवित्तिरधिकता तथाप्रतिभासनाद् बहिर्मुखावभासप्रतिभासनादन्याऽर्थान्तरभूतेति कृत्वाऽस्वलक्षणत्वमेव स्वसंविदः ।

तस्य विभ्रमरूपत्वात् तदन्याऽनन्यत्वकल्पनैवायुक्तेति चेत् । कोऽयं विभ्रम इति कथनीयम् ? । अनिरूप्यस्वरूपस्तत्त्वतोऽसद्रूप इति चेत् । कथमयं स्वसंवित्तिभेदक इति वाच्यम् ? । न तत्त्वत इति चेत् । उत्पन्नो विकल्पः। अस्त्विति चेत् । प्रतीत्यादिबाधा । चेतनैव तथाभूता विकल्प इति चेत् । किंभूतेति चिन्त्यम् ? असदाकारेति चेत् । अस्वलक्षणमेवेयम् , असदाकारत्वात् । न स्वसंवित्तिस्तत्रास्वलक्षणम् , अपि तु बहिर्मुखावभास एवेति चेत् । न खलु सा ततोऽन्येति समानं पूर्वेण , इति यदि मानमं कथं स्वलक्षणादस्वलक्षणजन्म साधीयः ? इति । कथं वा निर्विकल्पकत्वेनाभिन्नात् भिन्नविकल्पसम्भवः ? । हि नीलादिमात्रात् क्वचिद्भ्रमादिभावः तथाऽदर्शनात् । न चात्र किञ्चिद्भेदकम् , अनभ्युपगमात् । अभ्युपगमेऽपि ततोऽतिशयासिद्धिरिति निवेदयिष्यामः ।

तस्य बहिर्मुखावभासप्रतिभासस्य विभ्रमरूपत्वात्कारणात् तदन्याऽन्यत्वकल्पनैव तया स्वसंवित्त्याऽन्यानन्यत्वकल्पनैवायुक्तेति चेत् । एतदाशङ्क्याह-कोऽयं विभ्रमो यद्रूपत्वादन्याऽनन्यत्वकल्पनाऽयोग इति कथनीयम् ? । अनिरूप्य स्वरूप यस्य चैतथ्येन स तथा तत्त्वत परमार्थतोऽसद्रूप इति चेत् । एतदाशङ्क्याह-कथमय विभ्रमोऽ-

सद्रूपः सन् स्वसंवित्तिभेदक इत्येतद् वाच्यम् ? । न नन्वेत इति चेत् स्वसंवित्तिभेदकः । एतदाशङ्कयाह-इन्स्वो विकल्प अविशिष्टस्वसंवित्तिमात्रभावेन । अस्त्विति चेद् विकल्पाभाव । एतदाशङ्कयाह-प्रतीत्यादिबाधा. आदिशब्दाद्—भावनाभेदबाधाग्रहः । चेतनैव तथाभूता विशिष्टा विकल्प इति चेत् । एतदाशङ्कयाह—किंभूता तथाभूतेति चिन्त्यम् ? । असदाकारा असदाकारो यस्याः सा तथेति चेत् । एतदाशङ्कयाह-अस्वलक्षणमेवेयं चेतना, असदाकारत्वात् । न स्वसंवित्तिस्तत्र चेतनायामस्वलक्षणम्, अपि तु बहिर्मुखावभास एवास्वलक्षणमिति चेत् । एतदाशङ्कयाह-न खलु नैव सा चेतना स्वसंवित्तिस्ततो बहिर्मुखावभासादन्येति समानं पूर्वेण ' कथं नास्वलक्षणम्, इत्यादिनोक्तेन । इत्येवं यदि मानसं कथं स्वलक्षणादस्वलक्षणजन्म साधीयः-शोभनतरम् ?-नैवेत्यर्थः । कथं चेत्यादि । कथं वा निर्विकल्पकत्वेनाभिन्नाद मानसाद् भिन्नविकल्पसंभवो विकल्पकत्वेन । कथं च न स्यादित्याह—न हि नीलादिमात्राद वस्तुनोऽन्यरहितात् कश्चिद् रसादिभावः । आदिशब्दाद्—गन्धादिग्रहः । कथं न रसादिभाव इत्याह-तथाऽदर्शनात् । न चात्र मानसाद् विकल्पजन्मनि किञ्चिद् भेदकमस्ति । कुत इत्याह-अनभ्युपगमात् । अभ्युपगमेऽपि सति भेदकस्य वासनादेः, ततो भेदकादनिश्चयासिद्धेरिति निवेदयिष्यामि ऊर्ध्वम् । गतो मानसपक्षः ।

विकल्पान्तरेणाह—

अथान्यैव काचित् । काऽसाविति वाच्यम् ? । अनादिमदालयगतशक्तेः स्वलक्षणदर्शनसहकारिभावतो विशेषकरणम्, तथाहि-सा तदनुभवं प्राप्याक्षेपेण तथाविधविकल्पजननस्वभावोपजायत इति स्वलक्षणदर्शनाहितत्युच्यते । अत एव न भिन्नविकल्पसम्भवाभावः, तथाविधशक्तिसहकारित्वेन तदनुभवस्य तदविरोधादिति । एतदपि यत्किञ्चित्, तस्य तत्सहकारित्वासिद्धेः, ततस्तस्या उपकाराभावात्, अनुपकार्योपकारकयोश्च सहकारित्वायोगात् । द्विविधो हि वः सहकारार्थः परम्परातिशयाधानेन सन्ताने विशिष्टक्षणोत्पादनलक्षणः, पूर्वस्वहेतोरेव समग्रोत्पन्नैककार्यक्रियालक्षणश्च । न चानयोरेकोऽपि सम्भवति, क्षणिकत्वेन परस्परातिशयाधानायोगात् । अतिशय उपकार इत्यनर्थान्तरम् । न चासावन्यतोऽन्यस्य, विकल्पायोगात् ।

द्वितीय विकल्पमधिकृत्याह—अथान्यैव काचित् तथाविधविकल्पजननशक्ति । एतदुररीकृत्याह-काऽसाविति वाच्यम् ? । अनादिमती चासावालयगतशक्तिश्चेति विग्रहः, तस्याः स्वलक्षणदर्शनसहकारिभावतः—प्रवृत्तिविज्ञानसहकारिभावत इत्यर्थः विशेषकरणमतिशयकरणं सा । एतदेव भावयति-तथाहीत्यादिना । तथाहि—साऽनादिमदालयगतशक्तिस्तदनुभवं प्राप्य—स्वलक्षणदर्शनमासाद्य, आक्षेपेणाव्यवधानेन, तथाविधविकल्पजननस्वभावा-अनित्यादिविकल्पजननस्वभावोपजायत इति कृत्वा स्वलक्षणदर्शनाहितेत्युच्यते । अत एव कारणात् न भिन्नविकल्पसंभवाभावः, किं तर्हि ? संभव एव । कुत इत्याह—तथाविधशक्तिसहकारित्वेन हेतुना तदनुभवस्य-स्वलक्षणानुभवस्य प्रवृत्तिविज्ञानस्येत्यर्थः तदविरोधादिति प्रक्रमाद् भिन्नविकल्पसंभवाविरोधात् शक्तेरस्योपादानमित्यभिप्राय इति । एतदाशङ्कयाह—एतदपि यत् किञ्चित् । कथमित्याह—तस्य स्वलक्षणानुभवस्य तत्सहकारित्वासिद्धेः-प्रस्तुतशक्तिसहकारित्वासिद्धेः । असिद्धिश्च ततोऽधिकृतानुभवात् । तस्याः शक्तेः, किमित्याह-उपकाराभावात् । यदि नामैवं ततः किमित्याह—अनुपकार्योपकारकयोश्च भावयोः सहकारित्वायोगात् । एतमेवाह-द्विविधो हि वो—युष्माकं सहकारार्थः । द्वैविध्यमाह-परम्परातिशयाधानेन क्षणपरम्परया संताने प्रबन्धे विशिष्टक्षणोत्पादनलक्षणो विवक्षितकार्ययोग्यताकारीत्यर्थः, तथा पूर्वस्वहेतोरेवोपादानादेः समग्रोत्पन्नैककार्यक्रियालक्षणश्च समग्रोत्पन्नानामेककार्यक्रियाऽन्यानां विवक्षितकार्योत्पत्तिः सैव लक्षणं यस्य सहकारार्थस्य स तथेति समासः । न चेत्यादि । न चानयोः—सहकारार्थयोरेकोऽपि संभवति । कुत इत्याह—क्षणिकत्वेन हेतुना परस्परातिशयाधानायोगात् । एतदेव भावयति-अतिशय उपकार इत्यनर्थान्तरम् । न चासावतिशयोऽन्यतः सकाशादन्यस्य । कथं नेत्याह—विकल्पाऽयोगात् ।

तदनुभवो हि तच्छक्तेरनुत्पन्नायाः, उत्पन्नायाः, निरुद्धाया एव वोपकुर्यात् ? । न तावदनुत्पन्नायाः, तस्या एवासत्त्वात्, असतश्चोपकाराकरणात् । नाप्युत्पन्नायाः, तस्या अनाधेयातिशयत्वात्, क्षणादूर्ध्वमनवस्थितेः । द्वाभ्यामप्येकीभूय तदन्यकरणमेवातिशयाधानम्, तदेव चोपकार इति चेत् । न, उपादानकारणविशेषाधानमन्तरेण ततः कार्यविशेषासिद्धेः । न चैककालभाविनाऽन्यतो भवन्त्या अन्यत एव भवता तस्या अतिशयाधानम्, तन्निबन्धनस्य तत्कृतविशेषासिद्धेः । तदभ्युपगमे च तत्राप्ययमेव वृत्तान्तः, एवं निबन्धनपरम्परायामपि वाच्यम्, इत्यत्राणं निबन्धनपरम्परा ।

एतमेवाह—तदनुभवो हीत्यादिना । तदनुभवोऽधिकृतस्वलक्षणानुभवो यस्मात्तच्छक्तेरनादिमदालयगतशक्तेरनुत्पन्नाया उत्पन्नाया निरुद्धाया एव वोपकुर्यादिति संभाविनो विकल्पाः । न तावदनुत्पन्नाया उपकरोति तदनुभवः । कुत इत्याह—तस्या एव शक्तेरसत्त्वात् । न चासावनुत्पन्नाऽस्ति । यदि नामैवं ततः किमित्याह—असतश्च सामान्येनोपकाराकरणात् । नाप्युत्पन्नाया उपकरोति तदनुभवः । कुत इत्याह—तस्या उत्पन्नाया निष्पन्नत्वेनानाधेयातिशयत्वात् । एतच्च क्षणादूर्ध्वमनवस्थितेः कारणात् । द्वाभ्यामपि शक्त्यनुभवाभ्यामेकीभूय तदन्यकरणमेव विशिष्टशक्तिकरणमेवातिशयाधानम्, तदेव चान्यकरणमुपकार इति चेत् । एतदाशङ्कयाह-नेत्यादि । न-नैतदेवम् । कुत इति युक्तिमाह—उपादानकारणविशेषाधानमन्तरेण इह तावदधिकृतशक्तिविशेषाधानं विना, ततो विवक्षितानुभवात्, कार्यविशेषासिद्धेः प्रस्तुतविकल्पकार्यभेदासिद्धेरित्यर्थः । न

चैककालभाविना शक्त्या सहानुभवेनान्यतो भवन्त्या शक्त्यन्यत एव स्वहेतोर्भवताऽनुभवेन तस्याः शक्तेरतिशयाधानं 'न्याय्यम्' इति शेषः । कुत इत्याह—तन्निबन्धनस्य अधिकृतशक्त्युपादानस्य तत्कृतविशेषासिद्धेर्विवक्षितानुभवकृतविशेषासिद्धेः । तदभ्युपगमे च सामान्येन तन्निबन्धनस्य तत्कृतविशेषाभ्युपगमे च तत्रापि तन्निबन्धनेऽयमेवानन्तरोदितो 'नोपादानकारणविशेषाधानमन्तरेण ततः कार्यविशेषासिद्धेः' इत्यादिर्दृष्टान्तः । एवमुक्तनीत्या निबन्धनपरम्परायामपि वाच्यम् । इति एवम्, अत्रार्वाग् निबन्धनपरम्परा अनादावपि संसारे कस्यापि निबन्धनस्योक्तनीत्या विशेषाधानायोगादिति भावनीयम् ।

स्वहेतुपरम्परात एव सा शक्तिस्तथास्वभावोत्पन्ना याऽनुपकारिणमपि तदनुभवं सहकारिणमपेक्ष्य विशिष्टं कार्यं जनयत्यतो न दोष इति चेत् । न । अनुपकारिणोऽपेक्षाऽयोगात् । तदभ्युपगमेऽतिप्रसङ्गात्, तत्तथाविधस्वभावाधायकहेतोरप्यस्थानपक्षपातित्वापत्तेः, स्वभावापर्यनुयोगस्य च प्रमाणोपपन्नस्वभावविषयत्वात् । स्वपरिकल्पनागर्भवाङ्मात्रोदितस्वभावविषयत्वे तु तत्त्वव्यवस्थानुपपत्तिः, अतथाविधस्वभावानामपि तथाविधस्वभावत्वाभिधानाविरोधात् । एवं च सहेतुकनाशापत्तिः, 'स्वहेतुपरम्परातस्तथास्वभाव एवासावुत्पन्नो भावो योऽकिञ्चित्करमपि नाशहेतुमपेक्ष्य नश्यति' इत्यपि वक्तुं शक्यत्वात्, स्वभावपर्यनुयोगासिद्धेः, अचिन्त्यशक्तित्वात्, अन्यथा त्वत्पक्षेऽपि तुल्यत्वादिति । नापि निरुद्धायाः, तस्या एवासत्त्वात्, असतश्चोपकाराकरणात् । न च प्रकारान्तरेणोपकारकरणं संभवति । एवं तावदाद्यपक्षे सहकारार्थाभाव इति ।

स्वहेत्वित्यादि । स्वहेतुपरम्परात एव सा शक्तिरधिकृता तथास्वभावोत्पन्ना, याऽनुपकारिणमपि तदनुभवमधिकृतस्वलक्षणानुभवं सहकारिणमपेक्ष्य विशिष्टं कार्यं जनयत्यधिकृतविकल्पाख्यम्, अतो न दोष इति चेत् अधिकृतः । एतदाशङ्क्याह—न, अनुपकारिणः तदनुभवस्य । किमित्याह—अपेक्षाऽयोगात् । तदभ्युपगमेऽनुपकारिणोऽपेक्षाऽभ्युपगमेऽतिप्रसङ्गात्, तद्वद् विश्वापेक्षापत्तेः । तत्तथाविधेत्यादि । तस्याः शक्तेस्तथाविधस्वभावाधायकोऽनुपकारिणमपि तदनुभवं सहकारिणमपेक्ष्य विशिष्टं कार्यं जनयतीत्येवंविधस्वभावाधायकश्चासौ हेतुश्चेति समासः, तस्यापि, किमित्याह—अस्थानपक्षपातित्वापत्तेः नेति क्रियायोगः । उक्तं च—" अस्थानपक्षपातश्च, हेतोरनुपकारिणि । अपेक्षाया नियुङ्क्ते यत् कार्यमन्याविशेषतः ॥ १ ॥ " इत्यादि । स्वभावापर्यनुयोगस्य च न स्वभावः पर्यनुयोगमर्हतीति इत्यस्य । किमित्याह-प्रमाणोपपन्नस्वभावविषयत्वात् प्रतीतिसचिवस्वभावविषयत्वादित्यर्थः, स्वपरिकल्पनागर्भश्चासौ वाङ्मात्रोदितस्वभावश्चेति समासः, स एव विशेषो यस्य स्वभावापर्यनुयोगस्य स स्वपरिकल्पनागर्भवाङ्मात्रोदितस्वभावविषयस्तस्य भावस्तस्मिन् पुनरभ्याभ्युपगम्यमाने, किमित्याह—तत्त्वव्यवस्थानुपपत्तिः । कुत इत्याह—अतथाविधस्वभावानामपि भावानां तथाविधस्वभावत्वाभिधानाविरोधात् । तत किमित्याह-एवं च सहेतुकनाशापत्तिः । कथमित्याह-स्वहेतुपरम्परातः सकाशात् तथास्वभाव एवासावुत्पन्नो भावः पदार्थो योऽकिञ्चित्करमपि नाशहेतुमपेक्ष्य नश्यति इत्यपि वक्तुं शक्यत्वात् तथास्वभावपर्यनुयोगासिद्धेरुक्तनीत्या । असिद्धिश्चाचिन्त्यशक्तित्वात् स्वभावस्य । इत्थं चैतदङ्गीकर्तव्यमित्याह-अन्यथा त्वत्पक्षेऽपि स्वहेतुपरम्परात एव सा शक्तिस्तथास्वभावोत्पन्नेत्यस्मिन्नपि, तुल्यत्वात् पर्यनुयोगस्य । इति सर्वत्र 'न, अनुपकारिणोऽपेक्षाऽयोगात्' इत्यतो यथायोगं 'न' इति क्रिया योजनीया । नापि निरुद्धायाः 'शक्तेरुपकरोति तदनुभव' इति प्रक्रमः । कुत इत्याह—तस्या एव निरुद्धायाः शक्तेरसत्त्वात्, असतश्च तुच्छस्य चोपकाराकरणात् । न चेत्यादि । न च प्रकारान्तरेणोक्तप्रकारत्रयातिरिक्तेनोपकारकरणं संभवति वस्तुतस्तस्यैवाभावात् । एवं तावदाद्यपक्षे—उपन्यासक्रमप्राधान्यात् 'परस्परातिशयाधानेन सताने विशिष्टक्षणोत्पादनलक्षणः' इत्यस्मिन्, सहकारार्थाभाव इति ।

एतेन पूर्वस्वहेतोरेव समग्रोत्पन्नैककार्यक्रियालक्षणोऽपि सहकारार्थो निषिद्धः, तत्त्वतः प्रथमसहकारार्थाविशेषात्, 'स्वहेतुपरम्परात एव सा शक्तिस्तथास्वभावोत्पन्ना' इत्यादिना तु सुतरामभेदात्, प्रत्येकं तत्तथाविधकार्यजननसमर्थस्वभावेतरविकल्पदोषापत्तेश्च । प्रथमपक्षे किमन्योन्यापेक्षया ?, एकत एव तत्सिद्धेः । द्वितीयपक्षे चापेक्षायामपि तदसिद्धेः, प्रत्येकमतत्स्वभावत्वात् ।

एतेनेत्यादि । एतेन-अनन्तरोदितेन, पूर्वस्वहेतोरेव समग्रोत्पन्नैककार्यक्रियालक्षणोऽपि सहकारार्थः प्राग् निदर्शितस्वरूपो निषिद्धः । कुत इत्याह—तत्त्वतः—परमार्थेन, प्रथमसहकारार्थाविशेषात् । अस्य सहकारार्थस्य परस्परातिशयाधानेन सताने विशिष्टक्षणोत्पादनलक्षणः प्रथमः, तदयमपि पूर्वस्वहेतोरेव समग्रोत्पन्नैककार्यक्रियालक्षणः सदा संतानापेक्षयैवंभूत एव, तस्य तस्य कार्यस्य विशिष्टक्षणोत्पादजलक्षणत्वादिति भावनीयम् । 'स्वहेतुपरम्परात एव सा शक्तिस्तथास्वभावोत्पन्ना' इत्यादिना त्वनन्तरोदितग्रन्थेन सुतरामभेदात्—द्वयोरपि सहकारार्थयोः फलाभेदादिति गर्भः । दोषान्तरमाह—प्रत्येकमित्यादिना । प्रत्येकमेकमेकं प्रति, तेषां समग्रोत्पन्नानां तथाविधं विशिष्टं यद् विवक्षितं विज्ञानादि कार्यं तज्जननसमर्थस्वभावश्चेतरश्चातज्जननसमर्थस्वभावश्चेति विकल्पाभ्यां दोषास्तदापत्तेश्च कारणाद् 'द्वितीयोऽपि सहकारार्थो निषिद्धः' इति क्रिया । एतदुक्तं भवति-पूर्वस्वहेतोरेव समग्रोत्पन्नैककार्यक्रियालक्षणो द्वितीयः सहकारार्थः । तत्र ये समग्रा उत्पन्नास्ते प्रत्येकं तथाविधकार्यजननसमर्थस्वभावाः स्युः, न वा तथाविधकार्यजननसमर्थस्वभावा इति द्वयी गतिः । तत्र प्रथमपक्षे—प्रत्येकं ते तथाविधकार्यजननसमर्थस्वभावा इत्यस्मिन्, किमन्योन्यापेक्षया ?, एकत एव तथाविधका-

र्यजननसमर्थस्वभावात् समग्रात्, तत्सिद्धेस्तथाविधकार्यसंसिद्धेः, अन्यथा तत्तत्स्वभावत्वानुपपत्तिरिति हृदयम्। द्वितीयपक्षे च—प्रत्येकं ते न तथाविधकार्यजननसमर्थस्वभावा इत्यस्मिन्। किमित्याह-अपेक्षायामपि सत्यां, तत्सिद्धेः-विवक्षितकार्यासिद्धेः। असिद्धिश्च प्रत्येकमतत्स्वभावत्वात् समग्राणाम्। न हि प्रत्येकं तैलाजननस्वभावाः सिकताणवः परस्परापेक्षयाऽपि तैलं जनयन्ति, तदतत्स्वभावत्वविरोधादिति।

तेषामत एव प्रत्येकत्वाभावादप्रत्येकत्वत एव तत्स्वभावत्वाददोष इति चेत्। न। अनेकतः सर्वथैकभवनासिद्धेः, तद्भिन्नस्वभावत्वात्, अन्यथाऽनेकत्वायोगात्। एवं चेतरेतरस्वभाववैकल्येन तत्रानुपयोगात्। तत्स्वभावविकलस्तद्रूपो न स्याद्, नातत्कार्यं इति चेत्। न। तत्स्वभावविकलस्य तत्कार्यत्वविरोधात्, तज्जननैकस्वभावादेव ततस्तदुत्पत्तेः, अन्यतस्तदभावात्, तस्यापि तत्त्वेऽन्यत्वाभाव इति निरूप्यतां सम्यग्, अन्यथा कार्यैकत्वानुपपत्तिः, समग्रस्यैव तस्योत्पत्तेः, अनेकजन्यत्वे च तदयोगात्, सर्वेषां तज्जनकत्वाद्, एकभाविनोऽपरभावासिद्धेः तद्वैयर्थ्यप्रसङ्गात्, समग्रजनकत्वेऽप्येकस्यापि जनकत्वाद्, अन्यथा समग्रजनकत्वविरोधाद्, भेदशस्तद्भावापत्तेः, अन्यतज्जनकत्वे च कुतस्तत्स्वभाववैकल्यम्? इति यत्किञ्चिदेतत्।

तेषामित्यादि। तेषा-समग्रोत्पन्नानां समग्राणाम्; किमित्याह-अत एव हेतो, प्रत्येकत्वाभावात् कारणात्, अप्रत्येकत्वत एव-अप्रत्येकत्वेनैव समग्रतयेत्यर्थं, तत्स्वभावत्वात् तथाविधकार्यजननसमर्थस्वभावत्वाददोष इति चेदनन्तरविकल्पयुगलकोपनीत.। एतदाशङ्क्याह—नानेकत्यादिना। न-नैतदेवम्। कुत इत्याह—अनेकतोऽनेकेभ्यः समग्रेभ्य, सर्वथैकभवनासिद्धेर्निरंशभवनासिद्धेरित्यर्थ.। असिद्धिश्च तद्भिन्नस्वभावत्वात्—तेषामनेकेषां भिन्नस्वभावत्वात्। इत्थं चैतदङ्गीकर्तव्यमित्याह—अन्यथा एवमनभ्युपगमेऽभिन्नस्वभावत्वादनेकत्वायोगात्। एव चेत्यादि। एवं चानेकत्वे सति इतरेतरस्वभाववैकल्येन न य एवैकस्य स्वभाव. स एवापरस्य, तदभेदप्रसङ्गादितरेतरस्वभाववैकल्यं तेन, तत्र सर्वथैकभवने, अनुपयोगाद् नानेकत. सर्वथैकभवनमिति। तत्स्वभावविकलस्तस्य विवक्षितस्य कस्यचित् तथाविधकार्यजननसमर्थस्य समग्रस्य स्वभावस्तत्स्वभावस्तेन विकलो रहितोऽपर समग्र एव तत्स्वभावविकल. स, तद्रूपोऽधिकृतसमग्रान्तररूप, न स्याद्—न भवेत तद्वैकल्येन, नातत्कार्यो न समग्रान्तराकार्य, किन्तु तत्कार्य एव, समग्रान्तरवत्, तस्यापि तज्जननस्वभावत्वादिति चेत्। एतदाशङ्क्याह—नेत्यादि। न-नैतदेवम्। कुत इत्याह-तत्स्वभावविकलस्य विवक्षितसमग्रतथाविधकार्यजननसमर्थस्वभावविकलस्य समग्रान्तरस्येति प्रक्रम। किमित्याह—तत्कार्यत्वविरोधात्—समग्रान्तरकार्यत्वविरोधात्। विरोधश्च तज्जननैकस्वभावादेव-तथाविधकार्यजननैकस्वभावादेव, ततः प्रथमसमग्रात्, तदुत्पत्तेस्तथाविधकार्योत्पत्ते, अन्यत समग्रान्तरात्, तदभावादन्योत्पन्नकार्याभावात् तत एवोत्पन्नं तदिति किमन्यस्मादुत्पादेन ?। सोऽपि तज्जननस्वभाव इत्येवं तज्जनयतीत्याशङ्कानिरासायाह—तस्यापि अन्यस्य समग्रान्तरस्य. तत्त्वे तज्जननैकस्वभावत्वे। किमित्याह—अन्यत्वाभाव. तत्स्वभावस्य तत्त्वादिति निरूप्यतां सम्यक्। अन्यथैवमनभ्युपगमे, किमित्याह—कार्यैकत्वानुपपत्ति.। कुत इत्याह—समग्रस्यैव—अखण्डस्यैव, तस्य कार्यस्योत्पत्ते.। यदि नामैवं तत. किमित्याह—अनेकजन्यत्वे च सति कार्यस्य, तदयोगात्-समग्रोत्पत्त्ययोगात्। अयोगश्च सर्वेषां समग्राणां तज्जनकत्वाद्—विवक्षितैककार्यजनकत्वात्। किमेवं न समग्रोत्पत्तिरित्याह—एकभाविन इति, एकस्माद् भवितुं शीलमस्येत्येकभावि कार्यं गृह्यते तस्य, किमित्याह-अपरस्माद् भावोऽपरभाव, भवनं भाव उत्पादः, तदसिद्धेः। असिद्धिश्च तद्वैयर्थ्यप्रसङ्गादपरवैयर्थ्यप्रसङ्गात्। नैको जनकः समग्रा एव जनका इत्यसद्ग्रहव्यपोहायाह—समग्रजनकत्वेऽपि सति, किमित्याह—एकस्यापि जनकत्वात्। इत्थं चैतदङ्गीकर्तव्यमित्याह—अन्यथा एवमनभ्युपगमे, समग्रजनकत्वविरोधात्, नैकाद्यभावे सामग्र्यमिति भावनीयम्। यदि नामैवं तत. किमित्याह—भेदश भेदै, तद्भावापत्ते-कार्यभावापत्ते., न तत्रैकोऽप्यजनक, न चांशजनक इति कृत्वा। अथान्योऽपि तदेव जनयति यदेकेन जनितमित्यत्राह—अन्यतज्जनकत्वे च अन्यस्यापि समग्रस्य तज्जनकत्वे समग्रान्तरजनकत्वे चाभ्युपगम्यमाने। किमित्याह—कुतस्तत्स्वभाववैकल्यं समग्रान्तरस्वभाववैकल्यम्?-नैव, तज्जन्यजनकत्वान्यथानुपपत्ते.; उक्तं च-"उत्पद्यते यदेकस्मा दनंशं नान्यतोऽपि तत्। समग्रभावे सामग्र्या,नैकं कार्यं सुनीतितः॥ १॥" इति यत् किञ्चिदेतत्-'तत्स्वभावविकलस्तद्रूपो न स्याद् नातत्कार्य., इति।

हेतुभेदात् फलभेद इति चापन्यायः। तथा च सत्ययमेव खलु भेदो भेदहेतुर्वा भावानां यदुत विरुद्धधर्माध्यासः कारणभेदश्चेत्युक्तिमात्रम्, भावार्थशून्यत्वात्, सामग्र्ययोगात्, समग्रेभ्यस्तद्भेदाभेदासिद्धेः, तत्त्वतः समग्रमात्रत्वात्। तदुपादानादिभेदेन तद्भेद इति चेत्। न। तत्स्वभावभेदमन्तरेण तदसिद्धेः, तद्भेदे चानेकस्वभावतापराधः, अन्यथोभयोस्तुल्यतापत्तेस्तत्कार्ययोरपि तुल्यता, सामस्त्येनोभयजननस्वभावादुभयादुभयप्रसूतेः, तत्तथात्वकल्पनायास्तद्वैचित्र्यापादनेनायोगात्। इति प्रपञ्चितमेतदन्यत्र, नेह प्रतन्यते इति परमते सहकारार्थासिद्धेरशोभनस्तदुपन्यास इति परिचिन्त्यतामेतत्।

दोषान्तरमाह-हेतुभेदात् सकाशात् फलभेद इति चापन्याय., तथानेकैकभावेन। तथा च सति 'अयमेव खलु भेदो भेदहेतुर्वा भावानां, यदुत—विरुद्धधर्माध्यासो भेद, कारणभेदश्च भेदहेतु, इत्युक्तिमात्रम्। कुत इत्याह-भावार्थशून्यत्वात्। भावार्थशून्यत्वं च सामग्र्ययोगात्। अयोग-

जश्च समग्रेभ्य· सकाशात्, तद्भेदाभेदासिद्धेस्तस्या सामग्र्या भेदाभेदाभ्यामसिद्धे·, तत्त्वतः-परमार्थत, समग्रमात्रत्वात् सामग्र्या इति । तदुपादानादिभेदेन-तेषां समग्राणामुपादाननिमित्तभेदेन, तद्भेद -सामग्रीभेद ; तथाहि-रूपाऽऽलोकादिसामग्र्यामेकत्र रूपमुपादानमालोकादयो निमित्तम्, अपरत्रालोकादय उपादानं रूपं निमित्तमिति सामग्रीभेद इति चेत् । एतदाशङ्कयाह—नेत्यादि । न-नैतदेवम् । कुत इत्याह—तत्स्वभावभेदमन्तरेण तेषा समग्राणां स्वभावभेदमन्तरेण, तदसिद्धे सामग्रीभेदासिद्धे·. उक्तं च—" रूप येन स्वभावेन, रूपोपादानकारणम् । निमित्तकारणं ज्ञाने, तत् तेनान्येन वा भवेत्? ॥ १ ॥ यदि तेनैव विज्ञानं, बोधरूप न युज्यते । अथान्येन बालाद् रूपं, द्विस्वभावं प्रसज्यत ॥ २ ॥ " इति । तद्भेदे च—स्वभावभेदे च, समाग्राणामनेकस्वभावनाऽपराधो महानयमेकान्तैकस्वभाववादिन । अन्यथेत्यादि । अन्यथैवमनभ्युपगमे, उभयोः समग्रयोरिति सामग्र्युपलक्षणम् । किमित्याह—तुल्यतापत्ते कारणात्, तत्कार्ययोरपि रूपाऽऽलोकादिरूपयोः, तुल्यता । कुत इत्याह—सामस्त्येनोभयजननस्वभावात् । उभयादेकस्वभावात् समग्रोभयात्, उभयप्रसूतेरुभयभावात् । तत्तथात्वेत्यादि । तस्याधिकृतस्वभावद्वयस्य तथात्वकल्पनाया--भिन्नजातीयोभयजननैकस्वभावत्वकल्पनाया, तद्वैचित्र्यापादनेनाधिकृतस्वभावद्वयवैचित्र्यापादनन हेतुना, अयोगात्, तथाहि—नाचित्रात् स्वभावद्वयाच्चित्रद्वयभाव·, भवन्नपि द्वयभावोऽचित्रादेकस्वभावतया तुल्य एव स्यादिति प्रपञ्चितमेतदन्यत्रानेकान्तसिद्धौ, नेह प्रतन्यते । इति एवं, परमते सहकरार्थासिद्धे· कारणात्, अशोभनस्तदुपन्यास --सहकार्युपन्यास इति परिचिन्त्यतामेतत् ।

भिन्नविकल्पसंभवाभावोऽपि न्यायतस्तदवस्थ एव, तदनुभवस्यानेकशक्तिसहकारित्वविरोधात्, एकस्वभावत्वात्, तस्य चानित्याद्यन्यतमविकल्पशक्तिसहकारित्वतत्त्वात्; अन्यथा तदेकस्वभावत्वासिद्धेः । एकान्तैकस्वभावत्वे च कथमस्य नित्यादिविकल्पशक्तिमहकारिभावः? इति चिन्त्यम् । न हि नीलविज्ञानजन्मसहकारिस्वभावं नीलं कदाचिद् रमादिविज्ञानजन्ममहकारितां प्रतिपद्यते, तत्तत्त्वविरोधादिति ।

भिन्नविकलपसंभवाभावोऽपि निमित्तान्तराभावेन पूर्वोक्त, न्यायतस्तदवस्थ एव । कुत इत्याह-तदनुभवस्य-प्रस्तुतस्वलक्षणानुभवस्य, अनेकशक्तिसहकारित्वविरोधात् । विरोधश्चैकस्वभावत्वात् । तस्य चैकस्य स्वभावस्यानित्याद्यन्यतमविकल्पशक्तिसहकारित्वतत्त्वात् सहकारित्वस्वभावत्वात् । अन्यथैवमनभ्युपगमे तदेकस्वभात्वासिद्धे -तस्यानुभवस्यैकस्वभावत्वासिद्धेश्चित्रशक्तिसहकारिभावेन एकान्तैकस्वभावत्वे च कथमस्यानुभवस्य नित्यादिविकल्पशक्तिसहकारिभाव· ? इति चिन्त्यम्—नैवानित्यादिविकल्पशक्तिं विहाय सहकारिभाव इत्यर्थ· । अमुमेवार्थं निदर्शनेनाह-न हीत्यादिना । न यस्माद् नीलविज्ञानजन्मसहकारिस्वभावं नील कदाचित् रसादिविज्ञानजन्मसहकारिता प्रतिपद्यते । किं न प्रतिपद्यते? इत्याह—तत्तत्त्वविरोधात् तस्य नीलस्य नीलविज्ञानजन्मसहकारिस्वभावत्वं तत्त्वं तद्विरोधादिति ।

अनेनानेकशक्तिमहकार्यैकस्वभावत्वकल्पना प्रत्युक्ता, अनेकगर्भस्य तस्यैकत्वायोगात्, अतिप्रसङ्गात्, निबन्धनव्यवस्थाभावात्, विश्वस्यैकनिबन्धनतापत्तेः इति ' स्वलक्षणदर्शनाहितवासनाकृतविप्लवरूपाः सर्व एव विकल्पाः ' इति वचनमात्रमेव ।

अनेनानेकशक्तिसहकार्यैकस्वभावत्वकलपना प्रत्युक्ता । कथमित्याह—अनेकगर्भस्य तस्य अधिकृतस्वभावस्य, एकत्वायोगात् । अनेकगर्भश्चानेकशक्तिसहकार्यैकस्वभाव इति परिभावनीयम् । योगेऽप्यतिप्रसङ्गात् सर्वस्य सर्वसहकारिकल्पनया । ततश्च निबन्धनव्यवस्थाऽभावात् ' नेदमस्य कारणम् ' इति । व्यवस्थाभावे च विश्वस्यैकनिबन्धनतापत्ते· ' अनेककार्यकरणैकस्वभावत्वादेकस्य ' इत्यपि वक्तुं शक्यत्वात् । इति ' अनन्तरोदिता कलपना प्रत्युक्ता ' इति क्रियायोग । इति-एवं ' स्वलक्षणदर्शनाहितवासनाकृतविप्लवरूपा सर्व एव विकलपा· ' इति वचनमात्रमेव, अभिप्रेतार्थशून्यत्वादिति गर्भ ।

तत्प्रतिबद्धजन्मत्वासिद्धेश्च, तथाहि-कस्तेषां वस्तुना प्रतिबन्धः? इति वाच्यम् । न तादात्म्यम्, तद्देशादिभेदात्, अनभ्युपगमाच्च । न तदुत्पत्तिः, तदसरूपत्वात्, तदनन्तराभावाच्च । पारम्पर्येण तत्तदुत्पत्तिरिति चेत् । न । विहितोत्तरत्वात्, तत्तद्भावेऽपि तन्निमित्तत्वाविशेषात् नित्यादिविकल्पेभ्योऽपि तन्निश्चितिसिद्धेः, वस्तुनस्तथात्वप्रसङ्गात्, अनेकान्तापत्तेरिति । न च न नित्यादिविकल्पानामपि तत्प्रतिबन्धः, तेषामपि तद्भेदप्रभवाभ्युपगमात्, ' नान्येषाम् तद्भेदप्रसवे सत्यपि ' इत्याद्युपन्यासात् । तद्भेदप्रसवश्चार्थभेदादुत्पादः । स चानित्यादिविकल्पानामिवामीषां तत इति । तत्कथं न तेभ्यस्तन्निश्चितिः? ।

इहैवोपपत्त्यन्तरमाह—तत्प्रतिबद्धजन्मत्वासिद्धेश्च—वस्तुप्रतिबद्धजन्मत्वासिद्धेश्च ' विकलपानाम् ' इति प्रक्रम । तथाहि इत्युपप्रदर्शने । कस्तेषामधिकृतविकलपाना वस्तुना सह प्रतिबन्ध ? इति वाच्यम् । न तादात्म्यं प्रतिबन्ध, तद्देशादिभेदाद्-वस्तुदेशादिभेदात् । आदिशब्दात्—कालस्वभावादिग्रह । अनभ्युपगमाच्च । न हि परेणापि वस्तुविकलपयोस्तादात्म्यमभ्युपगम्यते । न तदुत्पत्ति· प्रतिबन्ध, विकलपाना वस्तुना । कुत इत्याह-तदसरूपत्वात्-वस्त्वसरूपत्वाद् विकलपानाम् । उपपत्त्यन्तरमाह-तदनन्तराभावाच्च--वस्त्वनन्तराभावाच्च कारणादिति । पारम्पर्येण स्वलक्षणज्ञानव्यवधानेन, तत्तदुत्पत्ति —तस्माद् वस्तुनो विकलपोत्पत्तिरिति चेत् एतदाशङ्क्याह-न, विहितोत्तरत्वात् परदर्शने निमित्तान्तराभावेन विहितोत्तरमेतत् ' कथं वा निर्विकलपकत्वेनाभिन्नाद् भिन्नवि-

कल्पसंभव.?' इत्यादिना ग्रन्थेन । इतश्चैतद् न तत्तद्भावेऽपि वस्तुनो वि-ल्पभावेऽपि, तन्निमित्तत्वाविशेषाद्-वस्तुनिमित्तत्वाविशेषात् नित्यादिविकल्पेभ्योऽपि सकाशात्, तन्निश्चितिसिद्धेर्वस्तुनिश्चितिसिद्धे. कारणात् । किमित्याह-वस्तुनस्तथात्वप्रसङ्गात् . नित्यत्वादिप्रसङ्गात् अनेकान्तापत्तेरिति,न नैतदेवमिति क्रिया । न चेत्यादि । न च न नित्यादिविकल्पानामपि, तत्प्रतिबन्धो-वस्तुप्रतिबन्ध , किन्तु प्रतिबन्ध एव । कुत इत्याह-तेषामपि नित्यादिविकल्पानाम्, तद्भेदप्रसवाभ्युपगमाद्—वस्तुभेदप्रसवाभ्युपगमात् । अभ्युपगमश्च 'नान्येषाम्, तद्भेदप्रसवे सत्यपि ' इत्याद्युपन्यासात् प्राक् । तद्भेदप्रसवश्च कः ? । उच्यते-अर्थभेदादुत्पादःस्वलक्षणादित्यर्थ । न चेत्यादि । स चानित्यादिविकल्पानामिवासौ नित्यादिविकल्पानाम्, तत इति वस्तुन. । तत्-तस्मात्, कथं न तेभ्यो नित्यादिविकल्पेभ्यः, तन्निश्चितिर्वस्तुनिश्चिति. ? इति ।

ननूक्तमत्र ' यथादृष्टविशेषानुसरणं परित्यज्य किञ्चित्सामान्यग्रहणेन विशेषान्तरसमारोपात् ' इति । उक्तमिदम्, अयुक्तं तूक्तम्, इतरत्राप्युक्तन्यायतुल्यत्वात्, 'अनित्यादिविकल्पानामपि नित्यादिरूपयथादृष्टविशेषनिश्चयपरित्यागेनावस्थाभेदग्रहणतो विशेषान्तरसमारोपेण प्रवृत्तेः ' इत्यपि वक्तुं शक्यत्वात् । नित्यस्य भेदाभेदविकल्पद्वारेणावस्थाभेद एवायुक्त इति चेत् । न । ततस्तद्भेदाभेदविकल्पाप्रवृत्तेः, अवस्थानामुत्प्रेक्षितत्वात्, तथातत्त्वानामपि समचित्रनिम्नोन्नतसमारोपवत् तथासमारोपहेतुत्वाविरोधः, आन्तरदोषसामर्थ्यात्, तस्य चासद्दर्शनवासनारूपत्वात्, नित्यप्रमातुरपि तत्स्वभावत्वतोऽनित्यस्याभेदवासनावत् तथावासनोपपत्तेः । इतीतरत्राप्युक्तन्यायतुल्यत्वमिति ।

आह—ननूक्तमत्र प्राक्, ' यथादृष्टविशेषानुसरणं परित्यज्य किञ्चित्सामान्यग्रहणेन विशेषान्तरसमारोपाद् न तेभ्यस्तन्निश्चिति ' इति । एतदाशङ्क्याह—उक्तमिदम्, अयुक्तं तूक्तम् । कथमित्याह—इतरत्रापि प्रक्रमाद् वस्त्वनित्यत्वादौ, उक्तन्यायतुल्यत्वात् ' यथादृष्टविशेषानुसरणं परित्यज्य ' इत्यादिरुक्तो न्याय., अस्य तुल्यत्वात् । तुल्यत्वमेवाह—अनित्यादिविकल्पानामपीत्यादिना । तत्र 'यथादृष्टविशेषानुसरणं परित्यज्य ' इत्यादि भङ्ग्यन्तरेणाधिकृतपक्षविपक्षे योजयति-अनित्यादिविकल्पानामपीति न केवलं नित्यादिविकल्पानाम्, नित्यादिरूपयथादृष्टविशेषनिश्चयपरित्यागेन नित्यादिरूपस्य यथादृष्टविशेषो नित्यादिरूप एव तन्निश्चयपरित्यागेन । परित्यागश्चावस्थाभेदग्रहणतोऽवस्थाभेदग्रहणात् कारणात्, विशेषान्तरसमारोपेणाभेदसमारोपेण. प्रवृत्तेरनित्यादिविकल्पानामपि । इत्यपि—एवमपि . वक्तुं शक्यत्वात्, नात्र जिह्वान्तरे डाङ्कर. । नित्यस्येत्यादि । नित्यस्य वस्तुन , भेदाभेदविकल्पद्वारेण-एतन्मुखेनेत्यर्थ , अवस्थाभेद एवायुक्तोऽघटमानक , तथाहि-तास्ततो भेदेन वा स्यु, अभेदेन वा ? । भेदे ' अस्य ता. ' इति क संबन्ध ? । अभेदेऽवस्थातैवासौ , अवस्था वा, इति नित्यस्यावस्थाभेदाभाव इति चेत् । एतदाशङ्क्याह—नेत्यादि । न-नैतदेवम्, ततो नित्याद् वस्तुनः, तद्भेदाभेदविकल्पाप्रवृत्ते.—तासामवस्थानां भेदाभेदविकल्पाप्रवृत्ते. । अप्रवृत्तिश्चावस्थानामुत्प्रेक्षितत्वात्-अवस्तुत्वादित्यर्थ । तथातत्त्वानामपि-उत्प्रेक्षिततद्भावानामपि 'अवस्थानाम् ' इति प्रकृप. , समचित्रनिम्नोन्नतसमारोपवदिति निदर्शनम्, समचित्रे निम्नोन्नतसमारोप इति विग्रह., तद्वत्, तथा समारोपो भेदसमारोपस्तद्धेतुत्वाविरोधस्तथातत्त्वानामप्यवस्थानामिति । कुत इत्याह—आन्तरदोषसामर्थ्यात् कारणात्, तस्य चान्तरदोषस्य, असद्दर्शनवासनारूपत्वात्—असद्दर्शनवासनाऽनित्यादिदर्शन—वासना तद्रूपत्वात्, नित्यप्रमातुरपि तत्स्वभावत्वतोऽसद्दर्शनवासनास्वभावत्वेन, अनित्यस्य प्रमातु., अभेदवासनावदिति निदर्शनम्, ' तत्स्वभावत्वत. ' इति योज्यते, तथावासनोपपत्तेर्भेदप्रकारेण वासनोपपत्ते । इति एवम्, इतरत्रापि वस्त्वनित्यत्वादौ, उक्तन्यायतुल्यत्वमिति निगमननिदर्शनमेतत् ।

किञ्च-'यथादृष्टविशेषानुसरणं परित्यज्य, इत्यत्र 'तथा दृष्टो नान्यथा' इत्यत्र न प्रमाणम् । प्रत्यक्षमेवात्र प्रमाणमिति चेत् । न तत्कस्यचित् निश्चायकम् । तथ्यमपि गृह्णाति न तन्निश्चयेन, किं तर्हि ?, तत्प्रतिभासेन । स चैवंभूत एव नान्यथेति ऋतेऽतीन्द्रियार्थदर्शितामतिशयश्रद्धां वा न विनिश्चयोपायः । न तदेव, संप्रमुग्धमूकवत्कल्पत्वात् । नानुमानम्, तथाविधलिङ्गासिद्धेः । न चान्यत्, अनभ्युपगमात् । अनित्यतादिरूपस्यैव वस्तुनि विद्यमानत्वात् स एवंभूतो नान्यथेति चेत् । कुतस्तत्रास्यैव विद्यमानतासिद्धिः ? इति वाच्यम् । तत्तथाप्रत्यक्षप्रतिभासादेवेति चेत् । सोऽयमितरेतराश्रयदोषोऽनिवारितप्रसरः । कथं वा तत्तत्प्रतिभासत्वे तन्नीलत्वादिवत्तदनिश्चयः ? । किञ्चित्सामान्यग्रहणेन विशेषान्तरसमारोपादिति चेत् । किमत्यन्तभेदिनां सामान्यम् ? । सदृशापरापरोत्पत्तिरिति चेत् । प्रतिनियतैकग्राहिज्ञानतत्त्ववादे कुतोऽस्याः खल्ववगमः ? । न हि कथञ्चिदेकस्यानेकग्राहिणो विज्ञानस्याभावे ' केनचित् सदृशोऽयम् ' इति भवति, अतिप्रसङ्गात्, रूपग्रहणस्यापि रसग्रहणसदृशतापत्तेः । एवं च व्यवस्थानुपपत्तिः । न रूपज्ञानं रसज्ञानोपादानमतोऽयमदोष इति चेत् । न । न भवति,क्वचित्तथाभावोपपत्तेः, रूपज्ञानसमनन्तरभाविनो रसज्ञानस्य तदनुपादानत्वेऽनुपादानत्वप्रसङ्गात् । किं वा-तत्तथाभावाभावेऽत्यन्तासत एव भवतोऽस्योपादानचिन्तया ? । तत्तथाभावे चानिवारितोऽन्वयः । एतेन सदा सत्त्वोपलम्भः प्रत्युक्तः, तत्त्वतस्तस्यापि साद-

श्यनिबन्धनत्वात् तस्य चोक्तवद् ग्रहणायोगात् आन्तरतद्विकल्पबीजस्याप्रमाणत्वात्, तथापि तत्कल्पनायाश्चेतरत्रापि तुल्यत्वादित्युक्तप्रायम् ।

इहैव दूषणान्तरमाह—किञ्चेत्यादिना । किञ्च-'यथा दृष्टविशेषानुसरणं परित्यज्य' इत्यत्र तथादृष्टोऽनित्यादिरूपत्वेन, नान्यथा-न नित्यादिरूपत्वेन, इत्यत्र न प्रमाणम्-नास्मिन् विषये प्रत्यक्षं प्रवर्तते, नाप्यनुमानमित्यर्थः । प्रत्यक्षमेवात्र 'तथादृष्ट' इति विषये प्रमाणमिति चेत् । एतदाशङ्क्याह—न तदित्यादि-न तत्, प्रत्यक्षं कस्यचिद् वस्तुनो निश्चायकम् । तथ्यमप्यर्थविशेषं गृह्णाति न तत् निश्चयेन 'एवमेतत्' इत्येवंरूपेण । किं तर्हि ?, तत्प्रतिभासेन तदाकारेण ग्राह्याकारेणेत्यर्थः । स चेत्यादि । स च प्रतिभास एवंभूत एव-अनित्यादिरूप एव, नान्यथेति न नित्यादिरूपः, इति-एवम्, ऋते-विना, अतीन्द्रियार्थदर्शिनामतिशयश्रद्धां वा न विनिश्चयोपायः । न तदेव प्रत्यक्षं विनिश्चयोपायः । कुत इत्याह-संप्रमुग्धमूककल्पत्वात् तस्य संप्रमुग्धो हि मूकः स्वप्रतिभासमपि न विनिश्चिनोतीति लौकिकमेतत् । अतोऽत्र न प्रत्यक्षमेव प्रमाणमिति । अनुमानं तर्हि भविष्यतीत्याशङ्कानिरासायाह-नानुमानम् 'अत्र प्रमाणम्' इति प्रक्रमः कुत इत्याह-तथाविधलिङ्गासिद्धेः स एवंभूत एवेत्याद्यर्थाविनाभूतलिङ्गासिद्धेः । न चान्यत् 'अत्र मानम्' इति प्रक्रमः कुत इत्याह-अनभ्युपगमात् अन्यस्य मानस्य । अनित्यत्वादिरूपस्यैव वस्तुनि रूपादौ विद्यमानत्वात् कारणात्, स प्रतिभासः, एवंभूतोऽनित्यादिरूप एव नान्यथेति न नित्यादिरूप इति चेत् । एतदाशङ्क्याह-कुतस्तत्र वस्तुनि, तस्यैवानित्यत्वादिरूपस्यैव, विद्यमानतासिद्धिः ? इत्येतद् वाच्यम् । तत्तथेत्यादि । तस्मिन् वस्तुनि तथाऽनित्यादिरूपतया प्रत्यक्षप्रतिभासः प्रत्यक्षाकारस्तत्तथाप्रत्यक्षप्रतिभासस्तस्माद्देवेति चेत् तस्यैव विद्यमानतासिद्धिरिति । एतदाशङ्क्याह- सोऽयमितरेतराश्रयदोषोऽनिवारितप्रसरः तथाहि अनित्यत्वादिरूपता वस्तुनः प्रत्यक्षप्रतिभासबलेन, सोऽपि तथा वस्तुनोऽनित्यत्वादिरूपतया, इतीतरेतराश्रयदोषः कथं वेत्यादि । कथं वा तस्य प्रत्यक्षस्य, तत्प्रतिभासत्वे प्रक्रमादनित्यत्वाद्याकारत्वे, तच्छीलत्वादिवत् तस्य वस्तुनो नीलत्वादिर्वादिति निदर्शनं व्यतिरेकेण, तदनिश्चयोऽनित्यत्वाद्यर्थानिश्चयः । किञ्चित् सामान्यग्रहणेनापरसदादिग्रहणेनेत्यर्थः, विशेषान्तरसमारोपात् सर्वसदादिसमारोपादिति चेत् तदनित्यत्वाद्यनिश्चयः । एतदाशङ्क्याह-किमत्यन्तभेदिनां सामान्यं 'वस्तूनाम्' इति प्रक्रमः । सदृशापरापरोत्पत्तिरिति चेत् प्रस्तुतसामान्यम् । एतदाशङ्क्याह-प्रतिनियतैकग्राहिविज्ञानतत्त्ववादे क्षणिकत्वेन कुतोऽस्या सदृशापरापरोत्पत्तेः खल्ववगमः ? नैवेत्यर्थः । एतदेव भावयति--न हीत्यादिना । न हि कथञ्चिदेकस्यानेकग्राहिणो विज्ञानस्याभावेऽन्वयिन इत्यर्थः, 'केनचित् सदृशोऽयम्' प्रक्रमाद् 'भाव' इति भवति । किं न भवति ? इत्याह-अतिप्रसङ्गात् । एनमेवाह-रूपग्रहणस्यापि रसग्रहणसदृशतापत्तेः, तेन तदग्रहणाविशेषादिति भावः । एवं चातिप्रसङ्गे सति व्यवस्थानुपपत्तिः । न रूपज्ञानं रसज्ञानोपादानम्, यथा रूपज्ञानोपादानमेव, अतोऽयमतिप्रसङ्गदोषोऽदोष इति चेत् । एतदाशङ्क्याह—न-न भवति रूपज्ञानं रसज्ञानोपादानम्, किन्तु-भवत्यपि क्वचित् सामान्येन तथाभावोपपत्तेः रूपज्ञानस्य रसज्ञानोपादानभावोपपत्तेः । एतदेवाह—रूपज्ञानसमनन्तरभाविनो रसज्ञानस्य तदनुपादानत्वे-रूपज्ञानानुपादानत्वे, अनुपादानत्वप्रसङ्गात् । न तदपरं ज्ञानमुपादानम्, न च—न भवति रूपज्ञानानन्तरं रसज्ञानमिति भावनीयम् । किं वा तत्तथा—भावाभावे तस्य—रूपज्ञानस्य तथा रसज्ञानतया भावाभावे, अन्वयानभ्युपगमेनात्यन्तासत एव भवतः, अस्य—रसज्ञानस्य, उपादानचिन्तया, परमार्थतः सर्वत्रासत् सद् भवतीति कृत्वा ? । तत्तथाभावे च तस्य रूपज्ञानस्य तथाभावे च रसज्ञानभावे चाभ्युपगम्यमाने सति । किमित्याह—अनिवारितोऽन्वयः बलादापद्यत इत्यर्थः । एतेनेत्यादि । एतेनानन्तरोदितेन, सदा सत्त्वोपलम्भः प्रत्युक्तः । कथमित्याह—तत्त्वतः -परमार्थतः, तस्यापि सदासत्त्वोपलम्भस्य, सादृश्यनिबन्धनत्वात् । यदि नामैवं ततः किमित्याह—तस्य च सादृश्यस्य, उक्तवद् यथोक्तम्—'प्रतिनियतैकग्राहिविज्ञानतत्त्ववादे' इत्यादि तथा ग्रहणायोगात्, आन्तरतद्विकल्पबीजस्य--असदृशीनवासनाख्यनित्यत्वादिविकल्पबीजस्य, अप्रमाणत्वात्, नैतद्ग्राहकं प्रमाणमस्ति ; तथापि प्रमाणाभावेऽपि, तत्कल्पनायाश्चान्तरतद्विकल्पबीजकल्पनायाश्च, इतरत्रापि प्रक्रमादनित्यत्वादौ, तुल्यत्वादित्युक्तप्रायम्-प्रायेणोक्तम् 'आन्तरदोषसामर्थ्यात्' इत्यादिना ग्रन्थेन ।

प्रकारान्तरेण पूर्वपक्षयन्नाह—

एवं प्रदीपप्रभोदाहरणं सर्वत्रगत्वादनुदाहरणमेव । न च दीपप्रभाया मण्यर्थेन प्रतिबन्धः, अस्ति च मणिप्रभायाः । न चैवमनित्येतरादिविकल्पानां केषांचिदेव वस्तुना प्रतिबन्धो नान्येषाम्, इति वैषम्यमपि दार्ष्टान्तिकेन । अयोनिशोमनस्कारपूर्वकत्वान्नित्यादिविल्पानां न वैषम्यमिति चेत् । न । अस्यापि तुल्यत्वात्, अनित्यादिविकल्पानामप्येवंभूतभावस्य वक्तुं शक्यत्वात्, उभयत्र तन्नियामकत्वानुपपत्तेः, निबन्धनाविशेषादिति । अतः स्थितमेतत्-'अखिलविकल्पज्ञानभ्रान्तततावादिनश्च तत्सामर्थ्योत्थं वचनमपि तादृगेव' इति दुःस्थिता तत्त्वनीतिः ।

पूर्वपक्षान्तरमधिकृत्याह—एवमित्यादि । एवमुक्तनीत्या, प्रदीपप्रभोदाहरणं परप्रणीतं, सर्वत्रगत्वात् कारणाद् विपक्षेऽप्युपनयकरणेन, किमित्याह-अनुदाहरणमेव । अभ्युच्चयमाह-न चेत्यादिना । न च दीपप्रभाया मण्यर्थेन सह प्रतिबन्धोऽस्ति, अस्ति च मणिप्रभाया इत्युभयसिद्धमेतत् । न चैवमनित्येतरादिविकल्पानामनित्यनित्यादिविकल्पानाम्, केषाञ्चिदेवानित्यादिविकल्पानामेव, वस्तुना प्रतिबन्धो नान्येषां नित्यादिविकल्पानाम्, किं तर्हि ? अविशेषेण, 'नान्येषां तद्भेदप्रसवे सत्यपि इत्यादिवचनात्, इत्येव, वैषम्यमपि, दार्ष्टान्तिकेन । अयोनिशोमनस्कारपूर्वकत्वाद् नित्यादिविकल्पाना सर्वथा वस्तुशून्यत्वादित्यर्थः, न वैषम्य-

मिति चेद् दार्ष्टान्तिकेन, एतदाशङ्क्याह—न, अस्यापि तुल्यत्वात्। एतदेवाह—अनित्यादिविकल्पानामपि पराभिमतानाम्, एवंभूतभावस्य—अयोनिशोमनस्कारपूर्वकत्वभावस्य, वक्तुं शक्यत्वात्; तथाहि—अनित्यादिविकल्पा एवायोनिशोमनस्कारपूर्वका वस्त्वसंस्पर्शिनः, सतोऽसत्त्वानापत्त्या, असतश्च सद्भावविरोधेन वस्तुन एवंभूतस्यासंभवात्, इति बाधकप्रमाणवृत्तिः, अतः स्थितमेतत् अनित्यादिविकल्पानामप्येवंभूतभावस्य वक्तुं शक्यत्वात्' इति। उभयत्रेत्यादि उभयत्र नित्यादिविकल्पपक्षेऽनित्यादिविकल्पपक्षे च, तन्नियामकत्वानुपपत्तेः तस्यायोनिशोमनस्कारपूर्वकत्वस्य नियामकत्वानुपपत्तेः। अनुपपत्तिश्च निबन्धनाविशेषात्। निबन्धनाविशेषश्च सर्वेषां तद्भेदप्रसवत्वेनेति। अत स्थितमेतत् 'अखिलविकल्पज्ञानभ्रान्ततावादिनश्च तत्सामर्थ्यात्थं—विकल्पसामर्थ्यात्थं वचनमपि तादृगेव—भ्रान्तमेव, इत्येवं, तु स्थिता तत्त्वनीतिः।

भ्रान्तिज्ञानवन्तोऽपि कामलिप्रभृतयः शङ्खादौ संस्थानादितत्त्वनिश्चयनिबन्धनं दृश्यन्त एवेति चेत् । न । तेषां तत्राभ्रान्तत्वात्; अन्यथा पीतवर्णादिवत्तत्त्वनिश्चयनिबन्धनाभावः । विकल्पज्ञानमपि स्वसंवित्तावभ्रान्तमेवेति चेत् । क्व तर्हि भ्रान्तम्? इति वाच्यम् । कल्पनायामिति चेत् । न । तस्यास्तदव्यतिरेकात्; अन्यथा विकल्पज्ञानायोगात्, स्वसंवित्तेर्भेदकासिद्धेः, बोधमात्राद्-बोधमात्रभावात्, तदतिरिक्तदोषानभ्युपगमात् । अभ्युपगमे च तद्वस्तुत्वेन तद्योगजविकारकल्पनाया वस्तुत्वापत्तेरिति ।

भ्रान्तीत्यादि। भ्रान्तिज्ञानवन्तोऽपि कामलिप्रभृतयः प्रमातारः, शङ्खादौ प्रमेये, संस्थानादितत्त्वनिश्चयनिबन्धनं दृश्यन्त एवेति चेत्, ततश्च तद् भ्रान्तं च ज्ञानं, तत्त्वनिश्चयनिबन्धनं च, एवमनित्यादिविकल्पा अपि भविष्यन्ति, इत्याह—नेत्यादि। न, तेषां कामलिप्रभृतीनां, तत्र शङ्खादिसंस्थानादितत्त्वनिश्चयनिबन्धनाभावः, अभ्रान्तत्वात् । इत्थं चैतदङ्गीकर्तव्यमित्याह-अन्यथा पीतवर्णादौ यथा पीतवर्णादौ तथा, तत्तत्त्वनिश्चयनिबन्धनाभाव —शङ्खादिसंस्थानादितत्त्वनिश्चयनिबन्धनाभाव, सर्वथा भ्रान्तत्वादिति भावना। विकल्पज्ञानमपि स्वसंवित्तौ, किमित्याह-अभ्रान्तमेवेति चेत्, ततश्च किलोक्तदोषानुपपत्ति, इत्याशङ्क्याह-क्व तर्हि भ्रान्तम्? इति वाच्यम् । कल्पनायामिति चेद् भ्रान्तम् । अत्राह न, तस्या कल्पनाया, तदव्यतिरेकात्—स्वसंवित्त्यव्यतिरेकात्। इत्थं चैतदित्याह—अन्यथा व्यतिरेके सति स्वसंवित्ते कल्पनाया, विकल्पज्ञानायोगात्। अयोगश्च स्वसंवित्तेश्चित्रूपाया, भेदकासिद्धेरङ्गकासिद्धेः । असिद्धिश्च बोधमात्रात् सकाशात् कारणगतात्, बोधमात्रभावात्। तत्कार्यं तदेव दोषसंपृक्तं विकल्पज्ञानमित्येतन्निरासायाह—तदतिरिक्तदोषानभ्युपगमात्-बोधमात्रातिरिक्तदोषानभ्युपगमात्। अभ्युपगमे च तदतिरिक्तदोषाणां, तद्वस्तुत्वेनदो(षा)षवस्तुत्वेन हेतुना, 'तद्योगजविकारकल्पनाया—दोषयोगजविकारकल्पनाया, वस्तुत्वापत्ते 'न, तेषां तत्राभ्रान्तत्वात्' इत्यतो नेति क्रियायोग इति।

आह-अस्तु दोषजं वस्तुत्वमस्याः, शङ्खपीतादिप्रतिभासतुल्यं तु तत्, संस्थानादितत्त्वनिश्चयकल्पा तु स्वसंवित्तिरिति । यदि नामैवम्, ततः किम्? इति वाच्यम् विकल्पज्ञानस्याप्यभ्रान्तता । एवमपि का भवत इष्टसिद्धिः? ननु ततस्तत्त्वनीतिभावः । अनिश्चयात्मिकायाः कथमसौ? । हन्त! कल्पनानुवेधात् । स खलु नित्यत्वादिकल्पनयाऽपि । इति विपक्षसाधारणत्वात् नेष्टसिद्ध्यर्थमेवेत्ययुक्त एव । न च निरंशवस्तुवादिनो यथोक्तकल्पनैव संभवति, तदेकस्वभावत्वेन कल्पनाबीजायोगात्, स्वभावभेदमन्तरेण हेत्वभेदतः फलभेदासिद्धेः ।

आह-अस्तु दोषजं वस्तुत्वम् अस्याः-कल्पनायाः। शङ्खपीतादिप्रतिभासतुल्यं तु तद्—वस्तुत्वम्, संस्थानादितत्त्वनिश्चयकल्पा तु स्वसंवित्तिरिति । एतदाशङ्क्याह—यदि नामैवं ततः किम्? इति वाच्यम् । विकल्पज्ञानस्याप्यभ्रान्तता। एतदाशङ्क्याह—एवमपि का भवत इष्टसिद्धिः?। ननु ततः-अभ्रान्तायाः स्वसंवित्तेः, तत्त्वनीतिभाव इतीष्टसिद्धिः। एतदाशङ्क्याह—अनिश्चयात्मिकायाः स्वसंवित्तेः, कथमसौ तत्त्वनीतिभावः?। हन्त! कल्पनानुवेधात्। एतदाशङ्क्याह--स खलु-कल्पनानुवेधः, नित्यत्वादिकल्पनयाऽपि-सह, इति-विपक्षसाधारणत्वात् कारणात्, 'नेष्टसिद्ध्यर्थमेव' इति कृत्वाऽयुक्त एवेति किञ्चिदनेन । अभ्युच्चयमाह--न च निरंशवस्तुवादिनः--परस्य, यथोक्तकल्पनैव संभवति । इत्याह—तदेकस्वभावत्वेन-निरंशवस्तुन एकस्वभावत्वेन हेतुना कल्पनाबीजायोगात् । अयोगश्च स्वभावभेदमन्तरेण--अक्रमादविकल्पज्ञानवस्तुनः, हेत्वभेदतः कारणात्, फलभेदासिद्धेः। फलभेदश्चाविकल्पज्ञानात् कल्पनेति भावनीयम्।

भवतोऽपि कथमेकं भ्रान्ताभ्रान्तम्? इति चेत् । चित्रस्वभावत्वेन तथात्वाविरोधात्, तत्त्वत एकत्वासिद्धेः, दोषसामर्थ्योपयोगात्, अविगानतस्तथा तत्प्रतीतेरिति । अतोनिर्विकल्पकवद् विकल्पकमप्यक्षव्यापारानुसारि यथावस्थितवस्तुविषयमविगानतः स्पष्टतुल्यविनिश्चयं सत्त्वयोपशमजन्म बाधविज्ञानरहितमवगमादिफलमभ्रान्तमेष्टव्यम्, अन्यथोक्तवत् तत्तत्त्वनिश्चयाभावः । इति विकल्पकत्वेऽपि न भ्रान्तमधिकृतविज्ञानमिति । अतः सामान्यविशेषरूपवस्तुसिद्धिरिति ।

भवतोऽपि कथमेकं अक्रमात् कामलिशङ्खपीतज्ञानं, भ्रान्ताभ्रान्तम्? इति चेत् । एतदाशङ्क्याह चित्रस्वभावत्वेन अधिकृतज्ञानस्य, तथात्वाविरोधात्-भ्रान्ताभ्रान्तत्वाविरोधात्, तत्त्वतः--परमार्थेन; एकत्वासिद्धेरेकान्तैकत्वादित्यर्थः । हेतुभेदमाह—दोषसामर्थ्योपयोगात् कामलस्य सामर्थ्याद्धि तत् तथा, तदभावेऽभावात् । इत्थं चैतदङ्गीकर्तव्यमित्याह--अविगानतः--अविगानेन लोके, तथा दोषजत्वेन, तत्प्रतीतेः --शङ्खपीतज्ञानप्रतीतेरिति नि-

लोठ्यानुषङ्गिकम्—प्रकृतमाह—अतो निर्विकल्पकवत् इति निदर्शनम् । विकल्पकमप्यभ्रान्तमेष्टव्यमिति योग । किंविशिष्टमित्याह-अक्षव्यापारानुसारि-अक्षव्यापारानुसरणशीलम् , यथावस्थितवस्तुविषयं सामान्यविशेषरूपवस्तुगोचरम् , अविगानतोऽविगानेन, स्पष्टतुल्यविनिश्चयं प्रमात्रन्तरमधिकृत्य,सत्क्षयोपशमजन्म-विशिष्टक्षयोपशमोत्पादम् , बाधविज्ञानरहितं तथा अनुभवदार्ढ्येन,अवगमादिफले परिच्छित्तिप्रवृत्तिप्राप्तिफलमर्थमधिकृत्य , अभ्रान्तमेष्टव्यम् । अन्यथा—तदनिष्टौ, उक्तवद् यथोक्त तथा, तत्तत्त्वनिश्चयाभावो—यथावस्थितवस्तुतत्त्वनिश्चयाभाव , प्रत्यक्षस्यानिश्चायकत्वात् , विकल्पाना च मिथो विरुद्धानामपि प्रवृत्तेरिति । इति—एव, विकल्पकत्वेऽपि सति, न भ्रान्तमधिकृतविज्ञानं-सामान्यविशेषावसायरूपमिति । अतः-अस्माद् विज्ञानाद् , सामान्यविशेषरूपवस्तुसिद्धिरिति ।'

यच्चोक्तम्-'एकं सामान्यमनेके विशेषाः' इत्यादि । तदप्ययुक्तम् , तथानभ्युपगमात् । न हि यथोक्तस्वभावं सामान्यमभ्युपगम्यतेऽस्माभिः,युक्तिरहितत्वात् , तथाहि-नदेकादिस्वभावं सामान्यमनेकेषु-दिग्देश-समय-स्वभावभिन्नेषु विशेषेषु सर्वात्मना वा वर्त्तेत, देशेन वा ? । न तावत्सर्वात्मना, सामान्यानन्त्यप्रसङ्गात् , विशेषाणामनन्तत्वात् , एकविशेषव्यतिरेकेण वाऽन्येषां सामान्यशून्यतापत्तेः, आनन्त्ये चैकत्वाविरोधात् । नापि देशेन, सदेशत्वप्रसङ्गात् । न च गगनवद् व्यापित्वात् वर्त्तेत इति ब्रूम इत्यकलङ्कन्यायानुसारि चेतोहरं वचः; अविचारितरमणीयत्वात्, कार्त्स्न्यदेशव्यतिरेकेण वृत्त्यदर्शनात् । उभयव्यतिरेकेण नभसो वृत्तिरिति चेत् । न, असिद्धत्वात् , नभसः सप्रदेशत्वाभ्युपगमात् , निष्प्रदेशत्वे चानेकदोषप्रसङ्गात् , तथाहि—येन देशेन विन्ध्येन सह संयुक्तं नभः, हिमवन्मन्दरादिभिरपि किं तेनैव, आहोस्विदन्येनेति ? । यदि तेनैव , विन्ध्यहिमवदादीनामेकत्रावस्थानप्रसङ्गः, निष्प्रदेशैकाकाशसंयोगान्यथानुपपत्तेः । अथान्येन, आयातं तर्हि सदेशत्वमाकाशस्य ।

यच्चोक्तम्-' एकं सामान्यमनेके विशेषा ' इत्यादि मूलपूर्वपक्षे । तदप्ययुक्तम् । इत्याह-तथाऽनभ्युपगमात् । एतदेवाह—न हीत्यादिना । न हि यथोक्तस्वभावमेकादिधर्मकं सामान्यमभ्युपगम्यतेऽस्माभि. । कुत इत्याह-युक्तिरहितत्वात् । एतदेवाह—तथाहि—तदेकादिस्वभावं सामान्यम् एक , नित्यं, निरवयवं, निष्क्रिय च, अनेकेषु दिग्देशसमयस्वभावभिन्नेषु विशेषेषु घटादिषु, सर्वात्मना वा वर्तेत , देशेन वा ? । न तावत् सर्वात्मना वर्त्तते । कुत इत्याह—सामान्यानन्त्यप्रसङ्गात् । प्रसङ्गश्च विशेषाणामनन्तत्वात् । दोषान्तरमाह—एकविशेषव्यतिरेकेण वाऽन्येषा विशेषाणाम् , किमित्याह—सामान्यशून्यतापत्तेः एकत्रैव सामान्यवृत्तेरिति । आनन्त्ये च सामान्यानाम् ,एकत्वविरोधाद् न नापि देशेन वर्त्तत ' सामान्य विशेषेषु ' इति प्रक्रम', सदेशत्वप्रसङ्गात् सामान्यस्य । न च गगनवदिति दृष्टान्त , व्यापित्वात् कारणात् , वर्तत इति ब्रूमः , इत्यकलङ्कन्यायानुसारि चेतोहरं वच । कुत इत्याह—अविचारितरमणीयत्वात् । एतदेवाह-कार्त्स्न्यदेशव्यतिरेकेण वृत्त्यदर्शनाल्लोके । उभयव्यतिरेकेण—कार्त्स्न्यदेशोभयव्यतिरेकेण, नभस —आकाशस्य, वृत्तिरिति चेद् भावेष्वाधेयादित्वेन । एतदाशङ्क्याह- न, असिद्धत्वात् अधिकृतनभोवृत्ते. । असिद्धिश्च नभस सप्रदेशत्वाभ्युपगमाज्जैने. । यदा च सप्रदेशं नभ., तदा देशकार्त्स्न्याभ्या नियोगतोऽस्य वृत्ति., उभयनिमित्तभावात् । इत्थ चैतदङ्गीकर्तव्यमित्याह-निष्प्रदेशत्वे च नभस., अनेकदोषप्रसङ्गात् । एतदेव भावयति—तथाहीत्यादिना । तथाहीत्युपप्रदर्शने । येन देशेन विन्ध्येन सह पर्वतेन संयुक्तं नभ , हिमवद्—मन्दरादिभिरपि पर्वतै. , किं तेनैव देशेन, आहोस्विदन्येन ? इति । किञ्चात. ? उभयथापि दोष इत्याह—यदि तेनैव , ततो विन्ध्यहिमवदादीना पर्वतानाम् , एकत्र देशे, अवस्थानप्रसङ्ग. । कुत इत्याह—निष्प्रदेशं च तदेकाकाश च तेन संयोगस्तदन्यथानुपपत्तेरिति । अथान्येन । एतदाशङ्क्याह—आयात तर्हि सप्रदेशत्वमाकाशस्य, तथाऽभ्युपगमात् ।

स्यादेतददेशत्वात् वियतो यथोक्तविकल्पासंभवः, तत्रैकस्मिन्नेव तेषामवस्थितत्वात् । इदमप्ययुक्तम्, वस्तुतः पूर्वोक्तदोषानतिवृत्तेः । न च सर्वव्यापिनो विन्ध्यादय इति , येन 'तस्मिन्नेव तेषामवस्थितत्वात्' इति सफलं भवेदिति । अतो यत्र विन्ध्यभावो यत्र चाभाव इत्यनयोर्नभोभागयोरनन्यत्वम् , अन्यत्वं वेति वाच्यम् ? । किञ्चातः ? । यद्यनन्यत्वम् , किमु सर्वथा, आहोस्वित्कथञ्चित् । यदि सर्वथा, हन्त ! तर्हि यत्र विन्ध्यभावस्तत्राप्यभावः स्यात् , तदभाववन्नभोभागाव्यतिरिक्तत्वात् , तद्भाववन्नभोभागस्य विपर्ययो वा । अथ कथञ्चित् , अनेकान्तवादाभ्युपगमात् स्वकृतान्तप्रकोपः । अथान्यत्वम् । किं सर्वथा, उत कथञ्चित् ? । यदि सर्वथा, अन्यतरस्यानभोभागत्वप्रसङ्गः, सर्वथा भेदान्यथानुपपत्तेः । अथ कथञ्चित् , स्वदर्शनपरित्यागदोष इति । स्यादेतद्भागानभ्युपगमाद् व्योम्नो यथोक्तदोषानुपपत्तिरिति । अभ्युपगममात्रभक्तो देवानांप्रियः सुखैधितो नोपपत्तिप्राप्तानपि भागानवगच्छतीति ; ननु विशिष्टभावभावाऽभावगम्या एव भागा इत्यवगमे निवेशयतां चित्तमित्यलं प्रसङ्गेन । एतेन नित्यव्यापिनिर्देशसामान्यवृत्तिरपि प्रत्युक्ता ।

स्यादेतददेशत्वात् वियत-आकाशस्य यथोक्तविकल्पासंभव । तत्र-वियति, एकस्मिन्नेव निष्प्रदेशे, तेषां विन्ध्यादीनाम् , अवस्थितत्वात् । एतदाशङ्क्याह—इदमप्ययुक्तम् , वस्तुत -परमार्थेन , पूर्वोक्तदोषानतिवृत्ते —विन्ध्यहिमवदादीनामेकत्रावस्थानादिप्रसङ्ग पूर्वोक्तो दोष , तदनति-

वृत्ते.। एतमेव प्रकारान्तरेण समर्थयन्नाह—न च सर्वव्यापिनो विन्ध्याद्य इति येन 'तस्मिन्नेकस्मिन्नेव तयामवस्थितत्वात्' इति सफलं भवेत्। अतो यत्रेति देशे विन्ध्यभावः, यत्र चाभाव, इत्यनयोर्नभोभागयोराकाशदेशयोः। किमित्याह· अनन्यत्वमन्यत्वं वेति वाच्यम्?। किञ्चातः। यद्यनन्यत्वम् किं सर्वथा, आहोस्वित् कथञ्चित्?। यदि सर्वथाऽनन्यत्वम्, हन्त! तर्हि यत्र विन्ध्यभावस्तत्राप्यभावः स्यात्। कुत इत्याह—तद्भाववन्नभोभागाव्यतिरिक्तत्वात्-विन्ध्याभाववन्नभोभागाव्यतिरिक्तत्वात्, तद्भाववन्नभोभागस्य-विन्ध्यभाववन्नभोभागस्य, विपर्ययो वा, यत्राभावस्तत्रापि भावप्राप्तेः। अथ कथञ्चिदनन्यत्वम्। एतदाशङ्क्याह—अनेकान्तवादाऽभ्युपगमात् स्वकृतान्तप्रकोपः—स्वसिद्धान्तविरोध इत्यर्थः। द्वितीयं विकल्पमधिकृत्याह—अथान्यत्वम् अधिकृतनभोभागयोः, किं सर्वथाऽन्यत्वम्, उत कथञ्चित्?। यदि सर्वथा—एकान्तेनान्यत्वम्। ततः किमित्याह—अन्यतरस्य यत्र विन्ध्यभावो यत्र चाभाव इत्यनयोरेकस्य इत्यनयोरेकस्य किमित्याह-अनभोभागत्वप्रसङ्गः। कुत इत्याह-सर्वथा भेदान्यथाऽनुपपत्तेः सर्वधर्मवैलक्षण्ये हि सर्वथा भेदः तस्मिंश्च सत्येकस्य भावरूपता, अपरस्य साऽपि न, इत्येतदेव भवतीति भावना। अथ कथञ्चिदन्यत्वमधिकृतनभोभागयोरित्यत्राह-स्वदर्शनपरित्यागदोष एकान्तदर्शनं हि परस्य स्वदर्शनं तत्परित्यागदोष इति स्यादेतद् भागानभ्युपगमाद् व्योम्न-आकाशस्य, यथोक्तदोषानुपपत्तिरित्येतदधिकृत्याह—अभ्युपगममात्रभक्तो देवानांप्रियो; मूर्ख इत्यर्थः, सुखैषिणः-शास्त्रग्रहणपरिश्रमत्यागेन सुखवर्धिनः, नोपपत्तिप्रतानानपि विन्ध्यभावभावाऽभावाभ्या भागान्त्वगच्छतीति। एतद्भावनायैवाह—ननु विशिष्टभावभावाऽभावगम्या एव भागाः—विशिष्टभावोऽन्यव्यावृत्ततया विन्ध्यभाव एव तद्भावाऽभावगम्या एव भागा व्योम्नः। न हि निर्भागे परमाणौ कार्यस्य द्व्यणुकादेः क्वचिद् भावः क्वचिद् नेति स्वदर्शनास्थित्यप्यवगमे निवेश्यता चित्तमित्यलं प्रसङ्गेन। एतेने—त्यादि। एतेनैकसामान्यवृत्तिनिराकरणेन, नित्यव्यापिनिर्देशसामान्यवृत्तिरपि प्रत्युक्ता विशेषेषु, नित्यस्यैकस्वभावतया कालभिन्नासु व्यक्तिषु वृत्त्ययोगः, व्यापिनः सर्वगतत्वेन निर्देशस्य देशाभावेनेति भावनीयम्।

आह-अनुभवसिद्धत्वात् सामान्यस्य न युज्यते सहृदयतार्किकस्य तत्प्रतिक्षेपेणात्मानमायासयितुम्, आयासस्य निष्फलत्वात्, तथाहि-यदि सनातनं वस्तुसद् व्याप्येकमनवयवं सामान्यवस्तु न स्यात् न तदा देशकालस्वभावभेदभिन्नेषु घटशरावोद्ञ्चिकोदञ्चनादिषु बहुषु विशेषेषु सर्वत्र ' मृद् मृद् ' इत्यभिन्नौ बुद्धिशब्दौ स्याताम्। न खलु हिमतुषारकरकोदकाङ्गारमुर्मुरज्वालानलझञ्झामण्डलिकोत्कलिकापवनखदिरोदुम्बरबदरिकादिष्वत्यन्तभिन्नेषु बहुषु विशेषेष्वेकाकारा बुद्धिर्भवति, नाप्येकाकारः शब्दः प्रवर्त्तत इति। अतोऽस्य यथोक्ताभिन्नबुद्धिशब्दद्वयप्रवृत्तिनिबन्धनस्य वस्तुसतः सामान्यस्य सत्त्वमाश्रयितव्यमिति।

आह परः, अनुभवसिद्धत्वात् सामान्यस्य, विशेषेषु तुल्यबुद्धिभावेन, न युज्यते सहृदयतार्किकस्य भावाशून्यस्य, तत्प्रतिक्षेपेण-सामान्यप्रतिषेधेण, आत्मानमायासयितुम्। कुतो न युज्यत इत्याह—आयासस्य निष्फलत्वात्। एतदेवाह—तथाहीत्यादिना। तथाहीति पूर्ववत्। यदि सनातनं नित्यम्; वस्तुसत्—अपरिकल्पितम्, व्यापि-विशेषव्यापनशीलम्, एकं-स्वरूपेण, अनवयवम्-अवयवरहितम्, सामान्यवस्तु न स्यात्, ततः किं स्यादित्याह--न तदा देशकालस्वभावभेदभिन्नेषु, केष्वित्याह—घटशरावोद्ञ्चिकोदञ्चनादिषु उदञ्चनो-लोट्टक, आदिशब्दादलिञ्जरादिग्रहः, बहुषु विशेषेषु सर्वत्र ' मृद् मृद् ' इत्येवं अभिन्नौ तुल्यावेकरूपावित्यर्थः; कावित्याह--बुद्धिशब्दौ स्याताम्। किमिति न स्यातामित्याह-न खल्वित्यादि। नैव ' हिमतुषार-करकोदकानि च इत्यनेन जलभेदानाह, ' अङ्गारमुर्मुर-ज्वालानलाश्च ' इत्यनेन त्वग्निभेदान्, ' झञ्झामण्डलिको-त्कलिकापवनाश्च ' इत्यनेन वायुभेदान्, ' खदिरो-दुम्बर-बदरिकादयश्च ' इत्यनेन च वनस्पतिभेदानाह, आदिशब्दः प्रत्येकं धारादिसंग्रहार्थः; एतेष्वत्यन्तभिन्नेषु, जातिभेदापेक्षया बहुषु, विशेषेषु भेदेषु, एकाकारा बुद्धिर्भवति, तथाऽननुभवात्। नाप्येकाकारः शब्दः प्रवर्तत इति ' मृद् मृद् ' इत्यादिशब्दवत्। अतोऽस्य सामान्यस्येति योगः। यथोक्तं च तद् ' मृद् मृद् ' इत्यादिरूपतयाऽभिन्नं च तद् बुद्धि--शब्दद्वयं चेति विग्रहः, प्रवृत्तिनिबन्धनं--प्रवृत्तिकारणम्, तस्य वस्तुसतः पारमार्थिकस्य सामान्यस्य सत्त्वमाश्रयितव्यमिति।

पुनराशङ्क्याह—

अत्रोच्यते-न खल्वस्माभिर्यथोक्तबुद्धि-शब्दद्वयप्रवृत्तिनिबन्धनं निषिध्यते। किं तर्हि?। एकादिधर्मयुक्तं परपरिकल्पितं सामान्यमिति। तच्च यथा विशेषवृत्त्ययोगेन न घटां प्राञ्चति तथा लेशतो निदर्शितमेव, प्रपञ्चतस्त्वन्यत्र वृत्त्ययोग-संख्यादिव्यभिचार-तद्वत्प्रत्ययप्रसङ्गादिना युक्तिकलापेन निराकृतमिति नेह प्रयासः।

एतदाशङ्क्याह—अत्रोच्यते न खल्वस्माभिः जैनैः, यथोक्तबुद्धि-शब्दद्वयप्रवृत्तिनिबन्धनं निषिध्यते। किं तर्हि?। एकादिधर्मकं परपरिकल्पितं सामान्यमिति-सामान्यं निषिध्यते। तच्चैकादिधर्मकं सामान्यम्, यथा विशेषवृत्त्ययोगेन हेतुना, न घटां प्राञ्चति--न घटनं गच्छति, तथा लेशतो निदर्शितमेव, प्रपञ्चतस्त्वन्यत्र स्याद्वादकुचोद्यपरिहारादौ, वृत्त्ययोगश्च संख्यादिव्यभिचारश्च तद्वत्प्रत्ययप्रसङ्गादिश्चेति समासः, तेन; केनेत्याह-युक्तिकलापेन उपपत्तिसंघातेन, निराकृतमिति कृत्वा, नेह प्रयासो-नेह प्रयत्नविशेषः। तत्र वृत्त्ययोगो दर्शित एव। ' यदेकबुद्ध्येकशब्दप्रवृत्तिनिमित्तं तत् सामान्यम् ' इत्यभ्युपगमे संख्यादिभिर्व्यभिचारः-एकसंख्याऽपि भवत्येकबुद्ध्येकशब्दप्रवृत्तिनिमित्तम्; आदिशब्दात्-तत्समवायश्च, न चासौ सामान्यमिति व्यभिचारः। तथाभावेऽपि सामान्यस्य विशेषेषु तद्वत्प्रत्ययप्रसङ्गः 'एकसामान्यवन्तो विशेषाः' इति प्रत्ययः प्रा-

भोति, न समाना' इति । आदिशब्दाद्-विशेषविनाशे तत्र तत्केवलग्रहणप्रसङ्ग । इति संक्षेपगर्भार्थ. । इत्यलं प्रसङ्गेन ।

आह—किं पुनर्यथोक्तबुद्धिशब्दद्वयप्रवृत्तिनिबन्धनम्? इति । उच्यते–अनेकधर्मात्मकानां वस्तूनां तथाविधः समानपरिणाम इति । न चात्र सामान्यवृत्तिपरीक्षोपन्यस्तविकल्पयुगलप्रभवदोषसंभवः, समानपरिणामस्य तद्विलक्षणत्वात्, तुल्यज्ञानपरिच्छेद्यवस्तुरूपस्य समानपरिणामत्वात्, अस्यैव च सामान्यभावोपपत्तेः समानानां भावः सामान्यमिति यत्तत्समानैस्तथा भूयत इत्यन्वर्थयोगात्, अर्थान्तरभूतभावस्य च तद्व्यतिरेकेणापि तत्समानत्वेऽनुपयोगात्, अन्यथा समानानामित्यभिधानाभावादयुक्तैव तत्कल्पना । समानत्वं च भेदाविनाभाव्येव, तदभावे सर्वथैकत्वतः समानत्वानुपपत्तेः । इति तथाविधः समानपरिणाम एव समानबुद्धिशब्दद्वयप्रवृत्तिनिमित्तम् ।

आह-किं पुनर्यथोक्तबुद्धिशब्दद्वयप्रवृत्तिनिबन्धनम्? इति । उच्यते-अनेकधर्मात्मकानां सत्त्वज्ञेयत्वाद्यपेक्षया, वस्तूना घटशरावोष्ट्रिकोदञ्चनादीनाम्, तथाविधो 'मृद् मृद्' इत्यभिन्नबुद्धिशब्दद्वयप्रवर्तक', समानपरिणाम इति । न चात्र समानपरिणामे, सामान्यवृत्तिपरीक्षायामुपन्यस्तं च तद् विकल्पयुगलकं च 'तथाहि—तदेकादिस्वभाव सामान्यमनेकेषु दिग्देशसमयस्वभावभिन्नेषु विशेषेषु सर्वात्मना वा वर्त्तते, देशेन वा' इत्येतत्, तत्प्रभवाश्च ते दोषाश्च सामान्यानन्त्यादय, तेषा संभवो न च । कुत इत्याह—समानपरिणामस्य तद्विलक्षणत्वात् एकादिधर्मकसामान्यविलक्षणत्वात् । वैलक्षण्यमेवाह—तुल्येत्यादिना । तुल्यज्ञानपरिच्छेद्यं च तद् वस्तुरूपं चेति विग्रहस्तस्य, समानपरिणामत्वात् । अस्यैव-समानपरिणामस्य, सामान्यभावोपपत्त । उपपत्तिश्च, समानाना भाव सामान्यमिति यत् तत्समानैस्तथा भूयत इति कर्तरि षष्ठी, इत्येवमन्वर्थयोगात् । नायं परपक्ष इत्याह-अर्थान्तरभूतभावस्य च सम्बन्धपक्षे समानाना संबन्धिन, तद्व्यतिरेकेणापि-भावव्यतिरेकेणापि तदर्थान्तरत्वेन, तत्समानत्वे—तेषा समानानां समानत्वे, प्रकृत्यैवेति भावः, किमित्याह-अनुपयोगात् अधिकृतभावस्य, तमन्तरेणैव ते समाना इति कृत्वा । अन्यथैवमनभ्युपगमे तमन्तरेण तदसमानत्वे प्रकृत्या 'समानानाम्' इत्यभिधानाभावात्, अयुक्तैव तत्कल्पना—अधिकृतभावकल्पना । 'समानानां भाव.' इत्येतत्संबन्धिना समानानामिति कृत्वा । उपचयमाह-समानत्वं च-तुल्यत्वं च भेदाविनाभाव्येव 'अयमनेन समान' इति नीते । तदभावे—भेदाभावे, सर्वथैकत्वत कारणात्, किमित्याह—समानत्वानुपपत्ति । इति एवम्, तथाविधो 'मृद् मृद्' इत्यभिन्नबुद्धिशब्दद्वयप्रवर्तक, समानपरिणाम एव समानबुद्धिशब्दद्वयप्रवृत्तिनिमित्तमिति स्थितम् ।

आह-यथा असमाना अपीन्द्रियादयस्तथास्वभावत्वाद् रूपज्ञानाद्येककार्यकारिणः, तथैतेऽपि भावास्तथाविधसमानपरिणामविकला अपि तथाविधबुद्ध्यादिहेतवः किं नेष्यन्ते? । उच्यते–असमानेभ्यः समानबुद्ध्याद्यसिद्धेः, तन्निबन्धनस्वभाववैकल्यात्, तथाहि–न चक्षुरादिषु समानबुद्ध्यादिभावः तथाऽप्रतीतेः । रूपज्ञानाद्येककार्यकारित्वं चात्रानर्थकमेव, सिद्धसाधनत्वात् । को हि नाम तथाऽसमानेभ्योऽपि तथैकं कार्यं नेच्छति? । तथाविधसमानपरिणामविकलास्तु समानबुद्धिशब्दद्वयप्रवृत्तिहेतवो न भवन्ति, न तथाविधैककार्याः, इत्यभिदधति विद्वांसः । ततश्चानेन न किञ्चिदुपद्रूयते, असमानेभ्यः समानबुद्ध्याद्यसिद्धेः ।

आह—यथाऽसमाना अपीन्द्रियादय.—इन्द्रियमनस्काराऽऽलोकरूपादयो जातिभेदेन, तथास्वभावत्वाद्—रूपादिज्ञानजननस्वभावत्वात् कारणात् रूपज्ञानादि, आदिशब्दात्—स्वसंसताविन्द्रियादिकार्यग्रह, एतदेककार्यकारिणः, तथैतेऽपि भावा घट—शरावो—ष्ट्रिकोदञ्चनादय, तथाविधसमानपरिणामविकला अपि, तात्त्विकसमानपरिणामविरहिता अपीत्यर्थ', तथाविधबुद्ध्यादिहेतव'—समानबुद्धिशब्दद्वयहेतव, किं नेष्यन्ते? । एतदाशङ्क्याह—उच्यते—असमानेभ्यो जातिभेदेन, समानबुद्ध्याद्यसिद्धे'–समानबुद्धिशब्दद्वयानुपपत्तः । असिद्धिश्च, तन्निबन्धनस्वभाववैकल्यात् । समानबुद्ध्यादिनिबन्धस्वभाववैकल्यात् । एतदेवाह—तथाहि—न चक्षुरादिषु विषयेषु, समानबुद्ध्यादिभावो विषयत्वेन । कुत इत्याह—तथाऽप्रतीतेः चक्षुरादिषु विषयत्वेन समानबुद्ध्याद्यप्रतीते, नीलादिष्विव समानेष्विति व्यतिरेकेण भावना । रूपज्ञानाद्येककार्यकारित्वं चात्र व्यतिकरे, अनर्थकमेव । कुत इत्याह—सिद्धसाधनत्वात् । एतदेवाह—को हि नाम वादी, तथा—असमानेभ्योऽपि विशिष्टसमानपरिणामापेक्षया, तथैक कार्यं—सामग्रीजनकत्वेनैकं कार्यं नेच्छति? । तथाविधसमानपरिणामविकला. पुनश्चक्षुरादय' समानबुद्धि-शब्दद्वयप्रवृत्तिहेतवो न भवन्ति, न तथाविधैककार्यास्तथाविधैककार्या भवन्त्येवेत्यर्थ', इत्यभिदधति विद्वांसो जैना' । ततश्चानेनानन्तरोदितेन, न किञ्चिदुपद्रूयते । कुत इत्याह—असमानेभ्य.—चक्षुरादिभ्य', सामानबुद्ध्याद्यसिद्धे, तत्सिद्धौ च नो बाधेति भावना ।

नासिद्धिः प्रधानेश्वरादिकार्यत्वसमानपरिणामविकलेभ्योऽपि भावेभ्यः 'प्रधानादिकार्याः प्रधानादिकार्याः' इति केषाञ्चित्समानबुद्ध्यादिसिद्धेः । न । तस्याः संकेतसंमोहहेतुत्वात्, अविद्वदङ्गनादीनामविशेषेण समानपरिणामवद्भावेष्विवाक्षदर्शनत एव तदप्रवृत्तेः । तथाक्षदर्शनमपि न तत्रार्थयाथात्म्यतः, अपि तु–जन्मान्तरवासनात इति चेत् । तत्रापि किं निमित्तम्? इति वाच्यम् । जन्मान्तरवासनैवेति चेत् । अनवस्था । अनादित्वात् तद्वासनाया अयमप्यदोष इति चेत् । न । अना-

दितथाचदर्शनादर्थयाथात्म्यसिद्धेः, अन्यथाऽतिप्रसङ्गात्, रूपाद्यचदर्शनस्यापि तत्रार्थयाथात्म्यत एतदिति निश्चयाभावात्, उक्तवद्वासनाकल्पनोपपत्तेः। इत्यलं प्रसङ्गेन।

आह—नासिद्धिः 'असमानेभ्यः समानबुद्धयादेः' इति प्रक्रमे । कुत इत्याह-प्रधाने—श्वरादिकार्यत्वसमानपरिणामविकलेभ्योऽपि भवद्दर्शननीत्या, भावेभ्यो महदादिभ्यः, 'प्रधानादिकार्या प्रधानादिकार्या' इत्येवं केषाञ्चित् सांख्यादीनाम्, समानबुद्धयादिसिद्धेः । एतदाशङ्क्याह-नेत्यादि । न-नैतदेवम्, तस्याः समानबुद्धयादिसिद्धेः, संकेतसंमोहहेतुत्वात्-असच्छास्त्रसंकेतसंमोहनिबन्धनत्वात् । कथमेतदेवमित्याह—आविद्धदङ्गनादीनां प्रमातृणाम्, अविशेषेण—सामान्येन, समानपरिणामवद्भावेष्विव घट—शरावोष्ट्रिको-दञ्चनादिषु, अचदर्शनत एव तदप्रवृत्तेः 'प्रधानादिकार्याः प्रधानादिकार्याः' इति समानबुद्धयाद्यप्रवृत्तेः, अचदर्शनतश्चाविशेषेण घटादिषु समानबुद्धयादिसिद्धिः । आह-तथाचदर्शनमपि समानतया, न तत्र घटादौ, अर्थयाथात्म्यतः-अर्थयाथात्म्यभावेन, अपि तु-जन्मान्तरवासनात इति चेत् । एतदाशङ्क्याह—तत्रापि जन्मान्तरे, किं निमित्तम् ? इति वाच्यम् । जन्मान्तरवासनैवेति चेद् निमित्तम् । एतदाशङ्क्याह—अनवस्था तत्राप्युक्तदोषानतिवृत्तेः । अनादित्वात् तद्वासनायाः-तथाचदर्शनवासनायाः, अयमपि-अनवस्थालक्षणः,अदोष इति चेत् । एतदाशङ्क्याह-नेत्यादि। न-नैतदेवम्, अनादि च तत् तथाचदर्शनं च, प्रक्रमात् समानतयाऽचदर्शनं चेति विग्रहस्तस्मादनादितथाचदर्शनात्, किमित्याह—अर्थयाथात्म्यसिद्धेः अनादितथाभावेन । इत्थं चैतदङ्गीकर्तव्यमित्याह—अन्यथातिप्रसङ्गात् एवमनभ्युपगमेऽतिप्रसङ्गात् । एतमेवाह—रूपाद्यचदर्शनस्यापि रूपादेरचैर्दर्शनं रूपाद्यचदर्शनं तस्यापि, अर्थयाथात्म्यतोऽर्थयाथात्म्यात्, एतदिति—निश्चयाभावात् । अभावश्च, उक्तवद् यथोक्तं तथा, वासनाकल्पनोपपत्तेः 'रूपाद्यचदर्शनमपि न तथार्थयाथात्म्यत, अपि तु—जन्मान्तरवासनातः' इत्यादेरपि वक्तुं शक्यत्वात्. इत्यलं प्रसङ्गेन।

बुद्धयाकार एवायमिति चेत् । कोऽस्य हेतुः ? इति वाच्यम् । तदेककार्यकारिणामतत्कारिभेद इति चेत् । न इन्द्रियादिभिर्व्यभिचारात् । न रूपज्ञानाद्येककार्यमिह गृह्यते, अपि तु-समानजातीयक्षणोत्पादस्तेषामतत्कारिभेदोऽत्र विवक्षित इति चेत् । न । सर्वेषामेवासौ विद्यते, रूपज्ञानादिभावेऽपीन्द्रियादिसमानजातीयक्षणोत्पत्तेः, इति तैरेव व्यभिचारात् ।

बुद्धयाकार एवायं—समानाकारो घटादिगत, इति चेत् । एतदाशङ्क्याह-कोऽस्य हेतुः ? इति वाच्यम् । तदेककार्यकारिणामिह प्रक्रमे, मृद्बुद्धयाख्यैककार्यकारिणां घट-शरावो-ष्ट्रिको-दञ्चनादीनाम्, अतत्कारिभेद अतत्कारिभ्यो-हिम-तुषार-करकादिभ्यो भेदोऽतत्कारिभेद, इति चेदस्य हेतु । एतदाशङ्क्याह—नेत्यादि । न-नैतदेवम्, इन्द्रियादिभिर्व्यभिचारात्. इन्द्रिय-मनस्कार-ऽऽलोकादयस्तदेककार्यकारिणोऽतत्कारिभिन्ना, न च यथोक्तबुद्धयाकारहेतव ।

आह—न रूपज्ञानादि, आदिशब्दाद्-रसज्ञानादिग्रहः, एककार्यमिह गृह्यते, येन तदेककार्यकारित्वमिन्द्रियादीनां भवति; अपि तु—समानजातीयक्षणोत्पाद एकं कार्यमिह गृह्यते, तेषां समानजातीयैककार्याणाम्, अतत्कारिभ्यः—समानजातीयैककार्याकारिभ्यो भेद, अत्र प्रक्रमे, विवक्षित इति चेत् । एतदाशङ्क्याह—नेत्यादि । न-नैतदेवम् । कुत इत्याह-सर्वेषामेव इन्द्रियादीनाम्, असौ समानजातीयक्षणोत्पादो विद्यते, कथमित्याह—रूपज्ञानादिभावेऽपि सति, इन्द्रियादिसमानजातीयक्षणोत्पत्ते कारणात्, तैरिन्द्रियादिभिः, व्यभिचारात् । न हीन्द्रियादीनामपि समानजातीयक्षणोत्पादः, अतत्कारिभेदश्च च विद्यते, तथापि न ते समानबुद्धयाकारहेतव इति तैरेव व्यभिचारः ।

तुल्यसमानजातीयकार्योत्पादिनामतत्कारिभेद इह गृह्यत इति चेत् । न । तस्य तेभ्यो भेदाऽभेदविकल्पानुपपत्तेः, भेदे तेषामिति संबन्धाभावः, तादात्म्याद्यसिद्धेः, भेदमात्रत्वात्, वस्तुत्वापत्तेश्च । अभेदे त एव ते । इति कथमसमानास्तद्धेतवो नाम ? । न हि रसादिभ्यः समानो रूपबुद्धयाकारः, तथाननुभवात्, व्यवस्थानुपपत्तेश्च । नान्य एव तत्तद्भेदः, अपि तु-त एव तत्स्वभावा इति, अतस्त एव तद्धेतवो नान्ये, अतत्स्वभावत्वादिति चेत् । तेषामेवासौ स्वभाव इति कुतः ? स्वहेतुभ्य उत्पत्तेः । न अन्येषामपि तत्प्रसङ्गात्, तेषामपि स्वहेतुभ्य एवोत्पत्तेः । न, तथाविधेभ्यस्तेषां यथाविधेभ्य एषामिति चेत् । किमिदं तथाविधत्वम् ? । तुल्यकार्यकृज्जनकत्वम् । नेदं तत्तुल्यसामर्थ्यमन्तरेण । तदङ्गीकरणे चाङ्गीकृत एव मदीयोऽभ्युपगमः, अतुल्यसामर्थ्येभ्यस्तुल्यसमानजातीयकार्यानुत्पत्तेः, इन्द्रियादिषु तददर्शनात् । तदतुल्यसामर्थ्यनिबन्धनमेतत् । अतोऽन्यत् तत्तुल्यसामर्थ्यकारणमिति सन्न्यायः । तुल्यसामर्थ्यमेव च नो भावानां समानपरिणाम इति परिभाव्यतामेतत् ।

तुल्येत्यादि । तुल्यं च तत् समानजातीयकार्यं चेति विग्रहः, तदुत्पादयितुं शीलास्तुल्यसमानजातीयकार्योत्पादिनस्तेषाम्, अतत्कारिभेदः, इहाधिकारे, गृह्यत इति चेत् । एतदाशङ्क्याह—न, तस्य अतत्कारिभेदस्य, तेभ्य —तुल्यसमानजातीयकार्योत्पादिभ्य, भेदाऽभेदविकल्पानुपपत्ते । एतामेवाह—भेद इत्यादिना । भेदे तुल्यसमानजातीयकार्योत्पादिभ्योऽतत्कारिभेदस्याभ्युपगम्यमाने, तेषां 'तुल्यसमानजातीयकार्योत्पादिनां भेद.' इत्येवं, संबन्धाभाव. । कुत इत्याह-तादात्म्याद्यसिद्धेः तुल्यसमाजातीयकार्योत्पादिनामतत्कारिभेदस्य च तादात्म्याद्यसिद्धे, आदिशब्दात्—तदुत्पत्तिपरिग्रह. । असिद्धिश्च भेदमात्रत्वात् कारणात् तादात्म्यासिद्धि',वस्तुत्वापत्तेश्च भेदस्य तदुत्पत्त्यसिद्धि । द्वितीयविकल्पमधिकृत्याह-अभेदे तुल्यसमानजातीयकार्योत्पादिभ्योऽतत्कारिभेदस्याभ्युपगम्यमाने । किमित्याह-त एव--ते

तुल्यसमानजातीयकार्योत्पादिन एव ते-केवला , न तदतिरिक्तं किञ्चित् । इति-एवं,क्रमसमाना प्रकृत्या, तद्धेतव -समानबुद्ध्याकारहेतवो नाम?।एतदेव प्रकटयति नेत्यादिना । न हि रसादिभ्य प्रकृत्याऽसमानेभ्यः, समानो रूपबुद्ध्याकार. । कुतो न इत्याह-तथाननुभवात्-समानरूपबुद्ध्याकारतयाऽननुभवाद् रसादीनाम् , एतत्कल्पाश्च तुल्यसमानजातीयकार्योत्पादिन इन्द्रियादय इष्यन्त इत्यर्थ । दोषान्तरमाह—व्यवस्थानुपपत्तेश्च अननुभवेऽपि समानबुद्ध्याकारपरिकल्पने रसादिभेदाभावप्रसङ्गादिति भावः । आह-अन्य एव तत्कृद्भेद तुल्यसमानजातीयकार्योत्पादिभ्योऽतत्कारिभेद. , अपि तु-त एव तुल्यसमानजातीयकार्योत्पादिन , तत्स्वभावा.-प्रक्रमादधिकृतबुद्ध्याकारजननस्वभावा. , इत्यत कारणात् , त एव—विशिष्टास्तुल्यसमानजातीयकार्योत्पादिनो घट-शरावो-ष्ट्रिका-दञ्चनादय इत्यर्थ , तद्धेतव —प्रक्रमादधिकृतबुद्ध्याकारहेतवः, नान्य इन्द्रियादय. । कुत इत्याह—अतत्स्वभावत्वात् सोऽधिकृतबुद्ध्याकारहेतु , स्वभावो येषां ते तत्स्वभावा न तत्स्वभावा अतत्स्वभावास्तद्भावस्तस्मात् , इति चेदिन्द्रियादीनाम् । एतदाशङ्क्याह-तेषामेव-घटादीनाम् ,असौ स्वभाव.-प्रक्रमादधिकृतबुद्ध्याकारजननस्वभाव , इति एतत् , कुत ? अत्राह-स्वहेतुभ्य सकाशात्,-उत्पत्तेर्विशिष्टेभ्य इति पराकूतम् । एतदनादृत्य सामान्यमेव गृहीत्वाह-नेत्यादि । न-नैतदेवम् ,अन्येषामपीन्द्रियादीनाम् , तत्प्रसङ्गादधिकृतबुद्ध्याकारजननस्वभावत्वप्रसङ्गात् । प्रसङ्गश्च , तेषामप्यन्येषामिन्द्रियादीनाम् , किमित्याह—स्वहेतुभ्य एवोत्पत्ते । न हि तेऽप्यन्यहेतुका अहेतुका वेति भावनीयम् । न तथाविधेभ्यस्तेषामित्यन्येषामिन्द्रियादीना , यथाविधेभ्य एषामधिकृतबुद्ध्याकारहेतूना घटादीनाम् , इति चेत् । एतदाशङ्क्याह-किमिदं तथाविधत्व तद्धेतूनामिति ?। अत्राह—तुल्यकार्यकृज्जनकत्व-तुल्यकार्यकरणशीलास्तुल्यकार्यकृत इह प्रक्रमे तानुद् घटादयस्तेषां जनकास्तद्धेतव इति प्रक्रम , तद्भावस्तुल्यकार्यकृज्जनकत्व तथाविधत्वमिति । एतदाशङ्क्याहनेद तुल्यकार्यकृज्जनकत्वम् , तत्तुल्यसामर्थ्यमन्तरेण तेषा तद्धेतूना तुल्यसामर्थ्ये विना । यदि नामैव तत किमित्याह--तदङ्गीकरणे च तत्तुल्यसामर्थ्याङ्गीकरणे च , अङ्गीकृत एव मदीयोऽभ्युपगम , तुल्यसामर्थ्यस्यैव समानपरिणामत्वात् । एतदेव विपक्षबाधाभिधानेनाभिधातुमाह—कथमङ्गीकृत एव मदीयोऽभ्युपगम , अतुल्यसामर्थ्येभ्य इन्द्रियादिभ्यस्तुल्यसमानजातीयकार्यानुत्पत्ते । न रूपादिज्ञानैककार्यकारिभ्योऽपीन्द्रियादिभ्य. स्वसंततौ तुल्यानि समानजातीयकार्याण्युपपद्यन्ते , यदुत-सर्वाणीन्द्रियाण्येव मनस्कारा इत्यादीति भावना । आह च—इन्द्रियादिषु अतुल्यसामर्थ्येषु , तद्दर्शनात् तुल्यसमानजातीयकार्यादर्शनादिति , भावितमेतम् । यदि नामैवं तत. किमित्याह—तदतुल्यसामर्थ्यनिबन्धनम्-इन्द्रियादीनामतुल्यसामर्थ्यनिबन्धनम् , एतत्-तुल्यसमानजातीयकार्यादर्शनम् । अतोऽन्यत्—प्रक्रमात् तुल्यसमानजातीयकार्यदर्शनं श्रूयते , एतच्चेह मृद्रूपमात्रतयाऽधिकृतघट-शरावो-ष्ट्रिका-दञ्चनादिविषयमेवावगन्तव्यम् , तत्तुल्यसामर्थ्यकारणमिति घटादीना तुल्यसामर्थ्यकारणम् , अतुल्यसामर्थ्येभ्यो हिमादिभ्य एव मृद्रूपताऽयोगात् , इति सन्न्याय , अन्वयव्यतिरेकवलप्रतिष्ठितत्वात् तत्तुल्यसामर्थ्यस्य । एवमपि काऽनेष्टसिद्धिरित्याह-तुल्यसामर्थ्यमेव च न -अस्माकम् , भावानां घटादीनाम् , समानपरिणाम , इति परिभाव्यतामेतत् । एतदुक्तं भवति—येषामेव भावाना पिण्डादीना तुल्यं सामर्थ्यं त एव घटादीन् मृद्रूपमात्रतया तुल्यान् सामानजातीयान् कुर्वन्ति, नान्ये हिमादय. , घटादिष्वेव च ' मृद् मृद् ' इति समानाकारा बुद्धिरुत्पद्यते, न हिमादिषु; अतस्तात्त्विकसमानपरिणामनिबन्धनेयमिति सूक्ष्मधियाऽऽलोचनीयम् ।

अविषय एवायं बुद्ध्याकारोऽनादिवासनादोषादुपप्लव इति चेत् । केयं वासना नाम ?-किं बोधमात्रम् , उतान्यदेव किञ्चित् ? । यदि बोधमात्रम् , अनुत्तरज्ञानेऽपि तथाविधाकारापत्तिः , तस्यापि बोधमात्रभावाद् , अनिष्ट चैतत् , तत्र तदनभ्युपगमात् । अथान्यदेव किञ्चित् । तदेवास्य विषय इति कथमविषयो नाम ? । अवस्त्वेव तदिति चेत् । कथं ततः स आकारः ? इति वाच्यम् । अहेतुक एवायमिति चेत् । सदा तद्भावादिप्रसङ्गः । विशिष्टं बोधरूपं वासना न बोधमात्रमिति चेत् । किंकृतमस्य वैशिष्ट्यम् ? इति वाच्यम् । अनादिहेतुपरम्पराकृतमिति चेत् । न । तत्रापि तन्मात्राविशेषात् । स समुद्रोर्मिवद् यतस्तदेव तदिति चेत् । न । तस्यापि वाय्वादिना विना तत एवाभावात् । अनागमो वाय्वादिकल्प इति चेत् । न । तदभावेऽपि क्वचित्तद्भावोपपत्तेः । स्वचित्तोभोद्भवसमुद्रोर्मितुल्यः स इति चेत् । स एव तदा कुतः । इति वाच्यम् । तस्यैव तत्स्वभावत्वादिति चेत् । न । तदविशेषेण सदा समुद्रोर्मिप्रसङ्गात् । तस्य तत्क्षणविशेषत्वादप्रसङ्ग इति चेत् । न । तस्य तन्मात्रत्वेन विशेषस्यासिद्धेः । ऊर्मिजननस्वभावत्वं विशेष इति चेत् । न स्वभावः स्वभाववतोऽन्य इति तन्मात्रत्वमेव । तन्मात्रत्वेऽपि तद्भेदवच्छेद एवेति चेत् । न । तादृशस्यास्याप्रयोजकत्वात् , तत्तद्भावेऽतिप्रसङ्गात् , तत्स्वभावानामपि केषाञ्चित् तथाभेदाद् नियतया फलभेदापत्तेः ।

आह—अविषय एव-अनालम्बन एव, अयं-प्रक्रान्तो ' मृद् मृद् ' इति समानो बुद्ध्याकार. । कुत किमात्मको वाऽयमित्याह—अनादिवासनादोषात् अयमुप्लव स्वरूपेण , इति चेत् । एतदाशङ्क्याह—केय वासना नाम ? । किं बोधमात्रं निर्विशेषमेव , उतान्यदेव किञ्चिद् बोधाद् भिन्न वस्तु ? । उभयथाऽपि दोषमाह—यदि बोधमात्रं निर्विशेषमेव वासना । तत किमित्याह—अनुत्तरज्ञानेऽपि भगवत सर्वन्धिनि , तथाविधाकारापत्ति , प्रक्रमाद् ' मृद् मृद् ' इति सामानबुद्ध्याकारापत्ति , कुत इत्याह-तस्यापि अ-

नुत्तरज्ञानस्य, बोधमात्रभावात्, एतदेव वासनेति बोधानुत्तरबोधान्याकारानुत्तरज्ञानजन्मेतिः अनिष्टं चैतत्। कुत इत्याह-तत्र अनुत्तरज्ञाने, तदनभ्युपगमात्-तथाविधाकारानभ्युपगमात्। द्वितीयं विकल्पमधिकृत्याह-अथान्यदेव किञ्चित् वस्तु वासनेति। एतदाशङ्क्याह-तदेव अन्यत् किञ्चिद् वासनाख्यम्, अस्याधिकृतबुद्ध्याकारस्य विषय, इति-एवम्, कथमविषयो नामायं बुद्ध्याकारः?। अवस्त्वेव तदिति चेदन्यत् किञ्चिद् वासनाख्यम्। एतदाशङ्क्याह-कथं तत वस्तुनः, स आकारोऽधिकृतबुद्ध्याकारः? इति वाच्यम्। अहेतुक एवायं बुद्ध्याकार इति चेत्। एतदाशङ्क्याह-सदा तद्भावादिप्रसङ्गः नित्यं सत्त्वमसत्त्वं चेति नेति। विशिष्टं बोधरूपं वासना, न च बोधमात्रमविशिष्टमिति चेत्, ततश्च किल यथोक्तदोषाभाव इति। एतदाशङ्क्याह-किंकृतमस्य बोधरूपस्य, वैशिष्ट्यमिति वाच्यम्। अनादिहेतुपरम्पराकृतमिति चेत्। एतदाशङ्क्याह-न, तत्रापि अनादिहेतुपरम्परायाम्, तन्मात्राविशेषाद्-बोधरूपमात्राविशेषात्। स बुद्ध्याकारः-समुद्रोर्मिवदिति निदर्शनम्. यतो बोधरूपात्, तदेव बोधरूपं, तद् वैशिष्ट्यम्, इति चेत्। एतदाशङ्क्याह-न, तस्यापि समुद्रोर्मेः, वाय्वादिना विक्षोभकारणेन, विना, तत एव समुद्रमात्राद् अभावात्। ततश्च दृष्टान्त-दार्ष्टान्तिकयोर्वैषम्यमित्यर्थः। अनागमस्तीर्थिकसंबन्धी, वाय्वादिकल्प इति चेत् ततो न वैषम्यमित्यभिप्राय। एतदाशङ्क्याह-न, तदभावेऽपि अनागमाभावेऽपि, क्वचिद् बालविकल्पादौ, तद्भावोपपत्तेः प्रक्रमादधिकृतबुद्ध्याकारोपपत्ते। स्वेत्यादि। स्वचित्तक्षोभादुद्भवो यस्य समुद्रोर्मेः स तथा, स्वचित्तक्षोभोद्भवश्चासौ समुद्रोर्मिश्चेति समासः, तेन तुल्यः स इति चेत् प्रस्तुतबुद्ध्याकारः। एतदाशङ्क्याह-स एव स्वचित्तक्षोभोद्भवः समुद्रोर्मिः, तदा तस्मिन्नेव काले, कुत.? इति. वाच्यम्। तस्यैवेत्यादि। तस्यैव समुद्रस्य, तत्स्वभावत्वात्-तदोर्मिजननस्वभावत्वात्, इति चेत् स एव तदेति। एतदाशङ्क्याह-नेत्यादि। न-नैतदेवम्, तदविशेषेण-समुद्रविशेषेण हेतुना, सदा समुद्रोर्मिप्रसङ्गात्, तन्मात्रनिमित्तत्वात् ह्यूर्मिः, विशिष्टं च भेदकस्वभावेन परस्य तन्मात्रत्वमिति भावना। तस्येत्यादि। तस्य स्वचित्तक्षोभोद्भवसमुद्रोर्मिहेतोः समुद्रस्य, तत्क्षणविशिष्टत्वात्-समुद्रक्षणविशिष्टत्वात् अप्रसङ्ग इति चेत् सदोर्मिप्रसङ्गोऽनन्तरोदितः, स एव क्षणस्तत्स्वभावो नान्ये तत्क्षणा इत्यभिप्राय। एतदाशङ्क्याह-न, तस्य समुद्रक्षणस्य, तन्मात्रत्वेन समुद्रक्षणमात्रत्वेन हेतुना, विशेषस्यासिद्धेः। ऊर्मिजननस्वभावत्वं विशेष इति चेत्, तथाहि-न सर्वे तत्स्वभावाः, सर्वेष्व ऊर्मिभावापत्तेः, न चेयम्, तथाऽदर्शनप्रवृत्तिरिति भावनेति। एतदाशङ्क्याह-न स्वभाव इत्यादि। न स्वभावः स्वभाववतः सकाशात्, अन्य इति कृत्वा, तन्मात्रत्वमेव, समुद्रक्षणमात्रत्वमेव ततश्च 'ऊर्मिजननस्वभावत्वं विशेष' इति वचनमात्रमेव। तन्मात्रत्वेऽपि-समुद्रक्षणमात्रत्वेऽपि, तद्धेतुत्वत्-समुद्रक्षणभेदवत्, भेद एवेति चेद् विशेष एवोर्मिजननस्वभावस्य तत्त्वमिति। एतदाशङ्क्याह-न, तादृशस्य तुल्यस्वरूपभेदस्याप्रहेतो, अन्यस्य चाभेदस्य, अप्रयोजकत्वात् स्वभावभेदेनोर्मिजननं प्रति। एतदेवाह-तत्सद्भावे-तस्य भेदमात्रस्य तद्भावे स्वभावभेदेनोर्मिजननं प्रति प्रयोजकत्वादित्यर्थः, किमित्याह-अतिप्रसङ्गात्। एतमेवाह-तत्स्वभावानामपि कयाश्चित् पदार्थानां तथा भेदात् तुल्यस्वरूपभेदमात्रहेतुतथाभेदात्, नित्यतया-नित्यस्वभावत्वेन फलभेदापत्तेः समुद्रोर्मिवदनित्यभावविलक्षणफलभेदापत्तेरित्यतिसूक्ष्मधिया भावनीयम्।

न नित्यता कयाश्चिदपि। किं न? इति वाच्यम्। न तद्धेतुस्तथाभूताद् हेतोस्तस्यैव यदिति चेत्। न। मोक्षहेतोः कैश्चित् तथाविधत्वाभ्युपगमात्, अहेतोरपि तथाभावकल्पनाऽविरोधात्, अस्याप्यर्थक्रियोपपत्तेः, तत्करणस्वभावत्वात्, अनित्यत्वादेः सर्वतः-सर्वार्थक्रियाभावेनेहाप्रयोजकत्वात्; तत्करणस्वभावत्वस्य च प्रयोजकत्वात्, तद्वैचित्र्येण परोदितदोषासिद्धेः, क्रम-यौगपद्यार्थक्रियाकरणस्वभावत्वात्, तस्य च पर्यनुयोगायोगात्; अन्यथा समानत्वात्, इति 'समुद्रोर्मिकल्पश्चाधिकृतो बुद्ध्याकारः' स यदेवं न युज्यते। स्वसंवेदनसिद्धश्च प्रतिभासात्, अतो यथोक्तनिमित्तक एव, इति युक्तमभ्युपगन्तुम्, अन्यथा तदुच्छेदापत्तेः। इति तथाविधः समानपरिणाम एव समानबुद्धि-शब्दद्वयप्रवृत्तिनिमित्तम्॥

अत्राह-न नित्यता कयाश्चिदपि भावानाम्। एतदाशङ्क्याह-किं न? इति वाच्यम्। न तद्धेतु-नित्यभावहेतुः, तथाभूताद्-नित्यभावजननस्वभावजननस्वभावादिति योऽर्थः हेतोः-कारणात्, तस्यैव-प्रक्रमादूर्मिजननस्वभावसमुद्रक्षणस्यैव, यदिति चेत्, ऊर्मिजननस्वभावो हि समुद्रक्षण ऊर्मिजननस्वभावसमुद्रक्षणजननस्वभावात् समुद्रक्षणादुत्पन्न इति विद्यतेऽस्य तथाभूतो हेतुः, नैवं नित्यभावजननस्वभावजननस्वभावो हेतुरस्ति, तन्नित्यत्वविरोध इत्यभिप्राय। एतदाशङ्क्याह-नेत्यादि। न-नैतदेवम्, मोक्षहेतो-र्विशिष्टज्ञानादेः, कैश्चिद् नैयायिकादिभिः, तथाविधत्वाभ्युपगमाद् नित्यभावजननस्वभावत्वाभ्युपगमात्; तथा, अहेतोरपि-अविद्यमानहेतोरप्यनवस्थादेः, किमित्याह-तथाभावकल्पनाऽविरोधात्-तथाभावो-नित्यभावस्तत्कल्पनाविरोधात्; तथाहि-अहेतुरेव कश्चित् स स्वभावः सन् नित्य इति किमत्र दूषणम्?। नित्यस्य क्रम-यौगपद्याभ्यामर्थक्रियाविरोध इत्याशङ्कापोहायाह-अस्यापि अधिकृतनित्यस्य, अर्थक्रियोपपत्तेः। उपपत्तिश्च, तत्करणस्वभावत्वात्-अर्थक्रियाकरणस्वभावत्वात्। अर्थ चात्र प्रधान इति विपक्षे बाधमाह-अनित्यत्वादेः 'इहार्थक्रियायामप्रयोजकत्वात्' इति योगः। अप्रयोजकत्वं च, सर्वतः-सर्वार्थक्रियाभावेन। न ह्यनित्य इत्येव सर्वो भावः सर्वामर्थक्रियां करोति, नित्य इत्येव वा, तथाऽदर्शनात्। अतो यो यदर्थक्रियाकरणस्वभावः स तां करोतीति तत्करणस्वभावत्वमेवात्र प्रयोजकमिति। अत एवाह-तत्करणस्वभावत्वस्य च-अर्थक्रियाकरणस्वभावत्वस्य च, प्रयोजकत्वात्, 'इह' इति वर्तते, तथाहि-यतोऽर्थक्रियाकरणस्वभावः, अतोऽर्थक्रियां करोति, किमत्रानित्यत्वादिना?, सत्यप्यस्मिन् सर्वतः सर्वा-

र्थक्रियाऽसिद्धेरिति । तथा, तद्विविशेषेण—स्वभावविशेषेण, परोदितदोषासिद्धेः क्रम—यौगपद्याभ्याम—र्थक्रियाविरोध इति परोदितो दोषस्तदसिद्धेः । अ—सिद्धिश्च, क्रम-यौगपद्यार्थक्रियाकरणस्वभावत्वात् । ततश्च क्रमसाध्यं क्रमेण करोति, यौगपद्यसाध्यं यौगपद्येन । इति न कश्चिद् दोषः, तथास्वभावत्वात् । तस्य च स्वभावस्य, पर्यनुयोगायोगात् । इत्थं चैतदङ्गीकर्तव्यमित्याह-अन्यथा समानत्वात् ऊर्मिजननस्वभावत्वपरिकल्पितस्वभावस्यापि पर्यनुयोगप्राप्ते, इति—एवम्, समुद्रोर्मेरप्यभावापत्तेः, स-मुद्रोर्मिकल्पश्चाधिकृतो बुद्ध्याकारः समानबुद्ध्याकारः, स यद्येवम्-उक्तनीत्या, न युज्यते, स्वसंवेदनसिद्धश्च प्रतिप्रमातृ; प्रमातारं प्रमातारं प्रति । अत -अस्मात् कारणात्, यथोक्त-निबन्धन एव-तथाविधसमानपरिणामनिबन्धन एव, इति युक्तमभ्युपगन्तुम्, अन्यथैवमनभ्युपगमे, तदुच्छेदापत्तेः-स-मानबुद्ध्याकारोच्छेदापत्ते. । इति-एवम्, तथाविधो वास्त-वः, समानपरिणाम एव समानबुद्धिशब्दद्वयप्रवृत्तिनिमित्त-मिति निगमनम् ।

यद्येवम्, कथं क्वचित् तद्व्यतिरेकेणाप्यस्य प्रवृत्तिः ? । ननु चास्येत्ययुक्तम्, वस्तुनिबन्धनस्य तद्व्यतिरेकेण कदा-चिदप्यप्रवृत्तेः, तथातद्दर्शनस्य च तदाभासविषयत्वेनावि-रोधात्, अन्यथा प्रत्यक्षस्याप्यविषयत्वापत्तिः । इति समानपरिणाम एव सामान्यम् ।

यद्येवमित्यादि । यद्येवम्, कथं क्वचित्—प्रधाने-श्वरादि-कार्यत्वादौ, तद्व्यतिरेकेणापि-प्रधाने-श्वरादिकार्यत्वव्यतिरे-केणापि, अस्येति—प्रक्रमात् समानबुद्धि-शब्दद्वयस्य, प्र-वृत्तिर्भवतीति यथोक्तं प्रागिति । एतदाशङ्क्याह—नन्वित्या-दि । ननु च 'अस्य' इत्ययुक्तम् । कथमित्याह-वस्तुनिबन्ध-नस्य समानबुद्धिशब्दद्वयस्य, तद्व्यतिरेकेण—वस्तुव्यतिरे-केण, कदाचिदप्यप्रवृत्तेर्घट-शरावादिष्विव हिमाङ्गारादि-ष्वदर्शनादिति भावना । तथातद्दर्शनस्य च संकेतविप्रलम्भ-द्वारेण समानबुद्धिशब्दद्वयदर्शनस्य च, प्रधाने-श्वरादि-कार्यत्वादौ, तदाभासविषयत्वेन-समानबुद्धिशब्दद्वयाभास-विषयत्वेन, अविरोधात् । इत्थं चैतदङ्गीकर्तव्यमित्याह-अ-न्यथा एवमनभ्युपगमे, प्रत्यक्षस्यापि निर्विकल्पकस्य, किमि-त्याह-अविषयत्वापत्ति. अविगानेन तथाऽनुभवादेरधिकृत-बुद्ध्याकारेऽपि भावात्, तस्य च निर्विषयत्वात्, न चैत-देवम् । इति-एवम्, समानपरिणाम एव सामान्यमिति म-हानिगमनम् ।

यतश्चैवम्, अतो न य एवासावेकस्मिन् विशेषे स एव वि-शेषान्तरे । किं तर्हि ? । समानः । इति कुतः सामान्य-वृत्तिविचारोदितभेदद्वयसमुत्थापराधावकाशः ? इति । न चैवं सति परस्परविलक्षणत्वाद् विशेषाणां समानबुद्धि-शब्दद्वयप्रवृत्त्यभावः, सत्यपि वैलक्षण्ये समानपरिणाम-सामर्थ्यतः प्रवृत्तेः, असमानपरिणामनिबन्धना च विशे-षबुद्धिरिह । इति यथोदितबुद्धि-शब्दद्वयप्रवृत्तिः ।

तथा चोक्तम्—

" वस्तुन एव समानः,परिणामो यः स एव सामान्यम् ।
असमानस्तु विशेषो, वस्त्वेकमनेकरूपं तु ॥ १ ॥ "

ततश्च तद् यत एव सामान्यरूपमत एव विशेषरूपम्, समानपरिणामस्याऽसमानपरिणामाऽविनाभूतत्वात्, यत एव च विशेषरूपमत एव सामान्यरूपम्, असमानपरि-णामस्यापि समानपरिणामाविनाभावादिति । न चानयो-र्विरोधः,अन्योऽन्यव्याप्तिव्यतिरेकेणोभयोरसत्त्वापत्तेः, उ-भयोरपि स्वसंवेदनसिद्धत्वात्, संवेदनस्योभयरूपत्वात् उभयरूपतायाश्च व्यवस्थापितत्वात् ।

यतश्चेत्यादि, यतश्चैवम्, अतो न य एवासौ समानपरिणा-म एकस्मिन् विशेषे घटादौ, स एव विशेषान्तरे शरावा-दौ । किं तर्हि ? । समान । इत्येवम्, कुत. सामान्यवृत्ति-विचारोदितं तद्भेदद्वयं च देशकार्त्स्न्यरूपं विकल्पद्वयमिति विग्रह ,तत्समुत्थाश्च तेऽपराधाश्च सदेशत्वप्रसङ्गादयस्तेषाम-वकाश कुत ?-नैव,समानपरिणामस्य तद्विलक्षणत्वादिति । न चैवमित्यादि । न चैव सति,परस्परविलक्षणत्वाद् विशेषा-णां घटशरावादीनाम्, समानबुद्धिशब्दद्वयप्रवृत्त्यभाव , हि-माङ्गारादीनामिव । कुत इत्याह-सत्यपि वैलक्षण्ये समान-परिणामसामर्थ्यत. प्रवृत्तेः कारणात्, समानबुद्धि-शब्द-द्वयस्येति । व्यतिरेकमाह-असमानपरिणामनिबन्धना च वि-शेषबुद्धिरिह प्रक्रमे घट शरावादिबुद्धिवत् । इति-एवम्, यथोदितबुद्धि-शब्दद्वयप्रवृत्ति. सामानबुद्धि-शब्दद्वयप्रवृत्ति-रित्यर्थ.। तथा चोक्तमिति अधिकृतार्थप्रसाधकं ज्ञापकमाह-वस्तुन एव घटादे. समान परिणामो यो मृदादि, स एव सामान्यम् । असमानस्तु विशेष ऊर्ध्वतादि. । वस्त्वेकमनेक-रूपं तु सामान्यविशेषोभयरूपमपि तदनेकत्वतोऽनेकरूपमि-त्यर्थ.।ततश्चेत्यादिना मूलपूर्वपक्षग्रन्थं परिहरति-ततश्च तद् वस्तु घटादि, यत एव सामान्यरूपं मृदाद्यात्मकतया, अत एव कारणात्, विशेषरूपमूर्ध्वादिरूपापेक्षया । कुत इत्याह-समानपरिणामस्य प्रस्तुतस्य, असमानपरिणामाविनाभूत-त्वाद्-विशेषपरिणामाविनाभूतत्वादित्यर्थ । यत एव च का-रणात्, विशेषरूपमूर्ध्वाद्यपेक्षया, अत एव सामान्यरूपं मृदाद्यात्मकतया । भावनामाह-असमानपरिणामस्यापि ऊ-र्ध्वादिरूपस्य, समानपरिणामाविनाभावाद्—मृदादिपरिणा-माविनाभावादिति । न चानयो. समानाऽसमानपरिणामयोः विरोध. । कुत इत्याह-अन्योन्यव्याप्तिव्यतिरेकेण उभयोः समाना-ऽसमानपरिणामयो, असत्त्वापत्ते । आपत्ति. प्राक् प्रदर्शितैव, तथा, उभयोरपि स्वसंवेदनसिद्धत्वात् तथानु-भवभावेन । अत एवाह—संवेदनस्योभयरूपत्वात् सामान्य-विशेषोभयापेक्षया, उभयरूपतायाश्च संवेदनस्य, व्यवस्था-पितत्वादध ' न चानयोर्विरोध ' इति क्रियायोग ।

यच्चोक्तम्—'सामान्यविशेषोभयरूपत्वे सति वस्तुनः सक-ललोकप्रसिद्धसंव्यवहारनियमोच्छेदप्रसङ्गः' इत्यादि । त-दपि जिनमतानभिज्ञतासूचकमेव केवलम्, न पुनरिष्टार्थ-

प्रसाधकमिति। न हि 'मधुरक–लड्डुकादिविशेषानर्थान्तरं सर्वथैकस्वभावमेकमनवयवं सामान्यम्' इत्यभिदधति जैनाः। अतः किमुच्यते–'न विषं विषमेव मोदकाद्यभिन्नसामान्याव्यतिरेकात्' इत्यादि ?। किं तर्हि ?। समानपरिणामः। स च भेदाविनाभूतत्वाद् न य एव विषादभिन्नः स एव मोदकादिभ्योऽपि, सर्वथा तदेकत्वे समानत्वायोगात्।

यच्चोक्तं पूर्वपक्षग्रन्थे, 'सामान्यविशेषोभयरूपत्वे सति, वस्तुनो-घटादेः, सकललोकप्रसिद्धसंव्यवहारनियमोच्छेदप्रसङ्ग' इत्यादि, तदपि, किमित्याह–जिनमतानभिज्ञतासूचकमेव केवलम्, न पुनरिष्टार्थप्रसाधकं वस्त्वनुपपत्तिरिष्टोऽर्थ इति न तत्प्रसाधकम्। कथमित्याह–न हीत्यादि। न यस्माद् मधुरक-लड्डुकादिविशेषानर्थान्तरमभिन्नम्, सर्वथैकस्वभावमेकमनवयवं सामान्यमित्यभिदधति जैनाः–भगवन्त्यार्हताः। अतः किमुच्यतेऽनभ्युपगतोपालम्भप्रायम्, यदुत–'न विषं विषमेव, मोदकाद्यभिन्नसामान्याव्यतिरेकात्' इत्यादि ?। किं तर्हि ?। समानपरिणामः सामान्यमित्यभिदधति जैना इति। स च समानपरिणामः, किमित्याह भेदाविनाभूतत्वात् कारणात्, न य एव विषादभिन्नः स एव मोदकादिभ्योऽपि। कथं नेत्याह–सर्वथा तदेकत्वे समानपरिणामैकत्वे, समानत्वायोगात्। न ह्येकं समानमिति भावना।

स्यादेतत् समानपरिणामस्यापि प्रतिविशेषमन्यत्वादसमानपरिणामवत् तद्भावानुपपत्तिरिति। एतदप्ययुक्तम्, सत्यप्यन्यत्वे समानासमानपरिणामयोर्भिन्नस्वभावत्वात्, तथाहि–समानधिषणा–ध्वनिनिबन्धनस्वभावः समानपरिणामः, तथा विशिष्टबुद्ध्यभिधानजननस्वभावस्त्वितर इति यथोक्तसंवेदनाभिधानसंवेद्याभिधेया एव च विषादय इति प्रतीतमेतत्, अन्यथा यथोक्तसंवेदनाद्यभावप्रसङ्गात्। अतो यद्यपि द्वयमप्युभयरूपम्, तथापि विषार्थी विष एव प्रवर्तते, तद्विशेषपरिणामस्यैव तत्समानपरिणामाविनाभूतत्वात्, न तु मोदके, तत्समानपरिणामाविनाभावाभावात् तद्विशेषपरिणामस्येति। अतः प्रयासमात्रफला प्रवृत्तिनियमोच्छेदचोदनेति।

स्यादेतदित्यादि। स्यादेतद्, अथैवं मन्यसे, समानपरिणामस्यापि मृदाद्यात्मकस्य, प्रतिविशेषं–विशेषं विशेषं प्रति घट-शरावादिलक्षणम्, अन्यत्वात् कारणात्, असमानपरिणामवदिति निदर्शनम्, तद्भावानुपपत्तिः–समानपरिणामभावानुपपत्तिरिति। एतदाशङ्क्याह–एतदप्ययुक्तम्। कथमित्याह–सत्यप्यन्यत्वे समानपरिणामस्य प्रतिविशेषम्, समाना–ऽसमानपरिणामयोस्तल्लक्षणयोः, भिन्नस्वभावत्वात्। भिन्नस्वभावत्वमेवाह–तथाहीत्यादिना। तथाहीत्युपप्रदर्शने। समानधिषणा ध्वनिनिबन्धनस्वभावस्तुल्यबुद्धिशब्दहेतुस्वभावः, समानपरिणाम, यतः खलु घटशरावादिषु 'मृद् मृद्' इत्यविशेषेण भवतो–धिषणा–ध्वनी। तथा विशिष्टबुद्ध्यभिधानजननस्वभावस्त्वितरोऽसमानपरिणामः, यतः खलु घटादिष्वेव 'घटः शरावम्' इत्यादिविशेषेण भवतो बुद्ध्यभिधाने इति। एवमधिकृतोदाहरणापेक्षया भावार्थमभिधाय पूर्वपक्षोपन्यस्तभेदापेक्षया प्रक्रान्तनिगमनायाह–यथोक्तसंवेदनेत्यादि। यथोक्ते च ते संवेदनाभिधाने च तयोः संवेद्याभिधेया इति विग्रहः, एवंभूता एव च विषाऽऽदयः, तथाहि–'सद् सद्' इति विषादयः संवेद्यन्ते, अभिधीयन्ते च, तथा 'विषमोदकः इत्येवं चेति प्रतीतमेतत्। अन्यथा यथोक्तसंवेदनाभिधानसंवेद्याभिधेयत्वाभावे, यथोक्तसंवेदनाद्यभावप्रसङ्गात्, आदिशब्दाद्-यथोक्ताभिधानग्रहः अतो यद्यपि द्वयमपि विषं मोदकश्चेति, उभयरूपं-सामान्यविशेषरूपम्, तथापि विषार्थी प्रमाता विष एव प्रवर्तते। कुत इत्याह–तद्विशेषपरिणामस्यैव-विषविशेषपरिणामस्यैव, तत्समानपरिणामाविनाभूतत्वाद्–विषसमानपरिणामाविनाभूतत्वात्, न तु मोदके–न पुनर्मोदके। कुत इत्याह–तत्समानपरिणामाविनाभावाऽभावात्–मोदकसमानपरिणामाविनाभावाभावात्, तद्विशेषपरिणामस्येति विषविशेषपरिणामस्येति। अत उक्तन्यायात्, प्रयासमात्रफला प्रवृत्तिनियमोच्छेदचोदना पूर्वपक्षसंबन्धिनीति।

एतेन 'विषे भक्षिते मोदकोऽपि भक्षितः स्यात्' इत्याद्यपि प्रतिक्षिप्तमवगन्तव्यम्, तुल्ययोगक्षेमत्वादिति। यच्चापरेणाप्युक्तम्–'सर्वस्योभयरूपत्वे तद्विशेषनिराकृतेः' इत्यादि। तदपि कूटनटनृत्तमिवाविभावितानुष्ठानं न विदुषां मनोहरमित्यपकर्णयितव्यम्, वस्तुतः प्रदत्तोत्तरत्वात्-सामान्यविशेषरूपस्य वस्तुनः सम्यग्व्यवस्थापितत्वात्।

एतेनेत्यादि, एतेनानन्तरोदितेन ग्रन्थेन, 'विषे भक्षिते मोदकोऽपि भक्षितः स्यात्' इत्यपि पूर्वपक्षोक्तं प्रतिक्षिप्तमवगन्तव्यम्, तुल्ययोगक्षेमत्वादिति। यच्चापरेणाप्युक्तम्–'सर्वस्योभयरूपत्वे तद्विशेषनिराकृतेः।' इत्यादि। तदपि कूटनटनृत्तमिवेति निदर्शनम्, अविभावितानुष्ठानं दर्शनभार्यार्थपरिज्ञानशून्यत्वेन, न विदुषां मनोहरमिति कृत्वा, अपकर्णयितव्यं–न श्रोतव्यम्। कुत इत्याह–वस्तुतः प्रदत्तोत्तरत्वात्। तथा, सामान्यविशेषरूपस्य वस्तुनः सम्यग्व्यवस्थापितत्वात्। अने० ३ अधि०।

सामत्थ–सामर्थ्य–न०। समर्थस्य भावः सामर्थ्यम्। वीर्ये, आ० म० १ अ०। बले, ज्ञा० १ श्रु० १६ अ०। 'चेट्ठा सत्ती सामत्थं ति य जोगस्स हवंति पज्जाया।' आ० चू० १ अ०। बलं ति वा वीरियं ति वा सामत्थं ति वा एगट्ठा। नि० चू० ११ उ०। आ० चू०। वीर्येणापि वीर्यस्य सामर्थ्यं समत्थशब्दो वा युक्तः वाचकः वीर्ययुक्त इत्यर्थः। नि० चू० २ उ०। साधुव्यसनपरित्राणबले, पञ्चा० २ विव०। पर्यालोचने, व्य० ६ उ० पञ्चा०।

सामत्थजोग–सामर्थ्ययोग–पुं०। शास्त्रोक्त क्षपकश्रेणीद्वितीये अपूर्वकरणभाविनि योगे, षो० १५ विव०। शास्त्रीयेऽतिशक्तौ योगे, द्वा० १९ द्वा०। ('जोग' शब्दे चतुर्थभागे १६२७ पृष्ठे व्याख्यानमेतद्।)

सामत्थजोग्गया–सामर्थ्ययोग्यता–स्त्री०। सामानफलसाधकत्वरूपेण स्वसमर्थेन योग्यतायाम्, षो० १२ विव०।

सामपाय-श्यामपाद-पुं० । कस्मिंश्चिदाचार्ये, कर्म०४ कर्म० ।
सामपुव्वग-सामपूर्वक-त्रि० । प्रेमोत्पादकवचनपुरस्सरे दानादौ, पञ्चा० ६ विव० ।
साममुही-श्याममुखी-स्त्री० । श्यामलकान्तिमुख्यां स्त्रियाम् , आ० म० १ अ० ।
सामय-प्रतीक्ष-धा० । " प्रतीक्षेः सामय—विहीर-विरमाला " ॥ ८ । ४ । १९३ ॥ इति प्रतीक्षते. सामयादेश. । सामयइ । प्रतीक्षते । प्रा० ४ पाद ।
सामलय-श्यामलक-पुं० वनस्पतिविशेषे,जी०३प्रति०४अधि०।
सामलया-श्यामलता-स्त्री० । प्रियङ्गुलतायाम् , आ० १ श्रु० १७ अ० । प्रज्ञा० । पिं० । जं० ।
सामलि-शाल्मलि-स्त्री० । सेमरनामके वृक्षविशेषे,सूत्र०१श्रु० ६अ० । जी० । आचा० । स्था० । तं० । "सामलिवोंडघणनिचियच्छेडिया" शाल्मली वृक्षविशेषः । स च प्रतीत एव तस्य वोण्डं-फल तद्वत् छेटिता अपि अतिशयेन नमिता. शाल्मलीवोण्टघननिचितच्छटिता । जी०३ प्रति०४ अधि० । तं० ।
सामलेर-शाबलेय-पुं० । शबलाया गोरपत्ये, अनु० ।
सामवण्ण-श्यामवर्ण—त्रि० । श्यामले, प्रव० २६ द्वार ।
सामवेय-सामवेद-पु० । गानप्रतिबद्धे वेदे, उत्त० २२ अ० ।
सामहत्थि(ण्)-श्यामहस्तिन्-पुं० । श्रमणस्य भगवतो महावीरस्य स्वनामख्यातेऽनगारे, भ० १० श० ४ उ० । (अत्रत्या वक्तव्यता 'तायत्तीसग' शब्दे चतुर्थभागे २२२४ पृष्ठे गता । )
सामा-श्यामा-स्त्री० । ' शषो. स. " ॥८।१।२६०॥ इति शस्य स. । प्रा० । "अधो म-न-याम्" ॥ ८।२।७८ ॥ इति यलुग्वा । प्रा० । पोडशवार्षिक्यां, श्यामवर्णायां वा स्त्रियाम् , 'सामागायइ महुरं ' । स्था० ७ ठा० ३ उ० । अनु० । शक्रलोकपालस्य सोममहाराजस्याग्रमहिष्याम् , स्था० ४ ठा० १ उ० । रात्रौ, सूत्र० २ श्रु० १ अ० । सिन्धुदत्तपुत्र्या ब्रह्मदत्तचक्रिभार्यायाम् , उत्त० १३ अ० । अनु० । प्रियङ्गुवल्लीविशेषे, प्रज्ञा० १ पद । ज्ञा० । विमलस्य त्रयोदशतीर्थकरस्य मातरि, स० । प्रव० । सम्भवस्य जिनस्य प्रवर्त्तिन्याम् , स० । आव० । ति० । ती० । प्रव० । सुप्रतिष्ठिते नगरे सिंहसेनस्य राज्ञो भार्यायाम् , स्था० १० ठा० ३ उ० । आचा० । श्रीपद्मप्रभस्य अच्युतापरनाम्न्यां शासनदेव्याम् , सा च श्यामवर्णा नरवाहना चतुर्भुजा वरदवाणान्वितदक्षिणकरद्वया कार्मुकाभययुतवामपाणिद्वया च । प्रव० २७ द्वार ।
सामाइय-सामायिक-न० । रागद्वेषविरहितः समस्तस्य प्रतिक्षणमपूर्वापूर्वकर्मनिर्जराहेतुभूताया विशुद्धेरायो—लाभः समाय स एव सामायिकम् । विशे० । ' सामायिकम् ' इति समानां—ज्ञानदर्शनचारित्राणां आय.—समाय , समाय एव सामायिकं, विनयादिपाठात् स्वार्थे ठक् । आह-समयशब्दस्तत्र पठ्यते तत्कथ समाये प्रत्यय ?, उच्यते—' एकदेशाविकृतमनन्यवद्भवती ' ति न्यायात् , तच्च सावद्ययोगविरतिरूप, ततश्च सर्वमप्येतच्चारित्रम् अविशेषत सामायिकम् । आव० १ अ० । ( सम्मावाय' शब्देऽस्मिन्नेव भागे अस्यैकार्थिकान्युक्तानि ) ( ' सजम ' शब्देऽस्मिन्नेव भागे किंनामसामायिकमिति किञ्चिदुक्तम् । )

विषयसूचना—

(१) सामायिकस्वरूपम् ।
(२) समायिकलक्षणम् ।
(३) समभाव. सामायिकम् ।
(४) श्रावकस्य सामायिककरणविधि' ।
(५) कृतसामायिक. श्रावक. साधुरिव भवति ।
(६) सामायिकाध्ययननिर्युक्तिनिरूपणम् ।
(७) सामायिकाध्ययनस्यानुयोगद्वारनिरूपणम् ।
(८) सामायिकं पुरं कतिद्वारमित्याशङ्क्य निर्दिष्टदृष्टान्तस्योपनय. ।
(९) सामायिके उपक्रमादिद्वाराणि ।
(१०) प्रथमाध्ययनस्य सामायिकत्वम् ।
(११) क्वोपक्रमे सामायिकमवतरति ।
(१२) प्रमाणेन ज्ञानगुणे सामायिकावतारनिरूपणम् ।
(१३) आत्मागमानन्तरागमपरम्परागमभेदतोऽपि लोकोत्तरागमस्त्रिविध., तत्र क सामायिकमवतरति ।
(१४) नयप्रमाणे न सामायिकमवतरति ।
(१५) आसीत् पूर्वं सामायिकस्य नयेष्ववतारः ।
(१६) संख्याप्रमाणे सामायिकमवतरति न वा ? ।
(१७) सामायिकाध्ययन स्वसमयवक्तव्यतानियतम् ।
(१८) सामायिकाध्ययनस्यार्थाधिकारः ।
(१९) सामायिकसमवतार. ।
(२०) अथानुगमलक्षण तृतीयमनुयोगद्वारं संबन्धोपदर्शनपूर्वक निरूपितम् ।
(२१) नामनिष्पन्नं निक्षेपमभिधित्सुरध्ययनस्य विशेषनामनिक्षेप. ।
(२२) अत्राक्षेपपरिहारौ ।
(२३) सूत्रालापकनिक्षेपस्यावसरप्रतिपादनम् ।
(२४) चतुर्विधस्य सामायिकस्य क्रियाकारकभेदपर्यायैः शब्दार्थकथनम् ।
(२५) श्रुतसामायिकनिरुक्तिप्रदर्शनम् ।
(२६) सर्वविरतिसामायिकनिरुक्तिप्रदर्शनम् ।
(२७) चतुर्विधसामायिकनिरूपणम् ।
(२८) सामायिकोदाहरणे कथानकम् ।
(२९) द्विविधसामायिकस्वरूपनिरूपणम् ।
(३०) सामायिकस्य द्वारसंग्रह. ।
(३१) तत्रोद्देशादिद्वारप्ररूपणा ।
(३२) कुत सामायिकं निर्गतमत्राक्षेपपरिहारौ ।
(३३) मूलद्वारनयै सहामीषां भेदप्रतिपादनम् ।
(३४) विस्तरार्थे भाष्यम् ।
(३५) कस्य जीवस्य किं सामायिकम् ।
(३६) गृहस्थसामायिकमपि परलोकार्थिना कार्यम् ।
(३७) कतिविधं सामायिकम् ।
(३८) श्रुतसामायिकभेदकथनम् ।
(३९) सम्यक्त्वादिसामायिकभेदनिरूपणम् ।
(४०) कतिसान्तरं सामायिकम् ।
(४१) किं सामायिकमिति निरूपणार्थं द्वारगाथात्रयम् ।
(४२) ऊर्ध्वलोकादिक्षेत्रमङ्गीकृत्य सम्यक्त्वादिसामायि-

( १ ) सामायिकस्वरूपमाह—

**सामाइय छेय परिहा–र सुहुम अहखाय देस जय अजया।**
**चक्खु अचक्खु ओही, केवल दंसण अणागारा ॥ १२ ॥**

समानां-ज्ञानदर्शनचारित्राणामायो लाभ. समाय. समाय एव सामायिक विनयादे.॥७।२।१६९॥आकृतिगणत्वादिकण्प्रत्यय. यद्वा समो रागद्वेषविप्रमुक्तो य. सर्वभूतान्यात्मवत्पश्यति,आयो लाभ प्राप्तिरिति पर्याया ।समस्याय. समाय ।समो हि प्रतिक्षणमपूर्वैर्ज्ञानदर्शनचरणपर्यायैर्भवाटवीभ्रमणसंक्लेशविच्छेदकैर्निरुपमसुखहेतुभिरध कृतचिन्तामणिकामधेनुकल्पद्रुमोपमैर्युज्यते, समाय एव सामायिकं मूलगुणानामाधारभूतं सर्वसावद्यविरतिरूपं चारित्रम् । यदाह वाचकमुख्यः–
"सामायिकं गुणाना—माधार. खमिव सर्वभावानाम् । न हि सामायिकहीना—श्चरणादिगुणान्विता येन ॥१॥ तस्माज्जगाद भगवान्, सामायिकमेव निरुपमोपायम् । शारीरमानसानेकदु.खनाशस्य मोक्षस्य ॥२॥" यद्यपि च सर्वमपि चारित्रमविशेषत. सामायिकं तथापि छेदादिविशेषैर्विशेष्यमाणमर्थत. शब्दान्तरतश्च नानात्वं भजते । प्रथमं पुनरविशेषणात् सामान्यशब्द एवावतिष्ठते "सामायिकमिति" । तच्च द्विधा इत्वरं, यावत्कथिकं च । तत्रेत्वरम्—भाविव्यपदेशान्तरत्वात् स्वल्पकालम्, तच्च प्रथमचरमतीर्थकरतीर्थे भरतैरवतेषु यावदद्यापि शैक्षकस्य महाव्रतानि नारोप्यन्ते तावद्विज्ञेयम् । आत्मन. कथां यावद्यदास्ते तद्यावत्कथं यावज्जीवमित्यर्थ. । यावत्कथमेव यावत्कथिकम् , एतच्च भरतैरवतेषु प्रथमचरमवर्जमध्यमद्वाविंशतितीर्थकरतीर्थान्तर्गतसाधूनां महाविदेहतीर्थकरमुनीनां चावसेयम् , तेषामुपस्थापनाया अभावात् । कर्म० ४ कर्म० । आ० म० ।

"सव्वमिणं सामाइयं, छेयाइविसेसियं पुण विभिन्नं ।
अविसेसियसामइयं, ठियमिह सामन्नसन्नाए ॥ १ ॥
सावज्जजोगविरइ, त्ति तत्थ सामाइयं दुहा तं च ।
इत्तरमावकहं ति य, पढम पढमंऽतिमजिणाणं ॥ २ ॥
तित्थेसु अणारोविय-वयस्स सेहस्स थेवकालीयं ।
सेसाणमावकहियं, तित्थेसु विदेहयाणं च ॥ ३ ॥"

ननु चेत्वरमपि सामायिकं करोमि-'भदंत ! सामायिकं यावज्जीवमि त्येवं यावदायुरागृहीतं, तत उत्स्थापनाकाले तत्परित्यजत कथं न प्रतिज्ञालोप । "नणु जावज्जीवाए, इत्तिरियं पि गहियं सुयं तस्स । होइ पइण्णालोवो , जहाऽऽवकहियं सुयं तस्स ॥ १ ॥"

उच्यते ननु प्रागेवोक्तं यत् सर्वमेवेदं चारित्रमविशेषत. सामायिकं, सर्वत्रापि सर्वसावद्ययोगविरतिसद्भावात् , केवलं छेदादिविशुद्धिविशेषैर्विशिष्यमाणमर्थत शब्दान्तरतश्च नानात्वं भजते ततो यथा यावत्कथिकं सामायिक—छेदोपस्थापनं वा परमविशुद्धिविशेषरूपसूक्ष्मसंपरायादि चारित्रावाप्तौ न भङ्गमास्कन्दति तथेत्वरमपि सामायिकं विशुद्धिविशेषरूपच्छेदोपस्थापनावाप्तौ नैव भङ्गं प्राप्नोति। यदि हि प्रव्रज्या परित्यज्यते तर्हि तद्भङ्ग आपद्यते,न तु तस्यैव विशुद्धिविशेषावाप्तौ । उक्तं च–" नणु भणियं सव्व चिय, सामइयमिणं

विसुद्धिनो भिन्नं । सावज्जविरइमइयं, को वयलोवो विसुद्धीए ॥ उभिक्खमतो भंगो,जो पुण तं चिय करेइ सुद्धयरं । सन्नामेत्तविसिट्ठं, सुहुम पि व तस्स को भंगो ॥ २ ॥" पं० स० १ द्वार । आव० । सर्वसावद्यपरित्यागनिरवद्यासेवनरूपे व्रतविशेषे, ध०-र० २ अधि० ।

( २ ) सामयिकमाह—

सामाइयं नाम, सावज्जजोगपरिवज्जणं-निरवज्जजोगपडिसेवणं च ।

"सिक्खा दुविहा गाहा, उववायठिई गई कसाया य ।
बंधंता वेयंता, पडिवज्जा इक्कमे पंच ॥ १ ॥
सामाइअम्मि उ कए, समणो इव सावओ हवइ जम्हा ।
एएण कारणेणं, बहुसो सामाइयं कुज्जा ॥ २ ॥
सव्वं ति भाणिऊणं,विरई खलु जस्स सव्विया नत्थि ।
सो सव्वविरइवाई, चुक्कइ देसं च सव्वं च ॥ ३ ॥"

सामाइयस्स समणोवायस्स इमे पञ्च अइयारा जाणियव्वा न समायरियव्वा, तं जहा-मणदुप्पणिहाणे वइदुप्पणिहाणे-कायदुप्पणिहाणे सामाइयस्स सइ अकरणया सामाइयस्स अणवट्ठियस्स करणया ॥ ६ ॥

समो—रागद्वेषवियुक्तो यः सर्वभूतान्यात्मवत् पश्यति , आयो लाभः प्राप्तिरिति पर्यायाः , समस्यायः समायः,समो हि प्रतिक्षणमपूर्वैर्ज्ञानदर्शनचरणपर्यायैर्निरुपमसुखहेतुभिरधःकृतचिन्तामणिकल्पद्रुमोपमैर्युज्यते , स एष समायः प्रयोजनमस्य क्रियानुष्ठानस्येति सामायिकं, सामाय एव सामायिकम् । नामशब्दोऽलङ्कारार्थः, अवद्य-गर्हितं पापं, सहावद्येन सावद्यः योगो-व्यापारः कायिकादिस्तस्य परिवर्जनं—परित्यागः कालावधिनेति गम्यते । तत्र मा भूत् सावद्ययोगपरिवर्जनमात्रमपापव्यापारासेवनशून्यमित्यत आह-निरवद्ययोगप्रतिसेवनं चेति, अत्र सावद्ययोगपरिवर्जनवन्निरवद्ययोगप्रतिसेवनेऽप्यहर्निशं यत्नः कार्य इति दर्शनार्थम् ।चशब्द परिवर्जनप्रतिसेवनक्रियाद्वयस्य तुल्यकक्षतोद्भावनार्थः । आव० ६ अ० । आर्त्तरौद्रध्यानपरिहारेण धर्मध्यानकरणेन शत्रुमित्रकाञ्चनादिषु समतायाम् , ध० । आतु० । सूत्र० । ध० ।

( ३ ) तत्राद्यं शिक्षापदव्रतमाह—

सावद्यकर्ममुक्तस्य, दुर्ध्यानरहितस्य च ।
समभावो मुहूर्त्तं तद्-व्रतं सामायिकाह्वयम् ॥३७॥

सावद्यम्-वाचिकं कायिकं च कर्म, तेन मुक्तस्य तथा दुर्ध्यानम्—आर्त्तरौद्ररूपं तेन रहितस्य प्राणिन मनोवाक्कायचेष्टापरिहारं विना सामायिकं न भवतीति विशेषणद्वयं तादृशस्य मुहूर्तं घटिद्वयकालं यावत् योऽसौ समभावो-रागद्वेषहेतुषु मध्यस्थभावस्तत् सामायिकाह्वयं व्रतं ज्ञेयम् । ध०-२ अधि० ।

उपदेशान्तरमाह—

उवणीयतरस्स ताइणो,
भयमाणस्स विविक्कमासणं ।
सामाइयमाहु तस्स जं,
जो अप्पाणभएण दंसए ॥ १७ ॥

उप-सामीप्येन नीतः-प्रापितो ज्ञानादावात्मा येन स तथा अतिशयेनोपनीत उपनीततरस्तस्य , तथा तायिन — परात्मोपकारिणः त्रायिणो वा-सम्यक्पालकस्य , तथा भजमानस्य-सेवमानस्य विविक्तम्-स्त्रीपशुपण्डकविवर्जितम् , आस्यते-स्थीयते यस्मिन्निति तदासनं-वसत्यादि, तस्यैवम्भूतस्य मुनेः सामायिकम् समभावरूपं सामायिकादिचारित्रमाहुः सर्वज्ञाः , यद्—यस्मात् ततश्चारित्रिणा प्राग्व्यवस्थितस्वभावेन भाव्यम् , यश्चात्मानं भये-परीषहोपसर्गजनिते न दर्शयेत्—तद्भीरुर्न भवेत् तस्य सामायिकमाहुरिति सम्बन्धनीयम् । सूत्र० १ श्रु० २ अ० ।

( ४ ) श्रावकस्य सामायिककरणविधिः—

सामाइयं सावएण कथं कायव्वं नि ?, इह सावगो दुविहो-इड्ढिपत्तो,अणिड्ढिपत्तो य। जो सो अणिड्ढिपत्तो सो चेतियघरे साधुसमीवे वा घरे वा पोसधसालाए वा जत्थ वा विसमति अच्छते वा निव्वावारो सव्वत्थ करेति तत्थ, चउसु ठाणेसु णियमा कायव्वं । चेतियघरे साधुमूले पोसधशालाए घरे आवासगं करेंतो त्ति, तत्थ जति साधुसगासे करेति तत्थ का विधी ?, जति परं परभयं नत्थि जति वि य केणइ समं विवादो णत्थि जति कस्सइ ण धरेइ मा तेण अछवियंछियं कज्जिहिति , जति य धारणगं दट्ठूण न गेण्हति मा णिज्जिहिति, जति वावारं ण वावारेति, ताधे घरे चेव सामायिकं कातूणं वच्चति । पंचसमिओ तिगुत्तो इरियाउवजुत्ते जहा साहू भासाए सावज्जं परिहरंतो एसणाए कट्ठं लेट्ठुं वा पडिलेहिउं पमज्जितुं एवं आदाणे णिक्खेवणे , खेलसिंघाणे ण विगिंचति, विगिंचंतो वा पडिलेहेति य पमज्जति य जत्थ चिट्ठति तत्थ वि गुत्तिरोधं करेति । एताए विधीए गन्ता निविधेण णमित्तु साधुणो पच्छा सामाइयं करेति, 'करेमि भन्ते ! सामाइयं सावज्जं जोगं पच्चक्खामि दुविधं तिविधेणं जाव साधू पज्जुवासामि त्ति कातूण । पच्छा इरियावहियाए पडिक्कमति । पच्छा आलोएत्ता वदति आयरियादी जधा रातिणिया । पुणो वि गुरु वंदित्ता पडिलेहित्ता णिविट्ठो पुच्छति पढति वा । एवं चेतियाइएसु वि जदा स गिहे पोसधसालाए वा आवासाए वा तत्थ णवरि गमणं णत्थि, जो इड्ढिपत्तो ( सो ) सव्विड्ढीए एति तेण जणस्स उच्छाहो वि आढिता य साधुणो सुपुरिसपरिग्गहेणं, जति सो कयसामाइओ एति ताधे आसहत्थिमादिणा जणेण य अधिकरणं वट्टति,ताधे ण करेति । कयसामाइएण य पादेहिं आगतव्वं तेण ण करेति, आगतो साधुसमीवे करेति, जति सो सावओ तो ण कोइ उट्ठेति । अह अहाभद्दओ ता आदितो होतु त्ति भण( ण्ण ) ति, ताधे पुव्वरइयं आसणं कीरति, आयरिया उट्ठिता य अच्छति । तत्थ उट्ठेंतमणुट्ठेंते दोसा विभासितव्वा ॥ पच्छा सो इड्ढिपत्तो सामाइयं करेइ अणेण विधिणा—' करेमि भन्ते ! सामाइयं सावज्जं जोगं पच्चक्खामि दुविधं तिविधेण जाव नियमं पज्जुवासामि ' त्ति, एव सामाइयं

काउं पडिक्कंतो वंदित्ता पुच्छति, सो य किर सामाइयं करेंतो मउडं अवणेति कुंडलाणि णाममुद्दं पुप्फतंबोलपावारगमादी वोसिरति। एसा विधी सामाइयस्स।" आह-सावद्ययोगपरिवर्जनादिरूपत्वात् सामायिकस्य कृतसामायिकः श्रावको वस्तुतः साधुरेव, स कस्माद् इत्वरं सर्वसावद्ययोगप्रत्याख्यानमेव न करोति त्रिविधं त्रिविधेनेति ?, अत्रोच्यते-सामान्येन सर्वसावद्ययोगप्रत्याख्यानस्यागारिणोऽसम्भवादारम्भेष्वनुमतेरव्यवच्छिन्नत्वात्, कनकादिषु चाऽऽत्मीयपरिग्रहादनिवृत्तेः, अन्यथा सामायिकोत्तरकालमपि तदग्रहणप्रसङ्गात्, साधुश्रावकयोश्च प्रपञ्चेन भेदाभिधानात्। आव० ६ अ०। पं० व०। पञ्चा०।

(५) तथा चाह ग्रन्थकारः

सिक्खा दुविधा गाहा, उववात ठिती गती कसाया य।
बंधंता वेदेन्ता, पडिवज्जा इक्कमे पंच ॥ १ ॥

इह शिक्षाकृतः साधुश्रावकयोर्महान् विशेषः, सा च शिक्षा द्विधा-आसेवनाशिक्षा, ग्रहणशिक्षा च। आसेवनाप्रत्युपेक्षणादिक्रियारूपा, शिक्षा-अभ्यासः, तत्रासेवनाशिक्षामधिकृत्य सम्पूर्णामेव चक्रवालसामाचारीं सदा पालयति साधुः। श्रावकस्तु न तत्कालमपि सम्पूर्णामपरिज्ञानादसम्भवाच्च। ग्रहणशिक्षां पुनरधिकृत्य साधुः सूत्रतोऽर्थतश्च जघन्येनाष्टौ प्रवचनमातरः उत्कृष्टतस्तु बिन्दुसारपर्यन्तं गृह्णातीति, श्रावकस्तु सूत्रतोऽर्थतश्च जघन्येनाष्टौ प्रवचनमातरः उत्कृष्टतस्तु षड्जीवनिकायां यावदुभयतोऽर्थतस्तु पिण्डैषणां यावत्, न तु तामपि सूत्रतो निरवशेषामर्थत इति सूत्रप्रामाण्याच्च, विशेषः। तथा चोक्तम्—
" सामाइयम्मि तु कते, समणो इव सावओ हवइ जम्हा।
एतेण कारणेणं, बहुसो सामाइयं कुज्जा ॥ १ ॥ " इति,
गाथासूत्रं प्राग् व्याख्यातमेव, लेशतस्तु व्याख्यायते-सामायिके प्रागुक्तनिरूपितशब्दार्थे, तुशब्दोऽवधारणार्थः, सामायिक एव कृते न शेषकाले श्रमण इव—साधुरिव श्रावको भवति यस्मात्, एतेन कारणेन बहुशः—अनेकशः सामायिकं कुर्यादित्यत्र श्रमण इव चोक्तं न तु श्रमण एवेति, यथा समुद्र इव तडागः न तु समुद्र एवेत्यभिप्रायः। तथोपपाते विशेषकः, साधुः सर्वार्थसिद्धे उत्पद्यते श्रावकस्त्वच्युते परमोपपातेन जघन्येन तु द्वावपि सौधर्मे एवेति। तथा चोक्तम्—" अविराधिनसामण-स्स साधुणो सावगस्स उ जहन्नो। सोधम्मे उववातो, भणिओ तेलोक्कदंसीहिं ॥ १ ॥" तथा स्थितिर्भेदिका, साधोरुत्कृष्टा त्रयस्त्रिंशत्सागरोपमाणि जघन्या तु पल्योपमपृथक्त्वमिति श्रावकस्य तूत्कृष्टा द्वाविंशतिः सागरोपमाणि जघन्या तु पल्योपममिति। तथा गतिर्भेदिका, व्यवहारतः साधुः पञ्चस्वपि गच्छति, तथा च कुरुटोत्कुरुटौ नरकं गतौ कुणालादृष्टान्तेनेति श्रूयते, श्रावकस्तु चतसृषु न सिद्धगताविति। अन्ये च व्याचक्षते-साधुः सुरगतौ मोक्षे च, श्रावकस्तु चतसृष्वपि। तथा कषायाश्च विशेषकाः, साधुः कषायोदयमाश्रित्य संज्वलनापेक्षया चतुस्त्रिद्व्येककषायोदयवानकषायोऽपि भवति छद्मस्थवीतरागादिः, श्रावकस्तु द्वादशकषायोदयवान् अष्टकषायोदयवांश्च भवति। यदा द्वादशकषायवांस्तदाऽनन्तानुबन्धवर्जा गृह्यन्ते, एते चाविरतस्य विज्ञेया इति। यदा त्वष्टकषायोदयवान् तदा अनन्तानुबन्धि अप्रत्याख्यानकषायवर्जा इति; एते च विरताविरतस्य। तथा बन्धश्च भेदकः, साधुर्मूलप्रकृत्यपेक्षया अष्टविधबन्धको वा सप्तविधबन्धको वा षड्विधबन्धको वा एकविधबन्धको वा। उक्तं च—

" सत्तविधबंधगा हुंति, पाणिणो आउवज्जगाणं तु।
तह सुहुमसंपरागा, छव्विहबंधा विणिद्दिट्ठा ॥ १ ॥
मोहाउयवज्जाणं, पगडीणं ते उ बंधगा भणिया।
उवसंतखीणमोहा, केवलिणो एगविधबंधा ॥ २ ॥
ते पुण दुसमयठितिय-स्स बंधगा ण पुण संपरागस्स।
सेलेसीपडिवण्णा, अबंधगा होंति विण्णेया ॥३॥"

श्रावकास्तु अष्टविधबन्धको वा सप्तविधबन्धको वा। तथा वेदनाकृतो भेदः, साधुरष्टानां सप्तानां चतसृणां वा प्रकृतीनां वेदकः, श्रावकस्तु नियमादष्टानामिति। तथा प्रतिपत्तिकृतो विशेषः, साधुः पञ्च महाव्रतानि प्रतिपद्यते, श्रावकस्त्वेकमणुव्रतं द्वे त्रीणि चत्वारि पञ्च वा। अथवा-साधुः सकृत् सामायिकं प्रतिपद्य सर्वकालं धारयति, श्रावकस्तु पुनः पुनः प्रतिपद्यते इति। तथाऽतिक्रमो विशेषकः, साधुरेकव्रतातिक्रमे पञ्चव्रतातिक्रमः, श्रावकस्य पुनरेकस्यैव, पाठान्तरं वा। किं च-इतरश्च सर्वशब्दं न प्रयुङ्क्ते, मा भूद्देशविरतेरप्यभाव इति। आह च—' सामाइयम्मि उ कए ' ' सव्वं ति भाणिऊणं ' गाहा, सर्वमित्यभिधाय—सर्वं सावद्यं योगं परित्यजामीत्यभिधाय विरतिः खलु यस्य सर्वा—निरवशेषा नास्ति, अनुमतेर्नित्यप्रवृत्तत्वादिति भावना,स एवंभूतः सर्वविरतिवादी ' चुक्कइ ' त्ति-भ्रश्यति देशविरतिं सर्वविरतिं च प्रत्यक्षमृषावादित्वादित्यभिप्रायः। पर्याप्तं प्रसङ्गेन। प्रकृतं प्रस्तुम इदमपि च शिक्षापदव्रतमनिचाररहितमनुपालनीयमित्यत-आह-'सामाइयस्स समणो'(गाहा) सामायिकस्य श्रमणोपासकनामी पञ्चातिचारा ज्ञातव्या न समाचरितव्याः, तद्यथा-मनोदुष्प्रणिधानम् प्रणिधानं-प्रयोगः दुष्टं प्रणिधानं दुष्प्रणिधानं मनसो दुष्प्रणिधानं मनोदुष्प्रणिधानम्, कृतसामायिकस्य गृहसत्केतिकर्त्तव्यता सुकृतदुष्कृतपरिचिन्तनमिति। उक्तं च-"सामाइयं ति (तु) कातुं, घरचिन्तं जो तु चिंतये सड्ढो। अट्टवसट्टमुवगतो, निरत्थयं तस्स सामइयं ॥ १ ॥ " वाग्दुष्प्रणिधानं कृतसामायिकस्यासभ्यनिष्ठुरसावद्यवाक्प्रयोग इति। उक्तं च-" कडसामइओ पुव्वं, बुद्धीए पेहितूण भासेज्जा। सइ णिरवज्जं वयणं, अण्णह सामाइयं ण भवे ॥ २ ॥ " कायदुष्प्रणिधानं कृतसामायिकस्याप्रत्युपेक्षितादिभूतलादौ करचरणादीनां देहावयवानामनिभृतस्थापनमिति। उक्तं च-" अणिरिक्खिया पमज्जिय, थंडिल्ले ठानमादिसेवेन्तो। हिंसाभावे विणसो, कडसामइओ पमादाओ ॥ १ ॥ " सामायिकस्य स्मृत्यकरणं सामायिकस्य सम्बन्धिनी या स्मरणा—स्मृतिः उपयोगलक्षणा तस्या अकरणम्-अनासेवनमिति। एतदुक्तं भवति-प्रबलप्रमादवान् नैव स्मरत्यस्यां वेलायां मया यत्सामायिकं कर्त्तव्यं कृतं न कृतमिति वा। स्मृतिमूलं च

मोक्षसाधनानुष्ठानमिति । उक्तं च-" ण सरइ पमादजुत्तो, जो सामइयं कदा तु कातव्व । कतमकतं वा तस्स हु, कयं पि विफलं तयं गेयं ॥ १ ॥ " सामायिकस्यानवस्थितस्य करणमनवस्थितकरणम् , अनवस्थितमल्पकालं वा करणानन्तरमेव त्यजति, यथा कथञ्चिद् वाऽनवस्थितं करोतीति । उक्तं च-"कातूण तक्खणं चिय,पारेति करेति वा जधिच्छाए । अणवट्ठियं सामइयं, अणादराती न तं सुद्धं ॥ ॥" उक्तं सातिचारं प्रथमं शिक्षापदव्रतम् । आव० ६ अ० । ध० । पञ्चा० । ( सामायिके आकारा न सन्ति इति ' पच्चक्खाण ' शब्दे पञ्चमभागे १०४ पृष्ठे गतम् । ) ( श्रावकस्य सामायिकादिग्रहणविधिः ' अणुव्वय ' शब्दे प्रथमभागे ४१७ पृष्ठे गता । ) इह श्रावको द्विविधः—ऋद्धिप्राप्त., अनृद्धिकश्च । योऽसावनृद्धिकः स चैत्यगृहे साधुसमीपे वा गृहे वा पौषधशालायां वा यत्र विश्राम्यति , निर्व्यापारो वाऽऽस्ते, तत्र सर्वत्र तत्करोति , चतुर्षु स्थानेषु पुनर्नियमात्करोति, तद्यथा-चैत्यगृहे साधुसमीपे पौषधशालाया स्वगृहे वावश्यकं कुर्वाणः । तत्र यदि साधुसमीपे करोति , तदाऽयं विधिः—यदि परं परभयं नास्ति , यदि केनापि समं विवादो नास्ति, यदि कस्यापि द्रव्यं न धारयति मा भूत्तत्कृता कर्षापकर्षिका, यदि च धारणकं दृष्ट्वा न गृह्णाति मा भूद्भङ्गः , यदि च व्याहारं न करोति , तदा स्वगृह एव सामायिकं कृत्वा व्रजति । पञ्च समितस्त्रिगुप्त -ईर्यायामुपयुक्त , यथा साधुर्भाषायां सावद्यं परिहरन् , एषणायां काष्ठं वा लेष्टु वाऽनुज्ञाप्य प्रत्युपेक्ष्य प्रमृज्य च गृह्णन् , एवमादाने निक्षेपे च , तथा खेलसिङ्घाणादीन्न विवेचयति , विवेचयंश्च स्थण्डिल प्रत्युपेक्षते प्रमार्ष्टि च, यत्र तिष्ठति तत्रापि गुप्तिनिरोधं करोति । अनेन विधिना गत्वा, त्रिविधेन साधूंनत्वा सामायिकं करोति- " करेमि भंते ! सामाइयं सावज्जं जोग पच्चक्खामि जाव साहू पज्जुवासामि दुविहं तिविहेणं " इत्याद्युच्चारणत. । तत ईर्यापथिकाया. प्रतिक्रामति, पश्चादालोच्य वन्दते आचार्यादीन् यथारात्निकतया, पुनरपि गुरुं वन्दित्वा प्रत्युपेक्ष्य निविष्ट पृच्छति वा पठति वा । एवं चैत्येष्वपि । यदा तु स्वगृहे पौषधशालाया वा तदा गमनं नास्ति । य पुन ऋद्धिप्राप्त स सर्वर्द्ध्याऽऽयाति,तेन जनस्यास्था भवति, आदृताश्च साधव. सुपुरुषपरिग्रहेण भवन्ति । यदि त्वसौ कृतसामायिक एति, तदाश्वहस्त्यादिभिरधिकरणं स्यात्तच्च न वर्त्तते कर्तुमित्यसौ तन्न करोति । तथा कृतसामायिकेन पादाभ्यामेवागन्तव्यमिति च तन्न करोति। तथा यद्यसौ श्रावक स्तदा तं न कोऽप्यभ्युत्तिष्ठति । अथ यदा भद्रकस्तदा पूजा कृता भवत्विति पूर्वरचितमासनं क्रियते , आचार्याश्चोत्थिता एवासते । मोत्थानानुत्थानकृता दोषा भूवन् । पश्चादसामृद्धिप्राप्तश्रावक सामायिक करोति । कथम्? " करेमि भते ! सामाइयं सावज्जं जोग पच्चक्खामि दुविहं तिविहेणं जाव नियम पज्जुवासामि " इत्यादि । एव सामायिकं कृत्वेर्या प्रतिक्रान्तो वन्दित्वा पृच्छति वा पठति वा । स च किल सामायिकं कुर्वन् मुकुटं कुण्डले नाममुद्रा चापनयति । पुष्पताम्बूलप्रावारादिकं च व्युत्सृजतीत्येष विधि सामायिकस्येति । पञ्चा० १ विव० । श्रा० । ध० । आ० चू० ।

( ६ ) अथ सामायिकाध्ययनमत्र व्याख्येयं तस्य चानेके अधिकारा अन्यत्र गतास्तानिह संसूचयन् तत्र तत्राऽऽगतान् दर्शयामि । सामायिकनिर्युक्ति । तत्र यथोद्देश निर्देश इति न्यायात् प्रथमताऽधिकृतावश्यकाद्यध्ययनसामायिकाख्योपोद्घातनिर्युक्तिमभिधित्सुराह—

सामायियनिज्जुत्तिं, वोच्छं उवएसियं गुरुजणेण ।
आयरियपरम्परए-ण आगयं आणुपुव्वीए ॥ ८७ ॥

सामायिकस्य निर्युक्ति सामायिकनिर्युक्तिस्तां वक्ष्ये । कथंभूतामित्याह-उप-सामीप्येन देशिना उपदेशिता ता केन? गुरुजनेन तीर्थकरगणधरलक्षणेन पुनरुपदर्शनकालादारभ्य आचार्यपारंपर्येणागताम् । स च परंपरको द्विधा-द्रव्यतो,भावतश्च । तत्र द्रव्यपरपरक' पुरुषपारंपर्येण इष्टकानामानयनम् । अत्र चासंमोहार्थे कथानक गाथाविवरणसमाप्तौ वक्ष्याम. । भावपरंपरकस्त्वियमेव उपोद्घातनिर्युक्तिराचार्यपारंपर्येणागतेति । कथमाचार्यपारपर्येणागतामिति वदत आह-आनुपूर्व्या—परिपाट्या, तद्यथा-जम्बूस्वामिना प्रभवेनानीता ततोऽपि शय्यम्भवादिभिरिति । अथवा-जिनगणधरेभ्य आरभ्य आचार्ये पारंपर्येणागता पश्चात्स्वकीयगुरुजनेनोपदेशितामिति । आ० म० १ अ० । आव० ।

(७)सामायिकस्य अनुयोगद्वाराणि । सामायिकाध्ययनस्य चत्वारि द्वाराणि इत्याह—

अणुओगद्दाराइं, महापुरस्सेव तस्स चत्तारि ।
अणुओगो त्ति तदत्थो,दाराइं तस्स उ मुहाइं ॥९०७॥

तस्य च-सामायिकाध्ययनस्य महापुरस्य द्वाराणीव-चत्वार्यनुयोगद्वाराणि भवन्ति तत्रानुयोग किमुच्यते?,इत्याह-तदर्थ -अध्ययनार्थः । आह-नन्वनुयोगो व्याख्यानमुच्यते,तत् कथं तदेवाध्ययनार्थ उच्यते ? । सत्यम् , किन्तु व्याख्यानेऽप्यध्ययनार्थः कथ्यते, अतोऽभेदोपचारात् तदपि तथोच्यत इत्यदोष. । द्वाराणि पुनस्तत्प्रवेशमुखानि ।

अथैतामेव पुरकल्पना द्वारकल्पना चार्थवतीं दर्शयन्नाह-

अकयद्दारमनगरं, कएगदारं पि दुक्खसंचारं ।
चउमूलद्दारं पुण, सपडिद्दारं सुहाहिगमं ॥ ९०८ ॥

अकृतद्वारं नगर सततमाकारवलयवेष्टितमनगरमेव भवति' जनप्रवेशनिर्गमाभावात् । तथा—कृतैकद्वारमपि हस्त्यश्वरथजनसंकुलत्वाद् दुःखसंचारं जायते, कार्यातिपत्तये च भवति । कृतचतुर्मूलं प्रतोलीद्वारं तु सप्रतिद्वारं सुखाधिगमम्—सुखनिर्गमप्रवेश भवति, कार्याननिपत्तये च सपद्यते इति ।

(८)तथा किम् ?,इत्याशङ्क्य निर्दिष्टदृष्टान्तस्योपनयमाह-

सामाइयमहपुरमवि, अकयद्दारं तहेगदारं वा ।
दुरहिगमं चउदारं, सपडिद्दारं सुहाहिगमं ॥ ९०९ ॥

एव सामायिकमहापुरमप्यर्थाधिगमोपायभूतद्वारशून्यमशक्याधिगमम् ,कृतैकानुयोगद्वारमपि कृच्छ्रेण द्राघीयसा च कालेनाधिगम्यते विहितसप्रभेदोपक्रमादिद्वारचतुष्टयं पुनरयत्नेनाऽल्पीयसा च कालेनाधिगम्यत इति ।

( ९ ) कानि पुनस्तान्यनुयोगद्वाराणि ?, इत्याह-

ताणीमाणि उवक्कम-निक्खेवाऽणुगमनयमनामाइं ।

छ त्ति दु दु विगप्पाइँ, पमयओऽणेगभेयाइं ॥ ६१० ॥

तानि-चैतान्यनुयोगद्वाराणि. तद्यथा-उपक्रमो वक्ष्यमाणभेदादिस्वरूपः, निक्षेपः-अनुगमः, नयश्चेत्येतैर्नामभिः सनामानि साभिधानानीति । पञ्चमं द्वारोपन्यासद्वारं समाप्तम् । अथ 'तब्भेय' त्ति तद्भेदद्वारमाह-'छर्ती' त्यादि इह यथासङ्ख्येन सम्बन्धः उपक्रमः षड्विकल्पः, निक्षेपस्त्रिभेद, अनुगमो द्विभेदः, नयोऽपि द्विभेदः। प्रभेदतस्तूपक्रमादयोऽनेकभेदाः। एषां च भेदप्रभेदानां स्वरूपं पुरस्ताद् विस्तरेण वक्ष्यते । इति षष्ठं तद्भेदद्वारम् । विशे० ।

(१०) प्रथमाध्ययनस्य सामायिकत्वम्—

तत्थ पढमं अज्झयणं सामाइयं, तस्स णं इमे चत्तारि अणुओगदारा भवंति, तं जहा-उवक्कमे १, निक्खेवे २, अणुगमे ३, नए ४, ( सू० ५९ × ) ।

तत्र—तेषु अनन्तरोद्दिष्टेषु षट्सु अध्ययनेषु मध्ये प्रथमम्-आद्यम् अध्ययनं सामायिकम्, आद्युपन्यासश्चास्य निःश्रेयसचरणादिगुणाधारत्वेन प्रधानमुक्तिकारणत्वात्, उक्तं च—"सामायिकं गुणाना-माधारः खमिव सर्वभावानाम् । न हि सामायिकहीना—श्चरणादिगुणान्विता येन ॥ १ ॥ तस्माज्जगाद भगवान्, सामायिकमेव निरुपमोपायम् । शारीरमानसानेकदुःखनाशस्य मोक्षस्य ॥ २ ॥" तत्र योधादेरधिकम् अयनं-प्रापणमध्ययनं प्रपञ्चतो वक्ष्यमाणशब्दार्थे, सामायिकमित्यत्र यः सर्वभूतान्यात्मवत् पश्यति स रागद्वेषवियुक्तः समः तस्याऽऽयः—प्रतिक्षणं ज्ञानादिगुणोत्कर्षप्राप्तिः समायः, समो हि—प्रतिक्षणमपूर्वैः ज्ञानदर्शनचरणपर्यायैर्भवाटवीभ्रमणहेतुसंक्लेशविच्छेदकैर्निरुपमसुखहेतुभिः संयुज्यते, समायः प्रयोजनमस्याध्ययनस्य ज्ञानक्रियासमुदायरूपस्येति सामायिकम्, समाय एव सामायिकम्, तस्य सामायिकस्य, 'णमि' ति वाक्यालङ्कारे, 'इमे' त्ति—अमूनि-वक्ष्यमाणलक्षणानि चत्वार्यनुयोगद्वाराणि भवन्ति, तत्राध्ययनार्थकथनविधिरनुयोगः, द्वाराणीव द्वाराणि महापुरस्येव सामायिकस्यानुयोगार्थं व्याख्यानार्थं द्वाराण्यनुयोगद्वाराणि, अत्र नगरदृष्टान्तं वर्णयन्त्याचार्याः, यथा हि-अकृतद्वारं नगरमनगरमेव भवति, निर्गमप्रवेशोपायाभावतोऽनधिगमनीयत्वात् । कृतैकद्विकादिद्वारमपि दुरधिगमं कार्यातिपत्तये च भवति, चतुर्मूलद्वारं तु प्रतिद्वारानुगतं सुखाधिगमं कार्यानतिपत्तये च सम्पद्यते, एवं सामायिकपुरमप्यर्थाधिगमोपायद्वारशून्यमशक्याधिगमं स्याद्, एकादिद्वारानुगतमपि दुरधिगमं भवेत्, सप्रभेदचतुर्द्वारानुगतं तु सुखाधिगमं भवति, अतः फलवांस्तदधिगमार्थो द्वारोपन्यास कानि पुनस्तानीति तद्दर्शनार्थमाह—'तद्यथे' त्यादि । तत्रोपक्रमणम्—दूरस्थस्य वस्तुनस्तैस्तैः प्रतिपादनप्रकारैः समीपमानीय निक्षेपयोग्यताकरणमुपक्रम, उपक्रान्तं हि—उपक्रमान्तर्गतभेदैर्विचारितं हि निक्षिप्यते नान्यथेति भाव. । उपक्रम्यते वा—निक्षेपयोग्यं क्रियतेऽनेन गुरुवाग्योगेनेत्युपक्रम । अथवा—उपक्रम्यते अस्मिन् शिष्यश्रवणभावे सतीत्युपक्रम । अथवा—उपक्रम्यते अस्माद्विनीतविनेयविनयादित्युपक्रम, विनयेनाराधितो हि गुरुर्निक्षेपयोग्यं शास्त्रं करोतीति भावः, तदेवं करणाधिकरणापादानकारकैर्गुरुवाग्योगादयोऽर्था भेदतोऽभिहिताः, यदि त्वेकोऽप्यन्यतरोऽर्थः करणादिकारकवाच्यत्वेन विवक्ष्यते तथापि न दोषः । एवं निक्षेपणं शास्त्रादेर्नामस्थापनादिभेदैर्न्यसनं—व्यवस्थापनं निक्षेपः, निक्षिप्यते—नामादिभेदैर्व्यवस्थाप्यते अनेनास्मिन्नस्मादिति वा निक्षेपः, वाच्यार्थविवक्षा तथैव । एवमनुगमनं—सूत्रस्यानुकूलमर्थकथनमनुगमः । अथवा-अनुगम्यते—व्याख्यायते सूत्रमनेनास्मिन्नस्मादिति वाऽनुगमः, वाच्यार्थविवक्षा तथैव । एवं नयनं नयो नीयते—परिच्छिद्यते अनेनास्मिन्नस्मादिति वा नयः, सर्वत्रानन्तधर्माध्यासिते वस्तुन्येकांशग्राहको बोध इत्यर्थः । अत्र चोपक्रान्तमेव निक्षेपयोग्यतामानीतमेव निक्षिप्यत इत्युपक्रमानन्तरं निक्षेप उपन्यस्तः, नामादिभेदैर्निक्षिप्तमेव चानुगम्यत इति निक्षेपानन्तरमनुगमः, अनुगम्यमानमेव च नयैर्विचार्यते नान्यथेति तदनन्तरं नय इति यथोक्तक्रमेणोपन्यासः फलवानिति । अनु० ।

(११) क्वोपक्रमे सामायिकमवतरति । तत्र षड्नाम्नि क्षायोपशमिके भावे सामायिकस्याध्ययनस्यावतार इति दर्शयन्नाह—

छव्विहनामे भावे, खओवसमिए सुयं समोयरइ ।
जं सुयनाणावरण-क्खओवसमजं तयं सव्वं ॥ ६४५॥

अनुयोगद्वाराध्ययने षड् नाम्न्यौदयिकादयः षड् भावाः पठ्यन्ते । तत्र च क्षायोपशमिके भावे सर्वमप्याचारादि श्रुतं समवतरति यद्—यस्मात् सर्वमपि तद् श्रुतं श्रुतज्ञानावरणकर्मक्षयोपशमादेव जायते, नान्यतः, तस्मात् क्षायोपशमिक एव भावे समवतरति । अत इदं सामायिकाध्ययनमपि श्रुतविशेषरूपत्वात् क्षायोपशमिक एव भावे समवतरति, नान्यत्रेत्यर्थादुक्तं भवति । इत्युक्तं संक्षेपतो नाम ।

(१२) साम्प्रतं प्रमाणमभिधित्सुराह—

दव्वाइचउब्भेयं, पमीयए जेण तं पमाणं ति ।
इदमज्झयणं भावो-त्ति भावमाणे समोयरइ ॥६४६॥

द्रव्य—क्षेत्र-काल-भावभेदाच्चतुर्विधं प्रमेयम्, प्रमेयचातुर्विध्याच्च प्रमाणमपि चतुर्विधम्—द्रव्यप्रमाणम्, क्षेत्रप्रमाणम्, कालप्रमाणम्, भावप्रमाणं चेति । द्रव्यादिकं चतुर्विधं प्रमेयं प्रमीयतेऽनेनेति कृत्वा । तत्रेदं सामायिकाध्ययनं श्रुतज्ञानविशेषत्वेन जीवपर्यायत्वाज्जीवभावत्वाद् भावप्रमाणे समवतरति । आह—ननु भावप्रमाणमपि त्रिविधम् गुणप्रमाणम्, नयप्रमाणम्, संख्याप्रमाणं चेति । तत्र सामायिकं क्व समवतरति ? इति । उच्यते—गुणप्रमाणे । ननु गुणप्रमाणमपि द्विविधम्-जीवगुणप्रमाणम्, अजीवगुणप्रमाणं च । तत्र सामायिकं क्व समवतरति ? इति । उच्यते-जीवानन्यत्वेन जीवगुणप्रमाणे । ननु जीवगुणोऽपि त्रिविधः—ज्ञानदर्शनचारित्रभेदात् । तत्र क्व सामायिकस्यावतारः ?, उच्यते-बोधात्मकत्वात् ज्ञानगुणे । ननु ज्ञानमपि प्रत्यक्षाऽनुमानोपमानाऽऽगमभेदाच्चतुर्विधम्, तत्र क्वेदमवतरति ? इति । उच्यते—आगमे । ननु सोऽपि लौकिक—लोकोत्तरभेदाद् द्विविधः । लोकोत्तरोऽपि सूत्रार्थोभयरूपत्वात् त्रिविध एव तत् क्वेदं समवतरति ? इति । उच्यते-सूत्रार्थोभयभेदात् त्रिविधेऽपि लोकोत्तर आगमे समवतरति, तत्स्वभावात्—तत्स्वरूपत्वादिति ।

एतदेवाह—

जीवाणोसत्तणाओ, जीवगुणे वेहभेचिओ नाणे ।
लोउत्तरसुत्तत्थो-भयागमे तस्स भावाओ ॥ ६४७ ॥

व्याख्यातार्थैव ।

( १३ ) आह-नन्वात्मागमानन्तरागमपरम्परागमभेदतोऽपि लोकोत्तरागमस्त्रिविधः तत् कदमवतरति ? इत्याशङ्कयाह-

सुयओ गणहारीणं, तस्सिस्साणं तहाऽवसेसाणं ।
एवं अत्ताणंतर-परंरागमेपमाणम्मि ॥ ६४८ ॥
अत्थेण उ तित्थंकर-गणहर-सेसाणमेवमेवेदं ।

यथा जीवगुणादिष्वस्यावतारः , एवमात्मानन्तरपरम्परागमप्रमाणेऽप्यवतारो मन्तव्यः । कथम् ? , इत्याह-सूत्रतो गणधराणामिदमात्मागमः , तैरेव तत्सूत्रस्य निर्वर्तितत्वात् , अत आत्मनि एवं सकाशादागमनमस्येति कृत्वा । तच्छिष्याणां तु जम्बूस्वाम्यादीनां सामायिकसूत्रमनन्तरागमः , अनन्तरादेव गणधरादागमनमागमोऽस्येति हेतोः । तथाऽवशेषाणां प्रभवेशय्यंभवादीनामेतत् सूत्रं परंपरागम सूरिपरम्परयाऽऽगमनमागमोऽस्येति युक्तेः । तदेवं सूत्रतो यथासख्येन गणधरादीनामात्मगमादित्वयोजना कृता॥६४८॥ अर्थेनाप्येवमेवेदं सामायिकं यथासंख्येन तीर्थकरगणधरशेषजम्बूप्रभृतीनामात्मागमानन्तरागमपरम्परागमत्वेन वक्तव्यमिति ।

(१४) ननु नयनप्रमाणे समवतारोऽस्य भवति, न वा ?, इत्याशङ्क्य गाथोत्तरार्धमाह—

मूढनयं ति संपइ, नयप्पमाणेऽवयारो से ॥ ६४९ ॥

"मूढनइयं सुयं कालियं, न नया समोयरंति इहं" इति वचनाद् मूढनय चिरन्तनमुनिभि शिष्यव्यामोहभयाद् निषिद्धनयविचारं संप्रति श्रुतम्, अतो नयप्रमाणे नाऽस्यावतार इति ।

(१५) आह ननु कियतः कालादर्थात् कालिकश्रुतेन नयविचारो निषिद्ध ?, इत्याह—

आसी पुरा सो नियओ, अणुओगाणमपुहुत्तभावम्मि ।
संपइ नत्थि पुहुत्ते, होज्ज व पुरिसं समासज्ज ॥ ६५० ॥

पुरा--पूर्वं चरणकरणधर्मकथागणितद्रव्यानुयोगलक्षणानां चतुर्णामनुयोगानामपृथग्भावे प्रतिसूत्रं चतुर्णामप्यवतारे स नयावतारो नियतो निश्चित आसीत् । साम्प्रतं पुनरनुयोगानां पृथक्त्वे-"कालियसुयं च इसिभा-सियाइँ तइया य सूरपन्नत्ती । सव्वो य दिट्ठिवाओ, चउत्थओ होइ अणुओगो ॥ १ ॥" इति वचनात् पार्थक्येन व्यवस्थापने सति नास्त्यसौ नयावतार । किं सर्वथा ? , न , इत्याह—भवेद् वा प्राज्ञपुरुषविशेषं समासाद्य कोऽपि कियानपीति । इदमुक्तं भवति—श्रीमदार्यरक्षितसूरीन् यावदेकैकस्मिन् सूत्रेऽनुयोगचतुष्टयव्याख्यानम्, नयविचारश्च विस्तरेणाऽऽसीत्। ततश्च तैरेव श्रीमदार्यरक्षितसूरिभिर्विचारबाहुल्याद् मुह्यन्तं शिष्यानवलोक्य चत्वारोऽप्यनुयोगा भेदेन व्यवस्थापिताः, तद्यथा—कालिकश्रुते चरणकरणानुयोग एवं व्याख्येय , उत्तराध्ययनादिषु धर्मकथानुयोग , सूर्यप्रज्ञप्त्यादिषु गणितानुयोगः, दृष्टिवादे द्रव्यानुयोगः । नयविचारश्चाऽर्वाक् प्रायो निषिद्धः । इति न सामायिकस्य प्रायो नयेष्ववतार इति ।

( १६ ) सङ्ख्याप्रमाणे तर्ह्यवतरतीदं न वा ? इत्याह—

संखामाणे कालिय-सुयपरिमाणे परित्तपरिमाणं ।
सुयओ तदत्थओ पुण, भणियं तमणंतपज्जायं ॥६५१॥

संख्या नाम—स्थापना-द्रव्य-क्षेत्र-काल-पर्यय—परिमाण-भावभेदाऽनुयोगद्वारेष्वष्टधा प्रोक्ता । तत्र संख्यामाने-सङ्ख्याप्रमाणे विचार्यमाणे कालिकश्रुतपरिमाणे एतदवतरति । तत्र कालिकश्रुतपरिमाणं द्विविधम्—सूत्रतः, अर्थतश्च । तत्र सूत्रतस्तु सामायिकाध्ययनं परीत्तं सङ्ख्याताक्षरादिनियतपरिमाणम् । तस्य सामायिकस्यार्थस्तदर्थस्ततः पुनरनन्तपर्यायत्वादनन्तपरिमाणं भणितमिति । तदेवं प्रमाणमप्युक्तं संक्षेपतः ।

( १७ ) अथ वक्तव्यतामभिधित्सुराह—

समओ जो सिद्धंतो, सो सपरोभयगओ तिविहभेओ ।
तत्थ इमं अज्झयणं, ससमयवत्तव्वयं नियं ॥ ६५२ ॥

यः सिद्धान्तः स तावद् समय उच्यते । स च त्रिविधः स्वसमय—परसमयो—भयसमयभेदात् । अत एवं वक्तव्यताऽनुयोगद्वारेषु त्रिविधा प्रोक्ता स्वसमयवक्तव्यता , परसमयवक्तव्यता, स्वपरोभयवक्तव्यता चेति । तत्रेदं सामायिकाध्ययनं स्वसमयवक्तव्यतानियतम् स्वसमयस्यैवेह प्रतिपाद्यमानत्वादिति ।

न केवलमिदमध्ययनम्, किन्तु सर्वाण्यप्यध्ययनानि स्वसमयवक्तव्यतानियतान्येव । कुतः ?, इत्याह—

परसमओ उभयं वा, सम्मद्दिट्ठिस्स ससमओ जेणं ।
तो सव्वज्झयणाइं, ससमयवत्तव्वनिययाइं ॥६५३॥

यतः परसमयः, उभयसमयो वा सम्यग्दृष्टेः स्वसमय एव, यथावद्विषयविभागेन व्यवस्थापनात् । ततो यद्यपि केषुचिदध्ययनेषु परोभयसमयवक्तव्यताऽपि श्रूयते, तथापि तानि सर्वाण्यपि स्वसमयवक्तव्यतानियतान्येव, सम्यग्दृष्टिपरिग्रहात्, एतच्च पूर्वमनेकशो भावितमेवेति ।

किञ्च—

मिच्छत्तमयसमूहं, सम्मत्तं जं च तदुवगारम्मि ।
वट्टइ परसिद्धंतो, तो तस्स तओ ससिद्धंतो ॥६५४॥

मिथ्यात्वानामेकान्तक्षणिकत्वा-ऽक्षणिकत्वचादिसौगतादिमतानां यः समूह -समुदाय स्यात्पदलाञ्छितः स एव यस्मात् सम्यक्त्वं, नान्यत् । यस्माच्च तस्य—स्वसमयस्योपकारस्तदुपकारस्तस्मिन् वर्तते परसिद्धान्त , परसिद्धान्तव्यावृत्त्यैव स्वसिद्धान्तसिद्धेः असमञ्जसवादित्वं परसिद्धान्तानां दृष्ट्वा स्वसिद्धान्ते स्थैर्यमित्यर्थः इति । ततस्तस्मात्तस्य सम्यग्दृष्टेस्तक परसिद्धान्त स्वसिद्धान्त एव । तदेवं सम्यग्दृष्टेः सर्वोऽपि विषयविभागेन स्थापितः स्वसिद्धान्त एव , इति सर्वाण्यप्यध्ययनानि स्वसमयवक्तव्यतानियतान्येवेति स्थितम् । तदेवमभिहिता वक्तव्यता ।

( १८ ) अथार्थाधिकारमभिधित्सुराह—

सावज्जजोगविरई, अज्झयणत्थाहिगार इह सो य ।

भरणइ समुदायत्थो, ससमयवत्तव्वया देसो ॥६५५॥

इह सावद्ययोगविरति.-सामायिकाध्ययनस्यार्थाधिकारः, स च समुदायार्थो भरायत इति प्रागप्युक्तमेव । स एव च स्वसमयवक्तव्यतायाः सम्पूर्णाया एकदेशोऽभिधीयत इति । उक्तोऽर्थाधिकार. ।

(१६) अथ समवतारमभिधित्सुराह--

अहुणा य समोयारो, जेण समोयारियं पइद्दारं ।

सामाइयँ सोऽणुगओ,लाघवओ नो पुणो वच्चो ॥६५६॥

अधुना समवतारोऽवसरप्राप्त. । चकारो भिन्नक्रमे, तद्यथा--स च 'लाघवउ' त्ति--लाघवमाश्रित्य लाघवार्थमित्यर्थ, अनुगतः पूर्वमेव गत.-अतिक्रान्त. पूर्वमेवाभिहित इत्यर्थ. । कथम् ?, इत्याह--येन यस्मात् प्रतिद्वारं सामायिकाध्ययनं समवतारितमेव । ततो नेदानीं पुनरपि समवतारो वाच्य. , तद्व्यापारस्याऽऽध्ययनसमवतारलक्षणस्य प्रतिद्वारमेवानिष्ठितत्वात् । एतदुक्तं भवति--अधुना षष्ठ उपक्रमभेदः समवतार. प्रस्तुतः , स च लाघवार्थं सामायिकस्य प्रतिद्वारं समवतारितत्वात् पूर्वमेवाभिहित. , इति न पुनरप्यत्रोच्यते , पौनरुक्त्यप्रसङ्गात् इति । विशे० । आ० म० । आ० चू० ।

(२०) अथानुगमलक्षणं तृतीयमनुयोगद्वारं संम्बन्धोपदर्शनपूर्वकमाह—

संपयमोहाईणं , संनिक्खित्ताणमणुगमो कज्जो ।

सोऽणुगमो दुविगप्पो, नेओ निज्जुत्तिसुत्ताणं ॥६७१॥

ओघादीनां निक्षिप्तानां सतां साम्प्रतमनुगमस्तद्व्याख्यानरूप कार्य इत्यानुगमस्यावसर. । स च द्विविधः निर्युक्त्यनुगम. , सूत्रानुगमश्च । छन्दोऽनुवृत्त्या च कयाचिदित्थं व्यत्ययोपन्यास. । इत्थं च पुनर्द्रष्टव्य -सूत्रानुगम., निर्युक्त्यनुगमश्चेति । तथा चानुयोगद्वारेऽप्युक्तम्-" अणुगमे दुविहे पन्नत्ते , तं जहा-सुत्ताणुगमे , निज्जुत्तिअणुगमे य । निज्जुत्तिअणुगमे तिविहे पन्नत्ते , तं जहा-निक्खेवनिज्जुत्तिअणुगमे , उवग्घायनिज्जुत्तिअणुगमे , सुत्तप्फासियनिज्जुत्तिअणुगमे य । " इति । विशे० ।

(२१) अथ नामनिष्पन्नं निक्षेपमभिधित्सुरध्ययनस्य विशेषनाम तन्निक्षेपं चाह—

सामाइयं ति नामं , विसेसविहियं चउव्विहं तं च ।

नामाइनिरुत्तीए , सुत्तप्फासे व तं वोच्छं ॥ ८६२ ॥

प्रस्तुताध्ययनस्य सामायिकमिति विशेषविहितं नाम । तच्च चतुर्विधम् । कथम् ?, इत्याह-नामादि-नामसामायिकम् , स्थापनासामायिकम् , द्रव्यसामायिकम् , भावसामायिकं चेति । एतत्त्वार्थनिरूपणतो वक्ष्येऽहम् । क ?, इत्याह-निरुक्तौ ' उद्देसे निद्देसे य निग्गमे ' इत्याद्युपोद्घातनिर्युक्तिगतगाथाद्वयपर्यन्ते ' भवागरिसफासणनिरुत्ती, इति यद् निर्युक्तिद्वारं तत्रार्थतोऽभिधास्य इत्यर्थ । यदि वा-निर्युक्त्यनुगमभेदरूपायामेव सूत्रस्पर्शिकनिर्युक्तौ वक्ष्य इति ।

(२२) अत्राक्षेपपरिहारौ प्राह—

इह जइ कीस निरुत्ते,नत्थ व भणियमिह भरणए कीस ? ।

निक्खेवमित्तमिहइं , तस्स निरुत्तीएँ वक्खाणं ॥८६३॥

आह—यद्यत्रापीदं चतुर्विधं विशेषनाम भणनीयत्वेनावसरप्राप्तम् , तर्हि किमुच्यते-निरुक्त्यादौ वक्ष्य ? । अथ तत्र वक्ष्यते, तर्ह्यत्र किमर्थमुच्यते ? । अत्रोत्तरमाह-' निक्खेवे ' त्यादि,इह नामादिनिक्षेपमात्रस्यैव भणनावसरं , स च नामादिचातुर्विध्यभणनादुक्त एव , निरुक्तौ तु तदर्थो निरूपयिष्यत इत्यदोष. ।

पुनरप्यन्यथाऽऽक्षिप्य परिहरति—

तो कीस पुणो सुत्ते, सुत्तालावो तओ न तन्नामं ।

इह उण नामं नत्थं, तं वक्खायं निरुत्तीए ॥६६४॥

हन्त ! यदि निरुक्तौ सामायिकं व्याख्यायते, तर्हि 'करोमि भदन्त ! सामायिकम् ' इत्यादि किमिति पुनरपि सूत्रे व्याख्यायते ? । नैवम् , यत.--सूत्रालापक एव तकोऽसौ व्याख्यायते न पुनस्तन्नाम व्याख्यानम् , इह पुनर्नामादिभेदैः सामायिकनाम न्यस्तम् तच्च निरुक्तौ व्याख्यातम् , इति विषयविभागात् सर्वं सुस्थमिति ।

पुन. प्रेर्यमुत्थाप्य परिहरति-

इह पुण कीस न भरणइ,जं निक्खेवो इमो स निज्जुत्ती ।

निज्जुत्ती वक्खाणं, निक्खेवो नासमेत्तं तु ॥६६५॥

नन्विहैव निक्षेपद्वारे किमिति न भरायते--न व्याख्यायते-सामायिकम् , येन निरुक्तौ व्याख्यायते ? । अत्रोच्यते-यद्-यस्मादसौ निक्षेपः प्रस्तुत., तत्र च प्रस्तुते व्याख्यानस्य कोऽवसर.? । 'स निज्जुत्ति' त्ति-सा पुनर्वक्ष्यमाणा निर्युक्तिरुपोद्घातनिर्युक्तिद्वाररूपत्वाद् निर्युक्ति । यदि नाम सा निर्युक्तिः तथापि तत्र व्याख्यानस्य किमायातम्? इत्याह-'निज्जुत्तिवक्खाणं' ति-निर्युक्तिरनुगमभेदत्वाद् व्याख्यानात्मिकैव भवति अतो युक्तं तस्यां व्याख्यानम् । निक्षेपोऽपि तर्हि व्याख्यानरूपो भविष्यति, इत्याह—'निक्खेवो नासमेत्तं तु ' त्ति—निक्षेपस्तु नामादिन्यासमात्रात्मक एव वर्तते, न तु व्याख्यानरूप., अनुगमस्यैव तद्रूपत्वात् । अतः कोऽत्र निक्षेपे व्याख्यानावसरः ? इति ।

पुनरपि परमतमाशङ्क्य प्रतिविधातुमाह—

नणु निज्जुत्ति अणुगमे,भणिया एसा वि नासनिज्जुत्ती।

सच्चमियं निज्जुत्ती, इयं तु निक्खेवमित्तस्स ॥६६६॥

ननु यदि निर्युक्तावेव व्याख्यानमिष्यते भवद्भि., तर्ह्यत्रापि ब्रूमो वयं यदुत-एषाऽपि निर्युक्त्यनुगमे न्यासनिर्युक्तिर्भणिता, अयमपीह प्रस्तुतो निक्षेपो वक्ष्यमाणे निर्युक्त्यनुगमे निक्षेपनिर्युक्तित्वेन भणिष्यत इत्यर्थ । इदमुक्तं भवति-अनुगमो द्विविधो वक्ष्यते, तद्यथा-सूत्रानुगम , निर्युक्त्यनुगमश्च । निर्युक्त्यनुगमस्त्रिविधोऽभिधास्यते-निक्षेपनिर्युक्त्यनुगम , उपोद्घातनिर्युक्त्यनुगम , सूत्रस्पर्शिकनिर्युक्त्यनुगमश्चेति । यथा-" से किं तं निक्खेवनिजुत्तिअणुगमे ?। निक्खेवनिज्जुत्तिअणुगमे अणुगए , वक्खमाणे य " । एतदपि वक्ष्यते । तत्रायमर्थ —अत्रैव प्रागावश्यकसामायिकादिपदानां नाम-स्थापनादिनिक्षेपद्वारेण यद् व्याख्यानं कृतम् , तेन निक्षेपनिर्युक्त्यनुगमोऽनुगत प्रोक्तो-द्रष्टव्य , सूत्रालापकानां निक्षेपप्रस्तावे पुनर्वक्ष्यते च । तदेवमेतेनैषोऽपि निक्षेपो निक्षेपनिर्युक्तित्वेनाऽनुगमे प्ररूप्यमाणेऽभिधा-

स्यते। अतः किमुच्यते—' नेह व्याख्यानम् ' किन्तु-निरुक्तावेव इति ? । तदेघमतिनिपुणं परस्य प्रेर्यमवलोक्याऽभ्युपगमपूर्वकमुत्तरमाह-' सच्च ' मित्यादि, "सत्यम् ' इयमपि प्रस्तुतनिक्षेपलक्षणा निर्युक्तिः, किन्त्वियं निक्षेपमात्रस्य नामस्थापनादिनिक्षेपस्वरूपनिरूपणायैव, न विशेषार्थस्येत्यर्थः, निरुक्तौ तु "सम्मद्दिट्ठि अमोहो, सोही सब्भावदंसणं बोही " इत्यादिना ग्रन्थेन शब्दार्थादिविचारः करिष्यत इति भाव.।

अथवा—किमनेन बहुना प्रोक्तेन ? , अतिगहनं प्रकरणमिदम् , अतः संक्षिप्य विशेषविषयविभागतात्पर्यमुच्यते, तथा चाह—

निक्खेवे मित्तमिह वा, अत्थवियारो य नासजुत्तीए।
सद्दगओ य निरुत्ते, सुत्तप्फासम्मि सुत्तगओ ॥ ६६७ ॥

अथवा—इह निक्षेपद्वारे सामायिकस्य नामादिनिक्षेपमात्रमेवोच्यते, तदर्थनिरूपणमात्रमेव च निक्षेपनिर्युक्तौ निर्दिश्यते। नैरुक्तस्तु शब्दगतो विचार उपोद्घातनिर्युक्त्यन्तर्गते निर्युक्तिद्वारे-' सम्मदिट्ठि अमोहो ' इत्यादिना ग्रन्थेन शब्दार्थविचारः करिष्यत इत्यर्थः। सूत्रस्पर्शे तु सूत्रगतो विचार सूत्रस्पर्शिक-निर्युक्तौ सूत्रालापद्वाराऽऽयातस्य सामायिकस्यार्थविचार क्रियते, न तु सामायिकनाम्न इत्यर्थ । एवं विषयविभागेनाऽवस्थानात् सर्वं समञ्जसमिति । तदेवमभिहितो नामनिष्पन्नोऽपि निक्षेप.।

( २३ ) अथ सूत्रालापकनिक्षेपस्यावसरः, तत्राह—

जो सुत्तपयन्नासो, सो सुत्तालावयाण निक्खेवो ।
इह पत्तलक्खणो सो,निक्खिप्पइ न पुण किं कज्जं ।६६८।
सुत्तं चेव न पावइ, इह सुत्तालावयाण कोऽवसरो ?।
सुत्ताणुगमे काहिइ, तण्णासं लाघवनिमित्तं ॥ ६६९ ॥

' करेमि भन्ते ! सामाइयं ' इत्यादिसूत्रपदानां यो नामस्थापनादिरूपेण न्यासः, स सूत्रालापकनिक्षेप.। स चेह प्राप्तलक्षणः-प्राप्तावसर एव, न पुनर्निक्षिप्यते-न पुन सूत्रालापकः, इदानीमेव निक्षिप्यत इति भाव। किं कार्यं-कस्माद्धेतो' ?, इत्याह-सूत्रमेव तावदिदानीं न प्राप्नोति, अत. सूत्रालापकानामिह निक्षेपे कर्त्तव्ये कोऽवसर. ? । इदमुक्तं भवति-सूत्रानुगम एव सूत्रमुच्चारयितव्यम् उच्चारिते च सूत्रे तदालापकविभाग , तदविभागे च तन्निक्षेप । अतः सूत्राभावात् क सूत्रालापकानामिह निक्षेपेऽवसर. ? । तर्हि कदा तन्निक्षेपो विधेय ?, इत्याह-सूत्रानुगमे प्राप्ते करिष्यति लाघवार्थं सूरिस्तन्निक्षेपमिति।

अथ पूर्वापरासंवद्धतामाशङ्क्य परिहरति—

इह जइ पत्तो वि तओ, न [illegible] ए कीस भण्णए इहई।
दाइज्जइ सो निक्खे-वमेत्तसामण्णओ नवरं ॥ ६७० ॥

नन्विह प्राप्तावसरोऽपि यदि तकोऽसौ सूत्रालापकनिक्षेपो न न्यस्यते-न विधीयते, तर्ह्यत्र किमर्थं भण्यते-' सूत्रालापकनिक्षेपश्च इत्येव निक्षेपतृतीयभेदत्वेन किमर्थमिहोपन्यस्यते ?, अनुगमेऽपि किमिति न भण्यते ? इति भाव.। सत्यम्, किन्त्वोघनिष्पन्नादिना निक्षेपेण सह निक्षेपमात्रसाम्यात् नवरं—केवलं दर्श्यत एवाऽयमत्र, न तूपन्यस्यते, ग्रन्थगौरवभयात्। इति। विशे०।

( २४ ) चतुर्विधस्य सामायिकस्य क्रिया-कारकभेदपर्यायैः शब्दार्थकथनं निर्वचनं निरुक्ति । तत्र सम्यक्त्वसामायिकनिरुक्तिमभिधित्सुराह—

सम्मद्दिट्ठि अमोहो, सोही सब्भावदंसणं बोही।
अविवज्जओ सुदिट्ठी, एवमाई निरुत्ताइं ॥ २७८४ ॥

सम्यग् इति—प्रशस्तार्थः, दर्शनं दृष्टि., सम्यग्—अविपरीता दृष्टि. सम्यग्दृष्टि. अर्थानाम्—इति गम्यते । मोहनं मोहो वितथग्राह, न मोह. अमोहः—अवितथग्राह । शोधनं शुद्धिर्मिथ्यात्वमलापगमात् सम्यक्त्वं शुद्धिरुच्यते । सत्—जिनाभिहितं प्रवचनम्, तस्य भाव सद्भावः, तस्य दर्शनम्-उपलम्भ', सद्भावदर्शनम्। बोधनं बोधिरित्यौणादिक इन् परमार्थबोध. । अतस्मिंस्तदध्यवसायो विपर्ययो न विपर्ययोऽविपर्ययस्तत्त्वाध्यवसाय इत्यर्थ । सुशब्द प्रशंसायाम्, शोभना दृष्टि. सुदृष्टि' । इत्येवमादीनि सम्यग्दर्शनस्य निरुक्तानीति।

( २५ ) श्रुतसामायिकनिरुक्तिप्रदर्शनायाह—

अक्खर सन्नी सम्मं, साईयं खलु सपज्जवसियं च ।
गमियं अंगपविट्ठं, सत्त वि एए सपडिवक्खा ॥२७८५॥

इयं च पीठे व्याख्यातत्वाद् न विव्रियते।

देशविरतिसामायिकनिरुक्तिमाह—

विरयाविरई संवुड-मसंवुडे बालपंडिए चेव ।
देसिक्कदेसविरई, अणुधम्मोऽगारधम्मो य ॥२७८६॥

विरमणं विरतम्, न विरतिरविरति, विरतं चाविरतिश्च यस्या निवृत्तौ सा विरताविरति. । संवृतासंवृता - स्थगितास्थगिता परित्यक्तापरित्यक्ता. सावद्ययोगा यस्मिन् सामायिके तत् संवृताऽसंवृतम्। एवमुभयव्यवहारानुगतत्वाद् बालपण्डितम्। देश प्राणातिपातादि, एकदेशस्तु वृक्षच्छेदनादिस्तयोर्विरमणं-विरतिर्यस्या निवृत्तौ सा देशैकदेशविरति । वृहत्साधुधर्मापेक्षयाऽणु -अल्पो धर्मोऽणुधर्मो देशविरतिलक्षण.। न गच्छन्तीत्यगा—वृक्षास्तैः कृतमगार—गृहम्, तद्योगादगारो गृहस्थस्तद्धर्मस्त्विति।

( २६ ) सर्वविरतिसामायिकनिरुक्तिमुपदर्शयन्नाह—

सामाइयं समइयं, सम्मावाओ समाससंखेवो ।
अणवज्जं च परिन्ना, पच्चक्खाणं च ते अट्ठा ॥ २७८७ ॥

समो राग—द्वेषरहितत्वाद् मध्यस्थ, अयनमयो गमनमित्यर्थ समस्याय समाय. स एव सामायिकमेकान्तप्रशमगमनमित्यर्थ । सामायिकमिति—' सम् ' इति सम्यक्शब्दार्थ उपसर्ग , सम्यगय. समय , सम्यग् दयापूर्वकं जीवेषु विषये गमनं, प्रवर्तनमित्यर्थ , समयोऽस्यास्तीति सामयिकम्। ' सम्मावाउ' त्ति—सम्यग्शब्देनेह रागद्वेषविरह उच्यते, तेन तत्प्रधानो वादो वदनं सम्यग्वादो रागादिविरहेण यथावद् वदनमित्यर्थ । ' समास ' त्ति—सशब्द प्रशंसायाम्, असु क्षेपणे, शोभनमस्ननं संसाराद् वहिर्जीवस्य जीवात् कर्मणो वा क्षेपण समास । अथवा,—संशब्द सम्यगर्थ, सम्यगास समासः। रागद्वे-

परादिस्य समस्य वा आसः समासः । 'संखेवो' त्ति-संक्षेपणं संक्षेपः सामायिकमुच्यते, महार्थस्यापि स्तोकाक्षरत्वादस्येति । 'अणवज्ज' ति-अवद्यं-पापं नास्मिन्नवद्यमस्तीत्यनवद्यं सामायिकम् । 'परिराण' त्ति-परितः-समन्ताज्ज्ञानं पापपरित्यागेन परिज्ञा सामायिकम् । 'पच्चक्खाणे' ति-प्रति हरणीयं वस्तु आख्यानं गुरुसाक्षिकं निवृत्तिकथनं प्रत्याख्यानम् । एतेऽष्टौ सामायिकपर्यायाः । इति निर्युक्तिगाथाचतुष्टयार्थः । विशे० ।

'सामाइयं समइयं' इत्यादिचारित्रनिरुक्तेस्तु व्याख्यानं-साक्षादेवाह-

राग-दोसविरहिओ,समो त्ति अयणं अओ त्ति गमणं ति ।
समयागमो समाओ, स एव सामाइयं होइ ॥ २७६२ ॥
सम्ममओ समउ त्ति य, सम्मं गमणं ति सव्वभूएसु ।
सो जस्स तं समइयं,जम्मि य भेओवयारेण ॥ २७६३ ॥
रागाइरहो सम्मं, वयणं वाओऽभिहाणमुत्ति त्ति ।
रागाइरहियवाओ , सम्मावाओ त्ति सामइयं ॥२७६४॥
अप्पक्खरं समासो, अहवाऽऽसोऽसणं महासणं सव्वा ।
सम्मं समस्स वासो, होइ समासो त्ति सामइयं ।२७६५।
संखिवणं संखेवो, सो जं थोवक्खरं महत्थं च ।
सामइयं संखेवो,चोद्दसपुव्वत्थपिंडो त्ति ॥ २७६५ ॥
पावमवज्जं सामा-इयं अपावं ति तो तदणवज्जं ।
पावमणं ति न जम्हा,वज्जिज्जइ तेण तदसेसं ॥ २७६७ ॥
पावपरिच्चायत्थं,परितो नाणं मया परिराण त्ति ।
पइवत्थुमिहक्खाणं,पच्चक्खाणं निवित्ति त्ति ॥ २७६८ ॥
विशे० ।

रागद्दोसविरहिओ,समो त्ति अयणं अओ त्ति गमणं ति ।
समगमणं ति समाओ, स एव सामाइयं नाम ॥३३७७॥
अहवा भवं समाए, निव्वत्तं तेण तम्मयं वा वि ।
जं तप्पओयणं वा , तेण व सामाइयं नेयं ॥ ३४७८ ॥
अहवा समाइँ सम्म-त्तँ नाण चरणाइँ तसु तेहिँ वा ।
अयणं अओ समाओ, स एव सामाइयं नाम । ३४७६ ।
अहवा समस्स आओ,गुणाण लाभो त्ति जो समाओ सो ।
अहवा समाणमाओ, नेओ सामाइयं नाम ३४८० ॥

भागपि निरुक्तिद्वारे प्रायश्चर्चितार्था, सुगमाश्चेति ।

अथवा-अन्यथा व्युत्पत्तिरित्याह-

अहवा सामं मित्ति, तत्थ अओ तेण होइ सामाओ ।
अहवा सामस्साओ, लाभो स माइयं नाम ॥ ३४८१ ॥
सम्ममओ वा समओ , सामाइयमुभयविद्धि भावाओ ।
अहवा सम्मस्साओ, लाभो सामाइयं होइ ॥ ३४८२ ।

अथवा-सर्वजीवेषु मैत्री-साम भगवन , तत्र साम्नि अयो-गमनम् साम्ना वाऽयो गमनं-वर्त्तनं सामायः । अथवा-साम्न आयो-लाभः सामायः स एव सामायिकं नामेति । अथवा-सम्यगर्थसंशब्दपूर्वकोऽयं धातुः , सम्यग् अयनं-वर्त्तनं समयः, समय एव स्वार्थिके कप्रत्ययोपादानादुभयत्र वृद्धिभावाच्च सामायिकम् । अथवा-सम्यगायो-लाभः समायः, स एव सामायिकम् । अथवा-समस्य भावः साम्यम् , साम्यस्यायो निपातनात् सामायः , स एव सामायिकमिति ।

अथवा-अन्यथा निरुक्तविधिरुच्यत इत्याह-

अहवा निरुत्तविहिणा, सामं सम्मं समं च जं तस्स ।
इकमप्पए पवेसण-मेयं सामाइयं नेयं ॥ ३४८३ ॥

अथवा-निरुक्तविधिना बहुव्युत्पत्तिकमेतत् सामायिकं ज्ञेयं ज्ञातव्यमिति कथम् ? इति । अत्रोच्यते-इकशब्दो देशीवचनः क्वापि प्रवेशार्थे वर्तते । आत्मोपमया परेषां दुःखस्याकरणं सामेह गृह्यते तस्य साम्न इकं यदात्मनि प्रवेशनम् नकारस्यायादेशनिपातनात् , तत् सामायिकम् । तथा-सम्यग्दर्शनज्ञानचारित्रत्रयस्य परस्परं योजनं सम्यगिहोच्यते,निर्वाणसाधकत्वेन तद्योगस्यैव परमार्थतः सम्यग्रूपत्वात् , तस्य सम्यग्दर्शनादिरूपस्य सम्यग्-इत्येतस्यात्मनि यत् इकं-प्रवेशनम् यकारादेरयादेशनिपातने सकारस्य च दीर्घत्वे, तत् सामायिकम् । तथा-रागद्वेषमाध्यस्थ्यमात्मनः सर्वत्र तुल्यरूपेण वर्तनं सममुच्यते, तस्य समस्यात्मनि यत् इकं-प्रवेशनम् , समशब्दादयागमे सकारस्य दीर्घत्वे तत् सामायिकमिति । विशे० । स्था० । आव० । आ० म० । ध० । आ० चू० । ( सामायिकसंयमव्याख्या 'संजम' शब्देऽस्मिन्नेव भागे गता ) ( " सामं समं० " (१०३०) इत्यादिगाथया सामायिकशब्दस्यैकार्थिकानि 'साम' शब्देऽस्मिन्नेव भागे उक्तानि । ) ( कियन्ति सामायिकानि मनुष्यादयः प्रतिपद्यन्ते इति 'समोसरण' शब्देऽस्मिन्नेवभागे गतम् । ) ( दमदन्त उदाहरणकथा 'दमदन्त' शब्दे चतुर्थभागे २४५६ पृष्ठे गता । ) सामायिकशब्दयोजना चैवं द्रष्टव्या-इहाऽऽत्मन्येव साम्न इकं निरुक्तनिपातनात् [ यद् यल्लक्षणेनानुपपन्नं तत् सर्वं निपातनात् सिद्धमिति ] साम्ना नकारस्याऽऽय आदेशः, ततश्च सामायिकम् , एवं समशब्दस्याऽऽयादेशः समस्य वा आयः समायः स एव सामायिकमिति , एवमन्यत्रापि भावना कार्येति कृतं प्रसङ्गेन ।

साम्प्रतं सामायिकपर्यायशब्दान् प्रतिपादयन्नाह-

समया सम्मत्त पस-त्थ संति सुविहिअ सुहं अनिंदं च ।
अदुगुंछिअमगरिहिअं,अणवज्जमिमेऽवि एगट्ठा॥१०३३।

व्याख्या-निगदसिद्धैव । आह-अस्य निरुक्तावेव 'सामाइयं समइय' मित्यादिना पर्यायशब्दाः प्रतिपादिता एव नतु पुनः किमर्थमभिधानमिति ? , उच्यते-तत्र पर्यायशब्दमात्रता, इह तु वाक्यान्तरेणार्थनिरूपणमिति , एवं प्रतिशब्दमर्थभेदतोऽनन्ता गमा अनन्ता पर्याया इति चैकस्य सूत्रस्येति ज्ञापितं भवति, अथवाऽसम्मोहार्थं तत्रोक्तावप्यभिधानमदुष्टमेव इत्यत एवोक्तम्-'इमेऽवि एगट्ठा' त्ति एतेऽपि तेऽपीत्यर्थः ।

( नामनिष्पन्नसामायिकस्य चातुर्विध्यम् ' णिक्खेव ' शब्दे चतुर्थभागे २०२७ पृष्ठे गतम्। )

( २७ ) चतुर्विधं सामायिकम्

णामठवणाओ पुव्वं भणिआओ। दव्वसामाइए वि तहेव, ०जाव से तं भविअसरीरदव्वसामाइए। से किं तं जाणयसरीरभविअसरीरवइरित्ते दव्वसामाइए ?, जाणयसरीरभविअसरीरवइरित्ते दव्वसामाइए पत्तेयपोत्थयलिहियं। से तं जाणयसरीरभविअसरीरवइरित्ते दव्वसामाइए। से तं णोआगमओ दव्वसामाइए। से तं दव्वसामाइए। से किं तं भावसामाइए ?, भावसामाइए दुविहे पण्णत्ते, तं जहा-आगमओ अ,नोआगमओ अ। से किं तं आगमओ भावसामाइए ?, आगमओ भावसामाइए, जाणए उवउत्ते। से तं आगमओ भावसामाइए। से किं तं नोआगमओ भावसामाइए ?, नोआगमओ भावसामाइए "जस्स सामाणिओ अप्पा,संजमे णिअमे तवे। तस्स सामाइअं होइ,इइ केवलिभासिअं॥१॥जो समो सव्वभूएसु, तसेसु थावरेसु अ। तस्स सामाइयं होइ, इइ केवलिभासियं ॥२॥" (अनु०) से तं नोआगमओ भावसामाइए। से तं भावसामाइए। ( सू०-१५४ + )

'जस्स सामाणिओ अप्पा' इत्यादि, यस्य सत्त्वस्य, सामानिक:-सन्निहित आत्मा सर्वकालं व्यापारात् क्व ?—संयमे मूलगुणरूपे, नियमे—उत्तरगुणसमूहात्मके तपसि-अनशनादौ तस्येत्थंभूतस्य सामायिकं भवतीत्येतत्केवलिभाषितमिति श्लोकार्थ। 'जो समो' इत्यादि, यः सम सर्वत्र मैत्रीभावात्तुल्य सर्वभूतेषु-सर्वजीवेषु त्रसेषु स्थावरेषु च तस्य सामायिकं भवतीत्येतदपि केवलिभाषितम्, जीवेषु च समत्वं संयमसान्निध्यप्रतिपादनात्पूर्वश्लोकेऽपि लभ्यते, किंतु जीवदयामूलत्वाद्धर्मस्य तत्प्राधान्यख्यापनाय पृथगुपादानमिति। ( अनु० ) इह च ज्ञानक्रियारूपं सामायिकाध्ययनं नोआगमतो भावसामायिकं भवत्येव, ज्ञानक्रियासमुदाये आगमस्यैकदेशवृत्तित्वात्, नोशब्दस्य च देशवचनत्वाद्, एवं च सति सामायिकवत: साधोरपीह नोआगमतो भावसामायिकत्वेनोपन्यासो न विरुध्यते, सामायिकतद्वतोरभेदोपचारादिति भाव:। नामनिष्पन्नो निक्षेप समात।

( २८ ) पञ्चुदाहरणानि। सामायिके तावत्—

"इहास्ति भरतक्षेत्रे, नगरं हस्तिशीर्षकम्।
सुवृत्तरक्तमुक्तौघं, हस्तिशीर्षविवोन्नतम् ॥ १ ॥
दमदन्त प्रभुस्तत्र, धरित्रीधवपुङ्गव।
य सौन्दर्याच्च शौर्याच्च, विषमायुधदर्पहृत् ॥ २ ॥
इत पुरं गजपुर, यद् दृष्ट्वा मन्यते जन।
साक्षात्तु स्वर्ग एवाय, वार्त्तैवान्याभिधायिनी ॥ ३ ॥
राज्यं युधिष्ठिरस्तत्र, विधत्ते शक्रवद्दिवि।
चतुर्भिर्बान्धवैर्लोक-पालैरिव पुरस्कृत ॥ ४ ॥
विषया इव जीवस्य, दमन्तस्य तेऽरय।
सोऽन्यदागाद्राजगृहे, जरासंधस्य सन्निधौ ॥ ५ ॥
पाण्डवास्तेऽथ तद्देशं, मुमुषु पुपुषुस्तथा।
राजनीतिरियं राज्ञां, बलवत्सु छलं बलम् ॥ ६ ॥
तदाकर्ण्य ससंरम्भ:, सर्वौघेण महाबलः।
दमदन्त: क्षतारातिः—दन्तिदन्त: समागमत् ॥ ७ ॥"
आ० क० १ अ०। आ० चू०। ( शेषा कथा 'समइय' शब्देऽस्मिन्नेव भागे गता। )

पुन सामायिकस्यैव स्वरूपनिरूपणायाह—

समभावो सामाइयं, तणकंचणसत्तुमित्तविसउ त्ति।
णिरभिस्संगं चित्तं, उचियपवित्तिप्पहाणं च ॥ ५ ॥

समभावो मध्यस्थाध्यवसाय:। सामायिकमुक्तनिर्वचनं भवति। किंविषयोऽसौ समभाव इत्याह—तृणकाञ्चने प्रतीते हेयोपादेयेऽजीवरूपे तदन्यहेयोपादेयाचेतनवस्तूपलक्षणभूते। शत्रुमित्रे च प्रतीते एवाप्रीतिप्रीतिनिबन्धने सचेतने तदन्यैवभूतवस्तूपलक्षणभूते, विषयो गोचरो यस्यासौ तृणकाञ्चनशत्रुमित्रविषय। इतिर्वाक्यार्थसमाप्तौ। किमुक्तं भवति ?-निरभिष्वङ्गं—रागद्वेषलक्षणाभिष्वङ्गवर्जितं चित्त मनः सामायिकं भवतीति प्रकृतम्। एवंविधमेव चित्तं सामायिकमिति मन्यमाना बाह्यप्रवृत्तिमकिञ्चित्करीं केचित्कल्पयन्ति, अतस्तच्छिक्षणार्थमाह—उचितप्रवृत्तिप्रधानं सव्यापारम्, निरभिष्वङ्गे हि चित्ते सति प्राय उचितैव प्रवृत्तिर्जायते, साभिष्वङ्गचित्तकार्यत्वाद्भावतोऽनुचितप्रवृत्ते:। इदं चोक्तमनेन 'वीतरागाणां परोपकारप्रवृत्तिर्न समभावं सामायिकं बाधते' इति। चशब्द: समुच्चयार्थ। इति गाथार्थ ॥५॥ पञ्चा० ११ विव०।

( २९ ) द्विविधं सामायिकम्—

सामाइयचरित्तगुणप्पमाणे दुविहे पण्णत्ते, तं जहा-इत्तरिए य, आवकहिए य। ( सू० १४७× )

सामायिक—पूर्वोक्तशब्दार्थं तच्च इत्वरं, यावत्कथिकं च। तत्रेत्वरम्-भाविव्यपदेशान्तरत्वात् स्वल्पकालम्, तच्चाद्यचरमतीर्थकरकालयोरेव यावदद्यापि महाव्रतानि नारोप्यन्ते तावच्छिष्यस्य संभवति, आत्मन: कथा यावदास्ते तद् यावत्कथं-यावज्जीवमित्यर्थ, यावत्कथमेव यावत्कथिकम्। एतच्च भरतैरावतेष्वाद्यचरमवर्जमध्यमतीर्थकरसाधूना महाविदेहतीर्थकरयतीनां च संभवति। अनु०। पं० चू०। तेषामुपस्थापनाया अभावत्। पञ्चा० ११ विव०।

द्विविधं सामायिकम्—

दुविहे सामाइए, पण्णत्ते, तं जहा-अगारसामाइए चेव, अणगारसामाइए चेव। ( सू० ८४× )

' दुविहे ' त्यादि समाना—ज्ञानादीनामायो-लाभ समायः स एव सामायिकमिति तद् द्विविधम्—अगारवदनगारस्वामिभेदाद् देशसर्वविरतीत्यर्थ। स्था० २ ठा० ३ उ०।

(३०) सामयिकस्योद्देशादीनि द्वाराणि वक्तव्यानि तत्रोपोद्घातदर्शनायाह—

उद्देसे १ निद्देसे २,
निग्गमे ३ खित्ते य ४ काल ५ पुरिसे ६ अ।

कारण ७ पच्चय ८ लक्खण ६,
नए १० समोआरणा ११ ऽणुमए १२ ॥ ४० ॥
किं १३ कइविहं १४ कस्स १५ कहिं, १६,
केसु १७ कहं १८ केच्चिरं १६ हवइ कालं ।
कइ २० संतर २१ मविरहिअं २२ ,
भवा२३ऽऽगरिस२४फासण२५निरुत्ती२६ ॥१४१॥

उद्देशो वक्तव्य., एवं सर्वेषु क्रिया-योज्या। उद्देशनमुद्देश.-सामान्याभिधानमध्ययनमिति१। निर्देशनं निर्देश.-विशेषाभिधानं सामायिकमिति २। तथा निर्गमनं निर्गमः ३। कुतोऽस्य निर्गमनमिति वाच्यम्, क्षेत्रं वक्तव्यम् कस्मिन् क्षेत्रे ? ४। कालो वक्तव्य. कस्मिन् काले ? ५। पुरुषश्च वक्तव्यः कुतः पुरुषात् ? ६। कारणं वक्तव्यं किं कारणं गौतमादयः शृण्वन्ति ? ७। तथा प्रत्याययतीति प्रत्यय. स च वक्तव्य', केन प्रत्ययेन भगवतेदमुपदिष्टम्?को वा गणधाराणां श्रवण इति८। तथा लक्षणं वक्तव्यं श्रद्धानादि ६। तथा नया-नैगमादय. १०। तथा तेषामेव समवतरणं वक्तव्यं यत्र संभवति, वक्ष्यति च-'मूढणइयं सुयं कालियं तु' इत्यादि ११। अनुमतम् इति-कस्य व्यवहारादे. किमनुमतं—सामायिकमिति, वक्ष्यति-'तवसंजमो अणुमओ' इत्यादि १२। किं समायिकम् ? 'जीवो गुणपडिवन्नो' इत्यादि वक्ष्यति १३। कतिविधं सामायिकम्? 'सामाइयं च तिविहं, सम्मत्तसुयं तहा चरित्तं च' इत्यादि प्रतिपादयिष्यते १४। कस्य सामायिकमिति, वक्ष्यति 'जस्स सामाणिओ अप्पा' इत्यादि १५। क सामायिकम्, क्षेत्रादाविति, वक्ष्यति-'खित्तकालदिसिगतिभविय' इत्यादि १६। केषु सामायिकमिति, सर्वद्रव्येषु वक्ष्यति-' सव्वगतं सम्मत्तं सुए चरित्तेण पज्जवा सव्वे' इत्यादि १७। कथमवाप्यते ?, वक्ष्यति-'माणुस्सखित्तजाइ' इत्यादि १८। कियच्चिरं भवति ? कालमिति, वक्ष्यति—' सम्मत्तस्स सुयस्स य, छावट्ठी सागरोवमाइ ठिती' इत्यादि १६ कति इति कियन्त. प्रतिपद्यन्ते ? पूर्वप्रतिपन्ना वेति वक्तव्यम्, वक्ष्यति च-'सम्मत्तदेसविरया, पलियस्स असंखभागमित्ता उ' इत्यादि २०। सान्तरम् इति सह अन्तरेण वर्त्तत इति सान्तरम् किं सान्तरं, निरन्तरं वा ?, यदि सान्तरं किमन्तरं भवति ?, वक्ष्यति-' कालमणंतं च सुते, अद्धापरियट्टगो य देसूणो।' इत्यादि २१। अविरहितम् इति अविरहितं कियन्तं कालं प्रतिपद्यन्त इति, वक्ष्यति-' सुतसम्मअगारीणं, आवलिया संखभाग' इत्यादि २२। तथा भवा-इति कियतो भवानुत्कृष्टत. खल्ववाप्यन्ते' सम्मत्तदेसविरता, पलियस्स असंखभागमित्ता उ। अट्ठ भवा उ चरित्ते' इत्यादि २३। आकर्षणमाकर्ष., एकानेकभवेषु ग्रहणानीति भावार्थ 'तिराह सहस्सपुहुत्तं, सयपुहुत्तं च होति विरईए। एगभवे आगरिसा' इत्यादि, २४। स्पर्शना वक्तव्या, कियन्ते सामायिकवन्त स्पृशन्तीति, वक्ष्यति-'सम्मत्तचरणसहिआ, सव्वं लोगं फुसे निरवसेसं।' इत्यादि २५। निश्चिता उक्तिर्निरुक्तिर्वक्तव्या—' सम्मद्दिट्ठि अमोहो, सोही सब्भावदंसणं बोही।' इत्यादि, वक्ष्यति २६। अयं तावद्गाथाद्वयसमुदायार्थ । अवयवार्थ तु प्रतिद्वारं प्रपञ्चेन वक्ष्याम.। अत्र कश्चिदाह—पूर्वमध्ययनं सामायिकं तस्यानुयोगद्वारचतुष्टयमुपन्यस्तम्, अतस्तदुपन्यास एव उद्देशनिर्देशावुक्तौ, तथौघनामनिष्पन्ननिक्षेपद्वये च, अतः पुनरनयोरभिधानमयुक्तमिति। अत्रोच्यते—तत्र हि अत्र द्वारद्वयोक्तयोरनागतग्रहणं द्रष्टव्यम्, अन्यथा तद्ग्रहणमन्तरेण द्वारोपन्यासादय एव न स्यु.। अथवा—द्वारोपन्यासादिविहितयोस्तत्राभिधानमात्रमिह त्वर्थानुगमद्वाराधिकारे विधानतो लक्षणतश्च व्याख्या क्रियत इति। आह—यद्येवं निर्गमो न वक्तव्य', तस्यागमद्वार एवाभिहितत्वात्, तथा च 'आत्मागम' इत्याद्युक्तम्, ततश्च तीर्थकरगणधरेभ्य एव निर्गतमिति गम्यते इति। उच्यते—सत्यं किं तु इह तीर्थकरगणधराणामेव निर्गमोऽभिधीयते, कोऽसौ तीर्थकरो गणधराश्चेति वक्ष्यते—वर्धमानो गौतमादयश्चेति। यथा च तेभ्यो निर्गतं तथा क्षेत्रकालपुरुषकारणप्रत्ययविशिष्टमित्यतोऽदोष इति। आह—यद्येवं लक्षणं न वक्तव्यम् उपक्रम एव नामद्वारे क्षायोपशमिकभावेऽवतारितत्वात्, प्रमाणद्वारे च जीवगुणप्रमाणे आगमे इति। उच्यते-तत्र निर्देशमात्रत्वात्, इह तु प्रपञ्चतोऽभिधानाददोष.। अथवा-तत्र श्रुतसामायिकस्यैवोक्तम्, इह तु चतुर्णामपि लक्षणाभिधानाददोष.। आह—नयाः प्रमाणद्वार एवोक्ताः कि—मिहोच्यन्ते ?, स्वस्थाने च मूलद्वारे वक्ष्यमाणा एवेति। उच्यते—प्रमाणद्वारोक्ता एवेह व्याख्यायन्ते। अथवा—प्रमाणद्वाराधिकारात्तत्र प्रमाणभावमात्रमुक्तम् इह तु स्वरूपावधारणमवतारो वाऽऽरभ्यते, एते च सर्व एव सामायिकसमुदायार्थमात्रविषयाः प्रमाणोक्ता उपोद्घातोक्ताश्च नया सूत्रविनियोगिन', मूलद्वारोपन्यस्तनयास्तु सूत्रव्याख्योपयोगिन एवेति। आह—प्रमाणद्वारे जीवगुणे सामायिकं ज्ञानं चेति प्रतिपादितमेव, ततश्च किं सामायिकमित्याशङ्कानुपपत्तिः। उच्यते—जीवगुणत्वे ज्ञानत्वे च सत्यपि किं तज्जीव एव आहोस्विद् जीवादन्यदिति संशयः तदुच्छित्त्यर्थमुपन्यासाददोषः। आह—नामद्वारे क्षायोपशमिकं सामायिकमुक्तं तत्तदावरणक्षयोपशमाल्लभ्यत इति गम्यत एव, अत. कथं लभ्यत इत्यतिरिच्यते, न, क्षयोपशमलाभस्यैवेह शेषाङ्गलाभचिन्तनादिति। एवं यदुपक्रमनिक्षेपद्वारद्वयाभिहितमपि पुन. प्रतिपादयति अनुगमद्वारावसरे तदशेषं,निर्दिष्टनिक्षिप्तप्रपञ्चव्याख्यानार्थमिति। आह—उपक्रम. प्राय. शास्त्रसमुत्थानार्थ उक्त, अयमप्युपोद्घात' शास्त्रसमुद्धानप्रयोजन एवेति कोऽनयोर्भेद.?, उच्यते-उपक्रमो ह्युद्देशमात्रनियत',तदुद्दिष्टवस्तुप्रबोधनफलस्तु प्रायेणोपोद्घात अर्थानुगमत्वात् इत्यलं विस्तरेण प्रकृतमुच्यते।

तत्रोद्देशद्वारावयवार्थप्रतिपादनायेदमाह—

नामं ठवणा दविए, खेत्ते काले समासे उद्देसे।
उद्देसुद्देसम्मि अ, भावम्मि अ होइ अट्ठमओ ॥१४२॥

तत्र नामोद्देश -यस्य जीवादेरुद्देश इति नाम क्रियते, नाम्नो वा उद्देश नामोद्देश। स्थापनोद्देश. स्थापनाभिधानम्। उद्देशान्यासो वा,द्रव्ये इति-द्रव्यविषय उद्देशो द्रव्योद्देश, स च आगमनोआगमज्ञशरीरेतरव्यतिरिक्त. द्रव्यस्य द्रव्येण द्रव्ये वा उद्देशो द्रव्योद्देश, द्रव्यस्य--द्रव्यमिदमिति, द्रव्येण-

द्रव्यपतिरथमिति , द्रव्ये-सिंहासने राजा , चूते कोकिल , गिरौ मयूर इति । एवं क्षेत्रविषयोद्देशोऽपि वक्तव्य , एवं कालविषयोऽपीति । ' समास.-सङ्क्षेपस्तद्विषय उद्देश. समासोद्देश , स च अङ्गश्रुतस्कन्धाध्ययनेषु द्रष्टव्य. । तत्र अङ्गसमासोद्देश —अङ्गम् , अङ्गी तदध्येता तदर्थज्ञ इत्येवमन्यत्रापि योजना कार्या । उद्देश.—अध्ययनविशेष तस्य उद्देश उद्देशोद्देश , तद्विपर्ययश्च उद्देश इति, स चोद्देशोद्देशोऽभिधीयते-उद्देशवान् तदध्येता तदर्थज्ञो वेति । भावविषयश्च भवति उद्देश. अयमक इति , स चायं-भाव. भावी भावज्ञो वेति गाथार्थ । आव० १ अ० ।

( ३१ ) उद्देशादीनि द्वाराणि । अथ प्रेरकः प्राह—

दारोवन्नासाइसु, निक्खेवे ओहनाम निप्फन्ने ।
उद्देसो निद्देसो, भणिओ इह किं पुणग्गहणं ॥ ९७६ ॥

आह-नन्वसावावश्यकशास्त्रस्य प्रथममध्ययन सामायिकम् , तस्य च चत्वार्यनुयोगद्वाराणि , इत्यादिना द्वारोपन्यासादिषु प्रक्रमेषु । यदि वा-ओघनिष्पन्ननामनिष्पन्नयोर्निक्षेपयोः सामान्यनामरूप उद्देश. , विशेषनामरूपश्च निर्देशोऽनकश -प्रोक्त एव, किमर्थमिहोपोद्धातनिर्युक्तौ पुनरपि तयोर्ग्रहणम् ? इति ।

अत्रोत्तरमाह—

इह विहियाणमणागय-गहणं तत्थन्नहा कहं कुणउ ।
तेसिं गहणमकाउं, दारन्नासाइकज्जाइं ॥ ९७७ ॥

इहोपोद्धाते आद्यद्वारद्वयविहितयोरेवोद्देश-निर्देशयोस्तत्र द्वारोपन्यासादौ शास्त्रकृताऽनागतमेव ग्रहण कृतम् , अन्यथा हि तयो सामान्यविशेषनामरूपयोरुद्देशनिर्देशयोस्तत्र ग्रहणमकृत्वा कथं निराश्रयाणि द्वारोपन्यासादिकार्याणि करोतु ? इति ।

प्रतिविधानान्तरमाह—

अहवा तत्थुद्देसो, निद्देसो वि य कओ इहं तेसिं ।
अत्थाऽणुगमावसरे, विहाणवक्खाणमारद्धं ॥ ९७८ ॥

अथवा-तत्र द्वारोपन्यासादौ सामान्यविशेषाभिधानरूप उद्देशो, निर्देशश्च कृत इत्युपगमच्छाम केवलमिहार्थानुगमावसरेऽर्थव्याख्याप्रस्तावे तयो पूर्वविहितयोरुद्देशनिर्देशयोर्विधानतो-भेदतो व्याख्यानमारब्धमित्यदोष इति ।

अन्ये तु ब्रुवते । किम् ? , इत्याह—

अन्ने उ विसेसमिहं, भणंति नोद्देसबद्धमेयं ति ।
जाणावियमज्झयणं, समासदारावयारेणं ॥ ९७९ ॥

अन्ये तु पूर्वविहितयोरपीह विशेषमाचक्षते नोद्देशकबद्धमिदमध्ययनमित्येतज्ज्ञापित किल । कुत ? , अङ्गश्रुतस्कन्धाध्ययनसमासद्वारावतारात् । इदमत्र हृदयम्— 'नाम ठवणा दविए , खेत्ते काले समासे उद्देस । उद्देसुद्देसम्मि य , भावम्मि य होइ अट्ठमओ ॥ १ ॥ ' इति पुरस्तादिहैव वक्ष्यमाणगाथायामुद्देशोऽष्टविधोऽभिधास्यते , तथा ' एमेव य निद्देसो ' इत्यादिगाथाया निर्देशोऽपि चाष्टविधो वक्ष्यते । तत्र च समासद्वारे सङ्क्षेपाभिधायक नाम समासोद्देश इति व्याख्यास्यते, तद्यथा--अङ्गम् , श्रुतस्कन्ध अध्ययनम् , उद्देश इत्यादि । तत्रेद सामायिकाध्ययन किलाध्ययनोद्देशो भवति , न तूद्देशोद्देश , उद्देशरहितत्वात् । एतच्च तत्र व्याख्यास्यते । तदत्रोद्देशनिर्देशयोरष्टविधत्वभणनेन षष्ठं समासद्वारमायातम् । अनेन च समासद्वारेण विचार्यमाणेदमध्ययनमुद्देशरहितमिति ज्ञापितम् । एतच्चेहोद्देशनिर्देशाभणनेन निर्मूलस्य समासद्वारस्यैवाऽऽभावात् किल न ज्ञायेतेति ।

एतच्च यत्किञ्चिदेव , इति दर्शयति—

अंगाइ पण्हकाले, कालिय सुयमाणसमवयारे य ।
तमणुद्देसयबद्धं, भणियं चिय इह किमब्भहियं ? ॥ ९८० ॥

आवश्यकं किमङ्गम् , अङ्गानि ? इत्यादि, प्रश्नकाल एव कालिकश्रुतपरिमाणसङ्ख्यावतारे चाध्ययनसङ्ख्यावतारात् , नोद्देशक. नोद्देशका इति निषेधाच्च तत् सामायिकाध्ययनमुद्देशकबद्धं न भवतीति भणितमेव , इह किमभ्यधिकमज्ञातं ज्ञायते ? । तस्माद् यत्किञ्चिदेवेदम् । अत एतयोरिह भणनं व्याख्यानार्थमेवेति स्थितम् । तदेवं कृतोद्देशनिर्देशविषया चालना , प्रत्यवस्थानं च ॥ अथ निर्गमनं निर्गम । स च कुत. सामायिकम् निर्गतम् ? इत्येवंरूपो वक्ष्यते ।

( ३२ ) अत्राक्षेपपरिहारौ प्राह—

नणु निग्गमो गउ च्चिय, अत्ताणंतरपरंपरागमओ ।
तित्थयराईहिंतो, आगयमेय परंपरया ॥ ९८१ ॥

ननु पूर्वमागमद्वार एवात्माऽनन्तरपरम्परागमतस्तीर्थकरादिभ्य. परम्परया समागतमेतत् सामायिकमित्यभिधानात् तीर्थकरादिभ्यो निर्गमनमस्य , इत्यवगतत्वाद् गतार्थ एव निर्गम , किं पुनरिहोपात्तः ? इति ।

परिहारमाह—

इह तेसिं चिय भण्णइ, निद्देसो निग्गमो जहा तं च ।
उवयातं तेहिंतो , खेत्ताइविसेसियं बहुहा ॥ ९८२ ॥

तेषामेव तीर्थकरादीना सामान्योद्देशमात्रेण प्रागवगतानामिह विशेषाभिधानरूपो निर्देशो भण्यते , यथा श्रीमन्महावीरतीर्थकरादेतत् सामायिकमर्थतो निर्गतम् , सूत्रतस्तु गौतमादिगणधरेभ्यो निर्गतम् . तथा निर्गमश्चेह मिथ्यात्वाविरत्यादितमसस्तेषां तीर्थकरादीनामत्रोच्यते ' अवरविदेहे गामस्स चिंतओ ' इत्यादिना ग्रन्थेन । तथा, तच्च सामायिकं बहुधा—अनेकधा क्षेत्रकालपुरुषकारणप्रत्ययविशेषित तेभ्यस्तीर्थकरादिभ्यो यथोपयानमागतम् , तच्चेह भण्यत इति विशेष ।

अथ लक्षणद्वारविषयमाक्षेपमाह—

अज्झयणलक्खणं नणु,खओवसमियं गुणप्पमाणे वा ।
नाणागमाइगहणे,भणियं किमिहं पुणो गहणं ॥ ९८३ ॥

लक्ष्यतेऽनेनेति लक्षणम् , तच्च—'सद्दहण जाणणा खलु ' इत्यादिना सामायिकस्य सावद्ययोगविरत्यादिकं वक्ष्यति । अत्र पर प्रेरयति—नन्वध्ययनस्याऽस्य क्षायोपशमिको भावो लक्षणम्, इति प्रागुपक्रमभेदरूप षड नाम्नि क्षायोपशमिके भावे समवतारादर्शपरया भणितमेव । अथवा—

'गुणप्रमाणे ज्ञानमिदम्, तत्राप्यागम.' इत्याद्यभिधानादिदं क्षायोपशमिकभावरूपं लक्षणमर्थापत्त्या ऽभिहितमेव ?, आगमस्य क्षायोपशमिकभावलक्षणत्वात्, किमिहानुगमे लक्षणस्य पुनर्ग्रहणम् ? इति ।

परिहारमाह—

निद्देसमेत्तमुत्तं, वक्खाणिज्जइ सवित्थरं तमिह ।

अहवा सुयस्स भणियं,लक्खणमिह तं चउण्हं पि॥९८४॥

निर्देशमात्रमेव लक्षणस्य प्रागुक्तम्—निर्दिष्टमेव पूर्वं लक्षणम्, न तु तथाविधव्याख्यया व्याख्यातमित्यर्थः । इह त्वनुगमे व्याख्यानप्रस्तावात् सविस्तरं तद् व्याख्यायते । अथवा—स क्षायोपशमिको भावः श्रुतसामायिकस्यैव पूर्वं लक्षणमुपपद्यते, इह तु श्रद्धानज्ञानदेशविरति—सर्वविरतिरूपं चतुर्णामपि सम्यक्त्वश्रुतदेशचारित्रसर्वचारित्रसामायिकानां लक्षणमुच्यत इति विशेषः ।

अथ नयद्वारे आक्षेपमाह—

भणिया नयप्पमाणे, भणंतीहं नया पुणो कीस ? ।

मूलद्दारं य पुणो,एएसिं को णु विणिओगो ॥९८५॥

ननु पूर्वं नयप्रमाणे भणिता एव नयाः, किमिहोपोद्धाते पुनरपि भण्यन्ते, तथा, वक्ष्यमाणे चतुर्थे नयलक्षणे मूलानुयोगद्वारे भणिष्यन्ते । तदमीषां पूर्वमनेकशो भणितानां पुनर्भणने को विनियोगः किं फलम् ?, न किञ्चिदित्यर्थः ।

अत्र परिहारमाह—

जे चिय नयप्पमाणे, ते चिय इहइं सवित्थरा भणिया ।

जं तमुवक्कममेत्तं, वक्खाणमिणं अणुगमो त्ति ॥९८६॥

य एव प्राक् प्रमाणद्वारे संक्षेपमात्रेण नया उक्ताः, त एवेह सविस्तरा भणिताः, अग्रे भणिष्यन्त इति भावः । कुतः ? , यतस्तदध्ययनोपक्रमणरूपमुपक्रममात्रम्, एतत् त्वर्थानुगम इति कृत्वा नयानां व्याख्यानमिति ।

परिहारान्तरमाह—

अहवा तत्थ पमाणं, इहं सरूवावहारणं तेसिं ।

तत्तो वक्कंता वा, इह तदणुमयावयारोऽयं ॥ ९८७ ॥

अथवा-प्रमाणद्वाराधिकारात् प्रमीयन्ते वस्त्वेभिरिति प्रमाणं—भावमात्रं नयानां तत्राभिहितम् । इह तु-उपाद्धातनिर्युक्त्यनुगमे तेषां सरूपव्याख्यानम् । अथवा—तत्रोपक्रान्ताः, इह त्वयं तदनुमतावतारश्चिन्त्यते । इदमुक्तं भवति-प्रागुपक्रमाधिकारादध्ययनं नयैरुपक्रम्यते, इह तु कस्य नयस्य किं सामायिकमनुमतम् ? इति चिन्त्यते, तथा च वक्ष्यति-" नव संजमो अणुमओ, निग्गंथं पवयणं च ववहारो । सद्दुज्जुसुयाणं पुण, निव्वाणं संजमो चेव ॥ १ ॥" तेषां च नयानामिह समवतरणं समवतारो यत्र संभवति तत्र दर्शनीयः, यद् वक्ष्यते-' मूढनइयं सुयं का-लियं तु न नया समोयरंति इहं । ' इत्यादीनि ।

(३३) मूलद्वारनयैः सहामीषां भेदमाह—

सामाइयसमुदाय-त्थमेत्तवावारतप्परा एए ।

मूलद्दारनया पुण,सुत्तप्फासोवओगपरा ॥९८८॥

सर्वेऽपि चैते नय-प्रमाणोक्ता उपोद्घ.तनिर्युक्तिद्वारोक्ताश्च नयाः सामायिकसमुदायार्थमात्रे व्याप्रियन्ते, न तु सूत्रार्थविनियोगिनः । वक्ष्यमाणास्तु मूलद्वारनयाः प्रतिपदं सूत्रार्थविषया इति विशेष इति ।

अथ किंद्वारे आक्षेपपरिहारौ प्राऽऽह—

जीवगुणो नाणं ति य,भणिए इह किं ति का पुणो संका ।

तं चिय किं जीवाओ, अणमणन्नं ति संदेहो ॥ ९८९ ॥

ननु प्रमाणद्वारेऽदः गुणप्रमाणे सामायिकं जीवगुणः तत्रापि ज्ञानम्, इत्याद्युक्तेऽत्र किं सामायिकम् ?, इति का शङ्का येन किंद्वारमुच्यते ?, इत्याह— '' तं चिय ' त्यादि, तदेव सामायिकं किं जीवादन्यत्, अनन्यद् वा ? इति संदेहः, तदपनोदार्थमिह किंद्वारोपन्यास इति ।

अथ कथं द्वारविषयावाक्षेप-परिहारौ प्राह—

भणिए खओवसमियं-ति किं पुणो लब्भए कहं तं ति ।

इह सो चिय चिंतिज्जइ,किह लब्भए सो खओवसमो॥९९०

ननु नामद्वारे क्षायोपशमिकं सामायिकम्—इत्युक्ते ' तदावरणक्षयोपशमात् तल्लभ्यते ' इत्यर्थादुक्तमेव भवति । अतः ' कथं तल्लभ्यते ? ' इत्यर्थप्रतिपादकं किमितीह पुनरपि कथं द्वारमुच्यते ? । अत्रोत्तरमाह—इह कथमिति द्वारे स एव क्षयोपशमश्चिन्त्यते । कथम् ?, इत्याह—कथं लभ्यते स क्षयोपशमः ?, इत्येष विशेषः ।

अथ द्वारबाहुल्याद् ग्रन्थविस्तरमवलोक्य संक्षिपन्नाह-

किं बहुणा जमुवक्कम-निक्खेवेसु भणियं पुणो भणई ।

अत्थाणुगमावसरे, तं वक्खाणाहिगारत्थं ॥ ९९१ ॥

किं बहुना ?, सर्वेष्वप्येतेषूपोद्घातद्वारेषु यदुपक्रम-निक्षेपयोर्भणितमपि पुनरप्याचार्यो भणति, तदिहार्थानुगमावसरे पूर्वोपक्रान्तनिक्षिप्तवस्तुव्याख्यानाधिकारार्थम्, इत्येवं भावनीयमिति ।

तदेवमुपोद्घातोक्तेष्वेतेषूद्देशादिद्वारेषु प्रत्येकं विशेषनश्चालनाप्रत्यवस्थाने अभिधाय, इदानीं सामान्येन सर्वस्याऽप्युपोद्घातस्य चालनामाह—

सत्थसमुत्थाणत्थो, पायेणोवक्कमो तहाऽयं पि ।

सत्थस्सोवग्घाओ, को एएसिं पइविसेसो ॥ ९९२ ॥

आह-ननु उपक्रमोऽपि प्रायः शास्त्रसमुत्थानार्थमेव, तत्रानुपूर्व्यादिभिर्द्वारैरुपक्रम्य शास्त्रं नामादिन्यासव्याख्यानयोग्यतामानीयत इत्यर्थः, तथाऽयमप्युपोद्घातः शास्त्रस्योद्देशनिर्देशनिर्गमादिभिर्द्वारैरुत्थानमुपवर्ण्य व्याख्यानयोग्यतामुपकल्पयति, इति कोऽनयोर्विशेषः ? न कश्चित् । ततः एतयोर्द्वयोरन्यतर एव वाच्य इत्यभिप्राय इति ।

प्रत्यवस्थानमाह—

उद्देसमेत्तनियओ, उवक्कमोऽयं तु तव्विवोहत्थं ।

पाएणोवग्घाओ,नणु भणिओऽयं जओऽणुगमो॥९९३॥

उद्देशमात्रनियतः एवोपक्रमः—नामस्थापनाद्रव्यादिभिः, आनुपूर्व्यादिभिश्च भेदैरुपक्रमः शास्त्रमुद्दिशत्येव न तु व्याख्यानयतीत्यर्थः । अयं पुनरुपोद्घातः प्रायेण तस्य शास्त्रस्य विबोधार्थो-व्याख्यानार्थः । कुत इदं ज्ञायते ?, इत्याह—ननु यस्मादयं प्रस्तुतोऽनुगमो भणितः, उपोद्घातश्चानुगम-

भेद एव, अनुगमस्य च व्याख्यानरूपत्वात् सिद्धमुपोद्घातस्य व्याख्यानार्थत्वमिति

परिहारान्तरमाह—

नासस्स व संबंधण-मुवक्कमोऽयं तु सुत्तवक्खाए ।
संबंधोवग्घाओ, भएणइ जं सा तदंतम्मि ॥ ६६४ ॥

अथवा-न्यासस्याऽध्ययनसंबन्धिनो नामादिनिक्षेपस्य संबन्धन तद्योग्यताऽऽपादनमुपक्रम उच्यते, तदन्ते तत्प्रतिपादनात् । अयं तूपोद्घात सूत्रव्याख्याया. सवन्धस्तद्योग्यताव्यवस्थापनरूप यद्—यस्मात् तदन्ते—उपोद्घातान्ते सैव सूत्रव्याख्या भएयते, इत्युपक्रमोपोद्घातयोर्विशेष. । तदेवमभिहितं संक्षेपेणापोद्घातनिर्युक्तेर्भावार्थमात्रम् । विशे० ।

[ ३४ ] अथ विस्तरार्थमभिधित्सुर्भाष्यकार उद्देशनिर्देशविषयमाक्षेप चेतस्याशङ्क्य परिहार तावदाह-

उद्देट्ठुं निद्दिस्सइ, पायं सामन्नओ विसेसो त्ति ।
उद्देसो तो पढमं, निद्देसोऽणंतरं तस्स ॥ १४८६ ॥

ननु कस्मात् प्रथममुद्देशस्ततो निर्देश. ? इत्याशङ्क्य परिहरति—'उद्देट्ठु ' मित्यादि, सामान्येन हि पूर्वं वस्तूद्दिश्य तत पश्चाद् विशेषतो निर्दिश्यते, इति शास्त्रे लोके च स्थिति । तथा—ज्ञानमपि प्राय प्रथम वस्तुन सामान्याकारग्राहकमुत्पद्यते, ततो विशेषाकारग्राहकम् । तत —तस्मात् कारणाद् वस्तुन. सामान्याभिधानलक्षण. प्रथममुद्देश ततस्तस्यैव विशेषाभिधानरूपो निर्देश इति गाथार्थ. । विशे० ।

( ३५ ) एतानि द्वाराणि क्रमशो व्याख्यानयामि तत्रानुमतद्वारम् । कस्य जीवस्य किं सामायिकम् । साम्प्रतं 'कस्य सामायिक भवति ? ' इति द्वारे प्रस्तुते यस्य तद् भवति तदभिधित्सया प्राह—

जस्स सामाणिओ अप्पा, संजमे नियमे तवे ।
तस्स सामाइयं होइ, इइ केवलिभासियं ॥ २६७६ ॥
जो समो सव्वभूएसु, तसेसुं थावरेसु य ।
तस्स सामाइयं होइ, इइ केवलिभासियं ॥ २६८० ॥

यस्य सामायिक निसंनिहितोऽप्रोषित इत्यर्थ , आत्मा जीव. । क्व ? । संयमे—मूलगुणरूपे, नियम उत्तरगुणात्मके, तपसि—अनशनादिलक्षणे । तस्यैवंभूतस्याप्रमादिन. सामायिक भवतीत्येव केवलिभिर्भाषितमिति । तथा, य समो मध्यस्थ आत्मानमिव पर पश्यतीत्यर्थ., सर्वभूतेषु सर्वप्राणिषु त्रसेषु-द्वीन्द्रियादिषु, स्थावरेषु च पृथिव्यादिषु तस्य सामायिक भवतीत्येतच्च केवलिभिर्भाषितमिति ।

साम्प्रत फलप्रदर्शनद्वारेणास्य करणविधानं प्रतिपादयन्नाह-

सावज्जजोगं परिरक्खणट्ठा,
सामाइयं केवलियं पसत्थं ।
गिहत्थधम्मा परमं ति नच्चा,
कुज्जा वुहो आयहियं परत्था ॥ २६८१ ॥

सावद्ययोगपरिरक्षणार्थं सामायिकं केवलिक-परिपूर्णं—प्रशस्तं-पवित्रम् , एतदेव हि गृहस्थधर्मात् परमं-प्रधानं; ज्येष्ठम्, इत्येवं ज्ञात्वा कुर्यात् वुधो-विद्वानात्महितम्-आत्मोपकारकम् इहलोके, परत्र च । अथवा—परो मोक्षस्तदर्थं कुर्याद् , नतु सुरलोकाद्यर्थम् । इति निर्युक्तिरूपकत्रयार्थ. ।

अथ भाष्यगाथा—

केवलियं पडिपुन्नं, परमं जेट्ठं गिहत्थधम्माओ ।
तं हियमिओ परत्था, सिवं परं वा तदत्थं वा ।२६८२।

गतार्थाः नवरम् 'तं हियमिओ परत्थ' त्ति-तत् सामायिकमात्मनो हितम् । क्व ? इत्याह-इत.—इहलोके, परत्र-परलोके चेति ।

अथ वक्ष्यमाणगाथाया प्रस्तावना कुर्वन् भाष्यकार एवाह-

गिहिणा वि सव्ववज्जं, दुविहं तिविहेण छिन्नकालं तं ।
कायव्वमाह सव्वे, को दोसो भण्णएऽणुमई ॥ २६८३॥

इह परिपूर्णसामायिककरणशक्त्यभावे- सम्पूर्णसंयमाङ्गीकारभावसार्थ्याभावे गृहिणाऽपि-गृहस्थेनाऽपि सता तत्- सामायिकं, छिन्नकालं- द्विघटिकादिकालमानोपेतं सर्ववर्जं- सर्वशब्दोच्चारणरहितं द्विविध त्रिविधेन कर्त्तव्यमेव । आह-पर:-सर्वे—सर्वशब्दोच्चारणे को दोष , येन सर्ववर्जम्-इति विशिष्यते ? । भएयतेऽत्रोत्तरम्-सर्वशब्दोच्चारणं कुर्वतस्तस्य सावद्ययोगानुमतिलक्षणो दोष., तेन हि गृहादिषु प्रागनेक आरम्भा प्रवर्तिता सन्ति, तदनुमतिश्च सामायिके तिष्ठतस्तस्यानुवर्तत एव तत. सर्वसावद्ययोगनिषेधं कुर्वतो गृहस्थस्य व्रतभङ्ग एव स्यादिति भाव. । इति गाथाद्वयार्थ. । (विशे०)( सर्वविरतिविषया 'सव्वविरइवाइ' शब्देऽस्मिन्नेव भागे व्याख्या गता । )

अत्रापेक्ष-परिहारौ भाष्यकार प्राह-

आहाणुमई व न सो, किं पच्चक्ख त्ति भन्नइ न सत्तो ।
पुव्वपउत्तियसाव-ज्ज कम्मसाइज्जणं मोत्तुं ॥ २६८५॥

वाशब्दोऽप्यर्थ , आह पर —ननु यथा सावद्ययोगस्य करणकारणे तथाऽनुमतिमप्यसौ किमिति न प्रत्याख्याति ? । भएयतेऽत्रोत्तरम्-नासौ गृही शक्त —समर्थ । किं कर्तुम्? । मोक्तुम् । किं तत् ? इत्याह-पूर्वप्रयुक्तस्य प्राग् गृहादिषु प्रवर्तितस्य सावद्यकर्मण सावद्ययोगस्य ' साइज्जण ' ति- अभिष्वङ्गनम् प्रतिवन्धविधानमित्यर्थ । शक्यमेव ह्यनुष्ठानं विधीयते, नाशक्यम् । पूर्वप्रवृत्ते च सावद्ययोगे गृहस्थोऽभिष्वङ्गं मोक्तुं न शक्नोति । अतो न सावद्ययोगानुमतिमसौ प्रत्याख्याति, व्रतभङ्गप्रसङ्गादिति ।

पुनरपि पराभिप्रायमाशङ्क्य परिहरन्नाह—

णणु तिविहं तिविहेणं,पच्चक्खाणं सुयम्मि गिहिणो वि।
तं थूलवहाईणं, न सव्वसावज्जजोगाणं ॥ २६८६ ॥

ननु गृहस्थस्य सावद्ययोगानुमतिप्रत्याख्याननिषेधं कुर्वतस्तव श्रुतविरोध , यतस्त्रिविधं त्रिविधेन प्रत्याख्यान श्रुते गृहिणोऽपि भणितम्-इति शेष , तथा च भगवत्यामुक्तम्-"समणोवासगस्स णं भंते ! पुव्वमेव थूले पाणाऽइवाए अपच्चक्खाए भवइ, से ण भंते ! पच्छा पच्चाइक्खमाणे किं करेइ ? । गोयमा ! तीयं पडिक्कमइ, पडुप्पन्नसंवरेइ, अणागयं पच्चक्खाइ । तीयं पडिक्कममाणे किं तिविह तिविहेण पडिक्कमइ, तिविहं दुविहेण पडिक्कमइ, तिविहं एगविहेण पडिक्कमइ? ०जाव एक्कविह एक्कविहेण

पडिकमइ?।गोयमा!तिविहं तिविहेणं पडिकमइ०जाव एकविहं एक्कविहेण वा पडिकमइ"। तदेवमिह श्रुते त्रिविधं त्रिविधेनापि गृहस्थस्य प्रत्याख्यानमुक्तम् , तत् कथमस्य निषेधो भवता विधीयते? इति । सत्यम् , किन्तु त्रिविधं त्रिविधेन श्रुतोक्तं प्रत्याख्यानं स्थूलवधमृषावादादीनामेव द्रष्टव्यम् , यथा कोऽपि सिंहसरभगजादीना वधादीनतिवादस्त्रिविधं त्रिविधेन प्रत्याख्याति , न पुनस्तत् सामान्येन सावद्ययोगविषयमवगन्तव्यमिति ।

अतो विशेषित एव क्वचिद् विवक्षितसावद्ययोगे त्रिविधं त्रिविधेनापि प्रत्याख्यानमदोषाय भवतीति दर्शयति-

जइ किंचिदप्पओयणं, मप्पप्पं वा विसेसियं वत्थुं ।
पच्चक्खेज्ज न दोसो, सयंभुरमणाइ मच्छु व्व ॥२६८७॥
जो वा निक्खमिउमणो, पडिमं पुत्ताइ संतइनिमित्तं ।
पडिवज्जेज्ज तओ वा,करेज्ज तिविहं पि तिविहेणं॥२६८८॥
जो पुण पुव्वारद्धा-णुज्झिय सावज्जकम्म संताणो ।
तदणुमइ परिणइं सो,न तरइ सहसा नियत्तेउं ॥२६८९॥

न विद्यते प्रयोजनं येन तदप्रयोजनं काकमांसादिकं विशेषितं वस्त्वाश्रित्य , अप्राप्यं वा मनुष्यक्षेत्राद् बहिर्दन्तिदन्तचित्रकचर्मादिकं किमपि विशिष्टं वस्त्वधिकृत्य यदि त्रिविधं त्रिविधेन प्रत्याचक्षीत तदा न कश्चिद् दोष । *यथा कश्चित् स्वयम्भूरमणादिमत्स्यानधिकृत्य तद्वधं त्रिविधं त्रिविधेन प्रत्याचष्ट इति* । यो वा व्रतं जिघृक्षु पुत्रसन्तत्यादिनिमित्तं विलम्बमान एकादशीं प्रतिमा प्रतिपद्यते तको वाऽसौ त्रिविधं त्रिविधेनापि सावद्ययोगप्रत्याख्यानं कुर्याद् न दोष इति । य पुन. पूर्वारब्धानुज्झितसावद्यकर्मसंतानस्तदनुमतिपरिणतिं न शक्नोति सहसा निवर्तयितुम् , अतस्त्रिविधं त्रिविधेन नासौ प्रत्याख्याति, इति गाथापञ्चकार्थ. ।

(३६) तथापि गृहस्थसामायिकमपि परलोकार्थिना कार्यमेव, तस्यापि-विशिष्टफलसाधकत्वादित्याह—

सामाइयम्मि उ कए, समणो इव सावओ हवइ जम्हा ।
एएण कारणेणं, बहुसो सामाइयं कुज्जा ॥ २६९० ॥

कृते पुनर्गृहस्थ सामायिकेऽपि श्रमण इव श्रावको भवति, यस्मात् प्रायोऽशुभयोगरहितत्वाद् बहुतरकर्मनिर्जरोऽसौ भवतीति भाव । अनेन कारणेन बहुशोऽनेकधा सामायिक कुर्याद् मध्यस्थो भूयादिति ।

मध्यस्थस्यैव लक्षणमाह-

जो न विवज्जइ रागे, न वि दोसे दोण्ह मज्झयारम्मि ।
सो होइ उ मज्झत्थो,सेसा सव्वे अमज्झत्था ॥२६९१॥

सुगता, नवरं मध्ये रागद्वेषयोरन्तराले तिष्ठतीति मध्यस्थ. न रागेण स्पृश्यते, नापि द्वेषेणेति भाव. । इति निर्युक्तिगाथाद्वयार्थ । विशे० ।

आकर्षद्वारमाह—

तिण्हँ सहस्सपुहत्तं सयं पुहत्तं च होइ विरईए ।
एगभवे आगरिसा, एवइया हुंति नायव्वा ॥ २७८० ॥

आकर्षणमाकर्षस्तत्प्रथमतया, मुक्तस्य वा ग्रहणमित्यर्थ । तत्र त्रयाणां सम्यक्त्वश्रुतदेशविरतिसमायिकानामेकभवे सहस्रपृथक्त्वमाकर्षाणां भवति । विरतेस्तु चारित्रस्यैकभवे शतपृथक्त्वमाकर्षाणां भवतीति । एवमेत उत्कृष्टत एकभविका आकर्षा. प्रोक्ता., जघन्यतस्त्वेक एव सर्वेषामाकर्ष इति ।

नानाभवगतानाह—

दोण्ह पुहत्तमसंखा, सहसपुहत्तं च होइ विरईए ।
नाणभवे आगरिसा,सुए अणंता उ नायव्वा ॥२७८१॥

द्वयोः सम्यक्त्वदेशविरतिसामायिकयोर्नानाभवेषूत्कृष्टतोऽसंख्येयानि सहस्रपृथक्त्वान्याकर्षाणां सम्भवन्ति । एकं हि सहस्रपृथक्त्वमसंख्येयैस्तत्प्रतिपत्तिभवैर्गुणितमसङ्ख्येयानि सहस्रपृथक्त्वानि भवन्ति । तथा विरतेश्च चारित्रस्य नानाभवेष्वाकर्षाणां सहस्रपृथक्त्वं भवति श्रुते तु सामान्यनादरात्मकेऽनन्तेषु भवेष्वनन्ता आकर्षा भवन्ति । इति निर्युक्तिगाथाद्वयार्थ. । विशे० । प्रव० । आ० म० । आ० चू० । ( उद्देशद्वारम् ' उद्देस ' शब्दे द्वितीयभागे ७६६ पृष्ठे उक्तम् । )

(३७) अथ कतिविधं सामायिकम् ? इति द्वारं व्याचिख्यासुराह—

सामाइयं पि तिविहं, सम्मत्तसुयं तहा चरित्तं च ।
दुविहं चेव चरित्तं, अगारमणगारियं चेव ॥ २६७३ ॥

त्रिविधम्—त्रिभेदं सामायिकम् , अनुस्वारलोपात् सम्यक्त्वम्—सम्यक्त्वसामायिकम् । श्रुतम्-श्रुतसामायिकम् । तथा चारित्रम्-चारित्रसामायिकम् । चशब्द. प्रत्येकं स्वगतानेकभेदसूचनार्थ. । तत्र संक्षेपेण मूलभेदतश्चारित्रं चारित्रसामायिक द्विविधमेव-द्विभेदमेव, तद्यथा-अगा.-वृक्षास्तैः कृतमगारं-गृहं तदस्यास्तीति मतुब्लोपादगारो-गृहस्थस्तस्येदमगारिकं-देशचारित्रसामायिकं देशविरतिसामायिकमिति यावत् । एतच्च पुनरप्यनेकभेदम् , देशविरतेश्चित्ररूपत्वात् । न विद्यतेऽगारं-गृहं यस्यासावनगार. साधुस्तस्येदमनगारिकं सर्वचारित्रसामायिकम्—सर्वविरतिसामायिकमित्यर्थ. । इदमपि स्वस्थानेऽनेकभेदमेवेति ।

( ३८ ) श्रुतसामायिकस्यापि संक्षेपतो भेदकथनार्थमाह—

अज्झयणं पि य तिविहं,सुत्ते अत्थे अ तदुभए चेव ।
सेसेसु वि अज्झयणे-सु होइ एसेव निज्जुत्ती ॥२६७४॥

अधीयते विनयादिक्रमेण गुरुसमीप इत्यध्ययन सामान्येन श्रुतमिह गृह्यते, श्रुतसामायिकमित्यर्थ , तदपि त्रिविधम्—त्रिभेदम् ' सुत्ते ' त्यादि, सूत्रत , अर्थत , तदुभयतश्चेत्यर्थ । उपलक्षणत्वात् , अपिशब्दाद्—वा सम्यक्त्वसामायिकमप्यौपशमिकक्षायिकक्षायोपशमिकभेदात् त्रिविधं द्रष्टव्यम् । अथ प्रक्रान्तोपोद्घातनिर्युक्तेरशेषाध्ययनव्यापितां दर्शयन्नाह-' सेसेसु वी ' त्यादि, प्रस्तुतसामायिकाध्ययनात् शेषेष्वपि चतुर्विंशतिस्तवादिष्वन्येषु चाध्ययनेष्वेषैवोद्देश—निर्देशादिका निरुक्तिपर्यवसानोपोद्घातनिर्युक्तिर्भवति । एवंव सर्वत्र द्रष्टव्येत्यर्थ । आह—ननूपोद्घातनिर्युक्तौ सर्वस्यामपि समर्थितायामित्यमतिदेशो दातुं युज्यते, न चेयमद्यापि

समर्थ्यते ' भवागारिसफोसणनिरुत्ती ' इति निरुक्तद्वार एव तस्या समर्थयिष्यमाणत्वात् ? । सत्यम् , किन्तूद्घातनिर्युक्तिमध्यमिदम् , मध्य चातिदेश. कृत पर्यन्तेऽपि लभ्यते " मध्यग्रहणे आद्यन्तयोर्ग्रहणम् " इति न्यायात् । इति निर्युक्तिगाथाद्वयार्थ ।

( ३९ ) अथ भाष्यकार सम्यक्त्वादिसामायिकाना भेदनिरूपणार्थमाह—

सम्मं निसग्गओऽहिग-मओ य दसहा य तप्पभेयाओ ।
कारयरोयगदीवग-महवा खइयाइयं तिविहं ॥२६७५॥
सुत्तत्थतदुभयाइं, बहुहा वा सुत्तमक्खरसुयाइं ।
खइयाईं तिहा सामा-इयाइं वा पंचहा चरणं ॥२६७६॥
दुविहतिविहाइ णाणु-व्वयाइ बहु एगदेसचारित्तं ।
वीसुं सव्वाइं पुण, पज्जायओ ऽणंतभेयाइं ॥ २६७७ ॥

सम्यक्त्वं तावद् निसर्गतोऽधिगमतश्चेत्येवं द्विधा भवति । तत्र निसर्ग —स्वभावस्तस्मात् सम्यक्त्व भवति, यथा नारकादीनाम् , अधिगमस्तीर्थकरादीना समीपे धर्मश्रवण तस्मात् सम्यक्त्वं भवतीति प्रतीतमेव, यथा स्कन्दकादीनाम् । अथवा—'तप्पभेयाओ' त्ति-तस्य सम्यक्त्वस्य प्रकृष्ट सूक्ष्मो भेदस्तस्मात् प्रभेदतश्चिन्त्यमानमिदम् , द्विविधमपि समुदितं दशधा भवति । तत्रौपशमिकसास्वादनक्षायोपशमिकवेदकक्षायिकभेदात् , निसर्गज पञ्चधा, एवमधिगमसमुत्थमपि पञ्चधैव । तदेवं समुदित सद् दशधा भवति । अथवा-कारकरोचकदीपकभेदात् क्षायिकक्षायोपशमिकौपशमिकभेदात् त्रिधा सम्यक्त्व भवति । तत्र क्षायिकादयो भेदा. प्रतीता एव । कारकादीना त्वयमर्थ -यस्मिन् सम्यक्त्व सति सदनुष्ठानं श्रद्धत्ते, सम्यक् करोति च, तत् कारयति सदनुष्ठानमिति कारकं सम्यक्त्वमुच्यते । एतच्च साधूना द्रष्टव्यम् । यत्तु सदनुष्ठानं रोचयत्येव केवलम् न पुन कारयति तद् रोचकम् , यथा श्रेणिकादीनाम् । यत्तु स्वयं तत्त्वश्रद्धानरहित एव मिथ्यादृष्टि परस्य धर्मकथादिभिस्तत्त्वश्रद्धान दीपयत्युत्पादयति तत्सम्बन्धि सम्यक्त्व दीपकमुच्यते, यथाऽङ्गारमर्दकादीनामिदं सम्यक्त्वमुच्यते, परमार्थतस्तु मिथ्यात्वमेवेति । सूत्राऽर्थतदुभयभेदात्—सूत्र श्रुतसामायिक त्रिधा भवति । ' अक्खरसण्णी सम्मं, साइयं खलु सपज्जवसियं च । गमियअङ्गपविट्ठ ' इत्यादिना प्रतिपादिताक्षरश्रुताऽनक्षरश्रुतादिभेदाद् बहुधा वा श्रुतसामायिकं भवति । चरणं चारित्रसामायिक पुन क्षायिकम् , क्षायोपशमिकम् , औपशमिकमित्येव त्रिधा भवति । यदिवा-सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्परायययाख्यातभेदात् पञ्चधा तद् भवति । यत् त्वणुव्रताद्येकदेशविषय चारित्रं देशविरतिसामायिकमित्यर्थ , तद् बहुधा-बहुभेदं भवति । केन ? इत्याह—' दुविहतिविहाइणा ' त्ति । ' दुविह तिविहेण पढमओ, दुविह दुविहेण बीअओ होइ । दुविह एक्कविहेण, एगविहं चेव तिविहेण ॥ १ ॥ ' इत्यादि—प्रत्यप्रतिपादितभङ्गजालेन हेतुभूतेनेत्यर्थ । ' वीसु ' त्ति—एतेषा सामायिकानामेत पूर्वोक्ता भेदा विष्वग् एकैकशश्चिन्त्य-

मानानां द्रष्टव्या. यदा तु सर्वाण्यप्येतानि समुदितानि भेदतश्चिन्त्यन्ते तदा पर्यायत पर्यायानाश्रित्यानन्तभेदानि द्रष्टव्यानि । संयमश्रेण्यामध्यवसायस्थानानामसंख्येयलोकाकाशप्रदेशप्रमाणत्वात् , एकैकस्य चाध्यवसायस्थानस्यानन्तपर्यायत्वादिति ।

' सेसेसु वि अज्झयणेसु ' इत्यादिव्याख्यानमाह—

चउवीसयत्थयाइसु, सव्वज्झयणेसु याऽणुओगम्मि ।
एस च्चिय निज्जुत्ती, उद्देसाई निरुत्तंता ॥ २६७८ ॥

शेषेष्वपि चतुर्विंशतिस्तवादिषु, चशब्दाद्-अन्येषु च शस्त्रपरिज्ञादिष्वध्ययनेष्वनुयोगे विधीयमाने आदावेवोद्देशादिका निरुक्त्यन्तोपोद्घातनिर्युक्तिर्द्रष्टव्या । इति गाथाचतुष्टयार्थ । विशे० । आ० चू० । आ० म० ।

(४०) कति सान्तरं सामायिकम् । अथ सान्तरद्वारमाह—

कालमणंतं च सुए, अद्धा परियट्टओ य देसूणो ।
आसायणबहुलाणं, उक्कोसं अन्तरं होइ ॥ २७७५ ॥

इह जीव एकदा सम्यक्त्वादिसामायिकमवाप्य ततस्तत्परित्याग यावता कालेन पुनरपि तदवाप्नोति सोऽपान्तरकाल -अन्तरमुच्यते । तच्च सामान्येन अक्षरात्मके श्रुते जघन्यतोऽन्तर्मुहूर्तम् , उत्कृष्टतस्त्वनन्त कालं भवति । इदमुक्तं भवति-इह द्वीन्द्रियादि कश्चित् श्रुत लब्ध्वा मृतो य. पृथिव्यादिषूत्पद्य तत्रान्तर्मुहूर्तं स्थित्वा पुनरपि द्वीन्द्रियादिष्वागत. श्रुतं लभते तस्य जघन्यतोऽन्तर्मुहूर्त्तमन्तरं भवति । यस्तु द्वीन्द्रियादिभ्य —पृथिव्यप्तेजोवायुवनस्पतिषु पुन पुनरुत्पद्यमानोऽनन्तं कालमवतिष्ठते , ततः पुनरपि द्वीन्द्रियादिष्वागत्य श्रुत लभते, तस्यायमेकेन्द्रियावस्थितिकाललक्षणोऽनन्तकाल उत्कृष्टतोऽन्तरं भवति । अयं चासङ्ख्यातपुद्गलपरावर्त्तमानो द्रष्टव्य । शेषस्य तु सम्यक्त्वदेशविरतिसर्वविरतिसामायिकत्रयस्येति द्वयम्-जघन्यतोऽन्तर्मुहूर्त्तम् , उत्कृष्टतस्तु देशोनाऽपार्धपुद्गलपरावर्तोऽन्तरं भवति । इदं चोत्कृष्टमन्तरमाशातनाबहुलाना जीवानां द्रष्टव्यम् , उक्तं च-' तित्थयरपवयणसुयं, आयरिय गणहरं महिड्ढीयं । आसायंतो बहुसो, अणंतसंसारिओ होइ ॥ १ ॥ ' इति निर्युक्तिगाथार्थ ।

भाष्यम्-

मिच्छसुयस्स वणस्सइ-कालो सेसस्स सेससामण्णो ।
हीणं भिन्नमुहुत्तं, सव्वेसिमिहेगजीवस्स ॥ २७७६ ॥

इह योऽयं वनस्पतिकालो वनस्पतेरुपलक्षणत्वादेकेन्द्रियकालोऽसंख्यातपुद्गलपरावर्तात्मक श्रुतस्योत्कृष्टोऽन्तरं प्रोक्त , स मिथ्याश्रुतस्य मिथ्याश्रुतमङ्गीकृत्य द्रष्टव्य । ' सेसस्स सेससामण्णो ' त्ति—शेषस्य तु सम्यक्श्रुतस्य शेषैः सम्यक्त्वादिसामायिकै सामान्य —तुल्यो देशोनापार्धपुद्गलपरावर्तलक्षण उत्कृष्टोऽन्तरकालो द्रष्टव्य । ' हीणं ' त्ति-हीनं-जघन्यमन्तर सर्वेषामपि सम्यक्त्वादिसामायिकानां निर्युक्तिगाथायामनुक्तत्वाद् भिन्नमुहूर्तम्-अन्तर्मुहूर्तं द्रष्टव्यम् इद च जघन्यमुत्कृष्टं चान्तरमेकजीवस्य मन्तव्यम् , नानाजीवाना सम्यक्त्वाद्यन्तराभावादिति गाथार्थ ।

( ४१ ) अथ क्व किं सामायिकम् ? इति निरूपणार्थं द्वारगाथात्रयमाह—

खेत्तदिसि कालगई, भवियसन्नि(उ)सासदिट्ठिमाहारे।
पज्जत्तसुत्तजम्म–ट्ठिइ वेयसण्णा कसायाऽऽउं ॥ २६६२ ॥
नाणे जोगुवओगे, सरीरसंठाणसंघयणमाणे।
लेसा परिणामे वे–यणा य समुग्घाय कम्मे य॥२६६३॥
निव्वेढ्णमुव्वट्टे, आसवकरणं तहा अलंकारे।
सयणासणठाणट्ठ, चंकमंते य किं कहियं ॥२६६४ ॥

आसां समुदायार्थः क्षेत्रदिक्कालगतिभव्यसंज्ञ्युच्छ्वासदृष्ट्या-हारकानङ्गीकृत्यालोचनीयं 'किं कहिं' ति–'किं क्व सा-मायिकम् ?' इति संबन्धः, तथा, पर्याप्तसुप्तजन्मस्थितिवे-दसंज्ञाकषाया–ऽऽयूंषि चेति। तथा, ज्ञानं योगोपयोगौ, शरीरसंस्थानसंहननमानानि, लेश्यापरिणामं, वेदनां, समु-द्घातकर्म चाश्रित्यालोचनीयम्. 'किं क्व सामायिकम् ?' इति। तथा, निर्वेष्टनोद्वर्त्तने आश्रवकरणम्, तथाऽलङ्कारम्, शयनाऽऽसनस्थानस्थाचङ्क्रमतश्चाश्रित्य चिन्तनीयं 'किं क्व सामायिकम् ?' इति। विशे०। आ० म०।

( ४२ ) एतानि द्वाराणि अन्तरानुक्रमणव्याचिख्यासुरपि वस्तूनां सहैव व्याख्यानत्वान्न शक्नोमि तथा समावेष्टुम् इति द्वारगाथोक्तक्रमेण ज्ञेयम्।

इदानीमवयवार्थ उच्यते। तत्रोर्ध्वलोकादिक्षेत्रम-ङ्गीकृत्य सम्यक्त्वादिसामायिकानां लाभादिभावमभिधित्सुराह—

सम्मसुयाणं लाभो, उड्ढं य अहे य तिरियलोए य।
विरई मणुस्सलोए, विरयाविरई य तिरिएसु ॥२६६५॥

सम्यक्त्वश्रुतसामायिकयोर्लाभः–प्राप्तिरूर्ध्वे चाधश्च तिर्य-ग्लोके भवति, तत्रोर्ध्वलोके मेरुसुरलोकादिषु निस-र्गतोऽधिगमाद् वा सम्यक्त्वसामायिकस्य, तथा श्रुताज्ञा-नस्य तत्समकालमेव श्रुतज्ञानतया परिणामात् श्रुतसामा-यिकस्य च लाभो भवति। एवमधोलोकेऽप्यधोलौकिकग्रा-मेषु नरकेषु च ये सम्यक्त्वं प्रतिपद्यन्ते तेषां यथोक्तसामायि-कद्वयलाभो वक्तव्यः, एवं तिर्यग्लोकेऽपि यथोक्तसामायिकद्व-यलाभो वक्तव्यः। इह च त्रिष्वपि लोकेषु यथोक्तसामायि-कद्वयं लभ्यत एवेतीत्थमवधारणीयम्. न पुनर्यथोक्तसा-मायिकद्वयमेव लभ्यत इति यत आह—' विरई मणुस्स-लोए' त्ति—तिर्यग्लोकविशेषभूतेऽर्धतृतीयद्वीपसमुद्रलक्षणे मनुष्यलोके विरतिः सर्वविरतिसामायिकमपि लभ्यते। इदं चेहैव लभ्यते नान्यत्रेति द्रष्टव्यम् मनुष्या एवैतत्प्रति-पत्तारो नान्य इत्यर्थः। क्षेत्रनियमं तु विशिष्टश्रुतविदो विद-न्ति। विरताविरतिश्च देशविरतिसामायिकलक्षणा लाभवि-चारे तिर्यक्षु भवति मनुष्येषु च केषुचिदिति।

पुव्वपडिवण्णया पुण, तीसु वि लोएसु नियमओ तिण्हं।
चरणस्स दोसु नियमा,भयणिज्जा उड्ढलोगम्मि॥२६६६॥

पूर्वप्रतिपन्नकास्तु त्रयाणां सामायिकानां नियमेन त्रिष्व-पि लोकेषु विद्यन्ते। चतुर्थस्य सामायिकस्य द्वयोरेवाधो-लोकतिर्यग्लोकयोः पूर्वप्रतिपन्ना नियमेन सन्ति। ऊर्ध्व-लोके पुनर्भाज्याः कदाचिद् भवन्ति कदाचिद् नेति। गतं क्षेत्रद्वारम्। विशे०।

(४३) दिग्द्वारम्–कस्यां दिशि किं सामायिकम्। इह नाम-स्थापनाद्रव्यदिग्भिरनधिकार एव शेषासु यथासंभवं सामा-यिकस्य प्रतिपद्यमानकः पूर्वप्रतिपन्नो वा वाच्यः। तथा चा-ह चूर्णिकृत्–' एत्थ पुण चउहिं दिसाहिं अहिगारो खेत्तदि-सानावखेत्तपन्नवगभावदिसाहिं नामादी निरिक्ष पर्वगा-निमित्तं ' ति। तत्र क्षेत्रदिशोऽधिकृत्य तावदाह—

पुव्वाईयासु महा–दिसासु पडिवज्जमाणओ होइ।
पुव्वपडिवन्नओ पुण, अन्नयरीए दिसाए उ॥

पूर्वादिकासु क्षेत्रतो महादिक्षु विवक्षिते काले स-र्वेषामपि सामायिकानां प्रतिपद्यमानको भवति। तत्सं-भवस्तास्वस्ति न पुनर्भवत्येव कदाचित्तस्य तासु भ-वनात्। पूर्वप्रतिपन्नः पुनश्चतुर्णामपि सामायिकाना-मन्यतरस्यां दिशि भवत्येव। पुनः शब्दस्यैवकारार्थत्वात् न पुनर्न भवति। एतदपि सामान्येनोक्तम् विशेषतस्त्वेवमव-गन्तव्यम्। त्रयाणां सम्यक्त्वसामायिकश्रुतसामायिकदेश-विरतिसामायिकानां चतसृष्वपि पूर्वादिकासु महादिक्षु नियमेन पूर्वप्रतिपन्नकोऽस्ति। सर्वविरतिसामायिकस्य तु पूर्वापरदिशोर्नियमेन दक्षिणोत्तरयोस्तु भजनया। एकान्त-दुष्षमादिकाले भरतैरवतेषु सर्वविरतेरुच्छेदात् विदिक्षु पुनश्चतसृष्वपि तथा ऊर्ध्वाधोदिग्द्वये च चतुर्णामपि सा-मायिकानां न पूर्वप्रतिपन्नो, नापि प्रतिपद्यमानकः तास्वेक-देशिकत्वेन चतुःप्रादेशिकत्वेन च जीवावगाहनासंभवात्। स्पर्शनामात्रं पुनर्भवेदपि। तथा चाह भाष्यकारः– छिन्ना-वलिरुयगादी, दिसासु सामाइयं न जं तासु। सुद्धासु ना-वगाहइ, जीवा तासो पुण फुसेज्जा " ॥ २७०७॥

तापक्षेत्रविषये प्रज्ञापकदिशावधिकृत्याह–

अट्ठसु चउण्ह नियमा, पुव्वपवन्नो उ दोसु दोण्हेवं।
दोण्ह तु पुव्वपवन्नो, सिय नत्थि ताव पन्नवए॥

तापक्षेत्रविषये प्रज्ञापकविषये च पुनरष्टसु पूर्वादिकासु दिक्षु चतुर्णामपि सामायिकानां नियमात् पूर्वप्रतिपन्नोऽ-स्ति, प्रतिपद्यमानकस्तु भाज्यः कदाचिद्भवति कदाचिन्नेति। तथा द्वयोरूर्ध्वाधोरूपयोर्दिशोः द्वयोः—सम्यक्त्वसामायि-कश्रुतसामायिकयोरेवं पूर्वप्रतिपन्नो नियमादस्ति प्रतिपद्य-मानकस्तु भाज्य इत्यर्थः। ' दोण्ह उ ' इत्यादि द्वयोः— पुनर्देशविरतिसामायिकसर्वविरतिसामायिकयोरूर्ध्वाधोदि-शोः स्यात् भजनया पूर्वप्रतिपन्नः कदाचिद्भवति कदाचि-न्नेति। अन्यः पुनः प्रतिपद्यमानकः सर्वथा नास्ति।

भावदिशमधिकृत्याह—

उभयाभावो पुढवा–इएसु विगलेसु होज्ज उववन्नो।

१–विशेषावश्यकेऽपि व्याख्यात इमे गाथे।

पंचिंदियतिरिएसुं, नियमा तिराहं सिय पवज्जे ॥
नारय-देव-अकम्मय, अंतरदीवेसु दोराह भयणाओ ।
कम्मजनरेसु चउसुं, मुच्छेसुं उभयपडिसेहो ॥

पृथिव्यादिषु—पृथिव्यप्तेजोवायुमूलबीजस्कन्धबीजाग्रबी-जपर्वबीजेषु उभयाभावश्चतुर्णामपि सामायिकाना न पूर्वप्रतिपन्नो न प्रतिपद्यमानक । विकलेषु द्वित्रिचतुरिन्द्रियेषु पूर्वप्रतिपन्नो भवेत् । व्याख्यानतो विशेषप्रतिपत्तिरिति सम्यक्त्वसामायिकश्रुतसामायिकयो कदाचित् पूर्वप्रतिपन्नो भवेत्सासादनसम्यक्त्ववता तेषु मध्ये उत्पादसंभवात् । प्रतिपद्यमानकस्तु नोपपद्यते उपदेशश्रवणादिसामग्र्ययोगात् । देशविरतिसर्वविरतिसामायिकयो पुनर्न पूर्वप्रतिपन्नो नापि प्रतिपद्यमानक , पञ्चेन्द्रियतिर्यक्षु सर्वविरतिवर्जानां त्रयाणामपि सामायिकाना पूर्वप्रतिपन्नो नियमादस्ति । य पुन प्रतिपद्यते प्रतिपद्यमानक स्यात् भजनया-कदाचित् विवक्षित काले कदाचिन्नेति भाव । सर्वविरतिसामायिकस्य तु न पूर्वप्रतिपन्नो नापि प्रतिपद्यमानकस्तथा भवस्वाभाव्यात् । नारकदेवेष्वकर्मभूमिजान्तरद्वीपजमनुष्येषु च द्वयो. सम्यक्त्वश्रुतसामायिकयो पूर्वप्रतिपन्नो नियमादस्ति । इतरस्य तु प्रतिपद्यमानकस्य भजना-स्याद्वा न वा । इतरयोस्तु—देशविरतिसर्वविरतिसामायिकयोर्न पूर्वप्रतिपन्ना नापि प्रतिपद्यमानकस्तथा स्वाभाव्यात् । कर्मजनरेषु—कर्मभूमिजमनुष्येषु चतुर्णामपि सामायिकानां पूर्वप्रतिपन्नाऽस्त्येव । प्रतिपद्यमानकस्तु भाज्य· । समूर्च्छिमेषु तु मनुष्येषु चतुर्णामपि सामायिकानां विषये उभयप्रतिषेधो न पूर्वप्रतिपन्नो नापि पूर्वप्रतिपद्यमानक इति भाव । आ० म० १ अ० । विशे० ।

( ४४ ) अथ भाष्यकारो वक्ष्यमाणनिर्युक्तिगाथाया· प्रस्तावनामाह—

खेत्तदिसासुं पगयं, सेसदिसाओ पसंगओऽभिहिया ।
संभवओ वा वच्चं, सामइयं जत्थ जं हुज्जा ॥ २७०५ ॥

इह दिग्द्वारे विचार्यमाणे रुचकादारभ्य या—पूर्वादिका दिश प्ररूपितास्ताभिरेवेह प्रकृतं प्रयोजनम् , शेषास्तु नाम स्थापनादिका दिशो दिक्साम्यात् प्रसङ्गतोऽभिहिता । यदि वा-अशेषदिशा मध्ये यस्या दिशि यत् सामायिकम् सम्भवति तदभ्यूह्य वाच्यम् , मूलावश्यकाद् वाऽवसेयम् , इति गाथार्थ ।

' इह क्षेत्रदिग्भि. प्रयोजनम् ' इत्युक्तम् , किं पुनस्तत् ?, इत्याह—

पुव्वाईयासु महा-दिसासु पडिवज्जमाणओ होइ ।
पुव्वपडिवन्नओ पुण, अन्नयरीए दिसाए उ ॥२७०६॥

पूर्वाद्यासु शकटोर्द्ध्वे संस्थितासु पूर्वोक्तासु चतसृषु महादिक्षु विवक्षिते काले चतुर्णामपि सामायिकाना प्रतिपद्यमानको भवति , तत्सम्भवस्तास्वस्ति , न पुनर्भवत्येव कदाचित् तस्य तासु भवनात् कदाचिदभवनादिति । पूर्वप्रतिपन्नक पुनरन्यतरस्या दिशि भवत्येव । इति निर्युक्तिगाथार्थ ।

ऊर्ध्वाऽधो दिग्द्वये विदिक्षु च तर्हि का वार्ता ? इत्याशङ्क्य भाष्यकार· प्राह—

छिन्नावलि रुयगागी, दिसासु सामाइयं न जं तासु ।
सुद्धासु नावगाहइ, जीवो ताओ पुण फुसिज्जा ॥२७०७॥

एकप्रदेशिकत्वेन छिन्नमुक्तावलीकल्पासु चतसृष्वपि विदिक्षु 'रुयगागि' त्ति—रुचकाकारया· प्रत्येक चतुष्प्रदेशिकयोरूर्ध्वाऽधोदिशोश्च 'सामाइय न' त्ति—सर्वमपि सम्पूर्ण—सामायिकं न लभ्यते इति शेष । कुत ? इत्याह-' ज तास्वित्यादि ' यद्—यस्मात् तासु शुद्धासु—केवलासु षट्स्वपि जीव सम्पूर्णो नावगाहते, तस्य जघन्यतोऽप्यसङ्ख्येयप्रदेशावगाहित्वात् , एतासां चैकप्रदेशिकत्वेन चतुष्प्रदेशिकत्वेन चैतावत्प्रमाणावगाहासम्भवात् । इतस्तत सञ्चरणादौ पुन. सामायिकवाञ्जीवस्ता एडपि देशतः स्पृशेद् न विरोध इति गाथार्थ । उक्तं दिग्द्वारम् ।

( ४५ ) साम्प्रतं कालद्वारमभिधित्सुराह—

सम्मत्तस्स सुयस्स य, पडिवत्ती छव्विहे वि कालम्मि ।
विरइं विरयाविरइं,पडिवज्जइ दोसु तिसु वावि ॥२७०८॥

सम्यक्त्वस्य श्रुतस्य च द्वयोरप्यनयो सामायिकयो प्रतिपत्ति षड्विधेऽपि सुषमदु षमादिके काले सम्भवति । पूर्वप्रतिपन्नकास्त्वनयोर्विद्यन्त एव । विरतिं समग्रचारित्रलक्षणाम् , तथा, विरताविरतिं-देशचारित्रात्मिका प्रतिपद्यते कश्चिदुत्सर्पिण्या द्वयो कालयोर्दु षमसुषमायाम् सुषमदु षमाया चेति, अवसर्पिण्यां तु त्रिषु कालेषु सुषमदु षमायाम् दु षमसुषमायाम् , दु षमाया चेति । पूर्वप्रतिपन्नस्त्विह विद्यत एव । अपिशब्दात्—संहरणं प्रतीत्य पूर्वप्रतिपन्नक· सर्वकालेष्वेव सम्भवति । प्रतिभागकालेषु तु त्रिषु सम्यक्त्वश्रुतयो प्रतिपद्यमानक सम्भवति, पूर्वप्रतिपन्नस्त्वस्त्येव, चतुर्थे च प्रतिभागे चतुर्विधस्यापि सामायिकस्य प्रतिपद्यमानक सम्भवति, पूर्वप्रतिपन्नस्तु विद्यत एव बाह्यद्वीपसमुद्रेषु तु कालरहितेषु त्रयाणा सामायिकानां प्रतिपद्यमानक सम्भवति, पूर्वप्रतिपन्नस्त्वस्त्येव, चरणस्यापि नन्दीश्वरादौ विद्याचारणादिगमने पूर्वप्रतिपन्न सम्भवति इति निर्युक्तिगाथार्थ ।

अथ भाष्यम्—

तइयाइसु तिसु ओस-प्पिणीएँ उस्सप्पिणीएँ दोसुं तु ।
नोउस्सप्पुस्सप्पिणि-काले तिसु सम्मसुत्ताइं ॥२७०९॥
पलिभागम्मि चउत्थे, चउव्विहं चरणवज्जियमकाले ।
चरणं पि हुज्ज गमणे, सव्वं सव्वत्थ साहरणे ॥२७१०॥

' तइयाइसु तिसु ओसप्पिणीए ' त्ति—अवसर्पिण्या तृतीयादिषु त्रिषु कालेषु सुषमदुष्षमादिषु त्रिष्वरकेष्वित्यर्थ ' सर्वविरतिदेशविरतिसामायिकयो प्रतिपत्ता लभ्यते ' इत्यध्याहार· । पूर्वप्रतिपन्नस्त्विह चतुर्णा—मस्त्येव । एवमुत्तरत्रापि पूर्वप्रतिपन्ना यथासम्भवमभ्यूह्य वक्तव्य इति । ' उस्सप्पिणीए दोसुं ' ति—उत्सर्पिण्या पुनर्द्वयोर्दु षमसुषमासुषमदु षमालक्षणयो कालविशेषयोस्तत्प्रतिपत्ता प्राप्यते । ' नो इत्यादि ' इह देवकुरूत्तरकुरुषु

सुषमसुषमाप्रतिभागः, हरिवर्षरम्यकेषु—सुषमाप्रतिभाग, हैमवतैरण्यवतेषु सुषमदुःषमाप्रतिभागः, पञ्चसु महाविदेहेषु दुःषमसुषमाप्रतिभाग । इह चतुर्ष्वपि स्थानेषूत्सर्पिण्यवसर्पिण्यभावाद् नोउत्सर्पिण्यवसर्पिणीकालोऽयमभिधीयते, यथाक्रमं च सुषमसुषमादिभिः कालविशेषैः सह प्रतिभागस्य सादृश्यस्य विद्यमानत्वाच्चत्वारः सुषमसुषमादयः प्रतिभागा एते भवन्ति । तदस्मिन् प्रतिभागचतुष्टयलक्षणे नोउत्सर्पिण्यवसर्पिणीकाले चिन्त्यमाने 'तिसु' त्ति—आद्येषु सुषमसुषमाप्रतिभागादिषु त्रिषु प्रतिभागेषु द्वे सम्यक्त्वश्रुतसामायिके जीवः प्रतिपद्यते । 'पलिभागम्मि चउत्थे चउव्विहं' ति—महाविदेहेषु चतुर्थे दुःषमसुषमाप्रतिभागे चतुर्विधमपि सामायिकं प्रतिपद्यते । 'चरणवज्जियमकाले' त्ति—अकाले—कालाभावे बाह्यद्वीपसमुद्रेषु चरणवर्जितमाद्यं सामायिकत्रयं मत्स्यादयः प्रतिपद्यन्ते । 'चरणं वि हुज्ज गमणे' त्ति—नन्दीश्वरादौ विद्याचारणादीनां गमने चरणमपि पूर्वप्रतिपन्नं सर्वविरतिसामायिकमपि भवेदित्यर्थः । 'सव्वं सव्वत्थ साहरणे' त्ति—देवादिना तु संहरणं प्रतीत्य सर्वं चतुर्विधमपि सामायिकं सर्वत्र निःशेषेऽपि काले प्राप्यते । इति गाथाद्वयार्थः । गतं कालद्वारम् ।

( ४६ ) इदानीं गतिद्वारं विभणिषुराह—

चउसु वि गईसु नियमा, सम्मत्तसुयस्स होइ पडिवत्ती ।
मणुएसु होइ विरई, विरयाविरई य तिरिएसु ॥२७११॥

चतसृष्वपि नारकतिर्यङ्नरामरगतिषु सम्यक्त्वश्रुतसामायिकयोर्नियमात् प्रतिपत्तिर्भवति, न पुनर्न भवतीत्येवं नियमो द्रष्टव्यः, भवत्येव सदैव तत्प्रतिपत्तिरित्येवं तु न नियमः, कदाचिदन्तरस्यापि तत्प्रतिपत्तेरिहैव वक्ष्यमाणत्वादिति पूर्वप्रतिपन्नास्तु सदैव लभ्यन्त इति । तथा, मनुष्येषु प्रतिपत्तिमङ्गीकृत्य भवति विरतिश्चारित्रात्मिका, नान्यगतिषु, पूर्वप्रतिपन्नास्तु तस्याः सदैवेह विद्यन्त इति । विरताविरतिश्च देशविरतिस्तिर्यक्षु 'भवति' इत्यनुवर्तते, इहापि सम्भवतस्तत्प्रतिपत्तिर्द्रष्टव्या पूर्वप्रतिपन्नास्तु सदैव सन्तीति ।

अथ भव्यसंज्ञिद्वारद्वयमभिधातुमाह—

भवसिद्धिओ य जीवो, पडिवज्जइ सो चउण्हमण्णयरं ।
पडिसेहो पुणऽसण्णि-म्मि मीसए सण्णिपडिवज्जे॥२७१२॥

भवा भाविनी सिद्धिर्यस्यासौ भवसिद्धिको भव्यो जीव, स चतुर्णां सामायिकानामन्यतरत् सामायिकम् प्रतिपद्यते । इदमुक्तं भवति—कदाचित् सम्यक्त्वश्रुतसामायिके प्रतिपद्यते, कदाचिद् देशविरतिम्, कदाचित् सर्वविरतिमपि प्रतिपद्यत इति । पूर्वप्रतिपन्नास्तु नाना भव्याश्चतुर्णामपि सामायिकाना सदैव लभ्यन्त इति । एव संज्ञ्यपि चतुर्णामपि सामायिकाना कदाचित् किञ्चित् प्रतिपद्यते । तथा चाह—'सण्णिपडिवज्जे' त्ति—पूर्वप्रतिपन्नास्तु संज्ञिनोऽपि भव्यवत् सदैव प्राप्यन्त इति । 'पडिसेहो, इत्यादि, पूर्वप्रतिपन्नान् प्रतिपद्यमानकांश्चाश्रित्य चतुर्णामपि सामायिकाना प्रतिषेध कार्य । क ? इत्याह—असंज्ञिनि, मिश्रके, अभव्ये च " सिद्धे नो सण्णी, नो असण्णी, नो भव्वे, नो अभव्वे" इति वचनाद् मिश्रक सिद्धोऽभिधीयते । ततश्चैते त्रयोऽप्यसंज्ञ्यभव्यमिश्रकाश्चतुर्णामपि सामायिकानां न पूर्वप्रतिपन्ना नापि प्रतिपद्यमानका लभ्यन्त इति भावार्थः । पुन शब्दादसंज्ञी सास्वादनमाश्रित्य सम्यक्त्व-श्रुतसामायिकयो पूर्वप्रतिपन्नो भवेदिति द्रष्टव्यम्, तथा मिश्रोऽपि भवस्थकेवली सम्यक्त्वचारित्रसामायिकयो पूर्वप्रतिपन्नो भवेदित्यपि दृश्यम् । अयं च न संज्ञी नाप्यसंज्ञीति मिश्रना द्रष्टव्या । आह—यद्येवं सिद्धोऽपि सम्यक्त्वसामायिकस्य पूर्वप्रतिपन्नो लभ्यते, अतोऽस्यापि—किमिति सर्वसामायिकनिषेधः क्रियते ? । सत्यम्, किन्तु सम्यक्त्ववर्जं सामायिकत्रयं संसारस्थानामेव सम्भवात्, तत्साहचर्यात् सम्यक्त्वसामायिकमपि संसारिणां सम्बन्धि विचार्यते, तथाभूतं तु सिद्धे नास्तीति निषिध्यत इत्यदोष, इति निर्युक्तिगाथाद्वयार्थः ।

पुन शब्दस्य व्याख्यान भाष्यकारोऽप्याह—

पुणसद्दाउ असण्णी, सम्मसुए होज्ज पुव्वपडिवन्नो ।
मीसो भवत्थकाले, सम्मत्तचरित्तपडिवन्नो ॥२७१३॥

गतार्था ।

अथोच्छ्वासनिःश्वासकदृष्टिद्वारद्वयाभिधित्सया प्राह—

ऊसासय नीसासय-मीसे पडिसेहो दुविह पडिवण्णो ।
दिट्ठी य दो नया खलु, ववहारो निच्छओ चेव॥२७१४॥

उच्छ्वसितीत्युच्छ्वासक, निःश्वसितीति निःश्वासकः, आनापानपर्याप्तिपरिनिष्पन्न इत्यर्थः । 'स चतुर्णामपि सामायिकानां प्रतिपद्यमानकः सम्भवति, पूर्वप्रतिपन्नकस्त्वस्त्येव, इति वाक्यशेष । मिश्रः खल्वानापानपर्याप्त्यपर्याप्तो भण्यते । तत्र प्रतिपत्तिमङ्गीकृत्य प्रतिषेधः, नासौ चतुर्णामपि प्रतिपद्यमानकः सम्भवतीति भावना । 'दुविहपडिवण्णो' ति स एव द्विविधस्य सम्यक्त्वश्रुतसामायिकस्य प्रतिपन्नः पूर्वप्रतिपन्नो भवति देवादिर्जन्मकाल इति । अथवा—मिश्र—सिद्धः, तत्र चतुर्णामपि सामायिकानां पूर्वोक्तयुक्तेरुभयथाऽपि प्रतिषेधः 'दुविह पडिवण्णो' त्ति—इह मिश्रः शरीररहितत्वाद् नोउच्छ्वासनिःश्वासकत्वेन शैलेशीगतोऽयोगिकेवली गृह्यते, स द्विविधस्य—सम्यक्त्वचारित्रसामायिकस्य पूर्वप्रतिपन्नो भवति । दृष्टौ विचार्यमाणायां द्वौ नयौ खलु विचारकौ व्यवहारो निश्चयश्चैव । तत्रास्य यथा मतिज्ञानविचारेऽज्ञानी ज्ञानं प्रतिपद्यते, तथेहाप्यसामायिकी—असामायिकवान् सामायिकं प्रतिपद्यते, तथाऽसामायिकी दीर्घकालिकी तत्प्रतिपत्तिः ; द्वितीयस्य तु यथा ज्ञानी ज्ञानं प्रतिपद्यते तथात्रापि सामायिकी—सामायिकवान् सामायिकं प्रतिपद्यते, सामयिकी च तत्प्रतिपत्तिः, क्रियाकालनिष्ठाकालयोरभेदात् । इति निर्युक्तिगाथार्थः ।

(४७) मिश्रशब्दभावार्थं व्यवहारनिश्चयनयमतविचारं च भाष्यकारोऽप्याह—

मीसो नो उस्सासय-नीसासो तेहिँ जो अपज्जत्तो ।
हुज्ज पवन्नो दोन्नि उ, सेलेसिगओ चरित्तं च॥२७१५॥
पढमसमासमइगी, पडिवज्जइ विइयगस्स सामइगी ।

ववहारनिच्छयमयं, नेयं मइनाणलाभो व्व ॥ २७१६ ॥

इह मिश्रो नो उच्छ्वासकनिःश्वासकोऽयोगिकेवली गृह्यते। तथा-ताभ्यामुच्छ्वासनिःश्वासाभ्यामपर्याप्तकश्चेह मिश्रः। स चापर्याप्तको देवादिर्जन्मकाले द्विविधस्य सम्यक्त्वश्रुतसामायिकस्य पूर्वप्रतिपन्नो लभ्यते। यस्तु नोउच्छ्वासकनिःश्वासको मिश्रः शैलेशीगतोऽयोगिकेवली, स चारित्रसामायिकं चशब्दात्—सम्यक्त्वसामायिकं चाश्रित्य पूर्वप्रतिपन्नः प्राप्यत इति। द्वयौ नयविचारे प्रथमस्य व्यवहारनयस्यासामायिकी-असामायिकवान् सामायिकं प्रतिपद्यते, द्वितीयस्य तु निश्चयनयस्य सामायिकी—सामायिकवान् सामायिकं प्रतिपद्यत इत्येवमादिव्यवहारनिश्चयनयमतं मतिज्ञानलाभ इवात्रापि विज्ञेयम् इति गाथाद्वयार्थः।

(४८) अथाहारकपर्याप्तकद्वारद्वयमाह—

आहारगो उ जीवो, पडिवज्जइ सो चउण्हमण्णयरं।

एमेव य पज्जत्तो, सम्मत्तसुए सिया इयरो ॥२७१७॥

आहारयतीत्याहारकस्तु यो जीव स चतुर्णां सामायिकानां प्राग्वदन्यतरत् प्रतिपद्यते, पूर्वप्रतिपन्नस्त्वस्त्येव, पञ्चभिः पर्याप्तिभिः पर्याप्तकोऽप्येवमेव चतुर्णामन्यतरत् प्रतिपद्यते, पूर्वप्रतिपन्नस्त्वस्त्येव। 'सम्मत्तसुए सिया इयरो' त्ति—इतरोऽनाहारकोऽपर्याप्तकश्च, तत्रानाहारकोऽपान्तरालगतौ सम्यक्त्वश्रुते अङ्गीकृत्य स्यात्—भवेत् पूर्वप्रतिपन्न, 'प्रतिपद्यमानस्तु नैव' इति वाक्यशेषः। केवली तु समुद्घातशैलेश्यवस्थायामनाहारको दर्शनचरणसामायिकद्वयस्य पूर्वप्रतिपन्नो लभ्यते, अपर्याप्तोऽपि सम्यक्त्वश्रुते अधिकृत्य स्यात् पूर्वप्रतिपन्न। इति निर्युक्तिगाथार्थः।

अत्र भाष्यम्—

पुव्वपवन्नोऽणाहा-रगो दुगं सो भवंतरालम्मि।

चरणं सेलेसाइसु, इयरो त्ति दुगं अपज्जत्तो ॥२७१८॥

गतार्था, नवरं 'चरणं सेलेसाइसु' त्ति—आदिशब्दात् समुद्घातपरिग्रहः। ततश्च शैलेश्यां समुद्घाते च केवलयनाहारकश्चरणस्योपलक्षणत्वात् सम्यक्त्वसामायिकं चारित्रसामायिकं चाश्रित्य पूर्वप्रतिपन्न प्राप्यते। इतरस्त्वपर्याप्तको देवादिजन्मकाले सम्यक्त्व-श्रुतलक्षणसामायिकद्विकमाश्रित्य पूर्वप्रतिपन्नो लभ्यते इति।

(४९) साम्प्रतं सुप्तजन्मद्वारद्वयव्याचिख्यासयेदमाह—

निद्दाइभावओ वि य, जागरमाणो चउण्हमण्णयरं।

अंडय तह पोयजरो-वयाइदो तिण्णि चउरो वा ॥२७१९॥

इह सुप्तो द्विविध—द्रव्यसुप्त, भावसुप्तश्च। एवं जाग्रदपीति। तत्र द्रव्यसुप्तो निद्रया, भावसुप्तस्तु मिथ्यादृष्टिः। तथा द्रव्यजागरो—निद्रारहित, भावजागर सम्यग्दृष्टिः। तत्र निद्रया भावतोऽपि च जाग्रच्चतुर्णां सामायिकानामन्यतरत् प्रतिपद्यते। 'पूर्वप्रतिपन्नस्त्वस्त्येव' इत्यध्याहार। अपिशब्दो विशेषणे। किं विशिनष्टि?। भावजागर सम्यग्दृष्टिर्द्वे आद्यसामायिके प्रतीत्य पूर्वप्रतिपन्न एव व्यवहारनयमतेन भवेत्, निश्चयनयमतेन तु तत्प्रतिपत्ताऽपि भवति। चरणं देशविरतिं चाश्रित्य पूर्वप्रतिपन्न प्रतिपद्यमानकश्च भवति। निद्रासुप्तस्तु चतुर्णामपि प्रतिपन्नो भवति, न तु प्रतिपद्यमानक, निद्रासुप्तस्य तथाविधविशुद्धयादिसामग्र्यभावात्। भावसुप्तस्तु भयविकल, तस्य मिथ्यादृष्टित्वात्, वक्ष्यति च—"मिच्छो उ भावसुत्तो न पवज्जइ" इति। अथवा-नियमतो निश्चयव्यवहारनयाभिप्रायात् स भावसुप्तः सम्यक्त्वश्रुतसामायिकद्वयप्रतिपत्तिकाले सम्यग्दृष्टिर्वा मिथ्यादृष्टिर्वाऽभिहित, तथा च वक्ष्यते—'सोऽहवा नयमयाओ। सम्मो वा मिच्छो वा, निच्छयववहारओऽभिहिओ' इति। इदमुक्तं भवति—निश्चयनयस्य सम्यग्दृष्टि सम्यक्त्वं प्रतिपद्यते, व्यवहारनयस्य तु मिथ्यादृष्टिः सम्यक्त्वं प्रतिपद्यते। अतो व्यवहारनयमतेन भावसुप्तो मिथ्यादृष्टि सम्यक्त्वादिसामायिकद्वयस्य प्रतिपत्ता लभ्यत इति। जन्म चतुर्विधम्—अण्डजम्, पोतजम्, जरायुजम्, औपपातिकं चेति। तत्राण्डजा—हंसादय, पोतजा-हस्त्यादय, जरायुजा-मनुष्या, औपपातिका-देवनारका। एतेषां यथासंभवं द्वे, त्रीणि, चत्वारि वा सामायिकानि भवन्ति। तत्र हंसादयो द्वे त्रीणि वाऽऽद्यसामायिकानि कदाचित् प्रतिपद्यन्ते, पूर्वप्रतिपन्नास्त्वेषा ते नियमत सन्त्येव। एवं पोतजा हस्त्यादयोऽपि वक्तव्या। जरायुजास्तु मनुष्याश्चत्वार्यपि सामायिकानि प्रतिपद्यन्ते, पूर्वप्रतिपन्नास्तु तेषां नियमत सन्ति, देवनारका पुनराद्ये द्वे सामायिके प्रतिपद्यन्ते, प्रतिपन्नास्त्वस्य सामायिकद्वयस्य त नियमत सन्ति। इह च मूलावश्यकानि युक्त्यैव पाठो दृश्यते—"अंडज पोयज जराउय तिग तिग चउरो भवे कमसो" इति, टीकायां तु तथैव व्याख्यानमभिधीयते-जन्म त्रिविधम्-अण्डज-पोतज जरायुजभेदभिन्नम्। तत्र यथासंख्य-'तिगतिगचउरो भवे कमसो'। ततोऽण्डजादीनां त्रयाणामपि व्याख्याने कृते पश्चाद् व्याख्यातम्—'औपपातिकास्तु प्रथमयोर्द्वयोरेव' इति। भाष्यटीकाकृताऽप्येवद् मूलावश्यकटीकागतं सर्वं प्रायस्तद्वस्थमेव लिखितम्। भाष्ये तु गाथायामप्यौपपातिकानामुपादानं कृतं दृश्यते। ततोऽस्या गम्भीरोक्तेः समाधान बहुश्रुता एव विदन्ति। अस्माभिस्तु यथा भाष्ये दृष्टं तथा व्याख्यातम्, संगतमसंगत वेति पुनस्त एव जानन्ति। इति निर्युक्तिगाथार्थः।

अथ भाष्यव्याख्यानम्—

सम्मद्दिट्ठि किर भा-वजागरो दुण्हि पुव्वपडिवन्नो।

होज्ज पडिवज्जमाणो, चरणं सो देसविरइं च ॥२७२०॥

मिच्छो उ भावसुत्तो,

न पवज्जइ सोऽहवा नयमयाओ।

सम्मो वा मिच्छो वा,

निच्छय-ववहारओऽभिहिओ ॥ २७२१ ॥

चउरो जराउजम्मे,

हुज्ज पवण्णो पवज्जमाणो वा।

सेसे तिन्नि पवण्णो,

दोण्णि तओ वा पवज्जेज्ज ॥ २७२२ ॥

तिस्रोऽप्युक्तार्था एवेति। नवरं 'सेसे तिन्नि पवण्णो' इत्या-

दि, इह शेषग्रहणेनाण्डजपोतजलक्षणं जन्मद्वयमेव गृह्यते, औपपातिकास्तु पूर्वप्रतिपन्ना, प्रतिपद्यमानकाश्चाद्ययोर्द्वयोरेव भवन्तीति द्रष्टव्यमिति ।

( ५० ) अथ स्थितिद्वारमाह—

उक्कोसयट्ठिईए ,
पडिवज्जंते य नत्थि पडिवण्णो ।
अजहण्णमणुक्कोसे ,
पडिवज्जे यावि पडिवण्णे ॥ २७२३ ॥

आयुर्वर्जानां ज्ञानावरणादिकर्मणां त्रिंशत्सागरोपमकोटीकोट्यादिकायामुत्कृष्टस्थितौ वर्त्तमानो जीवश्चतुर्णामपि सामायिकानां न प्रतिपद्यमानको न चापि पूर्वप्रतिपन्नः प्राप्यते, तस्यातिसंक्लिष्टत्वेन तदसम्भवात् । आयुष्कस्य त्रयस्त्रिंशत्सागरोपमलक्षणायामुत्कृष्टस्थितौ वर्त्तमानोऽनुत्तरसुरः पूर्वप्रथमसामायिकद्वयस्य प्रतिपन्नः प्राप्यते, सप्तमपृथिव्यप्रतिष्ठाननारकस्तु षण्मासावशेषायुस्तथाविधविशुद्धियुक्तत्वादस्यैव सामायिकद्वयस्य प्रतिपद्यमानकः पूर्वप्रतिपन्नश्च लभ्यते; तथा च वक्ष्यति-' आउक्कोसे दोण्णि उ पवज्जमाणो पवण्णो वा ' इति । जघन्यायां तु क्षुल्लकभवग्रहणलक्षणायामायुःस्थितौ वर्त्तमानो निगोदादिश्चतुर्णामपि न प्रतिपद्यमानको नापि पूर्वप्रतिपन्नः प्राप्यते, तस्याविशुद्धत्वेन तद्योग्यत्वादिति । शेषे तु ज्ञानावरणादिकर्मसप्तके जघन्यामन्तर्मुहूर्त्तादिकां स्थितिं बध्नन् दर्शनसप्तकातिक्रान्तोऽनन्तरं केवलित्वमवाप्स्यन् क्षपको देशविरतिवर्जितस्य सम्यक्त्वश्रुतसर्वविरतिलक्षणसामायिकत्रयस्य पूर्वप्रतिपन्नो लभ्यते, तस्यातिविशुद्धत्वेनातिजघन्यस्थितिबन्धकत्वात्, क्षपकस्य च देशविरतेरसंभवात्, सम्यक्त्वादिप्रतिपत्तेश्च पूर्वमेव संजातत्वादिति । जघन्यस्थितिकर्मबन्धकत्वेन चेह जघन्यस्थितिकत्वं गृह्यते, न तु प्राक्तनकर्मसत्तापेक्षयेति, व्याख्यानतो विशेषप्रतिपत्तेरिति । ' अजहण्णमणुक्कोसे ' इत्यादि, अजघन्योत्कृष्टे तु कर्मणामायुषामपि कर्मणां मध्यमायां स्थितौ वर्तमानो जीव इत्यर्थः । चतुर्णामपि सामायिकानां प्रतिपद्यमानकः पूर्वप्रतिपन्नश्च लभ्यते । इति निर्युक्तिगाथार्थः ।

अथ भाष्यम्—

उक्कोसट्ठिइकम्मो, न पवज्जंतो न यावि पडिवण्णो ।
आउक्कोसे दुण्णि उ, पवज्जमाणो पवण्णो वा ॥ २७२४ ॥
न जहण्णा उ ठिईए, पडिवज्जइ नेयपुव्वपडिवण्णो ।
सेसे पुव्वपवण्णो, देसविरइवज्जिए होज्ज ॥ २७२५ ॥

व्याख्यातार्थे एव ।

(५१) साम्प्रतं वेदसंज्ञाकषायद्वारत्रयं व्याचिख्यासुराह—

चउरो वि तिविहवेए,
चउसु वि सण्णासु होइ पडिवत्ती ।
हेट्ठा जहा कसाएँ—
सुत्तपिसरं तह य इहयं पि ॥ २७२६ ॥

चत्वार्यपि सामायिकानि-स्त्रीपुंनपुंसकलक्षणे त्रिविधेऽपि वेदे प्राप्यन्ते । इदमुक्तं भवति-चत्वार्यपि सामायिकान्यधिकृत्य त्रिविधवेदे विवक्षिते काले प्रतिपद्यमानकः संभवति, पूर्वप्रतिपन्नस्त्वस्त्येव । अवेदस्तु देशविरतिरहितानां त्रयाणां पूर्वप्रतिपन्नः स्यात्, न तु प्रतिपद्यमानकः । तथा, चतसृष्वपि संज्ञास्वाहारभयमैथुनपरिग्रहरूपासु चतुर्विधस्यापि सामायिकस्य भवति प्रतिपत्तिः-प्रतिपद्यमानको भवति, न न भवतीत्यर्थः, पूर्वप्रतिपन्नकस्त्वस्त्येव । ' हेट्ठ ' त्ति—अधो यथा ' पढमिल्लुआण उदए नियमा संजोयणा कसायाणं ' इत्यादिना कषायेषु वर्णितं तथेहापि वर्णयितव्यम्, सामान्येन तु सकषायी चतुर्णामपि प्रतिपद्यमानकः, पूर्वप्रतिपन्नश्च भवति । अकषायी तु छद्मस्थवीतरागो देशविरतिवर्जसामायिकत्रयस्य पूर्वप्रतिपन्नो भवति, न तु प्रतिपद्यमानक इति । गतं वेदादिद्वारत्रयम् ।

(५२) साम्प्रतमायुर्ज्ञानद्वारद्वयाभिधित्सया प्राह—

संखेज्जाऊ चउरो, भयणा सम्मसुएँऽसंखवासाणं ।
ओहेण विभागेण य, नाणी पडिवज्जए चउरो ॥२७२७॥

संख्यातवर्षायुर्जीवश्चत्वारि सामायिकानि प्रतिपद्यते, प्रतिपन्नस्त्वस्त्येव ' इति शेषः । ' भयणे ' त्यादि भजना—विकल्पना सम्यक्त्वश्रुतसामायिकयोरसंख्येयवर्षायुषाम् । इयमत्र भावना—विवक्षितकालेऽसंख्येयवर्षायुषां सम्यक्त्वश्रुतयोः प्रतिपद्यमानकः सम्भवति, पूर्वप्रतिपन्नस्त्वस्त्येवेति द्वारम् । ' ओहेणे ' त्यादि ओघेन—सामान्यतो निश्चयनयमतेन ज्ञानी चत्वार्यपि सामायिकानि प्रतिपद्यते, व्यवहारनयमतेन त्वज्ञानिन एव सम्यक्त्वश्रुतप्रतिपत्तेः । पूर्वप्रतिपन्नस्तु ज्ञानी चतुर्णामप्यस्त्येव । विभागेन च भेदेन यदा ज्ञानी चिन्त्यते तदा मतिश्रुतज्ञानी द्वे सम्यक्त्व—श्रुतसामायिके युगपत् प्रतिपद्यते । देशसर्वविरतिसामायिके तु भजनया प्रतिपद्यते । पूर्वप्रतिपन्नस्तु चतुर्णामप्यस्त्येव । अवधिज्ञानी तु सम्यक्त्व—श्रुतसामायिकयोः पूर्वप्रतिपन्न एव न प्रतिपद्यमानकः । देशविरतिसामायिकं तु न प्रतिपद्यते । देवनारकयतिश्रावका हि चत्वारोऽवधिस्वामिनः । तत्राद्यत्रयस्य देशविरतिप्रतिपत्तेरसम्भव एव, श्रावकोऽप्यवधिज्ञानं प्राप्य देशविरतिं प्रतिपद्यत इत्येवं न, किन्तु पूर्वमभ्यस्तदेशविरतिगुणः पश्चादवधिं प्रतिपद्यते, देशविरत्यादिगुणप्राप्तिपूर्वकत्वादवधिज्ञानप्रतिपत्तेरित्येतावद् गुरुभ्योऽस्माभिरवगतम्, तत्त्वं तु केवलिनो विदन्ति । सर्वविरतिसामायिकं तु प्रतिपद्यते । पूर्वप्रतिपन्नस्तु सर्वेषामप्यस्त्येव । मनःपर्यायज्ञानी तु देशविरतिरहितसामायिकत्रयस्य पूर्वप्रतिपन्न एव, न तु प्रतिपद्यमानः, युगपद्वा सह तेन वा चारित्रं प्रतिपद्यते तीर्थकृत्, उक्तं च-' पडिवण्णम्मि चरित्ते, चउनाणी जाव छउमत्थो " इति । भवस्थकेवलिसम्यक्त्वचारित्रसामायिकयोः पूर्वप्रतिपन्नो भवति, न तु प्रतिपद्यमानकः । इति निर्युक्तिगाथाद्वयार्थः ।

भाष्यम्—

दोसु जुगवं चिय दुगं, भयणा देसविरइए य चरणे य ।
ओहिम्मि न देसवयं, पडिवज्जइ होइ पडिवन्नो ॥२७२८॥
देसव्वयवज्जं मा—णसम्म पवन्नो समं पि च चरित्तं ।

भवकेवले पवन्नो, पुव्वं सम्मत्तचारित्तं ॥ २७२९ ॥
उक्तार्थ एव, नवरं 'दोसु जुगवं चिय दुर्गं' ति-द्वयोर्मतिज्ञान-श्रुतज्ञानयोर्युगपदेव प्रतिपत्तिमाश्रित्य सम्यक्त्व-श्रुतसामायिकद्विक प्राप्यत इति ।

(५३) अथ योगोपयोगशरीरद्वारत्रयाभिधित्सया प्राह—

चउरो तिविहे जोए, उवओगदुगम्मि चउरो पडिवज्जे।
ओरालिए चउक्कं, सम्मसुयविउव्विए भयणा ॥२७३०॥

चत्वार्यपि सामायिकानि सामान्यतस्त्रिविधयोगे मनोवाक्कायलक्षणे सति प्रतिपत्तिमाश्रित्य विवक्षिते काले सम्भवन्ति, प्राक्प्रतिपन्नता त्वधिकृत्य विद्यन्त एव। विशेषतस्त्वौदारिककाययोगवति योगत्रये चत्वार्युभयथाऽपि लभ्यन्ते। वैक्रियसहिते तु योगत्रये सम्यक्त्वश्रुते उभयथाऽपि प्राप्येते, देशसर्वविरती तु पूर्वप्रतिपन्ने लभ्येते। आहारकयुक्ते तु योगत्रये देशविरतिरहितानि त्रीणि पूर्वप्रतिपन्नानि भवन्ति, तैजसकार्मणयोग एव केवलेऽपान्तरालगतावाद्य सामायिकद्वय प्राक् प्रतिपन्नतामधिकृत्य प्राप्यते। केवलिसमुद्घाते तु सम्यक्त्वचारित्रसामायिके पूर्वप्रतिपन्ने प्राप्येते। मनोयोगे केवले न किञ्चित्, तस्यैवाभावात्। एवं वाग्योगेऽपि काय-वाग्योगद्वये-द्वीन्द्रियादिषूत्पन्नमात्रस्य सास्वादनस्य पूर्वप्रतिपन्ने सम्यक्त्वश्रुते प्राप्येते इत्यलं विस्तरेण। 'उवओगे' त्यादि, साकारानाकारभेद उपयोगे उपयोगद्वये चत्वारि प्रतिपद्यते, प्राक् प्रतिपन्नस्तु विद्यत एव। आ-आऽऽक्षेपपरिहारौ भाष्यकार एव वक्ष्यति। 'ओरालिए' इत्यादि, औदारिकशरीरे सामायिकचतुष्कमुभयथाऽप्यस्ति। सम्यक्त्वश्रुतयोर्वैक्रियशरीरे भजना-विकल्पना कार्या देवादि कदाचित् ते प्रतिपद्यते, कदाचिद् नेति। देशविरतिसर्वविरतिसामायिके तु वैक्रियशरीरिणस्तिर्यग्मनुष्या अपि न प्रतिपद्यन्ते। विक्रियाप्रवृत्तित्वेन किल तेषां प्रमत्तत्वादिति। पूर्वप्रतिपन्नस्तु वैक्रियशरीरे चतुर्णामपि प्राप्यत एव। शेषशरीरविचारः प्रस्तुतगाथायामेवादौ निरूपितयोगद्वारानुसारत एव भावनीय, इति निर्युक्तिगाथार्थ।

यदुक्तम् 'उवओग दुगम्मि चउरो पडिवज्जे' इति। तत्र भाष्यकारः प्रेर्यमुत्थापयन्नाह—

सव्वाओ लद्धीओ, जइ सागारोवओगभावम्मि।
इह कहमुवओगदुगे, लब्भइ सामाइयचउक्कं ॥२७३१॥

आह ननु, 'सव्वाओ लद्धीओ सागारोवओगोवउत्तस्स भवति" इत्यागमे प्रोक्तम्, ततो यदि एतस्मादागमात् सर्वा अपि लब्धय साकारोपयोग एव भवन्ति; तर्हि कथमिह प्रोच्यते-' उपयोगद्वयेऽपि सामायिकचतुष्टयं लभ्यते' इति?।

अत्र परिहारमाह—

सो किर निअमो परिव-ड्ढमाणपरिणामयं पइ इहं तु।
जोऽवट्ठियपरिणामो, लभेज्ज स लभिज्ज वीए वि॥२७३२॥

'सव्वाओ लद्धीओ' इत्यादिको यस्त्वयाऽऽगमोक्तनियमोऽभिधीयते स किल परिवर्धमानपरिणामक जीवं प्रति द्रष्टव्य। इह च प्रस्तुते योऽवस्थितपरिणामो जीव सामायिकानि लभते, स द्वितीयेऽप्यनाकारोपयोगे लभेत तानि, इति न विरोधः।

आह ननु यद्येवमनाकारोपयोगेऽपि लब्धौ सत्या 'सव्वाओ लद्धीओ सागारोवओगे' इत्याद्यागमे साकारोपयोगस्यैव ग्रहणं किमर्थम्? इत्याशङ्क्याह—

पायं पवड्ढमाणो, लभए सागारगहणया तेणं।
इयरो उ जइच्छाए, उवसमसम्माइ लाभम्मि ॥२७३३॥

प्रायो-बाहुल्येन वर्धमान-प्रवर्धमानपरिणाम एव जीवो लब्धीर्लभते, तेनागमे साकारोपयोगस्यैव ग्रहणं कृतम्। इतरस्त्ववस्थितपरिणामो यदृच्छया सकृत् कदाचिदेवौपशमिकसम्यक्त्वादिलाभकाले प्राप्यते, इत्यनाकारोपयोगस्य स्वल्पत्वेन सतोऽप्यविवक्षितत्वात् सूत्रेऽग्रहणम्। आदिशब्दात्-श्रुतदेशसर्वविरतिसामायिकलाभपरिग्रह। अयमत्र भावार्थ, यथा—" सव्वाओ लद्धीओ सागारोवओगे " इत्यादिक आगमः, तथा-' उवओगदुगम्मि चउरो पडिवज्जे' इत्ययमप्यागम एव, अत परस्परप्रतिस्पर्द्धिसैद्धान्तिकवचसा व्यवस्था न्याय्या। सा चेयम्—या सम्यक्त्वं लब्ध्वा मिथ्यात्वं गतानां पुनरपि कुतश्चित् शुभोदयात् प्रतिपत्तिं प्रवर्धमानाध्यवसायवतां सम्यक्त्व-चारित्रादिलब्धयो भवन्ति, याश्चावध्यादिलब्धय उत्पद्यन्ते ताः सर्वा साकारोपयोगोपयुक्तस्य द्रष्टव्या। यास्तु प्रथमसम्यक्त्वलाभकालेऽन्तरकरणप्रविष्टस्यावस्थिताध्यवसायस्य सम्यक्त्वादिलब्धयो भवन्ति ता अनाकारोपयोगेऽपि भवन्ति न कश्चिद् दोष। अन्तरकरणे च वर्तमान सम्यक्त्व-श्रुतसामायिकलाभसमकालमेव कश्चिदतिविशुद्धत्वाद् देशविरतिम्, अपरस्त्वतिविशुद्धत्वात् सर्वविरतिमपि प्रतिपद्यते, इत्यौपशमिकसम्यक्त्वलाभकालेऽवस्थितपरिणामस्यानाकारोपयोगवर्तिनोऽपि चत्वार्यपि सामायिकानि भवन्ति, स्वल्पत्वाच्चैतदत्रागमे न विवक्षितमिति।

(५४) कथं पुनरिदमौपशमिकसम्यक्त्वं जीवस्याभ्युपगन्तव्यम्? इत्याह—

ऊसरदेसं दड्ढि-ल्लयं व विज्झाइ वणदवो पप्प।
इय मिच्छस्स अणुदए, उवसमसम्मं मुणेयव्वं ॥२७३४॥

यथोषरदेशं पूर्ववद् दग्धप्रदेश वा प्राप्य वनदवो विध्यायति, इत्येवमन्तरकरणं प्राप्य मिथ्यात्वस्यानुदये मिथ्यात्वोदयवह्नावुपशान्ते औपशमिकं सम्यक्त्वं जीवस्य मुणितव्यमिति।

कदा पुनरिदं भवति? इत्याह—

उवसामगसेढिगय-स्स होइ उवसामगं तु सम्मत्तं।
जो वा अकयतिपुंजो, अखवियमिच्छो लहइ सम्मं ॥२७३५

प्रागुक्तार्था।

(५५) कथं पुनरस्यौपशमिकसम्यक्त्वलाभेऽवस्थितपरिणामत्वम्? इत्याह—

जं मिच्छस्साणुदओ, न हायए तेण तस्स परिणामो।
जं पुण सयमुवसंतं, न वड्ढए तेण परिणामो ॥२७३६॥

यद्-यस्मादन्तरकरणे मिथ्यात्वस्यानुदयस्तेन तस्माद् न हीयते तस्य परिणाम, हानिकारणाभावात्। यस्मात् पुन स्वतोगतं मिथ्यात्वमुपशान्तं विष्कम्भितोदयमपनीतमिथ्यास्वभावं च, तेनास्य परिणामो न वर्धते। यथा हि-वनद-

वो द्राह्याभावाद् न वर्धते : किन्तु विध्यायति, इत्येवं वेद्यस्य मिथ्यात्वस्याभावात् तत्क्षपणाया निवृत्तिकरणवद् नौपशमिकसम्यग्दृष्टेः परिणामो वर्धते किन्त्ववस्थित एवास्ते, अतोऽवस्थितपरिणामत्वमिति ।

(५६) 'ओरालिए चउक्कं' इत्यादेर्व्याख्यानमाह—

दुगपडिवत्ती वेउ–व्वियम्मि सव्वाइं पुव्वपडिवन्नो ।
देमव्वयवज्जाइं, आहाराईसु तीसुं तु ॥ २७३७ ॥

उक्तार्था । नवरमाहारकशरीरे देशविरतिवर्जसामायिकत्रयं पूर्वप्रतिपन्नमवाप्यते, चतुर्दशपूर्वविदो देशविरतेरभावात्, शेषाणां तु पूर्वप्रतिपन्नत्वेन प्रतिपत्तेरसंभवादिति । तैजसकार्मणयोस्तु केवलिसमुद्घाते चतुर्थपञ्चमतृतीयसमयेषु सम्यक्त्वचारित्रसामायिकस्य विग्रहगतौ तु सम्यक्त्वश्रुतयोः पूर्वप्रतिपन्नः प्राप्यते । इति गाथासप्तकार्थः ।

(५७) अथ संस्थानादिद्वारत्रयमाह–

सव्वेसु वि संठाणे–सु लहइ एमेव सव्वसंघयणे ।
उक्कोसजहन्नं व–ज्जिऊण माणे लभे मणुओ ॥२७३८॥

संस्थितिः संस्थानमाकारविशेषलक्षणम् । तच्च 'समचउरंसे निग्गोहमंडले' इत्यादिभेदात् षोढा । तत्र सर्वेष्वपि संस्थानेषु लभते—प्रतिपद्यते चत्वार्यपि सामायिकानि, 'प्राक् प्रतिपन्नोऽप्यस्ति' इत्यध्याहारः ।

(संहनने)—

'एमेव सव्वसंघयणे' त्ति—संहन्तिः संहननमस्थिसञ्चयविशेषः, तानि च वज्रर्षभनाराचादिभेदात् षड् भवन्ति । एतेषु च यथासंस्थानेष्वेवमेव निरवशेषो विचारः कर्तव्यः, पूर्वप्रतिपन्नानि प्रतिपद्यमानानि चैतेष्वपि चत्वारि लभ्यन्त इत्यर्थः ।

(अवगाहना)—

'उक्कोसे' इत्यादि मीयते इति मानं—शरीरस्य प्रमाणमवगाहनेत्यर्थः । तत्र मनुष्यस्योत्कृष्टमानं त्रीणि गव्यूतानि, जघन्यं त्वङ्गुलासंङ्ख्येयभागः, एतदुत्कृष्टं जघन्यं च मानं वर्जयित्वा मध्यमशरीरमानं वर्तमानो मनुष्यो लभते-प्रतिपद्यते 'चत्वार्यपि सामायिकानि' इति प्रक्रमाद् गम्यते । पूर्वप्रतिपन्नस्त्वस्त्येव । जघन्यावगाहस्तु गर्भजमनुष्यः सम्यक्त्वश्रुतयोः पूर्वप्रतिपन्नः सम्भवति । न तु प्रतिपद्यमानकः उत्कृष्टावगाहनस्तु । त्रिगव्यूतः सम्यक्त्व-श्रुतयोर्द्विधाऽप्यस्ति । नारकदेवा अपि जघन्यावगाहनाः सम्यक्त्वश्रुतयोः पूर्वप्रतिपन्नाः सम्भवन्ति न तु प्रतिपद्यमानकाः । मध्यमोत्कृष्टावगाहनास्त्वेतयोः प्रतिपद्यमानकाः सम्भवन्ति, पूर्वप्रतिपन्नास्तु सन्त्येव, तिर्यञ्चस्तु पञ्चेन्द्रिया जघन्यावगाहनाः सम्यक्त्व-श्रुतयोः पूर्वप्रतिपन्नाः सम्भवन्ति न तु प्रतिपद्यमानकाः उत्कृष्टावगाहनास्तु षड्गव्यूतास्तयोर्द्विधाऽपि लभ्यन्ते । मध्यमावगाहनास्तु द्वयोस्त्रयाणां वा सर्वविरतिवर्जितानां प्रतिपद्यमानकाः सम्भवन्ति पूर्वप्रतिपन्नास्तु त्रयाणां सन्त्येव इति निर्युक्तिगाथार्थः ।

अथ भाष्यम्—

न जहन्नोगाहणओ, पवज्जए दोण्णि होज्ज पडिवन्नो ।
उक्कोसोगाहणगो, दुहा विदो तिन्नि उ तिरिक्खो ॥२७३९॥

जघन्यावगाहनो गर्भजमनुष्यस्तिर्यक् च न किञ्चित् प्रतिपद्यते, द्वयोस्त्वाद्ययोः पूर्वप्रतिपन्नो भवेत् । उत्कृष्टावगाहनस्त्वनयोर्द्विधाऽपि पूर्वप्रतिपन्न प्रतिपद्यमानकश्च भवति । मध्यमावगाहनो मनुष्यश्चतुर्णामपि सामायिकानां पूर्वप्रतिपन्नः प्रतिपद्यमानश्च लभ्यत इति द्रष्टव्यम् । पञ्चेन्द्रियतिर्यक् पुनर्द्वयोराद्ययोः त्रयाणां वा सर्वविरतिवर्जितानां 'द्विधापि' इत्यत्रापि वर्तते, पूर्वप्रतिपन्नः प्रतिपद्यमानश्च भवति इति गाथार्थः ।

(५८) अथ लेश्याद्वारमाह—

सम्मत्तसुयं सव्वा–सु लहइ सुद्धासु तीसु य चरित्तं ।
पुव्वपडिवन्नओ पुण, अन्नयरीए उ लेसाए ॥ २७४० ॥

सम्यक्त्वश्रुतसामायिके सर्वास्वपि कृष्णादिकासु शुक्लान्तासु षट्स्वपि लेश्यासु लभते-प्रतिपद्यते नरकादिः । चारित्रं तु देशसर्वविरतिलक्षणं शुद्धास्वेवोपरितनीषु तैजसीपद्मशुक्ललक्षणासु तिसृषु लेश्यासु प्रतिपद्यते । पूर्वप्रतिपन्न पुनः षण्णामन्यतरस्यामपि लेश्याया चारित्री सम्यग्दृष्टिश्च प्राप्यते । इति निर्युक्तिगाथार्थः ।

अथ भाष्यकारः प्रेर्यमुत्थापयन्नाह—

नणु मइसुयाइलाभो–ऽभिहिओ सुद्धासु तीसु लेसासु ।
सुद्धासु असुद्धासु य, कहमिह सम्मत्तसुयलाभो ? ॥२७४१॥

ननु पूर्वं ज्ञानपञ्चकविचारे मतिश्रुतादिज्ञानलाभः शुद्धास्वेव तैजसीप्रभृतिषु तिसृषु लेश्यास्वाभिहितः, इह तु शुद्धास्वशुद्धासु च षट्स्वपि सम्यक्त्वश्रुतलाभोऽभिधीयमानः कथं न विरुध्यते ? इति ।

अत्र परिहारमाह

सुरनेरइएसु दुगं, लब्भइ य दव्वलेसया सव्वे ।
नाणेसु भावलेसाऽ–हिगया इह दव्व लेसाओ ॥२७४२॥

इह तावत् सुरनारकेष्वपि सम्यक्त्वश्रुतसामायिकद्वयं लभ्यत एव ते च सुरनारकाः सर्वेऽप्यवस्थितद्रव्यलेश्या भवन्ति, यथासम्भवं षडपि कृष्णादिद्रव्यलेश्यास्तेष्ववस्थिताः श्रुते प्रतिपाद्यन्त इत्यर्थः । भावलेश्यास्तु तेषां परावृत्त्या कस्यचित् काचिदेव भवति । तिर्यग्मनुष्याणां त्ववस्थिता द्रव्यलेश्या न भवन्ति, किन्तु-द्रव्यलेश्या, भावलेश्या च सर्वेषां परावर्तते । देवनारकाणामपि द्रव्यलेश्यैवावस्थिता, भावलेश्या तु तेषामपि परावृत्त्या कदाचित् काचिदेव भवति । ततश्च सुरनारका अपि यदा सम्यक्त्वादिकं लभन्ते तदा भावलेश्या तैजस्यादीनामन्यतरा शुद्धैव भवति, अशुद्धा तु नित्यावस्थितत्वात् तेषां द्रव्यलेश्यैव द्रष्टव्या न तु भावलेश्या । एवं च स्थिते ज्ञानेषु मत्यादिषु पूर्वं लाभचिन्तायां भावलेश्यैवाधिकृता भावलेश्यामेवाङ्गीकृत्य शुद्धलेश्याशये तल्लाभ उक्त इत्यर्थः । इह तु सम्यक्त्वश्रुतसामायिकलाभचिन्तायां देवनारकानाश्रित्य द्रव्यलेश्या अधिकृताः, तेन शुद्धास्वशुद्धासु च सर्वासु लेश्यासु तल्लाभ उक्त इति भावः । भावलेश्यामङ्गीकृत्य पुनरिहापि शुद्धास्वेव तिसृषु तैजस्यादिलेश्यासु तल्लाभोऽवगन्तव्यः । इति न कश्चिद् विरोधः । आह—ननु यदि देवनारकाणां कृष्णादिका अशुभा द्रव्यलेश्या सदाऽवस्थिता

भवन्ति तदा सम्यक्त्वादि-लाभकाले कथं तथा शुभभावलेश्यासम्भव । द्रव्यलेश्या हि भावलेश्या जनयन्ति । तत कृष्णादिलेश्या द्रव्याण्यशुभानि कथ शुभभावलेश्या-जनयेयु , अशुभकारणात् शुभकार्यायोगात् ? इति सत्यम् , किन्तु—नारकादीनामपि सम्यक्त्वादिलाभकाले कथमपि यथाप्रवृत्तिकरणेन शुभानि तैजस्यादिद्रव्यलेश्याद्रव्याण्या-क्षिप्यन्त । ततो यथाऽऽदर्शे श्वेतोऽपि जपाकुसुमादिवस्तुप्रतिविम्बसङ्क्रान्तौ रक्तादिरूपता प्रतिपद्यते तथा कृष्णाद्यशुभद्रव्याण्यपि तैजस्यादिशुभद्रव्यप्रतिविम्बसङ्क्रमे निजरूपोत्कटता परित्यज्य तदाभासतां प्रतिपद्यन्ते । ततो नारकादीनामपि कृष्णाद्यशुभद्रव्यानुभावं मन्दता नीत्वा शुभानि तैजस्यादिद्रव्याणि शुभा भावलेश्या जनयन्ति अतोऽवस्थितायामपि कृष्णादिद्रव्यलेश्याया नारकदेवाना सम्यक्त्वादिलाभकाले शुभभावलेश्यासम्भवो न विरुध्यते । इत्यलं विस्तरेण । तदर्थिना तु—" से नूणं भंते ! किण्हलेसा नीललेस पप्प नो तारूवत्ताए, नो तावन्नत्ताए " इत्यादि प्रज्ञापनासूत्रं मूलावश्यकटीकादिलिखितमनुसरणीयम् इति गाथाद्वयार्थ ।

( ५६ ) अथ परिणामद्वारमाह—

वड्ढंते परिणामे, पडिवज्जइ सो चउएहमएणयरं ।
एमेव वड्ढियम्मि वि, हायंते न किंचि पडिवज्जे ॥२७४३॥

परिणाम-–अध्यवसायविशेष तत्र शुभशुभतररूपतया वर्धमाने परिणामे प्रतिपद्यते स वर्धमानपरिणामो जीवश्चतुर्णा सम्यक्त्वादिसामायिकानामन्यतरदिति । एवमेव पूर्वोक्तन्यायेनान्तरकरणादाववस्थितेऽपि शुभे परिणामे प्रतिपद्यते स चतुर्णामन्यतरदिति । हीयमाने तु क्षीयमाणे शुभे परिणामे न कश्चित् सामायिकम् प्रतिपद्यते, सङ्क्लिष्टत्वात् । प्राक्प्रतिपन्नस्तु त्रिष्वपि परिणामेषु भवतीति ।

(६०) अथ वेदनासमुद्घातकर्मद्वारद्वयमाह—

दुविहाएँ वेयणाए, पडिवज्जइ सो चउएहमएणयरं ।
असमोहओ वि एमे-व पुव्वपडिवन्नए भयणा ॥२७४४॥

द्विविधाया वेदनाया साता-ऽसातरूपाया सत्यां प्रतिपद्यते स चतुर्णामन्यतरत् , प्राक्प्रतिपन्नश्च भवतीति द्वारम् । सम्यगेकीभाव, उत—प्राबल्य , वेदना-कषायाद्यनुभवपरिणामेन सहैकीभावमापन्नस्य जन्तोर्वेदनीयादिकर्मपुद्गलाना प्राबल्येन हननं—घात समुद्घात । स च केवलिसमुद्घातादिभेदात् सप्तविध , उक्तं च- केवलिकसायमरणा,वेयणवेउव्वितेयआहारे । सत्तविहसमुग्घाआ, पन्नत्तो वीयरागेहिं ॥ १ ॥' समुद्घाते एव कर्म—क्रिया समुद्घातकर्म तद्द्वारमित प्रोच्यते । तत्र केवल्यादिसमुद्घातेन समवहतस्य विपक्षोऽसमवहत । सोऽप्येवमेव वेदनावद् वाच्य , चतुर्णा प्रतिपद्यमानक पूर्वप्रतिपन्नश्च भवतीत्यर्थ । ' पुव्वपडिवन्नए भयण' त्ति—इद साध्याहारं व्याख्येयम् , तद्यथा-यस्तु केवल्यादिसप्तविधसमुद्घातेन समवहत स न किञ्चित् सामायिक प्रतिपद्यते । पूर्वप्रतिपन्नक तु भजना-सेवना समर्थनाविधि कार्य इति यावत् । समवहतो हि सामायिकद्वयस्य त्रयस्य वा पूर्वप्रतिपन्नको भवति । तत्र केवलिसमुद्घाते सम्यक्त्वचारित्रसामायिकद्वयस्य पूर्वप्रतिपन्नको लभ्यते । शेषसमुद्घातेषु पुनर्देशविरतिवर्जसामायिकत्रयस्य चारित्रवर्जस्य वा सामायिकत्रयस्य पूर्वप्रतिपन्न प्राप्यते इति निर्युक्तिगाथार्थ । विशे० । आ० म० ।



(६१) निर्वेष्टनोद्वर्तनद्वारद्वयमाह—

दव्वेण य भावेण य, निव्वेट्ठंतो चउएहमएणयरं ।
नरएसु अणुव्वट्टे,दुग तिग चउरो सि उव्वट्टे ॥२७४५॥

द्रव्यत सामान्येन सर्वकर्मप्रदेशान् , विशेषतस्तु तस्य चतुर्विधस्य सामायिकस्य यदावरण ज्ञानावरणमोहनीयलक्षण तत्प्रदेशान् निर्वेष्टयन् निर्जरयन् , भावतस्तु क्रोधाद्यध्यवसायान् निर्वेष्टयन् हा(प)यंश्चतुर्णामन्यतरत् प्रतिपद्यते, पूर्वप्रतिपन्नस्त्वस्त्येव । सर्वेष्टयस्त्वनन्तानुबन्ध्यादीन् न प्रतिपद्यते,शेषकर्म त्वङ्गीकृत्योभयथाऽप्यस्ति । नरकेष्वधिकरणभूतेष्वनुद्वर्तयंस्तत्रस्थ एवेत्यर्थ , आद्यं सामायिकद्वयं प्रतिपद्यते, तदेव चाधिकृत्य पूर्वप्रतिपन्नो भवति । तत उद्वृत्त स्यात् कदाचित् तिर्यक्षूत्पन्न सर्वविरतिवर्जं सामायिकत्रय प्रतिपद्यते , कदाचित्तु मनुष्येषूत्पन्नश्चत्वार्यपि प्रतिपद्यते , पूर्वप्रतिपन्नस्त्वस्त्येव इति निर्युक्तिगाथार्थः ।

भाष्यम्—

कम्मं निव्वेट्टंतो, पवज्जइ विमेसओ तदावरणं ।
दव्वं कम्मपएसे, भावे कोहाइ हाविंतो ॥२७४६॥

उक्तार्थैव ।

तदेवोद्वर्तनाद्वारं निरयादीनधिकृत्याह—

तिरिएसु अणुव्वट्टे, तिगं चउक्कं सिया उ उव्वट्टे ।
मणुएसु अणुव्वट्टे,चउरो वि तियं सि उव्वट्टे ॥२७४७॥
देवेसु अणुव्वट्टे,दुग तिग चउरो सिया उ उव्वट्टे ।
उव्वट्टमाणओ पुण,सव्वो वि न किं चि पडिवज्जे॥२७४८

तिर्यक्षु गर्भजेष्वनुद्वृत्त संज्ञिकमाद्य सामायिकत्रयमधिकृत्य ' प्रतिपत्ता पूर्वप्रतिपन्नश्च भवति ' इत्यध्याहार । 'चउक्क'मित्यादि तिर्यग्भ्य उद्वृत्ता मनुष्यादिष्वायात स्यात् कदाचिच्चतुष्कम् , स्याद् ग्रहणादिदमपि द्रष्टव्यम् । स्यात् त्रिकम् , स्याद् द्विकमधिकृत्योभयथाऽप भवतीति । 'मणुएसु अणुव्वट्टे चउरो' त्ति-मनुष्येष्वनुद्वृत्त संश्चत्वारि प्रतिपद्यते, प्राक् प्रतिपन्नश्च भवति । 'तियं सि उव्वट्टे' मनुष्येभ्य उद्वृत्तो देव-नारकेषूत्पन्न प्रथमं सामायिकद्वयमधिकृत्योभयथाऽपि लभ्यते । तिर्यक्षूत्पन्न पुन सर्वविरतिवर्जसामायिकत्रिकमाश्रित्य द्विधाऽपि भवतीति । 'देवेसु अणुव्वट्टे दुग ' त्ति-देवेष्वनुद्वृत्त सन्नाद्यं सामायिकद्वयमाश्रित्योभयथाऽपि भवति । ' तिग चउरो सिया उ उव्वट्टे ' त्ति-देवेभ्य उद्वृत्तस्तिर्यक्ष्वायात सर्वविरतिसामायिकत्रिकम् , मनुष्येषु त्वायात सामायिकचतुष्कमप्याश्रित्योभयथापि स्यादिति । उद्वर्तमान पुनरपान्तरालगतौ सर्वोऽप्यमरादिर्न किञ्चित् प्रतिपद्यते , प्राक् प्रतिपन्नस्तु द्वयोर्भवतीति ।

( ६२ ) आश्रवकरणद्वारमाह—

नीसवमाणो जीवो, पडिवज्जइ सो चउएहमएणयरं ।

पुव्वपडिवन्नओ पुण,सिय आसवओ व नीसवओ२७४९

यत् सम्यक्त्वादिसामायिकं प्रतिपद्यते तदावारकं मिथ्यात्वमोहनीयादिकर्म निश्रावयन्-निर्जरयन्नेव शेषकर्म तु बध्नन्नपि जीवः प्रतिपद्यते स चतुर्णामन्यतरदिति । यस्तु पूर्वप्रतिपन्नः सः, वाशब्दस्य व्यवहितसंबन्धात् स्यादाश्रावको, बन्धक इत्यर्थः, निश्रावको वा निर्जरकः स्यात् । निर्वेष्टनद्वारोक्त एवार्थोऽत्र पर्यायान्तरेणोक्तः, परमार्थतस्त्वात्यन्तिकभेदाभावादिति ।

(६३) अथालङ्कारशयनाऽऽसनस्थानचङ्क्रमणद्वारकदम्बकं व्याचिख्यासुराह—

उम्मुक्कमणुम्मुक्के, उम्मुच्चंते य केसलंकारे ।
पडिवज्जिज्जं नयरं, सयणाईसुं पि एमेव ।। २७५० ।।

केशोपलक्षितकटककेयूरहारकङ्कणवस्त्रताम्बूलाद्यलङ्कार । केशालङ्कारस्तत्रोन्मुक्ते परित्यक्ते, अनुन्मुक्ते च-अपरित्यक्ते, तथा उन्मुच्यमाने च केशाद्यलंकारचतुर्णामन्यतरत् सामायिकं प्रतिपद्यते । अत्र च भरतचक्रवर्त्यादय उदाहरण मन्तव्याः । एवं शयने, आसने, स्थाने, चङ्क्रमणे च परित्यक्ते अपरित्यक्ते परित्यज्यमाने चैतासु तिसृष्वप्यवस्थासु चतुर्णामन्यतरत् प्रतिपद्यते प्राक् प्रतिपन्नश्च सर्वत्र लभ्यते । इति निर्युक्तिगाथाचतुष्टयार्थः तदेवमुक्तं विस्तरतः 'कहिं' इति द्वारम् ।

अथ 'केषु' सामायिकं लभ्यत इति द्वारमभिधातुमाह—

सव्वगयं सम्मत्तं, सुयचारित्ते न पज्जवा सव्वे ।
देसविरइं पडुच्चा, दोण्ह वि पडिसेहणं कुज्जा ।।२७५१।।

अथ केषु द्रव्येषु पर्यायेषु च सामायिकम् ?, इति जिज्ञासायामुच्यते सर्वद्रव्यपर्यायगतं सम्यक्त्वम् सर्वद्रव्यपर्यायश्रद्धानरूपत्वात् तस्य । तथा-श्रुत-श्रुतसामायिके,चारित्रे-चारित्रसामायिके द्रव्याणि सर्वाण्यपि भवन्ति । विषयपर्यायास्तु न सर्वे तद्विषय, श्रुतस्याभिलाप्यविषयत्वात्, पर्यायाणां चाभिलाप्याऽनभिलाप्यरूपत्वादिति । चारित्रस्यापि 'पढमम्मि सव्वजीवा' इत्यादिना सर्वद्रव्याऽसर्वपर्यायविषयताया प्रतिपादितत्वादिति । देशविरतिं प्रतीत्य द्वयोरपि सकलद्रव्यपर्याययोः प्रतिषेधनं कुर्यात्-न सर्वद्रव्यविषयम्, नापि सर्वपर्यायविषयं देशविरतिसामायिकमिति भाव , इति निर्युक्तिगाथार्थः ।

अथ भाष्यकारव्याख्या—

एगं पि असद्दहओ, जं दव्वं पज्जवं च मिच्छत्तं ।
विणिउत्तं सम्मत्तं, तो सव्वयदव्वभावेसु ।।२७५२।।
नाणभिलप्पेसु सुयं, जम्हा न य दव्वमणभिलप्पं ति ।
सव्वदव्वेसुं तयं, तम्हा न उ सव्वभावेसु ।। २७५३ ।।
बिइयचरिमव्वयाइं, पइ चारित्तमिह सव्वदव्वेसु ।
न उ सव्वपज्जवेसुं, सव्वाणुवओगभावाओ ।।२७५४।।

यद् यस्मादेकमपि द्रव्यं पर्यायं वा जिनप्रणीतमश्रद्दधत सतो मिथ्यात्वमुक्तम्, तत सम्यक्त्वं विनियुक्तं सर्वद्रव्यपर्यायेषु ; श्रद्धानभावेन इति शेषः । यस्माच्च श्रुतज्ञानमनभिलाप्येषु न प्रवर्तते अविषयत्वात् तेषाम्, किन्त्वभिलाप्येष्वेवार्थेषु तत् प्रवर्तते । न च द्रव्यं धर्मास्तिकायादिकमनभिलाप्यं किन्त्वभिलाप्यमेव । ततः सर्वद्रव्येषु श्रुतं प्रवर्तते, अभिलाप्यविषयत्वात्, तस्य, न पुन सर्वभावेषु सर्वपर्यायेषु तेषामभिलाप्याऽनभिलप्यत्वात् श्रुतस्य चाभिलाप्यमात्रविषयत्वात्, अभिलाप्यानां चानभिलाप्येभ्योऽनन्तभागमात्रवृत्तित्वादिति । 'बिइय' त्यादि द्वितीयचरमव्रतं द्वितीयं मृषावादव्रतम् । चरमं तु परिग्रहव्रतमाश्रित्येह प्रक्रमे चारित्रं सर्वद्रव्येषु प्रवर्तते न तु सर्वपर्यायेष्वित्युक्तम्, मृषावादस्य वचनरूपत्वेन, परिग्रहस्य च मूर्च्छा विकल्पात्मकत्वेन द्रव्येष्वेव सर्वेषु प्रवृत्ते, तेषामेवाभिलाप्यविषयत्वात्, पर्यायाणां त्वभिलाप्याऽनभिलाप्यत्वात् । अत एवाह-सर्वेषां पर्यायाणां चारित्रेऽनुपयोगभावात् ; अनुपयोगश्चानभिलाप्यानाश्रित्य मन्तव्य । शेषाणि तु त्रीणि महाव्रतानि सर्वद्रव्यविषयाण्यपि न भवन्ति, किमुत—सर्वपर्यायविषयाणि ? । अतोऽद्वितीयचरमव्रते एवाश्रित्य सर्वद्रव्या सर्वपर्यायविषयता-चारित्रस्य भावितेति ।

सर्वपर्यायाणां चारित्रेऽनुपयोगभावात्, इति यदुक्तं तदुपजीव्य पर. प्रेर्यमाह—

नणु सव्वनहपएसा-णंतगुणं पढमसंजमट्ठाणं ।
छव्विहपरिवुड्ढीए, छट्ठाणासंखया सेढी ।। २७५५ ।।
अन्ने के पज्जाया, जेऽणुवउत्ता चरित्तविसयम्मि ।
जे तत्तोऽणंतगुणा, जेसिं तमणंतभागम्मि ।। २७५६ ।।
अन्ने केवलिगम्म-त्ति ते मई ते वि के तदब्भहिया ।
एवं पि हुज्ज तुल्ला, नाणंतगुणत्तणं जुत्तं ।। २७५७ ।।

आह—ननु संयमश्रेण्यां सर्वजघन्यत्वेन यत् प्रथमम्-आद्यं संयमस्थानं तदपि पर्यायानाश्रित्य सर्वनभःप्रदेशानन्तगुणमागमे प्रोक्तम्—यावन्त सर्वस्यापि लोकालोकनभसः प्रदेशास्तदनन्तगुणपर्यायराशियुक्तं प्रथममपि संयमस्थानं श्रुतेऽभिहितमित्यर्थ । ततोऽन्यद् विशुद्धितोऽनन्तभागवृद्धम्, तदपरं त्वसंख्यातभागवृद्धम्, अन्यत्तु संख्यातभागवृद्धम्, तदपरं तु संख्यातगुणवृद्धम्, अन्यत् त्वसंख्यातगुणवृद्धम्, तदपरं त्वनन्तगुणवृद्धमित्येवं पुन पुन क्रियमाणया-षड्विधपरिवृद्ध्याऽसंख्येयलोकाकाशप्रदेशप्रमाणैः षट्स्थानकैर्निष्पन्ना संयमश्रेणिर्भवतीति । ततश्च के नाम तेऽन्ये समधिका पर्यायाः, ये 'सर्वानुपयोगभावात्' इति वचनाच्चारित्रविषयानुपयुक्ता प्रतिपाद्यन्ते ?, ये च-'न उ सव्वपज्जवेसु' इत्युक्ताभिप्रायात् ततश्चारित्रादनन्तगुणा, येषा च पर्यायाणा तच्चारित्रमनन्तभागेऽभिधीयते ? । अभिलाप्यपर्यायविषयं हि किल चारित्रम्, ते चानभिलाप्यानामनन्तभाग एव वर्तन्ते, अतो-'न उ सव्वपज्जवेसुं'इत्युक्तेऽनुपयुक्ताः पर्यायाश्चारित्रादनन्तगुणा ,चारित्रं तु तेषामनन्तभाग,इत्यनुक्तमपि सामर्थ्याद् गम्यत इति । एतच्च किल परो न मन्यते, सर्वजघन्यस्यापि संयमस्थानस्य सर्वनभःप्रदेशानन्तगुणपर्यायत्वात्, पर्यायाणां च त्रिभुवनेऽप्येतावन्मात्रत्वात्, चारित्रानुपयुक्तपर्यायाणामसम्भवादिति । 'अन्ने' इत्यादि, अत्रा-

चार्थ ! 'ते' तचैवभूता मतिर्भवञ्चारित्रोपयुक्तेभ्योऽन्येऽपि केवलज्ञानगम्या अनभिलाप्या अनन्तगुणाः पर्यायाः सन्ति, ये चारित्रादनन्तगुणाः, चारित्रं तु येषामनन्तभाग इति । पर प्राह-'ते वि के तदब्भहिय' त्ति—तेऽपि केवलज्ञानगम्या ज्ञेयगता अनभिलाप्या पर्याया । के तदभ्यधिकाः तेभ्यश्चारित्रोपयुक्तेभ्योऽभ्यधिका अतिरिक्ता स्यु ? न केचनेत्यर्थः, संयमस्थानपर्यायैः सर्वस्यापि त्रिजगत्पर्यायराशेः क्रोडीकृतत्वात् तदनुपयुक्तत्वासम्भवादिति । किञ्च-एवमपि चारित्रपर्याया केवलज्ञानगम्यैर्ज्ञेयगतै पर्यायैस्तुल्या एव भवेयुः, न पुनस्तेषां केवलज्ञानगम्यपर्यायाणामनन्तगुणत्व युक्तम् । यावन्तो-हि ज्ञेयस्य पर्यायास्तवन्तस्तदवभासकत्वेन ज्ञानस्यापेयेष्टव्या, अन्यथा तदवभासकत्वायोगात् । ततश्च ज्ञानदर्शनचरित्राध्यवसायात्मिकायाः संयमश्रेणेरन्तर्गतत्वात् केवलज्ञानस्य संयमश्रेण्यात्मकं चारित्रं पर्याये केवलज्ञानगम्यानां ज्ञेयगतपर्यायाणा तुल्यमेव युक्तं न हीनमिति ।

( ६४ ) एवं परस्यातिप्रेर्यनिपुणत्वमवलोक्य सूरिरतिनिपुणमेव प्रतिविधानमाह—

सेढी य नाणदंसण-पज्जाया तेण तप्पमाणा सा ।
इह पुण चरित्तमेत्तो-वओगिणो तेण ते थोवा ॥२७५८॥

श्रेण्यां ज्ञानदर्शन-चारित्राध्यवसायात्मिकायां संयमश्रेणौ ज्ञानदर्शनपर्याया मध्ये संलुलिना विवक्षिता, तेन तत्प्रमाणासौ सर्वनभ प्रदेशानन्तगुणपर्यायराशिप्रमाणाऽसौ प्रोक्ता । इह तु ये चारित्रोपयोगिनस्त एव विवक्षिताः, ते च ग्रहणधारणादिविषयभूता एव केचित्, तेन स्तोका इति न दोषः ।

अथान्यत् प्रेर्यमुत्थापयन्नाह—

णणु सामाइयविसओ, किं दारम्मि वि परूविओ पुव्विं ।
कह न पुणरुत्तदोसो, होज्ज इहं को विसेसो वा ?॥२७५६॥

ननु पूर्वं किंद्वार एव 'त खलु पच्चक्खाणं आवाए' इत्यादिना सामायिकाना विषय प्ररूपित एव, इह पुनरपि 'सव्वगयं सम्मत्तं' इत्यादिना तद्विषयनिरूपण कुर्वतः कथं न पुनरुक्तदोषो-भवेत् ?, को वा विशेषोऽत्र, यमाश्रित्य पुनरप्येवमुच्यते ? इति ।

अत्रोत्तरमाह—

किं तं ति जाइभावे-ण तत्थ इह नेयभावओऽभिहियं ।
इह विसयविसइभेओ, तत्थाभेओवयारो त्ति ॥२७६०॥

किं तत् सामायिकम् ? इति जातिभावेन विषयविषयिणोरभेदं चेतसि विधाय सामायिकजातिमात्रमेव तत्र पूर्वं किंद्वारेऽपरेण जिज्ञासितम्, तत 'आया खलु सामइयं' इत्यनेन तदेव मुख्यतया प्रोक्तम्, तद्विषयस्तु परेण जिज्ञासितोऽपि विषयिणि पृष्टे तदभिन्नत्वाद् गौणवृत्त्यैव प्रोक्त । इह तु 'केषु' इति द्वारे विषय एव मुख्यतया परेण जिज्ञासित, अतस्तस्यैव विषयस्य ज्ञेयभावेन ज्ञातव्यतयाऽभिहितं स्वरूपमित्युपस्कार । पाठान्तर वा-'अभिहिउ' त्ति—तत्रायमर्थ —इह तु ज्ञेयभावेन—ज्ञातव्यतया विषय एवाभिहित । किमुक्त भवति ?—इत्याह-'इहे' त्यादि, इह-केषु इतिद्वारे विषयविषयिणोर्भेदो विवक्षित इत्यतो निष्कृष्य विषय एव ज्ञेयभावेनोक्त, तत्र तु किं द्वारे विषयविषयिणोरभेदोपचार इत्यतो विषयिभूतं सामायिकमेव ज्ञेयभावेन मुख्यतया निर्दिष्टम् । इति गाथानवकार्थ । साम्प्रतं 'कथं सामायिक लभ्यते ?' इति द्वारे महाकष्टलभ्ये तल्लाभक्रमं दर्शयन्नाह—'माणुस्स' इत्यादिकाः 'अब्भुट्ठाणे विणए' इति पर्यन्ता अष्टाविंशतिगाथा । एताश्च पाठसिद्धा एव क्वचिद् वैषम्यसम्भवे मूलावश्यकटीकातो बोद्धव्या इति । कथमिति द्वारम् गतम् । विशे० । आ० म० । आ० चू० । ( कथं सामायिकमवाप्यते इति 'माणुसत्त' शब्दे षष्ठ भागे गतम् । )

(६५) मानुषत्वे लब्धेऽपि एतैः कारणैः दुर्लभं सामायिकमिति प्रतिपादयन्नाह—

आलस्स मोहवन्ना, थंभा कोहा पमायकिविणत्ता ।
भयसोगा अन्नाणा, वक्खेव कुऊहला रमणा ॥
एएहिँ कारणेहिं, लद्धूण सुदुल्लह पि माणुस्सं ।
न लहइ सुइं हियकरिं, संसारुत्तारणिं जीवो ॥

आलस्यान्न साधुसकाशं गच्छति शृणोति वा, तथा—मोहात् गृहकर्तव्यतया व्याकुलत्वात्, तथा-अवज्ञातः किमेते जानन्तीत्येवरूपायाः, स्तम्भात्-जाड्यादपि,मानात् उत्तमजातीयोऽहं कथमेनेषा भिक्षाचराणा हीनजातीयाना पार्श्वे गच्छामीत्यादिलक्षणात्,क्रोधात्तथा च कोऽपि साधुदर्शनादेव कुप्यति,तथा प्रमादात् मद्यादिप्रसक्तिरूपात्,कृपणत्वात् नूनं गतैस्तेभ्यः किमपि दातव्यं भविष्यतीत्येवं रूपात्,तथा-भयात् साधवो हि नरकादिभयं गतेभ्यो वर्णयन्तीति,शोकाद्वा इष्टवियोगजात्, अज्ञानात् कुदृष्टिजनितात्, कुबोधात् व्याक्षेपात् अन्यान्यबहुप्रयोजनकरणत आत्मनो व्याकुलीभावसपादनात्, तथा कुतूहलात् नटादिविषयात्, रमणात् नानाविधकुक्कुटयोधनादिक्रीडाप्रसक्तिरूपात्। 'एतेहिं' एभि कारणैरालस्यादिभिश्च दुर्लभमपि मानुष्यं लब्ध्वाऽपि हितकरीं संसारोत्तारणीं श्रुतिमिति एतादिसामग्रीयुक्तस्तु कर्मरिपुं विजित्याविकलचारित्रसामायिकमाप्नोति। यानादिगुणयुक्तयोध इव जयलक्ष्मीमिति ।

तथा चाऽऽह—

जाणावरणपहरणे,जुद्धे कुसलत्तणं व नीई य ।
दक्खत्तं ववसाओ, सरीरमारोग्गया चेव ॥

यानम्-हस्त्यादि आवरणम्-कवचादि प्रहरणम्-खड्गादि यानावरणप्रहरणानि,तथा-युद्धे कुशलत्वम्-सम्यक्त्वज्ञानम् नीतिश्च निर्गमप्रवेशरूपा,दक्षत्वम्-आशुकारिता व्यवसाय - शौर्य,शरीरमविकलम् आरोग्यता-व्याधिवियुक्तता-एतावद्गुणसामग्रीसमन्वित एव योधो जयश्रियमाप्नोति एष दृष्टान्त ।

दार्ष्टान्तिकयोजना त्वियम्—

जीवो जोहो जाणं, वयाणि आवरणमुत्तमाखंति ।
झाणं पहरणमिट्ठं, गीयत्थत्त व कोसल्लं ॥
दव्वाइ जहोवाया-गुरुत्वपडिवत्तिवत्तिया नीई ।

दक्खत्तं किरियाणं, जं करणमहीणकालम्मि ॥
करणं सहणं च तवो-वसग्गदुग्गा वतीएँ वयसाओ ।
एएहिँ सुनीरोगो, कम्मरिपुं जिणइ सव्वेहिं ॥
कर्मरिपुविजयपक्षे-जीवो योधो, महाव्रतानि-प्राणातिपातविरमणादीनि यानम्, उत्तमा क्षान्तिरावरणं, ध्यानं धर्मध्यानमिष्ट प्रहरणं, कौसलम् सम्यग्गीतार्थता द्रव्यादिषु-द्रव्यक्षेत्रकालभावेषु यथोपायं-श्रुतोक्तोपायमनतिक्रमेण या अनुरूपप्रतिपत्तिर्वर्त्तिता. यथा साधूनामेतत्-द्रव्यादि एतेनोपायेन देशकालाद्युचितेन कर्त्तव्यं नैतेनेति सा नीति, तथा क्रियाणां-प्रत्युपेक्षणवैयावृत्त्यादीनां यत् काले स्वस्वप्रस्तावे अहीनं-परिपूर्णं करणं तत्-दक्षत्वम्, तथा-करणं तपसो द्वादशभेदस्य उपलक्षणमेतत् संयमस्य च सहनं चोपसर्गेषु समापनत्तु अत्र बहु त्यक्तम्। यदि वा-यथा स्वयम्भूरमणसमुद्रमत्स्येन प्रतिमासं स्थितान् मत्स्यान् प्रतिमासं स्थितानि पद्मानि वा दृष्ट्वा सामायिकमवाप्यते। स्वयंभूरमणे हि मत्स्यानां पद्मानां च सर्वाण्यपि संस्थानानि संभवन्ति मुक्त्वैकं वलयसंस्थानं श्रुतमवाप्यते । आ० म० १ अ० ।

दिट्ठे सुए ऽणुभूए, कम्माण खए कए उवसमे ।
मणवयणकायजोगे, अपसत्थे लब्भए बोही ॥८४४॥
दृष्टे भगवत. प्रतिमादौ सामायिकमवाप्यते, यथा श्रेयांसेन भगवद्दर्शनादवाप्तमिति, कथानकं, चाध. कथितमेव श्रुते चावाप्यते यथाऽऽनन्दकामदेवाभ्यामवाप्तमिति, अत्र कथानकमुपरितनाङ्गादवसेयम्, अनुभूते क्रियाकलापे सत्यवाप्यते, यथा वल्कलचीरिणा पितृपकरणं प्रत्युपेक्षमाणेनेति, कथानकं कथिकातोऽवसेयं, कर्मणा क्षये कृते सति प्राप्यते यथा चण्डकौशिकेन प्राप्तम्, उपशमे च सत्यवाप्यते यथाऽङ्गर्षिणा, मनोवाक्काययोगे च प्रशस्ते लभ्यते बोधि, सामायिकमनर्थान्तरमिति गाथार्थः ।

अथवाऽनुकम्पादिभिरवाप्यते सामायिकमित्याह-
अणुकंपकामणिज्जर-बालतवे दाणविणयविब्भंगे ।
संयोगविप्पओगे, वसणूसवइड्ढि सक्कारे ॥ ८४५ ॥
वेज्जे मेंठ तह इं-दणागकयउण्णपुप्फमालसुए ।
मिवदुमहुरवणिभाउय, आहीरदसण्णिलापुत्ते ॥ ८४६ ॥
अनुकम्पाप्रवणचित्तो जीव. सामायिक लभते, शुभपरिणामयुक्तत्वाद्, वैद्यवत्, प्रतिज्ञेयमेव मनाग् विशेषितव्या, हेतुदृष्टान्तान्यत्वं तु प्रतिप्रयोगं भणिष्याम-अकामनिर्जरावान् जीवः सामायिकं लभते, शुभपरिणामयुक्तत्वान्मिण्ठवत्, बालतपोयुक्तत्वादिन्द्रनागवत्, सुपात्रप्रयुक्तयथाशक्ति श्रद्धादानत्वात् कृतपुण्यकवत्, आराधितविनयत्वात् पुष्पशालसुतवत्, अवाप्तविभङ्गज्ञानत्वात् तापसशिविराजर्षिवत्, दृष्टद्रव्यसंयोगविप्रयोगत्वात् मधुराद्वयवास्तिवणिग्द्वयवत्, अनुभूतव्यसनत्वात् भ्रातृद्वयशकटचक्रव्यापादितमल्लगडीलब्धमानुपत्वस्त्रीगर्भजातद्रव्यद्वयपुत्रद्वयवत्, अनुभूतोत्सवत्वादाभीरवत्, दृष्टमहर्द्धिकत्वाद्दशार्णभद्रराजवत्, सत्कारकारित्वाण्यलब्धसत्कारवर्गदिलापुत्रवत् । इयमक्षरगमनिका । साम्प्रतमुदाहरणानि प्रदर्श्यन्ते-बारवतीए कण्हस्स वासुदेवस्स दो वेज्जा-धन्नंतरी, वैतरणी य । धन्नंतरी अभविओ, वेतरणी भविओ, सो साधूण गिलाणाणं पिएण साहति, जं जस्स कायव्वं तं तस्स फासुएण पडोआरेण साहति । जति से अप्पणो अत्थि ओसधाणि ता देति, धण्णंतरी पुण जाणि सावस्सयाणि ताणि साहति असाधुपाओग्गाणि । ततो साहुणो भणंति-अम्ह कतो एताणि ?, सो भणति-ण मए समणाणं अट्ठाए अज्झाइतं वेज्जसत्थं, ते दोवि महारंभा महापरिग्गहा य सव्वाए बारवतीए तिगिच्छं करेति । अण्णदा कण्हो वासुदेवो तित्थगरं पुच्छति-एते बहूण ढंकादीण वधकरणं काऊण कहिं गमिस्सति ?, ताधे सामी साधति-एस धण्णंतरी अप्पतिट्ठाणे णरए उववज्जिहिति । एस पुण वेतरणी कालंजरवत्तिणीए गंगाए महाणदीए विंझस्स य अंतरा वाणरत्ताए पच्चायाहिति । ताधे सो वयं पत्तो सयमेव जूहवतित्तणं काहिति । तत्थ अण्णया साहुणो सत्थेण समं धाविस्संति । एगस्स य साधुस्स पादे सल्लो लग्गिहिति । ताधे ते भणंति-अम्हे पडिच्छामो । सो भणति-मा सव्वे मरामो । वच्चह तुब्भे अहं भत्तं पच्चक्खामि । ताहे णिव्वंधं काउं सोऽवि ठिओ । ण तीरति सल्लं णीणेतुं । पच्छा थंडिल्लं पावितो छायं च, तेऽवि गता । ताहे सो वाणरजूहवती तं पदेसं एति जत्थ सो साधू । जाव पुरिल्लेहिं तं दट्ठूण किलिलाइतं, तो तेण जूहाहिवेण तेसिं किलिकिलाइतसद्दं सोऊण रूसितेण आगंतूण दिट्ठो सो साधू । तस्स तं दट्ठूण ईहापूहा करेंतस्स कहिं मया एरिसो दिट्ठो त्ति ?, जाती संभरिता । बारवई संभरति । ताहे तं साधु वंदति । तं च से सल्लं पासति । ताहे निगिच्छं सव्वं संभरति । ततो सो गिरिं विलग्गिऊण सल्लुद्धरणिसल्लरोहणीओ ओसहीओ य गहाय आगतो । ताधे सल्लुद्धरणीए पादो आलित्तो । ततो एगमुहुत्तेण पडिओ सल्लो । पउणावितो संरोहणीए । ताहे तस्स पुरतो अक्खराणि लिहति । जधा-अहं वेतरणी नाम वेज्जो पुव्वभव बारवतीए आसि । तेहिं वि सो सुतपुव्वो, ताधे सो साधू धम्मं कधेति । ताहे सो भत्तं पच्चक्खाति । तिण्णि रातिंदियाणि जीवित्ता सहस्सारं गतो ।

तथा चाऽऽह-
सो वा जूहवती, कंतारे सुविहियाणुकंपाए ।
भासुरवरबोंदिधरो, देवो वेमाणिओ जाओ ॥८४७॥
निगदसिद्धा । ओहिं पयुंजति जाव पेच्छति त सरीरगं तं च साधुं । ताहे आगंतूण देविड्ढिं दापति । भणति य-तुज्झ प्पसादेण मए देविड्ढी लद्ध त्ति । ततोऽणेण सो साधू साहरितो तेसिं साधूणं सगासं ति । ते पुच्छंति-किहऽसि आगतो ?, ताहे साहति । एवं तस्स वाणरस्स सम्मत्तसामाइयसुयसामाइयचरित्ताचरित्तसामाइयाण अणुकंपाए लाभो जातो, इतरधा णिरयपायोग्गाणि कम्माणि करेत्ता णरयं गतो होन्तो । ततो चुतस्स चरित्तसामाइयं भविस्सति सिद्धी य १ । एकामणिज्जराए, वसनपुरे नगरे इब्भवधुगा णदीए राहाति अण्णो य तरुणो तं दट्ठूण भणति-" सुण्हातं ते पुच्छ-

ति, एस णदी मत्तवारणकरोरु ! । पते य णदीरुक्खा , अहं च पादेसु ते पडिओ ॥ १ ॥" सा भणति—"सुभगा होंतु णदीओ, चिर च जीवंतु जे णदीरुक्खा । सुण्हान पुच्छगाए य, घत्तीहामो पियं काउं ॥ २ ॥" ततो सो तीए घरं वा दारं वा आयरणंतो चिन्तति—"अन्नपानैर्हरेद्बाला , यौवनस्थां विभूषया । वेश्यां स्त्रीमुपचारेण , वृद्धा कर्कशसेवया ॥१॥" तीसे बिइज्जियाणि चेडरूवाणि रुक्खे फलोप्पताणि अच्छंति , तेण तेसिं पुप्फाणि फलाणि य दाऊण पुच्छिताणि-का एसा ? , ताणि भणंति—अमुगस्स सुण्हा , ताहे सो चिंतेति—केण उवाएण एतीए समं मम संपयोगो भवेज्जा ? , ततो णेण चरिका दाणमाणसंगहीता काऊण विसज्जिता तीए सगासं । ताए गंतूण सा भणिता-जधा अमुगो ते पुच्छति , तीए रुट्ठाए पत्तभायणाणि धोवतीए मसिलित्तेण हत्थेण पिट्ठीए आहता , पंचगुलीओ जाताओ , ओवारेण य णिच्छूढा । सा गता साहति—णामं पि ण सहति । तेण णातं जहा—कालपक्खपंचमीए , ताहे तेण पुणरवि पेसिता पवेसजाणणानिमित्तं । ताहे सलज्जाए आहणिऊण असोगवणियाए छिंडियाए निच्छूढा । सा गता साहति—णामं पि ण सहति , तेण णातो पवेसो , तेणाव-द्दारेण अइगतो , असोगवणियाए सुत्ताणि , जाव ससुरेण दिट्ठा । तेण णातं , जधा—ण मम पुत्तो त्ति, पच्छा से पादातो णेउरं गहितं , चेतितं च तीए, भणितो य णाए—णास लहुं , सहायकिच्चं करेज्जासि । इतरी गतूण भत्तारं भणति—इत्थं घम्मो , जामो असोगवणियं , गताणि , असोगवणियाए पसुत्ताणि , ताहे भत्तारं उट्ठवेत्ता भणति-तुज्झ एतं कुलाणुरूवं ?, ज मम पादातो ससुरो णेउरं गेण्हति । सो भणति—सुवसु लभिहिसि पभाते । थेरेण सिट्ठ , सो रुट्ठो भणति--विवरीताऽसि थेरा ?, सो भणति—मए दिट्ठो अण्णो , ताहे विवादे सा भणति—अहं अप्पाणं साहेमि । एवं करेहि , ण्हाता , ताहे जक्खघरं अइगता , जो कारि सो लग्गति दोण्हं जंघाणं अंतरेण वोलनओ , अकारि मुच्चति , सा पधाविता , ताहे सो विडो पिसायरूवं काऊण सागतएणं गेण्हति । ताहे तत्थ गंतूण जक्खं भणति--जो मम पितिदिण्णओ तं च पिसायं मोत्तूण जइ अण्णं जाणामि तो मे तुम जाणासि त्ति जक्खो विलक्खो चिंतेति-पेच्छह केरिसाणि मतेति ?, अहं पि वंचितो णाए, णत्थि सतित्तणं धुत्तीए , जाव चिंतेति ताव णिप्फिडिता । ताहे सो थेरो सव्वेण लोगेण हीलितो , तस्स ताए अधितीए निद्दा नट्ठा , ताहे रण्णो तं कण्णे गतं । रायाणएण अंतेउरवालओ कतो , आभिसिक्कं च हत्थिरयणं रण्णो वासघरस्स हेट्ठा वद्धं अच्छति । देवी य हत्थिमेंठे आसत्तिया , णवरं रत्तिं हत्थिणा हत्थो पसारितो , सा पासायाओ ओयारिया , पुणरवि पभाए पडिविलइता , एवं वच्चति कालो । अण्णता चिर जातं ति हत्थिमेंठेण हत्थिसकलाए हता , सा भणति--सो पुरिसो तारिसो ण सुवति , मा रूसह । तं थेरो पेच्छति , सा चिंतेति—जति पताओ वि एरिसिओ , किंतु ताओ भद्दियाउ त्ति सुत्तो , पभाते सव्वो लोगो उट्ठितो , सो न उट्ठितो । राया भणति--सुवउ सत्तमे दिवसे उट्ठितो । राइणा पुच्छितेण कहितं—जहेगा देवी ण याणामि कतर त्ति , ताहे राइणा मेंडमओ हत्थी कारितो , सव्वाओ अंतपुरियाओ भणियाओ—एयस्स अच्चणियं करेत्ता ओलंडेह । सव्वाहिं ओलंडितो , सा णेच्छति , भणति—अहं बीहेमि । ताहे राइणा उप्पलणालेण आहता , जाव मुच्छिता पडिया । ततो से उवगत—जधेसा कारि त्ति, भणिता—' मत्तंगयमारुहंतीए, मेंडमयस्स गयस्स भयनिए । इह मुच्छित उप्पलाहता , तत्थ न मुच्छित संकलाहता ॥ १ ॥' पुट्ठी से जोइया , जाव सकलपहारा दिट्ठा, ताहे राइणा हत्थिमेंठो सा य दुयगाणि वि तम्मि हत्थिम्मि विलग्गाविऊण छुरणकडए चिलइताणि । भणितो मिंठो—एत्थ अप्पततीओ गिरिप्पवातं देहि , हत्थिस्स दोहि वि पासेहिं वेलुग्गाहा ठविता , जाव हत्थिणा एगो पादो आगासे कतो । लोगो भणति—किं तिरिओ जाणति ?, एताणि मारेतव्वाणि , तहावि राया रोसं ण मुयति । ततो दो पादा आगासे ततियवाराए तिन्नि पादा आगासे एक्केण पादेण ठितो , लोगेण अक्कंदो कतो—किं एतं हत्थिरयणं विणासेहि ?, रण्णो चित्त ओआलितं , भणितो—तरसि णियत्तेउं ?, भणति—जति अभयं देह , दिण्णं , तेण णियत्तितो अंकुसेण जहा भमित्ता थले ठितो, ताहे उत्तारेत्ता णिव्विसताणि कयाणि । एगत्थ पच्चंतगामे सुन्नघरं ठिताणि, तत्थ य गामेल्लयपारद्धो चोरो त सुन्नघर अतिगतो, ते भणंति—वेढनुं अच्छामो, मा कोवि पविसउ, गोसे घेच्छामो । सोऽवि चोरो लुट्टंतो किहवि तीसे ढुक्को, तीसे फासा वेदितो, सा ढुक्का भणति—कोऽसि तुमं ?, सो भणति—चोरोऽहं, तीए भणियं—तुमं मम पती होहि । जा एतं साहामो जहा एस चोरो त्ति, तेहिं कल्लं पभाए मेंठो गहिओ । ताहे आविद्धो सूलाए भिण्णो, चोरेण समं सा वच्चति । जावंतराणदी, सा तेण भणिता—जधा एत्थ सरत्थभे अच्छ, जा अहं एताणि वत्थाभरणाणि उत्तारेमि, सो गतो, उत्तिण्णो पधावितो । सा भणति-" पुण्णा णदी दीसइ कागेज्जा, सव्वं पियाभंडग तुज्झ हत्थे । जधा तुम पारमतीतुकामो, धुवं तुमं भंड गहीउकामो ॥ १ ॥ " सो भणति-" चिं (र) संथुतो वालि ! असंथुएणं , मेलहे पिया ताव धुओऽधुवेणं । जाणेमि तुज्झ प्पयइस्सभावं , अण्णो णरो को तुह विस्ससेज्जा ? ॥ १ ॥ " सा भणति—किं जाहि ?, सो भणति-जहा ते सो माराविनो एवं ममं पि कहचि मारेहिसि । इतरो वि नत्थ विद्धो उदगं मग्गति , तत्थेगो सड्ढो, सो भणति-जति नमोक्कारं करेसि तो देमि , सो उदगस्स अट्ठा गतो , जाव तम्मि एंते चेव सो णमोक्कारं करेंतो चेव कालगतो वाणमंतरो जातो । सड्ढो वि आरक्खियपुरिसेहिं गहितो, सो देवो ओहिं पयुंजति, पेच्छति सरीरगं सड्ढं च वद्धं । ताहे सो सिलं विउव्वित्ता भणति, तं च पेच्छति सरधंमे णिलुक्कं, ताहे से घिणा उप्पण्णा, सियालरूवं विउव्वित्ता मंसपेसीए गहियाए उदगतीरेण वोलेति । जाव णदीतो मच्छो उच्छलिऊण तडे पडितो, ततो सो मंसपेसिं मोत्तूण मच्छस्स पधावितो, सो पाणिए पडितो, मंसपेसीवि सेणेण गहिता, ताहे सियालो झायति । ताए भण्णति-"मंसपेसीं परिच्चज्ज,मच्छं पेच्छसि जंवुगा ! । चुक्को मंस च मच्छं च, कलुण झायसि-

कोरहुआ ॥ १ ॥' तेण भगणति—" पत्तपुडयपडिच्छएणे !, जणयस्स अयसकारिए ! । चुक्का पति च जारं च , कलुणं झायसि वंधकी ' ॥ २ ॥ ' एवं भणिया ना विलिया जाता, ताहे सो मयं रुवं दंसेति , पराणवित्ता वुत्ता-पव्वयाहि, ताहे सो राया तज्जितो, तेण पडिवरणा सक्कारेण णिक्खंता, देवलोयं गता एवमकामनिज्जराए मरुठस्स ॥ २ ॥ बालतवेण—वसंतपुरं नगरं , तत्थ सिट्ठिघरं मारिए उच्छादितं, इंदणागो नाम दारओ, सो छुट्टो , छुहितो गिलाणो पाणितं मग्गति जाव सव्वाणि मताणि पेच्छति । वारं पि लोगेण कंटियाहिं ढक्कियं । ताहे सो सुणइयच्छिड्डेण णिग्गंतूण तम्मि णगरे कप्परेण भिक्खं हिंडति , लोगो से देइ सदेसभूतपुव्वो त्ति काउं, एवं सो संवड्ढइ । इतो य एगो सत्थवाहो रायगिहं जाउकामो घोसणं घोसावेति , तेण सुत सत्थेण समं पत्थितो । तत्थ तेण सत्थे कूरो लद्धो-सो जिमितो ण जिरणो , वितियदिवसे अच्छति, सत्थवाहेण दिट्ठो, चिंतेति--णूणं एस उववासिओ सो य अव्वत्तलिंगो, वितियादिवसे हिंडतस्स सेट्ठिणा बहुं णिद्धं च दिएणं, सो तेण दुवे दिवसा अजिरणएण अच्छति । सत्थवाहो जाणति—एस छट्ठराणकालिओ, तस्स सद्धा जाता । सो ततियदिवसे हिंडतो सत्थवाहेण सद्दावितो , कीसऽसि कल्लं णागतो ?, तुरिहक्को अच्छति, जाणइ, जधा-छट्ठं करेल्लयं , ताहे से दिएणं, तणवि असेवि दो दिवसे अच्छावितो । लोगोऽवि परिणतो, अरणस्स णिमंतेतस्सवि ण गेरहति । अरणे भणंति—एसो एगपिंडिओ, तेण तं अट्ठापदं लद्धं, वाणिएण भणिता-मा अरणस्स खणं गेरहेज्जासि , जाव णगरं गम्मति ताव अहं देमि । गता णगरं, तेण से णियघरे मढो कतो, ताधे सीसं मुंडावेति कामायाणि य चीवराणि गेरहति, ताधे विक्खातो जणे जातो ताधे तस्सवि घरं णेच्छति , ताघे जद्दिवसं से पारणयं तद्दिवसं से लोगो आणेइ भत्तं , एगस्स पडिच्छति । ततो लोगो ण याणति--कस्स पडिच्छितंति ?, ताधे लोगेण जाणणाणिमित्तं भेरी कता , जो देति सो ताडेति , ताहे लोगो पविसति , एवं वच्चति कालो । सामी य समोसरितो , ताहे साधू संदिसावेत्ता भणिता—मुहुत्तं अच्छह , अणेसणा , तम्मि जिमिते भणिता ओयरह । गोतमो य भणितो—मम वयणेणं भणेज्जासि—भो अणेगपिंडिया ! एगपिंडितो ते दट्ठुमिच्छति, ताहे गोतमसामिणा भणितो रुट्ठो, तुब्भे अणेगाणि पिंडसताणि आहारेह,अहं एगं पिंड भुजामि, तो अहं चेव एगपिंडिओ . मुहुत्तन्तरस्स उवसंतो चिंतेति—ण एते मुसं घदंति . किह होज्जा ? . लद्धा सुती, होमि अणेगपिंडितो , जद्दिवसं मम पारणयं तद्दिवसं अणेगाणि पिंडसताणि कीरति , एते पुण अकतमकारितं भुंजति , तं सच्चं भणंति । चिन्तंतेण जाती सरिता , पत्तेयबुद्धो जातो , अज्झयणं भासति इंदणागेण अरहता वुत्त सिद्धो य । एवं बालतवेण सामाइय लद्धं तेण ॥ ३ ॥ दाणेण . जधा—एगाए वच्छवालीए पुत्तो , लोगेण उस्सवे पायसं ओवक्खडितं । तत्थासन्नघरे दारगरूवाणि पासति पायसं जिमिताणि । ताधे सो मायरं भणेइ—ममऽवि पायसं रंधेहि, ताहे णत्थि त्ति सा अद्धितीए परुगणा , ताओ सएज्झियाओ पुच्छंति णिब्बंधे कथितं । ताहिं अणुकंपाए अरणाए वि अरणाए वि आणीतं खीरं साली तंदुला य । ताधे थेरीए पायसो रद्धो, ततो तस्स दारयस्स राहायस्स पायसस्स घतमधुसंजुत्तस्स थालं भरेऊण उवट्ठितं । साधू य मासखवणपारणते आगतो, जाव थेरी अतो वाउला ताव तेण धम्मोऽवि मे होउ त्ति तस्स पायसस्स तिभागो दिएणो । पुणो चिंतितं—अतिथोवं वितिओ तिभागो दिएणो पुणो वि तेण चिंतितं—एत्थ जति अरणं अंबक्खलगादि छुभति तोऽवि णस्सति, ताहे तइओ तिभागो दिएणो । ततो तस्स तेण दव्वसुद्धेण दायगसुद्धेण गाहगसुद्धेण तिविहेण तिकरणसुद्धेण भावेणं देवाउए णिबद्धे, ताधे माता से जाणति—जिमिओ, पुणरवि भरितं अतीव रं-कत्तणेण भरितं पोट्टं । ताधे रत्तिं विसूइयाए मतो देवलोगं गतो, ततो चुतो रायगिहे नगरे पधाणस्स धणावहस्स पुत्तो भद्दाए भारियाए जातो । लोगो य गब्भगते भणति—कयपुन्नो जीवो जो उववरणो , ततो से जातस्स णामं कतं कतपुरणो त्ति । वड्ढितो, कलाओ गहियातो, परिणीतो, माताए दुल्ललियगोट्ठीए छूढो , तेहिं गणियाघरं पवेसितो, बारसहिं वरिसेहिं णिद्धणं कुलं कतं । तोऽवि सो ण णिग्गच्छति, मातापिताणि से मताणि , भज्जा य से आभरणगाणि चरिमदिवसे पेसेति । गणितामायाए णातं णिस्सारो कतो,ताधे ताणि अन्नं च सहस्सं पडिविसज्जितं,गणिया माताए भरणइ-निच्छुभउ एसो सा णेच्छति,ताहे चोरियं णीणिओ घरं सज्जिज्जति, उच्छिरणो बाहिं अच्छति, ताहे दासीए भसति-णिच्छूढोऽवि अच्छसि ?, ताहे नियघरयं सडियपडियं गतो, ताहे से भज्जा संभमेणं उट्ठिता, ताहे से सव्वं कथितं, सोगेणं अप्फुरणो भवति—अत्थि किंचि ? जा अन्नहिं जाइत्ता ववहरामि, ताहे जाणि आभरणगाणि गणितामाताए जं च सहस्सं कप्पासमोल्लं दिएण ताणि से दंसिताणि । सत्थो य तद्दिवसं कं पि देसं गतुकामओ, सो तं भंडमोल्लं गहाय तेण सत्थेण समं पधावितो, बाहिं वेउलियाए खट्टं पाडिऊणं सुत्तो । अरणस्स य वाणिययस्स माताए सुतं, जधा—तव पुत्तो मतो वाहणे भिन्ने,तीए तस्स दव्व दिएणं, मा कस्सइ कधिज्जसि, तीए चिंतितं—मा दव्वं जाउ राउलं, पविसिहिति मे अपुत्ताए, ताहे रत्तिं तं सत्थं एति, जा कंचि अणाहं पासेमि, ताहे तं पासति, पडिबोधित्ता पवेसितो,ताहे घरं नेतूण रोवति-चिरणट्ठग त्ति पुत्ता !,सुरहाणं चउरहं ताणं कधेति—एस देवरो भे चिरणट्ठओ । ताओ तस्स लाइताओ,तत्थ वि बारस वरिसाणि अच्छति । तत्थ एक्केक्काए चत्तारि पंच चेडरूवाणि जाताणि । थेरीए भणितं एत्ताहे णिच्छुभतु, ताओ ण तरंति धरितुं । ताधे ताहिं संवलमोदगा कता, अंतो रयणाण भरिता, वरं से एयं पाओग्गं होति,ताधे वियडं पाएत्ता ताए चेव देवउलियाए ओसीसए से संबलं ठवेत्ता पडियागता । सोऽवि सीतलएण पवणेणं संबुद्धो पभातं च, सोऽवि सत्थो तद्दिवसमागतो । इमाए वि गवेसओ पेसिओ,ताहे उट्ठवित्ता घरं णीतो,भज्जा से संभमेण उट्ठिता,संबलं गहितं, पविट्ठो, अब्भंगादीणि करेति । पुत्तो-य से तदा गब्भिणीए जातो,सो ए-

कारसरिसो जाओ, लेहमालाओ आगतो रायति—देहि मे भत्तं, मा उवज्झाएण हम्मिहामि त्ति । ताए ताओ संबलथइयातो मोयगो दिण्णो, णिग्गतो खायंतो तत्थ रयणं पासति, लेहचेडएहिं दिट्ठं, तेहिं पूवियस्स दिण्णं दिवे दिवे अम्ह पोल्लियाओ देहि त्ति । इमोऽवि जिमिते मोयगे भिंदति तेण दिट्ठाणि,भणति सुंकभएण कताणि, तेहिं रयणेहिं तहेव पवित्थरितो । से तणओ य गंधहत्थी णदीए ततुएण गहितो, राया आदण्णो, अभयो भणति—जइ जलकंतो अत्थि तो छुट्टति, सो राउले अतिबहुअत्तणेण रतणाण चिरेण लब्भिहिति त्ति काऊण पडहओ णिप्फिडितो—जो जलकंतं देति तस्स राया रज्जं अद्धं धूतं च देति । ताधे पुविएण दिण्णो, णीतो, उदगं पगासित, ततुओ जाणतिथल णीतो, मुक्को, गट्ठो । राया चिंतेति—कतो ?, पुवियस्स पुच्छति—कतो एस तुज्झे, निव्वंधे सिट्ठं—कयपुण्णगपुत्तेण दिण्णो, राया तुट्ठो, कस्स अण्णस्स होहिति ?, रण्णा सद्दाविऊण कतपुण्णओ धूताए विवाहितो, विसओ से दिण्णो, भोगे भुंजति । गणिताऽवि आगता भणति—एच्चिरं कालं अहं वणीबंधए अच्छिता, सव्ववेतालीओ तुमं अट्ठाए गवेसाविताओ, एत्थ दिट्ठो त्ति, कतपुण्णओ अभयं भणति—एत्थ मम चत्तारि महिलाओ, तं च घरं ण याणामि, ताहे चेतियघरं कतं, लेप्पगजक्खो कतपुण्णगसरिसो कतो, तस्स अच्चणिया घोसाविता, दो य वाराणि कताणि, एगेण पवेसो एगेण णिप्फेडो । तत्थ अभओ कतपुण्णओ य एगत्थ वारब्भासे आसणवरगया अच्छंति, कोमुदी आणत्ता, जधा पडिमपवेसो अच्चणियं करेह । णयरे घोसितं—सव्वमहिलाहिं एत्तव्वं, लोगोऽवि एति । ताओऽवि आगताओ, चेडरूवाणि तत्थ वप्पो त्ति उच्छंगे णिविसति, णाताओ तेण । थेरी अंबाडिता, ताओऽवि आणिताओ, भोगे भुंजति सत्तहि वि सहितो । वद्धमाणसामी य समोसरितो, कतपुण्णओ सामिं वंदिऊण पुच्छति—अप्पणो संपत्तिं विपत्तिं च । भगवता कथितं—पायसदाणं, संवेगेण पव्वइतो । एवं दाणेण सामाइयं लब्भति ॥ ४ ॥ इदाणिं विणएणं—मगधविसए गोव्वरगामे पुप्फसालो गाहावती, तस्स भद्दा भारिया, पुत्तो से पुप्फसालसुओ । सो मातापितरं पुच्छति—को धम्मो ?, तेहिं भण्णति—मातापितरं सुस्सूसितव्वं—"दो चेव देवताइ, माता य पिता य जीवलोगम्मि । तत्थ वि पिया विसिट्ठो, जस्स वसे वट्टते माता ॥ १ ॥" सो ताण पगे मुहधोवणादिविभासा, देवताणि व ताणि सुस्सूसति । अण्णता गामभोइओ आगतो, ताणि सभत्ताणि पाहुण्णं करेंति, सो चिंतेति—एताण वि एस देवत, एत पूएमि तो धम्मो होहिति, तस्स सुस्सूसं पकतो । अण्णता तस्स भोइओ, तस्स वि अण्णो, तस्स वि अण्णो, जाव सेणियं रायाणं ओलग्गिउमारद्धो, सामी समोसढो, सेणिओ इड्ढीए गतूण वंदति, ताहे सो सामिं भणति—अहं तुब्भे ओलग्गामि ?, सामिणा भणितं—अहं रयहरणपडिग्गहमत्ताए ओलग्गिज्जामि । ताए सुणणाए संबुद्धो, एवं विणएण सामाइयं लब्भति ॥ ५ ॥ इदानीं विभंगेण लब्भति, जधा—अत्थि मगधजणवए सिवो राया तस्स धणधण्णहिरण्णाइ पइदियहं वड्ढति, चिंता जाया—अत्थि धम्मफलं ति, तो मह हिरण्णादि वड्ढति, ता पुण्णं करेमि त्ति कलिऊण भोयणं कारिमं, दाणं च णेगं दिण्णं । ततो पुत्तं रज्जे ठवेऊण सकनतयमयभिक्खाभायणकडुच्छुगोत्तरणो दिसापोक्खियतावसाण मज्झे तावसो जातो । छट्ठट्ठमातो परिसडियपंडुपत्ताणि आणिऊण आहारेति । एवं से चिट्ठमाणस्स कालेण विभंगणाणं समुप्पण्णं संखेज्जदीवसमुद्दविसयं, ततो णगरमागतूण जधावलद्धं भावं पण्णवेति । अण्णता साधवो दिट्ठा, तेसिं किरियाकलावं विभंगाणुसारेण लोएमाणस्स विसुद्धपरिणामस्स अपुव्वकरणं जातं, ततो केवली संवुत्तो त्ति ॥ ६ ॥ (आव०) । इदाणिं वसणेण, दो भाउगा सगडेण वच्चति, चक्कुलिंडा य सगडवट्टाए लोलति, सहत्तेण भणियं—उव्वत्तेहि भंडिं, इतरेण वाहिया भंडी, सा सन्नी सुणेति, छिण्णा चक्केण, मता इत्थिया जाया हत्थिणापुरे णगरे, सो महल्लतरो पुव्वं मरित्ता तीसे पोट्टे आयाओ पुत्तो जाओ, इट्ठो, इतरोऽवि तीसे चेव पोट्टे आयाओ, जं सो उववण्णो तं सा चिंतेति-सिलं व हाविज्जामि, गब्भपाडणेहिं वि ण पडति, तओ सो जाओ दासीए हत्थे दिण्णो,छड्डेहि, सो सेट्ठिणा दिट्ठो णिज्जंतो, तेण घेत्तूण अण्णाए दासीए दिण्णो, सो तत्थ सवड्ढइ । तत्थ महल्लगस्स णामं रायललिओ इयरस्स गंगदत्तो । सो महल्लो ज किंचि लहइ ततो तस्स वि देति, माऊए पुण अणिट्ठो, जहिं पेच्छइ तहिं कट्ठादीहिं पहणइ । अण्णया इंदमहो जाओ, तओ पियरेण अप्पसागारिय आणीओ आसंदगस्स हेट्ठा कओ, जेमाविज्जइ, ओहाडिओ ताहे कहवि दिट्ठो, ताहे हत्थे घेत्तूण कड्ढिओ चंदणियाए पक्खित्तो, ताहे सो रुवइ, पिउणा ण्हाणिओ, एत्थंतरे साहू भिक्खस्स अतियओ । सिट्ठिणा पुच्छिओ—भगवं ! माउए पुत्तो अणिट्ठो भवइ ?, हता भवइ, किह एयं ?, ताहे भणति— यं दृष्ट्वा वर्धते क्रोध, स्नेहश्च परिहीयते । स विज्ञेयो मनुष्येण, एष मे पूर्ववैरिक ॥ १ ॥ यं दृष्ट्वा वर्धते स्नेह, क्रोधश्च परिहीयते । स विज्ञेयो मनुष्येण, एष मे पूर्वबान्धव ॥ २ ॥' ताहे सो भणइ-भगवं ! पव्वावेह एयं ?, बाढंति विसज्जिओ पव्वइओ । तेसिं आयरियाण सगासे भायावि से णेहाणुरागेण पव्वइओ, ते साहू जाया इरियासमिया, अणिस्सितं तव करेंति । ताहे सो तत्थ णिदाणं करेइ-जइ अत्थि इमस्स तवणियमबंभचेरस्स फलं तो आगमेसाणं जणणयणाणंदो भवामि, घोरं तवं करेत्ता देवलोयं गओ ततो चुओ वसुदेवपुत्तो वासुदेवो जाओ । इयरोऽवि बलदेवो एवं तेण वसणेण सामाइं लद्धं ॥ ७ ॥ उस्सवे एगम्मि पच्चंतियगामे आभीराणि, ताणि साहूणं पासे धम्मं सुणेंति, ताहे देवलोए वण्णेंति, एव तेसिं अतीव धम्मे सुद्धी । अण्णदा कयाइ इंदमहे वा अण्णम्मि वा उस्सवे गयाणि णगरिं, जारिसा वारवई. तत्थ लोयं पासन्ति मंडितपसाहियं सुगंध विचित्तणेवत्थं ताणि तं दट्ठूण भणति—एस सो देवलोओ जो साहूहिं वण्णिओ, एत्ताहे जइ वच्चामो सुंदरं करेमो, अम्हेवि देवलोए उववज्जामो, ताहे ताणि गंतूण साहूण साहंति—जो तुब्भेहिं अम्ह कहिओ देवलोओ सा पच्चक्खो अम्हेहिं दिट्ठो । साहू भण-

ति—ण तारिसो देवलोओ, अरणारिसो, अन्नो अणंतगुणो । तओ नाणि अब्भहियजातविम्हयाणि पव्वइयाणि । एवं उस्सवेण सामाइयलंभो ॥६॥ 'इड्ढि' त्ति-दसण्णपुरे णगरे दसण्णभद्दो राया, तस्स पंच देवीसयाणि ओरोहो, एवं सो रूवेण जोव्वणेण बलेण य वाहणेण य पडिबद्धो, एरिसं णत्थि त्ति अरणस्स चिंतेइ । सामी समोसरिओ दसरणकूडे पव्वते । ताहे सो चिंतेइ—तहा कल्लं वंदामि जहा ण केणइ अरणेण वंदियपुव्वो, तं च अब्भत्थियं सक्को णाऊण चिंतेइ—वराओ अप्पाणयं ण याणति । तओ राया महया समुदएण णिग्गओ वंदिउं सव्विड्ढिए, सक्को य देवराया एरावणं विलग्गो, तस्स अट्ठ मुहे विउव्वइ, मुहे मुहे अट्ठ अट्ठ दंते विउव्वेइ, दंते २ अट्ठ अट्ठ पुक्खरणीओ विउव्वेइ,एक्केक्काए पुक्खरणीए अट्ठ २ पउमे विउव्वेइ,पउमे २ अट्ठ अट्ठ पत्ते विउव्वेइ, पत्ते २ अट्ठ २ बत्तीसवद्धाणि दिव्वाणि णाडगाणि विउव्वइ । एवं सो सव्विड्ढीए उवगिज्जमाणो आगओ, तओ एरावणं विलग्गो चेव तिक्खुत्तो आदाहिणं पयाहिणं सामिं करेइ, ताहे सो हत्थी अग्गपादेहिं भूमीए ठिओ, ताहे तस्स हत्थिस्स दसरणकूडे पव्वते देवतापसाएण अग्गपायाणि उट्ठिताणि, तओ से णामं कतं गयग्गपादगो त्ति । ताहे सो दसरणभद्दो चिंतेइ—एरिसा कओ अम्हाणं इड्ढि त्ति?, अहो कएल्लओऽणेण धम्मो, अहमवि करेमि, ताहे सो सव्वं छड्डेऊण पव्वइओ । एवं इड्ढीए सामाइयं लहइ ॥ १० ॥ ( आव० ) ।

अहवा इमेहिं कारणेहिं लंभो—

अब्भुट्ठाणे विणए, परक्कमे साहुसेवणाए य ।
सम्मद्दंसणलंभो, विरयाविरईइ विरईए ॥ ८४८ ॥

अभ्युत्थाने सति सम्यग्दर्शनलाभो भवतीति क्रिया, विनीतोऽयमिति साधुकथनात्, तथा विनये-अञ्जलिप्रग्रहादावित्ति, पराक्रमे-कषायजये सति, साधुसेवनाया च सत्यां कथञ्चित् नतिक्रियोपलब्ध्यादेः सम्यग्दर्शनलाभो भवतीत्यध्याहारः । विरताविरतेश्च विरतेश्चेति गाथार्थः । कथमिति द्वारं गतम् । आव०१ अ० । अत्र पुनर्वल्कलचीरिणोऽधिकारः, तथा कर्म्मणां क्षये सति प्राप्यते सामायिकं यथाप्राप्तं चण्डकौशिकेन उपशमे सत्यवाप्यते यथा अङ्गर्षिणा तथा मनोवाक्काययोगे प्रशस्ते लभ्यते बोधि —सामायिकमिति । आ० म० १ अ० । (अनुकम्पादिभिरवाप्यते सामायिकमिति, अनुकम्पादिशब्देषु कथानकानि गतानि । ) ( कारणभेदाः 'कारण' शब्दे तृतीयभागे ४६५ पृष्ठे उक्ताः । ) ( अत्रत्या व्याख्या 'सक्कार' शब्देऽस्मिन्नेव भागे गता । ) तदेवं नामादिभेदतश्चतुर्विधकारणं विचार्य प्रस्तुते येनाधिकारस्तदाह—' अहिगार पसत्थएणत्थ ' त्ति—इह सामायिके विचार्यमाणे प्रशस्तेन भावकारणेनाधिकारः । सामायिकाध्ययनं हि क्षायोपशमिकभावरूपं वर्तते । स च प्रशस्तः , मोक्षकारणत्वात् अतो युक्तमुक्तम्—प्रशस्तभावकारणेनात्राधिकार इति । विशे० ।

( ६६ ) अथ कारणद्वार एव कारणवक्तव्यतानुगतप्रसङ्गतः किञ्चिदाह—

तित्थयरो किं कारणँ, भासइ सामाइयं तु अज्झयणं ? ।
तित्थयरनामगोत्तं, बद्धं मे वेइअव्वं ति ॥ २१२२ ॥

तीर्थकरः किं कारणं-किं निमित्तं भाषते सामायिकाध्ययनम् ? । तुशब्दाद्-अन्यानि चाध्ययनानि, केवलज्ञानोत्पत्तितस्तस्य कृतकृत्यत्वात् किं तद्भाषणेन ? इत्यभिप्रायः । अत्रोच्यते—तीर्थकर इति नाम—गोत्रं संज्ञा यस्य तत् तीर्थकरनामसंज्ञकं कर्म पूर्वं मया बद्धं तदिदानीमनेन प्रकारेण वेदितव्यम् , इत्यनेन कारणेन स तद् भाषत इति ।

पुनरत्रैव च विनेयप्रश्नमुत्तरं चाह—

तं च कहं वेइज्जइ, अगिलाए धम्मदेसणाईहिं ।
बज्झइ तं तु भगवओ,तइयभवो सक्कइत्ता णं ॥२१२३॥
नियमा मणुयगईए, इत्थी पुरिसेयरो व सुहलेसो ।
आसेविय बहुलेहिं वीसाए अन्नयरएहिं ॥२१२४॥

एतयोर्व्याख्यानं पूर्ववदेव , नवरं तत् पुनस्तीर्थकरनामकर्म बद्धं सत् कथं वेद्यते ? इति प्रश्नः । अत्रोत्तरम्-अग्लान्या—निर्वेदेन धर्मदेशनादिभिः । तच्च भगवतस्तीर्थकरस्यैव—यस्तीर्थकरो भविष्यति तस्यैव बध्यते-बन्धमायाति । कदा ? इत्याह-सिद्धिगमनभवात् तृतीयभवं यावदवष्वष्क्य-अपसृत्य । इदमुक्तं भवति—अनेन बद्धेन भवत्रयमेव संसारेऽवतिष्ठते , ततः सिध्यति । एकस्तावत् स एव मनुष्यभवो यत्र तद् बध्यते, द्वितीयस्तु देवभव , नरकभवो वा, तृतीयभवे तु तीर्थकरो भूत्वा सिध्यति । तच्च नियमाद् मनुष्यगतावेव प्रारम्भमाश्रित्य सम्यग्दृष्टिमनुष्यो बध्नाति , नान्यगतावन्यः । कथंभूतो मनुष्यः ? इत्याह-स्त्री पुरुष , इतरो वा पुरुषः नपुंसकवेदको मन्त्रादिकारणैरुपहतपुरुषवेदः सन् यो नपुंसकः, न तु क्लिष्टः; पण्डकादिरित्यर्थः । कथंभूतः पुनः स्त्र्यादिः ? इत्याह-सम्यग्दर्शनादिगुणयुक्तत्वात् शुभलेश्यः । कैः पुनः कारणैः सोऽपि बध्नाति ? इत्याह-' अरहंत सिद्धपवयण '-इत्यादिना पूर्वमभिहितैर्बहुलैः पुनः पुनरासेवितैः सम्पूर्णैर्विंशत्या कारणैः अन्यतरैर्वैकद्वित्र्यादिभिरतिपुष्टिं नीतैरिति ।

( ६७ ) एवं तीर्थकृतः सामायिकाध्ययनभाषणकारणमभिधाय , अथ गणभृतामाशङ्काद्वारेण तच्छ्रवणकारणमभिधित्सुराह-

गोयममाई सामा-इयं तु किं कारणं निसामेंति ।
नाणस्स तं तु सुंदर-मंगुलभावाण उवलद्धी ॥२१२५॥
होइ पवित्तिनिवित्ती , संजमतवपावकम्मअग्गहणं ।
कम्मविवेगो य तहा,कारणमसरीरया चेव ॥२१२६॥
कम्मविवेगो असरी-रयाइ असरीरयाऽणबाहाए ।
हो अणबाहनिमित्तं,अवेयणुअणाउलो निरुओ॥२१२७॥
निरुयत्ताए अयलो, अयलत्ताए य सासओ होइ ।
सासयभावमुवगओ, अव्वाबाहं सुहं लहई ॥ २१२८॥

गौतमादयो गणधराः किं कारणं—किं निमित्तं-किं प्रयोजनं सामायिकं निशमयन्ति—शृण्वन्ति ? इत्याह—' नाणस्स ' त्ति—विभक्तिव्यत्ययाच्चतुर्थीह द्रष्टव्या, सा च तादर्थ्ये , ततश्च ज्ञानार्थं , ज्ञानायेत्यर्थः तेषां भगवद्वदनारविन्दविनिर्गतं सामायिकमिदं श्रुत्वा तदर्थविषयं ज्ञानमुत्पद्यत इति भावः । ननु ज्ञानं सुन्दरमङ्गुलभावाना शुभाऽशुभप-

दार्थानामुपलब्धये—उपलब्धिनिमित्त भवति । तस्याश्च शुभाऽशुभपदार्थोपलब्धेः सकाशात् शुभेषु प्रवृत्ति , इतरेभ्यस्तु निवृत्तिर्भवति । ते च निवृत्तिप्रवृत्ती ' सजमतव' त्ति संयमतपसोः कारणं—निमित्तं भवत , अशुभनिवृत्ति सयमकारणम् , शुभप्रवृत्तिस्तु तप कारणमित्यर्थ । तयोश्च संयमतपसो पापकर्मणोऽग्रहणम् , तथा-कर्मविवेकश्च कर्मनिर्जरारूपो यथासङ्ख्यं कारण निमित्तं प्रयोजनमिति यावत् । कर्मविवेकस्य च कारणं प्रयोजनमशरीरतैव भवति । ' अथ विवक्षितमर्थमुक्तानुवादेन प्रतिपादयन्नाह--कर्मविवेक.-कर्मपृथग्भावोऽशरीरतायाः कारणम् । अशरीरता पुनरनाबाधतायाः कारण भवति । ' हो अणवाहनिमित्त ' ति-अनाबाधतानिमित्तम्-अनाबाधताकारणम्,अनाबाधतया हेतुभूतयेत्यर्थ , अवेदनो-वेदनारहितो भवति जीव. । अवेदनत्वाच्चानाकुलोऽविह्वलो भवति । रोगाद्यनाकुलत्वाच्च नीरुक्--समस्तभावरोगरहितो भवति । नीरुक्तया पुनरचल , अचलतया च तत्रैवमुक्तिक्षेत्रे शाश्वतो--नित्यो भवति । शाश्वतभाव चापगत सन्नव्याबाधसुख लभते । इत्थ पारम्पर्येणाऽव्याबाधमुक्तिसुखनिमित्त सामायिकश्रवणं सिद्धम् । इति निर्युक्तिगाथादशकार्थ ।

एताश्च गाथा सुगमत्वात् सङ्क्षेपतो भाष्यकार किञ्चिद् व्याचिख्यासुराह—

तित्थयरनामकम्म-क्खयस्स कारणमिदं जिणिंदस्स ।
सामाइयाभिहाणं , नाणस्स उ गोयमाईणं ॥२१२६॥
तं पि सुभेयरभावो-वलद्धिए सा पवित्तिनियमाणं ।
एवं नेयं कमसो , पुव्वं पुव्वं परनिमित्तं ॥ २१३० ॥

इदं सामायिकाभिधान—सामायिकभाषणं जिनेन्द्रस्य-तीर्थकरस्य भगवतस्तीर्थकरनामकर्मक्षयस्य कारणं-हेतु । गौतमादीना पुनर्ज्ञानस्य ' तच्छ्रवण कारणम् ' इति गम्यते । तदपि ज्ञान शुभाऽशुभभावोपलब्धः कारणम्, एषाऽपि प्रवृत्तिनियमयोः-प्रवृत्तिनिवृत्त्योः कारणम् । एवं क्रमश क्रमेण पूर्व परस्य-उत्तरस्य निमित्त तावज्ज्ञेयं यावत् शाश्वतत्वादव्याबाधं मुक्तिसुखं लभते । इति गाथाद्वयार्थः । उक्त कारणद्वारम् । विशे० ।

अथ भवद्वारमुच्यते । तत्र कियतो भवानेकजीव सामायिकचतुष्टयमुत्कृष्टत प्रतिपद्यते ? इत्याह--

सम्मत्तदेसविरया, पलियस्स असंखभागमेत्ताओ ।
अट्ठ भवा उ चरित्ते, अणंतकालं च सुयसमए॥२७७६॥

सम्यग्दृष्टयो, देशविरताश्च , प्रत्येकं क्षेत्रपल्योपमा असङ्ख्येयभागमात्रान् भवान् यावद् भवन्ति । इदमुक्तं भवति-क्षेत्रपल्योपमस्यासङ्ख्येयभागे यावन्तो नभ प्रदेशास्तावतो भवानुत्कृष्टत. सम्यक्त्व देशविरतिं च प्रतिपद्यन्ते, जघन्यतस्त्वेक भवम् । तत पर सिध्यन्ति । इह च सम्यक्त्वभवासङ्ख्येयकाद् देशविरतिभवासङ्ख्येयक लघुतर द्रष्टव्यम् । चारित्रे तु विचार्येऽष्टौ भवानुत्कृष्टतस्तत् प्रतिपद्यते , उत्कृष्टतोऽष्टौ तस्यादानभवा , जघन्यतस्त्वेक , तत सिध्यति । ' अणतकाल च सुयसमए ' त्ति-अनन्तकालोऽनन्तभवरूपस्तमनन्तकालमेव प्रतिपत्ता भवत्युत्कृष्टत. सामान्यश्रुतसामायिकं,जघन्यतस्त्वेकभवमेव, मरुदेवीवत् । इति निर्युक्तिगाथार्थः । विशे० । आ० म०। आ०चू० । आव० । आ० म० ।

तदेवं 'दव्वे अद्ध अहाउय' इत्यादिनोपक्षिप्तान् कालभेदान् व्याख्याय प्रस्तुते येनाधिकारस्तमाह—

एत्थं पुण अहिगारो, पमाणकालेण होइ नायव्वो ।
खेत्तम्मि कम्मि काल-म्मि भासियं जिणवरिंदेणं ।२०८२।

अत्र पुनरनेकविधकालप्ररूपणायामधिकार —प्रयोजनं प्रस्ताव. प्रमाणकालेन भवति-ज्ञातव्य । आह-ननु 'दव्वे अद्ध अहाउय ' इत्यादिद्वारगाथायां ' पगयं तु भावेणं ' इत्युक्तम् , इह पुन अधिकार. प्रमाणकालेन भवति-ज्ञातव्य', इत्युच्यते, तत् कथं न पूर्वापरविरोध. ? । अत्रोच्यते-' क्षायिकभावकाले वर्तमानेन भगवता सामायिकाध्ययनं भाषितम् , इत्यभिप्रायवता ' पगयं तु भावेणं ' इति प्रागुक्तम् , तथा ' पूर्वाह्णलक्षणे प्रमाणकाले च भगवता भाषित सामायिक इत्यध्यवसायवताऽत्रोक्त ' प्रमाणकालेनाधिकार. ' इत्युभयसंग्रहपरत्वाददोष । अथवा—अद्धाकालपर्यायत्वात् प्रमाणकालोऽपि भावकाल एवेत्यविरोध । आह-ननु कस्मिन् क्षेत्रे श्रीमन्महावीरजिनवरेन्द्रेण प्रथमत सामायिकाध्ययन भाषितम् ? , तथा , प्रमाणकालोऽपि दिनप्रथमपौरुषीपूर्वाह्णादिभेदादनेकविध इत्यत प्रश्न प्रमाणकाले च कस्मिंस्तज्जिनवरेन्द्रेण भाषितम्—विनेय पृच्छति-कस्मिन् क्षेत्रे काले च क सामायिकस्य निर्गम. ? इत्यर्थ इति ।

अथोत्तरमाह—

वइसाहसुद्धइक्का-रसीएँ पुव्वण्हदेसकालम्मि ।
महसेणवणुज्जाणे, अणंतरं परपरं सेसं ॥ २०८३ ॥

वैशाखशुक्लैकादश्या पूर्वाह्णदेशकाले प्रथमपौरुष्यामित्यर्थ , कालस्यान्तरङ्गत्वख्यापनार्थमेव प्रश्नाद् व्यत्ययेनोत्तरनिर्देश , महासेनवनोद्यानलक्षणे क्षेत्रे चानन्तर निर्गम सामायिकाध्ययनस्य । ' परंपरं सेस ' ति—अन्येष्वपि गुणशिलकाद्युद्यानक्षेत्रेषु पश्चात् प्ररूपितमेव भगवता सामायिकम् , किन्तु—महासेनवनात् शेष क्षेत्रजातमधिकृत्य परपरनिर्गम , तस्य केवलज्ञानोत्पत्तायपापामध्यमानगर्या महासेनवनोद्यान एव प्रथमं तस्य प्ररूपितत्वादिति । तदेव 'नाम ठवणा दविए,खेत्ते काले तहेव भावे अ । एसो उ निग्गमस्स,निक्खेवो छव्विहो होइ ॥ ? ॥' अस्यां निर्गमनिक्षेपप्रतिपादकगाथायामुद्दिष्टौ व्याख्यातौ क्षेत्रकालनिर्गमौ ।

अथ भावनिर्गममभिधित्सुराह—

खइयम्मि वट्टमाण-स्स भगवओ निग्गयं जिणिंदस्स ।
भावे खओवसमिय-म्मि वट्टमाणेहिं तं गहियं॥२०८४॥

भावशब्दोऽत्रापि सबध्यते । ततश्च क्षायिके भावे वर्तमानस्य जिनेन्द्रस्य भगवत श्रीमन्महावीरस्य निर्गत सामायिकम् । क्षायिकोपशमिके भावे च वर्तमानैस्तस्मात् सामायिकमन्यच्च श्रुत गृहीतम्(गणधरादिभि ) इति गम्यते । तत्र भगवतो दर्शनज्ञानचारित्रावरणस्य सर्वथा क्षीणत्वात् क्षायिको भाव ,गणधरादीना तु तदावरणस्य तदानीं क्षयोप-

शमावस्थत्वात् क्षायोपशमिको भाव.। निर्गम एव चात्र प्रस्तुत., यत्तु क्षायोपशमिकभावग्रहणप्रतिपादनं तत् प्रसङ्गतो द्रष्टव्यम् । तत्र श्रीगौतमस्वामिना निषद्यात्रयेण चतुर्दश पूर्वाणि गृहीतानि । प्रणिपत्य पृच्छा च निषद्योच्यते । प्रणिपत्य पृच्छति गौतमस्वामी–कथय भगवन् ! तत्त्वम् । ततो भगवानाचष्टे—"उप्पन्नेइ वा" । पुनस्तथैव पृष्टे प्राह—"विगमेइ वा" । पुनरप्येवं कृते वदति—"धुवेइ वा" । एतास्तिस्रो निषद्या. । आसामेव सकाशात् 'यत् सत् तदुत्पादव्ययध्रौव्ययुक्तम्, अन्यथा वस्तुन सत्ताऽयोगात्' इत्येवं तेषां गणभृता प्रतीतिर्भवति । ततश्च ते पूर्वभवभावितमतयो बीजबुद्धित्वाद् द्वादशाङ्गमुपरचयन्ति । ततो भगवांस्तेषां तदनुज्ञां करोति । शक्रश्च दिव्यं वज्रमयस्थालं दिव्यचूर्णानां भृत्वा त्रिभुवनस्वामिन. संनिहितो भवति । ततः स्वामी रत्नसिंहासनादुत्थाय परिपूर्णां चूर्णमुष्टिं गृह्णाति । ततो गौतमस्वामिप्रमुखा एकादशापि गणधरा ईषदवनततनव परिपाट्या तिष्ठन्ति । ततो देवास्तूर्यध्वनिगीतशब्दादिनिरोधं विधाय तूष्णीका. शृण्वन्ति । ततो भगवान् पूर्वं तावदेतद् भणति—"गौतमस्य द्रव्य–गुण–पर्यायैस्तीर्थमनुजानामि' इति, चूर्णांश्च तन्मस्तके क्षिपति । ततो देवा अपि चूर्णपुष्प–गन्धवर्षां तदुपरि कुर्वन्ति गणं च भगवान् सुधर्मस्वामिनं धुरि व्यवस्थाप्यानुजानाति । एवं सामायिकस्यार्थो भगवत सकाशाद् निर्गत., सूत्रं तु गणधरेभ्यो निर्गतम्, इत्यलं प्रसङ्गेन । इति निर्युक्तिगाथात्रयार्थः ।

यदुक्तम्—'एत्थं पुण अहिगारो पमाणकालेण' इत्यादि, तत्र पर पूर्वापरविरोधमुद्भावयन्नाह—

किह पगयं भावेणं, कहमहिगारो पमाणकालेणं ? ।

आचार्य. प्राह—

खाइयभावेऽरुहया, पमाणकालेण जं भणियं ॥२०८५॥

अहवा पमाणकालो, वि भावकालो त्ति जं च सेसा वि ।

किंचिम्मेत्तविसिट्ठा, सव्वे चिय भावकाल त्ति॥२०८६॥

आहिकेणं कज्जं, पमाणकालेण जमहिगारो त्ति ।

सेसा वि जहासंभव–माउज्जा निग्गमे काला ॥२०८७॥

निगदोऽपि प्रायो व्याख्यातार्थो , नवरं 'अरुहय' त्ति–अर्हता श्रीमन्महावीरेण । 'जं च सेसा वी'त्यादि–यस्माच्च शेषा अपि द्रव्याऽद्धाकालादयः किञ्चिदुपाधिमात्रविशिष्टाः सर्वेऽपि भावकाला एव; तथाहि—द्रव्यस्य या चतुर्विकल्पा स्थितिः सा द्रव्यकाल उक्त., समया–ऽऽवलिकादयस्त्वद्धाकाल , यथायुष्कं चायुष्ककाल इत्यादि । एते च स्थित्यादयः सर्वेऽपि जीवाऽजीवपर्यायत्वाद् भावरूपा एवेति परमार्थतो भावकालाद् न विशिष्यन्त इति । परं तथापि 'प्रमाणकालेनात्राधिकार.' इति यदुक्तं तदाधिक्येन विशेषनस्तेन प्रमाणकालेन कार्यमिति हेतोरवगन्तव्यम्, अन्यथा शेषा अपि द्रव्याद्धाकालादय. पारम्पर्यादिना सामायिकनिर्गमे यथासंभवमायोजनीया , यथाहि–क्षायिके भावे वर्तमानस्य सामायिकं निर्गतं भगवतस्तत्र रत्नमयासिंहासनलक्षणे द्रव्ये चोपविष्टस्य, यच्च द्रव्ये तत्र तत्स्थितिलक्षण. कालोऽप्यस्त्येव; तथा–यथाऽऽयुष्ककालं चानुभवत , कर्माणि चोपक्रामत , प्रस्तावं चावगच्छत , आवीचिमरणलक्षणं मरणकालं चानुभवत , जीवादिपदार्थवर्णनाकाले च प्रवृत्तस्य तस्य तन्निर्गतम् , प्रमाण––भावकालौ त्वधिकृतत्वेनोक्तावेव । प्रमाणकाले चाधिकृतेऽद्धाकालोऽधिकृत एव, तस्य तद्विशेषत्वादेवेति । एवं सर्वेऽपि द्रव्यकालादयोऽत्रोपयुज्यन्त एव । केवलमाधिक्येन प्रमाणकालो भावकालश्चेहोपयुज्येते, इति तयोर्विशेषतोऽधिकृतत्वमुक्तमिति । विशे० ।

( ६७ ) कियच्चिरम्, कालद्वारम् । साम्प्रतं 'तदित्थं लब्धं कियच्चिरं कालं भवति ?' इति कालद्वारे जघन्योत्कृष्टं सामायिककालमभिधित्सुराह—

सम्मत्तस्स सुयस्स य, छावट्ठी सागरोवमाइं ठिई ।

सेसाण पुव्वकोडी, देसूणा होइ उक्कोसा ॥ २७६१ ॥

सम्यक्त्वस्य श्रुतस्य च लब्धिमङ्गीकृत्य 'दो वारे विजयाइसु' इत्यादि वक्ष्यमाणन्यायेन षट्षष्टिसागरोपमाणि पूर्वकोटीपृथक्त्वाधिकानि स्थितिर्भवति । शेषयोर्देशविरति–सर्वविरतिसामायिकयो पूर्वकोटिर्देशोना भवति । 'उक्कोस' त्ति—एषा सामायिकलब्धेरुत्कृष्टा स्थिति. । इति निर्युक्तिगाथार्थः ।

भाष्यकारव्याख्या—

दो वारे विजयाइसु, गयस्स तिषच्चुए य छावट्ठी ।

नरजम्मपुव्वकोडी, पुहुत्तमुक्कोसओ अहियं ॥२७६२॥

इयं प्रागिहैव व्याख्याता ।

अथ चतुर्णामपि सामायिकानां जघन्यस्थितिं भाष्यकार एवाऽऽह—

अंतोमुहुत्तमित्तं, जहन्नयं चरणमेगसमयं तु ।

उवओगंतमुहुत्तं, नानाजीवाण सव्वद्धं ॥ २७६३ ॥

जघन्यां तु लब्धिमाश्रित्याद्यसामायिकत्रयस्यान्तर्मुहूर्तं स्थिति. । सर्वविरतिसामायिकस्य तु समयम् , चारित्रपरिणामारम्भसमयानन्तरमेवायुष्कक्षयसम्भवात् । देशविरतेरप्येवं कस्माद् न भवति ? इति चेत् । तदयुक्तम्, तस्याः प्रतिनियतप्राणातिपातादिनिवृत्तिरूपत्वात्, तदा लोचनपरिणतेश्च जघन्यतोऽप्यान्तर्मौहूर्तिकत्वात् । तदेष लब्धेः स्थितिकाल । उपयोगतस्तु सर्वेषामन्तर्मुहूर्तं स्थिति. । नानाजीवाना तु सर्वाणि सर्वाद्धा इति गाथाद्वयार्थ. ।

अथ कतिद्वारमुच्यते—तत्र सम्यक्त्वादिसामायिकानां विवक्षितसमये कति प्रतिपत्तार., प्रतिपन्ना , प्रतिपतिता वा भवन्ति ? इत्याह—

सम्मत्तदेसविरया, पलियस्स असंखभागमेत्ताओ ।

सेढी असंखभागो, सुए सहस्सग्गसो विरई ॥ २७६४ ॥

सम्यक्त्वदेशविरताः प्राणिन क्षेत्रपल्योपमस्यासंख्येयभागमात्रा एव । इयमत्र भावना–क्षेत्रपल्योपमस्यासङ्ख्येयभागे यावन्तः प्रदेशास्तावन्त एवोत्कृष्टत. सम्यक्त्वदेशविरतिसामायिकयोरेकदा प्रतिपत्तारो भवन्ति । किन्त्वयं विशेष –देशविरतिप्रतिपत्तृभ्य. सम्यक्त्वप्रतिपत्तारोऽसङ्ख्येयगुणा इति । जघन्यतस्त्वेको द्वौ वेति । 'सेढी असंखभागो सुए' त्ति–इह संवर्तितचतुरस्रीकृतलोकस्यैकप्रादेशिकी सप्तरज्जुप्रमाणा श्रेणिर्गृह्यते श्रुतमपि सम्यग्मिथ्याश्रुतभेदरहितं

सामान्येनाक्षरात्मकमत्राङ्गीक्रियते ततो यथोक्तायाः श्रेणेरसङ्ख्याततमे भागे यावन्तो नभःप्रदेशास्तावन्तो विवक्षितकाले सामान्यश्रुतस्योत्कृष्टतः प्रतिपत्तारो लभ्यन्ते, जघन्यतस्त्वेको द्वौ वेति। 'सहस्सग्गसो विरइ' त्ति—कदाचिद् विवक्षितकाले उत्कृष्टतः सहस्राग्रशः सहस्रपरिगणनया सहस्रपृथक्त्वं विरतेः प्रतिपत्तारो भवन्ति, जघन्यतस्त्वेको द्वौ वेति। तदेवमुक्ताः प्रतिपद्यमानकाः। विशे०। आ० म०।

अथ पूर्वप्रतिपन्नान् प्रतिपादयन्नाह—

सम्मत्तदेसविरया, पडिवण्णा संपई असंखेज्जा।
संखेज्जा य चरित्ते, तीसु वि पडिया अणंगुणा।२७६५।

सम्यक्त्वदेशविरताः पूर्वप्रतिपन्नाः साम्प्रतं वर्त्तमानसमये जघन्यत उत्कृष्टतश्चासङ्ख्येयाः प्राप्यन्ते, किन्तु जघन्यपदादुत्कृष्टपदे विशेषाधिकाः। एते च प्रतिपद्यमानकेभ्योऽसङ्ख्येयगुणाः। सङ्ख्येयाश्चारित्रे प्राक् प्रतिपन्नाः। एते तु स्वस्थाने प्रतिपद्यमानकेभ्यः सङ्ख्येयगुणाः। त्रिभ्योऽपि चरण-देश-सम्यक्त्वेभ्यः एतानेव चरणगुणान् प्राप्य ये प्रतिपतितास्तेऽनन्तगुणाः। तत्र सम्यग्दृष्ट्यादिभ्यः प्रतिपद्यमानकेभ्यः पूर्वप्रतिपन्नेभ्यश्च चरणप्रतिपतिता अनन्तगुणाः, देशविरतिप्रतिपतितास्तु तेभ्योऽसङ्ख्येयगुणाः। सम्यक्त्वप्रतिपतिताः पुनस्तेभ्योऽसङ्ख्येयगुणा इति विशेषो द्रष्टव्य इति।

(९८) तदेवमत्र श्रुतवर्जसामायिकत्रयस्य पूर्वप्रतिपन्नाः प्रतिपतिताश्चोक्ताः। अथ श्रुतमाश्रित्याह—

सुयपडिवण्णा संपइ, पयरस्स असंखभागमेत्ताओ।
सेसा संसारत्था, सुयपडिवडिया हु ते सव्वे ॥२७६६॥

सम्यग् मिथ्यारूपस्य सामान्यतोऽक्षरात्मकस्य श्रुतस्य ये पूर्वप्रतिपन्नास्ते साम्प्रतं-वर्तमानसमये प्रतरस्यासङ्ख्येयभागमात्रा भवन्ति। घनसमचतुरस्रीकृतलोकप्रतरस्यासङ्ख्येयभागवर्तिनीष्वसङ्ख्येयासु श्रेणिषु यावन्तो नभःप्रदेशास्तावन्तो विवक्षितसमये सामान्यश्रुतस्य पूर्वप्रतिपन्ना लभ्यन्त इत्यर्थः। श्रुतप्रतिपन्नप्रतिपद्यमानकेभ्यस्तु ये शेषाः संसारस्था जीवाः भाषालब्धिरहिताः पृथिव्यादय इत्यर्थः, ते सर्वेऽपि भाषालब्धिं प्राप्य प्रतिपतितत्वात् सामान्यश्रुतात् प्रतिपतिता मन्तव्याः न हि निरादिके संसारे भ्राम्यद्भिस्तैर्भाषालब्धिः पूर्वं न लब्धेति। ते च सम्यक्त्वादिप्रतिपतितेभ्योऽनन्तगुणा इति स्वयमेव द्रष्टव्यम्। इति निर्युक्तिगाथात्रयार्थः।

'सेढीअसंखभागो सुए' त्ति—इत्यस्य व्याख्यानं भाष्यकार आह—

संवट्टियचउरंसी-कयस्स लोगस्स सत्तरज्जूओ।
सेढी तदसंखिज्जइ-भागो समए सुयं लहइ ॥२७६७॥

उक्तार्था।

'सुयपडिवण्णा संपइ पयरस्स' इत्यादेर्व्याख्यानमाह—

सा सेढी सेढिगुणा, पयरं तदसंखभागसेढीणं।
संखाईयाण पए, सरासिमाणा सुयपवन्ना ॥२७६८॥

इयमपि गतार्था। नवरं श्रेणिः श्रेण्या गुणिता प्रतरो मन्तव्यः।

'सम्मत्तदेसविरया पलियस्स' इत्याद्युक्तम्, तत्र सम्यक्त्वप्रतिपद्यमानकादीनां संख्यातीतत्वस्य तुल्यत्वादल्पबहुत्वं पूर्वं न विज्ञातम्, तद् भाष्यकार आह—

सइ संखाईयत्ते, थोवा देसविरया दुविण्हं पि
तदसंखगुणा सम्म-द्दिट्ठी तत्तो य सुयसहिया ॥२७६९॥
मीसे पवज्जमाणा, सुयस्स सेसपडिवन्नएहिंतो।
संखाईयगुणा च्चिय, तदसंखगुणा सुयपवन्ना ॥२७७०॥

सम्यक्त्वदेशविरतानामुभयेषामपि प्रतिपद्यमानकानां पल्योपमासङ्ख्येयभागवर्तित्वेन संख्यातीतत्वेऽसंख्येयत्वे तुल्येऽपि सति द्वयोरप्यनयो राश्योः स्तोका देशविरताः प्रतिपद्यमानकाः, सम्यग्दृष्टयः प्रतिपद्यमानकास्तेभ्योऽसंख्येयगुणाः, तेभ्यश्च प्रतिपद्यमानसम्यग्दृष्टिभ्यः श्रुतसहिताः सामान्यश्रुतप्रतिपद्यमानकाः असंख्येयगुणाः। मिश्रे—मिलिते समुदितेऽपीत्यर्थः, सम्यग्दृष्टिदेशविरतराशिद्वयेऽवधौ व्यवस्थापिते सामान्यश्रुतस्य ये प्रतिपद्यमानकास्ते, शेषेभ्यः सम्यग्दृष्टिदेशविरतेभ्यो मिलितेभ्यः प्रतिपन्नकेभ्यः पूर्वप्रतिपन्नेभ्य इति भावः, 'संखाईयगुण च्चिय' त्ति-संख्यातीतगुणा एवासंख्यातगुणा एवेत्यर्थः। तदनेन श्रेणेरसंख्यातभागवृत्तित्वात् सामान्येन श्रुतप्रतिपद्यमानकानां प्राचुर्यं सूचितम्। एवं नाम ते सामान्यश्रुतप्रतिपद्यमानका बहवो यत् शेषेभ्यः—समुदितसम्यग्दृष्टिदेशविरतेभ्यः पूर्वप्रतिपन्नेभ्योऽप्यसंख्यातगुणाः 'तदसंखगुणा सुयपवन्न' त्ति-तेभ्योऽपि श्रुतप्रतिपद्यमानकेभ्यस्तस्यैव श्रुतस्य ये पूर्वप्रतिपन्नास्तेऽसङ्ख्यातगुणा इति।

अथ पूर्वप्रतिपन्नानां च प्रतिपद्यमानकानां च सम्यग्दृष्ट्यादीनां स्वस्थानेऽल्पबहुत्वमाह—

सट्ठाणे सट्ठाणे, पुव्वपवण्णा पवज्जमाणेहिं।
हुंति असंखिज्जगुणा, संखिज्जगुणा चरित्तस्स।२७७१।

सम्यक्त्वयुक्तश्रुतदेशविरतानां स्वस्थाने स्वस्थाने पूर्वप्रतिपन्नाः प्रतिपद्यमानकेभ्योऽसंख्येयगुणाः, चारित्रिणां तु विशेषः, तद्यथा—सर्वस्तोकाः स्वस्थाने चारित्रिणः प्रतिपद्यमानकाः, पूर्वप्रतिपन्नास्तु सङ्ख्येयगुणा इति।

अथ सम्यक्त्वादिप्रतिपतितानामल्पबहुत्वमाह—

चरणपडिया अणंता, तदसंखगुणा य देसविरईओ।
सम्मादसंखगुणिया, तओ सुयाओ अणंतगुणा।२७७२।

चारित्रं प्राप्य ये प्रतिपतितास्ते सम्यक्त्वादिप्रतिपद्यमानपूर्वप्रतिपन्नकेभ्यः सर्वेभ्योऽप्यनन्ता अनन्तगुणाः, देशविरतिप्रतिपतितास्तेभ्योऽसङ्ख्यातगुणाः, सम्यक्त्वप्रतिपतितास्तेभ्योऽसङ्ख्यातगुणाः, तेभ्योऽपि श्रुतात् प्रतिपतिता अनन्तगुणा इति।

'सेढी असंखभागो सुए' इत्यादि यदुक्तम्, तत्र किं सामान्यश्रुतं सम्यक्त्वश्रुतं वेह गृह्यते, इत्याशङ्कायामाह—

सामण्णं सुयगहणं, ति तेण सव्वत्थ बहुतरा तम्मि।
इहरा पइ सम्मसुय, सम्मत्तसमा मुणेयव्वा ॥ २७७३ ॥

उक्तार्थप्राया, सुगमा चेति ।

इह सम्यक्त्वश्रुतदेशविरतिचारित्रलक्षणेषु चतुर्ष्वपि सामायिकेषु पूर्वप्रतिपन्न-प्रतिपद्यमानपदयोर्जघन्योत्कृष्टभेदभिन्नत्वात् तद्विशेषप्रतिपादनार्थमाह—

पडिवन्नपडिवज्जयाणं, मग्गणा समहियं जहन्नाओ ।
सव्वत्थुक्कोसपयं, पव्वज्जइ जहन्नओ एगो ॥ २६२० ॥

इह सम्यक्त्वादिप्रतिपन्नानां यज्जघन्यपदं तस्मात् स्वस्थाने यदुत्कृष्टपदं तत् सर्वत्र समधिकं विशेषाधिकमवगन्तव्यम् । एवं पूर्वप्रतिपन्नानामपि जघन्यपदादुत्कृष्टपदं विशेषाधिकमेव । प्रतिपद्यमानानां तर्हि का वार्त्ता ? इत्याह—' पवज्जई ' त्यादि, प्रतिपद्यते सम्यक्त्वादिगुणं जघन्यत एको द्वौ वा, उत्कृष्टतस्त्वाद्यसामायिकत्रयमसङ्ख्याता , चारित्रं तूत्कृष्टतः सङ्ख्याताः प्रतिपद्यन्ते । अत इह जघन्यपदादुत्कृष्टपदमसंख्येयगुणं संख्येयगुणं वा द्रष्टव्यम् इति गाथाऽष्टकार्थः । विशे० ।

( ६९ ) अथ यस्य नयस्य यत् सामायिकं मोक्षमार्गत्वेनानुमतम् , तद्दर्शनस्वरूपमनुमतद्वारं विभणिषुराह—

तवसंजमो अणुमओ, नेग्गंथं पवयणं च ववहारो ।
सद्दुज्जुसुयाणं पुण,निव्वाणं संजमो चेव ॥ २६२१ ॥

तापयतीति तपस्तत्प्रधानः संयमस्तपःसंयमश्चारित्रसामायिकमित्यर्थः । तथा निर्ग्रन्थानामिदं नैर्ग्रन्थ्यमार्हतमिति भावना, प्रवचनं श्रुतसामायिकमित्यर्थः । चशब्दोऽनुक्तसम्यक्त्वसामायिकपरिग्रहार्थः ।एतानि त्रीण्यपि सामायिकानि मोक्षमार्गत्वेन समानुमतानीति ब्रूते व्यवहारनयः । एतद्ग्रहणे चाधोवर्तिनौ नैगमसंग्रहावपि गृहीतौ द्रष्टव्यौ । ततश्चेदमुक्तं भवति-नैगमसंग्रहव्यवहारास्त्रिविधमपि सामायिकं मोक्षमार्गतयाऽनुमन्यन्ते । शब्दर्जुसूत्रयोः पुनर्निर्वाणं निर्वाणमार्गोऽभिमतः संयम एव चारित्रसामायिकमेवेत्यर्थः, नेतरं द्वे, सर्वसंवररूपचारित्रानन्तरमेव मोक्षप्राप्तेः, इति निर्युक्तिगाथासंक्षेपार्थः ।

विस्तरार्थं भाष्यकारः प्राह—

कस्स नयस्साणुमयं,किं सामाइयमिह मोक्खमग्गो त्ति ।
भन्नइ नेगमसंगह–ववहाराणं तु सव्वाइं ॥ २६२२ ॥
तवसंजमो त्ति चरित्तं, निग्गंथं पवयणं ति सुयनाणं ।
तग्गहणे सम्मत्तं, च गहणाओ य बोद्धव्वं ॥ २६२३ ॥

गाथाद्वयमपि गतार्थम् । नवरं ' सव्वाइं ' ति-सम्यक्त्वश्रुतचारित्ररूपाणि त्रीण्यपि सामायिकानीत्यर्थः ।

अथ परमतमाशङ्क्य परिहरन्नाह—

तिन्नि वि सामइयाइं, इच्छंता मोक्खमग्गमाइल्ला ।
किं मिच्छद्दिट्ठीया, वयंति जं समुइयाइं पि ॥२६२४॥

आह नन्वाद्या नैगमसंग्रहव्यवहारलक्षणास्त्रयो नया उक्तन्यायेन चारित्रश्रुतसम्यक्त्वरूपाणि सामायिकानि मोक्षमार्गत्वेनेच्छन्ति किमिति मिथ्यादृष्टय ?-किमिति नयमतमिदं गीयते?-सम्पूर्णं जिनमतमेव कस्मादेतद् न भवति ? इत्यर्थः । नहि जैनैरपि ज्ञानदर्शनचारित्रेभ्योऽन्यद्दूरमधिकं वा किमपि मोक्षमार्गत्वेनेष्यते ? । अत्रोत्तरमाह-' वयंती ' त्यादि, यत्-यस्मादसमुदितान्यप्येतानि मोक्षमार्गत्वेन वदन्ति नैगमादयः, न तु ' ज्ञानादित्रितयादेव मोक्षः ' इति नियमं कुर्वते, न यत्त्वहानिप्रसङ्गात् । अत एते मिथ्यादृष्टय इति ।

'सद्दुज्जुसुयाणं पुण ' इत्यादि गाथादलं व्याख्यातुमाह—

उज्जुसुयाइमयं पुण, निव्वाणपहो चरित्तमेवेगं ।
न हि नाणदंसणाइं,भावे वि न तेसिं जं मोक्खो।२६२५

ऋजुसूत्रस्य, त्रयाणां च शब्दनयानां पुनश्चारित्रसामायिकमेवैकं निर्वाणमार्ग इति हि मतम् , हिशब्दः पुनरर्थे, न पुनः श्रुतज्ञानसामायिकं सम्यग्दर्शनसामायिकं च मोक्षमार्गस्तेषामनुमत इत्यर्थः , यद्—यस्मात् तयोर्ज्ञानदर्शनसामायिकयोः सद्भावेऽपि चारित्रमन्तरेण न मोक्षः । तस्मादन्वयव्यतिरेकाभ्यां चारित्रसामायिकमेवैकं तन्मतेन मोक्षमार्ग इति ।

एतदेव भावयति—

जं सव्वनाणदंसण–लंभे वि न तक्खणं चिय विमोक्खो ।
मोक्खो य सव्वसंवर–लाभे मग्गो स एवाओ ।२६२६।

यद्-यस्मात् सर्वम्—परिपूर्णं ज्ञानं सर्वज्ञानं क्षायिकं ज्ञानम् ,केवलज्ञानमिति यावत् , तथा—सर्वम्-सम्पूर्णं दर्शनं सर्वदर्शनम् ; क्षायिकसम्यक्त्वमित्यर्थः , तयोर्लाभेऽपि न तत्क्षणमेव विमोक्षो—मुक्तिसद्भावः । भवति च मोक्षः, कदा ? इत्याह—सर्वसंवररूपचारित्रसामायिकलाभे । अतोऽन्वयव्यतिरेकाभ्यां स एव सर्वसंवररूपचारित्रलाभो मोक्षमार्ग इति ।

अत्र पर प्राह—

आह नणु नाणदंसण–रहियस्सेव सव्वसंवरो दिट्ठो ।
तस्सहियस्सेव तओ,तम्हा तितयं पि मोक्खपहो ।२६२७

आह ननु सोऽपि—सर्वसंवररूपचारित्रलाभो ज्ञानदर्शनरहितस्याकस्मादेवोपजायमानो न कस्यापि दृष्टः , किंतु तत्सहितस्यैव प्रागुत्पन्नज्ञानदर्शनस्यैव तको यथोक्तचारित्रलाभः संजायते । तस्मात् त्रितयमपीदं मोक्षमार्ग इति । अतोऽयुक्तमुक्तम् ' निव्वाणं संजमो चेव ' इति ।

एवं नैगमादिभिरुक्ते ऋजुसूत्रशब्दावाहतु —

जइ तेहिं विणा नत्थि–त्ति संवरो तेण ताइं तस्सेव ।
जुत्तं कारणमिह न उ,संवरसज्झस्स मोक्खस्स ।२६२८।

यदि 'ताभ्यां ज्ञानदर्शनाभ्यां विना सर्वसंवररूपचारित्रलाभो नास्ति' इत्युच्यते भवता, ' तेण' त्ति—तर्हि तावता हन्त !'ताइं' ति—ते ज्ञानदर्शने तस्यैव सर्वसंवरचारित्रस्य कारणमिह युक्तमभिधातुम् , न तु सर्वसंवरचारित्रसाध्यस्य मोक्षस्य , तदनन्तरमात्रभावित्वात् ज्ञानदर्शनद्वयानन्तरमभूतत्वाच्चेति ।

पुनरपि पराभिप्रायमाशङ्क्य परिहरन्नाह—

अह कारणोवगारि त्ति, कारणं तेण कारणं सव्वं ।
सुवणं नाणाईणं, जइ णो नेयाइ भावेणं ॥ २६२९ ॥
तह साहणभावेण वि, देहाइपरंपराइबहुभेयं ।
निव्वाणकारणं ते,नाणाइतियम्मि को नियमो ।२६३०।
अह पच्चासण्णतरं, हेऊ नयरमिहोवगारिं पि ।
तो सव्वसंवरमयं, चारित्तं चेव मोक्खपहो ॥२६३१॥

अथ सूत्रे—कारणस्य सर्वसंवरचारित्रस्योपकारिणी ज्ञानदर्शने, इति ते तस्य कारणम्, 'तेसु' त्ति—तर्हि हन्त ! सर्वमपि भुवन यतेज्ञानदर्शनचारित्राणां कारणं प्राप्नोति, ज्ञेयश्रद्धेयप्रवृत्तिनिवृत्तिभावेन सर्वस्यापि भुवनस्य तदुपकारित्वादिति । न केवलं ज्ञेयादिभावेनोपकारमात्रात्, तथा, साधनभावेनापि—साधकतमत्वेनापि देहमातापितृवस्त्रपात्राऽऽहारभेषजादिकं परम्परया बहुभेद—बहुप्रकारं निर्वाणस्य मोक्षस्य—कारणं विद्यते । ततस्ते—तव ज्ञानादित्रिके को नियम ? 'ज्ञानदर्शनचारित्राणि मोक्षमार्ग ' इत्येवंभूत को निश्चय ?, अन्यस्यापि परम्परया देहादेर्बहुप्रकारस्य तत्कारणस्य विद्यमानत्वादिति । अथ बहुप्रकारकारणसंभवेऽपि यदेव प्रत्यासन्नतरं कारणं तदेव मोक्षस्य हेतुरिष्यते, न पुनरितरद् देहादिकमपि परंपरयोपकारकमपि तद्धेतुनयाऽभिधीयते ततो ज्ञानादित्रयमेव मोक्षहेतुरिति नियम । अत्रोच्यते—यदि हन्त ! प्रत्यासन्नतया यदुपकुरुते तदेव मोक्षकारणम्, न व्यवहितम्, ततस्तर्हि सर्वसंवरात्मकं चारित्रमेव मोक्षमार्गो नान्यदिति प्रतिपद्यस्व, तस्यैवातिप्रत्यासन्नत्वादिति ।

आह—ननु यद्येतदनन्तरोक्तं नैगमादिनयमतम्, तर्हि स्थित पक्ष क ? इत्याह—

इट्ठत्थसाहयाइं, सद्दहणाइगुणओ समेयाइं ।
सम्मकिरियाउरस्स व,इह पुण निव्वाणमिट्ठत्थो।।२६३२।।

इह नैगमादय एकैकशो व्यस्तान्यपि त्रीणि सामायिकानि मोक्षकारणत्वेनेच्छन्ति, ऋजुसूत्रादयस्तु चारित्रमेवैकं तद्धेतुत्वेन प्रतिपद्यन्ते, इति तावद् नयमतं प्रतिपादितम् । स्थितपक्षे तु त्रीण्यपि ज्ञानादीनि सामायिकानि समुदितान्येवेष्टार्थसाधकानि, न त्वेकम्, व्यस्तानि वा, यथाऽऽतुरस्य वैद्यभैषजाऽऽतुरप्रतिचारकलक्षणसमुदितचतुरङ्गसम्यक्क्रिया । सम्यक्त्वेन हि सम्यक्त्वं श्रद्धत्ते, ज्ञानेन तु जानाति, चारित्रेण तु सर्वसावद्याद् विरमतीति । अत 'सद्दहणाइगुणउ' त्ति-श्रद्धानादिगुणयुक्तत्वात् समुदितेभ्य एव ज्ञानादिभ्य इष्टार्थसिद्धिर्नान्यथा । अत्र प्रयोग.—इहेष्टार्थस्य सामग्र्येव साधिका न त्वेकं किञ्चित्, तथैवोपलम्भात्, यथाऽऽतुरस्य चतुरङ्गसम्यक्क्रियासामग्री तदिष्टार्थस्य साधिका । स चेष्टार्थ पुनरिह प्रस्तुते निर्वाणं मोक्षो मन्तव्य इति । तदेवमुक्तमनुमतद्वारम् । तद्वर्णनेनैव समाप्ता 'उद्देसे निद्देसे य निग्गमे' इत्याद्युपोद्घातप्रथमद्वारगाथा ।

अथ 'किं कइविहं' इत्यादि द्वितीयद्वारगाथावयवभूतं प्रथमं 'किम्' इत्येतद्द्वारं व्याख्येयम् । अतस्तत्प्रतिपादकनिर्युक्तिगाथाया प्रस्तावना कुर्वन्नाह—

किं सामइयं जीवो, अजीवो दव्वमहगुणो होज्जा ।
किं जीवाजीवमयं, होज्ज तदत्थंतरं व त्ति ?।। २६३३ ।।

किं सामायिक जीव, उताजीव. ? । जीवाजीवत्वेऽपि किं द्रव्य, गुणो वा भवेत् । आहोस्विज्जीवाजीवमयमुभयम् । अथ जीवाऽजीवोभयेभ्योऽर्थान्तरं खरविषाणवन्ध्यापुत्रकल्प किमपि तद् भवेत् ? इति द्वादशगाथार्थ । विशे० । आ० म० ।

तथाहि—सामायिकविषयनिरूपणं प्रस्तुतं सामायिकाङ्गत्वात् यत् यत् सामायिकाङ्गं तत्तत्प्ररूपणं प्रस्तुत यथा सामायिकस्वात्मप्ररूपणमित्यलं विस्तरेण । तत्र यदुक्तम्-आत्मा खलु सामायिकमिति तत्र यथाभूतोऽसौ सामायिकं तथाभूतमभिधित्सुराह—

सावज्जजोगविरतो. तिगुत्तो छसु संजतो ।
उवउत्तो जयमाणो, आया सामाइयं होइ ।। १४६ ।।

अवद्य मिथ्यात्वकषायनोकषायलक्षणं सहावद्य यस्य येन वा स सावद्य. स चासौ योगश्च सावद्ययोगस्तस्माद्विरतो-निवृत्त. सर्वसावद्ययोगविरतस्तथा त्रिभिर्मनोवाक्कायैर्गुप्तस्त्रिगुप्त । तथा षट्सु जीवनिकायेषु संयत -प्रयत्नवान्, अथ अवश्यकर्त्तव्येषु योगेषु सततमुपयुक्तो यतमान यतनं तेषामासेवनम् । इत्थंभूत आत्मा सामायिकमिति । इय मूलटीकानुसारेण व्याख्या । आ० म० १ अ० ।

अनन्तरोक्ताशङ्काऽसम्भवे इत्याह—

आया खलु सामइयं, पच्चक्खायं तओ हवइ आया।
तं खलु पच्चक्खाणं, आयाए सव्वदव्वाणं ।।२६३४।।

इह सामायिक क. ? इत्याह—'आया खलु' त्ति-आत्मैव-जीव एव सामायिकम्, न त्वजीवादिरिति भावः 'पच्चक्खाय तओ हवइ आय' त्ति—स चात्मा सावद्ययोगं प्रत्याचक्षाणस्तत्प्रत्याख्यान कुर्वन् प्रत्याख्यानक्रियाकाले सामायिकं भवति, निश्चयनयमतेन 'क्रियमाणं कृतम्' इति क्रियाकालनिष्ठाकालयोरभेदात् ।न केवलं प्रत्याचक्षाणोऽसौ वर्त्तमानकाले सामायिक भवति, किन्तूपलक्षणत्वात् कृतप्रत्याख्यानोऽपि सामायिकं भवतीति द्रष्टव्यम् । द्वितीयमात्मग्रहणं किमर्थम् ? इति चेत् । उच्यते-स एव सावद्ययोगप्रत्याख्यानयुक्त परमार्थत आत्मा, श्रद्धानज्ञानसावद्यनिवृत्तिलक्षणस्वस्वभावावस्थितत्वात् । शेषसंसार. पुनरात्मैव न भवति, प्रचुरघातिकर्मभिस्तस्य स्वाभाविकगुणतिरस्करणादिति ज्ञापनार्थं पुनरात्मग्रहणमिति । 'त खलु पच्चक्खाणं' ति—खलुशब्द सामायिकस्य जीवपरिणतित्वज्ञापनार्थ । ततोऽयमर्थ —तच्च प्रत्याख्यानं जीवपरिणतिरूपत्वाद् विषयमधिकृत्य 'आयाए सव्वदव्वाणं' ति—सर्वेषामपि जीवादिद्रव्याणामायाते अभिमुख्येन समवाये 'निष्पद्यते' इति शेष । सर्वाणि जीवादिद्रव्याणि सामायिकप्रत्याख्यानस्य श्रद्धेयज्ञेयप्रवृत्तिनिवृत्तिभावेनोपयुज्यन्ते, अतस्तत्समवाये तद् निष्पद्यत इत्यभिधीयते । न च सामायिकप्ररूपणे प्रस्तुते तद्विषयनिरूपणमसंबद्धमिति वक्तव्यम्, तदङ्गत्वात् तत्स्वरूपवत् इति निर्युक्तिगाथार्थ । विशे० । आ० म० । साम्प्रतमियमेव गाथा कथं कालिकसूत्रेऽपि प्रतिसूत्र पूर्वमवतेरुर्नया इति सकौतुकविनेयजनानुग्रहाय पूर्वसूरिकृतव्याख्यानुसारेण नयैर्व्याख्यायते । संग्रहनय आह—आत्मा सामायिकं सामायिकशब्दवाच्यो न तदतिरिक्त गुणान्तरं, गुणाना द्रव्यात् पृथग्भूतानामसम्भवात्, अपृथग्भूताना द्रव्य एवान्तर्भावात्, एवं ब्रुवाणं संग्रहं प्रति व्यवहारोऽप्यवोचत्-न शक्यमेतत् प्रतिपत्तुमतिप्रसङ्गदोषात् । तथाहि-यद्यसौ सामायिकं तर्हि यो य आत्मा स सामायिकमिति प्रसक्तं तत एव प्ररूपय- जयमाणो आया सामाइय होइ इति-यतमानो नाम

प्रयत्नपरस्तथाभूत आत्मा सामायिक न शेष इति । एवं व्यवहारेणोक्ते सति ऋजुसूत्रनय उवाच-यदि नाम यतमान आत्मा सामायिकं तत एवं तामलिप्रभृतयोऽपि स्वच्छन्दसा यतमाना सामायिकं प्रसक्तास्तेषामपि स्वसंयमानुगतयतनामात्रसम्भवात्, नचैतदिष्टं तेषां मिथ्यादृष्टित्वात् । तत एवं बुध्यस्व उपयुक्तो यतमान आत्मा सामायिकमिति । उपयुक्तो नाम ज्ञयप्रत्याख्येयज्ञानप्रत्याख्यानपरिणाम., एवं सति तामलिप्रभृतीनां व्यवच्छेदस्तेषां सम्यग्ज्ञानसम्यक्प्रत्याख्यानासम्भवात् । एवम् ऋजुसूत्रेणोक्ते शब्दनयोऽभाणीत्-यद्युपयुक्तो यतमान आत्मा सामायिकमेवं तर्ह्यविरतसम्यग्दृष्टयो देशविरताश्च सामायिकं प्राप्नुवन्ति । तेषामपि यथायोगं ज्ञयज्ञानप्रत्याख्येयप्रत्याख्यानसम्भवात् । तत एवं मान्वदव-'षट्सु संयत उपसंयुक्तो यतमान आत्मा सामायिकमिति' । षट्सु—पृथिवीकायिकादिषु सम्यक् सूत्रोक्तनीत्या यत संघट्टनपरितापनादिभ्यो विरत. संयत । एवं चारित्रसम्यग्दृष्टिदेशविरतव्यवच्छेद., तेषां त्रिविधं त्रिविधेन षड्जीवनिकायपरितापनादिभ्यो विरत्यभावात् । एवमुक्ते समभिरूढ प्राह-यदि षट्सु जीवनिकायेषु संयत उपयुक्तो यतमान आत्मा सामायिकमिति । त्रिगुप्तो नाम-मनोवाक्कायगुप्त. । किमुक्तं भवति-अकुशलमनोवाक्कायप्रवृत्तिनिरोधी कुशलमनोवाक्कायोद्दीपक 'एकग्रहणे तज्जातीयग्रहण' मिति न्यायात् पञ्चसु ईर्याभाषैषणादानभाण्डमात्रनिक्षेपणोच्चारप्रश्रवणादिपरिष्ठापनरूपासु समितिषु समित इत्यपि गृह्यते । तत प्रमत्तसंयतानां व्यवच्छेदः, तेषां निद्राविकथादिप्रमादोपेतानां यथोक्तरूपगुप्तिसमित्यभावात् । एवं समभिरूढेणाभिहिते एवंभूतो वदति यदि नाम यथोक्तस्वरूप आत्मा सामायिकं ततोऽप्रमत्तसंयतादयोऽपि सामायिकं भवेयुस्तेषामपि यथोक्तविशेषणविशिष्टत्वभावात्, तत एवं प्रतिपद्यस्व-सावद्ययोगविरतस्त्रिगुप्त. षट्सु संयत उपयुक्तो यतमान आत्मा सामायिकमिति । सावद्ययोगविरतो नाम अवद्यं कर्मबन्ध सहावद्यं यस्य येन वा स सावद्यः योगो व्यापार. सामर्थ्यं वीर्यमित्येकार्थं "जोगो विरियं थामं, उच्छाह परक्कमो तहा चेट्ठा । सत्ती सामत्थं चिय, जोगस्स हवंति पज्जाया ॥१॥" इति वचनात् सावद्यश्चासौ योगश्च सावद्ययोगस्तस्मात् विरत.—प्रतिनिवृत्त. सावद्ययोगविरतो ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया च परिज्ञातसमस्तसावद्ययोग. । किमुक्तं भवति—निरुद्धसूक्ष्मबादरमनोवाक्कायव्यापारो विगतक्रियानिवृत्तिध्यानमधिरूढ शैलेशीं प्रतिपन्नो नामात्मा सामायिकमिति, एवं चाप्रमत्तसंयतादीना व्यवच्छेदस्तेषां मनोवाक्कायव्यापारवत्तया सावद्ययोगपरिकलितत्वात् " नत्थि हु सकिरियाणं अबंधगं किंचि इह अणुट्ठाण " मिति वचनात् । नैगमस्य त्वनेकगमत्वात् समस्तैतद्विशेषणविशिष्टोऽन्यतरैकविशेषणविशिष्टो वा द्वित्रिचतुःपञ्चविशेषणविशिष्टो वा सामायिकमित्येतावन्मात्रमभ्युपगम्यते, तत सावद्यव्यापारबहुलानामपि सामायिकत्वप्रसङ्ग । ततो मा वादीरेवं, किन्त्वेव वद-सावद्ययोगविरत आत्मा सामायिकमिति । एवं च सावद्यव्यापारनिपुणानां सामायिकत्वव्युदासः । ऋजुसूत्र पुन संयममेव सामायिकम् मन्यते, न सम्यक्त्वसामायिकं श्रुतसामायिकं वा, विरत्यभावे तयोर्निष्फलत्वात्, ज्ञानस्य फलं विरति'रिति वचनात् । विरतिभावे च तयोस्तत्रैवान्तर्भावात् । तत उक्तप्रकारेण वदन्तं व्यवहारं प्रति स प्राह-विरतिर्नाम परिज्ञानमात्रेऽपि तदा शक्यभावतो लोके व्यवह्रियते । तथाहि-केचित् प्रबलचारित्रावरणीयकर्म्मोदयसमेता कदाचित्तीर्थकरादिसमीपे धर्मश्रवणवेलायां नरकादिदु खाकर्णनतस्तद्धेतुता विषयान्नरकादिकुगतिप्रपातहेतून् अवबुध्य तेभ्यो विरज्यन्ते । हा धिग् यद्वयमेतेष्वेवरूपेष्वपि प्रसक्ता इति, लोकानामपि च तथारूपचेष्टादिदर्शनत एवं प्रत्यय उपजायते यदेते विरक्ता इति । परं ते न तान् विषयान् त्यक्तुं शक्नुवन्ति प्रबलचारित्रावरणीयकर्म्मोदयात् । तत. सावद्ययोगविरत आत्मा सामायिकमित्येतावन्मात्रोक्तौ तेषामपि सम्यक्त्वसामायिकवतां च व्यवहारत. सावद्ययोगविरतानां सामायिकत्वं प्राप्नोति । तस्मादेवमभिधानीयं सावद्ययोगविरतस्त्रिगुप्त आत्मा सामायिकमिति । त्रिगुप्त इत्यस्य व्याख्यानं प्राग्वत् । त्रिगुप्त इत्युपलक्षणं, ते पञ्चसमित इत्यपि द्रष्टव्यं शब्दनयः पुनर्देशविरतिसामायिकमपि नेच्छति । तत एवमभिदधानमृजुसूत्रं प्रति स ब्रूते—यदि नाम सावद्ययोगविरतस्त्रिगुप्त. सामायिकमित्युच्यते ततो देशविरता अपि सामायिक प्राप्नुवन्ति तेषामपि सामायिकं कुर्वता सावद्ययोगविरतत्वात्, यथायोगं पञ्चसमितित्रिगुप्तिभावाच्च । ततस्तेषा सामायिकत्वप्रतिषेधार्थमेवमभिदध्या —सावद्ययोगविरतस्त्रिगुप्त. षट्सु संयत. आत्मा सामायिकमिति । षट्सु संयतो नाम-त्रिविधं त्रिविधेन षट्सु जीवनिकायेषु संघट्टनपरितापनादिभ्यो विरतस्तत एव देशविरतानां सामायिकमपि कुर्वतां सामायिकत्वव्युदासस्त्रिविधं त्रिविधेन, विरत्यभावात् द्विविधं त्रिविधेनेति, सामायिकसूत्रोच्चारणात्, समभिरूढ पुन. प्रमत्तसंयतानामपि सूक्ष्मसंपरायपर्यन्ताना सामायिकत्वं नेच्छति । तत उक्तप्रकारेण ब्रुवन्तं शब्दनयं प्रति स प्राह- यदि नाम सावद्ययोगविरतस्त्रिगुप्त षट्सु संयत आत्मा सामायिकमिति, उपयुक्तो नाम—कषायोदयलेशेनाप्यकलङ्कित. सन् समभावे व्यापृतस्ते च उपशान्तमोहादय एव न प्रमत्तसंयतादयस्ततस्तेषां व्युदास. । एवंभूतः पुनः समुद्घातादिगतं सयोगिकेवलिनमयोगिकेवलिनं वा सामायिकमिच्छति, न शेषं यतः सामायिकस्य फलं मोक्षस्ततो यैव सम्यक्—समभावे व्यवस्थितस्य समस्तकर्म्मविमोक्षार्थमायोजिका करणसमुद्घातादिका विगतक्रियानिवर्तिध्यानप्रतिपत्तिरूपा वा क्रिया सैव सामायिकशब्दस्य प्रवृत्तिनिमित्तमतस्तत्प्रतिपत्त्यर्थं विशेषणान्तरमाह—सावद्ययोगविरतस्त्रिगुप्त षट्सु संयत उपयुक्तो यतमान आत्मा सामायिकमिति । एवं चोपशान्तमोहादीना सामायिकत्वप्रतिक्षेपस्तेषां यथोक्तलक्षणक्रियारूपाया यतनाया असम्भवात्, नैगमस्त्वनेकगमत्वादेव प्राग्वत् सामायिकमिच्छन् भावनीयः । आ० म० १ अ० । आ० चू० ।

(७०) ननु कस्माज्जीव एव सामायिकं नाजीवादि ? इत्याशङ्कायां भाष्यकार प्राह—

सद्दहइ जाणइ जओ, पच्चक्खायं तओ जओ जीवो ।

नाजीवो नाभावो, सो च्चिय सामाइयं तेण ॥ २६३५ ॥

यतो—यस्मात् सम्यक्त्वश्रुतसामायिकाभ्यां भवजो जानाति च जीव एव नाजीवादि, प्रत्याचक्षाणश्च चारित्री-यतो जीव एव भवति नाजीवो नाप्यभाव', अज्ञानज्ञान-प्रत्याख्यानानां प्रेक्षावत्स्वेव संभवात्, अजीवाऽभावयोश्च प्रेक्षाभावात् तेन तस्मात् स एव जीव सामायिक,नाजीवादिरिति।

'तं खलु पच्चक्खाणं' इत्यादेर्व्याख्यानमाह—

सामाइयभावपरिणइ,-भावाओ जीव एव सामइयं।

सद्धेयनेयकिरिओ-वओगओ सव्वदव्वाइं ॥ २६३६ ॥

'खलु शब्द सामायिकस्य जीवपरिणतित्वज्ञापनार्थ.' इत्युक्तमेव। ततश्च सामायिकभावपरिणतिभावात् सामायिकपरिणामानन्यत्वाज्जीव एव सामायिकम्। तस्य च जीवपरिणतिरूपस्य सामायिकस्य को विषय ? इत्याह--सर्वद्रव्याणि। कुत ? । 'सद्धेयनेयकिरिओवओगओ' त्ति-यथासंख्यं सम्यक्त्वश्रुतचारित्रसामायिकानां श्रद्धेयत्वेन ज्ञेयत्वेन, प्रवृत्तिनिवृत्तिक्रियया च सर्वद्रव्याणामुपयोगात्, इति गाथाद्वयार्थ'।

(७१) तत्रैकस्मिन्नपि तावद् महाव्रतात्मके चारित्रसामायिके निर्युक्तिकृदेवं साक्षात् सर्वद्रव्योपयोग दर्शयति—

पढमम्मि सव्वजीवा, बीए चरिमे य सव्वदव्वाइं।

सेसा महव्वया खलु,-तदेगदेसेण दव्वाणं ॥ २६३७ ॥

प्रथमे प्राणातिपातनिवृत्तिरूपे व्रते विषयद्वारेण चिन्त्यमाने सर्वजीवास्त्रसस्थावरसूक्ष्मेतरभेदा विषयत्वेन द्रष्टव्या', तदनुपालनरूपत्वात् तस्येति। तथा,द्वितीये मृषावादनिवृत्तिरूप, चरमे च परिग्रहनिवृत्तिरूप महाव्रते सर्वद्रव्याणि विषयत्वेन द्रष्टव्यानि। कथम् ?। "नास्ति पञ्चास्तिकायात्मको लोक' इति मृषावादस्य सर्वद्रव्यविषयत्वात्, तन्निवृत्तिरूपत्वाच्च द्वितीयव्रतस्य। तथा,मूर्च्छाद्वारेण परिग्रहस्यापि सर्वद्रव्यविषयत्वात्, चरमव्रतस्य च तन्निवृत्तिरूपत्वादशेषद्रव्यविषयतेति। 'सेसा' इत्यादि खलुशब्दोऽवधारणे,'तस्य च व्यवहितसम्बन्ध। तनश्च शेषाणि महाव्रतानि द्रव्याणां तदेकदेशेनैव 'भवन्ति' इति क्रियाध्याहार। तेषां द्रव्याणामेकदेशस्तदेकदेशस्तेनैव हेतुभूतेन विषयत्वेन भवन्ति, न तु सर्वद्रव्यैरिति भाव। कथम् ? इति चेत्। उच्यते—तृतीयस्य ग्रहणीयधारणीयद्रव्यादत्तादानविरतिरूपत्वात्, चतुर्थस्य तु "रूवेसु वा रूवसहगेसु वा दव्वेसु" इत्यादिवचनाद् रूप-रूपसहगतद्रव्यसम्बन्ध्यब्रह्मविरतिरूपत्वात्, षष्ठस्य च रात्रिभोजनविरमणस्वरूपत्वादिति। एवममीषां सर्वद्रव्यैकदेशविषयता इति निर्युक्तिगाथार्थ।

कुत पुनरेवम् ? इत्याशङ्क्य भाष्यकारोऽप्याह–

जं सव्वजीवपालण-विसयं पाणाइवायवेरमणं।

मिच्छा मुच्छोवरमा, सव्वद्दव्वेसु विणिउत्ता ॥२६३८॥

रूवेसु सहगएसुं, बंभवयं गहणधारणिज्जेसु।

तइयं छट्ठवयं पुण, भोयणविणिवित्तिवावारं ॥२६३९॥

एवं चारित्तमयं, सव्वद्दव्वनिमयं तह सुयं पि।

देमे देसोवरई, सम्मत्तं सव्वभावेसु ॥ २६४० ॥

यद्--यस्मात् त्रसस्थावरसूक्ष्मस्थूलसर्वजीवपालनविषयं प्राणातिपातविरतिव्रतम्, तस्मात् प्रथमं व्रत सर्वजीवा विषयत्वेन सङ्ग्रहीता। मिथ्या, अनृतम्, मृषेति पर्यायाः। मूर्च्छा, गृद्धि, परिग्रह इत्येकार्था। उपरमणमुपरमो; नियम। अयं चोपरमशब्द प्रत्येकमभिसम्बध्यते। ततश्च मिथ्योपरमो मृषावादनियमो द्वितीयव्रतमित्यर्थ। मूर्च्छोपरम परिग्रहनिगमश्चरमव्रतमित्यर्थ। एतौ मिथ्योपरम—मूर्च्छोपरमौ द्वितीय—चरमव्रतविशेषौ सर्वद्रव्येषु विनियुक्तौ सर्वद्रव्याणि प्रत्येकं तयोर्विषय इत्यर्थ। कथम् ? इति चेत्। उच्यते-शून्यवादे सर्वद्रव्यापलापेन, अन्यथा प्ररूपणेन वा मृषावादस्य सर्वद्रव्यविषयत्वात्, द्वितीयव्रतस्य च तन्निवृत्तिरूपत्वात् सर्वद्रव्यविषयता। पञ्चमव्रतस्यापि 'त्रिभुवनाधिपतिरहम्' 'सर्वमपि मदीयम्' इत्येवंभूतमूर्च्छानिवृत्तिरूपत्वात् सर्वद्रव्यविषयतेति। रूपेषु तिर्यग्मनुष्यदेवस्त्रीपण्डकादिलक्षणेषु मूर्तवस्तुषु; रूपसहगतेषु च स्तननयनजघनादिषु विषये तत्सेवानिवृत्तिरूपत्वेन ब्रह्मव्रतम्-चतुर्थव्रतं प्रवर्तते, न पुन सर्वद्रव्येषु। तृतीयं त्वदत्तादानव्रतं ग्रहणीय--धारणीयेषु मूर्तेषु ग्रहणधारणयोग्येषु हिरण्यद्रविणादिषु विषये तदपहारनिवृत्तिद्वारेण प्रवर्तते, न सर्वत्र। षष्ठमपि रात्रिभोजनविरमणव्रत रात्रिभोजनविनिवृत्तिमात्रव्यापारपरतया न सर्वविषयम्। अतस्त्रयाणामप्येतेषां सर्वद्रव्यैकदेशविषयतेति। एवमुक्तप्रकारेणेदं चारित्रसामायिकं सामान्येन सर्वद्रव्यविषयं व्रतविभागविशेषविषयमवगन्तव्यम्। तथा, श्रुतसामायिकमपि " सर्वद्रव्येष्वसर्वपर्यायेषु श्रुतम् " इति वचनात् सर्वद्रव्यविषयमवसेयम्। देशोपरतिर्देशविरतिसामायिकं तु तद्रूपत्वादेव देशे सर्वद्रव्यैकदेशविषयमेव मन्तव्यम्। सम्यक्त्वसामायिक तु यथावस्थितसमस्तवस्तुस्तोमश्रद्धानरूपत्वात् सर्वद्रव्यविषयमेव बोद्धव्यम्। अतस्त्रीण्यपि सामायिकानि प्रत्येकं समुदितानि च सर्वद्रव्यविषयाणीति सिद्धम्। तत्सिद्धौ च सिद्धमिदम्-'तं खलु पच्चक्खाणं आवाए सव्वदव्वाणं' इति।

अथ परमतमाशङ्क्य परिहरन्नाह—

किं तं ति पत्थुए किं,थविसयचिंताएँ भण्णइ तओ वि।

सामाइयंगभावं,जाइ जओ तेण तग्गहणं ॥ २६४१ ॥

किं तत् सामायिकम् ? इति ज्ञेयत्वेन प्रस्तुते किमत्र विषयचिन्तया ? इति प्रेर्ये भण्यते-प्रतिविधीयते तकोऽपि विषय सामायिकस्याङ्गभावं हेतुभावं याति यस्मात्, तेन तस्य विषयस्य ग्रहणमिह प्ररूपणं कृतमिति न तस्याप्रस्तुतत्वमिति।

अथ वक्ष्यमाणनिर्युक्तिगाथायाः प्रस्तावनामाह-

दव्वं गुणो त्ति भइयं, सामाइयं सव्वनयमयाधारं।

तं दव्वपज्जवट्ठिय, नयमयमंगीकरेऊणं ॥ २६४२ ॥

इह सामायिकं सर्वनयमताधार सर्वनयविचारविषय इत्यर्थ, ततस्तन्मतेन भाज्य भजनीयं द्रव्य गुणो वा भवति। ततस्तद्द्रव्यार्थिक-पर्यायास्तिकनयद्वयमतमङ्गीकृत्य विचार्यते इति गाथापञ्चकार्थ।

कथं विचार्यते ? इत्याह—

जीवो गुणपडिवन्नो, नयस्स दव्वट्ठियस्स सामइयं ।
सो चेव पज्जवट्ठिय–नयस्स जीवस्स एस गुणो ॥२६४३॥

जीव –आत्मा गुणं. प्रतिपन्न –आश्रितः, द्रव्यमेवार्थो यस्य न तु पर्यायाः स द्रव्यार्थिकस्तस्य द्रव्यार्थिकस्य नयस्य मतेन सामायिकम् । ( अन्यत्या व्याख्या ' गुण ' शब्दे तृतीयभागे ९०६ पृष्ठे गता । )

अत्र भाष्यम्—

उप्पाय विगम परिणा–मओ गुणा पत्तनीलयाइ व्व ।
संति न उ दव्वमिट्ठं,तव्विरहाओ खपुप्फं व ॥२६४९॥
ते जप्पभवा जं वा, तप्पभवं होज्ज होज्ज तो दव्वं ।
न य तं ते चेय जओ, परोप्परप्पच्चयप्पभवा ॥२६५०॥

गुणा एव सन्ति, उत्पादविगमपरिणामत –उत्पादव्ययपरिणामवत्त्वात् , पत्रनीलतादिवदिति । अनभिमतप्रतिषेधमाह–' न उ.' इत्यादि, सन्ति इति बहुवचनव्यत्ययादेकवचनान्तमिहापि सम्बध्यते, न तु ' द्रव्यमस्ति ' इत्यभीष्टं पर्यायार्थिकनयस्य, तद्विरहात्–उत्पादव्ययपरिणामाभावात् , खपुष्पवदिति । यदि हि यस्मात् प्रभवो येषां ते यत्प्रभवास्ते प्रसिद्धा नीलतादयो गुणाः, ' जं वा तप्पभवं ' ति—यद्वा—तत्प्रभवं तेभ्यो गुणेभ्य प्रभवो यस्य तत् तत्प्रभवं गुणेभ्यो व्यतिरिक्तं किमपि वस्तु 'होज्ज' त्ति–भवेदित्यर्थः. ' होज्ज तो दव्वं' ति–ततस्तदेव वस्तु पारमार्थिकं द्रव्यं भवेदिति, 'न य तमि' त्यादि, न च तद्गुणानां कारणभूतं कार्यभूतं वा गुणेभ्यो व्यतिरिक्तं किमपि वस्त्वस्ति, यतस्त एव नीलरक्तादयो गुणा. पूर्वापरीभावत. सातत्येन प्रवृत्ता दृश्यन्ते, न पुनस्तद्व्यतिरिक्तं किमपि द्रव्यमीक्ष्यते । कथंभूता गुणा ? इत्याह—' परोप्परे ' त्यादि परस्परम्—अन्योन्यं प्रत्ययः—प्रत्ययभाव , प्रत्ययत्वमित्यर्थ . तस्मात् प्रभवो—जन्म येषां ते परस्परप्रत्ययप्रभवा. प्रतीत्य समुत्पादेनोत्पन्ना इत्यर्थः । तस्माद् न गुणेभ्योऽतिरिक्तं द्रव्यमस्तीति ।

अत्र कश्चिदाचार्यदेशीयः स्वात्मन्येव व्याख्यातृत्वमवगच्छन्नाह—

आहावक्खाणमियं, इच्छइ दव्वमिह पज्जवनओ वि ।
किं तच्चंतविभिन्नं, मन्नइ सो दव्वपज्जाए ॥ २६५१ ॥
उप्पायाइसहावा, पज्जाया जं च सासयं दव्वं ।
ते तप्पभवा न तयं, तप्पभवं तेण ते भिन्ना ॥२६५२॥
जीवस्स य सामइयं, पज्जाओ तेण तं तओ भिन्नं ।
इच्छइ पज्जायनओ, वक्खाणमिणं जहत्थं ति ॥२६५३॥

व्याख्यानिकाभास. कश्चिदाह—ननु पर्यायार्थिकनयमतेन यदिदं सर्वथा द्रव्याभावव्याख्यानं भवद्भिः कृतम् ; तदयुक्तमेव,यत इह पर्यायनयोऽपि द्रव्यमिच्छत्येव, किन्तु परस्परमत्यन्तभिन्नावेव द्रव्यपर्यायावसौ मन्यते न पुन कथञ्चित् , इत्येतावता सिद्धान्तादस्य भेद इति। कुत पुन परस्परं द्रव्यपर्याययोरत्यन्तं भेद ? इत्यत्र युक्तिमाह–'उप्पाये' त्यादि, यस्मादुत्पादव्ययपरिणामस्वभावा पर्याया. शाश्वतं–नित्यं पुनर्द्रव्यम् , अपरं च–ते गुणास्तत्प्रभवा द्रव्याल्लब्धात्मलाभा , न पुनस्तद् द्रव्यं तत्प्रभवं गुणेभ्यो लब्धात्मस्वरूपम् , तेन तस्मादुक्तन्यायेन परस्परं भिन्नस्वभावत्वाद् भिन्नास्ते द्रव्यपर्याया अन्योन्यव्यतिरेकिण इति । यस्माच्च जीवस्य शाश्वतस्य तद् व्यतिरिक्तं सामायिकं पर्याया धर्मास्तेन तस्मात् सामायिकं ततो जीवादत्यन्तं भिन्नमिच्छति पर्यायनय. । अतो मदीयं व्याख्यानमिदं यथार्थं घटमानकमिति ।

अत्र सूरिरेतद् व्याख्यानमपाकुर्वन्नाह–

जइ पज्जायनओ च्चिय, सम्मन्नइ दोवि दव्वपज्जाए ।
दव्वट्ठिओ किमत्थं,जइ व मई दो वि जमभिन्ने ॥२६५४॥
इच्छइ सो तेणोभय–मुभयग्गाहे वि सयं पिहब्भूयं ।
मिच्छत्तमिहेगं ता–देगतन्नतगाहाओ ॥ २६५५ ॥

यदि भो ! पर्यायनय एव द्रव्यपर्यायौ द्वावपि सम्मन्यतेऽभ्युपगच्छति तर्हि द्रव्यार्थिकः किमर्थं 'द्रव्यपरिकल्पना त्वयेष्यते' इति शेष., पर्यायनयाभ्युपगमेनापि द्रव्यस्य सिद्धत्वादिति ?। यदि वा-एवंभूता मति. स्यात् परस्य। कथं भूता? इत्याह–द्वावपि द्रव्यपर्यायौ यद्–यस्मादभिन्नौ परस्परमेकत्वमापन्नाविच्छति,स द्रव्यार्थिकनय इति सम्बन्ध , तेन तस्मादिदमुभयं द्रव्यपर्यायार्थिकनयद्वयमुभयग्रहेऽपि सति प्रत्येकं द्रव्यपर्यायाभ्युपगमेऽपि सतीत्यर्थ । किम् ? इत्याह–'पिहब्भूयं' ति–पृथग्भूतं भिन्नं द्रव्यार्थिकात् पर्यायार्थिक , तस्माच्च द्रव्यार्थिका भेदवान् न पुनरनयोरेकतेति, एकस्य द्रव्यपर्याययोरत्यन्तमभेदाभ्युपगमात् , अन्यस्य त्वत्यन्तं तयोर्भेदाभ्युपगमादिति । नापि प्रत्येकं द्रव्यपर्यायाभ्युपगमेऽप्येतयोः समग्ररूपता, किन्तु मिथ्यात्वम् , द्वयोरपि मिथ्यादृष्टिरूपता कस्मात् ? । उच्यते–इहैकान्तादेकान्तेनैकत्वग्रहादन्यत्वग्रहाच्चेति । इदमत्र हृदयम्–द्रव्यार्थिको द्रव्यपर्यायौ परस्परमभिन्नाविच्छति, द्रव्याद्व्यतिरिक्तमेव पर्यायमिच्छति,अत एतस्य विशेषस्य प्राप्तये पर्यायार्थिकाद् द्रव्यार्थिको भिन्नः परिकल्पित. । पर्यायार्थिकस्तु द्रव्यपर्यायौ परस्परभिन्नावेव मन्यते । अतोऽसौ द्रव्यार्थिकाद् भिन्न इष्यते । मिथ्यादृष्टी च प्रत्येकमेतौ द्रव्यार्थिको द्रव्यपर्यायर्योरेकत्वग्रहात्, पर्यायार्थिकस्तु नयोरन्यत्वग्रहादिति ।

एवंभूता यदि परस्य मतिस्तदा प्रतिविधीयते ।

कथम् ? इत्याह—

एगत्ते नणु दव्वं, गुणो त्ति पज्जायवयणमित्तमियं ।
तम्हा तं दव्वं वा, गुणो व दव्वट्ठियग्गाहो ॥२६५६॥
जइ भिन्नोभयगाही, पज्जायनओ तदेगपक्खम्मि ।
अविरुद्धं चेव तयं, किमओ दव्वट्ठियनयेण ? ॥२६५७॥

ननु द्रव्यपर्याययोरेकत्वे त्वदभिप्रायतो द्रव्यार्थिकेनेष्यमाणे ' द्रव्यं ' ' गुणा. ' इति ध्वनिद्वयमिदमेकार्थवाचकत्वादिन्द्रपुरन्दरादिध्वनिवत् पर्यायवचनमात्रमेव स्यात् । तस्मात् तत् सामायिकं द्रव्यं वा गुणो वेति द्रव्यार्थिकनयग्रह. स्यात् , न पुनस्तद् द्रव्यमेवेति तद्ग्रहो भवेत् , न चैवमिष्यते, द्रव्यार्थिकनयमतेन द्रव्यरूपस्यैव तस्य प्रसिद्धेरिति । तथा, यदि परस्परमत्यन्तभिन्नस्य द्रव्यपर्यायोभयस्य ग्राहक पर्यायनयस्त्वयेष्यते, तदा हन्त ! एकस्मिन् द्रव्यपदे तत् सामायिकमविरुद्धमेव ' द्रव्यत्वेन '

इति शेषः, ' द्रव्यं सामायिकम् ' इति द्रव्यपक्षे पर्यायनयमतेनाप्यविरोधतः सिद्धमेवेत्यर्थः, अतः किं द्रव्यार्थिकनयेनोपन्यस्तेन ? इति ।

तस्माद् यथाविहितमेव व्याख्यानं श्रेय इति दर्शयन्नाह—

तम्हा किं सामइयं, हवेज्ज दव्वं गुणो त्ति चिंतेयं ।

दव्वट्ठियस्स दव्वं, गुणो य तं पज्जवनयस्स ॥२६५८॥

इहरा जीवाणन्नं, दव्वनयस्सेयरस्स भिन्नं ति ।

उभयनओभयगाहे, घडेज्ज नेक्केक्कगाहम्मि ॥२६५६॥

तस्मात् किं द्रव्यं गुणो वा सामायिकम् ? इतीयं चिन्ताऽत्र प्रस्तुता। अस्यां तु चिन्तायामुच्यते- द्रव्यार्थिकनयस्याभिप्रायेण द्रव्यम् , पर्यायार्थिकनयस्य मतेन गुणश्च तत् सामायिकमिति । इतरथाऽन्यथा पुनर्द्रव्यार्थिकस्य जीवादनन्यत् सामायिकम् , इतरस्य तु पर्यायार्थिकस्य जीवाद् भिन्नं तत् ,इत्येवमेकैकस्य नयस्य ग्रहेऽभ्युपगमे सति- " जइ पज्जायमेत्तं चिय " इत्यादिपूर्वोक्तयुक्तिभ्यो न 'घटते' इति शेषः। कथं पुनस्तर्हि घटते ? इत्याह-'उभयनओभयगाहे घडेज्ज'त्ति—उभयनयस्य द्रव्यार्थिकपर्यायार्थिकलक्षणस्य नयद्वयस्य मिलितस्य द्रव्यगुणरूपसामायिकलक्षणस्योभयस्य ग्रहे सर्वं घटेत। इदमुक्तं भवति—यदि द्रव्यनयो द्रव्यरूपं, पर्यायनयस्तु पर्यायरूपं सामायिकमिच्छति, तदित्यमुभयोरपि नययोः समुदितयोर्यथोक्तोभयग्रहे सर्वं सुस्थं भवति, न पुनरेकैकस्य नयस्योभयग्रहे सनीति ।

अथ यदुक्तम्—'सो चेव पज्जवट्ठियनयस्स जीवस्स एस गुणो' इति,एतदवष्टम्भेन पुनरपि परः प्राह—

णणु भणियं पज्जाय-ट्ठियस्स जीवस्स एस हि गुणो त्ति ।

छट्ठीए तओ दव्वं,सो तं च गुणो तओ भिन्नो॥२६६०॥

ननु ' सो चेव पज्जव'—इत्यादौ निर्युक्तिगाथोत्तरार्धे भणितं—प्रतिपादितं निर्युक्तिकृता-पर्यायार्थिकनयमतेन जीवस्यैष सामायिकलक्षणो गुण इति। हि -यस्मादेवमुक्तम् , ततस्तस्माज्जीवस्यैव गुण इति षष्ठया षष्ठीनिर्देशादवसीयते 'दव्व सो' त्ति—स जीवो द्रव्यम् तच्च सामायिकम् , 'गुणो तओ भिन्नो ' त्ति—स च सामायिकगुणस्ततो जीवद्रव्याद् भिन्नः, षष्ठीनिर्देशान्यथानुपपत्तेः, तस्मात् पर्यायनयमतेन भिन्नद्रव्यपर्यायोभयसद्भावाद् मदीयमेव व्याख्यानं श्रेय इति परस्याकूतमिति ।

अत्रोत्तरमाह—

उप्पायभंगुराणं, पइक्खणं जो गुणाण संताणो ।

दव्वोवयारमेत्तं, जइ कीरइ तम्मि तन्नाम ॥२६६१॥

तब्भेयकप्पणाओ, तं तस्स गुणो त्ति होउ सामइयं ।

पत्तस्स नीलया जह, तस्संताणे दियत्थमिया॥२६६२॥

अत्र परं पृच्छाम —ननु पर्यायार्थिकनयमतेन द्रव्यं पारमार्थिकं त्वयेष्यते, कल्पनाशिल्पिनिर्मितं वा ? । यद्याद्यपक्षः, स न युक्तः, ' जइ पज्जाय मेत्तं चिय, ' इत्यादिना प्रतिविहितत्वात्। अथ द्वितीयपक्षः, तत्रोच्यते-गुणानां यः सन्तानो गुणानां या सभागसन्ततावनवरतप्रवृत्तिः । किं विशिष्टानाम् ?। प्रतिक्षणमुत्पादभङ्गुराणाम्। तस्मिन् यदि सामानबुद्ध्यभिधानहेतुत्वेन निबन्धनेन द्रव्योपचारमात्र क्रियते षष्ठीवादिना भवता, तदा ' तन्नाम ' त्ति—' नाम ' इत्यभ्युपगमे, मन्यामहे तदित्यर्थः। न हि कल्पितसद्भावोपादनेऽस्माकं किञ्चित् त्रूयत इति । ततश्च ' तब्भेयकप्पणाउ ' त्ति—तेन कल्पितद्रव्येण सह भेदस्तद्भेदस्तस्य कल्पनं तद्भेदकल्पनं तस्मात् सकाशात् तत् सामायिकं तस्य कल्पितजीवद्रव्यस्य गुणो भवतु, को निवारयिता ? । कस्य यथा को गुण ? इत्याह—' पत्तस्से ' त्यादि यथा गुणसमुदयव्यतिरिक्तस्य कल्पितस्य पत्रद्रव्यस्य नीलतादिर्गुणः । कथभूता नीलता ? इत्याह--' तस्संताणे ' त्यादि, तस्मिन्नेव पुत्रसन्ताने उदिता समुत्पन्ना, अस्तमिता च विनष्टेति । इदमुक्तं भवति—यथा कल्पितस्य पत्रादेर्द्रव्यस्य नीलतादयो गुणा भिन्ना व्यपदिश्यन्ते तथा यद्यत्रापि परिकल्पितस्य जीवद्रव्यस्य सामायिकं गुण उच्यते तदा सिद्धसाध्यतैवेति। न च वक्तव्यम्-वास्तव एव सम्बन्धिवस्तुद्वये षष्ठी दृश्यते, यथा 'देवदत्तस्य गावः' इत्यादि, एवमत्रापि वास्तवयोरेव द्रव्यगुणयोः सम्बन्धे षष्ठी युज्यते न तु द्रव्यस्य कल्पनायामिति, 'राहोः शिरः' 'शिलापुत्रकस्य शरीरम्' इत्यादिभिर्व्यभिचारादिति ।

आह—ननु गुणसन्तानयोरभेद एव तद्भेदनिबन्धनधर्मभेदाभावात् घटते तत्स्वरूपवत्, तत् कथं कल्पितस्यापि गुणव्यतिरेकिणो द्रव्यस्य सद्भावः ?। तदयुक्तम् , ' धर्मभेदाभावात् ' इत्येतस्य हेतोरसिद्धत्वात्। कथम् ? इत्याह—

उप्पायभंगुरा जं, गुणा य न य सो त्ति ते य तप्पभवा।

न य सो तप्पभवो त्ति य,जुज्जइ तं तदुवयाराओ।२६६३।

यद्—यस्मादुत्पादभङ्गुरा गुणा उत्पद्यन्ते व्ययन्ते चेत्यर्थः। 'नय सो' त्ति-न पुनरसौ सन्तान उत्पादभङ्गुर , तस्य प्रवाहनित्यतया स्थितत्वात्, इत्येको गुणसन्तानयोर्धर्मभेद । तथा-' ते य तप्पभवे ' त्यादि ते सामायिकादयो नीलतादयो वा गुणास्तत्रैव सन्ताने समुत्पन्नत्वात् तत्प्रभवास्तस्मात् सन्तानाल्लब्धात्मजन्मान , न पुनरसौ सन्तानस्तत्प्रभवो गुणेभ्यो लब्धात्मलाभः, तस्य गुणसादृश्यनिबन्धनत्वात्। तदेव कारणमेव सन्तानो न कार्यम्, कार्यमेव च गुणा न कारणम्, इत्येवमपि गुणसन्तानयोर्धर्मभेदे युज्यते-घटते तत्—जीवादिद्रव्यम्। कुत ?। तत्र गुणसन्ताने समानबुद्ध्यभिधाननिबन्धनत्वेनोपचारः-कल्पना तदुपचारस्तस्मादिति । तदेवं पर्यायार्थिकनयमतं समर्थ्य पूर्वं ' तम्हा किं सामइयं हवेज्ज ' इत्यादिनोपसंहारः कृत ।

अथ प्रकारान्तरेण तं कुर्वन्नाह—

अहवोदासीणमयं, दव्वनयं पइ न जीवओ भिन्नं ।

भिन्नमियरं पइ जओ, नत्थि तदत्थंतरं जीवो॥२६६४॥

इदमत्र हृदयम्—तस्मात् ' किं सामायिकं द्रव्यं गुणो वा भवेत् ?' इत्यस्या चिन्तायामुक्तम्-' दव्वट्ठियस्स दव्वं गुणो य तं पज्जवनयस्स ' इति। अथवा नास्यां द्रव्यगुणचिन्तायामिदमुक्तम् , किन्तु ' किं सामायिकम् ?' इति द्वारे प्रस्तुते उदासीनमतमिदम्-द्रव्यपर्यायास्तिकयोरेकतरमतेऽभिनिविष्टवन् उदासीनवृत्तिनाऽऽचार्येण शिष्यान् प्रत्यभिहितं युक्तिभिश्च समर्थितमिदमित्यर्थः । किम् ? इत्याह-' दव्व-

नयं मित्यादि । द्रव्यनयं प्रति द्रव्यनयाभिप्रायेणेत्यर्थ ,जीवात् सामायिकं न भिन्नम् , किन्तु जीव एव सामायिकम् , तदभिप्रायेण वक्ष्यमाणयुक्त्या जीवादेर्द्रव्यस्यैव सत्त्वात् , गुणानां तु तद्व्यतिरेकिणा परमार्थतोऽसत्त्वादिति । इतरं तु पर्यायार्थिकनयं प्रति पर्यायार्थिकनयाभिप्रायेण भिन्नं जीवद्रव्यात् सामायिकम् ; यतो यस्मात् पूर्वोक्तयुक्तिभिर्नास्ति तेभ्य.—सामायिकादिगुणेभ्योऽर्थान्तर भिन्नो जीव , तन्मतेन जीवादेर्द्रव्यस्य कल्पनामात्रत्वेन सत्त्वादिति । तत्र " पज्जायनयमिए " इत्यादिना ग्रन्थेन विस्तरत पर्यायार्थिकनयमतमुपदर्शितम् ।

(७२) अथ द्वितीयस्य द्रव्यार्थिकनयस्याभिप्रायं सविस्तरं विदर्शयिषुराह—

बीयस्स दव्वमेत्तं, नत्थि तदत्थंतरं गुणो नाम ।
सामन्ना वत्थाणा–भावाओ खरविसाणं व ॥ २६६५ ॥
आविब्भावतिरोभा–वमेत्तपरिणामिदव्वमेवेयं ।
निच्चं बहुरूवं पि य, नडो व्व वेसंतरावन्नो ॥२६३६॥

प्रथमनिर्दिष्टपर्यायार्थिकनयापेक्षया द्वितीयस्य द्रव्यार्थिकनयस्य मते सुवर्णरजतादिक द्रव्यमात्रमेवास्ति , गुणस्तु रक्तत्वश्वेतत्वादिकस्तदर्थान्तरभूतो नास्ति, तस्य सामान्यरूपतयाऽवस्थानाभावात् ,खरविषाणवदिति । एतदेवाह-आविर्भावश्च कुण्डलादिरूपेण, तिरोभावश्च मुद्रिकादिभावेन , आविर्भावतिरोभावौ , तावेव तन्मात्रम् , तेन परिणन्तुं—परिवर्तितुं शीलं यस्य तदाविर्भावतिरोभावमात्रपरिणामि सुवर्णादिकं द्रव्यमेवेदमस्ति, न तु तदतिरिक्ता गुणा । कथंभूतं द्रव्यम् ? । नित्यमविचलितस्वभावम् , बहुरूपं च कङ्कणाऽङ्गदकुण्डलमुद्रिकादिबहुपरिणामम् , रामरावणभीमाऽर्जुनादिस्पर्धीनि वेषान्तराण्यापन्न प्राप्तो नट इवेति । यथाहि—बहून् वेषान् कुर्वन्नपि नटो निज देवदत्तादिस्वभावं न जहाति, सर्वास्वप्यवस्थास्वपि तस्यैकस्वरूपत्वात् ; एवं सुवर्णादिकं द्रव्यमपि कङ्कणादि—बहुरूपाण्यापन्नमपि सुवर्णादिरूपता न परित्यजतीति न तद्व्यतिरेकेण. कश्चनापि गुणः । इत्यष्टादशगाथार्थ ।

अस्यैव द्रव्यार्थिकनयमतस्य समर्थनार्थं निर्युक्तिकारोऽप्याह-

जं जं जे जे भावे, परिणमइ पओगवीससा दव्वं ।
तं तह जाणाइ जिणो,अपज्जवे जाणणा नत्थि॥२६६७॥

प्रयोगश्चेतनावतो व्यापार , विस्रसा-स्वभावस्ताभ्या निष्पन्नं द्रव्यं प्रयोगविस्रसाद्रव्यमुच्यते । तत्र प्रयोगनिष्पन्नं घटपटादि, विस्रसानिष्पन्नं त्वभ्रेन्द्रधनुरादि । तत्र प्रयोगविस्रसाद्रव्यं कर्तृ यान यान् कृष्णरक्तपीतशुक्लत्वादीन भावान पर्यायान् परिणमति प्रतिपद्यते, ' तं तह ' त्ति-वीप्साप्रधानत्वाद् निर्देशस्य तत् तत् तथा तेन तेन रूपेण परिणमद् द्रव्यमेव जानाति. जिन –केवली, न पुनस्तदतिरिक्तान् पर्यायानिति भाव , तेषामपेक्षामात्रत्वेन सत्त्वात् । न हुत्फण—विफण—कुण्डलितावस्थायामपि सर्पादिद्रव्यस्य स्वरूपव्यतिरिक्त कोऽपि पर्याय. संलक्ष्यते , सर्वावस्थास्वविचलितस्वरूपस्य सर्पादिद्रव्यस्यैव संलक्षणादिति । यदि पर्याया न विद्यन्ते, तर्हि कथमुच्यते ' जे जे भावे परिणमइ ' ? इत्याशङ्क्याह—' अपज्जवे जाणणा नत्थि ' त्ति—अपर्याये पर्यायरहिते वस्तुनि केवल्यादीनां परिज्ञा नास्तीति मन्यामहे , केवलमुत्प्रेक्षामात्रेणैव ते पर्याया., न पुनर्द्रव्यव्यतिरेकिण केचनापि वास्तवास्ते विद्यन्ते । अतो द्रव्यमेव परमार्थसत् , इति निर्युक्तिगाथार्थ. ।

अथ भाष्येणैनां व्याचष्टे—

जं जाहे जं भावं, परिणमइ तयं तया तओऽणन्नं ।
परिणाइ मेत्तविसिट्ठं, दव्वं चिय जाणइ जिणिंदो॥२६६८

इह यद् घटेन्द्रधनुरादिद्रव्य यदा यस्मिन् काल यं रक्तश्वेतादिभावं पर्यायं परिणमति प्राप्नोति तत् तदा तत पर्यायादनन्यदभिन्नं सद्द्रव्यमेव परिणतिमात्रविशिष्टमविचलितस्वरूपं जानाति जिनेन्द्र केवलीति ।

ननु यदि पर्याया वस्तु सन्तो न भवन्ति तर्हि कथमविशिष्टेऽपि सुवर्णादिद्रव्ये कुण्डलाऽङ्गुलीयकनूपुरादयो व्यपदेशा. प्रवर्तन्ते ? । नचैते निर्विबन्धना एव अतिप्रसङ्गादित्याशङ्क्याह—

न सुवण्णादन्नं कुं–डलाइ तं चेय तं तमागारं ।
पत्तं तव्ववएसं, लभइ सरूवादभिन्नं ति ॥ २६६९ ॥

न सुवर्णादन्यो व्यतिरिक्त कुण्डलादिरर्थोऽस्ति , येन सुवर्णादिद्रव्यव्यतिरेकिण कुण्डलादिपर्याया भवेयु, किन्तु तदेव सुवर्णादि द्रव्यं तं तं कुण्डलकङ्कणाद्याकारं प्राप्तं सत् तस्य तस्य कुण्डलाद्याकारस्य व्यपदेशं लभते । कथंभूतम् ? । पूर्वावस्थास्वरूपादुत्तरावस्थायामभिन्नमप्यविचलितस्वभावमपीति । ततश्च नैते सुवर्णादिद्रव्ये कुण्डलकङ्कणादयो व्यपदेशा निर्निबन्धना , तत्तद्विशिष्टाकारनिबन्धनत्वात् । न च तदाकारस्य द्रव्याद् भिन्नत्वम , द्रव्यस्य निराकारत्वप्रसङ्गात् । तस्मादनन्यत्व गुणानामिति ।

अथान्यत्वमिष्यते , तत्राह—

जइ वा दव्वादन्ने, गुणादओ नूण सप्पएसत्तं ।
होज्ज व रूवाईणं, विभिन्नदेसोवलंभो वि ॥ २६७० ॥

यदि पुनर्द्रव्याद् रूपादयो,गुणा , आदिशब्दाद्-नवपुराणादय पर्याया अन्य व्यतिरेकिण इष्यन्ते, तदा नूनं निश्चितं गुणादीना सप्रदेशत्वमेष्टव्यं भवता । इदमुक्तं भवति-द्रव्यप्रदेशा गुणादय इति रूढम् , यदा च ते द्रव्याद् भिन्ना इष्यन्ते, तदाऽनन्यशरणा. सन्त स्वस्यात्मन एव प्रदेशा अवयवा भवेयु । न चैतद् दृष्टम् , इष्टं वा, गुणादीना सदैव पारतन्त्र्येण परप्रदेशत्वस्यैव रूढत्वात् । न हि वस्तु स्वात्मन एव स्वयमवयवो भवतीति क्वापि दृश्यते , युज्यते वेति । किञ्च—गुणादीनां द्रव्याद् भिन्नत्व इष्यमाणे रूपरसगन्धादीना घटादिद्रव्याद् भिन्नेऽपि देश उपलब्धि स्यात् ; तथाहि—यद् यतो भिन्नं तत् ततो भिन्नदेश उपलभ्यते, यथा घटात् पट , न चैवं रूपादय , तस्मात् न घटादिद्रव्यादभिन्ना एवेति द्रव्यमेवास्ति न पर्याय इति ।

अथोपचारतस्तेऽपीष्यन्ते, तर्हि सिद्धसाध्यतेति दर्शयन्नाह-

जइ पज्जवोवयारो, लयपयासपरिणाममेत्तस्स ।

कीरइ तन्नाम न सो, दव्वादत्थंतरब्भूओ ॥ २६७१ ॥

लय., लीनता , तिरोभाव इत्यनर्थान्तरम् । प्रकाश , प्रकटत्वम , आविर्भाव इत्यप्यभिन्नार्थम् । लयश्च प्रकाशश्च लयप्रकाशौ पर्यायाणामाविर्भावतिरोभावो लयप्रकाशाभ्या लयप्रकाशरूपतया परिणमनं—परिणामो लयप्रकाशपरिणाम स एव तन्मात्र तस्य यदि तत्तद्विशेषवुद्ध्यभिधानानिवन्धनत्वेन पर्यायोपचार क्रियते, तदा तन्नामनि नामशब्दोऽभ्युपगमे , मन्यामहे तदित्यर्थ , केवल नासौ पर्यायो वास्तव कोऽपि द्रव्यादर्थान्तरभूतो विद्यत इत्येतदेव भुजमुत्क्षिप्य ब्रूम इति ।

यदि न वास्तव पर्याय किन्तु काल्पत., तर्हि खरविषाणस्याप्यसौ कथ न भवति,कल्पनामात्रस्य तत्रापि सुकरत्वात्? इत्याह—

दव्वपरिणाममेत्तं, पज्जाओ सो य न खरसिंगस्स ।
तदपज्जवं न नज्जइ, जं नाणं नेयविसयं ति ॥ २६७२ ॥

विशिष्टो द्रव्यपरिणाम एव द्रव्यपरिणाममात्र पर्यायो नान्य स च न द्रव्याद् भिन्न , तथाऽनुपलम्भात् । नाप्यसौ खरशृङ्गस्य पर्यायस्य द्रव्यपरिणामत्वात् , खरशृङ्गस्य च द्रव्यत्वाभावात् । अत एव तत् खरशृङ्गमद्रव्यत्वादपर्यायं सद् न ज्ञायते केवलिना , यतो ज्ञान ज्ञेयविषयं ज्ञेयग्राहित्वेन प्रवर्तते । तच्चेह ज्ञेयविषयं नास्ति, खरविषाणस्याभावरूपत्वात् । अत एव निर्युक्तिकृता प्रोक्तम्—'अपज्जवे जाणणा नत्थि ' इति गाथाप्रश्नकार्थ । तदेवमवसितं सप्रसङ्ग ' किं सामायिकम् ? ' इति द्वारम् । विशे० । आ० म० । आ० चू० । ( निर्गमद्वारम् , ' णिग्गम ' शब्दे चतुर्थभागे २०५१ पृष्ठे उक्तम् । ) निर्गमद्वारशेष. तदेवं षोढा निर्गमोऽभिहितस्तत्र जिनगणधरलक्षणद्रव्यनिर्गमभणनेनैवावसितो द्रव्यनिर्गमः ।

इदानीं क्षेत्रनिर्गम प्रस्तुतमप्यतिक्रम्य अन्तरङ्गत्वात्कालनिर्गममभिधित्सुर्भाष्यकार. प्रस्तावनामाह—

जिणगणहरणिग्गमणं, भणियमओ खेत्तनिग्गमावसरो ।
कालंतरंगदरिसण-हेओ तु विवज्जओ तह वि ॥ २०२६ ॥

तदित्थं जिनगणधरलक्षणद्रव्यस्य निर्गमनं भणितमत ऊर्ध्वं नाम ठवणा दविए , खित्ते काले तहेव भावे य ' इति निर्देशक्रमप्रामाण्यात्क्षेत्रनिर्गमस्यावसर परं तथापि विपर्यय. कालनिर्गमन तावदभिधाय तत क्षेत्रनिर्गमो भणिष्यत इत्यर्थ । किमर्थम्-इत्याह-कालस्यान्तरङ्गत्वदर्शनहेतो । अयमभिप्राय.-काल एव द्रव्यस्यान्तरङ्ग क्षेत्रं तु बहिरङ्गम् , अता द्रव्यनिर्गमानन्तरमन्तरङ्गत्वात्कालनिर्गममभिधाय-पश्चात्क्षेत्रनिर्गममभिधास्यति 'नामं ठवणा दविए ' इत्यादिगाथाया तु निर्युक्तिकृता क्षेत्रस्याल्पवक्तव्यत्वादन्यथोपन्यास कृत इति । विशे० ( निर्देश ' णिद्देस ' शब्द चतुर्थभागे २०७३ पृष्ठे उक्त । ) ( पुरुषद्वारम् पुरुषभदा , केन पुरुषेण प्रज्ञापित सामायिकमिति च ' पुरिस ' शब्द पञ्चमभागे१०११ पृष्ठे उक्तम् ।)(प्रत्ययद्वारम् , प्रत्ययनिक्षेप पच्चय' शब्दे पञ्चमभागे १२३ पृष्ठे उक्त ।) सामायिकस्य प्रत्यय ' सव्वे तित्थयरा वि य ण सामाइय करेमाणा एवं , भणंति-"करेमि सामाइय सव्वं सावज्जं जोग पच्चक्खामि जावज्जीवाए तिविहं तिविहेणं जाव वोसिरामि " " भदंत" इति न भणन्ति, तथाकल्पत्वात् ।आ० म० १ अ०।(लक्षणद्वार लक्षणभेदाश्च 'लक्खण' शब्दे षष्ठ भागे उक्ताः )

(७३) अथ सामायिकस्य वैशेषिकलक्षणप्रतिपादनार्थमाह-'अथवापी'त्यादि, अथवाऽपि भावस्य-सामायिकस्य लक्षणमनुस्वारलोपोऽत्र द्रष्टव्यः चतुर्विध श्रद्धानादि एतदेव प्रदर्शयितुराह—

सद्दहणजाणणा खलु, विरई मीसा य लक्खणं कहए ।
ते वि निसामेंति तहा, चउलक्खणसंजुयं चेव ॥ ७५३ ॥

इह सामायिक चतुर्विधं भवति तद्यथा-सम्यक्त्वसामायिकम्,श्रुतसामायिकम्,चारित्रसामायिकम्,चारित्राचारित्रसामायिकं,च । अस्य यथायोगलक्षणं 'सद्दहण' त्ति-श्रद्धाणं लक्षणमिति-योगे सम्यक्त्वसामायिकस्य'जाणण' त्ति ज्ञान-ज्ञा, संवित्तिरित्यर्थ , सा च लक्षण श्रुतसामायिकस्य । खलुशब्दो निश्चयत परस्परसापेक्षत्वाविशेषणार्थः । तथा 'विरई' इति विरमणं विरति सर्वसावद्ययोगविनिवृत्ति , सा च चारित्रसामायिकस्य लक्षण ' मीसा य'त्ति-मिश्रा-विरत्यविरति ; सा च चारित्रसामायिकस्य लक्षणम् , कथयतीत्यनेन स्वमनीषिकापोहमाह भगवान् जिन एव कथयति,तस्य च कथयतस्तेऽपि गणधरादयो निशामयन्ति शृण्वन्ति। तथा तेनैव प्रकारेण चतुर्लक्षणसयुक्तमेव । उक्त लक्षणद्वारम् । आ० म० १ अ० । आ० चू० ।

स्पर्शनाद्वारमाह—

सम्मत्तचरणसहिया, सव्वं लोगं फुसे निरवसेसं ।
सत्त य चोद्दस भागा, पंच य सुयदेसविरईए ॥२७८२॥

सम्यक्त्वचरणसहिता.—सम्यक्त्वचरणयुक्ता. प्राखिन उत्कृष्टत. सर्वे लोकं स्पृशन्ति । किं वहिर्व्याप्त्या ? नेत्याह-निरवशेषं-प्रतिप्रदेशव्याप्त्योऽसंख्येयप्रदेशात्मकमपीत्यर्थ । एते च केवलिसमुद्घातावस्थाया केवलिनो द्रष्टव्या. । ' जघन्यतस्त्वसख्येयभागं स्पृशन्ति' इति स्वयमेव द्रष्टव्यम् । ' सत्त य चोद्दसभागा पंच य सुयदसविरईए ' त्ति-श्रुतदेशविरत्योरिति यथासङ्ख्यन सम्बध्यते, तद्यथा—श्रुत श्रुतस्य सप्तचतुर्दशभागा, स्पर्शनीया. , चशब्दात्-पञ्च च देशविरतौ देशविरतस्य पञ्च चतुर्दशभागा स्पर्शनीया., चशब्दाद्-द्वयादयश्चेति । इयमत्र भावना—कश्चित् तपोधन श्रुतज्ञानी अनुत्तरसुरेष्विलिकागत्या समुत्पद्यमानो लोकस्य सप्तचतुर्दशभागान् स्पृशति , एका-रज्जुर्लोकस्य चतुर्दशभाग उच्यत । ततश्च सप्त रज्जू स्पृशतीत्युक्तं भवति । एवमुत्तरत्रापि भावार्थो विभाव्य । चशब्दात् कोऽपि सम्यग्दृष्टि श्रुतज्ञानी पूर्वं नरके वद्धायुष्क. पश्चाद् विराधिता—त्यक्तसम्यक्त्व षष्ठपृथिव्यामिलिकागत्या समुत्पद्यमानो लोकस्य पञ्च चतुर्दशभागान् स्पृशति । देशविरतस्त्वच्युतसुरेष्विलिकागत्या समुत्पद्यमानो लोकस्य पञ्च चतुर्दशभागान् स्पृशति , चशब्दात्—शेषसुरालयेष्विलिकागत्या समुत्पद्यमानो लोकस्य द्वयादींश्चतुर्दशभागान् स्पृशति । आह—नन्वन्यत्र ' छ्लच्चुए ' इति पठ्यते तत् कथमिदोच्यते समुत्पद्यमान.

पञ्चैव रज्जूः स्पृशतीति निगद्यते ? । सत्यम् किन्त्वच्युतग्रैवेयकापान्तरालमपेक्ष्यान्यत्र षड् रज्जवः पठ्यन्ते, इह त्वच्युतदेवलोकमपेक्ष्य पञ्चेति वृद्धसम्प्रदायः । अधस्तु घएटशलान्यायेनापि तं परिणाममपरित्यज्य देशविरता न गच्छन्ति अत ऊर्ध्वलोक एव तत्स्पर्शना दर्शिता नाधस्तादिति । तदेवं क्षेत्रमधिकृत्य स्पर्शना प्रोक्ता ।

अथ भावमधिकृत्य तामुपदर्शयन्नाह—

सव्वजीवेहिँ सुयं, सम्मचरित्ताइँ सव्वसिद्धेहिं ।
भागेहिँ असंखिज्जे-हि फासिया देसविरई उ ॥२७९३॥

इह जीवा द्विविधाः संसारस्थाः, सिद्धाश्च । संसारस्था अपि द्विविधाः—संव्यवहारराशिगताः, असंव्यवहारराशिगताश्च । तत्र संव्यवहारराशिगतैः सर्वैरपि जीवैः सामान्येनाक्षरात्मकं श्रुतं स्पृष्टम्, द्वीन्द्रियादिभावेऽस्य सर्वैरपि तैः स्पृष्टत्वात्, तत्र च सामान्यश्रुतसद्भावात् । संव्यवहारराशिगतविशेषणं चेह पूर्वटीकाकारैः कृतम्, इति नास्माकं स्वमनीषिका सम्भावनीयेति । सम्यक्त्वचारित्रे तु सर्वैरपि सिद्धैः पूर्वं स्पृष्टे, तत्स्पर्शनामन्तरेण सिद्धत्वायोगात् । देशविरतिस्तु सर्वसिद्धानां बुद्धिपरिकल्पितैरसङ्ख्यातैर्भागैः पूर्वं स्पृष्टा, एकेन तु तदसङ्ख्येयभागेनासौ प्राग् न स्पृष्टा, यथा मरुदेवीस्वामिन्या । इह च सम्यक्त्वादयो जीवपर्यायत्वाद्, भावाः, ततस्तेषां स्पर्शनाभावः स्पर्शनोच्यते, इति निर्युक्तिगाथाद्वयार्थः ।

( ७४ ) सामायिकपदव्याख्या-तत्रेदं सूत्रम्—

करेमि भंते ! सामाइयं सव्वं सावज्जं जोगं पच्चक्खामि जाव जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अन्नं न समणुजाणामि तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि । आव० १ अ० ।

अथ सूत्रस्पर्शिका निर्युक्तिर्वक्तव्या, ततः पूर्वोक्तमुपसंहरन्नुत्तरवक्तव्यसम्बन्धनार्थं भाष्यकारः प्राह-

इइ एस उवग्घाओ-ऽभिहिओ सामाइयस्स तस्सेव ।
अहुणा सुत्तप्फासियओ,निज्जुत्ती सुत्तवक्खाणं ॥२८००॥

इति पूर्वोक्तक्रमेणैष उपोद्घातोऽभिहितः सामायिकस्य अथ तस्यैवाधुना सूत्रस्पर्शिका निर्युक्तिरुच्यते—सूत्रव्याख्यानमभिधीयत इत्यर्थः ।

ननु सूत्रस्पर्शिकनिर्युक्त्या सूत्रं स्पृश्यते । तच्च क सति भवति ? इत्याह—

सुत्तं सुत्ताणुगमो, तं च नमोकारपुव्वयं जेणं ।
सो सव्वसुयक्खंध-ब्भंतरभूउ त्ति निद्दिट्ठो ॥२८०१॥

'करेमि भंते ! सामाइयं' इत्यादिसूत्रम्, सूत्रानुगम एतद्व्याख्यानरूपे प्रक्रान्ते सति भवति । तच्च नमस्कारपूर्वकमेव पठ्यते । कथम् ? इत्याह—येन यस्मात् स नमस्कारः सर्वश्रुतस्कन्धाभ्यन्तर्भूतः पूर्वमिहैव निर्दिष्टः । ततो नमस्कारं व्याख्याय पश्चात् सामायिकसूत्रं व्याख्यास्यत इति भावः ।

अन्ये तु सामायिकसूत्रादिनमस्कारं न मन्यन्ते, किन्त्वन्यदेव किञ्चिद् ब्रुवते । किं पुनस्तत् ? इत्याह—

तं चावसाणमंगल-मन्ने मन्नंति तं च सत्थस्स ।
सव्वस्स भणियमंते, इयमाईए कहं जुत्तं ॥ २८०२ ॥

तं च नमस्कारमुपोद्घातनिर्युक्तिशास्त्रस्यावसानमङ्गलं केचिद् मन्यन्ते, न पुनः सूत्रादिम् । इदमुक्तं भवति-शास्त्रस्यादौ मध्येऽवसाने च मङ्गलमिष्यते, तत्रोपोद्घातनिर्युक्तेरादौ नन्दिर्मङ्गलम् ; मध्ये तु जिनगणधरोत्पत्त्यादिगुणोत्कीर्तनम्, अवसाने तु किलैष नमस्कारो मङ्गलमित्यन्येषां बुद्धिः । सा च न युक्ता । कुतः ? इत्याह-'तं च सत्थस्से' त्यादि, इयमत्र भावना-यत् शास्त्रस्यावसानमङ्गलं तैर्गीयते, तद्भणितमेव भद्रबाहुस्वामिना सर्वस्यापि षडध्ययनात्मकस्यावश्यकशास्त्रस्यान्ते प्रत्याख्यानलक्षणं मङ्गलम् । प्रत्याख्याने हि तपः, तच्च "धम्मो मंगलमुक्किट्ठं" इत्यादिवचनाद् मङ्गलमेव । ततश्चेदं नमस्कारलक्षणं मङ्गलं सामायिकस्यादौ कथमभिधातुं युक्तम्, अप्रस्तुतत्वात् ? । अप्रस्तुतत्वं चेहादिमध्याऽवसानत्वाभावादिति ।

पुनरपि परमतमाशङ्क्य परिहरन्नाह—

होज्जाइ मंगलं सो, तं कयमाईए किं पुणो तेणं ।
अथवा कयं पि कीरइ,कत्थावत्थाए मेवं ति ॥२८०३॥

अथ सामायिकस्यादौ निर्दिष्टत्वादादिमङ्गलमसौ नमस्कारो भवेदित्युच्यते, तदयुक्तम्, यतस्तदादि मङ्गलं कृतमेवादौ नन्द्यभिधानेन, किं पुनरप्यत्र तेन विहितेन ? । अथ कृतमप्यादिमङ्गलं पुनरपि क्रियते, तर्ह्येवं सति क्वावस्थानम् । पुनः पुनस्तत्करणप्रसङ्गादनवस्थाप्राप्तेर्न क्वचिदवस्थानं स्यादिति ।

तर्हि भवन्त एव कथयन्तु--किमिह नमस्कारव्याख्याने कारणम् ?, इत्युपसन्ने प्रेरके सूरिराह—

तम्हा सो सुत्तं चिय, तदाइभावादओ तयं चेव ।
पुव्वं वक्खाणेउं, पच्छा वोच्छामि सामइयं ॥२८०४॥

तस्माद्-नमस्कारस्तत्त्वतः सामायिकसूत्रमेव तदादिभावात्-सामायिकादावुपन्याससद्भावात्, 'करेमि भंते ! सामाइयं " इत्यादि सामायिकसूत्रावयववदिति । अत परमार्थेन सामायिकसूत्रत्वाद् न पुनर्मङ्गलार्थत्वात् तमेव नमस्कारं पूर्वमादौ व्याख्या पश्चात् सामायिकार्थं वक्ष्यामि इति गाथापञ्चकार्थः । विशे० । आ० म० । आ० चू० ।

सम्प्रति सूत्रोपन्यासार्थं प्रत्यासत्तियोगतः परमार्थेन सूत्रस्पर्शिकनिर्युक्तिगतामेव गाथामाह-

नंदिअणुओगदारं, विधिवदुवग्घाइयं च नाऊणं ।
काऊण पंच मंगल-मारंभो होइ सुत्तस्स ॥

नन्दिश्चानुयोगद्वाराणि च नन्द्यनुयोगद्वारं समाहारत्वादेकवचनं विधिवत् यथावत् उपोद्घातं च । 'उद्देसे निद्देसे य ' इत्यादिलक्षणं ज्ञात्वा पाठान्तरं भणित्वा अन्यथा कृत्वा पञ्च मङ्गलानि, नमस्कारमित्यर्थः । किम् ? आरम्भो भवति सूत्रस्य इह पुनर्नन्द्याद्युपन्यासः किल विधिनियमख्यापनार्थः । नन्द्यादि ज्ञात्वैव-भणित्वैव वा सूत्रस्यारम्भो भवति नान्यथेति । तथा उपोद्घात -सकलप्रवचनसाधारणत्वेन प्रधानं प्रधानस्य

च सामान्यग्रहणेऽपि भेदेनोपन्यासो भवति, यथा ब्राह्मणा आयाता वशिष्ठोऽप्यायात इत्यनुयोगद्वारग्रहणेन तस्य ग्रहणेऽपि पृथगुपन्यास ।

संबन्धान्तरप्रतिपादनायैवाह—

कयपंचनमोक्कारो, करेइ सामाइयं तु सोऽभिहितो ।
सामाइयंगमेव य, जं सा सेसं अतो वोच्छं ॥१०२६॥

कृत पञ्चनमस्कारो येन स तथाविध शिष्य सामायिक करोतीत्यागम. । स च पञ्चनमस्कारोऽभिहितो यस्मादसौ नमस्कार. सामायिकाङ्गमेव । सा च सामायिकाङ्गता प्रागेवोक्ता अत ऊर्ध्वं शेष सूत्रं वक्ष्ये । तच्चेदम्-'करेमि भंते ! सामाइयं सव्वं सावज्जं जोगं पच्चक्खामि । जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं । न करेमि न कारवेमि करंतं पि अन्नं न समणुजाणामि तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि' । इदं च सूत्र सूत्रानुगम एव प्रस्तावसरे अहीनाक्षरादिगुणोपेतमुच्चारणीयम् । तद्यथा—अहीनाक्षरमनत्यक्षरम् अव्याविद्धाक्षरमस्खलितममिलितमव्यत्ययाम्रेडितं प्रतिपूर्णं प्रतिपूर्णघोषं कण्ठौष्ठविप्रमुक्तं वाचनोपगतमिति । अमूनि च पदानि प्राग्व्याख्यातत्वान्न व्याख्यायन्ते । एवरूपे च सूत्रे उच्चारिते सति केषाञ्चिद्भगवतां साधूनां केचन अर्थाधिकारा अधिगतीभवन्ति, केषाचन त्वनधिगताधिगमनाय व्याख्या प्रवर्त्तते । तल्लक्षणं चेदम्-"संहिता च पदं चैव, पदार्थः पदविग्रह । चालना प्रत्यवस्थानं, व्याख्या तन्त्रस्य षड्विधा ॥ १ ॥" तत्राऽस्खलितपदोच्चारणं संहिता । यथा—'करेमि भंते ! सामाइयमि' त्यादि '०जाव वोसिरामि' । पदं पञ्चधा, तद्यथा--नामिकं नैपातिकमौपसर्गिकमाख्यातिकं मिश्रं च । तत्र अश्व इति नामिकम्, खल्विति नैपातिकं, परीत्यौपसर्गिकं, धावतीत्याख्यातिकं, संयत इति मिश्रम् । अथवा-द्विविधं पदं स्याद्यन्तम्, तिवाद्यन्तं च । अत्र पञ्चविधानि वा पदानि, तद्यथा-करोमि भयान्त ! सामायिकं सर्वं सावद्यं योगं प्रत्याख्यामि यावज्जीवया त्रिविधं त्रिविधेनेति मनसा वाचा कायेन, न करोमि न कारयामि कुर्वन्तमपि अन्यं न समनुजाने, तस्य भयान्त ! प्रतिक्रमामि निन्दामि गर्हामि आत्मानं व्युत्सृजामीति पदानि । अधुना पदार्थ स चतुर्विध । तद्यथा-कारकविषय, समासविषय, तद्धितविषय, निरुक्तिविषयश्च । तत्र कारकविषयो यथा-पचतीति पाचक । समासविषयो यथा—राज्ञ पुरुषो राजपुरुष । तद्धितविषयो यथा—वसुदेवस्यापत्यं वासुदेव । निरुक्तिविषयो यथा-भ्रमति रौति च भ्रमर' । तत्रापि डुकृञ्करणे इत्यस्य मिप्रत्ययान्तस्य कृञ, तनादिभ्य उरिति उकारे गुणे च कृते करोमीति च भवति । अभ्युपगमश्चास्यार्थ । एवं प्रकृतिप्रत्ययविभाग सर्वत्र वक्तव्य । इह तु ग्रन्थगौरवभयान्नोच्यते । भय प्रतीतम्, वक्ष्यामो वा उपरिष्टात् अन्तो-विनाश. भयस्यान्तो भयान्त । अयमेव पदविग्रह, पदपृथक्करणं--पदविग्रह तस्य सम्बोधनं भयान्त ! सामायिकपदार्थ पूर्ववत् सर्वमित्यपरिशेषवाची शब्द । अवद्यम् -पापं सहावद्यं यस्य येन वा सावद्य. त सपापमित्यर्थ, योग्यो व्यापारस्त प्रत्याख्यामि प्रतिशब्द प्रतिषेधे, आङ् आभिमुख्ये, ख्याप्रकथने, तत प्रत्याख्यामीति । किमुक्तं भवति-सावद्ययोगस्य प्रतीपमभिमुखं ख्यापनं करोमीति । अथवा-'पच्चक्खामीति' प्रत्याचक्षे इति शब्दसंस्कार । चक्षिङ् व्यक्तायां वाचि । अस्य प्रत्याङ्पूर्वस्य प्रयोग प्रत्याचक्षे इति । कोऽर्थ प्रतिषेधस्यादरेणाभिधानम् । करोमि यावज्जीवयेति च । यावच्छब्द परिमाणमर्यादावधारणवचन, तत्र परिमाणे यावन् मम जीवनपरिमाणं तावत्प्रत्याख्यामीति, मर्यादायां यावज्जीवनमिति, मरणं मर्यादीकृत्य, अवधारणे यावज्जीवनमेव प्रत्याख्यामि न तस्मात्परत इत्यर्थ. । जीवनं जीवितव्यं क्रियाशब्द. । परिगृह्यत तया । अथवा-प्रत्याख्यानक्रिया परिगृह्यते । यावज्जीवो यस्या सा यावज्जीवा तया त्रिविधमिति तिस्रो विधा यस्य सावद्ययोगस्य स त्रिविध., स च प्रत्याख्येयत्वेन कर्म संपद्यते कर्मणि च द्वितीया विभक्तिरस्ति । तं त्रिविधं मनोवाक्कायव्यापारलक्षण 'कायवाङ् मन कर्मयोग' इति वचनात् । त्रिविधेनेति करणे तृतीया । मनसा वाचा कायेन । तत्र 'मन् बुद्धिमतिज्ञाने, मनन मन्यते वाऽनेनेति मन । औणादिकोऽसुन्प्रत्यय । तच्चतुर्द्धा । नामस्थापनाद्रव्यभावभेदात्, नामस्थापने सुगमे । द्रव्यमनो ज्ञशरीरभव्यशरीरव्यतिरिक्तं तद्योग्यपुद्गलमिदम् । भावमनो मनो जीव एव । वच परिभाषणे, वचनम् उच्यते इति च वाक्, साऽपि चतुर्विधा नामस्थापनाद्रव्यभावभेदात् । तत्र नामस्थापने सुगमे । द्रव्यवाग् ज्ञशरीरभव्यशरीरव्यतिरिक्ता शब्दपरिणामयोग्यजीवपरिगृहीता पुद्गला. । भाववाक् पुनस्त एव पुद्गला' शब्दपरिणाममापन्ना । तथा-'चिञ्' चयने । चयन चीयत इति वा काय, चीत्युपसमाधाना वा ऋदोहकश्चादिरिति चेञो चकारस्य ककारः । पुद्गलान्-अवयवान् पुद्गलानामेवावयवरूपतया समानात् जीवस्य निवासात् प्रतिलक्षणं केषाञ्चित्पुद्गलानां शरणात् । काय -शरीरम्, सोऽपि नामस्थापनाद्रव्यभावभेदाच्चतुष्प्रकार । तत्र नामस्थापने प्रतीते । द्रव्यकायो ज्ञशरीरभव्यशरीरव्यतिरिक्त शरीरत्वयोग्या अगृहीतास्वस्वामिना वा जीवेन मुक्ता यावन्तं परिणामं न मुञ्चति तावद् द्रव्यकाय. । भावकायस्तु तत्परिणता जीवसंयुक्ताश्च पुद्गला. । अनेन त्रिविधेन करणेन त्रिविधं पूर्वाधिकृत सावद्य योगं न करोमि न कारयामि कुर्वन्तमप्यन्यं न समनुजानामि-नानुमन्येऽहमिति, तस्येत्यधिकृतस्य सावद्ययोगस्य प्रतिक्रमामि-निवृत्ते निन्दामि-जुगुप्से गर्हे इति, स एवार्थ । किं त्वात्मसाक्षिका निन्दा । गुरुसाक्षिका गर्हेति । किं जुगुप्से इत्यत आह-आत्मानमतीतसावद्ययोगकारिणं व्युत्सृजामि विविधार्थो विशेषार्थो वा विशब्द उच्छब्दो भृशार्थ, सृजामि-त्यजामि । विविध विशेषेण वा भृशं त्यजामीति भाव । एवं तावत्पदार्थपदविग्रहौ यथासम्भवमुक्तौ । आ० म० द्वि० अ० ।

अधुना चालनाप्रत्यवस्थाने वक्तव्ये । अत्रान्तरे सूत्रस्पर्शिनिर्युक्तिरुच्यते । स्वस्थानत्वादाह निर्युक्तिकार —

अक्खलियसंहियादी, वक्खाणचउक्कए दरिसियम्मि ।
सुत्तप्फासियनिज्जुत्ति वित्थरत्थो इमो होइ ॥१०१६॥

अस्खलितादौ सूत्रे उच्चरिते संहितादौ च व्याख्यानचतुष्टये दर्शिते सति सूत्रस्पर्शनिर्युक्तिविस्तारार्थोऽयं भवतीति ।

तमेव दर्शयति—

करणे भए य अंते, सामाइयसव्वए अ वज्जे य ।
जोगे पच्चक्खाणे, जावज्जीवाए तिविहेण ॥१०१६॥

आव० १ अ० । ( करणव्याख्या ' करण ' शब्दे तृतीयभागे ३६६ पृष्ठे गता । )

किं सामायिकं कस्मिन् करणे—

भावसुयसद्दकरणे, अहिगारो एत्थ होइ कायव्वो ।
नो सुयकरणे गुणजुं-जणे य जहसंभवं होइ ॥

आ० म० १ अ० ।

अथ विनेय पृच्छति नन्वक्तस्वरूपाणां नामादीनां परणां करणभेदानां मध्ये सामायिककरणमिदं किं भवत् ?—कस्मिन् भेदेऽवतरेत् ? इत्यर्थ ।

अत्र गुरुराह—

सव्वं पि जहाजोगं, नेयं भावकरणं विसेसेणं ।
सुयवद्धसद्दकरणं, सुयसामइयं न चारित्तं ॥३३६१॥

इदं सामायिककरणं सर्वमपि षड्विधमपि नामादिकरणं ज्ञेयम्—सर्वेष्वपि नामादिभेदेष्ववतरतीत्यर्थ । कथं ? यथायोगं—यथासम्भवम् । तत्र सम्यक्त्वश्रुतप संयमादिगुणानां जीवद्रव्यपर्यायत्वात् , पर्यायस्य च द्रव्यानन्यत्वाद् द्रव्यकरणमिदं भवत्येव । एवं नामादिकरणान्यप्यस्य यथासम्भवं भावनीया । भावकरणं त्विदं विशेषतो भवति , सम्यक्त्वादिसामायिकानां जीवभावत्वादिति । आह—ननु भावकरणं पूर्वं बहुभेदमुक्तम् , तत् किं सर्वेष्वपि भावकरणभेदेषु सर्वमपि सामायिकमवतरति ? नेत्याह—'सुए' त्यादि , श्रुतकरणं , तथा बद्धश्रुतकरणम् , शब्दकरणं च श्रुतसामायिकमेव भवति , तस्यैवैतद्भेदरूपताघटनात् , न तु चारित्रसामायिकम् , तस्यैतद्रूपासम्भवादिति ।

चारित्रसामायिकं तर्हि कस्मिन् भावकरणभेदेऽवतरति ? इत्याह—

गुणकरणं चारित्तं, तवसंजमगुणमयं ति काऊणं ।
संभवओ सुयकरणं, सुपसत्थं जुंजणाकरणं ॥३३६२॥
कया कयं केण कयं, केसु व दव्वेसु कीरई वावि ।
काहे व कारओ नय-ओ करणं कइविहं कहं च ॥३३६३॥

गुणकरणं चारित्रसामायिकं गुणकरणलक्षणे नोश्रुतभावकरणे प्रथमभेदे एतदवतरतीत्यर्थ , तप -संयमगुणात्मकमिति कृत्वा सम्भवतो-यथासम्भवं श्रुतकरणमप्येतद् भवति । प्रशस्तवाग्रूपायाश्चारित्रभेदभूताया वाक्समितेरवाचनादिति । तथा , सुप्रशस्तं योजनाकरणमिति नोश्रुतभावकरणद्वितीयभेदेऽप्येतदवतरतीत्यर्थ . सुप्रशस्तमनोवाक्कायरूपव्यापाररूपत्वात्चारित्रस्य । इति गाथार्थ । ( विशे० । ) कृताकृतादिभिर्निरूपयन्नाह— कयाकयमि' त्यादि ननु करणक्रियाया पूर्वं सामायिकं किं कृतं क्रियते , अकृतं वा ? उभयथाऽपि वक्ष्यमाणदोष । अत्रोत्तरमाह-'कयाकयं तिनैकान्तेन कृतं क्रियते , नाप्यकृतम् , किन्तु कृताकृतं क्रियत इति । तथा , केन कृतमिति वक्तव्यम् । तथा , केषु द्रव्येष्विष्टादिषु क्रियते । कदा वा कारकोऽस्य भवति । 'नयउ ' त्ति—नैगमादिनयमतेनात्रोत्तरं वक्तव्यम् । तथा, करणं कतिभेदमिति वाच्यम् । तथा , कथं केन प्रकारेणेदं सामायिककरणं लभ्यते इति चाभिधानीयम् , इति निर्युक्तिगाथासंक्षेपार्थ ।

विस्तरार्थं तु भाष्यकार आह—

किं कयमकयं कीरइ, किं चातो भणइ सव्वहा दोसो ।
कयमिह सब्भावाओ, न कीरइ चिरकयघडु व्व ॥३३६४॥
निच्चकिरियापसंगो, किरियावेफल्लमपरिणिट्ठा वा ।
अकयकयकज्जमाण-व्ववएसा भावया निच्चं ॥३३६५॥

किं कृतं क्रियते सामायिकम् , अकृतं वा ? । किञ्चात: ?- किमनेन प्रश्नेन ? इति गुरुणा प्रोक्ते भणति परः, सर्वथापक्षद्वयेऽपि दोषः—तथाहि—कृतं तावद् न क्रियते, सद्भावादग्रेऽपि,विद्यमानत्वात् , चिरकृतघटवदिति । कृतस्य च करणे नित्यं क्रियाया. करणस्य प्रसङ्ग: क्रियायाश्च वैफल्यम् , कृतत्वादेवेति । अथ कृतमपि क्रियते , तर्हि करणस्यापरिनिष्ठा, कृतत्वाविशेषादिति । अपि च—' कृत क्रियते इत्युच्यमाने वस्तुनि सर्वदैव सत्त्वमभ्युपगतं भवति , यच्च सर्वदा सत् तदाकाशवद् नित्यम्, नित्ये च वस्तुन्यकृतमिदम् , कृतं वा , क्रियमाणं वा इत्यादिव्यपदेशो न भवति, अनित्यत्वप्रसङ्गादिति ।

अकृतपक्षमङ्गीकृत्याह—

अकयं पि नेय कीरइ, अचंताभावओ खपुप्फं व ।
निच्चकिरियाइदोसा, सविसेसयरा व सुत्तम्मि ॥३३६६॥

स्पष्टा ।

अथ क्रियमाणं क्रियते, तत्राह—

सदसदुभयदोसाओ, सव्वं कीरइ, न कज्जमाणं पि ।
इह सव्वहा न कीरइ, सामाइयमओ कओ करणं ? ॥३३६७॥

तत् क्रियमाणं वस्तु सद्वाऽसद् वा परिकल्प्येत ? यदि सत् , तर्हि कृतपक्षोक्ता सर्वेऽपि दोषा प्रसजन्ति । असत्त्वपक्षे त्वकृतपक्षदोषानुषङ्ग । अथ सदसत् क्रियमाणमिष्यते, तदप्ययुक्तम् , उभयपक्षोक्तदोषप्रसङ्गादिति । एवं सर्वथा सर्वप्रकारै सामायिकं न क्रियते । अत. कस्मात् तस्य करणम् ? इति ।

अत्रोत्तरमाह—

नणु सव्वहा न कीरइ, पडिसेहम्मि वि समाणमेवेदं ।
पडिसेहस्साभावे, पडिसिद्धं केण सामइयं ? ॥३३६८॥
अह कयमकयं न कयं, न कज्जमाणं कहं तहावि कयं ।
पडिसेहवयणमेयं,तह सामइयं पि को दोसो ? ॥३३६९॥

ननु सर्वथा—सर्वप्रकारै. सामायिकं न क्रियते इत्येवं यस्त्वया प्रतिषेधो विधीयते, तत्रापि प्रतिपक्षे समानमेवेदम् । किमसौ कृत क्रियते, अकृत , क्रियमाणो वेत्याद्युक्तन्यायेन सोऽपि सर्वथा न क्रियते । अत प्रतिषेधाभावे केन प्रतिषिद्धं सामायिकम् ? न केनचित् , अत क्रियत एवैतदिति । अथैवं ब्रूषे प्रतिषेधवचनमेतत् कृतं वा सत् , अकृतं वा सद् , न कृतम् , नापि क्रियमाणं कृतम् ,

तथापि कृत तावत् केनाप्युच्चारणादिना प्रकारेण । हन्त ! यथा केनापि प्रकारेण त्वयैतत् कृत तथा सामायिकमपि केनापि प्रकारेण कृतम् , अतस्तत्रापि को दोषस्त्वया दीयते ? इति ।

अथ कृताकृतपक्ष नयमतेनोपदर्श्य सिद्धान्तपक्षमुपदर्शयन्नाह--

अकयमसुद्धनयाणं, निच्चत्तणओ नभं व सामइयं ।
सुद्धाण कयं घड इव,कयाकयं समयसब्भावो ॥३३७०॥

द्रव्यार्थिकरूपाणामशुद्धनयानां नैगमसंग्रहव्यवहाराणामकृतं सामायिकम् , नित्यत्वात् , नभोवदिति । शुद्धाना तु निश्चयनयरूपाणामृजुसूत्रादीनां कृतं तत् , घटवदिति । समयसद्भावस्त्वयम् नैकान्तेन कृतं सामायिक क्रियते नाप्यकृतम् , किन्तु कृताकृतं क्रियत इति ।

यदि वा—सिद्धान्तस्थित्या--विवक्षावशात् कृतादिभिश्चतुर्भिर्भङ्गै किञ्चिद् वस्तु क्रियते, किञ्चिद् त्वेतैश्चतुर्भिरपि भङ्गैर्न क्रियत एवेति दर्शयन्नाह--

कीरइ कयमकयं वा, कयाऽकयं वेह कज्जमाणं वा ।
कज्जमिह विवक्खाए,न कीरए सव्वहा किंचि ।३३७१।

इह किञ्चित् कार्य केनापि रूपेण कृत क्रियते , केनचिद्रूपेणाकृत क्रियते, केनापि तु रूपेण कृताकृत क्रियते । केनचित् प्रकारेण क्रियमाणं वा किञ्चित् क्रियते, अन्यत्तु किञ्चिद् विवक्षया सर्वैरपि कृतादिभिः प्रकारैर्न क्रियत इति ।

अत्र यथासंख्यमुदाहरणम्--

रूवि त्ति कीरइ कओ, कुंभो संठाणमत्तिओऽकओ ।
दोहि वि कयाकओ सो,तस्समयं कज्जमाणो त्ति।३३७२।
पुव्वकओ उ घडतया,परपज्जाएहिँ तदुभएहिं च ।
कज्जंतो य पडतया,न कीरए सव्वहा कुंभो ।।३३७३।।

रूपी--इति कृत्वा पूर्वं कृत एव कुम्भस्तद्रूपतया क्रियते, मृत्पिण्डावस्थायामपि रूपादीनां सद्भावादिति । संस्थानजलाहरणशक्तिभ्या पूर्वमकृत क्रियते । रूपतया संस्थानशक्तितश्चेति रूपद्वयेनापि विवक्षितोऽसौ पूर्वं कृताकृत क्रियते । तत्समयमुत्पत्तिसमये क्रियमाणोऽसौ क्रियत इति । 'पूर्वकृतस्तु पूर्वं निष्पन्नो घटो घटतया घटपर्यायेण न क्रियते, परपर्यायैस्तु पटादिधर्मैः पूर्वमकृता घटो न क्रियते, परपर्यायैर्वस्तुन कर्तुमशक्यत्वात् ।तदुभयैस्तु स्वपरपर्यायैर्विवक्षित कृताकृतोऽसौ न क्रियते, 'स्वपर्यायाणा पूर्वमेव कृतत्वात् , परपर्यायाणा तु पूर्वमप्यकृतानां कर्तुमशक्यत्वात् । क्रियमाणश्चोत्पत्तिसमये कुम्भ पटतया न क्रियते,अशक्यत्वात् । तदेव सर्वथा सर्वैरपि कृतादिप्रकारै कुम्भो न क्रियते,यथाक्तविवक्षया कृतोऽकृत कृताकृत क्रियमाणश्च कुम्भो न क्रियत इत्यर्थ ।तदेव यथाभिहितविवक्षया क्रियमाणत्वमक्रियमाणत्व च वस्तुन प्रोक्तम् ।

अथवा विवक्षान्तरेण सर्ववस्तूना क्रियमाणत्वमक्रियमाणत्व च दर्शयितुमाह--

वोमाइनिच्चयाओ, न कीरई दव्वयाइ वा सव्वं ।
कीरइ य कज्जमाणं, समए २ सपज्जयओ ।।३३७४।।

इह व्योमाऽऽत्मकालदिगादिक वस्तु न क्रियते , नित्यत्वात् । अथवा—व्योम्ला सर्वमपि व्योमादि घटादिद्व्यणुककुसुमादि च वस्तु न क्रियते , द्रव्यनया सर्वस्य सर्वदाऽवस्थितत्वात् । पर्यायनया तु प्रतिसमयं सर्व वस्तु क्रियमाणं क्रियते, सर्वस्यापि समये समयेऽपरापरस्वपर्यायाणामुत्पादादिति ।

समयसद्भावव्यक्तीकरणपूर्वकं प्रकृतयोजनामाह—

उप्पायट्ठिइभंग-स्सभावओ इय कयाऽकयं सव्वं ।
सामाइयं पि एवं, उप्पायाइस्सहाव त्ति ।। ३३७५ ।।

उत्पादस्थितिभङ्गस्वभावत्वादित्युक्तप्रकारेण सर्वमपि वस्तु कृताकृतस्वरूपम् , एवं सामायिकमप्युत्पादादिस्वभावत्वात् कृताकृतस्वरूपं द्रष्टव्यम् । अतः 'कृताकृतं क्रियते' इति स्थितम् ।

अत्र पर. प्राह—

णणु दव्वमणत्थंतर-पज्जायंतरविसेसणेहि जुज्जेज्ज ।
उप्पायाइसहावं, न उ सामाइयं गुणो जम्हा ।। ३३७६ ।।
सो उप्पण्णो उप्पण्णएँ, व विगओ य विगय एवेह ।
किं सेसमस्स जेणिह,कयाकया देसया होज्जा ।।३३७७।।

ननु द्रव्यमनर्थान्तरभूतपर्यायान्तरविशेषणैरुत्पादादिस्वभावं युज्येत,न तु सामायिकम् , 'गुणो जम्ह' त्ति-गुणमात्ररूपत्वादिति। स हि गुण उत्पन्न. समुत्पन्न एव, न तु विगतोऽवस्थितो वा, यदा तु विगतस्तदा विगत एव, नतूत्पन्नोऽवस्थितो वा । अत किं शेषमस्योद्धृतम् , येनेह कृताकृतादेशता—कृताकृतरूपता स्यात् ? इति ।

सूरिरुत्तरमाह—

जं चिय दव्वाणन्नो, पज्जाओ तं च तिविहसब्भावं ।
तो सो वि तिरूवो चिय,तत्तो य कयाकयसहावो ।३३७८।

यस्मादेव पर्यायो द्रव्यानन्य. , तच्च द्रव्यमुत्पादव्ययध्रौव्यलक्षणत्रिविधस्वभावम् , ततो द्रव्यानन्यत्वात् सोऽपि पर्यायस्त्रिरूप एव , अतश्च द्रव्यवत् कृताकृतस्वभाव स्यादेवेति ।

अथवा—स्वतन्त्रस्यापि सामायिकगुणस्य त्रिरूपता घटत एवेति । कथम् ? इत्याह—

जह वा रूवंतरओ, विगमुप्पाए वि रूपसामण्णं ।
निच्चं कयाकयमओ, रूवं परपज्जयाओ वा ।। ३३७९ ।।
तह परिणामंतरओ, वयविभवे वि परिणामसामण्णं ।
निच्चं कयाकयमओ , सामइयं परगुणाओ वा ।।३३८०।।

यथा वा घटादौ रक्तत्वादिरूपाच्छुक्लत्वादिरूपान्तरोत्पत्तौ पूर्वरूपस्य विगमे उत्तररूपस्योत्पादेऽपि रूपसामान्य नित्यमवतिष्ठते , अतो रूपगुणस्य त्रिरूपता, अस्माच्च त्रैरूप्यात् कृताकृत रूप युज्यत । परपर्यायाद् वा परपर्यायमाश्रित्य कृताकृतं युज्यत इति । तथात्तरोत्तरशुद्धया परिणमन सामायिकगुणस्य परिणामान्तरात् परिणामोत्पत्तौ पूर्वपरिणामस्य व्यये-विगमे , उत्तरपरिणामस्य तु विभवेऽप्युत्पादेऽपि परिणामसामान्यं नित्यमवतिष्ठते । तत सामायिकगुणस्य त्रिरूपता । अस्माच्च त्रैरूप्यात् तस्य कृ-

ताकृतत्वम्, परगुणत्वाद् वा परगुणमाश्रित्य कृताकृतत्व-मिति।

अथवा-अन्यथाऽपि सामायिकस्य कृताकृतत्वं वक्तव्यम्, कथम्? इत्याह—

दव्वाइचउक्कं वा, पडुच्च कयमकयमहव सामइयं।
एगपुरिमाइओ कय-मकयं नाणानराईहिं ॥ ३३८१ ॥

अथवा-द्रव्यादिचतुष्कं द्रव्यक्षेत्रकालभावचतुष्टयं प्रतीत्य-कृतमकृतं च सामायिकं भावनीयम्; तथाहि—एकं विवक्षितं पुरुषद्रव्यं प्रतीत्य कृतं सामायिकम्, सादिसपर्यवसितत्वात्, नानापुरुषद्रव्याण्याश्रित्य पुनरकृतम्, अनाद्यपर्यवसितत्वादिति। आदिशब्दाद्-भरतैरावतक्षेत्राणि प्रतीत्य कृतम्, महाविदेहक्षेत्रेष्वकृतम्, अवच्छिन्नप्रवाहत्वेन नित्यत्वादिति। तथा, उत्सर्पिण्यवसर्पिणीकालमाश्रित्य कृतम्, व्यवच्छिद्यमानत्वेनानित्यत्वात्। नोउत्सर्पिण्यवसर्पिणीकालं त्वाश्रित्याकृतम्, अव्यवच्छिन्नत्वेन नित्यत्वात् भावं त्वेकपुरुषोपयोगं प्रतीत्य कृतम्, नानापुरुषोपयोगाना—श्रित्य पुनरकृतम्। इत्येवं वा कृताकृतं सामायिकमिति। तदेवमुक्तं कृताकृतद्वारम्।

अथ 'केन कृतम्' इति द्वारं विवरीषुराह—

केण कयं ति य ववहा-रओ जिणिदेण गणहरेहिं च।
तस्सामिणा उ निच्छय-नयस्स तत्तो जओऽणन्नं ३३८२

पाठसिद्धा।

अत्राक्षेपपरिहारौ प्राह—

नणु निग्गमे कयं चिय,केण कयं तं ति का पुणो पुच्छा।
भण्णइ स बज्झकत्ता, इहंतरंगो विसेसेणं ॥३३८३॥

आह-ननु 'उद्देसे निद्देसे य निग्गमे' इत्यत्र सामायिकस्य निर्गमे भण्यमाने 'महावीरात् तन्निर्गतम्' इत्यादिप्रतिपादनेन केन कृतं तत्' इत्येतद् गतमेव-उक्तार्थमेव, पुनरपीह का पृच्छा?। भण्यतेऽत्रोत्तरम्—स तीर्थकरादिः सामायिकस्य बाह्यकर्ता तत्रोक्तः, इह तु विशेषणान्तरङ्गकर्ता जिज्ञासितः। स च नैश्चयिकः सामायिकानुष्ठाता साध्वादिर्द्रष्टव्यः, सामायिकपरिणामानन्यत्वादिति।

परिहारान्तरमाह—

अहवा सतंतकत्ता, तत्थेह पउज्जकारगोऽभिमओ।
अहवेह सव्वकारग-परिणामाणन्नरूवो त्ति ॥३३८४॥

अथवा—तत्र निर्गमे भगवांस्तीर्थकरः स्वयंबुद्धत्वात् स्वतन्त्रकर्ता अभिहितः, इह तस्यैव भगवतस्तीर्थकरस्य यः प्रयोज्यः—प्रयोजनीयः सन् कारकः साध्वादिः स कर्ताऽभिमतः। अथवा-इह कर्ता सर्वकारकपरिणामानन्यरूपोऽभिमतः, स च साध्वादिरेव सामायिकानुष्ठाता मन्तव्यः, तथाहि—सामायिकं कुर्वन्नसौ कर्ता, क्रियमाणत्वेन च कर्मरूपात् सामायिकादनन्यत्वात् कर्म, सामायिकं येनाध्यवसायेन कारणभूतेनासौ करोति तस्मादनन्यत्वात् करणम्। गुरुणा चास्मै सामायिकं प्रदीयत इति सम्प्रदानम्, सामायिकं चास्मात् शिष्यप्रशिष्यपरम्परया प्रवर्तिष्यत इत्यपादानम्, स्वपरिणामे च सामायिकमव्यवच्छिन्नं धरतीत्यधिकरणमित्येवं सर्वकारकपरिणामानन्यरूपः कर्ता भवत्यसाविति आह—ननु यद्यन्तरङ्गः प्रयोज्यः सर्वकारकपरिणामानन्यरूपश्च कर्ता साध्वादिरिह विवक्षितः, तर्हि 'जिनेन्द्रेण गणधरैश्च कृतं तत्' इति कस्मादुक्तम्, जिनेन्द्रगणधराणामिहाविवक्षितत्वात्?। सत्यम्। किन्तु-जिनेन्द्रस्यापि सामायिकस्यान्तरङ्गकर्तृत्वं सर्वकारकपरिणामानन्यरूपकर्तृत्वं प्रायो न विरुध्यते, तेनापि तस्यानुष्ठितत्वात्, गणधराणां तु प्रयोज्यकर्तृत्वमपि युज्यत एव, जिनेन्द्रप्रयोज्यत्वात् तेषामिति। अतो जिनेन्द्रगणधराणामप्युपन्यासोऽत्र न विरुध्यत इति। गतं 'केन कृतम्' इति द्वारम्।

अथ 'केषु द्रव्येषु तत् क्रियते' इति द्वारमभिधित्सुराह—

दव्वेसु केसु कीरइ, सामइयं नेगमो मणुन्नेसु।
सयणाईएसु भासइ, मणुन्नपरिणामकारणओ ॥३३८५॥
नेगंतेण मणुन्नं, मणुन्नपरिणामकारणं दव्वं।
वभिचाराओ सेसा, विंति तओ सव्वदव्वेसु ॥३३८६॥

केषु द्रव्येषु व्यवस्थितस्य सामायिकं क्रियते—निर्वर्त्यते?। अत्र नैगमनयो भाषते—मनोज्ञेषु शयनाऽऽसनादिषु स्थितस्य तत् क्रियते, मनोज्ञपरिणामकारणत्वात्। तथा च कैश्चिदुक्तम्—"मणुन्नं भोयणं भोच्चा, मणुन्नं सयणासणं। मणुन्नम्मि अगारम्मि, मणुन्नं झायए मुणी ॥ १ ॥" इत्यादि। शेषास्तु संग्रहादयो ब्रुवते—नैकान्तेन मनोज्ञं द्रव्यं मनोज्ञपरिणामकारणं भवति, व्यभिचारात्, मनोज्ञेऽपि कस्यापि स्वाभिप्रायेण मनोज्ञपरिणामभावात्, अमनोज्ञेऽपि च कस्यापि मनोज्ञपरिणामसद्भावात्। ततः सर्वद्रव्येषु व्यवस्थितस्य सामायिकं क्रियते।

अत्राक्षेपपरिहारावाह—

नणु भणियमुवग्घाए, केसु त्तीहं कओ पुणो पुच्छा?।
केसु त्ति तत्थ विसओ, इह केसु ठिअस्स तल्लाभो ३३८७

ननूपोद्घाते 'किं कइविहं' इत्यादि गाथायां 'केषु सामायिकं भवति' इति भणितमेव, इह कुतः पुनरपि पृच्छावसरः?। नैवम्, तत्र हि केषु द्रव्यपर्याया सामायिकस्य विषये भवन्तीत्युक्तम्, तथा च तत्र निर्वचनम्-'सव्वगयं सम्मत्तं' इत्यादि। इह तु केषु द्रव्येषु स्थितस्य सामायिकलाभो भवतीत्युच्यत इति महान् भेद इति।

यदि न पौनरुक्त्यम्, तर्ह्यन्यद्दूषणम्। किं तत्? इत्याह—

तो किह सव्वदव्वा, वत्थाणं जाइमित्तवयणाओ।
धम्माइसव्वदव्वा-धारो सव्वो जओऽवस्सं ॥३३८८॥

ततस्तर्हि कथं सर्वद्रव्येष्ववस्थानं सम्भवति, येनोच्यते-'सेसा विंति तओ सव्वदव्वेसु' इति। न हि सर्वेष्वाकाशादिद्रव्येषु कोऽप्यवतिष्ठत' इति। उच्यते?-जातिमात्रवचनात् सर्वद्रव्यमात्रस्येह विवक्षणात्, जातिमात्रं च सर्वद्रव्यैकदेशेऽपि प्राप्यत इति। ननु देशतोऽपि किं सर्वद्रव्याधारः कोऽपि प्राप्यते?। उच्यते-प्राप्यत एव, यतो धर्मास्तिकायाऽधर्मास्तिकायाऽऽकाशास्तिकायजीवपुद्गलाधारः सर्वोऽप्ययं जीवलोक इति परिहृतं प्रासङ्गिकं दूषणम्।

अथ प्रस्तुतप्रेर्यस्य परिहारान्तरमाह—

विसओ व उवग्घाए, केसु त्ति इहं स एव हेउ त्ति।

सद्धेय नेय किरिया, निबंधणं जेण सामइयं ॥३३८६॥

अथवा-उपोद्घाते सर्वद्रव्याणि सामायिकस्य विषये भवन्तीत्युक्तम् । इह तु स एव सामायिकलाभः सर्वद्रव्येषु हेतुभूतेषु भवतीत्युच्यते इति । कथं पुनः सर्वाण्यपि द्रव्याणि सामायिकस्य हेतुर्भवन्ति ? इत्याह—'सद्धेये' त्यादि श्रद्धेयानि च ज्ञेयानि च चारित्रक्रियाहेतुभूतानि च यानि द्रव्याणि तन्निबन्धनं तद्धेतुकं येन सामायिकम् । न च श्रद्धेयादिभ्योऽन्यानि सर्वद्रव्याणीति, नापि विषयहेत्वोरेकत्वमवगन्तव्यम्, विषयस्य गोचररूपत्वात्, जीवघातनिवृत्तेः सर्वजीववद्धेतोरुपष्टम्भकत्वात्, अन्नादिवदिति ।

अन्यदपि परिहारान्तरमाह—

अहवा कयाकयाइसु, कज्जं केण व कयं च कत्त त्ति ।
केसु त्ति करणभावो, तइयत्थे सत्तमि काऊं ॥३३६०॥

अथवा—कृताकृतादिद्वारेषु प्रथमं कृताकृतद्वारे कर्त्रा यत् क्रियते तत् कार्यं सामायिकमुक्तम्, 'केन कृतम्' इति च द्वितीयद्वारे सामायिकस्यैव कर्ता निर्दिष्ट, 'केषु' इति तृतीयद्वारे तु तृतीयार्थे सप्तमीं कृत्वा करणमभिहितम्, कैर्द्रव्यैः करणभूतैः सामायिकं क्रियत इति नोपोद्घातेन सह पौनरुक्त्यमिति ।

अथ 'कदा कारको भवति' इति नयैर्निरूपयन्नाह—

उद्दिट्ठे च्चिय नेगम-नयस्स कत्ताऽणहिज्जमाणो वि ।
जं कारणमुद्देसो, तम्मि य कज्जोवयारो त्ति ॥३३६१॥

इहोद्दिष्ट एव गुरुणा सामायिके नैगमनयस्यानधीयानोऽपि शिष्यस्तत्कर्ता भवति । आह-ननु कार्यस्य कर्ता भवति, कार्यं च सामायिकमुद्देशस्थले नास्ति, तत् कथं तस्यासौ कर्ता भवति ! इत्याह—'जम्मि' इत्यादि, यस्मात् सामायिककारणमुद्देशः तस्मिंश्चोद्देशलक्षणे कारणे कार्यस्य सामायिकस्योपचारः क्रियत इति सामायिकस्य कर्ताऽसौ भवतीति ।

सङ्ग्रहव्यवहारनयमतमाह—

संगहववहाराणं, पच्चासन्नयरकारणत्तणओ ।
उद्दिट्ठम्मि तदत्थं, गुरुपामूले समासीणो ॥ ३३६२ ॥

सङ्ग्रहव्यवहारयोरुद्दिष्टे सामायिके तत्पठनार्थं गुरुपादमूले समासीनः शिष्यः प्रत्यासन्नतरकारणत्वात् पूर्ववत् तत्र सामायिककार्योपचारतः कर्ता भवतीति ।

ऋजुसूत्रमतमाह—

उज्जुसुयस्स पढंतो, तं कुणमाणो वि निरुवओगो वि ।
आसन्नासाहारण, कारणओ सद्दकिरियाणं ॥३३६३॥

ऋजुसूत्रस्यानुपयुक्तोऽपि सामायिकं पठन्, तथा कुर्वंस्तदर्थक्रियामनुतिष्ठन् सामायिकस्य कर्ता भवति, सामायिकासन्नतरासाधारणकारणत्वात् तद्विषयशब्दक्रिययोरिति ।

शब्दादिमतमाह—

सामाइओवउत्तो, कत्ता सद्दकिरियाविउत्तो वि ।
सद्दाईण मणुन्नो, परिणामो जेण सामइय ॥३३६४॥

शब्दादिनयानां सामायिकोपयुक्तः शब्दक्रियावियुक्तोऽपि सामायिककर्ता भवति, येन यस्मात् मनोज्ञो विशुद्धपरिणाम एव तेषां सामायिकमिति ।

अथ पूर्वोक्तमुपसंहरन्नुत्तरग्रन्थसम्बन्धनार्थमाह—

कत्ता नयओऽभिहिओ, अहवा नयउ त्ति नीइओ नेओ ।
सामाइयहेउपउ-ज्जकारओ सो नओ य इमो ॥३३६५॥

तदेवं सामायिकस्य कर्ता नयतो—नयैरभिहितः । अथवा—'कदा वा कारक' इत्यस्माद् नय इति पृथगेव द्वारम् । तत्र चायमर्थः—नयतो-नीतितो विधिना सामायिकस्य हेतुः कर्ता सामायिकस्य प्रयोज्यकारको ज्ञेयः । कः पुनरसौ नय इत्याह स चायम् । इति द्वात्रिंशद्गाथार्थः । विशे० । आ० म० । आ० चू० ।

सम्प्रति नय इत्येतद्द्वारं विवरीषुराह—

आलोयणा य विणए, खित्तदिसाभिग्गहे य काले य ।
रिक्खगुणसंपयाविय, अभिवाहारे य अट्ठमए॥३३६६॥ विशे० ।

इहाभिमुख्येन गुरोरात्मदोषप्रकाशनमालोचनानय । आ० म० १ अ० । आव० ।

अथालोचनानयं भाष्यकारो विवृण्वन्नाह—

सामाइयत्थमुवसं-पया गिहत्थस्स होज्ज जइणो वा ।
उभयस्स पउत्ता लो-इयस्स सामाइय देज्जा ॥ ३३६७ ॥

तत्र गृहस्थे—

आलोइयम्मि दिक्खा-रुहस्स गिहिणो चरित्तसामइयं ।
बालाइदोसरहिय-स्स देज्ज नियमा न सेसाणं॥३३६८॥

स्पष्टे । नवरम्, आलोचिते—आलोकिते विज्ञाते यथा द्रव्यतो ज्ञातोऽसौ; न नपुंसकादि, क्षेत्रतस्तु विज्ञातो यथा नायमनार्यः, कालतस्त्ववगतो यथा शीतोष्णादिना न क्लाम्यति, भावतस्त्ववबुद्धो यथा नीरोगानलसादिरूप । ततश्चैवमालोकिते निश्चिते च दीक्षार्हस्य बालादिदोषरहितस्य गृहिणश्चारित्रसामायिकं दद्यादिति ।

ननु गृहस्थस्य सामायिकसूत्रार्थमुपसम्पदित्यवगम्यते, श्रमणस्य तु व्रतग्रहणकाल एवाधीतसामायिकत्वात् कथं तदर्थमुपसम्पद् भवेत् ? इत्याह—

सामाइयत्थमवणो-वसंपया साहुणो हवेज्जाहि ।
वाघायमेसकालं, च पडुमुयत्थं पि होज्जाहि ॥३३६६॥

यदा गुरु सूत्रमात्रविदेव भवति, सूत्रे चादरवा परलोकीभूतो भवेत्, तदा तच्छिष्यस्य साधोः सामायिकार्थश्रवणनिमित्तमन्यत्रोपसम्पद् भवेत् । अथवा—'सुयत्थं पि होज्जाहि' त्ति—व्याघातमेष्यत्काल वा प्रति तौ, प्रतीत्यत्यर्थे, सूत्रमात्रार्थमपि साधोरन्यत्रोपसम्पद् भवेत् । इदमुक्तं भवति-ग्लानभावेन व्यन्तरोपसर्गादिना वा व्याघातेन पतिते विस्मृते सामायिकसूत्रे, एष्यति वा दुःषमाकाले प्रज्ञामान्द्यादसमाप्तसामायिकसूत्रमात्रा अपि साधवो भविष्यन्तो निजगुर्वभावी भवनादिना कारणेन सर्वस्यापि सामायिकसूत्रस्य पठनार्थम्, असमाप्तस्य वा समाप्त्यर्थमन्यत्र साधोरुपसम्पद् भवतीति । तदेवं चारित्रसामा-

यिकमङ्गीकृत्य तदर्थश्रवणार्थं तत्सूत्रमात्रपठनार्थं वा साधोरन्यत्रोपसम्पदुक्ता ।

अथवा—श्रुतसामायिकमङ्गीकृत्य समस्तद्वादशाङ्गसूत्रार्थोभयार्थमप्युपसम्पद् भवेदिति दर्शयन्नाह–

सव्वं व बारसंगं, सुयसामइयं ति तदुभयत्थं ति ।
होज्जा लोइयभाव–स्स देज्ज सुत्तं तदत्थं वा ॥३४००॥

अथवा–सर्वमपि द्वादशाङ्गं श्रुतसामायिकं भण्यते, अतस्तदुभयार्थं समस्तद्वादशाङ्गसूत्रार्थोभयनिमित्तमप्युपसम्पद् भवेत्, अत आलोचितभावस्य दत्तविशुद्धालोचनस्य सूत्रमर्थं वा दद्यादिति । उक्तमालोचनाद्वारम् ।

(७५) अथ विनयद्वारमभिधित्सुराह–

आलोयणसुद्धस्स वि,देज्ज विणीयस्स नाविणीयस्स ।
नहि दिज्जइ आहरणं,पलिय त्ति य कन्नहत्थस्स॥३४०१॥

सुगमा ।

किमिति विनीतस्यैव दीयते ? इत्याह—

अणुरत्तो भत्तिगत्रो, अमुई अणुअत्तओ विसेसन्नू ।
उज्जुत्तो अपरितंतो,इच्छियमत्थं लहइ साहू॥३४०२॥

सुबोधा । नवरम् ' अमुइ ' त्ति–अमोचक, उद्युक्त—उद्यमपर, ' अपरितंतो ' अनिर्विण्ण इति ।

क्षेत्रद्वारमभिधित्सुराह—

विणयवओ वि य कयमं–गलस्स तदविग्घपारगमणाए ।
देज्ज सुकओवओगो, खित्ताईसु सुपसत्थेसु ॥३४०३॥
उच्छुवणे सालिवणे, पउमसरे कुसुमिए व वणसंडे ।
गंभीरसाणुणाए, पयाहिणजले जिणहरे वा ॥३४०४॥
दिज्ज न उ भग्गभामिय–मसाणसुन्नामणुन्नगेहेसु ।
छारंगारक्खरा–मेज्झाइदव्वदुट्ठेसु ॥३४०५॥

तिस्रोऽपि सुगमाः, नवरमिक्षुवनादीनां समीपे दद्यात् सामायिकम्, न तु भग्नभ्रामितगृहादिप्रदेशे । द्रुमाचन्दनलताद्याच्छादितप्रदेशो–गम्भीर. । यत्र जल्पतो प्रतिशब्द. उत्तिष्ठते स प्रदेश. सानुनाद इति ।

दिगभिग्रहद्वारमाह–

पुव्वाभिमुहो उत्तर–मुहो व दिज्जाऽहवा पडिच्छेज्जा ।
जाए जिणादओवा, दिसाइ जिणचेइयाइं वा ॥३४०६॥

पाठसिद्धा ।

कालद्वारमाह–

चाउद्दसिँ पन्नरसिं, वज्जेज्जा अट्ठमिं च नवमिं च ।
छट्ठिं च चउत्थिं वा–रसिं च सेसासु देज्जाहि ॥३४०७॥

सुबोधा ।

नक्षत्रद्वारमाह—

मियसिरअद्दा पुस्से, तिन्नि य पुव्वाइं मूलमस्सेसा ।
हत्थो चित्ता य तहा,दस विद्धिकराइँ नाणस्स ॥३४०८॥
संझागयं रविगयं, विड्डेरं सग्गहँ व विलंबं वा ।
राहुहयं गहभिन्नं, च वज्जए सत्त नक्खत्ते॥३४००॥

मृगशिर प्रभृतिषु नक्षत्रेषु दद्यात् सामायिकम् ॥ संध्यागतादीनि तु वर्जयेत् । तत्र संध्यागतं यत्र रवि स्थास्यति । यत्र नक्षत्रे सूर्यस्तिष्ठति तस्माच्चतुर्दश पञ्चदशं वा नक्षत्रं सन्ध्यागतम्, इत्यन्ये । रविगतं यत्र रविस्तिष्ठति । पूर्वद्वारिकेषु नक्षत्रेषु पूर्वदिशागन्तव्येऽपरया गच्छतो विड्डरम्, ' सग्गहं ' च ग्रहाधिष्ठितम्, विलम्बि यद् भास्वता परिभुज्य मुक्तम्, राहुगतं यत्र ग्रहणमभूदिति । ग्रहभिन्नं ग्रहविदारितमिति ।

गुणसम्पद्द्वारमाह—

पियधम्मो दढधम्मो, संविग्गोऽवज्जभीरु असढो य ।
खंतो दंतो गुत्तो, थिरव्वय जिइंदिओ उज्जू ॥३४१०॥
असढो तुलासमाणो, समिओ तह साहुसंगइरओ य ।
गुणसंपओववेओ,जुग्गो सेसो अजुग्गो य ॥३४११॥

सुगमे ।

अथाष्टममभिव्यवहारनयमाह—

नेओऽभिव्वाहारो–ऽभिव्वाहरणमहमस्स साहुस्स ।
इयमुद्दिस्सामि सुत्त–त्थोभयओ कालियसुयम्मि ३४१२
गुणदव्वपज्जवेहिं, भूयावायम्मि गुरुसमाइट्ठं ।
वे उद्दिट्ठमियं मे, इच्छामणुसासणं सीसो ॥ ३४१३ ॥

अभिव्याहरणमभिव्याहार. सामायिकश्रुतोद्देशादिविषयो गुरुशिष्ययोरुक्तिप्रत्युक्तिविशेषो ज्ञेय', तद्यथा—अहमस्य साधो. कालिकश्रुते इदमङ्गं श्रुतस्कन्धमध्ययनमुद्देशकं वा उद्दिस्सामि, वाचयामि । कथम् ? इत्याह–सूत्रत., अर्थतः, तदुभयतश्चेति । इह च सूत्रनात् सूत्रस्य, इयं भावना द्रष्टव्या–इदमङ्गादिकं ममोद्दिशत, इति शिष्येणोक्ते गुरुर्वदति–उद्दिशामि, तत शिष्यो भणति–' संदिशत किं भणामि ? । गुरुराह–वन्दित्वा प्रवेदय, ततः शिष्यो वन्दित्वा भवद्भिर्ममेदमङ्गादिकमुपदिष्टम् । गुरुराह—उद्दिष्ट क्षमाश्रमणानां हस्तेन सूत्रेण, अर्थेन, तदुभयेन च । तत. शिष्य आह–इच्छामोऽनुशास्तिम् । ततश्च गुरुराह–' सम्यग् योग. कर्तव्य. ' इति । अत्रेच्छाकारक्षमाश्रमणदानप्रनिपातकायोत्सर्गकरणादिक. शेषो विधि' स्वयमेव द्रष्टव्य' । समुद्देशाऽनुज्ञयोरप्ययमेव विधि., नवरं तयोर्यथा संख्यं सम्यग् धारय अन्येषां च प्रवेदय ; इति गुरुवचनं द्रष्टव्यमिति । भूतवादो–दृष्टिवाद, तत्राप्ययमेवोद्देशादिविधि, केवलं द्रव्येण, गुणै., पर्यायैश्च ' उद्दिष्टमिदम् ' इति गुरु. समादिशति । एवं च गुरुसमादिष्टे शिष्यो वदति–उद्दिष्टमिदं मे, इच्छाम्यनुशास्तिम् ' इत्यादीनि । तदेवं व्याख्यातोऽभिव्याहारनय, तद्व्याख्याने च व्याख्याता ' आलोयणा य विणए ' इत्यादि प्रतिद्वारगाथा ।

अथ मूलद्वारगाथाया यदुक्तम्–' करणम् कतिविधम् ? ' इति, तत्राह—

करणं तव्वावारो, गुरुसीसाणं चउव्विहं तं च ।
उद्देसो वायणिआ, तहा समुद्देसणमणुन्ना ॥ ३४१४ ॥

गुरुशिष्ययोस्तद्विषय.-सामायिकविषयो व्यापार. करणम्, स च गुरुशिष्ययोस्तद्व्यापारश्चतुर्विध, तच्चातुर्विध्यात् तत्स्वरूपं करणमपि चतुर्विधम्, तद्यथा—वाचयामि इ-

ति-गुरुप्रतिज्ञारूप उद्देशः, ततस्तत्प्रदत्तैव सूत्रस्य परिपाटीरूपा वाचना, तथा, समुद्देश' अनुज्ञा चेति ।

अत्राक्षेपपरिहारावाह—

**नणु भणियमणेगविहं, पुव्वं करणमिह किं पुणो गहणं ।**
**तं पुव्वगहियकरणं,इदमिह दाणग्गहणकाले ॥३४१५॥**

ननु पूर्वे नामादिभेदतोऽनकविध्र करणमुक्तम्, इह किं पुनरपि भद्कथनगर्भ करणग्रहणम् ? । अत्रोच्यते—तत् प्रागुक्तं पूर्वगृहीतस्य दानग्रहणकालादुत्तीर्णस्य सामायिकस्य सिद्धं करणमुक्तम्, इदं त्विह गुरु--शिष्ययोर्दानग्रहणकाले उद्देशादिविधिना साध्यं करणमुच्यत इति विशेष ।

विशेषान्तरमाह—

**पुव्वमविसेसियं वा, इह गुरुसीसकिरिया विसेसाओ ।**
**करणावसरो वायं, सेगं तत्थं तु वच्चासो ॥ ३४१६ ॥**

अथवा—पूर्वमविशेषित करणमुक्तम्, इह तु तदेव गुरु-शिष्योक्तिक्रियाविशेषाद् विशेषितमुच्यते । अथवा--अयमेव गुरुशिष्योक्तिप्रत्युक्तिकाले सामायिककरणस्य भणनावसर । तत्र तर्हि किमित्युक्तम् ? इति चेत् । उच्यते—अनेकान्तार्थं व्यत्यासोऽस्थानभणनम् । न ह्ययं नियमो यदन्यत्र वक्तव्यं तदत्र नोच्यते विचित्रा च भगवत. सूत्रस्य कृतिरिति । गत करणं कतिविधम् ?, इति द्वारम् ।

इदानीं ' कथम् ?, इति द्वारमभिधित्सुराह—

**लब्भइ कहं ति भणिए, सुयसामइयं जहा नमोकारो ।**
**सेसाई तदावरणा-क्खयओ समओ हवो भयओ॥३४१७॥**

कथं सामायिकं लभ्यते ?, इति भणित सत्युच्यते—श्रुतसामायिकं तावद् यथा नमस्कारः पूर्वमुक्तस्तथा लभ्यते, नमस्कारस्यापि श्रुतान्तर्गतत्वात् । नमस्कारलाभश्च पूर्वमित्थमुक्त'—

" मइ सुयनाणावरणं, दंसणमोहं च तदुवघाईणि ।
तप्फड्डयाइँ दुविहा-इ सव्वदेसोवघाईणि ॥ १ ॥
सव्वेसु सव्वघाइसु, हएसु देसोवघाइयाणं च ।
भाएहिं मुंचमाणो, समए समए अणंतेहिं ॥ २ ॥
पढमं लहइ नकारं, इक्किकं वएणमेवमएण पि ।
कमसो विसुज्झमाणो, लहइ समत्तं नमोक्कारं ॥ ३ ॥"

इह च सम्यग्दृशामेव नमस्कारो भवतीत्येतावन्मात्रेणैव दर्शनमोहनीयस्य क्षयोपशम उक्त । मुख्यवृत्त्या तु नमस्कारस्य श्रुतरूपत्वात्, तदावरणक्षयोपशमादेवासौ लभ्यत इत्युक्त द्रष्टव्यम् । एवं श्रुतसामायिकमपि मति-श्रुतक्षयोपशमाल्लभ्यत इति हृद्यम् । शेषाणि तु सम्यक्त्वदेशविरतिसर्वविरतिसामायिकानि तदावरणस्य यथासम्भवं क्षयत'- शमत ; उपशमत इत्यर्थ' । अथवा--उभयत. क्षयोपशमाद् भवन्तीति द्रष्टव्यमिति ।

अत्राक्षेपपरिहारावाह—

**नणु भणियमुवक्कमया, खओवसमओ पुणो उवग्घाए ।**
**लब्भइ कहं ति भणियं,इहं कहं का पुणो पुच्छा ।३४१८।**

आह-ननु पूर्वमत्रैवोपक्रमतोपक्रमप्रस्तावे ' भावे खओवसमिए दुवालसंगं पि होइ सुयनाणं । ' तथा-' वीयकसायाणुदए, अपच्चक्खाणनामधिज्जाणं । ' तथा—' तइयकसायाणुदए पच्चक्खाणावरणनामधिज्जाणं । देसिक्कदेसविरइं ' तथा-बारसविहे कसाए, खविए उवसामिए व जोएहिं । लब्भइ 'चरित्तलंभो' इत्यादि वचनात् , तदावरणस्य क्षयोपशमात् क्षयादिभ्यश्च सम्यक्त्वादिसामायिकानि लभ्यन्त इति भणितम् , पुनरपि चोपोद्घाते ' किं कइविहं ' इत्यादिगाथायां ' कथ सामायिकं लभ्यते ? , मानुष्यादिभ्य ' इति भणितम् , ततश्चेह ' कथं सामायिकं लभ्यते ' इति का पुनः पृच्छा ?—पुनरुक्तत्वाद् नेयमिह युज्यत इति भाव. ।

परिहारमाह—

**भणिए खओवसमओ,स एव लब्भइ कहमुवग्घाए ।**
**सो चेव खओवसमओ,इह केसिं होज्ज कम्माणं ।३४१९।**

' भावे खओवसमिए' इत्यादिनोपक्रमे 'क्षयोपशमादिहेतो , सामायिकं लभ्यते ?' इति भणिते पुनरुपोद्घाते स एव क्षयोपशमादिहेतु कथं लभ्यते ' मानुष्यादिसामग्रीत.' इत्युक्तम् । इह तु "स एव क्षयोपशमादि कषां कर्मणा भवेत् ?, इति विचिन्त्यत इति स्थानत्रयभणनस्यापि विषयविभाग इति तदेव व्याख्यातं कृताकृतादिद्वारे. करणम् ।

अथ ' करोमि भदन्त ! सामायिकम् ' इत्यत्र विनेयपृच्छामाशङ्क्योत्तरमाह—

**को कारओ करिंतो, किं कम्मं जं तु कीरई तेणं ।**
**किं कारओ य करणं,च होइ अन्नं अणन्नं ते?॥३४२०॥**

कोऽत्र तावत् कारक. ? इति कथ्यताम् । सूरिराह--स्वतन्त्रत्वात् कुर्वन् सामायिकस्य कर्ता । कर्म तर्हि किमत्र ? इत्याह-यत् तेन । क्रियते । तुशब्दात्-किं करणम् ? । उच्यते—मन.प्रभृति । एवमुक्ते सत्याह--ते-तव सूरे ! किं कारक. करणं च, चशब्दात्-कर्म चेत्येतत् त्रयं परस्परमन्यद् भिन्नम् , अनन्यद् वा-अभिन्नं भवति ? इति ।

एतदेव चित्तुरुवन्नाह—

**को कारउ त्ति भणिए, होइ करेंतो त्ति भएणए गुरुणा ।**
**किं कम्मं ति य भणिए,भएणइ जं कीरए तेणं॥३४२१॥**

गातार्था ।

अत्र ' क. कारकं. ?, इत्यादित एव प्रश्नमक्षममाण परस्तावदाह—

**केणं कयं ति य कत्ता,नणु भणियं तत्थ का पुणो पुच्छा?।**
**तव्विवरणं चिय इमं,केणं ति व होज्ज मा करणं ॥३४२२॥**

आह—ननु ' कयाकयं ' इत्यादिगाथाया ' केन कृतम् ' इति द्वितीयद्वारे ' कर्ता ' इति भणितमेव , तत्र का पुनरपीह कर्तु पृच्छा ? । सत्यम् , केन कृतम् इत्यत्र कर्तरि करणे च तृतीया सम्भवति, अतस्तद्विवरणमेवेदम्-केन इति--अत्र कर्तरि तृतीया, मा भूत् करणमिति ।

अथवा, तेष्वेव कृताकृतादिद्वारेषु सामायिकस्य कर्तारं कर्मकरणभाव च श्रुत्वा कुलालघटदण्डानामिव प्रस्तुते कर्तृकर्मकरणानां प्रविभागमपश्यन् पृच्छति-क कारक सामायिकस्य ? इत्यत्रोत्तरं कुर्वन्नयमस्य कारक , किं पुनः कर्म ? इत्यत्रोत्तरम्—यत् तेन कर्त्रा क्रियते , तुशब्दाद्—मन प्रभृतिकरणं च द्रष्टव्यम् । एतदेवाह—

**अहवा कयाकयाइसु, कत्तारं कम्मकरणभावं च ।**

सामाइयस्स सोउं, कुलालवइदण्डगाणं व ॥३४२३॥
पविभागमपेच्छंतो, पुच्छइ को कारओ करेंतोऽयं ।
किं कम्मं जं कीरइ,तो तेण सद्देण करणं च ॥३४२४॥
इ अपि गतार्थे ।

अत्राक्षेपमाह-

किं कारओ य करणं, च होइ कम्मं च ते चसद्दाओ ।
अन्नमणन्नं भण्णइ, किंचाह न सव्वहा जुत्तं ॥३४२५॥

कारक. करणं चशब्दात्—कर्म च 'ते' तव सूरे ! परस्परं किमन्यद् भिन्नम्, अनन्यदभिन्नमिति ? । भण्यतेऽत्रोत्तरम्-किं चात. ? किमनेन तव पृष्टेन ? इति । अत्राह पर.— अन्यत्वमनन्यत्वं वेति, द्वयोरेकमपि सर्वथा न युक्तमिति ।

अत्रान्यत्वे तावद् दूपणमाह—

अन्नत्ते समभावा-भावाओ तप्पओयणाभावो ।
पावइ मिच्छस्स व से,सम्मामिच्छाऽविसेसोऽयं ।३४२६।

कर्मभूतस्य सामायिकस्य कर्तुर्जीवादन्यत्वे मिथ्यादृष्टेरिव 'से' तस्य कर्तृजीवस्य सामायिकजन्यसमभावाभाव एव स्यात्, अन्यत्वाविशेषात् । ततश्च तत्प्रयोजनभूतस्य मोक्षसुखस्याभाव एव प्राप्नोति । अपरं च—अयं कृतसामायिक सम्यग्दृष्टि. अयं तु मिथ्यादृष्टि., इत्ययमविशेष एव स्यात्, उभयोरपि सामायिकस्यान्यत्वाविशेषादिति ।

पर एवाचार्यमाशङ्कते—

अहवा मइभिन्नेण वि, धणेण सधणो त्ति होइ ववएसो ।
सधणो य धणभागी,जह तह सामाइयस्सामी ।३४२७।

अथवा—अत्र सूरे ! नवेयं मति. स्यात्, भिन्नेनापि धनेन 'सधन.' इति व्यपदेशो लोके भवति, अपरं चासौ सधनो धनभागी धनफलभोक्ता यथा दृश्यते तथा भिन्नस्यापि सामायिकस्य स्वामी सामायिकवांस्तत्फलभोक्ता भविष्यति, न्यायस्य समानत्वादिति ।

तदेतत् पर. परिहरति—

तं न जओ जीवगुणो, सामइयं तेण विफलया तस्स ।
एगत्तगुणओ जुत्ता, परसामइयस्स वाऽफलया ।३४२८।

तदेतत् सूरे ! त्वदुक्तं न, यतो जीवगुण. सामायिकम्, तेन जीवगुणस्य सामायिकस्य गुणिनो जीवादन्यत्वे विफलता—निष्फलता युक्ता, धनं तु धनिनो गुणो न भवति, तेन तस्य भिन्नस्यापि सफलताऽस्त्विति भाव । यथा परसामायिकस्य विवक्षितजीवमपेक्ष्यान्यत्वादफलतेति ।

अपि च—

जइ भिन्नं तब्भावे,वि तओ (सो) तस्स भावरहिओ त्ति ।
अन्नाणी चिय निच्चं, अंधोव्वसमं पईवेण ॥ ३४२९ ॥

यदि कर्तुर्जीवादभिन्नं सामायिकम्, तदा तद्भावेऽपि भिन्नसम्यक्त्वादिसामायिकसद्भावेऽपि तकोऽसौ कर्तृजीवस्तत्स्वभावरहित. सम्यक्त्वादिसामायिकस्वभावरहित इति कृत्वाऽज्ञान्येव स्यात्, यथा भिन्नेन प्रदीपेन समं वर्तमानोऽपि स्वस्वभावभूतचक्षुर्विकलोऽन्ध इति ।

अथानन्यत्वपक्षे दूपणमाह—

एगत्ते तन्नासे. नासो जीवस्स संभवे भवणं ।
कारगसंकरदोसा, तदिक्कया कप्पणा वावि ॥३४३०॥

सामायिकतद्वतोरेकत्वेऽनन्यत्वे तन्नाशे—सामायिकनाशे सामायिकवतो जीवस्यापि नाश प्राप्नोति, घटस्वरूपनाशे घटस्येव संभवे वोत्पत्तौ वा सामायिकस्य, जीवस्यापि भवनमुत्पत्तिमत्त्वं स्यात् । न च तस्य तदिष्यते, नित्यत्वात्, तथा-कर्तृकर्मकरणकारकाणां संकरदोप., तदेकता वा स्यात्,कल्पनामात्ररूपता वा कारकाणां भवेदिति ।

अत्राचार्य उत्तरमाह—

आया हु कारओ मे, सामाइयकम्म करणमाया य ।
तम्हा आया सामा-इयं च परिणामओ इक्कं ॥३४३१॥

आत्मैव तावत् सामायिकस्य कारक कर्ता मे—मम, सामायिकमेव क्रियमाणत्वात् कर्म . सामायिककर्म तदप्यात्मैव, न पुनस्तद्व्यतिरिक्तमन्यत् किञ्चिदिति, चशब्दाद्—मन.प्रभृतिकं करणमप्यात्मैव । तस्मादात्मा सामायिकं चशब्दात्-करणं चेति त्रितयमप्येतदेकमेव । कथम् ?, परिणामत.-आत्मपरिणामरूपत्वात् । नहि सामायिक मनःप्रभृतिकरणं चात्मपरिणामरूपत्वमतिक्रम्य वर्तते । अतस्त्रितयमपि परिणाम रूपतयैकमेवेदमिति ।

एतदेव व्याचिख्यासुराह—

जं नाणाइसभावं, सामइयं जोगमाह करणं च ।
उभयं च सपरिणामो,परिणामाणन्नया जं च॥३४३२॥

यस्मात् सामायिकं सामान्येन ज्ञानदर्शनचारित्रस्वभावम्, करणपि मन.प्रभृतिकं योगमाह परमगुरु, उभयं चैतदात्मनः स्वपरिणाम., परिणामतद्वतोश्च यस्मादनन्यरूपतैवेति ।

तत. किम् ? इत्याह—

तेणाया सामइयं, करणं च चसद्दओ न भिन्नाइं ।
नणु भणियमणन्नत्ते, तन्नासे जीवनासो त्ति ॥३४३३॥

तेन तस्मादात्मा सामायिकम्, चशब्दात्—करणं च मन प्रभृति, न परस्परमेतानि भिन्नानि । आह—नन्वेवमनन्यत्वे 'तन्नाशे जीवनाश.' इत्यादिकं दूपणं भणितमेवेति ।

अत्र सूरिराह—

जइ तप्पज्जयनासो, को दोसो होइ सव्वहा नत्थि ।
जं सो उप्पायव्वय-धुवधम्माणंतपज्जाओ ॥ ३४३४ ॥

स चासौ सामायिकादिरूप पर्यायश्च तत्पर्याय.—तत्पर्यायेण तत्पर्यायरूपेण नाशो जीवस्य तत्पर्यायनाशो यदि भवति, तदा भवतु नाम, को दोप ? । यस्तु पर्यायविनाशे जीवस्य सर्वथा नाश स नास्ति नेष्यते, यस्मादसौ जीव उत्पादव्ययध्रौव्यधर्माऽनन्तपर्याय. । ततश्चैकस्य सामायिकादिपर्यायस्य नाशेऽपि कथं तस्य सर्वथा नाशः, शेपानन्तपर्यायैर्विशिष्टस्य तस्य सर्वदाऽवस्थानात् इति ।

न केवलमात्मा, किन्तु सर्वमपि वस्तु जैनानामुत्पादव्ययनित्यतास्वरूपमेवेति दर्शयन्नाह—

सव्वं चिय पइसमयं, उप्पज्जइ नासए य निच्चं च ।

एवं चेव य सुह दु-क्ख बंधमोक्खाइसब्भावो ॥३४३५॥
प्रागसकृद् भावितार्थैवेति ।

यदप्युक्तम् कारकैकत्वम् कारकैकता प्राप्नोति, अत्राप्याह-

एकं चेव य वत्थुं, परिणामवसेण कारगंतरयं ।
पावइ तेणादोसो, विवक्खया कारगं जं च ॥ ३४३६ ॥

एकमेव हि वस्तु परिणामवशेन कारकान्तरतां प्राप्नोति ; तथाहि-एक एव देवदत्तः कटादिकर्तृत्वेन परिणतः कर्ता , स एव यज्ञदत्तादिप्रयोजककरणतया परिणतत्वात् करणम् , दिदृक्षूणां दृश्यमानतया परिणतत्वात् कर्म , ताम्बूलादिदानग्रहणतया परिणतत्वात् सम्प्रदानम् , स एव निष्पन्नकटस्य मोचनेन परिणतत्वादपादानम् , कटक्रियाधारत्वेन च परिणतत्वादधिकरणमिति । एवमन्यत्रापि भावनीयम् । तेन कारकसंकरादिको न दोषः । विवक्षातश्च यस्मात् कारकाणि भवन्ति , तस्मात् कल्पनायामप्यदोष एवेति ।

तथाहि—

कुंभो विसिज्जमाणो, कत्ता कम्मं स एव करणं च ।
नाणाकारयभावं, लहइ जहेगो विवक्खाए ॥ ३४३७ ॥
जह वा नाणाणन्नो, नाणी नियओवओगकालम्मि ।
एगो वि तिस्सहावो, सामाइयकारओ एवं ॥ ३४३८ ॥

कुम्भो विशीर्यमाणो विशरणक्रियायाः कर्तृत्वेन विवक्षितः कर्ता भवति । स एव च विशरणक्रियाव्याप्यत्वेन विवक्ष्यमाणः कर्म सम्पद्यते , तेन घटपर्यायेण कृत्वा विशीर्यते , इति करणत्वेन विवक्ष्यमाणः स एव करणं संज्ञायते । एवं यथैकोऽपि पदार्थो विवक्षया नानाकारकभावं लभते , यथा वा मत्यादिज्ञानादनन्योऽभिन्नो ज्ञानी जीवो निजकात्मविषयः स्वसंवेदनरूपो य उपयोगस्तत्काल एकोऽपि त्रिस्वभावो भवति ; तथाहि स्वोपयोगं उपयुज्यमानोऽसौ कर्ता भवति , संवेद्यमानत्वेन तु कर्म , करणभूतज्ञानानन्यत्वाच्च करणमिति । एवं सामायिककारक एकोऽपि विवक्षया कर्तृकर्मकरणस्वभावो द्रष्टव्य इति । तदेवं करणं व्याख्यातम् , तद्व्याख्याने च ' करोमि ' इति सामायिकस्य प्रथमावयवो व्याख्यातः । विशे० । आ० म० । आ० चू० । आव० ।

अट्ठण्हं पयडीणं, उक्कोसठिईउ वट्टमाणो उ ।
जीवो न लहइ सामा-इयं चउण्हं पि एगयरं ॥ १०५ ॥
सत्तण्हं पयडीणं, अब्भिंतरओ उ कोडिकोडीणं ।
काऊण सागराणं, जइ लहइ चउण्हमण्णयरं ॥ १०६ ॥

प्रथमगाथाव्याख्या-अष्टानाम् इति-संख्या , कासाम् ?—ज्ञानावरणीयादिकर्मप्रकृतीनाम् , उत्कृष्टा चासौ स्थितिश्चोत्कृष्टस्थितिः तस्यां वर्त्तमानो भवन् जीवः—आत्मा न लभते—न प्राप्नोति, किं तत् ?—सामायिक—पूर्वव्याख्यातम्, किं विशिष्टम् ?—चतुर्णामपि—सम्यक्त्वश्रुत—देशविरतिसर्वविरतिरूपाणाम् एकतरम्—अन्यतमत् इति यावत्, अपिशब्दात्—मत्यादि च, न केवलं न लभते, पूर्वप्रतिपन्नोऽपि न भवति, यतोऽवाप्तसम्यक्त्वो हि न पुनस्तत्परित्यागेऽपि ग्रन्थिमुल्लङ्घ्य उत्कृष्टस्थितीः कर्मप्रकृतीः बध्नाति, आयुष्कोत्कृष्टस्थितौ पुनर्वर्त्तमानः पूर्वप्रतिपन्नको भवति, अनुत्तरविमानोपपातकाले देवो, न तु प्रतिपद्यमानक इति । तुशब्दाद् जघन्यस्थितौ च वर्त्तमानः पूर्वप्रतिपन्नत्वान्न लभते , आयुष्कजघन्यस्थितौ च वर्त्तमानो न पूर्वप्रतिपन्नो नापि प्रतिपद्यमानकः, जघन्यायुष्कस्य क्षुल्लकभवग्रहणाधारत्वात् , तस्य च वनस्पतिषु भावात् , तत्र च पूर्वप्रतिपन्नप्रतिपद्यमानकाभावात् , प्रकृतीनां च उत्कृष्टेतरभेदभिन्ना खल्वियं स्थितिः —आदितस्तिसृणामन्तरायस्य च त्रिंशत्सागरोपमकोटीकोट्यः परास्थितिः , सप्ततिर्मोहनीयस्य, नामगोत्रयोर्विंशतिः , त्रयस्त्रिंशत्सागरोपमाण्यायुष्कस्य, इति, जघन्या तु द्वादशमुहूर्त्ता वेदनीयस्य, नामगोत्रयोरष्टौ, शेषाणामन्तर्मुहूर्त्तं ( तत्त्वार्थे अ० ८ सूत्राणि १५ १६-१७ १८-१९-२०-२१ ) इति गाथार्थः । आह-किमेताः—युगपदेव उत्कृष्टां स्थितिमासादयन्ति उत एकस्यामुत्कृष्टस्थितिरूपायां सञ्जातायामन्या अपि नियमतो भवन्ति, आहोस्विदन्यथा वा वैचित्र्यमत्रेति । उच्यते-अत्र विधिरिति, मोहनीयस्य उत्कृष्टस्थितौ शेषाणामपि षण्णामुत्कृष्टैव, आयुष्कप्रकृतेस्तु उत्कृष्टा वा मध्यमा वा, न तु जघन्येति । मोहनीयरहितानां तु शेषप्रकृतीनामन्यतमायाः उत्कृष्टस्थितेः सद्भावे मोहनीयस्य शेषाणां च उत्कृष्टा वा मध्यमा वा, न तु जघन्येति प्रासङ्गिकम् । द्वितीयगाथाव्याख्या--सप्तानामायुष्करहितानां कर्मप्रकृतीनां या पर्यन्तवर्त्तिनी स्थितिस्तामङ्गीकृत्य सागरोपमाणां कोटीकोटी, तस्याः कोटीकोट्या अभ्यन्तरत एव तुशब्दोऽवधारणार्थः , कृत्वाऽऽत्मानमिति गम्यते यदि लभते—यदि प्राप्नोति , चतुर्णां श्रुतसामायिकादीनामन्यतरत् , तत एव लभते नान्यथेति । पाठान्तरं वा कृत्वा सागरोपमाणां स्थितिं लभते चतुर्णामन्यतरत् इत्यक्षरगमनिका । अवयवार्थोऽभिधीयते-सप्तानां प्रकृतीनां यदा पर्यन्तवर्त्तिनी सागरोपमकोटीकोटी पल्योपमासङ्ख्येयभागहीना भवति, तदा घनरागद्वेषपरिणामोऽत्यन्तदुर्भेद्यदारुग्रन्थिवत् कर्मग्रन्थिर्भवतीति । आह च--भाष्यकारः -" गंठि त्ति सुदुब्भेओ, कक्खडघणरूढगूढगंठि व्व । जीवस्स कम्मजणिओ, घणरागद्दोसपरिणामो ॥ १ ॥ " इत्यादि, तस्मिन् भिन्ने सम्यक्त्वादिलाभ उपजायते , नान्यथेति , तद्भेदश्च मनोविघातपरिश्रमादिभिः दुस्साध्यो वर्त्तते । तथाहि--स जीवः कर्मरिपुमध्यगतः तं प्राप्य अतीव परिश्राम्यति , प्रभूतकर्मारातिसैन्यान्तकृत्त्वेन संजातखेदत्वात् , सङ्ग्रामशिरसीव दुर्जयापाकृतानेकशत्रुनरनरेन्द्रभटवत् । अपरस्त्वाह-किं तेन भिन्नेन ? किं-वा सम्यक्त्वादिनाऽवाप्तेन ? यथाऽतिदीर्घा कर्मस्थितिः सम्यक्त्वादिगुणरहितेनैव क्षपिता, एवं कर्मशेषमपि गुणरहित एव क्षपयित्वा विमुक्तिफलभाग् भवतु । अत्रोच्यते-स हि तस्यामवस्थायां वर्त्तमानोऽनासादितगुणान्तरो न शेषक्षपणया विशिष्टफलप्रसाधनायालम् , चित्तविघातादिप्रचुरविघ्नत्वात् विशिष्टप्राप्तपूर्वफलप्राप्त्यासन्नत्वात् प्रागभ्यस्तक्रियया तस्यावाप्तुमशक्यत्वाच्च । अनेकसंवत्सरानुपालिता चाम्लादिपुरश्चरणक्रियासादितगुणान्तरोत्तरसहायविरहितविद्यासाधकवत् तथा चाह-भाष्यकारः -' पाएण पुव्वसेवा,परिमउई साहणमि गु.

कनरिआ । होति महाविज्ञाए किरिया पायं सविग्घा य ॥१॥ नह कम्मठिनी खवणं, परिमउई मोक्खसाहणे गरुई । इह दंसणादिकिरिया, दुलभपायं सविग्घा य ॥ २ ॥" अथवा-यंत एव बही कर्मस्थितिरनेन उन्मूलिना, अत एवा-पचीयमानदोषस्य सम्यक्त्वादिगुणलाभः संजायते, नि-श्शेषकर्मपरिक्षये सिद्धत्ववत्, तत एव च मोक्ष इति, अतो न शेषमपि कर्मगुरुरहित एवापाकृत्य मोक्षं प्रसाधयतीति स्थितम् । आव० १ अ० । ( भदन्तशब्दव्याख्या 'भंदंत' शब्दे पञ्चमभागे उक्ता । ) सामायिकशब्दार्थः पूर्वं व्याख्यातः ।

तस्य चेमे पर्यायाः—

समया सम्मत्त पस-त्थ संति सुविहिय सुहं अणिंदं च ।
अदुगुंछियम (ण)गरहिय-मणवज्जमिमे वि एगट्ठा ॥१०३३॥
आव० १ अ० ।

(एषां स्वस्वस्थाने व्याख्या । )(अनन्तशब्दव्याख्या 'अंत' शब्दे प्रथमभागे ४४ पृष्ठ उक्ता । ) ( सर्वशब्दार्थः 'सव्व' शब्देऽस्मिन्नेव भागे गत । ) ( सावद्यपदार्थः 'सावज्ज' शब्देऽस्मिन्नेव भागे वक्ष्यते । )

अथ सर्वादिपदानां क्रियया सह संबन्धं कुर्वन्नाह—

सव्वो सावज्जो त्ति य, जोगो संबज्झए तयं सव्वं ।
सावज्जं जोगं ति य, पच्चक्खामि त्ति वज्जेमि ॥ ३५०० ॥

सर्वो—निरवशेष सावद्ययोग इति संबध्यते तं सर्वं साव-द्ययोगं प्रत्याख्यामीति क्रिया प्रत्याचक्षे वा वर्जयामीत्यर्थः । इह प्रत्याख्यामि प्रत्याचक्षे चेति क्रियाद्वयेऽपि सावद्ययो-गस्य प्रत्याख्यानं गम्यते, अतस्तदेव प्रत्याख्यानं व्याचि-ख्यासुराह—

पडमहो पडिसेहे, अक्खाणं खावणाऽभिहाणं वा ।
पडिसेहस्सक्खाणं, पच्चक्खाणं निवित्ति त्ति ॥३५०१॥

प्रतिशब्दोऽत्र प्रतिषेधे वर्तते, आख्यानं त्वाभिमुख्येन वा-ऽऽदरेण वा ख्यापना—प्रकथनं, चक्षिपक्षेऽभिधानं वा, प्र-तिषेधस्याख्यानं प्रत्याख्यान—निवृत्तिः इति । विशे० ।

(७६) सांप्रतं करणतः स्वयमेव चालनां प्रतिपादयन्नाह—

को कारओ ? करंतो, किं कम्मं ?, जं तु कीरई तेण ।
किं कारयकरणाण य, अन्नमणन्नं च ? अक्खेवो१०३४

इह 'करोमि भदन्त ! सामायिकम्' इत्यत्र क—र्तृकर्मकरणव्यवस्था वक्तव्या, यथा—करोमि राजन् ! घट-मित्युक्ते कुलाल कर्ता घट एव कर्म दण्डादि करणमिति, एवमत्र क कारकः कुलालसंस्थानीय ? इत्यत आह—'करेंतो' ति—तत् कुर्वन्नात्मैव, अथ किं कर्म घटादिसंस्था-नीयम् ? इत्यत्राऽऽह—यत्तु क्रियते—निर्वर्त्यते तेन—क-र्त्रा तच्च तद्गुणत्वं सामायिकमेव, तुशब्दः करणप्रश्न-निर्वचनसंग्रहार्थः, यथा कर्म निर्दिष्टमेवं किं करणमित्यु-द्देशादिचतुर्विधमिति निर्वचनम्, एवं व्यवस्थिते सत्याह—'किं कारगकरणाण य' त्ति—किं कारककरणयोः ?, चश-ब्दात्—कर्मणश्च परस्परं कुलालघटदण्डादीनामिवान्य-त्वम्, आहोस्विदनन्यत्वमेवेति ?, उभयथाऽपि दोष , क-थम् ?, अन्यत्वे सामायिकवतोऽपि तत्फलस्य मोक्षस्याभा-व., तदन्यत्वाद्, मिथ्यादृष्टेरिव,अनन्यत्वे तु तस्योत्पत्तिवि-नाशाभ्यामात्मनोऽप्युत्पत्तिविनाशप्रसङ्ग इति, अनिष्टं चैतत्, तस्यानादिमत्त्वाभ्युपगमादित्याक्षेपप्रक्षालनेति गाथार्थः ।

विजृम्भितं चात्र भाष्यकारेण—

" अन्नत्ते समभावा-भावाओ तप्फलोवणाभावो ।
पावइ मिच्छस्स व से, सम्मामिच्छाऽविसेसो य ॥ १ ॥
अह व मईभिन्नेण वि, धणेण सधणो त्ति होइ ववएसो ।
सधणो य धणभागी, जह तह सामाइयस्सामी ॥ २ ॥
तं ण जओ जीवगुणो, सामइयं तेण विफलता तस्स ।
अन्नत्तणओ जुत्ता, परसामइयस्स वाऽफलता ॥ ३ ॥
जइ भिन्नं तब्भावे-ऽवि नो तओ तस्सभावगहिओ त्ति ।
अणणाणिच्चिय णिच्चं, अंधो व समं पईवेणं ॥ ४ ॥
एगत्ते तन्नासे, नासो जीवस्स संभवे भवणं ।
कारगसंकरदोसो, तदेकयाकप्पणा वावि ॥ ५ ॥ "

इत्यादि, इत्थं चालनामभिधायाधुना प्रत्यवस्थानं प्रतिपा-दयन्नाह—

आया हु कारओ मे, सामाइय कम्म करणमाया य ।
परिणामे सइ आया, सामाइयमेव उ पसिद्धि ॥१०३५॥

इहाऽऽत्मैव कारको मम, तस्य स्वातन्त्र्येण प्रवृत्तेः, तथा—सामायिकं कर्म तद्गुणत्वात्, करणं चोद्देशादिलक्षणं तत्क्रियत्वादात्मैव, तथाऽपि यथोक्तदोषाणामसम्भव एव, कुत इत्याह—यस्मात् परिणामे सत्यात्मा सामायिकं, परि-णमनं—परिणाम कथञ्चित् पूर्वरूपापरित्यागेनोत्तररूपाप-त्तिरिति, उक्तं च—"नार्थान्तरगमो यस्मात्, सर्वथैव न चाऽगमः । परिणाम प्रमासिद्धः, इष्टश्च खलु पण्डितैः ॥ १ ॥" इत्यादि, तस्मिन् परिणामे सति । अयमत्र भावार्थः—परि-णामे सति तस्य नित्यानित्याद्यनेकरूपत्वाद् द्रव्यगुणपर्याया-णामपि भेदाभेदसिद्धेः, अन्यथा सकलसंव्यवहारोच्छेदप्रस-ङ्गात्, एकान्तपक्षेणान्यत्वानन्यत्वयोरनभ्युपगमाद्, इत्थं चैकत्वानेकत्वपक्षयोः कर्तृकर्मकरणव्यवस्थासिद्धेः, आ-त्मा—जीवः सामायिकमेव तु प्रसिद्धिः । तथाहि—न तदे-कान्तेन अन्यत् । तद्गुणत्वान्न चानन्य (त्त्व) द्गुणत्वादेवे-ति । इत्थं चैतदङ्गीकर्तव्यम्, अन्यथा गुणगुणिनोरेकान्तभे-दे विप्रकृष्टगुणमात्रोपलब्धौ प्रतिनियतगुणिविषय एव संश-यो न स्यात्, तदन्येभ्योऽपि तस्य भेदाविशेषात्, दृश्यते च यदा कश्चिद्दूरितरुतरुणशाखाविसरस्न्ध्रोदरान्तरतः कि-मपि शुक्लं पश्यति तदा किमियं पताका किं वा बलाकेत्येवं प्रतिनियतगुणिविषय इति, अभेदपक्षे तु संशयानुत्पत्तिरेव, गुणग्रहणत एव तस्यापि गृहीतत्वादित्यलं विस्तरेणेति गा-थार्थः ।

भाष्यकारदूषणानि त्वमूनि—

" आयाहु कारओ मे,सामाइय कम्म करणमाआ य ।
तम्हा आया सामा-इयं च परिणामओ एक्क ॥ १ ॥
जं णाणाइसहावं, सामाइयजोगमाइकरणं च ।
उभयं च स परिणामो, परिणामाणण्णया जं च ॥ २ ॥
तेणाया सामइयं, करणं च चसद्दओ अभिहाई ।
एगु भणियमणत्ते, तण्णासे जीवणासो त्ति ॥ ३ ॥
जइ तप्पज्जयनासो, को दोसो होउ ? सव्वहा नत्थि ।

जं सो उप्पायव्वय—धुवधम्माणंतपज्जाओ ॥ ४ ॥
सव्वं चिय पइसमयं, उप्पज्जइ णासए य णिच्चं च ।
एवं चेव य सुहदु—क्खबंधमोक्खाइसब्भावो ॥ ५ ॥
एगं चेव य वत्थु, परिणामवसेण कारगंतरयं ।
पावइ तेणादोसो, विवक्खया कारगं जं च ॥ ६ ॥
कुंभोऽवि सज्जमाणो, कत्ता कम्मं स एव करणं च ।
णाणाकारगभावं, लहइ जहेगो विवक्खाए ॥ ७ ॥
जह वा नाणाणण्णो, नाणी नियओवओगकालम्मि ।
एगोऽवि तस्सभावो, सामाइयकारगो चेयं ॥ ८ ॥"

साम्प्रतं परिणामपक्षे सत्येकत्वानेकत्वपक्षयोरविरोधेन कर्तृकर्मकरणव्यवस्थामुपदर्शयन्नाह-

एगत्ते जह मुट्ठिं, करेइ अत्थंतरे घडाईणि ।
दव्वत्थंतरभावे,गुणस्स किं केण संबद्धं ? ॥१०३६॥

एकत्वे-कर्तृकर्मकरणाभेदे कर्तृकर्मकरणभावो दृष्ट, यथा-मुष्टिं करोति,अत्र देवदत्तः कर्ता, तद्धस्त एव कर्म, तस्यैव च प्रयत्नविशेषः करणमिति ।तथाऽर्थान्तरे-कर्तृकर्मकरणानां भेदे दृष्ट एव तद्भाव.। तथा चाऽऽह-घटादीनि यथा करोतीति वर्तते। तत्रापि कुलाल कर्ता, घट कर्म, दण्डादि करणमिति। इह च सामायिकं गुणो वर्तते, स च गुणेन कथञ्चिदेव भिन्न इति । विपक्षे बाधामुपदर्शयति द्रव्यात् सकाशाद्, गुणिन इत्यर्थ., एकान्तेनैवार्थान्तरभावे--भेदे सति,कस्य ?-गुणस्य, किं केन सबद्धमिति ?, न किञ्चित् केनचित् संबद्ध, ज्ञानादीनामपि गुणत्वात्तेषामपि चाऽऽत्मादिगुणिभ्य एकान्तभिन्नत्वात्, सवेदनाभावत. सर्वव्यवस्थानुपपत्तेरिति भावना। एवमेकान्तेनानर्थान्तरभावेऽपि दोषा अभ्यूह्या इति गाथार्थ । कण्ठतस्तावदुक्ते चालनाप्रत्यवस्थाने, अत एव चात्र पुनरुक्तदोषोऽपि नास्ति, अनुवादद्वारेण चालनाप्रत्यवस्थानप्रवृत्तेरित्यल प्रसङ्गेन।

( ७७ ) अथौघ-भवजीवितयोर्विवरणमाह-

आउस्सदव्वतया, सामन्नं पाणधारणमिहोहो ।
भवजीविय चउद्धा, नेरइयाईण जावत्था ॥३५१२॥

आयुष.—आयुर्मात्ररूपस्य कर्मण· सवन्धीनि यानि सन्ति जीवस्य सत्तावर्तीनि द्रव्याणि तान्यायु सद्द्रव्याणि तद्भाव आयु सद्द्रव्यता तया आयु सद्द्रव्यतया ससारे परिभ्रमतो जीवस्य यत् सामान्य प्राणधारणं यदाश्रित्य सिद्धा एव मृता उच्यन्ते, न ससारिण., तदिह संसारिणा जीवितसामान्यमात्ररूपमोघ ओघजीवितमुच्यत इति । भवन्ति प्राणिनोऽस्मिन्निति भव --ससारस्तत्रावस्थितिहेतुभूत भवजीवितम्, तच्चतुर्धा। किं पुनस्तत् ? इत्याह—नारकादीना या जन्मन प्रथमसमयाच्चरमसमय यावदवस्थाऽवस्थितिरवस्थाना तद्धेतुत्वात् सा भवजीवितमिति।

तद्भवजीवित भोगजीवितं चाह—

तब्भवजीवियमोरा—लियाण जं तब्भवेववन्नाणं ।
चक्कहराईणं भो—गजीवियं सुरवराणं च ॥ ३५१३॥

पुन पुनस्तत्रैव विवक्षिते भव उत्पन्नास्तद्भवोत्पन्नास्तेषा तद्भवोत्पन्नाना यज्जीवित तत् तद्भवजीवितमुच्यते। तत्औदारिकशरीरिणां तिर्यग्-मनुष्याणामेवावगन्तव्यम्। तत्रैकेन्द्रियाणां पुन पुनस्तत्रैवैकेन्द्रियभव उत्पद्यमानानामनन्तानि भवग्रहणान्येतदुत्कृष्टतोऽवसेयम्। द्वीन्द्रियाणां तु संख्यातानि भवग्रहणानि। पञ्चेन्द्रियतिरश्चां मनुष्याणां च सप्ताष्टौ वा भवग्रहणानीति मन्तव्यम्। जघन्यतस्तु सर्वत्र द्वे भवग्रहणे। वैक्रियशरीरिणां तु देवनारकाणामिदं न संभवत्येव,पुन पुनस्तत्रैवोत्पत्त्यभावादिति। चक्रधराऽऽदीनां तु भोगपुरुषाणां सुरवराणां च देवानां जीवितं—भोगजीवितमिति।

शेषजीवितानि तु श्रीण्याह—

संजमजीवियमिसी—णं असंजमजीवियमविरयाणं ।
जसजीवियं जसोना—मओ जिणाईण लोगम्मि ॥३५१४॥

पाठसिद्धा, नवरं 'इसीणं' ति—ऋषीणाम् यतीनामिति। 'जसनामओ' त्ति—यशोनामकर्मोदयादित्यर्थ ।

नान्येषां मध्यात् किं जीवितमिहाधिकृतम्? इत्याह—

नरभवजीवियमहिगयं, विसेसओ सेसयं जहाजोगं ।
जावज्जीवामि तयं, ता पच्चक्खामि सावज्जं ॥ ३५१५ ॥

भवजीवितरूपं नरभवजीवितं मनुष्यभवजीवितं विशेषतोऽत्राधिकृतम्, मनुष्याणामेव चारित्रसामायिकाधिकारात्, शेष नामादिजीवितं यथायोगं यद् यत्र युज्यते तत् तत्र योजनीयम्। ततश्च स एव मनुष्य प्रतिजानीते—यावदनेन नरभवजीवितेन जीवामि तावत् तकं सावद्ययोगं प्रत्याख्यामीति।

अथवा-यावच्छब्दस्यार्थमाह-

जावदयं परिमाणे, मज्जायाएऽवधारणे चेइ ।
जावज्जीवं जीवण-परिमाणं जत्तियम्मि त्ति ॥३५१६॥
जावज्जीवमिहारे-ण मरणमज्जायओ न तं कालं ।
अवधारणे वि जाव-ज्जीवणमेवेह न उ परओ ॥३५१७॥

इह यावदयं शब्दस्त्रिष्वर्थेषु वर्तते, तद्यथा—परिमाणे-मर्यादायाम्, अवधारणे चेति । तत्र परिमाणार्थे तावदाह—यावज्जीवमिति। किमुक्तं भवति ?—यावद् मे जीवनपरिमाणमिहभवायुष्कस्य परिमाण तावन्तं काल प्रत्याचक्षे इति। मर्यादार्थमाह-यावज्जीवमित्यादि। अत्र यावज्जीवमिति। किमुक्तं भवति ?-आरेण मरणमर्यादाया अर्वाक् प्रत्याचक्षे, न पुनस्तत्कालं प्रत्याख्यानग्रहणकाल एव, किन्तु मरणसीमा यावत् प्रत्याख्यामीति। अवधारणेऽपि—यावदिहभवजीवितं तावदेव प्रत्याचक्षे, न तु परत, देवाद्यवस्थायामविरतत्वे प्रत्याख्यानभङ्गप्रसङ्गात्। 'परतो मुत्कलम्' इति विधिरपि न कर्तव्य, भोगाशंसादोषानुषङ्गादिति स्वयमेव द्रष्टव्यमिति।

अत्राक्षेपपरिहारावाह—

जावज्जीवं पत्ते, जावज्जीवाएँ लिंगवच्चासो ।
भावप्पच्चयओ वा, जा जावज्जीवया ताए ॥ ३५१८ ॥

ननूक्तन्यायेन यावज्जीवमिति निर्देशे प्राप्ते 'यावज्जीवया' इति निर्देश किमर्थ भगवता सूत्रकृता विहित· ?' इति शेष । अत्र परिहारमाह—'लिंगवच्चासो' त्ति-लिङ्गव्यत्ययोऽत्र प्र-

गवतोऽभिमत, नेनेत्थं निर्देश कृत इत्यर्थ। अथवा-यावज्जीवशब्दाद् भावप्रत्यय उत्पाद्यते, ततश्चेत्थं भावप्रत्यये उत्पादिते या 'यावज्जीवता' इति निष्पद्यते, तया यावज्जीवतया 'प्रत्याख्यामि' इति संबध्यत इति।

नन्वित्थमपि 'यावज्जीवतया' इति प्राप्ते 'यावज्जीवया' इति कथं भवति? इत्याह—

जावज्जीवतया इति, जावज्जीवाएँ वण्णलोवाओ।
जावज्जीवो जीसे, जावज्जीवाहवा सा उ ॥ ३५१९ ॥

'यावज्जीवतया' इति निर्देशे प्राप्ते यत् 'यावज्जीवया' इत्युक्तम्, तत् तकारलक्षणवर्णलोपादिति द्रष्टव्यम्। तृतीयं पग्हािरमाह। अथवा-जीवनं जीवा यावज्जीवो यस्यां सा यावज्जीवेति बहुव्रीहिस्तया यावज्जीवया इत्येवं द्रष्टव्यमिति।

अत्र विनेयपृच्छामुत्तरं चाऽऽह—

का पुण सा संबज्झइ, पच्चक्खाणकिरिया तया सव्वं।
जावज्जीवाएऽहं पच्चक्खामीति सावज्जं ॥ ३५२० ॥

का पुन पूर्वोक्तबहुव्रीहावन्यपदार्थे संबध्यते? इत्याह— प्रत्याख्यानक्रियेति। तया यावज्जीवया प्रत्याख्यानक्रियया सर्वं सावद्ययोगमहं 'प्रत्याख्यामि' इति संबन्ध इति।

परिहारान्तरमाह-

जीवणमहवा जीवा, जावज्जीवा पुरा व सा नेया।
तीए पाययवयणे, जावज्जीवाइतइएयं ॥ ३५२१ ॥

अथवा-जीवनं जीवेति स्त्रीलिङ्गाभिधायक एवायं शब्द. साध्यते, न तु जीव इति पुंलिङ्गाभिधायक। ततश्च यथा पुरा-पूर्वं तथाऽत्राप्यर्थवयवृत्तिना यावच्छब्देन सह समासे सा यावज्जीवा ज्ञेया, तद्यथा-यावत्परिमाणा जीवा यावज्जीवा एवं मर्यादाऽवधारणयोरपि समास कार्य, तया यावज्जीवया प्रत्याख्यामि; प्राकृतवचने च पर्यन्त एकारनिर्देशेन तृतीयेयमवसेयेति। विशे०।

तदेवं मन.प्रभृति त्रिविधं करणं व्याख्याय प्रस्तुतयोजनामाह-

तेण तिविहेण मनसा, वाया काएण किं तयं तिविहं।
पुव्वाहिगयं जोग, न करेमिच्चाइ सावज्जं ॥ ३५२९ ॥

तेन यथोक्तस्वरूपेण त्रिविधेन करणेन—मनसा वाचा कायेन मनो-वाक्-कायलक्षणेनेत्यर्थ। किम्? अत आह— तकं पूर्वाधिकृतं त्रिविधं सावद्यं योगं न करोमीत्यादि संबध्यत-'न करेमि, न कारवेमि, करंतं पि अरणं ण समणुजाणामि' इति संबध्यत इत्यर्थ।

अथवा, अन्यथा संबन्धयन्नाह-

पुव्वं व जमुद्दिट्ठं तिविहं तिविहेण तत्थ करणस्स।
तिविहत्तणं विवरीयं, मणेण वायाए काएणं ॥३५३०॥
तिविहमियाणिं जोगं, पच्चक्खेयमणुभासए सुत्तं।
किं पुणरुक्कमिऊणं, जोगं करणस्स निद्देसो? ॥३५३१॥

तो न जहुद्देसं चिय, निद्देसो भण्णए निसामेहि।
जोगस्स करणतंतो-वदरिसणत्थं विवज्जासो ॥३५३२॥
देसियमेवं जोगो, करणवसो नियमप्पहाणो त्ति।
तब्भावे भावाओ, तदभावे वप्पभावाओ ॥ ३५३३ ॥

अथवा—पूर्वं सूत्रे यदुद्दिष्टं 'त्रिविधं त्रिविधेन' इति, तत्र करणस्य त्रिविधत्वम्—'मणेणं, वायाए, काएणं' इति सूत्रगतेनैवावयवेन विवृतं व्याख्यातमिति। इदानीं तु त्रिविधं प्रत्याख्येयं योगं सूत्रमनुभाषते—विवृणोति-'न करेमि, न कारवेमि' इत्यादिनैव सूत्रावयवेन। अत्राह पर.—ननु यद्येवम्, तर्हि किं पुन कारणम्, येन योगमुत्क्रम्यातिलङ्घ्य करणस्य प्रथमं निर्देशः कृत.? । उद्देशकाले हि प्रथमं 'त्रिविधम्' इत्युद्देशाद् योग एव प्रथममुद्दिष्ट, तदनन्तरं 'त्रिविधेन' इत्यभिधानात् पश्चात् करणस्योद्देशः कृत.। एवं च सति 'यथोद्देशं निर्देश' इति न्यायादिह निर्देशोऽपि प्रथमं योगस्य, पश्चात् करणस्य प्राप्नोति, तद्यथा—'न करेमि, न कारवेमि करंतं पि अरणं ण समणुजाणामि मणेणं वायाए काएणं' इति। न चैवं निर्दिष्टम्, व्यत्ययाभिधानादिति। 'तो' त्ति-ततो न यथोद्देशमेव निर्देशोऽत्र संजात, तत् किमत्र कारणमिति वाच्यम्? । गुरुराह-निशमय-आकर्णय-भण्यतेऽत्र कारणम्-करणादिलक्षणस्य योगस्य करणतन्त्रोपदर्शनार्थं मनो-वाक्-कायलक्षणकरणायत्ततोपदर्शनार्थमयं व्यत्यास. कृत इति। एतदेव भावयति—देशितमुपदिष्टमेवं व्यत्यासकरणेन भगवता सूत्रकृता—योऽयं करणकरणादिव्यापारलक्षणो योग स मन प्रभृतिकरणवशस्तदायत्त इति नियतम्-निश्चितं स्वयमप्रधान, तद्भावे-करणभाव एव भावात्, तदभावेऽपि च-करणाभावेऽवश्यमभावादिति।

किमिति योग करणभाव एव भवति, तदभावे तु न भवति? इत्याह—

तस्स तदाधाराओ, तक्कारणओ य तप्परिणईओ।
परिणंतुरणत्थंतर-भावाओ करणमेव तओ ॥३५३४॥

तस्य—योगस्य तदाधारत्वात्—करणाधारत्वात्, तथा-तद्—मन प्रभृति करणमेव कारणं यस्य स तत्कारणस्तद्भावस्तत्त्वं तस्मात्, कारणत्वात् तस्य योगस्य, तथा-तत्परिणतित्वात्-करणपरिणतिरूपत्वात्-तस्य, तथा, परिणन्तु करणस्याऽनर्थान्तरत्वादनन्यत्वात् तस्य, यत करणमेव तकोऽसौ योगः, ततस्तदात्मकत्वात् तद्भाव एव भवति, तदभावे तु न भवति। आह—यद्येवम्, उद्देशोऽप्येवं कस्माद् न कृत.? । उच्यते—योगस्यापि प्रत्याख्येयत्वेन प्राधान्यस्यापनार्थमिति। तदेवं योगस्य करणात्मकत्वं दर्शितम्।

अथ करणयोगयो. पुन. समुदितयोर्जीवात्मकत्वं दर्शयन्नाह—

एत्तो च्चिय जीवस्स वि, तम्मयया करण-जोगपरिणामा।
गम्मइ नयंतराओ,कयाइ समए जओऽभिहियं॥३५३५॥

यत एव परिणन्तु परिणामोऽनर्थान्तरमुक्तम्, अत एव जीवस्यापि तन्मयता-स्वपरिणामरूपकरणयोगात्मता ग-

केयते । कुत इत्याह—'करणजोगपरिणाम' त्ति करणं च योगश्च करण-योगौ तौ परिणाम:—स्वभावौ यस्यासौ करणयोगपरिणामस्तद्भावस्तत्त्वं तस्मात् करणयोगपरिणामत्वाज्जीवस्य । स हि करण-योगपरिणामेन परिणमति । परिणामश्च परिणन्तुरनर्थान्तरम् । अत. करणयोगात्मता जीवस्य गम्यते , कदाचित् कथञ्चिद् नयान्तराद् मिश्रयलक्षण नयान्तरमाश्रित्येति , अत. समये सिद्धान्तेऽभिहितम् ।

किम् ? इत्याह—

आया चेव अहिंसा, आया हिंस त्ति निच्छओ एस ।
जो होइ अप्पमत्तो, अहिंसओ हिंसओ इयरो ॥२५३६॥

इह आत्मा मन.प्रभृतिना करणेन हनन-घातना-ऽनुमतिलक्षणा हिंसां तन्निवृत्तिरूपामहिंसा च करोतीति व्यवहारः । अस्या च गाथाया निश्चयनयमतेन आत्मैव हननादिलक्षणा हिंसा , स एव च तन्निवृत्तिरूपाऽहिंसेत्युक्तम् । तदनेनात्मन. करणस्य योगलक्षणस्य कर्मणश्चैकत्वमुक्तं भवतीति ।

अत्र परप्रेर्यमाशङ्क्य परिहरन्नाह—

आहेगत्ते कत्ता, कम्मं करणं ति को विभागोऽयं ।
अएइ पज्जायंतर-विसेसणाओ न दोसो चि ॥२५३७॥

आह पर.—नन्वेवं त्रितयस्याप्येकत्वे कर्ता, कर्म , करणं चेति को विभाग ?—को भेदः ? । भण्यतेऽत्रोत्तरम्—पर्यायान्तरेण विशेषणे पर्यायान्तरविशेषणे तस्माददोष । इदमुक्तं भवति—एक एव कर्ताऽऽत्मा व्यतिरिक्तै. कथञ्चिद् भिन्नै. कर्म-करणादिपर्यायान्तरैर्विशिष्यत इति नोक्तदोष इति ।

पूर्वं भावितमपीदं पुनरपि स्मारयन्नाह—

एक्कं पि सव्वकारग-परिणामाणन्नभावयामेइ ।
जया नाणाणन्नो, जह विन्नेयाइपरिणामं ॥ २५३८ ॥

एकमपि घटादिकं वस्तु सर्वेकारकपरिणामलक्षणमन्यान्यभावतम्-अन्यान्यरूपतामेति, यथा ज्ञाता जीवो ज्ञानानन्य. सन् विज्ञेयादिपरिणाममेति। स एव हि स्वज्ञान उपयुज्यमान' कर्ता , करणभूतज्ञानानन्यत्वात् स एव च करणं , स्वयं संवेद्यमानस्तु स एव विज्ञेय इति सविस्तरेण प्रागुक्तमिति ।

ननु 'सर्वं सावद्यं योगं प्रत्याख्यामि ' इत्युक्तम् , क पुनरसौ सावद्यो योग ? इत्याह—

स य सावज्जो योगो, हिंसाईओ तयं सयं सव्वं ।
न करेमि न कारेमि य, न याणुजाणे करंतं पि ।२५३६।

स च सावद्यो योगो हिंसा-ऽनृतस्तेयादिको मन्तव्य' तकं सर्वमपि स्वयं न करोमि , न कारयाम्यन्यै , एवं नानुजानामि कुर्वन्तमपीति । विशे०। आ० म०। आ० चू० । सामायिकसूत्रसङ्ग्रह , तत्र ' करेमि भंते ! सामाइयं ' ति पंच समिईओ गहिआओ, 'सव्वं सावज्जं जोगं पच्चक्खामि ' त्ति तिरिण गुत्तीओ गहियाओ, एत्थ समिईओ पवत्तणे निग्गहे य गुत्तीओ त्ति, पयाओ अट्ठ पवयणमायाओ जाहिं सामाइयं चोद्दसपुव्वाणि मायणि,माउगाओ त्ति मूल भणियं ति होइ "। इहैव प्राय सूत्रस्पर्शनिर्युक्तिचक्रव्यतायां उक्तत्वात् मध्यग्रहणे च तुलादण्डन्यायेनाऽऽद्यन्तयोरप्याक्षेपादिदमाह-' सुत्तप्फासियणिज्जु-त्ति वित्थरत्थो गओ एवं ' ति-सूत्रस्पर्शनिर्युक्तिविस्तरार्थो गत', एवम्-उक्तेन प्रकारेणेति गाथार्थ ।

साम्प्रतं सूत्र एवातीतादिकालग्रहणं त्रिविधमुक्तमिति दर्शयन्नाह—

सामाइअं करेमी, पचक्खामी पडिकमामि त्ति ।
पच्चुप्पन्नमणागय-अईअकालाण गहणं तु ॥१०४६॥

सामायिक करोमि, तथा प्रत्याख्यामि सावद्य योगमिति तथा प्रतिक्रमामीति प्राक्कृतस्य. इदं हि यथासङ्ख्यमेव प्रत्युत्पन्नानागतातीतकालाना ग्रहणमिति, उक्त च-'अईय णिंदइ पडुप्पन्नं संवरेइ, अणागय पच्चक्खाइ' त्ति गाथार्थः ॥१०४६॥ साम्प्रतं तस्य भदन्त ! प्रतिक्रमामीत्येतद् व्याख्यायते-तत्र 'तस्य' त्वधिकृतो योग' संबध्यते, ननु च प्रतिक्रमामीत्यस्या क्रियाया सोऽधिकृतो योग कर्म, कर्मणि च द्वितीया विभक्तिरतस्तमित्यभिधेये तस्येत्यभिधीयते किमर्थमिति ?, आह—प्रयोजनार्थं षष्ठी विवक्षात प्रयुक्ता सम्बन्धलक्षणा, अवयवलक्षणा वा, योऽसौ योगस्त्रिकालविषयस्तस्यातीत सावद्यमंशमवयवं प्रतिक्रमामि न शेषं वर्तमानमनागतं वा । केचित् पुनरविभागज्ञा अविशिष्टमेव सामान्य योग सम्बन्धयन्ति, तन्न युज्यते, अविशिष्टस्य त्रिकालविषयस्य प्रतिक्रमणप्रयोजनाभावात् , ग्रन्थगुरुत्वापत्तेश्च अविशिष्टमपि सवध्य पुनर्विशेषोऽवस्थापनीयस्त—स्त्वद् इति ग्रन्थगुरुता । यदेतत् प्रतिक्रमणमेतत् प्राय—श्चित्तमध्ये पठितमत प्रायश्चित्तमासेवितेऽतीतविषयमिति गतत्वाददतीतप्रतिक्रमणमिति न वक्तव्यम् , इह पुनरुक्तत्वप्रसङ्गात् , यस्मादस्य प्रतिक्रमामीतिशब्दस्य कर्मणा भवितव्यमवश्यं, तच्च भूत सावद्ययोग मुक्त्वा नान्यत् कर्म भवितुमर्हति, यस्मात्तस्येत्यवयवलक्षणया षष्ठ्या सम्बन्ध. ।

आह—यद्येवं पुनरुक्तादिभयादभिधीयते तत इदमपरमाशङ्कापदमिति दर्शयति—

तिविहेणं ति न जुत्तं, पडिपयविहिणा समाहिअं जेण ।
अत्थविगप्पणयाए,गुणभावणय त्ति को दोसो? ।१०४७।

' त्रिविधं त्रिविधेन ' इत्यत्र त्रिविधेनेत्ययुक्तमिति, अत आह—प्रतिपदविधिना समाहितं येन , यस्मात् प्रतिपदमभिहितमेव, मनसा वाचा कायेन ति । अत्रोच्यते, अर्थविकल्पनया—गुणभावनयेति वा को दोष ? एतदुक्तं भवति—अर्थविकल्पसङ्ग्रहार्थं न पुनरुक्तम् । अथवा—गुणभावना पुन पुनरभिधानाद्भवतीति न दोष । अथवा—मनसा वाचा कायेनेत्यभिहिते प्रतिपद न करोमि, न कारयामि, नानुजानामीति । ' यथासङ्ख्यमनुदेश समानाना ' मिति यथासङ्ख्यक्रमनिष्टं मा प्रापदिति त्रिविधेनेत्यकमुच्यते त्रिविधमित्यप्राप्त्ययमेव प्राय परिहार इति गाथार्थ ॥१०४७॥ इत्यलं प्रसङ्गेन । प्रकृतं प्रस्तुम —' तस्य भदन्त ! प्रतिक्रमामी ' इत्यत्र भदन्त पूर्ववद् आनिचारनिवृत्तिक्रियाभिमुखश्च तद्विशुद्धवर्धमानस्मयम इति अत्राऽऽह—ननु पूर्वमुक्त एव भदन्त स पश्चानुवर्तिष्यते, एवमर्थ नार्थो

प्रयुक्त इत्यत किं पुनरनेनेति ?, अत्रोच्यते-अनुवर्तनार्थमेव अयं पुनरनुस्मरणया प्रयुक्तः, यतः परिभाषा-अनुवर्तन्ते च नाम विधयो, न चानुवर्तनादेव भवन्ति, किं, तर्हि ?, यत्नाद्भवन्ति, स चायं यत्न -पुनरुच्चारणमिति। अथवा-सामायिकक्रियाप्रत्यर्पणवचनोऽयं भदन्तशब्द, अनेन चैतत् ज्ञापितं भवति-सर्वक्रियावसाने गुरो प्रत्यर्पणं कार्यमिति, उक्तं च भाष्यकारेण—, सामाइयपच्चप्पण-वयणोवाऽयं भदंतसद्दो त्ति। सव्वकिरियावसाणे, भणियं पच्चप्पणमेणं ॥ १ ॥' इति कृतं प्रसङ्गेन। प्रतिक्रमामीत्यत्र प्रतिक्रमणं-मिथ्यादुष्कृतमभिधीयते। तच्च द्विधा-द्रव्यतो भावतश्च, तथा चाह निर्युक्तिकारः-

दव्वम्मि निण्हगाई, कुलालमिच्छंति तत्थुदाहरणं।
भावम्मि तदुवउत्तो, मिआवई तत्थुदाहरणं ॥१०४८॥

द्रव्य इति द्वारपरामर्शः, द्रव्यप्रतिक्रमणं तदभेदोपचारात् तद्वदेवोच्यते। अत एवाह-निह्नवादि, आदिशब्दाद्-अनुपयुक्तादिपरिग्रहः, कुलालमिथ्यादुष्कृतं तत्रोदाहरणं, तच्चेदम्-" एगम्मि कुंभकारस्स कुडीए साहुणो ठिया, तत्थेगो चेल्लओ तस्स कुंभगारस्स कोलालाणि अंगुलिधणुहएणं पाहाणएहिं विंधइ, कुंभगारेण पडिजग्गिऊं दिट्ठो, भणिओ य-कीस मे कोलालाणि काणेसि ?, खुड्डओ भणइ-मिच्छा मि दुक्कडं ति एवं सो पुणोऽवि विंधिऊण मिच्छा मि दुक्कडं ति, पच्छा कुंभगारेण तस्स खुड्डगस्स कन्नामोडओ दिन्नो, सो भणइ-दुक्खाविओऽहं, कुंभगारो भणइ-मिच्छा मि दुक्कडं, एवं सो पुणो पुणो कन्नामोडयं दाऊण मिच्छा दुक्कडं ति करेइ। पच्छा चेल्लगो भणइ-अहो सुंदरं मिच्छा मि दुक्कडं ति, कुंभगारो भणइ-तुज्झ वि एरिसं चेव मिच्छा दुक्कड ति, पच्छा ठिओ विंधियव्वस्स। 'जं दुक्कडं ति मिच्छा, तं चेव णिसेवई, पुणो पावं। पच्चक्खमुसावाई, मायाणियडिप्पसंगो य ॥ १ ॥ एयं दव्वपडिक्कमणं॥ भावप्रतिक्रमणं प्रतिपादयति—भाव इति द्वारपरामर्श एव, 'तदुपयुक्त एव' तस्मिन्—अधिकृते शुभव्यापारे उपयुक्तस्तदुपयुक्तो यत् करोति, मृगापतिः तत्रोदाहरणं तच्चेदम्-भगवं वद्धमाणसामी कोसंबीए समोसरिओ, तत्थ चंदसूरा भगवंतं वंदगा सविमाणा ओइण्णा, तत्थ मियावई अज्जा उदयणमाया दिवसो त्ति काउ चिरं ठिया, सेसाओ साहुणीओ तित्थयरं वंदिऊण सनिलयं गयाओ। चंदसूरा वि तित्थयरं वंदिऊण पडिगया, सिग्घमेव वियालीभूयं, मियावई संभंता गया अज्जचंदणासगासं। ताओ य ताव पडिक्कंताओ, मियावई आलोएउं पवत्ता, अज्जचंदणाए भण्णइ-कीस अज्जे! चिरं ठियासि ?, न जुत्त नाम तुमं उत्तमकुलप्पसूयाए एगागिणीए चिरं अच्छिउं ति। सा सब्भावेण मिच्छा मि दुक्कडं ति भणमाणी, अज्जचंदणाए पाएसु पडिया, अज्जचंदणा य ताए वेलाए संथारं गया, ताहे निद्दा आगया, पसुत्ता। मियावईए वि तिव्वसंवेगमावण्णाए पायपडियाए चेव केवलणाणं समुप्पण्णं। सप्पो य तेणंतेणमुवागओ। अज्जचंदणाए य संथारगाओ हत्थो ओलंबिओ मियावईए मा खज्जिहिति त्ति सो हत्थो संथारगं चडाविओ। सा विबुद्धा भणइ—किमेयं ति ?, अज्ज वि तुमं अच्छसि त्ति मिच्छा मि दुक्कडं, निद्दापमाएणं ण उट्ठावियासि। मियावई भणइ—एस सप्पो मा भे खाहिइ त्ति अतो हत्थो चडाविओ। सा भणइ—कहिं ? सो, सा दाएइ, अज्जचंदणा अपेच्छमाणी भणइ-अज्जे! किं ते अइसओ ?, सा भणइ—आमं, तो किं छाउमत्थिओ केवलिओ त्ति ?, भणइ—केवलिओ, पच्छा अज्जचंदणा पाएसु पडिऊण भणइ—मिच्छा मि दुक्कडं ति। केवली आसाइओ त्ति, इयं भावपडिक्कमणं। एत्थ गाहा—'जइ य पडिक्कमियव्वं, अवस्स काऊण पावयं कम्मं। तं चेव न कायव्वं, ता होइ पए पडिक्कंतो ॥१॥' त्ति गाथार्थः ॥१०४८॥ इह च प्रतिक्रमामीति भूतात्-सावद्ययोगान्निवर्तेऽहमित्युक्तं भवति, तस्माच्च निवृत्तिर्यत्तदनुमतेर्विरमणमिति, तथा निन्दामीति—गर्हामि, अत्र निन्दामीति जुगुप्सेत्यर्थः गर्हामीति च तदेवोक्तं भवति, एवं तर्हि को भेद एकार्थत्वे ?, उच्यते—सामान्यार्थाभेदेऽपीष्टविशेषार्थो गर्हाशब्द, यथा—सामान्ये गमनार्थे गच्छतीति गौः, सर्पतीति सर्पः। तथाऽपि गमनविशेषोऽवगम्यते, शब्दार्थादेव, एवमिहापि निन्दागर्हयोरिति। तं चार्थविशेषं दर्शयति—

सचरित्तपच्छयावो, निंदा तीए चउक्कनिक्खेवो।
दव्वे चित्तयरसुआ, भावेसु बहू उदाहरणा ॥ १०४९॥

सचरित्रस्य सत्त्वस्य पश्चात्तापो निन्दा, स्वप्रत्यक्षं जुगुप्सेत्यर्थः, उक्तं च—" आत्मसाक्षिकी निन्दा " 'तीए चउक्कनिक्खेवो' त्ति-तस्यां तस्या वा नामादिभेदचतुष्को निक्षेप इति, तत्र नामस्थापने अनादृत्याऽऽह—'दव्वे चित्तकरसुया, भावेसु बहू उदाहरण' त्ति-द्रव्यनिन्दायां चित्रकरसुतोदाहरणं, सा जहा रण्णा परिणीया अप्पाणं णिंदियाइय त्ति। भावनिन्दायां सुबहून्युदाहरणानि योगसंग्रहेषु वक्ष्यन्ते, लक्षणं पुनरिदम्—'हा! दुट्ठु कयं हा! दु-ट्ठु कारियं दुट्ठु अणुमयं इ त्ति। अंतो अंतो डज्झइ, पच्छानावेण वेवंतो ॥ १ ॥ ' त्ति गाथार्थः।

गरहा वि तहा जाईं, अमेव नवरं परप्पगासणया।
दव्वम्मि मरुअनायं, भवेसु बहू उदाहरणा ॥१०५०॥

गर्हाऽपि तथाजातीयैवेति—निन्दाजातीयैव, नवरमेतावान् विशेषः—परप्रकाशनया गर्हा भवति, या गुरोः प्रत्यक्षं जुगुप्सा सा गर्हेति, " परसाक्षिकी गर्हे " ति वचनाद्, असावपि चतुर्विधैव, तत्र नामस्थापने अनादृत्यैवाह—'दव्वम्मि मरुअणायं भावेसु बहू उदाहरण' त्ति-तत्र द्रव्यगर्हायां मरुकोदाहरणं, तच्चेदम्—आणंदपुरे मरुओ एहुसाए समं संवासं काऊण उवज्झायस्स कहेइ, जहा-सुविणए एहुसाए समं संवास गओ मि त्ति। भावगर्हाए साधू उदाहरणं—'गतूण गुरुसगासो, काऊण य अंजलिं विणयमूलं। जइ अप्पणो तह परे, जाणावण एस गरहा उ ॥ १ ॥ ' त्ति गाथार्थः ॥ १०४९ ॥ तत्र निन्दामि गर्हामीत्यत्र गर्हा जुगुप्सोच्यते, तत्र किं जुगुप्से ?, 'आत्मानम्' अतीतसावद्ययोगकारिणमश्लाघ्यम्। अथवा-अत्राणम्-अतीतसावद्ययोगत्राणविरहितं जुगुप्से, सामायिकेनाधुना त्राणमिति। अथवा—'अत' सातत्यगमने, अतनमतीतं-सावद्ययोगं सततभवनप्रवृत्तं निवर्तयामीति; व्युत्सृजामीति-

त्रिविधार्थो विशेषार्थो वा विशब्द, उच्छब्दो भृशार्थः, सृजामि; त्यजामीत्यर्थ, विविधं विशेषेण वा भृशं त्यजामि-व्युत्सृजामि, अतीतसावद्ययोगं व्युत्सृजामीति वा, अवशब्दोऽथ शब्दस्यार्थे, विशेषणाथ सृजामीत्यर्थ, नन्वेवं सावद्ययोगपरित्यागात् करोमि भदन्त! सामायिकमिति सावद्ययोगनिवृत्तिरुच्यते, तस्य व्युत्सृजामि शब्दप्रयोगे वैपरीत्यमापद्यते, तन्न, यस्मात् मासादिविरमणक्रियानन्तरं व्युत्सृजामीति प्रयुक्ते तद्विपक्षत्यागो मासभक्षणनिवृत्तिरभिधीयते, एवं सामायिकानन्तरमपि प्रयुक्ते व्युत्सृजामिशब्दे तद्विपक्षत्यागोऽवगम्यते, स च तद्विपक्षः सुगम एवेत्यत्र बहु वक्तव्यं तत्तु नोच्यते, ग्रन्थविस्तरभयाद्, गमनिकामात्रप्रधानत्वात् प्रारम्भस्य।

साम्प्रतं व्युत्सर्गप्रतिपादनायाऽऽह ग्रन्थकारः—

**दव्वविउस्सग्गे खलु, पसन्नचंदो हवे उदाहरणं।**
**पडिआगयसंवेगो, भावम्मि वि होइ सो चेव ॥१०५१॥**

इह द्रव्यव्युत्सर्गः-गणोपधिशरीरान्नपानादिव्युत्सर्गः अथवा द्रव्यव्युत्सर्गः आर्तध्यानादिध्यायिनः कायोत्सर्ग इति। अत एवाऽऽह-द्रव्यव्युत्सर्गे खलु प्रसन्नचन्द्रो भवत्युदाहरणम्, भावव्युत्सर्गस्त्वज्ञानादिपरित्यागः। अथवा—धर्मशुक्लध्यायिनः कायोत्सर्ग एव, तथा चाऽऽह-प्रत्यागतसंवेगो भावेऽपि भावव्युत्सर्गेऽपि भवति स एव-प्रसन्नचन्द्र उदाहरणमिति गाथाक्षरार्थ ॥१०५१॥ भावार्थः कथानकादवसेयः। तच्चेदम्-"खिइपइट्ठिए णयरे पसन्नचंदो राया, तत्थ भगवं महावीरो समोसढो, तओ राया धम्मं सोऊण संजायसंवेगो पव्वइओ, गीयत्थो जाओ। अण्णया जिणकप्पं पडिवज्जिउकामो सत्तभावणाए अप्पाणं भावेइ। तेण कालेणं रायगिहे णयरे मसाणे पडिमं पडिवन्नो, भगवं च महावीरो तत्थेव समोसढो, लोगोऽवि वंदगो णीइ। दुवे य वाणियगा खिइपइट्ठियाओ तत्थेव आयाया, पसन्नचंदं पासिऊण एगेण भणिय-एस अम्हाणं सामी रायलच्छि परिच्चइय तवसिरिं पडिवन्नो। अहो से धन्नया, बितिएण भणियं-कुओ एयस्स धण्णया?, जो असंजायबलं पुत्तं रज्जे ठविऊण पव्वइओ, सो तवस्सी दाइएहिं परिभविज्जइ, णयरं च उत्तिमक्खयं पवण्णं ताव, एवमणेण बहुओ लोगो दुक्खं ठविओ त्ति अदट्ठव्वो एसो। तस्स तं सोऊण कोवो जाओ, चिंतिय चऽणेण-को मम पुत्तस्स अवकरइ त्ति?, नूणममुंगो, तं किं तेण?, एयावत्थगओ णं वावाएमि, मोणससगामेण रोद्दझाणं पवन्नो, हत्थिणा हत्थिं विवाएइ त्ति, विभासा। एत्थंतरे सेणिओ भगवं वंदओ णीइ, तेण वि दिट्ठो वंदिओ य अणेण ईसिं पि ण य निज्झाइतओ। सेणिएण चिंतियं-सुक्कज्झाणोवगओ एसं भगव, ता एरिसम्मि झाणे कालगयस्स का गई भवइ त्ति भगवंतं पुच्छिस्सं, तओ गओ वंदिऊण पुच्छिओऽणेण भगवं-जम्मि झाणे ठिओ मए वंदिओ पसन्नचंदो तम्मि मयस्स कहिं उववाओ भवइ?, भगवया भणियं-अहे सत्तमाए पुढवीए। तओ सणिएण चिंतियं हा! किमेवं ति?, पुणो पुच्छिस्सं। एत्थंतरम्मि अ पसन्नचंदस्स माणसे संगामे पहाणनायगेण सहावडियस्स असिसत्तिचक्ककप्पणिप्पमुहाइं खयं गयाइं पहरणाइं, तओऽणेण सिरत्ताणेण वावाएमि त्ति परामुसियमुत्तिमंगं, जाहे लोयं कयं ति, तओ संवेगमावण्णो महया विसुज्झमाणपरिणामेण अत्ताणं निंदिउं पयत्तो, समाहियं चऽणेण पुणरवि सुक्कं झाणं। एत्थंतरम्मि सेणिएण वि पुणोऽवि भगवं पुच्छिओ--भगवं! जारिसे झाणे संपइ पसन्नचंदो वट्टइ तारिसे मयस्स कहिं उववाओ?, भगवया भणियं--अणुत्तरसुरेसुं ति, तओ सेणिएण भणियं पुव्वं किमन्नहा परूवियं उआहु मया अन्नहा अवगच्छियं-ति?, भगवया भणियं-न अन्नहा परूवियं, सेणिएणं भणियं-किं वा कहं व त्ति?, तओ भगवया सव्वो वुत्तंतो साहिओ। एत्थंतरम्मि य पसन्नचंदसमीवे दिव्वो देवदुंदुहिसणाहो महन्तो कलयलो उट्ठाइओ, तओ सेणिएण भणियं भगवं! किमेयं ति?, भगवया भणियं-तस्सेव विसुज्झमाणपरिणामस्स केवलणाणं समुप्पण्णं, तओ से देवा महिमं करेंति। एस एव दव्वविउस्सग्ग-भावविउस्सग्गेसु उदाहरणं।"

साम्प्रतं समासौ यथाभूतोऽस्य कर्ता भवति सामायिकस्य तथाभूत संक्षेपतोऽभिधित्सुराह—

**सावज्जजोगविरओ, तिविहं तिविहेण वोसिरिअ पावं।**
**सामाइअमाईए, एसोऽणुगमो परिसमत्तो ॥ १०५२ ॥**

सावद्ययोगविरत, कथमित्याह--त्रिविधं त्रिविधेन व्युत्सृज्य पापं न तु सांपत्त एवेत्यर्थ, पाठान्तरं वा सावद्ययोगविरत सन् त्रिविधं त्रिविधेन व्युत्सृजति पापमेव्यं, सामायिकादौ--सामायिकारम्भसमये एषोऽनुगमः परिसमाप्त। अथवा-सामायिकादौ सूत्र इति, आदिशब्दात्-सर्वमित्याद्यवयवपरिग्रह इति गाथार्थ ॥१०५२॥ उक्तोऽनुगम।

सम्प्रति नया, ते च नैगमसङ्ग्रहव्यवहारऋजुसूत्रशब्दसमभिरूढैवम्भूतभेदभिन्नाः खल्वोघतः सप्त भवन्ति, स्वरूपं चैतेषामधः सामायिकाध्ययने न्यक्षेण प्रदर्शितमेवेति नेह प्रतन्यते, इह पुन स्थानाशून्यार्थमेते ज्ञानक्रियानयद्वयान्तर्भावद्वारेण समासतः प्रोच्यन्ते, ज्ञाननयः क्रियानयश्च। तथा चाऽऽह--

**विज्जाचरणनएसुं, सेससमोआरणं तु कायव्वं।**
**सामाइअनिज्जुत्ती, सुभासिअत्था परिसमत्ता ॥१०५३॥**

'विज्जाचरणनएसु' ति--विद्याचरणनययो, ज्ञानक्रियानययोरित्यर्थः, 'सेससमोयारणं तु कायव्वं' ति-शेषनयसमवतार कर्तव्य, तुशब्दो विशेषणार्थ। किं विशिनष्टि?—तौ च वक्ष्यमाणौ, सामायिकनिर्युक्ति सुभाषितार्था परिसमाप्तेति प्रकटार्थमिति गाथार्थ ॥१०५३॥

साम्प्रतं स्वद्वार एव शेषनयान्तर्भावेनाधिकृतमहिमानौ अनन्तरोपन्यस्तगाथागततुशब्देन चावश्यवक्ष्यतया विहितौ ज्ञानचरणनयावुच्येते, तत्र ज्ञाननयदर्शनमिदं--ज्ञानमेव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणं, युक्तियुक्तत्वात्। तथा चाऽऽह—

**नायम्मि गिण्हिअव्वे, अगिण्हिअव्वम्मि चेव अत्थम्मि।**
**जइ अव्वमेव इअ जो, उवएसो सो नओ नाम ॥१०५४॥**

'नायम्मि' त्ति-ज्ञाते सम्यक्परिच्छिन्ने 'गिण्हियव्वे' त्ति ग्रहीतव्ये-उपादेये 'अगिण्हियव्वम्मि' त्ति-अग्रहीतव्ये, अनु-

पादेये हेय इत्यर्थः; चशब्दः खल्भयोर्ग्रहीतव्याऽग्रहीतव्ययोर्ज्ञातत्वानुकर्षणार्थः, उपेक्षणीयसमुच्चयार्थो वा, एवकारस्त्ववधारणार्थः, तस्य चैवं व्यवहितः प्रयोगो द्रष्टव्यः ज्ञात एव ग्रहीतव्ये, तथा-अग्रहीतव्ये-तथोपेक्षणीये च, ज्ञात एव नाज्ञाते। 'अत्थम्मि' त्ति-अर्थे—ऐहिकामुष्मिके, तत्रैहिकः ग्रहीतव्य -स्रक्चन्दनाङ्गनादिः, अग्रहीतव्यो-विषशस्त्रकण्टकादिः, उपेक्षणीय -तृणादिः। आमुष्मिको ग्रहीतव्य -सम्यग्दर्शनादि, अग्रहीतव्यो-मिथ्यात्वादिः, उपेक्षणीयो-विवक्षयाऽभ्युदयादिरिति, तस्मिन्नर्थे 'जइअव्वमेव' त्ति-अनुस्वारलोपाद् यतितव्यम्, एवम्—अनेन क्रमेणैहिकामुष्मिकफलप्राप्त्यर्थिना सत्त्वेन यतितव्यमेव प्रवृत्त्यादिलक्षणः प्रयत्न कार्य इत्यर्थः, इत्थं चैतदङ्गीकर्तव्यं, सम्यग्ज्ञाने प्रवर्तमानस्य फलविसंवाददर्शनात्। तथा चान्यैरप्युक्तम्—"विज्ञप्तिः फलदा पुंसां, न क्रिया फलदा मता। मिथ्याज्ञानात् प्रवृत्तस्य, फलासंवाददर्शनात्॥ १॥" तथा-आमुष्मिकफलप्राप्त्यर्थिनाऽपि ज्ञान एव यतितव्यम्, तथा चागमोऽप्येवमेव व्यवस्थित. यत उक्तम्—"पढमं णाणं तओ दया, एवं चिट्ठइ सव्वसंजए। अन्नाणी किं काहिति, किं वा णाहिति छेय पावगं?॥ १॥" इतश्चैतदेवमङ्गीकर्तव्यं यस्मात्तीर्थकरगणधरैरगीतार्थानां केवलानां विहारक्रियाऽपि निषिद्धा, तथा चागमः—"गीयत्थो य विहारो, बितिओ गीयत्थमीसिओ भणिओ। एत्तो तइयविहारो, णाणुण्णाओ जिणवरेहिं॥ १॥" न यस्मादन्धेनान्धः समाकृष्यमाणः सम्यक् पन्थानं प्रतिपद्यत इत्यभिप्रायः। एवं तावत् क्षायोपशमिकं ज्ञानमधिकृत्योक्तं, क्षायिकमप्यङ्गीकृत्य विशिष्टफलसाधकत्वं तस्यैव विज्ञेयं, यस्मादर्हतोऽपि भवाम्भोधितटस्थस्य दीक्षा प्रतिपन्नस्योत्कृष्टतपश्चरणवतोऽपि न तावदपवर्गप्राप्तिः संजायते यावज्जीवाजीवाद्यखिलवस्तुपरिच्छेदरूपं केवलज्ञानं नोत्पन्नमिति, तस्माज्ज्ञानमेव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणमिति स्थितम्। 'इति जो उवएसो सो नयो नामं' ति-इति-एवमुक्तेन न्यायेन य उपदेशो ज्ञानप्राधान्यख्यापनपरः स नयो नाम ज्ञाननय इत्यर्थः। अयं च चतुर्विधे सम्यक्त्वादिसामायिके सम्यक्त्वसामायिकश्रुतसामायिकद्वयमेवेच्छति, ज्ञानात्मकत्वादस्य, देशविरतिसर्वविरतिसामायिके तु तत्कार्यत्वात् तदायत्तत्वाच्चेच्छति, गुणभूते चेच्छतीति गाथार्थः॥ १०५४॥ उक्तो ज्ञाननयः अधुना क्रियानयावसरः, तद्दर्शनं चेदम्-क्रियैव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणं, युक्तियुक्तत्वात्, तथा चायमप्युक्तलक्षणमेव स्वपक्षसिद्धये गाथामाह-'णायंमि गिण्हियव्वे' त्यादि, अस्या क्रियानयदर्शनानुसारेण व्याख्या-ज्ञाते ग्रहीतव्ये, अग्रहीतव्ये चैव अर्थे ऐहिकामुष्मिकफलप्राप्त्यर्थिना यतितव्यमेव, न यस्मात् प्रवृत्त्यादिलक्षणप्रयत्नव्यतिरेकेण ज्ञानवताऽप्यभिलषितार्थावाप्तिर्दृश्यते। तथा चान्यैरप्युक्तम्-क्रियैव फलदा पुंसां, न ज्ञानं फलदं मतम्। यतः स्त्रीभक्ष्यभोगज्ञो, न ज्ञानात् सुखितो भवेत्॥ १॥" तथाऽऽमुष्मिकफलप्राप्त्यर्थिना क्रियैव कर्तव्या। तथा च-मुनीन्द्रवचनमप्येवमेव व्यवस्थितम्, यत उक्तम्-"चेइयकुलगणसंघे, आयरियाणं च पवयणसुए य। सव्वेसु वि तेण कयं, तवसंजममुज्जमंतेणं॥ १॥" इतश्चैतदेवमङ्गीकर्तव्यं य स्मात् तीर्थकरगणधरैः क्रियाविकलानां ज्ञानमपि विफलमेवोक्तम्, तथा चाऽऽगम—"सुबहुं पि सुयमहीयं, किं काहि चरणविप्पमुक्कस्स? । अंधस्स जह पलित्ता, दीवसयसहस्सकोडी वि॥ १॥" दृशिक्रियाविकलत्वात् तस्येत्यभिप्रायः, एवं तावत् क्षायोपशमिकं चारित्रमङ्गीकृत्योक्तं चारित्रं क्रियेत्यनर्थान्तरं, क्षायिकमप्यङ्गीकृत्य प्रकृष्टफलसाधकत्वं तस्या एव विज्ञेयम्, यस्मादर्हतोऽपि भगवतः समुत्पन्नकेवलज्ञानस्यापि न तावन्मुक्त्यवाप्तिः संजायते यावदखिलकर्मेन्धनानलभूता ह्रस्वपञ्चाक्षरोद्गिरणमात्रकालावस्थायिनी सर्वसंवररूपा चारित्रक्रिया नावाप्तेति, तस्मात् क्रियैव प्रधाना ऐहिकामुष्मिकफलप्राप्तिकारणमिति स्थितम्। 'इति जो उवएसो सो नओ नामं' ति-इति—एवमुक्तेन न्यायेन य उपदेश क्रियाप्राधान्यख्यापनपरः स नयो नाम; क्रियानय इत्यर्थः, अयं च सम्यक्त्वादौ चतुर्विधे सामायिके देशविरतिसर्वविरतिसामायिकद्वयमेवेच्छति क्रियात्मकत्वादस्य, सम्यक्त्वसामायिकश्रुतसामायिके तु तदर्थमुपादीयमानत्वादप्रधानत्वाच्चेच्छति, गुणभूते चेच्छतीति गाथार्थः॥ १०५४॥ उक्तः क्रियानयः। इत्थं ज्ञानक्रियानयस्वरूपं ज्ञात्वाऽविदिततदभिप्रायो विनेयः संशयापन्नः सन्नाह—किमत्र तत्त्वं?, पक्षद्वयेऽपि युक्तिसम्भवात्, आचार्य पुनराह-'सव्वेसि पि' गाहा। अथवा-ज्ञानक्रियानयमतं प्रत्येकमभिधायाधुना स्थितपक्षमुपदर्शयन्नाह—

सव्वेसिं पि नयाणं, बहुविहवत्तव्वयं निसामित्ता।
तं सव्वनयविसुद्धं, जं चरणगुणट्ठिओ साहू॥१०५५॥

सर्वेषामपि मूलनयानाम्, अपिशब्दात्—तद्भेदाना च नयानाम्-द्रव्यास्तिकादीनां बहुविधवक्तव्यतां सामान्यमेव विशेषा एव उभयमेव वाऽन्योन्यनिरपेक्षमित्यादिरूपाम्। अथवा-नामादीनां नयानां कः कं साधुमिच्छतीत्यादिरूपां निशम्य-श्रुत्वा तत् सर्वनयविशुद्धं-सर्वनयसम्मतं वचनं यच्चरणगुणस्थितः साधुः, यस्मात् सर्वनया एव भावनिक्षेपमिच्छन्तीति गाथार्थः। आव०।

'भंते' इत्यतिदेशयन्नाह—

भंति त्ति पुव्वभणियं,तेणं चिय भणइ किं पुणो भणियं।
सव्वत्थ सोऽणुवत्तइ,भणियं चादिप्पउत्तो त्ति॥३५६७॥
अणुवत्तणत्थमेव य, तग्गहणं नाणुवत्तणादेव।
अणुवत्तंते विघओ,जमिह कया किं तु जत्तेणं॥३५६८॥

'भंते' इति पदं पूर्वमेव भणित व्याख्यातम्, इति नेह व्याख्यायते तेनैव कारणेन-तेनैव हेतुना तर्हि परो भणति-यदि पूर्वमेवेदं भणितम्, तर्हि किं पुनरपीह भणितं सूत्रकृता?-ननु सर्वत्र सूत्रान्ते यावदनुवर्तते एवासौ, भणितं चान्यत्र-'आदौ प्रयुक्तोऽर्थः सर्वत्रानुवर्तते' इति। गुरुराह-सत्यमेतत्, सूत्रान्ते यावदनुवर्तनार्थमेव तस्य भदन्तशब्दस्य ग्रहणं तद्ग्रहणमाद्यौ कृतम्, केवलं नानुवर्तनादेव-नानुवर्तनमात्रादेव यस्माद्विधिकृता विधयोऽनुवर्तन्ते भवन्ति, किन्तु यत्नेन कृतेन ते भवन्ति, तथा चोक्तं परिभाषासु—

'अनुवर्तन्ते च नामविधयो न चानुवर्तनादेव भवन्ति, किं तर्हि ? यत्नाद् भवन्ति'। स चायं यत्नः, यत् तस्यानुस्मरणार्थं पुनरुच्चारणमिति ।

अथवा, पुनस्तद्ग्रहणे समाधानान्तरत्रयमाह—

अहवा समत्तसामा-इयकिरिओ तन्निसोहणत्थाए ।
तस्साइआरनिव-त्तणाइकिरियंतराभिमुहो ॥ ३५६९ ॥
जं च पुरा निद्दिट्ठं, गुरुं जहावासयाइँ सव्वाइं ।
आपुच्छिउं करिज्जा, तयणेण समत्थियं होइ ॥३५७०॥
सामाइयपच्चप्पण-वयणो वाऽयं भदंतसद्दो त्ति ।
सव्वकिरियावसाणे, भणियं पच्चप्पणमणेणं ॥३५७१॥

अथवा-समाप्तप्रस्तुतसामायिकप्रतिपत्तिक्रियस्तन्मालिन्यविशुद्धिहेतोस्तस्य सामायिकस्य येऽतिचारा-मालिन्यप्रकारास्तेषा यद् निवर्तनादिरूपं क्रियान्तरम्, आदिशब्दाद्-निन्दागर्हाक्रियान्तरपरिग्रहः, तदभिमुखः पुनरपि भदन्तशब्दमुच्चारयति विनेय इति शेषः । यच्चेहैव पुरा-पूर्वं निर्दिष्टं यथा गुरुमापृच्छ्य सर्वाण्यावश्यकानि कुर्याद् विनेयः । तदनेन पुनरपि भदन्तशब्दोच्चारणेन समर्थितं भवति । पूर्वं ह्यनेन भदन्तशब्दोच्चारणाद् गुरुमापृच्छ्य सामायिकावश्यकं प्रतिपन्नम् । इदानीं तु तदतीचारप्रतिक्रमणावश्यकं पुनरपि तदुच्चारणात् तमापृच्छ्य कुर्वता यथोक्तार्थं समर्थितो भवतीति । अहवा—"भवत पृष्ट्वा यत् पूर्वं कर्तुमारब्धं सामायिकं तदिदानीं कृतं—समर्थितं भदन्त ! मया, इत्येवं सामायिकक्रियाप्रत्यर्पणवचनोऽयं भदन्तशब्दः । अनेन च गुरुमापृच्छ्यारब्धानां सर्वासामपि क्रियाणामवसानं गुरोः प्रत्यर्पणं—निवेदनमवश्यं विधेयमित्येतद् भणितं भवति ।

अथ 'पडिक्कमामि' इत्यादिक्रियाव्याख्यानार्थमाह—

नेयं पडिक्कमामि, त्ति भूयसावज्जओ निवत्तामि ।
तत्तो य जा निवत्ती, तदणुमइओ विरमणं जं ॥३५७२॥
निंदामि त्ति दुगुंछे, गरिहामि तदेव तो कओ भेओ ? ।
भण्णइ सामण्णत्था, भेए इट्ठो विसेसत्थो ॥ ३५७३ ॥
जह गच्छइ त्ति गो स-प्पइ त्ति सप्पो समे वि गच्छत्थे ।
गम्मइ विसेसगमणं, तह निंदागरहणत्थाणं ॥३५७४॥

'प्रतिक्रमामि' इत्यस्य व्याख्यानं ज्ञेयम् । किम् ? इत्याह—'भूतसावद्ययोगाद् निवर्तेऽहम्' इति प्रेरकः पृच्छति-भूतसावद्ययोगस्यासेवितत्वात् का नामेदानीं ततो निवृत्तिः ?, इत्याह—यत् तदनुमतेर्विरमणं, न पुनस्तत्करण-कारणाभ्याम्, तयोरासेवितत्वेन विरमणायोगादिति । 'निन्दामि' इति कोऽर्थः ? "जुगुप्से-आत्मानमतीतसावद्ययोगकारिणम्" इति संबन्धं वक्ष्यति । 'गरहामि' इत्यनेनाप्येतदेवोक्तं जुगुप्स इति । आह—ततस्तर्हि कुतो निन्दा-गर्हयोरर्थतो भेदः, द्वयोरपि जुगुप्सार्थत्वात् ? । भण्यतेऽत्रोत्तरम्—सामान्यार्थाभेदेऽपि विशेषार्थो विशेषवदर्थाभिधायक इष्टो गर्हाशब्द इति । यथा गच्छतीति गौः, सर्पतीति सर्पः, इत्यनयोः समानेऽपि गत्यर्थे द्वयोरपि विशेषवदेव गमनं गम्यते-प्रतीयते तथा निन्दा-गर्हार्थयोरपि विशेषरूपत्वं वक्ष्यतीति ।

तदेवाह—

सप्पच्चक्खदुगंछा, तह निंदामि त्ति गम्मए समए ।
गुरुपच्चक्खदुगंछा, गम्मइ गरिहामि सद्देणं ॥३५७५॥

'तह' त्ति-यथा गो-सर्पयोर्गमनस्य सामान्येनाऽभेदेऽपि विशेषतो भेदो दृष्टस्तथा निन्दा—गर्हाभिधेयस्यापि जुगुप्सार्थस्य विशेषेणो भेदोऽस्ति, तथाहि—या स्वप्रत्यक्षाऽऽत्मसाक्षिकी जुगुप्सा सा समये सिद्धान्ते 'निन्दामि' इत्यनेन गम्यते-अवबुध्यते, या तु गुरुप्रत्यक्षा गुरुसाक्षिकी जुगुप्सा सा 'गर्हामि' इत्यनेन शब्देन गम्यत इति ।

अथवा—एकार्थयोरपि निन्दा—गर्हयोर्ग्रहणं भृशा-ऽऽदरार्थमिह न विरुध्यत इति दर्शयन्नाह—

एगत्थोभयगहणं, भिसादरत्थं च जमुदियं होइ ।
कुच्छामि कुच्छामि,तदेव निंदामि गरिहामि ॥३५७६॥
भिसमायरओ व पुणो,पुणो व कुच्छामि जमुदियं होई ।
पुणरुत्तमणत्थं वे-ह नाणुवाादादराईसुं ॥ ३५७७ ॥

एकार्थं च तदुभयं च निन्दा—गर्हालक्षणमेकार्थोभयं तस्य ग्रहणमेकार्थोभयग्रहणं, तदपि चेह भृशादरार्थं न विरुध्यते । ततश्च 'कुच्छामि कुच्छामि' इत्यनेन यदुक्तं भवति, 'निंदामि गरिहामि' इत्यनेनापि तदेवोक्तं भवतीति भृशमत्यर्थम्, आदरतो वा पुनः पुनरेव 'कुच्छामि' इति यदुक्तं भवति-इदमुक्तं भवतीत्यर्थः । न चेहानुवादादरादिषु पुनः पुनरपि प्रत्युक्तमपि वचः पुनरुक्तमनर्थकं वा भवतीति ।

अथ 'निंदामि गरिहामि' इत्यनयोः कर्मपदसंबन्धनार्थमाह—

किं कुच्छामऽप्पाणं, अईयमावज्जकारिणमसग्घं ।
अत्ताणमयणमहवा, सावज्जमईयजोगं ति ॥३५७८॥

किं 'कुच्छामि'-जुगुप्से ? इत्याह-आत्मानं निजजीवम् । कथंभूतम्? अतीतसावद्ययोगकारिणम् । अत एवाश्लाघ्यम-प्रशंसनीयम् । अथवा—अत्राणं-संसारे निपतन्तमशरणम्, अतनं वाऽनादिकालात् सातत्यभवनप्रवृत्तमतीतसावद्ययोगं 'कुच्छामि' जुगुप्से, भवहेतुत्वात्, सर्वविरतिसामायिकस्यैव भवाब्धौ निमज्जता त्राणत्वादिति ।

अथ 'व्युत्सृजामि' इति सूत्रस्य चरमावयवं संबन्धयन्नाह—

विविहं विसेसओ वा,भिसं सिरामि त्ति वोसिरामि त्ति ।
छड्डेमि त्ति जमुत्तं, तमेव समईयमावज्जं ॥ ३५७९ ॥

विशब्दो विविधार्थो विशेषार्थो वा, उत्शब्दस्तु भृशार्थे, ततश्च विविधं विशेषतो वा भृशमत्यर्थं 'सृज' विसर्गे, सृजामि-त्यजामीति यदुक्तं भवति । कम् ? इत्याह—तमेवातीतमावद्ययोगम् । 'व्यवसृजामि' इति-वाऽवशब्दोऽधःशब्दार्थे, विशेषेणाधः सृजामि-क्षिपामि व्यवसृजामीति ।

आह—नन्वेवं सावद्ययोगपरित्यागात् 'करोमि भदन्त ! सामायिकम्' इति सावद्ययोगनिवर्तनमुच्यते, तदनन्तरं 'व्युत्सृजामि' इत्युक्ते तत्सावद्ययोगनिवर्तनं त्यजामि इति वैपरीत्यमापद्यते । नम । कुतः ? इत्याह—

मंसाइनिरमणाओ, जहेह भणियम्मि वोसिरामि त्ति ।

तप्पडिवक्खच्चाओ, गम्मइ सामाइए वेवं ॥ ३५८० ॥

यथेह मांसादिविरमणादनन्तरं ' व्युत्सृजामि ' इति भणिते तत्प्रतिपक्षत्यागो मांसभक्षणनिवृत्तिरूपो गम्यते-अवसीयते-तथा संव्यवहारदर्शनात् . प्रस्तुतसामायिकेऽप्येवमेवावगन्तव्यम् । इदमुक्तं भवति-यथा 'मंसं सुराइयं पञ्चक्खामि जावज्जीवाए चउव्विह तिविहेणं मणेणं वायाए काएणं न भुंजामि न भुंजावेमि, वोसिरामि ' इति मांसविरमणादनन्तरं ' व्युत्सृजामि ' इत्युक्ते ' मांसादिभक्षणरूपं तद्विपक्षं त्यजामि ' इति गम्यते एवमिहापि ' तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं ' इत्येतत्पर्यन्तेन सूत्रेण यत् सर्वसावद्ययोगप्रत्याख्यानमुक्तम् , तदनन्तरं ' व्युत्सृजामि ' इत्युक्ते ' तद्विपक्षरूपं सावद्ययोगाविरमणं त्यजामि ' इति गम्यत इति ।

अथ कः पुन सर्वसावद्ययोगप्रत्याख्यानरूपस्य सामायिकस्य विपक्ष ? इत्याशङ्क्य तदुपदर्शनार्थमाह—

सम्मत्ताइमयं तं, मिच्छत्ताईणि तव्विवक्खो य ।
ताण विवक्खो गम्मइ,पभासिए वोसिरामि त्ति ।३५८१।

तत्र सामायिकं ' सामाइयं च तिविहं सम्मत्तसुयं तहा चरित्तं च ' इति वचनात् सम्यक्त्वश्रुताद्यात्मकम् । ततश्च मिथ्यात्वा-ऽज्ञाना-ऽविरतयस्तद्विपक्षोऽवसेय. । तत ' व्युत्सृजामि ' इति प्रभाषिते तेषां मिथ्यात्वादीनां विसर्गस्त्यागो गम्यत इति ।

तदेवं ' निन्दामि गर्हामि व्युत्सृजामि ' इति क्रियात्रयस्य विषयविभागो दर्शित । अथवा—अतीतसावद्ययोगप्रायश्चित्तसंग्रहार्थमिदं क्रियात्रयमिति दर्शयन्नाह—

अहवा तिच्छियमाव-ज्जयोगपच्छित्तसंगहत्थाय ।
संखेवओ विहाणं, निंदामिच्चाइसुत्तम्मि ॥ ३५८२ ॥
निंदा-गरहग्गहणा-दालोयण-पडिकमोभयग्गहणं ।
होइ विवेगाईणं, छेयंताणं विसग्गाओ ॥ ३५८३ ॥

अथवा—अतिक्रान्तसावद्ययोगप्रायश्चित्तस्य संक्षेपत. संग्रहार्थं ' निन्दामि ' इत्यादिसूत्रेऽभिधानमिति । तत्र प्रायश्चित्तम् । ' अलोयणपडिक्कमणे, मीस विवेगे तहा विउस्सग्गे । तव छेय मूल अणव-ट्ठया य पारंचिए चेव ॥ १ ॥ " इति वचनाद् दशविधम् । तत्र निन्दा-गर्हयोर्ग्रहणादालोचनप्रतिक्रमणोभयलक्षणस्याद्यप्रायश्चित्तत्रयस्य ग्रहणम् , ' व्युत्सृजामि ' इति विसर्गग्रहणात् पुनर्विवेकादीनां छेदान्तानां चतुर्णां प्रायश्चित्तभेदाना ग्रहणं भवति । मूलादयस्तु त्रय प्रायश्चित्तभेदा इह न संभवन्ति, तेषां चारित्रोत्तीर्णजन्तुविषयत्वात् । इह तु प्रतिपन्नचारित्रस्य प्रक्रमादिति तावद् वयमवगच्छाम , तत्त्वं तु केवलिनो बहुश्रुता वा विदन्तीति । तदेवं व्याख्यातं सामायिकसूत्रम् । तद्व्याख्यानं चाभिमतोऽनुगम. ।

तत. पूर्वोक्तमुपसंहरन्नुत्तरनयद्वारसंबन्धनार्थमाह—

एवं सुत्ताणुगमो, सुत्तालामो सुयत्थजुत्ती य ।
भणिया नयाणुजोग-दारावसरोऽधुणा ते य ॥३४८४॥
अत्थाणुगमंगं चिय, तेण जहासंभवं तहिं चेव ।
भणिया तहावि पत्थुय-दारासुन्नत्थमुसेहं ॥ ३५८५ ॥

एवमुक्तप्रकारेण सूत्रानुगम' . सूत्रालापकानां च न्यासो निक्षेप', सूत्रार्थयुक्तिश्च-सूत्रस्पर्शिकनिर्युक्तिश्चेत्यर्थ , भणिता - प्रतिपादिता. । विशे० । ( सामायिके नयौ ज्ञानक्रियात्मकौ ज्ञानक्रियादिशब्देषु )-तत्रमज्ञाननय', अयं चतुर्विध सम्यक्त्वादिसामायिके सम्यक्त्वसामायिके श्रुतसामायिकं वक्ष्यति, अस्य ज्ञानात्मकत्वात् , देशविरतिसामायिकसर्वविरतिसामायिके तु नेच्छति तयोस्तत्कार्यत्वात् गुणभूते वा इच्छति । उक्तो ज्ञाननय । ( आ० म० ) क्रियानय. सम्यक्त्वादिके चतुर्विधे सामायिके देशविरतिसर्वविरतिरूपसामायिकद्वयमेवेच्छति क्रियाप्रधानत्वादस्य, सम्यक्त्व सामायिकं तु तदर्थमुपादीयमानत्वेनाप्रधानत्वान्नेच्छति गुणभूते वा इच्छतीति । आ० म० १ अ० ।

(७८) आलोचनादीनि सामायिकवत एव भवन्तीति अतस्तत्प्रश्नोत्तरपूर्वं फलमाह—

सामाइएणं भन्ते ! जीवे किं जणयइ ? सामाइएणं सावज्जजोगविरइं जणयइ ॥ ८ ॥

हे भदन्त ! सामायिकेन—समतारूपेण जीव. किं जनयति । गुरुराह—हे शिष्य ! सामायिकेन सावद्ययोगविरतिं जनयति कर्मबन्धकारणेभ्यः सपापमनोवाक्काययोगेभ्यो विरतिं पश्चान्निवर्त्तनां जनयति ॥ ८ ॥ उत्त० २९ अ० । सावद्ययोगविरतिप्रधाने आवश्यकस्य प्रथमे अध्ययनविशेषे, पा० । " सामायिकस्य विवृतिं, कृत्वा यदवाप्तमिह मया कुशलम् । तेन खलु सर्वलोको, लभता सामायिकं परमम् ॥ १ ॥ यस्माज्जगाद भगवान् , सामायिकमेव निरुपमोपायम् । शारीरमानसाने—कदु.खनाशस्य मोक्षस्य ॥ २ ॥ " आ० म० १ अ० ।

राज्यादिदानपूर्वकं च जगद्गुरु. सामायिकं प्रतिपन्नवानिति तत्स्वरूपनिरूपणायाह—

सामायिकं च मोक्षाङ्गं, परं सर्वज्ञभाषितम् ।
वासीचन्दनकल्पाना-मुक्तमेतन्महात्मनाम् ॥ १ ॥

समस्य-रागद्वेषकृतवैषम्यवर्जितस्य भावस्याऽऽयो लाभ समाय. स एव सामायिकं चारित्रं तच्च चशब्दात्-ज्ञानदर्शने च। यदाह-"सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग." अवधारणार्थो वा चशब्दस्य, सामायिकमेव नतु परपरिकल्पितं कुशलचित्तम् । अथवा-चशब्द पुनरर्थे. तस्य चैवं प्रयोगः, इह भगवता राज्यदानमहादानादीनि कृतानि सामायिकं पुनस्तेषु मोक्षाङ्गम्-निर्वाणकारणम् । नन्वेवं ज्ञानादीनां तदकारणत्वं स्यादित्यत आह—परं प्रधानमनन्तरमित्यर्थ. , ज्ञानादीनां हि सामायिककारणत्वेन मोक्षकारणत्वम् , यदाह-"णाणाहियस्स णाण, हुज्जइ णाणापवत्तए चरणं " ति तत्किं स्वमतिविकल्पितं नेति आह-सर्वज्ञभाषितम् । अथवा-कथमिदमवसितमिति वदत आह—यत. सर्वज्ञभाषितं समस्तवित्प्रणीतम् । मोक्षादयो हि भावा अतीन्द्रियास्ते च सर्वविद्वचनावसेया एव भवन्ति प्रमाणान्तरस्य तेष्वप्रवृत्त. । एतच्च

किं सर्वेषां भवति नेत्याह-वासी-लोहकारोपकरणविशेष, वासीव वासी अपकारकारि तां चन्दनमिव-मलयजमिव दुष्कृतक्षयहेतुतयोपकारकत्वेन कल्पयन्ति मन्यन्ते वा—सीचन्दनकल्पा, यदाह—"यो मामपकरोत्येप, तत्त्वेनोपकरोत्यसौ। शिरामोक्षाद्युपायेन, कुर्वाण इव नीरुजम् ॥ १ ॥" अथ वास्यामपकारिणि चन्दनस्य कल्प इव छेद इव य उपकारित्वेन वर्तन्ते ते वासीचन्दनकल्पाः, आह च-"अपकारपरेऽपि परे, कुर्वन्त्युपकारमेव हि महान्त। सुरभीकरोति वासीं, मलयजमपि तक्षमाणमपि ॥१॥" वास्या वा चन्दनस्येव कल्प आचारो येषा ते तथा। अथवा-वास्या चन्दनकल्पाः-चन्दनतुल्या ये ते तथा, भावना तु प्रतीतैव, तषा वासीचन्दनकल्पानामुक्तमभिहितमार्षैर्नान्येषामेतत्सामायिकम् केषामेव विशेषणामित्याह-महात्मनाम्-उत्तमसत्त्ववतामिति।

सामायिकं फलत स्वामितश्च निरूपितम्। अथ स्वरूपतस्तदेव निरूपयन्नाह। अथवा-मोक्षाङ्ग सामायिकं यत आह—

**निरवद्यमिदं ज्ञेय-मेकान्तेनैव तत्त्वतः**
**कुशलाशयरूपत्वात्, सर्वयोगविशुद्धितः ॥ २ ॥**

निर्गतम् अवद्याद्-गर्हितकर्म्मणो हिंसादिक्रोधादेरिति निरवद्यं स्वरूपेणेदं सामायिकं ज्ञेयं-ज्ञातव्यम्। एकान्तेनैव-सर्वथैव न पुनरंशेनापि सावद्य तथाविधस्य तस्याविशुद्धत्वात्, यदाह-"पडिसिद्धेसु य देसे, विहिएसु य ईसिरागभावम्मि। सामाइय असुद्ध, सुद्धं समयाए दोएह पि ॥१॥" तत्त्वत —परमार्थतो नतूपचारवृत्त्या उपचरित ह्यवस्तु तत्कार्याकरणात्। कुत एतदेवमित्याह—कुशलाशयरूपत्वात् शुभाभिसन्धिस्वभावतस्तस्य सर्वथा निरवद्यत्वाभावे हि कुशलाशयत्वं न स्यादिति ननु। ज्ञानदर्शनयोरप्येतदस्तीत्याह—सर्वयोगविशुद्धितः-समस्तमनोवाक्कायव्यापारशुद्धिभावान्नहि ज्ञानादिषु योगविशुद्धिरस्तीति।

अथाक्तरूपसामायिकविलक्षण शाक्यपरिकल्पितं कुशलचित्तं मोक्षाङ्गतया निषेधयन्नाह—

**यत्पुनः कुशलं चित्तं, लोकदृष्ट्या व्यवस्थितम्।**
**तत्तथौदार्ययोगेऽपि, चिन्त्यमानं न तादृशम् ॥ ३ ॥**

सामायिकं तावत् मोक्षाङ्गं, तत् पुनर्यदित्युद्देश पुनरिति विशेषणार्थे, कुशलं—शुभ चित्तं-मन, किं तत्त्वत कुशल नेत्याह—लोकदृष्ट्या सामान्यजनदर्शनेन—लोकोत्तरजनदृष्ट्या तु तस्य विचार्यमाणस्य कुशलाभासतैवं व्यवस्थितम्-प्रतिष्ठितम्, तच्चित्तम्, 'तथे' ति तथाविधस्य सामान्यबुद्धिजनसंमतस्यौदार्यस्योदारताया योग।—संबन्ध तदौदार्ययोगस्तत्रापि, आस्ता तदयोगेऽपि चिन्त्यमान-विचार्यमाणम्, न—नैव तादृशं-सामायिकसदृशम्। यत्किल सामायिकादधिकतया संमत परेषां तद्विचार्यमाणं तत्सममपि न भवतीति कथं तन्मोक्षाङ्गमिति।

अथ तदेव मायापुत्रीयकल्पित कुशलचित्तमुपदर्शयन्नाह—

**मय्येव निपतत्वेतज्, जगद्दुश्चरितं यथा।**
**मत्सुचारित्रयोगाच्च, मुक्तिः स्यात्सर्वदेहिनाम् ॥ ४ ॥**

मय्यीति अनेन बोधिसत्त्व आत्मान निर्दिशति-एवशब्दोऽवधारणे, तेन मय्येव न पुन परत्र निपततु—नितरामापद्यताम् एतत्प्रतिपाद्यप्रत्यक्षमच्चूर्णं सांसारिकासुखकारण जगतां-प्राणिनां दुश्चरितं-हिंसादिनिबन्धनं कर्म जगद्दुश्चरितं, यथेत्युपदर्शनार्थ, तस्य चैवं संबन्ध तत्तथौदार्ययोगेऽपि चिन्त्यमान न तादृशं यथा एतन्मय्येवेत्यादि, तथा मत्सुचरितयोगात्-मदीयाहिंसादिसदनुष्ठानसंबन्धाच्चशब्द समुच्चये, मुक्ति-मोक्ष स्याद्-भवेत् सर्वदेहिनां-सकलसंसारिणामिति कुशलचित्तमिति।

कस्मादिद तथौदार्ययुक्तमपि न सामायिकसदृशं भवतीत्याह—

**असंभवीदं यद्वस्तु, बुद्धानां निर्वृतिश्रुतेः।**
**संभवित्वे त्विदं न स्यात्, तत्रैकस्याप्यनिर्वृतौ ॥ ५ ॥**

असंभवि—न संभवनस्वभावम् इदमनन्तरोदित यद्—यस्माद्वस्तु अन्यकृतकर्मणोऽन्यत्र संबन्धलक्षणोऽर्थः, कुत इत्याह—बुद्धाना-बोधिसत्त्वाना निर्वृत्तिश्रुतेर्निर्वाणगमनश्रवणात् तदागमे, तथाहि-"गङ्गावालिकासमा बुद्धा निर्वृता" इति तदागम। अयमभिप्रायो यदि जगद्दुश्चरितं बुद्धे न्यपतिष्य त्तदा तस्य निर्वाण नाभविष्यत्, इष्यत च तत्तस्येत्यसंभवीदं वस्तु। एतदेवाह-संभवित्वे तु भवनस्वभावत्वे पुनरस्य वस्तुन इयं स्तूयमाना बुद्धनिर्वृतिर्न स्यात्-न भवेत्तत्र तेषु जाग्रत्सु मध्य एकस्यापि जगत आस्तां बहुनामनिर्वृतावनिर्वाणे सति अतोऽसभवित्वादस्य वस्तुन एतत्कुशलचित्त न सामायिकसदृशमिति।

यदि सामायिकसदृश नेदं चित्तं तर्हि किंविधमिद—मित्याह—

**तदेवं चिन्तनं न्यायात्, तत्त्वतो मोहसंगतम्।**
**साध्ववस्थान्तरे ज्ञेयं, बोध्यादेः प्रार्थनादिवत् ॥ ६ ॥**

तदिति—यस्मादसंभवीदं वस्तु तस्मादेवमनन्तरोदित मय्येवेत्यादिचिन्तनं ध्यानं न्यायादुपदर्शितादसभवित्वलक्षणाद्यावत्तत्त्वत परमार्थचिन्ताया मोहसङ्गते-मोहनीयकर्मोदयानुगतम्, मोहोदयाभावे हि समस्तविकल्पोत्कलिकावर्जितमेव चित्तं भवति। सरागावस्थायां पुन स्यादप्येवंविधं चित्तं साधुता च तस्य स्यादित्याह—साधु-शोभनमनन्तरोदित प्रणिधानमवस्थान्तरं सरागावस्थाया न पुना रागक्षये ज्ञेयं-ज्ञातव्यम्। किंवदित्याह—बोध्यादेरारोग्यबोधिलाभादेरादिशब्दात्-समाधिवरपरिग्रह, प्रार्थनादिवत्-याञ्चादि यथा। यदाह-'आरुग्गबोहिलाभं, समाहिवरमुत्तमं दिंतु' आदिशब्दाद्-अर्हदादिरागपरिग्रहः, यदाह-'अरिहंतेसु य रागो, रागो साहूसु बंभयारीसु। एस पसत्थो रागो, अज्जसरागाण साहूणं ॥ १ ॥' अयमभिप्रायो यद्यपि प्रार्थनीयानामर्हतां वीतरागतया बोधिलाभादिदानमसंभवि तथापि रागवतो भगवत्सु भक्तिमावहयतो भावात्कर्षादिदं साध्वेव। आह च-'भासा असच्चमोसा, नवरं भत्तीए भासिया एसा। नहु खीणपेज्जदोसा, देंति समाहिं च बोहिं च ॥२॥' यदि च मोहसंगतमप्यौदार्यमात्रापेक्षया मय्येवेत्यादिचिन्तनमनवद्यं स्यात्तदैतदनन्तरं भविष्यति, यथा

"व्याघ्रादीनां यदङ्गानि-मास्त्वां सयोव तत्तदा । मदीयमांसयोगाञ्च, चैतन्यं ते(यु)षां सर्वदा।" अत्रैतदसंभवान्मोहसंगतमिति चेदितरत्राप्यसंभवित्वं तुल्यमेवेति । अस्य च श्लोकस्य प्रथमपादमन्यथाऽपि पठन्ति । तद्यथा—'एवं च चिन्तनं ह्यनादि' ति, अर्थस्तु प्रकट एवेति ।

यदपि व्याघ्रादेः स्वकीयमांसप्रदानादावनिकुशलं चित्तं परेऽभ्युपेत तदपि सामायिकापेक्षया असाध्विति दर्शयन्नाह—

अपकारिणि सद्बुद्धि-र्विशिष्टार्थप्रसाधनात् ।
आत्मम्भरित्वपिशुना, तदपायानपेक्षिणी ॥ ७ ॥

अपकारिणि-अपकरणशील बुद्धमांसभक्षके-व्याघ्रादौ दुर्जने वा विषयभूते सत्-शोभनोऽयमिति बुद्धिः-मतिः सद्बुद्धिः कुत इत्याह-विशिष्टार्थस्य-पीडोत्पादकतया कर्मकर्तृकर्तृत्वसहायककरणेन, सकलशरीरनिवृत्तिहेतुभूतसर्वज्ञतासौधशिखरारोहणलक्षणस्य प्रधानवस्तुनः प्रसाधनं-निष्पादनं विशिष्टार्थप्रसाधनं तस्मात्, या सद्बुद्धिः, सा किमित्याह-आत्मानमेव न परं बिभर्त्ति-पुष्णातीत्यात्मम्भरिस्तद्भावं पिशुनयति सूचयतीत्यात्मम्भरित्वपिशुना, कुतः एतदित्याह—यतोऽसौ तेषां बुद्धशरीरापकारिणां व्याघ्रादीनां ये अपायाः—दुर्गतिगमनादयस्तानपेक्षत इत्येवंशीला तदपायानपेक्षिणी आत्मम्भरित्वं परापकारानपेक्षित्वं च महद् दूषणं महतामिति ।

प्रकृतमुपसंहरन्नाह—

एवं सामायिकादन्य-दवस्थान्तरभद्रकम् ।
स्याच्चित्तं तत्तु संशुद्धे-र्ज्ञेयमेकान्तभद्रकम् ॥ ८ ॥

एवमनन्तरोक्तनीत्या मोहसङ्गतत्वाभिधानलक्षणया सामायिकान्मोक्षभवादिसकलभावोपेक्षालक्षणात् अन्यद्-अपरं मय्येव निपतत्वित्यादि परपरिकल्पितम्—'आरुग्ग बोहिलाभमि' त्यादि जैनकल्पितं च चित्तमिति योगः । अवस्थान्तरे योग्यताविशेष एव साभिष्वङ्गतायामेव, न तु केवलित्वे भद्रकं—कल्याणं युक्तमवस्थान्तरभद्रकं स्यात्-भवेच्चित्तं—मनः, तत्तु सामायिकं पुनः संशुद्धेः समस्तदोषवियोगाद्धेतोर्ज्ञेयं-ज्ञातव्यमेकान्तभद्रकं-सर्वथैव शोभनमिति । द्वा० २६ अष्ट० ।

परिहार्यदोषप्रदर्शनेन अधुनोपदेशमभिधित्सयाऽऽह—

सीओदगपडिदुगुंछिणो,अपडिण्णस्स लवावसप्पिणो ।
सामाइयमाहु तस्स जं,जो गिहिमत्तेऽसणं न भुंजती॥२०॥

तथा शीतोदकम्-अप्रासुकोदकं तत्प्रति जुगुप्सकस्य-अप्रासुकोदकपरिहारिणः साधोः न विद्यते प्रतिज्ञा-निदानरूपा यस्य सोऽप्रतिज्ञोऽनिदान इत्यर्थः, लवं-कर्म तस्मात् अवसर्पिणो त्ति-अवसर्पिणः यदनुष्ठानं कर्मबन्धोपादानभूतं तत्परिहारिण इत्यर्थः, तस्यैवम्भूतस्य साधोर्यस्मात् यत् सामायिकं-समभावलक्षणमाहुः सर्वज्ञाः, यश्च साधु गृहमात्रे-गृहस्थभाजने कांस्यपात्रादौ न भुङ्क्ते तस्य च सामायिकमाहुरिति संबन्धनीयमिति । सूत्र० १ श्रु० २ अ० २ उ० । त्रिपिटकादिसमयवृत्तौ पण्डिते, पुं० । दश० ४ अ० ।

आराहणाइजुत्तो, सम्मं काऊण सुविहिओ कालं ।
उक्कोसं तिन्नि भवे, गंतूण लभेज्ज निव्वाणं ॥ ८०८ ॥

किञ्च—आराधनया युक्तः—प्रयत्नपरः सम्यक् कृत्वा सुविहित कालं पुनश्च उत्कृष्टतः—अतिशयेन सम्यगाराधनां कृत्वा त्रीन् भवान् गत्वा निर्वाणं—मोक्षमवश्यं प्राप्नोतीति । एतदुक्तं भवति-यदि परमसमाधानेन सम्यक् कालं करोति ततस्तृतीये भवेऽवश्यं सिद्ध्यतीति । आह परः-उत्कृष्टतोऽष्टभवाभ्यन्तरे सामायिकं प्राप्य नियमात्सिद्ध्यतीति, जघन्यतः पुनरेकस्मिन्नेव भवे सामायिकं प्राप्य-सिद्ध्यतीत्युक्तं ग्रन्थान्तरे, ततश्च यदुक्तं त्रीन् भवानतीत्य सिद्ध्यतीति तदेतन्नाप्युत्कृष्टं नापि जघन्यं ततश्च विरोध इति । उच्यते-अनालीढसिद्धान्तसद्भावेन यत्किञ्चिदुच्यते, यत्तदुक्तं जघन्यत एकेनैव भवेन सिद्ध्यतीति तद्वज्रर्षभनाराचसंहननमङ्गीकृत्योक्तम्, एतच्च छेवट्टिकासंहननमङ्गीकृत्योच्यते, छेवट्टिकासंहननो हि यद्यतिशयेनाराधनं करोति ततस्तृतीये भवे मोक्षं प्राप्नोति । उत्कृष्टशब्दश्चात्रातिशयार्थे द्रष्टव्यो न तु भवमङ्गीकृत्य, भवाङ्गीकरणे पुनरष्टभिरेवोत्कृष्टतो भवे छेवट्टिकासंहनन सिद्ध्यतीति । ओघ० ।

( ७६ ) प्रकीर्णकवार्ता.—

तथा-श्राद्ध सामायिकं कुर्वन् 'दुविहं तिविहेणं' इत्यादिना सावद्यव्यापारसम्बन्धिकरणकारणे एव निषेधयति, नत्वनुमोदनम्,तथा च सति सामायिकस्थोऽसौ सावद्यव्यापारं मनोवाक्कायानामन्यतरेण केनाप्यनुमोदयन् सामायिकं खण्डयति नवेति ? प्रश्न , अत्रोत्तरम्—सामायिकस्थः श्राद्धो मनोवाक्कायैः सावद्यव्यापारमनुमोदयन्नपि सामायिकं न खण्डयति, तद्विषयकविरतेरभावात्, यदि च नानुमोदयति तदा भूयो लाभभाग् भवतीति ॥७५॥ सेन०१ उल्ला० । तथा-तीर्थकरगणभृतां मिथो भिन्नवाचनत्वेऽपि साम्भोगिकत्वं भवति न वा ?, तथा सामाचार्यादिकृतो भेदो भवति न वा?, इति प्रश्नः, अत्रोत्तरम्-गणभृता परस्परं वाचनाभेदेन सामाचार्या अपि कियान् भेदस्सम्भाव्यते, तद्भेदे च कथञ्चिदसाम्भोगिकत्वमपि सम्भाव्यत इति ॥ ८६ ॥ सेन० २ उल्ला० । तथा-व्याख्यानवेलायां कृतसामायिका श्राद्धी आदेशमार्गणपूर्वकं प्रतिलेखना करोत्यन्यथा वेति ? प्रश्नः, अत्रोत्तरम्—सामायिकमध्ये प्रतिलेखनादेशमार्गणं यौक्तिकमिति ॥ १६५ ॥ सेन० २ उल्ला० । तथा-पौषधमध्ये चर्चालापककुण्डिका वाच्यते न वा ?, इति प्रश्न , अत्रोत्तरम्-सा मनसि वाच्यते, नतु, वाढस्वरेण, सिद्धान्तालापकगर्भितत्वादिति ॥१०३॥ सेन० ४ उल्ला० ।

सामाइयउवक्कम-सामायिकोपक्रम-पुं० । सामायिकम्-आवश्यकप्रथमाध्ययनम्, तस्यानुक्रम -परिपाटीविशेष सामायिकं वा अनुक्रम सामायिकानुक्रमः । सामायिकस्य सामायिके वाऽनुक्रमणे,दश० १ अ० ।

सामाइयकड-सामायिककृत-पुं० । सामायिकं सावद्ययोगपरिवर्जननिरवद्ययोगासेवनस्वभावं कृतं—विहितं देशतो येन स सामायिककृत । आहिताग्न्यादिदर्शनात् क्तान्तस्योत्तरपदत्वम् । तदेवमप्रतिपन्नपौषधस्य दर्शनव्रतोपेतस्य

प्रतिदिनमुभयसन्ध्यं सामायिककरणं मासत्रयं यावत्तृतीयामुपासकप्रतिमा प्रतिपन्ने, स० ११ सम० । प्रतिपन्नाद्याशिक्षाव्रते, पञ्चा० १ विव० । ( ' उवासगपडिमा ' शब्दे द्वितीयभागे ११३० पृष्ठे इयं प्रतिमोक्ता । ) ( सामायिककृतस्य का क्रिया क्रियत इति ' किरिया ' शब्दे तृतीयभागे ५४७ पृष्ठे उक्तम् । )

सामायिककृतस्य प्रत्याख्यानभङ्गा —

-रायगिहे० जाव एवं वयासी-आजीविया णं भंते ! थेरे भगवंते एवं वयासी-समणोवासगस्स णं भंते ! सामाइयकडस्स समणोवस्सए अच्छमाणस्स केइ भंडे अवहरेज्जा,से णं भंते ! तं भंडं अणुगवेसमाणे किं सयं भंडं अणुगवेसइ परायगं भंडं अणुगवेसइ ? , गोयमा ! सयं भंडं अणुगवेसइ नो परायगं भंडं अणुगवेसइ , तस्स णं भंते ! तेहिं सीलव्वयगुणवेरमणपच्चक्खाणपोसहोववासेहिं से भंडे अभंडे भवति ?, हंता भवति । से केणं खाइ णं अट्ठेणं भंते ! एवं वुच्चइ सयं भंडं अणुगवेसइ नो परायगं भंडं अणुगवेसइ?गोयमा !तस्स णं एवं भवति-णो मे हिरन्ने नो मे सुवन्ने नो मे कंसे नो मे दूसे नो मे विउलधणकणगरयणमणिमोत्तियसंखसिलप्पवालरत्तरयणमादीए संतसारसावदेज्जे, ममत्तभावे पुण से अपरिण्णाए भवति,से तेणट्ठेणं गोयमा ! एवं वुच्चइ-सयं भंडं अणुगवेसइ नो परायगं भंडं अणुगवेसइ । (सू० ३२८×)

'रायगिहे' इत्यादि,गौतमो भगवन्तमेवमवादीत्-आजीविका'-गोशालकशिष्या भदन्त ! स्थविरान्—निर्ग्रन्थान् भगवत एवं—वक्ष्यमाणप्रकारमवादिषु , यच्च ते तान् प्रत्यवादिषुस्तद्गौतम स्वयमेव पृच्छन्नाह—'समणोवासगस्स णं' मित्यादि, 'सामाइयकडस्स' त्ति—कृतसामायिकस्य-प्रतिपन्नाद्यशिक्षाव्रतस्य, श्रमणोपाश्रये हि श्रावक सामायिकं प्राय प्रतिपद्यते इत्यत उक्त श्रमणोपाश्रये आसीनस्येति, ' केइ ' त्ति—कश्चित्पुरुष 'भंडं' ति वस्त्रादिकं वस्तु गृहवर्त्ति साधूपाश्रयवर्त्ति वा 'अवहरेज्ज' त्ति—अपहरेत् ' से 'त्ति-स श्रमणोपासक 'तं भंडं'ति—तद्—अपहृतं भाण्डम् ' अणुगवेसमाणे ' त्ति—सामायिकपरिसमाप्त्यनन्तरं गवेषयन् सभंडं' ति—स्वकीयं भाण्डं ' परायगं ' ति-परकीयं वा'?, पृच्छतोऽयमभिप्राय —स्वसम्बन्धित्वात्तस्य स्वकीयं सामायिकप्रतिपत्तौ च परिग्रहस्य प्रत्याख्यातत्वादस्वकीयमत प्रश्न , अत्रोत्तरम्-' सभंडं ' ति-स्वभाण्डं, ' तेहिं ' ति-तैर्विवक्षितैर्यथाक्षयोपशमं गृहीतैरित्यर्थ , सीले ' त्यादि, तत्र शीलव्रतानि—अणुव्रतानि गुणा-गुणव्रतानि विरमणानि-रागादिविरतय प्रत्याख्यानं—नमस्कारसहितादि पौषधोपवास.—पर्वदिनोपवसनं तत एषा द्वन्द्वोऽतस्तै , इह च शीलव्रतादीना ग्रहणेऽपि सावद्ययोगविरत्या विरमणशब्दोपात्तया प्रयोजन तस्या एव परिग्रहस्यापरिग्रहतानिमित्तत्वेन भाण्डस्याभाण्डताभवनहेतुत्वादिति ' से भंडे अभंडे भवइ' त्ति-तत्—अपहृत भाण्डमभाण्ड भवत्यसंव्यवहार्यत्वात् । से केणं'ति अथ केन 'खाइ णं' ति-पुन 'अट्ठेणं' ति—अर्थेन—हेतुना 'एवं भवइ ' त्ति—एवंभूतो मन परिणामो भवति-'नो मे हिरन्ने' इत्यादि, हिरण्यादिपरिग्रहस्य द्विविधं त्रिविधेन प्रत्याख्यानत्वात्, उक्तानुक्तार्थानुसंग्रहेणाह—' नो मे ' इत्यादि, धनं-गणिमादि गवादि वा कनकं—प्रतीतं रत्नानि—कर्केतनादीनि मणय — चन्द्रकान्तादय मौक्तिकानि शङ्खाश्च प्रतीताः शिलाप्रवालानि-विद्रुमाणि । अथवा—शिला—मुक्ताशिलाद्या प्रवालानि—विमाद्रुणि रक्तरत्नानि—पद्मरागादीनि तत एषा द्वन्द्वस्ततो विपुलानि-धनादीन्यादिर्यस्य स तत्तथा, ' सत ' त्ति-विद्यमानं ' सार ' त्ति प्रधान ' सावएज्ज ' त्ति-स्वापतेयं द्रव्यम्, एतस्य च पदत्रयस्य कर्मधारयः, अथ यदि तद्भाण्डमभाण्डं भवति तदा कथं स्वकीयं तद् गवेषयति ? इत्याशङ्क्याह-' ममत्त ' त्यादि, परिग्रहादिविषये मनोवाक्कायाना करणकारणे तेन प्रत्याख्याते ममत्वभाव' , पुन - हिरण्यादिविषये ममतापरिणाम' पुन अपरिज्ञात -अप्रत्याख्यातो भवति, अनुमतेरप्रत्याख्यानत्वात्, ममत्वभावस्य चानुमतिरूपत्वादिति । भ० ८ श० ५ उ० । ( ' जाया ' शब्दे चतुर्थभागे १४५४ पृष्ठे बहु वक्तव्यं गतम् । )

सामाइयकप्पट्ठिइ-सामायिककल्पस्थिति-स्त्री० । सामायिकम्-संयमविशेषस्तस्य तदेव वा कल्प करणम्-आचार. सामायिककल्प । स च प्रथमचरमतीर्थयो साधूनामल्पकालच्छेदोपस्थापनीयसद्भावात्, मध्यमतीर्थेषु महाविदेहेषु च यावत्कथिकच्छेदोपस्थापनीयाभावाभावात्, तदेव तस्याव-स्थिति -मर्यादा सामायिककल्पस्थिति । कल्पस्थितिभेदे , स्था० ३ ठा० ४ उ० ।

अथैनामेव यथाक्रम विवरीषु' प्रथमत सामायिककल्पस्थितिं विवृणोति-

कतिठाणट्ठितो कप्पो, कतिठाणेहिं अट्ठितो ।
वुत्तो धूतरजोकप्पो, कतिट्ठाणपतिट्ठितो ॥ २८२ ॥

य किल धूतरजा —अपनीतपापकर्मा सामायिकसाधूना कल्प आचारो भगवद्भिरुक्त स कतिषु स्थानेषु स्थितः ?, कतिषु स्थानेषु अस्थित ?, कतिस्थानप्रतिष्ठितश्चोक्त. ? ।

सूरिराह-

चउठाणे ठिओ कप्पो, छहिं ठाणेहिं अट्ठिओ ।
एसो धूयरयोकप्पो, दसठाणपतिठिओ ॥ २८३ ॥

चतु स्थानस्थित कल्प षट्सु च स्थानेष्वस्थितस्तदेवमेव धूतरजा सामायिकसंयतकल्पो दशस्थानप्रतिष्ठित' , केषुचित् स्थित्या केषुचित्पुनरस्थित्या, दशसु स्थानेषु प्रतिबद्धो मन्तव्य इत्यर्थ ।

इदमेव व्यक्तीकरोति-

चउहि ठितो छहि अठितो,पढमा वितिया ठिता दसविहम्मि।
वद्धमाणा णिव्विसगा, जेहिं वहंतेउ णिव्विट्ठा ॥ २८४॥

प्रथमा —सूत्रक्रमप्रामाण्येन सामायिकसंयतास्ते चतुर्षु स्थानेषु स्थिता , षट्सु पुनरस्थिता . गाथायां सप्तम्यर्थे तृतीया । ये तु द्वितीया -छेदोपस्थापनीयसंयतास्ते दशविधेऽपि कल्पे स्थिता । पश्चार्द्धेन तृतीयचतुर्थकल्पस्थित्यो कल्पशब्दार्थमाह-' वद्धमाणा ' इत्यादि । ये परिहारविशुद्धिक

तपो वहन्ति ते निर्विशमानका, यैस्तु तदेव तपो व्यूढं ते निर्विष्टकायिका उच्यन्ते। आह—कानि पुनस्तानि चत्वारि पद्(दा)नि वा स्थानानि येषु सामायिकसंयता यथाक्रमं स्थिता अस्थिताश्चेति।

अथोच्यते—

सिज्जायरपिंडे या, चाउज्जामे य पुरिसजेट्ठे य।
कितिकम्मस्स य करणे,चत्तारि अवट्ठिया कप्पा॥२८५॥

'सेज्जातरपिंडे' त्ति-सूचनात् सूत्रमिति शय्यातरपिण्डस्य परिहरणम्, चतुर्याम., पुरुषज्येष्ठश्च धर्मः कृतिकर्मणश्च करणमेते चत्वार. कल्पा, सामायिकसाधूनामप्यवस्थिता। तथाहि-सर्वेऽपि मध्यमसाधवो महाविदेहसाधवश्च शय्यातरपिण्डं परिहरन्ति। चतुर्यामं च धर्ममनुपालयन्ति पुरुषज्येष्ठश्च धर्म इति कृत्वा तदीया अप्यार्यिकाश्चिरदीक्षिता अपि तद्दिनदीक्षितमपि साधुं वन्दन्ते। कृतिकर्म च यथा रात्निकं तेऽपि कुर्वन्ति, अत एते चत्वार. कल्पा अवस्थिता.।

इमे पुन. षडनवस्थिता.-

आचेलक्कुद्देसिय, सपडिक्कमणे य रायपिंडे य।
मासं पज्जोसवणा, छप्पेते ऽणवट्ठिता कप्पा॥ २८६॥

आचेलक्यमौद्देशिकं सप्रतिक्रमणो धर्मो राजपिण्डो मासकल्प पर्युषणाकल्पश्चेति। षडप्येते कल्पा मध्यमसाधूनाविदेहसाधूनामनवस्थिता। तथाहि-यदि तेषां वस्त्रप्रत्ययो रागो द्वेषो वा उत्पद्यते तदा अचेला, अथ न रागोत्पत्तिस्तत. सचेला महामूल्यं प्रमाणातिरिक्तमपि वस्त्रं गृह्णन्तीति भाव। औद्देशिकं नाम-साधूनुद्दिश्य कृतं भक्तादिकमाधाकर्मेत्यर्थस्तदप्यन्यस्य साधोरर्थाय कृतं कल्पते तदर्थं तु कृतं न कल्पते प्रतिक्रमणमपि यद्यतिचारो भवति तत. कुर्वन्ति, अतिचाराभावे न कुर्वन्ति। राजपिण्डे यदि वक्ष्यमाणा दोषा भवन्ति तत परिहरन्ति, अन्यथा गृह्णन्ति। मासकल्पे यद्येकक्षेत्रे तिष्ठतां दोषा न भवन्ति तत. पूर्वकोटीमप्यासते, अथ दोषा भवन्ति ततो मासे अपूर्णे वा निर्गच्छन्ति पर्युषणायामपि यदि वर्षासु विहरतां दोषा भवन्ति तत एकत्र क्षेत्रे आसते, अथ दोषा न भवन्ति ततो वर्षारात्रेऽपि विहरन्ति। गता सामायिकसंयतकल्पस्थितिः। बृ० ६ उ०।

सामाइयचरित्त-सामायिकचरित्र-न०। सावद्ययोगविरतिरूपे चारित्रभेदे, भ० ८ श० २ उ०। अनु०। औ०।

सामाइयचरित्तलद्धि-सामायिकचरित्रलब्धि-स्त्री०। सावद्ययोगविरतिरूपस्य चारित्रस्य लब्धौ, भ० ८ श० २ उ०।

सामाइयज्झयण-सामायिकाध्ययन-न०। आवश्यकश्रुतस्कन्धस्य सामायिकप्रतिपादके प्रथमे अध्ययने, विशे०। अनु०। आ० म०। आ० चू०। ( अत्र वक्तव्यम् 'सामाइय' शब्देऽनुपदमेवोक्तम्। )

सामाइयपडिमा-सामायिकप्रतिमा-स्त्री०। 'वरदंसणवयजुत्तो, सामाइय कुणइ जो उ संझासु। उक्कोसेण तिमासं, एसा सामाइयप्पडिमा'॥१॥ इत्येवं रूपायां तृतीयायामुपासकप्रतिमायाम्,उपा०१ अ०। त्रीन्मासानुभयकालमप्रमत्तः पूर्वोक्तप्रतिमानुष्ठानसहितः सामायिकमनुपालयतीति। ध० २ अधि०।

सामाइयपय-सामायिकपद-न०। सामायिकप्रतिपादके पदे अनु०।

सामाइयसंजय-सामायिकसंयत-पुं०। सामायिकं सर्वसावद्यविरतिरूप तत्प्रधाना संयता सामायिकसंयता। सामायिकाख्यचारित्रप्रधानेषु साधुषु बृ० ६ उ०। ( सामायिकसंयतानां विस्तरतो व्याख्या 'संजय' शब्दे गता )

सामाग-श्यामाक-पुं०। जृम्भकग्रामस्य बहि ऋजुपालिकाया नद्यास्तटे उषिते स्वनामख्याते गृहपतौ, यस्य क्षेत्रे वीरजिनस्य केवलज्ञानमुत्पन्नम्। कल्प० १ अधि० ६ क्षण। आ० म०। आ० चू०। धान्यभेदे, वाच०।

सामाणिय-सामानिक-पुं०। संकारस्य प्राकृतत्वाद् दीर्घः। सन्निकृते, आ० म० १ अ०। सन्निहिते, अग्रेपिते, " जस्स सामाणिओ अप्पा, संजमे नियमे तवे। तस्स सामाइयं होइ, इइ केवलिभासियं॥१॥ " विशे०। समानतया इन्द्रतुल्यतया ऋद्ध्या चरन्तीति सामानिकाः। इन्द्रसमानर्द्धिषु देवेषु, भ० ३ श० १ उ०। स्था०। सामाने-द्युतिवैभवादौ भवाः सामानिका। अध्यात्मादित्वादिकण्। विमानाधिपतिसूर्याभदेवसदृशद्युतिविभवादिकेषु देवेषु, रा०। आ० म०।

केषामिन्द्राणां कियन्त. सामानिका.—

चउसट्ठी सट्ठी खलु, छच्च सहस्सा तहेव चत्तारि।
भवणवइवाणमंतर-जोइसियाणं च सामाणे॥ ४४॥
द० प०।

धरणस्स णं णागकुमारिंदस्स णागकुमाररण्णो छ सामाणियसाहस्सीओ पण्णत्ताओ, एवं भूयाणंदस्स वि०जाव महाघोसस्स। ( सू० ५०९ ) स्था० ६ ठा० ३ उ०।

सामाणियपरिसोववण्णग-सामानिकपर्षदुपपन्नक-पुं०। अभ्यन्तरपर्षदुपपन्ने जी० ३ प्रति० ४ अधि०।

सामाय-श्यामाक-पुं०। धान्यविशेषे, जं० १ वक्ष०।

सामाय-पुं०। साममेति "तत्थ आओ व त्ति तेण सामाओ। अहवा सामस्स आओ" सर्वेषु जीवेषु मैत्री साम भण्यते तत्र साम्नि आयो गमनं साम्ना वा यो गमनं वर्तनं स सामाय। अथ वा साम्न आयो-लाभ. सामाय.। सामायिके, विशे०। आ० म०। रा०।

सामायारी-सामाचारी-स्त्री०। समाचरणं समाचार.,तद्भावः सामाचार्यं तदेव सामाचारी। संव्यवहारे, स्था० १० ठा० ३ उ०। आगमोक्ताहोरात्रक्रियाकलापे, ग० १ अधि०।

सामाचारीस्वरूपम्—

सामायारी तिविहा, ओहे दसहा पयविभागे॥ ६६५॥

समाचरणं समाचार.—शिष्टाचरितः क्रियाकलापस्तस्य भाव "गुणवचनब्राह्मणादिभ्य कर्मणि च" (पा० ५-१-१२४) इति ष्यञ् सामाचार्यं, पुन स्त्रीत्वविवक्षायाम्-"षिद्गौरादिभ्यश्च" ( पा० ४-१-४१ ) इति ङीष्, "यस्येति च (पा० ६-४-१४८ ) इत्यकारलोप, "हलस्तद्धितस्य" ( पा० ६-४-१५० ) इत्यनेन तद्धितयकारलोप, परगमनं सामाचारी। तत्र सामाचारी त्रिविधा—' ओहे दसहा पदविभागे ' त्ति-

ओघ —सामान्यम् . ओघ सामाचारी सामान्यन सङ्क्षेपाभिधानरूपा१,सा चौघनिर्युक्तिरिति १। दशविधसामाचारी इच्छाकारादिलक्षणा२, पदविभागसामाचारी छेदसूत्राणीति३। तत्रौघसमाचारी नवमात्पूर्वात् तृतीयाद्वस्तुन- आचाराभिधानात्, तत्रापि विंशतिनमात्प्राभृतात्, तत्राप्योघप्राभृतप्राभृतात् निर्व्यूढेति। एतदुक्तं भवति—साम्प्रतकालप्रव्रजितानां तावच्छ्रुतपरिज्ञानशक्तिविकलानामायुष्कादिह्रासमपेक्ष्य प्रत्यासन्नीकृतेति। दशविधसामाचारी पुन. षड्विंशतितमादुत्तराध्ययनात्स्वल्पतरकालप्रव्रजितपरिज्ञानार्थं निर्व्यूढेति। पदविभागसामाचार्यपि छेदसूत्रलक्षणान्नवमपूर्वादेव निर्व्यूढेति गाथार्थ। साम्प्रतमोघनिर्युक्तिर्वाच्या।आव०१अ०।

तत्रौघसामाचारी तावदभिधीयते, अस्याश्च महार्थत्वात् कथञ्चिच्छास्त्रान्तरत्वाच्चादावेवाचार्यो मङ्गलार्थं सम्बन्धादित्रयप्रतिपादनार्थं च गाथाद्वयमाह—

अरहंते वंदित्ता, चउदसपुव्वी तहेव दसपुव्वी।
एक्कारसंगसुत्त-त्थधारए सव्वसाहू य ॥ १ ॥
ओहेण उ निज्जुत्ती, वुच्छं चरणकरणाणुओगाओ।
अप्पक्खरं महत्थं, अणुग्गहत्थं सुविहियाणं ॥ २ ॥

अर्हतो वन्दित्वा चतुर्दशपूर्विण तथैव दशपूर्विण, एकादशाङ्गसूत्रार्थधारकान् सर्वसाधूंश्च, एतावन्ति पदान्याद्यगाथासूत्रे। द्वितीयगाथासूत्रपदान्युच्यन्ते-ओघेन तु निर्युक्तिं वक्ष्ये चरणकरणानुयोगात् अल्पाक्षरा महार्थाम् अनुग्रहार्थं सुविहितानाम्। ओघ०। ( ओघनिर्युक्तिपदव्याख्यानम् 'ओहणिज्जुत्ति' शब्दे तृतीयभागे १२७ पृष्ठे गतम्। ) ( चरणपदविवरणं 'चरण' शब्दे तत्रैव तृतीयभागे ११२५ पृष्ठे विस्तरतो गतम्। ) ( करणपदव्याख्यानम् 'करण' शब्दे तृतीयभागे ३५६ पृष्ठे गतम्। ) अनुयोगपदव्याख्यानम् 'अणुओग' शब्दे प्रथमभागे ३५६ पृष्ठे गतम्। ) ( अल्पाक्षरमहार्थपदप्ररूपणम् 'अप्पक्खर' शब्दे प्रथमभागे ६१४ पृष्ठे गतम्। ) अनुग्राहार्थं सुविहितानामित्यस्यार्थविस्तर' 'ओहणिज्जुत्ति' शब्दे तृतीयभागे १२८ पृष्ठे तथा 'पडिलेहणं०' (२) इत्यादिगाथाया ओघनिर्युक्तिप्रतिलेखनापिण्डोपधिप्रमाणायतनप्रतिसेवनाऽऽलोचनाविशुद्धिद्वाराणि च सूचितानि। ) ( तत्र प्रतिलेखनाद्वार 'पडिलेहणा' शब्दे पञ्चमभागे ३३६ पृष्ठे गतम्। ) (अशिवादिकारणे एकाकिविहारविचारविषय 'एगल्लविहार' शब्दे तृतीयभागे १६ पृष्ठे गत.। )

गव्यूतिमात्र यावन्मार्गे वहति। क्रोशद्वयं गव्यूति.। इदानीं तस्य गच्छतो विधिरुच्यते—

अत्थंडिलसंकमणे, चलवक्खित्तणुवउत्तसागरिए।
पडिपक्खेसु उ भयणा, इयरेण विलंबणा लोगं ॥१३॥

स्थण्डिलादस्थण्डिलं च सङ्क्रामता साधुना पादौ रजोहरणेन प्रमार्जनीयाविति विधि., मा भूत् सचित्तपृथिव्या अचित्तपृथिव्या व्यापत्ति, तत्र च पादयोरसौ रजोहरणेन प्रमार्जनं करोति। अथ कश्चित्सागारिक पथि व्रजतश्चलो भवति, व्याक्षिप्तोऽनुपयुक्तश्चेति। तत्र चलो—गन्तुं पथि प्रवृत्त, व्याक्षिप्तो—हलकुलिशवृत्तच्छेदादिव्यग्र, अनुपयुक्त-साधु प्रत्यदत्तावधान, यद्येवविध. सागारिको भवति तदा रजोहरणेन प्रमृज्य पादौ याति। 'पडिपक्खेसु उ' इति विसदृशा' पक्षा' प्रतिपक्षा', असदृशा इत्यर्थ, तेषु प्रतिपक्षेषु भजना—विकल्पना कर्त्तव्या। एतदुक्तं भवति-केषुचित्प्रतिपक्षेषु प्रमार्जन क्रियते, केषुचित्तु नैव। तुशब्दो विशेषणार्थे। किं विशेषयति ?, प्रतिपक्षेष्वेव समुदायरूपेषु भजना कर्त्तव्या, न त्वेकैकस्मिन् भङ्ग इति। यदा तु सागारिकः स्थिरोऽव्याक्षिप्त उपयुक्तश्च साधुं प्रति भवति तदा 'इतरेणं' ति इतरशब्देन रजोहरणनिषद्योच्यते तया पादौ प्रमार्ष्टि, न रजोहरणेन, 'विलंबणा' त्ति तां च निषद्यां हस्तेन विलम्बमाना नयति, न तच्छरीरसंस्पर्शनं करोति। कियतीं भुवं यावदित्याह-'आलोयणं'त्ति आलोकनमालोको यावत्तद्दृष्टिप्रसर इत्यर्थ, अथवा इतरेणं' ति केनचिदौपग्रहिकेण कार्पासिकेन और्णिकेन वा चीरेण, शेषं प्राग्वत्, पश्चात्तं गोपयति। अथवा-' इतरेण विलंबणालोयं' ति-प्राक् तावदेकाकिनो विधिरुक्त, यदा तु इतरेण—इतरशब्देन सार्थो गृह्यते, तेनेतरेण-सार्थेन सह प्रव्रजना स्थाण्डिल्याचास्थाण्डिल्यं संक्रामता किं कर्त्तव्यं सार्थेपुरत.? इत्याह-' विलम्बने' ति-विलम्बना कार्या, मन्दगतिना सता स्थण्डिलस्थेन तावत्प्रतिपालनीयं, कियन्तं कालं प्रतिपालनीयम्? यावदालोकनं-दर्शनं तस्य सार्थस्य, अदर्शनीभूते तु प्लाटान्तरिते सार्थे पादयो' प्रमार्जन कृत्वा व्रजतीत्ययं विधि। उक्तो गाथाऽक्षरार्थ', इदानीमष्टभङ्गिका प्ररूप्यते, सा चेयम्—चलो वक्खित्तो अणुवउत्तो य सागारिओ, एत्थ पमज्जणं, तस्यानुपयुक्तत्वादप्रमार्जनेऽसामाचारीप्रसङ्गात् १ चलवक्खित्त उवउत्तु एत्थ नत्थि पमज्जणं सागारियत्तणओ २, च० अव० अणु० एत्थवि पमज्जणं ३, चल० अव० उव० एत्थ वि णत्थि पमज्जणं ४, अच० व० अणु० एत्थ पमज्जणं ५, अच० व० उ० णत्थि पमज्जणं ६, अच० अव० अणु० अत्थि पमज्जणं ७, अच० अव० उ० एत्थ नत्थि पमज्जण ८। तत्थ पढमभंगे नियमेण पमज्जणा, सत्तसु भयणा। एतदुक्तं भवति—केषुचित्प्रमार्जनं केषुचिदप्रमार्जना।

स इदानीं साधुर्मार्गमजानान. पृच्छति, तत्र को विधिरित्याह—

पुच्छाए तिण्णि तिआ, छक्के पढम जयणा तिपंचविहा।
आउम्मि दुविहतिविहा, तिविहा सेसेसु काएसु ॥१४॥

पृच्छायां सत्यां 'तिण्णि तिग' त्ति-त्रयस्त्रिका भवन्ति, तत्र पुरुष स्त्री नपुंसकं च। तत्रैतेषामेकैकस्त्रिप्रकार.—बालस्तरुणो वृद्धश्चेति, एवमेते त्रयस्त्रिका., नवेत्यर्थ, तथा तेनैव साधुना गच्छता 'छक्के पढमजयणा' इति—षट्के पृथिव्यादिलक्षणे यतना कर्त्तव्या, तत्र 'पढमजयणा तिपंचविह' त्ति-प्रथमा य पृथ्वीकाय नस्य यतना त्रिपञ्चविधा, तत्र त्रिविधा सचित्तस्य अचित्तस्य मिश्रस्य च। पञ्चविधा पृथिविकाययतना कृष्णनीलरक्तपीतशुक्लस्येति, अथवा-त्रिपञ्चविधेति—त्रय पञ्चका पञ्चदशप्रकारेत्यर्थ, तथाहि-सचित्त. पृथिवीकाय शुक्लादि पञ्चधा, एवमचित्तो, मिश्रश्च, तथाऽप्काये—' दुविहा ( जहा जयणा ) तिविहा य' तत्र द्विधा अन्तरिक्षाप्काययतना भौमाप्काययतना च, त्रिविधा तु सचित्ताप्काययतना, अचित्ता० मिश्रा०, त्रिविधा

तु शेषेषु कायेषु—तेजोवायुवनस्पतित्रसाख्येषु गमना. कथम् ? , सचित्तादि, महाद्वारगाथायाः समुदायार्थः ।

अथाद्यद्वारावयवार्थं पुनस्तदेवाह—

पुरिसो इत्थिनपुंसग, एक्केको थेर मज्झिमो तरुणो ।
साहम्मि अन्नधम्मिअ–गिहत्थदुगअप्पणो तइओ ॥१५॥

यदुक्तमनन्तरगाथायां'पुच्छाए'त्ति-पृच्छायां त्रितयं संभवति तदा पुरुषः स्त्री नपुंसकं चेति,यदुक्तं त्रयस्त्रिकाः तद्दर्शयन्नाह-एकैकः स्थविरो मध्यमस्तरुण इत्ययं नवभेदः । स चैकैको नवविधोऽपि कदाचित्साधर्मिकः स्यात्कदाचित्तु नवविधोऽप्यन्यधार्मिकः स्यादित्याह—समाने धर्मे वर्त्तत इति साधर्मिकः-श्रावकः श्राविका नपुंसकं श्रावकं च, अन्यधार्मिको मिथ्यादृष्टिः । कियन्त पुनस्तेन गच्छता पन्थानं प्रष्टव्याः इत्यत आह—' गिहत्थदुग ' त्ति—साधर्मिकगृहस्थद्वयं पृच्छनीयम् , अन्यधार्मिकगृहस्थद्वयं वा । ' अप्पणा तइओ ' त्ति–आत्मना तृतीयो युक्तया ऽन्वेषणं विदधाति, एष तावत्सामान्योपन्यासः । अथ प्रथमं यः प्रष्टव्यः स उच्यते-तत्र यदि साधर्मिकद्वयमस्ति ततस्तदेवोत्सर्गेण पृच्छ्यते, तस्य प्रत्ययिकत्वात् , अथ नास्ति तत —

साहम्मिअपुरिसासइ,मज्झिमपुरिसं अणुण्णविअ पुच्छे ।
सेसेसु होंति दोसा, सविसेसा संजईवग्गे ॥१६॥

साधर्मिकपुरुषद्वयाभावेऽन्यधार्मिकमध्यमपुरुषद्वयं पृच्छनीयं कथम् ?—' अणुरणविअ ' अनुज्ञां कृत्वा धर्मलाभपुरस्सरं, ततः प्रियपूर्वकं पृच्छति । अन्यधार्मिकमध्यमग्रहणं त्विह साधर्मिकविपन्नत्वादवसीयत एव, ' सेसेसु ' त्ति—अन्यधार्मिकमध्यमपुरुषद्वयव्यतिरिक्तेषु अष्टसु भेदेषु दोषा भवन्ति पृच्छतस्त एव दोषाः सविशेषाः—समधिकाः संयतीवर्गे—संयतीवर्गविषये पृच्छत सतः ।

के च ते दोषा इत्याह—

थेरो पहं न याणइ, बालो पवंचणो न याणई वा वि ।
पंडित्थिमज्झमंका, इयरे न याणंति संका य ॥१७॥

स्थविर —वृद्धः स मार्गं न जानाति, भ्रष्टस्मृतित्वात् , बालस्तु प्रपञ्चयति केलीकिलत्वात् न वा जानाति, क्षुल्लकत्वाद् , बालस्त्वत्र अष्टवर्षादारभ्य यावत्पञ्चविंशतिक इति, असावपि बाल इव बाल , अपरिणतत्वेन रागान्धत्वात् ,मध्यमवयः-पण्डकमध्यवय स्त्रीपृच्छायां शङ्कोपजायते, नूनमस्य नाभ्यां कश्चिदर्थोऽस्ति, 'इयरे न याणंति ' इतरशब्देन स्थविरनपुंसकं बालनपुंसकं स्थविरस्त्री बाला स्त्री वाऽभिगृह्यते, एते मार्गानभिज्ञा शङ्का च स्यात् ।

क तर्हि व्यवस्थितेन पृच्छनीयमित्याह—

पासट्ठिओ य पुच्छे–ज्ज वंदमाणं अवंदमाणं वा ।
अणुवइऊण व पुच्छे, तुसिणिकं मा य पुच्छिज्जा ॥१८॥

पार्श्वस्थित —समीपे व्यवस्थित पृच्छेत् , किंविशिष्टं तं पृच्छेत् ?—वन्दनं कुर्वाणमकुर्वाणं वा । अथासौ समीपमतिक्रम्य यात्येव ततः ' अणुवइऊणं च ' अनुव्रजनं कृत्वा कतिचित्पदानि गत्वा प्रष्टव्य । अथासौ पृच्छ्यमानोऽपि न किञ्चिद्वक्ति तूष्णीं व्रजति, ततो नैव पृच्छनीय इति ।

पंथब्भासे य ठिओ, गोवोई मा य दूरि पुच्छिज्जा ।
संकाईया दोसा,विराहणा होइ दुविहा उ ॥१९॥

तथा पन्थाभ्यासे—समीपे स्थितः कश्चिद्गोपालादिः, आदिशब्दात्कर्षकपरिग्रहः. स च पृच्छनीयः, मा च दूरे व्यवस्थितं गोपालादि पृच्छेत् , शङ्कादिदोषसद्भावात् , नूनमस्य द्रविणमस्ति बलीवर्दादि ( कं वा, शङ्कितं करोतीत्येवमादय. । दूरे च गच्छतो द्विविधा विराधना-आत्मसंयमविषया । आद्या कण्टकादिभिरितरा ऽनाक्रान्तपृथिव्याद्याक्रमणेन ।

यदा तु पुनरन्यधार्मिको मध्यमवयाः पुरुषो नास्ति यः पन्थानं पृच्छ्यते तदा कः प्रष्टव्य इत्याह—

असई मज्झिम थेरो, दढस्सुई भद्दओ य जो तरुणो ।
एमेव इत्थिवग्गे,नपुंसवग्गे य संजोगा ॥ २० ॥

असति मध्यमपुरुषे स्थविरः पन्थानं पृच्छनीयः, किंविशिष्टः ?—दृढस्मृतिः अथ स्थविरो न भवति ततस्तरुणः प्रष्टव्यः, कीदृशः ?—यः स्वभावेनैव भद्रकः । स्त्रीवर्गेऽप्येवमेव पृच्छा कर्त्तव्या । एतदुक्तं भवति-प्रथमं मध्यमवया स्त्रीमार्गं प्रष्टव्या तदभावे स्थविरा दृढस्मृतिः ,अथ स्थविरा न भवति ततस्तरुणी प्रष्टव्या, तदभावे भद्रिका तरुणी, एवं मध्यमवयो नपुंसकं, तस्याभावे स्थविरनपुंसकं दृढस्मृति, तदभावे बालनपुंसकं भद्रकम् , आह च—नपुंसकवर्गे च संयोगा —नपुंसकवर्गे—नपुंसकसमुदाये एवमेव संयोगा ज्ञातव्या । यथैतेऽनन्तरमुक्ता न केवलमेतावन्त एव संयोगा किन्त्वन्येऽपि बहव सन्ति ।

आह च—

एत्थं पुण संजोगा, होंति अणेगा विहाणसंगुणिआ ।
पुरिसित्थिनपुंसेसुं , मज्झिम तह थेर तरुणेसुं ॥२१॥

अत्र पुन —पृच्छाप्रक्रमे संयोगा भवन्त्यनेके कथं ?-'विहाणसंगुणिय त्ति'—विधानेन-भेदप्रकारेण संगुणिताः, चारणिकया अनेकशो भिन्ना इत्यर्थः, क च ते भवन्ति ?-' पुरिसित्थिनपुंसेसु ' पुरुषस्त्रीनपुंसकेषु. किंविशिष्टेषु ?—मध्यमस्थविरतरुणभेदभिन्नेषु , उक्तो गाथाऽक्षरार्थः । इदानीं भङ्गका प्रदर्श्यन्ते—"तत्थ साहम्मिअचारणिआए ताव- दो मज्झिमवया साहम्मिअपुरिसा पुच्छेज्ज एस एक्को उ १ . तदभावे दो थेरे साहम्मिए चेव पुच्छिज्जा २ , तदभावे दो तरुणे साहम्मिए चेव एस तइओ त्ति ३ । तदभावे दो साहम्मिणीओ-मज्झिमिअमहिलाओ ४, तत्तो दो थेरीओ साहम्मिणीओ चेव पंचमो एसो५, तत्तो साहम्मिणीओ चिअ दो तरुणीओ छट्ठो सो ६ , तदभावे दो साहम्मिआ उ मज्झिमनपुंसया पुच्छे ७, तत्तो दो साहम्मिअथेरणपुंसाओ अट्ठमओ ८ , दो साहम्मिअतरुणे नपुंसया चेव उ पुच्छेज्जा ९, अहवा—मज्झिमपुरिसो थेरो उ दु चेव साहम्मी १० , मज्झिमपुरिसो साहम्मिओ तरुणसाहम्मिओ उ पुच्छिज्जइ ११ , मज्झिमपुरिसो साहम्मिओ मज्झिममहिला साहम्मिआ १२ , मज्झिमपुरिसो साहम्मिओ थेरी य साहम्मिणी १३, मज्झिमपुरिसो साहम्मिओ तरुणी य साहम्मिणी १४ , म-

ज्झिमपुरिसो साहम्मिओ मज्झिमसाहम्मिअनपुंसो अ १५, मज्झिमपुरिसो साहम्मिओ थेरसाहम्मिअनपुंसओ अ १६, मज्झिमपुरिसो साहम्मिओ तरुणनपुंसयसाहम्मिओ य १७, अहवा—थेरपुरिसो साहम्मिओ तरुणसाहम्मिओ अ १८, थेरपुरिसो साहम्मिओ मज्झिममहिला साहम्मिणी १९, थेरपुरिसो साहम्मिओ थेरी साहम्मिणी अ २०, थेरपुरिसो साहम्मिओ तरुणी साहम्मिणी य २१, थेरपुरिसो साहम्मिओ मज्झिमनपुंसओ साहम्मिओ य २२, थेरपुरिसो साहम्मिओ थेरनपुंसओ साहम्मिओ अ २३, थेरपुरिसो साहम्मिओ तरुणनपुंसओ सा० य २४,तरुणपुरिसो साहम्मिओ मज्झिममहिला साहम्मिणी अ २५, तरुणपुरिसो साहम्मिओ थेरसाहम्मिणी अ २६, तरुणपुरिसो साहम्मिओ तरुणी-साहम्मिणी अ २७, तरुणपुरिसो साहम्मिओ मज्झिमनपुंसयसाहम्मिओ अ २८, तरुणपुरिसो साहम्मिओ थेरनपुंसयसाहम्मिओ अ २९, तरुणपुरिससाहम्मिओ तरुणनपुंसयसाहम्मिओ अ ३०, मज्झिममहिला साहम्मिणी थेरी साहम्मिणी अ ३१, मज्झिममहिला साहम्मिणी अ तरुणी साहम्मिणी अ ३२, मज्झिममहिला साहम्मिणी मज्झिमनपुंसयसाहम्मिओ अ ३३,-मज्झिममहिला साहम्मिणी थेरनपुंसओ साहम्मिओ उ ३४, मज्झिममहिला साहम्मिणी तरुणनपुंसयसाहम्मिओ अ ३५, थेरी साहम्मिणी तरुणी थेरसाहम्मिणी ३६, थेरी साहम्मिणी नपुंसयसाहम्मिओ अ ३७, थेरी साहम्मिणी मज्झिमनपुंसयसाहम्मिओ उ ३८, थेरी साहम्मिणी तरुणनपुंसयसाहम्मिओ उ ३९, तरुणीसाहम्मिणी मज्झिमनपुंसयसाहम्मिओ य ४०, तरुणी साहम्मिणी थेरनपुंसयसाहम्मिओ उ ४१, तरुणी साहम्मिणी तरुणनपुंसयसाहम्मिओ य ४२,तरुणी साहम्मिणी मज्झिमो नपुंसयसाहम्मिओ अ ४३,थेरनपुंसयसाहम्मिओ तरुणनपुंसयसाहम्मिओ अ ४४, एते ताव साहम्मिअचारणिआए लद्धा ॥ इदानीं अन्नधम्मचारणिआए एवं सिज्झइ—अण्णधम्मिआ दो मज्झिमपुरिसा पुच्छिज्जंति एसको १, अन्नधम्मिआ दो थेरपुरिसा २, अण्णधम्मिआ दो तरुणपुरिसा ३, अण्णधम्मिआउ दो मज्झिममहिला ४, अण्णधम्मिआ थेरी उ दो ५, अण्णधम्मिअतरुणी दो ६, अण्णधम्मिअमज्झिमनपुंसया दो ७, अण्णधम्मिअथेरनपुंसया दो८, अण्णधम्मिअतरुणनपुंसया दो९, अण्णधम्मिअमज्झिमपुरिसो अण्णधम्मिअथेरपुरिसो य १०, अण्णधम्मियमज्झिमपुरिसो अण्णधम्मिअतरुणपुरिसो य ११, अण्णधम्मिअमज्झिमपुरिसो अ अण्णधम्मिअमज्झिममहिला अ १२,अण्णधम्मिअमज्झिमपुरिसो अ अण्णधम्मिअथेरी य १३ अण्णधम्मिअमज्झिमपुरिसो अण्णधम्मिअतरुणी अ१४, अण्णधम्मिअमज्झिमपुरिसो अण्णधम्मिअमज्झिमनपुंसओ अ १५,अण्णधम्मिअमज्झिमपुरिसो अण्णधम्मिअथेरनपुंसगो य १६, अण्णधम्मिअमज्झिमपुरिसो अण्णधम्मिअतरुणनपुंसगो अ १७, अण्णधम्मिअथेरपुरिसो अण्णधम्मिअतरुणपुरिसो अ १८, अण्णधम्मिअथेरपुरिसो अण्णधम्मिअमज्झिममहिला य १९, अण्णधम्मिअथेरपुरिसो अण्णधम्मिअथेरी अ २०, अण्णधम्मिअथेरपुरिसो अण्णधम्मिअतरुणी अ २१, अण्णधम्मिअथेरपुरिसो अण्णधम्मिअमज्झिमनपुंसओ अ २२, अण्णधम्मिअथेरपुरिसो अण्णधम्मियथेरनपुंसगो य २३, अण्णधम्मिअथेरपुरिसो अण्णधम्मिअतरुणनपुंसगो य २४, अण्णधम्मिअतरुणपुरिसो अण्णधम्मिअमज्झिममहिला य २५, अण्णधम्मिअतरुणपुरिसो अण्णधम्मिअथेरी य २६, अण्णधम्मिअतरुणपुरिसो अण्णधम्मिअतरुणी अ २७, अण्णधम्मिअतरुणपुरिसो अण्णधम्मिअमज्झिमनपुंसगो अ २८ अण्णधम्मिअतरुणपुरिसो अण्णधम्मिअथेरनपुंसगो अ २९, अण्णधम्मियतरुणपुरिसो अण्णधम्मिअतरुणनपुंसगो अ ३० , अण्णधम्मिअमज्झिममहिला अण्णधम्मिअथेरी अ ३१, अण्णधम्मिअमज्झिममहिला अण्णधम्मिअतरुणी अ३२, अण्णधम्मिअमज्झिममहिला अण्णधम्मियमज्झिमनपुंसगो अ ३३ , अण्णधम्मिअमज्झिममहिला अण्णधम्मिअथेरनपुंसगो य ३४, अन्नधम्मिअमज्झिममहिला अन्नधम्मिअतरुणनपुंसगो अ ३५, अण्णधम्मिअथेरी अण्णधम्मिअतरुणी य ३६, अण्णधम्मिअथेरी अण्णधम्मिअथेरनपुंसगो य ३७, अन्नधम्मिअथेरी अन्नधम्मिअमज्झिमनपुंसगो य ३८ , अण्णधम्मियथेरी अण्णधम्मियतरुणनपुंसगो अ ३९, अन्नधम्मिअतरुणी अन्नधम्मियमज्झिमनपुंसगो अ ४०, अन्नधम्मिअतरुणी अन्नधम्मिअथेरनपुंसगो य ४१, अन्नधम्मिअतरुणी अन्नधम्मिअतरुणनपुंसगो य ४२, अन्नधम्मिअतरुणी अन्नधम्मिअमज्झिमनपुंसगो अ ४३ , अन्नधम्मिअमज्झिमनपुंसओ अन्नधम्मिअथेरी नपुंसगो अ ४४, अण्णधम्मिअमज्झिमनपुंसगो अण्णधम्मिअतरुणनपुंसओ अ ४५ , अण्णधम्मिअथेरनपुंसओ अन्नधम्मिअतरुणनपुंसगो अ४६, एते अन्नधम्मिअचारणियाए लद्धा । ते सव्वे य नउई ॥ इदाणिं साहम्मिअ अन्नधम्मिअ उभयचारणिआ किज्जइ-साहम्मिअमज्झिमपुरिसो अन्नधम्मियमज्झिमपुरिसो य पुच्छिज्जइ १, साहम्मिअमज्झिमपुरिसो अण्णधम्मियथेरपुरिसो य २, साहम्मिअमज्झिमपुरिसो अण्णधम्मिअतरुणो अ ३ , साहम्मिअमज्झिमपुरिसो अण्णधम्मिअ—मज्झिममहिला अ ४, साहम्मिअमज्झिमपुरिसो अण्णधम्मिअथेरी अ ५ , साहम्मिअमज्झिमपुरिसो अण्णधम्मिअतरुणी अ ६ , साहम्मिअमज्झिमपुरिसो अण्णधम्मिअमज्झिमनपुंसगो य ७, साहम्मिअमज्झिमपुरिसो अण्णधम्मिअथेरनपुंसगो अ ८, साहम्मिअमज्झिमपुरिसो अण्णधम्मिअतरुणनपुंसगो य ९ , एते नव साहम्मियमज्झिमपुरिसममुंचमाणेहिं लद्धा । साहम्मिअथेरपुरिसो अण्णधम्मिअमज्झिमपुरिसो अ १ , साहम्मिअथेरपुरिसो अन्नधम्मिअथेरपुरिसो चेव २ , साहम्मिअथेरपुरिसो अण्णधम्मिअतरुणो अ ३, साहम्मिअथेरपुरिसो अन्नधम्मिअमज्झिममहिला अ ४ , साहम्मिअथेरपुरिसो अन्नधम्मिअमहिलथेरी अ ५, साहम्मिअथेरपुरिसो अण्णधम्मिअतरुणी अ ६, साहम्मिअथेरपुरिसो अण्णधम्मिअमज्झिमनपुंसगो अ ७ , साहम्मिअथेरपुरिसो अण्णधम्मियनपुंसगथेरो अ ८ , साहम्मिअथेरपुरिसो अण्णधम्मिअतरुणनपुंसगो अ ९ , एते नव साहम्मिअथेरपुरिसममुंचमाणेहिं लद्धा । साहम्मिअतरुणपुरिसो अण्णधम्मिअमज्झिमपुरिसो य १, साहम्मियतरुणपुरिसो अण्णधम्मियथेरपुरिसो अ २, साहम्मियतरुणपुरिसो अण्णधम्मिअतरुणपुरिसो अ ३, साहम्मियतरुणपु—

रिसो अण्णधम्मिअमज्झिममहिला अ ४, साहम्मिअतरुणपुरिसो अण्णधम्मिअथेरमहिला य ५, साहम्मिअतरुणपुरिसो अण्णधम्मियतरुणी अ ६, साहम्मियतरुणपुरिसो अण्णधम्मिअमज्झिमनपुंसगो अ ७, साहम्मिअतरुणपुरिसो अन्नधम्मिअतरुणनपुंसगो अ ८, साहम्मिअतरुणपुरिसो अण्णधम्मिअथेरनपुंसगो अ ९, एतेवि नव साहम्मिअतरुणमुंचमाणेहिं लद्धा । साहम्मिअमज्झिममहिला अण्णधम्मिअमज्झिमपुरिसो अ १, साहम्मिअमज्झिममहिला अण्णधम्मिअथेरपुरिसो अ २, साहम्मियमज्झिममहिला अण्णधम्मिअतरुणपुरिसो अ ३, साहम्मिअमज्झिममहिला अन्नधम्मिअमज्झिममहिला अ ४, साहम्मिअमज्झिममहिला अण्णधम्मिअथेरमहिला अ ५, साहम्मिअमज्झिममहिला अण्णधम्मिअतरुणमहिला अ ६, साहम्मिअमज्झिममहिला अण्णधम्मिअमज्झिमनपुंसगो अ ७, साहम्मिअमज्झिममहिला अण्णधम्मिअथेरनपुंसगो अ ८, साहम्मिअमज्झिममहिला अण्णधम्मिअतरुणनपुंसगो अ ९ । एते नव साहम्मिअमज्झिममहिलाए लद्धा । साहम्मिआ थेरी अण्णधम्मिअमज्झिमपुरिसो अ १, साहम्मिअथेरी अण्णधम्मिअथेरपुरिसो अ २, साहम्मिअथेरी अण्णधम्मिअतरुणपुरिसो य ३, साहम्मियथेरी अण्णधम्मिअमज्झिममहिला अ ४, साहम्मिअथेरी अण्णधम्मिअथेरी अ ५, साहम्मिअथेरी अण्णधम्मिअतरुणी अ ६, साहम्मिअथेरी अण्णधम्मिअमज्झिमनपुंसगो अ ७, साहम्मियथेरी अन्नधम्मिअथेरनपुंसगो अ ८, साहम्मिअथेरी अण्णधम्मिअतरुणनपुंसगो अ ९ एते साहम्मियथेरीए अमुंचमाणीए लद्धा । साहम्मिअतरुणी अण्णधम्मिअमज्झिमपुरिसो य १, साहम्मिअतरुणी अण्णधम्मिअथेरपुरिसो अ २, साहम्मिअतरुणी अण्णधम्मियतरुणपुरिसो य ३, साहम्मियतरुणी अण्णधम्मिअमज्झिममहिला य ४, साहम्मिअतरुणी अण्णधम्मिअथेरी अ ५, साहम्मिअतरुणी अण्णधम्मिअतरुणी अ ६ साहम्मिअतरुणी अन्नधम्मिअमज्झिमनपुंसगो अ ७ साहम्मिअतरुणी अन्नधम्मिअथेरनपुंसगो अ ८ साहम्मिअतरुणी अन्नधम्मिअतरुणनपुंसगो अ ९, एते नव साहम्मिअतरुणीए अमुंचमाणीए लद्धा । साहम्मिअमज्झिमनपुंसगो अन्नधम्मिअमज्झिमपुरिसो अ १, साहम्मिअमज्झिमनपुंसगो अन्नधम्मिअथेरपुरिसो अ २, साहम्मिअमज्झिमनपुंसगो अन्नधम्मिअतरुणपुरिसो अ ३, साहम्मियमज्झिमनपुंसओ अन्नधम्मियमज्झिममहिला य ४, साहम्मियमज्झिमनपुंसओ अन्नधम्मिअथेरी अ ५, साहम्मिअमज्झिमनपुंसओ अन्नधम्मियतरुणी अ ६, साहम्मियमज्झिमनपुंसओ अन्नधम्मियमज्झिमनपुंसओ अ ७, साहम्मिअमज्झिमनपुंसओ अन्नधम्मियथेरनपुंसओ अ ८, साहम्मिअमज्झिमनपुंसओ अन्नधम्मिअतरुणनपुंसओ अ ९, एते नव साहम्मिअमज्झिमनपुंसगेण अमुंचमाणेण लद्धा । साहम्मिअथेरनपुंसओ अण्णधम्मिअमज्झिमपुरिसो अ १, साहम्मिअथेरनपुंसगो अन्नधम्मिअथेरपुरिसो अ २, साहम्मिअथेरनपुंसगो अन्नधम्मिअतरुणपुरिसो अ ३, साहम्मिअथेरनपुंसगो अण्णधम्मिअमज्झिममहिला अ ४, साहम्मिअ—थेरनपुंसगो अन्नधम्मिअ—थेरी अ ५, साहम्मिअ—थेरनपुंसओ अण्णधम्मिअतरुणी अ ६, साहम्मिअथेरनपुंसगो अण्णधम्मिअमज्झिमनपुंसगो अ ७, साहम्मिअथेरनपुंसगो अण्णधम्मिअथेरनपुंसगो, अ ८ । साहम्मिअथेरनपुंसगो अण्णधम्मिअतरुणनपुंसगो अ ९, एते नव साहम्मियथेरनपुंसगेण अमुंचमाणेण लद्धा । साहम्मिअतरुणनपुंसगो अण्णधम्मिअमज्झिमपुरिसो अ १, साहम्मिअतरुणनपुंसगो अण्णधम्मिअथेरपुरिसो अ २, साहम्मिअतरुणनपुंसगो अण्णधम्मिअतरुणपुरिसो अ ३, साहम्मिअतरुणनपुंसगो अण्णधम्मिअमज्झिममहिला अ ४, साहम्मिअतरुणनपुंसगो अण्णधम्मिअथेरी अ ५, साहम्मिअतरुणनपुंसगो अण्णधम्मिअतरुणी अ ६, साहम्मिअतरुणनपुंसगो अण्णधम्मिअमज्झिमनपुंसगो अ ७, साहम्मिअतरुणनपुंसगो अण्णधम्मिअथेरनपुंसगो अ ८, साहम्मिअतरुणनपुंसगो अण्णधम्मिअतरुणनपुंसगो अ ९, एते नव साहम्मिअतरुणनपुंसगेण अमुंचमाणेण लद्धा । एते नव नवगा साहम्मिअअण्णधम्मिअचाराणिआए होंति । एगत्थ मिलिआ एकासीति । उक्तं पृच्छाद्वारम् । ओघ० । (षट्कायतना पृथ्वीकायिकादिशब्देषु) तदेवं गच्छतस्तस्य षट्काययतनादिको विधिरुक्तः , स इदानीं गच्छन् ग्रामादौ प्रविशति, तत्र का सामाचारी ?, तद्दर्शनार्थमुपक्रमते—

पढमबिइया गिलाणे, तइए सण्णी चउत्थ साहम्मी ।
पंचमियम्मि अ वसही, छट्ठे ठाणट्ठिओ होइ ॥६१॥

प्रथमद्वारे द्वितीयद्वारे च 'गिलाणे'त्ति-ग्लानविषया यतना वक्तव्या । तृतीये द्वारे संज्ञी-श्रावको वक्तव्य. । चतुर्थे द्वारे साधर्मिक —साधुर्वक्तव्य । पञ्चमे द्वारे वसतिर्वक्तव्या । षष्ठे द्वारे वर्षकालप्रतिघातात्स्थानस्थितो भवति । आह-तृतीयद्वारे षडर्थाधिकारा भविष्यन्ति, तद्यथा-"वइअग्गामे संखडि, सण्णी दाणे अ भद्द अ" त्ति, ततश्च किमिति संज्ञिन एव केवलस्य ग्रहणमकारि ?, उच्यते—संज्ञिनोऽतिरिक्तो विधिर्वक्ष्यमाणो भविष्यति अस्यार्थस्य ज्ञापनार्थं संज्ञिग्रहणमेवाकरोत् । अथवा—तुलादण्डमध्यग्रहणन्यायेन मध्यग्रहणे शेषाण्यपि गृहीतान्येव द्रष्टव्यानि, आह—मध्यमे चैतन्न भवति, यत. षडमूनि द्वाराणि, उच्यन्ते, नैतदेवं, यत सप्तमं चशब्दाक्षिप्तं महानिनादेति द्वारं भविष्यति, संज्ञिग्रहणेन मध्यमेव गृहीतमितीयं द्वारगाथा । ओघ० । ( साधर्मिकद्वारम् 'साहम्मिय' शब्दे वक्ष्यते । )( श्रमणानां मध्ये ये शुद्धास्तैस्त्वेव संवासं कुर्यादिति 'पडिलेहणा' शब्दे पञ्चमभागे ३३८ पृष्ठे गतम् । ) ( वसतिद्वारविषय. 'वसहि' शब्दे गत. । )( यै. कारणै स्थानस्थितो भवति तानि कारणानि 'ठाणट्ठिय' शब्दे चतुर्थभागे १७१६ पृष्ठे गतानि । ) ('हिंडग' शब्दे हिण्डकस्वरूपं वक्ष्यामि । ) ( आहिण्डकानां विषय. 'आहिंडग' शब्दे द्वितीयभागे-५२७ पृष्ठे गत. । )

इदानीं बालादीनां प्रेषणार्हत्वे प्राप्ते यतना प्रतिपाद्यते, तत्र च गणावच्छेदक. प्रेष्यते, तदभावेऽन्यो गीतार्थ. । तदभावेऽगीतार्थोऽपि प्रेष्यते । तस्य को विधि. ?—

सामायारिमगीए, जोगमणागाढ संवग परावे ।
वेयावच्चे दायण—जुयलसमत्थं व सहिअं वा ॥ १४२ ॥

अगीतार्थस्य समाचारी कथ्यते, तत्र प्रेष्यते, तदभावे योगी प्रेष्यते। किंविशिष्ट ?-'अणागाढ' त्ति अनागाढयोगी-यात्रायोगी योगं निक्षिप्य पारयित्वा-भोजयित्वा प्रेष्यते,तत स्तदभावे क्षपक प्रेष्यत,कथम् ?-'पाराव' त्ति भोजयित्वा , तदभावे वैयावृत्त्यकर। एतदेवाह-'वेयावच्चे' त्ति वैयावृत्त्यकर: प्रेष्यते,'दायण त्ति स च वैयावृत्त्यकर. कुलानि दर्शयति, तदभावे 'जुअल' त्ति युगलं प्रेष्यते-वृद्धस्तरुणसहित , बालस्तरुणसहितो वा, 'समत्थं व सहिअं व' त्ति समर्थे वृषभे प्रेष्यमाणे तरुणेन सह वृद्धेन वा सह, द्वितीयो वकार: पादपूरण । आह-प्रथम बालादय उपन्यस्ता., तत्कस्मात्तेषामेव प्रेषणविधिर्न प्रतिपादित. प्रथमम् ?, उच्यते, अयमेव प्रक्रम', यदुत प्रथममगीतार्थ: प्रेष्यत, पश्चाद्योगिप्रभृतय इति आह-इत्थमेवोपन्यास कस्मान्न कृत.?, उच्यते, अप्रेणार्हत्वं सर्वेषां तुल्यं वर्त्तते, ततश्च योऽस्तु सोऽस्तु प्रथममिति न कश्चिद्दोष.। ओघ०। ( लब्धाया वसतौ संस्तारकविधि. 'संथारग' शब्देऽस्मिन्नेव भागे गत.। ) ( शकुनविचार.' सउण ' शब्देऽस्मिन्नेव भागे ५ पृष्ठे गतः। ) ( कायोत्सर्गविषय. 'काउस्सग्ग' शब्दे तृतीयभागे ४१७ पृष्ठे गतः। ) ( प्रत्युपेक्षणाया पौरुषीप्रमाणम् ' पोरिसी ' शब्दे पञ्चमभागे उक्तम् । ) ( स्थण्डिलद्वारविषय. ' थंडिल ' शब्दे चतुर्थभागे २३७० पृष्ठे गत.। ) ( मार्गप्रत्युपेक्षणाद्वारम् ' पडिलेहणा ' शब्दे पञ्चमभागे ३५१ पृष्ठे गतम्। ) ( पिण्डनिक्षेप. ' पिंड ' शब्दे पञ्चमभागे ६१७ पृष्ठे गत.। ) ( लेपपिण्डव्याख्या ' लेव ' शब्दे पृष्ठे भागे गता। ) ( पात्रकद्वारम् ' पत्त ' शब्दे पञ्चमभागे ३६२ पृष्ठे गतम्। ) ( एषणाविषयः ' एसणा ' शब्दे तृतीयभागे ५२ पृष्ठे गत.। ) ( भावद्वारं ' भाव ' शब्दे पञ्चमभागे गतम्। ) ( भिक्षाविषयः ' गोयरचरिया ' शब्दे ३ भागे १००४ पृष्ठे गतः। ) ( भोजनविधिः ' भोयण ' शब्दे पञ्चमभागे गतः। ) ( ग्रासैषणाविधि. ' एसणा ' शब्दे तृतीयभागे ६७० पृष्ठे गत.। ) ( परिस्थापनिकाविधिः ' परिट्ठवण ' शब्दे पञ्चमभागे ५७० पृष्ठे गत. )

एसा परिठवणविही, कहिया भे धीरपुरिसपन्नत्ता।
सामायारी एत्तो, वुच्छं अप्पक्खरमहत्थं ॥ ६२५ ॥

सुगमा।

इदानीं सामाचारी व्याख्यायते—

सम तो आगतो चर-मपोरिसिं जाणिऊण ओगाढं ।
पडिलेहणमप्पत्तं, नाऊण करेइ सज्झायं ॥ ६२६ ॥

एव च साधुः सञ्ज्ञा व्युत्सृज्यागत पुन चरमपौरुषी-चतुर्थप्रहर ज्ञात्वा अवगाढम्-अवतीर्ण, तत किं करोतीत्यत आह—प्रत्युपेक्षणा करोति , अथासौ चरमपौरुषी नाद्यापि भवति ततोऽप्राप्ता चरमपौरुषीं मत्वा स्वाध्यायं तावत्करोति यावच्चरमपौरुषी प्राप्ता। ओघ०। ( स्वाध्यायविषय ' सज्झाय ' शब्देऽस्मिन्नेव भागे गत । )

एसा सामायारी, कहिया भे धीरपुरिसन्नत्ता।
एत्तो उवहिपमाणं, वुच्छं सुद्धस्स जह धरणा ॥६६५॥

सुगमा। उक्त पिण्डद्वारम् , ( उपाधिद्वारम् ' उवहि ' शब्दे द्वितीयभागे १०६४ पृष्ठे गतम्। ) ( नन्दिभाजनविषय ' णंदिभायण ' शब्दे चतुर्थभागे १७५७ पृष्ठे गत ) ( अनायतनद्वारम् ' अणाययण ' शब्दे प्रथमभागे ३१० पृष्ठे गतम्। ) ( आलोचनाविषय 'आलोयणा' शब्दे द्वितीयभागे ४०० पृष्ठे गत । )

दशधा सामाचारी—

दसविहा सामायारी पन्नत्ता, तं जहा-
इच्छा मिच्छा तहक्कारो,आवस्सियाँ निसीहिया।
आपुच्छणा य पडिपुच्छा, छंदणा य निमंतणा ॥ १ ॥
उपसंपया य काले,सामायारी भवे दसविहा उ।(सू०७४६)

स्था० १० ठा० ३ उ०। अनु०। आ० म०। ( आसां व्याख्या स्वस्वस्थाने। )

दसविह सामायारी, जत्थ ठिए भव्वसत्तसंघाए।
सिज्झंति य वुज्झंति य, ण खंडिज्जइ तयं गच्छे ॥
महा० ४ अ०।

तथा'तव्वइरित्ते य णामणाईसु' त्ति सोपस्कारत्वान्नामनधावनादिषु सुकराणि यानि द्रव्याणि तानि तद्व्यतिरिक्तो द्रव्याचार उच्यते, यत उक्तम्-"णामणधोवणवासण-सिक्खावणसुकरणविरोहीणि। दव्वाणि जाणि लोए, दव्वायारं वियाणाहि ॥ १ ॥" भावे दशविधाया इच्छादिभेदेन सामाचार्या आचरणं, अत्र बहुलग्रहणात्स्त्रियां युद् , एवमापृच्छनादिष्वपि, भावत्वं तु जीवद्रव्यपर्यायत्वादस्येति।

सम्प्रत्यध्ययननामान्वर्थमाह—

इच्छाइसाममेसुं, आयरणं वण्णिअं तु जम्हेत्थ ।
तम्हा सामायारी, अज्झयणं होइ नायव्वं ॥ ४८६ ॥

'इच्छादिसाम'त्ति सुब्व्यत्ययाद् इच्छादिसामसु एषु—अनन्तराभिहितेषु आचरणम्—एतद्विषयमनुष्ठान वर्णितं—प्ररूपितम् तु'-पूरणे यस्मादत्राध्ययने तस्मात्सामाचारीति-सामाचारीनामकमिदमिति प्रक्रमे अध्ययन भवति-ज्ञातव्यम् , अयमाशय.-समाचारोऽत्र वर्ण्यते ततः समाचार भवमिति विवक्षाया शैषिकोऽण ,रूढितश्च स्त्रीलिङ्गता, तथा च-'टिड्ढाणञ्'०( पा० ४-१-१५ ) इत्यादिना ङीपि सामाचारीति भवतीति गाथार्थ.। गतो नामनिष्पन्ननिक्षेप.।

सम्प्रति सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

सामायारिं पवक्खामि, सव्वदुक्खविमुक्खणिं ।
जं चरित्ता ण निग्गन्था, तिण्णा संसारसागरं ॥ १ ॥

समाचरणं—समाचारस्तस्य भावो 'गुणवचनब्राह्मणादिभ्य' इति ( पा० ५-१-१२४ ) ष्यञ् , तस्य च षित्करणसामर्थ्यात् स्त्रियामपि वृत्तिरिति 'षिद्गौरादिभ्यश्च' ( पा०४-१-४१) इति ङीषि सामाचारी ता-यतिजनेतिकर्त्तव्यतारूपामहं प्रवक्ष्यामि सर्वदु खविमोक्षणीम्—अशेषशारीरमानसासातविमुक्तिहेतुम् , अत एव यां सामाचारीं चरित्वा—आसेव्य 'ण' इति वाक्यालङ्कारे, निर्ग्रन्था.—यतयस्तीर्णा समारसा-

गरे, मुक्तिं प्राप्ता इति भावः, उपलक्षणत्वाच्च तरन्ति तरिष्यन्ति चेति सूत्रार्थः ।

यथाप्रतिज्ञातमाह—

पढमा आवस्सिया नामं, बिइया य निसीहिया ।
आपुच्छणा य तइया, चउत्थी पडिपुच्छणा ॥ २ ॥
पंचमा छंदणा नामं, इच्छाकारो अ छट्ठओ ।
सत्तमो मिच्छकारो य, तहक्कारो य अट्ठमो ॥ ३ ॥
अब्भुट्ठाणं नवमा, दसमा उवसंपया ।
एसा दसंगा साहूणं, सामायारी पवेइया ॥ ४ ॥

सूत्रत्रयं स्पष्टमेव, नवरं व्रतग्रहणादारभ्य कारणं विना गुर्ववग्रहे आशातनादोषसम्भवान्न स्थेयं, किन्तु ततो निर्गन्तव्यं, न च निर्गमनमावश्यकीं विनेति प्रथममावश्यकी, निर्गत्य च यत्रास्पदे स्थेयं तत्र नैषेधिकीपूर्वकमेव प्रवेष्टव्यमिति तदनु नैषेधिकी, तत्रापि तिष्ठतो भिक्षाटनादिविषयाभिप्रायोत्पत्तौ गुरुपृच्छापूर्वकमेव तत्साधनमित्यनन्तरमापृच्छना, आपृच्छनायामपि गुरुनियुक्तेन पुनः प्रवृत्तिकाले कश्चित्प्रष्टव्या एव गुरव इति तत्पृष्ठतः प्रतिप्रच्छना, कृत्वाऽपि गुर्वनुज्ञया भिक्षाटनादिकं नात्मम्भरिणैव भवितव्यमिति तदनु छन्दना—प्राग्गृहीतद्रव्यजातेन शेषयतिनिमन्त्रणात्मिका, तस्यामपि प्रयोक्तव्य एवेच्छाकार इति तदनु तस्याभिधानम्, अयं चात्यन्तमवद्यभीरुणैव तत्त्वतो विधीयते, तेन च कथञ्चिदतिचारसम्भवे आत्मा निन्दितव्य इति तदनु मिथ्याकारः, कृतेऽपि च तस्मिन् बृहत्तरदोषसम्भवे गुरूणामालोचना दातव्या, तत्र च यदादिशन्ति गुरवस्तत्तथेति मन्तव्यम् इति तथाकारः, तथेति प्रतिपद्य च सर्वकृत्येषूद्यमवता भाव्यमिति तदनु तद्रूपमभ्युत्थानम्, उद्यमवता च ज्ञानादिनिमित्तं गच्छान्तरसङ्क्रमोऽपि विधेय तत्र चोपसम्पद् ग्रहीतव्येत्यनन्तरमुपसम्पदुक्ता । उपसंहारमाह—एषा—अनन्तरोक्ता दशाङ्गा—इच्छादिदशावयवा साधूनां—यतीनां सामाचारी प्रवेदिता—तीर्थकरादिभिरुक्तेति सूत्रत्रयगर्भार्थः ।

एतामेव प्रत्यवयवं विषयप्रदर्शनपूर्वकं विधेयतयाऽभिधातुमाह-

गमणे आवस्सियं कुज्जा, ठाणे कुज्जा निसीहियं ।
आपुच्छणा सयंकरणे, परकरणे पडिपुच्छणा ॥ ५ ॥
छंदणा दव्वजाएणं, इच्छाकारो अ सारणे ।
मिच्छाकारो अ निंदाए, तहक्कारो पडिस्सुए ॥ ६ ॥
अब्भुट्ठाणं गुरुपूया, अच्छणे उवसंपया ।
एवं दुपंचसंजुत्ता, सामायारी पवेइया ॥ ७ ॥

गमने—तथाविधालम्बनतो बहिर्निःसरणे आवश्यकेषु—अशेषावश्यकर्त्तव्यव्यापारेषु सत्सु भवाऽऽवश्यकी, उक्तं हि-" आवस्सिया उ आव-स्सएहिं सव्वेहिं जुत्तजोगस्स " त्यादि तां कुर्याद्—विदध्यात् स्थीयतेऽस्मिन्निति स्थानम्-उपाश्रयस्तस्मिन् प्रविशन्निति शेषः, कुर्यात्, कां ?—नैषेधिकीम्, निषेधनं निषेधः—पापानुष्ठानेभ्य आत्मनो व्यावर्त्तनं तस्मिन् भवा नैषेधिकी, निषिद्धात्मन एतत्संभवात्, उक्तं हि-" जो होइ निसिद्धप्पा, निसीहिया तस्स भावओ होइ " इत्यादि, आङिति—सकलकृत्याभिव्याप्त्या प्रच्छना आप्रच्छना-इदमहं कुर्यां न वेत्येवंरूपा तां स्वयमित्यात्मनः करणं—कस्यचिद्विवक्षितकार्यस्य निर्वर्त्तनं स्वयंकरणं तस्मिन्, तथा परकरणे-अन्यप्रयोजनविधाने प्रतिप्रच्छना, गुरुनियुक्तोऽपि हि पुनः प्रवृत्तिकाले प्रतिपृच्छत्येव गुरुं, स हि कार्यान्तरमप्यादिशेत् सिद्धं वा तदन्यतः स्यादिति, उभयत्र वा स्वकरणपरकरणे उपलक्षणमिति—उच्छ्वासनिःश्वासौ विहाय सर्वकार्येष्वपि स्वपरसम्बन्धिषु गुरवः प्रष्टव्याः, अतः सर्वविषयमपि प्रथमतः प्रच्छनमापृच्छनेत्युच्यते । तथा च निर्युक्तिकृता सामान्येनैवावाचि—"आपुच्छणा उ कज्जे " त्ति, तथा स्वपरसम्बन्धिनि सर्वत्रापि कृत्ये गुरुनियुक्तेन पुनः प्रवृत्तिकाले यद्गुरुप्रच्छनं सा प्रतिपृच्छा, तथा च-" पुव्वनिउत्तेण होइ पडिपुच्छा ' त्ति अविशेषेणैवोक्तं, छन्दना-उक्तरूपा विधेयेति शेषः, एवमुत्तरत्रापि, द्रव्यजातेन तथाविधाशनादिद्रव्यविशेषेण प्राग्गृहीतेनेति गम्यते, सूचकत्वात्सूत्रस्य, तथा चाह-" पुव्वगहिएण छंदणं " ति, इच्छा-स्वकीयोऽभिप्रायस्तया करणं—तत्कार्यनिर्वर्त्तनमिच्छाकारः, ' सारणे ' इत्यौचित्यत आत्मनः परस्य वा कृत्यं प्रति प्रवर्त्तने. तत्रात्मसारणे यथेच्छाकारेण युष्मच्चिकीर्षितं कार्यमिदमहं करोमीति, अन्वाह च-"अहगं तुब्भं एयं करेमि कज्जं तु इच्छाकारेणं"ति, अन्यसारणे च मम पात्रलेपनादि सूत्रदानादि वा इच्छाकारेण कुरुतेति, तथा चान्वाह-" जइ अब्भत्थिज्ज परं, कारणजाए करेज्ज से कोइ । तत्थ वि इच्छाकारो, ण कप्पइ बलाभिओगो उ ॥ १ ॥ " तथा मिथ्येत्यलीकं मिथ्याकरणं मिथ्याकारः—मिथ्येदमिति प्रतिपत्तिः सा चात्मनो निन्दा—जुगुप्सा तस्यां, वितथाचरणे हि धिगिदं मिथ्यामया कृतमिति निन्द्यत एवात्मा विदितजिनवचनैः, तथाकरणं तथाकारः—इदमित्थं चैवेत्यभ्युपगमः, स च किं विषय इत्याह—प्रतिश्रवणं प्रतिश्रुतं-गुरौ वाचनादिकं यच्छत्येवमेतदित्यभ्युपगमस्तस्मिन्, तथा चान्वाह-"वायणपडिसुणणाए, उवएसे सुत्तअत्थकहणाए । अवितहमेयं ति तहा, अविकप्पेणं तहक्कारो ॥१॥" अभीत्याभिमुख्येनोत्थानम्-उद्यमनमभ्युत्थानं तच्च 'गुरुपूय' त्ति सूत्रत्वाद् गुरुपूजायां, सा च गौरवार्हाणाम्—आचार्यग्लानबालादीनां यथोचिताहारभेषजादिसम्पादनम्, इह च सामान्याभिधानेऽप्यभ्युत्थानं निमन्त्रणारूपमेव परिगृह्यते, अत एव निर्युक्तिकृतैतत्स्थाने निमन्त्रणैवाभिहिता ' छंदणा य निमंतणा" त्ति । तथा ' अच्छणे ' त्ति आसने प्रक्रमादाचार्यान्तरादिसन्निधौ अवस्थाने उप-सामीप्येन सम्पादनं-गमनं सम्पदादित्वात्क्विपि उपसंपद्—इयन्तं कालं भवदन्तिके मयाऽऽसितव्यमित्येवंरूपा, च ज्ञानार्थतादिभेदेन त्रिधा, तथा चोक्तम्-' उवसंपया य तिविहा, णाणे तह दंसणे चरित्ते य " त्ति एवम् इत्युक्तप्रकारेण 'दुपंचसंजुत्त' त्ति आर्षत्वात् द्विपञ्चकसंयुक्ता; दशसंख्यायुक्तामित्यर्थः, समाचारीं प्रवदयेत्—कथयेत् आर्षत्वाद् गुरुः शिष्यायेति शेषः, अनेन च गुरुणा सदा तदुपदेशपरेणैव भवितव्यमित्यर्थत उक्तम्, पठ्यते च-'एसा दसंगा साहूणं, सामारी पवेइय' त्ति, एतच्च स्पष्टमिति सूत्रत्रयार्थः ।

एतावता दशविधसामाचारीमभिधायौघसामाचारीं वि-वक्षुरिदमाह—

पुव्विल्लम्मि चउब्भागे, आइच्चम्मि समुट्ठिए ।
भंडयं पडिलेहित्ता, वंदित्ता य तओ गुरुं ॥८॥
पुच्छिज्जा पंजलिउडो, किं कायव्वं मए इहं ? ।
इच्छं निओइउं भंते !, वेयावच्चे व सज्झाए ॥९॥
वेयावच्चे निउत्तेणं, कायव्वमगिलायओ ।
सज्झाए वा निउत्तेणं, सव्वदुक्खविमुक्खणे ॥१०॥

'पुव्विल्लम्मि' त्ति पूर्वस्मिंश्चतुर्भागे आदित्ये समुत्थिते—समुद्गते, इह च यथा दशाविकलोऽपि पटः पट एवोच्यते, एवं किञ्चिदूनोऽपि चतुर्भागश्चतुर्भाग उक्तः, ततोऽयमर्थः—बुद्ध्या नभश्चतुर्धा विभज्यते, तत्र पूर्वदिक्सम्बद्धे किञ्चिदूननभश्चतुर्भागे यदाऽऽदित्यः समुदेति तदा पादोनपौरुष्यामित्युक्तं भवति, भाण्डक—पतद्ग्रहाद्युपकरणं प्रतिलेख्य—सामयिकपरिभाषया चक्षुषा निरीक्ष्योपलक्षणत्वात्प्रमृज्य च वन्दित्वा च—नमस्कृत्य ततः—इति प्रतिलेखनानन्तरं गुरुम्—आचार्यादिकं, किमित्याह-पृच्छेत्—पर्यनुयुञ्जीत प्रक्रमाद् गुरुमेव 'पंजलिउड' त्ति प्राग्वत्कृताञ्जलिः, यथा-'किं कर्त्तव्यम्' अनुष्ठेयं 'मये' त्यात्मनिर्देशः इह—अस्मिन् समये इति गम्यते, कदाचिद् गुरवो मन्येरन्-स्वाध्यायवैयावृत्त्ययोरन्यतरस्मिन्नेवास्य नियोग वाञ्छेत्यतो ब्रूयात्-'इच्छामि णिओइउं' ति अन्तर्भावितणयर्थत्वान्नियोजयितुं युष्माभिरात्मानमिति शेषः 'भंते' त्ति भदन्त ! 'वेयावच्चे' त्ति वैयावृत्त्ये-ग्लानादिव्यापारे वाशब्दो भिन्नक्रमस्ततः 'सज्झाए' त्ति आर्षत्वात्स्वाध्याये वा, इह च पात्रप्रतिलेखनानन्तरं गुरुं पृच्छेदिति यदुक्तं तत्प्रायस्तदैव बहुतरवैयावृत्त्यविधानसम्भवात् । यद्वा-पूर्वस्मिंश्चतुर्भागे आदित्ये समुत्थिते इव समुत्थिते, बहुतरप्रकाशीभवनात्तस्य, भाण्डमेव भाण्डकं ततस्तदिव धर्मद्रविणोपार्जनाहेतुत्वेन मुखवस्त्रिकावर्षाकल्पादीह भाण्डकमुच्यते,तत्प्रतिलेख्य वन्दित्वा च ततो गुरुं पृच्छेत् शेषं प्राग्वत् । उपलक्षणं चैतद्-यतः सकलमपि कृत्यं विधाय पुनरभिवन्दनापूर्वकं प्रष्टव्या एव गुरव इति, एवं च पृष्टा यत्कर्त्तव्यं तदाह—वैयावृत्त्ये नियुक्तेन—व्यापारितेन कर्त्तव्यं प्रक्रमात् वैयावृत्त्यम्, 'अगिलायउ' त्ति अग्लान्यैव शरीरश्रममविचिन्त्यैवेति यावत्, स्वाध्याये वा नियुक्तेन सर्वदुःखविमोक्षणे, सकलतपःकर्मप्रधानत्वादस्य, स्वाध्यायोऽग्लान्यैव कर्त्तव्य इति प्रक्रम इति सूत्रत्रयार्थः ।

इत्थं सकलौघसामाचारीमूलत्वात्प्रतिलेखनायास्तत्काल सदाविधेयत्वाद् गुरुपारतन्त्र्यस्य तथाभिधायौत्सर्गिकं दिनकृत्यमाह—

दिवसस्स चउरो भागे, कुज्जा भिक्खू वियक्खणो ।
तओ उत्तरगुणे कुज्जा, दिणभागेसु चउसु वि ॥११॥
पढमं पोरिसिं सज्झायं, बीयं झाणं झियायई ।
तइयाए भिक्खायरियं, पुणो चउत्थीइ सज्झायं ॥१२॥

सूत्रद्वयं स्पष्टमेव, नवरं चतुरो भागान् कुर्याद् बुद्ध्येत्युपस्कारः, 'तत' इति चतुर्भागकरणादनन्तरमिति गम्यते उत्तरगुणान् मूलगुणापेक्षया स्वाध्यायादींस्तत्कालोचितान् कुर्याद्—विदध्यात्, क्व दिनभागे । कमुत्तरगुणं कुर्यादित्याह—प्रथमां पौरुषीं स्वाध्यायं—वाचनादिकं, सूत्रपौरुषीत्वादस्याः, कुर्यादितीहोत्तरत्र च क्रियान्तराभावेऽनुवर्त्यते, द्वितीयां प्रक्रमात्पौरुषीं ध्यानं 'झियायइ' त्ति ध्यायेत्, ध्यानं चेहार्थपौरुषीत्वादस्या अर्थविषयमेव मानसादिव्यापारणमुच्यते, ध्यायेदिति चाऽनेकार्थत्वाद्धातूनां कुर्यात्, इह च प्रतिलेखनाकालस्याल्पत्वेनाविवक्षितत्वादुभयत्र—"कालाध्वनोरत्यन्तसंयोगे" ( पा० २-३-५ ) इति द्वितीया, तृतीयायां भिक्षाचर्यां, पुनश्चतुर्थ्यां स्वाध्यायम्, उपलक्षणत्वात्तृतीयायां भोजनबहिर्गमनादीनि, इतरत्र तु प्रतिलेखनास्थण्डिलप्रत्युपेक्षणादीनि गृह्यन्ते । इत्थमभिधानं च कालापेक्षयैव कृष्यादेरिव सकलानुष्ठानस्य सफलत्वादिति सूत्रद्वयार्थः । उत्त० २६ अ० । ( पर्युषणाकल्पसामाचारी 'पज्जुसवणाकप्प' शब्दे पञ्चमभागे २५२ पृष्ठे तथा रात्रिसामाचारी 'पदाहिणकिरिया' शब्दे ५ पृष्ठे गता । )

उपसंपदि मण्डल्यां च द्विविधा सामाचारी—

दुविहा सामाचारी, उपसंपदे मंडलीएँ बोधव्वा ।
ओणालोइयम्मि गुरुणा,मंडलिमेरं अतो वोच्छं॥७८१॥

सामाचारी द्विविधा-उपसंपदि मण्डल्यां च बोद्धव्या । तत्रोपसंपत् त्रिविधा-ज्ञानोपसंपत्, दर्शनोपसंपत्, चारित्रोपसंपत् । आसां च सामान्यत इयं च सामाचारी गच्छान्तरादुपसंपदः प्रतिपत्त्यर्थमायान्तं साधु पर्यनुयोक्तव्य । वत्स! कस्त्वं कुतो गच्छादागतोऽसि, किंनिमित्तमिहायात इत्येवं यद्यपर्यनुयुज्य तस्योपसंपदं प्रतीच्छति तदा अनालोचिते अपर्यनुयुक्ते सति चत्वारो गुरुकाः, यद्वा-अनालोचिते-आलोचनामदापयित्वा, यदि तं परिभुङ्क्ते वाचयति वा तदा चत्वारो गुरुकाः । अत्र च ज्ञानोपसंपदाऽधिकारः 'मण्डलिमेरं अतो वोच्छं' ति-मण्डली-सूत्रार्थमण्डलीरूपा तस्याः सम्बन्धिनीं मर्यादां सामाचारीमतः ऊर्ध्वं वक्ष्ये । बृ०१ उ०१ प्रक०। (साम्भोगिकासाम्भोगिकयोः सह मिलितयोरागाचार्ययोः सामाचारी 'उवसंपया' शब्दे द्वितीयभागे ९९८ पृष्ठे गता ।) ( गच्छवासिना जिनकल्पिकानां च सामाचारी 'गच्छवासि' 'जिणकप्पिय' शब्दयोः । ) (चतुर्विधा सामाचारी 'आयारविणय' शब्दे द्वितीयभागे ३६० पृष्ठे व्याख्याता । सा चैवम्-संयमसामाचारी, तपःसामाचारी, गणसामाचारी, एकान्तविहारसामाचारी च । तत्र-संयमः सप्तदशप्रकारः तस्य सामाचारी । तपो द्वादशविधं तस्य सामाचारी । गणस्य साधुसमुदायस्य सामाचारी । एकान्तविहारसामाचारी-एकान्तविहारप्रतिमास्वरूपा । )

सांप्रतमुपसंहरन्नाह—

एवं सामाचारी, कहिया दसहा समासओ एसा ।
संजमतवड्ढगाणं, निग्गंथाणं महरिसीणं ॥ ७२२ ॥

एवमेषा-सामाचारी दशधा—दशविधा समासतः सङ्क्षेपेण कथिता । केषय-इत्याह-संयमतपोभ्यामाढ्या -समृद्धाः संयमतपआढ्यास्तेभ्यो निर्ग्रन्थेभ्यो महर्षिभ्य ।

समाचार्यनिवकानां फलमुपदर्शयति—

एवं सामायारिं, जुंजंता चरणकरणमाउत्ता ।

साहू खवंति कम्मं, अणेगभवसंचियमणंतं ॥ ७२३ ॥

एनाम्-अनन्तरोदितस्वरूपा दशविधा सामाचारीं यथाविधि युञ्जानास्तथा चरणकरणायुक्ताश्चरणं व्रतादि, उक्तं च—' वय ५ समणधम्म १० संजम १७, वेयावच्चं १० च बंभगुत्तीओ ९। णाणाइतियं ३ तव १२ कोहनिग्गहा ४ चेव चरणं तु ॥ १ ॥ " करणं पिण्डविशुद्ध्यादि, तदुक्तम्—' पिंडविसोही ४ समिई ५ भावण १२ पडिमा १२ य इन्दियनिरोहो ५। पडिलेहण २५ गुत्तीओ ३, अभिग्गहा ४ चेव करणं तु ॥ १ ॥ ' तया चरणकरणयोः सयुक्ताः समन्तात् उपयुक्ताः साधवः क्षपयन्ति कर्म्म अनेकभवसंचितमनन्तमिति । इदानीं पदविभागसमाचार्याः प्रस्तावः, सा च कल्पव्यवहाररूपा बहुविस्तरा, ततः स्वस्थानादवसेया । आ० म० १ अ० ।

विक्कमवच्छराओ पच्छा सोलसवाससए(१६००) वइक्कंते के वि तब्भत्तिया सावयसाविया तेसिं सूरीणं नाऊण नियाणिगणपरंपरं ठाइस्संति । के वि दूरभविया परम्मुहा होऊण परगणस्स सामायारिं गहिस्संति । अङ्ग०

( सामाचारीवैचित्र्यहेतुः ' अणुण्णा ' शब्दे प्रथमभागे ३६१ पृष्ठे गतः । )

सामायारीउवक्कमकाल-सामाचार्युपक्रमकाल-पुं० । समाचार्या उपक्रमणमुपरितनाच्छ्रुतादिहानं यत्र स सामाचार्युपक्रमकालः । उपक्रमकालभेदे, विशे० ।

सामायारीविराहग-सामाचारीविराधक-पुं० । सामाचारी साधूनामहोरात्रक्रियारूपा सदृच्छमर्यादा तस्या विराधकः । सामाचारीखण्डके गं० २ अधि० ।

सामायारीसीयंतचोयणा-सामाचारीसीदच्चोदना-स्त्री० । सामाचार्यां यथायोगं सीदतः शिथिलीभवतश्चोदनायाम्, व्य० १ उ० ।

सामालिय(मालिय)पोंड-शाल्मलीपौण्ड-न० । शाल्मलीपुष्पे, "एवं सा(मा)लियपोंडं, वद्धं आमोलगं होइ ।" उत्त० ३ अ० । (' अग ' शब्दे प्रथमभागे ३६ पृष्ठे व्याख्या गता । )

सामास-श्यामाश-पुं० । श्यामा—रजनी तस्यामाशनमाशः । रात्रिभोजने, आचा० १ श्रु० २ अ० ५ उ० ।

सामासिया-सामासिकी-स्त्री० । सनार्यमातुर्भगिन्या प्रतिवेशिन्याम्, आ० म० १ अ० ।

सामि ( ण् )-स्वामिन्-पुं० । स्वमस्यास्तीति स्वामी । नायके, आ० म० १ अ० । प्रभौ, उपकर्त्तरि, आश्रये, पिं० । ज्ञा० । पा० । प्रभु स्वामीत्यनर्थान्तरम् । आव० ४ अ० । राजनि, अनु० । जगद्गुरौ, सू० प्र० १ पाहु० । 'लोगणाहाणं' पुद्गलपरावर्त्त संसार इति कृत्वा लोकनाथाः ( भगवन्तः ) ल० । ( चतुर्दशरज्ज्वात्मकोऽयं लोक इति ' लोग ' शब्दे षष्ठभागे गतम् । ) ( चतुर्दशरज्ज्वात्मकलोकगतरुचकपर्वतात् रत्नप्रभापृथिव्या दश दिश उत्पद्यन्ते, ताश्च- जदसं जआओ उदेइ सा भवइ तस्स पुव्वदिसा " इत्यादिगाथाभिः ' दिसा ' शब्दे चतुर्थभागे २५२३ पृष्ठे दर्शिताः । ) ( स च रुचकपर्वतः जम्बूद्वीपमध्यगतः । स च जम्बूद्वीपः ' जम्बूदीव ' शब्दे चतुर्थभागे १३७१ पृष्ठे अनादृतनामदेवस्वामिको दर्शितः । ) ( एवं सर्वे द्वीपाः समुद्राः दिशः विदिशः देवलोकाः विमानादयश्च सस्वामिकाः इति स्वस्वशब्दव्याख्यावसरे दर्शितम् । )

सामिकत्तिय-स्वामिकार्त्ति(केय)क-पुं० । कृत्तिकात्मजे स्कन्दे, आचा० २ श्रु० १ चू० १ अ० २ उ० ।

सामिकुट्ठ-सामिकुष्ट-पुं० । ऐरवते वर्षे वर्त्तमानावसर्पिण्यां जाते विंशे तीर्थंकरे, प्रव० ७ द्वार ।

सामिणी-स्वामिनी-स्त्री० । भर्तृकायाम्, " हले हलि त्ति अन्नित्ति भट्टे सामिणि गोमिणि" इत्येवं वदेत् । दश० ७ अ० । मरुदेवी सामिणी य " आ० म० १ अ० ।

सामित्त-स्वामित्व-स्वमस्यास्तीति स्वामी तद्भावः । नायकत्वे, जं० १ वक्ष० । प्रज्ञा० । जी० । विपा० । स्वस्वामिसम्बन्धमात्रे, विपा० १ श्रु० २ अ० । औ० । आधिपत्ये, कर्म० ३ कर्म० । स्वामिभावत्वे, स० ७८ सम० । स्वस्वामिभावे, भ० ३ श० १ उ० । ज्ञा० । पं० सं० । विशे० । आ० चू० । ( विविधं स्वामित्वम् ' णमुक्कार ' शब्दे चतुर्थभागे २८२० पृष्ठे दर्शितम् । )

सामिय-स्वामिक-पुं० । अधिपतौ, ज्ञा० १ श्रु० ६ अ० ।

सामिल-सामिल-पुं० । स्वनामख्याते बटुकब्राह्मणे, व्य० २ उ० ।

सामिस-सामिष-त्रि० । सहाऽऽमिषेण पिशितरूपेण वर्त्तत इति सामिषम् । सस्पृहे भोजनार्थं लुब्धे, उत्त० । " सामिसं कुललं दिस्स, वज्झमाणं निरामिसं । " उत्त० १४ अ० ।

सामीविय-सामीप्यक-पुं० । सामीप्याधारे, यथा गङ्गायां घोषः । आ० म० १ अ० ।

सामुच्छेय-सामुच्छेद-पुं० । समुच्छेदो वस्तुविनाशः समुच्छेदमधीयते तद्विदन्तीति वा सामुच्छेदिकाः । तद् व्रत्तीत्यण् । क्षणक्षयिभावप्ररूपकेषु अश्वमित्रमतानुसारिषु निह्नवेषु, औ० । आ० म० । आ० चू० । विशे० ।

अथ चतुर्थवक्तव्यतामाह—

वीसा दो वाससया, तइया सिद्धिं गयस्स वीरस्स ।

सामुच्छेइयदिट्ठी, मिहिलपुरीए समुप्पन्ना ॥ २३८९ ॥

विंशत्युत्तरे वर्षशतद्वयं तदा सिद्धिं गतस्य वीरस्यासीत्ततोऽनन्तरं सामुच्छेदिकदृष्टिर्मिथिलापुर्यां समुत्पन्नेति ।

यथोत्पन्नस्तथा दर्शयन्नाह—

मिहिलाए लच्छिहरे, महगिरिकोडिन्नआसमित्ते य ।

नेउणिय-णुप्पवाए, रायगिहे खंडरक्खा य ॥२३९०॥

मिथिलानगर्यां लक्ष्मीगृहे चैत्ये महागिरिसूरीणां कौण्डिन्यो नाम शिष्यः स्थितस्तस्याप्यश्वमित्रो नाम शिष्योऽनुप्रवादाभिधानपूर्वे नैपुणिकं नामवस्तु पठति स्म, तत्र छिन्नच्छेदनकनयवक्तव्यतायामालापकाः सामायानास्तद्यथा ' पडुप्पन्नसमयनेरइया सव्वे वोच्छिज्जिस्संति एवं जाव वेमाणियत्ति । एवं बीयाइसमएसु वि वत्तव्वं अत्र तस्य चिकित्सा जाता, तद्यथा प्रत्युत्पन्नसमयनारकाः सर्वेऽपि तावद् व्यवच्छेदं प्रा-

पश्यन्ति, ततश्च कुतः सुकृतदुष्कृतकर्मफलवेदनम् उत्पादानन्तरं सर्वजीवानां नाशादित्येवमादि स्वमतिकल्पितं प्ररूपयन् वक्ष्यमाणभाष्ययुक्तिभिर्गुरुणा प्रज्ञाप्यमानोऽपि यावत्कथमपि न प्रज्ञाप्यते तत उद्घाट्य संघबाह्यः कृत , समुच्छेदवादं प्ररूपयन् काम्पिल्यपुरनगरं "राजगृहापरनामकं" गत , तत्र च खण्डरक्षाभिधाना श्रावका आसन्, ते शुल्कपालास्तैश्च ते निह्नवा समागता विज्ञाता मारयितुं चारब्धा, ततो भीतैरश्वमित्रादिभिस्ते प्रोक्ता —वयं न जानीमः श्रावका यूयम् , तत्किमस्मान् श्रमणान्सतो मारयथ ?, ततस्तैरुक्तम्—ये श्रमणास्ते युष्मत्सिद्धान्तेन समुच्छिन्ना , यूयं तु चौराद्यन्यतरा केचिदिति मारयाम , ततस्तैर्भीतैर्मुक्तो निजाग्रहः संबुद्धाश्च दत्तमिथ्यादुष्कृता गता गुरुपादमूलमिति । विशे० ( खणिअवाइ ( ण् ) शब्दे तृतीयभागे ७०६ पृष्ठे विस्तरो गत । )

सामुदाइय–सामुदायिक–त्रि० । समुदाये भवं सामुदायिकम् । उत्त० १७ अ० । जनमीलकप्रयोजने, ज्ञा० १ श्रु० ५ अ० ।

सामुदाणिय–सामुदानिक–न० । समुदानं—भिक्षा तत्र भवं सामुदानिकम् । सूत्र० १ श्रु० १६ अ० । आचा० । भिक्षापिण्डे, आचा० २ श्रु० १ चू० १ अ० ४ उ० । समुदानं लब्ध सामुदानिक । "अध्यात्मादिभ्य इकण्" । ६ । ३ । ७८ । इति इकण् प्रत्ययः । उच्चावचेषु कुलेषु अटित्वा लब्धे पिण्डे, बृ०१ उ० २ प्रक० ।

सामुद्दिय–सामुद्रिक–पुं० । समुद्रेण प्रोक्तं वेत्त्यधीते वा ठञ् । स्त्रीपुरुषशुभाशुभलक्षणज्ञापकग्रन्थाध्येतरि , 'तद्वेत्तरि च' । वाच० । ( तानि लक्षणानि ' लक्खणवंजणगुणोववेय ' शब्दे षष्ठभागे गतानि । ) समुद्रस्यैते सामुद्रिका । भ० ५ श० २ उ० । समुद्रयात्रिषु निर्यामकेषु आ० क० १ अ० । आ० म० । "अत्थि णं भंते ! सामुद्दिया वाया ईसिं हंता अत्थि" सन्ति सामुद्रिका वाता ईषद्वाता हन्त सन्ति । भ० ५ श० २ उ० ।

सामूहिय–सामूहिक–पुं० । समूहार्थके प्रत्यये, विशे० ।

साय–सात–न० । सुखे, स्था० ।

षड्विधसातस्वरूपम्–

छव्विहे साते पण्णत्ते, तं जहा–सोइंदियसाते० जाव नोइंदियसाते । (सू० ४८८ ×)

स्था० ६ ठा० ३ उ० । सूत्र० । आव० । उत्त० । उन्मग्नत्वे, प्रश्न० ३ आश्र० द्वार । मनआह्लादकारिणि, आचा० १ श्रु० ४ अ० २ उ० । प्रीत्युत्पादके, अनु० । स्था० । विशे० । स्वाद्यते शारीरं मानसं च सुखमनेनेति सातम् । सातवेदनीये कर्मणि, उत्त० ३३ अ० । ज्ञा० । प्रव० । दश० । पुण्यप्रकृतौ, स्था० ६ ठा० ३ उ० । दशम देवविमानभेदे, स० २० समु० । स्वाद–पुं० । स्वादनं स्वाद । स्था० ३ ठा १ उ० । खर्जूरद्राक्षापानादिस्वादने, प्रव० ४ द्वार । हरितवनस्पतिविशेषे, प्रज्ञा० १ पद ।

सायम्–अव्य० । प्रदोषे, आव० ५ अ० । संध्यासमये, सू० प्र० २ पाहु० । पञ्चा० । च० प्र० । उत्त० । सूत्र० । सत्ये, स्था० १० ठा० ३ उ० ।

सायकार–सायंकार–पुं० । शुद्धवागनुयोगभेदे, स्था० । सायमिति निपातः सत्यार्थस्तस्माज्ज्ञीत्कारप्रत्यये करणं वा कारस्ततः सायंकार इति । तदनुयोगो यथा—सत्यं तथा वचनमद्भावप्रश्नेष्विति । स्था० १० ठा० ३ उ० ।

सायंभुव–स्वायंभुव–पुं० । स्वयम्भुवोऽपत्यं प्रथममुनौ स्या० । ( 'अणेगतवाय ' शब्दे प्रथमभागे ४२४ पृष्ठे विस्तरो गत । )

सायसमय–सायंसमय–पुं० । दिवसावसानरूपे समये , सू० प्र० १० पाहु० ।

सायणा–शातना–स्त्री० । खण्डनायाम् , स० ३२ सम० ।

स्वादना–स्त्री० । अभिलाषे, आचा० १ श्रु० ८ अ० ५ उ० ।

सायणी–शायनी–स्त्री० । शाययति-निद्रावन्तं करोति सा शायनी । शेते वा यस्यां सा शायिनी शयिनी वा । स्था० १० ठा० ३ उ । शतायुष पुरुषस्य नवतिवर्षात्परतो दशवर्षाभिकायां दशायाम् , तं० ।

हीणभिन्नसरो दीणो, विवरीओ विचित्तओ ।
दुब्बलो दुक्खिओ सुयई, संपत्तो दसमिं दसं ॥ १० ॥

हीनस्वर —लघुध्वनि भिन्नस्वर -स्वभावस्वराद्न्यस्वरः दीन -करुणत्व गत विपरीत पूर्वावस्थात विचित्त विचित्रो वा नानास्वरूप दुर्बल -कृशाङ्ग दु खितो-रोगादिपीडालक्ष्यात , एवंविधो जीव स्वपिति स्वशरीरे स्वगृहे वासं प्राप्त का दशमीं दशामिति । तं० ।

सायत्त–स्वायत्त–त्रि० । स्वाधीने, ज्ञा० १ श्रु० ६ अ० ।

सायत्थ–स्वात्मस्थ–त्रि० । परभिन्नस्थे, पं० ६ विव० ।

सायबंध–सातबन्ध–पुं० । सुखसंबन्धे, द्वा० २५ द्वा० ।

सायय–सायक–पुं० । बाणे, पाइ० ना० ३६ गाथा ।

सायरसइड्ढिहेउ–सातरसर्द्धिहेतु–त्रि० । सातं—सुखं रसो—माधुर्यादिर्य ऋद्धिरुपकरणादिसंपदो हेतवो यस्मिन् प्रयोजने तत्सातरसर्द्धिहेतुकम् । रसायर्थे, "सायरसइड्ढिहेउअभिओगभाविणं कुणइ " ग० २ अधि० ।

सायवडिया–सातप्रतिज्ञा–स्त्री० । सुखार्थे , आचा० २ श्रु० १ चू० ३ अ० २ उ० ।

सायवाइ ( न् )–सातवादिन्–पुं० । सातं—सुखमभ्यसनीयमिति वदतीति सातवादी । अक्रियावादिभेदे , स्था० । कश्चित् सुखमेवानुशीलनीयं सुखार्थिना तत्त्वसातरूपं तपोनियमब्रह्मचर्यादिकारणानुरूपत्वात्कार्यस्य, न हि शुक्लैस्तन्तुभिरारब्ध पटो रक्तो भवति, अपि तु-शुक्ल एव, एवं सुखाऽऽसेवनात् सुखमेवेति । उक्तं च—' मृद्वी शय्या प्रातरुत्थाय पेया , भक्तं मध्ये पानकं चापराह्ने । द्राक्षाखण्डं शर्करा चार्धरात्रे, मोक्षश्चान्ते शाक्यपुत्रेण दृष्ट " ॥ १ ॥ अक्रियावादिता चास्य संयमतपसो पारमार्थिकप्रशमसुखरूपयोर्दुःखत्वेनाभ्युपगमात् कारणानुरूपकार्याभ्युपगमस्य च विषयसुखादनुरूपस्य निर्वाणसुखस्याभ्युपगमेन बाधितत्वादिति । स्था० ८ ठा० ३ उ० ।

सायसोक्खपडिबद्ध–सातसौख्यप्रतिबद्ध–पुं० । सातात्—पुण्यप्रकृतेः सकाशाद्यत्सौख्यं—सुखं गन्धरसस्पर्शशब्दरूपविषयसंपाद्यं तत्र प्रतिबद्धस्तत्पर सातसौख्यप्रतिबद्ध ।

सुखप्रतिबद्धे, ' सायासोक्खपडिबद्धे यावि भवइ ' इति । प्राकृते दीर्घमध्योऽपि । स्था० ६ ठा० ३ उ० ।

सायाउल-साताकुल-त्रि० । भावसुखार्थव्याक्षिप्ते, दश०४अ० ।

सायागारव-सा(त)तागौरव-न० । सातया गौरवं सातागौरवम् । स० ३ सम० । सातं—सुखं तेन गौरवम्-गर्व. । अहमेव सुखीत्यभिमाने, आतु० ।

सायागारवज्झाण-सातगौरवध्यान-न० । सातं—सुखं तेन गौरवं-गर्वस्तस्य ध्यानम् । 'नीरपठो ससिराये' ति गाथाङ्कशशिराजस्येव गर्वोद्धुरं दुर्ध्याने, आतु० ।

सायागारवणिस्सिय-सातगौरवनिश्रित-त्रि० । सुखशीलतायामासक्ते, सूत्र० १ श्रु० १ अ० ।

सायाणुग-सातानुग-पुं० । सातं—सुखमनुगच्छतीति सातानुग । सुखशीले, सूत्र० १ श्रु० २ अ० ३ उ० ।

सायावेयणिज्ज-सातवेदनीय-न० । सातं-सुखं तद्रूपेण यद् वेद्यते तत्सातवेदनीयम् । वेदनीयभेदे, कर्म० ६ कर्म० । स० । पं० सं० । स्था० ।

सायासुक्ख-सातासौख्य-न० । सातासातवेदनीयकर्मणः सकाशात्सुखं शर्म सातसुखं सातं च तत्सुखं च सातसुखम् । अतिशयसुखे, 'सायासोक्खमणुपालंताणं' पा० । आह्लादप्रधाने सौख्ये. जी०३ प्रति० १ अधि० २ उ० ।

सार-सार-पुं० । प्रधाने, विशे० । सामर्थ्ये, विभवे, सूत्र० २ श्रु० १ अ० । परमार्थे ,सूत्र० १ श्रु० ११ अ० । ध० । आव० । काष्ठमध्ये, स्था० ४ ठा० १ उ० । आचा० । निष्पन्दे, पा० । भ० । आ० चू० । परमार्थप्रधाने,सूत्र० १ श्रु० ११ अ० । स्था० । वि० । आचा० । ज्ञा० । प्रश्न० । जी० । भ० । स० । न्याय्ये, ' एवं खु नाणिणो सारं, जन्न हिंसइ किंचण । ' सूत्र० १ श्रु० १ अ० ४ उ० । उत्त० । प्रकर्षे,आचा० १श्रु० ५अ० १उ० । सफले, आ० म० १ अ० । स० । उत्कृष्टेष्वलंकारेषु , द्वा० १२ द्वा० । शुभपुद्गलोपचयजन्ये धनुर्विशेषे, जं० ३ वक्ष० । सारं द्विधा-बाह्य , आन्तरञ्च । बाह्यो गुरुत्वमान्तरः सन्दोह । आव०४अ० । ज्ञानादौ (आव० ४अ० । )सद्भावे, निष्ठायाम् , आ० चू० १ अ० । आ० म० । विवक्षितकर्मणः परमार्थे.नं० । आ० म० । विषयगणस्य प्राप्तौ, आचा० १ श्रु० ३ अ० २ उ० । बले, पाइ० ना० १६४गाथा । धने ,पाइ० ना० ४६ गाथा । कर्पूरे, पाइ० ना० ६४ गाथा ।

प्रहृ—धा० । मारणे, "प्रहृ-(त्व)रेः सारः" ॥ ८ । ४ । ८४ ॥ इति प्रपूर्वस्य हृधातोः सार इत्यादेशः । सारइ । पहरइ । प्रहरति , प्रा० ४ पाद ।

सारंग-सारङ्ग-पुं० । चतुरिन्द्रियजीवविशेषे, जी० १ प्रति० । प्रज्ञा० । भृङ्गे, अनु० ७ अनु० । पाइ० ना० । चातकखगे, हरिणे, गजे, भृङ्गे, खगभेदे , छत्रे , राजहंसे, चित्रमृगे , वाद्यभेदे, वस्त्रे, नानावर्णे, मयूरे , कामदेवे, चापे, केशे, स्पर्शे, आभरणे, पद्मे, शङ्खे, चन्दने, कर्पूरे, पुष्पे, कोकिले , मेघे,सिंहे । गर्वो,भूमौ,दीप्तौ च । स्त्री० । शारङ्गोऽप्यत्र । वाच० ।

सारङ्ग-न० । प्रधानकारणे प्रति० । जं० ।

शार्ङ्ग-त्रि० "शार्ङ्गे ङात्पूर्वोऽत् ।" ॥ ८।२।१००॥ इति ङात्पूर्व अकारः । प्रा० । शृङ्गस्य विकारः । अण् । शृङ्गजाते, वाच० । विष्णुधनुषि नपुं० । को० ।

सारंगदेव-साराङ्गदेव-पुं० । वाघेलक्षत्रिये गुर्जरधरित्रीश्वरे, ती० २५ कल्प ।

सारंगी-सारङ्गी-स्त्री० । हरिण्याम् , पाइ० ना० ४५ गाथा ।

सारंभ-सारम्भ-त्रि० । सहाऽऽरम्भेण जीवोपमर्दादिकारिणा व्यापारेण वर्तत इति तदभावेऽप्यौद्देशिकादिभोजित्वात्सारम्भ । सूत्र० १ श्रु० १ अ० ४ उ० । गृहस्थेषु । सूत्र० १ श्रु० ३ अ० ३ उ० । जीवोपमर्दादिकारिषु , सूत्र० २ श्रु० १ अ० । पृथिव्यादीनां परितापकरे आरम्भे , स्था० ।

सत्तविहे सारंभे , पण्णत्ते , तं जहा-पुढविकाइयसारंभे ०जाव अजीवकाइयआरंभे । ( सू०५७१X ) स्था० ७ ठा० ३ उ० ।

संरम्भ-पुं० । यहुकल्प , भ० ८ श० ।

सारक्खणाणुबंधि-संरक्षणानुबन्धिन्-त्रि० । संरक्षणे सर्वोपायैः परित्राणे विषयसाधनस्य धनस्यानुबन्धो यत्र तत्संरक्षणानुबन्धि । आर्तध्याने, भ० २५ श० ७ उ० । औ० ।

सारक्खणा-संरक्षणा-स्त्री० । संगोपनायाम् , आ०म०१अ० ।

सारक्खणोवघाय-संरक्षणोपघात-पुं० । संरक्षणेन शरीरादिविषये मूर्च्छयोपघातः परिग्रहविरतेरिति संरक्षणोपघात । उपघातभेदे, स्था० १० ठा० ३ उ० ।

सारक्खमाणी-संरक्षन्ती-स्त्री० । अपायेभ्यः संरक्षणं कुर्वत्याम् , विपा० १ श्रु० २ अ० ।

सारक्खित्ता-संरक्षयितृ-त्रि० । चौरादिभ्यो रक्षणं कुर्वति , स्था० ७ ठा० ३ उ० । ग० ।

सारय-स्मारक-त्रि० । अन्येषां विस्मृतार्थस्मरणकर्तरि , कल्प० १ अधि० ६ क्षण ।

शारद-त्रि० । शरदि ऋतौ जातं शारदम् । उत्त० १० अ० । शरत्कालजाते, ज्ञा० १ श्रु० ५ अ० । जी० । आव० । आ० म० । उपा० । सू० ।

सारचिय-सारचित-त्रि० । संमार्जिते, ' काउं गिणहेतुवहिं, सारचियपडिस्सया पुव्वि ' सारचित-संमार्जित प्रतिश्रयो यैस्ते सारचितप्रतिश्रयाः । बृ० १ उ० २ प्रक० ।

सारणा-सारणा-स्त्री० । विस्मृतस्मारणायाम् , विस्मृते कश्चित्कर्तव्ये भवतेदं न कृतमिति सारणा । ग० २ अधि० ।

सारवंत-सारवत्-त्रि० । गोशब्दादिवद्बहुपर्यायत्वेन, । विशे० । अर्थेन युक्ते , स्था० ७ ठा० ३ उ० । सामायिकशब्दवत् बहुपर्याये गुणवत्सूत्रे, आ० म० १ अ० ।

सारवणा-सारापना-स्त्री० । संगोपनायाम् , "होही पत्तीनि सारवणा । " आव० १ अ० ।

सारवय-सारपद-न० । ज्ञानादिके सारसहिते पदे , आचा० १ श्रु० ५ अ० १ उ० ।

सारविज्जंत-सार्यमाण-त्रि० । ध्रियमाणे , व्य० ४ उ० ।

सारस-सारस-त्रि० । दीर्घजानुके लोमपक्षिविशेषे, तं० जी० ।

स्था० । प्रश्ना० । कल्प० । औ० । रा० । प्रश्न० । ज्ञा० ।

सारसार–सारसार–पुं० । सारस्यापि सारभूते, आचा० १ श्रु० ५ अ० १ उ० । आ० म० ।

सारसावएज्ज–सारसापतेय–न० । प्रधानद्रव्ये , कल्प० १ अधि० ४ क्षण ।

सारसी–सारसी–स्त्री० । षड्जग्रामस्य षष्ठ्यां मूर्छनायाम् , स्था० ७ ठा ३ उ० ।

सारस्सय–सारस्वत–त्रि० । सरस्वतीमभ्यधिनि मन्त्रादौ , स्था०।सरस्वतीप्रोक्तव्याकरणे,नपुं०। कल्प० १ अधि०२ क्षण। कृष्णराज्यन्तरालवर्तिविमानवासिनि लोकान्तिकदेवे , पुं० । स्था० ६ ठा० ३ उ० । प्रव० । ज्ञा० । आ० म० ।

सारह–सारघ–न० । मधुनि, पाइ० ना० २२४ गाथा ।

सारहि–सारथि–पुं० । नेतरि , दश० ८ अ० । आ० म० । सूते , पाइ० ना० २२३ गाथा ।

सारिक्ख–सादृक्ष–त्रि० । "क्षोऽदयादौ " ॥ ८ । २ ।१७॥ इति संयुक्तस्य छो वा । सारिक्ख । प्रा० । साधर्म्ये, स्था० १ ठा० ।

सारिणी–सारिणी–स्त्री०।दीर्घिकाख्ये जलाशयविशेषे, अनु० ।

सारिय–सारित–त्रि० । हिते प्रवर्तिते , ध० ३ अधि० । पा० । शिक्षिते , व्य० ७ उ० ।

सारिया–सारिका–स्त्री० । कोशलविषये देवराजस्य कुटुम्बिनो भार्यायाम् , पिं० । मैनापक्षिणि , आचा० १ श्रु० १ अ०६ उ० ।

सारिस–सादृश्य–अव्य० । यथाऽस्मिन् देशे घटा ऊर्ध्वग्रीवा अधस्तात्परिमण्डला विपुलकुक्षयस्तथा अन्येष्वपि देशेष्वि-त्यादि-साधर्म्ये, आ० म० १ अ० ।

सारी–देशी–ऋषीणामासने , मृत्तिकायामित्यन्ये , दे० ना० ८ वर्ग २२ गाथा ।

सारीर–शारीर–त्रि० । शरीरसंभवे, प्रव० २६८ द्वार । आव० ।

सारीरमाणसाणेगदुक्खमोक्ख–शारीरमानसानेकदुःखमोक्ष–पुं० । सकलदेहदुःखक्षये , प० व० ३ द्वार ।

सारीरसम–शारीरसम–न० । कलाभेदे , कल्प० १ अधि० ७ क्षण ।

सारूवि(ण्)–सारूपिन्–पुं०। सारूपिके, " मुंडसिरोया सुक्कि-ल्लवत्थधरा न वियत्थ। हिंडइ न य अभज्जो,सारूवी परिसो होई ॥ १ ॥ " इति तल्लक्षणम् । जी० १ प्रति० ।

सारूविय–सारूपिक–पुं० । समानं रूपं--सरूपं तेन चरन्ति सारूपिकः । रजोहरणवर्जसाधुवेषधारिणि गृहस्थे, "सारूवी धारेइ निसिज्जं च एगं ओलयगं चेव " यस्तु सारूपिकः स एकनिषद्यम्-एकनिषद्यापेतं रजोहरणमव-लम्बकदण्डकमुपलक्षणमेतत् पात्रादिकं च धारयति शि-रश्च मुण्डयति । व्य० ४ उ० । नि० चू० । सारूपिकः-शुक्लाम्बरो मुण्डोऽवद्धकच्छो रजोहरणरहितोऽब्रह्मचर्योऽ-भार्यो भिक्षाग्राही । ध०४ अधि० । मुण्डितशिरा शुक्लवासःपरिधायी कच्छामबध्नानोऽभार्यको भिक्षां हिण्डमानः सारू-पिक उच्यते । वृ० ४ उ० ।



सारूवियसिद्धपुत्त–सारूपिकसिद्धपुत्र–पुं० । मुण्डितशिरस्के रजोहरणरहिते अलघुपात्रेण भिक्षामटति सभार्ये अभार्ये वा गृहस्थे व्य० ८ उ० ।

सारूह–संरुष्ट–त्रि० । मनसा रुष्टे , भ० ७ श ६ उ० ।

साल–साल–पुं० । अशीतितमे महाग्रहे, स्था० २ ठा० ३ उ०। कल्प० । सू० प्र० । चं० प्र० । ( साखू ) वृक्षविशेषे, स्था० ४ ठा० ४ उ० । अनु० । प्रश्ना० । जं० । आचा० । स० । शाखायाम् , ज्ञा० १ श्रु० १ अ० । जी० । पृष्ठचम्पानगर्याः स्वनामख्याते राजनि , उत्त० १ अ० । आ० क० । ती० ।

तद्वृत्तम्—

" वद्धमाणसामी पिट्ठिचंपाए नयरीए सुभूमिभागे उज्जाणे समोसढो , तत्थ य सालो राया , महासालो जुवराया । तेसिं भगिणी जसवती , तीसे भत्ता पिठरो , पुत्तो य से गागलीनाम कुमारो, ततो सालो भगवतो समीवे धम्मं सोऊण भणइ—जं नवरं महासालं रज्जे अभिसिं-चामि ततो तुम्ह पादमूले पव्वयामि , तेण गंतूण भणि-तो महासालो—राया भवसु, अह पव्वयामि । सो भणइ—अहं पि पव्वयामि, जहा तुब्भे इह अम्हाणं मेढीपमाणं त-हा पव्वइयस्स वि त्ति, ताहे गागली कंपिल्लपुरातो आणेउं रज्जे अभिसिंचितो । तस्स माया जसवती कंपिल्लपुरे न-गरे दिण्णिया पिठररायपुत्तस्स , तेण ततो आणिओ , ते-ण पुण तेसिं दो पुरिससहस्सवाहिणीओ सीयाओ का-रियाओ, ०जाव ते पव्वइया । सा वि तेसिं भगिणी समणो-वासिया जाया, तेऽवि एक्कारसंगाइं अहिज्जिया । अण्णया य भगवं रायगिहे समोसढो, ततो भगवं निग्गतो चंपं जतो पधावितो , ताहे सालमहासाला सामिं पुच्छंति—अम्हे पिट्ठिचंपं वच्चामो , जइ नाम कोइ तेसिं पव्वएज्ज सम्मत्तं वा लभेज्ज । सामी जाणइ—जहा ताणि संबुज्झि-हिंति , ताहे तेसिं सामिणा गोतमसामी बिइज्जओ दि-ण्णो, सामी चंपं गतो, गोयमसामीऽवि पिट्ठिचंपं गतो, त-त्थ समवसरणं, गागलि, पिठरो, जसवती य निग्गयाणि, ताणि परमसंवेग्गाणि, धम्मं सोऊण गागली पुत्तं रज्जे अ-भिसिंचिऊण मातापितिसहितो पव्वइओ । गोयमसामी ता-णि घेत्तूण चंपं वच्चइ, तेसिं सालमहासालाणं चंपं वच्चं-ताण हरिसो जातो—संसारातो उत्तारियाणि त्ति, ततो-सुभेणऽज्झवसाणेण केवलनाणं उप्पन्नं ।" आ०चू०१ अ०। आ० म० । आ० चू० ।

श्याल–पुं० । भार्याभ्रातरि, अनु० ।

सालंकायण–सालंकायन–पुं० । कौशिकगोत्रान्तर्गते पुरुष-विशेषे, तत्प्रवर्तिते गोत्रविशेषे च । स्था० ६ ठा० ३ उ० ।

सालकल्लाण–सालकल्याण–पुं० । वृक्षविशेषे,भ०८ श०३उ० ।

सालंब–सालम्ब–त्रि० । आलम्बनमवलम्बमानः , नि० चू० १ उ० । ज्ञानादिपुष्टालम्बनयुक्ते , दशा० १ अ० । आव० । नि० चू० । चिरनिभं प्राणिनः सन् चिरं ज्ञानादि ग्रहीष्यामीत्यालम्बनमाहित, व्य० ४ उ० । नि० चू० ।

सालंबसेवि(ण्)–सालम्बसेविन्–त्रि० । पुष्टालम्बनप्रतिसे-

विणि काइ अंछिति अदुवा अधीहं नवोवहाणेसु य उज्ज- मिस्स। गणं च गणीती अणुसारचिस्सं, सालंबसेवी समुवेति मोक्खं॥१॥'। आ० चू० ३ अ०।

सालंवहत्थाभरण-सालम्बहस्ताभरण-त्रि०। सह आलम्बनेन-प्रलम्बन वर्तत सालम्बं तानि च हस्ताभरणानि यस्या-श्चामुर्वे गमनवशादसौ सालम्बहस्ताभरण। हस्तया प-रिहिताभरणे भ० ३ श० २ उ०।

सालकोट्ठय-सालकोष्ठक-न०। मेण्ढिग्रामस्य बहिरुत्तरपूर्व-दिग्भागे स्वनामख्याते चैत्ये, भ० ३ श० २ उ०।

सालग-शालक-पुं०। अवष्टम्भसमन्विते आसनविशेषे, दश० ६ अ०। दीर्घशाखायाम्, आव० ६ अ०। स्से, आचा०२ श्रु० १ चू० ७ अ० २ उ०।'अहं सिमं बाहिरा छल्ली साले भएणइ। नि० चू० १५ उ०। सालग पुण तस्स बाहिरा छल्ली। सालगं बाहिरा छल्ली भएणति। नि० चू० १६ उ०।

सालगिह-शालागृह-न०। शालागृहवद्धे, तत्र अकुड्डा साला सकुड्डं गिहं। अस्मादिअवाहगाणं सालगिहं। नि० चू० ८ उ०।

सालघरय-सालगृहक-न०। शाला-शाखा। अथवा-शाला-वृक्षविशेषास्तत्प्रधान गृहकम्। शालाप्रधाने गृहके ज्ञा० १ श्रु० १ अ०। ज्ञा०। जी०। पट्टशालाप्रधाने गृहे, रा०।

सालज्जा-सालार्या-स्त्री०। बहुशालकनामग्रामस्समीपवर्ति-शालवनोद्यानवास्तव्याया व्यन्तर्याम्, आ० म० १ अ०। ('वीर' शब्दे षष्ठभागे तत्कथा गता।)

सालपरियाय-सालपर्याय-पुं०।सालस्येव पर्याया धर्मा-बहु-लच्छायात्वाश्रितत्वादयो यस्य स सालपर्यायः। सालस-धर्मिणि पुरुषजाते, स्था० ४ ठा० ४ उ०।

सालभंजिया-शालभञ्जिका-स्त्री०। स्तम्भपुत्रिकायाम्, आ० म० १ अ०। ज्ञा०।

सालरुक्ख-शालवृक्ष-पुं०। "वृक्षक्षिप्तयो रुक्ख-छूढौ" ॥८।२।१२७॥ इति वृक्षस्य रुक्खाऽऽदेशः। प्रा०। शालाख्ये वृक्षविशेषे, भ० १४ श० ८ उ०। (अस्य भावि-जन्मान्तरवृत्तम् 'वणप्फइ' शब्दे षष्ठभागे गतम्।)

साललट्ठिया-शालयष्टिका-स्त्री०। शालवृक्षस्तम्भे, भ०१४ श० ८ उ०। (इह च यद्यपि शालवृक्षादावनेके जीवा भवन्ति तथापि प्रथमजीवापेक्ष सूत्रत्रयमपि नेतव्यम्, एवं-विधप्रश्नाश्च वनस्पतीनां जीवत्वमश्रद्दधानं श्रोता-रमपेक्ष्य भगवता गौतमेन कृता इति 'वणप्फइ' शब्दे षष्ठभागे गतम्।)

सालवण-शालवन-न०। बहुशालकनामग्रामसमीपवर्तिनि उद्याने आ० म० १ अ०। आ० चू०।

सालवाहण-शालवाहन-पुं०। स्वनामख्याते महाराजे, कल्प० ३ अधि० ६ क्षण। व्य०। (शालवाहनचरित्रम् 'परिहि' शब्दे पञ्चमभागे ३८३ पृष्ठे गतम्।)

सालहिआ-देशी-स्त्री०। 'मैना' इति ख्याते पक्षिविशेषे, पाइ० ना० २३६ गाथा।

साला-शाला-स्त्री०। वृक्षस्कन्धे, ज्ञा० १ श्रु०१ अ०। शाखायाम्, ज्ञा० १श्रु०४ अ०। स्था०। सूत्र०। रा०। जं०। जत्थ भंडं विक्किणइ सा साला। अहवा-सकुड्डिमं गिहं। अकुड्डिमा साला। नि० चू० १२ उ०। अशीतितमे महाग्रहे, स्था०।

दो साला (सू०९०+) स्था० २ ठा० ३ उ०।

सालाइयतंत-शालाक्यतन्त्र-न०। शलाकाया कर्म,शालाक्यं तत्प्रतिपादकं तन्त्रं शालाक्यतन्त्रम्। स्था० ८ ठा० ३ उ०। विपा०। आयुर्वेदाङ्गे तद्धि ऊर्ध्वयतिगतानां रोगाणां श्र-वणवदननयनघ्राणादिसंश्रितानामुपशमनार्थमिति। स्था० ८ ३ उ०।

सालाडवि-शालाटवी-स्त्री०। विजयचौरसेनापतिपालितायां चौरपल्ल्याम्, विपा० १ श्रु० ३ अ०।

सालाहण-सातवाहन-पुं०। "सर्वत्र लवरामचन्द्रे" ॥८॥२।७९॥ इति वलुकि सति। "अनसी-सातवाहने लः" ॥ ८।२।२११॥ इति तस्य ल। सालाहणो। प्रा०। गोदाव-रीतटवर्त्यप्रतिष्ठाननगरराजे, बृ० ६ उ०।

सालि-शालि-पुं०। कलमादिके धान्ये, स्था० ३ ठा० १ उ०। आचा०। सूत्र०। प्रश्न०। ध०। बृ०। रा०। पो०। व्रीहि-विशेषे, ज्ञा० १ श्रु० १ अ०। कलमशाल्यादिकूर, व्य० ६ उ०। भ०। जं०। आचा०। तत्थ पुव्वरण्हे साली चुप्पइ। अवरण्हे जेमति। आ० म० १ अ०।

सालिउद्देस-शाल्युद्देश-पुं०। षष्ठशतस्य सप्तमोद्देशके, भ० ११ श० ११ उ०।

सालिंगणवट्टिय-सालिङ्गनवर्तित-त्रि०। शरीरप्रमाणेनोप-धानेन वर्तमाने, सूत्र० १ श्रु० १ अ० ३ उ०।

सालिक्खेत्त-शालिक्षेत्र-न०। धान्यक्षेत्रे, कल्प० १ अधि० १ क्षण।

सालिखंडण-शालिखण्डन-न०। शालिधान्यखण्डने, तत्क-लायाम्, कल्प० १ अधि० ७ क्षण।

सालिग्गाम-शालिग्राम-पुं०। मगधजनपदेषु स्वनामख्याते ग्रामे, आ० क० १ अ०। आ० चू०।

सालिपिट्ठ-शालिपिष्ट-न०। शालिचूर्णे, जं० १ वक्ष०।

सालिपिट्ठरासि-सालिपिष्टराशि-पुं०। शालिक्षोदपुञ्जे, रा०।

सालिवाहण-शालिवाहन-पुं०। स्वनामख्याते प्रतिष्ठानपुरराजे; विशे०। ('अणुओग' शब्दे प्रथमभागे ३८५पृष्ठे उदाहरणम्।)

सालिभंजिया-शालिभञ्जिका-स्त्री०। पुत्तलिकायाम्, रा०।

सालिभद्द-शालिभद्र-पुं०। राजगृहे स्वनामख्याते गोभ-द्रश्रेष्ठिनः पुत्रे, स्था०। 'शालिभद्र' इति य पूर्वभवे सङ्ग-मनामा वत्सपालोऽभवत्, सबहुमानं च साधवे पायसम-दात्, राजगृहे गोभद्र श्रेष्ठिन पुत्रत्वेनोत्पन्नो देवीभूतगो-भद्रश्रेष्ठिसमुपनीतदिव्यभोजनवसनकुसुमविलेपनभूषणादि-भिर्भोगाङ्गैः ङ्गनाना द्वात्रिंशता सह सप्तभूमिकरम्यहर्म्यतल-गतो ललति स्म। वाणिजकोपनीतलक्षमूल्यबहुरत्नकम्बला गृहीता, भद्रया शालिभद्रमात्रा वधूनां पादप्रोञ्छनी कृताश्चेति श्रवणाज्जातकुतूहल दर्शनार्थं गृहमागते श्रेणिकमहाराजे जनन्याऽभिहितः यथा-त्वां स्वामी द्रष्टुमिच्छतीत्यवतर प्रा सादशृङ्गात्, स्वामिनं पश्येति, वचनश्रवणादस्माकमप्यन्य

-स्वामीति भावयन् वैराग्यमुपजगाम । वर्धमानस्वामिसमीप च प्रवव्राज, विकृष्टतपसा क्षीणदेह शिलातल पादपोपगमनविधिनाऽनुत्तरसुरेषु पन्नवानिति सोऽयमिह संभाव्यते, केवलमनु तरोपपातिकाङ्गनाधीत इति । स्था० १० ठा० ३ उ० । ती० । कापिलमहर्षे स्वगृह भोजयितरि श्रावस्तीवास्तव्ये व्यवहारिणि, उत्त० ८ अ० । ( 'कविल' शब्दे तृतीयभागे ३८७ पृष्ठे कथा उक्ता । )

सालिभसेल-शालिभसेल-पुं० । व्रीहिकणिकशूके, उपा० २ अ० ।

सालिया-शाटिका-स्त्री० । परिधानवस्त्रविशेषे । आव० ।

शालिका-स्त्री० । सम्मूर्छजक्षुद्रजन्तुविशेषे, आचा० १ श्रु० १ अ० ६ उ० ।

सालिसच्छियामच्छ-शालिसाच्छिकामत्स्य-पुं० । मत्स्यभेदे, भ० १ श० २ उ० ।

सालिसय-सदृशक-त्रि० । समाने, रा० । स्था० । ज्ञा० ।

सालिसीस-शालिशीर्ष-पुं० । स्वनामख्याते ग्रामे, स्था० । ग्रामाकस्मन्निवेशात् शालिशीर्षग्रामे उद्याने प्रतिमास्थस्य स्वामिनो माघमासे निपृष्ठभवापमानिता अन्तःपुरि मृत्वा व्यन्तरीभूत्वा तापसीरूपं कृत्वा जलभृतजटाभिरन्यद्रु सहं शीतोपसर्गं चक्रे कल्प० १ अधि० ६ क्षण ।

सालुज्जाण-शालोद्यान-न० । वहुशालकग्रामाद्बहिरुद्याने, आ० चू० १ अ० ।

सालुय-शालूक-पुं० । उत्पलकन्दे, भ० ११ श० ३ उ० । ( शालकोद्देशक 'वणप्फइ' शब्दे उक्तः )

सालेइया ( सालिही ) पिया-शा ( सा ) लेयिकापितृ-पुं० । स्वनामख्याते गृहपतौ, उपा० ।

एवं खलु जंबू! तेणं कालेणं तेणं समएणं सावत्थीणयरी कोट्ठए चेइए जियसत्तू राया, तत्थ णं सावत्थीए णयरीए सालिपियाणामं गाहावई परिवसइ। अड्ढे दित्ते चत्तारि हिरण्णकोडीओ णिहाणपउत्ताओ चत्तारि हिरण्णकोडीओ वुड्ढिपउत्ताओ चत्तारि हिरण्णकोडीओ पवित्थरपउत्ताओ चत्तारि वया दस गोसाहस्सिएणं वएणं । फग्गुणी भारीया सामी समोसढो जहा आणंदो तहेव गिहिधम्मं पडिवज्जइ, जहा कामदेवो तहा जेट्ठं पुत्तं ठवेत्ता पोसहसालाए समणस्स भगवओ महावीरस्स धम्मपण्णत्तिं उवसंपज्जित्ता णं विहरइ । नवरं निरुवसग्गाओ एक्कारस्स वि उवासगपडिमाओ तहेव भाणियव्वाओ एवं कामदेवगमेणं नेयव्वं०जाव सोहम्मे कप्पे अरुणकीले विमाणे देवत्ताए उववण्णे। चत्तारि पलिओवमाइं ठिई महाविदेहे वासे सिज्झिहिति ।५६। दसण्ह वि ओवमाइं संवच्छरे वट्टमाणाण चिंता उववण्णा । दसण्ह वि वीसं वासाइं समणोवासयपरियाओ । एवं खलु जंबू! समणेणं०जाव संपत्तेणं सत्तमस्स अंगस्स उवासगदसाणं दसमस्स अज्झयणस्स अयमट्ठे पण्णत्ते । ( सू० ५७ )

'सालिहीपिय' त्ति सालेयिकापितृनाम्न श्रावस्तीनिवासिनो गृहमेधिनो भगवतो बोधिलाभिनोऽनन्तरं तथैव सौधर्मगामिनो वक्तव्यतानिवद्ध सालेयिकापितृनामकं दशममिति । दशाप्यमी विंशतिवर्षपर्याया सौधर्मे गताश्चतु पल्योपमस्थितया देवा जाता महाविदेहे च सेत्स्यन्तीति । स्था० १० ठा० ३ उ० ।

साव-शाप-पुं० । नावर्णात्प ।८।१।१७९ इति पस्य लुक् न । प्रा० । पो वः ॥८।१।२३१॥ इति पस्य व । आक्रोशे, प्रा० १ पाद ।

सावइत्ता-श्रावयित्वा-स्त्री० । श्रावणं कुर्वेत्यर्थे, 'नामगं सावइत्ता' स्वकीयं नाम श्रावयित्वा यदुताहं भदन्त ! शक्रो देवराजो भवन्त वन्दे नमस्यामि चेत्यर्थम् । भ० १६ श० २ उ० ।

श्रावयितृ-त्रि० । श्रवणं कारयितरि, सूत्र० २ श्रु० ३ अ० ।

सावएज्ज-स्वापतेय-न० । धने, जी० ३ प्रति० ४ अधि० । द्रव्ये, भ० ८ श० ५ उ० । आचा० ।

सावकंख-सावकाङ्क्ष-न० । सह अवकाङ्क्षया वर्त्तत इति सावकाङ्क्षम् । षष्ठ्यष्टमाद्यनन्तरमहं भोजनं विधास्यामीति वाञ्छासहितेऽनशने, उत्त० ३० अ० ।

सावग(य)-श्रावक-पुं० । शृणोति जिनवचनमिति श्रावक । "अवाप्तदृष्ट्यादिविशुद्धसम्पत्-परं समाचारमनुप्रभातम् । शृणोति यः साधुजनादतन्द्र-स्तं श्रावकं प्राहुरमी जिनेन्द्राः ॥१॥" इति । अथवा-श्रन्ति पचन्ति तत्त्वार्थश्रद्धानं निष्ठां नयन्तीति श्राः, तथा वपन्ति गुणवत्सप्तक्षेत्रेषु धनबीजानि निक्षिपन्तीति वा, तथा किरन्ति क्लिष्टकर्मरजो विक्षिपन्तीति काः, ततः कर्मधारये श्रावका इति भवति । जिनवचनश्रद्धाने, स्था० ४ ठा० ४ उ० ( एकविंशतिगुणयुक्त एव श्रावको भवतीति 'धम्मरयण' शब्दे चतुर्थभागे २७२७ पृष्ठे उक्तम् । ) शृणोति साधुसमीपे साधुसामाचारीमिति श्रावक । ग० २ अधि० ।

श्रावकधर्मस्य प्रक्रान्तत्वात्तस्य श्रावकानुष्ठातृकत्वाच्छ्रावकशब्दार्थमेव प्रतिपादयति—

संपत्तदंसणाई, पइदियहं जइ जणा सुणेई य ।
सामायारिं परमं, जो खलु तं सावकं बिन्ति ॥ २ ॥

संप्राप्तं दर्शनादि येनासौ संप्राप्तदर्शनादि । दर्शनग्रहणात्सम्यग्दृष्टिरादिशब्दाद्-अणुव्रतादिपरिग्रह, अनेन मिथ्यादृष्टेर्व्युदासः । स इत्थंभूत प्रतिदिवसं-प्रत्यहं यतिजनात्साधुलोकात् शृणोत्येव किं सामाचारीं परमाम् । तत्र समाचरणं समाचार -शिष्टाचरितं, क्रियाकलाप तस्य भाव 'गुणवचनब्राह्मणादिभ्य कर्मणि ष्यञ्चेति ष्यञ् सामाचार्यं पुनः स्त्रीत्वविवक्षायाम्-"षिद्गौरादिभ्यश्च" ति ङीप् । यस्येति चेत्यकारलोप । 'हलस्तद्धितस्य" त्यनेन तद्धितयकारलोप परगमनं सामाचारी ता सामाचारीं परमां प्रधानां, साधुश्रावकसम्बद्धामित्यर्थ । य खलु य एव शृणोति त श्रावकं ब्रुवते-त श्रावक प्रतिपादयन्ति भगवन्त —तीर्थङ्करगणधरा । तत्रार्थं पिण्डार्थं । अभ्युपेतसम्यक्त्व प्रतिपन्नाणुव्रतोऽपि प्रतिदिवसं यतिभ्य सकाशात्साधूनामगारिणां च सामाचारीं शृणोतीति श्रावक इति । श्रा० ।

श्रावकधर्मं वक्ष्य इति यदुक्तं, तत्र श्रावकशब्दार्थमाह—

परलोयहियं सम्मं, जो जिणवयणं सुणेइ उवउत्तो ।
अइतिव्वकम्मविगमा, सुक्कोसो सावगो एत्थ ॥ २ ॥

यो जिनवचनं शृणोति स श्रावक इत्येवमिह क्रियाभिसंबन्ध. । तत्र य इति सामान्यनिर्देशः । तेन य कश्चित्प्राणी, न पुनर्नियतकुलोत्पन्न एव, यथा ब्राह्मणकुलोत्पन्न एव ब्राह्मणो भवतीति, क्रियाविशेषनिबन्धनत्वात् श्रावकत्वस्येति । ननु श्रवणमात्रनिबन्धन श्रावकत्वमेवं स्यात्तच्च सर्वस्य श्रोत्रेन्द्रियलब्धिमत. संभवति,विशिष्टं च तदिष्यत इत्याशङ्कायामाह—जिनवचनमाप्तागमं, न पुनर्यत्किञ्चनानाप्तवचनं वा. तस्याप्रमाणतया विवक्षितार्थासाधकत्वेन श्रवणानुचितत्वात् । किंभूतं तदित्याह—परलोको जन्मान्तरं प्रधानं जन्म वा तस्मै हितं पथ्यं परलोकहितम् । जिनवचनाराधनाद्धि परलोकोऽनुकूल एव भवतीति । स्वरूपप्रतिपादनपरं चेद विशेषणं, परलोकहितस्य जिनवचनस्य सर्वथैवाभावेन व्यवच्छेद्याभावात् । अथवा-यज्जिनवचनमिहलोकहितं निमित्तशास्त्रं ज्योतिषप्राभृत ( योनिप्राभृत ) प्रभृतिकं तद्व्यवच्छेदार्थमेतद्भविष्यति । यद्यपि ज्योतिषप्राभृतादिकमभिप्रायविशेषत. परलोकहितं. तथापि तन्मुख्यवृत्त्येहलोकहितमेव । अथाभिप्रायविशेषतोऽपि यत्परलोकहितं तत्परलोकहितमेव, एव तर्हि सर्वाण्यपि कुशासनानि तथा भवन्तु, किमेकमेव जिनवचनं परलोकहितमित्युच्यते, सर्वेषामपि तेषां विवक्षया परलोकहितत्वेनेष्टत्वात्, यदाह—" ज जत्तिया य हेऊ, भवस्स ते चेव तत्तिया मोक्खे । गणणाईया लोया दोण्ह वि पुण्णा भवे तुल्ला ॥ १ ॥ " अतोऽनेन विशेषणेन यत्साक्षात्परलोकहितं साधुश्रावकानुष्ठानगर्भं जिनवचनं तच्छृण्वन्नेव श्रावको भवतीत्यभिहितम् । अत एवान्यत्र पूज्यैरेवोक्तम्—"संपत्तदंसणाई, पइदियहं जइ जणा सुणेई य । सामायारिं परमं, जो खलु तं सावयं विंति ॥ १ ॥ " कथं शृणोतीत्याह—सम्यगशठतया, प्रत्यनीकादिभावेन शृण्वन्नपि न श्रावको भवतीति भाव । अथवा-ननु कपिलादिवचनमपि परलोकहितं भवति, कथमन्यथाऽभिधीयते-'जावंति वंभलोओ चरगपरिव्वायउववाउ त्ति' । अतस्तत्त्यागेन कथं जिनवचनमेव शृण्वन् श्रावको भवतीत्याशङ्कायामाह—सम्यक् समीचीनमत्यन्तं परलोकहितमिति यावत् । यथा हि जिनवचनं साक्षात्पारंपर्येण वा मोक्षहेतुतया सम्यक् परलोकहितं, न तथा कपिलादिवचनमिति भाव. । शृणोत्याकर्णयति । किंभूतः सन्नित्याह-उपयुक्तः दत्तावधानोऽनुपयुक्तश्रवणं हि नार्थवदत एव तन्निषेधार्थमुक्तम्- ' निद्दाविगहापरिव-ज्जिएहि गुत्तेहि पंजलिउडेहिं । भत्तिबहुमाणपुव्वं,उवउत्तेहिं सुणेयव्वं ॥१॥" एवंविधे श्रवणे हेतुमाह-अथवा ननु व्यवहारेणोपयुक्तोऽशठश्च जिनवचनमभव्योऽपि कस्यांचिदवस्थायां शृणोति, तत्कथमसौ श्रावकः स्यादित्याशङ्क्याह-अतितीव्रस्यात्युत्कटस्य कर्मणो ज्ञानावरणीयमिथ्यात्वादेर्विगमो विनाशोऽतितीव्रकर्मविगमस्तस्मात् । न हि तीव्रकर्मविगममन्तरेणोक्तविशेषणश्रवणसंभव । पारतन्त्र्येण तु उक्तविशेषणवत. शृण्वतोऽप्यतितीव्रकर्मविगम एव विवक्षितश्रावकत्वं भवति । यदाह—' सत्तण्ह पगईणं, अब्भितरओ उ कोडिकोडीण । काऊण सागराणं,जइ लहति चउण्हमण्णयरं ॥ १ ॥ " स इत्यनन्तरोद्दिष्टः ।'उक्कोसो'त्ति उत्कृष्यत इत्युत्कर्षः उत्कृष्ट प्रधानो मुख्यश्रावकव्यपदेशभाजनत्वात्तस्य । यद्वा-शुक्लः-शुक्लपाक्षिक ः अपार्धपुद्गलपरावर्ताभ्यन्तर्गभूतसंसार इत्यर्थः । स उक्तस्वरूपश्रावकः शृणोतीति शब्दव्युत्पत्तिविषयीभूतनामा । अत्रैतस्मिन् श्रावकधर्मविचारप्रक्रमेऽन्यत्र पुनर्विशेषणेन श्रवणेन श्रावणेन वा नामादिभेदभिन्नो वा श्रावको भवतीति गाथार्थ' । पञ्चा० १ विव० । "यो ह्यभ्युपेतसम्यक्त्वो, यतिभ्यः प्रत्यहं कथाम् । शृणोति धर्मसंबद्धा-मसौ श्रावक उच्यते।' श्राव०६ अ०। सम्यग्दर्शनसंपन्नः प्रवचनभक्तिमान् षड्विधावश्यकनिरतः षट्स्थानकयुक्तश्च श्रावको भवति । श्रा० १ श्रु० १६ अ० । यतिवचनामृतपाननिरते, भ० २ श० १ उ० । श्रमणोपासके, अनु० । स्था० । पञ्चा० । जिनशासनभक्ता गृहस्था· श्रावका भण्यन्ते । आव०४ अ० । सावगा गहिताणुव्वता. अगहिताणुव्वता वा । नि० चू०१ उ० । वंभी पव्वइया भरहो सावगो जाओ । आ० म० १ अ० । श्रावका धर्मशास्त्रश्रवणाद् ब्राह्मणा । अनु० । श्रावका ब्राह्मणा , प्रथमं भरतादिकाले श्रावकाणामेव सतां पश्चाद् ब्राह्मणत्वभवनात् । अनु०। आ०। ( 'उसभ' शब्दे द्वितीयभाग ११४३ पृष्ठ स्पष्टमिदमुक्तम् । )

अधुना श्रावकस्यैव निवासादिविषया सामाचारीं प्रतिपादयन्नाह—

निवसिज्ज तत्थ सड्ढो, साहूणं जत्थ होइ संपाओ ।
चेइयघराइ जत्थ य, तयन्नसाहम्मिया चेव ॥३३६॥

निवसेत्तत्र नगरादौ श्रावक साधूना यत्र भवति संपात । संपतनं-संपात आगमनमित्यर्थ । चैत्यगृहाणि च यस्मिंस्तदन्यसाधर्मिकाश्चैव श्रावकादय इति गाथासमासार्थ. । अधुना प्रतिद्वारं गुणा उच्यन्ते तत्र साधुसंपाते गुणानाह-

साहूण वंदणेणं, नासइ पावं असंकिया भावा ।
फासुयदाणे निज्जर, उवग्गहो नाणमाईणं ॥ ३४० ॥

साधूनां वन्दनेन करणभूतेन किं नश्यति पापं गुणेषु बहुमानात्तथा अशङ्किता भावास्तत्समीपे श्रवणात्, प्रासुकदाने निर्जरा । कुत. ? उपग्रहो ज्ञानादीनां ज्ञानादिमन्त एव साधव इति । उक्ताः साधुसंपाते गुणा ।

चैत्यगृहे गुणानाह—

मिच्छादंसणमहणं, सम्मइंसणविसुद्धिहेउं च ।
चिइवंदणाइ विहिणा, पन्नत्तं वीयरागेहिं ॥ ३४१ ॥

मिथ्यादर्शनमथनं मिथ्यादर्शन—विपरीतपदार्थश्रद्धानरूप, मथ्यते विलोड्यते येन तत्तथा, न केवलमपायनिबन्धनदर्शनमेव किन्तु कल्याणकारणोपकारि चेत्याह-सम्यग्दर्शनविशुद्धिहेतु च । सम्यग्- अविपरीतं तत्त्वार्थश्रद्धानलक्षणं दर्शन सम्यग्दर्शनं मोक्षादिसोपानं तद्विशुद्धिकरण च । किं तच्चैत्यवन्दनादि आदिशब्दात्पूजादिपरिग्रह. । विधिना-सूत्रोक्तेन प्रज्ञप्त-प्ररूपितं वीतरागैरर्हद्भि स्थाने शुभाध्यवसायप्रवृत्तेरेतच्च चैत्यगृहे सति भवतीति गाथार्थः । उक्ताश्चैत्यगृहगुणा ।

सांप्रतं समानधार्मिकगुणानाह—

साहम्मियथिरकरणं, वच्छल्ले सासणस्स सारो त्ति ।
मग्गसहायत्तणओ, तहा अणासो य धम्माओ ॥३४२॥

समानधार्मिकस्थिरीकरणमिति, यदि कश्चित्कथञ्चिद्धर्मात् प्रच्यवते ततस्तं स्थिरीकरोति, महाश्चायं गुणः। तथा वात्सल्ये क्रियमाणे शासनस्य सार इति सार आसेवितो भवति। उक्तं च-" जिणसासणस्स सारो " इत्यादि सति च तस्मिन् वात्सल्यमिति, तथा तत तेनोपबृंहणादिना प्रकारेण सम्यग्दर्शनादिलक्षणमार्गसहायत्वादनाशश्च भवति,कुतो धर्मोत्तम एवेति गाथार्थः। उक्ता समानधार्मिकगुणा।

साम्प्रत तत्र निवसनो विधिरुच्यते—तत्रापि च प्रायो भावसुप्ता श्रावका ये प्राप्यापि जिनमत गार्ह—स्थ्यमनुपालयन्त्यतो निद्रावबोधद्वारेणाह-

**नवकारेण विबोहो, अणुसरणं सावओ वयाइम्मि।**
**जोगो चिइवंदणमो, पच्चक्खाणं च विहिपुव्वं ॥३४३॥**

नमस्कारेण विबोध इति सुप्तोत्थितेन नमस्कार पठितव्य, तथाऽनुस्मरणं कर्तव्यं श्रावकोऽहमिति व्रतादौ विषये, ततो योग कायिकादि चैत्यवन्दनमिति प्रयत्नेन चैत्यवन्दनं कर्तव्य, ततो गुर्वादीनभिवन्द्य प्रत्याख्यान च विधिपूर्वकं सम्यगाकारशुद्ध ग्राह्यमिति।

**गोसे सयमेव इमं, काउं तो चेइयाण पूयाई।**
**साहुसगासे कुज्जा, पच्चक्खाणं अहागहियं ॥ ३४४ ॥**

गोसे-प्रत्युषसि स्वयमेवेद कृत्वा गृहादौ ततश्चैत्याना पूजादीनि संमार्जनोपलेपपुष्पधूपादिसपादनादि कुर्यात् तत साधुसकाशे कुर्यात्किं प्रत्याख्यानं यथागृहीतमिति। श्रा०। अत्र च यद्यपि श्रावकयतिधर्मभेदाद्धर्मो द्विधा। श्रावकधर्मोऽपि अविरतविरतश्रावकधर्मभेदाद् द्विधा, तत्राविरतश्रावकधर्मस्य पूर्वसूरिभि -" तत्थहिगारी अत्थी, समत्थओ जो न सुत्तपडिकुट्ठो। अत्थी उ जो विणीओ, समुट्ठिओ पुच्छमाणो अ ॥ १ ॥" इत्यादिनाऽधिकारी निरूपित, विरतश्रावकधर्मस्य " सपत्तदंसणाई पइदिअहं जइ जणा सुणेई अ। सामायारिं परम, जो खलु तं सावयं विंति ॥ १ ॥" तथा-' परलोगहिअं ध( स )म्मं, जो जिणवयणं सुणेइ उवउत्तो। अइतिव्वकम्मविगमा, उक्कोसो सावगो इत्थ ॥ १ ॥' इत्यादिभिरसाधारणैः श्रावकशब्दप्रवृत्तिहेतुभिरधिकारित्वमुक्तम्। यतिधर्माधिकारिणोऽप्येवं तद्प्रस्तावे वक्ष्यमाणा यथा—

" पव्वज्जाए अरिहा, आरिअदेसम्मि जे समुप्पन्ना।
आइकुलेहिं विसिट्ठा, तह खीणप्पा य कम्ममला ॥ १ ॥
तत्तो अ विमलबुद्धी, दुलहं मणुअत्तणं भवसमुद्दे।
जम्मो मरणनिमित्तं चवलाओ संपयाओ अ ॥ २ ॥
विसया य दुक्खहेऊ, संजोगे निअमओ विओगु त्ति।
पइसमयमेव मरणं, इत्थ विवागो अ अइरुद्दो ॥ ३ ॥
एव पयईए च्चिअ, अवगयससारनिग्गुणसहावा।
तत्तो अ तव्विरत्ता, पयणुकसायप्पहासा य ॥ ४ ॥
सुकयन्नुआ विणीआ, रायाईणमविरुद्धकारी अ।
कल्लाणऽगा सड्ढा, धीरा तह समुवसंपन्ना ॥ ५ ॥"

इति पृथक् पृथक् प्रतिपादितास्तथाऽप्येभिरेकविंशत्या गुणैः कतमधर्मस्याधिकारित्वमिति न व्यामोहः कार्यो, यत एतानि सर्वाण्यपि शास्त्रान्तरीयाणि लक्षणानि प्रायेण तत्तद्गुणस्याङ्गभूतानि वर्त्तन्ते। चित्रस्य वर्णकशुद्धिविचित्रवर्णतारेखाशुद्धिनानाभावप्रतीतिवत्। प्रकृतगुणाः पुन सर्वधर्माणा साधारणभूमिकेव चित्रकराणामिति सूक्ष्मबुद्ध्या भावनीयम्। यदुक्तम्-' दुविह पि धम्मरयणं, तरइ नरो घित्तुमविगलं सो उ। जस्सेगवीसगुणरयणसंपया होइ सुत्थि त्ति ॥ १ ॥" त च सर्वेऽपि गुणा प्रकृते संविग्नादिविशेषणपदैरेव संगृहीता इति सद्धर्मग्रहणार्ह उक्तः ॥ २० ॥ ( ध० १ अधि० । श्रा० । ) एत्ता च भेदाना यथासभव ज्ञानश्रद्धाचरणविधया सम्यक्त्वमुपयोगित्वमिति ध्येयम्। इत्थ च देवादितत्त्वश्रद्धानविकलत्व तथाविधाजीविकादिहेतो श्रावकाकारधरणे द्रव्यश्रावकत्वमेव च पर्यवसन्न, भावश्रावकत्व तु यथोक्तविधिप्रतिपन्नसम्यक्त्वादिर्यतिभ्य सकाशान्नित्य धर्मश्रवणादेव, यदुक्तमावश्यकवृत्तौ—" यो ह्यभ्युपेतसम्यक्त्वो, यतिभ्य प्रत्यह कथाम्। शृणोति धर्मसम्बद्धा-मसौ श्रावक उच्यते ॥ १ ॥" अभ्युपेतसम्यक्त्व इत्युपलक्षणमभ्युपेताणुव्रतोऽपीति व्याख्यालेश इति। तच्चेहाधिकृत भावस्यैव मुख्यत्वात्, भावश्रावकोऽपि दर्शनव्रतोत्तरगुणश्रावकभेदात् त्रिविध, तद्विस्तरस्तु व्रतभङ्गाधिकारे दर्शयिष्यते, आगमे चान्यथाऽपि श्रावकभेदा श्रूयन्ते, तथात्र स्थानाङ्गसूत्रम्- चउव्विहा समणोवासगा पण्णत्ता, तं जहा-अम्मापिइसमाणे, भाइसमाणे, मित्तसमाणे, सवत्तिसमाणे। अहवा-चउव्विहा समणोवासगा पण्णत्ता, त जहा-आयंससमाणे, पडागसमाणे, खाणुसमाणे, खरंटसमाणे।' इति एतत् साधूनाश्रित्य द्रष्टव्या इति न पार्थक्यशङ्कालेश। एषामपि नामश्रावकादिष्ववतारणाविचारे व्यवहारनयमते भावश्रावका एवैते श्रावकपदव्युत्पत्तिनिमित्तमात्रयोगेन तथाव्यवह्रियमाणत्वात्, निश्चयनयमते पुन सपत्नीखरण्टसमानौ मिथ्यादृष्टिप्रायौ द्रव्यश्रावकौ, शेषास्तु भावश्रावका।

यतस्तेषां स्वरूपमेवमागमे व्याख्यायते—

"चिंतिज्जइ कज्जाइं, न दिट्ठखलिओ वि होइ निन्नेहो।
एगतवच्छलो जइ-जणस्स जणणीसमो सड्ढो ॥ १ ॥
हिअए ससिणेहो च्चिअ, मुणीण मंदायरो विणयकम्मे।
भाइसमो साहूणं, पराभवे होइ सुसहाओ ॥ २ ॥
मित्तसमाणो माणा ईसिं रूसइ अपुच्छिओ कज्जे।
मन्नतो अप्पाणं, मुणीण सयणाउ अब्भहिअं ॥ ३ ॥
थद्धो छिद्दप्पेही पमायखलिआणि निच्चमुच्चरइ।
सड्ढो सवत्तिकप्पो, साहुजणं तणसमं गणइ ॥ ४ ॥"

तथा द्वितीयचतुष्के—

" गुरुभणिओ सुत्तत्थो, बिंबिज्जइ अवितहो मणे जस्स।
सो आयंससमाणो, सुसावओ वण्णिओ समए ॥ ५ ॥
पवणेण पडागा इव, भामिज्जइ जो जणेण मूढेण।
अविणिच्छिअगुरुवयणो, सो होइ पडाइआतुल्लो ॥ ६ ॥
पडिवन्नमसग्गाहं, न मुणइ गीअत्थसमणुसिट्ठो वि।
खाणुसमाणो एसो, अपउसी मुणिजणे नवरं ॥ ७ ॥
उम्मग्गदेसओ णि-ण्हवोऽसि मूढोऽसि मन्दधम्मोऽसि।
इअ सम्म पि कहत, खरंटए सो खरंटसमो ॥ ८ ॥
जह सिढिलमसुइदव्वं, छुप्पंत पि हु नरं खरंटेइ।
एवमणुसासतं पि हु दूसतो भण्णइ खरंटो ॥ ९ ॥

निच्छयओ सिच्छ्रनी, सरंटतुल्लो सवत्तितुल्लो त्ति ।
ववहारओ उ सड्ढा, जयंति ज जिणगिहाईसु ॥ १० ॥"

इत्यलं प्रसङ्गेन ।

अत्रोपयोगित्वात् पूर्वसूरिप्रणीतानि भावश्रावकस्य लिङ्गानि धर्मरत्नप्रकरणे यथोपादिष्टानि तथोपदर्श्यन्ते । तथाहि—

"कयवयकम्मो १ तह सी-लवं च २ गुणवं च ३ उज्जुववहारी ४।
गुरुसुस्सूसो ५ पवयण-कुसलो ६ खलु सावगो भावे ॥१॥"

कृतम्-अनुष्ठितं व्रतविषयं कर्म-कृत्यं येन स कृतव्रतकर्मा १,

अथैनमेव सप्रभेदमाह—

' तत्थायरणा १ जाणा २ गिण्हण ३ पडिसेवणासु ४ उज्जुत्तो ।
कयवयकम्मो चउहा, भावत्थो तस्सिमो होइ ॥ २ ॥"

तत्राकर्णनं विनयबहुमानाभ्यां व्रतस्य श्रवणं १, ज्ञानं व्रतभङ्गभेदातिचाराणां सम्यगवबोधः २, ग्रहणं गुरुसमीपे इत्वरं यावत्कालं वा व्रतप्रतिपत्तिः ३, आसेवनं सम्यक्पालनम् ४ ।

अथ शीलवत्स्वरूपं द्वितीयलक्षणं यथा—

' आययणं खु निसेवइ १,वज्जइ परगेहपविसणमकज्जे २।
निच्चमणुब्भडवेसो ३, न भणइ सविआरवयणाइं ४ ॥ ३ ॥
परिहरइ बालकीलं ५, साहइ कज्जाइं महुरनीईए ६ ।
इअ छव्विहसीलजुओ, विन्नेओ सीलवंतोऽत्थ ७ ॥ ४ ॥"

आयतनं धर्मिजनमीलनस्थानम्, उक्तं च—" जत्थ साहम्मिआ बहवे सीलवंता बहुस्सुआ । चरित्तायारसंपन्ना, आययणं तं विआणाहि ॥ १ ॥" तत्सेवते भावश्रावको तत्सेवनेनेति भावः ॥ १ शेषपदानि सुगमानि, बालक्रीडां द्यूतादिकं ५, मधुरनीत्या सामवचनेन स्वकार्यं साधयति, न तु परुषवचनेनेति षट् शीलानि ६ । अधुना तृतीयं भावश्रावकलक्षणं गुणवत्स्वरूपं यथा-

"जइवि गुणा बहुरूवा,तहावि पंचहिँ गुणेहिँ गुणवंता ।
इअ मुणिवरेहिँ भणिओ, सरूवमेसिं निसामेहि ॥ ५ ॥
सज्झाए १ करणम्मि अ २,विणयम्मि अ ३ निच्चमेव उज्जुत्तो।
सव्वत्थऽणभिनिवेसो ४, वहइ रुई सुट्ठु जिणवयणे ५ ॥६॥"

स्वाध्याये पञ्चविधे १, करणे—तपोनियमवन्दनाद्यनुष्ठाने २, विनये—गुर्वाद्यभ्युत्थानादिरूपे, नित्यमुद्युक्तः प्रयत्नवान् भवति ३, सर्वत्र प्रयोजनेषु अनभिनिवेशः प्रज्ञापनीयो भवति ४, तथा वहति धारयति, रुचिम्-इच्छां श्रद्धानमित्यर्थः, सुष्ठु-बाढं जिनवचने ५, इति पञ्च गुणाः । ( सम्यक्त्वग्रहणं ' सम्मत्त ' शब्देऽस्मिन्नेव भागे गतम् । )

सामाचारीशेषमाह—

सुणिऊण तओ धम्मं, अहारविहारं च पुच्छिउमिमीणं ।
काऊण य करणिज्जं, भत्तम्मि तहा ससत्तीए ॥ ३५२ ॥

श्रुत्वा ततो धर्मं क्षान्त्यादिलक्षणं साधुसकाशे इति गम्यते । यथाविहारं च तथाविधवचनारूपं पृष्ट्वा, आसीनां संबन्धिनं कृत्वा च करणीयम् आसीनामेव संबन्धिमात्र इत्यासितानां करणीयस्य स्वशक्त्या स्वविभवाद्यौचित्येनेति ।

ततो अतिंदियं खलु, काऊण जहोचियं अणुट्ठाणं ।
भुंजेइ जहाविहिणा, पच्चक्खाणं च काऊण ॥ ३५३ ॥

ततस्तदनन्तरमनिन्द्यं खलु इहलोकपरलोकानिन्द्यमेव कृत्वा यथोचितमनुष्ठानं यथा वाणिज्यादि तथा भुक्त्वा यथाविधिना अतिथिसंविभागसंपादनादिना प्रत्याख्यानं च कृत्वा तदनन्तरमेव पुनर्भोगेऽपि ग्रन्थिसहितादीति ।

सेविज्ज तओ साहू, करिज्ज पूयं च वीयरागाणं ।
चिइवंदणसगिहागम—पइरिक्कम्मि य तुयट्टिज्जा ॥३५४॥

सेवेत ततः साधून् पर्युपासनविधिना कुर्यात् पूजां च वीतरागाणां स्वविभवौचित्येन,ततश्चैत्यवन्दनं कुर्यात्, ततः स्वगृहागमनं तथैकान्ते तु त्वग्वर्तनं कुर्यात्स्वपेदिति ।

कथमित्याह—

उस्सग्गबंभयारी, परिमाणकडो उ नियमओ चेव ।
सरिऊण वीयरागे, सुत्तविबुद्धो विचिंतिज्जा ॥ ३५५ ॥

उत्सर्गतः प्रथमकल्पेन ब्रह्मचारी आसेवनं प्रति कृतपरिमाणस्तु नियमादेव आसेवनपरिमाणाकरणे महामोहदोषात् तथा स्मृत्वा वीतरागान् सुप्तविबुद्धः सन् विचिन्तयेद्वक्ष्यमाणमिति ।

भूएसु जंगमत्तं, तेसु वि पंचेन्दियत्तमुक्कोसं ।
तेसु वि अ माणुसत्तं, मणुयत्ते आरिओ देसो ॥३५६॥

भूतेषु—प्राणिषु जङ्गमत्वं द्वीन्द्रियादित्वं तेष्वपि पञ्चेन्द्रियत्वमुत्कृष्टम्-प्रधानं तेष्वपि पञ्चेन्द्रियेषु मानुषत्वमुत्कृष्टमिति वर्तते मनुजत्वे आर्यो देश उत्कृष्ट इति ।

देसे कुलं पहाणं, कुले पहाणे य जाइ उक्कोसा ।
तीइवि रूवसमिद्धी, रूवे य बलं पहाणयरं ॥ ३५७ ॥

देशे आर्ये कुलं प्रधानम् ,उग्रादिकुले प्रधाने च जातिरुत्कृष्टा-मातृसमुत्था, तस्यामपि जातौ रूपसमृद्धिरुत्कृष्टा-सकलाङ्गनिष्पत्तिरित्यर्थः, रूपे च सति बलं प्रधानतरं सामर्थ्यमिति ।

होइ बले वि य जीयं, जीए वि पहाणयं तु विन्नाणं ।
विन्नाणे सम्मत्तं,सम्मत्ते सीलसंपत्ती ॥३५८॥

भवति बलेऽपि च जीवितं प्रधानतरमिति योगः,जीवितेऽपि च प्रधानतरं विज्ञानं, विज्ञाने सम्यक्त्वं क्रिया पूर्ववत्, सम्यक्त्वे शीलसंप्राप्तिः प्रधानतरेति ।

सीले खाइयभावे, खाइयभावे य केवलं नाणं ।
केवलिए पडिपुन्ने, पत्ते परमक्खरे मुक्खो ॥ ३५९ ॥

शीले क्षायिकभावः प्रधानः, क्षायिकभावे च केवलज्ञानं प्रतिपत्तव्यम्, योजना सर्वत्र कार्येति, कैवल्ये प्रतिपूर्णे प्राप्ते परमाक्षरे मोक्ष इति ।

न य संसारम्मि सुहं, जाइजरामरणदुक्खगहियस्स ।
जीवस्स अत्थि जम्हा, तम्हा मुक्खो उवादेओ ॥३६०॥

न च संसारे सुखं जातिजरामरणदुःखगृहीतस्य जीवस्यास्ति, यस्मादेवं तस्मात् मोक्ष उपादेयः ।

किंविशिष्ट इत्याह—

जाइाइदोसरहिओ, अव्वाबाहसुहसंगओ इत्थ ।
तस्साहणसामग्गी, पत्ता य मए बहू इन्हि ॥३६१॥

जात्यादिदोषरहितोऽव्याबाधसुखसंगतोऽत्र ( संसारे )तत्साधनसामग्री प्राप्ता च मया बह्विदानीम् ।

ता इत्थ लं न पत्तं, तयत्थमेवुज्जमं करेमि त्ति ।

विबुहजणणिंदिएणं, किं संसाराऽणुबंधेणं ॥ ३६२ ॥

तदत्र ( सामग्र्यां ) यत्र प्राप्तं तदर्थमेवोद्यमं करामीति विबुधजननिन्दितेन किं संसारानुबन्धेन । इति निगदसिद्धो गाथात्रयार्थः ।

इत्थं चिन्तनफलमाह—

वेरग्गं कम्मक्खय-विसुद्धनाणं च चरणपरिणामो ।

थिरया आउय बोही, इय चिंताए गुणा हुंति ॥३६३॥

इत्थं चिन्तयतो वैराग्यं भवत्यनुभवसिद्धमेवैतत्, तथा कर्मक्षयः तत्त्वचिन्तनेन, प्रतिपक्षत्वात् विशुद्धज्ञानं च निबन्धनहानेः, चरणपरिणामः प्रशस्ताध्यवसायत्वात्, स्थिरता धर्मे प्रतिपक्षासारदर्शनात्, आयुरिति - कदाचित्परभवायुष्कबन्धस्ततस्तच्छुभत्वात्सर्वं कल्याणं बोधिरित्थं तत्त्वभावनाभ्यासात् । एवं चिन्तायां क्रियमाणायां गुणा भवन्त्येवं चिन्तया वेति ।

गोसम्मि पुव्वभणिओ, नवकारेणं विबोहमाईओ ।

इत्थ विही गमणम्मि य, समासओ संपवक्खामि ॥३६४॥

गोसे—प्रत्यूषसि पूर्वभणितो नमस्कारेण विबोधादिः अत्र विधिः इति गमने च समासतः संप्रवक्ष्यामि विधिमिति ।

अहिगरणं खामणं खलु, चेइयसाहूण वंदणं चेव ।

संदेसम्मि विभासा, जइ गिहिगुणदोसविक्खाए ॥३६५॥

अधिकरणक्षामणं खलु मा भूत्तत्र मरणादौ वैरानुबन्ध इति तथा चैत्यसाधूनामेव च वन्दनं क्रियमतः कुर्यात् गुणदर्शनात्, संदेशे विभाषा (यतिगृहिगुणदोषापेक्षयेति) यतः संदेशको नीयते न सावद्यो गृहस्थस्य इति चैत्यसाधूना वन्दनं करोति यदुक्तं तद्विस्फारयति ।

साहूण सावगाण य, सामायारी विहारकालम्मि ।

जत्थ त्थि चेइयाइं, वंदावंती तहिं संघं ॥ ३६६ ॥

साधूना श्रावकाणां चोक्तशब्दार्थाना ( २ ) सामाचारी-व्यवस्था कदा विहरणकाले-विरहणसमये, किं विशिष्टेत्याह—यत्र स्थाने सन्ति चैत्यानि वन्दयन्ति तत्र संघं चतुर्विधमपि प्रणिधानं कृत्वा स्वयमेव वन्दत इति ।

पढमं तओ य पच्छा, वंदंति सयं सिया ण वेल त्ति ।

पढमं चिय पणिहाणं, करंति संघम्मि उवउत्ता ॥३६७॥

प्रथममिति—पूर्वमेव संघं वन्दयन्ति ततः पश्चात्सङ्घवन्दऽनोत्तरकालं वन्दन्ते, स्वयम्-आत्मना आत्मनिमित्तमिति स्याच्च वेलेति—स्तेनादिभयसार्थगमनादौ तत्रापि प्रथममेव वन्दने प्रणिधानं कुर्वन्ति संघविषयमुपयुक्ताः संघं प्रत्येतद्वन्दनं संघोऽयं वन्दत इति ।

पच्छाकयपणिहाणा, विहरंता साहुमाइ दट्ठूणं ।

जंपंति अमुगठाणे, देवे वंदाविया तुब्भे ॥ ३६८ ॥

पश्चात्तदुत्तरकालं कृतप्रणिधानाः सन्तस्तदर्थस्य संपादितत्वाद्विहरन्तः सन्त साध्वादीन् दृष्ट्वा साधुं साध्वीं श्रावकं श्राविका वा जल्पन्ति व्यक्तं च भणन्ति । किम् अमुकस्थाने—मथुरादौ देवान्वन्दिता यूयमिति ।

ते वि य कयंजलिउडा, सद्धासंवेगपुलइयसरीरा ।

अवणामिउत्तमंगा, तं बहु मन्नंति सुहज्झाणा ॥३६९॥

तेऽपि च साध्वादयः कृताञ्जलिपुटा रचितकरपुटाञ्जलयः श्रद्धासंवेगपुलकितशरीराः—श्रद्धाप्रधानसंवेगतो रोमाञ्चितवपुषोऽवनामितोत्तमाङ्गाः सन्तस्तद्वन्दनं बहु मन्यन्ते शुभध्यानाः—प्रशस्ताध्यवसायाः ।

इत्युभयो फलमाह—

तेसिं पणिहाणाओ, इयरेसिं पि य सुभाउ झाणाओ ।

पुन्नं जिणेहिँ भणियं, नो संकमउ त्ति ते मेरा ॥ ३७० ॥

तेषामाद्यानां वन्दननिवेदकानां प्रणिधानात्तथाविधकुशलचित्तादितरेषामपि च वन्द्यमानानां शुभध्यानात्तच्छ्रवणप्रवृत्त्या पुण्यं जिनैर्भणितम्—अर्हद्भिरुक्तं न च संक्रमत इति न निवेदकपुण्यं निवेद्यसंक्रमेण यतश्चैवमतो मर्यादियमवश्यं कार्येति ।

विपर्यये दोषमाह—

जे पुणऽकयपणिहाणा, वंदित्ता नेव वा निवेयंति ।

पच्चक्खमुसावाई, पावा हु जिणेहिँ ते भणिया ॥३७१॥

ये पुनरनाभोगादितोऽकृतप्रणिधाना वन्दित्वा नैव वा यन्दित्वा निवेदयन्ति अमुकस्थाने देवान्वन्दिता यूयमिति प्रत्यक्षमृषावादिनोऽकृतनिवेदनात्पापा एव जिनैस्ते भणिता मृषावादित्वादेवेति ।

जे वि य कयंजलिउडा, सद्धासंवेगपुलइयसरीरा ।

बहु मन्नंति न सम्मं, वंदणगं ते वि पाव त्ति ॥३७२॥

येऽपि च साध्वादयो निवेदिते सति कृताञ्जलिपुटाः श्रद्धासंवेगपुलकितशरीरा इति पूर्ववन्न बहु मन्यन्ते न सम्यक् वन्दनकं कुर्वन्ति तेऽपि पापा गुणवति स्थानेऽवज्ञाकरणादिति ।

कचिद्वेलाभावेऽपि विधिमाह—

जइ वि न वंदणवेला, तेणाइभएण चेइए तह वि ।

दट्ठूणं पणिहाणं, नवकारेणावि संघम्मि ॥ ३७३ ॥

यद्यपि क्वचिच्छून्यादौ न वन्दनवेला स्तेनश्वापदादिभयेषु चैत्यानि तथापि दृष्ट्वा अवलोकननिबन्धनमपि प्रणिधानं नमस्कारेणापि संघ इति संघविषयं कार्यमिति ।

तम्मि य कए समाणे, वंदवणागं निवेइयव्वं ति ।

तयभावम्मि पमादा, दोसो भणिओ जिणिंदेहिं ॥३७४॥

तस्मिन्नपि एवंभूते प्रणिधाने कृते सति वन्दनं निवेदयितव्यमेव वस्तुतः संपादितत्वात्, तदभावे तथाविधप्रणिधानाकरणे प्रमादाद्धेतोर्दोषो भणितो जिनेन्द्रैर्विभागायातशक्यकुशलाप्रवृत्तेरिति ।

उपसंहरन्नाह—

एयं सामायारिं, नाऊण विहीइ जे पउंजंति ।

ते हुंति इत्थ कुसला, सेसा सव्वे अकुसला उ ॥३७५॥

एतामनन्तरोदितां सामाचारी—व्यवस्था ज्ञात्वा विधिना ये प्रयुञ्जते यथावद् ये कुर्वन्तीत्यर्थः, ते भवन्त्यत्र विहरणविधौ कुशलाः शेषा अकुशला एव—अनिपुणा एव; न च यमयुक्ताः संदिष्टवन्दनकथनतीर्थस्नपनादिदर्शनादिति । श्रा० ।

( श्रावकदिनक्रिया ' सावगदिणकिरिया ' शब्दे वक्ष्यते । )

अथ श्रावकस्य भावगतानि तान्याह—

"भावगयाइँ सत्तरस, मुणिणो एअस्स विंति लिङ्गाइं ।
जाणि अ जिणमयसारा,पुव्वायरिआ जओ आह ॥ ११ ॥
इत्थि१,दिअत्थसंसा-र४विसय५आरंभ६गेह ७दंसणओ ८।
गड्डरिगाइपवाहे९पुरस्सरं आगमपवित्ती १० ॥ १२ ॥
दाणाइ जहासत्ती, पवत्तणं ११ विहिअ १२ रत्तदुट्ठे अ १३।
मज्झत्थ १४ मसंबद्धो १५, परत्थकामोवभोगी अ १६॥१३॥
वेसा इव गिहवासं; पालइ १७ सत्तरसपयनिवद्धं तु ।
भावगयभावसावग- लक्खणमेअं समासेणं ॥ १४ ॥"

आसां काचिद्व्याख्या-स्त्र्यादिदर्शनान्तपदाष्टकानां द्वन्द्वे सप्तम्यर्थे तसिल् (इतरेभ्योऽपि दृश्यन्ते इति)अयं भावः—स्त्रीवशवर्त्ती न भवेत् १, इन्द्रियाणि विषयेभ्यो निरुणद्धि, २, नानर्थमूलेऽर्थे लुभ्यति ३, संसारे रतिं न करोति ४, विषयेषु न गृद्धिं कुर्यात् ५, तीव्रारम्भं न करोति, करोति चेदनिच्छन्नेव ६, गृहवासे पाशमिव मन्यमानो वसेत् ७, सम्यक्त्वान्न चलति ८, गड्डरिकप्रवाहं त्यजति ९, आगमपुरस्सरं सर्वाः क्रियाः करोति १०, यथाशक्ति दानादौ प्रवर्त्तते ११, विह्रीको निरवद्यक्रियां कुर्वाणो न लज्जते १२, संसारगतपदार्थेषु अरक्तद्विष्टो निवसति १३, धर्मादिस्वरूपविचारे मध्यस्थः स्यात्, न तु मया अयं पक्षोऽङ्गीकृत इत्यभिनिवेशी १४, धनस्वजनादिषु सम्बद्धोऽपि क्षणभङ्गुरतां भावयन्नसम्बद्ध इवास्ते १५, परार्थम् अन्यजनदाक्षिण्यादिना भोगोपभोगेषु प्रवर्त्तते, नतु स्वतीव्ररसेन १६,वेश्येव निराशंसो गृहवासं पालयतीति १७।ध०२अधि०।

[श्रमणेभ्यः श्रावकभेदः 'सामाइय' शब्देऽस्मिन्नेव भागे गतः ।] [श्रावकस्य साधोः अन्तरम् 'मरण' शब्दे षष्ठभागे गतम् ।] "एवं व्रतस्थितो भक्त्या, सप्तक्षेत्र्यां धनं वपन् । दयया चातिदीनेषु, महाश्रावक उच्यते ॥ १ ॥" इति ('महासावग' शब्दे षष्ठभागे गतम्) । श्रावकस्य एकविंशतिर्गुणास्ते च पूर्वमुक्ताः । दर्श० २ तत्त्व ।

श्वापद—पुं० ।प्रायो मांसाहारादिविशेषणविशिष्टे व्याघ्रादौ, ज० २ वक्ष० । मकरग्रहादौ, स० । जलचरक्षुद्रसत्त्वे, आ० १ श्रु० ६ अ० । सिंहादिषु, आ० १ श्रु० १ अ० । आ० म० । व्याघ्रादिषु, स० १ सम० । प्रश्न० ।

सावगकुल—श्रावककुल—न०।श्रावकान्वये, 'वंसाणं जिणवंसो सव्वकुलाण च सावयकुलाइं' संथा० । कइ एगवीसगुणा सावगा भवंति, तेहिं सावएहि य परंपरागयं सावयकुलं भंडियं ।' अङ्ग० ।

सावगणंदण—श्रावकनन्दन—पुं० । श्रावककुमारे, आ० क० १ अ० ।

सावगदिणकिच्च—श्रावकदिनकृत्य—न० । श्रावकप्रतिदिनक्रियाप्रतिपादके स्वनामख्याते ग्रन्थे,ध० २ अधि० । ( श्राद्धदिनकृत्यमित्यपरं नामास्य । )

सावगदिणकिरिया—श्रावकदिनक्रिया—स्त्री० । श्राद्धप्रतिदिनकृत्ये, ध० ।

सांप्रतं मध्याह्नादिविषयं यत्कर्त्तव्यं तद्दर्शयन्नाह—

मध्याह्नेऽर्चा च सत्पात्र-दानपूर्वं तु भोजनम् ।
संवरणकृतिस्तद्विज्ञैः, सार्धं शास्त्रार्थचिन्तनम् ॥ ६५ ॥

मध्याह्ने—मध्याह्नकाले च पुनरर्थे पूर्वोक्तविधिना विशिष्य च प्रधानशाल्योदनादिनिष्पन्नविशेषरसवतीढौकनादिना,द्वितीयवारमित्यर्थः । अर्चा—पूजा श्रावकाधिकारप्रस्तावाज्जिनपूजाविशेषतो गृहिधर्मो भवतीत्यन्वयः, एवमग्रेऽपि । तथा सत्पात्रे साध्वादि तस्मिन् दानपूर्वं दानं दत्त्वेत्यर्थः, भोजनम्-अभ्यवहरणं तुरेवकारार्थस्ततः सत्पात्रदानपूर्वमेव भोजनमिति निष्कर्षः, अन्वयस्तूक्त एव । अत्र च भोजनमित्यनुवादः मध्याह्निकपूजाभोजनयोश्च न कालनियमः, तीव्रबुभुक्षोर्हि बुभुक्षाकालो-भोजनकाल इति रूढेः, मध्याह्नादर्वागपि गृहीतं प्रत्याख्यानं तीरयित्वा देवपूजापूर्वकं भोजनं कुर्वन्न दुष्यति । अत्र चायं विधिः-भोजनवेलायां साधून्निमन्त्र्य तैः सह गृहमायाति स्वयमागच्छतो वा मुनीन् दृष्ट्वा संमुखं गमनादिकं करोति, साधूनां हि प्रतिपत्तिपूर्वकं प्रतिलम्भनं न्याय्यं श्रावकाणां, सा चेत्थं योगशास्त्रे—"अभ्युत्थानं तदा लोके, ऽभियानं च तदागमे । शिरस्यञ्जलिसंश्लेषः, स्वयमासनढौकनम् ॥ १ ॥ आसनाभिग्रहो भक्त्या, वन्दना पर्युपासनम् । तद्यानेऽनुगमश्चेति, प्रतिपत्तिरियं गुरोः ॥ २ ॥" दिनकृत्येऽपि—"आसणेण निमंतेत्ता, तओ परिअणसंजुओ । वंदए मुणिणो ताहे, खंताइगुणसंजुए ॥१॥" एवं प्रतिपत्तिं विधाय सविनयं संविग्नासंविग्नभावितक्षेत्रं १ सुभिक्षदुर्भिक्षादिकालं २ सुलभदुर्लभादिदेयं च द्रव्यं ३ विचार्य आचार्योपाध्यायगीतार्थतपस्विबालवृद्धग्लानसहाऽसहादिपुरुषाद्यपेक्षया च स्पर्द्धामहत्त्वमत्सरस्नेहलज्जाभयदाक्षिण्यपरानुवर्त्तना प्रत्युपकारेच्छामायाविलम्बानादरविप्रियोक्तिपश्चात्तापदीनाननादिदोषवर्जमेकान्तात्मानुग्रहबुद्ध्या द्विचत्वारिंशद्भिक्षादोषाद्यदूषितं निःशेषनिजान्नपानवस्त्रादिभोजनाद्यनुक्रमेण स्वयं दानं दत्ते दापयति वा पार्श्वे स्थित्वा भार्यादिपार्श्वाद् यतो दिनकृत्ये—"देसं खित्तं तु जाणित्ता, अवत्थं पुरिसं तहा । विज्जो व्व रोगिअस्सेव, तओ किरिअं पउजए ॥ १ ॥" देशं मगधावन्त्यादि साधुविहारयोग्यायोग्यरूपं १ क्षेत्रं संविग्नैर्भावितमभावितं वा, तुशब्दात्-द्रव्यमिदं सुलभं दुर्लभं वा, अवस्था सुभिक्षदुर्भिक्षादिका पुरुषमाचार्योपाध्यायबालवृद्धग्लानसहाऽसहादिकं च ज्ञात्वा 'विज्जु व्व रोगिअस्स' त्ति—यथा किल भिषग् देशकालादि विचार्य व्याधिमतश्चिकित्सां करोत्येवं श्रावकोऽपि ततः क्रियामाहारादिदानरूपां प्रयुङ्क्त इति तद्वृत्तिः । तत्र च साधूनां यद्योग्यं तत्सर्वं विहारयितुं प्रत्यहं नामग्राहं कथयति, अन्यथा प्राक् कृतनिमन्त्रणस्य वैफल्यापत्तेः, नामग्राहं कथने तु यदि साधवो न विहरन्ति, तथापि कथयितुः पुण्यं स्यादेव, अकथने तु विलोक्यमानमपि साधवो न विहरन्तीति हानिः । एवं गुरून्प्रतिलम्भ्य वन्दित्वा च गृहद्वारादि यावदनुव्रज्य च निवर्त्तते । साध्वभावे त्वनभ्रवृष्टिवत्साध्वागमनं जातु स्यात्तदा कृतार्थः स्यामिति दिगालोकं कुर्यात्, तथा चाहुः—
"जं साहूण न दिन्नं, कहिं पि तं सावया न भुंजंति ।

पत्ते भोअणसमए, वारस्सालोअणं कुज्जा ॥ १ ॥ "( ध० १ ) " भोजनानन्तर चाम--कटिस्थो घटिकाद्वयम् । शयीत निद्राया हीनम्--यद्वा पदशत , व्रजेत् ॥ ६३ ॥ " अथोत्तरार्द्धव्याख्या--' संवरणे ' त्यादि भोजनानन्तर संवरणं- प्रत्याख्यान दिवसचरमं ग्रन्थिसहितादि वा, तस्य कृति करणं, सति सभंव देवगुरुवन्दनपूर्वमित्यनुक्रमप्यवसेयं, यतो दिनकृत्ये--" देवं गुरु च वन्दित्ता, काउ संवरणं तदा " इति । तथा ततः-प्रत्याख्यानकरणानन्तर,शास्त्रार्थाना-शास्त्रप्रतिपादितभावानां चिन्तन--स्मरणं विचारणं वा इदमित्थं भवति नवेति संप्रधारणमिति यावत्, कथं? सार्द्ध-सह कै तज्ज्ञैः, तं शास्त्रार्थे जानन्तीति तज्ज्ञास्तैर्गीतार्थयतिभिः प्रवचनकुशलश्राद्धपुत्रैर्वेत्यर्थ ' गुरुमुखाच्छ्रुतान्यपि शास्त्रार्थरहस्यानि परिशीलनाविकलानि न चेतसि सुदृढप्रतिष्ठानि भवन्तीति कृत्वा ।

संम्प्रति संध्याविषयं यत्कर्तव्यं तदाह--

**सायं पुनर्जिनाभ्यर्चा, प्रतिक्रमणकारिता ।**
**गुरोर्विश्रामणा चैव, स्वाध्यायकरणं तथा ॥ ६६ ॥**

साय--संध्यासमयेऽन्तर्मुहूर्तादर्वाक् पुनस्तृतीयवार--मित्यर्थ , जिनाभ्यर्चा--देवपूजनं विशेषतो गृहिधर्मे इति संटङ्क । एवमग्रेऽपि । अत्र चायं विशेष.--उत्सर्गत श्रावकेणैकवारभोजिनैव भाव्यम् , यदभाणि दिनकृत्ये--"उस्सग्गेणं तु सड्ढो उ , सचित्ताहारवज्जओ । इक्कासणगभोई अ,बंभयारि तहेव य ॥१॥ " यश्चैकभक्तं कर्तुं न शक्नोति स दिवसस्याष्टमे भागेऽन्तर्मुहूर्तद्वयलक्षणे यामिनीमुखादौ तु रजनीभोजनमहादोषप्रसङ्गादन्तर्मुहूर्तादर्वागेव वैकालिकं करोति , यतो दिनकृत्य एव--"अह न सक्केइ काउ जो , एगभत्तं जओ गिही । दिवसस्स ऽट्ठमे भागे , तओ भुंजे सुसावओ॥१॥" वैकालिकानन्तर च यथाशक्ति दिवसचरमं सूर्योद्गमान्तं मुख्यवृत्त्या दिवसे सति द्वितीयपदे रात्रवपि करोति, कृत्वा च सध्यायाम् अर्द्धविम्बदर्शनादर्वाग् पुनरपि यथाविधि जिनं पूजयति । सा च दीपधूपरूपावसेयेति भाव , तथा प्रतिक्रमणस्य सामायिकम् १, चतुर्विंशतिस्तवो २, वन्दनकम् ३ , प्रतिक्रमणम् ४, कायोत्सर्ग ५ , प्रत्याख्यानं ६ चेति पड्विधावश्यकक्रियालक्षणस्य कारिताकरणम् , विशेषतो गृहिधर्मे इति संवन्ध । अयं भाव --संध्यायां जिनपूजनानन्तरं श्रावक साधुपार्श्वे पौषधशालादौ वा गत्वा प्रतिक्रमणं करोति । प्रतिक्रमणशब्दश्चावश्यकविशेषवाच्यपि । अत्र सामान्येन सामायिकादि षड्विधावश्यकक्रियाया रूढ , अध्ययनविशेषवाचिनोऽपि प्रतिक्रमणशब्दस्य नोआगमतो भावनिक्षेपमपेक्ष्य षडावश्यकरूपज्ञानक्रियासमुदायप्रवृत्तेरविरोधात् । क्रियारूप एकदेशे आगमस्याऽभावाच्च आगमत्वं,नोशब्दस्य देशनिषेधार्थत्वात् , उक्त च-' किरिआगमो ण होइ,तस्स णिसेधम्मि नो त्ति सद्दो त्ति"। तत्र सामायिकमार्तरौद्रध्यानपरिहारेण धर्मध्यानकरणेन शत्रुमित्रकाञ्चनादिषु समता , तच्च पूर्वमुक्तं चतुर्विंशतिस्तव चतुर्विंशतस्तीर्थकराणां नामोत्कीर्तनपूर्वकं गुणकीर्तन , तस्य च कायोत्सर्गे मनसाऽनुध्यान शेषकाले व्यक्तवर्णपाठ , अयमपि पूर्वमुक्त । वन्दन वन्दनायोग्याना

धर्माचार्याणा पञ्चविंशत्यावश्यकविशुद्धं द्वात्रिंशद्दोषरहितं नमस्करणं तदप्युक्तमेव । ध० २ अधि० । ( रात्रिकर्त्तव्यं ' सयण ' शब्देऽस्मिन्नेव भागे उक्तम् । )

अथ निद्रान्ते किं कर्त्तव्यमित्याह--

**निद्राक्षयेऽङ्गनाऽङ्गाना-मशौचादेर्विचिन्तनम् ।**
**इत्याहोरात्रिकी चर्या, श्रावकाणामुदीरिता ॥ ६८ ॥**

तत परिणताया रात्रौ निद्राया क्षये--नाशे सत्यनादिभवाभ्यासरसोल्लसद्दुर्जयकामरागजयार्थम् अङ्गना स्त्रियस्तासामङ्गानाम्--शरीराणां यदशौचम्-अपावित्र्य तस्य विचिन्तनं--विशेषेण विचारणम् , आदिशब्दात्--जम्बूस्वामीस्थूलभद्रादिमहर्षिसुश्राद्धादिदुष्पालनशीलपालनपवित्रचरित्रकषायजयोपायभवस्थित्यत्यन्तदु स्थताधर्ममनोरथानां ग्रहणम् , एषामपि चिन्तनमित्यर्थ. , तद्विशेषतो गृहिधर्मो भवतीत्यन्वय । ध० २ अधि० ।

**अगारिसामाइयङ्गाइ, सड्ढी काएण फासए ।**
**पोसहं दुहओ पक्खं, एगराई न हावए ॥ २३ ॥**

अगारी--गृहस्थ सामायिकाङ्गानि सामायिकस्य अङ्गानि सामायिकाङ्गानि नि शङ्कितनि काङ्क्षितनिर्विचिकित्सितामूढदृष्टिप्रमुखाणि कायेन स्पृशति, कीदृश सन् श्रद्धी-श्रद्धावान् सन् पुनर्गृहस्थ. उभयो.-शुक्लकृष्णपक्षयो पौषध मेवंत चतुर्दशीपूर्णिमास्यादिषु पौषधम्-आहारपौषधादिकं कुर्यात् एकरात्रिमपि--एकदिनमपि न हापयेत्--न हानिं कुर्यादित्यर्थ । रात्रिग्रहण दिवाव्याकुलताया रात्रौ अपि पौषध कुर्यात् । चेत् एव न स्यात् तदा चतुर्दशी अष्टमी उद्दिष्टा महाकल्याणकपूर्णिमा चतुर्मासकत्रयस्य दिवसे पौषधं कुर्यात्। सामायिकाङ्गत्वेनैव सिद्धे भेदेनोपादानमादरख्यापनार्थम् । उत्त० ५ अ० ।

**सावगधम्म**-श्रावकधर्म-पु० । श्रावकाणामुक्तशब्दार्थानां दुर्गतिगर्तनिपतज्जन्तुधरणप्रवणपरिणामस्तत्पूर्वकमनुष्ठानं श्रावकधर्म । पञ्चा० १ विव० । आव० । सम्यक्त्वमूलेऽणुव्रतशिक्षाव्रतगुणव्रतरूपे गृहिधर्मे अणुव्रताद्युपासकप्रतिमागतक्रियासाध्ये, ल० । ध० । श्र० । पञ्चा० ।

साम्प्रतं द्वादशविधं श्रावकधर्ममुपन्यस्यन्नाह--

**पञ्चेवऽणुव्वयाइं, गुणव्वयाइं च हुंति तिन्नेव ।**
**सिक्खावयाइँ चउरो, सावगधम्मो दुवालसहा ॥ ६ ॥**

पञ्चेति सङ्ख्या । एवकारोऽवधारणे । पञ्चैव न चत्वारि षड्वा । अणूनि च तानि व्रतानि चाणुव्रतानि महाव्रतापेक्षया-चाणुत्वमिति ; स्थूलप्राणातिपातादिविनिवृत्तिरूपाणीत्यर्थ । गुणव्रतानि च भवन्ति त्रीण्येव न न्यूनाधिकानि वा। अणुव्रतानामेवोत्तरगुणभूतानि व्रतानि गुणव्रतानि दिग्व्रतभोगापभोगपरिमाणकरणानर्थदण्डविरतिलक्षणानि, एतानि च भवन्ति त्रीण्येव । शिक्षापदानि च शिक्षाव्रतानि वा , तत्र शिक्षा-अभ्यास स च चारित्रनिवन्धनविशिष्टक्रियाकलापविषयस्तस्य पदानि--स्थानानि तद्विषयाणि या व्रतानि शिक्षाव्रतानि। एतानि च चत्वारि सामायिकदेशावकाशिकपोषधोपवासातिथिसंविभागाख्यानि। एव श्रावकधर्मो द्वादशधा--द्वादशप्रकार इति गाथासमासार्थ ।

अथ श्रावकस्य भावगनानि तान्याह—

"भावगयाइँ सत्तरस, मुणिणो एअस्स विंति लिङ्गाइं ।
जाणि अ जिणमयसारा, पुव्वायरिआ इओ आह ॥ ११ ॥
इत्थि१, दिअत्थसंसा-२३विसय४आरंभ५गेह ७दंसणओ ८ ।
गड्डरिगाइपवाह९पुरस्सरं आगमपवित्ती १० ॥ १२ ॥
दाणाइ जहासत्ती, पवत्तणं ११ विहिअ १२ रत्तदुट्ठे अ १३ ।
मज्झत्थ १४ मसंबद्धो १५, परत्थकामोवभागी अ १६॥१३॥
वेसा इव गिहवासं, पालइ १७ सत्तरसपयनिवडं तु ।
भावगयभावसावग-लक्खणमेअं समासेणं ॥ १४ ॥"

आसां काचिद्व्याख्या-स्त्र्यादिदर्शनान्तपदाष्टकानां द्वन्द्वे सप्तम्यर्थे तसिल् (इतरेभ्योऽपि दृश्यन्ते इति) अयं भावः—स्त्रीवशवर्त्ती न भवेत् १, इन्द्रियाणि विषयेभ्यो निरुणद्धि, २, नानर्थमूलेऽर्थे लुभ्यति ३, संसारे रतिं न करोति ४, विषयेषु न गृद्धिं कुर्यात् ५, तीव्रारम्भं न करोति, करोति चेदनिच्छन्नेव ३, गृहवासे पाशमिव मन्यमानो वसेत् ७, सम्यक्त्वाच्च चलति ८, गड्डरिकप्रवाहं त्यजति ९, आगमपुरस्सरं सर्वाः क्रियाः करोति १०, यथाशक्ति दानादौ प्रवर्त्तते ११, विहीको निरवद्यक्रिया कुर्वाणो न लज्जते १२, संसारगतपदार्थेषु अरक्तद्विष्टो निवसति १३, धर्मादिस्वरूपविचारे मध्यस्थः स्यात्, न तु मया अयं पक्षोऽङ्गीकृत इत्यभिनिवेशी १४, धनस्वजनादिषु सम्बद्धोऽपि क्षणभङ्गुरतां भावयन्नसम्बद्ध इवास्ते १५, परार्थम् अन्यजनदाक्षिण्यादिना भोगोपभोगेषु प्रवर्त्तते, न तु स्वतीव्ररसेन १६, वेश्येव निराशंसो गृहवासं पालयतीति १७।ध०२अधि० ।

[श्रमणेभ्यः श्रावकभेदः 'सामाइय' शब्देऽस्मिन्नेव भागे गतः । ] [श्रावकस्य सावो अन्तरम् 'मरण' शब्दे षष्ठभागे गतम् । ] " एवं व्रतस्थितो भक्त्या, सप्तक्षेत्र्यां धनं वपन् । दयया चातिदीनेषु, महाश्रावक उच्यते ॥ १ ॥" इति ('महासावग' शब्दे षष्ठभागे गतम्) । श्रावकस्य एकविंशतिर्गुणास्ते च पूर्वमुक्ताः । दर्श० २ तत्त्व ।

श्वापद—पुं० । प्रायो मांसाहारादिविशेषणविशिष्टे व्याघ्रादौ, जं० २ वक्ष० । मकरग्रहादौ, स० । जलचरक्षुद्रसत्त्वे, आ० १ श्रु० ६ अ० । सिंहादिषु, आ० १ श्रु० १ अ० । आ० म० । व्याघ्रादिषु, स० १ सम० । प्रश्न० ।

सावगकुल—श्रावककुल—न० । श्रावकान्वये, 'वंसाणं जिणवंसो सव्वकुलाणं च सावयकुलाइं' संथा० । 'कइ एगवीसगुणा सावगाण भवन्ति, नेहिं सावएहिं य परंपरागयं सावयकुलं भेडियं ।' अष्ट० ।

सावगणंदण—श्रावकनन्दन—पुं० । श्रावककुमारे, आ० क० १ अ० ।

सावगदिणकिच्च—श्रावकदिनकृत्य—न० । श्रावकप्रतिदिनाक्रियाप्रतिपादके स्वनामख्याते ग्रन्थे, ध० २ अधि० । (श्राद्धदिनकृत्यमित्यपरं नामास्य ।)

सावगदिणकिरिया—श्रावकदिनक्रिया—स्त्री० । श्राद्धप्रतिदिनकृत्ये, ध० ।

सांप्रतं मध्याह्नादिविषयं यत्कर्त्तव्यं तद्दर्शयन्नाह—

मध्याह्नेऽर्चा च सत्पात्र-दानपूर्वं तु भोजनम् ।
संवरणाकृतिस्तद्विज्ञैः, सार्धं शास्त्रार्थचिन्तनम् ॥ ६५ ॥

मध्याह्ने—मध्याह्नकाले च पुनरर्थे पूर्वोक्तविधिना विशिष्य च प्रधानशाल्योदनादिनिष्पन्नविशेषरसवतीढौकनादिना,द्वितीयवारमित्यर्थः । अर्चा—पूजा श्रावकाधिकारप्रस्तावाज्जिनपूजाविशेषतो गृहिधर्मो भवतीत्यन्वयः, एवमग्रेऽपि । तथा सत्पात्रे साध्वादि तस्मिन् दानपूर्वं दानं दत्त्वेत्यर्थः, भोजनम्-अभ्यवहरणं तुरेवकारार्थस्ततः सत्पात्रदानपूर्वमेव भोजनमिति निष्कर्षः, अन्ययस्तूक्त एव । अत्र च भोजनमित्यनुवादः मध्याह्निकपूजाभोजनयोश्च न कालनियमः, तीव्रबुभुक्षोर्हि बुभुक्षाकालो-भोजनकाल इति रूढेः, मध्याह्नादर्वागपि गृहीतं प्रत्याख्यानं तीरयित्वा देवपूजापूर्वकं भोजनं कुर्वन्न दुष्यति । अत्र चायं विधिः-भोजनवेलायां साधूनिमन्त्र्य तैः सह गृहमायाति स्वयमागच्छतो वा मुनीन् दृष्ट्वा समुत्थं गमनादिकं करोति, साधूना हि प्रतिपत्तिपूर्वकं प्रतिलम्भनं न्याय्यं श्रावकाणां, सा चेयं योगशास्त्रे—" अभ्युत्थानं तदा लोके, ऽभियानं च तदागमे । शिरस्यञ्जलिसंश्लेषः, स्वयमासनढौकनम् ॥ १ ॥ आसनाभिग्रहो भक्त्या, वन्दना पर्युपासनम् । तद्यानेऽनुगमश्चेति, प्रतिपत्तिरियं गुरोः ॥ २ ॥" दिनकृत्येऽपि—"आसन्नेसु निमंतेत्ता, तओ पडिअण्णसंजुओ । वंदए मुणिणो ताहे, सेनाइगुणसंजुए ॥१॥" एवं प्रतिपत्तिं विधाय सविनयं संविग्नासंविग्नभावितक्षेत्रं १ सुभिक्षदुर्भिक्षादिकालं २ सुलभदुर्लभादिद्रव्यं च द्रव्यं ३ विचार्य आचार्योपाध्यायगीतार्थतपस्विबालवृद्धग्लानसहाऽसहादिपुरुषापेक्षया च स्पर्द्धामहत्त्वमत्सरस्नेहलज्जाभयदाक्षिण्यपरानुवर्त्तना प्रत्युपकारेच्छामायाविलम्बानादरविप्रियोक्तिपश्चात्तापदीनाननादिदोषवर्जमेकान्तात्मानुग्रहबुद्ध्या द्विचत्वारिंशद्भिक्षादोषाद्यदूषितं निःशेषनिजाशनपानवस्त्रादिभोजनाद्यनुक्रमेण स्वयं दानं दत्ते दापयति वा पार्श्वे स्थित्वा भार्यादिपार्श्वाद्, यतो दिनकृत्ये—"देसं खित्तं तु जाणित्ता, अवत्थं पुरिसं तहा । विज्जो व्व रोगिअस्सेव, तओ किरिअं पउंजए ॥ १ ॥" देशं मगधावन्त्यादि साधुविहारयोग्यायोग्यरूपं १ क्षेत्रं सविग्नैर्भावितमभावितं वा, तुशब्दात्-द्रव्यमिदं सुलभं दुर्लभं वा, अवस्था सुभिक्षदुर्भिक्षादिका पुरुषमाचार्योपाध्यायबालवृद्धग्लानसहाऽसहादिकं च ज्ञात्वा 'विज्जु व्व रोगिअस्स' त्ति—यथा किल भिषग् देशकालादि विचार्य व्याधिमतश्चिकित्सां करोत्येवं श्रावकोऽपि ततः क्रियामाहारादिदानरूपां प्रयुङ्क्ते इति तद्वृत्तिः । तत्र च साधूना यथोग्यं तत्सर्वं विहारयितुं प्रत्यहं नामग्राहं कथयति, अन्यथा प्राक् कृतनिमन्त्रणस्य वैफल्यापत्तेः, नामग्राहं कथने तु यदि साधवो न विहरन्ति, तथापि कथयितुं पुण्यं स्यादेव, अकथने तु विलोक्यमानमपि साधवो न विहरन्तीति हानिः । एवं गुरून्प्रतिलम्भ्य वन्दित्वा च गृहद्वारादि यावदनुव्रज्य च निवर्तते । साध्वभावे त्वनभ्रवृष्टिवत्साध्वागमनं जातु स्यात् तदा कृतार्थः स्यामिति दिगालोकं कुर्यात्, तथा चाहुः—
जं साहूण न दिन्नं, कहिं पि तं सावया न भुंजंति ।

पत्ते भोश्रणसमए, वारस्सालोश्रणं कुज्जा ॥ १ ॥" ( ध० १ ) " भोजनानन्तरं वाम--कटिस्थो घटिकाद्वयम् । शयीत निद्राया हीनम्--यद्वा पदशत , व्रजेत् ॥ १२ ॥ " अथो- त्तरार्द्धव्याख्या--' संवरणे ' त्यादि भोजनानन्तर सवरण- प्रत्याख्यान दिवसचरमं ग्रन्थिसहितादि वा, तस्य कृति क- रणं, सति सभवे देवगुरुवन्दनपूर्वमित्यनुक्तमप्यवसेयं, यतो दिनकृत्ये--" देवं गुरु च वन्दित्ता, काउ सवरणं तदा " इति । तथा तत--प्रत्याख्यानकरणानन्तरं,शास्त्रार्थाना-शा- स्त्रप्रतिपादितभावानां चिन्तन--स्मरणं विचारणं वा इद- मित्थं भवति नवेति संप्रधारणमिति यावत्, कथ? सार्द्धं-सह कै. तज्ज्ञै. , तं शास्त्रार्थं जानन्तीति तज्ज्ञास्तैर्गीतार्थयतिभि. प्रवचनकुशलश्राद्धपुत्रैर्वेत्यर्थ ' गुरुमुखाच्छ्रुतान्यपि शा- स्त्रार्थरहस्यानि परिशीलनाविकलानि न चेतसि सुदृढप्र- तिष्ठानि भवन्तीति कृत्वा ।

संप्रति सध्याविषयं यत्कर्तव्यं तदाह--

**सायं पुनर्जिनाभ्यर्चा, प्रतिक्रमणकारिता ।**
**गुरोर्विश्रामणा चैव, स्वाध्यायकरणं तथा ॥ ६६ ॥**

सायं--संध्यासमयेऽन्तर्मुहूर्तादर्वाक् पुनस्तृतीयवार-- मित्यर्थ. , जिनाभ्यर्चा--देवपूजनं विशेषतो गृहिधर्म इति संटङ्क । एवमग्रेऽपि । अत्र चायं विशेष.-- उत्सर्गत श्रावकेणैकवारभोजिनैव भाव्यम् , यदभाणि दिनकृत्ये--"उस्सग्गेणं तु सड्ढो उ , सचित्ताहारवज्जश्रो । इक्कासणगभोई श्र,बभयारि तहव य ॥१॥ " यश्चैकभक्तं कर्तुं न शक्नोति स दिवसस्याष्टमे भागेऽन्तर्मुहूर्तद्वयलक्षणे यामिनी- मुखादौ तु रजनीभोजनमहादोषप्रसङ्गादन्तर्मुहूर्तादर्वागेव वैकालिकं करोति , यतो दिनकृत्य एव--' श्रह न सक्केइ काउ जो , एगभत्तं जश्रो गिही । दिवसस्स ऽट्ठमे भागे , तश्रो भुंजे सुसावश्रो॥१॥" वैकालिकानन्तर च यथाशक्ति दि- वसचरमं सूर्योद्गमान्तं मुख्यवृत्त्या दिवसे सति द्वितीयपदे रात्रवपि करोति, कृत्वा च सध्यायाम् अर्द्धबिम्बदर्शनादर्वा- ग् पुनरपि यथाविधि जिनं पूजयति । सा च दीपधूपरूपा- वसेयेति भाव , तथा प्रतिक्रमणस्य सामायिकम् १ , चतुर्वि- शतिस्तवो २, वन्दनकम् ३ , प्रतिक्रमणम् ४, कार्योत्सर्ग ५ , प्रत्याख्यानं ६ चेति षड्विधावश्यकक्रियालक्षणस्य कारिता- करणम् , विशेषतो गृहिधर्म इति सबन्ध । अयं भाव --सं- ध्यायां जिनपूजनानन्तरं श्रावक साधुपार्श्वे पौषधशालादौ वा गत्वा प्रतिक्रमणं करोति । प्रतिक्रमणशब्दश्चाव- श्यकविशेषवाच्यपि । अत्र सामान्येन सामायिकादि ष- ड्विधावश्यकक्रियायां रूढ , अध्ययनविशेषवाचिनोऽपि प्र- तिक्रमणशब्दस्य नोआगमतो भावनिक्षेपमपेक्ष्य षडावश्यक- रूपज्ञानक्रियासमुदायप्रवृत्तेरविरोधात् । क्रियारूप एकदेशे आगमस्याऽभावान्नो आगमत्व.नोशब्दस्य देशनिषेधार्थत्वा- त् , उक्तं च-' किरिश्रागमो ण होइ,तस्स णिसेधम्मि नो त्ति सद्दो त्ति"। तत्र सामायिकमार्त्तरौद्रध्यानपरिहारेण धर्मध्या- नकरणेन शत्रुमित्रकाञ्चनादिषु समता , तच्च पूर्वमुक्त चतु- र्विंशतिस्तव चतुर्विंशतस्तीर्थकराणां नामोत्कीर्तनपूर्वकं गुणकीर्तन , तस्य च कार्योत्सर्गे मनसाऽनुध्यान शेषकाल व्यक्तवर्णपाठ , अयमपि पूर्वमुक्त । वन्दन वन्दनायोग्याना

धर्माचार्याणां पञ्चविंशत्यावश्यकविशुद्धं द्वात्रिंशद्दोषरहितं नमस्करणं तदप्युक्तमेव । ध० २ अधि० । ( रात्रिकर्त्तव्यं ' सयण ' शब्देऽस्मिन्नेव भागे उक्तम् । )

अथ निद्रान्ते किं कर्त्तव्यमित्याह--

**निद्राच्छयेऽङ्गनाऽङ्गाना-मशौचादेर्विचिन्तनम् ।**
**इत्याहोरात्रिकी चर्या, श्रावकाणामुदीरिता ॥ ६८ ॥**

तत परिणतायां रात्रौ निद्राया च्छये--नाशे सत्यनादिभ- वाभ्यासरसोल्लसद्दुर्जयकामरागजयार्थम् अङ्गना स्त्रियस्ता- सामङ्गनाना--शरीराणां यदशौचम्-अपावित्र्य तस्य विचि- न्तनं--विशेषेण विचारणम् , आदिशब्दात्--जम्बूस्वामी- स्थूलभद्रादिमहर्षिसुश्राद्धादिदुष्पालनशीलपालनपवित्रत्र-- रित्रकषायजयोपायभवस्थित्यत्यन्तदु स्थताधर्ममनोरथानां ग्र- हणम् , एषामपि चिन्तनमित्यर्थ , तद्विशेषतो गृहिधर्मो भवतीत्यन्वय । ध० २ अधि० ।

**अगारिसामाइयङ्गाइ, सड्ढी काएण फासए ।**
**पोसहं दुहश्रो पक्खं, एगराई न हावए ॥ २३ ॥**

अगारी--गृहस्थ सामायिकाङ्गानि सामायिकस्य अङ्गानि सामायिकाङ्गानि नि शङ्कितानि काङ्क्षितनिर्विचिकित्सिता- मूढदृष्टिप्रमुखाणि कायेन स्पृशति, कीदृश सन् श्रद्धी-श्रद्धा- वान् सन् पुनर्गृहस्थ उभयो.-शुक्लकृष्णपक्षयो पौषध सेवते चतुर्दशीपूर्णिमास्यादिषु पौषधम्-आहारपौषधादिकं कुर्या- त् एकरात्रिमपि--एकदिनमपि न हापयेत्--न हानिं कुर्या- दित्यर्थ । रात्रिग्रहण दिवाव्याकुलताया रात्रौ अपि पौषध कुर्यात् । चेत् एव न स्यात् तदा चतुर्दशी अष्टमी उद्दिष्टा म- हाकल्याणकपूर्णिमा चतुर्मासकत्रयस्य दिवसे पौषधं कुर्यात्। सामायिकाङ्गत्वेनैव सिद्धे भेदेनोपादानमादरख्यापनार्थम् । उत्त० ५ अ० ।

सावगधम्म-श्रावकधर्म-पुं० । श्रावकाणामुक्तशब्दार्थानां दुर्ग- तिगर्तनिपतज्जन्तुधरणप्रवणपरिणामस्तत्पूर्वकमनुष्ठानं श्राव- कधर्म । पञ्चा० १ विव० । आव० । सम्यक्त्वमूलेऽणुव्रतशि- क्षाव्रतगुणव्रतरूपे गृहिधर्मे अणुव्रताद्युपासकप्रतिमागतक्रि- यासाध्ये, ल० । ध० । श्र० । पञ्चा० ।

साम्प्रत द्वादशविधं श्रावकधर्ममुपन्यस्यन्नाह--

**पञ्चेवऽणुव्वयाइं, गुणव्वयाइं च हुंति तिन्नेव ।**
**सिक्खावयाइँ चउरो, सावगधम्मो दुवालसहा ॥ ६ ॥**

पञ्चेति सङ्ख्या । एवकारोऽवधारणे । पञ्चैव न चत्वारि ष- ड्वा । अणूनि च तानि व्रतानि चाणुव्रतानि महाव्रतापेक्षया- चाणुत्वमिति ; स्थूरप्राणातिपातादिविनिवृत्तिरूपाणीत्यर्थ । गुणव्रतानि च भवन्ति त्रीण्येव न न्यूनाधिकानि वा । अणुव्र- तानामेवोत्तरगुणभूतानि व्रतानि गुणव्रतानि दिग्व्रतभोगो- पभोगपरिमाणकरणानर्थदण्डविरतिलक्षणानि, एतानि च भवन्ति त्रीण्येव । शिक्षापदानि च शिक्षाव्रतानि वा , तत्र शिक्षा-अभ्यास स च चारित्रनिबन्धनविशिष्टक्रियाकलाप- विषयस्तस्य पदानि--स्थानानि तद्विषयाणि वा व्रतानि शिक्षाव्रतानि । एतानि च चत्वारि सामायिकदेशावका-- शिकपौषधोपवासातिथिसंविभागाख्यानि । एव श्रावकधर्मो द्वादशधा--द्वादशप्रकार इति गाथासमासार्थ ।

अवयवार्थं तु महता प्रपञ्चेन ग्रन्थकार एव वक्ष्यति।

तथा चाह—

एयस्स मूलवत्थू, सम्मत्तं तं च गंठिभेयम्मि।
खयउवसमाइ तिविहं,सुहाय परिणामरूवं तु ॥ ७॥

एतस्यानन्तरोपन्यस्तस्य श्रावकधर्मस्य मूलवस्तु सम्यक्त्वम्। वसन्त्यस्मिन्नणुव्रतादयो गुणास्तद्भावभावित्वेनेति वस्तु। मूलभूतं च तद्वस्तु च मूलवस्तु किं तत्सम्यक्त्वम्। श्रा०। श्राव०। (एतानि व्रतानि स्वस्वस्थाने।) 'इत्थ पुण समणोवासगधम्मे पंच अणुव्वयाइं तिन्नि गुणव्वयाइं श्रावकहियाइं चत्तारि सिक्खावयाइं इत्तरियाइं, श्राव० ६ अ०। आ०चू०। ध० र०। ननु धर्मो द्विधा-श्रावकधर्मो, यतिधर्मश्च। तत्राद्योऽविरतविरतश्रावकधर्मभेदात् द्विधा। तत्राविरतश्रावकधर्मस्यान्यत्र 'तत्थऽहिगारी अत्थी, समत्थओ जो न सुत्तपडिकुट्ठो। अत्थी उ जो विणीओ, समुट्ठिओ पुच्छमाणो य' ॥ १॥ इत्यादिनाऽधिकारी निरूपित,विरतश्रावकधर्मस्य तु "संपत्तदंसणाई, पइदियहं जइजणा सुणेई य। सामायारिं परमं, जो खलु तं सावयं बिंति" ॥२॥तथा-परलोगहियं सम्मं, जो जिणवयणं सुणेइ उवउत्तो। अइतिव्वकम्मविगमा, उक्कोसो सावगो इत्थं ॥३॥" इत्यादिभिरसाधारणैः श्रावकशब्दप्रवृत्तिहेतुभिः सूत्रैरधिकारित्वमुक्तम्। यतिधर्माधिकारिणोऽप्यन्यत्रैवमुक्ता, तद्यथा—

पव्वज्जाए अरिहा. आयरियदेसंमि जे समुप्पन्ना।
जाइकुलेहिँ विसिट्ठा, तह खीणप्पाय कम्ममला ॥ १॥
तत्तो य विमलबुद्धी, दुलहं मणुयत्तणं भवसमुद्दे।
जम्मो मरणनिमित्तं, चवलाओ संपयाओ य ॥ २॥
विसया य दुक्खहेऊ, संजोगे नियमओ विओगु त्ति
पइसमयमेव मरणं, इत्थ विवागो य अइरुद्दो ॥ ३॥
एवं पयईए च्चिय अवगयसंसारनिग्गुणसहावा।
तत्तो य तव्विरत्ता, पयणुकसायप्पहासा य ॥ ४॥
सुकयन्नुया विणीया, रायाईणमविरुद्धकारी य।
कल्लाणंगा सड्ढा, थिरा तहा समुवसंपन्ना ॥ ५॥"

इत्यादि। तदेभिरकविशत्या गुणैः कतमस्य धर्मस्याधिकारित्वमुक्तमिति?, अत्रोच्यते—एतानि सर्वाण्यपि शास्त्रान्तरीयाणि लक्षणानि प्रायेण तत्तद्गुणस्याङ्गभूतानि वर्त्तन्ते, चित्रस्य वर्णकशुद्धिविचित्रवर्णता—संरक्षाशुद्धिनानाभावप्रतीतिवत्, प्रकृतगुणाः पुनः सर्वधर्माणां साधारणा भूमिकेव चित्रप्रकाराणामिति सूक्ष्मबुद्ध्या परिभावनीयम्। वक्ष्यति च-'दुविहं पि धम्मरयणं, तरइ नरो घित्तुमविगलं सोउं। जस्सेगवीसगुणरय—ण संपया सुट्ठिया अत्थि ॥ १॥" (त्ति)।

अत एवाह—

सइ एयम्मि गुणोहे, संजायइ भावसावगत्तं पि।
तस्स पुण लक्खणाइं, एयाइँ भणंति सुहगुरुणो ॥३२॥

सति विद्यमाने एतस्मिन्ननन्तरोक्ते गुणौघे संजायते-सम्भवति भावश्रावकत्वमपि—दूरे तावद् भावयतित्वमित्यपेरर्थः। आह—किमन्यदपि श्रावकत्वमस्ति, येनैवमुच्यते भावश्रावकत्वमिति?, सत्यम्—इह जिनागमे सर्वेऽपि भावाश्चतुर्विधा एव, "नामस्थापनाद्रव्यभावैस्तन्न्यासः" इति वचनात्,तथाहि—नामश्रावक, सचेतनाचेतनस्य पदार्थस्य यत् श्रावक इति नाम क्रियते।स्थापनाश्रावकश्चित्रपुस्त(का)-कर्मादिगतः। द्रव्यश्रावको ज्ञशरीरभव्यशरीरव्यतिरिक्तो देवगुरुतत्त्वादिश्रद्धानविकलस्तथाविधाऽऽजीविकाहेतोः श्रावकाकारधारकश्च। भावश्रावकस्तु—" श्रद्धालुतां श्राति शृणोति शासनं, दीनं वपेदाशु वृणोति दर्शनम्। कृन्तत्यपुण्यानि करोति संयमं, तं श्रावकं प्राहुरमी विचक्षणाः ॥ १॥" इत्यादिश्रावकशब्दार्थधारी यथाविधि श्रावकोचितव्यापारपरायणो वक्ष्यमाण—स चेहाधिकृत—शेषत्रयस्य स्यात्कथंचिदेव भावादिति। ननु—आगमेऽन्यथा श्रावकभेदाः श्रूयन्ते-यदुक्तं श्रीस्थानाङ्गे—"चउव्विहा समणोवासगा पन्नत्ता, तं जहा—अम्मापिइसमाणे, भायसमाणे, मित्तसमाणे, सवत्तिसमाणे। अहवा-चउव्विहा समणोवासगा पन्नत्ता, तं जहा-आयंससमाणे. पडागसमाणे, खाणुसमाणे, खरंटसमाणे" एते च साधूनाश्रित्य द्रष्टव्याः। ते चामीषां चतुर्णां मध्ये कस्मिन्नवतरन्तीति?, उच्यते-व्यवहारनयमतेन भावश्रावका एवैते तथा व्यवह्रियमाणत्वात्, निश्चयनयमतेन पुनः सपत्निखरण्टसमानौ मिथ्यादृष्टिप्रायौ द्रव्यश्रावकौ,शेषास्तु भावश्रावकाः। तथाहि-तेषां स्वरूपमेवमागमे व्याख्यायते—

"चिंतइ जइ कज्जाइं, न दिट्ठखलिओ वि होइ निन्नेहो।
एगंतवच्छलो जइ-जणस्स जणणीसमो सड्ढो ॥ १॥
हियए ससिणेहो च्चिय, मुणीण मंदायरो विणयकम्मे।
भाइसमो साहूणं, पराभवे होइ सुसहाओ ॥ २॥
मित्तसमाणो माणा, ईसिं रूसइ अपुच्छिओ कज्जे।
मन्नंतो अप्पाणं, मुणीण सयणाउ अब्भहियं ॥ ३॥
थद्धो छिद्दप्पेही, पमायखलियाणि निच्चमुच्चरइ।
सड्ढो सवत्तिकप्पो, साहुजणं तणसमं गणइ ॥ ४॥"

तथा द्वितीयचतुष्के—

गुरुभणिओ सुत्तत्थो, बिंबिज्जइ अवितहो मणे जस्स।
सो आयंससमाणो सुसावओ वन्निओ समए ॥ १॥
पवणेण पडागा इव, भामिज्जइ जो जणेण मूढेण।
अविणिच्छियगुरुवयणो, सो होइ पडाइयातुल्लो ॥ २॥
पडिवन्नमसग्गाहं, न मुयइ गीयत्थसमणुसिट्ठो वि।
थाणुसमाणो एसो, अपओसियमुणिजणे नवरं ॥ ३॥
उम्मग्गदेसओ निन्हवो सि मूढो सि मंदधम्मो सि।
इइ सम्म पि कहंतं, खरंटए सो खरंटसमो ॥ ४॥
जह सिढिलमसुइदव्वं, छुप्पंतं पि हु नरं खरंटेइ।
एवमणुसासगं पि हु, दूसंतो भन्नइ खरंटो ॥ ५॥
निच्छयओ मिच्छत्ती, खरंटतुल्लो सवत्तितुल्लो वि।
ववहारओ उ सड्ढा, वयंति जं जिणगिहाईसु ॥ ६॥"

इत्यलमतिप्रसङ्गेन तस्य पुनर्भावश्रावकस्य लक्षणानि चिह्नान्येतानि वक्ष्यमाणानि भणन्ति—अभिदधति—शुभगुरवः संविग्नसूरय इति। ध० र० १ अधि०। ध०। ('णालंदइज्ज' शब्दे चतुर्थभागे २०१३ पृष्ठे श्रावकगतविधिरुक्तः।) जिनवल्लभसूरिकृतप्रकृतालापकरूपदीपालिकाकल्पे लिखितमस्ति 'पडिमारूवो सावगधम्मो वुच्छिज्जिस्सइ' इति, तेन तत्रत्यपुस्तकेष्वयं पाठोऽस्ति न वा? इति प्रश्न,अत्रोत्तरम्-जिनवल्लभसूरिकृत आलापकरूपो दी-

पालिकाकल्पो दृष्टो नास्ति, जिनप्रभसूरिकृतस्त्वत्रालापकरूप एव वर्तते, तत्र च 'पडिमारूवो सावगधम्मो वुच्छिज्जिस्सइ' इत्यक्षराणि सन्तीति ॥ ४६ ॥ सेन० १ उल्ला०। "एत्थ सामाचारी-सावगेण पोसधं पारेंतेण णियमा साधूणमदातु ण पारेयव्व, अन्नदा पुण अनियमो—दातुं वा पारेति पारितो वा देइ त्ति, तम्हा पुव्वं साधूण दातु पच्छा पारेतव्वं कधं ?, जाधे देसकालो ताधे अप्पणो सरीरस्स विभूस काउं साधुपडिस्सयं गंतुं णिमंतेति, भिक्खं गेण्हध त्ति साधूण का पडिव त्ति ?, ताधे अण्णो पडलं अण्णो मुहणंतयं अण्णो भाणं पडिलेहेति, मा अंतराइयदोसा ठवितगदोसा य भविस्संति,सो जति पढमाए पोरुसीए णिमंतेति अत्थि णमोक्कारसहिताइतो तो गेज्झति,अधव णत्थि ण गेज्झति, तं वहितव्वयं होति । जति घणं लग्गज्जा ताधे गेज्झति संचिक्खाविज्जति । जो वा उग्घाडाए पोरिसीए पारेति पारणइत्तो अण्णो वा तस्स दिज्जति, पच्छा तेण सावगेण समगं गम्मति, संघाडगो वच्चति, एगो ण वट्टति पेसितु, साधू पुरओ सावगो मग्गतो, घरं णेऊण आसणेण उवणिमंतिज्जति । जति णिविट्ठगा तो लट्ठयं; अध ण णिवसंति तधावि विणयो पउत्तो, ताधे भत्तं पाणं सयं चेव देति । अथवा भाणं धरेति भज्जा देति, अधवा ठितीओ अच्छति जाव-दिण्णं, साधू वि सावसेसं दव्वं गेण्हति, पच्छाकम्मपरिहारणट्ठा, दातूण वंदित्तु विसज्जेति, विसज्जेत्ता अणुगच्छति, पच्छा सयं भुंजति । ज च किर साधूण ण दिण्णं त सावगेण ण भोत्तव्व, जति पुण साधू णत्थि ताधे देसकालवेलाए दिसालोगो कातव्वो, विसुद्धभावेण चिंतियव्वं—जति साधुणो होता तो णित्थारितो होतो त्ति विभासा"। इदमपि च शिक्षापदव्रतमतिचाररहितमनुपालनीयमिति, अत आह—अतिथिसंविभागस्य—प्राग्निरूपितशब्दार्थस्य श्रमणोपासकेनामी पञ्चातिचारा ज्ञातव्या न समाचरितव्या, तद्यथा—सचित्तनिक्षेपणं—सचित्तेषु व्रीह्यादिषु निक्षेपणमन्नादेरदानबुद्ध्या मातृस्थानेन, एवं सचित्तपिधानं—सचित्तेन फलादिना पिधानं स्थगनमिति समासः, भावना प्राग्वत्. 'कालातिक्रम' इति कालस्यातिक्रमः कालातिक्रमः इति उचितो यो भिक्षाकालः साधूनां तमतिक्रम्यानागतं वा भुङ्क्तेऽतिक्रान्ते वा, तदा च किं तेन लब्धेनापि कालातिक्रान्तत्वात् तस्य, उक्तं च—"काले दिण्णस्स पधे-यणस्स अग्घो ण तीरते काउं । तस्सेव अकालपणा-मियस्स गेण्हतया णत्थि ॥ १ ॥" 'परव्यपदेश इति आत्मव्यतिरिक्तो योऽन्यः स परस्तस्य व्यपदेश इति समासः, साधोः पोषधोपवासपारणकाले भिक्षार्थं समुपस्थितस्य प्रकटमन्नादि पश्यन् श्रावकोऽभिधत्ते—परकीयमिदमिति, नास्माकीनमतो न ददामि, किञ्चिद्याचितो वाऽभिधत्ते—विद्यमान एवामुकस्येदमस्ति तत्र गत्वा मार्गयत यूयमिति । 'मात्सर्यम्' इति याचितः कुप्यति सदपि न ददाति, 'परोन्नतिवैमनस्यं च मात्सर्य' मिति, एतेन तावद् द्रमकेण याचितेन दत्तं किमहं ततोऽप्यून इति मात्सर्याद् ददाति, कषायकलुषितेनैव चित्तेन ददतो मात्सर्यमिति व्याख्यातं सातिचारं चतुर्थं शिक्षापदव्रतम् । आव० ६ अ० ।

सावगधम्मपण्णत्ति-श्रावकधर्मप्रज्ञप्ति-स्त्री० । सम्यक्त्वमूलस्य द्वादशविधस्य श्रावकधर्मस्य प्रतिपादके हरिभद्रसूरिविरचिते ग्रन्थभेदे, आ० ।

सावगपाढण-श्रावकपाठन-न० । श्रावकेभ्य सूत्रप्रदाने,जी० १ प्रति० । ( श्रावकमिश्रान्तगाथापाठनविचार: 'पाढयत' शब्दे पञ्चमभागे ८२४ पृष्ठे गत । )

सावगभज्जा-श्रावकभार्या-स्त्री० । श्रावकपत्न्याम् , अनु० । (अस्या 'अणुयोग' शब्दे प्रथमभागे २८७ पृष्ठे कथा गता । )

सावगवय-श्रावकव्रत-न० । सम्यक्त्वाणुव्रतादिप्रतिपत्तौ, ध० २ अधि० । महा० ।

सावगाभास-श्रावकाभास-पुं० । सम्यक्त्वाणुव्रतादिश्रद्धाधर्मरहिते नमस्कारगुणनजिनार्चनवन्दनाभिग्रहप्रतिग्राहके श्रावके, ध० २ अधि० ।

सावज्ज-सावद्य-न० । अवद्यं—पापं सहावद्येन वर्तत इति सावद्यम् । सपापे,विशे० । स्था० । दश० । प्रश्न० । सहावद्येन दोषेण वर्त्तत इति सावद्यम् । उत्त० ६ अ०। सहावद्येन गर्हितकर्मणा-हिंसादिना वर्त्तत इति सावद्यम् । हिंसादिदोषयुक्ते, औ० । आचा० । आव० । उत्त० । आ० चू० । निशि० ।

अथ षष्ठं सावद्यपदं व्याचिख्यासुर्गाथोत्तरार्धमाह—

गरहियमवज्जमुत्तं, पावं सह तेण सावज्जं ॥३४६६॥

गर्हितमित्यादि , गर्हितं—निन्द्य वस्त्ववद्यमुक्तं तच्चेह पापम् , सह तेनावद्येन वर्तते इति सावद्यस्तं सावद्यं योगं प्रत्याख्यामीति वक्ष्यमाणं गम्यत इति ।

अथवा—अन्यथा सावद्यशब्दो व्युत्पाद्यत इत्याह—

अहवेह वज्जणिज्जं, वज्जं पावं ति सहसकारस्स ।
दिग्घत्ता देसाओ, सह वज्जेणं ति सावज्ज ॥ ३४६७ ॥

अथवेह वर्जनीयं वर्ज्यत इति वर्ज पापमुच्यते, सह वर्जेन वर्त्तत इति सहस्य सभावात्सवर्ज्ज,सकारस्य च प्राकृतत्वेन दीर्घत्वविधानात्सावर्जमित्युक्तम् । विशे० । हिंसाचौर्यादिगर्हितकर्मालम्बने, स्था० ७ ठा० ३ उ० । भ० । ग० । प्रश्न० । ध० । गर्हितकर्मयुक्ते, प्रश्न० २ आश्र० द्वार । आव० । प्रति० । गर्ह्ये,सूत्र० १ श्रु० १ अ० २ उ० । अवद्यं मिथ्यात्वलक्षणकषायलक्षणं सह अवद्य यस्य येन वा स सावद्य: । त्रि० । अवद्येन सह वर्त्तमाने, आ० म० १ अ० । आ० चू० । सावद्या नाम—कर्मबन्धा अवज्ज सह तेण जो सो सावज्जो । जोगो त्ति वा वावारो त्ति वा वीरिय ति वा सामत्थ ति वा एगट्ठा । आ० चू० १ अ० । सावज्जमणुचिट्ठ ति वा पावकम्मासेवित ति वा वितहमाइन्न ति वा एगट्ठा । आ० चू० १ अ० । सावज्जमणायरण अणाइट्ठाण कुसीलसग्गा एगट्ठा । औ० ।

सावज्जकडा-सावद्यकृता-स्त्री० । सावद्यभाषायाम् , आव० १ अ० ।

सावज्जकिरिया-सावद्यक्रिया-स्त्री० । पञ्चविधश्रमणाद्यर्थं कृतवसतौ, स्थानादिकुर्वतस्तथाविधे उपाश्रये, आचा० ।

सावज्जचागरूव-सावद्यत्यागरूप-त्रि०। निखिलसपापव्यापारपरिहारस्वभावे, पञ्चा० ४ विव०।

सावज्जजोग-सावद्ययोग-पुं०। सकलनित्यकर्मणि, ध० ३ अधि०। आ० म०।

साम्प्रतं सावद्यावयवव्याख्यानार्थमाह—

कम्ममवज्जं जं गर-हियं ति कोहाइणो व चत्तारि।
सह तेहि जो उ जोगो, पच्चक्खाणं भवइ तस्स ॥

कर्म्म-अनुष्ठानमवद्यं भण्यते, किमविशेषेण?, नेत्याह-यत् गर्हितमिति यन्निन्द्यमित्यर्थः। अथवा-क्रोधादयश्चत्वारोऽवद्यं तेषां सर्वावद्यहेतुतया कारणे कार्योपचारात् सह तेनावद्येन यो योगो व्यापारस्तस्य सावद्ययोगस्य प्रत्याख्यानं निषेधलक्षणं भवति। पाठान्तरम्-'कम्मं वज्जं जं गरहियं'ति-तत्र 'वृजी' वर्जने, वृज्यते इति वर्ज्यं वर्जनीयं, त्यजनीयमित्यर्थः, शेषं पूर्ववत्, नवरं सह वर्जेन सवर्जं प्राकृतत्वात् सकारस्य दीर्घत्वे सावर्जमिति भवति। आ० म० १ अ०।

सावज्जजोगपरिवज्जणा-सावद्ययोगपरिवर्जना-स्त्री०। सपापव्यापारपरिहारनिरवद्ययोगासेवायाम्, पञ्चा० १० विव०।

सावज्जबहुल-सावद्यबहुल-त्रि०। पापभूयिष्ठे दश० ६ अ०।

सावज्जा-सावद्या-स्त्री०। श्रमणसाधुनिश्रामेदेन सपापायां वसतौ, आचा०२ श्रु०१ चू० २ अ० २ उ०। ('वसहि' शब्दे षष्ठभागे सूत्रमुक्तम्।)

सावज्जायरिय-सावद्याचार्य-पुं०। कुवलयप्रभाचार्ये, ग०। श्रीमहानिशीथपञ्चमाध्ययनोक्तसावद्याचार्यस्यैव ज्ञेयम्। तथाहि—अस्या ऋषभादिचतुर्विंशतिकायाः प्रागनन्तकालेन याऽतीता चतुर्विंशतिका, तस्यां मत्सदृशः सप्तहस्ततनुर्धर्मश्रीनामा चरमतीर्थङ्करो बभूव। तस्मिंश्च तीर्थकरे सत्याश्चर्याणि अभूवन्। असंयतपूजायां प्रवृत्तायामनेके श्राद्धेभ्यो गृहीतद्रव्येण स्वस्वकारितचैत्यनिवासिनोऽभूवन्। तत्रैको मरकतच्छवि कुवलयप्रभनामाऽनगारो महातपस्वी उग्रविहारी शिष्यगणपरिवृतः समागात्। तैर्वन्दित्वोक्तम्—अत्रैकं वर्षारात्रिकं चातुर्मासिकं तिष्ठ, यथा त्वदीयाज्ञयाऽनेके चैत्यालया भवन्ति, कुर्वस्माकमनुग्रहम्, तेनोक्तं—सावद्यमिदं नाहं वाङ्मात्रेणापि कुर्वे। तदेवमनेन भणता सता तीर्थकृन्नामकर्म्मार्जितम्। एकभवावशेषीकृतश्च भवोदधिः। ततस्तैः सर्वैरेकमतं कृत्वा तस्य सावद्याचार्य इति नाम दत्तं प्रसिद्धिं नीतं च। तथाऽपि तस्य तन्मात्रमपि कोपो नाभूत्। अन्यदा तेषां लिङ्गमात्रप्रव्रजितानां मिथः आगमविचारो बभूव। यथा श्राद्धानामभावे संयता एव मठदेवकुलानि रक्षन्ति पतितानि च समारचयन्ति। अन्यदपि यत्तत्र करणीयं तस्यापि करणे न दोषः। केऽप्याहु:—संयमो मोक्षनेता, केचिद् ऊचुः-प्रासादावतंसके पूजासत्कारबलिविधानादिना तीर्थोन्सर्पणेनैव मोक्षगमनम्। एवं तेषां यथेच्छं प्रलपतां विवादेऽन्य आगमकुशलो नास्ति कोऽपि यो विवादं भनक्ति। सर्वैः सावद्याचार्य एव प्रमाणीकृत आकारितो दूरदेशात्सप्तमासैर्विहरन् समागात्। एकयाऽऽर्यया श्रद्धावशात् प्रदक्षिणीकृत्य झगिति मस्तकेन पादौ संघट्टयन्त्या ववन्दे दृष्टस्तैर्वन्द्यमानः। अन्यदा स तेषामग्रे श्रुतार्थकथनेऽस्यैव महानिशीथस्य पञ्चमाध्ययनव्याख्याने आगतेयं गाथा, "जत्थित्थीकरफासं, अंतरियं कारणे वि उप्पन्ने। अरिहा वि करिज्ज सयं, तं गच्छं मूलगुणमुक्कं ॥१॥" आत्मशङ्कितेन तेन चिन्तितं साध्वीयन्दनमेतैर्दृष्टमस्ति सावद्याचार्य इति नाम पुराऽपि दत्तम्, साम्प्रतं तु यथार्थकथनेऽन्यदपि किमपि करिष्यन्ति, अन्यथा प्ररूपणे तु महत्याशातना अनन्तसंसारिता च स्याताम्, ततः किं कुर्वे। अथवा-यद् भवति तद्भवतु यथार्थमेव व्याकरोमीति ध्यात्वा व्याख्याता यथार्था गाथा। तैः पापैरुक्तं यद्येवं तत् त्वमपि मूलगुणहीनो यतः साध्व्या वन्द्यमानया भवान् स्पृष्टः, ततोऽयशोभीरुः स दध्यौ किमुत्तरं ददे। आचार्यादिना किमपि पापस्थानं न सेवनीयं त्रिविधं त्रिविधेन, य सेवते सोऽनन्तसंसारं भ्राम्यति। तैर्विलक्षं दृष्ट्वोचे किं न वदसि। स दध्यौ किं वदामि। ततस्तेन दीर्घसंसारित्वमङ्गीकृत्योक्तम्-अयोग्यस्य श्रुतार्थो न दातव्यः "आमं घडे निहत्तं, जहा जलं तं घडं विणासेइ। इअ सिद्धंतरहस्सं, अप्पाहारं विणासेइ ॥१॥" इत्यादि तैरुचे—किमसम्बद्धं भाषसे, अपसर दृष्टिपथात्। अहो त्वमपि संघप्रमाणीकृतोऽसि। ततस्तेन दीर्घसंसारित्वमङ्गीकृत्योक्तम्, उत्सर्गापवादैरागम स्थितो यूयं न जानीथ। "एगंतं मिच्छत्तं, जिणाण आणा अणेगंतं।" तैर्हृष्टैर्मानितं ततः स प्रशंसितः। स एकवचनदोषेणानन्तसंसारित्वमुपार्ज्याऽप्रतिक्रान्तो मृत्वा व्यन्तरो बभूव १। ततश्च्युत्वोत्पन्नः प्रोषितपतिकायाः प्रतिवासुदेवपुरोहितदुहितुः कुक्षौ, कुलकलङ्कभीताभ्यां पितृभ्यां निर्विषयीकृता सा क्वापि स्थानमलभमाना दुर्भिक्षे कल्पपालगृहे, दासीत्वेन स्थिता मद्यमासदोहदोऽस्याः सञ्जातः। बहूनां मद्यपायकानां भाजनपुच्छिष्टे मद्यमांसे च भुङ्क्ते, कांस्यदूष्यद्रविणानि चोरयित्वाऽन्यत्र विक्रीय मद्यमांसं भुङ्क्ते गृहस्वामिना राज्ञो निवेदितम्। राज्ञा मारणाय प्रसूतिसमयं यावद्रक्षितुमर्पिता चण्डालानाम्। "अप्रसूता न हन्यते" इति तत्कुलधर्मत्वात्। प्रसूता बालकं त्यक्त्वा नष्टा। राज्ञा पञ्चसहस्रद्रविणदानेन बालः पालितः। क्रमात् सूनाधिपतौ मृते राज्ञा स एव तद्गृहस्वामी कृतः पञ्चशतानामीशः २, ततो मृत्वा सप्तमपृथिव्यां ३३ सागरायु ३, तत उद्वृत्यान्तर्द्वीपे एकोरुकजातिर्जातः, ४, ततो मृत्वा महिषः २६ वर्षायु ५, ततो मनुष्यः ६ ततो वासुदेवः ७, ततः सप्तमपृथिव्यां ८, ततो गजकर्णो मनुष्यो मांसाहारी ९, ततो मृत्वा सप्तमपृथिव्यामप्रतिष्ठाने गतः १०, ततो महिषः ११, ततो बालविधवावन्धकीब्राह्मणसुताकुक्षावुत्पन्नः, गर्भशातनपातनक्षारचूर्णयोगैरनेकव्याधिपरिगतो गलत्कुष्ठी-कृमिभिर्भक्ष्यमाणो गर्भान्निर्गतः लोकैर्निन्द्यमानः क्षुधादिपीडितो दुःखी सप्तवर्षशतानि द्वौ मासौ चत्वारि दिनानि जीवित्वा १२ मृतो व्यन्तरोत्पन्नः १३, ततः सूनाधिपो मनुष्यः १४, ततः सप्तम्यां १५, ततश्चाक्रिकगृहे वृषभो वाहमानः स्कन्धितस्कन्धो मुक्तो गृहस्वामिना का-

कङ्कमिश्रामादिभिर्विलुप्यमान २६ वर्षायुर्मृतो १६, मनुष्याधिमाभिभ्यपुत्रो वमनविरेचनादिदु खैरवास्यगतो मनुष्यभव १७, एवं चतुर्दशरज्ज्वात्मकं लोक जन्ममरणैः परिपूर्य अनन्तकालेनाऽपराविदेहे मनुष्योऽभवत् । तत्र लोकानुवृत्त्या गतस्तीर्थकरवन्दनाय, प्रतिबुद्ध , सिद्ध । अत्र त्रयोविंशतितमश्रीपार्श्वजिनस्य काले गौतमोऽप्राक्षीत्-किंनिमित्तमनेन दु खमनुभूतम् ?, गौतम ! उत्सर्गापवादैरागम इत्यादि यद् भणित तन्निमित्तम् । यद्यपि प्रवचने उत्सर्गापवादौ अनेकान्तश्च प्रज्ञाप्यन्ते, तथापि अप्कायपरिभोगस्तेज कायपरिभोगो मैथुनसेवनं चैकान्तेन निषिद्धानि, इत्थं सूत्रातिक्रमादुन्मार्गप्रकटनं ततश्चाज्ञाभङ्ग , तस्माच्चानन्तसंसारी । गौतमोऽप्राक्षीत्—किं तेन सावद्याचार्येण मैथुनमासेवितम् ?, गौतम ! नो सेवितं नोऽसेवितम् ,यतस्तेन वन्दमानार्यास्पर्शे पादौ नाकुञ्चितौ । भगवन् ! तेन तीर्थकरनामकर्मार्जितम् । एकभवावशेषीकृतश्चासीद्भवोदधि , तत्कथमनन्तससारं सम्भ्रान्त ? गौतम ! निजप्रमाददोषात् , यत सिद्धान्तेऽप्युक्तमस्ति—" चोद्दसपुव्वी आहा-रगा वि मणनाणिवीयरागा य । हुंति पमायपरवसा , तयणंतरमेव चउगइआ ॥ १ ॥" इत्यादि । तस्मात् गच्छाधिपतिना सर्वदा सर्वार्थेषु अप्रमत्तेन भाव्यम् । इति पूर्वाचार्यसंस्कृतसावद्याचार्यसम्बन्ध । ग० १ अधि० ।

जहा ण भयवं ! जइ तुममिहाइ एक्कवासारत्तियं चाउम्मासियं पउंजियंताणमिच्छाए अणेगे चेइयालगे भवन्ति, नूणं । तज्झाणत्तीए ता कीरउ अणुग्गहमम्हाणं इहेव चाउम्मासियं । ताहे भणियं तेण महाणुभागेणं, गोयमा ! जहा भो भो पियं वए जइ वि जिणालए तहा वि सावज्जमिणं णाहं वायामित्तेणं पि (णायं) आयरिज्जा । एवं च समयसारपरं तत्तं जहट्ठियं अविवरीअं णीसंकं भणमाणेण तेसिं मिच्छदिट्ठिलिंगीणं साहुवेसधारीणं मज्झे गोयमा ! आसकलियं तित्थयरनामकम्मगोयं तेणं कुवलयप्पभेणं एगभवावसेसीकओ भवोयही । तत्थ य दिट्ठो अणुलविज्ज नाम संघमेलावगो आसि,तेहिं च बहूहिं पावमईहिं लिंगिणियाहिं परोप्परमेगमयं काऊणं गोयमा ! तालं दाऊण निप्पलोइयं चेव । ते तस्स महाणुभागस्स महतवस्सिणो कुलयप्पहाभिहाणं, कयं च से सावज्जायरियाभिहाणं सद्दकरणं गयं च पसिद्धीए । एवं स य वदिज्जमाणो वि सो तेणाऽपसत्थसद्दकरणेण तहा वि गोयमा ! ईसिं पि ण कुप्पो । अहऽन्नया तेसिं दुरायारीणं सद्धम्मपरम्मुहाणं अगारधम्मोऽणगारधम्मोभयट्ठाणं लिंगमेत्तनामपव्वइयाणं संजाओ परोप्परं आगमवियारो । जहा णं सड्ढगाणं असइ संजया चेव भट्ठदेउले पडिजागरेंति । खंडपडिए य समारयंति । अन्नं च जाव करणिज्जं तं अइममारंभे कज्जमाणे जइस्सऽवि णं नत्थि दोससंभवं एवं च केइ भणंति–संजमं मोक्खनेयारं । अन्ने भणंति जहा णं पासायवडिंसए पूयासक्कारबलिविहाणाइसु णं तित्थत्थापणाए चेव मोक्खगमणं । एवं तेसिमविइयपरमत्थाणं पावकम्माणं जं जं सिद्धंता तं चेव मुद्दा मुक्खलक्खणं मुहेणं पलवंति । ताहे समुट्ठियं वादसंघट्ट तत्थ य कोइ नत्थि आगमकुसलो तेसिं मज्झे । जो तत्थ जुत्तं वियारेइ, जो पमाणमुवइस्सइ । तहा एगे भणंति जहा अमुगो अमुगगच्छम्मि चिट्ठइ अन्ने भणंति–अमुगो, अन्ने भणंति किमित्थ बहुणा पलविएणं सव्वेसिं अम्हाणं सावज्जायरिओ एत्थ पमाणं ति तेहिं भणियं जहा एवं होउ त्ति हकाराविहं लहुं । तओ हकाराविओ गोयमा ! सो तेहिं सावज्जायरिओ आगओ दूरदेसाओ अप्पडिबद्धत्ताए विहरमाणो सत्तहिं मासेहिं । जाव णं दिट्ठो एगाए अज्जाए । सा य तं कट्ठुग्गतवचरणसोसियसरीरं चम्मट्ठिसेसतणुं अच्चंतं तवसिरीए दिप्पंतं सावज्जायरियं पेच्छिय सुविम्हियतकरणा विउक्किउं पवन्ना । अहो किं एस महाणुभागो णं सो अरहा,किं वा णं धम्मो चेव मुत्तिमंतो, किं बहुणा तियसिंदवंदाणं पि वंदणिज्जो पायजुओ एस त्ति चिंतिऊणं भत्तिभरनिब्भरा आयाहिणं पयाहिणं काऊणं उत्तिमंगेणं संघट्टेमाणी झगिति निवडिया चलणेसु । गोयमा ! तस्स णं सावज्जायरियस्स दिट्ठो य सो तेहिं दुरायारेहिं पणमिज्जमाणो । अन्नया णं सो तेसिं तत्थ जहा जगगुरूहिं उवइट्ठं तहा चेव गुरूवएसाणुसारेणं आणुपुव्वीए जहट्ठियं सुत्तत्थं वागरेइ ते वि तहा चेव सद्दहंति अन्नया ताव वागरियं गोयमा ! जाव णं एक्कारसण्हमंगाणं चोद्दसण्हपुव्वाणं दुवालसंगस्स णं सुयनाणस्स नवणीयसारभूयं सयलपावपरिहारऽट्ठकम्मनिम्महणं आगयं इणामेव गच्छमेरापवत्ताणं महानिसीहसुयक्खंधस्स पंचमं अज्झयणं । अत्थेव गोयमा ! ताव णं वक्खाणीयं जाव णं आगया इमा गाहा–" जत्थित्थीकरफरिसं, अंतरियं कारणे वि उप्पन्ने । अरहा वि करेज्ज सयं, तं गच्छं मूलगुणमुक्कं ॥१॥" तओ गोयमा ! अप्पसंकिएणं चेव चिंतियं तेण सावज्जायरिएणं । जइ इह एयं जहट्ठियं पन्नवेमि तओ जं मम वंदणगं दाउमाणीए तीए अज्जाए उत्तिमंगेण चलणंगे पुट्ठे तं सव्वेहिं पि दिट्ठा इमेहिं ति । ता जहा मम सावज्जायरियाभिहाणं कयं तहा अन्नमवि किं चि एत्थ मद्दं किं काहंति । अह अन्नहा सुत्तत्थं पन्नवेमि ता णं महती आसायणा; तो किं करियव्वमेत्थ त्ति, किं एयं गाहं एव उवचयामि, किं वा णं अन्नहा पन्नवेमि । अहवा- हा हा ण–

१–' विज्जपुत्तो ' इति महानिशीथे ।

जुत्तमिदं उभयहा वि अच्चंतगरहियं आयहियट्टीणमेयं जे उणमम ममाभिप्पाओ जहा णं जे भिक्खू दुवालसंगस्स णं सुयनाणस्स असई चुक्कक्खलियपमाया संकादी स-भयत्तेणं पयक्खरमत्ताबिंदुमवि एक्कं पउंविज्जा , अन्न-हा वा पन्नवेज्जा संदिद्धं वा सुत्तत्थं वक्खाणेज्जा अ-विहिए अजोगस्स वा वक्खाणेज्जा, से भिक्खू अणंतसं-सारी भवेज्जा। ता किं एत्थं जं होही तं च भयउ जहट्ठियं चेव गुरूवएसाणुसारेण सुत्तत्थं पवक्खामि त्ति चिंतिऊणं गोयमा ! पवक्खाया णिखिलावयवविसु-द्धा सा तेण गाहा, एयावसरंमि चोइओ गोयमा ! सो तेहिं दुरंतपंतलक्खणेहिं , जहा जइ एवं ता तुमं पि ताव मूलगुणहीणो जाव णं संभरसु तं, जं तद्दिवसं तीए अज्जाए तुज्झ वंदणगं दाउकामाए पाए उत्तमंगेणं पुट्ठे , ताहे इहलोइगाऽपयसहीरू खरम(स)च्छरीहूओ गोयमा ! सो सावज्जायरिओ चिंतिउ जहा से जं मम सावज्जायरि-याऽभिहाणं कयं इमेहिं तहा य किं पि संपइ काहिंति,जेणं तु सव्वलोए अपुज्जो भविस्सं ता किमित्थ परिहारगं दाहा-मि त्ति चिंतमाणेण संभरियं तित्थयरवयणं। जहा णं जे केइ आयरिएइ वा गणहरेइ वा गच्छाहिवई सुयहरे भवेज्जा से णं जं किंचि सव्वन्नूहिं अणंतनाणीहिं पावाय-यणट्ठाणं पडिसेहियं तं सव्वं सुयाणुसारेणं विन्नायं स-व्वहा सव्वपयारेहिं णो समायरेज्जा , णो णं स-मायरिज्जमाणं समणुजाणेज्जा, से कोहेण वा माणेण वा मायाए वा लोभेण वा भएण वा हासेण वा गारवेण वा दप्पेण वा पमाएण वा असती चुक्कखलिएण वा दिया वा राओ वा एगओ वा परिसागओ वा सु-त्ते वा जागरमाणे वा तिविहं तिविहेणं मणेणं वायाए काएणं एतेसिं मे पयाणं जे केइ विराहगे भवेज्जा , से णं भिक्खू भुओ भुओ निंदणिज्जे गरहणिज्जे खिं-सणिज्जे दुगुंछणिज्जे सव्वलोगपरिभूए बहुं वाउवे-यणापरिगयसरीरो उक्कोसट्ठिइए अणंतसंसारसागरं प-रिभमेज्जा। तत्थ णं परिभममाणे खणमेक्कं पि न कहं चि कयाइ निव्वुइं संपावेज्जा। ता पमायगोयरगयस्स णं मे पावाहमहीणसत्तकाउरिसस्स इहइं चेव समुट्ठियाए महंता आवई,जेणं ण सक्को अहमेत्थजुत्तीखमं किं चि प-डिउत्तरं पयाउ,जे तहा परलोगे य अणंतभवपरंपरं भममाणो घोरदारुणाणंतसोयदुक्खस्स भागी भविहामि। हं मंदभा-गो त्ति चिंतयतोऽविलक्खिओ सो सावज्जायरिओ। गो-यमा ! तेहिं दुरायारपावकम्मदुट्ठसोयारेहि जहा णं अलि-यखग्गम(स)च्छरीभूओ एस तओ सं खुद्दमणं खरमच्छरीभूयं कलिऊणं च भणियं तेहिं दुट्ठसोयारेहिं जहा जाव णं तो छिन्नभिन्नसामंसयं ताव णं उड्ढं वक्खाणं अधिती एत्थं तं परिहारगं वायरेज्जा। जं पोढजुत्तीखमं कुग्गहणिग्गहपच्चलं ति तओ तेण चिंतियं। जहा नाहं अदिन्नेणं परिहारगेणं चु-क्किमो एसिं ता किमित्थ-परिहारगं दाहामि त्ति। चिंतयंतो पुणो वि गोयमा ! भणिओ ,सो तेहिं दुरायारेहिं जहा किं-मट्ठं चिंतासागरे णिमज्जिऊणं ठिओ णिव्वमेत्थ किंचि प-रिहारगं वयाहि , णवरं तं परिहारगं भणेज्जा जं जहुत्तत्थ-किरियाए अव्वभिचारि। ताहे सुइरं परितप्पिऊणं हियएणं भणियं सावज्जायरिएणं , जहा एएणं अत्थेणं जगगु-रूहिं वागरियं जं अजोग्गस्स सुत्तत्थं न दायव्वं। जओ- "आमे घडे निहत्तं,जहा जलं तं घडं विणासेइ। इय सिद्धं-तरहस्सं,अप्पाहारं विणासेइ ॥१॥" ताहे पुणो वि तेहिं भ-णियं जहा किमेयाइं अरडवरडाइं असंबद्धाइं दुब्भासियाइं पलवह,जइ परिहारगं दाउं न सक्को ता उप्फिडसु सुआसणं ओसर सिग्घं इमाओ ठाणाओ किं देवस्स रूसेज्जा,जत्थ तुमं पि पमाणीकाऊणं सव्वसंघेण समयसब्भावं वायारेउ जं समाढत्तो तओ पुणो वि सुइरं परितप्पिऊणं गोयमा ! अन्न परिहारगमलभमाणेणं अंगीकाऊण दीहसंसारं भणि-यं च सावज्जायरिएणं। जहा णं उस्सग्गाववाएहिं आगमो ठिओ तुज्झे ण याणह। "एगंतं मिच्छत्तं जिणाणमा-णामणेगंता"। एयं च वयणं गोयमा ! गिम्हाय वसता वि एहिं सिहिउलेहिं वा। अहिणवपाउससजलघणारलिमिव स-बहुमाणं सामाइयत्थितेहिं,दुट्ठसोयरिहिं,तओ एगवयणदो-सेणं गोयमा ! निबंधिऊणाऽणंतसंसारियत्तणं अपडिक्कमि-ऊणं च तस्स पावस्य समुदायमहाखंधमेलावगस्स मरिऊणं उववन्नो वाणमंतरेसु सो सावज्जायरिओ। तओ चुओ समाणो उववन्नो पवसियभत्ताए पडिवासुदेवपुरोहियधू-याए कुच्छिंसि। अहऽन्नया वियाणिओ जणणीए पुरोहि-यभज्जाए। जहा णं हा हा दिन्नं मसीकुच्चयं सव्वनियकुलस्स इमाए दुरायाराए मज्झ धूयाए साहियं च पुरोहियस्स। तओ संतप्पिऊण सुइरं बहुं वहियएणं साहारेउं निव्वि-सया कया सा तेणं पुरोहिएणं ए महंता असज्झदुव्विवा-रअयसभीरुणा। अहऽन्नया थोवकालंतरेणं कहि वि धा-ममलभमाणी सीउण्हवायविज्झडिया दुक्खक्खामकंठा दुब्भिक्खदोसेणं पविट्ठा दासत्ताए रसवाणिज्जगस्स गेहे। तत्थ य बहूणं मज्जपाणगाणं संचियं साहेरइ। अ-णुसमयं वुच्छिट्ठगं ति। अहऽन्नया अणुदिणं सा-

हरमाणीएसु दट्ठूणं च बहुमज्झपाणगे मज्जमापिवमाणा पोग्गलं च समुद्दिसंते तहेव तीए मज्जमंसस्सोवरिं दोहलगं समुप्पन्नं जाव णं जं तं बहुमज्जपाणगं नडनट्टछत्तचारणं भंडोड्डविउ तक्करमरिमजातीसु मुज्झियं खुरसीसपुंछकत्तट्ठियमयगयं उच्छिट्ठं वच्छरमंडं तं समुद्दिसितुं समारद्धा । ताहे तेसु चेव उच्छिट्ठकोडियगेसु जं किंचि वि णाहीए मज्झ विवक्कंइ तमेव सोइउमारद्धा । एवं च कइवयदिणाइक्कमेणं मज्जमंसस्सोवरिं दढं गेही संजाया । ताहे तस्सेव रमवाणिज्जगस्स गेहाओ परिमुसिऊणं किंचि वि कंसदूसदविणजायं अन्नत्थ विकिणिऊणं मज्जं मंसं परिभुंजइ । तं च णं विन्नायं तेण रमवाणिज्जगेण. साहियं च नवरइणो, तेणावि वज्झा समाइट्ठा । तत्थ य राउले एसो गोयमा ! कुलधम्मो– "जहा णं जा काइ आवन्नसत्ता नारी अवराहदोसेण सा जाव णं नो पसूया. ताव णं नो वावाएयव्वा" । तेहि वि णिउत्तगणिगिंतगेहिं सगेहे नेऊण पसूइसमयं जाव णियंतिए रक्खेयव्वा । अहऽन्नया णीया तेहिं हरिए सजाइहिं सगेहिं कालक्कमेण पसूया य दारगं तं सावज्जायरियजीवं । तओ पसूयमेत्ता चेव तं बालयं उज्झिऊण पणट्ठा मरणभयद्दिया सा गोयमा ! दिसिमेक्कं गंतूणं वियाणियं च तेहिं पावेहिं, जहा पणट्ठा सा पावकम्मा साहियं च नरवइणो सूणाहिवइणा । जहा णं देव ! पणट्ठा सा दुरायारा कयलीगब्भोवमं दारगं उज्झिऊणं । रन्ना वि पडिभणियं । जहा ण जइ नाम सा गया ता गच्छउ तं बालगं पडिवालेज्जासु सव्वहा तहा कायव्वं जहा तं बालगं ण वावज्जे, गिण्हेसु इमे पंचसहस्सा दविणजाइ । तओ नरवइणो संदेसेणं सुयमिव परिवालिओ सो पांसुलीतणओ । अन्नया कालक्कमेणं मओ सो पावकम्मो सुणाहिवई । तओ रन्ना समणुजाणिउं तस्सेव बालगस्स घरसारकरो पंचण्हं सयाणं अहिवई । तत्थ य सूणाहिवइपइट्ठिओ समाणो ताइं तारिसाइं अकरणिज्जाइं समणुट्ठित्ताणं तओ सो गोयमा ! सत्तमाए पुढवीए अपइट्ठाणनामे निरयावासे सावज्जायरियजीवो । एवं तं तत्थ तारिसं घोरपचंडरोद्दं सुदारुणं दोक्खं तित्तीसं ३३ सागरोवमं जाव कहवि लेसेणं समणुभविऊणं इहागओ समाणो उववन्नो अंतरदीवे एगोरुयजाई । तओ वि मरिऊण उववन्नो तिरियजोणीए महिसत्ताए, तत्थ य जाइं काइं वि णारगदुक्खाइं तेसिं तु सरिसनामाई अणुभविऊणं छव्वीसं संवच्छराणि तओ गोयमा ! मओ समाणो उववन्नो मणुएसु । तओ वासुदेवत्ताए सो सावज्जायरियजीवो । तत्थ वि अहाउयं परिवालिऊणं अणेगसंगामारंभपरिग्गहदोसेणं मरिऊण गओ सत्तमाए । तओ वि उव्वट्टिऊणं सुइरकालाओ उववओ गयकन्नो नाम मणुयजाई । तओ वि उव्वट्टिऊणं पुणो वि उववन्नो तिरिएसु महिसत्ताए, तत्थ वि णं नरगोवमं दुक्खमणुभवित्ता णं मओ समाणो उववन्नो बालविहवाए पुंसलीए माहणधूयाए कुच्छिसि । अहऽन्नया निउत्तपच्छन्नगब्भसाडणपाडणक्खारचुन्नजोगदोसेणं अणेगवाहिवेयणापरिगयसरीरो सिडिहडंतकुट्ठवाहीए परिगलमाणो सलसलिंतकिमिजालेणं खज्जंतो नीहरिओ निरओवमघोरदुक्खनिवासाओ गब्भवासाओ, गोयमा ! सो सावज्जायरियजीवो तओ सव्वलोगेहिं निंदिज्जमाणो गरहिज्जमाणो खिंसिज्जमाणो दुगुंछिज्जमाणो सव्वलोगपाणखाणभोगोवभोगपरिवज्जिओ गब्भवासपमितीए चेव विचित्तसारीरमाणसिगघोरदुक्खसंतत्तो सत्त संवच्छरसयाइं दो य मासे चउरो दिणे य जाव जीविऊणं मओ समाणो उववन्नो वाणमंतरेसु, तओ य उववन्नो मणुएसु, पुणो वि सूणाहिवइत्ताए, तओ वि तक्कम्मदोसेणं सत्तमाए, तओ वि उव्वट्टिऊणं उववन्नो तिरिएसुं चक्कियघरंसि गोणत्ताए । तत्थ य चक्कसगडलंगलपट्टणेण अह निसंभं वारोवरोणं पच्चिऊण जुहियाउच्छियखंधं समुत्थिए य किमी ताहे, अक्खमीहूयं खंधं जूअधरणस्स विन्नाय पिट्ठीए वाइउमाढो तेणं चक्किएणं । अहऽन्नया कालक्कमेणं जहा खंधं तहा कुच्छिऊण कुहयपिट्ठी तत्थ वि समुत्थिए किसी सडिऊण विगयं च पिट्ठिचम्मं ताव परं निप्पओयणं ति णाऊण मोक्कलियं । गोयमा ! तेणं चक्किएणं तेमल्लं सत्तकिमिजालेहिं णं वइल्लसावज्जायरियजीवं । तओ मोक्कलिओ समाणो पडिसडियचम्मो बहुकायसाणं किमिकुलेहिं सवज्झब्भंतरो विलुप्पमाणो एकूणतीसं संवच्छराइं जाव अहाउगं परिवालेऊण मओ समाणो उप्पन्नो अणेगवाहिवेयणापरिगयसरीरो मणुएसु महाधणस्स णं विज्जगेहे । तत्थ य वमणविरेयणखारकडुतित्तकसायतिहलागुग्गुलकाढगेआवीयमाणस्स निच्चविसोसिराहिं च असज्झाणुवसमे घोरदारुणदुक्खेहिं पज्जलियस्सेव । गोयमा ! गओ निप्फलो तस्स मणुयजम्मो । एवं च गोयमा ! सो सावज्जायरियजीवो चोद्दसरज्जुयलोगं जम्मणमरणेहिं णं निरंतरं पडिऊणं सुदीहाणंतकालाओ समुप्पन्नो मणुयत्ताए अवरविदेहे । तत्थ य भागवसेण लोगाणुवत्तीए गओ तित्थयरस्स वंदणवत्तियाए पडिबुद्धो य पव्वइओ सिद्धो य । इह तेवीसइ–

भवित्थयरसासणस्स काले । एवं च गोयमा ! सावज्जायरिएणं पावियं । महा० ५ अ० ।

सावण-श्रावण-त्रि० । श्रवणे प्रयोजककर्तरि, पो० ११ विव० । आव० । श्रोत्रेन्द्रियजे ज्ञाने, नपुं० । द्वा० २६ द्वा० । श्रवणयुक्तपौर्णमासीघटिते मासे, पुं० । ज्यो० १ पाहु० ।

सावणमास-श्रावणमास-पुं० । त्रिंशद्रात्रिन्दिवात्मके कर्ममासे, ज्यो० १ पाहु० ।

सावणसंवच्छर-सावनसंवत्सर-पुं० । ऋतुसंवत्सरे, स्था० ५ ठा० ३ उ० ।

सावतेय-स्वापतेय-न० । शुद्धे द्रव्यजाते, सूत्र० २ श्रु० १ अ० ।

सावत्थिया-श्रावस्तिका-स्त्री० । उडुपाटिकगणस्य प्रथमशाखायाम्, कल्प० २ अधि० ८ क्षण ।

सावत्थी-श्रावस्ती-स्त्री० । कुणालजनपदप्रधाननगर्याम्, प्रज्ञा० १ पद । भ० । ज्ञा० । एकं श्रावस्त्याम् । कल्प० १ अधि० ६ क्षण । प्रव० । उत्त० । ज्ञा० । आव० । भ० । स्था० । आ० क० । आ० म० ।

'दुहसरितारणवत्थी, सावत्थी सयलसुक्ख पसवत्थी ।
नमिऊण संभवजिणं, तीसे कप्पेमि कप्पलवं ॥ १ ॥'

अत्थि इहेव दाहिणद्धभारहे वासे अगणिज्जगुणविसए कुणालाविसए सावत्थीनाम नयरी, संपइ काले महाचित्तिरूढा तत्थ अज्ज वि वणगहणवणमाहिट्ठियं सिरिसंभवनाहपडिमाविभूसियं गयणग्गलग्गसिहरं पासट्ठियजिणबिंबमंडियदेवउलियाअलंकरियं जिणभवणं ति चिट्ठइ पायारपरियरियं । तस्स चेइयस्स दुवारे अदूरसामंते वित्थिरउल्लसिहरं अतुल्लपल्लवसोहिणिच्छाओ महल्लसाहामिरामो रत्तसोअ पायवो दीसइ । तस्स य जिणभवणस्स पउल्लीए जे कवाडसंपुडा आसि ते माणिभद्दजक्खाणुभावाओ सूरिए अत्थमिते सयमेव लग्गंति स्म, उदिए य दिणयरे सयमेव उग्घडंति स्म । कलिकालदुल्ललिअवसेण अल्लावदीणसुरत्ताणस्स मल्लिक्केण हव्वसनामेणं 'वहडाइच्च' नगराओ आगंतूण पायारभित्तिकवाडाइ धिंबाणि अ भग्गाणि, मंदप्पभावा हि भवंति दूसमाए अहिट्ठायगा । तहा तस्सेव चेइयस्स सिहरं जत्तागयसंघेण कीरमाणे राहवणाइमहूसवे आगंतूण एगो चित्तगो उवविसइ । न य कस्स वि भयं जाणइ । जाव मंगलपईवेकए सट्ठाणमुवगच्छइ त्ति इत्थेव नयरीए उच्चाययणं चिट्ठइ जत्थ समुद्दवंसीया करा दल्लनरिंदकुलसंभूया रायाणो छत्तभत्ता अज्ज वि नियदेवयस्स पुरट्ठमहग्घमुल्लं पल्लाणियं अलंकियं विभूसियं महाउरंगमं ढोअंति । "अंगुलीविज्जा" य इत्थेव बुद्धेण संपयासिया महप्पभावा । इत्थेव निप्पज्जंति नाणाविहा साली । जेसिं सव्वसालिजाईणं इक्किक्के कणम्मि निक्खिप्पमाणे आसिहं भरिज्जइ महंतं थारयं । इत्थेव भयवं संभवसामिणो चवणजम्मणकेवलनाणुप्पत्तिकल्लाणगाइं सुरासुरनरभवणमणरंजणाइं अकारि । कोसंबीपुरीए उप्पन्नो जियसत्तुनिवसचिवकासपुत्तो, जस्स कुच्छिसंभूओ कविलो महरिसी, जणयम्मि विवन्ने विज्जामहिजणत्थं एयं नयरिं समागओ पिउमित्तइंददत्तउवज्झायसयासे सालिभद्दइब्भदासचेडी वयणेणं दो मासमणुयकए वड्ढंतो कमेण सयंबुद्धो जाओ । पडिबोहिऊण पंचसयचोरसहिओ सिद्धो अ । इत्थेव तिंदुगुज्जाणे पंचसयसमणअज्जियासहस्सपरिवुडो पढमनिण्हवो जमाली ठिओ, ढंकेण कुंभयारेण पढमं निअसालासंठिआ भगवओ धूआ पियदंसणा अज्जा साडिया एगदेसे अंगारं खोविऊण, 'कयमाणे किय' मिति वीरवयणं पडिवज्जं पडिवज्जाविया तीए य सेससाहुणी साहुणो पडिबोहिया सामी चेव अल्लीणा एगो चेव जमाली विप्पडिवन्नो ठिओ । इत्थेव तिंदुगुज्जाणे केसीकुमारसमणो गणहरो भगवया गोयमसामिणा कुट्ठओ आणाओ आगंतूण परुप्परं संवायं च काउं पंचजामं धम्मं कारिओ । इत्थेव एगं वासारत्तं समणो भयवं महावीरो ठिओ खंडपडिमाए सक्केण य पूइओ चित्तं च तवोकम्ममकासी । इत्थव जियसत्तू धारणीपुत्तो खंदगायरिओ उप्पण्णो । जो पंचसयसीससहिओ पालगेण कुंभयारकडनयरे जंतेण पीलिओ । इत्थेव जियसत्तुरायपुत्तो भद्दो नाम पव्वइत्ता पडिमं पडिवन्नो विहरंतो वेरज्जे संपत्तो चारिउ त्ति काऊण गहिओ रायपुरिसेहिं तत्थ य सोसिरं साउं कक्कडदज्झेहिं वेढिओ मुक्को सिद्धो अ जहा रायगिहाइसु तहा इत्थ वि नयरीए खंभदत्तहिंडी जाया । इत्थेव खुड्डगकुमारो अजियसेणायरियसीसो जणणीमयहरिया आयरियउवज्झायनिमित्तं बारस वरिसाणि दव्वओ सामण्णे ठिओ, नट्टविहीए सुट्ठु गाइयं, सुट्ठु वाइयं दिव्वाइं गीयं सोउं जुवरायसत्थवाहभज्जा सच्चम्मि तेहिं समं पडिबुद्धा एवमाईणं अणेगेसिं संविहाणगरयणाण उप्पत्ती एसा नयरी रोहणगिरिभूमि त्ति ।

"सावत्थिमहातित्थ-स्स कप्पमेयं पढंतु विबुहवरा ।
जिणपवयणभत्तीए, इय भणइ जिणप्पहो सूरी ॥ १ ॥"
इति श्रीश्रावस्तीकल्प । ती० २६ कल्प ।

सावयगुण-श्रावकगुण-पु० । अक्षुद्रत्वादिषु श्राद्धगुणेषु, "धम्मरयणस्स जुग्गो, अक्खुद्दो रूववं पगयसोम्मो । लोगप्पिओ अकूरो, भीरू असढो सुदक्खिन्नो ॥ १ ॥ लज्जालुओ दयालू, मज्झत्थो सोमदिट्ठिगुणरागी । सक्कह सुपक्खजुत्तो, सुदीहदंसी विसेसन्नू ॥ २ ॥" ध० र० १ अधि० १ गुण ।

सावसलोणी-स(र्वांश)लावण्य-स्त्री० । सर्वांशैर्लावण्ययुक्तायाम्, "सावसलोणी गोरडी, नवखी कवि विसगंठि । भडपच्चलिओ सो मरइ, जासु न लग्गइ कंठि ॥ १ ॥" सर्वसलावण्या काऽपि नवीना विषग्रन्थि यस्य कण्ठे न लगति स भटः कामुकः प्रत्युत सम्मुखं म्रियत इत्यर्थः । प्रत्युतस्य स्थानेऽनेन पच्चलियाऽऽदेश । प्रा० ढुं० ४ पाद ।

सावसेस-सावशेष-त्रि० । अनस्तमित, कल्प० ३ अधि० ६ क्षण । प्रश्न० ।

सावा-शाया-स्त्री० । भुजपरिसर्पिणीविशेषे, जी० २ प्रति० ।

सावासग-स्वावासक-पुं० । स्वनीडे, सूत्र० १ श्रु० १४ अ० ।

सावित-श्रावयत्-त्रि० । इदं चेदं भविष्यतीत्येवंभूतवचांसि श्रवणपथमानयति, भ० ६ श० ३३ उ० ।

सावेक्ख-सापेक्ष-पुं० । सह अपेक्षा गच्छस्येति गम्यते ये-

या ते सापेक्षा । गच्छवासिषु , व्य० १ उ० । गुरुगच्छादिसाहाय्यमपेक्षमाणो य. प्रव्रज्या परिपालयति स सापेक्षः । ध० ३ अधि० । आचार्यस्य शिष्ये प्रातीच्छिकैश्च सर्वे कर्त्तव्यं ते च तथा कुर्वन्त सापेक्षा उच्यन्ते । व्य०४उ० ।

सावि( न् )-स्वापिन्-पुं० । स्वप्नशीले , बृ० १ उ० २ प्रक० ।

सास-श्वास-पुं० । प्राणेन अतिशयत ऊर्ध्वश्वासरूपे रोगभेदे , आ० १ श्रु० १३ अ० । जी० । जं० । विपा० ।

शश्य-न० । "लुप्त य-र व-श ष-सां श-ष सां दीर्घः" ॥८।१।४३॥ इत्यादि स्वरस्य दीर्घ । श्य इत्यस्य यलोपे सासम् । धान्यवनस्पतौ, प्रा० १ पाद ।

सासंत-शासत्-शिक्षा ददाति, उत्त० १ अ० । आज्ञापयति, उत्त० १ अ० ।

सासचउक्क-श्वासचतुष्क-न० । उच्छ्वासोद्योतातपपराघात-समूहे, कर्म० ५ कर्म० ।

सासग-शश्यक-पुं० । रत्नविशेषे, कल्प० १ अधि० ३ क्षण ।

सासण-शासन-न० । शास्यन्तेऽनेन जीवा इति शासनम् । द्वादशाङ्गे , आव० १ अ० । प्रवचने , प्रश्न० ५ संव० द्वार । सम्म० । आज्ञायाम् , ज० ३ वक्ष० । प्रव० । सूत्र० । बृ० । प्रतिपादने , नं० । शिक्षणे , अनु० । ज्ञा० । शिष्यते प्रतिपाद्यते इति शासनम् । शिक्षणीये , प्रश्न० १ संव० द्वार । सूत्र० ।

सासणगरिहा-शासनगर्हा-स्त्री० । प्रवचननिन्दायाम् , प्रश्न० ७ विव० ॥

सासणमालिण्ण-शासनमालिन्य-न० । जिनप्रवचनस्य लोक-विरुद्धाचरणोपघाते, हा० २३ अष्ट० । ( 'पभावणा ' शब्दे पञ्चमभागे ४३८ पृष्ठे विस्तरो गत. । )

सासणसुरी-शासनसुरी-स्त्री० । प्रवचनदेवतायाम् , पञ्चा० ८ विव० ।

सासणाम-श्वासनामन्-न० । उच्छ्वासनामनि,कर्म० ५ कर्म० ।

सासय-शाश्वत-त्रि० । शश्वद् भवतीति शाश्वतम् , सूत्र० १ श्रु० ५ अ० २ उ । शश्वद्भावाच्छाश्वतम् । सततोपयोग , विशे० । आ० म० । नं० । आचा० । नित्ये , सूत्र० २ श्रु० १ अ० । आव० । विशे० । ध्रुवे, विशे० । अनादौ , स्था० ५ वा० ३ उ० । सूत्र० । ज्ञा० । प्रतिक्षणमत्ता-लिङ्गत्वादवस्थित, स्था० ५ ठा० ३ उ० । सूत्र० । प्रव० । आचा० । शश्वद्भवनस्वभावे , जी० ३ प्रति० ४ अधि० । अविनाशिनि , सूत्र० १ श्रु० १ अ० १ उ । शश्वद्भाविनि , प्रज्ञा० ३६ पद । शश्वद् भवनस्वभावे , नं० । प्रतिक्षणं सद्भावात् ( भ० २ श०१ उ०) अनादिनिधने , स्था० १ ठा० ३ उ०।दश०। अपुनरागामिनि,दश०६अ०४ उ०। साद्यपर्यवसित , प्रश्न० ४ संव० द्वार । सर्वकालभाविनि , आ० म० १ अ० । सदाभाविनि , स० । आ० म० । सूत्र० । द्रव्यार्थतयाऽविच्छेदेन प्रवृत्ते, स० ।

जीवा शाश्वता अशाश्वता वा ?—

जीवा णं भंते ! किं सासया, असासया य ?। गोयमा ! जीवा सिय सासया , सिय असासया । से केणट्ठेणं भंते! एवं वुच्चइ-जीवा सिय सासया , सिय असासया ? । गोयमा ! दव्वट्ठयाए सासया, भावट्ठयाए असासया । से तेणट्ठेणं गोयमा ! एवं वुच्चइ० जाव सिय असासया । नेरइया णं भंते ! किं सासया असासया । एवं जहा जीवा तहा नेरइया वि एवं० जाव वेमाणिया० जाव सिय सासया सिय असासया । ( सू० २७४ × )

'दव्वट्ठयाए'त्ति—जीवद्रव्यत्वेनेत्यर्थ. । भावट्ठयाए'त्ति—नारकादिपर्यायत्वेनेत्यर्थ. । भ० ७ श० २ उ० ।

पूर्वकृतकर्मणश्च वेदना तद्वत्ता च कथञ्चिच्छाश्वतत्वे सति युज्यत इति तच्छाश्वतत्वसूत्राणि , तत्र च—

नेरइया णं भंते ! किं सासया असासया ? , गोयमा ! सिय सासया सिय असासया । से केणट्ठेणं भंते ! एवं वुच्चइ नेरइया सिय सासया सिय असासया ? , गोयमा ! अव्वोच्छित्तिणयट्ठयाए सासया वोच्छित्तिणयट्ठयाए असासया , से तेणट्ठेणं०जाव सिय सासया सिय असासया एवं० जाव वेमाणिया०जाव सिय असासया । सेवं भंते ! सेवं भंते ! त्ति ॥ ( सू० २८० )

' अव्वोच्छित्तिणयट्ठयाए ' त्ति अव्यवच्छित्तिप्रधानो नयोऽव्यवच्छित्तिनयस्तस्यार्थो-द्रव्यमव्यवच्छित्तिनयार्थस्तद्भावस्तत्ता तया अव्यवच्छित्तिनयार्थतया-द्रव्यमाश्रित्य शाश्वता इत्यर्थ , ' वोच्छित्तिणयट्ठयाए' त्ति व्यवच्छित्तिप्रधानो यो नयस्तस्य योऽर्थ.—पर्यायलक्षणस्तस्य यो भाव. सा व्यवच्छित्तिनयार्थता तया पर्यायानाश्रित्य अशाश्वता नारका इति । भ०७श०३उ० । निर्वाणे, जी० १प्रति० । औ० । जन्ममरणादिरहितत्वात् । सिद्धे , स्था० २ ठा० १ उ० । त्रिकाले फलदायकत्वात् ब्रह्मचर्ये , उत्त० १६ अ० ।

स्वाशय-पुं० । स्वकीये आशये , स्वदर्शनाभ्युपगमे , सूत्र० १ श्रु० १ अ० ३ उ० । शोभनाध्यवसाये , ध० २ अधि० ।

स्वाश्रय-पुं० । स्व—आत्मीय उत्पत्तिप्रत्ययो यासु ता. स्वाश्रयाः । अविनष्टयोनिषु , आचा० २ श्रु १ चू० १ अ० ३ उ० ।

स्वासक-पुं० । दर्पणाकारे अश्वालङ्कारविशेषे, जं ३ वक्ष० ।

सासयचेइय-शाश्वतचैत्य-न० । नन्दीश्वरादिष्ववस्थिते चैत्ये, जीत० ।

सासयजत्ता-शाश्वतयात्रा-स्त्री० । नन्दीश्वरादिषु वैमानिक-देवै कृतायां तीर्थयात्रायाम् , ध० । अष्टाह्निकास्वपि चैत्राश्विनाष्टाह्निके शाश्वत्यौ, तयोर्वैमानिकदेवा अपि नन्दीश्वरादिषु तीर्थयात्रादुत्सवान् कुर्वन्ति । यदाहु —

" दो सासयजत्ताओ , तत्थेगा होइ चित्तमासम्मि ।
अट्ठाहिआहिमहिमा , बीआ पुण अस्सिए मासे ॥१॥

पश्चाओ दो वि सासय-जत्ताओ करिंति सव्वदेवा वि।
नन्दीसरम्मि दीवम्मि, अह्वा निअएसु ठाणेसु ॥ २ ॥
तह चउमासियतियगं, पज्जोसवणा य तह य इअ छक्कं।
जिणजम्मदिक्ख केवल-निव्वाणाइसु असासइया ॥३॥"

अत्र जीवाभिगमे त्वेवम्—" तत्थ णं बहवे भवणवइ-वाणमंतरजोइसवेमाणिआ देवा तिहिं चउमासिएहिं चउमासिपर्व्हि पज्जोसवणाए अट्ठाहिआओ महामहिमाओ करिंति " इति। ध० २ अधि०।

सासयट्ठाण-शाश्वतस्थान-न०। मोक्षे, प्रश्न० १ द्वार।

सासयदुक्खधम्म-शाश्वतदुःखधर्म-पुं०। शश्वद्भवतीति शाश्वत यावदायुस्तच्च तद् दुःखं च शाश्वतदुःखम् तद्धर्मः स्वभावो यस्मिन् स तथा। नरके, सूत्र० १ श्रु० १ अ० १ उ०।

सासयवुड्ढि-स्वाशयवृद्धि-स्त्री०। कुशलपरिणामवर्द्धने, ध० ३ अधि०। ( स्वाशयवृद्धिश्चैत्यनिर्माणे 'चेइय' शब्दे तृतीयभागे १३६३ पृष्ठे उक्ता। )

सासयसुह-शाश्वतसुख-न०। शाश्वतं-नित्यं च तत्सुखम्। निर्वाणजनितानन्दे, द्वा० १ अष्ट०।

सासयसोक्ख-शाश्वतसौख्य-न०। निर्वाणसाते, जी० १ प्रति०। नित्यसुखे, पञ्चा० ७ विव०।

सासया-शाश्वती-स्त्री०। अविनश्वर्याम्, औ०।

सासयाणंतय-शाश्वतानन्तक-न०। अक्षये जीवादिद्रव्ये, स्था० १० ठा० ३ उ०।

सासयाऽसासय-शाश्वताऽशाश्वत-त्रि०। शाश्वतं-नित्यं सर्व-वस्तुजातं द्रव्यास्तिकनयाश्रयणाद्शाश्वतं वा नित्यं प्रतिक्षण-विनाशरूपं पर्यायनयाश्रयणात्। द्रव्यास्तिकपर्यायास्ति-कनयाश्रयणेन नित्यानित्ये, सूत्र० १ श्रु० १२ अ०।

सासयासासयाणुओग-शाश्वताऽशाश्वतानुयोग-पुं०। शाश्वतं च अशाश्वतं च शाश्वताऽशाश्वतम्। तदनुयोगः। द्रव्यानुयोगभेदे, तत्र जीवद्रव्यमनादिनिधनत्वात् शाश्वतं तदेवापरापरपर्यायाप्राप्तितोऽशाश्वतमित्येवमतो द्रव्यानुयोगः, स्था० १० ठा० ३ उ०।

सासवणाल-सर्षपनाल-न०। सर्षपभर्जिकायाम्, आचा०। सर्षपकन्दल्याम्, आचा० २ श्रु० १ चू० १ अ० ८ उ०।

सासायण-सासाद(शात)(साद)न-पुं०। निरुक्तविधिना वर्ण-लोपे सहैव तत्त्वश्रद्धानरसास्वादनेन वर्तत इति सास्वादनम्। अथापि मिथ्यात्वोदयाभावादनन्तानुबन्ध्युदयकलुषितत्वश्र-द्धानरसास्वादमात्राश्रितं सम्यक्त्वम्, आ-समन्ताच्छातयन्ति मुक्तिमार्गाद् भ्रंशयन्तीत्याशातनम्। अनन्तानुबन्धकषायवेदनं, सहाशातनेन वर्त्तत इति साशातनम्। सम्यक्त्वभेदे, विशे०। सासादनं तत्र आयमौपशमिकसम्यक्त्वलक्षणं सादयति-अपनयति आसादनम् अनन्तानुबन्धिकषायवेदनम्। अत्र पृषोदरादित्वाद्यशब्दलोपः (३-३-१५५) रम्यादिभ्यः कर्त्तरि-नट् प्रत्ययः (५-३-१२६) सति हि अस्मिन् परमानन्दरूपान-न्तसुखदो निःश्रेयसतरुबीजभूतो ग्रन्थिभेदजौपशमिकस-म्यक्त्वलाभो जघन्यतः समयमात्रेणोत्कर्षतः षड्भिरावलिकाभिरपगच्छतीति। ततः सहासादनेन वर्त्तत इति सासादनम्। यद्वा—सास्वादनं तत्र सह सम्यक्त्वलक्षण-रसास्वादनेन वर्त्तत इति सास्वादनम्, यथाहि—भुक्तक्षीरा-न्नविषयव्यलीकचित्तः पुरुषस्तद्वमनकाले क्षीरान्नरसमास्वा-दयति, तथाऽत्रापि गुणस्थाने मिथ्यात्वाभिमुखतया सम्य-क्त्वस्योपरि व्यलीकचित्तस्य पुरुषस्य सम्यक्त्वमुद्वमतः स्तद्रसास्वादो भवतीति इदं सास्वादनमुच्यते इति। कर्म० ४ कर्म०। पं० सं०। आ० चू०। तत्त्वश्रद्धानरसा-स्वादनेन सह वर्तत इति सास्वादनम्। कणदघण्टालाला-न्यायेन प्रायः परित्यक्तसम्यक्त्वे, आव० ४ अ०।

सासादनसम्यक्त्वमाह—

उवसमसम्मा पडमा-णाओ मिच्छत्तसंकमणकालो।
सासायणछावलितो, भूमिगपत्तो व पवडंतो ॥१२५॥

मिथ्यात्वसंक्रमणकाले मिथ्यात्वसंक्रमणाभिमुख उप-शमसम्यक्त्वात् प्रपतन् जघन्यत एकसामयिक उत्कर्षतः षडावलिकः सास्वादनो भवति। किंरूपः स इत्याह—भूमिमप्राप्त इव प्रपतन् यथा मालात्प्रपतन् भूमिमप्राप्तोऽपान्तराले व-र्त्तते तथोपशमसम्यक्त्वात्प्रपतन् मिथ्यात्वमप्राप्य प्राप्तोऽपा-न्तराले वर्त्तमानः सासादन इति।

अथ कथं स सम्यग्दृष्टिरुपशमसम्यक्त्वतः प्रच्यवमान-त्वात्, उच्यते-च्यवनेऽप्यव्यक्तमुपशमगुणवेदनाद्। अत्रैव दृष्टान्तमाह—

आसादेउं व गुलं, ओहीरंतो न सुट्ठु जा मुयति।
सं आयं आदेंतो, सासादो वावि सासाणो ॥१२६॥

यथा कश्चित्पुरुषो गुडमास्वाद्य तदनन्तरमोहीरति नि-द्रायते, न पुनः सुष्ठु अद्यापीति। स च निद्रायमाणोऽव्यक्त-मास्वादितगुडमाधुर्यमनुभवति। एवम् उपशमसम्यक्त्वात् प्रच्यवमानो मिथ्यात्वमप्राप्य प्राप्तोऽव्यक्तमुपशमगुणं वेदयन् इति सम्यग्दृष्टिः। संप्रति सासादनशब्दव्युत्पत्तिमाह— स्वमात्मीयम्, आयं स्वायं यत्र "सासादो वावि सासाणो" सास्वादो व्यक्तोपशमगुणस्तत्सहित इति कृत्वा सास्वादनः। सह आस्वादनं यस्य स तथेति व्युत्पत्तेः। बृ० १ उ० १ प्रक०।

सासायणगुणट्ठाण-सास्वादनगुणस्थान-न०। द्वितीयगुण-स्थाने, कर्म० ३ कर्म०।

सासायणभाव-सास्वादनभाव-पुं०। सास्वादनसम्यग्दृष्टित्वे, कर्म० ४ कर्म०।

सासायणसम्मत्त-सास्वादनसम्यक्त्व-न०। सम्यक्त्वभेदे, ध०। सास्वादनं च पूर्वोक्तौपशमिकसम्यक्त्वात्पततो ज-घन्यतः समयं उत्कर्षतश्च षडावलिकायामवशिष्टायामन-न्तानुबन्ध्युदयात्तद्वमने तदास्वादनरूपम्। यत —"उवसमस-म्मत्ताओ, चयओ मिच्छं अपावमाणस्स। सासायणसम्मत्तं, तयंतरालम्मि छावलिअं॥१॥" इति। ध० २ अधि०।

सासायणसम्मदिट्ठिगुणट्ठाण-सास्वा(सा)दनसम्यग्दृष्टिगुण-स्थान-न०। कर्म०। आयम्-औपशमिकसम्यक्त्वलाभलक्षणं सादयति अपनयतीत्यासादनम् अनन्तानुबन्धिकषायवेदनम्

पृषोदरादित्वाद्यशब्दलोपः, सह द्युतमिति कर्मत्रेत्। सति अस्मिन् परमानन्दरूपानन्तसुखफलदो निःश्रेयसतरुबीजभूत औपशमिकसम्यक्त्वलाभो जघन्यतः समयमात्रेण उत्कर्षतः षड्भिरावलिकाभिरपच्छनीति, तत सह आसादनेन वर्त्तत इति सासादनः, सम्यग्-अविपर्यस्ता दृष्टिर्जिनप्रणीतवस्तुप्रतिपत्तिर्यस्य स सम्यग्दृष्टिः सासादनश्चासौ सम्यग्दृष्टिश्च सासादनसम्यग्दृष्टिस्तस्य गुणस्थानं सासादनसम्यग्दृष्टिगुणस्थानं, सास्वादनमिति वा पाठः। तत्र सह सम्यक्त्वलक्षणरसास्वादनेन वर्त्तत इति सास्वादनः। यथाहि—भुक्तक्षीरान्नविषयव्यलीकचित्तः पुरुषस्तद्वमनकाले क्षीरान्नरसमास्वादयति, तथैषोऽपि मिथ्यात्वाभिमुखतया सम्यक्त्वस्योपरि व्यलीकचित्तः सम्यक्त्वमुद्वमन् तद्रसमास्वादयति। ततः स चासौ सम्यग्दृष्टिश्च तस्य गुणस्थानं सास्वादनसम्यग्दृष्टिगुणस्थानम्। गुणस्थानभेदे,(कर्म०) आन्तर्मौहूर्त्तिक्यामुपशान्ताद्धायां परमनिधिलाभकल्पायां जघन्येन समयशेषायामुत्कृष्टतः षडावलिकाशेषायां सत्यां कस्यचिन्महाविभीषिकोत्थानकल्पोऽनन्तानुबन्ध्युदयो भवति, तदुदये चासौ सास्वादनसम्यग्दृष्टिगुणस्थाने वर्त्तते। उपशमश्रेणिप्रतिपतितो वा कश्चित्सासादनत्वं याति, तदुत्तरकालं चावश्यं मिथ्यात्वोदयादसौ मिथ्यादृष्टिर्भवतीति। कर्म० २ कर्म०। दर्श०। प० सं०। वृ०। आव०। स०।

सासिउं-सासितुम्-अव्य०। उपदेष्टुमित्यर्थे, सूत्र० १ श्रु० १ अ० २ उ०।

सासिंत-शासयत्-त्रि०। शिक्षयति, औ०।

सासु-सासु-त्रि०। असवः-प्राणाः सहासवो यस्य येन वा तत्सासु। सचित्ते, व्य० ६ उ०।

श्वश्रु-स्त्री०। श्वशुरस्य स्त्रियाम्, 'घरे सासुयाए कहियं' आ० म० १ अ०। 'अत्ता सासू' पाइ० ना० २५३ गाथा।

सासेरा-देशी-अचेतनायां यन्त्रमय्यां नर्त्तक्याम्, वृ० ६ उ०।

साहइत्ता-साधयित्वा-अव्य०। सम्यगाराध्येत्यर्थे, सूत्र० १ श्रु० १४ अ०।

साहंजणी-शाखाञ्जनी-स्त्री०। स्वनामख्याते नगरीभेदे, यत्र सुभद्रासार्थवाहपुत्रः सनत्कुमार आसीत्। स्था० १० ठा० ३ उ०।

साहकुमरसिंह-साहकुमरसिंह-पुं०। नासिक्यपुरस्य महादुर्गमब्रह्मगिरिशिखरजिनप्रासादस्योद्धारकारके ईश्वरपुत्रमाणिक्यपुत्रे परमश्रावके, ती० २७ कल्प।

साहग-साधक-त्रि०। सिद्धिजनके, वृ० ३ उ०।

साहगतम-साधकतम-न०। क्रियां प्रति करणे, "साधकतमं करणम्"। आ० म० १ अ०।

साहज्ज-साहाय्य-न०। सहायतायाम् आ० म० १ अ०। 'अणगारे रससाहिज्जे दिसे' अन्त० १ श्रु० ३ वर्ग ८ अ०।

साहट्ट-संवृ-धा०। संवरणे, "संवृगेः साहर-साहट्टौ" ॥ ८। ४। ८२॥ संवृणोतेः साहर—साहट्ट इत्यादेशौ। साहट्टइ। संवरइ। संवृणोति। प्रा० ४ पाद।

साहट्टु-संहृत्य-अव्य०। संगोगाभिमुखमाशिप्येत्यर्थे, आचा० २ श्रु० १ चू० ३ अ० १ उ०। विपा०। दश०। विधायेत्यर्थे, उपा० २ अ०। अपनीयेत्यर्थे,सूत्र०१ श्रु०६ अ०। आतपि पादौ कमौ जिनमुद्रया व्यवस्थाप्येत्यर्थे,पञ्चा० १८ विव०। जिनमुद्रया संहृतौ कृत्वेत्यर्थे, दशा० ७ अ०।

साहट्ठ-संहृष्ट-त्रि०। उद्घुषिते, 'साहट्ठरोमकूवेहिं' संहृष्टैः सकूपैरुद्घुषितरोमभिरित्यर्थः। स०।

साहण-साधन-न०। साध्यन्ते मोक्षादयोऽनेनेति साधनम्। ज्ञानदर्शनचारित्रादिके (विशे०।) करणे, ध० ३ अधि०। कारणे, आव० ४ अ०। उपकरणे, उत्त० २३ अ०। आ० म०। निष्पादने, सं०ध०। प्रसंगे, विशे०। साध्यतेऽनेनेति साधनम्। सधककनमकरणे, पा०।

साहणण-संहनन-न०। संघाते, संयोगे,भ० १२ श० ४ उ०।

साहणणाबंध-संहननबंध-पुं०। संहननमवयवानां संघातमनन्यमेनरूपो यो बन्धः स संहननबन्धः। दीर्घत्वादि चेह प्राकृतशैलीप्रभवमिति। भ० ८ श० ६ उ०। अक्षिपनबन्धभेदे ,भ० ८ श० ६ उ०। ('बंधण' शब्दे पञ्चमभागे १२२४ पृष्ठे व्याख्यातमेतत्।)

साहणणाभेदाणुवाय-संहननभेदानुपात-पुं०। दीर्घः प्राकृतत्वात्संहननं—संघातो भेदश्च वियोजनम्—तयोरनुपातो—योगः संहननभेदानुपातः। सर्वपुद्गलद्रव्यैः सह परमाणूनां सयोगे, भ० १२ श० ४ उ०।

साहणय-साधनक-न०। प्रकृष्टोपकारकेषु ज्ञानदर्शनसंयमनपस्सु, आचा० १ श्रु० ५ अ० १ उ०।

साहणी-साधनी-स्त्री०। "प्रत्यये ङीर्न वा" ॥८।३।३१॥ इति स्त्रिया ङीर्वा। साहणी। पक्षे—टाप् साहणा। निष्पादयन्त्याम्, प्रा० ३ पाद।

साहण्णंत-संहन्यमान-त्रि०।संघातमापद्यमाने,स्था०२ठा०३उ०।

साहत्थ-स्वहस्त-पुं०। साक्षादर्थे, उपा० ७ अ०।

साहत्थिया-स्वाहस्तिका-स्त्री०। स्वहस्तेन निर्वृत्ता स्वाहस्तिका। स्वहस्तगृहीतजीवादिना जीवं मारयत क्रियाभेदे, स्था० ५ ठा० २ उ०। आव०।

साहत्थिया किरिया दुविहा पन्नत्ता, तं जहा–जीवसाहत्थिया चेव, अजीवसाहत्थिया चेव। (सू० ६० +) स्था० २ ठा० १ उ०।

साहम्म-साधर्म्य-न०। समानः-तुल्यः साध्यसामान्यान्वितः, समानः धर्मो यस्यासौ सधर्मा। साधर्म्यं दृष्टान्तापेक्षया, सधर्मो तस्य भावः साधर्म्यम्। सम्म० ३ काण्ड। सादृश्ये, स्था० १ ठा०। विशे०।

साहम्मत्ता-सधर्मता-स्त्री०। समानधर्मतायाम्, नि०चू०४उ०।

साहम्मभाव-साधर्म्यभाव-पुं०। सादृश्यसद्भावे, पञ्चा० १४ विव०।

साहम्मिउग्गह-साधर्मिकावग्रह-पुं०। समानेन धर्मेण चरन्तीति साधर्मिकाः, साधर्मापेक्षया साधव एव नैगमनयप्रहस्तदाभाव्यपञ्चक्रोशपरिमाणक्षेत्रमृतुबद्धे मासमेकं पर्या-

सु चतुरो मासान् यावदिति साधर्मिकावग्रहः। अवग्रहभेदे, भ० १६ श० २ उ०। प्रति०। आचा०।

साहम्मिणी-साधर्मिणी-स्त्री०। संयत्याम्, बृ० ३ उ०।

साहम्मिय-साधर्मिक-पुं०। समानेन धर्मेण चरतीति साधर्मिकः। भ० १६ श० २ उ०। समानो धर्मः सधर्मस्तेन चरतीति साधर्मिकः। स्था० १० ठा० ३ उ०। प्रति-पन्नैकप्रवचने, प्रव० ७२ द्वार। लिङ्गप्रवचनाभ्यां समानधार्मिके, प्रति०। साम्भोगिके, आचा० २ श्रु० १ चू० १ अ० ६ उ०। व्य०। नि० चू०। स्था०। प्रश्न०। समानधर्मयुक्ते साधौ, स्था० ६ ठा० ३ उ०। पञ्चा०। बृ०। प्रव०। व्य०।

साहम्मियाण अट्ठा, चउव्विहो लिंगओ जह कुडुंबी।
मंगलमासयभत्तीएँ, जं वा कयं तत्थ आदेसो ॥६६॥

साधर्म्मिकाणामर्थाय कृतं न कल्पते। स च चतुर्विधस्तत्र लिङ्गतः साधर्म्मिकस्तीर्थकरो यथा कुटुम्बी। ततस्तन्निमित्तं कृतं कल्पते। अन्यच्च भगवतां मङ्गलनिमित्तं शाश्वतो मोक्षस्तन्निमित्तं च भक्त्या यत् क्रियते समवसरणमायतनं वा तत्रादेशोऽनुज्ञावस्थानस्येति भावः। व्य० ६ उ०।

सम्प्रति साधर्मिकस्य द्वादशकं निक्षेपमाह—

नाम ठवणा दविए, खेत्ते काले य पवयणे लिंगे।
दंसणनाणचरित्ते, अभिग्गहे भावणाओ य ॥ १२८॥

'नामं' ति-नाम्नि साधर्मिकः, । १। स्थापनायां साधर्मिकः। २। द्रव्ये द्रव्यविषयः साधर्मिकः ३। क्षेत्रसाधर्मिकः। ४। कालसाधर्मिकः। ५। प्रवचनसाधर्मिकः। ६। लिङ्गसाधर्मिकः। ७। दर्शनसाधर्मिकः। ८। ज्ञानसाधर्मिकः। ९। चारित्रसाधर्मिकः। १०। अभिग्रहसाधर्मिकः। ११। 'भावणाओ य' त्ति—भावनातश्च साधर्मिको भवति॥ १२॥ पिं०।

तत्र नामस्थापनाद्रव्यसाधर्मिकप्रतिपादनार्थमाह—

नामम्मि सरिसनामो, ठवणाए कट्ठकम्ममादीसुं।
दव्वम्मि उ जो भविओ, साहम्मिसरीरगं चेव ॥१३॥

नाम्नि-नामविषये साधर्म्मिको यः सदृशनामा यथा देवदत्तो देवदत्तस्य। स्थापनायां साधर्म्मिकः काष्ठकर्म्मादिषु स्थाप्यमानः, यथा—वारत्रकर्षिरादिशब्दात्—पुस्तकर्म्मात्त्वराटकादिपरिग्रहः, द्रव्ये द्रव्यरूपतया साधर्म्मिको यो भव्यो भावी स च त्रिप्रकारः, तद्यथा-एकभविको बद्धायुष्कोऽभिमुखनामगोत्रश्च। आमीषां च भावना द्रव्यभिक्षुवद्भावनीया। यच्च साधर्मिकशरीरं व्यपगतजीवितं सिद्धशिलातलादिगतं तत् द्रव्यसाधर्म्मिकः, द्रव्यता, चास्य भूतभावत्वात्।

क्षेत्रकालप्रवचनलिङ्गसाधर्म्मिकानाह—

खेत्ते समाणदेसी, कालम्मि उ एक्ककालसंभूतो।
पवयणसंघगयरो, लिंग रयहरणमुहपुत्ती ॥१४॥

क्षेत्रे-क्षेत्रतः साधर्म्मिकः समानदेशी यथा सौराष्ट्रः सौराष्ट्रस्य। काले कालतः साधर्म्मिकः एककालसंभूतो यथा वर्षाजाता वर्षाजातस्य, प्रवचनमिति प्रवचनतः साधर्मिकः संघमध्ये एकतरः श्रमणः श्रमणी श्रावकः श्राविका चेति लिङ्गे-लिङ्गतः साधर्म्मिकः 'रजोहरणमुहपोत्ति' त्ति रजोहरणमुखपोत्तिकायुक्तः।

संप्रति दर्शनादिसाधर्म्मिकानाह—

दंसणणाणे, चरणे, तिग पण पण तिविह होइ उ चरित्ते।
दव्वाइओ अभिग्गह, अह भावणमो अणिच्चाई ॥१५॥

दर्शनसाधर्म्मिकः 'तिग' त्ति-त्रिविधस्तद्यथा-क्षायिकदर्शनिनः क्षायिकदर्शनी औपशमिकदर्शनिनः औपशमिकदर्शनी क्षायोपशमिकदर्शनिनः क्षायोपशमिकदर्शनी। अन्ये पुनराहुरेवं त्रिविधस्तद्यथा-सम्यग्दृष्टेः सम्यग्दृष्टिः मिथ्यादृष्टेर्मिथ्यादृष्टिः मिश्रस्य मिश्रः। ज्ञानतः साधर्म्मिकः, 'पण' त्ति-पञ्चविधः, तद्यथा—आभिनिबोधिकज्ञानी आभिनिबोधिकज्ञानिनः, एवं श्रुतावधिमनःपर्यायकेवलेष्वपि भावनीयम्। चरणतः साधर्म्मिकः 'पण' त्ति—पञ्चप्रकारः सामायिकचारित्रिणः सामायिकचारित्री। एवं छेदोपस्थापनपरिहारविशुद्धिसंपरायथाख्यातेष्वपि वाच्यम्। 'तिविहो होइ चरित्ते' इति—त्रिविधः-त्रिप्रकारो भवति चारित्रे चारित्रतः साधर्म्मिकः। तद्यथा—क्षायिकचारित्री क्षायिकचारित्रिण इत्यादि 'दव्वाईउ अभिग्गह' त्ति—अभिग्रहतः साधर्म्मिको द्रव्यादौ—वेदितव्यः, तद्यथा-द्रव्याभिग्रही द्रव्याभिग्रहिणः। एवं क्षेत्र काल भावे अपि भाव्यम्। तुशब्दोऽनुक्तसमुच्चयार्थः। तेन षष्ठादिक्षपणाभिग्रही षष्ठादिक्षपणाभिग्राहिणः इत्याद्यपि द्रष्टव्यम्। भावनातः साधर्म्मिकोऽनित्यत्वादौ, यथा-एकोऽप्यनित्यत्वभावनां भावयत्यपरोऽप्यनित्यत्वमिति भावनासाधर्म्मिकः, एवं शेषास्वपि भावनासु द्रष्टव्यम्। तदेवमुक्तः साधर्म्मिकस्य द्वादशको निक्षेपः।

संप्रति यदुक्तं लिङ्गे भवन्ति भङ्गाश्चत्वार इति तदेतत् व्याचिख्यासुराह—

साहम्मिएहिँ कहिए-हिं लिंगाई होइ चउभंगा।
नामं ठवणा दविए, भावे विहारे य चत्तारि ॥ १६ ॥

साधर्म्मिकेषु कथितेषु सत्सु गाथायां तृतीया सप्तम्यर्थे प्राकृतत्वाल्लिङ्गादौ प्रवचनादिभिः सह भवति प्रत्येकं चतुर्भङ्गी। गाथाया पुंस्त्वमार्षत्वात्। विहारे च ये चत्वारो भेदाः प्रागुक्तास्त इमे, तद्यथा—नामविहारः स्थापनाविहारो द्रव्यविहारो भावविहारश्च।

तत्र लिङ्गादिषु प्रवचनादिभिः सह प्रत्येकं चतुर्भङ्गीमाविर्भावयिषुः प्रथमतो लिङ्गप्रवचनेन चतुर्भङ्गीसूत्रमाह—

लिंगेण उ साहम्मी, नो पवयणओ उ निण्हगा सव्वे।
पवयणसाहम्मी पुण, लिंगे दस होंति ससिहागा ॥१७॥

लिङ्गेन—रजोहरणादिना साधर्म्मिको नो—नैव प्रवचनतः इत्येको भङ्गः। के त इत्याह—सर्वे निह्नवास्तेषां संघबाह्यत्वात्, रजोहरणादिलिङ्गोपेतत्वाच्च, तथा प्रवचनतः साधर्म्मिको न पुनः लिङ्गे लिङ्गतः एष द्वितीयः। के ते एवंभूता इत्याह—दश भवन्ति सशिखाकाः क्षुरमुण्डितशिरस्का श्रावका इति गम्यते। श्रावका हि दर्शनव्रतादिप्रतिमाभेदेन एकादशविधा भवन्ति, तत्र

दश संकेशा', एकादश प्रतिमाप्रतिपन्नस्तु लुञ्चितशिराः श्रमणभूतो भवति ततस्तद्व्यवच्छेदाय सशिखग्रहणम्। एते हि दश शासिखाका. प्रवचनत साधर्मिका भवन्ति, तेषां सङ्घान्तर्भूतत्वान्न लिङ्गत' रजोहरणादिलिङ्गरहितत्वात्। तृतीयचतुर्थौ तु भङ्गौ सुप्रतीतत्वान्नोक्तौ तौ चेमौ प्रवचनतोऽपि साधर्म्मिका लिङ्गतोऽपि साधु. एष तृतीय'। न प्रवचनतो नापि लिङ्गत. इति चतुर्थ'। एष शून्यो भङ्ग। तदेव लिङ्गप्रवचनेनेन सह चतुर्भङ्गिकोक्ता।

संप्रति दर्शनादिभि. सह चतुर्भङ्गिकाप्रतिपादनार्थमाह—

एमेव य लिंगेणं, दंसणमादी उ होंति भंगा उ।
भइएसु उवरिमेसुं, हेट्ठिल्लपदं तु छड्डेज्जा ॥ १८ ॥

एवमेव-प्रवचनगतेन प्रकारेण लिङ्गेन सह दर्शनादिषु भङ्गा भवन्ति-ज्ञातव्या। उक्तेषु च उपरितनेषु सर्वेष्वपि भावनापर्यन्तेषु अधस्तन लिङ्गलक्षणं पद त्यजेत्-त्यक्त्वा च तदनन्तरं द्वितीयपदं गृह्णीयात्। अभिगृह्य च तेनापि सह चतुर्भङ्गिकाक्रमेण योजयेत्। तत्राप्युपरितनेषु सर्वेषु भङ्गेषु तदधस्तनं पदं त्यजेत्। अग्रेतनमनन्तरमाश्रयेत्। तत्राप्ययमेव क्रम. एव तावद्वाच्यं यावदन्तिमपदद्वयचतुर्भङ्गिका। इह लिङ्गेन सह दर्शनादिषु भङ्गसूचा कृता तत्र लिङ्गग्रहणमुपलक्षण तत. प्रवचनेनापि सह भङ्गा द्रष्टव्या' ते चामी प्रवचनसाधर्म्मिका न दर्शनत। एष क्षायिके औपशमिके क्षायोपशमिके वा। उक्त च-'विसरिसदंसणजुत्ता, पवयणसाहम्मिया न दंसणतो'। इति दर्शनत. साधर्मिको न प्रवचनतस्तीर्थंकर. प्रत्येकबुद्धश्च तथा संघानन्तर्वर्त्तित्वाद्, आह च-"तित्थयरा पत्तेया, नो पवयणदंसणसाहम्मी"। प्रवचनतोऽपि साधर्मिको दर्शनतोऽपि समानदर्शनी। संघमध्यवर्त्ती न प्रवचनतो नापि दर्शनत इति चतुर्थ.। एष शून्य.। उक्ता प्रवचनेन सह दर्शनस्य चतुर्भङ्गिका। सम्प्रति ज्ञानस्योच्यते-प्रवचनत. साधर्मिको न ज्ञानत., एको द्विज्ञानी एकत्रिज्ञानी चतुर्ज्ञानी केवलज्ञानी वा ज्ञानत. साधर्मिको न प्रवचनत' तीर्थंकरः प्रत्येकबुद्धो वा प्रवचनतो ज्ञानतोऽपि तृतीय.। न प्रवचनतोऽपि नापि ज्ञानत इति चतुर्थ। एष शून्यः। तथा प्रवचनतः साधर्मिको न चारित्रतः श्रावक, चारित्रतो न प्रवचनत तीर्थकर प्रत्येकबुद्धो वा, प्रवचनतोऽपि साधु, न प्रवचनतो नाऽपि चारित्रत एष शून्य.। तथा प्रवचनतो नापि अभिग्रहत.। साधर्मिकोऽनभिग्रहत। श्रावको यतिर्वा उभयोरप्यन्योन्याभिग्रहयुक्तत्वात्। अभिग्रहतो न प्रवचनतो निह्नव., तीर्थंकर प्रत्येकबुद्धो वा। उक्त च-"साहम्मभिग्गहेण, नोपवयणनिण्हतित्थपत्तेया"। इति प्रवचनतोऽप्यभिग्रहतोऽपि श्रावको यतिर्वा समानाभिग्रह. न प्रवचनतो नाप्यभिग्रहत इति शून्य। तथा प्रवचनत साधर्मिको न भावनातो भिन्नभावनाक श्रावको यतिर्वा भावनात। साधर्मिको न प्रवचनत समानभावनाकस्तीर्थकरः प्रत्येकबुद्धो निह्नवो वा प्रवचनतोऽपि भावनातोऽपि समानभावनाक श्रावको यतिर्वा न प्रवचनतोऽपि नापि भावनात. एष शून्य। उक्ता प्रवचनेन सह दर्शनादिषु भङ्गा। सम्प्रति लिङ्गेन सहोच्यन्ते-लिङ्गत. साधर्मिको न दर्शनत निह्नव, दर्शनत. साधर्मिको न लिङ्गत'। प्रत्येकबुद्धस्तीर्थकरो लिङ्गतोऽपि समानदर्शनी साधु। नापि लिङ्गतो नापि दर्शनतः एष शून्य। तथा लिङ्गत साधर्म्मिको न ज्ञानत' निह्नवो विभिन्नज्ञानी वा साधु ज्ञानतो न लिङ्गतः समानज्ञानी श्रावक प्रत्येकबुद्धस्तीर्थकरो वा लिङ्गतोऽपि ज्ञानतोऽपि समानज्ञानी साधु. न लिङ्गतोऽपि नापि ज्ञानत एष शून्य'। तथा लिङ्गतो न चारित्रतो निह्नवो विषमचारित्री वा साधु चारित्रतो न लिङ्गत प्रत्येकबुद्धस्तीर्थकरो वा, चारित्रतोऽपि लिङ्गतोऽपि समानचारित्री साधु। न लिङ्गतो नापि चारित्रत एष शून्य.। तथा लिङ्गतो नाभिग्रहत' विचित्राभिग्रही साधुर्निह्नवो वा 'अभिग्रहतो न लिङ्गत. समानाभिग्रही श्रावक' प्रत्येकबुद्धस्तीर्थकरो वा लिङ्गतोऽप्यभिग्रहतोऽपि समानाभिग्रही साधु लिङ्गतो नाप्यभिग्रहत'। एष शून्य.। तथा लिङ्गत साधर्म्मिको न भावनात विषमभावनाक साधुर्निह्नवो वा, भावनातो न लिङ्गत समानभावनाक श्रावकः प्रत्यकबुद्धस्तीर्थकरो वा, लिङ्गतोऽपि भावनातोऽपि समानभावनाक. साधु, न लिङ्गतोऽपि न भावनातः एष शून्य'। तदेवमुक्ता लिङ्गेन सह दर्शनादिषु भङ्गा। सम्प्रति लिङ्गपदं त्यक्त्वा दर्शनपदमभिगृह्यते। तेन सह ज्ञानादिषु उच्यन्ते। दर्शनत. साधर्मिको न ज्ञानतः, क्षायिकदर्शनी य' एक. केवलज्ञानी एको द्विज्ञानीति ज्ञानत. साधर्म्मिको न दर्शनतः समानज्ञानी विभिन्नदर्शनी दर्शनतोऽपि ज्ञानतोऽपि समानदर्शनज्ञानी। न दर्शनतोऽपि न ज्ञानत.'एष शून्यो भङ्ग.। तथा दर्शनत. साधर्मिको न चारित्रत' समानदर्शनी श्रावक. चारित्रतो न दर्शनत. समानचारित्री विभिन्नदर्शनी साधु, चारित्रतोऽपि दर्शनतोऽपि समानदर्शनचारित्री साधु, न चारित्रतोऽति नापि दर्शनत एष शून्यः। तथा दर्शनतो न अभिग्रहत. समानदर्शनी विचित्राभिग्रह श्रावक साधुर्वा, अभिग्रहतो न दर्शनत, सामानाभिग्रही विचित्रदर्शनत श्रावकादि, दर्शनतोऽपि अभिग्रहतोऽपि समानदर्शनाभिग्रही न श्रावकादि. न दर्शनतो नाप्यभिग्रहत एष शून्य। तथा दर्शनतो न भावनात.। समानदर्शनो विचित्रभावनाक श्रावकादि., भावनातो दर्शनत. समानभावनाको विचित्रदर्शन श्रावकादिः,-दर्शनतोऽपि भावनातोऽपि समानदर्शनभावनाक श्रावकादि, न दर्शनतो नापि भावनात एष शून्य। तदेवमुक्ता दर्शनेनापि सह ज्ञानादिषु भङ्गा. अधुना दर्शनपदमपहाय ज्ञानपदमभिगृह्यते। तेन सह चारित्रादिषु प्रदर्श्यन्ते। ज्ञानत. साधर्मिको न चारित्रत. समानज्ञानो विचित्रचारित्रसाधु यदि वा-श्रावक चारित्रत साधर्मिको न ज्ञानत समानचारित्री एक केवली एक. छद्मस्थ। ज्ञानतोऽपि चारित्रतोऽपि समानज्ञानचारित्री साधुर्न ज्ञानतोऽपि न चारित्रतोऽपि एष शून्य.। तथा ज्ञानतो नाभिग्रहत। सामानज्ञानो विचित्राभिग्रह. श्रावकादि अभिग्रहतो ज्ञानत। समानाभिग्रहो विचित्रज्ञानी साधुस्तीर्थकरः प्रत्येकबुद्धो वा, ज्ञानतोऽप्यभिग्रहतोऽपि समानज्ञानाभिग्रही साध्व्यादि, न ज्ञानतो नाऽप्यभिग्रहत शून्य एष। तथा ज्ञानतो न भावनात समानज्ञानो विचित्रभावनाक श्रावकादि। भावनातो ज्ञानत समानभावनो विचित्रज्ञानी श्रावकादि। ज्ञानतोऽपि भावनतोऽपि समानज्ञानभावनाक.। श्रावकादिर्न ज्ञानतो नाऽपि भावनात एष शून्य.।

उक्ता ज्ञानेन सह चारित्रादिषु भङ्गाः । संप्रति ज्ञानपदं विमुच्य चारित्रपदं गृहीत्वा तेन सहाभिग्रहभावनयोर्भङ्गा उच्यन्ते- चरणतः साधर्मिको नाभिग्रहतः समानचरणो विचित्राभिग्रही साधुः, अभिग्रहतः साधर्मिको न चरणतः श्रावकादिः, चरणतोऽपि अभिग्रहतोऽपि साधुः, न चरणतो नाप्यभिग्रहत एष शून्यः । तथा चरणतो न भावनातः विचित्रभावनाकः साधुः, भावनातो न चरणतः श्रावकः समानभावनाकः साधुर्वा विसदृशचरणः, चरणतोऽपि भावनातोऽपि समानचरणभावनाकः साधुः न चरणतो नाऽपि न भावनात शून्य एषः । सम्प्रत्यभिग्रहेण सह भावनाया भङ्गाः-अभिग्रहतः साधर्मिको न भावनतः, समानाभिग्रही विचित्रभावनाकः श्रावकादिः, भावनातः साधर्मिको नाऽभिग्रहतः विचित्राऽभिग्रहः श्रावकादिः, अभिग्रहतोऽपि भावनातोऽपि समानाऽभिग्रहभावनाकः श्रावकादिः, नाभिग्रहतोऽपि नापि भावनात एष भङ्गः शून्यः । तदेवमुक्ता भङ्गाः ।

सांप्रतममीषां भङ्गानां विषयविशेषप्रतिपादनार्थमाह—

पत्तेयबुद्ध निण्हग-उवासए केवली य आसज्ज ।
खइयाइए य भावे, पडुच्च भंगो य जोएज्जा ॥ १६ ॥

प्रत्येकबुद्धान् निह्नवान् उपासकान् केवलिनश्चाश्रित्य तथा क्षायिकादीन् भावान् प्रतीत्य आश्रित्य भङ्गकान् अनन्तरोदितान् योजयेत् । तद्यथा—न प्रवचनतः साधर्मिको लिङ्गत एष भङ्गः प्रत्येकबुद्धात्केवलिनश्च । जिनानाश्रित्य योजनीयः । लिङ्गतो न प्रवचनत इत्ययं निह्नवान्, प्रवचनतो न लिङ्गत इत्येष श्रावकान्, प्रवचनतो न दर्शनत इत्यादयस्तु क्षायोपशमिकदर्शनज्ञानचारित्रादीनाश्रित्य योजयितव्यास्ते च तथैव यथास्थानं योजिता एवेति । व्य० २ उ० । समानधार्मिको हि सम्यग्दृष्टिः साधुः साध्वी श्रावकः श्राविका च । श्रा० । (साधर्मिकाणां स्तैन्यं कुर्वतोऽनवस्थाप्यो भवतीत्युक्तम् ' अणवट्ठप्प ' शब्दे प्रथमभागे २६३ पृष्ठे ) सदृशकल्पिके, समाचारीस्थे, आचा० १ श्रु० ८ अ० ५ उ० ।

पंचहिं ठाणेहिं समणे णिग्गंथे साहम्मियं संभोतियं विसंभोतियं करेमाणे णातिक्कमति, तं जहा-सकिरितट्ठाणं पडिसेवित्ता भवति १ पडिसेवित्ता णो आलोएइ २ आलोइत्ता णो पट्ठवेति ३ पट्ठवेत्ता णो णिव्विसति ४ जाइं इमाइं थेराणं ठितिपकप्पाइं भवंति ताइं अतियंचिय २ पडिसेवेति । से हंदऽहं पडिसेवामि किं मं थेरा करिस्संति ? ५ । पंचहिं ठाणेहिं समणे निग्गंथे साहम्मियं पारंचियं करेमाणे णातिक्कमति, तं०—सकुले वसति सकुलस्स भेदाते अब्भुट्ठित्ता भवति १ गणे वसति गणस्स भेदाते अब्भुट्ठत्ता भवति २ हिंसप्पेही ३ छिद्दप्पेही ४ अभिक्खणं पसिणायतणाइं पउंजित्ता भवति ५ । ( सू० ३९८ )

साम्भोगिकम्-एकभोजनमण्डलीकादिकं विसाम्भोगिकं—मण्डलीबाह्यं कुर्वन्नातिक्रामति आज्ञामिति गम्यते, उचितत्वादिति । सक्रियं—प्रस्तावादशुभकर्मबन्धयुक्तं स्थानम् अकृत्यविशेषलक्षणं प्रतिषेविता भवतीत्येकं, प्रतिषेव्य गुरवे नालोचयति—न निवेदयतीति द्वितीयम्, आलोच्य गुरूपदिष्टप्रायश्चित्तं न प्रस्थापयति-कर्त्तुं नारभत इति तृतीयं, प्रस्थाप्य न निर्विशति-न समस्तं प्रवेशयति, अथवा-'निर्वेश परिभोग' इति वचनान्न परिभुङ्क्ते—नासेवत इत्यर्थः इति चतुर्थम्, यानीमानि सुप्रसिद्धतया प्रत्यक्षाणि स्थविराणां—स्थविरकल्पिकानां स्थितौ—समाचारे प्रकल्प्यानि-प्रकल्पनीयानि योग्यानि विशुद्धपिण्डशय्यादीनि स्थितिप्रकल्प्यानि, अथवा—स्थितिश्च—मासकल्पादिका प्रकल्प्यानि च-पिण्डादीनि स्थितिप्रकल्प्यानि तानि "अइयंचिय अइयंचिय" त्ति-अतिक्रम्यातिक्रम्येत्यर्थः, प्रतिषेवते तदन्यानीति गम्यते । अथ सङ्घाटकादिः साधुस्तं पर्यालोचयति—यथा नैतत्प्रतिषेवितुमुचितं गुरवो वा ते किं करिष्यति, तत्रेतर आह— 'से' इति तदकल्प्यजातं 'हंदे' त्ति-कोमलामन्त्रणं वचनं; हमित्यकारप्रश्लेषादहं प्रतिषेवामि किं मम स्थविरा—गुरवः करिष्यन्ति ?, न किञ्चित्तैः रुष्टैरपि मे कर्त्तुं शक्यत इति बलोपदर्शनं पञ्चममिति । "पारंचियं" ति-दशमप्रायश्चित्तभेदवन्तमपहृतलिङ्गादिकमित्यर्थः कुर्वन्नातिक्रामति सामायिकमिति गम्यते । कुले—चान्द्रादिके वसति गच्छवासीत्यर्थस्तस्यैव कुलस्य भेदायान्योऽन्यमधिकरणोत्पादनेनाभ्युत्थाता भवति; यतत इत्यर्थः इत्येकम्, एवं गणस्यापीति द्वितीयं, तथा हिंसां—वधं साध्वादेः प्रक्षते—गवेषयतीति हिंसाप्रेक्षीति तृतीयं; हिंसार्थमेवाप्रमार्जनार्थं वा 'छिद्राणि' प्रमत्ततादीनि प्रेक्षत इति छिद्रप्रेक्षीति चतुर्थम्, अभीक्ष्णमितीह पुनःशब्दार्थः ततश्चाभीक्ष्णमभीक्ष्णं; पुनः पुनरित्यर्थः; प्रश्ना—अङ्गुष्ठकुड्यप्रश्नादयः सावद्यानुष्ठानपृच्छा वा त एवायतनान्यसंयमस्य प्रश्नायतनानि प्रयोक्ता भवति, प्रयुङ्क्त इत्यर्थः इति पञ्चमम् । स्था० ५ ठा० १ उ० ।

इदानीं साधर्मिकद्वारप्रतिपादनायाह—

दिट्ठमदिट्ठा दुविहा, णायगुणा चेव हुंति अन्नाया ।
अदिट्ठा वि य दुविहा, सुय असुय पसत्थमपसत्था ॥ ६५ ॥

साधर्मिका द्विविधा—दृष्टा, अदृष्टाश्च । 'णायगुणा तह य चेव अन्नाया' ये ते दृष्टाः साधर्मिकास्ते द्विविधाः कदाचित् ज्ञातगुणा भवन्ति कदाचिदज्ञातगुणाः, 'अदिट्ठा वि य दुविहा' येऽप्यदृष्टाः साधर्मिकास्तेऽपि द्विविधाः—'सुय असुय' त्ति-श्रुतगुणाः, अश्रुतगुणाश्च । 'पसत्थापसत्थ' त्ति- ये ते ज्ञातगुणास्ते द्विविधाः—प्रशस्तज्ञातगुणाः, अप्रशस्तज्ञातगुणाश्च । येऽपि तेऽज्ञातगुणास्तेऽपि द्विविधाः—प्रशस्ताज्ञातगुणाः, अप्रशस्ताज्ञातगुणाश्चेति । येऽपि ते श्रुतगुणास्तेऽपि द्विविधाः—प्रशस्तश्रुतगुणाः, अप्रशस्तश्रुतगुणाश्च । येऽपि तेऽश्रुतगुणास्तेऽपि द्विविधाः—प्रशस्ताश्रुतगुणाः, अप्रशस्ताश्रुतगुणाश्च ।

आह—ये दृष्टास्ते कथमज्ञातगुणा भवन्तीत्यत आह—

दिट्ठा व समोसरणे, न य नायगुणा हवेज्ज ते समणा ।
सुअमुणपसत्थ इयरे, समणुन्निअरे य सव्वे वि ॥ ६६ ॥

दृष्टा—उपलब्धाः सामान्यतो झटिति क्व ?-समवसर-

ण-स्नात्रादौ, न च ज्ञातगुणास्ते भवेयु श्रमणा," "सुयगुणपसत्थ इयरे'त्ति-इतरे इति अहष्टानां परामर्शः; ते अदृष्टा 'सुयगुणे'त्ति-श्रुतगुणा अपि सन्तः 'पसत्थ'त्ति-प्रशस्तश्रुतगुणा गृह्यन्ते, तदनेन 'सुयगुणपसत्थ" त्ति-भावितम्, "इयरे' त्ति-इतरे इत्यदृष्टानां परामर्शः ते अदृष्टा श्रुतगुणा इत्ययमनन्तरगाथोपन्यस्तभङ्गकः एक सूचित इति 'समणुनियरे य सव्वऽवि" सर्वेऽपि चैते श्रुतादिगुणभेदभिन्ना साधव समनोज्ञा इतरे च—असमनोज्ञा इति च, साम्भोगिका असाम्भोगिकाश्चेत्यर्थः ॥ ओघ०।

साहम्मिअणुववूहण–साधर्मिकानुपबृंहण–न०। सम्यग्दृष्टिः साधु साध्वी श्रावकः श्राविका च एतेषां कुशलमार्गे—प्रवृत्तानामतिचारे; श्रा०।

साहम्मियचेइय–साधर्मिकचैत्य–न०। चारित्तकसाध्वादीना प्रतिकृतिरूपे चैत्ये, जीत०।

साहम्मियत्तविणय–साधर्मिकत्वविनय–पुं०। सम्यक्त्वग्रहणे, व्य० १० उ०।

साहम्मियपीइ–साधर्मिकप्रीति–स्त्री०। समानधर्मजनविषयप्रेमजन्यवात्सल्ये, कार्ये कारणोपचारात् सामानधर्मकानुरागे, पञ्चा० ३ विव०।

साहम्मियवग्ग–साधर्मिकवर्ग–पुं०। स्वजनातिरिक्तसमानधार्मिकजने, पञ्चा० ६ विव०।

साहम्मियवच्छल्ल–साधर्मिकवात्सल्य–न०। साधर्मिकाणां निमन्त्रणभोजन, ध०। साधर्मिकाणा वात्सल्यमपि प्रतिवर्षं यथाशक्ति कार्यं, सर्वेषां तत्करणाशक्तेनाप्येककद्वयादीनामवश्यं तत् कार्यं समानधर्माणो हि प्रायेण दुष्प्रापा, यत. "सर्वे सर्वे मिथः सर्व-संबन्धालब्धपूर्विण । साधर्मिकादिसंबन्ध-लब्धारस्तु मिता कचित्" ॥ १ ॥ तेषा महत्पुण्यलभ्यसंगमाना प्रतिपत्तेस्तु फलमतुलमेव यत् । "एगत्थ सव्वधम्मो, साहम्मियवच्छल्लं तु एगत्थ । बुद्धितुलाए तुलिआ, दो वि अतुल्लाई भणिआइं ॥ १ ॥" साधर्मिकवात्सल्येनैव च राज्ञामतिथिसंविभागव्रताराधन राजपिण्डस्य मुनीनामकल्प्यत्वादिति तद्विधिस्त्वेवम्-सतिसामर्थ्ये प्रत्यहमेकद्व्यादिसाधर्मिकाणामन्यथा तु स्वपुत्रादिजन्मोत्सवे विवाहेऽन्यस्मिन्नपि प्रकरणे साधर्मिकजनानां सविनय निमन्त्रण भोजनवेलायां स्वयं पादप्रक्षालनादिप्रतिपत्तिपुरस्सरं विशिष्टासनेषु संनिवेश्य प्रवरभाजनेषु नानाव्यञ्जनसहितविशिष्टभोजनताम्बूलवस्त्राभरणादिदानम् । आपन्निमग्नाना च स्वधनव्ययेनाऽभ्युद्धरणम् । अन्तरायदोषात् विभवक्षये पुनः पूर्वभूमिकाप्रापणम् । उक्तमपि-" न कयं दीणुद्धरणं, न कयं साहम्मिआण वच्छल्लं । हिअयम्मि वीअराओ, न धारिओ हारिओ जम्मो ॥ १ ॥ " धर्मे च विषीदतां तेन तेन प्रकारेण स्थैर्यारोपणं, प्रमाद्यता च स्मारणवारणचोदनप्रतिचोदनादिकरणम् । यत –" सारणा वारणा चेव, चोअणा पडिचोअणा । सावएणावि दायव्वा, सावयस्स हिआवहा ॥ १॥" एतदर्थो यथा विस्मृतस्य धर्मकृत्यस्य ज्ञापनं सारणा, तथा कुमार्गगामकृत्यस्य निषेधनं वारणा, एतयोश्च सतत क्रियमाणयोर्हि कस्यचित्प्रमादबहुलस्य नियमस्खलितादौ युक्तम्, किं श्राद्धकुलोत्पन्नस्य तवेदं प्रवर्तितुमित्यादिवाक्यैः सोपालम्भं प्रेरणं चोदना, तथा तथैवाऽसकृत् स्खलितादौ धिग् ते जन्मेत्यादि, निष्ठुरवाक्यैर्गाढतरप्रेरणा प्रतिचोदना। उक्तं च-"पम्हुट्ठे सारणा वुत्ता, अणायारस्स वारणा। चुक्काणं चोअणा होइ, निट्ठुर पडिचोअणा॥१॥" त्ति। एतच्च भाववात्सल्यम्। यतो दिनकृत्ये "साहम्मिआण वच्छल्लं, एअं अत्थ विआहिअं। धम्मट्ठाणेसु सीअंतं, सव्वभायेण चोअणा ॥१॥" साधर्मिकाणां वात्सल्यमेनदन्तरोक्तं द्रव्यवात्सल्यम्, अन्यदिति भाववात्सल्यमिति तदर्थ ॥४॥ इत्थं च तेषां प्रतिपत्तिरेव श्रेयसी नतु तैः सह कलहादि, यत "विचार्यं कलहं चेव, सव्वहा परिवज्जए। साहम्मिएहिं सद्धिं तु, जओ एअं विआहिअं ॥१॥ जो किर पहणइ साह-म्मिअम्मि कोवेण दंसणं यम्मि। आसायणं तु सो कुण-इ निक्किवो लोगबधूणं ॥२॥" इति साधर्मिकवात्सल्यद्वारम्। भ० २ अधि०। (साधर्मिकस्य वैयावृत्त्यकरणफलम् 'महाणिज्जर' शब्दे पञ्चभागे गतम्।)

साहम्मियवेयावच्च–साधर्मिकवैयावृत्य–न०। साध्व्या साधोर्वा वैयावृत्त्ये, औ०।

साहम्मिया–साधर्मिकी–स्त्री०। सधर्मिण्या संयम्याम्, बृ० ३ उ०।

साहय–संहृत–त्रि०। सङ्क्षिप्ते, तं०। आ० म०।

साहयमोणंद–संहृतसौनन्द–न०। ऊर्ध्वीकृते उदूखलादिकाष्ठे, जी०। "साहयसोणंदमुसलदप्पणं०" सहृतसौनन्दं नाम ऊर्ध्वीकृतमुदूखलाकृतिकाष्ठम्–तच्च मध्ये तनु उभयोः पार्श्वयोर्बृहत् मुशलं प्रतीतम् दर्पणशब्देनेहावयवे समुदायोपचारादर्पणगण्डो गृह्यते। जी० ३ प्रति ४ अधि०।

साहर–संवृ–धा०। सवरणे, "संवृगे साहर-साहट्टौ" ॥ ८। ४। ८२ ॥ इति संवृणोतेः साहरादेश। संवृणोति। प्रा०। नयने, स्था० ३ ठा० ३ उ०। आचा०।

साहरग–साहरक–पुं०। रूपके, नि० चू० २ उ०।

साहरण–संहरण–न०। देवेन नयने, भ० ६ श० ३१ उ०।

साहरमाण–संहरत्–त्रि०। अन्यत्र नयति, भ० ५ श० ४ उ०।

साहरावित्तए–संहर्तुम्–अव्य०। मोचयितुमित्यर्थे, कल्प० १ अधि० २ क्षण।

साहरिज्जमाण–संह्रियमाण–त्रि० नीयमाने, जं० १ वक्ष०। जी०। आचा०। यत्कुरादिक शीतलीकरणाय पटहादिषु विस्तारित तत्पुनर्भाजने क्षिप्यमाणं संह्रियमाणमुच्यते। औ०।

साहरिज्जमाणचरय–संह्रियमाणचरक–पुं०। सह्रियमाणस्यैव पिण्डस्य तथाविधाभिग्रहविशेषाद्। भिक्षाचरे, औ०।

साहरित्तए–संहर्तुम्–अव्य०। प्रवेशयितुमित्यर्थे, भ० ५ श० ४ उ०।

साहरिय-संहृत-त्रि०। नीते, स०। तस्मादन्यत्र क्षिप्ते, ग० १ अधि०। प्रव०। स्था०। आचा०। पञ्चा०। दानानुचितं सचित्तेषु पृथिव्यादिषु अचित्तेषु वा केषुचित्पात्रेषु निक्षिप्य तेन रिक्तीकृतपात्रकेणैव भक्तं ददत उत्पादनादोषे, ध० ३ अधि०। पं० चू०। (संहृतद्वारम् 'एसणा' शब्दे तृतीयभागे ५६ पृष्ठे उक्तम्।)

साहस-साहस-न०। अकार्यकरणे, सूत्र० १ श्रु० ४ अ० १ उ०।

साहस्स-त्रि०। सहस्रमूल्ये, बृ० ३ उ०।

साहसकारि(ण्)-साहसकारिन्-त्रि०। साहसं कर्तुं शीलमस्येति साहसकारी। अकार्यकारिणि, सूत्र० १ श्रु० १० अ०। (अत्रोदाहरणम्। 'आउक्काय' शब्दे द्वितीयभागे २७ पृष्ठे गतम्।)

साहसविवज्जिय-साध्वसविवर्जित-त्रि०। अविमृश्य प्रवृत्तिः साध्वसं तद्विवर्जितः। सम्मुखीभूय युद्धप्रदानलक्षणसाध्वसरहिते, व्य० १ उ०।

साहसिय-साहसिक-पुं०। सहसाऽविमर्शात्मकेन बलेन वर्तते इति साहसिकः। भाविनमर्थमविभाव्य प्रवर्तमाने, स्था०। अविमर्शितकारिणि, ज्ञा० १ श्रु० २ अ०। धैर्यवति, प्रश्न० ३ आश्र० द्वार। सात्त्विके, औ०। अविमृश्य पापकर्मनिवृत्ते, दशा० ६ अ०। अकृत्यकरणपरे, दशा० ६ अ० २ उ०। असमीक्षितकारिणि, ज्ञा० १ श्रु० १८ अ०। सहसाऽवितर्क्य प्रवर्तत इति साहसिकः पुरुषः, तत्प्रवर्तितत्वात्साहसिकः। साहसिकप्रवर्तिते प्राणातिपाते, प्रश्न० १ आश्र० द्वार।

साहस्सिय-साहस्रिक-पुं०। सहस्रयोधिनि मल्ले, व्य० १ उ०।

साहस्सी-साहस्री-स्त्री०। सहस्रे, भ० १ श० १ उ०।

साहा-शाखा-स्त्री०। "खघथधभाम्" ॥ ८। १। १८७ ॥ इत्यनेन खस्य हः। एकाचार्यसंततावेव पृथक्पृथगन्वये विवक्षितायपुरुषसंततौ, यथा अस्मदीया वइरस्वामिनाम्नी 'वइरी' शाखा। विशे०। एकदेशे, कल्प० १ अधि० ६ क्षण। पल्लवे, आचा० २ श्रु० १ चू० १ अ० ७ उ०। वृक्षडाले, दश० ४ अ०। वृक्षभुजायाम्, दश० ६ अ० २ उ०। स्था०। स्थूला शाखा सूक्ष्मा प्रशाखा। सम्म० ३ काण्ड। उत्त०। नि० चू०। वेदस्य ऋषिभेदाद्भिन्नपाठे, आ० म० १ अ०। 'साहाहेउं सहीहेउं महामोहं पकुव्वइ' वशीकरणादिप्रयोग श्लाघाहेतोः सखिहेतोर्भिन्ननिमित्तमित्यर्थः। स० ३० सम०।

स्वाहा-अव्य०। देवतार्थं द्रव्यत्यागार्थं प्रयुज्यमाने शब्दे, प्रति०।

साहाणुसाह-पुं०। अयं पारसीकः शब्दः। राज्ञामपि राजनि, नि० चू० १ उ०।

साहाभंग-शाखाभङ्ग-पुं०। वृक्षडालैकदेशभङ्गे, दश० ४ अ०।

साहामय-शाखामृग-पुं०। वानरे, पाइ० ना०।

साहारग-साधारक-त्रि०। साधारे, आ० म० १ अ०।

साहारण-साधारण-न०। सामान्ये, आचा० २ श्रु० १ चू० १ अ० १ उ०। द्रव्यकारणे, "कारणं ति वा कारगं ति वा साहारणं ति वा एगट्ठा" आ० चू० १ अ०। द्रव्या०। आव०। आ० म०। संकीर्णे, विशे०। आचा०। स०। साधारणशरीरनामकर्मोदयवर्तिनि, प्रश्न० १ आश्र० द्वार। अनन्तकायिके, प्रव० ४ द्वार। नि० चू०। उपकारे, स० ३० सम०। (साधारणवनस्पतिकायिकानामपि किं सर्वकालं शरीरावस्थामधिकृत्य किं प्रत्येकशरीरत्वमुत कस्मिंश्चिदवस्थाविशेषेऽनन्तजीवत्वमपि संभवतीति 'अणन्तजीव' शब्दे प्रथमभागे २६४ पृष्ठे उक्तम्।) ('वणप्फइ' शब्देऽपि षष्ठभागे उक्तम्।)

सम्प्रति साधारणलक्षणमाह—

समयं वक्कंताणं, समयं तेसिं सरीरनिव्वत्ती।
समयं आणुग्गहणं, समयं ऊसासनीसासो ॥६५॥
इक्कस्स उ जं गहणं, बहूण साहारणाण तं चेव।
जं बहुयाणं गहणं, समासओ तं पि इक्कस्स ॥६६॥

'समयमि' त्यादि गाथाद्वयम्, समयं—युगपद् व्युत्क्रान्तानाम्—उत्पन्नानां सतां तेषां—साधारणजीवानां समकम्—एककालं शरीरनिर्वृत्तिर्भवति, समकं च प्राणापानग्रहणं—प्राणापानयोग्यपुद्गलोपादानम्, ततः समकम्—एककालं तदुत्तरकालभाविनावुच्छ्वासनिःश्वासौ। तथा एकस्य यत् आहारादिपुद्गलानां ग्रहणं तदेव बहूनामपि साधारणजीवानामवसेयम्। किमुक्तं भवति?—यत् आहारादिकमेको गृह्णाति शेषा अपि तच्छरीराश्रिता बहवोऽपि तदेव गृह्णन्तीति, तथा च यद्बहूनां ग्रहणं तत्संक्षेपादेकस्य शरीरे समावेशात् एकस्यापि ग्रहणम्।

सम्प्रत्युक्तार्थोपसंहारमाह—

साहारणमाहारो, साहारणमाणुपाणगहणं च।
साहारणजीवाणं, साहारणलक्खणं एयं ॥६७॥

सर्वेषामप्येकशरीराश्रितानां जीवानामुक्तप्रकारेण यत् साधारणं साधारण्ये, सूत्रे नपुंसकनिर्देशः आर्षत्वात् आहारः आहारयोग्यपुद्गलोपादानम्, यच्च साधारणं प्राणापानयोग्यपुद्गलोपादानम् उपलक्षणमेतत् यौ साधारणावुच्छ्वासनिःश्वासौ, या च साधारणा शरीरनिर्वृत्तिः एतत्साधारणजीवानां लक्षणम्। प्रज्ञा० १ पद।

सम्प्रति पर्याप्तापर्याप्तभेदेन प्रत्येकसाधारणवनस्पतिजीवानां प्रमाणमाह—

पत्तेया पज्जत्ता, पयरस्स असंखभागमित्ता उ।
लोगाऽसंखापज्जत्तयाण साहारणमणंता ॥१०२॥
एएहिं सरीरेहिं, पच्चक्खं ते परूविया जीवा।
सुहुमा आणागिज्झा, चक्खुप्फासं न ते इंति ॥१०३॥

'पत्तेया पज्जत्ता' इत्यादि। पर्याप्ताः प्रत्येकवनस्पतिजीवाः घनीकृतस्य सम्बन्धिनः प्रतरस्य असंख्येयतमे भागे यावन्त आकाशप्रदेशास्तावत्प्रमाणा भवन्ति, अपर्याप्तानां पुनः प्रत्येकतरुजीवानामसंख्येया लोकाः परिमाणं, पर्याप्तानामपर्याप्तानां च साधारणजीवानाम् अनन्ता लोकाः। किमुक्तं भवति?—असंख्येयलोकाकाशप्रदेशप्रमाणा अपर्याप्ताः प्रत्येकतरवः, अनन्तलोकाकाशप्रदेशप्रमाणाः पर्याप्ता अपर्याप्ताश्च साधारणजीवा इति। प्रज्ञा० १ पद।

साहारणकप्प–साधारणकल्प–पुं० । शय्योपध्यादिसाधारण-सामाचार्याम् , पं० भा० ।

एत्तो साहारणं वोच्छं ।

सेज्जुवहिमायआहा–रमेव साहार तह य अणुकंपा ।
आदिपणगं तु तुल्लं, भइयं अणुसासणाए तु ॥
सेज्जुवहिमायआहा–र पमिद्धा एते होंति चत्तारि ।
साहारणकप्पे पुण, मूलगुणा उत्तरगुणा य ॥
साहरण तु किं पुण, सेज्जादुप्पादणाण सव्वेसिं ।
सामण्णगुणा ते उ, तम्हा साहारणं जाण ॥
आदिपणगं दुतुल्लं, जाणसु सेज्जाति जाव साहारं ।
ठियमट्ठियाण दोण्ह वि, एते खलु होंति तुल्ला तु ॥
अहवादिपणगमूलं, (गुण)पंचेते होंति दोण्हि तुल्ला तु ।
समणाण व समणीण व, तम्हा साहारण जाण ॥

दारं ।

भइयमणुसासणंती, अणुकंपण सासण त्ति एगट्ठा ।
कोइ कदाइ अणिउणो, ण तरति अणुमासणं काउ ॥
सुहमारियएणं, होति विसुद्धो य अंतरप्पा से ।
तस्स व होंति वताई, पंच वि साहारणाई तु ॥
आणा तित्थकराणं, सामण्ण संजताणं सव्वेसिं ।
सुहुमे वि तप्पमाए, अणुमासणयं कुणति जो तु ॥
तेसिं अणुकंपया णि–च्छएण जम्हा उवट्ठिता होति ।
तेणऽणुसट्ठिऽणुकंपा, एगट्ठा होंति णायव्वा ॥
साहारकप्पो एसो । पं० भा० ५ कल्प ।

इयाणिं साहरणकप्पो तत्थ गाहा–सेज्जोवहिं,सो कह भवइ, उच्यते–शय्योपध्याहारादिभिः आयत्तो । कह सो साहारणो भवइ, उच्यत–एत्र तानि आहाराईणि सोढव्वयताणं मइव्वयाणि साहारणाणि भवति सामान्यानीत्यर्थः । सव्वेसिं पि आहाराइ सोढयताणं सपत्ताणं सजयाण ताणि विद्यन्त स्वाध्याययोगयुक्तानाम् । अणुकंप त्ति वा अणुमासण ति वा एगट्ठा । कयाइ काइ अनिउणो न तरइ अणुसासिउं न सुहमारियाए सुत्तत्थतदुभयाए अव्वोच्छित्ति काउं वत्थपायाइसु वा सविभाग भावसुद्धा पुण तस्स वि साहारणाणि भवन्ति चेव । एस साहारणकप्पो । पं० चू० ५ कल्प ।

साहारणगुणप्पसंसा–साधारणगुणप्रशंसा–स्त्री० । लोकलोकोत्तरयोः सामान्यानां गुणानां प्रशंसायाम् , ध० १ अधि० ।

साहारणट्ठिय–साधारणस्थित–त्रि० । साधारणावग्रहस्थिते, व्य० ४ उ० ।

साहारणणाम–साधारणनामन्–न० । नामकर्मभेदे कर्म० ६ कर्म० । श्रा० । यदुदयादनन्तानां जीवानां साधारणमेकं शरीरं भवति तत्साधारणं नाम । कर्म० १ कर्म० । प्रव० । ननु कथमनन्तजीवानामेकं शरीरमुत्पद्यते । तथाहि–य एव प्रथममुत्पत्तिमागतस्तेन तच्छरीरं निष्पादितमनेन च सर्वात्मना क्रोडीकृतं, तत कथं तत्रान्येषां जीवानामवकाश न खलु देवदत्तशरीरं देवदत्त इव सकलशरीरेण महान्योन्यानुगमपुरस्सरमन्येऽपि जीवा प्रादुर्भवन्ति तथा दर्शनात् । अपि च–सत्यवकाशे येनैव तच्छरीरं निष्पाद्यान्यान्यानुगमेनन क्रोडीकृत स एव तत्र प्रधान इति तस्यैव पर्याप्तापर्याप्तव्यवस्था प्राणापानादियोग्यपुद्गलोपादानं वा भवेन्न शेषाणामिति । तदेतदसम्यक् जिनवचनपरिज्ञानाभावात् , ते ह्यनन्ता अपि जीवास्तथाविधकर्मोदयसामर्थ्येन समकमेवोत्पत्तिदेशमधितिष्ठन्ति, समकमेव तच्छरीराश्रिताः पर्याप्तिं निर्वर्त्तयितुमारभन्ते, समकमेव च पर्याप्ता भवन्ति, समकमेव च प्राणापानादियोग्यान्पुद्गलानाददते । यच्चैकस्य पुद्गलाभ्यवहरणं तदन्येषामनन्तानामपि साधारणम् । यच्चानन्तानन्तत्वाद्विवक्षितस्यापि जीवस्य ततो न काचिदनुपपत्तिरिति । पं० सं० ३ द्वार ।

साहारणसरीर–साधारणशरीर–न० । अनेकजीवसामान्ये शरीरे, भ० २० श० १ उ० ।

सम्प्रति साधारणवनस्पतिकायिकप्रतिपादनार्थमाह–

से किं तं साहारणसरीरबादरवणस्सइकाइया ?, साहारणसरीरबादरवणस्सइकाइया अणेगविहा पन्नत्ता, तं जहा–
"अवए पणए सेवा–ले लोहिणी मिहुत्थु हुत्थिभागा (य)
अस्सकण्णि सीहकन्नी , सिउंढि तत्तो मुसुंढी य ॥४३॥
रुरु कुण्डरिया जीरू, छीरविराली तहेव किट्टीया ।
हालिद सिंगबेरे य, आलूगा मू(मू)लए इय ॥ ४४ ॥
कंबूयं कन्नुक्कड,सुमत्तओ वलइ तहेव महुसिंगी ।
नीरुह सप्पसुयंधा, छिन्नरुहा चेव बीयरुहा ॥ ४५ ॥
पाढामियवालुंकी, महुररसा चेव रायवत्ती य ।
पउमा माढरि दंती–चंडि किट्ठी त्ति या अवरा ॥४६॥
मासपण्णि मुग्गपण्णी, जीवियरसहे य रेणुया चेव ।
काओली खीरकाओली, तहा भंगी नही इय ॥४७॥
किमिरासि भद्द मुच्छा, णंगलई पेलुगा इय ।
किण्हपउले य हढे, हरतणुया चेव लोयाणी ॥ ४८ ॥
कण्हे कंदे वज्जे, सूरणकंदे तहेव खल्लूरे ।
एए अणंतजीवा, जे यावन्ने तहाविहा ॥ ४९ ॥

'से किं तमि' त्यादि । अथ के ते साधारणशरीरबादरवनस्पतिकायिका , सूरिराह–साधारणशरीरबादरवनस्पतिकायिका अनेकविधाः प्रज्ञप्तास्तद्यथा–'अवए' त्यादि , एते च केचिदतिप्रसिद्धत्वात् केचिद्देशविशेषतः स्वयमवगन्तव्याः 'जे यावन्ने तहाविहा' इति । येऽपि चान्ये उक्तव्यतिरिक्तास्तथाप्रकारा–उक्तप्रकारास्तेऽप्यनन्तजीवा ज्ञातव्याः । प्रज्ञा० १ पद । जी० । स० । ( पृथ्व्यादीनां साधारणशरीरत्वं 'पुढवीकाइय' शब्दे पञ्चमभागे गतम् । )

साहारमाण–संह्रियमाण–त्रि० । स्वस्थानादन्यत्र नीयमाने, व्य० ।

अह साहारमाण तु, वट्टेउं जो उ दारग ।

दाणए अचलितो, छट्टी एसाऽवि एसणा ॥

अथ वर्णयितुं साहरमाणं यो दापयेत् तस्य वचनमिदं स प-रिवेपकस्तस्मात्स्थानात् मनागप्यचलितो दद्यात्, एतत्साह-रमाणमुच्यते एषाऽपि षष्ठी एषणा द्रष्टव्या । ध्यं० ६ उ० ।

साहाविय-स्वाभाविक-त्रि० । अकृत्रिम, आव० ४ अ० । वि-शे० । दर्श० । सहज, ज्ञा० १ श्रु० १ अ० ।

साहिऊण-साधयित्वा-अव्य० । साधनं कृत्वेत्यर्थे, दर्श० ४ तत्त्व ।

साहिंत-साधयत्-त्रि० । प्रतिपादयति, सूत्र० १ श्रु० १ अ० ५ उ० । प्रश्न० ।

साहिगरण-साधिकरण-त्रि० । सोद्यधिकरणेन साधिकर-ण । युद्धार्थमुपस्थिते, स्था० ५ ठा० २ उ० । कलहयति, स्था० ६ ठा० ३ उ० । सह अधिकरणेन वर्त्तते इति साधिकरणः । कषायभावशुभभावाधिकरणसहिते, नि० चू० १० उ० ।

साहिगरणि(ण्)-साधिकरणिन्-त्रि० । सह भवितोऽधिकरणे न शरीरादिना वर्त्तते इति समासान्तविधि. साधिकरणी । शरीरादिसहिते, 'साहिगरणी जीवे' साधिकरणी-सं-सारिजीवस्य शरीरेन्द्रियरूपाधिकरणस्य सर्वदैव सह-चारित्वात्साधिकरणत्वमुपदिश्यते शस्त्राद्यधिकरणापेक्षया तु स्वस्वामिभावस्य तदविरतिरूपस्य सह वर्त्तित्वाज्जीव साधिकरणीत्युच्यते । भ० १६ श० १ उ० ।

साहिट्ठलव-स्वामीष्टार्थलव-पुं० । स्वामिमतार्थलेशप्राप्तौ, प्रति० ।

साहिय-स्वाहित-त्रि० । सुष्ठु आहित-उपलब्ध. स्वाहितः । स्वजातश्रामादौ, "अयंस अवर धम्मे, णायपुत्तेण साहिए ।" आचा० १ श्रु० ८ अ० ८ उ० ।

साहिज्ज-साहाय्य-न० । सहायकृत्यकरणे, व्य० ३ उ० ।

साहिया-साहिका-स्त्री० । गृहपङ्क्तौ, बृ० १ उ० ३ प्रक० ।

साही-साही-स्त्री० । गृहपंक्तौ, नि० चू० ३ उ० । आव० ।

साही-पारसीक शब्द । राजनि, नि० चू० १० उ० ।

साहीण-स्वाधीन-त्रि० । अपरायत्ते, दश० २ अ० । सं० । आचा० । स्वायत्ते, आ० १ श्रु० ५ अ० ।

साहीणभोगचाइ(ण्)-स्वाधीनभोगत्यागिन्-पुं० । स्वजन-क्रियमाणमद्यांङ्गनारागाद्यनास्वादिनि, व्य० २ उ० ।

साहु-साधु-न० । "ख-घ-थ-ध-भाम्" ॥८।१।१८७॥ इति धस्य ह । प्रा० । शोभने, सूत्र० २ श्रु० १ अ० । आचा० । औ० । निर्दोषे, ठा० ११ ठा० । पुं० । सम्यग्ज्ञानदर्शनचारित्रैर्मोक्षं साधयतीति साधु । दर्श० १ तत्त्व । साधयति सम्यग्दर्शनादियोगैर-पवर्गमिति साधु । दश० १ अ० । साधयति-पोषयति विशिष्टक्रियाभिरपवर्गमिति साधु । उत्त० १ अ० । विशे० । साधयति ज्ञानादिशक्तिभिर्मोक्षमिति साधु । समतां च सर्व-भूतेषु ध्यायतीति निरुक्तन्यायात् साधु । साहाय्यको वा सं-यमकारिणः साधयतीति वा साधु । दश० ३ अ० । भ० । अभिलषितमर्थं साधयतीति साधु । कृवापाजात्यादिना उणप्रत्यय । आ० म० १ अ० । निर्वाणसाधकान् योगान् साधयतीति साधु । आव० ४ अ० । निर्वाणसाधकयो-गसाधनात्साधु । दश० १० अ० । अष्टादशदोषाणां वर्जके, दर्श० ४ तत्त्व । सुयतौ, दर्श० ४ तत्त्व । यतौ, पञ्चा० ११ विव० । मुक्तिसाधके, विशे० । यथावस्थितयतौ, आचा० २ श्रु० ३ चू० । ध० र० । मुनौ, पा० । सूत्र० । ज्ञानदर्शनचारित्र-क्रियोपेते मोक्षमार्गव्यवस्थितसाधौ, सूत्र० २ श्रु० ५ अ० । ज्ञानादिक्रियाभिर्मुक्तिसाधनप्रवणे साधौ, चं० प्र० १ पाहु० । श्रेष्ठे, सूत्र० २ श्रु० २ अ० । आचा० । विशे० । भिक्षौ, सूत्र० १ श्रु० १३ अ० । सदाचारे, सूत्र० १ श्रु० ३ अ० १ उ० । पारमार्थिकयतौ, पं० व० ४ द्वार । ब्रह्मचर्यादिगुणान्विते, स्था० १० ठा० ३ उ० ।

सत्थुत्तगुणी साहू, ण सेस इह णो पइण्णा इह हेऊ ।
अगुणत्ता इति णेओ, दिट्ठंतो पुण सुवण्णं व ॥११६१॥

शास्त्रोक्तगुणी साधु पर्यभूत एव न शेषा-शास्त्रोक्ता नाऽ-साक प्रतिज्ञा, पक्ष इत्यर्थ । इह च शेषा इति अत्र हेतु-साधक अगुणत्वादिति ज्ञेय, तद्गुणरहितत्वादित्यर्थ. । दृष्टान्तः पुन. सुवर्णमिवात्र व्यतिरेकत इति गाथार्थः ।

सुवर्णगुणानाह—

विसघाइरसायणमं-गलत्थविणए पयाहिणावत्ते ।
गुरुए अडज्झकुत्थे, अट्ठ सुवण्णे गुणा हुंति ॥११६२॥

विषघाति सुवर्णं तथा रसायनं वयस्तम्भनं मङ्गलार्थं म-ङ्गलप्रयोजनं विनीतं कटकादियोग्यतया प्रदक्षिणावर्त्तम-ग्नितप्त प्रकृत्या गुरु सारतया अदाह्यं सारतयैव अकुथनी-यमत एवमष्टौ सुवर्णे गुणा भवन्त्यसाधारणा इति गाथार्थ ।

दार्ष्टान्तिकमधिकृत्याह—

इअ(इ)ह मोहविसं घायइ, सिवोवएसा रसायणं होइ ।
गुणओ अ मंगलत्थं, कुणइ विणीओ अ जोग त्ति ॥११६३॥

इति मोहविषं घातयति, कथञ्चिद् वैद्योपदेशात्तथा रसा-यनं भवत्येव, परिणामात्सुखस्य गुणतश्च मङ्गलार्थं क-रोति, प्रकृत्या विनीतश्च योग्य इति कृत्वेति गाथार्थ ।

मग्गणुसारिपयाहिण, गंभीरो गुरुअओ तहा होइ ।
कोहग्गिणा अडज्झो, अकुत्थो सइसीलभावेणं ॥११६४॥

मार्गानुसारित्वे सर्वत्र प्रदक्षिणावर्त्तता गम्भीरश्चेतसा गु-रुस्तथा भवति । क्रोधाग्निनाऽदाह्यो, ज्ञेय. अकुथनीयस्सदो-चितेन शीलभावेनेति गाथार्थः ।

एवं दिट्ठंतगुणा, सज्झम्मि वि एत्थ होंति णायव्वा ।
ण हि साहम्माभावे, पायं जं होइ दिट्ठंतो ॥ ११६५ ॥

एवं दृष्टान्तगुणा विषघातित्वादय साध्येऽपि साधा-भवन्ति-ज्ञातव्या., नहि साधर्म्याभावे एकान्तेनैव प्रायो यद् यस्माद्भवति दृष्टान्त इति गाथार्थ ।

चउकारणपरिसुद्धं, कसछेअताहतालणाए अ ।
जं तं विसघाइरसा-इआइ गुणसंजुअं होइ ॥ ११६६ ॥

चतुष्कारणपरिशुद्धं चैतत्कथयति, कषेण छेदेन तापेन ताड-नया चेति, यदेवंभूतं तद्विषघातिरसायनादि गुणसंयुक्तं भ-वति नान्यत्परीक्षणीयमिति गाथार्थ. ।

कम्मं निव्वाहिअं होउ त्ति , ताहे तत्थ अकाले वच्चंतस्स तस्स ते चेव दोसा। अथवा ताणि धम्मसड्डियाओ ओसक्कणदोसं उस्सक्कणदोसं वा करेज्जा ठवियगदोसा वा। अहवा आयरियाण निमित्त पए वा उस्सूर उवक्खडेज्जा , एते एवमाइया अलंभे दोसा। घसिरो-बहुभक्खगो , सोवि ण पट्ठवेयव्वो, सो पढमं चेव अप्पणो अट्ठाए हिंडइ पज्जत्तं , जाव सो अप्पणो पज्जत्तं हिंडइ ताव फिडिआ वेला। अहवा तत्थेव पढमं वच्चइ पच्छा तत्थ य ण चेव वेला होइ , ते चेवोस्सक्कणादिआ दोसा अहवा तत्थ सड्ढकुले पभूय गेण्हइ ताहे उग्गमदोसा न सुज्झंति। सुविरो ताव सुवइ जाव फिडिआ भिक्खावेला। अहवा पढम तत्थ गंतुं अवेलाए पच्छा सुयइ ते चेव दोसा। समओ जइ अप्पणो हिंडइ ताहे आयरिआ परितावणादि पावंति। अह खमओ आयरिआण गेण्हइ ततो अप्पणा परितावणादि पावइ। कोहिल्लो पुव्वलाभाओ फिडितो सकोहिओ संतो भणइ-अम्हे अणंतो लभाम , न पि तुज्झ पच्चएण न गेण्हामो। अहवा थव लंभइ तत्थ भंडइ, अहवा ऊणं पाणेण वा लवणेण वा तत्थ वि रूसंति। माणिओ जइ न अब्भुट्ठिज्जंति ता पुणो न एइ को विसेसो सावगाण ति ? । माइल्लो भद्दग अप्पसागारिअ भोच्चा पंतं आणेति। लोभिल्लो जत्तिअ लभंति तं सव्वं गेण्हंति, एसणं वा लोभेणं पेल्लेज्जा। कोऊहल्लिलो जत्थ नडादि पेच्छइ तत्थ पेच्छंतो अच्छइ। पडिबद्धो जो सुत्तत्थेसु अच्छिओ तो सो ताव अच्छइ जाव कालवेला जाया। एए दोसा तम्हा एरिसं साहुं वेयावच्चं न कारेज्जा। ओघ०।

साहुकार-साधुकार-पुं०। साधु कृतं तत्सुष्ठु कृतमिति विहद्रस्य प्रशंसायाम् , आ० म० १ अ०। पिं०। न०।

साहुजणाचरिय-साधुजनाचरित-न०। साधुजनैरासेविते , प्रश्न० ४ सव० द्वार।

साहुजीवि(ण्)-साधुजीविन्-पुं०। साधु-शोभनं परोपकारपूर्वकं जीवितुं शीलमस्य स साधुजीवी। सूत्र० २ श्रु० ५ अ०। साधुना विधिना जीवितुं शीलं यस्य स साधुजीवी। सूत्र० १ श्रु० ३ अ० ३ उ०। सूत्रोक्ते श्रमणव्यापारे, पं० व० २ द्वार।

साहुजोणिय-साधुयोनिक-पुं०। साधुपक्षके नि० चू० १ उ०।

साहुणिक्खेवण-साधुनिक्षेपण-न०। साधर्मिकाणामशिवादिकारणैर्निक्षितधारक, नि० चू० १५ उ०।

साहुणी-साध्वी-स्त्री०। रत्नत्रयधारिण्या श्रमण्याम् , ध०२ अधि०। तपस्विन्याम् , पञ्चा० २ विव०। आ० चू०। तथा साध्वी श्राद्धानामग्रे व्याख्यानं न करोतीत्यक्षराणि कुत्र ग्रन्थे सन्तीति। अत्र दशवैकालिकवृत्तिप्रमुखग्रन्थमध्ये यतिः केवलश्राद्धी सभाग्रे व्याख्यानं न करोति रागहेतुत्वादित्युक्तमस्ति, एतदनुसारेण साध्व्यपि केवलश्राद्धसभाग्रे व्याख्यानं न करोति रागहेतुत्वादिति ज्ञायते। ही० ३ प्रका०।

साहुदंसण-साधुदर्शन-न०। मुनिजनावलोकने , पञ्चा० ७ विव०।

साहुदंसणभाव-साधुदर्शनभाव-पुं०। मुनिजनावलोकनाध्यवसाये पञ्चा० ७ विव०।

साहुदासी-साधुदासी-स्त्री०। मथुरानगरीवास्तव्यस्य जिनदासस्य श्रावकस्य भार्यायाम् , आ० चू० १ अ०। कल्प०।

साहुधम्म-साधुधर्म-पुं०। श्रमणसंबन्धिचारित्रधर्मे, पञ्चा० ११ विव०। ( स च क्षान्त्यादिको दशविध " अणगारधम्म " शब्दे प्रथमभागे २७६ पृष्ठे दर्शितः । )

साहुभाव-साधुभाव-पुं०। मालवदेशमण्डले,११८५-संवत्सरे श्रीनेमिनाथस्य मन्दिरनिर्माणकारके, स्वनामख्याते गृहपतौ, ती० ४ कल्प।

साहुमग्ग-साधुमार्ग-पुं०। मुनिपथे, ग० १ अधि०।

साहुमाइ-साध्वादि-पुं०। निर्ग्रन्थशाक्यादौ,पञ्चा० १३ विव०।

साहुमाणि(ण्)-साधुमानिन्-त्रि०। आत्मोत्कर्षायाऽसदनुष्ठानमानिनि सूत्र० १ श्रु० १३ अ०।

साहुया-साधुता-स्त्री०। साधुभावे, उत्त० २ अ०।

साहुरंग-साधुरङ्ग-पुं०। जिनचन्द्रसूरिशिष्यपुण्यप्रधानशिष्यसुमतिसागरशिष्यविद्याविशारदशिष्ये, अष्ट० ३२ अष्ट०।

साहुरक्खिय-साधुरक्षित-पुं०। स्वनामख्याते स्थविरे, एष मित्रवाचकक्षमाश्रमणानामादेशः । साधुरक्षितक्षमाश्रमणाः पुनरेवं ब्रुवते। व्य० १ उ०।

साहुरयण-साधुरत्न-पुं०। सोमसुन्दरगुरूणां शिष्ये, ग० ३ अधि०। स०। येन सोमप्रभसूरिविरचितयतिजीतकल्पस्य वृत्तिः कृता। पञ्चा० १ विव०।

साहुली-देशी-स्त्री०। वृक्षशाखायाम् , नि० चू० १ उ०।

साहुलूसय-साधुलूषक-त्रि०। साधुमोषके, सूत्र० १ श्रु० ३ अ० १ उ०।

साहुवग्ग-साधुवर्ग-पुं०। साधूनां वृन्दे, ग० १ अधि०।

साहुवयण-साधुवचन-न०। असत्यसत्यामृषावचनपरित्यागे, सत्या०।उद्घाटापौरुषीत्यादिके विभ्रमकारिणि,ध०२अधि०।

साहुवसण-साधुव्यसन-न०। दुष्टराज्यादिजनिताया शिष्टजनानामापदि, नि० चू० ६ उ०।

साहुवाय-साधुवाद-पुं०। वर्णवादे, स्था० १० ठा० ३ उ०। आ० म०। ही०।

साहुसक्खिय-साधुसाक्षिक-न०। साधवो-मुनयस्ते सातिशयज्ञानवन्त इतरे वा विरतिप्रतिपत्तिसमकालसमयसमीपवर्त्तिनः साक्षिणो यत्र तत्तथा। साधून् साक्षिणः कृत्वा कृते, पा०।

साहुसच्चेट्ठा-साधुसच्चेष्टा-स्त्री०। साधूना विनयादिरूपायां सच्चेष्टायाम् , पो० १२ विव०।

साहुसमिक्खा-साधुसमीक्षा-स्त्री०। साध्वी चासौ समीक्षा च साधुसमीक्षा। यथावस्थिततत्त्वपरिच्छित्तौ, समतायाञ्च। सूत्र० १ श्रु० ८ अ०।

साहुसामग्गी-साधुसामग्री-स्त्री०। साधूना ज्ञानादिरूपाया सामग्र्याम् , द्वा०।

जिनभक्तिप्रतिपादनानन्तरं तत्साध्यं सामग्र्यमाह—

ज्ञानेन ज्ञानिभावः स्या-द्भिक्षुभावश्च भिक्षया ।
वैराग्येण विरक्तत्वं, संयतस्य महात्मनः ॥ १ ॥

ज्ञानेनेति—व्यक्तः ।

विषयप्रतिभासाख्यं, तथात्मपरिणामवत् ।
तत्त्वसंवेदनं चेति, त्रिधा ज्ञानं प्रकीर्तितम् ॥२॥

तत्त्वं परमार्थस्तत्सम्यक्प्रवृत्त्याद्युपहितत्वेन वेद्यते यस्मिन्स्तच्च । तत्त्वपदेन मिथ्याज्ञाननिवृत्तिः, तद्विषयस्यैतदंशनिर्धारणावच्छिन्नत्वेनातत्त्वत्वात्, सम्यक्पदेनाविरतसम्यग्दृष्टिज्ञानेन निवृत्तिः, तस्य ज्ञाताज्ञानस्वधारणप्रतिभासत्वप्रयोज्यविषयप्रवृत्त्याद्युपहितत्वेऽपि ज्ञानत्वप्रयोज्यविरतिप्रवृत्त्याद्युपहितत्वाभावादिति । इत्यमुना प्रकारेण त्रिधा ज्ञानं प्रकीर्तितम् । तदाह—" विषयप्रतिभासं चा-त्मपरिणतिमत्तथा । तत्त्वसंवेदनं चैव, ज्ञानमाहुर्महर्षयः ॥१॥" (आत्मपरिणतिविषय 'आतपरिणइ' शब्दे द्वितीयभागे १६० पृष्ठे गतं ।)

आद्यं मिथ्यादृशां मुग्ध-रत्नादिप्रतिभासवत् ।
अज्ञानावरणापाया-ग्राह्यत्वाद्यविनिश्चयम् ॥३॥

आद्यमिति—आद्यं विषयप्रतिभासज्ञानं मिथ्यादृशामेव मुग्धस्याज्ञस्य रत्नप्रतिभासादिवत् तत्तुल्यम् । तदाह-"विषकण्टकरत्नादौ बालादिप्रतिभासवत्" इति । अज्ञानं मत्यज्ञानादिकं तदावरणं यत्कर्म तस्यापायः क्षयोपशमस्तस्मात् । तदाह—" अज्ञानावरणापायम् " इति । ग्राह्यत्वादीनामुपादेयत्वादीनामविनिश्चयोऽनिर्णयो यतस्तत् । तदाह—" तद्धेयत्वाद्यवेदकम् " इति । यद्यपि मिथ्यादृशामपि घटादिज्ञानेन घटादिग्राह्यता निश्चीयत एव, तथापि स्वविषयत्वावच्छेदेन तदनिश्चयान्न दोषः, स्वसंवेद्यस्य स्वस्यैव तदनिश्चयात् ॥

भिन्नग्रन्थेर्द्वितीयं तु, ज्ञानावरणभेदजम् ।
श्रद्धावत्प्रतिबन्धेऽपि, कर्मणा सुखदुःखयुक् ॥४॥

भिन्नग्रन्थेरिति—भिन्नग्रन्थेः सम्यग्दृशस्तु द्वितीयमात्मपरिणामवत् ज्ञानावरणस्य भेदः-क्षयोपशमस्तज्जम् । तदाह—" ज्ञानावरणह्रासोत्थम् " इति । श्रद्धावत् वस्तुगुणदोषपरिज्ञानपूर्वकचारित्रेच्छान्वितम्, प्रतिबन्धेऽपि चारित्रमोहोदयजनितान्तरालक्षणे सति कर्मणा पूर्वार्जितेन । सुखदुःखयुक्-सुखदुःखान्वितम् । तदाह—" पातादिपरतन्त्रस्य तद्दोषादावसंशयम् । अनर्थाद्याप्तियुक्तं च,आत्मपरिणतिमन्मतम् ॥ १ ॥"

स्वस्थवृत्तेस्तृतीयं तु, सज्ज्ञानावरणव्ययात् ।
साधोर्विरत्यवच्छिन्न-मविघ्नेन फलप्रदम् ॥ ५ ॥

स्वस्थेति—स्वस्थाऽनाकुला वृत्तिः कायादिव्यापाररूपा यस्य तस्य साधोः तृतीयम् विरतिः सदसत्प्रवृत्तिनिवृत्त्यात्मिका तयाऽवच्छिन्नमुपहितम् । अविघ्नेन-विघ्नाभावेन, फलप्रदम् । तदाह—" स्वस्थवृत्तेः प्रशान्तस्य तद्धेयत्वादिनिश्चयम् । तत्त्वसंवेदनं सम्यग् यथाशक्ति फलप्रदम् ॥ १ ॥ "

इदं च सज्ज्ञानावरणस्य व्ययात्-क्षयोपशमात् प्रादुर्भवति । तदाह—" सज्ज्ञानावरणापायम् " इति ।

निष्कम्पा च सकम्पा च, प्रवृत्तिः पापकर्मणि ।
निरवद्या च सेत्याहु-र्लिङ्गान्यत्र यथाक्रमम् ॥६॥

निष्कम्पा चेति—अत्रोक्तेषु त्रिषु भेदेष्वज्ञानसज्ज्ञानत्वेन फलितेषु यथाक्रमं पापकर्मणि निष्कम्पा दृढा प्रवृत्तिः, सकम्पा चादृढा निरवद्या च सा प्रवृत्तिरिति, लिङ्गान्याहुः । तदुक्तम्—"निरपेक्षप्रवृत्त्यादि लिङ्गमेतदुदाहृतम् ।" तथा—" तथाविधप्रवृत्त्यादिव्यङ्ग्यं सदनुबन्धि च " तथा—" न्याय्यादौ शुद्धवृत्त्यादिगम्यमेतत्प्रकीर्तितम् । " इति ।

ननु कैनानि लिङ्गान्युपयुज्यन्त इत्यत आह—

जातिभेदानुमानाय, व्यक्तीनां वेदनात् स्वतः ।
तेन कर्मान्तरात् कार्य-भेदेऽप्येतद्भिदाऽक्षता ॥७॥

जातीति—जातिभेदस्य-निष्कम्पपापप्रवृत्त्यादिजनकतावच्छेदकस्याज्ञानादिगतस्य अनुमानाय उक्तानि लिङ्गानीति संबन्धः । व्यक्तीनाम्-अज्ञानादिव्यक्तीनां स्वतो-लिङ्गैरपेक्ष्यैव वेदनात्-परिज्ञानात्, तेन कर्मान्तरात्-चारित्रमोहादिरूपादुदयक्षयोपशमावस्थानावस्थितात् । कार्यभेदेऽपि-सावद्यानवद्यप्रवृत्तिवैचित्र्येऽपि । तद्भिदा अज्ञानादिभिदाऽक्षता। प्रवृत्तिसामान्ये ज्ञानस्य हेतुत्वात्तद्वैचित्र्येणैव तद्वैचित्र्योपपत्तेः । प्रवृत्तौ कर्मविशेषप्रतिबन्धकत्वस्यापि हेतुविशेषविघटनं विनाऽयोगात् । वस्तुतः कार्यस्वभावभेदे कारणस्वभावभेदः सर्वत्राप्यावश्यकः, अन्यथा हेत्वन्तरसंमवधानस्याप्यकिंचित्करत्वादिति विवेचितमन्यत्र ।

योगादेवान्त्यबोधस्य, साधुः सामग्र्यमश्नुते ।
अन्यथा कर्पगामी स्यात्, पतितो वा न संशयः ॥८॥

योगादिति—अन्त्यबोधस्य—तत्त्वसंवेदनस्य योगादेव-संस्कारूपसंबन्धादेव साधुः सामग्र्यं—पूर्णभावमश्नुते । अन्यथा तत्त्वज्ञानसंस्काराभावे पुनर्योगशक्त्यनुवृत्तौ शङ्काकाङ्क्षादिना कर्पगामी वा स्यात्, तदनुवृत्तौ च पतितो वा न संशयोऽत्र कश्चित्, बाह्यलिङ्गस्याकारणत्वात् ।( द्वा० ) ( भिक्षाविषय ' गोयरचरिया ' शब्दे तृतीयभागे १००७ पृष्ठे गतं । )

स्वोचिते तु तदारम्भे, निष्ठिते नाविशुद्धिमत् ।
तदर्थकृतिनिष्ठाभ्यां, चतुर्भङ्ग्यां द्वयोर्ग्रहात् ॥ १७ ॥

स्वोचित-इति स्वोचित तु स्वशरीरकुटुम्बादेर्योग्ये तु आरम्भे पाकप्रयत्ने निष्ठिते चरमेन्धनप्रक्षेपेणौदनसिद्ध्युपहिते । तत् स्वभोग्यातिरिक्तपाकशून्यया संकल्पकं स्वार्थमुपकल्पितमन्नम् " इतो मुनीनामुचितेन दानेनात्मानं कृतार्थयिष्यामि " इत्याकारं नाविशुद्धिमत् न दोषान्वितं तदर्थं कृतिराद्यपाकः, निष्ठा च चरमः पाकः, ताभ्यां निष्पन्नाया चतुर्भङ्ग्या—तदर्थं कृतिस्तदर्थं निष्ठा, अन्यार्थं कृतिस्तदर्थं निष्ठा, तदर्थं कृतिरन्यार्थं निष्ठा, अन्यार्थं कृतिरन्यार्थं च निष्ठा, इत्येवरूपायां द्वयोर्भङ्गयोर्ग्रहाच्छुद्धत्वेनोपादानात् । तदुक्तम्—" तस्स कडं तस्स निट्ठियं चउभंगो तत्थ दु चरिमा सुद्धा"। यदि च साध्वर्थं पृथिव्याद्यारम्भप्रयोजकशुभसंकल्पनमपि गृहिणो दुष्टं स्यात्तदा साधुवन्दनादियोगोऽपि तथा स्यादिति न

किञ्चिदेतत् । तदिदमुक्तं-' स्वोचितं तु यदारम्भे,तथा संकल्पनं क्वचित् । न दुष्टं शुभभावत्वा-त्तच्छुद्धापरयोगवत् ॥१॥"

प्राय एवमलाभः स्या-दिति चेद्बहुधाऽप्ययम् ।
संभवीत्यत एवोक्तो, यतिधर्मोऽतिदुष्करः ॥ १८ ॥'

प्राय इति-एवमसंकल्पितस्यैव पिण्डस्य ग्राह्यत्वे प्रायोऽलाभः स्यात्-शुद्धपिण्डाप्राप्तिः स्यात्, इति चेत् बहुधाऽपि-संकल्पानिरिक्तैर्बहुभिरपि प्रकारैः शङ्कितम्रक्षितादिभिरयमलाभः संभवी । अथवा-एवं प्रायोऽसंकल्पितस्यालाभः स्यादिति चेद्बहुधाऽप्ययमसंकल्पितस्य लाभः संभवि । अदित्सूनां भिक्षूणामभावेऽपि च बहूनां पाकस्योपलम्भे । तथापि तद्वृत्तेर्दुष्करत्वात्तत्प्रणेतुरनाप्तता स्यादित्यत आह-इत्यत एव यतिधर्मो मूलोत्तरगुणसमुदायरूपोऽतिदुष्कर उक्तः । अतिदुर्लभे मोक्षं प्रति अतिदुष्करस्यैव धर्मस्य हेतुत्वात् ,,कार्यानुरूपकारणवचनेनैवाप्तसिद्धेः ।

संकल्पितस्य गृहिणा , त्रिधा शुद्धिमतो ग्रहे ।
को दोष इति चेज्ज्ञाते, प्रसङ्गात्पापवृद्धितः ॥ १९ ॥

संकल्पितस्येति-गृहिणा-गृहस्थेन संकल्पितस्य-यत्यर्थे प्रतिदित्सितस्य त्रिधा शुद्धिमतो-मनोवाक्कायशुद्धस्य-साधोर्ग्रहे-ग्रहणे को दोषः । आरम्भप्रत्याख्यानस्य लेशतोऽप्यव्याघातादिति चेत् , ज्ञाते-" मदर्थं कृतोऽयं पिण्ड " इति ज्ञाने सति तद्ग्रहणे प्रसङ्गात् , गृहिणः पुनः तथाप्रवृत्तिलक्षणात् पापवृद्धितः तन्निमित्तभावस्य परिहार्यत्वात् ।

यत्यर्थं गृहिणश्चेष्टा, प्राण्यारम्भप्रयोजिका ।
यतेस्तद्वर्जनोपाय-हीन सामग्र्यघातिनी ॥ २० ॥

यत्यर्थमिति-यत्यर्थं गृहिणः प्राण्यारम्भप्रयोजिका चेष्टा निष्ठितक्रिया । तद्वर्जनोपायैराधाकर्मिककुलपरित्यागादिलक्षणैर्हीना सती यतेः सामग्र्यघातिनी गुणश्रेणिहानिकर्त्री ।

वैराग्यं च स्मृतं दुःख-मोहज्ञानान्वितं त्रिधा ।
आर्तध्यानाख्यमाद्यं स्या-द्यथाशक्त्यप्रवृत्तितः ॥ २१ ॥

वैराग्यं चेति-दुःखान्वितं मोहान्वितं ज्ञानान्वितं चेति त्रिधा वैराग्यं स्मृतम् । आद्यं दुःखान्वितं आर्त्तध्यानाख्यम् स्यात् । यथाशक्ति-शक्त्यनुसारेण मुक्त्युपायेऽप्रवृत्तितः । तात्त्विकं तु वैराग्यं शक्तिमतिक्रम्यापि श्रद्धातिशयेन प्रवृत्तिं जनयेदिति ।

अनिच्छा ह्यत्र संसारे, स्वेच्छालाभादतुत्कटा ।
नैर्गुण्यदृष्टिजं द्वेषं, विना चित्ताङ्गखेदकृत् ॥ २२ ॥

अनिच्छेति-अत्र हि वैराग्ये सति संसारे-विषयसुखे अनिच्छा-इच्छाभावलक्षणा आत्मपरिणतिः नैर्गुण्यदृष्टिजं संसारस्य बलवदनिष्टसाधनत्वप्रतिसन्धानजम् द्वेषं विनाऽनुत्कटा । अत एव चित्ताङ्गयोः खेदकृत्-मानसशारीरदुःखोत्पादिका । इच्छाविच्छेदो हि द्विधा स्यात् अलभ्यविषयत्वज्ञानाद् द्वेषाच्च , आद्य इष्टाप्राप्तिज्ञानाद् दुःखजनकः , अन्त्यश्च न तथेति ।

एकान्तात्मग्रहोद्भूत-भवनैर्गुण्यदर्शनात् ।
शान्तस्यापि द्वितीयं स-ज्ज्वर,तुद्भवसन्निभम् ॥ २३ ॥

एकान्तेति-एकान्तः सर्वथा सन् क्षयी वा य आत्मा तस्य ग्रहादुत्पन्नं यद्भवनैर्गुण्यदर्शनं ततः शान्तस्यापि प्रशमवतोऽपि लोकदृष्ट्या , द्वितीयं मोहान्वितं वैराग्यं भवति । एतच्च सन् शक्त्यावस्थितो यो ज्वरस्तस्यानुदयो वेलाप्राक्काललक्षणस्तत्सन्निभं तेषां भवेत् । द्वेषजनितस्य वैराग्यस्योत्कटत्वेऽपि मिथ्याज्ञानवासनाऽविच्छेदादपायप्रतिपातशक्तिसमन्वितत्वात् ।

स्याद्वादविषयया ज्ञात्वा, बद्धानां कष्टमङ्गिनाम् ।
तृतीयं भवभीभाजां, मोक्षोपायप्रवृत्तिमत् ॥ २४ ॥

स्याद्वादेति-स्याद्वादस्य सकलनयसमूहात्मकवचनस्य विषयया बद्धानामङ्गिनां कष्टं दुःखं ज्ञात्वा भवभीभाजां संसारभयवतां तृतीयं ज्ञानान्वितं वैराग्यं भवति । तच्च मोक्षोपाये-त्रिरत्नसाम्राज्यलक्षणे प्रवृत्तिमत्-प्रकृष्टवृत्त्युपहितम् ।

सामग्र्यं स्यादनेनैव, द्वयोस्तु स्वोपमर्दतः ।
अत्राङ्गत्वं कदाचित्स्या-द्गुणवत्पारतन्त्र्यतः ॥२५॥

सामग्र्यमिति-अनेनैव-ज्ञानान्वितवैराग्येणैव सामग्र्यं सर्वथा दुःखोच्छेदलक्षणं स्यात् , ज्ञानसहितवैराग्यस्यापायशक्तिप्रतिबन्धकत्वात् । द्वयोस्तु-दुःखमोहान्वितवैराग्ययोः स्वोपमर्दतः-स्वविनाशद्वारा अत्र-ज्ञानान्वितवैराग्येऽङ्गत्वमुपकारकत्वम् कदाचिच्छुभोदयदशायां स्यात् । गुणवतः पारतन्त्र्यम्-आज्ञावशवर्तित्वं ततः ,ज्ञानवत्पारतन्त्र्यस्यापि फलतो ज्ञानत्वात् ।

ननु गुणवत्पारतन्त्र्यं विनाऽपि भावशुद्ध्या वैराग्यसाफल्यं भविष्यतीत्यत आह-

भावशुद्धिरपि न्याय्या, न मार्गाननुसारिणी ।
अप्रज्ञाप्यस्य बालस्य, विनैतत्स्वाग्रहात्मिका ॥ २६ ॥

भावेति-भावशुद्धिरपि यमनियमादिना मनसोऽसंक्लिश्यमानताऽपि । एतत् गुणवत्पारतन्त्र्यं विना अप्रज्ञाप्यस्य गीतार्थोपदेशावधारणायोग्यतारहितस्य बालस्य-अज्ञानिनः स्वाग्रहात्मिका-शास्त्रश्रद्धाधिकस्वकल्पनाभिनिवेशमयी मार्गो-विशिष्टगुणस्थानावाप्तिप्रवणः स्वरसवाही-जीवपरिणामस्तदननुसारिणी न न्याय्या ।यदाह-

' भावशुद्धिरपि ज्ञेया, यैषा मार्गानुसारिणी ।
प्रज्ञापनाप्रियाऽत्यर्थं, न पुनः स्वाग्रहात्मिका ॥ १ ॥
रागो द्वेषश्च मोहश्च,भावमालिन्यहेतवः ।
एतदुत्कर्षतो ज्ञेयो, हन्तोत्कर्षोऽस्य तत्त्वतः ॥ २ ॥
तथोत्कृष्टे जगत्यस्मिन् , शुद्धिर्वै शब्दमात्रकम् ।
स्वबुद्धिकल्पनाशिल्प-निर्मितं नार्थवद्भवेत् ॥ ३ ॥

मोहानुत्कर्षकृच्चैत-दत एवापि शास्त्रवित् ।
क्षमाश्रमणहस्तेने-त्याह सर्वेषु कर्मसु ॥ २७ ॥

मोहेति एतद्-गुणवत्पारतन्त्र्यं च मोहानुत्कर्षकृत् स्वाग्रहहेतुमोहापकर्षनियन्धनम् । तदाह-- न मोहोद्रिक्तताभावे, स्वाग्रहो जायते क्वचित् । गुणवत्पारतन्त्र्यं हि तदनुत्कर्षसाधनम् ॥ १ ॥ " अत एव गुणवत्पारतन्त्र्यस्य मोहानुत्कर्षकृत्त्वादेव शास्त्रविदपि-आगमज्ञोऽपि सर्वेषु कर्मसु-दीक्षादानोद्देशसमुद्देशादिषु क्षमाश्रमणहस्तेनेत्याह । इत्थ-

मभिलापस्य भावतो गुरुपारतन्त्र्यहेतुत्वात् तस्य च मोहापकर्षद्वारेणऽतिचारशोधकत्वात्। तदाह—" अत एवागमज्ञोऽपि, दीक्षादानादिषु ध्रुवम्। क्षमाश्रमणहस्तेनेत्याह सर्वेषु कर्मसु ॥ १ ॥ "

यस्तु नान्यगुणान् वेद, न वा स्वगुणदोषवित्।
स एवैतन्नाद्रियते, न त्वासन्नमहोदयः ॥ २८ ॥

यस्त्विति—व्यक्तं।

गुणवद्बहुमानाद्यः, कुर्यात्प्रवचनोन्नतिम्।
अन्येषां दर्शनोत्पत्ते—स्तस्य स्यादुन्नतिः परा ॥ २९ ॥

गुणवदिति-गुणवतां-ज्ञानादिगुणशालिनां बहुमानात्-य प्रवचनस्योन्नतिं—बहुजनश्लाघां कुर्यात् तस्य स्वतोऽन्येषां दर्शनोत्पत्तेः परा—तीर्थकरत्वादिलक्षणा उन्नतिः स्यात्। कारणानुरूपत्वात्कार्यस्य। तदाह—" यस्तून्नतौ यथाशक्ति, सोऽपि सम्यक्त्वहेतुताम्। अन्येषां प्रतिपद्येह, तदेवाप्नोत्यनुत्तमम् ॥१॥ प्रक्षीणतीव्रसंक्लेशं, प्रशमादिगुणान्वितम्। निमित्तं सर्वसौख्यानां, तथा सिद्धिसुखावहम् ॥ २ ॥ "

यस्तु शासनमालिन्ये-ऽनाभोगेनापि वर्तते।
बध्नाति स तु मिथ्यात्वं, महानर्थनिबन्धनम् ॥ ३० ॥

यस्त्विति-यस्तु शासनमालिन्य—लोकविरुद्धगुणवन्निन्दादिना प्रवचनोपघाते अनाभोगेनाप्यज्ञानेनापि वर्तते, स तु शासनमालिन्योत्पादनावसर एव मिथ्यात्वोदयात् महानर्थनिबन्धनं-दुरन्तसंसारकान्तारपरिभ्रमणकारणं मिथ्यात्वं बध्नाति। यदाह—" यः शासनस्य मालिन्य-ऽनाभोगेनापि वर्तते। स तन्मिथ्यात्वहेतुत्वा—दन्येषां प्राणिनां ध्रुवम् ॥१॥ बध्नात्यपि तदेवालं, परं संसारकारणम्। विपाकदारुणं घोरं, सर्वानर्थनिबन्धनम् ॥ २ ॥ "

स्वेच्छाचारे च बालानां, मालिन्यं मार्गबाधया।
गुणानां तेन सामग्र्यं, गुणवत्पारतन्त्र्यतः ॥ ३१ ॥

स्वेच्छेति-बालानाम्-अज्ञानिनां स्वेच्छाचारे च सति। मार्गस्य-बाधया " अप्रधानपुरुषोऽयं जैनानां मार्गः " इत्येवं जनप्रवादरूपया मालिन्यं भवति मार्गस्य। तेन हेतुना गुणवत्पारतन्त्र्यत एव गुणानां ज्ञानादीनां सामग्र्यं पूर्णत्वं भवति।

इत्थं विज्ञाय अतिमान्, यतिर्गीतार्थसङ्गकृत्।
त्रिधा शुद्ध्याचरन् धर्मं, परमानन्दमश्नुते ॥ ३२ ॥

इत्थमिति-स्पष्टं। इति साधुसामग्र्यद्वात्रिंशिकाद्वा०२६द्वा०।

साहेमाण-साधयत्-त्रि०। प्रतिपादयति, ज्ञा० १ श्रु० १३ अ०। नि० चू०।

साहेल्लता-साहित्य-न०। सहिततायाम्, दशा० ४ अ०।

साहोहासिय-साध्ववभाषित-न०। संयतेन याचिते, पञ्चा० १३ विव०।

सिआ-स्यात्-अव्य०। " स्याद्भव्यचैत्यचौर्यसमेषु यात् " ॥ ८। २। १०७ ॥ इति संयुक्तस्य यात्पूर्व इत्। प्रा०। कदाचिदर्थे, कल्प० ३ अधि० ६ क्षण।

सिआल-शृगाल-पुं०। " इत्कृपादौ " ॥ ८। १। १२८। इति ऋत इत्वम्। जम्बूके, प्रा० २ पाद।

सिउंठा-असिकुण्ठा-स्त्री०। साधारणशरीरवनस्पतिभेदे, प्रज्ञा० १ पद। जी०।

सिं-एतस्य-एतद् ङस् " वेदंतदेतदो ङसाऽऽम्भ्यां सेसिमौ " ॥ ८। ३। ८१ ॥ इति आमा सहितस्य एतस्य स्थाने सिमादेशः। सिं गुणा। सिं सील। तेषां शीलम्। प्रा० ३ पाद।

सिंग-शृङ्ग-न०। " मसृणमृगाङ्कमृत्युशृङ्गधृष्टे वा " ॥ ८। १। १३० ॥ इति ऋत इत्वम्। प्रा०। विषाणे, विशे०। अनु०। आचा०। औ०। चू०। प्रश्न०। आ० म०।

सिंगक्खोड-शृङ्गस्फोट-न०। शृङ्गप्रदेशे, ध०३ अधि०। ओघ०।

सिंगणादिय-शृङ्गनादित-न०। सर्वेषु कार्येषु शृङ्गभूते कार्ये, " कज्जेसु सिंगभूत कज्जं तु सिंगणाइय होइ "। पं० भा० ३ कल्प। बृ०। पं० चू०।

सिंगधम-शृङ्गधम-त्रि०। शृङ्गं धमति शृङ्गधम। शृङ्गवादके, ' सिंगं धमति। अहवा वा तेणोवामेण जोग गावीओ हरंति तेण समावतिए धतं चोरओ कुट्ठो आगओ ' त्ति। नि० चू० १ उ०।

सिंगपाय-शृङ्गपात्र-न०। शृङ्गमये पात्रे, आचा० २ श्रु० १ चू० ६ अ० १ उ०।

सिंगभेय-शृङ्गभेद-पुं०। महिषादिविषाणच्छेदे, ज्ञा० १ श्रु० २ अ०। विषाणविशेषे च। ओघ०।

सिंगमाल-शृङ्गमाल-पुं०। द्रुमजातिविशेषे, जं० २ वक्ष०।

सिंगरीडी-शृङ्गरीटी-स्त्री०। चतुरिन्द्रियजीवभेदे, उत्त०३६अ०।

सिंगवंदण-शृङ्गवन्दन-न०। शृङ्गेन उत्तमाङ्गैकदेशेन वन्दनम् इति शृङ्गवन्दनम्। शिरसा वन्दने, आव०३अ०। आ०म०। आ० चू०। ' सिंग पुण कुंभगणिवातो " कुम्भकशब्देनेह ललाटमुच्यते तस्य वामपार्श्वयोर्निपातो हस्ताभ्यां स्पर्शनं तच्छृङ्गवन्दनं शृङ्गमुच्यते। एतदुक्तं भवति-अहो कायं इत्याद्यावर्त्तान् कुर्वन् कराभ्यां ललाटस्य मध्यदेशं स्पृशति। किं तु वामपार्श्वं दक्षिणपार्श्वं वा न स्पृशतीति। बृ० ३ उ०।

सिंगवेर-शृङ्गवेर-न०। आर्द्रके, उत्त० ३६ अ०। सूत्र०। जी०। प्रज्ञा०। आचा०।

सिंगार-शृङ्गार-पुं०। ऋपादित्वादित्वम्। प्रा०१ पाद। शृङ्गं सर्वरसेभ्यः परमप्रकर्षकोटिलक्षणमियर्ति-गच्छतीति। कमनीयकामिनीदर्शनादिसम्भवे रतिप्रकर्षात्मके सर्वरसप्रधाने रसविशेषे, अनु०।

शृङ्गाररस लक्षणतस्त्वाह—

सिंगारो नाम रसो, रतिसंजोगाभिलाससंजणणो।
मंडणविलासविब्बो—अहासलीलारमणलिंगो ॥ ४ ॥

सिंगारो रसो जहा—

महुरविलाससललिअं, हियउम्मादणकर जुवाणाणं।
सामा सद्दुद्दामं, दाएती मेहलादामं ॥ ५ ॥

शृङ्गारो नाम रसः किं विशिष्ट इत्याह-'रती' त्यादि, रतिशब्देनेह रतिकारणानि सुरतव्यापाराङ्गानि ललनादीनि गृह्यन्ते,

तं सार्द्धं संयोगाभिलाषसंजनकः, तस्य तत्कार्यत्वादेव, तथा मण्डनविलासविब्बोकहास्यलीलारमणानि लिङ्गं यस्य स तथा, तत्र मण्डनं कङ्कणादिभिः,विलासः कामगर्भो रम्यो नयनादिविभ्रमः विब्बोय'त्ति देशिपदम् ,अङ्गजविकारार्थं हास्यं प्रतीतं लीला सकामगमनभाषितादिरमणीयचेष्टा, रमणं-क्रीडनमिति । उदाहरणमाह-'सिंगारो' इत्यादि-'महुरगाढ' श्यामा । स्त्री मेखलादाम रसनासूत्रं दर्शयति-प्रकटयति इत्यर्थः । कथंभूतमित्याह-रणन्मणिकिङ्किणिस्वरमाधुर्योन्ममधुरं, तथा विलासैः-सकामैश्चेष्टाविशेषैर्ललितं-मनोहारि, तथा शब्दोद्दामं किङ्किणीस्वनमुखरम् ,किमिति तत्प्रकटयति इत्याह-यतो-हृदयोन्मादनकरम्-प्रबलस्मरदीपनं यूनामिति, शृङ्गारप्रधानचेष्टाप्रतिपादकत्वादयं शृङ्गारो रस इति । अनु० । ज्ञा० । विपा० । प्रश्न० । मण्डनभूषणाटोपे , जं० १ वक्ष० । अलङ्कारादिकृतायां शोभायाम् , तद्योगाच्छृङ्गारम् । शृङ्गारमिव शृङ्गारम्' । अतिशयशोभावति , भ० २ श० १ उ० । अलङ्कृते , रा० । नि० चू० । देवानामेकान्तात्यन्तिकमनोज्ञत्वे प्रकृष्टरसास्पदत्वादिरूपे कामभेदे, पुंनार्योरन्योन्यरक्तयोः रतिप्रकृतिः शृङ्गारः इति । स्था० ४ ठा० ४ उ० ।

सिंगारकहाविरय-शृङ्गारकथाविरत-त्रि० । कामकथानिवृत्ते, पञ्चा० १० विव० ।

सिंगारमइ-शृङ्गारमति-स्त्री० । मूलपिण्डे उदाहृतस्य सिन्धुराजस्य भार्यायाम् , पिं० । ('मूलकम्म' शब्दे षष्ठभागे व्याख्यातैषा ।)

सिंगारमंजरी-शृङ्गारमञ्जरी-स्त्री० । शीतलराजस्य भगिन्या विक्रमसिंहस्य भार्यायाम् , मत्र० २ द्वार ।

सिंगाररस-शृङ्गाररस-पुं० । मन्मथदीपके , दश० ३ अ० ।

सिंगाररसोवेय-शृङ्गाररसोपेत-त्रि० । कामोत्कोचके, ज्ञा० १ श्रु० ९ अ० ।

सिंगारागार-शृङ्गारागार-न० । पुं० । शृङ्गारस्य रसविशेषस्यागारमिवागारम् । शृङ्गाररसोपेते, ज्ञा० १ श्रु० १ अ० ।

शृङ्गाराकार-त्रि० । शृङ्गारो मण्डनभूषणादिस्तत्प्रधान आकारः-आकृतिर्यस्येति तथा । मण्डनप्रधानाकृतिसहिते , ज्ञा० १ श्रु० १ अ० । भ० । जी० । औ० ।

सिंगारागारचारुवेसा-शृङ्गारागारचारुवेषा-त्रि० । शृङ्गारो मण्डनभूषणाटोपस्तत्प्रधान आकारो यासां तास्तथा चारुवेषा मनोहरवेषा मनोहरनेपथ्याः पश्चात् कर्मधारयः । अथवा-शृङ्गारस्य प्रथमरसस्यागारमिव-गृहमिव चारुवेषो यासां तास्तथा । जं० ३ वक्ष० । कृतसुन्दरवेषायाम् , रा० । प्रश्न० । सू० प्र० । विशे० । चं० प्र० । औ० ।

सिंगारिय-शृङ्गारिक-पुं० । शृङ्गाररसवति , उपा० ८ अ० ।

सिंगि(ण)-शृङ्गिन्-पुं० । शृङ्गमस्येति शृङ्गी । विषाणिनि पशौ अनु । ज्ञा० म० ।

सिंघ सिंह-पुं० । "हो घोऽनुस्वारात्" ॥८ । १ । २६४॥ इति हस्य घो वा । मृगाधिपे, प्रा० १ पाद ।

सिंघली-पुं० । देशी० । म्लेच्छदेशविशेषे,त्रि० । तद्वासिनि जने च । भ० ९ श० ३३ उ० ।

सिंघाडग-शृङ्गाटक-न० । त्रिकोणे जलजफलविशेषे, स्था० ३ ठा० ३ उ० । प्रज्ञा० । शृङ्गाटकाकृतिपथयुक्ते, त्रिकोणस्थाने, आ० म० १ अ० । अनु० । ज्ञा० । स्था० । प्रश्न० । कल्प० । रा० । चन्द्रं सूर्यं वा गृह्णतो राहोः कृष्णपुद्गले, चं० प्र० २० पाहु० । भ० । कल्प० । औ० । दशा० । रा० । जं० । सू० प्र० । आचा० । सू० । आव० ।

सिंघाण-सिङ्घाण-न० । नासिकाश्लेष्मणि, स्था० ९ ठा० ३ उ० । स० । ध० । तं० । उत्त० । नासिकोद्भवे श्लेष्मणि,स्था० ५ ठा० ३ उ० । कल्प० । ज्ञा० । तं० ।

सिंच-सिंच-धा० । क्षरणे, "सिचेः सिञ्च-सिम्पौ" ॥८ । ४ । ९६॥ इति सेचने सिञ्चादेशः । सिंचइ । सिञ्चति । प्रा० । आचा० ।

सिंदी-सिन्दी-स्त्री० । खर्जूर्याम् , आ० म० १ अ० ।

सिंदुवार-सिन्दुवार-पुं० । निर्गुण्डीवृक्षे,जं० २ वक्ष० । प्रज्ञा० । ज्ञा० । आचा० ।

सिंदुवारकुसुम-सिन्दुवारकुसुम-न० । निर्गुण्डीपुष्पे, पञ्चा० ५ विव० ।

सिंदूर-सिन्दूर-न० । "इत एद् वा" ॥८ । १ । ८५॥ पदे इकारस्य सेन्दूरं । सिन्दूरं । वर्णकद्रव्यविशेषे प्रा० १ पाद ।

सिंधव-सैन्धव-न० । "इत् सैन्धव-शनैश्चरे" ॥८ । १ । १४९ ॥ इति ऐत इद् वा । प्रा० । सिन्धुदेशोद्भवे लवणे, अश्वे, पुं० । सूत्र० १ श्रु० ५ अ० १ उ० । स्था० । आचा० ।

सिंधु-सिन्धु-पुं० । वीतिभयनगरप्रतिबद्धे जनपदभेदे, प्रज्ञा० १ पद । सूत्र० । आ० म० । आ० क० । स्त्री० । जम्बूद्वीपे मन्दरस्य दक्षिणेन पश्चिमलवणसमुद्रगामिन्यां महानद्याम् , स्था० ८ ठा० ३ उ० । पाहु० । ना० । ज्ञा० चू० । स० । (अस्याः सिन्धुमहानद्या वक्तव्यता गङ्गाया इव । गंगामहानदीवक्तव्यता 'गंगा' शब्दे तृतीयभागे ७८२ पृष्ठे गता ।)

एवं सिंधूए वि णेअव्वं०जाव तस्स णं पउमद्दहस्स पच्चत्थिमिल्लेणं तोरणेणं सिंधूए आवत्तणकूडे दाहिणाभिमुही सिंधुप्पवायकुंडं सिंधुद्दीवो अट्ठो सो चेव ०जाव अहे तिमिसगुहाए वेअड्ढपव्वयं दालइत्ता पच्चत्थिमाभिमुही आवत्ता समाणी चोद्दससलिला अहे जगइं पच्चत्थिमेणं लवणसमुद्दं ०जाव समप्पेइ, सेसं तं चेव त्ति । (सू० ७४ X)

अथ गङ्गानद्या आयामादीन्यत्रावतारयति 'एवं सिन्धुए' इत्यादि । एवं सिन्ध्वा अपि सर्वं नेतव्यं यावत्तस्य पद्मद्रहस्य पाश्चात्येन तोरणेन सिन्धुमहानदी निर्गता सती पश्चिमाभिमुखी पञ्चयोजनशतानि पर्वतेन गत्वा सिन्ध्वावर्त्तनकूटे आवृत्ता सती पञ्चयोजनशतानि त्रयोविंशत्यधिकानि त्रींश्चैकोनविंशतिभागान् दक्षिणाभिमुखी पर्वतेन गत्वा महता

घटमुखप्रवृत्तिकेन यावत्प्रमाणेन प्रपतति, सिन्धुमहानदी यत्र प्रपतति अत्र महती जिह्विका वाच्या, सिन्धुमहानदी यत्र प्रपतति तत्र सिन्धुप्रपातकुण्डं वाच्यम्, तन्मध्ये सिन्धुद्वीपो वाच्योऽर्थः स एव, यथा गङ्गाद्वीपप्रभाणि गङ्गाद्वीपवर्णाभानि पद्मानि तथा सिन्धुद्वीपप्रभाणि-सिन्धुद्वीपवर्णाभानि पद्मानि सिन्धुद्वीप इत्युच्यते। अत्र यावत्पर्यन्तं सूत्रं वाच्यं तथा हि-यावद्धस्तमिस्रागुहाया इत्यादि, अत्र यावत्करणादिदम्-" तस्स णं सिन्धुप्पवायकुंडस्स दक्खिणिल्लेणं तोरणेणं सिंधुमहाणई पवूढा समाणी उत्तरद्धभरहवासं एज्जेमाणी २ सत्तहिं सलिलासहस्सेहिं आपूरेमाणी २" इति संग्रहः। अथ तमिस्रागुहाया वैताढ्यपर्वतं दारयित्वा देशदर्शनेदिशसरमितं दाहिणड्ढभरहवासस्स बहुमज्झदेसभागं गन्ता इति पदानि वाच्यानि, पश्चिमाभिमुखी आवृत्ता सती चतुर्दशभिः सलिलासहस्रैः समग्रा-पूर्णा जगतीमधो दारयित्वा पश्चिमायां लवणसमुद्रं समुपसर्प्पति, शेषम्-उक्तातिरिक्तं प्रवाहमुखमानादि तत्रैव-गङ्गामानसमानमेव ज्ञेयम्। जं० ४ वक्ष०।

जंबूदीवे णं दीवे चउद्दस महानईओ पुव्वावरेणं लवणसमुद्दं समप्पयंति तं० गंगा सिंधू०। सं० १४ सम०। स्था०।

जंबूदीवे णं दीवे मंदरस्स दाहिणेणं-सिंधु महाणदिं पंच महानदीओ समप्पेंति, तं जहा-सतद्दू विभासा वितत्था, एरावई चंदभागा। स्था० ५ ठा० ३ उ०। जं०।

सिन्धुनद्यधिष्ठाऽया देव्याम्, जं० ३ वक्ष०।

सिंधुकुंड-सिन्धुकुण्ड-न०। यतः सिन्धुमहानदी प्रवहति तस्मिन् कुण्डे, जं० ४ वक्ष०।

सिंधुकूड-सिन्धुकूट-न०। हिमवद्वर्षधरपर्वतस्य सिन्धुदेव्यधिष्ठिते स्वनामख्याते कूटे, स्था० २ ठा० १ उ०।

सिंधुणिक्खुड-सिन्धुनिष्कुट-न०। सिन्धुकूले, आ०म०१ अ०।

सिंधुदत्त-सिन्धुदत्त-पुं०। ब्रह्मदत्तचक्रिभार्याया धनराज्याः पितरि, उत्त० १३ अ०।

सिंधुदेवी-सिन्धुदेवी-स्त्री०। सिन्धुनद्यधिष्ठात्र्यां देव्याम्, आ० म० १ अ०। जं०।

सिंधुदेवीकूड-सिन्धुदेवीकूट-न०। क्षुद्रहिमवद्वर्षधरपर्वतस्य सिन्धुदेव्यावासीभूते अष्टम कूटे, जं० ४ वक्ष०। (' गंगा ' शब्दे तृतीयभागे ७८२ पृष्ठे वक्तव्यता गता।)

सिंधुप्पवायदह-सिन्धुप्रपातहद-पुं०। यतः सिन्धु प्रपतति तस्मिन् ह्रदविशेषे, स्था० २ ठा० ३ उ०। ( अस्य गंगाप्रपातहृदवद्वक्तव्यता।)

सिंधुर-सिन्धुर-पुं०। हस्तिनि, को०।

सिंधुराय-सिन्धुराज-पुं०। संयुगनामनगरस्य स्वनामख्याते राजनि, पिं०।

सिंधुवद्धण-सिन्धुवर्धन-न०। स्वनामख्याते नगरभेदे, आ० क० ४ अ०।



सिंधुसेवण-सिन्धुसेवन-पुं०। वानीरनाम्न्या ब्रह्मदत्तचक्रिभार्यायाः पितरि, उत्त० १३ अ०।

सिंधुसोवीर-सिन्धुसौवीर-पुं०। सिन्धुनद्या आसन्नाः सौवीरा जनपदविशेषाः सिन्धुसौवीराः। वीतिभयनगरप्रधानेषु जनपदविशेषेषु, भ० १३ श० ६ उ०। दर्श०। प्रति०। स्था०।

सिंभ-श्लेष्मन्-न०। श्लेष्मणि, बृ० १ उ० २ प्रक०। कफ, तं०।

सिंभिय-श्लैष्मिक-त्रि०। श्लेष्ममये, तं०।

सिंबली-शाल्मली-स्त्री०। वल्ल्यादिफली, दश० ५ अ० १ उ०। वज्रमयतीक्ष्णकण्टकाकुलायां नरकपालविकुर्वितायां शाल्मल्याम्, सूत्र० १ श्रु० ५ अ० १ उ०। वृक्षविशेषे, भ० १५ श०।

सिंह-सिंह-पुं०। मृगराजे, स्था० ६ ठा० ३ उ०। स्वनामख्याते वीरस्य शिष्ये, यो हि गोशालककृततेजोलेश्यया रुग्णस्य वीरजिनस्य दुःखादिवं दुःखितं वन गत्वा प्ररोदीत्, प्रेषि च रेवत्यन्तिके कुक्कुटमांसकाहरणाय। प्रश्न० ५ संव० द्वार। ऋषभदेवस्य द्वानवतितमे पुत्रे, कल्प० १ अधि० ७ क्षण।

सिंहकण्णी-सिंहकर्णी-स्त्री०। औषधिविशेषे, आचा० १ श्रु० १ अ० ५ उ०। प्रज्ञा०।

सिंहकेसर-सिंहकेशर-पुं०। सिंहस्य सटायाम्, सिंहसटासदृशेषु, जी० ३ प्रति० ४ अधि०।

सिंहगइ-सिंहगति-पुं०। अमृतगतेरमृतवाहनस्य च पश्चिमोत्तरदिग्गण्यवस्थितलोकपालयोः, स्था० ४ ठा० १ उ०।

सिंहगिरि-सिंहगिरि-पुं०। श्रीवज्रस्वामिनां गुरौ, स्था० ४ ठा० ३ उ०। आ० क०। ध० र०।

सिंहगुहा-सिंहगुहा-स्त्री०। वङ्कचूडपालिते चौरपल्लीविशेषे, विशे०।

सिंहगुहावासिमुणि-सिंहगुहावासिमुनि-पुं०। सुस्थितार्ये, ती० ३५ कल्प।

सिंहपुर-सिंहपुर-न०। सिंहरथराजपालिते स्वनामख्याते नगरे, स्था० १० ठा० ३ उ०। काम्पिल्ये गङ्गामूले सिंहपुरं च विमलनाथ। ती० ४३ कल्प। सिंहपुरे स्तम्भतीर्थे पातालगङ्गाभिध श्रीनेमिनाथ। ती० ४३ कल्प।

सिंहल-सिंहल-पुं०। अनार्यदेशविशेषे, तद्वासिनि जने च। त्रि०। ज्ञा० १ श्रु० १ अ०। कल्प०।

सिंहलदीव-सिंहलद्वीप-पुं०। जम्बूद्वीपे स्वनामख्याते भारतवर्षीय दक्षिणसमुद्रमध्यवर्तिनि भूखण्डे, आचा० १ श्रु० ६ अ० ६ उ०। ती०।

सिंहलय-सिंहलक-पुं०। सिंहलदेशोद्भवे मनुष्ये, जं० ३ वक्ष०। आ० चू०। मानुष्या सिंहली। ग०।

सिंहविक्कमगइ-सिंहविक्रमगति-पुं०। अमितगत्यमितवाहनेन्द्रस्य लोकपाले, स्था० ४ ठा० १ उ०।

सिंहसेण-सिंहसेन-पुं०। सहस्रोद्दाहपूर्वभवजीवेषु प्रतिष्ठनगरराजे, यो हि श्यामाख्याया स्वभार्याया अर्थाय ५०० स्वराज्ञीर्दग्ध्वा नरकं गतः। स्था० १० ठा० ३ उ०। चम्पाया नगर्यां स्वनामख्याते राजनि, यन्मन्त्री गोदगुप्त धर्मघ-

चागय 'सकुण्डलं वा वयणं न व त्ति' समस्यां ददौ। आ-चा० १ श्रु० ४ अ० २ उ०। स्वनामख्याते आचार्ये, यो वादे पराजितेन रिपुमार्त्येन वध्यमानोऽनशनं प्रतिपद्य स्वर्गतः। संथा०।

सिक्क-सेव्य-त्रि०। सेवनीये, आव० ६ अ०।

सिक्कग-शिक्यक-न०। आकाशे दध्यादिभाजनावलम्बनाय दवरकमयेऽवलम्बनके, उपा०२ अ०। नि० चू०। रा०। आव०।

जे भिक्खू सिक्कगं वा सिक्कगणंतगं वा सयमेव करेइ करंतं वा साइज्जइ॥ ११॥ नि० चू० २ उ०।

अन्ययूथिकैः कारयति—

जे भिक्खू सिक्कगं वा सिक्कगणंतगं वा अण्णउत्थिएण वा गारत्थिएण वा कारेति करंतं वा साइज्जइ॥ १३॥

जे भिक्खू सिक्कगं इत्यादि सिक्कगयंमि जारिसं वा पच्छिायगस्स सिक्कगणंतओ उपोणओ उच्छाडणं भवति जारिसं कावालिस्स भायगगुलियाणं। नि० चू० १ उ०।

सिक्कयणंतय-शिक्यकानन्तक-न०। शिक्यकपिधाने, नि० चू० १ उ०।

सिक्ख-शैक्ष-पुं०। नवतरदीक्षिते शिक्षार्हे च। प्रव०६६द्वार।

सिक्खग-शैक्षक-पुं०। नूतनप्रव्रजिते, दश० १ अ०। सूत्र०।

गंथो पुव्वुद्दिट्ठो, दुविहो सिस्सो य होति णायव्वो।
पव्वावण सिक्खावण, पगयं सिक्खावणाए उ॥१२७॥

ग्रन्थो द्रव्यभावभेदभिन्नः क्षुल्लकनैर्ग्रन्थ्य नाम उत्तराध्ययनेष्वध्ययनम् तत्र पूर्वमेव सप्रपञ्चोऽभिहितः, इह तु ग्रन्थं द्रव्यभावभेदभिन्नं य परित्यजति शिष्य आचारादिकं वा ग्रन्थं योऽधीतेऽसौ अभिधीयते,स शिष्यो द्विविधो द्विप्रकारो ज्ञातव्यो भवति। तद्यथा-प्रव्रज्यया, शिक्षया च। यस्य प्रव्रज्या दीयते शिक्षा वा यो ग्राह्यते स द्विप्रकारोऽपि शिष्य। इह पुन शिक्षा शिष्येण प्रकृतम्-अधिकारो य शिक्षां गृह्णाति शैक्षकस्तच्छिक्षयेह प्रस्ताव इत्यर्थ।

यथाप्रतिज्ञातमधिकृत्याह—

सो सिक्खगो य दुविहो,गहणे आसेवणा य णायव्वो।
गहणम्मि होति तिविहो,सुत्ते अत्थे तदुभए य॥२०९॥

सूत्र० १ श्रु० १४ अ०। ('सो सिक्खगो य दुविहो' इत्यादि, व्याख्या 'सिस्स' शब्दे वक्ष्यते।)

सिक्खमाण-शिक्षमाण-त्रि०। शिक्षां कुर्वाणे, सम्यगासेवमाने. सूत्र० १ श्रु० १४ अ०।

सिक्खा-शिक्षा-स्त्री०। अभ्यासे. सूत्र० १ श्रु० ५ अ० १ उ०। आव०। आ०। व्यापारणे आचा० १ श्रु० २ अ० ३ उ०। आसेवने, आचा० १ श्रु० ८ अ० ८ उ०। उपयोग ग्रहणे, सूत्र० १ श्रु० १ अ०।

अथ शिक्षापदद्वारमाह—

पव्वइयस्स य सिक्खा, गयएहते मिलिवती य दिट्ठंतो।
तइय च आउरम्मी, चउत्थगं अंधलो थेरो॥ ३४१॥

प्रव्रजितस्य च सतोऽस्य शिक्षा दातव्या, सा च द्विधा-ग्रहणशिक्षा, आसेवनाशिक्षा च। तत्र ग्रहणशिक्षा सूत्राध्ययनरूपा, आसेवना शिक्षा प्रत्युपेक्षणादिका। तत्र कोऽपि प्रव्रजितः सन्नासेवनाशिक्षा सम्यगभ्यस्यति, न पुनर्ग्रहणशिक्षाम् तत्राचार्यै स्नानेन गजेन श्लीपदेन च दृष्टान्त क्रियते,तृतीयं च उदाहरणम् आतुरविषयम्, चतुर्थ अन्धस्थविरविषयं कर्त्तव्यमिति गाथासमासार्थ।

अथ विस्तरार्थोऽभिधीयते। तत्रासौ गुरुभिरादिष्ट सौम्य! गृहाण त्वमेना ग्रहणशिक्षाम्, अधीष्व विधिवदेवाक्रमाचारादि श्रुतम्। स प्राह—

पव्वइओ इह समणो, निक्खित्तपरिग्गहो निरारंभो।
इति दिक्खियेऽमेगमणो,धम्मधुराए दढो होमि॥३४२॥
समितीसु भावणासु य, गुत्तीपडिलेहविणयमाईसु।
लोगविरुद्धेसु य बहु- विहेसु लोगुत्तरेसु च॥३४३॥
मज्झविरयस्स य सयं, संजमजोगेसु उज्जयमइस्स।
किं मज्झं पढिएणं, भण्णइ सुण ताव बे नाए॥३४४॥

भदन्त! प्रव्रजितोऽहं श्रमण-तपस्वी निक्षिप्तपरिग्रहो निरारम्भश्च संजात इत्यतो दीक्षिते गाथायां मकारोऽलाक्षणिकः एकाग्रमना धर्मधुरायां-धर्मचिन्ताया दृढो-निष्कम्पो भवामि। किं च-समितिष्वीर्यादिषु भावनासु द्वादशसु पञ्चविंशतिसंख्याकासु वा गुप्तिषु-मनागुप्त्यादिषु प्रत्युपेक्षणाया विनये अभ्युत्थानादिरूपे आदिशब्दाद्वैयावृत्त्यादिषु व्यापारेषु युक्तस्य प्रयत्नवत। तथा लोकविरुद्धेषु जुगुप्सितकुलभिक्षाग्रहणादिषु बहुविधेषु-नानाप्रकारेषु लोकोत्तरविरुद्धेषु नवनीतचलितान्नग्रहणादिषु चशब्दादुभयविरुद्धेषु च। मद्यादिषु विरतस्य-प्रतिनिवृत्तस्य संयमयोगेषु च-आवश्यकव्यापारेषु उद्यतमते एवंविधस्य मम किं पठितेन-पाठेन कार्यं; न किंचिदिति भाव। भण्यते गुरुभिरुत्तरम्-वत्स! यदर्थं भवान् प्रव्रजित स एवार्थो नश्यतीति। तथाचात्र शृणु तावद्द्वे ज्ञाते द्वे निदर्शने।

ते एव यथाक्रममाह—

जह एहाउं तिण्णगओ, बहुअतरं रेणुयं छुभइ अंगे।
सुट्ठु वि उज्जममाणो, तह अन्नाणी मलं चिणइ॥३४५॥
जं सिलयइ निदायति,तं लगयति चेलणेहिँ भूमीए।
एवमसंजमपंके, चरणगयं लाइ अमुणंतो॥३४६॥

यथा गज सरसि नद्यादौ मलापनयनार्थं स्नात्वा तीर्णः सन् बहुतरान् रेणून् करेण गृहीत्वा स्वकीये अङ्गे क्षिपति तथा स्वाभाव्यात् तथा सुष्ठ्वपि अतिशयेनाप्युद्यच्छमान-उद्यमं कुर्वाणोऽज्ञानी-जीवो मलं-कर्मरजोमललक्षणं चिनोति। एव त्वमपि कर्ममलनिर्घातनार्थं प्रव्रजित परं श्रुताध्ययनमन्तरेण प्रवचनविरुद्धानि समाचरन् प्रत्युत भूयस्तरेण कर्मरजसाऽऽत्मन गुण्डयिष्यसि। तथा-श्लीपदनाम्ना रोगेण यस्य पादौ शूनौ शिलावन्महाप्रमाणौ भवत स एवंविध श्लीपदी यथा क्षेत्रं निदायति; निद्दिणतीत्यर्थ, स च यदल्पमात्रं सस्यं निदायति तद्भूयस्तरं चलनाभ्यां पादाभ्यामाक्रम्य भूमौ लगयति-मर्दयति च, एवं श्रुतपाठं विना 'अमुणंतो' अजानन् 'चरणगय' ति-चरणसस्यमसंयमपङ्के पृथिव्याद्युपमर्दकर्दमेन लगयित्वा च सकलमपि मर्दयति।

एवमाचार्यैरुक्ते शिष्य आतुरदृष्टान्तमाह—

भन्ते ! जह रोगत्तो, पुच्छति वेज्जं न संहियं पढइ।
इय कम्मामयविज्जे, पुच्छिय तुब्भे करिस्सामि ॥३४७॥

भगवन् ! यथा रोगार्त्तः पुरुषो वैद्यमेव पृच्छति न पुनर्वैद्यकसंहितां पठति, एवमहमपि युष्मान् कर्मामयवैद्यान्-कर्मरोगचिकित्सान् पृष्ट्वा सर्वामपि क्रियां करिष्यामि न पुनः श्रुतं पठिष्यामीति।

गुरुराह—

भण्णइ न सो सयं चिय,करेति किरियं अपुच्छिओ रोगी।
नायव्वो अहिगारो, तुमं पि नाउं तहा कुणसु ॥३४८॥

भण्यते अत्रोत्तरम्—यद्यपि नासौ रोगी वैद्यमपृष्ट्वा स्वयमेव क्रियां करोति, तथापि तस्य ज्ञातव्ये क्रियायाः परिज्ञानेऽधिकारोऽस्ति, यथा स वैद्यो भूयो भूयः प्रष्टव्यो न भवति एवं यद्यपि त्वमस्मान् पृष्ट्वा सर्वामपि क्रियां करिष्यसि तथापि सूत्रमधीत्य षट्कायरक्षणविधिं जानीहि। ज्ञात्वा च तथा कुरु बहुशः प्रष्टव्यं न भवति।

शिष्यः प्रतिभणति—

दूरे तस्स तिगिच्छी, आउरपुच्छा उ जुज्जई तेणं।
सारेहिं ति सहीणा, गुरुमादि जतो न ढिज्जामि ॥३४९॥

तस्यातुरस्य दूरे-दूरवर्त्ती स चिकित्सी वैद्यः अत आतुरस्य क्रियाया अपरिज्ञाने वैद्यान्तिके पृच्छा युज्यते। मम पुनर्गुरव आदिशब्दाद्-उपाध्यायादयः स्वाधीना एव अतो ज्ञास्यन्ति ते भगवन्तः, स्वयमेव मदीयं स्खलितं ज्ञात्वा सम्यग् मां सारयिष्यन्ति। यत एवमत एवाहं नाधीये-न पठामीति।

सूरिराह—

आगाढकारणेहिं, गुरुमादी ते जया न होहिंति।
तइया कहं तु काहिसि, जहा व सो अंधलो थेरो ॥३५०॥

आगाढैः-कुलादिभिः कारणैर्यदा ते गुर्वादयस्तव स्वाधीना न भविष्यन्ति तदा कथं नाम त्वं 'काहिसि' करिष्यसि। यथा वा स अन्धः स्थविरः।

तथाहि—

अट्ठसुय थेरअंधल-तरुणं अत्थि मे बहूणि अच्छीणि।
अप्पट्ठणप्पलित्ते, डहणं अपसत्थगपसत्थे ॥३५१॥

"उज्जेणीनाम नगरी। तत्थ सोमिलो नाम बंभणो परिवसति। सो य अंधलीभूओ तस्स य अट्ठ पुत्ता, तेसिं अट्ठ भज्जाओ सो पुत्तेहिं भण्णति,अच्छीण किरिया कीरउ। सो पडिभणति तुब्भ अट्ठण्हं पुत्ताण सोलस अच्छीणि सुण्हाण वि सोलस, बंभणीए दोन्नि एते चउतीसं, अन्नस्स य परियणस्स जाणि अच्छीणि ताणि सव्वाणि मम, एतं चेव पभूया। अन्नया घरं पलित्तं तत्थ तेहिं अप्पदत्तेहिं सो न चत्तओ नीणिओ तत्थेव दड्डो। एस अपसत्थो दिट्ठंतो। मा एव डज्झिहिसि संसारे असुभकम्मेहिं। इमा पसत्थो तत्थेव अंधलथेरो नवरं तिण किरिया कारिया सा मणुस्साण भोगाण आभोगी जाओ। एव तुमं पि कज्जाकज्ज वियाणिता संसारातो न तिरिहिसि।" अथ गाथाक्षरार्थ-सोमिलस्थविरस्याष्टौ सुता परं तस्यान्धत्वं बभूव। गाथायामन्धलशब्दात्- विद्युत्पत्रपीतान्धाल्लः' ॥८।२।१७३॥ इति प्राकृत स्वार्थिको लप्रत्ययः। स च पुत्रैरक्षिचिकित्साकारणायेमुक्तः सन् प्राह-सन्ति मे पुत्रादीनां बहून्यक्षीणि नैवं मदीयं कार्यं मत्स्यति। अन्यदा च गृहे प्रदीपनं लग्नं ततस्ते पुत्रादय 'अप्पट्ठ' त्ति-आत्मरक्षणपरास्त्वग्निं प्रणष्टाः, स्थविरान्धस्य प्रदीप्ते गृहे दहनम्। एषोऽप्रशस्तो दृष्टान्तः। प्रशस्तस्तु विपरीतः। स चोपदर्शित एव उपनययोजनाऽपि कृतैव।

कृतमप्युक्तोऽसौ न प्रतिपद्यते श्रुताध्ययनम्। अतो भूयोऽपि करुणापरीतचेतसः सूरयः प्राहुः—

मा एवमसग्गाहं, गिण्हसु गिण्हसु सुयं तइयचक्खुं।
किं वा तुमंऽनिलसुतो, न स्सुयपुव्वो जवो राया ॥३५२॥

सौम्य ! मैवमसद्ग्राहं गृहाण गृहाण सूक्ष्मव्यवहितादिष्वतीन्द्रियार्थेषु तृतीयचक्षुःकल्पं श्रुतं किं वा त्वया न श्रुतपूर्वोऽनिलनरेन्द्रसुतो यवो राजा। बृ० १ उ० २ प्रक०। उत्त०। आ० चू०। आ० क०। आव०। ('जवराज' शब्दे चतुर्थभागे तत्कथा।) (श्रुताऽध्ययने अमी गुणाः आत्महितादयः 'सुय' शब्दे वक्ष्यन्ते।) ग्रहणासेवनारूपायां शिक्षायाम्, आ० क०। (संपूर्णा कथा 'अणिसिसिस्थावहाण' शब्दे प्रथमभागे ३३८ पृष्ठे 'अवंतिसुकुमाल' शब्दे च ७८७ पृष्ठे गता।)

पञ्चमशिक्षाद्वारमाह—

खिइपइट्ठउसभकुमग्गं, रायगिहं चंपपाटलीपुत्तं।
नंदसगडाले थूल-भद्दसिरिए वररुई अ ॥ १८३ ॥

आ० क०४ अ०। आव०। ( कथाः स्वस्वस्थानतोऽवसेयाः।) ("अह पंचहिँ ठाणेहिं,जेहिं सिक्खा न लब्भइ। थम्भा कोहप्पमाएणं, रोगेणालस्सएण य ॥१॥" 'बहुस्सुय' शब्दे पञ्चमभागे व्याख्यातैषा।)

पंचहिं ठाणेहिं सुत्तं सिक्खेज्जा, तं जहा-णाणट्ठयाए दंसणट्ठयाए चरित्तट्ठयाए वुग्गहविमोयणट्ठयाए अहत्थे वा भावे जाणिस्सामि त्ति कट्टु। (सू०-४६०×)

ज्ञानं-तत्त्वानां परिच्छेदो दर्शनम्-तेषामेव श्रद्धानं चारित्रम्-सदनुष्ठानं व्युद्ग्रहो-मिथ्याभिनिवेशस्तस्य तस्माद्वा परेषां विमोचनं व्युद्ग्रहविमोचनं तदर्थाय तदर्थतया वा 'अहत्थे'त्ति-यथास्थान्-यथावस्थितान् यथार्थान् वा-यथाप्रयोजनान् भावान् जीवादीन्यथार्थान्वा-यथाद्रव्यान् भावान्-पर्यायान् ज्ञास्यामीति कृत्वा इति हेतोः शिक्षेत इति। स्था०५ठा०३उ०। उद्यमेन ग्रहणम्। सूत्र० १ श्रु० ८ अ०। ( पण्डको वातिकः क्लीबश्च न शिक्षणीय इति 'पव्वज्जा' शब्दे पञ्चमभागे ७४६ पृष्ठे गतम्।) ( लघुबालकं प्रव्राज्य तस्मै ग्रहणशिक्षा सा दशवैकालिकादिसूत्र पाठनीयम्, आसेवनाशिक्षा वस्त्रपरिधापनादि शिक्षत इत्यादि 'पव्वज्जा' शब्दे ७७५ पृष्ठे उक्तम्।) शिष्यं यथाचार्यः शिक्षयेत्-गुणसंपदयोग्यान् कथंचित्प्रमादिनाऽपि दृष्ट्वा धर्मानुगतैः मधुरवचनाभराचार्यस्तान् शिक्षयेत्, यथा तेषां मनःप्रसादमेव विशिष्टगुणप्रतिपत्त्यभिमुखमनस्तुतं न कोपं प्रतिपन्नगुणभ्रंशकारणमिति। उक्तं च- 'धम्ममइएहिँ अइसु-दरेहिँ कारणगुणोवणीएहिँ पल्हायंतो य मणं, सीसं चोएइ आयरिओ' ॥१॥ (अन्ययूथिक गृहस्थो वा शिक्षयेदिति 'अण्णउत्थिय' शब्दे प्रथमभागे ५७४ पृष्ठे उक्तम्।) ('अन्तरगृहे शिक्षा न कर्तव्येत्युक्तम्' 'अंतरागिह' शब्दे प्रथमभागे ८६ पृष्ठे।) शिक्षयितु द्वे दिशौ प्राह्यः प्राचीना, उदीचीना च। स्था० २ ठा० ४ उ०।

तस्सेव अंतरायम्मि, सिक्खं सिक्खेज्ज पंडिए।

संलेखनानुरूपां शिक्षां भक्तपरिज्ञेङ्गितमरणादिकां वा शिक्षेत्। तत्र ग्रहणशिक्षया यथावन्मरणविधिं विज्ञायासेवनां शिक्षेतेति। सूत्र० १ श्रु० ८ अ०। ( "अट्ठावयं न सिक्खिज्जा।' इति 'धम्म' शब्दे चतुर्थभागे व्याख्यानम्।) (' सत्थमेगे तु सिक्खंता, अतिवायाय पाणिणं। एगे मंते अहिज्जंति, पाणभूयविहेडिणो ॥ " ( सूत्र० १ श्रु० ८ अ०।) इति 'वीरिय' शब्दे षष्ठभागे उदाहृतम्।)

सिक्खण-शिक्षण-न०। आचारग्रन्थे, कल्प० १ अधि० १ क्षण।

सिक्खावण-शिक्षण-न०। अश्वादीनां चतुष्पदानां परिकर्मणि, नि० चू० १ उ०।

सिक्खावणा-शिक्षापणा-स्त्री०। ग्रहणासेवनारूपशिक्षाग्रहणे, पं०भा० १ कल्प। शिक्षापणा त्रिविधा-लोइया, लोउत्तरिया, कुप्पावयणिया। लोइया नाव व्याकरणनाटकादिपु शिक्षादि कुप्रावचनिका-रक्तपटादीनां या शिक्षा, त्रिपटिकादिषु द्रव्यशिक्षा लोकोत्तरा द्विविधा-ग्रहणशिक्षा, आसेवनाशिक्षा च। गहणसिक्खा सुत्तत्थतदुभयाणं आसेवणा-पडिलेहणा, पप्फोडणा य उवट्ठावणा लोइया लोउत्तरा कुप्पावयणिया। लोइया राया रायमच्चठवणा। कुप्पावयणिया भिक्खुमाइयाणं उवसंपदा लोउत्तरा असंयतत्वात्, व्रतेपु स्थापना उपस्थापना। प० चू० १ कल्प।

सिक्खावय-शिक्षापद-न०। शिक्षाया: पदं शिक्षापदम्। शिक्षैव वा पदं-स्थानं शिक्षापदम्। विधिना प्रव्रजितस्य सतः शिक्षाधिकारे, विशे०। ध० र०।

शिक्षाव्रत-न०। शिक्षा-अभ्यासस्तत्प्रधानानि व्रतानि पुनः पुनरासेवार्हाणि। सामायिकादिषु श्रावकधर्मेषु; पंचा० २ विव०। 'दुवालसविहं गिहिधम्मं पडिवज्जा'' अत्र त्रयाणां गुणव्रतानां शिक्षाव्रतेषु गणनात् सप्त शिक्षाव्रतानीत्युक्तम्। श्रा०। चत्वारि शिक्षाव्रतानि भवन्ति, तद्यथा—सामायिकम् देशावकाशिकं पौषधोपवास अतिथिसंविभाग। आव० ६ अ०।

सिक्खावयव्वय-शिक्षापदव्रत-न०। शिक्षणं शिक्षा अभ्यासस्तस्यै तस्या वा पदानि स्थानानि तान्येव व्रतानि शिक्षापदव्रतानि। सामायिकादिषु श्रावकधर्मेषु, ध०१ अधि०। ' सत्त य सिक्खावयाइं' सप्त च शिक्षाप्रधानानि व्रतानि गुणव्रतानामपि नित्याभ्यसनीयतया शिक्षाव्रतत्वेन विवक्षणात् सप्त शिक्षाव्रतान्युक्तानि। आतु०।

अथ यद्व्रतयोगाद्देशविरतो भवति तानि व्रतान्याह—

पंच य अणुव्वयाइं, सत्त उ सिक्खा उ देसजइधम्मो।
सव्वेण व देसेण व, तेण जुओ होइ देसजई ॥ २ ॥

सप्त च शिक्षाप्रधानानि व्रतानि गुणव्रतानामपि नित्याभ्यसनीयतया शिक्षाव्रतत्वेन विवक्षणात् सप्त शिक्षाव्रतान्युक्तानि। आतु०। शिक्षा-अभ्यासस्तस्याः पदानि स्थानानि तान्येव व्रतानि शिक्षापदव्रतानि। " चत्तारि सिक्खावयव्वयाइं" प्रतिदिवसानुष्ठेय सामायिकदेशावकाशिके पुनः पुनरुच्चार्ये इति भावना पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ न प्रतिदिवसाचरणीयाविति। आव०। सामायिकं देशावकाशिकं पौषधोपवास अतिथिसंविभागश्चेति, स्वल्पकालिकत्वाच्चैतेषां गुणव्रतेभ्यो भेदः। गुणव्रतानि तु प्रायो यावज्जीविकानि। एतेष्वपि सामायिकदेशावकाशिके प्रतिदिवसानुष्ठेये पुनःपुनरुच्चारणीये पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ न प्रतिदिवसाचरणीयाविति विवेकः। आवश्यकवृत्तिकृत्। ध० २ अधि०। इयाणिं सिक्खावयाणि, शिक्षा नाम यथा सिक्खगः पुनः पुनर्विद्यामभ्यस्यति, एवमपि, याणि चत्तारि सिक्खावयाणि पुणो २ अब्भसिज्जति अणुव्वयगुणव्वयाणि। एक्कसिं गहियाणि चेव ताणि सिक्खावयाणि सामातियं देसावगासियं पोसहोववासो अतिहिसंविभागो। आ० चू० ६अ०। (प्रथमं शिक्षापदव्रतं सामायिकं तच्च ' सामाइय ' शब्देऽस्मिन्नेव भागे विस्तरतो दर्शितम्।) ( द्वितीयं देशावकाशिकव्रतम् ' देसावगासिय ' शब्दे २६३३ पृष्ठ उक्तम्।) ( तृतीयं पौषधोपवास- ,' पोसह ' शब्दे पञ्चमभागे गतम्।) ( चतुर्थमतिथिसंविभागव्रतम् ' अहासंविभाग ' शब्दे प्रथमभागे ३३ पृष्ठे प्रतिपादितम्। ) चतुर्थशिक्षापदव्रते वृद्धाज्ञा समाचारी—श्रावकेण पौषधं पारयता नियमात्साधुभ्यो दत्त्वा भोक्तव्यम्, कथम् ? यदा भोजनकालो भवति, तदाऽऽत्मनो विभूषां कृत्वा प्रतिश्रयं च गत्वा साधून्निमन्त्रयते, 'भिक्षां गृह्णीतेति' साधूनां च तं प्रति का प्रतिपत्तिः? उच्यते—तदेकः पटलमन्यो मुखानन्तकमपरो भाजनं प्रत्युपेक्षते, माऽन्तरायदोषाः स्थापनादोषा वाऽभूवन्निति। स च यदि प्रथमायां पौरुष्यां निमन्त्रयते, अस्ति च नमस्कारसहितप्रत्याख्यानी ततस्तद् गृह्यते, अथ नास्त्यसौ तदा न गृह्यते, यतस्तद्वोढव्यं भवति, यदि पुनर्घनं लगेत् तदा गृह्यते संस्थाप्यते च। यो वा उद्घाटपौरुष्यां पारयति पारणकवानन्यो वा, तस्मै तद्दीयते। पश्चात्तेन श्रावकेण स संघाटको व्रजति, एको न वर्त्तते प्रेषयितुं, साधू पुरतः श्रावकस्तु मार्गे ( मार्गतो ) गच्छति, ततोऽसौ गृहं नीत्वा तावासनेनोपनिमन्त्रयते, यदि निविशेते तदा भव्यम्, अथ न निविशेते तथापि विनयः प्रयुक्तो भवति। ततोऽसौ भक्तं पानं च स्वयमेव ददाति, भाजनं वा धारयति, स्थित एव वाऽऽस्ते यावद्दीयते; साधू अपि पश्चात्कर्मपरिहारार्थं सावशेषं गृह्णीतः ततो वन्दित्वा विसर्जयति, अनुगच्छति च कतिचित्पदानि, ततः स्वयं भुङ्क्ते। यदि पुनस्तत्र ग्रामादौ साधवो न भवन्ति तदा भोजनवेलायां द्वारावलोकनं करोति, विशुद्धभावेन च चिन्तयतियदि साधवोऽभविष्यन् तदा निस्तारितोऽभविष्यमिति। एष पोषधपारणके विधिः। अन्यदा तु दत्त्वा भुङ्क्ते, भुक्त्वा वा ददातीति। उमास्वातिवाचकविरचितश्रावकप्रज्ञप्तौ तु अतिथिशब्देन साध्वादयश्चत्वारो गृहीताः, ततस्तेषां संविभागः कार्य इत्युक्तम्, तथा च तत्पाठ "अतिथिसंविभागो नाम अतिथयः—साधवः साध्व्यः श्रावकाः श्राविकाश्च, एतेषु गृहमुपागतेषु भक्त्याऽभ्युत्थानासनपादप्रमार्जननमस्कारादिभिरर्चयित्वा यथाविभवशक्ति अन्नपानवस्त्रौषधालयादिप्रदानेन संविभागः कार्यः।' इति। एतद्व्रतारोपणायैव प्रत्य-

इं श्रावकेण "फासुएणं एसणिज्जेणं असण-पाण-खाइम-साइमेणं वत्थपरिग्गहकंबलपायपुंछणेणं पीढफलगसिज्जासंथारेणं ओसहभेसज्जेणं भयवं ! अणुग्गहो कायव्वो" इत्यादिना गुरूणा निमन्त्रणं क्रियते । एतद्व्रतफलं च दिव्यभोगसमृद्धिसाम्राज्यतीर्थकृत्पदादि श्रीशालिभद्रमूलदेवाद्यन्तार्हदादीनामिव सर्वं प्रसिद्धम्, पारम्पर्येण मोक्षोऽपि फलमस्ति, वैपरीत्ये तु दास्यदौर्गत्यादयोऽपीति । अभिहितं चतुर्थं शिक्षापदव्रतम् । ध० २ अधि० । गुणव्रतान्यभिधीयन्ते—तानि पुनस्त्रीणि भवन्ति, तद्यथा-दिग्व्रतम्, उपभोगपरिभोगपरिमाणम्, अनर्थदण्डपरिवर्जनमिति । आव०६ अ० । ( पञ्चम शिक्षापदव्रतम् 'दिसिव्वय' शब्दे चतुर्थभागे २५४० पृष्ठे गतम् । ) ( षष्ठ-शिक्षापदव्रतम् 'उवभोगपरिभोगपरिमाण' शब्दे द्वितीयभागे ८६६ पृष्ठे गतम् । ) ( सप्तमं शिक्षापदव्रतम् 'अणट्ठादंडविरमण' शब्दे प्रथमभागे २८४ पृष्ठे गतम् । )

सिक्खाविअ( य )-शिक्षित-त्रि० । ग्रहणशिक्षादिग्राहिते । पञ्चा० ५ विव० । आसोपदेशदाने, म० ८ श० २ उ० ।

सिक्खावित्तए-शिक्षयितुम्-अव्य० । प्रत्युपेक्षादिसामाचारीं ग्राहयितुमित्यर्थे स्था० ३ ठा० ४ उ० । ग्रहणशिक्षापेक्षया सूत्रार्थौ ग्राहयितुमासेवनाशिक्षापेक्षया तु प्रत्युपेक्षणादि शिक्षयितुमित्यर्थे, स्था० ३ ठा० २ उ० ।

सिक्खावेउं-शिक्षयितुम् अव्य० । ग्रहणशिक्षादि ग्राहयितुमित्यर्थे, पं० व० ३ द्वार ।

सिक्खासमावन्न-शिक्षासमापन्न-त्रि० । शिक्षया-व्रतासेवनया समापन्नो युक्तः । शिक्षिते, उत्त० ५ अ० ।

सिक्खिऊण-शिक्षित्वा-अव्य० । अधीत्येत्यर्थे, "सिक्खिऊण भिक्खेसणसोहिं संजयाण बुद्धाण सगासे" दश०५अ०२ उ० ।

सिक्खिय-शिक्षित-त्रि० । शिक्षा जाताऽस्येति शिक्षितः । उत्त० ४ अ० । शिक्षाग्राहिते, उत्त० ४ अ० । अभ्यस्ते, औ० । उत्त० । पठनक्रिययान्तं नीते, ग० २ अधि० । विशे० । गृहीते, चं० प्र० २० पाहु० । अनु० । सूत्र० । आ० म० ।

सिक्खवंत-शिक्षवत्-त्रि० । शिक्षां ग्रयच्छत्याचार्ये सूत्र० । 'सिक्खावता दुविहा गहणे आसेवणे चेव' शिक्षयन्नपि द्विविधः,एको य शिक्षाशास्त्रं ग्राहयति पाठयत्यपरस्तु तदर्थं दशविधचक्रवालसामाचार्यनुष्ठानतः सेवयति सम्यगनुष्ठापं कारयति । सूत्र० १ श्रु० १४ अ० ।

सिगया-सिकता-स्त्री० । वालुकायाम् . सू० प्र० १८ पाहु० ।

सिगाल-शृगाल-पुं० । जम्बूके, आचा० ।

सिगाली-शृगाली-स्त्री० । शिवायाम् , अनु० ।

सिगु-सिगु-पुं० । वृक्षविशेषे, आ० क० २ अ० ।

सिग्ग-देशीयपदमेतत् । परिश्रमे, व्य० ४ उ० ।

सिग्घ-शीघ्र-न० । आशुशब्दार्थे , स्वल्पे काले , आव० ४ अ० । आ० म० । दर्श० । रा० । वेगवतां मध्ये ऽतिशीघ्रे, औ० । श्लाघ्य-त्रि० । प्रशंसास्पदे, दर्श० ४ तत्त्व । 'सिग्घं निस्सेसं वा अभिगच्छइ" श्लाघ्यं प्रशंसास्पदभूतं निःशेषं प्रशंसास्पदभूतम् । दश० ९ चू० ।

सिग्घगइ-शीघ्रगति-त्रि० । शीघ्रा गतिर्यस्य । द्रुतगमनयुक्ते, सू० प्र० १ पाहु । ( सूर्यादीनां कः शीघ्रगतिरिति 'जोइसिय' शब्दे चतुर्थभागे १६०५ पृष्ठे गतम् । ) (अस्य दर्शन वीरशब्द षष्ठभागे गतम् । )

सिग्घगमन-शीघ्रगमन-सूर्याभदेवस्य वैकुर्विके विमाने,रा० ।

सिचय-सिचय-पुं० । वस्त्रे, व्य० ५ उ० ।

सिज्जंभव-शय्यम्भव-पुं० । प्रभवस्वामिना शिष्ये चतुर्दशपूर्वधरे दशवैकालिककर्त्तरि आचार्ये, दश० १ अ० । कल्प० । पा० । नं० । ति० । महा० । स्था० । नि० चू० । अस्य गृहिपर्याय. २८ दीक्षापर्याय. ११ आचार्यपदवी २३ सर्वायु. ६२ वर्षाणि,स्वर्गनि. वीरमोक्षात् ६८ वर्षे । जै० इ० ।

सिज्जंस-श्रेयस्-त्रि० । परमप्रशस्ये, जी० १ प्रति० ।

श्रेयांस-पुं० । भारते वर्षेऽस्यामवसर्पिण्यां जाते एकादशे जिने, स० ७६ सम० । अनु० । प्रव० । आ० चू० । कल्प० । इदानीं श्रेयान् समस्तभुवनस्य हितकारित्वात् प्रशस्यतरः, श्रेयान् प्राकृतशैल्या छान्दसत्वात् सिज्जंस इत्युच्यते तत्र सर्वेऽपि भगवन्तस्त्रैलोक्यस्यापि श्रेयांस इति विशेषमाह—

महरिहसेज्जारुहणे-म्मि डोहलो तेण होइ सिज्जंसो ।

तस्य राज्ञः पितृपरंपरागता देवतापरिगृहीता शय्या अर्च्यते । यस्तामाश्रयति तस्योपसर्गं देवता करोति । गर्भगते भगवति दिव्यदौहृदमजायत, शय्यामारोहामि । तत्रोपविष्टा देवता समारसितुमपक्रान्ता । सा हि तीर्थकरनिमित्तं देवतया रक्षिता एवं गर्भप्रभावतो देव्याः श्रेयो जातमिति श्रेयांसमिति नामकृतम् । आ० म० २ अ० । ध० । आ० चू० ।

सिज्जंसे णं अरहा असीइं धणुइं उड्ढं उच्चत्तेणं होत्था । ( सू० ८० × ) स० ८० सम० ।

सिज्जंसस्स णं अरहओ छावट्ठिं गणा छावट्ठिं गणहरा होत्था । ( सू० ६६ + ) सम० ।

सिज्जंसे णं अरहा चउरासीइं वाससयसहस्साइं सव्वाउयं पालइत्ता सिद्धे ०जाव सव्वदुक्खप्पहीणे । ( सू० ८४ + ) श्रेयांस.-एकादशस्तीर्थकरः एकविंशतिर्वर्षलक्षाणि कुमारत्वे तावन्त्येव प्रव्रज्याया द्विचत्वारिंशद्राज्ये इत्येवं चतुरशीतिमायुः पालयित्वा सिद्धः । स० । सर्वोऽस्य वक्तव्यता 'तित्थयर' शब्दे चतुर्थभागे २२४७ पृष्ठे गता । ) गजपुरनगरे भरतस्य राज्ञः पुत्रे, मतान्तरेण बाहुबलिनः सुतस्य सोमप्रभस्य । आ०चू०१अ० । आ०म० । येन प्रथममृषभस्वामिने भिक्षा दत्ता । आ० चू० १ अ० । स पश्चात् प्रव्रजितः भगवत आत्मभवसम्बन्धानचीकथत् । आ०क० १ अ० । सिद्धार्थनरेन्द्रे महावीरस्वामिनः पितरि, नि० । कल्प० । अहोरात्रस्य त्रिंशन्मुहूर्त्तान्तर्द्वितीये, कल्प० १ अधि० ६ क्षण । द्वादशमासानां लोकोत्तररीत्या पौषमासे, चं० प्र० १० पाहु० । जं० । सू० प्र० ।

सिज्जा-शय्या-स्त्री० । शेरतेऽस्यां साधव इति शय्या । सू० २

उ० । शीङ् स्वप्ने , अस्य क्यप्प्रत्ययान्तस्य कृत्यल्युटो बहुलमिति वचनात् शयन शय्या । आव० ४ अ० । ' य्य-र्य-र्यो ज ' ॥८।२।२४॥ इति सयुक्तस्य द्वित्वम् । प्रा० 'एच्छय्यादौ" ॥८।१।५७॥ इत्यादेरस्यैत्व वा । सिज्जा । सेज्जा । प्रा० । सर्वाङ्गीणवसतौ ध० २ अधि० । बृहत्संस्तारके , भ० २ श० ५ उ० । शयने ध० २ अधि० । अनु० । आव० । ओघ० । नि० । स० । दशा० । प्रा० । उत्त० । श्रमणोपाश्रये , व्य० ४ उ० । आचा० । उत्त० । शून्यगृहादिकाया वसतौ , आचा० १ श्रु० १ अ० । शयनीये , ज्ञा० १ श्रु० १ अ० । स्था० । आचा० । आव० । सूत्र० । भ० । " सव्वगिया सेज्जा " ग० १ अधि० । पं० भा० । आ० म० । यत्र वा प्रसारितपादैः सुप्यते सा शय्या संस्तारको वा । आसने . नि० चू० १३ उ० । प्रश्न० । आ० म० । आ० चू० । आव० । वृ० । व्य० । तत्र नामनिष्पन्ने निक्षेपे शय्यैषणेति , तस्या निक्षेपविधाना य पिण्डैषणानिर्युक्तिर्यत्र संभवति ता तत्रातिदिश्य प्रथमगाथया अपरासां च निर्युक्तीनां यथायोग संभव द्वितीयगाथया आविर्भाव्य निक्षेप च तृतीयगाथया शय्यापदनिक्षेपे प्राप्त नामस्थापने अनादृत्य निर्युक्तिकृदाह—

दव्वे खित्ते काले, भावे सिज्जा य जा तहिं पगयं ।

केरिसिया सिज्जा खलु,संजयजोग त्ति नायव्वा ॥२९८॥

द्रव्यशय्या क्षेत्रशय्या कालशय्या भावशय्या , अत्र च या द्रव्यशय्या तस्यां प्रकृतं , तामेव च दर्शयति—कीदृशी सा द्रव्यशय्या ? संयतानां योग्येत्येवं ज्ञातव्या भविष्यति ।

द्रव्यशय्याव्याचिख्यासयाऽऽह—

तिविहा य दव्वसिज्जा, सचित्ताऽचित्त मीसगा चेव ।

खित्तम्मि जम्मि खित्ते,काले जा जम्मि कालम्मि ॥२९९॥

त्रिविधा द्रव्यशय्या भवति. तद्यथा—सचित्ता, अचित्ता , मिश्रा चेति । तत्र सचित्ता पृथिवीकायादौ . अचित्ता तत्रैव प्रासुके, मिश्राऽपि तत्रैवार्द्धपरिणते । अथवा-सचित्तामुत्तरगाथया स्वत एव निर्युक्तिकृद् भावयिष्यति । 'क्षेत्र'मिति तु क्षेत्रशय्या , सा च यत्र ग्रामादिके क्षेत्र क्रियते, कालशय्या तु या यस्मिन्नृतुबद्धादिके काले क्रियते ।

तत्र सचित्तद्रव्यशय्योदाहरणार्थमाह—

उक्कलकलिंग गोअम, वग्गुमई चेव होइ नायव्वा ।

एयं तु उदाहरणं, नायव्वं दव्वसिज्जाए ॥ ३०० ॥

अस्या भावार्थ कथानकादवसेय , तच्चेदम्—एकस्यामटव्या द्वौ भ्रातरावुत्कलकलिङ्गाभिधानौ विषमप्रदेशे पल्लिं निवेश्य चौर्येण वर्त्तेते । तयोश्च भगिनी वल्गुमती नाम , तत्र कदाचिद् गौतमाभिधानो नैमित्तिक समायातः, ताभ्या च प्रतिपन्न । तया च वल्गुमत्योक्तं-यथा नाय भद्रक , अत्र वसन् यदा तदाऽयमस्माक पल्लिविनाशाय भविष्यत्यतो निर्द्धाट्यते , ततस्ताभ्यां तद्वचनान्निर्द्धाटितः । स तस्यां प्रद्वेषमापन्न प्रतिज्ञामग्रहीद् , यथा—नाहं गौतमो भवामि यदि वल्गुमत्युदरं विदार्य तत्र न स्वपिमीति । अन्ये तु भणन्ति—नैव वल्गुमत्यपत्यानां लघुत्वात्पल्लिस्वामिनी , उत्कलकलिङ्गौ नैमित्तिकौ , सा तयाऽभक्त्या गौतमं पूर्वनैमित्तिक निर्द्धाटितवती । अतस्तत्प्रद्वेषात्प्रतिज्ञामादाय सर्वपान् वर्षाशिरोग्र , सर्पपाश्च वर्षाकालेन जाता , ततस्तदनुसारेणान्यं राजानं प्रवेश्य सा पल्ली समस्ता लुण्टिता दग्धा च । गौतमेनापि वल्गुमत्या उदरं पाटयित्वा सावशेषजीवितदेहाया उपरि सुप्तमित्येषा वा सचित्ता द्रव्यशय्येति ।

भावशय्याप्रतिपादनार्थमाह—

दुविहा य भावसिज्जा, कायगए छव्विहे य भावम्मि ।

भावे जो जत्थ जया, सुहदुहगब्भाइसिज्जासु ॥३०१॥

द्वे विधे-प्रकारावस्या सा द्विविधा. तद्यथा-कायविषया , षड्भावविषया च । तत्र यो जीव यत्र औदयिकादौ भावे यदा-यस्मिन् काले वर्त्तते सा तस्य षड्भावरूपा भावशय्या , शयनं शय्या स्थितिरिति कृत्वा । तथा स्त्र्यादिकायगतो गर्भत्वेन स्थितो यो जीवस्तस्य स्त्र्यादिकाय एव भावशय्या , यत स्त्र्यादिकाये सुखिते दु खिते सुप्ते उत्थिते वा तादृगवस्थ एव तदन्तर्वर्त्ती जीवो भवति, अतः कायविषया भावशय्या द्वितीयेति । अध्ययनार्थाधिकारः सर्वोऽपि शय्याविषय । आचा० २ श्रु० १ चू० २ अ० १ उ० । शय्या-संस्तारक । आचा० २ श्रु० १ चू० २ अ० १ उ० । ( अस्य महात्म्यम्-' संथार ' शब्देऽस्मिन्नेव भागे गतम् । ) एतत्प्रतिपादके आचाराङ्गद्वितीयश्रुतस्कन्धस्य द्वितीये अध्ययने, स० ।

सिज्जाकप्पविहिण्णु-शय्याकल्पविधिज्ञ-पुं० । आचाराङ्गे शय्यायां संस्तारग्रहणं, येन स सूत्रतोऽधीतोऽर्थतश्च शय्याकल्पविधिज्ञ । शय्याकल्पसूत्रार्थज्ञ नि० चू० २ उ० ।

सिज्जाकप्पिय-शय्याकल्पिक-पुं० । शय्याया ग्रहणारक्षणधारणप्रवण वृ० १ उ० ।

सिज्जाकर-शय्याकर-पुं० । शय्यां प्रतिश्रयं करोतीति शय्याकर. । नि० चू० ८ उ० । वसतिस्वामिनि, वृ० २ उ० ।

सिज्जादाता-शय्यादातृ-त्रि० । शय्याया वसतेर्दानात् शय्यादाता । सागारके , वृ० २ उ० ।

सिज्जाधर-शय्याधर-पुं० । शय्यां पतन्तीं छादनलेपनाभ्याम् आदिशब्दात् स्थूणादानादिभिश्च धारयति अत शय्याधर । यद्वा-तया शय्यया साधूना विस्तीर्णया नरकाद त्मानं धारयतीति शय्याधर । सागारिके , वृ० २ उ० । नि० चू० । ( अत्र विस्तर ' सागरिय ' शब्देऽस्मिन्नेव भागे गत । )

सिज्जापडिमा-शय्याप्रतिमा-स्त्री० । शय्यते यस्यां सा शय्या संस्तारकस्तस्या प्रतिमा-अभिग्रहः-शय्याप्रतिमा । वसतिविषयकाभिग्रहे, स्था० ।

चत्तारि सिज्जापडिमाओ पण्णत्ताओ । ( सू० ३३१× )

' चत्तारि सेज्जा इत्यादि सुगम, नवरं शय्यते यस्या सा शय्या-संस्तारकस्तस्या. प्रतिमा अभिग्रहा शय्याप्रतिमा तत्रोद्दिष्टं फलकादीनामन्यतमत् ग्रहीष्यामि नेतरदित्येका । नान्यत्रेति द्वितीया । तदपि यदि तस्यैव शय्यातरस्य गृहे भवति ततो गृहीष्यामि नान्यत् आनीय तत्र शयिष्य

इति तृतीया। सदपि फलकादिकं यदि यथासंस्तृतमेवास्ते ततो ग्रहीष्यामि नान्यथेति चतुर्थी। आसु च प्रतिमासु आद्ययोः प्रतिमयोर्गच्छनिर्गतानामग्रहः, उत्तरयोरन्यतरस्या मभिग्रहो, गच्छान्तर्गतानां तु चतसृष्वपि कल्पन्ते इति। स्था० ४ ठा० ३ उ०।

सिज्जापरिसह-शय्यापरि(री)षह-पुं०। शय्या-वसतिस्तत्परिषहणं च तज्जन्यदुःखादरुपत्ता। भ० ८ श० ८ उ०। समविषमभूमिकापांशूत्करप्रचुरमतिशिशिरं बहुधर्मकं वा उपाश्रयं मृदुकठिनादिभेदनात्कावत्र्क वा संस्तारकं वा प्राप्योद्वेगाकरणं, प्रव० ८६ द्वार। "शुभाशुभायां शय्यायां, विषहेत सुखासुखे। रागद्वेषौ न कुर्वीत, प्रातस्त्याज्येति चिन्तयत्॥१॥" ध० ३ अधि०।

नैषेधिकीतश्च स्वाध्यायादि कृत्वा शय्यां प्रति निवर्तेतातस्तत्परीषहमाह—

उच्चावयाहिं सिज्जाहिं, तवस्सी भिक्खू थामवं।
णाइवेलं विहन्निज्जा, पावदिट्ठी विहन्नइ ॥२२॥ (सू०)

ऊर्ध्वं चिता उच्चा, उपलिप्तलाघूपलक्षणमेतत्, यद्वा शीतातपनिवारकत्वादिगुणैः शय्यान्तरोपरिस्थितत्वेनोच्चा तद्विपरीतास्त्ववचा, अनयोर्द्वन्द्वे उच्चावचा नानाप्रकारा श्चोच्चावचास्ताभिः,शय्याभिः—वसतिभिः तपस्वी—प्रशस्यतपाऽन्वितो, भिक्षुः प्राग्वत्, स्थामवान्—शीतातपादिसहनं प्रति सामर्थ्यवान् नातिवेलं—स्वाध्यायादिवेलातिक्रमेण विहन्यात्—हर्नगतावपि वृत्तेरत्राह शीतादिभिरभिभूत इति स्थानान्तरं गच्छेत्। यद्वा-अतिवेलाम्-अन्यसमयानिशायिनीं मर्यादा-समतारूपामुच्चां शय्यामवाप्याहो! सभाग्योऽहं यस्येदृशी सकलर्तुसुखोत्पादिनी मम शय्येति, अवचावाप्तौ वा अहो! मम मन्दभाग्यता येन शय्यामपि शीतादिनिवारिकां न लभे इति हर्षविषादादिना न विहन्यात्-नोल्लङ्घयेत्, किमित्येवमुपदिश्यत इत्याह— पावदिट्ठी विहन्नइ' त्ति प्राग्वदिति सूत्रार्थः।

किं पुनः कुर्यादित्याह—

पइरिक्कुवस्सयं लद्धुं, कल्लाणं अदुव पावगं।
किमेगरायं करिस्सइ, एवं तत्थऽहियासए ॥२३॥ (सू०)

'पइरिक्कं' स्त्र्यादिविरहितत्वेन विविक्तमव्याबाधं वा उपाश्रय-वसतिं लब्ध्वा-प्राप्य कल्याणं-शोभनम् 'अदुव' त्ति अथवा पापं—पांशूत्कराकीर्णत्वादिभिरशोभनं, किं?, न किञ्चित्, सुखं दुःखं चेति गम्यते, एका रात्रिर्यत्र तदेकरात्रं करिष्यति—विधास्यति? कल्याणः पापको वोपाश्रय इति प्रक्रमः। कोऽभिप्रायः?-कश्चित् पुरोपचितसुकृतो विविधमणिकिरणोद्द्योतितासु महाधनसमृद्धासु महारजतरजतोपचितभित्तिषु मणिनिर्मितोरुस्तम्भासु नदितरं तु जीर्णविशीर्णभग्नकटकस्थूणापटलसंवृतद्वारासु तृणकचवरतुषमूषकोत्करपांशुभस्मसविण्मूत्रावमद्धीर्णासु श्वनकुलमार्जारमूत्रप्रसेकदुर्गन्धिष्वाजन्म वसतिषु वसन्ति। मम त्वद्यैवमीदृशी श्वोऽन्या भविष्यतीति किमत्र हर्षेण विषादेन वा?,मया हि धर्मनिर्वाहाय विविक्तत्वमेवाश्रयस्यान्वेष्यं,किमपरेण?, 'एवमि ति-अमुना प्रकारेण 'तत्र' ति कल्याणे पापके वाऽऽश्रये अध्यासीत—सुखं तु खं वाऽधिसहेत, प्रतिमाकल्पिकापेक्षं चैकरात्रमिति, स्थविरकल्पिका—पेक्षया तु कतिपया रात्रयः, दिवसोपलक्षणं च रात्रिग्रहणमिति सूत्रार्थः।

अत्र निर्वेदद्वारम्, इह च 'अदुव पावगं'ति सूत्रावयवमर्थतः स्पृशन् उदाहरणमाह निर्युक्तिकारः—

कोसंबी जन्नदत्तो, य सोमदत्तो य सोमदेवो य।
आयरिय सोमभूई, दुण्हं पि य होइ णायव्वं ॥१०८॥
सन्नाइगमणं वियड-वेरग्गा दोवि ते नईतीरे।
पाओवगया नइपू-रएण उदहिं तु उवणीया ॥१०९॥

व्याख्या—कोशाम्बी यज्ञदत्त सोमदत्तश्च सोमदेवश्च आचार्यः सोमभूतिर्द्वयोरपि च भवति—ज्ञातव्य। स्वज्ञातिगमनं विकटवैराग्यात् द्वावपि तौ नदीतीरे पादपोपगतौ नदीपूरकेणोदधिं तूपनीतौ इति गाथाद्वयाक्षरार्थः।

भावार्थस्तु वृद्धसम्प्रदायादवसेयः, स चायम्—कोसंबीए णयरीए जण्णदत्तो धिज्जाइओ, तस्स दो पुत्ता-सोमदत्तो सोमदेवो य। ते दोऽवि निव्विण्णकामभोगा पव्वतिया सोमभूइअणगारस्स अंतिए, बहुस्सुया य बहुआगमा य जाया। ते अन्नया य सन्नायपल्लिमागया, तेसिं मायापियरो उज्जेणिं गतल्लिया। तहिं च विसए धिज्जाइणो वियडं आवियंति। तेहिं तेसिं वियडं अन्नेण दव्वेण मेलेऊण दिण्णं। केऽवि भणंति—वियडं चेव अयाणताण दिण्णं, तहिं चि य तं विसेस अयाणमाणेहिं पीयं। पच्छा वियडत्ता जाया, ते चिंतेंति—अम्हेहिं अजुत्त कयं, पमाओ एस, वरं भत्तं पच्चक्खायंति। ते एगाए णईए तीरे तीसे कट्ठाण उवरि पाओवगया। तत्थ अकाल वरिसं जायं, पूरो य आगतो, हरिया, वुज्झमाणा य उदएण समुद्दं णीया। तहिं सम्मं अहियासिय, अहाउयं, पालियं, सेज्जापरीसहा अहियासितो समविसमाहिं सेज्जाहिं। एवं समो अहियासियव्वो त्ति। उत्त० २ अ०। "सेज्ज" त्ति शय्या संस्तारकः—चम्पकादिपट्टो मृदुकठिनादिभेदेनोच्चावचः प्रतिश्रयो वा पांशूत्करप्रचुरः शिशिरो बहुधर्मको वा तत्र नोद्विजत ११. आव० ४ अ०।

सिज्जापरिसहविजय-शय्यापरी(रि)षहविजय-पुं०। स्वगविषमप्रचुरशर्कराशकलसंकुलेषु शीतेष्वपूषु वा देशेषु मृदुकठिनादि भेदभिन्नचम्पकादिपट्टेषु वा निद्रामनुभवतः सम्यक्प्रवचनानुसारेण तत्कृतबाधासहनं, अरागगमनं च। पं० सं० ४ द्वार।

सिज्जाभंड-शय्याभाण्ड-न०। शय्योपकरणे, भ० ११ श० ६ उ०।

सिज्जायर-शय्यातर-पुं०। शय्या—वसतिस्तया तरति संसारमिति शय्यातरः। साधूनां वसतिदातरि, दश० ३ अ०। (सागारिय शब्देऽस्मिन्नेव भागे८०६पृष्ठेऽस्य व्याख्या गता।) (शय्यातरेण कोऽशन भवितव्यमिति 'लिंगत्थी' शब्दे चतुर्थभागे २०४८ पृष्ठे गतम्।)

सिज्जायरपिंड-शय्यातरपिण्ड-पुं०। शय्यातरो-धर्मोवसामी तस्य पिण्डः। सागारिकेण दीयमाने अशनादिद्वादश-

विये पिण्डे,उत्त०२अ०। ( 'सागारियपिण्ड ' शब्देऽस्मिन्नेव भागे उदाहृतम्।)

सिज्जायरभत्त–शय्यातरभक्त–न०। शय्यातरपिण्डे, नि० चू० ११ उ०।

सिज्जावाली–शय्यापालिका–स्त्री०। ' शय्यारक्षिकायां शयनीयस्मारिकायाम् , आ० म० १ अ०।

सिज्जासंथार–शय्यासंस्तार–पुं० शेरतेऽस्यामिति शय्या–वसतिः सैव संस्तारकः, यद्वा–शय्या–वसतिरिव संस्तारको द्विधा–परिशाटी,अपरिशाटी चेति शय्योपलक्षित संस्तारकः शय्यासंस्तारकः । शय्या–शयनं तदर्थः संस्तारकः–संस्तारकभूमयः।अथवा–शय्यायां–वसतौ संस्तारकाः शय्यासंस्तारकाः । ज्ञा० १ श्रु० १ अ०। शय्यासंस्तारकोभयं, बृ० १ उ० ३ प्रक०। आचा०। आव०। नि० चू०। पं० भा०। ग०। स०।

सिज्झ–सिध्मन्–न०। क्षुद्रकुष्ठविशेषे, भ० ७ श० ६ उ०। जं०।

सिज्झिया–साध्यापिका–स्त्री०। प्रातिवेशिमकस्त्रियाम् , बृ० १ उ० २ प्रक०।

सिञ्च–सिच्–धा०। क्षरणे, "सिचेः सिञ्चसिम्पौ" ॥८।४।९६॥ इति सिच्धातोः सिञ्चसिम्पादेशौ । सिञ्चइ । सिम्पइ । सिञ्चइ । सेचति । प्रा० ४ पाद ।

सिट्ठ–शिष्ट–पुं०। शिष्यते स्म शिष्टः। वृत्तस्थज्ञानवृद्धसेवोपलब्धविशुद्धसेवामनुजविशेषे, ध० १अधि०। साधुजनसंमते, द्वा०२२द्वा०। वेदस्मृत्याद्यनुसारिणि, पञ्चा० १३ विव०। विशिष्टजने, पञ्चा० १३ विव०। क्षीणदोषे सम्यग्दृष्टौ, द्वा०।

तल्लक्षणम्—

अंशतः क्षीणदोषत्वात् , शिष्टत्वमपि युक्तिमत् ।
अत्रैव हि परोक्तं तु, तल्लक्षणमसंगतम् ॥ १६ ॥

अंशत इति—अंशतो–देशतः क्षीणदोषत्वाद्दोषक्षयवत्त्वात् शिष्टत्वमपि अत्रैव–सम्यग्दृष्टावेव युक्तिमत् न्याय्योपेतम्। " क्षीणदोषः पुरुषः शिष्टः " इति लक्षणस्य निर्वाचनत्वात् । सर्वदोषक्षयेण सर्वथा शिष्टत्वस्य सिद्धे केवलिनि वा विश्रान्तत्वेऽपि सम्यग्दृष्टेरारभ्य देशतो विचित्रस्य शिष्टत्वस्यान्यत्रानपायत्वात् । न चैवं शिष्टत्वस्यातीन्द्रियत्वेन दुर्ग्रहत्वाच्छिष्टाचारेण प्रवृत्त्यनापत्तिरिति शङ्कनीयं प्रशमसंवेगादिलिङ्गैस्तस्य सुग्रहत्वात्। दोषा रागादय एव तेषां च क्षियमाणादर्वाक् न क्षयमुपलभामहे, न वा तेषु निरवयवेषु अंशोऽस्ति येनांशतः तत्क्षयो वक्तुं शक्येतेति चेन्न, अत्युचितप्रवृत्तिसंवेगादिलिङ्गकप्रबलतदुपक्षयस्यैवांशतो–दोषक्षयार्थत्वात , आत्मानुग्रहोपघातकारित्वेन चयोपचयवत सावयवस्य कर्मरूपदोषस्य प्रसिद्धत्वाच्च इत्यन्यत्र विस्तरः । हि–निश्चितं परोक्तं तु द्विजन्मोद्भावितं तु तस्य शिष्टस्य लक्षणम् असंगतमयुक्तम् ।

तथाहि—

वेदप्रामाण्यमन्तृत्वं, बौद्धे ब्राह्मणताडिते ।
अतिव्याप्तं द्विजेऽव्याप्तं, स्वापे स्वारसिकं च तत् ॥१७॥

वेदेति—" वेदप्रामाण्यमन्तृत्वम् " एतावदेव शिष्टलक्षणम् ब्राह्मणताडिते बौद्धेऽतिव्याप्तं, तेनापि " वेदाः प्रमाणम् " इत्यभ्युपगमात् । स्वारसिकं च तत् वेदप्रामाण्यमन्तृत्वं द्विजे ब्राह्मणेऽव्याप्तम् । अयं भावः—स्वारसिकत्वविशेषणेन बौद्धेऽतिव्याप्तिनिरासेऽपि स्वारसिकवेदप्रामाण्यमन्तृत्वम् ' यदा कदाचिद्वाच्यं सर्वदा वा ? आद्ये बौद्धे एवातिव्याप्तितादवस्थ्यं, तस्यापि जन्मान्तरे वेदप्रामाण्याभ्युपगमध्रौव्यात्। अन्त्ये च शयनादिदशायां वेदप्रामाण्याभ्युपगमाभाववति ब्राह्मणेऽव्याप्तिरिति।

तदभ्युपगमाभाव–स्तद्व्यत्ययमन्तृता ।
तावच्छिष्टत्वमिति चे–त्तदप्रामाण्यमन्तरि ॥ १८ ॥

तदिति—तस्य वेदप्रामाण्यस्याभ्युपगमात् यावत् तद्व्यत्ययस्य वेदप्रामाण्यस्य मन्तुरनभ्युपगमः तावच्छिष्टत्वम् शयनादिदशायां च वेदप्रामाण्यानभ्युपगमाद् ब्राह्मणे नाव्याप्तिरिति भावः। अप्रामाण्यमन्यस्यापि स्वारसिकस्य ग्रहणाद्बौद्धताडिते ब्राह्मणे वेदाप्रामाण्याभ्युपगन्तरि नातिव्याप्तिः अप्रमाकरणत्वाभावयोश्च द्वयोरपि प्रमाण्यविरोधित्वेन संग्रहात्सैकग्रहेऽन्याभ्युपगन्तर्यनिव्याप्तिः । अत्राह—इति चेत्तदप्रामाण्यमन्तरि–वेदाप्रामाण्याभ्युपगन्तरि ।

अजानति च वेदत्व–मव्याप्तं चेद्विवक्ष्यते ।
वेदत्वेनाभ्युपगम–स्तथापि स्याददः किल ॥ १९ ॥

अजानति चेति—वेदत्वं च वेदेऽजानति ब्राह्मणे अव्याप्तं लक्षणमेतत् तेन वेदाप्रामाण्याभ्युपगमात् । अथ चेद्वि वेदत्वेनाभ्युपगमो विवक्ष्यते वेद एव वेदत्वमजानतश्च न वेदत्वेनाप्रामाण्याभ्युपगमः किं त्विदमप्रमाणमिति इदंत्वादिनैवेति नाव्याप्तिः, तथाप्यद एतल्लक्षणं किल ।

ब्राह्मणः पातकात्प्राप्तः, काकभावं तदापि हि ।
व्याप्नोतीशं च नोत्कृष्ट–ज्ञानावच्छेदिका तनुः ॥२०॥

ब्राह्मण इति—यदा ब्राह्मणः पातकात् काकजन्मनिबन्धनाद् दुरितात् काकभावं प्राप्तः तदापि हि स्यात् ब्राह्मणदशायां वेदप्रामाण्याभ्युपगन्तृत्वात् काकदशायां च वेदाप्रामाण्यानभ्युपगन्तृत्वात्। उत्कृष्टज्ञानावच्छेदिका च तनुरीशं–भवानीपतिं न व्याप्नोति। तथा च काकेऽतिव्याप्तिवारणार्थमुत्कृष्टज्ञानावच्छेदकशरीरवत्त्वे सतीति विशेषणदाने ईश्वरेऽव्याप्तिरित्यर्थः।

अन्याङ्गरहितत्वं च, तस्य काकभवोत्तरम् ।
देहान्तराग्रहदशा–माश्रित्यातिप्रसक्तिमत् ॥२१॥

अन्येति–अन्याङ्गरहितत्वं च अपकृष्टज्ञानावच्छेदकशरीररहित्यं च तस्य ब्राह्मणभवानन्तरप्राप्तकाकभवस्य, काकभवोत्तरं देहान्तराग्रहदशा–शरीरान्तरानुपादानावस्थाम् आश्रित्य अतिप्रसक्तिमदतिव्याप्तं तदानीमपकृष्टज्ञानावच्छेदकशरीररहित्यात्।

अवच्छेदकदेहाना–मपकृष्टधियामथ ।
संबन्धविरहो यावान् , प्रामाण्योपगमे सति ॥ २२ ॥

अवच्छेदकेति–अथ प्रामाण्योपगमे सति–वेदप्रामाण्या–

भ्युपगमकाले यावान् 'अपकृष्टधियाम्-अवच्छेदकदेहानाम् अपकृष्टज्ञानावच्छेदकशरीराणां संबन्धविरह -संबन्धाभाव'।

अप्रामाण्यानुपगम-स्तावत्कालीन एव हि ।
शिष्टत्वं काकदेहस्य,प्रागभावस्तदा च न ॥२३॥

अप्रामाण्येति--तावत्कालीन एव हि--सकलतत्समानकालीन एव अप्रामाण्यानुपगमो--वेदप्रामाण्याभ्युपगमविरहः, शिष्टत्वं काकदेहस्य प्रागभावो वेदप्रामाण्याभ्युपगमसमानकालीन , तदा च काकस्य मरणानन्तरं शरीरान्तराग्रहदशायां नास्तीति नातिव्याप्ति । इत्थं च यावन्तं कालं वेदत्वेन वेदाप्रामाण्याभ्युपगमस्य विरहो वेदप्रामाण्याभ्युपगमसमानकालीनयावदपकृष्टज्ञानावच्छेदकशरीरसंबन्धाभावसमानकालीनस्तावन्तं कालं स शिष्ट । ब्राह्मणोऽपि बौद्धो जातो वेदाप्रामाण्यं यावन्नाभ्युपगतवान् तावच्छिष्ट एव । बौद्धोऽपि ब्राह्मणो जातो वेदप्रामाण्यं यावन्नाङ्गीकृतवांस्तावदशिष्ट एवेति फलितमाह प-र्यालोच । अत्र च वेदप्रामाण्याभ्युपगमसमानकालीनत्वं-यत्तत्सामानाधिकरण्यमपि वाच्यम् । अन्यथोत्तरकाले तत्कालीनं यत्किंचिद्व्यधिकरणापकृष्टज्ञानावच्छेदकशरीरसंबन्धप्रागभावनाशेनाव्याप्त्यापत्ते ।

नैवं तदुत्तरे विप्रे-ऽव्याप्तेः प्राक् प्रतिपत्तितः ।
प्रामाण्योपगमात्तत्र,प्राक् तत्रेति न सेति चेत् ॥२४॥

नैवमिति--नैवं यथा विवक्षित प्राक् तदुत्तरं विप्रे काकभवात्तत्र्क्षणप्राप्तब्राह्मणभवे प्राक्प्रतिपत्तित. प्राग्भवीयवेदप्रामाण्यग्रहमाश्रित्याव्याप्ते । तदानीं तदीयवेदाप्रामाण्याभ्युपगमविरहस्य प्राक्तनब्राह्मणभवीयवेदप्रामाण्याभ्युपगमसमानकालीनयावदपकृष्टज्ञानावच्छेदकशरीरसंबन्धविरहासमानकालीनत्वादान्तरालिककाकभव एव काकशरीरसंबन्धप्रागभावनाशात् । प्रामाण्योपगमाद्वेदप्रामाण्याभ्युपगमात् प्राक् तत्र काकभवोत्तरब्राह्मणे तच्छिष्टत्वं न इति हेतोरलक्ष्यत्वादेव न सोऽव्याप्ति । वेदप्रामाण्याभ्युपगमे तु लक्षणसपत्त्यैवेति भाव । इति चेदन्वेव यत्किंचिद्वेदप्रामाण्याभ्युपगम एव ग्राह्य ।

तथा च--

यत्किञ्चित्तद्ग्रहे पश्चात्, प्राक् च काकस्य जन्मनः ।
विप्रजन्मान्तराले स्या-त्सा ध्वंसप्रागभावतः ॥२५॥

यत्किञ्चिदिति-यत्किञ्चित्तद्ग्रहे-यत्किञ्चिद्वेदाप्रामाण्याभ्युपगमस्य लक्षणमध्यनिवेशे काकस्य जन्मन पश्चात् प्राक् च विप्रजन्मनोरन्तरालेऽप्राप्तिविश्लेषाभ्यां. मध्यभावे ध्वंसप्रागभावत काकशरीरसंबन्धध्वंसप्रागभावावाश्रित्य सा प्रसिद्धाऽतिव्याप्ति स्यात् । अयं भाव --यो ब्राह्मण काको जातस्तदनन्तरं च ब्राह्मणो भविष्यति तस्य मरणानन्तरं ब्राह्मणशरीराग्रहदशायामुत्तरब्राह्मणभवकालीनवेदप्रामाण्याभ्युपगमसमानकालीनकाकशरीरध्वंसेनैव लक्षणसाम्राज्यादव्याप्ति । प्राक्तनकाकशरीरसंबन्धप्रागभावस्तु न तत्समानकालीन एवेति तस्यैव ब्राह्मणभवत्यागानन्तरं काकशरीराग्रहदशायां प्राक्तनब्राह्मणभवकालीनवेदप्रामाण्याभ्युपगमसमानकालीनकाकशरीरसंबन्धप्रागभावेनाव्याप्तिरिति । किं च-



यो ब्राह्मण प्राग् बौद्धो मृतस्तस्य स्वापादिदशायां वेदप्रामाण्याभ्युपगमविरहस्याप्रिमब्राह्मणभवीयनिरुक्तयावच्छरीरसंबन्धाभावसमानकालीनत्वात्तत्रातिव्याप्तिरिति बोध्यम् ।

जीववृत्तिविशिष्टाङ्गा-भावाभावग्रहोऽप्यसन् ।
उत्कर्षश्चापकर्षश्चा-व्यवस्थो यदपेक्षया ॥ २६ ॥

जीवेति-जीववृत्तिविशिष्ट--जीववृत्तित्वविशिष्टो योऽङ्गाभाव उत्कृष्टज्ञानावच्छेदकशरीराभावस्तदभावग्रहोऽपि तद्भावनिवेशोऽपि काकश्वरयोरतिव्याप्तिवारणार्थमनवकृष्टलक्षणाधानासमर्थ. । यस्मादुत्कर्षश्चापकर्षश्च अपेक्षया व्यवस्थित । कीटिकादिज्ञानापेक्षयोत्कृष्टत्वात् काकादिज्ञानस्य, ब्राह्मणादिज्ञानस्य च देवादिज्ञानापेक्षयाऽपकृष्टत्वात् । इत्थं च तदवस्थ एवातिव्याप्त्यव्याप्ती । न च काकादिज्ञानव्यावृत्तं मनुष्यादिज्ञानसाधारणमुत्कर्षं नाम जातिविशेषमाद्रियन्ते भवन्त , अन्यथा कार्यमात्रवृत्तिजाते कार्यतावच्छेदकत्वनियमेन तदवच्छिन्नेऽनुगतकारणकल्पनापत्ति., ईश्वरज्ञानसाधारण्याच्च तस्य कार्यमात्रवृत्तित्वमिति चेत्तथापि देवदत्तादिजन्यतावच्छेदिकयाऽपकर्षविशेषेण च सांकर्यान्न जातित्वं तत्तद्ज्ञानावच्छेदकशरीरसंबन्धाभावकूटस्तु दुर्ग्रह इति न किंचिदेतत् ।

ननु एकजन्मावच्छेदेन स्वसमानाधिकरणस्वोत्तरवेदाप्रामाण्याभ्युपगमध्वंसानाधारवेदप्रामाण्याभ्युपगमोत्तरकालवृत्तित्वविशिष्टवेदाप्रामाण्याभ्युपगमविरह. शिष्टत्वमिति निर्वचने न कोऽपि दोषो भविष्यतीत्यत आह--

अपि चाव्याप्त्यतिव्याप्ती, कात्स्न्र्यदेशविकल्पतः ।
आद्यग्रहे स्वतात्पर्या-न्न दोष इति चेन्मतिः ॥ २७ ॥

अपि चेति--अपि च कात्स्न्र्यदेशविकल्पत कृत्स्नवेदप्रामाण्याभ्युपगमो विवक्षितो देशतस्त्वभ्युपगमो वेति विवेचनेऽव्याप्त्यतिव्याप्ती । कृत्स्नवेदप्रामाण्याभ्युपगमस्य ब्राह्मणेष्वप्यभावात् । न हि वेदान्तिनो नैयायिकाद्यभिमता श्रुतिं प्रमाणयन्ति,नैयायिकादयो वा वेदान्त्यभिमता यत्किंचिद्वेदप्रामाण्य च बौद्धादयोऽप्यभ्युपगच्छन्ति, "न हिंस्यात् सर्वभूतानि, अग्निर्हिमस्य भेषजम्" इत्यादिवचनानां तेषामपि संमतत्वादिति । स्वतात्पर्यात्-स्वाभिप्रायमपेक्ष्य । आद्यग्रहे यावद्वेदप्रामाण्याभ्युपगमनिवेशे न दोष., स्वस्वतात्पर्ये प्रमाणं श्रुतिरिति हि सर्वेषां नैयायिकादीनामभ्युपगमः । इति चेन्मति कल्पना भवदीया ।

नैव विशिष्य तात्पर्या-ग्रहे तन्मानताऽग्रहात् ।
सामान्यतः स्वतात्पर्ये, प्रामाण्यं नोऽपि संमतम् ॥२८॥

नैवमिति-एवं मतिर्नियुक्ता कस्याश्चिद् दुरवबोधया. श्रुतेर्विशिष्य स्वकल्पितार्थानुसारेण तात्पर्याग्रह तन्मानताया-स्तत्प्रमाणताया अग्रहात् । स्वतात्पर्ये सर्ववेदप्रामाण्याभ्युपगमस्य तु शक्यत्वादनाकलिततात्पर्यायामपि श्रुतौ प्रमाणत्वग्रहेऽपि प्रमाकरणत्वस्य सुग्रहत्वाच्च दोष इत्यत आह-सामान्यतो नयरूपत्वेन , स्वतात्पर्ये स्वाभिप्रायप्रामाण्ये वेदप्रामाण्यं नोऽस्माकं जैनानामपि संमतम् । यावन्तो हि परसमयास्तावन्त एव नया इति ,अनयोरिकाभिप्राये सर्व-

मेव शब्दं प्रमाणीकुर्वन्. सकलवेदप्रामाण्याभ्युपगमोऽनपाय एवेति । द्वा० १५ द्वा० । शिष्टसमयानुपालनार्थं ग्रन्थादौ संबन्धाभिधानम्—कोऽपि शिष्योऽल्पश्रुत कंचिदाचार्यं पूर्वगतसूत्रार्थधारकं चालभ्य श्रुतसागरपारगतं शिरसा प्रणम्य विज्ञपयति स्म । यथा—भगवन्निच्छामि युष्माकं श्रुतनिधीनामन्ते यथावस्थितं कालविभागं ज्ञातुमिति । तत एवमुक्ते सति आचार्य आह—शृणु वत्स ! तावदित्यादि, तथा-तद्वाद्वतीयप्राभृतवृत्तावपि संख्यास्थानविसदृशत्वमाश्रित्योक्तम्, यथा-इह स्कन्दिलाचार्यप्रवृत्तौ दु पमानुभावतो दुर्भिक्षप्रवृत्त्या साधूना पठनगुणनादिकं सर्वमप्यनशत् ततो- दुर्भिक्षातिक्रमे सुभिक्षप्रवृत्तौ द्वयो. संघयोर्मेलापकोऽभवत् । तद्यथा—एको वलभ्याम्, एको मथुरायाम् । तत्र च सूत्रार्थसंघटने परस्परवाचनाभेदो जात । विस्मृतयोर्हि सूत्रार्थयो. स्मृत्वा संघटने भवत्यवश्यं वाचनाभेदो न काचिदनुपपत्ति. । ग० १ अधि० ।

सृष्ट—न० । एकीभूत, स्था० ३ ठा० ३ उ० । कृपादित्वादत इ । प्रा० १ पाद ।

श्लिष्ट—न० । मिलिते, स्था० ३ ठा० ३ उ० ।

सिट्ठत्त—शिष्टत्व—न० । शिष्टभावे , वक्तु शिष्टत्वसूचने , अभिमतसिद्धान्तोक्तार्थतया वक्तु. शिष्टतासूचकत्वे च । स० ३५ सम० । दशमे सत्यवचनातिशये, रा० ।

सिट्ठगिहत्थ—शिष्टगृहस्थ—पुं० । वेदस्मृत्याद्यनुसारिणि गृहस्थे, पञ्चा० १३ विव० ।

सिट्ठजन—शिष्टजन—पुं० । विशिष्टभव्यलोके, षो० ८ विव० ।

सिट्ठाऽऽयार—शिष्टाऽऽचार—पुं० । शिष्टचरिते, ध० । तथा शिष्यन्तेस्म शिष्टा वृत्तस्थज्ञानवृद्धसेवोपलब्धविशुद्धशिक्षा मनुजविशेषास्तेषामाचारश्चरितम् । यथा—

"लोकापवादभीरुत्वं, दीनाभ्युद्धरणादर ।
कृतज्ञतासु दाक्षिण्य, सदाचार प्रकीर्तित. ॥ १ ॥
सर्वत्र निन्दासंत्यागो, वर्णवादश्च साधुषु ।
आपद्यदैन्यमत्यन्तं, तद्वत्संपदि नम्रता ॥ २ ॥
प्रस्तावे मितभाषित्व—मविसवादनं तथा ।
प्रतिपन्नक्रिया चेति, कुलधर्मानुपालनम् ॥ ३ ॥
असद्व्ययपरित्याग , स्थाने चैव क्रिया सदा ।
प्रधानकार्ये निर्बन्ध', प्रमादस्य विवर्जनम् ॥ ४ ॥
लोकाचारानुवृत्तिश्च, सर्वत्रोचितपालनम् ।
प्रवृत्तिर्गर्हिते नेति, प्राणै कण्ठगतैरपि ॥ ५ ॥'

इत्यादि । तस्य प्रशंसा-प्रसंशनं पुरस्कार इत्यर्थ , यथा—"गुणेषु यत्न. क्रियतां किमाटोपै प्रयोजनम् । विक्रीयन्ते न घण्टाभि—र्गाव क्षीरविवर्जिता ॥ १ ॥" तथा-'शुद्धा. प्रसिद्धिमायान्ति,लघवोऽपीह नेतरे । तमस्यपि विलोक्यन्ते, दन्तिदन्ता न दन्तिन ॥२॥" इति ॥ ध० १ अधि० ।

सिट्ठाऽऽयारपसंसा—शिष्टाचारप्रशंसा—स्त्री० । शिष्टाचारपुरस्कारे, ध० १ अधि० ।

सिट्ठि—शिष्टि—स्त्री० । 'ष्टस्यानुष्ट्रेष्टासंदष्टे" ॥८।२।३४॥ इति । ष्टस्य ठ । प्रा० । "इत् कृपादौ" ॥ ८।१।१२८ ॥ इति ऋत इत्वम । प्रा० । रचनायाम् , अष्ट० २२ अष्ट० ।

श्रेष्ठिन्—पुं० । नगरमुख्यव्यवहारिणि, कल्प० १ अधि० ३ क्षण ।

सिढिर—शिथिर—त्रि० । "मेथि-शिथिर-शिथिल-प्रथमे थस्य ढ" ॥८।१।२१५॥ इति थस्य ढ. । शिथिले, प्रा० १ पाद ।

सिढिल—शिथि(र)ल—त्रि० । "मेथि-शिथिर-शिथिल-प्रथमे थस्य ढ" ॥८।१।२१५॥ इति थस्य ढ । हरिद्रादित्वाद्रस्य ल । प्रा० । मन्दवीर्ये , आचा० १ श्रु० ५ अ० ३ उ० । श्लथे, भ० १ श० १ उ० ।

सिढिलत्तया—शिथिलता—स्त्री० । शैथिल्ये,भ०१६,श०४ उ० ।

शिथिलत्वच्—स्त्री० । श्लथचर्मणि , भ० १६ श० ४ उ० ।

सिढिलीकय—श्लिष्टीकृत—त्रि० । सूत्रबद्धाग्नितप्तलोहशलाकाकलापवन्निधत्ते, भ० ६ श० १ उ० ।

शिथिलीकृत—त्रि० । मन्दविपाकीकृते , भ० ६ श० ३ उ० । पं० सू० ।

सिणाण—स्नान—न० । सोत्तमाङ्गशौचे,आचा०२ श्रु०१ चू० २ अ० १ उ० । स्नानं । देशस्नानं-सर्वस्नानञ्च देशस्नान-हस्तपादमुखप्रक्षालनम् । सर्वस्नानं शिरसा स्नातत्व सत्यागमप्रसिद्ध्या । पं० ६ विव० । स्नानं च देशसर्वभेदभिन्नं देशस्नानमधिष्ठानशौचातिरेकेणाक्षिपक्ष्मप्रक्षालनमपि । सर्वस्नानं प्रतीतम् ।." राइभत्ते सिणाणे य गंधमल्ले य वीयणे।" अनाचरितम् , दश०३ अ० । जीत० । स्नानं द्रव्यभावसंयोजितम् ,स्नानं वा विलेपनं चन्दनकुङ्कुमादिभि । पं०६विव० । अभ्यङ्गपूर्वकेऽङ्गप्रक्षालने , तथायतनयाऽत्र संसक्तभूम्या संपातिमसत्त्वाकुले वा काले वस्त्रापूतजलेन वा यत् कृतम् । आचा० १ श्रु० ६ अ० ४ उ० । स्नानं तैलाभ्यङ्गादिपूर्वकं देवपूजार्थं करणेन नियमभङ्ग, लौकिककारणे च यतना रक्ष्या । ध० २ अधि० ।

साम्प्रतं स्नानप्रतिपादकं सप्तदशस्थानमाह—

वाहिओ वा अरोगी वा, सिणाणं जो उ पत्थए ।
वुक्कंतो होइ आयारो, जढो हवइ संजमो ॥ ६० ॥
संतिमे सुहुमा पाणा, घसासु भिलुगासु अ ।
जे अ भिक्खू सिणायंतो, विअडेणुप्पलावए ॥६१॥
तम्हा ते न सिणायंति, सीएण उसिणेण वा ।
जावज्जीवं वयं घोरं, असिणाणमहिट्ठगा ॥ ६२ ॥
सिणाणं अदुवा कक्कं, लुद्धं पउमगाणि अ ।
गायस्सुव्वट्टणट्ठाए, नायरंति कयाइ वि ॥ ६३ ॥

'वाहिओ व' त्ति सूत्रम्, व्याधिमान् वा—व्याधिग्रस्त अरोगी वा—रोगविप्रमुक्तो वा स्नानम्—अङ्गप्रक्षालनं यस्तु प्रार्थयते—सेवत इत्यर्थ , तेनेत्थंभूतेन व्युत्क्रान्तो भवति, आचारो—बाह्यतपोरूप , अस्नानपरीषहानतिसहनात्, 'जढ' परित्यक्तो भवति संयम.—प्राणिरक्षणादिक , अप्कायादिविराधनादिति सूत्रार्थ ॥ ६० ॥ प्रासुकस्नानेन कथं संयमपरित्याग इत्याह—'संतिमे' त्ति सूत्रम्, सन्ति एते—प्रत्यक्षोपलभ्यमानस्वरूपा. सूक्ष्म —श्लक्ष्णा 'प्राणिनो'—द्वी—

न्द्रियादय एवासु—शुषिरभूमिषु भिलुगासु च—तथा-विधभूमिराजीषु च, यास्तु भिलु- स्नानजलोज्झनक्रियया विकृतेन-प्रासुकोदकेनोत्प्लावयति,तथा च तद्विराधनात. स-यमपरित्याग इति सूत्रार्थ ॥ ६१ ॥ निगमयन्नाह-'तम्ह त्ति, सूत्रम् यस्मादेवमुक्तदोषप्रसङ्गस्तस्मात् ने-साधवो न स्नान्ति शीतेन वोष्णेनोदकेन, प्रासुकेनाप्रासुकेन वेत्यर्थ , किंविशि-ष्टास्त इत्याह—यावज्जीवम्—आजन्म व्रत घोरम्-दुरनु-चरमस्नानमाश्रित्य अधिष्ठातार —अस्यैव कर्तार इति सूत्रा-र्थ ॥ ६२ ॥ किंच-' सिणाणं ' ति सूत्रम्-स्नान—पूर्वोक्तम् । अथवा—कल्कं—चन्दनकल्कादि लोध्र—गन्धद्रव्य पद्म-कानि-च—कुङ्कुमकेसराणि, चशब्दादन्यच्चैवंविध गात्रस्य उद्वर्त्तनार्थम्—उद्वर्त्तननिमित्त नाचरन्ति कदाचिदपि याव-ज्जीवमव भावसाधव इति सूत्रार्थः ॥६३॥ दश० ६ अ० २ उ० ।

" मलमइलपंकमइला, धूलीमइला न त नरा मइला ।
जे पावपंकमइला, ते मइला जीवलायम्मि ॥ १६६ ॥
खणमित्त सलिलेहिं, सरीरदेहस्स सुद्धिजणग ज ।
कामग त्ति खिसिद्धं, महेसिए त ननु सिणाणं " ॥ १७० ॥

उक्त च-

" स्नानं मददर्पकरं, कामाङ्ग प्रथम स्मृतम् ।
तस्मात्काम परित्यज्य, नैव स्नान्ति दमे रता." ॥१७१॥

ध० र० १ अधि० १० गुण ।

तथा-चोऽवाचि—

"नोदकक्लिन्नगात्रोऽपि, स्नान इत्यभिधीयते ।
स स्नातो यो दमस्नात., स बाह्याभ्यन्तर. शुचि ॥१७४॥
चित्तमन्तर्गत दुष्ट, तीर्थस्नानैर्न शुध्यति ।
शतशोऽपि जलैर्धौत-सुराभाण्डमिवाशुचि" ॥ १७५ ॥

ध० र० १ अधि० १० गुण । गृहस्थाना स्नानसं-लोके न तिष्ठेत् । आचा० २ श्रु० १ चू० १ अ० ६ उ० । स्नान मनोमलत्यागो' योगश्चेन्द्रियरोधनम् । अ-भेददर्शनं ज्ञानं , ध्यानं निर्विषय मन ॥ १ ॥ न तु बाह्या-विशुद्धि " ज मग्गहा बाहिरियं विसोहिं, ण त सुदिट्ठं कुसला वयंति ।" जयघोषं प्रति विजयघोष स्नाननिरूप-णायाह-"द्रव्यतो भावतश्चैव,द्विधा स्नानमुदाहृतम्। बाह्य-माध्यात्मिकं चेति,तदन्यै परिकीर्त्यते॥१॥ "उत्त० १२ अ० । "पाओ सिणाणादिसु णत्थि मोक्खो,खारस्स लोणस्स असा सणेण । ते मज्जमस लसणं च भोच्चा , अण्णत्थवासं परिक-प्पयंति ॥१॥" सूत्र०१ श्रु०७ अ० । ('कुसील'शब्दे तृतीयभाग ६१० पृष्ठ व्याख्यातैषा ।)' दगेण जे सिद्धिमुदाहरंति,सायं च पाय उदग फुसता । दगस्स फासेण सिया य सिद्धि,सिज्झ-सु पाणा बहवे दगंसि ।" सूत्र० १ श्रु०७अ० । ( उदग' शब्दे-द्वितीयभाग ७६६ पृष्ठ व्याख्यातैषा गाथा ।) "न शक्यं निर्म-लीकर्तु, गात्र स्नानशतैरपि । अश्रान्तमेव स्रोतोभि-रुद्गिरच्च घभिर्मलम्॥१॥ ' उत्त०२अ० । अपत्यार्थं मन्त्रौषधीभि संस्कृ तजलैर्मूलादिस्नानं, रोगमुक्तस्नानं च । उत्त०१५ अ० । (ग्ला-नस्य स्नान 'गिलाण' शब्दे तृतीयभाग ८८८ पृष्ठ गतम् । )

सप्त स्नानानि लौकिके पुनरिद् सप्तधोक्तम् । यदाह—

" सप्त स्नानानि प्रोक्तानि स्वयमेव स्वयंभुवा ।
द्रव्यभावविशुद्ध्यर्थं-मृषीणा ब्रह्मचारिणाम् ॥ १ ॥
आग्नेयं वारुणं ब्राह्मय. वायव्य दिव्यमेव च ।
पार्थिवं मानस चैव, स्नानं सप्तविधं स्मृतम् ॥ २ ॥
आग्नेयं भस्मना स्नान-मवगाह्य तु वारुणम् ।
आपोहिष्ठामय ब्राह्मय, वायव्यं तु गवां रज ॥ ३ ॥
सूर्यदृष्टं तु यद् दृष्ट. तद्दिव्यमृषयो विदुः ।
पार्थिव तु मृदा स्नान, मन.शुद्धिस्तु मानसम् ॥४॥"

स्था० ५ ठा० ३ उ० । आचा० । स्नात्यनेनेति स्नानम् । गन्धोदकादिके, उत्त० २१ अ० । सुगन्धिद्रव्यसमुदाये, आ-चा० २ श्रु० १ चू० २ अ० १ उ० ।

सिणाय--स्नात ( क )--पुं० । क्षालितसकलघातिकर्ममलत्वा-त्स्नात इव स्नात स एव स्नातक । ध०३ अधि० । घातिक-र्ममलप्रक्षालनावाप्तशुद्धस्नानस्वरूपे निर्ग्रन्थभेदे , स्था० ३ ठा० २ उ० । भ० ।

**सिणाते पंचविधे पण्णत्ते, तं जहा–अच्छवी १ असवले २ अकम्मंसे ३ संसुद्धणाणदंसणधरे अरहा जिणे केवली ४ अपरिस्सावी ५, ६ । ( सू० ४४५× )**

स्नान इव स्नान स एव स्नातक , सयोगोऽयोगो वा केवलीति । अधुनैत एव भेदत उच्यन्ते, तत्र पुलाक इ-त्यासेवापुलाक पञ्चविधो, लब्धिपुलाकस्यैकविधत्वात् , त-त्र स्खलितमिलितादिभिरतिचारैर्ज्ञानमाश्रित्यात्मानम् अ-सारं कुर्वन् ज्ञानपुलाक , एव कुदृष्टिसंस्तवादिभिर्दर्शनपुला-क . मूलोत्तरगुणप्रतिसेवनातश्चरणपुलाकः , यथोक्तलिङ्गाधि-कग्रहणात् निष्कारणेऽन्यलिङ्गकरणाद्वा लिङ्गपुलाक , किञ्चि-त्प्रमादान्मनसाऽकल्प्यग्रहणाद्वा यथा सूक्ष्मपुलाको नाम प-ञ्चम इति । बकुशो द्विविधोऽपि पञ्चविध , तत्र शरीरोप-करणभूषयो संज्ञिन्त्यकारी आभोगबकुश , सहसाकारी, अनाभोगबकुश , प्रच्छन्नकारी संवृतबकुश , प्रकटकारी असंवृतबकुश , मूलोत्तरगुणाश्रित वा संवृतासंवृतत्वं किञ्चित्प्रमादी अक्षिमलाद्यपनयन् वा यथा सूक्ष्मबकुशो नाम पञ्चम इति । कुशीलो द्विविधोऽपि पञ्चविधस्तत्र ज्ञानदर्शन-चारित्रलिङ्गान्युपजीवन् प्रतिसेवनतो ज्ञानादिकुशीलो लि-ङ्गस्थाने क्वचित् तपो दृश्यते तथाऽय तपश्चर्त्तीत्येवमनु-मोद्यमानो हर्षङ्गच्छन यथासूक्ष्मकुशील प्रतिसेवनयैवेति , कषायकुशीलोऽप्येवं नवरं क्रोधादिना विद्यादिज्ञान प्रयुञ्जा-नो ज्ञानकुशीला दर्शनग्रन्थ प्रयुञ्जानो दर्शनत., शाप ददच्चा-रित्रेण कषायैर्लिङ्गान्तरं कुर्वन् लिङ्गतो. मनसा कषायान् कु-र्वन् यथासूक्ष्म । चूर्णिकाकारव्याख्या त्वेव सम्यगाराधन-विपरीता प्रतिगता वा सेवना प्रतिसेवना । सा पञ्चसु ज्ञा-दिषु येषा ते प्रतिसेवनाकुशीला कषायकुशीलास्तु पञ्चसु ज्ञानादिषु येषा कषायैर्विराधना क्रियत इति । अन्तर्मुहूर्तप्र-माणाया निर्ग्रन्थाद्धाया प्रथमे समये वर्त्तमानः एक शेषेषु द्वितीय अन्तिम तृतीय शेषेषु चतुर्थ सर्वेषु पञ्चम इति वि-वक्षया भेद एषामिति । छवि -शरीरं तदभावात्काययोगनि-रोधे सति अच्छविर्भवति अव्यथको वा १, निरतिचारत्वाद-शबल २, क्षपितकर्मत्वादकर्मांश इति ३ तृतीयः । ज्ञानान्तर-णासंपृक्तत्वात्संशुद्धज्ञानदर्शनधर पूजार्हत्वादर्हन् नास्य रहो-रहस्यमस्तीत्यरहा वा,जितकषायत्वात् जिन ,केवल परिपूर्ण

ज्ञानादित्रयमस्यास्तीति केवलीति चतुर्थः ४। निष्क्रियत्वात् सकलयोगनिरोधे अपरिस्रावीति पञ्चमः ५। क्वचित्तु पुनः- अर्हन् जिन इति पञ्चमः। स्था० ५ ठा० ३ उ०। भ०। प्रव०। पं० भा०। 'सिणाए त्ति' सिणायति' ना उवसंतवेयए होज्जा खीणवेयए होज्ज' त्ति—क्षपकश्रेण्यामेव स्नातकत्वभावादिति। भ० २५ श० ६ उ०। "सुहमाणजलविसुद्धे, कम्ममलाविक्खया सिणाउ त्ति। दुविहो य सो सजोगी, तहा अजोगी विणिद्दिट्ठो॥ ५४॥" ध० र० ३ अधि० ७ लक्ष०। तथाविधमार्यदेशवशवर्तित्वेन स्वनामख्याते पुरुषे, पिं०। ('मानपिंड' शब्दे षष्ठ भागे अस्य कथा कथयिता।)

सिणायग-स्नातक-पुं०। स्नाते, स्वार्थिककप्रत्ययविधानात्। द्वा० २ अष्ट०। जिनगृहे स्नपनं स्नात्रं तदपि प्रत्ययं पर्वसु वा, करणाशक्तेनापि प्रतिवर्षमेकैकं साडम्बरसमग्रसामग्रीमेलनादिपूर्वं कार्यम्। स्था० ४ ठा० १ उ०। ध०। पर्वसु जिनगृहे स्नपनं कार्यम्। देवस्नातको देवश्रेष्ठ। सूत्र० २ श्रु० ६ अ०। बोधिमस्ति, सूत्र० २ श्रु० ६ अ०। घातिकर्ममलप्रक्षालनावाप्तशुद्धज्ञानस्वरूपे निर्ग्रन्थभेदे, स्था० ५ ठा० ३ उ०। षट्कर्माभिरतेषु वेदाध्यापकेषु शौचाचारपरतया नित्यं स्नायिषु ब्रह्मचारिषु, "सिणायगाणं तु दुवे सहस्से, जे भोयए णितिए माहणाणं॥ ३६॥" सूत्र० २०७ अ०। (अत्र दूषणम् 'अद्दगकुमार' शब्दे प्रथमभागे २५५ पृष्ठे उक्तम्।) पर्वसु त्रिपञ्चसप्तकुसुमाञ्जलिप्रक्षेपादिपूर्वं भगवतः स्नपने, ध० २ अधि०। (सविस्तरपूजावसरे च नित्यं विशेषतश्च पर्वसु त्रिपञ्चसप्तकुसुमाञ्जलिप्रक्षेपादिपूर्वं भगवतः स्नात्रं विधेयमिति 'चेइय' शब्दे तृतीयभागे १२८७ पृष्ठे गतम्।)

सिणिद्ध-स्निग्ध-त्रि०। आर्द्रे, आचा० २ श्रु० २ चू० १ अ० १ उ०। स्था०। घने, औ०। अरूक्षे, आ० १ श्रु० ६ अ०। शुभकान्तौ, रा०।

सिणेह-स्नेह-पुं०। स्वजनादिषु प्रेमणि, उत्त० १ अ०। सूत्र०। ... सूत्र० २ श्रु० ३ अ०। स्था०। "छेदणे भेदणे चेव, घिसणे पीसणे तहा। अभिघाते सिणेहे य, कार स्साएत्ति यावरे॥१॥" नि० चू० १ उ०। तैलघृतादौ, स्था० १० ठा० ३ उ०। मात्रादिसंबन्धहेतौ, औ०। जले, कल्प० ३ अधि० ६ क्षण। रागस्नेहयोः क प्रतिविशेष इत्युच्यते, रूपाद्याक्षेपजनितः प्रीतिविशेषो रागः, सामान्यतस्त्वपत्यादिगोचरः स्नेहः। आव० १ अ०।

माया पिया एहुसा भाया, भज्जा पुत्ता य ओरसा।
नालं ते मम ताणाय, लुप्पंतस्स सकम्मुणा॥ ३॥

पण्डित इति विचारयेदिति अध्याहारः कर्तव्य, इतीति, किम् एते मम त्राणाय—मम रक्षायै न अलं—न समर्थाः। कथंभूतस्य मम, स्वकर्मणा पीड्यमानस्य। एते के माता पिता स्नुषा—पुत्रवधूः भ्राता—सहोदरः भार्या—पत्नी पुत्राः पुत्रत्वेन मानिताः च—पुनः औरसाः स्वयमुत्पादिताः, एते सर्वेऽपि स्वकर्मसमुद्भूतेदु खाद् रक्षणाय न समर्था भवन्तीत्यर्थः।

एअमट्ठं सपेहाए, पासे समियदंसणे।
छिंदे गेहिं सिणेहं च, न कंखे पुव्वसंथवं॥ ४॥

शमितदर्शनः शमितं ध्वस्तं दर्शनं मिथ्यादर्शनं येन स शमितदर्शनः। अथवा—सम्यक्प्रकारेण इतं प्राप्तं दर्शनं सम्यक्त्वं येन स समितदर्शनः, एतादृशः संयमी एतदर्थं पूर्वोक्तमर्थम् अशरणादिकं 'सपेहाए'—स्वप्रज्ञया—स्वबुद्ध्या 'पासे' इति—पश्येत् हृदि अवधारयेत्, च—पुनः 'गेहिं' गृद्धिं रसलाम्पट्यं च—पुनः स्नेहं पुत्रकलत्रादिषु रागं छिन्द्यात्। पुनः पूर्वसंस्तवं—पूर्वपरिचयः एकेन ग्रामादिवासस्तं न स्मरेत्। उत्त० ६ अ०।

नमिऊणऽरहंताणं, सिद्धाणं कम्मचक्कमुक्काणं।
सयणसिणेहविमुक्का-ण सव्वसाहूण भावेणं॥ नि० चू० १ उ०।

"मेघापयः किसलयानि च सल्लकीनां, विन्ध्योपकण्ठविपिनं स्वकुलं च हित्वा। किं ताम्यसि द्विप! गतोऽसि वशं करिण्याः, स्नेहो निबन्धनमनर्थपरंपरायाः॥" शी॥ सूत्र० १ श्रु० २ अ० २ उ०॥ आ० चू०।

सिणेहकाय-स्नेहकाय-पुं०। अप्कायविशेषे, भ० १ श० ६ उ०।

सिणेहज्झवसाण-स्नेहाध्यवसान-न०। स्नेहहेत्वध्यवसानभेदे, आ० क० ४ अ०।

सिणेहद्द-स्नेहार्द्र-न०। अभिष्वक्तेनार्द्र जीवभेद, सूत्र० २ श्रु० ६ अ०।

सिणेहपयवज्जिय-स्नेहपयोवर्जित-न०। स्नेहेन घृतादिना पयसा क्षीरेण वर्जितं भक्तम्। घृतपयोवर्जिते भक्ते, ओघ०।

सिणेहपरूवणा-स्नेहप्ररूपणा-स्त्री०। कर्मपुद्गलानां संबन्धजनकस्नेहप्ररूपणायाम्, पं० सं० ५ द्वार।

सिणेहपाण-स्नेहपान-न०। द्रव्यविशेषपक्वघृतादिपाने भैषज्यविषये, आ० १ श्रु० १३ अ०।

सिणेहराग-स्नेहराग-पुं०। सिणेहरागो नाम यो यस्मिन् विषये मूर्छितस्तस्य तद्विषयमूर्छायाम्, आ० चू० १ अ०। (अत्रोदाहरणं 'राग' शब्दे षष्ठे भागे समुपदर्शितम्।)

सिणेहविगइ-स्नेहविकृति-स्त्री०। स्नेहरूपासु विकृतिषु, स्था० ४ ठा० १ उ०।

सिणेहसुहुम-स्नेहसूक्ष्म-न०। अवश्यायहिममिहिकाकरकहरतनुरूपे सूक्ष्मभेदे, स्था० ८ ठा० ३ उ०।

से किं तं सिणेहसुहुमे? पंचविहे पण्णत्ते, तं जहा—उस्साहिमए मिहिया करए हरतणुए, जे छउमत्थेणं जाव पडिलेहियव्वे भवइ से तं सिणेहसुहुमे। (सू० ४५ ×) कल्प० ३ अधि० ६ क्षण। दश०।

सिणेहायथण-स्नेहायतन-न०। जलाऽऽवाहनस्थाने, कल्प० ३ अधि० ६ क्षण।

सिणह-शिश्न-पुं०। "सूक्ष्म-श्न-ष्ण-स्न-ह्न-ह्ण-क्ष्णां ण्हः" ॥८।२।७५॥ इति। संयुक्तस्य नस्य ण्हः। पुरुषचिह्ने, प्रा०।

सिणहाय-स्नानीय-पुं०। स्नानकरणयोग्यजलाधारे, उत्त० १२ अ०। त्रि०। शुचिभूते, उत्त० १२ अ०।

सित—सित—त्रि० । बद्धे , नं० ।

सित्त—सिक्त—त्रि० । केवलोदकेनार्द्रीकृते, ग० १ अधि० । आ० । अ० । रा० । उदकच्छटनेन कृतसेचने , औ० । जी० ।

सित्ति—सित्ति—पुं० । ऊर्ध्वमधो वा गच्छतः सुखोत्तारावतारहेतौ काष्ठादिमये पथि, स्था० १० ठा० । ( 'भत्तपच्चक्खाण' शब्दे पञ्चमभागेऽस्य विस्तरो गतः । )

सित्थ—सिक्थ—न० । 'क-ग-ट-ड-त-द-प-श-ष-स-ँक-ँपामूर्ध्वं लुक्' ॥८।२।७७॥ एषां संयुक्तवर्णसंबन्धिनामूर्ध्वं स्थितानां लुग्भवति । सिक्थं सित्थं । कर्म०,प्रा० । ग० । आ० म० । अनु० । प्रश्न० । विपा० । मधूच्छिष्टे रज्जुनिर्मिते पदार्थे,नीलयाञ्च । भक्तपुलाके, ग्रासे च । पु० । वाच० ।

सिद्ध—सिद्ध—पुं० । ये येन गुणेन निष्पन्ना परिनिष्ठिता सिद्धौदनवद्; न पुनः साधनीया इत्यर्थः । ध० २ अधि० । कल्प० ।

एगे सिद्धे । ( सू० ४६+ )

सिद्ध्यति स्म कृतकृत्यो भवेत् सेधयति स्म वा—अगच्छत् अपुनरावृत्त्या लोकाग्रमिति सिद्धः । सितं वा बद्धं कर्म ध्मातं दग्धं यस्य स इति निरुक्तात् सिद्धः । कर्मप्रपञ्चनिर्मुक्तः, स च एको द्रव्यार्थतया पर्यायार्थतस्त्वनन्तपर्याय इति,अथवा—सिद्धानामनन्तत्वेऽपि तत्सामान्यादेकत्वम् । अथवा—कर्मशिल्पविद्या-मन्त्रयोगागमार्थयात्राबुद्धितपःकर्मक्षयभेदेनानेकत्वेऽप्यस्यैकत्वं सिद्धशब्दाभिधेयत्वसाम्यादिति । कर्मक्षयसिद्धस्य च परिनिर्वाणम् । स्था० १ ठा० । कर्मप्रपञ्चनिर्मुक्ते , पा० । अपगतसकलकर्ममले , चं० प्र० १ पाहु० । दशा० । भ० । दश० । आव० । अशेषद्वन्द्वरहिते , सूत्र० १ श्रु० १ अ० ४ उ० । शुक्लध्यानानलनिर्दग्धकर्मेन्धने मुक्तिपदभाजि जीवे , पा० । अपगतसकलकर्मांशेन परमसुखिनि एकान्तकृतकृत्ये , आ० म० १ अ० । कर्मविगमात् कृतकृत्ये , ल० । आव० २ अ० । निर्दग्धानेकभवकर्मेन्धने, ल० । जी० । सूत्र० । संथा० । पं० सू० । आ० चू० । सिद्धा खेत्तलोगस्स निरवसेसाणं च कम्मपगडीण जो खाइ भावलोगो तस्स उत्तमा खीणसव्वकम्म त्ति भणितं होति । आ० चू० ४ अ० । सिद्धः पञ्चदशविधः । विशे० ।

अथ सिद्धनमस्कारं व्याचिख्यासुराह—

सिद्धो जो निप्फन्नो, जेण गुणेण स य चोद्दसविगप्पो ।
नेओ नामाईओ, ओयणसिद्धाइओ दव्वे ॥३०२७॥

इह 'सिद्ध' इति कोऽर्थः ?। उच्यते—'षिध संराद्धौ' 'राध साध संसिद्धौ' 'षिधू शास्त्रे माङ्गल्ये च' सिध्यति स्म सिद्धो यो येन गुणेन निष्पन्नः-परिनिष्ठित',न पुनः साधनीय इत्यर्थः । स च सिद्धः सामान्यतो नामसिद्धादिभेदाच्चतुर्दशविधो ज्ञेयः । तत्र नाम-स्थापनासिद्धौ सुगमौ । द्रव्यसिद्धस्तु सिद्धो-निष्पन्न ओदन , आदिशब्दात्-पाकोत्तीर्णघटादिर्गृह्यते , अस्यौदनादेर्निष्पन्नत्वगुणेन परिनिष्ठितत्वात् , अप्रधानत्वेन च द्रव्यत्वात् इति गाथार्थः ।

शेषानेकादश सिद्धभेदानाह—

कम्मे सिप्पे य विज्जाए, मंते जोगे य आगमे ।
अत्थ जत्ता अभिप्पाए, तवे कम्मक्खए इय ॥३०२८॥

कर्मसिद्धः, शिल्पसिद्धः , विद्यासिद्धः, मन्त्रसिद्धः, योगसिद्धः , आगमसिद्धः , अर्थसिद्धः, यात्रासिद्धः, अभिप्रायो बुद्धिपर्यायस्ततो बुद्धिसिद्धः , तपःसिद्धः , कर्मक्षयसिद्धः । इति निर्युक्तिश्लोकसमासार्थः ।

एतेषां च कर्मादिसिद्धानां स्वरूपप्रतिपादनपरा 'कम्मं जमणाईओ' इत्यादिकाः 'न किलम्मइ जो तवसा' इतिगाथापर्यन्ता एकचत्वारिंशद् गाथा सकथानकभावार्था मूलावश्यकटीकातोऽवसेया इति । अथ कर्मक्षयसिद्धमेव प्रेप्सुर्नतो निरुक्तविधिना प्रतिपादयन्नाह—

दीहकालरयं जंतु—कम्मं से सियमट्ठहा ।
सियं धंतं ति सिद्धस्स, सिद्धत्तमुवजायइ ॥३०२९॥

व्याख्या-दीर्घः संतानापेक्षयाऽनादित्वात् स्थितिबन्धकालो यस्य तद् दीर्घकालम् , निसर्गनिर्मलजीवस्यानुरञ्जनाद् मालिन्यापादनाद् रजः, अथवा—स्नेहेन बन्धनयोग्यं भवतीति साम्याद् रज , सूक्ष्मत्वसाम्याद् वा रज इति कर्मण एव विशेषणम् , दीर्घकालं च तद् रजश्चेति दीर्घकालरज ; 'ज तु कम्मं ति' दीर्घकालरजोरूपं यत् कर्म दीर्घकालस्थितिकं रजोरूपं यत् कर्मेत्यर्थः, एतदेवंविधं कर्म, तुशब्दस्य विशेषणार्थत्वादत्र भव्यस्य, संबन्धि गृह्यते, नाभव्यस्य , तस्य वक्ष्यमाणध्मातत्वायोगात् , अथवा भव्यसंबन्धित्वमिह कर्मणो ध्मातत्वसामर्थ्यादेव लभ्यते । यच्छब्दोऽपि साक्षादुपात्ते कर्मणि न तथाविधं साफल्यमनुभवति ; अत 'जंतुकम्मं' इत्येतदन्यथा व्याख्यायते—जन्तुर्जीवस्तस्य कर्म जन्तुकर्म । अनेनाबद्धकर्मव्यवच्छेदमाह—बद्धं यत् कर्मेत्यर्थः । कथंभूतं यत्कर्म जन्तुकर्म वा ? इत्याह—'से सियमट्ठह' त्ति ज्ञानावरणाद्यष्टप्रकारं पूर्वं 'से' तस्य सितं बद्धमित्यर्थः । अथवा 'से सियं' ति अनाभोगनिर्वर्तितयथाप्रवृत्तकरणेन सम्यग्ज्ञानाद्युपायतश्च क्रमेण शेषित शेषं कृतं, स्थित्यनुभवादिभिरल्पीकृतमित्यर्थः । तद् दीर्घकालस्थितिक रजोरूपं भव्यस्य संबन्धि यत्कर्म जन्तुकर्म वा पूर्वमष्टधा बद्धं तत् कर्म शेषितं सत् , किम् ? इत्याह—'सिय धंतं ति' त्ति सितमित्थं यद् ध्मातं तीव्रध्यानानलेन दग्धं क्षपितं महाग्निना लोहमलवदस्येति सिद्ध इति निरुक्तिः । एवं च कर्मदहनानन्तरं सिद्धस्यैव सत. सिद्धत्वमुपजायते नासिद्धस्य, 'नेरइएसु उववज्जइ' इत्यादिनिश्चयनयमताश्रयणादिति । उपजायत इति तदात्मन स्वाभाविकं सम्यक्त्वमनादिकर्मावृतं तदावरणविगमेनाविर्भवत्येव , न पुनरसदुत्पद्यत इति प्रतिपत्तव्यम् , असत एवयिपाकस्येव जन्मायोगादिति । अथवा—सिद्धस्य सिद्धत्वं सद्भावरूपमुपजायते न तु प्रदीपनिर्वाणकल्पमभावरूपमिति । एवं नगम-

तान्तरव्यवच्छेदार्थमेतत्। तथा चाहुरेके—" दीपो यथा निर्वृतिमभ्युपेतो, नैवावनिं गच्छति नान्तरिक्षम्। दिशं न काञ्चिद्विदिशं न काञ्चित्, स्नेहक्षयात्केवलमेति शान्तिम्॥ १॥ जीवस्तथा निर्वृतिमभ्युपेतो. नैवावनिं गच्छति नान्तरिक्षम्। दिशं न काञ्चिद्विदिशं न काञ्चि-त्स्नेहक्षयात्केवलमेति शान्तिम्॥ २॥" इत्यादि एवंविधासिद्धत्वाभ्युपगमे दीपादिप्रयासवैयर्थ्यान्निरन्वयक्षणभङ्गस्य चाघटमानत्वादिति। अथवा-'दीहकालरयं' इति एतदन्यथा व्याख्यायते रयो वेगश्चेष्टाविशेष फलमनुभव इत्यनर्थान्तरम्, ततश्च सन्तानेनानुभूयमानत्वाद्दीर्घकालो रयोऽनुभवो यस्य तद्दीर्घकालरयं यद्भव्यकर्म्म जन्तुकर्म वा तथा 'सेमियं'मिति एतदप्यन्यथा व्याख्यायते-लेश्याविशेषाच्छ्लेषितं वह्ययोगोलकन्यायाज्जीवेन सह संश्लेषमुपगतम्। अन्यथा सितमित्यादि तु नयैवेति निर्युक्तिश्लोकसंक्षेपार्थ।

आह ननु यच्छेषितं भवोपग्राहि चतुर्विधं कर्म्म तद्यदि पर्यन्ते समस्थितिकं भवति तदा समकालमेव क्षपयित्वा मोक्षं गच्छतीत्यर्थादवगम्यते, यदा तु विषमस्थितिकं तद् भवति तदा किं करोतीत्याह?—

नाऊण वेयणिज्जं, अइबहुयं आउयं च थोवागं।
गंतूण समुग्घायं, खवेइ कम्मं निरवसेसं॥ ३०३०॥

सम्यगपुनर्भावेन उत्प्राबल्येन कर्मणो हननं-घात प्रलयो यस्मिन्प्रयत्नविशेषे असौ समुद्घात।

तत्स्वरूपमेवाह—

दण्डकवाडे मन्थ-न्तरे य साहरणया सरीरत्थे।
भास.जोगनिरोहे, सेलेसी सिज्झणा चेव॥ ३०३१॥

नन्वचभूत' समुद्घातगतानां विशिष्ट कर्मक्षयो भवतीति कोऽत्र हेतुरिति ?। अत्रोच्यते प्रयत्नविशेष.।

किं पुनरत्र निदर्शनमित्यत्राह—

जह उल्ला साडीया, आसुं सुक्कइ विरल्लिया संती।
तह कम्मलहुयसमए,वच्चंति जिणा समुग्घायं॥३०३२॥

एता अपि तिस्रो निर्युक्तिगाथा.।

अथ 'दीहकालरयं' मित्यादि भाष्यकारो व्याख्यामाह—

संताणओ अणाई, दीहो ठिइकाल एव बंधाओ।
जीवाणुरंजणाओ,रउ त्ति जोगो त्ति सुहुमो वा॥३०३३॥
सो जस्स दीहकालो, कम्मं तं दीहकालरयमुत्तं।
अइदीहकालरंजण-महवा चेट्ठाविसेसत्थं॥ ३०३४॥

'बंधानु त्ति—बन्धमाश्रित्य सन्तानेन -सन्तानभावेन अनादित्वाद्दीर्घ स्थिति. कालो यस्य तद्दीर्घकालं जीवस्यानुरञ्जनात्—मालिन्यापादनाद्रज., अथवा—'जोगो' त्ति स्नेहन बन्धनयोग्यो भवतीति साम्याद्रज। अथवा—'सुहुमो' त्ति सूक्ष्मत्वसाम्याद्रज कर्म भण्यते 'सो जस्स' इत्यादिना समास., स च विहित एव। किमुक्तं भवतीत्याह-'अइदीह'त्यादि अतिदीर्घकालं जीवस्य रञ्जन-मालिन्यापादनं रज इति। अथवा—रय इत्येतत्पदं चेष्टाविशेषार्थं, ततश्च दीर्घकालो रयो वेगश्चेष्टाविशेषो जीवेऽनुभवो यस्य तद्दीर्घकालरयमित्यर्थ.।

किं पुनस्तदित्याशङ्क्य 'जन्तुकर्म्मं' इत्यस्य व्याख्यानमाह—

जं कम्मं ति तुसद्दो, विसेसणे पूरणेऽहवा जीवो।
जंतु त्ति तस्स जंतो, कम्मं से जं सियं बद्धं॥३०३५॥

यद् दीर्घकालरजोरूपं दीर्घकालरयं वा कर्मेति। तुशब्दो विशेषणे। तेन विशेषतो भव्यस्य सम्बन्धि तद् गृह्यते। अथ ध्मातत्वप्रस्तावादेव भव्यसम्बन्धित्वं कर्मणो लभ्यते, तर्हि पूरयतीति पूरण, तुशब्दः पूरणार्थ। अथवा—जीवो जन्तुस्तस्य जन्तो कर्म जन्तुकर्मेत्येवं व्याख्यायते। 'से—सियं' इत्यस्य व्याख्यामाह-'से' तस्य जीवस्य यत् सितं बद्ध, 'षिञ्' बन्धने, इत्यस्य धातोर्निष्ठान्तस्य प्रयोगादिति।

अथ 'सेसियं' इत्यस्यापराण्यपि व्याख्यानान्तराण्याह—

अहवा सेसियमसियं, गहियं वत्तमइसंसिलिट्ठं वा।
जं वा विसेसियमट्ठ-ह त्ति खयसेसियं व त्ति॥३०३६॥

अथवा—'से' तस्य जीवस्य सर्वमपि कर्म संसारानुबन्धत्वादसितं, कृष्णमशुभमित्यर्थ। अथवा-'षो' अन्तकर्मणि 'गाहियं वत्तं' ति—जीवेन गृहीतं व्याप्तं व्याप्तमानीनमिति सितम्। अथवा-'सेसियं' ति-लेश्याविशेषात् श्लेषित जीवेन श्लेषविशेषमानीतमिति, संश्लिष्टं बाधकं कृतमिति संश्लेषितम्। 'जं वा विसेसियमट्ठह' त्ति अथवा—एकदेशेन समुदायस्य गम्यमानत्वाद् यदष्टधा विशेषितं व्यवच्छिन्नं तत् शेषितं विशेषितमिहोच्यते। अथवा-क्षयेण क्षपणया क्रमश· शेषितं स्थित्यनुभवादिनाऽल्पीकृतमित्यर्थ।

अथ 'सितं ध्मातमस्येति सिद्ध' इति निरुक्तविधिमुपदर्शयन्नाह—

नेरुत्तियं सियं धं-तमस्स तवसा मलो व लोहस्स।
इय सिद्धस्सेयसओ, सिद्धत्तं सिज्झणा समए॥३०३७॥
उवजायइ त्ति ववहा-रदेसणमभावया निसेहो वा।
पज्जायंतरविगमे, तप्पज्जायंतरं सिद्धो॥ ३०३८॥

द्वे अपि गतार्थे। नवरम् 'अभावया निसेहो व' त्ति-निर्वाणप्रदीपकल्पतदभावरूपं सिद्धत्वमिति यत् कैश्चिदुच्यते, तदभिमतायाः अभावरूपतायाः 'सिद्धत्वमुपजायते' इत्यनेन निषेधो वा क्रियते, सिद्धत्वं भावरूपमुपजायते, न पुनः पूर्वपर्यायस्य भाव एव भवतीत्यर्थ।

अथ 'नाऊण वेयणिज्जं' (३०३०) इत्यादिगाथाया प्रस्तावनार्थमाह—

कम्मचउक्कं कमसो, समं ति खयमेइ तस्स भणियम्मि।
समयं ति कए भासइ, कत्तो तुल्लट्ठिई नियमो ?।३०३९।

भवोपग्राहिकर्मचतुष्टयं तस्य मुमुक्षोर्मोक्षगमनसमये क्रमश क्षयमेति, समकं वा युगपदिति कथ्यताम्?। एवं भणिते परेण पृष्टे सूरिराह-'समयंति' त्ति-समकं-युगपत् तस्य तत् कर्मचतुष्कं क्षयमेति न तु क्रमश इति। एवं च सूरिणोत्तरे कृते पुनरपि भाषते पर.-कुत. कर्म-

चतुष्कस्य तुल्यस्थितिनियमः, विषमनिबन्धनत्वेन विषमस्थितिकत्वस्यैव युज्यमानत्वात् इति ।

अथ विषमस्थितिकमपि समकं क्षपयति । तदयुक्तम् । कुतः ? इत्याह—

कह व अपुन्नट्ठिइयं, खवेउ कत्तो व तस्समीकरणं ।
कयनासाइभयाउ, तो तस्स कमक्खओ जुत्तो ।।३०४०।।

कथं वा स मुमुक्षुरपूर्णस्थितिकमायुष्कापेक्षया दीर्घस्थितिकं वेदनीय—नाम-गोत्रकर्मत्रयं ह्रस्वस्थितिकायुष्कानुरोधेन क्षपयतु-ह्रस्वीकरोतु, कृतनाशप्रसङ्गात् ? । कृतनाशश्चैवमेवाधिकस्य खण्डयित्वा नाशनात् । अथायुष्कं वृद्धिमुपनीय वेदनीयादिभिः सह समस्थितिकं कृत्वा समकमेव क्षपयतीत्याशङ्क्याह-' कत्तो वे ' त्यादि कुतो वायुष्कस्य वेदनीयादिभिः सह समीकरणं—समस्थितिकत्वापादनम्, अकृताभ्यागमप्रसङ्गात् ? । तत्प्रसङ्गश्च ह्रस्वस्यायुषो दीर्घत्वापादनात् । ततस्तस्य मुमुक्षोर्वेदनीयादिकर्मणां कर्मक्षय एव युक्तः प्रथममायुषस्ततः शेषाणामिति ।

अत्र गुरुरुत्तरमाह—

भण्णइ कम्मखयम्मी, जयाउमाईएँ तस्स निट्ठेज्जा ।
तो कहमत्थउ सभवे, सिज्झउ व कहं सकम्मंसो ?।३०४१।

भण्यतेऽत्रोत्तरम्—कर्मक्षये मुक्तिगमनसमयवर्तिनि कर्मक्षयकाले, पाठान्तरतः क्रमक्षये वा यद्यायुरादावेव तस्य निस्तिष्ठेत्—निष्ठां यायात्, क्षीयेतेत्यर्थः, शेषाणि तु क्रमशः पश्चात्, ततः कथमसौ क्षीणायुष्कः शेषकर्मक्षपणार्थं भवे तिष्ठतु, तदवस्थाननिबन्धनस्यायुष्कस्याभावात् ? । अथ तदभावात् सिध्यत्वसौ, किं निवार्यते ? । तदयुक्तम्, यत आयुषि क्षीणेऽपि सहवेदनीयादिकर्मांशैर्वर्तते इति सकर्मांशः कथं सिध्यतु, 'सकलकर्मक्षयादेव मोक्षः' इति वचनात् ? इति ।

तर्हि किमत्र युक्तम् ? इत्याह—

तम्हा तुल्लट्ठिइयं, कम्मचउक्कं सभावओ जस्स ।
सो अकयसमुग्घाओ, सिज्झइ जुगवं खवेऊणं।।३०४२।।
जस्स पुण थोवमाउ, हवेज्ज सेसं तयं च बहुतरयं ।
तं तेण समीकुरुए-गतूण जिणो समुग्घायं ।। ३०४३ ।।

द्वे अपि सुगमे। नवरं 'तेण' त्ति—तत् शेषकर्मत्रिकमपवर्तनात् खण्डयित्वा तेनायुष्केण समं कुरुते इति ।

नन्वेवं कृतनाशादिदोषः उक्तः स कथं परिहर्तव्यः ? इत्याह-

कयनासाइविघाओ, कओ पुरा जह य नाण किरियाहिं ।
कम्मस्स कीरइ खओ न चेदमोक्खादओ दोसा ।३०४४।

कृतनाशादिदोषाणां विघातः—परिहारः कृतोऽस्माभिः । क ? पुरा—पूर्वमुपक्रमकालविचारे, "न हि दीहकालियस्स वि, नासो तस्साणुभूइओ खिप्पं । बहुकालाहारस्स व, दुयमग्गियरोगिणो भोगो ॥ १ ॥" इत्यादिना ग्रन्थेन । यथा च ज्ञान—क्रियाभ्यां चिरकालस्थितिकस्यापि कर्मणः क्षिप्रमेव क्षयः क्रियते, तथा प्रागपि 'सज्झमुवक्कामिज्जइ, एत्तो चिय सज्झरोगो व्व ।' इत्यादिनाऽनेकशः प्रोक्तम् । न चेदुपक्रमः इष्यते, तदामोक्षादयो दोषाः इत्यपि ' जइ ताणुभूइउ च्चिय खविज्जए कम्ममन्नहा न मयं ' इत्यादिना प्रागुक्तमेव । तदेवमेतावता ' नाऊण वेयणिज्जं ' इत्यादिनिर्युक्तिगाथा व्याख्यातेति ।

अथ परप्रेर्यमाशङ्क्य परिहरन्नाह—

असमट्ठिईण नियमो, को थोवं आउयं न सेसं ति ।
परिणामसभावाओ, अद्धुवबंधो व्व तस्सेव ।।३०४५।।

'असमस्थितिकानां कर्मणां स्तोकमायुरेव, न शेषं वेदनीयादिकम्' इति कोऽयं नियमः येनोच्यते—'नाऊण वेयणिज्जं अइबहुयं आउगं च थोवागं' इति ? । इदमपि कस्माद् नोच्यते—'नाऊण आउयं खलु अइबहुयं थोवयं च वेयणियं' इति ? । अत्रोच्यते—बन्धपरिणामस्वाभाव्यात्, एवंभूतो ह्यायुषः कोऽपि बन्धपरिणामो वर्तते, येन पर्यन्ते वेदनीयाद्यपेक्षया समं स्तोकं वा भवति, नत्वधिकमिति । अत्र दृष्टान्तमाह—यथा बन्धपरिणामस्वाभाव्यादध्रुवबन्धस्तस्यैवायुषो भवति, अन्तर्मुहूर्तमात्रबन्धकालत्वात्, न तु वेदनीयादेः तस्य ध्रुवबन्धित्वात्, एवमत्रापि स्तोकत्वमायुष एव, न तु वेदनीयादेरिति ।

आह—ननु समुद्धातगतो जन्तुर्वेदनीयादिकर्मणः किं करोति ? इत्याह—

विसमं स करेइ समं, समोहओ बंधणेहिँ ठिइए य ।
कम्मदव्वाइं बं-धणाइँ कालो ठिई तेसिं ।।३०४६।।

स समवहतः केवलिसमुद्धातगतो जीव आयुष्कादधिकत्वेन विषमं वेदनीयादिकर्मत्रयमपवर्तमानः खण्डयित्वा आयुष्केण समं करोति । कैः कृत्वा समं करोति ? इत्याह—बध्यन्ते जीवा यैस्तानि बन्धनानि तैर्बन्धनैः कर्मद्रव्यैः, स्थित्या च काललक्षणया । अत एवाह-कर्मद्रव्याणि बन्धनानि भण्यन्ते, कालस्तु स्थितिस्तेषां वेदनीयादीनामिति । समीकुर्वंश्चैतद्विशिष्टदलिकनिषेकेणान्तर्मुहूर्तस्थितिकं सर्वं करोति ।

कथम् ? इत्याह—

आउयसमयसमाए, गुणसेढीएँ तदसंखगुणियाए ।
पुव्वरइयं खवेहिइ, जह सेलेसीएँ पइसमयं ।।३०४७।।

वध्यमानस्यायुषो यावन्तः समयाः शेषा अवतिष्ठन्ते तत्समयसमानयाऽन्तर्मुहूर्तप्रमाणयेत्यर्थः, दलिकमाश्रित्यासंख्येयगुणया प्रथमसमयनिषिक्तदलिकाद् द्वितीयसमयनिषिक्तमसंख्येयगुणम्, ततोऽपि तृतीयसमयनिषिक्तमसंख्येयगुणम्, एवं यावच्चरमसमयनिषिक्तमसंख्येयगुणमिति; एवमसंख्येयगुणया स्थानान्तरप्रसिद्धया गुणश्रेण्या तद् वेदनीयादिकर्मत्रयं केवलज्ञानाभोगेनाकलय्य तथा रचयति यथाऽनन्तरोक्तेन प्रकारेण पूर्वरचितं तदेतत् शैलेश्यां प्रतिसमयं क्षपयंश्चरमसमये सर्वमसौ क्षपयिष्यति । अत्र गुणश्रेणिस्थापना आयुषस्तु गुणश्रेणिर्न भवति, किन्तु यथाबद्धमेव तद् वद्यते । अतस्तस्यैवं स्थापना- जह उल्ला साडीया ' इत्यादिगाथायाः पूर्वार्धं सुगमत्वाद् न व्याख्यातम् । उत्तरार्धं तु यदुक्तम्-' तह कम्मलहुयसमए ' त्ति तत्र कर्मलघुतायाः समयः क ? इत्याह-

कम्मलहुयाएँ समओ, भिन्नमुहुत्तावसेसओ कालो ।

अन्ने जहन्नमेयं, छम्मासमुक्कोसमिच्छंति ॥ ३०४८ ॥

कर्मणि आयुषो लघुतायां. समयोऽत्र भिन्नमुहूर्तविशेषकालो जघन्यत , उत्कृष्टतश्चान्तर्मुहूर्त्तविशेषं निजमायुर्विज्ञाय तदधिकवेदनीयादिकर्मस्थितिविघातार्थे; केवली समुद्घातमारभत इत्यर्थः , अन्ये तु सूरय एनं भिन्नमुहूर्तलक्षणं जघन्यमेव कालं मन्यन्ते उत्कृष्टं तु षण्मासानिच्छन्ति—जघन्यतोऽन्तर्मुहूर्तशेषायुष्क उत्कृष्टतस्तु षण्मासावशेषायु समुद्घातं करोतीति केचिद् मन्यन्त इत्यर्थः ।

तदेतदन्यमतमयुक्तमिति दर्शयन्नाह—

तं नाणन्तरसेले-सिवयणओ जं च पाडिहेराणं ।
पच्चप्पणमेव सुए,इहरा गहणं पि होज्जाहि ॥३०४९॥

तदेतदन्यमतं न युक्तम् ,आगमविरोधात् । तद्विरोधश्च समुद्घातानन्तरं तत्र शैलेशीप्रतिपत्तिवचनात् , शैलेश्यनन्तरं च सिद्धिगमनात् ,कुत. षण्मासविशेषायुष्कत्वम् ?। आनन्तर्ये षड्भिरपि मासैर्विवक्षया घटत एवेति चेत् ? इत्याशङ्क्याह—'जं च' त्यादि, यस्माच्च समुद्घाताद् निवृत्त्य शरीरस्थस्य प्रातिहारक—पीठफलकादीनां "कायजोगं जुंजमाणे—आगच्छेज्जा वा, चिट्ठेज्जा वा, निसीएज्जा वा, अनुयट्टिज्जा—या, उल्लंघेज्जा वा, पाडिहारियं, पीढफलगं , संथारगं , पच्चप्पिणिज्ज " इति प्रज्ञापनासूत्ररूपे श्रुते प्रत्यर्पणमेवोक्तम् , इतरथा षण्मासावशेषायुष्कत्वेन चिरंजीवित्वे तेषां ग्रहणमपि स्यात् , न च तत्रोक्तम् । तस्मादन्तर्मुहूर्तावशेषायुरेव समुद्घातं करोतीति ।

अथ समुद्घातशब्दार्थं समुद्घातारम्भात् पूर्वव्यापारनिरूपणार्थं चाह—

तत्थाउयसेसाहिय—कम्मसमुग्घायणं समुग्घाओ ।
तं गंतुमणो पुव्वं, आवज्जीकरणमब्भेइ ॥३०५०॥
आवज्जणमुवओगो, वावारो वा तदत्थमाईए ।
अंतोमुहुत्तमेत्तं, काउं कुरुए समुग्घायं ॥३०५१॥

तत्रायुःशेषाणामधिकस्थितिकानां वेदनीयादिकर्मणां समुद्घातनं समुद्घात. । तं च गन्तुमना —प्रारिप्सुः पूर्वमावर्जीकरणमभ्येति—विदधाति । कथंभूतं तत् ? इति । उच्यते—तदर्थं समुद्घातकरणार्थमादौ केवलिन उपयोगो 'मयाऽधुनेदं कर्तव्यम्' इत्येवंरूप उदयावलिकायां कर्मप्रक्षेपरूपो व्यापारो वाऽऽवर्जनमुच्यते । तथाभूतस्य करणमावर्जीकरणं तदन्तर्मुहूर्तमात्रं कालं कृत्वा तत समुद्घातं कुरुत इति ।

कथंभूत तदित्याशङ्क्य 'दंडकवाड' इत्यादिगाथा व्याचिख्यासुराह—

उड्ढाहायलोगं—तगामिणं सो सदेहविक्खंभं ।
पढमसमयम्मि दंडं,करेइ बिइयम्मि य कवाडं ॥३०५२॥
तइयसमयम्मि मंथं, चउत्थए लोगपूरणं कुणइ ।
पडिलोमं साहरणं, काउं तो होइ देहत्थो ॥३०५३॥

ऊर्ध्वमधश्चायतं दीर्घमुभयतोऽपि लोकान्तगामिनं स्वदेहप्रमाणविष्कम्भं केवली केवलज्ञानाभोगत प्रथमसमये जीवप्रदेशसंघातात्मकं दण्डं करोति । द्वितीयसमये तु तमेव दण्डं पूर्वापरदिग्द्वयप्रसारणादुभयपार्श्वतो लोकान्तगामिनं कपाटमिव कपाटं करोति । तृतीयसमये तु तमेव कपाटं दक्षिणोत्तरदिग्द्वयप्रसारणेन मन्थसदृशत्वाल्लोकान्तप्रापिणमेव मन्थानं करोति । एवं च लोकस्य प्रायो बहुपूरितं भवति मन्थान्तराणि त्वपूरितानि तिष्ठन्ति , जीवपुद्गलयोरनुश्रेणिगमनात् । ततश्चतुर्थसमये तान्यपि मन्थान्तराणि सह निष्कुटै पूरयति ततश्च सकललोक पूरितो भवतीति । 'साहरणं' इत्यादेर्व्याख्यामाह-'पडिलोम'मित्यादि, इदमत्र हृदयम्-लोकपूरणानन्तरमेव पञ्चमे समये यथोक्तक्रमात् प्रतिलोमं मन्थान्तराणि संहरति , जीवप्रदेशान् सकर्मकान् संकोचयति, षष्ठे समये मन्थानमुपसंहरति-घनतरसङ्कोचात् ; सप्तमसमये तु कपाटमुपसंहरति, दण्डात्मनि सङ्कोचात् ; अष्टमे तु समये दण्डमप्युपसंहृत्य शरीरस्थ एव भवतीति ।

आह-ननु समुद्घातगतस्य -मनो-वाक्-काययोगेषु मध्ये को योग. कस्मिन् समये व्याप्रियते ? इत्याशङ्क्याह—

न किर समुग्घायगओ, मणवइजोगप्पओयणं कुणइ ।
ओरालियजोगं पुण, जुंजइ पढमट्ठमे समए ॥३०५४॥
उभयव्वावाराओ, तम्मीसंवीय छट्ठ सत्तमए ।
ति चउत्थ पंचमे क—म्मयं तु तम्मत्तचेट्ठाओ ॥३०५५॥

किलशब्द आप्तोक्तौ इह समुद्घातगत. केवली मनोवाग्योगयो प्रयोजनं व्यापारणं तावद् न करोत्येव , प्रयोजनाभावात् । औदारिककाययोगं पुन प्रथमाष्टमसमययोर्युनक्ति—व्यापारयति , दण्डकरणादिक्रियायां तत्प्रयत्नविधानात् । द्वितीयषष्ठसप्तमसमयेषु तु तन्मिश्रम्—औदारिकं कार्मणेन मिश्रं व्यापारयति, उभयप्रयत्नसंभवात् । तृतीयचतुर्थपञ्चमसमयेषु पुन. 'कम्मयं' ति—कार्मणकाययोगमेव व्यापारयति तन्मात्रचेष्टनादिति ।

समुद्घाताद् निवृत्तः किमसौ करोति ? इत्याह—

विणिवत्तसमुग्घाओ, तिन्नि वि जोए जिणो पउंजेज्ज ।
सच्चमसच्चामोसं, च सो मणं तह वईजोगं ॥ ३०५६ ॥
ओरालियकाओगं, गमणाई पाडिहरियाणं वा ।
पच्चप्पणं करेज्जा, जोगनिरोहं तओ कुरुए ॥ ३०५७ ॥

इह समुद्घातगतस्तावद् न कोऽपि सिध्यति, निवृत्तसमुद्घातोऽन्तर्मुहूर्तं भव एव केवली तिष्ठति । तत्र च तिष्ठन्नसौ मनो—वाक्—कायलक्षणात्रीनपि योगान् प्रयुञ्जीत । तत्र मनोयोगं , वाग्योगं च सत्यमसत्यामृषं च प्रयुङ्क्ते, असत्य—मिश्रयोस्तस्यासंभवात् । काययोगं त्वौदारिकं प्रयुञ्जानो गमनागमनादिकं प्रत्याहरणीयगृहीतपीठफलकादिप्रत्यर्पणं वा कुर्यात् , तत एतेषां योगानां निरोधं करोतीति ।

अथ परप्रश्नमाशङ्क्योत्तरमाह—

किं न सजोगो सिज्झइ, सबंधहेउ त्ति जं सजोगो य ।
न समेइ परमसुक्कं, स निज्जराकारणं झाणं ॥ ३०५८ ॥

ननु किमिति योगनिरोधं करोति, सयोग एवासौ किं न सिध्यति ? इति परेण पृष्ट सन्नाह-यस्मात् स त्रिवि-

धोऽपि योगः कर्मणो बन्धहेतुः, कर्मसम्बन्धश्च संसारनिबन्धनमेव, इति कथं सयोगः सिध्यति ? । किञ्च-पर्यन्ते सकलकर्मनिर्जरायाः परमशुक्लध्यानमेव कारणम्, तच्च सयोग सन् जन्तुर्न समेति न प्राप्नोति, सयोगस्य सक्रियत्वात्, परमशुक्लध्यानस्य च समुद्धातादिशेषक्रियारूपत्वात् इति कुतः सयोगः सिध्यतीति ? । तस्माद् योगनिरोधः कर्तव्यः ।

कथं पुनस्तं करोति ? इत्याह—

पज्जत्तमित्तसन्नि-स्स जत्तियाइं जहन्नजोगिस्स ।
होंति मणोदव्वाइं, तव्वावारो य जम्मत्ता ॥ ३०५९ ॥
तदसंखगुणविहीणं, समए समए निरुंभमाणो सो ।
मणसो सव्वनिरोहं, करे असंखेज्जसमएहिं ॥ ३०६० ॥
पज्जत्तमेत्तबिंदिय, जहन्नवइजोगपज्जया जे उ ।
तदसंखगुणविहीणे, समए समए निरुंभंतो ॥ ३०६१ ॥
सव्ववइजोगरोहं, संखाईएहिं कुणइ समएहिं ।
तत्तो य सुहुमपणय-स्स पढमसमओववन्नस्स ॥३०६२॥
जो किर जहन्नजोगो, तदसंखेज्जगुणहीणमेक्केक्के ।
समए निरुंभमाणो, देहतिभागं च मुंचंतो ॥ ३०६३ ॥
रुंभइ सकायजोगं, संखाईएहिं चेव समएहिं ।
तो कयजोगनिरोहो, सेलेसीभावयामेइ ॥ ३०६४ ॥

गतार्थाः एव । विशे० ।

शैलेशीकालप्रमाणमाह—

ह्रस्सक्खराइं मज्झे-ण जेण कालेण पंच भण्णंति ।
अत्थइ सेलेसिगओ, तत्तियमेत्तं तओ कालं ॥३०६८॥

नातिशीघ्रेणं नाप्यतिविलम्बितं, किन्तु-मध्यमभङ्ग्या यावता कालेन 'अ इ उ ऋ लृ' इत्येतानि पञ्च ह्रस्वाक्षराणि भण्यन्ते-एतावन्तं कालं शैलेशीगतस्तकोऽसौ तिष्ठतीति ।

किं पुनस्तत्र ध्यानं ध्यायति ? इत्याह—

तणुरोहारंभाओ, झायइ सुहुमकिरियानियट्टिं सो ।
वुच्छिन्नकिरियमप्पडि-वाइं सेलेसिकालम्मि ॥३०६९॥

तनोः काययोगस्य निरोधारम्भसमयात् प्रभृति सूक्ष्मक्रियानिवृत्तिरूपं शुक्लध्यानमसौ ध्यायति ततः सर्वयोगनिरोधादूर्ध्वं शैलेशीकाले समुच्छिन्नक्रियमप्रतिपाति शुक्लध्यानं ध्यायतीति ।

अत्र प्रेर्यमाशङ्क्य परिहरन्नाह—

झाणं मणोविसेसो, तदभावे तस्स संभवो कत्तो ।
भण्णइ भणियं झाणं, समए तिविहे वि करणम्मि ।३०७०।

ननु 'ध्यै' चिन्तायाम्, इति वचनाद् मनोविशेषो मनसः काऽपि निश्चला चिन्तावस्थैव ध्यानमुच्यते । मनश्च-"अमनस्काः केवलिनः" इति वचनात् तस्य नास्ति । ततस्तदभावे मनसोऽसत्त्वे तस्य ध्यानस्य केवलिनः कुतः सम्भवः ? । अतः 'तनुरोहारंभाओ' इत्याद्यघटमानमेवेति । सूरिराह—भण्यतेऽत्रोत्तरम्—'भणियसुय गुणता घट्ट तिविहे वि झा-

णम्मि' इत्यादिवचनात् त्रिविधेऽपि मनोवाक्कायलक्षणे करणे समये सिद्धान्ते ध्यानं भणितमेव । ततो मनोविशेष एव ध्यानमित्यनैकान्तिकम्, वाक्कायव्यापारेऽपि ध्यानस्योक्तत्वादिति भावः ।

यतः परिभाषा—

सुदढप्पयत्तवावा-रणं निरोहो व विज्जमाणाण ।
झाणं करणाणमयं, न उ चित्तनिरोहमित्तागं ॥३०७१॥

यतश्च मनोवाक्कायलक्षणानां करणानां सुदृढप्रयत्नेन व्यापारणम्, विद्यमानानां पूर्वोक्तक्रमेण निरोधो वा ध्यानं भगवता मतम्, न पुनश्चित्तनिरोधमात्रकम्, ध्यैधातोरनेकार्थत्वात् करणनिरोधार्थेऽपि वर्तनादिति ।

ततश्च—

होज्ज न मणोमयं वा-इयं च झाणं जिणस्स तदभावे ।
कायनिरोहपयत्त-स्स भावमिह को निवारेइ ॥३०७२॥

तदभावे मनसोऽभावे केवलिनो मनोमयं मनोविशेषरूपम्, तथा मनःपूर्वकत्वाद् विशिष्टवचसो वाचिकं च ध्यानं न भवेत्, तद् मा भूत्, यत् पुनः कायनिरोधप्रयत्नस्वभावं ध्यानमिह, तत् तस्य को निवारयति—न कोऽपीति ।

अपि च—

जह छउमत्थस्स मणो, निरोहमेत्तप्पयत्तयं झाणं ।
कहकायजोगरोह-प्पयत्तयं होइ न जिणस्स ॥३०७३॥

प्रकटार्थाः ।

पुनरपि पर प्राह—

आह भवे मणसो, छउमत्थमेव तं न झाणं मे ।
अह तदभावे वि मयं, झाणं तं किं न सुत्तस्स? ॥३०७४॥

आह परः-मनसोऽभावे 'से' तस्य केवलिनश्छद्मस्थस्येवेन्द्रियादेरिव तत् सूक्ष्मक्रियानिवृत्त्यादिकं ध्यानं न घटते । अथ तदभावेऽपि मतं ध्यानम्, तत् सुप्तस्य तत् किं नेष्यते, मनोऽसत्त्वस्य तुल्यत्वात् ? इति ।

पर एवाचार्यमतमाशङ्क्याह—

अह व मई सुत्तस्स हि, न कायरोहप्पयत्तसब्भावो ।
एवं चित्ताभावे, कत्तो य तओ जिणस्सावि ? ॥३०७५॥
होज्ज व किंचिम्मेत्तं, चित्तं सुत्तस्स सव्वहा न जिणे ।
जइ सुत्तस्स न झाणं, जिणस्स तं दूरयरएणं ॥३०७६॥

अथवा, आचार्यस्य मतिः—सुप्तस्य स्फुटमेव ज्ञायते न कायनिरोधप्रयत्नसद्भावः, किन्तु तदभाव एव, ततः कुतस्तस्य ध्यानम् ? । जिने त्वस्त्यसाविति तस्य ध्यानं भवत्येव । अत्रोच्यते-नन्वेवं तर्हि मनस्कत्वाच्चित्ताभावे जिनस्यापि केवलिनः कुतस्तकोऽसौ कायनिरोधप्रयत्नसद्भावः ? भवेद् वाऽद्यापि किञ्चिन्मात्रं चित्तं सुप्तस्यापि, जिने तु केवलिन्यमनस्कत्वात् तत् सर्वथा नास्ति, ततश्च सुप्तस्य यदि न ध्यानमिष्यते, तर्हि जिनस्य तद् दूरतरकेण—दूरतरेण नेष्टव्यम्, सर्वथा चित्ताभावेन कायनिरोधप्रयत्नाभावादिति ।

सूरिः प्रतिविधानमाह—

जुत्तं जं छउमत्थ-स्स करणमेत्ताणुसारिनाणस्स ।
तदभावम्मि पयत्ता-भावो न जिणस्स सो जुत्तो ॥३०७७॥
छउमत्थस्स मणोमे-त्तविहियजत्तस्स जइ मयं झाणं ।
कह तं जिणस्स न मयं, केवलविहियप्पयत्तस्स ? ॥३०७८॥

युक्तं यच्छद्मस्थस्य करणमत्र मनः, तन्मात्रानुसारिज्ञानस्य तदभावे सुप्तावस्थायां मनःकरणाभावे कायनिरोधप्रयत्नाभावः । जिनस्य पुनरसौ न युक्तः, मनोज्ञानाभावेऽपि केवलज्ञानसद्भावादिति । किञ्च-यदि मनोमात्रविहितयत्नस्य छद्मस्थस्य साध्यचेतसि ध्यानम्, तर्हि कथं जिनस्य केवलिनः सकललोकावलोकविलोकनस्वभावकेवलज्ञानविहितप्रयत्नस्य तद् ध्यानं नाभिमतम् ? इति ।

अपि च—

पुव्वप्पओगओ वि य, कम्मविणिज्जरणहेउओ चावि ।
सद्दत्थबहुत्ताओ, तह जिणचंदागमाओ य ॥ ३०७९ ॥
चित्ताभावे वि सया, सुहुमोवरयकिरियाइँ भन्नंति ।
जीवोवओगसब्भा-वओ भवत्थस्स झाणाइं ॥३०८०॥

भवस्थस्य केवलिनश्चिन्ताया अभावेऽपि सदा सूक्ष्मक्रियानिवृत्त्युपरतक्रियाप्रतिपातिलक्षणे द्वे ध्याने भण्येते इति सम्बन्धः, इयं च प्रतिज्ञा । हेतुमाह-जीवोपयोगसामान्यात्, सद्भावोपयोगस्य तस्यामवस्थायामेवंविधस्वभावत्वादित्यर्थः ; तथा, पूर्वप्रयोगात्-पूर्वविहितध्यानसंस्कारादित्यर्थः । तथा, कर्मनिर्जरणहेतुत्वात् ते ध्याने अभिधीयेते, छद्मस्थस्य धर्मध्यानवदिति । तथा, शब्दस्यार्थानां बहुत्वात्-ध्यैधातोरनेकार्थत्वादित्यर्थः । तथा, जिनागमे भणितत्वादिति ।

अथ परे परिहारं चाह—

जइ अमणस्स वि झाणं,
केवलिणो कीस तं न सिद्धस्स ।
भणइ जं न पयत्तो,
तस्स जओ न य निरुद्धव्वं ॥ ३०८१ ॥

यद्यमनस्कस्यापि केवलिनो ध्यानमिष्यते, तर्हि सिद्धस्य किमिति नाभ्युपगम्यते ? । भण्यतेऽत्रोत्तरम्-यद् यस्मात् तस्य-सिद्धस्य कारणाभावेन प्रयत्नो नास्ति, न च योगलक्षणं निरोद्धव्यमस्ति अतः प्रयत्नाभावात् प्रयोजनाभावाच्च न सिद्धस्य ध्यानमिति ।

भवतु केवलिनो ध्यानम्, किन्तु शैलेश्यां वर्तमानः किमसौ करोति ? इत्याह—

तदसंखेज्जगुणाए, गुणसेढीए रइयँ पुराकम्मं ।
समए समए खवियं, कमसो सेलेसिकालेण ॥ ३०८२ ॥
सव्वं खवेइ तं पुण, निल्लेवं किंचि दुचरिमे समए ।
किंचिच्च होइ चरिमे, सेलेसीए य तं वोच्छं ॥ ३०८३ ॥
मणुयगइजाइतसबा-यरं च पज्जत्तसुभयमाएज्जं ।
अन्नयरवेयणिज्जं, नराउमुच्चं जसो नामं ॥ ३०८४ ॥
संभवओ जिणनामं, नराणुपुव्वी य चरिमसमयम्मि ।
सेसा जिणसंताओ, दुचरिमसमयम्मि निट्ठंति ॥३०८५॥

पाठसिद्धा एव । नवरं तदिति-वक्ष्यमाणवेदनीयादिकम् । 'जिणनामं' ति-तीर्थकरनाम । इदं च तीर्थकरस्यैव सम्भवति, अन्यस्य न सम्भवति इत्युक्तम् । सामान्यकेवली तु शेषा मनुष्यगतिपञ्चेन्द्रियजात्यादिका द्वादशैव प्रकृतीश्चरमसमये क्षपयतीति ।

अन्यदपि तत्र किमसौ करोति ? इत्याह—

ओरालियाइ सव्वा-हिँ चयइ विप्पजहणाहिँ जं भणियं ।
निस्सेसतया न जहा, देसच्चाएण सो पुव्वं ॥ ३०८६ ॥

औदारिकतैजसकार्मणशरीरत्रयं सर्वाभिरेव विप्रजहनाभिः प्रकृष्टाभिस्त्यजनाभिस्त्यजत्यसौ । किमुक्तं भवति ? इत्याह-' जं भणियमि ' त्यादि, निःशेषतयैवौदारिकादिशरीरत्रयं तदा त्यजति, न तु यथा पूर्वं भवे भ्राम्यन् संघातपरिशाटाभ्यां देशत्यागेन त्यक्तवानिति यदुक्तं भवति-एतदिह तात्पर्यमित्यर्थः ।

अपरं च तदा तस्य किं निवर्तते किं वा न ? इति दर्शयन्नाह—

तस्सोदइयाईया, भव्वत्तं च विणियत्तए समयं ।
सम्मत्तनाणदंसण-सुहसिद्धत्ताइँ मोत्तूणं ॥ ३०८७ ॥

तस्य सिद्धिं गच्छत औदयिकादयो भावा भव्यत्वं च समकं युगपत् विनिवर्तते । भवा भाविनी सिद्धिर्यस्यासौ हि भव्य उच्यते, न च सा तस्य भाविनी, साक्षात्सञ्जातत्वात्, ततोऽसौ न भव्य इति भव्यत्वं निवर्तते, उक्तं च-"सिद्धे नो भव्वे नो अभव्वे" इति । सम्यक्त्वादीनि तु सिद्धस्यापि भवन्ति, अतस्तान्निवृत्तिवर्जनम् । इति प्रकृतगाथार्थः । नन्वौदारिकादिशरीराणां कथं सर्वथा त्यागः, कर्मशरीरसन्तानस्यानादित्वात्, अनादेश्चानन्तत्वात् ? इत्याशङ्क्योत्तरम्, प्रासङ्गिकमन्यदपि चाह- नणु संताणोऽणाइ' इत्यादिद्वाविंशतिगाथा । एताश्च पूर्वं षष्ठगणधरे प्रायो लिखिताः, व्याख्यातास्तेनेति नेह लिख्यन्त इति ।

कियता कालेन पुनरसौ सिध्यति ? इत्याह—

रिउसेढीपडिवन्नो, समयपएसंतरं अफुसमाणो ।
एगसमएण सिज्झइ, अह सागारोवउत्तो सो ॥३०८८॥

सुबोधा । नवरं ' समय ' त्यादि, एकसमयादन्यत् समयान्तरमस्पृशन्नवगाढप्रदेशेभ्योऽपराकाशप्रदेशानस्पृशन् अचिन्तया शक्त्या सिद्धिं गच्छतीति गाथार्थः । विशे० । आ० म० । उत्त० । आ० । ( कथं पुनरसौ साकारोपयोग इति ' उवओग ' शब्दे द्वितीयभागे ८६१ पृष्ठे उक्तम् । ) सिद्धो नाम साधनः यत्कुतः जिनमतं इति कृत्वा सर्वस्यार्थस्य साधितत्वात् सर्वलब्धिसम्पन्नैश्च गणधरैः प्रणीतत्वात् सिद्धं निर्वचनीयमविचार्यं श्रुतज्ञानमित्यर्थः । अथ पुनः भणितिसिद्धं प्रतिष्ठितं प्रकटं सर्वकालं सर्वकालिकं नित्यमित्यर्थः । 'जिणमतं' तथाहि-एवं दुवालसंगं, गणिपिडगं न कयाइ नासी न कयाइ नत्थि न कयाइ न भविस्सति । अभूत् भवति भविस्सइ य धुवमादि सिद्धे जिणमते मो इत्यसम्भवे ।

पश्चतो प्रवसनपए पुणो वि भत्तियहुमाणतो णमो इत्याह । अहवा-प्रयतो भूत्वा नमस्करोमि एताश्रो य सिद्धीश्रो सदा संजमे भवंतु । आ० चू० २ अ० ।

अनन्तराऽऽदिसिद्धप्ररूपणा—

इदानीमनन्तरसिद्धाः—सत्पदप्ररूपणा १ द्रव्यप्रमाण २ क्षेत्र ३ स्पर्शना ४ काला ५ ऽन्तर ६ भावा ७ ल्पबहुत्व ८ रूपैरष्टभिरनुयोगद्वारैः परम्परसिद्धाः सत्पदप्ररूपणा द्रव्यप्रमाणक्षेत्रस्पर्शनाकालान्तरभावाल्पबहुत्वसन्निकर्षरूपैर्नवभिरनुयोगद्वारैः क्षेत्रादिषु पञ्चदशसु द्वारेषु सिद्धप्राभृते चिन्तिताः तदनुसारेण वयमपि विनेयजनानुग्रहार्थं लेशतश्चिन्तयाम । तत्रादीनि च पञ्चदश द्वाराण्यमूनि—" खेत्ते १ काले २ गइ ३ वेय ४ तित्थ ५ लिंग ६ चरित्त ७ बुद्धे ८ य । नाण ९ गाहु १० क्कस्से ११, अंतर १२ मणुसमय १३ गणण १४ अप्पबहू १५ ॥ १ ॥" तत्र प्रथमतः एषु द्वारेषु सत्पदप्ररूपणया अनन्तरसिद्धाश्चिन्त्यन्ते, तत्र द्वारं त्रिविधेऽपि लोके सिद्धाः प्राप्यन्ते, तद्यथा—ऊर्ध्वलोके अधोलोके तिर्यग्लोके च, तत्रोर्ध्वलोके पण्डकवनादौ अधोलोके—अधोलौकिकेषु ग्रामेषु तिर्यग्लोके मनुष्यक्षेत्रे, तत्रापि निर्व्याघातेन पञ्चदशसु कर्मभूमिषु, व्याघातेन समुद्रनदीवर्षधरपर्वतादावपि । व्याघातो नाम संहरणम्, उक्तं च— 'दीवसमुद्दहाइ-जणएसु वाघाय खेत्तओ सिद्धा । निव्वाघाएण पुणो, पनरससुं कम्मभूमीसु ॥ १ ॥" तीर्थकृत पुनरधोलोके तिर्यग्लोके वा । तत्राधोलोकेऽधोलौकिकेषु ग्रामेषु तिर्यग्लोके पञ्चदशसु कर्मभूमिषु न शेषेषु स्थानेषु शेषेषु हि स्थानेषु संहरणतः संभवन्ति, न च भगवतां संहरणसंभवः १ । तथा कालं काल द्वारे ऽवसर्पिण्यां जन्म चरमशरीरिणां नियमतः तृतीयचतुर्थारकयोः, सिद्धिगमनं तु केषाञ्चित् पञ्चमेऽप्यरके यथा जम्बूस्वामिनः, उत्सर्पिण्यां जन्म चरमशरीरिणां दुष्षमादिषु द्वितीयतृतीयचतुर्थारकेषु, सिद्धिगमनं तु तृतीयचतुर्थयोरेव, उक्तं च—" दोसु वि समासु जाया, सिज्झंतोसप्पिणीए कालतिगे । तीसु य जाया ओस-प्पिणीए सिज्झंति कालदुगे ॥ २ ॥" महाविदेहेषु पुनः कालः सर्वदैव सुषमदुष्षमाप्रतिरूपः, ततस्तद्वक्तव्यताभणनेनैव तत्र वक्तव्यता भणिता द्रष्टव्या, संहरणमधिकृत्य पुनरुत्सर्पिण्यामवसर्पिण्यां च षट्स्वप्यरकेषु सिध्यन्तो द्रष्टव्याः, तीर्थकृतां पुनरवसर्पिण्यामुत्सर्पिण्यां च जन्म सिद्धिगमनं च सुषमदुष्षमादुष्षमसुषमारकयोरेवाकारयोर्वेदितव्यं, न शेषेष्वरकेषु । तथाहि-भगवान् ऋषभस्वामी सुषमदुष्षमारकपर्यन्ते समुदपादि, एकोननवतिपक्षेषु शेषेषु सिद्धिमगमत्, वर्द्धमानस्वामी तु भगवान् दुष्षमसुषमारकपर्यन्तेषु एकोननवतिपक्षेषु शेषेषु मुक्तिसौधमध्यमध्यास्त, तथा चोक्तम्—" समणे भगवं महावीरे तीसं वासाइं अगारवासमज्झे वसित्ता साइरेगाइं दुवालस संवच्छराइं छउमत्थपरियागं पाउणित्ता बायालीसं वासाइं सामण्णपरियागं पाउणित्ता बावत्तरिं वासाणि सव्वाउयं पालइत्ता खीणे वेयणिज्जआउयनामगोए दूसमसुसमाए बहुवीइक्कंताए तिहिं वासेहिं अद्धनवमेहि य मासेहिं सेसेहिं पावाए मज्झिमाए जाव सव्वदुक्खप्पहीणे " । ( उत्सर्पिण्यामपि च प्रथमतीर्थकरो दुष्षमसुषमायामेकोननवतिपक्षेषु व्यतिक्रान्तेषु जायते, यतो भगवद्वर्द्धमानस्वामिसिद्धिगमनस्य भविष्यन्महापद्मतीर्थकरोत्पादस्य चान्तरं चतुरशीतिवर्षसहस्राणि सप्त वर्षाणि पञ्च च मासाः भवन्ति ) तथा चोक्तम्—" चुलसीईवाससहस्सा, वासा सत्तेव पंच मासा य । वीरमहापउमाणं, अंतरमेयं जिणुद्दिट्ठं ॥ १ ॥" तत उत्सर्पिण्यामपि प्रथमतीर्थङ्करा अथोक्तकालमान एव जायते, तथा उत्सर्पिण्यां चतुर्विंशतितमः तीर्थकरः सुषमदुष्षमायामेकोननवतिपक्षेषु व्यतिक्रान्तेषु जन्मासादयति, एकोननवतिपक्षाधिकचतुरशीतिपूर्वलक्षातिक्रमे च सेत्स्यति, अत उत्सर्पिण्यामवसर्पिण्यां वा दुष्षमसुषमासुषमदुष्षमयोरेव तीर्थकृतां जन्म निर्वाणं चेति २ । गतिद्वारे प्रत्युत्पन्ननयमधिकृत्य मनुष्यगतावेव सिध्यन्तः प्राप्यन्ते, न शेषासु गतिषु । पाश्चात्यमनन्तरं भवमधिकृत्य पुनः सामान्यतश्चतसृभ्योऽपि गतिभ्य आगताः सिध्यन्ति, विशेषचिन्तायां पुनश्चतसृभ्यो नरकपृथिवीभ्यो, न शेषाभ्यः; तिर्यग्गतेः पृथिव्यम्बुवनस्पतिपञ्चेन्द्रियेभ्यो न शेषेभ्यः, मनुष्यगतेः स्त्रीभ्यः पुरुषेभ्यो वा, देवगतेश्चतुर्भ्यो देवनिकायेभ्यः । तथा चाह भगवानार्यश्यामः—" नेरइया णं भंते ! अणंतरागया अंतकिरियं करेंति परंपरागया अंतकिरियं करेंति ?, गोयमा ! अणंतरागया वि अंतकिरियं करेंति परंपरागया वि अंतकिरियं करेंति, एवं रयणप्पभापुढविनेरइया वि० जाव पंकप्पभापुढविनेरइया, धूमप्पभापुढविनेरइयाणं पुच्छा, गोयमा ! नो अणंतरागया अंतकिरियं करेंति, परंपरागया अंतकिरियं करेंति, एवं० जाव अहे सत्तमपुढविनेरइया । असुरकुमारा० जाव थणियकुमारा । पुढविआउवणस्सइकाइया अणंतरागया वि अंतकिरियं करेंति, परंपरागया वि अंतकिरियं करेंति, तेउवाउबेइंदियतेइंदियचउरिंदिया नो अणंतरागया अंतकिरियं करेंति परंपरागया—अंतकिरियं करेंति सेसा अणंतरागया वि अंतकिरियं करेंति परंपरागया वि " तीर्थकृतः पुनर्देवगतेर्नरकगतेर्वाऽनन्तरागताः सिध्यन्ति, न शेषगतेः, तत्रापि नरकगतेस्तिसृभ्यो नरकपृथिवीभ्यो, न शेषाभ्यः, देवगतेर्वैमानिकदेवनिकायेभ्यो, न शेषनिकायेभ्यः । तथा चाह भगवानार्यश्यामः —" रयणप्पभापुढविनेरइया णं भंते ! रयणप्पभापुढविनेरइएहिंतो अणंतरं उव्वट्टित्ता तित्थयरत्तं लभेज्जा ?, गोयमा ! अत्थेगइए लभेज्जा अत्थेगइए नो लभेज्जा से केणट्ठेणं भंते ! एवं वुच्चइ अत्थेगइए लभेज्जा अत्थेगइए नो लभेज्जा ?, गोयमा ! जस्स णं रयणप्पभापुढविनेरइयस्स तित्थयरनामगोत्ताइं कम्माइं बद्धाइं पुट्ठाइं कडाइं निवद्धाइं अभिनिव्वट्टाइं अभिसमन्नागयाइं उदिन्नाइं नो उवसंताइं भवंति से णं रयणप्पभापुढविनेरइए रयणप्पभापुढविनेरइएहिंतो उव्वट्टित्ता तित्थयरत्तं लभेज्जा, जस्स णं रयणप्पभापुढविनेरइयस्स तित्थयरनामगोत्ताइं कम्माइं नो बद्धाइं० जाव नो उदिन्नाइं उवसंताइं भवंति से णं रयणप्पभापुढविनेरइए रयणप्पभापुढविनेरइएहिंतो उव्वट्टित्ता तित्थयरत्तं नो लभेज्जा से एएणट्ठेणं गोयमा ! एवं वुच्चइ—अत्थेगइए लभेज्जा अत्थेगइए नो लभेज्जा । एवं० जाव वालुय-

प्पभापुढविनेरइएहिंतो तित्थयरत्तं लभेज्जा। पंकप्पभापुढवि-नेरइया णं भंते! पंकप्पभापुढविनेरइएहिंतो अणंतरं उव्वट्टित्ता तित्थयरत्तं लभेज्जा ?, गोयमा !, णो इणट्ठे समट्ठे अंतकिरियं पुण करेज्जा । धूमप्पभापुढविनेरइए णं पुच्छा, गोयमा ! नो इणट्ठे समट्ठे, विरइं पुण लभेज्जा, तमापुढविपुच्छा, गोयमा ! नो इणट्ठे समट्ठे विरयाविरइं लभेज्जा, अहे सत्तमाए पुच्छा गोयमा ! नो इणट्ठे समट्ठे, सम्मत्तं पुण लभेज्जा । असुरकुमारा-णं पुच्छा, गोयमा ! नो इणट्ठे समट्ठे अंतकिरियं पुण करेज्जा एवं निरंतरं० जाव आउक्काइया, तेउक्काइए णं भंते ! तेउक्का-इएहिंतो अणंतरं उव्वट्टित्ता तित्थयरत्तं लभेज्जा ?, गोयमा ! नो इणट्ठे समट्ठे, केवलिपन्नत्तं धम्मं लभेज्जा सवणयाए, एवं वाउकाइएवि; वणस्सइकाइए णं पुच्छा. गोयमा ! नो इणट्ठे समट्ठे अंतकिरियं पुण करेज्जा । बेइंदियतेइंदियचउरिंदियाणं पुच्छा, गोयमा ! नो इणट्ठे समट्ठे मणपज्जवनाणं पुण उप्पाडे-ज्जा । पंचिंदियतिरिक्खजोणियमणुस्सवाणमंतरजोइसिएसु पुच्छा, गोयमा ! नो इणट्ठे समट्ठे, अंतकिरियं पुण करेज्जा । सो-हम्मगदेवे णं भंते ! अणंतरं चइत्ता तित्थयरत्तं लभेज्जा?, गो०! अत्थेगइए लभेज्जा अ०नो ल० एवं जहा रयणप्पभापुढविनेरइ-यस्स एवं० जाव सव्वट्ठगदेवे"३ वेदद्वारे प्रत्युत्पन्ननयमधिकृ-त्यापगतवेद एव सिध्यति, तद्भवानुभूतपूर्ववेदापेक्षया तु सर्वे-ष्वपि वेदेषु, उक्तं च-"अवगयवेओ सिज्झइ, पच्चुप्पन्नं नयं पडुच्चा उ । सव्वेहि वि वेएहिं, सिज्झइ, समईयनयवाया ॥१॥" तीर्थकृतः पुनः स्त्रीवेदे वा पुरुषवेदे वा, न नपुंसकवेदे ४, तथा तीर्थद्वारे तीर्थकरतीर्थे तीर्थकरातीर्थे च अतीर्थे च सिध्यन्ति ५ लिङ्गद्वारे अन्यलिङ्गे गृहिलिङ्गे स्वलिङ्गे वा, एतच्च सर्वं द्रव्य-लिङ्गापेक्षया द्रष्टव्यं, संयमरूपभावलिङ्गापेक्षया तु स्वलिङ्ग एव, उक्तं च-"लिंगेण अन्नलिंगे, गिहत्थलिंगे तहेव य सलिं-गे । सव्वेहिं दव्वलिंगे, भावेण सलिंगसंजमओ ॥ १ ॥" ६, चारित्रद्वारे प्रत्युत्पन्ननयापेक्षया यथाख्यातचारित्रे, तद्भवा-नुभूतपूर्वचरणापेक्षया तु केचित्सामायिकसूक्ष्मसम्परायय-थाख्यातचारित्रिणः, केचित्सामायिकच्छेदोपस्थापनसूक्ष्म-सम्पराययथाख्यातचारित्रिणः, केचित् सामायिकपरिहा-रविशुद्धिकसूक्ष्मसम्पराययथाख्यातचारित्रिणः, केचित्सामा-यिकच्छेदोपस्थापनपरिहारविशुद्धिकसूक्ष्मसम्पराययथाख्या-तचारित्रिणः उक्तं च-" चरणंमि अहक्खाए पच्चुप्पन्नेण सिज्झइ नएणं । पुव्वाणंतरचरणे, तिचउक्कगपंच-गुणमेगं ॥ १ ॥" तीर्थकृतः पुनः सामायिकसूक्ष्मस-म्पराययथाख्यातचारित्रिण एव, बुद्धद्वारे प्रत्येकबुद्धाः स्वयम्बुद्धा बुद्धबोधिता बुद्धीबोधिता वा सिध्यन्ति ८, ज्ञानद्वारे प्रत्युत्पन्ननयमपेक्ष्य केवलज्ञाने, तद्भवानुभूतपू-र्वज्ञानापेक्षया तु केचिन्मतिश्रुतज्ञानिनः, केचिन्मति-श्रुतावधिज्ञानिनः, केचिन्मतिश्रुतमनःपर्यायज्ञानिनः, केचि-न्मतिश्रुतावधिमनःपर्यायज्ञानिनः, तीर्थकृतस्तु मतिश्रुता-वधिमनःपर्यायज्ञानिन एव ९, अवगाहनाद्वारे जघन्याया-मपि अवगाहनायां सिध्यन्ति उत्कृष्टायां मध्यमायां च, तत्र द्विहस्तप्रमाणा जघन्या, पञ्चविंशत्यधिकपञ्चधनुःश-तप्रमाणा उत्कृष्टा, सा च मरुदेवीकालवर्तिनामवसेया, म-रुदेव्यप्यादेशान्तरेण नाभिकुलकरतुल्या । तदुक्तं सिद्धप्राभृ-तटीकायाम्-' मरुदेवी वि आएसन्तरेण नाभितुल्ल ' त्ति, त-त आदेशान्तरापेक्षया मरुदेव्यामपि यथोक्तप्रमाणावगाहना द्रष्टव्या, उक्तं च-"ओगाहणा जहन्ना, रयणिदुगं अह पु-णो उ उक्कोसा । पंचेव धणुसयाइं, धणुहपुहुत्तेण अहि-याइं ॥ १ ॥" अत्र पृथक्त्वशब्दो बहुत्ववाची बहुत्वं चेह प-ञ्चविंशतिरूपं द्रष्टव्यं, सिद्धप्राभृतटीकायां तथाव्याख्यानात्, तेन पञ्चविंशत्यधिकानीत्यवसेयं, शेषा त्वजघन्योत्कृ-ष्टावगाहना, तीर्थकृतां तु जघन्यावगाहना सप्तहस्तप्रमा-णा उत्कृष्टा पञ्चधनुःशतमाना शेषा त्वजघन्योत्कृष्टा १०, उत्कृष्टद्वारे सम्यक्त्वपरिभ्रष्टा उत्कर्षतः कियता कालेन सि-ध्यन्ति ?, उच्यते, देशोनापार्द्धपुद्गलपरावर्त्तसंसारातिक्रमे, अनुत्कर्षतस्तु केचित्सङ्ख्येयकालातिक्रमे केचिदसङ्ख्येयका-लातिक्रमे, केचिदनन्तेन कालेन ११, अन्तरद्वारे जघन्य-त एकसमयोऽन्तरम् उत्कर्षतः षण्मासा १२, निरन्तरद्वारे जघन्यतो द्वौ समयौ निरन्तरं सिध्यन्तः प्राप्यन्ते उत्क-र्षतोऽष्टौ समयान् १३, गणनाद्वारे जघन्यत एकस्मिन् स-मये एकः सिध्यति उत्कर्षतोऽष्टाधिकं शतं, तथा चास्मि-न्नवसर्पिण्यामवसर्पिण्या भगवतः श्रीनाभेयस्य निर्वा-णसमये श्रूयतेऽष्टोत्तरं शतमेकसमयेन सिद्धं, तथा चोक्तं सङ्घदासगणिना वसुदेवचरिते-" भयवं च उसभसामी जयगुरू, पुव्वसयसहस्सं वाससहस्सूणयं विहरिऊणं के-वली अट्ठावयपव्वए सह दसहिं समणसहस्सेहिं परिनि-व्वाणमुवगते चोद्दसेणं भत्तेणं माघबहुले पक्खे तेरसीए अभीइणा नक्खत्तेणं एगूणपुत्तसएण अट्ठहि य नत्तुएहिं सह एगसमएणं निव्वुओ ,सेसाण वि अणगाराणं दस स-हस्साणि अट्ठसयऊणगाणि सिद्धाणि, तम्मि चेव रिक्खे समयंतरेसु बहूसु ' इति । १४, अल्पबहुत्वद्वारे युगपद् द्वि-आदिकाः सिद्धाः स्तोकाः,एककाः सिद्धाः सङ्ख्येयगुणाः, उक्तं च-"संखाए जहन्नेणं, एक्को उक्कोसएण अट्ठसयं । सि-द्धाणेगा थोवा, एगागसिद्धा उ संखगुणा ॥१॥" १५ । तदेवं कृता पञ्चदशस्वपि द्वारेषु सत्पदप्ररूपणा ॥ सम्प्रति द्रव्य-प्रमाणमभिधीयते-तत्र क्षेत्रद्वारे ऊर्ध्वलोके युगपदेकसमयेन चत्वारः सिध्यन्ति द्वौ समुद्रे चत्वारः सामान्यतो जलमध्ये तिर्यग्लोकेऽष्टशतं विंशतिपृथक्त्वमधोलोके; उक्तं च-"च-त्तारि उड्ढलोए, जले चउक्कं दुवे समुद्दम्मि । अट्ठसयं तिरि-यलोए, वीसपुहुत्तं अहोलोए ॥१॥" तथा नन्दनवने चत्वारः, 'नंदणे चत्तारि' तिवचनात्, एकतमस्मिंस्तु विजये विंशतिः, उक्तं च-सिद्धप्राभृतटीकायाम्-"वीसा एगयरे विजये" तथा सर्वास्वप्यकर्मभूमिषु प्रत्येकं संहरणतो दश १०, पण्डकवने द्वौ, पञ्चदशस्वपि कर्मभूमिषु प्रत्येकमष्टशतम्, उक्तं च-"संका-मणाए दसगं, दो चेव हवंति पंडगवणम्मि । समएण य अ-ट्ठसयं, पण्णरससु कम्मभूमीसु ॥ ॥" कालद्वारे उत्सर्पिण्या-मवसर्पिण्यां च प्रत्येकं तृतीये चतुर्थे चारकेऽष्टशतम्, अ-वसर्पिण्यां पञ्चमारके विंशतिः, शेषेष्वरकेषु प्रत्येकमुत्स-र्पिण्यामवसर्पिण्यां च संहरणतो दश १०, तथा चोक्तं सि-द्धप्राभृतटीकायाम्-" सेसेसु अरएसु दस सिज्झंति,दोसु-वि उस्सप्पिणीओसप्पिणीसु संहरणतो ।" सिद्धप्राभृतसू-त्रेऽप्युक्तम् 'उस्सप्पिणि ओसप्पिणि,तइयचउत्थेसु समासु अ-

इसयं । पंचमियाए वीसं, दसगं दसगं च सेससु ॥ १ ॥ ” गतिद्वारे—देवगतेरागतानामष्टशतं, शेषगतिभ्य आगता प्रत्येकं दश दश, उक्तं च सिद्धप्राभृते—'संसारा गई दसगं' भगवांस्त्वयार्थश्याम पुनरेवमाह—नरकगतेरागता दश, तत्रापि विशेषचिन्तायां रत्नप्रभापृथिव्याः शर्कराप्रभाया वालुकाप्रभायाश्च पृथिव्या आगता प्रत्येकं दश दश, पङ्कप्रभायाः पृथिव्या आगताश्चत्वारः, तथा तिर्यग्गतेरागता सामान्यतो दश, विशेषचिन्तायां पुनः पृथिवीकायेभ्योऽप्कायेभ्यश्चागताः प्रत्येकं चत्वारश्चत्वारः, वनस्पतिकायेभ्य आगताः षट्, पञ्चेन्द्रियतिर्यग्योनिपुरुषेभ्य आगता दश, पञ्चेन्द्रियतिर्यग्योनिस्त्रीभ्योऽप्यागता दश, तथा सामान्यतो मनुष्यगतेरागता विंशतिः, विशेषचिन्तायां मनुष्यपुरुषेभ्य आगता दश, मनुष्यस्त्रीभ्य आगता विंशतिः ; तथा सामान्यतो देवगतेरागता अष्टशतं, विशेषचिन्तायामसुरकुमारेभ्यो नागकुमारेभ्यो यावत् स्तनितकुमारेभ्यः प्रत्येकमागता दश दश, असुरकुमारीभ्यः प्रत्येकमागताः पञ्च पञ्च, व्यन्तरदेवेभ्य आगता दश, व्यन्तरीभ्य आगताः पञ्च, ज्योतिष्कदेवेभ्य आगता दश ज्योतिष्कदेवीभ्य आगता विंशतिः, वैमानिकदेवेभ्य आगता अष्टशतं, वैमानिकदेवीभ्य आगता विंशतिः, तथा च प्रज्ञापनाग्रन्थः—“ अणंतरागया णं भंते ! नेरइया एगसमएणं केवइया अंतकिरिअं पकरेंति ?, गोअमा !, जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं दस, रयणप्पभापुढविनेरइयावि एवं चेव, ०जाव वालुयप्पभापुढविनेरइया, अणंतरागया णं भंते ! पंकप्पभापुढविनेरइया एगसमयेणं केवइया अंतकिरिअं पकरेंति ?, गोअमा !, जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं चत्तारि, अणंतरागया णं भंते ! असुरकुमारा एगसमएणं केवइया अंतकिरिअं पकरेंति ?, गोअमा ! जहन्नेणं एक्को वा दो वि तिन्नि वा, उक्कोसेणं दस, अणंतरागया णं भंते! असुरकुमारीओ एगसमएणं केवइयाओ अंतकिरियं पकरेंति ?, गोअमा! जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं पञ्च,एवं जहा असुरकुमारा सदेवीया तहा०जाव थणियकुमारा, अणंतरागया णं भंते ! पुढविकाइया एगसमएणं केवइया अंतकिरिअं पकरेंति ?, गोअमा ! जहन्नेणं इक्को वा दो वा तिन्नि वा उक्कोसेणं चत्तारि, एवं आउक्काइया वि, वणस्सइकाइया पंचेंदियतिरिक्खजोणिया दस,पचेंदियतिरिक्खजोणिणीओ वि दस, मणुस्सा दस, मणुस्सीओ वीसं, वाणमंतरा दस वाणमंतरीओ पञ्च, जोइसिया दस, जोइसिणीओ वीसं, वेमाणिया अट्ठसयं, वेमाणिणीओ वीसं ” मिति तत्त्वं पुनः केवलिनो बहुश्रुता वा विदन्ति । वेदद्वारे-पुरुषाणामष्टशतं, स्त्रीणां विंशतिः, दश नपुंसकाः, उक्तं च-“अट्ठसयं पुरिसाणं, वीसं इत्थीण दस नपुंसाणं” तथा इह पुरुषेभ्य उद्धृता जीवाः केचित्पुरुषा एव जायन्ते केचित् स्त्रियः केचिन्नपुंसकाः, एवं स्त्रीभ्योऽप्युद्धृतानां भङ्गत्रयम्, एवं नपुंसकेभ्योऽपि, सर्वसङ्ख्यया भङ्गा नव । तत्र ये पुरुषेभ्य उद्धृताः पुरुषा एव जायन्ते तेषामष्टशतं, शेषेषु चाष्टसु भङ्गेषु दश २, तथा चोक्तं सिद्धप्राभृते—'सेसा उ अट्ठ भंगा, दसगं दसगं तु होइ एक्केक्के'। तीर्थद्वारे-तीर्थकृतो युगपदेकसमयेन उत्कर्षतश्चत्वारः सिध्यन्ति, दश प्रत्येकबुद्धाश्चत्वारः स्वयम्बुद्धाः, अष्टशतमतीर्थकृतां विंशतिः स्त्रीणां, द्वे तीर्थकर्यौ । लिङ्गद्वारे—गृहिलिङ्गे चत्वारः, अन्यलिङ्गे दश, स्वलिङ्गे अष्टशतम्, उक्तं च-'चउरो दस अट्ठसयं, गिहअन्नलिंगे सलिंगे य '। चारित्रद्वारे—सामायिकसूक्ष्मसम्परायथाख्यातचारित्रिणां सामायिकच्छेदोपस्थापनसूक्ष्मसम्परायथाख्यातचारित्रिणां च प्रत्येकमष्टशतं,सामायिकपरिहारविशुद्धिकसूक्ष्मसम्परायथाख्यातचारित्रिणां सामायिकच्छेदोपस्थापनपरिहारविशुद्धिकसूक्ष्मसम्परायथाख्यातचारित्रिणां च दशकम् २, उक्तं च-“पच्छाकडे चरित्ते, तिग चउक्के य तेसिमट्ठसयं। परिहारिएहिं सहिए, दसगं दसगं च पचगडे॥ १ ॥ ” बुद्धद्वारे प्रत्येकबुद्धानां दशकं, बुद्धबोधितानां पुरुषाणामष्टशतं, बुद्धबोधितानां स्त्रीणां विंशतिः, नपुंसकानां दशकं, बुद्धीभिर्बोधितानां स्त्रीणां विंशतिः, बुद्धीभिर्बोधितानामेव सामान्यतः पुरुषादीनां विंशतिपृथक्त्वम्, उक्तं च सिद्धप्राभृतटीकायाम्-'बुद्धीहिं चेव बोहियाणं पुरिसाईणं सामन्नेण वीसपुहुत्तं सिज्झइ' त्ति, बुद्धी च मल्लिस्वामिनीप्रभृतिका तीर्थंकरी सामान्यसाध्व्यादिका वा वेदितव्या, यतः सिद्धप्राभृतटीकायामेवोक्तं-“बुद्धीओ वि मल्लीपमुहाओ अन्नाओ य सामन्नसाहुणीपमुहाओ बोहंति त्ति” ज्ञानद्वार-पूर्वभावमपेक्ष्य मतिश्रुतज्ञानिनो युगपदेकसमयेनोत्कर्षतश्चत्वारः सिध्यन्ति, मतिश्रुतमनःपर्यायज्ञानिनो दश, मतिश्रुतावधिज्ञानिनः मतिश्रुतावधिमनःपर्यायज्ञानिनो वा अष्टशतम् । अवगाहनाद्वारे-जघन्यायामवगाहनायां युगपदेकसमयेनोत्कर्षतश्चत्वारः सिध्यन्ति, उत्कृष्टायां द्वौ, अजघन्योत्कृष्टायामष्टशतं, यवमध्येऽष्टौ, उक्तं च—“ उक्कोसगाहणाए, दो सिद्धा-होंति एक्कसमएण । चत्तारि जहन्नाए, अट्ठसयं मज्झिमाए उ ॥ १ ॥ ” अत्र टीकाकारेण व्याख्या कृता-गाथापर्यन्तवर्त्तिनस्तुशब्दस्याधिकार्थसंसूचनात् ' जवमज्झे अट्ठ ' इति उत्कृष्टद्वारे येषां सम्यक्त्वपरिभ्रष्टानामनन्तः कालोऽगमत् तेषामष्टशतं, सङ्ख्यातकालपतितानामसंख्यातकालपतितानां च दशकं दशकम्, अप्रतिपतितसम्यक्त्वानां चतुष्टयम्, उक्तं च—“ जेसिं अणंतकालो, पडिवाओ तेसिं होइ अट्ठसयं । अपडिवडिए चउरो, दसगं दसगं च सेसाणं ॥ १ ॥ ” अन्तरद्वारे—एको वा सान्तरतः सिध्यति बहवो वा, तत्र बहवो यावदष्टशतम् । अनुसमयद्वारे—प्रतिसमयमेको वा सिध्यति, बहवो वा ?। तत्र बहूनां सिध्यतामियं प्ररूपणा-एकादयो द्वात्रिंशत्पर्यन्ता निरन्तरमुत्कर्षतोऽष्टौ समयान् यावत् प्राप्यन्ते । इयमत्र भावना-प्रथमसमये जघन्यत एको द्वौ वा उत्कर्षतो द्वात्रिंशत् सिध्यन्तः प्राप्यन्ते द्वितीयसमये जघन्यत एको द्वौ वा उत्कर्षतो द्वात्रिंशद् एवं तृतीयसमयेऽपि, एवं चतुर्थसमयेऽपि एवं यावदष्टमेऽपि समये जघन्यत एको द्वौ वा उत्कर्षतो द्वात्रिंशत्ततः परमवश्यमन्तरम्। तथा त्रयस्त्रिंशदादयोऽष्टचत्वारिंशत्पर्यन्ता निरन्तरं सिध्यन्तः सप्त समयान् यावत्प्राप्यन्ते,भावना प्राग्वत्,परतो नियमादन्तरं,तथा एकोनपञ्चाशदादयः षष्टिपर्यन्ता निरन्तरं सिध्यन्त उत्कर्षतः षट् समयान् यावदवाप्यन्ते, परतोऽवश्यमन्तरं, तथा एक-

षण्णवत्यादयो द्विसप्ततिपर्यन्ता निरन्तरमुत्कर्षतः सिध्यन्त उत्कर्षतः पञ्च समयान् यावत्प्राप्यन्ते, ततः परमन्तरं, तथा त्रिसप्तत्यादयश्चतुरशीतिपर्यन्ता निरन्तरं सिध्यन्त उत्कर्षतः चतुरः समयान् यावत्प्राप्यन्ते, तत ऊर्ध्वमन्तरं, तथा पञ्चाशीत्यादयः षण्णवतिपर्यन्ता निरन्तरं सिध्यन्तः उत्कर्षतस्त्रीन् समयान् यावदवाप्यन्ते,परतोऽवश्यमन्तरम् । तथा सप्तनवत्यादयो द्व्युत्तरशतपर्यन्ता निरन्तरं सिध्यन्त उत्कर्षतो द्वौ समयौ यावदवाप्यन्ते, परतो नियमादन्तरं, तथा त्र्युत्तरशतादयोऽष्टोत्तरशतपर्यन्ताः सिध्यन्तो नियमादेकमेव समयं यावदवाप्यन्ते, न द्वित्रादिसमयानिति । एतदर्थसंग्राहिका चेयं गाथा-"बत्तीसा अडयाला,सट्ठी बावत्तरी य बोद्धव्वा । चुलसीई छन्नउई, दुरहियमट्ठुत्तरसयं च ॥१॥" अत्राष्टसामायिकेभ्य आरभ्य द्विसामायिकपर्यन्ता निरन्तरं सिद्धाः एकैकस्मिंश्च विकल्पे उत्कर्षतः शतपृथक्त्वं संख्यापरिमाणं, गणनाद्वारमल्पबहुत्वद्वारं च प्रागिव द्रष्टव्यं, तथा च सिद्धप्राभृतेऽपि द्रव्यप्रमाणचिन्तायामेतयोर्द्वारयोः सत्पदप्ररूपणोक्तैव गाथा भूयोऽपि परावर्त्तिता-"संखाए जहन्नेणं, एक्को उक्कोसएण अट्ठसयं । सिद्धा णगा थोवा,एक्कगसिद्धा उ संखगुणा ॥१॥" तदेवमुक्तं द्रव्यप्रमाणम् ॥ सम्प्रति क्षेत्रप्ररूपणा कर्त्तव्या-तत्र पूर्वभावमपेक्ष्य सत्पदप्ररूपणायामेव कृता । सम्प्रति प्रत्युत्पन्ननयमतेन क्रियते-तत्र पञ्चदशस्वप्यनुयोगद्वारेषु पृच्छा इह सकलकर्मक्षयं कृत्वा कुत्र गतो भगवान् सिध्यति ?, उच्यते-ऋजुगत्या मनुष्यक्षेत्रप्रमाणे सिद्धिक्षेत्रे गतः सिध्यति, यदुक्तम्-"इह बोन्दिं चइत्ताणं, तत्थ गंतूण सिज्झइ"॥ गतं क्षेत्रद्वारम् ॥ सम्प्रति स्पर्शनाद्वारम्-स्पर्शना, च क्षेत्रावगाहादतिरिक्ता यथा परमाणोः, तथाहि-परमाणोरेकस्मिन् प्रदेशेऽवगाहः सप्तप्रादेशिकी च स्पर्शना । उक्तं च-"एगपएसोगाढं , सत्तपएसा य से फुसणा "। सिद्धानां तु स्पर्शना एवमवगन्तव्या-"फुसइ अणंते सिद्धे , सव्वपएसेहिं नियमसो सिद्धो । ते उ असंखेज्जगुणा, देसपएसेहिं जे पुट्ठा ॥ १ ॥" गतं स्पर्शनाद्वारम् ॥ सम्प्रति कालद्वारम्-तत्र चेयं परिभाषा-सर्वेष्वपि द्वारेषु यत्र यत्र स्थानेऽष्टशतमेकसमयेन सिध्यदुक्तं तत्र तत्राष्टौ समया निरन्तरं कालो वक्तव्यः यत्र यत्र पुनर्विंशतिर्दश वा तत्र तत्र चत्वारः समयाः , शेषेषु स्थानेषु द्वौ समयौ, उक्तं च-"जहिं अट्ठसयं सिज्झइ, अट्ठ उ समया निरंतरं कालो । वीसदसएसु चउरो, सेसा सिज्झंति दो समए ॥ १ ॥" सम्प्रति एतदेव मन्दविनेयजनानुग्रहाय विभाव्यते, तत्र क्षेत्रद्वारे-जम्बूद्वीपे धातकीखण्डे पुष्करवरद्वीपे च प्रत्येकं भरतैरावतमहाविदेहेषूत्कर्षतोऽष्टौ समयान् यावन्निरन्तरं सिध्यन्तः प्राप्यन्ते, हरिवर्षादिष्वधोलोके च चतुरश्चतुरः समयान् , नन्दनवने पण्डकवने लवणसमुद्रे च द्वौ द्वौ समयौ,कालद्वारे-उत्सर्पिण्यामवसर्पिण्यां च प्रत्येकं तृतीयचतुर्थारकयोरष्टावष्टौ समयान् , शेषेषु चारकेषु चतुरश्चतुरः समयान् , गतिद्वारे-देवगतेरागता उत्कर्षतोऽष्टौ समयान् , शेषगतिभ्य आगताश्चतुरः समयानिति, वेदद्वारे-पश्चात्कृतपुरुषवेदा अष्टौ समयान् , पश्चात्कृतस्त्रीवेदनपुंसकवेदाः प्रत्येकं चतुरश्चतुरः समयान् , पुरुषवेदेभ्य उद्वृत्य पुरुषा एव सन्तः सिध्यन्तोऽष्टौ समयान् , शेषेषु चाष्टसु भङ्गेषु चतुरश्चतुरः समयानिति , तीर्थद्वारे-तीर्थकरतीर्थे तीर्थकरीतीर्थे वाऽतीर्थकरसिद्धा उत्कर्षतोऽष्टौ समयान् , तीर्थकरास्तीर्थकर्यश्च द्वौ द्वौ समयौ , लिङ्गद्वारे-स्वलिङ्गेऽष्टौ समयान् , अन्यलिङ्गे चतुरः समयान् , गृहिलिङ्गे द्वौ समयौ, चारित्रद्वारे-अनुभूतपरिहारविशुद्धिकचारित्राश्चतुरः समयान् , शेषा अष्टावष्टौ समयान् , बुद्धद्वारे-स्वयम्बुद्धा द्वौ समयौ , बुद्धबोधिता अष्टौ समयान् , प्रत्येकबुद्धा बुद्धीबोधिताः स्त्रियो बुद्धिबोधिता एवं च सामान्यतः पुरुषादयः प्रत्येकं चतुरश्चतुरः समयान् , ज्ञानद्वारे-मतिश्रुतज्ञानिनो द्वौ समयौ , मतिश्रुतमनःपर्यायज्ञानिनश्चतुरः समयान् , मतिश्रुतावधिज्ञानिनो मतिश्रुतावधिमनःपर्यायज्ञानिनो वाऽष्टावष्टौ समयान् , अवगाहनाद्वारे-उत्कृष्टायां जघन्यायां चावगाहनायां द्वौ द्वौ समयौ , यवमध्ये चतुरः समयान् , उक्तं च सिद्धप्राभृतटीकायाम्-'जवमज्झाए य चत्तारि समया' इति , अजघन्योत्कृष्टायां पुनरवगाहनायामष्टौ समयान् , उत्कृष्टद्वारे अप्रतिपतितसम्यक्त्वा द्वौ समयौ, संख्येयकालप्रतिपतिता असंख्येयकालप्रतिपतिताश्चतुरश्चतुरः समयान् , अनन्तकालप्रतिपतिता अष्टौ समयान् । अन्तरादीनि चत्वारि द्वाराणि नेहावतरन्ति । गतं मौलं पञ्चमं काल इति द्वारम् ॥ सम्प्रति षष्ठमन्तरद्वारम्-अन्तरं नाम सिद्धिगमनविरहकालः , स च सकलमनुष्यक्षेत्रापेक्षया सत्पदप्ररूपणायामेवोक्तः , यथा जघन्यत एकसमय उत्कर्षतः षण्मासा इति,ततः इह क्षेत्रविभागेन सामान्यतो विशेषतश्चोच्यते-तत्र जम्बूद्वीपे धातकीखण्डे च प्रत्येकं सामान्यतो वर्षपृथक्त्वमन्तरं, जघन्यत एकसमयः , विशेषचिन्तायां-जम्बूद्वीपविदेहे , धातकीखण्डविदेहयोश्चोत्कर्षतः प्रत्येकं वर्षपृथक्त्वमन्तरं जघन्यत एकः समयः , तथा सामान्यतः पुष्करवरद्वीपे विशेषचिन्तायां च तत्रत्ययोर्द्वयोरपि विदेहयोः प्रत्येकमुत्कर्षतः साधिकं वर्षमन्तरं जघन्यत एकः समयः । उक्तं च-"जम्बूदीवे धायइ-ओहविभागे य तिसु विदेहेसुं । वासपुहुत्तं अंतर-पुक्खरमुभयं पि वासहियं ॥१॥" कालद्वारे-भरतैरावतेषु च जन्मत उत्कृष्टमन्तरं किञ्चिदूना अष्टादश सागरोपमकोटीकोट्यः , संहरणतः संख्येयानि वर्षसहस्राणि, जघन्यतः पुनरुभयत्राप्येकः समयः , गतिद्वारे-निरयगतेरागत्योपदेशतः सिध्यतामुत्कृष्टमन्तरं वर्षसहस्रं हेतुमाश्रित्य प्रतिबोधसम्भवेन सिध्यतां संख्येयानि वर्षसहस्राणि , जघन्यतः पुनरुभयत्राप्येकः समयः , तिर्यग्योनिकेभ्य आगत्योपदेशतः सिध्यतां वर्षशतपृथक्त्वं हेतुमाश्रित्य प्रतिबोधतः सिध्यतां संख्येयानि वर्षसहस्राणि, जघन्यतः पुनरुभयत्राप्येकः समयः तिर्यग्योनिकस्त्रीभ्यो मनुष्येभ्यो मनुष्यस्त्रीभ्यः सौधर्मेशानवर्जदेवेभ्यो देवीभ्यश्च पृथक् पृथक् समागत्योपदेशतः सिध्यतां प्रत्येकमुत्कर्षतोऽन्तरं सातिरेकं वर्षं हेतुमाश्रित्य प्रतिबोधतः सिध्यतां संख्येयानि वर्षसहस्राणि , जघन्यतः पुनरुभयत्राप्येकः समयः, तथा पृथिव्यब्वनस्पतिभ्यो गर्भव्युत्क्रान्तेभ्यः प्रथमद्वितीयनरकपृथिवीभ्यामीशानदेवेभ्यः

सौधर्मदेवेभ्यश्च समागत्योपदेशेन हत्वा च सिध्यतां प्रत्येकमुत्कृष्टमन्तरं सङ्ख्येयानि वर्षसहस्राणि जघन्यत एकः समयः, वेदद्वारे—पुरुषवेदानामुत्कर्षतोऽन्तरं साधिकं वर्षं, स्त्रीनपुंसकवेदानां प्रत्येकं सङ्ख्येयानि वर्षसहस्राणि, पुरुषेभ्य उद्वृत्य पुरुषत्वेन सिध्यतां साधिकं वर्षं, शेषेषु चाष्टसु भङ्गकेषु प्रत्येकं सङ्ख्येयानि वर्षसहस्राणि, जघन्यतः सर्वत्राप्येकः समयः, तीर्थद्वारे—तीर्थकृतां पूर्वसहस्रपृथक्त्वम् उत्कर्षतोऽन्तरं, तीर्थकरीणामनन्तं कालं, अतीर्थकराणां साधिकं वर्षं, नोतीर्थसिद्धानां संख्येयानि वर्षसहस्राणि नोतीर्थसिद्धाः प्रत्येकबुद्धाः, जघन्यतः सर्वत्रापि समयः। उक्तं च—" पुव्वसहस्सपहुत्तं, तित्थकरानंतकाल तित्थगरी । नोतित्थकरा वासा-हिग तु सेसेसु संखसमा ॥ १ ॥ एएसिं च जहन्न समओ।" 'संखसमं' त्ति-सङ्ख्येयानि वर्षसहस्राणि, लिङ्गद्वारे—स्वलिङ्गादिषु सर्वेष्वपि जघन्यत एकः समयोऽन्तरम् उत्कर्षतोऽन्यलिङ्गे गृहिलिङ्गे च प्रत्येकं सङ्ख्येयानि वर्षसहस्राणि, स्वलिङ्गे साधिकं वर्षम्, चारित्रद्वारे-पूर्वभावमपेक्ष्य सामायिकसूक्ष्मसम्परायथाख्यातचारित्रिणामुत्कृष्टमन्तरं साधिकं वर्षं, सामायिकच्छेदोपस्थापनसूक्ष्मसम्परायथाख्यातचारित्रिणां सामायिकपरिहारविशुद्धिकसूक्ष्मसंपरायथाख्यातचारित्रिणां सामायिकच्छेदोपस्थापनपरिहारविशुद्धिकसूक्ष्मसम्परायथाख्यातचारित्रिणां च किञ्चिदूनाष्टादशसागरोपमकोटीकोट्यः, जघन्यतः सर्वत्राप्येकः समयः, बुद्धद्वारे—बुद्धबोधितानामुत्कर्षतोऽन्तरं सातिरेकं वर्षं, बुद्धबोधिनानां स्त्रीणां प्रत्येकबुद्धानां च सङ्ख्येयानि वर्षसहस्राणि, स्वयम्बुद्धानां पूर्वसहस्रपृथक्त्वं, जघन्यतः पुनः सर्वत्रापि समयः । उक्तं च—"बुद्धेहिं बोहियाण वासहियं सेसयाण संखसमा । पुव्वसहस्सपुहुत्तं होइ सयबुद्ध समइयरं ॥ १ ॥" 'समइयर' मिति-इतरज्जघन्यमन्तरं समयः, ज्ञानद्वारे-मतिश्रुतज्ञानिनामुत्कृष्टमन्तरं पल्योपमासङ्ख्येयभागः, मतिश्रुतावधिज्ञानिनां साधिकं वर्षं, मतिश्रुतमनःपर्यायज्ञानिनां च संख्येयानि वर्षसहस्राणि जघन्यतः सर्वत्रापि समयः, अवगाहनाद्वारे—जघन्यायामुत्कृष्टाया चावगाहनाया यवमध्ये चोत्कृष्टमन्तरं श्रेण्यसंख्येयभागः, अजघन्योत्कृष्टाया साधिकं वर्षं, जघन्यतः पुनः सर्वत्रापि समयः, उत्कृष्टद्वारे—अप्रतिपतितसम्यक्त्वसागरोपमासङ्ख्येयभागः, सङ्ख्येयकालप्रतिपतितानामसंख्येयकालप्रतिपतितानां च सङ्ख्येयानि वर्षसहस्राणि, अनन्तकालप्रतिपतितानां साधिकं वर्षं, जघन्यतः सर्वत्रापि समयः, उक्तं च—उवहिअसंखो भागो, अपडिवडियाण सेस संखसमा। वासमहियमणंते, समओ य जहन्नओ होइ ॥ १ ॥" अन्तरद्वारे—सान्तरं सिध्यतामनुसमयद्वारं निरन्तरं सिध्यतां गणनाद्वारं एककानामनेकेषां च सिध्यतामुत्कृष्टमन्तरं संख्येयानि वर्षसहस्राणि जघन्यतः पुनः सर्वत्रापि समयः । गतमन्तरद्वारम् ॥ सम्प्रति भावद्वारम्-तत्र सर्वेष्वपि क्षेत्रादिषु द्वारेषु पृच्छा, कतरस्मिन् भावे वर्तमानाः सिध्यन्तीति ?, उत्तरं—क्षायिके भावे, उक्तं च-'खेत्ताइएसु पुच्छा, खाइए सव्वहिं खइए'। गतं भावद्वारम् ॥ सम्प्रत्यल्पबहुत्वद्वारम्-तत्र ये तीर्थकरा ये च जले ऊर्ध्वलोकादौ च चतुष्का सिध्यन्ति ये च हरिवर्षादिषु सुषमसुषमादिषु च संहरणतो दश दश सिध्यन्ति ते परस्परं तुल्याः, तथैवोत्कर्षतो युगपदेकसमयेन प्राप्यमाणत्वात्, तेभ्यो विंशतिसिद्धाः स्तोकाः, तथा स्त्रीषु दुष्पमायामेकतमस्मिन् विजये वा प्राप्यमाणत्वात्, तथा चोक्तम् " वीसगसिद्धा इत्थी, ऽहलोगेगेविजयादिसु अओ चउरो । दसगेहिंतो थोवा " तैस्तुल्या विंशतिपृथक्त्वसिद्धाः, यतस्ते सर्वाधोलौकिकग्रामेषु बुद्धीबोधितस्त्र्यादिषु वा लभ्यन्ते, ततो विंशतिसिद्धैस्तुल्याः, यदुक्तम्—" वीसपुहुत्त सिद्धा सव्वाहोलोगबुद्धीबोहियाइ अओ वीसगेहिं तुल्ला " क्षेत्रकालयोः स्वल्पत्वात् कादाचित्कत्वेन च सम्भवादिति तेभ्योऽष्टशतसिद्धाः सङ्ख्येयगुणाः, उक्तं च—" चउ दसगा तह वीसा, वीसपुहुत्ता य जे य अट्ठसया । तुल्ला थोवा तुल्ला, संखेज्जगुणा भवे सेसा ॥ १ ॥ ". गतमल्पबहुत्वद्वारम् । कृताऽनन्तरसिद्धप्ररूपणा ।

सम्प्रति परम्परसिद्धप्ररूपणा क्रियते—

तत्र सत्पदप्ररूपणा पञ्चदशस्वपि क्षेत्रादिषु द्वारेष्वनन्तरसिद्धवदविशेषेण द्रष्टव्या, द्रव्यप्रमाणचिन्तायां सर्वेष्वपि द्वारेषु सर्वत्रैवानन्ता वक्तव्याः, क्षेत्रस्पर्शने प्रागिव, कालः पुनः सर्वत्रापि अनादिरूपोऽनन्तो वक्तव्यः, अत एवान्तरमसम्भवान्न वक्तव्यम्, तदुक्तं द्रव्यप्रमाणम् ,कालमन्तरं चाधिकृत्य सिद्धप्राभृते—" परिमाणेण अणंता, कालोऽणाई अणंतओ तेसिं । नत्थि य अंतरकालो " त्ति, भावद्वारमपि प्रागिव, सम्प्रत्यल्पबहुत्वं सिद्धप्राभृतक्रमेणोच्यते-समुद्रसिद्धाः स्तोकाः, तेभ्यो द्वीपसिद्धाः सङ्ख्येयगुणाः, तथा जलसिद्धाः स्तोकाः तेभ्यः स्थलसिद्धाः संख्येयगुणाः, तथा ऊर्ध्वलोकसिद्धाः स्तोकाः तेभ्योऽधोलोकसिद्धाः संख्येयगुणाः तेभ्योऽपि तिर्यग्लोकसिद्धाः संख्येयगुणाः । उक्तं च- सामुद्दीव जलथल, दुगदुगं तु थोवसंखगुणा । उड्ढअहतिरियलोए, थोवा संखागुणा संखा ॥ १ ॥ " तथा लवणसमुद्रसिद्धाः सर्वस्तोकाः तेभ्यः कालोदसमुद्रसिद्धाः सङ्ख्येयगुणाः तेभ्योऽपि जम्बूद्वीपसिद्धाः संख्येयगुणाः तेभ्यो धातकीखण्डसिद्धाः संख्येयगुणाः तेभ्योऽपि पुष्करवरद्वीपार्द्धसिद्धाः संख्येयगुणाः, उक्तं च—"लवणे कालोए या जंबूदीवे य धायईसंडे । पुक्खरवरे य दीवे, कमसो थोवा य संखगुणा ॥ १ ॥ " तथा जम्बूद्वीपे संहरणतो हिमवच्छिखरिसिद्धाः सर्वस्तोकाः १, तेभ्यो हैमवतैरण्यवतसिद्धाः सङ्ख्येयगुणाः २, तेभ्योऽपि महाहिमवद्रुक्मिसिद्धाः संख्येयगुणाः ३, तेभ्योऽपि देवकुरूत्तरकुरुसिद्धाः संख्येयगुणाः ४, तेभ्योऽपि हरिवर्षरम्यकसिद्धाः संख्येयगुणाः, क्षेत्रबाहुल्यात् ५, तेभ्योऽपि निषधनीलवत्सिद्धाः संख्येयगुणाः ६, तेभ्योऽपि भरतैरावतसिद्धाः संख्येयगुणाः स्वस्थानत्वात् ७, तेभ्यो महाविदेहसिद्धाः संख्येयगुणाः सदाभावात् ८, सम्प्रति धातकीखण्डे क्षेत्रविभागेनाल्पत्वे—धातकीखण्डे संहरणतो हिमवच्छिखरिसिद्धाः सर्वस्तोकाः १ तेभ्यो महाहिमवद्रुक्मिसिद्धाः संख्येयगुणाः २, तेभ्योऽपि निषधनीलवत्सिद्धाः संख्येयगुणाः ३, तेभ्योऽपि हैमवतैरण्यवतसिद्धा विशेषाधिकाः ४,तेभ्यो देवकुरूत्तरकुरुसिद्धाः संख्येयगुणाः ५, तेभ्योऽपि हरिवर्षरम्यकसिद्धा विशे-

षाधिका ६, तेभ्योऽपि भरतैरवतसिद्धाः संख्येयगुणा. ७, तेभ्योऽपि महाविदेहसिद्धाः संख्येयगुणा. ८, तथा पुष्करवरद्वीपार्द्धे हिमवच्छिखरिसिद्धाः सर्वस्तोकाः १, तेभ्योऽपि महाहिमवद्रुक्मिसिद्धाः संख्येयगुणा २, तेभ्योऽपि निषधनीलवत्सिद्धाः संख्येयगुणा ३, तेभ्योऽपि हैमवतैरण्यवतसिद्धाः संख्येयगुणा. ४, तेभ्योऽपि देवकुरूत्तरकुरुसिद्धाः संख्येयगुणा. ५,तेभ्योऽपि हरिवर्षरम्यकसिद्धाः विशेषाधिका ६, तेभ्योऽपि भरतैरावतसिद्धाः संख्येयगुणा ७, स्वस्थानमिति कृत्वा, तेभ्योऽपि महाविदेहसिद्धाः संख्येयगुणाः, क्षेत्रबाहुल्यात् स्वस्थानाच्च ८, सम्प्रति त्रयाणामपि समवायेनाल्पबहुत्वमुच्यते—सर्वस्तोका जम्बूद्वीपे हिमवच्छिखरिसिद्धाः १,तेभ्योऽपि हैमवतैरण्यवतसिद्धाः संख्येयगुणाः २, तेभ्योऽपि महाहिमवद्रुक्मिसिद्धाः संख्येयगुणा.३, तेभ्योऽपि देवकुरूत्तरकुरुसिद्धाः संख्येयगुणा. ४, तेभ्योऽपि हरिवर्षरम्यकसिद्धाः संख्येयगुणा. ५, तेभ्योऽपि निषधनीलवत्सिद्धाः संख्येयगुणा. ६, तेभ्योऽपि धातकीखण्डहिमवच्छिखरिसिद्धाः विशेषाधिका, स्वस्थाने तु परस्परं तुल्याः ७, ततो धातकीखण्डमहाहिमवद्रुक्मिपुष्करवरद्वीपार्द्धहिमवच्छिखरिसिद्धाः संख्येयगुणाः, स्वस्थाने तु चत्वारोऽपि परस्परं तुल्याः ८, ततो धातकीखण्डनिषधनीलवत्सिद्धाः पुष्करवरद्वीपार्द्धमहाहिमवद्रुक्मिसिद्धाश्च संख्येयगुणाः स्वस्थाने तु परस्परं तुल्याः ६, ततो धातकीखण्डहैमवतैरण्यवतसिद्धाः विशेषाधिकाः १०, तेभ्योऽपि पुष्करवरद्वीपार्द्धनिषधनीलवत्सिद्धाः संख्येयगुणाः ११, ततो धातकीखण्डदेवकुरूत्तरकुरुसिद्धाः संख्येयगुणाः १२,तेभ्योऽपि धातकीखण्ड एव हरिवर्षरम्यकसिद्धाः विशेषाधिकाः १३ ततः पुष्करवरद्वीपार्द्धहैमवतैरण्यवतसिद्धाः संख्येयगुणाः १४,तेभ्योऽपि पुष्करवरद्वीपार्द्धे एव देवकुरूत्तरकुरुसिद्धाः संख्येयगुणा १५, तेभ्योऽपि तत्रैव हरिवर्षरम्यकसिद्धाः विशेषाधिकाः १६, तेभ्योऽपि जम्बूद्वीपभरतैरावतसिद्धाः संख्येयगुणाः १७, तेभ्योऽपि धातकीखण्डभरतैरावतसिद्धाः संख्येयगुणाः १८, तेभ्योऽपि पुष्करवरद्वीपार्द्धभरतैरवतसिद्धाः संख्येयगुणाः १९, तेभ्योऽपि जम्बूद्वीपे विदेहसिद्धाः संख्येयगुणाः २०, ततो धातकीखण्डविदेहसिद्धाः संख्येयगुणाः २१, ततोऽपि पुष्करवरद्वीपार्द्धे विदेहसिद्धाः संख्येयगुणाः २२, इदं च क्षेत्रविभागेनाल्पबहुत्वं सिद्धप्राभृतटीकातो लिखितम् । गतं क्षेत्रद्वारम् ॥ अधुना कालद्वारम्—तत्रावसर्पिण्यां संहरणत एकान्तदुष्षमासिद्धाः सर्वस्तोकाः, इतो दुष्षमासिद्धाः संख्येयगुणाः, तेभ्यः सुषमदुष्षमासिद्धाः असंख्येयगुणाः कालस्यासंख्येयगुणत्वात्, तेभ्योऽपि सुषमासिद्धाः विशेषाधिकाः, तेभ्योऽपि सुषमसुषमासिद्धाः विशेषाधिकाः, तेभ्योऽपि दुष्षमसुषमासिद्धाः संख्येयगुणाः, उक्तं च—"अइदूसमाइ थोवा संख असंखा दुवे विसेसहिया । दूसमसुसमा संखा-गुणा उ ओसप्पिणीसिद्धा ॥ १ ॥" एवमुत्सर्पिण्यामपि द्रष्टव्यम्, तथा चोक्तम्—'अइदूसमाइ थोवा, संखअसंखा उ दुन्नि सविसेसा । दूसमसुसमा संखा-गुणा उ उस्सप्पिणीसिद्धा ॥१॥" सम्प्रत्युत्सर्पिण्यवसर्पिण्योः समुदायेनाल्पबहुत्वमुच्यते-तत्र द्वयोरप्युत्सर्पिण्यवसर्पिण्योरेकान्तदुष्षमासिद्धाः सर्वस्तोकाः, तत उत्सर्पिण्यां दुष्षमासिद्धाः विशेषाधिकाः, ततोऽवसर्पिण्यां दुष्षमासिद्धाः संख्येयगुणाः, तेभ्योऽपि द्वयोरपि दुष्षमसुषमासिद्धाः संख्येयगुणाः ; ततोऽवसर्पिण्यां सर्वसिद्धाः संख्येयगुणाः, तेभ्योऽप्युत्सर्पिणीसर्वसिद्धाः विशेषाधिकाः, गतं कालद्वारम् ॥ सम्प्रति गतिद्वारं तत्र मानुषीभ्योऽनन्तरागताः सिद्धाः सर्वस्तोकाः, ततो मानुषेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि नैरयिकेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि तिर्यग्योनिस्त्रीभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि तिर्यग्योनिकेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि देवीभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः,तेभ्योऽपि देवेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, उक्तं च—" मणुई मणुया नारय , तिरिक्खिणी तह तिरिक्ख देवीओ । देवा य जहाकमसो, संखेज्जगुणा मुणेयव्वा ॥ १ ॥" तथा एकेन्द्रियेभ्योऽनन्तरागताः सिद्धाः सर्वस्तोकाः, ततः पञ्चेन्द्रियेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तथा वनस्पतिकायेभ्योऽनन्तरागताः सिद्धाः सर्वस्तोकाः, ततः पृथिवीकायेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः,ततोऽप्यप्कायेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः,तेभ्योऽपि त्रसकायेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः,उक्तं च-"एगिंदिएहिँ थोवा,सिद्धा पञ्चिंदिएहिँ संखगुणा।तरुपुढविआउतसकाइएहिँ संखगुणा कमसो॥१॥" तथा चतुर्थपृथिवीतोऽनन्तरागताः सिद्धाः सर्वस्तोकाः, तेभ्यस्तृतीयपृथिवीतोऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि द्वितीयपृथिवीतोऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि पर्याप्तबादरप्रत्येकवनस्पतिभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि पर्याप्तबादरपृथिवीकायेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि पर्याप्तबादराप्कायेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः,तेभ्योऽपि भवनपतिदेवीभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि भवनवासिदेवेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततोऽपि व्यन्तरीभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि व्यन्तरदेवेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः ,तेभ्योऽपि ज्योतिष्कदेवीभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि ज्योतिष्कदेवेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि मनुष्यस्त्रीभ्योऽप्यनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि मनुष्येभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि प्रथमनरकपृथिवीतोऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि तिर्यग्योनिस्त्रीभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि तिर्यग्योनिकेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि अनुत्तरोपपातिकदेवेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि ग्रैवेयकेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः , तेभ्योऽप्यच्युतदेवलोकादनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि आरणदेवेभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः. एवमधोमुखं तावन्नेयं यावत् सनत्कुमारादनन्तरागताः सिद्धाः संख्येयगुणाः, तत ईशानदेवीभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, ततोऽपि सौधर्मदेवीभ्योऽनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि

ईशानदेवेभ्योऽप्यनन्तरागताः सिद्धाः संख्येयगुणाः, तेभ्योऽपि सौधर्मदेवेभ्योऽप्यनन्तरागताः सिद्धाः संख्येयगुणाः, उक्तं च—

"नरगेचउत्थापुढवी, तच्चा दोच्चा तरू-पुढवि आऊ ।
भवणवइ देवि देवा, एवं वणजोइसाणं पि ॥ १ ॥
मणुई मणुस्स नारय-पढमा तह तिरिक्खिणी य तिरिया य ।
देवा अणुत्तराई, सव्वे वि सणकुमारंता ॥ २ ॥
ईसाणदेवि सोह—म्मदेवि ईसाणदेव सोहम्मा ।
सव्वे वि जहाकमसो, अणंतरायाउ सखगुणा ॥ ३ ॥"

गतं गतिद्वारम् ॥ सम्प्रति वेदद्वारम्—अत्र सर्वस्तोका नपुंसकसिद्धाः, तेभ्यः स्त्रीसिद्धाः संख्येयगुणाः, तेभ्योऽपि पुरुषसिद्धाः संख्येयगुणाः, उक्तं च—"थोवा नपुंसइत्थी, सखा संखगुणा य तत्रो पुरिसा ।" तीर्थद्वारे—सर्वस्तोकाः तीर्थकरीसिद्धाः, ततः तीर्थकरीतीर्थे प्रत्येकबुद्धसिद्धाः संख्येयगुणाः, तेभ्योऽपि तीर्थकरीतीर्थे अतीर्थकरीसिद्धाः संख्येयगुणाः, तेभ्योऽपि तीर्थकरीतीर्थे एवातीर्थकरसिद्धाः संख्येयगुणाः, तेभ्यः तीर्थकरसिद्धाः अनन्तगुणाः, तेभ्योऽपि तीर्थकरतीर्थे प्रत्येकबुद्धसिद्धाः संख्येयगुणाः, तेभ्योऽपि तीर्थकरतीर्थे एव साध्वीसिद्धाः संख्येयगुणाः, तेभ्योऽपि तीर्थकरतीर्थे एवातीर्थकरसिद्धाः संख्येयगुणाः, लिङ्गद्वारे—गृहिलिङ्गसिद्धाः सर्वस्तोकाः तेभ्योऽप्यन्यलिङ्गसिद्धाः असंख्येयगुणाः, तेभ्योऽपि स्वलिङ्गसिद्धाः असंख्येयगुणाः । उक्तं च—"गिहिअन्नसलिंगेहिं सिद्धा थोवा दुवे असंखगुणा" चारित्रद्वारे—सर्वस्तोकाः छेदोपस्थापनपरिहारविशुद्धिकसूक्ष्मसम्परायययाख्यातचारित्रसिद्धाः, तेभ्यः सामायिकच्छेदोपस्थापनपरिहारविशुद्धिकसूक्ष्मसम्पराययथाख्यातचारित्रसिद्धाः संख्येयगुणाः, तेभ्योऽपि छेदोपस्थापनसूक्ष्मसम्पराययथाख्यातचारित्रसिद्धाः असंख्येयगुणाः, सामायिकरहितं च छेदोपस्थापनं भग्नचारित्रस्यावगन्तव्यं, तेभ्योऽपि सामायिकच्छेदोपस्थापनसूक्ष्मसम्पराययथाख्यातचारित्रसिद्धाः संख्येयगुणाः, तेभ्योऽपि सामायिकसूक्ष्मसम्पराययथाख्यातचारित्रसिद्धाः संख्येयगुणाः, उक्तं च—"थोवा परिहारचऊ, पंचग संखा असंखछयतिग । छयचउक्कं संखे, सामाइयतिग च संखगुणा ॥ १ ॥" बुद्धद्वारे-सर्वस्तोकाः स्वयम्बुद्धसिद्धाः, तेभ्यः प्रत्येकबुद्धसिद्धाः संख्येयगुणाः, तेभ्योऽपि बुद्धीबोधितसिद्धाः संख्येयगुणाः, तेभ्योऽपि बुद्धबोधितसिद्धाः संख्येयगुणाः, ज्ञानद्वारे—मतिश्रुतमनःपर्यायज्ञानिनः सिद्धाः सर्वस्तोकाः, तेभ्यो मतिश्रुतज्ञानिसिद्धाः संख्येयगुणाः, तेभ्योऽपि मतिश्रुतावधिमनःपर्यवज्ञानिसिद्धाः असंख्येयगुणाः, तेभ्योऽपि मतिश्रुतावधिज्ञानिसिद्धाः संख्येयगुणाः, उक्तं च—"मणपज्जवनाणतिगे, दुगे चउक्के मणस्स नाणस्स । थोवा संख असंखा, ओहितिगे हुंति संखेज्जा ॥ १ ॥" अवगाहनाद्वारे—सर्वस्तोका द्विहस्तप्रमाणजघन्यावगाहनासिद्धाः, तेभ्यो धनुःपृथक्त्वाभ्यधिकपञ्चधनुःशतप्रमाणोत्कृष्टावगाहनासिद्धाः असंख्येयगुणाः, ततो मध्यमावगाहनासिद्धाः असंख्येयगुणाः, उक्तं च—"ओगाहणाजहन्ना, थोवा उक्कोसिया असंखगुणा । तत्तो वि असंखगुणा, नायव्वा मज्झिमाए वि ॥ १ ॥" अत्रैव सिद्धप्राभृतटीकाकारोपदर्शितो विशेष उपदर्श्यते-सर्वस्तोकाः सप्तहस्तप्रमाणावगाहनासिद्धाः, तेभ्यः पञ्चधनुःशतप्रमाणावगाहनासिद्धाः संख्येयगुणाः, ततो न्यूनपञ्चधनुःशतप्रमाणावगाहनासिद्धाः संख्येयगुणाः, तेभ्योऽपि सातिरेकसप्तहस्तप्रमाणावगाहनासिद्धा विशेषाधिकाः, उत्कृष्टद्वारे—सर्वस्तोका अप्रतिपतितसिद्धाः, तेभ्यः संख्येयकालप्रतिपतितसिद्धा असंख्येयगुणाः, तेभ्योऽप्यसंख्येयकालप्रतिपतितसिद्धाः संख्येयगुणाः, तेभ्योऽप्यनन्तकालप्रतिपतितसिद्धा असंख्येयगुणाः, उक्तं च—"अप्पडिवाइयसिद्धा, संखासंखा अणंतकाला य । थोव असंखेज्जगुणा, संखेज्जगुणा असंखेज्ज ( ख ) गुणा ॥ १ ॥" अन्तरद्वारे—सर्वस्तोकाः षण्मासान्तरसिद्धाः, तत एकसमयान्तरसिद्धाः संख्येयगुणाः, ततो द्विसमयान्तरसिद्धाः संख्येयगुणाः, ततोऽपि त्रिसमयान्तरसिद्धाः संख्येयगुणाः, एवं तावद्वाच्यं यावद्यवमध्यम्, ततः संख्येयगुणहीनास्तावद्वक्तव्या यावदेकसमयहीनषण्मासान्तरसिद्धेभ्यः षण्मासान्तरसिद्धाः संख्येयगुणहीनाः, अनुसमयद्वारे—सर्वस्तोका अष्टसमयसिद्धाः, ततः सप्तसमयसिद्धाः संख्येयगुणाः, तेभ्यः षट्समयसिद्धाः संख्येयगुणाः, एवं समयसमयहान्या तावद्वाच्यं यावद् द्विसमयसिद्धाः संख्येयगुणाः, उक्तं च—"अट्ठसमयम्मि थोवा, संखेज्जगुणा उ सत्त समया उ । एवं परिहायंते, जाव पुणो दोन्नि समया उ ॥ १ ॥" अत्र 'अट्ठसमयंमि' इत्यादौ द्विगुसमाहारत्वादेकवचनं, गणनाद्वारे—सर्वस्तोका अष्टशतसिद्धाः, ततः सप्ताधिकशतसिद्धा अनन्तगुणाः, तेभ्योऽपि षडधिकशतसिद्धाः अनन्तगुणाः, तेभ्यः पञ्चाधिकशतसिद्धा अनन्तगुणाः एवमेकैकहान्या अनन्तगुणाः तावद्वाच्या यावदेकपञ्चाशत्सिद्धेभ्यः पञ्चाशत्सिद्धा अनन्तगुणाः, ततः तेभ्य एकोनपञ्चाशत्सिद्धा असंख्येयगुणाः तेभ्योऽप्यष्टचत्वारिंशत्सिद्धा असंख्येयगुणाः एवमेकैकपरिहान्या तावद्वक्तव्यं यावत्षड्विंशतिसिद्धेभ्यः पञ्चविंशतिसिद्धा असंख्येयगुणाः, ततः तेभ्यश्चतुर्विंशतिसिद्धाः संख्येयगुणाः, तेभ्योऽपि त्रयोविंशतिसिद्धाः संख्येयगुणाः एवमेकैकहान्या संख्येयगुणाः तावद्वाच्या यावद् द्विसिद्धेभ्य एकैकसिद्धाः संख्येयगुणाः । उक्तं च—"अट्ठसयसिद्ध थोवा, सत्तहियसया अणंतगुणिया य । एवं परिहायंते, सयगाओ जाव पन्नासं ॥ १ ॥ तत्तो पणपण्णासाओ, असंखगुणिया उ जाव पणवीसं । पणवीसा आरंभा, संखगुणा होंति एगं जा ॥ २ ॥" सम्प्रति अल्पबहुत्वद्वारे यो विशेषः सिद्धप्राभृते दर्शितः स विनेयजनानुग्रहाय दर्श्यते—तत्र सर्वस्तोका अधोमुखसिद्धाः, ते च पूर्ववैरिभिः पादेनोत्पाट्य नीयमाना अधोमुखकायोत्सर्गव्यवस्थिता वा वेदितव्याः, तेभ्य ऊर्ध्वस्थितकायोत्सर्गस्थिताः संख्येयगुणाः, तेभ्योऽपि उत्कुटुकासनसिद्धाः संख्येयगुणाः, तेभ्योऽपि वीरासनसिद्धाः संख्येयगुणाः, तेभ्योऽपि न्युब्जासनसिद्धाः संख्येयगुणाः, न्युब्जोपविष्टा एवाधोमुखा द्रष्टव्याः, तेभ्योऽपि पार्श्वस्थितसिद्धाः संख्येयगुणाः, तेभ्योऽप्युत्तानस्थितसिद्धाः संख्येयगुणाः, तथा चैतदेव पश्चानुपूर्व्याऽभिहितम्—"उत्ताणग पासिल्लग, निउज्ज वीरासणे य उक्कुडुए । उद्धट्ठिय ओमथिय, संखेज्जगुणेण हीणा उ ॥ १ ॥" तदेवमुक्तमल्पबहुत्वद्वारम् ॥ सम्प्रति सर्वद्वारगतालपबहुत्वविशेषप्रदर्शनाय सन्नि-

कर्षद्वारमुच्यते—सन्निकर्षो नाम संयोग , ह्रस्वदीर्घयोरविवक्षितं किञ्चित्प्रतीत्य विवक्षितस्याल्पतया बहुत्वेन वाऽवस्थानरूप सम्बन्ध , उक्तं च—"संजोग सन्निगासो पहुच सम्बन्ध एगट्ठा" तत्रेयं व्याप्तिः—यत्र यत्राष्टशतमुपलभ्यते तत्र तत्रोपरितनमष्टकरूपमङ्कमपनीय शेषस्य शतस्य चतुर्भिर्भागो ह्रियते , हृते च भागे लब्धा पञ्चविंशतिः , तत्र पञ्चविंशतिसंख्येयप्रथमचतुर्थभागे क्रमेण संख्येयगुणहानिर्वक्तव्या । तद्यथा—सर्वेबहव एकैकसमयसिद्धाः , ततो द्विकद्विकसिद्धा संख्येयगुणहीना , तेभ्योऽपि त्रिकत्रिकसिद्धाः संख्येयगुणहीनाः , एवं तावद्वाच्यं यावत्पञ्चविंशतिसिद्धा संख्येयगुणहीना ,उक्तं च—"पढमो चउत्थभागो,पणवीसा तत्थ संखेज्जगुणहाणी । दट्ठव्व" त्ति द्वितीये पुनश्चतुर्थभागे क्रमेणासंख्येयगुणहानिर्वक्तव्या, तद्यथा-पञ्चविंशतिसिद्धेभ्यः षड्विंशतिसिद्धा संख्येयगुणहीना', एवमेकैकवृद्ध्या असंख्येयगुणहानि तावद्वक्तव्या यावत्पञ्चाशत् , तदुक्तम्—"बिइए चउत्थभागे , असंखगुणहानि जाव पन्नासं " त्ति , तृतीयस्माच्चतुर्थभागादारभ्य सर्वत्रापि अनन्तगुणहानिर्वक्तव्या , तद्यथा-पञ्चाशत्सिद्धेभ्य एकपञ्चाशत्सिद्धाः अनन्तगुहीना तेभ्योऽपि द्विपञ्चाशत्सिद्धा अनन्तगुणहीनाः एवमेकैकवृद्ध्या अनन्तगुणहानिस्तावद्वक्तव्या यावदष्टाधिकशतसिद्धा अनन्तगुणहीनाः, उक्त च—" तइयय आइकाऊण चउत्थयं जाव अट्ठसय ताव अणंतगुणहाणी एगवन्नाओ आरंभ दट्ठव्वा । " सिद्धप्राभृतसूत्रेऽप्युक्तम्—" पढमे भागे संखा बिइए असंख अणंत तइयाए ।" तथा यत्र यत्र विंशतिसिद्धाः तत्र तत्रापि व्याप्तिरियमनुसर्त्तव्या, प्रथमे चतुर्थभागे संख्येयगुणहानि , द्वितीये असंख्येयगुणहानि तृतीये चतुर्थे चानन्तगुणहानिः, तद्यथा—एकैकसिद्धाः सर्वेबहव तेभ्योऽपि द्विकद्विकसिद्धा' संख्येयगुणहीनाः एवं तावद्वाच्यं यावत्पञ्च, तत षडादिसिद्धा असंख्येयगुणहीना यावद्दश , तत एकादशाद्य सर्वेऽप्यनन्तगुणहीना. , एवमधोलोकादिष्वपि विंशतिपृथक्त्वसिद्धा प्रथमे चतुर्थभागे संख्येयगुणहानि , द्वितीयचतुर्थभागेऽसंख्येयगुणहानि., तृतीयस्माच्चतुर्थभागादारभ्य पुन. सर्वत्राप्यनन्तगुणहानि. , येषु तु हरिवर्षादिषु स्थानेषूत्कर्षतो दश दश सिध्यन्ति तत्रैवं व्याप्ति -त्रिकं यावत्संख्येयगुणहानि , ततश्चतुष्के पञ्चके चासंख्येयगुणहानि , तत षट्कादारभ्य सर्वत्रापि अनन्तगुणहानि , तद्यथा-"एककसिद्धाः सर्वेबहव , ततो द्विकद्विकसिद्धाः संख्येयगुणहीना , तेभ्योऽपि त्रिकत्रिकसिद्धाः संख्येयगुणहीना , तेभ्योऽपि चतुश्चतु सिद्धा असंख्येयगुणहीना , तेभ्योऽपि पञ्चपञ्चसिद्धाः असंख्येयगुणहीना , तत षडाद्य. सर्वेऽप्यनन्तगुणहीना. यत्र पुनरवगाहना यवमध्यादावुत्कर्षतोऽष्टौ सिध्यन्त. प्राप्यन्ते तत्रैवं व्याप्ति —चतुष्कं यावत्संख्येयगुणहानि , तत परमनन्तगुणहानि , तद्यथा--एककसिद्धा सर्वेबहव . तेभ्योऽपि द्विकद्विकसिद्धा संख्येयगुणहीना , तेभ्योऽपि त्रिकत्रिकसिद्धा संख्येयगुणहीना., तेभ्योऽपि चतुश्चतु सिद्धा संख्येयगुणहीना , परं पञ्चपञ्चादयोऽनन्तगुणहीना , अत्रासंख्येयगुणहानिर्न विद्यते,यत्र पुनरूर्ध्वलोकादावुत्कर्षतश्चत्वार सिध्यन्त. प्राप्यन्ते तत्र एवं व्याप्ति —एककसिद्धाः सर्वेबहव., तेभ्यो द्विकद्विकसिद्धा असंख्येयगुणहीना ,तेभ्योऽपि त्रिकत्रिकसिद्धा अनन्तगुणहीना., तेभ्योऽपि चतुश्चतुस्सिद्धा अनन्तगुणहीना., अत्र संख्येयगुणहानिर्न विद्यते, तदुक्तम्—"जत्थ चत्तारि सिद्धा दिट्ठा तत्थ संखेज्जगुणहाणी नत्थि संखेज्जविवज्जिय चउक्क " इति वचनादिति । यत्र पुनर्लवणादौ द्वौ द्वावुत्कर्षतः सिध्यन्तौ दृष्टौ तत्रैवं व्याप्ति —एककसिद्धा सर्वेबहवः, ततो द्विकद्विकसिद्धा अनन्तगुणहीना., तदुक्तम्—" लवणाई दो सिद्धा दिट्ठा तत्थ एक्कगसिद्धा बहुगा, दुगसिद्धा अणंतगुणहीणा । " तदेवमिह सन्निकर्षो द्रव्यप्रमाणे सप्रपञ्चं चिन्तितः, शेषेषु द्वारेषु सिद्धप्राभृतटीकातो भावनीय , इह तु ग्रन्थगौरवभयान्नोच्यते- "सिद्धप्राभृतसूत्रं,तद्वृत्तिं चोपजीव्य मलयगिरिः । सिद्धस्वरूपमेत-न्निरवोचच्छिष्यबुद्धिहित ॥ १ ॥ " ( नं० १ )

तीर्थसिद्धादीनां व्याख्यानम्—

तीर्यते संसारसागरोऽनेनेति तीर्थं यथावस्थितसकलजीवाजीवादिपदार्थसार्थप्ररूपकं परमगुरुप्रणीतं प्रवचनं,तच्च निराधारं न भवतीति कृत्वा सङ्घ प्रथमगणधरो वा वेदितव्यम् , उक्तं च—" तित्थं भंते ! तित्थं तित्थकरे तित्थं ?, गोअमा ! अरहा ताव नियमा तित्थंकरे, तित्थं पुण चाउव्वण्णो समणसंघो पढमगणहरो वा " तस्मिन्नुत्पन्ने ये सिद्धाः ते तीर्थसिद्धाः, तथा तीर्थस्याभावोऽतीर्थं तीर्थस्याभावश्चानुत्पादोऽपान्तराले व्यवच्छेदो वा तस्मिन् ये सिद्धाः तेऽतीर्थसिद्धा , तत्र तीर्थस्यानुत्पादे सिद्धा मरुदेवीप्रभृतय. , न हि मरुदेव्यादिसिद्धिगमनकाले तीर्थमुत्पन्नमासीत् , तथा तीर्थस्य व्यवच्छेदश्चन्द्रप्रभस्वामिसुविधिस्वाम्यपान्तराले तत्र ये जातिस्मरणादिनाऽपवर्गमवाप्य सिद्धा ते तीर्थव्यवच्छेदसिद्धा., तथा तीर्थकरा सन्तो ये सिद्धा ते तीर्थकरासिद्धा , अन्ये सामान्यकेवलिन , तथा स्वयम्बुद्धा सन्तो ये सिद्धाः ते स्वयम्बुद्धसिद्धा , प्रत्येकबुद्धाः सन्तो ये सिद्धाः ते प्रत्येकबुद्धसिद्धा , अथ स्वयम्बुद्धप्रत्येकबुद्धानां क प्रतिविशेष ?, उच्यते-बोध्युपधिश्रुतलिङ्गकृतो विशेषः, तथाहि-स्वयम्बुद्धा बाह्यप्रत्ययमन्तरेणैव बुध्यन्ते , स्वयमेव बाह्यप्रत्ययमन्तरेणैव निजजातिस्मरणादिना बुद्धाः स्वयम्बुद्धा इति व्युत्पत्ते , ते च द्विधा—तीर्थकराः तीर्थकरव्यतिरिक्ताश्च, इह तीर्थकरव्यतिरिक्तैरधिकारा , आह च चूर्णिकृत्—" ते दुविहा तित्थयरा, तित्थयरवइरित्ता वा, इह वइरित्तेहिं अहिगारो" इति । प्रत्येकबुद्धास्तु बाह्यप्रत्ययमपेक्ष्य बुध्यन्ते. प्रत्येकं-बाह्यं वृषभादिकं कारणमभिसमीक्ष्य बुद्धा' प्रत्येकबुद्धा इति व्युत्पत्ते , तथा च श्रूयते-बाह्यवृषभादिप्रत्ययसापेक्षा करकण्ड्वादीनां बोधि', बोधिप्रत्ययमपेक्ष्य च बुद्धाः सन्तो नियमत प्रत्येकमेव विहरन्ति, न गच्छवासिन इव संहता', आह च चूर्णिकृत्—" पत्तेय-बाह्यं वृषभादिकरणमभिसमीक्ष्य बुद्धा प्रत्येकबुद्धा बहिः प्रत्ययप्रतिबुद्धानां च "पत्तेयं नियमा विहारो जम्हा तम्हा य ते पत्तेयबुद्धा " इति, तथा स्वयम्बुद्धानामुपधिर्द्वादशविध एव पात्रादिक., प्रत्येकबुद्धानां तु द्विधा-जघन्यत , उत्कर्षतश्च, तत्र जघन्य-

तो द्विविध' उत्कर्षतो नवविध प्रावरणवर्जं , आह च चूर्णिकृत्—" पत्तेयबुद्धाण जहन्नेण दुविहो उक्कोसेणं नवविहो नियमा पाउरणवज्जो भवइ । " तथा स्वयम्बुद्धानां पूर्वाधीतं श्रुतं भवति वा न वा यदि भवति ततो लिङ्गं देवता वा प्रयच्छति गुरुसन्निधौ वा गत्वा प्रतिपद्यते, यदि चैकाकी विहरणसमर्थ इच्छा च तस्य तथारूपा जायते तत एकाकी विहरत्यन्यथा गच्छवासेऽवतिष्ठते । अथ पूर्वाधीतं श्रुतं न भवति तर्हि नियमाद् गुरुसन्निधौ गत्वा लिङ्गं प्रतिपद्यते, गच्छं चावश्य न मुञ्चति , उक्तं च चूर्णिकृता— " पुव्वाधीत से सुयं हवइ वा न वा, जइ से नत्थि तो लिङ्गं नियमा गुरुसन्निहे पडिवज्जइ , गच्छे य विहरइ त्ति , अहवा—पुव्वाधीतसुयसंभवो अत्थि तो से लिङ्गं देवया पयच्छइ गुरुसन्निधे वा पडिवज्जइ, जइ य एगागिविहरणजोग्गो इच्छा वा से तो एक्को च्चेव विहरइ , अन्नहा गच्छे विहरइ ' त्ति । प्रत्येकबुद्धानां तु पूर्वाधीतं श्रुत नियमतो भवति , तच्च जघन्यत एकादशाङ्गानि उत्कर्षत किञ्चिन्न्यूनानि दश पूर्वाणि , तथा लिङ्गं तस्मै देवता प्रयच्छति, लिङ्गरहितो वा कदाचिद्भवति , तथा चाह चूर्णिकृत्—" पत्तेयबुद्धाणं पुव्वाधीतं सुयं नियमा भवइ, जहन्नेणं एक्कारस अंगा , उक्कोसेण भिन्नदसपुव्वी , लिङ्गं च से देवया पयच्छइ लिंगवज्जिओ वा भवति , जतो भणियं-- "रूप्प पत्तेयबुद्धा" इति तथा बुद्धा—आचार्यास्तैर्बोधिता सन्तो ये सिद्धा ते बुद्धबोधितसिद्धा,एते च सर्वेऽपि केचित् स्त्रीलिङ्गसिद्धा , स्त्रिया लिङ्गं स्त्रीलिङ्गं, स्त्रीत्वस्योपलक्षणमित्यर्थ., तच्च त्रिधा, तद्यथा—वेद. शरीरनिर्वृत्ति नैपथ्य च, तत्रेह शरीरनिर्वृत्त्या प्रयोजनं , न वेदनेपथ्याभ्या,वेदे सति सिद्धत्वाभावात् , नेपथ्यस्य चाप्रमाणत्वात् , आह च चूर्णिकृत्—"इत्थिए लिंग इत्थिलिंगं, इत्थिए उवलक्खणं ति वुत्त भवति, त च तिविहं—वेयो सरीरनिव्वत्ती नेवत्थं च, इह सरीरनिव्वत्तीए अहिगारो, न वेयनेवत्थेहिं" ति । तस्मिन् स्त्रीलिङ्गे वर्त्तमानास्सन्तो ये सिद्धा ते स्त्रीलिङ्गसिद्धा., एतेन यदाहुराशाम्बरा –न स्त्रीणा निर्वाणमिति, तदपास्तं द्रष्टव्यम् , स्त्रीनिर्वाणस्य साक्षादनेन सूत्रेणाभिधानात् , तत्प्रतिषेधस्य च युक्त्यनुपपन्नत्वात् , तथाहि—मुक्तिपथो ज्ञानदर्शनचारित्राणि, "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग " ( तत्त्वा० अ० १ सू० १ ) इति वचनात् , सम्यग्दर्शनादीनि च पुरुषाणामिव स्त्रीणामपि अविकलानि, तथाहि-दृश्यन्ते स्त्रियोऽपि सकलमपि प्रवचनार्थमभिरोचयमाना', जानते च षडावश्यककालिकोत्कालिकाद्विभेदभिन्न श्रुतं, परिपालयन्ति च सप्तदशविधमकलङ्कं संयमं धारयन्ति च देवसुराणामपि दुर्धर ब्रह्मचर्यं, तप्यन्ते च तपांसि मासक्षपणादीनि, तत कथमिव तासां न मोक्षसम्भव ?, स्यादतद्-अस्ति स्त्रीणा सम्यग्दर्शनं ज्ञानं च न पुनश्चारित्रं, संयमाभावात् , तथाहि—स्त्रीणामवश्यं वस्त्रपरिभोगेन भवितव्यम् , अन्यथा विवृताङ्गतया तिर्यक्स्त्रिय इव पुरुषाणामभिभवनीया भवेयु , लोके च गर्होपजायते, ततोऽवश्य ताभिर्वस्त्रं परिभोक्तव्य, वस्त्रपरिभोगे च सपरिग्रहता, सपरिग्रहत्वे च संयमाभाव इति, तदसमीचीन,सम्यक्सिद्धान्ताऽपरिज्ञानात्, परिग्रहो हि परमार्थतो मूर्च्छाऽभिधीयते, 'मुच्छा परिग्गहो वुत्तो ' इति वचनप्रामाण्यात् , तथाहि—मूर्च्छारहितो भरतचक्रवर्त्ती सान्त पुरोऽप्यादर्शकगृहेऽवतिष्ठमानो निष्परिग्रहो गीयते, अन्यथा केवलोत्पादासम्भवात् , अपि च—यदि मूर्च्छाया अभावेऽपि वस्त्रसंसर्गमात्रं परिग्रहो भवेत् ततो जिनकल्पं प्रतिपन्नस्य कस्यचित् साधोस्तुषारकणानुषक्ते प्रपतति शीते केनाप्य-विपद्यापनिपातमध्यशीतमीति विभाव्य धर्म्मार्थिना शिरसि वस्त्रे परिक्षिप्ते तस्य सपरिग्रहता भवेत् , न चैतदिष्टम् , तस्मान्न संसर्गमात्र परिग्रह ,किन्तु-मूर्च्छा, सा च स्त्रीणां वस्त्रादिषु न विद्यते, धर्मोपकरणमात्रतया तस्योपादानात् , न खलु ता वस्त्रमन्तरेणात्मानं रक्षितुमीशते, नापि शीतकालादिष्वर्वाग्दशायां स्वाध्यायादिक कर्त्तु , ततो दीर्घतरसंयमपरिपालनाय यतनया वस्त्रं परिभुञ्जाना न ता. परिग्रहवत्य. । अथोच्येत-सम्भवति नाम स्त्रीणामपि सम्यग्दर्शनादिकं रत्नत्रयम् , परं न तत् सम्भवमात्रेण मुक्तिपदप्रापकं भवति, किन्तु प्रकर्षप्राप्तम् , अन्यथा दीक्षानन्तरमेव सर्वेषामप्यविशेषेण मुक्तिपदप्राप्तिप्रसक्तेः, सम्यग्दर्शनादिरत्नत्रयप्रकर्षश्च स्त्रीणामसम्भवी, ततो न निर्वाणमिति । तदप्ययुक्तम् , स्त्रीषु रत्नत्रयप्रकर्षासम्भवग्राहकस्य प्रमाणस्याभावात् , न खलु सकलदेशकालव्याप्त्या स्त्रीषु रत्नत्रयप्रकर्षासम्भवग्राहकं प्रत्यक्षमनुमानं वा प्रमाण विजृम्भते, देशकालविप्रकृष्टतया तत्र प्रत्यक्षस्याप्रवृत्ते , तदप्रवृत्तौ चानुमानस्याप्यसम्भवात् , नापि तासु रत्नत्रयप्रकर्षासम्भवप्रतिपादक. कोऽप्यागमो विद्यते, प्रत्युत सम्भवप्रतिपादकः स्थाने स्थानेऽस्ति, यथा इदमेव प्रस्तुतं सूत्र ततो न तासा रत्नत्रयप्रकर्षासम्भव. अथ मन्येथा.—स्वभावत एवातपेनेव छाया विरुध्यते स्त्रीत्वेन रत्नत्रयप्रकर्ष. ततस्तदसम्भवोऽनुमीयते,तदयुक्तम् , युक्तिविरोधात् , तथाहि-रत्नत्रयप्रकर्ष. स उच्यते यतोऽनन्तर मुक्तिपदप्राप्ति , स चायोग्यवस्थाचरमसमय , अयोग्यावस्था चास्मादृशामप्रत्यक्षा, तत कथ विरोधगतिः ?, न हि अदृष्टेन सह विरोध. प्रतिपत्तुं शक्यते, मा प्रापत् पुरुषेष्वतिप्रसङ्ग । ननु जगति सर्वोत्कृष्टपदप्राप्ति सर्वोत्कृष्टेनाध्यवसायेनावाप्यते, नान्यथा, एतच्चोभयोरप्यावयोरागमप्रामाण्यबलत सिद्धं, सर्वोत्कृष्टे च द्वे पदे-सर्वोत्कृष्टं दु खस्थानं सर्वोत्कृष्टं सुखस्थान च। तत्र सर्वोत्कृष्टदु खस्थानं सप्तमनरकपृथिवी, अत. परं परमदु खस्थानस्याभावात् , सर्वोत्कृष्टसुखस्थानं तु नि श्रेयसं, तत. परमन्यस्य सुखस्थानस्यासम्भवात , तत स्त्रीणा सप्तमनरकपृथिवीगमनमागमे निषिद्ध, निषेधस्य च कारणं तद्गमनयोग्यतथाविधसर्वोत्कृष्टमनोवीर्यपरिणत्यभाव , तत. सप्तमपृथिवीगमननिषेधादवसीयते-नास्ति स्त्रीणा निर्वाणम् , निर्वाणहेतो. तथारूपसर्वोत्कृष्टमनोवीर्यपरिणामस्यासम्भवात् , तथा चात्र प्रयोग —असम्भवनिर्वाणा. स्त्रिय , सप्तमपृथिवीगमनाभावात् , सम्मूर्च्छिमादिवत् , तदेतदयुक्तम् , यतो यदि नाम स्त्रीणां सप्तमनरकपृथिवीगमनं प्रति सर्वोत्कृष्टमनोवीर्यपरिणत्यभाव , तत एतावता कथमवसीयते ?, नि श्रेयसमपि प्रति तासा सर्वोत्कृष्टमनोवीर्यपरिणत्यभावो, न हि यो भूमिकर्षणादिकं कर्म कर्त्तु न शक्नोति स शास्त्राण्य-

प्यवगाढुं न शक्नोतीति प्रत्येतुं शक्यं, प्रत्यक्षविरोधात् । अथ सम्मूर्च्छिमादिषूभयमपि प्रति सर्वोत्कृष्टमनोवीर्यपरिणत्यभावो दृष्ट ततोऽत्राप्यवसीयते, ननु यदि तत्र दृष्टस्तर्हि कथमत्रावसीयते ?, न खलु बहिर्व्याप्तिमात्रेण हेतुर्गमको भवति, किन्तु-अन्तर्व्याप्त्या, अन्तर्व्याप्तिश्च प्रतिबन्धबलेन सिध्यति न चात्र प्रतिबन्धो विद्यते, न खलु सप्तमपृथिवीगमने निर्वाणगमनस्य कारणं, नाप्येवमेवाविनाभावप्रतिबन्धेन सप्तमपृथिवीगमनाविनाभावि निर्वाणगमनं, चरमशरीरिणां सप्तमपृथिवीगमनमन्तरेणैव निर्वाणगमनभावात्, न च प्रतिबन्धमन्तरेण एकस्याभावेऽन्यस्याभावो, मा प्रापद्यस्य तस्य वा कस्यचिदेकस्याभावे सर्वस्याभावप्रसङ्गः; यद्येवं तर्हि कथं सम्मूर्च्छिमादिषु निर्वाणगमनाभाव इति ?, उच्यते-तथाभवस्वाभाव्यात्, तथाहि-ते सम्मूर्च्छिमादयो भवस्वभावत एव न सम्यग्दर्शनादिकं यथावत्-प्रतिपत्तुं शक्नुवन्ति, ततो न तेषां निर्वाणसम्भवः, स्त्रियस्तु प्रागुक्तप्रकारेण यथावत्सम्यग्दर्शनादिरत्नत्रयसम्पद्योग्या, ततस्तासां न निर्वाणाभाव । अपि च-भुजपरिसर्पा द्वितीयामेव पृथिवीं यावद्गच्छन्ति, न परतः, परपृथिवीगमनहेतुतथारूपमनोवीर्यपरिणत्यभावात्, तृतीया यावत् पक्षिणः, चतुर्थीं चतुष्पदाः, पञ्चमीमुरगाः, अथ च सर्वेऽप्यूर्ध्वमुत्कर्षेण सहस्रारं यावद्गच्छन्ति, तस्माधोगतिविषये मनोवीर्यपरिणतिवैषम्यदर्शनादूर्द्ध्वगतावपि तद्वैषम्य, तथा च सति सिद्धं स्त्रीपुंसामधोगतिवैषम्येऽपि निर्वाणं सममिति कृत प्रसङ्गेन । तथा पुंल्लिङ्गे शरीरनिर्वृत्तिरूपे व्यवस्थिताः सन्तो ये सिद्धास्ते पुंलिङ्गसिद्धाः, एवं नपुंसकलिङ्गसिद्धा, यथा स्वलिङ्गे-रजोहरणादिरूपे व्यवस्थिताः सन्तो ये सिद्धास्ते स्वलिङ्गसिद्धाः, तथा अन्यलिङ्गे-परिव्राजकादिसम्बन्धिनि वल्कलकषायादिवस्त्रादिरूपे द्रव्यलिङ्गे व्यवस्थिताः सन्तो ये सिद्धास्तेऽन्यलिङ्गसिद्धाः गृहिलिङ्गे सिद्धा गृहिलिङ्गसिद्धा मरुदेवीप्रभृतयः, तथा 'एकसिद्धा' इति-एकस्मिन् २ समये एकका सन्तो ये सिद्धास्ते एकसिद्धाः, 'अणेगसिद्धा' इति एकस्मिन् समये अनेके सिद्धा अनेकसिद्धा अनेके चैकस्मिन् समये सिध्यन्त उत्कर्षेणाऽष्टोत्तरशतसंख्या वेदितव्याः । आह-ननु तीर्थसिद्धातीर्थसिद्धरूपभेदद्वये एव शेषभेदा अन्तर्भवन्ति तत्किमर्थं शेषभेदोपादानम् ?, उच्यते-सत्यम्, अन्तर्भवन्ति परं न तीर्थसिद्धातीर्थसिद्धभेदद्वयोपादानमात्रात् शेषभेदपरिज्ञानं भवति, विशेषपरिज्ञानार्थं चैष शास्त्रारम्भप्रयास इति शेषभेदोपादानम् । नं० । प्रज्ञा० । औ० । दश० । उत्त० । विशे० । ध० र० । प्रव० । पं० सू० । न० । ('केवलणाण' शब्दे तृतीयभागे ६४७ पृष्ठे सिद्धकेवलज्ञानप्रस्तावे अनन्तरपरम्परभेदाः सिद्धस्य दर्शिताः ।)

साम्प्रतं यदुक्तं 'शैलेशीं प्रतिपद्यते सिध्यति चे' ति, तत्रासावेकसमयेन लोकान्ते सिध्यतीत्यागमः, इह च कर्ममुक्तस्य तद्देशनियमेन गतिर्नोपपद्यते इति मा भूदव्युत्पन्नविभ्रम इत्यतस्तन्निरासेनार्थसिद्ध्यर्थमिदमाह—

लाउअ एरंडफले, अग्गी धूमे उसू धणुविमुक्के ।
गइपुव्वपओगेणं, एवं सिद्धाण वि गईओ ॥ ६५७ ॥

अलाबु, एरण्डफलम्, अग्निधूमौ, इषुर्धनुर्विमुक्तः, अमीषां यथा तथा गमनकाले स्वभावतस्तन्निबन्धनाभावेऽपि देशादिनियमेनैव गतिः पूर्वप्रयोगेण प्रवर्तते, एवमेव व्यवहिततुशब्दस्यैवकारार्थत्वात् सिद्धानामपि गतिरित्यक्षरार्थः । अधुना भावार्थः प्रयोगैर्निदर्श्यते—तत्र कर्मविमुक्तो जीवः सकृदूर्ध्वमेवाऽलोकाद्गच्छति, असङ्गत्वेन तथाविधपरिणामत्वादुद्धृतमृत्तिकालेपलिप्ताधोनिमग्नक्रमापनीतमृत्तिकालेपजलतलमर्यादोर्ध्वगामितथाविधालाबुवत्, तथा छिन्नबन्धनत्वेन तथाविधपरिणतेस्तथाविधैरण्डफलवत्, तथा स्वाभाविकपरिणामत्वादग्निधूमवत्, तथा पूर्वप्रयुक्तक्रियातथाविधसामर्थ्याद् धनुःप्रयत्नेरितेषुवद्, इषु-शर इति गाथार्थः ॥६५७॥ आव० १ अ० ।

स्फुटं भावार्थं कथानकादवसेयस्तच्चेदम्—

"एगो धिज्जाइतो दुद्दंतो अविणयं करेइ सो ताओ थाणाओ णीणितो हिंडंतो चोरपल्लिमल्लिणो सेणावइणा पुत्तो गहिओ। तम्मि मयम्मि सो चेव सेणावती जाओ निक्किवं पयणइ त्ति दढप्पहारी से नामं कयं । सो अन्नया सेणाए सम एग गामं हंतुं गओ तत्थ य एगो दरिद्दो, तेण पुत्तभडाणं मग्गंताण दुद्धं जाएत्ता पायसो सिद्धो, सो य ण्हाइउ गओ चोरा य तत्थ पडिया, एगेण सो तस्स पायसो दिट्ठो छुहिय त्ति तं गहाय पहाविओ,ताणि खुड्डगरूवाणि रोवंताणि पिउमूलं गयाणि, हिओ पायसो त्ति सो रोसेण मारेमि त्ति पहाविओ महिला अवसित्ता अच्छइ तहवि जाइ, जहिं सो चोरसेणावई गाममज्झे अच्छइ, तेण गन्तूण महासंगामो कओ। सेणावइणा चिन्तियं—एएण मम चोरा परिभविज्जन्ति ततो असिं गहाय निद्दयं छिन्नो । महिला से भणइ-हा निक्किव ! किमेयं कयं ति, पच्छा सा वि मारिया, गब्भो वि दो भागे कतो फुरुफुरेइ, तस्स किवा जाया अधम्मो कतो त्ति, चेडरूवेहिंतो दरिद्द त्ति पउत्ती उवलद्धा ततो दढयरं निव्वेयं गतो को उवाओ त्ति साहू दिट्ठा पुच्छिया य?,अणेण भयवं ! को एत्थ उवाओ त्ति तेहिं धम्मो कहिओ,सा य से उवगतो पच्छा चारित्तं पडिवज्जिय कम्माण समुग्घायणट्ठाए घोरं खनिअभिग्गहं गेण्हिय तत्थव विहरइ । ततो हीलिज्जइ हम्मइ य सो सम्मं अहियासेइ, घोराकारं च कायकिलेसं करेइ असणाइं वा अलभतो सम्मं अहियासेइ जाव अणेण कम्मं निग्घाइयं केवलं से उप्पन्नं, पच्छा सो सिद्धो" त्ति । उक्तस्तपः सिद्धः । साम्प्रतं कर्मक्षयसिद्धप्रतिपादनाय गाथाचरमदलमाह—'सो कम्मे' इत्यादि स कर्मक्षयसिद्धो य किं विशिष्ट इत्यत आह-सर्वक्षीणकर्मांशः सर्वे निरवशेषा क्षीणाः कर्मांशाः-कर्मभेदा यस्य स तथाविध इति गाथार्थः ।

अधुना कर्मक्षयसिद्धमेव प्रपञ्चतो निरुक्तविधिना प्रतिपादयति-

दीहकालरयं जं तु, कम्मं से सियमट्ठहा ।
सियं धंतं ति सिद्धस्स, सिद्धत्तमुवजायई ॥ ६५६ ॥

दीर्घं सन्तानापेक्षया अनादित्वात् स्थितिबन्धकालो यस्य तद्दीर्घकालं निसर्गनिर्मलजीवानुरञ्जनाद्रज कर्मैव भण्यते दीर्घकालं च तद्रजश्च दीर्घकालरजः यच्छब्द सर्वनामत्वादुद्देशवचन यत्कर्म इत्थप्रकारं तुशब्दो भव्यकर्मवि-

ध्यातार्थः स खल्वत्रभव्यकर्म सर्वथा ध्मायते ततोऽयमर्थः, दीर्घकालरजो यत्कर्मेति शेषितं शेषीकृतं स्थित्यादिभिः प्रभूतं सत् स्थित्यनुभागासंख्येयतया अनाभोगसम्यग्दर्शनज्ञानचरणाद्युपायतः शमलं कृतमिति भावः । प्राक्किभूतं सत् शेषितमित्यत आह-अष्टधा ज्ञानावरणादिभेदेनाष्टप्रकारं सत् सितं-सितवर्णे 'सित' धर्मबन्धनयोरिति वचनात्, 'षिञ्' व न्धने इति वचनाद् वा, बद्धं कर्म ध्मात 'ध्मा' शब्दाग्निसंयोगयोरिति वचनाद् ध्यानानलेन दग्धं-महाग्निना लोहमलवत् येन स सिद्धः । आ० म० १ अ० ।

कहिं पडिहया सिद्धा, कहिं सिद्धा पइट्ठिया ।
कहिं बोंदिं चइत्ता णं, कत्थ गंतूण सिज्झई ॥ १ ॥

क्व प्रतिहताः-क्व प्रतिस्फालिताः सिद्धा-मुक्ताः, तथा क्व सिद्धास्तथा प्रतिष्ठिताः-व्यवस्थिताः बोन्दिस्तनु-शरीरमित्यनर्थान्तरं क्व बोन्दिं त्यक्त्वा-परित्यज्य क्व गत्वा सिद्ध्यन्ति निष्ठितार्था भवन्ति । अत्रानुस्वारलोपो द्रष्टव्यः । अथवा-एकवचनमतोऽप्येवमुपन्यासः सूत्रशैल्या अविरुद्ध एव ततोऽन्यत्राऽपि प्रयोगः, 'वत्थगन्धमलङ्कारं, इत्थीओ सयणाणि य । अच्छंदा जे ण भुञ्जन्ति, न से चाइ त्ति वुच्चई ॥ १ ॥" इति ।

इत्थं चोदकेनोक्ते सति प्रतिसमाधानमाह-

अलोए पडिहया सिद्धा, लोयग्गे य पइट्ठिया ।
इहं बोंदिं चइत्ता णं, तत्थ गंतूण सिज्झई ॥

अलोके केवलाकाशास्तिकाये प्रतिहताः प्रतिस्फालिताः सिद्धा इह प्रतिस्खलनं तत्र धर्मास्तिकायाद्यभावात्तदानन्तर्यवृत्तिरेव द्रष्टव्यं न तु सम्बन्धे सति भित्तौ लोष्टस्येव विघातः अमूर्त्तत्वात्, तथा लोकाग्रे पञ्चास्तिकायात्मकलोकमूर्ध्नि च प्रतिष्ठिताः; अपुनरागमवृत्त्या, व्यवस्थिता इत्यर्थः तथा इह अर्द्धतृतीयद्वीपसमुद्रमध्ये बोन्दिं-तनुं मुक्त्वा-परित्यज्य सर्वथा किं तत्र लोकाग्रे गत्वा समयप्रदेशान्तरमस्पृशन्तो गत्वा सिध्यन्ति-निष्ठितार्था भवन्ति सिद्ध्यन्तीति गाथार्थः । आ० म० । ( ईषत्प्राग्भारास्वरूपम्, 'इसिपब्भारा' शब्दे द्वितीयभागे ६५४ पृष्ठे उक्तम् । )

अस्याश्चोपरि योजनचतुर्विंशतिभागे सिद्धास्तथा चाह-

ईसीपब्भाराए, उवरिं खलु जोअणस्स जो कोसो ।
कोसस्स य छब्भाए, सिद्धाणोगाहणा भणिया ॥

ईषत्प्राग्भारायाः पृथिव्या उपरि यत् खलु योजनं तस्य योजनस्य उपरितने क्रोशो-गव्यूतं तस्य क्रोशस्योपरितने ष ड्भागे सिद्धानामवगाहना तीर्थकरगणधरैर्भणिता, 'लोकाग्रे च प्रतिष्ठिताः' इति वचनात् ।

अमुमेवार्थं समर्थयमान आह-

तिन्नि सया तेत्तीसा, धणुत्तिभागो य कोसछब्भागो ।
जं परमोगाहोऽयं, तो ते कोसस्स छब्भाए ॥

यस्मात् परम उत्कृष्टः सिद्धानामवगाहो वर्त्तते त्रीणि धनुषां शतानि त्रयस्त्रिंशदधिकानि धनुषस्त्रिभागश्च क्रोशस्य षड्भागः, ततस्तस्मात् क्रोशस्य षड्भागे सिद्धा इत्युक्तम् ।

अथ कथं पुनस्तत्र तेषामुत्पातोऽवगाहना चेत्यत आह-

उत्ताणओ व पासि-ल्लओ व अहवा निसन्नओ चेव ।
जो जह करेइ कालं, सो तह उववज्जए सिद्धो ॥

उत्तानका वा पृष्ठतो वा अधोवदनतादिस्थानतः पार्श्वस्थिता वा तिर्यक् स्थिता वा, अथवा-निषण्णश्चैवेति प्रकटार्थम्, किं बहुना यो यथा येन प्रकारेणावस्थितः सन् कालं करोति स तथा तेन प्रकारेणोपपद्यते सिद्ध इति ।

किमित्येवमेवमित्यत आह-

इह भवभिन्नागारो, कम्मवसाओ भवंतरे होई ।
न य तं सिद्धस्स जओ, तम्मी तो सो तयागारो ॥

इहभवादधिकृतभावाद् भिन्नाकारः इहभवभिन्नाकारो जीवः कर्मवशेन भवान्तरे स्वर्गादौ भवति तदाकारभेदस्य कर्मभेदनिबन्धनत्वात्; न च तत्कर्म आकारभेदनिबन्धनं यतो यस्मादस्ति ततस्तस्मिन्नपवर्गे ततोऽसौ सिद्धस्तदाकारः पूर्वभवाकारः । आ० म० १ अ० । औ० ।

साम्प्रतमुत्कृष्टादिभेदभिन्नामवगाहनामभिधित्सुराह-

तिन्नि सया तित्तीसा, धणुत्तिभागो य होइ बोद्धव्वा ।
एसा खलु सिद्धाणं, उक्कोसोगाहणा भणिया ॥

त्रीणि धनुषां शतानि त्रयस्त्रिंशदधिकानि धनुस्त्रिभागस्य बोद्धव्या, एषा एतावत्प्रमाणा खलु सिद्धानामुत्कृष्टावगाहना भणिता तीर्थकरगणधरैः । ननु भगवती मरुदेव्यपि सिद्धा सा च नाभिकुलकरपत्नी नाभेश्च शरीरप्रमाणं पञ्चधनुःशतानि पञ्चविंशत्यधिकानि यावच्च शरीरप्रमाणं तावदेव तत्पत्नीनामपि 'संघयणं संठाणं उच्चत्तं चेव कुलगरेहिं समं' मिति वचनात् ततो मरुदेव्या अपि शरीरप्रमाणं पञ्चधनुःशतानि पञ्चविंशत्यधिकानि यावच्च शरीरप्रमाणं तावदेव तत्पत्नीनामपि । तस्य त्रिभागे पातिते सिद्धावस्थायाः सार्द्धानि त्रीणि धनुःशतानि अवगाहना प्राप्नोति, कथमुक्तप्रमाणा सिद्धानामुत्कृष्टाऽवगाहनेति, नैष दोषः नाभिकुलकरमानाद् हि प्रमाणतोऽसौ किञ्चिन्न्यूना तथा सम्प्रदायात्ततः साऽपि पञ्चधनुःशतप्रमाणैवेत्यदोषः । यश्च 'कुलगरेहिं समं' मित्यतिदेशः सोऽपि कियता न्यूनाधिक्येऽपि अतिदेशानामागमे दर्शनादबाधकः । अथवा-भगवती हस्तिस्कन्धाधिरूढा सती सिद्धा हस्तिस्कन्धाधिरूढा च सङ्कुचिताङ्गीति यथोक्तावगाहनाया अविरोधः । उक्तं च-"किह मरुदेवा(वी)माणं, नाभीओ जेण किंचिदूणा सा । तो किर पंचसयं चिय, अहवा संकोयओ सिद्धा ॥१॥"

अधुना मध्यमावगाहनामानमाह-

चत्तारि य रयणीओ, रयणितिभागूणिया य बोद्धव्वा ।
एसा खलु सिद्धाणं, मज्झिमओगाहणा भणिया ॥

मध्यमा ननु जघन्याजघन्यत्वनिषेधपरं सूत्रमिदम् । नन्वेतावदेव मध्यमावगाहनामानं हस्तद्वयादूर्ध्वं पञ्चधनुःशतेभ्योऽर्वाक् सर्वत्रापि मध्यमावगाहनाभावात् ।

सम्प्रति जघन्यावगाहनाप्रतिपादनार्थमाह-

एगा य होइ रयणी, अट्ठेव य अंगुलाइँ साहीया ।
एसा खलु सिद्धाणं, जहन्न ओगाहणा भणिया ॥

एको रत्निः अष्टावेव चाङ्गुलानि साधिका अष्टभिरङ्गु-

लाधिक इत्यर्थः । एषा एतावत्प्रमाणा खलु सिद्धाना जघन्यतोऽवगाहना भणिता । एषा चद्र्धहस्तिप्रमाणानां कूर्मापुत्रादीनामवसातव्या । अन्ये त्वेवं ब्रुवते सप्तहस्तानामेव यन्त्रपालनादिना संवर्तितगात्राणि सतां सिद्धानामवगन्तव्या, तन्त्वागमे सिद्धिर्जघन्यपदे सप्तहस्तोच्छ्रितानामभिहिता तत्. कथमुच्यते द्विहस्तप्रमाणाना कूर्मापुत्रादीनामिति ? उच्यते-सा जघन्यपदे सिद्धिस्तीर्थकरानधिकृत्योक्ता शेषाणां तु केवलिनां सिद्धिर्द्विहस्तप्रमाणानामप्यविरुद्धेत्यदोष । उक्तं च-"सत्तूसिएसु सिद्धी, जहन्नओ किहमिहं विहत्थेसु । सा किर तित्थयरेसुं सेसाणमियं तु सिद्धाणं ॥१॥ ते पुण होज विहत्था, कुम्मापुत्ताइयो जहन्नेणं । अन्ने संवट्टियसत्तहत्थसिद्धस्स हीण ॥ २ ॥ त्ति" ॥ अथवा-यदिदं सूत्रे जघन्यं मानमुक्तं सप्तहस्तम् , उत्कृष्टं पञ्च धनुःशतानि तत् बाहल्यमधिकृत्याक्तमन्यथाऽङ्गुलपृथक्त्वैर्जघन्यपदे धनुःपृथक्त्वे उत्कृष्टपदे यथाक्रमं हीनमभ्यधिकं यावद्भवति तेन कूर्मापुत्रमरुदेव्यादिभिर्न कश्चिद्विरोधः । न खल्वाश्चर्यादिकं किञ्चित् सामान्यश्रुते सर्वमुक्तमस्ति । अथवा-निबद्धमपि तदस्तीति श्रद्धायानपञ्चशतादेशवचनवत् तथेदमपि सिद्धं गच्छता द्विहस्तमान सपादपञ्चधनुःशतमान श्रद्धीयतामिति । उक्तं च—' बाहल्लओ य सुत्तम्मि सुत्तपंचय जहन्नमुक्कोसं । इह राजीणब्भहियं, होज्जंगुलधणुपुहत्तेहिं ॥१॥ अत्थियराई किंची, सामन्नसुए न दसियं सव्वं । होज्ज व अनिबद्धं चि य, पञ्च सया देसवयणं च ॥ २ ॥" आ० म० १ अ० ।

भंते त्ति भगवं गोयमे समणं भगवं महावीरं वंदइ नमंसइ वंदित्ता नमंसित्ता एवं वयासी—जीवा णं भंते ! सिज्झमाणा कयरम्मि संघयणे सिज्झंति ?, गोयमा ! वयरोसभणारायसंघयणे सिज्झंति, एवं जहेव उववाइए तहेव संघयणं संठाणं उच्चत्तं आउयं च परिवसणा , एवं सिद्धिगंडिया निरवसेसा भणियव्वा०जाव अव्वाबाहं सोक्खं, अणुहवं ( हुंती ) ति सासया सिद्धा । सेवं भंते ! भंते ! त्ति । ( सू० ४१९ )

भंते त्ति—इत्यादि अथ लाघवार्थमतिदेशमाह-' एवं जहेव ' त्यादि एवम्—अनन्तरदर्शितनाभिलापेन यथौपपातिके सिद्धानधिकृत्य संहननाद्युक्तं तथैवहापि वाच्यं , तत्र च संहननादिद्वारगणा सङ्ग्रहाय गाथापूर्वार्द्धम्-' संघयणं संठाणं उच्चत्तं आउयं च परिवसणं ' ति । तत्र संहननमुक्तमेव, संस्थानादि त्वेवम्-तत्र संस्थाने षण्णां संस्थानानामन्यतरस्मिन् सिद्धयन्ति उच्चत्वे तु जघन्यतः सप्तहस्तप्रमाणे उत्कृष्टतस्तु पञ्चधनुःशतके आयुषि पुनर्जघन्यतः सातिरेकाष्टवर्षप्रमाणे उत्कृष्टतस्तु पूर्वकोटीमाने, परिवसना पुनरेवम्—रत्नप्रभादिपृथिवीनां सौधर्मादीनां चाप्राग्भारान्तानां क्षेत्रविशेषाणामधो न परिवसन्ति सिद्धा किन्तु-सर्वार्थसिद्धमहाविमानस्योपरितनात्स्तूपिकाग्रादूर्ध्वं द्वादश योजनानि व्यतिक्रम्येषत्प्राग्भारानामपृथिवी पञ्चचत्वारिंशद्योजनलक्षप्रमाणाऽऽयामविष्कम्भाभ्याम् वर्णेन श्वेताऽत्यन्तरम्यास्ति तस्याश्चोपरियोजने लोकान्तो भवति तस्य च योजनस्योपरितनगव्यूतोपरितनषड्भागे सिद्धाः परिवसन्तीति , ' एवं सिद्धिगंडिया निरवसेसा भाणियव्व' त्ति-एवमिति-पूर्वोक्तसंहननादिद्वारनिरूपणक्रमेण ' सिद्धिगण्डिका ' सिद्धिस्वरूपप्रतिपादनपरा वाक्यपद्धतिरौपपातिकप्रसिद्धाऽध्येया । भ० ११ श० ९ उ० ।

से णं भंते ! तहा सजोगी सिज्झिहिइ० जाव अंतं करेहिइ ?, णो इणट्ठे समट्ठे, से णं पुव्वामेव संणिस्स पंचिंदियस्स पज्जत्तगस्स जहण्णजोगस्स हेट्ठा असंखेज्जगुणपरिहीणं पढमं मणजोगं निरुंभइ, तयाणंतरं च णं बिंदियस्स पज्जत्तगस्स जहण्णजोगस्स हेट्ठा असंखेज्जगुणपरिहीणं बिइयं वइजोगं निरुंभइ, तयाणंतरं च णं सुहुमस्स पणगजीवस्स अपज्जत्तगस्स जहण्णजोगस्स हेट्ठा असंखेज्जगुणपरिहीणं तईयं कायजोगं णिरुंभइ , से णं एएणं उवाएणं पढमं मणजोगं णिरुंभइ, मणजोगं णिरुंभित्ता वयजोगं णिरुंभइ, वयजोगं णिरुंभित्ता कायजोगं णिरुंभइ, कायजोगं निरुंभित्ता जोगनिरोहं करेइ , जोगनिरोहं करेत्ता अजोगत्तं पाउणति, अजोगत्तं पाउणित्ता इसिं हस्सपंचक्खरउच्चारणद्धाए असंखेज्जसमइयं अंतोमुहुत्तियं सेलेसिं पडिवज्जइ, पुव्वरइयगुणसेढीयं च णं कम्मं तीसे सेलेसिमद्धाए असंखेज्जाहिं गुणसेढीहिं अणंते कम्मंसे खवेति वेयणिज्जाउयणामगुत्ते, इच्चेते चत्तारि कम्मंसे जुगवं खवेइ वेदणिज्जा २ ओरालियतेयाकम्माइं सव्वाहिं विप्पयहणाहिं विप्पजहइ । ओरालियतेयाकम्माइं सव्वाहिं विप्पयहणाहिं विप्पयहित्ता उज्जुसेढीपडिवन्ने अफुसमाणगई उड्ढं एक्कसमएणं अविग्गहेणं गंता सागारोवउत्ते सिज्झिहिइ । ते णं तत्थ सिद्धा हवंति सादीया अपज्जवसिया असरीरा जीवघणा दंसणनाणोवउत्ता निट्ठियट्ठा निरेयणा नीरया णिम्मला वितिमिरा विसुद्धा सासयमणागयद्धं कालं चिट्ठंति । से केणट्ठेणं भंते ! एवं वुच्चइ-ते णं तत्थ सिद्धा भवंति सादीया अपज्जवसिया०जाव चिट्ठंति ?, गोयमा ! से जहाणामए बीयाणं अग्गिदड्ढाणं पुणरवि अंकुरुप्पत्ती ण भवइ, एवामेव सिद्धाणं कम्मबीए दड्ढे पुणरवि जम्मुप्पत्ती न भवइ , से तेणट्ठेणं गोयमा ! एवं वुच्चइ—ते णं तत्थ सिद्धा भवंति सादीया अपज्जवसिया ०जाव चिट्ठंति । जीवा णं भंते ! सिज्झमाणा कयरम्मि संघयणे सिज्झंति ?, गोयमा ! वइरोसभणारायसंघयणे सिज्झंति, जीवा णं भंते ! सिज्झमाणा कयरम्मि संठाणे सिज्झंति ? , गोयमा ! छण्हं संठाणाणं अण्णतरे संठाणे सिज्झंति , जीवा णं भंते ! सिज्झमाणा कयरम्मि उच्चत्ते सिज्झंति ?, गोयमा ! जहण्णेणं

सत्तरयणीओ उक्कोसेणं पंचधणुसए सिज्झंति । जीवा णं भंते ! सिज्झमाणा कयरम्मि आउए सिज्झंति ?, गोयमा ! जहण्णेणं साइरेगट्ठवासाउए उक्कोसेणं पुव्वकोडियाउए सिज्झंति । अत्थि णं भंते ! इमीसे रयणप्पहाए पुढवीए अहे सिद्धा परिवसंति ?, णो इणट्ठे समट्ठे, एवं० जाव अहे सत्तमाए । अत्थि णं भंते ! सोहम्मस्स कप्पस्स अहे सिद्धा परिवसंति ?, णो इणट्ठे समट्ठे, एवं सव्वेसिं पुच्छा, ईसाणस्स सणंकुमारस्स ०जाव अच्चुयस्स गेविज्जविमाणाणं अणुत्तरविमाणाणं । अत्थि णं भंते ! ईसीपब्भाराए पुढवीए अहे सिद्धा परिवसंति ?, णो इणट्ठे समट्ठे, से कहिं खाइ णं भंते ! सिद्धा परिवसंति ?, गोयमा ! (औ० ) ईसीपब्भाराए णं पुढवीए सीयाए जोयणंमि लोगंते, तस्स जोयणस्स जे से उवरिल्ले गाउए तस्स णं गाउअस्स जे से उवरिल्ले छब्भागिए तत्थ णं सिद्धा भगवंतो सादीया अपज्जवसिया अणेगजाइजरामरणजोणिवेयणसंसारकलंकलीभावपुणब्भवगब्भवासवसहीपवंचसमइक्कंता सासयमणागयमद्धं चिट्ठंति । ( सू० ४३ × )

'स णं पुव्वामेव सन्निस्से' त्यादि, अस्यायमर्थः -स-केवली णमित्यलङ्कारे, पूर्वमेव—आदावेव योगनिरोधावस्थाया सञ्ज्ञिनो मनोलब्धिमत पञ्चेन्द्रियस्येति स्वरूपविशेषणं, यत संज्ञी पञ्चेन्द्रिय एव भवति,'पज्जत्तस्स'त्ति-मन पर्याप्त्या पर्याप्तस्य, तदन्यस्य मनोलब्धिमतोऽपि मनसोऽभाव एवेति पर्याप्तस्येत्युक्तं, स च मध्यमादिमनोयोगोऽपि स्यादित्याह—'जहण्णजोगिस्स' त्ति जघन्यमनोयोगवत' 'हेट्ठ' त्ति अधो यो मनोयोग इति गम्यते , जघन्यमनोयोगसमानो यो न भवतीत्यर्थ , मनोयोगश्च—मनोद्रव्याणि तद्व्यापारश्चेति, जघन्यमनोयोगाधोभागवर्तित्वमेव दर्शयन्नाह-' असंखेज्जगुणपरिहीणं ' ति असंख्यातगुणेन परिहीणो य स तथा तं जघन्यमनोयोगस्यासंख्येयभागमात्र मनोयोगं निरुणद्धि तत क्रमेणानया मात्रया समये समये तं निरुन्धान सर्वमनोयोग निरुणद्धि, अनुत्तरेणाचिन्त्येन अकरणवीर्येणेति, एतदेवाह-' पढमं मणजोगं निरुंभइ ' त्ति प्रथमं—शेषयोगादियोगापेक्षया प्राथम्येन-आदितो मनोयोगं निरुणद्धीति। उक्तं च-" पज्जत्तमेत्तसन्नि-स्स जत्तियाइं जहन्नजोगिस्स । होंति मणोदव्वाइं, तव्वावारो य जम्मत्तो ॥१॥ तदसंखगुणविहीणं, समए समए निरुंभमाणो सो । मणसो सव्वनिरोहं, करे असंखेज्जसमएहिं ॥ २ ॥ " ति , एवमन्यदपि सूत्रद्वयं नयम् , अजोगयं पाउणइ ' त्ति अयोगता प्राप्नोतीति, ' ईसिहस्सपचक्खरुच्चारणद्धाए' त्ति 'ईसि' ति-ईषत्स्पृष्टानि ह्रस्वानि यानि पञ्चाक्षराणि तेषां यदुच्चारणं तस्य याऽद्धा काल सा तथा तस्याम् , इदं चोच्चारणं न विलम्बितं द्रुतं वा, किन्तु मध्यममेव गृह्यते, यत आह-" हस्सक्खराइं मज्झेण, जेण कालेण पंच भण्णंति । अच्छइ सेलेसिगओ, तत्तियमेत्तं तओ कालं ॥१॥ शैलेशो-मेरुस्तस्येव स्थिरतासाम्याद् या अवस्था सा शैलेशी-अथवा शीलेश —सर्वसंवररूपचारित्रप्रभुस्तस्येयमवस्था योगनिरोधरूपेति शैलेशी तां प्रतिपद्यते, तत 'पुव्वरइयगुणसेढीयं च णं ' ति—पूर्वं-शैलेश्यवस्थायाः प्राक् रचिता गुणश्रेणीक्षपणोपक्रमविशेषरूपा यस्य तत्तथा, गुणश्रेणी चैवम्-सामान्येन किल कर्म बहुलपमल्पतरमल्पतमं चेत्येव निर्जरणाय रचयति, यदा तु परिणामविशेषात्तत्र तथैव रचिते कालान्तरे च प्रमल्पं बहु बहुतरं बहुतमं चेत्येवं शीघ्रतरक्षपणाय रचयति तदा सा गुणश्रेणीत्युच्यते, स्थापना चैवम्- ▽ ' कम्मं ' ति वेदनीयादिक भवोपग्राहि ' तीसे सेलेसिमद्धाए ' त्ति—तस्यां शैलेश्यद्धायां—शैलेशीकाले क्षपयन्निति योग , एतदेव विशेषेणाह—' असंखेज्जाहिं गुणसेढीहिं ' ति—असंख्याताभिर्गुणश्रेणीभि शैलेश्यवस्थाया असंख्यातसमयत्वेन गुणश्रेण्यप्यसंख्यातसमया तत तस्याः प्रतिसमयभेदकल्पनया असंख्याता गुणश्रेण्यो भवन्ति, अतोऽसंख्याताभि गुणश्रेणीभिरित्युक्तम् , असंख्यातसमयैरिति हृदयम् , ' अणंते कम्मंसे खवयंतो ' त्ति-अनन्तपुद्गलरूपत्वादनन्तास्तान् कर्मांशान् भवोपग्राहिकर्मभेदान् क्षपयन्-निर्जरयन् ' वेयणिज्जाउयणामगोए ' त्ति-वेदनीयं साताद्यायु —मनुष्यायुष्कं नाम—मनुष्यगत्यादि गोत्रम्—उच्चैर्गोत्रम् 'इच्चेते' त्ति-इत्येतान् ' चत्तारि ' त्ति चतुर. 'कम्मंसे' त्ति-कर्मांशान्-मूलप्रकृती 'जुगवं खवेइ' त्ति-यौगपद्येन निर्जरयतीति । एतच्चैता भाष्यगाथा अनुश्रित्य व्याख्यातम् , यदुत—

'तदसंखेज्जगुणाए, सेढीए विरइयं पुरा कम्मं ।
समए समए खवयं, कम्मं सेलेसिकालेणं ॥ १ ॥
सव्वं खवेइ तं पुण, निल्लेवं किंचिदुचरिमे समए ।
किंचिच्च होइ चरमे, सेलेसीए तयं वोच्छं ॥ २ ॥
मणुयगइजाइतसबा-यरं च पज्जत्तसुभगमाएज्जं ।
अन्नयरवेयणिज्जं, नराउमुच्चं जसो नामं ॥ ३ ॥
संभवओ जिणनामं, नराणुपुव्वी य चरिमसमयम्मि ।
सेसा जिणसंताओ, दुचरिमसमयम्मि निट्ठंति ' ॥४॥"

इति । 'सव्वाहिं विप्पयहणाहिं' ति-सर्वाभि -अशेषाभिः-विशेषेण—विविधं प्रकर्षेतो हानय -त्यागा विप्रहाणयो व्यक्त्यपेक्षया बहुवचनं ताभि ,किमुक्तं भवति ?-सर्वथा परिशाटनं न तु यथा पूर्वं सङ्घातपरिशाटाभ्यां देशत्यागत 'विप्पजहित्त' त्ति विशेषेण प्रहाय—परित्यज्य 'उज्जूसेढिपडिवन्ने'त्ति ऋजु -अवक्रा श्रेणि -आकाशप्रदेशपङ्क्तिस्ताम् ऋजुश्रेणिं प्रतिपन्न -आश्रित 'अफुसमाणगई' त्ति अस्पृशन्ती-सिद्ध्यन्तरालप्रदेशान् गतिर्यस्य सोऽस्पृशद्गति , अन्तरालप्रदेशस्पर्शने हि नैकेन समयेन सिद्धि , इष्यते च तत्रैक एव समय , य एव चायुष्कादिकर्मणा क्षयसमय स एव निर्वाणसमय , अतोऽन्तराले समयान्तरस्याभावादन्तरालप्रदेशानामसंस्पर्शनमिति । सूक्ष्मश्चायमर्थः केवलिगम्यो भावत इति, 'एगसमएणं ' ति-कुत इत्याह—'अविग्गहेणं ' ति-अविग्रहेण-वक्रगहितेन, वक्र एव हि समयान्तर लगति प्रदेशान्तरं च स्पृशतीति, 'उड्ढं गंता ' ऊर्ध्वं गत्वा ' सागारोवउत्ते ' त्ति-साकारोपयोगवान् सिध्यति कृतकृत्यता लभते इति।गतमानुषङ्गिकम्।अथ प्रकृतमाह-किं च प्रकृतम् ?, से जे इमे गामागर०जाव सन्निवेसेसु मणुया हवंति सव्वकामवि-

स्या ०जाव अट्ठ कम्मपयडीओ खवइत्ता उप्पिं लोयग्गपइट्ठाणा हवंति ' त्ति--लोकाग्रप्रतिष्ठानाश्च सन्तो यादृशास्ते भवन्ति तद्दर्शयितुमाह-'ते णं तत्थ सिद्धा हवंति' त्ति-ते पूर्वोक्तविशेषणा मनुष्या, तत्र-लोकाग्रे निष्ठितार्थाः स्युरिति, अनेन च यत्केचन मन्यन्ते, यदुत--'रागादिवासनामुक्तं, चित्तमेव निरामयम्। सदाऽनियतदेशस्थं, सिद्ध इत्यभिधीयते ॥१॥' यच्चापरे मन्यन्ते--"गुणसत्त्वान्तरज्ञानान्निवृत्तप्रकृतिक्रियाः। मुक्ताः सर्वत्र तिष्ठन्ति, व्योमवत्तापवर्जिताः ॥२॥" तदनेन निरस्तम्, यच्चोच्यते-सशरीरतायामपि सिद्धत्वप्रतिपादनाय, यदुत-"अणिमाद्यष्टविधं प्रा-प्यैश्वर्यं कृतिनः सदा। मोदन्ते निर्वृतात्मान-स्तीर्णाः परमदुस्तरम् ॥१॥" इति तद्व्याकरणायाह--असरीरा-अविद्यमानपञ्चप्रकारशरीराः, तथा 'जीवघण' त्ति-योगनिरोधकाले रन्ध्रपूरणेन त्रिभागोनाऽवगाहना सन्तो जीवघना इति, 'दंसणनाणोवउत्त' त्ति-ज्ञानं--साकारं दर्शनम्--अनाकारं तयोः क्रमेणोपयुक्ता ये ते तथा, 'निट्ठियट्ठ' त्ति-निष्ठितार्थाः--समाप्तसमस्तप्रयोजनाः 'निरेयण' त्ति निरेजनाः--निश्चलाः 'नीरय' त्ति-नीरजसो-बध्यमानकर्मरहिता नीरया वा-निर्गतौत्सुक्याः 'निम्मल' त्ति-निर्मलाः पूर्वबद्धकर्मविनिर्मुक्ताः द्रव्यमलवर्जिता वा ' वितिमिर ' त्ति विगताज्ञानाः 'विसुद्ध' त्ति-कर्मविशुद्धिप्रकर्षमुपगताः 'सासयमणागयद्धं कालं चिट्ठंति' शाश्वतीम्--अविनश्वरीं सिद्धत्वस्याविनाशात्, अनागताद्धा-भविष्यत्कालं तिष्ठन्तीति 'जम्मुप्पत्ती' ति-जन्मना--कर्मकृतप्रसूत्या उत्पत्तिर्या सा तथा, जन्मग्रहणेन परिणामान्तररूपात्तदुत्पत्तिर्भवतीत्याह, प्रतिक्षणमुत्पादव्ययध्रौव्ययुक्तत्वात्सद्भावस्येति, 'जहण्णेणं सत्त रयणीए' त्ति-सप्तहस्ते उच्चत्वे सिध्यन्ति महावीरवत्, ' उक्कोसेणं पंचधणुस्सए' त्ति-ऋषभस्वामिवद्, एतच्च द्वयमपि तीर्थङ्करापेक्षयोक्तम्, अतो द्विहस्तप्रमाणेन कूर्मापुत्रेण न व्यभिचारो न वा मरुदेव्या सातिरेकपञ्चधनुःशतप्रमाणयेति, 'साइरेगट्ठवासाउए' त्ति-सातिरेकाण्यष्टौ वर्षाणि यत्र तत्तथा तच्च तदायुश्चेति तत्र सातिरेकाष्टवर्षायुषि, तत्र किलाष्टवर्षस्य चारित्रं प्रतिपद्यते, ततो वर्षे अतिगते केवलज्ञानमुत्पाद्य सिध्यतीति, ' उक्कोसेणं पुव्वकोडाउए ' त्ति--पूर्वकोट्यायुर्नरः पूर्वकोट्या अन्ते सिध्यतीति न परतः । ' ते णं तत्थ सिद्धा भवंति ' त्ति-प्राक्तनवचनाद् यद्यपि लोकाग्रे सिद्धानां स्थानमित्यवसीयते, तथापि मुग्धविनेयस्य कल्पितविविधलोकाग्रनिरासतो निरुपचरितलोकाग्रस्वरूपविशेषावबोधाय प्रश्नोत्तरसूत्रमाह-'अत्थि णं' मित्यादि व्यक्तम्, नवरं यदिदं रत्नप्रभाया अधस्तदेव लोकाग्रमिति तत्र सिद्धाः परिवसन्तीति प्रश्नः, तत्रोत्तरम्--नायमर्थः समर्थ इति, एवं सर्वत्र, ' से कहिं खाइ णं भंते !' त्ति-इत्यत्र 'से' त्ति-ततः ' कहिं ' त्ति--क्व देशे 'खाइ णं' त्ति--देशभाषया वाक्यालङ्कारे ( ईषत्प्राग्भाराापृथ्वीप्रश्नोत्तरम् ' ईसिप्पब्भारा ' शब्दे द्वितीयभागे ६५४ पृष्ठे गतम् । ) 'सेय ' त्ति--श्वेता, एतदेवाह--' आयंसतलविमलसोल्लियमुणालदगरयतुसारगोक्खीरहारवण्ण ' त्ति--व्यक्तमेव, नवरम् आदर्शतलम्--दर्पणतलं क्वचिच्छत्रतलमिति पाठः, आदर्शतलमिव विमला या सा तथा, सोल्लिय ' त्ति-कुसुमविशेषः, ' सव्वज्जुणसुवण्णमई' त्ति-अर्जुनसुवर्ण-श्वेतकाञ्चनम्, अच्छा आकाशस्फटिकमिव 'सण्ह' त्ति-श्लक्ष्णपरमाणुस्कन्धनिष्पन्ना श्लक्ष्णतन्तुनिष्पन्नपटवत् 'लण्ह' त्ति-मसृणा घुण्टितपटवत्, 'घट्ठ' त्ति-घृष्टेव घृष्टा खरशानया पाषाणप्रतिमावत्, ' मट्ठ' त्ति-मृष्टेव मृष्टा सुकुमारशानया प्रतिमेव-शोधिता वा प्रमार्जनिकयेव, अत एव ' णीरय ' त्ति-नीरजा--रजोरहिता '-णिम्मला-' कठिनमलरहिता 'णिप्पंक ' त्ति-निष्पङ्का--आर्द्रमलरहिता अकलङ्का वा ' णिक्कंकडच्छाय ' त्ति-निष्कङ्कटा--निष्कवचा; निरावरणेत्यर्थः, छाया--शोभा यस्याः सा तथा अकलङ्कशोभा वा, ' समरीचिय ' त्ति-समरीचिका--किरणयुक्ता, अत एव ' सुप्पभ ' त्ति-सुष्ठु प्रकर्षेण च भाति--शोभते या सा सुप्रभेति, ' पासादीया ' त्ति-प्रासादो-मनःप्रमोदः प्रयोजनं यस्याः सा प्रासादीया ' दरसणिज्ज' त्ति-दर्शनाय-चक्षुर्व्यापाराय हिता दर्शनीया, तां पश्यच्चक्षुर्न श्राम्यतीत्यर्थः, ' अभिरूव ' त्ति अभिमतं रूपं यस्याः सा अभिरूपा, कमनीयेत्यर्थः, ' पडिरूव ' त्ति द्रष्टारं द्रष्टारं प्रति रूपं यस्याः सा प्रतिरूपा, ' जोयणंमि लोगंते ' त्ति इह योजनमुत्सेधाङ्गुलयोजनमवसेयं, तदीयस्यैव हि क्रोशस्य षड्भागस्य सत्रिभागत्रयस्त्रिंशदधिकधनुःशतत्रयीप्रमाणत्वादिति, ' अणेगजाइजरामरणजोणिवेयणं ' अनेकजातिजरामरणप्रधानयोनिषु वेदना यत्र स तथा तम्, ( औ० ) ( ' संसारकलंकलीभाव ' पदव्याख्या ' संसारकलंकलीभाव ' शब्देऽस्मिन्नेव भागे गता । ) पाठान्तरमिदम्-' अणेगजाइजरामरणजोणिसंसारकलंकलीभावपुणब्भवगब्भवासवसहिपवंचसमइक्कंत ' त्ति-अनेकजातिजरामरणप्रधाना योनयो यत्र स तथा स चासौ संसारश्चेति समासः, तत्र कलङ्कलीभावेन यः पुनर्भवेन पुनः पुनरुत्पत्त्या गर्भवासवसतीनां प्रपञ्चस्तं समतिक्रान्ता ये ते तथा ॥ ४३ ॥

अथ प्रश्नोत्तरद्वारेण सिद्धानामेव वक्तव्यतामाह--

कहिँ पडिहया सिद्धा, कहिँ सिद्धा पडिट्ठिया ?, ।
कहिं बोंदिं चइत्ता णं, कत्थ गंतूण सिज्झइ ? ॥ १ ॥
अलोगे पडिहया सिद्धा, लोयग्गे य पडिट्ठिया ।
इहं बोंदिं चइत्ता णं, तत्थ गंतूण सिज्झई ॥ २ ॥
जं संठाणं तु इहं, भवं चयंतस्स चरिमसमयम्मि ।
आसी य पएसघणं, तं संठाणं तहिं तस्स ॥ ३ ॥
दीहं वा हस्सं वा, जं चरिमभवे हवेज्ज संठाणं ।
तत्तो तिभागहीणं, सिद्धाणोगाहणा भणिया ॥ ४ ॥
तिन्नि सया तेत्तीसा, धणुत्तिभागो य होइ बोद्धव्वा ।
एसा खलु सिद्धाणं, उक्कोसोगाहणा भणिया ॥ ५ ॥
चत्तारि य रयणीओ, रयणितिभागूणिया य बोद्धव्वा ।
एसा खलु सिद्धाणं, मज्झिमओगाहणा भणिया ॥६॥
एक्का य होइ रयणी, साहीया अंगुलाइं अट्ठ भवे ।
एसा खलु सिद्धाणं, जहण्णओगाहणा भणिया ॥७॥
ओगाहणाए सिद्धा, भवत्तिभागेण होइ परिहीणा ।

संठाणमणित्थंथं, जरामरणविप्पमुक्काणं ॥ ८ ॥
जत्थ य एगो सिद्धो, तत्थ अणंता भवक्खयविमुक्का ।
अण्णोण्णसमवगाढा, पुट्ठा सव्वे य लोगंते ॥ ९ ॥
फुसइ अणंते सिद्धे, सव्वपएसेहिँ णियमसो सिद्धा ।
ते वि असंखेज्जगुणा, देसपएसेहिँ जे पुट्ठा ॥ १० ॥
असरीरा जीवघणा, उवउत्ता दंसणे य णाणे य ।
सागारमणागारं, लक्खणमेयं तु सिद्धाणं ॥ ११ ॥
केवलणाणुवउत्ता, जाणंती सव्वभावगुणभावे ।
पासंति सव्वओ खलु, केवलदिट्ठी अणंताहिं ॥ १२ ॥
ण वि अत्थि माणुसाणं, तं सोक्खं ण वि य सव्वदेवाणं ।
जं सिद्धाणं सोक्खं, अव्वाबाहं उवगयाणं ॥ १३ ॥
जं देवाणं सोक्खं, सव्वद्धापिंडियं अणंतगुणं ।
ण य पावइ मुत्तिसुहं, णंताहिं वग्गवग्गूहिं ॥ १४ ॥
सिद्धस्स सुहो रासी, सव्वद्धापिंडिओ जइ हवेज्जा ।
सोऽणंतवग्गभइओ, सव्वागासे ण माएज्जा ॥ १५ ॥
जह णाम कोइ मिच्छो, नगरगुणे बहुविहे वियाणंतो ।
न चएइ परिकहेउं, उवमाए तहिं असंतीए ॥ १६ ॥
इय सिद्धाणं सोक्खं, अणोवमं णत्थि तस्स ओवम्मं ।
किंचि विसेसेणेत्तो, ओवम्ममिणं सुणह वोच्छं ॥ १७ ॥
जह सव्वकामगुणियं, पुरिसो भोत्तूण भोयणं कोइ ।
तण्हाछुहाविमुक्को, अच्छेज्ज जहा अमियतित्तो ॥ १८ ॥
इय सव्वकालतित्ता, अतुलं निव्वाणमुवगया सिद्धा ।
सासयमव्वाबाहं, चिट्ठंति सुही सुहं पत्ता ॥ १९ ॥
सिद्ध त्ति य बुद्ध त्ति य पारगय त्ति य परंपरगय त्ति ।
उम्मुक्ककम्मकवया, अजरा अमरा असंगा य ॥ २० ॥
णिच्छिण्णसव्वदुक्खा, जाइजरामरणबंधणविमुक्का ।
अव्वाबाहं सुक्खं, अणुहोंती सासयं सिद्धा ॥ २१ ॥
अतुलसुहसागरगया, अव्वाबाहं अणोवमं पत्ता ।
सव्वमणागयमद्धं, चिट्ठंति सुही सुहं पत्ता ॥ २२ ॥

'कहिं' इत्यादि-क्व-कस्मिन् प्रतिहताः-क्व प्रस्खलिताः सिद्धा मुक्ताः ?, तथा क्व सिद्धाः प्रतिष्ठिता-व्यवस्थिता इत्यर्थः ?, तथा क्व बोन्दिं-शरीरं त्यक्त्वा ?, तथा क्व गत्वा ' सिज्झइ ' त्ति-प्राकृतत्वात् 'से हु चाइ' त्ति 'बुब्बइ' इत्यादिवत् सिध्यन्तीति व्याख्येयमिति ॥ १ ॥ अलोके-अलोकाकाशास्तिकाये प्रतिहताः-स्खलिताः सिद्धाः-मुक्ताः, प्रतिस्खलनं चेहानन्तर्यवृत्तिमात्रं, तथा लोकाग्रे च-पञ्चास्तिकायात्मकलोकमूर्धनि च प्रतिष्ठिताः-अपुनरागत्या व्यवस्थिता इत्यर्थः, तथा इह-मनुष्यक्षेत्रे बोन्दिं-तनुं परित्यज्य तत्रेति-लोकाग्रे गत्वा ' सिज्झइ ' त्ति-सिध्यन्ति-निष्ठितार्था भवन्ति ॥ २ ॥ किञ्च-' जं संठाणं ' गाहा व्यक्ता, नवरं प्रदेशघनमिति त्रिभागेन रन्ध्रपूरणादिति, ' तहिं ' ति-सिद्धिक्षेत्रे 'तस्स' त्ति सिद्धस्येति ॥ ३ ॥ तथा चाह-' दीहं वा ' गाहा, दीर्घं वा पञ्चधनुःशतमानं ह्रस्वं वा-हस्तद्वयमानं, वाशब्दान्मध्यमं वा यच्चरमभवे भवेत्संस्थानं ततः-तस्मात् संस्थानात् त्रिभागहीना त्रिभागेन शुषिरपूरणात् सिद्धानामवगाहना-अवगाहन्ते-अस्यामवस्थायामिति अवगाहना स्वावस्थैवेति भावः, भणिता-उक्ता जिनैरिति ॥ ४ ॥ अथावगाहनामेवोत्कृष्टादिभेदेन आह-'तिण्णि सया' इत्यादि, इयं च पञ्चधनुःशतमानानां 'चत्तारि य' इत्यादि तु सप्तहस्तानाम् 'एगा य' इत्यादि द्विहस्तमानानामिति । इयं च त्रिविधाऽप्युत्सेधमानमाश्रित्यान्यथा सप्तहस्तमानानां च उपविष्टानां सिद्ध्यतामन्यथाऽपि स्यादिति । आक्षेपपरिहारौ पुनरेवम्-ननु नाभिकुलकरः पञ्चविंशत्यधिकपञ्चधनुःशतमानः प्रतीत एव, तद्भार्याऽपि मरुदेवी तत्प्रमाणैव, ' उच्चत्तं चेव कुलगरेहिं समं ' मिति वचनात्, अतस्तदवगाहना उत्कृष्टावगाहनातोऽधिकतरा प्राप्नोतीति कथं न विरोधः ?, अत्रोच्यते-यद्यप्युच्चत्वं कुलकरतुल्यं तदा पिता इत्युक्तं, तथापि प्रायिकत्वादस्य स्त्रीणां च प्रायेण पुम्भ्यो लघुतरत्वात् पञ्चैव धनुःशतान्यसावभवत्, वृद्धकाले वा सङ्कोचात् पञ्चधनुःशतमाना सा अभवद्, उपविष्टा वाऽसौ सिद्धेति न विरोधः । अथवा-बाहुल्यापेक्षमिदमुत्कृष्टावगाहनामानं, मरुदेवी त्वाश्चर्यकल्पत्येवमपि न विरोधः, ननु जघन्यतः सप्तहस्तोच्छ्रितानामेव सिद्धिः प्रागुक्ता, तत्कथं जघन्यावगाहना अष्टाङ्गुलाधिकहस्तप्रमाणा भवतीति ?, अत्रोच्यते, सप्तहस्तोच्छ्रितेषु सिद्धिरिति तीर्थकरापेक्षं, तदन्ये तु द्विहस्ता अपि कूर्मापुत्रादयः सिद्धाः अतस्तेषां जघन्याऽवसेया, अन्ये त्वाहुः-सप्तहस्तमानस्य संवर्तिताङ्गोपाङ्गस्य सिद्ध्यतो जघन्यावगाहना स्यादिति ॥ ७ ॥ ओगाहणाए गाहा व्यक्ता, नवरम् 'अणित्थंथ' ति अमुं प्रकारमापन्नमित्थमित्थं तिष्ठतीति इत्थंस्थम् न इत्थंस्थम् अनित्थंस्थम्-न केनचिल्लौकिकप्रकारेण स्थितमिति ॥ ८ ॥ अथैते किं देशभेदेन स्थिता उतान्यथेत्यस्यामाशङ्कायामाह-'जत्थ य' गाहा, यत्र च-यत्रैव देशे एकः सिद्धो-निर्वृतस्तत्र देशे अनन्ताः किम् ?-' भवक्खयविमुक्का ' इति-भवक्षयेण विमुक्ता भवक्षयविमुक्ताः, अनेन स्वेच्छया भवावतरणशक्तिमत्सिद्धव्यवच्छेदमाह । अन्योऽन्यसमवगाढाः-तथाविधाचिन्त्यपरिणामत्वाद्धर्मास्तिकायादिवदिति, स्पृष्टाः-लग्नाः सर्वे च लोकान्ते, अलोकेन प्रतिस्खलितत्वाद्, अत एव ' लोयग्गे य पइट्ठिया ' इत्युक्तमिति ॥ ९ ॥ तथा ' फुसइ ' गाहा, स्पृशत्यनन्तान्सिद्धान् सर्वप्रदेशैरात्मसम्बन्धिभिः ' णियमसो ' त्ति-नियमतः सिद्धः, तथा तेऽप्यसंख्येयगुणा वर्तन्ते देशैः प्रदेशैश्च ये स्पृष्टाः, केभ्यः ?-सर्वप्रदेशस्पृष्टेभ्यः, कथम् ?-सर्वात्मप्रदेशैस्तावदनन्ताः स्पृष्टाः, एकसिद्धावगाहनायामनन्तानामवगाढत्वात्, तथैकैकदेशेनाप्यनन्ताः, एवमेकैकप्रदेशेनाप्यनन्ता एव नवरं देशो-द्व्यादिप्रदेशसमुदायः, प्रदेशस्तु-निर्विभागोंऽश इति । सिद्धश्चासंख्येयदेशप्रदेशात्मकः, ततश्च मूलानन्तकमसंख्येयैर्देशानन्तकैरसंख्येयैश्च प्रदेशानन्तकैर्गुणितं यथोक्तमेव भवतीति ॥ १० ॥ अथ सिद्धानेव लक्षणत आह-' असरीरा ' गाहा, उक्तार्था, संग्रहरूपत्वाच्चास्या न पुनरुक्ततेति ॥ ११ ॥ ' उवउत्ता दंसणे य णाणे य ' त्ति यदुक्तं, तत्र ज्ञानदर्शनयोः सर्वविषयतामुपदर्शयन्नाह-' केव-

ल' गाहा, केवलज्ञानोपयुक्ता सन्तो न त्वन्त करणोपयुक्ताः भावतस्तदभावात्, जानन्ति 'सर्वभावगुणभावान्' समस्तवस्तुगुणपर्यायान्, तत्र गुणा -सहवर्तिन पर्यायास्तु-क्रमवर्तिन इति, तथा पश्यन्ति सर्वत. खलु—सर्वत एवेत्यर्थ केवलदृष्टिभिरनन्ताभि —केवलदर्शनैरनन्तैरित्यर्थ, अनन्तत्वात् सिद्धानामनन्तविषयत्वाद्वा दर्शनस्य केवलदृष्टिभिरनन्ताभिरित्युक्तम्, इह चादौ ज्ञानग्रहणं प्रथमतया तदुपयोगस्था सिध्यन्तीति ज्ञापनार्थमिति ॥ १२ ॥ अथ सिद्धाना निरुपमसुखतां दर्शयितुमाह—' ण वि अत्थि' गाहा व्यक्ता, नवरम् 'अव्वाबाहं' ति-विविधा आबाधा व्याबाधा तन्निषेधादव्याबाधा तामुपगतानां—प्राप्तानामिति ॥ १३ ॥ कस्मादेवमित्याह— 'जं देवाणं' गाहा, यतो यस्माद्देवानाम्—अनुत्तरसुरान्तानां सौख्यम्-त्रिकालिकसुखं सर्वाद्धया—अतीतानागतवर्तमानकालेन पिण्डितम्—गुणितं सर्वाद्धापिण्डितं, तथाऽनन्तगुणमिति, तदेवं-प्रमाणं किलासद्भावकल्पनयैकैकाकाशप्रदेशे स्थाप्यत इत्येवं सकललोकालोकाकाशानन्तप्रदेशपूरणेनानन्तं भवति, न च प्राप्नोति मुक्तिसुखम्-नैव मुक्तिसुखसमानतां लभते, अनन्तानन्तत्वात्सिद्धसुखस्य, ( किंविध देवसुखमिति-' वग्गवग्ग ' शब्दे षष्ठ भागे गतम् । ) औ० । खण्डखण्डैः खण्डितं सिद्धसुखं तदीयानन्तानन्ततमखण्डसमतामपि न लभत इत्यर्थ, यतो नास्ति तन्मानुपादीनां सुखं यत्सिद्धानामिति प्रकृतम् ॥ १४ ॥ सिद्धसुखस्यैवोत्कर्षणाय भङ्ग्यन्तरेणाह—'सिद्धस्स' गाहा, सिद्धस्य-मुक्तस्य सम्बन्धी सुख —सुखाना सत्को राशि —समूह सुखसङ्घात इत्यर्थ, सर्वाद्धापिण्डितः सर्वकालसमयगुणितो यदि भवेद्, अनेन चास्य कल्पनामात्रतामाह, सोऽनन्तवर्गभक्तः—अनन्तवर्गापवर्तितः सन्समीभूत एवेति भावार्थ, 'सर्वाकाशे' लोकालोकरूपे न मायात्, अयमत्र भावार्थ –इह किल विशिष्टाह्लादरूपं सुखं गृह्यते, ततश्च यत आरभ्य शिष्टाना सुखशब्दप्रवृत्तिस्तमाह्लादमवधीकृत्य एकैकगुणवृद्धितारतम्येन तावदसावाह्लादो विशिष्यते यावदनन्तगुणवृद्ध्या निरतिशयनिष्ठां गत., ततश्चासावत्यन्तोपमातीतैकान्तिकौत्सुक्यविनिवृत्तिरूप. स्तिमिततममहोदधिकल्पः स्वस्माह्लाद एव सदा सिद्धाना भवति, तस्माच्चारात्प्रथमाद्यावधेमपान्तरालवर्तिनो ये तारतम्येनाह्लादविशेषास्ते सर्वाकाशप्रदेशराशेरपि भूयांसो भवन्तीत्यत किलोक्तम्-'सव्वागासे ण माएज्ज' त्ति-अन्यथा प्रतिनियतदेशावस्थिति. कथं नयामिति सूर्योऽभिदधतीति ॥ १५ ॥ अस्य च वृद्धोक्तस्याधिकृतगाथाविवरणस्यायं भावार्थ —य एते सुखभेदास्ते सिद्धसुखपर्यायतया व्यपदिष्टा, तद्योगतया तत्स्य क्रमेणोत्कृष्यमाणस्यानन्ततमस्थानवर्तित्वेनोपचारात्, तद्राशिश्च किलासद्भावस्थापनया सहस्रं समयराशिस्तु शतं, सहस्रे च शतेन गुणिते जातं लक्ष, गुणनं च कृतं सर्वसमयसम्बन्धिना सुखपर्यायाणां मीलनार्थम् । तथाऽनन्तराशि किल दश, तद्वर्गश्च शतं तेनापवर्तितं लक्षं जातं सहस्रमेव, अत' पूर्वमुक्तम्-'समीभूत एवे'ति भावार्थ इति । यद्वेह सुखराशेर्गुणनमपवर्तनं च तदेवं सम्भावयाम.-यत्र किलानन्तराशिना गुणितोऽपि सति अनन्तवर्गेणानन्तानन्तकरूपेणापवर्तितं महाराशिरूपेणापवर्तिते किञ्चिदवशिष्यते, स राशिरतिमहान्, ततश्च सिद्धसुखराशिर्महानिति बुद्धिजननार्थं शिष्यस्य. तस्यैव वा गणितमार्गे व्युत्पत्तिकरणार्थमिति । अन्ये पुनरिमा गाथामेव व्याख्यान्ति-सिद्धसुखपर्यायराशि नभःप्रदेशाग्रगुणितनभःप्रदेशाग्रप्रमाण., तत्परिमाणत्वात् सिद्धसुखपर्यायाणा, सर्वाद्धापिण्डित.-सर्वसमयसम्बन्धी सङ्कलितः सन्, स चानन्तैः अनन्तश इत्यर्थ, वर्गैः -वर्गमूलैर्भक्त-अपवर्तितः,अत्यन्तं लघूकृत इत्यर्थ, यथा किल सर्वसमयसम्बन्धी सिद्धसुखराशि पञ्चषष्टि सहस्राणि पञ्च शतानि षट्त्रिंशच्चेति (६५५३६) स च वर्गेणापवर्तितः सन् जातं द्वे शते षट्पञ्चाशदधिके (२५६)सोऽपि स्ववर्गापवर्तितो जाताः षोडश ततश्चत्वार. ततो द्वावित्येव-मतिलघूकृतोऽपि सर्वाकाशे न मायाद्, एतदेवाह-'सव्वायासे न माएज्ज' त्ति-अथ सिद्धसुखस्यानुपमता दृष्टान्तेनाह—'जह' गाहा, पूर्वार्धं व्यक्तं 'न चएइ' त्ति-न शक्नोति परिकथयितुं नगरगुणानरण्यमागतोऽरण्यवासिम्लेच्छः, कुत इत्याह—

उपमाया त्वत्र नगरगुणेष्वरण्ये वाऽसत्यामिति, कथानकं पुनरेवम्—

"म्लेच्छ कोऽपि महारण्ये, वसति स्म निराकुल ।
अन्यदा तत्र भूपालो, दुष्टाश्वेन प्रवेशित. ॥ १ ॥
म्लेच्छेनासौ नृपो दृष्ट, सत्कृतश्च यथोचितम् ।
प्रापितश्च निजं देश, सोऽपि राज्ञा निजं पुरम् ॥ २ ॥
ममायमुपकारीति, कृतो राज्ञाऽतिगौरवात् ।
विशिष्टभोगभूतीनां, भाजनं जनपूजित ॥ ३ ॥
तत. प्रासादशृङ्गेषु, रम्येषु काननेषु च ।
कुतो विलासिनीसार्धं—भुङ्क्ते भोगसुखान्यसौ ॥ ४ ॥
अन्यदा प्रावृष प्राप्तौ, मेघाडम्बरमण्डितम् ।
व्योम दृष्ट्वा ध्वनिं श्रुत्वा, मेघानां स मनोहरम् ॥ ५ ॥
जातोत्कण्ठो दृढं जातो-ऽरण्यवासगमं प्रति ।
विसर्जितश्च राज्ञाऽपि, प्राप्तोऽरण्यमसौ तत. ॥ ६ ॥
पृच्छन्त्यरण्यवासास्तं, नगरं तात ! कीदृशम् ? ।
स स्वभावान् पुन सर्वान्, जानात्येव हि केवलम् ॥ ७ ॥
न शशाक तको तेषां, गदितुं स कृतोद्यम ।
वने वनेचराणा हि, नास्ति सिद्धोपमा यत ॥ ८ ॥"

१६ । अथ दार्ष्टान्तिकमाह-' इय ' गाहा, इति—एवम्—अरण्ये नगरगुणा इवेत्यर्थ, सिद्धानां सौख्यमनुपमं वर्तते, किमित्याह—यतो नास्ति तस्यौपम्यं, तथापि बालजनप्रतिपत्तये किञ्चिद्विशेषेणाह— एत्तो' त्ति-आर्षत्वादस्य-सिद्धिसुखस्य इतो वाऽनन्तरम् औपम्यम्—उपमानम् इदम्—वक्ष्यमाणं शृणुत वक्ष्ये इति ॥ १७ ॥ 'जह' गाहा, 'यथे' त्युदाहरणोपन्यासार्थ. सर्वकामगुणितं—सञ्जातसमस्तकमनीयगुण, शेष व्यक्तम्, इह च रसनेन्द्रियमेवाधिकृत्येष्टविषयप्राप्त्या औत्सुक्यनिवृत्त्या सुखप्रदर्शनं सकलेन्द्रियार्थावाप्त्याऽशेषौत्सुक्यनिवृत्त्युपलक्षणार्थम्, अन्यथा बाधान्तरसम्भवात् सुखाभाव इति ॥ १८ ॥ ' इय' गाहा, ' इय ' एवं सर्वकालतृप्ता शश्वद्भावत्वात् अतुलं निर्वाणमुपागता सिद्धा., सर्वदा सकलौत्सुक्यनिवृत्ते, यतश्चैवमत' शाश्वतम्—सर्वकालभावि ' अव्याबाधं ' व्याबाध वर्जितं सुख प्राप्ता. सु-

खिनस्तिष्ठन्तीति योगः, सुखं प्राप्ता इत्युक्ते सुखिन इत्यनर्थकमिति चेत्, नैवं, दुःखाभावमात्रमुक्तिसुखाभिरामेन वास्तवसुखप्रतिपादनार्थत्वादस्य, तथाहि—अशेषदोषक्षयतः शाश्वतमव्याबाधसुखं प्राप्ताः सुखिनः सन्तः तिष्ठन्ति, न तु दुःखाभावमात्रान्विता एवेति ॥ १९ ॥ साम्प्रतं वस्तुनः सिद्धपर्यायशब्दान् प्रतिपादयन्नाह—'सिद्ध य त्ति' गाहा, सिद्धा इति च तथा नाम कृतकृत्यत्वाद्, एवं बुद्धा इति केवलज्ञानेन विश्वावबोधात्, पारगता इति च भवार्णवपारगमनात् 'परंपरगय' त्ति पुण्यवीजसम्यक्त्वज्ञानचरणक्रमप्राप्त्युपाययुक्तत्वात् परम्परया गताः परम्परगता उच्यन्ते, उन्मुक्तकर्मकवचा सकलकर्मवियुक्तत्वात्, तथा अजरा वयसोऽभावाद् अमराः आयुषोऽभावात्, असङ्गाश्च सकलक्लेशाभावादिति ॥२०॥'निच्छिण्ण' गाहा 'अतुलं' गाहा व्यक्तार्थे एवेति ॥२१॥२२॥ औ०।

तथा किंच—

जं संठाणं तु इहं, भवं चयंतस्स चरमसमयम्मि ।
आसी य पएसघणं, तं संठाणं तहिं तस्स ॥

यदेव तुशब्दस्य व्यवहितस्यैवकारार्थत्वात् संस्थानमिह-मनुष्यभवे भवं-संसारं मनुष्यभवं वा त्यजतः सतश्च चरमसमये आसीत् देशघनं तदेव संस्थानं तत्र तस्य भवति । तच्च मनुष्यभवशरीरापेक्षया त्रिभागहीनं-त्रिभागोनं रन्ध्रापूरणात्।

तथा चाह—

दीहं वा हस्सं वा, जं चरमभवे हवेज्ज संठाणं ।
तत्तो तिभागहीणा, सिद्धाणोगाहणा भणिया ॥

दीर्घं वा पञ्चधनुःशतप्रमाणं ह्रस्वं वा हस्तद्वयप्रमाणं वाशब्दाद्-मध्यमं वा विचित्रं यच्चरमभवे संस्थानं ततस्तस्मात् संस्थानात् त्रिभागहीना सिद्धानाम् अवगाहन्ते अस्यामित्यवगाहना स्वावस्थैव भणिता तीर्थकरगणधरैः । कस्मात् त्रिभागहीनेति चेत्, उच्यते-इह देहविभागः शुषिरं ततो योगनिरोधकाले तथाविधप्रयत्नभावतः शुषिरापूरणात् त्रिभागहीनो जातः, न च वाच्यम् संहरणं तावत् प्रदेशानां सम्भवति ततः प्रयत्नविशेषः प्रदेशमात्रोऽपि कस्मान्नावतिष्ठत इति तथाविधसामर्थ्याभावात् योगनिरोधकाले अप्यपि सकर्मकात् तथा जीवस्वाभाव्याच्च । उक्तं च—"संहारसंभवातो, पएसमेत्तम्मि किन्न संवाए । सामत्थाईसामत्थाभावतओ भवे सिद्ध" तदवस्थ एव भवति, आह च-'देहतिभागा सुसिरं तप्पूरणतो तिभागहीणो उ । सो जोगनिरोहोच्चिय, जातो वि तओ य तदवत्थो" न च सिद्धस्य सतः प्रदेशसंहारसम्भवः प्रयत्नाभावादप्रयत्नस्य गतिरिव कथमिति चेत् । उच्यते समाहितमेतदसङ्गत्वादिति हेतुभिरिति,उक्तं च-"सिद्धो वि देहरहितो, सपयत्ताभावतो न संहरइ । अपयत्तस्स किह गई, नणु भणियमसंगयादीहिं ॥ " आ० म० १ अ० ।

साम्प्रतमुक्तानुवादेनैव संस्थानलक्षणं सिद्धानामभिधातुकाम आह—

ओगाहणा य सिद्धा, भवत्तिभागेण हुंति परिहीणा ।
संठाणमणित्थंथं, जरामरणविप्पमुक्काणं ॥

अवगाहनया सिद्धा भवत्रिभागेन भगवतः शरीरत्रिभागेन परिहीना भवन्ति ततस्तेषां जरामरणविप्रमुक्तानां संस्थानमनित्थंस्थं वेदितव्यम् । इत्थं प्रकारमापन्नमित्थम् तिष्ठतीति इत्थंस्थं न इत्थंस्थमनित्थंस्थं न केनचिदपि लौकिकेन प्रकारेण स्थितमिति भावः । इयमत्र भावना-योगनिरोधकाले देहविभागस्य शुषिरस्य प्रदेशैरापूरणात् पूर्वसंस्थानान्यथाव्यवस्थानतोऽनियताकारं संस्थानमनियताकारत्वादेव च तदनित्थंस्थमुच्यते, ननु सर्वथा तदभावतः सिद्धादिगुणेष्वपि यः सिद्धानां से न दीहे न हस्से इत्यादिवचनेन दीर्घत्वह्रस्वत्वादीनां प्रतिषेधः सोऽप्यनित्थंस्थः स्वसंस्थानत्वादेवमेया न पुनः सर्वथा तेषामभावतः । उक्तं च-

"सुसिरपडिपूरणातो, पुव्वागारं तहा वयत्थातो ।
संठाणमणित्थंथं, जं भणियं अणिययागारं ॥१॥
एत्तो च्चिय पडिसेहो, सिद्धाइगुणेसु दीहयाईणं ।
जमणित्थ ( थ ) त्थं पुव्वा-गारावेक्खाएँ नाभावो ॥ २ ॥"

आह किमेते सिद्धा देशभेदेन स्थिता उत नेति, उच्यते-नेति ब्रूमः । कुत इति चेत् उच्यते—यस्मात् ।

जत्थ य एगो सिद्धो, तत्थ अणंता भवक्खयविमुक्का ।
अन्नोन्नसमोगाढा, पुट्ठा सव्वे य लोगंते ॥

यत्रैव चशब्दस्यैवकारार्थत्वाद्देशे एकः सिद्धो-निर्वृतस्तत्रानन्ता भवक्षयविमुक्ता भवक्षयेण विमुक्ताः, अनेन स्वेच्छया भवावतरणशक्तिमत्सिद्धव्यवच्छेदमाह--"अन्नोन्नसमोगाढा, पुट्ठा सव्वे य लोगंते" अन्योन्यसमवगाढास्तथाविधतत्परिणामवशात् धर्मास्तिकायादिवत्, 'पुट्ठा सव्वे य लोगंते' इति--स्पृष्टाः--लग्नाः सर्वे लोकान्ते वा, पाठान्तरम् 'पुट्ठो सव्वेहिं लोगंतो' स्पृष्टः सर्वैः लोकान्तः 'लोकाग्रे च प्रतिष्ठिता' इति वचनात् । तथा-

फुसइ अणंते सिद्धे, सव्वपएसेहिँ सव्वतो सिद्धा ।
ते वि असंखेज्जगुणा, देसपएसेहिँ जे पुट्ठा ॥

ये असंख्येयगुणा वर्त्तन्ते ये देशप्रदेशैः स्पृष्टाः केभ्योऽसंख्येयगुणा इति चेत् उच्यते-सर्वप्रदेशस्पृष्टेभ्यः । कथमिति चेत्, उच्यते-इह एकस्य सिद्धस्य यदवगाहना तत्रैकस्मिन् अपि परिपूर्णतत्रे अवगाढास्तेऽपि प्रत्येकमनन्ता एवं द्वित्रिचतुःपञ्चादिप्रदेशहान्या ये अवगाढास्तेऽपि प्रत्येकमनन्ता । तथा तस्य मूलक्षेत्रस्य एकैकं प्रदेशं परित्यज्य येऽपि अवगाढास्तेऽपि प्रत्येकमनन्ता , एवं द्वित्रिचतुःपञ्चादिप्रदेशहान्या ये अवगाढास्तेऽपि प्रत्येकमनन्ता । एवं च सति प्रदेशपरिवृद्धिहानिभ्यां ये समवगाढास्ते परिपूर्णतत्रावगाढेभ्योऽसंख्येयगुणा भवन्ति । असंख्येयप्रदेशात्मकैकसिद्धावगाहक्षेत्रे प्रदेशपरिवृद्धिहानिभ्यां प्रतिप्रदेशमनन्तानां सिद्धानामवगाहनात् । उक्तं च—"एगक्खेत्ते णंता, पएसपरिवुड्ढिहाणि ततो । होंति असंखज्जगुणा, संखपएसो जमवगाहो " ॥ १ ॥

साम्प्रतं सिद्धानेव लक्षणतः प्रतिपादयति—

असरीरा जीवघणा, उवउत्ता दंसणे य नाणे य ।
सागारमणागारं, लक्खणमेयं तु सिद्धाणं ॥

अविद्यमानशरीराः अशरीराः, औदारिकादिपञ्चविधशरी-

रहिता इत्यर्थः । जीवाश्च ते घनाश्च शुषिरापूरणात् जीवघना उपयुक्ता दर्शने ज्ञाने च ।

केवलज्ञानदर्शनयोर्विशेषविषयतामुपदर्शयति—

केवलनाणुवउत्ता, जाणंता सव्वभावगुणभावे ।
पासंति सव्वतो खलु, केवलदिट्ठीहिऽणंताहिं ॥

केवलज्ञानेनोपयुक्ता जानन्ति—अवगच्छन्ति सर्वभावगुणभावान्, सर्वपदार्थगुणपर्यायान् । प्रथमो भावशब्दः पदार्थवचनो द्वितीयः पर्यायवचनः ; गुणपर्यायभेदस्त्वयम्—सहवर्त्तिनो गुणाः, क्रमवर्त्तिनः पर्यायाः । तथा पश्यन्ति सर्वतः खलु खलुशब्दस्यावधारणार्थत्वात् सर्वत एव केवलदृष्टिभिरनन्ताभिः केवलदर्शनैरनन्तत्वात् सिद्धानामिहादौ ज्ञानग्रहणं प्रथमतया तदुपयोगस्था सिद्ध्यन्तीति ज्ञापनार्थम् । आह—किमेते युगपज्जानन्ति पश्यन्ति च आहोस्वित् अयुगपदिति । उच्यते अयुगपत् ।

कथं नैवचसीयते इति चेत्, यत आह—

नाणम्मि दंसणम्मि य, एत्तो एगयरम्मि उवउत्ता ।
सव्वस्स केवलिस्सा, जुगवं दो नत्थि उवओगा ॥

ज्ञाने दर्शने च एत्तो त्ति—अनयोरेकतरस्मिन्नुपयुक्ताः, किमिति यतः सर्वस्य केवलिनः सतो युगपद् एकस्मिन् काले द्वौ न स्त उपयोगौ, तत् क्षायोपशमिकसंवेदने तथा दर्शनात् । अत्र बहु वक्तव्यं तच्च नन्द्यध्ययनटीकातोऽवसेयमिति ।

साम्प्रतं निरुपमसुखभाजस्ते इत्युपदर्शयन्नाह—

न वि अत्थि माणुसाणं, तं सोक्खं न वि य सव्वदेवाणं ।
जं सिद्धाणं सोक्खं, अव्वाबाहं उवगयाणं ॥

नैवास्ति मानुषाणां चक्रवर्त्त्यादीनामपि तत्सौख्यं, न चैव देवानामनुत्तरसुरपर्यन्तानामपि यत् सिद्धानां सौख्यम् अव्याबाधामुपगतानां, विविधा आबाधा व्याबाधा न व्याबाधा अव्याबाधा तामुप—सामीप्येन गतानां प्राप्तानाम् ।

यथा नास्ति तथा भङ्ग्योपदर्शयति—

सुरगणसुहं समत्तं, सव्वद्धा पिंडियं अणंतगुणं ।
न य पावइ मुत्तिसुहं, ऽणंताहि वि वग्गवग्गूहिं ॥

सुरगणसुखं समस्तं देवसङ्घातसुखं समस्तं सम्पूर्णमतीतानागतवर्त्तमानकालोद्भवमित्यर्थः । पुनः सर्वाद्धापिण्डितं समयैर्गुणितं ततः पुनरप्यनन्तगुणम् । किमुक्तं भवति—सर्वाद्धासमयगुणितं सत् यत् प्रमाणं भवति तावत्प्रमाणं किलासत्कल्पनया वा, एकैकस्मिन्नाकाशप्रदेशे स्थाप्यत इत्ययं सकललोकाकाशानन्तप्रदेशपूरणलक्षणेनानन्तगुणकारेण गुणितमिति । एवं प्रमाणस्य सतः पुनर्वर्गो क्रियते । तस्याऽपि वर्गितस्य भूयो भूयः एवमनन्तैर्वर्गवर्गैर्वर्गितं तथापि तथा प्रकर्षगतमुक्तिसुखं न प्राप्नोति ।

तथा चैतदभिहितार्थानुवाद्याह—

सिद्धस्स सुहो रासी, सव्वद्धापिंडितो जइ हवेज्जा ।
सोऽणंतवग्गभइतो, सव्वागासे न माइज्जा ॥

सिद्धस्य सम्बन्धी सुखानां राशिः सुखराशिः—सुखसङ्घात इत्यर्थः सर्वाद्धापिण्डितः सर्वकालसमयगुणितः । औ० । म० । प्र० । आ० । दश० । कर्म० । प्रति० । पं० सू० ।

साम्प्रतमस्य रूपस्यापि सतोऽस्य निरुपमतां प्रतिपादयति—

जह नाम कोई मिच्छो, नगरगुणे बहुविहे वि याणंतो ।
न चएइ परिकहेउं, उवमाइ तहिं असंतीए ॥

यथानाम कश्चित् म्लेच्छो नगरगुणान् सद्मप्रासादादीन् बहुविधान्—अनेकप्रकारान् अरण्यगतः सन् अन्यम्लेच्छेभ्यो न शक्नोति परिकथयितुम् । कुतो निमित्तादित्यत आह—उपमायां तत्रासत्यां तद्विषये उपमाया अभावादिति भावः ; एष गाथाक्षरार्थः । भावार्थः कथानकादवसेयः, तच्चेदम्—"एगो महारण्णवासी मिच्छो रण्णे चिट्ठइ । अन्नो य एगो राया आसेण अवहरिओ तं अडविं पविसिओ, तेण दिट्ठो । सक्कारेऊण रायणयरं नीओ । रण्णा वि सो नगरमाणीतो पच्छा उवगारि त्ति गारवमुवणिता जह राया तह चिट्ठइ । धवलघराइं वि भोगेण विभासा । कालेण रण्णं सरिउमाढत्तो आरण्णगा पुच्छंति करिसं नगरं ति, सो वि याणंति वित्तथोवमाभावा न सक्कइ नगरगुणा परिकहेउं" एष दृष्टान्तः ।

अयमर्थोपनयः—

इय सिद्धाणं सोक्खं, अणोवमं नत्थि तस्स ओवम्मं ।
किंचि विसेसेणेत्तो, सारिक्खमिणं सुणह वोच्छं ॥

इति—एवमुक्तेन प्रकारेण सिद्धानां सौख्यमनुपमं वर्तते । किमित्यत आह—यतो नास्ति तस्य औपम्यम्, उपमीयमानता उपमानासम्भवात् । तथाऽपि बालजनप्रतिपत्तये किञ्चिद्विशेषेण एत्तो त्ति—आर्षत्वादस्य सादृश्यमिदं वक्ष्यमाणलक्षणं शृणुत तदहं वक्ष्ये इति ।

प्रतिज्ञातमेव निर्वाहयति—

जह सव्वकामगुणियं, पुरिसो भोत्तूण भोयणं कोइ ।
तण्हाछुहाविमुक्को, अच्छेज्ज जहा अमियतित्तो ॥

यथेत्युदाहरणोपन्यासार्थः सर्वकामगुणितं सकलसौन्दर्यसंस्कृतं भोजनं भुज्यते इति भोजनं कूरकुलमिति, वचनात्, कर्मण्यनट्, कश्चित् पुरुषो भुक्त्वा तृट्क्षुद्विमुक्तः सन् यथा आसीत अमृततृप्तः आबाधारहितत्वात् इह च रसनेन्द्रियमधिकृत्येष्टविषयं प्राप्ता औत्सुक्यविनिवृत्तेः सुखदर्शनं सकलेन्द्रियार्थावाप्त्या शेषौत्सुक्यनिवृत्त्युपलक्षणार्थं । अन्यथा बाधान्तरसम्भवतः सुखाभावः स्यात् सर्वबाधाविगमेन चात्र प्रयोजनम् । उक्तं च—

"वेणुवीणामृदङ्गादि—समायुक्तेन हारिणा ।
श्लाघ्यस्मरकथाबद्ध—गीतेन स्तिमितः सदा ॥१॥
कुट्टिमादौ विचित्राणि, दृष्ट्वा रूपाण्युत्सुकः ।
लोचनानन्ददायीनि, लीलावन्ति स्वकानि हि ॥२॥
अम्लानगुरुकर्पूर—गन्धमाघ्राय निस्पृहः
नानारससमायुक्तं, भुक्त्वाऽन्नमिह मात्रया ॥३॥
पीत्वोदकं च तृप्तात्मा, स्वादयन् स्वादिमं शुभम् ।
मृदुकूलसमाक्रान्त—दिव्यपर्यङ्कसंस्थितः ॥४॥
सहसाऽम्भोदसंशब्द—श्रुतेर्भयघनं भृशम् ।
इष्टभार्यापरिष्वक्त—स्तदन्तेऽभवन्नरः ॥५॥

सो यथानिकस्याप्यासीत् पैचित्र्यमिति ... पुनरुक्ति ।

सर्वेन्द्रियार्थसम्प्राप्त्या, सर्वाबाधानिवृत्तिजम् ।
यद्वेदयति संद् हृष्य, प्रशान्तेनान्तरात्मना ॥६॥
मुक्तात्मनस्ततोऽनन्त, सुखमाहुर्मनीषिणः ॥" इति ।

इय सव्वकालतित्ता, अतुलं निव्वाणमुवगया सिद्धा ।
सामयमव्वाबाहं, चिट्ठंति सुही सुहं पत्ता ॥

इति—पूर्वमुक्तेन प्रकारेण सर्वकालतृप्ताः, स्वस्वभावावस्थितत्वात् अतुलं निर्वाणमुपगताः सिद्धाः सर्वदा सकलौत्सुक्यनिवृत्तेः, यतश्चैवमतः शाश्वतम् सर्वकालभावि अव्याबाधं—व्याबाधापरिवर्जितं सुखं प्राप्ताः सुखिनस्तिष्ठन्ति । अथ सुखं प्राप्ता इत्युक्ते सुखिन इत्यनर्थकम्, नैष दोषोऽस्य दु:खाभावमात्रमुक्तिसुखवादिमतेन व्यस्तत्वसुखप्रतिपादनार्थत्वात्, तथा ह्यशेषदोषक्षयतः शाश्वतमव्याबाधं सुखं प्राप्ताः सन्तः सुखिनस्तिष्ठन्ति न तु दु:खाभावमात्रान्विता एवेति । आ० म० १ अ० ।

सिद्धो भूत्वा क परिवसेत्—

से भयवं जरामरणाइं अणेगसंसारियदुक्खजालविमुक्के समाणे जत्थ कहिं परिवसेज्जा, गोयमा ! जत्थ णं न जरा ण मच्चू न वाहीओ णो अयसब्भक्खाणं संतावुव्वेगकलिकलहदारिद्दहपरिकिलेसणइट्ठविओगो किं बहुणा एगंतेण अक्खयधुवमासयनिरुवमं अणंतसोक्खं परिवसेज्ज त्ति बेमि । महा० २ चू० ।

साम्प्रतं सिद्धपर्यायशब्दान् प्रतिपादयति—

सिद्ध त्ति य बुद्ध त्ति य, पारगय त्ति य परंपरगय त्ति ।
उम्मुक्ककम्मकवया, अजरा अमरा असंगा य ॥

सिद्धा इति कृतकृत्यत्वात् बुद्धा इति केवलज्ञानदर्शनाभ्यां विश्वावगमात् पारगता इति भवार्णवपारगमनात्, परम्परागता इति पुण्यबीजसम्यक्त्वज्ञानचरणक्रमप्रतिपन्नत्वात्, परम्परागताः । उन्मुक्तकर्मकवचाः सकलकर्मवियुक्तत्वात्, तथा अजरा वयसोऽभावात्, अमरा आयुषोऽभावात् असङ्गाश्च सकलक्लेशाभावात् ।

साम्प्रतमुपसंहरति—

निच्छिन्नसव्वदुक्खा, जाइजरामरणबंधणविमुक्का ।
अव्वाबाहं सोक्खं, अणुहवयंती सया कालं ॥

निस्तीर्णम्-अतिक्रान्तं सर्वम्-अशेषं दु:खं यैस्ते निस्तीर्णसर्वदु:खा जातिर्जन्म, जरा—वयोहानिर्मरणं—प्राणत्यागः बन्धनं-संसारबन्धहेतुरष्टप्रकारं कर्म तैर्मुक्ता अव्याबाधं व्याबाधारहितं सौख्यं सदाकालमनुभवन्ति । आ० म० १ अ० । आ० । " सिद्धा निगोयजीवा, वणस्सई कालपुग्गला चेव । सव्वमलोगागासं, छप्पेए णतया णेया ॥१॥" नं० । ( केवली समुद्घातं कृत्वा सिद्ध्यतीति 'केवलिसमुग्घाय' शब्दे तृतीयभागे ६५६ पृष्ठे उक्तम् । ) "कणादादिपरिकल्पितोऽनादि सिद्धः । उत्त० २ अ० । ( ज्ञानमप्रतिघं यस्य, वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च, सह सिद्धं चतुष्टयम् ॥१॥" इत्यादिको विशेषः ' परिसह ' शब्दे पञ्चमभागे ६४२ पृष्ठे गतः । )

( सिद्धानामाशातना ' आसायणा ' शब्दे द्वितीयभागे ४८२ पृष्ठे गता । ) परिडतहापरिषिगणिकृतप्रश्नो यथा—अन्यच्च सिद्धजीवानां कश्चरणपादाङ्गुलीनां सावयवाकारः संभाव्यन्ते नवेति ? । अन्यच्च सिद्धजीवानां कश्चरणाद्याकारः सभाव्यते, यतः—' अरूविणो जीवघणा ' इत्यत्र घनाश्च शुषिरपूरणतो निचितप्रदेशतयेति श्रीशान्तिसूरिवचनेन शरीरान्तर्वर्त्तिशुषिरपूरणमेव दृश्यते, नत्ववयवानां बाह्यान्तरपूरणमिति, तथा श्रीहरिभद्रसूरिश्रीमलयगिरिप्रमुखैरपि शुषिरपूरणमेवोक्तमस्तीति । ही० २ प्रका० । सिद्धानां वर्गणा ' वग्गणा ' शब्दे षष्ठभागे गता । ) " सिद्धा मे मंगलं " आव० ४ अ० । ( " सिद्धा लोगुत्तमा " अस्य पदस्य व्याख्या ' पडिक्कमण ' शब्दे पञ्चमभागे २७० पृष्ठे गता । ) अर्हत्प्रतिमायाम्, स्था० ४ ठा० २ उ० । शाश्वते, स्था० ४ ठा० २ उ० । साधितार्थे, कल्प० १ अधि० ६ क्षण । कृतार्थे, पा० । स्था० । ध० । ( सिद्धानामर्हतां च नमस्कारे क्रमप्रदर्शनम् । 'णमुक्कार' शब्दे चतुर्थभागे १८४३ पृष्ठे दर्शितम् । तत्रैव सिद्धनमस्कारहेतुफलं च दर्शितं । ) ' अट्ठसय सिद्धा' अष्टशतसिद्धा निर्वृता इत्यनन्तकालजातमित्याश्चर्यम् । स्था० १० ठा० ३ उ० । साधने विचारयश्रुतज्ञाने प्रतिष्ठिते, आ० चू० ४ अ० । 'कम्मट्ठक्खयसिद्धा, साहावियनाणदंसणसमिद्धा ।' दश० । लोकोत्तरलीला पत्रस्य द्वितीयदिवसे, चं० प्र० १० पाहु० । कल्प० । निष्पादिते, निष्पन्ने, नि० चू० २० उ० । बृ० । निर्णीते, द्वा० २६ अष्ट० । निश्चितप्रामाण्ये, " सिद्धं सिद्धट्ठाणं ( १ गा० ) ।" सम्म० १ काण्ड । प्रख्याते, प्रथिते, नि० चू० १ उ० । प्रतीते, पञ्चा० ११ विव० । प्रतिष्ठित, पा० । विव० । दश० । ग० । फलाव्यभिचारेण प्रतिष्ठिते सकलनयव्यापकत्वे त्रिकुटीपरिशुद्धत्वेन च प्रत्याख्याने, ल० । ध० । 'सिद्धे भो पयतो नमो जिणमये, नंदी सया संजमे' आव० ५ अ० । दिव्यपुरुषे, द्वा० २६ द्वा० । माल्यवद्-वक्षस्कारपर्वतस्य प्रथमकूटे ; जं० ४ वक्ष० । अञ्जनपादलेपतिलकगुटिकाशकलतूताकर्षणवैक्रियत्वप्रभृतयः सिद्धयस्ताभिः सिध्यति स्म सिद्धः । लब्धिमति, अष्टसु प्रभावकेष्वन्यतमे, प्रव० १४८ द्वार । ध० । वसुश्रेष्ठिपुत्रे ध० र० २ अधि० । ( तत्कथा 'वसु' शब्दे षष्ठे भागे उक्ता । )

सिध्म—पुं० । कुष्ठभेदे, प्रश्न० ५ संव० द्वार ।

सिद्धंत—सिद्धान्त—पुं० । सिद्धः प्रमाणप्रतिष्ठितमर्थमन्तं संवेदनं निष्ठारूपं नयतीति सिद्धान्तः । आगमे, अनु० । विशे० । आर्षवचने, द्वा० २१ द्वा० । समय, जी० १ प्रति० । बृ० ।

अधुना सिद्धान्तद्वारमाह—

जेण उ सिद्धं अत्थं, अंतं णयतीति तेण सिद्धंतो ।
सो सव्वपडीतंतो, अहिगरणे अब्भुवगमे य ॥ १८२ ॥

येन कारणेन प्रमाणतः सिद्धमर्थमन्तं नयति—प्रमाणकोटिमारोहयतीति तेन कारणेन सिद्धान्त उच्यते । स एष उच्यते —आगमतोऽनागमतो द्विविधः पुस्तकप्रन्यस्ताभावतश्चतुर्विधः, तद्यथा—सर्वतन्त्रसिद्धान्तः प्रतितन्त्रसिद्धान्तः, अधिकरणसिद्धान्तोऽभ्युपगमसिद्धान्तश्च । बृ० १ उ० १ प्रक० । विशे० । आगमोक्तानुष्ठाने ग० २ अधि० ।

सिद्धंतकहा-सिद्धान्तकथा-स्त्री० । स्वसमयकथायाम् , पो० १४ विव० ।

सिद्धंतपडिणीय-सिद्धान्तप्रत्यनीक-पुं० । सिद्धान्तविनाशके, पं० व० ४ द्वार ।

सिद्धंतपरम्मुह-सिद्धान्तपराङ्मुख-पुं० । आगमोक्तानुष्ठानशून्ये, ग० २ अधि० ।

सिद्धंतरहस्स-सिद्धान्तरहस्य-न० । आगमगुप्तार्थे, "आमे घडे निहत्तं जहा जलं न-घडं विणासेइ । इय सिद्धन्तरहस्सं, अप्पाधारं विणासेइ " ॥ १ ॥ नं० ।

सिद्धंतसार-सिद्धान्तसार-पुं० । आगमस्य सारभूते, ध० १ अधि० ।

सिद्धंताणणुवाइ- सिद्धान्ताननुपातिन्-पुं० । स्वच्छन्दबुद्धिरचितत्वेन जैनागमाननुसारिणि, प्रव० २ द्वार ।

सिद्धंतामयपडिपुण्णकण्णपुडअ-सिद्धान्तामृतप्रतिपूर्णकर्णपुटक-पुं०।आगमसुधासम्भृतश्रवणच्छदपत्रे,जीवा०२४अधि० ।

सिद्धंतिय-सैद्धान्तिक-सिद्धान्तवेत्तरि, प्रव० १० द्वार ।

सिद्धंतियवयण-सैद्धान्तिकवचन-न० । आगमभणिते, जी० १ प्रति० ।

सिद्धकंचणया-सिद्धकाञ्चनता-स्त्री० । सिद्धसुवर्णत्वे, पो० ८ विव० ।

सिद्धकूड-सिद्धकूट-पुं० । न० । महाहिमवत्- प्रथमकूटे स्था० ८ ठा० ३ उ० । शिखरिवर्षधरपर्वतस्य प्रथमकूटे , स्था० २ ठा० ३ उ० । जम्बूद्वीपे सौमनसे वक्षस्कारपर्वतस्य गन्धमादनस्य पर्वतस्य प्रथमकूटे. स्था० ७-ठा० ३ उ० । रुक्मिवर्षधरपर्वतस्य प्रथमकूटे स्था० ८ ठा० ३ उ० । निषधवर्षधरपर्वतस्य प्रथमकूटे स्था० ६ ठा० ३ उ० । दक्षिणभरतदीर्घवैताढ्यस्य प्रथमकूटे स्था० ६ ठा० ३ उ० । ( अस्य व्याख्या 'कूड ' शब्दे तृतीयभागे ६१८ पृष्ठे गता । ) कच्छादिविजयस्थदीर्घवैताढ्यानां प्रथमकूटे , स्था० ६ ठा० ३ उ० । विद्युत्प्रभवक्षस्कारपर्वतस्य प्रथमकूटे, स्था० ६ ठा० ३ उ० । नीलवद्वक्षस्कारपर्वतस्य प्रथमकूटे. स्था० ६ ठा० ३ उ० । ऐरवते दीर्घवैताढ्यस्य प्रथमकूटे, स्था० ६ ठा० ३ उ० ।

सिद्धकेवलनाण-सिद्धकेवलज्ञान-न०। सिद्धकेवलज्ञाने,स्था०।

सिद्धकेवलणाणे दुविहे पण्णत्ते , तं जहा-सिद्धकेवलणाणे चेव, परंपरसिद्धकेवलणाणे चेव । स्था० २ ठा० १ उ० । ( व्याख्या स्वस्वस्थाने )

सिद्धखेत्त-सिद्धक्षेत्र-न० । शत्रुञ्जयपर्वते, ती० १ कल्प ।

सिद्धगइ-सिद्धगति-स्त्री० । सिद्ध्यन्ति-निष्ठितार्था भवन्ति यस्यामिति सिद्धिः -लोकान्तक्षेत्रलक्षणा सैव गम्यमानत्वाद् गतिः । ना० । दश० । स० । सिद्धैर्गम्यमानायामीषत्प्राग्भारायां पृथिव्याम्, भ० १ श० १ उ० । स्था० ।

सिद्धगइनामधेज्ज-सिद्धगतिनामधेय-न० । सिद्धगतिरिति नामधेयं यस्य तत्सिद्धगतिनामधेयम् । सिद्धस्थाने, स० १ सम० । रा० ।

सिद्धगंडिया-सिद्धगण्डिका-स्त्री०। सिद्धवक्तव्यताप्रतिबद्धायां ग्रन्थपद्धतौ भ० ११ श० ६ उ० । ( सा च 'सिद्ध ' शब्देऽस्मिन्नेव भागे दर्शिता । )

सिद्धगुण-सिद्धगुण-पुं० । सिद्धसहभाविगुणेषु, प्रव० ।

इदानीं 'सिद्धेगत्तीसगुण' त्ति पदसप्तत्यधिकद्विशततमं द्वारमाह—

नव दरिसणंमि ९ चत्ता-रि आउए ४ पंच आइमे अंते ५ ।
सेसे दो दो भेया ६, खीणेऽभिलावेण इगतीसं ॥१६०७॥

दर्शने-दर्शनावरणीये कर्मणि , चक्षुर्दर्शनाचक्षुर्दर्शनावधिदर्शनकेवलदर्शनावरणनिद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धिलक्षणा भेदा ,तथाऽऽयुषि नारकतिर्यङ्नरामरायुर्लक्षणाश्चत्वारः त था।दिमे ज्ञानावरणीये मतिश्रुतावधिमनःपर्यवकेवलज्ञानावरणीयस्वरूपाः पञ्च, अन्त्येऽप्यन्तरायाख्ये कर्मणि दानलाभभोगोपभोगवीर्यान्तरायरूपाः पञ्चैव भेदाः शेषे च कर्मचतुष्के प्रत्येकं द्वौ द्वौ भेदौ, तत्र वेदनीये सातासातात्मकौ, मोहनीये दर्शनमोहनीयचारित्रमोहनीयलक्षणौ नामकर्मणि शुभनामाशुभनामकौ गोत्रे उच्चैर्गोत्रनीचैर्गोत्राभिधौ भेदौ भवत इति. तदेवमेते सर्वेऽपि भेदाः क्षीणाभिलापेन क्षीणशब्दविशेषितत्वेन प्रोच्चार्यमाणा एकत्रिंशत्संख्या सिद्धानां गुणा भवन्ति , क्षीणचक्षुर्दर्शनावरण इत्यादिकश्चाभिलापः कार्यः ।

अथवा प्रकारान्तरेणैकत्रिंशत्सिद्धगुणानाह-

पडिसेहणा संठाणे, य वन्नगंधरसफासवेए य ॥
पण ५ पण ५ दुग २ पण ५ ऽट्ठ ८ तिही ३ ,
एगतीसमकाय१संग २ रुहा ३ ॥ १६०८ ॥

प्रतिषेधेन-निषेधेन संस्थानवर्णगन्धरसस्पर्शवेदानां क्रमेण पञ्च पञ्च द्विपञ्चाष्टत्रिभेदानां, तथा अकायासङ्गारुहपदत्रितयेन, चैकत्रिंशत्सिद्धगुणा भवन्ति, तत्र संतिष्ठन्ते एभिरिति संस्थानानि-आकाराः, तानि च पञ्च परिमण्डलवृत्तत्र्यस्रचतुरस्रायतभेदात्, तत्र परिमण्डलं संस्थानं बहिर्वृत्ततावस्थितप्रदेशजनितमन्तः शुषिरं यथा वलयस्य, तदेवान्तःपूर्णं वृत्तं यथा दर्पणस्य , त्र्यस्रं-त्रिकोणं यथा शृङ्गाटकस्य, चतुरस्रं-चतुष्कोणं यथा स्तम्भस्य कुम्भिकायां , आयतं दीर्घं यथा दण्डस्य, घनप्रतरादिप्रतिभेदव्याख्या च बृहदुत्तराध्ययनटीकादिभ्योऽवसेया, तथा वर्णाः पञ्च श्वेतपीतरक्तनीलकालभेदात् , गन्धो द्विधा-सुरभीतरभेदात् ,रसाः पञ्च तिक्तकटुकषायाम्लमधुरभेदात् , स्पर्शा अष्टौ-गुरुलघुमृदुकर्कशशीतोष्णस्निग्धरूक्षभेदात् , वेदास्त्रयः -स्त्रीपुंनपुंसकभेदात् , तथा सिद्धा अकायादिकायपञ्चकविमुक्ताः , तेषां सिद्धत्वे प्रथमसमय एव सर्वात्मना त्यक्तत्वात् , तथा असङ्गा बाह्याभ्यन्तरसङ्गरहितत्वात् ,तथा अरुहा न रोहन्ति भूयः संसारे समुत्पद्यन्ते इत्यरुहाः , संसारकारणानां कर्मणां निर्मूलकाषंकषितत्वात् ,उक्तं च—दग्धे बीजे यथाऽत्यन्तं

प्रादुर्भवति नाङ्कुरः । कर्मबीजे तथा दग्धे, न रोहति भवाङ्कुरः ॥ १ ॥ तदेवमष्टाविंशतिसंख्यानां संस्थानादीनां निषेधादकायत्वासङ्गत्वारुहत्वविधानाच्च सिद्धानामेकत्रिंशद्गुणा भवन्ति, संस्थानाद्यभावोऽकायत्वादिसद्भावौ च सिद्धानां सुप्रसिद्धावेव, तथा चाचाराङ्गम्-'से न दीहे,"०(सू०१७०+) इत्यादि सूत्रं ' लोगसार ' शब्दे पष्ठभागे गतम् । ) एतेच्च सिद्धगुणप्रतिपादकं द्वारम् । प्रव० २७६ द्वार ।

सिद्धघोष-सिद्धघोष-पुं० । ऐरवते वर्षे भविष्यति द्वितीयतीर्थकरे, प्रव० ७ द्वार ।

सिद्धजत्त-सिद्धयात्र-पुं० । सुरभिपुरपार्श्वे स्वनामख्याते नाविके, आ० क० १ अ० । आ० म० । ( तत्कथा ' कंबल ' शब्दे तृतीयभागे १७१ पृष्ठे गता । )

सिद्धजोगि(ण्)-सिद्धयोगिन्-पुं० । रागद्वेषाभावेनोपशमीकृतार्थे, अष्ट० ६ अष्ट० ।

सिद्धजोगिसंसरणजोग-सिद्धयोगिसंस्मरणयोग-पुं० । सिद्धाः प्रतिष्ठिता लब्धात्मलाभा ये योगिनस्तेषां संस्मरणयोग — स्मरणव्यापारः । इष्टफलसिद्धये यो हि यत्र कर्मणि सिद्धस्तदनुसरणे, षो० १५ विव० ।

सिद्धट्ठाण-सिद्धस्थान-न० । स्थीयतेऽस्मिन्निति स्थानमित्यधिकरणसाधनोऽयं शब्दस्ततश्च सिद्धस्य स्थानं सिद्धस्थानम् । सिद्धपत्तने, विशे० । निश्चितप्रामाण्ये, स० २५ सम० ।

सिद्धत्थ-सिद्धार्थ-पुं० । सिद्धा अर्था अस्मिन्निति सिद्धार्थः । पो० ६ विव० । सर्षपे, अनु० । श्वेतसर्षपे कल्प० १ अधि० ३ क्षण । ग० । रा० । श्रमणस्य भगवतो महावीरस्य पितरि क्षत्रियकुण्डग्रामराजे, स० । आव० । आचा० । दर्श० । आ० म० । कल्प० । ति० । प्रव० । अस्थिग्रामे वीरं प्रत्युपसर्ग कुर्वतः शूलपाणेर्यक्षस्य निग्राहके स्वनामख्याते यक्षे, स्था० १० ठा० ३ उ० । आ० क० । ('उंउंबरदत्त' शब्दे द्वितीयभागे ६८३ पृष्ठे कथा गता । ) पाटलिखण्डनगरराजनि, विपा० १ श्रु० ६ अ० । मण्डिकग्रामे स्वनामख्याते वणिजि, आ० चू० १ अ० । वीराङ्गदस्य प्रव्राजके स्वनामख्याते आचार्ये, नि० । दशमकल्पविमानभेदे, स० ० सम० । जम्बूद्वीपे ऐरवते वर्षे उत्सर्पिण्यां भविष्यति द्वितीये तीर्थकरे, स० । रुद्रे, दे० ना० ८ वर्ग ३१ गाथा ।

सिद्धत्थग-सिद्धार्थक-पुं० । सर्षपे, पञ्चा० ४ विव० । भ० । ज्ञा० । अनु० । स्था० ।

सिद्धत्थगजाल-सिद्धार्थकजाल-न० । सिद्धार्था — सर्षपा येन जालेन गृह्यन्त तस्मिञ्जाले, नि० चू० ११ उ० ।

सिद्धत्थगाम-सिद्धार्थग्राम-पुं० । सिद्धार्थप्रधाने ग्रामे, यत्र वीरप्रभुर्गोशालेन सह विहृतवान् । भ० ६ श० १ उ० ।

सिद्धत्थणिव-सिद्धार्थनृप-पुं० । श्रीमहावीरस्वामिपितरि, प्रति० ।

सिद्धत्थपुर-सिद्धार्थपुर-न० । सिद्धार्थग्रामे, ' ततो अणारियदेसाओ णिग्गया पढमसरए सिद्धत्थपुरं गया ' आ० म० १ अ० । कल्प० । सघा० । यत्र गोशालस्तिलस्तम्बं दृष्टवान् । आ० चू० १ अ० । आ० म० ।

सिद्धत्थव-सिद्धस्तव-न० । सिद्धानां स्तवे श्रुतस्तवसिद्धस्तवयोः कस्मिन्नावश्यकेऽन्तर्भाव इति ? प्रश्ने , अत्रोत्तरम्—श्रुतस्तवसिद्धस्तवयोः कायोत्सर्गावश्यकेऽन्तर्भाव इत्यावश्यकबृहद्वृत्त्यनुसारेण ज्ञायते ॥ ३ ॥ सेन० १ उल्ला० ।

सिद्धत्थवण-सिद्धार्थवन-न० । ऋषभदेवस्य निष्क्रमणवने , आ० म० १ अ० । कल्प० । आ० चू० ।

सिद्धत्थसारहि-सिद्धार्थसारथि-पुं० । सिद्धार्थनरेन्द्रसारथौ, सिद्धार्थसारथिदेवेन गृहीतहरिशवो बलदेवः प्रतिबोधित इति । सूत्र० १ श्रु० १ अ० १ उ० ।

सिद्धत्थसुअ-सिद्धार्थसुत-पुं० । सिद्धार्थनरेन्द्रस्य सुतोऽपत्यम् । वर्द्धमानस्वामिनि , क० प्र० १ प्रक० ।

सिद्धत्था-सिद्धार्था-स्त्री० । संवरराजभार्यायामभिनन्दनजिनमातरि, ति० । "तिन्नेव सयसहस्सा, अभिणंदणजिणवरस्स सीसाणं । सव्वत्थीरियधयस्स सिद्धत्था सवरं सुयस्स" ति० । आव० । अभिनन्दनजिनस्य निष्क्रमणशिविकायां सर्षपप्रमाणसुवर्णकणरचितसुवर्णमणिमयकणिठकायाम् , औ० ।

सिद्धपय-सिद्धपद-न० । सिद्धं—प्रतिष्ठितं चालयितुमशक्यमित्येकोऽर्थः , ततः सिद्धानि पदानि येषु ते सिद्धपदाः । कर्मप्रकृतिप्राभृतादिषु , न हि तेषां पदानि कैश्चिदपि चालयितुं शक्यन्ते , तेषां सर्वज्ञोक्तानुसारित्वात्स्वसमये जीवस्थानगुणस्थानरूपेषु पदेषु, कर्म० ५ कर्म० ।

सिद्धपाहुड-सिद्धप्राभृत-न० । स्वनामख्याते सिद्धाधिकारप्रतिपादके ग्रन्थे , नं० ।

सिद्धपुत्त-सिद्धपुत्र-पुं० । मुण्डे सशिखाके सभार्यके गृहस्थे , बृ० ३ उ० । ध० । ग० । सभार्यकोऽभार्यको वा णियमासुक्कंबरधरो खुरमुंडो ससिही असिही वा णियमा अडंडगो अपत्तगो य सिद्धपुत्तो भवति । नि० चू० १ उ० । जीं० । नं० । आ० म० ।

सिद्धपुर-सिद्धपुर-न० । गुर्जरधरित्र्यां स्वनाख्याते पुरे, अष्ट० ।

अथ श्रीमद्यशोविजयोपाध्यायैः एतद् ज्ञानसाराभिधशास्त्रं रचितं तत्तत्त्वादिप्रतिपादकं वृत्तमुच्यते—

सिद्धिं सिद्धपुरे पुरन्दरपुरस्पर्द्धावहे लब्धवान् ,
चिद्दीपोऽयमुदारसारमहसा दीपोत्सवे पर्वणि ।
एतद्भावनभावपावनमनश्चञ्चच्चमत्कारिणां ,
तैस्तैर्दीपशतैः सुनिश्चयमतैर्नित्योऽस्तु दीपोत्सवः ॥१॥

सिद्धिं सिद्धपुरे इति । अयं ग्रन्थः सिद्धपुरे नगरे सूत्ररचनया सिद्धिं लब्धवान् उदारसारमहसा-प्रधानसारतेजसा दीपोत्सवे पर्वणि—दीपालिकादिने सम्पूर्णतां गतः , कथंभूतोऽयं ग्रन्थः ? चिद्दीपः —ज्ञानप्रदीपः एतद्भावनभावपावनमनश्चञ्चच्चमत्कारिणां जीवानाम् एतस्य ग्रन्थस्य भावना आत्मतन्मयता तस्या भावः अर्थप्राप्तसमाध्यवसायः तेन पावनं—पवित्रं मनः—चित्तं तत्र चञ्चन् मनोहारी चमत्कारो येषां ते तेषां तैः तैः निर्मलोपयोगलक्षणैः दीपशतैः सुष्ठु निश्चयो वस्तुधर्मः तस्य यद् ज्ञानं तदेव मतम्—इष्टं तैः , तेषां ज्ञानचमत्कारिणां दीपोत्सवः नित्यः निरन्तर

अस्तु-भवतु, इत्यनेन यथा येऽज्ञानगृहीतात्मरसमग्नानां नित्यं दीपोत्सव एवास्ति ॥ १३ ॥ अष्ट० ३२ अष्ट० ।

सिद्धपुरिस- सिद्धपुरुष-पुं० । विद्यासिद्धे पुरुषे , 'तप्पहाव- ग सो महासिद्धीहिं-अलौकियो सिद्धपुरिस त्ति विक्खा- ओ । ती० ५४ कल्प ।

सिद्धभाव-सिद्धभाव-पुं० । सिद्धत्वे पं० सू० ४ सूत्र ।

सिद्धभूमि-सिद्धभूमि-पुं० । ईषत्प्राग्भाराया पृथिव्याम् ,आ० म० १ अ० ।

सिद्धमग्ग- सिद्धमार्ग-पुं० । हितप्राप्तिपथे: उपा० २अ० । सि- द्धिशब्देन श्रमणधर्मस्य वशीकारस्तस्य मध्ये लक्षणया प्रकर्ष । कल्प० १ अधि० ५ क्षण ।

सिद्धमणोरम-सिद्धमनोरम-पुं० । द्वितीयदिवसे, जं० ७ व- क्ष० ।

सिद्धराय-सिद्धराज-पुं० । चौलुक्यवंशे अणहिलपट्टनराजे जयसिंहदेवे ' तस्यान्वये समजनि प्रबलप्रताप-तिग्मद्युति क्षितिपतिर्जयसिंहदेव । येन स्ववंशसवितर्यपरार्चिते च, श्रीसिद्धराज इति नाम निज व्यलेखि ॥१॥ " प्रा० ४ पाद ।

सिद्धवरसासण-सिद्धवरशासन-न० । सिद्धानां-निष्ठितार्थानां वरशासनं-प्रधानाज्ञा सिद्धवरशासनम् । सर्वज्ञाऽऽज्ञायाम् , प्रश्न० १ संव० द्वार ।

सिद्धसक्खिय-सिद्धसाक्षिक-त्रि० । सिद्धा- मुक्तिपदप्राप्ता साक्षिणो दिव्यज्ञानभावेन समक्षभाववर्तिनो यत्र तत् सिद्धसाक्षिकम् । सिद्ध साक्षिणं कृत्वा कृत, पा० ।

सिद्धसरण-सिद्धशरण-न० । सिद्धाश्रयणे, " कम्मट्ठक्खय- सिद्धा, सहाडुया नाणदंसणसमिद्धा । सव्वट्ठलद्धसिद्धा, ते सिद्धा सन्तु मे सरणं ॥ १ ॥ " द० प० ।

सिद्धसूरि-सिद्धसूरि-पुं० । स्वनामख्याते गर्गाचार्यशिष्ये, मा- घकविपितृव्यपुत्र सिद्धनामा निर्वेदाद् गर्गाचार्यसमीपे दी- क्षा गृहीत्वा सिद्धसूरिनामा जात । अनेन धर्मदासगणि- कृताया उपदेशमालायाष्टीका उपमितभवप्रपञ्चकथा चेति ग्रन्था रचिता । विक्रम—९६२ संवत्सरेऽयं स्वर्गत ,अपरश्च सिद्धसूरि उकेशगच्छीयो देवगुप्तसूरिशिष्य तेन वि- क्रम-११९२ संवत्सरे बृहत्क्षेत्रसमासवृत्तिनामा ग्रन्थो र- चित । जै० इ० ।

सिद्धसेणदिवागर-सिद्धसेनदिवाकर-पुं० । समयोद्भूतसम- स्तजनशाङ्करमोविध्वंसकत्वेनावातयथार्थाभिधान सिद्ध- सेनदिवाकर । सम्म० १ काण्ड । सम्मत्यादिविविधग्रन्थका रक स्वनामख्याते आचार्ये प० व० ४ द्वार । नं० । आ० म० । सि० चू० । आव० ।( 'कुडंगेसर' शब्द तृतीयभागे ५७६ पृष्ठ एतत्प्रसङ्गेन महाकालीलिङ्गभवनं दर्शितम् । )

सिद्धसेणसूरि--सिद्धसेनसूरि-पुं० । चन्द्रगच्छे श्रीदेवगुप्तसू- रिशिष्ये तेन विक्रम—११९२ संवत्सरे प्रवचनसारोद्धारटी- का कृता । जै० इ० । इति श्रीसिद्धसेनसूरिविरचिता प्रवचन सारोद्धारवृत्ति समाप्ता । प्रव० ७६ द्वार ।

---

१ सूत्रा०५० ।

सिद्धसेणीय-सिद्धसेनीय-पुं० । सिद्धसेनदिवाकरशिष्ये , आ० म० १ अ० ।

सिद्धसेणियापरिकम्म-सिद्धश्रेणिकापरिकर्मन्- न० । दृष्टिवा- दान्तर्गतपरिकर्मसूत्रभेदे, स० । स्था० । ' एगट्ठियपयासिद्धसे- णियापरिकम्म ' श्रुतविशेषे, स० ।

सिद्धसोक्ख-सिद्धसौख्य-न० । मुक्तस्य सुखे, औ० । ( एतच्च ' सिद्ध ' शब्दे दर्शितम् । )

सिद्धहेमचंद-सिद्धहेमचन्द्र-न० । हेमचन्द्रविरचिते व्याकर- णभेदे, कल्प० १ अधि० १ क्षण । पुं०। स्वनामख्याते आचा- र्ये है० । ( अत्रत्यविस्तर. ' हेमचंद- ' शब्दे वक्ष्यते । )

सिद्धाइगुण-सिद्धादिगुण-पुं० । आदौ गुणा- आदिगुणाः युगपद्भाविनो; न क्रमभाविन सिद्धानामादिगुणा सिद्धा- दिगुणा । आभिनिबोधिकावरणादिक्षयस्वरूपेषु सिद्धत्वप्र- थमसमयेषु सिद्धसहभाविगुणेषु , स० ३१ सम० । आ० चू० ।

एक्कतीसं सिद्धाइगुणा पण्णत्ता , तं जहा-खीणे आ- भिणिबोहियणाणावरणे , खीणे सुयणाणावरणे, खीणे ओहिणाणावरणे , खीणे मणपज्जवणाणावरणे , खीणे केवलणाणावरणे , खीणे चक्खुदंसणावरणे , खीणे अचक्खुदंसणावरणे , खीणे ओहिदंसणावरणे , खीणे केवलदंसणावरणे, खीणे निद्दावरणे० , खीणे णिद्दा- णिद्दा०, खीणे पयला, खीणे पयलापयला० , खीणे थीणद्धी०,खीणे सायावेयणिज्जे, खीणे असायावेयणिज्जे , खीणे दंसणमोहणिज्जे,खीणे चरित्तमोहणिज्जे,खीणे नेरइ- आउए , खीणे तिरिआउए , खीणे मणुस्साउए , खीणे देवाउए , खीणे उच्चागोए , खीणे नीचागोए , खीणे सुभणामे, खीणे असुभणामे , खीणे दाणंतराए , खीणे लाभंतराए, खीणे भोगंतराए , खीणे उवभोगं- तराए , खीणे वीरिअंतराए ॥ ३१ ॥ स० ३१ सम० ।

प्रकारान्तरेण—

एकतीसाए सिद्धादिगुणेहिं सिद्धाणं आदीए गुणा -सिद्धादिगुणा सिद्धेहिं सह भाविन इत्यर्थ । ते य अपज्जवसिया ते य इमे, तं जहा—से ण परिमंडले १ न वट्टे २ न तंसे ३ ण चतुरंसे ४ ण आयते ५ ण किण्हे ६ ण णीले ७ न लोहिए ८ न हालिद्दे ९ न सुक्किले १० न सु- ब्भिगंधे ११ न दुब्भिगंधे १२ न तित्ते १३ न कडुए १४ न कसाए १५ न अंबिले १६ न महुरे १७ न कक्खडे १८ न मउए १९ न गुरुए २० न लहुए २१ न सीते २२ न उण्हे २३ न निद्धे २४ न लुक्खे २५ न संगे २६ न रुहे २७ न काऊ २८ न इत्थी २९ न पुरिसे ३० न नपुंसके ३१ । आ० चू० ४ अ० ।

सिद्धाइया-सिद्धायिका-स्त्री० । वीरजिनशासनदेव्याम्, श्रीवी- रजिनस्य सिद्धायिका देवी हरितवर्णा सिंहवाहना चतुर्भुजा पुस्तकाभययुक्तदक्षिणकरद्वया बीजपूरकवीणाभिरामवामक-

स्तया च। प्रव० २७ द्वार। स्वैनामख्यातायां देवतायाम्, यदुद्देशेन तक्को विशेष: क्रियते। पञ्चा० १६ विव०।

सिद्धाबद्ध-सिद्धाबद्ध-न०। सिद्धश्रेणिकापरिकर्मभेदे, स०।

सिद्धाययणकूड-सिद्धायतनकूट-न०। सिद्धानि-शाश्वतानि सिद्धाना वा शाश्वतानामर्हत्प्रतिमानामायतनं-स्थानं सिद्धायतनं तदाधारभूतं कूटं सिद्धायतनकूटम्। भरतवैताढ्यप्रथमकूटे, जं०१ वक्ष०। क्षुद्रहिमवद्वर्षधरे पर्वतकूटे, जं०४ वक्ष०। महाविदेहे माल्यवद्वक्षस्कारपर्वतस्य प्रथमकूटे, जं०४ वक्ष०। हिमवद्वर्षधरपर्वतस्य पूर्वस्यां दिशि कूटे, स्था०२ठा० ३ उ०। चित्रकूटवक्षस्कारपर्वतस्य प्रथमकूटे, जं०४वक्ष०। गन्धमादनवक्षस्कारपर्वतस्य प्रथमकूटे जं०४वक्ष०। महाविदेहे ब्रह्मकूटस्य वक्षस्कारपर्वतस्य प्रथमकूटे, जं० ४ वक्ष०। ( वक्ष० 'कूड' शब्दे तृतीयभागे ६१८ पृष्ठे गत०।)

सिद्धालय-सिद्धालय-पुं०। सिद्धावस्थिते क्षेत्रे, विशे०। सिद्धानामाश्रयत्वात्सिद्धालय। ईषत्प्राग्भारया पृथिव्याम्, स्था० ८ ठा० ३ उ०। सिद्धिमार्गे, स० १४५ सम०। प० सं०।

सिद्धालयमग्गणिग्गय-सिद्धालयमार्गनिर्गत-त्रि०। सिद्धालयमार्गान्निर्गता। ज्ञानादर्निर्गतेषु, स० १४२ सम०।

सिद्धावास-सिद्धावास-पुं०। मोक्षवासनिबन्धनत्वादहिंसायाम्, प्रश्न० १ संव० द्वार।

सिद्धि-सिद्धि-स्त्री०। सिद्ध्यन्ति-कृतार्था भवन्ति यस्यां सा सिद्धि। लोकाग्रे ईषत्प्राग्भाराया पृथिव्याम्, स्था० १०ठा०३ उ०। दशा०। रा०। आ० म०। स०। भ०। पं० व०। संथा०। यथा परमाणोस्तथाविधैकत्वपरिणामविशेषादेकत्वं भवति तथा तत एवानन्ताणुमयस्कन्धस्यापि स्यादिति दर्शयन् सकलवाङ्मरस्कन्धप्रधानभूतमीषत्प्राग्भाराभिधानं पृथिवीस्कन्धं प्ररूपयन्नाह—

एगा सिद्धी ( सू० ४६ + )

सिद्ध्यन्ति कृतार्था भवन्ति यस्यां सा सिद्धि, सा च यद्यपि लोकाग्रे, यत आह—"इहं बुन्दिं चइत्ता णं तत्थ गतूण सिज्झइ" त्ति—तथापि तत्प्रत्यासत्त्येषत्प्राग्भाराऽपि तथा व्यपदिश्यते। आह च-"बारसहिं जोयणेहिं सिद्धी सव्वट्ठसिद्धाउ" त्ति। यदि च—लोकाग्रमेव सिद्धिः स्यात्तदा कथमेतदनन्तरमुक्तं 'निम्मलदगरयवन्ना, तुसारगोखीरहारसरिवन्ने' त्यादि, तत्स्वरूपवर्णनं घटते लोकाग्रस्यामूर्तत्वादिति, तस्मादीषत्प्राग्भारा सिद्धिरिहोच्यते। सा चैका द्रव्यार्थतया पञ्चचत्वारिंशद्योजनलक्षप्रमाणस्कन्धस्यैकपरिणामत्वात्, पर्यायार्थतया त्वनन्ता। अथवा—कृतकृत्यत्व लोकाग्रमणिमादिका वा सिद्धि, एकत्वं च सामान्यत इति। स्था० १ ठा०। जी०। भ०। अशेषकर्मक्षये, सूत्र० २ श्रु० १ अ०। सथा०। निवृत्तौ, स्था० १ ठा०। पञ्चमगतौ, आ० म० १ अ०। अशेषद्वन्द्वोपरमे, सूत्र० १ श्रु० १ अ० ४ उ०। मोक्षे, सूत्र० २ श्रु० १ अ०। प० व०। जी०। कृतार्थीभवने, कल्प० ३ अधि० ३ क्षण। कृतकृत्यतायाम्, औ०। नि०। मोहनीयक्षयेणानिष्ठितार्थतायाम्, आ० चू० १ अ०। उत्कर्षविशेषे, द्वा० १५ द्वा०। सूत्र०। अशेषद्वन्द्वप्रच्युतौ, सूत्र० १ श्रु० १ अ० ४ उ०। सेधनं सिद्धि:। हितार्थप्राप्तौ, आव० ४ अ०। प्रा०। निष्पत्तौ, "सिद्धिः स्याद्वादात्" ॥ १। १। २॥ है०। ( सिद्धिप्ररूपणा 'अत्थिवाय' शब्दे प्रथमभागे ५२२ पृष्ठे गता।) "चारं पडिऊण पायच्छित्तं संविग्गो भामिश्रो धारवारतवं काउं असुभकम्मं खवेंतो य सुक्कज्झाणो समारुहिय केवलं पप्प सिज्झइ" महा०।

केवली णं भंते ! मणूसे तीतमणंतं सासयं समयं ०जाव अंतं करेंसु ? हंता सिज्झिंसु ०जाव अंतं करेंसु, एते तिन्नि आलावगा भाणियव्वा छउमत्थस्स जहा नवरं सिज्झिंसु सिज्झंति सिज्झिस्संति। से णूणं भंते ! तीतमणंतं सासयं समयं पडुप्पन्नं वा सासयं समयं अणागयमणंतं वा सासयं समयं जे केइ अंतकरा वा अंतिमसरीरिया वा सव्वदुक्खाणमंतं करेंसु वा करेंति वा करिस्संति वा सव्वे ते उप्पन्ननाणदंसणधरा अरहा जिणे केवली भवित्ता तओ पच्छा सिज्झंति ०जाव अंतं करेस्संति वा ? हंता गोयमा ! तीतमणंतं सासयं समयं ०जाव अन्तं करेस्संति वा ( सू० ४२ + ) भ० १ श० ४ उ०। एएण सिद्धी पज्जवसाणफला पण्णत्ता ? भ० १७ श० ३ उ०।

अष्टगुणैश्वर्यसिद्धि—अणिमा लघिमा गरिमा प्राकाम्यमीशित्वं वशित्वं प्रतिघातित्व यत्रकामावसायित्वमिति। सूत्र० १ श्रु० १ अ० ३ उ०। पं० सू०। स्या०। प्रतिष्ठायाम्, विशे०।

समाधिविघ्नाभ्युत्थाने-सिद्धयः प्रातिभं ततः।
श्रावणं वेदनादर्शा-स्वादवार्ताश्च वित्तयः॥ ११॥

समाधीति-तत स्वार्थसंयमाद्दृयात्—पुरुषसंयमादभ्यस्यमानात् प्रातिभं पूर्वोक्तं ज्ञानं, यदनुभावात् सूक्ष्मार्थादिकमर्थं पश्यति। श्रावण-श्रोत्रेन्द्रियजं ज्ञानं, यस्मात्प्रकृष्टाद्दिव्यं शब्दं जानाति। वेदना-स्पर्शनेन्द्रियजं ज्ञानं वेद्यतेऽनयति कृत्वा, तान्त्रिकया सञ्ज्ञया व्यवह्रियते, यत्प्रकर्षाद्दिव्यस्पर्शविषयज्ञानमुत्पद्यते। आदर्शः-चक्षुरिन्द्रियजं ज्ञानम्, आ समन्ताद् दृश्यते-अनुभूयते रूपमनेनेति कृत्वा, यत्प्रकर्षाद्दिव्यरूपज्ञानमुत्पद्यते। आस्वादो-रसनेन्द्रियजं ज्ञानम्, आस्वाद्यतेऽनेनेति कृत्वा, यत्प्रकर्षाद्दिव्यरससंविदुपजायते। वार्ता-गन्धसंवित्तिः, वृत्तिशब्देन तान्त्रिक्या परिभाषया घ्राणेन्द्रियमुच्यते, वर्तमाने गन्धविषये प्रवर्तत इति कृत्वा, वृत्तौ-घ्राणेन्द्रिये भवा वार्ता, यत्प्रकर्षाद्दिव्यो गन्धोऽनुभूयते। एताश्च वित्तयो-ज्ञानानि भवन्ति। तदुक्तम्—"ततः प्रातिभश्रावणवेदनादर्शा [ शा-ना ] स्वादवार्ता जायन्ते" [ ३-३३ ]। एताश्च समाधेः प्रकर्षं गच्छत सतो विघ्ना हर्षविस्मयादिकरणेन तच्छिथिलीकरणात् व्युत्थाने-व्यवहारदशायां च समाध्युन्मादजननादिविशिष्टफलदायकत्वाच्च सिद्धय। यत उक्तम्-" ते समाधावुपसर्गा व्युत्थाने सिद्धय " ( ३-३७ ) द्वा० २६ द्वा०।

वति, मनःस्थैर्यसिद्धये । तदुक्तम्—" कूर्मनाड्यां स्थैर्यमिति " ( ३—३१ ) । मूर्धज्योतिषीति—मूर्धकपालान्तरस्य मध्ये प्रसरन्ती प्रभेव कुम्भिकादौ प्रदेशे, हृदयस्थ स्व सात्त्विकः प्रकाशो मूर्धस्थः अपि रिहतत्वे—भजन् तत्र संयमात् सिद्धानां दर्शनं प्रकीर्तितम् । द्यावापृथिव्योरन्तरालवर्तिनो ये दिव्यपुरुषास्तावेनद्धान पश्यति, तैश्चायं संभाष्यत इति भावः । तदुक्तम्—" मूर्धज्योतिषि सिद्धदर्शनम् " ( ३—३२ ) ॥९॥

प्रातिभात् सर्वतः संवि—चेतसो हृदये तथा ।
स्वार्थे संयमतः पुंसि, भिन्ने भोगात्परार्थकात् ॥१०॥

प्रातिभादिति—निमित्तानपेक्षं मनोमात्रजन्यम् अविसंवादकं झगित्युत्पद्यमानं ज्ञानं प्रतिभा । तत्र संयमे क्रियमाणे समुत्पन्ने ज्ञाने विवेकख्यातेः पूर्वभावि तारकमुदयति, यथोदेष्यति सवितरि प्रभा, तत्र सर्वत संवित्प्रवर्तते । संयमान्तरानपेक्षं सर्वं जानातीत्यर्थः । " प्रातिभाद्वा सर्वम् " ( ३—३३ ) इत्युक्तेः । तथा हृदये—शरीरप्रदेशविशेषेऽधोमुखस्वल्पपुण्डरीकाकारे संयमात् चेतस संवित्—स्वपरचित्तगतवासनारागादिज्ञानं भवति । तदुक्तम्—"हृदये चित्तसंवित्" (३—३४) । परार्थकात् सत्त्वस्य स्वार्थसंयमेन स्वभिन्नपुरुषार्थैकान्तिकोद्योगात् सत्त्वपुरुषाभेदाध्यवसायलक्षणात् सत्त्वस्यैव सुख दुःख कर्तृत्वाभिमानाद्भिन्ने स्वार्थे स्वरूपमात्रालम्बने परित्यक्ताहङ्कारे सत्त्व विच्छायासंक्रान्तौ पुंसि संविद्भवति । एवभूतं स्वालम्बनज्ञानं सत्त्वनिष्ठं पुरुषो जानाति, न पुनः पुरुषः ज्ञाता ज्ञानस्य विषयभावमापद्यते, ज्ञेयत्वापत्तेः । ज्ञातृज्ञेययोश्चात्यन्तविरोधादिति भावः । तदुक्तम् "सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थ ( र्थात् ) स्वार्थसंयमात् पुरुषज्ञानमिति"(३—३५)१० । (द्वा०)

समानस्य जयाद्धामा—दानस्याद्यावसंगता ।
दिव्यं श्रोत्रं पुनः श्रोत्र—व्योम्नोः संबन्धसंयमात् ॥१२॥

समानस्येति—समानस्याग्निमभिवेष्ट्य व्यवस्थितस्य सामान्यस्य वायोर्जयात् संयमेन वशीकारान्निरावरणस्याग्नेरूर्ध्वगत्वात् धाम—तेज तरणिप्रतापवदवभासमानमाविर्भवति, येन योगी ज्वलन्निव प्रतिभाति । यदुक्तम्—" समानजयाज्ज्वलन ( म् ) " ( ३—४० ) । उदानस्य कृकाटिकादेशान्मशिरोवृत्तेर्जयादितरेषां वायूनां निरोधादूर्ध्वगतिरयसिद्धेः । ( द्वा० ) श्रोत्रं शब्दग्राहकमाहङ्कारिकमिन्द्रियं व्योम, शब्दतन्मात्रजमाकाशं, तयोः पुनः संबन्धसंयमाद्देशसम्भावाद्भवत्यस्येयमाद्दिव्यं युगपत्सूक्ष्मव्यवहितविप्रकृष्टशब्दग्रहणसमर्थं श्रोत्रं भवति । तदुक्तम्—" श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं श्रोत्रम् " ( ३—४१ ) ॥१२॥

लघुतूलसमापत्त्या, कायव्योम्नोस्ततोऽम्बरे ।
गतिर्महाविदेहातः, प्रकाशावरणक्षयः ॥ १४ ॥

लघ्वयिति—कायः पाञ्चभौतिकं शरीरं, व्योम च प्रागुक्तं, तयोः । ततोऽवकाशदानसंबन्धसंयमात् । लघुनि तूले समापत्त्या तन्मयीभावलक्षणया प्राप्तात्यन्तलघुभावतयाऽम्बरे आकाशे गतिः स्यात् । उक्तसंयमधारप्रथमं यथारुचि जले संचरन् क्रमेणोर्णनाभतन्तुजालेन संचरमाणः आदित्यरश्मिभिश्च विहरन् यथेष्टमाकाशे गच्छतीत्यर्थः । तदुक्तम्—" कायाकाशयोः संबन्धसंयमाल्लघुतूलसमापत्तेश्च ( आ ) काशगमनम् " ( ३—४२ ) । ( द्वा० ) ( पूर्वार्धव्याख्या ' महाविदेहा ' शब्दे षष्ठभागे गता । )

स्थूलादिसंयमाद्भूत—जयोऽस्मादणिमादिकम् ।
कायसंपच्च तद्धर्मा—नभिघातश्च जायते ॥ १५ ॥

स्थूलादीति—स्थूलादीनि स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वानि पञ्चानां भूतानामवस्थाविशेषरूपाणि । तत्र भूतानां परिदृश्यमानं विशिष्टाकारवत्त्वं स्थूलं रूपं, स्वरूपं च पृथिव्यादीनां कार्कश्यस्नेहोष्णताप्रेरणावकाशदानलक्षणं, सूक्ष्मं च यथाक्रमं भूतानां कारणत्वेन व्यवस्थितानि गन्धादितन्मात्राणि । अन्वयाः गुणाः प्रकाशप्रवृत्तिस्थितिरूपतया सर्वत्रैवोपलभ्यमानाः । अर्थवत्त्वं च तेष्वेव गुणेषु भोगापवर्गसंपादनशक्तिरूपम् । तेषु क्रमेण प्रत्यवस्थं संयमाद्भूतजयो भवति । कृततत्संयमस्य संकल्पानुविधायिन्यो वत्सानुसारिण्य इव गावो भूतप्रकृतयो भवन्तीत्यर्थः । तदुक्तम्—" स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः " इति ( ३—४४ ) अस्माद्भूतजयात् अणिमादिकं भवति । अणिमा, गरिमा, लघिमा, महिमा, प्राकाम्यम्, ईशित्वं, वशित्वं, यत्रकामावसायित्वं चेत्यणिमादिकम् । तत्राणिमा—परमाणुरूपतापत्तिः, गरिमा—वज्रवद्गुरुत्वप्राप्तिः लघिमा—तूलपिण्डवल्लघुत्वप्राप्तिः, महिमा—महत्त्वप्राप्तिः अङ्गुल्यग्रेण चन्द्रादिस्पर्शनयोग्यता । प्राकाम्यम्—इच्छानभिघातः शरीरान्तःकरणयोः । ईशित्वम्—सर्वत्र प्रभविष्णुता । वशित्वम्—यतः सर्वाण्येव भूतानि वचनं नातिक्रामन्ति । यत्रकामावसायित्वम्—स्वाभिलषितस्य समाप्तिपर्यन्तनयनम् । कायसंपच्च उत्तमरूपादिलक्षणा । "रूपलावण्यबलवज्रसंहननत्वानि कायसंपत्" ( ३—४६ ) इत्युक्तेः । तद्धर्मानभिघातश्च तस्य कायस्य धर्मो रूपादयस्तेषामभिघातो—नाशस्तदभावश्च जायते न ह्यस्य रूपमग्निर्दहति, न वा आपः क्लेदयन्ति, न वा वायुः शोषयतीति । तदिदमुक्तम्—""ततोऽणिमादिप्रादुर्भावः कायसंपत्तद्धर्मानभिघातश्चेति" ( ३—४५ ) ॥ १५ ॥ ( द्वा० । )

मनोजवो विकरण—भावश्च प्रकृतेर्जयः ॥ १६ ॥

तत इन्द्रियजयान्मनोजवः—शरीरस्य मनोवदनुत्तमगतिलाभः । विकरणभावश्च कायमनपेक्ष्येन्द्रियाणां वृत्तिलाभः प्रकृतेः—प्रधानस्य जयः सर्ववशित्वलक्षणो भवति । तदुक्तम्—" ततो मनोजवित्वं विकरणभावः प्रधानजयश्च"(३—४८)॥१६॥

स्थितस्य सत्त्वपुरुषा—न्यतारख्यातौ च केवलम् ।
सार्वज्ञ्यं सर्वभावाना—मधिष्ठातृत्वमेव च ॥ १७ ॥

स्थितस्येति—केवलं सत्त्वपुरुषयोरन्यताख्यातौ गुणकर्तृत्वाभिमानशिथिलीभावलक्षणायां शुद्धसात्त्विकपरिणामरूपायां स्थितस्य सार्वज्ञ्यं सर्वेषां शान्तोदिताव्यपदेश्यधर्मत्वेन स्थितानां यथावद्विवेकजं ज्ञानलक्षणं सर्वेषां भावानां गुणपरिणामानामधिष्ठातृत्वमेव च स्वामिवदीक्रमणलक्षणं भवति । तदुक्तम्— सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च" ( ३—४९ ) ॥ १७ ॥ ( द्वा० । )

स्मृता सिद्धिरिशोकेयं, तद्वैराग्याच्च योगिनः ।
दोषबीजक्षये नूनं, कैवल्यमुपदर्शितम् ॥ १८ ॥

('केवल' शब्दे तृतीयभागे ६६८ पृष्ठे ऽस्य व्याख्या गता।)

असङ्गश्चासमयश्चैव, स्थितावुपनिमन्त्रणे।

बीजं पुनरनिष्टस्य, प्रसङ्गः स्यात्किलान्यथा॥ १६॥

असङ्गश्चेति-उपनिमन्त्रणे उक्तसमाधिस्थस्य देवैर्दिव्यस्त्री-रसायनाद्युपढौकनेन भोगनिमन्त्रणेऽसङ्गश्चासमयश्चैव स्थितौ बीजम्। सङ्गकरणे पुनर्विषयप्रवृत्तिप्रसङ्गात् स्मयकरणे-च कृतकृत्यमात्मानं मन्यमानस्य समाधावुत्साहभङ्गात्। एत-देवाह—अन्यथाऽसङ्गासमयाकरणे पुनः किलेति सत्येऽनिष्ट-स्य प्रसङ्ग इति। तदिदमुक्तम्-"स्थान्युपनिमन्त्रणे सङ्गस्म-याकरणं पुनरनिष्टप्रसङ्गादिति" (३-५१)॥ १६॥ (द्वा०।)

तारकं सर्वविषयं, सर्वथा विषयाक्रमम्।

शुद्धिसाम्येन कैवल्यं, ततः पुरुषसत्त्वयोः॥ २१॥

तारकमिति—तच्च विवेकजं ज्ञानं तारयत्यगाधात्संसारप-योधेर्योगिनमित्यान्वर्थिक्या संज्ञया तारकमुच्यते। तथा स-र्वविषयं सर्वाणि तत्त्वानि महदादीनि विषयो यस्य तत्त-था। तथा सर्वथा सर्वैः प्रकारैः सूक्ष्मादिभेदैर्विषयो यस्य तच्च तत्क्रमं च निःशेषनानावस्थापरिणतत्वनः आ-र्थिकभावग्रहण क्रमरहितं चेति कर्मधारयः। इत्थं चास्य संज्ञाविषयस्वभावा व्याख्याता। तदुक्तम्—"तारकं सर्ववि-षयं सर्वथा (र्था) विषयमक्रमं चेति (विवेकजं ज्ञानम्)" (३-५४)। ततस्तस्मात् ज्ञानात् पुरुषसत्त्वयोः शुद्धिसाम्येन कै-वल्यं भवति। तत्र पुरुषस्य शुद्धिरुपचरिता भोगाभावः। सत्त्वस्य तु सर्वथा कर्तृत्वाभिमाननिवृत्त्या स्वकारणेऽनुप्र-वेश इति। तदिदमुक्तम्-"सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्य-मिति" (३।५५)॥ २१॥

इत्यमन्यैरुपदर्शिते योगमाहात्म्ये उपपत्त्यनुपपत्त्यो-र्दिशं प्रदर्शयन्नाह—

इह सिद्धिषु वैचित्र्ये, बीजं कर्मक्षयादिकम्।

सयमश्चात्र सदस-त्प्रवृत्तिविनिवृत्तितः॥ २२॥

इहेति-इह प्रागुक्तग्रन्थे सिद्धिषु वैचित्र्ये कर्मक्षयादिकं बी-जम्, तथा ज्ञानं तथा ज्ञानावरणक्षयोपशमादेर्वीर्यविशेषे च वीर्यान्तरायक्षयोपशमादेर्हेतुत्वात्। संयमश्चात्रोक्तसिद्धिषु स-त्प्रवृत्त्यसन्निवृत्तिभ्यां तथाविधक्षयोपशमाद्याधानद्वारैव,बी-जं न तु तत्तद्विषयज्ञानप्रणिधानादिरूपः। अनन्तविषयक-ज्ञानस्य प्रतिविषयं सयमासाध्यत्वाद्विहितानुष्ठानप्रणिधा-नमात्रसंयमेनैव मोहक्षयात्तदुपपत्तेः। चित्तप्रणिधानार्थं त्वा-लम्बनमात्रं क्वापि न वार्यते, केवलमात्मप्रणिधानप-र्यवसान एव सर्वं संयमः फलवानित्यात्मनो ज्ञयत्वं विना सर्वं विलूनशीर्णं भवेदित्यधिकं स्वयमूहनीयम्॥ २२॥ द्वा० २६ द्वा०।

सिद्धिगइ-सिद्धिगति-स्त्री०। सिद्धौ गमनं निर्विशेषणत्वा-च्चानेन सामान्या सिद्धिगतिः। स्था० १० ठा० ३ उ०। गमनं गतिर्गम्यते इति वा गतिः क्षेत्रविशेषो गम्यतेऽन-या कर्मपुद्गलसहत्येति गतिर्नाम कर्मोत्तरप्रकृतिरूपा सिद्धौ गतिः सिद्धिश्चासौ गतिश्चेति सिद्धिगतिः। स्था० ५ ठा० ३ उ०। मोक्षगमने, प्रश्न० ४ संव० द्वार। "धंमाणं जिणधंमा, सव्वकुलाणं च सावगकुलाइं। सिद्धिगई वि गईणं, मुत्तिसुहं सव्वसुक्खाणं॥६॥" संथा०। स्था०। पञ्चम्यां गतौ, सूत्र० १ श्रु० ६ अ०।

सिद्धिगइनामधेज्ज-सिद्धिगतिनामधेय-त्रि०। सिद्ध्यन्ति-नि-ष्ठितार्था भवन्त्यस्यां प्राणिनः इति सिद्धिः-लोकान्तक्षेत्रल-क्षणा सैव गम्यमानत्वाद्गतिः सिद्धिगतिरेव नामधेयं यस्य स तथा। सिद्धिगत्याख्ये, ध० २ अधि०। जी० ल०। कल्प०।

सिद्धिगइपज्जवसाण-सिद्धिगतिपर्यवसान-त्रि०। मोक्षान्ते सि-द्धिगतिः पर्यवसानं संसरणपर्यन्तो यस्य स सिद्धिगति-पर्यवसानः। जीवे, स्था० ५ ठा० ३ उ०।

सिद्धिगंडिया-सिद्धिगण्डिका-स्त्री०। सिद्धिस्वरूपप्रतिपादन-परायां वाक्यपद्धतौ, औ०। स०।

सिद्धिजम-सिद्धियम-पुं०। चतुर्थयमे, द्वा०। "परार्थसाधिका त्वेषा सिद्धिः शुद्धान्तरात्मनः। अचिन्त्यशक्तियोगेन,चतुर्थो यम उच्यते॥ २८॥" द्वा० १८ द्वा०। ('जम' शब्दे चतुर्थ-भागे १३६१ पृष्ठे व्याख्यातमिदम्।)

सिद्धिजोग-सिद्धियोग-पुं०। अष्टाङ्गयोगसाधनसिद्धे,अष्ट० १० अष्ट०।

सिद्धिणगर-सिद्धिनगर-न०। मोक्षपुरे, जी० ११ अधि०।

सिद्धिणाह-सिद्धिनाथ-पुं०। निर्वाणस्वामिनि द्वा० ३२ अष्ट०।

सिद्धिदूय-सिद्धिदूत-पुं०। सिद्धिसमागमहेतौ, यो० बि०।

सिद्धिपडागा-सिद्धिपताका-स्त्री०। सिद्धिसुखहेतुत्वादारा-धनायाः पताकेव पताका, सिद्धिरेव पताका। मोक्षपता-कायाम्, संथा०।

सिद्धिपत्त-सिद्धिप्राप्त-पुं०। मोक्षं गते, उत्त० १६ अ०।

सिद्धिपत्तण-सिद्धिपत्तन-न०। निर्वाणपुरे, आव० ४ अ०।

सिद्धिपव्वय-सिद्धिपर्वत-पुं०। शत्रुञ्जयपर्वते,ती० ११ कल्प।

सिद्धिपह-सिद्धिपथ-पुं०। सिद्धानां सम्बन्धनीयेयमनन्तरं गतिरुक्ता सैवेह सिद्धिरभिप्रेता,तस्या यः पन्थाः-ज्ञानदर्शन-चारित्रलक्षणः स सिद्धिपथः। विशे०। पञ्चमगतिरूपायाः सिद्धेर्मार्गे, आ० म० १ अ०।

सिद्धिपहप्पएसय-सिद्धिपथप्रदेशक-पुं०। सिद्धिपदस्य प्रधा नादेशकाः। सिद्धिहेतुभूतसामायिकादिप्रतिपादकेषु तीर्थ-कृत्सु, आ० म० १ अ०।

सिद्धिपुर-सिद्धिपुर-न०। मोक्षे, आ० चू० १ अ०। आ० म०।

सिद्धिपुरवासि(ण्)-सिद्धिपुरवासिन्-पुं०। सिद्धिपुरे-लोकान्ते वस्तुं शीलं येषां ते तथा। मुक्तिवासिषु, पं० सू० १ सूत्र।

सिद्धिवहुवरसंगलालस-सिद्धिवधूवरसङ्गलालस-पुं०। मुक्ति-कान्ताप्रधानताभिष्वङ्गलम्पटे, जीवा० २४ अधि०।

सिद्धिमग्ग-सिद्धिमार्ग-पुं०। साधनं सिद्धिः-हितार्थप्राप्ति-स्तस्या मार्गः सिद्धिमार्गः। आव० ४ अ०। सूत्र०। क्षपक-श्रेणिकेवलोत्पत्त्यादिरूपे मार्गे, वृ० १ उ० २ प्रक०। सम्यग्-दर्शनादिरूपे (दश० ३ अ०।) हितार्थप्राप्त्युपाये, भ० ६ श० ३३ उ०। आ० चू०।

सिद्धिया-सिद्धिका-स्त्री०। जितशत्रोर्मथुराराजस्य दु-हितरि, आ० चू० १ अ०। आ० म०।

सिद्धिविग्गहगइ-सिद्धयविग्रहगति-स्त्री०। सिद्ध्यावविग्रहेण अवक्रेण गमनं सिद्ध्यविग्रहगतिः । विशिष्टसिद्धगतौ, स्था० १० ठा० ३ उ० ।

सिद्धिविणिच्छय-सिद्धिविनिश्चय-पुं० । स्वनामख्याते सिद्धिप्रतिपादके ग्रन्थे, पा० १५ विव० ।

सिद्धिसुगइगिहुत्तम-सिद्धिसुगतिगृहोत्तम-न० । सिद्धिलक्षणा सुगतिः सिद्धिसुगतिः । अथवा—सिद्धिश्च सुगतिश्च सुदेवत्वसुमानुषत्वलक्षणा सिद्धिसुगती , तल्लक्षणं यद् गृहाणामुत्तमं गृहोत्तमं वरप्रासादः । सिद्धिस्वरूपसुगतिगृहे , स० ८३ सम० ।

सिद्धिसेहर-सिद्धिशेखर-न० । शत्रुञ्जयपर्वते, ती० १ कल्प ।

सिधु-सीधु-पुं० । गुडधातकीसम्भवे मद्ये, विपा० ८ अ० ।

सिनात-स्नात-त्रि० । 'थे-स्न-प्म रिय-सिन-सटा क्वचित्'॥८ ।४।३१४॥ इति स्न इत्यस्य स्थाने सिनादेशः । स्नातम् । सिनातं । शुचीभूते, प्रा० ४ पाद ।

सिन्दी-देशी—खर्जूर्याम् , दे० ना० ८ वर्ग २६ गाथा ।

सिन्दुवण-देशी—अग्नौ, दे० ना० ८ वर्ग ३२ गाथा ।

सिन्दू-देशी—रज्ज्वाम् दे० ना ८ वर्ग ८ गाथा ।

सिन्दूर-देशी—राज्ये, दे० ना० ८ वर्ग ३० गाथा ।

सिन्दोला-देशी—खर्ज्जूर्याम् , दे० ना० ८ वर्ग २६ गाथा ।

सिन्धुओ-देशी—राहौ, दे० ना० ८ वर्ग २ गाथा ।

सिन्न-सैन्य-न० । "सैन्ये वा" ॥ ८ । १ । १५०॥ इति सैन्यशब्दे ऐत इत्वं । सैन्यम् । सिन्नं । सैनिके, प्रा० १ पाद ।

सिप्प-शिल्प-न० । अनाचार्यके कर्मणि, नित्यव्यापारे च । स्था० ४ ठा० ४ उ० । भ० । चित्रादिविज्ञाने, स्था० ५ ठा० ३ उ० । पिं० । क्रियासु कौशले, आ० म० १ अ० । अक्रमर्हनादिक, औ० । कल्प० । दश० । शिल्पशतम् । शिल्पानि कुम्भकारक्रियादीनि नैपुण्यानि वा लख्यादिकलालक्षणानि । दश० ६ अ० २ उ० । शिल्पशतं च कालनिधौ वर्त्तते, तथा च—" घट १ लोह २ चित्र ३ वस्त्र ४ नापितशिल्पाना प्रत्येक विंशतिभेदात् । स्था० ६ ठा० ३ उ० । चित्रादिक,प्रश्न० ६ आश्र० द्वार । क्रियाकौशले, ग० । सातिशये आचार्योपदेशजे ग्रन्थनिबद्धे व्यापारे , आ० म० १ अ० । आ०चू० । अनाचार्यकं कर्म, साचार्यकं शिल्पम् । अथवा—कादाचित्कं शिल्पम्,सार्वकालिकं कर्म । न० । आ० म० ।

सिह-धा० । प्रीतौ, "स्निह-सिचो सिप्प " ॥ ८ । ४ ।२५५॥ अनयो कर्मभावे सिप्प इत्यादेशो भवति क्यलुक् च । सिप्पइ । स्निह्यते । प्रा० ४ पाद ।

सिच्-धा० । सेचने पूर्ववत् सिप्पादेश । सिप्पइ ।सिच्यते।प्रा०।

सिप्पसत्थ-शिल्पशास्त्र-न० । य शिल्पनिमित्तादिशास्त्राणि ग्राहयति स इहोपचारत शिल्पशास्त्रम् । शिल्पशास्त्रग्राहके, विशे० ।

सिप्पसय-शिल्पशत-न० । भगवत आचार्योपदेशज शिल्पमिति । तत्कृते, कल्प० १ अधि० ७ क्षण ।

सिप्पसिद्ध-शिल्पसिद्ध-पुं० । शिल्पभेदे, आ० म० ।

सम्प्रति शिल्पसिद्धं सोदाहरणमभिधातुकाम आह—

जो सव्वसिप्पकुसले, जो वा जत्थ सुपरिनिट्ठितो होइ ।
कोकासवड्ढइ विव, सातिसतो सिप्पसिद्धो त्ति ॥

य कश्चिद् निर्दिष्टस्वरूप सर्वशिल्पेषु कुशल यो वा यत्रैकस्मिन्नपि शिल्पे सुपरिनिष्ठित सातिशयश्च कोकासवर्द्धकिवत् स शिल्पसिद्ध इति एष गाथाक्षरार्थ । आ० म० १ अ० । आ० क० ।

कथा चेयम्—

"पुरं सोपारकं तत्र, रथकारोऽभवत्सुधी ।
तद्दास्याश्च द्विजाज्जात , कोकासो नाम दारक ॥ १ ॥
स चासीन्मूकभावेन, समीपेऽप्यश्रवा इति ।
रथकार सुशिल्पानि, शिक्षयत्यङ्गजान्निजान् ॥ २ ॥
न तेऽगृह्णन्किमप्यज्ञा , दासेर सर्वमग्रहीत् ।
रथकारे मृते राजा, दासेरे तच्छ्रियं न्यधात् ॥ ३ ॥
इतश्चोज्जयिनीपुर्या-मार्हत श्रावको नृप ।
चत्वार श्रावकास्तस्य , सन्ति कर्मसु कर्मठा ॥ ४ ॥
करोत्येको रसवतीं, तादृक् पाकवती यथा ।
जीर्यत्यन्न भुक्तमात्र-मथवा याममात्रत ॥ ५ ॥
यथा द्वित्रिचतु पञ्च-यामेभ्यो जीर्यते क्रमात् ।
यथा वा कुरुते ग्रन्न, सर्वथाऽपि न जीर्यति ॥ ६ ॥
अभ्यनक्ति द्वितीयस्तु, स तैलकुडवं प्रधी ।
प्रवेशयति देहान्त-स्तावन्निस्सारयत्यपि ॥ ७ ॥
तार्तीयीको रचयति, शय्या तादृग्विधां यथा ।
जागर्ति प्रथमे यामेऽथवा द्वित्रिचतुर्थके ॥ ८ ॥
श्रीगृहाधिकृतस्तुर्य-स्तस्मै तन्मतिवैभवम् ।
प्रविष्टो ह्यपरस्तत्र, न किञ्चिदपि पश्यति ॥ ९ ॥
स च क्षमाभृदपुत्रत्वा-द्राजकार्येषु शीतल ।
निर्विण्णकामभोगोऽस्ति, यावद्व्रतकृतोद्यम ॥ १० ॥
इतश्च पाटलीपुत्रा-ज्जितशत्रु क्षितीश्वर ।
लङ्कापुरीं राम इव, रुरोधागत्य तत्पुरीम् ॥ ११ ॥
तदाऽवन्तीपते शूल-मुत्पन्न दैवयोगत ।
विधायानशनं सोऽथ , जगाम त्रिदशालयम् ॥ १२ ॥
नागरैरथ तस्यैव, पाटलीपुत्रभूभुज ।
अर्पिता नगरी तेन , श्रावकास्ते च शब्दिता ॥ १३ ॥
चत्वारोऽप्यागता पृष्टा , यदोऽभूदोऽत्र कुत्र क ।
कोश कोशाधिकृत्तश्रा-दर्शयद्विक्रमैक्षत ॥ १४ ॥
शय्यापालस्तु शय्यां च , सज्जयामास तादृशीम् ।
मुहूर्ते च मुहूर्ते च, यस्या उत्थीयते जवात् ॥ १५ ॥
सूदनाश्च तथा राज्ञे , येन भुङ्क्ते क्षणे क्षणे ।
अभ्यक्ताऽन्येन चैकस्मा-त्तैलमाकर्षि पादत ॥ १६ ॥
ऊचे स्वस्तेऽस्थिमज्जत्त्य , सोऽन्यतस्तैलमाकृषत् ।
प्रावृजन्न सर्वेऽपि, निजस्वामिवियोगत ॥ १७ ॥
तेन तैलेन तस्याहि-र्दह्यमान क्रमादभूत् ।
काकस्यामस्तत सोऽत्र, काकजङ्घ इति श्रुत ॥ १८ ॥
इतश्च सोपारपुरे, दुर्भिक्षमभवत्तदा ।
आजगाम ततोऽवन्त्या, पुर्या कोकासवर्द्धकि ॥ १९ ॥
राज्ञ सङ्गापनायाथ , शालीन्शाष्टपोतकै ।

अथाहरत्प्रतिदिनं कोष्ठागारान्नरेशितुः ॥ २० ॥
नियुक्तः कथितं राज्ञा—ऽऽनाय्य कोकासवर्द्धकिः ।
रथकारपदं चक्रे पूज्या कुत्र गुणा न वा ॥ २१ ॥
चक्रे काष्ठमयस्तेन गरुडो नृपतेः कृते ।
यः कीलिकाप्रयोगेण, व्योमगामी सजीववत् ॥ २२ ॥
अथ राजा सगर्भीकः, कोकासेन समं सदा ।
व्योम्ना गरुडमारूढः, सर्वां सञ्चरते महीम् ॥ २३ ॥
मार्गयिष्याम्यहं युष्मान्, व्योम्नागत्य वदन्निति ।
मापयित्वा परान्सर्वान्, भूपतीन् करदान् व्यधात् ॥ २४ ॥
तां देवीमपरा प्राहुः—रेप कीलिकया कथा ।
गरुत्मान् चलते ब्रूहि, साऽऽर्जवादाख्यदेतया ॥ २५ ॥
ईर्ष्ययैकाऽऽदद राज्ञी, तन्निवर्तनकीलिकाम् ।
तथैवागान्नृपस्तेन, वाहितस्तु न सोऽचलत् ॥ २६ ॥
अथोद्दामं व्रजंस्ताभ्यां, महावानाभिधानतः ।
कलिङ्गेषु तडागान्ते, भग्नपक्षः पपात सः ॥ २७ ॥
तस्य सङ्घटनाहेतो—र्वास्यार्थानतुमुत्सुकः ।
कोकासो नगरऽयासी—त्तत्रान्यो रथकृत्तदा ॥ २८ ॥
काष्ठकर्मालये राज्ञो, रथं कुर्वन्समस्ति सः ।
तेनैकं निर्मितं चक्र—मन्यदस्त्यर्द्धनिर्मितम् ॥ २९ ॥
कोकासेनार्थितं तत्रैत्य, तच्चोपकरणानि सः ।
सोऽभ्यधादर्पयिष्यामि, गृहादानीय तान्यहम् ॥ ३० ॥
इतो नैतानि लभ्यन्ते, नेतुमित्यगमद् गृहे ।
कोकासेनार्द्धनिष्पन्नं, तच्चक्रं घटितं क्षणात् ॥ ३१ ॥
प्रक्षिप्तं याति वेगेन, स्खलितेऽपि पतेच्च तत् ।
किं तु पश्चान्मुखं याति, स्खलिते त्वितरत्पतत् ॥ ३२ ॥
आगतः सोऽथ तच्चक्रं, दृष्ट्वा गत्वा सपद्यपि ।
राज्ञो विज्ञापयामास, यथा कोकास आययौ ॥ ३३ ॥
यद्बलात्काकजङ्घेन, नृपाः सर्वे वशीकृताः ।
धृतोऽसौ ताडनाद्याख्य—द्भूतो राजाऽथ सप्रियः ॥ ३४ ॥
दण्डिता स्मो वयमिति, तयार्भकं निवारितम् ।
नागरैरयशोभीतैः, काकपिण्डी प्रवर्तिता ॥ ३५ ॥
कोकासं च स राजोचे, प्रासादं शतभूमिकम् ।
मम पुत्रशतस्य त्वं, कुरु मध्ये च मत्कृते ॥ ३६ ॥
पश्चादापयिष्यामि, राजकं सर्वमप्यहम् ।
कोकासो ज्ञापयामास, काकजङ्घतनूरुहम् ॥ ३७ ॥
सपुत्रं संहरिष्यामि, नृपमेते दिनेऽमुकः ।
आगन्तव्यं त्वयाऽवश्य—मत्र तद्दिवसोपरि ॥ ३८ ॥
कृत्वा प्रासादं कोकासो, नृपमारुह्य सात्मजम् ।
संजहे कीलिकापातात्, सपुटीकृत्य तं जवात् ॥ ३९ ॥
काकजङ्घतनूजेन, तत्र तत्कालमीयुषा ।
नगरं जगृहेऽमोचि पिता माता च वर्द्धकिः ॥ ४० ॥
विधायाथ महोत्साहं, सर्वेऽपि स्वपुरं ययुः ।
शिल्पसिद्ध इति ख्यातिं, प्राप कोकासवर्द्धकिः ॥ ४१ ॥"

आ० क० १ अ० ।

सिप्पं—देशी—पलाले, दे० ना० ८ वर्ग २८ गाथा ।

सिप्पा—शिप्रा—स्त्री० । स्वनामख्यातायामुज्जयिन्या महानद्याम्, आ० म० १ अ० । आ० क० ।

सिप्पाजीव—शिल्पाजीव—पुं० । शिल्पं तूर्णनादि मात्रार्यकं वा कर्म तेन जीवति जीविका कल्पयतीत्यर्थः । शिल्पोपजीविनि, स्था० ५ ठा० १ उ० । प्रश्न० ।

सिप्पायरिय—शिल्पाचार्य—पुं० । तुन्नकादिषु शिल्पिषु, प्रज्ञा० १ पद । ('आयरिय' शब्दे द्वितीयभागे ३०३ पृष्ठे गतमेतत् ।)

सिप्पि—शिल्पिन्—पुं० । चित्रकारसूत्रधारलोहकारस्वर्णकारस्थपतिप्रभृतिषु, उत्त० १५ अ० । औ० । रा० । ज्ञा० ।

शुक्ति—स्त्री० । द्वीन्द्रियजीवविशेषे, प्रज्ञा० १ पद । "सिप्पिपुडगसठाणसंठिय" उपा० २ अ० ।

सिप्पिय—शिल्पिज—न० । तृणविशेषे, प्रज्ञा० १ पद ।

सिप्पिसंपुड—शुक्तिसंपुट—त्रि० । संपुटरूपासु शुक्तिषु, प्रज्ञा० १ पद । औ० । नि० चू० । जी० ।

सिप्पोवगय—शिल्पोपगत—त्रि० । शिल्पं क्रियासु कौशलमुपगतः प्राप्तः । स० १ शिल्पसमन्विते, 'निउणसिप्पोवगए' अनु० ।

सिप्पोवदेसमइ—शिल्पोपदेशमति—स्त्री० । आचार्यस्य शिल्पोपदेशदातुरुपदेशाज्जायमानायां बुद्धौ, औ० ।

सिफा—शिफा—स्त्री० । 'फो भ-हौ' ॥ ८ । १ । २३६॥ इति फस्य भहौ । सिफा । सिभा । वृक्षाणां जटाकारे मूले, प्रा० १ पाद ।

सिमिण—स्वप्न—पुं० । "स्वप्न—नीव्योर्वा" ॥८।१।२५९॥ इति वस्य मो वा । सिमिणो । सिविणो । स्वापावस्थायाम्, प्रा० ।

सिम्मिअं—देशी—भूतगृहीते, दे० ना० ८ वर्ग ४० गाथा ।

सिम्बाडी—देशी—नासिकानादे, दे० ना० ८ वर्ग २९ गाथा ।

सिम्बीरं—देशी—पलाले, दे० ना० ८ वर्ग २८ गाथा ।

सिम्भ—श्लेष्मन्—पुं० । "सर्वत्र लवरामचन्द्रे" ॥८।२।७९॥ इति ललुक् । ह्रस्वः संयोगे दीर्घस्य ॥८।१।८४॥ इत्येकारस्येकारः । "शषोः सः" ॥८।१।२६०॥ इति शस्य सः । 'पक्ष्म-श्म-ष्म-स्म-ह्मां म्हः' ॥८।२।७४॥ इति क्वाचित्कत्वादत्र म्भ । सिम्भो । कफ, प्रा० । अपभ्रंशे तु-पक्ष्म-श्मनि म्हादेशः-"अम्भो वा" प्रा० ढुं० १ पाद । इति म्हेत्यस्य स्थाने मकाराक्रान्तो भकारः । प्रा० ।

सिय—शित—त्रि० । अनितेजिते, रा० । बद्धे परिग्रहेच्छारम्भेष्वासक्ते, सूत्र० १ श्रु० १ अ० ४ उ० । विशे० । स्था० । पुत्रकलत्रादिभिर्बद्धे, आचा० । सूत्र० । भ० । ('कम्मसेसियमट्ठा' इति 'सिद्ध' शब्दे सितशब्दार्थो उक्तः ।) चामरे, दश० ४ अ० । आचा० । सूत्र० ।

सित—त्रि० । शुक्ले, चं० प्र० १८ पाहु० । सूत्र० । संथा० । आचा० । मितवर्णे, 'षिञ्' बन्धने इति वचनात् । सितपट्टे, प्रश्न० ३ आश्र० द्वार । आ० म० । आ० चू० । स० ।

श्रित—त्रि० । सम्बद्धे, सूत्र० १ श्रु० १ अ० २ उ० । आश्रिते, स० ३३ सम० ।

स्यात्—अव्य० । प्रशंसास्तित्वविवादविचारणानेकान्तसंशयप्रश्नादिषु, प्रज्ञा० ५ पद । अनेकान्तद्योतने, स्या० । भ० । रत्ना० ।

सियंबर—श्वेताम्बर—पुं० । जैने, आव० ६ अ० ।

सियंबुज—श्वेताम्बुज—न० । पुण्डरीके, आ० म० १ अ० ।

सियकमल—सितकमल—न० । पुण्डरीके, औ० ।

मियणाम--मितनामन्-न० । नामकर्मभेदे,यदुदयाज्जन्तुशरीरं मित—श्वेतं शङ्खादिवद्भवति । कर्म० १ कर्म० ।

सियवत्थ-सितवस्त्र-न० । शुक्लवाससि , पञ्चा० २ विव० ।

सियवाय-स्याद्वाद-पु० । स्यादित्यव्ययमनेकान्तद्योतकं ततः स्याद्वादः। अनेकान्तवादे,नित्यानित्याद्यनेकधर्मशबलैकवस्त्वभ्युपगमे, स्या० । उत्त० । "स्यादस्तीत्यादिको वाद , स्याद्वाद इति गीयते । नयौ न च विमुच्याय,द्रव्यपर्यायवादिनौ ॥३॥ अतश्चैतत् द्वयोपेत, स्वमत समुदाहृतम् ।सञ्ज्ञाततत्त्वसंविद्भि स्याद्वाद परमेश्वरे ॥४॥"उत्त० १ अ० । जिनागमे, द्रव्या० ७ अध्या० । अनु० । ( अत्र यद्वक्तव्यं तद् ' अणेगंतवाय 'शब्दे प्रथमभागे ४२३ पृष्ठ उक्तम् । )

यस्तु नयवादान्तरनिरपेक्षतया स्वाभिप्रेतेनैव धर्मेणावधारणपूर्वकं वस्तु परिच्छेत्तुमभिप्रैति स नयः, वस्त्वेकदेशपरिग्राहकत्वान्नय इत्युच्यते, स च नियमान्मिथ्यादृष्टिरेव अयथावस्थितार्थवस्तुपरिग्राहकत्वात् ,अत एवोक्तमन्यत्र 'सव्वे नया मिच्छावाइणो " इति , यत एव च नयवादो मिथ्यावादस्तत एव च जिनप्रवचनतत्त्ववेदिनो मिथ्यावादित्वपरिजिहीर्षया सर्वमपि स्यात्कारपुरस्सर भाषन्ते, नतु जातुचिदपि स्यात्कारविरहितम् , यद्यपि च लोकव्यवहारपथमवतीर्णा न सर्वदा साक्षात्स्यात्पदं प्रयुञ्जते तथापि तत्राप्रयुक्तेऽपि सामर्थ्यात्स्याच्छब्दो द्रष्टव्य प्रयोजकस्य कुशलत्वात , उक्तं च—"अप्रयुक्तोऽपि सर्वत्र, स्यात्कारोऽर्थात् प्रतीयते । विधौ निषेधेऽन्यत्रापि कुशलश्चेत्प्रयोजक ॥ १ ॥' अत्र अन्यत्रापि इति अनुवादातिदेशादिवाक्येषु । ननु यदि सर्वत्र स्यात्पदप्रयोगानुसरण तर्हि मूलत एवापगमादवधारणविधि परस्परमनयोर्विरोधात्, तथा हि-अवधारणमन्यनिषेधपर स्यात्पदप्रयोगस्तु अन्यसग्रहणशील इति, तदयुक्तं सम्यक् वस्तुतत्त्वापरिज्ञानात् । स्यात्पदप्रयोगो हि विवक्षितवस्त्वनुयायी धर्मान्तरसग्रहणशील ,अवधारणविधिस्तु तत्तदा शङ्कितान्ययोगव्यवच्छेदादिफल ,तथाहि- ज्ञानदर्शनवीर्यसुखोपेत किं जीवो भवति ? । किं वा नेत्याशङ्कायां प्रयुज्यते—स्याज्जीव एव । अत्र जीवशब्देन प्राणधारणनिबन्धनं जीवशब्दवाच्यत्वमभिधीयते, एवकारेण यदा शङ्कित परेणाजीवशब्दवाच्यत्व तस्य निषेध, स्यात्पदप्रयोगात्तु ये ज्ञानदर्शनसुखादिरूपा असाधारणा ये त्वमूर्तत्वासख्यातप्रदेशसूक्ष्मत्वलक्षणा धर्माधर्माकाशास्तिकायपुद्गलैः साधारणा येऽपि च सत्त्वप्रमेयत्वधर्मित्वगुणित्वाऽऽदय सर्वे पदार्थैः साधारणास्ते सर्वेऽपि प्रतीयन्त । यदा तु ज्ञान दर्शनादिलक्षणो जीव किं वाऽन्यलक्षण इत्याशङ्का तदैवमवधारणविधि स्यात् ज्ञानादिलक्षण एव जीव अत्र जीवशब्देन जीवशब्दवाच्यतामात्र प्रतीयते, ज्ञानादिलक्षण एवेत्यन्यलक्षणव्युदास । स्यात्पदप्रयोगात्तु साधारणाऽसाधारणधर्मपरिग्रह । यदा तु जगति जीवोऽस्ति किं वा नत्यसम्भवाशङ्का तदैवमवधारण स्यादस्त्येव जीव अत्रापि जीवशब्दप्रयोगाज्जीवशब्दवाच्यताधिगति स्यात्पदप्रयोगात् साधारणाऽसाधारणधर्मपरिग्रह । अस्त्येवेत्यवधारणादसम्भवाशङ्काव्यवच्छेद एवमन्यत्रापि साक्षाद्दृश्यमानतया स्यात्पदप्रयोगपुरःसरं यथायोगमवधारणविधि सम्यक् प्रवचनार्थं जानानैः प्रयोक्तव्य । अवधारणाभावे तु जीवाजीवादिवस्तुतत्त्वव्यवस्थाविलोपप्रसक्त , तथाहि-यद्यन्यव्यवच्छेदेन ज्ञानदर्शनोपयोगलक्षणो जीव एवेति नावधार्येत, तर्हि अजीवोऽपि तल्लक्षण स्यादिति जीवाजीवव्यवस्थालोप । तथा यदि ज्ञानदर्शनोपयोगलक्षण एव जीव इत्यन्ययोगव्यवच्छेदो नाभ्युपगम्यते ततोऽन्यम् किमप्यजीवानुगतमजीवसाधारण वा तथा लक्षणमाशङ्क्येत तथापि जीवेतरविभागपरिज्ञानाभावः, ततो यथा सम्यग्दृष्ट्यादित्वमिच्छता सर्वत्र स्यात्पदप्रयोग साक्षात् गम्योऽनुमीयते, तथा यथायोगमवधारणविधिरपि,अन्यथा यथावस्थितवस्तुतत्त्वप्रतिपत्त्यनुपपत्ते तच्चावधारणविधिरपि सिद्धान्तेनानुमत इति वक्तव्यं तत्र तत्र प्रदेशेऽनेकशोऽवधारणविधिदर्शनात् । तथा हि-" किमयं भंते ! कालो त्ति पवुच्चइ गोयमा ! जीवा चेव अजीवा चेव " स्थानाङ्गेऽप्युक्तम्-"जं इत्थ च णं लोए तं सव्वं दुप्पडोयारं, तं जहा—जीवा चेव, अजीवा चेव तहा जह चेव मोक्खफला आणा आराहिया जिणिंदाणमि"त्यादि या चावधारणी भाषा प्रवचने निषिध्यते सा क्वचित् तथारूपवस्तुतत्त्वनिर्णयाभावात् क्वचिदेकान्तप्रतिपादिका या न तु सम्यक् यथावस्थितवस्तुतत्त्वनिर्णये स्यात्पदप्रयोगाद्यस्यामिति । दैगम्बरी त्वियं प्रमाणनयभाषा सम्पूर्णवस्तुकथन प्रमाणवाक्यं यथा-स्याज्जीव स्याद्धर्मास्तिकाय इत्यादि । वस्त्वेकदेशकथनं नयवाद , तत्र यो नाम नया नयान्तरसापेक्ष स नय इति वा सुनय इति वा प्रोच्यते (आ० म०) नयचिन्तायामपि च ते दिगम्बरा स्यात्पदप्रयोगमिच्छन्ति। तथा चाकलङ्क एव प्राह—नयोऽपि तथैव सम्यगेकान्तविषय स्यादिति । अत्र टीकाकारेण व्याख्या कृता-नयोऽपि नयप्रतिपादकमपि वाक्य, न केवल प्रमाणवाक्यमित्यपिशब्दार्थ , तथैव-स्यात्पदप्रयोगप्रकारेणैव सम्यगेकान्तविषय स्यात् , यथा-स्यादस्त्येव जीव इति, स्यात्पदप्रयोगाभावेतु मिथ्यैकान्तगोचरतया दुर्नय एव स्यादिति, तदेतदयुक्तम् , प्रमाणनयविभागाभावप्रसक्ते ,तथाहि-स्याज्जीव एवेति किल प्रमाणवाक्यं , स्यादस्त्येव जीव इति नयवाक्यम् । एतच्च द्वयमपि लघीयस्त्रयाऽलङ्कारे साक्षादकलङ्केनेदमुदाहृतम् अत्र चोभयत्रापि विशेष , तथाहि-स्यात् जीव एवेत्यत्र जीवशब्देन प्राणधारणनिबन्धना जीवशब्दवाच्यता प्रतिपत्ति , अस्तीत्यनेनोक्तनाकारशब्दप्रयोगादजीवशब्दवाच्यताप्रतिषेध, स्याच्छब्दप्रयोगत असाधारणसाधारणधर्माक्षेप । स्यादस्त्येव जीव इत्यत्र जीवशब्देन जीवशब्दवाच्यताप्रतिपत्तिरस्तीत्यनेनोक्तनविवक्षास्तित्वावगति , एवकारप्रयोगात्तु यदाशङ्कितं सकलेऽपि जगति जीवस्य नास्तित्वं तद्व्यवच्छेद , स्यात्पदप्रयोगादसाधारणसाधारणधर्मप्रतिपत्तिरित्युभयत्राप्यविशेष एव । तथा च-सिद्धव्याख्याता न्यायविचारवित्रुतौ-'स्यादस्त्येव जीव'इति प्रमाणवाक्यमुदाहृतवान् , तथा च तद्ग्रन्थो ग्रन्थ " यदा तु प्रमाणव्यापारसमविकलं परामृश्य प्रतिपादयितुमभिप्रेतेन प्रयत्यते तदा अङ्गीकृतगुणप्रधानभावाशेषधर्मसूचककथञ्चित्पर्याय स्याच्छब्दविभूषितया साधारणया च वाचा स्यादस्त्येव जीव इत्यादिकया, अतोऽन्य स्याच्छब्दसंसूचिताभ्यन्तरीभूतानन्तधर्मकस्य साक्षादुपन्यस्तजीवशब्दक्रियाभ्यां प्रधानीकृतात्मभावस्यावधारणव्यवच्छिन्नतदसम्भवस्य वस्तुन सन्दर्शकत्वा-

त्सकलादेश इत्युच्यते, प्रमाणप्रतिपन्नसम्पूर्णार्थकथनमिति यावदित्यादि तस्मादसद्दुक्तैव प्रमाणनयव्यवस्था समीचीना, यथा या नाम नया नयान्तरमापेक्ष परमार्थेन स्यात्पदप्रयोगतमभिलपन् सम्पूर्णं वस्तु गृह्णातीति प्रमाणान्तरभावनीयम्, नयान्तरानिरपेक्षस्तु यो नयः स च नियमान्मिथ्यादृष्टिरेव सम्पूर्णवस्तुग्राहकत्वाभावादिति। आ० म० १ अ०। 'स्याद्वादाय नमस्तस्मै, यं विना सकला क्रिया। लोकद्वितयभाविन्यो, नैव साङ्गत्यमासते ॥ १ ॥" स्था० ६ ठा०। सकलनयसमूहात्मकवचने, द्वा० ६ द्वा०। "नयास्तव स्यात्पदलाञ्छना इमे, रसोपविद्धा इव लोहधातवः। भवन्त्यभिप्रतफला यतस्ततो, भवन्तमार्याः प्रणता हितैषिणः ॥१॥" आ०, म० १ अ०। अनु०। सूत्र०।

सियवायमंजरी-स्याद्वादमञ्जरी-स्त्री० हेमचन्द्रसूरिविरचितायां वर्द्धमानजिनस्तुतिलक्षणायां अन्ययोगव्यवच्छेदद्वात्रिंशिकायां व्याख्यानरूपे मल्लिषेणसूरिविरचिते ग्रन्थविशेषे, स्या०।

"येषामुज्ज्वलहेतुदृष्टिरुचिरः प्रामाणिकाध्वस्पृशां,
हेमाचार्यसमुद्भवस्तवनभूरर्थः समर्थः सखा।
तेषां दुर्नयदस्युसम्भवभयाऽस्पृष्टात्मना संभवस्याद्वादेन विना जिनागमपुरप्राप्तिः शिवश्रीप्रदा ॥ १ ॥
चातुर्विद्यमहोदधेर्भगवतः श्रीहेमसूरेर्गिरा,
गम्भीरार्थविलोकने यदभवद् दृष्टिः प्रकृष्टा मम।
द्वार्थोय समयादरागद्रपराभूतप्रभूतावमं,
तन्नूनं गुरुपादरेणुकणिकासिद्धाञ्जनस्योर्जितम् ॥ २ ॥
अन्यान्यशास्त्रतरुसङ्गतचित्तहारि,
पुष्पोपमेयकतिचिच्चितप्रमेयैः।
दृब्धां मयाऽन्तिमजिनस्तुतिवृत्तिमेनां,
मालामिवामलहृदो हृदये वहन्तु ॥ ३ ॥
प्रमाणसिद्धान्तविरुद्धमत्र,
यत्किञ्चिदुक्तं मतिमान्द्यदोषात्।
मात्सर्यमुत्सार्य तदार्यचित्ताः,
प्रसादमाधाय विशोधयन्तु ॥ ४ ॥
उर्व्यामेव सुधाभुजां गुरुरिति त्रैलोक्यविस्तारिणो,
यत्रैव प्रतिभाभरेण तनुमितिर्निर्दम्भमुज्जृम्भते।
किं चामी विबुधाः सुधीति वचनोद्गारं यदीयं मुदा,
शंसन्त प्रथयन्ति तामतितमां स्याद्वादमेदस्विनीम् ॥ ५ ॥
नागेन्द्रगच्छगोविन्द-वक्षोऽलङ्कारकौस्तुभाः।
ते विश्ववन्द्या नन्द्यासु-रुदयप्रभसूरयः ॥ ६ ॥ युग्मम्।
श्रीमल्लिषेणसूरिभि-रकारि तत्पदगगनदिनमणिभिः।
वृत्तिरियं मनुरविमित-शाकाब्दे दीपमहसि शनौ ॥७॥
श्रीजिनप्रभसूरीणां साहाय्योद्भिन्नसौरभा।
श्रुतावुत्तंसतु सतां वृत्तिः स्याद्वादमञ्जरी ॥ ८ ॥
बिभ्राण किल निर्जयाज्जिनतुलां श्रीहेमचन्द्रप्रभौ,
तद्दृष्टयस्तुतिवृत्तिनिर्मितिमिषाद्धाक्रमेया विस्तृता।
निर्गुंतु गुणदूषणं निजगिरा तत्रार्थये सज्जनान्,
तस्यास्तत्र समृद्ध्रिम बहुमानं साऽस्यत्र सम्यग् यतः ॥९॥"
स्या०।

सियवायमुद्दानइभेइ-स्याद्वादमुद्रानतिभेदिन्-त्रि०। स्याद्वाद-अनेकान्तवादो नित्यानित्याद्यनेकधर्मशबलैकवस्त्वभ्युपगम इति यावत्। तस्य मुद्रा-मर्यादा तां नाऽतिभिनत्ति-नातिक्रामति स्याद्वादमुद्रानतिभेदी। अनेकान्तवादमर्यादाव्यवस्थिते, स्या०। ('अणेगंतवाय' शब्दे प्रथमभागे ४२३ पृष्ठे विस्तरो गतः।)

सियवायरयणागर-स्याद्वादरत्नाकर-पुं०। देवसूरिभिर्विरचिते प्रमाणनयतत्त्वालोकालङ्कारटीकाग्रन्थे, रत्ना०।

"सिद्धेय वर्धमानः स्तात्, ताम्रा यन्नखमण्डली।
प्रत्यूहशलभप्लोषे, दीप्रदीपाङ्कुरायते ॥ १ ॥
यैरत्र स्वप्रभया, दिगम्बरस्यार्पिता पराभूतिः।
प्रलयन्तु विबुधानां, जयन्तु ते देवसूरयो नव्याः ॥ २ ॥
स्याद्वादमुद्रामपनिद्रभक्त्या,
समाभृतां स्तौमि जिनेश्वराणाम्।
सन्न्यायमार्गानुगतस्य यस्यां,
सा भीस्तदन्यस्य पुनः स दण्डः ॥ ३ ॥"

इह हि लक्ष्यमाणाऽक्षोदीयोऽर्थाचूर्णसारव्रीगनिरन्तरे, तत इतो दृश्यमानस्याद्वादमहामुद्रामुद्रितानिद्रप्रमेयसहस्रोत्तुङ्गतरङ्गभाङ्गिमङ्गसौभाग्यभाजने, अतुलफलभरभ्राजिष्णुभूयिष्ठागमाऽभिरामातुच्छपरिच्छेदनन्दोहशाद्वलासन्नकाननिकुञ्जे, निरुपममनीषामहायानपात्रव्यापारपरायणपूरुषप्राप्यमणप्राप्तपूर्वरत्नविशेषे; क्वचन वचनरचनाऽनवद्यगद्यपरम्पराप्रवालजालजटिले, क्वचन सुकुमारकान्तलोकनीयास्तोकश्लोकमौक्तिकप्रकरकरम्बिते, क्वचिदनेकान्तवादोपक्लिप्तानल्पविकल्पकल्लोलोल्लासितोद्दामदूषणाद्रिविद्राव्यमाणानेकतीर्थिकनक्रचक्रचक्रवाले, क्वचिदुपगताशेषदोषानुमानाभिधानोद्वर्तमानासमानपाठीनपुच्छच्छटाऽऽच्छोटनोच्छलदुच्छशीकरश्लेषसञ्जायमानमार्तण्डमण्डलप्रचण्डचमत्कारे, क्वापि तीर्थिकग्रन्थग्रन्थिसार्थसमर्थकदर्थनोपस्थापितार्थानवस्थितप्रदीपायमानसमानज्वलन्मणिफणीन्द्रभीषणे, सहृदयसैद्धान्तिकतार्किकवैयाकरणकविचक्रचक्रवर्तिसुविहितसुगृहीतनामधेयास्मद्गुरुश्रीदेवसूरिभिर्विरचिते स्याद्वादरत्नाकरे न खलु कातपयतकभाषातीर्थमजानन्तोऽपाठीनाः अधीवराश्च प्रवेष्टुं प्रभविष्णवः, इत्यतस्तेषामवतारदर्शनं कर्तुमनुरूपम्। तच्च संक्षेपतः शास्त्रशरीरपरामर्शमन्तरेण नोपपद्यते। सोऽपि समासतः सूत्राभिधेयावधारणं विना न इति, प्रमाणनयतत्त्वालोकाख्य तत्सूत्रार्थमात्रप्रकाशनपरा रत्नाकरावतारिकानाम्नी लघीयसी टीका प्रकटीक्रियते। तत्र चेह यत्र क्वचिदपि प्रवर्तमानस्य पुरुषत्वाभिमानिनोऽनेकप्रकारतत्तद्गुणदोषदर्शनाऽऽहतसंस्कारस्याऽझायद्वये स्मृतिकोटिमुपढौकनीया भवन्त्युपकारिण, अपकारिणश्च, विशेषतो ये यत्र तदभिमततत्त्वावधारणेनाऽऽरिराधयिषिता, तदुपहितदोषापसारणेन परिचिकीर्षिताश्च द्वयेऽपि चामी द्वेधा-परापरभेदात्, बाह्यान्तरङ्गभेदाच्च इत्यस्मिन् प्रमाणनयतत्त्वपरीक्षाप्रवीणे प्रक्रमे तत्रास्तत्र भवन्तस्तेषां प्रागेव स्मृतये श्लोकमेकमेमं चकीर्तत्। रत्ना० १ परि०।

सिया-स्यात्-अव्य०। आशङ्कायाम्, आशङ्का नाम विभाषा, स्यादिति कोऽर्थः-कदाचिद्भवेत्, कदाचिन्न भवेत्। व्य० १ उ०।

उत्त० । दश० । अवधारणे, नि० चू० १ उ० । भवत्यर्थे, आशङ्कायां भजनाया वा । तत्र भवत्यर्थे सुप्रसिद्ध ,आशङ्काया यथा ' दव्वत्थउ भावत्थउ, दव्वत्थउ बहुगुण त्ति बुद्धि सिया" भजनाया यथा–"सिय तिभाग सिय तिभागतिभागे" इत्यादि । वृ० १ उ० २ प्रक० ।

सिता–स्त्री० । मृत्तिकादीनां संग्रह, आचा०१ श्रु० २अ०५उ० ।

सियाणकरण–श्मशानकरण–न० । श्मशानस्थापनायोग्यप्रत्युपत्तनं, वृ० १ उ० २ प्रक० ।

सियाल–शृगाल–पुं० । गोमायौ, प्रज्ञा० ११ पद । वृ० । जम्बुके, प्रश्न० १ आश्र० द्वार । वृ० । शृगालो वै एष जायते यस्सपुरीषा दह्यते । आ० म० १ अ० । नरकपालविकुर्विते जम्बुके, सूत्र० १ श्रु० ५ अ० २ उ० । प्रज्ञा० ।

सियालखाइता–शृगालखादिता–स्त्री० । शृगालस्तु न्यग्वृत्त्योपात्तस्यान्यान्यस्थानभक्षणेन वा खादिता तत्स्वभावो वेति । प्रव्रज्याभेदे, स्था० ४ ठा० ४ उ० ।

सियालता–शृगालता–स्त्री० । दीनवृत्तौ , स्था० ४ ठा० ३ उ० ।

सियाली–शृगाली–स्त्री० । शृगालभार्यायाम् , प्रज्ञा० ६ पद २ द्वार ।

सिर–सृज–धा० । सृष्टौ, " सृजो र " ॥ ८ । ४ । २२६ ॥ इत्यन्तस्य र. । सिरइ । सृजति । प्रा० ४ पाद ।

शिरस्–न० । उत्तमाङ्ग, व० सूत्र० । दश० । औ० । " श्रमदामशिरानभ."।८।१।३२।इत्यत्र शिर पर्युदासात् शिरस. पुंस्त्वं न । प्रा० । उपचाराच्छिरोवन्धने,औ० । मस्तके,"सिरसामियकरयलंजलि" शिरसि–मस्तके नमितो निर्वासित करतलयोर्हस्तयोरञ्जलिर्हस्तविन्यासविशेषो यत्र करणे तत्तथा कर्त्तव्यमित्येतत्क्रियाविशेषणमिदमिति । पञ्चा० ४ विव० । " सीस सिरं उत्तमग च" पाइ० ना० १११ गाथा ।

सिरपरिरय–शिरःपरिरय–पुं० । करभ्रमणाभिमन्त्रणे , पं–व० ५ द्वार ।

सिरपाल–शिरःपाल–पुं० । विगउल्लीदेशीयविगल्लनगरराजे , ती० ५१ कल्प । ( ' अतरिक्खपासणाह ' शब्दे प्रथमभागे ६६ पृष्ठ कथा । )

सिरमुंड–शिरोमुण्ड–पुं० । शिरसा मुण्डे,स्था० १० ठा०३ उ० ।

सिरय–शिरोज–पुं० । मस्तककेशे , प्रज्ञा० १ पद ।

सिररुह–शिरोरुह–पुं० । केशे, प्रज्ञा० १ पद ।

सिरवेयणा–शिरोवेदना–स्त्री० । "श्रोतोद्वाऽन्योन्य–प्रकोष्ठातोद्यशिरोवेदना–मनोहर–सरोरुहे क्तोश्च व " । ८ । १ । १५६ । एषु ओत्त्वं वा भवति । तत्सन्नियोगे च यथासम्भव ककारतकारयोर्वाऽऽदेश ।सिरविअणा । सिरोवेयणा । शिर पीडायाम्,प्रा० ।

सिरसंभूया–श्रीसम्भूता–स्त्री० । पक्षस्य पञ्चम्यां रात्रौ, ज्यो० ४ पाहु० ।

सिरसावत्त–शिरसा(स्या)वर्त्त–पुं० । शिरसा आवर्त्त आवृत्तिरावर्त्तन परिभ्रमण यस्याऽसौ । सप्तम्यलोपाच्छिरस्यावर्त्त । भ० २ श० १ उ० । शिरसि–मस्तके आवर्त्त प्रदक्षिणभ्रमणं यस्येति । कृतिकर्मणि क्रियमाणे आवृत्तेऽञ्जलौ, कर्म० १ कर्म० । जी० । औ० । रा० ।

सिरा–शिरा–स्त्री० । धमन्याम् , जी० ३ प्रति० । तं० ।



सिरि–श्री–स्त्री० । "ई–श्री–ह्री–कृत्स्न–क्रिया–दिष्ट्यादिष्वित् " ॥ ८ । २ । १०४ ॥ इति संयुक्तव्यञ्जनात्पूर्व इकार । प्रा० । लक्ष्म्याम् , ज्ञा० १ श्रु० १ अ० । उपा० । द्वा० । सम्पदि, ज्ञा० १ श्रु० ६ अ० । शोभायाम् , ज्ञा० १ श्रु० १ अ० । कल्प० । नि० । जम्बूद्वीपे पद्महृदाधिष्ठातृदेव्याम् , स्था० ६ ठा० ३ उ० । अन्तरञ्जिकानगरीराजे, यत्र त्रैराशिकनवाचार्यस्य रोहगुप्तस्य परिव्राजकेन सह शास्त्रार्थोऽभवत् । विशे० । सौधर्मकल्पे स्वनामख्याते विमाने, तद्देव्याञ्च । नि० ।

एवं खलु जंबू तेणं कालेणं तेणं समएणं रायगिहे नगरे गुणसिलए चेइए सेणिए राया सामी समोसढे परिसा निग्गया । तेणं कालेणं तेणं समएणं सिरिदेवी सोहम्मे कप्पे सिरिवडिंसए विमाणे सभाए सुहम्माए सिरंसि सीहासणंसि चउहिं सामाणियसाहस्सेहिं चउहिं महत्तरियाहिं सपरिवाराहिं जहा बहुपुत्तिया ० जाव नट्टविहिं उवदंसित्ता पडिगता, नवरं दारियाओ नत्थि पुव्वभवपुच्छा, एवं खलु जंबू ! तेणं कालेणं तेणं समएणं रायगिहे नयरे गुणसिलए चेइए जियसत्तू राया । तत्थ णं रायगिहे नगरे सुदंसणो नामं गाहावई परिवसति, अड्ढे० । तस्स णं सुदंसणस्स गाहावइस्स पिया नामं भारिया होत्था सुमाला । तस्स णं सुदंसणस्स गाहावइस्स भूया पियाए गाहावतिणीए अत्तिया भूया नामं दारिया होत्था वुड्ढा वुड्ढकुमारी जुन्ना जुन्नकुमारी पडितपुतत्थणीवरपरिवज्जिया यावि होत्था । तेणं कालेणं तेणं समएणं पासे अरहा पुरिसादाणीए० जाव नवरयणीए वण्णओ सो चेव समोसरणं परिसा निग्गया । तते णं सा भूया दारिया इमीसे कहाए लद्धट्ठा समाणी हट्ठतुट्ठा जेणेव अम्मापियरो तेणेव उवागच्छइ उवागच्छित्ता एवं वदासी–एवं खलु अम्मताओ पासे अरहा पुरिसादाणीए पुव्वाणुपुव्विं चरमाणे० जाव देवगणपडिवुडे विहरति, तं इच्छामो णं अम्मयाओ तुब्भेहिं अब्भणुन्नाया समाणी पासस्स अरहओ पुरिसादाणीयस्स पादवंदिया गमित्तए । अहासुहं देवाणुप्पिया ! मा पडिबंधं करेह । तते णं सा भूया दारिया ण्हाया० जाव सरीरा चेडीचक्कवालपरिकिन्ना साओ गिहाओ पडिनिक्खमति पडिनिक्खमित्ता जेणेव बाहिरिया उवट्ठाणसाला तेणेव उवागच्छइ उवागच्छित्ता धम्मियं जाणप्पवरं दुरूढा । तते णं सा भूया दारिया नियगपरिवारपरिवुडा रायगिहं नगरं मज्झंमज्झेणं निग्गच्छति०त्ता जेणेव गुणसिलए चेइए तेणेव उवागच्छइ उवागच्छित्ता छत्तादीए तित्थकरातिसए पासति पासित्ता धम्मियाओ जाणप्पवराओ पच्चोरुभित्ति० २ त्ता चेडीचक्कवालपरिकिन्ना जेणेव पासे अरहा पुरिसादाणीए

तेणेव उवागच्छइ उवागच्छित्ता तिक्खुत्तो वंदति वंदित्ता० जाव पज्जुवासेति पज्जुवासित्ता तते णं पासे अरहा पुरिसादाणीए भूयाए दारियाए तीसे महति महलियाए धम्मकहाए धम्मं सोच्चा णिसम्म हट्टतुट्टा वंदति वंदित्ता एवं वयासी–सद्दहामि णं भंते! निग्गंथं पावयणं० जाव अब्भुट्ठेमि णं भंते! णिग्गंथं पावयणं। से जहे तं तुब्भे वदहे जं नवरं देवाणुप्पिया! अम्मापियरो आपुच्छामि तते णं अहं० जाव पं(प)व्वइत्तए अहासुहं देवाणुप्पिया! तते णं सा भूया दारिया तमेव धम्मियं जाणप्पवरं० जाव दुरुहति दुरुहित्ता जेणेव रायगिहे नगरे तेणेव उवागता, रायगिहं नगरं मज्झं मज्झेणं जेणेव सए गिहे तेणेव उवागता, रहाओ पच्चोरुहित्ता जेणेव अम्मापितरो तेणेव उवागता, करतल० जहा जमाली आपुच्छति। अहासुहं देवाणुप्पिए! तते णं से सुदंसणे गाहावई विउलं असणं पाणं खाइमं साइमं उवक्खडावेति, मित्तनाति आमंतेति ०जाव जिमियभुत्तुत्तरकाले सुईभूते निक्खमणमाणित्ता कोडुंबियपुरिसे सद्दावेति कोडुंबियपुरिसे सद्दावित्ता एवं वदासि–खिप्पामेव भो देवाणुप्पिया! भूयादारियाए पुरिससहस्सवाहिणीयं सीयं उवट्ठवेह ०जाव पच्चप्पिणह। तते णं ते ०जाव पच्चप्पिणति। तते णं से सुदंसणे गाहावई भूयं दारियं ण्हायं०जाव विभूसियसरीरं पुरिससहस्सवाहिणिं सीयं दुरुहति दुरुहित्ता मित्तनाति० जाव रवेणं रायगिहं नगरं मज्झं मज्झेणं जेणेव गुणसिलए चेइए तेणेव उवागते, छत्ताईए तित्थकरातिसए पासति सीयं ठावेति ठावित्ता भूयं दारियं सीयाओ पच्चोरुहति पच्चोरुहित्ता, तते णं तं भूयं दारियं अम्मापियरो पुरतो काउं जेणेव पासे अरहा पुरिसादाणीए तेणेव उवागते, तिक्खुत्तो वंदति नमंसति वंदित्ता नमंसित्ता एवं वदासी–एवं खलु देवाणुप्पिया! भूया दारिया अम्हं एगा धूया इट्ठा, एस णं देवाणुप्पिया! संसारभउव्विग्गा भीया ०जाव देवाणुप्पियाणं अंतिए मुंडा ०जाव पव्वयति पव्वयित्ता तं एयं णं देवाणुप्पिया! सिस्सिणी भिक्खं दलयति, पडिच्छंतु णं देवाणुप्पिया। सिस्सिणीभिक्खं। अहासुहं देवाणुप्पिया! तते णं सा भूता दारिया पासेणं अरहा० एव वुत्ता समाणी हट्टा उत्तरपुरच्छिमं सयमेव आभरणमल्लालंकारं उम्मुयइ, जहा देवाणंदा पुप्फचूलाणं अंतिए ०जाव गुत्तबंभयारिणी। तते णं सा भूता अज्जा अण्णदा कदाइ सरीरपाओसिया जाया यावि होत्था, अभिक्खणं अभिक्खणं हत्थे धोवति, पादे धोवति, एवं सीसं धोवति, मुहं धोवति, थणगंतराइं धोवति, कक्खंतराइं धोवति, गुज्झंतराइं जत्थ जत्थ वि य णं ठाणं वा सिज्जं वा निसीहियं वा चेतेति तत्थ तत्थ वि य णं पुव्वामेव पाणएणं अब्भुक्खेति। ततो पच्छा ठाणं वा सिज्जं वा निसीहियं वा चेतेति। तते णं तातो पुप्फचूलातो अज्जातो भूयं अज्जं एवं वदासी–अम्हे णं देवाणुप्पिए! समणीओ निग्गंथीओ इरियासमियाओ ०जाव गुत्तबंभचारिणीओ, नो खलु कप्पति अम्हं सरीरपाओसियाणं होत्तए, तुमं च णं देवाणुप्पिए! सरीरपाओसिया अभिक्खणं अभिक्खणं हत्थे धोवसि ०जाव निसीहियं चेतेहि, तं णं तुमं देवाणुप्पिए एयस्स ठाणस्स आलोएहि त्ति, सेसं जहा सुभद्दाए ०जाव पाडियक्कं उवस्सयं उवसंपज्जित्ता णं विहरति। तते णं सा भूता अज्जा अणोहट्टिया अणिवारिया सच्छंदमई अभिक्खणं अभिक्खणं हत्थे धोवति ०जाव चेतेति। तते णं सा भूया अज्जा बहूहिं चउत्थछट्ठ० बहूहिं वासाइं सामण्णपरियागं पाउणित्ता तस्स ठाणस्स अणालोइयपडिक्कंता कालमासे कालं किच्चा सोहम्मे कप्पे सिरिवडिंसए विमाणे उववायसभाए देवसयणिज्जंसि ०जाव ओगाहणाए सिरिदेवित्ताए उववन्ना पंचविहाए पज्जत्तीए भासामणपज्जत्तीए पज्जत्ता। एवं खलु गोयमा! सिरीए देवीए एसा। दिव्वा देविड्डी लद्धा पत्ता, ठिई एगं पलिओवमं सिरी णं भंते! देवी ०जाव कहिं गच्छिहिति? महाविदेहे वासे सिज्झिहिति एवं खलु जंबू! निक्खेवओ। नि० १ श्रु० ४ वर्ग १ अ०।

कुन्थुनाथस्य मातरि, प्रव० ११ द्वार। स०। वणिग्ग्रामे मित्रनामकस्य राज्ञो भार्यायाम्, विपा० १ श्रु० २ अ०। क्षुद्रहिमवद्देव्याम्, आ० म० १ अ०। उत्तररुचकवास्तव्यायां दिक्कुमार्याम्, आ० चू० १ अ०। वाराणस्यां भद्रश्रेणिजीर्णश्रेष्ठि(नः) भार्याया सुनन्दाया दुहितरि, आ० चू० ४ अ०। देवतानामनिसाविशेषे, ज्ञा० १ श्रु० १ अ०। हिमवद्वर्षधरपर्वते स्वनामख्याते षष्ठे कूटे, स्था० २ ठा० ३ उ०।

सिरिअ–श्रीक–पुं०। सूर्यभद्रस्य भ्रातरि, ही० ३ प्रका०।

सिरिअभिसेय–श्र्यभिषेक–पुं०। लक्ष्म्यभिषेके, जं० २ वक्ष०।

सिरिउववेय–श्र्युपपेत–त्रि०। लक्ष्म्योपगते, दश० ६ चू०।

सिरिंग–देशी–विट, दे० ना० ८ वर्ग ३२ गाथा।

सिरिकंत–श्रीकान्त–पुं०। अयोध्यानगरीराजस्य मिथ्यादृष्टेः श्रावीरस्य पुत्रे, अष्ट० २५ अष्ट०। ('राम' शब्दे षष्ठे भागे कथा।) षष्ठे देवलोके विमाने, स० १४ सम०। श्रीकान्तानगरीवास्तव्ये व्यवहारिणि, कल्प० १ अधि० १ क्षण।

सिरिकंता–श्रीकान्ता–स्त्री०। भोगपुरवास्तव्यस्य वरुणश्रेष्ठि-

नो भार्यायां सुलभकुमारमातरि, भ० श० २ अधि०। मरुदेवस्य पष्ठकुलकरस्य भार्यायाम्, आ० म० १ अ०। स्था०। स०। स्वनामख्यातायां सार्थवाह्याम्, आव० ४ अ०। आ० म०। आ० क०। ('अलोमया' शब्दे प्रथमभागे ७८४ पृष्ठे कथोक्ता।) स्वनामख्यातायां नगर्याम्, यत्र विजयसेनो नाम राजा श्रीकान्ताख्यश्च व्यवहार्यासीत्। कल्प० १ अधि० १क्षण। जम्ब्वा. सुदर्शनाया अपरस्यां दिशि नन्दापुष्करिण्याम्, जी० ३ प्रति० ४ अधि०। ज०। पुरिमतालनगरराजस्य उदितोदयस्य भार्यायाम्, न०। आ० म०। आ० चू०। चम्पाया नगर्या दत्तराजस्य पुत्रमहाचन्द्रराजभार्यायाम्, विपा० २ श्रु० ६ अ०।

सिरिकंदल-श्रीकन्दल-पुं०। एकखुरजीवविशेषे, प्रज्ञा०१पद।

सिरिकूड-श्री कूट-पुं०। न०। श्रीदेवतानिवासभूते हिमवद्वर्षधरस्य षष्ठे कूटे, स्था० २ ठा० ४ उ०। जं०।

सिरिखंड-श्रीखण्ड-न०। मलयज, आ० म० १ अ०। स्था०।

सिरिगुत्त-श्रीगुप्त-पुं०। आर्यसुहस्तिन शिष्ये अन्तरञ्जिकाया नगर्या त्रैराशिकाचार्यस्य रोहगुप्तस्य गुरौ दशपूर्विण्याचार्ये, विशे०। उत्त०। आ० म०। आ० चू०। कल्प०। विन्ध्याद्रौ पार्श्वनाथे, ती० ४३ कल्प।

सिरिघर-श्रीगृह-न०। भाण्डागारे, ज्ञा०२श्रु०२ अ०। विशे०। ज्ञा०। भ०। आ० म०। पार्श्वनाथस्य षष्ठे गणधरे, स्था० ८ ठा० ३ उ०।

सिरिघरपडिरूवय-श्रीगृहप्रतिरूपक-त्रि०। रत्नमयत्वाद्भाण्डागारतुल्ये, भ० ११ श० ११ उ०।

सिरिघरिय-श्रीगृहिक-पुं०।श्रीगृह भाण्डागार तदस्यास्तीत्य नोऽनेकस्वरादीतीकप्रत्यय। आ० म० १ अ०। भाण्डागारिके. विशे०। भाण्डागारनियुक्ते, व्य० ३ उ०। आ० म०।

सिरिचंद-श्रीचन्द्र-पुं०। ऐरवते वर्षे उत्सर्पिण्या भविष्यति षष्ठ तीर्थकरे, स०। ति०। प्रव०। भारते वर्षे भविष्यति तृतीयचक्रवर्त्तिनि, ती० २०.कल्प। मलधारिश्रीहेमचन्द्रसूरिशिष्ये, विक्रम ११२१ वर्षे भृगुकच्छनगरश्रेष्ठिना धवलशाहनाम्ना प्रार्थनया मुनिसुव्रतस्वामिचरित्रकारके आचार्ये च। जै० इ०।

सिरिचंदा-श्रीचन्द्रा-स्त्री०। जम्ब्वा सुदर्शनाया अपरोत्तरस्या दिशि नन्दापुष्करिण्याम्, जी० ३ प्रति० ४ अधि०।

सिरिजगसूरि-श्रीजगत्सूरि-पुं०। सत्यपुरनगरे नाहडकारितश्रीवीरप्रतिमाप्रतिष्ठापके स्वनामख्याते सूरौ, ती० १५ कल्प।

सिरिड्ढ-श्र्याढ्य-पुं०। स्थविरस्यार्यमहागिरेरेलापत्यसगोत्रस्य स्वनामख्याते शिष्ये, कल्प० २ अधि० ८ क्षण।

सिरिणाभिज्जजिण-श्रीनाभेयजिन-पुं०। नाभेरपत्य नाभेय। श्रीयुतो नाभेय श्रीनाभेय स चासौ जिनश्च श्रीनाभेयजिन। ऋषभदेवे, द्व्या० १० अध्या०।

सिरिणिलया-श्रीनिलया-स्त्री०। जम्ब्वा सुदर्शनाया अपरोत्तरस्या दिशि नन्दापुष्करिण्याम्, जी० ३ प्रति० ४ अधि०। ज०। स्था०।

सिरिदत्त-श्रीदत्त-पुं०। कुम्भाकर्मनिवेशवासिनि स्वनामख्याते श्रेष्ठिपुत्रे, ध० र० २ अधि०। (श्रीदत्तवर्दिनि तद्दृष्टान्तश्च 'सम्मत्' शब्देऽस्मिन्नेव भागे उक्त।) ऐरवतेऽस्यामवसर्पिण्यां जातेऽष्टमे तीर्थकारे, प्रव० ७ द्वार।

सिरिदाम-श्रीदामन्-न०। शोभावन्मालायाम्, ज्ञा० १ श्रु० ८ अ०। अनेकरत्नखचिते दर्शनसुभगे आभरणविशेषे, आ० म० १ अ०। मथुरायां नन्दिवर्द्धनस्य नन्दिषेणस्य विपाकश्रुतोक्तस्य पितरि, स्था० १० ठा० ३ उ०। विपा०। एकादशदेवलोकविमाने, स० २१ सम०।

सिरिदामगंड-श्रीदाम(गण्ड)काण्ड-पुं०। श्रीदाम्नां शोभावद्विचित्ररत्नमालानां गण्डं गालवृत्ताकारत्वात्, काण्ड वा समूह श्रीदामगण्डम्। श्रीदामकाण्डं वा। अथवा-गण्डो दण्ड स्तद्वद् यत्तद् गण्ड एवोच्यते श्रीदाम्ना गण्ड श्रीदामगण्डं। श्रीदामसमूह. ज० ५ वक्ष०। स्था०। ज्ञा०।

सिरिदेवी-श्रीदेवी-स्त्री०। दीर्घदशाना चतुर्थाध्ययनोक्तायां सौधर्मकल्पदेव्याम्, स्था० १० ठा०३ उ०।(अस्या कथा 'सिरि' शब्देऽस्मिन्नेव भागे उक्ता।)

सिरिद्दही-देशी-पक्षिपानपात्रे, दे० ना० ८ वर्ग ३२ गाथा।

सिरिधम्म-श्रीधर्म-पुं०। स्थविरस्यार्यसुहस्तिन काश्यपगोत्रस्य शिष्ये दशपूर्विणि स्थविरे, कल्प० २ अधि० ८ क्षण। उज्जयिन्या मुनिसुव्रतस्वामिशिष्यसुव्रताचार्यस्य बन्धनकर्त्तरि राजनि, ती० २० कल्प।

सिरिधर-श्रीधर-पुं०। स्वनामख्याते नैयायिके, स्या०।

सिरिपभ-श्रीप्रभ-पुं०। स्वनामख्याते राज्ञि, ध० र०।

श्रीप्रभमहाराजकथा चेयम्-

"सौधोज्ज्वलप्रभाभि-र्निरन्तरप्रसृतधूपधूम्याभि।
जितसुरसरिदर्कसुता-सङ्गाऽस्ति पुरी विशालेति॥ १॥
सुरलोकावधिविदल-द्विचकिलकलिकोमलं यशो यस्य।
प्रबलबलशत्रुसंहति-कूलङ्कषावधि सदा शौर्यम्॥ २॥
त्यागस्तर्ककजनता-च्छिन्नावधि सागरावधिर्वसुधा।
श्रीजिनपतिपदकमल-द्वयप्रमाणावधिर्भक्ति॥ ३॥
शेष पुनर्गुणगणो, निरवधिरवधीरितान्यदोषभर।
स श्रीचन्द्रनरेन्द्र-स्तां नगरीं पालयामास॥ ४॥
क्षितिपतिहृदयकुशेशय-शया सदाचरणरागपरिकलिता।
शुद्धोभयपक्षाऽजनि, हंसी हंसीव तस्य जनी॥ ५॥
तनयौ तयोरभूतां, परिभूताखिलविपक्षसंदोहौ।
ज्येष्ठ श्रीप्रभसंज्ञ-स्तथा कनिष्ठ प्रभाचन्द्र॥ ६॥
तत्र ज्येष्ठा गम्भी-र्यसागरा रूपविजितरतिकान्त।
सौम्याकृतिः प्रकृत्या, लोकप्रियगुणमाणिक्यकरण्ड॥ ७॥
अक्रूरचित्तपरिणति-निर्जरजम्बालिनीहिमानीभृत्।
शिवसुखघातकपातक-भीरुर्नरराजदिननाथ॥ ८॥
शठतालतालवित्र, दाक्षिण्यहिरण्यमेरुगिरिसदृश।
संततमकार्यलज्जा-स्फुरद्नलिनीकमलिनीतुल्य॥ ९॥
जीवदयाकरधिणी-शशभृत् माध्यस्थ्यहस्तिविन्ध्याद्रि।
गुणरञ्जनवर्त्म, साधुकुलधरकथनपथपान्थ॥ १०॥
जिनधर्मदत्तमतूप-त्तरुत्तमेत्तनयोधर्मान्तम।
स्फूर्जद्गुरुदीर्घदर्शि-त्वनागराक्रमार्ग॥ ११॥
जिनपरिवृढगदितागम-विशेषविधि-वेदनाविधाममनम।

सद्बुद्धिवृद्धजनमे-वनैकसरसी वरमराल ॥१२॥
विनयनयवद्धचेता., कृतजनाकुलिनीधुनीनाथ. ।
परहितकरणप्रवण , सुलब्धलक्ष्यश्च कृत्येषु ॥१३॥
तत्रापरेद्युरागात्, केवलकलितो गुरुर्भुवनभानु ।
तं नन्तुमगान्नृपति , सुतसामन्तादिपरिकलित ॥ १४ ॥
कृत्वा प्रदक्षिणात्रय-मानम्य गुरुं गरिष्ठया भक्त्या ।
उचितस्थाने न्यषद-द्यतिपतिरथ देशनां चक्रे ॥ १५ ॥
इह भवगहनेऽनन्ते. भ्राम्यन् जीव सहन्नसातभरम् ।
जातिकुलप्रभृतियुतं , कथमपि लभते मनुजजन्म ॥ १६ ॥
तदवाप्य भव्यलोका. ! , जिनधर्मं कुरुत सकलदुःखहरम् ।
स पुनर्द्वेधा प्रोक्तो , यतिगृहिधर्मप्रभेदेन ॥ १७ ॥
तत्राद्ये पञ्च यमा , प्रत्येकं पञ्च भावना पाल्याः ।
हिंसालीकस्तेया-ब्रह्मपरिग्रहविरतिरूपा ॥ १८ ॥
समितिभिरीर्यादानै—षणाभिरनिशं तथा मनोगुप्त्या ।
दृष्टान्तादिग्रहणे—न भावयेत्प्रथमयममलम् ॥ १९ ॥
विविधैर्नियमविधानै , प्रत्याख्यानैर्निरन्तरं मतिमान् ।
आलोच्य भाषणेना-पि भावयेत् सूनृतं च यमम् ॥ २० ॥
याचनमवग्रहस्या—लोच्यावग्रहविमार्गणं च भृशम् ।
ततनं समनुज्ञापित—भक्तान्नाभ्यवहृत करणम् ॥ २१ ॥
साधर्मिकतो याचन-मवग्रहस्योच्चकैस्तथाऽस्यैव ॥
मर्यादाकरणमिमा , अस्तेये भावनाः पञ्च ॥ २२ ॥
नारीषण्ढकपशुम—द्विवासकुड्यान्तरासनोज्झनतः ।
स्त्रीरम्याङ्गनिरीक्षण—निजाङ्गसंस्कारपरिहारात् ॥ २३ ॥
स्निग्धात्यशनत्यागात्—सरागयोषित्कथाविवर्जनतः ।
पूर्वरतास्मरणेन—ब्रह्म सदा भावयेद्धीमान् ॥ २४ ॥
स्पर्शे रसे च गन्धे, शब्दे रूपे शुभाशुभे सततम् ।
रागद्वेषत्यागो, हि भावना. पञ्चमयमे स्यु ॥ २५ ॥
एव व्रतानि पञ्चा-पि पञ्चभि पञ्चभि सुधास्य भृशम् ।
सद्भावनाभिरगम—न्ननुमन्त शिवपदमनन्ता. ॥ २६ ॥
गृहमेधिनां तु धर्मे, निशम्य सम्यक् सुसाधुगुरुपार्श्वे ।
श्रान्त्वा तथा गृहीत्वा, व्रतानि परिपालनीयानि ॥ २७ ॥
आयतनसेवनाद्यं, शीलं परिशीलनीयमनवरतम् ।
साङ्ग , समर्जनीय , स्वाध्यप्रभृतिविभवभर. ॥ २८ ॥
व्यवहारशुद्धिरनिशं, मध्यस्थ्याजमावनं कार्या ।
गुरुवर्गगणविहंगम-तरवः शुश्रूषणीयाश्च ॥ २९ ॥
भाव्यं प्रवचनकौशल—सुपेशलैर्गलितसकलपापमले ।
स्त्रीणां वश्योऽवश्यं, नात्मा कार्यं कदाचिदपि ॥ ३० ॥
सुश्रान्तहृदयस्थलाभि—हृषीकचपलाः समन्ततो रोध्या ।
शुद्धितरार्थमार्थे, क्लेशायासाकर कार्या ॥ ३१ ॥
निर्वेद संसारे, तु स्वागारे सदा विधातव्य ।
विषया कुनृपाधिष्ठित-विषया इव दूरतस्त्याज्या. ॥ ३२ ॥
तीव्रारम्भा दम्भा, इव निर्दम्भै कदापि नहि सेव्या ।
सफलक्लेशनिवासे,न गेहवासे रति कार्या ॥ ३३ ॥
धार्यं निरतीचार सुदर्शनं स्वर्गागतदुर्गतिद्वारम् ।
मोहनृपविजयसेरे, न लोकहरो मना धेयम् ॥ ३४ ॥
शुद्धागमविशदशोध , समलकल्याणशेवधि सेव्य ।
दानादिश्चतुर्धा, धर्मः शिवशर्मकृत् कार्यः ॥ ३५ ॥
स्यादेव पथि प्रवृत्ते—र्विमुग्धहासितेऽप्यधीरता धेया ।
द्वेषौ रागद्वेषौ, भवभावेषु नकल्मषेषु ॥ ३६ ॥
धर्माधर्मविचार-श्चिन्त्यो माध्यस्थ्यसुस्थचेतोभि. ।
स्वजनधनादिषु निविड , प्रतिबन्धो नो विधातव्य ॥३७॥
भोगोपभोगतृष्णा, कृष्णाहिविनिग्रहे प्रयतितव्यम् ।
सततं यतिधर्मधुरो-द्धरणोद्धुरकन्धरैर्भाव्यम् ॥ ३८ ॥
एवं श्रमणोपासक-धर्मं विधिना विधाय विमलमना. ।
सुचरित्रमाप्य लभते, भवाष्टकस्यान्तरपवर्गम् ॥ ३९ ॥
इत्याकर्ण्य श्रीच—न्द्रनरपतिर्भुवनभानुगुरुमूले ।
श्रीप्रभसुतादिसहितो , जगृहे गृहमेधिनां धर्मम् ॥ ४० ॥
अथ नत्वा गुरुचरणौ, निजधाम जगाम वसुमतीनाथ. ।
विजहार हारनिर्मल-गुणोच्चय सूरिरन्यत्र ॥ ४१ ॥

चतुर्भि. कलापकम्—

अपरेद्यु. श्रीचन्द्र-क्षितीशितु सविनयं तनूजाभ्याम् ।
संवाह्यमानचरण-द्वयस्य सुकुमारकरकमलम् ॥ ४२ ॥
मौलिमणिरुचिररोची , रचितसद सदनभूरिहरिचापे ।
भक्त्या पर· सहस्रै-रवनिधवै सेव्यमानस्य ॥ ४३ ॥
राज्यभरभवनधरण—स्तम्भै सद्बुद्धिभिर्विगतदम्भै ।
शतश सचिववरिष्ठै-रलंकृतासन्नदेशस्य ॥ ४४ ॥
बहुसमसमरसंप—ल्लम्पटभटकोटिभि परिवृतस्य ।
करकलितकनकदण्डो, विज्ञपयामास वेत्रीति ॥ ४५ ॥
देव ! द्विट्कुवैरि-गमल्लनामा नटाग्रणी रुद्ध. ।
संक्षेपनिबद्धसन-त्कुमारनाट्यप्रबन्धोऽस्ति ॥ ४६ ॥
लघु मुञ्चत्युक्ते सति , महीभुजा वेत्रिणा स आनायि ।
कृत्वा त्रिपात्रकिंकर—मिलाशिषमथ नृपस्यादात् ॥४७॥

तद्यथा—

षट्खण्डामवनिं निधीन्नव चतु षष्टिं सहस्राणि च,
स्त्रीणां क्षोणिभुजां तदर्द्धमपरं द्वि.सप्त रत्नानि च ।
यस्त्यक्त्वा तृणवद्धृवार्त्तिविधुरो जैनं व्रतं शिश्रिये,
राजर्षि. स सनत्कुमार इह ते भूपाल ! भूयाच्छ्रिये ॥४८॥
अथ नाटकावलोकन-कौतुकरसविवशमानसं सकलम् ।
निजतनयप्रभृतिजनं, नृपतिर्विसपर्जमैक्षिष्ट ॥ ४९ ॥
तस्यानुवृत्तिवशतः, सविलासासमुज्ज्वला ततो दृष्टिम् ।
तदभिनयकृते स कृती , नटनेतरि पातयाञ्चक्रे ॥ ५० ॥
बुद्ध्वाऽथो नृपहृदयं, हृदयंगमया गिराऽगृणात् सोऽपि ।
भो भो पार्षद्यजना ! , श्रीचन्द्रनरेश्वरप्रमुखा ! ॥ ५१ ॥
क्षणमेकमेकतानी—भूय. शृणुत तुर्यचक्रिणश्चरितम् ।
इति जल्पन्नट उच्चै—स्तदभिनयं कर्त्तुमारेभे ॥ ५२ ॥

तथाहि—

श्रीहस्तिनापुरपते , सनत्कुमारस्य नृपतितिलकस्य ।
षट्खण्डभरतभर्त्तु , प्राज्यं साम्राज्यमनुभवत ॥ ५३ ॥
अप्रतिमरूपलक्ष्मी—विलोकनोत्पन्नविस्मयोत्कर्ष ।
मध्ये सभं निलिम्पान् ,सुरपतिरिति निगदति स्म मुदा॥५४॥
भो भो अमरा ! पश्यत , सनत्कुमारस्य सार्वभौमस्य ।
पूर्वार्जितशुभतिर्मा—ण कर्मनिर्मितनलसन्मूर्तें ॥ ५५ ॥
सा काऽपि रूपलक्ष्मी , वरेण्यलावण्यकान्तिपरिकलिता ।
सुरसद्मजन्मिनामपि, या प्रायो नैव संभवति ॥ ५६ ॥
अश्रद्दधताविति सुर-पतेर्वचो विजयवैजयन्ताख्यौ ।
क्षिप्रं वसुंधरायां , द्वावमृतभुजाववातरताम् ॥ ५७ ॥
अत्रान्तरे च सर्वे-ऽपि विस्मयस्मेरलोचना लोका ।
किमितो भवितेत्यवहित—चित्ता आकर्णयामासु ॥ ५८ ॥

तौ तदनु विप्ररूपे-ण भूपरूपावलोकनसतृष्णौ ।
द्वारसमीपेऽस्थातां, प्रासादद्वारि भूमिभुजः ॥ ६६ ॥
आसीत् सनत्कुमारो, मुक्तालङ्कारसारनेपथ्यः ।
प्रारब्धमज्जनोऽभ्य-ङ्गसङ्गमङ्क वहन्नुच्चैः ॥ ६० ॥
दौवारिकेण तौ वि-प्रपुङ्गवौ द्वारसंस्थितौ कथितौ ।
प्रावीविशत्तदाप्ये-ष चक्रवर्ती स नयवर्ती ॥ ६१ ॥
अप्रतिरूपं रूपं, तौ दृष्ट्वा तस्य राजराजस्य ।
मौलिं विधूनयन्तौ, दध्यतुरिति विस्मितौ मनसि ॥ ६२ ॥
एतस्य भालपट्टो-ऽयमस्तशस्ताष्टमीरजनिजानि ।
नीलोत्पलजयपत्रे, नेत्रे कर्णान्तविश्रान्ते ॥ ६३ ॥
दन्तच्छदयुगमभिभू-तपक्वबिम्बीफलच्छविविकाशम् ।
जितशुक्ति श्रुतियुगली, कण्ठोऽयं पाञ्चजन्यजयी ॥ ६४ ॥
स्तम्बेरमराजकरा-कारतिरस्कारकारिणौ बाहू ।
वक्षःस्थलममराचल-पृथुलशिलाश्रीविलुण्टाकम् ॥ ६५ ॥
कटेरे करचरणतलं, तर्जितकाङ्केल्लिपल्लवप्रचयम् ।
किमपरममुष्य सर्वा-ङ्गश्रीर्नहि गोचरो वाचाम् ॥ ६६ ॥
कोऽप्यस्याहो लाव-ण्यसरित्पूरो निरर्गलो येन ।
जानीयो नाभ्यङ्गं, भविभामिव चारुचन्द्रिकया ॥ ६७ ॥
वर्णयति स यथेन्द्र-स्तथेदमाभाति समधिकं चापि ।
न कदाचनापि मिथ्या, वदन्ति वाचं महात्मानः ॥ ६८ ॥
किमिहागतौ भवन्ता-विति पृष्टौ चक्रिणाऽथ तौ जगतुः ।
अप्रतिमं तव रूपं, त्रिजगत्या गीयते भूप ! ॥ ६६ ॥
दूरादपि तत् श्रुत्वा, तरङ्गितामुद्रकौतुकसमुद्रौ ।
अवलोकयितुमिहाऽऽवा-मायाव नरेन्द्रशार्दूल ! ॥ ७० ॥
व्यावर्ण्यमानमतुलं, तव रूपं शुश्रुवे यथा लोके ।
नरवर ! ततोऽपि सविशे-षमेतदालोकयतेऽस्माभिः ॥ ७१ ॥
श्रुत्वेति विप्रवचनं, स्मितविच्छुरिताधरो नृपः प्रोचे ।
कान्तिरियं किल कियती, परितोऽप्यङ्के कृताभ्यङ्गे ॥ ७२ ॥
क्षणमात्रमितो भूत्वा, भो भो द्विजसत्तमौ प्रतीक्षेथाम् ।
मज्जनकृत्यं एषो-ऽस्माभिर्निर्वर्त्यते यावत् ॥ ७३ ॥
रचितविचित्राकल्पं, विभूषितं भूरिभूषणगणेन ।
रूपं मम पश्येतं, सरत्नमिव काञ्चनं भूयः ॥ ७४ ॥
तदनु स्नातविलिप्तो-ऽलङ्कृतनेपथ्यभूषितो भूपः ।
अध्यासामास सदः-सदनं गगनं गगनमणिवत् ॥ ७५ ॥
समनुज्ञातौ भूयो-ऽपि भूपरूपं द्विजौ प्रपश्यन्तौ ।
द्रवदग्धकीचकाविव, विच्छायौ झगिति तौ जातौ ॥७६॥
किमेतदिति सर्वेऽपि,सभ्याः साकूतं परस्परमुदीक्षामासुः ।
अनलंकृतेऽपि पूर्व-मपि दृष्टे हर्षितौ युवां विप्रौ ।
समलंकृतेऽपि संप्रति, दृश्येथे किमिति सविषादौ ? ॥७७॥
इति चक्रभृता पृष्टौ-भूदेवौ तौ जजल्पतुर्भूप ! ।
अधुना तावकदेहे, संक्रान्ता व्याधयः सप्त ॥ ७८ ॥
तद्वशाविनश्यदतुला-ङ्गरूपलावण्यवर्णकान्तिगुणः ।
त्वं वर्त्तसे इत्यावां, प्रतिपन्नौ शोकसंभारम् ॥ ७६ ॥
कथमेतद्विज्ञायत, इत्येव प्रश्नितौ भरतपतिना ।
तौ शिष्टयथास्थितस-र्वपूर्वसुरराजवृत्तान्तौ ॥ ८० ॥
प्रकटितनिजस्वरूपौ, गीर्वाणौ प्रतिगतौ यथास्थानम् ।
वैराग्योपगतमतिः-श्चक्रधरोऽचिन्तयदथैवम् ॥ ८१ ॥
भवनजनयुवतिचतुर-ङ्गसंग्रहो यस्य कारणात् क्रियते ।
तद्दारु दारुणघुणै-रिव रोगैर्लुप्यते गात्रम् ॥ ८२ ॥

येन विमोहितमनसो, हितमहितं चिन्तयन्ति नहि जीवाः ।
तद्यौवनमिह वनमिव , जरा दवानलशिखा दहति ॥ ८३ ॥
अर्वाग्लक्षो येन जनः , कृत्याकृत्यं न वेत्ति तद्रूपम् ।
मङ्क्षु विनश्यति धातु-क्षोभे हिमपात इव कमलम् ॥ ८४ ॥
अथ श्वोऽथ विनाशिन, एतस्य शरीरकस्य तदिदानीम् ।
गृह्णाम्यविनश्वरफल-मिति नृपतिश्चेतसि विभाव्य ॥ ८५ ॥
प्राज्यं साम्राज्यमिदं , विहाय लोका अहो निरीक्षध्वम् ।
आदत्ते जिनदीक्षां, तारतरीमिव भवाम्भोधौ ॥ ८६ ॥
सागरमिव दशमहा-रत्नोधनं चिकुरनिकरमसितरुचिम् ।
पश्यत पश्यत पुरतः , समूलमुन्मूलयत्येषः ॥ ८७ ॥
पुरतोऽवलोकयध्वं, मणिरत्नोत्कटकिरीटहारादि ।
आभरणसमूहोऽयं , निर्माल्यमिवामुनाऽत्याजि ॥ ८८ ॥
निध्यात नाथमुक्तं, क्रन्दत्यन्तःपुरं स्फुरद्दुःखम् ।
खरतरसमीरलहरी-प्रकम्पितं खगकुलमिवाग्रे ॥ ८६ ॥
हा नाथ! नाथ! किं वय-मेकपदेऽप्यशरणास्त्वया त्यक्ताः ।
एवं विलपन्ति जना, इतरसर्वस्या इवेक्षध्वम् ॥ ६० ॥
इति तेन भरतभर्त्तु-र्निष्क्रमणव्यतिकरस्तथाऽदर्शि ।
श्रीचन्द्रनृपोऽपि यथा , तत्कालं जातवैराग्यः ॥ ६१ ॥
संस्मृतपूर्वभवश्रुतशु-द्धसमयः पञ्चमुष्टिकृतलोचः ।
सुरदत्तसाधुवेषो-विनिर्ययौ राजमन्दिरतः ॥ ६२ ॥
नटविलसितमिदमखिलं, निर्नाथा नाथ ! मा स्म नस्त्याक्षीः।
एवं रुदत्यपि जने, विहृतः स यथाभिमतम् ॥ ६३ ॥
अथ पितृवियोगविह्वल-चित्तमतिच्छन्नमश्रुपूर्णाक्षम् ।
श्रीप्रभमुच्चै राज्ये , कौमारे च प्रभाचन्द्रम् ॥ ६४ ॥
विनिवेश्य विनयनम्रं , सामन्तैः सचिवपुङ्गवैश्चोक्तम् ।
अस्तोकशोकशङ्कु-द्धरणप्रवणैरिदं वचनम् ॥ ६५ ॥
मा देव ! कृथाः स्वपितुः , शोकमशोच्यो ह्यसौ महाभागः ।
खलमहिलेव विमुक्ता , येन समग्राऽपि राज्यश्रीः ॥ ६६ ॥
को नाम प्रारभते , दुष्करमेवंविधं श्रमणधर्मम् ।
प्रायो वैराग्यमतिः , क्षणमेकं मतिमतामपि यत् ॥ ६७ ॥
शोच्यास्त एव ये का-लधर्मतामुपगता अकृतसुकृताः ।
येऽत्यन्तमतिधर्मं , ते भुवने पञ्चषाः पुरुषाः ॥ ६८ ॥
निशमयति को न समयं ? , क्व सर्वे नेक्षन्ते क्षणविनाशि ? ।
प्रतिसमयभाविमरणं , शरीरिणां को न भावयति ? ॥ ६६ ॥
को वा हृदि नहि धत्ते, गुरूपदेशं सदा सुसंनिवेशम् ? ।
कस्य नवा प्रियमक्षय-मनन्तमसदृशममृतमोक्षम् ? ॥१००॥
किंतु चलचित्तभावा-दनुष्ठाने भृशं गतोत्साहाः ।
गिरिगुरुका अपि पुरुषाः , अवसर्पन्तो विलोक्यन्ते ॥१०१॥
देवेन पुनस्तात्किम-पि साहसं व्यवसितं महामतिना ।
यदसममाहसिकाना-मपि चेतः खलु चमत्कुरुते ॥ १०२ ॥
एषोऽपि देव ! परमो-पकारिभावेन नाटकविधाता ।
सद्धर्मसुगिरिव यो , विशेषतश्चार्चितुं युक्तः ॥ १०३ ॥
एवं निशम्य राजा, रङ्काचार्यं प्रपूज्य विससर्ज ।
किंचिदुपशान्तशोको , नीतिलतामजलजलवाहः ॥१०४॥
नीहारहारधवलान , नव्यविहारान विधापयन् बहुशः ।
गुरुगौरवेण कुर्वन् , साधर्मिकलोकवात्सल्यम् ॥ १०५ ॥
मुग्धजनं सद्धर्मे, स्थिरयन् जिनशासनोन्नतिं तन्वन् ।
सामायिकपौषधमु-ख्यधर्मनिरतोऽजनि प्रायः ॥१०६॥
अथ सततं धर्मोद्यत-माजिगीषुं श्रीप्रभं चर क्षान्या ।

अरिदमनक्षितिपस्त-द्देशमुपद्रोतुमारभत ॥ १०७ ॥
ज्ञात्वेदं चरपुरुषात् ; स मोक्षितः श्रीप्रभेण दूतेन ।
किं ननु क्षितिपर्यसीम-ग्रामकुटीरकविलुण्टनतः ॥ १०८ ॥
पूर्वजविहितप्रणय-प्राग्भारमसारमारचय्य भृशम् ।
आहत्य दुर्जनत्व , विप्रियमेव मम विधत्से ? ॥ १०९ ॥

यतः—

ते धन्याः सत्पुरुषा, येषां स्नेहो ह्यभिन्नमुखराग ।
वृद्धिं गच्छत्यनुदिन-मृणमिव पुत्रेषु संचरति ॥ ११० ॥
तस्मादितोऽपराधा-दुपाऽस्युपरम सर्वथाऽत्र प्रवृत्ते ।
क्षान्त्वा नह्यग्रेऽपि-मवास्यहं स्नेहनरुमेदे ॥ १११ ॥
श्रुत्वेत्यरिदमनतृप-स्तं दूतं प्रतिहसन्निति जजल्प ।
भो भो त्वया निजप्रभु-रेवं वाच्यो मदीयगिरा ॥ ११२ ॥

यथा—

तव पार्थिव ! धर्मार्थी, सविस्तरारब्धकुशलकल्पस्य ।
पृथ्व्या परिपन्थनया, कृतमनयाऽनर्थकारिण्या ॥ ११३ ॥
अथ धार्मिकस्यनामापि तद् दूरं मुञ्च धर्मकर्मेदम् ।
एकत्र कथं संभव-ति खलति सीमन्तसंघटनम् ? ॥ ११४ ॥
अथ लोकरञ्जनार्था-त्रेमेप आरभ्यते त्वया धर्मः ।
तद् भव निश्चिन्तमना,न हन्मि तव देशमहमधुना ॥ ११५ ॥
पूर्वप्रणयप्रकटन-मवनीशानां परं जिगीषूणाम् ।
दूरेणैव गरिष्ठं , गाढमसामर्थ्यमथवाऽपि ॥ ११६ ॥
श्रुत्वेति दूतमुखतः , श्रीप्रभराजः प्रदीप्तकोपाग्निः ।
किंकरगणेन सहसा, रणभेरीं ताडयामास ॥ ११७ ॥
तच्छब्दाकर्णनभङ्गि-ति मिलितचतुरङ्गसैन्यपरिकलितः ।
शत्रु प्रति प्रतस्थे, प्रदेशसीमान्यगात् क्रमशः ॥ ११८ ॥
अरिदमननृपोऽप्यस्या-च्छ्रु संमुखं समजनिष्ट रणरसिकः ।
अलसा न युधि शूरा , विप्रा इव भोजनायेह ॥ ११९ ॥
अथ सैन्ययोर्द्वयोरपि , सुभटानां तत्र चित्रशस्त्रभृताम् ।
संफोटोऽजनि गगने , सविद्युतामिव पयोदानाम् ॥ १२० ॥
अन्यद्भुतभटवादे-रथ मालवभूभुजः सुभटसंघे ।
परबलमभ्याताद्भुत-मुद्यानमिव द्विपैर्मत्तैः ॥ १२१ ॥
अथ रथमध्यारूढो , भग्न संधीरयन्ननीक स्वम् ।
उदतिष्ठन्नारिदमन , समरायास्फालयंश्चापम् ॥ १२२ ॥
युगपद्विमुक्तशिनविशि-खनचयैः सोऽप्यधत्त रिपुसैन्यम् ।
तटपर्यन्तमिव जलधेः, प्रसरद्वेलासलिलपूरः ॥ १२३ ॥
रणमाधादरिदमन , परसैन्यमदैन्यभुजबलोऽभाङ्क्षीत् ।
कुटकोटिं लकुट इव , प्रभञ्जनो वृक्षजालमिव ॥ १२४ ॥
निजसैन्यभङ्गतः, क्रुद्धः श्रीप्रभनृपो विपक्षबलम् ।
उत्तस्थे सहर्त्तुं कीनाशस्यानुजन्मेव ॥ १२५ ॥
नैव मनागपि मेहे , मालवपतिरापतन् परानीकैः ।
भुजगैरिव विनतायाः , सूनुर्हरिणैरिव व्याघ्रः ॥ १२६ ॥
विद्रुतसैन्ये पुरतः , स्थितमरिदमनं नृपं रणायाथ ।
आहास्त मालवेशः , बलानुजन्मेव भूमिपालः ॥ १२७ ॥
तदनु विचित्रैः शस्त्रै—स्त्रैरपि तौ नृपावयुध्यताम् ।
घनैरप्यधिप दर्शने—स्त्योन्यप्रधाभिलाषमतौ ॥ १२८ ॥
युद्धा चिरमरिदमनं, गुरुशक्तिमालवाधिपश्चक्रे ।
गतवीर्यं गतगर्वं भुजगं निर्विषमिव तरक्षः ॥ १२९ ॥

अरिदमननृपः श्रीप्रभ-नृपेण कलभो महागजेनेव ।
परिभूत पश्चाद्मुख—मवद्नमाणः पलायिष्ट ॥ १३० ॥
अथ तस्य श्रियमखिलां,रथकटका श्वीयहस्तिकप्रमुखाम् ।
जगृहे श्रीप्रभराज—स्तस्य श्रीविक्रमो यस्य ॥ १३१ ॥
आपूर्णं इवाम्बुधरो, निवृत्य रणसागरादवन्तीशः ।
कृतसकललोकतोषो, निजनगरीमाजगाम ततः ॥ १३२ ॥
तत्र त्रिवर्गसारं; राज्यश्रियमनुभवन्नसौ भूपतिः ।
भूयांसमनेहांसं, स्व सुरपतिवदतिचक्राम ॥ १३३ ॥
तत्र प्रभासगुरवः, समवसृता अन्यदा सुमुनिसंहिताः ।
बन्धुपरिवारयुक्त—स्तान्नन्तुं निर्ययौ राजा ॥ १३४ ॥
सम्यक् विनम्य मुनिपतिं-मिलातलाश्लिष्टमस्तको नृपतिः ।
निषसाद यथास्थानक-मथ गुरुरिति देशना विदधे ॥ १३५ ॥
इह हि भवसमुद्रे संसरन् भूरिकाल-
कथमपि मनुजत्वं प्राप्नुयात् कोऽपि जीवः ।
तदपि कथमपीह प्राप्य सद्धर्मकर्म-
क्षमतनुबलमायुर्दीर्घकालाप्तमेतत् ॥ १३६ ॥
इदमपि समवाप्य प्रौढमिथ्यात्वलुप्त-
स्फुटविशदविवेकः पापतापातिरेकः ।
पुनरपि च भवेऽत्राऽनन्तशोऽनन्तदुःख-
व्यतिकरविधुरो यं संभ्रमी बम्भ्रमीति ॥ १३७ ॥
इति भवजलराशौ मज्जनोन्मज्जनानि,
प्रविदधदिह दैवात्प्राप्य भूयोऽपि नृत्वम् ।
दृढगुणगणलब्धां जैनदीक्षां तरीव-
च्छ्रयत भविकलोकाः क्लेशविच्छेददक्षाम् ॥१३८॥

किंच—

अत्युत्कटभटकोटी-रथहरिकरिनिकरबलभरसमृद्धाः ।
यैर्जीयन्ते रिपवः, परः शता जगति ते पुरुषाः ॥ १३९ ॥
येन पुनः स्वात्माऽसौ-चतलरकुविकल्पकलनाकलितः ।
जीयेत तेन विजितं, त्रिजगदिदं परमशूरोऽसौ ॥ १४० ॥

तथा चार्षम्—

जो सहस्सं सहस्साणं, संगामे दुज्जए जिणे ।
एगं जिणिज्ज अप्पाणं, एस से परमो जओ ॥ १४१ ॥
एगे जिए जिया पंच, पंच जिए जिया दस ।
दसहाउ जिणित्ताणं, सव्वसत्तू जिणिज्ज तो ॥ १४२ ॥
इत्याकर्ण्य श्रीप्रभ, आनम्य गुरूनुवाच यः पार्श्वे ।
प्रव्रज्यामादास्ये, राज्यं न्यस्य प्रभाचन्द्रे ॥ १४३ ॥
देवानुप्रिय !, मोऽस्य, त्वया प्रमादमिति सूरिणा गदिते ।
राजा च सपरिवारो,निजधाम जगाम मुदितमनाः ॥१४४॥
अथ सकलराजलोक-प्रत्यक्षं भ्रातरं प्रभाचन्द्रम् ।
संस्थाप्य राज्यभारे,प्रददाविति नरपतिः शिक्षाम्॥१४५॥
वत्सान्तरङ्गशत्रून्-सदा जयरविजये यतस्तेषाम् ।
विजिता अप्यजिता खलु, बलवन्तः शत्रवो बाह्याः ॥१४६॥
परिपालयेः प्रजास्त्वं, मालिक इव सुमनस प्रयत्नेन ।
सर्वप्राप्यौचित्यं हृदये दध्या जिनेन्द्रमिव ॥ १४७ ॥
इतरेतराविघाते-न वत्स ! धर्मार्थकामपुरुषार्थान् ।
प्रतिलम्भनादिचेष्टाः , सुसाधुरिव साधयेः सततम् ॥ १४८ ॥
स्त्रियमिवानलदूषित—मुत्कर्निजमपि मयम परिहार्यम् ।
दुर्दममिन्द्रियवर्गं दमयेस्तुरगानिवहमिव ॥१४९॥
परिवर्जयेः कुसङ्गं, क्रिलाके मोलभोजनमिवात्रे ॥

सेवेथा आर्यजन, घनं यथा चातकसमूहः ॥ १५० ॥
बन्धो बन्धुरमक्त्या, बन्धुमिव श्राद्धलोकमश्रुष्या ।
रत्नैनैव वसुधा, सुधां यथा भोगिना भर्त्ता ॥ १५१ ॥
आधारस्त्वमसि भुवा, नाधारस्तत्र समस्ति कश्चिदपि ।
आत्मानमात्मनैव हि, तरसनत आर्यधैर्य्येस ! ॥ १५२ ॥
इत्युक्त्वा तूष्णीकी—भूते श्रीप्रभनृपे प्रभाचन्द्रः ।
एवमिति भानपदे, सर्वे भक्त्या नमद्ग्रीवः ॥ १५३ ॥
अथ सुस्नानविलिप्तो, रत्नालंकारभूषितशरीर ।
सदशांशुकसितवयधरो, ददर्थिभ्यो महादानम् ॥ १५४ ॥
कृतसकलसघपूजा, भ्रातुर्विधापितसहस्रनरवाह्याम् ।
शिविकामध्यासामा—स पुष्पकं यत्तराज इव ॥ १५५ ॥
चतुरङ्गचमूयुक्ते—न बन्धुभूपेन विनयनम्रेण ।
अनुगम्यमान उच्चै—र्मार्गाध कृतजयजयाराव ॥ १५६ ॥
पुर्या मध्यं मध्ये—न निर्ययौ नरपतिर्महाभूत्या ।
गुरुपदपावितमुद्या—नमाप्य शिविकात उदतारीत् ॥१५७॥
अथ भूषणसभारं विश्व विश्वम्भरापतिर्भङ्गिमिति ।
उदतारयदङ्गाद् भुज—दण्डादिव वसुमतीभारम् ॥ १५८ ॥
सिद्धान्तगदितविधिना, गुरुणाऽथ श्रीप्रभ परिव्राज्य ।
परमां मुदं दधत्वा, भारत्या समनुशिष्ट इति ॥ १५९ ॥
कमठेन्दुदर्शनमिव, प्राप्य दुरापां जिनाधिपतिदीक्षाम् ।
शयनासनादिचेष्टा, सकलाऽपि हि यतनया कार्या ॥१६०॥

यत —

यतना सुधर्मजननी, यतना धर्मस्य पालनी नित्यम् ।
सद्वृद्धिकरी यतना, सर्वत्र सुखावहा यतना ॥ १६१ ॥
एकामेव हि यतना, ससेव्य विलीनकर्ममलपटला ।
प्रापुरनन्ता सत्त्वा, शिवमक्षयमव्ययं स्थानम् ॥ १६२ ॥
एवं शिक्षा दत्त्वा, प्रभासगुरवो विजह्रुरन्यत्र ।
शारदिकवारिदा इव, तिष्ठन्त्येकत्र न हि मुनयः ॥ १६३ ॥
श्रीप्रभराजर्षिरपि, प्रतिसमयविशुध्यदमलपरिणाम ।
यूथपतिनेव कलम, सततं विजहार सह गुरुणा ॥ १६४ ॥
जिनपरिवृढगदितागम—सूत्रार्थसुधां पिबन्नमर्त्य इव ।
पञ्चमहाव्रतभारं, दधदवनीभारमिव शेष ॥ १६५ ॥
पञ्च निशाता समिती—र्हस्तशरानिव धनुर्धरो बिभ्रत् ।
तिस्रो गुप्ती शक्ती—र्नरपतिरिव धारयन् शुद्धा ॥ १६६ ॥
मार्गानुसारिणीमिह, कुर्वन् सकला क्रिया सुगान्ध इव ।
श्रद्धा प्रवरां धर्मे, तन्वन् मकरन्द इव भृङ्ग ॥ १६७ ॥
प्रज्ञापनीयभावे—न संयुतो भद्रवारण इवोच्चै ।
साधक इव विद्यासु, प्रमादमुक्तः क्रियासु सदा ॥ १६८ ॥
आद्रियमाण शक्या—नुष्ठाने योग्यमन्द इव वैद्य ।
हृष्यन् गुणाढ्यसङ्गे, सरउत्सङ्गे मराल इव ॥ १६९ ॥
आराधयन् गुरुजन, परमात्मानं यथा परमयोगी ।
सुचिर निरतीचार, चरण परिपालयामास ॥ १७० ॥
अथ वर्गत्रयपालन—परायणस्य प्रभेन्दुराजस्य ॥
तनयावुभावभूतां, हरिषेण पद्मनामश्च ॥ १७१ ॥
तौ सकलकलापूर्णौ, पूर्णेन्दू इव समस्तजनसुखदौ ।
अपराविव भुजदण्डौ—रेजाते तस्य भूपस्य ॥ १७२ ॥
अपरेद्युरवनिजाने—रजनिप्रगोचिकत्वमगादौ ।
मरुनिपातितहंस इव, प्रतिदिनमक्षीयत ततोऽसौ ॥ १७३ ॥
आहूता वरवैद्या, क्रिया चिकित्साश्च तैः समारब्धा ।
न च जज्ञे कोऽपि गुणो, ह्यचिन्त्ययमन इति नरेन्द्र ॥१७४॥
द्रव्यौषधे किमभि—र्वैद्य पुत्र विधेयं राजयक्ष्मे ।
कौमारं च कनिष्ठ, अयामि धर्मौषधमिदानीम् ॥ १७५ ॥
अत्रान्तरे च महसा मजातप्रबलशूलरोगेण ।
अपि वैद्ये क्रियमाणो—पचार आपन्मूर्ति पद्म ॥ १७६ ॥
अथ तनयमरणमाक—र्ण्य नृपतिरस्तोकशोकसन्तप्त ।
दम्भोलिनिहतगिरिरिव, मूर्च्छाविवश पपात भुवि ॥१७७॥
पवनाद्युपचारवशा—दवाप्य चैतन्यमिति नृपो व्यलपत् ।
हा पुत्र ! क्वासि गत ?, प्रतिवचनं किं न मम दत्से ? ॥१७८॥
उदियाय पूर्णचन्द्रो, हा अस्यत मङ्क्षु सैंहिकेयेन ।
अहह फलेग्रहिरभवत्, तरुरुदमूल्यत महाकरिणा ॥१७९॥
पोतः प्राप पयोनिधि—पारं तटाशन्नरिणा हहाऽभाजि ! ।
दृष्टो निधिर्विशालो, हा हा हाऽह्रियत हतविधिना ! ॥१८०॥
उदनमदम्भोवाहो, नभस्वताऽक्षिप्यत क्षणनाहो ! ।
राज्योचितोऽजनि हहा, तनय समहारि दैवेन ! ॥ १८१ ॥
एव प्रलपन् सचिवै—र्व्यबोधि कथमपि नृपोऽकरोत् सूनो ।
मृतकृत्यमल्पशोक, कालेनैवं मनसि दध्यौ ॥ १८२ ॥
ये दण्डसात् सुमेरु, पृथिवी वा छत्रसात् क्षमा कर्तुम् ।
तेऽपि क्षमन्यमावतु, नाल किं हन्त पुनरन्ये ! ॥ १८३ ॥
पीयूषपोषपुष्ट., पविभीषणपाणिरमरकोटवृत ।
सुरपतिरपि सुरलोका—च्च्यवते पक्व फलमिव द्रो ॥१८४॥
षष्टि पुत्रसहस्रान्, सगरश्चक्र्यपि न रक्षितुमीश ।
ज्वलनप्रभाद्यमादिव, तताऽपि किं त्व बलिष्ठनर ? ॥१८५॥
कृत्वा पातकमपि यान्, पुष्येदुत्पश्यतामपि हि तराम् ।
रङ्क इव यमेन भवी, गतशरणो नीयते क्रूरा ॥ १८६ ॥
नीतस्ततश्च नरक, सहत खलु वेदना परमघोरा ।
जन्मान्तरानुधावी—नि देहिनामहह कर्माणि ! ॥ १८७ ॥
जननी मे जनको मे, भ्राता मे सुतकलत्रवर्गो मे ।
मिथ्यैव बुद्धिरेषा, न दृढमपि वस्तुत स्वीयम् ॥१८८॥
पुत्रादीनामेषा, भिन्नस्थानात्समेयुषा स्थान ।
एकत्र निवासः खलु, विहगानामिव तरौ सायम् ॥१८९॥
गच्छन्ति ततोऽपि पुन, पृथक् पृथक् स्थानकेषु देहभृत ।
एकत्र निशि प्रसुप्ता, निशावसाने यथा पान्था ॥१९०॥
अरघट्टघटीन्याया—दस्थिरैर्याहिरां (गीं) क्रिया सततम् ।
इह कुर्वता तनुभृता, को हन्त स्व पर को वा ? ॥१९१॥
एव यावत् सये—गसंगतश्चिन्तयत्यवनिनाथ ।
तावत् तत्रोद्याने, कुमारनन्दी गुरु प्राप ॥ १९२ ॥
गुर्वागमनं ज्ञात्वा, गत्वा तत्र प्रणम्य मुनिनाथम् ।
उचितस्थाने निषसा—द देशनामथ गुरुर्विदध ॥ १९३ ॥
द्विम्भय सर्वेभ्योऽपि, स्वतोऽन्यतश्चापतद्विपन्निवहा ।
यमदन्तयन्त्रसंस्था, कष्ट जीवन्ति तनुभाज ॥१९४॥
जीवातुभिरगदगणै—रायुर्वेदेन सप्रभेदेन ।
मृत्युंजयादिभिर्वर—मन्त्रैर्नाहं रक्ष्यते मृत्यो ॥ १९५ ॥
अहह सकलार्यमभन, महाधनं मन्दमेधसं प्राज्ञम् ।
कवलयति सततमगण्य—मविशेषेणैव समवर्त्ती ॥१९६॥
तापापहमजरामर—पदमन्दश्रमणधर्ममतनमम् ।
मुक्त्वा तदत्र भुवने, क्वापि दर्प नान्यच्छरणमस्ति ॥१९७॥
इत्याकर्ण्य नरेशो, विनमय यतिपतिपदौ जगादेति ।

यतिधर्मेणाऽऽगनिशं, पालितगृहमेधिधर्मस्य ॥ १९८ ॥
पूर्वमवार्जितगुरुतर-रोगभयभरात्रिधुर्देहस्य ।
दीक्षां गृहीतुमनलं-भूपणोरुचितं किमधुना मे ? ॥ १९९॥
अल्पायुष्कत्वमथो, जानन्नृपतेर्गुरुर्बभाणेदम् ।
स्मातीचारान् विकट्य, यथाश्च पुनरुच्चर नरेश ! ॥२००॥
क्षमयस्व प्राणिगणं, व्युत्सृज सर्वाणि पातकपदानि ।
जिनसिद्धसाधुधर्मं, सम्यक् शरणं प्रपद्यस्व ॥२०१॥
गर्हस्व दुष्कृतभरं, कुरुष्व सुकृतानुमोदनं भूप ! ।
शुभभावना च भावय मुदितोऽनशनं प्रपद्यस्व ॥२०२॥
पञ्च नमस्कारं स्मर, विमुञ्च ममतां च राज्यराष्ट्रादौ ।
इति गुरुगिरं निशम्य, प्रमुदितचित्तो महीभर्त्ता ॥२०३॥
निजतनये हरिषेणे हर्षेण निवेश्य वसुमतीभारम् ।
सर्वं च क्षमयित्वा, विधाप्य पूजां जिनगृहेषु ॥ २०४ ॥
सुगुरोः समक्षमनशन-मुररीचक्रे समाहितमनस्कः ।
स्वाध्यायध्यानपरो, वासरमेकमनैषीत् ॥२०५॥
विदलच्चरणावारक-कर्मचयोऽत्रान्तरे प्रभाचन्द्रः ।
विहिताञ्जलिर्गुरुं प्रति, विज्ञपयामासिवानेवम् ॥२०६॥
दीक्षा जगृहे न मया, प्रभोऽल्पसत्त्वेन पूर्वमधुना किम् ।
सा समुचिता ग्रहीतुं, नवेति ? गुरुराह भो भूप ! ॥ २०७ ॥
एकाहमपि प्राणी, प्रव्रज्यां पालयेदनन्यमनाः ।
यदि नहि गच्छेन्मोक्षं, स भवेद्वैमानिकोऽवश्यम् ॥ २०८ ॥
तत्संस्तारकदीक्षा-मधुनाऽपि विधेहि धेहि समभावम् ।
श्रुत्वैव मुदितमनाः, संस्तारकयत्यभून्नृपतिः ॥ २०९ ॥
अनिशं श्रुतिपत्रपुटे-न पिबन् समथामृतं विगततृष्णः ।
अवगाढो हंस इव, स्फूर्जन्निरवधिसमाधिहृदे ॥२१०॥
पक्षं विहितानशनः, पञ्चनमस्कारमनुस्मरन् मनसि ।
मृत्वा स वैजयन्ते, महर्द्धिरमरः समुत्पेदे ॥२११॥
ग्रामपुरकर्बटादिषु, सार्द्धं विहरन् प्रभासमुनिपतिना ।
श्रीप्रभमुनिररिदमन-क्षितिपतिजनपदमथायासीत् ॥२१२॥
तत्र च निशम्य लोकात्, प्रभेन्दुराजस्य मरणवृत्तान्तम् ।
वैराग्योपगतमनाः, एवं स महामना दध्यौ ॥२१३॥
धन्यः कृतकृत्योऽयं, कृतार्थजन्मा नृपः प्रभाचन्द्रः ।
पण्डितमरणं लब्धं, भवकोटिसुदुर्लभं येन ॥ २१४ ॥
सुरगीर्धीराणापि च, मर्त्तव्यं कापुरुषेणाऽपि तथा ।
उभयोर्नियतं मरणं, धीरतया तद्वरं मरणम् ॥२१५ ॥
तद्व्याकुलत्वं-मनस्य चिरविहितविमलचरणस्य ।
अभ्युद्यतमरणं खलु, विधातुमुचितं ममाप्यधुना ॥२१६॥
एवं विभाव्य स मुनि-र्गुरूननुज्ञाप्य पापरिपुमुक्तः ।
प्रतिमममयशुद्धध्यव-साया देहेऽपि च निरीहः ॥२१७॥
समशत्रुमित्रभावो, निर्जन्तुशिलातलं समनुसृत्य ।
विदधे विधिना सुमना, अनशनमथ पादपोपगमम् ॥२१८॥
अथान्तरं चरमुखा-दरिदमननृपो निशम्य तद्वृत्तम् ।
आगत्य तत्र हृष्ट-स्तस्य मुनेरिति नुतिं चक्रे ॥२१९॥
जय जय मुनीश ! विकसित शतदलपटलविमलकीर्त्तिभर ! ।
निःशरणशरणसंहति-रत्नाकराशय ! सुधीर ! ॥२२०॥
शुचिमन्त्रवचनरचना-प्रपञ्चपीयूषशमितभवदाह ! ।
धवलाविराधनमापेऽ-पि परधने निःस्पृहमनस्क ! ॥२२१॥
त्रिभुवनमदनमदकल !, कुम्भस्थलदलनकेसरिविशिष्ट ! ।
पटलग्रथितलीला-परिमुक्त ! साम्यसाम्राज्य ! ॥ २२२ ॥
मैत्रीप्रमोदकरुणा-माध्यस्थ्यमहार्णवावगाढाय ।
अतिदुष्करतरतपसे, नमो नमस्ते महाभाग ! ॥ २२३ ॥
इति तेन नूयमानोऽ-पि सर्वथोत्कर्षवर्जितः स मुनिः ।
तत्कालं त्रुटितायुः, परमं ध्यानं समधिरूढः ॥ २२४ ॥
मुक्त्वा तनूमवक्रय-कुटीपरित्यागहेलयाऽत्रैव ।
सर्वार्थवरविमाने, त्रिदशवरिष्ठः समजनिष्ट ॥ २२५ ॥
हर्षप्रकर्षकलितै-रथ तस्य कलेवरस्य सन्निहितैः ।
विबुधैर्विदधे महिमा, गन्धोदककुसुमवर्षेण ॥ २२६ ॥
देवः स तत्र हस्तो-च्छ्रयो निशाकरकरप्रतिमरोचिः ।
त्रियुतत्रिंशज्जलधि-स्थितिरहमिन्द्रो विगतमानः ॥ २२७ ॥
सुखशय्यामधिशयितो, निष्प्रतिकर्मा सदा विमललेश्यः ।
मुक्तस्थानान्तरगति-रुत्तरवैक्रियविकारः ॥२२८॥
आयुः सागरसंख्यैः, पक्षैः कुर्वन् सुगन्धि निःश्वसितम् ।
वर्षसहस्रैस्तावद्भिरेष आहारयन् मनसा ॥२२९॥
भिन्नां च लोकनालीं, त्रिलोकयन्नवधिसंपदा मुदितः ।
निर्वृतिसुखदेश्यं, सुखमनुभूय प्रवरतेजाः ॥२३०॥
स्वस्वस्थानाच्च्युत्वा, श्रीप्रभजीवः प्रभेन्दुजीवश्च ।
अपरविदेहे मुक्तिं, लप्स्येते शुद्धचरणेन ॥२३१॥
एवं सयुतः एकविंशतिगुणैः स श्रीप्रभः क्ष्मापतिः,
साधुश्रावकधर्मभारधरणे धौरेयकोऽजायत ।
तद् भो भव्यजनाः ! सनातनसुखस्थानाप्तिबद्धादराः !,
एतान् मूलगुणानुपार्जितुमहो यत्नं विधत्तान्वहम् ॥२३२॥
(इति श्रीप्रभमहाराजकथा । ) ध० र० ३ अधि० ७ लक्ष० ।

सिरिमुह-देशी-मन्दमुखे, दे० ना० ८ वर्ग ३२ गाथा ।

सिरियक-श्रीयक-पुं० । स्थूलभद्रस्वामिभ्रातरि सकटालसुते, आ० क० ४ अ० ।

सिरिवओ-देशी-हंसे, दे० ना० ८ वर्ग ३२ गाथा ।

सिरिवच्छ-श्रीवत्स-न० । माहेन्द्रकल्पस्य स्वनामख्याते पारियानिके विमाने, स्था० ८ ठा० ३ उ० । जं० । प्रव० । औ० । एकादशे देवलोकविमाने, स० २१ सम० । माङ्गलिकचिह्नभेदे, जं०१वक्ष० । रा० । महापुरुषाणां वक्षोऽन्तर्वर्तिनि अभ्युन्नतावयवे लाञ्छनविशेषे जं० ३ वक्ष० ।

श्रीवत्स्-पुं० जिनादिवक्षश्चिह्नविशेषे, रा० । आ० म० । स० ।

सिरिवच्छा-श्रीवत्सा-स्त्री० । श्रीश्रेयांसस्य शासनदेव्याम् मतान्तरेण-मानवी गौरवर्णा सिंहवाहना चतुर्भुजा वरदमुद्गरान्वितदक्षिणकरद्वया कलशाङ्कुशसंयुक्तवामकरद्वया च । प्रव० २६ द्वार ।

सिरिवच्छंकियवच्छ-श्रीवृक्षाङ्कितवक्षस्-पुं० । श्रीवृक्षेणाङ्कितं लाञ्छितं वक्षो येषां ते श्रीवृक्षाङ्कितवक्षसः । श्रीवत्सचिह्नाङ्कितेषु, जी० ३ प्रति ४ अधि० । औ० । अन्त० ।

सिरिवडिंसय-श्र्यवतंसक-न० । सौधर्मकल्पविमानभेदे, नि० १ श्रु० ३ वर्ग १० अ० ।

सिरिवण-श्रीवन-न० । पोलासपुरे नगरे स्वनामख्याते उद्याने, अन्त० ।

सिरिवण्ण-श्रीपर्ण-न० । भद्दिलपुरस्योत्तरपौरस्त्ये दिग्भागे स्वनामख्याते विमाने, अन्त० १ श्रु० ३ वर्ग १ अ० ।

सिरिवण्णा-श्रीपर्णी-स्त्री० । शाकप्रतीतौषधिविशेषे, आचा० २ श्रु० १ चू० १ अ० ८ उ० । प्रज्ञा० ।

सिरिवद्धमाण-श्रीवर्द्धमान-पुं० । वीरजिने, स्या० । श्रीवर्द्धमानमिति विशेष्यपदमपि विशेषणरूपतया व्याख्यायते-श्रिया-चतुस्त्रिंशदतिशयसमृद्धिरूपया नुभवात्मकमावार्हन्त्यरूपया वर्द्धमानं-वर्द्धिष्णुं नन्वतिशयानां परिमितत्वेनैव सिद्धान्ते प्रसिद्धत्वात्कथं वर्द्धमानतोपपत्तिः ?, इति चेत् न । यथा निशीथचूर्णौ भगवता श्रीमदर्हतामष्टोत्तरसहस्रसंख्याबाह्यलक्षणसंख्याया उपलक्षणत्वेनान्तरङ्गलक्षणानां सत्त्वादीनामानन्त्यमुक्तम्, एवमतिशयानामधिकृतपरिगणनायोगेऽप्यपरिमितत्वमविरुद्धम् । ततो नातिशयश्रिया वर्धमानत्वं दोषाश्रय इति । स्या० ।

सिरिवप्पहट्टसूरि-श्रीवप्पभट्टसूरि-पुं० । विक्रम ८२६ वत्सरेषु मथुरायां वीरबिम्बस्थापके सूरौ, ती० ८ कल्प ।

सिरिवर-श्रीवर-पुं० । अयोध्यानगरस्य स्वनामख्याते राजनि अष्ट० २५ अष्ट । शोभाप्रधाने, कल्प० १ अधि० ३ क्षण ।

सिरिवसह-श्रीवृषभ-पुं० । स्वनामख्याते आदितीर्थकरे, प्रव० २४८ द्वार ।

सिरिवारिसेण-श्रीवारिषेण-पुं० । ऐरवते वर्षे जाते चतुर्विंशतिजिननाथे, प्रव० ७ द्वार ।

सिरिविजय-श्रीविजय-पुं० । श्रीरामविजयपण्डितशिष्ये कल्पसुबोधिकावृत्तिकरणसाहाय्यके सूरौ, कल्प० ३ अधि० ६ क्षण ।

सिरिवीर-श्रीवीर-पुं० । वीरजिने, "सिरिवीरजिणं वंदिअ, कम्मविवागं समासओ वुच्छं ।" कर्म० १ कर्म० ।

सिरिवीरधवल-श्रीवीरधवल-पुं० । गुर्जरधरित्रीराजे पोरवाडकुलमण्डने, ती० ४ कल्प ।

सिरिस-शिरीष-पुं० । वृक्षविशेषे स्था० १० ठा० ३ उ० ।

सिरिसंभूया-श्रीसंभूता-स्त्री० । षष्ठ्यां रात्रितिथौ, चं० प्र० १ पाहु० । कल्प० । ज० ।

सिरिसमुदाय-श्रीसमुदाय-पुं० । शोभासमूहे, कल्प० १ अधि० ३ क्षण ।

सिरिसही-श्रीसखी-स्त्री० । श्रीविजयसेनस्य चन्द्रकान्तानगरीराजस्य भार्यायाम्, श्रीकान्ताख्यव्यवहारिणो भार्यायां च । कल्प० १ अधि० १ क्षण ।

सिरिसिद्धंतमहोदधि-श्रीसिद्धान्तमहोदधि-पुं० शोभनागमबृहत्समुद्रे, जा० १ प्रति० ।

सिरिसिवय-श्रीशिवक-पुं० । अस्यामवसर्पिण्यां जाते ऐरवतदशमजिने, प्रव० ७ द्वार ।

सिरिसिहर-श्रीशेखर-पुं० । स्वनामख्याते कुम्भपुरनगरराजे, दर्श० १ तत्त्व ।

सिरिसोम-श्रीसोम-पुं० । अर्बुदपर्वते कषोपलमयबिम्बप्रतिष्ठापयतस्तेजःपालस्य तत्पूर्ववंश्यानां मूर्तिनिवेशनिर्देशकृति श्रावके, ती० ७ कल्प । भरते वर्षे भविष्यति स्वनामख्याते सप्तमे कुलकरे, ती० २० कल्प ।

सिरिहर-श्रीधर-त्रि० । शोभावति, आ० १ श्रु० ६ अ० । भारतेऽतीते सप्तमे जिनेश्वरे, प्रव० ७ द्वार । पार्श्वनाथस्य षष्ठे गणधरे, कल्प० १ अधि० १ क्षण । द्वीपसमुद्रविशेषाधिपतौ, द्वी० । स्था० ।

श्रीगृह-न० । रत्नादिस्थाने, नि० चू० १ उ० । आ० क० ।

सिरिहरय-श्रीगृहक-न० । भाण्डागारे, स्था० ६ उ० ।

सिरिहरिय-श्रीगृहिक-पुं० । श्रिया गृहं भाण्डागारं तद्विद्यते यस्य स श्रीगृहिकः । भाण्डागारिके, कर्म० १ कर्म० ।

सिरिहरिसपुर-श्रीहर्षपुर-न० । स्वनामख्याते नगरे, अत्र हर्षपुरीयगच्छः समजनि " ज्ञानादिकुसुमनिचित-फलितश्रीमन्मुनीन्द्रफलवृन्दे । कल्पद्रुम इव गच्छः, श्रीहर्षपुरीयनामास्ति ॥ १ ॥ " अनु० ।

सिरिहल-श्रीफल-न० बिल्वे, पाइ० ना० १४८ गाथा ।

सिरी-श्री-स्त्री० । अनन्यसाधारणपरमतेजोविभूतौ, विपा० २ श्रु० १ अ० । लक्ष्म्याम्, दशा० १० अ० । स्था० । " श्रीर्मङ्गलात् प्रभवति प्रागल्भ्यात्संप्रवर्द्धते । दाक्ष्यात्तु कुरुते मूलं, संयमात्प्रतितिष्ठति ॥१॥" ध० १ अधि० । "कमला सिरी य लच्छी" पाइ० ना० ९६ गाथा । स० । प्रज्ञा० । आव० । विभवे, सम्पत्तौ, पाइ० ना० । शोभायाम्, रा० । अष्ट० । ज० । देहकान्तौ, आ० म० १ अ० । जम्बूद्वीपे मन्दरस्य पश्चिमे पद्मद्रहाधिष्ठातृदेवतायाम्, स्था० ३ ठा० ४ उ० । अनु० । उत्तररुचकपर्वतवास्तव्याया दिक्कुमारीमहत्तरिकायाम्, स्था० ८ ठा० ३ उ० । आ० म० । आ० क० । जं० । पोलासपुरनगरराजस्य विजयस्य भार्यायामतिमुक्तककुमारमातरि, स्था० १० ठा० ३ उ० । अन्त० । कुन्थुजिनमातरि, ती० ८ कल्प ।

सिरीस-शिरीष-पुं० । वृक्षविशेषे, रा० । जं० ।

सिरोरुह-शिरोरुह-न० । केशे, पाइ० ना० १०६ गाथा ।

सिरोवत्थी-शिरोवस्ति-स्त्री० । शिरसि बद्धस्य, चर्मकोशस्य संस्कृततैलापूरलक्षणे वैद्यकर्मणि, आ० १ श्रु० १३ अ० । विपा० ।

शिरोविशुद्ध-शिरोविशुद्ध-न० । यदा स्वरः शिरः प्राप्तः सन् सानुनासिको भवति तत शिरोविशुद्धम् । करणविशुद्धे गेये, रा० ।

सिरोवेदणा-शिरोवेदना-स्त्री० । शिरःपीडायाम्, जी० ३ प्रति० ४ अधि० ।

सिरोवेह-शिरोवेध-पुं० । नाडीवेधेन रुधिरमोक्षणे, आ० १ श्रु० १३ अ० ।

सिरोहमज्जा-शिरोहमज्जा-स्त्री० । स्वनामख्यातायां नगर्याम्, ती० ४८ कल्प ।

सिरोहरा-शिरोधरा-स्त्री० । ग्रीवायाम्, पाइ० ना० २१० गाथा ।

सिलश्र-देशी-उञ्छे, दे० ना० ८ वर्ग ३० गाथा ।

सिलग्घ-श्लाघ्य-त्रि० । कथनीये, आ० म० १ अ० ।

सिलप्पवाल-शिलाप्रवाल-न० । शिलारूपं प्रवालं श्रिया युक्तं वा प्रवालं श्रीप्रवालम् । वर्णादिगुणोपेते विद्रुमे, सूत्र० २ श्रु० १ अ० । जी० । शिलाप्रवालानि-विद्रुमाणि । अन्ये त्वाहुः शिला राजपट्टादिरूपा. प्रवालं-विद्रुमम् । दशा० ६ अ० । भ० । रा० । औ० । नं० ।

सिला-शिला-स्त्री० । राजपट्टे, गन्धपेषशिलायाम्, आ० १ श्रु० १ अ० । घट्टनयोग्ये देवकुलपीठाद्युपयोगिनि महति पाषाणविशेषे. जी० १ प्रति० । प्रश्न० । दशा० । दश० । विपा० । स्फटिकादिके, स्था० ६ ठा० ३ उ० । वृ० । कल्प० । तीर्थकृज्जन्माभिषेकसिंहासनाश्रयभूतायां शिलायाम्, सूत्र० २ श्रु० १ अ० । राजपट्टक, गन्धपट्ट इत्यन्ये । अनु० । काम्पायनगरेशस्य वृषभस्य दुहितरि ब्रह्मदत्तचक्रवर्तिनो भार्यायाम्, उत्त० १३ अ० । पाषाणे, पाइ० ना० ११३ गाथा ।

सिलाइच्च-शिलादित्य-पुं० । स्वनामख्याते वलभीपुरराजे, ती० १६ कल्प । ( तत्कथा 'सत्तुंजय' शब्देऽस्मिन्नेव भागे २७३ पृष्ठे गता । )

सिलागहत्थ-शलाकाहस्त-पुं० । अयं शलाकादिरूपे ( दश० ८ अ० । ) शलाकासङ्घातरूपे सरित्पर्णविशलाकाहस्तके, रा० ।

सिलागा-शलाका-स्त्री० । वेत्रादौ, नि० चू० १ उ० । अयःशलाकादौ, दश० ४ अ० ।

सिलाघा-श्लाघा-स्त्री० । गुणोद्घट्टने, स्था० ४ ठा० ४ उ० । श्लोके, यशसि, आव० ४ अ० । सूत्र० ।

सिलाणिहिय-शिलानिहित-त्रि० । शिलाप्राप्ते, जं० ३ वक्ष० ।

सिलापट्टय-शिलापट्टक-पुं० । मसृणशिलायाम्, आ० म० १ अ० । आ० ।

सिलावुट्ठ-शिलावृष्ट-न० । शिलाशब्देन करका गृह्यन्ते वृष्टं वर्षणम् । करकादिवृष्टौ, दश० ८ अ० ।

सिलावुट्ठि-शिलावृष्टि-स्त्री० । पाषाणनिपतने, करकादिशिलावर्षणे च । प्रव० २६८ द्वार । व्य० ।

सिलिंद-शिलिन्द-पुं० । मुकुण्डधान्यविशेषे, ग० २ अधि० । दश० । ध० ।

सिलिंध-शिलीन्ध्र-पुं० । छत्रके, आ० १ श्रु० १ अ० । प्रश्न० । भूमिस्फोटे, आ० १ श्रु० १ अ० । भूमिस्फोटकच्छत्रके, औ० ।

सिलिंधपुप्फप्पगास-शिलीन्ध्रपुष्पप्रकाश-त्रि० । शिलीन्ध्रकुसुमप्रभे ईषत्सिते, औ० ।

सिलिंब-देशी-शिशौ, दे० ना० ८ वर्ग ३० गाथा-

सिलिट्ठ-श्लिष्ट-त्रि० । रुचिरे, विशिष्टे, आ० १ श्रु० १ अ० । सुसंहतावयवे, आ० म० १ अ० । संगते, औ० । सुदढं जुत्तं सिलिट्ठमित्यनर्थान्तरम् । आ० चू० १ अ० ।

सिलिपइ-श्लीपदिन्-त्रि० । श्लीपदनाम्ना रोगेण यस्य पादौ शूनौ-शिलावन्महाप्रमाणौ भवतः । तस्मिन्, सू० १ उ० २ प्रक० ।

सिलिम्ह-श्लेष्मन्-पुं० । "लात्" ॥ ८ । २ । १०६ ॥ संयुक्तस्यान्त्यव्यञ्जनाल्लात्पूर्व इद्भवति । इतीत्-सिलिम्हो । "श्लेष्मणि वा" ॥ ८ । २ । ५५ ॥ श्लेष्मशब्दे ष्मस्य फो भवति । फादेशाभावे । सिलिम्ह । प्रा० । खेले, आव० ४ अ० ।

सिलिय-सिलिक-पुं० । प्रतलपाषाणरूपशस्त्रतीक्ष्णीकरणार्थे, किरातनिक्षकादित्वणे च । आ० १ श्रु० १३ अ० । विशे० ।

सिलीमुह-शिलीमुख-पुं० । बाणे, पाइ० ना० २६ गाथा ।

सिलीवय-श्लीपद-न० । पादादौ काठिन्यरूपे रोगे, आचा० १ श्रु० ६ अ० १ उ० ।

सिलेलियमच्छ-शिलेलिकामत्स्य-पुं० । मत्स्यभेदे, जी० १ प्रति० ।

सिलेस्-श्लिष्-धा० । आलिङ्गने, "श्लिषेः सामग्गावयास-परिअन्ता." ॥ ८ । ४ । १९० ॥ श्लिष्यतेरेते त्रय आदेशा भवन्ति । पक्षे-सिलेसइ । श्लिष्यति । प्रा० ४ पाद ।

श्लेष-पुं० । श्लेषयतीति श्लेषः । "लात्" ॥ ८ । २ । १०६ ॥ इति सूत्रेण लात्पूर्वमिकारः । प्रा० । सर्जरसादौ, आचा० १ श्रु० १ अ० ५ उ० । भावे घञ् । समाश्रयणे, सूत्र० २ श्रु० २ अ० । वज्रलेपे, भ० ८ श० ६ उ० ।

सिलोग-श्लोक-पुं० । आत्मश्लाघायाम्, सूत्र० १ श्रु० १३ अ० । पा० । विशे० । श्लाघायाम्, सूत्र० १ श्रु० १३ अ० । अनु० । आ० । कीर्तौ, स्था० ७ ठा० ३ उ० । आचा० । अनुष्टुप्छन्दसि, स० । जं० । आ० । गुणवचनैर्वर्णनायाम्, नि० चू० १ उ० । स० ।

सिलोगगामी-श्लोककामिन्-त्रि० । आत्मश्लाघाभिलाषिणि, सूत्र० १ श्रु० १२ अ० ।

श्लोकगामिन्-त्रि० । श्लोकः-श्लाघा कीर्तिस्तद्गामी यः । यशोऽभिलाषुके, सूत्र० १ श्रु० १३ अ० ।

सिलोगाणुवाइ-श्लोकानुपातिन्-त्रि० । श्लोकं-ख्यातिमनुपतति इति श्लोकानुपाती । यशोऽर्थिनि, स्था० ६ ठा० ३ उ० ।

सिलोचय-शिलोच्चय-पुं० । शिलाना पाण्डुशिलादीनामूर्ध्वशिरस उपरि च यत्र सम्भवो स शिलोच्चयः । जं० ४ वक्ष० । मेरुपर्वते, सू० प्र० ५ पाहु० । चं० प्र० । पर्वतमात्रे, पाइ० ना० ।

सिल्हग-सिल्हक-न० । गन्धद्रव्यविशेषे, आ० म० १ अ० ।

सिव- शिव-न० । व्यन्तरकृतोपद्रवाभावे, सू० १ उ० २ प्रक० । भ० । कल्प० । स्था० । व्य० । मन्त्रादिसामर्थ्यादुपशमितोपद्रव, अनु० । सकलद्वन्द्ववर्जितत्वात् । प्रश्न० १ आश्र० द्वार । दश० । उपद्रवोपशमहेतुत्वात् । आ० १ श्रु० १ अ० । सर्वोपद्रवरहितत्वात् । औ० । ध० । रा० । ल० । भ० । आ० । मोक्षपदे, सूत्र० १ श्रु० १ अ० । विशे० । आ० म० । स० । अबाधके, सर्वदु खमोक्षे, निर्वाणे, स० । आ० म० ।

सर्वोपद्रवभावनानायधे, उत्त० २३ अ० । स० । भ० । सुखे, विशे० । उपद्रवहरे, कल्प० १ अधि० २ क्षण । शिवहेतौ, प्रश्न० २ आश्र० द्वार । शान्तौ, रा० । निरुपद्रवकारिणि, कल्प० १ अधि० ३ क्षण । सदा मङ्गलोपेते, ज० १ वक्ष० । जी० । सामायिके, आ० चू० १ अ० । आव० । तस्योपद्रवकारित्वाभावात् । आ० म० १ अ० । पञ्चमबलदेववासुदेवयोः पितरि, स० । आव० । ति० । स्था० । श्रावणादिगणनया पौषे मासे, ज० ७ वक्ष० । सूत्र० । आकारविशेषधरे देवताविशेषे, रा० । जी० । भ० । अनु० । व्यन्तरविशेषे, ग० २ अधि० । महादेवे, स्था० १ श्रु० १ अ० । महादेवशब्देनार्हन्त एव, तेषामेव महादेवत्वात् । हा० १ अष्ट० । उत्त० । अकोपन तत्र चाहरति, पञ्चत्रिंशत्तमे सूरिगुणविशिष्टे, प्रव० ६५ द्वार । कल्याणकरे, दर्श० १ तत्त्व । रा० । सौम्ये, सुखकारिणि, कल्प० १ अधि० ३ क्षण । तगरायां नगर्यां कस्यचिदाचार्यस्याष्टाना शिष्याणां तृतीये सुशिष्ये, व्य० १० उ० । भ० । स्था० । आ० चू० । आ० म० । श्रीवीरेण सह प्रव्राजिते ( स्था० ८ ठा० ३ उ० । ) स्वनामख्याते हास्तिनापुरनगरराजे, भ० ।

शिवराजर्षिसंविधानकं नवमोद्देशकं माह, तस्य चेदमादिसूत्रम्—

तेणं कालेणं तेणं समएणं हत्थिणापुरे नामं नगरे होत्था वन्नओ । तस्स णं हत्थिणापुरस्स नगरस्स बहिया उत्तरपुरच्छिमे दिसीभागे एत्थ णं सहस्सम्बवणे णामं उज्जाणे होत्था, सव्वोउयपुप्फफलसमिद्धे रम्मे णंदणवणसंनिगासे सुहसीयलच्छाए मणोरमे सादुफले अकंटए पासादीए ०जाव पडिरूवे । तत्थ णं हत्थिणापुरे नगरे सिवे नामं राया होत्था, महयाहिमवंत ० वन्नओ । तस्स णं सिवस्स रन्नो धारिणी नामं देवी होत्था सुकुमालपाणिपाया ०वन्नओ । तस्स णं सिवस्स रन्नो पुत्ते धारणीए अत्तए सिवभद्दए नामं कुमारे होत्था सुकुमाल० जहा सूरियकंते० जाव पच्चुवेक्खमाणे पच्चुवेक्खमाणे विहरइ । तए णं तस्स सिवस्स रन्नो अन्नया कयावि पुव्वरत्तावरत्तकालसमयंसि रज्जधुरं चिंतेमाणस्स अयमेयारूवे अब्भत्थिए ०जाव समुप्पज्जित्था—अत्थि ता मे पुरा पोराणाणं जहा तामलिस्स ०जाव पुत्तेहिं वड्ढामि पसूहिं वड्ढामि रज्जेणं वड्ढामि एवं रट्ठेणं बलेणं वाहणेणं कोसेणं कोट्ठागारेणं पुरेणं अंतेउरेणं वड्ढामि विपुलधणकणगरयण०जाव संतसारसावएज्जेणं अतीव अतीव अभिवड्ढामि तं किन्नं अहं पुरा पोराणाणं०जाव एगंतसोक्खयं उव्वेहमाणे विहरामि ?, तं जाव ताव अहं हिरन्नेणं वड्ढामि तं चेव०जाव अभिवड्ढामि०जाव मे सामंतरायाणो वि वसे वट्टंति ताव ता मे सेयं कल्लं पाउप्पभयाए ०जाव जलंते सुबहुं लोहीलोहकडाहकडुच्छुयं तंबियं तावसभंडगं घडावेत्ता सिवभद्दं कुमारं रज्जे ठावेत्ता तं सुबहुं लोहीलोहकडाहकडुच्छुयं तंबियं तावसभंडगं गहाय जे इमे गंगाकूले वाणपत्था तावसा भवंति, तं जहा—होत्तिया पोत्तिया कोत्तिया जन्नई सड्ढई थालई जं च उट्ठदंतुक्खलिया उम्मज्जया संमज्जगा निमज्जगा संपक्खाला उद्धकंडूयगा अहोकंडूयगा दाहिणकूलगा उत्तरकूलगा संखधमया कूलधमगा मियलुद्धा हत्थितावसा जलाभिसेयकिढिणगाया अंबुवासिणो वाउवासिणो जलवासिणो चेलवासिणो अंबुभक्खिणो वायभक्खिणो सेवालभक्खिणो मूलाहारा कंदाहारा पत्ताहारा पुप्फाहारा फलाहारा बीयाहारा परिसडियकंदमूलपंडुपत्तपुप्फफलाहारा उद्दंडा रुक्खमूलिया वालवासिणो वक्कवासिणो दिसापोक्खिया आयावणाहिं पंचग्गितावेहिं इंगालसोल्लियं पिव कंडुसोल्लियं पिव कट्ठसोल्लियं पिव अप्पाणं ०जाव करेमाणा विहरंति जहा उववाइए० जाव कट्ठसोल्लियं पिव अप्पाणं करेमाणा विहरंति । तत्थ णं जे ते दिसापोक्खियतावसा तेसिं अंतियं मुंडे भवित्ता दिसापोक्खियतावसत्ताए पव्वइत्तए, पव्वइए वि य णं समाणे अयमेयारूवं अभिग्गहं अभिगिण्हिस्सामि—कप्पइ मे जावज्जीवाए छट्ठंछट्ठेणं अनिक्खित्तेणं दिसाचक्कवालेणं तवोकम्मेणं उड्ढं बाहाओ पगिज्झिय पगिज्झिय ०जाव विहरित्तए त्ति कट्टु, एवं संपेहेति संपेहेत्ता कल्लं ०जाव जलंते सुबहुं लोहीलोह०जाव घडावेत्ता कोडुंबियपुरिसे सद्दावेइ सद्दावेत्ता एवं वयासी—खिप्पामेव भो देवाणुप्पिया ! हत्थिणागपुरं नगरं सब्भिंतरबाहिरियं आसिय ०जाव तमाणत्तियं पच्चप्पिणंति, तए णं से सिवे राया दोच्चं पि कोडुंबियपुरिसे सद्दावेति सद्दावेत्ता एवं वयासी—खिप्पामेव भो देवाणुप्पिया ! सिवभद्दस्स कुमारस्स महत्थं ३ विउलं रायाभिसेयं उवट्ठवेह । तए णं ते कोडुंबियपुरिसा तहेव उवट्ठवेंति । तए णं से सिवे राया अणेगगणनायगदंडनायग०जाव संधिपालसद्धिं संपरिवुडे सिवभद्दं कुमारं सीहासणवरंसि पुरत्थाभिमुहं निसीयावेन्ति २ त्ता अट्ठसएणं सोवन्नियाणं कलसाणं०जाव अट्ठसएणं भोमेज्जाणं कलसाणं सव्विड्ढीए०जाव रवेणं महया २ रायाभिसेएणं अभिसिंचइ २ त्ता पम्हलसुकुमालाए सुरभिए गंधकासाईए गायाइं लूहेइ पम्ह० २ त्ता सरसेणं गोसीसेणं एवं जहेव जमालिस्स अलंकारो तहेव०जाव कप्परुक्खगं पिव अलंकियविभूसियं करेंति २ त्ता करयल०जाव कट्टु सिवभद्दं कुमारं जएणं विजएणं वद्धावेंति जएणं विजएणं वद्धावेत्ता ताहिं इट्ठाहिं कंताहिं पियाहिं जहा उववाइए कोणियस्स०जाव परमाउं पालयाहि इट्ठजणसपरिवुडे हत्थिणापुरस्स नगरस्स अन्नेसिं च ब-

दूसं गामागरनगर० जाव विहराहि त्ति कट्टु जयजयसद्दं पउं- जंति। तए णं से सिवभद्दे कुमारे राया जाए महया हिम- वंत० वन्नओ० जाव विहरइ। तए णं से सिवे राया अन्नया कयाइं सोभणंसि तिहिकरणदिवसमुहुत्तनक्खत्तंसि विपुलं असणपाणखाइमसाइमं उवक्खडावेंति उवक्खडावेत्ता मि- त्तणाइनियग० जाव परिजणं रायाणो य खत्तिया आमंतेति आमंतेत्ता तओ पच्छा एहाए ०जाव सरीरे भोयण- वेलाए भोयणमंडवंसि सुहासणवरगए तेणं मित्तणा- ति नियगसयण ०जाव परिजणेणं राएहि य खत्तिएहिं य सद्धिं विपुलं असणपाणखाइमसाइमं एवं जहा ता- मली ०जाव सक्कारेति संमाणेति सक्कारेत्ता संमाणेत्ता तं मित्तणाति ०जाव परिजणं रायाणो य खत्तिए य सि- वभद्दं च रायाणं आपुच्छइ आपुच्छित्ता सुबहुं लो- हीलोहकडाहकडुच्छुयं० जाव भंडं गहाय जे इमे गंगाकूल- गा वाणपत्था तावसा भवंति तं चेव ०जाव तेसिं अंतिए मुंडे भवित्ता दिसापोक्खियतावसत्ताए पव्वइए, पव्वइएऽवि य णं समाणे अयमेयारूवं अभिग्गहं अभि- गिण्हइ-कप्पइ मे जावज्जीवाए छट्ठं तं चेव ०जाव अ- भिग्गहं अभिगिण्हइ अभिगिण्हित्ता पढमं छट्ठक्खमणं उवसंपज्जित्ता णं विहरइ। तए णं से सिवे रायरिसी पढमछट्ठक्खमणपारणगंसि आयावणभूमीए पच्चोरुहइ आ- यावणभूमीए पच्चोरुहित्ता वागलवत्थनियत्थे जेणेव सए उडए तेणेव उवागच्छइ तेणेव उवागच्छित्ता किढिणसंका- इयगं गिण्हइ गिण्हित्ता पुरच्छिमं दिसं पोक्खेइ पुरच्छि- माए दिसाए सोमे महाराया पत्थाणे पत्थियं अभिरक्खउ सिवं रायरिसी अभि० २, जाणि य तत्थ कंदाणि य मू- लाणि य तयाणि य पत्ताणि य पुप्फाणि य फलाणि य बीयाणि य हरियाणि य ताणि अणुजाणउ त्ति कट्टु पु- रच्छिमं दिसं पसरति पु०त्ता जाणि य तत्थ कंदाणि य ०जाव हरियाणि य ताइं गेण्हइ गेण्हित्ता किढिणसंकाइयं भरेइ किढि० त्ता दब्भे य कुसे य समिहाओ य पत्तामोडं च गेण्हइ गेण्हित्ता जेणेव सए उडए तेणेव उवागच्छइ २त्ता किढिणसंकाइयगं ठवेइ किढि०त्ता वेदिं वड्ढेइ वेदिं वड्ढि- त्ता उवलेवणसंमज्जणं करेइ उव०त्ता दब्भसगब्भकलसाह- त्थगए जेणेव गंगा महानदी तेणेव उवागच्छइ गंगामहा- नदीं ओगाहेति २ त्ता जलमज्जणं करेइ २ त्ता जलकीडं करेइ करेत्ता जलाभिसेयं करेति करेत्ता आयंते चोक्खे परमसुइभूए देवयपितिकयकज्जे दब्भसगब्भ- कलसाहत्थगए गंगाओ महानईओ पच्चुत्तरइ पच्चुत्त- रित्ता जेणेव सए उडए तेणेव उवागच्छइ तेणेव उवागच्छित्ता दब्भेहि य कुसेहि य वालुयाएहि य वेतिं रएति वेतिं रएत्ता सरएणं अरणिं महेति सरएत्ता अग्गिं पाडेति अ०त्ता अग्गिं संधुक्केइ अ०त्ता समिहाकट्ठाइं पक्खिवइ समिहाकट्ठाइं पक्खिवित्ता अग्गिं उज्जालेइ अ० त्ता, अग्गिस्स दाहिणे पासे, सत्तंगाइं समादहे। त जहा- "सकहं वकलं ठाणं, सिज्जा भंडं कमंडलुं॥ दंडदारुं तहा पाणं, अहे ताइं समादहे ॥ १॥" महुणा य घएण य तंदुलेहि य अग्गिं हुणइ, अग्गिं हुणित्ता चरुं साहेइ, चरुं साहेत्ता बलिवइस्सदेवं करेइ, बलिवइस्सदेवं क- रेत्ता अतिहिपूयं करेइ अतिहिपूयं करेत्ता तओ पच्छा अप्पणा आहारमाहारेति। तए णं से सिवे रायरिसी दो- च्चं छट्ठक्खमणं उवसंपज्जित्ता णं विहरइ, तए णं से सिवे रायरिसी दोच्चे छट्ठक्खमणपारणगंसि आयावणभूमी- ओ पच्चोरुहइ आयावण० त्ता एवं जहा पढमपारणगं नवरं दाहिणगं दिसं पोक्खेति पो०त्ता दाहिणाए दिसाए जमे महाराय पत्थाणे पत्थियं सेसं तं चेव आहारमाहा- रेइ। तए णं से सिवराय रिसी तच्चं छट्ठक्खमणं उवसं- पज्जित्ता णं विहरति। तए णं से सिवे रायरिसी सेसं तं चेव नवरं पच्चच्छिमाए दिसाए वरुणे महाराया पत्था- णे पत्थियं सेसं तं चेव० जाव आहारमाहारेइ। तए णं से सिवे रायरिसी चउत्थं छट्ठक्खमणं उवसंपज्जित्ता णं विह- रइ, तए णं से सिवे रायरिसी चउत्थं छट्ठक्खमणं एवं तं चेव नवरं उत्तरदिसं पोक्खेइ उत्तराए दिसाए वेसमणे महाराया पत्थाणे पत्थियं अभिरक्खउ सिवं, सेसं तं चेव ०जाव तओ पच्छा अप्पणा आहारमाहारेइ। (सू० ४१७)

तए णं तस्स सिवस्स रायरिसिस्स छट्ठंछट्ठेणं अनिक्खि- त्तेणं दिसाचक्कवालेणं ०जाव आयावेमाणस्स पगइभद्दयाए ०जाव विणीययाए अन्नया कयाति तयावरणिज्जाणं क- म्माणं खओवसमेणं ईहापोहमग्गणगवेसणं करेमाणस्स विब्भंगे नामं नाणे समुप्पन्ने, से णं तेणं विब्भंगणा- णेण समुप्पन्नेणं पासइ अस्सिं लोए सत्त दीवे सत्त समुद्दे तेण परं न जाणति, न पासति। तए णं तस्स सि- वस्स रायरिसिस्स अयमेयारूवे अब्भत्थिए ०जाव समु- प्पज्जित्था--अत्थि णं ममं अइसेसे नाणदंसणे समुप्पन्ने एवं खलु अस्सिं लोए सत्त दीवा सत्त समुद्दा तेण परं वोच्छिन्ना दीवा य समुद्दा य, एवं संपेहेइ एवं संपेहेत्ता आ- यावणभूमीओ पच्चोरुहइ आया० हि त्ता वागलवत्थनियत्थे जेणेव सए उडए तेणेव उवागच्छइ उवा०त्ता सुबहुं लोही- लोहकडाहकडुच्छुयं ०जाव भंडगं किढिणसंकाइयं च गे- ण्हइ गेण्हित्ता जेणेव हत्थिणापुरे नगरे जेणेव तावसाव-

सहे तणेव उवागच्छइ उवागच्छित्ता भंडनिक्खेवं करइ भंड०त्ता हत्थिणापुरे नगरे सिंघाडगतिग० जाव पहेसु बहुजणस्स एवमाइक्खइ० जाव एवं परूवेइ-अत्थि णं देवाणुप्पिया! ममं अतिसेसे नाणदंसणे समुप्पन्ने, एवं खलु असिंस लोए० जाव दीवा य समुद्दा य। तए णं तस्स सिवस्स रायरिसिस्स अंतियं एयमट्ठं सोचा निसम्म हत्थिणापुरे नगरे सिंगाडगतिग० जाव पहेसु बहुजणो अन्नमन्नस्स एवमाइक्खइ ०जाव परूवेइ-एवं खलु देवाणुप्पिया! सिवे रायरिसी एवं आइक्खइ ०जाव परूवेइ अत्थि णं देवाणुप्पिया! ममं अतिसेसे नाणदंसणे ०जाव तेण परं वोच्छिन्ना दीवा य, समुद्दा य, से कहमेयं मन्ने एवं?। तेणं कालेणं तेणं समएणं सामी समोसढे परिसा ०जाव पडिगया। तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स जेट्ठे अंतेवासी जहा बितियसए नियंठुद्देसए ० जाव अडमाणे बहुजणसद्दं निसामेइ बहुजणो अन्नमन्नस्स एवं आइक्खइ एवं ० जाव परूवेइ-एवं खलु देवाणुप्पिया! सिवे रायरिसी एवं आइक्खइ ० जाव परूवेइ-अत्थि णं देवाणुप्पिया! तं चेव०जाव वोच्छिन्ना दीवा समुद्दा य, से कहमेयं मन्ने एवं?। तए णं भगवं गोयमे बहुजणस्स अंतियं एयमट्ठं सोचा निसम्म ०जाव सड्ढे जहा नियंठुद्देसए ०जाव तेण परं वोच्छिन्ना दीवा य समुद्दा य, से कहमेयं भंते! एवं? गोयमादिसमणे भगवं महावीरे भगवं गोयमं एवं वयासी-जन्नं गोयमा! से बहुजणे अन्नमन्नस्स एवमातिक्खइ तं चेव सव्वं भाणियव्वं ०जाव भंडनिक्खेवं करेति हत्थिणापुरे नगरे सिंघाडग० तं चेव ०जाव वोच्छिन्ना दीवा य समुद्दा य। तए णं तस्स सिवस्स रायरिसिस्स अंतिए एयमट्ठं सोचा निसम्म तं चेव सव्वं भाणियव्वं ०जाव तेण परं वोच्छिन्ना दीवा य समुद्दा य तणं मिच्छा, अहं पुण गोयमा! एवमाइक्खामि० जाव परूवेमि-एवं खलु जंबुद्दीवादीया दीवा लवणादीया समुद्दा संठाणओ एगविहिविहाणा वित्थारओ अणेगविहिविहाणा एवं जहा जीवाभिगमे ०जाव सयंभूरमणपज्जवसाणा असिंस तिरियलोए असंखेज्जे दीवसमुद्दे पन्नत्ते समणाउसो!। अत्थि णं, भंते! जंबुद्दीवे दीवे, दव्वाइं सवन्नाइं पि अवन्नाइं पि सगंधाइं पि अगंधाइं पि सरसाइं पि अरसाइं पि सफासाइं पि अफासाइं पि अन्नमन्नबद्धाइं अन्नमन्नपुट्ठाइं० जाव घडत्ताए चिट्ठति?, हंता अत्थि। अत्थि णं भंते! लवणसमुद्दे दव्वाइं सवन्नाइं पि अवन्नाइं पि सगंधाइं पि अगंधाइं पि सरसाइं पि अरसाइं पि सफासाइं पि अफासाइं पि अन्नमन्नबद्धाइं अन्नमन्नपुट्ठाइं० जाव घडत्ताए चिट्ठंति?, हंता अत्थि। अत्थि णं भंते! धायइसंडे दीवे दव्वाइं सवन्नाइं पि०जाव एवं चेव एवं०जाव सयंभूरमणसमुद्दे?, ०जाव हंता अत्थि। तए णं सा महतिमहालिया महच्चपरिसा समणस्स भगवओ महावीरस्स अंतियं एयमट्ठं सोच्चा निसम्म हट्ठतुट्ठा समणं भगवं महावीरं वंदइ नमंसइ वंदित्ता नमंसित्ता जामेव दिसं पाउब्भूया तामेव दिसं पडिगया। तए णं हत्थिणापुरे नगरे सिंघाडग ०जाव पहेसु बहुजणो अन्नमन्नस्स एवमाइक्खइ० जाव परूवेइ-जन्नं देवाणुप्पिया! सिवे रायरिसी एवमाइक्खइ०जाव परूवेइ-अत्थि णं देवाणुप्पिया! ममं अतिसेसे नाणे०जाव समुद्दा य तं नो इणट्ठे समट्ठे, समणे भगवं महावीरे एवमाइक्खइ० जाव परूवेइ-एवं खलु एयस्स सिवस्स रायरिसिस्स छट्ठं छट्ठेणं तं चेव० जाव भंडनिक्खेवं करेइ भंडनिक्खेवं करेत्ता हत्थिणापुरे नगरे सिंघाडग० जाव समुद्दा य। तए णं तस्स सिवस्स रायरिसिस्स अंतियं एयमट्ठं सोचा निसम्म० जाव समुद्दा य तणं मिच्छा, समणे भगवं महावीरे एवमाइक्खइ० जाव परूवेइ-एवं खलु जंबुद्दीवादिया दीवा लवणादिया समुद्दा तं चेव० जाव असंखेज्जा दीवसमुद्दा पन्नत्ता समणाउसो!। तए णं से सिवे रायरिसी बहुजणस्स अंतियं एयमट्ठं सोचा निसम्म संकिए कंखिए वितिगिच्छिए भेदसमावन्ने कलुससमावन्ने जाए यावि होत्था। तए णं तस्स सिवस्स रायरिसिस्स संकियस्स कंखियस्स०जाव कलुससमावन्नस्स से विभंगे नाणे खिप्पामेव परिवडिए। तए णं तस्स सिवस्स रायरिसिस्स अयमेयारूवे अब्भत्थिए० जाव समुप्पजित्था-एवं खलु समणे भगवं महावीरे आदिगरे तित्थगरे०जाव सव्वन्नू सव्वदरिसी आगासगएणं चक्केणं०जाव सहस्सऽम्बवणे उज्जाणे अहापडिरूवं०जाव विहरइ, तं महाफलं खलु तहारूवाणं अरहंताणं भगवंताणं नामगोयस्स जहा उववाइए० जाव गहणयाए, तं गच्छामि णं समणं भगवं महावीरं वंदामि०जाव पज्जुवासामि, एयं णे इहभवे य परभवे य०जाव भविस्सइ त्ति कट्टु एवं संपेहेति एवं संपेहित्ता जेणेव तावसावसहे तेणेव उवागच्छइ तेणेव उवागच्छित्ता तावसावसहं अणुप्पविसति अणु०सित्ता सुबहुं लोहीलोहकडाह०जाव किढिणसंकातियं च गेण्हइ किढि० गेण्हित्ता तावसावसहाओ पडिनिक्खमति ताव० त्ता परिवडियविब्भंगे हत्थिणागपुरं नगरं मज्झं मज्झेणं निग्गच्छइ निग्गच्छित्ता जेणेव सहस्सम्बवणे उज्जाणे जेणेव समणे भ-

मेण सगर्भो य कलशक स हस्ते गतो यस्य स तथा ' जलमज्जणे ' ति-जलेन देहशुद्धिमात्रे ' जलकीड ' ति-देहशुद्धावपि जलेनाभिरत ' जलाभिसेय ' त्ति-जलक्षरणम् ' आयंत ' त्ति-जलस्पर्शात् ' चोक्खे ' त्ति-अशुचिद्रव्यापगमात् । किमुक्तं भवति ?—' परमसुइभूए ' त्ति— देवयपिइकयकज्जे ' त्ति—देवतानां पितृणां च कृतं कार्यं-जलाञ्जलदानादिकं येन स तथा , ' सरएणं अरणिं महेइ ' त्ति—शरकेन—निर्मन्थनकाष्ठेन अरणिं—निर्मन्थनीयकाष्ठं मथ्नाति-घर्षयति ," अग्गिस्स दाहिणे ' इत्यादि सार्द्धं श्लोकस्तथा शब्दवर्ज , तत्र च ' सत्तंगाइं ' सप्ताङ्गानि समादधाति—संनिधापयति सकथां १ वल्कलं २ स्थानं ३ शय्याभाण्डं ४ कमण्डलुम् ५ दण्डदारु ६ तथाऽऽत्मानं ७ मिति, तत्र सकथा—तत्समयप्रसिद्ध उपकरणविशेषः स्थानं-ज्योतिःस्थानं पात्रस्थानं वा शय्याभाण्ड—शय्योपकरणं दण्डदारु-दण्डकः आत्मा प्रतीत इति , ' चरुं साहेति ' त्ति-चरु -भाजनविशेषस्तत्र पच्यमानद्रव्यमपि चरुरेव तं चरुं बलिमित्यर्थ साधयति-रन्धयति ' बलिवइस्सदेवं करेइ ' त्ति-बलिना वैश्वानरं पूजयतीत्यर्थ , ' अतिहिपूयं करेइ ' त्ति-अतिथि —आगन्तुकस्य पूजां करोतीति । ' से कहमेयं मन्ने एवं ' ति—अत्र मन्येशब्दो वितर्कार्थः ' बितियसए नियंठुद्देसए ' ति—द्वितीयशते पञ्चमोद्देशके इत्यर्थः ' एगविहिविहाणा ' त्ति-एकेन विधिना-प्रकारेण विधान-व्यवस्थानं येषां ते तथा , सर्वेषां वृत्तत्वात् , ' वित्थराओ अणेगविहिविहाणा ' त्ति-द्विगुण २ विस्तारत्वात्तेषामिति ' एवं जहा जीवाभिगमे ' इत्यनेन यदिह सूचितं तदिदम्—' दुगुणादुगुणं पडुप्पाएमाणा पवित्थरमाणा ओभासमाणवीइया ' अवभासमानवीचय -शोभमानतरङ्गा , समुद्राः पेत्तमिदं विशेषणम् , ' बहुउप्पलकुमुदनलिणसुभगसोगंधियपुंडरीयमहापुंडरीयसयपत्तसहस्सपत्तसयसहस्सपत्तपफुल्लकेसरोववेया ' बहूनामुत्पलादीनां प्रफुल्लानां—विकसितानां यानि केशराणि तैरुपचिता:-संयुक्ता य ते तथा,तत्रोत्पलानि-नीलोत्पलादीनि कुमुदानि चन्द्रबोध्यानि पुण्डरीकाणि-सितानि शेषपदानि तु रूढिगम्यानि ' पत्तेयं पत्तेयं पउमवरवेइयापरिक्खित्ता पत्तेयं पत्तेयं वणसंडपरिक्खित्त ' त्ति । ' सवण्णाइं पि ' त्ति-पुद्गलद्रव्याणि ' अवण्णाइं पि ' त्ति—धर्मास्तिकायादीनि ' अन्नमन्नबद्धाइं ' ति परस्परेण गाढाश्लेषाणि ' अन्नमन्नपुट्ठाइं ' ति-परस्परेण गाढाश्लेषाणि इह यावत्करणादिदमेव दृश्यम्—' अन्नमन्नबद्धपुट्ठाइ अन्नमन्नघडत्ताए चिट्ठंति ' तत्र स्वान्योऽन्यबद्धस्पृष्टान्यनन्तरोक्तगुणद्वययोगात् , किमुक्तं भवति ?-अन्योऽन्यघटतया-परस्परसम्बद्धतया तिष्ठन्ति ' तावसावसहे ' त्ति तापसावसथ —तापसमठ इति ॥ अनन्तरं शिवराजर्षेः सिद्धिरुक्ता । भ० ११ श० ६ उ० । आ० चू० । आ० म० ।

सिवंकर- शिवंकर—न० । शिवं—मोक्षपदं तत्करणशीलम् । शैलेश्यवस्थागमने, सूत्र० १ श्रु० ११ अ० ।

सिवंबतरु- शिवाम्रतरु—पुं० । शिवो-मोक्ष आम्रतरु-सहकारद्रुम शिवाम्रतरु-सिद्धिरसालवृक्षविशेषे , दर्श० १ तत्त्व ।

सिवक(ग)र—शिवकर—पुं० । स्वनामख्याते श्रेष्ठिनि, सेन० । ( ' पडिलाभ ' शब्दे पञ्चमभागे २३८ पृष्ठे तत्कथा गता । )

सिवकुमार—शिवकुमार—पुं० । अपरविदेहे पुष्कलावतीविजये वीतशोकानगरीराजस्य पद्मरथस्य पुत्रे , ध० र० २ अधि० । ( शिवकुमारकथा ' गिहवास ' शब्दे तृतीयभागे ८६७ पृष्ठे गता । )

सिवकोट्ठग—शिवकोष्ठक—पुं० । नगरयां नगर्यां सुन्यवहारित्वेन प्रसिद्धे स्वनामख्याते पुष्पमित्रादीनां सुन्यवहारिणामन्यतमे , व्य० ३ उ० ।

सिवग—शिवग—पुं० । महादेवे , नि० चू० १ उ० ।

सिवगइ—शिवगति—स्त्री० । सिद्धगतौ, पुं० । सिद्धगतिप्राप्ते , त्रिश० । भारतातीते चतुर्दशे जिने, प्रव० ७ द्वार ।

सिवगय—शिवगत—पुं० । परमपदं प्राप्ते , प्रव० ४४ द्वार ।

सिवतित्थ—शिवतीर्थ—न० । काश्याम् , प्रा० १ पाद ।

सिवदत्त—शिवदत्त—पुं० । इन्द्रपुरवास्तव्ये स्वनामख्याते ब्रह्मदत्तपितरि, उत्त० १३ अ० । श्रावस्त्यां नगर्यां स्वनामख्याते नैमित्तिके, आ० म० २ अ० ।

सिवदेव—शिवदेव—पुं० । ' पामिच्च ' शब्दे पञ्चमभागे उदाहृते सम्मतसाधुभागिन्यै तैलरूपऋणप्रदे वणिजि, पिं० ।

सिवपह—शिवपथ—न० । शिवा-मोक्ष पारमार्थिकनिरुपमद्रव्यस्थान तस्य पन्था-मार्ग शिवपथ । मोक्षाध्वनि, दर्श० ३ तत्त्व ।

सिवपुर—शिवपुर—न० । शिवस्य पुरं शिवपुरम् । शिवनगरे, मोक्षे, दर्श० ३ तत्त्व ।

सिवभद्द—शिवभद्र—पुं० । एकादशशतनवमोद्देशकाभिहिते देवराजर्षिपुत्रे, भ० ७ श० ३ उ० । ( ' सिव ' शब्देऽस्मिन्नेव भागे कथा गता । ) स्वनामख्याते मुनौ, ध० र० ।

तथाहि—

"इह कोसंबिपुरीए , पुत्तविसुज्झाणभवणकयवासो ।
सनिहियपाडिहेरो, जक्खो निवसइ फग्गुमित्तो ॥ १ ॥
अन्नदिणे तब्भवणे, सुत्तत्थविऊ सुनसणा साहू ।
काउस्सग्गेण ठिओ विसेसपडिवन्नतवकम्मो ॥ २ ॥
तब्बित्तखोहणत्थ, जक्खो नं डमइ भुयगरूवेण ।
करिरूवेण पीडइ, तस्सइ अट्टट्टहासेहिं ॥ ३ ॥
तह वि हु अक्खुहियमणं तं समणं ददठु फग्गुमित्तसुरो ।
नमिउं विन्नवइ इमं, उच्छलियातुच्छहरिसभरो ॥ ४ ॥
उवसग्गवग्गमुग्ग , जं तुह मुणिपवर ! पावभरसज्जो ।
सज्जोगमालिणा वि हु , काहमहं खमसु तं भंते ! ॥ ५ ॥
इय चरणजुयलमंडणि-य मउलिकमलो खमाविउं साहू ।
सीसो इव समयविणओ , जक्खो तं सेवए सम्मं ॥ ६ ॥
अह तत्थ सुधि पुरोहिय-पुत्तो सिवभद्दमिरियणभिहाणो ।
पत्तो तं अइदुक्करं, तवकिलेसिंयं निएइ मुणिं ॥ ७ ॥
तो नहि सहासमिणं, पयपिंयं जं मुणिंद ! अम्मत्थं ।
पीडिज्जइ किर अप्पा, पाढमजुत्तं तयं एयं ॥ ८ ॥

जओ—

धम्माओ धणलाभो, तत्तो कामो तओ य संसारो ।
धम्मस्स अज्जणा ता, मूलाउ च्चिय दढमजुत्तं ॥ ९ ॥
इय ते उवहासपरे, दट्ठु जक्खो फुरंतगुरुकावो ।
उप्पाडिय सियफरसुं, पहाविओ तेसि हणणत्थं ॥ १० ॥
नयणु भयलोललोयण-तरलियतारा पकंपिरसरीरा ।
लग्गा मुणिचलणेसुं, भणिरा " तं अम्ह सरणं " ति ॥११॥
ते दट्ठु साहुसरणे, जक्खो जाओ पसंतमन्नुभरो ।
पारियउस्सग्गेणं, अह मुणिणा ते इमं वुत्ता ॥ १२ ॥
( भद्देत्यादि ' धम्म ' शब्दे चतुर्थभागे २६६० पृष्ठ उक्तम् । )
जं पिहु धणभोगाई, भणिय भवकारणं तमवि इत्थ ।
नेयं किलिट्ठसत्ता-ण न उण इयराण जं भणियं ॥ १७ ॥
सा काऽवि कला भायं—ति नियमणे जाणिऊण परमत्थं ।
न्हायंति घडसएण वि, छिप्पंति न बिंदुणा चेव ॥ १८ ॥
सुव्वइ य भरहसगरा-इणो इहं सुचिरभुत्तवरभोगा ।
होउ अकिलिट्ठमणा, लोयग्गठियं पयं पत्ता ॥ १९ ॥
इयं सोउं पडिबुद्धा, पुणो पुणो खामिउं नमंसराह ।
तस्स मुणिस्स समीवे, ते दो वि वयं पवज्जंति ॥ २० ॥
मुणिय जइजुगकिरिया, गुरुमूले पढियबहुयसुत्तत्था ।
सुचिरं उग्गविहारा, खंतिपहाणा तवंति तवं ॥ २१ ॥
अह असुहकम्मवसओ सिरिओ सिढिलेइ चरणकरणभरं ।
धरइ मणे जाइमयं, न कुणइ विणयं गुरूसुं पि ॥ २२ ॥
तो सिवभद्दो सिरियं, भणेइ भो भद्द ! चरणकरणम्मि ।
भवसयसहस्सदुलहे,खणं पि किह होसि सिढिलमणो? ॥२३॥
गुरुविणयपरो निच्चं, मणं पि मा कुणसु जाइमयमेवं ।
जं जाइमयाईहिं, दुहिओ परिभमइ भवगहणे ॥ २४ ॥

उक्तं च—

जाइकुलरूपबलसुय-तवलाभिस्सरिय अट्ठमयमत्तो ।
एयाइं चिय बंधइ, असुहाइँ बहुं च संसारे ॥ २५ ॥
तो भद्द नियं दोसं, एय गीयत्थसुगुरुमूलम्मि ।
तं आलोयसु सम्मं, नाउं आलोयणाइविहिं ॥ २६ ॥

तद्यथा—

पडिसेवा पडिसेवग—दोसगुणा गुरुगुणा य इह नेया ।
सम्मविसोहीइ गुणा, सम्ममणालोयओ सिक्खा ॥ २७ ॥
तह पडिसेवादप्प—प्पमायणाभोगसहसकारे य ।
आउरआवइसंकिय—भयप्पओसा य वीमंसा ॥ २८ ॥
वग्गणमाई दप्पो, इह कंदप्पो उ भन्नइ पमाओ ।
विस्सरियमणाभोगो, सहसाकारो अकम्हं त्ति ॥ २९ ॥
छुहतण्हवाहिपरेयो, जं सेवइ आउरा भवे एसा ।
दव्वाइअलंभे पुण, चउव्विहा आवई होइ ॥ ३० ॥
संकिय मा कम्हा मा-इ संकिए सीहमाईण च भयं ।
कोहाइओ पओसो, वीमंसा सेहमाईण ॥ ३१ ॥

( दारं )—

"आकंपइत्ता अणुमाणइत्ता", जं दिट्ठं बायरं व सुहुमं वा ।
छन्नं सद्दाउलयं, बहुजणअव्वत्त तस्सेवी ॥ ३२ ॥
इय पडिसेवगदोसा, आकंपिय नत्थ भत्तिमाईहिं ।
गुरुअवराहं लहुया—णुमाणओ तहय आलोए ॥ ३३ ॥
जं दिट्ठं ति परेणं, आलोयइ बायरं ति नहु सुहुमं ।
अह सुहुमं आलोयइ, विस्संभत्थं न उण थूलं ॥ ३४ ॥
छन्नं अव्वत्तरसं, सद्दाउलयंति तुरियमंदं तु ।
तं चेव य पच्छित्तं, आलोयइ बहुजणाण पुरो ॥ ३५ ॥
अव्वत्तस्स अगीय—स्स तस्स आसेवगो य तस्सेवी ।
इत्तो दस आलोयग—गुणा इमे हुंति नायव्वा ॥ ३६ ॥
जाइकुलविणयउवसम—इंदियजयनाणदंसणसमग्गा ।
अणणुत्ता वि अमाई, चरणजुया लोयगा भणिया ॥ ३६ ॥
जाइजुओ पाएणं, न कुणइ असुहं कयं तु आलोए ।
कुलसंपन्नो सम्मं, पच्छित्तं वहइ गुरुदिन्नं ॥ ३८ ॥
नाणी किच्चाकिच्चं, जाणइ सद्दहइ दंसणी साहिं ।
चरणी न पडिवज्जइ, ससपया हुंति पयडत्था ॥३९॥
आयारव माहारव, ववहारुव्वीलए पकुव्वी य ।
अपरिस्सावी निज्जव, अवायदंसी गुरू भणिओ ॥ ४० ॥
नाणायाराइजुओ, आयारव सीसकहियसवगाहं ।
धारंतो आहारव, ववहारो पंचहा इणमो ॥ ४१ ॥
आगमसुयआणा धा—रणा य जीयं च होइ ववहारो ।
केवलिमणो हि चउदस,दसनवपुव्वी य पढमो त्थ ॥ ४२ ॥
आयारपकप्पाई, सव्वं सेसं सुयं विणिद्दिट्ठं ।
देसंतरट्ठियाण, गूढपयालोयणा आणा ॥ ४३ ॥
गीयत्थाओ पुव्विं, अवधारिय धारणं तहिं दिने ।
पायच्छित्तं जीयं, रूढं वा जं जहिं गच्छे ॥ ४४ ॥
लज्जाइनिव्वहंत, अवलइजं कुणइ सो उ उव्वीलो ।
गरुयस्स वि पावस्स उ, सुद्धिसमत्थो पकुव्वी य ॥ ४५ ॥
अपरिस्साविगभीरो, निज्जवगो दुब्बलस्स निव्वहगो ।
नरगाइदुक्खदंसी, अवायदंसी ससज्झाणं ॥ ४६ ॥

अवि य—

सल्लुद्धरणनिमित्तं, खित्तम्मी सत्त जोयणसयाइं ।
काले बारस वासा-गीयत्थगवेसणं कुज्जा ॥ ४७ ॥

जओ—

नासेइ अगीयत्थो, चउरंगं सव्वलोयसारंगं ।
नट्ठम्मि य चउरंगे, नहु सुलहं होउ चउरंगं ॥ ४८ ॥

किंच—

अक्खंडियचारित्तो, वयगहणाओ य जो य गीयत्थो ।
तस्स सगासे दंसण, वयगहणं सोहिगहणं च ॥ ४९ ॥
एयंविहगुरुपासे, व(ल)ज्जागारवभयाइ मोत्तूणं ।
सव्वं पि भावसल्लं, उद्धरियव्वं जओ भणियं ॥ ५० ॥
जह बालो जंपंतो, कज्जमकज्जं च उज्जुओ भणइ ।
तं तह आलोइज्जा, मायामयविप्पमुक्को उ ॥ ५१ ॥

दारं-

लहुयाल्हाईजणणं, अप्पपरनिवित्तिअज्जवं सोही ।
दुक्करकरणं अट्ठउ , निस्सल्लत्तं च सोहिगुणा ॥ ५२ ॥
आलोयणा परिणओ , सम्मं संपट्ठिओ गुरुसगासे ।
जइ अंतरा वि कालं , करिज्ज आराहगो तह वि ॥ ५३ ॥
आगंतु गुरुमूले , जो पुण पयडेइ अत्तणो दोसे ।
सो जइ न जाइ मोक्खं , अवस्समसरत्तणं लहइ ॥ ५४ ॥
जो पुण इय नाऊण वि, सम्मं न कहेइ अत्तणो सल्लं ।
चोएयव्वो तो सो, निसीहभणिएहिं मायाहिं ॥ ५५ ॥
जह कस्सइ नरवइणो , एगो आसो समग्गगुणकलिओ ।
तस्स पभावेण निव-स्स वट्टए सव्वसंपत्ती ॥ ५६ ॥

अह संसनिवा पभणेमि, नियानियठाणेसु संठिया एव ।
भो अत्थि कोइ पुरिसो, जो तं आसं अवहरिज्जा ॥ ५७ ॥
भणिय चारनरेहिं, सो नरपजागओ सया कालं ।
हरिउं तेण न तीरइ, अह वुत्तं एगपुरिसेण ॥ ५८ ॥
जइ नवरं मारिज्जइ, रन्ना भणियं इमं पि ता होउ ।
तत्तो सो तत्थ गओ, न लहइ तुरयस्स अवगासं ॥५६॥
ता एण खुद्दियाके-टएण सरमुहठिएण वरतुरओ ।
कहमवि विद्धो सो तें-ण सन्निओ सुहुमसल्लेण ॥६०॥
सो निच्च परिहप्पइ, भुंजतो वि हु पभू रज्जवसाइ ।
तो रन्ना सो विज्ज-स्स दाइओ तेण भणियमिणं ॥ ६१ ॥
न हि कोइ धाउखोहो, अत्थि हु अव्वत्तसल्लमेयस्स ।
तो जमगसमगमसा, उज्झितो सुहुमपक्केण ॥ ६२ ॥
सल्लप्पएसं आसो, उवहतेणओ य पढमसुव्वाओ ।
नाऊण तम्मि सल्लं, नीणिय आसो कओ सज्जो ॥ ६३ ॥
अन्ना पुण जइ आसो, अणुधियसल्ला न भुज्जपरिहत्थो ।
तह साहू वि ससल्लो, कम्मज्जं काउं असमत्थो ॥६४॥
देवाणुप्पिय ! सम्मं, लज्जागारवभयाइ ता मुत्तु ।
आलोयसु नियसल्लं, मा मरसु ससल्लमरणेण ॥ ६५ ॥

जओ—

न वि तं सत्थं व विसं, व दुप्पउत्तो व कुणइ वेयालो ।
जंतं व दुप्पउत्तं, सप्पो व पमाइओ कुद्धो ॥ ६६ ॥
जं कुणइ भावसल्लं, अणुद्धियं उत्तमट्ठकालम्मि ।
दुल्लभबोहीयत्तं, अणंतसंसारियत्तं च ॥६७॥
इय पभणिआ वि सिरिओ, तओ अणालोइओ अपडिक्कंतो ।
मरणं विराहिऊणं, उववन्ना भवणवासीसु ॥ ६८ ॥
सिवभद्दो उण कट्टग—पहछलणानायओ कह वि जाय ।
नाउं वियमइयारं आलोयइ झ त्ति गुरुमूले ॥ ६६ ॥
आलोइयपडिक्कंतो, सम्मं आराहिऊण सामन्नं ।
उववन्नो पवरसुरो, सोहम्मे हेमकंताभो ॥ ७० ॥
तो चविउं इह-भरहे, वेयड्ढगयणवल्लहपुरम्मि ।
सिरिकणयकेउरन्नो, देवइनामाइ देवीए ॥७१॥
जाओ पहाणपुत्तो, सिवचंदो नाम पत्ततारुन्नो ।
परिणेइ वसंतसिरिं, सिवधूय पढियबहुविज्जो ॥७२॥
सिरिओ वि तओ वट्टिय, जाओ तस्सेव बंधवो लहुओ ।
कयसामचंदनामो, कमसो तरुणत्तमणुपत्तो ॥७३॥
अह सामचंदकुमर-स्स पढियनिरवज्जपवरविज्जस्स ।
जाया कयाइ बुद्धी, मायंगि साहिउं विज्जं ॥७४॥
तीसे य इमो कप्पो, मायंगिदिट्ठिपण कह वि दिणे ।
साहणविही विहेया, परिणियमायंगधूयाए ॥ ७५ ॥
तयणु सकामं पिउणा, पारिज्जंतो वि सो यरेण पुणो ।
सुबहु खलिज्जंतो वि हु, गओ कुणालाइनयरीए ॥ ७६ ॥
तत्थ बहुदाणपुव्वं, मायंगसुयं विवाहए पगे ।
सिद्धालयविज्जासाहण—वावारो गलियसुद्धमई ॥७७॥
अगणियसकुलकलंको, दूरं पच्चट्ठपुन्नपब्भारो ।
तीए च्चिय अणुरत्तो, कमेण जायाणि डिंभाणि ॥७८॥
इयं तस्स मलीमस चि—ट्ठियस्स अच्चंतपावनिरयस्स ।
पिउभायपमुहलोए-ण भकहादूरओ चत्तो ॥७६॥
अन्नदिणे सिवचंदो, हत्थिकिरिरहजोहजूहपरियरिओ ।
पत्तो गयणयलं, विमाणमालाहिं संछन्ना ॥८०॥
पवरविमाणारूढो, सिरउवरिंधरिज्जमाणसियछत्तो ।
पासपरिट्ठियखयरा, जुगदालिज्जंतसियचमरो ॥ ८१ ॥
अग्गट्ठियमागहगण-पढ्यपयडियविविहमंगलजओ ।
कलकंठकंठगायण—गिज्जंतमहंतगुणनिवहो ॥ ८२ ॥
सुचिरं सुरसरिसुरगिरि-वणेसु तह जंबुदीवजगईए ।
पउमवरवेइगाए, पक्कीलिउं सगिहमणुवत्तिओ ॥ ८३ ॥
कह वि कुणालानयरी-इ उवरि वच्चंतओ निए वि इमं ।
नेहेण आयरिऊ-ण सायरं भायरं भणइ ॥ ८४ ॥
किं भो बंधव ! तुमए, इहेव अच्चंतनिंदियकुलम्मि ।
कायरेण व मयणकले—वरम्मि बद्धा रई दूरं ॥८५॥
किं मूढ ! विस्सगंधं—पवंधं दढगाढपिहियनासमउडं ।
दूरेण वयमाणं, जण इओ न हु पलाएसि ? ॥ ८६ ॥
एगत्थ अत्थिउक्कर-ड भरियमन्नत्थ भमिरमाणगणं ।
अवरत्थ गिद्धवायस-दुप्पिच्छं किं न नियसि इमं ? ॥८७॥
तं सोउ सामचंदो, अयंडनडिदंडताडिओ व्व दढं ।
विच्छाओ लज्जावस-मिलंतनयणो भणइ एवं ॥ ८८ ॥
भो भाय ! को न याणइ, दुहमसममिमं परं कहेसु इमं ।
पुव्वभवज्जियदुक्क-म्म भारवासेण केण अहं ॥ ८६ ॥
विमलकुलवाससुविसुद्धो, विमुक्कतुहससिमयंखुरडिदंधो ।
एरिसविजाइवावा-र सायरं पाडिओऽम्हि हहा ? ॥६०॥
तो विहसिणा सिवचंदो, सविम्हओ सरिय गेहिणिं देविं ।
पुच्छइ कहेसु भयवइ !, मह बंधवपुव्वभवचरियं ॥ ६१ ॥
उवओहिनाणमुणिय-कहिउं सयलं पि तस्स पुव्वभवं ।
देवीइ रोहिणीए फुडवयणमिमं समुल्लविय ॥ ६२ ॥
जाइमयाइ पुव्विं, न सम्ममालोइय जमएण ।
तेणेसो तुह भाया, विडंवणं एरिसं पत्तो ॥ ६३ ॥
जं सुहुमं वि हु खलियं, निस्सल्ला लोयणा कया तुमए ।
तं जाओ सि इय सुही, इय भणिय तिरोहिया देवी ॥६४॥
सोउमिणं सिवचंदो, पुव्वभवं सरिय भणइ भो भाय ! ।
अज्ज वि नाडं वि लहु, कुकुडुंवसिणेहं मुचमिमं ॥६५॥
नियदुक्कयाइं आलो-इऊण काऊण निव्वतवचरणं ।
एयस्स-दुक्खनिवह-स्स देसु सलिलंजलिं भाया ! ॥६६॥
अह भणइ सामचंदो, भाय ! इमा भारिया मह अणाहा ।
आसन्नपसवसमया, इमाई डिंभाई लहुयाइं । ६७ ॥
ता कहसु मुणमि कह इय तं मूढ निएवि सिवचंदो ।
दूरं न धम्मजुग्ग—त्ति चयइ पत्तो निय नयरं ॥ ६८ ॥
मायाविऊण पिउणो, कहमवि चारणमुणिंदपयमूले ।
पडिवन्नसंजमभरो, सिद्धिं पत्तो धुयकिलेसो ॥ ६६ ॥
इयरो वि काउ विविहं, पावं कालम्मि कालमासज्ज ।
पत्तो नरयं घोरं, दुहिओ भमिही भवकडिल्ले ॥ १०० ॥
श्रुत्वेति सद्धिकटनाघटनानिरस्त-
कर्मव्रजस्य शिवभद्रमुनेश्चरित्रम् ।
वाचंयमा नियमिनाखिलदोषजाला,
यत्नं मुदा स्खलितशुद्धिविधौ कुरुध्वम् ॥ १०१ ॥

इति शिवभद्रमुनिकथा । ध० र० ।

सिवभूइ-शिवभूति-पु० । स्थविरस्यार्यधनगिरेः वाशिष्ठगोत्रस्य स्वनामख्याते ऽन्तेवासिनि कौत्सगोत्रे आचार्ये, कल्प० ८ क्षण । स्वनामख्याते रथवीरपुरवास्तव्ये सार्थस्त्रिस्त

ले, य. प्रवर्ज्य बोटिकनिह्नवानस्थापयत्। आ० म०१ अ०।

भाष्यम्—

उवहिविभागं सोउं, सिवभूई अज्जकण्हगुरुमूले।
जिणकप्पियाइयाणं,भणइ गुरुं कीस नेयाणिं? ।२५५३।
जिणकप्पोऽणुचरिज्जइ,
नोच्छिन्नो त्ति भणिए पुणो भणइ।
तदसत्तस्सोच्छिज्जउ,
वुच्छिज्जइ किं समत्थस्स ? ॥ २५५४ ॥
पुच्छस्स पुव्वमणापुच्छे,
छिण्णकंवलकसायकलुसिओ चेव।
सो वेइ परिग्गहओ,
कसाय मुच्छा भयाईया ॥ २५५५ ॥
दोसा जओ सुबहुया,सुए य भणियमपरिग्गहत्तं ति।
जमचेला य जिणिंदा,तदभिहिओ जं च जिणकप्पो२५५६
जं च जियाचेलपरि-सहो मुणी जं च तीहिँ ठाणेहिं।
वत्थं धरिज्ज नेगं-तओ तओऽचेलया सेया ॥२५५७॥

सर्वा अप्युक्तार्था एव, नवरं 'जं च जिणा चेले' त्यादि, यस्माच्च 'जिनाचेलपरिषहो मुनि.' इत्यागमेऽभिहितम्। जिताचेलपरिषहत्वं च किल स्यक्तवस्त्रस्यैव भवतीत्यभिप्राय। यस्माच्च त्रिभिरेव स्थानैर्वस्त्रधारणमनुज्ञातमागमे नैकान्तत, तथा चागमवचनम्-"तिहिं ठाणेहिं वत्थं धरिज्जा-हीरिवत्तियं, दुगंछावत्तियं, परीसहवत्तियं"। तत्र हीर्लज्जा संयमो वा प्रत्ययो निमित्तं यस्य धारणस्य तत् तथा, जुगुप्सा-लोकविहिता निन्दा सा प्रत्ययो यस्य तत्तथा, एवं परीषहा—शीतोष्णदंशमशकादय प्रत्ययो यत्र तत्तथा। उपसंहरन्नाह-ततस्तस्मादुक्तयुक्तिभ्योऽचेलतैव श्रेयस्करीति पूर्वपक्ष.।

अत्रोत्तरपक्षमभिधित्सुराह—

गुरुणाऽभिहिओ जइ जं, कसायहेऊ परिग्गहो सो ते।
तो सो देहो च्चिय ते, कसायउप्पत्तिहेउ त्ति ॥२५५८॥

गुरुणा-आर्यकृष्णेनाभिहित शिवभूति.-यदि हन्त! यद् यत् कषायहेतुः, तत् तत् ते तव परिग्रह, स च मुमुक्षुणा परिहर्तव्य एवेत्येकान्त। 'तो सो' इत्यादि ततस्तर्हि स्वकीयो देह एव 'ते' तव स्वस्यात्मनोऽपि कषायोत्पत्तिहेतुरिति परिग्रह परिहरणीयश्च प्राप्नोति। अतोऽपरिग्रहत्वस्य परिग्रहाणां चासन्ना कथंति।

अथवा-किमेको देह एव, ननु व्याप्त्यापि ब्रूम', तद्यथा—

अत्थि व किं किंचि जए,जस्स व तस्स व कसायबीयं जं।
वत्थु न होज्ज एवं;धम्मो वि तुमे न घेत्तव्वो ॥२५५९॥
जेण कसायनिमित्तं, जिणो वि गोसालसंगमाईणं।
धम्मो धम्मपरा वि य,पडिणीयाणं जिणमयं च।२५६०

किं हि नामैतावति जगति तद् वस्तु, यद् यस्य वा तस्य वा कषायाणां बीजं-कारणं न भवेत्? एवं च सति श्रुत-चारित्र-भेदभिन्नो धर्मोऽपि त्वया न ग्रहीतव्य', तस्यापि कस्यचित् कषायहेतुत्वात्। कुत.? इत्याह 'जेणे'त्यादि येन यस्मा दास्तां तत्प्रणेतो धर्म, किन्तु-स त्रिभुवनबन्धु.-निष्कारणवत्सल सर्वसत्त्वानां जिनोऽपि भगवान् तीर्थकरोऽपि क्लिष्टकर्मणां गोशालकसंगमकादीनां कषायनिमित्त सजात.। एवं धर्मस्तत्प्रणीत', तदुक्तधर्मपरा अपि तदुक्तनिष्ठाः साधव', जिनमतं च द्वादशाङ्गीरूपम्, सर्वमप्येतद् गुरुकर्मणां दु.खैकरूपदीर्घभवभ्रमणभाजां प्रत्यनीकानां जिनशासनप्रतिकूलवर्तिनां कषायनिमित्तमेव, इत्येतदप्यग्राह्यं प्राप्नोति, न चैतदस्ति। तस्मात् यत् कषायहेतुस्तत् परिहर्तव्यम्' इत्यनेकान्त एवेति।

अथैतद्दोषपरिजिहीर्षो परस्याभिप्रायमाशङ्क्य परिहरन्नाह-

अह ते न मोक्खसाहण-मईए गंथो कसायहेऊ वि
वत्थाइमोक्खसाहण-मईए सुद्धं कहं गंथो ? ॥२५६१॥

अथ मन्येथाः-ते देहादयो जिनमतान्ता. पदार्थो कषायहेतवोऽपि सन्तो न ग्रन्थो-न परिग्रह., मोक्षसाधनमत्या गृह्यमाणत्वादिति। हन्त! यद्येवम्, तर्हि वस्त्रपात्रादिकमप्युपकरणं शुद्धमेषणीयं मोक्षसाधनबुद्ध्या गृह्यमाणं कथं ग्रन्थ.?-न कथञ्चिदित्यर्थ, न्यायस्य समानत्वादिति।

तदेवं कषायहेतुत्वादग्राह्य वस्त्रादिकमित्येतद् निराकृतम्। अथ मूर्च्छाहेतुत्वेन तत् परिहरणीयमित्येतदपाकर्तुमाह—

मुच्छाहेऊ गंथो, जइ तो देहाइओ कहमगंथो ?
मुच्छावओ कहं वा, गंथो वत्थादसंगस्स ? ॥२५६२॥
अह देहाऽऽहाराइसु, न मोक्खसाहणमईए ते मुच्छा।
का मोक्खसाहणेसुं, मुच्छा वत्थाइएसुं तो ? ॥२५६३॥
अह कुणसि थुल्लवत्था-इएसु मुच्छं धुवं सरीरे वि।
अकेज्ज दुल्लभयरे, काहिसि मुच्छं विसेसेणं ॥ २५६४ ॥
वत्थाइगंथरहिया, देहाऽऽहाराइमित्तमुच्छाए।
तिरिय सबराइओ नणु, हवंति निरओवगा बहुसो।२५६५।
अपरिग्गहा वि परसं-तिएसु मुच्छाकसायदोसेहिं।
अविणिग्गहियप्पाणो, कम्ममलमणंतमज्जंति। २५६६।
देहत्थवत्थमल्लाऽ-णुलेवणाऽऽभरणाधरिणो केइ।
उवसग्गाइसु मुसओ, निस्संगा केवलमुविंति। २५६७।

एताः सुगमा एव, नवरं यदि यो मूर्च्छाहेतु स ग्रन्थः परिग्रह, परिग्रहत्वादेव च त्याज्य. ततस्तर्हि मुच्छावउ' त्ति-मूर्च्छावतो वक्ष्यमाणयुक्त्या मूर्च्छायुक्तस्य देहाऽऽहारादिकस्तव हन्त! कथमग्रन्थ? अपि तु ग्रन्थ एव, तत सोऽपि परित्याज्यः प्राप्नोति। कथं वा ममत्वमूर्च्छारहितत्वेनासङ्गस्य-सङ्गविप्रमुक्तस्य साधोर्वस्त्रादिकं ग्रन्थो गीयते भवता?-न भवत्येव तथाभूतस्य तद् ग्रन्थ इति। अथ देहाऽऽहारादिषु ते-तव मूर्च्छा नास्ति, मोक्षसाधनमत्या तेषां ग्रहणात्, तर्हि मोक्षसाधनत्वेन तुल्येष्वपि वस्त्रादिषु तव हन्त! का मूर्च्छा? इति। अथ स्थूलेषु बाह्यत्वात्, सागमात्रेणैवाग्नितस्कराद्युपद्रवगम्यत्वात्, सुलभत्वात्, कतिपयदिनान्ते स्वयमेव विनाश्यत्वात् शरीराद्-नितरा ति मारेषु वस्त्रादिषु मूर्च्छा करोषि त्वम्, तर्हि ध्रुव-नि-

श्चितं शरीरेऽपि विशेषतो मूर्च्छां करिष्यसि । कुतो विशेषेण तत्र तत्करणमित्याह-'अक्केज्ज' 'दुल्लभयरे' त्ति-विभक्तिव्यत्ययात् शरीरस्याक्रय्यत्वात्-क्रयणालभ्यत्वात्। न हि वस्त्रादिवत् शरीरं क्रयेण क्वापि लभ्यते । अत एव वस्त्राद्यपेक्षया दुर्लभतरत्वात्, तथा, तदपेक्षयैवान्तरङ्गत्वात्, बहुतरदिनावस्थायित्वात्, विशिष्टतरकार्यसाधकत्वाच्च विशेषेण शरीरे मूर्च्छां करिष्यसीति । अथ देहादिमात्रे या मूर्च्छा सा स्वल्पैव वस्त्रादिग्रन्थमूर्च्छा तु बह्वी, ततो देहादिमात्रमूर्च्छासम्भवेऽपि नग्नश्रमणका सेत्स्यन्ति, न भवन्त., बहुपरिग्रहत्वादित्याह-'वत्थाइ' इत्यादि, गाथात्रयम् । अयमिह संक्षेपार्थ -तिर्यक्-शबरादयोऽल्पपरिग्रहा अपि, तथा शेषमनुष्या अपि महादारिद्र्योपहताः क्लिष्टमनसोऽविद्यमानतथाविधपरिग्रहा अप्यविनिगृहीतात्मानो लोभादिकषायवर्गवशीकृता परमतेष्वपि विभवेषु मूर्च्छाककषायादिदोषै कर्ममलमनन्तमर्जयन्ति, तद् बहुशो निर्ग्रन्था भवन्ति, न मोक्षप्रापका । अन्ये तु महामुनय केनचिदुपसर्गादिबुद्ध्या शरीरासञ्जितमहामूल्यवस्त्राऽऽभरणमाल्यविलेपनादिसंयुक्ता अपि सर्वसङ्गविनिर्मुक्ता निगृहीतात्मानो जितलोभादिकषायरिपव समासादितविमलकेवलालोका सिद्धिमुपगच्छन्ति । तस्मादवश्यात्मनां क्लिष्टमनसां नाग्न्यमात्रमिदमकिञ्चित्करमेवेति ।

अथ यदुक्तम्-'भयहेतुत्वेन वस्त्रादयस्त्याज्याः' इति । तत्र प्रतीतयधानमाह—

जइ भयहेऊ गंथो, तो नाणाईण तदुवघाईहिं ।
भयमिह ताइं गंथो, देहस्स य सावयाईहिं ॥२५६८॥
अह मोक्खसाहणमईए न भयहेऊ वि ताणि ते गंथो ।
वत्थाइ मोक्खसाहण-मईए सुद्धं कहं गंथो ? ॥२५६९॥

यदि यद् भयहेतुस्तद्ग्रन्थ, तर्हि ज्ञान-दर्शन-चारित्राण्यपि तदुपघातकेभ्य, देहस्य च श्वापदादिभ्यो भयमस्ति, इति तान्यपि ग्रन्थ प्राप्नुवन्ति । शेष व्याख्यातप्रायम् ।

अथ यदुक्तम्—' परिग्गहओ कसाय-मुच्छा-भयाईय' त्ति तत्रादिशब्दसंगृहीतं वस्त्रादीनां रौद्रध्यानहेतुत्वमभ्युपदर्श्य परिहरन्नाह—

सारक्खणाणुबंधो, रोद्दज्झाणं ति ते मई हुज्जा ।
तुल्लमियं देहाइसु, पसत्थमिह तं तहेहावि ॥२५७०॥
जे जत्तिया पगारा, लोए भयहेअवो अविरयाणं ।
ते चेव य विरयाणं, पसत्थभावाय मोक्खा य ॥२५७१॥

स्थानाङ्गे रौद्रध्यानं चतुर्विधमुक्तम्, तद्यथा—" से किं तं रोद्दज्झाणे ? । रोद्दज्झाणे चउव्विहे पन्नत्ते; तं जहा-हिंसाणुबंधी, मोसाणुबंधी, तेयाणुबंधी सारक्खणाणुबंधी " । तत्र हिंसाया सत्त्ववधादिरूपाया अनुबन्ध सातत्येन चिन्तन यत्र तद् हिंसानुबन्धि । मृषा-असत्य तस्यानुबन्धो यत्र तत् तथा । स्तेयं—चौर्यं तस्यानुबन्धो यत्र तत् तथा । संरक्षण—सर्वैरुपायैस्तस्करादिभ्यो निजवित्तस्य संगोपन तस्यानुबन्ध सातत्येन चिन्तनं यत्र रौद्रध्यानं तत् तथा । एष च सति संरक्षणानुबन्धो रौद्रध्यानस्य चतुर्थो भेद । स च वस्त्रादौ गृहीते किलावश्यंभावी, रौद्रध्यानभेदत्वाच्च रौद्रध्यानमिति । एवं रौद्रध्यानहेतुत्वाद् वस्त्रादिकं दुर्गतिहेतु. शस्त्रादिवत्, ततो न ग्राह्यमिति तव बुद्धिर्भवेत्; तर्हि यदुक्तयुक्त्या रौद्रध्यान तदिद देवानांप्रिय! देहादिष्वपि तुल्यम्, तेष्वपि जल-ज्वलन-मलिम्लुच-श्वापदा-ऽहि-विष-कण्टकादिभ्य संरक्षणानुबन्धस्य तुल्यत्वात् । अतस्तेऽपि परित्याज्या प्राप्नुवन्ति । अथेह देहादेर्मोक्षसाधनाङ्गत्वाद् यतनया तत्संरक्षणानुबन्धविधान प्रशस्तं न दोषाय । यद्येवम्, तर्हि तथा तेनागमप्रसिद्धेन यतनाप्रकारेणेहापि वस्त्रादौ संरक्षणानुबन्धविधान कथं न प्रशस्तम् ? । ननु कथं वस्त्रादयोऽपि परित्याज्या ? इति । अथैवं भूप-वस्त्रादिपरिग्रह एव मूर्च्छादिदोषहेतुत्वाल्लोकस्य ' भयभ्रमणकारणम् ' इत्येतदपि प्रतीतं वस्त्रादिपरिग्रहवत् साधोरपि कथं न स्यात् ? इत्याह—' जे जत्तियत्यादि ' । इह ये यावन्त शयन-पान-भोजन-गमना-ऽवस्थान-मनो-वाक्-कायचेष्टादय प्रकारा अविरतानामसंयतानामप्रशस्ताध्यवसायवता लोके भयहेतवो जायन्ते, त एव तावन्त प्रकारा विरताना संयतानां प्रशस्ताध्यवसायाना मोक्षायैव संपद्यन्ते । तस्माद् वस्त्रादिस्वीकारेऽपि नेतरजनवत् साधूना मूलाच्छेदितलोभादिकषाय-भय-मोहनीयादिदोषाणा तदुद्भवितदोष कोऽप्यनुपपद्यत इति ।

अपि च, यदि वस्त्रादिक ग्रन्थ, मूर्च्छादिहेतुत्वात्, कनकादिवदिति हेतु-दृष्टान्तोपन्यासमात्रेणैव वस्त्रादेर्ग्रन्थत्वं साधयति भवान्, तर्हि वयमपि तदुपन्यासमात्रेण कनकादेरप्यग्रन्थत्व साधयाम । कथम् ? इत्याह—

आहारो व्व न गंथो, देहत्थं ( व ) विसघायणट्ठाए ।
कणगं पि तहा जुवई, धम्मंतेवासिणी मे त्ति ॥२५७२॥

कनक तथा युवतिश्च धर्मान्तेवासिनी मे ममेति बुद्ध्या परिगृह्णतो न ग्रन्थ इति सम्बन्ध, एषा किल प्रतिज्ञा । कुत ? इत्याह—देहार्थमिति कृत्वा, अयं च हेतु, देहार्थत्वात्—देहप्रयोजनत्वात्—देहोपकारित्वादित्यर्थ. । ननु युवतेर्देहोपकारित्वं किल प्रतीतम्, कनकस्य तु तत् कथम्? इत्याह—' विसघायणट्ठाए त्ति ' विषघातकत्वादित्यर्थ; उक्तं च—" विसघाय-रसायण-मंगल-त्थविणीय-पयाहिणावत्ते । गुरुए अ डज्झकुट्टे. अट्ठ सुवण्णे गुणा होंति ॥ १ ॥ " आहारवदिति दृष्टान्त । कनक-युवत्यादयोऽपि न ग्रन्थ, देहार्थत्वात्, आहारवदिति तात्पर्यम् । अत्राह—ननु यद्येवम्, तर्हि समुच्छिन्ना ग्रन्था-ऽग्रन्थविभागकथा, ग्रन्थत्वेन प्रसिद्धस्य कनकादेस्त्वयाऽग्रन्थत्वसाधनात्, अग्रन्थत्वेन च ममाभिमतस्य देहस्य ' ग्रन्थो देह, कषायादिहेतुत्वात्, कनकादिवत् ' इत्येव ग्रन्थत्वस्य साधनात् । तदा भवन्त एव कथयन्तु-को ग्रन्थ, कश्चाग्रन्थ इति ? । तदित्यमुपन्यस्य परस्य वचनमाशङ्क्योपसंहारपूर्वकं ग्रन्था-ऽग्रन्थविभागमुपदिदर्शयिषुराह—

तम्हा किमत्थि वत्थुं, गंथाऽगंथो व सव्वहा लोए ? ।
गंथोऽगंथो व मओ, मुच्छममुच्छाहि निच्छयओ ॥२५७३॥
वत्थाई तेण जं जं, संजममाहणमरागदोसस्स ।
तं तमपरिग्गहो च्चिय, परिग्गहो जं तदुवघाई ॥२५७४॥

तस्मात् किं नाम तद् वस्त्वस्ति लोके यदात्मस्वरूपेण सर्वथा ग्रन्थोऽग्रन्थो वा ?-नास्त्येवैतदित्यर्थः। ततश्च " मुच्छा परिग्गहो वुत्तो, इइ वुत्तं महेसिणा।" इत्यादिवचनाद् यत्र वस्तु-देहा-ऽऽहार-कनकादौ मूर्च्छा संपद्यते तद् निश्चयतः परमार्थतो ग्रन्थः। यत्र तु सा नोपजायते, तदग्रन्थ इति। एतदेव व्यक्तीकरोति-' वत्थाई-तेगंत्यादि, ' तेन तस्मात्। शेषं सुगममिति। ( विशे० ) ( वस्त्रादिग्रहणाग्रहणविषयता ' कप्प ' शब्दे तृतीयभागे २३१ पृष्ठेऽभ्युक्ता।)

" कप्पा आयपमाणा, अड्ढाइज्जा उ वित्थडा हत्था।
दो चेव सोत्तिया उण्णिआ य तइआ मुणेयव्वो ॥ १ ॥
तणगहणाऽणलसेवा-निवारणा धम्मसुक्कझाणट्ठा।
दिट्ठं कप्पग्गहणं, गिलाणमरणट्ठया चेव ॥ ॥
संपायमरयरेणु-प्पमज्जणट्ठा वयंति मुहपत्तिं।
नासं मुहं च बंधइ, तीए वसहिं पमज्जंतो ॥ ३ ॥
आयाणे निक्खेवे, ठाणे निसीयणे सुयपट्टसंकोए।
पुव्वं पमज्जणट्ठा, लिंगट्ठा चेव रयहरणं ॥ ४ ॥
वेउव्वऽवाउडे वा-इए हि खद्धे पजणणे चेव।
तेसिं अणुग्गहट्ठा, लिंगुदयट्ठा य पट्टोमओ ॥ ५ ॥ "

तत्र प्रजनने-मेहने ' वेउव्वि ' त्ति-वैक्रिये विकृते, तथा, अप्रावृत-अनावृते, वातिके चास्तूनत्वभाजने, ह्रिया-लज्जया सत्या खद्धे बृहत्प्रमाणे ' लिंगुदयट्ठ ' त्ति-स्त्रीदर्शने लिङ्गोदयरक्षणार्थं च पट्टश्चोलपट्टो मत इति। अथ पात्रस्य मात्रकस्य च संयमोपकारित्वं दर्शयन्नाह- ' ससंत ' त्यादि। संसक्तसक्तुगोरस-द्राक्षादिपानक-पानीयगतसत्त्वप्राणरक्षणार्थं पात्रमिति संबन्धः। पात्राभावे हि संसक्तगोरसादयो हस्त एवानाभोगादिकारणाद् गृहीताः क्व क्रियेरन्?, तद्गतसत्त्वानां प्राणविपत्तिरेव स्यात्, पात्रे तु सति समयोक्तविधिना ते परिस्थाप्यन्ते। तथा च सति तद्गतसत्त्वप्राणरक्षा पात्रेण सिध्यतीति। तथा पात्राभावे पाणिपुट एव गृहीतानां घृतगोरसादिरसानां परिगलने सति यत् कुन्थु-कीटकादिप्राणघातनम्, ये च भाजन-धावनादिभिः पश्चात्कर्मादयो दोषास्तेषां परिहारार्थं च पात्रमिष्यते जगद्गुरुभिः। तथा, ग्लान-बाल-दुर्बल-वृद्धाद्युपग्रहार्थं च तदिष्यते। पात्रे हि सति गृहस्थस्य पथ्यादिकं समानीय ग्लान-बालादीनामुपग्रह उपष्टम्भः क्रियते, तदभावे पुनरसौ न स्यादेवेति। अपरञ्च-पात्रे सति भक्तपानादिकं समानीयान्यस्य प्रयच्छतां साधूनां दानमयधर्मस्य साधनं-सिद्धिर्भवति, पात्राभावे चैतद् न स्यात्। तदसत्त्वे कस्यापि केनचिद् भक्तपानादिदानासंभवात्। ' समया चेव परुप्परं ' त्ति-एवं च पात्रे परिग्रहे सति लब्धिमतामलब्धिमतां च, शक्तानामशक्तानां च वास्तव्यानां प्राघूर्णकानां च सर्वेषामपि साधूनां परस्परं समता-स्वास्थ्यं तुल्यता भवति। पात्रे हि सति लब्धिमान् भक्तपानादिकं समानीयालब्धिमते ददाति। एवं शक्तोऽशक्ताय, वास्तव्यः प्राघूर्णकाय तत् प्रयच्छति। इति सर्वेषां सौस्थ्यम्, पात्राभावे तु नैतत् स्यादिति। इह च पात्रग्रहणस्य गुणकथनेन मात्रकस्यापि तत्कथनं कृतमेव द्रष्टव्यम्, प्रायः समानगुणत्वात्।

उक्तं च-

" छक्कायरक्खणट्ठा, पायग्गहणं जिणेहिं पन्नत्तं।
जे य गुणा संभोए, हवंति ते पायगहणे वि ॥ १ ॥
अतरंतबालवुड्ढा-सेहाएसा गुरू अ सहुवग्गा।
साहारणुग्गहाऽल-द्धिकारणा पायगहणं तु ॥ २ ॥
आयरिए य गिलाणे, पाहुणए दुल्लहे सहसदाणे।
संसत्तभत्तपाणे, मत्तगपरिभोगणुण्णा उ ॥ ३ ॥ " इति।

यदुक्तम् ' सुए भणियमपरिग्गहत्तं ' इति, तत्राह-

अपरिग्गहया सुत्ते, त्ति जा य मुच्छा परिग्गहोऽभिमओ।
सव्वदव्वेसु न सा, कायव्वा सुत्तसब्भाओ ॥ २५८० ॥

या च ' सव्वाओ परिग्गहाओ वेरमणं '-इत्यादिनाऽपरिग्रहता सूत्रे प्रोक्तेति त्वया गीयते; तत्रापि मूर्च्छैव परिग्रहस्तीर्थकृतामभिमतो नान्यः, सा च मूर्च्छा यथा वस्त्रे तथा सर्वेष्वपि शरीराऽऽहारादिषु द्रव्येषु न कर्तव्येति सूत्रसद्भाव-सूत्रपरमार्थः, न पुनस्त्वदभिमतः सर्वथा वस्त्रपरित्यागोऽपरिग्रहतेति सूत्राभिप्रायः। तस्मादपरिज्ञातसूत्रभावार्थो मिथ्यैव खिद्यसे त्वमिति हृदयम्। विशे०। ( तीर्थकरा वस्त्रपात्ररहिता अपि संयमविराधनादिदोषान् न प्राप्नुवन्तीति ' तित्थयर ' शब्दे चतुर्थभागे २२४७ पृष्ठे गतम्।)

जिनकल्पिकादयस्तु सदैव सचेलका इति दर्शयन्नाह-

जिणकप्पियादओ पुण, सोवहओ सव्वकालमेगंतो।
उवगरणमाणमेसिं, पुरिसाविक्खाए बहुभेयं ॥ २५८४ ॥

अयमत्राभिप्रायः-तीर्थकरदृष्टान्तावष्टम्भेन, जिनकल्पिकादिदृष्टान्तावष्टम्भेन च त्वमचेलकत्वं प्रतिपद्यसे। एतच्च सर्वं भवतो दुर्बोधविलसितमेव, यतस्तीर्थकरा अपि पूर्वोक्तन्यायेन न तावदेकान्ततोऽचेलकाः। जिनकल्पिक-स्वयंबुद्धादयः पुनः सर्वकालमेकान्तेन सोपधय एवेति। अत एव ' दुग तिग चउक्क पणगं ' इत्यादिना पूर्वमेतेषामुपकरणमानं पुरुषापेक्षया बहुभेदमुक्तम्, न पुनः सर्वथा निरुपकरणता। तदयं यस्त्वया सर्वथोपकरणत्यागः कृतः स दृष्टान्तीकृतानां तीर्थकर-जिनकल्पिकादीनामपि न दृश्यते, केवलं नूतनः कोऽपि त्वदीय एवायं मार्ग इति।

अथ प्रकारान्तरेण परमतमाशङ्क्य परिहरन्नाह-

अरहंता जमचेला, तेणाचेलत्तणं जइ मयं ते।
तो तव्वयणाउ च्चिय, निरतिसओ होहि माऽचेलो ॥ २५८५ ॥

यद् यस्मादर्हन्तोऽचेलाः-चेलरहिता नाग्न्यधारिणस्तेन तस्मात् कारणादचेलत्वं-नग्नत्वं यदि तव मतं-संमतम्, " जारिसयं गुरुलिंगं, सीसेण वि तारिसेण होयव्वं। न हि होइ बुद्धसीसो, सेयवडो नग्गखवणो वा ॥ १ ॥ " इति वचनादिति। ततस्तर्हि तद्वचनादेव-तीर्थकरोपदेशादेव निरुपमधृतिसंहननाद्यतिशयरहितोऽचेलो-नग्नो मा भूस्त्वम्। इदमुक्तं भवति-यदि तीर्थकरशिष्यत्वात् तद्वेषस्तव प्रमाणम्, तर्हि तत एव हेतोस्तदुपदेशोऽपि भवतः प्रमाणमेव। न हि गुरूपदेशमतिक्रम्य प्रवर्तमानः शिष्योऽभीष्टार्थसाधको भवति परमगुरूपदेशश्चैवं वर्तते-निरुपमधृतिसंहननाद्यतिशयरहितेनाचेलकेन नैव भवितव्यम्। तत् किं त्वमित्थं गुरूपदेशबाह्येन नाग्न्येनात्मानं विगोपयसीति।

अथ यथा गुरोरुपदेशः कर्तव्यस्तथा तद्वेष-चरिते अप्यवश्यमाचरणीये। तदयुक्तम्, तदुपदेशानुष्ठानस्यैव कार्य-

साधकत्वादिति दर्शयति—

रोगी जहोवएसं, करेइ वेज्जस्स हो अरोगो य ।
न उ वेसं चरियं वा,करेइ न य पउणइ करेंतो ॥२५८६॥
तह जिणवेज्जाएसं, कुणमाणोऽवेइ कम्मरोगाओ ।
न उ तन्नेवत्थधरो, तेमिमाएसमकरेंतो ॥ २५८७ ॥

इह यथा रोगी वैद्यस्योपदेशं करोति, तत्करणमात्रेणैव च रोगाद् विमुच्यते, न पुनरसौ तद्वेषं करोति, नापि तच्चरितमाचरति, न च तत् कुर्वाणोऽप्यसौ प्रगुणीभवति, प्रत्युत क्षपणकादौ वैद्ये नाग्न्यादिकं तद्वेषं कुर्वन्, सर्वरसांश्च स्वेच्छया तद्वद् भुञ्जानस्तच्चरितानुष्ठायी संनिपातस्यैवं म्रियते । तस्माद् वैद्योपदेशानुष्ठानमेव रोगिणो रोगापगमहेतु । प्रस्तुतयोजनामाह-'तह' त्यादि तथा तेनैव प्रकारेण जिनवैद्यस्यादेशं कुर्वाणस्तद्वेषचरिते अनाचरन्नपि कर्मरोगादपैति—वियुज्यते, न पुनस्तेषामादेशमकुर्वाणस्तन्नेपथ्य-चरिते बिभ्राणोऽपि तस्माद् वियुज्यते, केवलं तद्योग्यतारहितत्वात्तन्नेपथ्य-चरिताभ्यां प्रवर्तमान उन्मादादिभाजनमेव भवतीति ।

किञ्च—यदि तीर्थकरवेष-चरितानुष्ठानवर्ती भवान्, तर्हि किं सर्वथा तैः सह वेष-चरिताभ्यां साधर्म्यं भवतः, उत देशतः ? । यद्याद्य पक्षः, तर्हि यत् ते कुर्वन्ति, तत् सर्वमपि भवता कर्तव्यं प्राप्नोति, किं पुनस्तत् ? इत्याह—

न परोवएसवसया, न य छउमत्था परोवएसं पि ।
दिंति न य सीसवग्गं,दिक्खंति जिणा जहा सव्वे।२५८८।
तह सेसेहिं वि सव्वं, कज्जं जइ तेहिं सव्वसाहम्मं ।
एवं च कओ तित्थं,न चेदचेलो त्ति को गाहो ।२५८९।

यदि तैर्जिनैस्तीर्थकरैः सह लिङ्गचरिताभ्यां सर्वसाधर्म्यम्, तर्हि यथा ते स्वयंबुद्धत्वाद् न परोपदेशवशगा न परोपदेशेन वर्तन्ते, न च छद्मस्थावस्थायां प्रतिबोधार्थं परस्याप्युपदेशं ददति, न च शिष्यवर्गं दीक्षन्ते, तथा शेषैरपि तच्छिष्य-प्रशिष्यैः सर्वमेतत् त्वदभिप्रायेण कार्यं करणीयं प्राप्नोति । भवत्वेवं तर्हि, का दोषः ? इति चेत् इत्याह-एवं च सति कुतस्तीर्थम्, कस्यापि प्रतिबोधाभावाद् दीक्षाद्यभावाच्च ? । 'न चेदिति' अथ न तैः सह सर्वसाधर्म्यमित्युच्यते, तर्हि 'अचेलो भवाम्यहम्' इति कस्तव ग्रहः ?, अचिन्त्यत्वात् तच्चरितस्येति ।

अथ तीर्थकरैः सह सर्वसाधर्म्याभावेऽचेलताग्रहः किमिति न कर्तव्यः ? इत्याह—

जह न जिणिंदेहिँ समं, सेसाइसएहिँ सव्वसाहम्मं ।
तह लिंगेणाभिमयं, चरिएण वि किंचि साहम्मं ।२५९०।

यथा जिनेन्द्रैः सह 'निरुवमधिइसंघयणा, चउनाणाइसयसत्तसंपन्ना ।' इत्यादिना ग्रन्थेन प्रतिपादितैर्लिङ्गचरिताद्य शेषैरतिशयैः सर्वसाधर्म्यं नाभिमतं भवतः, किं तर्हि ? किञ्चित् साधर्म्यमेव, तथा तेनैव प्रकारेण लिङ्गेन चरितेन च किञ्चित् साधर्म्यमेव तैः सहाभिमतमस्माकम्, न तु सर्वसाधर्म्यम्, तच्च किञ्चित् साधर्म्यं लिङ्गतो लोचकरणमात्रेण न पुनरचेलत्वेन, चरितेण त्वेषणीयाहारपरिभोगा-ऽनियतवासादिना, न तु पाणिभोजित्वेन निरतिशयत्वेन तदयोग्यत्वादस्मदादीनाम् । तस्मात् किञ्चित् साधर्म्यस्योक्तन्यायेनान्यथापि सिद्धेः कोऽचेलताग्रहो भवतः ? इति (जिनकल्पविषय० (विशे०) 'जिणकप्प' शब्दे चतुर्थभागे १४८६ पृष्ठे उक्तः ।)

यच्चोक्तम् 'जं च जियाचेलपरिसहो मुणी' इत्यादि, तत्राह—

जइ चेलभोगमेत्ता-दजिआचेलयपरीसहो तेण ।
अजियदिगिंछाइपरी-सहो वि भत्ताइभोगाओ।।२५९४।।
एवं तुह न जियपरी-सहा जिणिंदा वि सव्वहावन्नं ।
अहवा जो भत्ताइसु,स विही चेले वि किं नेट्ठो?।।२५९५।।
जह भत्ताइविसुद्धं,राग-दोसरहिओ निसेवंतो ।
विजियदिगिंछाइपरी-सहो मुणी सपडियारो वि।२५९६।
तह चेलं परिसुद्धं, राग-द्दोसरहिओ सुयविहीए ।
होइ जियाचेलपरी-सहो मुणी सेवमाणो वि ॥२५९७॥

जिताचेलपरीषहो मुनिर्भवतीति वयमपि मन्यामहे । केवलमिदं प्रष्टव्योऽसि, किं चेलभोगमात्रेणाप्यजिताचेलपरीषहत्वं भवति येन भवता सर्वथा वस्त्रपरित्यागः क्रियते, आहोस्विदनेषणीयादिदोषदुष्टवस्त्रपरिभोगेण ? । तत्राद्यपक्षे दूषणमाह—'जइ' त्यादि, यदि चेलभोगमात्रादपि तेन साधुनाऽचेलत्वपरीषहो न जित इति त्वया प्रोच्यते, तर्हि भक्तादिपरिभोगमात्रादजितदिगिंछादिपरीषहोऽपि त्वदभिप्रायेणैव साधुः स्यात् । एतदुक्तं भवति—इह देशीवचनत्वाद् दिगिंछाशब्देन क्षुत् प्रोच्यते, आदिशब्दात्—पिपासादिपरिग्रहः । ततश्च यथैषणीयादिगुणोपेतवस्त्रपात्रपरिभोगाज्जिताचेलपरीषहो नेष्यते, तर्ह्येषणादिगुणसंपन्नभक्तपानादिपरिभोगाज्जितक्षुत्पिपासादिपरीषहोऽपि न कश्चिज्जगति स्यात् । भवत्वेवम्, न किञ्चिद् नः क्षूयत इति चेत् । अत्राह-'एवमित्यादि' एवं सति त्वदभिप्रायेण जिनेन्द्रा अपि भगवन्तो निरुपमधृतिमहननाः सर्वेकनिधयो न जितपरीषहा इति सर्वप्रकारैरपन्नम् । अथोद्गमादिदोषविप्रमुक्तं विशुद्धमेषणीयं राग-द्वेषरहितो भक्त-पानादिकं सेवमानोऽपि जितक्षुत्पिपासादिपरीषहो मुनिर्भवति, तर्हि योऽयं भक्तादिषु विधिरुच्यते स चेलेऽपि वस्त्रेऽपि भण्यमानः किं नष्टः क्वापि ?-ननु तदप्येषणीयं रागादिदोषरहितः परिभुञ्जानो जिताचेलपरीषहो मुनिः स्यादेवेति भावः । एतदेव व्यक्तीकुर्वन्नाह-'जह'इत्यादि गाथाद्वयं स्पष्टम् । नवरं 'सपडियारो वि' त्ति-विबुभुक्षा-पिपासा-शीतोष्णादीनां भक्त-पान-वस्त्रादिभिः सूत्रोक्तयतनया कृत प्रतीकार प्रतिविधानं येन स तथा । इदं च इतरेतरकर्मणिन्यायेन गाथाद्वयेऽपि सम्बध्यते । तस्मादनेषणीयादिदोषदुष्टवस्त्रपरिभोगेणैवाजिताचेलपरीषहत्वं भवति, न तु सूत्रविधिना तदुपभुञ्जन इति ।

आह-ननु यदि वस्त्रं परिभुङ्क्ते साधुः, तर्हि तस्य कथमचेलपरीषहसहिष्णुत्वम्, चेलाभाव एव तदुपपत्तेः ? । तदयुक्तम्, सति, असति च चेलेऽचेलकत्वस्यागमे लोके च रूढत्वात् । एतदेवाह-

सदसंतचेलगोऽचे-लगो य जं लोगसमयसंसिद्धो ।

त्ति ' तया गणिकया ' बब्बोरसेगधत्थ त्ति ' बब्बुमुरस्यकं यस्याः सा तथेति । "तयो ययोरेत्यादि" अत्र परमार्थ्या याऽसौ सार्थो युक्तिमत्त्वल्लक्षणः तस्माद् बोटिकसन्तानवर्तिनोऽवशेषा बोटिकाः समुत्पन्ना इति । एतासां च बोटिकव्यतिकरसंबद्धानां सर्वासामपि गाथानामर्थं सक्षिप्य ' इह या यदर्थी न स तन्निमित्तोपादान प्रत्यनाचून ', यथा घटार्थी मृत्पिण्डोपादाने प्रति , वाचिमार्थिन-अध्यनय , संशिमित्त च चीवरमिति, न चास्यासिद्धत्वम् , इत्यादिना सूत्र-वस्त्र-पात्रपरिग्रहविषय वादस्थानक वृत्तौ विरचितमस्ति, तथोत्तराध्ययनेषु द्वितीये परीषहाध्ययने आचेलक्यपरीषह वृहट्टीकाया तदर्थिनाऽन्वेषणीयम् । तथा, "इह खलु यस्य यत्रासम्भवो न तस्य तत्र कारणावैकल्यम् , यथा शुद्धशिलाया शाल्यङ्कुरस्य, अस्ति च तथाविधस्त्रीषु मुक्त कारणावैकल्यम् , न चायमसिद्धो हेतु , इत्यादिना विरचित स्त्रीनिर्वाणविषयमपि वादस्थानक तत्रैव षट्त्रिंशत्तमाध्ययने द्रष्टव्यम् ॥ इति षड्गाथार्थ । विशे० । आ० क० । आचार्यदिगम्बर, ध० र० । आ० चू० । आपदीनवरीयास्तव्यश्रीभद्रात्मजे, आ० चू० १ अ० । स्था० ।

सिवमग्ग–शिवमार्ग–पुं० । दर्शनज्ञानचारित्रलक्षणे मोक्षमार्गे, विशे० ।

सिवय–शिवक–पुं० । उदकावभासननामकस्य वेलन्धरनागराजस्य आवासपर्वते, स्था० ४ ठा० २ उ० । ( 'लवणसमुद्द ' शब्दे वक्तव्यता । )

सिवद–पुं० । शिवं ददातीति शिवद । मोक्षप्रदे, पो० ८७ विव० ।

सिवलिया–शिवलिका–स्त्री० । कलायाभिधानधान्यफलिकायाम् , भ० ७ श० १ उ० ।

सिववत्त–शिववर्त्मन्–न० । शैवानां परिभाषया मोक्षे , द्वा० ३४ द्वा० ।

सिवसम्मसूरि–शिवशर्मसूरि–पुं० । शतकाख्यकर्मग्रन्थकर्त्तर्याचार्ये, कर्म० ५ कर्म० । द्वा० ।

सिवसोक्खद–शिवसौख्यद–पुं० । शिवं—मोक्षस्तस्य सौख्यं निराबाधलक्षण ददातीति शिवसौख्यद । मोक्षफलके, ध० ३ अधि० ।

सिवहत्थ–शिवहस्त–पुं० । आरोग्यकरहस्ते, विपा० १ श्रु० ७ अ० ।

सिवा–शिवा–स्त्री० । सौर्यपुरे नगरे दशदशाराणा मध्ये ज्येष्ठसमुद्रविजयस्य राज्ञो भार्यायाम् , स्था० ८ ठा० ३ उ० । उत्त० । कल्प० । अन्त० । आ० म० । स० । उज्जयिनीराजस्य प्रद्योतस्य भार्यायाम्, चेटकराजदुहितरि, आ० चू० ४ अ० । "लोहजघो लोहहारी अग्गिभीरुस्तथा रथ । स्त्रीरत्न च शिवा देवी गजोऽनलगिरि पुन ॥१॥" आ० क० ४ अ० । नि० । आव० । पञ्चदशतीर्थकरस्य प्रथमप्रवर्तिन्याम् , स० । प्रव० । शक्रस्य देवेन्द्रस्याग्रमहिष्याम् , भ० १० श० ५ उ० । स्था० । ( अस्या ' अग्गमहिसी ' शब्द प्रथमभागे १७३ पृष्ठ पूर्वोत्तरजन्मकथा । ) शृगाल्याम् , शृगाली अशिवाऽन्यमाङ्गलिकशब्दपरिहारार्थं शिवा भण्यते । अनु० ।

सिवाणंदा–शिवानन्दा–स्त्री० । आनन्दस्य श्रमणोपासकस्य भार्यायाम् , उपा० १ अ० । आ० चू० ।

सिविण–स्वप्न–पुं० । ' इ स्वप्नादौ ' ॥ ८ । १ । ४६ ॥ इत्यादेरस्य इत्वम् । प्रा० । "स्वप्ने नात्" ॥ ८ । २ । १०८ ॥ स्वप्नशब्दे नात् पूर्व इद् भवति । प्रा० । स्वापावस्थायां गजादिदर्शने, आ० क० १ अ० ।

सिविया–शिबिका–स्त्री० । उपरिच्छादिते कोष्ठाकारे जम्पानविशेषे जी० ३ प्रति० ४ अधि० । ज्ञा० । सूत्र० । अनु० । ओ० । आ० म० । ज्ञा० । दशा० । भ० । रा० । आचा० । अन्त० ।

सिवोवएस–शिवोपदेश–पुं० । मोक्षसाधनप्ररूपणे, पञ्चा० १२ विव० ।

सिव्वण–सीवन–न० । परिकर्मणि, नि० चू० १६ उ० ।

सिव्विणी–देशी–सूच्याम् , दे० ना० ८ वर्ग ३६ गाथा ।

सिव्वी–देशी–सूच्याम् , दे० ना० ८ वर्ग २९ गाथा ।

सिसिर–शिशिर–पुं० । लोकोत्तरलक्षणया माघे मासे, ज्यो० ४ पाहु० । चं० प्र० । ज० । सू० प्र० । शीतकाल, नि० चू० १ उ० । हिमे, दे० ना० ८ वर्ग ३१ गाथा ।

सिसिरकाल–शिशिरकाल–पुं० । शीतकाले, प्रश्न० ५ संव० द्वार ।

सिसिररत्त–शिशिररात्र–पुं० । पौषमाघमासद्वयात्मके ऋतुभेदे, स्था० ६ ठा० ३ उ० ।

सिसिरली–शिशिरली–स्त्री० । अनन्तकायकन्दभेदे, भ० ७ श० ८ उ० । साधारणवनस्पतिकायविशेषे, जी० १ प्रति० ।

सिसु–शिशु–पुं० । बालके, विशे० । नि० चू० ।

सिसुनाग–शिशुनाग–पुं० । अलसे, सर्पाकृतौ, मुद्गलके सर्पजन्तौ, शिशुनागो गण्डूपद । उत्त० ५ अ० । ' समाहि ' शब्दे उदाहृते सुदर्शनपुरवास्तव्ये स्वनामख्याते गृहपतौ, आ० क० ४ अ० । आव० ।

सिसुपाल–शिशुपाल–पुं० । वसुदेवसुतायां माद्र्या दमघोषेण जाते पुत्र, सूत्र० ।

तद्येदम्—

"वसुदेवसुसाए सुओ, दमघोसणराहिवेण महीए ।
जाओ चतुभुजो भुज—बलकलिओ कलहपत्तट्ठो ॥१॥
दट्ठूण तओ जणणी, चतुब्भुयं पुत्तमब्भुयमणग्घं ।
भयहरिसविम्हयमुही, पुच्छइ णेमित्तियं सहसा ॥२॥
णेमित्तिएण भणिअ—ण साहियेतीइ हट्ठहियया ।
जह एस तुज्झ पुत्तो, महाबलो दुज्जओ समरे ॥३॥
एयस्स य जं दट्ठु—ण होइ साभाविय भुआजुअलं ।
होहि नतो चिय भयं सुतस्स ते णत्थि संदेहो ॥४॥
सा वि भयवेवियंगी, पुत्त दमेइ जाव कण्हस्स ।
तावाइय तस्स ठियं, पयइत्थं वरभुयाजुगलं ॥ ५ ॥
तो कण्हस्स पिउच्छा, पुत्त पाडइ पायपीढम्मि ।
अवराहसामणत्थं, सो वि सयं से खमिस्सामि ॥६॥
सिसुपालो वि हु जुव्वण—मयणा नारायणं अणेगेहिं ।
घयणेहि भणइ सो वि हु समइ समए समत्था वि ॥७॥
अवराहसए पुण्णे, वारिज्जतो ण चिट्ठइ जाहे ।
तो तेण तओ छिण्ण, चक्केण उत्तमंग से ॥ ८ ॥" सू० १ श्रु० ३ अ० १ उ० ।

सिसुमारिया-शिशुमारिका-स्त्री० वाद्यविशेषे, रा०।

सिस्स-शिष्य-पुं०। प्रव्रज्यां शिक्षां च ग्राहिते, सूत्र० २ श्रु० ७ अ०। आचा०। जं०। आव०। आ० चू०। शिक्षणीयोपाध्यायस्योपासके, जं० २ वक्ष०।

गंथो पुव्वुद्दिट्ठो, दुविहो सिस्सो य होति णायव्वो।
पव्वावण सिक्खावण,पगयं सिक्खावणाए उ ॥ १२७॥
सो सिक्खगो य दुविहो,गहणे आसेवणाएँ णायव्वो।
गहणम्मि होति तिविहो, सुत्ते अत्थे तदुभए य॥१२८॥
आसेवणाएँ दुविहो, मूलगुणे चेव उत्तरगुणे य।
मूलगुणे पंचविहो, उत्तरगुणे बारसविहो उ॥१२९॥
आयरिओऽवि य दुविहो, पव्वावंतो य सिक्खवंतो य।
सिक्खावंतो दुविहो, गहणे आसेवणे चेव ॥१३०॥
गाहावेंतो तिविहो, सुत्ते अत्थे य तदुभए चेव।
मूलगुण उत्तरगुणे, दुविहो आसेवणाए उ ॥ १३१ ॥

( गंथो० इत्येतद् १२७ गाथाव्याख्या 'सिक्ख' शब्देऽस्मिन्नेव भागे गता।)

अहर्निशमनुतिष्ठति स एवंविधो ग्रहणासेवनाभेदभिन्नः शिष्यो ज्ञातव्यो भवति, तत्रापि ग्रहणपूर्वकमासेवनमिति कृत्वाऽऽदावेव ग्रहणशिक्षामाह-शिक्षाया ग्रहणे-उपादानेऽधिकृते त्रिविधो भवति शैक्षक, तद्यथा-सूत्रे, अर्थे, तदुभये च। सूत्रादीन्यादावेव गृह्णन् सूत्रादिशिक्षको भवतीति भावः। साम्प्रतं ग्रहणोत्तरकालभाविनीमासेवनामधिकृत्याह-यथावस्थितसूत्रानुष्ठानमासेवना तया करणभूतया द्विविधो भवति शिक्षकः, तद्यथा-मूलगुणे-मूलगुणविषये आसेवमानः-सम्यग्मूलगुणानामनुष्ठानं कुर्वन् तथा उत्तरगुणे च-उत्तरगुणविषयं सम्यगनुष्ठानं कुर्वाणो द्विरूपोऽप्यासेवनाशिक्षको भवति, तत्रापि मूलगुणे पञ्चप्रकारः-प्राणातिपातादिविरतिमासेवमानः पञ्चमहाव्रतधारणात्पञ्चविधो भवति मूलगुणेष्वासेवनाशिक्षक, तथोत्तरगुणविषये सम्यक्पिण्डविशुद्ध्यादिकान् गुणानासेवमान उत्तरगुणासेवनाशिक्षको भवति, ते चामी उत्तरगुणाः—'पिंडस्स जा विसोही, समिईओ भावणा तवो दुविहो। पडिमा अभिग्गहावि य, उत्तरगुणमो वियाणाहि॥१॥' यद्वा-सत्स्वप्यन्येषूत्तरगुणेषु प्रधाननिर्जराहेतुतया तप एव द्वादशविधमुत्तरगुणत्वेनाधिकृत्याह-उत्तरगुणे-उत्तरगुणविषये तपो द्वादशभेदभिन्नं य सम्यग् विधत्ते स आसेवनाशिक्षको भवतीति। शिष्यो ह्याचार्यमन्तरेण न भवत्यत आचार्यनिरूपणमाह (गाथा) ह-शिष्यापेक्षया हि आचार्यो द्विविधो-द्विभेदः, एको य प्रव्रज्यां ग्राहयत्यपरस्तु य शिक्षामिति, शिक्षयन्नपि द्विविधः-एको य शिक्षाशास्त्रं ग्राहयति-पाठयत्यपरस्तु तदर्थं दशविधचक्रवालसमाचार्यनुष्ठानतः सेवयति-सम्यगनुष्ठानं कारयति। तत्र सूत्रार्थतदुभयभेदाद् ग्राहयन्नप्याचार्यस्त्रिधा भवति। आसेवनाचार्योऽपि मूलोत्तरगुणभेदाद् द्विविधो भवति। गतो नामनिष्पन्नो निक्षेप, तदनन्तरं किं तत् सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारयितव्यम्।

तच्चेदम्—

गंथं विहाय इह सिक्खमाणो,
उट्ठाय सुबंभचेरं वसेज्जा।
ओवायकारी विणयं ससिक्खे,
जे छेय विप्पमायं न कुज्जा ॥ १ ॥

'इह' प्रवचने ज्ञानसंसारस्वभावः सन् सम्यगुत्थानेनोत्थितो ग्रथ्यते आत्मा येन स ग्रन्थो-धनधान्यहिरण्यद्विपदचतुष्पदादि-विहाय-त्यक्त्वा प्रव्रजितः सन् सदुत्थानेनोत्थाय च ग्रहणरूपामासेवनारूपां च शिक्षां [च] कुर्वाणः-सम्यगासेवमानः सुष्ठु शोभनं नवभिर्ब्रह्मचर्यगुप्तिभिर्गुप्तमाश्रित्य ब्रह्मचर्यं वसेत्-तिष्ठेत्, यदिवा-सुब्रह्मचर्यमिति-संयमस्तद् आवसेत्-तं सम्यक् कुर्यात् आचार्यान्तिके यावज्जीवं वर्त्तमानो यावदभ्युद्यतविहारं न प्रतिपद्यते तावदाचार्यवचनस्यावपातो—निर्देशस्तत्कार्यसंपादनकारी वचननिर्देशकारी सदाऽऽज्ञाविधायी, विनीयतेऽपनीयते कर्म येन स विनयस्तं सुष्ठु शिक्षेद्—विदध्यात् ग्रहणासेवनाभ्यां विनयं सम्यक् परिपालयेदिति। तथा यः छेको-निपुणः स संयमानुष्ठाने सदाचार्योपदेशे वा विविधं प्रमादं न कुर्यात्, यथा ह्यातुरः सम्यग्वैद्योपदेशं कुर्वन् श्लाघां लभते रोगोपशमं च एवं साधुरपि सावद्यग्रन्थपरिहारी पापकर्मभयजस्थानभूतान्याचार्यवचनानि विदधदपरसाधुभ्यः साधुकारमशेषकर्मक्षयं चावाप्नोतीति॥१॥ सूत्र० १४ अ०।

शीर्षन्-न०। उत्तमाङ्गे, नं०।

सिस्सिणी-शिष्या-स्त्री०। स्वहस्तदीक्षितायाम्, व्य० २ उ०। आव०।

सिह-काङ्क्ष-धा०। काङ्क्षायाम् "काङ्क्षेराहाहिलङ्घाहिलङ्घवच्चवम्फमहसिहविलुम्पाः" ॥८।४।१९२॥ इति काङ्क्षतेः सिह इत्यादेशः। सिहइ। काङ्क्षते। प्रा० ४ पाद।

स्पृहि-धा०। स्पृह णिच्। इच्छायाम्, "स्पृहेः सिहः" ॥८।४।३४॥ इति ण्यन्तस्य स्पृहेः सिह इत्यादेशः। सिहइ। स्पृहयति। इच्छति। प्रा० ४ पाद।

सिहंडइल्लो-देशी-बालदधिसरमयूरेषु,दे०ना०८ वर्ग ५४गाथा।

सिहंडि-शिखण्डिन्-त्रि०। शिखाधारिणि,भ० ९ श० ३३ उ०। दशा०।

सिहर-शिखर-न०। पर्वतोपरिवर्त्तिकूटेषु,आ० १ श्रु० १ अ०। स्था०। नि०चू०। "चूलं ति वा विभूसणं ति वा सिहरं ति वा एते एगट्ठा" नि०चू० १ उ०। जी०। सू० प्र०। उपरितने भागे, आ०म०१ अ०। शिखराणि अंतुपक्षे वृत्तसम्बन्धीनि पर्वतपक्षे कूटानि। ज्ञा० १ श्रु० ६ अ०। प्रश्न०।

सिहरभूअ-शिखरभूत-त्रि०। शिखरकल्पे,प्रश्न०५संव०द्वार।

सिहरि-शिखरिन्-पुं०। जम्बूद्वीपस्य षष्ठवर्षधरपर्वते, जं०

दो सिहरिकूडा। स्था० २ ठा० ३ उ०।

अथ षष्ठवर्षधरावसरः—

कहि णं भन्ते! जम्बुद्दीवे दीवे सिहरी णामं वासहरपव्वए पण्णत्ते?, गोयमा! हेरण्णवयस्स उत्तरेणं एरावयस्स

दाहिणेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पच्च-त्थिमलवणसमुद्दस्स पुरत्थिमेणं, एवं जह चेव चुल्लहिमवन्तो तह चेव सिहरी वि णवरं जीवा दाहिणेणं धणुं उत्तरेणं अवसिट्ठं तं चेव पुण्डरीए दहे सुवण्णकूला महाणई दाहिणेणं णेअव्वा जहा रोहिअंसा पुरत्थिमेणं गच्छइ ।

'कहि णं' मित्यादि क भदन्त ! जम्बूद्वीपे द्वीपे शिखरी नाम वर्षधरपर्वतः प्रज्ञप्तः ?, गौतम ! हैरण्यवतस्योत्तरस्याम् ऐरावतस्य-वक्ष्यमाणसप्तमक्षेत्रस्य दक्षिणस्यां 'पुरत्थिमे' त्यादि प्राग्वत्, एवमुक्ताभिलापेन यथा क्षुद्रहिमवान् तथैव शिखर्यपि, नवरं जीवा दक्षिणेन धनुरुत्तरेण अवशिष्टं तदेवेति क्षुद्रहिमवत्प्रकरणोक्तमेव, तत्र पुण्डरीको ह्रदः । जं० ४ वक्ष० । स्था० । स० । शिखरेण समन्विते पर्वतमात्रे च । नं० ।

सिहरिकूड–शिखरिकूट–न० । जम्बूमन्दरस्योत्तरे स्वनामख्याते कूटे, स्था० ६ ठा० ३ उ० । जं० ।

सिहरिणी–शिखरिणी–स्त्री० । करमथितखण्डयुक्तदधिनिष्पन्ने भक्ष्योपस्करे, ध० २ अधि० ।

जा दहिसरम्मि गालिय-गुलेण-चउजायसुगयसंभारा ।
कूरम्मि खुप्पमाणे, बंधति सिहरं सिहरिणी उ ॥१८५॥

दध्ना शरे गालितेन गुडेन या निष्पन्ना अपरं च चतुर्जातकसुकृतसंभारा एलात्वक्तमालपत्रनागकेशराख्यैश्चतुर्भिर्गन्धद्रव्यैराधिक्येनोपजनितवासा कूरमध्ये प्रक्षिप्यमाणे शिखरं बध्नाति सा शिखरिणीत्युच्यते । वृ० २ उ० । नि० चू० । आचा० । प्रश्न० । मार्जितायाम्, दे० ना० ८ वर्ग ३३ गाथा ।

सिहरिल्ला–देशी–मार्जितायाम्, दे० ना० ८ वर्ग ३३ गाथा ।

सिहलि–शिखा–स्त्री० । चूडायाम्, आव० ४ अ० । सिहलि वा धारन्ती करइ 'सिहलि' त्ति शिखा । पञ्चा० १० विव० ।

सिहा–शिखा–स्त्री० । शिरसि, व्य० २ उ० । शिरसि सर्वथा जाना केशाना समूहे, व्य० ३ उ० । अनु० । स्था० । सूत्र० ।

सिहाचारण–शिखाचारण–पुं० । अग्निशिखामुपादाय तेजःकायिकानविराधयति स्वयमदह्यमाने पादविहारनिपुणे चारणभेदे, ग० ३ अधि० ।

सिहि–शिखिन्–पुं० । शिखाऽस्यास्तीति शिखी । अनु० । मयूरे, भ० ७ श० ६ उ० । कल्प० । सथा० । को० । जं० । वि-शे० । निर्धूमेऽग्नौ, कल्प० १ अधि० १ क्षण । व्य० । अग्निमात्र, आव० ४ अ० ।

सिहंडिणी–शिखण्डिनी–स्त्री० । शिखाधारिण्याम्, औ० ।

सिहिणा–देशी–स्तनयोः, दे० ना० ८ वर्ग ३० गाथा ।

सिही–देशी–कुक्कुटे, दे० ना० ८ वर्ग २८ गाथा ।

सीअ–देशी–सिक्थे, दे० ना० ८ वर्ग ३३ गाथा । स्था० ।

सीअणयं–देशी–दुग्धपारि-श्मशानयो, दे० ना० ८ वर्ग ५५ गाथा ।

सीअप्पवायदह–शीताप्रपातह्रद–पुं० । ह्रदविशेषे, स्था० । यत्र नीलवत शीता निपतति यश्च चत्वार्यशीत्यधिकानि योजनशतानि आयामविष्कम्भाभ्यां पञ्चदशाष्टचत्वारिंशानि विशेषन्यूनानि परिक्षेपतो यस्य च मध्ये शीताद्वीपं चतुःषष्टियोजनायामविष्कम्भो द्व्युत्तरयोजनशतद्वयपरिक्षेपः जलान्ताद् द्विक्रोशोच्छ्रितः शीतादेवीभवनेन विभूषितोपरितनभागः स शीताप्रपातह्रदः । स्था० २ ठा० ३ उ० ।

सीअल्ली–देशी–हिमकालदुर्दिने, झञ्झावाते च । दे० ना० ८ वर्ग ५५ गाथा ।

सीअवेगमहण–शीतवेगमथन–न० । आतपेन शीतवेगनिवारणात्; सूर्ये, कल्प० १ अधि० ३ क्षण ।

सीइआ–देशी–अविच्छिन्नवृष्टौ, दे० ना० ८ वर्ग २४ गाथा ।

सीईभूय–शीतीभूत–त्रि० । सुखे, आचा० १ श्रु० ३ अ० १ उ० ।

सीउग्गयं–देशी–सुजाते, दे० ना० ८ वर्ग ३४ गाथा ।

सीउण्ह–शीतोष्ण–न० । शीतं च उष्णं च शीतोष्णम् । अनुकूलप्रतिकूलपरीषहे, सूत्र० १ श्रु० २ अ० २ उ० ।

सीओअगकूड–शीतोदककूट–पुं० न० । विद्युत्प्रभवक्षस्कारपर्वते स्वनामख्याते कूटे, जं० ४ वक्ष० ।

सीओअप्पवाय–शीतोदाप्रपात–पुं० । शीतोदामहानदीप्रपातह्रदनिर्गमे, यत्र निषधात् शीतोदा निपतति स शीतोदानिपातः । स्था० २ ठा० ३ उ० ।

सीओदग–शीतोदक–न० । शीतं शीतलं स्वरूपस्थ-तोयोपलक्षणमेतत् । स्वकीयादिशस्त्रानुपहतमप्राशुकमित्यर्थः; तच्च तदुदकं शीतोदकम् । उत्त० २ अ० । अप्रासुकजले, उत्त० २ अ० । सूत्र० । "नदीतडागावटवापीपुष्करिण्यादिषु शीतपरिणामे, जी० १ प्रति० । नि० चू० । सचित्तपानीये, दश० १० अ० । नि० चू० । प्रश्न० ।

सीओदगदुगंछि–शीतोदकजुगुप्सिन्–पुं० । अप्राशुकोदकपरिहारिणि, जं० २ वक्ष० ।

सीओदगवियड–शीतोदकविकृत–न० । शीतोदकं च तद्विकृतं च शीतोदकाद्विकृतं तदेव विकटं-विगतजीवम् । शीतोष्णादिशस्त्रेण विकारं मापिते प्राशुकीकृते, वृ० २ उ० । नि० चू० । आचा० । दशा० । (यत्रोपाश्रयस्यान्तर्वगडायां शीतोदकविकृतं स्यात्तत्र न वासः कर्त्तव्य इति 'वसहि' शब्दे षष्ठ भागे उक्तम् । )

सीओदा–शीतोदा–स्त्री० । जम्बूद्वीपे पूर्वापरेण लवणसमुद्रं समुत्सर्पन्त्या महानद्याम्, स० १४ सम० ।

सीतोयामहानदीओ चोवत्तरिं जोयणसयाइं साहियाइं उत्तराहिमुही पवहित्ता वइरामयाए जिब्भियाए चउजोयणायामाए पन्नासजोयणविक्खंभाए वइरतले कुंडे महया घडमुहपवत्तिएणं मुत्तावलिहारसंठाणसंठिएणं पवाएणं महया सद्देणं पवडइ, एवं सीता वि दक्खिणाहिमुही भाणियव्वा । ( स० ७४+ )

सीतोदाया महानद्याः पर्वतस्योपरि चतुःसप्ततिर्योजनशतान्येकविंशत्यधिकानि कला चैकेत्येवं प्रवाहो भवति, 'वइरामयाए जिब्भियाए' त्ति–वज्रमय्या जिह्विकया प्रणालमुखमकरमुखाजिह्विकया 'चउजोयणायामाए पन्नासजोयणविक्खं-

मया 'वइरतले कुण्डे' त्ति-निषधपर्वतस्याधोवर्त्तिनि वज्रभूमिके अशीत्यधिकचतुर्योजनशतायामविष्कम्भे दशयोजनावगाहे शीतोदादेवीभवनाध्यासितमस्तकेन तदुद्वीपनानेकक्नमध्यभागे शीतोदाप्रपातह्रदे ' महया ' त्ति महाप्रमाणेन यत्पुन 'दुहओ' त्ति-क्वचित् दृश्यते तदपपाठ इति मन्यते 'घडमुहपवत्तिएणं' ति—घटमुखेनेव-कलशवदनेनेव प्रवर्त्तित-प्रेरितो घटमुखप्रवर्त्तितस्तेन मुक्तावलीनां-मुक्ताफलश्रेणीनां सम्बन्धी हारस्तस्य यत्संस्थानं तेन संस्थितो यस्तेन प्रपातं -पर्वतात्पतज्जलसमूहस्तेन महाशब्देन-महाध्वनिना प्रपतति, एवं सीताऽपि । सू० ७४ सम० ।

अथास्याया उत्तरेण नदी प्रवहति तामाह—

**तस्स णं तिगिंछिद्दहस्स उत्तरिल्लेणं तोरणेणं सीओआ महाणई पव्वूढा समाणी सत्त जोअणसहस्साइं चत्तारि अ एगवीसे जोअणसए एगं च एगूणवीसइभागं जोअणस्स उत्तराभिमुही पव्वएणं गंता महया घडमुहपवित्तिएणं ०जाव साइरेगचउजोअणसइएणं पवाएणं पवडइ । सीओआ णं महाणई जओ पवडइ एत्थ णं महं एगा जिब्भिआ पण्णत्ता चत्तारि जोअणाइं आयामेणं पण्णासं जोअणाइं विक्खम्भेणं जोअणं बाहल्लेणं मगरमुहविउट्टसंठाणसंठिआ सव्ववइरामई अच्छा । ( सू० ८४ )**

'तस्स णं तिगिंछिद्दह' इत्यादि, व्यक्तं, गिरिगन्तव्यं तु हरिन्नद्या ईवावसेयम् , अथास्या जिह्विकास्वरूपमाह—' सीओआ ' इत्यादि, उक्तार्थं, नवरमायामेन चत्वारि योजनानि, हरिकान्ताजिह्विकाद्विगुणत्वात् , पञ्चाशद् योजनानि विष्कम्भेन-हरिन्नदीप्रवहतो द्विगुणस्य सीतोदाप्रवहस्य मातव्यत्वात् , एवं बाहल्यमपि पूर्वजिह्विकातो द्विगुणमवसेयम् । जं० ४ वक्ष० ।

सीओभास-शीतावभास-त्रि० । ईषच्छीतलाभे, रा० । " सए सीओभास " त्ति-शीतस्पर्शापेक्षया कुल्याद्याक्रान्तत्वादिति वृद्धा । आ० १ श्रु० १ अ० ।

सीओयप्पवायदह-शीतोदाप्रपातह्रद-पुं० । शीतोदानद्या प्रपातस्थाने, यत्र निषधाच्छीतोदा निपतति स शीतोदाप्रपातह्रदः । शीतोदाप्रपातह्रदसमानः शीतोदाद्वीपभवनसमानः शीतोदादेवीद्वीपभवनश्चेति । स्था० १ ठा० ।

सीओयाकूड-शीतोदाकूट-न० । शीतोदानदीदेवनिवासभूते निषधवर्षधरपर्वतस्य कूटे, स्था० ९ ठा० ३ उ० ।

सीओसणिज्ज-शीतोष्णीय-न० । शीतं चोष्णं च शीतोष्णे ते अधिकृत्य कृतमध्ययनं शीतोष्णीयम् । शीतोष्णस्पर्शजनितवेदनाप्रतिपादके आचाराङ्गप्रथमश्रुतस्कन्धस्य तृतीये अध्ययने, स० । स्था० । आचा० ।

शीतोष्णयोरनुकूलप्रतिकूलपरिषहयोरतिमहन्नं कर्त्तव्यं , तदधुना प्रतिपाद्यते अध्ययनसम्बन्धस्तु शस्त्रपरिज्ञाध्ययनसमधिगतस्य लोकविजयाध्ययनप्रसिद्धस्य—संयमव्यवस्थितस्य विजितकषायादिलोकस्य मुमुक्षोः कदाचिदनुलोमप्रतिलोमाः परीषहाः प्रादुष्यन्ति , तेऽधिक्रान्तःकरणेन सम्यक् सोढव्या इत्यनेन सम्बन्धेनायातमिदमध्ययनम् , अस्य चोपक्रमादीनि चत्वार्यनुयोगद्वाराणि भवन्ति । तत्रोपक्रमेऽर्थाधिकारो द्वेधा, तत्राध्ययनार्थाधिकारोऽभिहितः । उद्देशार्थाधिकारप्रतिपादनार्थं तु निर्युक्तिकार आह—

**पढमे सुत्ता अस्संजयत्ति १ बिइए दुहं अणुहवंति २ ।**
**तइए न हु दुक्खेणं, अकरणयाए व समणुत्ति ३॥१९८॥**
**उद्देसम्मि चउत्थे, अहिगारो उ वमणं कसायाणं ।**
**पावविरओ विउणो, उ संजमो इत्थ मुक्खु त्ति ४॥१९९॥**

प्रथमोद्देशकेऽयमर्थाधिकारो, यथा--भावनिद्रया सुप्ताः—सम्यग्विवेकरहिताः , के ?-असंयताः-गृहस्थास्तेषां च भावसुप्तानां दोषा अभिधीयन्ते, जाग्रतां च गुणाः, तद्यथा—'जरामच्चुवसोवणीए नरे' इत्यादि १, द्वितीये तु न एवासंयता यथा भावनिद्रापन्ना दुःखमनुभवन्ति तथोच्यते । "तद्यथा—'कामेसु गिद्धा निचयं करंति' २, तृतीये तु 'न हु' नैव दुःखसहनादेव केवलाच्छ्रमणः अकरणतयैव-अक्रिययैव संयमानुष्ठानमन्तरेणेत्यर्थः वक्ष्यति च—'सहिए दुक्खमायाए य तेणय य पुट्ठो नो झंझाए' ३, चतुर्थोद्देशके त्वयमधिकारो, यथा-कषायाणां वमनं कार्यं पापस्य च कर्मणो विरतिः , विदुषो-विदितवेद्यस्य संयमोऽत्रैव प्रतिपाद्यते क्षपकश्रेणिप्रक्रमात् केवलं भवोपग्राहिक्षयान्मोक्षश्चेति गाथाद्वयार्थः । नामनिष्पन्ने तु निक्षेपे शीतोष्णीयमध्ययनमतः शीतोष्णयोर्निक्षेपं निर्दिदिक्षुराह—

**नामं ठवणा सीयं, दव्वे भावे य होइ नायव्वं ।**
**एमेव य उण्हस्स वि, चउव्विहो होइ निक्खेवो॥२००॥**

सुगमा ।

तत्र नामस्थापने अनादृत्य द्रव्यशीतोष्णे दर्शयितुमाह—

**दव्वे सीयलदव्वं, दव्वुण्हं चेव उण्हदव्वं तु ।**
**भावे उ पुग्गलगुणो, जीवस्स गुणो अणेगविहो ॥२०१॥**

ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यशीतं शीतगुणोपेतं गुणगुणिनोरभेदात् शीतकारणं वा यद्द्रव्यं द्रव्यप्राधान्याच्छीतलद्रव्यमेव द्रव्यशीतं--हिमतुषारकरकादि , एवं द्रव्योष्णमपीति । भावतस्तु द्वेधा--पुद्गलाश्रितं, जीवाश्रितं च , गाथाशकलेनाचष्टे--तत्र पुद्गलाश्रितं भावशीतं पुद्गलस्य शीतो गुणो गुणस्य प्राधान्यविवक्षयेति, एवं भावोष्णमपि । जीवस्य तु शीतोष्णरूपोऽनेकविधो गुणः , तद्यथा—औदयिकादयः षड् भावाः , तत्रौदयिकः कर्मोदयाविर्भूतनारकादिभवकषायोत्पत्तिलक्षण उष्णः , औपशमिकः कर्म्मोपशमावाप्तसम्यक्त्वविरतिरूपः शीतः, क्षायिकोऽपि शीत एव क्षायिकसम्यक्त्वचारित्रादिरूपत्वात् , अथवाऽशेषकर्मदाहान्यथानुपपत्तेरुष्णः,शेषा अपि विवक्षातो द्विरूपा इतीति । अस्य च जीवभावगुणस्य शीतोष्णविवेकं स्वत एव निर्युक्तिकारः प्रचिकटयिषुराह-

**सीयं परीसहपमा-यवसमविरई सुहं च उण्हं तु ।**

परीसहतवुज्जमकसा–य सोगाहिवेयाररई दुक्खं ॥२०२॥

'शीत' मिति भावशीतम्, तच्चेह जीवपरिणामस्वरूपं गृह्यते, स चाय परिणामो–मार्गाच्यवनलनिर्जरार्थं परिषोढव्या परीषहा', प्रमाद —कार्यशैथिल्य शीतलविहारता, उपशमो मोहनीयोपशम', स च सम्यक्त्वदेशविरतिसर्वविरतिलक्षण, उपशमश्रेण्याश्रितो वा; तत्त्वयो घर्ति, 'विरति' रिति प्राणातिपातादिविरत्युपलक्षित सप्तदशविध. संयम, सुखं च–सातावेदनीयविपाकाविर्भूतमिति । एतत् सर्वं परीषहादि शीतमुष्ण च · गाथाशकलेनाह—परीषहा —पूर्वव्यावर्णितस्वरूपा. तपस्युद्यमो —यथाशक्ति द्वादशप्रकारतपोऽनुष्ठान कषाया –क्रोधादय.—शोक –इष्टप्रासिविनाशोद्भव. आधि वेद —स्त्रीपुंनपुंसकवेदोदय. अरति.—मोहनीयविपाकाविर्भूतौ दु स च–असातावेदनीयोदयादीनि, एतानि परीषहादीनि पीडाकारित्वादुष्णमिति गाथासमासार्थ. ।

व्यासार्थं तु निर्युक्तिकार. स्वत एवाचष्ट–तत्र परीषहा. शीतोष्णयोर्द्वयोरप्यभिहिता, ततो मन्दबुद्धेरनध्यवसाय. संशयो विपर्ययो वा स्याद् अतस्तदपनोदार्थमाह—

इत्थी सक्कारपरी–सहो य दो भावसीयला एए ।
सेसा वीसं उण्हा, परीसहा हुंति नायव्वा ॥ २०३ ॥

स्त्रीपरीषह सत्कारपरीषहश्च द्वावप्येतौ शीतौ, भावमनोऽनुकूलत्वात्, शेषास्तु पुनर्विंशतिरुष्णा ज्ञातव्या भवन्ति, मनस प्रतिकूलत्वादिति गाथार्थ. ।

यदिवा परीषहाणां शीतोष्णत्वमन्यथा आचष्टे—

जे तिव्वप्परिणामा, परीसहा ते भवंति उण्हा उ ।
जे मंदप्परिणामा, परीसहा ते भवे सीया ॥२०४॥

तीव्रो—दु सह. परिणाम.—परिणतिर्येषां ते तथा, य एवम्भूता परीषहास्ते उष्णाः, ये तु मन्दपरिणामास्ते शीता इति । इदमुक्तं भवति—ये शरीरदु खोत्पादकत्वेनोदीर्णा सम्यक्सहनाभावाच्चाधिविधायिनस्ते तीव्रपरिणामत्वादुष्णा, ये पुनरुदीर्णा. शरीरमेव केवलं दु खमुत्पादयन्ति महासत्त्वस्य न मानसं ते भावतो मन्दपरिणामा., यदिवा–ये तीव्रपरिणामा.—प्रबलाविर्भूतस्वरूपास्ते उष्णा, ये तु मन्दपरिणामा —ईषल्लक्ष्यमाणस्वरूपास्ते शीता इति ।

यत्परीषहानन्तरं प्रमादपदमुपन्यस्तं शीतत्वेन यच्च तपस्युद्यम इत्युष्णत्वेन तदुभय गाथयाऽऽचष्टे—

धम्ममि जो पमायइ, अत्थे वा सीअलु त्ति तं विंति ।
उज्जुत्तं पुण अन्नं, तत्तो उण्हं ति णं बिंति ॥२०५॥

धर्मे—श्रमणधर्मे य प्रमाद्यति—नोद्यम विधत्ते 'अर्थे वा' अर्थ्यत इत्यर्थो—धनधान्यहिरण्यादिस्तत्र तदुपाये वा शीतल इत्येवं तं ब्रुवते—आचक्षते, उद्युक्तं पुनरन्यं तत —संयमोद्यमात् कारणादुष्णमित्येवं ब्रुवते, णमिति वाक्यालङ्कार इति गाथार्थ ।

उपशमपदव्याचिख्यासयाऽऽह—

सीईभूओ परिनि–व्वुओ य संतो तहेव पन्हाओ ।
होउवसंतकसाओ, तेणुवसन्तो भवे जीवो ॥२०६॥

उपशमो हि क्रोधाद्युदयाभावे भवति, ततश्च कषायाग्न्युपशमात् शीतीभूतो भवति, क्रोधादिज्वालानिर्वाणात् परिनिर्वृतो भवति । च समुच्चये । रागद्वेषाद्युपशमाद्रुपशान्त, तथा क्रोधादिपरितापोपशमात् 'प्रह्लादित' आपप्रमुख., यतो ह्युपशान्तकषाय एव एवम्भूतो भवति तेनोपशान्तकषाय. शीतो भवतीति । एकार्थिकानि चैतानीति गाथार्थ. ।

अधुना विरतिपदव्याख्यामाह—

अभयकरो जीवाणं, सीयघरो संजमो भवइ सीओ ।
असंजमो य उण्हो, एसो अन्नोऽवि पज्जाओ ॥२०७॥

अभयकरणशील., केषाम् ?—जीवानां, शीत–सुख तद्गृह तदावास:, कोऽसौ ?—संयम.—सप्तदशभेद., अतोऽसौ शीतो भवति, समस्तदु खहेतुद्वन्द्वोपरमाद्, एतद्विपर्ययस्त्वसंयम उष्ण, एष शीतोष्णलक्षण संयमासंयमयो पर्यायोऽन्यो वा सुखदु खरूपो विषयतावशाद्भवतीति गाथार्थ. ।

साम्प्रतं सुखपदविवरणायाह—

निव्वाणसुहं सायं, सीईभूयं पयं अणाबाहं ।
इहमवि जं किंचि सुहं, तं सीयं दुक्खमवि उण्हं ॥२०८॥

सुखं शीतमित्युक्तं, तच्च समस्तद्वन्द्वोपरमादात्यन्तिकैकान्तिकानाबाधलक्षणं निरुपाधिकं परमार्थचिन्तायां मुक्तिसुखमेव सुखं न परम्, एतच्च समस्तकर्म्मोपतापाभावाच्छीतमिति दर्शयति—' निर्वाणसुख ' मिति, निर्वाणम्–अशेषकर्म्मक्षयस्तदवाप्तौ वा विशिष्टाकाशप्रदेश. तेन तत्र वा सुखं निर्वाणसुखम् । अस्य चैकार्थिकानि–सातं शीतीभूत पदमनाबाधमिति । इहापि संसारे यत्किञ्चित् सातावेदनीयविपाकोद्भूतं सातं—सुखं तदपि शीतं मनआह्लादाद्, एतद्विपर्ययस्तु दु ख, तच्चोष्णमिति गाथार्थ ।

कषायादिपदव्याचिख्यासयाऽऽह—

डज्झइ तिव्वकसाओ, सोगाभिभूओ उइन्नवेओ य ।
उण्हयरो होइ तवो, कसायमाईवि जं डहइ ॥२०९॥

दह्यते–परितप्यते, कोऽसौ ?—तीव्रा–उत्कटा उदीर्णविपाकानुभवेन कषाया यस्य स तथा, न केवलं कषायाग्निना दह्यते, 'शोकाऽभिभूतश्च' इष्टवियोगादिजनित शोकस्तेनाभिभूत तिरोहितसमस्तव्यापारोऽसावपि दह्यते, तथा उदीर्णो विपाकापन्नो वेदो यस्य स तथा उदीर्णवेदो हि पुमान् स्त्रियं कामयते, साऽपीतरं, नपुंसकस्तूभयमिति, तत्प्राप्त्यभावे काङ्क्षानलनिदाहेन दह्यते । चशब्दादिच्छाकामाप्राप्तिजनितारतिपावकेन दह्यते, तदेवं कषाया शोको वेदोदयश्च दाहकत्वादुष्ण, सर्वं वा मोहनीयमष्टप्रकारं वा कर्म्मोष्णम्, ततोऽपि तद्दाहकत्वादुष्णतरं तप इति गाथाशकलेन दर्शयति—उष्णतर तपो भवति, किमिति ?—यतः कषायादिकमपि दहति, आदिशब्दाच्छोकादिपरिग्रह इति गाथार्थ ।

येनाभिप्रायेण द्रव्यभावभेदभिन्न परीषहप्रमादोपशमादिरूपं शीतोष्णं जगादाचार्यस्तमभिप्रायमाविष्करोति—

सीउण्हफासमुहदुह–परीसहकसायवेयसोयसहो ।
हुज्ज समणो सया उ–ज्जुओ य तवसंजमोवसमे ॥२१०॥

शीत चोष्णं च शीतोष्णे तयो स्पर्श तं सहत इति सुख–

शीतस्पर्शोष्णस्पर्शजनितवेदनामनुभवन्नार्त्तध्यानोपगतो भवतीति यावत् । शरीरमनसोरनुकूलं सुखमिति, तद्विपरीतं तु दुःखं, तथा परीषहकषायवेदशोकान् शीतोष्णभूतान् सहत इति । तदेवं शीतोष्णादिसहः सन् भवेत् श्रमणः-यतिः सहोयुक्तश्च, क ?–तपःसंयमोपशमे इति गाथार्थः ।

साम्प्रतमुपसंहारव्याजेन साधुना शीतोष्णातिसहनं कर्त्तव्यमिति दर्शयति–

सीयाणि य उण्हाणि य,भिक्खूणं हुंति वि सहियव्वाइं ।
कामा न सेवियव्वा,सीओमणिज्जस्स निज्जुत्ती ॥२११॥

शीतानि-परीषहप्रमादोपशमविरतिसुखरूपाणि यान्यभिहितानि, उष्णानि च–परीषहतपउद्यमकषायशोकवेदारत्यात्मकानि प्रागभिहितानि तानि भिक्षूणां-मुमुक्षूणा विषोढव्यानि, न सुखदुःखयोः उत्सेकविषादौ विधेयौ, तानि चैवं सम्यग्गृहस्थिना सहन्ते यदि कामपरित्यागो भवतीति गाथाशकलेनाह–"कामा" इत्यादि गाथार्द्धं सुगमम् ।

गतो नामनिष्पन्नो निक्षेपः, साम्प्रतं सूत्रानुगमेऽस्खलितादिगुणोपेतमशेषदोषव्रातविकलं सूत्रमुच्चारयितव्यम् , तच्चेदम्–

सुत्ता अमुणी सया मुणिणो जागरंति । (सू० १०५)

अस्य चानन्तरसूत्रेण सम्बन्धो वाच्यः , स चायम्–इह दुःखी दुःखानामेवावर्त्तमनुपरिवर्त्तत इत्युक्तं, तदिहापि भावसुप्ता अज्ञानिनो दुःखिनो दुःखानामेवावर्त्तमनुपरिवर्त्तन्ते इति । उक्तं च–"नातः परमहं मन्ये, जगतो दुःखकारणम् । यथाऽज्ञानमहारोगो, दुरन्तः सर्वदेहिनाम् ॥ १ ॥" इत्यादि, इह सुप्ता द्विधा–द्रव्यतो, भावतश्च । तत्र निद्राप्रमादवन्तो द्रव्यसुप्ताः, भावसुप्तास्तु मिथ्यात्वाज्ञानमयमहानिद्राव्यामोहिताः, ततो ये अमुनयः–मिथ्यादृष्टयः सततं भावसुप्ताः सम्यग्ज्ञानानुष्ठानरहितत्वात् , निद्रया तु भजनीयाः, मुनयस्तु सद्बोधोपेता मोक्षमार्गादप्रच्यवन्तस्ते सततम्–अनवरतं जाग्रति–हिताहितप्राप्तिपरिहारं कुर्वते, अतो द्रव्यनिद्रोपगता अपि कचिद् द्वितीयपौरुष्यादौ सततं जागरूका एवेति ।

एवमेव भावस्यापि जागरणं च विपर्ययीकृत्य निर्युक्तिकारो गाथां जगाद–

सुत्ता अमुणिणो सया,मुणिणो सुत्ता वि जागरा हुंति ।
धम्मं पडुच्च एवं, निद्दासुत्तेण भइयव्वं ॥२१२॥

सुप्ता द्विधा–द्रव्यतो, भावतश्च । तत्र निद्रया द्रव्यसुप्तान्गाथान्ते वक्ष्यति, भावसुप्तास्त्वमुनयो–गृहस्था मिथ्यात्वाज्ञानवृता हिंसाद्यास्रवद्वारेषु सदा प्रवृत्ताः , मुनयस्त्वपगतमिथ्यात्वाज्ञाननिद्रतयाऽवाप्तसम्यक्त्वादिबोधा भावतो जागरूका एव । यद्यपि कचिदाचार्यानुज्ञाता द्वितीयपौरुष्यादौ दीर्घसंयमाधारशरीरस्थित्यर्थं निद्रावशोपगता भवन्ति तथापि सदा जागरा एव, एवं च धर्म्मं प्रतीत्योक्ताः सुप्ता जाग्रद्यस्थाश्च । द्रव्यनिद्रासुप्तेन तु भाज्यमेतद्–धर्मः स्याद्वा, न वा, यदसौ भावतो जागर्त्ति ततः निद्रासुप्तस्यापि धर्मः स्यादेव, यदि वा-भावतो जाग्रतो निद्राप्रमादवशप्राप्तान्तःकरणस्य न स्यादपि । यस्तु द्रव्यभावसुप्तस्य न स्यादेवेति भजनार्थः । अथ किमिति द्रव्यसुप्तस्य धर्मो न भवतीति ?, उच्यते–द्रव्यसुप्तो हि निद्रया भवति, सा च दुरन्ता । किमिति ?, यतः स्त्यानर्द्धित्रिकोदये सम्यक्त्वावाप्तिर्भवसिद्धिकस्यापि न भवति, तद्बन्धश्च मिथ्यादृष्टिसास्वादनयोरनन्तानुबन्धिबन्धसहचरित , क्षयस्त्वनिवृत्तिबादरगुणस्थानकालसंख्येयभागेषु कियत्स्वपि गतेषु सत्सु भवति, निद्राप्रचलयोरपि उदयः प्राग्वदेव । बन्धोपरमस्त्वपूर्वकरणकालसंख्येयभागेऽन्ते भवति, क्षयः पुनः क्षीणकषायद्विचरमसमये , उदयस्तूपशमकोपशान्तमोहयोरपि भवतीत्यतो दुरन्तो निद्राप्रमादः ।

यथा च द्रव्यसुप्तो दुःखमवाप्नोत्येवं भावसुप्तोऽपीति दर्शयितुमाह–

जह सुत्त मत्त मुच्छिय, असहीणो पावए बहुं दुक्खं ।
तिव्वं अप्पडियारं, पि वट्टमाणो तहा लोगो ॥ २१३ ॥

सुप्तो निद्रया, मत्तो मदिरादिना, मूर्च्छितो गाढमर्म्मप्रहारादिना, अस्वाधीनः–परायत्तो वातादिदोषोद्भवग्रहादिना यथा बहु दुःखमप्रतीकारमवाप्नोति, यथा भावस्वापे–मिथ्यात्वाविरतिप्रमादकषायादिकेऽपि वर्त्तमानः–अवतिष्ठमानो लोकः–प्राणिगणो नरकभवादिकं दुःखमवाप्नोतीति गाथार्थः ।

पुनरपि व्यतिरेकदृष्टान्तद्वारेणोपदेशदानायाऽऽह–

एसेव य उवएसो, पदित्तपयला य पंथमाईसुं ।
अणुहवइ जह सचेओ,सुहाइँ समणोऽवि तह चेव ॥२१४॥

एष एव-पूर्वोक्त उपदेशो यो विवेकाविवेकजनितः, तथाहि-सचेतनो विवेकी प्रदीप्ते सति प्रपलायमानः सुखमनुभवति, पथिविषये च सापायनिरपायविवेकज्ञ , आदिग्रहणादन्यस्मिन्वा दस्युभयादौ समुपस्थिते सति , यथा विवेकी सुखेनैव तमपायं परिहरन् सुखभाग् भवति, एवं श्रमणोऽपि भावतः सदा विवेकित्वाज्जाग्रदवस्थामनुभवन् समस्तकल्याणस्पर्द्धी भवति । अत्र च सुप्तासुप्ताधिकारगाथाः–

"जागरह णरा णिच्चं, जागरमाणस्स वड्डए बुद्धी ।
जो सुअइ न सो धन्नो, जो जग्गइ सो सया धन्नो ॥ १ ॥
सुअइ सुअंतस्स सुअं, संकियखलियं भवे पमत्तस्स ।
जागरमाणस्स सुअं, थिरपरिचियमप्पमत्तस्स ॥ २ ॥
नालस्सेण समं सुक्खं, न विज्जा सह निद्दया ।
न वेरग्गं पमाएणं, नारंभेण दयालुया ॥ ३ ॥
जागरिआ धम्मीणं, अहम्मीणं तु सुत्तया सेआ ।
वच्छाहिवभगिणीए, अकहिंसु जिणो जयंतीए ॥ ४ ॥
सुयइ य अयगरभूओ,सुअं पि से नासई अमयभूअं ।
होहिइ गोणभूओ, नट्ठम्मि सुए अमयभूए ॥ ५ ॥"

तदेवं दर्शनावरणीयकर्म्मविपाकोदयेन कचित्स्वपन्नपि यः संविग्नो यतनावांश्च स दर्शनमोहनीयमहानिद्रापगमाज्जाग्रदवस्थ एवेति ।

ये तु सुप्तास्तेऽज्ञानोदयाद्भवन्ति, अज्ञानं च महादुःखं दुःखं च जन्तूनामहितायेति दर्शयति–

लोयंसि जाण अहियाय दुक्खं, समयं लोगस्स जाणित्ता, इत्थ सत्थोवरए, जस्सिमे सद्दा य रूवा य रसा य

गंधा य फासा य अभिसमन्नागया भवंति । ( सू० १०६ )

लोके—षड्जीवनिकाये जानीहि—परिच्छिन्द्या दुःखहेतुत्वाद् दुःखम्—अज्ञानं मोहनीयं वा तदहिताय—नरकादिभवव्यसनोपनिपाताय । इह वा बन्धवधशारीरमानसपीडायै जायत इत्येनज्जानीहि । परिज्ञानाच्चैतत्फलं, यदुत-द्रव्यभावस्वापादज्ञानरूपात् दुःखहेतोरपसर्पणमिति । किं चान्यत्—' समय ' मित्यादि, समयः—आचारोऽनुष्ठानं तं लोकस्यासुमद्व्रातस्य ज्ञात्वा अत्र शस्त्रोपरतो भवेदित्युत्तरसूत्रेण सम्बन्धः । लोको हि भोगाभिलाषितया प्राण्युपमर्दादिविकपायहेतुकं कर्मोपादाय नरकादियातनास्थानेषूत्पद्यते, ततः कथञ्चिदुद्धृत्यावाप्य चाशेषक्लेशनाशनम् धर्मकारणमार्यक्षेत्रादौ मनुष्यजन्म पुनरपि महामोहमोहितमतिस्तत्तदारभते येन यताधोऽधो व्रजति, संसाराञ्चो न्मज्जतीति । अयं लोकाचारस्तं ज्ञात्वा, अथवा-समभावः-समता तां ज्ञात्वा, ' लोकस्य ' सप्तम्यर्थे षष्ठी, तन्त्रायमर्थो—लोके—जन्तुसमूहे समतां—समशत्रुमित्रता समात्मपरतां वा ज्ञात्वा, यदिवा—सर्वेऽप्येकेन्द्रियादयो जन्तवः सदा स्वोत्पत्तिस्थानरिरंसवो मरणभीरवः सुखैप्सवो दुःखद्विष इत्यम्भूतां समतां ज्ञात्वा, किं कुर्यादित्याह—' एत्थ सत्थोवरए ' अत्र-अस्मिन् षट्कायलोके शस्त्राद् द्रव्यभावभेदादुपरतो धर्मजागरणेन जागृहि, यदिवा-यत्संयमशस्त्रं प्राणातिपातात्यास्रवद्वारं शब्दादिपञ्चप्रकारकामगुणाभिष्वङ्गो वा तस्माच्च उपरत स मुनिरिति । आह च-' जस्सिमे ' इत्यादि, यस्य मुनेरिमे-प्रत्यात्मवेद्याः समस्तप्राणिगणेन्द्रियप्रवृत्तिविषयभूता शब्दरूपरसगन्धस्पर्शा मनोज्ञेतरभेदभिन्ना ' अभिसमन्नागता ' इति, अभिः-आभिमुख्येन सम्यग्-इष्टानिष्टावधारणतयाऽन्विति-शब्दादिस्वरूपावगमात् पश्चादागता-ज्ञाता परिच्छिन्ना यस्य मुनेर्भवन्ति स लोकं जानातीति सम्बन्धः । इदमुक्तं भवति-इष्टेषु न रागमुपयाति, नापीतरेषु द्वेषम्, एतदेवाभिसमन्वागमनं तथा नान्यदिति । यदिवेहैव शब्दादयो दुःखाय भवन्त्यास्तां तावत्परलोक इति, उक्तं च—" रक्तः शब्दे हरिणः स्पर्शे नागो रसे च वारिचरः । कृपणपतङ्गो रूपे, भुजगो गन्धे ननु विनष्टः ॥१॥ पञ्चसु रक्ताः पञ्च विनष्टा यत्रागृहीतपरमार्थाः । एकः पञ्चसु रक्तः, प्रयाति भस्मान्ततामबुधः ॥ २ ॥ " अथवा-शब्दे-पुष्पशालाङ्गङ्गो ननाश, रूपे-अर्जुनकतस्करः, गन्धे-गन्धप्रियकुमारः, रसे-सौदासः, स्पर्शे—सत्यकिः, सुकुमारिकापतिर्वा ललिताङ्गकः, परत्र च नारकादियातनास्थानमयमिति ।

एवं शब्दादीनुभयदुःखस्वभावानवगम्य यः परित्यजेदसौ किं गुणमवाप्नुयादित्याह—

से आयवं नाणवं वेयवं धम्मवं बंभवं पन्नाणेहिं परियाणइ लोयं, मुणीति वुच्चे, धम्मविऊ उज्जू आवट्टसोए संगमभिजाणइ । ( सू० १०७ )

यो हि महामोहनिद्रावृते लोके दुःखमहिताय जानानो लोकसमयदर्शी शस्त्रोपरतः सन् शब्दादीन् कामगुणान् दुःखैकहेतूनभिसमन्वागच्छति ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया च प्रत्याचष्टे स मुमुक्षुरात्मवान्—आत्मा ज्ञानादिकोऽस्यास्तीत्यात्मवान्, शब्दादिपरित्यागेन ह्यात्माऽनेन रक्षितो भवति, अन्यथा नारकैकेन्द्रियादिपाते सत्यात्मकार्याकरणात्कुतोऽस्यात्मेति, पाठान्तरं वा-' से आयवी नाणवी ' आत्मानं श्वभ्रादिपतनरक्षणद्वारेण वेत्तीत्यात्मवित्, तथा-ज्ञानं यथावस्थितपदार्थपरिच्छेदकं वेत्तीति ज्ञानवित्, तथा वेद्यते जीवादिस्वरूपम् अनेनेति वेदः—आचाराद्यागम तं वेत्तीति वेदवित्, तथा-दुर्गतिप्रसृतजन्तुधरणस्वभावं स्वर्गापवर्गमार्गं धर्मं वेत्तीति धर्मवित्, एवं ब्रह्म—अशेषमलकलङ्कविकलं योगिशर्म वेत्तीति ब्रह्मवित्, यदिवा-अष्टादशधा ब्रह्मेति, एवम्भूतश्चासौ प्रकर्षेण ज्ञायते ज्ञेयं यैस्तानि प्रज्ञानानि-मत्यादीनि तैर्लोकं यथावस्थित जन्तुलोकं तदाधारं वा क्षेत्रं जानाति—परिच्छिनत्तीत्युक्तं भवति, य एव शब्दादिविषयसङ्गस्य परिहर्ता स एव यथावस्थितलोकस्वरूपपरिच्छेदीति । यश्चानन्तरगुणोपेत स किं वाच्यः ? इत्यत आह—' मुणी ' त्यादि, यो ह्यात्मवान् ज्ञानवान् वेदवान् धर्मवान् ब्रह्मवान् प्रज्ञानैर्यस्तैः समस्तैर्वा लोकं जानाति स मुनिर्वाच्यो मनुते,मन्यते वा जगतस्त्रिकालावस्थां मुनिरिति कृत्वा, किं च-' धम्म ' इत्यादि, धर्मं-चेतनाचेतनद्रव्यस्वभावं श्रुतचारित्ररूपं वा वेत्तीति धर्मवित्, ' ऋजु ' रिति ऋजो --ज्ञानदर्शनचारित्राख्यस्य मोक्षमार्गस्यानुष्ठानादकुटिलो यथावस्थितपदार्थस्वरूपपरिच्छेदाद्वा ऋजु सर्वोपाधिशुद्धोऽवक्र इति यावत् । तदेवं धर्मविदृजुर्मुनि किम्भूतो भवतीत्याह-' आवट्ट ' इत्यादि, भावावर्तो-जन्मजरामरणरोगशोकव्यसनोपनिपातात्मकः संसार इति, उक्तं हि-" रागद्वेषवशाविद्धं, मिथ्यादर्शनदुस्तरम् । जन्मावर्ते जगत्क्षिप्तं, प्रमादाद् भ्राम्यते भृशम् ॥ १ ॥ " भावश्रोतोऽपि शब्दादिकामगुणविषयाभिलाषः, आवर्तश्च श्रोतश्च आवर्त्त-श्रोतसी तयो रागद्वेषाभ्यां सम्बन्धः-सङ्गस्तमभिजानाति-आभिमुख्येन परिच्छिनत्ति-यथाऽयं सङ्ग आवर्तश्रोतसोः कारणं, जानानश्च परमार्थेन कोऽभिधीयते ? , योऽनर्थं ज्ञात्वा परिहरति, ततश्चायमर्थः—संसारश्रोतःसङ्गं रागद्वेषात्मकं ज्ञात्वा यः परिहरति स एव आवर्तश्रोतसोः सङ्गस्याभिज्ञाता । ।

सुप्तजागरतो दोषगुणपरिच्छेदी किं गुणमवाप्नुयादित्याह--

सीउसिणच्चाई से निग्गंथे अरइरइसहे, फरुसयं नो वेएइ, जागरवेरोवरए, वीरे एवं दुक्खा पमुक्खसि, जरामच्चुवसोवणिए नरे सययं मूढे धम्मं नाभिजाणइ । ( सू० १०८ )

सबाह्याभ्यन्तरग्रन्थरहितः सन् शीतोष्णत्यागी सुखदुःखानभिलाषुकः शीतोष्णरूपां वा परीषहावलिसहमान संयमासंयमरत्यरतिसहः सन् परुषता—कर्कशता पीडाकारितां परीषहाणामुपसर्गाणां वा कर्मक्षपणायोद्यत माहात्म्यं मन्यमानो ' नो वेत्ति ' न तान् पीडाकारित्वेन गृह्णातीत्युक्तं भवति । यदिवा-संयमस्य तपसो या परुषता शरीरपीडोत्पादनात् कर्मलेपापनयनाद्वा संमार्गोद्विग्नमना मुमुक्षुर्निरायाधमुक्तोन्मुखः " न वेत्ति " न संयमतपसो पीडाकारित्वेन गृह्णातीति यावत्, किं च—' जागर ' इत्यादि, असंयमनिद्रापगमाज्जागर्तीति जागरः, अभिमानसमुत्थोऽमर्षो वैरं परापरागद्ध्यवसायो वैरं तस्मादुपरतो, वैरोपरतो जागरश्चासौ वैरोपरतश्चेति

विगृह्य कर्मधारय , क एवम्भूत ?—वीर -कर्मापनयनशक्त्युपेत ,एवम्भूतश्च त्वं वीर ! आत्मानं परं वा दु खाद् दु.खकारणाद्वा कर्मण प्रमोचयसीति । यश्च यथोक्तोद्विपरीत. आवर्त्तश्रोतसो सङ्गमुपगतोऽजागरः स किमाप्नुयादित्याह—जरा च मृत्युश्च ताभ्यामात्मवशमुपनीतो नर -प्राणी सततम्-अनवरतं मूढो—महामोहमोहितमतिर्धर्म्म-स्वर्गापवर्गमार्ग नाभिजानीते—नावगच्छति नत् संसार स्थानमेव नास्ति यत्र जरामृत्यू न स्त , देवानां जराऽभाव इति चेत् , न , तत्राप्युपान्त्यकाले लेश्याबलसुखप्रभुत्ववर्णहान्युपपत्तेः अस्त्येव च तेषामपि जरासद्भावः, उक्तं च—' देवा णं भंते ! सव्वे समवन्ना ?, नो इणट्ठे समट्ठे, से केणऽट्ठेणं भंते! एवं वुच्चइ ?, गोयमा! देवा दुविहा-पुव्वोववन्नगा य, पच्छोववन्नगा य । तत्थ णं जे ते पुव्वोववन्नगा ते णं अविसुद्धवन्नयरा, जे णं पच्छोववन्नगा ते णं विसुद्धवन्नयरा ” एवं लेश्याद्यपीति, च्यवनकाले तु सर्वस्यैवैतद्भवति, तद्यथा—“ माल्यम्लानि कल्पवृक्षप्रकम्प , श्रीह्रीनाशो वाससां चोपराग । दैन्यं तन्द्रा कामरागाङ्गभङ्गौ, दृष्टिभ्रान्तिर्वेपथुश्चारतिश्च ॥ १ ॥ ”

यतश्चैवमतः सर्वं जरामृत्युवशोपनीतमभिसमीक्ष्य किं कुर्यादित्याह—

पासिय आउरपाणे अप्पमत्तो परिव्वए, मंता य मइमं, पास आरंभजं दुक्खमिणं ति णच्चा, माई पमाई पुण एइ गब्भं, उवेहमाणो सद्दरूवेसु उज्जू माराभिसंकी मरणा पमुच्चइ, अप्पमत्तो कामेहिं , उवरओ पावकम्मेहिं, वीरे आयगुत्ते खेयन्ने , जे पज्जवजायसत्थस्स खेयन्ने से असत्थस्स खेयन्ने, जे असत्थस्स खेयन्ने से पज्जवजायसत्थस्स खेयन्ने, अकम्मस्स ववहारो न विज्जइ, कम्मुणा उवाही जायइ, कम्मं च पडिलेहाए । ( सू० १०९ )

स हि भावजागरस्तैस्तैर्भावस्वापजनितै. शारीरमानसैर्दु खैरातुरान्-किंकर्त्तव्यतामूढान् दु खसागरावगाढान् प्राणान्-अभेदोपचारात् प्राणिना दृष्ट्वा-ज्ञात्वा अप्रमत्त. परिव्रजेद्-उद्युक्त सन् संयमानुष्ठानं विदध्यात्। अपि च-'मंता' इत्यादि, हे मतिमन् !-सश्रुतिक ! भावसुप्तातुरान् पश्य, मत्वा चैतज्जाग्रत्सुप्तगुणदोषापादनं मा स्वापमतिं कुरु । किं च—' आरंभज ' मित्यादि, आरम्भः—सावद्यक्रियानुष्ठानं तस्माज्जातमारम्भजं, किं तद् ?-दु खं तत्कारणं वा कर्म्म । 'इद' मिति—प्रत्यक्षगोचरापन्नमशेषारम्भप्रवृत्तप्राणिगणानुभूयमानमित्येतत् ज्ञात्वा—परिच्छिद्य निरारम्भो भूत्वाऽऽत्महिते जागृहि । यस्तु विषयकषायाच्छादितचेता भावशायी स किमाप्नुयादित्याह—' माई ' इत्यादि, मध्यग्रहणाच्चाद्यन्तयोर्ग्रहण, तेन क्रोधादिकषायवान्—मद्यादिप्रमादवांश्चारकदु खमनुभूय पुनस्तिर्यक्षु गर्भमुपैति । यस्त्वकषायी प्रमादरहित. स किम्भूतो भवतीत्याह—' उवेह ' इत्यादि, बहुवचननिर्देशादाद्यर्था गम्यते , शब्दरूपादिषु यौ रागद्वेषौ तावुपेक्षमाण —अकुर्वन् ऋजुर्भवति—यतिर्भवति, यतिरेव परमार्थत ऋजु , अपरस्त्वन्यथाभूत. स्यात् इत्यादिपदार्थान्यथाग्रहणाद्वक्र. । किं च—स ऋजु., शब्दादीनुपेक्षमाणो मरणं मारस्तदभिशङ्की—मरणादुद्विजमानोऽकार्यकारीति येन मरणात् प्रमुच्यते । किं तत्करोतीत्याह—'अप्रमत्त' इत्यादि, कामैयः प्रमादस्तत्राप्रमत्तो भवेत् । कथमप्रमत्त. स्याद् ?, य कामारम्भकेभ्यः पापेभ्य उपरतो भवतीति दर्शयति—' उवरओ ' इत्यादि, उपरतो मनोवाक्कायै., कुत ?—पापोपादानकर्म्मभ्यः, कोऽसौ?—वीर , किम्भूतो?-गुप्तात्मा, कथं गुप्तो भवति ?, यः खेदज्ञो, यश्च खेदज्ञः स कं गुणमवाप्नुयादित्याह—' जे पज्जव ' इत्यादि ' शब्दादीनां विषयाणां पर्यवा —विशेषास्तेषु—तन्निमित्तं जातं शस्त्रं पर्यवजातशस्त्रं—शब्दादिविशेषोपादानाय यत्प्राण्युपघातकार्यनुष्ठानं तत्पर्यवजातशस्त्रं तस्य पर्यवजातशस्त्रस्य यः खेदज्ञो—निपुणः सोऽशस्त्रस्य—निरवद्यानुष्ठानरूपस्य संयमस्य खेदज्ञ. , यश्चाशस्त्रस्य संयमस्य खेदज्ञ स पर्यवजातशस्त्रस्य खेदज्ञ. । इदमुक्तं भवति—यः शब्दादिपर्यायानिष्टानिष्टात्मकान् तत्प्राप्तिपरिहारानुष्ठानं च शस्त्रभूतं वेत्ति सोऽनुपघातकत्वात्संयममप्यशस्त्रभूतमात्मपरोपकारिणं वेत्ति शस्त्राशस्त्रे च जानानस्तत्प्राप्तिपरिहारौ विधत्ते, एतत्फलत्वात् ज्ञानस्येति । यदिवा-शब्दादिपर्यायेभ्यस्तज्जनितरागद्वेषपर्यायेभ्यो वा जातं यज्ज्ञानावरणीयादि कर्म्म तस्य यच्छस्त्रं दाहकत्वात् तपस्तस्य य. खेदज्ञ. तज्ज्ञानानुष्ठानत. सोऽशस्त्रस्य संयमस्यापि खेदज्ञ , पूर्वोक्तादेव हेतो., हेतुहेतुमद्भावाच्च योऽशस्त्रस्य खेदज्ञ स पर्यवजातशस्त्रस्यापि खेदज्ञ इति, तस्य च संयमतप खेदज्ञस्याश्रवनिरोधादनादिभवोपात्तकर्म्मक्षय. । कर्म्मक्षयाच्च यद्भवति तदप्यतिदिशति—( आचा० ) ' कम्ममुणा ' इत्यादि , उपाधीयते—व्यपदिश्यते येनेत्युपाधि.—विशेषणं स उपाधि. कर्म्मणा—ज्ञानावरणीयादिना जायते, तद्यथा—मतिश्रुतावधिमन.पर्यायवान् मन्दमतिस्तीक्ष्णो वेत्यादि, चक्षुर्दर्शनी अचक्षुर्दर्शनी निद्रालुरित्यादि, सुखी दु.खी चेति, मिथ्यादृष्टि. सम्यग्मिथ्यादृष्टि स्त्री पुमान्नपुंसक. कषायीत्यादि, सोपक्रमायुष्को निरुपक्रमायुष्कोऽल्पायुरित्यादि , नारकः तिर्यग्योनिक एकेन्द्रियो द्वीन्द्रियः पर्याप्तकोऽपर्याप्तक. सुभगो दुर्भग इत्यादि, उच्चैर्गोत्रो नीचैर्गोत्रो चेति, कृपणस्त्यागी निरुपभोगो निर्वीर्य , इत्येवं कर्म्मणा संसारी व्यपदिश्यते । यदि नामैवं तत. किं कर्त्तव्यमित्याह—'कम्मं च' इत्यादि, कर्म्म—ज्ञानावरणीयादि तत्प्रत्युपेक्ष्य बन्धं वा प्रकृतिस्थित्यनुभावप्रदेशात्मकं पर्यालोच्य, तत्सत्ताविपाकापन्नांश्च प्राणिनो यथा भावनिद्रया शेरते तथाऽवगम्याकर्म्मतापाये भावजागरणे यतितव्यमिति । तदभावश्चानेन प्रक्रमेण भवति, तद्यथा—अष्टविधसत्कर्म्मापूर्वादिकरणक्षपकश्रेणिप्रक्रमेण मोहनीयक्षयं विधायान्तर्मुहूर्त्तमजघन्योत्कृष्टं कालं सप्तविधसत्कर्म्मा , तत. शेषघातित्रयं क्षीणं चतुर्विधभवोपग्राहिसत्कर्म्मा जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतो देशोनां पूर्वकोटिं यावत् , पुनरूर्द्ध्वं पञ्चह्रस्वाक्षरोद्गिरणकालीयां शैलेश्यवस्थामनुभूयाऽकर्म्मा भवति । साम्प्रमुत्तरप्रकृतीनां सदसत्कर्म्मताविधानमुच्यते-तत्र ज्ञानावरणीयान्तराययो. प्रत्येकमुपात्तपञ्चभेदयोश्चतुर्दशस्वपि जीवस्थानकेषु गुणस्थानकेषु च मिथ्यादृष्टेरारभ्य केवलिगुणस्थानादर्वागपरविकल्पाभावात् पञ्चविधसत्कर्म्मता दर्शनावरणस्य त्रीणि सत्कर्म्म-

ताःस्थानानि, तद्यथा-नवविधं निद्रापञ्चकदर्शनचतुष्टयमम-क्षयात् एतत् सर्वजीवस्थानानुयायि, गुणस्थानस्थानवृत्तिवादरकालसंख्येयभागान् यावत् १, तत- कतिचित्संख्येयभागावसाने स्त्यानर्द्धित्रयक्षयात् षट्सत्कर्मताःस्थानं २,तत क्षीणकषायद्विचरमसमये निद्राप्रचलाद्वयक्षयाच्चतु,सत्कर्मतास्थान, तस्यापि क्षय क्षीणकषायकालान्त इति ३। वेदनीयस्य द्वे सत्कर्मताःस्थाने, तद्यथा-द्वे अपि सातासाते इत्येकम् ,अन्यतरोदयारूढशैलेश्यवस्थेतरद्विचरमक्षणक्षये सति सातमसातं वा कर्मेति द्वितीयम् २।मोहनीयस्य पञ्चदश सत्कर्मतास्थानानि, तद्यथा-षोडश कषाया नव नोकषाया दर्शनत्रये सति सम्यग्दृष्टेरष्टाविंशति १, सम्यक्त्वोद्वलने सम्यग्मिथ्यादृष्टे सप्तविंशतिः २, दर्शनद्वयोद्वलनेऽनादिमिथ्यादृष्टेर्वा षड्विंशति ३,सम्यग्दृष्टेरष्टाविंशतिसत्कर्मणोऽनन्तानुबन्ध्युद्वलने क्षपणे वा चतुर्विंशति ४, मिथ्यात्वक्षये त्रयोविंशति ५, सम्यग्मिथ्यात्वक्षये द्वाविंशति. ५, क्षायिकसम्यग्दृष्टेरेकविंशति ७, अप्रत्याख्यानप्रत्याख्यानावरणक्षये त्रयोदश ८, अन्यतरवेदक्षये द्वादश ९, द्वितीयवेदक्षये सत्येकादश १०, हास्यादिषट्कक्षये पञ्च ११, पुंवेदाभावे चत्वारि १२, संज्वलनक्रोधक्षये त्रय-१३, मानक्षये द्वौ १४, मायाक्षये सत्येको लोभ १५, तत्क्षये च मोहनीयासत्तेति। आयुषो द्वे सत्कर्मतास्थाने सामान्येन , तद्यथा-परभवायुष्कबन्धोत्तरकालमायुष्कद्वयमेकम्१,द्वितीयं तु तद्बन्धाभाव इति। नाम्नो द्वादश सत्कर्मतास्थानानि,तद्यथा-त्रिनवतिः १ द्विनवति. २ एकोननवति ३ अष्टाशीति ४ षडशीति ५ अशीति. ६ एकोनाशीति ७ अष्टसप्तति ८ षट्सप्तति ९ पञ्चसप्तति. १० नव ११ अष्टौ १२ चेति, तत्र त्रिनवति —गतयश्चतस्र ४ पञ्च जातय ५ पञ्च शरीराणि ५ पञ्च सङ्घाता ५ बन्धनानि पञ्च ५ संस्थानानि षट् ६ अङ्गोपाङ्गत्रयं ३ संहननानि षट् ६ वर्णपञ्चकं ५ गन्धद्वयं २ रसा पञ्च ५ अष्टौ स्पर्शा ८ आनुपूर्वीचतुष्टयम् ४अगुरुलघूपघातपराघातोच्छ्वासातपोद्योता. षट् ६ प्रशस्तेतरविहायोगतिद्वयं २ प्रत्येकशरीरत्रसशुभसुभगसुस्वरसूक्ष्मपर्याप्तकस्थिरादेययशांसि सेतराणीति विंशति २० निर्म्माणं तीर्थकरत्वमित्येवं सर्वसमुदाये त्रिनवतिर्भवति ९३, तीर्थकरनामाभावे द्विनवति ९२, त्रिनवतेराहारकशरीरसङ्घातबन्धनाङ्गोपाङ्गचतुष्टयाभावे सत्येकोननवति. ८९, ततोऽपि तीर्थकरनामाभावेऽष्टाशीति ८८, देवगतितदानुपूर्वीद्वयोद्वलने षडशीति. ८६, यदिवा-अशीति सत्कर्मणो नरकगतिप्रायोग्यं बध्नत. तद्गत्यानुपूर्वीद्वयवैक्रियचतुष्कबन्धकस्य षडशीति., देवगतिप्रायोग्यबन्धकस्य वेति ततो नरकगत्यानुपूर्वीद्वयवैक्रियचतुष्टयोद्वलनेऽशीति ८०, पुनर्मनुष्यगत्यानुपूर्वीद्वयोद्वलनेऽष्टसप्तति. ७८, एतान्यक्षपकाणा सत्कर्मतास्थानानि। क्षपकश्रेण्यन्तर्गतानां तु प्रोच्यन्ते, तद्यथा-त्रिनवतेर्नरकतिर्यग्गतितदानुपूर्वीद्वयैकद्वित्रिचतुरिन्द्रियजात्यातपोद्द्योतस्थावरसूक्ष्मसाधारणरूपैर्नरकतिर्यग्गतिप्रायोग्यैस्त्रयोदशभि १३ कर्मभि क्षपितैरशीतिर्भवति , द्विनवतेस्तैरेभिस्त्रयोदशभि क्षपितैरेकोनाशीति. , याऽसावाहारकचतुष्टयापगमेनैकोननवति सञ्जाता ततस्त्रयोदशनाम्नि क्षपिते षट्सप्ततिर्भवति, तीर्थकरनामाभावापादिताऽष्टाशीति , अष्टाशीतेस्त्रयोदशनामाभावे पञ्चसप्ततिः , नवाशीति. षट्सप्ततर्वा तीर्थकरकेवलिशैलेश्यापरद्विचरमसमये तीर्थकरनाम्न प्रक्षेपात् वक्ष्यमाणनवकर्मप्रकृतिव्युदासेन क्षयमुपगते शेषनाम्नि अन्त्यसमये नवसत्कर्मतास्थानं, ताश्च वक्ष्यमाणा नवमा , तद्यथा—मनुजगति १ पञ्चेन्द्रियजाति २ त्रस ३ बादर ४ पर्याप्तक ५ शुभगादेय ६-७ यशःकीर्त्ति ८ तीर्थकररूपा ९, एता एव शैलेश्यन्त्यसमये सत्ता बिभ्रति ,शेषास्तु एकसप्ततिः सप्तषष्टिर्वा द्विचरमसमये क्षयमुपयान्ति , एता एव नव अतीर्थकरकेवलिनस्तीर्थकरनामरहिता अष्टौ भवन्ति, अतोऽन्त्यसमयेऽष्टसत्कर्मतास्थानमिति। सामान्येन गोत्रस्य द्वे सत्कर्मतास्थाने , तद्यथा—उच्चनीचगोत्रसद्भावे सत्येकं सत्कर्मतास्थान, तेजोवायूच्चैर्गोत्रोद्वलने कालंकलीभावावस्थायां नीचैर्गोत्रसत्कर्मतेति द्वितीयं, यदिवा—अयोगिद्विचरमसमये नीचैर्गोत्रक्षये सत्युच्चैर्गोत्रसत्कर्मता , एवं द्विरूपगोत्राऽवस्थाने सत्येकं सत्कर्मतास्थानमन्यतरगोत्रसद्भावे सति द्वितीयमित्येव कर्म प्रत्युपेक्ष्य तत्क्षयाय—गमाय यतिना यतितव्यमिति।

किं च—

कम्ममूलं च जं छणं, पडिलेहिय सव्वं समायाय दोहिं अंतेहिं अदिस्समाणे तं परिन्नाय मेहावी विडत्ता लोगं वंता लोगसन्नं से मेहावी परिक्कमिज्जासि त्ति बेमि। (सू०११०)

कर्मणो मूलं-कारणं मिथ्यात्वाविरतिप्रमादकषाययोगा , च. समुच्चये ,कर्ममूलं च प्रत्युपेक्ष्य यत्क्षण—मिति 'क्षणु' हिंसायां, क्षणनं—हिंसनं यत्किमपि प्राण्युपघातकारि तत् कर्ममूलतया प्रत्युपेक्ष्य परित्यजेत् । पाठान्तरं वा ' कम्ममाहूय जं छणं ' य उपादानक्षणोऽस्य कर्मणः तत्क्षणं कर्माहूय-कर्मोपादाय तत्क्षणमेव निवृत्तिं कुर्याद् । इदमुक्तं भवति-अज्ञानप्रमादादिना यस्मिन्नेव क्षणे कर्महेतुकमनुष्ठानं कुर्यात्तस्मिन्नेव क्षणे लब्धचेता तदुपादानहेतोर्निवृत्तिं विदध्यादिति।पुनरप्युपदेशदानायाह—'पडिलेहिअ' इत्यादि,प्रत्युपेक्ष्य, पूर्वोक्त कर्म तद्विपक्षमुपदेशं च सर्वं समादाय-गृहीत्वा अन्तहेतुत्वादन्तौ—रागद्वेषौ ताभ्यां सदादृश्यमान ताभ्यामनपदिश्यमानो वा तत्कर्म तदुपादान वा रागादिकं ज्ञपरिज्ञया परिज्ञाय प्रत्याख्यानपरिज्ञया परिहरेदिति रागादिमोहित लोकं विषयकषायलोक वा ज्ञात्वा वान्त्वा च लोकसंज्ञा-विषयपिपासासञ्ज्ञिता धनायाग्रहरूपा वा स—मेधावी मर्यादाव्यवस्थित सन् पराक्रमेत—संयमानुष्ठाने उद्युक्तो भवेत् विषयपिपासामारिपड्वर्गं वाऽष्टप्रकारं वा कर्मारिवर्गाद्। इति परिसमाप्तौ ब्रवीमीति पूर्ववत्। इति शीतोष्णीयाध्ययनप्रथमोद्देशकटीका समाप्ता।

उक्त प्रथमोद्देशक । साम्प्रतं द्वितीय आरभ्यते, अस्य चायमभिसम्बन्ध., पूर्वोद्देशके भावसुप्ता प्रदर्शिता , इह तु तेषां स्वापविपाकफलमसातमनुभवन्त इत्यनेन सम्बन्धेनायातस्यास्य सूत्रानुगमे सूत्रमुच्चारयितव्यम् , तच्चेदम्—

जाइं च वुड्ढिं च इहऽज्ज ! पासे,भूएहिं जाणे पडिलेह सायं।
तम्हाऽतिविज्जे परम ति णच्चा,संमत्तदंसी न करेइ पावं।१॥

जातिं—प्रसूतिं बालकुमारयौवनवृद्धावस्थावसाना वृ-द्धिं इह-मनुष्यलोके, संसारे वा, अथवा कालक्षेपमनन्तरं जातिं च वृद्धिं च पश्य—अवलोकय। इदमुक्तं भवति—जायमानस्य यद् दुःखं वृद्धावस्थायां च यच्छारीरमानसमुत्पद्यते तद्विवेकचक्षुषा पश्य। उक्तं च—

"जायमाणस्स जं दुक्खं, मरमाणस्स जंतुणो।
तेण दुक्खेण संतत्तो, न सरइ जाइमप्पणो॥ १॥
विस्सरस्सियं रसंतो, तो सो जोणीमुहाउ निप्फिडइ।
माऊए अप्पणोऽवि अ, वेअणमउलं जणेमाणो॥ २॥"

तथा—

"हीणभिन्नसरो दीणो, विवरीओ विचित्तओ।
दुब्बलो दुक्खिओ वसई, संपत्तो चरिमं दसं॥ ३॥"

इत्यादि। अथवा-आर्य! इत्यामन्त्रणं भगवान् गौतमस्वामिनमामन्त्रयति, इह आर्य! जातिं वृद्धिं च तत्कारणं कर्म कार्यं च दुःखं पश्य, दृष्ट्वा च दुःखस्य, यथा ते जात्यादिकं न स्यात् तथा विधत्स्व। किं चापरम्—' भूएहिं ' मित्यादि, भूतानि-चतुर्दशभूतग्रामास्तैः सममात्मनः सातं—सुखं प्रत्युपेक्ष्य-पर्यालोच्य जानीहि; तथाहि-यथा त्वं सुखप्रिय एवमन्येऽपीति, यथा च त्वं दुःखद्विडेवमन्येऽपि जन्तव, एवं मत्वाऽन्येषामसातोत्पादनं न विदध्या, एवं च जन्मादिदुःखं न प्राप्स्यसीति। उक्तं च—" यथेष्टविषयाः सात-मनिष्ठा इतरस्तथ। अन्यत्रापि विदित्वैवं, न कुर्यादप्रियं जने॥ १॥" यद्येवं ततः किमित्याह—' तम्हा '-इत्यादि, तस्मात्-जातिवृद्धिसुखदुःखदर्शनादतीव विद्या—तत्त्वपरिच्छेत्री यस्यासावतिविद्यः स-परमं मोक्षं ज्ञानादिकं वा तन्मार्गं ज्ञात्वा सम्यक्त्वदर्शी सन् पापं न करोति, सावद्यमनुष्ठानं न विदधातीत्युक्तं भवति।

पापस्य च मूलं स्नेहपाशस्तदपनोदार्थमाह—

उम्मुंच पासं इह मच्चिएहिं,
आरंभजीवी उभयाणुपस्सी।
कामेसु गिद्धा निचयं करंति,
संसिच्चमाणा पुणरिंति गब्भं॥ २॥

इह-मनुष्यलोके चतुर्विधकषायविषयविमोक्षलक्षणाधारे मर्त्यैः सार्द्धं द्रव्यभावभेदभिन्नं पाशम् उत्-प्राबल्येन मुञ्च-अपाकुरु, स हि कामभोगलालसस्तदादानहेतोर्हिंसादीनि पापान्यारभते अतोऽपदिश्यते—' आरंभ ' इत्यादि, आरम्भेण जीवितुं शीलमस्येत्यारम्भजीवी-महारम्भपरिग्रहपरिकल्पितजीवनोपाय उभय-शारीरमानसमैहिकामुष्मिकं वा द्रष्टुं शीलमस्येति स तथा, किं च—' कामेसु ' इत्यादि कामा-इच्छामदनरूपास्तेषु गृद्धा-अध्युपपन्ना निचयं-कर्मोपचयं कुर्वन्ति। यदि नामैवं ततः किमित्याह—' संसिच्च '-इत्यादि, तेन कामोपादानजनितेन कर्मणा संसिच्यमाना-आपूर्यमाणा गर्भाद्गर्भान्तरमुपयान्ति, संसारचक्रवालेऽरघट्टघटीयन्त्रन्यायेन पर्यटन्ते, आसन इत्युक्तं भवति। (आचा०)

एस मरणा पमुच्चइ, से हु दिट्ठभए मुणी, लोगंसि परमदंसी विवित्तजीवी उवसंते समिए सहिए सयाजए कालकंखी परिव्वए, बहुं च खलु पावं कम्मं पगडं। ( सू० १११ )

एष—इत्यनन्तरोक्तो मूलाग्रच्छेदको निष्कर्मदर्शी मरणाद्-आयुःक्षयलक्षणात् मुच्यते आयुषो बन्धनाऽभावाद्, यद्विा-आजवंजवीभावादावीचीमरणाद्वा सर्वं एव संसारो मरणं तस्मात्प्रमुच्यते। यश्चैवं स किम्भूतो भवतीत्याह—' से हु ' इत्यादि, स-अनन्तरोक्तो मुनिर्दृष्टं संसारात्भयं सप्तप्रकारं वा येन स तथा, हुरवधारणे दृष्टभय एव। किं च—' लोयंसि ' इत्यादि, लोके ऽध्याधारे चतुर्दशभूतग्रामात्मके वा परमो-मोक्षस्तत्कारणं वा संयमः तं द्रष्टुं शीलमस्येति परमदर्शी, तथा ' विवित्तं ' स्त्रीपशुपण्डकससक्तशय्यादिरहितं उच्यते, भावतस्तु रागद्वेषरहितमसंक्लिष्टं जीवितुं शीलमस्येति विविक्तजीवी, यश्चैवम्भूतः स इन्द्रिय-नोइन्द्रियोपशमादुपशान्तो, यश्चोपशान्तः स पञ्चभिः समितिभिः सम्यग्वा इतो-गतो मोक्षमार्गे समितः, यश्चैवं स ज्ञानादिभिः सहितः-समन्वितो, यश्च ज्ञानादिर्भिर्हितः स सदा यतः-अप्रमादी। किमवधिश्चायमनन्तरोक्तो गुणोपन्यास इत्याह—' काल ' इत्यादि, कालो-मृत्युकालस्तमाकाङ्क्षितुं शीलमस्येति कालाकाङ्क्षी स एवम्भूतः परि-समन्ताद् व्रजेत्परिव्रजेत्, यावत्पर्यायागतं पण्डितमरणं तावदाकाङ्क्षमाणो विविक्तजीवित्वादिगुणोपेतः संयमानुष्ठानमार्गे परिस्पन्देदिति। स्यादेतत्-किमर्थम् एवं क्रियते? इत्याह—मूलोत्तरप्रकृतिभेदभिन्नं प्रकृतिस्थित्यनुभावप्रदेशबन्धात्मकं बन्धोदयसत्कर्मताव्यवस्थामयं तथा बद्धस्पृष्टनिधत्तनिकाचितावस्थागतं कर्म तच्च न ह्रसीयसा कालेन क्षयमुपयातीत्यतः कालाकाङ्क्षीत्युक्तम्, तत्र बन्धस्थानापेक्षया तावन्मूलोत्तरप्रकृतीनां बहुत्वं प्रदर्श्यते, तद्यथा—सर्वमूलप्रकृतीर्बध्नतोऽन्तर्मुहूर्तं यावदष्टविधम्, आयुष्कवर्जं सप्तविधं, तच्चाजघन्यनान्तर्मुहूर्तमुत्कृष्टतस्त्वहितानि त्रयस्त्रिंशत्सागरोपमाणि पूर्वकोटित्रिभागाभ्यधिकानि, सूक्ष्मसंपरायस्य मोहनीयबन्धोपरमे आयुष्कबन्धाभावात् षड्विधम्, एतच्च जघन्यतः सामयिकमुत्कृष्टतस्त्वन्तर्मुहूर्त्तमिति। तथोपशान्तक्षीणमोहसयोगिकेवलिनां सप्तविधबन्धोपरमे सातमेकं बध्नतामेकविधं बन्धस्थानं, तच्च जघन्येन सामयिकमुत्कृष्टतो देशोनपूर्वकोटिकालीयम्। इदानीमुत्तरप्रकृतिबन्धस्थानान्यभिधीयन्ते-तत्र ज्ञानावरणान्तराययोः पञ्चभेदयोरप्येकमेव ध्रुवबन्धित्वाद्बन्धस्थानं, दर्शनावरणीयस्य त्रीणि बन्धस्थानानि—निद्रापञ्चकदर्शनचतुष्टयसमन्वयाद् ध्रुवबन्धित्वान्नवविधं १, ततः स्त्यानर्द्धित्रिकस्यानन्तानुबन्धिभिः सह बन्धोपरमे षड्विधम् २, अपूर्वकरणसङ्ख्येयभागे निद्राप्रचलयोर्बन्धोपरमे चतुर्विधं बन्धस्थानम् ३। वेदनीयस्यैकमेव बन्धस्थानं-सातमसातं वा बध्नतः, उभयोरपि यौगपद्येन विरोधितया बन्धाभावात्। मोहनीयबन्धस्थानानि दश, तद्यथा-द्वाविंशतिः—मिथ्यात्वं १ षोडश कषायाः १७ अन्यतरवेदो १८ हास्यरतियुग्मारतिशोकयुग्मयोरन्यतर २० द्वयं २१ जुगुप्सा २२ चेति १, मिथ्यात्वबन्धोपरमे सास्वादनस्य सैवैकविंशतिः २, सैव सम्यग्मिथ्यादृष्ट्यविरतसम्यग्दृष्टयोरनन्तानुबन्ध्यभावे सप्तदशविधं बन्धस्थानं ३, तदेव देशविरतस्याप्रत्याख्यानबन्धाभावे त्रयोदशविधं ४, तदेव प्रमत्ताप्रमत्तापूर्वकरणानां यतीनां प्रत्याख्यानावरणबन्धाभावान्नवविधम् ५, एतदेव हास्यादियुगलस्य भयजुगुप्सयो-

अपूर्वकरणचरमसमये बन्धोपरमात्पञ्चविधं ६, ततो-ऽनिवृत्तिकरणसंख्येयभागावसाने पुंवेदबन्धोपरमाच्चतुर्विधं ७, ततोऽपि तस्मिन्नेव संख्येयभागे क्षयमुपगच्छति सति क्रोधमानमायालोभसंज्वलनानां क्रमेण बन्धोपरमात् त्रिविध ८ द्विविध ९ एकविध १० चेति, तस्याप्यनिवृत्तिकरणचरमसमये बन्धोपरमान्मोहनीयस्याबन्धक । आयुषः सामान्येनैकविधं बन्धस्थानं चतुर्णामन्यतरत्, युगपद्द्वयोर्बन्धाभावो विरोधादिति । नाम्नोऽष्टौ बन्धस्थानानि, तद्यथा—त्रयोविंशतिस्तिर्यग्गतिप्रायोग्यं बध्नतस्तिर्यग्गतिरेकेन्द्रियजातिरौदारिकतैजसकार्मणानि हुण्डसंस्थानं वर्णगन्धरसस्पर्शास्तिर्यग्गतिप्रायोग्यानुपूर्वी अगुरुलघूपघातं स्थावरं बादरसूक्ष्मयोरन्यतरत् अपर्याप्तकं प्रत्येकसाधारणयोरन्यतरत् अस्थिरं अशुभम् दुर्भगम् अनादेयम् अयशःकीर्त्तिर्निर्माणमिति, इयमेकेन्द्रियापर्याप्तकप्रायस्य बध्नतो मिथ्यादृष्टेर्भवति १, इयमेव पराघातोच्छ्वाससहिता पञ्चविंशतिः, नवरमपर्याप्तकस्थाने पर्याप्तकमेव वाच्यम् २, इयमेव चातपोद्योतान्यतरसमन्विता षड्विंशतिः, नवरं बादरप्रत्येके एव वाच्ये ३, तथा देवगतिप्रायोग्यं बध्नतोऽष्टाविंशतिः, तथाहि—देवगतिः १ पञ्चेन्द्रियजातिः २ वैक्रिय ३ तैजस ४ कार्मणानि ५ शरीराणि समचतुरस्रम् ६ अङ्गोपाङ्गम् ७ वर्णादिचतुष्टयम् ११ आनुपूर्वी १२ अगुरुलघु १३ उपघात १४ पराघातो १५ उच्छ्वासः १६ प्रशस्तविहायोगतिः १७ त्रसम् १८ बादरम् १९ पर्याप्तकम् २० प्रत्येकम् २१ स्थिरास्थिरयोरन्यतरत् २२ शुभाशुभयोरन्यतरत् २३ सुभगम् २४ सुस्वरम् २५ आदेयम् २६ यशःकीर्त्त्ययशःकीर्त्त्योरन्यतरत् २७ निर्माणमिति २८, एषैव तीर्थकरनामसहिता एकोनत्रिंशत्, साम्प्रतं त्रिंशत्–देवगतिः १ पञ्चेन्द्रियजातिः २ वैक्रिया ३ हारका ४ङ्गोपाङ्ग ५-६ चतुष्टयम् तैजस ७ कार्मणं ८ संस्थानमाद्यम् ९ वर्णादिचतुष्कम् १३ आनुपूर्वी १४ अगुरुलघु १५ उपघातम् १६ पराघातम् १७ उच्छ्वासम् १८ प्रशस्तविहायोगतिः १९ त्रसम् २० बादरम् २१ पर्याप्तकम् २२ प्रत्येकम् २३ स्थिरम् २४ शुभम् २५ सुभगम् २६ सुस्वरम् २७ आदेयम् २८ यशःकीर्त्तिः २९ निर्माण ३० मिति च बध्नत एकं बन्धस्थानम् ६, एषैव त्रिंशत्तीर्थकरनामसहिता एकत्रिंशत् ७, एतेषां च बन्धस्थानानामेकेन्द्रियद्वीन्द्रियत्रीन्द्रियनरकगत्यादिभेदेन बहुविधता कर्मग्रन्थादवसेया, अपूर्वकरणादिगुणस्थानकत्रये देवगतिप्रायोग्यबन्धोपरमाद्यशःकीर्त्तिमेव बध्नत एकविधं बन्धस्थानमिति ८, तत ऊर्ध्वं नाम्नो बन्धाभाव इति । गोत्रस्य सामान्येनैकं बन्धस्थानं—उच्चनीचयोरन्यतरत् । यौगपद्येनोभयोर्बन्धाभावो विरोधादिति । तदेवं बन्धद्वारेण लेशतो बहुत्वमावेदितं कर्मणः, तच्च बहु कर्म प्रकृतं बद्धं प्रकटं वा, तत्कार्यप्रदर्शनात्, खलुशब्दो वाक्यालङ्कारेऽवधारणे वा, यदेव तत्कर्म ।

यदि नामैवं ततस्तदपनयनार्थं किं कर्त्तव्यमित्याह—

सच्चम्मि धिइं कुव्वहा, एत्थोवरए मेहावी सव्वं पावं कम्मं झोसइ । ( सू० ११२ )

सद्भ्यो हितः सत्यः—संयमस्तत्र धृतिं कुरुध्वं, सत्यो वा मौनीन्द्रागमो यथावस्थितवस्तुस्वरूपाविर्भावनात्, तत्र भगवदाज्ञया धृतिं कुमार्गपरित्यागेन कुरुध्वमिति, किं च–'एत्थो रए' इत्यादि, अत्र–अस्मिन् संयमे भगवद्वचसि वा उप–आ–मीप्येन रतो–व्यवस्थितो मेधावी–तत्त्वदर्शी सर्वम्—अशेषं पापं–कर्म संसारार्णवपरिभ्रमणहेतुं झोषयति—शोषयति क्षयं नयतीति यावत् । उक्तोऽप्रमादः । तत्प्रत्यनीकस्तु प्रमादः । तेन च कषायादिप्रमादेन प्रमत्तः किंगुणो भवतीत्याह—

अणेगचित्ते खलु अयं पुरिसे, से केयणं अरिहए पूरिएणए, से अण्णवहाए अण्णपरियावाए अण्णपरिग्गहाए जणवयवहाए जणवयपरियावाए जणवयपरिग्गहाए । ( सू० ११३ )

अनेकानि चित्तानि कृषिवाणिज्यावलगनादीनि यस्यासावनेकचित्तः, खलुरवधारणे, संसारसुखाभिलाषेणैकचित्त एव भवति, ' अयं पुरुष ' इति प्रत्यक्षगोचरीभूतः संसार्यपदिश्यते, अत्र च प्राग्धुपन्यस्तद्विघटिकया कपिलदरिद्रेण च दृष्टान्तो वाच्य इति । यश्चानेकचित्तो भवति स किं कुर्यादित्याह—'से केयण'मित्यादि, द्रव्यकेतनं चालिनी परिपूर्णक समुद्रो वेति, भावकेतनं लोभेच्छा तदसावनेकचित्तः केतनान्यभूतपूर्वं पूरयितुमर्हति, अर्थितया शक्याशक्यविचारात्–ऽशक्यानुष्ठानेऽपि प्रवर्त्तत इत्युक्तं भवति । स च लोभेच्छापूरणव्याकुलितमतिः किं कुर्यादित्याह— से अण्णवहाए' इत्यादि, स लोभपूरणप्रवृत्तोऽन्येषां प्राणिनां वधाय भवति, तथाऽन्येषां शारीरमानसपरितापनाय, तथाऽन्येषां द्विपदचतुष्पदादीनां परिग्रहाय, जनपदे भवा जानपदाः कालप्रष्ठादयो राजादयो वा तद्वधाय, मगधादिजनपदा वा तद्वधाय, तथा जनपदानां लोकानां परिवादाय—दस्युरयं पिशुनो वेत्येवं मर्मोद्घट्टनाय, तथा जनपदानां—मगधादीनां परिग्रहाय, प्रभवतीति सर्वत्राध्याहारः ।

किं च एते लोभप्रवृत्ता यथारिकाः क्रियाः कुर्वन्ति ते तथाभूताः पुत्रासने उतान्यथाऽपीति दर्शयति—

आसेवित्ता एतं ( वं ) अट्ठं इच्चेवेगे समुट्ठिया, तम्हा तं बिइयं नो सेवे, निस्सारं पासिय नाणी, उववायं चवणं णच्चा, अणण्णं चर माहणे, से न छणे न छणावए छणंतं नाणुजाणइ, निव्विंद नंदिं, अरए पयासु, अणोमदंसी, निसण्णे पावेहिं कम्मेहिं । ( सू० ११४ )

एवम्–अनन्तरोक्तमर्थमन्यवधपरिग्रहपरितापनादिकमासेव्य इत्येवेति लोभेच्छाप्रतिपूरणार्थेव एके भग्नराजादयः समुत्थिताः सम्यग्योगत्रिकेणोत्थिताः संयमानुष्ठानेनोद्यतास्तेनैव भवेन सिद्धिमासादयन्ति । संयमसमुत्थानेन च समन्वयाय कामभोगान् हिंसादीनि चास्रवद्वाराणि हित्वा किं विधेयमित्याह—'तम्हा' यस्माद्धान्तभोगतया कृतप्रतिप्रस्तस्माद्वोगलिप्सुतया तं द्वितीयं मृषावादमसंयमं वा नासेवेत । विषयार्थमसंयम सेव्यते, न च विषया निःसारा इति दर्शयति–'निस्सार' इत्यादि, सारो हि विषयग्रामस्य तत्प्राप्तौ तृप्तिस्तदभावाद्धि सारस्तद्दृष्ट्वा ज्ञानी–तत्त्ववेदी न विषयाभिलाषं विदध्यात न केवलं मनुष्याणां, देवानामपि विषयसुखास्पदमनित्यं जीवितमिति च दर्शयति—'उववायं चवणं णच्चा' उपपात–जन्म च्यवनं–पातस्तच्च ज्ञात्वा न विषयसङ्गोऽनुष्ठेयो भवेदिति, यतो निःसारो विषयग्रामः समस्तः संसारो

वा सर्वाणि च स्थानान्यशाश्वतानि, ततः किं कर्त्तव्यमित्याह-'अणण्ण' मित्यादि, मोक्षमार्गादन्योऽसंयमो नान्योऽनन्य-ज्ञानादिकस्तं चर 'माहण' इति मुनिः। किं च-'से न छणे' इत्यादि, स मुनिरनन्यसेवी प्राणिनो न क्षणुयात्-न हन्यात् नाप्यपरं घातयेत्-घातयन्तं न समनुजानीयात्।चतुर्थव्रतसिद्धये त्विदमुपदिश्यते-' निव्विंद ' इत्यादि, निर्विन्दस्व-जुगुप्सस्व विषयजनिता ' नंदी ' प्रमोदं , किम्भूतः सन् प्रजासु-स्त्रीषु अरक्तो-रागरहितो , भावयेश्च यथैते विषयाः किम्पाकफलोपमाः स्वपुर्याफलनिवन्धनकल्पाः, अतस्तदर्थे परिग्रहाग्रहयोगपराङ्मुखो भवेदिति। उत्तमधर्मपालनार्थमाह-'अणोम' इत्यादि, अवमम्-हीनं मिथ्यादर्शनाविरत्यादि तद्विपर्ययस्तमनवमं तद्द्रष्टुं शीलमस्येत्यनवमदर्शी सम्यग्दर्शनज्ञानचारित्रवान्, एवम्भूतः सन् प्रजानुगां नन्दिं निर्विन्दस्वेति संटङ्कः। यश्चानवमसंदर्शी स किम्भूतो भवतीत्याह-'निसण्ण' इत्यादि, पापोपादानेभ्यः कर्मभ्यो निषण्णो-निर्विण्णः पापकर्मभ्यः पापकर्मसु वा कर्त्तव्येषु निवृत्त इति यावत्।

किं च-

कोहाइमाणं हणिया य वीरे,

लोभस्स पासे निरयं महंतं ।

तम्हा य वीरे विरए वहाओ ,

छिंदिज्ज सोयं लहुभूयगामी ॥ १ ॥

गंथं परिण्णाय इहऽज्ज ! धीरे,

सोयं परिण्णाय चरिज्ज दंते ।

उम्मज्ज लद्धुं इह माणवेहिं,

नो पाणिणं पाणे समारभिज्जा ॥ २ ॥

त्ति बेमि ।

क्रोध आदिर्येषां ते क्रोधादयः मीयते-परिच्छिद्यतेऽनेनेति मानं-स्वलक्षणम् अनन्तानुबन्ध्यादिविशेषः,क्रोधादीनां मानं क्रोधादिमानं, क्रोधादिर्वा यो मानो-गर्वः क्रोधकारणस्तं हन्यात्, कोऽसौ?-वीरः, द्वेषापनोदमुक्त्वा रागापनोदार्थमाह-' लोहस्स' इत्यादि, लोभस्यानन्तानुबन्ध्यादेश्चतुर्विधस्यापि स्थितिं विपाकं च पश्य, स्थितिर्महती सूक्ष्मसम्परायानुयायित्वाद् विपाकोऽप्यप्रतिष्ठानादिनरकापत्तेर्महान्, यत आगमः-"मच्छा मणुआ य सत्तमिं पुढविं " ते च महालोभाभिभूताः सप्तमपृथ्वीभाजो भवन्तीति भावार्थः। यद्येव ततः किं कर्त्तव्यमित्याह-'तम्हा ' इत्यादि, यस्माल्लोभाभिभूताः प्राणिवधादिप्रवृत्तितया महानरकभाजो भवन्ति, तस्माद्वीरो लोमहतो -वधाद्विरतः स्यात्। किं च-'छिंदिज्ज' इत्यादि, शोकं भावश्रोतो वा छिन्द्यात्-अपनयेत्, किम्भूतो?-लघुभूतो-मोक्षः संयमो वा तं गन्तुं शीलमस्येति लघुभूतगामी, लघुभूतं वा कामयितुं शीलमस्येति लघुभूतकामी। पुनरप्युपदेशदानायाह-' गन्थ' मित्यादि, ग्रन्थम्-बाह्याभ्यन्तरभेदभिन्नं ज्ञपरिज्ञया परिज्ञाय इहाद्यैव कालानतिपातेन धीरः सन् प्रत्याख्यानपरिज्ञया परित्यजेत्। किं च 'साय' मित्यादि, विषयाभिष्वङ्गं संसारश्रोतस्तत् ज्ञात्वा दान्त इन्द्रिय-नोइन्द्रियदमेन संयमं चरेदिति। किमभिसन्धाय संयमं चरेदित्याह-'उम्मज्ज लद्धुं'मित्यादि, इह मिथ्यात्वादिशैवलाच्छादितसंसारहृदे जीवकच्छपः श्रुतिश्रद्धासंयमवीर्यरूपमुन्मज्जनम् आसाद्य-लब्ध्वा अन्यत्र सम्पूर्णमोक्षमार्गासम्भवात् मानुष्येष्वित्युक्तम्, क्त्वाप्रत्ययस्योत्तरक्रियासव्यपेक्षत्वादुत्तरक्रियामाह-'नो पाणिणं' मित्यादि, प्राणा विद्यन्ते येषां ते प्राणिनस्तेषां प्राणान्-पञ्चेन्द्रियत्रिविधबलोच्छ्वासनिःश्वासायुष्कलक्षणान् नो समारभेथाः-न व्यपरोपयेः, तदुपघातकार्यनुष्ठानं मा कृथा इत्युक्तं भवति । इति परिसमाप्तौ, ब्रवीमीति पूर्ववत् । शीतोष्णीयाध्ययने द्वितीयोद्देशकटीका समाप्तेति। उक्तो द्वितीयोद्देशकः ।

साम्प्रतं तृतीय आरभ्यते, अस्य चायमभिसम्बन्धः, इहानन्तरोद्देशके दुःखं तत्सहनं च प्रतिपादितं, न च तत्सहनेनैव संयमानुष्ठानरहितेन पापकर्माकरणतया वा श्रमणो भवतीत्येतत् प्रागुद्देशार्थाधिकारनिर्दिष्टमुच्यते, ततोऽनेन सम्बन्धेनायातस्यास्योद्देशकस्य सूत्रानुगमे सूत्रमुच्चारयितव्यम्, तच्चेदम्—

संधिं लोयस्स जाणित्ता आयओ बहिया पास, तम्हा न हंता न विघायए, जमिणं अन्नमन्नवितिगिच्छाए पडिलेहाए न करेइ पावं कम्मं किं तत्थ मुणी कारणं सिया ? । ( सू० ११५ )

( अत्र ' संधिं लोयस्स जाणित्ता ' अस्य पदस्य व्याख्या ' संधि ' शब्देऽस्मिन्नेव भागे गता । ) ' आयओ ' इत्यादि, यथा ह्यात्मनः सुखमिष्टमितरत्त्वन्यथा तथा बहिरपि-आत्मनो व्यतिरिक्तानामपि जन्तूनां सुखप्रियत्वमसुखाप्रियत्वं च पश्य-अवधारय । तदेवमात्मसमतां सर्वप्राणिनामवधार्य किं कर्त्तव्यमित्याह-' तम्हा ' इत्यादि, यस्मात्सर्वेऽपि जन्तवो दुःखद्विषः सुखलिप्सवस्तस्मात्तेषां न हन्ता-न व्यापादकः स्यान्नाप्यपरैस्तान् जन्तून् विविधैः-नानाप्रकारैरुपायैर्घातयेदिति। यद्यपि काश्चित् स्थूलान् सत्त्वान् स्वयं पाषण्डिनो न घ्नन्ति तथाऽप्यौद्देशिकसन्निध्यादिपरिभोगानुमतेरपरैर्घातयन्ति। न चैकान्तेन पापकर्माकरणमात्रतया श्रमणो भवतीति दर्शयति-' जमिणं ' मित्यादि, यदिदं-यदेतत् पापकर्माकरणाकारणं, किं तद् ?, दर्शयति-अन्योऽन्यस्य परस्परं या विचिकित्सा-आशङ्का परस्परतो भयं लज्जा वा तया ता वा प्रत्युपेक्ष्य परस्पराशङ्कयाऽपेक्षया वा पापं-पापोपादानं कर्मानुष्ठानं न करोति-न विधत्ते, किं: प्रश्ने क्षेपे वा । तत्र-तस्मिन् पापकर्माकरणे किं मुनिः कारणं स्यात् ?, किं मुनिरिति कृत्वा पापकर्म न करोति?, काक्वा पृच्छति,यदिवा-यदि नामासौ यथोक्तनिमित्तात्पापानुष्ठानविधायी न सञ्जातः किमेतावतैव मुनिरसौ ?, नैव मुनिरित्यर्थः। अद्रोहाध्यवसायो हि मुनिभावकारणं, स च तत्र न विद्यते, अपरापाध्यावेशात् , विनयो वा पृच्छति-यदिदं परस्पराशङ्कया आधाकर्मादिपरिहरणं तन्मुनिभावाङ्गतां यात्याहोस्विन्नेति ?, आचार्य आह-सौम्य ! निरस्तापरव्यापारः श्रृणु-' जमिणं ' मित्यादि , अपरोपाधिनिरस्तहेयव्यापारत्वमेव मुनिभावकारणमिति भावार्थः। यतः शुभान्तःकरणपरिणामव्यापारापादितक्रियस्य मुनिभावो नान्य-

थेति, अथ तावन्निश्चयनयाभिप्रायो व्यवहाराभिप्रायेण तुल्य ते-यो हि सम्यग्दृष्टिरुत्क्षिप्तपञ्चमहाव्रतभारस्तद्वहने प्रमा-दन्यपरसमानसाधुलज्जया गुर्व्वाद्याराध्यभयेन गौरवेण वा केनचिदाधाकर्मादि परिहरन् प्रत्युपेक्षणादिकाः क्रिया करोति। यदि च—तीर्थोद्भासनाय मासक्षपणातापनादिका जनविज्ञाता. क्रिया. करोति, तत्र तस्य मुनिभाव एव कारणं तद्वधापारापादितपारम्पर्यशुभाध्यवसायोपपत्तेः। तदेवं शु-भान्त.करणव्यापारविकलस्य मुनित्वे सदसद्भावः प्रदर्शितः।

कथं तर्हि नैश्चयिको मुनिभाव इत्यत आह—

समयं तत्थुवेहाए अप्पाणं विप्पसायए (आचा०)-विरागं रूवेहिं गच्छिज्जा महया खुड्डएहि य। ( सू० १६+ )

समभाव. समता तां तत्रोत्प्रेक्ष्य—पर्यालोच्य समताव्य-वस्थितो यत्करोति येन केनचित्प्रकारेणानेषणीयपरिह-रणं लज्जादिना जनविदितं चोपवासादि तत्सर्वं मुनिभाव-कारणमिति, यदिवा समयम्—आगमं तत्रोत्प्रेक्ष्य यदाम-मोक्तविधिनाऽनुष्ठानं तत्सर्वं मुनिभावकारणमिति भावार्थः। तेन चागमोत्प्रेक्षणेन समतोत्प्रेक्षया वाऽऽत्मानं विप्रसाद-येद्—विविध प्रसादयेदागमपर्यालोचनेन समतादृष्ट्या वा आत्मानं विविधैरुपायैरिन्द्रियप्रणिधानाप्रमादादिभि प्रसन्नं विदध्याद्। आत्मप्रसन्नता च संयमस्थस्य भवति।(आचा०) "आहारार्थे कर्म्म कुर्यादनिन्द्य-स्यादाहार. प्राणसन्धारणार्थम्। प्राणा धार्यास्तत्त्वजिज्ञासनाय,तत्त्वं ज्ञेय येन भूयो न भूयात्॥ १॥" सेवात्मगुप्तता कथं स्यादिति चेदाह—'विराग मित्यादि, विरञ्जन विरागस्त विराग रूपेषु मनोज्ञेषु चक्षुर्गोचरीभूतेषु गच्छेद्—यायात्, रूपमतीवाऽऽक्षेपकारी अतो रूपग्रहणम्, अन्यथा शेषविषयेष्वपि विरागं गच्छे-दित्युक्तं स्यात्। महता—दिव्यभावेन यद्व्यवस्थितं रूपं क्षु-ल्लकेषु वा मनुष्यरूपेषु सर्वत्र विराग कुर्यादिति। अथवा-दि-व्यादि प्रत्येक महत् क्षुल्लं चेति क्रिया पूर्ववत्। नागार्जुनी-यास्तु पठन्ति—"विसयम्मि पञ्चगम्मि वि,दुविहम्मि तियं तियं। भावओ सुट्ठु जाणित्ता, से न लिप्पइ दोसु वि॥ १॥" श-ब्दादिविषयपञ्चकेऽपि इष्टानिष्टरूपतया द्विविधे हीनमध्य-मोत्कृष्टभेदमित्येतत् भावतः परमार्थत सुष्ठु ज्ञात्वा स मुनि. पापेन कर्म्मणा द्वाभ्यामपि रागद्वेषाभ्यां न लिप्यते, तदकरणादिति भावः। ( आचा०। )

स्यात्-किमालम्ब्यैतत्कर्त्तव्यमित्याह—

"सव्वं हासं परिच्चज्ज, आलीणगुत्तो परिव्वए। पुरिसा!-तुममेव तुमं, किं बहिया मित्तमिच्छसि? ॥ १ ॥" ( सू० ११७× )

पुनरप्युपदेशदानायाह—'सव्व' मित्यादि, सर्वं हास्यं तदास्पदं वा परित्यज्य आङ् मर्यादयेन्द्रियनिरोधादिकया लीन आलीनो गुप्तो मनोवाक्कायकर्म्मभि कूर्म्मवद् वा-संवृतगात्र आलीनश्चासौ गुप्तश्चालीनगुप्त स एवम्भूत परि —सम न्ताद् व्रजेत् परिव्रजेत्—संयमानुष्ठानविधायी भवेदिति। त-स्य च मुमुक्षोरात्मसामर्थ्यात् संयमानुष्ठानं फलवद्भवति न परोपरोधेनेति दर्शयति—'पुरिसा' इत्यादि, यदिवा-त्यक्त-गृहपुत्रकलत्रधनधान्यहिरण्यादितया अकिञ्चनस्य समतृण-मणिमुक्तालेष्टुकाञ्चनस्य मुमुक्षोरुपसर्गव्याकुलितमतेः कदा-चिन्मित्राद्याशंसा भवेत्सदपनोदार्थमाह— पुरिसा' इत्यादि, पूर्णं सुखदु खयो पुरि शयनाद्वा पुरुषो—जन्तु , पुरुष-द्वागमन्त्रणं तु पुरुषस्यैवोपदेशार्हत्वात्तदनुष्ठानसमर्थत्वाच्चे-ति कश्चित्ससारदुःखिन्नो विषमस्थितो वाऽऽत्मानमनुशास्ति, परेण वा साध्वादिनाऽनुशास्यते—यथा हे पुरुष!-हे जीव! तव सदनुष्ठानविधायित्वात्त्वमेव मित्र, विपर्ययाच्चामित्रं, किमिति बहिर्मित्रमिच्छसि?—मृगयसे, यतो ह्युपकारि मित्रं, स चोपकारः पारमार्थिकात्यन्तिकैकान्तिकगुणार्पणं सन्मार्गपतितमात्मानं विहाय नान्येन शक्यो विधातुं, योऽपि संसारसाहाय्योपकारितया मित्राभासाभिमानस्तन्मोहवि-जृम्भितम्, यतो महाव्यसनोपनिपाताऽर्णवपतनहेतुत्वाद-मित्र एवासौ। इदमुक्तं भवति-आत्मैवात्मनोऽप्रमत्तो मित्रम्, आत्यन्तिकैकान्तिकपरमार्थसुखोत्पादनात्, विपर्ययाच्च वि पर्ययो, न बहिर्मित्रमन्वेष्टव्यमिति. यस्त्वयं बाह्यो मित्रामि-त्रविकल्प. सोऽदृष्टोदयनिमित्तत्वादौपचारिक इति. उक्तं हि "दुप्पत्थिओ, अमित्त, अप्पा सुपत्थिओ अ ते मित्त। सु-हदुक्खकारणाओ, अप्पा मित्तं अमित्तं च॥ १॥" तथा- "अप्येकं मरणं कुर्यात्, संक्रुद्धो बलवानरिः। मरणानि त्वनन्तानि, जन्मानि च करोत्ययम्॥ १॥"

यो हि निर्वाणनिर्वर्त्तकं व्रतमाचरति स आत्मनो मित्रम्। च चैवम्भूत. कुतोऽवगन्तव्य ? किंफलश्चेत्याह—

जं जाणिज्जा उच्चालइयं तं जाणिज्जा दूरालइयं, जं जाणिज्जा दूरालइयं तं जाणिज्जा उच्चालइयं, पुरिसा! अ-त्ताणमेवं अभिणिगिज्झ, एवं दुक्खा पमुच्चसि, पुरिसा! ( आचा० ) सहिओ धम्ममाया य मेयं समणुपस्सइ। ( सू० ११८× )

यं-पुरुषं जानीयात्—परिच्छिन्द्यात्कर्म्मणा विषयसङ्गा-ना चोच्चालयितारम्-अपनेतारं तं जानीयाद् दूरालयिक-मिति-दूरं सर्वहेयधर्म्मेभ्य इत्यालयो दूरालय.—मोक्षस्त-न्मार्गो वा स विद्यते यस्येति मत्वर्थीयष्ठन् दूरालयिकस्त-मिति। हेतुहेतुमद्भावं दर्शयितु गतप्रत्यागतसूत्रमाह-'ज जाणिज्जे' त्यादि, यं जानीयाद् दूरालयिक त जानीयादुच्चा-लयितारमिति। एतदुक्तं भवति-यो हि कर्म्मणा तदास्र-वद्वाराणा चोच्चालयिता-अपनेता स मोक्षमार्गव्यवस्थि-तो मुक्तो वेति, यो वा सन्मार्गानुष्ठायी स कर्म्मणामुच्चा-लयितेति, स च आत्मनो मित्रमतोऽपदिश्यते-'पुरिसा' इत्यादि, हजीव! आत्मानमेवाऽभिनिगृह्य धर्मध्यानाद्बहि-र्विषयाभिष्वङ्गाय निःसरन्तमवरुध्य तत एवम्-अनेन प्र-कारेण दु खात्मकाशादात्मानं प्रमोक्ष्यसि। एवमात्मा क-र्म्मणाम् उच्चालयिताऽऽत्मनो मित्रं भवति। अपि च-'पु-रिसा' इत्यादि. ('सच्च' मित्यादि 'सच्च' शब्देऽस्मि-न्नेव भागे गतम्।) किं च-'सहि' त्यादि. सहितो-ज्ञानादि-युक्त सह हितेन वा युक्त साहित धर्म्म-श्रुतचारित्राख्यम् आदाय-गृहीत्वा. किं करोतीत्याह-श्रेय -पुण्यमात्महित वा सम्यग्-अविपरीततयाऽनुपश्यति समनुपश्यति।

उक्तोऽप्रमत्त तद्गुणाश्च. तद्विपर्ययमाह-

दुहओ जीवियस्स परिवंदणमाणणपूयणाए, जंसि ए-गे पमायंति। ( ११९ )

द्विधा-रागद्वेषप्रकारद्वयेनात्मपरनिमित्तमैहिकामुष्मिकार्थं वा, यद्वा-द्वाभ्यां-रागद्वेषाभ्यां हतो द्विहतो दुष्टं हतो वा दुर्हतः, स किं कुर्याद् ?-जीवितस्य कदलीगर्भनिःसारस्य तडिल्लतासमुल्लसितचञ्चलस्य परिवन्दनमाननपूजनार्थं हिंसादिषु प्रवर्त्तते. परिवन्दनं-परिसंस्तवस्तदर्थमाचेष्टते, लावकादिमांसोपभोगपुष्टं सर्वाङ्गोपाङ्गसुन्दरमालोक्य मां जना सुखमेव परिवन्दिष्यन्ते, श्रीमान् जीयास्त्वं चहूनि वर्षशतसहस्राणीत्येवमादि परिवन्दनं; तथा माननार्थं कर्मोपचिनोति. दृष्टे उरुबलपराक्रमे मामन्येऽभ्युत्थानविनयासनदानाञ्जलिप्रग्रहैर्मानयिष्यन्तीत्येवमादि माननं, तथा पूजनार्थमपि प्रवर्त्तमानाः कर्माश्रवैरात्मानं भावयन्ति, मम हि कृतविधस्योपचितद्रव्यप्राग्भारस्य परे स्नानमानसत्कारप्रणामसेवाविशेषैः पूजां करिष्यन्तीत्यादि पूजनं, तदेवमर्थं कर्मोपचिनोतीति । किं च-'जंसि एगे' इत्यादि. यस्मिन् परिवन्दनादिनिमित्ते एके रागद्वेषोपहताः प्रमाद्यन्ति, न ते आत्मने हिता. ।

एतद्विपरीतं त्वाह-

सहिओ दुक्खमत्ताए, पुट्ठो नो झंझाए, पासिमं दविए लोकालोकपवंचाओ मुच्चइ त्ति बेमि । ( १२० )

सहितो-ज्ञानादिसमन्वितो हितयुक्तो वा दुःखमात्रया उपसर्गजनितया व्याध्युद्भवया वा स्पृष्टः सन् ' नो झंझाए ' त्ति-नो व्याकुलितमतिर्भवेत्, तदपनयनाय नोद्यच्छेद्, इष्टविषयावाप्तौ रागझञ्झा अनिष्टावाप्तौ च द्वेषझञ्झेति, तामुभयप्रकारामपि व्याकुलतां परित्यजेदिति भावः । किं च-"पासिमं' मित्यादि, यदुक्तमुद्देशकादेरारभ्यानन्तरसूत्रं यावत् तमिममर्थं पश्य-परिच्छिन्धि कर्त्तव्याकर्त्तव्यतया विवेकेनावधारय. कोऽसौ ?-द्रव्यभूतो-मुक्तिगमनयोग्यः, साधुरित्यर्थः । एवंभूतश्च कं गुणमवाप्नोति ?-आलोक्यत इत्यालोकः, कर्मणि घञ्, लोके चतुर्दशरज्ज्वात्मके आलोको लोकालोकस्तस्य प्रपञ्चः-पर्याप्तकापर्याप्तकसुभगादिद्वन्द्वविकल्पः, तद्यथा-नारको नारकत्वेनावलोक्यते, एकेन्द्रियादिरेकेन्द्रिय ( यादि ) त्वेन, एवं पर्याप्तकापर्याप्तकाद्यपि वाच्यं, तदेवम्भूतात्प्रपञ्चान्मुच्यते चतुर्दशजीवस्थानान्यतरव्यपदेशार्हो न भवतीति यावद् । इति. परिसमाप्तौ, ब्रवीमीति पूर्ववत् । इति शीतोष्णीयाध्ययने तृतीयोद्देशकटीका समाप्ता ।

उक्तस्तृतीयोद्देशकः, साम्प्रतं चतुर्थ आरभ्यते, अस्य चायमभिसम्बन्धः-इहानन्तरोद्देशके पापकर्माकरणतया दुःखसहनादेव केवलाच्छ्रमणो न भवतीति अपि तु निष्प्रत्यूहसंयमानुष्ठानादित्येतत्प्रतिपादितं, निष्प्रत्यूहता च कषायवमनाद्भवति, तदधुना प्रागुद्देशार्थाधिकारनिर्दिष्टं प्रतिपाद्यते तदनेन सम्बन्धेनायातस्यास्योद्देशकस्य सूत्रानुगमे सूत्रमुच्चारयितव्यम्, तच्चेदम्-

से वंता कोहं च माणं च मायं च लोभं च, एयं पासगस्स दंसणं, उवरयसत्थस्स पलियंतकरस्स, आयाणं सगडब्भि । ( सू० १२१ )

स-ज्ञानादिसहितो दुःखमात्रास्पृष्टोऽव्याकुलितमतिर्द्रव्यभूतो लोकालोकप्रपञ्चात् मुक्तः स्वपरापकारिणं क्रोधं च वमिता 'तुयम् उद्दिण' इत्यस्मात्ताच्छीलिकस्तृन्, तद्योगे च षष्ठ्याः प्रतिषेधे क्रोधशब्दाद् द्वितीया, उक्तं चैतद्, यो हि यथोक्तसंयमानुष्ठायी सोऽचिरात् क्रोधं वमिष्यति, 'एवमुत्तरत्रापि यथासम्भवमायोज्यम् । तत्राऽऽत्माऽऽत्मीयोपघातकारिणि क्रोधकर्मविपाकोदयात्क्रोधः. जातिकुलरूपबलादिसमुत्थो गर्वो मानः, परवञ्चनाध्यवसायो माया, तृष्णापरिग्रहपरिणामो लोभः, क्षपणोपशमक्रममाश्रित्य च क्रोधादिक्रमोपन्यासः, अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसञ्ज्वलनस्वगतभेदाविर्भावनाय व्यस्तनिर्देशः, चशब्दस्तु पर्वतपृथ्वीरेणुजलराजिलक्षणलक्षकः क्रोधस्य, शैलस्तम्भास्थिकाष्ठतिनिशलतालक्षणलक्षको मानस्य, वंशकुडङ्गीमेषशृङ्गगोमूत्रिकाऽवलेखकलक्षणलक्षको मायायाः, कृमिरागकर्दमखञ्जनहरिद्रालक्षणसूत्रको लोभस्य, तथा यावज्जीवसंवत्सरचातुर्मासपक्षस्थित्याविर्भावकश्चेति । तदेवं क्रोधमानमायालोभवमनादेव पारमार्थिकः श्रमणभावो, न तत्सम्भव सति, यत उक्तम्-'सामण्णमणुचरंतस्स कसाया जस्स उक्कडा हुंति । मन्नामि उच्छुपुप्फं,व निष्फलं तस्स सामण्णं ॥१॥ जं अज्जिअं चरित्तं,देसूणाए वि पुव्वकोडीए । तं पि कसाइयमित्तो,हारेइ नरो मुहुत्तेणं ॥ २ ॥" । स्वमनीषिकापरिहारार्थं गौतमस्वाम्याह-' एय ' मित्यादि, एतद्-यत्कषायवमनमनन्तरमुपादेशि तत् पश्यकस्य दर्शनं-सर्वं निरावरणत्वात्पश्यति-उपलभत इति पश्यः स एव पश्यकः-तीर्थकृत् श्रीवर्द्धमानस्वामी तस्य दर्शनम्-अभिप्रायः, यद्वा-दृश्यते यथावस्थितं वस्तुतत्त्वमनेनेति दर्शनम्-उपदेशो न स्वमनीषिका । किम्भूतस्य पश्यकस्य दर्शनमित्याह-' उवरय ' इत्यादि, उपरतं द्रव्यभावशस्त्रं यस्यासावुपरतशस्त्रः शस्त्राद्वोपरतः शस्त्रोपरतः, भावे शस्त्रं त्वसंयमः कषाया वा, तस्मादुपरतः । इदमुक्तं भवति-तीर्थकृतोऽपि कषायवमनमृते न निरावरणसकलपदार्थग्राहिपरमज्ञानावाप्तिः तदभावे च सिद्धिवधूसमागमसुखाभावः, एवमन्येनापि मुमुक्षुणा तदुपदेशवर्त्तिना-तन्मार्गानुयायिना कषायवमनं विधेयमिति । शस्त्रोपरमकार्यं दर्शयन् पुनरपि तीर्थकरविशेषणमाह-' पलियंतकरस्स ' पर्यन्तं कर्मणां संसारस्य वा करोति तच्छीलश्चेति, पर्यन्तकरस्तस्यैतद् दर्शनमिति सण्टङ्कः । यथा च तीर्थकृत् संयमापकारिकषायशस्त्रोपरमात्कर्मपर्यन्तकृदेवमन्योऽपि तदुक्तानुसारीति ( आचा० ) तीर्थकरोपदेशेनापि परकृतकर्मक्षपणोपायाभावात् स्वकृतग्रहणं तीर्थकरेणापि परकृतकर्मक्षपणोपायो न व्यवस्थापयितुं शक्यत इति चेत्, न, तज्ज्ञानस्य सकलपदार्थसत्ताव्यापित्वेनावस्थानात् ।

ननु च हेयोपादेयपदार्थहानोपादानोपदेशो योऽसौ न सर्वज्ञ इति सङ्किरामहे, एतावतैव परोपकारकर्तृत्वेन तीर्थकरस्योपपत्तेः, तदेतन्न सतां मनांस्यानन्दयति, युक्तिविकलत्वात्, यतः सम्यग्ज्ञानमन्तरेण हिताहितप्राप्तिपरिहारोपदेशासम्भवो यथावस्थितैकपदार्थपरिच्छेदश्च न सर्वज्ञतामन्तरेणेति दर्शयितुमाह-

जे एगं जाणइ से सव्वं जाणइ, जे सव्वं जाणइ से एगं जाणइ । ( सू० १२२ )

च-कश्चिदविशेषित एकं—परमाण्वादि द्रव्यं पश्चात्पुरस्कृतपर्यायं स्वपरपर्यायं वा जानाति—परिच्छिनत्ति स सर्वं स्वपरपर्यायं जानाति, अतीतानागतपर्यायिद्रव्यपरिज्ञानस्य समस्तवस्तुपरिच्छेदाविनाभावित्वात् । इदमेव हेतुहेतुमद्भावेन लगयितुमाह—' जे सव्व ' मित्यादि, यः सर्वं संसारोदरविवरवर्त्ति वस्तु जानाति स एकं घटादि वस्तु जानाति, तस्यैवातीतानागतपर्यायभेदैस्तत्तत्स्वभावापत्त्याऽनाद्यनन्तकालतया समस्तवस्तुस्वभावगमनादिति । तदुक्तम्-" एगदवियस्स जे अत्थपज्जवा वयणपज्जवा वा वि । तीयाणागयभूया, तावइयं तं हवइ दव्वं ॥ १ ॥ "

तदेवं सर्वज्ञस्तीर्थकृत्, सर्वज्ञश्च सम्भविनमेव सर्वसत्त्वोपकारिणमुपदेशं ददातीति दर्शयति—

**सव्वओ पमत्तस्स भयं, सव्वओ अप्पमत्तस्स नत्थि भयं जे एगं नामे से बहुं नामे , जे बहुं नामे से एगं नामे । दुक्खं लोगस्स जाणित्ता वंता लोगस्स संजोगं जंति धीरा महाजाणं , परेण परं जंति, नावकंखंति जीवियं । ( सू० २२३ )**

सर्वतः—सर्वप्रकारेण द्रव्यादिना यद्भयकारि कर्मोपादीयते ततः प्रमत्तस्य-मद्यादिप्रमादवतो भयं-भीतिः, तद्यथा-प्रमत्तो हि कर्मोपचिनाति द्रव्यतः सर्वैरात्मप्रदेशैः, क्षेत्रतः षड्दिग्व्यवस्थितं, कालतोऽनुसमयं, भावतो हिंसादिभिः, यदिवा-सर्वत्र-सर्वतो भयमिहामुत्र च , एतद्विपरीतस्य च नास्ति भयमिति । आह च-' सव्वओ ' इत्यादि, सर्वतः-ऐहिकामुष्मिकापायाद् अप्रमत्तस्य-आत्महितेषु जाग्रतो नास्ति भयं संसारापसदात्तत्काशात्कर्मणो वा । अप्रमत्तता च कषायाभावाद्भवति, तदभावाच्चाशेषमोहनीयाभावः, ततोऽप्यशेषकर्मक्षयः , तदेवमेकाभावे सति बहूनामभावसम्भवः । ( आचा० । ) ' दुक्ख ' मित्यादि, ' दुःखम् ' असातोदयस्तत्कारणं वा कर्म तद् ' लोकस्य ' भूतग्रामस्य ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया च यथा तदभावो भवति तथा विदध्यात् । कथं तदभावः ? का वा तदभावे गुणावाप्तिरित्युभयमपि दर्शयितुमाह-' वंता ' इत्यादि-वान्त्वा-त्यक्त्वा लोकस्य-आत्मव्यतिरिक्तस्य धनपुत्रशरीरादेः संयोगं-ममत्वपूर्वकं सम्बन्धं शारीरदुःखादिहेतुं तद्धेतुकर्मोपादानकारणं च यान्ति-गच्छन्ति धीराः-कर्मविदारणसहिष्णवः । यान्त्यनेन मोक्षमिति यानं-चारित्रं तच्चानेकभवकोटिदुर्लभं लब्धमपि प्रमादतस्तथाविधकर्मोदयात् समग्रावाप्तनिर्विसमतामवाप्नोत्यतो महच्छब्देन विशेष्यते,महच्च तद्यानं च महायानम् यदिवा-महद्यानं-सम्यग्दर्शनादित्रयं यस्य स महायानो-मोक्षस्तं यान्तीति सम्बन्धः । स्यात्-किमेकेनैव भवेनावाप्तमहायानदेशप्रयचारित्रस्य मोक्षावाप्तिरुत पारम्पर्येण ?, उभयथाऽपि ब्रूमः, तद्यथा—अवाप्तनद्येऽप्येकस्य कालस्य लघुकर्मणस्तेनैव भवेन मुक्त्यवाप्तिरपरस्य त्वन्यथेति दर्शयति—' परेण पर ' मित्यादि, सम्यक्त्वप्रतिपिद्दनरकगतितिर्यग्गतयो ज्ञानावाप्तियथाशक्तिप्रतिपालितसंयमा आयुषः क्षयात् सौधर्मादिकं देवलोकमवाप्नुवन्ति, ततोऽपि पुण्यशेषतया कर्मभूम्यार्यक्षेत्रसुकुलोत्पत्त्यारोग्यश्रद्धाश्रवणसंयमादिकमवाप्य विशिष्टतरं स्वर्गमनुत्तरोपपातिकपर्यन्तमधितिष्ठन्ति, पुनरपि ततश्च्युतस्यावाप्तमनुष्यादिसंयमभावस्याशेषकर्मक्षयान्मोक्ष , तदेवं परेणसंयमेनोद्दिष्टविधिना परं—स्वर्गं पारम्पर्येणापवर्गमपि यान्ति यदि वा-परेण—सम्यग्दृष्टिगुणस्थानेन परं-देशविरत्याद्ययोगिकेवलिपर्यन्तं गुणस्थानकमधितिष्ठन्ति , परेण वाऽनन्तानुबन्धिक्षयेणोल्लसत्करण्डकस्थानाः परं—दर्शनमोहनीयचारित्रमोहनीयक्षयं घातिभवोपग्राहिकर्मणां वा क्षयमवाप्नुवन्ति , एवंविधाश्च कर्मक्षपणोद्यता जीवितं कियद्वृत्तं किं वा शेषमित्येवं नावकाङ्क्षन्ति , दीर्घजीवित्वं नाभिलषन्तीत्यर्थः ,असंयमजीवितं वा नावकाङ्क्षन्तीति । यदिवा-परेण परं यान्तीत्युत्तरोत्तरां तेजोलेश्यामवाप्नुवन्तीति । उक्तं च—"जे इमे अज्जत्ताए समणा निग्गंथा विहरंति एए णं कस्स तेयलेस्सं वीईवयंति ?, गोयमा !, मासपरियाए समणे निग्गंथे वाणमन्तराणं देवाणं तेयलेस्सं वीइवयइ , एवं दुमासपरियाए असुरिंदवज्जियाणं भवणवासीणं देवाणं , तिमासपरियाए असुरकुमाराणं देवाणं , चउमासपरियाए गहगणनक्खत्ततारारूवाणं जोइसियाणं देवाणं , पञ्चमासपरियाए चंदिमसूरियाणं जोइसिंदाणं जोइसराईणं तेउलेस्सं , छम्मासपरियाए सोहम्मीसाणाणं देवाणं , सत्तमासपरिआए सणंकुमारमाहिंदाणं देवाणं , अट्ठमासपरियाए बंभलोगलंतगाणं देवाणं , नवमासपरिआए महासुक्कसहस्साराणं देवाणं , दसमासपरियाए आणयपाणयआरणच्चुआणं देवाणं, एगारसमासपरियाए गेवेज्जाणं, बारसमासे समणे निग्गंथे अणुत्तरोववाइयाणं देवाणं तेयलेसं वीइवयइ, तेण परं सुक्के सुक्काभिजाई भवित्ता तओ पच्छा सिज्झइ । "

यश्चानन्तानुबन्ध्यादिक्षपणोद्यतः स किमेकक्षयादिव प्रवर्त्तते उत नेत्याह—

**एगं विगिंचमाणे पुढो विगिंचइ, पुढो वि,सड्ढी आणाए मेहावी लोगं च आणाए अभिसमिच्चा अकुओभयं, अत्थि सत्थं परेण परं, नत्थि असत्थं परेण परं । ( सू०×१२४ )**

एकम्-अनन्तानुबन्धिनं क्रोधं क्षपकश्रेण्यारूढः क्षपयन् पृथग्—अन्यदपि दर्शनादिकं क्षपयति, बद्धायुष्कोऽपि दर्शनसप्तकं यावत्क्षपयति, पृथगन्यदपि क्षपयत्यवश्यमनन्तानुबन्धिनामकं क्षपयति पृथग्-अन्यद् क्षयान्यथानुपपत्तेः , किंगुण इत्थंश्रेणियोग्यो भवतीत्याह-' सड्ढी ' इत्यादि, श्रद्धा-मोक्षमार्गोद्यमेच्छा विद्यते यस्यासौ श्रद्धावान् आज्ञया—तीर्थकरप्रणीतागमानुसारेण यथोक्तानुष्ठानविधायी मेधावी-अप्रमत्तयतिः मर्यादाव्यवस्थितः श्रेण्यर्हो नापर इति । किं च-'लोगं च' इत्यादि, चः समुच्चये, लोकं-षड्जीवनिकायात्मकं कषायलोकं वा आज्ञया- मौनीन्द्रागमोपदेशेन अभिसमेत्य-ज्ञात्वा षड्जीवनिकायलोकस्य यथा न कुतश्चिद्भिमित्ताद्भयं भवति तथा विधेयम् , कषायलोकप्रत्याख्यानपरिज्ञानाच्च तस्यैव परिहर्त्तुर्न कुतश्चिद्भयमुपजायत इति, लोकं वा चराचरमाज्ञया-आगमाभिप्रायेणाभिसमेत्य न कुतश्चिदैहिकामुष्मिकापायसंदर्शनतो भयं भवति । ( आचा० । )

एतदेव प्रतिसूत्रं लगयितव्यमित्याह—

**जे कोहदंसी से माणदंसी , जे माणदंसी से मायादंसी,**

जे मायादंसी से लोभदंसी, जे लोभदंसी से पिज्जदंसी, जे पिज्जदंसी से दोसदंसी, जे दोसदंसी से मोहदंसी, जे मोहदंसी से गब्भदंसी, जे गब्भदंसी से जम्मदंसी, जे जम्मदंसी से मारदंसी, जे मारदंसी से नरयदंसी, जे नरयदंसी से तिरियदंसी, जे तिरियदंसी से दुक्खदंसी। से मेहावी अभिणिवट्टिज्जा कोहं च माणं च मायं च लोभं च पिज्जं च दोसं च मोहं च गब्भं च जम्मं च मारं च नरयं च तिरियं च दुक्खं च। एयं पासगस्स दंसणं उवरयसत्थस्स पलियंतकरस्स, आयाणं निसिद्धा सगडब्भि, किमत्थि ओवाही पासगस्स? न विज्जइ?, नऽत्थि त्ति बेमि। (सू० १२५)

यो हि क्रोधं स्वरूपतो वेत्ति अनर्थपरित्यागरूपत्वाज्ज्ञानस्य परिहरति च स मानमपि पश्यति परिहरति चेति। यदिवा-यः क्रोधं पश्यत्याचरति स मानमपि पश्यति, मानाध्मातो भवतीत्यर्थः, एवमुत्तरत्रापि आयोज्यं, यावत् स दुःखदर्शीति, सुगमत्वान्न विव्रियते। साम्प्रतं क्रोधादेः साक्षान्निवर्त्तनमाह-'से' इत्यादि, स मेधावी अभिनिवर्त्तयेद् व्यावर्त्तयेत्, किं तत्?-'कोधमि'त्यादि यावद् दुःखं सुगमत्वाद्व्याख्यानाभावः, स्वमनीषिकापरिहारार्थमाह 'एय' मित्यादि, एतद्-अनन्तरोक्तमुद्देशकादेरारभ्य पश्यकस्य-तीर्थकृतो दर्शनम्-अभिप्रायः, किम्भूतस्य?-उपरतशस्त्रस्य पर्यन्तकृतः, पुनरपि किम्भूतोऽसौ?-'आयाण' मित्यादि, आदानं-कर्मोपादानं निरुध्य पूर्वस्वकृतकर्मभिदसाविति। किं चास्य भवतीत्याह-'किमत्थी' त्यादि, पश्यकस्य-केवलिनः उपाधिः-विशेषणं उपाधीयत इति वोपाधिः, द्रव्यतो हिरण्यादिर्भावतोऽष्टप्रकारं कर्म्म, स द्विविधोऽप्युपाधिः किमस्त्याहोस्विन्न विद्यते?, नास्तीति, एतदहं ब्रवीमि, सुधर्म्मस्वामी जम्बूस्वामिनं कथयति, यथा सोऽहं ब्रवीमि येन मया भगवत्पादारविन्दमुपास(य)ता सर्वमेतदश्रावि तद्भवते तदुपदिष्टार्थानुसारितया कथयामि, न पुनः स्वमनिविकल्पशिल्परचनयेति। गतः सूत्रानुगमः, तद्गतौ च समाप्तश्चतुर्थोद्देशकः। तत्समाप्तौ चातीतानागतनयविचारनिर्देशात् समाप्तं शीतोष्णीयाध्ययनमिति। आचा० १ श्रु० ४ अ० १ उ०।

सीओसिणच्चाइन्-शीतोष्णत्यागिन्-त्रि०। सुखदुःखानभिलाषुके, शीतोष्णरूपं वा परिसहमसहमाने, आचा० १ श्रु० ३ अ० १ उ०।

सीओसिणफाससह-शीतोष्णस्पर्शसह-त्रि०। शीतं चोष्णं च शीतोष्णे तयोः स्पर्शस्तं सहत इति शीतोष्णस्पर्शसहः। शीतस्पर्शोष्णस्पर्शजनितवेदनामनुभवति, आचा० १ श्रु० ३ अ० १ उ०।

सीओसिणा-शीतोष्णा-स्त्री०। शीतोष्णरूपोभयस्पर्शपरिणामायां वेदनायाम्, प्रज्ञा० ६ पद। प्रज्ञा०।

सीतंत-सीदत्-त्रि०। संयमापसन्ने, "सीतंतो णाम जो थिरसंघयणो धितिसंपण्णो हट्ठो पण उज्जमति समणादि"। नि० चू० १ उ०।

सीधु-सीधु-न०। मद्यभेदे, उपा० ८ अ०। जं०।

सीभर-सीभर-त्रि०। मुखेन सी इति शब्दं कुर्वति, स्था० ३ उ०।

सीमंकर-सीमङ्कर-त्रि०। सीमां-मर्यादां करोति यमा एवं वर्त्तितव्यमेवं नेति सीमङ्करः। रा०। मर्यादाकारिणि, स्था० ६ ठा० ३ उ०। सूत्र०। ज्ञा०। जम्बूद्वीपे आगामिन्यामवसर्पिण्यामैरवते वर्षे भविष्यति द्वितीयकुलकरे, स०। जम्बूद्वीपे भारते वर्षेऽस्यामवसर्पिण्यां जाते पञ्चदशानां कुलकराणां चतुर्थे कुलकरे, जं० २ वक्ष०। जम्बूद्वीपे भरतक्षेत्रे आगामिन्या मुत्सर्पिण्यां भविष्यति प्रथमे तीर्थकरे, स्था० १० ठा० ३ उ०।

सीमंत-सीमन्त-पुं०। प्रथमपृथिव्यां प्रथमप्रस्तटे मध्यभागवर्त्तिनि वृत्ते नरकेन्द्रे, स०।

सीमन्तए णं णरए पणयालीसं जोयणसयसहस्साइं आयामविक्खंभेणं पण्णत्ते। (स० ४५ सम०। स्था०।)

सीमंतगो णरगो रयणप्पभाए पुढवीए पढमो। नि० चू० १ उ०।

सीमंतगप्पभ-सीमन्तकप्रभ-पुं०। रत्नप्रभायां पृथिव्यां सीमन्तकस्य नरकेन्द्रकस्य पूर्वास्यां दिशि नरकेन्द्रके; "सीमन्तगप्पभो खलु निरओ सीमन्तगस्स पुव्वेणं"। स्था० ६ ठा० ३ उ०।

सीमंतगमज्झिमअ-सीमन्तकमध्यमक-पुं०। सीमन्तस्य नरकेन्द्रस्योत्तरनरकेन्द्रके, स्था०।

सीमन्तगमज्झिमओ उत्तरपासे मुणेयव्वो। स्था० ६ ठा० ३ उ०।

सीमंतगावसिट्ठ-सीमन्तकावशिष्ट-पुं०। रत्नप्रभायां प्रथमनरकेन्द्रकस्य दक्षिणपार्श्ववर्तिनि नरकेन्द्रके, स्था० ६ ठा०।

सीमंतावत्त-सीमन्तावर्त्त-पुं०। सीमन्तस्य नरकेन्द्रकस्य पश्चिमदिशि नरकेन्द्रके; स्था०।

सीमन्तावत्तो पुण निरओ सीमन्तगस्स अवरेणं। स्था० ६ ठा० ३ उ०।

सीमंतिऊण-सीमान्तयित्वा-अव्य०। विक्रीयेत्यर्थे, इति बृहत्कल्पचूर्णिकारः। बृ० ३ उ०।

सीमंतिणी-सीमन्तिनी-स्त्री०। सीमन्तः पासोऽस्या अस्तीति सीमन्तिनी। प्रवरयोषिति, आचा० १ श्रु० २ अ० ४ उ०।

सीमंधर-सीमन्धर-त्रि०। सीमां-मर्यादां पूर्वपुरुषकृतां धारयति नात्मनो विलोपयति यः स तथा। कृतमर्यादापालके, स्था० ६ ठा० ३ उ०। ज्ञा०। रा०। औ०। जम्बूद्वीपे भरतक्षेत्रे आगामिन्यामुत्सर्पिण्यां भविष्यति द्वितीयकुलकरे, स्था० १० ठा० ३ उ०। जम्बूद्वीपे ऐरवते भविष्यति तृतीयकुलकरे, स०। महाविदेहस्य पूर्वविदेहे वर्त्तमाने तीर्थकरे, आ० क० ८ अ०। सीमन्धरस्वामिमातृनामादि, तथा महाविदेहे श्रीसीमन्धरस्वामिस्थाने यस्तीर्थकर उत्पत्स्यते तस्य किं नाम?, तथा तत्र वर्णवर्णादिविधि कथं?, तथा विहरमाणविंशतितीर्थकृतां मातापितृग्रामादिनामानि कुत्र शास्त्रे सन्तीति?, ॥ १ ॥ अत्र महाविदेहे श्रीसीमन्धरस्वामिस्थाने उत्पत्स्यमानतीर्थकरनाम शास्त्रे दृष्टं नास्ति, तथा तत्र वर्ण-

पर्णादिविचित्रिदित्याजितादिद्वाविंशतितीर्थंकनामनुमारेणेति तथा-विहरमाणविंशतितीर्थकृतां मातापितृग्रामादिनामानि त्रुटितप्रवादौ कथितानि सन्तीति । ह्री० ३ प्रका० । आव० । आ० क० । जम्बूद्वीपे भारते वर्षे जातानां पञ्चदशानां कुलकराणां चतुर्थे कुलकरे, जं० २ वक्ष० ।

सीमच्छेय-सीमाच्छेद-पुं० । मर्यादाकरणे, वृ० । सीमाच्छेदो नाम-साहिकाग्रामार्द्धवाटकादिविभजनं यथा अस्यां साहिकायां भवद्भि पर्यटनीयम् अस्यां पुनरस्माभिरित्यादि । यद्वा-ये तत्र क्षेत्रे समकं प्राप्तास्ते समच्छेदेन वक्तव्य यथा युष्माकं सचित्तम् अस्माकम् अचित्तम्, अथवा-युष्माकमन्त' असाकं बहि', युष्माकं स्त्रिय अस्माकं पुरुषा, युष्माकं श्राद्धा. अस्माकम् अश्राद्धा. । अथवा-यो यत्प्राप्स्यत तत्तस्यैव, न दातव्यम् । वृ० ३ उ० । व्य० ।

सीमा-सीमन्-स्त्री० । पूर्वपुरुषकृतायां मर्यादायाम्, स्था० ६ ठा० ३ उ० । सीमा मेरा मर्यादा इत्यनर्थान्तरम् । आ० चू० १ अ० । रा० ।

सीमागार-सीमाकार-पुं० । ग्राहभेदे, जी० १ प्रति० । प्रज्ञा० ।

सीमाधर-सीमाधर-सीमां-मर्यादा धरतीति सीमाधरः । ध० २ अधि० । ज्ञानादीनामविराधनाधारके श्रुतधर्मे, आव० ४ अ० । आ० चू० ।

सीमाविक्खंभ-सीमाविष्कम्भ-पुं० । पूर्वापरतश्चन्द्रस्य नक्षत्रमुक्तिक्षेत्रविस्तारे, स० ६७ सम० । ( 'णक्खत्त' शब्दे चतुर्थभागे १७७८ पृष्ठे दर्शितोऽयम् । )

सीय-शीत-त्रि० । श्यायते-धातूनामनेकार्थत्वात्कठिनीभवत्यस्मिन् जलादि इति शीतम् । उत्त० १ अ० । 'श्यैङ्' गतौ इत्यस्य गत्यर्थत्वात् कर्त्तरि क्तस्तत. "द्रवमूर्त्तिस्पर्शयो." इति सम्प्रसारणे स्पर्शवाचित्वात् "श्योऽस्पर्शे" इति नत्वाभावे शीतम् । शिशिरस्पर्शे, प्रव० ८६ द्वार । सू० प्र० । शृणातीति शीतम् । उत्त० २ अ० । प्रालेयाद्याश्रित, कर्म० १ कर्म० । वैशद्यकृत्स्तम्भनस्वभावे, स्पर्शभेदे, स्था० १ ठा० । आत्यन्तिकहिमे, स्था० ४ ठा० ४ उ० । सूत्र० । शीतकाले, आ० १ श्रु० ५ अ० । औ० । सूत्र० । उत्त० । रा० । अनुकूले, स्था० ६ ठा० ३ उ० । ( 'सीओसणिज्ज' शब्देऽस्मिन्नेव भागे शीतनिक्षेप उक्त' । )

सीयघर-शीतगृह-न० । चक्रवर्त्तिनस्तथाविधे गृहे; शीतगृहं नाम वर्द्धकिरत्ननिर्मितं चक्रवर्त्तिगृहम्, तत्र च वर्षासु निर्वातप्रवातं शीतकाले सोष्मं ग्रीष्मकाले शीतलं यथा च तच्चक्रवर्त्तिन सर्वर्तुक्षमं तथा द्रमकादपि प्राकृतपुरुषस्य तत्सर्वर्तुक्षममेव भवति । वृ० १ उ० ३ प्रक० ।

सीसो पडिच्छतो वा, कुलगणसंघो वएति इह लोए ।
जे सच्चकरणजोगा, ते संसारा विमोएंति ॥ ३३८ ॥

सुगमा ।

शीतगृहसम संघ इत्युक्तं तत्र शीतगृहसमता व्याख्यानयति-

सीमे कुलच्चिए य, गणच्चिय संघच्चिए य समदरिसी ।
ववहारसंथवेसु य, सो सीयघरोवमो संघो ॥ ३३९ ॥

शिष्ये सदीक्षिते 'कुलच्चिए' त्ति स्वकुलसम्बन्धिनि संघसम्बन्धिनि व्यवहारे समदर्शी, किमुक्तं भवति-शिष्याणां कुलगण संघसम्बन्धिनां च परस्परं व्यवहारे जाते समदर्शी तथा संस्तवेषु पूर्वसंस्तुतेषु पश्चात्संस्तुतेषु वान्येषु सम व्यवहारे जाते समदर्शी अत स संघ शीतगृहोपम. यथा शीतगृहमाश्रितानां स्वपरविशेषाकरणत. परितापहारि तथा व्यवहारार्थमागतानां संघोऽपि स्वपरविशेषाकरणत. परितापहारीति भाव । व्य० ३ उ० । पं० चू० ।

सीयच्छाय-शीतच्छाय-त्रि० । सर्वाविसंवादितया शीतत्वे, छायाशब्द आतपप्रतिपक्षवस्तुवाची द्रष्टव्य । रा० ।

सीयजोणिय-शीतयोनिक-त्रि० । शीता वेदनां वेदयन्ति किंतु-उष्णा वेदना न वेदयन्ति ते हि शीतयोनिका । शीतयोनिस्थानिषु नारकेषु, केवलं हिमानीप्रख्यशीतप्रदेशात्मत्वात्तदुत्पत्तिस्थानानाम् । जी० ३ प्रति० १ अधि० २ उ० ।

सीयपरि(री)सह-शीतपरि(री)षह-पुं० । शीत शिशिरस्पर्शस्तदेव परीषह. शीतपरीषह. । शीताधिसहने, प्रव० । शीते महत्यपि पतति जीर्णवसन परित्राणवर्जितो नाकल्प्यानि वासांसि गृह्णाति शीतत्राणाय आगमोक्तेन विधिना एषणीयमेव कल्प्यादि गवेषयेत् परिभुञ्जीत वा । नापि शीतार्तो ज्वलनं ज्वालयेत् अन्यज्वालितं वा नासेवेत एवमनुतिष्ठता शीतपरीषहजय कृतो भवति । प्रव० ८६ द्वार । उत्त० । स० । शीतादिसहनेऽपि यतिस्त्वगंध त्राणवर्जितो वासोऽकल्प्य न गृह्णीयादग्नि नो ज्वालयेदपि । आ० म० १ अ० । ध० ।

तस्य च संयमानुष्ठाने परिव्रजतो यत्स्यात्तदाह—

तं भिक्खुं सीयफासपरिवेवमाणगायं उवसंकमित्ता गाहावई बूया-आउसंतो समणा ! नो खलु ते गामधम्मा उव्वाहंति ?, आउसंतो गाहावई ! नो खलु मम गामधम्मा उव्वाहंति, सीयफासं च नो खलु अहं संचाएमि अहियासित्तए, नो खलु मे कप्पइ अगणिकायं उज्जालित्तए वा पज्जालित्तए वा कायं आयावित्तए वा पयावित्तए वा, अन्नेसिं वा वयणाओ सियां स एवं वयंतस्स परो अगणिकायं उज्जालित्ता पज्जालित्ता कायं आयाविज्ज वा पयाविज्ज वा, तं च भिक्खू पडिलेहाए आगमित्ता आणविज्जा अणासेवणाए त्ति बेमि । ( सू०२१० )

तम्—अन्तप्रान्ताहारतया निस्तेजसं निष्किञ्चन भिक्षणशील भिक्षुमतिक्रान्तसौम्ययौवनावस्थं सम्यक्वस्त्रत्राणाभावतया शीतस्पर्शपरिवेपमानगात्रम् उपसङ्क्रम्य-आसन्नतामेत्य गृहपति -ऐश्वर्योपमानुगतो मृगनाभ्यनुविद्धकश्मीरजद्रवलसानुलिप्तदेहो मीनमदागुरुवनसान्द्रधूपितगर्भिकाक्रान्तदितवपु प्रौढसीमन्तिनीसन्दोहपरिवृतो घर्माभूतशीतस्पर्शानुभव सन् किमयं मुनिरुपक्षमितसुरसुन्दरीरूपसम्पदो मत्सीमन्तिनीरवलोक्य सात्त्विकभावात्त. एवमुत उत शीतनेत्येवं संशयानो ब्रूयात् भो आयुष्मन् ! श्रमण ! कुलीनतामात्मन आविर्भावयन् प्रतिषेधद्वारेण प्रश्नयति-नो भवन्तं ग्रामधर्मा -विषया उत्-प्राबल्येन बाधन्ते ?, एव गृहपतिनोक्ते विदितामिप्राय' साधुराह-अस्य हि गृहपतेरात्मसविषया अङ्गनावलोकनाऽविप्रतीतमाशङ्क्यामत्यातथ्य-

ऽभूद् अतोऽहमग्न्यापनयामीत्येवमभिसन्धाय साधुरेवमाधे आयुष्मन् ! गृहपते ! 'नो खलु' नैव ग्रामधर्म्मा मामुद्बाधन्ते, यत्पुनर्वेपमानगात्रयष्टिं मामीक्षाचक्षेथे तच्छीतस्पर्शविजृम्भितं, न मनसिजविकारः, शीतस्पर्शमहं न खलु शक्नोम्यधिसोढुम्, एवमुक्तः सन् भक्तिकरुणार्द्रसाचितहृदयो ब्रूयात्-सुप्रज्वलितमग्निशुश्रूषणं किमिति न सेवसे ?, महामुनिराह-भो गृहपते ! न खलु मे कल्पतेऽग्निकायं मनाग् ज्वालयितुम् उज्ज्वालयितुं प्रकर्षेण ज्वालयितुं प्रज्वालयितुं स्वतो ज्वलितादौ कायं—शरीरमीषत् तापयितुमातापयितुं वा प्रकर्षेण तापयितुं प्रतापयितुं वा, अन्येषां वा वचनात् ममैतत्कर्त्तुं न कल्पते, यदिवाऽग्निसमारम्भायाम्यो वा वक्तुं न कल्पते ममेति । तं चैवं वदन्तं साधुमवगम्य गृहपतिः कदाचिदेतत्कुर्यादित्याह—स्यात् कदाचित्स-परो गृहस्थ एवमुक्तनीत्या वदत साधोरग्निकायमुज्ज्वाल्य प्रज्वाल्य वा कायमातापयेत् प्रतापयेद्वा, तं भोऽज्ज्वालनातापनादिकं भिक्षुः प्रत्युपेक्ष्य—विचार्य स्वसन्मत्या परव्याकरणेनान्येषां वाऽन्तिके श्रुत्वा अवगम्य ज्ञात्वा तं गृहपतिमाज्ञापयेत्-प्रतिबोधयेत् कथा?, अनासेवनया, यथैनत् ममायुक्तमासेवितुं, भवता तु पुनः साधुभक्त्यनुकम्पाभ्यां पुण्यप्राग्भारोपार्जनमकारीति, ब्रवीमीतिशब्दाबुक्तार्थौ । आचा० १ श्रु० ८ अ० ४ उ० । शीते महत्यपि पतति जीर्णवसन परित्राणवर्जितो नाकल्प्यानि वासांसि गृह्णीयात् परिभुञ्जीत वा नापि शीतार्त्तोऽग्निं ज्वालयेदन्यज्वालितं वा नासेवेत । आव० ४ अ० ।

एतदेव सूत्रकृदाह—

चरंतं विरयं लूहं, सीयं फुसइ एगया ।

नाइवेलं मुणी गच्छे, सोच्चा णं जिणसासणं ॥ ६ ॥

तत्परीषहमाह—

चरंतं विरयं लूहं, सीयं फुसइ एगया ।

नाइवेलं विहन्निज्जा, पावदिट्ठी विहन्नइ ॥ ६ ॥ (सू०)

व्याख्या—'चरन्तम्' इति ग्रामानुग्रामं मुक्तिपथे वा व्रजन्तं, धर्म्ममासेवमानं वा, विरतम्—अग्निसमारम्भादेर्निवृत्तं विमतरतं वा 'लूहं' ति स्नानस्निग्धभोजनादिपरिहारेण रुक्षं, किमित्याह—शृणाति इति शीतं, स्पृशति—अभिद्रवति, चरणादिविशेषणविशिष्टो हि सुतरां शीतेन बाध्यते, 'एकदे' ति शीतकालादौ प्रतिमाप्रतिपत्त्यादौ वा, तत्र किम् ? 'न' नैव वेला सीमा मर्यादा सेतुरित्यनर्थान्तरं, ततश्चानीति शेषसमयेभ्यः स्थविरकल्पिकापेक्षया जिनकल्पिकापेक्षया च स्थविरकल्पाच्चानिशायिनी वेला शक्त्यपेक्षतया च सर्वथानपेक्षतया च शीतसहनलक्षणा मर्यादा तां विहन्यात् । कोऽर्थः ?-अपध्यानस्थानान्तरसर्पणादिभिरनिक्रामेत्, किमेवमुपदिश्यत इत्याह—पाययति पातयति वा भवावर्ते इति पापा, तादृशी दृष्टि-बुद्धिरस्येति पापदृष्टिः 'विहन्नइ' इति सूत्रत्वाद्विहन्ति-अतिकामत्यतिवेलामिति प्रक्रमः । अयमत्र भावार्थः-पापदृष्टिरेवोक्तरूपमर्यादातिक्रमकारी, ततः पापबुद्धित्वादस्य सद्बुद्धिभिः परिहारो विधेयः, पठ्यते च "नाइवेलं मुणी गच्छे, सुच्चा णं जिणसासणं" तत्र वेला स्वाध्यायादिसमयात्मिका तामतिक्रम्य शीतेनाभिहतोऽहमिति मुनिः—तपस्वी न गच्छेत्—स्थानान्तरमभिसर्पेत्, 'सोच्चे' ति श्रुत्वा णमिति वाक्यालङ्कारे जिनशासनं—जिनागमम् अन्यो जीवोऽन्यश्च देहस्तीव्रतराश्च नरकादिषु शीतवेदनाः प्राणिभिरनुभूतपूर्वा इत्यादिकमिति सूत्रार्थः ॥ ६ ॥

अन्यच्च—

ण मे णिवारणं अत्थि, छवित्ताणं न विज्जइ ।

अहं तु अग्गिं सेवामि, इइ भिक्खू न चिंतए ॥७॥

न 'मे' मम नितरां वार्यते—निषिध्यतेऽनेन शीतवातादीति निवारणं—सौधादि अस्ति—विद्यते, तथा छवि-त्वक् त्रायते—शीतादिभ्यो रक्ष्यतेऽनेनेति छवित्राणं—वस्त्रकम्बलादि 'न विद्यते', वृक्षाम्तु निवारणं—वस्त्रादि तथा छविः—त्वक् त्राणं न विद्यते—न भवति, असौ हि शीताष्णादीना आह्निकेति व्याचक्षते, अतः 'अहं' मित्यात्मनिर्देशः, तु पुनरर्थे, तद्भावना च येषां निवारणं छवित्राणं वा समस्ति ते किमिति अग्निं सेवेयुः ?, अहं तु तदभावादत्राण तत्किमन्यत्करोमीत्यग्निं सेवे 'इती' त्येवं भिक्षु—यतिः न चिन्तयेत्—न ध्यायेत्, चिन्तानिषेधे च सेवन दूरापास्तमिति सूत्रार्थः ॥ ७ ॥

इदानीं लयनद्वारं, तत्र च 'नातिवेलं मुनिर्गच्छेदि' त्यादिसूत्रावयवसूचितं दृष्टान्तमाह—

रायगिहम्मि वयंसा, सीसा चउरो उ भद्दबाहुस्स ।

वेभारगिरिगुहाए, सीयपरिगया समाहिगया ॥९१॥

राजगृहे नगरे वयस्या शिष्याश्चत्वारस्तु भद्रबाहोर्वैभारगिरिगुहायां शीतपरिगता-समाधिगता इत्यक्षरार्थः ॥९१॥ भावार्थस्तु वृद्धविवरणादवसेयः, तच्चेदम्—

"रायगिहे णयरे चत्तारि वयंसा वाणियगा सहवड्ढियया, ते भद्दबाहुस्स अंतिए धम्मं सोच्चा पव्वइया, ते सुयं बहुं अहिज्जित्ता अन्नया कयाइ एगल्लविहारपडिमं पडिवन्ना, ते समावत्तीए विहरंता पुणोवि रायगिहं नयरं संपत्ता। हेमंतो य वट्टति, ते य भिक्खं काउं तइयाए पोरिसीए पडिनियत्ता, तेसिं च वेभारगिरिंतेणं गंतव्वं। तत्थ पढमस्स गिरिगुहादारे चरिमा पोरिसी ओगाढा, सो तत्थेव ठिओ। बिइयस्स उज्जाणे, नातियस्स उज्जाणसमीवे, चउत्थस्स नगरब्भासे चेव। तत्थ जो गिरिगुहब्भासे तस्स निरागं सीयं सो सम्मं सहंतो रूमतो अ पढमजामे चेव कालगतो। एवं जो नगरसमीवे सो चउत्थे जामे कालगतो, तेसिं जो नगरब्भासे तस्स नगरुण्हाए न तहा सीअं तेण पच्छा कालगतो, ते सम्मं कालगया। एवं सम्म अहियासियव्वं जहा तेहिं चउहिं अहियासियं"। उत्त० २ अ०। अत्र भद्रबाहुशिष्याणां कथा—राजगृहे नगरे चत्वारो वयस्या वणिजः श्रीभद्रबाहुगुर्वन्तिके प्रव्रज्य श्रुतं चाधीत्य एकाकित्वं प्रतिमया विहरन्तस्तत्रैव ईयुः, तदा हेमन्त आसीत्। ते च भिक्षामोजनमादाय तृतीयपौरुष्या निवर्त्तन्ते पुरात् पृथक् । तेषामेकस्य चरमपौरुषीवैभाराद्रिगुहाद्वारे अवगाढा तत्रैव सोऽस्थात् द्वितीयः पुरोद्याने, तृतीयस्तु उद्यानसमीपे, चतुर्थस्तु पुराऽभ्यर्णे । तत्र यो वैभाराद्रिगुहासन्नः स महासीतान्यथितो रजन्या आद्ययामे मृतः, उद्यानस्थो द्विती-

चर्मार्ते मृत, उद्यानासन्नस्तृतीये यामे मृत, पुरासन्नस्तु पुरोप्सगणाऽल्पशीतत्वेन चतुर्थे प्रहरे मृत । सर्वेऽप्येते साधवो विपद्य दिवं जग्मुः। शीतपरिषहः सोढव्यः। उत्त० २ अ०।

सीयपरिसहविजय-शीतपरिषहविजय-पुं०। महत्यपि शीते पतति परित्यक्ताकल्पनीयवाससः प्रवचनोक्तेन विधिना कल्पनीयवासांसि परिभुञ्जानस्य वृत्तवदनचेष्टारितालयविशेषस्य वृक्षमूले पथि शून्यागारेऽन्यत्र वा क्वापि निवसतो हिमानीकणसम्मिश्रशीतानिलसंमिश्रेऽपि तत्प्रतीकारहेतूपादानं प्रति निवृत्तेच्छस्य पूर्वानुभूतशीतप्रतीकारहेतूनस्मरतः सम्यग्भावनागर्भशीतसहनं, प० सं० ४ द्वार।

सीयपिंड-शीतपिण्ड-पुं०। शीतं शीतलं पिण्डं आहारं, शीतश्चासौ पिण्डश्च शीतपिण्डः। शाल्यादिपिण्डे, "पंताणि चेव सेविज्जा, सीयपिंडं पुराणकुम्मासं।" आचा० १ श्रु० ६ अ० ४ उ०।

सीयप्पवायदह-शीताप्रपातह्रद-पुं०। यत्र नीलवतः शीता निपतति यत्र चत्वार्यशीत्यधिकानि योजनशतानि आयामविष्कम्भ पञ्चदशाष्टादशोत्तराणि विशेषन्यूनानि परिक्षेपेण यस्य च मध्ये शीताद्वीपः चतुष्षष्टियोजनायामविष्कम्भो द्व्युत्तरयोजनशतद्वयपरिक्षेपः जलान्तात् द्विक्रोशोच्छ्रितः शीतादेवीभवनेन विभूषितोपरितनभागः स शीताप्रपात ह्रद इति। शीतादेव्या निवासभूते शीतानद्या जलप्रपातस्थाने, स्था० २ ठा० ३ उ०।

सीयफास-शीतस्पर्श-पुं०। शीतापादितदुःखविशेषे, आचा० १ श्रु० ८ अ० ४ उ०। शीतले, आचा० १ श्रु० ६ अ० ३ उ०।

सीयफासणाम-शीतस्पर्शनामन्-न०। नामकर्मभेदे, यदुदयाज्जन्तुशरीरं शीतं शीतलं मृणालादिवद् भवति तत् शीतस्पर्शनाम। कर्म० १ कर्म०।

सीयल-शीतल-त्रि०। शीतवेदनोत्पादके, स्था० ४ ठा० ४ उ०। आ० म०। औ०। चन्द्रं सूर्यं वा गृह्णतो राहोः कृष्णपुद्गलः एकः शीतलः। चं० प्र० २० पाहु०। दशमे तीर्थकरे, सम्प्रति शीतलः सकलसर्वसंतापकरणविरहादाह्लादजननाच्च शीतलः, तत्र सर्वेऽपि भगवन्तः शत्रूणां मित्राणां चोपरि समानास्ततः शेषमाह—

पिउणो दाहोवसमो, गब्भगए सीयलो तेणं।

भगवतः पितुः पूर्वोत्पन्नोऽसदृशः पित्तदाहोऽभवत् स चौषधैर्नानाप्रकारैर्नोपशाम्यति, भगवति तु गर्भगते देव्या परामर्शे स दाह उपशान्तस्तेन शीतल इति नाम। आ० म० २ अ०। ध०। प्रव०। आ० चू०। स०। कल्प०। (अस्य वक्तव्यता 'तित्थयर' शब्दे चतुर्थभागे २२६० पृष्ठे गता।) शीतलस्य अशोका देवी। प्रव० ७ द्वार।

सीयल(ग) शीतल(क)-पुं०। स्वनामख्याते नृपतौ, शीतलको नृपतिः परित्यक्तराज्यसमृद्धिः गृहीतसर्वविरतिकोऽधुना तदीयगुणेन प्रमादमानमानसैर्निजगुरुभिर्विश्राणितश्रमणगानन्दादिस्वरूपदा द्रव्यभावभेदभिन्ने वन्दनके उदाहरणम्।

तत्कथा चैवम्—

"अवनीवनिताभाल—तिलके श्रीपुरे पुरे।
प्रतापाक्रान्तदिक्चक्रः, क्ष्मापालः शीतलोऽजनि ॥ १ ॥
सर्वक्षशामनस्तीर—नीरधौ सद्गुणिस्तुतः।
शुद्धपक्षद्वयो राज—हंसः क्रीडति यः सदा ॥ २ ॥
तस्याभूद्भगिनी भाग्य-सौभाग्यैकनिकेतनम्।
सद्धर्मकर्मनिर्माण—परा शृङ्गारमञ्जरी ॥ ३ ॥
सा च विक्रमसिंहस्य, राज्ञो जाता जगत्पतेः।
सम्मतं क्षमापुत्र—चतुष्टयमजीजनत् ॥ ४ ॥
शीतलश्च महीपाल—श्चारुवैराग्यरञ्जितः।
श्रीधर्मघोषसूरीणा—मन्तिके व्रतमग्रहीत् ॥ ५ ॥
तं च विज्ञातसिद्धान्त—तत्त्वं गीतार्थशेखरम्।
गुरवस्तद्गुणैस्तुष्टाः, स्वपदेऽथ न्यवीविशन् ॥ ६ ॥
अन्येद्युर्निजपुत्राणां, कलाकौशलशालिनाम्।
शृङ्गारमञ्जरी राज्ञी, रहस्येवमवोचत् ॥ ७ ॥
वत्सास्त्वदीय एवैकः, श्लाघ्यो जगति मातुलः।
येन साम्राज्यमुत्सृज्य, जगृहे व्रतमुत्तमम् ॥ ८ ॥
यश्च निःशेषशास्त्राब्धि—पारदृश्वा मुनीश्वरः।
निस्सङ्गं विहरन्नित्यं, प्रबोधयति देहिनः ॥ ९ ॥
पंचालिमं यथाग्राही, ससारस्यामुना फलम्।
तथा वत्सास्तदादातुं, भवतामपि युज्यते ॥ १० ॥
यतः—
कोटिशो विषया प्राप्ताः, संपदश्च सहस्रशः।
राज्यं च शतशो जीवै-र्न च धर्मः कदाचन ॥ ११ ॥
इत्थं मातुर्वचः श्रुत्वा, सविघ्ना जनकं निजम्।
तेऽनुज्ञाप्याईती दीक्षां, जगृहुः स्थविरान्तिके ॥ १२ ॥
सजातास्ते च गीतार्था, वन्दितुं निजमातुलम्।
अवन्त्यां च गता सायं, तद्बाह्यायामवस्थिताः ॥ १३ ॥
अथ गन्ता पुरीमध्ये, श्रावकः कोऽपि तद्गिरा।
श्रीशीतलमुनीन्द्राय, तत्स्वरूपं न्यवेदयत् ॥ १४ ॥
इतश्च-
शुभेनाध्यवसायेन, तेन तेन महात्मनाम्।
तेषां निशि समुत्पन्नं, चतुर्णामपि केवलम् ॥ १५ ॥
ततश्च कृतकृत्यत्वा—द्यावत्तत्रैव ते स्थिताः।
प्रभाते नागमंस्ताव-दुत्कः श्रीशीतलोऽजनि ॥ १६ ॥
अहो दुष्टा अमी शैक्षा, निर्लज्जा इत्यचिन्तयत् सः।
क्रोधाध्मातो ददौ तेषां, चतुर्णामपि वन्दनम् ॥ १७ ॥
यामादूर्ध्वं स्वयं तेषा—मन्तिकेऽसौ गतस्ततः।
अनादरपरास्तांश्च, वीक्ष्य संस्थाप्य दण्डकम् ॥ १८ ॥
ऐर्यापथीं प्रतिक्रम्य, समालोच्यैवमभ्यधात्।
वन्देऽहं भवतां ह्यत्र, समागत्यापि सांप्रतम् ॥ १९ ॥
कषायकण्टकारूढ, तमूचुस्ते त्वया पुरा।
द्रव्यतो वन्दनं दत्त—मिदानीं देहि भावतः ॥ २० ॥
किमेतदिति जानन्ति, भवन्त इति सोऽब्रवीत्।
तेऽपि नं प्रत्यवोचन्त, जानीमो नितरामिदम् ॥ २१ ॥
आचार्य कथमित्याह, तेऽप्याहुर्ज्ञानिनः स च।
प्रतीति कीदृशात्ते च, प्रत्यप्रतिपातिनः ॥ २२ ॥
पापेनाशातिता एते, मया केवलिनो हहा।
इत्थं निन्दन्निवृत्तोऽसौ, कण्टकस्थानतस्ततः ॥ २३ ॥
क्षमयंस्तेषु चतुर्थस्य, ददतस्तस्य वन्दनम्।
केवलज्ञानमुत्पन्न—मपूर्वकरणादिना ॥ २४ ॥

द्रव्यतो वन्दनं पूर्वं, कषायोपरतचेतसः ।
जज्ञे पश्चात्तनस्तस्य, शान्तस्वान्तस्य भावतः ॥ २५ ॥"
प्रव० २ द्वार ।

सीयलगत्तया-शीतलगात्रता-स्त्री० । अङ्गोपाङ्गानां शीतलस्पर्शे, बृ० ३ उ० ।

सीयलविहारि-शीतलविहारिन्-पुं० । नित्यवासित्वादिना शिथिलाचारे, आव० १ अ० ।

सीयलिया-शीतलिका-स्त्री० । शीतस्पर्शायां लूतायाम्, आ० म० १ अ० । नहि लूतादिकं शीतलिकाभिधानान्तरमात्रेणान्यथात्वं भजते । सूत्र० १ श्रु० ११ अ० ।

सीयलेस्सालद्धि-शीतलेश्यालब्धि-स्त्री० । अगण्यकारुण्यवशादनुग्राह्यं प्रति तेजोलेश्याप्रशमनप्रत्यलशीतलतेजोविशेषविमोचनसामर्थ्ये, प्रव० । यथा भगवतो महावीरस्य-पुरा किल गोशालकः कूर्मग्रामे कदाचिदारामिकान्ते करगतया आतापनाभावाविर्भूतप्रभूतयूकामतितनितायितं वैशिकायनं बालतपस्विनमकारणकलहकलनतया "अरे यूकाशय्यातर-" इत्याद्ययुक्तोक्तिभिः कोपाटोपाध्मायमानमानसमकरोत्, तदनु वैशिकायनस्तस्य दुरात्मनो दाहाय वज्रदहनदेश्यां तेजोलेश्यां विससर्ज । तत्कालमेव च भगवान्वर्द्धमानस्वामी प्रगुणितकरुणत्वात्तत्त्राणाय प्रचुरपरितापोच्छेदच्छेका शीतलेश्यामसुमुचदिति । प्रव० २७० द्वार । पा० । स्था० ।

सीयवेगमहण-शीतवेगमथन-न० । आतपेन शीतवेगनिवारणे, कल्प० १ अधि० ३ क्षण ।

सीया-सीता-स्त्री० । जम्बूद्वीपे मेरोरुत्तरे नीलवतो वर्षधरपर्वतस्य केशरिहृदाद्विनिर्गतायां महानद्याम्, स्था० । शीता महानदी केशरिहृदस्य दक्षिणतोरणेन विनिर्गत्य कुण्डं पतित्वा मेरोः पूर्वेण पूर्वविदेहमध्येन विजयद्वारस्याधः पूर्वसमुद्रे शीतोदानामानं प्रविशतीति । स्था० २ ठा० ३ उ० । पश्चिमरुचकवास्तव्यायां दिक्कुमारीमहत्तरिकायाम्, जं० ५ वक्ष० । आ० क० । आ० म० । ग० । औ० । प्रश्न० । भ० । 'ईषत्प्राग्भारायां पृथिव्याम्, आ० म० १ अ० । लाङ्गलपद्धतौ, आ० म० २ अ० । पुरुषोत्तमस्य चतुर्थवासुदेवस्य मातरि, आव० १ अ० । शिबिकापुरुषसहस्रवहनीयकूटाकारशिखराच्छादिते जम्पानविशेषे, प्रव० ६ द्वार । स० । तीर्थकृतां २४ शिबिका 'तित्थयर' शब्दे चतुर्थभागे २०७२ पृष्ठे गताः ।)

सीयाकूड-शीताकूट-पुं०।न०।नीलवर्षधरपर्वतस्य चतुर्थे कूटे, स्था० २ ठा० ३ उ० । जम्बूमन्दरस्य उत्तरे नीलवन्तवर्षधरपर्वतस्य स्वनामख्याते चतुर्थे कूटे, स्था०२ ठा० ३ उ० । महाविदेहे माल्यवतो वक्षस्कारपर्वतस्य सीतासरित्सुरीकूटे, जं० ४ वक्ष० ।

सीयाण-श्मशान-न० । शवदाहस्थाने, व्य० ७ उ० ।

सीयायवतत्त-शीतातपतप्त-त्रि० । रात्रौ शीतेन दिवाऽऽतपेन क्लेशान्प्रापिते, जं० २ वक्ष० ।

सीयामुहवण-शीतामुखवन-न० । महाविदेहे वर्षे शीताया महानद्या उत्तरस्या नीलवतो वक्षस्कारपर्वतस्य दक्षिणे पूर्वलवणसमुद्रस्य पश्चिमे पुष्कलावर्त्तविजयक्षेत्रस्य पूर्वे स्वनामख्याते वने, जं० ।

कहिं णं भन्ते ! जम्बुद्दीवे दीवे महाविदेहे वासे सीआए महाणईए दाहिणिल्ले सीयामुहवणे णामं वणे पण्णत्ते ?, एवं जह चेव उत्तरिल्लं सीआमुहवणं तह चेव दाहिणं पि भाणिअव्वं, णवरं णिसहस्स वासहरपव्वयस्स उत्तरेणं सीआए महाणईए दाहिणेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं वच्छस्स विजयस्स पुरत्थिमेणं एत्थ णं जम्बुद्दीवे दीवे महाविदेहे वासे सीआए महाणईए दाहिणिल्ले सीआमुहवणे णामं वणे पण्णत्ते, उत्तरदाहिणायए तहेव सव्वं णवरं णिसहवासहरपव्वयन्तेणं एगमेगूणवीसइभागं जोअणस्स विक्खम्भेणं किण्हे किण्होभासे ०जाव महया गन्धद्धाणिं मुअंते ०जाव आसयन्ति उभओ पासिं दोहिं पउमवरवेइआहिं वणखण्डेहिं इति ।

"कहि णं" मित्यादि, क भदन्त ! जम्बूद्वीपे द्वीपे महाविदेहे वर्षे शीताया महानद्या दाक्षिणात्यं शीतामुखवनं शीतानिषधमध्यवर्त्तीत्यर्थः, अतिदेशसूत्रत्वेनोत्तरसूत्रं स्वयं भाव्यं, परं वच्छस्य विजयस्य—विदेहद्वितीयभागाद्यविजयस्य पूर्वत इति । जं० ४ वक्ष० ।

सीयावण-शीतापन-न० । शीतकरणे, नि० चू० १ उ० ।

सीरकंता-सीरकान्ता-स्त्री० । मूर्च्छनाविशेषे, स्था० ७ ठा० ३ उ० ।

सीरि-सीरिन्-पुं० । बलदेवे, को० ।

सील-शील-न० । शील-समाधौ धातोर्घञ् । नपुंसकत्वे शीलत्वे शीलम् । आ० चू० १ अ० । समाधाने, विशे० । स्था० । तं० । व्रतादिसमाधाने, आव० ४ अ० । प्रश्न० । यमनियमरूपे, सूत्र० १ श्रु० ६ अ० । ओघायुपशमरूपे, सूत्र० २ श्रु० ६ अ० । अनुष्ठाने, सूत्र० २ श्रु० १ अ० । व्रतविशेषे, सूत्र० २ श्रु० २ अ० । शीलमुत्तरगुणाः । ज्ञा० १ श्रु० ७ अ० । प्रव० । आ० म० । आ० चू० । शीलान्यणुव्रतानि । दशा० २ अ० । परद्रोहविरतौ, दश०६अ०१उ० । उद्युक्तविहारित्वे, सूत्र०१श्रु०१३अ० । चारित्रे, सूत्र० १ श्रु० १ अ० १ उ० । सूत्र० । दश० ।

निक्षेप —

सीलं चउक्कं दव्वे, पाउरणाभरणभोयणादीसु ।
भावे उ ओहसीलं, अभिक्खमासेवणा चेव ॥ ८६ ॥

शील-शीलविषये निक्षेपे क्रियमाणे 'चतुष्क' मिति नामादिश्चतुर्धा निक्षेपः । तत्रापि नामस्थापने क्षुण्णत्वादनादृत्य 'द्रव्यम्' इति द्रव्यशीलं प्रावरणाभरणभोजनादिषु द्रष्टव्यम् । अस्यायमर्थः—यो हि फलनिरपेक्षस्तत्स्वभावादेव क्रियासु प्रवर्त्तते स तच्छील । तत्रेह प्रावरणशील इति प्रावरणप्रयोजनाभावेऽपि तच्छीलत्वान्नित्यं प्रावरणस्वभावः; प्रावरणे वा दत्तावधानः, एवमाभरणभोजनादिष्वपि द्रष्टव्यमिति । यो वा यस्य द्रव्यस्य चेतनाचेतनादेः स्वभावस्तद् द्रव्यशीलमित्युच्यते, भावशीलं तु द्विधा—ओघशीलम्, आभीक्ष्ण्यसेवनाशीलं चेति ।

तत्रौघशीलं व्याचिख्यासुराह—

ओहे सीलं विरती, विरयाविरई य अविरतीऽसीलं ।

धम्मे णाणतवादी, अपसत्थ अहम्मकोवादी ॥८७॥

सामान्यं सामान्येन सावद्ययोगविरतो विरताविरतो वा शी तवान् भण्यते: तद्विपर्यस्तोऽशीलवानिति । आसेवनायां तु—अनवरतसेवनायां तु शीलमिदम्; तद्यथा-धर्मे-धर्मविषये प्रशस्तं शीलं यदुतानवरतापूर्वज्ञानार्जने विशिष्टतप करणे वा, आदिग्रहणादनवरताभिग्रहणादिकं परिगृह्यते । अप्रशस्तभावशीलं स्वधर्मप्रवृत्तिर्ग्राह्या, आन्तरा तु क्रोधादिषु प्रवृत्ति, आदिग्रहणात्—शेषकषायाश्चौर्याभ्या-ख्यानकलहादय परिगृह्यन्त इति ।

"सीलं नियकुलनहयल-ससि व्व कित्ती पयासए भुवणे ।
सुरनरसिवसुहकरणं-पालेयव्वं सया सील ॥१०८॥
जाइकुलरूवबलसुय-विज्जाविन्नाण बुद्धिरहिया वि ।
सव्वत्थ पूयणिज्जा-निम्मलसीला नरा हुंति ॥१०९॥
तं पुण सील दुविहं, दसे सव्वे य होइ नायव्वं ।
देसे गिहीण दसण-मूलाणि दुवालस वयाणि ॥११०॥
साहूण सव्वसील, ज सीलंगाण अट्ठदससहस्सो ।
वुज्झंति निरइयारा, जावज्जीवं अविस्सामं ॥१११॥
लघुकम्मा गुरुसत्ता—सत्ता विसमावईसु पत्ता वि ।
मणवयणतणुविसुद्धं, सील पालति सीय व्व ॥११२॥"

ध० र० २ अधि० ६ क्षण । ( कुशीलसुशीले " कुसील " शब्दे तृतीयभागे ६११ पृष्ठ उक्त । ) सर्वसंवरे, आ० म० २ अ० । अष्टादशसहस्रभेदसंख्ये संयमे, आचा० १ श्रु० ५ अ० ३ उ० । उत्त० । सूत्र० । मद्यमांस-निशाभोजनादिपरिहाररूपे आचारे, उत्त० १४ अ० । व्यवहारे, ध० १ अधि० । सथा० । जं० । शीलमष्टादशशीलाङ्गसहस्ररूपं, यदि वा-महाव्रतसमाधान पञ्चेन्द्रियजय कषायनिग्रह त्रिगुप्तिगुप्तता चैतत् शीलम् । आचा० १ श्रु० ६ अ० ४ उ० । शील सदाचारो विरतम्यग्दृशाविरतिमनानुदेशसर्वविरत्यात्मकं चारित्रम् । उत्त० ७ अ० । न० । शील-समाधानं तद्रूपत्वात् शीलम् । अहिंसायाम्, प्रश्न० १ संव० द्वार । ब्रह्मचर्ये, स० । वृ० । न० । " वरं प्रवेशो ज्वलितं हुताशनं, नचापि भग्नं चिरसंचितव्रतम् । वरं हि मृत्यु सुविशुद्धचेतसो, नचापि शीलस्खलितस्य जीवितम् ॥ १ ॥ " सूत्र० १ श्रु० २ अ० २ उ० । दानेन महाभोगा, देहिना सुरगतिश्च शीलेन । भावनया च विमुक्ति-स्तपसा सर्वाणि सिद्धयन्ति ॥ २॥" सूत्र० १ श्रु० १२ अ० ।

श्रावकस्य शीलानि—

सम्प्रति शीलवत्स्वरूप द्वितीय लक्षण व्याख्यानयन्नाह—

आययणं खु निसेवइ, वज्जइ परगेहपविसणमकज्जे ।
निच्चमणुब्भडवेसो, न भणइ सवियारवयणाइं ॥३७॥
परिहरइ बालकीलं, साहइ कज्जाइँ महुरनीईए ।
इय छव्विहसीलजुओ, विन्नेओ सीलवंतो त्थ ॥३८॥

आयतन धार्मिकजनमीलनस्थानम्-उक्तं च "जत्थ साहम्मिया बहवे, सीलवता बहुस्सुया । चरित्तायारसंपन्ना, आययणं तं वियाणाहि" ॥१॥ खुरवधारणे प्रतिपक्षप्रतिषेधार्थः-ततश्चायतनमेव निषेवते भावश्रावको, नानायतनमिति योग । 'न भिल्लपल्लीसु न चोरसश्रये, न पार्वतीयेषु जनेपु संवसेत् । न हिंस्रदुष्टाशयलोकसंनिधौ, कुसंगति साधुजनस्य निन्दिता ॥१॥"

तथा-"दमणाणिस्सेयणिया, चरित्तनिस्सेयणी य अगपरयो जत्थ पयट्टइ विगहा तमणाययण महापाव ॥१॥' इति प्रथमं शीलम् । तथा "वर्जयति परगृहप्रवेशनमन्येषां मन्दिरेषु गमनमकार्ये गुरुतरकार्याभावे नष्टविनष्टादावाशङ्कासंभवादिति द्वितीयं शीलम् । तथा नित्यं सदाऽनुद्भटवेषोऽनुल्बणनेपथ्यो भवति भावश्रावक इति तृतीयं शीलम् । न भणति न ब्रूते सविकाराणि-रागद्वेषविकारोत्पत्तिहेतुभूतानि वचनानि वाच इति चतुर्थं शीलम् । तथा परिहरति न सेवते बालक्रीडा बालिशजनविनोदव्यापारं द्यूतादिकमिति पञ्चमं शीलम् । तथा साधयति-निष्पादयति कार्याणि—प्रयोजनानि मधुरनीत्या सामपूर्वक " सौम्य ! सुन्दरैवं कुरुष्व " इत्यादिनेति षष्ठ शीलम् । इति पूर्वोक्तप्रकारेण षड्विधशीलयुतो विज्ञेय शीलवानत्र श्रावकविचार इति ।

संप्रत्येतदेव शीलपदकं व्याख्यानयन् प्रथमं शीलं आयतनलक्षणं गाथापूर्वार्द्धेन गुणोपदर्शनपूर्वकं भावयति-

आययणसेवणाओ, दोसा निज्जंति वड्ढइ गुणोहो ।

आयतनमुक्तस्वरूपं तस्य सेवनादुपासनाद्दोषा मिथ्यात्वादय क्षीयन्ते हीयन्ते क्षयं यान्तीति भाव -वर्द्धते वृद्धिमुपैति गुणौघो ज्ञानादिगुणकलाप, सुदर्शनस्येव । ध० र० । इत्युक्त शीलवतोऽनुद्भटवेष इति तृतीयो भेद । ( सविकारवचनवर्जनरूपश्चतुर्थभेद ' सवियारवयणवज्जण ' शब्दे तत्कथानकं च ' मित्तसेण ' शब्दे उक्तम् । )

संप्रति बालक्रीडापरिहाररूप पञ्चमं भेदम-भिधित्सुर्गाथापूर्वार्द्धमाह—

बालिसजणकीला वि हु, मूलं मोहस्स ऽणत्थदंडाओ ।

बालिशजनक्रीडापि-बालजनाचरितक्रीडाऽपि द्यूतादिरूपा ।

उक्तं च—

"चउरंगसारिपट्टिय-वट्टाईलावयाइजुद्धाइं ।
पण्हनरज(म) स्स गाई-पहेलियाईहिं नो रमइ ॥१॥ (इति)

आसना सविकारजल्पितनानीत्यपिशब्दार्थ , हुरलकोर—लिङ्ग चिह्न मोहस्यानर्थदण्डत्वात् निष्फलप्रायारम्भप्रवृत्तेरिहाप्यनर्थजनकत्वेन च , जिनदासस्येव । ध० र० । इत्युक्त शीलवतो बालक्रीडापरिहार इति पञ्चमो भेद ।

संप्रति परुषवचनाभियोगपरित्यागलक्षण षष्ठ शीलभेदम-भिधित्सुर्गाथोत्तरार्द्धमाह—

फरुसवयणाभियोगो, न संमओ सुद्धधम्माणं ॥ ४१ ॥

परुषवचनेन ' रे दरिद्र ! दासीपुत्र ' इत्यादिनाऽभियोग आज्ञादान न संगतो-नोचित शुद्धधर्माणां मतिपक्षजिनमताना धर्महानिधर्मलाघवहेतुत्वात् ।

तत्र धर्महानि -

"फरुसवयणेण दिणतव-महिक्खिवतो य हणइ मासतवं ।
वरिसतव सवमाणो, हणइ हणतो य सामन्नं ॥१॥' इति वचनात् ।
धर्मलाघव पुन 'अहो धार्मिका ' परपीडापरिहारिण ' नविवेकाश्च श्रावका यदेवं कलकलारोत्कराकार गिरो गिरन्ती'त्यादि लोकापवादात् ।

तथा—

"अप्रियमुक्ता पुरुषा , प्रवदन्ति द्विगुणमप्रियं यस्मात् ।
तस्मान्न वाच्यमप्रिय-मप्रियमश्रोतुकामेन ॥ १ ॥

विलज्यते परीवारो-नित्यं कर्कशभाषिणः।
परिग्रहे विरक्तेश्च प्रभुत्वं हीयते नृणाम् ॥ २ ॥

किंच—

अशिक्षितात्मवर्गेण, म्लानिं याति यतः प्रभुः।
अतः शिक्षा प्रदातव्या, प्रत्यहं मृदुभाषया ॥ ३ ॥
स्वाधीने माधुर्ये, मधुपानरसंभवेषु वाक्येषु।
किनामि सत्त्ववन्तः, पुरुषाः परुषाणि भाषन्ते ॥ ४ ॥" इत्यादि।
अत एव श्रीवर्द्धमानस्वामिना महाशतकमहाश्रावकः सत्येऽपि परुषं जल्पने प्रायश्चित्तं चाहितम् इति। मतान्तरे पुनरनुरागध्यतामिधानं षष्ठं शीलं तदप्यपरुषभाषित्वेन संगृहीतमेव।

महाशतकसंविधानकं त्विदम्—

रायगिहपुरसरोवर-विभूसहो गिहवई जलरुह व्व।
सिरिनिलओ भमरहिओ, नामेण पयं महासयगो ॥ १ ॥
अट्ठकणयकोडी-निहिवुड्ढिपवित्थरप्पउत्ताओ।
दसगोसहस्सपरिग-या तस्स (चेव) अट्ठ वया ॥ २ ॥
रेवइपमुहा तेरस-भज्जाओ तत्थ रेवईए उ।
पिउगेहसंतियाओ, कोडीओ अट्ठ कणगस्स ॥ ३ ॥
दसगोसहस्समाणा, अट्ठवया सेसयाण पिउहरिया।
इक्किक्कणयकोडी-दसगोसहस्सो पुढो य वओ ॥ ४ ॥
अह तत्थ समोसरिओ, गुणसिलए चेइए जिणो वीरो।
वंदणवडियाइगओ, पउरेहि समं महासयगो ॥ ५ ॥
नमिऊण तिहुयणगुरुं, उचियट्ठाणे निविट्ठओ एसो।
भयवं पि अभयनिस्सं-दसुंदरं कहइ इह धम्मं ॥ ६ ॥
इह दुलहं गिहिधम्मं, लहिउं सावयजणेण पइदिवसं।
तस्स विसुद्धिनिमित्तं दिणचरिया इह विहेयव्वा ॥ ७ ॥

तंयाहि—

सुत्तविउद्धो सड्ढो, सम्मं सुमरिज्ज पंचनवकारं।
जाइकुलदेवगुरुध-म्मसंगयं अह विचिंतिज्जा ॥ ८ ॥
तो छव्विहमावस्सय-मणुट्ठिउं न्हाइउं च दिवसमुहे।
सियवत्थो मुहकोसं, काउं पूइज्ज गिहबिंबं ॥ ९ ॥
पच्चक्खाणं काऊ-ण इड्ढिपत्तो महाविभूईए।
गच्छिज्ज जिणिंदगिहे, पविसिज्ज तेहि समयविहिणा ॥ १० ॥
पूएवि जिणं वंदि-ज्ज तयणु वच्चिज्ज सुगुरुपासम्मि।
काऊण तम्मि विणयं, पच्चक्खाणं च पयडेउं ॥ ११ ॥
धम्मं सुणिज्ज सम्मं, सुद्धं वित्तिं गिहागओ कुज्जा।
मज्झण्हे पुण पूयं, विहिज्ज जिणनाहपडिमाणं ॥ १२ ॥
पडिलाभिज्ज मुणिंदे, फासुयएसणिय असणदाणेणं।
साहम्मियवच्छल्लं करिज्ज दीणाइअणुकंपं ॥ १३ ॥
बहुबीयणंतकाया—इवज्जियं भोयणं तओ कुज्जा।
वंदे वि जिणवरिंदे, गुरुणो य विहिज्ज संवरणं ॥ १४ ॥
तो सत्थरहस्साइं, कुसलमईहि समं वियारिज्जा।
इगभत्तासत्तो पुण, भुंजिज्ज दिणट्ठमे भागे ॥ १५ ॥
संझासमए गिहचे—इयाइँ पूएवि पुणवि वंदिज्जा।
आवस्सयं वि हेउं, करिज्ज सज्झायमगरुगो ॥ १६ ॥
नियमाणुसारओ तत्तो, कहिज्ज धम्मं गिहागओ उचियं।
पायं विसयविरत्तो, सीलं पालिज्ज पव्वेसु ॥ १७ ॥
कयंचउस्सग्गमाई, सावज्ज चइय गंठिसहिएण।
पंचनमुक्कारपरो, एवं सोविज्ज नो निद्दं ॥ १८ ॥
निद्दाविरमे चिंति-ज्ज विसमविसमसंनिभं विसयसुक्खं।
सुरसिवपुरगमणरहे, एयं च मणोरहे कुज्जा ॥ १९ ॥
सिरिअरिहंतो देवो, सुनाणचरणा सुसाहुणो गुरुणो।
तत्तं जिणपन्नत्तं, भवे भवे इय मह हविज्जा ॥ २० ॥
जिणधम्मवासियमई, चेडो वि वरं हविज्ज मह कुले।
जिणधम्मेण विमुक्को, कयावि मा चक्कवट्टी वि ॥ २१ ॥
मलमलिणतणू जरमलि-णचीवरो सव्वसंगपरिमुक्को।
महुयरवित्तिपहाणं, कया करिस्सामि मुणिचरियं ॥ २२ ॥
चइउं कुसीलसंगं, गुरुपयपंकयरयं परिफुसंतो।
जोग अब्भस्संतो, भवबुच्छेयं कया काहं ॥ २३ ॥
अंकट्ठियहरिणसिसुं, वणम्मि पउमासणेण आसीणं।
वुड्ढा मिगजूहपहू, अग्घाइस्संति मं कइया ॥ २४ ॥
मित्ते सत्तुम्मि मणि-म्मि लट्ठुए कंचणम्मि पाहाणे।
मुक्खे भवे भमिस्सं, कया अहं निव्विसेसमई ॥ २५ ॥
एव पइदिणकिरियं, कुणमाणो माणवो निहियमाणो।
गिहिवासे वि वसंतो, आसन्नं कुणइ सिद्धिसुहं ॥ २६ ॥
इय सुणिय महासयगो, आणंदो व्विव गहिउं गिहिधम्मं।
तुट्ठो सगिहम्मि गओ, विहरइ अन्नत्थ सामी वि ॥ २७ ॥
तस्संसग्गवसेण वि, पाविट्ठा रेवई न पडिवुद्धा।
मज्जरसापिसियगिद्धा, खुद्दा धणियं धणे लुद्धा ॥ २८ ॥
अइविसयगिद्धिगहिला, सा अन्नदिणम्मि नियसवत्तीओ।
छ स्सत्थपओगेणं, छ च्च हणइ विसपओगेणं ॥ २९ ॥
दुपयचउप्पयधणकण-गभाइ तासिं संतियं लेइ।
बहुपाणवयाणी कू-रमाणसा चिट्ठइ सयावि ॥ ३० ॥
वुट्टे य अमाघाए, पलमलहंती कयावि तो एसा।
माराविय सवयाओ, आणावइ गोणपायदुगं ॥ ३१ ॥
चउदसवरिसवसाणे, कुडुंबभारे ठवित्तु जिट्ठसुयं।
पोसहसाले पविसइ, विरत्तचित्तो महासयगो ॥ ३२ ॥
सा मज्जपाणमत्ता, हावविलासाइविविहभावेहिं।
तं उवसग्गइ बहुसो, अहियासइ सुट्ठु स महप्पा ॥ ३३ ॥
सम्मं समणोवासग—पडिमा इक्कारसा वि फासेइ।
नाऊण चरिमसमयं, विहिणा पडिवज्जएऽणसणं ॥ ३४ ॥
सो सुहभाववसुप्प-न्न ओहिनाणेण लवणजलहिम्मि।
उत्तरवज्जदिसासुं, नियइ पुट्ठो जोयणसहस्सं ॥ ३५ ॥
उत्तरओ हिमवंतं, हिट्ठा रयणाइलोलुयं नरयं।
चुलसीवाससहस्स-ट्ठिइयं जाणेइ पासेइ ॥ ३६ ॥
इत्तो य मज्जमत्ता, सा पावा रेवई तहिं पत्ता।
उवसग्गिउं पवत्ता, दुस्सहरागग्गिसंतत्ता ॥ ३७ ॥
तो किमियमेरिसी इय वियक्कमाणेण ओहिनाणेणं।
नाय तीसे सयलं, चरियं तह नरयगामित्तं ॥ ३८ ॥
ईसिं कुविएण भणिया, हा पाविट्ठे! निकिट्ठदुच्चिट्ठे!।
निल्लज्जे! अज्जवि पा-व पुंजमज्जेसि केवइयं ॥ ३९ ॥
जं सत्तरत्तअंतो आलस्सयवाहिणा समभिभूया।
मरिऊण तं गमिस्ससि, निरयावासम्मि लोलुयए ॥ ४० ॥
इय सुणिय अवगयमया, अइकुविओ अज्ज मे महासयगो।
मरणभयवेवियंगी दुहियमणा सा गया गेहे ॥ ४१ ॥
इत्तो य तत्थ पत्ते-ण वीरनाहेण गोयमो भणिओ।
तं वच्च गच्छ पभणसु, मह वयणेणं महासयगं ॥ ४२ ॥
भद्द! न कप्पइ उत्तम-गुणाण सड्ढाण भासिउं फरुसं।

परपीडाए अलग, विसेसओ उत्तमट्ठम्मि ॥ ४३ ॥
ता तस्स तुम दुब्भा-सियस्स गिण्हाहि भद्द ! पच्छित्तं ।
नत्तो तह त्ति भणिउ, गोयमसामी तहिं पत्तो ॥ ४४ ॥
कहिओ पहुआएसो, संवेगगओ तओ महासयगो ।
वंदित्तु गोयमपहु, आलोयइ तं अईयारं ॥ ४५ ॥
पडिवज्जइ पच्छित्त, तो पत्तो गोयमा पहुसमीवे ।
इयरो वि समाहिजुओ, सुमरंतो वीरपयकमलं ॥ ४६ ॥
कयसट्ठिभत्तछेओ, विहिणा मरिउं सुहम्मकप्पम्मि ।
अरुणाभम्मि विमाणे, चउपलियठिई सुरो जाओ ॥ ४७ ॥
तत्तो चविय विदेहे, विसिट्ठदेहो लहित्त चारित्तं ।
स महासयगस्स जिओ, अफरुसभासी सिव गमिही ॥४८॥
महाशतक आलपन् पुरुषवाक्यमालोचनां,
गणाधिपतिगौतमाद् भुवनभानुना ग्राहितः ।
इति स्फुटमवेत्य भो विमलशीलभाजो जना !,
सुधामधुरमुत्तमं वदत संगतं सद् वच ॥ ४९ ॥"

समर्थितं शीलवतः परुषवचनाभियोगत्याग इति षष्ठो भेदः । ध०र०२ अधि० २ लक्ष० । स्था० । " कुरुडउक्करुडदुव्भगाई, वंजकत्तनि दुव्विसकन्नगाई । जम्मंतरे खंडियसीलभावा, चाऊल कुज्जा दढसीलभावं ॥ १ ॥ " कल्प० १ अधि० ४ क्षण । शील च सदाचाररूपमष्टादशशीलाङ्गलक्षणम् ब्रह्मवत् रूपं चेति त्रिविध यदुच्यते । ग० २ अ० । स्वभावे, उत्त० १३ अ० । प्रकृतौ, पं० चू० २ कल्प । स० । फलानपेक्षप्रवृत्तौ, स० ।

सीलंग-शीलाङ्ग-न० । शीलं-समाधानं तस्याङ्गानि करणानि । दर्श० ४ तत्त्व । चरणांशेषु, पञ्चा० १४ विव० । पृथिवीकायसमारम्भपरित्यागादिषु, आव० ४ अ० । ( शीलाङ्गानां परिमाणम् ' अट्ठारससीलंगसहस्स ' शब्दे प्रथमभागे २५१ पृष्ठे उक्तम् । ) " जोए करणसन्ना, इंदियभोगाइसमणधम्मे य । सीलङ्गसहस्साण , अट्ठारसयस्स निप्फत्ती ॥ १ ॥ " ध०र० ३ अधि० ७ लक्ष० । संथा० । दर्श० । ( अत्रत्या स्थापना ' गुरुकुलवास ' शब्दे तृतीयभागे ६४० पृष्ठे उक्ता । )

सीलंगजुय-शीलाङ्गयुत-त्रि० । चरणांशयुते, पञ्चा० ४ विव० ।

सीलंगायरिय-शीलाङ्गाचार्य-पुं० । तत्त्वादित्यापरनाम्नि आचार्ये, येन सं० ७६८ वर्षे आचाराङ्गटीका वाहरिगणिसाहाय्येन कृता । आचा० २ श्रु० ४ चू० । सूत्रकृताङ्गटीकाऽपि तेनैव वाहरिसाधुसहाय्येन चक्रे । आचा० । अयं श्रीजिनभद्रगणिक्षमाश्रमणस्य शिष्य आसीत्, अस्य कोट्याचार्येत्यपरं नाम । जै० इ० ।

सीलकरण-शीलकरण-न० । अनुष्ठानसेवने, प्रश्न० ४ संव० द्वार ।

सीलकलिय-शीलकलित-त्रि० । सुशीलतया परिहारविरते, प्रश्न० २ आश्र० द्वार ।

सीलखलियपण्णवणा-शीलस्खलितप्रज्ञापना-स्त्री० । शीलस्खलिताना व्यामोहिताना यथावस्थितार्थप्ररूपणायाम् , सूत्र० १ श्रु० ३ अ० १ उ० ।

सीलगुण-शीलगुण-पुं० । शीलं समाधानं तदेव गुण शीलगुण । समाधानरूप गुणे, प्रश्न० १ संव० द्वार । आचा० ।

सीलगुणोववेय-शीलगुणोपपेत-त्रि० । शीलं चारित्रं तदेव गुणो, यद्वा-गुणा पृथगेव ज्ञानं, तेन शीलगुणेन शीलगुणाभ्यां वा चारित्रज्ञानाभ्यामुपपेता. शीलगुणोपपेता. । ज्ञानिषु संयतेषु, उत्त० १ अ० ।

सीलऽड्ढ-शीलाढ्य-त्रि० । अष्टादशसहस्रब्रह्मचर्यभेदैः शीलैः पूर्णे, उत्त० १९ अ० ।

सीलपरिघर-शीलपरिगृह-न० । चारित्रस्थाने, प्रश्न० २ संव० द्वार ।

सीलभंग-शीलभङ्ग-पुं० । ब्रह्मव्रतनाशे, व्य०७ उ० । (संयतीनां ब्रह्मव्रतभङ्ग ' सयायार ' शब्दे' तृतीयभागे७१५पृष्ठे उपपादि । )

सीलभद्द-शीलभद्र-पुं० । स्वनामख्याते आचार्ये , यच्छिष्येण चन्द्रसूरिणा संवत् ११७४ वर्षे निशीथचूर्णेर्विंशतितमोद्देशकस्य व्याख्या निर्ममे । नि० चू० २ उ० ।

सीलभूय-शीलभूत-त्रि० । शीलं चारित्रं भूत. प्राप्तो यः स शीलभूत । शीलयुक्ते, उत्त० २७ अ० ।

सीलमंत-शीलवत्-त्रि० । शीलमस्यास्तीति शीलवान् । आव० ३ अ० । आयतनसेवादिषड्विधशीलयुक्ते श्रावके, ध० २ अधि० । ध० र० । (शीलवत्स्वरूपं द्वितीयलक्षणं 'सावग' शब्दे अस्मिन्नेव भागे प्रतिपादितम् । ) सदाचारे, उत्त० ७ अ० । शीलयुक्ते, पं० व० १ द्वार । अष्टादशशीलाङ्गसहस्रधारिणि, आचा० २ श्रु० १ चू० १ अ० ६ उ० । सामान्येन लाघवयोगविरतो वा शीलवान्-भण्यते । सूत्र० ७ अ० । य. प्रासुकमुद्गमादिदोषरहितमाहारं भुङ्क्ते त शीलवन्तं वदन्ति तज्ज्ञा । सूत्र० १ श्रु० ७ अ० ।

सीलरयणसूरि-शीलरत्नसूरि-पुं० । पाञ्चालगच्छीयजयकीर्तिसूरिशिष्ये, तेन च संवत्—१४९१ वर्षे श्रीमेरुतुङ्गसूरिकृतमेघदूतस्य टीका कृता । जै० इ० ।

सीलवाइ-शीलवादिन्-पुं० । शीलवन्तमात्मानं वादयितुं शील यस्य स शीलवादी । कुशले शीलवत्त्वख्यापके , सूत्र० १ श्रु० ७ अ० ।

सीलवित्ति-शीलवृत्ति-स्त्री० । हिंसानृतादत्ताब्रह्मपरिग्रहविरमणकुशलानुष्ठानवर्तने, द्वा० २५ अष्ट० ।

सीलव्वय-शीलव्रत-न० । अणुव्रते, आ० क० १ अ० । स० । दशा० । भ० । औ० ।

सीलसागर-शीलसागर-पुं० । शीलेन सागर इव शीलसागर । शीलवतां प्रधाने, आ० म० १ अ० ।

सीलायार-शीलाचार-पुं० । शील समाधिस्तत्प्रधानस्तस्य वाऽऽचारोऽनुष्ठानम् । शीलेन वा स्वभावेन वा आचरणे, स्था० ४ ठा० १ उ० ।

सीलायारसमण्णिय-शीलाचारसमन्वित-त्रि० । शीलदोषरहिते, व्य० १ उ० ।

सीलेस-शीलेश-पुं० । शीलं समाधानं तच निश्चयत प्रर्वसंवररूपं समाधानरूपत्वात् सर्वसंवररूपत्वात् तस्य सर्वसंवररूपस्य शीलस्येश शीलेश । शैलेशीमयस्था प्रतिपन्ने, विशे० ।

सीवण-सीवन-न०। सूच्या वस्त्रखण्डसन्धाने, नि०चू०१२उ०। आचा०।(अचेलस्य स्फुटितवस्त्रस्य वस्त्रसीवनार्थं सूच्यादियाचनम् 'अचेलपरिसह' शब्दे प्रथमभागे १८८ पृष्ठे उक्तम्। )

सीस-शिष-धा०। विशेषणे, "रुयादीनां दीर्घः" ॥८।४।२३६॥ इति स्वरस्य दीर्घः। सीसइ। शिष्यते। प्रा० ४ पाद।

शीर्षन्-न०। "सर्वत्र लरामचन्द्रे" ॥८।२।७९॥ इति रलोपः। "लुप्तयरवशषसां शषसां दीर्घः" ॥८।१।४३॥ इति स्वरस्य दीर्घः। प्रा०। शिरसि, आ० चू० १ अ०। मस्तके, दर्श० ४ तत्त्व। प्रश्न०। आचा०। उत्त०।

शिष्य-त्रि०। शासितुं शक्यः शिष्यः। उत्त०। शिक्षाधारके, उत्त० २० अ०। स्वदीक्षिते, व्य०। उपाध्यायस्योपासके, जी० ३ प्रति० ४ अधि०। शिष्ययोग्यतायां गोणयादयो दृष्टान्ताः। विशे०।

अथ भाषक-विभाषक-वार्त्तिकविद् एवान्यथा प्रतिपिपादयिषुराह—

ऊणं सममहियं वा, भणियं भासंति भासगाईया।
अहवा तिएणवि सोह-ऊ कट्ठकम्माइनाएहिं ॥१४२४॥

अनुयोगाचार्येण यद् भणितं—व्याख्यातं तस्मादूनं योऽन्यस्य भाषते—व्यक्तं स भाषक उच्यते। तद्व्याख्यातस्य समं तु भाषमाणो विभाषकः। प्रज्ञातिशयवांस्तदधिकं भाषमाणो वार्त्तिककृदिति। अथवा-किमनेन बहुना?, त्रीनप्येतान् भाषकादीननन्तरवक्ष्यमाणकाष्ठकर्मादिभिर्ज्ञातैरुदाहरणैः साधयेत्-कथयेदिति। अनन्तरनिर्युक्तिगाथाप्रस्तावनेयम्।

तान्येव काष्ठकर्माद्युदाहरणान्याह—

कट्ठे पोत्थे चित्ते, सिरिघरिए पोंड-देसिए चेव।
भासग-विभासए वा, वत्तीकरणे य आहरणा ॥१४२५

'काष्ठ' इति काष्ठविषयो दृष्टान्तः। यथा काष्ठे कश्चिद् रूपकार आकारमात्रमेवोन्मीलयति, कश्चिद् तु तत्रैव स्थूलावयवं रूपं किञ्चिद् निष्पादयति, अपरस्तु सुविभक्तविचित्रोत्कृष्टनि शेषाङ्गोपाङ्गावयवयुक्तं निर्वर्त्तयति। एवं काष्ठकल्पं सामायिकादिसूत्रम्। तत्र भाषकः किञ्चिदर्थमात्रमेव व्याचष्टे। विभाषकस्तु तस्यैवानेकप्रकारैरर्थमाख्याति। वार्त्तिककारस्तु निरवशेषैरपि व्याख्याप्रकारैस्तदर्थं प्रतिपादयति। पुस्तं लेप्यम्, तद्दृष्टान्तेऽपि काष्ठवदेव सर्वं वाच्यम्। चित्रदृष्टान्ते तु-यथा कोऽपि चित्रकारो वर्त्तिकाभिः कुड्यादिषु रूपस्याकारमात्रं लिखति। कश्चित्तु तत्रैव हरितालादिवर्णकैर्गौरवर्णादिभावान् दर्शयति। कश्चित्तु निःशेषानपि तद्गतभावान् सत्यापयति। दार्ष्टान्तिकयोजना तु तथैवेति। श्रीगृहं भाण्डागारम्, तदस्यास्तीति श्रीगृहिको भाण्डागारिकः। तत्र कोऽप्यसौ 'अत्र भाजने रत्नानि सन्ति' इत्येतावन्मात्रमेव जानाति, अपरस्तु तज्जाति-माने अपि वेत्ति, अन्यस्तु सर्वांस्तद्गुण-दोषानप्यवबुध्यत एव। एवं प्रथम-द्वितीय-तृतीयश्रीगृहिकतुल्या यथासंख्यं भाषक-विभाषक-वार्त्तिककरा विज्ञेयाः। पौण्डमविकसिताऽवस्थं कमलम्। तच्च यथेषद्विकसिता-ऽर्धविकसित-सर्वविकसितभेदात् त्रिधा भवति, एवं भाषकादिव्याख्यानमपीति। देशनं देशः कथनं सोऽस्यास्तीति देशिकः, तत्र यथा कश्चिद् देशिकः पन्थानं पृष्टो दिङ्मात्रोपदेशेनैव तं कथयति, कश्चित्तु तद्व्यवस्थितग्राम-नगरादिभेदेन, अपरस्तु समस्ततद्गतगुण-दोषाख्यानद्वारेणापि तमुपदिशति। दार्ष्टान्तिकयोजना तथैव। एवमेतानि भाषक-विभाषक-व्यक्तीकरविषयाण्युदाहरणानि प्रतिपादितानि। इति निर्युक्तिगाथासंक्षेपार्थः।

विस्तारार्थं भाष्यकारः प्राह—

पढमो रूवागारं, थूलावयवो बिइज्जओ बीओ।
तइओ सव्वावयवे, निद्दोसे सव्वहा कुणइ ॥१४२६॥
कट्ठसमासं सुत्तं, तदत्थरूवेगभासणं भासा।
थूलत्थाण विभासा, सव्वेसिं वत्तियं नेयं ॥ १४२७ ॥

प्रथमगाथायां प्रथम-द्वितीय-तृतीयशब्दवाच्यो रूपकारः, द्वितीयगाथायां तु दार्ष्टान्तिकयोजना। तत्र काष्ठस्थानीयं सूत्रम्। 'तदत्थरूवेगभासणं' ति तस्य च सूत्रस्यार्थस्तदर्थस्तस्य चानन्तरूपत्वाद् यदेकरूपभाषणं सा भाषा—स भाषकव्यापार इत्यर्थः, स्थूलार्थानां तु कियतामपि भाषणं विभाषा, सर्वेषां तु निरवशेषाणामर्थानां भाषणं वार्त्तिकं ज्ञेयमिति।

पुस्तदृष्टान्तं व्याख्यातुमाह—

पोत्थं दिट्ठागारं, दिट्ठावयवं समत्तपज्जायं।
जह तह सुत्तं भासा, विभासणं वत्तियं चेव ॥१४२८॥

यथा पुस्तं लेप्यं प्रथममिन्द्रादिसंबन्धिरूपस्य दृष्टाकारमात्रं भवति। ततः क्रमेण दृष्टतदवयवम्, ततोऽपि क्रमाद् निर्वर्तितनि शेषतत्पर्यायं संपद्यते, तथा सूत्रमाश्रित्य भाषा, विभाषा, वार्त्तिकं च जघन्य-मध्यमो-त्तमस्याख्यातरूपं यथासंख्यं ज्ञेयमिति।

चित्रदृष्टान्तं विवरीषुराह—

कुड्डे वत्तीलिहियं, वएणुम्भिन्नं समत्तपज्जायं।
जह तह सुत्तं भासा, विभासणं वत्तियं चरिमं ॥१४२९॥

यथा किञ्चिदिह मसृणं धवलं कुड्यम्। तच्च प्रथमं वर्त्तिकाभिस्तदालेख्यरूपकाणां लिखिताकारमात्रं भवति। ततश्च वर्णकोद्भिन्नं संपद्यते, हरितालादिवर्णकैरुन्मीलितं गौरवर्णादिस्वरूपं भवतीत्यर्थः। ततः समस्ताः समाप्ता वा पर्याया आलेख्यधर्मा निष्पन्ना यत्र तत् समस्तपर्यायम्, समाप्तपर्यायं वा भवति—सर्वात्मना निष्पन्नं भवतीत्यर्थः। तथाच कुड्यस्थानीयं सूत्रम्। तत्र भाषा, विभाषा, वार्त्तिकं च चरमं तृतीयं भवतीति।

श्रीगृहिकोदाहरणार्थमाह—

भासे जाई-माणं, गुणे य रयणाणँ मुणइ सिरिघरिओ।
जह तह सुयभासे भा-सगादओ अत्थरयणाणं ॥१४३०।

श्रीगृहिको भाण्डागारिकः, स च यथा कश्चिद् 'रत्नान्यत्र ताम्रकरण्डिकादिभाजने सन्ति' इत्येवं मुणतीति सोपस्कारं व्याख्येयम्। अपरस्तु तेषामेव रत्नानां जातिं मानं च जानाति। अन्यस्तु ज्वरादिरोगापहर्तृत्व-क्षुत्-पिपासा-श्रमापनेतृत्वादींस्तद्गुणानपि वेत्ति। अथवा-अन्यथा योज्यते-यथा श्रीगृहिकः कश्चिद् रत्नभाजनं मरकतादिकां तज्जातिं जानाति, अपरस्तु माष-वल्ल-गद्याणादिकादिकं तन्मानमपि बुध्यते, अन्यस्तु पूर्वोक्तांस्तद्गुणानपि समस्तान् जान-

तथा तत्त्वभाजनस्थानीये श्रुते श्लोक-बहु-बहुतरार्थवेत्तारो भापकादयो विज्ञेया इति।

पौण्डदृष्टान्तव्याख्यामाह—

पोंडं विभिन्नमीसं, दरफुल्लं वियसियं विसेसेणं।
जह कमलं चउरूवं, सुत्ताइचउक्कमप्पेवं ॥ १४३१ ॥

पौण्डमविकसितावस्थं कमलम्। तस्य च पश्चात् तिस्रो ऽवस्था जायन्ते, तद्यथा—'विभिन्नमीसं' ति ईषद्विभिन्नमित्यर्थः। तथा 'दरफुल्ल' ति अर्धविकसितमित्यर्थः। तथा 'वियसिय विसेसेणं' ति सर्वात्मना विकसितमित्यर्थः। एवं च सति यथा कमलं चतूरूपमुक्तम्, तथा सूत्रादिचतुष्कमपि विज्ञेयम्—अविवृतं मुकुलितं सूत्रम्, तथा, अल्प-बहु-बहुतरव्याख्यानरूपास्तस्य तिस्रोऽवस्थाः, इत्येवं चतूरूपतेति।

अथ देशिकदृष्टान्तव्याख्यामाह—

पंथो दिसाविभागो, गाम-पुराइगुण दोसपेयालं।
जह पहदेसगमेवं, सुत्तं भासाइतियं च ॥ १४३२ ॥

इह पन्था कश्चिद् ग्राम-नगरादीनां भवति। तं च पृष्टः कोऽपि दिग्विभागमात्रमेव कथयति, अन्यस्तु तद्व्यवस्थितग्रामनगरादीन् कथयति, अपरस्तु मार्गगतानि शेष—गुण-दोषविचारमपि कथयति। इत्थं यथा पथो मार्गस्य देशनं त्रिविधं प्रवर्त्तते, एवं भाषा-विभाषा—वार्तिकलक्षणमपि त्रितयमवगन्तव्यम्। नन्विह सर्वेष्वपि काष्ठादिदृष्टान्तेष्वयं परमार्थः—जघन्य—मध्यमो—त्कृष्टव्याख्यातारो भापक-विभापक-व्यक्तीकरा उच्यन्त इति। तदेवं जिनप्रवचनोत्पत्तिः प्रवचनैकार्थिकानि, तद्विभागश्चोक्तः।

अथ क्रमप्राप्तमपि द्वारविधिं 'दारविही वि महत्था तत्थ वि वक्खाणविहिविवज्जासो, मा होज्ज' इत्यादिपूर्वोक्तकारणादुल्लङ्घ्य, व्याख्यानविधिमेवेह तावदभिधित्सुः प्रस्तावनामाह—

एयस्स को णु जोग्गो, वत्तुं सोउं च केण विहिणा वा।
पुव्वोइयसंबंधो, वक्खाणविही विभागाओ ॥ १४३३ ॥

एतस्य च वक्ष्यमाणस्य 'उद्देसे निद्देसे य' इत्यादिद्वारविधेः, सर्वस्य वाऽनुयोगस्य को वक्तुं योग्यो गुरुः ?, कश्च श्रोतुं योग्यः श्रोता ?, केन वा विधिनाऽसौ वक्तव्य ?, इत्येतदभिधानीयम्। अत एव तस्मात् प्रवचनैकार्थिकविभागादनन्तरं 'दारविही वि महत्था' इत्यादिना पूर्वप्रतिपादितसंबन्धो व्याख्यानविधिरुच्यते। पाठान्तरं वा 'विभासाउ त्ति' सामान्येन पूर्वमुद्दिष्टस्येदानीं व्याख्यानविधिर्विशेषेण भापणं भाषा भणनं 'क्रियते' इति शेषः। इति गाथार्थः। (१४३४ गाथा 'वक्खाण' शब्दे षष्ठे भागे उक्ता।)

विस्तरतस्तु गोदृष्टान्तं भाष्यकारः प्राह—

भग्गनिविट्ठं गोणिं, केउं दंतो व्व न सुयमायरिओ।
एवं मए वि गहियं, गिण्हह तुमं पि त्ति जंपंतो ॥१४३५॥
अविगलगोविक्केया, न जो वि मंदक्खमो सुगंभीरो।
अक्खेवनिण्णयपसं-गपारओ सो गुरु जोग्गो ॥१४३६॥
सीसो वि पहाणयरो, जेगंताणवियारियग्गाही।
सुपरिच्छियक्केया इव, धाणवियारक्खमो इट्ठो ॥१४३७॥

कस्यापि धूर्तस्योपचितसर्वाङ्गसुन्दरस्वरूपाऽपि गौः कथमपि संस्थानीयप्रदेशे स्थिता भग्ना। ततश्चोत्थातु न शक्नोति, इत्युपविष्टैव तिष्ठति। ततस्तेन धूर्तेन कस्यापि मुग्धस्य क्रेतुस्तथैवोपविष्टा मूल्येन प्रदत्ताऽसौ। स्वयं पुनरपसृतः। क्रेताऽपि यावत् तामुत्थापयति, तावद् न शक्नोत्युत्थातुमसौ। ततस्तथैव स्थिताऽन्यस्य मूल्येन दातुमारब्धा तेनेयम्। स च दक्षत्वादध प्रभूत्यवयवाना निरीक्षणार्थं तामुत्थापयति मूलक्रेता च तत्कर्तुं न ददाति। वदति च मयोपविष्टैव गृहीता, त्वमप्युपविष्टामेवामुं गृहाण। एवं च न कोऽपि गृह्णाति, उपहसति च तामिति। अथ प्रकृते योज्यते-भग्ना सती निविष्टा भग्ननिविष्टा तां भग्ननिविष्टां 'गोणिं' गां यथा मुग्धः कश्चिदुपविष्टामेव क्रीत्वोपविष्टामेवाऽन्यस्य ददत्-प्रयच्छन् क्रेतोपहासविषयत्वादयोग्य। 'न सुयमायरिउ' त्ति एवमाचार्योऽपि 'न' नैव योग्यो भवति; किं कुर्वन् ?, श्रुतं ददत्-प्रयच्छन्। कथंभूतः सन् ?, इत्याह—'एवमविचारितमेव मयाऽप्येतत् श्रुतं गृहीतम्, त्वमप्यविचारितमेव गृहाण' इति शिष्यं प्रति जल्पन्निति। इत्थंभूतस्य सूरेः पार्श्वे न श्रोतव्यम्, संशीनिपदेषु निश्चयाभावेन मिथ्यात्वगमनप्रसङ्गात्। अतो व्याख्यानस्यायमयोग्योऽभिधीयत इति। कथंभूतः पुनर्योग्य ?, इत्याह—'अविगलेत्यादि' सुगमा। तदेव गुरोर्योग्यस्य योग्यस्य च स्वरूपमुपदर्श्य शिष्यस्यापि तदाह-'सीसो वी' त्यादि, शिष्योऽपि 'न' नैव प्रधानतरः, किंत्वयोग्यः। कथंभूतः ?, इत्याह-मुग्धगोक्रेतेवैकान्तेनाऽविचारितग्राही। यस्तु स्थानविचारक्षम आग्रहरहितो विचारयोग्ये वस्तुनि विचारकः स सुपरीक्षितगवादिक्रयिक इव सिद्धान्तश्रवणे इष्टो योग्य शिष्य इति।

अथ चन्दनकन्थादृष्टान्तविवरणमाह—

जो सीसो सुत्तत्थं,
चंदणकंथं व परमयाईहिं।
मीसेइ गलियमहवा,
सिक्खियमाणेण स न जोग्गो ॥१४३८॥
कंथीकयसुत्तत्थो
गुरू वि जोग्गो न भासियव्वस्स।
अविणासियसुत्तत्था,
सीसाऽऽयरिया विणिद्दिट्ठा ॥१४३९॥

इह भावार्थस्तावत् कथानकेनोच्यते-द्वारवत्यां नगर्यां वासुदेवस्य राज्यं पालयतो गोशीर्ष-श्रीखण्डमय्यो देवतापरिगृहीतास्तिस्रो भेर्य आसन्, तद्यथा-सांग्रामिकी, श्रोद्भूतिकी, कौमुदिका। तत्र प्रथमा संग्रामकाले समुपस्थिते सामन्तादीनां ज्ञापनार्थं वाद्यते, द्वितीया पुनरद्भुते- आगन्तुके कस्मिंश्चित् प्रयोजने सामन्ता—ऽमात्यादिलोकस्यैव ज्ञापनार्थं वाद्यते। तृतीया तु कौमुदीमहोत्सवादुत्सवज्ञापनार्थं वाद्यते। चतुर्थ्यपि गोशीर्ष-श्रीखण्डमयी भेरी तस्यासीत्। इयं तु षण्मासपर्यन्ते वाद्यते, यश्च तच्छब्दं शृणोति, तस्यातीतम्, अनागतं च प्रत्येकं षाण्मासिक-

माशिवमुपशामयति। इयं च प्रकृतोपयोगिनी चतुर्थी भेरी।
इति तदुत्पत्तिर्लिख्यते-

कदाचित् सौधर्मदेवलोके समस्ताऽमरसभापुरस्सरमभि-
हितं शक्रेण-

"पेच्छ अहो! हरिपमुहा, सप्पुरिसा दोसलक्खमज्झे वि।
गिण्हंति गुणं चिय तह, न नीयजुज्झेण जुज्झंति॥ १॥
एयं असद्दहंतो, कोइ सुरो चिंतए किह णु एयं।
संभवइ जं अगहिउं, परदोसं चिट्ठए कोइ॥ २॥
इय चिंतिऊण इहइं, समागओ तो विउव्वए एसो।
बीभत्थकसिणवन्नं, अइदुग्गंधं मयगसुणयं॥ ३॥
तस्स य मुहे विउव्वइ, कुंदुज्जलपवरदसणरिंछोली।
नेमिजिणवन्दणत्थं, चलियस्स पहम्मि हरिणो य॥ ४॥
तं उवदंसइ सुणयं, भग्गं गंधेण तस्स हरिसेन्नं।
सयलं पि उप्पहेणं; वच्चइ कण्हो उण सरूवं॥ ५॥
विविहं भावंतो पो-ग्गलाण वच्चइ पहेण तेणेव।
दट्ठूण य सुणयसवं, पभणइ गुरुयत्तणेणेवं॥ ६॥
अइमसिणकसिणवत्थं-चले व्व वयणे इमस्स पेच्छ अहो।
मुत्तावलि व्व रेहइ, निम्मलजोण्हा दसणपंती॥ ७॥
अह चिंतियं सुरेणं, सच्चं जं अमरसामिणा भणियं।
नूणं गुणे चिय गुरुया, पिच्छंति परस्स न हु दोसं॥ ८॥
अह अन्नदिणे देवो, तुरयं अवहरइ वन्नहं हरिणो।
मिच्छ व्व तस्स सयलं, विणिजिय तेण कुटलग्गं॥ ६॥
नो अप्पणा वि विणट्ठं, तुरगस्स कुढाचयम्मि पडिलग्गो।
अह देवेण भणियं, जिणिउं घेप्पंति रयणाइं॥ १०॥
नो जुज्झामो त्ति भणे-इ केसवो किं रहवरे अहयं।
तो गेण्ह तुमं पि रहं, जेण समाणं हवइ जुज्झं॥ ११॥
नेच्छइ एयं देवो, तुरएहिं गयाइएहिं वि स जुज्झं।
जा नेच्छइ ता भणिओ, हरिणा तो भणसु तुममेव॥१२॥
देवेण तओ भणियं, परंमुहा दो वि होइऊण पुणो।
जुज्झामो पूयघाए-हिं भणइ तो केसवो देवं॥ १३॥
जइ एवं तो विजिओ, अहयं तुमए तुरंगमं नेहि।
जुज्झामि पुणो कहमवि,न हु परिसनीयजुज्झेणं॥ १४॥
संजायपच्चओ सो, पच्चक्खो होइऊण तो देवो।
भणइ अमोहं देवा-ण दंसणं भणसु किं पि वरं॥ १५॥
अह भणइ केसवो असि-वपसमणिं नो पयच्छ मह भेरिं।
दिन्ना य सुरेणागम-णवइयरं साहिउं य गओ॥ १६॥
छण्हं छण्हं मासा-णं सा इ वाइज्जए तहिं भेरी।
जो सुणइ तीए सद्दं, पुव्वुप्पन्नाउ वाहीओ॥ १७॥
नस्संति तस्स अवरा,ताउ(तह)य न हु होंति जाव छम्मासा।
अह अन्नया कयाई, वणिओ आगंतुओ कोइ॥ १८॥
दाहज्जरेण घणियं, अभिभूओ भेरिरक्खयं भणइ।
दीणारसयसहस्सं, गेण्हसु मह देसु पलमेगं॥ १६॥
भेरीए छिंदिऊणं, दिन्नं तेणावि लोभवसगेणं।
अन्नेण चंदणेण य, भेरीए थिग्गलं दिन्नं॥ २०॥
इय अन्नाण विदिन्न-ण तेण कंथीकया इमा भेरी।
अह अन्नया य असिवे,हरिणा ताडाविया एसा॥ २१॥
कंथत्तणेण तीमे, सद्दो सुच्चइ हरिसभाए वि।
कंथीकरणवइयरो, विन्नाओ केसवेण तओ॥ २२॥
मारावित्रो य सो भे-रिरक्खओ तेण अट्ठमं काउ।
आराहिओ स देवो, अन्नं भेरिं च सो देइ॥ २३॥
अन्नो य केसवेणं, कओ तहिं भेरिपालओ सो य।
रक्खइ तं जत्तेणं, लहेइ लाभं च तो हरिणो॥ २४॥"

अथ गाथाक्षरार्थः कथ्यते—स शिष्योऽनुयोगश्रवणस्य न योग्यः, किम्?, इत्याह—यः सूत्रम्, अर्थं वा चन्दनकन्थावत् परमतादिभिर्मिश्रयति। गलितं वा विस्मृतं शिक्षितमानेन—शिक्षितत्वाहङ्कारेण परमतादिभिर्मिश्रयित्वा संपूर्णं करोति। इदमुक्तं भवति—यथा भेरीपालकेन गोशीर्षश्रीखण्डभेरी इतरचन्दनखण्डैर्मिश्रयित्वा कन्था कृता, एवं यः शिष्य सूत्रमर्थं वा परमतेन, आदिशब्देन स्वकीयेनैव ग्रन्थान्तरेण मिश्रयित्वा कन्थीकरोति, अथवा—विस्मृतं सूत्रमर्थं वा 'सुशिक्षितः स्वयमेवाहम्, नान्यं कञ्चित् कदाचित् किमपि पृच्छामि' इत्यहङ्कारेण परमतादिभिरपि मिश्रयित्वा संपूरणं विदधाति, सोऽनुयोगश्रवणस्य न योग्य इति। एवं कन्थीकृतसूत्रार्थो गुरुरप्यनुयोगभाषणस्य न योग्यः, किन्त्वविनाशितसूत्रार्था शिष्याचार्या अनुयोगस्य योग्या विनिर्दिष्टा इति।

अथ चेटिदृष्टान्तो विव्रियते—

अत्थाणत्थनिउत्ता-भरणाणं जिणसेट्ठिधूय व्व।
न गुरू विहिभणिए वा,विवरीयनिओयओ सीसो॥१४४०
सत्थाणत्थनिउत्ता, ईसरधूया सभूसणाणं व।
होइ गुरू सीसोऽवि य,विणिओएंतो जहाभणियं॥१४४१॥

भावार्थः कथानकेनोच्यते—वसन्तपुरे नगरेऽमृतनः श्रेष्ठी राज्ञा पदात् स्फेटितोऽन्यो नवश्रेष्ठी विहितः। तथापि जीर्णश्रेष्ठिदुहितुर्नवश्रेष्ठिदुहित्रा सह कथमपि महती प्रीतिः संजाता। परं तथापि जीर्णश्रेष्ठिपुत्रिका हृदये कालुष्यं न मुञ्चति—'वयमेतैः पदात् परिभ्रंशिताः' इति। अन्यदा च ते द्वे अपि जलाशये क्वचिद् गते। तत्राभरणानि तटे मुक्त्वा नवश्रेष्ठिदुहिता जीर्णश्रेष्ठिपुत्रिकया सहैव मज्जनार्थं प्रविष्टा। ततश्च जीर्णश्रेष्ठिदुहिता झगित्येव जलाद् निर्गत्य नवश्रेष्ठिदुहितृसत्कान्याभरणानि गृहीत्वा चलिता। इतरया तु जलमध्यगततयाऽप्युच्चैः स्वरेण निषिद्धा। ततश्च 'का त्वम्?' कानि च तानि त्वदीयाभरणानि? मया हृतान्यात्मीयान्येव गृहीतानि, इत्यादि जल्पन्ती गाढमाक्रोशन्ती च सा गृहं गता। कथितं च निजमातापित्रोः अनुमतं च तत् ताभ्याम्। भणिताऽसौ तूर्णीं विधाय तिष्ठ त्वम्। तत् इतरयाऽपि निजपित्रोस्तत् कथितम्। याचितानि च ताभ्यां तान्याभरणानि। न समर्पयन्ति चेतराणि। ततो राजकुलव्यवहारो जातः। कारणिकैश्च साक्षी पृष्टः। न च कोऽप्यसौ संजातः। ततस्ते द्वे अपि दारिके आकार्य— जीर्णश्रेष्ठिदुहिता प्रोक्ता यदि त्वदियान्याभरणानि, तर्हि भगिन्येवामून्यस्माकमेव पश्यतां परिधाय दर्शय। यावच्चैषा तानि परिधातुमारब्धा, तावदनभ्यासादन्यस्थानोचितमाभरणमन्यत्र नियोजयति। यदपि किञ्चित् स्थाने नियुङ्क्ते तदप्यश्लिष्टमेवाभाति, क्षुभितत्वेन च न किञ्चिदसौ जानाति ततो नवश्रेष्ठिदुहिता तैरुक्ता। तया च स्वभ्यस्ततया स्थानौचित्येन सर्वाण्यप्याभरणानि झगित्येव परिहितानि, श्लिष्टा चातीव शोभन्ते। ततस्तैः पुनरपि सा प्रोक्ता—

भागित्येव मुञ्च तानि, तथा च क्रमेणावतार्य तथैव मुक्तानि। ततो ज्ञात कारणिकैः सद्भावः। दण्डितश्च शरीरनिग्रहेण राज्ञा जीर्णश्रेष्ठी। तद्दुहिता चाऽनर्थभाजनं संजाता। एवं जीर्णश्रेष्ठिदुहितेवाभरणानामस्थानेऽर्थानां नियोक्ता न गुरुः—गुरुपदयोग्योऽसौ न भवतीत्यर्थः। ऐहिकामुष्मिकाणां नि सख्यानर्थानां भाजनमसौ सपद्यते। विधिभणित च-गुरुणा यथावत् प्ररूपितं चाज्ञानादिना विपरीतयोजकः शिष्योऽपि 'न' नैव श्रवणयोग्यः; नापि कल्याणभागित्यर्थः। स्वस्थाने त्वर्थाना नियोक्ता, ईश्वरदुहितेव स्वभूषणाना, गुरुर्योग्यो भवति। शिष्योऽपि गुरुभिर्यथोपदिष्टं तथैव नियोजयन् श्रवणयोग्यः कल्याणभाक् च भवतीति।

श्रावकोदाहरणभाष्यम्—

चिरपरिचियं पि न सरइ, सुत्तत्थं सावओ सभज्जं व।
जो न स जोग्गो सीसो,गुरुत्तणं तस्स दूरेणं ॥१४४२॥

इह कथानकं 'सावगभज्जा' इत्यादौ कथितमेव। ततश्च यथा चिरपरिचितामपि स्वभार्यां परकलत्रबुद्ध्या भुञ्जानो न स्मरति,एव चिरपरिचितमपि सूत्रार्थं यः शून्यहृदयतया न स्मरति,स शिष्यो न योग्यः शिष्यत्वस्यापि, गुरुत्व तु तस्य दूरेणैवेत्यर्थः।

अथ बधिरगोदोहोदाहरणम्—

अन्नं पुट्ठो अन्नं, जो साहइ सो गुरू न बहिरु व्व।
न य सीसो,जो अन्नं,सुणेइ परिभासए अन्नं ॥१४४३॥

बधिरकथानक प्रागुक्तमेव। गाथाक्षरार्थस्तु सुगमः। अथवा-बधिरश्चासौ गोदोहश्चेति कर्मधारयो न क्रियते, किन्तु-बधिरश्च गोदोहश्चेति द्वन्द्वः। ततो गोदोहो-ग्रामेयक, तत्कथानक तु भिन्नमेवेह प्रागुक्तं द्रष्टव्यम्। उपनयस्तु स्वयमभ्यूह्यः। यो ग्रामेयकवद् यावन्मात्रमुक्तस्तावन्मात्रमेव स्वयं द्रव्यक्षेत्रकालाद्यौचित्यविरहितो वक्ति, स शिष्यत्वेऽप्ययोग्यः, गुरुत्व तु दूरेणैव तस्येति।

अथ टङ्कणकव्यवहारदृष्टान्तभाष्यम्—

अक्खेवनिण्णयपसं-गदाणगहणाणुवत्तिणो दो वि।
जोग्गा सीसायरिया,टंकणवणिओवमा समए ॥१४४४॥
अहवा गुरुविणयसुय-प्पयाणभण्डविणिओगओ दो वि।
निज्जरलाभयसहिया,टंकणवणिओवमा जोग्गा॥१४४५॥

इहोत्तरापथे म्लेच्छदेशे क्वचिद् टङ्कणाभिधाना म्लेच्छाः। ते च सुवर्णसङ्घेन दक्षिणापथायातानि क्रयाणकानि गृह्णन्ति, पर वाणिज्यकास्तद्भाषा न जानन्ति, तेऽपीतरभाषा नावगच्छन्ति। ततश्च कनकस्य क्रयाणकाना च तावत् पुञ्ज क्रियते, यावदुभयपक्षस्याऽपीच्छापरिपूर्त्तिः, यावदेकस्यापि पक्षस्येच्छा न पूर्यते, तावत् कनकपुञ्जात् क्रयाणकपुञ्जाच्च हस्त नापसारयन्ति, इच्छापरिपूर्तौ तु तमपसारयन्ति। एवं तेषा परस्परमीप्सितप्रतीप्सिता व्यवहार। अथोपनयगाथाद्वयं व्याख्यायते, तद्यथा-टङ्कणाश्च वणिजश्च तेषामुपमैवं समये वर्णिता, यथैते टङ्कण-वणिज परस्परमीप्सितप्रतीप्सितव्यवहारेण व्यवहरन्ति, एवमाक्षेपनिर्णयप्रसङ्गदानग्रहणानुवर्तिनो द्वयेऽपि शिष्या आचार्याश्चानुयोगयोग्या भवन्ति। इदमुक्तं भवति--यथा टङ्कणा वणिजश्च परस्परेच्छापरिपूर्तिं यावत् सुवर्णस्य क्रयाणकस्य च पुञ्जान् कुर्वन्ति, एव शिष्योऽपि तावदाक्षेपं पूर्वपक्षं करोति यावत् सूत्रार्थमवबुध्यते, न पुनर्भयलज्जाऽहङ्कारादिभिरेवमेवानवगतेनाग्रतो याति, गुरुरपि तावद् निर्णयं प्रयच्छति यावच्छिष्यः सूत्रार्थमवगच्छति। प्रासङ्गिकं च तावद् गुरु कथयति यावन्मात्रं शिष्योऽवधारयति। शिष्योऽपि यथाशक्ति तत् सर्वं गृह्णातीति। एवं दानग्रहणानुवर्तिनो द्वयेऽपि शिष्याऽऽचार्या योग्याः। तत्र दानं च ग्रहणं च, दानग्रहणे, प्रसङ्गस्य प्रसङ्गात्तस्य दानग्रहणे प्रसङ्गदानग्रहणे, आक्षेपश्च निर्णयश्च प्रसङ्गदानग्रहणे च तानि तथेति समास, तदनुवर्तनशीला द्वयेऽपि शिष्याऽचार्या योग्या भवन्ति। प्रकारान्तरेणापि टङ्कण—वणिगुपमान भावयति—'अहवे' त्यादि गाथा। अथवा-शिष्यैर्नित्यानतिक्रमात् कर्त्तव्य सर्वोऽपि गुरुविनयः, गुरुणाऽपि शिष्यौचित्येन कर्त्तव्य सर्वमपि श्रुतप्रदानम्। गुरुविनयश्च श्रुतप्रदानं च, ते एव भाण्डे ग्राह्यदेयक्रयाणके तयोर्विनियोगो विनिमयस्तस्माद् गुरुविनयश्रुतप्रदान—भाण्डविनियोगाद् द्वयेऽपि शिष्याऽऽचार्या कर्मनिर्जरालाभसहिताष्टङ्कणवणिगुपमा अनुयोगस्य योग्या भवन्ति। विपर्यये तु विपर्यय इति। तदेवं 'गोणी चंदण' इत्यादिना योग्या अयोग्योश्चोक्ता शिष्याऽऽचार्याः।

इदानीं शिष्यस्य विशेषत एव योग्यायोग्यत्वमभिधित्सुः प्रस्तावनामाह—

अत्थी स एव य गुरू, होइ जओ तो विसेसओ सीसो।
जोग्गोऽजोग्गो भन्नइ,तत्थाजोग्गो इमो होइ ॥१४४६॥

य इदानीं श्रुतस्यार्थं शृणोति स एव शिष्य कालान्तरेणार्थी, अर्थयुक्तोऽवगतसूत्रार्थः सन् यस्माद् गुरुर्भवति नान्यः तस्माद् योग्याऽयोग्यश्च विशेषतः शिष्या भण्यते। तत्रायोग्यस्तावदयं वक्ष्यमाणो भवति। इति द्वादशगाथार्थः॥

कस्स न होही देसो, अणब्भुवगओ य निरुवगारी य।
अप्पच्छंदमईओ, पत्थियओ गंतुकामो य ॥ १४४७ ॥

कस्य गुरोर्न भविष्यति द्वेष्याऽप्रीतिकर शिष्यः, अपि तु भविष्यत्येव। किं सर्व एव ?, न इत्याह— अनभ्युपगता श्रुतसंपदाऽनुपसंपन्नो निवेदितात्मेत्यर्थः। अनुपसम्पन्नत्वेऽपि तथा निरुपकारी गुरूणामनुपकारकः सर्वथा गुरुकृत्येष्वप्रवर्त्तक इत्यर्थः, तत्राप्यात्मच्छन्दमति स्वाभिप्रायं कार्यकारीत्यर्थः। तथा, प्रस्थितो यो योऽन्यः कोऽपि शिष्यो जिगमिषु, तस्य तस्य द्वितीयः। तथा गन्तुकामश्च सदैव गन्तुमना य आस्ते, वक्ति च 'कोऽस्य गुरोः संनिधानेऽवतिष्ठते ?', समर्पयतामेतत् श्रुतस्कन्धादि, ततो यास्यामि, इत्येव नित्त एव मन्त्रयते। तदेवभूत शिष्योऽयोग्य एव श्रवणस्येति भाव। इति निर्युक्तिगाथार्थः।

अनभ्युपगतादिस्वरूपं भाष्यकारोऽप्याह—

भन्नइ अणब्भुवगओ-ऽणुवसंपन्नो सुओवसंपदया।
गुरुणो करणिज्जाइं,अकुव्वमाणो निरुवगारी। १४४८।

अप्पच्छंदमईओ, सच्छंदं कुणइ सव्वकज्जाई ।
पत्थियओ संपत्थिय-विइजओ निच्चगमिउ व्व॥१४४९॥
गंतुमणो जो जंपइ, नवरि समप्पउ इमो सुयक्खंधो ।
पढिउं मोउं च तओ,गच्छं को अत्थए एत्थ ? ॥१४५०॥

निगदोऽपि गतार्था । नवरं 'निच्चगमिउ व्व' त्ति यो य प्रस्थितस्तत्तद् द्वितीय प्रस्थित उच्यते। क इव ?, नित्यगामीव पथिक इवेत्यर्थः ।

अथ योग्यशिष्यगुणान् दर्शयन्नाह—

विणओणएहिँ पंजलि-यडेहि छंदमणुयत्तमाणेहिं ।
आराहिओ गुरुजणो, सुयं बहुविहं लहुं देइ ॥१४५१॥

विनयो-वन्दनादिलक्षणस्तेनावनता विनयावनतास्तैरित्थंभूतैः सद्भिः, तथा पृच्छादिषु कृताः प्राञ्जलयो यैस्ते कृतप्राञ्जलयस्तैः, तथा छन्दो-गुर्वभिप्रायस्तमिङ्गिताकारादिना विज्ञाय तदध्यवसितश्रद्धानसम्यनकरणकारणद्वारेणानुवर्त्त—मानैराराधितो गुरुजनः श्रुतं सूत्रा-ऽर्थोभयरूपं बहुविधमनेकप्रकारं लघु-शीघ्रं ददाति-प्रयच्छति । इति निर्युक्तिगाथार्थः ।

भाष्यम्—

विणओ णओऽभिवंदइ, पढए पुच्छए पडिच्छइ वा णं ।
पंजलियडो अभिमुहो, कयंजली पुच्छणाईसु॥१४५२॥
सद्दहइ समत्थेइ य, कुणइ करावेइ गुरुजणाभिमयं ।
छंदमणुयत्तमाणो, स गुरुजणाराहणं कुणइ ॥१४५३॥

उक्तार्थे ।

अथ प्रकारान्तरेणापि योग्याऽयोग्यशिष्यानुपदर्शयन्नाह—

सेलघणकुडगचालणि-परिपूणगहंसमहिसमेसे य ।
मसगजलूगविराली-जाहगगोभेरि आहेरी ॥१४५४॥

'सेल' त्ति—मुद्गशैल -पाषाणविशेषः, घनो-मेघः मुद्गशैलश्च घनश्च तदुदाहरणं प्रथमम्, कुटो-घटः, चालनी प्रतीता, परिपूणक -सुघरीचिटिकागृहम्, हंसमहिषमेषमशकजलूकाविडालय प्रतीताः, जाहक -सेहुलकः, गोभेरी, आभेरी चेति योग्यायोग्यशिष्यविषयाणि चतुर्दशैतान्युदाहरणानि इतिनिर्युक्तिगाथासंक्षेपार्थः ।

उदाहरणं च द्विविधं भवति चरितं, कल्पितं च । तत्रेह प्रथमं कल्पितमुदाहरणम् । एतच्च भाष्यकारो विवृण्वन्नाह—

उल्लेऊण न सक्को, गज्जइ इय मुग्गसेलओऽरन्ने ।
तं संवट्टयमेहो, गंतुं तस्सोवरिं पडइ ॥ १४५५ ॥
दविउ त्ति ठिओ मेहो, उल्लोऽम्हि नव त्ति गज्जई सेलो ।
सेलसमं गाहिस्सं, निव्विज्जइ गाहगो एवं ॥ १४५६ ॥

इह कचिदरण्ये पर्वतनामप्रदेशे समन्तात् निविडो मुद्गवद् वृत्तत्वश्लक्ष्णत्वादिधर्मयुक्तः किञ्चिद् भूतले निमग्नः किञ्चित्तु प्रकाशश्चिकचिकायमानो बदरादिप्रमाणलघूपलरूपो मुद्गशैल किलासीत् । स च गर्जति—सोत्सर्पं जल्पति । कथम् ?, इत्याह—अहमार्द्रीकर्त्तुं जलेन भेत्तुं केनापि न शक्य इति । तच्च मुद्गशैलस्य सम्बन्धि गर्ववचः कुतश्चिद् नारदकल्पात् श्रुत्वा संवर्त्तको नाम महामेघः 'तद्गर्वं मद्याहमपनयामि' इति सम्प्रधार्य तं मुद्गशैलं गत्वा संप्राप्य तस्यैवोपरि पतति—निरन्तरं मुशलप्रमाणधाराभिर्वर्षतीत्यर्थः, संवर्त्तकमेघश्चोत्सर्पिण्यां शुभीभवति, काले पूर्वदग्धभूम्याश्वासनार्थं वर्षति, इत्यागमे प्रतिपाद्यते । तस्य च सम्बन्धि जलमतीव भूम्यादेर्द्रावकं वासकं च भवति, इति विशेषतस्तस्येह ग्रहणम् । एवं—सप्ताहोरात्राणि महावृष्टिं कृत्वा 'ठिओ मेहो' त्ति स्थितो वृष्टेरुपरतोऽसौ मेघः । कया बुद्ध्या ?, इत्याह—' दविउ ' ति—द्रावितः खण्डशो नीतो मयाऽसौ मुद्गशैल इत्यभिप्रायेणेत्यर्थः । पानीये चापसृते सुतरामुज्ज्वलीभूतोऽसौ चिकचिकायमानो मुद्गशैल पुनरपि गर्जति । कथम् ?, इत्याह—' उल्लोऽम्हि नव' त्ति—आर्द्रोऽस्म्यहं न वा ? इति सम्यग् निरीक्षस्व । भो पुष्करावर्त्तक ! किमित्येवमेव स्थितोऽसि तिलतुषत्रिभागमात्रमपि ममाद्यापि न भिद्यत इति भावः । ततो लज्जितो विलक्षीभूतः स्वस्थानमुपाश्रितो मेघः । तदेवं मुद्गशैलोदाहरणमभिधायोपनयमाह—' सेलसमं ' त्यादि, यस्य वचनकोटिभिरपि चित्तं न भिद्यते ; एकमप्यक्षरं तन्मध्यात् न परिणमतीत्यर्थः स एवभूतः शैलसमो, मुद्गशैलतुल्य इत्यर्थः, तं तथाभूतं शिष्यं ज्ञात्वाऽपि कश्चिद् ग्राहयतीति ग्राहको गुरुः, "आचार्यस्यैव तज्जाड्यं, यच्छिष्या नावबुध्यते । गावो गोपालकेनैव, कुतीर्थेनावतारिता ॥१॥" इत्यादि श्लोकार्थविभ्रमितमतिर्गर्वाद् 'अहममुं ग्राहयिष्ये इति प्रतिज्ञाय समागतो महता च संरम्भेणाऽध्यापयितुमारब्धः, तथापि स मुद्गशैलोपमः शिष्योऽक्षरमपि न गृह्णाति । न च मनागपि स्वाग्रहग्रस्तत्वेन बुध्यते । ततश्चैवं यथा पुस्करावर्त्तः तथैव सुचिरं क्लेशमनुभूय निर्विद्यते—पराजयते, ततो विलक्षीभूतो लज्जितश्च निवर्त्तत तद्ग्रहणादयमाचार्य इति । एवंभूतस्य च शिष्यस्य सूत्राऽर्थदाने आगमे प्रायश्चित्तमुक्तम् ।

कुत ?, इत्याह—

आयरिये सुत्तम्मि य, परिवाओ सुत्तअत्थपलिमंथो ।
अन्नेसिं पि य हाणी, पुट्ठावि न दुद्धया वंझा ॥१४५७॥

एवं शैलसमस्यापि शिष्यस्य सूत्राऽर्थदाने प्रवृत्त आचार्ये, सूत्रेऽपि चागमे परिवादोऽवर्णवादो लोकसमुत्थो भवति, तद्यथा—अहो ! नास्य सूरेः प्रतिपादिका शक्तिः, नापि तथाविधं किमपि परिज्ञानं,यतोऽमुमप्येकं शिष्यमवबोधयितुं न क्षमः, आगमोऽप्यमीषां संबन्धी निरतिशयो युक्तिविकलश्च, इतरथा कथमयमेकोऽप्यस्माद् नावबुध्यते इत्यादि । तथा—सूत्राऽर्थयोरन्तरायसम्भवात् परिमन्थनं-मर्दनं विनाशनं सूत्राऽर्थपरिमन्थः, तच्छिक्षणप्रवृत्तस्य सूरेरात्मनः सूत्रपठनपरावर्त्तनव्याख्यानभङ्गो भवतीत्यर्थः । अपरं च—तद्ग्रहणप्रसक्ते सूरावन्येषां शिष्याणां सूत्राऽर्थदाने, तद्ग्रहणभङ्ग इत्यर्थः । न च बहुनाऽपि कालेन तथाविधः शिष्यः किञ्चिदपि ग्राहयितुं शक्यः । कुतः ? इत्याशङ्कयाचार्ये दृष्टान्तमाह—'पुट्ठावी' त्यादि, नियमनेन नियन्त्र्य स्तनेषु करैर्वेष्टया स्पृष्टाऽपि वन्ध्या गौर्न खलु दुग्धदा भवति एवं, मुद्गशैलसमः शिष्योऽपि ग्राहणकुशलेनापि गुरुणा ग्राह्यमाणोऽपि नाक्षरमपि गृह्णाति, ततस्तादृशस्य

सूत्रार्थौ न दातव्यौ, ऐहिकाऽऽमुष्मिकक्लेशादिबहुदोषसंभवात्, ददाति चेत्, तर्हि समयोक्तप्रायश्चित्तभागिति। अ आह—ननु प्रोक्तोऽसौ मुद्गशैलदृष्टान्त', केवल पाषाणमेघादीनां जल्प,, अभिप्रायपूर्विके न प्रवृत्तिनिवृत्ती इत्यलौकिकमेवेदम् । सत्यम् , किन्तु पूर्वमुनिभिरेवात्रोक्त प्रतिविधानम् । तद्यथा—" चरियं च कप्पियं चिय , आहरणं दुविहमेव पन्नत्तं । अत्थस्स साहणट्ठा, इंधणमिव ओयणट्ठाए ॥ १ ॥ न वि अत्थि न वि य होही, उल्लावो मुग्गसेलमेहाणं । उवमा खलु एस कया, भवियजणविबोहणट्ठाए ॥२॥" इत्यलं प्रसङ्गेनेति ।

अथ मुद्गशैलप्रतिपक्षभूत घनदृष्टान्तमाह—

बुट्ठे वि दोणमेहे, न कण्हभोमा पलोठए उदयं ।
गहणधरणासमत्थे, इय देयमछि त्ति कारिम्मि॥१४५८॥

यावता वृष्टेनाकाशविन्दुभिर्महती गर्गरी भ्रियते, तावत्प्रमाणजलवर्षी मेघो द्रोणमेघ उच्यते । तस्मिन् वृष्टेऽपि सति कृष्णा भूमिर्यत्र प्रदेशेऽसौ कृष्णभूम प्रदेशस्तस्माद् न प्रलोठति बह्वपि तन्मेघजल पतितं न लुठित्वाऽन्यत्र गच्छति, किन्तु तत्रैवान्त प्रविशतीति भाव । एवं शिष्योऽपि स कश्चिद् भवति यो गुरुभिरुक्त बह्वप्यवधारयति, न पुनरक्षरमपि पार्श्वतो गच्छतीति । एवभूते च सूत्रार्थग्रहणावधारणासमर्थे शिष्ये सूत्रार्थयो शिष्यप्रशिष्यपरम्पराप्रदानेनाव्यवच्छेदकारिणि देय सूत्रार्थजातम् , नान्यस्मिन्ननन्तराभिहितमुद्गशैलकल्पे । इत्यन्वयव्यतिरेकात्मकत्वादेकमेवेदमुदाहरणम् ।

अथ द्वितीय कुटोदाहरण विवृण्वन्नाह—

भाविय इयरे य कुडा, अपसत्थपसत्थभाविया दुविहा ।
पुप्फाईहिँ पसत्था, सुरतेल्लाईहिँ अपसत्था ॥१४५९॥
वम्मा य अवम्मा वि य,पसत्थवम्मा उ होंति अगेज्झा।
अपसत्थअवम्मा वि य,तप्पडिवक्खा भवे गेज्झा॥१४६०
कुप्पवयणओसन्ने-हिँ भाविया एवमेव भावकुडा ।
संविग्गेहिँ पसत्था,वम्माऽवम्मा य तह चेव ॥१४६१॥

कुटा-घटा , ते च तावद् द्विविधा-एके आपाकोत्तीर्णा नूतना अव्याप्रियमाणत्वादद्यापि पुष्पजलतैलादिनाऽभाविता , अन्ये तु व्याप्रियमाणत्वाद् भाविता । विशे० । (भावितविषय 'भाविय' शब्दे पञ्चमभागे उक्त ।) तत्र ये प्रशस्तवाम्या प्रशस्तभाव वमयितु शक्यास्तेऽग्राह्या भवन्ति, अनादेया , असुन्दरा इति यावत् । तथा येऽप्रशस्तभाव वमयितुमशक्या अप्रशस्तावाम्यास्तेऽप्यग्राह्या भवन्ति । 'तप्पडिवक्खा भवे गेज्झ' त्ति—तेषां प्रशस्तवाम्यानाम् , अप्रशस्तावाम्याना च ये प्रतिपक्षा प्रशस्ता वाम्या , अप्रशस्तवाम्याश्च ते ग्राह्या आदेया सुन्दरा भवन्ति । तदेवं द्रव्यकुटास्तावत् प्ररूपिता । भावकुटा अपि प्रशस्ताऽप्रशस्तगुणजलाधारत्वाज्जीवा एवमेव भाविताऽभावितादिभेदात् द्रष्टव्या केवलमत्र पक्षे कुप्रवचनावसन्नादिभिर्भाविता 'अप्रशस्तभाविता उच्यन्ते इत्यध्याहार । ये तु संविग्नैरेव साधुभिर्भावितास्ते प्रशस्ता : प्रशस्तभाविता इत्यर्थ । 'वम्मा अवम्मा य तह चेव' त्ति—वाम्याऽवाम्यभावना—यथा द्रव्यकुटपक्षे तथैव भावकुटपक्षेऽपि द्रष्टव्येत्यर्थ । सा चैवम्—प्रशस्तभाविता वाम्या , अप्रशस्तभाविताश्चावाम्या , एते उभयेऽप्यग्राह्या' । उक्तविपरीतास्तु ग्राह्या इति । तदेवमुक्ता भावितकुटपक्ष ।

अथाभावितकुटपक्षमधिकृत्याह—

जे उण अभाविया ते, चउव्विहा अह वि सो गमो अन्नो ।
छिड्डकुडभिन्नखंडे, सगले य परूवणा तेसिं ॥१४६२॥

ये पुनरभाविता कुटास्ते छिद्रभिन्नखण्डसकलभेदाच्चतुर्विधा । अथवा—भाविताऽभावितपक्षनिरपेक्ष एवायमन्यच्छिद्रभिन्नादिको गम -प्रकारो वर्तत इत्यर्थ । तमेवाह-'छिड्डकुड' त्यादि, इह कुटो-घट कोऽपि तावच्छिद्रो भवति ,, बुध्ने सच्छिद्रो भवतीत्यर्थ । अन्यस्तु भिन्नो राजिमान् भवति । तृतीयस्तु खण्डो भग्नकर्ण । चतुर्थस्तु सकल परिपूर्ण एव भवति । एतेषां च चतुर्णामपि कुटभेदाना दार्ष्टान्तिकमधिकृत्य प्ररूपणा स्वयमेव कार्या, यथा कोऽपि शिष्य श्रुतग्रहणमाश्रित्य छिद्रघटकल्पो भवति , कश्चित्तु भिन्नघटकल्प इत्यादि वाच्यमिति ।

अथ क्रमप्राप्तं चालन्युदाहरणमभिधित्सु मुद्गशैलच्छिद्रकुटचालन्युदाहरणाना परस्परभेदोद्भावकशिष्यमतं च निराचिकीर्षुराह—

सेले य छिड्ड चालणि, मिहोकहा सोउमुट्ठियाणं तु ।
छिड्डाह तत्थ विट्ठो, सुमरिंसु सरामि नेदाणिं ॥१४६३॥
एगेण विसइ बीए-ण नीइ कन्नेण चालणी आह ।
धन्नत्थ आह सेलो, जं पविसइ नीइ वा तुज्झं॥१४६४॥

शैलच्छिद्रकुटचालन्युदाहरणे प्रतिपादिता शिष्या अप्युपचारात् तथोच्यन्ते, तत्सादृश्यात् । ततश्च शैलच्छिद्रकुटचालन्यभिधानाना शिष्याणा गुर्वन्तिके व्याख्यान श्रुत्वा, उत्थायान्यत्र गताना मिथ परस्परं कथा समभवत् । कीदृशी ?, इत्याह—'छिड्ड' त्यादि, छिद्रघटकल्पच्छिद्र शिष्य प्राह । किम् ?, इत्याह-तत्र गुरुसमीपे उपविष्टस्तदुक्तमस्मार्षमहम् , इदानीं तु न किमपि स्मरामि । छिद्रघटो ह्येवंविध एव भवति । सोऽपि स्थानस्थितो मुञ्चादिकं प्रक्षिप्त धरति , अन्यत्र तृक्षिप्य नीतस्य तत्र स्राव्यत , अथच्छिद्रेण गलित्वा नि सृतत्वात् , अतस्तत्कल्प शिष्यो , ऽपीत्थमाहेति भाव । छिद्रकुटकल्पेन शिष्येणैवमुक्ते चालनीकल्प प्राह-'एगेण' त्यादि , चालनीकल्प शिष्यश्च लनी , स प्राह—भाश्छिद्रकुट ! शोभनस्त्वम् , येन गुरुसमीपस्थेन त्वया तावदवधारितं तद्वच पश्चादेव विस्मृतम् , मम तु गुर्वन्तिकेऽपि स्थितस्यैकेन कर्णेन विशति , द्वितीयेन तु निर्गच्छति , न पुन किमपि हृदये स्थितम् । कणिक्कादिचालन्या अपि हि जलादिकमुपरिभागे निक्षिप्यते, अधोभागेन तु निर्गच्छति , न तु किमपि । संनिष्ठत , अतस्तत्तुल्य शिष्योऽपीत्थमवादीति भाव । तदेवं छिद्रकुट—चालनीभ्यामेवमुक्ते मुद्गशैल प्राह—' धन्न' त्यादि मुद्गशैलो वदति—धन्यावत्र युवाम् , यद्—यस्मात् युष्माद् युवयोस्तावत्कर्णयोर्गुरूक्त किमपि प्रविशति निर्गच्छति च । मम त्वेतदपि नास्ति , तदुक्तस्य सर्वथाऽपि सर्व प्रव-

शाभावात्, उपलस्यैवंविधत्वादेवेति । तदेवं चालन्युदाहरणस्य स्वरूपमुक्तम्, शैलच्छिद्रघटचालन्युदाहरणानां परस्परं विशेषश्चाभिहितः ।

अथ चालनीप्रतिपक्षमाह—

तावसखउर कठिणयं,
चालणिपडिवक्खो न सवइ दव्वं पि ।
परिपूणगम्मि, उ गुणा,
गलंति दोसा य चिट्ठंति ॥ १४६५ ॥

चालनीप्रतिपक्षः 'भवति' इति शेषः। कीदृशः ? इत्याह- तापसानां भोजनादिनिमित्तमुपकरणविशेषः 'खउरकठिणकं' उच्यते । तच्च किल वंशशुम्बादिकं च द्रव्यमतिश्लक्ष्णं कुट्टयित्वा कमठकाकारं क्रियते । इदं चातिनिविडत्वात् द्रव्यं, जलमपि प्रक्षिप्तं न स्रवति, किन्तु सम्यग् धरति एवं शिष्योऽपि यो गुरुभिराख्यातं सर्वमेव धरति, न विस्मरति, स ग्राह्यः, चालनीसमस्त्वग्राह्य इति भावः । अथ परिपूणकोदाहरणमाह—'परिपूणग'-इत्याद्युत्तरार्धम् । परिपूणको नाम सुघरीचिटिकाविरचितो नीडविशेषः, तेन च किल घृतं गाल्यते, ततस्तत्र कचवरमवतिष्ठते, घृतं गलित्वाऽधः पतति, एवं परिपूणकसदृशः शिष्योऽप्युपचारात् परिपूणकः । तत्र हि श्रुतसम्बन्धिनो गुणाः सर्वेऽपि घृतवद् गलन्ति, दोषास्तु घृतगतकचवरवदवतिष्ठन्ते, श्रुतस्य दोषानेव गृह्णाति, गुणास्तु सर्वथा परिहरत्यसौ, अतोऽयोग्य इति भाव इति ।

अत्र प्रेर्यमुत्थाप्य परिहरन्नाह—

सव्वएणुप्पामन्ना, दोसा हु न संति जिणमए केइ ।
जं अणुवउत्तकहणं, अपत्तमासज्ज व हवेज्ज ॥१४६६॥

ननु सर्वज्ञप्रामाण्यात् सर्वज्ञोऽस्य प्रवर्त्तक इति हेतोर्जिनमते दोषाः केचिदपि न सन्तीत्यर्थः, तत् कथमस्य कोऽपि दोषान् ग्रहीष्यति, असत्त्वादेव ? इति भावः । सत्यम्, किन्तु यद्यपि जिनमते दोषा न सन्ति, तथाऽप्यनुपयुक्तस्य गुरोर्यत् कथनं व्याख्याविधानं तदाश्रित्य दोषा भवेयुरिति सम्बन्धः । अथवा-अपात्रम्-अयोग्यं शिष्यमङ्गीकृत्य जिनमतेऽपि तदुत्प्रेक्षिता दोषा भवेयुः, निर्दोषेऽपि जिनमतेऽपात्रभूता शिष्या असतोऽपि दोषानुद्भावयन्त्येवेत्यर्थः । तथा च ते वक्तारो भवन्ति । तद्यथा-

"पागयभासनिवद्धं, को वा जाणइ पणीय केणयं ।
किं वा चरणेणं तु, दाणेण विणा उ हवइ त्ति ॥ १ ॥
कायावया य ताच्चिय, ते चेव पमायअप्पमाया य ।
मोक्खाहिगारियाणं, जोइसजोणीहिँ किं कज्जं ? ॥ २ ॥
को आउरस्स कालो, महलवरधोयणे य को कालो ? ।
जइ मोक्खहेउ नाणं, को कालो तस्सऽकालो वा ? ॥ ३ ॥"

इत्यादि । असन्तश्च सर्वेऽप्यमी दोषाः, "बालस्त्रीमूढमूर्खाणां, नृणां चारित्रकाङ्क्षिणाम् । अनुग्रहार्थं तत्त्वज्ञैः, सिद्धान्तः प्राकृतः कृतः ॥ १ ॥" "पुव्वभणियं पि जं वत्थु, भण्णए तत्थ कारणं अत्थि । पडिसेहो य अणुन्ना, वत्थुविसेसोवलंभो वा ॥ १ ॥" इत्यादिना शास्त्रान्तरे विस्तरेण निराकृतत्वादिति ।

अथ हंसोदाहरणव्याख्यामाह-

अंबत्तणेण जीहाए, कूचिया होइ खीरमुदगम्मि ।
हंसो मुत्तूण जलं, आवियइ पयं तह सुसीसो ॥१४६७॥

दुग्धं च जलं च मिश्रयित्वा भाजने व्यवस्थाप्य कोऽपि हंसस्य पानार्थमुपनयति, स च तन्मध्ये चञ्चुं प्रक्षिपति । तस्य च जिह्वा स्वभावतः एवाम्ला भवति । तेन च जिह्वाया आम्लत्वेन हेतुभूतेनोदकमध्यगतं दुग्धं विलित्वा कूचिका बिन्दुरूपा बुद्बुदा भवन्तीत्यर्थः । ततश्च जलं मुक्त्वा तद् बुद्बुदीभूतं दुग्धमापिबति हंसः । तथा सुशिष्योऽपि गुरोर्जलस्थानीयान् दोषान् परित्यज्य दुग्धस्थानीयान् गुणान् गृह्णातीत्यर्थः इति ।

अथ महिषोदाहरणं विवृण्वन्नाह—

सयमवि न पियइ महिसो, न य जूहं पियइ लोडियं उदगं ।
विग्गहविगहाहि तहा, अत्थक्कपुच्छाहि य कुसीसो ॥१४६८

स्वयूथेन समं वनमहिषो जलाशये क्वचिद् गत्वा तन्मध्ये च प्रविश्योद्वर्त्तनपरावर्त्तनादिभिस्तथा तज्जलमालोडयति यथा कलुषितं सद् न स्वयं पिबति, नापि तद्यूथम् । एवं कुशिष्योऽपि व्याख्यामण्डलिकायामुपविष्टो गुरुणा, अन्येन वा शिष्येण सह विग्रहं कलहमुदीरयति, विकथाप्रबन्धं वा किञ्चिच्चालयति, सबद्धासंबद्धरूपाभिरनवरतमुपर्युपरिपृच्छाभिश्च तथा कथञ्चिद् व्याख्यानमालोडयति, यथा नात्मनः किञ्चिद् पर्यवस्यति, नापि शेषविनेयानामिति ।

मेषोदाहरणमाह—

अविगोपयम्मि वि पिवे, सुढिओ तणुयत्तणेण तुंडस्स ।
न करइ कलुसं तोयं, मेसो एवं सुसीसो वि ॥ १४६९ ॥

जलभृते क्वचिद् गोष्पदेऽपि, 'सुढिओ' त्ति-संकुचिताङ्गो मेषः ऊरणकः पिबेज्जलम्, न च तत् कलुषं करोति । केन हेतुना ? इत्याह-तनुकत्वेनाग्रभागे श्लक्ष्णत्वेन तुण्डस्य-मुखस्येति । अग्रपादाभ्यामवनम्य तीक्ष्णेन मुखेन तथासौ जलं पिबति यथा सर्वथैव कलुषं न भवति । एवं सुशिष्योऽपि तथा गुरोः सकाशाद् निभृतः श्रुतं गृह्णाति यथा तस्य परिषदो वा न कस्यचिद् मनोबाधादिकं कालुष्यं भवतीति ।

मशकजलूकोदाहरणद्वयविवृतिमाह—

मसउ व्व तुदं जच्चा-इएहिँ निच्छुब्भए कुसीसो वि ।
जलुगा व अदूमंतो, पिबइ सुसीसो वि सुयनाणं ।१४७०।

यथा मशको जन्तूंस्तुदते-व्यथयति । ततश्च वस्त्राञ्चलादिभिस्तिरस्कृत्य दूरीक्रियते, तथा कुशिष्योऽपि जात्यादिदोषोद्घाटनैर्गुरुं तुदन्-व्यथयमानो निष्कास्यते परिहियत इति । जलूका पुनर्यथाऽसृग् पिबति, नचासृग्मन्तं व्यथयति, तथा सुशिष्योऽपि गुरुभ्यः श्रुतज्ञानं पिबति-गृह्णाति-न तु जात्युद्घाटनादिना दुनोतीति ।

बिडालयुदाहरणमाह—

छड्डेउं भूमीए, खीरं जह पियइ दुट्ठमज्जारी ।

परिसदुट्ठियाॅण पासे, सिक्खइ एवं विणयभंसी ।१४७१।

यथा दुष्टमार्जारी तथाविधस्वभावतया स्थाल्या क्षीरं भूमौ छर्दयित्वा पिबति, न पुनस्तत्रस्थम्। तथा च सति न तत्तस्यास्तथाविधं किञ्चित् पर्ययस्यति । एवं विनयाद् भ्रश्यतीति विनयभ्रंशी-विनयकरणभीरुः कुशिष्यो गोष्ठामाहिलवत् परिषदुत्थितानां विन्ध्यादीनामिव पार्श्वे शिक्षते श्रुतं गृह्णाति, न तु गुरोः समीपे, तद्विनयकरणभयात् । इह च दुष्टमार्जारीस्थानीयः कुशिष्यः, भूमिकल्पस्तु परिषदुत्थिता शिष्याः, छर्दितदुग्धपानसदृशं तु तद्गतश्रुतश्रवणमिति ।

जाहकोदाहरणमाह—

पाउं थोउं थोउं, खीरं पासाइँ जाहगो (जह) लिहइ ।
एमेव जियं काउं, पुच्छइ मइमं न खेएइ ॥ १४७२ ॥

यथा भाजनगतं क्षीरं स्तोकं स्तोकं पीत्वा ततो जाहक सेह(हु)लकः भाजनस्य पार्श्वानि लेढि, पुनरपि च स्तोकं तत् पीत्वा भाजनपार्श्वानि लेढि, एवं पुनः पुनस्तावत् करोति यावत् सर्वमपि क्षीरं पीतमिति । एवं मतिमान् सुशिष्योऽग्रेतनं गृहीतं श्रुतं जितं—परिचितं कृत्वा पुनरन्यद् गृह्णाति, एवं पुनः पुनस्तावद् विदधाति यावत् सर्वमपि श्रुतं गुरोः सकाशाद् गृह्णाति, न च गुरुं खेदयतीति । अथ गोदृष्टान्त उच्यते—तत्र च केनापि यजमानेन वेदान्तर्गतग्रन्थविशेषाध्ययननिमित्तचरणशब्दवाच्येभ्यश्चतुर्भ्यो ब्राह्मणविशेषेभ्यो गौः प्रदत्ता । प्रोक्ताश्च तेन ते ब्राह्मणाः ' वारकेणासौ भवद्भिर्दोग्धव्या इति । अन्येभ्योऽपि च चतुर्भ्यश्चरणद्विजेभ्यो गौरेका तेन प्रदत्ता । तेऽपि च तेन तथैवोक्ताः । तत्र च प्रथमद्विजानां मध्ये ज्येष्ठब्राह्मणेन केनचिद् गौः स्वगृहे नीत्वा दुग्धा । ततश्चारीप्रदानवेलायां चिन्तितं तेन ।

किम् ? इत्याह—

अन्नो दोजइ कल्ले, निरत्थियं किं वहामि से चारिं ।
चउचरणगवीउ मया, अवन्नहाणी य बडुयाणं ।१४७३।

तेनैतच्चिन्तितम्—हन्त ! वारकप्राप्तोऽन्यो ब्राह्मणः कल्ये प्रातरेनां धेनुं धोक्ष्यति; ततः किमद्य निरर्थिकामस्याश्चारीं वहामि । कल्येऽन्योऽपि हि तां दास्यामि, इति विनिश्चित्य न तस्याश्चारी प्रदत्ता । ततो द्वितीये दिने द्वितीयेनापि द्विजातीयेन तथैव कृतम् । एवं तृतीये दिने तृतीयेनापि, चतुर्थे दिने चतुर्थेनापि तथैव चेष्टितम् । इत्थं च चारिविरहिता दुह्यमाना कतिपयदिनमध्ये चतुर्णां चरणानां सम्बन्धिनी सा गौर्मृता । ततश्च तेषां बहूनां गोहत्या समभवत् । जने चावर्णवादो जातः, हानिश्च, तेषां ततो यजमानात्, अन्यस्माद् वा पुनर्गवादिलाभाभावादिति । अन्यैश्च यैश्चतुर्भिश्चरणैर्गौर्लब्धा, तन्मध्ये प्रथमद्विजस्तां दुग्ध्वा चारीप्रदानवेलायामचिन्तयत्, किम् ?, इत्याह—

मा मे होज अवण्णो, गोवज्झा वा पुणो वि न दविज्जा ।
वयमवि दोज्झामो पुण, अणुग्गहो अन्नदुद्धे वि ॥१४७४॥

मा भूज्जनमध्ये ममावर्णवादः, गोहत्या वा मा भूत्, इत्यस्याश्चारीं प्रयच्छामि । यदि तु न दास्यामि तदा यजमानस्तकलङ्केभ्योऽस्मभ्यं पुनर्गवादिकं किमपि कोऽपि न दास्यति । अपरञ्च, एतस्याश्चारीप्रदाने को दोषः ? प्रत्युत गुण एव, यतश्चारीप्रदानपुष्टामेनां पुनरपि वारकेणागता वयमेव धोक्ष्यामः । यद्वा-अन्येनापि ब्राह्मणेन दुग्धायामेतस्यामस्माकमेवानुग्रह इति ।



अथोपनयमाह—

सीसा पडिच्छगाणं, भरो त्ति ते वि य हु सीसगभरो त्ति ।
न करेंति सुत्तहाणिं, अन्नत्थ वि दुल्लहं तेसिं ॥१४७५॥

गुरोर्विनयकर्मणि कर्त्तव्ये स्वगच्छदीक्षिता शिष्यास्तावच्चिन्तयन्ति । किम् ? इत्याह-प्रतीच्छकानामुपसंपन्नानामागन्तुकशिष्याणामयं गुरोर्विनयकरणलक्षणो भरः-आचारः, किमस्माकं, तेषामेव साम्प्रतं वल्लभत्वात् ? इति । तेऽपि च प्रतीच्छका एवं संप्रधारयन्ति—निजशिष्याणामेवाऽयं भरः, किमस्माकमागन्तुकानामद्य समागतानामन्येद्युर्निर्गमिष्णूनाम् ? इति । एवं संप्रधार्योभयेऽपि गुरोर्न किञ्चिद् विनयवैयावृत्यादिकं कुर्वन्ति । ततश्च गुरुषु सीदत्सु तेषां सूत्रार्थहानिः, अन्यत्रापि च गतानां तेषां दुर्विनीतानां दुर्लभं सूत्रम् अर्थश्च । उपलक्षणत्वादन्ये अप्यवर्णवादादयो दोषाः स्वयमेवाभ्यूह्याः । अयं च दुर्विनीतशिष्येषूपनयः कृतः । सुविनीतविनयोपनयस्तु तद्विपर्ययेण स्वयमेव कर्त्तव्य इति ।

भेरीदृष्टान्तमाह—

कोमुइया तह संगा-मिया य उब्भूइया य भेरीओ ।
कण्हस्सासिवहुतया, असिवोवसमी चउत्थी उ ।१४७६।
सक्कपसंसागुणगा-हिकेसवो नेमि वंद सुणदंता ।
आसरयणस्स हरणं, कुमारभंगे य पुयजुद्धं ॥१४७७॥
नेहि जिओ म्हि त्ति अहं, असिवोवसमीएँ संपयाणं च ।
छम्मासियघोसणया, पसमइ न य जायए अन्नो ।१४७८।
आगंतुवाहिखोभो, महिड्डिमुल्लेण कंथ दंडणया ।
अट्ठमआराहण अ- न्न भेरिअन्नस्स ठवणं च ॥१४७९॥

आसां भावार्थः कथानकादवसेयः । तच्च ' गोणीचन्दनकंथा ' इत्यत्र सविस्तरं कथितमेव । इह चेत्थमुपनयोऽपि द्रष्टव्यः । यः शिष्योऽशिवोपशमिकां भेरीं प्रथमरक्षक इव जिनगणधरप्रदत्तां श्रुतरूपां भेरीं परमतादिविगलकैः कन्थीकरोति स न योग्यः, यस्तु नैवं करोति स द्वितीयभेरीरक्षक इव योग्य इति ।

अथाऽऽभीरीदृष्टान्तं विवृण्वन्नाह—

मुक्कं तया अगहिए, दुप्परिग्गहियं कयं तया कलहो ।
पिट्टण अडविरविसय-गएसु चोरा य ऊणग्घे ॥१४८०॥

इह च कथानकेन भावार्थ उच्यते तद्यथा-कुतश्चिद् ग्रामाद् गोकुलाद् वाऽऽभीरीसहित आभीरो घृतवारकाणां गन्त्रीं भृत्वा विक्रयार्थं पत्तनं समागतः । विक्रयस्थाने च गन्त्र्या अधस्ताद् भूमावाभीरी स्थिता । आभीरस्तु गन्त्र्यां स्थितस्तस्याः घृतवारकं समर्पयति । ततश्चानुपयोगेन समर्पणे, प्रहणे वा घृतवारके भग्ने आभीरी प्राह—भग्नम् !

नगरतरुणीनां मुखान्यवलोकयमानेन त्वया, घृतचारकोऽयं मयाऽगृहीत एव मुक्तः, ततो भग्नः । आभीरस्त्वाह-रण्डे ! नगरयूनां वदनानि वीक्षमाणया त्वयैव दुष्परिगृहीतोऽयं कृतः, ततो भग्नः, इत्युभयोरपि कलहः समभवत्, पिट्टिता च तेनाभीरी । कलहयतोश्च तयोरन्यदपि घृतं बहु छर्दितम् । उद्वरितशेषेण च घृतेनोत्सूरेऽर्थोऽप्यूनो लब्धः । इतरेषु सार्थिकेषु घृतं विक्रीय गतेषु तयोरेकाकिनोर्गच्छतोर्घृतद्रम्मा गन्त्री बलीवर्दाश्च सर्वे तस्करैरपहृतमिति ।

एवं दृष्टान्तमभिधायोपनयमाह—

मा निण्हवइ य दाउं,
उवजुज्जिय देहि किं वि चिंतेसि ? ।
वच्चामेलियदाणे ;
किलिस्ससि य तं च हं चेव ॥ १४८१ ॥

चिन्तनिकाव्यवस्थायां वितथं प्ररूपयन्, अधीयानो वा गुरुणा शिक्षितः शिष्यो जगाद-त्वयैव ममेत्थं व्याख्यातं, पाठितो वा त्वयैवैवंविधम्, अतस्तवैव दोषोऽयम्, किं मां शिक्षयसि ? । आचार्यः प्राह—न मयैवमुपदिष्टम् । कुशिष्यो ब्रवीति-हन्त ! साक्षादेव मम पुरस्सरमित्थं सूत्रमर्थं वा दत्त्वा सूरे ! मा निह्नोष्ठास्त्वम् । इत्थमुक्त आचार्य किमप्यन्तर्ध्यायन् पुनरप्युक्तः शिष्याभासेन—किं बलीवर्दात् पातित इव विचिन्तयसि, भव्यगत्योपयुज्योपयुक्तो भूत्वा देहि सूत्राऽर्थौ, व्यत्याम्रेडितदाने वितथसूत्रार्थप्रदाने केवलं त्वम्, अहं च क्लेशमेवानुभवाव । तदित्थं स्वदोषाप्रतिपत्तौ गुरुदोषोद्भावनेनाभीरमिथुनस्येव गुरु-शिष्ययोः कलह एव प्रवर्त्तते। तथा च सति व्याख्याव्यवच्छित्ति-सूत्रार्थहान्यादयो दोषाः । अत्र प्रतिपक्षः स्वयमेव द्रष्टव्यः, तथाहि—अन्योऽप्याभीरः किल सकलत्रस्तथैव क्वापि नगरे घृतविक्रयार्थं गतः । कलत्रस्य च चार्पके समर्पिते भग्ने 'अहो ! मयाऽनुपयुक्तेन समर्पितोऽयम्' इति ब्रुवाणो झगिति गन्त्र्या समुत्तीर्य कर्परकैर्घृतं संवृणोति । भार्याऽपि 'धिग् मयाऽनुपयुक्तया दुष्परिगृहीतः कृतोऽसौ, तेन भग्नः' इति वदन्ती तथैव तत् संवृणोति । ततश्चान्योन्यं कलहे अजाते उभयसंवृत्त्या घृतं शीघ्रमेव विक्रीतम् । सार्थिकैश्च सह क्षेमेण स्वस्थानं जग्मतुः । एवं गुरु-शिष्या अपि स्वदोषं प्रतिपद्यमानाः परदोषं तु निह्नुवाना येऽन्योन्यं न विवदन्ते, त एव सूत्राऽर्थग्रहणप्रदानयोर्योग्या भवन्ति, निर्जरादिलाभभागिनश्चेति ।

तदेवं योग्याऽयोग्यान् गुरून् शिष्यांश्चोपदर्श्योपसंहारपूर्वकं तत्फलमाह—

भणिया जोग्गाऽजोग्गा, सीसा गुरवो य तत्थ दोण्हं पि ।
पेयालियगुणदोसो, जोग्गो जोग्गस्स भासेज्जा ॥१४८२॥

भणिता योग्याऽयोग्या गुरुशिष्याः । तत्र द्वयोरपि गुरुशिष्ययोर्विचारितगुणदोषो योग्यो गुरुर्योग्याय शिष्याय सूत्रार्थौ भाषेतेति । विशे० । आ० म० । शिष्यास्त्रिविधास्तद्यथा-अपरिणामा अतिपरिणामा, परिणामपरिणामाश्चेति । तत्राविपुलमतयो गीतार्थैरपरिज्ञातजिनवचनरहस्या अपरिणामाः, अतिव्याप्त्यपवाददृष्ट्योऽतिपरिणामाः, सम्यक्परिज्ञातजिनवचनास्तु परिणामपरिणामाः । विशे० । आ० म० । (विनीतस्यैव सामायिकं दीयते इति 'सामाइय' शब्देऽस्मिन्नेव भागे उक्तम् । ) कोइ सुसीसो आयरियकुलवासिजातिकुलरूवसुयायारसत्तविणयसंपन्नो ण दुगुंछओ अभीरुसत्तिओ विणओ गंभीरो अदीणो न रुसणो न कुसीलो ण चवलो ण बहुभासी ण गारविओ ण तुरितो असंपसारो ण पिसुणो ण परोवतावी ण अत्तद्दुगुरुओ ण मच्छरी न अकयन्नू ण अहाच्छंदो न मदो ण संदिट्ठवादी ण संढो ण दिन्नकयपसंसी ण, दिन्नकयपच्छाणुतावी णानिण्हो ण पडिकूलो नालसो ण तण्हालू णं छुहालू ण असंतुट्ठो नादेसकालन्नू ण वट्टो णाकालचारी ण मूढो ण णिल्लज्जो णाणस्स कारणे विप्पवसति पगामी । ण कंदप्पिओ ण कोकुइतो ण मोहरितो ण आयारभावसुत्तवयणेणो उज्जुभावो विसुद्धसमत्तो दढचरित्तो दढाभिग्गहो सुगुत्तो समितो समयन्नू दढाग्गहो दढीहो दढावाओ दढधारणो णायरियपारिभासी, भत्तिगतो अणुरत्तो पडिरूवेहि ति उ अणुलोमो गणसोभी संघसोभी छंदन्नू, अयायन्नू सुहदुक्खन्नू अणुद्दअ-ऽणुत्तन्नू विसेसन्नू उज्जुत्तो अपरितंतो बहुस्सुतो ण अतरकहापुच्छी ण समइच्छितपुच्छी ण उद्धितपुच्छी सुहासणविणयपुच्छी मेहावी धितिमं विसुद्धवाको पियधम्मो दढधम्मो संविग्गो भद्दविओ अमाई विरगच्च इओ सुपडिच्छाइओ अविसाई अपरिस्साई पच्चयभूओ पच्चयभूतो अणुवत्तमाणो सुत्तत्थभावपरिणामो एवमादिएहिं गुणेहिं उववेतो बहुसुपरिसपरंपरागयं चिरपरूढजिणिंदपवयणसासणं कालआवस्सगं सोउकामो । आ० चू० १ अ० ।

साम्प्रतमेतेषां मुद्गशैलसदृशादीनामाभीरीसदृशपर्यवसानानां दाने प्रायश्चित्तमाह—

सलकुडछिद्दचालणि, सुद्धो चउगुरुग घडिदुवे होंति ।
परिपूणमहिसमसए, विरालिआभीरि एमेव ॥ ३६५ ॥

एमेव गोणिभेरी, हंसे मेसे य जाहगजलूगा ।
चउलहुगमदाणम्मि, पावति एतेसु आयरिओ ॥३६६॥

मुद्गशैलछिद्रकुटचालनीसमानानां गुणनालक्षणेन कार्ये समापतिते सूत्रमर्थं वा प्रयच्छन् शुद्धो न खलु तत्र तस्यान्येषां वा शिष्याणां सूत्रार्थहानि, अकार्येषु तेषु सूत्रार्थौ प्रयच्छतश्चतुर्गुरु । तथा घटद्विके प्रशस्तवाम्ये अप्रशस्तवाम्ये । अथवा—चोडकुटे भिन्नकुटे व्याख्यानद्वयेन संग्रहतश्चतुर्धः तेषु प्रायश्चित्तं प्रत्येकं चतुर्गुरु । परिपूणकसदृशे मशकतुल्ये बिडालीसमाने आभीरीसदृशे अप्रशस्तगोसर्पलक्षितानीयतुल्ये कन्याकारिभेरीपालकसदृशे एतेषु सप्तसु सूत्रार्थौ प्रयच्छत प्रत्येकं प्रायश्चित्तमेवमेव चतुर्गुरुकमित्यर्थः, एतेषां ये प्रतिपक्षा हंसादयो ये च प्रशस्तगोभेरीदृष्टान्तसूचितास्तेषां सूत्रार्थौ प्रयच्छन् शुद्धः, यदि पुनर्न ददाति तदा प्रायश्चित्तं प्राप्नोति चतुर्लघु । बृ० १ उ० १प्रक० । 'समणाउसो' त्ति संबोधनेनापृच्छतोऽपि शिष्यस्य हिताय तत्त्वमाख्येयम् । स्था० ३ ठा० २ उ० । आयुष्मानित्यनेन ग्रहणधारणादिगुणवते शिष्याय शास्त्रार्थो देय इति । स्था० १

ठा० ३ " महुरेहिं निउणेहिं वयणेहिं चोययंति आयरिया। सीसे कहिंचि खलिए, जह मेहमुणिं महावीरे ॥ १ ॥" सू० १ श्रु० १ अ०।

आचार्यसेविनः शिष्या धन्याः—

धन्ना आयरियाणं, निच्चं आइच्चचंदभूआणं।
संसारमहन्नवतारयाण पाए य णिव्वयंति ॥ ३१ ॥

इहलोइयं च किर्त्ति, लहंति आयरियभत्तिराएणं।
देवगईसु विसुद्धं, धम्मेण अणुत्तरं बोधिं ॥ ३२ ॥

देवा वि देवलोए, निच्चं देवोहिणा वि आणीता।
आयरियाणुसरंता, आसणसयणाणि मुंचंति ॥ ३३ ॥

देवा वि देवलोए, निग्गंथं पवयणं अणुसरंतो।
अच्छरगणमज्झगया, आयरिए वंदिया हुंति ॥ ३४ ॥

दे० प०।

य शिष्योऽपि गुरोर्वैरी तमाह—

सीसो वि वेरिओ सो उ, जो गुरुं न विबोहए।
पमायमइराघत्थं, सामायारीविराहयं ॥ १८ ॥

शिष्योऽपि-विनेयोऽपि स वैर्येव-शत्रुरेव। तु-एवकारार्थो भिन्नक्रमश्च, स च योजित एव। यो गुरुं-धर्मोपदेशकं न विबोधयति-हितोपदेशदानेन धर्मे न स्थापयति। किंभूतं गुरुमित्याह-प्रमादमदिराग्रस्तम्, प्रमादो-निद्राविकथादिरूपः स एव मदिरा-वारुणी प्रमादमदिरा तया ग्रस्तः, तथाविधतस्त्वज्ञानुर्गहित इत्यर्थः तम्, पुनः किंभूतं गुरुं सामाचारीविराधकं शैलकाचार्यवत्। किञ्च—महोपकार्यपि शिष्यादिः केवलिप्रज्ञप्ते धर्मे स्थापनं विना गुर्वादेः प्रत्युपकारकारी न स्यात्। यदुक्तं स्थानाङ्गे-'तिण्हं दुप्पडिआरं समणाउसो, तं जहा-अम्मापिउणो १, भट्टिस्स २, धम्मायरियस्स ३। संपातो वि य णं केइ पुरिसे अम्मापियरं सयपागसहस्सपागेहिं तेल्लेहिं अब्भंगेत्ता सुरभिणा गंधवट्टएणं उव्वट्टित्ता तिहिं उदगेहिं मज्जावेत्ता सव्वालंकारविभूसियं करेत्ता मणुन्नं थालीपागसुद्धं अट्ठारसवंजणाउलं भोयणं भोयावेत्ता जावज्जीवं पिट्ठिवडिंसियाए परिवहेज्जा, तेणावि तस्स अम्मापिउस्स दुप्पडियारं हवइ'। दु खेन-कृच्छ्रेण प्रतिक्रियते-प्रत्युपक्रियते इति दुष्प्रतिकारं प्रत्युपकर्त्तुमशक्यमिति यावत्। 'अहे णं से तं अम्मापियरं केवलिपन्नत्ते धम्मे आघवइत्ता पण्णवइत्ता परूवइत्ता ठावइत्ता भवति, तेणामेव अम्मापिउस्स सुप्पडियारं भवति समणाउसो!' सुखेन प्रतिक्रियते-प्रत्युपक्रियते इति सुप्रतिकारं तद्भवति, प्रत्युपकारः कृतो भवतीत्यर्थः। धर्मस्थापनस्य महोपकारत्वात् १। 'केति महच्चे दरिद्दं समुक्कसेज्जा, तए णं से दरिद्दे समुक्किट्ठे समाणे पच्छा पुरं च णं विपुलभोगसमितिसमण्णागए यावि विहरेज्जा। तए णं से महच्चे अण्णया कयाइ दरिद्दीहूए समाणे तस्स दरिद्दस्स अंतियं हव्वमागच्छेज्जा, तए णं से दरिद्दे तस्स भट्टिस्स सव्वस्समवि दलयमाणे तेणावि तस्स भट्टिस्स दुप्पडियारं भवति, अहे णं से तं भट्टिं केवलिपण्णत्ते धम्मे आघवइत्ता पण्णवइत्ता परूवइत्ता ठावइत्ता भवति, तेणामेव तस्स भट्टिस्स सुप्पडियारं भवति ॥२॥ केइ तहारूवस्स समणस्स वा माहणस्स वा अंतिय एगमवि आयरियं धम्मियं सुवयणं सोच्चा निसम्म कालमासे कालं किच्चा अन्नयरेसु देवलोएसु देवत्ताए उववन्ने। तए णं से देवे तं धम्मायरियं दुब्भिक्खाओ देसाओ सुभिक्खं देसं साहरेज्जा, कंताराओ वा निक्कंतारं करेज्जा, दीहकालिएण वा रोगायंकेणं अभिभूयं विमोएज्जा, तेण वि तस्स धम्मायरियस्स दुप्पडियारं भवति। अहे णं से तं धम्मायरियं केवलिपण्णत्ताओ धम्माओ भट्ठं समाणं भुज्जो केवलिपन्नत्ते धम्मे आघवइत्ता ०जाव ठावइत्ता भवति, तेणामेव तस्स धम्मायरियस्स सुप्पडियारं भवति ॥ ३॥', तस्मात् सर्वेष्वपि गुरुः सुदुष्करतरप्रतीकारः। यदुक्तं श्रीउमास्वातिवाचकपादैः प्रशमरतिग्रन्थे-'दुष्प्रतिकारौ माता-पितरौ स्वामी गुरुश्च लोकेऽस्मिन्। तत्र गुरुरिहामुत्र च, सुदुष्करतरः प्रतीकारः ॥ १ ॥" इति, अनुष्टुप्छन्दः ॥ १ ॥ ग०१ अधि०।

(अथ शिष्यस्वरूपप्रतिपादनद्वारेण 'गच्छस्वरूपप्रतिपादन 'गच्छ' शब्दे तृतीयभागे ८०२ पृष्ठे प्रतिपादितम्।) (राजपुत्रस्य शिष्टीकृतस्य च रिणे संयत्युपाश्रये स्थापनमिति 'वसहि' शब्दे षष्ठभागे गतम्।) (शिष्यस्य हस्ताभ्यां ताडनम् 'अणवट्ठप' शब्दे प्रथमभागे २६७ पृष्ठे गतम्।) (शिष्यविषयोऽवग्रह 'उग्गह' शब्दे द्वितीयभागे ७१६ पृष्ठे उक्तः।) (शिष्याऽऽभवनव्यवहारः 'ववहार' शब्दे षष्ठभागे गतः।) (परिहारतप प्रतिपद्यमानेन प्रव्रजिता शिष्याः कस्येति 'आयरिय' शब्दे द्वितीयभागे ३२४ पृष्ठे उक्तम्।) (हेमन्तग्रीष्मयोर्विहारप्रस्तावे प्रव्रजिपुर्गच्छत्कस्य स इति 'खेत्त' शब्दे तृतीयभागे ७६५ पृष्ठे गतम्।) ('णायविहि' शब्दे चतुर्थभागे २००८पृष्ठे तत्र शिष्यलाभे कस्येत्युक्तम्।) (चारिकाप्रविष्टस्योपसंपद्यमानस्याध्ययनावसरे शैक्ष आगच्छेत् स कस्येत्युक्तम् 'चरियापविट्ठ' शब्दे तृतीयभागे ११६२ पृष्ठे।) ('उवसंपया' शब्दे द्वितीयभागे १००३ पृष्ठे द्वयोरेकेन लाभे कस्येति गतम्।) ('संजोग' शब्देऽस्मिन्नेव भागे संयोगनिक्षेपस्यानेके शिष्यगुणा उक्ताः।)

सीस-न०। धातुभेदे, प्रज्ञा० ११ पद।

सीसउचंपिय-शीर्षोच्चम्पित-न०। शीर्षम् उत् प्राबल्येन चम्पितं यत्र तच्छीर्षोच्चम्पितम्। तस्मिन्; यद्वा-शीर्षे उत्-प्राबल्येन चम्पितमाक्रमितं यस्तत्तथा, तस्मिन्, शीर्षोच्चम्पिते कमलकोष्ठाकारे, त०।

सीसकवाल-शीर्षकपाल-न०। दुर्गन्धिमस्तककर्परे, तं०।

सीहखाइय-सिंहखादित-न०। सिंहभक्षणे, पं० व० २ द्वार।

सीसग-सीसक-न०। पारदजे धातुभेदे, प्रज्ञा०१ पद। आचा०। पारदे, जी० ३ प्रति०। सूत्र०। स०। प्रज्ञा०।

सीसगपाय-सीसकपात्र-न०। सीसकधातुमये पात्रे, आचा० २ श्रु० १ चू० ६ अ० १ उ०।

सीसगभम-शिष्यकभ्रम-पुं०। शिष्या एव शिष्यकाः तेषु

भमो भ्रान्तिर्येषु ते शिष्यकभ्रमा। विनीततया शिष्यतुल्येषु. विपा० १ श्रु० ३ अ०।

शीर्षकभ्रम-पुं०। शीर्षकं शिर एव शिरः कवचं वा तस्य भ्रमो व्यभिचारतया शरीररक्षकत्वेन वा येषु ते शीर्षकभ्रमा.। राज्ञामभ्यन्तरपुरुषेषु, विपा० १ श्रु० ३ अ०।

सीसगुण-शिष्यगुण-पुं०। शुश्रूषादिके -शिष्ययोग्यतागुणे, 'सुस्सूसा पडिपुच्छा, सुणणं गहण च ईहणमवाओ। धरण करणं सम्मं, एमाई होंति सीसगुणा॥१॥" उत्त० १ अ०।

सीसघडी-शीर्षघटी-स्त्री०। शीर्षमेव घटी तदाकारत्वात् शीर्षघटी। मस्तकहड्डे, उपा० २ अ०। तं०।

सीसघडीकंजिय-शीर्षघटीकाञ्जिक-न०। कपालकर्परस्रष्टर-स्ने, तं०।

सीसघडीविणिग्गय-शीर्षघटीविनिर्गत-त्रि०। शीर्षमेव घटी तदाकारत्वात् शीर्षघटी, तस्या विनिर्गत इव विनिर्गतम्। शिरोघटीमतिक्रम्य वर्त्तमाने, उपा० २ अ०।

सीसता-शिष्यता-स्त्री०। शिक्षणीयतायाम्, भ० १२ श० ७ उ०।

सीसदुवारिया-शीर्षद्वारिका-स्त्री०। शीर्षस्यावरणे, नि० चू० ३ उ०। (अन्ययूथिकेन शीर्षद्वारं न कर्त्तव्यमिति' अन्नमन्न-किरिया' शब्दे प्रथमभागे ४८० पृष्ठे गतम्।)

सीसपहेलिअंग-शीर्षप्रहेलिकाङ्ग-न०। चतुरशीतिलक्षगुणिते चूलिकाकाले, भ० ६ श० ७ उ०। चतुरशीतिलक्षगुणिते महौघे, ज्यो० २ पाहु०। स्था०। अनु०।

सीसपहेलिया-शीर्षप्रहेलिका-स्त्री०। वाचनान्तरेण चतुरशीतिमहौघशतसहस्राण्येकशीर्षप्रहेलिकाङ्गम्। ज्यो० २ पाहु०। भ०। चतुरशीतिलक्षगुणिते शीर्षप्रहेलिकाङ्गे, अनु०। शीर्षप्रहेलिकाङ्गं चतुरशीत्या लक्षैर्गुणितं शीर्षप्रहेलिका भवति। अस्या. स्वरूपमङ्कतोऽपि दर्श्यते—७५८२६३२५३०७३०१०२४११५७९७३५६९९७५६९६४०६२१८९६६८४८०८०१८३२९६, अग्रे चत्वारिंशं शून्यशतम् १४० तदेवं शीर्षप्रहेलिकायां सर्वाण्यमूनि चतुर्णवत्यधिकशतसंख्यान्यङ्कस्थानानि भवन्ति। अनु०। कर्म०। स्था०।

सीसपूरग-शीर्षपूरक-पुं०। मस्तकाभरणे, तं०।

सीसवग्ग-शिष्यवर्ग-पुं०। अन्तेवासिवृन्दे, ग० ५ अधि०।

सीसवेयणा-शीर्षवेदना-स्त्री०। सर्वमस्तकवेदनायाम्, तं०।

सीसहिया-शिष्यहिता-स्त्री०। हरिभद्राचार्यनिर्मितायामावश्यकवृत्तौ, आव० ६ अ०।

सीसागर-सीसाकर-पुं०। सीसकधातूत्पत्तिस्थानौ, स्था० ८ ठा० ३ उ०। नि० चू०।

१-नम्बूद्वीपे स्थापना चैवम्-७५८०१३२५३०७३०१०२४११५७९७३५ ६९९७५६९६४०६२१८९६६८४८०८०१८३२९६।

सीसाणुगुण-शिष्यानुगुण्य-त्रि०। विनेयाभिप्रायानुरोधे, द्वा० १४ द्वार।

सीसावेढ-शीर्षवेष्ट-पुं०। आर्द्रचर्मादिमये शिरोबन्धने, आ० म० १ अ०। स०। प्रश्न०। आव०। दशा०।

सीसुक्कंपिय-शीर्षोत्कम्पित-न०। शीर्षं कम्पयत कायोत्सर्गकरणरूपे कायोत्सर्गदोषे, प्रव० ५ द्वार। "सीसं पकंपमाणो, जक्खाइट्ठ व्व कुणइ उस्सग्गं।" आव०५ अ०।

सीसुला-शीर्ष-न०। प्राकृतभाषया 'सीसुला' इति व्यपदेशः। शिरसि, ती० ३२ कल्प।

सीसोवहार-शीर्षोपहार-पुं०। पार्श्वादिशिरोबलौ, प्रश्न० २ आश्र० द्वार।

सीह-शीघ्र-त्रि०। वेगवति, शीघ्रगतिहेतुत्वाच्छीघ्रः गतिविषयो गतिगोचरस्तद्धेतुत्वात्काल इत्यर्थ। सूत्र०२ श्रु०३ अ०। शीघ्र -शीघ्रगतिविषय. शीघ्रत्वेन तद्विषयोऽप्युपचाराच्छीघ्र उक्त। प्रति०। भ०।

सिंह-पुं०। हिनस्तीति सिंहः। विंशत्यादित्वादनुस्वारस्य लुक्। प्रा०१ पाद। केशरिणि. जी० ३ प्रति० ४ अधि०। सूत्र०। प्रश्न०। जं०। प्रश्न०। बले सिंह एवायम्। प्रा०२ पाद। नपुं०। सप्तमदेवलोकविमानभेदे, स० १७ सम०। पुं०। स्वनामख्याते भगवतो महावीरस्य अनगारे, यो गोशालकतेजोलेश्यया वीरजिने रोगाक्रान्ते रेवतीगृहे कपोतकशरीरानयनार्थमगमत्। भ० १५ श०। (तत्कथा 'गोसालग' शब्दे तृतीयभागे १०३२ पृष्ठे गता।) "सीहे कासवगुत्ते धम्मं पि अ कासवं वंदे।" थेरस्स णं अज्जधम्मस्स सुव्वयगोत्तस्य अज्जसीहे थेर अंतेवासी कासवगुत्ते" कल्प० २ अधि० ८ क्षण। कालाशसन्निवेशे ग्रामणीपुत्रे, यो हि विद्युन्मत्या दास्या सह क्रीडन् हमितो गोशालकेन,कुट्टितवाँश्च तम्। कल्प० १ अधि० ६ क्षण। आ० म०। श्रेणिकस्य धारण्यां जाते स्वनामख्याते पुत्रे, अन्त०१ श्रु० २ वर्ग १० अ०। अणु०। (स च वीरान्तिके प्रव्रज्य सर्वार्थसिद्धे उपपद्य महाविदेहे सेत्स्यतीति अनुत्तरोपपातिकस्य द्वितीये वर्गे सूचितम्।)

सीहकंत-सिंहकान्त-न०। सप्तमदेवलोकस्थे विमाने, स० १७ सम०।

सीहकण्ण-सिंहकर्ण-पुं०। स्वनामख्याते अन्तरद्वीपे, प्रज्ञा० १ पद।

सीहकण्णी-सिंहकर्णी-स्त्री०। कन्दविशेषे, भ० ७ श० ३ उ०।

सीहकेसरय-सिंहकेशरक-पुं०। तथाविधे मोदकभेदे, धर्मलाभस्थाने सिंहकेशरा इति भणनात्, तथानाम्ना प्रसिद्धेऽनगारे, पिं०। ग० व०। दर्श०। आतु०। ग्रा०। ('लोभ' शब्दे षष्ठभागे तत्कथानकम्।)

सीहखाइता-सिंहखादिता-स्त्री०। सिंह पुन शौर्यातिरेकाद्वनक्षयोपात्तस्य यथारब्धभक्षणेन वा खादिता तथाविधप्रकृतिर्वा सिंह। प्रव्रज्याभेदे, स्था० ४ ठा० ४ उ०।

सीहगइ-सिंहगति-पुं०। दिक्कुमारेन्द्रस्य अमितगते. पश्चिमलोकपाल, भ० १ श० १ उ०।

**शीघ्रगति**–त्रि० । शीघ्रगमनशक्तिसम्पन्न, भ० ३ श०२ उ० ।

**सीहगिरि–सिंहगिरि**–पुं० । स्थविरस्यार्यस्य स्वनामख्याते शिष्ये, कल्प० २ अधि० ८ क्षण । अस्य द्वौ शिष्यौ धनगिरिरार्यवज्रश्च । आ० म० १ अ० । आ० चू० । ग० । कल्प० । उत्त० । आव० ।

**सीहगुहा–सिंहगुहा**–स्त्री० । राजगृहनगरस्यादूरे दक्षिणपौरस्त्य दिग्भागे व्यवस्थितायां चोरपल्ल्याम् , ज्ञा० १ श्रु० १८ अ० ।

**सीहज्झय–सिंहध्वज**–पुं० । स्त्री० । सिंहालेखरूपचिह्नोपेते ध्वजे , रा० ।

**सीहणाय–सिंहनाद**–पुं० । सिंहस्येव नादकरणे , प्रश्न० ३ आश्र० द्वार । ती० । औ० । आ० म० । आव० । सीहस्सेव सरिस णाय करेंति । नि० चू० १७ उ० ।

तिहिं ठाणेहिं देवा सीहणायं करेज्जा–अरिहंतेहिं जायमाणेहिं, अरिहंतेहिं पव्वयमाणेहिं, अरिहंताणं णाणुप्पायमहिमासु । स्था० ३ ठा० १ उ० ।

**सीहणिक्कीलिय–सिंहनिष्क्रीडित**–न० । सिंहनिष्क्रीडित सिंहगमन तदिव यत्तपस्तत्सिंहनिष्क्रीडितमित्युच्यते तद्गमनं चातिक्रान्तदेशावलोकनत , एवमतिक्रान्ततप समासेवनेनापूर्वतपसोऽनुष्ठानं यत्र तत् सिंहनिष्क्रीडितम् । तपोभेदे, तच्च क्षुद्रकं महच्चेति द्विविधम् । औ० । ज्ञा० । अन्त० ।

तते णं ते महब्बलपामोक्खा सत्त अणगारा खुड्डागं सीहनिक्कीलियं तवोकम्मं उवसंपज्जित्ता णं विहरंति, तं जहा–चउत्थं करेंति चउ०२त्ता सव्वकामगुणियं पारेंति २त्ता छट्ठं करेंति२त्ता चउत्थं करेंति२त्ता अट्ठमं करेंति२त्ता छट्ठं करेंति २त्ता दसमं करेंति २ त्ता अट्ठमं करेंति २ त्ता दुवालसमं करेंति २ त्ता दसमं करेंति २ त्ता चाउद्दसमं करेंति २ त्ता दुवालसमं करेंति २ त्ता सोलसमं करेंति २ त्ता चोद्दसमं करेंति २त्ता अट्ठारसमं करेंति २त्ता सोलसमं करेंति २त्ता वीसइमं करेंति २त्ता अट्ठारसमं करेंति२ त्ता वीसइमं करेंति२त्ता सोलसमं करेंति२त्ता अट्ठार० करेंति२त्ता चोद्दसमं करेंति२त्ता सोलसमं करेंति२त्ता दुवाल० करेंति२त्ता चाउद्द० करेंति२त्ता दसमं करेंति२त्ता दुवाल० करेंति२त्ता अट्ठमं करेंति२त्ता दसमं करेंति२ त्ता छट्ठं करेंति२त्ता अट्ठमं करेंति२त्ता चउत्थं करेंति२त्ता छट्ठं करेंति– त्ता चउत्थं करें० सव्वत्थ सव्वकामगुणिएणं पारेंति, एवं खलु एसा खुड्डागसीहनिक्कीलियस्स तवोकम्मस्स पढमा परिवाडी छहिं मासेहिं सत्तहि य अहोरत्तेहि य अहासुत्ता ०जाव आराहिया भवइ, तयाणंतरं दोच्चाए परिवाडीए चउत्थं करेंति नवरं विगइवज्जं पारेंति , एवं तच्चावि परिवाडी नवरं पारणए अलेवाडं पारेंति, एवं चउत्थावि परिवाडी नवरं पारणए आयंबिलेणं पारेंति ॥

'सीहनिक्कीलियं' ति सिंहनिष्क्रीडितमिव सिंहनिष्क्रीडित, सिंहो हि विहरन् पश्चाद्भागमवलोकयति एव यत्र प्राक्तनं तप आवर्त्योत्तरोत्तरं तद् विधीयते तत्तप सिंहनिष्क्रीडितम् । तच्च द्विविध–महत् क्षुद्रक चेति , तत्र क्षुल्लकमनुलोमगतौ चतुर्भक्तादि विंशतितमपर्यन्तं, प्रतिलोमगतौ तु विंशतितमादिकं चतुर्थान्तम् , उभयं मध्येऽष्टादशकोपेत, चतुर्थषष्ठादीनि तु एकैकवृद्धयैकोपवासादीनि । स्थापना चेयम्–

| | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | १ | ३ | २ | ४ | ३ | ५ | ४ | ६ | ५ | ७ | ६ | ८ | ७ | ९ | ८ |
| १ | २ | १ | ३ | २ | ४ | ३ | ५ | ४ | ६ | ५ | ७ | ६ | ८ | ७ | ९ | |

भवति इह चत्वारि २ चतुर्थादीनि त्रीण्यष्टादशानि द्वे विंशतितमे तदेवं चतुष्पञ्चाशदधिकं शतं तपोदिनाना त्रयस्त्रिंशच्च पारणकदिनानामेवमेकस्यां परिपाट्यां षण्मासाः सप्तरात्रिन्दिवाधिका भवन्ति , प्रथमपरिपाट्या च पारणकं सर्वकामगुणिकं, सर्वे कामगुणा –कमनीयपर्याया विकृत्यादयो विद्यन्ते यत्र तत्तथा, द्वितीयायां निर्विकृतं तृतीयायामलेपकारि चतुर्थ्यामाचाम्लमिति । प्रथमपरिपाटीप्रमाण चतुर्गुण सर्वप्रमाण भवतीति । ज्ञा० १ श्रु० ८ अ० । अन्त० ।

'खुड्डागसीहनिक्कीलिय' ति–वक्ष्यमाणमहासिंहनिष्क्रीडितापेक्षया क्षुद्रकं सिंहनिष्क्रीडितं सिंहगमन तदिव यत्तपस्तत्सिंहनिष्क्रीडितमित्युच्यते , तद्गमन चातिक्रान्तदेशावलोकनत, एवमतिक्रान्ततपःसमासेवनेनापूर्वतपसोऽनुष्ठान यत्र तत् सिंहनिष्क्रीडितमिति । तच्चेव चतुर्थं तत षष्ठचतुर्थे अष्टमषष्ठे दशमाष्टमे द्वादशदशमे चतुर्दशद्वादशे षोडशचतुर्दशे अष्टादशषोडशे विंशतितमाष्टादशे विंशतितमं चति क्रमेण विधीयते । तत षोडशाष्टादश चतुर्दशषोडशे द्वादशचतुर्दशे दशमद्वादशे अष्टमदशमे षष्ठाष्टमे चतुर्थषष्ठ चतुर्थं चेति । स्थापना चैवम्–

२३४५६७८९ ४५ ७६५४३२१ अत्र च
१ ९ । । १ । एकस्या
१२३४५६७८ ४५ ८७६५४३२

परिपाट्या दिनमानं नवकसंकलने द्वे । ४५ । ४५ । अष्टकसकलना चैका ३६ सप्तकसंकलनाऽप्येकैव २८ पारणकदिनानि ३३ सर्वाग्रम् । १८७ । एव च मासा ६ दिनानि च । ७ । चतसृषु परिपाटिष्वेतदेव चतुर्गुणं स्यात्तत्र वर्षं वर्षे दिनानि । २८ । तत्र प्रथमपरिपाट्या पारणक सर्व– कामगुणितं द्वितीयस्यां निर्विकृतिकं तृतीयायामलेपकारि चतुर्थ्यामाचाम्लमिति । औ० । ( एव महासिंहनिष्क्रीडितमपि तच्च 'महासीहणिक्कीलिय' शब्दे षष्ठभागे उक्तम् । )

**मीहणिसिज्जायतण–सिंहनिषद्यायतन**–न० । सिंहनिषद्यायुक्तगृहे, " अट्ठावय णगवरे जत्थ भगवं आइगरो सिद्धो जत्थ य भरहसरसीहनिसिज्जायतणं ति । " ती० ११ कल्प ।

**मीहणिसाइ–सिंहनिपादिन्**–पुं० । सिंहवत् निषीदनशीले सिंहनिषादी । यथा सिंहोऽग्रतन पादयुगलमुत्पश्चात्तन तु पादयुगं सकोच्य पुनःश्रया मनाक् लग्नो निषीदति । सिंहोपवेशनेनोपविष्टे जी० ३ प्रति० ४ अधि० ।

**मीहतिलगसूरि–सिंहतिलकसूरि**–पु० । अञ्चलगच्छीय धर्म

भमूरिशिष्ये महेन्द्रप्रभसूरिगुरौ, अस्य जन्म विक्रमसंवत् १३७५ स्वर्गति विक्रमसंवत् १३६५। जै० इ०।

सीहपुच्छ-सिंहपुच्छ-पुं०। पृष्ठिवर्ध्रे, सूत्र० १श्रु०५ अ० १उ०।

सीहपुच्छण-सिंहपुच्छन-न०। सेफस्फोटने, प्रश्न०५सव०द्वार।

सीहपुरी-सिंहपुरी-स्त्री०। सुपद्मविजयक्षेत्रराजधान्याम्, जं० ४ वक्ष०। आव०।

दो सीहपुरीओ। स्था० २ ठा०.३ उ०।

सीहमुहदीव-सिंहमुखद्वीप-पुं०। लवणसमुद्रस्यान्तर्द्वीपविशेष, स्था० ४ ठा० २ उ०। प्रज्ञा०। नं०। ('अंतरदीव' शब्दे प्रथमभागे ६६ पृष्ठे व्यक्ष्यताऽस्ता।)

सीहया-सिंहता-स्त्री०। ऊर्जवृत्तौ, स्था० ४ ठा० ३ उ०।

सीह (भ) (अ)र-शीकर-पुं०। "शीकरे महौ वा" ॥८।१।१८४॥ इति भकारहकारौ।पक्षे-सीअरो। अम्बुकणे प्रा०। अच्छगादिभि समं, "सत्तस्स (स)रसीहरा" स्था०७ठा०३उ०। म्लेच्छजातिविशेष, प्रज्ञा० १ पद।

सीहरह-सिंहरथ-पुं०। स्वनामख्याते पुण्ड्रवर्धननगरराजे, उत्त० ७ अ०। ('नग्गइ' शब्दे चतुर्थभागे १७६५ पृष्ठे कथाऽस्योक्ता।)

सीहलिपासग-शिखापाशक-पुं०। वेणीमयमनार्ये ऊर्णामये कङ्कणे, "सीहलिपासग च आणाहि" सूत्र० १ श्रु० ५ अ० १ उ०।

सीहवाहणा-सिंहवाहना-स्त्री०। सिंहारूढायामम्बिकायाम्, ती० ८ कल्प।

सीहविअ-सिंहविदु-न०। सप्तमदेवलोकस्थे विमानभेदे, स० १७ सम०।

सीहविक्कमगइ-सिंहविक्रमगति-पुं०। दिक्कुमाराणाममितगत्यमितामितवाहनयोर्लोकपाले, भ० ३ श० ८ उ०। स्था०।

सीहसर-सिंहस्वर-त्रि०। सिंहस्येव प्रभूतदेशव्यापी स्वरो यस्येति। सिंहनिर्ह्रादवति, नं०।

सीहसेण-सिंहसेन-पुं०। भरतक्षेत्रजविमलजिनसमकालिके ऐरवतजिने, ति०। प्रव०। "विमलो य भरहवासे एरवए सीहसेणजिणचंदो" ति०। अजितजिनस्य प्रथमगणधरे, ति०। अनन्तजिनस्य पितरि, प्रव० १० द्वार। स०। महासेनस्य राज्ञः पुत्रे, विपा० १ श्रु० ६ अ०। (अयं च परभवे देवदत्ता नाम दारिकाऽभवदिति 'देवदत्ता' शब्दे २६०८ पृष्ठे कथा।) श्रेणिकस्य राज्ञो धारण्यां जाते स्वनामख्याते पुत्र अणु० स्वर्ग १३ अ०। (सैं च वीरान्तिके प्रव्रज्य सर्वार्थसिद्धे उपपद्य महाविदेहे सेत्स्यतीति 'महासीहसेण' शब्दे षष्ठे भागे सूचितम्।)

सीहसोया-सिंहश्रोतस्-स्त्री०। जम्बूमन्दरस्य पश्चिमे भागे सीतोदाया महानद्याः संगताया स्वनामख्यातायामन्तर्नद्याम्, स्था० ३ ठा० ३ उ०।

दो सीहसोयाओ। स्था० २ ठा० ३ उ०।

सीहा-सिंहा-स्त्री०। सिंहगतिसमानायां श्रमाभावे दार्ढ्ये स्थिरतायाम्, भ० ३ श० १ उ०। प्रश्न०।

सीहागुग-सिंहानुग-पुं०। सन्निपद्याश्रिते आचार्ये, नि०चू० २० उ०।

सीहासण-सिंहासन-न०। सिंहप्रधानमासनं सिंहासनम्। आ० म० १ अ०। सिंहाङ्किते नृपासने, जं० ३ वक्ष०। सिंहाकृतियुक्ते विष्टरे, पञ्चा० २ विव०। जी०। सूत्र०। औ०। स्था०। रत्नमयैः सिंहैरुपशोभिते नृपासने, आ० म० १ अ०। जी०। सिंहस्य मृगाधिपतेरासन सिंहासनम्। मदस्थानविशेषरूपे कूर्जिते अनाकुले उपवेशने, पं० १४ विव०। पादपीठे, दशा० १० अ०।

सीहासणवरगय-सिंहासनवरगत-त्रि०। सिंहासनानां मध्ये यद्वरं तत्सिंहासनवर, तत्र गतो व्यवस्थितो य स तथा। श्रेष्ठसिंहासनासीनः स्था० १० ठा० ३ उ०।

सीहासणसंठिय-सिंहासनसंस्थित-त्रि०। सिंहासनस्येव संस्थितं संस्थानं यस्य स तथा। सिंहासनाकृतौ, रा०।

सीही-सिंही-स्त्री०। परिव्राजकप्रयुक्ताया वराहीविद्याया प्रतिमथिन्या सिंहविकुर्वणात्मिकायां विद्यायाम्, आ० म० १ अ०। आ० क०।

सीहु-सीधु-न०। तालवृक्षदुग्धोद्भवे, (उत्त० १६ अ०) मद्यविशेषे, प्रश्न० ५ संव० द्वार।

सु-सु-अव्य०। सुष्ठु शोभने, सूत्र० १ श्रु० १४ अ०। चं० प्र०। अतिशये, सूत्र० १ श्रु० २ अ० ३ उ०। सुरित्ययं निपातः प्रशंसायां शुद्धविषये वर्तते। सूत्र० १ श्रु० ७ अ०। उत्त०। विशे०। औ०। रा०। आ० म०। स०। आतु०।

सुअ-शुक-पुं०। कीरे, जं० १ वक्ष०। भ०।

स्वप-धा० शयने, "स्वपे कमवस-लिस-लोट्टाः" ॥ ८।४। १४६॥ पक्षे-सुअइ। स्वपिति। प्रा० ४ पाद।

सुअंग-श्रुताङ्ग-न०। श्रुतस्य प्रवचनस्य पुरुषरूपस्याङ्गावयव इति कृत्वा, समवायाङ्गे स०।

सुअक्खायधम्म-स्वाख्यातधर्मन्-त्रि०। सुष्ठु आख्यातो धर्मोऽस्येति स्वाख्यातधर्मा। संसारभीरुत्वाद्यथारोपितभाषाहिनि, आचा० १ श्रु० ६ अ० ३ उ०।

सुअण-सुजन-पुं०। उत्तमलोके, "सगिहिं न संगेहिं, न सरवरेहिं न वि उज्जाणवणेहिं। देसरवण्णा होंति वढ, निवसंतेहिं सुअणेहिं।" प्रा० ४ पाद। "वच्छह गृण्हइ फलइं जणु, कडुपल्लव वज्जेइ। तो वि महद्दुमु सुअणु जिवँ, ते उच्छंगि धरेइ" प्रा० ४ पाद।

सुअणलस-स्वनलस-त्रि०। कृतोद्यमे प्रशस्तपुरुषे, ग० ३ अधि०।

सुअप्परोग-स्वल्परोग-पुं०। मन्दव्याधौ, द्वा० २१ द्वार।

सुअमुह-शुकमुख-न०। शुकचञ्चुपुटे कल्प० १ अधि० ३ क्षण।

वेयपयाण य अत्थं,ण जाणसी तेसिमो अत्थो॥१६८९॥

पृथिव्यप्तेजोवाय्वाकाशलक्षणानि पञ्च भूतानि, तानि च किं सन्ति नवा? इति त्वं मन्यसे । संशयश्च तवायं विरुद्धवेदपदश्रवणनिबन्धनो वर्तते । तानि चामूनि वेदपदानि- स्वप्नोपमं वै सकलमित्येष ब्रह्मविधिरञ्जसा विज्ञेय इत्यादि, तथा- 'द्यावापृथ्वी'इत्यादि, तथा-'पृथिवी देवता आपो देवता' इत्यादि एतेषां चायमर्थस्तत्र प्रतिभासते-'स्वप्नोपम-स्वप्नसदृशं वै निपातोऽवधारणे सकलम्-अशेषं जगदित्येष ब्रह्मविधि -परमार्थप्रकार अञ्जसा-प्रगुणेन न्यायेन विज्ञेयो-ज्ञातव्य इति । तदेवमादीनि वेदपदानि किल भूतनिह्नवपराणि, द्यावापृथिवीत्यादीनि तु सत्ताप्रतिपादकानि अतस्तव संशय । तदेतेषां वेदपदानां त्वमर्थं न जानासि चशब्दाद्युक्तिहृदयं च न वेत्सि येन संशयं कुरुषे । तेषां चायमर्थो वक्ष्यमाणलक्षण इति । विशे० । सम्म० । कल्प० । ( सर्वशून्यताशङ्कां त्वं निरवशेषमपि लोकं मायोपमं स्वप्नेन्द्रजालतुल्यं मन्यसे ? किम्, नेति ' भाव-' शब्दे पञ्चमभागे साधितम् । ) ( शून्यवादिना नये आदित्यादिगमनक्रियानिराधो भवतीति 'आइच्च ' शब्दे द्वितीयभागे ३ पृष्ठ उक्तम् । ) चन्द्रमाश्च प्रत्यहं क्षीयमाणः समस्तक्षय यावत्पुनः कलाभिवृद्ध्या प्रवर्धमानः सपूर्णावस्था ( स्था ) या यावद्दृश्य-स्त्वैवोपलक्ष्यते । तथा-सरितश्च प्रावृषि जलकल्लोलाविला स्यन्दमाना दृश्यन्ते । वायवश्च वान्तो वृक्षभङ्गकम्पादिभिरनुमीयन्ते । यच्चोक्तं भवता—सर्वमिदं मायास्वप्नेन्द्रजालकल्पमिति, तदसत्, यतः सर्वभावे कस्यचिदमायारूपस्य सत्यस्याभावान्मायाया एवाभावः स्यात् यश्च माया प्रतिपादयेत् यस्य च प्रतिपाद्यते सर्वशून्यत्वे तयोरेवाभावात्कुतस्तद्व्यवस्थितिरिति ?, तथा स्वप्नोऽपि जाग्रदवस्थाया सत्या व्यवस्थाप्यते तस्या अभावे तस्याप्यभावः स्यात् ततः स्वप्नमभ्युपगच्छता भवता तत्प्रतिपक्षतया जाग्रदवस्थाऽवश्यमभ्युपगता भवति, तदभ्युपगमे च सर्वशून्यत्वहानि , न च स्वप्नोऽप्यभावरूप एव स्वप्नेऽप्यनुभूतादेः सद्भावात् तथा चोक्तम्— अणुहयदिट्ठचिंतिय सुयपयइवियारदेवयाऽणूवा । सुमिणस्स निमित्ताइं, पुण्णं पावं च ण भावो ॥ १ ॥ " इन्द्रजालव्यवस्थाऽप्यपरसत्यत्वे सति भवति, तदभावे तु केन कस्य चेन्द्रजालं व्यवस्थाप्यते ?, द्विचन्द्रप्रतिभासोऽपि गगने सत्यमेकस्मिंश्च चन्द्रमस्युपलम्भकरूपाद्भावे च घटते,न सर्वशून्यत्वे न चाभाव कस्यचिदप्यत्यन्ततुच्छरूपोऽस्ति शशविषाणकूर्मरोमगगनारविन्दादीनामत्यन्ताभावप्रसिद्धानां समासप्रतिपाद्यस्यैवाऽस्याभावो न प्रत्येकपदवाच्यार्थस्येति, तथाहि—शशोऽप्यस्ति विषाणमप्यस्ति ; किं त्वत्र शशमस्तकसमवायि विषाणं नास्तीत्यनेन प्रतिपाद्यते , तदेव समवायमात्रं निषिध्यते नास्त्यन्तिको वस्त्वभाव इति । एवमन्यत्रापि द्रष्टव्यमिति। तदेवं विद्यमानायामप्यस्तीत्यादिकायां क्रियायां निरुद्धप्रज्ञास्तीर्थिका अक्रियावादमाश्रिता इति ॥८॥ सूत्र० १ श्रु० १२ अ० ।

सुराणागार- शून्यागार-न० । शून्यमुद्रसं तच्च तदागारं शून्यागारम् । उत्त०२ अ० । शून्यगृहे, कल्प० ६ अधि० ५ क्षण । प्रश्न० । उत्त० । स्था० । सूत्र० ।

सुराणागारगय- शून्यागारगत-त्रि० । शून्यगृहव्यवस्थिते, सूत्र० १ श्रु० अ० २ उ० ।

सुराहा- सास्ना- स्त्री०-"उ सास्ना-स्तावके" ॥ ८ । १ । ७५ ॥ इति आदेरात उत्त्वम् । गवादिगलमासे, प्रा० १ पाद ।

स्नुषा- स्त्री० । ' स्नुषायां ण्हो न वा ॥ ८ । १ । २६१ ॥ इति णकाराकान्तो हकार । सुण्हा । सुसा । प्रा० । पुत्रभार्यायाम् ,स्था० ४ ठा० ३ उ० । विशे० । विपा० । आचा० ।

सुतवसिय- सुतपःसित- न० । सुष्ठु इह लोकस्य प्रशंसाद्युपहितत्वेन तपःसितम् तपस्यनुष्ठानं सुतपःसितम् । स्वनुष्ठिते, स्था० ३ ठा० ४ उ० ।

सुतवस्सि- सुतपस्विन्- पुं० । सुष्ठु—शोभनं बाह्याभ्यन्तरं तपोऽस्यास्तीति सुतपस्वी । सूत्र० १ श्रु० ६ अ० । सुविकृष्टतपोनिष्टप्तदेहे, सूत्र० १ श्रु० १० अ० । सं० ।

सुतारा- सुतारा- स्त्री० । अयोध्याराजस्य श्रीहरिश्चन्द्रस्य भार्यायाम् , ती० ३७ कल्प । शान्तिजिनस्य मातरि , उत्त० १८ अ० ।

सुतितिक्ख- सुतितिक्ष- त्रि०।सुखेन तितिक्ष्यते-सह्यते इति सुतितिक्षम् । तितिक्षयितु सुशक्ये परीषहादिके, स्था० ५ ठा० १ उ० ।

सुतिर- स्वप्तृ- त्रि० । "शीलाद्यर्थस्येरः ॥८।२।१४५॥" इति प्राकृतलक्षणबलादुभयत्रापि तृन्प्रत्ययस्येरादेश । प्रा० । स्वप्नशीले वृ० १ उ० २ प्रक० ।

सुतिहि- सुतिथि- स्त्री० । पञ्चानां नन्दादीनामन्यतरस्यां तिथौ, प्रश्न० २ आश्र० द्वार ।

सुत्त- सुप्त- त्रि० । निद्रायुक्ते,उत्त० ४ अ० । रात्रिमध्ययामद्वये निद्रां गत, पा० । "सुत्ता अमुणी सया मुणिणो जागरंति " ( 'लोगोत्तमणिज्ज ' शब्देऽस्मिन्नेव भागे इदं व्याख्यातम् । ) बाल्यादज्ञानचेतन, आ० १ श्रु० ३ अ० । औ० ( द्रव्यभावसुप्ता ' सामाइय ' शब्देऽस्मिन्नेव भागे विस्तरतो दर्शिता । ) ( सुत्तः किं स्वप्नं पश्यति इति ' महासुमिण ' शब्दे षष्ठे भागे दर्शितम् । ) स्वपनं सुप्तम् । निद्रायाम् , नपुं० । वृ० १ उ० १ प्रक० । मदिराज्ञोले दशावशेषप्रसिद्धे द्रव्यविशेषे स्त्र । वृ० ५ उ० ।

सूत्र- न० । अर्थानां सूचनात् सूत्रम् । अनु० । विशे० । तत्त्वार्थसूचनात् सूत्रम् । आगमादिकशब्दव्युत्पत्ति । व्य० १ उ० । आ० म० । जीत० । सर्वद्रव्यपर्यायनयाद्यर्थसूचनात्सूत्रम् । स्था० ४ ठा० ३ उ० । आगमे स्था० ४ ठा० । वृ० । प्रवचने, सूत्र० १ श्रु०१४ अ० । विशे० ।

निरुक्तम्—

सुत्तं च सुत्तमेव उ, अहवा सुत्तं तु तं भवे लेसो ।

अत्थस्स-सूयणा वा,सुवुत्तमिति वा भवे सुत्त । ३१२॥

अर्थेनाभिहितं सुप्तमिव सुप्तं प्राकृतशैल्या सुत्तम् । अथवा—सूत्रं नाम तद्भवति येन तन्तुरूपमित्यर्थः , यथा तन्तुना हि मणीन् यहाति वा यत्नेन एकत्र सहन्यन्ते एवमेतेनापि सूत्रेण तद्वद्योऽर्था संघात्यन्ते इति सूत्रमिव सूत्रम् । अथ-

सूत्रनाद्वा सूत्रं, सुष्ठु उक्तमिति वा सूत्रम् । प्राकृतशैल्या तु सुत्तमिति ।

सम्प्रति सूत्रशब्दस्यैव निरुक्तान्याह—

**नेरुत्तियाइँ तस्स उ, सूयइ सिव्वइ तहेव सुवइ त्ति ।**
**अणुसरति त्ति य भेया, तस्स य नामा इमा हुंति ॥ ३१३ ॥**

तस्य सूत्रस्य निरुक्तान्यमूनि—सूचयतीति सूत्रम् । अथवा—सीव्यतीति सूत्रम् । यदिवा—स्वपतीति सूत्रम् 'अथवा-अनुसरतीति सूत्रमिति निरुक्तस्य भेदाः । नामानि पुनस्तस्येमानि सुप्तादीनि भवन्ति ।

साम्प्रतमेवार्थतो व्याख्यानयति—

**पासुत्तसरिसं सुत्तं, अत्थेणाबोहियं ण तं जाणे ।**
**लेसमसरिसेण तेणं, अत्था संघ इया बहवे ॥ ३१४ ॥**

यथा द्वासप्ततिकलापण्डितो मनुष्यः प्रसुप्तः सन् न किञ्चित्तासां कलानां जानाति एवमर्थेनाबोधितं न किञ्चिदर्थविशेषं जानाति, यदा त्वर्थेन प्रबोधितं भवति तदा सर्वेषां तदन्तर्गतानां भावानां ज्ञायकमुपजायते । यथा स एव पुरुषः प्रबोधितस्तासां कलानाम् प्रसुप्तसमं सूत्रम् । अथवा-श्लेषसदृशं तत् सूत्रम् , तथाहि-तेन श्लेषसदृशेन-तन्तुसदृशेण बहवोऽर्थाः सङ्घातितास्तत श्लेषसदृशम् ।

सम्प्रति अर्थस्य सूचनादिति व्याख्यानयति—

**सूइज्जइ सुत्तेणं, सुई णट्ठा वि तह सुएणऽत्थो ।**
**सिव्वइ अत्थपयाणि व, जह सुत्तं कंचुगाईणि ॥३१५॥**

यथा सूची नष्टा सूत्रेण सूच्यते सूत्रेणोपलभ्यते, तथा श्रुतेनार्थः सूच्यते इति अर्थस्य सूचनात् सूत्रम् , एतेन सूचयतीति निरुक्तं व्याख्यानम् । अधुना सीव्यतीति व्याख्यानयति-यथा सूत्रं कञ्चुकादीनि सीव्यति एवमर्थपदान्यनेकानि सीव्यतीत्यर्थः, सीवनात् सूत्रम् ।

अथ (सूचय) तीति अस्य व्याख्यानमाह—

**सूरमणि जलकंतो, व अत्थमेव तु पसवई सुत्तं ।**
**वणियसुयअंधकयवर-तदणुसरंतो सुयं एवं ॥ ३१६ ॥**

यथा सूर्यकान्तोऽग्नौ, जलकान्तो जलं दीप्तिं स्रवति एवं सूत्रमर्थं प्रस्रवतीति सूत्रम् । अनुसरणं द्विधा-द्रव्यतो भावतश्च । तत्र द्रव्यतो वणिक्सुतोऽन्धः कचवरं दृष्टान्तः । एकस्य वणिजः पुत्रोऽन्धः वणिजा चिन्तितम्-एष वणिका निर्दिष्टं भुक्तं भुक्त्वा परिभवस्थानं गाढतरं भविष्यतीति द्वौ स्तम्भौ निहत्य तत्र रज्जुर्बद्धा । तेन सोऽन्धः पुत्रः रज्ज्वनुसारेण कचवरं बहिस्त्यजति एष दृष्टान्तः । अयमर्थोपनयः- वणिक्स्थानीय आचार्यः अन्धस्थानीयाः साधवः, रज्जुस्थानीयं सूत्रं, कचवरस्थानीयमष्टप्रकारं कर्म । तथा चाह-एवं वणिक्सुतान्धदृष्टान्तप्रकारेण तत्सूत्रमनुसरन् अष्टप्रकारं कर्म कचवरस्थानीयमपनयति । तत सरणात् सूत्रं, सुष्ठु उक्तं सूक्तमिति नाम तु प्रतीतमिति न व्याख्यातम् । वृ० १ उ० १ प्र० । स्था० । सूत्र० । प्रव० । गणधरादिकृते पञ्चमाश्रिते धर्मप्रतिपादनपरायणे सूत्रादौ, स्था० १ आ० १ प्रस्ता० । सुत्त ति वा ग्रन्थ ति वा एगट्ठा । आ० चू० १ अ० । जिनागमे, दर्श० ३ तत्त्व ।

सूत्रपदनिक्षेपमाह—

**दव्वं तु पोंडयादी , भावे सुत्तमिह सूयगं नाणं ।**
**सण्णासंगहवित्ते , जातिणिबद्धे य कत्थादी ॥ २ ॥**

नामस्थापने अनादृत्य द्रव्यसूत्रं दर्शयति-'पोंडयाइ' त्ति-पोण्डजं च वनीफलादुत्पन्नं कार्पासिकम् आदिग्रहणाद् अण्डजवालजादेर्ग्रहणं, भावसूत्रं तु इह-अस्मिन्नधिकारे सूचकं ज्ञानं-श्रुतज्ञानमित्यर्थः, तस्यैव स्वपरार्थसूचकत्वादिति । तच्च श्रुतज्ञानसूत्रं चतुर्द्धा भवति, तद्यथा-संज्ञासूत्रम् संग्रहसूत्रम् वृत्तनिबद्धम् , जातिनिबद्धं च । तत्र संज्ञासूत्रं यत् स्वसमयेनपूर्वकं निबद्धम् , तद्यथा—' जे छेए सागारियं न सेवे , सव्वामगंधं परिन्नाय णिरामगंधो परिव्वए " इत्यादि तथा लोकेऽपि पुद्गलाः संस्कार इत्यादि , संग्रहसूत्रं तु यत्प्रभूतार्थसंग्राहकम , तद्यथा-द्रव्यमित्युक्ते समस्तधर्माधर्मादिद्रव्यसंग्रह इति । यदिवा- ' उत्पादव्ययध्रौव्ययुक्तं सदिति वृत्तनिबद्धसूत्रं पुनर्यदनेकप्रकारया वृत्तजात्या निबद्धम् , तद्यथा-' बुज्झिज्ज त्ति तिउट्टिज्ज ' त्यादि , जातिनिबद्धं तु चतुर्द्धा, तद्यथा—कथनीयं-कथ्यमुत्तराध्ययनज्ञाताधर्मकथादि पूर्वर्षिचरितकथानकप्रायत्वात्तस्य, तथा गद्यम्-ब्रह्मचर्याध्ययनादि, तथा-पद्यम्-छन्दोनिबद्धम् तथा-गेयम्-यत् स्वरसञ्चारेण गीतिकाप्रायनिबद्धम् , तद्यथा-कापिलीयमध्ययनम् , ' अधुवे असासयम्मि संसारम्मि दुक्खपउराए- ' इत्यादि । सूत्र० १ श्रु० १ अ० १ उ० । " अत्थं भासइ अरिहा सुत्तं गुंफंति गणहरा निउणं । सासणस्स हियट्ठाए, तओ सुत्तं पवत्तइ ॥ " दशा० ४ अ० । तत्र गणधरा विशेष्यन्ते निपुणाः सूक्ष्मार्थदर्शित्वात् नियतगुणा निगुणा वा सन्निहितसमस्तगुणत्वात् , आह—तत्पुनः सूत्रं किमादिकं किंपर्यवसानं कियत्परिमाणं को वास्य सार इत्यत आह—

**सामाइयमाईयं, सुयनाणं जाव विंदुसाराओ ।**
**तस्स वि सारो चरणं,सारो चरणस्स निव्वाणं ॥**

तत् श्रुतज्ञानं सामायिकमादिर्यस्य तत्सामायिकादि यावत् बिन्दुसारात् बिन्दुसारं यावत् बिन्दुसाराख्यचतुर्दशपूर्वमित्यर्थः । तच्च मूलभेदापेक्षया द्विभेदम् , तद्यथा—अङ्गप्रविष्टम् , अनङ्गप्रविष्टं च । अङ्गप्रविष्टं द्वादशभेदमाचारादिभेदात् । अनङ्गप्रविष्टमनेकभेदमावश्यक तद्व्यतिरिक्तं कालिकोत्कालिकादिभेदात् । उक्तं च—द्व्यनेकद्वादशभेदं श्रुतमिति । आ० म० १ अ० । अनु० ।

से किं तं जाणयसरीरभवियसरीरवइरित्तं दव्वसुअं ? , जाणयसरीरभवियसरीरवइरित्तं पत्तयपोत्थयलिहिअं, अहवा-जाणयसरीरभवियसरीरवइरित्तं दव्वसुअं पंचविहं पण्णत्तं, तं जहा—अंडयं, बोंडयं, कीडयं, वालयं, वागयं । अंडयं हंसगब्भादि, बोंडयं-कप्पासमाइ, कीडयं पंचविहं पण्णत्तं, त जहा-पट्टे, मलए, अंसुए, चीणंसुए, किमिरागे, ( अनु० ) वागयं सणमाइ, से तं जाणयसरीरभवियसरीरवइरित्तं दव्वसुअं । से तं नोआगमतो दव्वसुअं, से तं दव्वसुअं । ( सू० ३७ । )

अथ निर्वचनम्— जाणयसरीरभवियसरीरवइरित्तं दव्वसुअं' मित्यादि, यत्र ज्ञशरीरभव्यशरीरयोः सम्बन्धि अनन्तरोक्तस्वरूपं न घटते तत् ताभ्यां व्यतिरिक्तं-भिन्नं द्रव्यश्रुतम्, किं पुनस्तदित्याह-' पत्तयपोत्थयलिहियं ' ति पत्रकाणि-तालताल्यादिसम्बन्धीनि तत्संघातनिष्पन्नास्तु पुस्तकाः, ततश्च पत्रकाणि च पुस्तकाश्च तेषु लिखितं पत्रकपुस्तकलिखितम्, अथवा—' पोत्थय ' त्ति-पोतं-वस्त्रं पत्रकाणि च पोतं च तेषु लिखितं पत्रकपोतलिखितं ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यश्रुतम्, अत्र च पत्रकादिलिखितस्य श्रुतस्य भावश्रुतकारणत्वात् द्रव्यत्वमवसेयम्, नोआगमत्वं तु आगमतो द्रव्यश्रुत इव आगमकारणस्यात्मदेहशब्दत्रयरूपस्याभावाद् भावनीयम् । तदेवमेकेन प्रकारेण ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यश्रुतमुक्तम् । साम्प्रतं तदेव प्रकारान्तरेण निरूपयितुमाह— अहवे त्यादि, अथवा-श्रुतं पञ्चविधं प्रज्ञप्तम्, तद्यथा-' अंडयमि ' त्यादि, अत्राऽऽह-ननु श्रुते प्रक्रान्ते सूत्रस्य प्ररूपणमप्रस्तुतम्, सत्यम्, किन्तु-प्राकृतशैलीमङ्गीकृत्य श्रुतस्याण्डजादिसूत्रस्य च सुत्तलक्षणेनैकेन शब्देनाभिधीयमानत्वसाम्यादिदमपि प्ररूपयतीत्यदोषः । प्रसङ्गतोऽण्डजादिसूत्रस्वरूपज्ञापनेन शिष्यव्युत्पत्तिश्चैवं कृता भवति अत एव भावश्रुते प्रक्रान्ते नामश्रुतादिप्ररूपणमप्रस्तुतमित्याद्यपि परमपास्तं, तस्यापि शिष्यव्युत्पादनादिफलत्वात् । न च भावश्रुतप्रतिपक्षस्य नामश्रुतादेः प्ररूपणमन्तरेण भावश्रुतस्य निर्दोषत्वादिस्वरूपनिश्चयं कर्तुं पार्यते, ' जं सव्वं जाणइ से एगं जाणइ ' त्ति वचनाद् इत्यलं विस्तरेण । अत्राद्यभेदज्ञापनार्थमाह—' से किं तं ' मित्यादि, अत्रोत्तरम्-' अंडयं हंसगब्भाइ ' त्ति-अण्डाज्जातमण्डजम्, हंसः-पतङ्गश्चतुरिन्द्रियो जीवविशेषः गर्भस्तु तन्निवर्तितः कोशिकाकारः, हंसस्य गर्भो हंसगर्भस्तदुत्पन्नं सूत्रमण्डजमुच्यते, आदिशब्दः स्वभेदप्रख्यापनपरः । ननु यदि हंसगर्भोत्पन्नसूत्रमण्डजमुच्यते तर्हि सूत्रे 'अंडयं हंसगब्भाइ ' त्ति सामानाधिकरण्यं विरुध्यते हंसगर्भस्य प्रस्तुतसूत्रकारणत्वादेव, सत्यम् । कारणे कार्योपचारात् तदविरोधः कोशकारभवं सूत्रं चटकसूत्रमिति लोकप्रतीतमण्डजमुच्यत इति हृदयम्, पश्चाद्द्वयहंसगर्भतत्समयास्यत्र । स नामे'त्यादि निगमनम् । अथ द्वितीयभेद उच्यते— से किं तं ' मित्यादि अथ निर्वचनम्- बोंडयं फलिहमाइ त्ति-बोण्डं वमनीफलं तस्माज्जातं बोण्डजं, फलिही-वमनी तस्याः फलमपि फलिहं कर्पासाश्रयः कोशकरूपं तदिहापि कारणे कार्योपचाराद्बोण्डजं सूत्रमुच्यते इति भावः । 'से तं'मित्यादि निगमनम् । अथ तृतीयभेद उच्यते— ' से किं तं ' मित्यादि अत्रोत्तरम्—' कीडयं पंचविहंमि ' त्यादि, कीटाज्जातं कीटजं सूत्रं तत् पञ्चविधं प्रज्ञप्तम्, तद्यथा—'पट्टे' त्ति पट्टसूत्रं मलयम् अंशुकम्, चीनांशुकं कृमिरागम् । अत्र वृद्धव्याख्या किल यत्र विषये पट्टसूत्रमुत्पद्यते, तत्रारण्ये वननिकुञ्जस्थाने मांसचीडादिरूपस्याऽऽमिषस्य पुञ्जाः क्रियन्ते, तेषां च पुञ्जानां पार्श्वतो निम्नोन्नताश्च सान्तरा बहवः कीलका भूमौ निखायन्ते, तत्र वनान्तरेषु संचरन्तः पतङ्गकीटाः समागत्य मांसाद्यभिलाषिणः-भोगलुब्धाः कीलकान्तरेष्वितस्ततः परिभ्रमन्तो लाला-प्रमुञ्चन्ति, ताश्च कीलकेषु लग्नाः परिगृह्णन्ते इत्येतत् पट्टसूत्रमभिधीयते । अनेनैव क्रमेण मलयविषयोत्पन्नं तदेव मलयम्, इत्थमेव चीनविषयाद् बहिस्तादुत्पन्नं तदेवांशुकम्, इत्थमेव चीनविषयोत्पन्नं तदेव चीनांशुकमभिधीयते, क्षेत्रविशेषाद्धि कीटविशेषस्तद्विशेषात् तु पट्टसूत्रादिव्यपदेश इति भावः । एवं केचिद्विषये मनुष्यादिशोणितं गृहीत्वा केनापि योगेन युक्तं भाजनसम्पुटे स्थाप्यते तत्र च प्रभूताः कृमयः समुत्पद्यन्ते ते च वातायनविनिर्गतभाजनच्छिद्रैर्निर्गत्य आसन्नं पर्यटन्तो यल्लालाजालमभिमुञ्चन्ति तत् कृमिरागं पट्टसूत्रमुच्यते, तच्च रक्तवर्णकृमिसमुत्पन्नत्वात् स्वपरिणामत एव रक्तं भवति । अन्ये त्वभिदधति—यदा तत्र शोणिते कृमयः समुत्पन्ना भवन्ति तदा सकृमिकं मांसं तत्सलिलेन किट्टं परित्यज्य रसो गृह्यते, तत्र च कश्चिद् योगः प्रक्षिप्यते, ततस्तेन यद् रज्यते पट्टसूत्रं तत् कृमिरागमुच्यते । तच्च धौताद्यवस्थासु मनागपि कदाचिद्रागं न मुञ्चति, से तंमि'त्यादि निगमनम् । अथ चतुर्थो भेद उच्यते- से किं तं ' त्यादि, अत्रोत्तरम्—(अनु० । ) (वालयपदव्याख्या 'वालय' शब्दे षष्ठभागे गता ।)

अथ पञ्चमो भेदोऽभिधीयते— से किं तं' त्यादि, वल्काज्जातं वल्कजं, तच्च शणादिभृति, क्वचित् पुनरतसीत्यादीति पाठः, तत्रातसीसूत्रं मालवादिदेशप्रसिद्धम्, ' से तं ' त्यादि निगमनम् । उक्तं पञ्चविधमण्डजादिसूत्रं, तद्भणनेन चोक्तं ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यश्रुतम्, अतस्तदपि निगमयति—'से तं जाणगे' त्यादि, एतद्भणनेन च समर्थितं नोआगमतो द्रव्यश्रुतमतस्तदपि निगमयति—' से तं नोआगमओ ' इत्यादि, एतत्समर्थनेन च समर्थितं द्विविधमपि द्रव्यश्रुतमतस्तदपि निगमयति—' से तं दव्वसुअमि ' त्यादि । अनु० ।

विध्युद्यमादिसूत्राणि—

विहि १ उज्जम २ वन्नय- ३ भय ४

उस्सग्ग ५ ऽववाय ६ तदुभयगयाइं ७ ।

सुत्ताइँ बहुविहाइं—

समए गंभीरभावाइं ॥ १०६ ॥

ध० र० ३ अधि० ३ लक्ष० । ( अस्या व्याख्या ' सद्दा ' शब्देऽस्मिन्नेव भागे गता । )

अ स्खलितादिगुणोपेतं सूत्रमुच्चारणीयम् । किं तत् इत्याह-

अप्पग्गन्थमहत्थं, बत्तीसदोसविरहियं जं च ।

लक्खणजुत्तं सुत्तं, अट्ठहि य गुणेहि उववेयं ॥८८८॥

अल्पग्रन्थं महार्थं च सूत्रं विज्ञेयम्, "उप्पादव्वय-धुवजुत्तं 'इत्यादिवत् सूत्रमल्पग्रन्थं महार्थं च भवतीत्यर्थः, यच्च द्वात्रिंशद्दोषविरहितम्, तल्लक्षणयुक्तं सूत्रमुच्यते । ते चैतेऽनन्तरोक्ता द्वात्रिंशद् दोषाः —

' अलियमुवघायजणयं, निरत्थयमवत्थयं छलं दुहिलं ।

निस्सारमहियमूणं, पुणरुत्तं वाहयमजुत्तं ॥ १ ॥

कमभिन्नवयणभिन्नं, विभत्तिभिन्नं च लिंगभिन्नं च ।

अणभिहियमपयमेव य, सहावहीणं ववहियं च ॥ २ ॥

कालजइच्छविदोसो, समयविरुद्धं च वयणमेत्तं च ।

अत्थावत्तीदोसो नेओ असमासदोसो य ॥३॥
उवमा रूवगदोसो निद्देसपयत्थसंधिदोसो य ।
एए उ सुत्तदोसा बत्तीस होंति नायव्वा ॥ ४ ॥
विशे० । दशा० ।

अक्खलितादिपदानां व्याख्या--

खलिए पत्थरमीया, मिलिए मिस्साणि धन्न वावणता ।
मत्ताइबिंदुवन्ने, घोसाइ उदत्तमाईया ॥ २६६ ॥

स्खलितं द्विधा-द्रव्यतो भावतश्च । तत्र द्रव्ये प्रस्तरमीना प्रस्तरकुले तेत्र तस्मिन् हि वाह्यमानानि हलकुलिकादीनि उत्सृज्य अन्यत्र निपतन्ति, एवं भावस्खलितं यदन्तरान्तरा आलापकान् मुञ्चति यथा अहिंसा 'देवा वि तं नमसन्ति' "पुप्फसु भमरा जहा परिचिचे चेव दोसा य" मिलितमपि द्विधा-द्रव्यतो भावतश्च । तत्र द्रव्यतो मिलितं बहूनां व्रीहि यवादीनां धान्यानामत्र मिश्रीकृतानां वापनता-वपनं भावतो मिलितं यदन्यस्यान्यस्योद्देशं कस्यचिदध्ययनस्य आलापकानेकत्र मीलयति सर्वजिनवचनामिति कृत्वा यथा 'सव्वे पाणा पियाउगा सव्वे जीवा वि इच्छंति जीविउं न मरिज्जिउं इत्य न नज्जइ किं कालिय उक्कालिय छेयसुयं वा' अत्र प्रायश्चित्तं दोषाश्च प्राग्वत् । परिपूर्णं द्विधा-द्रव्यतो भावतश्च । तत्र द्रव्यतः परिपूर्णो घटः, भावे परिपूर्णं मात्रादिभिः, आदिग्रहणात्--पदैर्बिन्दुभिर्वर्णैरक्षरैश्चापरिपूर्णं तदेव प्रायश्चित्तं दोषाश्च । मात्राभिरपरिपूर्णं यथा 'धम्म मंगलमुक्कट्ठं' । पदैरपरिपूर्णं यथा--' धम्म उक्किट्ठं ' बिन्दुभिरपरिपूर्णं यथा- 'धम्मो मगलमुक्किट्ठं' इति वर्णैरपरिपूर्णं यथा 'धम्मं लउक्किट्ठमि' त्यादि घोषा उदात्तादयः । तत्र उच्चैरुदात्तः नीचैरनुदात्तः समाहारः स्वरितः । उच्चैः शब्देन यथा- 'उप्पन्नेइ वा' इत्यादि नीचैः शब्देन यथा- ' जे भिक्खू हत्थकम्मं करेइ " इत्यादि घोषैरयुक्तं कुर्वतस्तदेव प्रायश्चित्तं त एव च दोषाः ।

सम्प्रति व्यत्याम्रेडितादीनां पञ्चानां प्रकारान्तरेणार्थमभिधातुकाम आह--

मुत्तूण पढमबिइए, अक्खरपयपायबिंदुमत्ताणं ।
सव्वेसिं ममायोगे, सट्ठाणे चेव चरमस्स ॥३००॥

प्रथमं हीनाक्षरं द्वितीयमधिकाक्षरमेते द्वे पदे मुक्त्वा शेषाणां पञ्चानां व्यत्ययुतवर्णानाम् अक्षरपदपादबिन्दुमात्राणां समवतारः कर्तव्यः यथा व्यत्याम्रेडितनामान्यशास्त्राणामक्षरं पदं पादं बिन्दुभिर्मात्राभिर्योपवाल्याविविरुद्धं तस्यैव शास्त्रस्य अप्रस्तुतानुगतिनानान्यपाऽऽक्षरपदानि यत्करोति स्खलितं पञ्चभिरव पदादिभिः मिलितम यथा-सामायिकपदं दशवैकालिकोत्तराध्ययनप्रभृतीनामन्तकानि पदानि मीलयति. अपरिपूर्णं पञ्चभिरक्षरादिभिः स्वगते ' सट्ठाणे चेव चरमस्स ' घोषयुतं घोषैरपरिपूर्णं नाक्षरादिभिः । बृ० १ उ० १ प्रक० । आचा० । आ० म० ।

अष्ट गुणाः सूत्रस्य तत्र प्रथमं लक्षणद्वारमाह--

लक्खणओ खलु सिद्धी, तदभावे तं ण साहए अत्थं ।
सिद्धिमिहं सव्वत्थ वि, लक्खणजुत्तं सुत्तं तेण ॥२७८॥

इह लक्षणहीनं सूत्रं न भवति, ततो लक्षणयुक्तसूत्रस्यार्थो भवति लक्षणहीनस्य त्वर्थाभावतस्ततो यन्निमित्तमुपनिबद्धं सूत्रं तस्याप्रसिद्धिरेव । तथा चाह-लक्षणेन खलु विवक्षितस्यार्थस्य सिद्धिस्तदभावे लक्षणाभावस्तत्सूत्रं न साधयति विवक्षितमर्थम् । इदं सर्वत्रापि लोके सिद्धं यत्किञ्चिन्मण्यादिद्रव्यं लाभार्थं क्रीतं तल्लक्षणहीनं लाभं न साधयति तेन-कारणेन लक्षणयुक्तं सूत्रमिष्यते ।

ईदृशं लक्षणयुक्तं सूत्रमत आह--

अप्पग्गंथमहत्थं , बत्तीसदोसविरहियं जं च ।
लक्खणजुत्तं सुत्तं, अट्ठहिँ य गुणेहिँ उववेयं ।।२७९॥

अल्पग्रन्थम्-अल्पाक्षरं महार्थमत्र चत्वारो भङ्गाः-अल्पाक्षरमल्पार्थम् यथा कापोसादिकम् । अल्पाक्षरं महार्थं यथा सामायिककल्पव्यवहारादि । महाक्षरमल्पार्थम् यथा-'जो सूतइ वा अजरोइ वा " इत्यादिभिर्बहुभिरक्षरैर्नशब्दव्यावर्णनम् महाक्षरं महार्थं यथा दृष्टिवादः तत्र यदल्पाक्षरं महार्थं तादृशं सूत्रमिति गमिष्यते तथा यद्द्वात्रिंशद्दोषविरहितं तदिष्यते न च द्वात्रिंशद्दोषा वक्ष्यमाणास्तथाष्टभिर्गुणैर्वक्ष्यमाणैर्यदुपेतं तदिष्यते एवंभूतं लक्षणयुक्तम् ।

अधुना द्वात्रिंशद्दोषानाह--

अलियमुवघायजणयं, णिरत्थगमवत्थयं छलं दुहिलं ।
निस्सारमहियमूणं, पुनरुत्तं वाहयमजुत्तं ॥ २८० ॥
कमभिन्नवयणभिन्नं, विभत्तिभिन्नं च लिङ्गभिन्नं च ।
अणभिहियमपयमेव य,सभावहीणं ववहियं च॥२८१॥
कालजुतिच्छविदोसो, समयविरुद्धं च वयणमित्तं च ।
अत्थावत्तीदोसो, हवइ य असमासदोसो य ॥ २८२ ॥
उवमा रूवगदोसो, परप्पवत्ती य संधिदोसो य ।
एए उ सुत्तदोसा, बत्तीसं हुंति नायव्वा ॥२८३॥ (वृ०)

अष्टभिर्गुणैरुपेतमित्युक्तमतः स्थाने चाष्टौ गुणानाह--

निद्दोसं सारवंतं च, हेउजुत्तमलंकियं ।
उवणीयं सोवयारं च, मियं महुरमेव य ॥ २८४ ॥

निर्दोषं १ सारवत् २ हेतुयुक्तम् ३ अलंकृतम् ४ उपनीतं सोपचारं ५ मितं ६ मधुरं ७ मान ।

तत्र निर्दोषादिपदव्याख्यानार्थमाह--

दोसा खलु अलियाई , बहुपज्जाय च सारवं सुत्तं ।
सो हम्मेयं हेऊ, सकारणं वा वि हेउजत्तं ॥ २८५ ॥
उवमाइअलंकारो, सोवणयं खलु वयंति उवणीयं ।
कहलमणोवयारं, दंडगमगियं तहा महुरं ॥२८६॥

दोषाः खल्वलीकादयः प्रागभिहितास्तैर्वर्जितं निर्दोषं सारवन्नाम बहुपर्यायमेकैकस्मिन्नभिधेये यत्रानेकान्यभिधानानीत्यर्थः । हेतुयुक्तं साधर्म्येण वा हेतुना युक्तम् । अथवा-हेतुः कारणं निमित्तमित्यनर्थान्तरं ततो यत्सकारणं तद्धेतुयुक्तमिति यथा-'सुतत्त सेयं जागरियत्त वा सेयं' इत्यादि, अलंकृतं यदुपमादिरलङ्कारः । तत्रोपमायुक्तम् . यथा-"सूर व सगाइमसत्तमाउंद" आदिग्रहणेन-'नियमा अक्खरलंभो माउक्कमसनिद्दुरुच्चार्य जमगं । महुरत्तणमत्थगणं--त्तणव

सुत्त अलङ्कारा" इति परिग्रह । उपनीतं खलु वदन्ति सोपनय सोपसंहारम्, अनुपन्यारं नाम—यत्काहल फल्गुप्रायं नद्विपरीत सोपचारम्. मितं यदे श्लोकादिभिर्वा अमित दण्डकै मधुरं त्रिधा सूत्रमधुरम् अर्थमधुरम् उभयमधुरम्, एतैरष्टभिर्गुणैरुपेतम्, वृ०। (अल्पाक्षरादिशब्देषु तत्तत्पदानामर्थ ।)

साम्प्रतमेतेषु हीनाक्षरादिषु प्रायश्चित्तमाह—

खलियमिलियवाइद्धं, हीणं अच्चक्खरं वयंतस्स।
विच्चामेलियअप्पडि-पुन्नघोसे य मासलहुं ॥ ३०१ ॥

स्खलितं मिलितं व्याविद्ध हीनाक्षरमत्यक्षर व्यत्याम्रेडितम् अपरिपूर्णघोषं च वदत प्रत्येकं प्रायश्चित्त मासलघु। स्वामिन आज्ञाभङ्गे चतुर्गुरु। स तथाऽन्येऽपि करिष्यन्तीति गुरु। यथोक्तकारी न भवतीति मिथ्यात्वे चतुर्लघु। विराधना द्विविधा-आत्मविराधना च.संयमविराधना च।आत्मविराधना देवतया छलनम्, संयमविराधना कोऽपि साधुर्वाग्येत् मा स्खलितादीनि कुरुत तत कलहतोऽस्थिभङ्गादि आत्मविराधनाया परितापमहाग्लानायारोपणा संयमविराधना सूत्रस्यान्यथोच्चारणादर्थे विसंवाद, अर्थविसंवादे चरणाभावश्चरणाभावे मोक्षाभाव इति दीक्षा निरर्थिका। लघुग्रहणात् गुरुकमपि—सूचितम् इस्वोक्त्या यथा दीर्घस्य सूचनम्। तत्र गुरुकमिति वा अनुद्धातीति वा कालकमिति वा गुरुकस्य नामानि। लघुकमिति वा उद्धातमिति वा शुक्लमिति वा लघुकस्य नामानि। अत्र गुरुलघुविशेषविस्तरपरिज्ञानार्थमाचार्यस्त्रिविधं प्रायश्चित्तं दर्शयति-तथा दानप्रायश्चित्तं तप प्रायश्चित्त कालप्रायश्चित्त वा। तत्र दानप्रायश्चित्तं गुरुकं लघुकं च। एवं तप कालप्रायश्चित्ते अपि गुरुलघुके प्रत्येकं वक्तव्ये।

तत्र दानप्रायश्चित्तं गुरुकमाह—

जं तु निरंतरदाणं,जस्स व तस्स व तवस्स तं गुरुकं।
ज पुण संतरदाणं, गुरू वि सो खलु भवे लहुओ ।३०२।

यस्य वा तस्य वा तपसो गुरुकस्याप्रमादिरगुरुकस्य निर्विकृतिकादेर्यन्निरन्तरं दानं तद्भवति दानप्रायश्चित्तं गुरु। यत्पुन सान्तरमप्रमादेर्गुरुकस्य तपसो दान तत् गुर्वपि खलु भवति लघु यथा आपत्तिश्चतुर्लघुकस्य पदलघुकस्य वा ततोऽष्टमदशमान सान्तराणि दीयन्त। एप दानप्रायश्चित्ते गुरुलघुकयोर्विशेष।

सम्प्रति तप कालयोराह—

कालतवे आसज्ज, गुरु वि होई लहूउ लहुगुरुगो।
कालो गिम्हो उ गुरू, अट्ठाइतवो लहू सेसा ॥ ३०४ ॥

काल तपश्चासाद्य गुर्वपि लघु भवति लघ्वपि च गुरु। तत्र कालो गीष्मो गुरु तपोऽष्टमादि शेष कालस्तपश्च लघु। इयमत्र भावना, लघ्वपि यदष्टमादिना तपसा उह्यते तत्तपा गुरु। यन्निर्विकृतिकादिना षष्ठपर्यन्तेनोह्यते तत्तपो लघु। तथा यद् ग्रीष्मे काले उह्यते तत्कालगुरु वर्षासु हेमन्ते वोह्यमानं काललघु। तदेवं यत स्खलिताद्युच्चारणे प्रायश्चित्तमज्ञानमिथ्यात्वविराधनाश्च दोषास्तस्मात् सूत्रमस्खलितादिदोषरहितमुच्चारणीयम्-पठनीयं च। एवं पठितस्य सूत्रस्याख्या कर्त्तव्या। वृ० १ उ० १ प्रक०। अनु०। आ० म०।

अथ यदं सर्वज्ञभाषितसूत्रलक्षणम्—

अप्पक्खरमसंदिद्धं, सारवं विस्सतोमुहं।
अत्थोभमणवज्जं च, सुत्तं सव्वण्णुभासियं ॥ २८६ ॥

अल्पाक्षरं नाम-मिताक्षरं यथा सामायिकसूत्रम्. असंदिग्ध यत्सैन्धवशब्दवत् लवणपटघोटकाद्यनेकार्थसंशयकारि न भवति. सारवत्-बहुपर्याय प्रतिसूत्रमनेकार्थाभिधायकं वा विश्वतो मुखम्-अनेकमुखं प्रतिसूत्रमनुयोगचतुष्टयाभिधानात्. अस्तोभं च वार्थहिहकारादिपदच्छिद्रपूरणस्तोभकशून्यम् स्तोभका निपाता इति पूर्ववैयाकरणेषु प्रसिद्धं अनवद्यम् अगर्ह्यम्-न हिंसाप्रतिपादकं यद् शतानि नियुज्यन्ते,पशूना मध्यमेऽहनि। अश्वमेधस्य वचनात्, न्यूनानि पशुभिस्त्रिभि ॥ १ ॥" इत्यादिवचनमिव न हिंसाविधायकम्। एवंभूतं सूत्रं सर्वज्ञभाषितमिति। आ० म० १ अ०।

एकस्मात् सूत्राद् बहवोऽर्था प्रतीयन्ते उत्सर्गापवादादय सूत्रभेदा —

एयारिसम्मि वासो, ण कप्पती जति वि सुत्तणुण्णातो।
अव्वागडो व भणितो,आयरिओ उवेहती अत्थं ॥२५॥

एतादृश उपाश्रये वासो यद्यपि सूत्रे अनुज्ञात तथापि न कल्पते यत अव्याकृतोऽविशेषित एवार्थ सूत्रे भणित परम् आचार्यस्तमर्थमुत्प्रेक्षितविषयविभागप्रकटनेनोन्मीलयति, यथा किलैकस्मात् मृत्पिण्डात् कुलालोऽनेकानि घटशरावादिरूपाणि निष्पादयति एवमाचार्योऽप्येकस्मात् सूत्रपदादभ्यूह्यानेकरूपार्थविकल्पानामुपदर्शनं करोति। यथा वा सान्धकारगृहादौ विद्यमाना अपि घटादय. पदार्था प्रदीपं विना न विलोक्यन्ते तथा सूत्रेऽप्यर्थविशेषा आचार्येणाप्रकाशिता. सन्तोऽपि नोपलभ्यन्ते।

किं च—

जं जह सुत्ते भणियं, तहेव तं जइ वियालणा नत्थि।
किं कालियाणुओगो, दिट्ठो दिट्ठिप्पहाणेहिं ॥ २६ ॥

यद्-वस्तु यदात्म्येन विधिरूपेण वा प्रकारेण सूत्रे भणित तत्तथैव यदि प्रतिपत्तव्यं विचारणा-विषयविभागव्यवस्थापनायुक्त विमर्शो वा नास्ति-न क्रियते तत किं केन हेतुना कालकश्रुतस्यानुयोगो दृष्ट—विषयतयोपलब्धो दृष्टिप्रधानै, केवलज्ञानश्रुतज्ञानरूपालोचनप्रवरैस्तीर्थकरगणधरै। अथवा—प्रधानैर्नैगमादिनयमतिविशारदै श्रीभद्रबाहुस्वामिभि, किमिति निर्युक्तिकरणद्वारेण कालिकश्रुतानुयोगो दृष्ट-प्रतिपादित।

अपि च—

उस्सग्गसुतं किंचि य,किंचि य अववातियं भवे सुत्तं।
तदुभयसुत्तं किंचि य,सुत्तस्स गमा मुणेयव्वा ॥ २७ ॥

किञ्चिदुत्सर्गसूत्र किञ्चित्पुनरपवादिकं सूत्रं. किञ्चित्तदुभयसूत्रम्। तच्च द्विधा-औत्सर्गापवादिकम् अपवादौत्सर्गिकम्। एते सूत्रस्य गमा प्रकाराश्चत्वारो ज्ञातव्या। अथवा-गमा नाम-द्विरुच्चारणीयानि पदानि तद्यथा-उत्सर्गोत्सर्गिकम् अपवादापवादिकम्। एवमेत द्वौ भेदौ चत्वारश्च प्रागुक्ता इत्येवं सूत्रस्य षड् भेदा संजाता, एते च पुरस्तादुदाहरिष्यन्ते।

अन्येऽपि सूत्रस्य भेदा भवन्तीत्याह—

रागेसु एगगहणं, सलोमणिल्लोमअकसिणे अइणे ।

विहितभिन्नस्स गहणं, अववाउस्सग्गियं सुत्तं ॥ २८ ॥

अनेकेषु कषायेन्द्रियाश्रवादिवर्गेषु ग्रहीतव्येषु क्वापि सूत्रे एकस्यान्यतरस्य ग्रहणं भवेत्, यथा यत्र सूत्रे क्रोधनिग्रह माश्रादुपदिष्टस्तत्र माननिग्रहादयोऽप्यर्थेन उक्ता द्रष्टव्या । एवमिन्द्रियाश्रवादिष्वपि भावनीयम् । कानिचित् तु सूत्राणि साधूना साध्वीना च प्रत्येकविषयाणि यथैहैव कल्पाध्ययने सलोमसूत्र वा ।

तद्यथा—

नो कप्पइ निग्गंथीणं सलोमाइं चम्माइं धारित्तए वा परिहरित्तए वा ॥ ३ ॥ कप्पइ निग्गंथाणं सलोमाइं चम्माइं धारित्तए वा परिहरित्तए वा । से वि याइं परिहारिए नो चेव णं अपरिहारिए । से वि याइं परिभुत्ते नो चेव णं अपरिभुत्ते । से वि याइं एगराइए नो चेव णं अणेगराइए ॥४॥ नो कप्पइ निग्गंथाणं वा निग्गन्थीण वा कसिणाइं चम्माइं धारित्तए वा परिहरित्तए वा ॥५॥

कानिचित्तु सामान्यसूत्राणि भवन्ति, यथा अकृत्स्नाजिनविषय सूत्रम् ।

तच्चेदम्—

कप्पइ निग्गंथाण वा णिग्गंथीण वा अकसिणाइं चम्माइं धारित्तए वा परिहरित्तए वा ॥ ६ ॥

अथानानुपूर्व्याऽपि व्याख्यानमिति तत्पदयोर्दर्शनार्थं प्रागुक्तसूत्रपदमत्याचतुर्थमदमुदाहरति 'विहिभिन्नस्स य' इत्यादि, इहैव ग्रन्थे यद् विधिभिन्नस्य ग्रहणमुक्तं तदपवादौत्सर्गिक सूत्रम् । तच्चेदम्—

कप्पइ निग्गंथीण पक्के तालपलंबे भिन्ने पडिगाहित्तए से वि य विहिभिन्ने नो चेव णं अविहिभिन्ने ॥५॥ (वृ० १ उ०)

आह—यद्यपवादेनानुज्ञात तर्हि सूत्र कथं प्रतिषिध्यते इत्याह—

उस्सग्गठिइसुद्धं, जम्हा दव्वं विवज्जयं लभति ।

ण य तं होइ विरुद्धं, एमेव इमं पि पासामो ॥ २९ ॥

उत्सर्गस्थित्याउत्सर्गपदेषु शुद्धमुद्गमादिदोषरहित यद्भक्तपानादि द्रव्यं ग्रहीतु कल्पते तदेवापवादपदे यस्माद्विपर्ययं वैपरीत्यं लभते इत्यर्थः, न च—नैव तथा गृह्यमाण विरुद्ध भवति । ज्ञानादिगुणोपकारकत्वादविरुद्धमेवेति भाव । एवमेवानुमतमपि प्रकृतमर्थं कल्पते—निर्ग्रन्थीनाम पक्क तालप्रलम्ब भिन्न प्रतिग्रहीतुमित्यपवादेनानुज्ञातस्याप्यविधिभिन्नप्रतिषेधस्याविरुद्धमेव पश्याम ।

अथोत्सर्गसूत्रादाहरणमाह—

उस्सग्गगोयरम्मि य, निसिज्जकप्पावयादए निएहं ।

मा संदल मा अट्ठी, अववादुस्सग्गियं सुत्तं ॥ ३० ॥

औत्सर्गिक सत्र गोचरं पयटत साध्याग्रहकयापान्तराल वा निषद्या—निषदन नाधिगमम् । तच्चेदम्—

नो कप्पइ निग्गन्थाण वा निग्गन्थीण वा अन्तरगिहंसि वा आसइत्तए वा० जाव काउस्सग्गं वा ठाणं ठाइत्तए त्ति ॥

यत्तु त्रयाणां जराभिभूतादीनां निषद्या कल्पते इत्येवं लक्षणं सूत्रं तदपवादिकं सूत्रम् ।

तच्चेदम्—

अह पुण एवं जाणिज्जा जराजुण्णो वाहिए वाहिओ तवस्सी मुच्छिज्ज वा एवं एहं कप्पइ अंतरगिहंमि आसइत्तए ।

इदं पुनरपवादौत्सर्गिकम्—'मंसं दल मा अट्ठि' त्ति—पुद्गल प्रयच्छ मा अस्थीनि ।

नो कप्पति य अभिन्नं, अववाएणं तु कप्पती भिन्नं ।

कप्पति पक्कं भिन्नं, विधी य अववायउस्सग्गं ॥३१॥

नो कल्पते अभिन्नं तालप्रलम्ब प्रतिग्रहीतुम् । एतद् वा उत्सर्गसूत्रम्, यत्पुनरपवादपदेना ग्लानादिकमौदर्यादिषु भिन्नं प्रतिग्रहीतुं कल्पते इत्येवरूप तदपवादिकम् । यत्पुनर्निर्ग्रन्थीना कल्पते पक्क तालप्रलम्ब विधिभिन्न विधिभिन्नमिति सूत्रं तदपवादौत्सर्गिकम् । एतत्प्रागुक्तमपि स्पष्टीकरणार्थमिहाभिहितम् ।

इदं त्वौत्सर्गापवादिकम्—

नो कप्पइ राओ वा वियाले वा सेज्जासंथारयं पडिगाहित्तए नन्नत्थ एगेणं पुव्वपडिलेहिएणं सिज्जासंथारएणं ।

इद पुनरौत्सर्गिकम्—

नो कप्पइ असणं वा पाणं वा खाइमं वा साइमं वा पढमाए पोरिसीए पडिगाहित्तए एत्थम्मि पोरिसिं उवाइणावित्तए से य आहच्च उवाइणावित्तए सिया जो तं भुंजइ भुंजंतं वा साइज्जइ से आवज्जइ चाउम्मासियं परिहारट्ठाणं उग्घाइयं ।

तथा येषु सूत्रेष्वपवादो भणितस्तेष्वेवार्थेन पुनरनुज्ञा प्रवर्त्तेन तान्यपवादापवादिकानि ।

किं चान्यत्—

कत्थइ देसग्गहणं, कत्थति भरणंति णिरवसेसाइं ।

उक्कमकमजुत्ताइं, कारणविसओ निउत्ताइं ॥ ३२ ॥

क्वचित् सूत्रे अभिधेयपदाना देशतो ग्रहणं क्रियते क्वापि च निरवशेषाण्यभिधेयपदानि भण्यन्ते, तथा कानिचित्सूत्राण्युत्क्रमयुक्तानि कानिचित्तु क्रमयुक्तानि कारणविशेषत—कारणविशेषमाश्रित्य नियुक्तानि गणधरादिभि श्रुतधरैर्विरचितानि ।

एतदेव विवृणोति—

देसग्गहणे बीएहिं, सूयिया मूलमादिणो हुंति ।

कोहादिअणिग्गहिया, सिंचति भवं निरवसेसं ॥३३॥

देशग्रहणे कृते सति तज्जातीयाना सर्वेषामपि ग्रहण भवति यथा सालीणि वा वीहीणि वा इत्यादावेकसिन्नेव च सूत्रे बीजग्रहणेन मूलादयोऽपि भेदा सूचिता भवन्ति कुत्रापि च सूत्रे निरवशेषाण्यभिधेयपदानि गृह्यन्ते, यथा दशवैकालिके क्रोधादयोऽनिगृहिता सन्तो भव—संसारं निरवशेषं चतुर्गतिकमपि सिञ्चन्तीत्युक्तम् तथा च तत्सूत्रम् 'कोहो य माणो य अणिग्गहीया माया य लोभो य पवड्ढमाणा । चत्ता-

रि एए कम्मिणा कसाया सिंचंति मूलाई पुणब्भवस्स ॥१॥"

अथोत्क्रमक्रमयुक्तानि सूत्राणि दर्शयति--

संत्थपरिण्णादुक्कमं, गोयरपिंडेसणा कमेणं तु ।

जं पि य उक्कमकरणं, तमभिणवधम्ममादिट्ठं ॥३४॥

शस्त्रपरिज्ञाध्ययने तेज कायोद्देशकानन्तरं वायुकायोद्देशक क्रमप्राप्तोऽपि नोक्त, किंतु वनस्पतित्रसकायोद्देशका प्ररूप्य पर्यन्ते स भणित ,एवमादिकमुत्क्रमयुक्तं सूत्रमुच्यते । क्वचित्तु सूत्रे क्रमेणैवार्थपदानि भवन्ति । यथाष्टौ गोचरभूमय , तद्यथा-"पडाआ अद्धपडा-गोमुत्तिया पत्तगविहिया। अंतोसंबुक्का वा, बाहिं संबुक्का उज्जगीय तु पच्चाग ।" तथा सप्तपिण्डैषणासूत्रमपि क्रमनिबद्ध मन्तव्यम ,तद्यथा-"संसट्ठा असंसट्ठा उद्धडा अप्पलेवा उग्गहिता पग्गहिता उज्झितधम्मिया ।" अथवा-पिण्डैषणेति प्रथम पिण्डपद तत एषणापद यत्रौघनिर्युक्त्यादौ सूत्र यथाक्रम प्ररूप्यते तत् क्रमनिबद्धम् ।यदपि चोत्क्रमकरण शस्त्रपरिज्ञादावध्ययने तदभिनवधर्मार्थम् । किमुक्तं भवति अभिनवधर्मा शैक्ष सचाद्याप्यपरिणतजिनवचनतया वा युक्तोऽयं परिस्फुटमनुपलभ्यमानतया प्रथमत प्ररूप्यमाणं न सम्यक् प्रतिपद्यते,अतो वनस्पतित्रसान् प्ररूप्य यदा तेषु सम्यग् जीवत्वं प्रतिपन्नस्तदा वायुकाय जीवत्वेन प्ररूप्यमाण सुखेनैव श्रद्धत्ते, एवमादिभि कारणैरुत्क्रमकरण मन्तव्यम् ।

अथ 'बीएहिँ सूइया मूलमाइणो ' त्ति पद व्याचष्टे--

बीएहिँ कंदमादी, विसूइया तेहिँ सव्ववणकाओ ।

भोम्मादिणा वणाओ, सभेदसागेवणा भणिता ॥३५॥

इहैव सूत्रे बीजैर्गृहीता कन्दमूलादयोऽपि भेदा सूचिता, तेष्वपि निष्ठत प्रायश्चित्तं भवतीति भाव । तैश्च कन्दादिभि सर्वोऽपि वनस्पतिकाय परीत्तानन्तभेदभिन्न सूचित , अनेन तु वनस्पतिना भौमादय काया सूचिता एवं सभेदा --भेदसहिता षडपि काया सागेवणा सप्रायश्चित्ता भणिता अवसातव्या ।

जत्थ उ देसग्गहणं, तत्थ ऽवसेसाइं सूइयवसेणं ।

मोत्तूणं अहिगारं, अणुयोगधरा पभासंति ॥३६॥

एवमत्रापि यत्र देशग्रहण तत्रावशेषाण्यर्थपदानि, सूचितस्वभावत्वप्रत्यय तादृशतानावगन्तव्यानि, तथा कुत्रापि सूत्रे अनुयोगधरा अधिकार-प्रस्तुतार्थं मुक्त्वा सूत्रानुपातिप्रसङ्गागतमर्थं प्रथमत प्रभाषन्ते । यथा पिण्डाधिकारप्रस्तुते " पुढवीआउक्काए, तेऊवाऊवणस्सई चेव । बिइय तिइय चउरो, पंचि--दिया य लेवा दसमओ अ ॥ १ ॥" इत्यादिनौघनिर्युक्तौ सविस्तर कायप्ररूपणा कृता । एव विचित्राणि सूत्राणि भवन्ति , अत एव यावदमीषामर्थ सूरिणा न व्यक्तीकृतस्तावन्न सम्यगवगममुपगच्छति ।

अथौत्सर्गिकापवादिकसूत्रयोर्विषयविभागमाह--

उस्सग्गेणं भणिया-णि जाणि अववादतो य जाणि भवे।

कारणजातेन मुणी, सव्वाणि वि जाणितव्वाणि ॥३७॥

उत्सर्गेण यानि सूत्राणि भणितानि यानि चापवादत सूत्राणि तानि हे मुने ! कारणजातेन सर्वाण्यपि ज्ञातव्यानि , । किमुक्तं भवति--प्रतिषिद्धस्याचरणं तु - कारण, तच्च ज्ञानादि । तत्र चोत्सर्गसूत्रेषु नाद्यादुत्सर्गापवादयो निबन्ध , अर्थतस्तु कारणजाते तत्राप्यनुज्ञा मन्तव्या । अपवादसूत्रेषु पुन कारणजातमुद्दिश्य साक्षादपवादावग्रयोर्निबन्ध , अर्थतस्तु तत्राप्युत्सर्गो द्रष्टव्य । एव सर्वसूत्रेषु तत्त्वत उत्सर्गापवादावुभावपि निबद्धाववगन्तव्यौ ।

अथ किं पुनस्तया स्वस्थानमित्याह—

उस्सग्गेण णिसिद्धा-ईं जाइं दव्वाइं संथरे मुणिणो ।

कारणजाते जाते , सव्वाणि वि ताणि कप्पंति ॥ ३८ ॥

उत्सर्गेण संस्तरणमाश्रित्य यानि द्रव्याणि प्रलम्बादीनि मुने -सयतस्य प्रतिषिद्धानि तान्येव कारणजाते-विशुद्धालम्बनप्रकार जाते-समुत्पन्ने सति सर्वाण्यपि कल्पन्ते ।

अत्र पर प्रश्नयति—

जं चिय पयं णिसिद्धं,तं चिय जाति भूयो कप्पती तस्स ।

एवं हो अणवत्था, ण य तित्थं णेव सच्चं तु ॥ ३९ ॥

यदेव प्रलम्बादिक प्राक्पूर्वं निषिद्ध तदेव यदि भूय — पुनरपि तस्य—साधो कल्पते तत एव सूत्रार्थस्य यदृच्छाप्रवृत्तौ चरणकरणस्यानवस्था भवति , ततश्च न तीर्थमनुसर्जति नैव च प्रतिषिद्ध समाचरतस्तस्य अंसयमो भवति, तदभावे दीक्षा निरर्थिका,-तन्निरर्थकतायां मोक्षस्याप्यभाव प्राप्नोति ।

अपि च—

उम्मत्तवायसरिसं , खु दंसणं ण वि य कप्पऽकप्पं तु ।

अह ते एव सिद्धी,ण होज्ज सिद्धी उ कस्सेवं ॥ ४० ॥

आचार्य पूर्वमेकत्र सूत्रे प्रतिषिध्य पुनस्तदेवानुजानत इत्थं भवतो दर्शनमुन्मत्तवाक्यसदृशं प्राप्नोति , तथा नापि भेद कल्पमिदमकल्पमिति व्यवस्था भवति । यदि चैवमपि व्रत सूत्राभिप्रेतार्थसिद्धिर्भवति तर्हि कस्य न सा भवति चरकपरिव्राजकादीनामप्यसमञ्जसप्रलापिता सा भविष्यती ति भाव ।

सूरिराह—

ण वि किंचि अणुणायं, पडिसिद्धं वावि जिणवरिंदेहिं ।

एसा तेसिं आणा , कज्जे सच्चेण होतव्वं ॥ ४१ ॥

हे नोदक ! यदेतद्भवता प्रलपित तत्प्रवचनरहस्यानभिज्ञतासूचकम् यतो जिनवरेन्द्रैस्तथाविधकारणाभावे नापि किंचिदकल्पनीयमनुज्ञातम् , कारणे च समुत्पन्ने नापि किंचित्प्रतिषिद्ध किंतु एषा तेषा तीर्थकृताम निश्चयव्यवहारनयद्वयाश्रिता सम्यगाज्ञा मन्तव्या । यदुत कार्ये ज्ञानादावालम्बने सत्यत-सद्भावानुसारिणा साधुना भवितव्य न मातृस्थानतो यत्किञ्चिदालम्बनीयमित्यर्थ । अथवा—सत्यं नाम संयम तत कार्ये समुत्पन्ने भवितव्य यथा यथा संयम उत्सर्पति तथा तथा कर्तव्यमिति भाव ।

आह च दृष्टान्तकार —

कज्जं णाणादीयं , सच्चं पुण होइ संजमो नियमा ।

जह जह सो होइ थिरो, तह तह कायव्वयं होइ ॥४२॥

इदमेव भावयति—

दोसा जेण निरुभं-ति जेण खिज्जंति पुव्वकम्माइं ।

सो सो मोक्खोवाओ, रोगावत्थासु समणं वा ॥ ४३ ॥

येनानुष्ठानवशाद्दोषा दोषा रागादयो निरुध्यन्ते पूर्वोपार्जितानि कर्माणि येन क्षीयन्ते सोऽनुष्ठानविशेषो मोक्षोपाया ज्ञातव्यः । रोगावस्थासु—ज्वरादिरोगप्रकारेषूपशमनमिवौचितीनौषधप्रदानाय-व्याधिपरिहारायानुष्ठानमिव, यथा तेन विधीयमानेन ज्वरादिरोग क्षयमुपगच्छति , एवमुत्सर्गे उत्सर्गम्ः अपवादे अपवादं समाचरतो रागादयो दोषा निरुध्यन्ते पूर्वकर्माणि च क्षीयन्ते। अथवा-यथा कस्यापि रोगिणः पथ्यापथ्यादिकं प्रतिषिध्यते . कस्यापि पुन तदेवानुज्ञायते, एवमत्रापि य समर्थस्तस्याकल्पं प्रतिषिध्यते असमर्थस्य तु तदेवानुज्ञायते । उक्तं च भिषग्वरशास्त्रे-"उत्पद्येत हि सावस्था देशकालामयान् प्रति । अतश्चैवमकार्य च, कार्य चापि विवर्जयेत् ॥१॥' एवंविधं चोत्सर्गापवादविभागमगीतार्थो न जानाति । चू० २ उ० । नि०चू० । उत्सर्गेऽपवादमपवादे वा-उत्सर्गं कुर्यात् इति 'कप्प' शब्दे तृतीयभागे २२३ पृष्ठे गतम् । ) ( पञ्चप्रकारैः सूत्रं वाचयेदिति 'वायणा' शब्दे षष्ठभागे उक्तम् । ) पञ्चभिः स्थानैः सूत्रं शिक्षेदिति 'सिक्खा' शब्देऽस्मिन्नेव भागे गतम् । ) ( दृष्टिवादस्य अष्टाविंशतिसूत्राणि 'दिट्ठिवाय' शब्दे चतुर्थभागे २५१४ पृष्ठे उक्तानि । ) ( पूर्वं सूत्रमर्थो वा इति 'अणुओग' शब्दे प्रथमभागे ३४४ पृष्ठे गतम् । ) इयाणिं सुत्तं भण्णति , तथा च-' नंदिमणुओगदारं विहिवादुवधानियं च णातूण। कातूण पंचमंगल-मारभो होति सुत्तस्स॥१॥ कतपंचनमोकारो करेति सामाइयं ति सोऽभिहितो। सामाइयंगमेव य जं सो सेसं तु तंचत्थं ॥२॥" प्रागुपदिष्टं च-एत्थ य सुत्ताणुगमे सुत्तालावगमि निप्फण्णो निक्खेवो सुत्तभासियनिज्जुत्ती समकं गमिस्संति । आ० चू० २ अ० । उत्त०। ' सुत्त सुत्ताणुगमो, सुत्तालावगकओ य निक्खेवो । सुत्तफासियनिज्जुत्तिनया समगं तु वच्चंति ॥१॥" कदाचिदपि सूत्रं विषमं न भवति । व्य० १ उ० । नि० चू० ।

सूत्रस्यान्यथा व्याख्याने प्रायश्चित्तम्—

से भयवं ! जे णं केइ आयरिएइ वा गणहरेइ वा असइं कहिं चि कयाइ तहा संविहाणगमासज्ज इणमो निग्गन्थं पवयणमन्नहा पन्नवेज्ज से णं किं पावेज्जा ? गोयमा! जं सावज्जायरिएणं पावियं। महा० ४ अ० ।

यथासूत्रमर्थं करणीय -

आयरियपरंपरए-ण आगयं जो उ छेयबुद्धीए ।
कोवेइ छेयवाई , जमालिनामं म णासिहिति ॥१२५॥

आचार्या — सुधर्मस्वामिजम्बूनामप्रभवार्यरक्षितादयास्तेषां प्रणालिका-पारम्पर्यं तेनागतं यद् व्याख्यानं—सूत्राभिप्राय , तद्यथा—व्यवहारनयाभिप्रायेण क्रियमाणमपि कृतं भवति। यस्तु कुतर्कदर्पाध्मातमानसो मिथ्यात्वोपहतदृष्टितया छेकबुद्धया-निपुणबुद्ध्या सूक्ष्मधीयशेमुषीकोऽहमिति कृत्वा कोपयति—दूषयति—अन्यथा तमर्थं सर्वज्ञप्रणीतमपि व्याचष्टे कृतं कृत्यमितीदं ब्रूयाद् , यत्क्षिप्तं न हि मृत्पिण्डक्रियाकाल एव घटो निष्पद्यते , कर्मगुणव्यपदेशानामनुपलब्धेः , स एवं छेकवादी—निपुणोऽहमित्येववादी—पण्डिताभिमानी जमालिनाश—जमालिनिह्नववत् सर्वज्ञमतविकोपको विनङ्क्ष्यति-अरहट्टघटीयन्त्रन्यायेन संसारचक्रवाले बंभ्रमिष्यतीति । न चासौ जानाति वराक , यथा अय लोका घटार्थं क्रिया मृत्खननाद्या घट एवोपचरति, (नत्वन ) नाम्ना च क्रियाणां क्रियाकालनिष्ठाकालयोरेककालत्वात् क्रियमाणमेव कृतं भवति । दृश्यते चायं व्यवहारो लोके, तद्यथा—अद्यैव देवदत्ते निर्गते कान्यकुब्जं देवदत्तो गत इति व्यपदेशः, ( लोकोक्त्या ) तथा दारुणि छिद्यमाने प्रस्थकोऽयम् ( इति ) व्यपदेश इत्यादि ।

साम्प्रतमन्यथावादिनोऽपायदर्शनद्वारेणोपदेशं दातुकाम आह—

ण करेति दुक्खमोक्खं, उज्जममाणोऽवि संजमतवेसुं ।
तम्हा अत्तुक्करिसो, वज्जेअव्वो जतिजणेणं ॥ १२६ ॥

यो हि दुर्गृहीतविद्यालवदर्पाध्मान सर्वज्ञवचनैकदेशमप्यन्यथा व्याचष्टे स एवंभूत सन् संयमतपस्सूद्यमं कुर्वाणोऽपि शारीरमानसानां दु खानामसातोदयजनितानां मोक्षं-विनाशं न करोति आत्मगर्वाध्मातमानसः, यत एवं तस्मादात्मोत्कर्ष अहमेव सिद्धान्तार्थवेदी, नाऽपर कश्चित् मत्तुल्योऽस्तीत्येवंरूपोऽभिमानो वर्जनीयः-त्याज्यो यतिजनेन—साधुलोकेन । अपरेऽपि ज्ञानिना जात्यादिको मदो न विधेय , किं पुनर्ज्ञानमद ?, तथा चोक्तम्-' ज्ञानं मददर्पहरं, माद्यति यस्तेन तस्य को वैद्य ? । अगदो यस्य विषायति, तस्य चिकित्सा कथं क्रियते ?॥१॥" सूत्र०१ श्रु०१३अ०। (सूत्रे देवतयाऽधिष्ठितमिति 'सज्झाय' शब्दे) (सूत्रार्थयो को महान् इति ' अइसेस ' शब्दे प्रथमभागे २४ पृष्ठे गतम् । ) ( सूत्रमर्थो वा बलवान् इति खेत्त ' शब्दे तृतीयभागे ७६६ पृष्ठे उक्तम् । ) यस्य सूत्रस्य कर्त्ता नोपलभ्यते तस्य गणधर. । प्रति० । सूत्रे पञ्चविधं सञ्ज्ञासूत्रादि । सू० ।

प्रथमतः संज्ञासूत्रमाह—

उवयारअनिठ्ठुरया, कज्जितथीदाण मा हु निच्छक्का ।
जे छेएँ आमगंधा-दिआरें सन्नासुयं तेणं ॥ ३१६ ॥

यत्सामायिकसंज्ञया सूत्रं भण्यते तत् सञ्ज्ञासूत्रम् , यथा 'जे छेए से सागारियं परिहारे' तथा 'आमगंधा' इति 'सव्वामगंधं परिन्नाय निरामगंधो परिव्वए ' तथा 'आरं' ति-आरं दुगुणेणं पारं एगगुणणमिति'यः छेक स सागारिकं मिथुनं 'परियाहरे' परिवर्जयति. तथा आममविशोधिकोटि गन्धविशोधिकोटि , परिज्ञा द्विविधा-ज्ञपरिज्ञा, प्रत्याख्यानपरिज्ञा च । तत्र ज्ञपरिज्ञया सर्वमामगन्धं परिज्ञाय, प्रत्याख्यानपरिज्ञया च प्रत्याख्याय निरामगन्धः सन् परि-समन्तात् परिव्रजत् अप्रतिबद्धो विहरेदित्यर्थ । आर -संसारस्तद् द्विगुणेन रागेण दोषेण च परिवर्जयति । पारं-मोक्षस्तमेकेन गुणेन रागद्वेषपरिहारलक्षणेन साधयति । अथ क संज्ञासूत्रेण गुण इत्यत आह—'उवयारं' त्यादि पूर्वार्द्धे संज्ञावचनं हि क्वचिज्जुगुप्सितेऽर्थे प्रयुज्यमानं तद्विषयमुपचारवचनं भवति ।उपचारवचनेन च भण्यमाने तस्मिन् जुगुप्सितेऽर्थे न निष्ठुरतेति अनिष्ठुरता, तथा कार्ये समापतिते स्त्रिया सा सूत्रदानमाहु पूर्वसूत्र , ततस्तस्या. साधुसमीपे पठन्त्या. सूत्रेनालापको दीयते । अन्यथा व्युत्क्रममभिधीयमाने कथा भि-

विरुद्धं , वयणं च अपोरुसेयं च ॥ १ ॥ जं वुच्चइ त्ति वयणं , पुरिसाभावे उ नेयमेवं ति । ता तस्सेयाभावो, नियमेण अपोरुसेयस्स ॥२॥" इति । अथवा—आख्यातं भगवतेदं , न कुड्यादिनि सृतम् , यथा कैश्चिदभ्युपगम्यते—"तस्मिन् ध्यानसमापन्ने , चिन्तारत्नवदास्थिते । नि सरन्ति यथाकामं, कुड्यादिभ्योऽपि देशना ॥ १ ॥ " इत्यस्यानेनानभ्युपगममाह, यतः—" कुड्यादिनि सृतानां तु , न स्यादाप्तोपदिष्टता । विश्वासश्च न तासु स्या—त्केनमा कीर्तिता इति ? ॥ १ ॥ " समस्तपदसमुदायेन त्वात्मौद्धत्यपरिहारेण गुरुगुणप्रभावनापरैरेव विनेयेभ्यो देशना विधेयेत्याह, एवं हि तेषु भक्तिपरता स्यात् , तया च विद्यादेरपि सफलता स्यादिति , यदुक्तम्—' भत्तीए जिनवराणं , खिज्जंति य पुव्वसंचिया कम्मा । आयरियनमोक्कारेण , विज्जा मंता य सिज्झंति ॥ १ ॥ " त्ति । नमस्कारश्च भक्तिरेवेति । अथवा—' आउसंतेणं ' ति—भगवद्विशेषणम् , आयुष्मता भगवता , चिरजीविनेत्यर्थः , अनेन भगवद्बहुमानगर्भेण मङ्गलमभिहितम् । भगवद्बहुमानस्य मङ्गलत्वादिति चोक्तमेव यद्वा—' आयुष्मते ' ति परार्थप्रवृत्त्यादिना प्रशस्तमायुर्धारयता न तु मुक्तिमवाप्यापि तीर्थनिकारादिदर्शनात् पुनरिहायातेनाभिमानादिभावतोऽप्रशस्तम् । यथोच्यते कैश्चित्—"ज्ञानिनो धर्मतीर्थस्य , कर्तारः परमं पदम् । गत्वाऽऽगच्छन्ति भूयोऽपि , भवं तीर्थनिकारतः ॥ १ ॥ " " यदा यदा हि धर्मस्य, ग्लानिर्भवति भारत ! । अभ्युत्थानमधर्मस्य , तदाऽऽत्मानं सृजाम्यहम् ॥ २ ॥" एवं ह्यनुन्मूलितरागादिदोषत्वात् तद्वचसोऽप्रामाण्यमेव स्यात् , नि शेषोन्मूलने हि रागादीनां कुतः पुनरिहागमनसम्भवः इति ? । अथवा—आयुष्मता—प्राणधारणधर्मवता न तु सदा संशुद्धेन , तस्याकरणत्वेनाख्यातृत्वासम्भवादिति । यदिवा—' आउसंतेणं ' ति-मयेत्यस्य विशेषणम् , तत आङिति-गुरुदर्शितमर्यादया वसता , अनेन तत्त्वतो गुरुमर्यादावर्त्तित्वरूपत्वात् गुरुकुलवासस्य तद्विधानमर्थत उक्तम् , ज्ञानादिहेतुत्वात्तस्य । उक्तं च—" णाणस्स होइ भागी , थिरयरओ दसणे चरित्ते य । धन्ना आवकहाए , गुरुकुलवासं न मुंचति ॥ १ ॥ गीयावासो रती धम्मे , अणाययणवज्जणं । निग्गहो य कसायाणं , एयं धीराण सासणं ॥ २ ॥ " ति । अथवा—' आमुसंतेणं ' ति—आमृशता भगवत्पादारविन्दं भक्तितः करतलयुगलादिना स्पृशता , अनेनैतदाह—अधिगतसकलशास्त्रेणापि गुरुविश्रामणादिविनयकृत्यं न मोक्तव्यम् उक्तं हि—" जहा हि अग्गी जलणं णमसे णाणा हुती मंतपयाभिसित्तं । एवायरीयं उवचिट्ठएज्जा अणतणाणोवगओ वि संतो ॥१॥" त्ति । यद्वा-'आउसंतेणं' ति-आजुषमाणेन-श्रवणविधिमर्यादया गुरुमासेवमानेन, अनेनाप्येतदाह—विधिनैवोचितदेशस्थेन गुरुसकाशाच्छ्रोतव्यम् , नतु यथा कथञ्चित् । यत आह—" निद्दाविगहापरिवज्जिएहिं गुत्तेहिं पंजलिउडेहिं । भत्तिबहुमाणपुव्वं, उवउत्तेहिं सुणेयव्वं ॥ १ ॥" इत्यादि , एवमुक्तः पदार्थः । पदविग्रहस्तु सामासिकपदविषय स चाख्यानमित्यादिषु दर्शित इति । इदानीं चालनाप्रत्यवस्थाने , ते च शब्दतोऽर्थतश्च । तत्र शब्दतः—ननु ' मे' इत्यस्य मम मह्यं चेति व्याख्यानमुचितं षष्ठीचतुर्थ्योरेवैकवचनान्तस्यास्मत्पदस्य, ' मे ' इत्यादेशादिति, अत्रोच्यते—' मे ' इत्ययं विभक्तिप्रतिरूपकोऽव्ययशब्दस्तृतीयैकवचनान्तोऽस्मच्छब्दार्थे वर्त्तते इति न दोषः । अर्थतस्तु चालना—ननु वस्तु नित्यं वा स्यादनित्यं वा ?, नित्यं चेत्तर्हि नित्यस्याप्रच्युतानुत्पन्नस्थिरैकस्वरूपत्वाद्यो भगवतः सकाशे श्रोतृत्वस्वभावः स एव च कथं शिष्योपदेशकत्वस्वभाव इति ?, किञ्च—शिष्योपदेशकत्वं त्वस्य पूर्वस्वभावत्यागे स्यादत्यागे वा ?,यदि त्यागे हन्त हतं वस्तुनो नित्यत्वं,वस्तुनः स्वभावाव्यतिरिक्तत्वेन तत्क्षय तत्क्षयेनेति, अपरित्याग इति चेत् , न, विरुद्धयोः स्वभावयोर्युगपदसम्भवादिति । अथ त्वनित्यमिति पक्षस्तदपि, न, निरन्वयनाशे हि श्रोतुः श्रवणकाल एव विनष्टत्वात् कथनावसरेऽन्यस्यैवोत्पन्नत्वादकथनप्रसङ्गः , यज्ञदत्तश्रुतस्य देवदत्ताकथनवदिति । अत्र समाधिर्नयमतेनेति नयद्वारमवतरति, तत्र नैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवम्भूता नयाः , तत्र चाद्यास्त्रयो द्रव्यमेवार्थोऽस्तीति वादितया द्रव्यार्थिके ऽवतरन्ति, इतरे तु पर्याय एवार्थोऽस्तीति वादितया पर्यायार्थिकनये,तदेवमुभयमताश्रयणे द्रव्यार्थितया नित्यं वस्तु पर्यायार्थितया त्वनित्यमिति नित्यानित्यं वस्त्विति प्रत्येकपक्षोक्तदोषाभावो गुडनागरादिवदिति । एवमेव च सकलव्यवहारप्रवृत्तिरिति । उक्तं च—" सव्वं चिय पइसमयं, उप्पज्जइ नासए य निच्चं च । एवं चेव य सुहदुक्खबंधमोक्खादिसब्भावो ॥ १ ॥" त्ति । उक्ता सूत्रस्पर्शिकनिर्युक्त्यनुगमः । स्था० १ ठा० । श्रूयते तदिति श्रुतम् ,प्रनिर्वाशिष्टार्थप्रतिपादनफलं वाग्योगमात्रं भगवता निसृष्टम् । आत्मीयश्रवणकोटरप्रविष्टं क्षायोपशमिकभावपरिणामाविर्भावकारणं श्रुतमित्युच्यते,श्रुतमवधृतमवगृहीतमिति पर्यायाः ।दश० ४ अ० । आचा० । श्रवणं श्रुतम् । अभिलापप्राप्तिार्थग्रहणस्वरूपे उपलब्धिविशेषे, अनु० । वाच्यवाचकभावपुरस्सरीकारेण शब्दसंसृष्टार्थग्रहणहेतावुपलब्धिविशेषे एवमाकारं वस्तु कालधारणाद्यर्थक्रियासमर्थघटशब्दवाच्यमित्यादि—रूपतया प्रधानीकृतत्रिकालसाधारणसमानपरिणामे शब्दार्थपर्यालोचनानुसारिणि इन्द्रियमनोनिमित्ते अवगमविशेषे, आ० म० १ अ० । प्रश्न० । अर्थश्रवणे, न० । ठा० । शृणोतीति श्रुतम् । आत्मनि तदनन्यत्वात् । श्रुतज्ञानं च । आ० म० १ अ० । "तं तेण तओ तम्मि व सुणेइ सो वा सुयं तेण" । अनु० ।

अथ श्रुतव्युत्पत्तिमाह—' तं तेण' इत्यादि श्रूयते आत्मना तदिति श्रुतं शब्दः । अथवा-श्रूयतेऽनेन श्रुतज्ञानावरणक्षयोपशमेन श्रूयते तस्मात् क्षयोपशमाच्छ्रूयते तस्मिन् क्षयोपशमे सतीति श्रुतं क्षयोपशमः 'सुणेइ सो य ' त्ति-शृणोतीति श्रुतमसौ आत्मा इति वा व्युत्पत्तिरित्यर्थः , 'सुय तेणं' ति—येनैव व्युत्पत्तिस्तेन कारणेन श्रुतमुच्यत इत्यर्थः । विशे० । स्था० । गुरुसमीपे श्रूयते इति श्रुतम् । अनु० । कर्म० । वृ० । द्वादशाङ्गे, स्था० २ ठा० १ उ० । आगमे, स्था० ३ ठा० २ उ० । अङ्गोपाङ्गप्रकीर्णादिभिन्ने आगमे , उत्त० १ अ०। स्था० । पा० । ध० । दर्श०। सं० । नं० । जीवादिपदार्थसूचके सूत्र० १ श्रु० ६ अ० ।सूत्रे, श्रुतग्रन्थसिद्धान्तप्रवचनाज्ञोपदेशागमादीनि श्रुतैकार्थिकनामानि ।

सूत्रस्य पर्यायानाह—

**सुयसुत्तगंथसिद्धं–तसासणे आणवयणउवएसो ।**
**पण्णवणामागम इय, एगट्ठा पज्जवा सुत्ते ॥ १७७ ॥**

श्रुतम् , सूत्रम् , ग्रन्थः, सिद्धान्तः, शासनम् , आज्ञा, वचनम् , उपदेशः , प्रज्ञापना, आगम इति , एते दश पर्याया एकार्थाः । बृ० १ उ० १ प्रक० । विशे० । उत्त० । आव० । श्रुतं सामायिकादिविन्दुसारान्तम् । आव० ४ अ० । स० । ध० । स्वाध्याये, स० ३० सम० । स्वदर्शनपरदर्शनानुगतसकलशास्त्रे, नं० । आचा० । ( मतिश्रुतभेदः ' णाण ' शब्दे चतुर्थभागे १९३१ पृष्ठे गतः । )

श्रुतनिक्षेपः—

**से किं तं सुतं , सुतं चउव्विहं पण्णत्तं । तं जहा नामसुअं, ठवणासुअं, दव्वसुअं, भावसुअं । ( सू० २९ )**

अथ किं तत् श्रुतमिति प्रश्नः , अत्र निर्वचनं ' सुअं चउव्विहंमि ' त्यादि , श्रुतम्—प्राग्निरूपितशब्दार्थं चतुर्विधं प्रज्ञप्तम् , तद्यथा—नामश्रुतम् , स्थापनाश्रुतम् , द्रव्यश्रुतम् , भावश्रुतं च ।

तत्राऽऽद्यभेदनिर्णयार्थमाह—

**से किं तं नामसुअं ? , णामसुअं जस्स णं जीवस्स वा ०जाव सुए त्ति नामं कज्जइ से तं नामसुअं । ( सू० ३० )**

अत्र निर्वचनं नामश्रुतम् , ' जस्स णमि ' इत्यादि , यस्य जीवस्स वा अजीवस्य वा जीवानां वा अजीवानां वा तदुभयस्य वा तदुभयानां वा श्रुतमिति यन्नाम क्रियते तन्नामश्रुतमित्यादिपदेन सम्बन्धः , नाम च तत् श्रुतं चेति व्युत्पत्तेः । अथवा—यस्य जीवादेः श्रुतमिति नाम क्रियते तज्जीवादि वस्तु नामश्रुतम् , नाम्ना नाममात्रेण श्रुतं नामश्रुतमिति व्युत्पत्तेः । तत्र जीवस्य कथं श्रुतमिति नाम सम्भवतीत्यादिभावना यथा नामावश्यके तथा तदनुसारेण यथासम्भवमभ्यूह्य वाच्या, ' से तमि ' त्यादि निगमनम् । उक्तं नामश्रुतम् ।

अथ स्थापनाश्रुतनिरूपणार्थमाह—

**से किं तं ठवणासुअं ?, जं णं कट्ठकम्मे वा ०जाव ठवणा ठविज्जइ से तं ठवणासुअं । नामठवणाणं को पइविसेसो ?, नाम आवकहियं ठवणा इत्तरिआ वा होज्जा आवकहिआ वा । ( सू० ३१ )**

अत्र निर्वचनम्—' ठवणासुअ जं णमि ' त्यादि, अत्र व्याख्यानं यथा स्थापनावश्यके तथा सप्रपञ्चं द्रष्टव्यम् , नवरमावश्यकस्थाने श्रुतमुच्चारणीयम् , काष्ठकर्मादिषु श्रुतपठनादिक्रियावन्तः एकादिसाध्वादयः स्थाप्यमानाः स्थापनाश्रुतमिति तात्पर्यम् । ' से तमि ' त्यादि निगमनम् । "नामठवणाणं को पइविसेसो ? " इत्यादि पूर्वं भावितमेव , वाचनान्तरे तु ' नामठवणाओ भणियाओ ' इत्येतदेव दृश्यते, आवश्यकनामस्थापनाभणनेन प्रायोऽभिन्नार्थत्वात् श्रुतनामस्थापनेऽप्युक्ते एव भवतः , इत्यतो नात्र ते पुनरुच्येते इति भावः ।

द्रव्यश्रुतनिरूपणार्थमाह—

**से किं तं दव्वसुयं ?, दव्वसुयं दुविहं पण्णत्तं, तं जहा–आगमतो अ, नो आगमतो अ । ( सू० ३२ )**

अत्र निर्वचनम्—' दव्वसुअं दुविहमि ' त्यादि , द्रव्यश्रुतं द्विविधं प्रज्ञप्तम् , तद्यथा—आगमतो, नोआगमतश्च ।

अत्राऽऽद्यभेदनिर्णयार्थमाह—

**से किं तं आगमतो दव्वसुअं ?, आगमतो दव्वसुयं जस्स णं सुए त्ति पयं सिक्खियं ठियं जियं० जाव णो अणुप्पेहाए कम्हा ?, अणुवओगो दव्वमिति कट्टु,नेगमस्स णं एगो अणुवउत्तो आगमतो एगं दव्वसुयं ० जाव कम्हा ?, जइ जाणए अणुवउत्ते न भवइ । से तं आगमतो दव्वसुअं । ( सू० ३३ )**

अत्र निर्वचनम्--' आगमओ दव्वसुअमि ' त्यादि, यस्य कस्यचित् श्रुतमिति पदं श्रुतपदाभिधेयमाचारादिशास्त्रं शिक्षितं स्थितं यावद्वाचनोपगतं भवति स जन्तुस्तत्र वाचनाप्रच्छनादिभिर्वर्त्तमानोऽपि श्रुतोपयोगेऽवर्त्तमानत्वादागमतः आगममाश्रित्य द्रव्यश्रुतमिति समुदायार्थः । शेषोऽत्राऽऽक्षेपपरिहारादिप्रपञ्चो नयविचारणा च द्रव्यावश्यकवत् द्रष्टव्या, अत एव सूत्रेऽप्यतिदेशं कुर्वता ' जाव कम्हा ?, जइ जाणए ' इत्यादिना पर्यन्तनिर्दिष्टानां शब्दनयानां सम्बन्धि सूत्रालापको गृहीतः । एतच्च काञ्चिदेव वाचनामाश्रित्य व्याख्यायते, वाचनान्तराणि तु हीनाधिकान्यपि दृश्यन्ते, ' से तमि ' त्यादि निगमनम् । उक्तमागमतो द्रव्यश्रुतम् ।

इदानीं नोआगमतस्तदेवोच्यते—

**से किं तं नोआगमतो दव्वसुअं ?, नोआगमतो दव्वसुअ तिविहं पण्णत्तं, तं जहा–जाणयसरीरदव्वसुअं भविअसरीरदव्वसुअं जाणयसरीरभविअसरीरवइरित्तं दव्वसुअं। ( सू० ३४ )**

अत्र निर्वचनम्–' नोआगमतो दव्वसुअं तिविहमि' त्यादि, ' जाणयसरीरदव्वसुअं भविअसरीरदव्वसुअं जाणयसरीरभविअसरीरवइरित्तं दव्वसुअं ' ।

अत्राऽऽद्यभेदज्ञापनार्थमाह—

**से किं तं जाणयसरीरदव्वसुअं ?, जाणयसरीरदव्वसुयं सुअ त्ति पयत्थाहिगारजाणयस्स जं सरीरयं ववगयचुअचाविअचत्तदेहं तं चेव पुव्वभणिअं भाणिअव्वं ० जाव से तं जाणयसरीरदव्वसुअं । ( सू० ३५ )**

अत्रोत्तरम्–' जाणयसरीरदव्वसुयं सुअत्ती ' त्यादि, ज्ञातवानिति ज्ञस्तस्य शरीरं तदेवानुभूतभावत्वाद् द्रव्यश्रुतं ज्ञशरीरद्रव्यश्रुतं, श्रुतमिति यत्पदं तदर्थाधिकारज्ञायकस्य यच्छरीरकं व्यपगतादिविशेषणविशिष्टं तज्ज्ञशरीरद्रव्यश्रुतमित्यर्थः । ननु यदि जीवविप्रमुक्तमिदं कथं तर्ह्यस्य द्रव्यश्रुतत्वम् ?, लेष्ट्वादीनामपि तत्प्रसङ्गात् , तत्पुद्गलानामपि कदाचित् श्रुतकर्तृभिः गृहीतत्वात् मुक्तत्वसम्भवादित्याशङ्क्याह–' सेज्जागयमि ' त्यादि, शेषोऽत्रावश्यकव्याख्या

त्रिप्रपञ्चो ऽशरीरद्रव्यावश्यकवत् , श्रुताभिलापतो वाच्य., यावत् ' से तमि ' त्यादि निगमनम् ।

द्वितीयभेदनिरूपणार्थमाह—

से किं तं भविअसरीरदव्वसुअं ?, भविअसरीरदव्वसुयं जे जीवे जोणीजम्मणनिक्खंते जहा दव्वावस्सए तहा भाणिअव्वं ०जाव से तं भविअसरीरदव्वसुअं । (सू०३६)

अत्र प्रतिवचः--' भविअसरीरदव्वसुअं जे जीवे ' इत्यादि, विवक्षितपर्यायेण ' भविष्यतीति भव्यो--विवक्षितपर्यायार्ह इत्यर्थ , तस्य शरीर तदेव भाविभावश्रुतकारणत्वात् द्रव्यश्रुतं भव्यशरीरद्रव्यश्रुतम् किं पुनस्तदिति अत्रोच्यते—यो जीवो योनिजन्मत्वनिष्क्रान्तोऽनेनैव शरीरसमुच्छ्रयेणादत्तेन जिनोपदिष्टेन भावेन श्रुतमित्येतत् पदमागामिकाले शिक्षिष्यते न तावच्छिक्षते तज्जीवाधिष्ठितं शरीर भव्यशरीरं द्रव्यश्रुतमित्यर्थ. । शेषं द्रव्यावश्यकवत् श्रुताभिलापेन सर्वं वाच्यम् , यावत् ' स त ' मित्यादि निगमनम् । अनु० ।

अथ भावश्रुतनिरूपणार्थमाह--

से किं तं भावसुयं ?, भावसुयं दुविहं पएणत्तं, तं जहा-आगमतो अ, नोआगवतो अ । ( सू० ३८ )

अत्रोत्तरम्— भावसुअं दुविहमि ' त्यादि , विवक्षितपरिणामस्य भवन भाव स चासौ श्रुतं चेति भावश्रुतं भावप्रधानं वा श्रुतं भावश्रुत, तद् द्विविधं प्रज्ञप्तम्-आगमतो, नोआगमतश्च ।

तत्राऽऽद्यभेदनिरूपणार्थमाह—

से किं तं आगमतो भावसुअं ? , आगमतो भावसुयं जाणए उवउत्ते, से तं आगमतो भावसुअं । ( सू० ३९ )

अत्रोत्तरम्-श्रुतपदार्थज्ञस्तत्र चोपयुक्त आगमत —आगममाश्रित्य भावश्रुतम् श्रुतोपयोगपरिणामस्य सद्भावात् तस्य चाऽऽगमत्वादिति भाव ' से तमि ' त्यादि निगमनम् ।

अथ द्वितीयभेद उच्यते--

से किं तं नोआगमतो भावसुअं ? , नोआगमतो भावसुयं दुविहं पण्णत्तं , तं जहा-लोइअं, लोगुत्तरिअं च । ( सू०-४० )

अत्रोत्तरम्-- नोआगमओ भावसुअ दुविह पण्णत्तं , लोइअं लोउत्तरिअमि ' त्यादि ।

अत्राऽऽद्यभेदनिरूपणार्थमाह—

से किं तं लोइअं नोआगमतो भावसुअं ?, लोइअं नोआगमतो भावसुयं जं इमं अण्णाणिएहिं मिच्छद्दिट्ठीहिं सच्छंदबुद्धिमइविगप्पियं, तं जहा--भारहं रामायणं भीमासुरुक्कं कोडिल्लयं घोडयमुहं सगडभद्दिआउ कप्पासियं णागसुहुमं कणगसत्तरी वेसियं वइसेसियं बुद्धसासणं काविलं लोगायतं सट्ठियंतं माढरपुराणवागरणनाडगाइ ' अहवा-बावत्तरिकलाओ, चत्तारि वेआ संगोवंगा, से तं लोइयं नो आगमतो भावसुयं । ( सू० ४१ )

अथ निर्वचनम्—' लोइय भावसुअं ज इममि ' त्यादि, लोके प्रणीतं लौकिकं, किं पुनस्तदित्याह-यदिदमज्ञानिकैमिथ्यादृष्टिभि स्वच्छन्दबुद्धिमतिविकल्पित तल्लौकिकं भावश्रुतमिति सम्बन्ध. तत्राल्पज्ञानभावतोऽधनवदशीलवद् वा सम्यग्दृष्टयोऽप्यज्ञानिका प्रोच्यन्तेऽत आह-मिथ्यादृष्टिभि स्वच्छन्दमतिबुद्धिविकल्पितम् । ईहावग्रहे बुद्धि., अपायधारणे तु मति स्वच्छन्देन—स्वाभिप्रायेण तत्त्वेन सर्वज्ञप्रणीतार्थानुसारमन्तरेण बुद्धिमतिभ्यां विकल्पितं स्वच्छन्दबुद्धिमतिविकल्पितम्--स्वबुद्धिविकल्पनाशिल्पिनिर्मितमित्यर्थः । तत्प्रकटनार्थमेवेदमाह--तद्यथा—'भारतमि' त्यादि, एतच्च भारतादिक नाटकादिपर्यन्तं श्रुत लोकप्रसिद्धिगम्यम् । अथ प्रकारान्तरेण लौकिकश्रुतनिरूपणार्थमाह--' अहवा बावत्तरिकलाओ' इत्यादि, तत्र कलनानि--वस्तुपरिज्ञानानि कलास्ताश्च द्विसप्तति. समवायाङ्गादिग्रन्थप्रसिद्धा , चत्वारश्च वेदा सामवेदऋग्वेदयजुर्वेदाथर्वणवेदलक्षणा. साङ्गोपाङ्गा , तत्राङ्गानि--शिक्षा १ कल्प २ व्याकरण ३ छन्दो ४ निरुक्त ५ ज्योतिष्कायन ६ लक्षणानि. षट् उपाङ्गानि तद्व्याख्यानरूपाणि तै सह वर्तन्ते इति साङ्गोपाङ्गा । ' से तमि ' त्यादि निगमनम् । उक्त नोआगमतो लौकिकं भावश्रुतम् ।

अथ लोकोत्तरिक तदेवाऽऽह--

से किं तं लोउत्तरिअं नोआगमतो भावसुयं ?, लोउत्तरिअं नो आगमतो भावसुय जं इमं अरिहंतेहिं भगवंतेहिं उप्पण्णणाणदंसणधरेहिं तीयपच्चुप्पण्णमणागयजाणएहिं सव्वण्णूहिं सव्वदरिसीहिं तिलुक्कवहितमहितपूइएहिं अप्पडिहयवरणाणदंसणधरेहिं पणीअं । ( अनु० ) से तं नोआगमतो भावसुअं । से तं भावसुअं । (सू०-४२ X )

लोकोत्तरै —लोकप्रधानैरर्हद्भि प्रणीतं लोकोत्तरिकम् .किं पुनस्तदित्याह-' लोउत्तरियं भावसुअं ज इममि ' त्यादि, यदिदमर्हद्भि -द्वादशाङ्ग गणिपिटकं प्रणीत तल्लोकोत्तरिकं भावश्रुतमिति सम्बन्ध' , तद्यथा-' आयारो सूयगडमि ' त्यादि तत्र सदेवमनुजासुरलोकविरचितां पूजामर्हन्तीति अर्हन्तस्ते , एवभूताश्चातीर्थकरा अपि केवल्यादयो भवन्त्यतस्तीर्थकरप्रतिपत्तये आह-' भगवद्भिरि ' ति; समस्तैश्वर्यनिरुपमरूपयश श्रीधर्मप्रयत्नवद्भिरित्यर्थ , इत्थभूताश्च अनाद्यप्रतिघज्ञानादिमन्त केचित् कैश्चिदभ्युपगम्यन्ते, उक्त चैतद्वादिभि — 'ज्ञानमप्रतिघं यस्य, वैराग्य च जगत्पते । ऐश्वर्यं चैव धर्मश्च, सह सिद्धं चतुष्टयम् ॥ १ ॥" इत्यादि । अतस्तद्व्यवच्छेदार्थमाह—ज्ञानावरणक्षपणादिप्रकारेणोत्पन्ने तु सहजे ज्ञानदर्शने धरन्तीत्युत्पन्नज्ञानदर्शनधरास्तै , न च प्रस्तुतविशेषणव्यवच्छेद्या अप्येवंभूता एव--' सह सिद्ध चतुष्टयमि' त्यादिवचनविरोधप्रसङ्गात , नहि सुगता इत्थभूता अपि भविष्यन्तीत्याशङ्कयाऽऽह-' तीयपच्चुप्पण्णे त्यादि, अतीतवर्तमानभविष्यदर्थज्ञायकैरित्यर्थ. , न च सुगतानामतीतभविष्यदर्थज्ञातृत्वसम्भव एकान्तक्षणभङ्गुरत्वादित्येन तदसत्त्वाभ्युपगमाद् असता च ग्रहणेऽतिप्रसङ्गाद् । अथ सन्तानद्वारेण कालत्रयेऽप्यर्थाना सङ्ग्रा-

वाऽतीतार्थज्ञातृत्वं तथापि न विहन्यत इत्याशङ्क्याह- 'सर्वदर्शिभि' रिति, सर्वम्-एकेन्द्रियद्वीन्द्रियजीवादिवस्तु केवलज्ञानेन जानन्तीति सर्वज्ञाः, तदेव सर्वं केवलदर्शनेन पश्यन्तीति सर्वदर्शिनस्तैः, शाक्यानां त्वतीतार्थज्ञातृत्वेऽपि सर्वज्ञादित्वं नोपपद्यते, कतिपयधर्माद्यभीष्टपदार्थज्ञातृत्वस्यैव तैरभ्युपगमाद्, यत उक्तं तच्छिष्यैः- 'सर्वं पश्यतु मा वाऽस्मा-विष्टमर्थं तु पश्यतु । कीटसङ्ख्या परिज्ञानं तत्र न क्वोपयुज्यते ? ॥ १ ॥" इत्यादि, यथोक्तगुणविशिष्टत्वात् 'निल्लुक्कमहियमहिये' त्यादि, 'वहिय' त्ति-विगलद्वहलानन्दाश्रुदृष्टिभि सहर्षं निरीक्षिता यथावस्थितानन्यसाधारणगुणोत्कीर्त्तनलक्षणेन भावस्तवेन महिता-अभिष्टुता सुगन्धिपुष्पप्रकरक्षेपादिना तु द्रव्यस्तवेन पूजिताः, तत एषां द्वन्द्वे त्रैलोक्येन-भवनपतिव्यन्तरनरविद्याधरवैमानिकादिसमुदायलक्षणेन वहितमहितपूजितास्तैः, अत्राऽऽह-ननूत्पन्नज्ञानदर्शनधरैरित्युक्तम्, उत्पत्तिमत् सप्रतिघं दृष्टं यथा मूर्तेष्ववध्यादिज्ञानम्, उत्पन्ने च तज्ज्ञानदर्शने अभ्युपगते, अतस्ताभ्यां ते सप्रतिघज्ञानिन प्राप्नुवन्ति, तथा च पूर्वोक्तसर्वज्ञत्वादिहानिरित्याशङ्क्याऽऽह-'अप्रतिहतवरज्ञानदर्शनधरैरि'ति, समस्तावरणक्षयसम्भूतत्वादप्रतिहते-मूर्तामूर्तेषु समस्तवस्तुष्वस्खलिते अत एव वरे-प्रधाने केवलज्ञानदर्शनलक्षणे ज्ञानदर्शने धरन्ति ये ते तथा तैः । यत्त्ववध्यादेः सप्रतिघत्वं तन्नोत्पत्तिमत्त्वेन, किं तर्हि ?, आवरणसद्भावात्, अतोऽप्रतिघकेवलज्ञानदर्शने समस्तावरणक्षयसम्भूतत्वात्, तत्क्षयेऽपि सप्रतिघत्वाभ्युपगमेऽतिप्रसङ्गाद् । इदं च विशेषणं कस्याञ्चिदेव वाचनायां दृश्यते, न सर्वत्र । तदेवं यथोक्तप्रकारेण तावद् व्याख्यातान्यमूनि विशेषणानि अन्यथा वाऽविरोधतः सुधिया व्याख्येयानि । तैरर्थकथनद्वारेण प्रणीतम्-प्ररूपितम्, द्वादशाङ्गं श्रुतम्, अनु० । ( एतद्वक्तव्यता 'दुवालसंग' शब्दे चतुर्थभागे उक्ता । ) एतद्भणनेन च समर्थितं द्विविधमपि नोआगमतो भावश्रुतम्, अतस्तदपि निगमयति- 'से तं नोआगमतो भावसुअं' इत्यादि । एतद्भणने चोक्तं सर्वमपि भावश्रुतमतो निगमयति-'से तं भावसुअमिति' ।

तदेवं स्वरूपत उक्तं भावश्रुतमनेनैव चात्राधिकार इत्यतोऽस्यैव पर्यायनिरूपणार्थमाह-

तस्स णं इमे एगट्ठिया णाणाघोसा णाणावंजणा नामधेज्जा भवन्ति, तं जहा-"सुअसुतगंथसिद्धंतसासणे आणावयणउवएसे । पन्नवण आगमेऽवि अ, एगट्ठा पज्जवा सुत्ते ॥ १ ॥" ( ४ ) से तं सुअं । ( सू० ४३ )

तस्य-श्रुतस्य अमूनि-अनन्तरमेव वक्ष्यमाणतया प्रत्यक्षाणि एकार्थिकानि-तत्त्वत एकार्थविषयाणि-नानाघोषाणि पृथगुभिन्नोदात्तादिस्वराणि नानाव्यञ्जनानि-पृथग्भिन्नाक्षराणि नामधेयानि पर्यायध्वनिरूपाणि भवन्ति । तद्यथा-'सुअ'गाहा व्याख्या-गुरुसमीपे श्रूयत इति श्रुतम् । अर्थानां सूचनात् सूत्र, विप्रकीर्णार्थग्रन्थनाद् ग्रन्थ, सिद्धं-प्रमाणप्रतिष्ठितमर्थमन्तम् संवेदननिष्ठारूपं नयतीति सिद्धान्त, मिथ्यात्वाविरतिकषायादिप्रवृत्तजीवानां शासनात्-शिक्षणाच्छासन, प्रवचनमिति पाठान्तरम्, तत्रापि प्रशस्तं-प्रधानं प्रथमं वा वचनं प्रवचनं, मोक्षार्थमाश्रयन्ते प्राणिनोऽनयेत्याज्ञा उक्ति-वचनं वाग्योग इत्यर्थः । हिताहितप्रवृत्तिनिवृत्त्युपदेशनादुपदेश, यथावस्थितजीवादिपदार्थज्ञापनात् प्रज्ञापना । आचार्यपारम्पर्येणागच्छतीत्यागम, आप्तवचनं वाऽऽगम इति, 'सूत्रे' सूत्रविषये एकार्थाः पर्याया इति गाथार्थः ॥ १ ॥ 'से तं सुअं' इत्यादि । तदेतत्प्रमाणादिभेदैरुक्तं श्रुतमित्यर्थः । अनु० ।

अथ श्रुतपदस्य तं चिकीर्षुरिदमाह-

आगमओ दव्वसुयं, वत्तासुत्तोवओगनिरवेक्खो ।
नोआगमओ जाणय-भव्वसरीरा-ऽइरित्तमिदं ॥ ८७७ ॥

इह नामस्थापने सुगमत्वाद् नोक्ते । द्रव्यश्रुतं त्वागमतो, नोआगमतश्च । तत्रागमतो द्रव्यश्रुतं वक्ता तदुपयोगानिरपेक्ष ; अनुपयुक्त इत्यर्थः नोआगमतस्तु त्रिविधम् ज्ञशरीरद्रव्यश्रुतम्, भव्यशरीरद्रव्यश्रुतम्, तद्व्यतिरिक्तं द्रव्यश्रुतं चेति । तत्राद्यभेदद्वयमावश्यकवदेव वाच्यम् ।

तद्व्यतिरिक्तं त्विदं किम् ?, इत्याह-

पत्ताइगयं सुत्तं, सुत्तं च जमंडजाइपंचविहं ।
आगमओ भावसुयं, सुओवउत्तो तओ ऽणण्णो ॥ ८७८ ॥

इह श्रुतं सूत्रं च द्वे अपि किलैकार्थे । तत्र तलतात्यादिप्रभवाणि पत्राणि प्रतीतानि, तेषु गतं लिखितं सूत्र पत्रादिगतम्, आदिशब्दात्-पत्रसंघातनिष्पन्नाः पुस्तकाः वस्त्रादयश्च गृह्यन्ते, तेष्वपि लिखितं सूत्रं ज्ञशरीर-भव्यशरीरव्यतिरिक्तं द्रव्यश्रुतमुच्यते । अथवा-अण्डजाद्यपि यदागमे पञ्चविधं सूत्रमुक्तम् । तद्यथा-" अंडए, बोंडए, कीडए, वालए, वागए" एतदपि सूत्राभिधानसाम्याद् व्यतिरिक्तं द्रव्यश्रुतमुच्यते । तत्राण्डाच्चतुरिन्द्रियकीटविशेषनिर्वर्तितकोशकाररूपाज्जातमण्डजं लोकप्रतीतं चटकसूत्रमित्यर्थः । वोण्डं-वमनीफलं तस्माज्जातं वोण्डजं कर्पाससूत्रमित्यर्थः । कीटजं तु पञ्चविधम्, तद्यथा-" पट्टे, मलए, अंसुए, चीणंसुए, किमिराए " एते पञ्चापि पट्टसूत्रविशेषा । वालजमपि पञ्चविधम्, तद्यथा-'उण्णिए, उट्टिए, मिगलोमिए, कोतवे, किट्टिसे' । तत्र मूषिकलोमनिष्पन्नम्-कौतवम्, ऊर्णाद्युद्धरितकिट्टिमनिष्पन्नं सूत्रं किट्टिमम् ; अथवा, ऊर्णादीनां द्विकादिसंयोगनिष्पन्नं किट्टिसम्, यदि वा, उक्तशेषाऽश्वादिजीवलोमनिष्पन्नं किट्टिसम् । शेषं प्रतीतम् । सणा-ऽतस्यादिप्रभवं वल्कजम् । तदेतत् सर्वमपि व्यतिरिक्तं द्रव्यश्रुतम् । भावश्रुतमपि द्विधा-आगमतः, नोआगमतश्च । तत्र श्रुतोपयुक्तस्तदध्येताऽऽगमतो भावश्रुतम् । ननूपयोग एव भावश्रुतं युज्यते, तत्कथमिह तद्वान् गृह्यते ?, इत्याह- तओऽणण्णो त्ति-तत श्रुतोपयोगादनन्य इति कृत्वोपचारत स एव भावश्रुतमुच्यत इति ।

नोआगमतो भावश्रुतमाह-

नोअगमओ भावे, लोइयलोउत्तरं पुराभिहियं ।
सम्मत्तपरिग्गहियं, सम्मसुयं मिच्छमियरं ति ॥ ८७९ ॥

नोआगमतो भावश्रुतं द्विविधम्-लौकिकं, लोकोत्तरं च । तत्र लौकिकं भारत-रामायणादि । इदं चेहैव पूर्वं श्रुतज्ञानविचारे प्रोक्तम् । लोकोत्तरं त्वङ्गप्रविष्टादि ; इदमपि

पूर्वं तत्रैवोक्तम् । एतच्च सर्वं सम्यक्त्वपरिगृहीतं सम्यक्श्रुतं, मिथ्यात्वपरिगृहीतं तु मिथ्याश्रुतमिति ।

अत्र प्रेरकः प्राह—

**आगमओ भावसुयं, जुत्तं नोआगमे कहं होइ ।**
**जइ नागमो न सुत्तं,अह सुत्तमणागमो किह णु ? ।८८०।**

यदागमतो भावश्रुतमुक्तम् तद् युक्तम्—घटत एव । नोआगमतस्तु भावश्रुतं कथं भवति ?—न घटत एवैतदित्यर्थः । तथाहि-नोशब्दस्तावद् निषेधवचनः, ततश्च यदि 'न'-नैवाऽऽगमः, तर्हि न श्रुतम्, तस्याऽऽगमरूपत्वात् । अथ श्रुतम्, तर्ह्यनागमः कथम् ? । तस्माद् नोआगमतो भावश्रुतमिति 'माता वन्ध्या' इत्यादिवद् विरुद्धमेवेति ।

प्रेरक एवाऽऽशङ्कयाह—

**उवओगो जम्मत्ते, तं तं जइ वागमोऽवसेसं तु ।**
**नोआगमो त्ति एवं, किमणुवउत्तम्मि दव्वसुयं? ।।८८१।।**

यदिवा—एवं सिद्धान्तवादी ब्रूयात्-यावन्मात्र यत्र यत्र श्रुताध्येतरि तदुपयोगस्तत्तदागमतो भावश्रुतम्, यत् त्वशेषमनुपयुक्तस्याध्येतु श्रुतं तद् नोआगमतो भावश्रुतमिति सर्वं सुस्थमिति । हन्त ! तर्हि 'आगमओ दव्वसुय वत्ता सुत्तोवओगनिरवेक्खो' इत्यनेनाऽनुपयुक्ते वक्तरि यत् पूर्वं द्रव्यश्रुतमुक्तं तत् किं स्यात्, तद्विषयस्येदानीं नोआगमतो भावश्रुतत्वेन त्वया प्रतिपाद्यमानत्वात् ?—निर्विषयमेव तत् स्यादिति भावः ।

पर एवाचार्यमतमाशङ्क्य परिहरन्नाह-

**अविसुद्धनयमएण व, जइ लद्धिसुयमणुवउत्ते वि ।**
**भावसुयं चिय पढओ, किमणुवउत्तस्स दव्वसुयं ? ।८८२।**

यदि च सूरिरेतद् ब्रूयात्—अावशुद्धनयमतेन श्रुतलब्धिरपि भावश्रुतमुच्यते । ततश्चानुपयुक्तेऽपि लब्धिसपन्ने जीवे तल्लब्धिरूपं श्रुतं लब्धिश्रुतं भावश्रुतमेवाऽङ्गीक्रियते, अन्यत्तु लब्ध्यादिशून्यस्य यत् श्रुतं तद् द्रव्यश्रुतम्, इति न तस्य निर्विषयतेति भावः । हन्त ! तर्ह्यनुपयुक्तस्य पठतो वक्तु किं द्रव्यश्रुतम् ?, तस्यापि श्रुतलब्धिमद्भावतो भावश्रुतप्राप्त्या तदवस्थैव द्रव्यश्रुतस्य निर्विषयतेति भावः । न हि श्रुतलब्धिरहितः कोऽपि पठति । तस्मादेतदपि वाङ्मात्रत्वाद् न किञ्चिदिति ।

अथाचार्यः प्रतिविधानमाह—

**आगम सुओवओगो, सुद्धो चिय न चरणाइमंमिस्सो ।**
**मीसेऽवि वा विवक्खा, सुयस्स चरणाइभिन्नस्स।।८८३।।**

इह तावत् सर्वस्याप्यस्य प्रक्रमस्य भावार्थ उच्यते-परेण निषेधवचनं नोशब्दमवगम्य पूर्वपक्षः कृतः । आचार्यस्तु मिश्रवचनं नोशब्दं चेतसि निधाय प्रतिविधत्ते । मिश्रवचनेनापि नोशब्देन द्रव्यश्रुतम्, आगमतो भावश्रुतम्, नोआगमतो भावश्रुतं चेत्येतत्त्रयं कथं पृथगुपपद्यते ? इति चेत् । उच्यते—अनुपयुक्तस्य श्रुताध्येतुस्तावद् द्रव्यश्रुतं 'आगम' त्ति एकदेशेन समुदायस्य गम्यमानत्वादागमतो भावश्रुतमुच्यते । किम् ?, इत्याह—शुद्ध एव श्रुतोपयोगः न चरणादिमिश्रः । यदि वा-चरणादिमिश्रेऽपि श्रुतोपयोगे तद्भिन्नं श्रुतोपयोगस्य विवक्षा क्रियते । इदमुक्तं भवति—चरणादिमिश्रमपि श्रुतोपयोगं भिन्नं विवक्षितत्वादागमतो भावश्रुतमुच्यत इति ।

तर्हि नोआगमतो भावश्रुतं किम्?, इत्याह—

**चरणाइमभेयम्मि उ,उवओगो जो सुए न तओ समए ।**
**नोआगमो त्ति भण्णइ, नोसद्दो मीसभावम्मि ।।८८४।।**

चरणादिसमेते तु श्रुते यश्चरणादिमिश्र उपयोगस्तकोऽसौ समयप्रसिद्धया नोआगमतो भावश्रुतमुच्यते । नोशब्दश्चेह मिश्रवचन इति । निषेधवचनस्तु नोशब्दोऽत्र नेष्यते, यतोऽसौ सर्वनिषेधवचनो वा स्यात्, देशनिषेधवचनो वा ? ।

तत्र सर्वनिषेधवचनत्वे नोशब्दस्य दोषमाह—

**सव्वनिसेहे दोसो, सव्वसुयमणागमो पसज्जेज्जा ।**
**होज्जा वाऽणागमओ, सुयवज्जमणागमसुयं तु ।।८८५।।**

सर्वनिषेधवचने नोशब्देऽत्र गृह्यमाणे दोषः प्रसज्यते । कः ?, इत्याह—'सव्वसुयमित्यादि' नोआगमतो भावश्रुतमिति । कोऽर्थः ?-अनागमः सर्वमपि यद् भावश्रुतमिति-सर्वनिषेधवाचकत्वे नोशब्दस्य सर्वस्यापि भावश्रुतस्याऽऽगमत्वनिषेधः स्यादिति भावः । अयुक्तं चैतत्, श्रुतस्यागमत्वेन सुप्रतीतत्वात् । अथवा—सर्वनिषेधवाचके नोशब्दे नोआगमतो भावश्रुतमित्ययमर्थः स्यात् । कः ?, इत्यत्रोच्यते-अनागमतोऽनागमत्वात् श्रुतवर्जं मत्यादिचतुष्टयात्मकं यदनागमरूपं ज्ञानं तत् श्रुतं भावश्रुतं भवदिति । अश्रुतरूपस्यापि मत्यादिज्ञानचतुष्टयस्य श्रुतप्रसङ्गः स्यादिति भावः ।

देशनिषेधवचनेऽप्यत्र नो शब्दे दूषणमाह—

**देसनिसेहे सयलं, नोआगमओ सुयं न पावेज्जा ।**
**भिन्नं पि व तं देसो,चरणाईणं पसज्जेज्जा ।।८८६।।**

देशनिषेधवचने नोशब्दे सकलमप्याचारादि श्रुतं नोआगमतो भावश्रुतं न प्राप्नुयात्—न स्यात्, किन्तु तदेकदेश एव नोआगमतो भावश्रुतं स्यादित्यर्थः । सर्वश्रुतस्य चैतदिष्यते, समस्तस्यापि द्वादशाङ्गगणिपिटकस्य ज्ञान-दर्शन-चारित्रपर्यायपिण्डाऽऽत्मकत्वाद् नोआगमत्वेन सिद्धान्ते रूढत्वात्, एतच्च मिश्रवचन एव नोशब्दे घटते नान्यथेति भावः । अथैकदेशनिषेधपक्षे दूषणान्तरमाह-'भिन्नं पि वेत्यादि' 'वा' इति-अथवा, भिन्नमपि पृथग्भूतमपि सत् तद्-भावश्रुतं चरणादीनामेकदेशः प्रसज्येत, अभिन्नदेशः चेष्यते तच्चरणादिभिः सह, धात्वञ्जनकपिशपर्णकवत्, अन्यथा सकर्मकत्वादिदोषप्रसङ्गादिति ।

किञ्च,देशनिषेधको नोशब्द एकदेशवाचकः, तत्र—चापरोऽपि दोषः । कः ?, इत्याह—

**होज्ज व नोआगमओ,सुओवउत्तो वि जं स देसम्मि ।**
**उवजुज्जइ न उ सव्वे, तेणायं मीसभावम्मि ।।८८७।।**

यः श्रुतोपयुक्तः पूर्वमागमतो भावश्रुतमुक्तः, सोऽपि नोशब्दस्य देशवचनत्वे नोआगमतो भावश्रुतं भवेत् । कुतः ?, इत्याह--यद् यस्मात् स श्रुतैकदेश एवोपयुज्यते, न तु सर्वस्मिन्नपि श्रुते, सर्वस्यापि श्रुतस्याऽनन्ताभिलाप्यार्थ-

विषयत्वात्, एतदुपयोगस्य चैकदाऽसंभवात् । ततश्चैकदेशवचनत्वे नोशब्दस्याऽयं नो आगम । तस्माद् येनैवं सति आगम--नोआगमभावश्रुतयोरविशेष प्राप्नोति, तेनाऽयं नोशब्दो मिश्रभावे ग्राह्य इति ।

अथ परकाभिप्रायमाशङ्कमान आह--

**आह णणु मीसभावे, नाभिहिओ अभिहिओ य नोसद्दो ।**
**देसे तदन्नभावे, दव्वे किरियाएँ भावे य ॥ ८८८ ॥**

आह-प्रतिषेधवाचकत्वाद् नोशब्दो मिश्रभावे न कचिदभिहित । किं तर्हि? देशादिषु पञ्चस्वर्थेष्वभिहित । तत्र देशे नोघटो घटैकदेश उच्यते, यतो घटैकदेशस्तावद्घटो न वक्तव्य, नापि घट । किं तर्हि ? नोघट । तथाहि--घटैकदेशस्य ग्रीवादेरघटत्वे तदन्यदेशानामपि तद्वदेवाऽघटत्वात् सर्वघटाभावप्रसङ्ग, एवं पट--शकटादावप्यभावप्रसङ्गेन सर्वशून्यतापत्ति । नापि घटैकदेशो घट, एवं हि प्रत्यवयवं घटप्राप्त्यैकस्मिन्नपि घटे घटबाहुल्यापत्ति, तथा च प्रत्येकघटविषयप्रवृत्ति-निवृत्त्यादिव्यवहारोच्छेदप्रसङ्ग । तस्मात् पारिशेष्याद् घटैकदेशो नोघट एवोच्यते, पर्यायशब्दत्वादनयो । तदन्यभावेऽपि नोशब्दो दृश्यते, यथा 'नो घटः' इत्युक्ते तदन्य पटादि प्रतीयते, यथा 'नो ब्राह्मण' इत्यभिहिते क्षत्रियादिर्गम्यते । द्रव्ये तु नोशब्दो घटैकदेशवचनादि--नोघट, नो पट, नो स्तम्भ इत्यादिघटाद्येकदेशवाचक इत्यर्थ । ननु देशवाचकादस्य को भेद ?, इति चेत् । उच्यते--तत्र घटादिसंबद्ध एव तदेकदेशो नोघटादिरुक्त, अत्र तु स एव घटाद्येकदेशो ग्रीवादि पृथग्भूतो रथ्यादिपतित स्वतन्त्र एव गृह्यते । स च घटाद् पार्थक्येन वर्तमानत्वात् पृथगेव स्वतन्त्रं द्रव्यम् इति द्रव्ये नोशब्द । क्रियानिषेधवचनो नोशब्द --'नो पचति, नो पक्तव्यम्' इत्यादि । भावनिषेधे तु नोशब्दो 'नो शय्यते, नो स्थीयते' इत्यादि । भाव--क्रिययोश्च विशेष सिद्ध--साध्यतादिरूप कोऽपि शब्दशास्त्रादिगतो बोद्धव्य । इत्येवं विवक्षावशाद् देशादिष्वर्थेषु दृष्टो नोशब्द, न तु मिश्रभाव इति ।

अत्रोत्तरमाह--

**सच्चमयं देसाइसु, तह वत्थवसेण सद्दविणिओगो ।**
**अभियत्था य निवाया, जुज्जइ तो मीसभावे वि ॥ ८८९ ॥**

सत्यम्, देशप्रतिषेधादिवचनोऽयं नोशब्द, तथाप्यर्थवशाच्छब्दानां विनियोग --यो यत्राऽर्थो घटते, तस्मिन्नर्थे तत्र ते प्रयुज्यन्त इत्यर्थ । आह-नन्वेकस्यापि शब्दस्य किमनेकार्था विद्यन्ते, येनैवमुच्यते ?, इत्याशङ्क्याह-द्योतकत्वेनार्थगमिनार्थाश्च निपाता इति मिश्रवचनोऽपि प्रयुज्यते नोशब्द, न किञ्चित् दूषण इति ।

अथवा--देशवचनोऽपि भवत्वत्र नोशब्द, न कश्चिद् दोष, इति दर्शयन्नाह-

**अविसेसियसंमिस्सो-वओगदेसु त्ति वा सुयं काउं ।**
**नोआगमभावसुए, नोसद्दो होज्ज देसे वि ॥ ८९० ॥**

अविशेषितश्चासौ ज्ञान-दर्शन-चारित्राणां परिपूर्णघटादिरिवाऽखण्ड संमिश्रोपयोगश्चाविशेषितसंमिश्रोपयोगस्तस्य घटादेर्ग्रीवादिरिव श्रुत देश एकदेश इति कृत्वा नोआगमतो भावश्रुत विचार्ये नोशब्दो देशेऽपि युज्यते । इदमुक्तं भवति--यथा सामान्येन परिपूर्णघटादिरिहाऽखण्डस्यैकदेशो ग्रीवादिर्नोघट उच्यते, एवमविशेषितभेदस्य ज्ञान-क्रियापरिणामरूपस्याऽखण्डस्य वस्तुन श्रुतमेकदेश इति कृत्वा ज्ञान-क्रियापरिणामो नोआगमतो भावश्रुतमिति स्थितम् ।

अथ मतान्तरमुपदर्श्य परिहरन्नाह--

**नोआगमओ केई, सद्दसहायमुवओगमिच्छंति ।**
**नणु सुतरमागमत्तं, हि दव्व-भावागमे जुत्तं ॥ ८९१ ॥**

केचिदाचार्या शब्दसहायं श्रुतोपयोगं नोआगमतो भावश्रुतमिच्छन्ति । अयमत्राभिप्राय -श्रुतोपयोगपूर्वकं ब्रुवाणस्य य श्रुतोपयोगसहित शब्द स नोआगमतो भावश्रुतम् । तत्र किलोपयोग--शब्दसमुदाये उपयोगलक्षणस्याऽऽगमस्यैकदेशत्वात्, शब्दनिरपेक्षं तूपयोगमात्रमागमतो भावश्रुतमिति । एतच्चायुक्तमिति दर्शयति-'नणु' इत्यादि । नन्वत्र हि स्फुटं श्रुतोपयोगो भावागमः, शब्दस्तु द्रव्यागमः, इति सुतरामागमत्वमेव युक्तम् आगमत एव श्रुतं युज्यते, न तु नोआगमत इत्यर्थ । यदि हि केवलोऽपि श्रुतोपयोग आगम उच्यते, तर्हि द्वितीये शब्दलक्षणे द्रव्यागमे मिलिते सुतरामयमागम एव युज्यते, न तु नोआगम, आगमाऽनागमसमुदाय एव तस्य युज्यमानत्वादिति भाव ।

पराभिप्रायमत्राशङ्क्य निराचिकीर्षुराह--

**अह नागमो त्ति सद्दो, नोआगमया य तदहियत्तणओ ।**
**आगमओ दव्वसुयं, किह सद्दो नागमो जइ सो ॥ ८९२ ॥**

अथ परो मन्यते-शब्द आगमो न भवति, तत उपयोगस्य तदधिकत्वादनागमरूपशब्दाधिकत्वात् नोआगमता, आगमाऽनागमसमुदाये आगमस्यैकदेशत्वाद् नोआगमत्वमित्यभिप्राय । अत्र सूरिराह-हन्त ! यद्यसौ शब्द आगमो न भवति तर्ह्यागमतो द्रव्यश्रुतं स्यात् ? । सुप्रतीतमप्यस्येत्यमागतो द्रव्यश्रुतत्वं न स्यात्, अनागमत्वात् । तस्माद् द्रव्यत आगम एवाऽयम्, अतो द्रव्यागमसहायो भावागम आगमत एव भावश्रुतम्, न तु नोआगमत इति स्थितम् ।

अथान्यदपि मतान्तरमुपन्यस्य दूषयति--

**अन्ने नोआगमओ, सामित्ताणासियं सुयं बेंति ।**
**जइ न सुयमणुवओगे, नणु सुयरमणासियं नत्थि ॥ ८९३ ॥**

अन्ये तु केचनाऽप्याचार्या स्वामिनमाश्रितं श्रुतोपयोगं भावश्रुतं ब्रुवते, स्वाम्यनाश्रितं तु तमेव नोआगमतो भावश्रुतं ब्रुवते, एतच्चातिफल्गुवचनं दर्शयति-- 'जइ' इत्यादि । यद्यनुपयुक्तेऽपि वक्तरि श्रुतं नोक्तम्, किन्तु विशिष्टेऽपि तस्मिन् स्वामिनि द्रव्यश्रुतमेव पूर्वमभिहितम्; मूढ ! तर्हि सुतरामेवाऽनाश्रितं भावश्रुतं नास्ति, स्वामिनमन्तरेण पुस्तकादिलिखिते श्रुते उपयोगस्य दूरोत्सारितत्वात्, उपयोगमन्तरेण च भावश्रुतस्य सर्वथाऽसत्त्वात्; 'स्वाम्यनाश्रितं च श्रुतं क्वाप्यस्ति' इति प्रतिपादयितुमहस्माद्दाम्भिकत्वमिति यत् किञ्चिदेतदिति । तदेवमुक्तं नोआगमतोऽपि भावश्रुतम् ।

अथ श्रुतस्यैकार्थिकनामान्याह—

सुय–सुत्त–गंथ–सिद्धंत–सासणे आण वयण–उवएसो ।
पण्णवण आगमो वि य, एगट्ठा पज्जया सुत्ते ॥८६४॥

एतेषां च नाम्नामर्थं प्रागतिदेशेनोक्त एवेति । तदेवं विहित-श्रुतस्यापि नामादिन्यासः । विशे० । उत्त० । आ० म० । स्था० । दश० । बृ० । सूत्र० । ( श्रुतैकार्थिकानां व्याख्या स्वस्वस्थाने । )

श्रुतज्ञानस्य अनन्ता भेदाः –

कत्तो मे वण्णेउं, सत्ती सुयनाणसव्वपयडीओ ? ।
चोद्दसविहनिक्खेवं, सुयनाणे आवि वोच्छामि ॥४४९॥

कुतो मे शक्तिः सामर्थ्यम् ?, नास्त्येवेत्यर्थः । किं कर्तुं ? । वर्णयितुम् । काः?, श्रुतज्ञानसर्वप्रकृतीः–सर्वास्तद्भेदान् । ततश्चतुर्दशविधश्चासौ निक्षेपश्च चतुर्दशविधनिक्षेपो–न्यासस्तं वक्ष्यामि–भणिष्यामि, श्रुतज्ञाने श्रुतविषयं, चशब्दात्–श्रुताज्ञानविषयं च, अपिशब्दाद्–उभयविषयं च । तत्र श्रुतज्ञाने सम्यक्श्रुते, श्रुताज्ञाने असंज्ञि मिथ्याश्रुते, उभयश्रुते दर्शनपरिग्रहविशेषादक्षरा–ऽनक्षरादिश्रुते । इति निर्युक्तिगाथार्थः ।

अथैतद्भाष्यम्—

पयडि त्ति जो तदंसो, हेऊ वा तस्स तस्स भावो वा ।
ते याणंता सव्वे, तओ न तीरंति वोत्तुं जे ॥४५०॥

इह प्रकृतिरिति किमुच्यते ?, इत्याह—यस्तदंशः–श्रुतज्ञानांशस्तद्भेदोऽङ्गप्रविष्टादिरित्यर्थः । हेतुर्वा बाह्याऽऽभ्यन्तरभेदभिन्नो यः श्रुतज्ञानस्य स प्रकृतिः । तत्र बाह्यो हेतुः श्रुतज्ञानस्य पत्रलिखिताक्षरादि, आन्तरस्तु तद्धेतुः क्षयोपशमवैचित्र्यम्, तस्य श्रुतस्य स्वभावो वैकेन्द्रियादीनां चतुर्दशपूर्वधरान्तानां जीवानां तारतम्येन भिन्नरूपः प्रकृतिः प्रोच्यते । एते चांशाः, हेतवः, स्वभावाश्चाऽनन्ताः सर्वेऽपि, अत आयुषः परिमितत्वाद् वाचश्च क्रमवर्तित्वात् न शक्यन्ते वक्तुम् । 'जे' इति निपातोऽलङ्कारार्थ इति ।

एतदेव भावयति—

जावंतो वयणपहा, सुयाणुसारेण केइ लब्भंति ।
ते सव्वे सुयनाणं, ते याणंता मइविसेसा ॥४५१॥

इह यावन्तः केचन श्रुतानुसारेण संकेताः श्रुतग्रन्थानुसारेण लभ्यन्ते—प्राप्यन्ते वचनस्य पन्थानो–मार्गा मतिज्ञानविशेषा इति तात्पर्यम्, ते सर्वेऽपि श्रुतज्ञानमिति । एवं 'ते वि य मइविसेसा सुयनाणब्भंतरे जाण' इत्यादि मति–श्रुतभेदविचारे पूर्वं प्रतिपादिता, ते च श्रुतानुसारिणो मतिविशेषा अनन्ता इति । ननु यदि मतिविशेषाः कथं श्रुतज्ञानम् ?, इति तु न प्रेर्यम्, श्रुतानुसारिणो विशिष्टस्य मतिविशेषस्यैव श्रुतत्वात् । एतच्च पूर्वं विस्तरेण समर्थितमेवेति ।

यदि नामाऽनन्ता श्रुतभेदास्तथापि ते वक्तुं शक्यन्त एव, इत्याशङ्क्याह—

उक्कोससुयन्नाणी, वि जाणमाणो वि तेऽभिलप्पे वि ।
न तरइ सव्वे वोत्तुं, न पहुप्पइ जेण कालो से ॥४५२॥

उत्कृष्टश्रुतज्ञानलब्धिसंपन्नोऽपि चतुर्दशपूर्वधरो जानन्नपि, अभिलप्यानपि तान् श्रुतज्ञानविशेषानन्तान् सर्वानपि वक्तुं न शक्नोति । कुतः ?, इत्याह–येन कारणेन 'से' तस्योत्कृष्टश्रुतज्ञानिनो वदतः कालो न प्रभवति–न पूर्यते, आयुषः परिमितत्वात्, वाचश्च क्रमवर्तित्वात् । यदा चोत्कृष्टश्रुतधरोऽपि सर्वान् श्रुतभेदान् वक्तुं न शक्नोति, तदाऽन्यस्याऽस्मदादेः का वार्ता ? इति भावः । विशे० ।

श्रुतज्ञानस्य अनन्ता भेदाः–

श्रुतज्ञाने पुनर्भवति मतिपूर्वे मतिकारके श्रुतज्ञाने हि वाच्यवाचकभावेन शब्दप्लावितस्यार्थस्य ग्रहणं वाच्यवाचकभावेन स्वशब्दः प्रवर्त्तते मलयधारितेऽर्थे इति, तत्पुनः श्रुतज्ञानं सर्वमपि मूलभेदापेक्षया द्विविधम्, तद्यथा—स्वमतिसमुत्थं, परोपदेशाद्वा, परोपदेशसमुत्थं चेत्यर्थः, तत्र स्वमतिसमुत्थं प्रत्येकबुद्धानां पदानुसारिप्रज्ञानां वा । परोपदेशसमुत्थमस्मदादीनाम् । तत्कतिविधमिति तद्भेदप्रदर्शनार्थमाह । बृ० १ उ० १ प्रक० ।

'चोद्दसविहनिक्खेवं' इत्याद्युत्तरार्धं व्याचिख्यासुराह—

नाणम्मि सुए चोद्दस–विहं परमदेण तह य अन्नाणे ।
अविसेसेणुभयम्मि वि, किंचि जहासंभवं वोच्छं ॥४५३॥

सम्यक्श्रुतादौ श्रुतज्ञाने चतुर्दशविधं निक्षेपं चशब्देन श्रुताज्ञाने च मिथ्याश्रुतादौ, अपिशब्दादुभयरूपे च दर्शनपरिग्रहविशेषादक्षराऽनक्षरादिश्रुते किञ्चिद् यथासंभवं निक्षेपं वक्ष्ये । इति गाथार्थः ।

तमेव चतुर्दशविधं निक्षेपमाह—

अक्खर सण्णी सम्मं, साईयं खलु सपज्जवसियं च ।
गमियं अंगपविट्ठं, सत्त वि एए सपडिवक्खा ॥४५४॥

अक्षरादीनि सप्त द्वाराण्यनक्षरादिप्रतिपक्षसहितानि चतुर्दश भवन्ति । विशे० ।

सकलचरणकरणक्रियाधारश्रुतज्ञानस्वरूपजिज्ञासया शिष्यः प्रश्नयति—

से किं तं सुयनाणपरोक्खं ?, सुयनाणपरोक्खं चोद्दसविहं पन्नत्तं, तं जहा–अक्खरसुयं १ अणक्खरसुयं २ सण्णिसुअं ३ असण्णिसुअं ४ सम्मसुअं ५ मिच्छसुअं ६ साइअं ७ अणाइअं ८ सपज्जवसिअं ९ अपज्जवसिअं १० गमिअं ११ अगमिअं १२ अंगपविट्ठं १३ अणंगपविट्ठं १४ । ( सू० ३७ )

अथ किं तच्छ्रुतज्ञानम् ?, आचार्य आह–श्रुतज्ञानं चतुर्दशविधं प्रज्ञप्तम्, तद्यथा–अक्षरश्रुतमनक्षरश्रुतं संज्ञिश्रुतमसंज्ञिश्रुतं सम्यक्श्रुतं मिथ्याश्रुतं सादि अनादि सपर्यवसितमपर्यवसितं गमिकमगमिकमङ्गप्रविष्टमनङ्गप्रविष्टं च । ननु अक्षरश्रुतानक्षरश्रुतरूप एव भेदद्वये शेषभेदा अन्तर्भवन्ति तत्किमर्थं तेषां भेदोपन्यासः ?, उच्यते—इहाव्युत्पन्नमतीनां विशेषावगमसम्पादनाय महात्मना शास्त्रारम्भप्रयासो, न चाक्षरश्रुतानक्षरश्रुतरूपभेदद्वयोपन्यासमात्रादव्युत्पन्नमतयः शेषभेदानवगन्तुमीशते, ततोऽव्युत्पन्नमतिविनेयजनानुग्रहाय शेषभेदोपन्यास इति । नं० । ( अक्षरश्रुतादिपदानां व्याख्या स्वस्वस्थाने । )

अथ संज्ञिश्रुतमभिधित्सुराह—

सण्णिस्स सुयं जं तं, सण्णिसुयं सो य जस्स सा सण्णा ।
होइ तिहा कालियहे-उदिट्ठिवाओवएसेणं ॥ ५०४ ॥

संज्ञिश्रुतं तावत् तदेवाऽभिधीयते यत् संज्ञिनः संबन्धि । सोऽपि संज्ञी स एव यस्याऽसौ संज्ञा समस्ति । सा च संज्ञा त्रिविधा भवति-दीर्घशब्दलोपाद् दीर्घकालिकोपदेशेन, हेतुवादोपदेशेन, दृष्टिवादोपदेशेन चेति ।

अत्र परः प्राह—

जइ सण्णासंबंधे-ण सण्णिणो, तेण सण्णिणो सव्वे ।
एगिंदियाइयाण वि, जं सण्णा दसविहा भणिया ॥ ५०५ ॥

संज्ञा विद्यते यस्य स संज्ञी, इत्येवं संज्ञासंबन्धाद् यदि संज्ञिन इष्यन्ते तदा तेन संज्ञासंबन्धेन सर्वेऽप्येकेन्द्रियादयो जीवाः संज्ञिनः प्राप्नुवन्ति, न पुनः कोऽप्यसंज्ञिनः,इत्येवमतिव्याप्तिप्रसङ्गः,यतः सर्वजीवानामेकेन्द्रियादीनामपि प्रज्ञापनादिषु संज्ञा दशविधा भणिता,तद्यथा-"एगिंदियाणं भंते ! कइविहा सण्णा पन्नत्ता ? । गोयमा ! दसविहा,तं जहा-आहारसण्णा, भयसण्णा, मेहुणसण्णा, परिग्गहसण्णा, कोहसण्णा, माणसण्णा, मायासण्णा लोहसण्णा, ओहसण्णा, लोगसण्णा " एवं द्वीन्द्रियादीनामपि वाच्यम् । तत् के नामेत्थमसंज्ञिनः ?, प्राक्प्राश्चैतेऽनेकशस्तेषु तेषु प्रदेशेष्वागमे, तत कथमेतत् ? इति ।

अत्र परिहारमाह—

थोवा न सोहणा वि य, जं सा तो नाहि कीरए इहइं ।
करिसावणेण धणवं, न रूववं मुत्तिमेत्तेण ॥ ५०६ ॥
जह बहुदव्वो धणवं, पसत्थरूवो अ रूववं होइ ।
महईए सोहणाए य, तह सण्णी नाणसण्णाए ॥ ५०७ ॥

यद्-यस्मात् कारणात् सा दशविधा संज्ञा काचित् तावदोघसंज्ञात्मिका स्तोका इति स्वल्पा, ततोऽत्र नाधिक्रियते-न तया संज्ञी वक्तुं युज्यत इति भावः । न हि कार्षापणमात्रान्वितत्वेन लोकेऽपि धनवानुच्यते । आहार-भय-परिग्रह-मैथुनादिसंज्ञात्मिकाऽपि च भूयस्यपीह नाधिक्रियते, तामप्याश्रित्य न ' संज्ञी ' इति निर्दिश्यत इत्यर्थः, यतो नाऽसौ शोभना—मोहादिजन्यत्वेन नासौ विशिष्टेत्यर्थः । न चाविशिष्टया संज्ञया ' संज्ञी ' इत्यभिधातुं युज्यते । न हि लोकेऽप्यविशिष्टेन मूर्तिमात्रेण ' रूपवान् ' इत्यभिधीयते । तर्हि कीदृश्या संज्ञयाऽत्र संज्ञी प्रोच्यते ?, इत्याह—यथा लोके बहुद्रव्य एव धनवानभिधीयते, प्रशस्तरूपश्च रूपवान् भवति, तथाऽत्रापि महत्या शोभनया च ज्ञानावरणकर्मक्षयोपशमजन्यमनोज्ञानसंज्ञयैव संज्ञा व्यपदिश्यते—संज्ञानं संज्ञा, मनोविज्ञानमित्यर्थः, तद्रूपा महती, शोभना च संज्ञेहाऽधिक्रियते, नान्येति भावः । ततश्चैषा मनोज्ञानरूपा संज्ञा येषामस्ति ते संज्ञिनः, नान्य इति । विशे० ।

एषा च संज्ञा यस्याऽस्त्यसौ कालिकसंज्ञी, स च यो भवति एतद् दर्शयति—

कालियसण्णि त्ति तओ,जस्स तई सो य जो मणोजोग्गे ।
खंधे णंते घेत्तुं, मन्नइ तल्लद्धिसंपन्नो ॥ ५०८ ॥

' तउ ' त्ति ततोऽसौ ' कालिकसंज्ञी ' इत्यभिधीयते । यस्य किम् ?, इत्याह—' जस्स तइ ' त्ति यस्याऽसौ कालिकसंज्ञा प्राप्यते । स च को विज्ञेयः ?, इत्याह—'सो य जो मणोजोग्गेत्यादि ' स च-कालिकसंज्ञी विज्ञेयः ' यो ' यः कश्चिद् मनोज्ञानावरणकर्मक्षयोपशमाद् मनोलब्धिसंपन्नो मनोयोग्यानन्तान् स्कन्धान् मनोवर्गणाभ्यो गृहीत्वा मनस्त्वेन परिणमय्य मन्यते चिन्तनीयं वस्त्विति । स च गर्भजस्तिर्यङ् मनुष्यो वा, देव , नारकश्चेति ।

अस्य चैवंभूतस्य संज्ञिनः किं भवति ?, इत्याह—

रूवे जहोवलद्धी, चक्खुमओ दंसिए पयासेणं ।
तह छव्विहोवओगो, मणदव्वपयासिए अत्थे ॥ ५१० ॥

यथा रूपं घट—पटादिसंबन्धिनि चक्षुष्मतो लोचनयुक्तस्य जन्तोरुपलब्धिश्चक्षुर्विज्ञानमुत्पद्यते । कथंभूते रूपे ?, दर्शिते प्रदीपादिप्रकाशेन, तथा तेनैव प्रकारेण मनोविज्ञानावरणकर्मक्षयोपशमवतो जीवस्य चिन्ताप्रवर्तकमनस्त्वपरिणतमनोद्रव्यप्रकाशिते शब्दरूपादिकेऽर्थे मनःपष्ठेन्द्रियपञ्चकभेदात् षड्विधोपयोगस्त्रिकालविषयोऽपि समुपजायत इति ।

अत्र विनेयः पृच्छति । नन्वसंज्ञिनः किं सर्वथैवेन्द्रियोपलब्धिर्न भवति ?, इत्याह—

अविसुद्धचक्खुणो जह, नाइपयासम्मि रूवविण्णाणं ।
असण्णिणो तहत्थे, थोवमणोदव्वलद्धिमओ ॥ ५११ ॥

यथाऽविशुद्धचक्षुषो नातिप्रकाशे मन्दमन्दप्रकाशान्वितप्रदेशेऽस्पष्टा रूपोपलब्धिर्भवति, एवमसंज्ञिनः सम्मूर्च्छनजपञ्चेन्द्रियस्य स्वल्पमनोविज्ञानक्षयोपशमवशादतिस्तोकमनोद्रव्यग्रहणशक्तेः शब्दाद्यर्थेऽस्पष्टैवोपलब्धिर्भवतीति ।

यदि सम्मूर्च्छनजपञ्चेन्द्रियस्यैवंभूतमस्पष्टं ज्ञानं भवति, तर्ह्येकेन्द्रियादीनां तत् कथंभूतं भवति ?, इत्याह—

जह मुच्छियाइयाणं, अव्वत्तं सव्वविसयविण्णाणं ।
एगेंदियाण एवं, सुद्धयरं बेंदियाईणं ॥ ५१२ ॥

यथा मूर्च्छितादीनां सर्वेष्वप्यर्थेष्वव्यक्तमेव ज्ञानं भवति, एवमतिप्रकृष्टावरणोदयादेकेन्द्रियाणामपि । तत शुद्धतरं शुद्धतमं द्वीन्द्रियादीनामपञ्चेन्द्रियसम्मूर्च्छजस्य, तत सर्वस्पष्टतमं संज्ञिनामिति । आह—कुत पुनश्चैतन्ये समानेऽपि जन्तूनामिदमुपलब्धिनानात्वम् ? । उच्यते—सामर्थ्यभेदात्; स च क्षयोपशमवैचित्र्यात् ।

एतदेवाह—

तुल्ले छेयगभावे, जं सामत्थं तु चक्करयणस्स ।
नं तु जहक्कमहीणं, न होइ सरपत्तमाईणं ॥ ५१३
ईय मणोविसईणं, जा पडुया होइ उग्गहाईसु ।
तुल्ले चेयणभावे, अस्स(स)ण्णीणं न सा होइ ॥ ५१४ ॥

इह यथा तुल्येऽपि छेदकभावे चक्रवर्तिसंबन्धिनश्चक्ररत्नस्य यच्छेदनसामर्थ्यं तदन्येषां खड्ग-दात्र-शरपत्रादीनां छेदकवस्तूनां न भवत्येव । कुतः ?, इत्याह—यतो यथाक्रमहीनं क्रमशो हीयमानमेव तत् तेष्विति । प्रकृते योजयन्नाह—' ईय ' त्ति दीर्घत्वं प्राकृतत्वात्, इत्येवं चैतन्ये

तुल्येऽपि मनोविषयित्वे संज्ञिनामवग्रहेहादिषु यावत्स्ववबोधापटुना भवति सा तथाविधक्षयोपशमविकलानां यथोक्तदीर्घकालिकसञ्ज्ञारहितानां सन्मूर्च्छजपञ्चेन्द्रिय-विकलेन्द्रियै-केन्द्रियाणामसंज्ञिनां न भवत्येव, क्रमशो हीनत्वादिति।

तदेष कालिकसंज्ञाविषय उपदेशो भणनं प्ररूपणं कालिकोपदेशस्तेन प्रोक्त सञ्ज्ञी । सांप्रतं हेतु , निमित्तं , कारणम् , इत्यनर्थान्तरं , तस्य वदनं वादस्तद्विषय उपदेश· प्ररूपणं हेतुवादोपदेशस्तेन संज्ञिनमसंज्ञिनं चाभिधित्सुराह--

जे पुण संचिंतेउं, इट्ठा-णिट्ठेसु विसयवत्थूसुं ।
वट्टंति नियट्टंति य, सदेहपरिपालणाहेउं ॥५१५॥
पाएण संपए चिय, कालम्मि न याइदीहकालएणा ।
तें हेउवायसरणी, निच्चेट्ठा होंति असरणणी ॥५१६॥

ये पुनः संचिन्त्य सचिन्त्य इष्टानिष्टेषु छाया-तपा-हारादिविषयवस्तुषु मध्ये स्वदेहपरिपालनाहेतोरिष्टेषु वर्तन्ते , अनिष्टेभ्यस्तु तेभ्य एव निवर्तन्ते , प्रायेण च सांप्रतकाल एव , न त्वतीता-नागतकालावलम्बिन , प्रायोग्रहणात् , केचिदतीता-ऽनागनावलम्बिनोऽपि नातिदीर्घकालानुसारिण , ते द्वीन्द्रियादयो हेतुवादोपदेशेन संज्ञिनो विज्ञेया । तथाहि--सञ्ज्ञिनो द्वीन्द्रियादय , संचिन्त्य संचिन्त्य हेयोपादेयेषु निवृत्ति-प्रवृत्ते , देवदत्तादिवदिति । तदेवं हेतुवादिनोऽभिप्रायेण निश्चेष्टा पृथिव्यादय एवाऽसज्ञिन इति ।

अथ दृष्टिर्दर्शनं सम्यक्त्वादि तस्य वदनं वादस्तद्विषय उपदेशः प्ररूपणं तेन सञ्ज्ञिनमसञ्ज्ञिनं च प्ररूपयन्नाह--

सम्मद्दिट्ठी सरणी, संते नाणे खओवसमियम्मि ।
असरणी मिच्छत्त-म्मि दिट्ठिवाओवएसेण ॥५१७॥

दृष्टिवादोपदेशेन क्षायोपशमिकज्ञाने वर्तमान सम्यग्दृष्टिरेव संज्ञी,विशिष्टसंज्ञायुक्तत्वात् , मिथ्यादृष्टिस्त्वसञ्ज्ञी,विपर्यस्तत्वेन वस्तुत संज्ञारहितत्वादिति।

आह-यदि विशिष्टसंज्ञायुक्तत्वात् सम्यग्दृष्टि· संज्ञीष्यते , तर्हि किमिति क्षायोपशमिकज्ञाने वर्तमानोऽसौ गृह्यते ? । क्षायिकज्ञाने हि तस्य विशिष्टतराऽसौ प्राप्यते । ततस्तद्वृत्तिरप्यसौ किं नाङ्गीक्रियते, येनोच्यते--' संते नाणे खओवसमियम्मि ' इति ? । एतदाशङ्क्य पूर्वमुत्तरमाह-

खयनाणी किं सरणी, न होइ होइ व खओवसमनाणी ।
सरणा सरणमणागय-चिंता य न सा जिणे जम्हा॥५१८

आवरणस्य सर्वथैव क्षयेण ज्ञानी क्षयज्ञानी , केवलीत्यर्थ , असौ संज्ञी किमिति न भवति ? , किमर्थं च क्षायोपशमिकज्ञानी सज्ञी भवतीति व्याख्यायते भवता ? । एवं परेणोक्ते सत्याह--' सरणेत्यादि ' केवली संज्ञी न भवति , यतोऽतीतार्थस्य स्मरणम् , अनागतस्य च चिन्ता संज्ञोच्यते, सा च जिने केवलिनि नास्तीति , सर्वदा सर्वार्थावभासकत्वेन केवलिना स्मरण--चिन्ताद्यतीतत्वात् । इति क्षायोपशमिकज्ञान्येव सम्यग्दृष्टि संज्ञीति ।

पुनरपि प्रकारान्तरेणाऽऽह पर --

मिच्छो हियाहियविभा-गनाणसरणासमरिणओ कोइ।
दीसइ सो किमसरणी,सरणा जममोहणा तस्स ५१६॥

ननु मिथ्यादृष्टिरपि कश्चिदैहिकार्थविषयहिता-ऽहितविभागज्ञानात्मकस्पष्टसंज्ञासमन्वित एव दृश्यते, तत किमित्यसौ सज्ञी न भवति, येन दृष्टिवादोपदेशेनाऽयमसञ्ज्ञी प्रोच्यते ? इति । गुरुराह—यद्-यस्मादशोभना कुत्सिता तस्य मिथ्यादृष्टे संज्ञा, तेन सत्याऽपि तयाऽयमसंज्ञीति ।

आह-ननु यद्यप्यशोभनाऽस्य संज्ञा, तथापि कथं तस्या अभाव· ?, इत्याह—

जह दुव्वयणमवयणं, कुच्छियसीलं असीलमसईए ।
भरणइ तह नाणं पि हु, मिच्छद्दिट्ठिस्स अरणाणं ॥५२०॥

यथा दुर्वचन कुत्सित वचनं सदप्यवचनं लोके भण्यते , असत्याश्च सबन्धि कुत्सितं शीलं विद्यमानमप्यशील यथाऽभिधीयते, तथा मिथ्यादृष्टर्ज्ञानमपि मिथ्यादर्शनोदयपरिग्रहादज्ञानं बम्भण्यते, संज्ञाऽप्यसंज्ञोच्यत इत्यर्थ· ।

कस्मात् पुनस्तस्य ज्ञानमप्यज्ञान भवति ?, इत्याह-

सदसदविसेसणाओ, भवहेउजहिच्छिओवलंभाओ ।
नाणफलाभावाओ, मिच्छद्दिट्ठिस्स अरणाणं ॥५२१॥

प्राग् व्याख्यातार्थैव ।

आह-ननु देव-नारक-गर्भजतिर्यङ्-मनुष्यलक्षणो मिथ्यादृष्टिर्दीर्घकालिकीं संज्ञामाश्रित्य दृष्टिवादोपदेशसंज्ञाविचारेऽपि संज्ञी कस्माद् नोच्यते ? , इत्याह--

ऊहो न हेउए हे-उई न कालम्मि भराई सरणा ।
जह कुच्छियत्तणाओ, तह कालो दिट्ठिवायम्मि॥५२२॥

यथा ऊह पृथिव्यादीना सबन्धिनी; ओघमात्रसंज्ञेत्यर्थ , न ' हेउए' त्ति हेतुवादसंज्ञाया विचार्यमाणायां कुत्सितत्वात् संज्ञा भण्यते,यथा वा 'कालम्मि ' त्ति दीर्घकालिकसंज्ञाया विचार्यमाणायां कुत्सितत्वेन हैतुकी संज्ञा न भण्यते , तथा 'कालो' त्ति दीर्घकालिक्यपि संज्ञा दृष्टिवादोपदेशसंज्ञायां विचार्यमाणायां कुत्सितत्वादेव सज्ञा न भण्यत । अतो नेह देवादिरपि मिथ्यादृष्टि संज्ञीति भाव· ।

तदेवं दीर्घकालिक-हेतुवाद-दृष्टिवादोपदेशन त्रिविधां संज्ञा निरूप्य , अथैतासा मध्ये कस्य जन्तो का भवति ? , इति निरूपयिषुमाह—

पंचरहमूहसरणा, हेउसरणा बेइंदियाईणं ।
सुर-नारय-गब्भुब्भव-जीवाणं कालिगी सरणा ॥५२३॥
छउमत्थाणं सरणा, सम्मद्दिट्ठीण होइ सुयनाणं ।
मइवावारविमुक्का, सराईआ उ केवलिणो ॥५२४॥

पञ्चानां पृथिव्य-प्तेजोवायु-वनस्पतीनामूहसंज्ञा वृत्त्यारोहणाद्यभिप्रायरूपौघसज्ञा भवति। आह--ननु त्रिविधसज्ञामध्येऽत्रेयमूहसंज्ञा नोक्तैव, अत एवैकेन्द्रिया इह सर्वथैवाऽसंज्ञिन एव, तुच्छत्वात् कुत्सितत्वाच्च तत्संज्ञाया , इति भवतैवोक्तमेव प्राक् , तत्कथमत्र· स्वामित्वप्ररूपणाया- मियमेतेषा संज्ञा प्रोक्ता ? । सत्यम् , किन्त्वेकेन्द्रियाणामेवैवोहसज्ञा भवति, न तु हेतुवादादिसंज्ञा, इत्ययमेतत्संज्ञात्रयनिषेधप्रधानोऽयं निर्देशो द्रष्टव्यो न तु विधिप्रधान । एतस्याश्चोहसंज्ञाया यथा सत्त्वात्तथा प्रागेवोक्तमिति । भवत्वेवम् , तथाऽप्येकेन्द्रियाणामाहार--क्रोधादिका सज्ञा

दशविधा समये प्रोक्ता, तत्कथमेकैवोहसंज्ञाऽत्रैषामुक्ता ? सत्यम्, वल्ल्यादिष्वियं व्यक्तत्वोपलम्भेन किञ्चिदिति शेषोपलक्षणार्थमेवैव निर्दिष्टा, इत्यलं प्रसङ्गेनेति। द्वि-त्रि-चतुरिन्द्रिय-सम्मूर्छनजपञ्चेन्द्रियाणां तु हेतुवादसंज्ञा प्राप्यते। देवनारकाणां गर्भज-तिर्यङ्-मनुष्याणां च कालिकी संज्ञेति। दृष्टिवादोपदेशेन छद्मस्थजन्तूनां सम्यग्दृष्टीनामेव संज्ञा प्राप्यते। ततश्च 'तया यच्छ्रुतज्ञानं तत् संज्ञिश्रुतं भवति' इत्यध्याहारः। एवं च सति स्मरण-चिन्तादिमति-श्रुतव्यापाररहिता अवस्था, सिद्धिगताश्च केवलिन एव संज्ञातीता संज्ञारहिता, शेषजन्तूनां केषाचित् कस्याश्चित् संज्ञाया उक्तत्वादिति भाव इति।

अत्राह परः—

मोत्तूण हेउ-कालिय, सम्मत्तकमं जहुत्तरविसुद्धं।
किं कालिओवएसो, कीरइ आईएँ सुत्तम्मि ॥ ५२५ ॥

नन्वविशुद्धत्वात् प्रथमं हेतुवादसंज्ञा, ततो विशुद्धत्वात् कालिकसंज्ञा, ततोऽपि विशुद्धतरत्वाद् दृष्टिवादसंज्ञा, इत्येव यथोत्तरविशुद्धमसुं क्रमं मुक्त्वा किं कालिकसंज्ञोपदेश आदौ प्रथमं सूत्रे नन्दिलक्षणे क्रियते ?, तथा च भवताऽपि तदनुरोधेन पूर्वमुक्तम्—' सा सण्णा होइ निहा कालिय-हेउ-दिट्ठिवाओवएसेणं ' इति।

अत्रोत्तरमाह—

सण्णि त्ति असण्णि त्ति य, सव्वसुए कालिओवएसेणं।
पायं संववहारो, कीरइ तेणाइए स कओ ॥ ५२५ ॥

इह सर्वस्मिन्नपि श्रुत-आगमे योऽयं 'संज्ञा' इति व्यवहारः स सर्वोऽपि प्रायो बाहुल्येन कालिकोपदेशेनैव क्रियते। तेनाऽऽदौ स एव कालिकोपदेशः कृतः। इदमुक्तं भवति—यतः स्मरण-चिन्तादिदीर्घकालिकज्ञानसहितः समनस्कपञ्चेन्द्रियः संज्ञीत्यागमे व्यवह्रियते, असंज्ञी तु प्रसह्यप्रतिषेधमाश्रित्य यद्यप्येकेन्द्रियादिरपि लभ्यते, तथापि समनस्कसंज्ञी तावत् पञ्चेन्द्रिय एव भवति। ततः पर्युदासाश्रयणादसंज्ञ्यप्यमनस्कसम्मूर्छनजपञ्चेन्द्रिय एवाऽऽगमे प्रायो व्यवह्रियते। तदेवंभूतः संज्ञा-संज्ञिव्यवहारो दीर्घकालिकोपदेशेनैवोपपद्यते। अतः प्रथमं स एव सूत्रे, तदनुरोधेनाऽत्र च निर्दिष्टः। इति त्रयोविंशतिगाथार्थः। विशे०।

अनन्तानुबन्धिकषायचतुष्टयक्षयानन्तरं मिथ्यात्व-मिश्रसम्यक्त्वपुद्गलक्षणे त्रिविधेऽपि दर्शनमोहनीये सर्वथा क्षीणे क्षायिकं सम्यक्त्वं भवतीति। तदेवमेतत्सम्यक्त्वपञ्चकपरिग्रहात् सम्यक्श्रुतम्, मिथ्यात्वपरिग्रहात्तु मिथ्याश्रुतं भवतीति प्रतिपत्तव्यमिति। विशे०।

अत्राह-ननु कियत् सम्यक्श्रुतमेव भवति ?, कियच्च मिथ्याश्रुतम् ?, शेषस्य च मत्यादिज्ञानचतुष्टयस्य मध्ये मिथ्यात्वोदयात् कस्य विपर्यासो भवति ?, कस्य च न ?, इत्याशङ्कयाह—

चोद्दस दस य अभिन्ने, नियमा सम्मत्तसेसए भयणा।
मइओहिविवज्जासे, वि होइ मिच्छं न उण सेसे ॥५३४॥

चतुर्दशपूर्वेभ्य आरभ्य यावत् संपूर्णदशपूर्वाणि तावद् नियमात् सम्यक्श्रुतमेव भवति, न मिथ्याश्रुतम्—एतावच्छ्रुतसद्भावे सम्यग्दृष्टिरेव भवति न मिथ्यादृष्टिरिति भावः। 'सेसए भयण' त्ति-शेषे भिन्नदशपूर्वादिके सामायिकपर्यन्ते श्रुते भजना—विकल्पना एतच्छ्रुतसद्भावे कोऽपि सम्यग्दृष्टिः, कश्चित्तु मिथ्यात्वोदयाद् विपर्यस्तो मिथ्यादृष्टिरपि भवति। ततश्चैतत् श्रुतं सम्यक्त्वपरिग्रहात् सम्यक्श्रुतं, मिथ्यात्वोदयाद् मिथ्याश्रुतमपि स्यादिति भावः। मत्य-वधिविपर्यासेऽपि मिथ्यात्वं मिथ्यात्वोदयो भवति, न पुनः शेषे—मनःपर्याय-केवलज्ञानद्वये। इदमुक्तं भवति-मिथ्यात्वोदयाद् मतिज्ञानं विपर्यस्तं सद् मत्यज्ञानं भवति, अवधिरपि तदुदयाद् विपर्यासमापन्नो विभङ्गपदव्यपदेशं लभते, मनःपर्याय—केवलज्ञाने तु कदापि मिथ्यात्वोदयाद् विपर्यासं न गच्छतः, तत्सद्भावे तदुदयस्यैवाऽसंभवात्। मनःपर्यायज्ञानं हि चारित्रिण एव भवति, केवलज्ञानं तु क्षीणघातिचतुष्टयस्य, इति कुतस्तद्भावे मिथ्यात्वोदयः ? इति। एतच्चेह मिथ्यात्वोदयसंभवाऽसंभवप्रस्तावादनुपक्तं एवोक्तम्, प्रस्तुतं पुनरत्र सम्यग्मिथ्याश्रुतमेवेति।

अत्र किल परः किंचित् प्रेरयति—

तत्तावगमसहावे, सइ सम्मसुयाण को पइविसेसो ?।
जह नाणदंसणाणं, भओ तुल्लेऽववोहम्मि ॥ ५२५ ॥
नाणमवाय धिईओ, दंसणमिट्ठं जहोग्गहेहाओ।
तह तत्तरुई सम्मं, रोइज्जइ जेण तं नाणं ॥ ५२६ ॥

उभयत्रापि तत्त्वावगमस्वभावत्वे तुल्ये सति कः सम्यक्त्व—श्रुतयोः प्रतिविशेषः, येनोच्यते—' सम्यक्त्वपरिग्रहात् सम्यक्श्रुतम् ' इति ?। इदमुक्तं भवति—'रागादिदोषरहित एव देवता, तदाज्ञापारतन्त्र्यवृत्तय एव गुरवः, जीवादिकमेव तत्त्वम्, जीवोऽपि नित्याऽनित्याद्यनेकस्वभावः, कर्ता, भोक्ता, मिथ्यात्वादिहेतुभिः कर्मणा बध्यते, तपः-'संयमाऽऽदिभिस्तु यतो मुच्यते' इत्यादिबोधात्मकमेव सम्यक्त्वमुच्यते, श्रुतमप्येवमाद्यभिलापात्मकमेव, तदनयोः को विशेषः, येनोच्यते—'सम्यक्त्वपरिगृहीतं सम्यक्श्रुतम्' इति ?। अत्रोत्तरमाह-' जह 'त्यादि यथा वस्त्ववबोधरूपत्वे तुल्येऽपि कथंचिज्ज्ञान—दर्शनयोर्भेदः, तथा तत्त्वावगमस्वभावे तुल्येऽपि सम्यक्त्व—श्रुतयोरिहाऽपि कश्चिद्भेदः। कथं पुनर्ज्ञान—दर्शनयोरन्यत्र तावद् भेद उक्तः ?, इति चेत्। इत्याह—' नाणे ' त्यादि यथाऽपायश्च धृतिश्चाऽपायधृती, एते वचनपर्यायग्राहकत्वेन विशेषावबोधस्वभावत्वाज्ज्ञानमिष्टम्, अवग्रहश्चेहा चाऽर्थपर्यायविषयत्वेन सामान्यावबोधाद् दर्शनम्, तथाऽत्रापि जीवादितत्त्वविषया रुचिः श्रद्धानं सम्यक्त्वं भण्यते, येन पुनस्तज्जीवादितत्त्वं रोच्यते—श्रद्धीयते तज्ज्ञानम्। अयमत्राभिप्रायः—दर्शनमोहनीयकर्मक्षयोपशमादिना या तत्त्वश्रद्धानात्मिका तत्त्वरुचिरुपजायते; तया तत्त्वश्रद्धानात्मकं जीवादितत्त्वरोचकं विशिष्टं श्रुतं जन्यते, ततस्तत् श्रुतज्ञानव्यपदेशं परिहृत्य श्रुतज्ञानसंज्ञा समासादयति। एवं च सति परो मन्यते-विशिष्टतत्त्वावगमस्वरूपं श्रुतमेव सम्यक्त्वं, न पुनस्ततोऽतिरिक्तं किञ्चिदुपलभ्यते, इति कथ-

मुच्यते-' सम्यक्त्वपरिग्रहात् सम्यक्श्रुतम् ' इति ?। सिद्धान्तवादी तु मन्यते-यथा ज्ञानदर्शनयोर्वस्तववबोधरूपतयैकत्वेऽपि विशेषसामान्यवस्तुग्राहकत्वेन भेद , तथाऽत्रापि शुद्धतत्त्वावगमरूपे श्रुते तत्त्वश्रद्धानाश. सम्यक्त्व , तद्विशिष्टं तु तत्त्वगोचरकं श्रुतज्ञानमित्यनयोर्भेद'। एतयोश्च सम्यक्त्व-श्रुतयोर्युगपल्लाभेऽपि कार्यकारणभावाद् भेद. ।

उक्तं च—

" कारण कज्जविभागो, दीवपगासाण जुगवजम्मे वि ।
जुगवुप्पन्न पि तहा, हेऊ नाणस्स सम्मत्तं ॥ १ ॥
जुगवं पि समुप्पन्न, सम्मत्तं अहिगम विसोहेइ ।
जह कयगमंजणाइ जलवुट्ठीश्रो विसोहिंति ॥ २ ॥ "

अतो युक्तमुक्तम् ' सम्यक्त्वपरिगृहीतं सम्यक्श्रुत, विपर्ययात्तु मिथ्याश्रुतम् ' । इति गाथादशकार्थ. । विशे० ।

सोच्चा व अभिसमेच्च य, तत्तरुई चेव होति सम्मत्तं ।
तत्थेव य जा विरुई, इतरत्थ रुई य मिच्छत्तं ॥

श्रुत्वा केवलिप्रभृतीनामुपदेशमिति समेत्य वा जातिस्मरणादिना या तत्त्वेषु रुचिर्भवति सा सम्यक्त्व , वा तत्रैव तत्त्वेषु विरुचिरितरेष्वतत्त्वेषु रुचि सा मिथ्यात्वमिति । उक्त सम्यक्त्वश्रुतं, मिथ्यात्वश्रुतं च । बृ० १ उ० १ प्रक० ।

से किं तं साइअं सपज्जवसिअं, अणाइअं अपज्जवसिअं च ?, इच्चेइयं दुवालसंगं गणिपिडगं वुच्छित्तिनयट्ठयाए साइअं सपज्जवसिअं , अवुच्छित्तिनयट्ठयाए अणाइअं अपज्जवसिअं । ( सू०-४२× )

अथ किं तत्सादि सपर्यवसितमनादि, अपर्यवसितं च ?। तत्र सद्दादिना वर्तते इति सादि, तथा पर्यवसानं पर्यवसितं, भावे क्तप्रत्यय . सह पर्यवसितेन वर्तते इति सपर्यवसितम्, आदिरहितमनादि, न पर्यवसितमपर्यवसितम् आचार्य आह-इत्येतद्द्वादशाङ्ग गणिपिटकं ' वोच्छित्तिनयट्ठयाए ' इत्यादि , व्यवच्छित्तिप्रतिपादनपरो नयो व्यवच्छित्तिनय ; पर्यायास्तिकनय इत्यर्थ तस्यार्थो व्यवच्छित्तिनयार्थ , पर्याय इत्यर्थ , तस्य भावो व्यवच्छित्तिनयार्थता , तया पर्यायापेक्षयेत्यर्थ , किमित्याह-सादिसपर्यवसितं नारकादिभवपरिणत्यपेक्षया जीव इव , ' अवुच्छित्तिनयट्ठयाए ' त्ति-अव्यवच्छित्तिप्रतिपादनपरो नयोऽव्यवच्छित्तिनयस्तस्यार्थ अव्यवच्छित्तिनयार्थ ; द्रव्यमित्यर्थ । तद्भावस्तत्ता तया, द्रव्यापेक्षया इत्यर्थ । किमित्याह-अनादि अपर्यवसित त्रिकालावस्थायित्वाज्जीववद् । नं० ।

इदानीं सादि सपर्यवसित च श्रुतं सप्रतिपक्षमुच्यते--

अत्थि त्ति नयस्सेयं , अणाइपज्जंतमत्थिकाय व्व ।
इयरस्स साइ संतं, गइपज्जाएहि जीवो व्व ॥ ५३७ ॥

अस्तीति नयो नित्यवादी द्रव्यास्तिकस्तस्याभिप्रायेणेद द्वादशाङ्गश्रुतमनादि, अपर्यन्तं च, नित्यत्वात् , पञ्चास्तिकायवत् , तथाहि—यैर्जीवद्रव्यै श्रुतमिदमधीतं, यान्यधीयन्ते यानि चाध्येष्यन्ते , तानि तावद् न कदापि व्यवच्छिद्यन्ते, इति तेषामनादिता, अपर्यन्तता च । तत श्रुतस्यापि तत्पर्यायभूतस्य तदव्यतिरेकात् तद्रूपतैव । न हि सर्वथाऽसत् क्वाप्युत्पद्यते, सिकतास्वपि तैलाद्युत्पत्तिप्रसङ्गात् । नापि सतोऽत्यन्तोच्छेद , सर्वशून्यतापत्ते । यदि हि यद् यदेव—नारकादिक घट—पटादिक च विनश्यति तत् तद्यदि सर्वथा निरन्वयमपैति, तदा कालस्याऽपर्यवसितत्वात् क्रमेण सर्वस्याऽपि जीवपुद्गलराशेर्व्यवच्छेदात् सर्वमेव विश्वं शून्यं स्यात् । तस्माच्छ्रुताधारद्रव्याणां सर्वदैव सत्त्वात् तदव्यतिरेकिणस्तस्यापि तद्रूपतैवेति स्थितम् । इतरस्य व्यवच्छित्तिनयस्याऽनित्यवादिन. पर्यायास्तिकस्य मतेन सादि, सपर्यन्तं च श्रुतम् , अनित्यत्वाज्जीवस्य, नारकादिगतिपर्यायवत् ; तथाहि—श्रुतज्ञानिनां निरन्तरमपरापरे द्रव्याद्युपयोगा प्रसूयन्ते, प्रलीयन्ते च । न च तेभ्योऽन्यत् किमपि श्रुतमस्ति, तत्कार्यभूतस्य जीवादितत्त्वावबोधस्याऽन्यत्राऽदर्शनात् , तदनुपलम्भेऽपि तत्कल्पनायामतिप्रसङ्गात् । द्रव्यादिषु च श्रुतोपयोग. सादि सपर्यवसित एवेति ।

अथवा नयविचारमुत्सृज्य द्रव्य-क्षेत्र-काल-भावानाश्रित्यदं साद्यादिस्वरूपं चिन्त्यत इति । एतदाह—

दव्वाइणा व साइय-मणाइयं संतमंतरहियं वा ।
दव्वम्मि एगपुरिसं, पडुच्च साइं सनिहणं च ॥५३८॥

द्रव्यादिना वा द्रव्यक्षेत्रकालभावैर्वा श्रुत सादिकमनादिकं, सान्तमनन्तं च भवति । इह च द्रव्यत. श्रुतमेकं बहूनि च पुरुषद्रव्याण्याश्रित्य चिन्तनीयम् । तत्रैकपुरुष द्रव्यमङ्गीकृत्य तावदाह—' दव्वम्मी ' त्यादि द्रव्यत एकपुरुष प्रतीत्य सादि सनिधनं च श्रुत भवति । विशे० ।

आह पर केन पुन. कारणेन अक्षरानक्षरश्रुते प्रथममुपात्ते तत आह—

सुणेतीति सुयं तेणं,सवणं पुण अक्खरेयरं चेव ।
तेणक्खरे तरं वा, सुयनाणे होति पुव्वं तु ॥१५०॥

इह हि यस्मात्प्रतिपत्तेर्यदुच्यमानं शृणोति तेन-कारणेन तत् श्रुतमित्युच्यते , श्रूयते इति श्रुतमिति व्युत्पत्ते । श्रवण पुनरक्षरस्य वाऽनक्षरस्य तेन श्रुतज्ञान प्ररूप्यमाणे पूर्वमक्षरमनक्षर वोपात्तमिति । बृ० १ उ० १ प्रक० ।

से किं तं गमिअं ?, दिट्ठिवाओ, अगमिअं कालिअं सुअं, सेत्तं गमिअं, सेत्तं अगमिअं । अहवा-तं समासओ दुविहं पण्णत्तं, तं जहा-अंगपविट्ठं, अंगबाहिरं च । से किं तं अंगबाहिरं ?, अंगबाहिरं दुविहं पण्णत्तं, तं जहा-आवस्सयं च, आवस्सयवइरित्तं च । से किं तं आवस्सयं ? आवस्सयं छव्विहं पण्णत्तं । तं जहा-सामाइअं चउवीसत्थओ वंदणयं पडिक्कमणं काउस्सग्गो पच्चक्खाणं, सेत्तं आवस्सयं । से किं तं आवस्सयवइरित्तं ?, आवस्सयवइरित्तं दुविहं पण्णत्तं, तं जहा-कालिअं च, उक्कालिअं च । ( सू० ४३ × )

अथ किं तद्गमिकम् ?, इहादिमध्यावसानेषु किञ्चिद्विशेषतो भूयो भूयस्तस्यैव सूत्रस्योच्चारण गम , तत्रादौ—" सुयं मे आउसतेण भगवया एवमक्खायं इह खलु " इत्यादि, एवं म-

द्यावसानयोरपि यथासम्भवं द्रष्टव्यं, गमा अस्य विद्यन्ते इति गमिकम्, 'अतोऽनेकस्वरात्' ।७।२।६। इति मत्वर्थीय इकप्रत्यय। उक्तं च चूर्णौ—आइए मज्झेऽवसाणे वा किंचि विसेसजुत्तं दुगाइसयग्गसो तमेव पढिज्जमाणं गमियं भन्नइ त्ति, तच्च गमिकं प्रायो दृष्टिवाद, तथा चाह—'गमियं दिट्ठीवाओ' तद्विपरीतमगमिकं, तच्च प्राय आचारादि कालिकश्रुतम् असदृशपाठात्मकत्वात् । तथा चाह—'अगमियं कालियसुयं' 'सेत्त' मित्यादि, तदेतद्गमिकमगमिकं च। 'तं समासओ' इत्यादि, तद्गमिकमगमिकं च, अथवा तत्—सामान्यत श्रुतमर्हदुपदेशानुसारि समासत—संक्षेपेण द्विविधं प्रज्ञप्तं, तद्यथा—अङ्गप्रविष्टमङ्गबाह्यं च। अत्राह—ननु पूर्वमेव चतुर्दशभेदोद्देशाधिकारेऽङ्गप्रविष्टमङ्गबाह्यं चेत्युपन्यस्तं तत्किमर्थं भूयस्तत्समासत इत्याद्युपन्यासेन तदेव न्यस्यते इति ?, उच्यते—इह सर्व एव श्रुतभेदा अङ्गानङ्गप्रविष्टरूपे भेदद्वये एवान्तर्भवन्ति, तत एतदर्थस्यापनार्थं भूयोऽप्युद्देशनाभिधानम्। अथवाऽङ्गानङ्गप्रविष्टमर्हदुपदेशानुसारि तत प्राधान्यस्थापनार्थं भूयोऽपि तस्योद्देशनाभिधानमित्यदोष, तत्राङ्गप्रविष्टमिति। ( नं० ) तत्राल्पवक्तव्यत्वात्प्रथममङ्गबाह्यमधिकृत्य प्रश्नसूत्रमाह-'से किं त' मित्यादि. अथ किं तदङ्गबाह्यं ?, सूरिराह—अङ्गबाह्यं श्रुतं द्विविधं प्रज्ञप्तं, तद्यथा-आवश्यकं चावश्यकव्यतिरिक्तं च। तत्रावश्य कर्म्म आवश्यकम्, अवश्यकर्त्तव्यक्रियानुष्ठानमित्यर्थ, अथवा-गुणानामभिविधिना अवश्यमात्मानं करोतीत्यावश्यकम्—अवश्यकर्त्तव्यसामायिकादिक्रियानुष्ठानं तत्प्रतिपादकं श्रुतमपि आवश्यकं चशब्द स्वगतानेकभेदसूचक। 'से किं तं' मित्यादि. अथ किं तदावश्यकम् ?, सूरिराह—आवश्यकं षड्विधं प्रज्ञप्तं, तद्यथा—'सामायिक मित्यादि निगदसिद्धं, 'सेत्त' मित्यादि तदेतदावश्यकं 'से किं त' मित्यादि, अथ किं तदावश्यकव्यतिरिक्तम्?,आचार्य आह—आवश्यकव्यतिरिक्तं द्विविधं प्रज्ञप्तं तद्यथा—कालिकम् उत्कालिकं च। तत्र यद्दिवसनिशाप्रथमपश्चिमपौरुषीद्वय एव पठ्यते तत्कालिकं, कालेन निर्वृत्तं कालिकमिति व्युत्पत्ते, यत्पुन कालवेलावर्ज्जं पठ्यते तदुत्कालिकम्,आह च चूर्णिकृत्-'तत्थ कालियं जं दिणराईए (प) ण पढमचरमपोरिसीसु पढिज्जइ। जं पुण कालवेलावज्जं पढिज्जइ त उक्कालियं" ति, तत्राल्पवक्तव्यत्वात्प्रथममुत्कालिकमधिकृत्य प्रश्नसूत्रमाह—'से किं त' मित्यादि, अथ किं तदुत्कालिकं श्रुतं? सूरिराह—उत्कालिकं श्रुतमनेकविध प्रज्ञप्तं, तद्यथा—दशवैकालिकं तच्च सुप्रतीतं, तथा कल्पाकल्पप्रतिपादकमध्ययनं कल्पाकल्पं, तथा कल्पन कल्प—स्थविरादिकल्प तत्प्रतिपादकं श्रुतं कल्पश्रुत,तत्पुनर्द्विभेदं तद्यथा— चुल्लकप्पसुयं, महाकप्पसुयं' एकमल्पग्रन्थमल्पार्थं च. द्वितीय महाग्रन्थं महार्थं च शेषा ग्रन्थविशेषा प्राय सुप्रतीता, तथापि लेशतोऽप्रसिद्धान् व्याख्यास्याम। तत्र 'पण्णवणं' त्ति जीवादीनां पदार्थानां प्रज्ञापनं प्रज्ञापना,सैव बृहत्तरा महाप्रज्ञापना. तथा प्रमादाप्रमादस्वरूपभेदफलविपाकप्रतिपादकमध्ययनं प्रमादाप्रमादम्।तत्र प्रमादस्वरूपमेवं-प्रचुरकर्मेन्धनप्रभवनिरन्तरविध्यातशारीरमानसानेकदु सहदुःखवह्न्वालाकलापपरीतमशेषमेव-

संसारवासगृहं पश्यंस्तन्मध्यवर्त्त्यपि सति च तन्निर्गमनोपाये वीतरागप्रणीतधर्म्मचिन्तामणौ यतो विचित्रकर्मोदयसाचिव्यजनितात् परिणामविशेषादपश्यन्निव तद्भयमविगणय्य विशिष्टपरलोकक्रियाविमुख एवास्ते जीव स खलु प्रमाद, तस्य च प्रमादस्य, ये हेतवो मद्यादयस्तेऽपि प्रमादास्तत्कारणत्वात्, उक्तं च—" मज्जं विसय कसाया निद्दा विगहा य पंचमी भणिया। एए पंच पमाया जीवं पाडेंति संसारे ॥ १ ॥" एतस्य च पञ्चप्रकारस्यापि प्रमादस्य फलं दारुणो विपाक, उक्तं च—

' श्रेयो विषमुपभोक्तुं, क्षमं भवेत् क्रीडितुं हुताशेन।
संसारबन्धनगतै-र्न तु प्रमाद क्षम कर्तुम् ॥ १ ॥
अस्यामेव हि जातौ, नरमुपहन्याद्विषं हुताशो वा।
आसेवित प्रमादो, हन्याज्जन्मान्तरशतानि ॥ २ ॥
यत्र प्रयान्ति पुरुषा, स्वर्गं यच्च प्रयान्ति विनिपातम्।
तत्र निमित्तमनार्य, प्रमाद इति विनिश्चतमिदं मे ॥ ३ ॥
संसारबन्धनगतो, जातिजराव्याधिमरणदु खार्त्त ।
यन्नोद्विजते सत्त्व, सोऽप्यपराध प्रमादस्य ॥ ४ ॥
आज्ञाप्यते यद्वशे-स्तुल्योदरपाणिपादवदनेन।
कर्म च करोति बहुविध-मतदपि फलं प्रमादस्य ॥ ५ ॥
इह हि प्रमत्तमनस, सोन्मादमदनिभृतेन्द्रियाश्चपला।
यत्कृत्यं तदकृत्वा, सततमकार्येऽष्वभिपतन्ति ॥ ६ ॥
तेषामभिपतितानां-मुद्भ्रान्तानां प्रमत्तहृदयानाम्।
वर्द्धन्त एव दोषा वनतरव इवाम्बुसेकेन ॥ ७ ॥
दृष्ट्वाऽप्यालोकं नैव विश्रम्भितव्यं,
तीरं नीतापि भ्राम्यति वायुना नौ।
लब्ध्वा वैराग्यं भ्रष्टयोग प्रमादा-
द्भूयो भूय संसृतौ बम्भ्रमीति ॥ ८ ॥"

एवं प्रतिपक्षद्वारेणाप्रमादस्यापि स्वरूपादयो वाच्या, 'नन्दी' त्यादि सुगमं, सूरियपन्नत्ति' त्ति सूर्यचर्याप्रज्ञपनं यस्यां ग्रन्थपद्धतौ सा सूर्यप्रज्ञप्ति तथा 'पौरुषीमण्डल' मिति पुरुष-शङ्कु पुरुषशरीरं वा तस्माज्जिष्पन्ना पौरुषी 'तत आगते' ॥६।३।१४६॥ इत्यण्. आह च चूर्णिकृत्—'पुरिसो त्ति संकू पुरिससरीरं वा, तत्र पुरिसाओ निप्फन्ना पोरिसी' इति इयमत्र भावना-सर्वस्यापि वस्तुनो यदा स्वप्रमाणच्छाया जायते तदा पौरुषी भवति एतच्च पौरुषीप्रमाणमुत्तरायणस्यान्ते दक्षिणायनस्यादौ चैक दिनं भवति. तत परमङ्गुलस्याष्टावेकषष्टिभागा दक्षिणायने वर्द्धन्ते उत्तरायणे च ह्रसन्ति एवं मण्डले मण्डले अन्या अन्या पौरुषी यत्राध्ययने व्यावर्ण्यते तदध्ययनं पौरुषीमण्डलं, तथा यत्राध्ययने चन्द्रस्य सूर्यस्य च दक्षिणेषु उत्तरेषु च मण्डलेषु सञ्चरतो यथा मण्डलात् मण्डले प्रवेशो भवति तथा व्यावर्ण्यते तदध्ययनं मण्डलप्रवेश, तथा 'विद्याचरणविनिश्चय' इति, विद्येति-ज्ञानं, तच्च सम्यग्दर्शनसहितमवगन्तव्यम्, अन्यथा ज्ञानत्वायोगात्, चरणचारित्रमेतेषां फलविनिश्चयप्रतिपादको ग्रन्थो विद्याचरणविनिश्चय, ( नं० ) तथाऽऽत्मनो-जीवस्यालोचनप्रायश्चित्तप्रतिपत्तिप्रवृत्तिप्रकारेण विशुद्धि —कर्मविगमलक्षणा प्रतिपाद्यते यस्यां ग्रन्थपद्धतौ साऽऽत्मविशुद्धि, तथा 'वीतरागश्रुत' मिति सरागव्यपोहेन वीतरागस्वरूपं प्रतिपा-

घते यत्राध्ययने तद्वीतरागश्रुतं, तथा 'सलेखनाश्रुत' मिति द्रव्यभावसंलेखना यत्र श्रुते प्रतिपाद्यते तत्संलेखनाश्रुतं, तत्रौत्सर्गिक इयं द्रव्यसंलेखना-

"चत्तारि विचित्ताइं, विगईनिज्जूहियाइ चत्तारि।
संवच्छरे उ दोन्नि उ, एगंतरियं च आयामं ॥ १ ॥
नाइविगिट्ठो य तवो, छम्मासे परिमियं च आयामं।
अन्नेवि य छम्मासे, होइ विगिट्ठ तवोकम्मं ॥ २ ॥
वासं च कोडिसहियं, आयामं कट्टु आणुपुव्वीए।
गिरिकंदरम्मि गंतु, पायवगमण अह करेइ ॥ ३ ॥"

भावसंलेखना तु क्रोधादिकषायप्रतिपक्षाभ्यास', तथा 'विहारकल्प' इति विहरणं विहार तस्य कल्पो-व्यवस्था स्थविरकल्पादिरूपा यत्र वर्ण्यते ग्रन्थे स विहारकल्पः, तथा 'चरणविधि' रिति चरणं-चारित्रं तस्य विधि-र्यत्र वर्ण्यते स चरणविधि., ( नं० ) 'महाप्रत्याख्यान' मिति महत्प्रत्याख्यानं यत्र वर्ण्यते तन्महाप्रत्याख्यानम्, इह चूर्णिकारेण कृता भावना दर्श्यते-" थेरकप्पेण जिणकप्पेण वा विहरित्ता अंते थेरकप्पिया बारस वासे सलेहणं करेत्ता जिणकप्पियो पुण विहारेणेव संलीढा तहावि जहाजुत्तं संलेहणं करेत्ता निव्वाघाय सचेट्ठा चेव भवचरिमं पच्चक्खति, एवं सवित्थरं जत्थज्झयणे वणिज्जइ तमज्झयणं महापच्चक्खाण' [ वृहट्टीकासत्कमेतत् ]—' एवं तावद्मून्यध्ययनानि-एतान्यध्ययनानि जहाभिहाणत्थाणि-भणियाणि'' सेत्त ' मित्यादि, निगमनं, तदेतदुत्कालिक-मुपलक्षणं चैतदिति उत्क्रमुत्कालिक, ' से किं त ' मित्यादि, अथ किं तत्कालिक ?, कालिकमनेकविधं प्रज्ञप्तं, तद्यथेत्यादि, ' उत्तराध्ययनानि' सर्वाण्यपि चाध्ययनानि प्रधानान्येव तथाऽप्यमून्येव रूढ्योत्तराध्ययनशब्दवाच्यत्वेन प्रसिद्धानि ' दसाओ ' इत्यादि प्रायो निगदसिद्धं, निशीथ' मिति निशीथवन्निशीथम्, इदं प्रतीतमेव, तस्मात्परं यद्ग्रन्थार्थाभ्यां महत्तर तन्महानिशीथं, तथा आवलिकाप्रविष्टानामितरेषां वा विमानानां वा प्रविभक्ति-प्रविभजनं यस्यां ग्रन्थपद्धतौ सा विमानप्रविभक्ति, सा चैका स्तोकग्रन्थार्था द्वितीया महाग्रन्थार्था, तत्राऽऽद्या क्षुल्लिका विमानप्रविभक्ति', द्वितीया महाविमानप्रविभक्ति., तथा 'अङ्गचूलिके' ति अङ्गस्य-आचारादेश्चूलिकाऽङ्गचूलिका, चूलिका नाम उक्तानुक्तार्थसंग्रहात्मिका ग्रन्थपद्धति, तथा 'वर्गचूलिके' ति वर्ग-अध्ययनाना समूहो यथाऽन्तकृद्दशास्वष्टौ वर्गा इत्यादि तेषां चूलिका, तथा व्याख्याभगवती तस्याश्चूलिका व्याख्याचूलिका, ( नं० )।

तथा 'उत्थानश्रुत' मिति, उत्थानम्—उद्वसनं तद्धेतु श्रुतमुत्थानश्रुतं, तच्च शृङ्गनादिते कार्ये उपयुज्यते, अत्र चूर्णिकारकृता भावना--" सज्जेगस्स कुलस्स वा गामस्स वा नगरस्य वा रायहाणीए वा समणे कयसकप्पे आसुरुत्ते चंडिक्किए अप्पसन्ने अप्पसन्नलेसे विसमासुहासणत्थे उवउत्ते समाणे उट्ठाणसुयज्झयणं परियट्टेइ तं च एक्कं दो वा तिण्णि वा वारे ताहे से कुले वा गामे वा जाव रायहाणीए वा ओहयमणसकप्पे विलवते दुयं दुय पहावेंत उद्देइ-उव्वसाति त्ति भणियं होइ" त्ति, तथा 'समुत्थानश्रुत' मिति समुपस्थान—भूयस्तत्रैव वासनं तद्धेतु श्रुत समुपस्थानश्रुत, वकारलोपाच्च सूत्रे "समुट्ठाणसुयं" ति पाठ, तस्य चेयं भावना—" तओ समत्ते कज्जे तस्सेव कुलस्स वा जाव रायहाणीए वा से चेव समणे कयसंकप्पे तुट्ठे पसन्ने पसन्नलेसे समसुहासणत्थे उवउत्ते समाणे समुट्ठाणसुयज्झयणं परियट्टेइ,तं च एक्कं दो तिन्नि वा वारे ताहे से कुले वा गामे वा ०जाव रायहाणीए वा पहट्ठचित्ते पसत्थं मंगलं कलयलं कुणमाणे मंदाए गईए सलालियं आगच्छइ समुवट्ठिए-आवासइत्तिवुत्त भवइ, सम्म उ ( मु ) वट्ठाणसुयं ति घत्तव्वे वकारलोवाओ समुट्ठाणसुयं ति भणियं, तहा जइ अप्पणावि पुव्वुट्ठियं गामाइ भवइ तहावि जइ से समणे एवं-कयसंकप्पे अज्झयणं परियट्टेइ तओ पुणरवि आवासेइ" तथा 'नागपरियावणियं' त्ति-नागाः-नागकुमारास्तेषा परिज्ञा यस्या ग्रन्थपद्धतौ भवति सा नागपरिज्ञा,तस्याश्चेय चूर्णिकृतोपदर्शिता भावना-" जाहे तं अज्झयणं समणे निग्गंथे परियट्टेइ ताहे अकयसंकप्पस्स वि ते नागकुमारा तत्थत्था चेव तं समणं परियाणति-वंदंति नमसंति बहुमाणं च करेंति,सिंगनादितकज्जेसु य वरदा भवंति"तथा'निरयावलियाओ' त्ति-यत्रावलिकाप्रविष्टा इतरे च नरकावासा' प्रसङ्गतस्तद्गामिनश्च नरास्तिर्यञ्चो वा वर्ण्यन्ते ता निरयावलिकाः एकस्मिन्नपि ग्रन्थे वाच्ये बहुवचनशब्द' शक्तिस्वाभाव्यात्, यथा पाञ्चाला इत्यादौ,तथा 'कल्पिका' इति या. सौधर्मादिकल्पगतवक्तव्यतागोचरा ग्रन्थपद्धतयस्ता कल्पिका, एवं कल्पावतंसिका द्रष्टव्या, नवरं तासामियं चूर्णिकृतोपदर्शिता भावना-'सोहम्मीसाणकप्पेसु जाणि कप्पविमाणाणि ताणि कप्पवडिंसताणि जासु वणिज्जंति तेसु कप्पवडिंसएसु विमाणेसु देवी जा जेण तवोविसेसेण उववण्णा एय पि वणिज्जइ ताओ कप्पवडिंसियाओ वुच्चंति' तथा 'पुष्पिता' इति यासु ग्रन्थपद्धतिषु गृहवाससमुत्कलनपरित्यागेन प्राणिन' संयमभावपुष्पिता सुखिता उषिता भूयः संयमभावपरित्यागतो दु खावाप्तिमुकुलनेन मुकुलिता पुनस्तत्परित्यागेन पुष्पिता प्रतिपाद्यन्ते ता पुष्पिता उच्यन्ते, अधिकृतार्थविशेषप्रतिपादिका पुष्पचूडा। ( नं० ) 'एवमाइया' इत्यादि, कियन्ति नामग्राहमाख्यातु शक्यन्ते प्रकीर्णकानि ?, तत एवमादीनि चतुरशीति' प्रकीर्णकसहस्राणि भगवतोऽर्हत श्रीऋषभस्वामिनस्तीर्थकृत. तथा संख्येयानि प्रकीर्णकसहस्राणि मध्यमानामजितादीनां जिनवरेन्द्राणां तीर्थकराणाम्, एतानि च यस्य यावन्ति भवन्ति तस्य तावन्ति प्रथमानुयोगतो वेदितव्यानि, तथा चतुर्दश प्रकीर्णकसहस्राणि भगवतोऽर्हतो वर्द्धमानस्वामिन। इयमत्र भावना—इह भगवत ऋषभस्वामिनश्चतुरशीतिसहस्रसंख्या श्रमणा आसीरन्, तत प्रकीर्णकरूपाणि चाध्ययनानि कालिकोत्कालिकभेदभिन्नानि सर्वसंख्यानि चतुरशीतिसहस्रसंख्यान्यभवन्, कथमिति चेत् ??, उच्यते—इह यद्भगवदर्हदुपदिष्टं श्रुतमनुसृत्य भगवन्त' श्रमणा विरचयन्ति तत्सर्वं प्रकीर्णकमुच्यते, अथवा-श्रुतमनुसरन्तो यदात्मनो वचनकौशलेन धर्म्मदेशनादिषु ग्रन्थपद्धतिरूपतया भाषन्ते तदपि सर्वं प्रकीर्णकम्, भगवत ऋषभस्वामिन उत्कृष्टा श्रमणसम्पदा

आसीत् चतुरशीतिसहस्रप्रमाणा ततो यदन्ते प्रकीर्णकान्यपि भगवतश्चतुरशीतिसहस्रसंख्यानि, एवं मध्यमतीर्थकृतामपि संख्येयानि प्रकीर्णकसहस्राणि भावनीयानि भगवतस्तु वर्द्धमानस्वामिनश्चतुर्दश श्रमणसहस्राणि, ततः प्रकीर्णकान्यपि भगवतश्चतुर्दश सहस्राणि. अत्र तु मतेएकं सूरय प्रज्ञापयन्ति—इदं किल चतुरशीतिसहस्रादिकं ऋषभादीनां तीर्थकृतां श्रमणपरिमाणं प्रधानसूत्रविरचनसमर्थान् श्रमणानधिकृत्य वेदितव्यम्, इतरथा पुन सामान्यश्रमणा प्रभूततरा अपि तस्मिन् तस्मिन् ऋषभादिकाले आसीरन्, अपरं पुनरेव प्रज्ञापयन्ति-ऋषभादितीर्थकृता जीवनामिदं चतुरशीतिसहस्रादिकं श्रमणपरिमाणं प्रवाहत पुनरेकैकस्मिन् तीर्थे भूयासः श्रमणा वेदितव्या. । तत्र ये प्रधानसूत्रविरचनशक्तिसमन्विता 'सुप्रसिद्धतद्ग्रन्था अतत्कालिका अपि तीर्थे वर्त्तमानास्तत्राधिकृता द्रष्टव्या, एतदेव मतान्तरमुपदर्शयन्नाह— अथव' त्यादि, अथवेति प्रकारान्तरोपदर्शने यस्य ऋषभादेस्तीर्थकृतो यावन्त शिष्यास्तीर्थे औत्पत्तिक्या वैनयिक्या कर्मजया पारिणामिक्या चतुर्विधया बुद्धया उपेता—समन्विता आसीरन् तस्य—ऋषभादेस्तावन्ति प्रकीर्णकसहस्राण्यभवन्, प्रत्येकबुद्धा अपि तावन्त एव, अत्रैके व्याचक्षते—इह एकैकस्य तीर्थकृतस्तीर्थेऽपरिमाणानि प्रकीर्णकानि भवन्ति, प्रकीर्णककारिणामपरिमाणत्वात्, केवलमिह प्रत्येकबुद्धरचितान्येव प्रकीर्णकानि द्रष्टव्यानि, प्रकीर्णकपरिमाणेन प्रत्येकबुद्धपरिमाणप्रतिपादनात्; स्यादेतत्—प्रत्येकबुद्धाना शिष्यभावो विरुध्यत—तदेतदसमीचीनं, यत प्रव्राजकाचार्यमेवाधिकृत्य शिष्यभावो निषिध्यते न तु तीर्थकरोपदिष्टशासनप्रतिपन्नत्वेनापि. ततो न कश्चिद्दोष । तथा च तेषा ग्रन्थ—" इह तित्थे अपरिमाणा पइन्नगा, पइन्नगसामिअपरिमाणत्तणओ, किं तु इह सुत्ते पत्तेयबुद्धपणीयं पइन्नग भाणियव्वं, कम्हा ?, जम्हा पइण्णगपरिमाणेण चेव पत्तेयबुद्धपरिमाण कीरइ, (इति) भणियं ' पत्तेयबुद्धा वि तत्तिया चेव ' त्ति चोयग आह—' ननु पत्तेयबुद्धा सिस्सभावो य विरुज्झए, आयरिओ आह तित्थयरपणीयसासणपडिवन्नत्तणओ तस्सीसा हवंति' ति, अन्ये पुनरेवमाहु—सामान्येन प्रकीर्णकस्तुल्यत्वात् प्रत्येकबुद्धानामत्राभिधानं, न तु नियोगत. प्रत्येकबुद्धरचितान्येव प्रकीर्णकानीति,'सेत्तं तदेतत्कालिकम्। नं०। (बद्धमबद्धं चेति द्विविध श्रुतम् ' करण ' शब्दे तृतीयभागे ३६८ पृष्ठे गतम्। )

तदेव निरूपितं चतुर्दशविधमपि श्रुतमर्थत । अथ कियांस्तद्विषय ?, इति निरूपयितुमाह—

उवउत्तो सुयनाणी,सव्वं दव्वाइँ जाणइ जहत्थं ।
पासइ य केइ सो पुण,तमचक्खुदंसणेणं ति ॥५५३॥

उपयुक्तो-दत्तोपयोग श्रुतज्ञानी सर्वं द्रव्यादि यथार्थं-यथावद् यथा सर्वज्ञेनोक्तं तथा जानाति—द्रव्यत. पञ्चास्तिकायद्रव्याणि, क्षेत्रं लोका—ऽलोकाकारं, कालमतीतादिरूपं, भावानौदायिकादीन् जानाति-स्पष्टावभासिना श्रुतज्ञानेनाऽवबुध्यते, न तु सामान्यग्राहिणा दर्शनेन पश्यति, तस्य तदसंभवात्, यथा हि मन पर्यायज्ञानं स्वभावेनैव स्पष्टार्थग्राहकम्, इति न तत्र दर्शनम्, एव श्रुतज्ञानेऽपि तदपि ह्यर्थविकल्पनावस्थायान्तर्जल्पाकारत्वाद् विशेषमेव गृह्णाति न सामान्यमिति भाव । तथा च नन्दिसूत्रम्—" तं समासओ चउव्विहं पण्णत्त, त जहा—दव्वओ, खेत्तओ, कालओ, भावओ। दव्वओ ण सुयनाणी उवउत्तो सव्वदव्वाइ जाणइ न पासइ, एव सव्वखेत्त, सव्वकाल, सव्वभावे जाणइ न पासइ " इति । अन्ये तु नञ. पाठं न मन्यन्ते । ततश्च " जाणइ पासइ " इति पठन्ति । अत. ' श्रुतज्ञान्यपि दर्शनेन पश्यति ' इति ते मन्यन्ते, यच्चासौ दर्शनेन पश्यति तदचक्षुर्दर्शनेनेति मन्यन्ते । इदमत्र हृदयम्—यस्य श्रुतज्ञानं तस्य मतिज्ञानमवश्यमेव भवति । मति—श्रुतज्ञानस्य च चक्षुरचक्षुर्दर्शनभेदाद् द्विभेदं दर्शनमुक्तम् । तत्र किल चक्षुर्दर्शनेन मतिज्ञान पश्यति, अचक्षुर्दर्शनेन पुन श्रुतज्ञानीमिति ।

एतत् तेषा मतमसमीक्षिताभिधानत्वाद् यदृच्छावादमात्रमिति दर्शयन्नाह—

तेसिमचक्खुदंसण-सामण्णाओ कहं न मइनाणी ।
पासइ पासइ व कहं, सुयनाणी किंकओ भेओ ॥५५४॥

तेषां नञ पाठमनभ्युपगच्छतां मतिज्ञान—श्रुतज्ञानयोरिन्द्रिय—मनोनिमित्ततासाम्यादचक्षुर्दर्शने समानेऽपि कथं हन्त ! तेनाऽचक्षुर्दर्शनेन मतिज्ञानी न पश्यति ?, कथं वा तेन श्रुतज्ञानी पश्यति ? । यदि हि श्रुतज्ञानी तेन पश्यति तर्हि मतिज्ञान्यपि पश्यतु । अथासौ न पश्यति, तर्हीतरोऽपि माऽपश्यतु । ननु किंकृतोऽयं भेदो यदचक्षुर्दर्शने समानेऽपि तेनैकं ज्ञानं पश्यति, अपरं तु न पश्यति ? । स्वेच्छाभाषितत्वमात्रं विहाय नापरमत्र कारणं पश्याम इति भाव । तस्मात् ' जाणइ न पासइ " इति स्थितमिति ।

अथवा प्रज्ञापनोक्तां पश्यत्तामाश्रित्य श्रुतज्ञानेऽपि पश्यत्ता युक्ता । ततश्च ' जाणइ पासइ " इत्यपि पाठो युक्त इति दर्शयन्नाह—

मइभेयमचक्खुदं-सणं च वज्जित्तु पासणा भणिया ।
पन्नवणाए उ फुडा, तेण सुए पासणा जुत्ता ॥५५५॥

मतिभेदा मतिभेदा मतिज्ञान—मत्यज्ञानलक्षणस्तं, तथाऽचक्षुर्दर्शनं च वर्जयित्वा येन कारणेन प्रज्ञापनाया त्रिंशत्तमपदं पश्यत्ता स्फुटा व्यक्ता भणिता, तेन श्रुते श्रुतज्ञानेऽपि पश्यत्ता युक्ता"जाणइ पासइ"इति पाठो युक्त इत्यर्थ ।(विशे०) केषुचित्तु पुस्तकेषु ' तेण सुए पासणाऽजुत्ता'' इत्यकारप्रश्लेषो दृश्यते तत्रायमर्थ —पूर्वगाथाया ' पासइ य केइ सो पुण तमचक्खुदंसणेण ' इति वचनादचक्षुर्दर्शनमाश्रित्य श्रुतज्ञाने या पश्यत्ता प्रोक्ता सा, इत्यतोऽप्ययुक्ता । कुत ?, इत्याह—येन प्रज्ञापनायां मतिभेदौ, अचक्षुर्दर्शनं च वर्जयित्वैव पश्यत्ता प्रोक्ता । अतोऽचक्षुर्दर्शनमाश्रित्याऽयुक्तैव श्रुतज्ञाने पश्यत्ता । ततो " जाणई न पासई " इति पाठ इति स्थितम् । इयं च गाथा पूर्वटीकाकारैर्गृहीता, ' कण्ठ्या ' इति च निर्दिष्टा, न तु व्याख्याता, अस्माभिस्तु यथावबोधं किञ्चिद् विवृता, सुधिया त्वन्यथाऽप्यविरोधतो व्याख्येयेति । तदेवं भेदतो विषयतश्च निरूपित श्रुतज्ञानम् ।

सांप्रतं सत्पदप्ररूपणतादिभिर्नवभिरनुयोगद्वारैर्गत्यादिमार्गणास्थानेषु तद् गमनीयम् । एतच्चाभिन्नस्वामित्वात् पूर्वोक्तमतिज्ञानेन समानम् , इत्यतिदिशन्नाह—

जह नवहा मइनाणं, संतपयपरूवणाइणा गमियं ।
तह नेयं सुयनाणं, जं तेण समाणसामित्तं ॥५५६॥

गतार्थैव ।

अथोत्तरनिर्युक्तिगाथासंबन्धनायाह—

सव्वाइसयनिहाणं, तं पाएणं जओ पराहीणं ।
तेण विणेयहियत्थं, गहणोवाओ इमो तस्स ॥५५७॥

तच्च श्रुतज्ञानं यतो यस्मादनेकातिशयनिधानं प्रायः पराधीनं च गुर्वायत्तम् , तेन कारणेन तस्य श्रुतज्ञानस्याऽयं वक्ष्यमाणो ग्रहणोपायो-ग्रहणविधिः 'तीर्थकर-गणधरैरुक्तः' इति शेषः । इति गाथापञ्चकार्थः ।

क पुनर्ग्रहणोपायः ?, इत्याह—

आगमसत्थग्गहणं, जं बुद्धिगुणेहिँ अट्ठहिँ दिट्ठं ।
बेंति सुयनाणलंभं, तं पुव्वविसारया धीरा ॥५५८॥

पूर्वेषु विशारदा विपश्चितो धीरा—व्रतानुपालनास्थिराः श्रुतज्ञानस्य लाभं ब्रुवते-प्रतिपादयन्ति । किं तत् ?, इत्याह-'त'दिति तदेवागमशास्त्रग्रहणम् । यत् किम् ?, इत्याह-यद् बुद्धिगुणैर्वक्ष्यमाणस्वरूपैरष्टभिर्दिष्टं शास्त्रे, इत्यक्षरयोजना । अयमर्थः—शिष्यते शिक्ष्यते बोध्यतेऽनेनेति शास्त्रं तच्चाविशेषितं सामान्येन सर्वमपि मत्यादिज्ञानमुच्यते, सर्वेणापि ज्ञानेन जन्तूना बोधनात् । अतो विशेषे स्थापयितुमाह—आगमरूपं शास्त्रमागमशास्त्रं श्रुतज्ञानमित्यर्थः , तस्य ग्रहणं गुरुसकाशादादानं तदेवं श्रुतलाभं ब्रुवते, यद् बुद्धिगुणैरष्टभिः शास्त्रे दिष्टं, नान्यदिति—वक्ष्यमाणशुश्रूषादिगुणाष्टकक्रमेणैव श्रुतज्ञानं ग्राह्यं, नान्यथेति तात्पर्यम् । इति निर्युक्तिगाथार्थः ।

अत्र भाष्यम्—

सासिज्जइ जेण तयं, सत्थं तं चाऽविसेसियं नाणं ।
आगम एव य सत्थं, आगमसत्थं तु सुयनाणं ॥५५९॥
तस्सायाणं गहणं, दिट्ठं जं मइगुणेहिं सत्थम्मि ।
बेंति तयं सुयलाभं, गुणा य सुस्सूसणाईया ॥५६०॥

गतार्थ एव । विशे० ।

साम्प्रतमोघतो द्वादशाङ्गाभिधेयमुपदर्शयति—

इच्चेइयंमि दुवालसंगे गणिपिडगे अणंता भावा अणंता अभावा अणंता हेऊ अणंता अहेऊ अणंता कारणा अणंता अकारणा अणंता जीवा अणंता अजीवा अणंता भवसिद्धिया अणंता अभवसिद्धिआ अणंता सिद्धा अणंता असिद्धा पण्णत्ता, तं जहा-"भावमभावा हेऊ-महेउ कारणमकारणे चेव । जीवाजीवा भविअम-भविआ सिद्धा असिद्धा य ॥१॥" इच्चेइअं दुवालसंगं गणिपिडगं तीए काले अणंता जीवा आणाए विराहित्ता चाउरंतं संसारकंतारं अणुपरिअट्टिंसु, इच्चेइअं दुवालसंगं गणिपिडगं पडुप्पण्णकाले परित्ता जीवा आणाए विराहित्ता चाउरंतं संसारकंतारं अणुपरिअट्टंति, इच्चेइअं दुवालसंगं गणिपिडगं अणागए काले अणंता जीवा आणाए विराहित्ता चाउरंतं संसारकंतारं अणुपरिअट्टिस्संति । इच्चेइयं दुवालसंगं गणिपिडगं तीए काले अणंता जीवा आणाए आराहित्ता चाउरंतं संसारकंतारं वीईवइंसु, इच्चेइअं दुवालसंगं गणिपिडगं पडुप्पण्णकाले परित्ता जीवा आणाए आराहित्ता चाउरंतं संसारकंतारं वीईवयंति , इच्चेइयं दुवालसंगं गणिपिडगं अणागए काले अणंता जीवा आणाए काले आराहित्ता चाउरंतं संसारकंतारं वीईवइस्संति । इच्चेइअं दुवालसंगं गणिपिडगं न कयाइ नासी न कयाइ न भवइ न कयाइ न भविस्सइ भुविं च भवइ अ भविस्सइ अ धुवे निअए सासए अक्खए अव्वए अवट्ठिए निच्चे से जहानामए पंचत्थिकाए न कयाइ नासी न कयाइ नत्थि न कयाइ न भविस्सइ भुविं च भवइ अ भविस्सइ अ धुवे नियए समाए अक्खए अव्वए अवट्ठिए निच्चे । एवामेव दुवालसंगे गणिपिडगे न कयाइ नासी न कयाइ नत्थि न कयाइ न भविस्सइ भुविं च भवइ अ भविस्सइ अ धुवे निअए सासए अक्खए अव्वए अवट्ठिए निच्चे । से समासओ चउव्विहे पण्णत्ते, तं जहा-दव्वओ, खित्तओ, कालओ, भावओ । ( सू० ५७ × )

'इत्येतस्मिन् द्वादशाङ्गे गणिपिटके' एतत्पूर्ववदेव व्याख्येयं, अनन्ता भावा—जीवादयः पदार्थाः प्रज्ञप्ता इति योगः, तथा अनन्ता अभावा —सर्वभावानां पररूपेणासत्त्वात् त एवानन्ता अभावा द्रष्टव्याः , तथाहि—स्वपरसत्ताभावाभावात्मकं वस्तुतत्त्वं, यथा जीवो जीवात्मना भावरूपो अजीवात्मना चाभावरूपः , अन्यथाऽजीवत्वप्रसङ्गात् , अत्र बहु वक्तव्यं तत्तु नोच्यते ग्रन्थगौरवभयादिति, तथाऽनन्ता 'हेतवो' हिनोति—गमयति जिज्ञासितधर्म्मविशिष्टमर्थमिति हेतुः, ते चानन्ताः , तथाहि—वस्तुनोऽनन्ता धर्मास्ते च तत्प्रतिबद्धधर्मविशिष्टवस्तुगमकास्ततोऽनन्ता हेतवो भवन्ति , यथोक्तहेतुप्रतिपक्षभूता अहेतव , तेऽपि अनन्ताः , तथा अनन्तानि कारणानि घटपटादीनां निर्वर्त्तकानि मृत्पिण्डतन्त्वादीनि, अनन्तान्यकारणानि, सर्वेषामपि कारणानां कार्यान्तराण्यधिकृत्याकारणत्वात् , तथा जीवाः—प्राणिनः , अजीवाः परमाणुद्व्यणुकादयः , भव्याः—अनादिपारिणामिकसिद्धिगमनयोग्यतायुक्ताः, तद्विपरीता अभव्याः , सिद्धा अपगतकर्ममलकलङ्काः , असिद्धाः संसारिणः , एते सर्वेऽप्यनन्ताः प्रज्ञप्ताः , इह भव्याभव्यानामानन्त्येऽभिहितेऽपि यत्पुनरसिद्धा अनन्ता इत्यभिहितं तत्सिद्धेभ्यः संसारिणामनन्तगुणताख्यापनार्थम् । सम्प्रति द्वादशाङ्गविराधनाफलं त्रैकालिकमुपदर्शयति—'इच्चेइय' मित्यादि, इत्येतद् द्वादशाङ्गं गणिपिटकमतीते कालेऽनन्ता जीवा आज्ञया—यथोक्ताऽऽ-

आपरिपालनाऽभावेनो विराध्य चतुरन्त संसारकान्तारं विविधशारीरमानसानेकदु:खविटपिशतसङ्कुलदुस्तरं भवगहनम् 'अणुपरियट्टिंसु' अनुपर्यावृत्तवन्त आसन्। इह द्वादशाङ्गं सूत्रार्थोभयभेदेन त्रिविधं, द्वादशाङ्गमेव चाऽऽज्ञा आज्ञाप्यते जन्तुगुणे हितप्रवृत्तौ यया साऽऽज्ञेति व्युत्पत्ते, ततश्चाज्ञा त्रिविधा, तद्यथा-सूत्राज्ञा, अर्थाज्ञा, उभयाज्ञा च। सम्प्रति अमूषामाज्ञाना विराधनाश्चिन्त्यन्ते-तत्र यदाऽभिनिवेशवशतोऽन्यथा सूत्रं पठति तदा सूत्राज्ञाविराधना, सा च यथा जमालिप्रभृतीनां, यदा त्वभिनिवेशवशतोऽन्यथा द्वादशाङ्गार्थं प्ररूपयति तदाऽर्थाज्ञाविराधना, सा च गोष्ठामाहिलादीनामवसेया, यदा पुनरभिनिवेशवशत श्रद्धाविहीनतया हास्यादिना वा द्वादशाङ्गस्य सूत्रमर्थं च विकुट्टयति तदा उभयाज्ञाविराधना सा च दीर्घसंसारिणामभव्यानां चानेकेषां विज्ञेया । अथवा पञ्चविधाचारपरिपालनशीलस्य परोपकारकरणैकतत्परस्य गुरोर्हितोपदेशवचनम् आज्ञा, तामन्यथा समाचरन् परमार्थतो द्वादशाङ्गं विराधयति, तथा चाह चूर्णिकृत्-'अहवा आणत्ति पञ्चविहायारायरणसीलस्स गुरुणो हियोवएसवयणं आणा, तमन्नहा आयरंतेण गणिपिडगं विराहियं भवइ' त्ति। तदेवमतीते काले विराधनाफलमुपदर्श्य सम्प्रति वर्त्तमानकाले दर्शयति-'इच्चेइयं'-मित्यादि, सुगमं नवरं 'परित्ता' इति परिमिता न त्वनन्ता असङ्ख्येया वा, वर्त्तमानकालचिन्तायां विराधकमनुष्याणां सङ्ख्येयत्वात्, 'अणुपरियट्टंति' त्ति अनुपरावर्त्तन्ते-भ्रमन्तीत्यर्थ, भविष्यति काले विराधनामुपदर्शयति-'इच्चेइयं, मित्यादि, इदमपि पाठसिद्धं, नवरं 'परियट्टिस्संति' त्ति अनुपरावर्तिष्यन्ते-पर्यटिष्यन्तीत्यर्थ, तदेवं विराधनाफलं त्रैकालिकमुपदर्श्य सम्प्रत्याराधनाफलं त्रैकालिकं दर्शयति-'इच्चेइयं' मित्यादि सुगमं नवरं 'वीइवइंसु' त्ति व्यतिक्रान्तवन्त संसारकान्तारमुल्लङ्घ्य, मुक्तिमवाप्ता इत्यर्थ। 'वीइवइस्संति' त्ति व्यतिक्रमिष्यन्ति, एतच्च त्रैकालिकं विराधनाफलमाराधनाफलं च द्वादशाङ्गस्य सदाऽवस्थायित्वे सति युज्यते, नान्यथा, तत: सदावस्थायित्वं तस्याह-'इच्चेइयं, मित्यादि, इत्येतद्द्वादशाङ्गं गणिपिटकं न कदाचिन्नासीत्, सदैवासीदिति भाव, अनादित्वात्, तथा न कदाचिन्न भवति, सर्वदैव वर्त्तमानकालचिन्तायां भवतीति, भाव, सदैव भावात्, तथा न कदाचिन्न भविष्यति, किन्तु भविष्यच्चिन्तायां सदैव भविष्यतीति प्रतिपत्तव्यम्, अपर्यवसितत्वात् तदेवं कालत्रयचिन्तायां नास्तित्वप्रतिषेधं विधाय सम्प्रत्यस्तित्वं प्रतिपादयति-'भुविं च' इत्यादि, अभूत् भवति भविष्यति चेति। एवं त्रिकालावस्थायित्वात् ध्रुव मेर्वादिवत्, ध्रुवत्वादेव सदैव जीवादिषु पदार्थेषु प्रतिपादकत्वेन नियत पञ्चास्तिकायेषु लोकवचनवत् नियतत्वादेव च शाश्वत-शश्वद्भवनस्वभाव शाश्वतत्वादेव च सततगङ्गासिन्धुप्रवाहप्रवृत्तावपि(पद्म) पुण्डरीकह्रद इव वाचनादिप्रदानेऽपि अक्षय-नास्य क्षयोऽस्तीत्यक्षयमक्षयत्वादेव च अव्यय मानुषोत्तराद्बहि समुद्रवत्, अव्ययत्वादेव सदैव प्रमाणेऽवस्थित जम्बूद्वीपादिवत्, एवं च सदाऽवस्थानेन चिन्त्यमान नित्यमाकाशवत्, साम्प्रतमस्यैव दृष्टान्तमाह-'से जहानामे' त्यादि, तद्यथानाम पञ्चास्तिकाया धर्मास्तिकायादयो न कदाचिन्नासन्नित्यादि पूर्ववत्, 'एवमेवे' त्यादि निगमनं निगदसिद्धं, 'से समासओ' इत्यादि, तद् द्वादशाङ्गं समासतश्चतुर्विधं प्रज्ञप्तं, तद्यथा-द्रव्यत क्षेत्रत कालतो भावतश्च।

**तत्थ दव्वओ णं सुअनाणी उवउत्ते सव्वदव्वाइं जाणइ पासइ, खित्तओ णं सुअनाणी उवउत्ते सव्वं खेत्तं जाणइ पासइ, कालओ णं सुअनाणी उवउत्ते सव्वं कालं जाणइ पासइ, भावओ णं सुअनाणी उवउत्ते सव्वे भावे जाणइ पासइ। ( सू० ५७ × )**

तत्र द्रव्यतो 'ण' मिति वाक्यालङ्कारे श्रुतज्ञानी उपयुक्तः सर्वद्रव्याणि जानाति पश्यति, तत्राह-ननु पश्यतीति कथं ?, न हि श्रुतज्ञानि श्रुतज्ञानज्ञेयानि सकलानि वस्तूनि पश्यति, नैष दोष, उपमाया अत्र विवक्षितत्वात्, 'पश्यतीव पश्यति, तथाहि-मेर्वादीन् पदार्थानदृष्टानप्याचार्य: शिष्येभ्य आलिख्य दर्शयति ततस्तेषां श्रोतृणामेवं बुद्धिरुपजायते भगवानेष गणी साक्षात्पश्यन्निव व्याचष्ट इति, एवं क्षेत्रादिष्वपि भावनीयम्, ततो न कश्चिद्दोष । अन्ये तु न पश्यतीति पठन्ति, तत्र चोद्यस्यानवकाश एव, श्रुतज्ञानी चेहाभिन्नदशपूर्वधरादिश्रुतकेवली परिगृह्यते, तस्यैव नियमत: श्रुतज्ञानबलेन सर्वद्रव्यादिपरिज्ञानसम्भवात्, तदितरे तु ये श्रुतज्ञानिनस्ते सर्वद्रव्यादिपरिज्ञाने भजनीया, केचित्सर्वद्रव्याणि जानन्ति केचिन्नेति भाव। इत्थम्भूता च भजना मतिवैचित्र्याद्वेदितव्या,आह च चूर्णिकृत्-"आरओ पुण जे सुयनाणी ते सव्वदव्वनाणपासणासु भइया, सा य भयणा मइविसेसओ जाणियव्व त्ति"।

सम्प्रति संग्रहगाथामाह-

"अक्खर सन्नी सम्मं, साइअं खलु सपज्जवसिअं च।
गमिअं अंगपविट्ठं, सत्त वि एए सपडिवक्खा ॥१८२॥
सुस्सूसइ१पडिपुच्छइ२,सुणेइ३गिण्हइ अ४ईहए यावि५।
तत्तो अपोहए वा६,धारेइ७करेइ वा सम्मं८॥१८३॥
मूअं हुंकारं वा, बाढंकार पडिपुच्छ वीमंसा।
तत्तो पसंगपारा-यणं च परिणिट्ठ सत्तमए॥१८४॥
सुत्तत्थो खलु पढमो, बीओ निज्जुत्तिमीसिओ भणिओ।
तइओ य निरविसेसो,एस विही होइ अणुओगे॥१८५॥"
से तं अंगपविट्ठं। से तं सुअनाणं।

'अक्खरसन्नी' त्यादि, गतार्था। नवरं सप्ताप्येते पक्षा सप्रतिपक्षा, ते चैवम्-अक्षरश्रुतमनक्षरश्रुतमित्यादि (नं०) किमुक्तं भवति ?-यदेव जिनप्रणीतप्रवचनार्थपरिज्ञान तदेव परमार्थत श्रुतज्ञानं, न शेषमिति। बुद्धिगुणैरष्टभिरित्युक्तम्, ततस्तानेव बुद्धिगुणानाह-'सुस्सूसई' त्यादि, पूर्वं तावत् शुश्रूषते-विनययुक्ता गुरुवदनारविन्दाद्विनिर्गच्छद्वचन श्रोतुमिच्छति, यत्र शङ्कितं भवति तत्र भूयोऽपि विनयनम्रतया वचसा गुरुमन प्रह्लादयन् पृच्छति, पृष्टे च सति यद् गुरु कथयति तत्सम्यक् व्याक्षेपपरिहारेण सावि-

धान शृणोति, श्रुत्वा त्वर्थरूपतया गृह्णाति गृहीत्वा च ईहते पूर्वापराविरोधेन पर्यालोचयति, चशब्द समुच्चयार्थ, अपिशब्दात्प(र्य प)र्यालोचयन् किञ्चित् स्वबुद्ध्याऽप्युत्प्रेक्षेत इति सूत्रार्थ. ततः पर्यालोचनाऽनन्तरमपोहते एवमेतत् यदादिष्टमाचार्येण नान्यथेत्यवधारयति, ततस्तमर्थ निश्चितं स्वचेतसि विस्मृत्यभावार्थ सम्यग्धारयति करोति च स-म्यग्-यथोक्तमनुष्ठानं यथोक्तमनुष्ठानमपि श्रुतज्ञानप्राप्तिहेतु तदावरणक्षयोपशमनिमित्तत्वात् । तदेव गुणा व्याख्याता । सम्प्रति यच्छुश्रूषते इत्युक्तं तत्र श्रवणविधिमाह-'मूय' मित्यादि,मूकमिति प्रथमतो मूकं शृणुयात्, किमुक्तं भवति ?-प्रथमश्रवणे संयतगात्रस्तूष्णीमासीत्, ततो द्वितीये श्रवणे हुङ्कार दद्यात्; वन्दन कुर्यादित्यर्थः, ततस्तृतीये बाढंकारं कुर्यात्, बाढमेवमेतन्नान्यथेति, ततश्चतुर्थे श्रवणे तु गृहीतपूर्वापरसूत्राभिप्रायो मनाक् प्रतिपृच्छां कुर्यात्, कथमेतदिति ?, पञ्चमे मीमांसा-प्रमाणजिज्ञासा कुर्यादिति भाव, षष्ठे श्रवणे तदुत्तरगुणप्रसङ्ग पारगमन चास्य भवति, ततः सप्तमे श्रवणे परिनिष्ठा गुरुवदनुभाषते । एवं तावच्छ्रवणविधिरुक्त । सम्प्रति व्याख्यानविधिमभिधित्सुराह-'सुत्तत्थो' इत्यादि. प्रथमानुयोग सूत्रार्थ' सूत्रार्थप्रतिपादनपर., खलुशब्द एवकारार्थ, स चावधारणे । ततोऽयमर्थ -गुणा प्रथमोऽनुयोग सूत्रार्थाभिधानलक्षण एव कर्त्तव्य, मा भूत् प्राथमिकविनेयानां मतिमोह, द्वितीयोऽनुयोग सूत्रस्पर्शिकनिर्युक्तिमिश्रितो भणितस्तीर्थकरगणधरै , सूत्रस्पर्शिकनियुक्तिमिश्रित द्वितीयमनुयोगं गुरुर्विदध्यादित्याख्यात तीर्थकरगणधरैरिति भाव., तृतीयश्चानुयोगो निरवशेष.-प्रसक्तानुप्रसक्तप्रतिपादनलक्षण इत्येष -उक्तलक्षणो विधिर्भवत्यनुयोगे व्याख्यायाम् । आह-परिनिष्ठा सप्तमे इत्युक्त,- त्रयश्चानुयोगप्रकारास्तदेतत्कथम् ? , उच्यते-त्रयाणामनुयोगानामन्यतमेन केनचित्प्रकारेण भूयो भूयो भाव्यमानेन सप्त वारा श्रवण कार्यते ततो न कश्चिद्दोष . अथवा-कश्चिन्मन्दमतिविनेयमधिकृत्य तदुक्तं द्रष्टव्य,न पुनरेष एव सर्वत्र श्रवणविधिनियम, उद्घटितज्ञविनेयाना सकृच्छ्रवणत एवाशेषग्रहणदर्शनादिति कृत प्रसङ्गेन । 'से त्त' मित्यादि, तदेतच्छ्रुतज्ञानम् । नं० ।

साम्प्रतं श्रुतज्ञानं व्याचिख्यासुराह-" चउदसहा वीसहा व सुयंति " । श्रुत-श्रुतज्ञानं चतुर्दशधा चतुर्दशभेद विंशतिधा विंशतिप्रकारं वा भवतीति । तत्र प्रथमं श्रुतस्य चतुर्दशभेदान् व्याख्यानयन्नाह-

अक्खर सन्नी संमं, साइअं खलु सपज्जवसियं च ।
गमियं अंगपविट्ठं, सत्त वि एए सपडिवक्खा ॥६॥

इह श्रुतशब्द पूर्वगाथात संबध्यते । ततोऽक्षरश्रुतं, संज्ञिश्रुतं, सम्यक्छ्रुतं, सादिश्रुतं, सपर्यवसितश्रुतं, गमिकश्रुतम्, अङ्गप्रविष्टश्रुतमित्येते सप्त भेदा सप्रतिपक्षा श्रुतस्य चतुर्दश भेदा भवन्ति । तथाहि-अक्षरश्रुतप्रतिपक्षमनक्षरश्रुतम्, एवमसंज्ञिश्रुत मिथ्याश्रुतमनादिश्रुतमपर्यवसित श्रुतमगमिकश्रुतमङ्गबाह्यश्रुतमिति । तत्राक्षरं त्रिधा संज्ञाव्यञ्जनलब्धिभेदात् । उक्तं च-"तं सन्नावंजणलद्धिसन्निय तिविहमक्खर भणियं । सुबहुलिविभेयनियय, सन्नक्खरमक्खरागारो ॥१॥" सुबहव्यो या एता अष्टादश लिपय-श्रूयन्ते,तद्यथा हि-"हंसलिवी भूयलिवी जक्खी तह रक्खसी य बोधव्वा । उड्डी जवणि तुरुक्की,कीरी दविडी य सिंधविया ॥१॥मालविणी नडिनागरि,लाडलिवी पारसी य बोधव्वा । तह अनिमित्ती य लिवी. चाणक्की मूलदेवी य ॥ २ ॥ " व्यञ्जनाक्षरमकारादिहकारपर्यन्तमुच्यते । तदेतद्द्वितयमज्ञानात्मकमपि श्रुतकारणत्वादुपचारेण श्रुतम् । लब्ध्यक्षरं तु शब्दश्रवणरूपदर्शनादेरर्थप्रत्यायनगर्भाक्षरोपलब्धि । यदाह-" जो अक्खरोवलंभो,सा लद्धी तं च होइ विन्नाणं । इंदियमणोनिमित्तं,जो आवरणक्खओवसमो ॥१॥ " ततोऽक्षरैरभिलाप्यभावाना प्रतिपादनप्रधानं श्रुतमक्षरश्रुतम् । नन्वनभिलाप्या अपि किं केचिद्भावा. सन्ति, येनैवमुच्यतेऽभिलाप्यभावानां प्रतिपादनप्रधानं श्रुतमिति, उच्यते-सन्त्येव । यदाहु श्रीपूज्या -

" पन्नवणिज्जा भावा, अणंतभागो उ अणभिलप्पाणं ।
पन्नवणिज्जाणं पुण, अणंतभागो सुयनिबद्धो ॥ १ ॥
जं चउदस पुव्वधरा, छट्ठाणगया परुप्परं हुंति ।
तेण उ अणंतभागो, पन्नवणिज्जाण जं वुत्तं ॥ २ ॥
अक्खरलंभेण समा, ऊणहिया हुंति मइविसेसेहिं ।
ते वि हु मईविसेसा, सुयनाणब्भंतरे जाण ॥ ३ ॥"

अनक्षरश्रुत क्ष्वेडितशिर कम्पनादिनिमित्तं मामाह्वयति वारयति वेत्यादिरूपमभिप्रायपरिज्ञानम् । तथा संज्ञिश्रुतं तत्र संज्ञानं संज्ञा "उपसर्गादात" ॥५।३।११०॥ इत्यङ्प्रत्यय. । सा च त्रिविधा दीर्घकालिकी हेतुवादोपदेशिकी दृष्टिवादोपदेशिकी । यदाह भाष्यसुधाम्भोनिधि -

" इह दीहकालिगि त्ति, सन्ना जीया जयं सुदीह पि ।
संभरइ भूयमेस्सं, चिंतइ य किह णु कायव्वं ॥ १ ॥
जे पुण संचिंतेउं, इट्ठाणिट्ठेसु विसयवत्थूसु ।
वट्टंति नियत्तंति य, स देहपरिपालणाहेउं ॥ २ ॥
पाएण संपय चिय, कालंमि न यावि दीहकालं जा ।
ते हेउवायसन्नी, निच्चेट्ठा हुंति अस्सन्नी ॥ ३ ॥
सम्मद्दिट्ठी सन्नी, संते नाणे खओवसमियंमि ।
अस्सन्नी मिच्छत्तं-मि दिट्ठिवाओवएसेणं ॥ ४ ॥ "

ततश्च संज्ञा विद्यते येषा त संज्ञिन पर सर्वत्राप्यागमे ये दीर्घकालिक्या संज्ञया संज्ञिनस्ते संज्ञिन उच्यन्ते, तत संज्ञिनां श्रुतं संज्ञिश्रुतं समनस्काना मन सहितैरिन्द्रियैर्जनितं श्रुतं संज्ञिश्रुतमिति भाव । मनोरहितेन्द्रियजं श्रुतमसंज्ञिश्रुतम् । तथा सम्यग्दृष्टिभिरर्हत्प्रणीत मिथ्यादृष्टिप्रणीत वा यथास्वरूपमवगमात् सम्यक्श्रुतं, मिथ्यादृष्टे पुन अर्हत्प्रणीतमितरद्वा मिथ्याश्रुत, यथास्वरूपमनवगमात् । आह-मिथ्यादृष्टेरपि मतिश्रुते सम्यग्दृष्टेरिव तदावरणकर्मक्षयोपशमसमुद्भवे सम्यग्दृष्टेरिव पृथुबुध्नोदराद्याकार घटादिकं च संविदाते, तत् कथ मिथ्यादृष्टेरज्ञाने ?। उच्यते-सदसद्विवेकपरिज्ञानाभावात् । तथाहि-मिथ्यादृष्टि सर्वमप्येकान्तपुर सर प्रतिपद्यते, न भगवदुक्तस्याद्वादनीत्या, ततो घट एवायमिति यदा ब्रूते तदा तस्मिन् घटे घटपर्यायव्यतिरेकेण शेषान् सत्त्वज्ञेयत्वप्रमेयत्वादीन् सतोऽपि धर्मानपलपति, अन्यथा घट एवायमित्येकान्तेनावधारणानुपपत्ते । घट स्वरूपेणेव परसत्ता परस्वरूपेण नास्तित्वस्यानभ्युपगमात् पररूपतामसतीमपि तत्र प्रतिपद्यते । तत सन्तमसन्तं

प्रतिपद्यतेऽसन्तं च सन्तमिति सदसद्विशेषपरिज्ञानाभावादज्ञानं मिथ्यादृष्टेर्मतिश्रुते। इतश्च ते मिथ्यादृष्टेरज्ञाने, भवहेतुत्वात्। तथाहि-मिथ्यादृष्टीनां मतिश्रुते पशुवधमैथुनादीनां धर्मसाधकत्वेन परिच्छेदके ततो दीर्घतरसंसारपथप्रवर्तिनी। तथा यदृच्छोपलम्भादुन्मत्तकविकल्पवत्। तथाहिउन्मत्तकविकल्पा वस्त्वनपेक्ष्यैव यथाकथंचित् प्रवर्तन्ते। यद्यपि च ते कचिद्यथावस्थितवस्तुसंवादिनस्तथापि सम्यग्यथावस्थितवस्तुतत्त्वपर्यालोचनाविरहेण प्रवर्तमानत्वात् परमार्थतोऽपरमार्थिका। तथा मिथ्यादृष्टीनां मतिश्रुते यथावद्वस्त्वविचार्यैव प्रवर्तेते, ततो यद्यपि ते कचिद्रसोऽयं स्पर्शोऽयमित्यादावधारणाध्यवसायाभावे संवादिनी, तथापि न ते स्याद्वादमुद्रापरिभावनातस्तथा प्रवृत्ते, किंतु यथाकथञ्चित्, अतस्ते अज्ञाने। तथा ज्ञानफलाभावात्, ज्ञानस्य हि फलं हेयस्य हानिरुपादेयस्य चोपादानं, न च संसारात्परं किंचन हेयमस्ति, न च मोक्षात्परं किंचिदुपादेयं, ततो भवमोक्षविकल्पेन हेयोपादेयौ, भवमोक्षयोश्च हान्युपादाने सर्वसङ्गविरतेर्भवत, तत सोऽवश्यं तत्त्ववेदिना कर्तव्या. सैव च तत्त्वतो ज्ञानस्य फलम्। तथाचाह भगवानुमास्वातिवाचक —"ज्ञानस्य फलं विरतिरिति"। सा च मिथ्यादृष्टेर्नास्तीति ज्ञानफलाभावादज्ञाने मिथ्यादृष्टेर्मतिश्रुते। यदाह भाष्यसुधाम्भोनिधि —"सदसदविसेसणाओ भवहेउ जहिच्छिओवलंभाओ। नाणफलाभावओ, मिच्छद्दिट्ठिस्स अन्नाणं ॥ १ ॥" इति। तथा—"साइयं, सपज्जवसियं, अणाइयं, अपज्जवसियं, इच्चेयं दुवालसंगं वुच्छित्तिनयट्ठयाए साइयं सपज्जवसियं, अवुच्छित्तिनयट्ठयाए अणाइयं अपज्जवसियं, तं सामासओ चउव्विहं पन्नत्तं, तं जहा-दव्वओ खित्तओ, कालओ, भावओ, दव्वओ णं संमसुयं एग पुरिसं पडुच्च साइयं सपज्जवसियं, बहवे पुरिसे पडुच्च अणाइयं अपज्जवसियं, खित्तओ णं पंच भरहाइं पंच एरवयाइं पडुच्च साइयं सपज्जवसियं, पंच महाविदेहाइं पडुच्च अणाइयं अपज्जवसियं, कालओ णं उस्सप्पिणिं ओसप्पिणिं च पडुच्च साइयं सपज्जवसियं नोउस्सप्पिणिं नोअवसप्पिणिं च पडुच्च अणाइयं अपज्जवसियं"। नोउत्सर्पिणी नोअवसर्पिणी चेति कालो महाविदेहेषु ज्ञेयस्तत्रोत्सर्पिण्यवसर्पिणीलक्षणकालाभावात्। "भावओ णं जे जया जिणपन्नत्ता भावा आघविज्जंति पन्नविज्जंति परूविज्जंति दंसिज्जंति निदंसिज्जंति, ते तया पडुच्च साइयं सपज्जवसियं, खाओवसमियं पुण भावं पडुच्च अणाइयं अपज्जवसियं। अहवा भवसिद्धियस्स सुयं साइयं सपज्जवसियं" केवलज्ञानोत्पत्तौ तदभावात्, "नट्ठम्मि उ छाउमत्थिए नाणे" इति वचनात्। "अभवसिद्धियस्स सुयं अणाइयं अपज्जवसियं"। इह च सामान्यत श्रुतशब्देन श्रुतज्ञानं श्रुताज्ञानं चोच्यते। यदाह—"अविसेसियं सुयं सुयनाणं सुयअन्नाणं च"। तथा गमा. सदृशपाठास्ते विद्यन्ते यत्र तद्गमिकम्, 'अतोऽनेकस्वरात्' ७-२-६ इति (सूत्रेण) इकप्रत्यय तत् प्रायो दृष्टिवादगतम्। आगमिकमसदृशाक्षरालापकं तत् प्राय कालिकश्रुतगतम्। कर्म०।

परिकम्म सुत्तपुव्वा-णुओगपुव्वगयचूलिया एवं।
पणु दिट्ठिवायभेया, चउदस पुव्वाइं पुव्वगयं ॥ ३ ॥
उप्पाय पयकोडी, अग्गाणीयंमि छंनवइलक्खा।
वि (वी) रियपवाए अच्छि-प्पवाइ लक्खा सयरिसट्ठी ॥४॥
एगपऊणा कोडी, पयाए नाणप्पवायपुव्वंमि।
सच्चप्पवायपुव्वे, एगा पयकोडि छच्च पया ॥ ५ ॥
छव्वीसं पयकोडी, पुव्वे आयप्पकायनामंमि।
कम्मप्पवायपुव्वे, पयकोडी असिइलक्खजुया ॥ ६ ॥
पच्चक्खाणभिहाणे, पुव्वे चुलसीइ पयसयसहस्सा।
दसपयमहस्सजुया, पयकोडिविज्जापवायम्मि ॥ ७ ॥
कल्लाणनामधिज्जे, पुव्वम्मि पयाण कोडिछव्वीसा।
छप्पन्नलक्खकोडी, पयाण पाणाउपुव्वंमि ॥ ८ ॥
किरियाविसालपुव्वे, नव पयकोडी उ विंति समयविऊ।
सिरिलोकविन्दुसारे, सड्ढदुवालस य पयलक्खा ॥ ९ ॥"

अङ्गबाह्यं श्रुतमावश्यकदशवैकालिकादि। इति व्याख्यातं चतुर्दशधा श्रुतम्।

संप्रति विंशतिधा श्रुतं व्याख्यानयन्नाह—

**पज्जयअक्खर पयसं-घाया पडिवत्ति तह य अणुओगो।**
**पाहुडपाहुडपाहुड-वत्थूपुव्वा य ससमासा ॥७॥**

पर्यायश्चाक्षरं च पदं च संघातश्च पर्यायाक्षरपदसंघाता 'पडिवत्ति' त्ति प्रतिपत्ति। प्राकृतत्वाल्लुप्तविभक्तिको निर्देश। तथा चानुयोगोऽनुयोगद्वारलक्षण, प्राभृतप्राभृतं च प्राभृतं च वस्तु च पूर्वं च प्राभृतप्राभृतप्राभृतवस्तुपूर्वाणि। प्राकृतत्वाल्लिङ्गव्यत्यय। यदाह पाणिनिः स्वप्राकृतलक्षणे "लिङ्गं व्यभिचार्यपि"। 'च.' समुच्चये। एते पर्यायादय श्रुतस्य दश भेदा। कथंभूता इत्याह—'ससमास' त्ति समास संक्षेपो, मीलक इत्यर्थः, सह समासेन वर्तन्ते ससमासास्ततश्च प्रत्येकं संबन्धः। तथाहि, पर्याय. पर्यायसमास. अक्षरमक्षरसमास, पदं पदसमास, संघात संघातसमास, प्रतिपत्तिः प्रतिपत्तिसमास., अनुयोगोऽनुयोगसमास, प्राभृतप्राभृतं प्राभृतप्राभृतसमास, प्राभृतं प्राभृतसमास, वस्तु वस्तुसमास. पूर्वं पूर्वसमास, इति विंशतिधा श्रुतं भवतीति गाथाक्षरार्थ। भावार्थस्त्वयम्-पर्यायो ज्ञानस्यांशो विभाग परिच्छेद इति पर्याया.। तत्रैको ज्ञानांश पर्यायोऽनेके तु ज्ञानांशा पर्यायसमास। एतदुक्तं भवति--लब्ध्यपर्याप्तस्य सूक्ष्मनिगोदजीवस्य यत् सर्वजघन्यं श्रुतमात्रं तस्मादन्यत्र जीवान्तर य एकश्रुतज्ञानांशो विभागपरिच्छेदरूपो वर्धते स पर्याय ॥ १ ॥ ये तु द्व्यादयः श्रुतज्ञानविभागपरिच्छेदा नानाजीवेषु वृद्धा लभ्यन्ते ते समुदिता. पर्यायसमास ॥ २ ॥ आकारादिलब्ध्यक्षराणामन्यतरदक्षरम् ॥ ३ ॥ तेषामेव द्व्यादिसमुदायोऽक्षरसमास. ॥ ४ ॥ पदं तु अर्थपरिसमाप्ति पदमित्याद्युक्तिसद्भावेऽपि येन केनचित्पदेनाष्टादशपदसहस्रादिप्रमाणा आचारादिग्रन्था गीयन्ते तदिह गृह्यते, तस्यैव द्वादशाङ्गश्रुतपरिमाणेऽधिकृतत्वात्, श्रुतभेदानामेव चेह प्रस्तुतत्वात्, तस्य च पदस्य तथाविधाम्नायाभावात्प्रमाणं न ज्ञायते, तत्रैकं पदं पदमुच्यते ॥ ५ ॥ द्व्यादिपदसमुदायस्तु पदसमास. ॥ ६ ॥ 'गइइंदिए य काए' इत्यादिगाथाप्रतिपादितद्वारकलापस्यैकदेशो यो गत्यादिकस्तस्याप्येकदेशो यो नर-

कगत्याद्विकस्तत्र जीवादिमार्गणा यका क्रियते स संघात ॥ ७ ॥ द्वयादिगत्याद्यवयवमार्गणा संघातसमास ॥ ८ ॥ गत्यादिद्वाराणामन्यतरैकपरिपूर्णगत्यादिद्वारेण जीवादिमार्गणा प्रतिपत्तिः ॥ ९ ॥ द्वारद्वयादिमार्गणा तु प्रतिपत्तिसमासः ॥ १० ॥ "संतपयपरूवणया दव्वपमाणं चे" त्यादि, अनुयोगद्वाराणामन्यतरदेकमनुयोगद्वारमुच्यते ॥ ११ ॥ तद्द्वयादिसमुदाय पुनरनुयोगद्वारसमास ॥ १२ ॥ प्राभृतान्तर्वर्ती अधिकारविशेष प्राभृतप्राभृतं ॥ १३ ॥ तद्द्वयादिसमुदायस्तु प्राभृतप्राभृतसमासः ॥ १४ ॥ वस्त्वन्तर्वर्ती अधिकारविशेषः प्राभृतम् ॥ १५ ॥ तद्द्वयादिसंयोगस्तु प्राभृतसमास ॥ १६ ॥ पूर्वान्तर्वर्ती अधिकारविशेषो वस्तु ॥ १७ ॥ तद्द्वयादिसंयोगस्तु वस्तुसमास ॥ १८ ॥ पूर्वमुत्पादपूर्वादि पूर्वोक्तस्वरूपम् ॥ १९ ॥ तद्द्वयादिसंयोगस्तु पूर्वसमास ॥ २० ॥ एवमेते संक्षेपत श्रुतज्ञानस्य विंशतिर्भेदा दर्शिताः, विस्तरार्थिना तु बृहत्कर्मप्रकृतिरन्वेषणीया । एते च पर्यायादय श्रुतभेदा यथोत्तर तीव्रतीव्रतरादिक्षयोपशमलभ्यत्वादित्थं निर्दिष्टा इति परिभावनीयमिति । अथवा चतुर्विध श्रुतज्ञानम्, तथाहि—द्रव्यत क्षेत्रत कालतो भावतश्च । तत्र द्रव्यतः श्रुतज्ञानी सर्वद्रव्याण्यादेशेन जानाति, क्षेत्रतः सर्वक्षेत्रमादेशेन श्रुतज्ञानी जानाति, कालतः सर्वं कालमादेशेन श्रुतज्ञानी जानाति, भावतः सर्वान् भावानादेशेन श्रुतज्ञानी जानातीति व्याख्यातं सविस्तरं श्रुतज्ञानम् ।

उपधानवताऽध्येतव्यम्—

से भयवं ! किं जहा पंचमंगलं तहा सामाइयाइयममेसं पि सुयनाणमहिज्जियव्वं ?, गोयमा ! तहा चेव विणओ विहाणेणमहिएयव्वं, णवरं अहिज्जणिउकामेहिं अट्ठविहं चेव नाणायारं सव्वपयत्तेणं कालादी रक्खेज्जा अन्नहा महया सायणं ति । अन्नं च दुवालसंगस्स सुयनाणस्स पढमचरिमजाम अहन्निसमज्झयणज्झावणं च पंचमंगलस्स सोलसद्धजामियं । अन्नं च पंचमंगलं कयसामइए वा अकयसामइए वा, अहीए सामाइयं तु सयं च सारंभपरिग्गहे जावज्जीवं कयसामाइए अहिज्जिणइ ण उण सारंभपरिग्गहे । अकयसामाइए तहा पंचमंगलस्स आलावगे य आयंबिलं तहा सकत्थवाईसु वि दुवालसंगस्स पुण सुयनाणस्स उद्देसगज्झयणेसु । महा० ३ अ० ।

श्रुतज्ञानस्य विराधक —

एएसिं पयाणं अन्नयरपए खलेज्जा । जो सहसा देवूणपुव्वकोडी ताव णं गोयमा ! मुज्झेज्ज वा ण वावि । "एवं गच्छविवड्डी, तह त्ति पालेतु जं जहा भणियं । रयमलकिलेसमुक्के, गोयम ! मुक्खं गएणं तं ॥१॥ गच्छंति गमिस्संति य, ससुरासुरजगणमंसिए वीरे । भुवणेकपायडजसे, जह भणियं गुणाद्विए गणिणो ॥ २ ॥" से भयवं जे णं केइ अमुणियसमयसब्भावे होत्था विहीए वा अविहीए वा कस्स य गच्छायारस्स य मंडलिधम्मस्स य वा छत्तीसइविहस्स णं सप्पत्तेयनाणदंसणचारित्ततववीरियायारस्स वा मणसा वा वायो वा कहिं वि अन्नयरे ठाणे केइ गच्छाहिवई आयरिएइ वा अणतो विसुद्धपरिणामो वि होत्था णं । असुइं वकेज्ज वा (खजेज्ज वा) परूवमाणे वा अणुट्ठमाणे वा से णं आराहगे उयाहु अणाराहगे ?, गोयमा ! अणाराहगे । से णं भयवं ! केणं अट्ठेणं एवं वुच्चइ एवं जहा णं गोयमा ! अणाराहगे णं इमे दुवालसंगे सुयनाणे अणपज्जवसिए अणाइनिहणे सब्भुयत्थपमाहगे । अणाइसंसिद्धे से णं देविंदविंदवंदाणं अतुलबलवीरिए सरियसत्तपरक्कममहापुरिसायारकंतिदित्तिलावन्नरूवसोहग्गसकलकलाकलावविछड्डपडियाणं अणंतणाणीणं । सयं संबुद्धाणं जिणवराणं अणाइसिद्धाणं अणंताणं वट्टमाणसमयसिज्झगाणं । अन्नेसिं च आसन्नपुरक्खडाणं अणंताणं सुगहियनामधिज्जाणं महायमाणं महासत्ताणं महाणुभागाणं तिहुयणेक्कनिलगाणं तेलोक्कनाहाणं जुगपवराणं जगेक्कबंधूणं जगगुरूणं सव्वन्नूणं सव्वदरिसीणं पवरवरधम्मतित्थकराणं अरहंताणं भगवताणं भूए सव्वभविसाइयाणं गयवट्टमाणनिखिलासेसकसिणसगुणसपज्जयमव्ववत्थुविदियसब्भावाणं असहाए पवरे एक्कमेक्कमग्गे से णं सुरूवत्ताए अच्छत्ताए गंधत्ताए । तेमिं पि णं जहट्ठिए चेव पन्नवणिज्जे जहट्ठिए अणुट्ठणिज्जे जहट्ठिए चेव भामणिज्जे जहट्ठिए चेव परूवणिज्जे जहट्ठिए चेव वायरणिज्जे जहट्ठिए चेव वायणिज्जे जहट्ठिए चेव कहणिज्जे । से णं इमे दुवालसंगे गणिपिडगे । तेसिं पि णं देविंदाणं णिखिलजगविदियदव्वसपज्जवगइआगइहासवुड्ढी जीया य तत्थ जाव णं वत्थुमहावाण अलंघणिज्जे अणइक्कमणिज्जे अणसायणिज्जे । तहा चेव इमे दुवालसंगे सुयनाणे सव्वजगज्जीयाणं भूयसत्ताणं एगंतेणं हिए सुए खमे नीसेसिए आणुगामिए पारगामिए पसत्थे महत्थे महागुणे महाणुभागे महापुरिसाणुचिन्ने परमरिसिदेसिए दुक्खक्खयाए मोक्खयाए संसारुत्तारणयाए त्ति कट्टु उवसंपज्जित्ता णं विहरिंसु किं सुतमन्नेसिं ति । ता गोयमा ! जं णं केइ अमुणियसमयसब्भावेइ वा विइयसमयसारेइ वा विहीए वा अविहीए वा गच्छाहिवईइ वा आयरिएइ वा अंतोविसुद्धपरिणामे वि होत्था गच्छायारमंडलिधम्मा छत्तीसइविहायारादि जाव णं अन्नयरस्स वा आवस्सगाइ करणिज्जस्स णं पवयणसारस्स असत्ती चुकेज्ज वा खलेज्ज वा तेणं इमे दुवालसंगे सुयनाणे अन्नहा पयंज्जा जेणं इमे दुवालसंगं सुयनाण-

निवद्धतरोवगयं एक्कपयक्खरमवि अन्नहा पयरे से णं उम्मग्गे पयंसेज्जा,जे णं उमग्गे पयंसेज्जा से णं अणारहागे भवेज्जा । ता एएणं अट्ठेणं एवं वुच्चइ-जहा णं गोयमा ! एगंतेणं अणाराहगे । महा०५अ०। "जत्थक्खलियममलिय-वाइपयं पयक्खरविसुद्धं । विणओवहाण पुव्वं, दुवालसंगं पि सुयनाणं ॥१॥" महा० ४ अ० ।

परोपदेशः श्रुतग्रन्थश्च श्रुतमिहोच्यते।विशे०।अविनीतो विकृतिप्रतिबद्धो व्यपशमितप्राभृतश्चेते न वाचनीया । बृ०४उ० । ( विनीतस्य सर्वोऽपि विनय 'विणय' शब्दे षष्ठभागे गत. । ) श्रुतं द्विविधं बद्धम्, अबद्ध च । बद्ध द्वादशाङ्गीरूपम्, अबद्धं तु भारतादि लौकिकम् । आ० म० १ अ० ।

आयारदसाकप्पो, ववहारो नवमपुव्वणीसंदो ।
चारित्तरक्खणट्ठा, सूयगडस्सुवरिठविताइं । पं० भा० १ कल्प ।

( 'आयारपकप्प' शब्दे द्वितीयभागे ३५० पृष्ठे व्याकृतैषा । )
('सिक्खा' शब्देऽस्मिन्नेव भागे सूत्राध्ययनरूपा शिक्षा उक्ता।)
आत्महिताद्दिज्ञानं सूत्राध्ययनस्य फलं--श्रुताध्ययनेऽमी अभ्यधिका गुणा —

आतहियपरिण्णा भा-वसंवरो नवनवो अ संवेगो ।
निक्कंपया तवो नि-ज्जरा य परदेसियत्तं च ॥३६०॥

आत्महितं १ परिज्ञा २ भावसंवरो ३ नवनवश्च संवग ४ निष्कम्पता ५ तपो ६ निर्जरा च ७ परदेशिकत्वं च ८ इति द्वारगाथासमासार्थ । बृ० । " जयइ सुयाणं पभवो, वीरजिणो ।" न० । ( व्याख्या 'आगम' शब्दे द्वितीयभागे ५३ पृष्ठे उक्ता । )

एकमप्यक्षरं श्रुतस्य जानानो नाचारी भवति-

भयवं ! जो रत्तिंदियहं सिद्धंतं पढइ सुणेइ वक्खाणेइ चिंतेइ सततं सो किं अणायारमायरे ? सिद्धंतगयमेगं पि अक्खरं जो वियाणइ सो गोयमा ! मरणंते वि अणायार नो समायरे । महा० ६ अ० ।

('अवण्णवाय' शब्दे प्रथमभागे ७६३ पृष्ठे श्रुतावर्णवाद ।)

सुयं पडुच्च तओ पडिणीया पण्णत्ता, तं जहा-सुत्तपडिणीए, अत्थपडिणीए, तदुभयपडिणीए । स्था० ३ ठा० ४ उ० ।

( प्रव्रजितस्य श्रुतदानं 'पव्वज्जा' शब्दे ७४५ पृष्ठेऽस्ति ) आचार्योपाध्यायादत्ता गिरं गृह्णत. प्रायश्चित्तम् । नि० चू० १६ । (स्वगणे संविग्नाद्यभावे श्रुतग्रहणम् 'उदंस' शब्दे द्वितीयभागे ८७६ पृष्ठ गतम् ।) अपूर्वज्ञानग्रहणे महा०१चू० । ( सुयकप्प' शब्दाऽप्यत्र वीक्ष्य । ) ( स्थानादिप्रवृत्तियोगर्गाहतस्य सूत्रदानं महादोष इति आचार्या हरिभद्रादय ।) (श्रावकेभ्य श्रुतप्रदानं पाढयण' शब्दे ५ भागे निरस्तम् । ) पार्श्वस्थादिभ्य श्रुतग्रहणम् ।

अधुना पार्श्वस्थादिसमीपे सूत्रनिषेधो विधीयते-

उम्मुग्गविहंडियमु—द्धोहपमग भणंति एवं न्ने ।
पासत्थाइसमीवे, सुत्ताईयं न घेत्तव्वं ॥ ६७ ॥

उत्सर्गेण सामान्योक्तं विधिना, 'विहंडिय' त्ति—देशीशब्दो विनाशार्थे, ततो विनाशित' शुद्धबोधप्रमर प्रधानमत्यवकाशलक्षणो येषा ते भणन्ति—जल्पन्ति एवं वक्ष्यमाणन्यायेन अन्ये परे । तदेवाह—पार्श्वस्थादिसमीपे तत्र पार्श्वस्था उक्तलक्षणा', आदिशब्दाद्—अवसन्नादिग्रह. , तेषां निकटे सूत्रादिकम्, आदिशब्दाद्—अर्थादिग्रह न ग्रहीतव्यं-न स्वीकर्तव्यमिति गाथार्थ ।

अथोत्तरम्—

तमवि न छेयग्गन्था-णुसारि वयणं जओ जइंदस्स ।
भणियं निमीहगंथे, उस्सग्गववायजलहिम्मि ॥ ६८ ॥

तदपि सूत्रादिनिषेधकरणं न केवलं पूर्वोक्तमित्यपिशब्दार्थ, 'न' नैव छेदग्रन्थानुसारि वचनम् उत्साहकशास्त्रसंवादिभणन, यस्माद्यतिं—साधुमुद्दिश्याश्रित्य भणितम्-उक्त निशीथग्रन्थे—प्रकल्पशास्त्रे । किंविशिष्टे उत्सर्गापवादजलधौ-सामान्यविशेषनीरनिधाविति गाथार्थ. ।

तदेवाह—

संविग्गासंविग्गे, पच्छाकडसिद्धपुत्तसारूवी ।
पडिक्कंते अविसेसं,नीरनिधावावि तत्थेव ॥६९॥

सुगमा । भावार्थस्तु कथ्यते। प्रथमं संविग्नस्योद्युक्तस्य सूत्रार्थनिपुणस्य समीपे साधुभि. श्रोतव्यं,तदभावेऽसंविग्नस्यापि गीतार्थस्य, तस्याप्यभावे पश्चात्कृतस्यामुक्तलिङ्गस्य, स च द्विरूपो भवति-एक' सिद्धपुत्रोऽन्यश्च सारूपी । अनयोश्च स्वरूपमाभ्यामु—क्ताभ्यामवगन्तव्यम् ।

"सभज्जओ वावि अभज्जओ वा,नियमेण दोसुक्किलवत्थधारी ।
खुरेण मुंडो असिही सिही वा, अदंडपत्तो वि य सिद्धपुत्तो ॥
मुंडसिरो दोसुक्किलवत्थधरो न विय वंधए कच्छं ।
हिंडइ नवा अभज्जो, सारूवी एरिसो होइ ॥२॥"

एतयोश्च देशनां कृत्वाऽभ्युद्यमं कार्यौ यदि कुरुतस्ततो लष्टं, न चेत्, ततोऽन्यत्र नीयते, यदि न गच्छत ततस्तत्रैव सिद्धान्तोक्तविधिना तत्समीपे पठितव्यम्, पठद्भिश्च यदि निवाहौ न भवति तयोस्तत. स्वय सर्व्वं करणीयं, श्रावकैश्च कारयितव्यम् । तथा च तत्रैव निशीथे भणितम्-"चोयइ से परिवारं, अकरिंति य वा भणइ तो सड्ढे । अव्वोच्छित्तिकरस्स उ, सुयभत्तीए कुणह पूयं ॥१॥" तथा उपदेशमालायाम्-" सुग्गइमग्गपईव " इत्यादि, अकरणे च प्रायश्चित्तं भणितमिति गाथार्थ ।

एव स्थिते जीवोपदेशमाह--

ता सिद्धिनगरसम्म-ग्गपयडणे नाणमणिपईवम्मि ।
कुणसु पयतणं जीव !, मच्छरं चइय सवत्थ ॥७०॥

तस्मात्सिद्धिनगरसन्मार्गप्रगटने मोक्षपुरपदवीप्रकाशके ज्ञाने—श्रुतज्ञाने तदेव वानाद्यद्योभ्यत्वेन प्रकाशकत्वेन च मणिप्रदीपस्तस्मिन् कुरु--विधेहि प्रयत्नम्--आदरं जीव ! भो आत्मन् ! मत्सरम्--रोष त्यक्त्वा-प्रोज्झय सर्वत्र पार्श्वस्थादिसमीपे, किञ्च—श्रावकान् पार्श्वस्थादिसमीपे शृण्वतो वारयन्, स्वयं च पूर्वोक्तयुक्त्या निष्कारणं नित्यश्रावकधर्मकथनेन पार्श्वस्था भवन्तोऽपीत्थं जल्पन्त्यहो मोहविलसितमित्यवस्थितमतोऽयमसदुक्ता जीवोपदेश इति गाथार्थ. । जीवा० ११ अधि० । ( संयत. किं श्रुतमध्येतुं शक्नोतीति 'संजय' शब्दे गतम् ।) श्रुते-श्रुतविषय उद्देशसमुद्देशानुज्ञा-

क्षा, ता अष्ट यूका, अष्टौ यूका एकं यवमध्यम्, अष्टौ यवमध्यानि एकमङ्गुलम्, एतेनाङ्गुलप्रमाणेनेति न तु न्यूनाधिकतया, षडङ्गुलानि पादः-पादस्य मध्यतलप्रदेशः, पादैकदेशत्वात् पादः, अथवा-पादो हस्तचतुर्थांशः, द्वादशाङ्गुलानि वितस्तिः सुखावबोधार्थमेवमुपन्यासः, लाघवार्थं तु द्वौ पादौ वितस्तिरिति पर्यवसितोऽर्थः। अन्यथा पादसंज्ञाया नैरर्थक्यापत्तिः, एवमग्रेऽपि चतुर्विंशतिरङ्गुलानि रत्निरिति सामयिकी परिभाषा; नामकोशादौ तु 'बद्धमुष्टिर्हस्तो रत्नि'रिति, अष्टचत्वारिंशदङ्गुलानि कुक्षिः, षण्णवतिरङ्गुलानि एकोऽक्ष इति वा-शकटावयवविशेषः दण्ड इति वा धनुरिति वा-युगमिति वा-वोढृस्कन्धकाष्ठं मुसलमिति वा नालिका इति वा-यष्टिविशेषः, अत्र च धनुरुपयोगः, संज्ञान्तराणि तु प्रसङ्गतोऽत्र लिखितानि अन्यत्रोपयोगीनीति, एतेन धनुःप्रमाणेन द्वे धनुःसहस्रे गव्यूतं चत्वारि गव्यूतानि योजनम्। एतेन योजनप्रमाणेन यः पल्यो-धान्याश्रयविशेषः स इव सर्वत्र समत्वात् लुप्तोपमाकः शब्द इति, योजनमायामविष्कम्भाभ्यां समवृत्तत्वात् प्रत्येकमुत्सेधाङ्गुलनिष्पन्नयोजनं योजनमूर्ध्वोच्चत्वेन, तद्योजनं त्रिगुणं सविशेषं परिरयेण, वृत्तपरिधेः किञ्चिन्न्यूनषड्भागाधिकत्रिगुणत्वात्, स पल्यः 'एगाहिअबेहिअ' त्ति षष्ठीबहुवचनलोपादेकाहिकद्व्याहिकत्र्याहिकाणामुत्कर्षतः सप्तरात्रप्ररूढानां-सप्तदिवसोद्गतपर्यन्तानां भृतो वालाग्रकोटीनामिति सम्बन्धः, तत्र मुण्डिते शिरस्येकेनाह्ना यावत्प्रमाणा वालाग्रकोटय उत्तिष्ठन्ति ता एकाहिक्यः, द्वाभ्यां तु यास्ता द्व्याहिक्यः, त्रिभिस्तु त्र्याहिक्यः, कथंभूता इत्याह-संमृष्टः-आकर्णपूरितः, संनिचितः-प्रचयविशेषान्निबिडीकृतः, वालानामग्रकोटयः-प्रकृष्टा विभागा इत्यर्थः, यद्वा-वालाग्रकोटीनामिति वालपु-विदेहनरवालाग्रापेक्षया सूक्ष्मत्वादिलक्षणोपेततयाऽग्राणि-श्रेष्ठानि वालाग्राणि, कुरुनररोमाणि तेषां कोटयः अनेकाः कोटाकोटिप्रमुखाः सङ्ख्याः "[1]स्त्रीणां शतानि शतशो जनयन्ति पुत्रान्" इत्यादिवत्, तथा वालाग्रकोटीनामिति तृतीयार्थे षष्ठी यथा माषाणां भृतः कोष्ठ इति, ततो वालाग्रकोटीभिर्भृत इति सुखावबोधाऽक्षरयोजना कार्या इति, वालाग्रसंख्यानयनोपायस्त्वयं-देवकुरूत्तरकुरुनरवालाग्रतोऽष्टगुणं हरिवर्षरम्यकनरवालाग्रमिति, यत्रैकं हरिवर्षरम्यकवालाग्रं तत्र कुरुनरवालाग्राण्यष्ट तिष्ठन्ति, यत्र चैकं हैमवतहैरण्यवतनरवालाग्रं तत्र कुरुनरवालाग्राणि चतुःषष्टिः, एवं विदेहनरवालाग्रे ५१२ लिक्षायां ४०९६ यूकायां ३२७६८ यवमध्ये २६२१४४ अङ्गुलेऽङ्कतः २०९७१५२, अत्राङ्गुलमुत्सेधाङ्गुलं ग्राह्यम् आत्माङ्गुलस्यानियतत्वात् प्रमाणाङ्गुलस्यातिमात्रत्वात् अत्र सर्वत्र पूर्वप्रमाणापेक्षयोत्तरोत्तरप्रमाणस्याष्टाष्टगुणकारेणैव संस्था समुत्तिष्ठति, अथायं राशिश्चतुर्विंशतिगुणो हस्तश्चतुर्विंशत्यङ्गुलमानत्वादस्य, स चैवम्-५०३३१६४८ नामतः पञ्च कोटयस्त्रीणि लक्षाणि एकत्रिंशत्सहस्राणि षट् शतान्यष्टचत्वारिंशदधिकानि, एष राशिश्चतुर्गुणो धनुषि, चतुर्हस्तमानत्वादस्य, अङ्कतः २०१३२६५९२नामतो विंशतिः कोटयस्त्रयोदश लक्षाणि षड्विंशतिः सहस्राणि पञ्च शतानि द्विनवत्यधिकानि, अयं द्विसहस्रगुणः क्रोशे, द्विसहस्रमानत्वादस्य, अङ्कतो यथा-४०२६५३१८४००० नामतः चत्वारिंशत्सहस्राणि द्वे शते पञ्चषष्ट्यधिके कोटीनां एकत्रिंशल्लक्षाणि चतुरशीतिः सहस्राणि, पुनरस्य राशिश्चतुर्गुणो योजने, चतुःक्रोशप्रमाणत्वादस्य, अङ्कतः १६१०६१२७३६००० नामत एकं लक्षमेकषष्टिः सहस्राण्येकषष्ट्यधिकानि कोटीनां तथा सप्तविंशतिर्लक्षाणि षट्त्रिंशत्सहस्राणि, शूचिगणनयैवेदं गणितं बोध्यम्, अथ शूचीराशिस्तेनैव गुणितः प्रतरसमचतुरस्रयोजने, शूच्या शूचीगुणिताया एव प्रतरत्वात्, अङ्कतः २५९४०७३३८५३६५४०५९६६०००००नामतो यथा पञ्चविंशतिः शतानि चतुर्नवत्यधिकानि कोटाकोटिकोटीनां तथा सप्त लक्षाणि त्रयस्त्रिंशत्सहस्राण्यष्ट शतानि त्रिपञ्चाशदधिकानि कोटाकोटीनां तथा पञ्चषष्टिर्लक्षाणि चत्वारिंशत्सहस्राणि पञ्च शतान्येकोनसप्तत्यधिकानि कोटीनां तथा षष्टिर्लक्षाणि, अयं राशिर्भूयः पूर्वराशिना गुणितो घनरूपो रोमराशिः स्यात्, तथाहि-अङ्कतः ४१७८०-४७९३२५८८१५८४२७७८४५४४२५६००००००००० नामत एकचत्वारिंशत्कोटयोऽष्टसप्ततिर्लक्षाणि चत्वारि सहस्राणि सप्त शतानि त्रिषष्ट्यधिकानि कोटाकोटिकोटाकोटीनां तथा पञ्चविंशतिर्लक्षाण्यष्टाशीतिः सहस्राण्येकं शतमष्टपञ्चाशदधिकं कोटाकोटिकोटीनां तथा द्विचत्वारिंशल्लक्षाणि सप्तसप्ततिः सहस्राण्यष्ट शतानि पञ्चचत्वारिंशदधिकानि कोटाकोटीनां तथा चतुश्चत्वारिंशल्लक्षाणि पञ्चविंशतिः सहस्राणि षट् शतानि कोटीनामिति। अयं च राशिः-समचतुरस्रघनयोजनप्रमितपल्यगतः समवृत्तघनयोजनप्रमितपल्यगतराश्यपेक्षया कियद्भागाभ्यधिकस्तेनाधिकभागापनतार्थं सौकुमार्याय स्थूलोपायमाह-अनन्तरोक्तराशेश्चतुर्विंशत्या २४ भागे हृते लब्धम् १७४०८५३१८०-२४५०९६०११५७६८९३४४००००००००० अयं चैकोनविंशत्या १९ गुणितः समवृत्तघनयोजनपल्यगतो राशिर्भवतीति, स चाङ्कतो यथा ३३०७५२१०४२४५५५,२५४२१९९५०-९१५३५००००००००० अयमर्थः-यादृशैश्चतुर्विंशत्या भागैः समचतुरस्रघनयोजनप्रमितपल्यगतो रोमराशिर्भवति तादृशैरेकोनविंशत्या भागैः समवृत्तघनयोजनप्रमितपल्यगतो राशिर्भवति, ननु चतुर्विंशत्या भागहरणमेकोनविंशत्या गुणनं च किमर्थम्?, उच्यते-एकयोजनप्रमाणवृत्तक्षेत्रस्य करणरीत्यागतं योजनत्रयमेकश्च योजनषड्भागः $३\frac{१}{६}$ सवर्णने च जातं $\frac{१९}{६}$ एतच्च वृत्तपल्यपरिधिक्षेत्रम्, अनेन सह समचतुरस्रपल्यपरिधिक्षेत्रं चतुर्योजनरूपं गुण्यते-स्थापना यथा- $\frac{१९}{६} \times \frac{४}{१}$ अनयोः $\frac{१९}{६}$ समच्छेदे $\frac{२४}{६}$ लाघवार्थं द्वयोरपि छेदापनयने जातं १९--२४ किमुक्तं भवति-समचतुरस्रपरिधिक्षेत्रात् वृत्तपरिधिक्षेत्रं स्थूलवृत्त्या पञ्चभागन्यूनमिति तत्करणार्थोऽयमुपक्रम इति, स्थूलवृत्तिश्च योजनषड्भागस्य किञ्चिदधिकतया अविवक्षणात्, अथ प्रकृतं प्रस्तुमः-'ते णं' मिति प्राग्वत्, तानि वालाग्राणि न कुथ्येयुः--प्रचयविशेषाच्छुषिराभावाद्वायोरसम्भवाच्च नाऽसारतां गच्छेयुरित्यर्थः, अतो न परिविध्वंसेरन् कतिपयपरिशाटनमप्यङ्गीकृत्य न विध्वंसं गच्छेयुः अर्थवशाद्विभक्तिपरिणाम इति तानि नाग्निर्दहेत् न वायुरपहरेदतीव निचितत्वादग्निपवनावपि तत्र न क्रमेते इ-

[1] १-भक्तामरस्तोत्रे।

स्वयं । तानि च न पूतिनया—पूतिभावं कदाचिदागच्छेयुः, न कदाचिद्दुर्गन्धितां प्राप्नुयुरित्यर्थः । अथ कोतिकर्त्तव्यता ?, तामेवाह-ततस्तेभ्यो वालाग्रेभ्यः, अथवा-'तत' इति तथाविधपल्यभरणानन्तरं वर्षशते २ एकैकं वालाग्रमपहृत्य कालो मीयेत इति शेषः, ततश्च यावता कालेन स पल्यः क्षीणो—वालाग्रकर्षणात् क्षयमुपागतः आकृष्टधान्यकोष्ठागारवत्, तथा (नीरजाः)—निर्गतरजःकल्पसूक्ष्मवालाग्रोऽपकृष्टधान्यरजःकोष्ठागारवत्, निर्लेपोऽत्यन्तसंश्लेषात्तन्मयतागतवालाग्रलेपापहारादपनीतधान्यलेपकोष्ठागारवत्, निष्ठितोऽपनेतव्यद्रव्यापनयनमाश्रित्य निष्ठां गतः विशिष्टप्रयत्नप्रमार्जितकोष्ठागारवत्, एकार्थिका वा एते शब्दा अत्यन्तविशुद्धिप्रतिपादनपराः । वाचनान्तरे दृश्यमानं चान्यदपि पदमुक्तानुसारतो व्याख्येयम्, तदेतत्पल्योपममिति, इदं च पल्यगतवालाग्राणां सङ्ख्येयैरेव वर्षैस्तदपहारसम्भवात् संख्येयवर्षकोटाकोटीमानं बादरपल्योपमं ज्ञेयम्, न चानेनात्र वक्ष्यमाणसुषमसुषमादिकालमानादावधिकारः परं सूक्ष्मपल्योपमस्वरूपसुखप्रतिपत्तये प्ररूपितमिति ज्ञायते तेन पूर्वोक्तमेकैकवालाग्रमसङ्ख्येयखण्डीकृत्य भृतस्योत्सेधाङ्गुलयोजनप्रमाणायामविष्कम्भावगाहस्य पल्यस्य वर्षशते वर्षशते एकैकवालाग्रापहारेण सकलवालाग्रखण्डनिर्लेपनाकालरूपमसङ्ख्येयवर्षकोटाकोटीप्रमाणं सूक्ष्मपल्योपमं विचित्राकृतिराचार्यस्येति सूत्रकारेणानुक्तमपि स्वयं ज्ञेयं, तेनैव च प्रस्तुतोपयोगः । अन्यथाऽनुयोगद्वारादिभिः सह विरोधप्रसङ्गादिति सर्वं सुस्थम् ।... एवमग्रे ... सागरोपमेऽपि ज्ञेयम्, अथ सागरोपमस्वरूपं गाथापद्येनाह—'एएसिं पल्लाण', मित्यादि, एतेषामनन्तरोदितानां पल्यानामिति पदैकदेशे, पदसमुदायोपचारात् पल्योपमानां या दशगुणिता कोटाकोटिर्भवेत् तत्सागरोपमस्यैकस्य भवेत् परिमाणमिति, प्रायः सर्वं कण्ठ्यं, नवरमेतेन सागरोपमप्रमाणेन न न्यूनाधिकेनेत्यर्थः चतस्रः सागरोपमकोटाकोट्यः कालः सुषमसुषमा । जं० २ वक्ष० ।

सुसमा-सुषमा-स्त्री० । सुष्ठु समा यस्या सा सुषमा । अवसर्पिण्या द्वितीये उत्सर्पिण्याश्च पञ्चमारके, स्था० १ ठा० ।

तिण्णि सागरोवमकोडीओ कालो सुसमा । भ० ६ श० ७ उ० ।

सुषमा संसारिणं सुखाय चेति प्ररूपणायाह—

सत्तहिं ठाणेहिं ओगाढं सुसमं जाणेज्जा, तं जहा-अकाले ण वरिसइ १, काले वरिसइ २ असाधू ण पुज्जति ३, साधू पुज्जति ४, गुरूहिं जणो सम्मं पडिवन्नो ५, मणो सु (दु) हया ६, वइसु (दु)हया ७। (सू० ५५६+)

'ओगाढं' त्ति अवतीर्णाम् अवगाढां वा प्रकर्षप्राप्तामिति अकाले-अवर्षा असाधवः-असंयता गुरुषु-मातापितृधर्माचार्येषु 'मिच्छं'मिथ्याभावं विनयभ्रंशमित्यर्थः 'प्रतिपन्नः' आश्रितः, 'मणोदुहय' त्ति मनसो मनसा वा दुःखिता-दुःखितस्य दुःखकारित्वं वा द्रोहकत्वं वा, एवं 'वयदुहयं'-त्यपि व्याख्येयमिति । 'सम्मं' ति सम्यग्भावं विनयमित्यर्थं । स्था० ७ ठा० ३ उ० ।

दसहिं ठाणेहिं ओगाढं सुसमं जाणिज्जा, तं जहा-अकाले न वरिसइ, तं चेव विपरीतं, ०जाव मणुन्ना फासा । (सू० ७६५+) स्था० १० ठा० ३ उ० ।

सुसमाउत्त-सुषमायुक्त-त्रि० । सुष्ठुकीभावेन युक्ते, दश० ४ अ० ।

सुसमाहरण-सुषमाहरण-न० । सुष्ठुयोगेन ग्रहणे, सूत्र० १ श्रु० ८ अ० ।

सुसमाहि-सुसमाधि-स्त्री० । स्वस्थचित्तवृत्तौ, सूत्र० १ श्रु० ३ अ० ४ उ० ।

सुसमाहिइंदिय-सुसमाहितेन्द्रिय-त्रि० । सुप्रणिहितेन्द्रिये, दश० ७ अ० ।

सुसमाहिय-सुसमाहित-त्रि० । दर्शनादिषु सम्यगाहिते, आचा० ३ अ० । ज्ञानदर्शनचारित्ररूपसमाधिवति, दशा० ४ अ० । ज्ञानादिषु यत्नपरे, दश० ३ अ० । उद्युक्ते, दश० ६ अ० । निवृत्तविपयव्यापारे, दश० २ चू० । सुतराम्-अतिशयेन समाधियुक्ते, उत्त० २० अ० ।

से किं तं जोगपडिसंलीणया ?, जोगपडिसंलीणया तिविहा पण्णत्ता, तं जहा-अकुसलमणनिरोहो वा कुसलमणउदीरणं वा मणस्स वा एगत्तीभावकरणं, अकुसलवइनिरोहो वा कुसलवइउदीरणं वा वइए वा एगत्तीभावकरणं । से किं तं कायपडिसंलीणया ?, कायपडिसंलीणया जं णं सुसमाहियपसंतसाहरियपाणिपाए कुम्मो इव गुत्तिदिए अल्लीणे पल्लीणे चिट्ठति । सेत्तं कायपडिसंलीणया । (सू० ८०२ ×)

'मणस्स वा एगत्तीभावकरणं' मनसो वा 'एगत्त' त्ति विशिष्टैकाग्रत्वेनैकता तद्रूपस्य भावस्य करणमेकताभावकरणम्, आत्मना वा सहाऽयैकता-निरालम्बनत्वं तद्रूपो भावस्तस्य करणं यत्तत्तथा 'वईए वा एगत्तीभावकरणं' ति वाचो वा विशिष्टैकाग्रत्वेनैकतारूपभावकरणमिति 'सुसमाहियपसंतसाहरियपाणिपाए' त्ति सुष्ठु समाहितः—समाधिप्राप्तो बहिर्वृत्त्या स चासौ प्रशान्तश्चान्तर्वृत्त्या यः स तथा संहृतम्-अविक्षिप्ततया धृतं पाणिपादं येन स तथा ततः कर्मधारयः 'कुम्मो इव गुत्तिदिए' त्ति गुप्तेन्द्रियो गुप्त इत्यर्थः । क इव ?-कूर्म इव, कस्यामवस्थायामित्यत एवाह—'अल्लीणे पल्लीणे' त्ति आलीन-ईषल्लीनः पूर्वं प्रलीनः पश्चात् प्रकर्षेण लीनस्ततः कर्मधारयः । भ० २५ श० ७ उ० ।

सुसमाहियप्पण-सुसमाहितात्मन्-त्रि० । मनोवाक्कायैः सुविशुद्धे दश० ६ अ० ४ उ० ।

सुसमाहियलेस्स-सुसमाहितलेश्य-त्रि० । सुष्ठु अमायमयानुष्ठानात् शोभना समाहिता गृहीता लेश्या अन्तः-करणवृत्तयस्तेजःप्रभृतयो वा येन स सुसमाहितलेश्यः । अकलमषवृत्तौ आचा० १ श्रु० ८ अ० ४ उ० ।

सुसमिय-सुसमित-त्रि० । सुष्ठु पञ्चभिः समितिभिः सम्यग् इतः प्राप्तः ज्ञानादिकं मोक्षमार्गमसौ सुसमितः । समितिसहिते, सूत्र० १ श्रु० १६ अ० । नं० ।

सुसवण-सुश्रवण-त्रि० । सुष्ठु श्रवणं शब्दोपलम्भो येषां ते

मथा । शोभनश्रवणेषु, जी० ३ प्रति० ४ अधि० । प्रश्न० ।
सुसागय-सुस्वागत-न०।अतिशयेन स्वागते,भ०२ श०१ उ० ।
सुमाण-श्मशान-न० । पितृवने, शवस्थाने, उत्त० ३४ अ० ।
आचा० । कल्प० । प्रश्न० । आ० म० ।
सुमाणकम्मंत-श्मशानकर्मान्त-न० । श्मशानगृहे, यत्र शव-
दाह क्रियते । आचा० २ श्रु० १ चू० २ अ० २ उ० ।
सुसाणगिह- श्मशानगृह-न०। पितृवनगृहे, भ० ३ श०७ उ०।
सुसाम-सुसामन्-न०।सप्तमदेवलोकविमानभेदे,स०१७सम० ।
सुसामण्णया-सुश्रामण्यता-स्त्री० । शोभनः पार्श्वस्थादिदो-
षवर्जितनया मूलोत्तरगुणसंपन्नतया च-स चासौ श्रमणश्च
तद्भावस्तत्ता । निरतिचारचारित्रे, स्था० १० ठा० ३ उ० ।
सुसामण्णरय-सुश्रामण्यरत-त्रि० । शोभने श्रामण्ये रते,
भ० २ श० १ उ० । अतिशयेन श्रमणकर्मासक्ते, औ० ।
सुसामाइय-सुसामायिक-त्रि० । सुष्ठु समभावतया सामायिकं
समशत्रुमित्रभावो यस्य स सुसामायिकः । सामायिकस्य
शोभनेऽनुष्ठानके, सूत्र० १ श्रु० १६ अ० ।
सुसावग-सुश्रावक-पुं० । सम्यक्त्वाणुव्रतादिसकलक्रिया-
कलापोपेते, दर्श० ३ तत्त्व । श्रमणोपासकविशेषे, पञ्चा०
१२ विव० ।
सुसाहिय-सुसाधित-त्रि० । सुष्ठु प्रतिपादिते,प्रश्न० ४ संव०
द्वार । साधौ, प्रश्न० ४ संव० द्वार ।
सुसाहु-सुसाधु-पुं० । निर्वाणसाधकयोगसाधनपरे साधौ ,
प्रश्न० ४ संव० द्वार ।
सुसाहुयुत्त-सुसाधुयुक्त-त्रि०।सुसाधोरुद्यतविहारिणो ये समा-
चारास्तैः समायुक्त मध्यमपदलोपी समासः । स्थानशयना-
सनादावुपयुक्ते,"परक्कमेयावि सुसाहुजुत्ते"सूत्र०१ श्रु०१४अ०
सुसाहुवाइ-सुसाधुवादिन्-पुं० ।सुष्ठु शोभनं हितं मितं प्रियं
वदितुं शीलमस्येत्यसौ सुसाधुवादी । सम्यग्भाषासमिते ,
सूत्र० १ श्रु० १० अ० ।
सुसिक्खा-सुशिक्षा-स्त्री० । ग्रहणासेवनाभ्यां सम्यक्पाल-
ने, सूत्र० १ श्रु० १४ अ० । व्य० ।
सुसिणिद्धदंत-सुस्निग्धदन्त-त्रि० । अरूक्षदन्ते, नं० ।
सुसिर-सुषिर-न० । अननादिषु विमानेषु अन्यतमे विमाने ,
स० १६ सम० । औ० । काहलादिवत् कोलवाद्ये, स्था० २
ठा० ३ उ० । रा० ।
सुसिलिट्ठ-सुश्लिष्ट-त्रि० । सुसन्धिके , ज्ञा० १ श्रु० १ अ० ।
त० । अत्यन्तसक्ते,पञ्चा० १८ विव० । औ० । कल्प० । सुघ-
टिते,प्रश्न० ४ आश्र० द्वार । रा० । सम्बद्धे, रा० । अविशर्मरे,
भ० ११ श० ११ उ० ।
सुसिलिट्ठपरिघट्ठ-सुश्लिष्टपरिघृष्ट-त्रि० । यथा भवत्येवं प-
रिघृष्टे, जी० ३ प्रति० ४ अधि० ।
सुसीमा-सुसीमा-स्त्री० । मन्दरस्य पूर्वे शीताया महानद्या द-
क्षिणे वत्सस्य विजयक्षेत्रस्य राजधान्याम् , "सुसीमा कुंडला
चेव जाय" त्ति करणात् । स्था० ८ ठा० ३ उ० ।
दो सुसीमाओ । स्था० २ ठा० ।
जम्बूद्वीपे महाविदेहे वर्षे वत्सो विजयः प्रज्ञप्तः , सुसीमा
राजधानी विजयविभाजकस्त्रिकूटनामा वक्षस्कारपर्वतः
सुवत्सो विजय । जं० ४ वक्ष० । ('वच्छ' शब्दे षष्ठे
भागे इयं दर्शिता । ) धराभिधानस्य कौशाम्बी-
महाराजस्य भार्यायां पद्मप्रभस्वामिमातरि, स्था० ५ ठा० ३
उ० । स० । प्रव० । आव० । स्वनामख्यातायां कृष्णवासुदे-
वाग्रमहिष्याम् , स्था० ८ ठा० ३ उ० ।
सुसील-सुशील-न० । शोभने समाधाने, चारित्रे च । उत्त०
१२ अ० । उद्युक्तविहारिणि, सूत्र० १ श्रु० १ अ० १ उ० । सु-
ष्ठु शीलं-स्वभावो यस्येति । उत्त० २ अ० । शोभनाचारवति,
औ० । अष्टादशसहस्रशीलाङ्गोपेते, ध० ३ अधि० ।
सुसीलभूय-सुशीलभूत-त्रि० । सुष्ठु शोभनं शीलं समाधानं
चारित्रं वा प्राप्त , उत्त० १२ अ० ।
सुसीलसंसग्ग-सुशीलसंसर्ग-पुं० । शीलवद्भिः सम्बन्धे, द-
श० १० अ० ।
सुसुकसुक्क-सुशुल्कशुल्क-न० । सुष्ठु शुल्कवच्छुल्के धान्ये,
सूत्र० १ श्रु० ६ अ० ।
सुसुज्ज-सुसूर्य-न० । विमानभेदे, स० ।
सुसुज्जं सुज्जविंतं सुज्जप्पभं ( स० ) विमाणं जे देवत्ताए
उववण्णा तेसि णं देवाणं णवसागरोवमाइं ठिई पण्णत्ता ।
( सू० ६ ) स० ६ सम० ।
सुसुत्त-सुसूत्र-न० । सुष्ठु सत्ये सूत्रे, आव० ५ अ० । कणाद-
मतानुगामिभिः-"सुसूत्रमासूत्रितम्" सम्यगागमः प्रपञ्चि-
तः । अथवा-सुसूत्रमिति क्रियाविशेषणं शोभनं सूत्रं-वस्तु-
व्यवस्थाघटनाविज्ञानं यत्रैवमासूत्रितं तत्तच्छास्त्रार्थोपनिब-
न्धः कृत इति हृदयम् , सूत्रं तु सूत्रनाकारिग्रन्थे तन्तुव्यव-
स्थयोरिति अनेकार्थवचनात् । स्या० ।
सुसुमार-सुसुमार-पुं० । जलचरविशेषे, प्रज्ञा० ।
से किं तं सुसुमारा सुसुमारा एगागारा पण्णत्ता , से त्तं
सुसुमारा । ( सू० ३३ + ) प्रज्ञा० १ पद ।
सुसुविण-सुस्वप्न-पुं० । शोभनाः स्वप्नाः,सुस्वप्नाः । श्वेतसु-
रभिपुष्पवस्त्रातपत्रचामरादिस्वप्नेषु, पो० १४ विव० ।
सुसूर-सुसूर-न० । चतुर्थदेवलोकविमानभेदे, स० ।
सुसूरं सुरावत्तं (स०) विमाणं देवत्ताए उववण्णा तेसि णं
देवाणं उक्कोसेणं पंचसागरोवमाइं ठिई पण्णत्ता । (सू०५×)
स० ५ सम० ।
सुसेण-सुषेण-पुं० । अष्टसप्ततितमे ऋषभदेवपुत्रे, कल्प० १
अधि० ७ क्षण । भरतचक्रिणः सेनापतौ , जं० ३ वक्ष० ।
आ० म० । ('भरह'शब्दे चतुर्थभागे १४४३ पृष्ठे कथा गता ।
शाखाञ्जनीराजस्य महाचन्द्रस्यामात्ये , विपा० १ श्रु०
४ अ० । ( 'सगड' शब्देऽस्मिन्नेव भागे कथा
गता । ) शाखाञ्जन्यां नगर्यां सुभद्राख्यसार्थवाह-
भद्राभिधानतद्भार्ययोः पुत्र , शकटः स च सुषेणाभि-

धामामात्येन सुदर्शनाभिधानगणिकाव्यतिकरे सगणिको विनाशिनः । स्था० १० ठा० ३ उ० ।

सुसेणा--सुषेणा--स्त्री० । रक्तामहानदीसङ्गतायां महानद्याम्, स्था० ५ ठा० ३ उ० ।

सुस्समण--सुश्रमण--पुं० । मुनौ, आचा० २ श्रु० ४ चू० ।

सुस्सर--सुस्वर--त्रि० । शोभनषड्जादिस्वरविशेषे, प्रश्न० ४ संव० द्वार । आ० म० । रा० । सुस्वरघोषे, जी० ३ प्रति० ४ अधि० । "सुस्सराओ सुस्सरघोसाओ" जी० ३ प्रति० ४ अधि० । नि० चू० । जं० ।

सुस्सरणाम- सुस्वरनामन्--न० । स्वरनामकर्मभेदे, यदुदयाच्छीजीवस्य स्वरः श्रोतृणां प्रीतिहेतुरुपजायते तत्सुस्वरनाम। प० सं० ३ द्वार । कर्म० । आ० । प्रव० । रा० । जं० ।

सुस्सरपरिवायिणी--सुस्वरपरिवादिनी--स्त्री० । वीणाविशेषे, प्रश्न० ५ संव० द्वार ।

सुस्सरा--सुस्वरा--स्त्री० । गीतरतेर्गन्धर्वेन्द्रस्य स्वनामख्यातायामग्रमहिष्याम् ,स्था० ४ ठा० ३ उ० । ज्ञा० । आ० चू० ।

सुस्सुयबहुस्सुय--सुश्रुतबहुश्रुत--पुं०। सुश्रुतम् शोभनमाकर्णितं बहु च श्रुतं येन स सुश्रुतबहुश्रुतः । तथाविधे बहुश्रुते, यस्य बह्वपि श्रुतं न विस्मृतिपथमुपयाति स सुश्रुतबहुश्रुतः।अथवा बहुश्रुतोऽपि सन् यस्तस्योपदेशेन वर्त्तते सन्मार्गानुसारित्वात् स सुश्रुतबहुश्रुतः । व्य० १० उ० ।

सुस्सू--श्वश्रू--स्त्री० । श्वशुरस्त्रियाम् , बृ० २ उ० ।

सुस्सूगुज्झ--श्वश्रूगुह्य--न० । श्वश्र्वा सम्बन्धिनि गुह्ये, बृ० २ उ० । ( कौतूहल श्वश्रूगुह्यदृष्टान्तः ' वसहि ' शब्दे षष्ठभागे गतः । )

सुस्सूसण--सुश्रूषण--न० । विधिवदनतिदूरासन्नतया सेवने, दशा० ६ अ० १ उ० । व्य० । आचा० ।

सुस्सूसणाविणय--सुश्रूषणाविनय--पुं० । दर्शनविनयभेदे, भ० २५ श० ७ उ० । ( ' विणय ' शब्दे षष्ठभागे स्वरूपम् । )

सुस्सूसमाण--सुश्रूषमाण--त्रि० । श्रोतुमिच्छति विनययुक्ते, नि० १ श्रु० १ वर्ग १ अ० । आव० । आ० म० । औ० । सू० प्र० । रा० । ज्ञा० । दश० । भ० । आचा०। श्रोतुं प्रवृत्ते,सूत्र०२ श्रु० १ अ० । परिचरति, द्वा० २५ अष्ट० । सुश्रूषां कुर्वाणे , सूत्र० १ श्रु० ६ अ० । धर्मं श्रोतुमिच्छति , आचा० १ श्रु० ६ अ० ५ उ० ।

सुस्सूसा--शुश्रूषा--स्त्री०। गुरोरादेशं प्रति श्रोतुमिच्छा सुश्रूषा। गुर्वादेर्वैयावृत्त्ये, सूत्र० १ श्रु० ६ अ० । विधिवददूरासन्नतया सेवने, द्वा० २८ द्वा० । पञ्चा० । आ० म० । सद्बोधावन्ध्यनिबन्धनधर्मशास्त्रश्रवणवाञ्छायाम् , पञ्चा० ६ विव० । ध० । यो० विं० । श्रवणेच्छायाम् ,ज्ञा० १ श्रु० १३ अ० । पञ्चा० ।

सुस्सूसाभावकरण--सुशुश्रुषाभावकरण--न० । धर्मशास्त्रं प्रति श्रोतुमिच्छा शुश्रूषा तल्लक्षणो भावः -परिणामस्तस्य करणं निर्वर्त्तनं श्रोतुस्तैस्तैर्वचनैरिति । श्रोतुः श्रवणेच्छोत्पादने , शुश्रूषामनुत्पाद्य धर्मकथने प्रत्युतानर्थसम्भवः , पठ्यते च- 'स खलु पिशाचकी वातकी वा य परेऽनर्थिनि वाचमुदीरयति ।' ध० १ अधि० ।

सुस्सूसावयणकर--शुश्रूषावचनकर--त्रि० । पूजाप्रधानवचनकरणशीले, दशा० ६ अ० २ उ० ।

सुस्सूसु--शुश्रूषु--त्रि० । श्रोतुमुपस्थिते, ध० १ अधि० ।

सुस्टु--सुष्ठु--अव्य० । " ट्ट-ष्टयोः स्टः " ॥ ८।४।२९० ॥ द्विरुक्तस्य टकारस्य षकाराक्रान्तस्य टकारस्य च मागध्यां सकाराक्रान्तः टकारो भवति । इति ष्टस्य स्टः । शोभने, प्रा० ।

सुह--शुभ--न० । पुण्य , आव० ४ अ० । उत्त० । सूत्र० । आ० म० । संक्लेशविरहिते , उत्त० १ अ० । सुकर्मणि , स्था० ६ ठा० ३ उ० । औ० । शुभगन्धस्पर्शात्मके कर्मणि, जी० १ प्रति० । शोभने, त्रि० । आव० ४ अ० । स्था० । उत्त० । कल्याणहेतौ, कल्प० १ अधि० ३ क्षण । रा० । कोमले , रा० । प्रधाने , रा० । जं० । मङ्गलभूते , रा० । शुभाध्यवसाये तदात्मकत्वात् सामायिके , न० । आ० म० १ अ० । औ० ।

सुख--न० । सुखयतीति सुखम् , शर्मणि , ज्ञा० १ श्रु० १ अ० । जी० । दशा० । भ० । निर्वृत्तौ, कल्प० १ अधि० ३ क्षण । सातोदये, सूत्र० १ श्रु० २ अ० । यथेप्सितविषये, उत्त० ७ अ० । तृषितस्य जलपान इवानन्दे , स्था० ३ ठा० ४ उ० । पा० । आत्मनो विशेषगुणे, सुखयुक्ते, त्रि० । विशे० ।

गुरौ सुखत्वामिति व्युत्पत्तिः सुखस्तर्हि कथमाचार्य इत्याह—

सुपसंसत्थो खाणि-दियाणि सुद्धिंदिओ सुहो ऽभिमओ ।
वसिंदिओ जमुत्तं,असुही अजिइंदिओ ऽभिमओ॥३४४३
सुहमहवा निव्वाणं, तच्चं सेसमुवयारओ ऽभिमयं ।
तस्साहणं गुरु त्ति य, सुहमन्ने पाणसन्नव्व ॥ ३४४४ ॥

सुशब्दः—प्रशंसार्थो निपातः खानि-इन्द्रियाणि, शोभनानि खानि यस्यासौ सुखः शुद्धेन्द्रियोऽभिमतः । किमुक्तं भवति-वश्येन्द्रियो-निर्विकारेन्द्रिय इति यदुक्तं भवति, अजितेन्द्रियस्तु सुखोऽभिमत इति । अथवा-सुखयतीति सुखं तथ्यं निरुपचरितं निर्वाणमुच्यते,शेषं तु सांसारिकमुपचारतः सुखमभिमतम् । ततोऽस्य द्विविधस्यापि सुखस्य साधनं कारणं गुरुरित्यसौ सुखम्, कारणे कार्योपचाराद् अन्ने भक्ते प्राणसञ्ज्ञावदिति, अन्नं—प्राणा वृष्टिस्तन्दुला इत्यादिवद्यथोक्तोभयरूपसुखहेतुत्वात् सुखो, गुरुरित्यर्थः ।

अथवा अन्यथा सुखशब्दार्थमाह—

जं च सियं खेहिं तो, ऽणुग्गहरूवं तओ सुहं तं च ।
अभयाईं तप्पयाया, सुहमिहतब्भाविभावाओ ॥३४४६॥

यद्वा-सुष्ठु हितं-प्राप्तं स्थितं खेभ्यः -इन्द्रियेभ्यः, खैरिन्द्रियैः करणभूतैरित्यर्थः , निपातनात् सुखमुच्यते । तत्कुतः प्राप्तम् ? इत्याह-ततो गुरोः सकाशात् सर्वे जीवा न हन्तव्या इत्यादि गुरुकृतानुग्रहरूपमभयप्रदानादि द्रष्टव्यम् , आदिशब्दात्-ज्ञानादिपरिग्रहः गुरुप्रदत्तेनाभयप्रदानादिना जीवाः पञ्चभिरपीन्द्रियैः सुखमनुभवन्ति । अतस्तत्प्रदाता अभयादिप्रदाता गुरुरपीह सुखम् , तद्भक्तिभावात्सुखोपचारात्कारणे कार्योपचारादित्यर्थः । विशे० । शरीरावदाभावे, औ० । रा० । प्रश्न० । कर्म० । उत्त० । ' गामाणुगामं सुहं सुहेणं वि-

हरमाणे " सुहं सुखेन-शरीरखेदाभावेन संयमबाधाभावेन च विहारेण वा ग्रामादिषु विहरन् । रा० ।

सुखं सामान्यत आह—

दसविहे सुखे पएणत्ते,तं जहा-"आरोग्ग १ दीहमाऊ२, अड्डेजं ३ काम ४ भोग ५ संतोसो ६ । अत्थि ७ सुहभोग ८ निक्खम्ममेव ९ तत्तो अणाबाहे १०॥१॥"(सूत्र०७३७)

'दसविहे' त्यादि, 'आरोग्ग' गाहा, आरोग्यं—नीरोगता१ दीर्घमायु —चिरं जीवितं, शुभमितीह विशेषणं दृश्यमिति २, 'अड्डेज्ज' त्ति आढ्यत्वं—धनपतित्वं सुखकारणत्वात्सुखम्, अथवा-आढ्यैः क्रियमाणा इज्या पूजा आढ्येज्या, प्राकृतत्वादड्डेज्जत्ति ३, 'काम' त्ति कामौ—शब्दरूपे सुखकारणत्वात् सुखम् ४, एवं 'भोगे' त्ति भोगा —गन्धरसस्पर्शाः ५, तथा सन्तोष —अल्पेच्छता—तत्सुखमेव आनन्दरूपत्वात्सन्तोषस्य, उक्तं च— "आरोगसारियं मा-णुसत्तणं सच्चसारिओ धम्मो । विज्जा निच्छयसारा, सुहाई संतोससाराइं ॥१॥" इति ६। 'अत्थि' त्ति येन येन यदा यदा प्रयोजनं तत्तत्तदा तदाऽस्ति—भवति जायत इति सुखमानन्दहेतुत्वादिति ७, 'सुहभोग' त्ति शुभः—अनिन्दितो भोगो—विषयेषु भोगक्रियेति स सुखमेव सातोदयसम्पाद्यत्वात् तस्येति ८, तथा 'निक्खम्ममेव' त्ति निष्क्रमणं निष्क्रम —अविरतिजम्बालादिति गम्यते, प्रव्रज्येत्यर्थः, इह च द्विर्भावो नपुंसकता च प्राकृतत्वात्, एवकारोऽवधारणे, अयमर्थः—निष्क्रमणमेव भवस्थानां सुखं, निराबाधस्वायत्तानन्दरूपत्वात्, अत एवोच्यते—'दुवालसमासपरियाए समणे निग्गंथे अणुत्तराणं देवाणं तेउल्लेसं वीइवयइ " त्ति । तथा " नैवास्ति राजराजस्य, तत्सुखं नैव देवराजस्य । यत्सुखमिहैव साधो-र्लोकव्यापाररहितस्य ॥१॥ " इति, शेषसुखानि हि दु खप्रतीकारमात्रत्वात् सुखाभिमानजनकत्वाच्च तत्त्वतो न सुखं भवन्तीति ६, 'तत्तो अणबाहि' त्ति ततो-निष्क्रमणसुखानन्तरम् अनाबाधं-न विद्यते आबाधा-जन्मजरामरणक्षुत्पिपासादिका यत्र तदनाबाधं; मोक्षसुखमित्यर्थः, एतदेव च सर्वोत्तमं, यत उक्तम्—"नवि अत्थि माणुसाणं तं सोक्खं न वि य सव्वदेवाणं । जं सिद्धाणं सोक्खं, अव्वाबाहं उवगयाणं ॥ १ ॥ " इति १०, निष्क्रमणसुखं चारित्रसुखमुक्तम् । स्था० १० ठा० ३ उ० । "दव्वादिएहि निच्चं एगंतेणेव जेसि अप्पाओ । होइ अभावो तेसिं, सुह दुहसंसारमोक्खाणं ॥ " दश०७ अ० । ( सिद्धसुखं 'सिद्ध' शब्देऽस्मिन्नेव भागे उक्तम् । ) ( सुखदु खकारणयोः सिद्धिः 'कम्म' शब्दे तृतीयभागे २५३ पृष्ठे उक्ता ।) सुखहेतुत्वात् सुखम् । उपशमश्रेण्यां शमक प्रत्यपूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायरूपायां गुणत्रयावस्थायाम् सूत्र०१ श्रु० ११ अ०। विपा०। राज्यैश्वर्यादौ, अष्ट० २१ अष्ट० । अनायासे, नं० । शरीरमनसोऽनुकूले , आचा० १ श्रु० ३ अ० १ उ० । आव० । अष्ट० ।

सुहअ(आ)-शुभग(गा)-पुं० । स्त्री० । " ऊत्सुभगमुसले वा " ॥८।१।११३॥ इत्यनयोरादेरूत् विकल्पेन । स्त्रीभिः काम्ये पुरुषे, पुरुषेण च काम्यायां स्त्रियाम् , प्रा० १ पाद ।

सुहकम्माणुबंध-शुभकर्मानुबन्ध-पुं० । कुशलकर्मानुबन्धे,पं० सू० १ सूत्र ।

सुहकामय-सुखकामक-त्रि० । सुखमानन्दरूपं तं कामयते इति । सुखेच्छौ , भ० १५ श० । प्रति० ।

सुहग-सुभग-त्रि० । सुरूपे , औ० ।

सुहगइ-सुखगति-स्त्री० । प्रशस्तविहायोगतौ,कर्म० २ कर्म० ।

सुहगुरुजोग-शुभगुरुयोग-पुं० । विशिष्टचारित्रयुक्ताचार्यसबन्धे , ध० २ अधि० ।

सुहजीवि-सुखजीविन्-पुं०।सुखेन जीवनशीले,"मज्झिमस्सरमंताओ हवंति सुहजीविणो । खायई पियई देई, मज्झिमस्सरमस्सिओ ॥१॥ " अनु० ।

सुहजोग-शुभयोग-पुं० । साधकचन्द्रनक्षत्रादिसम्बन्धे , पञ्चा० ८ विव० । शुभे संयमव्यापारे , प्रश्न १ संव० द्वार । प्रशस्तमनोवाक्कायव्यापारेषु , ध० ३ अधि० ।

सुहज्झाण-शुभध्यान-न० । धर्म्मशुक्ललक्षणे ध्यानभेदे , आव० ५ अ० ।

सुहड-सुहृत-त्रि०।सुष्ठु हृतं क्षुद्रस्य वित्तमिति सुहृतम् ।दश० ७अ०। सम्यक्कृते , उत्त० १ अ० । ' सुहडे त्ति नो वए ' तत्र सुहृतमुपकरणमशिवोपशान्तये । उत्त० १ अ० ।

सुहणाणज्झाणमग्ग-शुभज्ञानध्यानमग्न-त्रि०। शुद्धे यथार्थपरिच्छेदनभेदज्ञानविभक्तस्वपरत्वे च स्वस्वरूपैकत्वानुभवतन्मयत्वध्यानमग्ने , अष्ट० २ अष्ट० ।

सुहणाम-शुभनामन्-न० । नामकर्मभेदे , यदुदयवशान्नाभेरुपर्यवयवाः शुभा भवन्ति । कर्म० ६ कर्म० । आ० । पं० सं० ।

सुहणामा-शुभनामा-स्त्री०। लोकोत्तररीत्या पक्षस्य पञ्चम्यां तिथौ, जं० ७ वक्ष० । सू० प्र० । चं० प्र० ।

सुहणिसण्ण-सुखनिषण्ण-त्रि०। अनाबाधवृत्त्योपविष्टे, प्रश्न० १ संव० द्वार ।

सुहणुपाल-सुखानुपाल-त्रि० । सुखेनानुपाल्यते इति सुखानुपाल । सुरक्षे , पञ्चा० १७ विव० ।

सुहत्थ-सुखार्थ-त्रि० । सुखनिमित्ते, रा० ।

सुहत्थि-सुहस्तिन्-पुं० । गन्धहस्तिनि, भ० १५ श० । स्थूलभद्रस्वामिना दशपूर्वधरे शिष्ये , कल्प० २ अधि० ८ क्षण । स्था० । ज्ञा० । आ० म० । आव० । आ० क० । नं० । आ० चू० । राजगृहवास्तव्येषु कालोदाय्यादिष्वन्ययूथिकेषु अन्यतमे भ० ७ श० १० उ० । मन्दरस्य दक्षिणपूर्वे शीताया दक्षिणदिग्हस्तिकूटे जं० ४ वक्ष० ।

सुहद-सुहृत्-पुं० 'स्वरादसंयुक्तस्यानादे ' ॥८।१।१७६॥ इत्याधिकारात् । क-ग-च-ज-त-द-प-य-वां प्रायो लुक् ॥ ८।१। १७७ ॥ समासे तु वाक्यविभक्त्यपेक्षया भिन्नपदत्वमपि विवक्ष्यते तेन तत्र यथादर्शनमुभयमपि भवति । सुहदा । सुहओ इत्यादि । मित्रे , प्रा० १ पाद ।

सुहदव्वाइसमुदय-शुभद्रव्यादिसमुदय-पुं० । प्रशस्तद्रव्यप्रभृतीनां समवाये, पञ्चा० १५ विव० ।

सुहधाउजोगभाव-शुभधातुयोगभाव-पुं० । शुभानां सुन्दराणां धातूनां वातपित्तकफानां योगानां कायादिव्यापाराणां भाव सत्ता शुभधातुयोगभाव. । शुभानां धातूनां सम्बन्धे , पञ्चा० ५ विव० ।

सुहदुक्खसंपओग-सुखदुःखसम्प्रयोग-पुं०। सुखदुःखयोरकलिपते योगे दश० १ अ० ।

सुहदुक्खसमग्गिय-सुखदुःखसमन्वित-त्रि०। सुखमानन्दरूपं दु खमसातोदयरूपमिति ताभ्या समन्वितो युक्त । साता-सातयुक्ते , सूत्र० १ श्रु० १ अ० ३ उ० ।

सुहदुक्खिय-सुखदुःखित-त्रि० । सुखदु खोपमपंक्के , व्य० ४ उ० ।

सुहदुहनिव्विसेस-सुखदुःखनिर्विशेष-त्रि० । हर्षशोकादिरहित , प्रश्न० ५ संव० द्वार ।

सुहपगइ-शुभप्रकृति-स्त्री० । पुण्यप्रकृतिषु, कर्म० ५ कर्म० ।

सुहपडिबोहा-सुखप्रतिबोधा-स्त्री० । सुखेनाकुच्छ्रेण नखच्छोटिकामात्रेणापि प्रतिबोधो-जागरणं स्वप्तुर्यस्यां स्वापवास्थायां सा सुखप्रतिबोधा । निद्राविशेष, कर्म० १ कर्म० ।

सुहपय-सुखपद-न० । जइ वि अवराहं ण पत्तो तहा वि पच्छित्तं भवतीति लक्षणे प्रायश्चित्तदाने , नि० चू० १ उ० ।

सुहपरिकम्मणा-सुखपरिकर्म्मणा-स्त्री०। सुखा-सुखकारिणी परिकर्मणा कृतविश्रामणं यस्यां सा सुखपरिकर्म्मणा । असम्बाधनाभेदे, कल्प० १ अधि० ३ क्षण ।

सुहपसुत्त-सुखप्रसुप्त-त्रि० । सुखेनैव शयाने , आ० म० १ अ० । आव० ।

सुहप्पदाया-सुखप्रदातृ-त्रि० । सुखदे, " सर्वाणि सत्त्वानि सुखे रतानि , सर्वाणि दु खाच्च समुद्विजन्ति । तस्मात्सुखार्थी सुखमेव दद्यात् , सुखप्रदाता लभते सुखानि ॥१॥" सूत्र० १ श्रु० ३ अ० ४ उ० ।

सुहफल-शुभफल-त्रि० । अभिमतफले , पञ्चा० ४ विव० ।

सुहफास-सुखस्पर्श-त्रि० । सुख -कोमल स्पर्शो यस्य स सुखस्पर्श । शुभस्पर्शे, रा० । चं० प्र० । सू० प्र० । स० । ज० । सुखहेतुस्पर्शे , रा० । आ० म० । च० प्र० ।

सुहभाव-शुभभाव-त्रि० । गुणानुरागरूपेषु शोभनपरिणामेषु, पञ्चा० ७ विव० । प्रायश्चित्ततया विवक्षितसत्परिणामे, पञ्चा० १६ विव० । उदारतया प्रवर्धमानप्रशस्ताध्यवसायेषु, पञ्चा० ८ विव० ।

सुहभावजुय-शुभभावयुत-त्रि० । विशिष्टक्रियावत् प्रशस्ताध्यवसायविशेषोपेते, पञ्चा० १८ विव० ।

सुहभाववुड्ढि-शुभभाववृद्धि-स्त्री० । कुशलाशयवृद्धौ, पं० व० ५ द्वार । पञ्चा० ।

सुहभोग-शुभभोग-पुं०। शुभो-निन्दितो भोगो विषयेषु भोगक्रिया यस्यति । अनिन्दितक्रियायुक्त, स्था० १० ठा०३ उ०।

सुखभोग-पु० । सुखमेव सातोदयसपाद्यत्वात्तस्य भोग सुखभोग । सुखभेदे, स्था० १० ठा० ३ उ० ।

सुहभोगि-सुखभोगिन्-त्रि० । सुखम्-आनन्दरूपं भुनक्तीति सुखभोगी । सुखाऽऽस्वादके, आचा० १ श्रु० २ अ० ३ उ० ।

सुहमण-सुभमनस्-त्रि० । असक्लिष्टचेतसि , प्रश्न० १ सव० द्वार ।

सुहमेत्त-सुखमात्र-न० । सामान्येनैव वैषयिके सुखे पदपथ्याहारतृप्तिजनितपरिणामसुन्दरसुखकल्पं स्वपरजीवप्रतिष्ठित तत्सुखमात्रम् । स्वपरनिष्ठितं यत्किञ्चित्सुखे षो० १३ विव० ।

सुहमोय-सुखमोच-त्रि० । सुखेन मोच्यन्ते इति सुखमोचा. । सुखपरित्याज्येषु, वृ० २ उ० ।

सुहम्म-सुधर्मन्-पुं० । श्रीवीरजिनेन्द्रस्य पञ्चमे गणधरे,कल्प० २ अधि०८क्षण । (श्रीवीरपट्टे श्रीसुधर्म्मस्वामी पञ्चमो गणधर· तद्वर्णनम् 'अज्जसुहम्म ' शब्दे प्रथमभागे २१६ पृष्ठे गतम् । )

अथ पञ्चमगणधरवक्तव्यतामभिधित्सुराह—

ते पव्वइए सोउं, सुहम्म आगच्छई जिणसगासं ।
वच्चामि ण वंदामी, वंदित्ता पज्जुवासामि ॥ १७७० ॥

व्याख्या पूर्ववत् , नवरं सुधर्मनामा द्विजोपाध्यायोऽत्र वक्तव्य. ।

आगतस्य तस्य भगवता किं कृतमित्याह—

आभट्ठो य जिणेणं, जाइजरा-मरणविप्पमुक्केणं ।
नामेण य गोत्तेण य, सव्वण्णू सव्वदरिसीणं ॥१७७१॥

व्याख्या पूर्ववदिति । विशे० । कल्प० । आ० म० । (सुधर्म्मस्वामिन आयुरादि 'गणहर' शब्दे तृतीयभागे ८१६ उक्तम् । )

सुहम्मा-सुधर्म्मा-स्त्री० । चमरादीनामिन्द्राणां सूर्यादीना च महर्द्धिकदेवाना सभा सुधर्म्मासभा, । देवसभायाम् , रा० । प्रति० । ज० । आ० म० । प्रश्न० । सभाना मध्ये सुधर्म्मा श्रेष्ठा । सूत्र० १ श्रु० ६ अ०। स्था० ।

चमरस्स णं असुरिंदस्स असुररण्णो सभा सुहम्मा छत्तीसं जोयणाइं उड्ढं उच्चत्तेणं होत्था । ( सू० ३६ × ) स० ३६ सम० ।

चमरस्स णं असुरिंदस्स असुररण्णो सभा सुहम्मा , एकावन्न खम्भसयसन्निविट्ठा पण्णत्ता । ( सू० ५१ × ) स० ५ सम० । ( ' सूरियाभ ' शब्दे वक्ष्यते एषा । )

सुधर्मावर्णक —

कहि णं भंते ! सक्कस्स देविंदस्स देवरण्णो सभा सुहम्मा पण्णत्ता ?, गोयमा ! जंबूदीवे दीवे मंदरस्स पव्वयस्स दाहिणेणं इमीसे रयणप्पहाए पुढवीए० एवं जहा रायप्पसेणइज्जे ०जाव पंचवडिंसगा पण्णत्ता, तं जहा—असोयवडिंसए ०जाव मज्झे सोहम्मवडिंसए से णं सोहम्मवडेंसए महाविमाणे अद्धतेरस य जोअणसयसहस्साइं आयामविक्खंभेणं । एवं जहा सूरियाभे तहेव माणं तहेव उववाओ । सक्कस्स य अभिसेओ तहेव जहा सूरियाभस्स अलंकारअच्चणिया तहेव ०जाव आयरक्ख त्ति, दोसागरोवमाइं ठिई० । सक्के णं भंते ! देविंदे देवराया के महिड्ढीए ०जाव के महसोक्खे ? । गोयमा ! महिड्ढीए ०जाव महसोक्खे से णं तत्थ बत्तीसाए विमाणावाससयस-

हस्साणं०जाव विहरइ, एवं महिड्ढीए०जाव महासोक्खे सक्के देविंदे देवराया सवं भंते ! सेवं भंते ! त्ति ( सू० ४०७+ )

'कहि णं' मित्यादि "एवं जहा रायप्पसेणइज्जे" इत्यादिकरणादेवं दृश्यम्-"पुढवीए बहुसमरमणिज्जाओ भूमिभागाओ उड्ढ चंदिमसूरियगहगणनक्खत्ततारारूवाणं बहूइं जोयणाइं बहूइ जोयणसयाइं एवं सहस्साइं एवं सयसहस्साइं बहूओ जोयणकोडीओ बहूओ जोयणकोडाकोडीओ उड्ढं दूरं वीइवइत्ता एत्थ णं सोहम्मे नामं कप्पे पण्णत्ते" इत्यादि 'असोयवडिंसए' इह यावत्करणादिदं दृश्यम्-' सत्तवन्नवडेंसए चंपगवडेंसए चूयवडेंसए" त्ति विवक्षिताभिधेयसूचिका चेयमतिदेशगाथा-" एवं जह सूरियाभे, तहेव माणं तहेव उववाओ । सक्कस्स य अभिसेओ , तहेव जह सूरियाभस्स ॥१॥ " इति एवम्—अनेन क्रमेण यथा सूरिकाभे विमाने राजप्रश्नकृताख्यग्रन्थोक्ते प्रमाणमुक्तं तथैवास्मिन् वाच्यं तथा यथा सूरिकाभाभिधानदेवस्य देवत्वेन तत्रोपपात उक्तस्तथैवोपपातः शक्रस्येह वाच्यो अभिषेकश्चेति,तत्र प्रमाणमायामविष्कम्भस्यान्धि दर्शितम् शेष पुनरिदम्-"ऊयालीसं च सयसहस्साइं बावन्नं सहस्साइं अट्ठ य अडयाले जोयणसए परिक्खेवेणं ति ॥" उपपातश्चैवम्-' तेणं कालेणं तेणं समएणं सक्के देविंदे देवराया अहुणोववन्नमेत्ते चेव समाणे पंचविहाए पज्जत्तीए पज्जत्तिभाव गच्छइ,तं जहा—आहारपज्जत्तीए इत्यादि, अभिषेक पुनरेवम्-'तए णं सक्के देविंदे देवराया जेणेव अभिसेअसभा तेणेव उवागच्छइ तेणेव उवागच्छित्ता अभिसेयसभं अणुपयाहिणीकरेमाणे अणुप्पयाहिणीकरेमाणे पुरच्छिमिल्लेणं दारेणं अणुपविसइ, जेणेव सीहासणे तेणेव उवागच्छइ तेणेव उवागच्छित्ता सीहासणवरगए पुरत्थाभिमुहे निसण्णे तए णं सक्कस्स * देविंदस्स देवरायस्स सामाणियपरिसोववण्णगा देवा आभिओगिए देवे सद्दावेंति सद्दावित्ता, एवं वयासी-खिप्पामेव भो ! देवाणुप्पिया ! सक्कस्स *३ महत्थं महग्घं महरिहं विउलं इंदाभिसेयं उवट्ठवेह' इत्यादि, 'अलंकारअच्चणिया य तहेव' त्ति, यथा सूरिकाभस्य तथैवालङ्कारोऽर्चनिका चेन्द्रस्य वाच्या , तत्र अलङ्कार ,' तए णं से सक्के देवे तप्पढमयाए पम्हलसूमालाए सुरभीए गंधकासाइयाए गायाइं लूहेइ लूहेत्ता सरसेणं गोसीसचंदणेणं गायाइं अणुलिंपइ अणुलिंपित्तो नासानीसासवायवोज्झं चक्खुहरं वण्णफरिसजुत्तं हयलालापेलवातिरेग धवलकणगखचियंतकम्म आगासफालियसमप्पभं दिव्वं देवदूसजुयलं नियंसेति नियंसित्ता हारं पिणद्धेति' इत्यादीति अर्चनिकालेशस्त्वेवम्-तए णं से सक्के *३ सिद्धायययणं पुरत्थिमिल्लेणं दारेणं अणुपविसइ अणुप्पविसित्ता जेणेव देवच्छंदए जेणेव जिणपडिमा तेणेव उवागच्छइ तेणेव उवागच्छित्ता जिणपडिमाणं आलोए पणाम करेइ, आलो० करेत्ता लोमहत्थग गेण्हइ,लोम० गिहित्ता जिणपडिमाओ लोमहत्थेणं पमज्जइ जिण० जित्ता जिणपडिमाओ सुरभिणा गंधोदएणं एहाणेइ त्ति०जाव आयरक्ख' त्ति अर्चनिकाया परो ग्रन्थस्तावद्वाच्यो यावदात्मरक्षा ,स चैवं लेशतः-'तए णं से सक्के देविंदे देवराया समं सुहम्मं अणुपविसइ अणुप्पविसित्ता सीहासणे पुरत्थाभिमुहे निसीयइ,तए णं सक्कस्स*२ अवरुत्तरेणं उत्तरपुरच्छिमेणं चउरासीईसामाणियसाहस्सीओ निसीयंति पुरत्थिमेणं अट्ठ अग्गमहिसीओ, दाहिणपुरत्थिमेणं अभिंतरिया परिसा वारसदेवसाहस्सीओ निसीयंति,दाहिणेणं मज्झिमियाए परिसाए चोद्दसदेवसाहस्सीओ दाहिणपच्चत्थिमे णं वाहिरियाए परिसाए सोलस देवसाहस्सीओ पच्चत्थिमे णं सत्त अणीयाहिवइणो । तए णं तस्स सक्कस्स देविंदस्स देवरण्णो चउद्दिसिं चत्तारि आयरक्खं देवचउरासीइसाहस्सीओ निसीयंति ' इत्यादीति , ' के महिड्ढीए ' इह यावत्करणादिदं दृश्यम्—' के-महज्जुइए महाणुभागे के महाजसे के महाबले' त्ति । 'बत्तीसाएविमाणावाससयसाहस्साणं' इह यावत्करणादिदं दृश्यम्-" चउरासीए सामाणियसाहस्सीण तायत्तीसाए तायत्तीसगाण अट्ठण्हं अग्गमहिसीणं ०जाव- अन्नेसिं च बहूणं देवाणं देवीण य आहिवच्चं० जाव कारेमाणे पालमाणे" त्ति । भ०१० श० ६ उ० ।

सुहय-सुभग-त्रि० । मनोरमे, 'लट्ठं वतं सुहयं मणोरमं चारु रमणिज्ज, ' पाइ० ना० ८ वर्ग ।

सुहर-सुभर-त्रि० । न्यूनोदरतया आहारपरित्यागिनि, दश०८ अ० ।

सुहरा-देशी-चटिकाभेदे, यस्या अधोमुखं नीडं भवति । दे० ना० ८ वर्ग ३६ गाथा ।

सुहरासि-सुखराशि -पुं० । सुखसंघाते,आ० म० १ अ० ।

सुहरिसिगा-सुहरिरियका-स्त्री० । वनस्पतिविशेषे, जी० ३ प्रति० ४ अधि० ।

सुहरूव- सुखरूप-त्रि० । सातागौरवस्वभावे , सूत्र० १ श्रु० ६ अ० ।

सुहलेस्सा-सुखलेश्या-स्त्री० । सुखदतेजसि, जं० ७ वक्ष० । सुखलेश्याश्चन्द्रमसो न शीतकाले मनुष्यलोक इवात्यन्तशीतरश्मय इत्यर्थ , सू० प्र १६ पाहु० ।

सुहवाससुरभिगंध-शुभवाससुरभिगन्ध-पुं० । शुभवासैः सुन्दरचूर्णैः सुष्ठु गन्धे, तं० ।

सुहविण्णप्प-सुखविज्ञाप्य-त्रि० । सुखेनैव प्रबोध्ये, सुहविणप्पो सुहवणो त्ति । नि० चू०२ उ० ।

सुहविण्णवणा-सुखविज्ञापना-स्त्री० । सुखेन विज्ञापना-प्रार्थना यस्या सा । अनायाससमाध्यायां सुप्रतिसेव्यायां स्त्रियाम् , वृ० १ उ० ३ प्रक० ।

सुहविवाग-शुभविपाक-पुं० । शुभकर्मपरिणामे विपाकश्रुते , प्रथमविपाके दर्शितोऽयम् । स० १४६ सूत्र ।

सुहविवागोत्तम-शुभविपाकोत्तम-त्रि० । शुभविपाक उत्तमो येषा ते शुभविपाकोत्तमा । सुखैषिषु, स० १४६ सूत्र ।

सुहविहार-सुखविहार-पुं० । सुखेनैव वासकल्पविधिना विहर्तुं शक्ये , वृ० १ उ० ३ प्रक० ।

सुहवुड्ढि-शुभवृद्धि-स्त्री० ।-कल्याणोपचये सुखवर्द्धने, पञ्चा० ४ विव० ।

**सुहवेयणतर**-सुखवेदनतर-त्रि०। सुखेन अक्लेशेन वेदनम्-अनुभवनं यस्यासौ सुखवेदनतरः । अक्लेशेनैव वेद्ये, भ० १४ श० २ उ० ।

**सुहवेयतर**-सुखवेद्यतर-त्रि० । अकृच्छ्रानुभवनीये , स्था० २ ठा० १ उ० ।

**सुहसंकमण**-सुखसंक्रमण-न०।सुखस्य-मुक्तिरूपस्य वा विशिष्टगुणप्रकृतिरूपस्य सक्रमणं-संक्रान्तिः सुखसक्रमणम्। संसाराद् दुःखादशुभाद्वा नि सरणेन सुखप्राप्तौ, ' सुरमणिवरिंदवंदा, सुहसंकमणं मम दितु ।" संथा० ।

**सुहसंगय**-सुखसंगत-त्रि० । आनन्दयुक्ते , द्वा० ३२ अष्ट० ।

**सुहसंथरण**-सुखसंस्तरण-न०। सुखेन निस्तारहेतौ व्य०४ उ०।

**सुहसण्णा**-सुखसंज्ञा--स्त्री० । वेदनीयोदयजे सातानुभवे , आचा० १ श्रु० १ अ० १ उ० ।

**सुहसयण**-शुभस्वजन-पुं० । असंक्लिष्टबान्धवे , पञ्चा० ७ विव० ।

**सुहसाय**-सुखशात-पुं० । सुखस्य वैषयिकस्य शातं सुखशातः । वैषयिकस्य सुखस्य स्पृहानिवारणेनापनयने , उत्त० । संयमादिषु सत्स्वपि सुखशातेन एव प्रवर्त्तनीयम् अतस्तत्फलमाह—

सुहसाएणं भंते ! जीवे किं जणयइ? सुहसाएणं अणुस्सुयत्तं जणयइ अणुस्सुएणं जीवे अणुकंपए अणुब्भडे विगयसोगे चरित्तमोहणिज्जं कम्मं खवेइ ॥ २९ ॥

हे भदन्त ! हे स्वामिन् ! सुखस्य वैषयिकस्य शातं स्पृहानिवारणेन अपनयनं सुखशातस्तेन जीवः किं जनयति , गुरुराह-हे शिष्य! सुखशातेन अनुत्सुकत्वं जनयति,विषयसुखेऽनुत्तालत्वं जनयति अनुत्सुकश्च जीवोऽनुकम्पते अपरेण जीवं दृष्ट्वा अनुकम्पकः, दयावान् भवतीत्यर्थः । पुनरनुद्भटोऽभिमानरहितः शृङ्गारादिशोभारहितः स्यात् । पुनस्तादृशः सन् विगतशोकः इह लौकिककार्यभ्रंशादावपि शोचनं न कुरुते पुनस्तादृशो मोक्षार्थी शुभाध्यवसायवर्त्ती कषायनोकषायरूपचारित्रमोहनीयरूपं कर्म्म क्षपयति । उत्त० २९ अ० ।

**सुहसाय**-सुखास्वाद-त्रि० । सुखम् आनन्दरूपमास्वादयन्तीति सुखास्वादाः । सुखभोगिषु, सुखैषिषु आचा० १ श्रु० २ अ० ३ उ० ।

**सुहसायग**-सुखास्वादक-त्रि०। अभिष्वङ्गादिना प्राप्तसुखभोक्तरि , दश० ४ अ० ।

**सुहसील**-सुख(शुभ)शील-त्रि० । सुखं शुभं वा सुखकरत्वाच्छीलं स्वभावो यस्य स सुखशीलः शुभशीलो वा। स० । सुखेन जीवनशीले , नि० चू० १ उ० । (" मूलगुणपडिसेवणा ' शब्दे षष्ठभागे ऽस्त्वविस्तरो गतः । )

**सुहसीलगुण**-सुखशीलगुण-पुं० । सुखशीलस्य-शाताभिलाषिणो गुणा -पार्श्वस्थादिस्थानानि सुखशीलगुणाः । पार्श्वस्थादिषु शीलगुणेषु , ग० १ अधि० ।

**सुहसीलवियत्त**--सुखशीलव्यक्त-त्रि०।सुखे शीलं व्यक्तं येषां ते सुखशीलव्यक्ताः । पार्श्वस्थादिमन्दधर्म्मसु, नि० चू० ११ उ०।

**सुहसुरभिमणहर**-सुखसुरभिमनोहर-पुं०। गन्धान्तरेभ्यः सकाशान्मनोहरेषु , रा० ।

**सुहसेउकेउबहुल**-शुभसेतुकेतुबहुल--त्रि० । शुभाः -प्रधानाः सेतवो-मार्गा आलवालपाल्यो वा केतवो-ध्वजा बहुला अनेकरूपा येषां ते तथा । अनेकैः शुभैः सेतुभिः केतुभिश्च कलिते , जी० ३ प्रति० ४ अधि० ।

**सुहसेज्जा**--सुखशय्या-स्त्री० । सुखदाः शय्याः सुखशय्याः । सुखशय्यायाम् , पा० । ध० ।

" चत्तारि य सुहसिज्जाओ पन्नत्ताओ । तत्थ खलु इमा पढमा सुहसेज्जा-से णं मुंडे भवित्ता अगाराओ अणगारियं पव्वइए निग्गंथे पावयणे निस्संकिए निक्कंखिए निव्वितिगिच्छे नो भेयसमावन्ने नो कलुससमावन्ने निग्गंथं पावयणं सद्दहइ पत्तियइ रोएइ निग्गंथं पावयणं सद्दहमाणे पत्तियमाणे रोएमाणे नो मणं उच्चावयं नियच्छइ नो विणिघायमावज्जइ । पढमा सुहसेज्जा ॥ १ ॥ अहावरा दोच्चा सुहसेज्जा-से णं मुंडे भवित्ता ०जाव पव्वइए सएणं लाभेणं तुस्सइ परस्स लाभं नो आसाएइ नो पीहेइ नो पत्थेइ नो अभिलसइ परस्स लाभं अणासाएमाणे ०जाव अणभिलसमाणे नो मणं उच्चावयं नियच्छइ नो विणिघायमावज्जइ दोच्चा सुहसेज्जा ॥ २ ॥ अहावरा तच्चा सुहसेज्जा , से णं मुंडे भवित्ता ०जाव पव्वइए दिव्वमाणुस्सए कामभोगे नो आसाएइ ०जाव नो अभिलसइ दिव्वमाणुस्सए कामभोए अणासाएमाणे ० जाव अणभिलसमाणे नो मणं उच्चावयं नियच्छइ नो विणिघायमावज्जइ । तच्चा सुहसेज्जा ॥ ३ ॥

" अहावरा चउत्था सुहसेज्जा , से णं मुंडे ० जाव , पव्वइए , तस्स णं एवं भवइ जइ ताव अरहन्ता भगवन्तो हट्ठा अरोगा बलिया कल्लसरीरा अन्नयराइं उरालाइं कल्लाणाइं विउलाइं पयत्ताइं पग्गहियाइं महाणुभागाइं कम्मक्खयकारणाइं तवोकम्माइं पडिवज्जन्ति , किमङ्ग ! पुण अहं अब्भोवगमिओवक्कमियं वेयणं तो सम्मं सहामि खमामि तितिक्खेमि अहियासेमि , ममं च णं अब्भोवगमिओवक्कमियं वेयणं सम्मं असहमाणस्स अखममाणस्स अतितिक्खमाणस्स अणहियासेमाणस्स किं मन्ने कज्जइ ? एगंतसो मे पावे कम्मे कज्जइ , ममं च णं अब्भोवगमिओ ०जाव सम्मं सहमाणस्स ०जाव अहियासेमाणस्स किं मन्ने कज्जइ ? एगन्तसो मे निज्जरा कज्जइ । चउत्था सुहसेज्जा ॥ ४ ॥ "

अस्य चतुर्थसूत्रस्य व्याख्यानम्-'हट्ठ' त्ति-शोकाभावेन हृष्टा इव हृष्टाः , अरोगा ज्वरादिवर्जिता बलिका -प्राणवन्तः , कल्यशरीराः -पटुशरीराः , अन्यतराणि अनशनादीनां मध्ये एकतराणि उदाराणि आशंसादिपररहिततयोदारचित्तयुक्तानि, कल्याणानि मङ्गलस्वरूपत्वात् विपुलानि बहुदिनत्वात् , प्रयतानि प्रकृष्टसंयमयुक्तत्वात् , प्रगृहीतानि आदरप्रतिपन्नत्वात् , महानुभागानि अचिन्त्यशक्तियुक्तत्वात् , कर्मक्षयकारणत्वाद्वा , कर्मक्षयकारणानि मोक्षसाधनत्वात् ,

तप कर्माणि तप क्रिया , प्रतिपद्यन्ते आश्रयन्ति, " किमङ्ग ! पुरा ' त्ति—किं प्रश्ने, अङ्गेत्यामन्त्रणेऽलङ्कारे. सा पुनरिति पूर्वोक्तार्थवैलक्षण्यदर्शने , शिरोलोचब्रह्मचर्यादीनामभ्युपगम भवाभ्युपगमिकी उपक्रम्यतेऽनेनायुरित्युपक्रमो ज्वरातीसारादिस्तत्र भवा या सौपक्रमिकी ता वेदना , सहामि नदुत्पत्तावविमुखतया, क्षमे विकोपनया तितिक्षामि अदीनतया अध्यासयामि मौष्ठ्यानिरेकेण तत्रैव वेदनायामवस्थानं करोमीत्यर्थः । मन्ये निपातो वितर्कार्थे , क्रियते भवतीत्यर्थ. । पा० ।

सुहहत्थ–शुभहस्त–पुं० । प्रशस्तकरे, विपा० १ श्रु० ७ अ० ।

सुखहस्त–पुं० । सुखहेतुहस्ते, विपा० १ श्रु० ७ अ० ।

सुहहेउ–सुखहेतु–पुं० । भाविसुखकारणे, पञ्चा० १५ विव० ।

सुहा–सुधा–स्त्री० । अमृते , अष्ट० ११ अष्ट० । स्था० । पञ्चगाषाणशर्करासु शुभ्रायाम् , पञ्चा० २ विव० ।

शुभा–स्त्री० शुभविपाकायां कर्मप्रकृतौ, पं० सं० ३ द्वार । यास्तु जीवप्रमोदहेतुरूपेणास्ताः शुभा' । पं० सं० ३ द्वार । प्रति० । पञ्चदशस्य तीर्थकरस्य प्रथमप्रवर्तिन्याम् , प्रव० ६ द्वार ।

सुखा–स्त्री० । विशिष्टाह्लादरूपायाम् , पञ्चा० ३ विव० ।

सुहाकम्म–सुधाकर्मन्–न० । यत्र सुधापरिकर्म क्रियते तादृशे स्थाने, दशा० १० अ० । आचा० ।

सुहाकुंड–सुधाकुण्ड–न० । श्रीजीवद्वीरस्वामिप्रतिमाविभूषित स्वनामख्याते तीर्थे ती० ४३ कल्प ।

सुहागदेवी–सुहागदेवी–स्त्री० । जिनदासाभिधश्रावकभार्यायाम् , सेन० ३ उल्ला० । ( ' सिवंकर ' शब्देऽस्मिन्नेव भागे कथा गता । )

सुहाणुबंध–शुभानुबन्ध–पुं० । अविच्छिन्नकल्याणसन्ताने , पञ्चा० ७ विव० । कुशलानुबन्धे, पञ्चा० ७ विव० ।

सुहाणुबंधि शुभानुबन्धिन्–त्रि० कुशले प्रत्यायाति पुनर्बोधिलाभभोगप्रव्रज्याकेवलशैलेश्यपवर्गानुबन्धिषु आव० ४ अ० ।

सुहाभिगम–सुखाभिगम–त्रि० । सर्वजननयनानां कान्ते, स० ।

सुहायपरिणामरूप–सुखात्मपरिणामरूप–त्रि० । प्रशस्तजीवाध्यवसायस्वभावे, पञ्चा० १० विव ।

सुहारुहसुहोत्तार–सुखारोहसुखोत्तार–त्रि० । सुखेनारोहणमूर्ध्वगमनं सुखेनोत्तारोऽधस्तादवतरणं यस्य सोपानपङ्क्त्यादिभिः स सुखारोहसुखोत्तार. । सुखेनोर्ध्वमधस्ताच्च गन्तरि, जी० ३ प्रति० ४ अधि० ।

सुहावबोध–सुखावबोध–पुं० । सुखपरिज्ञाने, पो० ४ विव० ।

सुहावह–सुख(शुभा)वह–त्रि० । सुखं शुभं वा आवहतीति सुखावह । स्था० १० ठा० ३ उ० । दश० । उभयलोकसुखकरे, जम्बूद्वीपे मन्दरस्य पश्चिमे शीतोदाया महानद्या दक्षिणे स्वनामख्याते वक्षस्कारपर्वते, स्था० ४ ठा० १ उ० । देवकुरुषु विजयक्षेत्रपुद्गलस्वनामख्यातायां नगर्याम् , स्था० ।

दो सुहावहा । स्था० २ ठा० ३ उ० ।

सुहावासा–सुखावासा–स्त्री० । विश्वस्ताना निर्भयानामनुत्सुकानां वा सुख. सुखस्वरूप. आवासो यस्यां सा सुखावासा । ज्ञा० १ श्रु० १ अ० । सुखदयसतौ, ग० । औ० ।

सुहासणत्थ–शुभासनस्थ–त्रि० । शुभे आसने निषण्णे, उत्त० २ उ० ।

सुहासय–शुभाशय–पुं० । शुभपरिणामे, षो० १ विव० । शुभचित्त, प्रति० ।

सुहासव–शुभाश्रव–पुं० । पुण्याश्रवे, आव० ४ अ० ।

सुहासा–सुखासा–स्त्री० । सुखेच्छायाम् , अष्ट० १६ अष्ट० ।

सुहि–सुखिन्–त्रि० । सुखमस्यास्तीति सुखी । दश० २ अ० । सुखं प्राप्ते औ० । प्रश्ना० उत्त० । "आ आमन्त्र्ये सौ वेनो न." ॥ ८ । ४ । २६३ ॥ शौरसेन्यामिनो नकारस्यामन्त्र्ये सौ परे आकारो भवति । सुहिया ! । प्रा० ४ पाद ।

सुहृत्–पुं० । मित्रे, ध० २ अधि० । सूत्र० ।

सुहिभाव–सुखिभाव–पुं० । सुखित्वे, अने० १ अधि० ।

सुहिय–सुहित–त्रि० सुष्ठु हितं ज्ञानादित्रयं येषां ते सुहिताः । रत्नाधिकेषु, ध० २ अधि० । जी० । आचा० ।

सुहृद्–पुं० । मित्रे, वृ० १ उ० २ प्रक० । नि० ।

सुहियजण–सुहृज्जन–पुं० । हितैषिणि, स्था० ४ ठा० ३ उ० ।

सुहिरण्णिया–सुहिरण्यिका–स्त्री० । वनस्पतिविशेषे, आ० म० १ अ० । रा० । प्रज्ञा० । नं० ।

सुहिरीमण–सुहीमनस्–त्रि० । सुष्ठु ह्रीर्लज्जा तस्यां मनोऽन्तःकरणं येषां ते सुह्रीमनसः । लज्जालुषु, सूत्र० १ श्रु० १६ अ० ।

सुहुत्तमवरिट्ठ–उत्तमसुखवरिष्ठ–त्रि० । उत्तमं च तत्सुखं च तेन वरिष्ठा वरतमा । सुखोत्तमेन श्रेष्ठेषु, आचा० १ श्रु० ५ अ० १ उ० ।

सुहुत्तर–सुखोत्तर–त्रि० । सुखेन तीर्यते इति सुखोत्तर । सुखाल्लङ्घनीये, उत्त० २ अ० ।

सुहुम–सूक्ष्म–त्रि० । " तन्वीतुल्येषु " ॥ ८ । २ । ११३ ॥ उकारान्ता ङीप्रत्ययान्तास्तन्वीतुल्यास्तेषु संयुक्तस्यान्त्यव्यञ्जनात्पूर्व उकारो भवति, क्वचिदन्यत्रापि आर्षे । सुहुमं । सूक्ष्मम् । प्रा० । अल्पे पा० । मन्दे. स्था० ७ ठा० ३ उ० । अत्यन्तगहने, आव० ४ अ० । सूक्ष्मनामकर्मोदयात् सूक्ष्माभिधे य सर्वस्तोकापन्ना । स्था० २ ठा० १ उ० । येषां परिणामस्सूक्ष्मस्ते सूक्ष्मा । स्था० २ ठा० ३ उ० । उत्त० । सारे, ज्ञा० १ श्रु० १ अ० । लाभाणुन्—वदयन् सूक्ष्मो भण्यते सूक्ष्मसम्पराय इत्यर्थः । आव० ४ अ० । सूत्र० । सूक्ष्मोऽसंख्यातांशिकाद्वेदन. , स्था० २ ठा० १ उ० । प्रव० । मृदुनस्पर्शे अर्थे, जी० ३ प्रति० ४ अधि० । सूक्ष्मनामकर्मोदये दर्श० ४ तत्त्व । प्रश्न० । पं० सं० । सूक्ष्मनामकर्मोदयवर्त्तित्वात् ,पृथिव्यादिषु एकेन्द्रियेषु , स० । नं० । स्था० ।

अष्ट सूक्ष्माणि—

अट्ठ सुहुमा पण्णत्ता , तं जहा—पाणसुहुमे पणगसुहुमे बीयसुहुमे हरियसुहुमे पुप्फसुहुमे अंडसुहुमे लेणसुहुमे सिणेहसुहुमे । ( सू० ६१५ )

'अट्ठ सुहुम ' त्यादि, सूक्ष्माणि श्लक्ष्णत्वादल्पाधारतया च,

तत्र प्राणसूक्ष्मम् अनुद्धरिः कुन्थुः स हि चलन्नेव विभाव्यते न स्थितः सूक्ष्मत्वादिति १, पनकसूक्ष्मं पनक —उल्ली , स च प्रायः प्रावृट्काले भूमिकाष्ठादिषु पञ्चवर्णस्तद्द्रव्यलीनो भवति, स एव सूक्ष्ममिति एवं सर्वत्र २, तथा बीजसूक्ष्मं शाल्यादिबीजस्य मुखमूले कणिका लोके या तुषमुखमित्युच्यते ३, हरितसूक्ष्मम्-अत्यन्ताभिनवोद्भिन्नपृथिवीसमानवर्णं हरितमेवेति ४, पुष्पसूक्ष्मं-वटोदुम्बराणां पुष्पाणि तानि तद्वर्णानि सूक्ष्माणीति न लक्ष्यन्ते ५, अण्डसूक्ष्मं-मक्षिकाकीटिकागृहकोकिलाब्राह्मणीकृकलास्याद्यण्डकमिति६,लयनसूक्ष्मं लयनम्—आश्रयः सत्त्वानां तच्च कीटिकानगरकादि , तत्र कीटिकाश्चान्ये च सूक्ष्माः सत्त्वा भवन्तीति ७, स्नेहसूक्ष्ममवश्यायहिममहिकाकरकहरितनुरूपमिति ८ । स्था० ८ ठा० ३ उ०। (प्राणसूक्ष्मादीनां व्याख्या स्वस्वस्थाने ।) ( दश सूक्ष्मा इति 'महाणई' शब्दे षष्ठे भागे उक्तम् । ) प्रसङ्गतस्तट्टीका इह प्रदर्श्यते-प्राणसूक्ष्मम् , अनुद्धरिः कुन्थुः, पनकसूक्ष्मम् उल्ली , यावत्करणादिदं द्रष्टव्यम्—बीजसूक्ष्मं व्रीह्यादीनां कणिका हरितसूक्ष्मं भूमिसमवर्णं तृणं पुष्पसूक्ष्मं वटादिपुष्पाणि, अण्डसूक्ष्मं कीटिकाद्यण्डकानि,लयनसूक्ष्मं कीटिकानगरादि, स्नेहसूक्ष्मम् अवश्यायादीत्यष्टमस्थानकभणितमेव, इदमपरं गणितसूक्ष्मं गणितं सङ्कलनादि तदेव सूक्ष्मं सूक्ष्मबुद्धिगम्यत्वात् श्रूयते च वज्रान्तं गणितमिति । भङ्गसूक्ष्मं-भङ्गा भङ्गका वस्तुविकल्पास्ते च द्विधा स्थानभङ्गका , क्रमभङ्गकाश्च । तत्राद्या यथा द्रव्यतो नामैका हिंसा न भावतः , अन्या भावतो न द्रव्यतः, अन्या भावतो द्रव्यतश्च, अन्या न भावतो नापि द्रव्यत इति, इतरे तु द्रव्यतो हिंसा भावतश्च, द्रव्यतोऽन्या न भावतः , न द्रव्यतोऽन्या भावतः , अन्या न द्रव्यतो न भावत इति, तल्लक्षणं सूक्ष्मं भङ्गसूक्ष्मं, सूक्ष्मता चास्य भजनीयपदबहुत्वे गहनभावेन सूक्ष्मबुद्धिगम्यत्वादिति पूर्वं गणितसूक्ष्ममुक्तमिति । स्था० १० ठा० ३ उ० । दश० ।

सूक्ष्मविधिमाह—

अट्ठ सुहुमाइ पेहाए, जाइं जाणित्तु संजए ।
दयाहिगारी भूएसु, आस चिट्ठ सएज्ज वा ॥ १३ ॥

अष्टौ सूक्ष्माणि वक्ष्यमाणानि प्रेक्ष्योपयोगत आसीत तिष्ठेच्छयीत चेति योगः । किंविशिष्टानीत्याह-यानि ज्ञात्वा संयतो ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया च दयाधिकारी भूतेषु भवत्यन्यथा दयाधिकार्येव नेति तानि प्रेक्ष्य तद्रहित एवासनादीनि कुर्यात् , अन्यथा तेषां सातिचारतेति सूत्रार्थः ।

आह—

कयराणि अट्ठ सुहुमाणि, जाइ पुच्छिज्ज संजए ।
इमाणि ताणि मेहावी, आइक्खिज्ज वियक्खणो ॥१४॥

कतराण्यष्टौ सूक्ष्माणि यानि दयाधिकारित्वाभावभयात् पृच्छेत् संयत ' अनेन दयाधिकारिण एव एवंविधेषु यत्नमाह—स ह्यवश्यं तदुपकारकाण्यकारकाणि च पृच्छति तत्रैव भावप्रतिबन्धादिति । अमूनि तान्यनन्तरं वक्ष्यमाणानि मेधावी आचक्षीत विचक्षण इत्यनेनाप्येतदेवाह-मर्यादावर्तिना तज्ज्ञेन तत्प्ररूपणा कार्या, एवं हि श्रोतुस्तत्राप्रादेयबुद्धिर्भवत्यन्यथा विपर्यय इति सूत्रार्थः ।

सिणेहं पुप्फसुहुमं च, पाणुत्तिंगं तहेव य ।
पणगं बीय हरियं च, अंडसुहुमं च अट्ठमं ॥ १५ ॥

'सिणेह' ति सूत्रं, ' स्नेह ' मिति स्नेहसूक्ष्मम्-अवश्यायहिममहिकाकरकहरतनुरूपं, पुष्पसूक्ष्मं चेति वटोदुम्बराणां पुष्पाणि, तानि तद्वर्णानि सूक्ष्माणीति न लक्ष्यन्ते ' पाणे ' त्ति प्राणिसूक्ष्ममनुद्धरिः-कुन्थुः , स हि चलन् विभाव्यते, न स्थितः , सूक्ष्मत्वात् । ' उत्तिंग तहेव य ' त्युत्तिङ्गसूक्ष्मं--कीटिकानगरं, तत्र कीटिका अन्ये च सूक्ष्मसत्त्वा भवन्ति । तथा ' पनक ' मिति पनकसूक्ष्मं प्रायः प्रावृट्काले भूमिकाष्ठादिषु पञ्चवर्णस्तद्द्रव्यलीनः पनक इति तथा बीजसूक्ष्मं शाल्यादिबीजस्य मुखमूले कणिका, या लोके तुषमुखमित्युच्यते, ' हरितं च ' ति हरितसूक्ष्मं , तच्चात्यन्ताभिनवोद्भिन्नं पृथिवीसमानवर्णमेवेति ' अण्डसूक्ष्मं चाष्टम ' मिति । एतच्च मक्षिकाकीटिकागृहकोकिलकाब्राह्मणीकृकलासाद्यण्डमिति--सूत्रार्थः ॥ १५ ॥ दश० ८ अ० २ उ० । नि० चू० । समयपरिभाषया सूक्ष्मकायिके पुष्पे. " पुप्फाणि य कुसुमाणि य. फुल्लाणि य तहेव होंति पसवाणि । सुमणाणि य सुहुमाणि य, पुप्फाणि य होंति एगट्ठा ।" दश०१ अ०। चू०। सुहुमो य बायरो वा दुविधो लोउत्तरो समासेण । सुहुमो लोउत्तरिओ,णायव्वो इमेहि ठाणेहिं ॥' सुहुमबायरसरूवं वक्खमाणं। नि० चू० १ उ० । ईसिममंतभावे सुहुमो परिग्गहो भण्णति । नि० चू० १ उ० । आगामिन्यामुत्सर्पिण्यां भविष्यति सप्तमे कुलकरे , पुं० । स्था० ७ ठा० ३ उ० ।

सुहुमअपज्जत्त--सूक्ष्मापर्याप्त--पुं० । सूक्ष्मनामकर्मोदयवर्त्तिषु एकेन्द्रियापर्याप्तकेषु . स० १४ सम० ।

सुहुमअइयार--सूक्ष्मातिचार--पुं० । लघुचारित्रखण्डेषु , पं० व० ३ द्वार ।

सुहुमकम्म--सूक्ष्मकर्मन्--न० । सूक्ष्मेषु केवलज्ञानदर्शनयथाख्यातचारित्राद्यावरकेषु कर्मसु . द्वा० १४ द्वा० ।

सुहुमकाय--सूक्ष्मकाय--पुं० । हस्तादिके वस्तुनि, इति वृद्धाः । अन्ये त्वाहु --वस्त्रे. भ० १६ श० ३ उ० । सूक्ष्मकायं हस्तादिकं वस्तु मुखा । अन्ये त्वाहु सूक्ष्मकायं वस्त्रम् , इति । प्रति० ।

पृथिव्यादिषु कतरः कायः सूक्ष्म इति कायमाश्रित्य तेषामेवेतरेतरापेक्षया सूक्ष्मत्वनिरूपणायाह—

एयस्स णं भंते ! पुढविकाइयस्स आउकाइ० तेउकाइ० वाउकाइ० वणस्सइकाइयस्स कयरे काये सव्वसुहुमे कयरे काए सव्वसुहुमतराए ?, गोयमा ! वणस्सइकाइए सव्वसुहुमे ! वणस्सइकाइए सव्वसुहुमतराए १, एयस्स णं भंते ! पुढविकाइयस्स आउकाइ० तेउकाइ० वाउकाइयस्स कयरे काये सव्वसुहुमे कयरे काये सव्वसुहुमतराए ?, गोयमा ! वाउकाए सव्वसुहुमे वाउकाये सव्वसुहुमतराए २, एयस्स णं भंते ! पुढविकाइयस्स आउकाइयस्स तेउकाइयस्स कयरे काये सव्वसुहुमे कयरे काए सव्वसुहुमतराए ?, गोयमा !

तेउकाए सव्वसुहुमे तेउकाए सव्वसुहुमतराए ३, एयस्स णं भंते ! पुढविकाइयस्स आउकाइयस्स कयरे काए सव्वसुहुमे कयरे काये सव्वसुहुमतराए ?, गोयमा ! आउकाए सव्वसुहुमे, आउकाए सव्वसुहुमतराए ४ ।

एयस्से' त्यादि, 'कयरे काए' त्ति—कतरो जीवनिकाय 'सव्वसुहुमे' त्ति—सर्वथा सूक्ष्म सर्वसूक्ष्म. अयं च चक्षुरग्राह्यतामात्रेण पदार्थान्तरमनपेक्ष्यापि स्याद्, यथा सूक्ष्मो वायुः सूक्ष्मं मन इत्यत्र आह-'सव्वसुहुमतराए' त्ति सर्वेषां मध्यऽतिशयेन सूक्ष्मतर स एव सर्वसूक्ष्मतरक इति । भ० १६ श० ३ उ० ।

सुहुमकाल-सूक्ष्मकाल-पुं० । यावता वालाग्रसङ्ख्यानखण्डै स्पृष्टाश्चास्पृष्टाश्चोद्ध्रियन्ते स काल सूक्ष्म । सूक्ष्मे काले, स्था० २ ठा० ४ उ० ।

सुहुमकिरिय-सूक्ष्मक्रिय-न० । सूक्ष्मा क्रिया यत्र निरुद्धवाङ्मनोयोगत्व सत्यर्धनिरुद्धयोगत्वात्तत्सूक्ष्मक्रियम् । शुक्लध्यानस्य तृतीयभेदे, भ० २५ श० ७ उ० । स्था० । दर्श० । ग० । आव० ।

सुहुमगणिपवेसग-सूक्ष्माग्निप्रवेशक-पुं० । सूक्ष्माग्नौ—सूक्ष्माग्निकाये प्रवेशनमुत्पादो येषां ते सूक्ष्माग्निप्रवेशकाः । सूक्ष्माग्निरुत्पन्नेषु जीवेषु, क० प्र० १ प्रक० ।

सुहुमणाम-सूक्ष्मनामन्-न० । नामकर्मभेदे, प्रव० २१६ द्वार । यदुदयात्सूक्ष्मो भवति, अत्यन्तसूक्ष्म अनीन्द्रिय इत्यर्थ । आ० । सूक्ष्मा नाम यदुदयाद्वहूनामपि समुदिताना जन्तुशरीराणा चक्षुर्ग्राह्यता न भवति । पं० सं० ३ द्वार । यदुदयात्सूक्ष्मा. पृथिवीकायिकादय पञ्च भवन्ति, तदपि जीवविपाकिसूक्ष्मनामकर्मेति । कर्म० १ कर्म० । बादरत्वं परिणामविशेष, यदुदयात् पृथिव्यादेरेकैकस्य जन्तुशरीरस्य चक्षुर्ग्राह्यत्वाभावेऽपि बहूनां समवाये चक्षुर्ग्रहण भवति । तद्विपरीतं सूक्ष्मनाम । कर्म० ६ कर्म० ।

सुहुमतस-सूक्ष्मत्रस-पुं० । तेजोवायुषु, द्वीन्द्रियादीना बादरत्रसत्वात् । स्था० ६ ठा० ३ उ० ।

सुहुमतिग-सूक्ष्मत्रिक-त्रि० । सूक्ष्मपर्याप्तसाधारणरूपे सूक्ष्मापर्याप्तेति त्रिके, कर्म० ५ कर्म० । क० प्र० ।

सुहुमत्थवियार-सूक्ष्मार्थविचार-पुं० । सूक्ष्मो मन्दमतिना गम्यो योऽर्थ —शब्दाभिधेयं तस्य विचारो विचारणं सूक्ष्मार्थविचार । सरलस्यार्थस्य विचारणे कर्म० ४ कर्म० ।

सुहुमत्थालोयणा-सूक्ष्मार्थालोचना-स्त्री० । सूक्ष्माश्च तेऽर्थाश्च बन्धमोक्षादयस्तेषाम् आलोचना सूक्ष्मार्थालोचना । बन्धादिपदार्थे, पो० १२ विव० ।

सुहुमदव्वपुग्गल-सूक्ष्मद्रव्यपुद्गल-पुं० । द्रव्यपुद्गलपरावर्त्तभेद अत्र द्रव्ये द्रव्यविषय. सूक्ष्मपुद्गलपरावर्त्तो भवति, यदौदारिकादिशरीराणामेकेनान्यतमेन शरीरेणैको जीवः संसारे परिभ्रमन् सर्वानपि पुद्गलान् स्पृष्ट्वा परिभुज्य मुञ्चति । प्रव० १६२ द्वार ।

सुहुमपयत्थ-सूक्ष्मपदार्थ-पुं० । अस्थूलवस्तुषु कर्मात्मपरिणामादिषु, पञ्चा० १ विव० ।

सुहुमपुढविकाय-सूक्ष्मपृथिवीकाय-पुं० । सूक्ष्मनामकर्मोदये वर्त्तमाने पृथिवीकायिके. प्रज्ञा० १ पद ।

सुहुमबोंदिकलेवर-सूक्ष्मबोन्दिकलेवर-पुं० । सूक्ष्मबोन्दीनि सूक्ष्माकाराणि कलेवराण्यसंख्यातखण्डीकृतवालुकाकणरूपाणि यत्रोद्धारे स तथा गोशालकपरिभाषया उद्धारकालभेदे, भ० १५ श० ।

सुहुमभावकुसलमइ-सूक्ष्मभावकुशलमति-पुं० । लोकशास्त्रगताध्यात्मार्थनिपुणबुद्धिके. पञ्चा० १५ विव० ।

सुहुममहापाण-सूक्ष्ममहाप्राण-न० । सूक्ष्मे महाप्राणध्याने, " पुव्वाण अणुओगो, संघयणं पढमं च संहाणं । सुहुममहापाणाणि य, वोच्छिन्ना थूलभद्दम्मि । " नि० ।

सुहुमरययदीहवाल-सूक्ष्मरजतदीर्घवाल-त्रि० । सूक्ष्मा रजतमया दीर्घा वाला येषां तानि तथा । सूक्ष्मरजतमयवालवत्सु जी० ३ प्रति० ४ अधि० ।

सुहुमवाउसरीर-सूक्ष्मवायुशरीर-पुं० । वायुरेव शरीरं येषां ते तथा, सूक्ष्माश्च ते वायुशरीराश्च वायुकायिका सूक्ष्मवायुशरीराः । सूक्ष्मवायुकायिकेषु, भ० १६ श० ३ उ० ।

सुहुमवियार-सूक्ष्मविचार-पुं० । यतिसमाचारप्रकाशनस्वभावे दर्श० ३ तत्त्व ।

सुहुमसंपराय-सूक्ष्मसम्पराय-न० । सम्पर्यैति संसारमनेनेति सम्पराय कषायोदय सूक्ष्मो लोभांशावशेषः सम्परायो यत्र तत्सूक्ष्मसम्परायम् । चारित्रभेदेषु चतुर्थे चारित्रे, आ० म० १ अ० । विशे० । इदमपि द्विविधं विशुद्ध्यमानकम्, संक्लिश्यमानकं च । तत्र विशुद्ध्यमानक क्षपकोपशमश्रेणिद्वयमारोहतो भवति संक्लिश्यमानकं तूपशमश्रेणे प्रच्यवमानस्य प्राप्यते । विशे० । " सेढिं विलग्गतो तं, विसुद्धमाणं ततो चयंतस्स । तह संकिलिस्समाणं, परिणामवसेण विन्नेयं ॥ १ ॥ " आ० म० १ अ० । उत्त० । पा० । स्था० । विशे० । भ० । इह संख्येयानि लोभखण्डानि उपशमयन् बादरसम्पराय उच्यते, चरमस्य तु संख्येयखण्डस्यासंख्येयानि खण्डानि प्रतिसमयमेकैकखण्डमुपशमयन् सूक्ष्मसम्पराय । आ० म० १ अ० ।

तथा चाह—

लोभाणू वेयंतो, जो खलु उवसामगो य खवगो वा ।
सो सुहुमसंपरायो, अहक्खयाऊणओ किंचि ॥

लोभस्य संज्वलनलोभस्य अणून संख्येयतमस्य खण्डस्यासंख्येयानि खण्डानि वेदयमानोऽनुभवन् उपशमकः क्षपको वा भवति । सोऽन्तर्मुहूर्त्तं कालं यावत्सूक्ष्मसंपरायो भण्यते । आ० म० १ अ० । पं० भा० । सुहुमसंपराइय जो वट्टति सो सुहुमसंपरागो । सुहुमं नामं थोवं कहं थोवं ?, आउयमोहणिज्जवज्जाओ छ कम्मपयडीओ सिढिलबंधणबद्धाओ अप्पकालट्ठितिकाओ महाणुभावाओ अप्पपदेसग्गाओ सुहुमसंपरागस्स बज्झन्ति, एवं थोवं संपराइयं कम्मं तं स बज्झन्ति त सुहुमो संपरागो वा जस्स सो सुहुमसंपरागो, सो य असं-

कसमइश्रो अंतोमुहुत्तिश्रो विसुज्झमाणपरिणामो वा पडियत्तमाणपरिणामो वा भवति त्ति । आ० चू० ४ अ० । सूक्ष्मसंपराया दशमगुणस्थानवर्त्तिन. । पञ्चा० ६ विव० ।

सुहुमसंपरायगुणट्ठाण-सूक्ष्मसम्परायगुणस्थान-न० । सूक्ष्म-सम्परायो द्विधा—क्षपक , उपशमको वा । क्षपयति उपशमयति वा लोभमेकमिति कृत्वा तस्य गुणस्थानं सूक्ष्मसम्परायगुणस्थानम् । (एतच्च केवलिन्येव भवनीति विशेषणद्वारेणाह— ) तथा छाद्यते केवलज्ञानं केवल-दर्शनं चात्मनोऽनेनेति छद्म ज्ञानावरणदर्शनावरणमोह-नीयान्तरायकर्मोदयः सति तस्मिन् केवलस्यानुत्पादात् तदपगमानन्तरं चोत्पादात् छद्मनि तिष्ठन्तीति छद्मस्थ । स च सरागोऽपि भवतीत्यतस्तद्व्यवच्छेदार्थं वीतरागग्रहणं वीतो विगतो रागो मायालोभकषायोदयरूपो यस्य स वीतराग', स चासौ छद्मस्थश्च वीतरागछद्मस्थ' , स च क्षीणकषायोऽपि भवति तस्यापि यथोक्तरागापगमात् ,अतस्तद् व्यवच्छे-दार्थमुपशान्तकषायग्रहणं 'कर्षशिष' त्यादि दण्डकधातुर्हिं-सार्थ. , कषन्ति कष्यन्ते च परस्परमस्मिन् प्राणिन इति कषः ससारः, कषमयन्ते-गच्छन्त्येभिर्जन्तव इति कषाया. क्रोधादय उपशान्ता. उपशमिता विद्यमाना एव संक्रमणोद्व-र्त्तनादिकरणोदयायोग्यत्वेन व्यवस्थापिता. कषाया येन स उपशान्तकषाय । कर्म०२कर्म०।गुणस्थानभेदे,दर्श०५तत्त्व ।

सुहुमसंपरायचरित्तलद्धि-सूक्ष्मसम्परायचारित्रलब्धि-स्त्री०। संपरैति—पर्यटनि ससारमेभिरिति सम्परायाः—कषायाः । सूक्ष्मा लोभांशावशेषरूपा' सम्पराया यत्र तत् तस्य चारित्रस्य लब्धिस्तथा । चारित्रभेदे, भ० ८ श० २ उ० ।

सुहुमसल्ल-सूक्ष्मशल्य-न० । सूक्ष्मे गर्वात्मके शल्ये, सूत्र० ।

सुहुमे सल्ले दुरुद्धरे, विउमंता पयहिज्ज संथवं ॥ ११ ॥

किमिति ? यतो गर्वात्मकमेतत्सूक्ष्मं शल्य वर्त्तते सूक्ष्मत्वाच्च दुरुद्धर दु खेनोद्धर्तुं शक्यते, अतो विद्वान् सदसद्विवेक-ज्ञस्तत्तावत् संस्तव परिचयमभिष्वङ्ग परिजह्यात्-परित्य-जेदिति । नागार्जुनीयास्तु पठन्ति—

"पलिमन्थमहं वियाणिया, जा वि य वंदण पूयणा इहं ।
सुहुमं सल्लं दुरुद्धरं, तं पि जिणे एएण पंडिए ॥ १ ॥ "

अस्य चायमर्थः—साधो. स्वाध्यायध्यानपरस्यैकान्त-निःस्पृहस्य योऽपि चायं परैर्वन्दनापूजनादिकः सत्का-र क्रियते, असावपि सदनुष्ठानस्य सद्गतेर्वा महान् पलिमन्थो विघ्न , आस्तां तावच्छब्दादिष्वभिष्वङ्गस्तामि-त्येवं परिज्ञाय तथा सूक्ष्मशल्य दुरुद्धर चातस्तमपि जयेद्-अपनयेत् , पण्डित. एतेन वक्ष्यमाणेनेति । सूत्र० १ श्रु० २ अ० २ उ० ।

सुहुमुस्सास-सूक्ष्मोच्छ्वास-पुं० ।अल्पे अल्पपरिमाणे उच्छ्वासे, "सुहुमुस्सास तु जयणाए त्ति " सूक्ष्मोच्छ्वासमेव यतनया मुञ्चन्ति नोल्वणं मा भूत्सत्त्वघात । आव० ५ अ० ।

सुहुय-सुहुत-त्रि० । घृतादितर्पिते,श्रा० १ श्रु०५ अ० । औ० ।

सुहुयहुयासण-सुहुतहुताशन-पुं० । घृतादितर्पितवैश्वानरे, 'सुहुयहुयासणो व्व तेयसा जलते' घृतादितर्पितवैश्वानरस्य-

प्रभया दीप्यमाने , जी० ३ प्रति० १ अधि० ।

सुहेल्ली-देशी-सुखे, दे० ना० ८ वर्ग ३७ गाथा ।

सुहेसग-सुखैषक-त्रि० । सुखस्य एषक सुखैषक' याजकादि-त्वात्समास. । सुखार्थिनि, आचा० १ श्रु० २ अ० ३ उ० ।

सुहेसि-सुखैषिन्-त्रि० । सुखलालसे , दर्श० ३ तत्त्व । आ-चा० । सूत्र० ।

सुहोदय-शुभोदक-न० । पवित्रस्नानाहृत गन्धोदके , श्रा० १ श्रु० १ अ० । तीर्थोदके, ज० ३ वक्ष० ।

शुभोदय-न० । शुभ उदयो यस्य तच्छुभोदयम् । योगिनां शुभोदर्के चित्ते, षो० १४ विव० ।

सुखोदक-न० । नात्युष्णशीते जले, औ० ।

सुहोवओग-शुभोपयोग-पुं० । प्रशस्ताध्यवसाये, पञ्चा० १५ विव० ।

सूअरवल्ल-शूकरवल्ल-पुं० । शूकरसंज्ञके कन्दविशेषे, प्रव० ४ द्वार ।

सूअरलंछण-शूकरलाञ्छन-न० । स्वनामख्याते क्षेत्रे, "जत्थ तस्सव भगवओ सूअरलछणाणत्थणं पहुच्च देवेहिं महिमा कया, तत्थ य सूअरखेत्तं पसिद्धिमुवगयं" ती० २४ कल्प ।

सूआ-सूआ-न० । धान्यविशेषे, ध० २ अधि० ।

सूइअ-सूचित-त्रि० । तिरस्कृते , सू० ३ उ० । व्यञ्जना-दियुक्ते, दश० ५ अ० १ उ० । श्लाघिते, सू० १ उ० ।

सूई-सूची-स्त्री० । वस्त्रसीवनोपकरणे, सू० ३ उ० । जीत० । सूत्र० । यया वस्त्रं सीव्यते, ध० ३ अधि० ।

जे भिक्खू अविहीए सूइं जायति जायंतं वा साइज्जइ।२३।

जे भिक्खू अविहीए सुतिं जायति । का अवधी ? इमा—

वत्थं सिव्विस्सामि-त्ति जाइउं पादसिव्वणं कुणति ।
अहवा वि पादसिव्वणं, करेंतो सिव्वती वत्थं ॥१७५॥

कंठा ।

तं दट्ठूण सयं वा, अहवा अण्णेसि अंतियं सोच्चा ।
उभयेणं मग्गहणं, कुज्जा दुविधं च वोच्छेदं ॥ १७६ ॥

सूतिसामिणा अविहीए सिव्वंतो सयमेव दिट्ठो, अण्ण-स्स वा समीवे सुतं अभावणाओ अण्णस्स पुरओ सिं-सति अग्गहणं साहणं अण्णायारं करेंति, दुविधो वोच्छेओ तद्व्वेण दव्वाणं वा तस्स वा अण्णस्स वा साहुस्स ।

जे भिक्खू अप्पणो एगस्स अट्ठाए सूइं जाइत्ता अन्न-मन्नस्स अणुपदेइ अणुपदंतं वा साइज्जइ ॥ २४ ॥

अहगं सिव्विस्सामि, त्ति जाइउं सो य देति अण्णेसिं ।
अण्णो वा सिव्विहिती, सो सिव्वणमप्पणा कुणति।१७७

अप्पणो अट्ठाए जाएउं अण्णस्स अलद्धियसाहुस्स देति ताणि वा कुलाणि जस्स साहुस्स उवसमंति तस्स गामस्स मग्गइ अप्पणा सिव्वेति । के दोसा ? ।

स्मो--

तं दट्ठूण भयं वा, अहवा असेसि अंतियं सोचा ।
ओभावणमग्गहणं, कुज्जा दुविधं च वोच्छेदं ॥१७८॥
सूइं वा अविधीए, जे भिक्खू पाडिहारियं अप्पे ।
नक्कुज्झसंघणं वा, कुज्जा छक्कायघातं वा ॥ १७९ ॥
जं तीए सूईए कज्जं तं कज्जं गहणप्पणेण वा छक्कायघातं वा करेज्ज ।

इदाणिं चउण्ह वि सुत्ताण विधी भएणति-
तम्हट्ठा जाएज्जा,जं भिन्न कम्म कारणा वावि ।
एगतरमुभयतो वा, अक्खेवेत्तु तहा भिक्खू ॥ १८० ॥
अप्पट्ठाए जाएज्जा जं वा वत्थादि भिंदे नदट्ठाए जाएज्जा जस्स साहुस्स कज्जं तन्नामेण जाएज्ज, अप्पणो परस्स उभयट्ठा वा जाएज्जा जहा काउकामो तहा अक्खिउ जातियव्वं , एस परमत्थो ।

अप्पणे विधी भण्णति-
गहणम्मि गिरिहऊणं, हत्थे उत्ताणगम्मि वा काउं ।
भूमीए व ठवेत्तुं, एस विही होति अप्पणगे ॥१८१॥
गृहस्थप्रामस्थो तम्मि सयं गेरिहऊणं आणिऊणं गिहत्थस्स अप्पेति, एवं सेवरायप्पओगेण भवति, अप्पणगंमि वा हत्थे वि तिरिच्छं आणिएण वा ठवेति एवं भूमीएण वि ठवेति ।

एतेसिं चउण्ह वि सुत्ताणं इमे वितियपदा--
लाभपरिच्छा दुल्लभ, अचियत्ते सहूम अप्पणगे ।
चउसु वि पदेसु एतं,अवरपदा होंति णायव्वा ॥१८२॥
साहू मेत्तपडिलेहगा गता, किं सूती मग्गिता लब्भति ण य त्ति अप्पट्ठाए मग्गेज्जा, पत्तलिम्बणट्ठाए दुल्लभाओ सूतीओ वत्थभिन्नणट्ठमवि गीयाए पत्तं सिव्विज्जति, तं पुण ज पणाए निव्वति जहा ण दीसति सादयमावेण अचियत्तो- साहू गो ण लब्भति तस्स वा णामेण ण लब्भति ताहे अप्पणो अट्ठाए जाइउं तस्स देज्जा सहमाऽणाभोएण वा अविहीए अप्पेज्जा । नि० चू० १ उ० । फलकसंबन्धिघना- भावहेतुपादुकास्थानीयेऽर्थे,जी०३ प्रति०४ अधि०। जं०।नि० चू० । विपा० । पं० भा० । मट्टावनस्य मध्येयैरङ्गिर्जीवैरेकैकाकाशप्रदेशव्यवस्थापितैर्घनो मन्तव्य , द्वितीयोऽपि घनस्यैव भवति एवं प्रतरस्तथा सूचिरपि । विशे० (अत्रत्या व्याख्या ' ओहि ' शब्दे तृतीयभागे १५८ पृष्ठे गता । ) मखर्याम् , दे० ना० ८ वर्ग १ गाथा ।

सूईतल-सूचीतल-न० । ऊर्ध्वमुखसूचीके भूतले , प्रश्न० १ आश्र० द्वार ।

सूईफलय-सूची फलक-न० । सूचीभिरसंबन्धितेषु फलकप्रदेशेषु, जी० ३ प्रति० ४ अधि० ।

सूईमुह-सूचीमुख-न० । यत्र प्रदेशे सूची फलकं भित्त्वा मध्ये प्रविशति तत्प्रत्यासन्ने देशे, जी० ३ प्रति० ४ अधि० । रा० । द्वीन्द्रियजीवभेदे,प्रज्ञा०१ पद । पक्षिभेदे,प्रश्न०१ आश्र० द्वार।

सूक ( य ) र-शूकर-पुं० वराहे, प्रश्न० ३ आश्र० द्वार ।

सूड-भञ्ज-धा० । आमर्दने, "-भञ्जेर्वेमय--मुसुमूर- सूर-- सूर-सूड-विर-पविरञ्ज-करञ्ज-नीरञ्जा ॥ ८ । ४ । १०६ ॥ भञ्जरेते नवादेशा वा भवन्ति । सूडइ । भनक्ति । प्रा० ४ पाद ।

सूणत्त-सूनत्व-न० । वातपित्तश्लेष्मसन्निपातरक्ताभिघातजे शोथे वातपित्तश्लेष्मसन्निपातरक्ताभिघातजोऽयं पीडा, उक्तं च--" शोफ स्यात् षड्विधो घोरो, दोषैरुत्सेधलक्षण । व्यस्तै समस्तैश्चापीह, तथा रक्ताभिघातज ॥१॥" आचा० १ श्रु० ६ अ० १ उ० ।

सूणया-सूनृता-स्त्री० । वाङ्मनसोर्यथार्थत्वे, द्वा० २१ द्वा० ।

सूणा-सूना-स्त्री० । वधस्थाने, तं० । ग० ।

अथ गाथाचतुष्केनोत्सर्जनीयगच्छं दर्शयति--
जत्थ गोयम ! पंचएहं,कह वि सूणाण इक्कमवि हुज्जा ।
तं गच्छं तिविहेण, वोसिरिय वइज्ज अन्नत्थी ॥ १०१ ॥
यत्र गच्छे गौतम ! कथमपि पञ्चाना सूनानां-वधस्थानानां मध्ये एकाऽपि भवेत् , तं गच्छं त्रिविधेन मनोवाक्कायलक्षणेन व्युत्सृज्य-त्यक्त्वा अन्यत्र सद्गच्छे व्रजेत् । तत्र घरट्टिका १ उदूखलं २ चुल्ली ३ पानीयगृहं ४ प्रमार्जनी चेति ५ पञ्च सूना', उक्तं च शुकसंवादेऽपि-' खण्डनी, १ पेषणी २ चुल्ली३, जलकुम्भ ४ प्रमार्जनी ५ । पञ्च सूना गृहस्थस्य, तेन स्वर्गं न गच्छति ॥१॥ ' इति गाथाछन्द ।

सूणारम्भपवत्तं, गच्छं वेसुज्जलं न सेविज्ज ।
जं चारित्तगुणेहिं तु, उज्जलं तं तु सेविज्ज ॥ १०२ ॥
सूनारम्भप्रवृत्तं खण्डन्याद्यारम्भकर्त्तारं, तथा वेषेणोज्ज्वलं वेषाज्ज्वलम् , एवंविधं गच्छं न सेवेत संसारवर्द्धकत्वात् । ननु उज्ज्वलवेषस्य को दोष ? उच्यते-उज्ज्वलवेषेण विभूषा भवति विभूषातश्च चिक्कण कर्मबन्धः ततश्च संसारपर्यटनमिति । ग० २ अधि० ।

सूणारंभपवत्तग-शूनारम्भप्रवर्त्तक-त्रि० । खण्डन्याद्यारम्भकर्त्तरि , ग० २ अधि० ।

सू(सु)त्तम-सूत्तम-त्रि० । अतिप्रधाने , ग० १ अधि० ।

सूदग-सूद्रक-पुं० । प्रतिष्ठानपुरे सातवाहननृपतिमित्रे स्वनामख्याते द्विजे, ती० २६ कल्प । ( 'सातवाहन' शब्देऽस्मिन्नेव भागे कथा । )

सूमालिया-सुकुमारिका-स्त्री० । तैलविशेषे,बृ०१उ०२ प्रक० । पं०व० । चम्पानगर्यां सागरदत्तसार्थवाहस्य सुतायाम् , ज्ञा० १ श्रु०१६ अ० । ( 'दुवई' शब्दे चतुर्थभागे २५८८ पृष्ठे कथा ।)

सूय-सूत्र-न०। 'सूच' पैशून्ये,सूचनात्सूत्रं निपातनात् रूपनिष्पत्ति भावप्रधानश्चायं सूत्रतायाम् , नं०।

सूच्-धा० । चुरा० । ज्ञापने, सूएइ । सूचयति । बृ० २ प्रक० ।

सूयग-सूतक-न० । आशौचे. व्य० १ उ० । " जायमजायसूयगेसु निज्जूढा' व्य० १ उ० । सूतके विचार -पुत्रजन्मनि तद्गेहे दशदिनपर्यन्तं भोजनं न कर्त्तव्यम् । ही० ४ प्रका० । बृ० । ही० । ' तस्स परे तिन्नि पक्खा सूयतो मयणसलागा कुक्कुड-

गो," आ० म० १ अ० । सूयगमंद इति प्रसिद्धे तृणविशेषे, प्रव० ६० द्वार । जायमयसूयगाई निज्जूढा " इत्यादि-सूतकशब्दः प्रत्येक सम्बध्यते, जातकसूतक नाम जन्मानन्तर दशाहानि यावत्, मृतसूतक मृतान्तर दश दिवसान यावत्तत्र यद्वर्ज्यं तद् द्विधा—'लोग'त्ति लौकिकम् ' उत्तर'त्ति लोकोत्तरम्, लौकिक द्विधा—इत्वरम् यावत्कायिकं च। तत्रेत्वरम्—यत्सूक मृतकादि. तथाहि—लोके सूतकादि दश दिवसान् यावद्वर्ज्यते इति,यावत्कथिकं च —वरुडछिम्पकचर्मकारडोम्बादि, एतान्यक्षराणि व्यवहारसूत्रवृत्तौ सन्तीत्युक्त्वा सूतकगृहे दश दिवसान् यावत्खरतरास्त्यजन्त सन्ति,प्रश्नोत्तरग्रन्थे तु दशदिननिर्बन्धो ज्ञातो नास्ति इत्युक्तमस्ति, तत्क थमिति ? प्रश्न , अत्रोत्तरम्—व्यवहारसूत्रवृत्तौ सूतकविषये यद्दशदिनवर्जनं तद्देशविशेषपरत्वेन , ततो यत्र देशे सूतकविषये यावन्त्यवधिस्तावन्ति दिनानि वर्जनीयानि तेन प्रश्नोत्तरग्रन्थेन सह न कोऽपि विरोध इति ॥ २६० ॥ सूतकगृहे साधव आहारार्थं यान्ति नवेति?प्रश्न -अत्रोत्तरम्, यत्र देशे सूतकगृहे यावद्दिवासरैर्ब्राह्मणादयो भिक्षार्थं म. जन्ति तत्रास्माभिरपि तथा विधेयमिति वृद्धव्यवहार.।२०१। सेन० ३ उल्ला०। ' जायमयसूयगाइसु निज्जूढा ' सूतकशब्द प्रत्येकमभिसम्बध्यते जातसूतकं नाम जन्मान्तरं दशाहानि यावत् मृतकसूतक नाम मृतानन्तर दश दिवसान् यावत् तत्र जातकसूतके वा आदिशब्दात्तदन्येषु तथाविधेषु शूद्रगृहादिषु ये कृतभोजना सन्तो धिग्जातीयैर्निर्यूढा असंभाष्याः कृता इति । व्य० १ उ० । उत्त० । पा० ।

**सूचक**-पु० । पिशुने ; पिशुन सूचकं विदुरिति वचनात्, आव० ४ अ० । प्रश्न० । राज्ञा सूचनाकारके. ये सामन्तराज्येषु गत्वा अन्त पुरपालकै सह मैत्री कृत्वा यत्तत्र रहस्यं तत्सर्वं जानन्ति पश्चादनुसूचकेभ्य कथयन्ति । व्य० १ उ० ।

**सूयगड-सूत्रकृत**-न० । प्रवचनपुरुषस्य द्वितीयेऽङ्गे , न० । ' सूत्र ' पैशून्ये. सूचनात्सूत्रम् , निपातनाद्रूपनिष्पत्तिरिति भावप्रधानश्चाय सूत्रशब्द , ततोऽयमर्थ —सूत्रेण कृत सूत्ररूपतया कृतमित्यर्थ , यद्यपि च सर्वमङ्ग सूत्ररूपतया कृत तथापि रूढिवशादेतदेव सूत्रकृतमुच्यते, न शेषमङ्गम् । नं०। ( सूत्रस्य करणस्य च निक्षेपौ स्वस्वस्थाने उक्तौ । ) लौकिकग्रन्थस्य कर्मबन्धहेतुत्वात् कर्त्तुरशुभध्यायित्वमवसेयम् , इह तु सूत्रकृतस्य तावत् स्वसमयेन शुभाध्यवसायेन च प्रकृत यस्माद्गणधरै शुभध्यानावस्थितैरिदमङ्ग कृतमिति ।

सूत्रकृतपर्याया —

सूयगडं अंगाणं, बितियं तस्स य इमाणि नामाणि ।

सूयगडं सुत्तकडं, सु(या)यगडं चेव गोणाइं ॥२॥

सूत्रकृतमिति-एतदङ्गानां द्वितीयं तस्य चामून्यर्थिकानि. तद्यथा—सूत्रमुत्पन्नमर्थरूपतया तीर्थकृद्भ्य ततः कृत ग्रन्थरचनया गणधरैरिति , तथा सूत्रकृतमिति सूत्रानुसारेण तत्त्वावबोध क्रियतेऽस्मिन्निति तथा सूचाकृतमिति स्वपरसमयार्थसूचनं सूचा साऽस्मिन् कृतेति , एतानि चास्य गुणनिष्पन्नानि नामानीति । सूत्र० १ श्रु० १ अ० १ उ० । ( सूत्रकृतनिरुक्तम्याख्या ' करण ' शब्दे तृतीयभागे ३६ पृष्ठ गता । )

इहानन्तरसूत्रकृतस्य निरुक्तमुक्तमधुना सूत्रपदस्य निरुक्ताभिधित्सयाऽऽह—

सुत्तेण सुत्तिया चिय, अत्था तह सूइया य जुत्ता य ।

तो बहुविहप्पउत्ता, एयपसिद्धा अणादीया ॥ २१ ॥

' सुत्तेण ' त्यादि, अर्थस्य सूचनात्सूत्रम्-तेन सूत्रेण केचिदर्था. साक्षात्सूचिता मुख्यतयोपात्तास्तथा परे सूचिता अर्थापत्त्याक्षिप्ता साक्षादनुपादानेऽपि दध्यानयनचोदनया तदाधारानयनचोदनावदिति । एवं च कृत्वा चतुर्दशपूर्वविद. परस्परं षट्स्थानपतिता भवन्ति. तथा चोक्तम्-"अक्खरलंभेण समा , ऊणऽहिया हुंति मतिविसेसेहिं । ते वि य मई विसेसा , सुयणाणब्भंतरे जाण ॥ १ ॥ " तत्र ये साक्षादुपात्तास्तान् प्रति सर्वेऽपि तुल्या , ये पुन सूचितास्तदपेक्षया केचिदनन्तभागाधिकमर्थं वित्ति अपरेऽसंख्येयभागाधिकम् , अन्य. संख्येयभागाधिकम्, तथाऽन्य., संख्येयासंख्येयानन्तगुणमिति,ते च सर्वेऽपि युक्ता युक्त्युपपन्ना. सूत्रोपात्ता एव वेदितव्या , तथा चाभिहितम् ' न वि य मईविसेसे ' इत्यादि , ननु किं सूत्रोपात्तेभ्योऽन्येऽपि केचनार्था सन्ति येन तदपेक्षया चतुर्दशपूर्वविदां षट्स्थानपतितत्वमुद्घुष्यते वाढं विद्यन्ते यतोऽभिहितं-" पण्णवणिज्जा भावा, अणंतभागो उ अणभिलप्पाणं । पण्णवणिज्जाणं पुण, अणंतभागो सुयणिवद्धो ॥ १ ॥ " यतश्चैवं ततस्ते अर्था आगमे बहुविधं प्रयुक्ता . सूत्रोपात्ता. केचन साक्षात् केचिदर्थापत्त्या समुपलभ्यन्ते । यदि वा-कश्चिद्दण्डग्रहणं कश्चित्सर्वार्थोपादानमित्यादि; यैश्च पदैस्तेऽर्था. प्रतिपाद्यन्ते तानि पदानि प्रकर्षेण सिद्धानि प्रसिद्धानि न साधनीयानि, तथा अनादीनि च तानि नेदानीमुत्पाद्यानि, तथा चेयं द्वादशाङ्गी शब्दार्थरचनाद्वारेण विदेहेषु नित्या भरतैरावतेष्वपि शब्दरचनाद्वारेणैव प्रतितीर्थकर क्रियते अन्यथा तु नित्यैव; एतेन चोच्चारितप्रध्वंसिनो वर्णा इत्यनभिज्ञोक्त वेदितव्यमिति ।

साम्प्रत सूत्रकृतस्य श्रुतस्कन्धाध्ययनादिनिरूपणायेमाह—

दो चेव सुयक्खंधा, अज्झयणाई च हुंति तेवीसं ।

तेत्तिसुद्देसणकाला, आयाराओ दुगुणमंगं ॥ २२ ॥

' दो चेव ' त्यादि, द्वावत्र श्रुतस्कन्धा त्रयोविंशतिरध्ययनानि त्रयस्त्रिंशदुद्देशनकालास्ते चैव भवन्ति-प्रथमाध्ययने चत्वारो द्वितीये त्रयस्तृतीये चत्वार एव चतुर्थपञ्चमयोर्द्वौ द्वौ तथैकादशस्वेकसरकत्वेकादशैवेति प्रथमश्रुतस्कन्धे । तथा-द्वितीयश्रुतस्कन्धे सप्ताध्ययनानि तथा सप्तैवोद्देशनकाला एवमेते सर्वेऽपि त्रयस्त्रिंशदिति । एतच्चाचाराङ्गात् द्विगुणमङ्ग षट्त्रिंशत्पदसहस्रपरिमाणमित्यर्थ । सूत्र० १ श्रु० १ अ० ।

सूत्रकृत —

तवीसं सूयगडज्झयणा पण्णत्ता , तं जहा—समए वेयालिए उवसग्गपरिण्णा इत्थीपरिण्णा नरयविभत्ती महावीरथुई कुसीलपरिभासए वीरिए धम्मे समाहिमग्गे समोसरणे आहत्तहिए गंथे जमईए गाथा पुंडरीए किरियाठाणा आहारपरिण्णा अपच्चक्खाणकिरिया अणगारसुयं अद्दइज्जं णालंदइज्जं । ( सू० २३ × )

सूत्रकृतस्य सप्तपञ्चाशदध्ययनानि, स०। तत्राचारे प्रथमश्रुतस्कन्धे नवाध्ययनानि, द्वितीये षोडश निशीथाध्ययनस्य प्रस्थानान्तरत्वेनेहानाश्रयणात्, षोडशानां मध्ये एकस्याचारचूलिकेति परिहृतत्वात् शेषाणि पञ्चदश, सूत्रकृते द्वितीयाङ्गे प्रथमश्रुतस्कन्धे षोडश द्वितीये सप्त स्थानाङ्गे दशेत्येवं सप्तपञ्चाशदिति। स०। अध्ययनानां प्रत्येकमर्थाधिकारः। स०।

साम्प्रतं सूत्रकृताङ्गनिक्षेपानन्तरं प्रथमश्रुतस्कन्धस्य नामनिष्पन्ननिक्षेपाभिधित्सयाऽऽह—

निक्खेवो गाहाए, चउव्विहो छव्विहो य सोलसु।
निक्खेवो य सुयंमि य, खंधे य चउव्विहो होइ॥२३॥

इहाद्यश्रुतस्कन्धस्य गाथाषोडशक इति नाम, गाथाख्यं षोडशमध्ययनं यस्मिन् श्रुतस्कन्धे स तथेति, तत्र गाथाया नामस्थापनाद्रव्यभावरूपश्चतुर्विधो निक्षेपः, नामस्थापने प्रसिद्धे, द्रव्यगाथा द्विधा—आगमतो, नोआगमतश्च। तत्र आगमतो ज्ञाता तत्र चानुपयुक्तः 'अनुपयोगो द्रव्य' मिति कृत्वा, नोआगमतस्तु त्रिधा—ज्ञशरीरद्रव्यगाथा, भव्यशरीरद्रव्यगाथा ताभ्यां विनिर्मुक्ता च-" सत्तट्ठनरू विसमे, ण से हया नाण छट्ठ एह जलया। गाहाए पच्छद्धे, भेओ छट्ठो त्ति इक्कलो॥१॥" इत्यादिलक्षणलक्षिता पत्रपुस्तकादिन्यस्तेति, भावगाथाऽपि द्विविधा-आगम-नोआगमभेदात्, तत्राऽऽगमतो गाथापदार्थज्ञस्तत्र चोपयुक्तः, नोआगमतस्त्विदमेव गाथाख्यमध्ययनम्, आगमैकदेशत्वादस्य षोडशकस्यापि नामस्थापनाद्रव्यक्षेत्रकालभावभेदात् षोढा निक्षेपः। तत्र नामस्थापने क्षुण्णे, द्रव्यषोडशकं ज्ञशरीरभव्यशरीरविनिर्मुक्तं सचित्तादीनि षोडश द्रव्याणि, क्षेत्रषोडशकं षोडशाकाशप्रदेशाः, कालषोडशकं षोडश समया एतत्कालावस्थायि वा द्रव्यमिति, भावषोडशकमिदमेवाध्ययनषोडशकं, क्षायोपशमिकभाववृत्तित्वादिति। श्रुतस्कन्धयोः प्रत्येकं चतुर्विधो निक्षेपः स चान्यत्र न्यक्षेण प्रतिपादित इति नेह प्रतन्यते।

साम्प्रतमध्ययनानां प्रत्येकमर्थाधिकारं दिदर्शयिषयाऽऽह—

ससमयपरसमयपरू-वणा य णाऊण बुज्झणा चेव।
संबुद्धस्सुवसग्गा, त्थीदोसविवज्जणा चेव॥२४॥
उवसग्गभीरुणो त्थी-वसस्स णरएसु होज्ज उववाओ।
एवमहप्पा वीरो, जयमाह तहा जएज्जाह॥२५॥
परिचत्तनिसीलकुसी-ल सुसीलसंविग्गसीलवं चेव।
णाऊण वीरियदुगं, पंडियवीरिय पयट्टेई (वयइ)॥२६॥
धम्मो समाहिमग्गो, समोसढा चउसु सव्ववादीसु।
सीसगुणदोसकहणा, गंथंमि सदा गुरुनिवासो॥२७॥
आदाणिय संकलिया, आदाणीयंमि आयचरित्तं।
अप्पग्गंथे पिंडिय, वयणेणं होइ अहिगारो॥२८॥

तत्र प्रथमाध्ययने स्वसमयपरसमयप्ररूपणा द्वितीये स्वसमयगुणान् परसमयदोषांश्च ज्ञात्वा स्वसमय एव बोधो विधेय इति, तृतीयाध्ययने तु संबुद्धः सन् सम्यगुपसर्गसहिष्णुर्भवति तदभिधीयते, चतुर्थे स्त्रीदोषविवर्जना पञ्चमे त्वयमर्थाधिकारः, तद्यथा—उपसर्गासहिष्णोः स्त्रीवशवर्तिनोऽवश्यं नरकेषूपपात इति, षष्ठे पुनरेवमित्यनुकूलप्रतिकूलोपसर्गसहनेन स्त्रीदोषवर्जनेन च भगवान् महावीरो जेतव्यस्य कर्मणः संसारस्य वा पराभवेन जयमाह—अतस्तथैव यत्नं विधत्त यूयमिति शिष्याणामुपदेशो दीयते, सप्तमे त्विदमभिहितम्, तद्यथा—निःशीला गृहस्थाः कुशीलास्त्वन्यतीर्थिकाः पार्श्वस्थादयो वा ते परित्यक्ता येन साधुना स परित्यक्तनिःशीलकुशील इति, तथा सुशीलाः उद्युक्तविहारिणः संविग्नाः संवेगमापन्नास्तत्सेवाशीलः शीलवान् भवतीति, अष्टमे त्वेतत्प्रतिपाद्यते, तद्यथा—ज्ञात्वा वीर्यद्वयं पण्डितवीर्ये प्रयत्नो विधीयत इति, नवमे चार्थाधिकारस्त्वयम्, तद्यथा—यथावस्थितो धर्मः कथ्यते, दशमे तु समाधिः प्रतिपाद्यते, एकादशे तु सम्यग्दर्शनज्ञानचारित्रात्मको मोक्षमार्गः कथ्यते, द्वादशे त्वयमर्थाधिकारः, तद्यथा—समवसृता अवतीर्णा व्यवस्थिताश्चतुर्षु मतेषु क्रियाक्रियाज्ञानवैनयिकाख्येष्वभिप्रायेषु त्रिषष्ट्युत्तरशतत्रयसंख्याः पाषण्डिनः स्वीयं स्वीयमर्थं प्रसाधयन्तः समुत्थितास्तदुपन्यस्तसाधनदोषोद्भावनतो निराक्रियन्ते, त्रयोदशे त्विदमभिहितं, तद्यथा—सर्ववादिषु कपिलकणादाक्षपादशौद्धोदनिजैमिनिप्रभृतिमतानुसारिषु कुमार्गप्रणेतृत्वं साध्यते, चतुर्दशे तु ग्रन्थाख्येऽध्ययनेऽयमर्थाधिकारः, तद्यथा—शिष्याणां गुणदोषकथना, तथा शिष्यगुणसम्पदुपेतेन च विनेयेन नित्यं गुणानुरूपगुरुकुलवासो विधेय इति, पञ्चदशे त्वादानीयाख्येऽध्ययनेऽर्थाधिकारोऽयम्, तद्यथा—आदीयन्ते गृह्यन्ते उपादीयन्ते इत्यादानीयानि पदान्यर्था वा ते च प्रागुपन्यस्तपदैरर्थैश्च प्रायशोऽत्र संकलिताः, तथा आयतं चरित्रं सम्यक्चरित्रं मोक्षमार्गप्रसाधकं तदत्र व्यावर्ण्यत इति, षोडशे तु गाथाख्येऽल्पग्रन्थेऽध्ययनेऽयमर्थो व्यावर्ण्यते, तद्यथा—पञ्चदशभिरध्ययनैर्योऽर्थोऽभिहित सोऽत्र पण्डितवचनेन संक्षिप्ताभिधानेन प्रतिपाद्यत इति। "गाहासोलसगाणं, पिंडत्थो वण्णिओ समासेणं। एत्तो इक्किक्कं पुण, अज्झयणं कित्तइस्सामि॥१॥" सूत्र०। (समयाध्ययनस्याधिकारगाथा ०६ 'समय' शब्देऽस्मिन्नेव भागे उक्ताः।)

साम्प्रतं प्रागुपन्यस्तोद्देशार्थाधिकाराभिधित्सयाऽऽह—

महपंचभूय एक्क-प्पए य तज्जीवतस्सरीरे य।
तह य अगारगवाई, अत्तच्छट्ठो अफलवादी॥३०॥
बीए नियईवाओ, अण्णाणिय तह य नाणवाईओ।
कम्मं चयं न गच्छइ, चउव्विहं भिक्खुसमयंमि॥३१॥
तइए आहाकम्मं, कडवाई जह य ते पवाईओ।
किच्चुवमा य चउत्थे, परप्पवाई अविरएसु॥३२॥

'महपंचभूये' त्यादि गाथात्रयम्, अस्याध्ययनस्य चत्वार उद्देशकास्तत्राद्यस्य षडर्थाधिकारा आद्यगाथाऽभिहिताः, तद्यथा—पञ्च भूतानि पृथिव्यप्तेजोवाय्वाकाशाख्यानि महान्ति च तानि सर्वलोकव्यापित्वात् भूतानि च महाभूतानि इत्ययमेकोऽर्थाधिकारः, तथा चेतनाचेतनं सर्वमप्यात्मविवर्त्त इत्यात्माऽद्वैतवादः प्रतिपाद्यत इत्यर्थाधिकारो द्वितीयः, स चासौ जीवश्च तज्जीवः कायाकारो भूत-

परिणामस्तदेव च शरीरं जीवशरीरयोरैक्यमिति यावदिति, तृतीयोऽर्थाधिकारः, तथा कारको जीवः सर्वस्याः पुरुषप्राकृयाया इत्यवत्वादीनि चतुर्थोऽर्थाधिकारः, तथात्मषष्ठ इति पञ्चानां भूतानामात्मा षष्ठः प्रतिपाद्यत इत्ययं पञ्चमोऽर्थाधिकारः, तथा फलवादीनि न विद्यते कस्याश्चित् क्रियाया फलमित्येव वादी च प्रतिपाद्यत इति षष्ठोऽर्थाधिकार इति। द्वितीयोद्देशके चत्वारोऽर्थाधिकाराः, तद्यथा— नियतवादस्तथा अज्ञानिकमत ज्ञानवादी च प्रतिपाद्यते, कर्मचयमुपचयं चतुर्विधमपि न गच्छति भिक्षुसमये शाक्यागमे इति चतुर्थोऽर्थाधिकारः, चातुर्विध्यं तु कर्मणोऽविज्ञोपचितमविज्ञानमविज्ञातयोपचितमनाभोगकृतमित्यर्थः, यथा मातुस्तनाद्याक्रमणेन पुत्रव्यापत्तावप्यनाभोगान्न कर्मोपचीयते। तथा परिज्ञानं परिज्ञा केवलेन मनसा पर्यालोचनम्, तेनापि कस्यचित् प्राणिनो व्यापादनाभावात् कर्मोपचयाभाव इति, तथा ईरणमीर्या—गमनं तेन जनितमीर्याप्रत्ययं तदपि कर्मोपचयं न गच्छति, प्राणिव्यापादनाभिसंधेरभावादिति, तथा स्वप्नान्तिकं स्वप्नप्रत्ययं कर्म नोपचीयते, यथा स्वप्नभोजने तृप्त्यभाव इति। तृतीयोद्देशके त्वयमर्थाधिकारः, तद्यथा—आधाकर्मगतविचारस्तद्भोजिनां च दोषोपदर्शनमिति, तथा कृतवादी च भण्यते, तद्यथा—ईश्वरेण कृतोऽयं लोकः प्रधानादिकृतो वा यथा च ते प्रवादिनः आत्मीयमात्मीयं कृतवादं प्रशंसन्तोऽस्थितास्तेथा भण्यन्त इति द्वितीयोऽर्थाधिकारः। चतुर्थोद्देशकाधिकारस्त्वयम्, तद्यथा-अविरतेषु गृहस्थेषु यानि कृत्यानि अनुष्ठानानि स्थितानि तैरत्नत्रयप्रधानैः कर्तव्यैः परप्रवादी परतीर्थिक उपमीयत इति। सूत्र० १ श्रु० १ अ० १ उ०। स०।

सूत्रकृतस्य विषया.—

से किं तं सूयगडे ?, सूयगडे णं लोए सूइज्जइ, अलोए सूइज्जइ, लोयालोए सूइज्जइ। जीवा सूइज्जंति अजीवा सूइज्जंति जीवाजीवा सूइज्जंति, ससमए सूइज्जइ परसमए सूइज्जइ ससमयपरसमए सूइज्जइ, सूयगडेणं असीयस्स किरियावाइसयस्स चउरासीईए अकिरियावाईणं सत्तट्ठीए अन्नाणियवाईणं बत्तीसाए वेणइयवाईणं तिण्हं तिसट्ठाणं पासंडियसयाणं वूहं किच्चा ससमए ठाविज्जइ। सूयगडेणं परित्ता वायणा संखिज्जा अणुओगदारा संखिज्जा वढा संखिज्जा सिलोगा संखिज्जाओ निज्जुत्तीओ संखिज्जाओ पडिवत्तीओ, से णं अंगट्ठयाए बिइए अंगे दो सुयक्खंधा तेवीसं अज्झयणा तेत्तीसं उद्देसणकाला तेत्तीसं समुद्देसणकाला छत्तीसं पयसहस्साणि पयग्गेणं संखिज्जा अक्खरा अणंता गमा अणंता पज्जवा, परित्ता तसा अणंता थावरा सासयकडनिबद्धनिकाइया जिणपण्णत्ता भावा आघविज्जंति परूविज्जंति दंसिज्जंति निदंसिज्जंति उवदंसिज्जंति, से एवं आया से एवं नाया से एवं विण्णाया एवं चरणकरणपरूवणा आघविज्जइ। सेत्तं सूयगडे। (सू० ४६)।

अथ किं तत्सूत्रकृतम्-'सूत्र' पशूत्य सूचनात् सूत्रं निपातनात् रूपनिष्पत्तिर्भावप्रधानश्चायं सूत्रशब्दः, ततोऽयमर्थः—सूत्रेण कृतं सूत्ररूपतया कृतमित्यर्थः। यद्यपि च सर्वमङ्गं सूत्ररूपतया कृतं तथापि रूढिवशादेतदेव सूत्रकृतमुच्यते; न शेषमङ्गम्। आचार्य आह—सूत्रकृतेन अथवा—सूत्रकृते णमिति वाक्यालङ्कारे लोकः सूच्यते, इत्यादि निगदसिद्धं यावत् 'असीयस्स किरियावाइसयस्स' इत्यादि। सूत्र० १ श्रु० १ अ०। (लोकस्य सूचनम् 'लोक' शब्दे षष्ठभागे। 'भावणा' शब्दे पञ्चमभागे च गतम्।) (अलोकस्वरूपम् 'अलोग' शब्दे प्रथमभागे ७८९ पृष्ठे गतम्। लोक' शब्दे च षष्ठभागे सविस्तरमुक्तम्।) (जीवसूचनम् 'जीव' शब्दे चतुर्थभागे १५१६ पृष्ठे गतम्।) (अजीवसूचनम् 'अजीव' शब्दे प्रथमभागे २०३ पृष्ठे गतम्।), (जीवाजीवसूचनम् 'जीवाजीव' शब्दे चतुर्थभागे १५५६ पृष्ठे उक्तम्।) (स्वसमयस्वरूपम् 'ससमय' शब्देऽस्मिन्नेव भागे उक्तम्।) (परसमयस्वरूपम् 'परसमय' शब्दे पञ्चमभागे ५४८ पृष्ठे प्रतिपादितम्।) (क्रियावादिनः 'किरियावाइ' शब्दे तृतीयभागे ५५४ पृष्ठे उक्ताः।) (अक्रियावादिनः 'अकिरियावाइ' शब्दे प्रथमभागे १२६ पृष्ठे गताः।) (अज्ञानिकवादिनः 'अण्णाणिय' शब्दे प्रथमभागे ४८६ पृष्ठे गताः।) (वैनयिकवादिनः 'वेणइय' शब्दे षष्ठे भागे दर्शिताः।) "भारद्दाजसगोत्ते सूयगडंग महासमणनामं। अगुणत्तीससतरिंह, जा हि परिसाए वोच्छिन्ना॥" ति०।

सूयगी-सूतगवी-स्त्री०। अभिनवप्रसूतायां गवि, 'चिट्ठन्तो परिसप्पति, सूयगी य अदूरए'। सूत्र० १ श्रु० ३ अ० २ उ०।

सूयपाय-शूनपाद-त्रि०। संजातपादशोथे, विपा० १ श्रु० ७ अ०।

सूय(अ)र-शूकर-पुं०। पशुविशेषे, विड्वराहे, पं० व० १ द्वार। सूत्र०। विपा०। आ० म०। "सुणियाभाव साणस्स, सूयरस्स नरस्स य। विणए ठविज्ज अप्पाणं, इच्छंतो हियमप्पणो॥" उत्त० १ अ०।

सूयरिय-शौकरिक-त्रि०। शूकरवधार्थं चरन्तीति शौकरिकाः। शूकरमांसोपजीविनि, अनु०।

सूया-सूचा-स्त्री०। व्याजे, स्था० ३ ठा० ३ उ०। अप्पणो दोसं भासति न परस्स एसा असूया, ण अप्पणो परस्स फुडमेव दोसं भासति एसा सूया। नि० चू० १० उ०। स्वपरसमयसूचने, सूत्र० १ श्रु० १ अ० १ उ०। स्वरूपोपदेशेन परस्वरूपकथने, सू० १ उ० १ प्रक०।

सूर-भञ्ज-धा०। "भञ्जेर्वेमय-मुसुमूर-मूर-सूर-सूड-विर-पविरञ्ज—करञ्ज—नीरञ्जाः" ॥८।४।१०६॥ इति भञ्जेः सूरादेशः। सूरइ। भनक्ति। प्रा० ४ पाद।

शूर-पुं०। अक्षोभ्ये, आचा० १ श्रु० ५ अ० ३ उ०।

अनु० । उत्त० । कुन्थुजिनस्य पितरि, स० । आव० । सुभटे, संथा० । ति० । प्रव० । विक्रान्तभटे, दश० ८ अ० । ज्ञा० । आव० । स्था० । तथाविधे दातरि, अभ्युपेतनिर्वाहे, भ० ११ श० १ उ० । अङ्गीकृतनिर्वाहे, आ० १ श्रु० १ अ० । सूत्र० । " सूरा मो मन्नंता, कैतवियाहि (उ) वहि पहाणाहिं । गहिया हु अभयपज्जो, कूलवाला-दिणो वहवे ॥ " सूत्र० १ श्रु० ४ अ० १ उ० । (एतद्-व्याख्या " इत्थी " शब्दे द्वितीयभागे ५६६ पृष्ठे गता । ) समर्थे, सूत्र० १ श्रु० ३ अ० १ उ० । कल्प० । भ० । (अत्रत्या व्याख्या " उवसग्ग " शब्दे द्वितीयभागे १०२२ पृष्ठे गता । ) पराक्रमवति योधे च, स्था० ।

चत्तारि सूरा पमत्ता, तं जहा-खंतिसूरे तवसूरे दाण-सूरे जुद्धसूरे, खंतिसूरा अरहंता तवसूरा अणगारा दाण-सूरे वेसमणे जुद्धसूरे वासुदेवे । (सू० ३१७)

" चत्तारि सूरे " त्यादि, सूत्रद्वयं कण्ठ्यम्, किन्तु शूरा धीराः शान्तिशूरा अर्हन्तो महावीरवत्, तपःशूरा अनगारा दृढ-प्रहारिवत्, दानशूरो वैश्रमण उत्तराऽऽशालोकपालस्तीर्थ-करादिजन्मपारणकादिने इति, उक्तं च-" वेसमणवयणसंचो-इयाउ ते तिरियजंभगा देवा । कोडिग्गसो हिरण्णं, रयणाणि य तत्थ उवणेति ॥१॥ " त्ति । स्था० ४ ठा० ३ उ० । ऋषभदेवस्य एकोनविंशतितमे पुत्रे, कल्प० १ अधि० ७ क्षण ।

सूर-पुं० । आदित्ये, स० १३८ सूत्र । विशे० । अस्मादेव पूर्वादिदिशा व्यवस्था । नं० । रा० । प्रव० । संथा० ।

सूर्य-पुं० । ज्योतिष्काणामिन्द्रे, भ० ३ श० ८ उ० । सथा० । सूत्र०। (अस्य व्याख्या 'सामाइय' शब्देऽस्मिन्नेव भागे गता ।)

सूर्यस्य पूर्वोत्तरजन्मकथा—

वेचिरणं भंते ! अजस्स सुमणसेणं भगवया ०जाव संपत्तेणं के अट्ठे पमत्ते, एवं खलु जंबू ! तेणं कालेणं तेणं समएणं राय-गिहे नामं नगरे गुणसिलए चेइए सेणिए राया सामी सरणं जहा चंदो तहा सूरो वि आगतो, ०जाव नट्टविहिं उवदंसित्ता पडिगते पुव्वभवपुच्छा सावत्थीए नगरीए सुपविते नामं गाहावई होत्था, अड्ढे अहेव अंगती ०जाव विहराति पासे समोसढे, जहा अंगती तहेव पव्वइए तहेव विहारियमामन्ने ०जाव महाविदेहे वासे सिज्झिहिति ०जाव अंतं काहिति एवं खलु जंबू ! समणेणं निक्खेवतो । नि०३ वर्ग २ अ० । स्था० ।

( सूर्योऽप्युल्लिखित इति सूर्यस्य दुष्कथा ' महादेव ' शब्दे षष्ठभागे द्रष्टा । ) ( - अग्गमहिसी - शब्दे तदग्रमहिष्यः । )

ह्रौ सूर्यौ, इति सूर्यवर्णकमाह—

तओ पुणो तमपडलपरिप्फुडं चेव तेअसा पज्जलंत-रूवं, रत्तासोगपगासकिंसुअसुअमुहगुंजद्धरागसरिसं कमल-वणालंकरणं अंकणं जोइसस्स अंबरतलपईवं हिमपड-लगलग्गहं गहगणोरुनायगं रत्तिविणासं उदयत्थमणेसु मुहुत्तं सुहदंसणं दुन्निरिक्खरूवं रत्तिमुद्धंतदुप्पयारपम-द्दणं सीअवेगमहणं पिच्छइ मेरुगिरिसययपरिअट्टयं वि-

सालं सूरं रस्सीसहस्सपयलियदित्तसोहं ७ ॥ (सू० ३६)

( तओ पुणो ) तत पुनः चन्द्रदर्शनानन्तरं सप्तमे स्वप्ने सूर्य पश्यति, अथ किंविशिष्टं सूर्यम्-( तमपडलपरिप्फुडं ) तमःपटलम् अन्धकारसमूहस्तस्य परिस्फोटकं नाशकमि-त्यर्थः ( चेव ) निश्चयेन, पुनः किंवि० ( तेअसा पज्जलंत-रूवं ) तेजसैव प्रज्वलत् जाज्वल्यमानं रूपं यस्य स तं, तथा तं, स्वभावतस्तु सूर्यविम्बवर्तिनो बादरपृथ्वीकायिका शीतला एव, किन्त्वातपनामकर्मोदयात्तेजसैव एते जनं व्याकुलीकुर्वन्तीति ज्ञेयम्, पुनः किंवि० (रत्तासोग) रक्ता-शोकोऽशोकवृक्षविशेषः (पगासकिंसुअ) प्रकाशकिंशुकः पु-ष्पितपलाशः ( सुअमुहगुंजद्ध ) शुकमुखं गुञ्जार्धं च प्रसिद्धं ( रागसरिसं ) एतेषां वस्तूनां यो रागो रक्तत्वं तेन सदृशं, पूर्वोक्तवस्तुवत् रक्तवर्णमित्यर्थः, पुनः किंवि० ( कमलवणा-लंकरणं) कमलवनानाम् अलङ्करणं शोभाकारकं, विकाशक-मिति यावत्, विकसितानि तानि अलङ्कृतानीव विभा-न्ति, पुनः किंवि० ( अंकणं जोइसस्स ) ज्योतिषस्य ज्यो-तिश्चक्रस्य अङ्कनं, मेषादिराशिसंक्रमणादिना लक्षणज्ञा-पकं, पुनः किंवि० ( अंबरतलपईव ) अम्बरतले प्रदीपं आ-काशतलप्रकाशकं, पुनः किंवि० ( हिमपडलगलग्गहं ) हि-मपटलस्य-हिमसमूहस्य गलग्रहं गलहस्तदायकं, हिमस्फो-टकमित्यर्थः, पुनः किंवि० ( गहगणोरुनायगं ) ग्रहगणस्य ग्रहसमूहस्य उरुर्महान् नायको यः स तथा तम्, पुनः किंवि० (रत्तिविणासं ) रात्रिविनाशं, रात्रिविनाशकारण-मित्यर्थः, पुनः किंवि० ( उदयत्थमणेसु मुहुत्तं सुहदंसणं ) उदयास्तसमययोः उदयवेलायाम् अस्तवेलायाञ्च मुहूर्तं या-वत् सुखदर्शनं सुखेन अवलोकनीयमित्यर्थः ( दुन्निरिक्ख-रूवं ) अन्यस्मिन् काले दुर्निरीक्ष्यरूपं, सम्मुखं विलोकयितुं न शक्यते इत्यर्थः । पुनः किंवि० ( रत्तिमुद्धंत ) रात्रौ उ-द्धता स्वेच्छाचारिणः, मकारोऽत्र प्राकृतत्वात्, एवंवि-धा ये [ दुप्पयारप्पमद्दणं ] दुष्प्रचाराश्चौरादयोऽन्यायका-रिणस्तान् प्रमर्दयति यस्तम्, अन्यायकारिप्रचारनिवारक-मित्यर्थः, पुनः किंवि० ( सीअवेगमहणं ) शीतवेगमथनम्, आतपेन शीतवेगनिवारणात् ( पिच्छइ ) पश्यति इति क्रिया-पदं प्राग्योजितं, पुनः किंवि० ( मेरुगिरिसययपरिअट्टयं ) मेरुगिरेः सततं परिवर्तकं, मेरुमाश्रित्य प्रदक्षिणया भ्रम-न्तमिति यावत्, पुनः किंवि० ( विसालं ) विशालं वि-स्तीर्णमण्डलं ( सूरं ) सूर्यम् इत्यपि विशेष्यं योजितं, पुनः किंवि० ( रस्सीसहस्सपयलिअ ) रश्मिसहस्रेण कि-रणदशशत्या कृत्वा प्रदलिता स्फोटिता ( दित्तसोह ) दीप्तानां चन्द्रतारादीनां शोभा येन स तथा तं, यत्र स्व-किरणैः सर्वेषामपि प्रभा विलुप्ताऽस्तीति भावः, अत्र सहस्रकिरणाभिधानं तु लोकप्रसिद्धत्वात्, अन्यथा काल-विशेषे अधिका अपि तस्य किरणा भवन्ति, तथा चोक्तं लौकिकशास्त्रेषु—

" ऋतुभेदात्पुनस्तस्यो-ऽतिरिच्यन्तेऽपि रश्मयः ।
शतानि द्वादश १२०० मधौ त्रयोदश १३०० तु माधवे ॥१॥
चतुर्दश १४०० पुनर्ज्येष्ठे, नभोनभस्ययोस्तथा १५०० ।
पञ्चदशैव १५०० त्वाषाढे, षोडशैव १६०० तथाश्विने ॥२॥
कार्तिके त्वेकादश च ११०० स्त्रिताम्येवं तपस्यपि ।

मार्गे च दश सार्धानि १०५० शतान्येव १०५० च फाल्गुने ॥३॥ पौष एव परं मासि, सहस्रं १००० किरणा रवेः ॥ ७ ॥३६॥" कल्प० १ अधि० ३ क्षण।

ता के ते चिन्नं पडिचरंति आहितेत्ति वदेज्जा?, तत्थ खलु इमे दुवे सूरिया पन्नत्ता, तं जहा-भारहे चेव सूरिए, एरवए चेव सूरिए। ता एते णं दुवे सूरिए पत्तेयं पत्तेयं तीसाए तीसाए मुहुत्तेहिं एगमेगं अद्धमंडलं चरंति सट्ठिए सट्ठिए मुहुत्तेहिं एगमेगं मंडलं संघातंति, ता णिक्खममाणे णिक्खममाणे खलु एते दुवे सूरिया णो अण्णमण्णस्स चिण्णं पडिचरंति पविसमाणा खलु एते दुवे सूरिया अण्णमण्णस्स चिण्णं परिचरंति तं सतमेगं चोयालं तत्थ को हेऊ वदेज्जा ?, ता अयं णं जंबुद्दीवे दीवे ०जाव परिक्खेवेणं तत्थ णं अयं भारहे णं चेव सूरिए जंबुद्दीवे दीवे पाईणपडीणायत उदीणदाहिणायतताए जीवाए मंडलं चउव्वीसएणं सतेणं छेत्ता दाहिणपुरत्थिमिल्लंसि चउभागमंडलंसि बाणवतिं य सूरियमयाइं जाइं अप्पणा चिण्णाइं परिचरति, उत्तरपचत्थिमेल्लंसि चउभागमंडलंसि एकाणउतिं सूरियमताइं जाइं सूरिए अप्पणो चेव चिण्णं पडिचरति, तत्थ अयं भारहे सूरिए एरावयस्स सूरिअस्स जंबूदीवस्स दीवस्स पाईणपडीणायताए उदीणदाहिणायताए जीवाए मंडलं चउवीसएणं सएणं छेत्ता उत्तरपुरत्थिमिल्लंसि चउभागमंडलंसि बाणउतिं सूरियमताइं(सूरियमताइं)जाइं सूरिए परस्स चिण्णं पडिचरति, दाहिणपच्चत्थिमेल्लंसि चउभागमंडलंसि एकोणणउतिं सूरियमताइं जाइं सूरिए परस्स चेव चिण्णं पडिचरति, तत्थ अयं एरावए सूरिए जंबूदीवस्स दीवस्स पाईणपडीणायताए उदीणदाहिणायताए जीवाए मंडलं चउवीसएणं सएणं छेत्ता उत्तरपुरत्थिमिल्लंसि चउभागमंडलंसि बाणउतिं सूरियमताइं ०जाव सूरिए अप्पणो चेव चिण्णं पडिचरति, दाहिणपुरत्थिमिल्लंसि चउभागमंडलंमि एकोणउतिं सूरियमताइं जाइं सूरिए अप्पणो चेव चिण्णं पडिचरति, तत्थ णं एयं एरावए सूरिए भारहस्स सूरियस्स जंबूदी० दीवस्स पाईणपडीणायताए उदीणदाहिणायताए जीवाए मंडलं चउवीसएणं सतेणं छित्ता दाहिणपच्चत्थिमेल्लंमि चउभागमंडलंमि बाणउतिं सूरियमताइं सूरिए परस्स चिण्णं पडिचरति, उत्तरपुरत्थिमेल्लंसि चउभागमंडलंसि एकाणउतिं सूरियमताइं जाइं सूरिए परस्स चेव चिण्णं पडिचरति ।( सू० १४ ×)

'ता के ते' इत्यादि, 'ता' इति प्राग्वत्, कस्त्वया भगवन्! सूर्यः स्वयं परेण वा सूर्येण चीर्णं क्षेत्रं प्रतिचरति प्रतिसरन् आख्यात इति वदेत् ?, एवं भगवता गौतमेनोक्ते भगवान् वर्द्धमानस्वाम्याह--'तत्थ' इत्यादि, तत्र तस्मिन् जम्बूद्वीपे परम्परं चीर्णक्षेत्रप्रतिचरण--चिन्तायां खलु--निश्चितं यथावस्थित वस्तुतत्त्वमधिकृत्येमौ द्वौ सूर्यौ प्रज्ञप्तौ; तद्यथा--भारतश्चैव सूर्य, ऐरावतश्चैव सूर्य ।"ता एएण' मित्यादि, तत्र एतौ 'ण' मिति वाक्यालङ्कारे, द्वौ सूर्यौ प्रत्येकं त्रिंशता मुहूर्त्तै-रेकैकमर्द्धमण्डलं चरतः षष्ट्या षष्ट्या मुहूर्त्तैः पुनः प्रत्येकमेकैकं परिपूर्णं मण्डलं संघातयतः--पूरयतः 'ता निक्खममाणा' इत्यादि, 'ता' इति तत्र सूर्यमेकैकसंवत्सरस्य मध्ये इमौ द्वावपि सूर्यौ सर्वाभ्यन्तरान्मण्डलान्निष्क्रामन्तौ नाऽन्योऽन्यस्य परस्परेण चीर्णं क्षेत्रं प्रतिचरतः, नैकोऽपरेण चीर्णं क्षेत्रं प्रतिचरति, नाप्यपरोऽपरेण चीर्णमिति भावः, इदं तु स्थापनावशादवसेयम्; सा च स्थापना इयम्-सर्वबाह्यान्मण्डलादभ्यन्तरं प्रविशन्तौ द्वावपि खलु सूर्यावन्योऽन्यस्य परस्परेण चीर्णं प्रतिचरतः, तद्यथा-शतमेकं चतुश्चत्वारिंशं, किमुक्तं भवति-यैश्चतुर्विंशत्यधिकशतसङ्ख्यैर्भागैर्मण्डलं पूर्यते, तेषां चतुश्चत्वारिंशदधिकं शतम्। उभयसूर्यसमुदायचिन्तायां परस्परेण चीर्णं प्रतिचर्यते प्रतिमण्डलमवाप्यते इति एतदेवमर्थं प्रश्नसूत्रमाह-'तत्थ को हेऊ ?' इति तत्र एवंविधाया वस्तुतत्त्वव्यवस्थाया अवगमे को हेतुः का उपपत्तिरिति? अत्रार्थे भगवान् वदेत्, अत्र भगवानाह--'ता अयंणं' मित्यादि, इदं जम्बूद्वीपस्वरूपप्रतिपादकं वाक्यं पूर्ववत् स्वयं परिपूर्णं परिभावनीयम्, 'तत्थ णं' मित्यादि, तत्र जम्बूद्वीपे णमिति प्राग्वत् 'अयं भारहे चेव सूरिए' इति-सर्वबाह्यस्य मण्डलस्य दक्षिणस्मिन्नर्द्धमण्डले यश्चारं चरितुमारभते स भरतक्षेत्रप्रकाशकत्वाद्भारत इत्युच्यते, यस्त्वितरस्तस्यैव सर्वबाह्यस्य मण्डलस्योत्तरस्मिन् अर्द्धमण्डले चारं चरति, स ऐरवतक्षेत्रप्रकाशकत्वादैरवतस्तत्रायं प्रत्यक्षत उपलभ्यमानो जम्बूद्वीपस्य सम्बन्धी भारतः सूर्यो यस्मिन् मण्डले परिभ्रमति तत्तन्मण्डलं चतुर्विंशत्यधिकेन शतेन छित्त्वा-विभज्य चतुर्विंशत्यधिकशतसङ्ख्यान् भागान् तस्य तस्य मण्डलस्य परिकल्प्येत्यर्थः, कयेत्याह-प्राचीनाऽपाचीनायतया उदग्दक्षिणायतया च जीवया प्रत्यञ्चया, दवरिकया इत्यर्थः, तन्मण्डलं चतुर्भिर्भागैर्विभज्य दक्षिणपौरस्त्ये दक्षिणपूर्वे आग्नेये कोणे इत्यर्थः, 'चउभागमण्डलंसि' त्ति-प्राकृतत्वात्-स्पदव्यत्ययो मण्डलचतुर्भागे तस्य तस्य मण्डलस्य चतुर्थे भागे सूर्यसंवत्सरसत्कद्वितीयषण्मासमध्ये दिनवर्त्तीनि सूर्यगतानि द्वानवतिसंख्यानि मण्डलानि स्वयं सूर्येण गतानि चीर्णानि, किमुक्तं भवति ?--पूर्वं सर्वाभ्यन्तरान्मण्डलान्निष्क्रामता स्वचीर्णानि प्रतिचर्य्यन्ते गम्यन्ते, एतदेव व्याचष्टे-'जाइं सूरिए अप्पणा चिण्णाइं पडिचरइ' इति--यानि सूर्य आत्मना स्वयं पूर्वं सर्वाभ्यन्तरान्मण्डलान्निष्क्रमणकाले इति शेषः चीर्णानि प्रतिचरति तानि च द्विनवतिसंख्यानि मण्डलानि चतुर्भागरूपाणि चीर्णानि प्रतिचरति न परिपूर्णचतुर्भागमात्राणि, किन्तु--सकलमण्डलगतचतुर्विंशत्यधिकशतसत्काष्टादशाष्टादशभागप्रमितानि, न चाष्टादशाष्टादश भागा न सर्वेष्वपि मण्डलेषु प्रतिनियते एव देशे किन्तु क्वापि मण्डले कुत्रापि केवल दक्षिणपौरस्त्य-

ण्डचतुर्भागमध्ये तत. 'दाहिणपुरत्थिमंसि चउभागमंडलंसि' इत्युक्तम् एवमुत्तरेष्वपि मण्डलचतुर्भागेष्वष्टादशभागप्रमितत्वं भावनीयम्, स एव भारत. सूर्यस्तेषामेव द्वितीयानां षण्मासानां मध्ये उत्तरपश्चिमे चतुर्भागमण्डले मण्डलचतुर्भागे एकनवतिसंख्यानि मण्डलानि स्वस्वमण्डलस्य चतुर्विंशत्यधिकशतसत्काष्टादशाष्टादशभागप्रमितानि स्वयं मतानि स्वयं सूर्येण पूर्वं सर्वाभ्यन्तरान्मण्डलात् निष्क्रमणकाले चीर्णानि प्रतिचरतीति गम्यते; एतदेव व्याचष्टे-'जाइं सूरिए अप्पणा चेव चिरणाइं पडिचरइ' एतद् पूर्ववत् व्याख्येयम, इह सर्वबाह्यान्मण्डलात् शेषाणि मण्डलानि त्र्यशीत्यधिकशतसंख्यानि तानि च द्वाभ्यामपि सूर्याभ्यां द्वितीयषण्मासमध्ये प्रत्येकं परिभ्रम्यन्ते, सर्वेष्वपि च दिग्विभागेषु प्रत्येकमेकं मण्डलमेकेन सूर्येण परिभ्रम्यते द्वितीयमपरेण एवं यावत् सर्वान्तिमं मण्डलं, तत्र दक्षिणपूर्वदिग्भागे द्वितीयषण्मासमध्ये भारत. सूर्यो द्विनवतिमण्डलानि परिभ्रमति, एकनवतिमण्डलानि परापरत. उत्तरपश्चिमे दिग्भागे द्विनवतिमण्डलान्यैरावत परिभ्रमति, एकनवतिमण्डलानि भारत, एतच्च पट्टिकादौ मण्डलस्थापना कृत्वा भावनीयम्, तत उक्तम्-दक्षिणपूर्वे द्विनवतिसंख्यानि मण्डलानि उत्तरपश्चिमे त्वेकनवतिसंख्यानि भारत स्वयं चीर्णानि प्रतिचरतीति । तदेव भारतसूर्यस्य स्वयं चीर्णप्रतिचरणपरिमाणमुक्तम्, इदानीं तस्यैव भारतसूर्यस्य परचीर्णप्रतिचरणपरिमाणमाह— 'तत्थ य अय भारह' इत्यादि, तत्र जम्बूद्वीपे अय प्रत्यक्षत उपलभ्यमानो जम्बूद्वीपसम्बन्धी भारत' सूर्यो यस्मिन् मण्डलं परिभ्रमति तत्तन्मण्डलं चतुर्विंशत्यधिकेन भागशतेन छित्त्वा भूयश्च प्राचीनापाचीनायतया उदीच्यदक्षिणायतया च जीवया च तत्तन्मण्डलं चतुर्भिर्विभज्य उत्तरपूर्वे-ईशान कोणे इत्यर्थ चतुर्भागमण्डले तस्य तस्य मण्डलस्य चतुर्थे भागे तेषामेव द्वितीयाना षण्मासाना मध्ये एरावतस्य सूर्यस्य द्विनवतिसूर्यमतानि द्विनवतिसंख्यान्यैरावतेन सूर्येण पूर्वं निष्क्रमणकाले मतीकृतानि प्रतिचरति, एतदेव व्यक्तीकरोति जाइं सूरिए परस्स चिण्णाइं पडियरइ ' यानि सूर्यो भारत- 'परस्स चिण्णाइं ' इत्यत्र षष्ठी तृतीयार्थे, परेण एरावतेन सूर्येण निष्क्रमणकाले चीर्णानि प्रतिचरति, दक्षिणपश्चिमे च मण्डलचतुर्भागे एकनवतिम्-एकनवतिसंख्यानि एरवतस्य सूर्यस्यत्यत्रापि सम्बध्यते, ततोऽयमर्थ —एरावतस्य सूर्यस्य सम्बन्धीनि सूर्यमतानि, किमुक्तं भवति ?—एरावतेन सूर्येण पूर्वं निष्क्रमणकाले मतीकृतानि प्रतिचरति, एतदेवाह— 'जाइं सूरिए परस्स चिण्णाइं पडियरइ एतत्पूर्ववद् व्याख्येयम्, अथाप्येकस्मिन् विभागे द्विनवतिरेकस्मिन् भागे एकनवतिरित्यत्र भावना प्रागिव भावनीया। तदेव भारत सूर्यो दक्षिणपूर्वे द्विनवतिसंख्यानि उत्तरपश्चिमे एकनवतिसंख्यानि स्वयं चीर्णानि उत्तरपूर्वे द्विनवतिसंख्यानि दक्षिणपश्चिमे एकनवतिसंख्यान्यैरावतसूर्यचीर्णानि प्रतिचरतीत्युपपादितम्। सम्प्रति एरावत सूर्य उत्तरपश्चिमे दिग्विभागे द्विनवतिसंख्यानि मण्डलानि दक्षिणपूर्वे एकनवतिसंख्यानि स्वयं चीर्णानि दक्षिणपश्चिमे द्विनवतिसंख्यान्युत्तरपूर्वे एकनवतिसंख्यानि भारतसूर्यचीर्णानि प्रतिचरतीत्येतत्प्रतिपादयति—' तत्थ अय एरवए सूरिए ' इत्यादि, एतच्च सकलमपि प्रागुक्तसूत्रव्याख्यानुसारेण स्वयं व्याख्येयम् । सू० प्र० १ पाहु० । द्वात्रिंशत्याधिकं सूर्या मनुष्यलोके जम्बूद्वीपगतमेरोः परित. पङ्क्त्या परिभ्रमन्ति । चं० प्र० १ पाहु० । ( द्वयोः सूर्ययोश्चरतोरन्तरव्याख्या ' अंतर ' शब्दे प्रथमभागे ६८ पृष्ठे द्रष्टव्या । )

कियन्तं द्वीपं समुद्रं वा सूर्योऽवगाहते ?, इति ततस्तद्विषय प्रश्नसूत्रमाह--

ता केवतियं दीवं समुद्दं वा ओगाहित्ता सूरिए चारं चरति, आहिता ति वदेज्जा ?, तत्थ खलु इमाओ पंच पडिवत्तीओ पण्णत्ताओ-एगे एवमहंसु-ता एगं जोयणसहस्सं एगं च तेत्तीसं जोयणसतं दीवं वा समुद्दं वा ओगाहित्ता सूरिए चारं चरति एगे एवमाहंसु १ । एगे पुण एवमाहंसु-ता एगं जोयणसहस्सं एगं चउतीसं जोयणसयं दीवं वा समुद्दं वा ओगाहित्ता सूरिए चारं चरति, एगे एवमाहंसु २ । एगे पुण एवमाहंसु—ता एगं जोयणसहस्सं एगं च पणतीसं जोयणसतं दीवं वा समुद्दं वा ओगाहित्ता सूरिए चारं चरति, एगे एवमाहंसु ३ । एगे पुण एवमाहंसु ता अवड्ढं दीवं वा समुद्दं वा ओगाहित्ता सूरिए चारं चरति, एगे एवमाहंसु ४ । एगे पुण एवमाहंसु-ता एगं जोयणसहस्सं एगं तेत्तीसं जोयणसतं दीवं वा समुद्दं वा ओगाहित्ता सूरिए चारं चरति ५ । तत्थ जे ते एवमाहंसु-ता एगं जोयणसहस्सं एगं तेत्तीसं जोयणसतं दीवं वा समुद्दं वा उग्गाहित्ता सूरिए चारं चरति, ते एवमाहंसु, जता णं सूरिए सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरति तया णं जंबुद्दीवं एगं जोयणसहस्सं एगं च तेत्तीसं जोयणसतं ओगाहित्ता सूरिए चारं चरति, तता णं उत्तमकट्ठपत्ते उक्कोसए अट्ठारसमुहुत्ते दिवसे भवति, जहण्णिया दुवालसमुहुत्ता राई भवई, ता जया णं सूरिए सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरइ तया णं लवणसमुद्दं एगं जोयणसहस्सं एगं च तेत्तीसं जोयणसयं ओगाहित्ता चारं चरइ, तया णं लवणसमुद्दं एगं जोयणसहस्सं एगं च तेत्तीसं जोयणसयं ओगाहित्ता चारं चरइ, तया णं उत्तमकट्ठपत्ता उक्कोसिया अट्ठारसमुहुत्ता राई भवति, जहण्णए दुवालसमुहुत्ते दिवसे भवइ. । एवं चोत्तीसं जोयणसतं । एवं पणतीसं जोयणसतं । ( पणतीसेऽवि एवं चेव भाणियव्वं, ) तत्थ जे ते एवमाहंसु ता अवड्ढं दीवं वा समुद्दं वा ओगाहित्ता सूरिए चारं चरइ, ते एवमाहंसु-जता णं सूरिए सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरति, तता णं अवड्ढं जंबुद्दीवं दीवं ओगाहित्ता चारं चरति, तता णं उत्तमकट्ठपत्ते

उक्कोसए अट्ठारसमुहुत्ते दिवसे भवति, जहमिया दुवालसमुहुत्ता राई भवति, एवं सव्वबाहिरए वि, णवरं अवड्ढं लवणसमुद्दं, तता णं राइंदियं तहेव, तत्थ जे ते एवमाहंसु–ता णो किंचि दीवं वा समुद्दं वा ओगाहित्ता सूरिए चारं चरति, ते एवमाहंसु–ता जता णं सूरिए सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरति तता णं णो किंचि दीवं वा समुद्दं वा ओगाहित्ता सूरिए चारं चरति तता णं उत्तमकट्ठपत्ते उक्कोसए अट्ठारसमुहुत्ते दिवसे भवति, तहेव पुव्वं सव्वबाहिरए मंडले, णवरं णो किंचि लवणसमुद्दं ओगाहित्ता चारं चरति, राइंदियं तहेव, एगे एवमाहंसु। (सू० १९)

'ता कवइयं दीवं समुद्दं वा ओगाहित्ता सूरिए चारं चरइ' इत्यादि, 'ता' इति पूर्ववत्, कियन्तं कियत्प्रमाणं द्वीपं समुद्रं वा अवगाह्य सूर्यश्चारं चरति ?, वदाख्यात इति वदेत्, एवं प्रश्नकरणादनन्तरं भगवान्निर्वचनमभिधातुकाम एतद्विषये परतीर्थिकप्रतिपत्तिमिथ्याभावोपदर्शनार्थं प्रथमतस्ता एव परतीर्थिकप्रतिपत्ती सामान्यत उपन्यस्यति–'तत्थ खलु' इत्यादि, तत्र सूर्यस्य चारं चरतो द्वीपसमुद्रावगाहनविषये खल्विमाः–वक्ष्यमाणस्वरूपाः पञ्च प्रतिपत्तयः–परमतरूपाः प्रज्ञप्ताः, तद्यथा–एके तीर्थान्तरीया एवमाहुः–ता इति तावच्छब्दस्तेषां तीर्थान्तरीयाणां प्रभूतवक्तव्यतोपक्रमे क्रमोपदर्शनार्थः एकं योजनसहस्रमेकं च त्रयस्त्रिंशदधिकं योजनशतं द्वीपं समुद्रं वा अवगाह्य सूर्यश्चारं चरति, किमुक्तं भवति ?–यदा सर्वाभ्यन्तरं मण्डलमुपसंक्रम्य चारं चरति तदा एकं योजनसहस्रमेकं च त्रयस्त्रिंशदधिकं योजनशतं जम्बूद्वीपमवगाह्य चारं चरति तदा च परमप्रकर्षप्राप्तोऽष्टादशमुहूर्तो दिवसो भवति सर्वजघन्या च द्वादशमुहूर्त्ता रात्रिः। यदा तु सर्वबाह्यं मण्डलमुपसंक्रम्य चारं चरितुमारभते तदा लवणसमुद्रमेकं योजनसहस्रमेकं च त्रयस्त्रिंशदधिकं योजनशतमवगाह्य सूर्यश्चारं चरति तदा चोत्तमकाष्ठाप्राप्ता अष्टादशमुहूर्तप्रमाणा रात्रिर्भवति सर्वजघन्यो द्वादशमुहूर्तप्रमाणो दिवसः, अत्रैवोपसंहारमाह–'एगे एवमाहंसु' एके पुनर्द्वितीया एवमाहुः–'ता' इति पूर्ववत्, एकं योजनसहस्रमेकं च चतुस्त्रिंशदधिकं योजनशतं द्वीपं समुद्रं वा अवगाह्य सूर्यश्चारं चरति, भावना प्राग्वत्, अत्रैवोपसंहारमाह–'एगे एवमाहंसु' एके पुनस्तृतीया एवमाहुः–एकं योजनसहस्रमेकं च पञ्चत्रिंशदधिकं योजनशतमवगाह्य सूर्यश्चारं चरति, अत्रापि भावना प्रागिव, अत्रैवोपसंहारमाह–एगे 'एवमाहंसु' एके पुनश्चतुर्थास्तीर्थान्तरीया एवमाहुः–'अवड्ढं' ति–अपगतं सदप्यवगाहाभावतो न विवक्षितमर्द्धं यस्य तमपार्द्धमर्द्धहीनम्, अर्द्धमात्रमित्यर्थः, द्वीपं समुद्रं वा अवगाह्य सूर्यश्चारं चरति, इयमत्र भावना–यदा सर्वाभ्यन्तरं मण्डलमुपसंक्रम्य सूर्यश्चारं चरति तदा अर्द्धं जम्बूद्वीपमवगाहते, तदा च दिवसः परमप्रकर्षप्राप्तोऽष्टादशमुहूर्त्तप्रमाणो भवति सर्वजघन्या च द्वादशमुहूर्त्तप्रमाणा रात्रिः यदा पुनः सर्वबाह्यं मण्डलमुपसंक्रम्य सूर्यश्चारं चरति तदा अर्द्धम् अपरिपूर्णं लवणसमुद्रमवगाहते तदा च सर्वोत्कर्षकाष्ठाप्राप्ता अष्टादशमुहूर्त्तप्रमाणा रात्रिः सर्वजघन्यो द्वादशमुहूर्त्तो दिवसः। अत्रैवोपसंहारमाह–'एगे एवमाहंसु' एके पुनः पञ्चमास्तीर्थान्तरीया एवमाहुः–न किंचिद् द्वीपं समुद्रं वा अवगाह्य सूर्यश्चारं चरति, अत्रायं भावार्थः–यदापि सर्वाभ्यन्तरं मण्डलमुपसंक्रम्य सूर्यश्चारं चरति तदापि न किमपि जम्बूद्वीपमवगाहते, किं पुनः शेषमण्डलपरिभ्रमणकाले, यदापि सर्वबाह्यमण्डलमुपसंक्रम्य सूर्यश्चारं चरति तदापि न लवणसमुद्रं किमप्यवगाहते, किं पुनः शेषमण्डलपरिभ्रमणकाले किन्तु द्वीपसमुद्रयोरपान्तराल एव सकलेष्वपि मण्डलेषु चारं चरति अत्रोपसंहारमाह–'एगे एवमाहंसु' तदेवमुक्ता उद्देशतः पञ्चापि प्रतिपत्तयः। सम्प्रत्येता एव स्पष्टं भावयति–'तत्थ जे ते एवमाहंसु' इत्यादि प्रायः समस्तमपीदं व्याख्यातार्थं सुगमं च, नवरं 'चोत्तीसे वि' त्ति–एवं त्रयस्त्रिंशदधिकयोजनशतविषयप्रतिपत्तिवत् चतुस्त्रिंशे शते या प्रतिपत्तिस्तस्यामालापको वक्तव्यः, स चैवम्–तत्थ जे ते एवमाहंसु एगं जोयणसहस्सं एगं च चउत्तीसं जोयणसयं दीवं समुद्दं वा ओगाहित्ता चारं चरइ ते एवमाहंसु–जया णं सूरिए सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरति तया णं जंबुद्दीवं दीवं एगं जोयणसहस्सं एगं च चोत्तीसं जोयणसयं ओगाहित्ता चारं चरइ, तया णं उत्तमकट्ठपत्ते उक्कोसए अट्ठारसमुहुत्ते दिवसे भवइ, जहण्णिया दुवालसमुहुत्ता राई भवइ। ता जया णं सूरिए सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरइ तया णं लवणसमुद्दं एगं जोयणसहस्सं एगं च चोत्तीसं जोयणसयं ओगाहित्ता चारं चरति तया णं उत्तमकट्ठपत्ता उक्कोसिया अट्ठारसमुहुत्ता राई भवति, जहण्णए दुवालसमुहुत्ते दिवसे भवइ पणतीसे वि एवं चेव भाणियव्वं' एवमुक्तेन प्रकारेण पञ्चत्रिंशदधिकयोजनशतविषयायामपि प्रतिपत्तौ सूत्रं भणितव्यं, तच्च सुगमत्वात्स्वयं भावनीयम्। एवं 'सव्वबाहिरे वि' त्ति–एवं सर्वाभ्यन्तरमण्डल इव सर्वबाह्येऽपि मण्डले आलापको वक्तव्यः, नवरं जम्बूद्वीपस्थाने 'अवड्ढलवणसमुद्दं ओगाहित्ता' इति वक्तव्यम्, तच्चैवम्–'जया णं सूरिए सव्वबाहिरं मंडलमुवसंकमित्ता चारं चरइ तया णं अवड्ढं लवणसमुद्दं ओगाहित्ता चारं चरति तया णं राइंदियप्पमाणं भवति' त्ति तया णं मिति, वचनपूर्वकं रात्रिंदिवपरिमाणं जम्बूद्वीपापेक्षया विपरीतं वक्तव्यम्, यज्जम्बूद्वीपावगाहे दिवसप्रमाणमुक्तं तद्रात्रेर्द्रष्टव्यं, यद्रात्रेस्तद्दिवसस्य, तच्चैवम्–'तया णं उत्तमकट्ठपत्ता उक्कोसिया अट्ठारसमुहुत्ता राई भवइ जहन्ने दुवालसमुहुत्ते दिवसे हवइ' एवमुत्तरसूत्रेऽप्यक्षरयोजना भावनीया।

तदेवं परतीर्थिकप्रतिपत्तीरुपदर्श्य सम्प्रत्येतासां मिथ्याभावोपदर्शनार्थं स्वमतमुपदर्शयति–

वयं पुण एवं वदामो–ता जया णं सूरिए सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरति, तता णं जंबुद्दीवं दीवं असियं जोयणसतं ओगाहित्ता चारं चरति तदा णं उत्तमकट्ठपत्ते उक्कोसए अट्ठारसमुहुत्ते दिवसे भवति, जहण्णिया

दुवालसमुहुत्ता राई भवइ, एवं सव्ववाहिरेऽवि , णवरं लवणसमुदं तिण्णि तीसे जोयणसते ओगाहित्ता चारं चरति तया णं उत्तमकट्ठपत्ता उक्कोसिया अट्ठारसमुहुत्ता राई भवइ, जहएणए दुवालसमुहुत्ते दिवसे भवति, गाथाओ भाणितव्वाओ । ( सू० १७ )

'वय पुण'इत्यादि,वयं पुनरुत्पन्नकेवलज्ञानदर्शना एवं वक्ष्यमाणप्रकारेण वदामस्तमेव प्रकारमाह--यदा सूर्य सर्वाभ्यन्तरं मण्डलमुपसंक्रम्य चारं चरति तदा जम्बूद्वीपमशीत्यधिकं योजनशतमवगाह्य चारं चरति तदा चोत्तमकाष्ठाप्राप्त उत्कर्षकोऽष्टादशमुहूर्तो दिवसो भवति सर्वजघन्या द्वादशमुहूर्त्ता रात्रि , एवं 'सव्ववाहिरे वि' त्ति--एवं सर्वाभ्यन्तरमण्डल इव सर्ववाह्येऽपि मण्डले आलापको वक्तव्य. । स चैवम्-'जया ण सव्ववाहिर मंडलं उवसंकमित्ता चारं चरइ ' इति-नवरमिति सर्ववाह्यमण्डलगतादालापकादस्यालापकस्य विशेषोपदर्शनार्थं ,तमेव विशेष माह--'तया ण लवणसमुद्दं तिरिण तीसे जोयणसए ओगाहित्ता चारं चरइ तया णं उत्तमकट्ठपत्ता उक्कोसिया अट्ठारसमुहुत्ता राई भवइ, जहन्नए दुवालसमुहुत्ते दिवसे भवइ' इति, इदं च सुगमं, क्वचित्तु 'सव्ववाहिरे वि' इत्यतिदेशमन्तरेण सकलमपि सूत्र साक्षाल्लिखितं दृश्यते ' गाहाओ भाणियव्वाओ' अत्रापि काश्चन प्रसिद्धा विवक्षितार्थसंग्राहिका गाथा. सन्ति ता भणितव्याश्च,ताश्च सम्प्रति व्यवच्छिन्ना इति न कथयितुं व्याख्यातु वा शक्यन्ते यथासम्प्रदायं वाच्या इति । सू० प्र०१ पाहु० ।('सूरमंडल'शब्देऽस्मिन्नेव भागे पञ्चदशभिर्द्वारैः सूर्यप्ररूपणा वक्ष्यते ।) ('उउ'शब्दे द्वितीयभागे ६७६ पृष्ठे सूर्यतत्त्व ।) चतुर्थे देवलोकस्थे विमानभेदे,नपुं०।स० ५ सम० । औ० । स्वनामख्याते द्वीपे, समुद्रे च । सू० प्र० २० पाहु० । ( सूर्यस्यावृत्तय युगे कति भवन्तीति 'आउट्टि' शब्दे द्वितीयभागे ३० पृष्ठे गतम् । )

सूरग-देशी-प्रदीपे, दे० ना० ८ वर्ग ४२ गाथा ।

सूरकत-सूर्यकान्त-पुं० । सूर्यखरकिरणसम्पर्कादग्निकारमोचके मणिभेदे, प्रज्ञा० १ पद । उत्त० । सूत्र० । भ० । चतुर्थदेवलोकस्थे विमानभेदे, नपुं० । स० ५ सम० ।

सूरकूड-सूर्यकूट-न० । चतुर्थदेवलोकस्थे विमानभेदे, स० ५ सम० ।

सूरखेत्त-सूर्यक्षेत्र-न० । उदयास्तरूपे नभःखण्डे, ध० ३ अधि० ।

सूरचरिय-सूर्यचरित-न० । रविचरिते , सूर्यचरितं त्विदं सूर्यमण्डलपरिमाणराशिपरिभोगोद्योतावकाशराहूपरागादिकम् । सूत्र० २ श्रु० २ अ० । न० ।

सूरण-शूरण-पुं० । अर्शोघ्नकन्दे, प्रव० ४ द्वार । दे० ना० । औ० । आचा० । उत्त० । जी० । प्रज्ञा० । भ० । स० । स्वनामख्याते एकचत्वारिंशत्तितमे ऋषभदेवस्य पुत्रे, कल्प० १ अ० ७ क्षण । पा० ।

सूरदह-सूर्यहद-पुं० । जम्बूद्वीपे देवकुले स्वनामख्याते महाह्रदे, स्था० ५ ठा० ३ उ० ।

सूरदीव-सूर्यद्वीप-पुं० । जम्बूद्वीपगतसूर्यद्वीपके लवणसमुद्रगते द्वीपे, जी० ३ प्रति० ४ अधि० । ( अत्रत्या व्याख्या ' चंददीव ' शब्दे तृतीयभागे १०७२ पृष्ठे गता । )

सूरदेव-सूरदेव-पुं० । जम्बूद्वीपे आगामिन्यामुत्सर्पिण्यां भविष्यति द्वितीये तीर्थकरे , प्रव० ७ द्वार । ती० । स० ।

सूरद्धअ-देशी-दिने , दे० ना० ८ वर्ग ४२ गाथा ।

सूरपएणत्ति-सूर्यप्रज्ञप्ति-स्त्री० । सूर्यचर्याप्रज्ञापनं यस्या ग्रन्थपद्धतौ सा सूर्यप्रज्ञप्ति । नं० । पञ्चम्यागमस्योपाङ्गे , स्था० ४ ठा० २ उ० ।

अत्रत्याः प्राभृतार्थाधिकाराः—

सूर्यप्रज्ञप्तिमहं, गुरूपदेशानुसारतः किञ्चित् ।
विवृणोमि यथाशक्ति, स्पष्टं स्वपरोपकाराय ॥ ४ ॥
अस्या निर्युक्तिरभूत् , पूर्वं श्रीभद्रबाहुसूरिकृता ।
कलिदोषात् साऽनेशद् , व्याचक्षे केवलं सूत्रम् ॥ ५ ॥

तत्र यस्या नगर्या यस्मिन्नुद्याने यथा भगवान् गौतमस्वामी भगवन्तस्त्रिलोकीपते श्रीमन्महावीरस्यान्ते सूर्यवक्तव्यतां पृष्टवान् यथा च तस्मै भगवान् व्यागृणाति स्म तथोपदिदर्शयिषु. प्रथमतो नगर्युद्यानाभिधानपुरस्सरं सकलवक्तव्यतोपक्षेपं वक्तुकाम इदमाह—

ते णं काले णं ते णं समए णं मिथिला नाम नयरी होत्था रिद्धत्थिमियसमिद्धा पमुइतजणजाणवया ०जाव पासादीया० एवं(ह्व)(४,)तीसे णं मिहिलाए नयरीए बहिया उत्तरपुरच्छिमे दिसिभाए एत्थ णं माणिभद्दे णामं चेइए होत्था वएणओ । तीसे णं मिहिलाए जितसत्तू राया, धारिणी देवी, वएणओ, ते णं काले णं ते णं समए णं तंमि माणिभद्दे चेइए सामी समोसढे, परिसा निग्गता, धम्मो कहितो, परिसा पडिगया ०जाव राजा जामेव दिसिं पादुब्भूए तामेव दिसिं पडिगते । (सू० १)

'ते ण काले ण' मित्यादि, ' ते ' इति प्राकृतशैलीवशात् तस्मिन्निति द्रष्टव्यम् , अस्यायमर्थ.—यदा भगवान् विहरति स्म तस्मिन् णमिति वाक्यालङ्कारे दृष्टश्चान्यत्रापि णंशब्दो वाक्यालङ्कारार्थे यथा 'इमा णं पुढवी' इत्यादाविति, काले अधिकृतावसर्पिणीचतुर्थभागरूपे , अत्रापि णंशब्दो वाक्यालङ्कारार्थे , ' ते ण समए णं ' ति—समयोऽवसरवाची, तथा च लोके वक्तारो—नाद्याप्येतस्य वक्तव्यस्य समयो वर्त्तते,किमुक्तं भवति?-नाद्याप्येतस्य वक्तव्यस्यावसरो वर्त्तत इति, तस्मिन् समये भगवान् प्रस्तुतां सूर्यवक्तव्यतामचकथत् , तस्मिन् समये मिथिला नाम नगरी अभवत् , नन्विदानीमपि सा नगरी वर्त्तते तत कथमुक्तमभवदिति ?, उच्यते—वक्ष्यमाणवर्णकग्रन्थोक्तविभूतिसमन्विता तदैवाभवत् न तु ग्रन्थविधानकाले, एतदपि कथमवसेयमिति चेत् ?, उच्यते—अयं कालोऽवसर्पिणी, अवसर्पिण्यां च प्रतिक्षण शुभा भावा हानिमुपगच्छन्तीति, एतच्च सुप्रतीत जिनप्रवचनवेदिनाम् , अतोऽभवदित्युच्यमानं न विरोधभाक् । सम्प्रति अस्या नगर्या वर्णकमाह--'रिद्धत्थिमियस-

१-अत्र ' ह्व ' शब्द. समाप्त्यर्थे । निशीथचूर्णिग्रन्थे चतुर्णां पूर्वोक्तानां सकेत इति बहुषु स्थलेषु लभ्यते ।

मिद्धा पमुइयजणजाणवया ०जाव पासाईया० 'एक' (व्ह)(४) इति, ऋद्धा-भवनैः पौरजनैश्चातीव वृद्धिमुपगता ऋधु वृद्धा-विति वचनात् स्तिमिता-स्वचक्रपरचक्रतस्करडमरादिसमुत्थभयकल्लोलमालाविवर्जिता समृद्धा-धनधान्यादिविभूतियुक्ता, तत पदत्रयस्यापि कर्मधारय , तथा 'पमुइयजणजाणवय' त्ति—प्रमुदिता -प्रमोदवन्तः प्रमोदहेतुवस्तूनां तत्र सद्भावाज्जना—नगरीवास्तव्या लोका जानपदा—जनपदभवास्तत्र प्रयोजनवशादायाता सन्तो यत्र सा प्रमुदितजनजानपदा , यावच्छब्दनौपपातिकग्रन्थप्रतिपादितः समस्तोऽपि वर्णकः 'आइन्नजणसमूहा मणुस्सा ' इत्यादिको द्रष्टव्य ।(सू० १) स च ग्रन्थगौरवभयान्न लिख्यते , केवलं तत एवौपपातिकादवसेय , कियान् द्रष्टव्य इत्याह—'पासाईया 'व्ह इति अत्र 'व्ह' शब्दोपादानात् प्रासादीया इत्यनेन पदेन सह पदचतुष्टयस्य सूचा कृता , तानि च पदान्यमूनि-प्रासादीया दर्शनीया अभिरूपा प्रतिरूपा , तत्र प्रासादेषु भवा प्रासादीया; प्रासादबहुला इत्यर्थः , अत एव दर्शनीया-द्रष्टुं योग्या, प्रासादानामतिरमणीयत्वात् , तथा अभिमुखमर्तीवोत्करूप रूपम्-आकारो यस्याः सा अभिरूपा प्रतिविशिष्टम्-असाधारणं रूपम्-आकारो यस्या सा प्रतिरूपा, 'तीसे णं मिहिलाए णयरीए बहिया उत्तरपुरच्छिमे दिसीभाए एत्थ णं माणिभद्दे नाम चेइए होत्था वण्णओ ' इति तस्या मिथिलानगर्या बहिर्य औत्तरपौरस्त्य.—उत्तरपूर्वरूपो दिग्विभाग ईशानकोण इत्यर्थः , एकारो मागधभाषानुरोधत प्रथमैकवचनप्रभव , यथा ' कयरे आगच्छइ दित्तरूवे' ( उत्त० १२-६ ) इत्यादौ , ' अत्र 'अस्मिन् औत्तरपौरस्त्ये दिग्विभागे माणिभद्रमिति नाम चैत्यमभवत् , चितेर्लेप्यादिचयनस्य भाव कर्म वा चैत्यं , तच्च सज्ञाशब्दत्वाद्देवताप्रतिबिम्बे प्रसिद्धं . ततस्तदाश्रयभूतं यद्देवताया गृह तदप्युपचाराच्चैत्य , तच्चेह व्यन्तरायतनं द्रष्टव्य , नतु भगवतामर्हतामायतनमिति । ' वण्णओ ' त्ति तस्यापि चैत्यस्य वर्णको वक्तव्य , स चौपपातिकग्रन्थादवसेय (सू० २) । ' तीसे णं मिहिलाए ' इत्यादि , तस्या च मिथिलायां नगर्यां जितशत्रुर्नाम राजा , तस्य देवी—समस्तान्तःपुरप्रधाना भार्या सकलगुणधारणाद् धारिणीनाम्नी देवी , 'वण्णओ' त्ति तस्य राज्ञः तस्याश्च देव्या औपपातिकग्रन्थोक्तो वर्णकोऽभिधातव्य , (सू० ७) ' ते णं काले णं ते णं समए णं तंमि माणिभद्दे चेइए सामी समोसढे , परिसा णिग्गया, धम्मो कहिओ, परिसा पडिगया' तस्मिन् काले तस्मिन् समये तस्मिन् माणिभद्रे चैत्ये 'सामी समोसढे ' त्ति स्वामी जगद्गुरुर्भगवान् श्रीमहावीरोऽर्हन् सर्वज्ञ सर्वदर्शी सप्त—हस्तप्रमाणशरीरोच्छ्रय समचतुरस्रसंस्थानो वज्रर्षभनाराचसंहनन. कज्जलप्रतिमकालिमोपेतस्निग्धकुञ्चितप्रदक्षिणावर्तमूर्धज उत्तप्ततपनीयाभिरामकेशान्तकेशभूमिरातपत्राकारोत्तमाङ्गसन्निवेश परिपूर्णशशाङ्कमण्डलादप्यधिकतरवदनशोभ पद्मोत्पलसुरभिगन्धनि श्वासो वदनत्रिभागप्रमाणकम्बूपमचारुकन्धर सिंहशार्दूलवत्परिपूर्णविपुलस्कन्धप्रदेशो महापुरकपाटपृथुलवक्ष स्थलाभोगो यथास्थितलक्षणोपेतः श्रीवृक्षपरिघोपमप्रलम्बबाहुयुगलो रविशशिचक्रसौवस्तिकादिप्रशस्तलक्षणोपेतपाणितल सुजातपार्श्वो झषोदर सूर्यकरस्पर्शमजातविकोशपद्मोपमनाभिमण्डल सिंहवत्सवर्त्तितकटीप्रदेशो निगूढजानु कुरुविन्दवृत्तजङ्घायुगल सुप्रतिष्ठितकूर्मचारुचरणतलप्रदेश. अनाश्रवो निर्ममः छिन्नग्रोन्था निरुपलेपोऽपगतप्रेमरागद्वेषश्चतुस्त्रिंशदतिशयोपेतो देवोपनीतेषु नवसु कनककमलेषु पादन्यास कुर्वन्नाकाशगतेन धर्मचक्रेण आकाशगतेन छत्रेण आकाशगताभ्यां चामराभ्यामाकाशगतेनातिस्वच्छस्फटिकविशेषमयेन सपादपीठेन सिंहासनेन पुरतो देवै प्रकृष्यमाणेन प्रकृष्यमाणेन धर्मध्वजेन चतुर्दशभिः श्रमणसहस्रै पट्त्रिंशत्सख्यैरार्यिकासहस्रै परिवृतो यथाम्वकल्प सुखेन विहरन् यथारूपमवग्रहं गृहीत्वा सयमेन तपसा चाऽऽत्मानं भावयन् समवसृत , समवसरणवर्णन च भगवत औपपातिकग्रन्थादवसेयम् । ( सू० १० यावत् ३३ ) ' परिसा निग्गय' त्ति मिथिलाया नगर्या वास्तव्यो लोक. समस्तोऽपि भगवन्तमागत श्रुत्वा भगवद्वन्दनार्थं स्वस्मादाश्रयाद्विनिर्गत इत्यर्थ , तन्निर्गमश्चैवम्--' तए णं मिहिलाए नयरीए सिंघाडगतियचउक्कचच्चरचउम्मुहमहापहेसु बहुजणो अन्नमन्नस्स एवमाइक्खइ , एव भासेइ , एव पन्नवेइ , एव परूवेइ--एव खलु देवाणुप्पिया ! समणे भगव महावीरे आइगरे ०जाव सव्वन्नू सव्वदरिसी आगासगएण छत्तेणं० जाव सुहं सुहणं विहरमाणे इह आगए इह समागए इह समोसढे इहेव मिहिलाए नयरीए बहिया माणिभद्दे चेइए अहापडिरूव उग्गह ओगिण्हित्ता अरिहा जिण केवली समणगणपरिवुडे संजमेण तवसा अप्पाण भावेमाणे विहरइ, त महाफल खलु देवाणुप्पिया ! तहारूवाण अरहताणं भगवताणं नामगोयस्स वि सवणयाए किमग ! पुण अभिगमणवंदणनमंसणपडिपुच्छणपज्जुवासणयाए ?, तं सेयं खलु एगस्स वि आयरियस्स धम्मियस्स सुवयणस्स सवणयाए, किमग ! पुण विउलस्स अट्ठस्स गहणयाए ?, त गच्छामो ण देवाणुप्पिया ! समणं भगव महावीर वंदामो नमसामो सक्कारेमो सम्माणेमो कल्लाण मगल देवयं चेइयं पज्जुवासामो, एय णो इहभवे परभवे य हियाए सुहाए खमाए निस्सेसाए आणुगामियत्ताए भविस्सइ, तए णं मिहिलाए नयरीए बहवे उग्गा भोगा' इत्याद्यौपपातिकग्रन्थोक्त (सू० २७) सर्वमवसेय यावत्समस्ताऽपि राजप्रभृतिका पर्षत् पर्युपासीना तिष्ठति । 'धम्मो कहिओ' त्ति तस्याः पर्षद पुरतो निःशेषजनभाषानुयायिन्या अर्द्धमागधभाषया धर्म उपदिष्ट , स चैवम्—'अत्थि लोए अत्थि जीवा अत्थि अजीवा ' इत्यादि, तथा—"जह जीवा बज्झंति, मुच्चंति जह य संकिलिस्संति । जह दुक्खाणं अत, करिंति केई अपडिबद्धा ॥ १ ॥ अट्टविअट्टियऽचित्ता, जह जीवा सागरं भवमुविंति । जह य परिहीणकम्मा , सिद्धा सिद्धालयमुर्विति ॥ २ ॥ ' तहा आइक्खइ ' त्ति 'जाव राजा जामेव दिस पाउब्भूए तामेव दिसं पडिगए' इति, अत्र यावच्छब्दादिदमौपपातिकग्रन्थोक्त द्रष्टव्यम्— तएणं सा महइमहालिया परिसा समणस्स भगवओ महावीरस्स अंतिए धम्मं सोच्चा निसम्म हट्ठतुट्ठा समणं भगव म-

हावीरं तिक्खुत्तो आयाहिणपयाहिणं करेइ तिक्खु० करित्ता वंदइ नमंसइ वंदित्ता नमंसित्ता एवं वयासी—सुयक्खाए णं भंते ! निग्गंथे पावयणे, नत्थि य केइ अन्ने समणे वा माहणे वा एरिसं धम्ममाइक्खित्तए, एवं वदित्ता जामेव दिसं पाउब्भूया तामेव दिसं पडिगया। तए णं से जियसत्तू राया समणस्स भगवओ महावीरस्स अंतिए धम्मं सुच्चा निसम्म हट्ठतुट्ठ० जाव हयहियए समणं भगवं महावीरं वंदइ नमंसइ वंदित्ता नमंसित्ता पसिणाइं पुच्छइ पसि० पुच्छित्ता अट्ठाइं परियादेइ परियाइत्ता उट्ठाए उट्ठेइ, उट्ठाए उट्ठित्ता समणं भगवं महावीरं वंदइ नमंसइ सं० वंदित्ता नमंसित्ता एवं वयासी-सुयक्खाए णं भंते ! निग्गंथे पावयणे ०जाव एरिसं धम्ममाइक्खित्तए, एवं वइत्ता हत्थिं दुरूहइ दुरूहित्ता समणस्स भगवओ महावीरस्स अंतियाओ माणिभद्दाओ चेइयाओ पडिनिक्खमइ पडिनिक्खमित्ता जामेव दिसं पाउब्भूए तामेव दिसं पडिगए।' (सू० ३५-३६-३७) इति, इदं च सकलमपि सुगमं नवरं यामेव दिशमवलम्ब्य, किमुक्तं भवति ?—यतो दिशः सकाशात् प्रादुर्भूतः—समवसरणे समागतस्तामेव दिशं प्रतिगतः।

ते णं काले णं ते णं समए णं समणस्स भगवतो महावीरस्स जेट्ठे अंतेवासी इंदभूती णामे (मं) अणगारे गोतमे गोत्तेणं सत्तुस्सेहे समचउरंससंठाणसंठिए वज्जरिसहनारायसंघयणे ० जाव एवं वयासी-। ( सू० २ )

'ते णं कालेणं ते णं समए णं समणस्स भगवतो महावीरस्स जेट्ठे अंतेवासी इंदभूई नामे अणगारे गोयमे गोत्तेणं सत्तुस्सेहे समचउरंससंठाणसंठिए वज्जरिसहनारायसंघयणे ० जाव एवं वयासी' इति—तस्मिन् काले तस्मिन् समये, णंशब्दो वाक्यालङ्कारार्थः, श्रमणस्य भगवतो महावीरस्य ज्येष्ठ इति—प्रथमः, अन्तेवासी-शिष्यः, अनेन पदद्वयेन तस्य सकलसंघाधिपतित्वमावेदयति, इन्द्रभूतिरिति मातापितृकृतनामधेयः, 'नामं' ति प्राकृतत्वात् विभक्तिपरिणामेन नाम्नेति द्रष्टव्यम् अन्तेवासी च किल विवक्षया श्रावकोऽपि स्यात् अतस्तदाशङ्काव्यवच्छेदार्थमाह-अनगारः न विद्यते अगारं-गृहमस्येत्यनगारः, अयं च विगीतगोत्रोऽपि स्यादत आह-गौतमो गोत्रेण गौतमाह्वयगोत्रसमन्वित इत्यर्थः, अयं च तत्कालोचितदेहपरिमाणापेक्षया न्यूनाधिकदेहोऽपि स्यादत आह—सप्तोत्सेधः-सप्तहस्तप्रमाणशरीरोच्छ्रायः, अयं चेत्थंभूतो लक्षणहीनोऽपि सम्भाव्येत अतस्तदाशङ्कापनोदार्थमाह-' समचतुरस्रसंस्थानसंस्थितः ' समाः—शरीरलक्षणशास्त्रोक्तप्रमाणाविसंवादिन्यश्चतस्रोऽस्रयो यस्य तत्समचतुरस्रम् अस्रयस्त्विह चतुर्दिग्विभागोपलक्षिताः शरीरावयवा द्रष्टव्याः, अन्ये त्वाहुः—समाः—अन्यूनाधिकाश्चतस्रोऽप्यस्रयो यत्र तत्समचतुरस्रम्, अस्रयश्च पर्यङ्कासनोपविष्टस्य जानुनोरन्तरम् १, आसनस्य ललाटोपरिभागस्य चान्तरम् २ दक्षिणस्कन्धस्य वामजानुनश्चान्तरम् ३, वामस्कन्धस्य दक्षिणजानुनश्चान्तरं ४ मिति, अपरे त्वाहुः-विस्तारोत्सेधयोः समत्वात्समचतुरस्रम् तच्च तत्संस्थानं च समचतुरस्रसंस्थानम्—आकारस्तेन संस्थितो-व्यवस्थितो यः स तथा अयं च हीनसंहननोऽपि केनचित्सम्भाव्येत तत आह—' वज्जरिसहनारायसंघयणे ' नाराचम्-उभयतो मर्कटबन्धः ऋषभः-तदुपरिवेष्टनपट्टः कीलिका अस्थित्रयस्यापि भेदकमस्थि एवंरूपं संहननं यस्य स तथा, ०जाव एवं वयासी' इति, यावच्छब्दोपात्तादिदमनुक्तमप्यवसेयम्-' कणगपुलगनिघसपम्हगोरे उग्गतवे दित्ततवे महातवे उराले घोरे घोरगुणे घोरतवस्सी घोरबंभचेरवासी उच्छूढसरीरे संखित्तविउलतेउलेस्से चउद्दसपुव्वी चउणाणोवगए सव्वक्खरसंनिवाई समणस्स भगवओ महावीरस्स अदूरसामंते उड्ढंजाणू अहोसिरे झाणकोट्ठोवगए संजमेणं तवसा अप्पाणं भावेमाणे विहरइ। तए णं से भयवं गोयमे जायसड्ढे जायसंसए जायकोउहल्ले उप्पन्नसड्ढे उप्पन्नसंसए उप्पन्नकोउहल्ले समुप्पन्नसड्ढे समुप्पन्नसंसए समुप्पन्नकोउहल्ले उट्ठाए उट्ठेइ उट्ठाए उट्ठित्ता जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ उवागच्छित्ता समणं भगवं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेइ आयाहिणपयाहिणं करित्ता वंदइ णमंसइ वंदित्ता नमंसित्ता णच्चासन्ने णाइदूरे सुस्सूसमाणे नमंसमाणे अभिमुहे विणएणं पंजलिउडे पज्जुवासेमाणे एवं वयासी'-अस्यायमर्थः -कनकस्य—सुवर्णस्य यः पुलको—लवस्तस्य यो निकषः-(कष) पट्टके रेखारूपः, तथा पद्मग्रहणेन पद्मकेसराण्युच्यन्ते, अवयवे समुदायोपचारात्, यथा पद्मकेसराण्युच्यन्ते, अवयवो देवदत्तः, तथा च देवदत्तस्य हस्ताग्रे स्पृष्टे लोको वदति—देवदत्तो मया स्पृष्ट इति, ततः कनकपु ( कस्य ) पुलकनिकषवत्पद्मकेसरवच्च यो गौरः स कनकपुलकनिकषपद्मगौरः। अथवा—कनकस्य यः पुलको—द्रुतत्वे सति बिन्दुस्तस्य निकषो—वर्णः तत्सदृशः कनकपुलकनिकषः, तथा पद्मवत्—पद्मकेसर इव यो गौरः स पद्मगौरः, ततः पदद्वयस्य कर्मधारयः समासः। अयं च विशिष्टचरणरहितोऽपि शङ्क्येत अत आह—' उग्गतवे ' उग्रम्—अप्रधृष्यं तपः—अनशनादि यस्य स तथा, यदन्येन प्राकृतेन पुंसा न शक्यते चिन्तयितुमपि मनसा तद्विधेन तपसा युक्त इत्यर्थः, तथा दीप्तं—जाज्वल्यमानदहन इव कर्मवनगहनदहनसमर्थतया ज्वलितं तपो—धर्मध्यानादि यस्य स तथा, ' तत्ततवे ' त्ति-तप्तं तपो येन स तप्ततपाः एवं हि तेन तपस्तप्तं येन सर्वाण्यप्यशुभानि कर्माणि भस्मसात्कृतानीति, महत्—प्रशस्तमाशंसादोषरहितत्वात्तपो यस्य स महातपाः, तथा ' उराले ' त्ति-उदारः—प्रधानः, अथवा—ओरालो—भीष्मः, उग्रादिविशेषणतः पार्श्वस्थानामल्पसत्त्वानां भयानक इत्यर्थः, तथा घोरो—निर्घृणः परीषहेन्द्रियादिरिपुगणविनाशनमधिकृत्य निर्दय इत्यर्थः, तथा घोरा—अन्यैर्दुरनुचरा गुणा—ज्ञानादयो यस्य स तथा, तथा घोरैस्तपोभिस्तपस्वी, ' घोरबंभचेरवासि ' त्ति घोरं—दारुणं अल्पसत्त्वैर्दुरनुचरत्वात् ब्रह्मचर्यं यत्तत्र वस्तुं शीलं यस्य स तथा, उच्छूढम्-उज्झितमिव उज्झितं संस्कारपरित्यागात् शरीरं येन स उच्छूढशरीरः, ' संखित्तविउलतेउलेस्से ' त्ति-संक्षिप्ता—शरीरान्त-

गेतत्वेन ह्रस्वतां गता विपुला—विस्तीर्णा अनेकयोजनप्रमाणक्षेत्राश्रितवस्तुदहनसमर्थत्वात्तेजोलेश्या-विशिष्टतपोजन्यलब्धिविशेषप्रभवा तेजोज्वाला यस्य स तथा, 'चउद्दसपुव्वि' त्ति-चतुर्दश पूर्वाणि विद्यन्ते यस्य तेनैव रचितत्वात्, असौ चतुर्दशपूर्वी, अनेन तस्य श्रुतकेवलितामाह, स चावधिज्ञानादिविकलोऽपि स्यादत आह-' चउनाणोवगए ' मतिश्रुतावधिमनःपर्यायज्ञानरूपज्ञानचतुष्टयसमन्वित इत्यर्थ, उक्तविशेषणद्वययुक्तोऽपि कश्चिन्न समस्तश्रुतविषयव्यापिज्ञानो भवति, चतुर्दशपूर्वविदामपि षट्स्थानपतितत्वेन श्रवणादत आह—' सव्वक्खरसन्निवाती ' अक्षराणां सन्निपाताः—संयोगाः सर्वे च ते अक्षरसन्निपाताश्च सर्वाक्षरसन्निपातास्ते यस्य ज्ञेयानि स तथा, किमुक्तं भवति ?—या काचित् जगति पदानुपूर्वी वाक्यानुपूर्वी वा सम्भवति ता सर्वा अपि जानातीति, एवं गुणविशिष्टो भगवान् विनयराशिरिव साक्षादिति कृत्वा शिष्याचारत्वाच्च श्रमणस्य भगवतो महावीरस्स अदूरसामन्ते विहरतीति योग । तत्र दूर विप्रकृष्ट सामन्तं—सन्निकृष्ट तत्प्रतिषेधाददूरसामन्तम्, तत्र नातिदूरे नातिनिकटे इत्यर्थः, किंविशिष्ट सन् तत्र विहरतीत्यत आह-' उड्ढजाणु ' त्ति-ऊर्ध्वे जानुनी यस्यासौ ऊर्ध्वजानु , शुद्धपृथिव्यासनवर्जनादौपग्रहिकनिषद्यायास्तदानीमभावाच्च उत्कुटुकासन इत्यर्थ अध शिरा नोर्ध्वं तिर्यग्वा विक्षिप्तदृष्टि किन्तु नियतभूभागनियमितदृष्टिरिति भाव , ' झाणकोट्ठोवगए , त्ति-ध्यानं—धर्म्यं शुक्लं वा तदेव कोष्ठ —कुशूलो ध्यानकोष्ठस्तमुपगतो ध्यानकोष्ठोपगत., यथाहि कोष्ठके धान्यं प्रक्षिप्तमविप्रसृतं भवति , एवं भगवानपि ध्यानतोऽविप्रकीर्णेन्द्रियान्त करणवृत्तिरित्यर्थ , संयमेन पञ्चाश्रवनिरोधादिलक्षणेन तपसा—अनशनादिना , चशब्दोऽत्र समुच्चयार्थो लुप्तो द्रष्टव्य , संयमतपोग्रहणं चानयो प्रधानमोक्षाङ्गत्वख्यापनार्थम्, प्राधान्यं च संयमस्य नवकर्मानुपादानहेतुत्वेन तपसश्च पुराणकर्मनिर्जराहेतुत्वेन, तथाहि—अभिनवकर्मानुपादानात्, पुराणकर्मक्षपणाच्च जायते सकलकर्मक्षयलक्षणो मोक्ष , ततो भवति संयमतपसोर्मोक्ष प्रति प्राधान्यमिति, ' अप्पाणं भावेमाणे विहरइ ' इति आत्मनं भावयन्—वासयन् तिष्ठतीत्यर्थ , ' तनो णं स ' इति —ततो-ध्यानकोष्ठोपगतविहरणादनन्तरं, णमिति वाक्यालङ्कारार्थे , स—भगवान् गौतम ' जायसड्ढे ' इत्यादि , जातश्रद्धादिविशेषणः सन् उत्तिष्ठतीति योग , तत्र जाता-प्रवृत्ता श्रद्धा—इच्छा वक्ष्यमाणार्थतत्त्वज्ञान प्रति यस्यासौ जातश्रद्ध , तथा जात संशयो यस्य स जातसंशय ,सशयो नामानवधारितार्थं ज्ञानम्, स चैवं भगवत -इह सूर्यादिवक्तव्यता अन्यथा,अन्यथा च तीर्थान्तरीयैरुपदिश्यते तत किं तत्त्वमिति संशय . तथा 'जायकोउहल्ले ' त्ति—जातं कुतूहलं यस्य स जातकुतूहल ; जातौत्सुक्य इत्यर्थ यथा कथमेनां सूर्यवक्तव्यता भगवान् प्रज्ञापयिष्यतीति, तथा ' उप्पन्नसड्ढे त्ति-उत्पन्ना प्रागभूता सती भूता श्रद्धा यस्यासौ उत्पन्नश्रद्धः, अथ जातश्रद्ध इत्येतावदेवास्तु किमर्थमुत्पन्नश्रद्ध इत्यभिधीयते ? , प्रवृत्तश्रद्धत्वेनोत्पन्नश्रद्धत्वस्य लब्धत्वात्, न ह्यनुत्पन्ना श्रद्धा प्रवर्तत इति, अत्रोच्यते-हेतुत्वप्रदर्शनार्थम्, तथाहि-कथ प्रवृत्तश्रद्ध ?, उच्यते-यत उत्पन्नश्रद्ध इति, हेतुत्वप्रदर्शन चोपपन्नम् तस्य काव्यालङ्कारत्वात्, तथा ' प्रवृत्तदीपाम(प्र, प्रवृत्तभास्करां, प्रकाशचन्द्रा बुबुधे विभावरी ' मित्यत्र यद्यपि प्रवृत्तदीपत्वादेवाप्रवृत्तभास्करत्वमवगतं तथाप्यप्रवृत्तभास्करत्वं प्रवृत्तदीपत्वादेर्हेतुतयोपन्यस्तमिति स्मीर्ल्यानम्, ' उप्पन्नसंसे उप्पन्नसमए उप्पन्नकोउहल्ले ' इति प्राग्वत्, तथा ' संजायसड्ढे ' इत्यादि पदषट्कं प्राग्वत्, नवरमिह समुशब्द प्रकर्षादिवचनो वेदितव्य , तत ' उट्ठाए उट्ठेइ ' इति उत्थानमुत्था-ऊर्ध्वं वर्त्तनं तया उत्तिष्ठति , इह ' उट्ठेइ ' इत्युक्ते क्रियारम्भमात्रमपि प्रतीयत यथा वक्तुमुत्तिष्ठते ततस्तद्व्यवच्छेदार्थमुत्थायेत्युक्तम्, ' जेणेवे ' त्यादि, प्राकृतशैलीवशाद्व्ययत्वाच्च यत्रेति यासमाप्तेत्यर्थे द्रष्टव्यम्, यस्मिन् दिग्भागे श्रमणो भगवान् महावीरो वर्त्तते ' तेणेव ' त्ति-तस्मिन् दिग्भागे उपागच्छति, इह वर्त्तमानकालनिर्देशस्तत्कालापेक्षया उपागमनक्रियाया वर्त्तमानत्वात्, परमार्थतस्तूपागतवानिति द्रष्टव्यम्, उपागम्य च श्रमणं भगवन्तं महावीरं कर्मतापन्न त्रिकृत्व -त्रीन् वारान् आदक्षिणप्रदक्षिणं करोति, आदक्षिणात्-दक्षिणहस्तादारभ्य प्रदक्षिण.--परितो भ्राम्यतो दक्षिण एव आदक्षिणप्रदक्षिणं तं करोति, कृत्वा वन्दते-स्तौति नमस्यति कायेन प्रणमति , वन्दित्वा नमस्यित्वा च 'न'-नैव अत्यासन्न -अतिनिकट अवग्रहपरिहारात्, अथवा-नात्यासन्नस्थाने वर्त्तमान इति गम्यम्, तथा 'न'-नैवातिदूरेऽतिविप्रकृष्टेऽनौचित्यपरिहारात्, अथवानातिदूर स्थाने ' सुस्सूसमाणे ' त्ति-भगवद्वचनानि श्रोतुमिच्छन्, ' अभिमुहे ' त्ति--अभि-भगवन्तं प्रति मुखमस्येत्यभिमुख ' विणएणं ' त्ति विनयेन हेतुना ' पञ्जलिउडे ' त्ति प्रकृष्ट --प्रधानो ललाटतटघटितत्वेन अञ्जलि -हस्तन्यासविशेष कृतो विहितो येन स प्राञ्जलिकृत, भार्योढादेराकृतिगणतया कृतशब्दस्य परनिपात ' पज्जुवासेमाणे ' इति-पर्युपासीन -सेवमान अनेन विशेषणकदम्बकेन श्रवणविधिरुपदर्शित, उक्तं च-' निद्दाविगहापरिवज्जिएहिं गुत्तेहिं पञ्जलिउडेहिं । भत्तिबहुमाणपुव्वं , उवउत्तेहिं सुणेयव्वं ॥ १ ॥ " इति । ' एव वदासि ' त्ति एवं-वक्ष्यमाणेन प्रकारेण सूर्यादिवक्तव्यताविषय प्रश्नमवादीत्-उक्तवान्।

कथमुक्तवानिति शिष्यस्य प्रश्नावकाशमाशङ्क्य प्रथमतो विंशतौ प्राभृतेषु यद् वक्तव्य तदुपक्षिपन् गाथापञ्चकमाह-

कइ मंडलाइ वच्चइ १, तिरिच्छा किं च गच्छई २ ।
ओभासइ केवइयं ३, सेयाइ किं ते संठिई ४ ॥ १ ॥
कहिं पडिहया लेसा ५, कहिं ते ओयसंठिई ६ ।
के सूरियं वरयते ७, कहं ते उदयसंठिई ८ ॥ २ ॥
कह कट्ठा पोरिसीछाया ९, जोगे किं ते व आहिए १० ।
किं ते संवच्छरेणादी ११, कया संवच्छराइ य १२॥३॥
कहं चंदमसो वुड्ढी १३ , कया ते दोसिणा बहू १४ ।
के य सिग्घगई वुत्ते १५, कहं दोसिणलक्खणं १६ ॥४॥
चयणोववाय १७ उच्चत्ते १८,सूरिया-कइ आहिया-१९।

अणुभावे के य संवुत्ते २०,एवमेयाइँ वीसइ ॥५॥(सू०३)

प्रथमे प्राभृते सूर्यो वर्षमध्ये कति मण्डलान्येकवार कति वा मण्डलानि द्विकृत्वो व्रजतीत्येतन्निरूपणीयम्, किमुक्तं भवति-एवं गौतमेन प्रश्ने कृते तदनन्तरं सर्वं तद् विषयं निर्वचनं प्रथमे प्राभृते वक्तव्यमिति १। एवं सर्वत्रापि भावनीयम्। द्वितीये प्राभृते 'किं' कथं वाशब्द सर्वप्राभृतवक्तव्यतापेक्षया समुच्चये तिर्यग्व्रजतीति २। तृतीये चन्द्र-सूर्यो वा कियत्क्षेत्रमवभासयति-प्रकाशयतीति ३, चतुर्थे श्वेततायाः—प्रकाशस्य किं कथं 'ते'-तव मते संस्थिति—व्यवस्थेति ४। पञ्चमे कस्मिन् सूर्यस्य प्रतिहता लेश्येति ५, षष्ठे कथं—केन प्रकारेण किं सर्वकालमेकरूपावस्थायितया उतान्यथा ओजसः-प्रकाशस्य संस्थितिः-अवस्थानमिति ६, सप्तमे के पुद्गला सूर्यं वरयन्ति-सूर्यलेश्यासंस्पृष्टा भवन्तीति ७, अष्टमे कथं—केन प्रकारेण भगवन्! ते—तव मतेन सूर्यस्योदयसंस्थितिः ८, नवमे कतिकाष्ठा-किंप्रमाणा पौरुषीच्छाया ९, दशमे योग इति वस्तु किं ते—त्वया भगवताऽऽख्यातमिति १०, एकादशे कस्ते-तव मतेन संवत्सराणामादिरिति ११, द्वादशे कति संवत्सरा इति १२, त्रयोदशे कथं—केन प्रकारेण चन्द्रमसो वृद्धिः—वृद्धिप्रतिभासः उपलक्षणमेतत्तेन वृद्ध्यपवृद्धिप्रतिभास इत्यर्थः १३, चतुर्दशे कदा—कस्मिन् काले 'ते'-तव मतेन चन्द्रमसो ज्योत्स्ना बहु-प्रभूतेति १४, पञ्चदशे कश्चन्द्रादीनां मध्ये शीघ्रगतिरुक्त इति १५, षोडशे किं ज्योत्स्नालक्षणमिति वक्तव्यम् १६, सप्तदशे चन्द्रादीनां च्यवनमुपपातश्च स्वमतपरमतापेक्षया वक्तव्यः १७, अष्टादशे चन्द्रादीनां समतलाद्भूभागादूर्ध्वमुच्चत्वं-यावति प्रदेशे व्यवस्थितत्वं तत्स्वमतपरमतापेक्षया प्रतिपाद्यम् १८, एकोनविंशतितमे कति सूर्या जम्बूद्वीपाद्याख्याता इत्यभिधेयम् १९, विंशतितमे कोऽनुभावश्चन्द्रादीनामिति २०। एवम्-अनन्तरोक्तेन प्रकारेण एतानि अनन्तरोदितार्थाधिकारोपेतानि विंशतिः प्राभृतान्यस्यां सूर्यप्रज्ञप्तौ वक्तव्यानि। सू० प्र० १ पाहु०। (प्राभृतशब्दार्थे 'पाहुड' शब्दे पञ्चमभागे ९१४ पृष्ठे गत.।)

सम्प्रति प्रथमे प्राभृते यान्यपान्तरालवर्तीन्यष्टौ प्राभृतप्राभृतानि तेषामर्थाधिकारान् उपदिदिक्षुराह—

वड्ढोवड्ढी मुहुत्ताण १, मद्धमंडलसंठिई २।
के ते चिन्नं परियरइ ३, अंतरं किं चरंति य ४॥ ६ ॥
उग्गाहइ केवइयं ५, केवतियं च विकंपइ ६।
( सू०-४ )

मंडलाण य संठाने ७, विक्खंभो ८ अट्ठ पाहुडा ॥ ७ ॥
छप्पंच य सत्तेव य, अट्ठ तिन्नि य हवंति पडिवत्ति।
पढमस्स पाहुडस्स, हवंति एयाउ पडिवत्ती ॥८॥
( सू०-५ )

पडिवत्तीओ उदए, तहा अत्थमणेसु य।
भियघाए कण्णकला, मुहुत्ताण गतीति य ॥ ९ ॥
णिक्खममाणे सिग्घगई, पविसंते मंदगई इ य।
चुलसीइसयं पुरिसाणं, तेसिं च पडिवत्तिओ ॥१०॥
उदयम्मि अट्ठ भणिया, भेदग्घाए दुवे य पडिवत्ती।
चत्तारि मुहुत्तगइए, हुंति तइयम्मि पडिवत्ती ॥ ११ ॥
( सू०-६ )

आवलिय १ मुहुत्तग्गे २,
एवं भागा य ३ जोगस्स ४।
कुलाइं ५ पुन्नमासी ६ य,
सन्निवाए ७ य संठिई ८ ॥ १२ ॥
तार ( य )ग्गं च ९ नेता य १०,
चंदमग्ग त्ति ११ यावरे।
देवताण य अज्झयणे १२,
मुहुत्ताणं नामया इ य १३ ॥ १३ ॥
दिवसा राइ वुत्ता य १४,
तिहि १५ गोत्ता १६ भोयणाणि १७ य।
आइच्चवार १८ मासा १९ य,
पंच संवच्छराइ य २० ॥ १४ ॥
जोइसस्स य दाराइं २१,
नक्खत्तविजए वि य २२।
दसमे पाहुडे एए,
बावीसं पाँहु (ड) पाहुडा ॥ १५ ॥ ( सू०-७ )

प्रथमस्य प्राभृतस्य सत्के प्रथमे प्राभृतप्राभृते मुहूर्त्तानां दिवसरात्रिगतानां वृद्ध्यपवृद्धी वक्तव्ये १, द्वितीयेऽर्द्धमण्डलस्य द्वयोरपि सूर्ययोः प्रत्यहोरात्रमर्द्धमण्डलविषया संस्थितिः-व्यवस्था वक्तव्या-२, तृतीये तव मतेन कः सूर्यः कियदपरेण सूर्येण चीर्णं क्षेत्रं प्रतिचरतीति निरूप्यम् ३, चतुर्थे द्वावपि सूर्यौ परस्परं कियत्परिमाणमन्तरं कृत्वा चारं चरत इति प्रतिपाद्यम् ४, पञ्चमे कियत्प्रमाणं द्वीपं समुद्रं वाऽवगाह्य सूर्यश्चारं चरतीति ५; षष्ठे एकैकेन रात्रिन्दिवेन एकैकः सूर्यः कियत्प्रमाणं क्षेत्रं विकम्प्य-विमुच्य चारं चरतीति ६, सप्तमे मण्डलानां संस्थानमभिधानीयम् ७, अष्टमे मण्डलानामेव विष्कम्भो—बाहल्यमिति ८, एवमर्थाधिकारसमन्वितानि प्रथमे प्राभृतेऽष्टौ प्राभृतप्राभृतानि। सम्प्रति प्रथम एव प्राभृते चतुरादिषु प्राभृतप्राभृतेषु यत्र यावत्यः प्रतिपत्तयः परमतरूपास्तत्र तावतीरभिधित्सुराह—'छप्पंचे' त्यादि. प्रथमस्य प्राभृतस्य चतुरादिषु प्राभृतप्राभृतेषु यथाक्रममेताः प्रतिपत्तयः-परमतरूपा भवन्ति, तद्यथा-चतुर्थे प्राभृतप्राभृते षट् प्रतिपत्तयः ६ पञ्चमे पञ्च ५, षष्ठे सप्त ७, सप्तमे अष्टौ ८ अष्टमे तिस्रः ३ इति। सम्प्रति द्वितीये प्राभृते यदर्थाधिकारोपेतानि त्रीणि प्राभृतप्राभृतानि तान् प्रतिपादयति-' पडिवत्ती ' त्यादि, द्वितीयस्य प्राभृतस्य प्रथमे प्राभृतप्राभृते सूर्यस्योदये अस्तमयनेषु च प्रतिपत्तयः--परमतरूपाः प्र-

निपाद्याः स्वमतप्रतिपत्तिश्च । द्वितीये भेदघातः कर्णकला च वक्तव्या , किमुक्तं भवति ?-भेदो मण्डलस्यापान्तरालं तत्र घातो—गमनम् ' हन् ' हिंसागत्योरिति वचनात् , स एकेषां मतेन प्रतिपाद्यः , यथा विवक्षिते मण्डले सूर्येणापूरिते सति तदनन्तरं सूर्योऽपरमनन्तर मण्डलं संक्रामतीति , तथा कर्णः—कोटिभाग तमधिकृत्यापरेषां मतेन कला वक्तव्या , यथा विवक्षिते मण्डले द्वावपि सूर्यौ प्रथमक्षणे प्रविष्टौ सन्तौ पूर्वापरकोटिद्वय लक्षीकृत्य बुद्ध्या परिपूर्णं यथावस्थितं मण्डलं विवक्षित्वा ततः परमण्डलस्य कर्णं—कोटिभागरूमभिसमीक्ष्य ततः कलया १ मात्रया २ इत्यर्थः , अपरमण्डलाभिमुखमभिसर्पन्तौ चार चरत इति । तृतीये प्राभृतप्राभृते प्रतिमण्डलं मुहूर्तेषु गतिः-गतिपरिमाणमभिधातव्यम् तत्र निष्कामति प्रविशति या सूर्ये यादृशी गतिर्भवति तादृशीमभिधित्सुराह--'निक्खमे' त्यादि निष्कामेन्—सर्वाभ्यन्तरान्मण्डलाद्बहिर्निर्गच्छन् सूर्यो यथोत्तरं मण्डलं संक्रामन् शीघ्रगतिः शीघ्रतरगतिर्भवति, प्रविशन्—सर्वबाह्यान्मण्डलादभ्यन्तरमागच्छन् प्रतिमण्डल मन्दगतिः मन्दमन्दगतिः, तेषां च मण्डलाना चतुरशीतं चतुरशीत्यधिकं शतं सूर्यस्य भवति,तेषा मण्डलानां च विषये प्रतिमुहूर्त्तं सूर्यस्य गतिपरिमाणचिन्तया पुरुषाणां प्रतिपत्तयो नाम मतान्तररूपा भवन्ति । सम्प्रति कस्मिन् प्राभृतप्राभृते कति प्रतिपत्तय इत्येतत्प्ररूपयति—द्वितीये प्राभृते त्रिष्वपि प्राभृतप्राभृतेषु यथाक्रममेव संख्या प्रतिपत्तयो भवन्ति,तद्यथा—प्रथमे प्राभृतप्राभृते उदये—सूर्योदयवक्तव्यतोपलक्षिते अष्टौ भणितास्तीर्थकरगणधरैः प्रतिपत्तय , द्वितीये प्राभृतप्राभृते भेदघाते—भेदघातरूपे परमतवक्तव्यतोपलक्षिते द्वे एव प्रतिपत्ती भवत , तृतीये प्राभृतप्राभृते मुहूर्तगतौ—मुहूर्तगतिवक्तव्यतोपलक्षिते चतस्र प्रतिपत्तयो भवन्ति, 'चत्तारी' ति च सूत्रे नपुंसकत्वनिर्देश प्राकृतत्वात् ,प्राकृते हि लिङ्गं व्यभिचारि,यदाह पाणिनि स्वप्राकृतलक्षणे-' लिङ्गं व्यभिचार्यपी' ति । सम्प्रति दशमप्राभृते यान्यपान्तरालवर्तीनि द्वाविंशतिसंख्यानि प्राभृतप्राभृतानि तेषामर्थाधिकारमाह—दशमे प्राभृते एतानि—सूत्रे पुंस्त्वनिर्देशः प्राकृतत्वात् एतदर्थाधिकारोपेतानि द्वाविंशति प्राभृतप्राभृतानि भवन्ति,तद्यथा—प्रथमे प्राभृतप्राभृते नक्षत्राणामावलिकाक्रमो वक्तव्यः यथा अभिजितादीनि नक्षत्राणि भवन्तीति १, द्वितीये नक्षत्रविषयं मुहूर्त्ताग्र मुहूर्त्तपरिमाण वक्तव्यम् २, तृतीये ' एव भागा ' इति ' पूर्वभागा ' इति पूर्वपश्चिमादिप्रकारेण भागा वक्तव्याः ३, चतुर्थे ' योगस्स ' त्ति-योगस्यादिर्वक्तव्य , तथा च वक्ष्यति—' ता कहं ते जोगस्स आई आहियत्ति वइज्जा ' इति ४, पञ्चमे कुलानि चशब्दादुपकुलानि कुलोपकुलानि च वक्तव्यानि ५, षष्ठे पौर्णमासीति-पौर्णमासी वक्तव्यता अभिधेया ६, सप्तमे 'सन्निपात'इति अमावस्यापौर्णमासीसन्निपातो वक्तव्य ७, अष्टमे नक्षत्राणा संस्थिति -संस्थान वक्तव्यम् , नवमं नक्षत्रताराग्र तारापरिमाणमभिधेयम्९,दशमे नेता वक्तव्यो, यथा कति नक्षत्राणि स्वयमस्तङ्गमनेनाहोरात्रपरिसमाप्त्या कं मासं नयन्तीति १०, अपरस्मिन्नेकादशे प्राभृतप्राभृते चन्द्रमार्गा चन्द्रमण्डलानि नक्षत्राण्यधिकृत्य वक्तव्यानि ११, द्वादशे नक्षत्राधिपतीनां देवतानामध्ययनानि--अधीयन्ते ज्ञायन्ते एभिरित्यध्ययनानि--नामानि वक्तव्यानि १ , त्रयोदशे मुहूर्त्तानां नामकानि वक्तव्यानि १३, चतुर्दशे दिवसा रात्रयश्चोक्ता १४,पञ्चदशे तिथयः १५, षोडशे गोत्राणि नक्षत्राणां १६ सप्तदशे नक्षत्राणां भोजनानि वाच्यानि, यथेदं नक्षत्रमेवरूपं भोजने कृते शुभाय भवतीति १७ , अष्टादशे आदित्यानामुपलक्षणमेतच्चन्द्रमसां च चार वक्तव्या १८, एकोनविंशतितमे मासा १९, विंशतितमे संवत्सराः २०, एकविंशतितमे ज्योतिषां--नक्षत्रचक्रस्य द्वाराणि वक्तव्यानि, यथाऽमूनि नक्षत्राणि पूर्वद्वाराणि अमूनि च पश्चिमद्वाराणीत्यादि २१, द्वाविंशतितमे नक्षत्राणां विचयः-चन्द्रसूर्ययोगादिविषयो निर्णयो वक्तव्य इति । तदेवमुक्ता प्राभृतप्राभृतसंख्या तेषामर्थाधिकाराश्च २२ । सू० प्र० १ पाहु० ।

उपसंहारमाह—

इय एस पाहुडत्था, अभव्वजणहिययदुल्लहा इणमो ।
उक्कित्तिता भगवता, जोतिसरायस्स पण्णत्ती ॥ १ ॥
एस गहिता वि संता, थद्धे गारवियमाणि पडिणीए ।
अबहुस्सुए ण देया, तव्विवरीते भवे देया ॥ २ ॥
सद्धाधितिउट्ठाणु-च्छाहकम्मबलविरियपुरिसकारेहिं ।
जो सिक्खिओ वि संता, अभायणे परिकहेज्जाहि ॥३॥
सो पवयणकुलगणसं-घबाहिरो णाणविणयपरिहीणो ।
अरहंतथेरगणहर-मेरं किर होति वोलीणो ॥ ४ ॥
तम्हा धितिउट्ठाणु-च्छाहकम्मबलविरियसिक्खियं णाणं ।
धारेयव्वं णियमा, ण य अविणीएसु दायव्वं ॥ ५ ॥

इति—एवम्-उक्तेन प्रकारेण अनन्तरमुद्दिष्टस्वरूपा प्रकटार्था—जिनवचनतत्त्ववेदिनामुत्तानार्था,इय त्वर्थं प्रकटार्था ऽपि सती अभव्यानां हृदयेन—पारमार्थिकाभिप्रायेण दुर्लभा, भावार्थमधिकृत्याभव्यजनानां दुर्लभेत्यर्थ , अभव्यत्वादेव तेषां सम्यग्जिनवचनपरिभावात् , उत्कीर्तिता—कथिता भगवती—ज्ञानैश्वर्या देवता ज्योतिषराजस्य—सूर्यस्य प्रज्ञप्ति । एषा च स्वयं गृहीता सती यस्मै न दातव्या तत्प्रतिपादनार्थमाह—' एसा गहिया वि ' इत्यादि , गाथाद्वयम् , एषा—सूर्यप्रज्ञप्ति स्वयं सम्यक्करणेन गृहीताऽपि सती ' व्यत्ययोऽप्यासाम् " इति वचनात्—चतुर्थ्यर्थे सप्तमी, ततोऽयमर्थ -' थद्धे ' इति स्तब्धाय स्वभावत एव मानप्रकृत्या विनयभ्रंशकारिणे, ' गारवि य ' त्ति, ऋद्ध्यादिगौरव सजातमस्येति गौरवितस्तस्मै ऋद्धिरससाताना— मन्यतमेन गौरवेण गुरुतरायेति भाव , ऋद्ध्यादिमदोपेतो ह्यचिन्त्यचिन्तामणिकल्पमपीदं सूर्यप्रज्ञप्तिप्रकीर्णकमात्राद्यादिकं च तद्वेत्तारमवज्ञया पश्यति, सा चावज्ञा दुरन्तनरकादिप्रपातहेतुरतस्तदुपकारायैव तस्मै दानप्रतिषेधः , इय च भावना स्तब्धमान्यादिष्वपि भावनीया, तथा मानिने—जात्यादिमदोपेताय प्रत्यनीकाय-दुर्भव्यतया अभव्यतया वा सिद्धान्तवचननिकुट्टनपराय , तथा अल्पश्रुताय—स्वगाढस्तोकशास्त्राय , स हि जिनवचनेषु ( अ ) सम्यग्भावितत्वात् , शब्दार्थपर्यालोचनायामकुशलत्वाच्च यथावस्थितत्व-

मानमपि न सम्यगभिगेचयत इति न देया किन्तु तद्विपरीताय दातव्या भवेत्। भवेदिति क्रियापदस्य सामर्थ्यलब्धत्वप्युपादानं दातव्यत्वावधारणार्थं तद्विपरीताय दातव्यैव नाऽदत्तव्या। अदानं शास्त्रव्यवच्छेदप्रसक्त्या तीर्थव्यवच्छेदप्रसक्ते., एतदेव व्यक्तीकुर्वन्नाह-'सद्धे' त्यादि. श्रद्धा—श्रवणं प्रति वाञ्छा धृति.—विवाक्षितं जिनवचनं सत्यमेव नान्यथेति मनसाऽवष्टम्भ : उत्थानं—श्रवणाय गुरु प्रत्यभिमुखगमनसुत्साह —श्रवणविषये मनस उत्कलिकाविशेष यद्वशादिदानीमेव यदि मे पुण्यवशात् सामग्री सम्पद्यते शृणोमि च तत. शोभनं भवतीति परिणाम उपजायते कर्म्म—वन्दनादिलक्षणं बलं—शारीरो वाचनादिविषय. प्राण वीर्यम्—अनुप्रेक्षायां सूक्ष्मसूक्ष्मार्थोहनशक्ति पुरुषकार.-तदेव वीर्यं साधितनाभिमतप्रयोजनम्। एतैकारणै य स्वयं शिक्षितोऽपि गृहीतसूर्यप्रज्ञप्तिसूत्रार्थोभयोऽपि मन यो दाक्षिण्यादिना अन्तेवासिनि अभाजने-अयोग्ये प्रतिक्षिपेत्—सूत्रतोऽर्थत उभयतो वा न्यसेत् 'सो पवयण' त्यादि स प्रवचनकुलगणसङ्घबाह्यो ज्ञानविनयपरिहीणो—ज्ञानाचारपरिहीणो भगवदर्हत्स्थविरगणधरमर्यादां भगवदर्हदादिकृता व्यवस्थां भवति किल व्यतिकान्त'। किलेत्याप्तवादसूचकम् इत्थमाप्तवचनं व्यवस्थितं यथा सनूनं भगवदर्हदादिव्यवस्थामतिक्रान्त इति. तदतिक्रमं च दीर्घसंसारिता। 'तम्हे' त्यादि तस्माद् धृत्युत्थानोत्साहकर्म्मबलवीर्यैर्यत् ज्ञानं-सूर्यप्रज्ञप्त्यादि. स्वयं मुमुक्षुणा सता शिक्षितं तन्नियमादात्मन्येव धर्तव्यम् न तु जातुचिदप्यविनीतेषु दातव्यम्. उक्तप्रकारेण तद्दाने आत्मपरदीर्घसंसारित्वप्रसक्ते तदेवमुक्त प्रदानविधि'। इयं च सूर्यप्रज्ञप्तिर्यतो मिथिलायां नगर्यां भगवता वीरवर्द्धमानस्वामिना साक्षादुक्ता।

"सूर्यप्रज्ञप्तिमिमा-मतिगम्भीरां विवृण्वता कुशलम्।
यदवापि मलयगिरिणा. साधुजनस्तेन भवतु कृती ॥ ३ ॥"

सू० प्र० २० पाहु०। यो० विं०। 'कालियसुयं च इसिभासियाइँ तइओ अ सूरपन्नत्ती। सव्वो उ दिट्ठिवाओ, चउत्थगो होइ अणुओगो।" आ० क० १ अ०।

**सूरपरिवेस-सूर्यपरिवेष-पुं०।** सूर्यस्य परितो वलयाकारपरिणतौ. अनु०। जी०।

**सूरपव्वय-सूर्यपर्वत-पुं०।** मेरुपर्वतस्य पश्चिमवनखण्डेविकान्तविजयस्य दक्षिणस्यां दिशि पर्वतभेदे, स्था० २ ठा० ३ उ०।

दो सूरपव्वया। स्था० २ ठा० ३ उ०।

सीतोदाया उत्तरे पार्श्वे महावप्रविजयक्षेत्र वक्षस्कारपर्वते, जं० ४ वक्ष०। स्था०।

**सूरपाणिलेह-सूर्यपाणिलेख-पुं०।** सूर्य इव सूर्याकारा पाणौ लेखा यस्य स सूर्यपाणिलेखः'। सूर्याकृतिरेखायुतहस्ते-पु जी० ३ प्रति ४ अधि०। प्रश्न०।

**सूरपुरंगम-शूरपुरंगम-पुं०।** शूराणामग्रगामिनि सूत्र० १ श्रु० १ अ० ३ उ०।

**सूरप्पभ-सूर्यप्रभ-न०।** चतुर्थे देवलोकसत्के विमानभेदे, स० ५ सम०।

**सूरप्पभा-सूर्यप्रभा-स्त्री०।** एकादशस्य तीर्थकृतो निष्क्रमणशिविकायाम्, स०। जी०। सूर्यस्य ज्योतिष्केन्द्रस्याग्रमहिष्याम्, स्था० ४ ठा० १ उ०।

**सूरप्पमाणभोइ-सूर्यप्रमाणभोजिन्-पुं०।** सूर्योदयादस्तमयं यावदशनपानाद्यभ्यवहारिणि, स० २० सम०। आ० चू०। दशा०। "सूर एव पमाणं तस्स उदयमेत्ते आरद्धो जाव ण अत्थमेइ ताव भुंजइ सज्झायमादी न करेइ परिचोइओ रुस्सइ अजीरणादी असमाधी उप्पज्जति। आव० ४ अ०।

**सूरभद्द-सूर्यभद्र-पुं०।** सूर्यद्वीपदेवे, जी०३ प्रति० ४ अधि०।

**सूरमंडल-सूर्यमण्डल-न०।** आदित्यविमानवृत्ते, स० १० सम०। सूर्यवक्तव्यतायां पञ्चदश द्वाराणि तत्रेमानि—पञ्चदशानुयोगद्वाराणि।मण्डलसंख्या १मण्डलक्षेत्रम् २ मण्डलान्तरम् ३ विम्बायामविष्कम्भादि ४ मेरुमण्डलद्वयोरबाधा, ५ मण्डलायामादिवृद्धिहानी ६ मुहूर्त्तगति. ७ दिनरात्रिवृद्धिहानी ८ तापक्षेत्रसंस्थानादि ९ दूरासन्नादिदर्शने लोकप्रतीत्युपपत्ति १० चारक्षेत्रेऽतीतादिप्रश्न ११ तत्रैव क्रियाप्रश्न. १२ ऊर्ध्वादिदिक्षु प्रकाशयोजनसंख्या १३ मनुष्यक्षेत्रवर्तिज्योतिष्कस्वरूपम् १४ इन्द्राद्यभावे स्थितिप्रकल्प १५।

तत्र मण्डलसंख्यायामादिसूत्रम्—

कइ णं भंते! सूरमंडला पण्णत्ता?, गोअमा! एगे चउरासीए मंडलसए पण्णत्ते इति। जंबुद्दीवे णं भंते! दीवे केवइअं ओगाहित्ता केवइआ सूरमण्डला पण्णत्ता?, गोयमा! जंबुद्दीवे दीवे असीअं जोअणसयं ओगाहित्ता एत्थ णं पण्णसट्ठी सूरमण्डला पण्णत्ता, लवणे णं भंते! समुद्दे केवइअं ओगाहित्ता केवइआ सूरमंडला पण्णत्ता?, गोअमा! लवणे समुद्दे तिण्णि तीसे जोअणसए ओगाहित्ता एत्थ णं एगूणवीसे सूरमंडलसए पण्णत्ते, एवामेव सपुव्वावरेणं जंबुद्दीवे दीवे लवणे अ समुद्दे एगे चुलसीए सूरमंडलसए भवंतीतिमक्खायं ति ॥१॥ (सू० १२७)

'कइ णं' मित्यादि. कति भदन्त! सूर्ययोर्दक्षिणोत्तरायणे कुर्वतोर्निजबिम्बप्रमाणचक्रवालविष्कम्भानि प्रतिदिनभ्रमिक्षेत्रलक्षणानि मण्डलानि प्रज्ञप्तानि?. मण्डलत्वं चैषां मण्डलसदृशत्वात् न तु तात्त्विकं, मण्डलप्रथमक्षणे यद् व्याप्तं क्षेत्र तत्समश्रेण्येव यदि पुरः क्षेत्र व्याप्नुयात् तदा तात्त्विकी मण्डलता स्यात्, तथा च सति पूर्वमण्डलादुत्तरमण्डलस्य योजनद्वयमन्तरं न स्यादिति, भगवानाह—गौतम! एकं चतुरशीतं—चतुरशीत्यधिकं मण्डलशतं प्रज्ञप्तम्. यथा चैभिश्चारक्षेत्रपूरणं तथा अनन्तरद्वारे प्ररूपयिष्यते। अथैतान्येव क्षेत्रविभागेन द्विधा विभज्याङ्कसंख्यां पुनः प्रश्नयति—'जंबुद्दीवे' त्ति-जम्बूद्वीपे द्वीपे भदन्त! कियत्क्षेत्रमवगाह्य कियन्ति सूर्यमण्डलानि प्रज्ञप्तानि

गौतम ! जम्बूद्वीपे द्वीपे अशीतम्—अशीत्यधिकं शतं योजनशतमवगाह्य अत्र पञ्चषष्टिः सूर्यमण्डलानि प्रज्ञप्तानि तथा लवणे भदन्त ! समुद्रे कियदवगाह्य कियन्ति सूर्यमण्डलानि प्रज्ञप्तानि , गौतम ! लवणे समुद्रे त्रिंशदधिकानि त्रीणि योजनशतानि सूत्रे ... अष्टचत्वारिंशदेकषष्टिभागान् अवगाह्यान्तरं एकोनविंशत्यधिकं सूर्यमण्डलशतं प्रज्ञप्तम् , अत्र पञ्चषष्ट्या मण्डलैरेकोनाशीत्यधिकं योजनशतं तथ चैकषष्टिभागा योजनस्य पूर्यन्ते , जम्बूद्वीपेऽवगाहक्षेत्रं चाशीत्यधिक योजनशतं तेन शेषा द्वापञ्चाशद्भागाः पदपूरित-मस्य मण्डलस्य बोध्या अल्पत्वाच्चात्र न विवक्षिता. । अत्र च पञ्चषष्टिमण्डलानां विषयविभागव्यवस्थायां संग्रहणीवृत्त्याद्युक्तोऽयं वृद्धसम्प्रदायः—मेरोरेकतो निषधमूर्द्धनि त्रिषष्टिर्मण्डलानि हरिवर्षजीवाकोट्यां च द्वे द्वितीयपार्श्वे नीलवन्मूर्द्धनि त्रिषष्टिः, रम्यकजीवाकोट्या च द्वे इति , एवमेव सपूर्वापरेण पञ्चषष्ट्येकोनाविंशत्यधिकशतमण्डलमीलनेन जम्बूद्वीपे लवणे च समुद्रे एकं चतुरशीतं सूर्यमण्डलशतं भवतीत्याख्यातं मया चान्यैस्तीर्थकृद्भिः । गतं मण्डलसंख्याद्वारम् ।

अथ मण्डलक्षेत्रद्वारम् , तत्र सूत्रम्—

सव्वब्भंतराओ णं भंते ! सूरमंडलाओ केवइआए अबाहाए सव्वबाहिरए सूरमंडले पण्णत्ते ?, गोयमा ! पंचदसुत्तरे जोअणसए अबाहाए सव्वबाहिरए सूरमंडले पण्णत्ते ॥ २ ॥ ( सू० १२८ )

' सव्वब्भंतराओ ण' मित्यादि, सर्वाभ्यन्तरात्—प्रथमात् सूर्यमण्डलात् भदन्त ! कियत्या अबाधया—कियता अन्तरेण सर्वबाह्य-सर्वेभ्य परः यतोऽनन्तरं नैकमपीत्यर्थः सूर्यमण्डलं प्रज्ञप्तम् ?, गौतम ! दशोत्तराणि पञ्चयोजनशतानि अबाधया-अन्तरालत्वाप्रतिघातरूपया सर्वबाह्यं सूर्यमण्डलं प्रज्ञप्तम् , अत्रानुक्ता अपि अष्टचत्वारिंशदेकषष्टिभागाः ' ससिरविणो लवणम्मि अ जोअणसयतिसि तीसअहिआइं ' इति वचनादधिका ग्राह्या , अन्यथोक्तसंख्याकानां मण्डलानामनवकाशात् , कथमेतदवसीयते ?, उच्यते—सर्वसंख्यया चतुरशीत्यधिकं मण्डलशतम् , एकैकस्य च मण्डलस्य विष्कम्भोऽष्टचत्वारिंशदेकषष्टिभागाः योजनस्य , ततश्चतुरशीत्यधिकं शतमष्टाचत्वारिंशता गुण्यते , जातान्यष्टाशीति शतानि द्वात्रिंशदधिकानि, एतेषां योजनानयनार्थमेकषष्ट्या भागो ह्रियते, लब्धं चतुश्चत्वारिंशदधिकं योजनशतम् १४४ , शेषमवतिष्ठतेऽष्टचत्वारिंशत् , चतुरशीत्यधिकशतसंख्यामां च मण्डलानामन्तरालानि त्र्यशीत्यधिकशतरूपाणि सर्वत्रापि ह्यन्तरालानि रूपोनानि भवन्ति तथा च प्रतीतमेतत् चतुरङ्गुलानामन्तरालानि त्रीणीति ; एकैकं मण्डलान्तरालं च द्वियोजनप्रमाणं,ततस्त्र्यशीत्यधिकं शतं द्विकेन गुण्यते जातानि त्रीणि शतानि षट्षष्ट्यधिकानि ३६६ . पूर्वोक्तं च चतुश्चत्वारिंशं शतमत्र प्रक्षिप्यते. ततो जातानि पञ्च शतानि दशोत्तराणि योजनानि अष्टचत्वारिंशदेकषष्टिभागा योजनस्य तत्र च मण्डलक्षेत्रस्य प्रमाणमभिहितम् । मण्डलक्षेत्रं नाम सूर्यमण्डलैः सर्वाभ्यन्तरादिभिः सर्वबाह्यपर्यवसानैर्व्याप्तमाकाशं,तच्चक्रवालविष्कम्भतोऽवसेयम् । उक्तं मण्डलक्षेत्रद्वारम् ।

अथ मण्डलान्तरद्वारमाह—

सूरमंडलस्स णं भंते ! सूरमंडलस्स य केवइयं अबाहाए अंतरे पण्णत्ते ?, गोअमा ! दो जोअणाइं अबाहाए अंतरे पण्णत्ते ॥३॥ ( सू० १२९ )

' सूरमंडल ' इत्यादि, भगवन् ! सूर्यमण्डलस्य सूर्यमण्डलस्य च कियदबाधया—अव्यवधानेनान्तरं प्रज्ञप्तम् ? , गौतम ! द्वे योजने अबाधया अन्तरं प्रज्ञप्तम् , अन्तरशब्देन च विशेषोऽप्युच्यते इति तन्निवृत्त्यर्थमबाधयेत्युक्तं , कोऽर्थः ?-पूर्वस्मादपरं मण्डलं कियद् दूरं इत्यर्थः , अत्र यथा योजनद्वयमुपपद्यते तथाऽनन्तरमेव मण्डलरूपद्वारे दर्शितम् । गतं मण्डलान्तरद्वारम् ।

अथ बिम्बायामविष्कम्भादिद्वारम्—

सूरमंडले णं भंते ! केवइअं आयामविक्खंभेणं केवइअं परिक्खेवेणं केवइअं बाहल्लेणं पण्णत्ते ?, गोअमा ! अडयालीसं एगसट्ठिभाए जोअणस्स आयामविक्खंभेणं तं तिगुणं सविसेसं परिक्खेवेणं चउवीसं एगसट्ठिभाए जोअणस्स बाहल्लेणं पण्णत्ते इति ॥४॥ ( सू० १३० )

'सूरमण्डले ण ' मित्यादि , सूर्यमण्डलं णमिति प्राग्वत् भगवन् ! कियदायामविष्कम्भाभ्यां कियत्परिक्षेपेण कियद्बाहल्येन-उच्चत्वेन प्रज्ञप्तम् ?,गौतम ! अष्टचत्वारिंशद्भागान् योजनस्यायामविष्कम्भाभ्यां प्रज्ञप्तम्, अयमर्थः -एकयोजनस्यैकषष्टिभागाः कल्प्यन्ते तद्रूपा येऽष्टचत्वारिंशद्भागास्तावत्प्रमाणमस्यायामविष्कम्भावित्यर्थः , तत् त्रिगुणं सविशेषं-साधिकं परिक्षेपेण,अष्टचत्वारिंशत् त्रिगुणिता द्वे योजने द्वाविंशतिरेकषष्टिभागा अधिका योजनस्येत्यर्थः चतुर्विंशतिरेकषष्टिभागान् योजनस्य बाहल्येन,विमानविष्कम्भस्यार्द्धभागेनोच्चत्वात् । गतं बिम्बायामविष्कम्भादिद्वारम् । जं० ७ वक्ष० ।

जंबूदीवे दीवे ग्रासीयं मंडलसयं जं सूरिए दुक्खुत्तो संकमित्ता णं चार चरइ,तं जहा- निक्खममाणे य, पविसमाणे य । ( सू० ८२× )

तत्र जम्बूद्वीपे त्र्यशीत्यधिके मण्डलशते सूर्यस्य मार्गशतं तद्वर्त्तीनि चापयश्चेष , किं भूते ?, य सयो द्विरुक्तौ द्वौ वारौ संक्रम्य प्रविश्य चारं चरति , तद्यथा— निष्कामंश्च जम्बूद्वीपात् , प्रविशंश्च जम्बूद्वीपं प्रति । अयमत्र भावार्थः —किल चतुरशीत्यधिके सूर्यमण्डलशते भवति , तत्र सर्वाभ्यन्तरं सर्वबाह्यं सकृदेव स्पृशति शेषाणि तु द्वौ वारौविति । इह च त्र्यशीत्यधिकं त्र्यशीतिस्थानकेऽधीनमिति भावनीयम् । यद्यपि जम्बूद्वीपे पञ्चषष्टिरेव मण्डलानां भवन्ति तथापि जम्बूद्वीपादिषु सूर्यचारविषयत्वात्पञ्चोपपत्ति जम्बूद्वीपेन विवक्षितानीति । स० ८३ सम० ।

बाहिराओ उत्तराओ णं कट्ठाओ सूरिए पढमं छम्मासं अयमाणे चोयालीसइमे मंडलगते अट्ठासीति एगसट्ठिभागे दिवसखेत्तस्स निवुड्ढेत्ता रयणिखेत्तस्स अभिनिवुड्ढेत्ता सूरिए चारं चरइ

दक्खिणकट्ठाओ णं सूरिए दोच्चं छम्मासं अयमाणे चोयालीसइमे मंडलगते अट्ठासीई इगसट्ठिभागे मुहुत्तस्स रयणिखेत्तस्स निवुड्ढेत्ता दिवसखेत्तस्स अभिनिवुड्ढेत्ताणं सूरिए चारं चरइ । ( सू० ८८ + )

'बाहिराओ ण' मित्यादि बाह्याया सर्वाभ्यन्तरमण्डलरूपाया उत्तरस्या काष्ठाया क्वचिद् 'बाहिराओ' त्ति-न दृश्यते सूर्य, प्रथमं षण्मासं दक्षिणायनलक्षणं दक्षिणायनादित्वात्संवत्सरस्य 'अयमाणे' त्ति-आयन्, आगच्छन् चतुश्चत्वारिंशत्तममण्डलगतोऽष्टाशीतिमेकषष्टिभागान् 'दिवसखेत्तस्स' त्ति-दिवसस्यैव 'निवुड्ढेत्त' त्ति-निवर्द्ध्य-ह्रापयित्वा 'रयणिखेत्तस्स' त्ति-रजन्यास्तु अभिवर्द्ध्य 'सूरिए चारं चरइ' त्ति-भ्राम्यतीति, इह च भावनैवम्-प्रतिमण्डलं दिनस्य मुहूर्तैकषष्टिभागद्वयहानेर्दक्षिणायनापत्तया चतुश्चत्वारिंशत्तमे अष्टाशीतिर्भागा हीयन्ते रात्रेस्तु त एव वर्द्धन्त इति, द्वि सूर्यग्रहणं चेह दिनरात्र्याश्रितवाक्यद्वयभेदकल्पनया ततो न पुनरुक्तमवसेयमिति । इदं च सूत्रमष्टसप्ततिस्थानकसूत्रवद्भावनीयमिति, 'दक्खिणकट्ठाओ' इत्यादिसूत्रं पूर्वसूत्रवद्व्याख्येयम्, नवरमिह दिनवृद्धिः रात्रिहानिश्च भावनीयेति । स० ८८ सम० । ( 'आउट्टि' शब्दे द्वितीयभागे ३१ पृष्ठे मण्डलाऽऽवृत्तय उक्ताः । )

अथ सूर्यस्य सर्वमण्डलेषु प्रतिमुहूर्त्तं गतिप्रमाणमाह—

मज्झे दुवन्निगवन्ना, सया य चउवन्न संजुआ बाहिं ।
सूरस्स य अइगस्स, सट्ठीभागाणमिह वुड्ढी ॥ २१ ॥

सर्वमध्यमण्डले वर्त्तमानस्य जम्बूद्वीपसत्कसूर्यस्य तु द्विपञ्चाशच्छतानि एकपञ्चाशदधिकानि योजनानामिति योगः, एकैकस्मिन्मुहूर्ते गतिरेतावती भवति-५२५१ २९/६० ये चोपरितना सूत्रे स्तोकव्याख्योक्तास्ते चन्द्रसूर्ययोर्मुहूर्त्तवर्त्तमानाऽवसरे चिन्तयिष्यन्ते । या च सर्वमध्यमण्डले मुहूर्त्तगतिः सूर्यस्य सैव चतुःपञ्चाशद्योजनसंयुता कृता सती सर्वबाह्यमण्डले प्रतिमुहूर्त्तं गतिर्जायते यथा—५३०५ १५/६० अत्र प्रतिमण्डलं किञ्चिदूनानामष्टादशषष्टिभागानाम् १८/६० वृद्धिः यतोऽष्टादशाना त्र्यशीत्यधिकशतगुणने ३२९४ जायते, तेषां षष्ट्या भागहारे लब्धानि चतुःपञ्चाशद्योजनानीति ।

अथ अधिकाराद्नक्षत्राणां प्रतिमुहूर्त्तं गतिप्रमाणमाह—

पणसहस्सदुसयपाहिअ, पण्सट्ठी जोअणाण मज्झगई ।
चउपन्नाहिआमा बहि-मंडलए होइ रिक्खाणं ॥ २२ ॥

'पणसहस्स' त्ति-सर्वाभ्यन्तरमण्डले वर्त्तमानानां नक्षत्राणामेकैकस्मिन्मुहूर्त्ते गतिः पञ्चसहस्राणि द्वे शते पञ्चषष्टिश्च साधिका योजनानाम् ५२६५ १८२६३/२१९६० सा च सर्वाभ्यन्तरमण्डलगतिश्चतुःपञ्चाशद्योजनाधिका क्रियते तदा सर्वबाह्यमण्डले वर्त्तमानानां नक्षत्राणां प्रतिमुहूर्त्तं गतिर्यथा ५३१९ १६३६५/२१९६० अत्र प्रतिमण्डलवृद्धिः सम्यग् न ज्ञायते यतो मण्डलानामन्तरं सर्वत्र तुल्यं नास्ति । मण्ड० । जं० ।

अथ मेरुमण्डलयोरबाधाद्वारम्, तत्रादिसूत्रम्—

जंबुद्दीवे णं भंते ! दीवे मंदरस्स पव्वयस्स केवइआए अबाहाए सव्वब्भंतरे सूरमंडले पण्णत्ते ?, गोअमा ! चोआलीसं जोअणसहस्साइं अट्ठ य वीसे जोअणसए अबाहाए सव्वब्भंतरे सूरमंडले पण्णत्ते । ( सू० १३१ + )

'जंबुद्दीवे ण' मित्यादि, जम्बूद्वीपे द्वीपे भगवन् ! मन्दरस्य पर्वतस्य कियत्या अबाधया सर्वाभ्यन्तरं सूर्यमण्डलं प्रज्ञप्तम् ?, गौतम ! चतुश्चत्वारिंशद्योजनसहस्राणि अष्ट च विंशत्यधिकानि योजनशतानि अबाधया सर्वाभ्यन्तरं सूर्यमण्डलं प्रज्ञप्तम्, अत्रोपपत्तिः—मन्दरात् जम्बूद्वीपविष्कम्भः पञ्चचत्वारिंशद्योजनसहस्राणि, इदं हि मण्डलं जगतीतो द्वीपदिशि अशीत्यधिकयोजनशतोपसङ्क्रम्य भवति, तेन ४५००० योजनरूपे द्वीपविष्कम्भादियति १८० योजनरूपे शोधिते जातं यथोक्तं मानम्, एतच्च चक्रवालविष्कम्भेन भवति तेनापरसूर्यसर्वाभ्यन्तरमण्डलस्याप्येतेनैव करणेनाबाध्यबाधा बोद्धव्या, एतेन यदन्यत्र क्षेत्रसमासटीकादौ मेरुमवधीकृत्य सामान्यतो मण्डलक्षेत्राबाधापरिमाणद्वारं पृथक् प्ररूपितं तदनेनैव गतार्थम्, अस्यैवाभ्यन्तरतो मण्डलक्षेत्रस्य सीमाकारित्वात् ।

अथ प्रतिमण्डलं सूर्यस्य दूरदूरगमनादबाधापरिमाणमनियतमित्याह—

जंबुद्दीवे णं ! दीवे मंदरस्स पव्वयस्स केवइअबाहाए सव्वब्भंतराणंतरे सूरमंडले पण्णत्ते ?, गोयमा ! चोआलीसं जोअणसहस्साइं अट्ठ य बावीसे जोअणसए अडयालीसं च एगसट्ठिभागे जोयणस्स अबाहाए अब्भंतराणंतरे सूरमंडले पण्णत्ते ? । ( सू० १३१ × )

'जंबुद्दीवे ण' मित्यादि, जम्बूद्वीपे भदन्त ! द्वीपे मन्दरस्य पर्वतस्य कियत्या अबाधया सर्वाभ्यन्तरादनन्तरं-निरन्तरतया जायमानत्वात् द्वितीयं सूर्यमण्डलं प्रज्ञप्तम् ?, गौतम ! चतुश्चत्वारिंशद्योजनसहस्राणि अष्ट च योजनशतानि द्वाविंशत्यधिकानि अष्टचत्वारिंशतं चैकषष्टिभागान् योजनस्याबाधया सर्वाभ्यन्तरानन्तरं सूर्यमण्डलं प्रज्ञप्तं पूर्वस्माद्यदत्राधिकं तद्बिम्बविष्कम्भादन्तरमानाच्च समाधेयम् ।

अथ तृतीयमण्डलं पृच्छन्नाह—

जंबुद्दीवे णं भंते ! दीवे मंदरस्स पव्वयस्स केवइआए अबाहाए अब्भंतरतच्चे सूरमंडले पण्णत्ते ?, गोयमा ! चोआलीसं जोअणसहस्साइं अट्ठ य पणवीसे जोअणसए पणतीसं च एगसट्ठिभागे जोअणस्स अबाहाए अब्भंतरतच्चे सूरमंडले पण्णत्ते इति । ( सू० १३१ × )

'जंबुद्दीवे ण' मित्यादि व्यक्तं नवरम् 'अब्भंतरं तच्च' मिति अभ्यन्तरतृतीयम्, अनेन बाह्यतृतीयमण्डलस्य व्यवच्छेद, उत्तरसूत्रे चतुश्चत्वारिंशद्योजनसहस्राणि अष्ट शतानि पञ्चविंशत्यधिकानि पञ्चत्रिंशतं चैकषष्टिभागान् योजनस्याबाधया अभ्यन्तरतृतीयं सूर्यमण्डलं प्रज्ञप्तम्, उपपत्तिस्तु द्वितीयमण्डलाबाधापरिमाणे ४४८२२ योजन ४८/६१ इत्येवंरूपे प्रस्तुतमण्डलसत्के सान्तरबिम्बविष्कम्भे प्रक्षिप्ते जातं यथोक्तं मानम् ।

एवं प्रतिमण्डलमबाधावृद्धिर्भावनीयमानाया मा भूद् ग्रन्थगौरवं तेन तज्जिज्ञासूनां बोधकमतिदेशमाह—

एवं खलु एतेणं उवाएणं णिक्खममाणे सूरिए तयणंतराओ मंडलाओ तयणंतरं मंडलं संकममाणे संकममाणे दो

दो जोअणाइं अडयालीसं च एगसट्ठिभाए जोअणस्स एगमेगे मंडले अबाहावुड्ढिं अभिवड्ढेमाणे अभिवड्ढेमाणे सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरइ त्ति (सू० १३१×)

'एव खलु' इत्यादि, एवमुक्तरीत्या, मण्डलत्रयदर्शितयेत्यर्थः, एतेनोपायेन-प्रत्यहोरात्रमेकैकमण्डलमोचनरूपेण निष्क्रामन्-लवणाभिमुख मण्डलानि कुर्वन् सूर्यस्तदनन्तरात् विवक्षितात् पूर्वस्मात् मण्डलात् तदनन्तरमविवक्षितमुत्तरमण्डलं संक्रामन् संक्रामन् द्वे द्वे योजने अष्टचत्वारिंशतं चैकषष्टिभागान् योजनस्य एकैकस्मिन् मण्डले अबाधया वृद्धिमभिवर्द्धयन् २ सर्वबाह्यमण्डलमुपक्रम्य चारं चरति, यद्यत्रातिदेशरुचिरपि सूत्रकृन्मण्डलत्रयाभिव्यक्तिमदर्शयत् तत्प्रथमं ध्रुवाङ्कदर्शनार्थं द्वितीय मण्डलाभिवृद्धिदर्शनार्थं तृतीय पुनस्तदभ्यासार्थमिति ।

अथ पश्चानुपूर्व्यापि व्याख्यानाङ्गमित्यन्त्यमण्डलादारभ्य मेरुमण्डलयोरबाधां पृच्छन्नाह—

जंबुद्दीवे णं भंते ! दीवे मंदरस्स पव्वयस्स केवइआए अबाहाए सव्वबाहिरे सूरमंडले पण्णत्ते ?, गोयमा ! पणयालीसं जोअणसहस्साइं तिण्णि अ तीसे जोअणसए अबाहाए सव्वबाहिरे सूरमण्डले पण्णत्ते । (सू० १३१×)

'जंबुद्दीवे' त्ति जम्बूद्वीपे भदन्त ! द्वीपे मन्दरस्य पर्वतस्य कियत्या अबाधया सर्वबाह्य सूर्यमण्डल प्रज्ञप्तम् ?, गौतम ! पञ्चचत्वारिंशद्योजनसहस्राणि त्रीणि च योजनशतानि त्रिंशदधिकानि अबाधया सर्वबाह्य सूर्यमण्डलं प्रज्ञप्तम्, तत्र मन्दरात् पञ्चचत्वारिंशद्योजनसहस्राणि जगती, ततो लवणे त्रीणि शतानि त्रिंशदधिकानि ।

तथा द्वितीयमण्डलपृच्छा—

जंबुद्दीवे णं भंते ! दीवे मंदरस्स पव्वयस्स केवइयाए अबाहाए सव्वबाहिराणंतरे सूरमंडले पण्णत्ते ?, गोअमा ! पणयालीसं जोअणसहस्साइं तिण्णि अ सत्तावीसे जोअणसए तेरस य एगसट्ठिभाए जोअणस्स अबाहाए बाहिराणंतरे सूरमंडले पण्णत्ते । ( सू० १३१+ )

'जम्बुद्दीवे' त्ति प्रश्नसूत्रे बाह्यानन्तरम्-पश्चानुपूर्व्या द्वितीयमित्यर्थः, उत्तरसूत्रे पञ्चचत्वारिंशद्योजनसहस्राणि तथैव जगती ततस्त्रिंशदधिकत्रिशतयोजनातिक्रमे यत्सूरमण्डलमुक्तं तस्मादन्तरमाने बिम्बविष्कम्भमाने च शोधिते जातं यथोक्त मानमिति ।

अथ तृतीयम्—

जंबुद्दीवे णं भंते ! दीवे मंदरस्स पव्वयस्स केवइयाए अबाहाए बाहिरतच्चे सूरमडले पण्णत्ते ?, गोयमा ! पणयालीसं जोअणसहस्साइं तिण्णि अ चउवीसे जोअणसए छव्वीसं च एगसट्ठिभाए जोअणस्स अबाहाए बाहिरतच्चे सूरमंडले पण्णत्ते । ( सू० १३१× )

'जम्बुद्दीवे' त्ति व्यक्त, नवर उत्तरसूत्रे पञ्चचत्वारिंशद्योजनसहस्राणि त्रीणि च शतानि चतुर्विंशत्यधिकानि षड्विंशतिं च एकषष्टिभागान् योजनस्येति, अत्र पूर्वमण्डलाङ्कात् सान्तरमण्डलविष्कम्भयोजने २ ४८/६१ शोधिते जातं यथोक्तमान, पूर्वमण्डलाङ्का ध्रुवाङ्कस्तत्र सबिम्बविष्कम्भोऽन्तरष्कम्भः शोध्यस्ततः उपपद्यते यथोक्त मानम् ।

उक्तावशिष्टेषु मण्डलेष्वतिदेशमाह—

एवं खलु एएणं उवाएणं पविसमाणे सूरिए तयाणंतराओ मंडलाओ तयाणंतरं मंडलं संकममाणे संकममाणे दो दो जोअणाइं अडयालीसं च एगसट्ठिभाए जोयणस्स एगमेगे मंडले अबाहावुड्ढिं णिवुड्ढेमाणे णिवुड्ढेमाणे सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरइ ।५। (सू० १३१)

'एव खलु' इत्यादि, एवमुक्तरीत्या मण्डलत्रयदर्शितयेत्यर्थः, एतेनोपायेन प्रत्यहोरात्रमेकैकमण्डलमोचनरूपेण प्रविशन् जम्बूद्वीपमिति गम्यम्, सूर्यस्तदनन्तरान्मण्डलात्तदनन्तर मण्डल संक्रामन् २ द्वे द्वे योजने अष्टचत्वारिंशत चैकषष्टिभागान् योजनस्य एकैकस्मिन् मण्डले अबाधावृद्धिं निवर्द्धयन् २ इदं समवायाङ्गवृत्त्यनुसारेणोक्तं यथा वृद्धेरभावो निर्वृद्धि निशब्दस्याभावार्थत्वात् निघरा कन्येत्यादिवत्, ता कुर्वन् निवृद्धयन् २ इदं स्थानाङ्गवृत्त्यनुसारि, सूर्यप्रज्ञप्तिवृत्त्यादौ तु निवेष्टयन् निवेष्टयन् इत्युक्तमस्ति अत्र सर्वत्रापि हापयन् हापयन् इत्यर्थः, सर्वाभ्यन्तरमण्डलमुपसङ्क्रम्य चारं चरतीति, गतमबाधाद्वारम् ।

अथ मण्डलायामादिवृद्धिहानिद्वारम्—

जंबुद्दीवे दीवे सव्वब्भंतरे णं भंते ! सूरमण्डले केवइअं आयामविक्खंभेणं केवइअं परिक्खेवेणं पण्णत्ते ?, गोयमा ! णवणउइं जोअणसहस्साइं छच्च चत्ताले जोअणसए आयामविक्खंभेणं तिण्णि य जोयअणयसहस्साइं पण्णरस य जोअणसहस्साइं एगूणणउइं च जोअणाइं किंचि विसेसाहिआइं परिक्खेवेणं । ( सू० १३२+ )

'जंबुद्दीवे' इत्यादि, जम्बूद्वीपे भदन्त ! द्वीपे सर्वाभ्यन्तरं सूर्यमण्डल कियदायामविष्कम्भाभ्यां कियच्च परिक्षेपेण प्रज्ञप्तम् ? गौतम ! नवनवतिं योजनसहस्राणि षट् च योजनशतानि चत्वारिंशदधिकानि आयामविष्कम्भाभ्या, त्रीणि योजनशतसहस्राणि पञ्चदश च योजनसहस्राण्येकोननवतिं च योजनानि किञ्चिद्विशेषाधिकानि परिक्षेपेण, तत्रायामविष्कम्भयोरुपपत्तिरेवम्-जम्बूद्वीपविष्कम्भादुभयो पार्श्वयो प्रत्येकमशीत्यधिकयोजनशतशोधने यथोक्तं मानम्, तद्यथा-जम्बूद्वीपमानम् १००००० अस्मादशीत्यधिकयोजनशते १८० द्विगुणिते ३६० शोधिते सति जातम् ९९६४० इति, परिक्षेपस्त्वस्यैव राशे 'विक्खम्भवग्गदहगुणे'त्यादिकरणवशादानेतव्य ग्रन्थविस्तरभयान्नात्रोपन्यस्यते, यद्वा-यदेकतो जम्बूद्वीपविष्कम्भादशीत्यधिक योजनशतं यच्चापरतोऽपि तयो त्रयाणा शताना षष्ट्यधिकानाम् ३६० परिरयः एकादश शतान्यष्टात्रिंशदधिकानि ११३८, एतानि जम्बूद्वीपपरिरयात् शोध्यन्ते, ततो यथोक्तं परिक्षेपमानं भवति ।

अथ द्वितीयमण्डले तत्पृच्छा—

अब्भतराणंतरे णं भंते ! सूरमडले केवइअं आयामविक्खंभेणं केवइयं परिक्खेवेणं पण्णत्ते ?, गोयमा ! णवणउइं

जोअणसहस्साइं छच्च पणयाले जोअणसए पणतीसं च एगसट्ठिभाए जोअणस्स आयामविक्खंभेणं तिण्णि जोअणसयसहस्साइं पण्णरस्स य जोयणसहस्साइं एगं सत्तुत्तरं जोअणसयं परिक्खेवेणं पण्णत्ते । ( सू० १३२× )

" अब्भंतराणं ' मित्यादि,अन्वययोजना सुगमा, तात्पर्यार्थस्त्वयम्—सर्वाभ्यन्तरानन्तरं च—द्वितीयं सूर्यमण्डलमायामविष्कम्भाभ्यां नवनवतिं योजनसहस्राणि षट् च योजनशतानि पञ्चचत्वारिंशदधिकानि पञ्चत्रिंशतं चैकषष्टिभागान् योजनस्य ९९६४५ ३५/६१ तथाहि-एकतोऽपि सर्वाभ्यन्तरानन्तरं मण्डलं सर्वाभ्यन्तरमण्डलगतानष्टचत्वारिंशत्संख्यानेकषष्टिभागान् द्वे च योजने अपान्तराले विमुच्य स्थितमपरतोऽपि,तत पञ्च योजनानि पञ्चत्रिंशच्चैकषष्टिभागा योजनस्य पूर्वमण्डलविष्कम्भादस्य मण्डलस्य विष्कम्भे वर्द्धन्ते , अस्य च सर्वाभ्यन्तरानन्तरमण्डलस्य परिक्षेपस्त्रीणि शतसहस्राणि पञ्चदश सहस्राण्येकं च शतं सप्तोत्तरं योजनानाम् ३१५१०७,तथाहि—पूर्वमण्डलादस्य विष्कम्भे पञ्च योजनानि पञ्चत्रिंशच्चैकषष्टिभागा योजनस्य वर्द्धन्ते, पञ्चानां च योजनानां पञ्चत्रिंशत्संख्यैकभागाधिकानां परिरय सप्तदश योजनानि अष्टत्रिंशच्चैकषष्टिभागा, समधिका. योजनस्य पर व्यवहारतो विवक्ष्यन्ते परिपूर्णानि अष्टादश योजनानि, तानि पूर्वमण्डलपरिक्षेपे यदाऽधिकानि प्रक्षिप्यन्ते तदा यथोक्तं द्वितीयमण्डलपरिमाणं स्यात् ।

अथ तृतीयमण्डले तत्पृच्छा—

अब्भंतरच्चे णं भंते ! सूरमंडले केवइअं आयामविक्खंभेणं केवइयं परिक्खेवेणं पण्णत्ते ? , गोयमा ! णवणउइं जोअणसहस्साइं छच्च एकावण्णे जोअणसए णव य एगसट्ठिभाए जोअणस्स आयामविक्खंभेणं तिण्णि य जोअणसयसहस्साइं पण्णरस जोअणसहस्साइं एगं च पणवीसं जोअणसयं परिक्खेवेणं । ( सू० १३२+ )

'अब्भंतरतच्चे ण मित्यादि व्यक्तं नवरमुत्तरसूत्रे नवनवतिं योजनसहस्राणि षट् च एकपञ्चाशानि योजनशतानि नव चैकषष्टिभागान् योजनस्याभ्यन्तरं तृतीयास्य मण्डलमायामविष्कम्भेण. अत्रोपपत्ति पूर्वमण्डलायामविष्कम्भे ९९६४५ योजन ३५/६१ इत्येवंरूपे एतन्मण्डलवृद्धौ ५ योजन ३५/६१ प्रक्षिप्ताया यथोक्तं मानं भवति, परिक्षेपेण च त्रीणि योजनलक्षाणि पञ्चदश योजनसहस्राणि एकं च पञ्चविंशत्यधिकं योजनशतम् । अत्रोपपत्ति —पूर्वमण्डलपरिक्षेपे ३१५१०७ योजनरूपे प्राग्युक्तयुक्त्याऽऽगत अष्टादश १८ योजनरूपाया वृद्धौ प्रक्षिप्ताया यथोक्तं मानं भवति ।

अथोक्तातिरिक्तमण्डलायामादिपरिमानाय लाघवार्थमतिदेशमाह—

एवं खलु एएणं उवाएणं णिक्खममाणे सूरिए तयाणंतराओ मंडलाओ तयाणंतरं मंडलं उवसंकममाणे उवसंकममाणे पंच पंच जोअणाइं पणतीसं च एगसट्ठिभाए जोअणस्स एगमेगे मंडले विक्खंभवुड्ढिं अभिवद्धेमाणे अभिवद्धेमाणे अट्ठारस अट्ठारस जोअणाई परिरयवुड्ढिं अभिवद्धेमाणे अभिवद्धेमाणे सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरइ । ( सू० १३२× )

'एवं खलु एतेण' मित्यादि,एवम्—उक्तरीत्या मण्डलत्रयप्रदर्शितयेत्यर्थ, , एतेन-उक्तप्रकारेण निष्क्रामयन् निष्कामयन् सूर्यस्तदनन्तरात्तदनन्तरं मण्डलं संक्रामन् संक्रामन् पञ्च पञ्च योजनानि पञ्चत्रिंशतं चैकषष्टिभागान् योजनस्यैकैकस्मिन् मण्डले विष्कम्भवृद्धिमभिवर्द्धयन् २ तथा उक्तरीत्यैव अष्टादश-योजनानि परिरयवृद्धिमभिवर्द्धयन् परिरयवृद्धिमभिवर्द्धयन् सर्वबाह्यमण्डलमुपसंक्रम्य चारं चरति ।

अथ प्रकारान्तरेण प्रस्तुतविचारपरिज्ञानाय पश्चानुपूर्व्या पृच्छमाह—

सव्वबाहिरए णं भंते ! सूरमंडले केवइअं आयामविक्खंभेणं केवइअं परिक्खेवेणं पण्णत्ते ? , गोयमा ! एगं जोयणसयसहस्सं छच्च सट्ठे जोअणसए आयामविक्खंभेणं तिण्णि अ जोअणसयसहस्साइं अट्ठारस य सहस्साइं तिण्णि अ पण्णरसुत्तरे जोअणसए परिक्खेवेणं । (सू०१३२×)

' सव्वबाहिरए ' इत्यादि प्रश्नसूत्रं व्यक्तम् , उत्तरसूत्रे एकं योजनलक्षं षट्षष्ट्यधिकानि योजनशतान्यायामविष्कम्भाभ्याम् , उपपत्तिस्तु जम्बूद्वीपो लक्षम् उभयो. पार्श्वयोश्च प्रत्येकं त्रिंशदधिकानि त्रीणि योजनशतानि लवणान्तरमतिक्रम्य परतो वर्त्तमानत्वादस्य इदमेव मानं,त्रीणि योजनलक्षाण्यष्टादश च सहस्राणि त्रीणि च पञ्चदशोत्तराणि योजनशतानि ' व्याख्यानतो विशेषप्रतिपत्ति ' रिति किञ्चिदूनानि परिक्षेपेण भवन्ति , किञ्चिदूनत्वं चात्र परिक्षेपकरणेन स्वयं बोध्यं, संवादश्चात्र विष्कम्भायाममाने लक्षोपरि यानि षष्ट्यधिकानि षट् योजनशतान्युक्तानि तस्य परिरयमानीय तस्य च जम्बूद्वीपपरिरये प्रक्षेपणाद् भवति ।

अथ द्वितीयमण्डले तत्पृच्छा—

बाहिराणंतरे णं भंते ! सूरमंडले केवइअं आयामविक्खंभेणं केवइअं परिक्खेवेणं पण्णत्ते ? , गोयमा ! एगं जोअणसयसहस्सं छच्च चउपण्णे जोअणसए छव्वीसं च एगसट्ठिभागे जोअणस्स आयामविक्खंभेणं तिण्णि अ जोअणसयसहस्साइं अट्ठारस य सहस्साइं दोण्णि य सत्ताणउए जोअणसए परिक्खेवेणं ति । ( सू० १३२+ )

' बाहिराणंतरे णं भंते ! सूरमंडले ' इत्यादि प्रश्न प्राग्वत् , उत्तरसूत्रे गौतम ! एकं योजनलक्षं षट् खलु पञ्चाशानि योजनशतानि षड्विंशतिं चैकषष्टिभागान् योजनस्यायामविष्कम्भाभ्यां भवतीति चेद् सर्वबाह्यमण्डलविष्कम्भात् पञ्चत्रिंशदेकषष्टिभागाधिकपञ्चयोजनेषु शोधितेष्विति , त्रीणि योजनलक्षाण्यष्टादश च सहस्राणि द्वे च सप्तनवतियोजनशते परिक्षेपेण । कथमुपपद्यते इति वदाम , पूर्वमण्डलपरिरयादष्टादशयोजनशोधने सुस्थमिति ।

अथ तृतीयमण्डले तत्पृच्छा—

बाहिरतच्चे णं भंते ! सूरमंडले केवइअं आयामविक्खं-

भेणं केवइयं परिक्खेवेणं पएणत्ते ?, गोयमा ! एगं जोअणसयसहस्सं छच्च अडयाले जोअणसए यावरणं च एगसट्ठिभाए जोअणस्स आयामविक्खंभेणं तिरिण जोअणसयसहस्साइं अट्ठारस य सहस्साइं दोरिण अ अउणासीए जोअणसए परिक्खेवेणं। ( सू० १३२ + )

'बाहिरतच्चे णं' मित्यादि, प्रश्नः पूर्ववत्, उत्तरसूत्रे बाह्यतृतीयं पदं एकं योजनलक्षं चाष्टचत्वारिंशानि योजनशतानि द्वापञ्चाशतं चैकषष्टिभागान् योजनस्यायामविष्कम्भाभ्याम्, युक्तिश्चात्र—अनन्तरपूर्वमण्डलात् पञ्चत्रिंशदेकषष्टिभागाधिकपञ्चयोजनवियोजने साधु भवति, त्रीणि योजनलक्षाण्यष्टादश च सहस्राणि द्वे चैकानाशीते योजनशते परिक्षेपेण, पूर्वमण्डलपरिधेरष्टादशयोजनशोधने यथोक्तं प्रस्तुतमण्डलस्य परिधिमानम्।

अत्रातिदेशमाह—

एवं खलु एएणं उवाएणं पविसमाणे सूरिए तयणंतराओ मंडलाओ तयाणंतरं मंडलं संकममाणे संकममाणे पंच पंच जोअणाइं पणतीसं च एगसट्ठिभाए जोअणस्स एगमेगे मंडले विक्खंभवुड्ढिं णिव्वुड्ढेमाणे णिव्वुड्ढेमाणे अट्ठारस अट्ठारस जोअणाइं परिरयवुड्ढिं णिव्वुड्ढेमाणे णिव्वुड्ढेमाणे सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरइ। ६। ( सू० १३२+ )

'एव खलु एएण' मित्यादि, प्राग्वद्वाच्यम्, व्याख्यानार्थत्वात्। गतमायामविष्कम्भादिवृद्धिहानिद्वारम्, अनेनैव क्रमेण द्वयोः सूर्ययोः परस्परमबाधाद्वारमप्यभ्यन्तरबाह्यमण्डलादिष्ववसेयम्।

सम्प्रति मुहूर्त्तगतिद्वारम्—

जया णं भंते ! सूरिए सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरइ तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छइ ?, गोयमा ! पंच पंच जोअणसहस्साइं दोरिण अ एगावरणे जोअणसए एगूणतीसं च सट्ठिभाए जोअणस्स एगमेगेणं मुहुत्तेणं गच्छइ, तया णं इहगयस्स मणूसस्स सीआलीसाए जोअणसहस्सेहिं दोहि अ तेवट्ठेहिं जोअणसएहिं एगवीसाए अ जोअणस्स सट्ठिभाएहिं सूरिए चक्खुप्फासं हव्वमागच्छइ त्ति, से णिक्खममाणे सूरिए नवं संवच्छरं अयमाणे पढमंसि अहोरत्तंसि सव्वब्भंतराणंतरं मंडलं उवसंकमित्ता चारं चरइ त्ति। ( सू० १३३× )

'जया णं भंते ! सूरिए सव्वब्भतरं' इत्यादि, यदा भगवन् ! सूर्यः सर्वाभ्यन्तरं मण्डलमुपसंक्रम्य चारं चरति इति तदा एकैकेन मुहूर्त्तेन कियत् क्षेत्रं गच्छति ?, गौतम ! पञ्च पञ्च योजनसहस्राणि द्वे चैकपञ्चाशे योजनशते एकोनत्रिंशतं च षष्टिभागान् योजनस्यैकैकेन मुहूर्त्तेन गच्छति, कथमिदमुपपद्यते इति चेत्, उच्यते-इह सर्वमपि मण्डलमेकेनाहोरात्रेण द्वाभ्यां सूर्याभ्यां परिसमाप्यते प्रतिसूर्यं चाहोरात्रगणने परमार्थतो द्वावहोरात्रौ भवतः। द्वयोश्चाहोरात्रयोः षष्टिर्मुहूर्त्तास्ततो मण्डलपरिरयस्य षष्ट्या भागे हृते यल्लभ्यते तन्मुहूर्त्तगतिप्रमाणम्, तथाहि—सर्वाभ्यन्तरमण्डलपरिरयस्त्रीणि लक्षाणि पञ्चदश सहस्राण्येकोननवत्यधिकानि योजनानाम् ३१५०८६, एतेषां षष्ट्या भागे हृते लब्धं यथोक्तं मुहूर्त्तगतिप्रमाणम् ५२५१ $\frac{२९}{६०}$ अथ विनयार्जितमनस्केन प्रज्ञापकेनापृच्छतोऽपि विनेयस्य किञ्चिदधिकं प्रज्ञापनीयमित्याह-'तया णं' इत्यादि सम्बन्धादनुक्तमपि यच्छब्दगर्भितवाक्यमवतारणीयं तेन यदा सूर्य एकेन मुहूर्त्तेन इयत् ५२५१ $\frac{२९}{६०}$ प्रमाणं गच्छति तदा सर्वाभ्यन्तरमण्डलसङ्क्रमणकाले इहगतस्य मनुष्यस्य अत्र जातावेकवचनं ततोऽयमर्थः—इहगतानां भरतक्षेत्रगतानां मनुष्याणां सप्तचत्वारिंशता योजनसहस्रैर्द्वाभ्यां च त्रिषष्टाभ्यां त्रिषष्ट्यधिकाभ्यां योजनशताभ्यामेकविंशत्या च योजनस्य षष्टिभागैरुदयमानः सूर्यश्चक्षुःस्पर्शं—चक्षुर्विषयं हव्वं—शीघ्रमागच्छति, अत्र च स्पर्शशब्दो नेन्द्रियार्थसन्निकर्षपरश्चक्षुषोऽप्राप्यकारित्वेन तदसम्भवादिति, कथमेतदुपपत्तिरिति चेत्, उच्यते—इह दिवसस्यार्द्धेन यावन्मात्रं क्षेत्रं व्याप्यते तावति व्यवस्थितः सूर्य उपलभ्यते, स एव लोके उदयमान इति व्यवह्रियते, सर्वाभ्यन्तरमण्डले दिवसप्रमाणमष्टादशमुहूर्त्तास्तेषामर्द्धे नव मुहूर्त्ताः एकैकस्मिंश्च मुहूर्त्ते सर्वाभ्यन्तरे मण्डले चारं चरन् पञ्च योजनसहस्राणि द्वे च योजनशते एकपञ्चाशदधिके एकोनत्रिंशतं च षष्टिभागान् योजनस्य गच्छति, एतावन्मुहूर्त्तगतिपरिमाणं नवभिर्मुहूर्त्तैर्गुण्यते ततो भवति यथोक्तं दृष्टिपथप्राप्ततानाविषयपरिमाणमिति, एवं सर्वेष्वपि मण्डलेषु स्वस्वमुहूर्त्तगतौ स्वस्वदिवसार्द्धगतमुहूर्त्तराशिना गुणितायां दृष्टिपथप्राप्तता भवति, दृष्टिपथप्राप्तता चक्षुःस्पर्शः पुरुषच्छाया इत्येकार्थाः। सा च पूर्वतोऽपरतश्च समप्रमाणैव भवतीति द्विगुणिता तापक्षेत्रमुदयास्तान्तरमित्यादिपर्यायाः, इदं च सर्वबाह्यानन्तरमण्डलात् पश्चानुपूर्व्या गण्यमानं त्र्यशीत्यधिकशततमं, प्रतिमण्डलं चाहोरात्रगणनादहोरात्रोऽपि त्र्यशीत्यधिकशततमस्तेनायमुत्तरायणस्य चरमो दिवसः, अयमेव च सूर्यसंवत्सरस्य पर्यन्तदिवस उत्तरायणपर्यवसानकत्वात् संवत्सरस्येति। अथ नवसंवत्सरप्रारम्भप्रकारप्रज्ञापनाय सूत्रं प्रारभ्यते-'से णिक्खममाणे' इत्यादि, अथाभ्यन्तरान्मण्डलान्निष्क्रामन् जम्बूद्वीपान्तः प्रवेशेऽशीत्यधिकयोजनशतप्रमाणे क्षेत्रे चरमाकाशप्रदेशस्पर्शनानन्तरं द्वितीयसमये द्वितीयमण्डलाभिमुखं प्रसर्पन्नित्यर्थः, सूर्यो नवम्—आगामिकालभाविनं संवत्सरमयमानः २—आददानः प्रथमेऽहोरात्रे सर्वाभ्यन्तरानन्तरं मण्डलमुपसंक्रम्य चारं चरति, एष चाहोरात्रो दक्षिणायनस्याद्यः संवत्सरस्यापि च दक्षिणायनादिकत्वात् संवत्सरस्य, अत्र चाधिकारे समवायाङ्गसूर्यप्रज्ञप्तिचन्द्रप्रज्ञप्तिसूत्रादर्शे प्रस्तुतसूत्रादर्शेषु च 'अयमाणे अयमाणे' इत्यस्य स्थाने 'अयमीणे' इति पाठो दृश्यते तेन यदि स समूलस्तदा आर्षत्वादिहेतुना साधुरेव, 'अयमाणे' इति तु लक्षणसिद्ध, अर्थः पुनस्तथापि स एवेति। जं० ७ वक्ष०।

' मण्डलानां विष्कम्भो वक्तव्य. ततस्तद्विषयं प्रश्नसूत्रमाह—

ता सव्वा वि णं मंडलवया केवतियं बाहल्लेणं केवतियं आयामविक्खंभेणं केवतियं परिक्खेवेणं आहितातिवदेज्जा ?, तत्थ खलु इमाश्रो तिण्णि पडिवत्तीओ पण्णत्ताओ, तत्थेगे एवमाहंसु—ता सव्वा वि णं मंडलवता जोयणं बाहल्लेणं एगं जोयणसहस्सं एगं तेत्तीसं जोयणसतं आयामविक्खंभेणं तिण्णि जोयणसहस्साइं तिण्णि य नवणउए जोयणसते परिक्खेवेणं पण्णत्ते, एगे एवमाहंसु १, एगे पुण एवमाहंसु—ता सव्वा वि णं मंडलवता जोयणं बाहल्लेणं एगं जोयणसहस्सं एगं च चउत्तीसं जोयणसयं आयामविक्खंभेणं तिण्णि जोयणसहस्साइं जोयणसयं आयामविक्खंभेणं तिण्णि जोयणसहस्साइं चत्तारि बिउत्तरं जोयणसते परिक्खेवेणं पण्णत्त एगे एवमाहंसु २, एगे पुण एवमाहंसु—ता जोयणं बाहल्लेणं एगं जोयणसहस्सं एगं च पणतीसं जोयणसतं आयामविक्खंभेणं तिन्नि जोयणसहस्साइं चत्तारि पचुत्तरे जोयणसते परिक्खेवेणं पण्णत्ता, एगे एवमाहंसु ३। वयं पुण एवं वयामो ता सव्वा वि मंडलवता अडयालीसं एगट्ठिभागे जोयणस्स बाहल्लेणं अणियता आयामविक्खेभेणं परिक्खेवेणं आहिता ति वदेज्जा, तत्थ णं को हेउ त्ति वदेज्जा ?, ता अयं णं जंबुद्दीवे दीवे०जाव परिक्खेवेणं, ता जया णं सूरिए सव्वब्भतरं मंडलं उवसंकमित्ता चारं चरति तया णं सा मण्डलवता अडयालीसं एगट्ठिभागे जोयणस्स बाहल्लेणं णवणउइजोयणसहस्साइं छच्च चत्ताले जोयणसते आयामविक्खंभेणं तिण्णि जोयणसतसहस्साइं पण्णरसजोयणसहस्साइं एगूणणउतिं जोयणाइं किंचि विसेसाहिए परिक्खेवेणं तता णं उत्तमकट्ठपत्ते उक्कोसए अट्ठारसमुहुत्ते दिवसे भवति, जहण्णिया दुवालसमुहुत्ता राई भवति, से णिक्खममाणे सूरिए णवं संवच्छरं अयमाणे पढमंसि अहोरत्तंसि अब्भितराणंतरं मंडलं उवसंकमित्ता चारं चरति, ता जया णं सूरिए अब्भितराणंतरं मंडलं उवसंकमित्ता चारं चरति तदा णं सा मंडलवता अडयालीसं एगट्ठिभागे जोयणस्स बाहल्लेणं णवणवइजोयणसहस्साइं छच्च पणताले जोयणसते पणतीसं च एगट्ठिभागे जोयणस्स आयामविक्खंभेणं तिण्णि जोयणसतसहस्साइं पन्नरसं च सहस्साइं एगं चउत्तरं जोयणसतं किंचि विसेसूणं परिक्खेवेणं तदा णं दिवसरातिप्पमाणं तहेव। से णिक्खममाणे सूरिए दोच्चंसि अहोरत्तंसि अब्भितरं तच्चं मंडलं उवसंकमित्ता चारं चरति, ता जया णं सूरिए अब्भितरं तच्चं मंडलं उवसंकमित्ता चारं चरति तया णं सा मंडलवता अडयालीसं एगट्ठिभागे जोयणस्स बाहल्लेणं णवणवतिजोयणसहस्साइं छच्च एकावण्णे जोयणसते णव य एगट्ठिभागा जोयणस्स आयामविक्खंभेणं तिण्णि जोयणसयसहस्साइं पन्नरस य सहस्साइं एगं च पणवीसं जोयणसयं परिक्खेवेणं पण्णत्ता, तता णं दिवसराई तहेव।

एवं खलु एएणं णएणं निक्खममाणे सूरिए तताऽणंतरातो तदाणंतरं मंडलतो मंडलं उवसंकममाणे उवसंकममाणे जोयणाइं पणतीसं च एगट्ठिभागे जोयणस्स एगमेगे मंडले विक्खंभवुड्ढिं अभिवड्ढेमाणे अभिवड्ढेमाणे अट्ठारस अट्ठारस जोयणाइं परिरयवुड्ढिं अभिवड्ढेमाणे अभिवड्ढेमाणे सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरति, ता जया णं सूरिए सव्वबाहिरमंडलं उवसंकमित्ता चारं चरति तता णं सा मंडलवता अडतालीसं एगट्ठिभागा जोयणसयसहस्सं छच्च सट्ठे जोयणसते आयामविक्खंभेणं तिन्नि जोयणसयसहस्साइं अट्ठारस सहस्साइं तिण्णि य पण्णरसुत्तरे जोयणसत्ते परिक्खेवेणं तदा णं उक्कोसिया अट्ठारसमुहुत्ता राई भवति जहण्णए दुवालसमुहुत्ते दिवसे भवति, एस णं पढमे छम्मासे एस णं पढमस्स छम्मासस्स पज्जवसाणे। से पविसमाणे सूरिए दोच्चं छम्मासं अयमाणे पढमंसि अहोरत्तंसि बाहिराणंतरं मंडलं उवसंकमित्ता चारं चरति , ता जया णं सूरिए बाहिराणंतरं मंडलं उवसंकमित्ता चारं चरति तता णं सा मंडलवता अडतालीसं एगट्ठिभागे जोयणस्स बाहल्लेणं एगं जोयणसयसहस्सं छच्च चउपण्णे जोयणसते छव्वीसं च एगट्ठिभागे जोयणस्स आयामविक्खंभेणं तिन्नि जोयणसतसहस्साइं अट्ठारसमहस्साइं दोण्णि य सत्ताणउते जोयणसते परिक्खेवेणं पण्णत्ता, तता णं राइंदियं तहेव, से पविसमाणे सूरिए दोच्चं अहोरत्तंसि बाहिरं तच्चं मंडलं उवसंकमित्ता चारं चरति , ता जया णं सूरिए बाहिरं तच्चं मंडलं उवसंकमित्ता चारं चरति, तता णं सा मंडलवता अडयालीसं एगट्ठिभागे जोयणस्स बाहल्लेणं एगं जोयणसतसहस्सं छच्च अडयाले जोयणसए बावण्णं च एगट्ठिभागे जोयणस्स आयामविक्खंभेणं तिण्णि जोयणसतसहस्साइं अट्ठारसमहस्साइं दोण्णि अउणासीतं जोयणसते परिक्खेवेणं पण्णत्ते, दिवसराई तहेव। एवं खलु एतेणुवाएणं पविसमाणे सूरिए तताऽणंतरातो तदाणंतरं मंडलातो मंडलं संकममाणे संकममाणे पंच पंच जोयणाइं

पणतीसं च एगट्ठिभागे जोयणस्स एगमेगे मंडले विक्खंभवुड्ढिं णिवुड्ढेमाणे णिवुड्ढेमाणे अट्ठारसजोयणाइं परिरयवुड्ढिं णिवुड्ढेमाणे णिवुड्ढेमाणे सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरति, ता जता णं सूरिए सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरति, तता णं सा मंडलवता अडयालीसं एगट्ठिभागे जोयणस्स बाहल्लेणं णवणउतिं जोयणसहस्साइं छच चत्ताले जोयणसए आयामविक्खंभेणं तिण्णि जोयणसयसहस्साइं पणरस य सहस्साइं अउणाउतिं च जोयणाइं किंचि विसेसाहियाइं परिक्खेवेणं पण्णत्ते, तता णं उत्तमकट्ठपत्ते उक्कोसए अट्ठारसमुहुत्ते दिवसे भवति, जहण्णिया दुवालसमुहुत्ता राई भवति, एस णं दोच्चस्स छम्मासस्स पज्जवसाणे एस णं आदिच्चे संवच्छरे एस णं आदिच्चस्स संवच्छरस्स पज्जवसाणे, ता सव्वावि णं मंडलवता अडयालीसं एगट्ठिभागे जोयणस्स बाहल्लेणं, सव्वावि णं मंडलंतरिया दो जोयणाइं विक्खंभेणं, एस णं अद्धा तेसीयसतपडुप्पण्णो पंचदसुत्तरे जोयणसते आहिता ति वदेज्जा, ता अब्भिंतरातो मंडलवताओ बाहिरं मंडलवतं बाहिराओ वा अब्भिंतरं मंडलवतं एस णं अद्धा केवतियं आहिता ति वदेज्जा ? ता पंचदसुत्तरजोयणसते आहिता ति वदेज्जा, अब्भिंतराते मंडलवताते बाहिरा मंडलवया बाहिराओ मंडलतातो अब्भिंतरा मंडलवता एस ण अद्धा केवतियं आहिता ति वदेज्जा ?, ता पंचदसुत्तरे जोयणसते अडतालीसं च एगट्ठिभागे जोयणस्स आहिता वदेज्जा, ता अब्भंतरातो मंडलवतातो बाहिरमंडलवता बाहिरावो मं० तो अब्भंतरमंडलवता एस णं अद्धाकेवतियं आहिता ति वदेज्जा ?, ता पंचणउत्तरे जोयणसते तेरस य एगट्ठिभागे जोयणस्स आहिता ति वदेज्जा, अब्भिंतरा ते मंडलवताए बाहिरा मंडलवया बाहिराते मंडलवताते अब्भंतरमंडलवया, एस णं अद्धा केवतियं आहिता ति वदेज्जा ?, ता पंचदसुत्तरे जोयणसए आहिय त्ति वदेज्जा । ( सू० २० )

'ता सव्वा वि णं मंडलवया' इत्यादि 'ता' इति पूर्ववत्, सर्वाण्यपि मण्डलपदानि मण्डलरूपाणि पदानि मण्डलपदानि सूर्यमण्डलस्थानानीत्यर्थः कियन्मात्र बाहल्येन कियदायामविष्कम्भाभ्यां कियत्परिक्षेपेण—परिधिना आख्यातानि इति वदेत् 'सूत्र स्त्रीत्वनिर्देशः प्राकृतत्वात्, प्राकृते हि लिङ्गं व्यभिचारि, यदाह पाणिनिः—स्वप्राकृतलक्षणे 'लिङ्गं व्यभिचार्यपि' इति, एवं भगवता गौतमेन प्रश्ने कृते सति भगवानतद्विषयपरतीर्थिकप्रतिपत्तीनां मिथ्याभावोपदर्शनाय प्रथमतस्ता एवोपन्यस्यति—'तत्थ खलु' इत्यादि, तत्र मण्डलबाहल्यादिविचारविषये खल्विमास्तिस्रः प्रतिपत्तयः प्रज्ञप्ताः, तद्यथा—तत्र तेषां त्रयाणां परतीर्थिकानां मध्ये एके तीर्थान्तरीया एवमाहुः—'ता' इति प्राग्वत्, सर्वाण्यपि मण्डलपदानि—सूर्यमण्डलानि 'जोयण बाहल्लेणं' ति-प्रत्येकं योजनमेकं बाहल्येन—पिण्डेन एकं योजनसहस्रमेकं च त्रयस्त्रिंश—त्रयस्त्रिंशदधिकं योजनशतम्, 'आयामविक्खंभेणं' ति आयामश्च विष्कम्भश्च आयामविष्कम्भं समाहारो द्वन्द्वस्तेन प्रत्येकमायामेन विष्कम्भेन चेत्यर्थः, त्रीणि योजनसहस्राणि त्रीणि च नवनवतानि योजनशतानि परिक्षेपेन प्रज्ञप्तानि । इह च येषां तीर्थान्तरीयाणां मतेन मण्डलस्यायामविष्कम्भमेकं योजनसहस्रमेकं योजनशतं च त्रयस्त्रिंशदधिकमायामविष्कम्भाभ्यां ते परिरयपरिमाणं वृत्तपरिमाणात् त्रिगुणमेव परिपूर्णमिच्छन्ति, न विशेषाधिकमतस्त्रीणि योजनसहस्राणि त्रीणि शतानि नवनवतानीत्युक्तम् । तथाहि—सहस्रस्य त्रीणि सहस्राणि शतस्य त्रीणि शतानि त्रयस्त्रिंशतश्च नवनवतिरिति, इदं परिरयपरिमाणं 'विक्खंभवग्गदहगुणकरणीवट्टस्स परिरओ होइ' इति । परिरयगणितेन व्यभिचारि, तेन हि परिरयपरिमाणानयने त्रीणि योजनसहस्राणि पञ्चशतानि द्व्यशीत्यधिकानि किञ्चिन्न्यूनमधिकान्यागच्छन्ति, तथाहि-एकं योजनसहस्रमेकं च योजनशतं त्रयस्त्रिंशदधिकमित्येकादशयोजनशतानि त्रयस्त्रिंशदधिकानि ११३३, एतेषां वर्गो विधीयते,जात एकको द्विकोऽष्टकस्त्रिकः षट्कोऽष्टको नवक १२८३६८९, ततो दशभिर्गुणितेन जातमेकमधिकं शून्यम् १२८३६८९०, एतेषां वर्गमूलानयने आगच्छन्ति यथोक्तं परिरयपरिमाणमनन्तमेतेन परिरयपरिमाणं व्यभिचारि, एवमुत्तरमपि मतद्वयं परिभावनीयम्, अत्रैव प्रथममते उपसंहार एगे एवमाहंसु' १, एके पुनरेवमाहुः—सर्वाण्यपि सूर्यमण्डलपदानि प्रत्येकमेकं योजनं बाहल्येन एकं योजनसहस्रमेकं च योजनशतं चतुस्त्रिंशं चतुस्त्रिंशदधिकमायामविष्कम्भाभ्यां ११३४ त्रीणि योजनसहस्राणि चत्वारि योजनशतानि द्व्युत्तराणि ३४०२ परिक्षेपेन । तथाहि—एतेषामपि मतेन विष्कम्भपरिमाणात् परिरयपरिमाणं परिपूर्णत्रिगुणरूपं, तत सहस्रस्य त्रीणि सहस्राणि शतस्य त्रीणि शतानि चतुस्त्रिंशतो द्व्युत्तरं शतमिति । अत्रैवोपसंहारमाह—'एगे एवमाहंसु' एके पुनरेवमाहुः—सर्वाण्यपि मण्डलपदानि—सूर्यमण्डलानि प्रत्येकमेकं योजनं बाहल्येन एकं योजनसहस्रमेकं च योजनशतं पञ्चत्रिंशं-पञ्चत्रिंशदधिकमायामविष्कम्भाभ्याम् ११३५ त्रीणि योजनसहस्राणि चत्वारि योजनशतानि पञ्चोत्तराणि ३४०५ परिक्षेपेन, तथाहि—एकस्य योजनसहस्रस्य त्रीणि योजनसहस्राणि शतस्य त्रीणि शतानि पञ्चत्रिंशतः पञ्चोत्तरं शतमिति, एतानि त्रीण्यपि मतानि मिथ्यारूपाणि परिरयपरिमाणमधिकृत्य व्यभिचारात्, अतो भगवान् तेभ्यः पृथक् स्वमतमुपदर्शयति-'वयं पुण' इत्यादि, वयं पुनरेवं—वक्ष्यमाणप्रकारेण वदामः, तमेव प्रकारमाह-'ता सव्वावी' त्यादि, 'ता' इति पूर्ववत् सर्वाण्यपि मण्डलपदानि-सूर्यमण्डलानि प्रत्येकं बाहल्यान्ताष्टाचत्वारिंशदेकषष्टिभागा योजनस्य आयामविष्कम्भेन परिक्षेपेण-आयामविष्कम्भपरिक्षेपं पुनरनियतानि आख्यातानि, कस्यापि मण्डलस्य कियान् आयामो विष्कम्भः परिक्षे-

पश्चेति भाव इति स्वशिष्येभ्यो वदेत् , एवमुक्ते भगवान् गौतम. पृच्छति–' तत्थ णं को हेऊ इति वएज्जा ' तत्र–मण्डलपदानामायामविष्कम्भपरिक्षेपाऽनियतत्वे को हेतु.–का उपपत्तिरिति वदेत् ,अत्र भगवानाह–'ता अयन्न मित्यादि, इदं जम्बूद्वीपवाक्यं पूर्ववत् परिपूर्णं स्वय परिभावनीयं व्याख्यानीयं च, 'ता जया णं ' मित्यादि, तत्र यदा-णमिति वाक्यालङ्कारे सूर्य. सर्वाभ्यन्तरं मण्डलमुपसंक्रम्य चारं चरति तदा तन्मण्डलपदं, सूत्रे स्त्रीत्वनिर्देशः प्राकृतत्वाद् , बाहल्येनाष्टाचत्वारिंशदेकषष्टिभागा योजनस्य ज्ञातव्यम् , आयामविष्कम्भाभ्यां नवनवतियोजनसहस्राणि षट्शतानि चत्वारिंशदधिकानि ६६६४०, तथाहि-एकतोऽपि सर्वाभ्यन्तरमण्डलमशीत्यधिकं योजनशत जम्बूद्वीपमवगाह्य स्थितमपरतोऽपि, ततोऽशीत्यधिकं योजनशतं द्वाभ्यां गुण्यते , जातानि त्रीणि शतानि षष्ट्यधिकानि ३६०, एतानि जम्बूद्वीपविष्कम्भपरिमाणाल्लक्षरूपात् शोध्यन्ते, ततो यथोक्तमायामविष्कम्भपरिमाणं भवति,त्रीणि योजनशतसहस्राणि पञ्चदशसहस्राणि एकोननवत्यधिकानि३१५०८९ परिक्षेपत', तथाहि-तस्य सर्वाभ्यन्तरस्य मण्डलस्य विष्कम्भो नवनवतियोजनसहस्राणि षट्शतानि चत्वारिंशदधिकानि६६६४०, एतेषां वर्गो विधीयते,जातो नवको नवको द्विकोऽष्टक एकको द्विको नवक. षट्को द्वे च शून्ये ९९२८१२९६००, ततो दशभिर्गुणने जातमेकमधिकं शून्यम्९९२८१२९६००० अस्य वर्गमूलानयनेन लब्धं यथोक्तं परिरयप्रमाणं,शेषं तिष्ठति द्विक एकको ऽष्टक. शून्यं सप्तको नवक २१८०७९ एतत्त्यक्तम् , ' तया णं ' मित्यादिना रात्रिन्दिवपरिमाणं सुगमम् ।' से निक्खममाणे' इत्यादि. स सूर्य सर्वाभ्यन्तरान्मण्डलात्प्रागुक्तप्रकारेण निष्क्रामन् नवं संवत्सरमाददानो नवस्य संवत्सरस्य प्रथमेऽहोरात्रे सर्वाभ्यन्तरानन्तरं द्वितीयं मण्डलमुपसंक्रम्य चारं चरति तत्र यदा सर्वाभ्यन्तरानन्तरं द्वितीयं मण्डलमुपसंक्रम्य चारं चरति तदा तन्मण्डलपदमष्टाचत्वारिंशदेकषष्टिभागा योजनस्य बाहल्येन , नवनवतियोजनसहस्राणि षट् शतानि पञ्चचत्वारिंशदधिकानि पञ्चत्रिंशच्चैकषष्टिभागा योजनस्यायामविष्कम्भाभ्यां तथाहि-एकोऽपि सूर्य सर्वाभ्यन्तरमण्डलगतानष्टाचत्वारिंशतमेकषष्टिभागान् योजनस्यापरे च द्वे योजने बहिरवगाह्य द्वितीये मण्डले चारं चरति,द्वितीयोऽपि, ततो द्वयोर्योजनयोरष्टाचत्वारिंशतश्चैकषष्टिभागानां योजनस्य द्वाभ्यां गुणने पञ्च योजनानि पञ्चत्रिंशच्चैकषष्टिभागा योजनस्येति भवति, एतत्प्रथममण्डलविष्कम्भपरिमाणेऽधिकत्वेन प्रक्षिप्यते ततो भवति यथोक्तं द्वितीयमण्डलविष्कम्भायामपरिमाणमिति । तत्र त्रीणि योजनशतसहस्राणि पञ्चदश सहस्राणि एकं च सप्तोत्तरं योजनशतं किञ्चिद्विशेषाधिकं परिरयेण प्रज्ञप्तम् ,तथाहि-पूर्वमण्डलविष्कम्भायामपरिमाणादस्य मण्डलस्य विष्कम्भायामपरिमाणे पञ्च योजनानि पञ्चत्रिंशच्चैकषष्टिभागा योजनस्याधिकत्वेन प्राप्यन्ते, ततोऽस्य राशे. पृथक् परिरयपरिमाणमानेतव्यम् , तत्र पञ्च योजनान्येकषष्टिभागकरणार्थमेकषष्ट्या गुण्यन्ते, जातानि त्रीणि शतानि पञ्चोत्तराणि ३०५, एतेषां मध्ये उपरितना. पञ्चत्रिंशदेकषष्टिभागा प्रक्षिप्यन्ते , जातानि त्रीणि शतानि चत्वारिंशदधिकानि ३४० , एतेषां वर्गो विधीयते , वर्गयित्वा च दशभिर्गुणनात् ततो जात एकक एककः पञ्चक षट्क त्रीणि शून्यानि ११५६००० , तत एषां वर्गमूलानयने लब्धानि दश शतानि पञ्चसप्तत्यधिकानि १०७५ , एतेषां योजनाऽऽनयनार्थमेकषष्ट्या भागे हृते लब्धानि सप्तदश योजनानि अष्टत्रिंशच्चैकषष्टिभागा योजनस्य $17\frac{38}{61}$ एतत्पूर्वमण्डलपरिरयपरिमाणेऽधिकत्वेन प्रक्षिप्यते ; ततो यथोक्तमधिकृतमण्डलपरिरयपरिमाणं भवति किञ्चिद्विशेषोनता च किञ्चिदूनत्रयोविंशत्या एकषष्टिभागैरूनता द्रष्टव्या ,' तया णं दिवसराइप्पमाणं तह चेव ' तदा-द्वितीयमण्डलचारचरणकाले दिवसरात्रिप्रमाणं तथैव-प्राग्वत् ज्ञातव्यम् , तच्चैवम्–' तया णं अट्ठारसमुहुत्ते दिवसे हवइ दोहिं एगट्ठिभागमुहुत्तेहिं ऊणे दुवालसमुहुत्ता राई भवति दोहिं एगट्ठिभागमुहुत्तेहिं अहिया , से णिक्खममाणे ' इत्यादि , तत. सूर्यो द्वितीयस्मान्मण्डलादुक्तप्रकारेण निष्क्रामन् नवसंवत्सरसत्के द्वितीयेऽहोरात्रे ' अब्भिंतरं तच्च' ति-सर्वाभ्यन्तरान्मण्डलात्तृतीयं मण्डलमुपसंक्रम्य चारं चरति , ' ता जया णं ' मित्यादि , ततो यदा सूर्य. सर्वाभ्यन्तरान्मण्डलात्तृतीयं मण्डलमुपसंक्रम्य चारं चरति तदा तत्तृतीयं मण्डलपदम् अष्टाचत्वारिंशदेकषष्टिभागा योजनस्य बाहल्येन नवनवतियोजनसहस्राणि षट् योजनशतान्येकपञ्चाशदधिकानि नव चैकषष्टिभागा योजनस्य $99651\frac{9}{61}$ आयामविष्कम्भेन-आयामविष्कम्भाभ्यां. तथाहि-प्रागिवात्रापि पूर्वमण्डलविष्कम्भायामपरिमाणात् पञ्च योजनानि पञ्चत्रिंशच्चैकषष्टिभागा योजनस्याधिकत्वेन प्राप्यन्ते, ततो यथोक्तमायामविष्कम्भपरिमाणं भवति त्रीणि योजनशतसहस्राणि पञ्चदश सहस्राणि एकं च पञ्चविंशत्यधिकं योजनशतं परिक्षेपेण प्रज्ञप्तं , तथाहि-पूर्वमण्डलादस्य विष्कम्भे पञ्च योजनानि पञ्चत्रिंशच्चैकषष्टिभागा योजनस्याधिकत्वेन प्राप्यन्ते , ततो यथोक्तमत्रायामविष्कम्भपरिमाणं भवति , तस्य च पृथक् परिरयपरिमाणं सप्तदश योजनानि अष्टात्रिंशच्च एकषष्टिभागा योजनस्य , एतन्निश्चयनयमतेन, परं सूत्रकृता व्यवहारनयमतमवलम्ब्य परिपूर्णान्यष्टादश योजनानि विवक्षितानि , व्यवहारनयमतेन हि लोके किञ्चिदूनमपि परिपूर्णं विवदते , तथा यदपि पूर्वमण्डलपरिरयपरिमाणे किञ्चिदूनत्वमुक्तं तदपि व्यवहारनयमतेन परिपूर्णमिव विवक्ष्यते , तत पूर्वमण्डलपरिरयपरिमाणे अष्टादश योजनान्यधिकत्वेन प्रक्षिप्यन्ते इति भवति यथोक्तमधिकृतमण्डलपरिरयपरिमाणम् तया णं दिवसराई तहेव ' इति-तदा तृतीयमण्डलचारचरणकाले दिवसरात्री तथैव प्रागिव वक्तव्ये , तच्चैवम्-' तया णं अट्ठारसमुहुत्ते दिवसे भवति चउहिं एगट्ठिभागमुहुत्तेहिं ऊणे दुवालसमुहुत्ता राई भवति चउहिं एगट्ठिभागमुहुत्तेहिं अहिया ' 'एवं खलु' इत्यादि, एवम्—उक्तप्रकारेण खलु निश्चितमेतेनोपायेन प्रत्यहोरात्रमेकैकमण्डलमोचनरूपेण निष्क्रामन् सूर्यस्तदनन्तरान्मण्डलात्तदनन्तरं मण्डलं संक्रामन् २ एकैकस्मिन् मण्डले पञ्च पञ्च योजनानि पञ्चत्रिंशच्चैकषष्टिभागा योजनस्येत्येवं परिमाणां विष्कम्भवृद्धिमभिवर्द्धयन्नभिवर्द्धयन् एकैकस्मिन्नतन्मण्डले अष्टादश अष्टादश योजनानि प-

रियवृद्धिमभिवर्द्धयन्नभिवर्द्धयन् इहाष्टादश अष्टादशेति व्यवहारत उक्तम्, निश्चयनयमतेन तु सप्तदश सप्तदश योजनानि अष्टात्रिंशत् चैकषष्टिभागा योजनस्येति द्रष्टव्यम्, एतच्च प्रागेव भावितं, न चैतत्स्वमनीषिकाविजृम्भितं, यत उक्तं तद्विचारप्रक्रमे एव करणविभावनायाम्—'सत्तरस जोयणाइं अट्ठतीसं च एगट्ठिभागा १७३८/६१ एयं तिच्छएण, ववहारेण पुण अट्ठारस जोयणाइं' इति, प्रथमषण्मासपर्यवसानभूते त्र्यशीत्यधिकशततमे अहोरात्रे सर्वबाह्यं मण्डलमुपसंक्रम्य चारं चरति, 'ता जया णं' मित्यादि, तत्र यदा णमिति वाक्यालङ्कारे, सूर्यः सर्वबाह्यमण्डलमुपसंक्रम्य चारं चरति तदा तत्सर्वबाह्यं मण्डलपदम् अष्टचत्वारिंशदेकषष्टिभागा योजनस्य बाहल्येन एकं योजनशतसहस्रं षट् शतानि षष्ट्यधिकानि १००६६० आयामविष्कम्भेन—आयामविष्कम्भाभ्याम्, तथाहि-सर्वाभ्यन्तरान्मण्डलात्परतः सर्वबाह्यं मण्डलं पर्यवसानीकृत्य त्र्यशीत्यधिकं मण्डलशतं भवति, मण्डले मण्डले च विष्कम्भे विष्कम्भे परिवर्द्धन्ते पञ्च पञ्च योजनानि पञ्चत्रिंशच्चैकषष्टिभागा योजनस्य, ततः पञ्च योजनानि त्र्यशीत्यधिकेन शतेन गुण्यन्ते, जातानि नव शतानि पञ्चदशोत्तराणि ९१५, येऽपि च पञ्चत्रिंशदेकषष्टिभागा योजनस्य तेऽपि त्र्यशीत्यधिकेन शतेन गुण्यन्ते जातानि चतुःषष्टिशतानि पञ्चोत्तराणि ६४०५, तेषामेकषष्ट्या भागे हृते लब्धं पञ्चोत्तरं योजनशतम् १०५, एतत्पूर्वस्मिन् राशौ प्रक्षिप्यते, जातानि दश शतानि विंशत्यधिकानि १०२०, एतानि सर्वाभ्यन्तरमण्डलविष्कम्भायामपरिमाणे अधिकत्वेन प्रक्षिप्यन्ते, ततो यथोक्तं सर्वबाह्यमण्डलगतविष्कम्भायामपरिमाणं भवति, तथा त्रीणि योजनशतसहस्राणि अष्टादश सहस्राणि त्रीणि शतानि पञ्चदशोत्तराणि ३१८३१५ परिक्षेपेण, नवरं पञ्चदशोत्तराणि किञ्चिन्न्यूनानि द्रष्टव्यानि, तथाहि—अस्य मण्डलस्य विष्कम्भो योजनलक्षं षट् योजनशतानि षष्ट्यधिकानि १००६६०, अस्य वर्गो विधीयते, जात एककः शून्यमेककस्त्रिको द्विकश्चतुष्कस्त्रिकः पञ्चकः षट्को द्वे शून्ये १०१३२४३५६००, ततो दशभिर्गुणने जातमेकमधिकं शून्यम् १०१३२४३५६०००, अस्य वर्गमूलानयने लब्धानि त्रीणि योजनशतसहस्राणि अष्टादश सहस्राणि त्रीणि शतानि चतुर्दशोत्तराणि ३१८३१४, शेषमुद्वरति, पञ्चकः पञ्चकस्त्रिकश्चतुष्कः शून्यं चतुष्कः ५५३४०४, छेदराशिः षट्कस्त्रिकः षट्कः षट्को द्विकोऽष्टकः ६३६६२८, तत एतेन पञ्चदशं योजनं किञ्चिदून किल लभ्यते इति व्यवहारतः सूत्रकृता परिपूर्णं विवक्षित्वा पञ्चदशोत्तराणीत्युक्तम् । अथवा-मण्डले मण्डले पूर्वपूर्वमण्डलात्परिरयवृद्धौ सप्तदश सप्तदश योजनानि अष्टात्रिंशच्चैकषष्टिभागा योजनस्य लभ्यन्ते, ततः सप्तदश योजनानि त्र्यशीत्यधिकेन शतेन गुण्यन्ते, जातान्येकत्रिंशच्छतान्येकादशोत्तराणि ३१११, येऽपि चाष्टात्रिंशदेकषष्टिभागास्तेऽपि त्र्यशीत्यधिकेन शतेन गुण्यन्ते, जातान्येकोनसप्ततिशतानि चतुष्पञ्चाशदधिकानि ६९५४, तेषां योजनानयनार्थमेकषष्ट्या भागो ह्रियते, लब्धं चतुर्दशोत्तरं योजनशतम् ११४ तच्च पूर्वराशौ प्रक्षिप्यते जातानि द्वात्रिंशच्छतानि पञ्चविंशत्यधिकानि ३२२५, एतानि सर्वाभ्यन्तरमण्डलपरिरयपरिमाणे त्रीणि लक्षाणि पञ्चदश सहस्राणि नवाशीत्यधिकानि ३१५०८९ इत्येवंरूपेऽधिकत्वेन प्रक्षिप्यन्ते, जातानि त्रीणि लक्षाणि अष्टादश सहस्राणि त्रीणि शतानि चतुर्दशोत्तराणि ३१८३१४, तथा सप्तदशानां योजनानाम् अष्टात्रिंशतश्चैकषष्टिभागानामुपरि यानि त्रीणि शतानि पञ्चसप्तत्यधिकानि ३७५ शेषाण्युद्वरन्ति तानि त्र्यशीत्यधिकेन शतेन गुण्यन्ते जातान्यष्टषष्टिसहस्राणि षट् शतानि पञ्चविंशत्यधिकानि ६८६२५, तेषां छेदराशिना पञ्चाशदधिकैकविंशतिशतरूपेण २१५०, भागो ह्रियते, लब्धा एकत्रिंशदेकषष्टिभागा योजनस्य, शेषं स्तोकत्वात् त्यक्तं, परं व्यवहारतः परिपूर्णं योजनं विवक्षितमिति पञ्चदशोत्तराणीत्युक्तम्, 'तया णं' मित्यादिना रात्रिन्दिवपरिमाणं षण्मासोपसंहरणं च सुगमम्, 'से पविसमाणे' इत्यादि, ततः स सूर्यः सर्वबाह्यान्मण्डलात् प्रागुक्तप्रकारेणाभ्यन्तरं मण्डलं प्रविशन् द्वितीयं षण्मासमाददानो द्वितीयस्य षण्मासस्य प्रथमे अहोरात्रे सर्वबाह्यानन्तरमर्वाक्तनं द्वितीयं मण्डलमुपसंक्रम्य चारं चरति, 'ता जया णं' मित्यादि, तत्र यदा णमिति वाक्यालङ्कारे सर्वबाह्यानन्तरमर्वाक्तनं द्वितीयं मण्डलमुपसंक्रम्य चारं चरति तदा तन्मण्डलपदम् अष्टाचत्वारिंशदेकषष्टिभागा योजनस्य बाहल्येन, एकं योजनशतसहस्रं षट् च योजनशतानि चतुष्पञ्चाशदधिकानि षड्विंशतिश्चैकषष्टिभागा योजनस्य १००६५४ २६/६१ आयामविष्कम्भेन-आयामविष्कम्भाभ्याम्, तथाहि-एकतोऽपि तन्मण्डलं सर्वबाह्यमण्डलगतानष्टाचत्वारिंशतमेकषष्टिभागान् योजनस्यापरं द्वे योजने विमुच्याभ्यन्तरमवस्थितमपरतोऽपि ततो योजनद्वयस्याष्टाचत्वारिंशतश्चैकषष्टिभागानां द्वाभ्यां गुणने पञ्च योजनानि पञ्चत्रिंशच्चैकषष्टिभागा योजनस्येति भवति, एतत्सर्वबाह्यमण्डलगतविष्कम्भायामपरिमाणात् शोध्यते, ततो यथोक्तमधिकृतमण्डलविष्कम्भायामपरिमाणं भवति, तथा त्रीणि योजनशतसहस्राणि अष्टादशसहस्राणि द्वे योजनशते सप्तनवत्यधिके ३१८२९७, परिक्षेपेण प्रज्ञप्तं, तथाहि-पूर्वमण्डलादस्य मण्डलस्य विष्कम्भायामपरिमाणे पञ्च योजनानि पञ्चत्रिंशच्चैकषष्टिभागा योजनस्येति त्रुट्यन्ति, पञ्चानां योजनानां पञ्चत्रिंशतश्चैकषष्टिभागानां परिरयः सप्तदश योजनानि अष्टात्रिंशच्चैकषष्टिभागा योजनस्य भवन्ति परं सूत्रकृता व्यवहारनयमतेन परिपूर्णान्यष्टादश योजनानि विवक्षितानि, प्रागुक्तात्सर्वबाह्यमण्डलपरिरयपरिमाणात् त्रीणि लक्षाणि अष्टादशसहस्राणि त्रीणि शतानि पञ्चदशोत्तराणि इत्येवंरूपादष्टादश योजनानि शोध्यन्ते, ततो यथोक्तमधिकृतमण्डलपरिरयपरिमाणं भवति, 'तया णं राइंदियाणं तह चेव' त्ति-तदा रात्रिन्दिवं रात्रिन्दिवयोस्तथैव वक्तव्यौ, तौ चैवम्—'तया णं अट्ठारस-मुहुत्ता राई भवति दोहिं एगट्ठिभागमुहुत्तेहिं ऊणा दुवालसमुहुत्ते दिवसे हवइ दोहिं एगट्ठिभागामुहुत्तेहिं अहिए' इति, 'से पविसमाणे' इत्यादि, ततः स सूर्यस्तस्मादपि द्वितीयस्मान्मण्डलात्प्रागुक्तप्रकारेणाभ्यन्तरं प्रविशन् द्वितीयस्य षण्मासस्य द्वितीयेऽहोरात्रे सर्वबाह्यान्मण्डलादर्वाक्तनं तृतीयं मण्डलमुपसंक्रम्य चारं चरति, तत्र यदा सूर्यः सर्वबाह्यान्-

ण्डलादर्वाक्तनं तृतीयं मण्डलमुपसंक्रम्य चारं चरति तदा मन्मण्डलपदम् अष्टाचत्वारिंशदेकषष्टिभागा योजनस्य बाहल्येन एकं योजनशतसहस्रं षट् च योजनशतानि अष्टाचत्वारिंशदधिकानि द्विपञ्चाशच्चैकषष्टिभागा योजनस्य १००६४८ $\frac{५२}{६१}$ आयामविष्कम्भेन—आयामविष्कम्भाभ्यां, तथाहि—पूर्वस्मान्मण्डलादिदं मण्डलमायामविष्कम्भेन पञ्चभिर्योजनैः पञ्चत्रिंशता चैकषष्टिभागैर्योजनस्य हीनं, ततः पूर्वमण्डलविष्कम्भायामपरिमाणादेकं योजनशतसहस्रं षट् शतानि चतुष्पञ्चाशदधिकानि षड्विंशतिश्चैकषष्टिभागा योजनस्येत्येवंरूपात्पञ्च योजनानि पञ्चत्रिंशच्चैकषष्टिभागा योजनस्य शोध्यन्ते, ततो यथोक्तमधिकृतमण्डलविष्कम्भायामपरिमाणं भवति, तथा त्रीणि योजनशतसहस्राणि अष्टादश सहस्राणि द्वे शते एकोनाशीत्यधिके—३१८२७९ परिक्षेपेण प्रज्ञप्तं, तथाहि—प्राक्तनमण्डलादिदं मण्डलं पञ्चभिर्योजनैः पञ्चत्रिंशता चैकषष्टिभागैर्योजनस्य विष्कम्भतो हीनं, पञ्चानां योजनानां पञ्चत्रिंशतश्चैकषष्टिभागानां परिरयपरिमाणं व्यवहारतोऽष्टादश योजनानि, ततस्तानि पूर्वमण्डलपरिरयपरिमाणात् शोध्यन्ते, ततो यथोक्तमधिकृतपरिरयपरिमाणं भवति 'दिवसराई तहेव' त्ति—दिवसरात्री तथैव प्रागिव वक्तव्ये, ते चैवम्—'तया णं अट्ठारसमुहुत्ता राई भवइ चउहिं एगट्ठिभागमुहुत्तेहिं ऊणा, दुवालसमुहुत्ते दिवसे भवइ चउहिं एगट्ठिभागमुहुत्तेहिं अहिए' इति, 'एवं खलु' इत्यादि एतत्सूत्रं प्रागुक्तव्याख्यानुसारेण स्वयं परिभावनीयं, नवरं 'निव्वेढेमाणे' इति निर्वेष्टयन् निर्वेष्टयन् ह्रापयन् ह्रापयन्नित्यर्थः, ता जया णं' मित्यादि सुगमम्, अधुना प्रस्तुतवक्तव्यताऽवतारमाह—'ता सव्वा वि णं' मित्यादि, ततः सर्वाण्यपि मण्डलपदानि प्रत्येकं बाहल्येनाष्टाचत्वारिंशदेकषष्टिभागा योजनस्य, उपलक्षणमेतत्, अनियतानि आयामविष्कम्भपरिधिभिः तथा सर्वाण्यपि च मण्डलान्तरकाणि—मण्डलान्तराणि, सूत्रे स्त्रीत्वनिर्देशः प्राकृतत्वात्, द्वे द्वे योजने विष्कम्भेन, तत एष द्वे योजने अष्टचत्वारिंशच्चैकषष्टिभागा योजनस्येत्येवंरूपो, णमिति वाक्यालङ्कारे अध्वा—पन्थाः त्र्यशीत्यधिकशतप्रत्युत्पन्नः-त्र्यशीत्यधिकेन शतेन गुणितः सन् पञ्चदशोत्तराणि योजनशतान्याख्याता इति, वदेत्, तथाहि—द्वे योजने त्र्यशीत्यधिकेन शतेन गुण्येते जातानि त्रीणि शतानि षट्षष्ट्यधिकानि ३६६, येऽपि च अष्टचत्वारिंशदेकषष्टिभागास्तेऽपि त्र्यशीत्यधिकानि शतेन गुण्यन्ते जातानि स्त्राशीतिशतानि चतुरशीत्यधिकानि ८७८४, तथा योजनानयनार्थमेकषष्ट्या भागो ह्रियते, लब्धं चतुश्चत्वारिंशं योजनशतम् १४४, तत् पूर्वराशौ प्रक्षिप्यते, जातानि पञ्च शतानि दशोत्तराणि ५१०, अस्यैवार्थस्य व्यक्तीकरणार्थं भूयः प्रश्नसूत्रमाह— ता अब्भिंतराओ इत्यादि, 'ता' इति तत्र अभ्यन्तरात्—सर्वाभ्यन्तरान्मण्डलपदात् परतो यावद्बाह्यं—सर्वबाह्यं मण्डलपदं बाह्याद्वा—सर्वबाह्याद्वा मण्डलपदादर्वाक् यावत्सर्वाभ्यन्तरं मण्डलपदमेष एतावान् अध्वा कियान्—कियत्प्रमाण आख्यात इति वदेत् ?, एवमुक्ते गौतमेन भगवानाह—'ता' इत्यादि, तावानध्वा पञ्चदशोत्तराणि योजनशतानि आख्यात इति वदेत् ? स्वशिष्येभ्य पञ्चदशोत्तरयोजनशतभावना प्रागुक्तानुसारेण स्वयं परिभावनीया, 'अब्भिंतराए' इत्यादि अभ्यन्तरेण मण्डलपदेन सह अभ्यन्तरान्मण्डलपदादारभ्य यावद् बाह्यं-सर्वबाह्यं मण्डलपदं, यदिवा—बाह्येन सर्वबाह्येन मण्डलपदेन सर्वबाह्यान्मण्डलपदादारभ्य यावत्सर्वाभ्यन्तरं मण्डलम् एष एतावान् अध्वा कियानाख्यात इति वदेत् ?, भगवानाह—'ता पंचे' त्यादि स एतावान् अध्वा पञ्चदशोत्तराणि योजनशतान्यष्टाचत्वारिंशच्चैकषष्टिभागा योजनस्येत्याख्यात इति वदेत्, पूर्वस्माद्ध्वपरिमाणात् एतस्याध्वपरिमाणस्य सर्वबाह्यमण्डलगतेन बाहल्यपरिमाणेनाधिकत्वात्, 'ता अब्भिंतर' त्यादि, ता इति—अभ्यन्तरान्मण्डलपदात्परतो बाह्यमण्डलपदात्—सर्वबाह्यमण्डलादर्वाक्, यद्वा—बाह्यमण्डलपदादर्वाक् अभ्यन्तरमण्डलात्परत एष अध्वा कियानाख्यात इति वदेत्?, भगवानाह—'ता पंचे' त्यादि, पञ्च योजनशतानि नवोत्तराणि त्रयोदश चैकषष्टिभागा योजनस्य आख्यात इति वदेत्; पूर्वस्मादध्वपरिमाणादस्याध्वपरिमाणस्य सर्वाभ्यन्तरमण्डलगतसर्वबाह्यमण्डलगतबाहल्यपरिमाणेन पञ्चत्रिंशदेकषष्टिभागाधिकैकयोजनरूपेण हीनत्वात्, तदेवमभ्यन्तरान्मण्डलात्परतो यावत्सर्वबाह्यं मण्डलं सर्वबाह्याद्वा मण्डलादर्वाक् यावत्सर्वाभ्यन्तरं मण्डलं तथा सर्वाभ्यन्तरसर्वबाह्यमण्डलाभ्यां सह तथा सर्वाभ्यन्तरसर्वबाह्यमण्डलाभ्यां विना यावदध्वपरिमाणं भवति तावन्निरूपितम्, सम्प्रति सर्वाभ्यन्तरेण मण्डलेन सह सर्वाभ्यन्तरान्मण्डलात्परतो बाह्यमण्डलादर्वाक्, यदिवा—सर्वबाह्यमण्डलेन सह सर्वबाह्यमण्डलादर्वाक् सर्वाभ्यन्तरान्मण्डलात्परतो यावदध्वपरिमाणं भवति तावन्निरूपयति—'अब्भिंतराए' इत्यादि, अभ्यन्तरेण मण्डलपदेन सह अभ्यन्तरान्मण्डलात्परतः, सर्वबाह्यान्मण्डलादर्वागिति गम्यते, यदिवा—सर्वबाह्येन मण्डलपदेन सह सर्वबाह्यान्मण्डलादर्वाक् सर्वाभ्यन्तरान्मण्डलात्परत इति गम्यते, योऽध्वा एष णमिति वाक्यालङ्कारे अध्वा कियानाख्यात इति वदेत् ?, भगवानाह—'ता' इत्यादि, तावानध्वा पञ्चदशोत्तराणि योजनशतानि आख्यात इति वदेत्, भावना सुगमत्वान्न क्रियते। सू० प्र० ८ पाहु० ।

यथा 'मण्डले मण्डले प्रतिमुहूर्तं गतिर्वक्तव्ये' ति, तत्तद्विषयं प्रश्नसूत्रमाह—

ता केवतियं ते खेत्तं सूरिए एगमेगेणं मुहुत्तेणं गच्छति आहिता ति वदेज्जा ?, तत्थ खलु इमातो चत्तारि पडिवत्तीओ पण्णत्ताओ, तत्थ एगे एवमाहंसु—ता छ छ जोयणसहस्साइं सूरिए एगमेगेणं मुहुत्तेणं गच्छति, एगे एवमाहंसु १, एगे पुण एवमाहंसु—ता पंच पंच जोयणसहस्साइं सूरिए एगमेगेणं मुहुत्तेणं गच्छति एगे एवमाहंसु २, एगे पुण एवमाहंसु—ता चत्तारि चत्तारि जोयणसहस्साइं सूरिए एगमेगेणं मुहुत्तेणं गच्छति, एगे एवमाहंसु ३, एगे पुण एवमाहंसु—ता छ वि पंच वि चत्तारि वि जोयणसहस्साइं सूरिए एगमेगेणं मुहुत्तेणं गच्छति, एगे एवमाहंसु ४, तत्थ जे ते एवमाहंसु ता छ छ जोयणसहस्साइं सूरिए

एगमेगेणं मुहुत्तेणं गच्छति ते एवमाहंसु-जता णं सूरिए सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरति तया णं उत्तमकट्ठपत्ते उक्कोसे अट्ठारसमुहुत्ते दिवसे भवति,जहण्णिया दुवालसमुहुत्ता राई भवति , तेसिं च णं दिवसंसि एगं जोयणसतसहस्सं अट्ठ य जोयणसहस्साइं तावक्खेत्ते पण्णत्ते , ता जया णं सूरिए सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरति तया णं उत्तमकट्ठपत्ता उक्कोसिया अट्ठारसमुहुत्ता राई भवति , जहण्णए दुवालसमुहुत्ते दिवसे भवति, तेसिं च णं दिवसंसि बावत्तरिं जोयणसहस्साइं तावक्खेत्ते पण्णत्ते, तया णं छ छ जोयणसहस्साइं सूरिए एगमेगेणं मुहुत्तेणं गच्छति, तत्थ जे ते एवमाहंसु ता पंच पंच जोयणसहस्साइं सूरिए एगमेगेणं मुहुत्तेणं गच्छति, ते एवमाहंसु-ता जता णं सूरिए सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरति, तहेव दिवसराइप्पमाणं तंसि च णं तावक्खेत्तं नउइजोयणसहस्साइं , ता जया णं सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरति तता णं तं चेव राइंदियप्पमाणं तंसि च णं दिवसंसि सट्ठिं जोयणसहस्साइं तावक्खेत्ते पण्णत्ते, तता णं पंच पंच जोयणसहस्साइं सूरिए एगमेगेणं मुहुत्तेणं गच्छति । तत्थ जे ते एवमाहंसु , ता जया णं सूरिए सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरति तता णं दिवसराई तहेव, तंसि च णं दिवसंसि बावत्तरिं जोयणसहस्साइं तावक्खेत्ते पण्णत्ते , ता जया णं सूरिए सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरति तता णं राइंदियं तहेव तंसि च णं दिवसंसि अडयालीसं जोयणसहस्साइं तावक्खेत्ते पण्णत्ते तता णं चत्तारि चत्तारि जोयणसहस्साइं सूरिए एगमेगेणं मुहुत्तेणं गच्छति, तत्थ जे ते एवमाहंसु छ वि पंच वि चत्तारि वि जोयणसहस्साइं सूरिए एगमेगेणं मुहुत्तेणं गच्छति ते एवमाहंसु-ता सूरिए णं उग्गमणमुहुत्तेणं सिग्घ अत्थमणमुहुत्तं सिग्घगती भवति, तता णं छ छ जोयणसहस्साइं एगमेगेणं मुहुत्तेणं गच्छति, मज्झिमतावक्खेत्तं समासादेमाणे समासादेमाणे सूरिए मज्झिमगता भवति, तता णं पंच पंच जोयणसहस्साइं एगमेगेणं मुहुत्तेणं गच्छति,मज्झिमं तावखेत्तं संपत्ते सूरिए मंदगती भवति ,तता णं चत्तारि जोयणसहस्साइं एगमेगेणं मुहुत्तेणं गच्छति, तत्थ को हेउ त्ति वदेज्जा ? , ता अयण्णं जंबुद्दीवे दीवे ०जाव परिक्खेवेणं, ता जया णं सूरिए सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरति तता णं दिवसराई तहेव तंमि च णं दिवसंसि एकणउतिं जोयणसहस्साइं तावखेत्ते पण्णत्ते, ता जया णं सूरिए सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरति तता णं राइंदियं तहेव,तस्मिं च णं दिवसंमि एगट्ठिजोयणसहस्साइं तावक्खेत्ते पण्णत्ते,तता णं छ वि पंच वि चत्तारि वि जोयणसहस्साइं सूरिए एगमेगेणं मुहुत्तेणं गच्छति, एगे एवमाहंसु ॥ वयं पुण एवं वदामो-ता सातिरेगाइं पंच पंच जोयणसहस्साइं सूरिए एगमेगेणं मुहुत्तेणं गच्छति, तत्थ को हेतु त्ति वदेज्जा,ता अयण्णं जंबुद्दीवे दीवे परिक्खेवेणं ता जता णं सूरिए सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरति तता णं पंच पंच जोयणसहस्साइं दोण्णि य एकावण्णे जोयणसए एगूणतीसं च सट्ठिभागे जोयणस्स एगमेगेणं मुहुत्तेणं गच्छति,तता णं इहगतस्स मणुस्सस्स सीतालीसाए जोयणसहस्सेहिं दोहि य तेवट्ठेहिं जोयणसतेहिं एकवीसाए य सट्ठिभागेहिं जोयणस्स सूरिए चक्खुप्फासं हव्वमागच्छति, तया णं दिवसे राई तहेव, से णिक्खममाणे सूरिए णवं संवच्छरं अयमाणे पढमंसि अहोरत्तंसि अब्भितराणंतरं मंडलं उवसंकमित्ता चारं चरति, ता जया णं सूरिए अब्भितराणंतरं मंडलं उवसंकमित्ता चारं चरति तता णं पंच पंच जोयणसहस्साइं दोण्णि य एकावण्णे जोयणसते सीतालीसं च सट्ठिभागे जोयणस्स एगमेगेणं मुहुत्तेणं गच्छति,तता णं इहगतस्स मणूसस्स सीतालीसाए जोयणसहस्सेहिं अउणासीते य जोयणसते सत्तावण्णाए सट्ठिभागेहिं जोयणस्स सट्ठिभागं च एगट्ठिहा छेत्ता अउणावीसाए चुण्णियाभागेहिं सूरिए चक्खुप्फासं हव्वमागच्छति,तता णं दिवसराई तहेव। से णिक्खममाणे सूरिए दोच्चंसि अहोरत्तंसि अब्भितरतच्चं मंडलं उवसंकमित्ता चारं चरति, ता जया णं सूरिए अब्भितरतच्चं मंडलं उवसंकमित्ता चारं चरति तता णं पंच पंच जोयणसहस्साइं दोण्णि य बावण्णे जोयणसते पंच य सट्ठिभागे जोयणस्स एगमेगेणं मुहुत्तेणं गच्छति, तता णं इहगतस्स मणूसस्स सीतालीसाए जोयणसहस्सेहिं जोयणस्स सट्ठिं भागं च एगट्ठिधा छेत्ता दोहिं भागेहिं जोयणस्स सट्ठिं भागं च एगट्ठिधा छेत्ता दोहिं चुण्णियाभागेहिं सूरिए चक्खुप्फासं हव्वमागच्छति , तता णं दिवसराई तहेव , एवं खलु एतेणं उवाएण णिक्खममाणे सूरिए तताऽणंतराओ तदाणंतरं मंडलातो मंडलं संकममाणे सकममाणे अट्ठारस अट्ठारस सट्ठिभागे जोयणस्स एगमेगे मंडले मुहुत्तगतिं अभिवुड्ढेमाणे अभिवुड्ढेमाणे चुलसीतिं सीताइं जोयणाइं पुरिसच्छायं णिवुड्ढेमाणे२ सव्वबाहिर मंडल उवसंकमित्ता चारं चरति, ता जया णं सूरिए सव्वबाहिरमंडलं उवसंकमित्ता चारं चरति तता णं पंच पंच जोयणसहस्साइं तिन्नि

य पंचुत्तरे जोयणसते पणरस य सट्ठिभागे जोयणस्स एगमेगेणं मुहुत्तेणं गच्छति ततो णं इहगतस्स मणूसस्स एक्कतीसाए जोयणेहिं अट्ठहिं एक्कतीसेहिं जोयणसतेहिं तीसाए य सट्ठिभागेहिं जोयणस्स सूरिए चक्खुप्फासं हव्वमागच्छति, ततो णं उत्तमकट्ठपत्ता उक्कोसिया अट्ठार-समुहुत्ता राई भवइ, जहण्णए दुवालसमुहुत्ते दिवसे भवति। एस णं पढमे छम्मासे, एस णं पढमस्स छम्मासस्स पज्जव-साणे। से पविसमाणे सूरिए दोच्चं छम्मासं अयमाणे प-ढमंसि अहोरत्तंसि बाहिराणंतरं मंडलं उवसंकमित्ता-चारं चरति ता जता णं सूरिए बाहिराणंतरं मंडलं उव-संकमित्ता चारं चरति तता णं पंच पंच जोयणसह-स्साइं तिन्नि य चउरुत्तरे जोयणसते सत्तावण्णं च स-ट्ठिभाए जोयणस्स एगमेगेणं मुहुत्तेणं गच्छति, ततो णं इहगतस्स मणूसस्स एक्कतीसाए जोयणसहस्सेहिं नवहिं य सोलसेहिं जोयणसएहिं एगूणतालीसाए सट्ठिभागेहिं जोयणस्स सट्ठिभागं च एगट्ठिहा छेत्ता सट्ठिए चुण्णिया-भागे सूरिए चक्खुफासं हव्वमागच्छति,' ततो णं राइंदियं तहेव, से पविसमाणे सूरिए दोच्चंसि अहोर-त्तंसि बाहिरं तच्चं मंडलं उवसंकमित्ता चारं चरति, ता जया णं सूरिए बाहिरतच्चं मंडलं उवसंकमित्ता चा-रं चरति तता णं पंच पंच जोयणसहस्साइं तिन्नि य चउरुत्तरे जोयणसते ऊतालीसं च सट्ठिभागे जोयणस्स एगमेगेणं मुहुत्तेणं गच्छति ततो णं इहगतस्स मणू-सस्स एगाधिएहिं बत्तीसाए जोयणसहस्सेहिं एकाव-न्नाए य सट्ठिभागेहिं जोयणस्स सट्ठिभागं च एगट्ठिधा छेत्ता तेवीसाए चुण्णियाभागेहिं सूरिए चक्खुफासं हव्व-मागच्छति, राइंदियं तहेव; एवं खलु एतेणुवाएणं प-विसमाणे सूरिए तताणंतराओ तताणंतरं मंडलातो मं-डलं संकममाणे संकममाणे अट्ठारस अट्ठारस सट्ठिभा-गे जोयणस्स एगमेगे मंडले मुहुत्तगई णिवुड्ढेमाणे णि-वुड्ढेमाणे सातिरेगाइं पंचासीति पंचासीति जोयणाइं पुरि-सच्छायं अभिवुड्ढेमाणे अभिवुड्ढेमाणे सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरति, ता जता णं सूरिए सव्वब्भं-तरं मंडलं उवसंकमित्ता चारं चरति ता तता णं पं-च पंच जोयणसहस्साइं दोन्नि य एकावण्णे जोयणस-ए अट्ठतीसं च सट्ठिभागे जोयणस्स एगमेगेणं मुहुत्ते-णं गच्छति ततो णं इहगयस्स मणूसस्स सीतालीसाए जोयणसहस्सेहिं दोहि य दोवट्ठेहिं जोयणसतेहिं ए-क्कवीसाए य सट्ठिभागेहिं जोयणस्स सूरिए चक्खुप्फा-से हव्वमागच्छति, ततो णं उत्तमकट्ठपत्ते उक्कोसए अ-ट्ठारसमुहुत्ते दिवसे भवति, जहण्णिया दुवालसमुहुत्ता राई भवति; एस णं दोच्चे छम्मासे एस णं दोच्चस्स छम्मासस्स पज्जवसाणे एस णं आदिच्चे संवच्छरे एस णं आदिच्चसंवच्छरस्स पज्जवसाणे। (सू०-२३)

'ता केवतियं ते खित्तं सूरिए' इत्यादि, 'ता' इति पूर्व-वत्, कियन्मात्रं क्षेत्रं भगवन्! 'ते' त्वया सूर्य एकैकेन मु-हूर्त्तेन गच्छति, गच्छदाख्यात इति वदेत्?, एवमुक्ते स-ति भगवान् एतद्विषयपरतीर्थिकप्रतिपत्तिमिथ्याभावोपदर्श-नाय प्रथमतस्ता एव प्रतिपत्तीरुपदर्शयति- 'तत्थ' इत्यादि तत्र प्रतिमुहूर्त्तगतिपरिमाणचिन्तायां खल्विमाश्चतस्रः प्रति-पत्तयः प्रज्ञप्ताः, तद्यथा-तत्र तेषां चतुर्णां वादिनां मध्ये एके एवमाहुः-षट् षट् योजनसहस्राणि सूर्य एकैकेन मुहूर्त्तेन गच्छति, अत्रैवोपसंहार 'एगे एवमाहंसु १', एवमग्रेतनान्यु-पसंहारवाक्यानि भावनीयानि, एके पुनर्द्वितीया एवमाहुः-पञ्च पञ्च योजनसहस्राणि सूर्य एकैकेन मुहूर्त्तेन गच्छतिर। एके पुनस्तृतीया एवमाहुः-चत्वारि चत्वारि योजनसहस्रा णि सूर्य एकैकेन मुहूर्त्तेन गच्छति, ३। अपरे पुनश्चतुर्था एव-माहुः-षडपि पञ्चापि चत्वार्यपि योजनसहस्राणि सूर्य एकैके-न मुहूर्त्तेन गच्छति, तदेवं चतस्रोऽपि प्रतिपत्तीः संक्षेपत उप-दर्श्य सम्प्रत्येतासां यथाक्रमं भावनिकामाह-'तत्थ' इत्यादि, तत्र ये ते वादिन एवमाहुः-षट् षट् योजनसहस्राणि सूर्य ए-कैकेन मुहूर्त्तेन गच्छति ते एवमाहुः-यदा सूर्यः सर्वाभ्य-न्तरं मण्डलमुपसंक्रम्य चारं चरति तदा उत्तमकाष्ठाप्रा-प्तः परमप्रकर्षप्राप्तोऽष्टादशमुहूर्त्तो दिवसो भवति स-र्वजघन्या च द्वादशमुहूर्त्ता रात्रिः, तस्मिंश्च दिवसे ताप-क्षेत्र प्रज्ञप्तम् एकं योजनशतसहस्रमष्टौ च योजनसहस्रा-णि, तथाहि-तस्मिन्नपि मण्डले उदयमानः सूर्यो दिवसस्या-र्द्धेन यावन्मात्रं क्षेत्रं व्याप्नोति तावति व्यवस्थितश्चक्षुर्गो-चरमायाति तत एतावत्किल पुरस्तात्तापक्षेत्रम्, यावच्च पुर-स्तात्तापक्षेत्रं तावत्पश्चादपि, यत उदयमान इवास्तमयमानो-ऽपि सूर्यो दिवसस्यार्द्धेन यावन्मात्रं क्षेत्रं व्याप्नोति तावति व्यवस्थितश्चक्षुर्गोचरमायाति, एतच्च प्रतिप्राणि सुप्रसिद्धं, स-र्वाभ्यन्तरे च मण्डले दिवसस्यार्द्धे नव मुहूर्त्तास्ततोऽष्टा-दशभिर्मुहूर्त्तैर्यावन्मात्रं क्षेत्रं गम्यं तावत्प्रमाणं तापक्षेत्रम्, एकैकेन मुहूर्त्तेन षट् षट् योजनसहस्राणि गम्यन्ते, ततः षण्णां योजनसहस्राणामष्टादशभिर्गुणने भवत्येकं योजनश-तसहस्रमष्टौ योजनसहस्राणीति, एवमुत्तरत्रापि तत्तन्म-ण्डलगतदिवसपरिमाणं प्रतिमुहूर्त्तगतिपरिमाणं च परिभा-व्य तापक्षेत्रपरिमाणभावना भावनीया। यदा च सर्वबाह्यं मण्डलमुपसंक्रम्य चारं चरति तदा उत्तमकाष्ठाप्राप्ता अष्टा-दशमुहूर्त्ता रात्रिर्भवति सर्वजघन्यश्च द्वादशमुहूर्त्तो दिव-सः, तस्मिंश्च दिवसे तापक्षेत्रपरिमाणं द्विसप्ततियोजन-सहस्राणि ७२०००, तदा हि—तापक्षेत्रपरिमाणं द्वादशमु-हूर्त्तगम्यप्रमाणम्, अत्रार्थे च भावना प्रागुक्तानुसारेण स्वयं भावनीया, मुहूर्त्तेन च षट् षट् योजनसहस्राणि गच्छ-ति, तत षण्णां योजनसहस्राणां द्वादशभिर्गुणने भवन्ति द्वासप्ततिरेव योजनसहस्राणीति इमामेवोपपत्तिं लेशत आह-'तंसि ण' मित्यादि, तथा हि तीर्थान्तरीयाणां मतेन सूर्य

पद् पद् योजनसहस्राण्येकैकेन मुहूर्त्तेन गच्छति ततः सर्वाभ्यन्तरे सर्वबाह्ये च मण्डले यथोक्तमेव तापक्षेत्रपरिमाणं भवतीति, तथा 'तत्थे' त्यादि, तत्र--तेषां वादिनां मध्ये ये ते एवमाहु-पञ्च पञ्च योजनसहस्राणि सूर्य एकैकेन मुहूर्त्तेन गच्छति त एवमाहु-यदा सूर्यः सर्वाभ्यन्तरं मण्डलमुपसंक्रम्य चारं चरति 'तहेव दिवसराइप्पमाण'मिति-अत्र प्रस्तावे दिवसरात्रिप्रमाणं तथैव--प्रागिव द्रष्टव्यम् 'तया णं उत्तमकट्ठपत्ते उक्कोसए अट्ठारसमुहुत्ते दिवसे हवइ, जहन्निया दुवालसमुहुत्ता राई' इति, 'तंसि च णं'-मित्यादि, तस्मिंश्च सर्वाभ्यन्तरमण्डलगतेऽष्टादशमुहूर्तप्रमाणे दिवसे तापक्षेत्रे--तापक्षेत्रपरिमाणं प्रज्ञप्तं, नवतियोजनसहस्राणि, तदा हि प्रागुक्तयुक्तिवशादष्टादशमुहूर्त्तप्रमाणं तापक्षेत्रम्, एकैकेन च मुहूर्त्तेन गच्छति सूर्यः पञ्च पञ्च योजनसहस्राणि, ततः पञ्चानां योजनसहस्राणामष्टादशभिर्गुणनेन नवतिरेव योजनसहस्राणि भवन्ति, 'ता जया णं' मित्यादि, यदा सूर्यः सर्वबाह्यं मण्डलमुपसंक्रम्य चारं चरति तदा 'तहेव राइंदियप्पमाण' मिति, तदेव प्रागुक्तं रात्रिन्दिवप्रमाणं--रात्रिदिवसप्रमाणं वक्तव्यम्, तद्यथा "उत्तमकट्ठपत्ता उक्कोसिया अट्ठारसमुहुत्ता राई हवइ, जहन्निए दुवालसमुहुत्ते दिवसे भवतीति", तंसि च णं' मित्यादि, तस्मिन् सर्वबाह्यमण्डलगते सर्वजघन्ये द्वादशमुहूर्त्तप्रमाणे दिवसे, तापक्षेत्रं प्रज्ञप्तं षष्टिर्योजनसहस्राणि ६००००, तदा ह्यनन्तरोक्तयुक्तिवशाद् द्वादशमुहूर्त्तगम्यप्रमाणं तापक्षेत्रमेकैकेन च मुहूर्त्तेन पञ्च पञ्च योजनसहस्राणि गच्छति, ततः पञ्चानां योजनसहस्राणां द्वादशभिर्गुणने भवति षष्टिर्योजनसहस्राणि, अत्रैवोपपत्तिलेशमाह-'तया णं पंच पंचे' त्यादि, तदा सर्वाभ्यन्तरमण्डलचारचरणकाले सर्वबाह्यमण्डलचारचरणकाले च पञ्च पञ्च योजनसहस्राणि सूर्य एकैकेन मुहूर्त्तेन गच्छति, ततः सर्वाभ्यन्तरे सर्वबाह्ये च मण्डले यथोक्तमानपक्षेत्रपरिमाणं भवति २ ॥ 'तत्थ' त्यादि, तत्र ये ते वादिन एवमाहु --चत्वारि चत्वारि योजनसहस्राणि सूर्य एकैकेन मुहूर्त्तेन गच्छति त एवं सूर्यतापक्षेत्रप्ररूपणां कुर्वन्ति--यदा सूर्यः सर्वाभ्यन्तरमण्डलमुपसंक्रम्य चारं चरति तदा दिवसरात्री तथैव--प्रागिव वक्तव्ये, ते चैवम्-'तया णं उत्तमकट्ठपत्ते उक्कोसए अट्ठारसमुहुत्ते दिवसे हवइ जहन्निया दुवालसमुहुत्ता राई भवइ' इति, 'तंसिं च णं' मित्यादि, तस्मिंश्च सर्वाभ्यन्तरमण्डलगतेऽष्टादशमुहूर्त्तप्रमाणे दिवसे तापक्षेत्रं प्रज्ञप्तं द्विसप्ततिर्योजनसहस्राणि ७२०००, तथाहि-एतेषां मतेन सूर्य एकैकेन मुहूर्त्तेन चत्वारि चत्वारि योजनसहस्राणि गच्छति, सर्वाभ्यन्तरे च मण्डले तापक्षेत्रपरिमाणं प्रागुक्तयुक्तिवशादष्टादशमुहूर्त्तगम्यं, ततश्चतुर्णां योजनसहस्राणामष्टादशभिर्गुणने भवन्ति द्विसप्ततिर्योजनसहस्राणि, 'ता जया णं' मित्यादि, ततो यदा सूर्यः सर्वबाह्यं मण्डलमुपसंक्रम्य चारं चरति, तदा राइंदियं तहेव' त्ति-रात्रिन्दिवं--रात्रिदिवसप्रमाणं तथैव-प्रागिव वक्तव्यं, तच्चैवम्-' तया णं उत्तमकट्ठपत्ता उक्कोसिया अट्ठारसमुहुत्ता राई भवइ, जहन्नए दुवालसमुहुत्ते दिवसे भवति तंसि च णं ' मित्यादि, तस्मिंश्च सर्वबाह्यमण्डलगते द्वादशमुहूर्त्तप्रमाणे दिवसे तापक्षेत्रं प्रज्ञप्तम्-अष्टाचत्वारिंशद्योजनसहस्राणि ४८०००, तदा हि तापक्षेत्रं द्वादशमुहूर्त्तगम्यम् एकैकेन च मुहूर्त्तेन चत्वारि चत्वारि योजनसहस्राणि गच्छति, ततश्चतुर्णां योजनसहस्राणां द्वादशभिर्गुणनेऽष्टचत्वारिंशत्सहस्राणि भवन्ति, इममेवोपपत्तिलेशतो भावयति--'तया णं' इत्यादि, तदा सर्वाभ्यन्तरमण्डलचारकाले सर्वबाह्यमण्डलचारकाले च यतश्चत्वारि योजनसहस्राणि एकैकेन मुहूर्त्तेन गच्छति ततः सर्वाभ्यन्तरे सर्वबाह्ये च मण्डले यथोक्तं तापक्षेत्रपरिमाणं भवति ३ ॥ 'तत्थे' त्यादि, तत्र ये ते वादिन एवमाहु--षडपि पञ्चापि चत्वार्यपि योजनसहस्राणि सूर्य एकैकेन मुहूर्त्तेन गच्छति ते एवमाहु--एवं सूर्यचारं प्ररूपयन्ति, सूर्य उद्गमनमुहूर्त्ते अस्तमयनमुहूर्त्ते च शीघ्रगतिर्भवति ततस्तदा--उद्गमनकालेऽस्तमयनकाले च सूर्य एकैकेन मुहूर्त्तेन षड् षड् योजनसहस्राणि गच्छति, तदनन्तरं सर्वाभ्यन्तरगतं मुहूर्त्तमात्रगम्यं तापक्षेत्रं मुक्त्वा शेषं मध्यमं तापक्षेत्रं परिभ्रमण् समासादयन् मध्यमगतिर्भवति, ततस्तदा पञ्च पञ्च योजनसहस्राणि एकैकेन मुहूर्त्तेन गच्छति, सर्वाभ्यन्तरं तु मुहूर्त्तमात्रगम्यं तापक्षेत्रं सम्प्राप्तः सन् सूर्यो मन्दगतिर्भवति, ततस्तदा यत्र तत्र वा मण्डले चत्वारि चत्वारि योजनसहस्राणि एकैकेन मुहूर्त्तेन गच्छति। अत्रैव भावार्थं पिपृच्छिषुराह-- 'तत्थ' त्यादि, तत्र एवंविधवस्तुनस्त्वव्यवस्थायां को हेतुः ?--का उपपत्तिरिति वदेत्, एवं स्वशिष्येण प्रश्ने कृते सति ते एवमाहु "ता अयण्णं' मित्यादि, अत्र जम्बूद्वीपवाक्यं पूर्ववत् स्वयं परिपूर्णं पठनीयं व्याख्यानीयं च । 'जया णं' मित्यादि, तत्र यदा सूर्यः सर्वाभ्यन्तरं मण्डलमुपसङ्क्रम्य चारं चरति तदा दिवसरात्री तथैव प्रागिव वक्तव्ये, ते चैवम्--'तया णं उत्तमकट्ठपत्ते उक्कोसए अट्ठारसमुहुत्ते दिवसे भवइ जहन्निया दुवालसमुहुत्ता राई भवइ' ' तस्सिं च णं' मित्यादि, तस्मिंश्च सर्वाभ्यन्तरमण्डलगतेऽष्टादशमुहूर्त्तप्रमाणे दिवसे तापक्षेत्रं प्रज्ञप्तम् । एकनवतिर्योजनसहस्राणि ९१०००, तानि चैवमुपपद्यन्ते-उद्गमनमुहूर्त्तेऽस्तमयनमुहूर्त्ते च प्रत्येकं षड्योजनसहस्राणि गच्छतीत्युभयमीलने द्वादशयोजनसहस्राणि १२०००, सर्वाभ्यन्तरं मुहूर्त्तमात्रगम्यं तापक्षेत्रं मुक्त्वा शेषं मध्यमे तापक्षेत्रे पञ्चदशमुहूर्त्तप्रमाणे पञ्च पञ्च योजनसहस्राणि गच्छतीति पञ्चानां योजनसहस्राणां पञ्चदशभिर्गुणने पञ्चसप्ततिर्योजनसहस्राणि ७५०००, सर्वाभ्यन्तरे तु मुहूर्त्तमात्रगम्ये तापक्षेत्रे चत्वारि योजनसहस्राणि ४००० गच्छतीति सर्वमीलने एकनवतिर्योजनसहस्राणि ९१००० भवन्ति, न चैतान्यन्यथा घटन्ते, तथा--'ता जया णं' मित्यादि, तत्र यदा सर्वबाह्यं मण्डलमुपसंक्रम्य सूर्यश्चारं चरति तदा रात्रिंदिवं--रात्रिंदिवपरिमाणं तथैव प्रागिव वेदितव्यं, तच्चैवम्--'तया णं उत्तमकट्ठपत्ता उक्कोसिया अट्ठारसमुहुत्ता राई भवइ जहण्णए दुवालसमुहुत्ते दिवसे' 'तंसिं च णं' मित्यादि, तस्मिंश्च सर्वबाह्यमण्डलगते द्वादशमुहूर्त्तप्रमाणे दिवसे तापक्षेत्रं प्रज्ञप्तम्, एकषष्टिर्योजनसहस्राणि ६१०००, तानि चैवं घटां प्राञ्चन्ति-उद्गमनमुहूर्त्ते अस्तमयमुहूर्त्ते च प्रत्येकं षड् षड्

योजनसहस्राणि गच्छन्ति, तत उभयमीलने द्वादश योजनसहस्राणि भवन्ति १२०००, सर्वाभ्यन्तरं मुहूर्त्तमात्रगम्यं तापक्षेत्रं मुक्त्वा शेषे मध्यमे तापक्षेत्रे नवमुहूर्त्तगम्यप्रमाणे पञ्च पञ्च योजनसहस्राणि एकैकेन मुहूर्त्तेन गच्छति, तत पञ्चानां योजनसहस्राणां नवभिर्गुणने पञ्चचत्वारिंशद्योजनसहस्राणि भवन्ति ४५०००, सर्वाभ्यन्तरे तु मुहूर्त्तमात्रगम्ये तापक्षेत्रे चत्वारि योजनसहस्राणि ४०००, गच्छति, सर्वमीलने एकषष्टिर्योजनसहस्राणि, न चैतान्यन्यथोपपद्यन्ते, तत 'तया णं' मित्यादि, तदा सर्वाभ्यन्तरमण्डलचारकाले सर्वबाह्यमण्डलचारकाले चोक्तप्रकारेण षडपि पञ्चापि चत्वार्यपि योजनसहस्राणि सूर्य एकैकेन मुहूर्त्तेन गच्छति, अत्रैवोपसंहार —'एगे एवमाहंसु' एके चतुर्थो वादिन एवम्–अनन्तरोक्तेन प्रकारेणाऽऽहुः ॥ तदेवं परतीर्थिकप्रतिपत्तीरुपदर्श्य सम्प्रति स्वमतमुपदर्शयति—'वयं पुण' इत्यादि, वयं पुनरुत्पन्नकेवलज्ञाना केवलज्ञानेन यथावस्थितं वस्तूपलभ्य एवं—वक्ष्यमाणप्रकारेण वदाम । तमेव प्रकारमाह—'ता साइरेगाइ' इत्यादि, 'ता' इति पूर्ववत् सातिरेकाणि—समधिकानि पञ्च पञ्च योजनसहस्राणि सूर्य एकैकेन मुहूर्त्तेन गच्छति, इह क्वापि मण्डले कियताऽधिकेन पञ्च पञ्च योजनसहस्राणि गच्छति, तत सर्वमण्डलप्राप्तिमपेक्ष्य सामान्यत उक्तं सातिरेकाणीति, एवमुक्ते भगवान् गौतमस्वामी स्वशिष्याणां स्पष्टावबोधनाय भूय पृच्छति—'तत्थे' त्यादि, तत्र 'एवंविधायामनन्तरोदितायां वस्तुव्यवस्थायां को हेतु —का उपपत्तिरिति वदेत्, भगवान् वर्द्धमानस्वामी आह—'ता अयण्णं' मित्यादि, इदं च जम्बूद्वीपवाक्यं पूर्ववत्स्वयं परिपूर्णं परिभावनीयम्, 'ता जया णं' मित्यादि, तत्र यदा सूर्य सर्वाभ्यन्तरं मण्डलमुपसंक्रम्य चारं चरति तदा पञ्च पञ्च योजनसहस्राणि द्वे द्वे योजनशते एकपञ्चाशदधिके एकोनत्रिंशतं च षष्टिभागान् योजनस्य ५२५१ २९/६० एकैकेन मुहूर्त्तेन गच्छति, कथमेतदवसीयते इति चेत्, उच्यते—इह द्वाभ्यां सूर्याभ्यामेकं मण्डलमेकेनाहोरात्रेण परिसमाप्यते, अहोरात्रश्च त्रिंशन्मुहूर्त्तप्रमाण । प्रतिसूर्यं चाहोरात्रगणनं परमार्थतो द्वाभ्यामहोरात्राभ्यां मण्डलं परिभ्रमणेन परिसमाप्यते, द्वयोश्चाहोरात्रप्रमाणयोर्मुहूर्त्ता षष्टिर्भवन्ति, ततो मण्डलपरिरयस्य षष्ट्या भागं हारयेत्, भागलब्धं भवति तन्मुहूर्त्तगतिप्रमाणं, तत्र सर्वाभ्यन्तरे मण्डले परिरयप्रमाणं त्रीणि लक्षाणि पञ्चदशसहस्राणि नवाशीत्यधिकानि ३१५०८९ अस्य षष्ट्या भागे हृते लब्धं यथोक्तं मुहूर्त्तगतिपरिमाणमिति । अथास्मिन् सर्वाभ्यन्तरे मण्डले कियति क्षेत्रे व्यवस्थित उदयमान सूर्य इहगतानां मनुष्याणां चक्षुर्गोचरमायातीति प्रश्नावकाशमाशङ्क्याह—'तया णं' मित्यादि, तदा–सर्वाभ्यन्तरमण्डलचारचरणकाले उदयमान सूर्य इहगतस्य मनुष्यस्य, अत्र जातावेकवचनं, ततोऽयमर्थ –इहगतानाम्–भरतक्षेत्रगतानां मनुष्याणां सप्तचत्वारिंशता योजनसहस्रैर्द्वाभ्यां त्रिषष्टाभ्यां त्रिषष्ट्यधिकाभ्यां योजनशताभ्यामेकविंशत्या च षष्टिभागैर्योजनस्य चक्षुःस्पर्श 'हव्व' ति–शीघ्रमागच्छति, का अत्रोपपत्तिरिति चेत्, उच्यते–इह दिवसस्यार्द्धेन यावन्मात्रं क्षेत्रं व्याप्यते तावति व्यवस्थित उदयमान सूर्य उपलभ्यते, सर्वाभ्यन्तरे च मण्डले दिवसोऽष्टादशमुहूर्त्तप्रमाणस्तेषामर्द्धे नव मुहूर्त्ता, एकैकस्मिंश्च मुहूर्त्ते सर्वाभ्यन्तरे मण्डले चारं चरन् पञ्च पञ्च योजनसहस्राणि द्वे च योजनशते एकपञ्चाशदधिके एकोनत्रिंशतं च षष्टिभागान् योजनस्य गच्छति, तत एतावन्मुहूर्त्तगतिपरिमाणं नवभिर्मुहूर्त्तैर्गुण्यते, ततो भवति यथोक्तं दृष्टिपथप्राप्ततावियये परिमाणमिति, 'तया णं' मित्यादि, तदा सर्वाभ्यन्तरमण्डलचारचरणकाले दिवसरात्री तथैव–प्रागिव वक्तव्ये, ते चैवम्–'तया णं उत्तमकट्ठपत्ते उक्कोसए अट्ठारसमुहुत्ते दिवसे भवइ, जहण्णिया दुवालसमुहुत्ता राई भवइ' इति, 'से निक्खममाणे' इत्यादि, तत सर्वाभ्यन्तरान्मण्डलात्प्रागुक्तप्रकारेण निष्क्रामन् सूर्यो नवं संवत्सरमाददानो नवस्य संवत्सरस्य प्रथमे ऽहोरात्रे 'अभितराणंतरं' ति–सर्वाभ्यन्तरस्य मण्डलस्यानन्तरं द्वितीयं मण्डलमुपसंक्रम्य चारं चरति 'ता जया णं' मित्यादि तत्र यदा णमिति वाक्यालङ्कारे, सर्वाभ्यन्तरानन्तरं द्वितीयं मण्डलमुपसंक्रम्य चारं चरति तदा पञ्च योजनसहस्राणि द्वे योजनशते एकपञ्चाशदधिके सप्तचत्वारिंशतं च षष्टिभागान् योजनस्य ५२५१ ४७/६० एकैकेन मुहूर्त्तेन गच्छति, तथाहि—अस्मिन् सर्वाभ्यन्तरानन्तरे द्वितीये मण्डले परिरयपरिमाणं त्रीणि योजनलक्षाणि पञ्चदश सहस्राणि शतमेकं व्यवहारत परिपूर्णं सप्तोत्तरं निश्चयमतेन तु किञ्चिन्न्यूनम् ३१५१०७, ततोऽस्य प्रागुक्तयुक्तिवशात् षष्ट्या भागो ह्रियते लब्धं यथोक्तमत्र मण्डले मुहूर्त्तगतिपरिमाणम्, अथवा–पूर्वमण्डलपरिरयपरिमाणादस्य मण्डलस्य परिरयपरिमाणे व्यवहारत परिपूर्णान्यष्टादश योजनानि वर्द्धन्ते, निश्चयत किञ्चिदूनानि, अष्टादशानां च योजनानां षष्ट्या भागे हृते लब्धा अष्टादश षष्टिभागा योजनस्य, ते प्राक्तनमण्डलगतमुहूर्त्तगतिपरिमाणेऽधिकत्वेन प्रक्षिप्यन्ते, ततो भवति यथोक्तमत्र मण्डले मुहूर्त्तगतिपरिमाणमिति, अत्रापि दृष्टिपथप्राप्तताविषय परिमाणमाह—'तया णं' मित्यादि तदा–सर्वाभ्यन्तरानन्तरद्वितीयमण्डलचारकाले इहगतस्य मनुष्यस्य जातावेकवचनम् इहगतानां मनुष्याणां सप्तचत्वारिंशता योजनसहस्रैरेकोनाशीत्यधिकेन योजनशतेन सप्तपञ्चाशता षष्टिभागैरेकं च षष्टिभागमेकषष्टिधा छित्त्वा तस्य सत्कैरेकोनविंशत्या चूर्णिकाभागै सूर्यश्चक्षु स्पर्शमागच्छति, तथाहि–अस्मिन् मण्डले मुहूर्त्तगतिपरिमाणं पञ्च योजनसहस्राणि द्वे शते एकपञ्चाशदधिके सप्तचत्वारिंशच्च षष्टिभागा योजनस्य ५२५१ ४७/६० दिवसोऽष्टादशमुहूर्त्तप्रमाणो द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यामूनस्तस्यार्द्धे नव मुहूर्त्ता एकेन एकषष्टिभागेन हीना, तत सकलैकषष्टिभागकरणार्थं नव मुहूर्त्ता एकषष्ट्या गुण्यन्ते, गुणयित्वा च तत एकं रूपमपनीयते, जातानि पञ्चशतान्यष्टचत्वारिंशदधिकानि ५४८, ततोऽस्य द्वितीयस्य मण्डलस्य यत्परिरयपरिमाणं त्रीणि लक्षाणि पञ्चदश सहस्राणि शतमेकं सप्तोत्तरमिति ३१५१०७, तत्पञ्चभिः शतैरष्टाचत्वारिंशदधिकैर्गुण्यते, ततो जात एकक सप्तको द्विक षट्क सप्तकोऽष्टक षट्कस्त्रिक षट्क १७२६७८६३६, ततो योजनानयनार्थमेकषष्ट्या षष्ट्या गुणितया यावान्

राशिर्भवति तेन भागो ह्रियते, एकषष्ट्या च षष्ट्या गुणितायां षट्त्रिंशच्छतानि षष्ट्यधिकानि भवन्ति ३६६०, तैर्भागे हृते लब्धं सप्तचत्वारिंशत्सहस्राणि शतमेकोनाशीत्यधिकं योजनाना, शेषमुद्धरति चतुस्त्रिंशच्छतानि पञ्च स्यधिकानि ३४६६, ततोऽस्माद् योजनानि नायान्तीति षष्टिभागानयनार्थं छेदराशिरेकषष्टिर्ध्रियते, तेन भागे हृते लब्धा सप्तपञ्चाशत्षष्टिभागाः एकस्य च षष्टिभागस्य सत्का एकोनविंशतिरेकषष्टिभागा इति। 'तया णं' मित्यादि, तदा सर्वाभ्यन्तरानन्तरद्वितीयमण्डलचारचरणकाले दिवसरात्री तथैव-प्रागिव वक्तव्ये, ते चैवम्-'तया णं अट्ठारसमुहुत्ते दिवसे हवइ दोहिं एगट्ठिभागमुहुत्तेहिं ऊणे दुवालसमुहुत्ता राई भवइ दोहिं एगट्ठिभागमुहुत्तेहिं अहिया ' इति 'स निक्खममाणे' इत्यादि, द्वितीयस्मादपि मण्डलात् स सूर्य प्रागुक्तप्रकारेण निष्क्रामन् नवस्य संवत्सरस्य सत्के द्वितीयेऽहोरात्रे 'अब्भितरतच्च ति-सर्वाभ्यन्तरान्मण्डलात् तृतीय मण्डलमुपसंक्रम्य चारं चरति, 'ता जया णं' मित्यादि तत्र यदा सर्वाभ्यन्तरान्मण्डलात्तृतीय मण्डलमुपसंक्रम्य चारं चरति-तदा पञ्च पञ्च योजनसहस्राणि द्वे योजनशते द्विपञ्चाशे द्विपञ्चाशदधिके पञ्च च षष्टिभागान् योजनस्य ५२५२ ५/६० एकैकेन मुहूर्त्तेन गच्छति,तथाहि-अस्मिन्मण्डले परिरयपरिमाणं त्रीणि योजनलक्षाणि पञ्चदशसहस्राणि शतमेकं पञ्चविंशत्यधिकम् ३१५१२५, ततोऽस्य प्रागुक्तयुक्तिवशात् षष्ट्या भागो ह्रियते,लब्धं यथोक्तमत्र मण्डले मुहूर्त्तगतिपरिमाणम्, अथवा-पूर्वमण्डलमुहूर्त्तगतिपरिमाणादस्मिन् मण्डले मुहूर्त्तगतिपरिमाणचिन्तायां प्रागुक्तयुक्तिवशादष्टादश एकषष्टिभागा योजनस्याधिका प्राप्यन्ते, ततस्तत्प्रक्षेपे भवति यथोक्तमत्र मण्डले मुहूर्त्तगतिपरिमाणम्। अत्रापि-दृष्टिपथप्राप्ततविषयपरिमाणमाह-'तया णं' मित्यादि, तदा-सर्वाभ्यन्तरानन्तरतृतीयमण्डलचारकाले इहगतस्य मनुष्यस्य—जातावेकवचनस्य भावादिहगतानां मनुष्याणां सप्तचत्वारिंशता योजनसहस्रैः पञ्चनवत्या च योजनैस्त्रयस्त्रिंशता च षष्टिभागैर्योजनस्य एकं च षष्टिभागमेकषष्टिधा छित्त्वा तस्य सत्काभ्यां द्वाभ्यां चूर्णिकाभागाभ्याम् ४७०९६ ३३/६० ६१ सूर्यश्चक्षुःस्पर्शमागच्छति, तथाहि—अस्मिन् मण्डले दिवसोऽष्टादशमुहूर्त्तप्रमाणश्चतुर्भिर्मुहूर्त्तैकषष्टिभागैरूनस्तस्यार्द्धे नवमुहूर्त्ता द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यां हीना. तत सामस्त्येनैकषष्टिभागकरणार्थं नवापि मुहूर्त्ता एकषष्ट्या गुण्यन्ते, गुणयित्वा च द्वावेकषष्टिभागौ तस्मादपनीयेते ततो जाता एकषष्टिभागा: पञ्चशतानि सप्तचत्वारिंशताऽधिकानि ५४७, ततोऽस्य तृतीयमण्डलस्य यत्परिरयपरिमाणं त्रीणि योजनलक्षाणि पञ्चदशसहस्राणि शतमेकं पञ्चविंशत्यधिकमिति ३१५१२५, तत्पञ्चभिः शतैः सप्तचत्वारिंशदधिकैर्गुण्यते, जाता सप्तदश कोटयस्त्रयोविंशतिशतसहस्राणि त्रिसप्तति सहस्राणि त्रीणि शतानि पञ्च सप्तत्यधिकानि १७२३७३३७५, एतेषामेकषष्ट्या षष्ट्या गुणितया ३६६० भागो ह्रियते, लब्धानि सप्तचत्वारिंशत्सहस्राणि पञ्चनवत्यधिकानि ४७०९६, शेषमुद्धरति विंशतिशतानि पञ्चदशोत्तराणि २०१५, ततोऽस्माद्योजनानि नायान्तीति षष्टिभागानयनार्थं छेदराशिरेकषष्टिर्ध्रियते, तेन भागे हृते लब्धास्त्रयस्त्रिंशत्षष्टिभागा ३३/६० एकस्य च षष्टिभागस्य सत्कौ द्वावेकषष्टिभागौ २/६१ 'तया णं ' मित्यादि, तदा सर्वाभ्यन्तरतृतीयमण्डलचारचरणकाले दिवसरात्री तथैव-प्रागिव वदितव्ये,ते चैवम्-'तया णं अट्ठारसमुहुत्ते दिवसे हवइ,चउहिं एगट्ठिभागमुहुत्तेहिं ऊणे दुवालसमुहुत्ता राई भवइ चउहिं एगट्ठिभागमुहुत्तेहिं अहिया'इति, सम्प्रति चतुर्थादिषु मण्डलेष्वतिदेशमाह-'एव खलि'त्यादि, एवम्-उक्तेन प्रकारेण खलु—निश्चितमेतेन-अनन्तरोदितेनोपायेन शनैः शनैस्तद्वहिर्मण्डलाभिमुखगमनरूपेण निष्क्रामन् सूर्यस्तदनन्तरान्मण्डलात्तदनन्तरं मण्डलं प्रागुक्तप्रकारेण संक्रामन् संक्रामन् एकैकस्मिन् मण्डले मुहूर्त्तगतिमित्यत्र सूत्रे द्वितीया सप्तम्यर्थे प्राकृतत्वाद् भवति प्राकृतलक्षणवशात् सप्तम्यर्थे द्वितीया, यथा—'कत्तो रत्तिं मुद्धे ! पाणियसङ्खासउणयाए 'मित्यत्र ततोऽयमर्थः मुहूर्त्तगतौ अष्टादश अष्टादश षष्टिभागान् योजनस्य व्यवहारतः परिपूर्णान् निश्चयत किञ्चिदूनानभिवर्द्धयमान. २ 'पुरिसच्छायं' मिति पुरुषस्य छाया यतो भवति सा पुरुषच्छाया सा चेह प्रस्तावात् प्रथमत सूर्यस्योदयमानस्य दृष्टिपथप्राप्तता, अत्रापि द्वितीया सप्तम्यर्थे, ततोऽयमर्थः--तस्यामेकैकस्मिन् मण्डले चतुरशीतिं २ 'सीयाइं' ति-शीतानि किञ्चिन्न्यूनानीत्यर्थः, योजनानि निर्वेष्टयन् निर्वेष्टयन्—हापयन्नित्यर्थः, इद च स्थूलत उक्तं, परमार्थत पुनरिदं द्रष्टव्यम्—त्र्यशीतिर्योजनानि त्रयोविंशतिश्च षष्टिभागा योजनस्य एकस्य षष्टिभागस्य एकषष्टिधा छिन्नस्य सत्का द्विचत्वारिंशद्भागाश्चेति दृष्टिपथप्राप्ततविषये विषयहानौ ध्रुवं, तत सर्वाभ्यन्तरान्मण्डलात्तृतीयं यन्मण्डल तत आरभ्य यस्मिन् यस्मिन् मण्डले दृष्टिपथप्राप्तता ज्ञातुमिष्यते तत्तन्मण्डलसंख्यया षट्त्रिंशद् गुण्यते,तद्यथा-सर्वाभ्यन्तरान्मण्डलात्तृतीये मण्डले एकेन चतुर्थे द्वाभ्यां पञ्चमे त्रिभिर्यावत् सर्वबाह्ये मण्डले द्व्यशीत्यधिकेन शतेन, गुणयित्वा च ध्रुवराशिमध्ये प्रक्षिप्यते, प्रक्षिप्ते सति यद्भवति तेन हीना पूर्वमण्डलगता दृष्टिपथप्राप्तता—यस्मिन् विवक्षिते मण्डले दृष्टिपथप्राप्तता द्रष्टव्या, अथ त्र्यशीतियोजनानीत्यादिकस्य ध्रुवराशे कथमुत्पत्ति ?, उच्यते—इह सर्वाभ्यन्तरे मण्डले दृष्टिपथप्राप्ततापरिमाणं सप्तचत्वारिंशत्सहस्राणि द्वे शते त्रिषष्ट्यधिके योजनानामेकविंशतिश्च षष्टिभागा योजनस्य ४७२६३ २१/६०, एतच्च नवमुहूर्त्तगम्यम्, तत एकस्मिन् मुहूर्त्तैकषष्टिभागे किमागच्छतीति चिन्तायां नव मुहूर्त्ता एकषष्ट्या गुण्यन्ते,जातानि पञ्च शतान्येकोनपञ्चाशदधिकानि ५४९ तैर्भागो ह्रियते, लब्धा षडशीतिर्योजनानि पञ्च षष्टिभागा योजनस्य एकस्य च षष्टिभागस्य एकषष्टिधा छिन्नस्य सत्काश्चतुर्विंशतिर्भागा ८६ ५/६० २४/६१। पूर्वस्मात् पूर्वस्मात् च मण्डलादनन्तरानन्तरे मण्डले परिरयपरिमाणचिन्तायामष्टादश अष्टादश योजनानि व्यवहारत परिपूर्णानि वर्द्धन्ते, तत पूर्वपूर्वमण्डलगतमुहूर्त्तगतिपरिमाणादनन्तरानन्तरे मण्डल मुहूर्त्तगतिपरिमाणचिन्तायां प्रतिमुहूर्त्तमष्टादशाष्टादश षष्टिभागा योजनस्य प्रवर्द्धमाना द्रष्टव्या ,प्रतिमुहूर्त्तैकषष्टिभाग चाष्टादश एकस्य षष्टिभागस्य सत्का एकषष्टिभागा , स

षमासमाददानो द्वितीयस्य षण्मासस्य प्रथमेऽहोरात्रे 'बाहिराणंतर' त्ति—सर्वबाह्यान्मण्डलादनन्तरमर्वाक्तनं द्वितीयं मण्डलमुपसंक्रम्य चारं चरति 'ता जया णं' मित्यादि, तत्र यदा सर्वबाह्यानन्तरमर्वाक्तनं द्वितीयं मण्डलमुपसंक्रम्य चारं चरति तदा एकेन मुहूर्त्तेन पञ्च पञ्च योजनसहस्राणि त्रीणि चतुरुत्तराणि योजनशतानि सप्तपञ्चाशतं च षष्टिभागान् योजनस्य ५३०४५७/६० गच्छति, तथाहि—अस्मिन् मण्डले परिरयपरिमाणं तिस्रो लक्षा अष्टादश सहस्राणि द्वे शते सप्तनवत्यधिके योजनानाम् ३१८२९७, ततोऽस्य प्रागुक्तयुक्तिवशात् षष्ट्या भागो ह्रियते, हृते च भागे लब्धं यथोक्तमत्र मण्डले मुहूर्त्तगतिपरिमाणम्, अत्रापि दृष्टिपथप्राप्ततापरिमाणमाह—'तया णं' मित्यादि, तदा इहगतस्य मनुष्यस्य—जातावेकवचनम् इहगतानां मनुष्याणामेकत्रिंशता योजनसहस्रैर्नवभिः षोडशैः षोडशोत्तरैर्योजनशतैरेकोनचत्वारिंशता च षष्टिभागैर्योजनस्य एकं च षष्टिभागमेकषष्टिधा छित्त्वा तस्य सत्कैः षष्ट्या चूर्णिकाभागैः सूर्यश्चक्षुःस्पर्शमागच्छति, तथाहि—अस्मिन् मण्डले सूर्ये चारं चरति दिवसो द्वादशमुहूर्त्तप्रमाणो द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यामधिकः, तेषां चार्द्धे षट् मुहूर्त्ता एकेन मुहूर्त्तैकषष्टिभागेनाभ्यधिकाः, ततः सामस्त्येनैकषष्टिभागकरणार्थं 'षडपि' मुहूर्त्ता एकषष्ट्या गुण्यन्ते गुणयित्वा च एकषष्टिभागस्तत्राधिकः प्रक्षिप्यते ततो जातानि त्रीणि शतानि सप्तषष्ट्यधिकानि एकषष्टिभागानां ३६७, ततः सर्वबाह्यादर्वाक्तने तस्मिन् द्वितीये मण्डले यत्परिरयपरिमाणं त्रीणि लक्षाणि अष्टादश सहस्राणि द्वे शते सप्तनवत्यधिके ३१८२९७, तदेभिस्त्रिभिः शतैः सप्तषष्ट्यधिकैर्गुण्यते, जाता एकादश कोट्यः अष्टषष्टिर्लक्षाश्चतुर्दश सहस्राणि नव शतानि नवनवत्यधिकानि ११६८१४९९९, एतस्य एकषष्ट्या गुणितया षष्ट्या ३६६० भागो ह्रियते, हृते च भागे लब्धान्येकत्रिंशत्सहस्राणि नव शतानि षोडशोत्तराणि ३१९१६, शेषमुद्वरति चतुर्विंशतिः शतानि एकोनचत्वारिंशदधिकानि २४३९; नचातो योजनान्यायान्ति ततः षष्टिभागानयनार्थमेकषष्ट्या भागो ह्रियते, लब्धा एकोनचत्वारिंशत्षष्टिभागाः ३९ एकस्य च षष्टिभागस्य सत्काः षष्टिरेकषष्टिभागाः ६०/६१ 'तया णं राइदिय तहेव' तदा—सर्वबाह्यानन्तरार्वाक्तनद्वितीयमण्डलगोचारकाले रात्रिन्दिवम् रात्रिदिवसप्रमाणं तथैव—प्रागिव वक्तव्यम्, तच्चैवम्—'तया णं अट्ठारसमुहुत्ता राई भवति दोहिं एगट्ठिभागमुहुत्तेहिं ऊणा, दुवालसमुहुत्ते दिवसे हवइ दोहिं एगट्ठिभागमुहुत्तेहिं अहिए' इति, 'से पविसमाणे' इत्यादि, तत सर्वबाह्यानन्तरार्वाक्तनद्वितीयस्मादपि मण्डलादुक्तप्रकारेण प्रविशन् सूर्यो द्वितीयस्य षण्मासस्य द्वितीयेऽहोरात्रे 'बाहिरतच्चं' ति—सर्वबाह्यान्मण्डलादर्वाक्तनं तृतीयं मण्डलमुपसंक्रम्य चारं चरति 'ता जया णं' मित्यादि, तत्र यदा णमिति पूर्ववत् सर्वबाह्यान्मण्डलादर्वाक्तनं तृतीयं मण्डलमुपसंक्रम्य चारं चरति तदा पञ्च पञ्च योजनसहस्राणि त्रीणि चतुरुत्तराणि योजनशतानि एकोनचत्वारिंशतं च षष्टिभागान् योजनस्य ५३०४३९/६० एकैकेन मुहूर्त्तेन गच्छति, तस्मिन् हि मण्डले परिरयपरिमाणं तिस्रो लक्षा अष्टादश सहस्राणि द्वे शते एकोनाशीत्यधिके इति ३१८२७९, अस्य षष्ट्या भागो ह्रियते हृते च भागे लब्धं यथोक्तमत्र मण्डले मुहूर्त्तगतिपरिमाणम्, अत्रापि हि दृष्टिपथप्राप्ततापरिमाणमाह—'तया णं' मित्यादि, तदा इहगतस्य मनुष्यस्य—जातावेकवचनम्य भावादिहगतानां मनुष्याणामेकाधिकैर्द्वात्रिंशता सहस्रैरेकोनपञ्चाशता षष्टिभागैरेकं च षष्टिभागमेकषष्टिधा छित्त्वा तस्य सत्कैस्त्रयोविंशत्या चूर्णिकाभागैः सूर्यः चक्षुःस्पर्शमागच्छति, तथाहि—अस्मिन् मण्डले दिवसो द्वादशमुहूर्त्तप्रमाणश्चतुर्भिरेकषष्टिभागैरधिकस्तस्यार्द्धे षट् मुहूर्त्ता द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यामधिकाः, तत सामस्त्येनैकषष्टिभागकरणार्थं षडपि मुहूर्त्ता एकषष्ट्या गुण्यन्ते, गुणयित्वा च द्वावेकषष्टिभागौ प्रक्षिप्येते, ततो जातानि त्रीणि शतान्यष्टषष्ट्यधिकान्येकषष्टिभागानाम् ३६८, ततोऽस्मिन् मण्डले यत्परिरयपरिमाणं त्रीणि लक्षाण्यष्टादश सहस्राणि द्वे शते एकोनाशीत्यधिके ३१८२७९ इति, तदेभिस्त्रिभिः शतैरष्टषष्ट्यधिकैर्गुण्यते, जाता एकादश कोट्यः एकसप्तति शतसहस्राणि षड्विंशतिः सहस्राणि षट् शतानि द्विसप्तत्यधिकानि ११७१२६६७२, एतस्य षष्ट्या एकषष्ट्या गुणितया ३६६०, भागो ह्रियते, हृते च भागे लब्धानि द्वात्रिंशत्सहस्राणि एकोत्तराणि ३२००१, शेषमुद्वरति त्रीणि सहस्राणि द्वादशोत्तराणि ३०१२, तेषां षष्टिभागानयनार्थमेकषष्टिधा भागो ह्रियते, लब्धा एकोनपञ्चाशत्षष्टिभागा ४९ त्रयोविंशतिश्च एकस्य षष्टिभागस्य सत्का एकषष्टिभागा २३/६१ इति, 'रत्तिंदिय तहेव' त्ति—रात्रिन्दिवं—रात्रिदिवसपरिमाणमत्र तथैव—प्रागिव वक्तव्यम्, तच्चैवम्—'तया णं अट्ठारसमुहुत्ता राई भवइ चउहिं एगट्ठिभागमुहुत्तेहिं ऊणा, दुवालसमुहुत्ते दिवसे हवइ चउहिं एगट्ठिभागमुहुत्तेहिं अहिए' इति। सम्प्रति सर्वबाह्यान्मण्डलादर्वाक्तनेषु चतुरादिषु मण्डलेषु अतिदेशमाह—'एवं खलु' त्यादि एवम्—उक्तेन प्रकारेण 'खलु' निश्चितमेतेनोपायेन शनैः शनैस्तत्तदभ्यन्तरानन्तरमण्डलाभिमुखगमनरूपेणाभ्यन्तरं प्रविशन् सूर्यस्तदनन्तरान्मण्डलात्तदनन्तरं मण्डलं संक्रामन् संक्रामन् एकैकस्मिन् मण्डले मुहूर्त्तगतिमित्यत्र द्वितीया सप्तम्यर्थे मुहूर्त्तगतौ—मुहूर्त्तगतिपरिमाणे अष्टादश अष्टादश षष्टिभागान् योजनस्य व्यवहारेण परिपूर्णान् निश्चयतः किञ्चिदूनान्निर्वेष्टयन् २—हापयन् २ इत्यर्थः, पूर्वपूर्वमण्डलापेक्षया अभ्यन्तराभ्यन्तरमण्डलस्य परिरयमधिकृत्याष्टादशभिर्योजनैर्हीनत्वात्, पुरुषच्छायामित्यत्रापि द्वितीया सप्तम्यर्थे, ततोऽयमर्थः—पुरुषच्छायायां दृष्टिपथप्राप्ततारूपायां सातिरेकाणि पञ्चाशीतिं पञ्चाशीतिं योजनानि अभिवर्द्धयन् अभिवर्द्धयन्, इह च सर्वबाह्यान्मण्डलादर्वाक्तनानि कतिपयानि प्रथमद्वितीयादिमण्डलान्यपेक्ष्य स्थूलत उक्तम्, परमार्थतः पुनरन्यद् द्रष्टव्यम्—इह येनैव क्रमेण सर्वाभ्यन्तरान्मण्डलात्परतो दृष्टिपथप्राप्तता हापयन् विनिर्गतस्तेनैव क्रमेण सर्वबाह्यान्मण्डलादर्वाक्तनेषु मण्डलेषु दृष्टिपथप्राप्ततामभिवर्द्धयन् प्रविशति, तत्र सर्वबाह्यान्मण्डलादर्वाक्तनद्वितीयमण्डलगतात् दृष्टिपथप्राप्ततापरिमाणात् सर्वबाह्यमण्डले पञ्चाशीतिर्योजनानि नव षष्टिभागाः योजनस्य एकं

च पष्टिभागमेकषष्टिया छित्वा तस्य सत्कान् पष्टिभागान् हापयति, एतच्च प्रागेव भावितं, ततस्तस्मात्सर्वबाह्यान्मण्डलादर्वाक्तने द्वितीये मण्डले प्रविशन् तावद्भूयोऽपि दृष्टिपथप्राप्ततापरिमाणेऽभिवर्द्धयति ध्रुवं, ततोऽर्वाक्तनेषु मण्डलेषु यस्मिन् यस्मिन् मण्डले दृष्टिपथप्राप्ततापरिमाणं ज्ञातुमिष्यते तत्र तत्र तृतीयमण्डलादारभ्य तत्तन्मण्डलसंख्यया षट्त्रिंशद् गुण्यते, तद्यथा—तृतीयमण्डलचिन्तायामेकेन चतुर्थमण्डलचिन्ताया द्वाभ्याम्, एवं यावत्सर्वाभ्यन्तरमण्डलचिन्ताया द्व्यशीत्यधिकेन शतेन, इत्थं च गुणयित्वा यल्लभ्यते, तद् ध्रुवराशेरपनीय शेषेण ध्रुवराशिना सहितं पूर्वपूर्वमण्डलगतं दृष्टिपथप्राप्ततापरिमाणं तत्र तत्र मण्डले द्रष्टव्यं, तद्यथा—तृतीये मण्डले षट्त्रिंशद् एकेन गुण्यते एकेन च गुणितं तदेव भवतीति जाता षट्त्रिंशदेव, सा ध्रुवराशेरपनीयते, जातं शेषमिदं पञ्चाशीतिर्योजनानि नव षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्का एकषष्टिभागाश्चतुर्विंशतिः ८५ ९/६० । २४/६१ । एतेन सहितं पूर्वमण्डलगतं दृष्टिपथप्राप्ततापरिमाणम्, एकत्रिंशत्सहस्राणि नव शतानि षोडशोत्तराणि योजनानामेकोनचत्वारिंशत्षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्का षष्टिरेकषष्टिभागा ३१९१६ ३९/६० । ६०/६१ । इत्येवरूपं क्रियते, ततोऽधिकृते तृतीये मण्डले यथोक्तं दृष्टिपथप्राप्ततापरिमाणं भवति, तच्च प्रागेवोपदर्शितं, चतुर्थे मण्डले षट्त्रिंशद् द्वाभ्यां गुण्यते, गुणयित्वा ध्रुवराशेरपनीय शेषेण ध्रुवराशिना तृतीयमण्डलगतं दृष्टिपथप्राप्ततापरिमाणं सहितं क्रियते, तत इदं तत्र मण्डले दृष्टिपथप्राप्ततापरिमाणं भवति—द्वात्रिंशत्सहस्राणि षडशीत्यधिकानि योजनानामष्टापञ्चाशच्च षष्टिभागा योजनस्य एकस्य च षष्टिभागस्य सत्का एकादशैकषष्टिभागा. ३२०८६ । ५८/६० । ११/६१ । एवं शेषेष्वपि मण्डलेषु भावनीयं, यदा तु सर्वाभ्यन्तरे मण्डले दृष्टिपथप्राप्ततापरिमाणं ज्ञातुमिष्यते तदा षट्त्रिंशद् द्व्यशीत्यधिकेन शतेन गुण्यते तृतीयमण्डलादारभ्य सर्वाभ्यन्तरस्य मण्डलस्य द्व्यशीत्यधिकशततमत्वात्, ततो जातानि षट्षष्टिशतानि द्विपञ्चाशदधिकानि ६५५२, तेषामेकषष्ट्या भागे हृते लब्धं सप्तोत्तरं शतं षष्टिभागानां, शेषं पञ्चविंशतिः १०७/६० । २५ । एतत्पञ्चाशीतिर्योजनानि नव षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्का षष्टिरेकषष्टिभागा. ८५ ९/६० । ६०/६१ इत्येवंरूपात् ध्रुवराशेः शोध्यते, जातानि पश्चात् त्र्यशीतिर्योजनानि द्वाविंशतिः षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्का पञ्चत्रिंशदेकषष्टिभागा, इह षट्त्रिंशत् २ एकषष्टिभागा कलया न्यूना परमार्थतो लभ्यन्ते एतच्च प्रागेवोक्तं, तच्च कलान्यूनत्वं प्रतिमण्डलं भवत् यदा द्व्यशीत्यधिकशततमे मण्डले एकत्र पिण्डितं सत् चिन्त्यते तदा अष्टषष्टिरेव षष्टिभागा लभ्यन्ते ततस्ते भूयः प्रक्षिप्यन्ते ततो जातमिदम् त्र्यशीतिर्योजनानि त्रयोविंशतिः षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्का द्विचत्वारिंशदेकषष्टिभागा ८३ २३/६० ४२/६१ एतेषु सर्वाभ्यन्तरानन्तरद्वितीयमण्डलगतं दृष्टिपथप्राप्ततापरिमाणं सप्तचत्वारिंशत्सहस्राणि शतमेकमेकोनाशीत्यधिकं योजनानां सप्तपञ्चाशत् षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्का एकोनविंशतिरेकषष्टिभागा ४७१७९ ५७/६० । १९/६१ । इत्येवंरूपं सहितं क्रियते ततो यथोक्तं सर्वाभ्यन्तरे मण्डले दृष्टिपथप्राप्ततापरिमाणं भवति, तच्च सप्तचत्वारिंशत्सहस्राणि द्वे शते त्रिषष्ट्यधिके योजनानामेकविंशतिश्च षष्टिभागा योजनस्य ४७२६३ २१/६० । एवं दृष्टिपथप्राप्ततायां कतिपयेषु मण्डलेषु सातिरेकाणि पञ्चाशीतिं योजनानि अग्रेतनेषु चतुरशीतिं पर्यन्ते यथोक्ताऽधिकसहितानि त्र्यशीतिं योजनानि अभिवर्द्धयन् अभिवर्द्धयन् तावद् वक्तव्य यावत्सर्वाभ्यन्तरमण्डलमुपसङ्क्रम्य चारं चरति 'ता जया णं' मित्यादि तत्र यदा सूर्यः सर्वाभ्यन्तरमण्डलमुपसंक्रम्य चारं चरति तदा पञ्च पञ्च योजनसहस्राणि द्वे एकपञ्चाशदधिके योजनशते एकोनत्रिंशतं च षष्टिभागान् योजनस्य ५२५१ २९/६० एकेन मुहूर्तेन गच्छति, तदा च इहगतस्य मनुष्यस्य—जातावेकवचनम् इहगतानां मनुष्याणां सप्तचत्वारिंशता योजनसहस्रैर्द्वाभ्यां त्रिषष्ट्यभ्यां त्रिषष्ट्यधिकाभ्यां योजनशताभ्यामेकविंशत्या षष्टिभागैर्योजनस्य ४७२६३ २१/६० सूर्यश्चक्षुः स्पर्शमागच्छति, एतच्च मुहूर्तगतिपरिमाणं दृष्टिपथप्राप्ततापरिमाणं च प्रागेव भावितम्, सूत्रकृताऽपि प्रस्तावाद्भूय उक्तम्, ततो न पुनरुक्ततादोषः 'तया णं उत्तमकट्ठपत्ते' इत्यादि सुगमं, यावत्प्राभृतप्राभृतपरिसमाप्तिः । सू० प्र० २ पाहु० । जं० ।

अथाऽत्र गतिप्रश्नाय सूत्रम्—

जया णं भंते ! सूरिए अब्भंतराणंतरं मंडलं उवसंकमित्ता चारं चरति तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छइ ?, गोयमा ! पंच पंच जोअणसहस्साइं दोण्णि अ एगावण्णे जोयणसए सीआलीसं च सट्ठिभागे जोअणस्स एगमेगेणं मुहुत्तेणं गच्छइ, तया णं इहगयस्स मणूसस्स सीआलीसाए जोअणसहस्सेहिं एगूणासीए जोअणसए सत्तावण्णाए अ सट्ठिभाएहिं जोअणस्स सट्ठिभागं च एगसट्ठिधा छेत्ता एगूणवीसाए चुण्णिआभागेहिं सूरिए चक्खुप्फासं हव्वमागच्छइ, से णिक्खममाणे सूरिए दोच्चंसि अहोरत्तंसि अब्भंतरतच्चं मंडलं उवसंकमित्ता चारं चरइ । ( सू० १३३+ ) ।

'जया णं' मित्यादि, यदा भगवन् ! सर्वाभ्यन्तरानन्तरं द्वितीयं दक्षिणायनापेक्षया आद्यं मण्डलमुपसंक्रम्य चारं चरति तदा एकैकेन मुहूर्तेन कियत्क्षेत्रं गच्छति ?, गौतम ! पञ्च पञ्च योजनसहस्राणि द्वे चैकपञ्चाशे योजनशते सप्तचत्वारिंशतं च षष्टिभागान् योजनस्यैकैकेन मुहूर्तेन गच्छति, कथमिति चेत्, उच्यते—अस्मिंश्च मण्डले परिरयपरिमाणं त्रीणि योजनलक्षाणि पञ्चदश सहस्राणि शतमेकं सप्तोत्तरं व्यवहारतः परिपूर्णं निश्चयमतेन तु किञ्चिदूनं ३१५१०७, ततोऽस्य प्रागुक्तयुक्तिवशात् षष्ट्या भागे लब्धं यथोक्तमत्र मण्डले मुहूर्तगतिप्रमाणम् ५२५१ ४७/६० अथवा—पूर्वमण्डलपरिरयपरिमाणादस्य परिरयपरिमाणं व्यवहारतः पूर्णान्यष्टादश योजनानि वर्द्धते निश्चयमतेन तु किञ्चिदूनानि, अष्टादशानां योजनानां षष्ट्या भागे लब्धा अष्टादश षष्टिभागा योजनस्य ते प्राक्तनमण्डलगतमुहूर्तगतिपरिमाणेऽधिकत्वेन प्रक्षिप्यन्ते, ततो

भवति यथोक्त तत्र मण्डले मुहूर्त्तगतिप्रमाणमिति, अत्रापि दृष्टिपथप्राप्ततावियं परिमाणमाह—यदा अभ्यन्तराद्द्वितीये मण्डले सूर्यश्चरति तदा इहगतस्य मनुष्यस्य—जातावेकवचनमित्यत्र गतानां मनुष्याणां सप्तचत्वारिंशता योजनसहस्रैरेकोनाशीत्यधिकेन योजनशतेन सूत्रे तृतीयार्थे सप्तमी प्राकृतत्वात्, सप्तपञ्चाशता च षष्टिभागैर्योजनस्य षष्टिभागं च एकषष्टिधा छित्त्वा—एकषष्टिखण्डान् कृत्वा एकषष्टिधा गुणयित्वेत्यर्थ, तस्य सत्कैरेकोनविंशत्या चूर्णिकाभागै—भागभागै सूर्यश्चक्षु स्पर्शमागच्छति, तथाहि-सर्वाभ्यन्तरानन्तरे द्वितीये मण्डले दिवसप्रमाणं द्वाभ्यामेकषष्टिभागाभ्यां हीना अष्टादश मुहूर्त्तास्तेषामर्द्धे नव मुहूर्त्ता एकैकेकषष्टिभागेन हीनास्तत सामस्त्येनैकषष्टिभागकरणार्थं नवापि मुहूर्त्ता एकषष्ट्या गुण्यन्ते, तेभ्य एकषष्टिभागोऽपनीयते, तत शेषा जाता एकषष्टिभागा पञ्च शतान्यष्टचत्वारिंशदधिकानि ५४८, प्रस्तुतमण्डले मुहूर्त्तगति ५२५१ योजनानि ४७/६० अयं च राशि षष्टिच्छेद इति योजनराशि षष्ट्या गुणयित्वा सवर्ण्यते जातम् ३१५१०७, अयमेव राशि करणविभावनाया मलयगिरीयक्षेत्रसमासवृत्तौ च परिधिराशिरिति कृत्वा दर्शितो लाघवात् भाज्यराशिलब्धस्य भाजकराशिना गुणने मूलराशेरेव लाभात्, एष राशि पञ्चभि शतैरष्टाचत्वारिंशदधिकैर्गुण्यते जाता सप्तदशकोट्य षड्विंशतिर्लक्षा अष्टसप्ततिं सहस्राणि षट् शतानि षट्त्रिंशदधिकानि १७२६७८६३६, अयं च राशिर्भागभागात्मकत्वान्न योजनानि प्रयच्छतीति एकषष्टेः षष्ट्या गुणितायां यावान् राशिर्भवति तेन भागो ह्रियते इयं च गणितप्रक्रियालाघवार्थिका अन्यथाऽस्य राशेरेकषष्ट्या भागे हृते षष्टिभागा लभ्यन्ते तेषां च षष्ट्या भागे हृते योजनानि भवन्तीति गौरवं स्यात्, एकषष्ट्या च षष्ट्या गुणिताया षट्त्रिंशच्छतानि षष्ट्यधिकानि ३६६०, तैर्भागैर्हृते आगत सप्तचत्वारिंशत्सहस्राणि शतमेकमेकोनाशीत्यधिकं योजनानाम् ४७१७९, शेष ३४९६, छेदराशेः षष्ट्याऽपवर्त्तना क्रियते जाता एकषष्टि ६१ तया शेषराशेर्भागो ह्रियते लब्धा सप्तपञ्चाशत् षष्टिभागा ५७/६० एकोनविंशतिश्चैकस्य षष्टिभागस्य सत्का एकषष्टिभागा १९/६१ ।

अथाभ्यन्तरतृतीयमण्डलस्य चारं पिपृच्छिषुराद्यसूत्रं सूत्रयति—

जया णं भंते ! सूरिए अब्भंतरतच्चं मंडलं उवसंकमित्ता चारं चरइ, तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छइ ?, गोअमा ! पंच पंच जोअणसहस्साइं दोण्णि अ बावण्णे जोअणसए पंच य सट्ठिभाए जोअणस्स एगमेगेणं मुहुत्तेणं गच्छइ, तया णं इहगयस्स मणूसस्स सीआलीसाए जोअणसहस्सेहिं छण्णउइए जोअणेहिं तेत्तीसाए सट्ठिभागेहिं जोअणस्स सट्ठिभागं च एगसट्ठिधा छेत्ता दोहिं चुण्णिआभागेहिं सूरिए चक्खुप्फासं हव्वमागच्छति, एवं खलु एतेणं उवाएणं णिक्खममाणे सूरिए तयाणंतराओ मंडलाओ तयाणंतरं मंडलं संकममाणे संकममाणे अट्ठारस अट्ठारस सट्ठिभागे जोअणस्स एगमेगे मंडले मुहुत्तगइं अभिवड्ढेमाणे अभिवड्ढेमाणे चुलसीइं चुलसीइं सआइं जोअणाइं पुरिसच्छायं णिव्वुड्ढेमाणे णिव्वुड्ढेमाणे सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरइ । ( सू०-१३३× ).

'से णिक्खममाणे सूरिए दोच्चंसि' इत्यादि, अथ निष्क्रामन् सूर्यो द्वितीयेऽहोरात्रे प्रस्तुताऽयनापेक्षया द्वितीयमण्डल इत्यर्थः अभ्यन्तरं तृतीयमण्डलमुपसंक्रम्य चारं चरति तदा एकैकेन मुहूर्त्तेन कियत् क्षेत्रं गच्छति ?, भगवानाह-गौतम! पञ्च पञ्च योजनसहस्राणि द्वे च द्विपञ्चाशदुत्तरशते पञ्चदश षष्टिभागान् योजनस्यैकैकेन मुहूर्त्तेन गच्छति, इदं च प्रस्तुतमण्डलपरिरयस्य षष्ट्या भजने संवादमाप्नोति, तदा च इहगतस्य मनुष्यस्य सप्तचत्वारिंशता योजनसहस्रैः षण्णवत्या च योजनैस्त्रिंशता च षष्टिभागैर्योजनस्य षष्टिभागं चैकम् एकषष्टिधा छित्त्वा द्वाभ्यां चूर्णिकाभागाभ्यां सूर्यश्चक्षु स्पर्शं 'हव्वं' शीघ्रमागच्छति, तथाहि-अत्र मण्डले दिनप्रमाणमष्टादश मुहूर्त्ताश्चतुर्भिरेकषष्टिभागैर्हीनास्तेषामर्द्धे च नव द्वाभ्यामेकषष्टिभागाभ्यां हीनास्तत सामस्त्येनैकषष्टिभागकरणार्थं, नवापि मुहूर्त्ता एकषष्ट्या गुण्यन्ते तेभ्यश्च द्वावेकषष्टिभागावपनीयेते शेषाः पञ्च शतानि सप्तचत्वारिंशदधिकानि ५४७, प्रस्तुतमण्डले मुहूर्त्तगति ५२५२ ५/६० इत्येवरूपा योजनराशि षष्ट्या गुणयित्वा सवर्ण्यते जातम् ३१५१२५, अयमेव राशिरत्रैव परिधिराशित्वेन निरूपित, अस्य च सप्तचत्वारिंशदधिकपञ्चशतैर्गुणने जाता सप्तदशकोट्यस्त्रयोविंशति शतसहस्राणि त्रिसप्तति सहस्राणि त्रीणि शतानि पञ्चसप्तत्यधिकानि १७२३७३३७५, एतेषां षष्टिगुणितया एकषष्ट्या ३६६० भागे हृते आगतानि सप्तचत्वारिंशत् सहस्राणि षण्णवत्यधिकानि ४७०९६, शेषं विंशतिशतानि पञ्चदशोत्तराणि २०१५, छेदराशेः षष्ट्याऽपवर्त्तनाया जाता एकषष्टिस्तया शेषराशेर्भजने लब्धास्त्रयस्त्रिंशत् षष्टिभागा ३३/६० शेषौ च द्वावेकस्य षष्टिभागस्य सत्कावेकषष्टिभागौ २/६१ इति। सम्प्रति चतुर्थमण्डलादिष्वतिदेशमाह—'एवं खलु एतेणं उवाएणं' मित्यादि, एवम्—मण्डलत्रयदर्शितरीत्या खलु—निश्चितमनेनानन्तरोदितेनोपायेन शनै शनैस्तत्तद्बहिर्मण्डलाभिमुखगमनरूपेण निष्क्रामन् सूर्यस्तदनन्तरान्मण्डलात्तदनन्तरं मण्डलं प्रागुक्तप्रकारेण संक्रामन् २ एकैकस्मिन् मण्डले मुहूर्त्तगतिमित्यत्र प्राकृतत्वात् सप्तम्यर्थे द्वितीया तेन मुहूर्त्तगतौ अष्टादश अष्टादश षष्टिभागान् योजनस्य व्यवहारत परिपूर्णान् निश्चयत किञ्चिदूनान् अभिवर्द्धयमान चतुरशीतिं चतुरशीतिं योजनानि शतानि—किञ्चिन्न्यूनानि 'पुरिसच्छायं' इति-पुरुषस्य छाया यतो भवति सा पुरुषच्छाया सा चेह प्रस्तावात् प्रथमत सूर्यस्योदयमानस्य दृष्टिपथप्राप्तता, अत्रापि सप्तम्यर्थे द्वितीया, ततोऽयमर्थ —तस्यां निवर्द्धयन् २—हापयन् हापयन्, कोऽर्थ ?—पूर्वे पूर्वे मण्डले सत्कपुरुषच्छायातो बाह्यबाह्यमण्डलपुरुषच्छाया किञ्चिन्न्यूनैश्चतुरशीत्या योजनैर्हीना इत्यर्थ, सर्वबाह्यमण्डलमुप-

त्र्यशीतिचतुरशीतिपञ्चाशीतियोजनानां सम्भवेऽपि सूत्रे यच्चतुरशीतिग्रहणं तद् देहलीप्रदीपन्यायेनोभयपार्श्ववर्त्तिनोस्त्र्यशीतिपञ्चाशीत्योर्ग्रहणार्थमिति ।

अथोक्ते एव मण्डलत्रये पश्चानुपूर्व्या सूर्यस्य मुहूर्त्तगत्याद्याह—

जया णं भंते ! सूरिए सव्वबाहिरमंडलं उवसंकमित्ता चारं चरइ तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छइ ?, गोयमा ! पंच पंच जोअणसहस्साइं तिण्णि अ पंचुत्तरे जोअणसए पन्नरस य सट्ठिभाए जोअणस्स एगमेगेणं मुहुत्तेणं गच्छइ, तया णं इहगयस्स मणुसस्स एगतीसाए जोअणसहस्सेहिं अट्ठहि अ एगतीसेहिं जोअणसएहिं तीसाए अ सट्ठिभाएहिं जोअणस्स सूरिए चक्खुप्फासं हव्वमागच्छइ त्ति, एस णं पढमे छम्मासे, एस णं पढमस्स छम्मासस्स पज्जवसाणे, से सूरिए दोच्चे छम्मासे अयमाणे पढमंसि अहोरत्तंसि बाहिराणंतरं मंडलं उवसंकमित्ता चारं चरइ । ( सू० १३३× )

'जया ण' मित्यादि, यदा भगवन् ! सूर्यः सर्वबाह्यमण्डलमुपसंक्रम्य चारं चरति तदा एकैकेन मुहूर्त्तेन कियत् क्षेत्रं गच्छति ?, गौतम ! पञ्च पञ्च योजनसहस्राणि त्रीणि पञ्चोत्तराणि योजनशतानि पञ्चदश षष्टिभागान् योजनस्य ५३०५ १५/६० एकैकेन मुहूर्त्तेन गच्छति, कथमिति चेत् ?, उच्यते—अस्मिन् मण्डले परिरयपरिमाणं त्रीणि लक्षा अष्टादश सहस्राणि त्रीणि शतानि पञ्चदशोत्तराणि ३१८३१५, ततोऽस्य प्रागुक्तयुक्तिवशात् षष्ट्या भक्ते लब्धं यथोक्तमत्र मण्डले मुहूर्त्तगतिपरिमाणमिति, अत्र दृष्टिपथप्राप्ततापरिमाणमाह—तदा-सर्वबाह्यमण्डलचारचरणकाले इहगतस्य मनुष्यस्येति प्राग्वत् एकत्रिंशता योजनसहस्रैरष्टभिश्चैकत्रिंशदधिकैर्योजनशतैस्त्रिंशता च षष्टिभागैर्योजनस्य ३१८३१ ३०/६० सूर्यः शीघ्रं चक्षुःस्पर्शमागच्छति, तथाहि—अस्मिन् मण्डले सूर्ये चारं चरति दिवसो द्वादशमुहूर्त्तप्रमाणो, दिवसस्यार्द्धेन यावन्मात्रं क्षेत्रं व्याप्यते तावति स्थितः उदयमानः सूर्यः, उपलभ्यन्ते द्वादशानां च मुहूर्त्तानामर्द्धे षट् मुहूर्त्तास्ततो यदत्र मण्डले मुहूर्त्तगतिपरिमाणं पञ्च योजनसहस्राणि त्रीणि शतानि पञ्चोत्तराणि पञ्चदश च षष्टिभागा योजनस्य ५३०५ १५/६० तत् षड्भिर्गुण्यते, दिवसार्द्धगुणिताया एव मुहूर्त्तगतेर्दृष्टिपथप्राप्तताकारणत्वात्, ततो यथोक्तमत्र मण्डले दृष्टिपथप्राप्ततापरिमाणं भवति, यद्यप्यनुपान्त्यमण्डलदृष्टिपथप्राप्ततापरिमाणात् पञ्चाशीतिर्योजनानि नव षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्का षष्टिरेकषष्टिभागा इत्ययं राशौ शोधितः इदमुपपद्यते एतच्च प्राग् भावितं तथापि प्रस्तुतमण्डलस्योत्तरायणगतमण्डलानामवधिभूतत्वेनान्यमण्डलकरणनिरपेक्षतया करणान्तरमकारि, इदं च सर्वाभ्यन्तरानन्तरमण्डलात् पूर्वानुपूर्व्या गण्यमानं त्र्यशीत्यधिकशततमम्, प्रतिमण्डलं चाहोरात्रगणनादहोरात्रोऽपि त्र्यशीत्यधिकशततमस्तेनायं दक्षिणायनस्य चरमो दिवस इत्याद्यभिधातुमाह—'एस णं पढमे छम्मासे,' एस णं 'मित्यादि, एष च दक्षिणायनस्य त्र्यशीत्यधिकशतदिनरूपो राशिः प्रथमः षण्मासः—अयनरूपः कालविशेषः, षट्संख्याका मासाः पिण्डीभूता यत्रेति व्युत्पत्तेरिदं समाधेयम्, अन्यथा प्रथमः षण्मास इत्येकवचनानुपपत्तिरिति । अथवा-पात्रादिगणान्त पाठात् स्त्रीत्वाभावे अदन्तद्विगुत्वेऽपि न ङीप्रत्ययस्तेनैव तत्प्रथमं षण्मासम्, आर्षत्वात् पुंस्त्वम्, एतच्च प्रथमस्य षण्मासस्य दक्षिणायनरूपस्य पर्यवसानम्, अथ सर्वबाह्यमण्डलचारानन्तरं सूर्यो द्वितीयं षण्मासं प्राप्नुवन् गृह्णन् इत्यर्थः, प्रथमे अहोरात्रे उत्तरायणस्येति गम्यम् बाह्यानन्तरं पश्चानुपूर्व्या द्वितीयं मण्डलमुपसंक्रम्य चारं चरति ।

अथात्र गत्यादिप्रश्नार्थं सूत्रमाह—

जया णं भंते ! सूरिए बाहिराणंतरं मंडलं उवसंकमित्ता चारं चरइ तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छइ ?, गोअमा ! पंच पंच जोअणसहस्साइं तिण्णि अ चउरुत्तरे जोअणसए सत्तावण्णं च सट्ठिभाए जोअणस्स एगमेगेणं मुहुत्तेणं गच्छइ, तया णं इहगयस्स मणुसस्स एगत्तीसाए जोअणसहस्सेहिं णवहि अ सोलसुत्तरेहिं जोअणसएहिं इगुणालीसाए अ सट्ठिभाएहिं जोअणस्स सट्ठिभागं च एगसट्ठिधा छेत्ता सट्ठीए चुण्णिआभागेहिं सूरिए चक्खुप्फासं हव्वमागच्छइ त्ति, से पविसमाणे सूरिए दोच्चंसि अहोरत्तंसि बाहिरतच्चं मंडलं उवसंकमित्ता चारं चरइ । ( सू०-१३३× )

'जया ण' मित्यादि, यदा भगवन् ! सूर्यः बाह्यानन्तरमर्वाक्तनं द्वितीयं मण्डलमुपसंक्रम्य चारं चरति तदा भगवन् ! एकैकेन मुहूर्त्तेन कियत् क्षेत्रं गच्छति ?, भगवानाह—गौतम ! पञ्च पञ्च योजनसहस्राणि त्रीणि च चतुरुत्तराणि योजनशतानि सप्तपञ्चाशतं च षष्टिभागान् योजनस्यैकैकेन मुहूर्त्तेन गच्छति ५३०४ ५७/६०, तथाहि—अस्मिन् मण्डले परिरयपरिमाणं त्रीणि लक्षाणि अष्टादश सहस्राणि द्वे शते सप्तनवत्यधिके योजनानाम् ३१८२९७, ततोऽस्य षष्ट्या भागे हृते लब्धं यथोक्तमत्र मण्डले मुहूर्त्तगतिप्रमाणम्, अथात्र दृष्टिपथप्राप्ततापरिमाणमाह—तदा इहगतस्य मनुष्यस्येति प्राग्वत् एकत्रिंशता योजनसहस्रैः षोडशाधिकैर्नवभिश्च योजनशतैरेकोनचत्वारिंशता च षष्टिभागैर्योजनस्य एकं च षष्टिभागमेकषष्टिधा छित्त्वा तस्य सत्कैः षष्ट्या चूर्णिकाभागैः ३१९१६ ३९/६० ६०/६१ सूर्यश्चक्षुःस्पर्शमागच्छति । तथाहि-अस्मिन् मण्डले सूर्ये चारं चरति दिवसो द्वादशमुहूर्त्तप्रमाणो द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यामधिकस्तेषां चार्द्धे षट् मुहूर्त्ता एकेन मुहूर्त्तैकषष्टिभागेनाभ्यधिकास्ततः सवर्णनार्थं षडपि मुहूर्त्ता एकषष्ट्या गुण्यन्ते तत एकः षष्टिभागस्तत्राधिकः प्रक्षिप्यते, ततो जातानि त्रीणि शतानि सप्तषष्ट्यधिकानि एकषष्टिभागानां ३६७, ततः प्रस्तुतमण्डलस्य परिमाणं त्रीणि लक्षाणि अष्टादश सहस्राणि द्वे शते सप्तनवत्यधिके

३१८२९७, इदं च योजनराशिं षष्ट्या गुणयित्वा सवर्णितः मुहूर्तगतिरिति यथा व्यवह्रियते तथा प्रागुक्तम्, एतदभिस्त्रिभिः शतैः सप्तषष्ट्यधिकैर्गुण्यते जाता एकादश कोट्योऽष्टषष्टिर्लक्षाश्चतुर्दश सहस्राणि नव शतानि नवनवत्यधिकानि ११६८१४९९९, एतस्य एकषष्ट्या गुणितया षष्ट्या ३६६०, भागो ह्रियते लब्धान्येकत्रिंशत्सहस्राणि नव शतानि षोडशोत्तराणि ३१९१६, शेषमुद्धरति चतुर्विंशतिशतानि एकोनचत्वारिंशदधिकानि २४३९, न चातो योजनान्यायान्ति ततः षष्टिभागानयनार्थमेकषष्ट्या भागो ह्रियते लब्धा एकोनचत्वारिंशत् षष्टिभागा ३९ एकस्य च षष्टिभागस्य सत्काः षष्टिचूर्णिकाभागाः १६/६१ अथ तृतीयं मण्डलम्-'से पविसमाणे' इत्यादि। अथ प्रविशन्—जम्बूद्वीपाभिमुखं चरन् सूर्यः द्वितीयेऽहोरात्रे उत्तरायणसत्के इत्यर्थः बाह्यतृतीयमण्डलमुपसंक्रम्य चारं चरति।

तदा किमित्याह—

जया णं भंते! सूरिए बाहिरतच्चं मंडलं उवसंकमित्ता चारं चरइ तया णं एगमेगेणं मुहुत्तेणं केवइअं खेत्तं गच्छइ?, गोअमा! पञ्च पञ्च जोअणसहस्साइं तिण्णि अ चउरुत्तरे जोअणसए इगुणालीसं च सट्ठिभाए जोअणस्स एगमेगेणं मुहुत्तेणं गच्छइ, तया णं इहगयस्स मणुयस्स एगाहिएहिं बत्तीसाए जोअणसहस्सेहिं एगूणपन्नाए अ सट्ठिभाएहिं जोअणस्स सट्ठिभागं च एगसट्ठिधा छेत्ता तेवीसाए चुण्णिआभाएहिं सूरिए चक्खुप्फासं हव्वमागच्छइ त्ति, एवं खलु एएणं उवाएणं पविसमाणे, सूरिए तयाणंतराओ मंडलाओ तयाणंतरं मंडलं संकममाणे संकममाणे अट्ठारस अट्ठारस सट्ठिभाए जोअणस्स एगमेगे मंडले मुहुत्तगइं निवड्ढेमाणे निवड्ढेमाणे सातिरेगाइं पंचासीतिं पंचासीतिं जोअणाइं पुरिसच्छायं अभिवड्ढेमाणे अभिवड्ढेमाणे सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरइ, एस णं दोच्चे छम्मासे, एस णं दोच्चस्स छम्मासस्स पज्जवसाणे, एस णं आइच्चे, संवच्छरे एस णं आइच्चस्स संवच्छरस्स पज्जवसाणे पण्णत्ते। (सू०-१३३+)

'जया ण' मित्यादि यदा भगवन्! सूर्यः बाह्यतृतीय मण्डलमुपसंक्रम्य चारं चरति तदा एकैकेन मुहूर्त्तेन कियत् क्षेत्रं गच्छति?, भगवानाह—गौतम! पञ्च पञ्च योजनसहस्राणि त्रीणि चतुरुत्तराणि योजनशतानि एकोनचत्वारिंशतं च षष्टिभागान् योजनस्य ५३०४ ३९/६०। एकैकेन मुहूर्त्तेन गच्छति, तथाहि—अस्मिन् मण्डले परिरयपरिमाणं तिस्रो लक्षा अष्टादश सहस्राणि द्वे शते एकोनाशीत्यधिके ३१८२७९ अस्य च षष्ट्या भागे हृते लब्धं यथोक्तमत्र मण्डले मुहूर्तगतिप्रमाणम्, अथात्र दृष्टिपथप्राप्तता—तदा इहगतस्य मनुष्यस्य एकाधिकैर्द्वात्रिंशता सहस्रैरेकोनपञ्चाशता च षष्टिभागैरेकं च षष्टिभागमेकषष्टिधा छित्त्वा तस्य सत्कैस्त्रयोविंशत्या चूर्णिकाभागैः ३२००१ । ४९/६० । २३/६१ । सूर्यः चक्षुःस्पर्शमागच्छति, तथाहि—

अस्मिन् मण्डले दिवसो द्वादशमुहूर्त्तप्रमाणश्चतुर्भिर्मुहूर्त्तैकषष्टिभागैरधिकस्तस्यार्द्धं षट् मुहूर्त्ता द्वाभ्यामेकषष्टिभागाभ्यामधिकास्ततः सामस्त्येनैकषष्टिभागकरणार्थं षडपि मुहूर्त्ता एकषष्ट्या गुण्यन्ते गुणयित्वा च तत्र द्वावेकषष्टिभागौ प्रक्षिप्येते ततो जातानि त्रीणि शतानि अष्टषष्ट्यधिकानि एकषष्टिभागानाम् ३६८, ततोऽस्मिन् मण्डले यत्परिरयप्रमाणं त्रीणि लक्षाणि अष्टादश सहस्राणि द्वे शते एकोनाशीत्यधिके ३१८२७९ एतत् त्रिभिः शतैः अष्टषष्ट्यधिकैर्गुण्यते जाता एकादश कोट्यः एकसप्ततिः शतसहस्राणि षड्विंशतिः सहस्राणि षट् शतानि द्विसप्तत्यधिकानि ११७१२६६७२, अस्य एकषष्ट्या गुणितया षष्ट्या ३६६० भागे लब्धानि द्वात्रिंशत्सहस्राणि एकोत्तराणि ३२००१ शेषं त्रीणि सहस्राणि द्वादशोत्तराणि ३०१२ तथा षष्टिभागानयनार्थमेकषष्ट्या भागे हृते लब्धा एकोनपञ्चाशत् षष्टिभागा ४९/६० एकस्य षष्टिभागस्य सत्कास्त्रयोविंशतिश्चूर्णिकाभागा २३/६१ इति, समवायाङ्गे तु त्रयस्त्रिंशत्समवाये-'जया णं सूरिए बाहिराणंतरं तच्चं मंडलं उवसंकमित्ता चारं चरइ तया णं इहगयस्स पुरिसस्स तेत्तीसाए जोअणसहस्सेहिं किंचि विसेसूणेहिं चक्खुप्फासं हव्वमागच्छइ' त्ति, एतद्वृत्तौ च इह तु यदुक्तं त्रयस्त्रिंशत् किञ्चिन्न्यूनास्तत्र सातिरेकयोजनस्यापि न्यूनसहस्रता विवक्षितेति सम्भाव्यते इति, अथात्रापि चतुर्थमण्डलादिष्वतिदेशमाह—'एवं खलु' इत्यादि, एवमुक्तेन प्रकारेण खलु-निश्चितमनेनोपायेन-शनैः शनैः तत्तदनन्तराभ्यन्तरमण्डलाभिमुखगमनरूपेणाभ्यन्तरं प्रविशन् सूर्यस्तदनन्तरान्मण्डलात् तदनन्तरं मण्डलं संक्रामन् २ एकैकस्मिन् मण्डले मुहूर्त्तगतिमित्यत्र द्वितीया पूर्ववत् २ मुहूर्त्तगतिपरिमाणे अष्टादश अष्टादश षष्टिभागान् योजनस्य व्यवहारतः परिपूर्णान् निश्चयतः किञ्चिदूनान् निवर्द्धयन् २ हापयन्नित्यर्थः, पूर्वमण्डलात् अभ्यन्तराभ्यन्तरमण्डलस्य परिरयमधिकृत्याष्टादशयोजनैर्हीनत्वात्, पुरुषच्छायामित्यत्रापि द्वितीया पूर्ववत्, ततोऽयमर्थः-पुरुषच्छायायां दृष्टिपथप्राप्ततारूपायां नवभिः षष्टिभागैः षष्ट्या च चूर्णिकाभागैः सातिरेकाणि-समधिकानि पञ्चाशीतिं पञ्चाशीतिं योजनान्यभिवर्द्धयन्नभिवर्द्धयन् प्रथमद्वितीयादिषु कतिपयेषु मण्डलेषु इयं वृद्धिर्ज्ञेया, सर्वमण्डलापेक्षया तु येनैव क्रमेण सर्वाभ्यन्तरान्मण्डलात्परतो दृष्टिपथप्राप्ततां हापयन्निर्गतस्तेनैव क्रमेण सर्वबाह्यान्मण्डलादर्वाक्तनेषु दृष्टिपथप्राप्ततामभिवर्द्धयन् प्रविशति, तत्र सर्वबाह्यमण्डलादर्वाक्तनद्वितीयमण्डलगतात् दृष्टिपथप्राप्ततापरिमाणात् सर्वबाह्ये मण्डले पञ्चाशीतिं योजनानि नव षष्टिभागान् योजनस्य एकं च षष्टिभागमेकषष्टिधाभित्त्वा तस्य सत्कान् षष्टिभागान् हापयति, एतच्च प्रागेव भावितं तस्मात् सर्वबाह्यादर्वाक्तने द्वितीये मण्डले प्रविशन् तावद्भूयोऽपि दृष्टिपथप्राप्ततापरिमाणेऽभिवर्द्धयति तच्च ध्रुवं, ततोऽर्वाक्तनेषु-मण्डलेषु यस्मिन् मण्डले दृष्टिपथप्राप्तता ज्ञातुमिष्यते, तृतीयमण्डलादारभ्य तत्तन्मण्डलसंख्यया षट्त्रिंशद् गुणयेत तद्यथा—तृतीयमण्डलचिन्तायामेकेन चतुर्थमण्डलचिन्ताया द्वाभ्याम् एवं यावत् सर्वाभ्यन्तरमण्डलचिन्तायां

त्र्यशीत्यधिकेन शतेन, इत्थं च गुणयित्वा यल्लभ्यते तद् ध्रुवराशेरपनीय शेषेण ध्रुवराशिना सहितं पूर्वपूर्वमण्डलगतं दृष्टिपथप्राप्ततापरिमाणं तत्र मण्डले द्रष्टव्यम् , यथा तृतीये मण्डले षट्त्रिंशदेकेन गुण्यते , 'एकेन च गुणितं तदेव भवतीति' जाता षट्त्रिंशदेव सा ध्रुवराशेरपनीयते, जातं शेषमिदं—पञ्चाशीतिर्योजनानि नव षष्टिभागा योजनस्य एकस्य च षष्टिभागस्य सत्काश्चतुर्विंशतिरेकषष्टिभागा ८५ ९/६० । २४/६१ एतेन पूर्वमण्डलगतं दृष्टिपथप्राप्ततापरिमाणम् एकत्रिंशत् सहस्राणि नव शतानि षोडशोत्तराणि योजनानामेकोनचत्वारिंशदेकषष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्का षष्टिरेकषष्टिभागा ३१९१६ इत्येवंरूपमहितं क्रियते, कृते च तृतीये मण्डले यथोक्तं दृष्टिपथप्राप्ततापरिमाणं भवति तच्च प्रागेव प्रदर्शितं. चतुर्थे मण्डले षट्त्रिंशद् द्वाभ्यां गुण्यते,गुणयित्वा ध्रुवराशेरपनीय शेषेण ध्रुवराशिना तृतीयमण्डलगतं दृष्टिपथप्राप्ततापरिमाणं सहितं क्रियते, ततः इदं तत्र मण्डले दृष्टिपथप्राप्ततापरिमाणं भवति—द्वात्रिंशत्सहस्राणि षडशीत्यधिकानि योजनानामष्टपञ्चाशत् षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्काः एकादशैकषष्टिभागा ३२०८६ ५८/६० । ११/६१ । एवं शेषेष्वपि मण्डलेषु भावनीयम् , यदा तु सर्वाभ्यन्तरे मण्डले दृष्टिपथप्राप्ततापरिमाणं ज्ञातुमिष्यते तदा षट्त्रिंशद् द्व्यशीत्यधिकेन शतेन गुण्यते, तृतीयमण्डलादारभ्य सर्वाभ्यन्तरस्य मण्डलस्य द्व्यशीत्यधिकशततमत्वात् , ततो जातानि पञ्चषष्टिः शतानि द्विपञ्चाशदधिकानि ६५५२, तेषामेकषष्ट्या भागे हृते लब्धं सप्तोत्तरं शतं षष्टिभागानां शेषाः पञ्चविंशतिः १०७/६० । २५/६१ । एतत्पञ्चाशीतियोजनानि नव षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्का षष्टिरेकषष्टिभागा ८५ ९/६० । ६०/६१ । इत्येवंरूपाद् ध्रुवराशेः शोध्यते, जातानि पश्चाद् त्र्यशीतिर्योजनानि द्वाविंशतिः षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्का पञ्चत्रिंशदेकषष्टिभागाः, इह षट्त्रिंशदेकषष्टिभागा कलया न्यूना परमार्थतो लभ्यन्ते, एतच्च प्रागेवोपदर्शितम् , तच्च कलया न्यूनत्वं प्रतिमण्डलं भवत् यदा द्व्यशीत्यधिकशततममण्डले एकत्र पिण्डितं सञ्चिन्त्यते तदा अष्टषष्टिरेकषष्टिभागा लभ्यन्ते ततस्ते भूयः प्रक्षिप्यन्ते ततो जातमिदं त्र्यशीतिर्योजनानि त्रयोविंशतिः षष्टिभागाः योजनस्य एकस्य षष्टिभागस्य सत्का द्विचत्वारिंशदेकषष्टिभागा ८३ २३/६० । ४२/६१ । एतेन सर्वाभ्यन्तरानन्तरद्वितीयमण्डलगतं दृष्टिपथप्राप्ततापरिमाणं सप्तचत्वारिंशत्सहस्राणि शतमेकोनाशीत्यधिकं योजनानां सप्तपञ्चाशत्षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्का एकोनविंशतिरेकषष्टिभागा ४७१७९ ५७/६० । १९/६१ । इत्येवंरूपसहितं क्रियते, ततो यथोक्तं सर्वाभ्यन्तरे मण्डले दृष्टिपथप्राप्ततापरिमाणं भवति. तच्च सप्तचत्वारिंशत्सहस्राणि द्वे शते त्रिषष्ट्यधिके योजनानामेकविंशतिश्च षष्टिभागा योजनस्य ४७२६३ २१/६० एवं दृष्टिपथप्राप्ततायाः कतिपयेषु मण्डलेषु सातिरेकाणि पञ्चाशीतिं २ योजनानि अग्रेतनेषु चतुरशीतिं २ पर्यन्ते यथोक्ताधिकसहितानि त्र्यशीतिं योजनानि अभिवर्द्धयन् अभिवर्द्धयन् तावद् वक्तव्या यावत् सर्वाभ्यन्तरमण्डलमुपसङ्क्रम्य चारं चरति, इह च सर्वाभ्यन्तरमण्डलं सर्वबाह्यानन्तरात् मण्डलात् पश्चानुपूर्व्या गण्यमानं त्र्यशीत्यधिकशततमं , प्रतिमण्डलं चाहोरात्रगणनाद् द्वितीयेऽपि त्र्यशीत्यधिकशततमस्तेनायमुत्तरायणस्य चरमो दिवस इत्याद्यभिधातुमाह—' एस णं दोच्चे छम्मासे ' इत्यादि एष द्वितीयः षण्मासः—प्रागुक्तयुक्त्या अयनविशेषो ज्ञातव्यः , एतद् द्वितीयस्य षण्मासस्य पर्यवसानं त्र्यशीत्यधिकशततमाहोरात्रत्वात्, एष आदित्यसंवत्सरः —आदित्यचारोपलक्षितः संवत्सर इति, इत्येतेन नक्षत्रादिसंवत्सरव्युदासः , एतच्चादित्यस्य संवत्सरस्य पर्यवसानं चरमायनचरमदिवसत्वात् इति समाप्तं मुहूर्तगतिद्वारम् , तत्सम्बन्धाच्च दृष्टिपथवक्तव्यताऽपि । जं० ७ वक्ष० । स० ।

**जंबुद्दीवे णं दीवे असीउत्तरं जोयणसयं ओगाहित्ता सूरिए उत्तरकट्ठोवगए पढमं उदयं करेइ । ( सू० ८०+ )**

'जंबुद्दीवे णं ' मित्यादि , ' ओगाहित्त ' त्ति—प्रविश्य ' उत्तरकट्ठोवगए ' त्ति-उत्तरां काष्ठां दिशमुपगत उत्तरकाष्ठोपगतः प्रथममुदयं करोति , सर्वाभ्यन्तरमण्डले उदेतीत्यर्थः । स० ८० सम० ।

अथाष्टमं दिनरात्रिवृद्धिहानिद्वारं निरूप्यते—

**जया णं भंते ! सूरिए सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरइ तया णं केमहालए दिवसे केमहालिया राई भवइ ?, गोयमा ! तया णं उत्तमकट्ठपत्ते उक्कोसए अट्ठारसमुहुत्ते दिवसे भवइ, जहण्णिया दुवालसमुहुत्ता राई भवइ, से णिक्खममाणे सूरिए णवं संवच्छरं अयमाणे पढमंसि अहोरत्तंसि अब्भंतराणंतरं मंडलं उवसंकमित्ता चारं चरइ । ( सू०-१३४ × ) ।**

'जया णं ' मित्यादि, यदा भगवन् ! सूर्यः सर्वाभ्यन्तरमण्डलमुपसंक्रम्य चारं चरति तदा को महान् आलयः—व्याप्यस्वरूप आश्रयो यस्यासौ किंमहालयः कियानित्यर्थः दिवसो भवति, किंमहालया—कियती रात्रिर्भवति ?, भगवानाह—गौतम ! तदा उत्तमकाष्ठां प्राप्तः-उत्तमावस्थां प्राप्तः आदित्यसंवत्सरसत्कषट्षष्ट्यधिकत्रिशतदिवसमध्ये, यतो नापरः कश्चिदधिक इत्यर्थः अत एवोत्कर्षकः उत्कृष्ट इत्यर्थः अष्टादशमुहूर्तप्रमाणो दिवसो भवति, यत्र मण्डले यावत्प्रमाणो दिवसस्तत्र तदपेक्षया ( शेषा ) अहोरात्रप्रमाणा रात्रिरिति जघन्यिका द्वादशमुहूर्ता रात्रिः , सर्वस्मिन् क्षेत्रे काले चा अहोरात्रस्य त्रिंशन्मुहूर्तसंख्याकत्वस्य नैयत्याद् , ननु यदा भरतेऽष्टादशमुहूर्तप्रमाणो दिवसस्तदा विदेहेषु जघन्या द्वादशमुहूर्तप्रमाणा रात्रिस्तर्हि द्वादशमुहूर्तेभ्यः परं रात्रेरतिक्रान्तत्वेन षट् मुहूर्त्तान् यावत्केन कालेन भाव्यम् ? एवं भरतेऽपि वाच्यम् , उच्यते-अत्र षण्मुहूर्त्तगम्यक्षेत्रे ऽवशिष्टे सति तत्र सूर्यस्योदयमानत्वेन दिवसेनेति, तथा सूर्योदयास्तान्तरविचारेण तन्मण्डलगतदृष्टिपथप्राप्ततविचारेण च सुपपन्नम् , आह—एवं सति सूर्योदयास्तमयनं स्वानियतं आपन्नं भवतु नाम , न चैतदनिष्टम्, यदुक्तम्—

' जह जह समए समए, पुरओ संचरइ भक्खरो गयणे।
तह तह इओ वि नियमा, जायइ रयणीइ भावत्थो ॥१॥
एवं च सइ नराणं, उदयत्थमणाइँ होंतऽनिययाइं।
सइ देसकालभेए, कस्सइ किंची य दिस्सए नियमा ॥२॥
सइ चेव य निद्दिट्ठो, रुद्दमुहुत्तो कमेण सव्वेसिं।
केसिंचीदाणिं पि अ, विसयपमाणो रवी जेसिं ॥३॥ " त्ति।

यत्तु सूर्यप्रज्ञप्तिवृत्तौ सूर्यमण्डलसंस्थितिविचारे समचतुरस्रसंस्थितिवर्णनायां युगादौ एकः सूर्यो दक्षिणपूर्वस्याम् एकश्चन्द्रो दक्षिणापरस्यां द्वितीयः सूर्यः पश्चिमोत्तरस्यां द्वितीयश्चन्द्र उत्तरपूर्वस्यामित्युक्तं तत्तु दक्षिणादिविभागेषु मूलोदयापेक्षया इति बोध्यम्। अयं च सर्वोत्कृष्टो दिवसः पूर्वसंवत्सरस्य चरमो दिवस इति वक्तुमाह--' से णिक्खममाणे ' इत्यादि, अथ निष्क्रामन् सूर्यः नवं संवत्सरमयमानः--प्राप्नुवन्नाददान इत्यर्थः, प्रथमे अहोरात्रेऽभ्यन्तरानन्तरं द्वितीयमण्डलमुपसंक्रम्य चारं चरति इति।

अथ दिनरात्रिवृद्ध्यपवृद्ध्यावाह--

**जया णं भंते! सूरिए अब्भंतराणंतरं मंडलं उवसंकमित्ता चारं चरइ तया णं केमहालए दिवसे केमहालिया राई भवइ?, गोयमा! तया णं अट्ठारसमुहुत्ते दिवसे भवइ, दोहिं एगट्ठिभागमुहुत्तेहिं ऊणे दुवालसमुहुत्ता राई भवइ दोहि अ एगट्ठिभागमुहुत्तेहिं अहिअ त्ति, से णिक्खममाणे सूरिए दोच्चंसि अहोरत्तंसि ०जाव चारं चरइ तया णं केमहालए दिवसे केमहालिया राई भवइ?, गोयमा! तया णं अट्ठारसमुहुत्ते दिवसे भवइ चउहिं एगट्ठिभागमुहुत्तेहिं ऊणे, दुवालसमुहुत्ता राई भवइ चउहिं एगसट्ठिभागमुहुत्तेहिं अहिअ त्ति, एवं खलु एएणं उवाएणं निक्खममाणे सूरिए तयाणंतराओ मंडलाओ तयाणंतरं मंडलं संकममाणे दो दो एगट्ठिभागमुहुत्तेहिं मंडले दिवसखित्तस्स निवुड्ढेमाणे २ रयणिखित्तस्स अभिवड्ढेमाणे २ सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरइ त्ति। (सू० १३४X)**

' जया ण ' मित्यादि, यदा भगवन्! सूर्य अभ्यन्तरानन्तरं द्वितीयं मण्डलमुपसंक्रम्य चारं चरति तदा भगवन्! किंमहालयः--किंप्रमाणो दिवसः, किंमहालया-किंप्रमाणा रात्रिः?। भगवानाह--गौतम! तदा अष्टादशमुहूर्त्तप्रमाणो द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यामूनो दिवसो भवति, अत्र सूत्रे प्राकृतत्वात् पदव्यत्ययः, द्वादशमुहूर्त्तप्रमाणा द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यामधिका रात्रिर्भवति। अत्रोपपत्तिर्यथा अष्टादशमुहूर्त्ते दिवसे द्वादश पदमुहूर्त्ताः षट् चरमुहूर्त्ता, न च मण्डलानां त्र्यशीत्यधिकशतेन वर्द्धन्ते चापवर्द्धन्ते ततोऽत्र त्रैराशिकावतारः-यदि मण्डलानां त्र्यशीत्यधिकशतेन षट् मुहूर्त्ता वर्द्धन्ते चापवर्द्धन्ते तदा एकेन मण्डलेन किं वर्द्धते चापवर्द्धते?, स्थापना यथा-१८३।६।१। अत्रान्त्यराशिना एककलक्षणेन मध्यराशिः षट्कलक्षणो गुण्यते, गुणितं च ' एकेन गुणितं तदेव भवती ' ति षडेव स्थितास्ते चाद्यराशिना भज्यन्ते अल्पत्वाद् भागं न प्रयच्छन्तीति भाज्यभाजकराश्योस्त्रिकेनापवर्त्तना कार्या, जात उपरितनो राशिर्द्विकरूपः अधस्तन एकषष्टिरूपः इत्यागतं द्वावेकषष्टिभागौ मुहूर्त्तस्य अनेन दिवसेऽपवर्द्धते--रात्रौ च वर्द्धते इति, एवमग्रेऽपि करणभावना कार्या। अथानन्तरमण्डलगते दिनरात्रिवृद्धिहानी पृच्छन्नाह--' से णिक्खममाणे ' इत्यादि, अथ निष्क्रामन् सूर्यो दक्षिणायनमत्के द्वितीये अहोरात्रे-अत्र यावच्छब्दात् ' अब्भंतरतच्चं मंडलं उवसंकमित्ता ' इति ज्ञेयम्, सर्वाभ्यन्तरमण्डलापेक्षया तृतीयं मण्डलमुपसंक्रम्य चारं चरति तदा किंप्रमाणो दिवसः किंप्रमाणा रात्रिर्भवति?, गौतम! तदा अष्टादशमुहूर्त्तप्रमाणो द्वाभ्यां पूर्वमण्डलसत्काभ्याम् द्वाभ्यां च प्रस्तुतमण्डलसत्काभ्यामित्येवं चतुर्भिर्मुहूर्त्तैकषष्टिभागैरूनो दिवसो भवति, द्वादशमुहूर्त्ता उक्तप्रकारेणैव चतुर्भिर्मुहूर्त्तैकषष्टिभागैरधिका रात्रिर्भवति, उक्तातिरिक्तमण्डलेष्वतिदेशमाह--' एवं खलु एएण ' मित्यादि, एवं मण्डलत्रयदर्शितरीत्या खलु--निश्चितमेतत्--अनन्तरोक्तेनोपायेन प्रतिमण्डलं दिवसरात्रिक्षेत्रमुहूर्त्तैकषष्टिभागद्वयवृद्धिहानिरूपेण निष्क्रामन्--दक्षिणाभिमुखं गच्छन् सूर्यस्तदनन्तरात्मण्डलात्तदनन्तरं मण्डलं संक्रामन् द्वौ द्वौ मुहूर्त्तैकषष्टिभागावेकैकस्मिन् मण्डले दिवसक्षेत्रस्य निवर्द्धयन् निवर्द्धयन्--हापयन् २ रजनिक्षेत्रस्य तावदभिवर्द्धयन् २, कोऽर्थः?--मुहूर्त्तैकषष्टिभागद्वयगम्यं क्षेत्रं दिवसक्षेत्रे हापयन् तावदेव रजनिक्षेत्रे अभिवर्द्धयन्निति सर्वबाह्यमण्डलमुपसंक्रम्य चारं चरति, प्रतिमण्डलं भागद्वयहानिवृद्धी उक्ते। जं० ७ वक्ष०।

**उत्तरायणनियट्टे णं सूरिए पढमाओ मंडलाओ एगूणचत्तालीसइमे मंडले अट्ठहत्तरिं एगसट्ठिभाए दिवसखेत्तस्स निवुड्ढेत्ता रयणिखेत्तस्स अभिनिवुड्ढेत्ता णं चारं चरइ। एवं दक्खिणायणनियट्टे वि। ( सू० ७८X)**

' उत्तरायणनियट्टे णं ' ति--उत्तरायणाद्--उत्तरदिग्गमनान्निवृत्त उत्तरायणनिवृत्तः; प्रारब्धदक्षिणायन इत्यर्थः ' सूरिए ' त्ति-आदित्यः ' पढमाओ मंडलाओ ' त्ति-दक्षिणां दिशं गच्छतो रवेर्यत्प्रथमं तस्मात् न तु सर्वाभ्यन्तरसूर्यमार्गात्, ' एगूणचत्तालीसइमे ' त्ति--एकोनचत्वारिंशत्तमे मण्डले दक्षिणायनप्रथममण्डलापेक्षया- सर्वाभ्यन्तरमण्डलापेक्षया तु चत्वारिंशे, अट्ठहत्तरिं ' ति अष्टसप्ततिं ' एगसट्ठिभाए ' त्ति-मुहूर्त्तस्यैकषष्टिभागान् ' दिवसखेत्तस्स ' त्ति-दिवसलक्षणस्य क्षेत्रस्य दिवसस्यैवेत्यर्थः, ' निवुड्ढेत्त ' त्ति निवर्ध्य हापयित्वेत्यर्थः, तथा ' रयणिखेत्तस्स ' त्ति-रजन्या एव ' अभिनिवुड्ढेत्त ' त्ति-अभिनिवर्द्ध्य च; वर्द्धयित्वेत्यर्थः, ' चारं चरइ ' त्ति-आस्यतीत्यर्थः, भावार्थोऽस्यैव चन्द्रप्रज्ञप्तिवाक्यैरुपदर्श्यते--जम्बूद्वीपे यदैतौ सूर्यौ सर्वाभ्यन्तरमण्डलमुपसंक्रम्य चारं चरतस्तदा नवनवतियोजनसहस्राणि षट्चत्वारिंशदधिकानि योजनशतान्यन्योऽन्यमन्तरं कृत्वा चरतः एतच्च जम्बूद्वीपेऽशीत्युत्तरं योजनशतं प्रविश्याभ्यन्तरमण्डलं भवति तत्संख्ये द्विगुणे जम्बूद्वीपप्रमाणादपकर्षिते यथोक्तमन्तरं भवतीति, तथा तत्र तयोश्चरतोरुत्कृष्टोऽष्टादशमुहूर्त्तो दिवसो भवति, जघन्यका च द्वादशमुहूर्त्ता रात्रिर्भवति, ततोऽभ्यन्तरमण्डलान्निष्क्रम्य प्रथमेऽहोरात्रे

ऽभ्यन्तरानन्तरं मण्डलमुपसङ्क्रम्य यदा चारं चरतस्तदा नवनवतियोजनसहस्राणि पट्त्रत्वारिंशदधिकानि योजनशतानि पञ्चत्रिंशच्च एकपष्टिभागा योजनस्यान्तरं कृत्वा चारं चरतः, तदा चाष्टादशमुहूर्तो दिवसो भवति द्वाभ्यां मुहूर्त्तस्यैकपष्टिभागाभ्यां न्यूनः, द्वादशमुहूर्ता च रात्रिर्भवति द्वाभ्यां मुहूर्त्तैकपष्टिभागाभ्यामधिकाति, एवं दक्षिणायनस्य द्वितीयादिषु मण्डलेष्वहोरात्रेषु चान्योऽन्यान्तरप्रमाणस्य पञ्चभिः पञ्चभिर्योजनैः पञ्चत्रिंशता चैकपष्टिभागैर्योजनस्य वृद्धिर्वाच्या,द्वाभ्यां २ च मुहूर्त्तैकपष्टिभागाभ्यां दिनहानी रात्रिवृद्धिश्चेति, एवं च एकोनचत्वारिंशत्तमे मण्डले सूर्ययोरन्तरं नवनवतिः सहस्राण्यष्ट शतानि सप्तपञ्चाशच्च योजनानां त्रयोविंशतिश्चैकपभागा, दिनप्रमाणं चाष्टादशानां मुहूर्त्तानां मध्यादेकपष्टिभागानामष्टसप्तत्या पातितायां षोडश मुहूर्त्ताश्चतुश्चत्वारिंशच्चैकपष्टिभागा मुहूर्त्तस्य, रात्रेस्त्वष्टसप्तत्या क्षिप्तायां त्रयोदश मुहूर्त्ताः सप्तदशैकपष्टिभागाश्चेति, एवं 'दक्खिणायणनियट्टे' त्ति-यथोत्तरायणनिवृत्त एकोनचत्वारिंशत्तमे मण्डले अष्टसप्ततिमेकपष्टिभागान् हापयति, वर्द्धयति च। एवं दक्षिणायननिवृत्तोऽपि सूर्यस्तान् हापयति, वर्द्धयति च। केवलं दक्षिणायने दिनभागान् हापयति, रात्रिभागांश्च वर्द्धयति। इह तु दिनभागान् वर्द्धयति, रात्रिभागांश्च हापयति। स० ७८ सम०। जं०।

जया णं सूरिए सव्वब्भंतराओ मंडलाओ सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरइ तया णं सव्वब्भंतरमंडलं पणिहाय एगेणं तेसीएणं राइंदिअसएणं तिण्णि छावट्ठे एगसट्ठिभागमुहुत्तसए दिवसखेत्तस्स निव्वुड्ढेत्ता रयणिखेत्तस्स अभिवुड्ढेत्ता चारं चरइ। (सू०-१३४+)

'जया ण' मित्यादि, यदा सूर्यः सर्वाभ्यन्तरान्मण्डलादित्यत्र यल्लोपे पञ्चमी वक्तव्या" तेन सर्वाभ्यन्तरं मण्डलमारभ्य सर्वबाह्यमण्डलमुपसङ्क्रम्य चारं चरति तदा सर्वाभ्यन्तरं मण्डलं प्रणिधाय—मर्यादीकृत्य तत्र परस्माद् द्वितीयान्मण्डलादारभ्येत्यर्थः एकेन त्र्यशीतेन त्र्यशीत्यधिकेन रात्रिन्दिवानाम् अहोरात्राणां शतेन त्रीणि पट्पष्ठानि—पट्पष्ट्यधिकानि मुहूर्त्तैकपष्टिभागशतानि दिवसक्षेत्रस्याभिवर्द्ध्य, कोऽर्थः?—पट्पष्ठ्यधिकत्रिशतमुहूर्त्तैकपष्टिभागैर्यावन्मात्रं क्षेत्रं गम्यते तावन्मात्रं क्षेत्रं हापयित्वा इत्यर्थः, तावदेव क्षेत्रं रजनिक्षेत्रस्याभिवर्द्ध्य चारं चरति, अयमर्थः दक्षिणायनसत्कत्र्यशीत्यधिकमण्डलेषु प्रत्येकं हीयमानभागद्वयस्य त्र्यशीत्यधिकशतगुणनेन पट्पष्ट्यधिकत्रिशतराशिरुत्पद्यत इति तावदेव रजनिक्षेत्रे वर्द्धते इत्यर्थः। जं० ७ वक्ष०।

लवणे णं भंते! समुद्दे सूरिया उदीचिपाईणमुग्गच्छ जच्चेव जंबुद्दीवस्स वत्तव्वया भणिया सच्चेव सव्वा अपरिसेसिया लवणसमुद्दस्स वि भाणियव्वा, नवरं अभिलावो इमो णेयव्वो-जया णं भंते! लवणे समुद्दे दाहिणड्ढे दिवसे भवति तं चेव०जाव तदा णं लवणे समुद्दे पुरच्छिमपच्चत्थिमे णं राई भवति, एएणं अभिलावेणं नेयव्वं। जदा णं भंते! लवणसमुद्दे दाहिणड्ढे पढमा ओसप्पिणी पडिवज्जइ, तदा णं उत्तरड्ढे वि पढमा ओसप्पिणी पडिवज्जइ। जदा णं उत्तरड्ढे पढमा ओसप्पिणी पडिवज्जइ तदा णं लवणसमुद्दे पुरच्छिमपच्चत्थिमे णं नेवत्थि ओसप्पिणी २ समणाउसो!?, हंता गोयमा! ०जाव समणाउसो!। धायईसंडे णं भंते! दीवे सूरिया उदीचिपादीणमुग्गच्छ जहेव जंबुद्दीवस्स वत्तव्वया भणिया सच्चेव धायइसंडस्स वि भाणियव्वा, नवरं इमेणं अभिलावेणं सव्वे आलावगा भाणियव्वा। जया णं भंते! धायइसंडे दीवे दाहिणड्ढे दिवसे भवति तदा णं उत्तरड्ढे वि जया णं उत्तरड्ढे वि तदा णं धायइसंडे दीवे मंदराणं पव्वयाणं पुरच्छिमपच्चत्थिमे णं राती भवति?, हंता गोयमा! एवं चेव० जाव राती भवति। जदा णं भंते! धायइसंडे दीवे मंदराणं पव्वयाणं पुरच्छिमेणं दिवसे भवति तदा णं पच्चत्थिमेण वि, जदा णं पच्चत्थिमेण वि तदा णं धायइसंडे दीवे मंदराणं पव्वयाणं भवति उत्तरेणं दाहिणेणं राती भवतीति?, हंता गोयमा! ० जाव भवति, एवं एएणं अभिलावेणं नेयव्वं० जाव जया णं भंते! दाहिणड्ढे पढमा ओसप्पिणी तया णं उत्तरड्ढे जया णं उत्तरड्ढे तया णं धायइसंडे दीवे मंदराणं पव्वयाणं पुरच्छिमपच्चत्थिमे णं नत्थि ओसप्पिणी०जाव? समणाउसो! हंता गोयमा! ०जाव समणाउसो!, जहा लवणसमुद्दस्स वत्तव्वया तहा कालोदस्स वि भाणियव्वा,नवरं कालोदस्स नामं भाणियव्वं। अब्भिंतरपुक्खरद्धे णं भंते! सूरिया उदीचिपाईणमुग्गच्छ जहेव धायइसंडस्स वत्तव्वया तहेव अब्भिंतरपुक्खरद्धस्स वि भाणियव्वा नवरं अभिलावो०जाव जाणेयव्वो० जाव तया णं अब्भिंतरपुक्खरद्धे मंदराणं पुरच्छिमपच्चत्थिमेणं नेवत्थि ओसप्पिणी नेवत्थि उस्सप्पिणी अवट्ठिए णं तत्थ काले पन्नत्ते समणाउसो! सेव भंते! सेव भंते! त्ति। (सू०-१७६) भ० ५ श० २ उ०।

तेणं कालेणं तेणं समएणं चंपा नामं नगरी होत्था, वन्नओ,तीसे णं चंपाए नगरीए पुण्णभद्दे नामे चेइए होत्था वन्नओ, सामी समोसढे ०जाव परिसा पडिगया। तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स जेट्ठे अंतेवासी इंदभूती णामं अणगारे गोयमगोत्तेणं०जाव एवं वदासी-जंबुद्दीवे णं भंते! दीवे सूरिया उदीणपादीणमुग्गच्छ पादीणदाहिणमागच्छंति, पादीणदाहिणमुग्गच्छ दाहिणपडीणमागच्छंति दाहिणपडी-

णमुग्गच्छ पडीणउदीणमागच्छति पदीणउदीणं उग्गच्छ उदीचिपादीणमागच्छंति ?, हंता ? गोयमा ! जंबुद्दीवे णं दीवे सूरिया उदीचिपाईणमुग्गच्छ ०जाव उदीचिपाईणमागच्छंति । (सू०१७६×)

'सूरिय' त्ति—द्वौ सूर्यौ, जम्बूद्वीप द्वयोरेव भावात् 'उदीणपाईणं' ति उदगेव उदीचीन प्रागेव प्राचीन उदीचीन च तदुदीच्या आसन्नत्वात् प्राचीनम् च तत्प्राच्या. प्रत्यासन्नत्वाद् उदीचीनप्राचीन—दिगन्तर क्षेत्रदिगपेक्षया पूर्वोत्तरदिगित्यर्थ 'उग्गच्छ' त्ति-उद्गत्य क्रमेण तत्रोद्गमन कृत्वेत्यर्थ. 'पाईणदाहिणं' ति प्राचीनदक्षिणं दिगन्तरं पूर्वदक्षिणामित्यर्थ 'आगच्छति' त्ति-आगच्छत क्रमेणास्त यात इत्यर्थ, इह चोद्गमनमस्तमयं च द्रष्टृलोकविवक्षयाऽवसेयं, तथाहि--येषामदृश्यौ सन्तौ दृश्यौ तौ स्याता ते तयोरुद्गमनं व्यवहरन्ति येषां तु दृश्यौ सन्तावदृश्यौ स्तस्ते तयोरस्तमयं व्यवहरन्तीत्यनियतावुदयास्तमयौ । आह च—

"जह जह समए समए पुरओ सञ्चरइ भक्खरो गयणे ।
तह तह इओ वि नियमा, जायइ रयणी य भावत्थो ॥१॥
एवं च सइ नराणं, उदयत्थमणाइं होंतऽनिययाइं ।
सइ देसभेए कस्सइ, किंची ववदिस्सए नियमा ॥२॥
सइ चेव य निद्दिट्ठो, भ(रु)दमुहुत्तो कमेण सव्वेसिं ।
केसिंचीदाणिं पि य, विसयपमाणे रवी जेसिं ॥ ३ ॥"

इत्यादि, अनेन च सूत्रेण सूर्यस्य चतसृषु दिक्षु गतिरुक्ता, ततश्च ये मन्यन्ते सूर्य पश्चिमसमुद्रं प्रविश्य पातालेन गत्वा पुन. पूर्वसमुद्रमुदेतीत्यादि तन्मत निषिद्धमिति ।

इह च सूर्यस्य सर्वतोगमने ऽपि प्रतिनियतत्वात्तत्प्रकाशस्य रात्रिदिवसविभागाऽस्तीति तं क्षेत्रभेदेन दर्शयन्नाह—

जया णं भंते ! जंबुद्दीवे दीवे दाहिणड्ढे दिवसे भवति तदा णं उत्तरड्ढे दिवसे भवति जदा णं उत्तरड्ढे वि दिवसे भवति तदा णं जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरच्छिमपच्चत्थिमेणं राती भवति ?, हंता गोयमा ! जया णं जंबुद्दीवे दीवे दाहिणड्ढे वि दिवसे० जाव राती भवति । जदा णं भंते ! जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरच्छिमे णं दिवसे भवति तदा णं पच्चत्थिमे णं पि दिवसे भवति,जया णं पच्चत्थिमे णं दिवसे भवति तदा णं जंबुद्दीवे दीवे मंदरस्स पव्वयस्स उत्तरदाहिणे णं राती भवति ?, हंता गोयमा ! जदा णं जंबुद्दीवे मंदरपुरच्छिमे णं दिवसे ०जाव राती भवति , जया णं भंते ! जंबुद्दीवे दीवे दाहिणड्ढे उक्कोसए अट्ठारसमुहुत्ते दिवसे भवति , तदा णं उत्तरड्ढे वि उक्कोसए अट्ठारसमुहुत्ते दिवसे भवति , जदा णं उत्तरड्ढे उक्कोसए अट्ठारसमुहुत्ते दिवसे भवति तदा णं जंबूदीवे दीवे मंदरस्स पुरच्छिमपच्चत्थिमे णं जहन्निया दुवालसमुहुत्ता राती भवति ?, हंता गोयमा ! जदा णं जंबू० जाव दुवालसमुहुत्ता राती भवति । जदा णं जंबूदीवे२ मंदरस्स पुरच्छिमे णं उक्कोसए अट्ठारस० जाव तदा णं जंबुद्दीवे दीवे पच्चत्थिमे ण वि उक्कोसए अट्ठारसमुहुत्ते दिवसे भवति, जया णं पच्चत्थिमे णं उक्कोसए अट्ठारसमुहुत्ते दिवसे भवति तदा णं भंते ! जंबूदीवे दीवे उत्तर० दुवालसमुहुत्ता० जाव राती भवति ?, हंता गोयमा ! ० जाव भवति । जया णं भंते ! जंबू० दाहिणड्ढे अट्ठारसमुहुत्ताणंतरे दिवसे भवति तदा णं उत्तरे अट्ठारसमुहुत्ताणंतरे दिवसे भवति जदा णं उत्तरे अट्ठारसमुहुत्ताणंतरे दिवसे भवति तदा णं जंबूदीवे दीवे मंदरस्स पव्वयस्स पुरच्छिमपच्चत्थिमे णं सातिरेगा दुवालसमुहुत्ता राती भवति ?, हंता गोयमा ! जदा णं जंबू० जाव राती भवति । जदा णं भंते ! जंबूदीवे दीवे पुरच्छिमे णं अट्ठारसमुहुत्ताणंतरे दिवसे भवति तदा णं पच्चत्थिमे णं अट्ठारसमुहुत्ताणंतरे दिवसे भवति, जदा णं पच्चत्थिमे णं अट्ठारसमुहुत्ताणंतरे दिवसे भवति तदा णं जंबूदीवे दीवे मंदरस्स पव्वयस्स दाहिणे णं साइरेगा दुवालसमुहुत्ता राती भवति ?, हंता गोयमा ! ०जाव भवति । एवं एतेणं कमेणं ओसारेयव्वं सत्तरसमुहुत्ते दिवसे तेरसमुहुत्ता राती भवति , सत्तरसमुहुत्ताणंतरे दिवसे सातिरेगा तेरसमुहुत्ता राती, सोलसमुहुत्ते दिवसे चोद्दसमुहुत्ता राई , सोलसमुहुत्ताणंतरे दिवसे सातिरेगचोद्दसमुहुत्ता राती, पन्नरसमुहुत्ते दिवसे पन्नरसमुहुत्ता राती भवति । पन्नरसमुहुत्ताणंतरे दिवसे सातिरेगा पन्नरसमुहुत्ता राती, चोद्दसमुहुत्ते दिवसे सोलसमुहुत्ता राती, चोद्दसमुहुत्ताणंतरे दिवसे सातिरेगा सोलसमुहुत्ता राती तेरसमुहुत्ते दिवसे सत्तरसमुहुत्ता राती तेरसमुहुत्ताणंतरे दिवसे सातिरेगा सत्तरसमुहुत्ता राती । जया णं जंबूदीवे दीवे दाहिणड्ढे जहण्णए दुवालसमुहुत्ते दिवसे भवति तया णं उत्तरड्ढे वि, जया णं उत्तरड्ढे तया णं जंबूदीवे दीवे मंदरस्स पव्वयस्स पुरच्छिमे णं उक्कोसिया अट्ठारसमुहुत्ता राती भवति ? , हंता गोयमा ! एवं चेव उच्चारियव्वं० जाव राई भवति । जया णं भंते ! जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरच्छिमे णं जहन्नए दुवालसमुहुत्ते दिवसे भवति तया णं पच्चत्थिमे ण वि० तया णं जंबूदीवे दीवे मंदरस्स उत्तरदाहिणे णं उक्कोसिया अट्ठारसमुहुत्ता राती

भवति ?, हंता गोयमा ! ० जाव राती भवति । ( सू० १८७ )

'जया णं' मित्यादि, इह सूर्यद्वयभावादेकदैव दिग्द्वये दिवस उक्त, इह च यद्यपि दक्षिणार्द्धे तथोत्तरार्द्धे इत्युक्तं तथाऽपि दक्षिणभागे उत्तरभागे चेति बोद्धव्यम् ,—अर्द्ध-शब्दस्य भागमात्रार्थत्वात्, यतो यदि दक्षिणार्द्धे उत्तरार्द्धे च समग्र एव दिवसः स्यात्तदा कथं पूर्वेण अपरेण च रात्रिः स्यादिति वक्तुं युज्येत, अर्द्धद्वयग्रहणेन सर्वक्षेत्रस्य गृहीतत्वात्, इतश्च दक्षिणार्द्धादिशब्देन दक्षिणादिदिग्भागमात्रमेवावसेयं न त्वर्द्धम् अतो यदाऽपि दक्षिणोत्तरयोः सर्वोत्कृष्टो दिवसो भवति तदाऽपि जम्बूद्वीपस्य दशभागत्रयप्रमाणमेव तापक्षेत्रं तयोः प्रत्येकं स्याद्, दशभागद्वयमानं च पूर्वपश्चिमयोः प्रत्येकं रात्रिक्षेत्रं स्यात्, तथाहि—एकेन मुहूर्त्तेन किल सूर्यो मण्डलं पूरयति उत्कृष्टदिने चाष्टादशभिर्मुहूर्त्तैरुक्तम् अष्टादश च षष्ट्यंश भाग—त्रितयरूपा भवन्ति, तथा यदाऽष्टादशमुहूर्त्तो दिवसो भवति तदा रात्रिर्द्वादशमुहूर्त्ता भवति, द्वादश च षष्ट्यंशभागद्वयरूपा भवन्तीति, तत्र च मेरुं प्रति नव योजनसहस्राणि चत्वारि शतानि षडशीत्यधिकानि नव च दशभागा योजनस्येत्येतत्सर्वोत्कृष्टदिवसे दशभागत्रयरूपं तापक्षेत्रप्रमाणं भवति ६४८६ ६/१० कथम् ?, मन्दरपरिक्षेपस्य किञ्चिन्न्यूनत्रयोविंशत्युत्तरषट्शताधिकैकत्रिंशद्योजनसहस्रमानस्य ३१६२३ दशभिर्भागे हृते यल्लब्धं ३१६२ ३/१० तस्य त्रिगुणितत्वे एतस्य भावादिति । तथा लवणसमुद्रं प्रति चतुर्नवतिर्योजनानां सहस्राणि अष्टौ शतान्यष्टषष्ट्यधिकानि चत्वारश्च दश भागा योजनस्येत्येतदुत्कृष्टदिने तापक्षेत्रप्रमाणं भवति ६४८६८ ४/१०, कथम् ? जम्बूद्वीपपरिधेः किञ्चिन्न्यूनाष्टाविंशत्युत्तरशतद्वयाधिकषोडशसहस्राधिकयोजनलक्षत्रयमानस्य ३१६२२८ दशभिर्भागे हृते यल्लब्धं तस्य त्रिगुणितत्वे एतस्य भावादिति । जघन्यरात्रिक्षेत्रप्रमाणं चाप्येवमेव, नवरं परिधेर्दशभागो द्विगुणः कार्यः, तत्राद्यं षड्योजनानां सहस्राणि त्रीणि शतानि चतुर्विंशत्यधिकानि षट् च दश भागा योजनस्य ६३२४ ६/१० द्वितीयं तु त्रिषष्टिः सहस्राणि द्वे पञ्च चत्वारिंशदधिके योजनानां शते षट् च दशभागा योजनस्य ६३२४५ ६/१० सर्वलघौ च दिवसे तापक्षेत्रमनन्तरोक्तरात्रिक्षेत्रतुल्यं रात्रिक्षेत्रं त्वनन्तरोक्ततापक्षेत्रतुल्यमिति आयामतस्तु तापक्षेत्रं जम्बूद्वीपमध्ये पञ्चचत्वारिंशद्योजनानां सहस्राणीति लवणे च त्रयस्त्रिंशत्सहस्राणि त्रीणि शतानि त्रयस्त्रिंशदधिकानि त्रिभागश्च योजनस्य ३३३३३ १/३ उभयमीलने त्वष्टसप्ततिः सहस्राणि त्रीणि शतानि त्रयस्त्रिंशदधिकानि योजनत्रिभागश्चेति ७८३३३ १/३ । 'उक्कोसए अट्ठारसमुहुत्ते दिवसे भवइ" त्ति । इह किल सूर्यस्य चतुरशीत्यधिकं मण्डलशतं भवति तत्र किल जम्बूद्वीपमध्ये पञ्चषष्टिर्मण्डलानि भवन्ति एकोनविंशत्यधिकं च तेषां शतं लवणसमुद्रस्य मध्ये भवति, तत्र च सर्वाभ्यन्तरे मण्डले यदा वर्त्तते सूर्यस्तदाऽष्टादशमुहूर्त्तो दिवसो भवति, कथम् ?, यदा सर्वबाह्ये मण्डले वर्त्ततेऽसौ तदा सर्वजघन्यो द्वादशमुहूर्त्तो दिवसो भवति, ततश्च द्वितीयमण्डलादारभ्य प्रतिमण्डलं द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यां दिनस्य वृद्धौ त्र्यशीत्यधिकशततमे मण्डले षट् मुहूर्त्ता वर्द्धन्त इत्येवमष्टादशमुहूर्त्तो दिवसो भवति, अत एव द्वादशमुहूर्त्ता रात्रिर्भवति, त्रिंशन्मुहूर्त्तत्वादहोरात्रस्य । 'अट्ठारसमुहुत्ताणंतरे'त्ति यदा सर्वाभ्यन्तरमण्डलानन्तरे मण्डले वर्त्तते सूर्यस्तदा मुहूर्त्तैकषष्टिभागद्वयहीनाष्टादशमुहूर्त्तो दिवसो भवति, स चाष्टादशमुहूर्त्ताद्दिवसादनन्तरोऽष्टादशमुहूर्त्तानन्तरमिति व्यपदिष्टः, सातिरेगा दुवालसमुहुत्ता राइ'त्ति-द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यामधिका द्वादशमुहूर्त्ता 'राई भवइ'त्ति-रात्रिप्रमाणं भवतीत्यर्थः, यावता भागेन दिनं हीयते तावता रात्रिर्वर्द्धते, त्रिंशन्मुहूर्त्तत्वादहोरात्रस्येति ।'एवं एएणं कमेणं' एवमित्युपसंहारे, एतेन-अनन्तरोक्तेन 'जया णं भंते ! जंबूद्दीवे दीवे दाहिणड्ढे' इत्यनेनेत्यर्थः, 'ओसारेयव्व' त्ति—दिनमानं ह्रस्वीकार्यं, तदेव दर्शयति—'सत्तरसे' त्यादि, तत्र सर्वाभ्यन्तरमण्डलानन्तरमण्डलादारभ्यैकत्रिंशत्तममण्डलार्द्धे यदा सूर्यस्तदा सप्तदशमुहूर्त्तो दिवसो भवति, पूर्वोक्तहानिक्रमेण त्रयोदशमुहूर्त्ता च रात्रिरिति । 'सत्तरसमुहुत्ताणंतरे' त्ति-मुहूर्त्तैकषष्टिभागद्वयहीनसप्तदशमुहूर्त्तप्रमाणो दिवसः, अयं च द्वितीयादारभ्य द्वात्रिंशत्तममण्डलार्द्धे भवति, एवमनन्तरत्वमन्यत्राप्यूह्यम्-'साइरेगतेरसमुहुत्ता राई' त्ति—मुहूर्त्तैकषष्टिभागद्वयेन सातिरेकत्वम्, एवं सर्वत्र 'सोलसमुहुत्ते दिवसे' त्ति-द्वितीयादारभ्यैकषष्टितममण्डले षोडशमुहूर्त्तो दिवसो भवति, 'पन्नरसमुहुत्ते दिवसे' त्ति—द्विनवतितममण्डलार्द्धे वर्तमाने सूर्ये, 'चोद्दसमुहुत्ते दिवसे' त्ति-द्वाविंशत्युत्तरशततमे मण्डले, 'तेरसमुहुत्ते दिवसे' त्ति-सार्द्धद्विपञ्चाशदुत्तरशततमे मण्डले 'बारसमुहुत्ते दिवसे' त्ति—त्र्यशीत्यधिकशततमे मण्डले, सर्वबाह्य इत्यर्थः ।

कालाधिकारादिदमाह—

जया णं भंते ! जंबूदीवे दीवे दाहिणड्ढे वासाणं पढमे समए पडिवज्जइ तया णं उत्तरड्ढे वि वासाणं पढमे समए पडिवज्जइ । जया णं उत्तरड्ढे वि वासाणं पढमे समए पडिवज्जइ तया णं जंबूदीवे दीवे मंदरस्स पव्वयस्स पुरच्छिमपच्चत्थिमे णं अणंतरपुरक्खडसमयंसि वासाणं पढमे समए पडिवज्जइ ?, हंता गोयमा ! जया णं जंबुद्दीवे दीवे दाहिणड्ढे वासाणं पढमे समए पडिवज्जइ तह चेव० जाव पडिवज्जइ । जया णं भंते ! जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरच्छिमेणं वासाणं पढमे समए पडिवज्जइ तया णं पच्चत्थिमेण वि वासाणं पढमे समए पडिवज्जइ, जया णं पच्चत्थिमेण वि वासाणं पढमे समए पडिवज्जइ तया णं ०जाव मंदरस्स पव्वयस्स उत्तरदाहिणेणं अणंतरपच्छाकडसमयंसि वासाणं पढमे समए पडिवन्ने भवति ?, हंता गोयमा ! जया णं जंबूदीवे२ मंदरस्स पव्वयस्स पुरच्छिमे णं, एवं चेव उच्चारेयव्वं० जाव पडिवन्ने भवति १ । एवं जहा समएणं अभिलावो भणिओ वासाणं तहा आवलियाए वि २, आणपाणूए वि २, थो-

वेग वि ४, लवेण वि ५, मुहुत्तेण वि ६, अहोरत्तेण वि ७, पक्खेण वि ८, मासेण वि ९, उउणा वि १०, एएसिं सव्वेसिं जहा समयस्स अभिलावो तहा भाणियव्वो। जया णं भंते! जंबुद्दीवे२ दाहिणड्ढे हेमंताणं पढमे समए पडिवज्जति जहेव वासाणं अभिलावो तहेव हेमंताण वि२० गिम्हाणं वि३० भाणियव्वो०जाव उऊ, एवं एए तिण्णि वि एएसिं तीसं आलावगा भाणियव्वा। जया णं भंते! जंबुद्दीवे दीवे मंदरस्स पव्वयस्स दाहिणड्ढे पढमे अयणे पडिवज्जइ तया णं उत्तरड्ढे वि पढमे अयणे पडिवज्जइ, जहा समएणं अभिलावो तहेव अयणेण वि भाणियव्वो ०जाव अणंतरपच्छाकडसमयंसि पढमे अयणे पडिवन्ने भवति, जहा अयणेणं अभिलावो तहा संवच्छरेण वि भाणियव्वो, जुएण वि वाससएण वि वाससहस्सेण वि वाससयसहस्सेण वि पुव्वंगेण वि पुव्वेण वि तुडियंगेण वि तुडिएण वि, एवं पुव्वे २ तुडिये २ अडडे २ अववे २ हुहुए २ उप्पले २ पउमे २ नलिणे २ अच्छणिउरे २ अउए २ णउए २ पउए २ चूलिया २ सीसपहेलिया २ पलिओवमेण वि सागरोवमेण वि भाणियव्वो। जया णं भंते! जंबुद्दीवे दीवे दाहिणड्ढे पढमा ओसप्पिणी पडिवज्जइ तया णं उत्तरड्ढे वि पढमा ओसप्पिणी जया णं उत्तरड्ढे वि पडिवज्जइ तदा णं जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरच्छिमपच्चत्थिमेणं वि, णेवत्थि ओसप्पिणी नेवत्थि उस्सप्पिणी अवट्ठिए णं तत्थ काले पन्नत्ते? समणाउसो! हंता गोयमा! तं चेव उच्चारियव्वं ०जाव समणाउसो!, जहा ओसप्पिणीए आलावओ भणिओ, एवं उस्सप्पिणीए वि भाणियव्वो। ( सू० १७८ )

'जया णं भंते! जंबुद्दीवे दीवे दाहिणड्ढे वासाणं पढमे समए पडिवज्जइ' इत्यादि, 'वासाणं' ति--चतुर्मासप्रमाणवर्षाकालस्य सम्बन्धी प्रथम -आद्य समय -क्षण- प्रतिपद्यते-संपद्यते भवतीत्यर्थ 'अणंतरपुरक्खडे समयंसि' त्ति--अनन्तरो-निर्व्यवधानो दक्षिणार्द्धे वर्षाप्रथमतापेक्षया स चासौ तोऽपि स्यादत आह-पुरस्कृत--पुरोवर्त्ती, भविष्यन्नित्यर्थ, समय --प्रतीत. तत पदत्रयस्य कर्मधारयोऽतस्तत्र, 'अणंतरपच्छाकडसमयंसि' त्ति-पूर्वापरविदेहवर्षाप्रथमसमयापेक्षया योऽनन्तरपश्चात्कृतोऽतीत समयस्तत्र दक्षिणोत्तरयोर्वर्षाकालप्रथमसमयो भवतीति। 'एवं जहा समएण' मित्यादि. आवलिकाऽभिलापश्चैवम्- जया णं भंते! जंबुद्दीवे दीवे दाहिणड्ढे वासाणं पढमा आवलिया पडिवज्जइ तया णं उत्तरड्ढे वि, जया णं उत्तरड्ढे वासाणं पढमावलिया पडिवज्जति तया णं जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरच्छिमपच्चत्थिमेणं अणंतरपुरक्खडसमयंसि वासाणं पढमा आवलिया पडिवज्जइ?, हंता गोयमा!' इत्यादि। एवमानपानादिपदेष्वपि, आवलिकाद्यर्थ पुनरेवम्-आवलिका असंख्यातसमयात्मिका आनप्राण --उच्छ्वासनिःश्वासकाल' स्तोक --सप्तप्राणप्रमाणः लवस्तु-सप्तस्तोकरूप मुहूर्त्त'-पुनर्लवसप्तसप्ततिप्रमाण, ऋतुस्तु-मासद्वयमान, 'हेमंताणं' ति--शीतकालस्य 'गिम्हाण य' त्ति--उष्णकालस्य 'पढमे अयणे' त्ति--दक्षिणायन श्रावणादित्वात्संवत्सरस्य 'जुएण वि' त्ति--युगं--पञ्चसंवत्सरमान 'पुव्वंगेण वि' त्ति--पूर्वाङ्गं चतुरशीतिवर्षलक्षाणाम् 'पुव्वेण वि' त्ति--पूर्वं पूर्वाङ्गमेव चतुरशीतिवर्षलक्षेण गुणितम् एवं चतुरशीतिवर्षलक्षगुणितमुत्तरोत्तरं स्थानं भवति, चतुर्नवत्यधिकं चाङ्कशतमन्तिमे स्थाने भवतीति। 'पढमा ओसप्पिणि' त्ति--अवसर्पयति भावानित्येवंशीलाऽवसर्पिणी तस्या. प्रथमो विभाग' प्रथमावसर्पिणी, 'उस्सप्पिणि' त्ति--उत्सर्पयति भावानित्येवंशीला उत्सर्पिणीति। भ० ५ श० १ उ०।

एतदेव पश्चानुपूर्व्या पृच्छन्ति--

जया णं भंते! सूरिए सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरइ तया णं केमहालए दिवसे केमहालिया राई भवइ? गोयमा! तया णं उत्तमकट्ठपत्ता उक्कोसिया अट्ठारसमुहुत्ता राई भवइ, जहण्णए दुवालसमुहुत्ते दिवसे भवइ त्ति, एस णं पढमे छम्मासे एस णं पढमस्स छम्मासस्स पज्जवसाणे। से पविसमाणे सूरिए दोच्चं छम्मासं अयमाणे पढमंसि अहोरत्तंसि बाहिराणंतरं मंडलं उवसंकमित्ता चारं चरइ, जया णं भंते! सूरिए बाहिराणंतरं मंडलं उवसंकमित्ता चारं चरइ तया णं केमहालए दिवसे भवइ केमहालिया राई भवई?, गोयमा! अट्ठारसमुहुत्ता राई भवइ दोहिं एगसट्ठिभागमुहुत्तेहिं ऊणा दुवालसमुहुत्ते दिवसे भवइ दोहिं एगसट्ठिभागमुहुत्तेहिं अहिए, से पविसमाणे सूरिए दोच्चंसि अहोरत्तंसि बाहिरतच्चं मंडलं उवसंकमित्ता चारं चरइ, जया णं भंते! सूरिए बाहिरतच्चं मंडलं उवसंकमित्ता चारं चरइ तया णं केमहालए दिवसे भवइ केमहालिया राई भवइ?, गोयमा! तया णं अट्ठारसमुहुत्ता राई भवइ चउहिं एगसट्ठिभागमुहुत्तेहिं ऊणा दुवालसमुहुत्ते दिवसे भवइ चउहिं एगसट्ठिभागमुहुत्तेहिं अहिए, इति। एवं खलु एएणं उवाएणं पविसमाणे सूरिए तयाणंतराओ मंडलाओ तयाणंतरं मंडलं संकममाणे संकममाणे दो दो एगसट्ठिभागमुहुत्तेहिं एगमेगे मंडले रयणिखेत्तस्स निवुड्ढेमाणे २ दिवसखेत्तस्स अभिवुड्ढेमाणे २ सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरइ त्ति, जया णं भंते! सूरिए सव्वबाहिराओ मंडलाओ सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरइ तया णं सव्वबाहिरं मंडलं पणिहाय एगेणं तेसिएणं

राइंदिअमएणं तिण्णि छावट्ठे एगसट्ठिभागमुहुत्तसए रयणिखेत्तस्स णिव्वुड्ढेत्ता दिवसखेत्तस्स अभिवड्ढेत्ता चारं चरइ, एस णं दोच्चे छम्मासे एस णं दुच्चस्स छम्मासस्स पज्जवसाणे एस णं आइच्चे संवच्छरे एस णं आइच्चस्स संवच्छरस्स पज्जवसाणे पण्णत्ते । ८ । ( सू० १३४ + )

'जया ण'मित्यादि, प्रश्नसूत्रं प्राग्वत्, उत्तरसूत्रे गौतम ! तदा उत्तमकाष्ठां प्राप्ता—प्रकृष्टावस्थां प्राप्ता अत एवोत्कर्षिका—उत्कृष्टा, यतो नान्या प्रकर्षवती रात्रिरित्यर्थः, अष्टादशमुहूर्त्तप्रमाणा रात्रिर्भवति तदा त्रिंशन्मुहूर्त्तरूपस्याहोरात्रस्य जघन्यिका द्वादशमुहूर्त्तप्रमाणो दिवसो भवति त्रिंशन्मुहूर्त्तत्वादहोरात्रस्य, एष चाहोरात्रो दक्षिणायनस्य चरम इत्यादि प्रज्ञापनार्थमाह—'एस ण'मित्यादि, एतच्च प्राग्व्याख्यातार्थम्, अथात्र द्वितीयं मण्डलं पृच्छन्नाह—'जया ण'मित्यादि, यदा भगवन् ! सूर्यः सर्वबाह्यानन्तरं द्वितीयं मण्डलमुपसंक्रम्य चारं चरति तदा किंप्रमाणो दिवसो भवति, किंप्रमाणा रात्रिर्भवति ?, गौतम ! अष्टादशमुहूर्त्ता द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यामूना रात्रिर्भवति, द्वादशमुहूर्त्तो द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यामधिको दिवसो भवति भागयोर्न्यूनाधिकत्वकरणयुक्तिः प्राग्वत्, अथ तृतीयमण्डलप्रश्नायाह—'से पविसमाणे' त्ति-प्राग्वत् प्रश्नसूत्रमपि तथैव, उत्तरसूत्रे गौतम ! तदा अष्टादशमुहूर्त्ता द्वाभ्याम् पूर्वमण्डलसत्काभ्यां द्वाभ्यां च प्रस्तुतमण्डलसत्काभ्याम् इत्येवं चतुर्भिः-चतुःसङ्ख्याकैर्मुहूर्त्तैकषष्टिभागैरूना रात्रिर्भवति, द्वादशमुहूर्त्तश्च तथैव चतुर्भिर्मुहूर्त्तैकषष्टिभागैरधिको दिवसो भवति, उक्तातिरिक्तेषु मण्डलेष्वतिदेशमाह—'एवं खलु' इत्यादि, एवं मण्डलत्रयदर्शितरीत्या एतेनानन्तरोक्तेनोपायेन प्रतिमण्डलं दिवसरात्रिसत्कमुहूर्त्तैकषष्टिभागद्वयवृद्धिहानिरूपेण प्रविशन् जम्बूद्वीपे मण्डलानि कुर्वन् सूर्यस्तदनन्तरान्मण्डलात् तदनन्तरं मण्डलं सङ्क्रामन् २ द्वौ द्वौ मुहूर्त्तैकषष्टिभागौ एकैकस्मिन् मण्डले रजनिक्षेत्रस्य निवर्द्धयन् २ दिवसक्षेत्रस्य तावेवाभिवर्द्धयन् २ सर्वाभ्यन्तरमण्डलमुपसंक्रम्य चारं चरति, अत्रापि सर्वमण्डलेषु भागानां हानिवृद्धिसर्वाग्रं निर्दिशन्नाह—'जया ण'मित्यादि यदा भगवन् ! सूर्यः सर्वबाह्यात् सर्वाभ्यन्तरमण्डलमुपसंक्रम्य चारं चरति तदा सर्वबाह्यं मण्डलं प्रणिधाय—मर्यादीकृत्य तदर्वाक्तनाद् द्वितीयान्मण्डलादारभ्येत्यर्थः एकेन त्र्यशीत्यधिकेन रात्रिन्दिवशतेन त्रीणि षट्षष्ट्यधिकानि मुहूर्त्तैकषष्टिभागशतानि रजनिक्षेत्रस्य निवर्द्ध्य २ दिवसक्षेत्रस्य तान्येवाभिवर्द्ध्य २ चारं चरति एष चाहोरात्र उत्तरायणस्य चरम इत्यादि निगमयन्नाह—'एस ण'मित्यादि प्राग्वत् ।

अथ नवमं तापक्षेत्रद्वारम्—

जया णं भंते ! सूरिए सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरइ तया णं किंसंठिया तावक्खित्तसंठिई पण्णत्ता ?, गोयमा ! उद्धीमुहकलंबुआपुप्फसंठाणसंठिआ तावखेत्तसंठिई पण्णत्ता अंतो संकुआ बाहिं वित्थडा अंतो वट्टा बाहिं विउला अंतो अंकमुहसंठिआ बाहिं सगडुद्धीमुहसंठिआ उत्तरपासे णं तीसे दो बाहाओ अवट्ठिआओ हवंति पणयालीसं २ जोअणसहस्साइं आयामेणं, दुवे अ णं तीसे बाहाओ अणवट्ठिआओ हवंति, तं जहा—सव्वब्भंतरिआ चेव बाहा सव्वबाहिरिआ चेव बाहा, तीसे णं सव्वब्भंतरिआ बाहा मंदरपव्वयंतेणं णवजोअणसहस्साइं चत्तारि छलसीए जोअणसए णव य दसभाए जोअणस्स परिक्खेवेणं, एस णं भंते ! परिक्खेवविसेसे कओ आहिएति वएज्जा ?, गोयमा ! जे णं मंदरस्स परिक्खेवे तं परिक्खेवं तिहिं गुणेत्ता दसहिं छेत्ता दसहिं भागे हीरमाणे एस परिक्खेवविसेसे आहिएति वदेज्जा । तीसे णं सव्वबाहिरिआ बाहा लवणसमुद्दंतेणं चउणवइं जोअणसहस्साइं अट्ठसट्ठे जोअणसए चत्तारि अ दसभाए जोअणस्स परिक्खेवेणं, से णं भंते ! परिक्खेवविसेसे कओ आहिएति वएज्जा ? गोयमा ! जे णं जंबुद्दीवस्स परिक्खेवे तं परिक्खेवं तिहिं गुणेत्ता दसहिं छेत्ता दसभागे हीरमाणे एस णं परिक्खेवविसेसे आहिएति वएज्जा इति । तया णं भंते ! तावक्खित्ते केवइयं आयामेणं पण्णत्ते ?, गोयमा ! अट्ठहत्तरिं जोअणसहस्साइं तिण्णि अ तेत्तीसे जोअणसए जोअणस्स तिभागं च आयामेणं पण्णत्ते, 'मेरुस्स मज्झयारे, ० जाव य लवणस्स रुंदछब्भागो । तावायामो एसो, सगडुद्धीसंठिओ नियमा ॥ १ ॥" तया णं भंते ! किंसंठिआ अंधकारसंठिई पण्णत्ता ?, गोयमा ! उद्धीमुहकलंबुआपुप्फसंठाणसंठिआ अंधकारसंठिई पण्णत्ता, अंतो संकुआ बाहिं वित्थडा तं चेव ० जाव तीसे णं सव्वब्भंतरिआ बाहा मंदरपव्वयंतेणं छज्जोअणसहस्साइं तिण्णि अ चउवीसे जोअणसए छच्च दसभाए जोअणस्स परिक्खेवेणं ति, से णं भंते ! परिक्खेवविसेसे कओ आहिएति वएज्जा ?, गोयमा ! जे णं मंदरस्स पव्वयस्स परिक्खेवे तं परिक्खेवं दोहिं गुणेत्ता दसहिं छेत्ता दसहिं भागे हीरमाणे एस णं परिक्खेवविसेसे आहिएति वएज्जा, तीसे णं सव्वबाहिरिआ बाहा लवणसमुद्दंतेणं तेसट्ठिं जोअणसहस्साइं दोण्णि य पणयाले जोअणसए छच्च दसभाए जोअणस्स परिक्खेवेणं, से णं भंते ! परिक्खेवविसेसे कओ आहिएति वएज्जा ?, गोयमा ! जे णं जंबुद्दीवस्स परिक्खेवे तं परिक्खेवं दोहिं गुणेत्ता ० जाव तं चेव, तया णं भंते ! अंधयारे केवइए आयामेणं पण्णत्ते ?, गोयमा ! अट्ठहत्तरिं जोअणसहस्साइं तिण्णि अ तेत्तीसे जोअणसए तिभागं च आयामेणं पण्णत्ते । जया णं भंते ! सूरिए सव्वबाहिरमंडलं उवसंकमित्ता चारं चरइ तया णं किंसंठिआ तावक्खित्तसंठिई पण्णत्ता ?, गोयमा ! उद्धीमुहकलंबुआ-

पुप्फसंठाणसंठिआ पण्णत्ता, तं चेव सव्वं णेअव्वं णवरं णाणत्तं जं अंधयारसंठिइए पुव्ववण्णिअं पमाणं तं ताव-खित्तसंठिइए णेअव्वं, जं ताव खित्तसंठिई पुव्ववण्णिअं पमाणं तं अंधयारसंठिइए णेअव्वं ति । ( सू० १३५ )

'जया णं' मित्यादि,यदा भगवन् ! सूर्यः सर्वाभ्यन्तरमण्डलमुपसङ्क्रम्य चारं चरति तदा किंसंस्थिता-किंसंस्थाना ताप-क्षेत्रस्य-सूर्यातपस्याऽऽकाशखण्डस्य संस्थितिः -व्यवस्था प्रज्ञप्ता ? सूर्यातपस्य किंसंस्थानमिति यावत् भगवानाह-गौतम ! ऊर्ध्वमुखस्य अधोमुखत्वे तस्य वक्ष्यमाणाकारस्य सतः यत् कलम्बुकापुष्पं-नालिकापुष्पं तत्संस्थानसंस्थिता प्रज्ञप्ता मया शेषैश्च तीर्थकृद्भिः । इदमेव संस्थानं विशि-नष्टि अन्तः -मेरुदिशि सङ्कुचिता बहिः -लवणदिशि विस्तृता, तथा अन्तः -मेरुदिशि वृत्ता-अर्द्धवलयाकारा सर्वतो वृत्तमेरुगतान् त्रीन् द्वौ वा दश भागान् अभिव्याप्याऽस्या व्यवस्थितत्वात्, बहिः -लवणदिशि पृथुला-मुत्कलभावेन विस्तारमुपगता, एतदेव संस्थानकथनेन स्पष्टयति-अन्तर्मेरुदिशि अङ्कः-पद्मासनोपविष्टस्योत्सङ्गरूप आसनबन्धस्तस्य मुखम्-अग्रभागोऽर्द्धवलयाकारस्तस्येव संस्थितं संस्थानं यस्याः सा तथा, बहिः -लवणदिशि शकटस्योर्द्धि-प्रतीता तस्या मुखं यत प्रभृति निश्रेणिकाया फलकानि बध्यन्ते तद्वदतिविस्तृतं भवति तत्संस्थाना, अन्तर्बहिर्भागौ प्रतीत्य यथाक्रमं सङ्कुचिता विस्तृता इति भावः । आद-र्शान्तरे तु ' बाहिं सोत्थिअसंठिआ ' पाठस्तत्र स्वस्तिक प्रतीतस्तस्य मुखम्-अग्रभागस्तस्येवातिविस्तीर्णतया-संस्थितं-संस्थानं यस्याः सा तथा, अथास्या आयाममाह-' उभओ पासेणं ' मित्यादि , उभयपार्श्वेन-मन्दरस्यो-भयोः पार्श्वयोः तस्याः -तापक्षेत्रसंस्थितेः सूर्यभेदेन द्विधा व्यवस्थितायाः प्रत्येकमेकैकभावेन द्वे बाहे-द्वे पार्श्वे अवस्थिते-अवृद्धिहानिस्वभावे सर्वमण्डलेष्वपि नियतपरिमाणे भवतः । अयमर्थः -एका भरतस्थसूर्यकृता दक्षिणपार्श्वे, द्वितीया ऐरवतस्थसूर्यकृता उत्तरपार्श्वे इति द्विप्रकारा, सा च पञ्चचत्वारिंशत् २ योजनसहस्राणि आ-यामेन, मध्यवर्त्तिनो मेरोरारभ्य द्वयोर्दक्षिणोत्तरभागयोः पञ्चचत्वारिंशता योजनसहस्रैर्व्यवहिते जम्बूद्वीपपर्यन्ते व्यव-स्थितत्वात् ,एवं पूर्वापरभागयोरपि, यदा तत्र सूर्यौ तदाऽय मायामो बोध्यः एतच्च सूत्रं जम्बूद्वीपगतायाममपेक्ष्य बोध्यं, लवणसमुद्रे तु त्रयस्त्रिंशत्सहस्राणि त्रीणि शतानि त्रयस्त्रिं-शदधिकानि एकश्च त्रिभागो योजनस्येति , एतच्च एकत्र पिण्डितमष्टसप्तति सहस्राणि योजनानां त्रीणि शतानि इत्यादिकं सूत्रकृदेव वक्ष्यति तत्र सोपपत्तिकं निगदिष्यते तेनात्र पुनरुक्तभिया नोक्तम् । सम्प्रत्यनवस्थितबाहास्वरूप-माह-- 'दुवे अ णं' मित्यादि, तस्याः -एकैकस्यास्तापक्षेत्रसं-स्थितेः द्वे च बाहे अनवस्थिते-अनियतपरिमाणे भवतः , प्रतिमण्डलं यथायोगं हीयमानवर्द्धमानपरिमाणत्वात् , तद्यथा--सर्वाभ्यन्तरा सर्वबाह्या चैवशब्दौ प्रत्येकमनव-स्थितस्वभावद्योतनार्थौ तत्र या मेरुपार्श्वे विष्कम्भमधि-कृत्य बाहा सा सर्वाभ्यन्तरा या तु लवणदिशि जम्बूद्वीप-पर्यन्तमधिकृत्य बाहा सा सर्वबाह्या, आयामश्च दक्षिणोत्त-रायततया प्रतिपत्तव्यो विष्कम्भः पूर्वापरायततयेति । साम्प्रतं सर्वाभ्यन्तरा परिमाणं निर्दिशति-'तीसे णं' मित्यादि तस्या एकैकस्यास्तापक्षेत्रसंस्थितेः सर्वाभ्यन्तरा बाहा मेरुगि-रिसमीपे नवयोजनसहस्राणि चत्वारि षडशीत्यधिकानि यो-जनशतानि नव च दश भागान् योजनस्य परिक्षेपेण, अत्रोपपत्त्यर्थं प्रश्नमाह--' एस णं ' मित्यादि , एषः--अनन्त-रोक्तप्रमाणः परिक्षेपविशेषः--मन्दरपरिरयपरिक्षेपविशेषः कुतः--कस्मात् एवंप्रमाण आख्यातः; न ऊनोऽधिको वा इति वदेत ?, भगवानाह-गौतम ! यो मन्दरस्य परिक्षेपस्तं त्रिभिर्गुणयित्वा दशभिश्छित्त्वा-दशभिर्विभज्य एतदेव पर्यायेण व्याचष्टे दशभिर्भागे ह्रियमाणे सति एष परिक्षे-पविशेष आख्यात इति वदेत् स्वशिष्येभ्यः । अय-मर्थः --मेरुणा प्रतिहन्यमानः सूर्यातपो मेरुपरिधिं प-रिक्षिप्य स्थित इति मेरुसमीपेऽभ्यन्तरतापक्षेत्रविष्कम्भ-चिन्ता, अथैवं सति स त्रयोविंशतिषट्शताधिकैकत्रिंशत्स-हस्रयोजनमानः सर्वोऽपि मेरुपरिधिरस्य तापक्षेत्रस्य वि-ष्कम्भतामापद्येत इति चेत्, न, सर्वाभ्यन्तरे मण्डले वर्त्त-मानः सूर्यो दीप्तलेश्याकत्वाज्जम्बूद्वीपचक्रवालस्य यत्र तत्र प्रदेशे तत्तच्चक्रवालक्षेत्रानुसारेण त्रीन् दशभागान् प्रका-शयति दशभागानां त्रयाणां मीलने यावत् प्रमाणं क्षेत्रं ता-वत्तापयतीत्यर्थः । ननु तर्हि मेरुपरिधेस्त्रिगुणीकरणं किमर्थम्? दशभागानां त्रिधा गुणनेनैव चरितार्थत्वात् , सत्यं, विने-यानां सुखावबोधाय । भगवतीवृत्तौ तु श्रीअभयदेवसूरिपादा दशभागलब्धं त्रिगुणं चक्रुरिति , अथ दशभिर्भागे को हेतुरिति चेत् , उच्यते-जम्बूद्वीपचक्रवालक्षेत्रस्य त्रयो भागा मेरुदक्षिणपार्श्वे त्रयस्तस्यैवोत्तरपार्श्वे द्वौ भागौ पूर्वतो द्वौ चापरतः सर्वमीलने दश, तत्र भरतगतः सूर्यः सर्वाभ्यन्तरे मण्डले चरन् त्रीन् भागान् दाक्षिणात्यान् प्रकाशयति तदा-नीं च त्रीनौत्तराहान् ऐरवतगतः तदा द्वौ भागौ पूर्वतो रज-नी द्वौ चापरतोऽपि यथा यथा क्रमेण दाक्षिणात्य औत्तरा-हो वा सूर्यः सञ्चरति तथा तथा तयोः प्रत्येकं तापक्षेत्रम-ग्रतो वर्द्धते पृष्ठतश्च हीयते, एवं क्रमेण सञ्चरणशीले तापक्षेत्रे यदैकः सूर्यः पूर्वस्यामपरोऽपरस्यां वर्त्तेते तदा पूर्वपश्चिमदिशोः प्रत्येकं त्रीन् भागांस्तापक्षेत्रं द्वौ भागौ दक्षिणोत्तरयोः प्रत्येकं रजनीति । अथ गणितकर्मविधानं, तत्र मेरुव्यासः १०००० एषां वर्गो दश कोट्यः १०००००००० ततो दशभिर्गुणने जातं कोटिशतम् १०००००००००० अस्य वर्गमूलानयने लब्धान्येकत्रिंशद्योजनसहस्राणि षट्शतानि त्रयोविंशत्यधिकानि ३१६२३ एष राशिस्त्रिभिर्गुण्यते जाता-नि चतुर्नवति सहस्राणि अष्टौ शतान्येकोनसप्तत्यधिकानि ९४८६९ एषां दशभिर्भागे लब्धानि नवयोजनसहस्राणि च-त्वारि शतानि षडशीत्यधिकानि नव च दशभागा योजनस्य । अथ सर्वबाह्यबाहापरिमाणमाह—' तीसे णं ' मित्यादि , तस्याः --तापक्षेत्रसंस्थितेः सर्वबाह्या लवणसमुद्रस्यान्ते-स-मीपे चतुर्नवतिं योजनसहस्राणि अष्टौ च षष्ट्यधिकानि योजनशतानि चतुरश्च दशभागान् योजनस्य परिक्षेपेण । अथोपपादकसूत्रमाह--' से णं भंते ! परिक्खेवे ' इत्यादि , स भदन्त ! परिक्षेपविशेषोऽनन्तरोक्तो य इति गम्यं कुत

आख्यात इति गौतमो वदेत्--वदति । भगवानाह--गौतम! यो जम्बूद्वीपपरिक्षेपस्तं परिक्षेपं त्रिभिर्गुणयित्वा दशभिश्छित्वा--दशभिर्विभज्य इदमेव पर्यायेणाह--दशभिर्भागे ह्रियमाणे एष परिक्षेपविशेष आख्यातो मयाऽन्यैश्चाप्तैरिति वदेत् स्वशिष्येभ्य ,इदमुक्तं भवति--तापक्षेत्रस्य परमविष्कम्भः प्रतिपिपादयिषितव्य.,स च जम्बूद्वीपपर्यन्त इति तत्परिधि. स्थाप्य.,योजन ३१६२२७कोश ३धनूंषि१२८ अङ्गुलानि १३अर्द्धाङ्गुलम्१एतावता च योजनमेकं किञ्चिदूनमिति व्यवहारतः पूर्णं विवक्ष्यते--साशराशितो निरंशराशेर्गुणितस्य सुकरत्वात् ततो जातम् ३१६२२८, एतत् त्रिगुणं क्रियते जातानि नव लक्षाणि अष्टचत्वारिंशत्सहस्राणि षट् शतानि चतुरशीत्यधिकानि ९४८६८४, एषां दशभिर्भजने लब्धानि चतुर्नवतिर्योजनसहस्राणि अष्टौ शतानि अष्टषष्ट्यधिकानि चत्वारश्च दश भागा योजनस्य, अत्रापि त्रिगुणकरणादौ युक्तिः प्राग्वत् , नन्वन्यत्र 'रविणो उदयत्थन्तर-चउणवइसहस्स पणसयछव्वीसा । बायाल सट्ठिभागा, कक्कडसंकतिदिअहम्मि '॥१॥ इत्युक्तम् , अत्रोदयास्तान्तर प्रकाशक्षेत्र तापक्षेत्रमित्येकार्थो , तत्र भेदे किंनिबन्धनमिति चेत् , उच्यते-सर्वाभ्यन्तरमण्डलवर्त्ती सूर्यो मन्दरदिशि जम्बूद्वीपस्य पूर्वतोऽपरतश्चाशीत्यधिकं शतं योजनानामवगाह्य चारं चरति तेनाशीत्यधिकशतयोजनानि द्विगुणानि ३६० अस्य वर्गो दशगुणवर्गमूलानयने जातानि ११३८ एतच्च द्वीपपरिधित ३१६२२७ रूपात् शोध्यते ततः स्थितम् ३१५०८९, अस्य दशभिर्भागे आगतम् ३१५०८ अवशिष्टभागा ९/१० अनयोरंशच्छेदयो षड्भिर्गुणने जातम् ५४/६० अस्य राशेस्त्रिगुणने सम्पद्यते यथोक्तराशि , तथाहि--९४५२६ ४२/६० इद च सूक्ष्मेक्षिकया दर्शितं , न चैतत् समत्युत्प्रेक्षितमिति भाव्यम् ,श्रीमुनिचन्द्रसूरिकृतसूर्यमण्डलविचारेऽस्य सुविचारितत्वात् ,प्रस्तुते च स्थूलनयाश्रयणेन द्वीपपर्यन्तमात्रविवक्षणेन सूत्रोक्तं प्रमाणं सम्पद्यते, द्वीपोदधिपरिधिष्वेव सर्वत्राप्यागमे दशांशकल्पनादिश्रवणात् , अनेन परिधितः परतो लवणोदषड्भागं यावत् प्राप्यमाणे तापक्षेत्रे तच्चक्रवालक्षेत्रानुसारेण तत्र विष्कम्भसम्भवात् परमविष्कम्भस्तत्र कथनीय इति निरस्तम् , अयमेव चतुर्नवतिसहस्रपञ्चशतादियोजनादिको राशिर्बहुबहुश्रुतैः प्रमाणीकृत. करणसंवादित्वात् , तथाहि--स्वस्वमण्डलपरिधि षष्ट्या भक्ता मुहूर्त्तगतिं प्रयच्छति, सा च दिवसार्द्धगतमुहूर्त्तराशिना गुणिता चक्षुःस्पर्शं सा चोदयतः सूर्यस्याग्रतो यावानस्तमयतश्च पृष्ठतोऽपि तावानिति द्विगुणितः सन् तापक्षेत्रं भवति एतच्च चक्षुःस्पर्शद्वारे सुव्यक्तं निरूपितमस्ति । इद च तापक्षेत्रकरणं सर्वबाह्यमण्डलसत्कतापक्षेत्रयोरायामव्याख्यानिरूपणे विभावयिष्यत इति नात्रोदाह्रियते, यदुक्तं--चेत् दशभागान् प्रकाशयति इति. तत्र भागं एकमुहूर्त्ताक्रमणीयक्षेत्रप्रमाणं ,कथं ?, सर्वाभ्यन्तरे मण्डले चरति सूर्ये दिवसोऽष्टादशमुहूर्त्तमानं नवमुहूर्त्ताक्रमणीये च क्षेत्रे स्थित सूर्यो दृश्यो भवति , तत एतावत्प्रमाणं सूर्यात् प्राक् तापक्षेत्रं तावच्च अपरतोऽपि, इत्थं चाष्टादशमुहूर्त्ताक्रमणीयक्षेत्रप्रमाणमेकस्य सूर्यस्य तापक्षेत्रं, तच्च किल दशभागत्रयात्मकं ततो भवत्येकस्मिन् दशभागे षण्मुहूर्त्ताक्रमणीयक्षेत्रप्रमाणतेति । सम्प्रति सामस्त्यनायामतस्तापक्षेत्रपरिमाणं पिपृच्छिषुराह--' तया णं ' मित्यादि यदा भगवन् ! एतावत्तापक्षेत्रपरमविष्कम्भ इति गम्यं तदा भगवंस्तापक्षेत्रं सामस्त्येन दक्षिणोत्तरायनतया कियदायामेन प्रज्ञप्तम् ? , भगवानाह--गौतम ! अष्टसप्ततिं योजनसहस्राणि त्रीणि च त्रयस्त्रिंशदधिकानि योजनशतानि योजनस्यैकस्य त्रिभागं च यावदायामेन प्रज्ञप्तं, पञ्चचत्वारिंशद्योजनसहस्राणि द्वीपगतानि, त्रयस्त्रिंशद्योजनसहस्राणि त्रीणि च योजनशतानि त्रयस्त्रिंशदधिकानि , उपरि च योजनत्रिभागयुक्तानि लवणगतानि, द्वयोः सङ्कलने यथोक्तं मानम् । इदं च दक्षिणोत्तरत आयामपरिमाणमवस्थित न क्वापि मण्डलचारे विपरिवर्त्तेतेति , एतमेवार्थं सामस्त्येन द्रढयति-- ' मेरुस्स मज्झयारे ' इत्यादि , इह मेरुणा सूर्यप्रकाशः प्रतिहन्यते इत्येकेषां मतम् ,नेत्यपरेषाम्। तत्राद्यानां मते इयं सम्मतिरूपा गाथा,तस्मिन् पक्षे एव व्याख्येया--करणं कारो मध्ये कारो मध्यकार --मध्ये करणं मेरोस्तस्मिन् सति , कोऽर्थः ?--चक्रवालक्षेत्रत्वात्तापक्षेत्रस्य मेरु मध्ये कृत्वा यावल्लवणस्य रुन्दस्य--निर्देशस्य भावप्रधानत्वाद्रुन्दताया'--विस्तारस्य षड्भाग.--षष्ठो भाग एतावत्प्रमाणं तापस्य--तापक्षेत्रस्याऽऽयाम , तत्र मेरोरारभ्य जम्बूद्वीपपर्यन्तं यावत्पञ्चचत्वारिंशद्योजनसहस्राणि तथा लवणविस्तारे द्वे योजनलक्षे तयो षष्ठो भागस्त्रयस्त्रिंशद्योजनसहस्राणि त्रीणि योजनशतानि त्रयस्त्रिंशद्योजनानि एको योजनत्रिभाग इति रूप तत उभयमीलने यथोक्तप्रमाणं , एष च नियमात् शकटोद्धि(द्धि)संस्थित -शकटो(द्धि)द्धिसंस्थान अन्तः सङ्कुचितो बहिर्विस्तृत इति । अथ येषां मेरुणा न सूर्यप्रकाश प्रतिहन्यते इति मतं तेषामर्थान्तरसूचनायेयं गाथा तत्पक्षे चैवं व्याख्येया--मेरोर्मध्यभागो--मन्दरार्धं यावच्च लवणरुन्दतापड्भाग एतेन मन्दरार्द्धसत्कपञ्चयोजनसहस्राणि पूर्वराशौ प्रक्षिप्यन्ते जायते च त्र्यशीतिसहस्रयोजनानि त्रीणि योजनशतानि त्रयस्त्रिंशदधिकानि एकश्च योजनत्रिभाग. ८३३३३ १/३ , अनेन च मन्दरगतकन्दरादीनामप्यन्तः प्रकाशः स्यादिति लभ्यते , यत्त्वस्मिन् व्याख्याने श्रीमलयगिरिपादैः सूर्यप्रज्ञप्तिवृत्तौ "युक्तं चैतत् सम्भावनया तापक्षेत्रायामपरिमाणमन्यथा जम्बूद्वीपमध्ये तापक्षेत्रस्य पञ्चचत्वारिंशद्योजनसहस्रपरिमाणाभ्युपगमे यथा सूर्यो बहिर्निष्क्रामति तथा तत्प्रतिबद्धं तापक्षेत्रमपि , ततो यदा सूर्यः सर्वबाह्यमण्डलमुपसंक्रम्य चारं चरति तदा सर्वथा मन्दरसमीपे प्रकाशो न प्राप्नोति , अथ च तदापि तत्र मन्दरपरिरयपरिक्षेपेणाविशेषं परिमाणमग्रे वक्ष्यते , तस्मात्पादलिप्तसूरिव्याख्यानमभ्युपगन्तव्यमि" त्युक्त. तत्र तत्र भवत्पादाना गम्भीरमाशयं न विद्म , बाह्यमण्डलस्थेऽपि सूर्ये इयत्प्रमाणस्य तापक्षेत्रायामस्यावस्थितत्वेन प्रतिपादनात्, उक्ता सर्वाभ्यन्तरे मण्डले तापक्षेत्रसंस्थिति ।सम्प्रति प्रकाशपृष्ठलग्नत्वेन तद्विपर्ययभूतत्वेन च सर्वाभ्यन्तरमण्डलेऽन्धकारसंस्थितिं पृच्छति--' तया णं भन्ते ! ' इत्यादि , तदा--सर्वाभ्यन्तरमण्डलचरणकाले--कर्कसङ्क्रान्तिदिने किंसंस्थाना अन्धकारसंस्थितिः प्रज्ञप्ता ? यद्यपि प्रकाशत-

व्याख्यानं प्रज्ञापनोपाङ्गगतैकादशभाषापदाष्टाविंशतितमाहारपदगतोर्ध्वाधस्तिर्यग्विषयकनिर्वचनसूत्रव्याख्यानुसारेण ज्ञेयमिति बोध्यं,गमनं च क्रिया सा च बहुसामयिकत्वात् त्रिकालनिर्वर्त्तनीया स्यादित्यादिमध्यादिप्रश्नः तद्भदन्त ! किमादौ गच्छत किं मध्ये उत पर्यवसाने वा ? भगवानाह-गौतम ! षष्टिमुहूर्त्तप्रमाणस्य मण्डलसंक्रमकालस्यादावपि मध्येऽपि पर्यवसानेऽपि वा गच्छत .उक्तप्रकारत्रयेण मण्डलकालसमापनात् , अथ तद्भदन्त ! स्वविषय—स्वोचितं क्षेत्रं गच्छत. उत अविषयं वा, स्वानुचितमित्यर्थः . गौतम ! स्वविषयं स्पृष्टावगाढनिरन्तरावगाढस्वरूपं गच्छत न अविषयम् अस्पृष्टानवगाढपरम्परावगाढक्षेत्राणां गमनायोग्यत्वात्, तद्भदन्त ! आनुपूर्व्या—क्रमेण यथासन्नं गच्छत. उत अनानुपूर्व्य—क्रमेणानासन्नमित्यर्थः सूत्रे द्वितीया तृतीयार्थे, गौतम ! आनुपूर्व्या गच्छत न अनानुपूर्व्या व्यवस्थाहानेः, आनुक्रमेव दिक्प्रश्नं व्यक्त्या आह—तद्भदन्त ! किमेकदिग्विषयकं क्षेत्रं गच्छत यावत् षड्दिग्विषयकम् ?, गौतम ! नियमात् षड्दिशि , तत्र पूर्वादिषु तिर्यग्दिक्षु उदितः सन् स्फुटमेव गच्छन् दृश्यते , ऊर्ध्वाधोदिग्गमनं च यथोपपद्यते तथा प्राग्दर्शितम् । सम्प्रत्येतदतिदेशेनावभासनादिसूत्राण्याह—' एवं ओभासेंति ' इत्यादि . ' एव ' मिति-गमनसूत्रप्रकारेण अवभासयत —ईषदुद्योतयत, यथा स्थूरतरमेव दृश्यते तमेव प्रकारमुपदर्शयति—तद्भदन्त ! क्षेत्रं स्पृष्टं सूर्यतेजसा व्याप्तम् अवभासयत उतास्पृष्टम् ?, भगवानाह-स्पृष्टम् नास्पृष्टम् दीपादिभास्वरद्रव्याणां प्रभाया गृहादिस्पर्शपूर्वकमेवावभासकत्वदर्शनात् एवं—स्पृष्टपदरीत्या आहारपदानि-चतुर्थोपाङ्गगताष्टाविंशतितमपदे आहारग्रहणविषयकाणि पदानि-द्वाराणि नेतव्यानि तद्यथा-' पुट्ठो ' इत्यादि , प्रथमतः स्पृष्टविषयं सूत्रम् ततोऽवगाढसूत्रं ततोऽणुबादरसूत्रं तत ऊर्ध्वाधः प्रभृतिसूत्रम् तत ' आई ' इति उपलक्षणमेतत् आदिमध्यावसानसूत्रं- ततो विषयसूत्रं तदनन्तरमानुपूर्वीसूत्रम् .ततो यावत् नियमात् षड्दिशीति सूत्रम् अत्र यथासम्भवं विपक्षसूत्राण्युपलक्षणाद् ज्ञेयानि, अत्र चोर्ध्वादिदिग्भावना सूत्रकृत् स्वयमेव वक्ष्यति , एवमुद्योतयतोभृशं प्रकाशयत यथा स्थूलमेव दृश्यते तापयत -अपनीतशीतं कुरुत , यथा सूक्ष्मं पिपीलिकादि दृश्यते तथा कुरुत , प्रभासयत -अतितापयोगादविशेषतोऽपनीतशीतं कुरुत ,यथा सूक्ष्मतरं दृश्यते,उक्तमेवार्थं शिष्यहिताय प्रकारान्तरेण प्रश्नयितुं द्वादशद्वारमाह— जम्बुद्दीवे णं मित्यादि , जम्बूद्वीपे भदन्त ! द्वीपे द्वयोः सूर्ययोः किमतीते क्षेत्रे-पूर्वोक्तस्वरूपे क्रिया-अवभासनादिका क्रियते , कर्मकर्त्तरि प्रयोगोऽयं तेन भवतीत्यर्थः . प्रत्युत्पन्ने अनागते वा ? भगवानाह-गौतम ! नो अतीते क्षेत्रे क्रिया क्रियते . प्रत्युत्पन्ने क्रियते, नो अनागते, व्याख्यात प्राग्वत् सा क्रिया भगवन् ! किं स्पृष्टा क्रियते? उतास्पृष्टा क्रियते ?, गौतम ! स्पृष्टा तेजसा स्पर्शनं स्पृष्टं भावे क्तप्रत्ययविधानात् तद्योगाद् या सा स्पृष्टा उच्यते,काऽसौ ?- सूर्यतेजसा सह स्पर्शनेऽवभासनमुद्योतनं तापनं प्रभासनमित्यादिका क्रिया स्यादिति । अथवा—स्पृष्टात्—स्पर्शनादिति-पञ्चमीपरतया व्याख्येयं न अस्पृष्टात् क्रियते , अत्र यावत्पदात् आहारपदानि ग्राह्याणि । तत्रेयं सूत्रपद्धति — " से णं भन्ते ! किं ओगाढा अणोगाढा ?, ओगाढा,णो अणोगाढा ।"अत्रापि भावे क्तप्रत्ययविधानादवगाढम्—अवगाहनं क्षेत्रे तेजःपुद्गलानामवस्थानं तद्योगाद्या साऽवगाढा क्रिया एवमनन्तरावगाढपरम्परावगाढसूत्रम् . "सा णं भन्ते! अणू किज्जइ? बायरा किज्जइ?, गोअमा ! अणू वि बायरा वि' त्ति-सा क्रिया अवभासनादिका किमणुर्वा बादरा वा क्रियते गौतम ! अणुरपि —सर्वाभ्यन्तरमण्डलक्षेत्रावभासनापेक्षया, बादराऽपि—सर्वबाह्यमण्डलक्षेत्रावभासनापेक्षया, ऊर्ध्वाधस्तिर्यक्सूत्रविभावनां सूत्रकृदनन्तरमेव करिष्यति,' सा णं भन्ते ! किं आइं किज्जइ मज्झे किज्जइ पज्जवसाणे किज्जइ ?, गोयमा! आइं पि किज्जइ मज्झे वि किज्जइ पज्जवसाणे वि किज्जइ ' त्ति गमनसूत्र इवात्रापि भावना । एवं विषयसूत्रमानुपूर्वीसूत्रं च ज्ञेयमिति ।

अथ त्रयोदशद्वारमाह—

जम्बूद्दीवे णं भन्ते ! दीवे सूरिआ केवइअं खेत्तं उद्धं तवयन्ति अहे तिरिअं च ?, गोयमा ! एगं जोअणसयं उद्धं तवयन्ति अट्ठारसमयजोअणाइं अहे तवयन्ति सीआलीसं जोअणसहस्साइं दोण्णि अ तेवट्ठे जोअणसए एगवीसं च सट्ठिभाए जोअणस्स तिरिअं तवयन्ति त्ति १३ । (सू० १३९ ) । अंतो णं भंते ! माणुसुत्तरस्स पव्वयस्स जे चंदिमसूरिअगहगणणक्खत्ततारारूवा णं भन्ते ! देवा किं उद्धोववण्णगा कप्पोववण्णगा विमाणोववण्णगा चारोववण्णगा चारट्ठिइआ गइरइआ गइसमावण्णगा ?,गोयमा ! अंतो णं माणुसुत्तरस्स पव्वयस्स जे चन्दिमसूरिअ० जाव ताराख्वे ते णं देवा णो उद्धोववण्णगा णो कप्पोववण्णगा विमाणोववण्णगा चारोववण्णगा णो चारट्ठिइआ गइरइआ गइसमावण्णगा उद्धीमुहकलंबुआपुप्फसंठाणसंठिएहिं जोअणसाहस्सिएहिं तावखेत्तेहिं साहस्सिआहिं वेउव्विआहिं बाहिराहिं परिसाहिं महया हयणट्टगीअवाइअतंतीतलतालतुडिअघणमुइंगपडुप्पवाइअरवेणं दिव्वाइं भोगभोगाइं भुंजमाणा महया उक्किट्ठिसीहणायबोलकलकलरवेणं अच्छं पव्वयरायं पयाहिणावत्तमण्डलचारं मेरुं अणुपरिअट्टंति १४ । (सू० १४० )

' जम्बूद्दीवे णं 'मित्यादि प्रश्नसूत्रं व्यक्तम् . उत्तरसूत्रे गौतम! ऊर्ध्वमेकं योजनशतं तापयतः . स्वविमानस्योपरि योजनशतप्रमाणस्यैव तापक्षेत्रस्य भावात् . अष्टादशशतयोजनान्यधस्तापयतः कथं ? सूर्याभ्यामष्टासु योजनशतेष्वधोगतेषु भूतलम् . तस्माच्च योजनसहस्रे अधोग्रामाः स्युस्तांश्च यावत्तापनात् सप्तचत्वारिंशद्योजनसहस्राणि इत्यादि-प्रमाणं क्षेत्रं तिर्यक् तापयतः एतच्च सर्वोत्कृष्टदिवसे चक्षुःस्पर्शापेक्षया बोध्यम् ; तिर्यग्दिक्कथनेन पूर्वपश्चिमयोरेवेदं ग्राह्यम् , उत्तरस्तु १८० न्यून ४५ योजनसहस्राणि याम्यतः पुनर्द्वीपे १८० योजनानि लवणे तु योजनानि ३३ सहस्राणि ३ शतानि त्रयस्त्रिंशदधिकानि योजनत्रिभागयुतानीति । अथ मनुष्यक्षेत्रवर्त्तिज्योतिष्कस्वरूपं प्रष्टुं चतुर्दशद्वारमाह— ' अंतो णं भन्ते !' इत्यादि,अन्त-र्मध्ये भदन्त ! मानुषोत्तरस्य मनुष्य-

-स्य' उत्तर --अग्रवर्त्ती पर्वतमवधीकृत्य मनुष्याणामुत्पत्तिविपत्तिसिद्धिसम्पत्तिप्रभृतिभावात्। अथवा-मनुष्याणामुत्तरो--विद्यादिशक्त्यभावेऽनुल्लङ्घनीयो मानुषोत्तरस्तस्य पर्वतस्य ये चन्द्रसूर्यग्रहगणनक्षत्रतारारूपज्योतिष्का ते भदन्त! अत्रैकस्मिन्नत्र प्रश्ने यद्भदन्तेति भगवत्सम्बोधनं पुनश्चक्रे तत्पृच्छकस्य भगवन्नामोच्चारेऽतिप्रीतिमत्त्वात् देवाः किमूर्ध्वोपपन्नाः --सौधर्मादिभ्यो द्वादशभ्यः कल्पेभ्य ऊर्ध्वं ग्रैवेयकानुत्तरविमानेषूपपन्नाः -उत्पन्नाः कल्पातीता इत्यर्थः, कल्पोपपन्नाः--सौधर्मादिदेवलोकोपपन्नाः विमानेषु-ज्योतिः सम्बन्धिषु उपपन्नाः चारो--मण्डलगत्या परिभ्रमणं तमुपपन्नाः-आश्रितवन्तः उत चारस्य -यथोक्तस्वरूपस्य स्थितिः -अभावो येषां ते चारस्थितिकाः अपगतचारा इत्यर्थः, गतौ रतिः --आसक्तिः प्रीतिर्येषां ते गतिरतिकाः, अतेव गतौ रतिमात्रमुक्तं, सम्प्रति साक्षाद् गतिं प्रश्नयति-गतिसम्पन्ना -गतियुक्ताः ?, भगवानाह-गौतम! अन्तरमानुषोत्तरस्य पर्वतस्य ये चन्द्रसूर्यग्रहगणनक्षत्रतारारूपज्योतिष्कास्ते देवा नोर्ध्वोपपन्ना नो कल्पोपपन्नाः विमानोपपन्नाः चारोपपन्ना नो चारस्थितिकाः अत एव गतिरतिका गतिसमायुक्ताः, ऊर्ध्वमुखकलम्बुकापुष्पसंस्थानसंस्थितैरिति प्राग्वत् योजनसाहस्रिकैः अनेकयोजनसहस्रप्रमाणैस्तापक्षेत्रैः अत्रेत्थंभावे तृतीया, तेनेत्थंभूतैस्तैस्तैर्मेरुं परिवर्त्तन्त इति क्रियायोगः कोऽर्थः?--उक्तस्वरूपाणि तापक्षेत्राणि कुर्वन्तो जम्बूद्वीपगतं मेरुं परितो भ्रमन्ति, तापक्षेत्रविशेषणं चन्द्रसूर्याणामेव, न तु नक्षत्रादीनां, यथासम्भवं विशेषणानां नियोज्यत्वात्, अथैनान् साधारणेन विशेषयन्नाह--साहस्रिकाभिः --अनेकसहस्रसङ्ख्याकाभिः वैकुर्विकाभिः --विकुर्वितनानारूपधारिणीभिर्बाह्याभिः -आभियोगिककर्मकारिणीभिः, नाट्यगानवादनादिकर्मप्रवणत्वात् न तु तृतीयपर्षद्रूपाभिः पर्षद्भिः-देवसमूहरूपाभिः कर्तृभूताभिः, बहुवचनं चात्र नाट्यादिगणापेक्षया महता प्रकारेणाऽऽहतानि-भृशं ताडितानि नाट्यं गीतं वादित्रं च-वादनरूपे त्रिविधेऽपि सङ्गीते इत्यर्थः, तन्त्रीतलतालरूपत्रुटितानि शेषं प्राग्वत्, तथा स्वभावतो गतिरतिकैः -बाह्यपर्षदन्तर्गतैर्देवैर्वेगेन गच्छत्सु विमानेषु हृष्टा ये सिंहनादा मुच्यन्ते यौ च बोलकलकलौ क्रियेते, तत्र बोलो नाम मुखे हस्तं दत्त्वा महता शब्देन पूत्करणं, कलकलश्च-व्याकुलशब्दसमूहस्तद्रवेण महता महता समुद्ररवभूतमिव कुर्वाणा मेरुमिति योगः, किंविशिष्टमित्याह-अच्छम्--अतीव निर्मलं जाम्बूनदमयत्वात् रत्नबहुलत्वाच्च पर्वतराज--पर्वतेन्द्रं 'प्रदक्षिणावर्त्तमण्डलचारं' मिति प्रकर्षेण सर्वासु दिक्षु विदिक्षु च परिभ्रमतां चन्द्रादीनां दक्षिण एव मेरुर्भवति यस्मिन्नावर्त्तने--मण्डलपरिभ्रमणरूपे स प्रदक्षिणः, प्रदक्षिण आवर्त्तो येषां मण्डलानां तानि तथा तेषु यथा चारो भवति तथा क्रियाविशेषणं तेन प्रदक्षिणावर्त्तमण्डलं चारं यथा स्यात्तथा मेरुं परिवर्त्तन्त इति योज्यम्, अयमर्थः--चन्द्रादयः सर्वेऽपि समयक्षेत्रवर्त्तिनो मेरुं परितः प्रदक्षिणावर्त्तमण्डलचारेण भ्रमन्तीति।

अथ पञ्चदशं द्वारमाह--

तेसि णं भन्ते! देवाणं जाहे इंदे चुए भवइ से कहमियाणिं पकरेंति?, गोयमा! ताहे चत्तारि पंच वा सामाणिआ देवा तं ठाणं उवसंपज्जित्ता णं विहरंति ०जाव तत्थ अण्णे इंदे उववण्णे भवइ। इंदट्ठाणे णं भंते! केवइअं कालं उववाएणं विरहिए?, गोयमा! जहण्णेणं एगं समयं उक्कोसेणं छम्मासे उववाएणं विरहिए। बहिआ णं भन्ते! माणुसुत्तरस्स पव्वयस्स जे चंदिम ०जाव तारारूवा तं चेव णेअव्वं णाणत्तं विमाणोववण्णगा णो चारोववण्णगा चारट्ठिइआ णो गइरइआ णो गइसमावण्णगा पक्किट्टगसंठाणसंठिएहिं जोअणसयसाहस्सिएहिं तावखित्तेहिं सयसाहस्सिआहिं वेउव्विआहिं बाहिराहिं परिसाहिं महया हयणट्ट ०जाव भुंजमाणा सुहलेसा मन्दलेसा मन्दातवलेसा चित्तंतरलेसा अण्णोण्णसमोगाढाहिं लेसाहिं कूडा इव ठाणट्ठिआ सव्वओ समन्ता ते पएसे ओभासंति उज्जोवेंति पभासेन्ति त्ति। तेसि णं भन्ते! देवाणं जाहे इंदे चुए से कहमियाणिं पकरेन्ति ०जाव जहण्णेणं एक्कं समयं, उक्कोसेणं छम्मासा इति १५। (सू० १४१)

'तेसि णं' मित्यादि, तेषां भदन्त! ज्योतिष्कदेवानां यदा इन्द्रश्च्यवते तदा ते देवा इदानीम्-इन्द्रविरहकाले कथं प्रकुर्वन्ति?, भगवानाह--गौतम! तदा चत्वारः पञ्च वा सामानिका देवाः संभूय एकबुद्धितया भूत्वेत्यर्थः तत्स्थानम् इन्द्रस्थानमुपसम्पद्य विहरन्ति--तदिन्द्रस्थानं परिपालयन्ति, कियन्तं कालमिति चेदत आह--यावदन्यस्तत्र इन्द्र उपपन्नः--उत्पन्नो भवति। इदानीमिन्द्रविरहकालं प्रश्नयन्नाह--'इंदट्ठाणे णं' मित्यादि, इन्द्रस्थानं भदन्त! कियन्तं कालमुपपातेन--इन्द्रोत्पादेन विरहितं प्रज्ञप्तम्?, भगवानाह--गौतम! जघन्येनैकं समयं यावत् उत्कर्षेण षण्मासान् यावत्तत परमवश्यमन्यस्येन्द्रस्योत्पादसम्भवात् इति। सम्प्रति समयक्षेत्रबहिर्वर्त्तिज्योतिष्काणां स्वरूपं पृच्छति--'बहिआ णं' मित्यादि बहिस्ताद् भगवन्! मानुषोत्तरस्य पर्वतस्य ये चन्द्रादयो देवास्ते किमूर्ध्वोपपन्ना? इत्यादि प्रश्नसूत्रं प्राग्वत् निर्वचनसूत्रे तु नोर्ध्वोपपन्ना नापि कल्पोपपन्नाः, किन्तु विमानोपपन्नाः तथा नो चारोपपन्ना नो चारयुक्ताः किन्तु चारस्थितिकाः अत एव नो गतिरतयो नापि गतिसमापन्नकाः, पक्वेष्टकासंस्थानसंस्थितैर्योजनशतसाहस्रिकैस्तापक्षेत्रैस्तान् प्रदेशान् अवभासयन्तीत्यादिक्रियायोगः पक्वेष्टकासंस्थानं चात्र यथा पक्वेष्टका आयामतो दीर्घा भवति विस्तरस्तु स्तोका चतुरस्रा च, तेषामपि मनुष्यक्षेत्राद्बहिर्वर्त्तिनां चन्द्रसूर्याणामातपक्षेत्राणि आयामतोऽनेकयोजनलक्षप्रमाणानि। इयमत्र भावना--मानुषोत्तरपर्वतात् योजनलक्षार्द्धातिक्रमे करणविभावनोक्तकरणानुसारेण प्रथमा चन्द्रसूर्यपङ्क्तिस्ततो योजनलक्षातिक्रमे द्वितीया पङ्क्तिस्तेन प्रथमपङ्क्तिगतचन्द्रसूर्याणामनन्तरोक्तातपक्षेत्रस्यायामविस्तारश्च,परस्परं सूर्यान्तरं लक्षयोजनातिक्रमे तेन लक्षयोजनप्रमाणं, इयं च भावना प्रथमपङ्क्त्यपेक्षया बोद्धव्या,एवमग्रेऽपि भाव्यम्,'शतसाहस्रिकैः'

इत्यादि प्राग्वत्, कथंभूता इत्याह-सुखलेश्याः, एतच्च विशेषणं चन्द्रान् प्रति, तेन नातिशीततेजसः मनुष्यलोक इव शीतकालादौ न एकान्ततः शीतरश्मय इत्यर्थः. मन्दलेश्या एतच्च सूर्यान् प्रति तेन ते नात्युष्णतेजसः मनुष्यलोक इव निदाघसमये न एकान्ततः उष्णरश्मय इत्यर्थः एतदेव व्याचष्टे-मन्दातपलेश्या -मन्दा-नात्युष्णस्वभावा आतपरूपा लेश्या—रश्मिसंघातो येषां ते तथा तथा च चित्रान्तरलेश्याः —चित्रमन्तरं लेश्या च येषां ते तथा. भावार्थश्चास्य चित्रमन्तरं सूर्याणां चन्द्रान्तरितत्वात् चित्रलेश्या चन्द्रमसां शीतरश्मित्वात् सूर्याणामुष्णरश्मित्वात्, कामित्थमवभासयन्तीत्याह-अन्योऽन्यसमवगाढाभिः -परस्परसंश्लिष्टाभिर्लेश्याभिः तथाहि—चन्द्रमसां सूर्याणां च प्रत्येकं लेश्या योजनशतसहस्रप्रमाणविस्ताराश्चन्द्रसूर्याणां च सूचीपङ्क्त्या व्यवस्थितानां परस्परमन्तरं पञ्चाशद्योजनसहस्राणि ततश्चन्द्रप्रभामिश्राः सूर्यप्रभाः सूर्यप्रभामिश्राश्चन्द्रप्रभाः, इत्थं चन्द्रसूर्यप्रभाणां मिश्रीभावः, एषां स्थिरत्वं दृष्टान्तेन द्योतयति—कूटानीव-पर्वतोपरिव्यवस्थितशिखराणीव स्थानस्थिताः -सदैवैकत्र स्थाने स्थिताः. सर्वतः-समन्तात्. तान् प्रदेशान्—स्वस्वप्रत्यासन्नान् अवभासयन्ति उद्द्योतयन्ति तापयन्ति प्रभासयन्तीत्यादि प्राग्वत्। एषामपीन्द्राभावे व्यवस्थां प्रश्नयन्नाह-- 'तेसि णं भंते ! देवाणं' मित्यादि प्राग्वत्। इति कृता पञ्चदशानुयोगद्वारैः सूर्यप्ररूपणा। जं० ७ वक्ष०।

जावइयाओ य णं भंते ! उवासंतराओ उदयंते सूरिए चक्खुप्फासं हव्वमागच्छति अत्थमंते वि य णं सूरिए तावतियाओ चेव उवासंतराओ चक्खुप्फासं हव्वमागच्छति ?, हंता ! गोयमा ! जावइयाओ णं उवासंतराओ उदयंते सूरिए चक्खुप्फासं हव्वमागच्छति अत्थमंते वि सूरिए ०जाव हव्वमागच्छति । जावइया णं भंते ! खित्तं उदयंते सूरिए आतावेणं सव्वओ समंता ओभासेइ उज्जोएइ तवेइ पभासेइ, अत्थमंते वि य णं सूरिए तावइयं चेव खित्तं आयामेणं सव्वओ समंता ओभासेइ उज्जोएइ तवेइ पभासेइ ?, हंता गोयमा ! जावतियण्णं खेत्तं ०जाव पभासेइ । तं भंते ! किं पुट्ठं ओभासेइ अपुट्ठं ओभासेइ ?, ०जाव छद्दिसिं ओभासेति, एवं उज्जोवेइ तवेइ पभासेइ ०जाव नियमा छद्दिसिं । ( सू० ५० X)

'जावइयाओ' इत्यादि, यत्परिमाणात् 'उवासंतराओ' त्ति 'अवकाशान्तरात्' आकाशविशेषादवकाशरूपान्तरालाद्वा यावत्यवकाशान्तरे स्थित इत्यर्थः 'उदयंते' त्ति उदयन्—उद्गच्छन् 'चक्खुप्फासं' ति-चक्षुषो-दृष्टेः स्पर्श इव स्पर्शो न तु स्पर्श एव चक्षुषोऽप्राप्यकारित्वादिति चक्षुःस्पर्शस्तं 'हव्वं' ति शीघ्रं, स च किल सर्वाभ्यन्तरमण्डले सप्तचत्वारिंशता योजनानां सहस्रेषु द्वयोः शतयोस्त्रिषष्टौ (४७२६३) च साधिकायां वर्त्तमान उदये दृश्यते अस्तमयेऽप्येवम्. एवं प्रतिमण्डलं दर्शने विशेषोऽस्ति, स च स्थानान्तरादवसेयः, 'सव्वओ समंता' त्ति सर्वतः सर्वासु दिक्षु समन्तात्—विदिक्षु एकार्थौ वैतौ. 'ओभासेइ' त्यादि 'अवभासयति ईषत्प्रकाशयति यथा स्थूलतरमेव वस्तु दृश्यते उद्द्योतयति—भृशं प्रकाशयति यथा स्थूलमेव दृश्यते तपति—अपनीतशीतं करोति, यथा वा सूक्ष्मं पिपीलिकादि दृश्यते तथा करोति प्रभासयति--अतितापयोगाद्विशेषतोऽपनीतशीतं विधत्ते यथा वा सूक्ष्मतरं वस्तु दृश्यते तथा करोतीति । एतत्क्षेत्रमेवाश्रित्याह—'तं भंते' त्यादि तं भंते त्ति--यत् क्षेत्रमवभासयति यदुद्द्योतयति तपति प्रभासयति च तत्-क्षेत्रं किं भदन्त ! स्पृष्टमवभासयति अस्पृष्टमवभासयति ?, इह यावत्करणादिदं दृश्यम्—'गोयमा ! पुट्ठं ओभासेइ नो अपुट्ठं, तं भंते ! ओगाढं ओभासइ अणोगाढं ओभासइ ?, गोयमा ! ओगाढं ओभासइ नो अणोगाढं, एवं अणंतरोगाढं ओभासइ नो परंपरोगाढं, तं भंते !, किं अणुं ओभासइ बायरं ओभासइ ?. गोयमा ! अणुं पि ओभासइ बायरं पि ओभासइ. तं भंते ! उड्ढं ओभासइ १ तिरियं ओभासइ २. अहे ओभासइ ३ ?, गोयमा ! उड्ढं पि० ३ तं भंते ! आइं ओभासइ १ मज्झे ओभासइ २ अंते ओभासइ ३ ? गोयमा ! आइं ओ० ३. तं भंते !, सविसए ओभासइ अविसए ओभासइ ?, गोयमा ! सविसए ओभासइ नो अविसए, तं भंते ! आणुपुव्विं ओभासइ अणाणुपुव्विं ओभासइ ?, गोयमा ! आणुपुव्विं ओभासइ नो अणाणुपुव्विं. तं भंते ! कइ दिसिं ओभासइ ? गोयमा ! नियमा छद्दिसिं ति। एतेषां च पदानां प्रथमोद्देशकाहारसूत्रवद् व्याख्या दृश्यते । य एव 'ओभासइ' इत्यनेन सह सूत्रप्रपञ्च उक्तः स एव 'उज्जोयइ' त्यादिना पदत्रयेण वाच्य इति दर्शयन्नाह—एवं 'उज्जोवेइ' त्यादिना स्पृष्टं क्षेत्रं प्रभासयतीत्युक्तम् । भ० १ श० ६ उ०।

दिने दिने रविर्मण्डलपरावर्त्तं करोति, तथाधिकमासि कथं करोति ?, मण्डलानि तु अयने अयने नियतान्येव सन्ति, क्षेत्रमानमपि नियतमेवास्ति, तत्र केचन वदन्ति-हीयमानदिनपूर्त्यर्थं मासवृद्धिरस्ति, हीयमानदिनपूर्तिकृते तु वृद्धिमद्दिनास्सन्ति, तथा 'आसाढमासे दुपया' अनेन मानेन श्रावणादिने चतुरङ्गुलवृद्धिर्विलोक्यते, द्वितीयश्रावणादिनेऽपि चत्वारोऽङ्गुला युताः ? यदि चत्वारि तदा किं पादादिषु पुनः पुनः तथैव आयान्ति, येनाङ्गुलमानं तादृगवस्थं, तत्र मण्डलसाङ्कर्यं यथा भवति तथा प्रसाद्यमिति प्रश्ने, अत्रोत्तरम्—सूर्यसम्बन्धित्रिंशन्मासेषु गतेषु चन्द्रसम्बन्धिन एकत्रिंशन्मासा भवन्ति, तत्रैकत्रिंशत्तमो मासोऽभिवर्द्धित उच्यते, तेन सूर्यमण्डलानां नियतत्वेऽपि अधिकमासि पौरुष्यादिप्रमाणे न किञ्चिदनुपपन्नत्वं, विशेषजिज्ञासायां मण्डलप्रकरणं विलोकनीयमिति ॥ २८४ ॥ सेन० ३ उल्ला० ।

सूरमग्ग-सूर्यमार्ग-पुं०। सूर्यमण्डलचारमार्गे, सू०प्र०१०पाहु०। सूर्यस्य मण्डलगत्या परिभ्रमणे, चं० प्र० १० पाहु० ।

सूरमहाभद्द-सूरमहाभद्र-पुं०। सूर्यद्वीपस्य पश्चार्द्धदेवे, जी० ३ प्रति० ४ अधि०।

सूरमहावर-सूरमहावर-पुं०। सूर्यसमुद्रस्य सूर्यवरसमुद्रस्य च पश्चार्द्धाधिपतौ देवे, जी० ३ प्रति० ४ अधि०।

सूरमालिया-सूर्यमालिका-स्त्री०।द्वीनाराचाकृतिमालायाम्, औ०।

सूरमरीइ-सू(र)र्यमरीचि-पुं०। आदित्यकिरणेषु, 'सूरमरीइकवयं विणिम्मुयमाणेहिं' । प्रश्न० ४ आश्र० द्वार । 'सूरमरीइकवय' सूर्य-आदित्यकिरणास्त एव मरीचयः सूर्यमरीचयस्तेषां कवचमिव कवचं परिकरः परितो भावात् तं विनिर्मुञ्चद्भिर्विकिरद्भिः । प्रश्न० ४ आश्र० द्वार ।

सूरल्लेस्स-सूरलेश्य--न०।चतुर्थदेवलोकविमानभेदे,स०५सम० ।

सूरल्लि-सूरल्लि-पुं० ।वनस्पतिविशेषे, जी०३ प्रति० ४ अधि० ।

सूरल्लिमंडवग सूरल्लिमण्डपक-पुं० । सूरल्लिर्वनस्पतिविशेषस्तन्मया मण्डपका सूरल्लिमण्डपका । सूरल्लिवनस्पतिमयेषु मण्डपकेषु, जी० ३ प्रति० ४ अधि० ।

सूरवण्ण-सूर्यवर्ण-न०।चतुर्थदेवलोकविमानभेदे, स० ५ सम० ।

सूरवर-सूर्यवर-पुं०।स्वनामख्याते द्वीपे,समुद्रे च । तत्र सूर्यवरे द्वीपे सूर्यवरभद्रसूर्यवरमहाभद्रौ, सूर्यवरे समुद्रे सूर्यवरसूर्यमहावरौ देवौ । सू० प्र० २० पाहु० । जी० । चं० प्र० ।

सूरवरभद्द-सूरवरभद्र-पुं० । सूर्यवरद्वीपस्य पूर्वार्धाधिपतौ देवे, जी० ३ प्रति० ४ अधि० ।

सूरवरमहाभद्द-सूरवरमहाभद्र-पुं० । सूर्यवरद्वीपस्य परार्धाधिपतौ देवे,जी० ३ प्रति० ४ अधि० ।

सूरवरोभास-सूरवरावभास-पुं० । स्वनामख्याते द्वीपे, समुद्रे च ।तत्र सूर्यवरावभासे द्वीपे सूर्यवरावभासभद्रसूर्यवरावभासमहाभद्रौ देवौ । सूर्यवरावभाससमुद्रे सूर्यवरावभासवरसूर्यवरावभासमहावरौ देवौ । जी० ३ प्रति० ४ अधि० । सूर्यवरावभाससमुद्रवेष्टिते द्वीपे, सू० प्र० २० पाहु० ।

सूरवरोभासभद्द-सूरवरावभासभद्र-पुं० । सूर्यवरावभासद्वीपस्य पूर्वार्धाधिपतौ देवे, जी० ३ प्रति० ४ अधि० ।

सूरवरोभासमहाभद्द-सूरवरावभासमहाभद्र-पुं० । सूर्यवरावभासद्वीपस्य परार्धाधिपतौ देवे, जी० ३ प्रति०४ अधि० ।

सूरवरोभासमहावर-सूरवरावभासमहावर-पुं० । सूर्यवरावभाससमुद्रस्य पश्चार्धाधिपतौ देवे, जी० ३ प्रति० ४ अधि० ।

सूरवरोभासवर-सूरवरावभासवर-पुं० । सूर्यवरावभाससमुद्रस्य पूर्वार्द्धाधिपतौ देवे, सू० प्र० १६ पाहु० ।

सूरवाइ-शूरवादिन्-पुं० । शूरमात्मानं वदितुं शीलमस्येति शूरवादी । शूरंमन्य, सूत्र० १ श्रु० ४ अ० १ उ० ।

सूरविमाण-सूरविमान-न० । सूर्यसत्के विमाने,प्रज्ञा० ४ पद । ( 'विमाण' शब्दे षष्ठभागे वर्णक । ) ( 'अन्तर' शब्दे प्रथमभागे ७४ पृष्ठे चान्तरमुक्तम् । )

सूरसंवच्छर-सूरसंवत्सर-पुं० । आदित्यसंवत्सरे, सू० प्र० १० पाहु० ।

ता एएसि णं पंचण्हं संवच्छराणं चउत्थस्स आइच्चसंवच्छरस्स आइच्चे मासे तीसतिमुहुत्तेणं अहोरत्तेणं गणिज्जमाणे केवइए राइंदियग्गेणं आहितेति वदेज्जा ?, ता तीसं राइंदियाइं अवड्ढभागं च राइंदियस्स राइंदियग्गेणं आहितेति वदेज्जा, ता से णं केवतिए मुहुत्तग्गेणं आहितेति वदेज्जा ?, ता णव पण्णरस मुहुत्तसए मुहुत्तग्गेणं आहितेति वदेज्जा, ता एस णं अद्धा दुवालसखुत्तकडा आदिच्चे संवच्छरे, ता से णं केवतिए राइंदियग्गेणं आहितेति वदेज्जा ?, ता तिन्नि छावट्ठे राइंदियसए राइंदियग्गेणं आहिय त्ति वएज्जा, ता से णं केवतिए मुहुत्तग्गेणं आहिय त्ति वएज्जा ?, ता दस मुहुत्तस्स सहस्साइं णव असीते मुहुत्तसते मुहुत्तग्गेणं आहितेति वदेज्जा । (सू० ७२ +)

'ता एएसि णं' मित्यादि चतुर्थसूर्यसंवत्सरविषयं प्रश्नसूत्रं, तच्च सुगमम् । भगवानाह— ता तीसं मित्यादि ता इति पूर्ववत्, त्रिंशत् रात्रिन्दिवानि एकस्य रात्रिन्दिवस्य एकमपार्द्धभागम्, एकमर्द्धमित्यर्थः एतावत्प्रमाणं सूर्यमासो रात्रिन्दिवाग्रेण आख्यात इति वदेत्, तथाहि—सूर्यमासा युगे षष्टिस्तेनो युगसत्कानामहोरात्राणां त्रिंशदधिकाष्टादश शतसङ्ख्याना षष्ट्या भागो ह्रियते, लब्धाः सार्द्धास्त्रिंशदहोरात्रा, 'ता से णं' मित्यादि, मुहूर्त्तविषयं प्रश्नसूत्रं सुगमम्, भगवानाह-- नवपण्णरस' इत्यादि नव मुहूर्त्तशतानि पञ्चदशाधिकानि मुहूर्त्तपरिमाणेनाख्यात इति वदेत्, तथाहि--सूर्यमासपरिमाणं त्रिंशत् रात्रिन्दिवानि एकस्य च रात्रिन्दिवस्यार्द्धं तच्च त्रिंशता गुण्यते जातानि नव शतानि रात्रिन्दिवार्द्धे च पञ्चदश मुहूर्त्ता इति, 'ता एएसि णं'मित्यादि, प्राग्वद् भावनीयम् ।सू०प्र०१०पाहु०।

सूरसिंग-सूरशृङ्ग -न० । चतुर्थदेवलोकस्य स्वनामख्याते विमाने, स०५ सम० ।

सूरसिद्ध-सूरसिद्ध-न० । चतुर्थदेवलोकस्य स्वनामख्याते विमाने, स० ५ सम० ।

सूरसिरी-सूर्यश्री-स्त्री० । जम्बूद्वीपे सप्तमस्य चक्रवर्त्तिनो भार्यायाम्, स० ।

सूरसेण-शूरसेन-पुं० । मथुराप्रतिबद्धेषु जनपदभेदेषु स्था० १० ठा० ३ उ० । प्रज्ञा० । सूत्र० । प्रव० । उदयसेनस्य राज्ञः स्वनामख्याते पुत्रे, आचा० १ श्रु० ४ अ० १ उ० । एरवतवर्षे चतुर्विंशतितीर्थकरेषु चतुर्दशे तीर्थकरे, स० । स्वनामख्याते शत्रुञ्जयस्योद्धारके राजनि, ती० १ कल्प ।

सूरादिय-सूरादिक-त्रि० । सूर -सूर्य आदिर्यस्य स सूरादिक । सूरकारणे, सूरादिया अहोरत्ता ' सूरादिका -सूरकारणा, तथाहि-सूर्योदयमवधिं कृत्वा अहोरात्रारम्भक समयो गण्यते नान्यथा एवमाद्यवलिकादयोऽपि सूरादिका भावनीया । चं० प्र० २० पाहु० । सू० प्र० ।

सूराभ-सूर्याभ--न० । पञ्चमदेवलोके विमानविशेषे, स० ८ सम० ।

सूरावत्त-सूर्यावर्त्त--न० । स्वनामख्याते चतुर्थदेवलोकस्थे विमाने स० ५ सम० ।

१- अत्र सूत्राणोऽपि सेऽ१ ।

सूगासूरीया-शूगाशूरीया-स्त्री०। भोजनेऽयं शूगोऽयञ्च शूगे भुङ्क्ता यंयदृष्टमित्येवंभूतायां परिवेषणक्रियायाम्, आ० १ श्रु० ४ अ०।

सूरि-सूरिन्-पुं०। सदाचार्ये, ग० १ अधि०। "अनुयोगभृता पादान्, वन्दे श्रीगौतमादिसूरीणाम्। निष्कारणबन्धूनां,विशेषतो धर्मदातॄणाम्॥१॥" अनु०। "तीआणागयकाले,केई होहिंति गोअमा सूरी। जेसिं नामग्गहणे,नियमेण होइ पच्छित्त ॥१॥" महा० ३ उल्ला०।

गुरुगुणानाह—

सम्मत्तनाणचरणा, पत्तेयं अट्ठ अट्ठ भेअल्ला।
बारसभेओ य तवो, सूरिगुणा हुंति छत्तीसं ॥५५२॥

सम्यक्त्वस्य दर्शनाचारस्य नि शङ्कितादय . ज्ञानस्य ज्ञानाचारस्य कालविनयादय , चरणस्य चारित्राचारस्य ईर्यासमित्यादय' प्रत्येकमष्टावष्टौ भेदा मिलिताश्चतुर्विंशति', तपसश्च बाह्याभ्यन्तरभेदभिन्नस्य प्रत्येकं षड्विधत्वेन अनशनादयो द्वादश भेदा' , सर्वमीलने च षट्त्रिंशद्भवन्ति।

अथ प्रकारान्तरेणापि गुरो षट्त्रिंशद्गुणानाह—

आयाराई अट्ठ उ, तहेव य दसविहो य ठियकप्पो।
बारस तव छावस्सय, सूरिगुणा हुंति छत्तीसं ॥५५३॥

आचारा श्रुतादय' प्राग्व्याचर्णितस्वरूपा अविवक्षितस्वस्वभेदा अष्टौ गणिसंपद. , तथा "आचेलुक्कु १ द्देसिय २-सिज्जायर ३ रायपिंड ४ किइकम्मे ५ । वय ६ जेट्ठ ७ पडिक्कमणे ८, मासं ९ पज्जोसवणकप्पो १० ॥ १ ॥" इत्येवं वक्ष्यमाणस्वरूपो दशविध स्थितकल्प , तथा द्वादशविधं तपः प्रागुक्तस्वरूप तथा षडावश्यकानि सामायिकचतुर्विंशतिस्तववन्दनकप्रतिक्रमणकायोत्सर्गप्रत्याख्यानलक्षणानि,एतानि सर्वाण्यपि मिलितानि षट्त्रिंशत्सूरिगुणा भवन्ति, इह चैवमन्या अपि षट्त्रिंशिका संभवन्ति, तास्तु विस्तरभयान्नाभिधीयन्ते,केवलं किंचित्सोपयोगत्वात् सुप्रतीतत्वाच्च—

'देसकुलजाइरूवे, संघयणं धिईजुओ अणासंसि।
अविकत्थणो अमायी, थिरपरिवाडी गहियवक्को ॥१॥
जियपरिसो जियनिद्दो, मज्झत्थो देसकालभावन्नू।
आसन्नलद्धपइभो, नाणाविहदेसभासन्नू ॥ २ ॥
पंचविहे आयारे, जुत्तो सुत्तत्थतदुभयविहिन्नू।
आहरण हेउ कारण-नयनिउणो गाहणाकुसलो ॥ ३ ॥
ससमयपरसमयविऊ , गंभीरो दित्तिमं सिवो सोमो।
गुणसयकलिओ एसो. पवयणसारं परिकहेइ ॥४॥"

इति गाथाचतुष्टयभणिता सूरिगुणा षट्त्रिंशद् दृश्यन्ते-तत्र पुनशब्द. प्रत्येकमभिसंबध्यते देशयुतकुलयुत इत्यादि-तत्र यो मध्यदेशे जातो यद्वार्धषड्विंशतिषु जनपदेषु सदेशयुत , स ह्यार्यदेशभणितं जानाति, तत सुखेन तस्य समीपे शिष्या सर्वेऽप्यधीयन्ते इति तदुपादानम् १. कुलं पैतृकं , तथा च लोकव्यवहार —इक्ष्वाकुकुलजोऽयमित्यादि , तत युत. प्रतिपन्नार्थनिर्वाहको भवति २. जातिर्मातृकी, तया युतो विनयादिगुणवान् भवति३.रूपयुतो लोकाना गुणविषयबहुमानभाग् जायते,'यत्राकृतिस्तत्र गुणा वसन्ती' ति प्रवादात् , कुरूपस्य सर्वोऽप्यवज्ञास्पदं ४, संहननेन विशिष्टशारीरसामर्थ्यरूपेण युतो व्याख्यायां न श्राम्यति ५, धृतिर्विशिष्टमानसावष्टम्भलक्षणा, तया युतो नातिगहनेष्वप्यर्थेषु भ्रममुपयाति ६, अनाशंसी—श्रोतृभ्यो वस्त्राद्यनाकाङ्क्षी ७, अविकत्थनो-नातिबहुभाषी, यथा स्वल्पेऽपि केनचिदपराद्धे पुनस्तदुत्कीर्तनं विकत्थनं तद्रहित. ८, अमायी शाठ्यरहितः ९, स्थिरा अतिशयेन निरन्तराभ्यासत. स्थैर्यमापन्ना, अनुप्रयोगपरिपाट्यो यस्य स स्थिरपरिपाटि , तस्य हि सूत्रमर्थो वा न मनागपि गलति १०, गृहीतवाक्य-उपादेयवचन., तस्य हि स्वल्पमपि वचनं महार्थमिव प्रतिभाति ११, जितपर्षत्, न महत्यामपि पर्षदि क्षोभमुपयाति १२, जितनिद्रो-ऽल्पनिद्र' स हि रात्रौ सूत्रमर्थं वा परिभावयन् न निद्रया बाध्यते १३, मध्यस्थ -सर्वेषु शिष्येषु समचित्त. १४ देशं कालं च भावं च जानातीति देशकालभावज्ञ , स हि देशं कालं भावं च लोकाना ज्ञात्वा सुखेन विहरति, शिष्याणां वा अभिप्रायान् ज्ञात्वा तान् सुखेनानुवर्तयति १५, १६ १७, आसन्ना तत्क्षणादेव लब्धा कर्मक्षयोपशमेनाविर्भूता प्रतिभा परतीर्थिकादीनामुत्तरप्रदानशक्तिर्यस्य स आसन्नलब्धप्रतिभः १८, नानाविधाना देशानां भाषां जानातीति नानाविधदेशभाषाज्ञ., स हि नानादेशीयान् शिष्यान् सुखेन शास्त्राणि ग्राहयति, तत्र देशजांश्च जनान् तत्तद्भाषया धर्ममार्गेऽवतारयति १९, पञ्चविध आचारो ज्ञानाचारादिरूपस्तस्मिन् युक्त उद्युक्त , स्वयमाचारेष्वस्थितस्यान्यानाचारेषु प्रवर्तयितुमशक्यत्वात् २४, सूत्रार्थग्रहणेन चतुर्भङ्गी सूचिता, एकस्य सूत्रं नार्थ', द्वितीयस्यार्थो न सूत्र. तृतीयस्य सूत्रमप्यर्थोऽपि चतुर्थस्य न सूत्रं नाप्यर्थः, तत्र तृतीयभङ्गग्रहणार्थं तदुभयग्रहणं, तत सूत्रार्थतदुभयविधीन् जानातीति सूत्रार्थतदुभयविधिज्ञ २५, आहरणं दृष्टान्त हेतुर्द्विविध कारको, ज्ञापकश्च। तत्र कारको-यथा घटस्य कर्ता कुम्भकार.. ज्ञापको-यथा तमसि घटादीनामभिव्यञ्जक प्रदीप , उपनय —उपसंहारो दृष्टान्तदृष्टस्यार्थस्य प्रकृते योजनमिति भाव.-'कारण' त्ति पाठे तु कारण-निमित्त, नया नैगमादय., एतेषु निपुण. आहरणहेतूपनयनयनिपुण स हि श्रोतारमपेक्ष्य तत्प्रतिपत्त्यनुरोधत क्वचिद् दृष्टान्तोपन्यासम् २६, क्वचिद्धेतूपन्यासं करोति, २७, उपसंहारनिपुणतया सम्यगधिकृतमर्थमुपसंहरति २८, नयनिपुणतया स सम्यगधिकृतनयवक्तव्यतावसरे सम्यक् सप्रपञ्चं विकल्पेन नयानभिधत्ते २९, ग्राहणाकुशल -प्रतिपादनशक्तियुक्त ३०, स्वसमयम् ३१ परसमयम् ३२ वेत्तीति स्वसमयपरसमयवित् , स हि परेणाक्षिप्त' सुखेन स्वपक्षं परपक्षं च निर्वाहयति। गम्भीर अतुच्छस्वभाव ३३, दीप्तिमान्-परवादिनामनुद्धर्षणीय ३४ शिव'-अकोपनो, यद्वा-यत्र तत्र वा विहरन् कल्याणकर. ३५, सोम.-शान्तदृष्टि ३६ इति षट्त्रिंशद्गुणोपेतो गुरुर्विज्ञेय , उपलक्षणत्वादामीषां गुणानामपरैरपि गुणैरौदार्यस्थैर्यादिभि' शशधरकरनिकरकमनीयैरलङ्कृतः प्रवचनोपदेशको गुरुर्भवति, तथा चाह-"गुणसयकलिओ जुत्तो, पवयणसारं परिकहेउ' त्ति॥ यद्वा-गुणा मूलगुणा. उत्तरगुणाश्च, तेषां शतानि तै कलितो युक्त समीचीनप्रवचनस्य-द्वादशाङ्गस्य सारमर्थं कथयितुम् , यदुक्तम्-"गुणसुट्ठियस्स वयणं, घयपरिसित्तो

य पावओ भणइ । गुणहीणस्स न सोहइ, नेहविहूणो ज-ह पईवो ॥ १॥" इति गाथाचतुष्टयार्थः ॥६४॥ प्रव० ६४ द्वार।

सूरिअ ( य )-सूर्य-पुं० । "स्याद्-भव्य-चैत्य-चौर्यसमेषु यात्"॥८।२।१०७॥ इति यात्पूर्व इकारः। सूरिओ। सूर्यः। प्रा०। आदित्ये,अनु०। उत्त०। स्था०। ( 'सूर' शब्देऽस्मि-न्नेव भागे वक्तव्यतोक्ता। )

तेणं कालेणं तेणं समएणं भगवं गोयमे अचिरुग्गयं बाल-सूरियं जासुमणाकुसुमपुंजप्पकासं लोहितगं पासइ पासित्ता जायसड्ढे० जाव समुप्पन्नकोउहल्ले जेणेव समणे भगवं महा-वीरे तेणेव उवागच्छइ०जाव नमंसित्ता०जाव एवं वयासी-

'तेण' मित्यादि, 'अचिरोद्गतम्' उद्गतमात्रमत एव बालसूर्यं 'जासुमणाकुसुमप्पगासं' ति-जासुमणा नाम वृक्षस्तत्कुसुमप्रकाशमत एव लोहितकमिति।

किमिदं भंते ! सूरिए, किमिदं भंते ! सूरियस्स अट्ठे। गोयमा ! सुभे सूरिए, सुभे सूरियस्स अट्ठे। किमिदं भंते ! सूरिए किमिदं भंते ! सूरियस्स पभा एवं चेव एवं छाया एवं लेस्सा। ( सू० ५३६ )

'किमिद' ति—किंस्वरूपमिदं सूर्यवस्तु तथा किमिदं भद-न्त ! सूर्यस्य सूर्यशब्दस्याऽर्थोऽन्वर्थवस्तु 'सुभे सूरिए, त्ति—शुभस्वरूपं सूर्यवस्तु सूर्यविमानपृथिवीकायिकानामा तपाभिधानपुण्यप्रकृत्युदयवर्त्तित्वात् लोकेऽपि, प्रशस्ततया प्रतीतत्वाज्ज्योतिष्केन्द्रत्वाच्च। तथा शुभः सूर्यशब्दार्थः। तथाहि-सूरेभ्यः क्षमातपोदानसंग्रामादिवीरेभ्यो हितः सूरेषु वा साधुः सूर्य 'पभ' त्ति-दीप्ति -छाया शोभा प्रतिबिम्ब वा लेश्या—वर्ण। भ० १४ श० ९ उ०। सूत्र०। चं० प्र०। आ०। सूत्र०। स्वनामख्याते द्वीपे, समुद्रे च। चं० प्र० २० पाहु०।

शूर्य-पुं०। शूरेभ्यः क्षमानपोदानसंग्रामादिवीरेभ्यो हितः शूरेषु वा साधु शूर्यः। क्षमातपोदानसंग्रामादिशूरेषु कुशले, भ० १४ श० ६ उ०।

सूरियकंत-सूर्यकान्त-पुं०। श्वेताम्बिकानगरीराजस्य प्रदेशि-न पुत्रे, रा०।

सूरियकंता-सूर्यकान्ता-स्त्री०। श्वेताम्बिकानगरीराजस्य प्रदे-शिनोऽग्रमहिष्याम्, रा०। स्वनामख्यातायां सूर्यदेवाग्रमहि-ष्याम्, भ० ११ श० ६ उ०।

सूरियपीठ-सूर्यपीठ-न०। सूर्यदेवतापूजनस्थाने,तत्र पूर्वभृष-भदेवेन भगवता यत्र यत्र भिक्षा लब्धा तत्र तत्र श्रेयांसेन पीठानि कृतानि, तानि क्रमात्सौरैरायत्तीकृतानि सौरपीठ-त्वेन पूज्यन्ते स्म। आ० क०।

सूरियमंडलब्भतर-सूर्यमण्डलाभ्यन्तर-न०। सूर्यचारकथने, ज० ७ वक्ष०।

सूरियलेस्सा-सूर्यलेश्या-स्त्री०। सूर्यप्रभायाम्, चं० प्र०।

'कस्मिन् लेश्या प्रतिहतेति' ततस्तद्विषयं प्रश्नसूत्रमाह—

ता कसिं णं सूरियस्सं लेस्सा पडिहतेति वदेज्जा ?, तत्थ खलु इमाओ वीसं पडिवत्तीओ पण्णत्ताओ, तत्थेगे एवमाहंसु ता मंदरंसि णं पव्वतंसि सूरियस्स लेस्सा पडि-हता आहिता ति वदेज्जा, एगे एवमाहंसु १। एगे पुण एव-माहंसु-ता मेरुंसि णं पव्वतंसि सूरियस्स लेस्सा पडिहता आहिता ति वदेज्जा, एगे एवामाहंसु २। एवं एतेणं अभि-लावेणं भाणियव्वं,ता मणोरमंसि णं पव्वयंसि,ता सुदंस-णंसि णं पव्वयंमि,ता सयंपभंसि णं पव्वतंमि ता गिरिरा-यंसि णं पव्वतंसि ता रतणुच्चयंसि णं पव्वतंसि ता सिलु-च्चयंसि णं पव्वयंसि ता लोअमज्झंसि णं पव्वतंसि ता लोय-णाभिसि णं पव्वतंमि ता अच्छंमि णं प-व्वतंसि ता सूरियावत्तंसि णं पव्वतंमि ता सूरियावर-णंसि णं मव्वतंसि ता उत्तमंसि णं पव्वयंमि ता दिसादिस्सि णं पव्वतंसि ता अवतंसंसि णं पव्वतंसि ता धरणिखीलंसि णं पव्वयंसि ता धरणिसिंगंमि णं पव्वयंसि ता पव्वतिंदंमि णं पव्वतंसि ता पव्वयरायंसि णं पव्वयंसि सूरियस्स लेसा पडिहता आहिता ति वदेज्जा, एगे एवमाहंसु। वयं पुण एवं वदामो-ता मंदरे वि पवुच्चति ०जाव पव्वयराया, वुच्चति,ता जे णं पुग्गला सूरियस्स लेसं फुसंति ते णं पुग्गला सूरियस्स लेसं पडिहणंति, अदि-ट्ठा वि णं पोग्गला सूरियस्स लेसं पडिहणति, चरिमले-संतरगता वि णं पोग्गला सूरियस्स लेस्सं पडिहणंति। ( सू० २६ )

'ता कसि ण' मित्यादि, ता इति पूर्ववत्, अभ्यन्तरम-ण्डले सूर्यस्य लेश्या प्रसरतीति कस्मिन् स्थाने लश्या प्रति-हता आख्याता इति वदेत् १, अयमिह भावार्थ—इहाभ्य-न्तरमभ्यन्तर प्रविशन्ती सूर्यस्य लेश्या कस्मिन् स्थाने प्रतिहते-त्यभ्युपगन्तव्य, यतः सर्वाभ्यन्तरे सर्वथा च मण्डले ज-म्बूद्वीपगतं तापक्षेत्रमायामतः पञ्चचत्वारिंशद्योजनसहस्रप्र माणमेवाख्यातमेतच्च सर्वाभ्यन्तरमण्डलगते सूर्ये लेश्याप्र-तिहतिमन्तरेण नोपपद्यते,अन्यथा निष्क्रामति सूर्ये तत्प्रतिय क्ष्य तापक्षेत्रस्यापि निष्क्रमणभावात् सर्वबाह्ये मण्डले चारं चरति सूर्ये हीनमायामतो भवेत्, न च हीनमुक्तमतोऽवसी-यते कापि लेश्या प्रतिघातमुपयाति। ततस्तद्विषयमाये प्रश्न इति, एवं प्रश्ने कृते सति भगवानेतद्विषये यावत्य प्रतिप-त्तयस्तावतीरुपदर्शयति—'तत्थे' त्यादि, तत्र—सूर्यलेश्या-प्रतिहतिविषये खल्विमा विंशति प्रतिपत्तय प्रज्ञप्ता, त-द्यथा—तत्र तेषां विंशतेः परतीर्थिकानां मध्य एके एवमाहु-र्मन्दरे पर्वते सूर्यस्य लेश्या प्रतिहता आख्याता इति वदेत्, यदेदिति तेषां मूलभूतं स्वशिष्यं प्रत्युपदेशः अत्रैवोपसंहारः 'एगे एवमाहंसु' १। एके पुनरेवमाहु -मेरौ पर्वते सूर्यलेश्या प्रतिहता आख्याता इति वदेत्, एके एवमाहु २। 'एव' मित्यादि, एवम्—उक्तेन प्रकारेण एतेन वक्ष्यमाणेन प्रतिपत्ति-विशेषभूतेनालापकेन शेषप्रतिपत्तिजातं नेतव्यं, तानेव प्रति-पत्तिविशेषभूतानालापकान् दर्शयति—'ता मणोरमंसि णं पव्वतसि' इत्यादि प्रत्यालापकं च पूर्वोक्तानि पदानि योजनी-यानि, तत्र एवं सूत्रपाठः-'एगे पुण एवमाहंसु—ता मंदा-

१-अत्र दत्ताहितं चिन्त्यम्।

-रयंसि णं पव्वयंसि सूरियलेसा पडिहया आहिय त्ति वएज्जा एगे एवमाहंसु ३, एगे पुण एवमाहंसु ता सुदंसणंसि णं पव्वयंसि सूरियलेसा पडिहया आहिय त्ति वएज्जा एगे एवमाहंसु ४ एगे पुण एवमाहंसु ता सयपहंसि णं पव्वयंसि सूरियलेसा पडिहया आहिय त्ति वएज्जा एगे एवमाहंसु ५. एगे पुण एवमाहंसु ता गिरिरायंसि णं पव्वयंसि सूरियलेसा पडिहया आहिय त्ति वएज्जा एगे एवमाहंसु ६ एगे पुण एवमाहंसु ता रयणुच्चयंसि णं पव्वयंसि सूरियलेसा पडिहया आहिय त्ति वएज्जा एगे एवमाहंसु ७ एगे पुण एवमाहंसु ता सिलुच्चयंसि णं पव्वयंसि सूरियस्स लेसा पडिहया आहिय त्ति वएज्जा एगे एवमाहंसु ८ एगे पुण एवमाहंसु ता लोयमज्झंसि णं पव्वयंसि सूरियस्स लेसा पडिहया आहिय त्ति वएज्जा, एगे एवमाहंसु ९, एगे पुण एवमाहंसु ता लोगनाभिंसि णं पव्वयंसि सूरियस्स लेसा पडिहया आहिय त्ति वएज्जा एगे एवमाहंसु १०, एगे पुण एवमाहंसु ता अच्छंसि णं पव्वयंसि सूरियस्स लेसा पडिहया आहिय त्ति वएज्जा एगे एवमाहंसु ११, एगे पुण एवमाहंसु ता सूरियावत्तंसि णं पव्वयंसि सूरियस्स लेसा पडिहया आहिय त्ति वएज्जा एगे एवमाहंसु १२, एगे पुण एवमाहंसु ता सूरियावरणंसि पव्वयंसि सूरियस्स लेसा पडिहया आहिय त्ति वएज्जा, एगे एवमाहंसु १३, एगे पुण एवमाहंसु ता उत्तमंसि णं पव्वयंसि सूरियस्स लेसा पडिहया आहिय त्ति वएज्जा, एगे एवमाहंसु १४, एगे पुण एवमाहंसु ता दिसादिसिंसि णं पव्वयंसि सूरियस्स लेसा पडिहया आहिय त्ति वएज्जा, एगे एवमाहंसु १५, एगे पुण एवमाहंसु ता अवतंसंसि णं पव्वयंसि सूरियस्स लेसा पडिहया आहिय त्ति वएज्जा एगे एवमाहंसु १६, एगे पुण एवमाहंसु ता धरणिखीलंसि णं पव्वयंसि सूरियस्स लेसा पडिहया आहिय त्ति वएज्जा एगे एवमाहंसु १७, एगे पुण एवमाहंसु ता धरणिसिंगंसि णं पव्वयंसि सूरियस्स लेसा पडिहया आहिय त्ति वएज्जा एगे एवमाहंसु १८, एगे पुण एवमाहंसु ता पव्वइंदंसि णं पव्वयंसि सूरियस्स लेसा पडिहया आहिय त्ति वएज्जा एगे एवमाहंसु १९ एगे पुण एवमाहंसु ता पव्वयरायंसि णं पव्वयंसि सूरियस्स लेसा पडिहया आहिय त्ति वएज्जा एगे एवमाहंसु २०' तदेव परतीर्थिकप्रतिपत्तिरूपदर्श्य सम्प्रति स्वमतमुपदर्शयति—' वयं पुण ' इत्यादि, वयं पुनरुत्पन्नकेवलज्ञानिन एवं वदामः यदुत 'ता' इति पूर्ववत् यस्मिन् पर्वतेऽभ्यन्तरं प्रसरन्ती सूर्यस्य लेश्या प्रतिघातमुपगच्छति स मन्दरोऽभ्युच्यते यावत्पर्वतराजोऽभ्युच्यते, सर्वेषामप्येतेषां शब्दानामेकार्थिकत्वात् , तथा मन्दरो नाम देवस्तत्र परिस्थितिनिबन्धनको महर्द्धिकः परिवसति तेन तद्योगान्मन्दर इत्यभिधीयते १, सकलतिर्यग्लोकमध्यभागस्य मर्यादाकारित्वान्मेरुः २, सतामपि देवानामपि अतिसुरूपतया रमयतीति मनोरमः ३. शोभनं जाम्बूनदमयतया वज्ररत्नबहुलतया च मनोनिर्वृतिकरं दर्शनं यस्यासौ सुदर्शनः, ४. स्वयमादित्यादिनिरपेक्षा रत्नबहुलतया प्रभा—प्रकाशो यस्य स स्वयंप्रभः ५ तथा सर्वेषामपि गिरीणामुच्चत्वेन तीर्थकरजन्माभिषेकाश्रयतया च राजा गिरिराजः ६ तथा रत्नानां नानाविधानाम्-प्राचुर्येण चयः—उच्चयो यत्र स रत्नोच्चयः ७, तथा शिलानां—पाण्डुकम्बलशिलाप्रभृतीनाम् , उत्-ऊर्ध्वं शिरस उपरि चयः—सम्भवो यत्र स शिलोच्चयः ८ तथा लोकस्य तिर्यग्लोकस्य समस्तस्यापि मध्ये वर्त्तते इति लोकमध्यः ९, तथा लोकस्य-तिर्यग्लोकस्य स्थालप्रख्यस्य नाभिरिव-स्थालमध्यगतसमुन्नतवृत्तचन्द्रक इव लोकनाभिः १०. तथा अच्छः-स्वच्छः-सुनिर्मलजाम्बूनदरत्नबहुलत्वात् ११, तथा सूर्य उपलक्षणमेतत् चन्द्रग्रहनक्षत्रतारकाश्च प्रदक्षिणामावर्त्तन्ते यस्य स सूर्यावर्त्तः १२. तथा सूर्यैरुपलक्षणमेतत् चन्द्रग्रहनक्षत्रतारकाभिश्च समन्ततः परिभ्रमणशीलैरावियते स्म वेष्ट्यते स्मेति सूर्यावरणः ' कृद्बहुल ' मिति वचनात्कर्मण्यनट्प्रत्ययः १३ तथा गिरीणामुत्तम इति उत्तमः १४ दिशामादिः—प्रभवो दिगादिः , तथाहि—रुचकात् दिशां विदिशां च प्रभवो रुचकश्चाष्टप्रदेशात्मको मेरुमध्यवर्त्ती ततो मेरुरपि दिगादिरित्युच्यते १५, तथा गिरीणामवतंसक इवावतंसकः १६ अमीषां च षोडशानां नाम्नां सङ्ग्राहिके इमे जम्बूद्वीपप्रज्ञप्तिप्रसिद्धे गाथे—"मंदर मेरु मणोरम सुदंसण सयंपभ य गिरिराया। रयणोच्चए सिलोच्चय-मज्झे लोगस्स णाभी य ॥१॥ अच्छे य सूरियावत्ते सूरियावरणे इ य। उत्तमे य दिसाई य, वडिंसे इ य सोलसे ॥२॥" तथा धरण्या:—पृथिव्याः कीलक इव धरणिकीलकः , तथा धरण्याः शृङ्गमिव धरणिशृङ्गः . पर्वतानामिन्द्रः पर्वतेन्द्रः , पर्वतानां राजा पर्वतराजः तदत्र सर्वेऽपि मन्दरादयः शब्दाः परमार्थत एकार्थिकास्ततो भिन्नाभिप्रायतया प्रवृत्ताः प्राक्तनाः प्रतिपत्तयः सर्वा अपि मिथ्यारूपा अवगन्तव्याः । याऽपि च लेश्याप्रतिहतिः सा मन्दरेऽप्यस्ति अन्यत्रापि च, तथा चाह—' ता जे णं ' इत्यादि ता इति पूर्ववत् ये णमिति वाक्यालङ्कारे पुद्गला मेरुतटभित्तिसंस्थिताः सूर्यस्य लेश्यां स्पृशन्ति ते पुद्गलाः सूर्यस्य लेश्यां प्रतिघ्नन्ति, अभ्यन्तरं प्रविशन्त्याः सूर्यलेश्यायास्तैः प्रतिस्खलितत्वात् , येऽपि पुद्गला मेरुतटभित्तिसंस्थिता अपि दृश्यमानपुद्गलान्तर्गताः सूक्ष्मत्वान्न चक्षुःस्पर्शमुपयान्ति तेऽप्यदृष्टा अपि सूर्यलेश्यां प्रतिघ्नन्ति तैरप्यभ्यन्तरं प्रविशन्त्याः सूर्यलेश्यायाः स्वशक्त्यनुरूपं प्रतिस्खल्यमानत्वात् , येऽपि मेरोरन्यत्रापि चरमलेश्यान्तरगताः—चरमलेश्याविशेषसंस्पर्शिनः पुद्गलास्तेऽपि सूर्यलेश्यां प्रतिघ्नन्ति, तैरपि चरमलेश्यासंस्पर्शितया चरमलेश्यायाः प्रतिहन्यमानत्वात् । सू० प्र० ५ पाहु०।

सूरियसुद्धलेस्स--सूर्यशुद्धलेश्य--त्रि० । सूर्यसदृशे तेजसि, सूत्र० १ श्रु० ६ अ० ।

सूरियाभ - सूर्याभ—न० । स्वनामख्याते विमाने, रा० । स्वनामख्याते देवे च । पुं० । रा० ।

'नयरीए वद्धव उग्गा भोगा ' इत्याद्यौपपातिकग्रन्थोक्तं सर्वमवसातव्यं यावत् समग्रापि राजप्रभृतिका परिषत्पर्युपासीना अवतिष्ठते ।

ते णं काले णं ते णं समए णं सूरियाभे देवे सोहम्मे कप्पे सूरियाभे विमाणे सभाए सुहम्माए सूरियाभंसि सिंहासणंसि चउहिं सामाणियसाहस्सीहिं चउहिं अग्गमहि-

सीहिं सपरिवाराहिं तिहिं परिसाहिं सत्तहिं अणियाहिं सत्तहिं अणियाहिवईहिं सोलसहिं आयरक्खदेवसाहस्सीहिं अन्नेहिं य बहूहिं सूरियाभविमाणवासीहिं वेमाणिएहिं देवेहिं देवीहि य सर्द्धि संपरिवुडे महयाऽऽहयनट्टगीयवाइयतंतीतलतालतुडियघणमुइंगपडुप्पवाइयरवेणं दिव्वाइं भोगभोगाइं भुंजमाणे विहरति, इमं च णं केवलकप्पं जंबुद्दीवं दीवं विउलेणं ओहिणा आभोएमाणे २ पासति ।

'ते णं काले णं' मित्यादि,'ते' इति प्राकृतशैलीवशात्तस्मिन्निति द्रष्टव्यं,यस्मिन्काले भगवान् वर्द्धमानस्वामी साक्षाद्विहरति तस्मिन्काले 'ते णं समए णं' इति तस्मिन् समये यस्मिन्नवसरे भगवानाम्रशालवने चैत्ये देशनां कृतोपरतस्तस्मिन्नवसरे इति भावः,सूर्याभो नाम्ना देवः,नामशब्दो ह्यव्ययरूपोऽप्यस्ति,ततो विभक्तिलोपः, ततो सौधर्मनाम्नि कल्पे यत्सूर्याभनामकं विमानं तस्मिन् या सभा सुधर्माभिधा तस्यां यत्सूर्याभाभिधानं सिंहासनं तत्रोपविष्ट इति गम्यते, 'चउहिं सामाणियसाहस्सीहिं' इति समाने द्युतिविभवादौ भवाः सामानिकाः,अध्यात्मादित्वादिकण्, विमानाधिपतिसूर्याभदेवसदृशद्युतिविभवादिका देवा इत्यर्थः, ते च मातापितृगुरूपाध्यायमहत्तरवत्सूर्याभदेवस्य पूजनीयाः,केवलविमानाधिपतित्वहीना इति सूर्याभ देवं स्वामिनं प्रतिपन्नास्तेषां सहस्राणि सामानिकसहस्राणि तैश्चतुर्भिः, प्राकृतत्वाच्च सूत्रे सकारस्य दीर्घत्वं, क्लीवत्वं च । 'चउहिं अग्गमहिसीहिं' इह कृताभिषेका देवी महिषीत्युच्यते,सा च स्वपरिवारभूतानां सर्वासामपि देवीनामग्रे इत्यग्रा, अग्राश्च ता महिष्यश्च अग्रमहिष्यस्ताभिश्चतसृभिः, कथम्भूताभिरित्याह—'सपरिवाराभि' परिवारः सह यासां ताः सपरिवारास्ताभिः, परिवारश्चैकैकस्या देव्याः सहस्रं देवीनां,तथा तिसृभिः पर्षद्भिः, तिस्रो हि विमानाधिपतेः सर्वस्यापि पर्षदः, तद्यथा— अभ्यन्तरा मध्या बाह्या च,तत्र या यस्य मण्डलीकस्थानीया परममित्रसहतिसदृशी सा अभ्यन्तरपर्षत्, तया सहापर्यालोचितं स्वल्पमपि प्रयोजनं न विदधाति, अभ्यन्तरपर्षदा सह पर्यालोचितं यस्यै निवेद्यते यथेदमस्माकं पर्यालोचितं सम्मतमागतं युष्माकमपीदं सम्मतं किंवा, नेति सा मध्यमा, यस्याः पुनरभ्यन्तरपर्षदा सह पर्यालोचितं मध्यमया च सह दृढीकृतं यस्यै करणायैव निरूप्यते यथेदं क्रियतामिति सा बाह्या, तथा 'सत्तहिं अणिएहिं' इति अनीकानि—सैन्यानि, तानि च सप्त, तद्यथा—हयानीकं गजानीकं रथानीकं पदात्यनीकं वृषभानीकं गन्धर्वानीकं नाट्यानीकं तत्राद्यानि, पञ्चानीकानि संग्रामाय कल्पन्ते गन्धर्वनाट्यानीके पुनरुपभोगाय,'तैः' सप्तभिरनीकैः,अनीकानि स्वस्याधिपतिव्यतिरेकेण न सम्यक् प्रयोजने समागते समुपकल्पन्ते ततः सप्तानीकाधिपतयोऽपि तस्य वेदितव्याः,तथा चाह—'सत्तहिं अणियाहिवईहिं,' तथा षोडशभिरात्मरक्षदेवसहस्रैरिति विमानाधिपतेः सूर्याभस्य देवस्यात्मानं रक्षन्तीत्यात्मरक्षाः, "कर्मणोऽण्" इत्यण् प्रत्ययः, ते च शिरस्त्राणकल्पाः, यथा हि शिरस्त्राणं शिरस्याविद्धं प्राणरक्षकं भवति तथा तेऽप्यात्मरक्षकाः गृहीतधनुर्दण्डादिप्रहरणाः समन्ततः पृष्ठतः पार्श्वतोऽग्रतश्चावस्थायिनो विमानाधिपतेः सूर्याभस्य देवस्य प्राणरक्षकाः, देवानामपायाभावात् तेषां तथाग्रहणपुरस्सरमवस्थानं निरर्थकमिति चेत्, न, स्थितिमात्रपरिपालनहेतुत्वात् प्रकर्षहेतुत्वाच्च, तथाहि ते समन्ततः सर्वासु दिक्षु गृहीतप्रहरणाः ऊर्ध्वं स्थिता अवतिष्ठमानाः स्वनायकशरीररक्षणपरायणाः स्वनायकानिमेषदृष्टयः परप्राणसहमानानां क्षोभमुत्पादयन्तो जनयन्ति स्वनायकस्य परां प्रीतिमिति, एते च नियतसङ्ख्याकाः सूर्याभस्य देवस्य परिवारभूता देवा उक्ताः, ये तु नास्मिन् सूर्याभे विमाने पौरजनपदस्थानीयास्ते स्वाभियोग्याः—दासकल्पास्ते अभिभूयासः ओस्थानमण्डल्यामपि चानियतसङ्ख्याका इति तेषां सामान्यत उपादानमाह—'अन्नेहिं बहूहिं सूरियाभविमाणवासीहिं देवेहिं देवीहि य सर्द्धि संपरिवुडे' एतैः सामानिकप्रभृतिभिः सार्द्धं संपरिवृतः—सम्यग्नायकैकचित्ताराधनपरतया परिवृतः, 'महयाऽऽहये' त्यादि, महता रवेणेति योगः "आहया" इति—आख्यानकप्रतिबद्धानीति वृद्धाः, अथवा-अहतानि-अव्याहतानि अक्षतानीति भावः, नाट्यगीतवादितानि च तन्त्री—वीणा तला—हस्ततालाः कंसिका तुडितानि—शेषतूर्याणि, तथा घनो—घनसदृशो ध्वनिसाधर्म्यत्वात् यो मृदङ्गो—मर्दलः पटुना—दक्षपुरुषेण प्रवादितः, तत एतेषां पदानां द्वन्द्वः, तेषां यो रवस्तेन, 'दिव्यान्'—दिवि भवान् अतिप्रधानानित्यर्थः; 'भोगभोगाइं' इति—भोगार्हा ये भोगाः—शब्दादयस्तान्, सूत्रे नपुंसकता प्राकृतत्वात्, प्राकृते हि लिङ्गव्यभिचारः, यदाह पाणिनिः स्वप्राकृतलक्षणे—'लिङ्गं व्यभिचार्यपि' ति, भुञ्जानो विहरति—आस्ते,न केवलमास्ते किन्त्विमं—प्रत्यक्षतया उपलभ्यमानं केवलकल्पम्—ईषदपरिसमाप्तं केवलं—केवलज्ञानं केवलकल्पं, परिपूर्णतया केवलसदृशमिति भावः, जम्ब्वा रत्नमय्या उत्तरकुरुवासिन्या उपलक्षितो द्वीपो जम्बूद्वीपस्तं जम्बूद्वीपाभिधानं द्वीपं विपुलेन—विस्तीर्णेनावधिना तस्य हि सूर्याभस्य देवस्यावधिरधः प्रथमां पृथिवीं यावत्तिर्यक् असङ्ख्येयान् द्वीपसमुद्रानिति भवति विस्तीर्णस्तेनाभोगयन्—परिभावयन् पश्यति, अनेन सत्यप्यवधौ यदि तं द्वयविषयमाभोगं न करोति तदा न किञ्चिदपि तन्न जानाति पश्यति वेत्यावेदितम् ।

तत्थ समणं भगवं महावीरं जंबुद्दीवे दीवे भारहे वासे आमलकप्पाए नयरीए बहिया अंबसालवणे चेइए अहापडिरूवं उग्गहं उग्गिण्हित्ता संजमेणं तवसा अप्पाणं भावेमाणं पासति, पासित्ता हट्ठतुट्ठचित्तमाणंदिए पीइमणे परमसोमणस्सिए हरिसवसविसप्पमाणहियए विकसियवरकमलणयणे पयलियवरकडगतुडियकेऊरमउडकुंडलहारविरायंतरइयवच्छे पालंबपलंबमाणघोलंतभूसणधरे ससंभमं तुरियं चवलं सुरवरे (०जाव)-[ सीहासणाओ अब्भुट्ठेइ २ त्ता पायपीढाओ पच्चोरुहति, २ हित्ता एगसाडियं उत्तरासंगं करेति,२ त्ता सत्तट्ठपयाइं तित्थयराभिमुहं अणुगच्छति, म०२ च्छित्ता,वामं जाणुं अंचेति २ त्ता

दाहिणं जाणुं धरणितलंमि णिहट्टु तिक्खुत्तो मुद्धाणं धरणितलंमि णिवेसेइ, णिवेसित्ता ईसिं पच्चुण्णमइ, ईसिं पच्चुण्णमित्ता करतलपरिग्गहियं दसणहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी-णमोऽत्थु णं अरिहंताणं भगवंताणं आदिगराणं तित्थगराणं सयंसंबुद्धाणं पुरिसोत्तमाणं पुरिससीहाणं पुरिसवरपुंडरीयाणं पुरिसवरगंधहत्थीणं लोगुत्तमाणं लोगनाहाणं लोगहिआणं लोगपईवाणं लोगपज्जोयगराणं अभयदयाणं चक्खुदयाणं मग्गदयाणं जीवदयाणं सरणदयाणं बोहिदयाणं धम्मदयाणं धम्मदेसयाणं धम्मनायगाणं धम्मसारहीणं धम्मवरचाउरंतचक्कवट्टीणं अप्पडिहयवरनाणदंसणधराणं वियट्टछउमाणं जिणाणं जावयाणं तिण्णाणं तारयाणं बुद्धाणं बोहयाणं मुत्ताणं मोयगाणं सव्वन्नूणं सव्वदरिसीणं सिवमयलमरुयमणंतमक्खयमव्वाबाहमपुणरावत्तं सिद्धिगइनामधेयं ठाणं संपत्ताणं,नमोऽत्थु णं समणस्स भगवओ महावीरस्स ०जाव संपाविउकामस्स, वंदामि णं भगवन्तं तत्थगयं इह गते ] पासइ मे भगवं तत्थ गते इहगतं ति कट्टु वंदति णमंसति वंदित्ता णमंसित्ता सीहासणवरगए पुव्वाभिमुहं सण्णिसण्णे । ( सू० ५ )

तए णं तस्स सुरियाभस्स इमे एतारूवे अब्भत्थिते चिंतिते मणोगते संकप्पे समुप्पज्जित्था-

तत्र—तस्मिन्विपुलेनावधिना जम्बूद्वीपविषये दर्शने प्रवर्तमाने सति श्रमणं—श्राम्यति—तपस्यति नानाविधमिति श्रमणः, भग—समग्रैश्वर्यादिलक्षण, उक्तं च—" ऐश्वर्यस्य समग्रस्य, रूपस्य यशसः श्रियः । धर्मस्याथ प्रयत्नस्य, षण्णां भग इतीङ्गना ॥ १ ॥ " भगोऽस्यास्तीति भगवान् भगवन्त 'सूर वीर' विक्रान्तौ, वीरयति-कषायान् प्रति विक्रामति स्मेति वीरः, महांश्चासौ वीरश्च महावीरस्त, जम्बूद्वीपे भारते वर्षे आमलकल्पायां नगर्यां बहिराम्रशालवने चैत्ये अशोकवरपादपस्याधः पृथिवीशिलापट्टके सम्पर्यङ्कनिषण्णं श्रमणगणसमृद्धिसंपरिवृतं प्रतिरूपमवग्रहं गृहीत्वा संयमेन तपसा आत्मानं भावयन्तं पश्यति, दृष्ट्वा च—'हट्ठतुट्ठमाणंदिए' इति—हृष्टतुष्टोऽतीव तुष्ट इति भाव, अथवा—हृष्टो नाम विस्मयमापन्न, यथा—अहो भगवानास्ते इति, तुष्ट —सन्तोषं कृतवान्, यथा—सत्यमभूत् यन्मया भगवानालोकित, कोपवशादेव, चित्तमानन्दितं—स्फीतीभूतं 'टुनदि ' समृद्धाविति वचनात्, यस्य स चित्तानन्दित., सुखादिदर्शनात्पाठिका निष्ठान्तस्य परनिपात, मकार प्राकृतत्वादलाक्षणिकस्तत पदद्वयस्य पदद्वयपदद्वयमीलने कर्मधारय 'पीइमणे' इति प्रीतिर्मनसि यस्यासौ प्रीतिमना, भगवति बहुमानपरायण इति भाव, तत क्रमेण बहुमानोत्कर्षत्वात् 'परमसोमणस्सिए' इति—शोभनं मनो यस्य स सुमनास्तस्य भाव सौमनस्यं परमं च तत्सौमनस्यं च परमसौमनस्यं तत्सञ्जातमस्येति परमसौमनस्यितः, एतदेव व्यक्तीकुर्वन्नाह—'हरिसवसविसप्पमाणहियए' हर्षवशेन विसर्पत्—विस्तारयायि हृदयं यस्य स हर्षवशविसर्पद्धृदय, हर्षवशादेव 'वियसियवरकमलनयणे ' विकसिते वरकमलवत् नयने यस्य स तथा, हर्षवशादेव शरीरोद्धर्षेण 'पयलियवरकडगतुडियकेऊरमउडकुंडले 'त्ति प्रचलितानि वराणि कटकानि—कलाचिकाभरणानि त्रुटितानि—बाहुरक्षकाः केयूराणि—बाह्वाभरणविशेषरूपाणि मुकुटो—मौलिभूषण कुण्डले--कर्णाभरणे यस्य स प्रचलितवरकटकत्रुटितकेयूरमुकुटकुण्डल', तथा हारेण विराजमानेन रचित—शोभितं वक्षो यस्य स हारविराजमानरचितवक्षः, तत पूर्वपदेन कर्मधारयः समास, तथा प्रलम्बत इति प्रलम्ब —पदकस्त प्रलम्बमानम्--आभरणविशेषं घोलन्ति च भूषणानि धरन्तीति प्रलम्बप्रलम्बमानघोलद्भूषणधर, सूत्रे च प्रलम्बमानपदस्य विशेष्यात्परतो निपात प्राकृतत्वात्, हर्षवशादेव 'ससभमं संभम इह विवक्षितक्रियाया बहुमानपूर्विका प्रवृत्तिः सह सम्भ्रमो यस्य वन्दनस्य नमनस्य वा तत्ससम्भ्रमं, क्रियाविशेषणमेतत्, त्वरित--शीघ्र चपलं—सम्भ्रमवशादेव व्याकुलं यथा भवत्येवं सुरवरो--देववरो यावत्करणात्—'सीहासणाओ अब्भुट्ठइ अब्भुट्ठित्ता पायपीढाओ पच्चोरुहति पच्चोरुहित्ता पाउयाओ ओमुयइ ओमुयित्ता तित्थयराभिमुहे सत्तट्ठपयाइं अणुगच्छइ अणुगच्छित्ता वाम जाणुं अंचेइ [ उत्पाटयति ] दाहिणं जाणुं धरणितलंसि निहट्टु तिखुत्तो मुद्धाण धरणितलंसि नमइ नमित्ता ( निवेसेइ २ त्ता ) ईसिं पच्चुण्णमइ पच्चुण्णमित्ता कडियतुडियथंभियभुयाओ साहरइ साहरित्ता करयलपरिग्गहियं दसणहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी—नमोऽत्थु णं अरिहंताणं भगवंताणं ०जाव ठाणं संपत्ताणं, नमोऽत्थु णं समणस्स भगवओ महावीरस्स आदिगरस्स तित्थयरस्स ०जाव संपाविउकामस्स, वंदामि णं भगवंतं तत्थगयं इहगए ' इति परिग्रहः, पश्यति मां स भगवान् तत्र गत इह गतमिति कृत्वा वन्दते-स्तौति नमस्यति—कायेन मनसा च वन्दित्वा नमस्यित्वा च भूय सिंहासनवरं गतो गत्वा च पूर्वाभिमुख सन्निषण्ण ॥५॥ ' तए णं तस्से ' त्यादि, ' ततो ' निषदनानन्तरं तस्य-सूर्याभदेवस्य अयमेतद्रूप सङ्कल्प समुदपद्यत, कथम्भूत इत्याह—मनोगत —मनसि गतो-व्यवस्थितो, नाद्यापि वचसा प्रकाशितस्वरूपस्य इति भावः, पुन कथम्भूत इत्याह —आध्यात्मिक आत्मन्यध्यध्यात्मं तत्र भव आध्यात्मिक, आत्मविषय इति भावः, सङ्कल्पश्च द्विधा भवति-कश्चिद् ध्यानात्मक अपरश्चिन्तात्मक ; तत्रायं चिन्तात्मक इति प्रतिपादनार्थमाह-चिन्तितः चिन्ता सञ्जाताऽस्येति चिन्तित, चिन्तात्मक इति भाव, सोऽपि कश्चिदभिलाषात्मको भवति, कश्चिदन्यथा, तत्रायमभिलाषात्मक तथा चाह-प्रार्थितं प्रार्थनं प्रार्थो णिजन्तत्वात् अप्रत्ययः, प्रार्थः सञ्जातोऽस्येति प्रार्थित, अभिलाषात्मक इति भावः ।

किंस्वरूप इत्याह—

एवं ( सेयं ) ( मे ) खलु समणे भगवं महावीरे जंबूदीवे दीवे भारहे वासे आमलकप्पाणयरीए बहिया अंबसालवणे चेइए आहापडिरूवं उग्गहं उग्गिरिहत्ता संजमेणं तवसा अप्पाणं भावेमाणे विहरति , तं महाफलं खलु तहारूवाणं भगवंताणं णामगोयस्स वि सवणयाए किमंग!पुण अहिगमणवंदणणमंसणपडिपुच्छणपज्जुवासणयाए ?, एगस्स वि आयरियस्स धम्मियस्स सुवयणस्स सवणयाए ?, किमग! पुण विउलस्स अट्ठस्स गहणयाए ? , तं गच्छामि णं समणं भगवं महावीरं वंदामि णमंसामि सक्कारेमि सम्माणेमि कल्लाणं मंगलं चेतियं देवयं पज्जुवासामि, एयं मे पेच्चा हियाए सुहाए खमाए णिस्सेसाए आणुगामियत्ताए भविस्सति त्ति कट्टु एवं संपेहेइ , एवं संपेहित्ता आभिओगे देवे सदावेइ आभि० सद्दावेत्ता एवं वयासी-( सू० ६ ).

एवं खलु देवाणुप्पिया ! समणे भगवं महावीरे जंबुद्दीवे दीवे भारहे वासे आमलकप्पाए नयरीए बहिया अंबसालवणे चेइए अहापडिरूवं उग्गहं उग्गिरिहत्ता संजमेणं तवसा अप्पाणं भावेमाणे विहरइ ।

'सेय खलु' इत्यादि, श्रेय 'खलु' निश्चितं 'मे' मम श्रमणं भगवन्तं महावीरं वन्दितुं कायेन मनसा च प्रणन्तुं सत्कारयितुं-कुसुमाञ्जलिमोचनेन पूजयितुं सन्मानयितुम्-उचितप्रतिपत्तिभिराराधयितुं कल्याणं कल्याणकारित्वात् मङ्गलं दुरितोपशमकारित्वात् दैवत-देवं त्रैलोक्याधिपतित्वात् चैत्यं सुप्रशस्तमनोहेतुत्वात् पर्युपासितु-सेवितुम् इति कृत्वा-इति हेतो. 'एवं' यथा वक्ष्यमाण तथा सम्प्रेक्षते--बुद्धया परिभावयति , संप्रेक्ष्य च आभियोगिकान्-आभिमुख्येन योजनं अभियोग -प्रेष्यकर्मसु व्यापार्यमाणत्वम् अभियोगेन जीवन्तीत्याभियोगिका 'वेतनादेर्जीवन्ती' ति इकणप्रत्यय' , आभियोगिकाः-स्वकर्मकरास्तान् शब्दापयति आकारयति शब्दापयित्वा च तेषां सम्मुखमेवमवादीत्-एव खलु देवानां प्रिया ! इत्यादि सुगमं , नवरं देवानां प्रिया ऋजव प्राज्ञा ।

'तं गच्छह णं तुमे देवाणुप्पिया ! जंबुद्दीवं दीवं भारहं वासं आमालकप्पं णयरिं अंबसालवणं चेइयं समणं भगवं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेह करेत्ता वंदह णमंसह वंदित्ता णमंसित्ता साइं साइं नामगोयाइं साहेह साहित्ता समणस्स भगवओ महावीरस्स ( सव्वओ समंता ) जोयणपरिमंडलं जं किंचि तणं वा पत्तं वा कट्ठं वा सक्करं वा असुइं अचोक्खं वा पूइअं दुब्भिगंधं सव्वं आहुणिय २ एगंते एडेह एडेत्ता णच्चोयगं णाइमट्टियं पविरलपप्फुसियं रयरेणुविणासणं दिव्वं सुरभिगंधोदयवासं वासह वासित्ता णिहयरयं णट्ठरयं भट्ठरयं उवसंतरयं पसंतरयं करेह करित्ता जलथलयभासुरप्पभूयस्स बिंटट्ठाइस्स दसद्धवराणस्स कुसुमस्स जाणुस्सेहपमाणमित्तं ओहिं वासं वासह वासित्ता कालागुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुद्धुयाभिरामं सुगंधवरगंधियं गंधवट्टिभूतं दिव्वं सुरवराभिगमणजोग्गं करेह कारवेह करित्ता य कारवेत्ता य खिप्पामेव ( मम ) एयमाणत्तियं पच्चप्पिणह । ( सू० ७ )

'तं गच्छह णमि' त्यादि, यस्मादेवं भगवान् विहरन् वर्त्तते तत्-तस्माद्यूयं देवानां प्रिया ! पूय गच्छत जम्बूद्वीप द्वीपं तत्रापि भारतं वर्षं तत्राप्यामलकल्पां नगरीं तत्राप्याम्रशालवनं चैत्य श्रमण भगवन्तं महावीरं त्रिकृत्व —त्रीन् वारान् आदक्षिणप्रदक्षिणं कुरुत , आदक्षिणाद्—दक्षिणहस्तादारभ्य प्रदक्षिण -परितो भ्राम्यतो दक्षिण आदक्षिणप्रदक्षिणस्त कुरुत, कृत्वा च वन्दध्व नमस्यत, वन्दित्वा नमस्यित्वा च 'साइं साइं' ति—स्वानि २-आत्मीयानि २ नामगोत्राणि, गोत्रम्-अन्वर्थस्तेन युक्तानि नामानि , नामगोत्राणि, राजदन्तादिदर्शनान्नामशब्दस्य पूर्वनिपात., साधयत-कथयत, कथयित्वा च श्रमणस्य भगवतो महावीरस्य सर्वत —सर्वासु दिक्षु समन्ततः--सर्वासु विदिक्षु योजनपरिमण्डलं परिमाण्डलयेन योजनप्रमाणं यत् क्षेत्रं तत्र यत् तृणं—किलिञ्चादि काष्ठ वा काष्ठशकल वा पत्र वा निम्बाऽश्वत्थादिपत्रजात कचवरं वा—श्लक्ष्णत् धूलयादिपुञ्जरूप, कथम्भूतमित्याह—अशुचि—अशुचिममचित्तमचोक्षम्—अपवित्र पूयित-कुथितम् अत एव दुरभिगन्धं तत्सर्वं संवर्तकवातविकुर्वणेनाहत्याहत्य एकान्ते—योजनपरिमण्डलात्क्षेत्राद् दवीयसि देशे एडयत—अपनयत एडयित्वा च नात्युदकं नात्यतिमृत्तिक यथा भवति एवं सुरभिगन्धोदकवर्षं वर्षत कथम्भूतमित्याह-दिव्य-प्रधानं सुरभिगन्धोपेतत्वात् , पुन. कथम्भूतमित्याह 'पविरलपप्फुसिय' मिति—प्रकर्षेण यावद्रेणव स्थगिता भवन्ति तावन्मात्रेणोत्कर्षेणेति भाव , स्पर्शनानि प्रस्पृष्टानि प्रविरलानि घनभावे कर्दमसम्भवात् प्रस्पृष्टानि—प्रकर्षवन्ति स्पर्शनानि मन्दस्पर्शनसम्भवे रेणुस्थगनासम्भवात् यस्मिन्वर्षे तत्प्रविरलप्रस्पृष्टम् , अत एव 'रयरेणुविणासणं' श्लक्ष्णतरा रेणुपुद्गला—रज त एव स्थूला रेणव ,रजांसि च रेणवश्च रजोरेणवस्तेषां विनाशनम्, एवम्भूतं च सुरभिगन्धोदक वर्षं वर्षित्वा योजनपरिमण्डल क्षेत्रं निहतरज. कुरुतेति योग , निहतं रजो भूय उत्थानासम्भवात् यत्र तन्निहतरज , तत्र निहतत्वं रजस क्षणमात्रमुत्थानाभावेनापि सम्भवति, तत आह-नष्टरज -नष्टं सर्वथाऽदृश्यीभूत रजो यत्र तन्नष्टरज , तथा भ्रष्टवातोद्धततया योजनमात्रात् क्षेत्रात् दूरत पलायित रजो यस्मात्तद् भ्रष्टरज , एतदेव एकार्थिकद्वयेन प्रकटयति—उपशान्तरज प्रशान्तरज कुरुत, कृत्वा च कुसुमस्य जातावेकवचन कुसुमजातस्य जानू सेधप्रमाणमात्रमोघेन—सामान्येन सर्वत्र योजनपरिमण्डले क्षेत्रे वर्षं वर्षत, किंविशिष्टस्य कुसुमस्येत्याह—' जलथलयभासुरप्पभूयस्स ' जलजं च स्थलजं च जलजस्थलजं जलजं पद्मादि स्थलजं विचकिलादि भास्वरं-दीप्यमानं प्रभूतम्—अतिप्रचुर, ततः कर्मधारयः,-भास्वरं च तत्प्रभूतं च भास्वरप्रभूत जलज-

णात् त्वरितया-त्वरा सञ्जाता अस्या इति त्वरिता तया प्रकृष्टान्तरङ्गमणवती चपला तया क्रोधाविष्टस्येव श्रमासंवेदनात् चण्डेव चण्डा तया निरन्तरं शीघ्रत्वगुणयोगात् शीघ्रा तया शीघ्रया परमोत्कृष्टवेगपरिणामोपेता जवना तया वातोद्धूतस्य दिगन्तव्यापिनो रजस इव या गति सा उद्धूता तया दिव्यया-दिवि देवलोके भवा दिव्या तया देवगत्या तिर्यगसंख्येयाना द्वीपसमुद्राणां मध्यंमध्येन ; मध्येनेत्यर्थ , गृहंगृहेण मध्यमध्यन पदंपदेन सुखसुखेनेत्यादय शब्दाश्चिरन्तनव्याकरणेषु सुसाधव प्रतिपादिता इति नायमपप्रयोग , अवपतन्तोऽवपतन्त , समागच्छन्त इति भाव , पूर्वान् पूर्वान् द्वीपसमुद्रान् व्यतिक्रामन्तो व्यतिक्रामन्त ; उल्लङ्घयन्त इत्यर्थ , शेषं सुगमं यावत् ।

देवाइ समणे भगवं महावीरे देवा एवं वदासी-पोराणमेयं देवा ! जीयमेयं देवा ! किच्चमेयं देवा ! करणिज्जमेयं देवा ! आइन्नमेयं देवा ! अब्भणुरणायमेयं देवा ! जणं भवणवइवाणमंतरजोइसियवेमाणिया देवा ! अरहंते भगवं वंदंति नमंसंति वंदित्ता नमंसित्ता तओ साइं साइं णामगोयाइं साधिंति तं पोराणमेयं देवा ! ०जाव अब्भणुण्णायमेयं देवा ! । ( सू० ६ )

'देवाइ समणे' त्यादि, देवादियोगात् देवादि श्रमणो भगवान् महावीरस्तान् देवानेवमवादीत्—पुराणेषु भव पौराणमेतत्कर्म भो देवा ! , चिरन्तनैरपि देवै कृतमिदं चिरन्तनान् तीर्थङ्करान् प्रतीति तात्पर्यार्थ , जीतमेतद्—वन्दनादिकं तीर्थकृद्भ्यो भो देवा ! , यतोऽभ्यनुज्ञातमेतत् सर्वैरपि तीर्थकृद्भिर्भो देवास्तत कर्त्तव्यमेतद् युष्मादृशा भो देवा ! , एतदेव व्याचष्टे—करणीयमेतद् भो देवा ! , आचीर्णमेतत्-स्वरूपभूतमेतद् भो देवा ! , किं तदित्याह-'जन्न' मित्यादि, यत् 'णमि' ति पूर्ववत् भवनपतिव्यन्तरज्योतिष्कवैमानिका देवा अर्हतो भगवतो वन्दन्ते नमस्यन्ति, वन्दित्वा नमस्यित्वा च पश्चात्स्वानि २—आत्मीयानि २ नामगोत्राणि कथयन्ति तत युष्माकमपि भो देवा ! पौराणमेतत्-यावदाचीर्णमेतदिति ।

तए णं ते आभिओगिया देवा समणेणं भगवया महावीरेण एवं वुत्ता समाणा हट्ठ ०जाव हियया समणं भगवं महावीरं वंदंति णमंसंति वंदित्ता णमंसित्ता उत्तरपुरच्छिमं दिसिभागं अवक्कमंति अवक्कमित्ता वेउव्वियसमुग्घाएणं समोहणंति २ णित्ता संखेज्जाइं जोयणाइं दंडं निसिरंति, तं जहा-रयणाणं ०जाव रिट्ठाणं अहाबायरे पोग्गले परिसाडेंति अहाबायरे० २ डित्ता दोच्चं पि वेउव्वियसमुग्घाएणं समोहणंति २ त्ता संवट्टवाए विउव्वंति, से जहानामए भइयदारए सिया तरुणे जुगवं बलवं अप्पायंके [ थिरसंघयणे ] थिरग्गहत्थे पडिपुण्णपाणिपायपिट्ठंतरोरु [ संघाय ] परिणए घननिचियवट्टवलिय-( वलियवट्ट ) खंधे चम्मेट्ठगदुघणमुट्ठियसमाहयगत्ते उरस्सबलसमन्नागए तलजमलजुयल [ फलिहनिभ ] बाहू लंघणपवणजइणपमद्दणसमत्थे छेए दक्खे पट्ठे कुसले मेहावी णिउणसिप्पोवगए एगं महं दंडसंपुच्छणिं वा सलागाहत्थगं वा वेणुसलाइयं वा गहाय रायंगणं वा रायंतेपुरं वा देवकुलं वा सभं वा पवं वा आरामं वा उज्जाणं वा अतुरियमचवलमसंभंते निरंतरं सुनिउणं सव्वतो समंता संपमज्जेज्जा, एवामेव तेऽवि सूरियाभस्स देवस्स आभिओगिया देवा संवट्टवाए, विउव्वंति, संवट्टवाए विउवित्ता समणस्स भगवओ महावीरस्स सव्वतो समंता जोयणपरिमण्डलं जं किंचि तणं वा पत्तं वा तहेव सव्वं आहुणिय २ एगंते एडेंति एगंते एडित्ता खिप्पामेव उवसमंति, खिप्पा० २ त्ता दोच्चं पि वेउव्वियसमुग्घाएणं समोहणंति, दोच्चं पि० २ त्ता अब्भवद्दलए विउव्वंति अब्भ० २ त्ता से जहाणामए भइगदारए सिया तरुणे ०जाव सिप्पोवगए एगं महं दगवारगं वा दगथालगं वा दगकलसगं वा दगकुंभगं वा आरामं वा ०जाव पवं वा अतुरिय ०जाव सव्वतो समंता आवरिसेज्जा, एवामेव तेऽवि सूरियाभस्स देवस्स आभियोगिया देवा अब्भवद्दलए विउव्वंति अब्भ०२ व्वित्ता खिप्पामेव पयणुतणायन्ति० २ त्ता खिप्पामेव विज्जुयायंति २ त्ता समणस्स भगवओ महावीरस्स सव्वओ समंता जोयणपरिमंडलं णच्चोदगं णातिमट्टियं तं पविरलपप्फुसियं रयरेणुविणासणं दिव्वं सुरभिगंधोदगं ( वासं ) वासंति वासेत्ता णिहयरयं णट्ठरयं भट्ठरयं उवसंतरयं पसंतरयं करेंति, २ त्ता खिप्पामेव उवसामंति २ त्ता तच्चं पि वेउव्वियसमुग्घाएणं समोहणंति २ त्ता पुप्फवद्दलए विउव्वंति, से जहाणामए मालागारदारए सिया तरुणे ०जाव सिप्पोवगए एगं महं पुप्फपडलगं वा पुप्फचंगेरियं वा पुप्फछज्जियं वा गहाय रायंगणं वा ०जाव सव्वतो समंता कयग्गाहगहियकरयलपब्भट्ठविप्पमुक्केणं दसद्धवन्नेणं कुसुमेणं मुक्कपुप्फपुंजोवयारकलितं करेज्जा, एवामेव ते सूरियाभस्स देवस्स आभिओगिया देवा पुप्फवद्दलए विउव्वंति २ त्ता खिप्पामेव पयणुतणायन्ति खिप्पा० २ त्ता ०जाव जोयणपरिमण्डलं जलथलयभासुरप्पभूयस्स विंटट्ठाइस्स दसद्धवन्नकुसुमस्स जाणुस्सेहपमाणमेत्तिं ओहिवासं वासंति वासित्ता कालागुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुद्धुयाभिरामं सुगंधवरगंधियं गंधवट्टिभूतं दिव्वं सुरवराभिगमणजोग्गं करेंति कारयंति करेत्ता य कारवेत्ता य, खिप्पामेव उवसामंति २ त्ता जेणेव समणे भगवं

महावीरे तेणेव उवागच्छंति तेणेव उवागच्छित्ता समणं भगवं महावीरं तिक्खुत्तो ०जाव वंदित्ता नमंसित्ता समणस्स भगवओ महावीरस्स अंतियाओ अंबसालवणाओ चेइयाओ पडिनिक्खमंति पडिनिक्खमित्ता ताए उक्किट्ठाए० ०जाव वीइवयमाणे २ जेणेव सोहम्मे कप्पे जेणेव सूरियाभे विमाणे जेणेव सभा सुहम्मा जेणेव सूरियाभे देवे तेणेव उवागच्छंति २ त्ता सूरियाभं देवं करयलपरिग्गहियं सिरसावत्तं मत्थए अंजलिं कट्टु जएणं विजएणं वद्धावेंति २ त्ता तमाणत्तियं पच्चप्पिणंति । ( सू० १० )

' तए णमि ' त्यादि सुगमं, यावत् ' से जहानामए भइयदारए सिया ' इत्यादि, स वक्ष्यमाणगुणो यथानामको-ऽनिर्दिष्टनामकः कश्चिद्भृतिकदारकः —भृतिं करोति भृतिकः-कर्मकरः तस्य दारको भृतिकदारकः स्यात्, किंविशिष्ट इत्याह--तरुणः प्रवर्द्धमानवयाः ( ननु दारकः वर्धमानवयाः ) एव भवति ततः किमनेन विशेषणेन ?, न आसन्नमृत्युः प्रवर्द्धमानवयस्त्वाभावात्, न ह्यासन्नमृत्युः प्रवर्धमानवया भवति न च तस्य विशिष्टसामर्थ्यसम्भवः, आसन्नमृत्युत्वादेव, विशिष्टसामर्थ्यप्रतिपादनार्थश्चैवम् आरम्भस्ततोऽर्थवद्विशेषणम्, अन्ये तु व्याचक्षते-इह यद्द्रव्यं विशिष्टवर्णादिगुणोपेतमभिनवं च तत्तरुणमिति लोके प्रसिद्धं, तथा तरुणमिदमश्वत्थपत्रमिति, ततः स भृतिकदारकस्तरुण इति, किमुक्तं भवति ?-अभिनवो विशिष्टवर्णादिगुणोपेतश्चेति, बलं--सामर्थ्यं तद् यस्यास्तीति बलवान्, तथा युगं--सुषमदुष्षमादिकालः स स्वेन रूपेण यस्यास्ति न दोषदुष्टः स युगवान्, किमुक्तं भवति ?-कालोपद्रवोऽपि सामर्थ्यविघ्नहेतुः स चास्य नास्तीति प्रतिपत्त्यर्थमेतद्विशेषणं, युवा--यौवनस्थः, युवावस्थायां हि बलातिशय इत्येतदुपादानम्, ' अप्पायंके ' इति अल्पशब्दोऽभाववाची, अल्पः—सर्वथा अविद्यमान आतङ्कः—ज्वरादिर्यस्य सोऽल्पातङ्कः स्थिरोऽग्रहस्तो यस्य स स्थिराग्रहस्तः , " दढपाणिपायपिट्ठंतरोरुपरिणए ' इति दृढानि अतिनिबिडचयापन्नानि पाणिपादपृष्ठान्तरोरूणि परिणतानि यस्य स दृढपाणिपादपृष्ठान्तरोरुपरिणतः सुखादिदर्शनात् पाक्षिकः क्तान्तस्य परनिपातः, तथा घनम्-अतिशयेन निचितौ-निबिडतरचयमापन्नौ वलिताविव वलितौ वृत्तौ स्कन्धौ यस्य स घननिचितवलितवृत्तस्कन्धः, ' चम्मेट्ठगदुघणमुट्ठियसमाहयगत्ते ' इति चर्मेष्टकेन द्रुघणेन मुष्टिकया च-मुष्ट्या समाहत्य २ ये निचितीकृतगात्रास्ते चर्मेष्टकद्रुघणमुष्टिकसमाहतनिचितगात्रास्तेषामिव गात्रं यस्य स चर्मेष्टकद्रुघणमुष्टिकसमाहतनिचितगात्रः, ' उरस्सबलसमण्णागए ' इति उरसि भवम् उरस्यं तच्च तद्बलं च उरस्यबलं तत्समन्वागतः—समनुप्राप्त उरस्यबलसमन्वागतः आन्तरोत्साहवीर्ययुक्त इति भावः, ' तलजमलयुगलबाहु ' तलौ-तालवृक्षौ तयोर्यमलयुगलं—समश्रेणीकं युगलं तलयमलयुगलं तद्वदतिसरलौ पीवरौ च बाहू यस्य स तलयमलयुगलबाहुः, ' लंघणपवणजइणपमद्दणसमत्थे ' इति लङ्घने--अतिक्रमणे प्लवने-मनाक् पृथुतरविक्रमवति गमने जवने--अतिशीघ्रगतौ प्रमर्दने-कठिनस्यापि वस्तुनश्चूर्णनकरणे समर्थः लङ्घनप्लवनजवनप्रमर्दनसमर्थः, क्वचित् ' लंघणपवणजइणवायामणसमत्थे ' इति पाठः, तत्र व्यायामने--व्यायामकरणे इति व्याख्येयम्, छेको—द्वासप्ततिकलापण्डितो, दक्षः--कार्याणामविलम्बितकारी प्रष्ठो—वाग्मी कुशलः—सम्यक्क्रियापरिज्ञानवान् मेधावी परस्पराव्याहतः—पूर्वापरानुसन्धानदक्षः, अत एव " निपुणसिप्पोवगए ' इति निपुणं यथा भवति एवं शिल्पे-क्रियासु कौशलम् उपगतः, प्राप्तो निपुणशिल्पोपगतः एकं महान्तं शिलाकाहस्तकं—सरित्पर्णादिशलाकासमुदायं सरित्पर्णादिशलाकामयीं सम्मार्जनीमित्यर्थः, वाशब्दो विकल्पार्थो, " दंडसंपुच्छणिं वा' इति-दण्डयुक्ता सम्पुच्छनी-सम्मार्जनी दण्डसंपुच्छनी तां वा ' वेणुसिलागिगं वा ' इति—वेणुः वंशस्तस्य शलाका वेणुशलाकास्ताभिर्निर्वृत्ता वेणुशलाकिकी-वेणुशलाकामयी सम्मार्जनी ता वा गृहीत्वा राजाङ्गणं राजान्तःपुरं वा देवकुलं वा ' सभा वा ' सन्तो भान्त्यस्यामिति सभा ग्रामप्रधानानां नगरप्रधानानां यथासुखमवस्थानहेतुर्मण्डपिका तां वा प्रपां वा—पानीयशालाम् आरामं वेति—आगत्यागत्य भोगपुरुषा वरतरुणीभिः सह यत्र रमन्ते क्रीडन्ति स आरामो नगराद्नातिदूरवर्त्ती क्रीडाश्रयः तरुखण्डः तम्, ' उज्जाणं वे' त्ति-ऊर्ध्वं विलम्बितानि प्रयोजनाभावात् यानानि यत्र तदुद्यानं-नगरात्प्रत्यासन्नवर्त्ती यानवाहनक्रीडागृहाद्याश्रयस्तरुखण्ड, तथा अत्वरितमचपलमसम्भ्रान्तं, त्वराया चापल्ये सम्भ्रमे वा सम्यक्कचवराद्यपगमासम्भवात्, निरन्तरं न त्वपान्तरालमोचनेन, सुनिपुणं श्लक्ष्णस्याप्यचोक्षस्यापसारणेन, सर्वतः-सर्वासु दिक्षु विदिक्षु समन्ततः-सामस्त्येन सम्प्रमार्जयेत्, ' एवमेवे ' त्यादि, सुगमं यावत् ' खिप्पामेव पच्चुवसमंती ' त्यादि, एकान्ते तृणकाष्ठाद्यपनीय क्षिप्रमेव-शीघ्रमेव प्रत्युपशामयन्ति प्रत्येकं ते आभियोगिका देवाः उपशामयन्ति—संवर्त्तकवायुविकुर्वणान्निवर्त्तन्ते, संवर्त्तकवातविकुर्वणमुपसंहरन्तीति भाव, ततो ' दोच्चं पि वेउव्वियसमुग्घाएणं समोहणंति ' संवर्त्तकवातविकुर्वणार्थं हि यद्वेलाद्वयमपि वैक्रियसमुद्घातेन समवहननं तत्किलैकम् इदं त्वभ्रवार्दलकविकुर्वणार्थं द्वितीयमतः उक्तम्-द्वितीयमपि वारं वैक्रियसमुद्घातेन समवहन्यन्ते ( घ्नन्ति ), समवहत्य चाभ्रवार्दलकानि विकुर्वन्ति, वाः—पानीयं तस्य दलानि वार्दलानि तान्येव वार्दलकानि, मेघा इत्यर्थः, अपो बिभ्रतीति अभ्राणि-मेघाः, अभ्राणि सन्त्यस्मिन्निति अभ्रादिभ्य ' ॥५।२।४६॥ इति मत्वर्थीयोऽप्रत्ययः। आकाशमित्यर्थः, अभ्रे वार्दलकानि अभ्रवार्दलकानि तानि विकुर्वन्ति, आकाशे मेघान् विकुर्वन्तीत्यार्थः, ' से जहानामए भइगदारगे सिया ' इत्यादि पूर्ववत् ' निउणसिप्पोवगए एगं महंमि ' त्यादि, स यथानामको भृतिकदारक एकं महान्तं दकवारकं वा—मृत्तिकामयभाजनविशेषं ' दगकुंभगं वे' त्ति—दकघटं दकस्थालकं वा-कसादिमयमुदकभृतं भाजनं दककलसं वा—उदकभृतं भृङ्गारम् ' आवरिसिज्जा ' इति—आवर्षेत् आ-समन्तात्सिञ्चेत्, ' खिप्पामेव पतणतणाय ' ति--अनुकरणवचनमेतत् प्रकर्षेण स्तनितं कुर्वन्तीत्यर्थः, ' पविज्जुयायति ' त्ति—प्रकर्षेण

विघुर्न विदधति, ' पुप्फवद्दलए विउव्वति ' पुष्पवृष्टियोग्यानि वार्दलिकानि पुष्पवार्दलिकानि-पुष्पवर्षुकान् मेघान् विकुर्वन्तीति भावः , ' एगं महं पुप्फछज्जियं वा ' एका महती छायेत-उपरि स्थग्यते इति छाद्या छाद्येव छाद्यिका पुष्पैर्भृता छाद्यिका पुष्पछाद्यिका तां वा पटलकानि-प्रतीतानि , ' कयग्गाहगहियकरयलपब्भट्ठवि ( प्प ) मुक्केण ' ति-इह मैथुनसंरम्भे यत् युवते केशेषु ग्रहणं स कचग्रहस्तेन गृहीत तथा करतलाद्वि ( प्र , मुक्त , प्राकृतत्वात्पदव्यत्ययस्ततो विशेषणसमासः , तेन शेषं सुगमं यावत् ' जएणं विजएणं वद्धावेंति ' जयेन विजयेन वर्द्धापयन्ति जयतु देवेत्येवं वर्द्धापयन्तीत्यर्थः, तत्र जयः -परैरनभिभूयमानता प्रतापवृद्धिश्च विजयस्तु-परेषामसहमानानामभिभवोत्पत्तिः , वर्द्धापयित्वा च तां पूर्वोक्तामाज्ञप्तिकां प्रत्यर्पयन्ति , आदिष्टकार्यसम्पादनं निवेदयन्तीत्यर्थः ।

तए णं से सूरियाभे देवे तेसिं आभियोगियाणं देवाणं अंतिए एयमट्ठं सोच्चा निसम्म हट्ठतुट्ठ ०जाव हियए,पायत्ताणियाहिवइं देवं सद्दावेति सद्दावेत्ता एवं वदासी-खिप्पामेव भो देवाणुप्पिया ! सूरियाभे विमाणे सभाए सुहम्माए मेघोघरसियगंभीरमहुरसद्दं जोयणपरिमंडलं सुसरघंटं तिक्खुत्तो उल्लालेमाणे २ महया २ सद्देणं उग्घोसेमाणे २ एवं वयासी-आणवेति णं भो सूरियाभे देवे गच्छति णं भो सूरियाभे देवे जंबूदीवे दीवे भारहे वासे आमलकप्पाए णयरीए अंबसालवणे चेतिते समणं भगवं महावीरं अभिवंदए, तुब्भेऽवि णं भो देवाणुप्पिया ! सव्विड्ढीए ०जाव णातियरवेणं णियगपरिवालसद्धिं संपरिवुडा सातिं सातिं जाणविमाणाइं दुरूढा समाणा अकालपरिहीणं चेव सूरियाभस्स देवस्स अंतियं पाउब्भवह। (सू०११)

' तए णमि ' त्यादि, ततो ' णमि ' ति पूर्ववत् स सूर्याभो देवस्तेषाम् 'आभियोगाए' ति-आ-समन्तादाभिमुख्येन युज्यन्ते-प्रेष्यकर्मसु व्यापार्यन्ते इत्याभियोग्या आभियोगिका , इत्यर्थ , तेषामाभियोग्यानां देवानामन्तिके-समीपे एनम्-अनन्तरोक्तमर्थं श्रुत्वा-श्रवणविषयं कृत्वा श्रवणानन्तरं च निशम्य-परिभाव्य 'हट्ठतुट्ठ ०जाव हियए' इति यावच्छब्दकरणात्-' हट्ठतुट्ठचित्तमाणंदिए पीइमणे परमसोमणस्सिए हरिसवसविसप्पमाणहियए ' इति द्रष्टव्य, पदात्यनीकाधिपतिं देवं शब्दयति, शब्दयित्वा एवमवादीत्-क्षिप्रमेव भो देवाना प्रिय ! सभायां सुधर्मायां-सुधर्माभिधानायां ' मेघोघरसियगंभीरमहुरसद्द' मिति मेघानामोघ -सङ्घातो मेघौघस्तस्य रसितं गर्जितं तद्वद्गम्भीरो मधुरश्च शब्दो यस्याः सा मेघौघरसितगम्भीरमधुरशब्दा तां ' जायणपरिमंडलं ' ति योजनं-योजनप्रमाणं परिमण्डलं-गुणप्रधानोऽयं निर्देशः पारिमण्डल्यं यस्याः सा योजनपरिमण्डला तां सुस्वरां-सुस्वराभिधानां घण्टामुल्लालयन् २-ताडयन् ताडयन्नित्यर्थः , महता २शब्देन उद्घोषयन्-उद्घोषणां कुर्वन् एवं वदतिआज्ञापयति भो सूर्याभो देवो गच्छति भो, सूर्याभो देवो जम्बूद्वीपे भारते वर्षम् आमलकल्पा नगरीमाम्रशालवने चैत्ये यथा ( तत्र ) श्रमणं भगवन्तं महावीरं वन्दितुं तत् -तस्मात् 'तुब्भेऽवि णमि' ति यूयमपि, ' णमि ' ति पूर्ववद्, देवाना प्रिया ! पूर्ववद् सर्वर्द्ध्या -परिवारादिकया सर्वद्युतया-यथाशक्तिविस्फारितेन समस्तेन शरीरतेजसा सर्वबलेन-समस्तेन हस्त्यादिसैन्येन सर्वसमुदायेन-स्वस्वाभियोग्यादिसमस्तपरिवारेण, सर्वादरेण-समस्तयावच्छक्तितुलनेन सर्वविभूत्या सर्वया अभ्यन्तरवैक्रियकरणादियाद्युत्तमादिसम्पदा सर्वविभूषया -यावच्छक्तिस्फारोदारश्रृङ्गारकरणेन ' सव्वसंभमेणं ' ति सर्वोत्कृष्टेन सम्भ्रमेण , सर्वोत्कृष्टसम्भ्रमो नामेह स्वनायकविषयबहुमानख्यापनपरा स्वनायकोपदिष्टकार्यसम्पादनाय यावच्छक्तित्वरितत्वरितता प्रवृत्तिः , ' सव्वपुप्फवत्थगंधमल्लालंकारेणं ' अत्र गन्धा-वासा माल्यानि-पुष्पदामानि अलङ्कारा-आभरणविशेषाः, ततः समाहारो द्वन्द्वस्ततः सर्वशब्देन सह विशेषणसमासः , ' सव्वदिव्वतुडियसद्दसनिनाएणं ' मिति-सर्वाणि च तानि दिव्यत्रुटितानि च सर्वदिव्यत्रुटितानि तेषां शब्दाः सर्वदिव्यत्रुटितशब्दास्तेषामेकत्र मीलनेन यः सङ्गतेन नितरां नादो-महान् घोषः 'सर्वत्रुटितदिव्यशब्दसंनिनादस्तेन, इह अल्पत्वेऽपि सर्वशब्दो दृष्ट , यथा 'अनेन सर्वं पीतं घृतमि' ति, तत आह-'महता इड्ढीए' इत्यादि महत्या यावच्छक्तितुलितया ऋद्ध्यापरिवारादिकया , एवं ' महता जुईए ' इत्याद्यपि भावनीयम् , तथा महतां-स्फूर्तिमतां वराणां-प्रधानानां त्रुटितानाम् आतोद्यानां यमकसमकम्-एककाले पटुभिः पुरुषै प्रवादितानां यो रवस्तेन , एतदेव विशेषेणाचष्टे-'संखपणवपडहभेरिझल्लरिखरमुहिहुडुक्कमुरवमुइंगदुंदुभिनिग्घोसणाइतरवेणं ' शङ्खः -प्रतीत , पणवो-भाण्डानां पटहः-प्रतीतः भेरी ढक्का झल्लरी-चर्मावनद्धा विस्तीर्णा वलयाकारा खरमुखी-काहला हुडुक्का महती महाप्रमाणो मर्दलो मुरजः स एव लघुर्मृदङ्गो दुन्दुभि भेर्याकारा सङ्कटमुखी एतेषां द्वन्द्वस्तेषां निर्घोषो-महान् ध्वानो नादितं च-घण्टायामिव वादनोत्तरकालभावी सततध्वनिस्तल्लक्षणो यो रवस्तेन, 'नियगपरिवारसद्धिं संपरिवुडा ' इति निजकः -आत्मीयः आत्मीयो यः परिवारस्तेन सार्द्धं,तत्र सहभावं परिवारेतिमन्तरेणापि स्यादिति तत आह-'संपरिवुडा ' सम्यक्-परिवारलीलया परिवृता समपरिवृता , 'अकालपरिहीणं चेव ' ति परिहानि -परिहीनं कालस्य परिहीनं कालविलम्ब इति भावः न विद्यते कालपरिहीनं यत्र प्रादुर्भवने तदकालपरिहीनं, क्रियाविशेषणमेतत् ,'अंतिए पाउब्भवह' अन्तिके-समीपे प्रादुर्भवत् , समागच्छतेति भावः ।

तए णं से पायत्ताणियाहिवती देवे सूरियाभेणं देवेणं एवं वुत्ते समाणे हट्ठतुट्ठ ०जाव हियए एवं देवा!तह त्ति आणाए विणएणं वयणं पडिसुणेति, पडिसुणित्ता जेणेव सूरियाभे विमाणे जेणेव सभा सुहम्मा जेणेव मेघोघरसितगंभीरमहुरसद्दा जोयणपरिमंडला सुस्सरा घंटा तेणेव उवागच्छति २ त्ता तं मेघोघरसितगंभीरमहुरसद्दं जोयणपरिमंडलं सुस्सरघंटं तिक्खुत्तो उल्लालेति।तए णं तीसे मेघोघरसितगंभीरमहुरसद्दाते जोयणपरिमंडलाते सुस्सराते घंटाए तिक्खुत्तो उल्ला-

लियाए समाणीए से सूरियाभे विमाणे पासायविमाणणि-क्खुडावडियसद्दघंटापडिसुयसयसहस्ससंकुले जाए यावि होत्था । तए णं ते सूरियाभविमाणवासिणं बहूणं वेमाणियाणं देवाण य देवीण य एगंतरइपसत्तनिच्चप्पमत्तविसयसुहमुच्छियाणं सुस्सरघंटारवविउलबोल ( तुरियचवल ) पडिबोहणे कए समाणे घोसणकोउहलादिन्नकन्नएगग्गचित्तउवउत्तमाणसाणं से पायत्ताणीयाहिवई देवे तंसि घंटारवंसि णिसंतपसंतंसि महया महया सद्देणं उग्घोसेमाणे उग्घोसेमाणे एवं वदासी-हंत सुणंतु भवंतो सूरियाभविमाणवासिणो बहवे वेमाणिया देवा य देवीओ य सूरियाभविमाणवइणो वयणं हियसुहत्थं आणवणियं भो !,सूरियाभे देवे गच्छइ णं भो ! सूरियाभे देवे जम्बूदीवं दीवं भारहं वासं आमलकप्पं नयरिं अंबसालवणं चेइयं समणं भगवं महावीरं अभिवंदए, तं तुब्भेऽवि देवाणुप्पिया ! सव्विड्ढीए अकालपरिहीणा चेव सूरियाभस्स देवस्स अंतियं पाउब्भवह । ( सू० १२ )

' तए णं से ' इत्यादि ' ०जाव पडिसुणित्ता ' इति, अत्र यावच्छब्दकरणात्- करयलपरिग्गहियं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं देवा ! तह त्ति आणाए विणएणं वयणं पडिसुणेइ ' त्ति द्रष्टव्यं, ' तिक्खुत्तो उल्लालेइ ' त्ति त्रिकृत्वः-त्रीन् वारान् उल्लालयति-ताडयति, ततो ' ण ' मिति वाक्यालङ्कारे तस्यां मेघौघरसितगम्भीरमधुरशब्दायां योजनपरिमण्डलायां सुस्वराभिधानायां घण्टायां त्रिकृत्वस्ताडितायां सत्यां यत् सूर्याभविमानं ( तत्र ) तत्प्रासादनिष्कुटेषु च आपतिता. शब्दा.—शब्दवर्गणापुद्गलास्तेभ्यः समुच्छलितानि यानि घण्टाप्रतिश्रुतशतसहस्राणि—घण्टाप्रतिशब्दलक्षाणि तैः संकुलमपि जातमभूत्, किमुक्तं भवति?-घण्टायां महता प्रयत्नेन ताडितायां ये विनिर्गताः शब्दपुद्गलास्तत्प्रतिघातवशतः सर्वासु दिक्षु विदिक्षु च दिव्यानुभावतः समुच्छलितैः प्रतिशब्दैः सकलमपि विमानमेकयोजनलक्षमानमपि बधिरितमजायत इति, एतेन द्वादशभ्यो योजनेभ्य समागतः शब्दः श्रोत्रग्राह्यो भवति, न परतः ततः कथमेकत्र ताडितायां घण्टायां सर्वत्र तच्छब्दश्रुतिरुपजायते ? इति यदोद्यते तदपाकृतमवसेयं, सर्वत्र दिव्यानुभावतः तथारूपप्रतिशब्दोच्छलने यथोक्तदोषासम्भवात् । ' तए णमि ' त्यादि , ततो ' णमि ' ति पूर्ववत् तेषां सूर्याभदेवविमानवासिनां बहूनां वैमानिकदेवानां देवीनां च एकान्तेन सर्वात्मना रतौ—रमणे प्रसक्ता एकान्तरतिप्रसक्ता अत एव नित्यं—सर्वकालं प्रमत्ता नित्यप्रमत्ता , कस्मादिति चेदत आह—' विसयसुहमुच्छिय त्ति ' विषयसुखेषु मूर्च्छिता—अध्युपपन्ना विषयसुखमूर्च्छिता यतोऽध्युपपन्नास्ततो नित्यप्रमत्ता , तत पदद्वयस्य पदद्वयमीलनेन विशेषणसमासः , तेषां सुस्वरघंटारवविउलबोलतुरियचवलपडिबोहणे ' इति सुस्वराभिधानायां घण्टाया रवस्य य सर्वासु दिक्षु विदिक्षु च प्रतिशब्दोच्छलनेन विपुलः—सकलविमानव्यापितया विस्तीर्णो बोल —को-लाहलस्तेन त्वरितं-शीघ्रं चपलम्—आकुलं प्रतिबोधने कृते सति ' घोसणकोउहलादिन्नकन्नएगग्गचित्तउवउत्तमाणसाणमिति ' कीदृग् नाम घोषणं भविष्यतीत्येवं घोषणे कुतूहलेन दत्तौ कर्णौ यैस्ते घोषणकुतूहलदत्तकर्णा , तथा एकाग्रं—घोषणाश्रवणैकविषयं चित्तं येषां ते एकाग्रचित्ता , एकाग्रचित्तत्वेऽपि कदाचिदनुपयोग स्यादत आह-उपयुक्तमानसा , ततः पूर्वपदेन विशेषणसमासस्तेषां. पदात्यनीकाधिपतिर्देवस्तस्मिन् घण्टारवे 'निसंतपसंतंसि' ति नितरां शान्तौ निशान्त-अत्यन्तमन्दीभूतस्ततः प्रकर्षेण सर्वात्मना शान्त प्रशान्त , ततश्शिल्पप्रक्ढ इत्यादावित्र विशेषणसमासस्तस्मिन् महता २ शब्देन उद्घोषयन्नेवमवादीत्-' हन्त सुणंतु ' इत्यादि हर्षे , उक्तं च—' हन्त हर्षेऽनुकम्पायामि' त्यादि, हर्षश्च स्वामिनाऽऽदिष्टत्वात् श्रीमन्महावीरपादवन्दनार्थं च प्रस्थानसमारम्भात् , शृण्वन्तु भवन्तो बहवः सूर्याभविमानवासिनो वैमानिकदेवा देव्यश्च, सूर्याभविमानपतेर्वचनं हितसुखार्थं हितार्थं सुखार्थं चेत्यर्थः , तत्र हितं जन्मान्तरेऽपि कल्याणवहं तथाविधकुशलं, सुखं तस्मिन् भव निरुपद्रवता, आज्ञापयति भो देवानां प्रियाः ! सूर्याभो देवो यथा गच्छति भो ! सूर्याभो देवो ' जम्बूद्वीपं द्वीपमि ' त्यादि तदेव यावदन्तिके प्रादुर्भवत ।

तए णं ते सूरियाभविमाणवासिणो बहवे वेमाणिया देवा य देवीओ य पायत्ताणियाहिवइस्स देवस्स अंतिए एयमट्ठं सोच्चा णिसम्म हट्ठतुट्ठ०जाव हियया अप्पेगइया वंदणवत्तियाए अप्पेगइया पूयणवत्तियाए अप्पेगइया सक्कारवत्तियाए एवं संमाणवत्तियाए कोउहलवत्तियाए अप्पे० असुयाइं सुणिस्सामो सुयाइं अट्ठाइं हेऊइं पसिणाइं कारणाइं वागरणाइं पुच्छिस्सामो, अप्पेगइया सूरियाभस्स देवस्स वयणमणुयत्तमाणा अप्पेगतिया अन्नमन्नमणुयत्तमाणा अप्पेगइया जिणभत्तिरागेणं अप्पेगइया धम्मो त्ति अप्पेगइया जीयमेयं ति कट्टु सव्विड्ढीए ०जाव अकालपरिहीणा चेव सूरियाभस्स देवस्स अंतियं पाउब्भवंति । ( सू० १३ ) तए णं से सूरियाभे देवे ते सूरियाभविमाणवासिणो बहवे वेमाणिया देवा य देवीओ य अकालपरिहीणा चेव अंतियं पाउब्भवमाणे पासति पासित्ता हट्ठतुट्ठ०जाव हियए आभिओगियं देवं सद्दावेति आभिओ० सद्दावित्ता एवं वयासी-खिप्पामेव भो देवाणुप्पिया ! अणेगखंभसयसंनिविट्ठं लीलट्ठियसालभंजियागं ईहामियउसभतुरगनरमगरविहगवालगकिंनररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्तं खंभुग्गयवरवइरवेइयापरिगयाभिरामं विज्जाहरजमलजुयलजंतजुत्तं पिव अच्चीसहस्समालिणीयं रूवगसहस्सकलियं भिसमाणं चक्खुल्लोयणलेसं सुहफासं सस्सिरीयरूवं घंटावलिचलियमहुरमणहरसरं सुहं कंतं दरिसणि-

ज्ञं णिउणोचियमिसिमिसिंतमणिरयणघंटियाजालपरिक्खित्तं जोयणमयसहस्सवित्थिएणं दिव्वं गमणसज्जं सिग्घगमणं णाम दिव्वं जाणं ( जाणविमाणं ) विउव्वाहि, विउव्वित्ता खिप्पामेव एयमाणत्तियं पच्चप्पिणाहि । ( सू० १४ )

'तए णं ते' इत्यादि. ततस्ते सूर्याभविमानवासिनो वहवो वैमानिका देवा देव्यश्च पदात्यनीकाधिपतेर्देवस्य समीपे एतम्—अनन्तरोक्तमर्थं श्रुत्वा 'णिसम्म हट्ठ तुट्ठ ०जाव हियया' इति यावत्करणात्-'हट्ठतुट्ठचित्तमाणंदिया पीइमणा परमसोमणस्सिया हरिसवसविसप्पमाणहियया' इति परिग्रह, 'अप्पेगइया वदणवत्तियाए' इति अपि सम्भावनायामेकका.--केचन वन्दनप्रत्ययं वन्दनम्—अभिवादनं प्रशस्तकायवाग्मनःप्रवृत्तिरूपं तत्प्रत्यय तन्मया - भगवत. श्रीमन्महावीरस्य कर्त्तव्यमित्येवंनिमित्तम्, अप्येकका. पूजनप्रत्यय पूजन—गन्धमाल्यादिभि समभ्यर्चनं अप्येकका सत्कारप्रत्ययं सत्कार --स्तुत्यादिगुणोन्नतिकरणम् अप्येकका सन्मानो--मानस प्रीतिविशेष., अप्येकका कुतूहलजनभक्तिरागेण--कुतूहलेन--कौतुकेन कीदृशो भगवान् सर्वज्ञ सर्वदर्शी श्रीमन्महावीर इत्येवंरूपेण यो जिन—भगवति वर्द्धमानस्वामिनि भक्तिरागो-भक्तिपूर्वकोऽनुरागस्तेन अप्येके सूर्याभस्य वचनम्—आज्ञामनुवर्त्तमाना अप्येकका अश्रुतानि—पूर्वमनाकर्णितानि स्वर्गमोक्षप्रसाधकानि वचांसि श्रोष्याम इति वुद्धया अप्येकका श्रुतानि--पूर्वमाकर्णितानि यानि शङ्कितानि जातानि तानि इदानीं निःशङ्कितानि करिष्याम इति वुद्धया अप्येकका जीतमेतत्—कल्प एष इति कृत्वा, 'सव्विड्ढीए' इत्यादि प्राग्वत् ।

तए णं से आभिओगिए देवे सूरियाभेणं देवेण एवं वुत्ते समाणे हट्ठे ०जाव हियए करयलपरिग्गहियं ०जाव पडिसुणेइ ०जाव पडिसुणेत्ता उत्तरपुरच्छिमं दिसिभागं अवक्कमंति अवक्कमित्ता वेउव्वियसमुग्घाएणं समोहणइ २ णित्ता संखेज्जाइं जोयणाइं ०जाव अहाबायरे पोग्गलेसमो० २ त्ता अहासुहुमे पोग्गले परियाएइ २ त्ता दोच्चं पि वेउव्वियसमुग्घाएणं समोहणेइ २त्ता अणेगखंभसयसन्निविट्ठं ०जाव दिव्वं जाणविमाणं विउव्विउं पवत्ते याऽवि होत्था । तए णं से आभिओगिए देवे तस्स दिव्वस्स जाणविमाणस्स तिदिसिं तओ तिसोवाणपडिरूवए विउव्वति, तं जहा—पुरच्छिमेणं दाहिणेणं उत्तरेणं, तेसिं तिसोवाणपडिरूवगाणं इमे एयारूवे वण्णावासे पण्णत्ते, तं जहा—वइरामया णिम्मा रिट्ठामया पतिट्ठाणा वेरुलियामया खंभा सुवण्णरुप्पमया फलगा लोहितक्खमइयाओ सूइओ वइरामया संधी णाणामणिमया अवलंबणा अवलंबणबाहाओ य पासादीया ०जाव पडिरूवा । तेसि णं तिसोवाणपडिरूवगाणं पुरओ तोरणे विउव्वति, तोरणा णाणामणिमएसु थंभेसु उवनिविट्ठसंनिविट्ठविविहमुत्तंतरोवचिया विविहतारारूवोवचिया [ईहामियउसभतुरगणरमगरविहगवालगकिंनररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्ता खंभुग्गय [वर] वइरवेइयापरिगताभिरामा विज्जाहरजमलजुयलजंतजुत्ता विव अच्चीसहस्समालिणीया रूवगसहस्सकलिया भिसमाणा भिब्भिसमाणा चक्खुल्लोयणलेसा सुहफासा सस्सिरीयरूवा पासाइया ] ०जाव पडिरूवा ।

'तए णमि' त्यादि 'अणेगखंभसयसन्निविट्ठ' मिति अनेकेषु स्तम्भशतेषु संनिविष्ट 'लीलट्ठियसालिभंजियाग' मिति लीलया स्थिता लीलास्थिता, अनेन नाम्ना पुत्तलिकाना सौभाग्यमावेदयति, लीलास्थिता. शालभञ्जिका. पुत्तलिका यत्र तत्तथा 'ईहामियउसभतुरगनरमगरविहगवालगकुञ्जररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्तमि' ति ईहामृगा—वृका व्याला -स्वापदभुजङ्गा ईहामृगऋषभतुरगनरमगरविहगव्यालकिन्नररुरुसरभचमरकुञ्जरवनलतापद्मलतानां भक्त्या—विच्छित्त्या चित्रम्-आलेख्यो यत्र तत्तथा, तथा स्तम्भोद्गतया-स्तम्भोपरिवर्त्तिन्या वज्ररत्नमय्या वेदिकया परिगतं सत् यदभिराम तत्स्तम्भोद्गतवज्रवेदिकापरिगताभिराम, 'विज्जाहरजमलजुगलजतजुत्त पिव' इति विद्याधरयोर्यद् यमलयुगलं-समश्रेणीक द्वन्द्वं विद्याधरयमलयुगल तच्च तद् यन्त्र च सञ्चरिष्णुपुरुषप्रतिमाद्वयरूपं तेन युक्त तदेव तथा, अर्चिषा-किरणाना सहस्रैर्मालिनीयं-परिवारणीयम् अर्चि सहस्रमालिनीय, तथा रूपकसहस्रकलित, 'भिसमाण ति' दीप्यमानं 'भिब्भिसमानं' अतिशयेन देदीप्यमानं, 'चक्खुल्लोयणलेस' ति चक्षु -कर्तृलोकने लिसतीव—दर्शनीयत्वातिशयात् श्लिष्यतीव यत्र तत्तथा, 'सुहफास ति' शुभ -कोमल स्पर्शो यस्य तत्तथा, सश्रीकानि-सशोभाकानि रूपाणि-रूपकाणि यत्र तत् सश्रीकरूप . 'घण्टावलिचलियमहुरमणहरसर' मिति घण्टावले —घण्टापङ्क्तेर्वातवशेन चालिताया -कम्पिताया मधुर.—श्रोत्रप्रियो मनोहरो—मनोनिर्वृतिकर स्वरो यत्र तत्तथा, चलितशब्दस्य विशेष्यात्परनिपात प्राकृतत्वात्, 'शुभं' यथोदितवस्तुलक्षणोपेतत्वात्, कान्तं—कमनीयम् अत एव दर्शनीय, तथा निउणोचियमिसिमिसिंतमणि—रयणघंटियाजालपरिक्खित्त ' मिति निपुणशिल्पिसुचितानि खचितानि 'मिसिमिसिंत' त्ति देदीप्यमानानि मणिरत्नानि यत्र तत्तथा तेन, कथंभूतेन ? घण्टिकाजालेन—क्षुद्रघण्टिकासमूहेन परि —सामस्त्येन क्षित—व्याप्त यत्तत्तथा, योजनशतसहस्रविस्तीर्णं—योजनलक्षविस्तारं दिव्य—प्रधान गमनसज्जं—गमनप्रवणं शीघ्रगमननामधेयं 'जाणविमाण' यानरूप—वाहनरूप विमानं यानविमान, शेषं प्राग्वत् । 'तस्स ण ' मित्यादि, तस्स णमिति पूर्ववत् दिव्यस्य यानविमानस्य 'तिदिसिं ' इति तिसृषु दिक्षु समाहृतास्त्रिदिक् तस्मिन् त्रिदिशि, तत्र 'तिसोवाणपडिरूवए ' इति त्रीणि एकैकस्यां दिशि एकैकस्य भावात ति—

सोपानप्रतिरूपकाणि प्रति-विशिष्टं रूपं येषां तानि प्रतिरूपकाणि त्रयाणां सोपानानां समाहारस्त्रिसोपानं त्रिसोपानानि च तानि प्रतिरूपकाणि चेति विशेषणसमासः, विशेषणस्यात्र परनिपातः प्राकृतत्वात् 'तेसि णमि' त्यादि, तेषां च त्रिसोपानप्रतिरूपकाणामयमेतद्रूपो—वक्ष्यमाणस्वरूपो वर्णावासो—वर्णकनिवेशः प्रज्ञप्तः, तद्यथा-वज्रमया—वज्ररत्नमया 'नेमी' नेमिभूमिका तत्र ऊर्द्ध्वं निर्गच्छन्तः प्रदेशाः रिष्टरत्नमयानि प्रतिष्ठानानि त्रिसोपानानि त्रिसोपानमूलप्रदेशाः वैडूर्यमयाः स्तम्भाः सुवर्णरूप्यमयानि फलकानि-त्रिसोपानाङ्गभूतानि, लोहिताक्षमय्यः सूचयः-फलकद्वयसम्बन्धविघटनाभावहेतुपादुकास्थानीया वज्रमया—वज्ररत्नपूरिताः सन्धयः—फलकद्वयापान्तरालप्रदेशाः नानामणिमयानि अवलम्ब्यन्ते इति अवलम्बनानि-अवतरतामुत्तरतां चालम्बनहेतुभूता अवलम्बनबाहातो विनिर्गताः क्वचिदवयवाः, 'अवलम्बणबाहाओ य' त्ति अवलम्बनबाहाश्च नानामणिमय्यः, अवलम्बनबाहा नाम उभयोः पार्श्वयोरवलम्बनाश्रयभूता भित्तयः, 'पासाईयाओ' इत्यादि पदचतुष्टयं प्राग्वत् । 'तेसि ण' मित्यादि, तेषां 'णमि' ति वाक्यालङ्कारे त्रिसोपानप्रतिरूपकाणां पुरतः प्रत्येकं तोरणं प्रज्ञप्तं, तेषां च तोरणानामयमेतद्रूपो वर्णावासो—वर्णकनिवेशः प्रज्ञप्तः, तद्यथा-तोरणा नानामणिमया इत्यादि, क्वचिदेवं पाठः—'तेसि णं तिसोवाणपडिरूवगाणं पुरतो तोरणे विउव्वइ तोरणा नाणामणिमया' इत्यादि, मणयः—चन्द्रकान्ताद्याः, विविधमणिमयानि तोरणानि नानामणिमयेषु स्तम्भेषु उपनिविष्टानि—सामीप्येन स्थितानि, तानि च कदाचिच्चलानि, अथवा-अपदपतितानि वाऽऽशङ्क्येरन् तत आह-सम्यक्-निश्चलतया अपदपरिहारेण च निविष्टानि, ततो विशेषणसमासः, उपनिविष्टसन्निविष्टानि, 'विविहमुत्तंतरा (रूवो) वचियाइं' इति विविधा--विविधविच्छित्तिकलिता मुक्ता-मुक्ताफलानि 'अन्तरे' ति अन्तराशब्दोऽगृहीतवीप्सोऽपि सामर्थ्याद्वीप्सां गमयति, अन्तरा २ रूपोपचितानि यावता यत्र तानि तथा, 'विविहतारारूवोवचियाइं' विविधैस्तारारूपैः-तारिकारूपैरुपचितानि, तोरणेषु हि शोभार्थं तारिका निबध्यन्ते इति प्रतीतं लोकेऽपीति विविधतारारूपोपचितानि 'जाव पडिरूवा' इति यावत्करणात्-'ईहामिगउसभतुरगनरमगरविहगवालगकिन्नररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्ता खंभुग्गयवइरवेइयापरिगयाभिरामा विज्जाहरजमलजुगलजंतजुत्ताविव' एषां नामस्तम्भद्वयसन्निविष्टानि तोरणानि व्यवस्थितानि यथा विद्याधरयमलयुगलयन्त्रयुक्तानीव प्रतिभासन्ते इति, 'अच्चीसहस्समालणीया रूवगसहस्सकलिया भिसमाणा भिब्भिसमाणा चक्खुल्लोयणलेसा सुहफासा सस्सिरीयरूवा पासाईया दरिसणिज्जा अभिरूवा' इति परिग्रहः, फलितस्त्वाघाणस्तिमितमपि दृश्यते ।

तेसि णं तोरणाणं उप्पिं अट्ठट्ठमंगलगा पण्णत्ता, तंजहा-सोत्थियसिरिवच्छणंदियावत्तवद्धमाणगभद्दासणकलसमच्छदप्पणा (०जाव पडिरूवा) । तेसिं च णं तोरणाणं उप्पिं बहवे किण्हचामरज्झए ०जाव सुक्किल्लचामरज्झए अच्छे सण्हे रुप्पपट्टे वइरामयदंडे जलयामलगंधिए सुरम्मे पासादीए दरिसणिज्जे अभिरूवे पडिरूवे विउव्वति । तेसि णं तोरणाणं उप्पिं बहवे छत्तातिच्छत्ते घंटाजुगले पडागाइपडागे उप्पलहत्थए कुमुदणलिणसुभगसोगंधियपोंडरीयमहापोंडरीयसतपत्तसहस्सपत्तहत्थए सव्वरयणामए अच्छे ०जाव पडिरूवे विउव्वति । तए णं से आभिओगिए देवे तस्स दिव्वस्स जाणविमाणस्स अंतो बहुसमरमणिज्जं भूमिभागं विउव्वति ।

'तेसि णं तोरणाणं उप्पिमि' त्यादि सुगमं, नवरं 'जाव पडिरूवा' इति यावच्छब्दकरणात्-'घट्ठा मट्ठा नीरया निम्मला निप्पंका निक्कंकडच्छाया समिरि(स्सिरी) या सउज्जोया पासाइया दरिसणिज्जा अभिरूवा' इति द्रष्टव्यम् । 'तेसि णमि' त्यादि, तेषां तोरणानामुपरि बहवः कृष्णचामरयुक्ता ध्वजाः कृष्णचामरध्वजाः, एवं बहवो नीलचामरध्वजा, लोहितचामरध्वजाः, हरितचामरध्वजा, शुक्लचामरध्वजा, कथम्भूता एते सर्वेऽपीत्यत आह-अच्छा-आकाशस्फटिकवदतिनिर्मला श्लक्ष्णा-श्लक्ष्णपुद्गलस्कन्धनिर्मापिताः 'रुप्पपट्टा' इति रूप्यो-रूप्यमयो वज्रमयस्य दण्डस्योपरि पट्टो येषां ते रूप्यपट्टा 'वइरदंडा' इति वज्रो-वज्ररत्नमयो दण्डो रूप्यपट्टमध्यवर्त्ती येषां ते वज्रदण्डा, तथा जलजानामिव-जलजकुसुमानां पद्मादीनामिवामलो न तु कुद्रव्यगन्धसम्मिश्रो यो गन्धः स जलजामलगन्धः स विद्यते येषां ते जलजामलगन्धिका, अत एव सुरम्याः 'पासादीया' इत्यादिविशेषणचतुष्टयं प्राग्वत् । 'तेसि ण' मित्यादि, तेषां तोरणानामुपरि बहूनि छत्रातिच्छत्राणि-छत्रात्-लोकप्रसिद्धात् एकसङ्ख्याकात् अतिशायीनि छत्राणि उपर्यधोभावेन द्विसंख्याकानि त्रिसंख्याकानि वा छत्रातिच्छत्राणि, बाह्यपताकाभ्यो लोकप्रसिद्धाभ्योऽतिशायिन्यो दीर्घत्वेन विस्तारेण च पताका पताकातिपताकाः, बहूनि घण्टायुगलानि, बहूनि चामरयुगलानि, बहव उत्पलहस्ता —उत्पलाख्यजलजकुसुमसमूहविशेषाः, एवं बहवः पद्महस्तकाः नलिनहस्तकाः सुभगहस्तकाः सौगन्धिकहस्तकाः शतपत्रहस्तकाः सहस्रपत्रहस्तकाः, पद्मादिविभागव्याख्यानं प्राग्वत्, एते च छत्रातिच्छत्रादयः सर्वेऽपि रत्नामया अच्छा—आकाशस्फटिकवदतिनिर्मला यावत्करणात्-'सण्हा लण्हा घट्ठा मट्ठा नीरया निम्मला निप्पंका निक्कंकडच्छाया सप्पभा समिरिया सउज्जोया पासाईया दरिसणिज्जा अभिरूवा' इति परिग्रहः । 'तस्स णमि' त्यादि, 'तस्स ण भिति पूर्ववत् दिव्यस्य यानविमानस्य अन्तः—मध्ये बहुसमः सन् रमणीयो बहुरमणीयो भूमिभागः प्रज्ञप्तः ।

किंविशिष्ट ? इत्याह—

से जहाणामए आलिंगपुक्खरे ति वा मुइंगपुक्खरे इ वा सरतले इ वा करतले इ वा चंदमंडले इ वा सूरमंडले इ वा आयंसमंडले इ वा उरब्भचम्मे इ वा (वसहचम्मे इ वा) वराहचम्मे इ वा सीहचम्मे इ वा

वग्घचम्मे इ वा मिगचम्मे इ वा ( छगलचम्मे इ वा) दीवियचम्मे इ वा अणेगसंकुकीलगसहस्सवितए णाणाविहपंचवण्णेहिं मणीहिं उवसोभिते आवडपच्चावडसेढिपसेढिसोत्थिय—सोवत्थिय—पूसमाणग—वद्धमाणग—मच्छंडगमगरंडगजारामाराफुल्लावलिवपउमपत्तसागरतरंगवसंतलयपउमलयभत्तिचित्तेहिं सच्छाएहिं सप्पभेहिं समरीएहिं सउज्जोएहिं णाणाविहपंचवण्णेहिं मणीहिं उवसोभिएहिं तं जहा-किण्हेहिं णीलेहिं लोहिएहिं हालिद्देहिं सुक्किल्लेहिं, तत्थ णं जे ते किण्हा मणी तेसि णं मणीणं इमे एतारूवे वण्णावासे पण्णत्ते, से जहानामए जीमूतए इ वा अंजणे इ वा खंजणे इ वा कज्जले इ वा गवले इ वा गवलगुलिया इ वा भमरे इ वा भमरावलिया इ वा भमरपतंगसारे ति वा जंबूफले ति वा अद्दारिट्ठे इ वा परहुते इ वा गए इ वा गयकलभे इ वा किण्हसप्पे इ वा किण्हकेसरे इ वा आगासथिग्गले इ वा किण्हासोए इ वा किण्हकणवीरे इ वा किण्हबंधुजीवे इ वा, भवे एयारूवे सिया ?, णो इणट्ठे समट्ठे, ( ओवम्मं समणाउसो ! ) ते णं किण्हा मणी इत्तो इट्ठतराए चेव कंततराए चेव मणामतराए चेव मणुण्णतराए चेव वण्णेणं पण्णत्ता। तत्थ णं जे ते नीला मणी तेसि णं मणीणं इमे एयारूवे वण्णावासे पण्णत्ते, से जहानामए भिंगे इ वा भिंगपत्ते इ वा सुए इ वा सुयपिच्छे इ वा चासे इ वा चासपिच्छे इ वा णीली इ वा णीलीभेदे इ वा णीलीगुलिया इ वा सामा इ वा उच्चन्ते इ वा वणराती इ वा हलधरवसणे इ वा मोरग्गीवा इ वा अयसिकुसुमे इ वा वाणकुसुमे इ वा अंजणकेसिकुसुमे इ वा नीलुप्पले इ वा णीलासोगे इ वा णीलबंधुजीवे इ वा णीलकणवीरे इ वा, भवेयारूवे सिया ?, णो इणट्ठे समट्ठे, ते णं णीला मणी एत्तो इट्ठतराए चेव ०जाव वण्णेणं पण्णत्ता। तत्थ णं जे ते लोहियगा मणी तेसि णं मणीणं इमेयारूवे वण्णावासे पण्णत्ते, से जहाणामए उरब्भरुहिरे इ वा ससरुहिरे इ वा नररुहिरे इ वा वराहरुहिरे इ वा ( महिसरुहिरे इ वा ) बालिंदगोवे इ वा बालदिवाकरे इ वा संझब्भरागे इ वा गुंजद्धरागे इ वा जासुअणकुसुमे इ वा किंसुयकुसुमे इ वा पालियायकुसुमे इ वा जाइहिंगुलए ति वा सिलप्पवाले ति वा पवालअंकुरे इ वा लोहियक्खमणी इ वा लक्खारसगे ति वा किमिरागकंबले ति वा चीणपिट्ठरासी ति वा रत्तुप्पले इ वा रत्तासोगे ति वा रत्तकणवीरे ति वा रत्तबंधुजीवे ति वा, भवेयारूवे सिया ?, णो इणट्ठे समट्ठे, ते णं लोहिया मणी इत्तो इट्ठतराए चेव ०जाव वण्णेणं पण्णत्ता। तत्थ णं जे ते हालिद्दा मणी तेसि णं मणीणं इमेयारूवे वण्णावासे पण्णत्ते-से जहाणामए चंपे ति वा चंपछल्ली ति वा ( चंपगभेए इ वा ) हलिद्दा इ वा हलिद्दागुलिया ति वा हरियालियाइ वा हरियालभेदे ति वा हरियालगुलिया ति वा चिउरे इ वा चिउरंगारते ति वा वरकणगे इ वा वरकणगनिघसे इ वा ( सुवण्णसिप्पाए ति वा ) वरपुरिसवसणे ति वा अल्लकीकुसुमे ति वा चंपाकुसुमे इ वा कुहंडियाकुसुमे इ वा तडवडाकुसुमे इ वा घोसेडियाकुसुमे इ वा सुवण्णकुसुमे इ वा सुहिरण्णकुसुमे ति वा कोरंटवरमल्लदामे ति वा बीयो ( यकुसुमे ) इ वा पीयासोगे ति वा पीयकणवीरे ति वा पीयबंधुजीवे ति वा, भवेयारूवे सिया ?, णो इणट्ठे समट्ठे, ते णं हालिद्दा मणी एत्तो इट्ठतराए चेव ०जाव वण्णेणं पण्णत्ता। तत्थ णं जे ते सुक्किल्ला मणी तेसि णं मणीणं इमेयारूवे वण्णावासे पण्णत्ते। से जहानामए अंके ति वा संखे ति वा चंदे ति वा कुंदे इ वा दंते इ वा(कुमुदोदकदयरयदहिघणगोक्खीरपुर) हंसावली इ वा कोंचावली ति वा हारावली ति वा चंदावलीति वा सारतियबलाहए ति वा धंतधोयरुप्पपट्टे इ वा सालिपिट्ठरासी ति वा कुंदपुप्फरासी ति वा कुमुदरासी ति वा सुक्कच्छिवाडी ति वा पिहुणमिंजिया ति वा भिसे ति मुणालिया ति वा गयदंते ति वा लवंगदलए ति वा पोंडरियदलए ति वा सेयासोगे ति वा सेयकणवीरे ति वा सेयबन्धुजीवे ति वा, भवेयारूवे सिया ?, णो इणट्ठे समट्ठे, ते णं सुक्किल्ला मणी एत्तो इट्ठतराए चेव०जाव वन्नेणं पण्णत्ता।

'से जहा नाम ए' तत्-सकललोकप्रसिद्धं 'यथे'ति दृष्टान्तोपदर्शने 'नामे' ति शिष्यामन्त्रणे, 'ए' इति वाक्यालङ्कारे, 'आलिंगपुक्खरं इ वे' ति आलिङ्गो—मुरजनामा वाद्यविशेषः, तस्य पुष्करं—चर्मपुटं तत्किलात्यन्तसममिति तेनोपमा क्रियते, इति—शब्दाः सर्वेऽपि स्वस्वोपमाभूतवस्तुपरिसमाप्तिद्योतकाः, वाशब्दाः समुच्चये मृदङ्गो लोकप्रतीतो मर्दलस्तस्य पुष्करं मृदङ्गपुष्करं परिपूर्ण—पानीयेन भृतं तडाकं सरस्तस्य तलम्—उपरितनो भागः सरस्तलं, करतलं प्रतीतं, चन्द्रमण्डलं सूर्यमण्डलं च यद्यपि तत्त्ववृत्त्या उत्तानीकृतार्द्धकपित्थाकारं पीठप्रासादापेक्षया वृत्तालेखमिति तद्गतो दृश्यमानो भागो न समतलस्तथापि प्रतिभासते समतल इति तदुपादानम्, आदर्शमण्डलं सुप्रसिद्धम्, 'उरब्भचम्मे इ वे' त्यादि, अत्र सर्वत्रापि 'अणेगसंकुकीलगसहस्सवितते' इति विशेषणयोगः, उरभ्र-ऊरणः, वृषभ-

गजाः सिंहव्याघ्रच्छगला प्रतीता द्वीपी—चित्रकः, एतेषां प्रत्येकं चर्म अनेकैः शङ्कुप्रमाणैः कीलकसहस्रैः. महद्भिर्हि कीलकैस्ताडितं प्रायो मध्ये क्षामं भवति तथारूपताडासम्भवात् अतः शङ्कुग्रहणं, विततं—वितताकृतं ताडितमिति भावः, यथाऽत्यन्तं बहुसमं भवति तथा तस्यापि यानविमानस्यान्तर्बहुसमो भूमिभागः पुनः कथम्भूत इत्याह—‘णाणाविहपंचवन्नेहिं मणीहिं उवसोभिते’ नानाविधा—जातिभेदान्नानाप्रकारा ये पञ्चवर्णा मणयस्तैरुपशोभितः कथम्भूतैरित्याह—‘आवड’ इत्यादि, आवर्त्तादीनि मणीनां लक्षणानि, तत्रावर्त्तः प्रतीतः एकस्यावर्त्तस्य प्रत्यभिमुख आवर्त्तः प्रत्यावर्त्तः श्रेणिः—तथाविधबिन्दुजातपङ्क्तिस्तस्याश्च श्रेण्या च निर्गता अन्या श्रेणिः सा प्रश्रेणिः स्वस्तिकः प्रतीतः सौवस्तिकपुष्पमाणवौ लक्षणविशेषौ लोकात्प्रत्येतव्यौ वर्द्धमानकं—शरावसम्पुटं मत्स्याण्डकमकराण्डके प्रतीते ‘जारमारेति’ लक्षणविशेषौ सम्यग्मणिलक्षणवेदिनो लोकाद्वेदितव्यौ पुष्पावलिपद्मपत्रसागरतरङ्गवासन्तीलतापद्मलता सुप्रतीता तासां भक्त्या-विच्छित्त्या चित्रम्-आलेखो येषु ते आवर्त्तप्रत्यावर्त्तश्रेणिप्रश्रेणिस्वस्तिकसौवस्तिकपुष्पमाणववर्द्धमानकमत्स्याण्डकमकराण्डकजारमारपुष्पावलिपद्मपत्रसागरतरङ्गवासन्तीलतापद्मलताभक्तिचित्रास्तैः, किमुक्तं भवति?-आवर्त्तादिलक्षणोपेतैः, तथा सच्छायैः सती शोभना छाया-निर्मलत्वरूपा येषां ते सच्छायाः तथा सती-शोभना प्रभा-कान्तिर्येषां ते सत्प्रभास्तैः, ‘समरीइएहिं’ इति समरीचिकैः-बहिर्विनिर्गतकिरणजालसहितैः सोद्योतैः-बहिर्व्यवस्थितप्रत्यासन्नवस्तुस्तोमप्रकाशकरोद्योतसहितैः एवम्भूतैर्नानाजातीयैः पञ्चवर्णैर्मणिभिरुपशोभितः, तानेव पञ्चवर्णानाह—‘ते जहा-किण्हेहिं’ इत्यादि सुगमं ‘तत्थ णमि’त्यादि ‘तत्र’ तेषां पञ्चवर्णानां मणीनां मध्ये ‘णमि’ति वाक्यालङ्कारे, ये ते कृष्णा मणयः ते कृष्णमणय इत्येव सिद्धे ये इति वचनं भाषाक्रमार्थं, तेषां ‘णमि’ति पूर्ववत्, अयम्—अनन्तरमुद्दिश्यमान एतद्रूपः-अनन्तरमेव वक्ष्यमाणस्वरूपो वर्णावासो-वर्णकनिवेशः प्रज्ञप्तः तद्यथा—‘से जहानामए’ इत्यादि स यथानाम ‘जीमूत’ इति जीमूतो—बलाहकः, स चेह प्रावृट्प्रारम्भसमये जलभृतो वेदितव्यः, तस्यैव प्रायोऽतिकालिमसम्भवात् इतिशब्दः उपमाभूतवस्तुनामपरिसमाप्तिद्योतकः, वाशब्द उपमानान्तरापेक्षया समुच्चये एवं सर्वत्र. अञ्जनं—सौवीराञ्जनं रत्नविशेषो वा खञ्जनं—दीपमल्लिकामलः, कज्जलं—दीपशिखापतितं, मषी—तदेव कज्जलं ताम्रभाजनादिषु सामग्रीविशेषेण घोलितं मषीगुलिका—घोलितकज्जलगुटिका, क्वचित् ‘मसी इति वा मसीगुलिया’ इति न दृश्यते, ‘गवल’ माहिषं शृङ्गं तदपि चोपरितनत्वग्भागापसारणे द्रष्टव्यं, तत्रैव विशिष्टस्य कालिम्नः सम्भवात्, तथा तस्यैव माहिषशृङ्गस्योत्कर्त्तनसारनिर्वर्त्तिता गुटिका गवलगुटिका भ्रमरः—प्रतीतः भ्रमरावली— भ्रमरपङ्क्तिः भ्रमरपतङ्गसारः—भ्रमरपक्षान्तर्गतो विशिष्टकालिमोपचितप्रदेशः जम्बूफलं प्रतीतं, आर्द्रारिष्टः—कोमलः काकः, परपुष्टः—कोकिलः, गजो गजकलभश्च प्रतीतः, कृष्णसर्पः—कृष्णवर्णसर्पजातिविशेषः, कृष्णकेसरः—कृष्णबकुलः, ‘आकाशथिग्गलं’ शरदि मेघविनिर्मुक्तमाकाशखण्डं, तद्धि कृष्णमतीव प्रतिभातीति तदुपादानं, कृष्णाशोककृष्णकणवीरकृष्णबन्धुजीवा अशोककणवीरबन्धुजीववृक्षभेदाः, अशोकादयो हि पञ्चवर्णा भवन्ति ततः शेषवर्णव्युदासार्थं कृष्णग्रहणं, एतावत्युक्ते त्वरावानिव शिष्यः पृच्छति—‘भवे एयारूवे’ इति भवेत् मणीनां कृष्णो वर्णः ‘एतद्रूपः’ जीमूतादिरूपः?, सूरिराह—‘नायमर्थः समर्थः’ नायमर्थ उपपन्नो, यदुत-एवम्भूतः कृष्णो वर्णो मणीनामिति, यद्येवं तर्हि किमर्थं जीमूतादीनां दृष्टान्तत्वेनोपादानमत आह—औपम्यम् -उपमामात्रमेतत् उदितं हे श्रमण! आयुष्मन्!, यावता पुनस्ते कृष्णा मणय इतो जीमूतादेरिष्टतरका एव—कृष्णेन वर्णेन अभीप्सिततरका एव, तत्र किञ्चिदकान्तमपि कस्यचिदिष्टतमं भवति ततोऽकान्ततान्यवच्छित्त्यर्थमाह—कान्ततरका एव—अतिस्निग्धमनोहारिकालिमोपचिततया जीमूतादेः कमनीयतरकाः, अत एव मनोज्ञतरका एव—मनसा ज्ञायते—अनुकूलतया स्वप्रवृत्तिविषयीक्रियते इति मनोज्ञः मनोऽनुकूलः ततः प्रकर्षविवक्षायां तरप्प्रत्ययः, तत्र मनोज्ञतरमपि किञ्चिन्मध्यमं भवेत्, ततः सर्वोत्कर्षप्रतिपादनार्थमाह-‘मनआपतरका एव’ द्रष्टृणां मनांसि आप्नुवन्ति—आत्मवशतां नयन्तीति मनआपास्ततः प्रकर्षविवक्षायां तरप्प्रत्ययः, प्राकृतत्वाच्च पकारस्य मकारः मणामतरा इति भवति । तथा ‘तत्थ णमि’त्यादि, तत्र—तेषां मणीनां मध्ये ये ते नीला मणयस्तेषामयमेतद्रूपो वर्णावासो वर्णकनिवेशः प्रज्ञप्तः, तद्यथा—‘से जहानामए’ इत्यादि स यथानाम भृङ्गः—कीटविशेषः पक्ष्मलः ‘भृङ्गपत्रं’ तस्यैव भृङ्गाभिधानस्य कीटविशेषस्य पक्ष्म, शुकः—कीरः, शुकपिच्छं—शुकस्य पत्रं, चाषः—पक्षिविशेषः, चाषपिच्छं—चाषपक्षः, नीली प्रतीता, नीलीभेदो—नीलीच्छेदः, नीलीगुलिका—गुलिकाद्रव्यगुटिका, श्यामाको—धान्यविशेषः, ‘उच्चंतगो’ दन्तरागः, वनराजी प्रतीता, हलधरो—बलदेवस्तस्य वसनं हलधरवसनं, तच्च किल नीलं भवति सदैव तथास्वभावतया, हलधरस्य नीलवस्त्रपरिधानात्, मयूरग्रीवा पारापतग्रीवा अतसीकुसुमबाणवृक्षकुसुमानि प्रतीतानि इत ऊर्ध्वं क्वचित् ‘इंदनीले इ वा महानीले इ वा मरगते इ वा’ इति दृश्यते तत्रेन्द्रनीलमहानीलमरकता रत्नविशेषाः प्रतीताः, अञ्जनकेशिका—वनस्पतिविशेषस्तस्य कुसुममञ्जनकेशिकाकुसुमं, नीलोत्पलं—कुवलयं, नीलाशोककणवीरनीलबन्धुजीवा अशोकादिवृक्षविशेषाः, ‘भवेयारूवे’ इत्यादि प्राग्वत् व्याख्येयम् । तथा ‘तत्थ णमि’त्यादि, तत्र—तेषां मणीनां मध्ये ये ते लोहिता मणयस्तेषामयमेतद्रूपो वर्णावासः प्रज्ञप्तः, तद्यथा-‘से जहानामए’ इत्यादि, स यथानाम शशकरुधिरं उरभ्र-उरणस्तस्य रुधिरं, वराहः शूकरस्तस्य रुधिरं, मनुष्यरुधिरं महिषरुधिरं च प्रतीतम्, एतानि हि किल शेषरुधिरेभ्यो लोहितवर्णोत्कटानि भवन्ति तत एतेषामुपादानं, बालेन्द्रगोपकः—सद्योजातेन्द्रगोपकः, स हि प्रवृद्धः सन्नीषत्पाण्डुरो रक्तो भ-

१ पुस्तकान्तरे ।

यति ततो बालग्रहणम्, इन्द्रगोपक -प्रथमप्रावृट्कालभावी कीटविशेष, बालदिवाकरः--प्रथममुद्गच्छन् सूर्य, सन्ध्याभ्ररागो--वर्षासु सन्ध्यासमयभावी अभ्रराग, गुञ्जा-लोकप्रतीता तस्यार्द्धं रागो गुञ्जार्द्धराग, गुञ्जाया हि अर्द्धमतिरक्तं भवति अर्द्धं चातिकृष्णमिति गुञ्जार्द्धग्रहणं, जपाकुसुमकिंसुककुसुमपारिजातकुसुमजात्यहिङ्गुला लोकप्रसिद्धा, शिलाप्रवाल--प्रवालनामा रत्नविशेष प्रवालाङ्कुर--तस्यैव रत्नविशेषस्य प्रवालस्याङ्कुर, स हि तत्प्रथमोद्गतत्वेनात्यन्तरक्तो भवति ततस्तदुपादान, लोहिताक्षमणिर्नाम रत्नविशेष, लाक्षारसकृमिरागरक्तकम्बलचीनपिष्टराशिरक्तोत्पलरक्ताशोकरक्तकणवीररक्तबन्धुजीवा प्रतीता, 'भवेयारूवे' इत्यादि प्राग्वत्। 'तत्थ णमि'त्यादि, 'तत्र' तेषां मणीनां मध्ये ये हरिद्रा मणयस्तेषामेतद्रूपो वर्णावासः प्रज्ञप्त, तद्यथा--'से जहानामए' इत्यादि, स यथानाम चम्पकः सामान्यत सुवर्णचम्पको वृक्ष, चम्पकच्छल्ली--सुवर्णचम्पकत्वक्, चम्पकभेद-सुवर्णचम्पकच्छेद, हरिद्रा प्रतीता, हरिद्राभेदो-हरिद्राच्छेद, हरिद्रागुटिका--हरिद्रासारनिर्वर्तिता गुटिका, हरितालिका--पृथ्वीविकाररूपा प्रतीता हरितालिकाभेदा-हरितालिकाच्छेद, हरितालिकागुटिका-हरितालिकासारनिर्वर्तिता गुलिका, चिकुरा-रागद्रव्यविशेष, चिकुराङ्गराग-चिकुरसंयोगनिर्मितो वस्त्रादौ राग, वरकनकस्य जात्यसुवर्णस्य य कषपट्टके निघर्ष स वरकनकनिघर्ष, वरपुरुषो-वासुदेवस्तस्य वसनं वरपुरुषवसन, तद्ध किल पीतमेव भवतीति तदुपादानम्, अल्लकीकुसुम लोकतोऽवसेय, चम्पककुसुम-सुवर्णचम्पकपुष्प कूष्माण्डीकुसुमं पुष्प फलीकुसुमं, कोरण्टक-पुष्पजातिविशेष तस्य दाम कोरण्टकदाम तडवडा आउली तस्या कुसुम तडवडाकुसुम, घोषातकीकुसुमं सुवर्णयूथिकाकुसुम च प्रतीत, सुहिरण्यका-वनस्पतिविशेषस्तस्या कुसुमं सुहिरण्यकाकुसुम, वीयको वृक्ष प्रतीत तस्य कुसुमं वीयककुसुमं पीताशोकपीतकणवीरपीतबन्धुजीवा प्रतीता, 'भवेयारूवे' त्यादि प्राग्वत्। तत्थ णमि'त्यादि, तत्र--तेषा मणीनां मध्ये ये शुक्ला मणयस्तेषामयमेतद्रूपो वर्णावास प्रज्ञप्त, तद्यथा--'से जहानामए' इत्यादि, स यथानाम अङ्का--रत्नविशेष, शङ्खचन्द्र (दन्तकुन्द) कुमुदोदकोदकरजोदधिघनगोक्षीरपूरक्रौञ्चावलिहारावलिहंसावलिबलाकावलय प्रतीता, चन्द्रावली-तडागादिषु जलमध्यप्रतिबिम्बितचन्द्रपङ्क्ति, 'सारइयबलाहगे इति वा' शारदक-शरत्कालभावी बलाहको-मेघ, धन्तधोयरुप्पपट्टे इ चेति' ध्मात-अग्निसम्पर्केण निर्मलीकृतो धौत-भूतिखरण्टितहस्तसंतर्जनेन अतिनिशितीकृतो यो रूप्यपट्टो-रजतपत्रक स ध्मातधौतरूप्यपट्ट, अन्ये तु व्याचक्षत-ध्मातेन-अग्निसंयोगेन यो धौत-शोधितो रूप्यपट्ट स ध्मातधौतरूप्यपट्ट शालिपिष्टराशि-शालिपिष्टपुञ्ज, कुन्दपुष्पराशि कुमुदराशिश्च प्रतीत, 'सुक्कछिवाडिया इ चे' ति छिवाडि नाम वल्लादिफलिका सा च काचदेशविशेषे शुष्का सती अतीव शुक्ला भवति ततस्तदुपादान, पेहुणमिंजिया इ वा ति पेहुणं मयूरपिच्छं तन्मध्यवर्तिनी पेहुणमिञ्जिका सा चातिशुक्लेति तदुपन्यास, बिसं-पद्मिनीकन्द, मृणाल--पद्मतन्तु गजदन्तलवङ्गदलपुण्डरीकदलश्वेताशोकश्वेतकणवीरश्वेतबन्धुजीवा प्रतीता 'भवेयारूवे सिया' इत्यादि प्राग्वत्। तदेवमुक्तं वर्णस्वरूपम्।

सम्प्रति गन्धस्वरूपप्रतिपादनार्थमाह--

तेसि णं मणीणं इमेयारूवे गंधे पण्णत्ते, से जहा नाम ए कोट्ठपुडाण वा तगरपुडाण वा एलापुडाण वा चोयपुडाण वा चंपापुडाण वा दमणापुडाण वा कुंकुमपुडाण वा चंदणपुडाण वा उसीरपुडाण वा मरुआपुडाण वा जातिपुडाण वा जूहियापुडाण वा मल्लियापुडाण वा ण्हाणमल्लियापुडाण वा केतगिपुडाण वा पाडलिपुडाण वा णोमालियपुडाण वा अगुरुपुडाण वा लवंगपुडाण वा कप्पूरपुडाण वा वासपुडाण वा अणुवायंसि वा ओभिज्जमाणाण वा कोट्टिज्जमाणाण वा भंजिज्जमाणाण वा उक्किरिज्जमाणाण वा विकिरिज्जमाणाण वा परिभुज्जमाणाण वा परिभाइज्जमाणाण वा भंडाओ वा भंडं साहरिज्जमाणाण वा ओराला मणुण्णा मणहरा घाणमणनिव्वुतिकरा सव्वतो समंता गंधा अभिनिस्सवं(रं)ति, भवेयारूवे, सिया णो इणट्ठे समट्ठे, ते णं मणी एत्तो इट्ठतराए चेव गंधेणं पन्नत्ता।

'तेसि णमि'त्यादि, तेषा मणीनामयमेतद्रूपो गन्ध प्रज्ञप्त, तद्यथा-'से जहा नाम ए' इत्यादि प्राकृतत्वात् 'से' इति बहुवचनार्थं प्रतिपत्तव्य, ते यथा नाम गन्धा अभिनिर्गच्छन्तीति सम्बन्ध, कोष्ठ--गन्धद्रव्य तस्य पुटा कोष्ठपुटास्तेषा, वाशब्दा सर्वत्रापि समुच्चये, इह एकस्य पुटस्य प्रायो न तादृशो गन्ध आयाति, द्रव्यस्याल्पत्वात्, ततो बहुवचनं, तगरमपि गन्धद्रव्यम्, एला प्रतीता चोय-गन्धद्रव्य चम्पकदमनककुङ्कुमचन्दनोशीरमरुकजातीयूथिकामल्लिकास्नानमल्लिकाकेतकीपाटलीनवमालिकाऽगुरुलवङ्गकुसुमवासकर्पूराणि प्रतीतानि, नवरमुशीरं-वीरणीमूल स्नानमल्लिका स्नानयोग्यो मल्लिकाविशेष, एतेषा पुटानामनुवाते-आघ्रायकविवक्षितपुरुषाणामनुकूले वाते वाति सति उद्भिद्यमानानामुद्घाट्यमानाना वाशब्द सर्वत्रापि समुच्चये 'कुट्टिज्जमाणाण वा' इति इह पुटैः परिमितानि यानि कोष्ठादीनि गन्धद्रव्याणि तान्यपि परिमेये परिमाणोपचारात् कोष्ठपुटादीनीत्युच्यन्ते तेषा कुट्यमानानाम्--उदूखले क्षुद्यमानाना 'भंजिज्जमाणाण वा' इति श्लक्ष्णखण्डीक्रियमाणानाम् एतच्च विशेषणद्वय कोष्ठादिद्रव्याणामवसेय, तेषामेव प्राय कुट्टनश्लक्ष्णखण्डीकरणसम्भवात्, न तु यूथिकादीनाम्, 'उक्किरिज्जमाणाण वा' इति छुरिकादिभि कोष्ठादिपुटाना कोष्ठादिद्रव्याणा वा उत्कीर्यमाणाना विकिरिज्जमाणाण वा इति विकीर्यमाणानामितस्ततो विप्रकीर्यमाणाना 'परिभुज्जमाणाण वा परिभोगाय उपभुज्यमानाना, क्वचित्' परिभाइज्जमाणाण वा, इति पाठस्तत्र परिभाज्यमानाना -पार्श्ववर्तिभ्यो मनाग दीयमानानां, भंडाओ भंडं

साहरिज्जमाणाण वा ' इति भाण्डात्-स्थानादेकस्मादन्यद् भाण्डं-भाजनान्तरं संह्रियमाणानाम् उदारा -स्फारास्त्व मनोज्ञा अपि स्युरत आह—मनोज्ञा—मनोऽनुकूला. तत्त्व मनोज्ञत्वं कुत इत्याह-मनोहरा —मनो हरन्ति-आत्मवशं नयन्तीति मनोहरा इतस्ततो विप्रकीर्यमाणेन मनोहरत्व कुत ? इत्याह—घ्राणमनोनिर्वृतिकरा , एवंभूता सर्वत -सर्वासु दिक्षु समन्ततः-सामस्त्येन गन्धा अभिनिस्सरन्ति जिघ्रतामभिमुखं निस्सरन्ति , क्वचित् ' अभिनिस्सवन्तीति पाठ . तत्रापि स एवार्थो नवरमभिनिस्रवन्तीति शब्दसंस्कार . एवमुक्ते शिष्य. पृच्छति- भवेयारूवे सिया ' स्यादेतत् यथा भवेद् एतद्रूपस्तेषां मणीनां गन्ध ?, सूरिराह-' नो इणट्ठे समट्ठे ' इत्यादि प्राग्वत् ।

तेसि णं मणीणं इमेयारूवे फासे पण्णत्ते,-से जहा नाम ए आइणेति वा रूए ति वा बूरे इ वा णवणीए इ वा हंसगब्भतूलिया इ वा सिरीसकुसुमनिचये इ वा बालकुसुमपत्तरासी ति वा, भवे एयारूवे सिया ?, णो इणट्ठे समट्ठे, ते णं मणी एत्तो इट्ठतराए चेव ०जाव फासेणं पन्नत्ता ।

' तेसि णमि ' त्यादि, तेषा ' णमि ' ति प्राग्वन्मणीनामयमेतद्रूप स्पर्श प्रज्ञप्त , तद्यथा—' से जहा नाम ए इत्यादि, तद्यथा—आजिनकं-चर्ममयं वस्त्र रुतं-प्रतीतं बूरो-वनस्पतिविशेष नवनीत-म्रक्षण हंसगर्भतूलीशिरीषकुसुमनिचयाश्च प्रतीता , ' बालकुमुदपत्तरासी इ वा ' इति बालानिअचिरकालजातानि यानि कुमुदपत्राणि तेषां राशिर्बालकुमुदपत्रराशि . क्वचिद् बालकुसुमपत्रराशि ' इति पाठ , ' भवे एयारूवे ' इत्यादि प्राग्वत् ।

तए णं से आभियोगिए देवे तस्स दिव्वस्स जाणविमाणस्स बहुमज्झदेसभागे एत्थ णं महं पिच्छाघरमंडवं विउव्वइ अणेगखंभसयसंनिविट्ठं अब्भुग्गयसुकयवरवेइयातोरणवररइयसालभंजियागं सुसिलिट्ठविसिट्ठलट्ठसंठियपसत्थवेरुलियविमलखंभं णाणामणि ( कणगरयण ) खचियउज्जलबहुसमसुविभत्तदेसभाइए ईहामियउसभतुरगनरमगरविहगवालगकिंनररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्तं कंचणमणिरयणथूभियागं णाणाविहपंचवण्णघंटापडागपरिमंडियग्गसिहरं चवलं मरीतिकवयं विणिम्मुयंतं लाउल्लोइयमहियं गोसीस ( सरस ) रत्तचंदणदद्दरदिन्नपंचंगुलितलं उवचियचंदणकलसं चंदणघडसुकयतोरणपडिदुवारदेसभागं आसत्तोसत्तविउलवट्टवग्घारियमल्लदामकलावं पंचवण्णसरससुरभिमुक्कपुप्फपुंजोवयारकलियं कालागुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुद्धुयाभिरामं सुगंधवरगंधियं गंधवट्टिभूतं दिव्वं तुडियसद्दसंपणाइयं अच्छरगणसंघविकिण्णं पासादीयं दरिसणिज्जं ०जाव पडिरूवं । तस्स णं पिच्छाघरमंडवस्स बहुसमरमणिज्जभूमिभागं विउव्वति ०जाव मणीणं फासो तस्स णं पेच्छाघरमंडवस्स उल्लोयं विउव्वति पउमलयभत्तिचित्तं ०जाव पडिरूवं । तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ णं महं एगं वइरामयं अक्खाडगं विउव्वति । तस्स णं अक्खाडयस्स बहुमज्झदेसभागे एत्थ णं महेगं मणिपेढियं विउव्वति अट्ठजोयणाइं आयामविक्खंभेणं चत्तारि जोयणाइं बाहल्लेणं सव्वं मणिमयं अच्छं सण्हं ०जाव पडिरूवं । तीसे णं मणिपेढियाए उवरि एत्थ णं महेगं सिंहासणं विउव्वइ, तस्स णं सीहासणस्स इमेयारूवे वण्णावासे पण्णत्ते-तवणिज्जमया चक्कला रययामया सीहा सोवण्णिया पाया णाणामणिमयाइं पायसीसगाइं जंबूणयमयाइं गत्ताइं वइरामया संधी णाणामणिमये वेच्चे, से णं सीहासणे ईहामियउसभतुरगनरमगरविहगवालकिंनररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्तं ( सं ) सारसारोवचियमणिरयणपायपीढे अत्थरगमिउमसूरगणवत्तयकुसंतलिम्बकेसरपच्चत्थुयाभिरामे सुविरइयरयत्ताणे उवचियखोमदुगुल्लपट्टपडिच्छायणे रत्तंसुअसंवुए सुरम्मे आईणगरुयबूरणवणीयतूलफासे मउए पासाइए० ४ ।

' तए णमि ' त्यादि. तत स आभियोगिको देवस्तस्य दिव्यस्य यानविमानस्य बहुमध्यदेशभागे अत्र महत्प्रेक्षागृहमण्डपं विकुर्वति कथम्भूतमित्याह-अनेकस्तम्भशतसन्निविष्टं तथा अभ्युद्गता-अत्युत्कटा सुकृता-सुष्ठु निष्पादिता वरवेदिकाति तोरणानि वररचिता शालभञ्जिकाश्च यत्र तदभ्युद्गतसुकृतवरवेदिकातोरणवररचितशालभञ्जिकाकं . तथा सुश्लिष्टा विशिष्टा लष्टसंस्थिता —मनोज्ञसंस्थाना प्रशस्ताः प्रशस्तवास्तुलक्षणोपेता वैडूर्यविमलस्तम्भा—वैडूर्यरत्नमया विमला स्तम्भा यत्र-तत्-सुश्लिष्टविशिष्टलष्टसंस्थितप्रशस्तवैडूर्यविमलस्तम्भं, तथा नाना मणय खचिता यत्र भूमिभागे स नानामणिखचित सुखादिदर्शनात् क्तान्तस्य पाक्षिक परनिपात· नानामणिखचित उज्ज्वलो बहुसम —अत्यन्तसम सुविभक्तो भूमिभागो यत्र तत् नानामणिखचितोज्ज्वलबहुसमसुविभक्तभूमिभागं. तथा ईहामृगा-वृका ऋषभतुरगनरमगरविहगा प्रतीता व्याला -श्वापदभुजगाः किंनरा—व्यन्तरविशेषा रुरवो· मृगा सरभा -आटव्या महाकाया पशव चमरा-आटव्या गाव कुञ्जरा-दन्तिन वनलता—अशोकादिलता पद्मलता—पद्मिन्य एतासां भक्त्या—विच्छित्त्या चित्रम —आलेख्यो यत्र तदीहामृगऋषभतुरगनरमकरविहगव्यालकिन्नररुरुसरभचमरकुञ्जरवनलतापद्मलताभक्तिचित्रं , तथा स्तम्भोद्गतया—स्तम्भोपरिवर्तिन्या वज्ररत्नमय्या वेदिकया परिगतं सद् यदभिरामं तत् स्तम्भोद्गतवज्रवेदिकापरिगताभिरामं, ' विज्जाहरजमलजुगलजन्तजुत्तं पिव अच्चीसहस्समालिणीय मिति विद्या धरन्तीति विद्याधरा—विशिष्टविद्याशक्तिमन्त तेषां यमलयु-

गलानि—समानशीलानि द्वन्द्वानि तेषां यन्त्राणि—प्रपञ्चविशेषास्तैर्युक्तमिव अर्चिषा-मणिरत्नप्रभाज्वालानां सहस्रैर्मालनीय-परिवारणीयं, किमुक्तं भवति ?—एवं नाम अत्यद्भुतैर्मणिरत्नप्रभाजालैराकलितमिव भाति यथा नूनमिदं न स्वाभाविकं, किन्तु विशिष्टविद्याशक्तिमत्पुरुषप्रपञ्चप्रभाविनिर्मितं. 'रूवगसहस्सकलितं भिसिमाणं भिब्भिसमाणं चक्खुल्लोयणलेस सुहफासं सस्सिरीयरूवं' मिति प्राग्वत् क्वचिदेतन्न दृश्यते, 'कञ्चणमणिरयणथूभियाग' मिति काञ्चनं च मणयश्च रत्नानि च काञ्चनमणिरत्नानि तेषां-तन्मयी स्तूपिका-शिखरं यस्य तत्तथा नानाविधाभिः-नानाप्रकाराभिः पञ्चवर्णाभिर्घण्टाभिः पताकाभिश्च परि—सामस्त्येन मण्डितमग्र-शिखरं यस्य तन्नानाविधपञ्चवर्णघण्टापताकापरिमण्डिताग्रशिखरं', चपलं चञ्चलं चिकचिकायमानत्वात् मरीचिकवचं किरणजालपरिक्षेपं विनिर्मुञ्चत् 'लाउल्लोइयमहिय' मिति लाइयं नाम—यद्भूमेर्गोमयादिनोपलेपनम् उल्लोइयं—कुड्यानां मालस्य च सेटिकादिभिः सम्मृष्टीकरणं लाउल्लोइयाभ्यामिव महितं—पूजितं लाउल्लोयमहितं, तथा गोशीर्षेण—गोशीर्षनामकचन्दनेन दर्दरेण-बहलेन चपेटाकारेण वा दत्ता पञ्चाङ्गुलयस्तला-हस्तका यत्र तद्गोशीर्षरक्तचन्दनदर्दरदत्तपञ्चाङ्गुलितलं, तथा उपचिता-निवेशिता चन्दनकलशा—मङ्गलकलशा यत्र तदुपचितचन्दनकलशं, 'चंदणघडसुकयतोरणपडिदुवारदेसभागमिति' चन्दनघटैः-चन्दनकलशैः सुकृतानि-सुष्ठु कृतानि शोभितानीति तात्पर्यार्थः, यानि तोरणानि तानि चन्दनघटसुकृतानि तानि तोरणानि प्रतिद्वारदेशभागं-द्वारदेशभागे यत्र तत् चन्दनघटसुकृततोरणप्रतिद्वारदेशभागं, तथा 'आसत्तोसत्तविपुलवट्टवग्घारियमल्लदामकलावं' मिति आ-अवाङ् अधोभूमौ लग्न इत्यर्थः, उत्सक्तम्-ऊर्ध्वसक्तं, उल्लोचतले, उपरि सम्बद्ध इत्यर्थः. विपुलो—विस्तीर्णः वृत्तो—वर्तुलः 'वग्घारिय' इति-प्रलम्बितो माल्यदामकलापः पुष्पमालासमूहो यत्र तदासक्तोत्सक्तविपुलवृत्तप्रलम्बितमाल्यदामकलापं तथा पञ्चवर्णेन सरसेन-सच्छायेन सुरभिणा मुक्तेन क्षिप्तेन पुष्पपुञ्जलक्षणेनोपचारेण-पूजया कलितं पञ्चवर्णसरससुरभिमुक्तपुष्पपुञ्जोपचारकलितं., 'कालागुरुपवरकुन्दुरुक्कतुरुक्कधूवमघमघतगन्धुद्धुयाभिरामं सुगधवरगंधियं गंधवट्टिभूयं' मिति प्राग्वत्, तथा अप्सरोगणानां संघः-समुदायस्तेन सम्यग् रमणीयतया विकीर्णं—व्याप्तमप्सरोगणसंघविकीर्णं, तथा दिव्यानां त्रुटितानाम् आतोद्यानां—वेणुवीणामृदङ्गादीनां ये शब्दास्तैः सम्प्रणादितं—सम्यक्—श्रोत्रमनोहारितया प्रकर्षेण नादितं—शब्दवद् दिव्यत्रुटितशब्दसम्प्रणादितम्, 'अच्छं ०जाव पडिरूवं' मिति यावच्छब्दकरणात्—' अच्छं सण्हं घट्ठं मट्ठं नीरयं निम्मलं निप्पंकं निक्कंकडच्छायं सप्पभं समिरियं सउज्जोयं पासाईयं दरिसणिज्जं अभिरूवं पडिरूवं' मिति द्रष्टव्यम्, एतच्च प्राग्वद्व्याख्येयम्। 'तस्स णमि' त्यादि तस्य 'णमि' ति प्राग्वत् प्रेक्षागृहमण्डपस्यान्तः—मध्ये बहुसमरमणीयं भूमिभागं विकुर्वन्ति, तद्यथा—आलिङ्गपुष्करमिति वे त्यादि, तदेव तावद्वक्तव्यं यावन्मणिस्पर्शसूत्रपर्यन्तं, तथा चाह—' जाव मणीणं फासो ' इति। ' तस्स णमि ' त्यादि, तस्य णमिति पूर्ववत्, प्रेक्षागृहमण्डपस्य उल्लोकम् उपरिभागं विकुर्वन्ति पद्मलताभक्तिचित्रं ' जाव पडिरूवमि ' ति, यावच्छब्दकरणात् ' अच्छं सण्हं ' मित्यादिविशेषणकदम्बकपरिग्रहः। ' तस्स णमि ' त्यादि तस्य—बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागे अत्र ' णं ' मिति पूर्ववत् एकं महान्तं वज्रमयमक्षपाटं विकुर्वन्ति, तस्य चाक्षपाटकस्य बहुमध्यदेशभागे तत्रैकां महतीं मणिपीठिकां विकुर्वन्ति. अष्टौ योजनान्यायामविष्कम्भाभ्यां चत्वारि योजनानि बाहल्येन उच्चैस्त्वेनेति भावः, कथम्भूतां तां विकुर्वन्तीत्यत आह ' सर्वमणिमयीं—सर्वात्मना मणिमयीं यावत्करणाद्-च्छामित्यादिविशेषणसमूहपरिग्रहः. तस्याश्च मणिपीठिकाया उपर्यत्र महदेकं सिंहासनं विकुर्वन्ति, तस्य च सिंहासनस्यायमेतद्रूपो वर्णावासः प्रज्ञप्तः, तद्यथा-तपनीयमया चक्कला रजतमयाः सिंहास्तैरुपशोभितं सिंहासनमुच्यते, सौवर्णिकाः-सुवर्णमयाः पादाः नानामणिमयानि पादशीर्षकाणि-पादानामुपरितना अवयवविशेषाः, जाम्बूनदमयानि गात्राणि वज्रमयाः—वज्ररत्नापूरिताः सन्धयो-गात्राणां सन्धिमेलाः नानामणिमयं वेच्चं-तज्ज्ञानं ' से णं सीहासणे ' इत्यादि तत् सिंहासनमीहामृगवृषभतुरगनरमकरव्यालकिन्नररुरुसरभचमरवनलतापद्मलताभक्तिचित्रं ' ( स ) सारसारोवचियमणिरयणपायपीढं ' मिति ( स ) सारसारैः-प्रधानैः मणिरत्नैरुपचितेन पादपीठेन सह यत्तत्तथा, प्राकृतत्वाच्च पदोपन्यासव्यत्ययः. ' अत्थरयमउमसूरगनवत्तयकुसंतलिम्बकेसरपच्चत्थुयाभिरामं ' इति अस्तरकम्-आच्छादकं मृदु यस्य मसूरकस्य तदस्तरकमृदु, विशेषणस्य परनिपातः प्राकृतत्वात्, नवा त्वक् येषां ते नवत्वचः कुशान्ता -दर्भपर्यन्ता नवत्वचश्च ते कुशान्ताश्च नवत्वक्कुशान्ता —प्रत्यग्रत्वग्दर्भपर्यन्तरूपाणि लिम्बानि-कोमलानि नमनशीलानि च केसराणि मध्ये यस्य मसूरकस्य तत् नवत्वक्कुशान्तलिम्बकेसरम् आस्तरकमृदुना मसूरकेण नवत्वक्कुशान्तलिम्बकेसरेण प्रत्यवस्तृतम्—आच्छादितं सत् यदभिरामं तत्तथा, विशेषणपूर्वापरनिपातो यादृच्छिकः प्राकृतत्वात्, ' आईणगरुअबूरनवणीयतूलफासे ' इति पूर्ववत्, तथा ' सुविरइयरयत्ताणं ' तथा सुष्ठु विरचितं सुविरचितं रजस्त्राणमुपरि यस्य तत्सुविरचितरजस्त्राणं, ' उवचियखोमियदुगुल्लपट्टपडिच्छयणं ' मिति, उपचितं-परिकर्मितं यत्क्षौमं दुकूलं—कार्पासिकं वस्त्रं परिच्छादनं रजस्त्राणस्योपरि द्वितीयमाच्छादनं यस्य तत्तथा तत उपरि ' रत्तंसुयसंवुडे ' इति रक्तांशुकेन-अतिरमणीयेन रक्तेन वस्त्रेण संवृतम्-आच्छादितमत एव सुरम्यं, 'पासाईए दरिसणिज्जे अभिरूवे पडिरूवे ' इति प्राग्वत्।

तस्स णं सिंहासणस्स उवरिं एत्थ णं महेगं विजयदूसं विउव्वंति, संखंक ( संख ) कुंददगरयअमयमहियफेणपुंजसंनिगासं सव्वरयणामयं अच्छं सण्हं पासादीयं दरिसणिज्जं अभिरूवं पडिरूवं। तस्स णं सीहासणस्स उवरिं विजयदूसस्स य बहुमज्झदेसभागे एत्थ णं ( महं एगं ) वयरामयं अंकुसं विउव्वंति, तस्सिं च णं वयरामयंसि अंकुसंसि कुंभिक्कं मुत्तादामं विउव्वंति। से णं कुंभिक्के

मुत्तादामे अन्नेहिं चउहिं अद्धकुंभिकेहिं मुत्तादामेहिं तदद्धुच्चत्तपमाणेहिं सव्वओ समंता संपरिक्खित्ते । ते णं दामा तवणिज्जलंबूसगा सुवण्णपयरगमंडियग्गा णाणामणिरयणविविहहारद्धहारउवसोभियसमुदाया ईसिं अण्णमण्णमसंपत्ता वाएहिं पुव्वावरदाहिणुत्तरागएहिं मंदायं मंदायं एइज्जमाणाणि २ पलंबमाणाणि २ पझंझं [ पज्झंझं ] माणाणि २ उरालेणं मणुन्नेणं मणहरेणं कण्णमणणिव्वुतिकरेणं सद्देणं ते पएसे सव्वओ समंता आपूरेमाणा सिरीए अतीव २ उवसोभेमाणा चिट्ठंति । तए णं से आभिओगिए देवे तस्स सीहासणस्स अवरुत्तरेणं उत्तरेणं उत्तरपुरच्छिमे णं एत्थ णं सूरिआभस्स देवस्स चउण्हं सामाणियसाहस्सीणं चत्तारि भद्दासणसाहस्सीओ विउव्वइ, तस्स णं सीहासणस्स पुरच्छिमे णं एत्थ णं सूरियाभस्स देवस्स चउण्हं अग्गमहिसीणं सपरिवाराणं चत्तारि भद्दासणसाहस्सीओ विउव्वइ, तस्स णं सीहासणस्स दाहिणपुरच्छिमे णं एत्थ णं सूरियाभस्स देवस्स अब्भितरपरिसाए अट्ठण्हं देवसाहस्सीणं अट्ठ भद्दासणसाहस्सीओ विउव्वइ, एवं दाहिणेणं मज्झिमपरिसाए दसण्हं देवसाहस्सीणं दस भद्दासणसाहस्सीओ विउव्वति दाहिणपच्चत्थिमे णं बाहिरपरिसाए बारसण्हं देवसाहस्सीणं बारस भद्दासणसाहस्सीओ विउव्वति, पच्चत्थिमे णं सत्तण्हं अणियाहिवतीणं सत्त भद्दासणे विउव्वति, तस्स णं सीहासणस्स चउद्दिसिं एत्थ णं सूरियाभस्स देवस्स सोलसण्हं आयरक्खदेवसाहस्सीणं सोलस भद्दासणसाहस्सीओ विउव्वति, तं जहा—पुरच्छिमे णं चत्तारि साहस्सीओ दाहिणे णं चत्तारि साहस्सीओ पच्चत्थिमे णं चत्तारि साहस्सीओ उत्तरे णं चत्तारि साहस्सीओ । तस्स दिव्वस्स जाणविमाणस्स इमेयारूवे वण्णावासे पण्णत्ते, से जहा नामए अइरुग्गयस्स वा हेमंतियबालियसूरियस्स वा खयरिंगालाण वा रत्तिं पज्जलियाण वा जवाकुसुमवणस्स वा किंसुयवणस्स वा पारियायवणस्स वा सव्वतो समंता संकुसुमियस्स, भवेयारूवे सिया ?, णो इणट्ठे समट्ठे, तस्स णं दिव्वस्स जाणविमाणस्स एत्तो इट्ठतराए चेव ०जाव वण्णेणं पण्णत्ते, गंधो य फासो य जहा मणीणं । तए णं से आभिओगिए देवे दिव्वं जाणविमाणं विउव्वइ २ त्ता जेणेव सूरियाभे देवे तेणेव उवागच्छइ २ त्ता सूरियाभं देवं करयलपरिग्गहियं ०जाव पच्चप्पिणंति । (सू० १५)

'तस्स णमि' त्यादि, तस्य सिंहासनस्योपर्युल्लोके 'अत्र' अस्मिन् स्थाने महदेकं विजयदूष्यं—वस्त्रविशेषः, आह च जीवाभिगममूलटीकाकृत्—विजयदूष्यं वस्त्रविशेष इति, तं विकुर्वन्ति—स्वशक्त्या निष्पादयन्ति, कथम्भूतमित्याह—शङ्खकुन्ददकरजोऽमृतमथितफेनपुञ्जसन्निकाशम्, शङ्खः प्रतीतः, कुन्दमिति—कुन्दकुसुमं दकरजः—उदककणाः अमृतस्य—क्षीरोदधिजलस्य मथितस्य यः फेनपुञ्जो—डिण्डीरोत्करः तत्सन्निकाशं—तत्समप्रभं, पुनः कथम्भूतमित्याह—'सव्वरयणामयं' सर्वात्मना रत्नमयम् 'अच्छं सण्हं पासाईय' मित्यादिविशेषणजालं प्राग्वत् । 'तस्स णमि' त्यादि, तस्य सिंहासनस्योपरि तस्य विजयदूष्यस्य बहुमध्यदेशभागेऽत्र महान्तमेकं वज्रमयं—वज्ररत्नमयमङ्कुशम्—अङ्कुशाकारं मुक्तादामावलम्बनाश्रयं विकुर्वन्ति, तस्मिंश्च वज्रमयेऽङ्कुशे महदेकं कुम्भाग्रं—मगधदेशप्रसिद्धं कुम्भपरिमाणं मुक्तादाम विकुर्वन्ति । 'से णमि' त्यादि, तत्कुम्भाग्रं मुक्तादाम अन्यैश्चतुर्भिः कुम्भाग्रैः कुम्भपरिमाणैर्मुक्तादामभिस्तदर्धोच्चत्वप्रमाणमात्रैः 'सर्वतः' सर्वासु दिक्षु समन्ततः—सामस्त्येन सम्परिक्षिप्तं—व्याप्तम् । 'ते णं दामा' इत्यादि, तानि पञ्चापि दामानि 'तवणिज्जलंबूसगा (ग· गा ?)', तपनीयमया लम्बूसगा—आभरणविशेषरूपा (याः सुवर्णप्रतरकाः सुवर्णपत्राणि तैः मण्डितं—शोभितं अग्रम्—अग्रभागो येषां तानि तथा अ) ग्रभागे येषां प्रलम्बमानानां तानि तथा, नानामणिरत्नैः—नानामणिरत्नमयैर्विविधैः—विचित्रैर्हारैरर्द्धहारैश्चोपशोभितः सामस्त्येनोपशोभितः समुदायो येषां तानि तथा ईषत्—मनाक् अन्योऽन्यं—परस्परम् असंप्राप्तानि—असंलग्नानि पूर्वापरदक्षिणोत्तरागतैः (वातैः) मन्दाय मन्दाय इति मन्दं 'एज्जमानानि' कम्पमानानि 'भृशाभीक्ष्ण्याऽविच्छेदे द्वि प्राकृतमवादे' रित्यविच्छेदे द्विर्वचनं तथा पचन्ति पचन्तीत्यत्र, एवमुत्तरत्रापि ईषत्कम्पनवशादेव प्रकम्पेन इतस्ततो मनाक् चलनेन लम्बमानानि २ ततः परस्परं सम्पर्कवशतः 'पज्झंझमाणा पज्झंझमाणा' इति शब्दायमानानि २ उदारेण स्फारेण शब्देनेति योगः, स च स्फारशब्दो मनःप्रतिकूलोऽपि भवति तत आह—'मनोज्ञेन' मनोऽनुकूलेन, तच्च मनोऽनुकूलत्वं लेशतोऽपि स्यादत आह—'मनोहरेण' मनांसि श्रोतॄणां हरति—एकान्तेनात्मवशं नयतीति मनोहरो 'लिहादेराकृतिगणत्वादच् प्रत्ययः', तेन, तदपि मनोहरत्वं कुत इत्याह—कर्णमनोनिर्वृतिकरेण ' 'निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायो दर्शन' मिति वचनात् हेतौ तृतीया, ततोऽयमर्थः—प्रतिश्रोतृ कर्णयोर्मनसश्च निर्वृतिकरः—सुखोत्पादकस्ततो मनोहरस्तेनेत्थम्भूतेन शब्देन तान् प्रत्यासन्नान् प्रदेशान् सर्वतो—दिक्षु समन्ततो विदिक्षु आपूरयन्ति २ शब्दस्य स्यादाविदं रूपम्, अत एव श्रिया—शोभया अतीवोपशोभमानानि २ तिष्ठन्ति । 'तए णमि' त्यादि, ततः स आभियोगिको देवस्तस्य सिंहासनस्यापरोत्तरेण, वायव्ये कोण इत्यर्थः, उत्तरेण—उत्तरस्याम् उत्तरपुरच्छिमे णं 'ईशान्याम्' अत्र—एतासु तिसृषु दिक्षु सूर्याभस्य देवस्य चतुर्णां सामानिकसहस्राणां योग्यानि चत्वारि भद्रासनसहस्राणि विकुर्वन्ति, पूर्वस्यां च

चतसृणामग्रमहिषीणां सपरिवाराणां चत्वारि भद्रासनसहस्राणि दक्षिणपूर्वस्यामभ्यन्तरपर्षदोऽष्टानां देवसहस्राणां योग्यानि अष्टौ भद्रासनसहस्राणि दक्षिणस्यां मध्यमपर्षदो दशानां देवसहस्राणां योग्यानि दश भद्रासनसहस्राणि, दक्षिणापरस्यां नैर्ऋतकोण इत्यर्थः, बाह्यपर्षदो द्वादशानां देवसहस्राणां द्वादश भद्रासनसहस्राणि पश्चिमायां सप्तानामनीकाधिपतीनां सप्त भद्रासनानि विकुर्वन्ति । तदनन्तरं तस्य सिंहासनस्य चतसृषु दिक्षु अत्र सामानिकाऽऽदिदेवभद्रासनानां पृष्ठतः सूर्याभस्य देवस्य सम्बन्धिनां षोडशानामात्मरक्षकदेवसहस्राणां योग्यानि षोडश भद्रासनसहस्राणि विकुर्वन्ति, तद्यथा—चत्वारि भद्रासनसहस्राणि पूर्वस्यां चत्वारि दक्षिणतश्चत्वारि पश्चिमायां चत्वारि उत्तरेण, सर्वसङ्ख्यया सप्ताधिकानि चतुःपञ्चाशत्सहस्राणि ५४००७ भद्रासनानां विकुर्वन्ति । 'तस्स णं दिव्वस्से' त्यादि, 'तस्स णमि' ति पूर्ववत् दिव्यस्य यानविमानस्यायम्-अनन्तरं वक्ष्यमाणस्वरूपो वर्णावासो—वर्णकनिवेश प्रज्ञप्तः, तद्यथा—' से जहानामए ' इत्यादि, स यथानाम अचिरोद्गतस्य—क्षणमात्रमुद्गतस्य हैमन्तिकस्य—शिशिरकालभाविनो बालसूर्यस्य स ह्यत्यन्तमारक्तो भवति दीप्यमानश्चेत्युपादानं, वाशब्दाः सर्वेऽपि समुच्चये, खादिराङ्गाराणि वा ' रत्ति ' मिति सप्तम्यर्थे द्वितीया प्राकृतत्वात् यथा—' उय निणयभत्तिम्मि पूरेमसिसिरे दहे गए सूर कन्तो रत्ति सुद्ध पाणियसुद्धा सउणयाणमि ' त्यत्र, ततोऽयमर्थः—रात्रौ प्रज्वलितानां जपाकुसुमवनस्य वा किंशुकवनस्य वा पारिजातवनस्य वा सर्वतः—सर्वासु दिक्षु समन्ततः—सामस्त्येन सङ्कुसुमितस्य—सम्यक् कुसुमितस्य, अत्रान्तरे शिष्यः पृच्छति—यादृगूप एतेषां वर्णः ' भवेयारूवे सिया ' इति स्यात्-कथञ्चिद् भवेदेतद्रूपस्तस्य दिव्यस्य यानविमानस्य वर्णः ? । सूरिराह—' नो इणट्ठे समट्ठे तस्स णं दिव्वस्स जाणविमाणस्स एत्तो इट्ठतराए चेव कन्ततराए चेव मणुन्नतराए चेव मणामतराए चेव वण्णे पण्णत्ते ' इति प्राग्वत् व्याख्येयम्, ' गंधो फासो जहा मणीणं ' मिति गन्धः स्पर्शः यथा प्राग् मणीनामुक्तस्तथा वक्तव्यः, स चैवं—' तस्स णं दिव्वस्स जाणविमाणस्स इमे एयारूवे गंधे पण्णत्ते, तं जहा—से जहानामए कोट्ठपुडाण वा तगरपुडाण वा ' इत्यादि । ' तए णं से आभिओगिए देवे ' इत्यादि, यावत्करणात्—' करयलपरिग्गहियं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु जएणं विजएणं वद्धावेइ वद्धावित्ता एयमाणत्तियं ' ति द्रष्टव्यम् ।

तए णं से सूरिआभे देवे आभिओगस्स देवस्स अंतिए एयमट्ठं सोच्चा निसम्म हट्ठ ०जाव हियए दिव्वं जिणिंदाभिगमणजोग्गं उत्तरवेउव्वियरूवं विउव्वति २ त्ता चउहिं अग्गमहिसीहिं सपरिवाराहिं दोहिं अणीएहिं, तं जहा—गंधव्वाणीएण य णट्टाणीएण य सद्धिं संपरिवुडे तं दिव्वं जाणविमाणं अणुपयाहिणीकरेमाणे २ पुरच्छिमिल्लेणं तिसोवाणपडिरूवएणं दुरूहति दुरूहित्ता जेणेव सीहासणे तेणेव उवागच्छइ २ च्छित्ता सीहासणवरगए पुरत्थाभिमुहे सण्णिसण्णे । तए णं तस्स सूरिआभस्स देवस्स चत्तारि सामाणियसाहस्सीओ तं दिव्वं जाणविमाणं अणुपयाहिणीकरेमाणा उत्तरिल्लेणं तिसोवाणपडिरूवएणं दुरूहंति दुरूहित्ता पत्तेयं २ पुव्वणत्थेहिं भद्दासणेहिं णिसीयंति, अवसेसा देवा य देवीओ य तं दिव्वं जाणविमाणं ०जाव दाहिणिल्लेणं तिसोवाणपडिरूवएणं दुरूहंति २ हित्ता पत्तेयं २ पुव्वणत्थेहिं भद्दासणेहिं निसीयंति । तए णं तस्स सूरियाभस्स देवस्स तं दिव्वं जाणविमाणं दुरूढस्स समाणस्स अट्ठट्ठमंगलगा पुरतो अहाणुपुव्वीए संपत्थिता, तं जहा—सोत्थियसिरिवच्छ ०जाव दप्पणा । तयणंतरं च णं पुण्णकलसभिंगारदिव्वा य छत्तपडागा सचामरा दंसणरतिया आलोयदरिसणिज्जा वाउद्धुयविजयवेजयंतीपडागा ऊसिया गगणतलमणुलिहंती पुरतो अहाणुपुव्वीए संपत्थिया । तयणंतरं च णं वेरुलियभिसंतविमलदंडं पलंबकोरंटमल्लदामोवसोभितं चंदमंडलनिभं समुस्सियं विमलमायवत्तं पवरसीहासणं च मणिरयणभत्तिचित्तं सपायपीढं सपाउयाजोयसमाउत्तं बहुकिंकरामरपरिग्गहियं पुरतो अहाणुपुव्वीए संपत्थियं । तयाणंतरं च णं वइरामयवट्टलट्ठसंठियसुसिलिट्ठपरिघट्ठमट्ठसुपतिट्ठिए विसिट्ठे अणेगवरपंचवण्णकुडभीसहस्सुस्सिए [ परिमंडियाभिरामे ] वाउद्धुयविजयवेजयंतीपडागच्छत्तातिच्छत्तकलिते तुंगे गगणतलमणुलिहंतसिहरे जोअणसहस्समूसिए महतिमहालए महिंदज्झए पुरतो अहाणुपुव्वीए संपत्थिए । तयाणंतरं च णं सुरूवणेवत्थपरिकच्छिया सुसज्जा सव्वालंकारभूसिया महया भडचडगरपहगरेणं पंचअणियाहिवइणो पुरतो अहाणुपुव्वीए संपत्थिया । [ तयाणंतरं च णं बहवे आभिओगिया देवा देवीओ य सएहिं २ रूवेहिं सएहिं २ विसेसेहिं सएहिं २ विंदेहिं सएहिं २ णेज्जाएहिं सएहिं २ णेवत्थेहिं पुरतो अहाणुपुव्वीए संपत्थिया ] तयाणंतरं च णं सूरियाभविमाणवासिणो बहवे वेमाणिया देवा य देवीओ य सव्विड्ढीए ०जाव रूवेणं सूरियाभं देवं पुरतो पासतो य मग्गतो य समणुगच्छंति । ( सू० १६ )

'तए णं से सूरियाभे देवे' इत्यादि दिव्यं-प्रधानं जिनेन्द्रस्य-भगवतो वर्द्धमानस्वामिनोऽभिगमनाय-अभिमुखं गमनाय योग्यम्-उचितं जिनेन्द्राभिगमनयोग्यमुत्तरवैक्रियं रूपं विकुर्वन्ति विकुर्वित्वा चतसृभिरग्रमहिषीभिः सपरिवाराभिर्द्वाभ्यामनीकाभ्यां, तद्यथा—गन्धर्वानीकेन नाट्यानीकेन च, सार्द्धं, तत्र महभाय स्वस्वामिभावमन्तरेणापि इष्टो, यथा समानगुणविभवयोर्द्वयोर्मित्रयो, अत स्वस्वामिभावप्रकटनार्थमाह— संपरिवुडे सम्यगाराधकभावं विभ्राणैः परिवृतः—सम्परिवृतः तत् दिव्यं यानविमानमनुप्रदक्षिणीकुर्वन्-पूर्वतोऽनुकूलेन प्रदक्षिणीकुर्वन् पूर्वेण तोरणेनानुप्रविश-

ति-स्वस्मिन्नासनानुकूलं प्रविशति. प्रविशन् पूर्वेण 'तिसोपानप्रतिरूपकेण' प्रतिविशिष्टरूपेण त्रिसोपानेन तद् यानविमानं 'दुरूहइ' त्ति आरोहति, आरुह्य च 'जेणेव' त्ति यस्मिन्नेव देशे तस्य मणिपीठिकाया उपरि सिंहासनं तत्रोपागच्छति, उपागत्य च सिंहासनवरगतः सन् पूर्वाभिमुखः 'सम्निषण्णः' —सम्यक्—सकलसेवकजनचमत्काकारिण्या उपवेशनस्थित्योपविष्टः । 'तए णमि' त्यादि. ततस्तस्य सूर्याभस्य देवस्य चत्वारि सामानिकदेवसहस्राणि तद् दिव्यं यानविमानमनुप्रदक्षिणीकुर्वन्ति, उत्तरेण त्रिसोपानप्रतिरूपकेणारोहन्ति, 'पुव्वणत्थेहिं' इत्यादि अत्र सप्तम्यर्थे तृतीया. पूर्वन्यस्तेषु भद्रासनेषु निषीदन्ति, अवशेषाः—अभ्यन्तरपर्षदादयो देवा देव्यश्च दक्षिणेन त्रिसोपानप्रतिरूपकेणारोहन्ति, आरुह्य च स्वेषु भद्रासनेषु निषीदन्ति । 'तए णमि' त्यादि. ततस्तस्य सूर्याभस्य देवस्य तद् दिव्यं यानविमानमारूढस्य पुरतोऽष्टाष्टमङ्गलकानि यथानुपूर्व्या—वक्ष्यमाणपाठक्रमेणेत्यर्थः, सम्प्रस्थितानि, तद्यथा— 'सोत्थियसिरिवच्छे' त्यादि. पूर्वं स्वस्तिकं तदनन्तरं श्रीवत्सस्तदनन्तरं पूर्णकलशभृङ्गारदिव्यातपत्रपताका सचामरा कथम्भूता ? इत्याह—'दर्शनरतिका' दर्शने-अवलोकने रतिर्यासु ता दर्शनरतिका, इह दर्शनरतिकमपि किञ्चिदालोकदर्शनीयं न भवत्यमङ्गलत्वात् यथा गर्भवती युवतिः, अत आह—आलोके—वहिः प्रस्थानसमयभाविनि दर्शनीया द्रष्टुं योग्या मङ्गल्यत्वात्, अन्ये त्वाहुः—आलोके दर्शनीया न पुनरत्युच्चा आलोकदर्शनीया. तथा वातोद्धूता विजयसूचिका वैजयन्तीति विजयवैजयन्ती च उत्सृता ऊर्ध्वीकृता गगनतलम् अम्बरतलमनुलिखन्ती अभिलङ्घयन्ती पुरतो—यथानुपूर्व्या सम्प्रस्थिता । 'तयणतरं च णमि' त्यादि तदनन्तरं 'वेरुलियभिसंतविमलदंडं' मिति 'वैडूर्यो' वैडूर्यरत्नमयो भिसंतो दीप्यमानो विमलो निर्मलो दण्डो यस्य तत्तथा 'पलंबकोरंटमल्लदामोवसोहियं' मिति, प्रलम्बते इति प्रलम्बि तेन प्रलम्बमानेन कोरण्टमाल्यदाम्ना कोरण्टपुष्पमालयोपशोभितं प्रलम्बकोरण्टमाल्यदामोपशोभितं चन्द्रमण्डलनिभं दीप्त्या शोभया वर्तुलतया चन्द्रमण्डलाकारं समुत्सृतं सम्यगूर्ध्वीकृतं विमलमातपत्रं तथा प्रवरं सिंहासनं मणिरत्नैः भक्त्या विच्छित्त्या चित्रं यत् तन्मणिरत्नभक्तिचित्रं, सह पादपीठं यस्य तत्सपादपीठं, तथा 'सपाउयाजोगसमाउत्तं' मिति, पादुकायोगः पादुकाद्वितयं तस्य समायोजनं समायुक्तं सह पादुकायोगसमायुक्तं यस्य तत्तथा 'बहुकिंकरामरपरिग्गहियमि' ति बहुभिः किङ्करैः—किङ्करकल्पैरमरैः परिगृहीतं पुरतो यथानुपूर्व्या सम्प्रस्थितं तदनन्तरं 'वइरामयवट्टलट्ठसंठियसुसिलिट्ठपरिघट्ठमट्ठसुपइट्ठिए' त्ति, वज्रमयो वज्ररत्नमयः तथा वृत्तं वर्तुलं लष्टं मनोज्ञं संस्थितं संस्थानमाकारो यस्य स वृत्तलष्टसंस्थितः तथा सुश्लिष्टः सुश्लेषापन्नावयवो, मसृण इत्यर्थः, परिघृष्ट इव परिघृष्टः खरशाणया पाषाणप्रतिमावत् मृष्ट इव मृष्टः सुकुमारशाणया पाषाणप्रतिमेव सुप्रतिष्ठितो न तु तिर्यक्पातिततया वक्र ततः एतेषां पदानां पदद्वयमीलनेन कर्मधारयः, अत एव शेषध्वजेभ्यो विशिष्टः—अतिशायी, तथा अनेकानि-अनेकसङ्ख्याकानि वराणि-प्रधानानि पञ्चवर्णानि कुडभीसहस्राणि उत्सृतानि यत्र सोऽनेकवरपञ्चवर्णकुडभीसहस्रोत्सृतः क्रान्तस्य परनिपातो सुखादिदर्शनात् वातोद्धृतविजयवैजयन्तीपताकाच्छत्रातिच्छत्रकलितः तुङ्गः—अत्युच्चो योजनसहस्रप्रमाणोच्छ्रयत्वात्, तथा गगनतलम् अम्बरतलमनुलिखत् शिखरम्—अग्रभागो यस्य स तथा योजनसहस्रमुत्सृत अत एव 'महइमहालए' इति, अतिशयेन महान् महेन्द्रध्वजः पुरतो—यथानुपूर्व्या संप्रस्थितः । तदनन्तरं 'सुरूवनेवत्थपरिकच्छिया' इति. सुरूपं नेपथ्यं परिकच्छितं-परिगृहीतं यैस्ते तथा. तथा सुष्ठु अतिशयेन सज्जाः—परिपूर्णा स्वसामग्री-समायुक्ततया प्रगुणीभूताः-सर्वालङ्कारविभूषिताः 'महता भडचडगरपहकरेणं' ति महता-अतिशयेन भटचटकरपहकरेण-चटकरप्रधानभटसमूहेन पञ्चानीकानि पञ्चानीकाधिपतयः पुरतो—यथाऽनुपूर्व्या सम्प्रस्थिताः । तदनन्तरं च सूर्याभविमानवासिनो बहवो वैमानिका देवा देव्यश्च सर्वर्द्ध्या यावत्करणात्—'सव्वजुईए सव्वबलेणं' मित्यादि-परिग्रहः, सूर्याभं देवं पुरतः पार्श्वतो मार्गतः-पृष्ठतः समनुगच्छन्ति ।

तए णं से सूरियाभे देवे तेणं पंचाणीयपरिक्खित्तेणं वइरामयवट्टलट्ठसंठिएण० जाव जोयणसहस्समूसिएणं महतिमहालतेणं महिंदज्झएणं पुरतो कड्ढिज्जमाणेणं चउहिं सामाणियसहस्सेहिं ०जाव सोलसहिं आयरक्खदेवसाहस्सीहिं अन्नेहि य बहुहिं सूरियाभविमाणवासीहिं वेमाणिएहिं देवेहिं देवीहि य सद्धिं संपरिवुडे सव्विड्ढिए ०जाव रवेणं सोहम्मस्स कप्पस्स मज्झंमज्झेणं तं दिव्वं देविड्ढिं दिव्वं देवजुतिं दिव्वं देवाणुभावं उवदंसेमाणे २ पडिजागरेमाणे २ जेणेव सोहम्मकप्पस्स उत्तरिल्ले णिज्जाणमग्गे तेणेव उवागच्छति २ छित्ता जोयणसयसाहस्सितेहिं विग्गहेहिं ओवयमाणे वीतीवयमाणे ताए उक्किट्ठाए ०जाव तिरियमसंखिज्जाणं दीवसमुद्दाणं मज्झंमज्झेणं वीइवयमाणे २ जेणेव नंदीसरवरदीवे जेणेव दाहिणपुरच्छिमिल्ले रतिकरपव्वते तेणेव उवागच्छति २ छित्ता तं दिव्वं देविड्ढिं ०जाव दिव्वं देवाणुभावं पडिसाहरेमाणे २ पडिसंखेवेमाणे २ जेणेव जंबूदीवे दीवे जेणेव भारहे वासे जेणेव आमलकप्पा नयरी जेणेव अंबसालवणे चेइए जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ २ छित्ता समणं भगवं महावीरं तेणं दिव्वेणं जाणविमाणेणं तिक्खुत्तो आयाहिणं पयाहिणं करेइ २ रेत्ता समणस्स भगवतो महावीरस्स उत्तरपुरच्छिमे दिसिभागे तं दिव्वं जाणविमाणं ईसिं चउरंगुलमसंपत्तं धरणितलंमि ठवेइ ठवित्ता चउहिं अग्गमहिसीहिं सपरिवाराहिं दोहिं अणीयाहिं, तं जहा—गंधव्वाणिएण य णट्टाणिएण य सद्धिं संपरिवुडे ताओ दिव्वाओ जाणविमाणाओ पुरच्छिमिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहति । तए णं तस्स सूरियाभस्स देवस्स चत्तारि सामाणियसाहस्सीओ ता-

ओ दिव्वाओ जाणविमाणाओ उत्तरिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहति, अवसेसा देवा य देवीओ य ताओ दिव्वाओ जाणविमाणाओ दाहिणिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहंति । तए णं से सूरियाभे देवे चउहिं अग्गमहिसीहिं ०जाव सोलसहिं आयरक्खदेवसाहस्सीहिं अण्णेहि य बहुहिं सूरियाभविमाणवासीहिं वेमाणिएहिं देवेहिं देवीहि य सद्धिं संपरिवुडे सव्विड्ढीए ०जाव णाइयरवेणं जेणेव समणे भगवं महावीरे तेणेव उवागच्छति२त्ता समणं भगवं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेति करित्ता वंदति नमंसति वंदित्ता नमंसित्ता एवं वयासी-अहं णं भंते ! सूरियाभे देवे देवाणुप्पियाणं वंदामि णमंसामि ०जाव पज्जुवासामि (सू०१७) सूरियाभाति समणे भगवं महावीरे सूरियाभं देवं एवं वयासी-पोराणमेयं सूरियाभा ! जीयमेयं सूरियाभा ! किच्चमेयं सूरियाभा ! करणिज्जमेयं सूरियाभा ! आइण्णमेयं सूरियाभा ! अब्भणुण्णायमेयं सूरियाभा ! जे णं भवणवइवाणमंतरजोइसवेमाणिया देवा अरहंते भगवंते वंदंति नमंसंति वन्दित्ता नमंसित्ता तओ पच्छा साइं साइं नामगोत्ताइं साहिंति, तं पोराणमेयं सूरियाभा ! ०जाव अब्भणुण्णायमेयं सूरियाभा ! ( सू० १८ ) तए णं से सूरियाभे देवे समणेणं भगवया महावीरेणं एवं वुत्ते समाणे हट्ठ० जाव समणं भगवं महावीरं वंदति नमंसति वंदित्ता नमंसित्ता णच्चासण्णे णातिदूरे सुस्सूसमाणे णमंसमाणे अभिमुहे विणएणं पंजलिउडे पज्जुवासति । ( सू० १९ )

'तए णं'मित्यादि ततः स सूर्याभो देवः तेन पञ्चानीकपरिक्षिप्तेन यथोक्तविशेषणविशिष्टेन महेन्द्रध्वजेन पुरतः प्रकृष्यमाणेन चतुर्भिः सामानिकसहस्रैश्चतसृभिः सपरिवाराभिरग्रमहिषीभिस्तिसृभिः पर्षद्भिः सप्तभिरनीकाधिपतिभिः षोडशभिरात्मरक्षदेवसहस्रैरन्यैश्च बहुभिः सूर्याभविमानवासिभिर्वैमानिकैर्देवैर्देवीभिश्च सार्द्धं संपरिवृतः सर्वर्द्ध्या सर्वद्युत्या यावत्करणात्-'सव्वबलेणं सव्वसमुदएणं सव्वादरेणं सव्वविभूसाए सव्वविभूइए सव्वसंभमेणं सव्वपुप्फवत्थगंधमल्लालंकारेणं सव्वदिव्वतुडियसहसन्निनाएणं महया इड्ढीए महया जुईए महया बलेणं महया समुदएणं महया वरतुडियजमगसमगपडुप्पवाइयरवेणं संखपणवपडहभेरिझल्लरिखरमुहिहुडुक्कमुरयमुइंगदुंदुभिनिग्घोसनाइयरवेणं' मिति परिगृह्यते, सौधर्मस्य कल्पस्य मध्येन तां दिव्यां देवर्द्धिं दिव्यां देवद्युतिं दिव्यां देवानुभूतिं 'लालेमाणे २' इति उपलालयन् २ लीलया उपभुञ्जान इति भावः, यत्रैव सौधर्मस्य कल्पस्योत्तराहो निर्याणमार्गो-निर्गमनमार्गस्तत्रैव पार्श्वेनोपागच्छति. 'ताए उक्किट्ठाए' इत्यादि पूर्ववद्यावत् दिव्यया देवगत्या योजनशतसहस्रकैः-योजनलक्षप्रमाणैर्विग्रहैः-क्रमैरवपतन्-अधस्तादवतरन् व्यतिव्रजंश्च गच्छंश्च तिर्यग् असंख्येयानां द्वीपसमुद्राणां मध्यंमध्येन 'जेणेव' त्ति नन्दीश्वरो द्वीपः यस्मिन् प्रदेशे यस्मिन्नेव च प्रदेशे तस्मिन्नन्दीश्वरे द्वीपे दक्षिणपूर्वः-आग्नेयकोणवर्त्ती रतिकरनामा पर्वतस्तस्मिन्नुपागच्छति उपागत्य च तां दिव्यां देवर्द्धिं यावद् दिव्यं देवानुभावं शनैः २ प्रतिसंहरन् २ एतदेव पर्यायेण व्याचष्टे प्रतिसंक्षिपन् २ यस्मिन् प्रदेशे जम्बूद्वीपो नाम द्वीपः तत्र च जम्बूद्वीपे यस्मिन् प्रदेशे भारतवर्षं तस्मिंश्च भारतवर्षे यस्मिन् प्रदेशे आमलकल्पा नगरी तस्याश्चाऽऽमलकल्पाया नगर्या बहिर्यस्मिन्प्रदेशे आम्रशालवनं चैत्यं तस्मिंश्च चैत्ये यस्मिन् प्रदेशे श्रमणो भगवान् महावीरः 'तेणेव' त्ति तत्रोपागच्छति, सर्वत्र तृतीया सप्तम्यर्थे द्रष्टव्या प्राकृतत्वात् उपागत्य च श्रमणं भगवन्तं महावीरं तेन प्रागुक्तस्वरूपेण दिव्येन यानविमानेन सह त्रिकृत्वः त्रीन् वारान् आदक्षिणप्रदक्षिणीकरोति, आदक्षिणप्रदक्षिणीकृत्य च श्रमणस्य भगवतो महावीरस्यापेक्षया य उत्तरपूर्वो दिग्भागस्तमपक्रामति-गच्छति अपक्रम्य च तद् दिव्यं यानविमानमीषद् एतदेव प्रकटयति-चतुरङ्गुलं ; चतुर्भिरङ्गुलैरित्यर्थः , असम्प्राप्तं सत् धरणीतले स्थापयति स्थापयित्वा चतसृभिरग्रमहिषीभिः सपरिवाराभिः द्वाभ्यामनीकाभ्यां तद्यथा-गन्धर्वानीकेन नाट्यानीकेन च सार्द्धं संपरिवृतस्तस्माद् दिव्यात् यानविमानात् पूर्वेण त्रिसोपानप्रतिरूपकेण प्रत्यवतरति, चत्वारि सामानिकदेवसहस्राण्युत्तरेण शेषा दक्षिणेन । 'तए णमि' त्यादि 'वदामि नमंसामि ०जाव पज्जुवासामी ' त्यत्र यावच्छब्दकरणात्-'सक्कारेमि सम्माणेमि कल्लाणं मंगलं देवयं चेइयं पज्जुवासेमि' इति परिग्रहः ततः 'सूरियाभाइ'इत्यादि, सूरियाभात् आदि -मुख्यः पर्युपासकतया यस्य स सूर्याभादिः श्रमणो भगवान् महावीरस्तं सूर्याभं देवमेवमवादीत्-'पोराणमेयमि'त्यादि प्राग्वत् 'नच्चासन्ने' इत्यादि,नात्यासन्ने नातिनिकटेऽवग्रहपरिहारात् नात्यासन्ने वा स्थाने वर्त्तमान इति गम्यम् नाइदूरे इति न नैवातिदूरे अतिविप्रकृष्टेऽनौचित्यपरिहारात् नातिदूरे वा 'सुस्सूसमाणे' इति भगवद्वचनानि श्रोतुमिच्छन् ' अभिमुहे ' इति अभि भगवन्तं लक्षीकृत्य मुखमस्येति अभिमुखो, भगवतः सम्मुख इत्यर्थः , विनयेन हेतुना ' पंजलिउडे ' इति प्रकृष्टः प्रधानो ललाटतटघटितत्वेन अञ्जलि हस्तन्यासविशेषः कृतो येन स प्राञ्जलिकृतः , सुखादिदर्शनात् क्तान्तस्य परनिपातः पर्युपास्ते-सेवते ।

तए णं समणे भगवं महावीरे सूरियाभस्स देवस्स तीसे य महतिमहालियाए परिसाए ०जाव परिसा जामेव दिसिं पाउब्भूया तामेव दिसिं पडिगया ( सू० २० ) तए णं से सूरियाभे देवे समणस्स भगवओ महावीरस्स अंतिए धम्मं सोच्चा निसम्म हट्ठतुट्ठ ०जाव हयहियए उट्ठाए उट्ठेति उट्ठित्ता समणं भगवं महावीरं वंदइ णमंसइ वंदित्ता नमंसित्ता एवं वयासी-अहन्नं भंते ! सूरियाभे देवे किं भवसिद्धिए अभवसिद्धिए ? सम्मद्दिट्ठी मिच्छादिट्ठी ?

परित्तसंसारिते अणंतसंसारिए ? सुलभबोहिए दुल्लभबोहिए ? आराहते विराहते ? चरिमे अचरिमे ? सूरियाभाइ समणे भगवं महावीरे सूरियाभं देवं एवं वदासी-सूरियाभा ! तुमं णं-भवसिद्धिए णो अभवसिद्धिते ०जाव चरिमे, णो अचरिमे । ( सू० ३१ ) तए णं से सूरियाभे देवे समणेणं भगवया महावीरेणं एवं वुत्ते समाणे हट्ठतुट्ठचित्तमाणंदिए परमसोमणस्से समणं भगवं महावीरं वंदति नमंसति२त्ता एवं वदासी-तुब्भे णं भंते ! सव्वं जाणह सव्वं पासह ( सव्वओ जाणह सव्वओ पासह ) सव्वं कालं जाणह सव्वं कालं पासह सव्वे भावे जाणह सव्वे भावे पासह जाणंति णं देवाणुप्पिया मम पुव्विं वा पच्छा वा ममेयरूवं दिव्वं देविड्ढिं दिव्वं देवजुइं दिव्वं देवाणुभावं लद्धं पत्तं अभिसमण्णागयं ति, तं इच्छामि णं देवाणुप्पियाणं भत्तिपुव्वगं गोयमातियाणं समणाणं निग्गंथाणं दिव्वं देविड्ढिं दिव्वं देवजुइं दिव्वं देवाणुभावं दिव्वं बत्तीसतिबद्धं नट्टविहिं उवदंसित्तए । ( सू० २२ ) तए णं समणे भगवं महावीरे सूरियाभेणं देवेणं एवं वुत्ते समाणे सूरियाभस्स देवस्स एयमट्ठं णो आढाति णो परियाणाति तुसिणीए संचिट्ठति । ( सू० २३X )( रा० ) तए णं से सूरियाभे देवे तं दिव्वं देविड्ढिं दिव्वं देवजुइं दिव्वं देवाणुभावं पडिसाहरइ पडिसाहरित्ता खणेणं जाते एगे एगभूए तए णं से सूरियाभे देवे समणं भगवं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेइ वंदति णमंसति वंदित्ता णमंसित्ता नियगपरिवालसद्धिं संपरिवुडे तमेव दिव्वं जाणविमाणं दुरुहति दुरुहित्ता जामेव दिसिं पाउब्भूया तामेव दिसिं पडिगया । ( सू० २५ )

तत श्रमणो भगवान् महावीरः सूर्याभस्य देवस्य श्वेतस्य राज्ञो धारणीप्रमुखानां च देवीनां तस्याश्च ' महइमहालियाए ' इति अतिशयेन महत्या ' इसिपरिसाए ' इति ऋषयः-त्रिकालदर्शिनस्तेषां पर्षत् तस्याः ; अवध्यादिजिनपर्षदं इत्यर्थः, मुनिपर्षदो यथोक्तानुष्ठानानुष्ठायिसाधुपर्षद् ' जतिपरिसाए ' इति यतन्ते उत्तरगुणेषु विशेषत इति यतयो-विचित्रद्रव्याद्यभिग्रहाद्युपेता साधवस्तेषां पर्षदो यतिपर्षद् ' विदुपरिसाए ' इति विद्वत्परिषद्-अनेकविज्ञानपर्षदो देवपर्षद इक्ष्वाकुपर्षद क्षत्रियपर्षद् कौरव्यपर्षद् कथम्भूताया इत्याह-' अणेगसयाए ' इति अनेकानि पुरुषाणां शतानि सङ्ख्यया यस्यां सा अनेकशता तस्या ' अणेगवंदाए ' इति अनेकानि वृन्दानि यस्या सा तथा तस्याः, ' अणेगसयवंदपरिवाराए ' इति अनेकशतानि-अनेकशतसङ्ख्यानि वृन्दानि परिवारो यस्याः सा तथा तस्याः, ' महतिमहालियाए परिसाए ' अतिशयेन महत्या पर्षदः ' ओहबले ' इति ओघेन-प्रवाहेण बलं यस्य, न तु कदाचनापि बलहानिरुपजायते इ-

ति भावः । ' एवं जहा उववाइए तहा भाणियव्वमि ' ति, एवं यथा औपपातिके ग्रन्थे तथा वक्तव्यं, तच्चैवम्-' अइबले महब्बले अपरिमियबलवीरियतेयमाहप्पकंतिजुत्ते सारयनवत्थणियमहुरगंभीरकुंचनिग्घोसदुंदुभिस्सरे उरे वित्थडाए कंठे वट्टियाए सिरे समाइण्णाए अगरलाए अमम्मणाए फुडविसयमहुरगंभीरगाहिगाए सव्वक्खरसन्निवाइयाए गिराए सव्वभासाणुगामिणीए सव्वसंसयविमोयणीए अपुणरुत्ताए सरस्सईए जोयणनीहारिणा सरेणं अद्धमागहाए भासाए भासइ, अरिहा धम्मं परिकहेइ, तंजहा-अत्थि लोए अत्थि अलोए अत्थि जीवे अत्थि अजीवे ' त्यादि, तावत् ' तए णं सा महइमहालिया मणुस्सपरिसा समणस्स भगवतो महावीरस्स अंतिए धम्मं सोच्चा निसम्म हट्ठतुट्ठा समणं भगवं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेइ करित्ता वंदइ नमंसइ २ त्ता एवं वयासी-सुयक्खाए णं भंते ! निग्गंथे पावयणे, नत्थि णं केइ समणे माहणे वा एरिसं धम्ममाइक्खित्तए, एवं वइत्ता जामेव दिसिं पाउब्भूता तामेव दिसिं पडिगया । तए णं सेए राया समणस्स भगवतो महावीरस्स अंतिए धम्मं सोच्चा निसम्म हट्ठतुट्ठचित्तमाणंदिए ०जाव हरिसवसविसप्पमाणहियए समणं भगवं महावीरं वंदइ नमंसइ वंदित्ता नमंसित्ता पसिणाइं पुच्छइ पुच्छित्ता अट्ठाइं परियाएइ परियाइत्ता उट्ठाए उट्ठेइ उट्ठित्ता समणं भगवं महावीरं वंदइ नमंसइ २ त्ता एवं वयासी-सुयक्खाए णं भंते ! निग्गंथे पावयणे ०जाव एरिसं धम्ममाइक्खित्तए, एवं वइत्ता हत्थिं दुरूहइ २ हित्ता समणस्स भगवतो महावीरस्स अंतियाओ अवसालवणाओ चेइयाओ पडिनिक्खमइ पडिनिक्खमित्ता जामेव दिसिं पाउब्भूए तामेव दिसिं पडिगते ', इति इदं च प्रायः सकलमपि सुगमं नवरं यामेव दिशमलभ्य , किमुक्तं भवति ?-यतो दिशः सकाशात् प्रादुर्भूत-समवसरणे समागतस्तामेव दिशं प्रतिगतः । सम्प्रति सूर्याभो देवो धर्मदेशनाश्रवणतो जातप्रभूततरसंसारविरागः स्वविषयं भव्यत्वादिकं पिपृच्छिषुर्यत्करोति तदाह-तए णमि' त्यादि ' भवसिद्धिए ' इति भवे सिद्धिर्यस्यासौ भवसिद्धिको भव्य इत्यर्थः , तद्विपरीतोऽभवसिद्धिकः ; अभव्य इत्यर्थः, भव्योऽपि कश्चिन्मिथ्यादृष्टिर्भवति कश्चित्सम्यग्दृष्टिस्तत आत्मनः सम्यग्दृष्टित्वनिश्चयाय पृच्छति-सम्यग्दृष्टिको मिथ्यादृष्टिक ", सम्यग्दृष्टिरपि कश्चीत्परिमितसंसारो भवति कश्चिदपरिमितसंसारः , उपशमश्रेणिशिर प्राप्तानामपि केषांचिदनन्तसंसारभावाद्, अत पृच्छति-परित्तसंसारिकोऽनन्तसंसारिकः ? ,परीत्त-परिमितः स चासौ संसारश्च परीत्तसंसारः सोऽस्यास्तीति परित्तसंसारिकः , "अतोऽनेकत्वरादिनी कप्रत्ययः एवमनन्तश्चासौ संसारश्चानन्तसंसार सोऽस्तीति अनन्तसंसारिक ; परीत्तसंसारिकोऽपि कश्चित् सुलभबोधिको भवति यथा शालिभद्रादिक , कश्चिद् दुर्लभबोधिको यथा पुरोहितपुत्रजीव , ततः पृच्छति सुलभा बोधि -भवान्तरे जिनधर्मप्राप्तिर्यस्यासौ सुलभबोधिकः , एवं दुर्लभबोधिक , सुलभबोधिकोऽपि कश्चिद्बोधिं लब्ध्वा विराधयति ततः पृच्छति-आराधयति

सम्यक् पालयति बोधिमित्याराधक तद्विपरीतो विराधकः, आराधकोऽपि कश्चित्तद्भवमोक्षगामी न भवति तत पृच्छति—चरमोऽचरमो वा ?, चरमोऽनन्तरभावी भवो यस्यासौ चरम 'अभ्रादिभ्य' इति मत्वर्थीयोऽप्रत्ययस्तद्विपरीतोऽचरम, एवमुक्ते सूर्याभादि श्रमणो भगवान् महावीरस्तं सूर्याभं देवमेवमवादीत्—भो सूर्याभ! त्वं भवसिद्धिको, नाभवसिद्धिकः । यावत्करणात्-'सम्मद्दिट्ठी नो मिच्छादिट्ठी परित्तसंसारिए नो अणंतसंसारिए सुलभबोहिए नो दुल्लभबोहिए आराहए नो विराहए' इति परिग्रह, 'तुब्भे णं भंते!,' तुब्भे' इति यूय 'णमिति' वाक्यालङ्कारे भदन्त! सर्व केवलवेदसा जानीथ सर्वं केवलदर्शनेन पश्यथ, अनेन द्रव्यपरिग्रह, तत्र सर्वशब्दो देशकार्त्स्न्येऽपि वर्त्तते यथा अस्य सर्वस्यापि ग्रामस्यायमधिपतिरिति सचराचरविषयज्ञानदर्शनप्रतिपादनार्थमाह-'सव्वतो जाणह सव्वओ पासह' सर्वत - सर्वत्र दिक्षु ऊर्ध्वमधो लोकेऽलोके चेति भाव, जानीथ पश्यथ च, अनेन क्षेत्रपरिग्रह, तत्र सर्वद्रव्यसर्वक्षेत्रविषयं वार्त्तमानिकमात्रमपि ज्ञानं दर्शनं वा सम्भाव्येत तत सकलकालविषयज्ञानदर्शनप्रतिपादनार्थमाह-सर्वकालम्-अतीतमनागतं वर्त्तमानं च जानीथ पश्यथ, एतेन कालपरिग्रह, तत्र कश्चित् सर्वद्रव्यसर्वक्षेत्रसर्वकालविषयमपि ज्ञानं सर्वपर्यायविषयं न सम्भावयेत् यथा मीमांसकादि, अत आह-सर्वान् भावान्-पर्यायान् प्रतिद्रव्यमात्मीयान् परकीयांश्च केवलवेदसा जानीथ, केवलदर्शनेन पश्यथ। अथ भावा दर्शनविषया न भवन्ति तत कथमुक्तं 'सव्वे भावे पासह' इति ?, नैष दोष, उत्कलितरूपतया हि ते भावा दर्शनविषया न भवन्ति अनुत्कलितरूपतया तु ते भवन्त्येव, तथा चोक्तम्- 'निर्विशेषं विशेषाणां, ग्रहो दर्शनमुच्यते' इति, ततो 'जाणति' 'ण' मिति पूर्ववत् देवानाप्रिया पूर्वमपि अनन्तरमुपदर्श्यमाननाट्यविधे पश्चादपि च उपदर्श्यमाननाट्यविधे, उत्तरकालं मम एतद्रूपां दिव्यां देवर्द्धिं दिव्यां देवद्युतिं दिव्यं देवानुभावं लब्धं (लब्ध) देशान्तरगतमपि किञ्चिद्भवति तत आह-प्राप्तं, प्राप्तमपि किञ्चिदन्तरायवशादनात्मवशं भवति तत आह-अभिसमन्वागत, तत इच्छामि णमि' त्यादि, इच्छामि णमिति-पूर्ववत्, देवानांप्रियेण पुरतो भक्तिपूर्वकं-बहुमानपुरस्सरं गौतमादीनां श्रमणानां निर्ग्रन्थानां दिव्यां देवर्द्धिं दिव्यां देवद्युतिं दिव्यं देवानुभावमुपदर्शयितुं द्वात्रिंशद्विध-द्वात्रिंशत्प्रकारं नाट्यविधिं नाट्यविधानमुपदर्शयितुमिति। 'तए णमि' त्यादि, तत श्रमणो भगवान् महावीर सूर्याभेण देवेन एवमुक्त सन् सूर्याभस्य देवस्यैनम्-अनन्तरोदितमर्थं नाद्रियते-न तदर्थकरणायादरपरो भवति, नापि परिजानाति—अनुमन्यते, स्वतो वीतरागत्वात् गौतमादीनां च नाट्यविधे स्वाध्यायादिविघातकारित्वात्, केवलं तूष्णीकोऽवतिष्ठते, एवं द्वितीयमपि वार, तृतीयमपि वारमुक्त सन् भगवानेवमवतिष्ठते । 'तए णमि' त्यादि तत पारिणामिक्या बुद्ध्या तत्त्वमवगम्य मौनमेव भगवत उचितं न पुन किमपि वक्तुं केवलं मया भक्तिरात्मीयोपदर्शनीयेति प्रमोदातिशयतो जातपुलक सन् सूर्याभो देव श्रमणं भगवन्तं महावीरं वन्दते—स्तौति नमस्यति—कायेन वन्दित्वा नमस्थित्वा च 'उत्तरपुरच्छिमं दिसीभागमि' त्यादि सुगमं, नवरं बहुसमभूमिवर्णनप्रेक्षागृहमण्डपवर्णनमणिपीठिकासिंहासनेनदुष्ययुल्लोचाङ्कुशमुक्तादामवर्णनानि च प्राग्वद् भावनीयानि। 'तए णमि' त्यादि तत सूर्याभो देवस्तीर्थकरस्य भगवत आलोके प्रणामं करोति, कृत्वा चानुजानातु भगवान् मामित्यनुज्ञापनां कृत्वा सिंहासनवरगत सन् तीर्थकराभिमुख सन्निषण्ण। (रा०)। 'नाट्यविधि' 'णट्ट' शब्दे चतुर्थभागे उक्ता।)

भंते त्ति भयवं गोयमे समणं भगवं महावीरं वंदति नमंसति २त्ता एवं वयासी-'सूरियाभस्स' णं भंते! देवस्स एसा दिव्वा देविड्ढी, दिव्वा देवजुत्ती दिव्वे देवाणुभावे कहिं गते कहिं अणुपविट्ठे ?, गोयमा! सरीरं गते सरीरं अणुपविट्ठे से केणट्ठेणं भंते! एवं वुच्चइ ?-सरीरं गते सरीरं अणुपविट्ठे, गोयमा!, से जहा नाम ए कूडागारसाला सिया दुहतो लित्ता दुहतो गुत्ता गुत्तदुवारा णिवाया णिवायगंभीरा, तीसे णं कूडागारसालाते अदूरसामंते एत्थ णं महेगे जणसमूहे चिट्ठति, तए णं से जणसमूहे एगं महं अब्भवद्दलगं वा वासवद्दलगं वा महावायं वा इज्जमाणं पासति २ त्तिा तं कूडागारसालं अंतो अणुपविसइ २ त्तिा णं चिट्ठइ, से तेणट्ठेण गोयमा! एवं वुच्चति-सरीरं अणुपविट्ठे।(सू०२६)

भदन्तेत्यामन्त्रणपुरस्सरं भगवान् गौतम श्रमणं भगवन्तं महावीरं वन्दते नमस्यति वन्दित्वा नमस्थित्वा 'एवं' वक्ष्यमाणप्रकारेणावादीत्, पुस्तकान्तरे क्वचिद् वाचनान्तरं दृश्यते, 'तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स जिट्ठे अंतेवासी' इत्यादि, अस्य व्याख्या-तस्मिन् काले तस्मिन् समये णंशब्दो वाक्यालङ्कारार्थ श्रमणस्य भगवतो महावीरस्य 'ज्येष्ठ' इति प्रथमोऽन्तेवासी-शिष्य, अनेन पदद्वयेन तस्य सकलसङ्घाधिपतित्वमावेदयति, इन्द्रभूतिरिति मातापितृकृतं नामधेयं नाम्नि प्राकृतत्वात् विभक्तिपरिणामेन नाम्नेति द्रष्टव्यम्, एवमन्यत्रापि यथायोगं भावनीयम्, अन्तेवासी च किल विवक्षया श्रावकोऽपि स्यादतस्तदाशङ्काव्यवच्छेदार्थमाह—'अनगार', न विद्यते अगार—गृहमस्येत्यनगार, अयं च विगीतगोत्रोऽपि सम्भाव्येत अत आह-गौतमो गोत्रेण-गौतमाह्वयगोत्रसमन्वित इत्यर्थ, अयं च तत्कालोचितदेहपरिमाणापेक्षया न्यूनाधिकदेहोऽपि स्यादत आह--सप्तोत्सेध—सप्तहस्तप्रमाणशरीरोच्छ्राय, अयं चेत्थंभूतो लक्षणहीनोऽपि शङ्क्येतातस्तदाशङ्कापनोदार्थमाह--'समचउरंससंठाणसंठिए' इति, समा—शरीरलक्षणशास्त्रोक्तप्रमाणाविसंवादिन्यश्चतस्रोऽस्रयो यस्य तत समचतुरस्रं अस्रयस्त्विह चतुर्दिग्विभागोपलक्षिता शरीरावयवा द्रष्टव्या, अन्ये त्वाहु—समा—अन्यूनाधिकाश्चतस्रोऽप्यस्रयो यत्र तत् समचतुरस्रं तच्च तत् संस्थानं च, संस्थानम्—आकार तच्च, वामदक्षिणजान्वोरन्तरं आसनस्य ललाटोपरिभागस्य चान्तरं वामस्कन्धस्य दक्षिणजानुनश्चान्तरमिति, अपरे त्वाहु --विस्तारे-

स्सघयो समत्वात् समचतुरस्र तच्च तत्संस्थानं च २, संस्थानम्—आकारस्तेन संस्थितो—व्यवस्थितो यः स तथा ' जाव उट्ठाए उट्ठेइ ' इति यावत्करणात्—वज्जरिसहसंघयणे कणगपुलगनिघसपम्हगोरे उग्गतवे दित्ततवे तत्ततवे महातवे उराले घोरे घोरगुणे घोरतवस्सी घोरबंभचेरवासी उच्छूढसरीरे संखित्तविपुलतेयलेसे चउद्दसपुव्वी चउनाणोवगए सव्वक्खरसन्निवाई समणस्स भगवतो महावीरस्स अदूरसामन्ते उड्ढंजाणू अहोसिरे झाणकोट्ठोवगए संजमेणं तवसा अप्पाणं भावेमाणे विहरइ, तए णं से भगवं गोयमे जायसड्ढे जायसंसए जायकोउहल्ले उप्पन्नसड्ढे उप्पन्नसंसए उप्पन्नकोउहल्ले संजायसड्ढे संजायसंसए संजायकोउहल्ले समुप्पण्णसड्ढे समुप्पण्णसंसए समुप्पण्णकोउहल्ले उट्ठाए उट्ठेइ' इति द्रष्टव्यं, तत्र नाराचमुभयतो मर्कटबन्ध ऋषभस्तदुपरि वेष्टनपट्ट कीलिका अस्थित्रयस्यापि भेदकमस्थि एवरूपं संहननं यस्य स तथा, तथा कनकस्य—सुवर्णस्य यः पुलको—लवस्तस्य यो निकष —कषपट्टके रेखारूपस्तथा पद्मग्रहणेन पद्मकेसराण्युच्यन्ते अवयवे समुदायोपचारात् यथा देवदत्तस्य हस्ताग्ररूपोऽवयवोऽपि देवदत्त , तथा च देवदत्तस्य हस्ताग्रं स्पृष्ट्वा लोको वदति—स्पृष्टो मया देवदत्त इति, कनकपुलकनिकषवत् पद्मवच्च यो गौरः स कनकपुलकनिकषपद्मगौर , अथवा—कनकस्य य पुलको—द्रवत्वे सति बिन्दुस्तस्य निकषो वर्णत सदृश. कनकपुलकनिकष., तथा पद्मवत्—पद्मकेसरवत् यो गौरः स पद्मगौर, तत पदद्वयस्य कर्मधारयसमास , अयं च विशिष्टचरणरहितोऽपि शङ्क्येत तत आह—' उग्गतवे ' इति, उग्रम्—अधृष्यं तप —अनशनादि यस्य स तथा , यदन्येन प्राकृतेन पुंसा न शक्यते चिन्तयितुमपि मनसा तद्विधेन; तपसा युक्त इत्यर्थ , तथा दीप्तं—जाज्वल्यमानदहन इव कर्मवनगहनदहनसमर्थतया ज्वलितं तपो—धर्मध्यानादि यस्य स तथा, ' तत्ततवे ' इति तप्तं तपो येन स तप्ततपा , एवं हि तेन तपस्तप्तं येन सर्वाण्यपि अशुभानि कर्माणि भस्मसात् कृतानीति ' महत्वे ' इति महान्—प्रशस्तमाशंसादोषरहितत्वात् तपो यस्य स महातपा. , तथा ' उराले ' इति , उदार - प्रधान , अथवा-उरालो—भीष्म उग्रादिविशिष्टतप करणेन पार्श्वस्थानामल्पसत्त्वानामतिभयानक इति भाव , तथा घोरो—निर्घृण परीषहेन्द्रियादिरिपुगणविनाशनमधिकृत्य निर्दय इति यावत् , तथा घोरा—अन्यैर्दुरनुचरा गुणा मूलगुणादयो यस्य स घोरगुण , तथा घोरैस्तपोभिस्तपस्वी घोरतपस्वी , ' घोरबंभचेरवासी ' इति घोरं—दारुणमल्पसत्त्वैर्दुरनुचरत्वात् ब्रह्मचर्यं यत् तत्र वस्तुं शीलं यस्य स तथा, ' उच्छूढसरीरे ' इति उच्छूढम्—उज्झितमिवोज्झितं संस्कारपरित्यागात् शरीरं येन स उच्छूढशरीर , संखित्तविउलतेउलेसे ' इति संक्षिप्ता—शरीरान्तर्गतत्वेन ह्रस्वतां गता विपुला—विस्तीर्णा अनेकयोजनप्रमाणक्षेत्राश्रितवस्तुदहनसमर्थत्वात् तेजोलेश्या—विशिष्टतपोजन्यलब्धिविशेषप्रभवा तेजोज्वाला यस्य स तथा, चउद्दसपुव्वी ' इति चतुर्दश पूर्वाणि विद्यन्ते । यस्य तेनैव तेषां रचितत्वात् असौ चतुर्दशपूर्वी , अनेन तस्य श्रुतकेवलितामाह. स चावधिज्ञानादिविकलोऽपि स्यादत आह—' चउनाणोवगए ' मतिश्रुतावधिमन पर्याय ज्ञानचतुष्टयसमन्वित. , उक्तविशेषणद्वययुक्तोऽपि कश्चिन्न समग्रश्रुतविषयव्यापिज्ञानो भवति चतुर्दशपूर्वविदामपि षट्स्थानपतितत्वेन श्रवणादत आह—'सर्वाक्षरसन्निपाती ' अक्षराणां सन्निपाता.—संयोगा. अक्षरसन्निपाताः सर्वे च ते अक्षरसन्निपाताश्च सर्वाक्षरसन्निपातास्ते यस्य ज्ञेया' स तथा, किमुक्तं भवति ?—या काचित् जगति पदानुपूर्वी वाक्यानुपूर्वी वा संभवति ता. सर्वा अपि जानातीति, एवंगुणविशिष्टो भगवान् विनयराशिरिव साक्षादिति कृत्वा शिष्याचारत्वाच्च श्रमणस्य भगवतो महावीरस्यादूरसामन्ते विहरतीति योग , तत्र दूर—विप्रकृष्ट सामन्त—सन्निकृष्ट तत्प्रतिषेधाददूरसामन्त; ततो नातिदूरे नातिनिकटे इत्यर्थ , किंविशिष्ट. सन् तत्र विहरतीत्यत आह—' उड्ढंजाणू अहोसिरे ' ऊर्ध्वे जानुनी यस्यासावूर्ध्वजानु ,अध.शिरा नोर्द्ध्वं तिर्यग्वा विक्षिप्तदृष्टि , किन्तु-नियतभूभागनियमितदृष्टिरित्यर्थ., 'झाणकोट्ठोवगए' इति ध्यानं—धर्मध्यानं शुक्लध्यानं च तदेव कोष्ठ -कुशूलो ध्यानकोष्ठस्तमुपगतो ध्यानकोष्ठोपगत , यथा हि कोष्ठके धान्यं प्रक्षिप्तमविप्रसृतं भवति एवं भगवानपि ध्यानतोऽविप्रकीर्णेन्द्रियान्त.करणवृत्तिरित्यर्थ , 'संयमेन' पञ्चाश्रवनिरोधादिलक्षणेन तपसा अनशनादिना चशब्दोऽत्र समुच्चयार्थो लुप्तो द्रष्टव्य , संयमतपोग्रहणमनयो प्रधानमोक्षाङ्गताख्यापनार्थं, प्राधान्यं संयमस्य नवकर्मानुपादानहेतुत्वेन तपसश्च पुराणकर्मनिर्जराहेतुत्वेन, तथाहि—अभिनवकर्मानुपादानात् पुराणकर्मक्षपणाच्च जायते सकलकर्मक्षयलक्षणो मोक्षस्ततो भवति संयमतपसोर्मोक्षं प्रति प्राधान्यमिति ' अप्पाणं भावेमाणे विहरति ' इति, आत्मानं वासयन् तिष्ठति । ' तए णं ' मित्यादि, ततो ध्यानकोष्ठोपगतविहरणादनन्तर ' णं ' मिति वाक्यालङ्कारे स भगवान् गौतमो ' जातसड्ढे' इत्यादि, जातश्रद्धादिविशेषणविशिष्ट सन् उत्तिष्ठतीति योग ,तत्र जाता—प्रवृत्ता श्रद्धा—इच्छा वक्ष्यमाणार्थतत्त्वावगमं प्रति यस्यासौ जातश्रद्धः तथा जात संशयो यस्य स जातसंशय , संशयो नाम अनवधारितार्थं ज्ञानं, स चैवम्—इत्थं नामास्य दिव्या देवर्द्धिर्विस्तृता अभवत् , इदानीं सा क्व गतेति तथा 'जायकुतूहले ' इति जातं कुतूहलं यस्य स जातकुतूहल ; जातौत्सुक्य इत्यर्थ , तथा कथममुमर्थं भगवान् प्ररूपयिष्यति इति, तथा ' उप्पन्नसड्ढे ' उत्पन्ना प्रागभूता सती भूता श्रद्धा यस्यासौ उत्पन्नश्रद्ध , अथ जातश्रद्ध इत्येतदेवास्तु किमर्थमुत्पन्नश्रद्ध इति , प्रवृत्तश्रद्धत्वेनैवोत्पन्नश्रद्धत्वस्य लब्धत्वात् , न हि अनुत्पन्ना श्रद्धा प्रवर्त्तते इति, अत्रोच्यते—हेतुत्वप्रदर्शनार्थं. तथाहि—कथं प्रवृत्तश्रद्ध. ?, उच्यते—यत उत्पन्नश्रद्ध , इति हेतुत्वदर्शनं चोपपन्नं, तस्य काव्यालङ्कारत्वात् यथा ' प्रवृत्तदीपामप्रवृत्तभास्करां, प्रकाशचन्द्रां बुबुधे विभावरी ' मित्यत्र, अत्र हि यद्यपि प्रवृत्तदीपादित्वादेवाप्रवृत्तभास्करत्वमुपगतं तथाप्यप्रवृत्तभास्करत्वं प्रवृत्तदीपत्वादेर्हेतुतयोपन्यस्तमिति सम्यक् ' उप्पन्नसड्ढे उप्पन्नसंसये ' इति प्राग्वत् , तथा ' संजायसड्ढे ' इत्यादि पदषट्कं प्राग्वत् , नवरमिह संशब्द. प्रकर्षादिवचनो वेदितव्य , ' उट्ठाए उट्ठेइ '

त्ति उत्थानमुत्था—ऊर्ध्वं वर्त्तनं तया उत्तिष्ठति, इह 'उट्ठइ'
इत्युक्ते क्रियारम्भमात्रमपि प्रतीयेत यथा वक्तुमुत्तिष्ठते तत
स्तद्व्यवच्छेदार्थमुत्थायेत्युक्तम् .उत्थया उत्थाय 'जेणेव'त्यादि
यस्मिन् दिग्भागे श्रमणो भगवान् महावीरो वर्त्तते 'तेणेव'
त्ति तस्मिन्नेव दिग्भागे उपागच्छति.उपागत्य च श्रमणं त्रिकृ-
त्व --स्त्रिवारान् आदक्षिणप्रदक्षिणीकरोति, आदक्षिणप्रदक्षि-
णीकृत्य च वन्दते नमस्यति वन्दित्वा नमस्यित्वा एवमवादी-
त्—' सूरियाभस्स णं भंते ! ' इत्यादि, ' कहिंगए ' इति क
गत ?. तत्र गमनमन्तरप्रवेशाभावेऽपि दृष्टं यथा भित्तौ गतो
धूलिरिति एषोऽपि दिव्यानुभावो यत्रैव क्वचित्प्रत्यासन्ने प्रदे-
शे गत. स्यात्ततो दृश्येत न चासौ दृश्यते,ततो भूय' पृच्छति-
' कहिं अणुपविट्ठे ' इति क्वानुप्रविष्ट क्वान्तर्लीन इति भाव' ।
भगवानाह—गौतम ! शरीर गत शरीरमनुप्रविष्ट . पुन'
पृच्छति—' से केणट्ठेणं ' मित्यादि अथ केनार्थेन—केन हेतु-
ना भदन्त ! एवमुच्यते—शरीर गत शरीरमनुप्रविष्ट. ?,
भगवानाह—गौतम ! ' से जहानामए ' इत्यादि, कूटस्येव-
पर्वतशिखरस्येवाकारो यस्या सा कूटाकारा, यस्या उपरि
आच्छादनं शिखराकारं सा कूटाकारेति भाव , कूटाकारा
चासौ शाला च कूटाकारशाला, यद्वा-कूटाकारेण शिख-
राकृत्योपलक्षिता शाला कूटाकारशाला स्यात् ,'दुहतो लि-
त्ता ' इति बहिरन्तश्च गोमयादिना लिप्ता गुप्ता बहि प्रा-
कारावृता गुप्तद्वारा द्वारस्थगनात् , यद्वा—गुप्ता गुप्तद्वारा
केषाञ्चित् द्वाराणा स्थगितत्वात् केषाञ्चिद्वास्थगितत्वादि-
ति निवाता-वायोरप्रवेशात् किल महद् गृह निवात प्रायो
न भवति तत आह निवातगम्भीरा निवाता सती गम्भी-
रा निवातगम्भीरा; निवाता सती विशाला इत्यर्थ , ततस्त-
स्या कूटाकारशालाया अदूरसामन्ते नातिदूरे निकटे वा
प्रदेशे महान् एकोऽन्यतरो जनसमूहस्तिष्ठति, स च एक
महत् अभ्ररूप वार्दलम् अभ्रवार्दल, धाराभिपातरहित स-
म्भाव्यवर्षं वार्दलमित्यर्थ., वर्षप्रधानं वार्दलक वर्षवार्दलकं
'वर्षं कुर्वन्त वार्दलक महावात वा ' एज्जमाणं ' मिति आ-
यान्तम्-आगच्छन्तं पश्यति, दृष्ट्वा च त ' कूडागारसाल'
द्वितीया षष्ठ्यर्थे तस्या कूटाकारशालाया अन्तरं ततोऽ-
नुप्रविश्य तिष्ठति. एवं सूर्याभस्यापि देवस्य सा तथा
विशाला दिव्या देवर्धिर्दिव्या देवद्युतिर्दिव्यो देवानुभाव
शरीरमनुप्रविष्ट ' से-एणट्ठेणं ' मित्यादि, अनेन प्रकारेण
गौतम ! एवमुच्यते-' सूरियाभस्स ' त्यादि ।

भूयो गौतमः पृच्छति—

कहिं णं भंते ! सूरियाभस्स देवस्स सूरियाभे णामं
विमाणे पन्नत्ते ?, गोयमा ! जंबुद्दीवे दीवे मंदरस्स पव्व-
यस्स दाहिणेणं इमीसे रयणप्पभाए पुढवीए बहुसमरम-
णिज्जातो भूमिभागातो उड्ढं चंदिमसूरियगहगणणक्ख-
त्ततारारूवाणं बहूइं जोयणसयाइं बहूइं जोयणसहस्साइं
बहूइं जोयणसयसहस्साइं बहुईओ जोयणकोडीओ बहु-
ईओ जोयणसयसहस्सकोडीओ उड्ढं दूरं वीतीवइत्ता एत्थ
णं सोहम्मे कप्पे नामं कप्पे पन्नत्ते, पाईणपडीणआयते
उदीणदाहिणविच्छिण्णे अद्धचंदसंठाणसंठिते अच्चिमा-
लिभासरासिवण्णाभे असंखेज्जाओ जोयणकोडाकोडीओ
आयामविक्खंभेणं असंखेज्जाओ जोयणकोडाकोडीओ
परिक्खेवेणं इत्थ णं सोहम्माणं देवाणं बत्तीसं विमाण-
वाससयसहस्साइं भवंतीति मक्खायं, ते णं विमाणा स-
व्वरयणामया अच्छा ०जाव पडिरूवा, तेसिं णं विमाणाणं
बहुमज्झदेसभाए पंच वडिंसया पण्णत्ता, तं जहा—१ असो-
गवडिंसते २ सत्तवण्णवडिंसते ३ चंपकवडिंसते ४ चूयगव-
डिंसते ५ मज्झे सोहम्मवडिंसए, ते णं वडिंसगा सव्व-
रयणामया अच्छा ०जाव पडिरूवा, तस्स णं सोहम्मव-
डिंसगस्स महाविमाणस्स पुरच्छिमेणं तिरियमसंखेज्जाइं
जोयणसयसहस्साइं वीईवइत्ता एत्थ णं सूरियाभस्स
देवस्स सूरियाभे नामं विमाणे पन्नत्ते, अद्धतेरस जोय-
णसयसहस्साइं आयामविक्खंभेणं गुणयालीसं च सय-
सहस्साइं बावन्नं च सहस्साइं अट्ठ य अडयाले जोयण-
सते परिक्खेवेणं, से णं एगेणं पागारेणं सव्वओ समंता
संपरिक्खित्ते, से णं पागारे तिन्नि जोयणसयाइं उड्ढं उच्च-
त्तेणं मूले एगं जोयणसयं विक्खंभेणं मज्झे पन्नासं जो-
यणाइं विक्खंभेणं उप्पिं पणवीसं जोयणाइं विक्खंभेणं
मूले विच्छिन्ने मज्झे संखित्ते उप्पिं तणुए गोपुच्छसंठा
णसंठिए सव्वकणगामए अच्छे ०जाव पडिरूवे, से णं
पागारे णाणा ( मणि ) विहपंचवन्नेहिं कविसीसएहिं
उवसोभिते, तं जहा—किण्हेहिं नीलेहिं लोहितेहिं हालि-
द्देहिं सुक्किल्लेहिं कविसीसएहिं, ते णं कविसीसगा एगं
जोयणं आयामेणं अद्धजोयणं विक्खंभेणं देसूणं जोयणं
उड्ढं उच्चत्तेणं सव्वमणि ( रयणा ) मया अच्छा ०जाव
पडिरूवा, सूरियाभस्स णं विमाणस्स एगमेगाए बाहाए
दारसहस्सं २ भवतीति मक्खायं, ते णं दारा पंच जो-
यणसयाइं उड्ढं उच्चत्तेणं अड्ढाइज्जाइं जोयणसयाइं विक्खं-
भेणं तावइयं चेव पवेसेणं सेया वरकणगथूभियागा ईहा-
मियउसभतुरगणरमगरविहगवालगकिन्नररुरुसरभचमरकुं-
जरवणलयपउमलयभत्तिचित्ता खंभुग्गयवरवयरवेइया प-
रिगयाभिरामा विज्जाहरजमलजुयलजंतजुत्तं पिव अच्ची-
सहस्समालिणीया रूवगसहस्सकलिया भिसमाणा भिब्भि-
समाणा चक्खुल्लोयणलेसा सुहफासा सस्सिरीयरूवा वन्नो
दाराणं तेसिं होइ, तं जहा—वइरामया णिम्मा रिट्ठामया
पइट्ठाणा वेरुलियमया सूइखंभा जायरूवोवचियपवरपं-
चवन्नमणिरयणकोट्टिमतला हंसगब्भमया एलुया गोमे-
ज्जमया इंदकीला लोहियक्खमतीतो दारचेडीओ जो-
ईरसमया उत्तरंगा लोहियक्खमईओ सूईओ वयरामया
संधी नाणामणिमया समुग्गया वयरामया अग्गला अ-

ग्गलपासाया रययामयाओ आवत्तणपेढियाओ अंकुत्तरपासगा निरंतरियघणकवाडा भित्तीसु चेव भित्तिगुलिता छप्पन्ना तिणि होंति गोमाणसिया तइया णाणामणिरयणवालरूवगलीलट्ठिअसालभंजियागा वयरामया कुड्डा रययामया उस्सेहा सव्वतवणिज्जमया उल्लोया णाणामणिरयणजालपंजरमणिवंसगलोहियक्खपडिवंसगरययभोमा अंकामया पक्खा पक्खबाहाओ जोईरसामया वंसा वंसकवेल्लुयाओ रयणामयाओ पट्टियाओ जायरूवमईओ ओहाडणीओ वइरामईओ उवरिपुच्छणीओ सव्वसेयरययामयाच्छायणे अंकामया कणगकूडतवणिज्जथूभियागा सेया संखतलविमलनिम्मलदधिघणगोखीरफेणरययणिगरप्पगासा तिलगरयणद्धचंदचित्ता, नाणामणिदामालंकिया अंतो बहिं च सण्हा तवणिज्जवालुयापत्थडा सुहफासा सस्सिरीयरूवा पासाईया दरिसणिज्जा अभिरूवा पडिरूवा ।

क्व सूर्याभस्य देवस्य सूर्याभं विमानं प्रज्ञप्तं ?, भगवानाह-गौतम ! अस्मिन् जम्बूद्वीपे यो मन्दरः पर्वतस्तस्य दक्षिणतोऽस्या रत्नप्रभायाः पृथिव्या बहुसमरमणीयात् भूमिभागादूर्ध्वं चन्द्रसूर्यग्रहगणनक्षत्रतारारूपाणामपि पुरतो बहूनि योजनानि बहूनि योजनशतानि ततो बुद्ध्या बहुबहुतराण्युत्पत्य बहूनि योजनसहस्राण्येवमेव बहूनि योजनशतसहस्राणि एवमेव च बह्वीर्योजनकोटीरेवमेव च बह्वीर्योजनकोटीकोटीरूर्ध्वं दूरमुत्प्लुत्य अत्र-सार्द्धरज्जुप्रमाणे प्रदेशे सौधर्मो नाम कल्पः प्रज्ञप्तः स च प्राचीनापाचीनायतः-पूर्वापरायत इत्यर्थः, उत्तरदक्षिणविस्तीर्णः, अर्द्धचन्द्रसंस्थानसंस्थितः, द्वौ हि सौधर्मेशानदेवलोकौ समुदितौ परिपूर्णचन्द्रमण्डलसंस्थानसंस्थितौ, तयोश्च मेरोर्दक्षिणवर्ती सौधर्मकल्प उत्तरवर्त्ती ईशानकल्पः ततो भवति सौधर्मकल्पः चन्द्रसंस्थानसंस्थितः, 'अच्चिमाली' इति अर्चींषि-किरणानि तेषां माला अर्चिर्माला सा अस्यास्तीति अर्चिर्माली, किरणमालासङ्कुल इत्यर्थः असङ्ख्येययोजनकोटीकोटी 'आयामविक्खंभेणं' ति आयामश्च विष्कम्भश्च आयामविष्कम्भं समाहारो द्वन्द्वस्तेन आयामेन च विष्कम्भेन चेत्यर्थः, असंख्येया योजनकोटीकोट्यः परिक्खेवेणं' परिधिना 'सव्वरयणामए' इति सर्वात्मना रत्नमयः 'जाव पडिरूवे' इति यावत्करणात्—'अच्छे सण्हे घट्ठे मट्ठे' इत्यादिविशेषणकदम्बकपरिग्रहः, 'तत्थ णं' मित्यादि तत्र सौधर्मे कल्पे द्वात्रिंशत् विमानशतसहस्राणि भवन्ति इत्याख्यातं मया शेषैश्च तीर्थकृद्भिः । 'ते णं विमाणा' इत्यादि, तानि विमानानि सूत्रे पुंस्त्वं प्राकृतत्वात् सर्वरत्नमयानि-सामस्त्येन रत्नमयानि 'अच्छानि' आकाशस्फटिकवदतिनिर्मलानि, अत्रापि यावत्करणात्-'सण्हा लण्हा घट्ठा मट्ठा नीरया' इत्यादि, विशेषणजातं द्रष्टव्यं, तच्च प्राग्व्याख्यातं 'तेसि णं' मित्यादि, तेषां विमानानां बहुमध्यदेशभागे त्रयोदशप्रस्तटे सर्वत्रापि विमानावतंसकानां स्वकल्पचरमप्रस्तटवर्तित्वात् पञ्चावतंसकाः पञ्चविमानावतंसकाः प्रज्ञप्ताः, तद्यथा-अशोकावतंसकः-अशोकावतंसकनामा, स च पूर्वस्यां दिशि, ततो दक्षिणस्यां सप्तपर्णावतंसकः पश्चिमायां चम्पकावतंसकः उत्तरस्यां चूतावतंसकः मध्ये सौधर्मावतंसकः, ते च पञ्चापि विमानावतंसकाः सर्वरत्नमयाः 'अच्छा ०जाव पडिरूवा' इति यावत्करणादत्रापि सण्हा लण्हा घट्ठा मट्ठा' इत्यादि विशेषणजातमवगन्तव्यम्, अस्य च सौधर्मावतंसकस्य पूर्वस्यां दिशि तिर्यक् असंख्येयानि योजनशतसहस्राणि व्यतिव्रज्य-अतिक्रम्यात्र सूर्याभस्य देवस्य सूर्याभं नाम विमानं प्रज्ञप्तम्, अर्द्धं त्रयोदश येषां तानि अर्द्धत्रयोदशानि, सार्द्धानि द्वादशेत्यर्थः, योजनशतसहस्राण्यायामविष्कम्भेन, एकोनचत्वारिंशत् योजनशतसहस्राणि द्विपञ्चाशत्सहस्राणि अष्टौ च योजनशतानि अष्टचत्वारिंशदधिकानि ३९५२८४८ किञ्चिद्विशेषाधिकानि परिक्षेपेण—परिधिना. इह च परिक्षेपपरिमाणं 'विक्खंभवग्गदहगुणकरणी वट्टस्स परिरओ होइ' इति करणवशात् स्वयमानेतव्यं, सुगमत्वात् । 'से णं एगेणं' मित्यादि, तद्विमानमेकेन प्राकारेण सर्वतः—सर्वासु दिक्षु समन्ततः—सामस्त्येन परिक्षिप्तम् । 'से णं पागारे' इत्यादि-स प्राकारः त्रीणि योजनशतानि ऊर्ध्वमुच्चैस्त्वेन मूले एकं योजनशतं विष्कम्भेण मध्यभागे पञ्चाशत्, मूलादारभ्य मध्यभागं यावत् योजने योजने योजनत्रिभागस्य विष्कम्भतस्त्रुटितत्वात्, उपरि-मस्तके पञ्चविंशतियोजनानि विष्कम्भेण, मध्यभागादारभ्योपरितनमस्तकं यावत् योजने योजने योजनषड्भागस्य विष्कम्भतो हीयमानतया लभ्यमानत्वात्, अत एव मूले विस्तीर्णो मध्ये संक्षिप्तः पञ्चाशतो योजनानां त्रुटितत्वात् उपरि तनुकः पञ्चविंशतियोजनमात्रविस्तारात्मकत्वात्, अत एव गोपुच्छसंस्थानसंस्थितः, 'सव्वरयणामए अच्छे' इत्यादि विशेषणजातं प्राग्वत् 'से णं पागारे' इत्यादि, स प्राकारो णाणाविहपंचवण्णेहिं' इति नानाविधानि च तानि पञ्चवर्णानि च नानाविधपञ्चवर्णानि तैः. नानाविधत्वं च पञ्चवर्णापेक्षया द्रष्टव्यं कृष्णादिवर्णतारतम्यापेक्षया वा पञ्चवर्णत्वमेव प्रकटयति— कएहेहिं' इत्यादि, 'ते णं कविसीसगा' इत्यादि, तानि कपिशीर्षकाणि प्रत्येकं योजनमेकमायामतो दैर्घ्येणार्द्धं योजनं विष्कम्भेण देशोनयोजनमुच्चैस्त्वेन 'सव्वरयणामया' इत्यादि विशेषणजातं प्राग्वत् । सूरियाभस्स णं' मित्यादि, एकैकस्यां बाहायां द्वारसहस्रमिति सर्वसङ्ख्यया चत्वारि द्वारसहस्राणि, तानि च द्वाराणि प्रत्येकं पञ्चयोजनशतान्यूर्ध्वम् उच्चैस्त्वेन अर्द्धतृतीयानि योजनशतानि विष्कम्भतः 'तावइयं चेव' त्ति अर्द्धतृतीयान्येव योजनशतानि प्रवेशतः 'सेया' इत्यादि, तानि च द्वाराणि सर्वाण्युपरि श्वेतानि-श्वेतवर्णोपेतानि बाहुल्येनाङ्करत्नमयत्वात् 'वरकणगथूभियागा' इति वरकनका—वरकनकमयी स्तूपिका-शिखरं येषां तानि तथा, 'ईहामिगउसभतुरगनरमगरविहगवालगकिन्नररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्ता खंभुग्गयवइरवेइयापरिगयाभिरामा विज्जाहरजमलजुयलजंतजुत्ता विव अच्चीसहस्समालिणीया रूवगसहस्सकलिया भिसमाणा भिब्भिसमाणा चक्खुल्लो-

वण्णलेसा सुहफासा सस्सिरीयरूवा' इति विशेषणजातं यानविमानवद्भावनीयं 'वन्नो दाराणं तेसिं होइ' इति तेषां द्वाराणां वर्णः—स्वरूपव्यावर्णनमयं भवति, तमेव कथयति-'तंजहे' त्यादि, तद्यथा—'वइरामया णिम्मा' इति नेमा नाम द्वाराणां भूमिभागादूर्ध्वं निष्क्रामन्तः प्रदेशास्ते सर्वे वज्रमया—वज्ररत्नमयाः, वज्रशब्दस्य दीर्घत्वं प्राकृतत्वात्, एवमन्यत्रापि द्रष्टव्यं, 'रिट्ठामया पइट्ठाणा' रिष्टमया—रिष्टरत्नमयानि प्रतिष्ठानानि मूलपादाः 'वेरुलियमया खंभा' इति वैडूर्यरत्नमयाः स्तम्भाः 'जायरूवोवचियपवरपंचवण्ण [ वर ] मणिरयणकुट्टिमतला' जातरूपेण-सुवर्णेन उपचितैः-युक्तैः प्रवरैः—प्रधानैः पञ्चवर्णैर्मणिभिः-चन्द्रकान्तादिभिः रत्नैः—कर्केतनादिभिः कुट्टिमतलं—बद्धभूमितलं येषां ते तथा 'हंसगब्भमया एलुया' हंसगर्भमया—हंसगर्भाख्यरत्नमया एलुका—देहल्यः 'गोमेज्जमया इंदकीला' इति गोमेज्जकरत्नमया इन्द्रकीलाः, 'लोहियक्खमईओ' लोहिताक्षरत्नमय्यः 'चेडाओ' इति द्वारशाखाः 'जोईरसमया उत्तरंगा' इति द्वारस्योपरि तिर्यग्व्यवस्थितमुत्तरङ्गं तानि ज्योतीरसमयानि—ज्योतीरसाख्यरत्नात्मकानि 'लोहियक्खमईओ' लोहिताक्षमय्यो लोहिताक्षरत्नाधिकाः सूचयः—फलकद्वयसम्बन्धविघटनाभावहेतु पादुकास्थानीयाः 'वइरामया संधी' वज्रमयाः सन्धयः सन्धिमेलाः फलकानां, किमुक्तं भवति?-वज्ररत्नपूरिताः फलकानां सन्धयः,'नाणामणिमया समुग्गया' इति समुद्गका इव समुद्गकाः-शूचिकागृहाणि तानि नानामणिमयानि 'वयरामया अग्गला अग्गलपासाया' अर्गला-प्रतीताः अर्गलाप्रासादा यत्रार्गला नियम्यन्ते, आह च जीवाभिगममूलटीकाकारः-"अर्गलाप्रासादो यत्रार्गला नियम्यन्ते इति" एते द्वये अपि वज्ररत्नमय्यौ 'रययामयाओ आवत्तणपेढियाओ' इति आवर्त्तनपीठिका नाम यत्रेन्द्रकीलको भवति, उक्तञ्च विजयद्वारचिन्तायां जीवाभिगममूलटीकाकारेण-"आवर्त्तनपीठिका यत्रेन्द्रकीलको भवतीति" 'अंकुत्तरपासगा' इति अङ्का-अङ्करत्नमया उत्तरपार्श्वा येषां द्वाराणां तानि अङ्कोत्तरपार्श्वकानि 'निरंतरियघणकवाडा' इति निर्गता अन्तरिका—लघ्वन्तररूपा येषां ते निरन्तरिका अत एव घना निरन्तरिका घनाः कपाटा येषां द्वाराणां तानि निरन्तरिकघनकपाटानि 'भित्तिसु चेव भित्तिगुलिया छप्पन्ना तिन्नि होंति' इति तेषां द्वाराणां प्रत्येकमुभयोः पार्श्वयोः भित्तिषु भित्तिगता भित्तिगुलिका-पीठकस्थानीयाः तिस्रः षट्पञ्चाशत्प्रमाणा भवन्ति 'गोमाणसिया ( सज्जा ) तइया' इति गोमानस्य शय्या 'तइया' इति तावन्मात्रा, षट्पञ्चाशत्त्रिकपरिमाणा इत्यर्थः 'णाणामणिरयणवालरूवगलीलट्ठियसालभंजियागा' इति इदं द्वारविशेषणमेव, नानामणिरत्नानि—नानामणिरत्नमयानि व्यालरूपकाणि लीलास्थितशालभञ्जिकाश्च-लीलास्थितपुत्तलिका येषु तानि तथा 'वयरामया कूडा रययामया उस्सेहा' इति कूडो—माडभाग उच्छ्रय—शिखरम्, आह च जीवाभिगममूलटीकाकृत्-'कूडो माडभाग उच्छ्रय शिखर'मिति, नवरमत्र शिखराणि तेषामेव माडभागानां सम्बन्धीनि वेदितव्यानि, द्वारशिखराणामुक्तत्वात् वक्ष्यमाणत्वाच्च 'सव्वतवणिज्जमया उल्लोया' उल्लोका—

उपरिभागाः सर्वतपनीयमयाः—सर्वात्मना तपनीयरूपसुवर्णविशेषमयाः 'णाणामणिरयणजालपंजरमणिवंसगलोहियक्खपडिवंसगरययभोमा' इति मणयो—मणिमया वंशा येषु तानि मणिमयवंशकानि लोहिताख्यानि-लोहिताख्यमयाः प्रतिवंशा येषु तानि लोहिताख्यप्रतिवंशकानि रजता-रजतमयी भूमिर्येषां तानि रजतभूमानि प्राकृतत्वात्समासान्तः मणिवंशकानि लोहिताख्यप्रतिवंशकानि रजतभूमानि नानामणिरत्नानि-नानामणिरत्नमयानि जालपञ्जराणि-गवाक्षापरपर्यायाणि येषु तानि तथा, पदानामन्यथोपनिपातः प्राकृतत्वात्, 'अंकामया पक्खा पक्खबाहाओ' इति अङ्का—रत्नविशेषास्तन्मयाः पक्षास्तदेकदेशभूताः पक्षबाहवोऽपि तदेकदेशभूता एवाङ्कमय्यः, आह च जीवाभिगममूलटीकाकृत्-"अङ्कमयाः पक्षास्तदेकदेशभूता एव पक्षबाहवोऽपि द्रष्टव्या" इति, 'जोईरसामया वंसा वंसकवेल्लुया य' इति ज्योतीरसं नाम रत्नं तन्मया वंशाः-महान्तः पृष्ठवंशाः 'वंसकवेल्लुया य' इति महतां पृष्ठवंशानामुभयतस्तिर्यक् स्थाप्यमाना वंशाः कवेल्लुकानि प्रतीतानि 'रययामईओ पट्टिआओ' इति रजतमय्यः पट्टिकाः—वंशानामुपरि कम्बास्थानीयाः 'जायरूवमईओ ओहाडणीओ' जातरूप-सुवर्णविशेषस्तन्मय्यः 'ओहाडणीओ' अवघाटिन्यः आच्छादनहेतुकम्बोपरिस्थाप्यमानमहाप्रमाणकिलिञ्चस्थानीयाः, 'वयरामईओ उवरिं पुञ्छणीओ' इति वज्रमय्यो-वज्ररत्नात्मिका अवघाटनीनामुपरि पुञ्छन्यो-निबिडतराच्छादनहेतुश्लक्ष्णतरतृणविशेषस्थानीयाः, उक्तं च जीवाभिगममूलटीकाकारेण-"ओहाडणमहत् क्षुल्लकं च पुञ्छनी" इति 'सव्वसेयरययामयाच्छायणे' इति सर्वश्वेतं रजतमयं पुञ्छनीनामुपरि कवेल्लुकानामध आच्छादनम् 'अंकमयकणगकूडतवणिज्जथूभियागा' अङ्कमयानि बाहुल्येनाङ्करत्नमयानि पक्ष २ बाह्वादीनामङ्करत्नात्मकत्वात् कनकानि—कनकमयानि कूटानि—महान्ति शिखराणि येषां तानि कनककूटानि तपनीयानि—तपनीयस्तूपिकानि, ततः पदत्रयस्यापि कर्मधारयः, एतेन यत् प्राक् सामान्येन उत्क्षिप्तं 'सेयावरकणगथूभियागा' इति तदेव प्रपञ्चतो भावितमिति। सम्प्रति तदेव श्वेतत्वमुपसंहारव्याजेन भूय उपदर्शयति—'सेया' श्वेतानि, श्वेतत्वमेवोपमया द्रढयति-'संखतलविमलनिम्मलदधिघणगोखीरफेणरययनिगरप्पगासा' इति विगतं मलं विमलं यत् शङ्खतलं—शङ्खस्योपरितनो भागो यश्च निर्मलो दधिघनः—घनीभूतं दधि गोक्षीरफेनो रजतनिकरश्च तद्वत् प्रकाश -प्रतिभासो येषां तानि तथा 'तिलगरयणद्धचंदचित्ता' इति तिलकरत्नानि-पुण्ड्रविशेषास्तैरर्द्धचन्द्रैश्च चित्राणि—नानारूपाणि तिलकरत्नार्द्धचन्द्रचित्राणि, क्वचित्—संखतलविमलनिम्मलदधिघणगोखीरफेणरययनियरप्पगासद्धचंदचित्ताइं' इति पाठः, तत्र पूर्ववत् पृथक् पृथक् व्युत्पत्तिं कृत्वा पश्चात् पदद्वयस्य २ कर्मधारयः, 'णाणामणिदामालंकिया' इति नानामणयो-नानामणिमयानि दामानि-मालास्तैरलङ्कृतानि नानामणिदामालङ्कृतानि अन्तर्बहिश्च श्लक्ष्णानि—श्लक्ष्णपुद्गलस्कन्धनिर्मापितानि 'तवणिज्जवालुगापत्थडा' इति तपनीया—तपनीयमय्यो या वालुकास्ताभिः प्रस्तटः-प्रस्तरो येषु तानि तथा

'सुहफासा' इति सुखं-सुखहेतु स्पर्शो येषु तानि सुखस्पर्शानि सश्रीकरूपाणि प्रासादीयानीत्यादि प्राग्वत्।

नैषेधिकीप्ररूपणायाह—

तेसि णं दाराणं उभओ पासे दुहओ निसीहियाए सोलस सोलस चंदणकलसपरिवाडीओ पन्नत्ताओ, ते णं चंदणकलसा वरकमलपइट्ठाणा सुरभिवरवारिपडिपुण्णा चंदनकयचच्चागा आविद्धकंठगुणा पउमुप्पलपिहाणा सव्वरयणामया अच्छा ०जाव पडिरूवा महया महया इंदकुंभसमाणा पन्नत्ता समणाउसो!, तेसि णं दाराणं उभओ पासे दुहओ णिसीहियाए सोलस २ णागदंतपरिवाडीओ पन्नत्ताओ, ते णं णागदंता मुत्ताजालंतरुसियहेमजालगवक्खजालखिंखिणी ( घंटा ) जालपरिखित्ता अब्भुग्गया अभिणिसिट्ठा तिरियसुसंपग्गहिया अहेपन्नगद्धरूवा पन्नगद्धसंठाणसंठिया सव्ववइरामया अच्छा ०जाव पडिरूवा महया महया गयदंतसमाणा पन्नत्ता समणाउसो!, तेसु णं णागदंतएसु बहवे किण्हसुत्तवट्टवग्घारितमल्लदामकलावा णीलसुत्त० लोहितसु० हालिद्दसु० सुक्किल्लसुत्तवट्टवग्घारितमल्लदामकलावा, ते णं दामा तवणिज्जलंबूसगा सुवन्नपयरगमंडियगा ०जाव कन्नमणणिव्वुत्तिकरेणं सद्देणं ते पदेसे सव्वओ समंता आपूरेमाणा २ सिरीए अईव २ उवसोभेमाणा चिट्ठति । तेसि णं णागदंताणं उवरिं अन्नाओ सोलस नागदंतपरिवाडीओ पन्नत्ताओ, ते णं णागदंता तं चेव ०जाव महता २ गयदंतसमाणा पन्नत्ता समणाउसो!, तेसु णं णागदंतएसु बहवे रययामया सिक्कगा पन्नत्ता, तेसु णं रययामएसु सिक्कएसु बहवे वेरुलियामईओ धूवघडीओ पन्नत्ताओ, ताओ णं धूवघडीओ कालागुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुद्धुयाभिरामाओ सुगंधवरगंधियाओ गंधवट्टिभूयाओ ओरालेणं मणुन्नेणं मणहरेणं घाणमणणिव्वुइकरेणं गंधेणं ते पदेसे सव्वओ समंता ०जाव चिट्ठंति । तेसि णं दाराणं उभओ पासे दुहओ णिसीहियाए सोलस सोलस सालभंजियापरिवाडीओ पन्नत्ताओ, ताओ णं सालभंजियाओ लीलट्ठियाओ सुपइट्ठियाओ सुअलंकियाओ णाणाविहरागवसणाओ णाणामल्लपिणद्धाओ मुट्ठिगिज्झसुमज्झाओ आमेलगजमलजुयलवट्टियअब्भुन्नयपीणरइयसंठियपीवरपओहराओ रत्तावंगाओ असियकेसीओ मिउविसयपसत्थलक्खणसंवेल्लियग्गसिरयाओ ईसिं असोगवरपायवसमुट्ठियाओ वामहत्थग्गहियग्गसालाओ ईसिं अद्धच्छिकडक्खचिट्ठिएणं लूसमाणीओ विव चक्खुल्लोयणलेसेहिं अन्नमन्नं खेज्जमाणीओ ( विव ) पुढविपरिणामाओ सासयभावमुवगयाओ चन्दाणणाओ चंदविलासिणीओ चंदद्धसमणिडालाओ चंदाहियसोमदंसणाओ उक्का ( विव उज्जोवेमाणाओ ) विज्जुघणमिरियसूरदिप्पंततेयअहिययरसन्निकासाओ सिंगारागारचारुवेसाओ पासादियाओ दरिसणिज्जाओ ( पडिरूवाओ अभिरूवाओ ) चिट्ठंति । ( सू० २७ )

तेषां द्वाराणां प्रत्येकमुभयोः पार्श्वयोरेकैकनैषेधिकीभावेन 'दुहतो' इति द्विधातो द्विप्रकारायां नैषेधिक्यां, नैषेधिकी निषीदनस्थानम्, आह च जीवाभिगममूलटीकाकृत्— "नैषेधिकी निषीदनस्थान" मिति, प्रत्येकं षोडश २ ( कलश ) परिपाट्यः प्रज्ञप्ताः, ते च चन्दनकलशाः 'वरकमलपइट्ठाणा' इति वरं-प्रधानं यत्कमलं तत् प्रतिष्ठानम्—आधारो येषां ते वरकमलप्रतिष्ठानाः, यथा सुरभिवरवारिप्रतिपूर्णाश्चन्दनकृतचर्चाकाः-चन्दनकृतोपरागाः 'आविद्धकण्ठगुणा' इति आविद्ध-आरोपितः कण्ठे गुणो-रक्तसूत्ररूपो येषां ते आविद्धकण्ठगुणाः, कण्ठकालवत् सप्तम्या अलुक् 'पउमुप्पलपिहाणा' इति पद्ममुत्पलं च यथायोगं पिधानं येषां ते पद्मोत्पलपिधानाः 'सव्वरयणामया अच्छा सण्हा लण्हा' इत्यादि यावत् 'पडिरूवगा' इति विशेषणकदम्बकं प्राग्वत् 'महया' इति अतिशयेन महान्तः कुम्भानामिन्द्र इन्द्रकुम्भो राजदन्तादिदर्शनादिन्द्रशब्दस्य पूर्वनिपातः महाँश्चासौ इन्द्रकुम्भश्च तस्य समानाः महेन्द्रकुम्भसमानाः—महाकलशप्रमाणाः प्रज्ञप्ता हे श्रमण! हे आयुष्मन्। 'तेसि णं दाराणं' मिति तेषां द्वाराणां प्रत्येकमुभयोः पार्श्वयोरेकैकनैषेधिकीभावेन या द्विधा नैषेधिकी तस्यां प्रत्येकं षोडश षोडश नागदन्तपरिपाट्यः प्रज्ञप्ताः, नागदन्ता—अङ्कुटकाः, ते च नागदन्ता 'मुत्ताजालंतरुसियहेमजालगवक्खजालखिंखिणि ( घंटा ) जालपरिक्खित्ता' इति—मुक्ताजालानामन्तरेषु यानि उत्सृतानि-लम्बमानानि हेमजालानि—सुवर्णमयदामसमूहा यानि च गवाक्षजालानि गवाक्षाकृतिरत्नविशेषमालासमूहा यानि च किङ्किणीघण्टाजालानि—क्षुद्रघण्टासमूहास्तैः परिक्षिप्ताः—सर्वतो व्याप्ताः 'अब्भुग्गया' इति अभिमुखमुद्गताः अग्रिमभागे मनाक् उन्नता इति भावः 'अभिनिसिट्ठा' इति अभिमुखं बहिर्भागाभिमुखं निसृष्टा निर्गता अभिनिसृष्टाः 'तिरियसुसंपग्गहिया' इति तिर्यक् भित्तिप्रदेशैः सुष्ठु—अतिशयेन सम्यक्-मनागप्यचलनेन परिगृहीताः सुसम्परिगृहीताः, 'अहेपन्नगद्धरूवा' इति अधः—अधस्तनं यत् पन्नगस्य सर्पस्यार्द्धं तस्येव रूपम्-आकारो येषां ते अधःपन्नगार्द्धरूपाः अधःपन्नगार्द्धवदतिसरला दीर्घाश्चेति भावः । एतदेव व्याचष्टे— पन्नगार्द्धसंस्थानसंस्थिताः' अधःपन्नगार्द्धसंस्थानाः 'सव्ववइरामया' सर्वात्मना वज्रमयाः 'अच्छा सण्हा' इत्यारभ्य 'जाव पडिरूवा' इति विशेषणजातं प्राग्वत् 'महया' इति अतिशयेन महान्तो गजदन्तसमानाः—गजदन्ताकाराः प्रज्ञप्ता हे श्रमण! हे आयुष्मन्! 'तेसु णं णागदंतएसु बहवे किण्हसुत्तवट्ट' तेषु

नागदन्तकेषु बहवः कृष्णसूत्रबद्धा 'वग्घारिय' इति अवलम्बिता माल्यदामकलापाः--पुष्पमालासमूहा बहवो नीलसूत्रावलम्बितमाल्यदामकलापा एव लोहितहारिद्रशुक्लसूत्रबद्धा अपि वाच्याः । 'ते णं दामा' इत्यादि. तानि दामानि 'तवणिज्जलंबूसगा' इति तपनीय --तपनीयमयो लम्बूसको-दाम्नामग्रिमभागे मण्डनविशेषो येषां तानि तथा तपनीयलम्बूसकानि. 'सुवन्नपयरगमंडिया' इति पार्श्वतः सामस्त्येन सुवर्णप्रतरेण--सुवर्णपत्रकेण मण्डितानि सुवर्णप्रतरमण्डितानि 'नाणाविहमणिरयणविविहहारउवसोहियसमुदया' इति नानारूपाणां मणीनां रत्नानां च विविधा विचित्रवर्णा हारा अष्टादशसरिका अर्द्धहारा नवसरिकास्तैरुपशोभितः समुदायो येषां तानि तथा 'जाव सिरीए अईव २ उवसोभेमाणा चिट्ठति' इति अत्र यावत्करणादिदं परिपूर्णः पाठो द्रष्टव्यः 'ईसिमण्णोण्णमसंपत्ता पुव्वावरदाहिणुत्तरागएहिं वाएहिं मंदायं मंदायं एइज्जमाणा पइज्ज० पलंब० झंझमाणा ओरालेणं मणुण्णेणं मणहरेणं कण्णमणनिव्वुइकरेणं सद्देणं ते पएसे सव्वओ समंता आपूरेमाणा २ सिरीए अईव २ उवसोभेमाणा चिट्ठति' एतच्च प्रागेव यानविमानवर्णने व्याख्यातमिति न भूयो व्याख्यायते । 'तेसि णं णागदंताणं' मित्यादि, तेषां नागदन्तानामुपरि प्रत्येकमन्याः षोडश षोडश नागदन्तपरिपाट्यः प्रज्ञप्ताः ते च नागदन्ता यावत्करणात्- मुत्ताजालन्तरुसियहेमजालगवक्खजालखिंखिणिघंटाजालपरिक्खित्ता' इत्यादि प्रागुक्तं सर्वं द्रष्टव्यं यावत् गजदन्तसमाना प्रज्ञप्ता हे श्रमण ! हे आयुष्मन् ! 'तेसु णं णागदंतएसु' इत्यादि तेषु नागदन्तकेषु बहूनि रजतमयानि सिक्ककानि प्रज्ञप्तानि, तेषु सिक्ककेषु बहवो वज्रा वैडूर्यमय्यो वैडूर्यरत्नात्मिका धूपघटिका 'कालागुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंत' इत्यादि प्राग्वत् नवरं 'घाणमणनिव्वुइकरेणं' इति घ्राणेन्द्रियमनोनिर्वृतिकरेण । 'तासि णं' मित्यादि, तेषां द्वाराणां प्रत्येकमुभयोः पार्श्वयोरेकैकनैषेधिकीभावेन द्विधातो द्विप्रकारायां नैषेधिक्यां षोडश षोडश शालभञ्जिकापरिपाट्यः प्रज्ञप्ताः ताश्च शालभञ्जिका लीलया ललिताङ्गनिवेशरूपया स्थिता लीलास्थिता, 'सुपइट्ठियाओ' इति सुमनोज्ञतया प्रतिष्ठिता सुप्रतिष्ठिता 'सुअलंकियाओ' सुष्ठु-अतिशयेन रमणीयतया अलङ्कृता स्वलङ्कृता 'णाणाविहरागवसणाओ' इति नानाविधो-नानाप्रकारो रागो येषां तानि नानाविधरागाणि तानि वसनानि--वस्त्राणि यासां तास्तथा 'नाणामल्लपिणद्धाओ' इति नानारूपाणि माल्यानि--पुष्पाणि पिनद्धानि आविद्धानि यासां ता नानामाल्यपिनद्धाः क्तान्तस्य परनिपातः सुखादिदर्शनात् 'मुट्ठिगेज्झसुमज्झाओ' इति मुष्टिग्राह्यं सुष्ठु--शोभनं मध्यं--मध्यभागो यासां तास्तथा 'आमेलगजमलजुगलवट्टियअब्भुन्नयपीणरइयसंठियपीवरपओहराओ' पीनं पीवरं रचितं संस्थितं--संस्थानं याभ्यां तौ पीनरचितसंस्थानौ आमेलक --आपीडः शेखरक इत्यर्थः तस्य यमलयुगलं समश्रेणिकं युगलं तद्वत् वर्तितौ बद्धस्वभावासुपचितकठिनभावाविति भावः अभ्युन्नतौ पीनरचितसंस्थानौ च पयोधरौ यासां तास्तथा. 'रत्तावंगाओ' इति रक्तोऽपाङ्गः--नयनोपान्तरूपो यासां तास्तथा, 'असियकेसीओ' इति असिता --कृष्णा केशा यासां ता असितकेश्यः, एतदेव सविशेषमाचष्टे--' मिउविसयपसत्थलक्खणसंवेल्लियग्गसिरयाओ ' मृदवः --कोमला विशदा-निर्मला प्रशस्तानि-शोभनानि अस्फुटिताग्रत्वप्रभृतीनि लक्षणानि येषां ते प्रशस्तलक्षणाः 'संवेल्लितं' सवृत्तमग्रं येषां ते संवेल्लिताग्राः शिरोजा --केशा यासां ता मृदुविशदप्रशस्तलक्षणसंवेल्लिताग्रशिरोजाः, 'ईसिं असोगवरपायवसमुट्ठियाओ' ईषत्--मनाक् अशोकवरपादपे समुपस्थिता --आश्रिता ईषदशोकवरपादपसमुपस्थितास्तथा ' वामहत्थग्गहियग्गसालाओ ' वामहस्तेन गृहीतमग्रं शालायाः --शाखाया अर्थादशोकपादपस्य याभिस्ता वामहस्तगृहीताग्रशालाः ' ईसिं अद्धच्छिकडक्खचिट्ठिएणं लूसमाणीओ विव' ति ईषत्-मनाक् अर्द्धं--तिर्यक् वलितमक्षि येषु कटाक्षरूपेषु चेष्टितेषु तैर्मुष्णन्त्य इव सुरजनानां मनांसि ' चक्खुल्लोयणलेसेहि य अन्नमन्नं खिज्जमाणीओ विव' अन्योऽन्य-परस्परं चक्षुषां लोकनेन--आलोकनेन ये लेशाः --संश्लेषास्तैः खिद्यमाना इव, किमुक्तं भवति ?--एवनामानस्तिर्यग्वलिताक्षिकटाक्षैः परस्परमवलोकमाना अवतिष्ठन्ति, यथा नूनं परस्परसौभाग्यासहनतस्तिर्यग्वलिताक्षिकटाक्षैः परस्परं खिद्यन्त इवेति, ' पुढविपरिणामाओ' इति पृथिवीपरिणामरूपाः शाश्वतभावमुपगता विमानवत् ' चंदाणणाओ ' इति चन्द्र इवाननं मुखं यासां तास्तथा ' चंदविलासिणीओ ' इति चन्द्रवत् मनोहरं विलसन्तीत्येवंशीलाश्चन्द्रविलासिन्यः 'चंदद्धसमनिडालाओ ' इति चन्द्रार्द्धेन समम्--अष्टमीचन्द्रसमानं ललाटं यासां तास्तथा ' चंदाहियसोमदंसणाओ' इति चन्द्रादपि अधिकं सोमं--सुभगकान्तिमत् दर्शनम्--आकारो यासां तास्तथा उल्का इव उद्योतमाना. ' विज्जुघणमरीचिसूरदिप्पंततेयअहिययरसन्निकासाओ' इति विद्युतो ये घना-बहलतरा मरीचयस्तेभ्यो यच्च सूर्यस्य दीप्यमानं दीप्त-तेजस्तस्मादपि अधिकतरः सन्निकाशः-प्रकाशो यासां तास्तथा. ' सिंगारागारचारुवेसाओ पासाईयाओ दरिसणिज्जाओ पडिरूवाओ अभिरूवाओ चिट्ठंति' इति प्राग्वत् ।

तेसि णं दाराणं उभयो पासे दुहओ णिसीहियाए सोलस सोलस जालकडगपरिवाडीओ पन्नत्ताओ, ते णं जालकडगा सव्वरयणामया अच्छा ०जाव पडिरूवा । तेसि णं दाराणं उभयो पासे दुहओ निसीहियाए सोलस सोलस घंटापरिवाडीओ पन्नत्ताओ, तासि णं घंटाणं इमेयारूवे वन्नावासे पन्नत्ते, तं जहा- जंबूणयामईओ घंटाओ वयरामयाओ लालाओ णाणामणिमया घंटापासा तवणिज्जामइयाओ संखलाओ रययामयाओ रज्जूतो, ताओ णं घंटाओ ओहस्सराओ मेहस्सराओ सीहस्सराओ दुंदुहिस्सराओ कुंचस्सराओ णंदिस्सराओ णंदिघोसाओ मंजुस्सराओ मंजुघोसाओ सुस्सराओ सुस्सरणिग्घोसाओ उरालेणं मणुन्नेणं मणहरेणं कन्नमणनिव्वुइकरेणं सद्देणं ते पदेसे सव्वओ समंता आपूरेमाणीओ २ ०जाव चिट्ठंति ।

तेसि णं दाराणं उभओ पासे दुहओ णिसीहियाए सोलस सोलस वणमालापरिवाडीओ पन्नत्ताओ, ताओ णं वणमालाओ णाणामणिमयदुमलयकिसलयपल्लवसमाउलाओ छप्पयपरिभुज्जमाणा सोहंतसस्सिरीयाओ पासाईयाओ० ४। तेसि णं दाराणं उभओ पासे दुहओ णिसीहियाए सोलस २ पगंठगा पन्नत्ता, ते णं पगंठगा अड्ढाइज्जाइं जोयणसयाइं आयामविक्खंभेणं पणवीसं जोयणसयं बाहल्लेणं सव्ववयरामया अच्छा ०जाव पडिरूवा। तेसि णं पगंठगाणं उवरिं पत्तेयं २ पासायवडेंसगा पन्नत्ता, ते णं पासायवडेंसगा अड्ढाइज्जाइं उड्ढं उच्चत्तेणं पणवीसं जोयणसयं विक्खंभेणं अब्भुग्गयमूसिअपहसिया इव विविहमणिरयणभत्तिचित्ता वाउद्धुयविजयवेजयंतपडागछत्ताइछत्तकलिया तुंगा गगणतलमणुलिहंतसिहरा जालंतररयणपंजरुम्मिलिय व्व मणिकणगथूभियागा वियसियसयवत्तपोंडरीया तिलगरयणद्धचंदचित्ता णाणामणिदामालंकिया अंतो बहिं च सण्हा तवणिज्जवालुयापत्थडा सुहफासा सस्सिरीयरूवा पासादीया दरिसणिज्जा ०जाव दामा उवरिं पगंठगाणं भया छत्ताइछत्ता। तेसि णं दाराणं उभओ पासे सोलस सोलस तोरणा पन्नत्ता, णाणामणिमया णाणामणिमएसु खंभेसु उवणिविट्ठसन्निविट्ठा ०जाव पउमहत्थगा, तेसि णं तोरणाणं पुरओ दो दो सालभंजियाओ पन्नत्ताओ, जहा हेट्ठा तहेव तेसि णं तोरणाणं पुरओ नागदंता पन्नत्ता, जहा हेट्ठा ०जाव दामा, तेसि णं तोरणाणं पुरओ दो दो हयसंघाडा गयसंघाडा नरसंघाडा किन्नरसंघाडा किंपुरिससंघाडा महोरगसंघाडा गंधव्वसंघाडा उसभसंघाडा सव्वरयणामया अच्छा ०जाव पडिरूवा, एवं वीही पंतीओ मिहुणाइं। तेसि णं तोरणाणं पुरओ दो दो पउमलयाओ ०जाव सामलयाओ णिच्चं कुसुमियाओ सव्वरयणामया अच्छा ०जाव पडिरूवाओ। तेसि णं तोरणाणं पुरओ दो दो अक्खय ( दिसा ) सोवत्थिया पन्नत्ता, सव्वरयणामया अच्छा ०जाव पडिरूवा, तेसि णं तोरणाणं पुरओ दो दो चंदणकलसा पन्नत्ता, ते णं चंदणकलसा वरकमलपइट्ठाणा तहेव। तेसि णं तोरणाणं पुरतो दो दो भिंगारा पन्नत्ता, ते णं भिंगारा वरकमलपइट्ठाणा ०जाव महया मत्तगयमुहाऽऽकितिसमाणा पन्नत्ता समणाउसो!। तेसि णं तोरणाणं पुरओ दो दो आयंसा पन्नत्ता, तेसि णं आयंसाणं इमेयारूवे वन्नावासे पन्नत्ते, तंजहा—तवणिज्जमया पगंठगा वेरुलियमया सुरया वइरामया दोवारंगा णाणामणिमया मंडला अणुग्घसितनिम्मलाते छायाते समणुबद्धा चंदमंडलपडिणिकामा महया अद्धकायसमणा पन्नत्ता समणाउसो!। तेसि णं तोरणाणं पुरओ दो दो वइरनाभथाला पन्नत्ता अच्छतिच्छडियसालितंदुलणहसंदिट्ठपडिपुन्ना इव चिट्ठंति सव्वजंबूणयमया ०जाव पडिरूवा महया महया रहचक्कवालसमाणा पन्नत्ता समणाउसो!। तेसि णं तोरणाणं पुरओ दो दो पातीओ, ताओ णं पाईओ अच्छोदगपरिहत्थाओ णाणामणिपंचवन्नस्स फलहरियगस्स बहुपडिपुन्नाओ विव चिट्ठंति सव्वरयणामईओ अच्छाओ ०जाव पडिरूवाओ महया महया गोकलिंजरचक्कसमाणीओ पन्नत्ताओ समणाउसो!। तेसि णं तोरणाणं पुरओ दो दो सुपइट्ठा पन्नत्ता णाणाविहभंडविरइया इव चिट्ठंति सव्वरयणामया अच्छा ०जाव पडिरूवा। तेसि णं तोरणाणं पुरओ दो दो मणगुलियाओ पन्नत्ताओ, तासि णं मणगुलियासु बहवे सुवन्नरुप्पमया फलगा पन्नत्ता, तेसु णं सुवन्नरुप्पमएसु फलगेसु बहवे वयरामया नागदंतया पन्नत्ता, तेसु णं वयरामएसु णागदंतएसु बहवे वयरामया सिक्कगा पन्नत्ता, तेसु णं वयरामएसु सिक्कगेसु किण्हसुत्तसिक्कगवच्छिता णीलसुत्तसिक्कगवच्छिया लोहियसुत्तसिक्कगवच्छिया हालिद्दसुत्तसिक्कगवच्छिया सुक्किल्लसुत्तसिक्कगवच्छिया बहवे वायकरगा पन्नत्ता सव्वे वेरुलियमया अच्छा ०जाव पडिरूवा। तेसि णं तोरणाणं पुरओ दो दो चित्ता रयणकरंडगा पन्नत्ता, से जहाणामए रन्नो चाउरंतचक्कवट्टिस्स चित्ते रयणकरंडए वेरुलियमणिफलिहपडलपच्चोयडे साते पहाते ते पतेसे सव्वतो समंता ओभासति उज्जोवेति तवति भासति एवमेव ते वि चित्ता रयणकरंडगा साते पभाते ते पएसे सव्वओ समंता ओभासंति उज्जोवेंति तवंति पगासंति, तेसि णं तोरणाणं पुरओ दो दो हयकंठा गयकंठा नरकंठा किन्नरकंठा किंपुरिसकंठा महोरगकंठा गंधव्वकंठगा उसभकंठा सव्ववयरामया अच्छा ०जाव पडिरूवा, तेसु णं हयकंठएसु ०जाव उसभकंठएसु दो दो पुप्फचंगेरीओ ( मल्लचंगेरीओ ) चुन्नचंगेरीओ ( गंधचंगेरीओ ) वत्थचंगेरीओ आभरणचंगेरीओ सिद्धत्थचंगेरीओ लोमहत्थचंगेरीओ पन्नत्ताओ सव्वरयणामयाओ अच्छाओ ०जाव पडिरूवाओ, तासु णं पुप्फचंगेरीसु ०जाव लोमहत्थचंगेरीसु दो दो पुप्फपडलगाइं ०जाव लोमहत्थपड-

लगाइं सव्वरयणामयाइं अच्छाइं ०जाव पडिरूवाइं। तेसि णं तोरणाणं पुरओ दो दो सीहासणा पन्नत्ता, तेसि णं सीहासणाणं वण्णओ ०जाव दामा, तेसि णं तोरणाणं पुरओ दो दो रुप्पमया छत्ता पन्नत्ता, ते णं छत्ता वेरुलियविमलदंडा जंबूणयकन्निया वइरसंधी मुत्ताजालपरिगया अट्ठसहस्सवरकंचणसलागा दद्दरमलयसुगंधी सव्वोउयसुरभी सीयलच्छाया मंगलभत्तिचित्ता चंदागारोवमा। तेसि णं तोरणाणं पुरओ दो दो चामराओ पन्नत्ताओ, ताओ णं चामराओ ( चंदप्पभवेरुलियवरनानामणिरयणखचियचित्तदण्डाओ ) णाणामणिकणगरयणविमलमहरिहतवणिज्जुज्जलविचित्तदंडाओ वल्लियाओ संखंककुंददगरयअमयमहियफेणपुंजसन्निगासातो सुहुमरययदीहवालातो सव्वरयणामयाओ अच्छाओ ०जाव पडिरूवाओ। तेसि णं तोरणाणं पुरओ दो दो तेल्लसमुग्गा कोट्ठसमुग्गा पत्तसमुग्गा चोयगसमुग्गा तगरसमुग्गा एलासमुग्गा हरियालस० हिंगुलयस० मणोसिलासमुग्गा अंजणसमुग्गा सव्वरयणामया अच्छा ०जाव पडिरूवा। ( सू० २८ )

'तेसि ण' मित्यादि तेषां द्वाराणां प्रत्येकमुभयोः पार्श्वयोरेकैकनैषेधिकीभावेन या द्विधा नैषेधिकी तस्यां षोडश षोडश जालकटकाः प्रज्ञप्ताः, जालकटको—जालककीर्णो रम्यसंस्थानः प्रदेशविशेषः, ते च जालकटकाः 'सव्वरयणामया अच्छा सण्हा ०जाव पडिरूवा' इति प्राग्वत्। 'तेसि ण' मित्यादि, तेषां द्वाराणां प्रत्येकमुभयोः पार्श्वयोर्द्विधातो नैषेधिक्यां षोडश घण्टापरिपाट्यः प्रज्ञप्ताः, तासां च घण्टानामयमेतद्रूपो वर्णावासो—वर्णकनिवेशः प्रज्ञप्तः, तद्यथा-जम्बूनदमय्यो घण्टा वज्रमय्यो लाला नानामणिमया घण्टापार्श्वा तपनीयमय्यः शृङ्खला यासु ता अवलम्बिताः तिष्ठन्ति रजतमय्यो रज्जवः 'ताओ ण घण्टाओ' इत्यादि, ताश्च घण्टा ओघप्रवाहेण स्वरो यासां ता ओघस्वराः मेघस्येवातिदीर्घः स्वरो यासां ता मेघस्वराः हंसस्येव मधुरः स्वरो यासां ता हंसस्वराः, एवं क्रौञ्चस्वराः सिंहस्येव च प्रभूतदेशव्यापी स्वरो यासां ता सिंहस्वराः एवं दुन्दुभिस्वरा द्वादशविधतूर्यसङ्घातो नन्दि नन्दिस्वरा नन्दिवत् घोषो ह्रादो यासां ता नन्दिघोषाः मञ्जु—प्रियः स्वरो यासां ता मञ्जुस्वराः, एवं मञ्जुघोषाः, किं बहुना ?, सुस्वराः सुस्वरघोषाः, 'उरालेणं' मित्यादि प्राग्वत्। 'तेसि णं' मित्यादि, तेषां द्वाराणां प्रत्येकमुभयोः पार्श्वयोर्द्विधातो नैषेधिक्यां षोडश षोडश वनमालापरिपाट्यः प्रज्ञप्ताः, ताश्च वनमाला नानाद्रुमाणां नानालतानां च यानि किशलयानि ये च पल्लवास्तैः समाकुला—सम्मिश्राः 'छप्पयपरिभुज्जमाणा सोभन्तसस्सिरीया' इति पदपदैः परिभुज्यमानाः सत्यः शोभमाना षट्पदपरिभुज्यमानशोभमाना अत एव सश्रीकाः 'पासाईया' इत्यादि पदचतुष्टयं प्राग्वत्। 'तेसि णं दाराणं' मित्यादि, तेषां द्वाराणां प्रत्येकमुभयोः पार्श्वयोरेकैकनैषेधिकीभावेन या द्विधा नैषेधिकी तस्यां षोडश षोडश प्रकण्ठका प्रज्ञप्ताः, प्रकण्ठको नाम पीठविशेषः, आह च जीवाभिगममूलटीकाकारः—'प्रकण्ठौ पीठविशेषा' विति, ते च प्रकण्ठकाः प्रत्येकमर्द्धतृतीयानि योजनशतान्यायामविष्कम्भाभ्यां पञ्चविंशपञ्चविंशत्यधिकं योजनशतं बाहल्येन—पिण्डभावेन 'सव्ववयरामया' इति सर्वात्मना ते प्रकण्ठका वज्रमया—वज्ररत्नमयाः, 'अच्छा सण्हा' इत्यादि विशेषणजातं प्राग्वत्, 'तेसि णं पगंठगाणं' मित्यादि, तेषां प्रकण्ठकानाम् उपरि प्रत्येकं प्रत्येकम्—इह एकं प्रति प्रत्येकमित्याभिमुख्ये वर्तमानः प्रतिशब्दः समस्यते, ततो वीप्साविवक्षायां द्विवचनं, प्रासादावतंसकाः प्रज्ञप्ताः, प्रासादावतंसका नाम प्रासादविशेषाः, उक्तं च जीवाभिगममूलटीकायां—"प्रासादावतंसकौ-प्रासादविशेषा' विति, ते च प्रासादावतंसका अर्द्धतृतीयानि योजनशतानि ऊर्ध्वम् उच्चैस्त्वेन पञ्चविंशं योजनशतं विष्कम्भेन, 'अब्भुग्गयमूसियपहसियाविव' अभ्युद्गता—आभिमुख्येन सर्वतो विनिर्गता उत्सृता—प्रबलतया सर्वासु दिक्षु प्रसृता या प्रभा तया सिता इव—बद्धा इव तिष्ठन्तीति गम्यते, अन्यथा कथमिव ते अभ्युद्गता निरालम्बास्तिष्ठन्तीति भावः, 'विविहमणिरयणभत्तिचित्ता' विविधा-अनेकप्रकारा ये मणयः-चन्द्रकान्तादयो यानि च रत्नानि-कर्केतनादीनि तेषां भक्तिभिः विच्छित्तिविशेषैश्चित्रा-नानारूपा आश्चर्यवन्तो वा नानाविधमणिरत्नभक्तिचित्राः, 'वाउद्धूयविजयवेजयंतीपडागछत्ताइच्छत्तकलिया' वातोद्धूता-वायुकम्पिता विजयः-अभ्युदयस्तत्सूचिका वैजयन्त्यभिधाना याः पताकाः, अथवा—विजया इति वैजयन्तीनां पार्श्वकर्णिका उच्यन्ते तत्प्रधाना वैजयन्त्यो विजयवैजयन्त्यः, पताकास्ता एव विजयवर्जिता छत्रातिछत्राणि-उपर्युपरिस्थितान्यातपत्राणि तैः कलिता वातोद्धूतविजयवैजयन्तीपताकाछत्रातिछत्रकलिताः, तुङ्गा-उच्चा उच्चैस्त्वेनार्द्धतृतीययोजनशतप्रमाणत्वात् अत एव 'गगनतलमणुलिहंतसिहरा' इति गगनतलम्-अम्बरतलम् अनुलिखन्ति-अभिलङ्घयन्ति शिखराणि येषां ते तथा, जालानि-जालकानि तानि च भवनभित्तिषु लोके प्रतीतानि, तदन्तरेषु विशिष्टशोभानिमित्तं रत्नानि येषु ते जालान्तररत्नाः, सूत्रे चात्र विभक्तिलोपः प्राकृतत्वात्, तथा पञ्जरात् उन्मीलिता इव बहिष्कृता इव पञ्जरोन्मीलिता इव यथा किल किमपि वस्तु पञ्जरात् वंशादिमयाच्छादनविशेषात् बहिष्कृतमत्यन्तमविनष्टच्छायत्वात् शोभते एवं तेऽपि प्रासादावतंसका इति भावः, तथा मणिकनकानि-मणिकनकमय्यः स्तूपिका—शिखराणि येषां ते मणिकनकस्तूपिकाः, तथा विकसितानि यानि शतपत्राणि पुण्डरीकाणि च द्वारादौ प्रतिकृतित्वेन स्थितानि तिलकरत्नानि-भित्त्यादिषु पुण्ड्रविशेषाः अर्द्धचन्द्राश्च द्वारादिषु तैश्चित्रा—तथा नानारूपा वा विकसितशतपत्रपुण्डरीकतिलकरत्नार्द्धचन्द्रचित्राः, तथा नाना—अनेकरूपाणि यानि मणिदामानि—मणिमयपुष्पमालास्तैरलङ्कृतानि—शोभितानि नानामणिदामालङ्कृतानि [illegible] अन्तर्बहिश्च श्लक्ष्णा—मसृणाः, तथा तप-

तीयं-सुवर्णविशेषस्तन्मय्या वालुकाया प्रस्तट -प्रस्तारो येषु ते तपनीयवालुकाप्रस्तटा । 'सुहफासा सस्सिरीयरूवा पासाईया' इत्यादि प्राग्वत्तथा च प्रासादावतंसकानामन्तर्भूमिवर्णनमुल्लोकवर्णनं सिंहासनवर्णनमुपरिविजयदूष्यवर्णनं वज्राङ्कुशवर्णनं मुक्तादामवर्णनं च यथा प्राक् यानविमाने सवितं तथा भावनीयम् । 'तेसि णं' मित्यादि, तेषां द्वाराणां प्रत्येकमुभयोः पार्श्वयोरेकैकनैषेधिकीभावेन या द्विधा नैषेधिकी तस्यां षोडश षोडश तोरणानि प्रज्ञप्तानि, तानि च तोरणानि नानामणिमयानीत्यादि तोरणवर्णनं यानविमानमिव निरवशेषं भावनीयम् . 'तेसि णं तोरणाणं पुरओ' इत्यादि, तेषां तोरणानां पुरतः प्रत्येकं द्वे द्वे शालभञ्जिके, शालभञ्जिकावर्णनं प्राग्वत्, 'तेसि णं' मित्यादि, तेषां तोरणानां पुरतो द्वौ द्वौ नागदन्तकौ प्रज्ञप्तौ, तेषां च नागदन्तकानां वर्णनं यथाऽधस्तादनन्तरमुक्तं तथा वक्तव्यं नवरमत्रोपरि नागदन्तका न वक्तव्या अभावात् . 'तेसि णं' मित्यादि तेषां तोरणानां पुरतो द्वौ द्वौ हयसङ्घाटौ, सङ्घाटशब्दो युग्मवाची यथा साधुसंघाट इत्यत्र, ततो द्वे द्वे हययुग्मे इत्यर्थः, एवं नरकिंनरकिंपुरुषमहोरगगन्धर्ववृषभसंघाटा अपि वाच्या, एते च कथम्भूता ? इत्याह—'सव्वरयणामया अच्छा सण्हा' इत्यादि प्राग्वत् यथा चामीषां हयादीनामग्रतो संघाटा उक्तास्तथा पङ्क्तयोऽपि वीथयोऽपि मिथुनकानि च वाच्यानि, तत्र संघाटा —समानलिङ्गयुग्मरूपाः पुष्पावकीर्णकाश्च एकदिग्व्यवस्थिता श्रेणिः —पङ्क्तिरुभयोः पार्श्वयोरेकैकश्रेणिभावेन यत् श्रेणिद्वयं सा वीथिः स्त्रीपुरुषयुग्मं मिथुनकं 'तेसि णं' मित्यादि, तेषां तोरणानां पुरतो द्वे द्वे पद्मलते यावत्करणात्—द्वे द्वे नागलते द्वे द्वे अशोकलते द्वे द्वे चम्पकलते द्वे द्वे चूतलते द्वे द्वे वासन्तीलते द्वे द्वे कुन्दलते द्वे द्वे अतिमुक्तकलते इति परिगृह्यते . द्वे द्वे श्यामलते, ताश्च कथम्भूता इत्याह 'णिच्चं कुसुमियाओ' इत्यादि यावत्करणात्-'निच्चं मउलियाओ निच्चं लवइयाओ निच्चं थवइयाओ निच्चं गुच्छियाओ निच्चं जमलियाओ निच्चं जुयलियाओ निच्चं विणमियाओ निच्चं पणमियाओ निच्चं सुविभत्तपिंडमञ्जरिवडिंसगधरीओ निच्चं कुसुमियमउलियलवइयथवइयगुलइयगोच्छियविणमियपणमियसुविभत्तपिंडमञ्जरिवडिंसगधरीओ इति परिगृह्यते . अस्य व्याख्यानं प्राग्वत् . पुनः कथम्भूता इत्याह-'सव्वरयणामया ०जाव पडिरूवा' इति, अत्रापि यावत्करणात्- 'अच्छा सण्हा' इत्यादिविशेषणसमूहपरिग्रहः . स च प्राग्वद्भावनीयः . 'तेसि णं' मित्यादि . तेषां तोरणानां पुरतः प्रत्येकं द्वौ द्वौ दिक्सौवस्तिकौ-दिक्प्रोक्षकौ ते च सर्वे जाम्बूनदमयाः, क्वचित्पाठः -'सव्वरयणामया अच्छा' इत्यादि, प्राग्वत् 'तेसि णं' मित्यादि द्वौ द्वौ चन्दनकलशौ प्रज्ञप्तौ, वर्णकश्चन्दनकलशानां 'वरकमलपइट्ठाणा' इत्यादिरूपः सर्वः प्राकृतो वक्तव्यः, 'तेसि णं' मित्यादि द्वौ द्वौ भृङ्गारौ; तेषामपि कलशानामिव वर्णको वक्तव्यः, नवरं पर्यन्ते 'महयामत्तगयमहामुहागिइसमाणा पन्नत्ता समणाउसो !' इति वक्तव्यम् 'मत्तगयमहामुहागिइसमाणा' इति मत्तो यो गजस्तस्य महत्-अतिविशालं यन्मुखं तस्याकृतिः-आकारस्तत्समानाः-तत्सदृशाः प्रज्ञप्ताः, 'तेसि णं' मित्यादि तेषां तोरणानां पुरतो द्वौ द्वावादर्शकौ प्रज्ञप्तौ. तेषां चादर्शकानामयमेतद्रूपो वर्णावासो-वर्णकनिवेशः प्रज्ञप्तः, तद्यथा-तपनीयमयाः प्रकण्ठकाः -पीठविशेषाः, अङ्कमयानि--अङ्करत्नमयानि मण्डलानि यत्र प्रतिबिम्बसम्भूतिः. 'अणोघसियनिम्मलाए' इति अवघर्षणमवघर्षितं भावे क्तप्रत्ययः तस्य निर्मलता-अवघर्षितनिर्मलता, भूत्यादिना निर्माजनमित्यर्थः. अवघर्षितस्याभावोऽनवघर्षितं तेन निर्मला तया अनवघर्षितनिर्मलया छायया समनुबद्धा-युक्ताः. 'चन्दमण्डलपडिनिकासाः' इति चन्द्रमण्डलसदृशाः 'महया महया' अतिशयेन महान्तोऽर्द्धकायसमानाः -कायार्द्धप्रमाणाः प्रज्ञप्ता हे श्रमण ! हे आयुष्मन् ! 'तेसि णं' मित्यादि तेषां तोरणानां पुरतो द्वे द्वे वज्रनाभे--वज्रमयो नाभिर्ययोस्ते वज्रनाभे स्थाले प्रज्ञप्ते तानि च स्थालानि तिष्ठन्ति, 'अच्छतिच्छडियतंदुलनहसंदट्ठपडिपुण्णा इव चिट्ठंति' अच्छा--निर्मला, शुद्धा स्फटिकवत् त्रिच्छोटिताः-त्रीन् वारान् छोटिताः अत एव 'नखसन्दष्टाः' नखा—नखिकाः सन्दष्टा मुशलादिभिः छटिता यथा ते तथा सुखादिदर्शनात् क्तान्तस्य परनिपातः अच्छैस्त्रिच्छटितैः शालितन्दुलैर्नखसन्दष्टैः परिपूर्णाः, पृथ्वीपरिणामरूपाणि तानि तथा केवलमेवमाकाराणीत्युपमा, तथा चाह—'सव्वजम्बूणयमया' सर्वात्मना जाम्बूनदमयानि 'अच्छा सण्हा' इत्यादि प्राग्वत् 'महया महया' इति अतिशयेन महान्ति रथचक्रसमानानि प्रज्ञप्तानि हे श्रमण ! हे आयुष्मन् ! 'तेसि णं' मित्यादि तेषां तोरणानां पुरतो द्वे द्वे 'पाईओ' इति पात्र्यौ प्रज्ञप्ते, ताश्च पात्र्यः 'सच्छोदगपडिहत्थाओ' इति स्वच्छपानीयपरिपूर्णाः 'नाणाविहस्स फलहरियस्स बहुपडिपुन्नाविव' त्ति अत्र षष्ठी तृतीयार्थे 'बहु पडिपुन्ने' त्ति चैकवचनं प्राकृतत्वात्, नानाविधैः फलहरितैर्हरितफलैर्बहुप्रभूतैः प्रतिपूर्णा इव तिष्ठन्ति न खलु तानि फलानि किन्तु तथारूपाः शाश्वतभावमुपागताः पृथ्वीपरिणामास्ततः उपमानमिति, 'सव्वरयणामईओ' इत्यादि प्राग्वत्, 'महय' त्ति अतिशयेन महत्यो गोकलिञ्जचक्रसमानाः प्रज्ञप्ता हे श्रमण ! हे आयुष्मन् !, 'तेसि णं' मित्यादि तेषां तोरणानां पुरतो द्वौ सुप्रतिष्ठकौ—आधारविशेषौ प्रज्ञप्तौ, ते च सुप्रतिष्ठकाः सुसर्वौषधिप्रतिपूर्णा नानाविधैः पञ्चवर्णैः प्रसाधनभाण्डैश्च बहुपरिपूर्णा इव तिष्ठन्ति, उपमाभावना प्राग्वत्, 'सव्वरयणामईओ' इत्यादि तथैव, 'तेसि णं' मित्यादि तेषां तोरणानां पुरतो द्वे द्वे मनोगुलिका नाम पीठिका उक्तं च जीवाभिगमसूत्रटीकायाम्-- 'मनोगुलिका नाम पीठिके' ति, ताश्च मनोगुलिकाः सर्वात्मना वैडूर्यमय्यः 'अच्छा इ' त्यादि प्राग्वत् । 'तासु णं मणोगुलियासु बहवे' इत्यादि तासु मनोगुलिकासु सुवर्णमयानि रूप्यमयानि च फलकानि प्रज्ञप्तानि, तेषु सुवर्णरूप्यमयेषु फलकेषु बहवो वज्रमया नागदन्तकाः-अङ्कुटकाः ( नियकेषु, तेषु च नागदन्तकेषु बहूनि रजतमयानि सिक्ककानि प्रज्ञप्तानि, तेषु च रजतमयेषु बहवो वातकरका जलशून्याः करकाः प्रज्ञप्ताः - तद्यथा 'किण्हसुत्त' त्यादि गवच्छम्—आच्छादनं गवच्छा सञ्जाता एष्विति गवच्छिकाः ( ताः ) कृष्णसूत्रमयैर्गवच्छिकैः ( तैः ) इति गम्यते, सिक्ककेषु गवच्छिताः कृष्णसूत्र-

सिक्कगगवच्छिन्ना एवं नीलसूत्रासिक्कगगवच्छिन्ना इत्यादयाप भावनीय ते च वातकरका सर्वात्मना वैडूर्यमया 'अच्छा' इत्यादि प्राग्वत् । 'तेसि णं ' तेषां तोरणाना पुरतो द्वौ द्वौ चित्रौ—आश्चर्यभूतौ रत्नकरण्डकौ प्रज्ञप्तौ ' से जहा नाम ए इत्यादि, स यथा नाम राज्ञश्चतुरन्तचक्रवर्तिन -चतुर्षु पूर्वापरदक्षिणोत्तररूपेषु अन्तेषु-पृथिवीपर्यन्तेषु चक्रेण वर्त्तितुं शीलं यस्य तस्यैव चित्र —आश्चर्यभूतो नानामणिमयत्वेन नानावर्णो वा ' वेरुलियमणिफालियपडलपच्चोयडे ' इति बाहुल्येन वैडूर्यमणिमय " फलिहपडलपच्चोयडे ' इति स्फटिकपटलावच्छादित 'साए पभाए ' इत्यादि स यथा राज्ञश्चतुरन्तचक्रवर्तिन प्रत्यासन्नान् प्रदेशान् सर्वत. सर्वासु दिक्षु समन्तत —सामस्त्येन अवभासयति एतदेव पर्यायत्रयेण व्याचष्ट-उद्योतयति तापयति प्रभासयति 'एवमेवे'त्यादि सुगमं ' तेसि णं तोरणाणं ' मित्यादि तेषां तोरणाना पुरतो द्वौ द्वौ हयकण्ठप्रमाणौ रत्नविशेषौ एव गजनरकिन्नरकिंपुरुषमहोरगगन्धर्ववृषभकण्ठा अपि वाच्या. उक्तं च जीवाभिगममूलटीकाकारेण-"हयकण्ठौ-हयकण्ठप्रमाणौ रत्नविशेषौ एव सर्वेऽपि कण्ठा वाच्या " इति तथा-चाह—' सव्वरयणामया ' इति, सर्वे रत्नमया-रत्नविशेषरूपा ' अच्छा इत्यादि प्राग्वत् । ' तेसि णं ' मित्यादि तेषां तोरणाना पुरतो द्वौ द्वौ पुष्पचङ्गेर्यौ प्रज्ञप्ते एवं माल्यचूर्णगन्धवस्त्राभरणसिद्धार्थकलोमहस्तकचङ्गेर्योऽपि वक्तव्या' , एताश्च सर्वा अपि सर्वात्मना रत्नमया ' अच्छा ' इत्यादि प्राग्वत् एवं पुष्पादीनामष्टाना पटलकान्यपि द्विद्विसङ्ख्याकानि वाच्यानि, ' तेसि णं तोरणाणं ' मित्यादि तेषां तोरणानां पुरतो द्वे द्वे सिंहासने प्रज्ञप्ते, तेषां च सिंहासनाना वर्णक प्रागुक्तो निरवशेषो वक्तव्य , 'तेसि णं'मित्यादि, तेषां तोरणाना पुरतो द्वे द्वे छत्रे रूप्यमये प्रज्ञप्ते, तानि च छत्राणि वैडूर्यरत्नमयविमलदण्डानि जाम्बूनदकर्णिकानि वज्रसन्धीनि—वज्ररत्नापूरितदण्डशलाकासन्धीनि मुक्ताजालपरिगतानि अष्टौ सहस्राणि—अष्टसहस्रसंख्या वरकाञ्चनशलाका वरकाञ्चनमय्य. शलाका येषु तानि. तथा, तथा ' दद्दरमलयसुगंधिसव्वोउयसुरभिसीयलच्छाया' इति दर्दर —चीवरावनद्धकुण्डिकादिभाजनमुखं तेन गालितास्तत्र पक्का वा ये मलय इति—मलयोद्भवं श्रीखण्डं तत्सम्बन्धिन. सुगन्धा ये गन्धवासास्तद्वत् सर्वेषु ऋतुषु सुरभि शीतला च छाया येषां तानि तथा, ' मंगलभत्तिचित्ता ' अष्टाना स्वस्तिकादीना मङ्गलाना भक्त्या—विच्छित्त्या चित्रम्—आलेखो येषां तानि तथा ' चंदागारोवमा ' चन्द्राकार —चन्द्राकृति सा उपमा येषां तानि तथा,चन्द्रमण्डलवत् वृत्तानीति भाव , 'तेसि णं मित्यादि, तेषां तोरणानां पुरतो द्वे द्वे चामरे प्रज्ञप्ते तानि च चामराणि चंदप्पभवेरुलियवयरनानामणिरयणखचितचित्तदंडाओ' इति चन्द्रप्रभ -चन्द्रकान्तो वज्रं वैडूर्यं च प्रतीतं चन्द्रप्रभवज्रवैडूर्याणि शेषाणि च नानामणिरत्नानि खचितानि येषु ते तथा एवरूपाश्चित्रा—नानाकारा दण्डा येषां चामराणां तानि तथा सुहुमरययदीहवालाओ ' इति सूक्ष्मा रजतमया दीर्घा वाला येषां तानि तथा. ' संखककुददगरयअमयमहियफेणपुंजसन्निकासाओ ' इति ' शङ्ख ' प्रतीत अङ्को—रत्नविशेष 'कुंद'त्ति कुन्दपुष्पं दकरज-उदककणा अमृतमथितफेणपुञ्ज -क्षीरोदजलमथनसमुत्थ फेनपुञ्जस्तेषामिव सन्निकाश —प्रभा येषां तानि तथा, अच्छा' इत्यादि प्राग्वत् । 'तेसि णं तोरणाणं' मित्यादि, तेषां तोरणानां पुरतो द्वौ द्वौ तैलसमुद्गकौ—सुगन्धितैलाधारविशेषौ उक्तं च जीवाभिगममूलटीकाकारेण—"तैलसमुद्गकौ—सुगन्धितैलाधारौ" एव कोष्ठादिसमुद्गका अपि वाच्या , अत्र सग्रहणिगाथा--'तेल्ल कोट्ठसमुग्गे, पत्ते चोए य तगर एला य । हरियाले हिंगुलए,मणोसिला अंजणसमुग्गा ॥ १ ॥' सव्वरयणामया' इति एते सर्वेऽपि सर्वात्मना रत्नमया ' अच्छा इत्यादि प्राग्वत् ।

सूरियाभे णं विमाणे एगमेगे दारे अट्ठसयं चक्कज्झयाणं अट्ठसयं मिगज्झयाणं गरुडज्झयाणं छत्तज्झयाणं पिच्छज्झयाणं सउणिज्झयाणं सीहज्झयाणं उसभज्झयाणं अट्ठसयं सेयाणं चउविसाणाणं नागवरकेऊणं एवमेव सपुव्वावरेणं सूरियाभे विमाणे एगमेगे दारे असीयं केउसहस्सं भवतीति मक्खायं, सूरियाभे विमाणे पण्णट्ठि पण्णट्ठि भोमा पन्नत्ता, तेसि णं भोमाणं भूमिभागा उल्लोया य भाणियव्वा, तेसि णं भोमाणं च बहुमज्झदेसभागे पत्तेयं पत्तेयं सीहासणे, सीहासणवन्नतो सपरिवारो, अवसेसेसु भोमेसु पत्तेयं पत्तेयं भद्दासणा पन्नत्ता । तेसि णं दाराणं उत्तमागारा सोलसविहेहिं रयणेहिं उवसोभिया, तं जहा-रयणेहिं •जाव रिट्ठेहिं, तेसि णं दाराणं उप्पिं अट्ठट्ठमंगलगा सज्झया •जाव छत्तातिछत्ता, एवमेव सपुव्वावरेणं सूरियाभे विमाणे चत्तारि दारसहस्सा भवंतीति मक्खायं, असोगवणे सत्तिवणे चंपगवणे चूयगवणे, सूरियाभस्स विमाणस्स चउद्दिसिं पंच जोयणसयाइं अबाहाए चत्तारि वणसंडा पन्नत्ता, तं जहा--पुरच्छिमेणं असोगवणे दाहिणेणं सत्तवन्नवणे पच्चत्थिमेणं चंपगवणे उत्तरेणं चूयगवणे, ते णं वणसंडा साइरेगाइं अद्धतेरस जोयणसयसहस्साइं आयामेणं पंच जोयणसयाइं विक्खंभेणं पत्तेयं पत्तेयं पागारपरिक्खित्ता किण्हा किण्होभासा वणसंडवण्णओ । ( सू० २९ )

' सूरियाभे णं विमाणे एगमेगे दारे अट्ठसयं चक्कज्झयाणं ' मित्यादि तस्मिन् सूर्याभे विमाने एकैकस्मिन् द्वारे अष्टाधिक शतं चक्रध्वजानां चक्रलक्षणचिह्नोपेतानां ध्वजानामेवं मृगगरुडरुच्छत्रपिच्छशकुनिसिंहवृषभचतुर्दन्तहस्तिध्वजानामपि प्रत्येकमष्टशतमष्टशतं वक्तव्यम् ' एवमेव सपुव्वावरेणं ' एवमेव-अनेनैव प्रकारेण सपूर्वापरेण-सह पूर्वं अपरैश्च वर्त्तते इति सपूर्वापर-स्तेन सूर्याभे विमाने एकैकस्मिन् द्वारे अशीतमशीतम्-अशीत्यधिकं केतुसहस्रं भवतीत्याख्यातं मया अन्यैश्च तीर्थकृद्भि ' तेसि णं ' मित्यादि तेषां द्वाराणां सम्बन्धीनि प्रत्येक पञ्चषष्टिः भौमानि-विशिष्टानि स्थानानि प्रज्ञप्तानि, तेषां च भूमाना

भूमिभागा उल्लोकाश्च, यानविमानवद्वक्तव्या, तेषां च भौमानां बहुमध्यदेशभागे यानि त्रयस्त्रिंशत्तमानि भौमानि तेषां बहुमध्यदेशभागे प्रत्येकं प्रत्येकं सूर्याभदेवयोग्यं सिंहासनं तेषां च सिंहासनानां वर्णकोऽपरोत्तरोत्तरपूर्वादिषु सामानिकादिदेवयोग्यानि भद्रासनानि च क्रमेण यानविमानवद्वक्तव्यानि शेषेषु च भौमेषु प्रत्येकमेकैकं सिंहासनं परिवाररहितम्।' तेसि णं' मित्यादि, तेषां द्वाराणाम् उत्तमा आकारा—उपरितना आकारा उत्तरङ्गादिरूपा कचित् ' उवरिमागारा ' इत्येव पाठः, षोडशविधै रत्नैरुपशोभितास्तद्यथा-' रयणेहिं०जाव रिट्ठेहिं ' इति रत्नैः—सामान्यतः कर्केतनादिभिः १, यावत्करणात्-वज्रैः २ वैडूर्यैः ३ लोहिताक्षैः ४ मसारगल्लैः ५ हंसगर्भैः ६ पुलकैः ७ सौगन्धिकैः ८ ज्योतीरसैः ९ अङ्कैः १० अञ्जनैः ११ रजतैः १२ अञ्जनपुलकैः १३ जातरूपैः १४ स्फटिकैरिति परिग्रहः १५ पांडरिष्टैः १६ ' तेसि णं ' मित्यादि, तेषां द्वाराणां प्रत्येकमुपरि अष्टौ अष्टौ स्वस्तिकादीनि मङ्गलकानि इत्यादि यानविमानतोरणवक्तव्यवद्वाच्यं यावद् बहवः सहस्रपत्रहस्तका इति अत ऊर्ध्वं कपुस्तिकचित् पुस्तकान्तरे एवं पाठः-' एवामेव सपुव्वावरेणं सूरियाभे विमाणे चत्तारि दारसहस्सा भवंतीति मक्खाय ' मिति सुगमं ' सूरियाभस्स णं ' मित्यादि सूर्याभस्य विमानस्य चतुर्दिशं—चतसृषु दिक्षु समाहृताश्चतुर्दिक् तस्मिन् चतुर्दिशि चतसृषु दिक्षु पञ्च पञ्च योजनशतानि 'अबाहाए' इति बाधनं बाधा, आक्रमणमित्यर्थः, न बाधा अबाधा—अनाक्रमणं तस्यामबाधायां कृत्वेति गम्यते, अपान्तरालं मुक्त्वेति भावः, चत्वारो वनखण्डाः प्रज्ञप्ताः, अनेकजातीयानामुत्तमानां महीरुहाणां समूहो वनखण्डः, उक्तञ्च जीवाभिगमचूर्णौ-' अणेगजाईहिं उत्तमेहिं रुक्खेहिं वणसंडे ' इति, ' तद्यथे ' त्यादिना तानेव वनखण्डान् नामतो दिग्भेदतश्च दर्शयति—अशोकवृक्षप्रधानं वनमशोकवनमेवं सप्तपर्णवचनं चम्पकवनं चूतवनमपि भावनीय, ' पुरच्छिमेणं ' मित्यादि पाठसिद्धम्, अत्र संग्रहणिगाथा-' पुव्वेण असोगवणं, दाहिणओ होइ सत्तिवण्णवणं। अवरेणं चंपकवणं, चूयवणं उत्तरे पासे ॥ १ ॥ ' ' ते णं ' मित्यादि, ते च वनखण्डाः सातिरेकाणि अर्द्धत्रयोदशानि-सार्द्धानि द्वादश योजनशतसहस्राणि ( आयामेन ) पञ्च योजनशतानि विष्कम्भेन, प्रत्येकं २ प्राकारपरिक्षिप्ताः पुनः कथंभूतास्ते वनखण्डाः ? इत्याह—' किण्हा किण्होभासा ०जाव पडिमोयणा सुरम्मा ' इति यावत्करणादेवं परिपूर्णः पाठः सूचितः-"नीला नीलोभासा हरिया हरियोभासा सीया सीयोभासा निद्धा निद्धोभासा तिव्वा तिव्वोभासा किण्हा किण्हच्छाया नीला नीलच्छाया हरिया हरियच्छाया सीया सीयच्छाया निद्धा निद्धच्छाया घणकडियकडियच्छाया रम्मा महामेहनिकुरंबभूया, ते णं पायवा मूलमंतो कंदमंतो खंधमंतो तयमंतो पवालमंतो पत्तमंतो पुप्फमंतो बीयमंतो फलमंतो आणुपुव्वसुजायरुइलवट्टपरिगया एगखंधा अणेगसाहप्पसाहाविडिमा अणेगनरवामसुप्पसारियअगेज्झघणविउलवट्टखंधा अच्छिद्दपत्ता अविरलपत्ता अवाईणपत्ता अणीईयपत्ता निद्धूयजरढपंडुपत्ता नवहरियभिसंतपत्तभारंधयारगंभीरदरिसणिज्जा उवणिग्गयवरतरुणपत्तपल्लवकोमलउज्जलचलंतकिसलयकुसुमपवालपल्लवयकुरग्गसिहरा निच्चं कुसुमिया निच्चं मउलिया निच्चं लवइया निच्चं थवइया निच्चं गुलइया निच्चं गोच्छिया निच्चं जमलिया निच्चं जुयलिया निच्चं विणमिया निच्चं पणमिया, निच्चं-कुसुमियमउलियलवइयथवइयगुलइयगोच्छियजमलियजुवलियविणमियपणमियसुविभत्तपडिमंजरिवडंसयधरा सुयबरहिणमयणसलागाकोइलकोरकभिंगारककोंडलजीवंजीवकनंदीमुहकविजलपिंगलक्खगकारंडचक्कवागकलहंससारसअणेगसउणिमिहुणवियरियसद्दुन्नइयमहुरसरनाइयसंपिंडियदरियभमरमहुयरिपहकरपरिलेंतछप्पयकुसुमासवलोलमहुरगुमगुमतगुंजंतदेसभागा अब्भिंतरपुप्फफलबाहिरपत्तच्छन्ना पत्तेहि य पुप्फेहि य उच्छन्नपलिच्छन्ना नीरोगका मउफासा अकंटगा णाणाविहगुच्छगुम्ममंडवगोवसहिया विचित्तसुहकेउभूया वाविपुक्खरिणीदीहियासु य सुनिवेसियरम्मजालघरगा पिंडिमनीहारिमसुगंधिसुसुरभिमणहरं च गंधद्धणिं मुयंता सुहकेऊ केउबहुला अणेगसगडरहजाणजुग्गगिल्लिथिल्लिसीयसंदमाणीपडिमोयणा सुरम्मा ' इति अस्य व्याख्या—इह प्रायो वृक्षाणां मध्यमे वयसि वर्त्तमानानि पत्राणि कृष्णानि भवन्ति ततस्तद्योगात् वनखण्डा अपि कृष्णाः, न चोपचारमात्रात्ते कृष्णा इति व्यपदिश्यन्ते किन्तु तथा प्रतिभासनात्, तथा चाह—'कृष्णावभासा' यावति भागे कृष्णाभासपत्राणि सन्ति तावति भागे ते वनखण्डाः कृष्णा अवभासन्ते, ततः कृष्णोऽवभासो येषां ते कृष्णावभासा इति, तथा हरितत्वमतिक्रान्तानि कृष्णत्वमसंप्राप्तानि पत्राणि नीलानि तद्योगाद्वनखण्डा अपि नीलाः, न चैतदुपचारमात्रेणोच्यते किन्तु तथावभासात्, तथा चाह-नीलावभासाः, समासः प्राग्वत्, यौवने तान्येव पत्राणि किसलयत्वं रक्तत्वं चातिक्रान्तानि ईषत् हरितालाभानि पाण्डूनि सन्ति हरितानीति व्यपदिश्यन्ते, ततस्तद्योगात् वनखण्डा अपि हरिताः, न चैतदुपचारमात्रादुच्यते, किन्तु तथाप्रतिभासात्, तथा चाह-हरितावभासाः, तथा बाल्यादतिक्रान्तानि वृक्षाणां पत्राणि शीतानि भवन्ति ततस्तद्योगाद्वनखण्डा अपि शीता इत्युक्ताः, न च ते गुणतस्तथा किन्तु तथैव,तथा चाह-शीतावभासाः अधोभागवर्त्तिनां वैमानिकदेवानां देवीनां तद्योगशीतवातसंस्पर्शतः ते शीता वनखण्डा अवभासन्ते इति, तथा एते कृष्णनीलहरितवर्णा यथास्वस्मिन् स्वरूपे अत्यन्तं स्निग्धा भण्यन्ते तीव्राश्च ततः तद्योगात् वनखण्डा अपि स्निग्धाः तीव्राश्च इत्युक्ताः, न चैतदुपचारमात्रं किन्तु तथावभासोऽप्यस्ति तत उक्तं—स्निग्धावभासास्तीव्रावभासा इति, इहावभासो भ्रान्तोऽपि भवति यथा मरुमरीचिकासु जलावभासस्ततो नावभासमात्रोपदर्शनेन यथावस्थितं वस्तुस्वरूपं वर्णितं भवति किन्तु तथास्वरूपप्रतिपादनेन, ततः कृष्णत्वादीनां तथास्वरूपप्रतिपादनार्थमनुवादपुरस्सरं विशेषणान्तरमाह—'किण्हा किण्हच्छाया' इत्यादि, कृष्णा वनखण्डाः, कुत इत्याह—कृष्णच्छाया 'निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायो दर्शन' मिति वचनात् हेतौ प्रथमा, ततोऽय-

मर्थः—यस्मात् कृष्णा छाया-आकारः सर्वाविसंवादिनया तथा तस्मात् कृष्णा, एतदुक्तं भवति—सर्वाविसंवादिनया तत्र कृष्ण आकार उपलभ्यते, न च भ्रान्तावभासस्थापितसत्ताकः सर्वाविसंवादी भवति, ततस्तत्त्ववृत्त्या ते कृष्णा न भ्रान्तावभासमात्रव्यवस्थापिता इति, एवं नीला नीलच्छाया इत्याद्यपि भावनीयं, नवरं शीता शीतच्छाया इत्यत्र छायाशब्द आतपप्रतिपक्षवस्तुवाची द्रष्टव्यः, 'घनकडितडियच्छाया' इति इह शरीरस्य मध्यभागे कटिस्ततोऽन्यस्यापि मध्यभागः कटिरिव कटिरित्युच्यते-कटिस्तटमिव कटितटं घना—अन्योऽन्यशाखाप्रशाखानुप्रवेशतो निविडा कटितटे—मध्यभागे छाया येषां ते तथा, मध्यभागे निविडतरच्छाया इत्यर्थः, अत एव रम्यो—रमणीयः तथा महान् जलभारावनतप्रावृट्कालभावी यो मेघनिकुरुम्बो—मेघसमूहस्तद्भूता—गुणैः प्राप्ता महामेघनिकुरुम्बभूता, महामेघवृन्दोपमा इत्यर्थः । 'ते णं पायवा' इत्यादि, अशोकवरपादपपरिवारभूततिलकादिवृक्षवर्णनवत् परिभावनीयं, नवरं 'सुयवरहिणमयणसलागा' इत्यादि विशेषणसत्रोपमया भावनीयम्, 'अणेगसगडरहजाण' त्यादि तदाकारभावत ।

तेसि णं वणसंडाणं अंतो बहुसमरमणिज्जा भूमिभागा पण्णत्ता, से जहानामए आलिंगपुक्खरेति वा ०जाव णाणाविहपंचवण्णेहिं मणीहि य तणेहि य उवसोभिया, तेसि णं गंधो फासो णेयव्वो जहक्कमं, तसि णं भंते ! तणाण य मणीण य पुव्वावरदाहिणुत्तरातेहिं वातेहिं मंदाणं एइयाणं वेइयाणं कंपियाणं चालियाणं फंदियाणं घट्टियाणं खोभियाणं उदीरियाणं केरिसए सद्दे भवति ?, गोयमा ! से जहानामए सीयाए वा संदमाणीए वा रहस्स वा सच्छत्तस्स सज्झयस्स सघंटस्स सपडागस्स सतोरणवरस्स सनंदिघोसस्स सखिंखिणिहेमजालपरिक्खित्तस्स हेमवयचित्ततिणिसकणगणिज्जुत्तदारुयायस्स संपिनद्धचक्कमंडलधुरागस्स कालायससुकयणेमिजंतकम्मस्स आइण्णवरतुरगसुसंपउत्तस्स कुसलणरच्छेयसारहिसुसंपग्गहियस्स सरसयवत्तीसतोणपरिमंडियस्स सकंकडावयंसगस्स सचावसरपहरणावरणभरियजुज्झसज्जस्स रायगणंसि वा रायंतेउरंसि वा रम्मंसि वा मणिकुट्टिमतलंसि अभिक्खणं अभिघट्टिज्जमाणस्स वा नियट्टिज्जमाणस्स वा ओरालमणुण्णा कण्णमणनिव्वुडकरा सद्दा सव्वओ समंता अभिणिस्सवंति, भवेयारूवे सिया ?, णो इणट्ठे समट्ठे, से जहाणामए वेयालियवीणाए उत्तरमंदामुच्छियाए अंके सुपइट्ठियाए कुसलनरनारिसुसंपरिग्गहियाते चंदणकोणपरिघट्टियाए पुव्वरत्तावरत्तकालसमयंसि मंदायं वेइयाए पवेइयाए चालियाए घट्टियाए खोभियाए उदीरियाए ओराला मणुण्णा मणहरा कण्णमणनिव्वुइकरा सद्दा सव्वओ समंता अभिनिस्सवंति, भवेयारूवे सिया ?, णो इणट्ठे समट्ठे, से जहानामए किन्नराण वा किंपुरिसाण वा महोरगाण वा गंधव्वाण वा भद्दसालवणगयाणं वा नंदणवणगयाण वा सोमणसवणगयाणं वा पंडगवणगयाण वा हिमवंतमलयमंदरगिरिगुहासमन्नागयाण वा एगओ सन्निहियाणं समागयाणं सन्निसन्नाणं समुवविट्ठाणं पमुइयपक्कीलियाणं गीयरइगंधव्वहसियमणाणं गज्जं पज्जं कत्थं गेयं पयबद्धं पायबद्धं उक्खित्तायं पयत्तायं मंदायं रोइयावसाणं सत्तसरसमन्नागयं छद्दोसविप्पमुक्कं एक्कारसालंकारं अट्ठगुणोववेयं गुंजंतवंसकुहरोवगूढं रत्तं तिट्ठाणकरणसुद्धं सकुहरगुंजंतवंसतंतीतलतालखयगहसुसंपउत्तं महुरं समं सुललियमणोहरं मउयरिभियपयसंचारं सुरतिं वरचारुरूवं दिव्वं णट्टं सज्जं गेयं पगीयाणं, भवेयारूवे सिया ?, हंता सिया । ( सू० ३१ ) ।

तेसि णं वणसंडाणं तत्थ तत्थ तहिं तहिं देसे देसे बहूओ खुड्डाखुड्डियातो वावियाओ पुक्खरिणीओ दीहियाओ गुंजालियाओ सरपंतिआओ बिलपंतिआओ अच्छाओ सण्हाओ रययामयकूलाओ समतीराओ वयरामयपासाणातो तवणिज्जतलाओ सुवण्णसुब्भरययवालुयाओ वेरुलियमणिफालियपडलपच्चोयडाओ सुओयारसुउत्ताराओ णाणामणिसुबद्धाओ चउक्कोणाओ आणुपुव्वसुजातगंभीरसीयलजलाओ संछन्नपत्तभिसमुणालाओ बहुउप्पलकुमुयनलिणसुभगसोगंधियपोंडरीयसयवत्तसहस्सपत्तकेसरफुल्लोवचियाओ छप्पयपरिभुज्जमाणकमलाओ अच्छविमलसलिलपुण्णाओ अप्पेगइयाओ आसवोयगाओ अप्पेगइयाओ खोरोयगाओ अप्पेगतियातो घओयगा० अप्पे० खीरोय०अप्प०खारोय०अप्पेगइयाओ उयगरसेणं पण्णत्ताओ पासादीयाओ दरिसणिज्जाओ अभिरूवाओ पडिरूवाओ, तासि णं वावीणं ०जाव बिलपतीण पत्तेयं२ चउद्दिसिं चत्तारि तिसोपाणपडिरूवगा पण्णत्ता, तेसि णं तिसोपाणपडिरूवगाणं वन्नओ, तोरणाण झया छत्ताइछत्ता य णेयव्वा, तासु णं खुड्डाखुड्डियासु वावीसु ०जाव बिलपंतियासु तत्थ तत्थ देसे२ बहवे उप्पायपव्वयगा नियइपव्वयगा जगइपव्वयगा दारुइज्जपव्वयगा दगमंडवा दगणालगा दगमंचगा उसड्डा खुड्डखुड्डगा अंदोलगा पक्खंदोलगा सव्वरयणामया अच्छा ०जाव पडिरूवा, तेसु णं उप्पायपव्वएसु ०जाव पक्खंदोलएसु बहूइं हंसासणाइं कोंचासणाइं गरुलासणाइं उण्णयासणाइं पणयासणाइं दीहासणाइं पक्खासणाइं

भद्दासणाइं उसभासणाइं सीहासणाइं पउमासणाइं दि-
सासोवत्थियाइं सव्वरयणामयाइं अच्छाइं ०जाव पडिरू-
वाइं, तेसु णं वणसंडेसु तत्थ तत्थ तहिं तहिं देसे देसे
बहवे आलियघरगा मालियघरगा कयलिघरगा लयाघ-
रगा अच्छणघरगा पिच्छणघरगा मंडणघरगा पसाहण-
घरगा गब्भघरगा मोहनघरगा सालघरगा जालघरगा
चित्तघरगा कुसुमघरगा गंधघरगा आयंसघरगा सव्वर-
यणामया अच्छा ०जाव पडिरूवा, तेसु णं आलियघरगेसु
०जाव गंधव्व०तहिं२घरएसु बहूइं हंसासण० जाव दिसासो-
वत्थिआसणाइं सव्वरयणामयाइं ०जाव पडिरूवाइं । तेसु
णं वणसंडेसु तत्थ तत्थ देसे देसे तहिं २ बहवे जातिमं-
डवगा जूहियमंडवगा णवमालियमंडवगा वासंतिमंड-
वगा सूरमल्लियमंडवगा दहिवासुयमंडवगा तंवोलिमंड-
वगा मुद्दियमंडवगा णागलयामंडवगा अतिमुत्तयलया-
मंडवगा अप्फोवगा मालुयामंडवगा अच्छा सव्वरयणा
मया ०जाव पडिरूवाओ, तेसु णं जालिमंडवएसु ०जाव
मालुयामंडवएसु बहवे पुढविसिलापट्टगा हंसासणसंठि-
या ०जाव दिसासोवत्थियासणसंठिया अण्णे य बहवे मं-
सलघुट्ठविसिट्ठसंठाणसंठिया पुढविसिलापट्टगा पण्णत्ता-
समणाउसो ! आईणगरुयबूरणवणीयतूलफासा सव्व-
रयणामया अच्छा ०जाव पडिरूवा, तत्थ णं बहवे वे-
माणिया देवा य देवीओ य आसयंति सयंति चिट्ठंति
णिसीयंति तुयट्टंति हसंति रमंति ललंति कीलंति किट्टं-
ति मोहेंति पुरा पोराणाणं सुचिण्णाणं सुपडिक्कंताणं
सुभाणं कडाणं कम्माण कल्लाणाणं कल्लाणं फलविवा(यं)गं
पच्चणुब्भवमाणा विहरंति । ( सू० ३२ )

'तेसि णं वणसंडाण' मित्यादि , तेषां वनखण्डाना-
मन्त --मध्ये बहुसमरमणीया भूमिभागा प्रज्ञप्ता तेषां च
भूमिभागानां ' से जहानामए आलिंगपुक्खरे इ वा '
इत्यादि वर्णनं प्रागुक्तं तावद्वाच्यं यावन्मणीनां स्पर्शो. त-
दनन्तरमत्र तृणान्यपि वक्तव्यानि तानि चैवम्—' णाणाविह-
पञ्चवण्णेहिं मणीहि य तणेहि य उवसोभिया . तं जहा—
किण्हेहिं य नीलेहि य ०जाव सुक्किल्ले तत्थ ण जे ते क-
ण्हा तणा य मणी य तेसि णं अयमेयारूवे वण्णावासे
पण्णत्ते , से जहानामए जीमूतेइ वा ' इत्यादि । सम्प्रति
तेषां मणीनां तृणानां च वातेरितानां शब्दस्वरूपप्रतिपाद-
नार्थमाह— तेसि णं भंते ! तणाण य मणीण ' इत्या-
दि, तेषां 'णमिति' पूर्ववत् भदन्त !—परमकल्याणयोगिन्
तृणानां पूर्वापरदक्षिणोत्तरागतैर्वातैर्मन्दायन्ति-मन्दमन्दम् ए-
जितानां—कम्पितानां व्येजितानां-विशेषतः कम्पितानां
एतदेव पर्यायशब्देन व्याचष्टे—कम्पितानां चालितानाम्-इ-
तस्ततो मनाक् विक्षिप्तानाम् , एतदेव पर्यायेण व्याचष्टे-स्प-
न्दितानां तथा घट्टितानां—परस्परं संघर्षयुक्तानां, कथं घ-
ट्टिता इत्याह—क्षोभितानां, स्वस्थानाच्चालनमपि कुत इ-

त्याह—उदीरितानामुत्—प्राबल्येन प्रेरितानां , कीदृश श-
ब्दः प्रज्ञप्तः ? भगवानाह—' गोयमे ' त्यादि , गौतम !
स यथानामकः शिबिकाया वा स्यन्दमानिकाया वा रथ-
स्य वा , तत्र ' सिविया' जम्पानविशेषरूपा उपरिच्छादिता
कोष्ठाऽऽकारा, तथा दीर्घो जम्पानविशेषः पुरुषस्वप्रमाणाव-
काशदा या स्यन्दमानिका , अनयोश्च शब्दः पुरुषोत्पा-
टितयोः क्षुद्रहेमघण्टिकादिचलनवशतो वेदितव्यः , रथश्चेह
संग्रामरथः प्रत्येयोऽन्यतनविशेषणानामन्यथाऽसम्भवात् . त-
स्य च फलकवेदिका यस्मिन् काले ये पुरुषास्तदपेक्षया त-
तिप्रमाणाऽवसेया. तस्य च रथस्य विशेषणान्यभिधत्ते-
' सच्छत्तस्स ' इत्यादि, सच्छत्रस्य सध्वजस्य सघण्टाकस्य
उभयपार्श्वावलम्बिमहाप्रमाणघण्टोपेतस्य सपताकस्य सह
तोरणवरं—प्रधानतोरणं यस्य स सतोरणवरस्तस्य , सह
नन्दीघोषो—द्वादशतूर्यनिनादो यस्य स सनन्दिघोषस्तस्य
तथा सह किङ्किण्य -क्षुद्रघण्टा येषामिति सकिङ्किणीका-
नि, हेमजालानि—यानि हेममयदामसमूहास्तैः सर्वासु दि-
क्षु पर्यन्तेषु—बहि प्रदेशेषु परिक्षिप्तो--व्याप्तस्तस्य तथा
हैमवतं-हिमवत्पर्वतभावि चित्रं-विचित्रमनोहारिविशेषोपेतं-
तिनिशतरुसंबन्धि कनकविच्छुरितं दारु—काष्ठं यस्य
स हैमवतचित्रतैनिशकनकनिर्युक्तदारुकस्तस्य . सूत्रे च
द्वितीयः ककारः स्वार्थिकः पूर्वस्य च दीर्घत्वं प्रा-
कृतत्वात् , तथा सुष्ठु—अतिशयेन सम्यक् पिनद्धं—
बद्धमरकमण्डलं धूश्च यस्य स सुसंपिनद्धारकमण्डलधू क-
स्तस्य, तथा कालायसेन—लोहेन सुष्ठु—अतिशयेन कृ—
तं नेमे —बाह्यपरिधेर्यन्त्रस्य च—अरकोपरि फलकचक्रवा-
लस्य कर्म, यस्मिन् स कालायसकृतनेमियन्त्रकर्मा तस्य ,
तथा आकीर्णा—गुणैर्व्याप्ता ये वरा.—प्रधानास्तुरगास्ते
सुष्ठु--अतिशयेन सम्यक् प्रयुक्ता—योजिता यस्मिन् स
आकीर्णवरतुरगसुसंप्रयुक्त तस्य, प्राकृतत्वात् बहुव्रीहाव-
पि क्तान्तस्य परनिपात , तथा सारथिकर्मणि ये कुश-
ला नरास्तेषां मध्ये अतिशयेन छेको—दक्षः सारथिस्तेन
सुष्ठु--सम्यक् परिगृहीतस्य, तथा ' सरसयबत्तीसतोण-
परिमंडियस्स ' इति शराणा शतं प्रत्येकं येषु तानि श-
रशतानि तानि च तानि द्वात्रिंशत् तूणानि तैर्मण्डित
शरशतद्वात्रिंशत्तूणमण्डित , किमुक्तं भवति ?—एवं नाम
तानि द्वात्रिंशत् शरभृतभृतानि तूणानि रथस्य सर्वत.
पर्यन्तेष्ववलम्बितानि यथा तानि संग्रामायोपकल्पितस्या-
तीव मण्डनाय भवन्तीति , तथा कङ्कट --कवचं सह क
ङ्कटो यस्य स सकङ्कट सकङ्कट अवतंस —शेखरं
यस्य स सकङ्कटावतंसस्तस्य , तथा सह चापं येषा ते
सचापा ये शरा यानि च कुन्तभल्लिमुसुण्ढप्रभृतीनि ना-
नाप्रकाराणि प्रहरणानि यानि च कवच ( कङ्कट ) प्रमुखानि
आवरणानि तैर्भृत --परिपूर्णः , तथा योधानां युद्धं त-
न्निमित्तं सज्ज —प्रगुणीभूतो यः स योधयुद्धसज्जस्तत पू-
र्वपदेन सह विशेषणसमास तस्य इत्थभूतस्य राजाङ्गणे
वा अन्त पुरे वा रम्ये वा मणिकुट्टिमतले--मणिबद्धभूमि-
तले अभीक्ष्णमभीक्ष्णं कुट्टिमतलप्रदेशे वा 'अभिघट्टिज्जमा-
णस्स' ति अभिघट्यमानस्य वेगेन गच्छतो ये उदारा 'म-
नोज्ञा कर्णमनोनिर्वृतिकरा सर्वत समन्तात् जीवाभिग-

मूलटीकायामपि 'उप्पित्थं' श्वासयुक्तमिति , तथा उत्—प्राबल्येन अतितालमस्थानताल वा उत्तालं , श्लक्ष्णस्वरेण काकस्वरं, सानुनासिकम् अनुनासिकाविनिर्गतस्वरानुगतमिति भाव , तथा ' अट्ठगुणोववेयं ' मिति अष्टाभिर्गुणैरुपेतमष्टगुणोपेतं ते चाष्टावमी गुणा -पूर्णं रक्तमलङ्कृतं व्यक्तमविघुष्टं मधुरं समं सललितं च. तथा चोक्तम्—" पुण्णं रत्तं च अल—कियं च वत्तं तहेव अविघुट्ठं । महुरं समं सललियं , अट्ठ गुणा होंति गेयस्स ॥ १ ॥ " तत्र यत् स्वरकलाभि परिपूर्णं गीयते तत्पूर्णं , गेयरागानुरक्तेन यत् गीयते तत् रक्तम् , अन्योऽन्यस्वरविशेषकरणेन यदलङ्कृतमिव गीयते तदलङ्कृतम् , अक्षरस्वरस्फुटकरणतो व्यक्त. विस्वर क्रोशनीव विघुष्ट न तथा अविघुष्ट, मधुरस्वरेण गीयमान मधुरं कोकिलारुतवत् , तालवशस्वरादिसमनुगत समं, तथा यत् स्वरघोलनाप्रकारेण ललतीव तत् सह ललितेन—ललनेन वर्त्तत इति सललितम, यदिवा-यत् श्रोत्रेन्द्रियस्य शब्दस्य स्पर्शनमतीव सूक्ष्ममुत्पादयति सुकुमारमिव च प्रतिभासते तत् सललितम् । इदानीमेतेषामष्टानां मध्ये कियतो गुणान् अन्यच्च प्रतिपिपादयिषुरिदमाह—'रत्तं तिट्ठाणकरण सुद्धं' तत् 'कुहरगुंजंतवंसतंतीतलतालयगहसुसंपउत्तं महुर समं सललियं मणोहर मउयरिभियपयसचार सुरइ सुनतिं वरचारुरूव दिव्वं नट्ट सज्जं गेयं पगीयाण ' मिति यथा प्राक् नाट्यविधौ व्याख्यातं तथा भावनीय ' जारिसए सद्दे हवइ ' प्रगीतानां—गातुमारब्धवता यादृश शब्दोऽतिमनोहरो भवति—स्यात्—कथञ्चिद्वेदेतद्रूपस्तेषा तृणानां मणीनां च शब्द ?, एवमुक्ते भगवानाह—गौतम ! स्यादेवंभूत शब्द । ( सू० ३१ ) 'तेसि णं वणसंडाणं' मित्यादि, तेषा 'ण' मिति वाक्यालङ्कारे वनखण्डानां मध्ये तत्र तत्र देशे ' तत्र तत्रे ' ति तस्यैव देशस्य तत्र तत्र एकदेशे ' बहुई ' इति बहुक',' खुड्डाखुड्डियाओ इति क्षुल्लिक्षुल्लिका ; लघवो लघव इत्यर्थ' , वाप्यश्चतुरस्रा पुष्करिण्यो वृत्ताकारा , अथवा पुष्कराणि विद्यन्ते यासु ता पुष्करिण्यो दीर्घिका—ऋजवो नद्य वक्रा नद्यो गुञ्जालिका. , बहूनि कमलकेवलानि पुष्पावकीर्णकानि सरांसि एकपङ्क्त्या व्यवस्थितानि सर पङ्क्ति सललितास्ता बहव सर पङ्क्तय तथा येषु सर सु एङ्क्त्या व्यवस्थितेषु कूपोदकं प्रणालिकया संचरति सा सर पङ्क्ति ता बहव सर सर पङ्क्तय , तथा बिलानीव बिलानि—कूपास्तेषा पङ्क्तयो बिलपङ्क्तय , एताश्च सर्वा अपि कथंभूता इत्याह-अच्छा स्फटिकवद्बहिर्निर्मलप्रदेशा श्लक्ष्णा —श्लक्ष्णपुद्गलनिष्पादितबहि प्रदेशा श्लक्ष्णदलनिष्पन्नपटवत् , तथा रजतमयं रूप्यमय कूल यासां ता रजतमयकूला , तथा समं न गर्ताभावात् विषम तीरं-तीरवर्त्तिजलापूरित स्थान यासां ता समतीरा , तथा वज्रमया. पाषाणा यासा ता वज्रमयपाषाणा , तथा तपनीय—हेमविशेष तपनीयमय तलं यासां तास्तपनीयतला , तथा "सुवण्णसुब्भरययवालुयाओ ' इति सुवर्णं पीतकान्ति हेम शुभ्र रूप्यविशेष रजत प्रतीतं तन्मया वालुका यासु ता सुवर्णशुभ्ररजतवालुका , ' वेरुलियमणिफलिहपडलपच्चोयडाओ ' इति वैडूर्यमणिमयानि स्फटिकपटलमयानि च प्रत्यवतटानि-तटसमीपवर्त्तिन अत्युन्नतप्रदेशा यासां ता वैडूर्यमणिस्फटिकपटलप्रत्यवतटा , ' सुओयारसुउत्ताराउ' इति सुखनावतारो-जलमध्ये प्रवेशनं यासु ता सुखावतारा तथा सुखेन उत्तारो-जलमध्याद्बहिर्निर्गमन यासु ता सुखोत्तारास्तत' पूर्वपदेन विशेषणसमास ' नानामणितित्थसुबद्धाउ ' इति नानामणिभि' नानाप्रकारैर्मणिभिस्तीर्थानि सुबद्धानि यासां ता नानामणितीर्थसुबद्धा अत्र बहुव्रीहावपि क्तान्तस्य परनिपातः सुखादिदर्शनाद् प्राकृतशैलीवशाद्वा ' चउक्कोणाउ ' इति चत्वार कोणा यासां ताश्चतु कोणा , एतच्च विशेषण वापी. कूपाश्च प्रति द्रष्टव्यं , तेषामेव चतुष्कोणत्वसंभवात् न शेषाणा, तथा आनुपूर्व्येण-क्रमेण नीचैस्तरभावरूपेण सुष्ठु—अतिशयेन यो जातवप्र.—केदारो जलस्थानं तत्र गम्भीरम्-अलब्धस्ताघ शीतलं जलं यासु ता आनुपूर्व्यसुजातवप्रगम्भीरशीतलजला' , ' संछन्नपत्तभिसमुणालाउ ' इति संछन्नानि—जलेनान्तरितानि पत्रबिसमृणालानि यासु ता सछन्नपत्रबिसमृणाला. , इह बिसमृणालसाहचर्यात् पत्राणि पद्मिनीपत्राणि द्रष्टव्यानि, बिसानि—कन्दा. मृणालानि—पद्मनाला , तथा बहुभिरुत्पलकुमुदनलिनसुभगसौगन्धिकपुण्डरीकशतपत्रसहस्रपत्रैः केसरैः --केसरप्रधानै. फुल्लै —विकसितैरुपचिता बहूत्पलकुमुदनलिनसुभग—सौगन्धिकपुण्डरीकशतपत्रसहस्रपत्रकेसरफुल्लोपचिता , तथा षट्पदैः भ्रमरै' परिभुज्यमानकमला , तथा अच्छेन-स्वरूपत. स्फटिकवत् शुद्धेन विमलेन—आगन्तुकमलरहितेन सलिलेन पूर्णा अच्छविमलसलिलपूर्णा , तथा 'पडिहत्था' अतिरेकिता, अतिप्रभूता इत्यर्थ. ' पडिहत्थमडमुमायं अतिरियय जाणमाउरण ' मिति वचनात् , उदाहरण चात्र—' घणपडिहत्थं गयणं, सराइ नवसलिलउद्धमायाइं । अयरेइयं मह उण चिंताए मणुनहं विरहे ॥१॥" इति . भ्रमन्तो मत्स्यकच्छपा यत्र ता परिहत्थभ्रमतमत्स्यकच्छपा , तथा अनेकै. शकुनिमिथुनकै प्रविचरता—इतस्ततो गमनेन सर्वतो व्याप्ता अनेकशकुनिमिथुनकप्रविचरितास्तत पूर्वपदेन विशेषणसमास , एता वाप्यादय सरस्सर पङ्क्तिपर्यन्ता 'प्रत्येकं प्रत्येकं' प्रति प्रत्येकमत्राभिमुख्ये प्रतिशब्दस्ततो वीप्साविवक्षायां पश्चात्प्रत्येकशब्दस्य द्विर्वचनमिति, पद्मवरवेदिकया परिक्षिप्ता ,प्रत्येक प्रत्येक वनखण्डपरिक्षिप्ता.,'अप्पेगइयाउ' इत्यादि अपिर्वाढार्थे वाशब्दो ह्येकका —काश्चन वाप्यादय आसवमिव—चन्द्रहासादिपरमासवमिव उदकं यासा ता आसवोदका ,अप्येकका वारुणस्य-वारुणसमुद्रस्येव उदकं यासां ता वारुणोदका', अप्येकका. क्षीरमिव उदकं यासां ता क्षीरोदका , अप्येकका घृतमिव उदकं यासा ता घृतोदका , अप्येकका क्षोद इव-इक्षुरस इव उदकं यासा ता क्षोदोदका , अप्येकका स्वाभाविकेन उदकरसेन प्रज्ञप्ता , 'पासाइया' इत्यादि विशेषणचतुष्टयं प्राग्वत् । तेसि णं' मित्यादि, तासां क्षुल्लिकाना वापीना यावद्बिलपङ्क्तीनामिति यावत् शब्दात् पुष्करिण्यादिपरिग्रह , प्रत्येकं चतुर्दिशि चत्वारि एकैकस्या दिशि एकैकस्य भावात् त्रिसोपानप्रतिरूपकाणि—प्रतिविशिष्टरूपाणि त्रिसोपानानि, त्रयाणां सोपानाना समाहारस्त्रिसोपानं तानि प्रत-

मानि' तेषां च त्रिसोपानप्रतिरूपकाणामयं-वक्ष्यमाण एतद्रूप:-अनन्तरं वक्ष्यमाणस्वरूपो वर्णकनिवेशः प्रज्ञप्तः- तद्यथा वज्रमया 'नेमा' इत्यादि प्राग्वत्। 'तेसि णं' तेषां त्रिसोपानप्रतिरूपकाणां प्रत्येकं तोरणानि प्रज्ञप्तानि. तोरणवर्णकस्तु निरवशेषो यानविमानवद्भावनीयो यावत् बहवः सहस्रपत्रहस्तका इति. 'तासि णं' मित्यादि. तासां क्षुल्लिकाक्षुल्लिकानां यावद् बिलपङ्क्तीनाम् अत्रापि यावच्छब्दात्-पुष्करिण्यादिपरिग्रहः. तत्र-तत्र देशे तस्यैव देशस्य तत्र तत्र एकदेशे बहव उत्पातपर्वता यत्रागत्य बहवः सूर्याभविमानवासिनो वैमानिका देवा देव्यश्च विचित्रक्रीडानिमित्तं वैक्रियशरीरमारचयन्ति 'नियइपव्वया' इति नियत्या—नैयत्येन व्यवस्थिता पर्वता नियतिपर्वताः क्वचित् 'नियइपव्वया' इति पाठः, तत्र नियता —सदा भोग्यत्वेनावस्थिताः पर्वता नियतपर्वता यत्र सूर्याभविमानवासिनो वैमानिका देवा देव्यश्च भवधारणीयेनैव वैक्रियशरीरेण सदा रममाणा अवतिष्ठन्ते इति भावः. 'जगईपव्वया' इति जगतीपर्वतका पर्वतविशेषाः दारुपर्वतका दारुनिर्मापिता इव पर्वतकाः. 'दगमंडवा' इति दकमण्डपाः- स्फाटिका मण्डपाः. उक्तं च जीवाभिगममूलटीकायाम्— "दगमंडवा—स्फाटिका मण्डपाः" इति, एवं दकमञ्चका दकमालका दकप्रासादाः. एते च दकमण्डपादयः केचित् 'उच्छ्रिता' इति उच्छ्रिता: उच्चा इत्यर्थः. क्वचित् 'खुड्डाखुड्ड' त्ति क्षुल्लका क्षुल्लका इति तथा अन्दोलका पक्ष्यन्दोलकाश्च, इह यत्रागत्य मनुष्या आत्मानमन्दोलयन्ति तेऽन्दोलका इति लोके प्रसिद्धा यत्र तु पक्षिण आगत्यात्मानमन्दोलयन्ति ते पक्ष्यन्दोलकाः, तत्र अन्दोलका पक्ष्यन्दोलकाश्च तेषु वनखण्डेषु तत्र २ प्रदेशे देवक्रीडायोग्या बहवः सन्ति एते च उत्पातपर्वतादयः कथंभूता? इत्याह—'सव्वरयणमया' सर्वात्मना रत्नमया:, 'अच्छा सण्हा' इत्यादि विशेषणकदम्बकं प्राग्वत्। 'तेसु णं' मित्यादि, तेषु उत्पातपर्वतेषु यावत्पक्ष्यन्दोलकेषु यावत्करणान्नियतिपर्वतकादिपरिग्रहः बहूनि हंसासनादीनि आसनानि, तत्र येषामासनानामधोभागे हंसा व्यवस्थिता यथा सिंहासने सिंहाः तानि हंसासनानि, एवं क्रौञ्चासनानि गरुडासनानि च भावनीयानि उन्नतासनानि—उच्चासनानि प्रणतासनानि—निम्नासनानि दीर्घासनानि—शय्यारूपाणि भद्रासनानि येषामधोभागे पीठिकाबन्धः पक्ष्यासनानि येषामधोभागे नानास्वरूपाः पक्षिणः, एवं मकरासनानि सिंहासनानि च भावनीयानि पद्मासनानि—पद्माकाराणि आसनानि दिक्सौवस्तिकासनानि येषामधोभागे दिक्सौवस्तिका आलिखिताः सन्ति. अत्र यथाक्रममासनानां संग्रहणिगाथा—
'हंसे कोंचे गरुडे, उण्णय पणए य दीह भद्दे य। पक्खे मयरे पउमे, सीह दिसासोत्थि बारसमे ॥ १ ॥'
इति तानि सर्वाण्यपि कथंभूतानीत्यत आह—'सव्वरयणामया' इत्यादि प्राग्वत्। 'तेसि णं' मित्यादि तेषु वनखण्डेषु मध्ये तत्र २ प्रदेशे तस्यैव देशस्य तत्र, तत्र एकदेशे बहूनि 'आलिघरकाणि' आलि—वनस्पतिविशेषः तन्मयानि गृहकाणि आलिगृहकाणि, मालिरपि वनस्पतिविशेषः तन्मयानि गृहकाणि मालिगृहकाणि, कदलीगृहकाणि लतागृहकाणि च प्रतीतानि, 'अच्छणघरकाणि' इति अवस्थानगृहकाणि येषु यदा तदा वा आगत्य सुखासिकया अवतिष्ठन्ति, प्रेक्षणकगृहकाणि यत्रागत्य प्रेक्षणकानि विदधति निरीक्षन्ते च, मज्जनकगृहकाणि यत्रागत्य स्वेच्छया मज्जनकं कुर्वन्ति 'प्रसाधनगृहकाणि' यत्रागत्य स्वं परं च मण्डयन्ति 'गर्भगृहकाणि' गर्भगृहाकाराणि, 'मोहणघराइं' इति मोहनं—मैथुनसेवा 'रमियं मोहणरयाइं' इति नाममालावचनात् तत्प्रधानानि गृहकाणि। मोहनगृहकाणि वासभवनानीति भावः, शालागृहकाणि—पट्टशालाप्रधानानि जालगृहकाणि—गवाक्षयुक्तानि गृहकाणि कुसुमगृहकाणि—कुसुमप्रकरोपचितानि गृहकाणि. चित्रगृहकाणि—चित्रप्रधानानि गृहकाणि गन्धर्वगृहकाणि गीतनृत्ययोग्यानि गृहकाणि आदर्शगृहकाणि—आदर्शमयानीव गृहकाणि, एतानि च कथंभूतानीत्यत आह-'सव्वरयणामया' इत्यादि विशेषणकदम्बकं प्राग्वत्। 'तेसि णं' मित्यादि, तेषु आलिगृहकेषु यावदादर्शगृहकेषु. अत्र यावच्छब्दात् मालिगृहकादिपरिग्रहः, 'बहूनि हंसासनानि' इत्यादि प्राग्वत्। 'तेसि णं' मित्यादि तेषु वनखण्डेषु तत्र तत्र देशे तस्यैव देशस्य तत्र तत्र एकदेशे बहवो जातिमण्डपका यूथिकामण्डपका मल्लिकामण्डपका नवमालिकामण्डपका वासन्तीमण्डपका दधिवासुकामण्डपका दधिवासुका—वनस्पतिविशेषस्तन्मया मण्डपका दधिवासुकामण्डपका सूरल्लिरपि वनस्पतिविशेषः तन्मया मण्डपका २, ताम्बूली- नागवल्ली तन्मया मण्डपकास्ताम्बूलीमण्डपका. नागो- द्रुमविशेषः स एव लता नागलता इह यस्य तिर्यक् तथाविधा शाखा प्रशाखा वा न प्रसृता सा लतेत्यभिधीयते नागलतामया मण्डपका नागलतामण्डपका, अतिमुक्तमण्डपका, 'अप्फोया' इति वनस्पतिविशेषस्तन्मया मण्डपका अप्फोयामण्डपका, मालुका-एकास्थिकफला वृक्षविशेषास्तद्युक्ता मण्डपका मालुकामण्डपका, एते च कथंभूता इत्याह—'सव्वरयणामया' इत्यादि प्राग्वत्। 'तेसि णं' मित्यादि तेषु जातिमण्डपकेषु यावन्मालुकामण्डपकेषु 'जाव' शब्दात्-यूथिकामण्डपकादिपरिग्रहः बहवः शिलापट्टका प्रज्ञप्तास्तद्यथा—अप्येकका हंसासनवत् संस्थिता हंसासनसंस्थिता यावदप्येकका दिक्सौवस्तिकासनसंस्थिता. यावत्करणात्—'अप्पेगइया हंसासणसंठिया अप्पेगइया गरुडासणसंठिया अप्पेगइया उण्णयासणसंठिया अप्पेगइया पणयासणसंठिया अप्पेगइया दीहासणसंठिया अप्पेगइया भद्दासणसंठिया अप्पेगइया पक्खा० अप्पे० आयंसासणसंठिया अप्पेगइया उसभासणसंठिया अप्पेगइया सीहासणसंठिया अप्पेगइया पउमासणसंठिया' इति परिग्रहः. अन्ये च बहवः शिलापट्टका यानि विशिष्टचिह्नानि विशिष्टनामानि च वराणि—प्रधानानि शयनानि आसनानि च तद्वत् संस्थिताः, वरशयनासनविशिष्टसंस्थानसंस्थिता, क्वचित्—'मांसलसुघट्टविसिट्ठसंठाणसंठिया' इति पाठः तत्रान्ये च बहवः शिलापट्टका मांसला: अकठिना इत्यर्थः सुघृष्टा अतिशयेन मसृणा इति भावः विशि-

एतस्थानसस्थितास्थेति, 'आईणगरूयबूरनवणीयतूलफासमउया सव्वरयणामया अच्छा ०जाव पडिरूवा' इति प्राग्वत्. तत्र तेषु उत्पादपर्वतादिगतहंसासनादिषु यावन्नानारूपसंस्थानसंस्थितपृथ्वीशिलापट्टकेषु 'ण' मिति पूर्ववत् बहवः सूर्याभविमानवासिनो देवा देव्यश्च यथासुखमासते शेरते-दीर्घकायप्रसारणेन वर्त्तन्ते न तु निद्रां कुर्वन्ति. तेषां देवयोनिकत्वेन निद्राया अभावात्, तिष्ठन्ति— ऊर्ध्वस्थानेन वर्त्तन्ते निषीदन्ति-उपविशन्ति तुयट्टन्ति-त्वग्वर्त्तनं कुर्वन्ति, वामपार्श्वतः परावृत्य दक्षिणपार्श्वेनावतिष्ठन्ति दक्षिणपार्श्वतो वा परावृत्य वामपार्श्वेनेति भावः, रमन्ते—रतिमाबध्नन्ति ललन्ति-मनईप्सितं यथा भवति तथा वर्त्तन्त इति भावः, क्रीडन्ति-यथासुखमितस्ततो गमनविनोदेन गीतनृत्यादिविनोदेन वा तिष्ठन्ति मोहन्ति-मैथुनसेवां कुर्वन्ति इत्येवं 'पुरापोराणाणं' मित्यादि पुरापूर्वं प्राग्भवे इति भावः कृतानां कर्मणामिति योगः, अत एव पौराणानां सुचीर्णानां—सुचरितानाम्, इह सुचरितजनितं कर्मापि कार्ये कारणोपचारात् सुचरितं ततोऽयं भावार्थः-विशिष्टतथाविधधर्मानुष्ठानविषयाप्रमादकरणक्षान्त्यादिसुचरितजनितानामिति, तथा सुपराक्रान्तानाम्, अत्रापि कार्ये कारणोपचारात् सुपराक्रान्तिजनितानि सुपराक्रान्तानि इत्युक्तं, किमुक्तं भवति ?—सकलसत्त्वमैत्रीसत्यभाषणपरद्रव्यानपहारसुशीलादिरूपसुपराक्रमजनितानामिति, अत एव शुभानां शुभफलानाम् इह किञ्चिदशुभफलमपि इन्द्रियमतिविपर्यासात् शुभफलं प्रतिभासते ततस्तात्त्विकशुभत्वप्रतिपत्त्यर्थमस्यैव पर्यायशब्दमाह-कल्याणानां, तत्त्ववृत्त्या तथाविधविशिष्टफलदायिनाम्, अथवा-कल्याणानाम् अनर्थोपशमकारिणां कल्याणरूपं फलविपाकं 'पच्चणुब्भवमाणा' प्रत्येकमनुभवन्तो विहरन्ति-आसते।

तेसि णं वणसंडाणं बहुमज्झदेसभाए पत्तेयं पत्तेयं पासायवडेंसगा पण्णत्ता, ते णं पासायवडेंसगा पंचजोयणसयाइं उड्ढं उच्चत्तेणं अड्ढाइज्जाइं जोयणसयाइं विक्खंभेणं अब्भुग्गयमूसियपहसिया इव तहेव बहुसमरमणिज्जभूमिभागो उल्लोओ सीहासणं सपरिवारं, तत्थ णं चत्तारि देवा महिड्ढिया ०जाव पलिओवमट्ठितीया परिवसंति,तं जहा-असोए सत्तपण्णे चंपए चूए। सूरियाभस्स णं देवविमाणस्स अंतो बहुसमरमणिज्जे भूमिभागे पण्णत्ते, तं जहा-वणसंडविहूणे ०जाव बहवे वेमाणिया देवा देवीओ य आसयंति ०जाव विहरंति, तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसे एत्थ णं महेगे उवगारियालयणे पण्णत्ते, एगं जोयणसयसहस्सं आयामविक्खंभेणं, तिण्णि जोयणसयसहस्साइं सोलस सहस्साइं दोण्णि य सत्तावीसे जोयणसए तिन्नि य कोसे अट्ठावीसं च धणुसयं तेरस य अंगुलाइं अद्धंगुलं च किंचिविसेसूणं परिक्खेवेणं, जोयणबाहल्लेणं, सव्वजंबूणयामए अच्छे ०जाव पडिरूवे। ( सू० ३३ )

'तेसि णं' मित्यादि तेषां वनखण्डानां बहुमध्यदेशभागे प्रत्येकं प्रत्येकं प्रासादावतंसका इति..अवतंसक इव-शेखरक इवावतंसकः प्रासादानामवतंसक इव प्रासादावतंसकः प्रासादविशेष इति भावः, ते च प्रासादावतंसकाः पञ्च योजनशतान्यूर्ध्वमुच्चैस्त्वेन अर्द्धतृतीयानि योजनशतानि विष्कम्भतः, तेषां च 'अब्भुग्गयमूसियपहसियाविव' इत्यादिविशेषणजातं प्राग्वत्. भूमिवर्णनम् उल्लोकवर्णनं सपरिवारं च प्राग्वत्, 'तत्थ णं' मित्यादि तत्र-तेषु वनखण्डेषु प्रत्येकमेकैकदिग्भावेन चत्वारो देवा महर्द्धिका यावत्करणात्-'महज्जुइया महाबला महासुक्खा महाणुभावा' इति परिग्रहः, पल्योपमस्थितिकाः परिवसन्ति, तद्यथा-'असोए' इत्यादि, अशोकवने अशोकः सप्तपर्णवने सप्तपर्णः चम्पकवने चम्पकश्चूतवने चूतः' 'ते णं' मित्यादि, ते अशोकादयो देवाः स्वकीयस्य वनखण्डस्य स्वकीयस्य प्रासादावतंसकस्य, सूत्रे बहुवचनं प्राकृतत्वात्, प्राकृते हि वचनव्यत्ययोऽपि भवतीति, स्वस्वकीयानां सामानिकदेवानां स्वासां स्वासामग्रमहिषीणां सपरिवाराणां स्वासां स्वासां परिषदां स्वेषां स्वेषामनीकानां स्वेषां स्वेषामनीकाधिपतीनां स्वेषां स्वेषामात्मरक्षकाणां 'आहेवच्चं पोरेवच्चं' इत्यादि प्राग्वत् 'सूरियाभस्स णं' मित्यादि सूर्याभस्य विमानस्यान्तमध्यभागे बहुसमरमणीयो भूमिभागः प्रज्ञप्तः, तस्य 'से जहानामए आलिंगपुक्खरेइ वा' इत्यादि'यानविमान इव वर्णनं तावद्वाच्यं यावन्मणीनां स्पर्शः, तस्य बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागे अत्र सुमहत् एकम् उपकारिकालयनं प्रज्ञप्तं विमानाधिपतिसत्कप्रासादावतंसकादीन् उपकरोति—उपष्टम्नातीत्युपकारिका, विमानाधिपतिसत्कप्रासादावतंसकादीनां पीठिका, अन्यत्र त्वियमुपकार्योपकारिकेति प्रसिद्धा, उक्तं च—"गृहस्थानां स्मृत राज्ञामुपकार्योपकारिके" ति, उपकारिकालयनमिव उपकारिकालयनं, तत् एकं योजनशतसहस्रमायामविष्कम्भाभ्यां त्रीणि योजनशतसहस्राणि षोडश सहस्राणि द्वे योजनशते सप्तविंशत्यधिके अष्टाविंशं धनुःशतं त्रयोदश अङ्गुलान्यर्द्धाङ्गुलं परिक्षेपतः, इदं च परिक्षेपप्रमाणं जम्बूद्वीपपरिक्षेपप्रमाणवत् क्षेत्रसमासटीकातः परिभावनीयम्।

से णं एगाए पउमवरवेइयाए एगेण य वणसंडेण य सव्वतो समंता संपरिक्खित्ते, सा णं पउमवरवेइया अद्धजोयणं उड्ढं उच्चत्तेणं पंचधणुसयाइं विक्खंभेणं उवकारियलेणसमा परिक्खेवेणं, तीसे णं पउमवरवेइयाए इमेयारूवे वण्णावासे पण्णत्ते, तं जहा-वयरामया णिम्मा रिट्ठामया पतिट्ठाणा वेरुलियामया खंभा सुवण्णरुप्पमया फलगा लोहियक्खमईओ सूईओ णाणामणिमया कडेवरा णाणामणिमया कडेवरसंघाडगा णाणामणिमया रूवा णाणामणिमया रूवसंघाडगा अंकामया पक्खबाहाओ जोइरसामया वंसा वंसकवेल्लुगा रययामईओ पट्टियाओ जातरूवमई ओहाडणी वइरामया उवरिपुच्छणी सव्वर-

यणामई अच्छायणे, सा णं पउमवरवेइया एगमेगेणं हेमजालेणं गवक्खजालेणं खिंखिणीजालेणं घंटाजालेणं मुत्ताजालेणं मणिजालेणं कणगजालेणं रयणजालेणं पउमजालेणं सव्वतो समता संपरिक्खित्ता, ते णं दामा तवणिज्जलंबूसगा ०जाव चिट्ठंति । तीसे णं पउमवरवेइयाए तत्थ तत्थ देसे देसे तहिं तहिं बहवे हयसंघाडा ०जाव उसभसंघाडा सव्वरयणामया अच्छा ०जाव पडिरूवा पासादीया ४ ०जाव वीहीतो पंतीतो मिहुणाणि लयाओ । से केणट्ठेणं भंते ! एवं वुच्चति-पउमवरवेइया ?, गोयमा ! पउमवरवेइया णं तत्थ तत्थ देसे २ तहिं २ वेइयासु वेइयावाहासु य वेइयफलतेसु य वेइयपुडंतरेसु य खंभेसु खंभवाहासु खंभसीसेसु खंभपुडंतरेसु सूयीसु सूयीमुखेसु सूईफलएसु सूईपुडंतरेसु पक्खेसु पक्खवाहासु पक्खपेरंतेसु पक्खपुडंतरेसु बहुयाइं उप्पलाइं पउमाइं कुमुयाइं णलिणाति सुभगाइं सोगंधियाइं पुंडरीयाइं महापुंडरीयाइं सयवत्ताइं सहस्सवत्ताइं सव्वरयणामयाइं अच्छाइं पडिरूवाइं महया वासिक्कयछत्तसमाणाइं पण्णत्ताइं समणाउसो !, से एएणं अट्ठेणं गोयमा ! एवं वुच्चइ-पउमवरवेइया । पउमवरवेइया णं भंते ! किं सासया? अ० ?, गोयमा ! सिय,सासया सिय असासया । से केणट्ठेणं भंते ! एवं वुच्चइ-सिय सासया सिय असासया ?, गोयमा !, दव्वट्ठयाए सासया, वन्नपज्जवेहिं गंधपज्जवेहिं रसपज्जवेहिं फासपज्जवेहिं असासया, से तेणट्ठेणं गोयमा ! एवं वुच्चति-सिय सासया सिय असासया । पउमवरवेइया णं भंते ! कालओ केव चिरं होइ ?, गोयमा ! ण कयावि णासि ण कयावि णत्थि न कयावि न भविस्सइ, भुविं च हवइ य भविस्सइ य, धुवा णिइया सासया अक्खया अव्वया अवट्ठिया णिच्चा पउमवरवेइया । से णं वणसंडे देसूणाइं दो जोयणाइं चक्कवालविक्खंभेणं उवयारियालेणसमे परिक्खेवेणं, वणसंडवण्णो भाणितव्वो ०जाव विहरंति । तस्स णं उवयारियलेणस्स चउद्दिसिं चत्तारि तिसोवाणपडिरूवगा पण्णत्ता वण्णओ, तोरणा झया छत्ताइच्छत्ता, तस्स णं उवयारियालयणस्स उवरिं बहुसमरमणिज्जे भूमिभागे पण्णत्ते ०जाव मणीणं फासो । ( सू०-३४ )

तद्य एकया पद्मवरवेदिकया एकेन वनखण्डेन सर्वत -सर्वासु दिक्षु समन्तत -सामस्त्येन सम्यग् परिक्षिप्तं 'सा णं पउमवरवेइया' इत्यादि सा पद्मवरवेदिका अर्द्धं योजनमूर्ध्वमुच्चैस्त्वेन पञ्च धनु शतानि विष्कम्भेन परिक्षेपेण उपकारिकालयनसमाना-उपकारिकालयनपरिक्षेपपरिमाणा प्रज्ञप्ता, 'तीसे णं' इत्यादि, तस्या -पद्मवरवेदिकाया अयमेतद्रूपो वर्णावासो—वर्ण -श्लाघा यथावस्थितस्वरूपकीर्त्तनं तस्यावासो-निवासो ग्रन्थपद्धतिरूपो वर्णावासो, वर्णकनिवेश इत्यर्थ., प्रज्ञप्तो मया शेषतीर्थकरैश्च, तद्यथेत्यादिना तमेव दर्शयति—इह सूत्रपुस्तकेष्वन्यथाऽतिदेशबहुलः पाठो दृश्यते ततो मा भून्मतिसंमोह इति विनेयजनानुग्रहाय पाठ उपदर्श्यते—' वयरामया णिम्मा रिट्ठामया पइट्ठाणा वेरुलियामया खंभा सुवन्नरुप्पमया फलया लोहियक्खमईओ सूईओ वइरामया संधी नानामणिमया कडेवरा णाणामणिमया कडेवरसंघाडा नानामणिमया रूवा नानामणिमया रूवसंघाडा अंकामया पक्खा अंकामया पक्खवाहाओ जोईरसामया वंसा वंसकवेल्लुपुया रययामईओ पट्टियाओ जायरूवमई ओहाडणी वयरामई उवरिपुंछणी सव्वरयणामए आच्छायणे' एतत् सर्वं प्राग्वत् भावनीयं, नवरं कलेवराणि—मनुष्यशरीराणि कलेवरसंघाटा-मनुष्यशरीरयुग्मानि रूपाणि-रूपकाणि रूपसंघाटा—रूपकयुग्मानि, ' सा णं पउमवरवेइया तत्थ २ देसे २ एगमेगेणं हेमजालेणं एगमेगेणं गवक्खजालेणं एगमेगेण घंटाजालेणं एगमेगेणं खिंखिणीजालेण एगमेगेणं मुत्ताजालेणं एगमेगेणं कणगजालेणं एगमेगेणं मणिजालेणं एगमेगेणं रयणजालेणं एगमेगेणं सव्वरयणजालेणं एगमेगेणं पउमजालेणं सव्वतो समंता संपरिक्खित्ता, ते णं जाला तवणिज्जलंबूसगा सुवण्णपयरमंडिया नानामणिरयणविविहहारद्धहारउवसोभियसमुदयरूवा ईसिमन्नमन्नमसंपत्ता पुव्वावरदाहिणुत्तरागएहिं वाएहिं मंदायं मंदायमेइज्जमाणा एइज्जमाणा पलंबमाणा २ पझंझमाणा पझंझमाणा ओरालेणं मणुन्नेणं मणहरेणं कण्णमणणिव्वुइकरेणं सद्देणं ते पदेसे सव्वतो समंता आपूरेमाणा सिरीए उवसोभमाणा चिट्ठंति, तीसे पउमवरवेइयाए तत्थ २ देसे तहिं २ हयसंघाडा नरसंघाडा किंनरसंघाडा किंपुरिससंघाडा महोरगसंघाडा गंधव्वसंघाडा उसभसंघाडा सव्वरयणामया अच्छा ०जाव पडिरूवा, एवं पंतिओ वि वीहिओ वि मिहुणाइं, तीसे ण पउमवरवेइयाए तत्थ २ देसे तहिं २ बहुयाओ पउमलयाओ णागलयाओ असोगलयाओ चंपगलयाओ वणलयाओ वासंतियलयाओ अइमुत्तगलयाओ कुंदलयाओ सामलयाओ निच्चं कुसुमियाओ निच्चं मउलियाओ निच्चं लवइयाओ निच्चं थवइयाओ णिच्चं गुलइयाओ निच्चं गोच्छियाओ णिच्चं जमलियाओ निच्चं जुयलियाओ निच्चं विणमियाओ निच्चं पणमियाओ निच्चं सुविभत्तपडिमंजरीवडिंसगधरीओ निच्चं कुसुमियमउलियलवइयथवइयगुलइयगोच्छियजमलियजुयलियविणमियपणमियसुविभत्तपडिमंजरिवडिंसगधरीओ सव्वरयणमईओ अच्छाओ०जाव पडिरूवाओ' इति अस्य व्याख्या—' सा' एवंस्वरूपा ' ण ' मिति वाक्यालङ्कारे पद्मवरवेदिका तत्र २ प्रदेशे एकैकेन हेमजालेन—सर्वात्मना हेममयेन लम्बमानेन दामसमूहेन एकैकेन गवाक्षजालेन—गवाक्षाकृतिरत्नविशेषदामसमूहेन एकैकेन किङ्किणीजालेन, किङ्किणय —क्षुद्रघण्टिका एकैकेन घण्टाजालेन-किङ्किण्यपेक्षया किञ्चिन्महत्यो घण्टा-घण्टा, तथा एकैकेन मुक्ताजालेन-मुक्ताफलमयेन दामसमूहेन एकैकेन मणिजालेन-मणिमयेन दामसमूहेन एकैकेन कनकजालेन-कनक -पीतरूपः सुवर्णविशेष तन्मयेन दामसमूहेन एवमेकैकेन रत्नजालेन एकैकेन पद्म-

जालेन सर्वरत्नमयपद्मात्मकेन दामसमूहेन सर्वतः सर्वासु दिक्षु समन्ततः--सर्वासु विदिक्षु परिक्षिप्ता-व्याप्ता, एतानि च दामसमूहरूपाणि हेमजालादीनि जालानि लम्बमानानि वेदितव्यानि, तथा चाह--'ते णं जाला' इ--त्यादि, तानि सूत्रे पुंस्त्वनिर्देशः प्राकृतत्वात्, प्राकृते हि लिङ्गमनियतं, णमिति वाक्यालङ्कारे, हेमजालादीनि जालानि, क्वचित् दामा इति पाठः, तत्र तावत् हेमजालादिरूपा दामान इति, 'तवणिज्जलंबूसगा' इत्यादि हयसंघाटादिसूत्रं लतासूत्रं च प्राग्वत्। सम्प्रति पद्मवरवेदिकाशब्दप्रवृत्तिनिमित्तं जिज्ञासुः पृच्छति--'से केणट्ठेणं भंते !' इत्यादि, सेशब्दोऽथशब्दार्थे, केनार्थेन--केन कारणेन भदन्त ! एवमुच्यते--पद्मवरवेदिका पद्मवरवेदिकेति, किमुक्तं भवति ?--पद्मवरवेदिकेत्येवंरूपस्य शब्दस्य तत्र प्रवृत्तौ किं निमित्तमिति, एवमुक्ते भगवानाह--गौतम ! पद्मवरवेदिकायां तत्र तत्र एकदेशे तस्यैव देशस्य तत्र तत्र एकदेशे वेदिकासु--उपवेशनयोग्यमत्तवारणरूपासु वेदिकावाहासु--वेदिकापार्श्वेषु 'वेइयपुडंतरेसु' इति द्वे वेदिके वेदिकापुटं तयोरन्तराणि--अपान्तरालानि तानि वेदिकापुटान्तराणि तेषु, तथा स्तम्भेषु सामान्यतः स्तम्भवाहासु--स्तम्भपार्श्वेषु 'खंभसीसेसु' इति स्तम्भशीर्षेषु 'खम्भपुडंतरेसु' इति द्वौ स्तम्भौ स्तम्भपुटं तेषामन्तराणि स्तम्भपुटान्तराणि तेषु, सूचीषु----फलकसंबन्धविघटनाभावहेतुपादुकास्थानीयासु तासामुपरीति तात्पर्यार्थः, 'सूईमुहेसु' इति यत्र प्रदेशे सूची फलकं भित्त्वा मध्ये प्रविशति तत्प्रत्यासन्नो देशः सूचीमुखं तेषु, तथा सूचीफलकेषु सूचीभिः संबन्धिनो ये फलकप्रदेशास्तेऽप्युपचारात् सूचिफलकानि तेषु सूचीनामधः उपरि वर्त्तमानेषु, तद्यथा 'सूईपुडंतरेसु' इति द्वे सूच्यौ सूचीपुटं तदन्तरेषु पक्षाः पक्षवाहाः वेदिकैकदेशविशेषास्तेषु, बहूनि उत्पलानि गर्दभकानि पद्मानि--सूर्यविकासीनि कुमुदानि-चन्द्रविकासीनि नलिनानि--ईषद् रक्तानि पद्मानि सुभगानि--पद्मविशेषरूपाणि सौगन्धिकानि--कह्लाराणि पुण्डरीकाणि--सिताम्बुजानि तान्येव महान्ति महापुण्डरीकाणि शतपत्राणि--पत्रशतकलितानि सहस्रपत्राणि--पत्रसहस्रोपेतानि, शतपत्रसहस्रपत्रे च पद्मविशेषौ पत्रसंख्याविशेषाच्च पृथग्गुणिते, एतानि सर्वरत्नमयानि 'अच्छा' इत्यादि, विशेषणजातं प्राग्वत्, 'महया वासिक्कछत्तसमाणाई' इति महान्ति--महाप्रमाणानि वार्षिकाणि--वर्षाकाले पानीयरक्षार्थं यानि कृतानि वार्षिकाणि तानि च तानि छत्राणि च तत्समानानि प्रज्ञप्तानि हे श्रमण ! हे आयुष्मन् !, 'से एएणट्ठेणं' मित्यादि, तदेतेन अर्थेन--अन्वर्थेन गौतम ! एवमुच्यते--पद्मवरवेदिकेति तेषु तेषु यथोक्तरूपेषु प्रदेशेषु यथोक्तरूपाणि पद्मानि पद्मवरवेदिकाशब्दस्य प्रवृत्तिनिमित्तमिति भावः, व्युत्पत्तिश्चैवं--पद्मवरा--पद्मप्रधाना वेदिका पद्मवरवेदिकेति। 'पउमवरवेइया णं भंते ! किं सासया' इत्यादि, पद्मवरवेदिका णं' मिति पूर्ववत् किं शाश्वती उताऽशाश्वती, आवन्ततया सूत्रे निर्देशः प्राकृतत्वात्, किं नित्या उताऽनित्येति भावः, भगवानाह--गौतम ! स्यात् शाश्वती स्यादशाश्वती, कथञ्चिन्नित्या कथञ्चिदनित्या इत्यर्थः, स्याच्छब्दो निपातः कथञ्चिदित्येतदर्थवाची, 'से केणट्ठेणं' मित्यादि प्रश्नसूत्रं सुगमं, भगवानाह--गौतम ! द्रव्यार्थतया--द्रव्यास्तिकनयमतेन शाश्वती, द्रव्यास्तिकनयो हि द्रव्यमेव तात्त्विकमभिमन्यते न पर्यायान्, द्रव्यं चान्वयि परिणामित्वात् अन्वयित्वाच्च सकलकालभावीति भवति द्रव्यार्थतया शाश्वती, वर्णपर्यायैस्तत्तदन्यसमुत्पद्यमानवर्णविशेषरूपैः, एवं गन्धपर्यायैः रसपर्यायैः स्पर्शपर्यायैः उपलक्षणमेतत् तत्तदन्यपुद्गलविचटनोच्चटनैश्च अशाश्वती, किमुक्तं भवति ?--पर्यायास्तिकनयमतेनेयं पर्यायप्राधान्यविवक्षायामशाश्वती, पर्यायाणां प्रतिक्षणभावितया कियत्कालभावितया विनाशित्वात्, 'से एएणट्ठेणं' मित्याद्युपसंहारवाक्यं सुगमम्, इह द्रव्यास्तिकनयवादी स्वमतप्रतिष्ठापनार्थमेवमाह--नात्यन्तासत उत्पादो नापि सतो नाशः 'नासतो विद्यते भावो, नाभावो विद्यते सतः।' इति वचनात्, यौ तु दृश्येते प्रतिवस्तु उत्पादविनाशौ तदाविर्भावतिरोभावमात्रं, यथा सर्पस्य उत्फणत्वविफणत्वे, तस्मात्सर्वं वस्तु नित्यमिति, एवं च तन्मतचिन्तायां संशयः--किं घटादिवत् द्रव्यार्थतया शाश्वती उत सकलकालमेकरूपेति, तत संशयापनोदार्थं भगवन्तं भूयः पृच्छति- पउमवरवेइया णं' मित्यादि, पद्मवरवेदिका प्राग्वत् भदन्त ! कालतः कियच्चिरं--कियन्तं कालं यावद्भवति ?, एवंरूपा हि कियन्तं कालमवतिष्ठत इति ?, भगवानाह--गौतम ! न कदाचिन्नासीत् सर्वदैवासीदिति भावः अनादित्वात्, तथा न कदाचिन्न भवति, सर्वदैव वर्तमानकालचिन्तायां भवतीति भावः सदैव भावात्, तथा न कदाचिन्न भविष्यति, किंतु भविष्यच्चिन्तायां सर्वदैव भविष्यतीति प्रतिपत्तव्यम्, अपर्यवसितत्वात्, तदेवं कालत्रयचिन्तायां नास्तित्वप्रतिषेधं विधाय सम्प्रत्यस्तित्वं प्रतिपादयति--'भुविं च' इत्यादि, अभूच्च भवति च भविष्यति चेति, एवं त्रिकालावस्थायित्वात् ध्रुवा मेर्वादिवत् ध्रुवत्वादेव सदैव स्वस्वरूपनियता नियतत्वादेव च शाश्वती--शश्वद्भवनस्वभावा शाश्वतत्वादेव च सतत गङ्गासिन्धुप्रवाहप्रवृत्तावपि पौण्डरीकह्रद इवानेकपुद्गलविचटनेऽपि तावन्मात्रान्यपुद्गलोच्चटनसंभवादक्षया, न विद्यते क्षयो--यथोक्तस्वरूपाकारपरिभ्रंशो यस्याः सा अक्षया, अक्षयत्वादेव अव्यया--अव्ययशब्दवाच्या मनागपि स्वरूपचलनस्य जातुचिदप्यभावात्, अव्ययत्वादेव सदैव स्वस्वप्रमाणेऽवस्थिता, मानुषोत्तराद् बहिः समुद्रवत्, एवं स्वप्रमाणे सदावस्थानेन चिन्त्यमाना नित्या धर्मास्तिकायादिवत्, 'से णं' मित्यादि, सा 'णं' मिति वाक्यालङ्कारे पद्मवरवेदिका एकेन वनखण्डेन सर्वतः समन्तात् परिक्षिप्ता, स च वनखण्डो देशोने द्वे योजने चक्रवालविष्कम्भेन उपकारिकालयनपरिक्षेपपरिमाणः, वनखण्डवर्णकः 'किण्हे किण्होभासे' इत्यादिरूपः समस्तोऽपि प्राग्वत् यावद्विहरन्ति, 'तस्स णं' मित्यादि, तस्य--उपकारिकालयनस्य 'चउद्दिसिं' ति चतुर्दिशि चतसृषु दिक्षु एकैकस्यां दिशि एकैकभावेन चत्वारि त्रिसोपानप्रतिरूपकाणि--प्रतिविशिष्टरूपकाणि त्रिसो-

पानानि प्रज्ञप्तानि त्रिसोपानवर्णको यानविमानवत् वक्तव्यः, तेषां च त्रिसोपानप्रतिरूपकाणां पुरतः प्रत्येकमेकैकं तोरणं, तोरणवर्णकोऽपि तथैव, 'तस्स ण' मित्यादि तस्य उपकारिकालयनस्य 'बहुसमरमणिज्जे भूमिभागे' इत्यादिना भूमिभागवर्णनकं यानविमानवर्णकवत्तावद्वाच्यं यावन्मणीनां स्पर्शः ।

तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ णं महेगे पासायवडेंसए पण्णत्ते, से णं पासायवडिंसए पंच जोयणसयाइं उड्ढं उच्चत्तेणं अड्ढाइज्जाइं जोयणसयाइं विक्खंभेणं अब्भुग्गयमूसिय वण्णतो भूमिभागो उल्लोओ सीहासणं सपरिवारं भाणियव्वं, अट्ठट्ठ मंगलगा झया छत्ताइच्छत्ता, से णं मूलपासायवडेंसगे अण्णेहिं चउहिं पासायवडेंसएहिं तयद्धुच्चत्तप्पमाणमेत्तेहिं सव्वतो समंता संपरिक्खित्ता, ते णं पासायवडेंसगा अड्ढाइज्जाइं जोयणसयाइं उड्ढं उच्चत्तेणं पणवीस जोयणसयं विक्खंभेणं ०जाव वण्णओ, ते णं पासायवडिंसया अण्णेहिं चउहिं पासायवडिंसएहिं तयद्धुच्चत्तप्पमाणमेत्तेहिं सव्वओ समंता संपरिक्खित्ता, ते णं पासायवडेंसया पणवीसं जोयणसयं उड्ढं उच्चत्तेणं बावट्ठि जोयणाइं अद्धजोयणं च विक्खंभेणं अब्भुग्गयमूसिय वण्णओ भूमिभागे उल्लोओ सीहासणं सपरिवारं भाणियव्वं, अट्ठट्ठ मंगलगा झया छत्तातिच्छत्ता, ते णं पासायवडेंसगा अण्णेहिं चउहिं पासायवडेंसएहिं तदद्धुच्चत्तप्पमाणमेत्तेहिं सव्वतो समंता संपरिक्खित्ता, ते णं पासायवडेंसगा बावट्ठिं जोयणाइं अद्धजोयणं च उड्ढं उच्चत्तेणं एकतीसं जोयणाइं कोसं च विक्खंभेणं वण्णओ, उल्लोओ सीहासणं सपरिवारं पासायउवरिं अट्ठट्ठ मंगलगा झया छत्तातिछत्ता । ( सू० ३५ )

तस्य च बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागे अत्र महानेको मूलप्रासादावतंसकः प्रज्ञप्तः, स च पञ्च योजनशतान्यूर्ध्वमुच्चैस्त्वेन अर्द्धतृतीयानि योजनशतानि विष्कम्भतः 'अब्भुग्गयमूसियपहसियाविवे' त्यादि तस्य वर्णनं मध्ये भूमिभागवर्णनमुल्लोकवर्णनं द्वारवर्हि स्थितप्रासादवद्भावनीयं, तस्य च मूलप्रासादावतंसकस्य बहुमध्ये देशभागेऽत्र महती एका मणिपीठिका प्रज्ञप्ता, अष्टौ योजनान्यायामविष्कम्भाभ्यां चत्वारि योजनानि बाहल्येन सर्वात्मना मणिमयी 'अच्छा' इत्यादि विशेषणकदम्बकं प्राग्वत् । 'तीसे ण' मित्यादि, तस्याश्च मणिपीठिकाया उपरि महदेकं सिंहासनं प्रज्ञप्तं, तस्य सिंहासनस्य वर्णनं, परिवारभूतानि शेषाणि भद्रासनानि प्राग्वद्वक्तव्यानि, 'से ण' मित्यादि, स मूलप्रासादावतंसकोऽन्यैश्चतुर्भिः प्रासादावतंसकैस्तदर्द्धोच्चत्वप्रमाणैः सर्वतः समन्ततः परिक्षिप्तः, तदर्द्धोच्चत्वप्रमाणमेव दर्शयति—अर्द्धतृतीयानि योजनशतान्यूर्ध्वमुच्चैस्त्वेन, पञ्चविंशं योजनशतं विष्कम्भेन तेषामपि 'अब्भुग्गमूसियपहसियाविवे' त्यादि स्वरूपवर्णनं मध्यभूमिभागवर्णनमुल्लोकवर्णनं च प्राग्वत्, तेषां च प्रासादावतंसकानां बहुमध्यदेशभागे प्रत्येकं प्रत्येकं सिंहासनं प्रज्ञप्तं तेषां च सिंहासनानां वर्णनं प्राग्वत्, नवरमत्र शेषाणि परिवारभूतानि भद्रासनानि वक्तव्यानि 'ते णं पासायवडेंसया' इत्यादि, ते प्रासादावतंसका अन्यैश्चतुर्भिः प्रासादावतंसकैः 'तयद्धुच्चत्तप्पमाणमेत्तेहिं' तेषां मूलप्रासादावतंसकपरिवारभूतानां प्रासादावतंसकानां यदर्द्धं तदुच्चत्वप्रमाणमात्रैः-मूलप्रासादावतंसकापेक्षया चतुर्भागमात्रप्रमाणैः सर्वतः समन्तात्संपरिक्षिप्ता तदर्धोच्चत्वप्रमाणमेव दर्शयति-'ते ण' मित्यादि ते प्रासादावतंसकाः पञ्चविंशं योजनशतमूर्ध्वमुच्चैस्त्वेन द्वाषष्टियोजनानि अर्द्धयोजनं च विष्कम्भेन, तेषामपि 'अब्भुग्गयमूसियपहसियाविवे' त्यादि स्वरूपवर्णनं मध्यभागे भूमिवर्णनमुल्लोकवर्णनं सिंहासनवर्णनं च सर्वं प्राग्वत्, केवलमत्रापि सिंहासनं सपरिवारं वक्तव्यं, 'ते ण' मित्यादि, ते च प्रासादावतंसका अन्यैश्चतुर्भिः प्रासादावतंसकैस्तदर्द्धोच्चत्वप्रमाणैः-अनन्तरोक्तप्रासादावतंसकार्द्धोच्चत्वप्रमाणैर्मूलप्रासादावतंसकापेक्षया ( अष्ट ) भागप्रमाणैः सर्वतः समन्तात् संपरिक्षिप्ता, तदर्द्धोच्चत्वप्रमाणमेव दर्शयति-'ते ण' मित्यादि ते च प्रासादावतंसका द्वाषष्टियोजनानि अर्धयोजनं च ऊर्ध्वमुच्चैस्त्वेन एकत्रिंशतं योजनानि क्रोशं च विष्कम्भतः, एषामपि 'अब्भुग्गयमूसिय' त्यादि स्वरूपवर्णनं मध्यभागे भूमिवर्णनम् उल्लोकवर्णनं सिंहासनवर्णनं च परिवाररहितं प्राग्वत्, 'ते ण' मित्यादि, तेऽपि प्रासादावतंसका अन्यैश्चतुर्भिः प्रासादावतंसकैस्तदर्द्धोच्चत्वप्रमाणैः-अनन्तरोक्तप्रासादावतंसकार्द्धोच्चत्वप्रमाणैर्मूलप्रासादावतंसकापेक्षया षोडशभागप्रमाणैः सर्वतः समन्तात् संपरिक्षिप्ता, तदर्धोच्चत्वप्रमाणमेव दर्शयति-एकत्रिंशद्योजनानि क्रोशं च ऊर्ध्वमुच्चैस्त्वेन पञ्चदश योजनानि अर्द्धतृतीयांश्चैव क्रोशान् विष्कम्भेन, एतेषामपि स्वरूपादिवर्णनमनन्तरोक्तं, 'ते ण' मित्यादि तेऽपि च प्रासादावतंसका अन्यैश्चतुर्भिः प्रासादावतंसकैस्तदर्द्धोच्चत्वप्रमाणैः-अनन्तरोक्तप्रासादावतंसकार्द्धोच्चत्वप्रमाणैः सर्वतः समन्तात् संपरिक्षिप्ताः, तदर्द्धोच्चत्वप्रमाणमेव दर्शयति—पञ्चदश योजनानि अर्द्धतृतीयांश्च क्रोशान् ऊर्ध्वमुच्चैस्त्वेन देशोनान्यष्टौ योजनानि विष्कम्भेन एषामेव स्वरूपव्यावर्णनं भूमिभागवर्णनम् उल्लोकवर्णनं सिंहासनवर्णनं च परिवारवर्जितं प्राग्वत् ।

तस्स णं मूलपासायवडेंसयस्स उत्तरपुरच्छिमे णं एत्थ णं सभा सुहम्मा पण्णत्ता, एगं जोयणसयं आयामेणं पण्णासं जोयणाइं विक्खंभेणं बावत्तरिं जोयणाइं उड्ढं उच्चत्तेणं अणेगखंभसयसंनिविट्ठा अब्भुग्गयसुकयवयरवेइयातोरणवररइयसालिभंजिया ०जाव अच्छरगणसंघविप्पकिण्णा पासादीया दरिसणिज्जा अभिरूवा पडिरूवा सभाए णं सुहम्माए तिदिसिं तओ दारा पण्णत्ता, तं जहा-पुरत्थिमेणं दाहिणेणं उत्तरेणं, ते णं दारा सोलस जोयणाइं

उड्ढं उच्चत्तेणं अट्ठ जोयणाइं विक्खंभेणं तावतियं चेव पवेसेणं सेया वरकणगथूभियागा ०जाव वणमालाओ, तेसि णं दाराणं उवरिं अट्ठट्ठ मंगलगा झया छत्ताइछत्ता, तेसि णं दाराणं पुरओ पत्तेयं २ मुहमंडवा पण्णत्ता, ते णं मुहमंडवा एगं जोयणसयं आयामेणं पण्णासं जोयणाइं विक्खंभेणं साइरेगाइं सोलस जोयणाइं उड्ढं उच्चत्तेणं वण्णओ सभाए सरिसो, तेसि णं मुहमंडवाणं तिदिसिं तओ दारा पण्णत्ता, तं जहा-पुरत्थिमेणं दाहिणेणं उत्तरेणं, ते णं दारा सोलस जोयणाइं उड्ढं उच्चत्तेणं अट्ठ जोयणाइं विक्खंभेणं तावइयं चेव पवेसेणं सेया वरकणगथूभियागा ०जाव वणमालाओ। तेसि णं मुहमंडवाणं भूमिभागा उल्लोया तेसि णं मुहमंडवाणं उवरिं अट्ठट्ठ मंगलगा झया छत्ताइछत्ता। तेसि णं मुहमंडवाणं पुरतो पत्तेयं २ पेच्छाघरमंडवे पण्णत्ते, मुहमंडववत्तव्वया ०जाव दारा भूमिभागा उल्लोया। तेसि णं बहुसमरमणिज्जाणं भूमिभागाणं बहुमज्झदेसभाए पत्तेयं पत्तेयं वइरामए अक्खाडए पण्णत्ते, तेसि णं वयरामयाणं अक्खाडगाणं बहुमज्झदेसभागे पत्तेयं २ मणिपेढिया पण्णत्ता, ताओ णं मणिपेढियातो अट्ठ जोयणाइं आयामविक्खंभेणं चत्तारि जोयणाइं बाहल्लेणं सव्वमणिमईओ अच्छाओ ०जाव पडिरूवाओ, तासि णं मणिपेढियाणं उवरिं पत्तेयं २ सीहासणे पण्णत्ते, सीहासणवण्णओ सपरिवारो, तेसि णं पेच्छाघरमंडवाणं उवरिं अट्ठट्ठ मंगलगा झया छत्तातिछत्ता, तेसि णं पेच्छाघरमंडवाणं पुरओ पत्तेयं २ मणिपेढियाओ पण्णत्ताओ, ताओ णं मणिपेढियातो सोलस जोयणाइं आयामविक्खंभेणं अट्ठ जोयणाइं बाहल्लेणं सव्वमणिमईओ अच्छाओ पडिरूवाओ, तेसि णं उवरिं पत्तेयं २ थूभे पण्णत्ते, ते णं थूभा सोलस जोयणाइं आयामविक्खंभेणं साइरेगाइं सोलस जोयणाइं उड्ढं उच्चत्तेणं, सेया संखंककुंददगरयअमयमहियफेणपुंजसंनिगासा सव्वरयणामया अच्छा ०जाव पडिरूवा, तेसि णं थूभाणं उवरिं अट्ठट्ठ मंगलगा झया छत्तातिछत्ता, तेसि णं थूभाणं चउद्दिसिं पत्तेयं २ मणिपेढियातो पण्णत्ताओ, ताओ णं मणिपेढियातो अट्ठ जोयणाइं आयामविक्खंभेणं चत्तारि जोयणाइं बाहल्लेणं सव्वमणिमईओ अच्छाओ ०जाव पडिरूवातो, तेसि णं मणिपेढियाणं उवरिं चत्तारि जिणपडिमातो जिणुस्सेहपमाणमेत्ताओ संपलियंकनिसन्नाओ थूभाभिमुहीओ सन्निखित्ताओ चिट्ठंति, तं जहा-उसभा १ वद्धमाणा २ चंदाणणा ३ वारिसेणा ४, तेसि णं थूभाणं पुरतो पत्तेयं पत्तेयं मणिपेढियातो पण्णत्ताओ, ताओ णं मणिपेढियातो सोलस जोयणाइं आयामविक्खंभेणं अट्ठ जोयणाइं बाहल्लेणं सव्वमणिमईओ ०जाव पडिरूवातो, तासि णं मणिपेढियाणं उवरिं पत्तेयं पत्तेयं चेइयरुक्खे पण्णत्ते, ते णं चेइयरुक्खा अट्ठ जोयणाइं उड्ढं उच्चत्तेणं अद्ध जोयणाइं उव्वेहेणं दो जोयणाइं खंधा अद्धजोयणाणं विक्खंभेणं छ जोयणाइं विडिमा बहुमज्झदेसभाए अट्ठ जोयणाइं आयामविक्खंभेणं साइरेगाइं अट्ठ जोयणाइं सव्वग्गेणं पण्णत्ता, तेसि णं चेइयरुक्खाणं इमेयारूवे वण्णावासे पण्णत्ते, तं जहा-वयरामया मूला रययसुपइट्ठिया सुविडिमा रिट्ठामयविउला कंदा वेरुलिया रुइला खंधा सुजायवरजायरूवपढमगा विसालसाला नाणामणिमयरयणविविहसाहप्पसाहवेरुलियपत्ततवणिज्जपत्तविंटा जंबूणयरत्तमउयसुकुमालपवालसोभिया वरंकुरग्गसिहरा विचित्तमणिरयणसुरभिकुसुमफलभरेण नमियसाला अहियं मणनयणणिव्वुइकरा अमयरससमरसफला सच्छाया सप्पभा सस्सिरीया सउज्जोया पासाईया० ४, तेसि णं चेइयरुक्खाणं उवरिं अट्ठट्ठ मंगलगा झया छत्ताइछत्ता, तेसि णं चेइयरुक्खाणं पुरतो पत्तेयं २ मणिपेढियाओ पण्णत्ताओ, ताओ णं मणिपेढियाओ अट्ठ जोयणाइं आयामविक्खंभेणं चत्तारि जोयणाइं बाहल्लेणं सव्वमणिमईओ अच्छाओ ०जाव पडिरूवाओ, तासि णं मणिपेढियाणं उवरिं पत्तेयं २ महिंदज्झया पण्णत्ता, ते णं महिंदज्झया सट्ठिं जोयणाइं उड्ढं उच्चत्तेणं जोयणं उव्वेहेणं जोयणं विक्खंभेणं वइरामया वट्टलट्ठसुसिलिट्ठपरिघट्ठमट्ठसुपतिट्ठिया विसिट्ठा अणेगवरपंचवण्णकुडभीसहस्सपरिमंडियाभिरामा वाउद्धूयविजयवेजयंतीपडागा छत्ताइच्छत्तकलिया तुंगा गयणतलमभिलंघमाणसिहरा पासादीया० ४, अट्ठट्ठ मंगलगा झया छत्तातिछत्ता, तेसि णं महिंदज्झयाणं पुरतो पत्तेयं २ नंदा पुक्खरिणीओ पण्णत्ताओ, ताओ णं पुक्खरिणीओ एगं जोयणसयं आयामेणं पण्णासं जोयणाइं विक्खंभेणं दस जोयणाइं उव्वेहेणं अच्छाओ ०जाव वण्णओ एगइयाओ उदगरसेणं पण्णत्ताओ, पत्तेयं २ पउमवरवेइयापरिक्खित्ताओ पत्तेयं २ वणसंडपरिक्खित्ताओ, तासि णं णंदाणं पुक्खरिणीणं तिदिसिं तिसोवाणपडिरूवगा पण्णत्ता, तिसोवाणपडिरूवगाणं वण्णओ, तोरणा झया छत्तातिछत्ता। सभाए णं सुहम्माए अडयालीसं मणोगुलियासाहस्सीओ पण्णत्ताओ, तं जहा-पुरच्छिमेणं सोलस साहस्सीओ पच्चच्छिमेणं सोलस साहस्सीओ दाहिणेणं अट्ठ साहस्सीओ, उत्तरेणं अट्ठ साहस्सीओ, तासु णं मणोगुलियासु बहवे

सुवन्नरुप्पमया फलगा पण्णत्ता, तेसु णं सुवन्नरुप्पमएसु फलगेसु बहवे वइरामया णागदंता पण्णत्ता, तेसु णं वइरामएसु णागदंतएसु किण्हसुत्तवट्टवग्घारियमल्लदामकलावा चिट्ठंति, सभाए णं सुहम्माए अडयालीसं गोमाणसियासाहस्सीओ पन्नत्ताओ, जहा मणोगुलिया ०जाव णागदंतगा, तेसु णं णागदंतएसु बहवे रययामया सिक्कगा पण्णत्ता, तेसु णं रययामएसु सिक्कगेसु बहवे वेरुलियामईओ धूवघडियाओ पण्णत्ताओ, ताओ णं धूवघडियाओ कालागुरुपवर ०जाव चिट्ठंति, सभाए णं सुहम्माए अंतो बहुसमरमणिज्जे भूमिभागे पण्णत्ते ०जाव मणीहिं उवसोभिए मणिफासो य उल्लोयओ य, तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ णं महेगा मणिपेढिया पण्णत्ता सोलस जोयणाइं आयामविक्खंभेणं अट्ठ जोयणाइं बाहल्लेणं सव्वमणिमयी ०जाव पडिरूवा, तीसे णं मणिपेढियाए उवरिं एत्थ णं माणवए चेइयखंभे पण्णत्ते, सट्ठिं जोयणाइं उड्ढं उच्चत्तेणं जोयणं उव्वेहेणं जोयणं विक्खंभेणं अडयालीसं अंसिए अडयालीसं कोडीए अडयालीसं विग्गहिए सेसं जहा महिंदज्झयस्स, माणवगस्स णं चेइयखंभस्स उवरिं बारस जोयणाइं ओगाहित्ता हेट्ठावि बारस जोयणाइं वज्जित्ता मज्झे बत्तीसाए जोयणेसु, एत्थ णं बहवे सुवण्णरुप्पमया फलगा पण्णत्ता, तेसु णं सुवण्णरुप्पमएसु फलएसु बहवे वइरामया णागदंता पण्णत्ता, तेसु णं वइरामएसु नागदंतेसु बहवे रययामया सिक्कगा पण्णत्ता, तेसु णं रययामएसु सिक्कएसु बहवे वइरामया गोलवट्टसमुग्गया पण्णत्ता, तेसु णं वयरामएसु गोलवट्टसमुग्गएसु बहवे जिणसकहाओ सन्निखित्ताओ चिट्ठंति । ताओ णं सूरियाभस्स देवस्स अन्नेसिं च बहूणं देवाण य देवीण य अच्चणिज्जाओ ०जाव पज्जुवासणिज्जाओ माणवगस्स चेइयखंभस्स उवरिं अट्ठट्ठ मंगलगा झया छत्ताइच्छत्ता । ( सू० ३६ )

'तस्स णं' मित्यादि तस्य मूलप्रासादावतंसकस्य 'उत्तरपुरच्छिमेणं' ति उत्तरपूर्वस्यामीशानकोणे इत्यर्थः, अत्र सभा सुधर्मा प्रज्ञप्ता, सुधर्मा नाम विशिष्टच्छन्दकोपेता, सा एकं योजनशतमायामतः पञ्चाशद्योजनानि विष्कम्भतः द्वासप्ततिर्योजनानि ऊर्ध्वमुच्चैस्त्वेन, कथंभूता सा ? इत्याह—'अणेग' इत्यादि, अनेकस्तम्भशतसन्निविष्टा 'अब्भुग्गयसुकयवरवेइयातोरणवररइयसालिभंजियासुसिलिट्ठविसिट्ठलट्ठसंठियपसत्थवेरुलियविमलखंभा' इति, अभ्युद्गता—अतिरमणीयतया द्रष्टॄणां प्रत्यभिमुखमुत्—प्राबल्येन स्थिता सुकृतेव सुकृता निपुणशिल्पिरचितेति भावः, अभ्युद्गता चासौ सुकृता च अभ्युद्गतसुकृता वज्रवेदिका—द्वारमुण्डकोपरि वज्ररत्नमयी वेदिका तोरणं च अभ्युद्गतसुकृतं यत्र सा तथा, वराभिः—प्रधानाभिः रचिताभिः रतिदाभिर्वा शालिभञ्जिकाभिः सुश्लिष्टाः—संबद्धा विशिष्टं—प्रधानं लष्टं—मनोज्ञं संस्थितं-संस्थानं येषां ते विशिष्टलष्टसंस्थिताः प्रशस्ताः—प्रशंसास्पदीभूता 'वैडूर्यस्तम्भा—वैडूर्यरत्नमया स्तम्भा यस्यां सा तथा, वररचितशालभञ्जिका सुश्लिष्टविशिष्टलष्टसंस्थितप्रशस्तवैडूर्यस्तम्भास्ततः पूर्वपदेन कर्मधारयः समासः, तथा नानामणिकनकरत्नानि खचितानि यत्र स नानामणिकनकरत्नखचितः, क्तान्तस्य परनिपातः सुखादिदर्शनात्, नानामणिकनकरत्नखचितः उज्ज्वलो—निर्मलो बहुसमः—अत्यन्तसमः सुविभक्तो निचितो—निबिडो रमणीयश्च भूमिभागो यस्यां सा नानामणिकनकखचितरत्नोज्ज्वलबहुसमसुविभक्त ( निचित ) भूमिभागा, 'ईहामियउसभतुरगनरमगरविहगवालगकिन्नररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्ता खंभुग्गयवरवेइयाभिरामा विज्जाहरजमलजुगलजंतजुत्ताविव अच्चीसहस्समालिणीया रूवगसहस्सकलिया भिसिमाणा भिब्भिसमाणा चक्खुल्लोयणलेसा सुहफासा सस्सिरीयरूवा कंचणमणिरयणथूभियागा नानाविहपंचवण्णघंटापडागपरिमंडियग्गसिहरा धवला मरीइकवचं विणिम्मुयंती लाउल्लोइयमहिया गोसीससरससुरभिरत्तचंदणदद्दरदिन्नपंचंगुलितला उवचियचंदणकलसवंदणघडसुकयतोरणपडिदुवारदेसभागा आसत्तोसत्तविउलवट्टवग्घारियमल्लदामकलावा पंचवण्णसरससुरभिमुक्कपुप्फपुंजोवयारकलिया कालागुरुपवरकुंदुरुक्कतुरुक्कधूवडज्झंतमघमघंतगंधुद्धुयाभिरामा सुगंधवरगंधिया गंधवट्टिभूया अच्छरगणसंघसंविकिण्णा दिव्वतुडियसद्दसंपणादिया सव्वरयणामया अच्छा ०जाव पडिरूवा' इति प्राग्वत् । 'सभाए णं' मित्यादि, सभायाश्च सुधर्मायास्त्रिदिशि तिसृषु दिक्षु एकैकस्यां दिशि एकैकद्वारभावेन त्रीणि द्वाराणि प्रज्ञप्तानि, तद्यथा—एकं पूर्वस्यामेकं दक्षिणस्यामेकमुत्तरस्याम्, तानि च द्वाराणि प्रत्येकं षोडश २ योजनान्यूर्ध्वमुच्चैस्त्वेन अष्टौ योजनानि विष्कम्भतः 'तावइयं चेवे' ति तावन्त्येवाष्टौ योजनानीति भावः प्रवेशेन, 'सेया वरकणगथूभिया' इत्यादि प्रागुक्तद्वारवर्णनं तदेव तावद्वक्तव्यं यावद्वनमाला इति, तेषां च द्वाराणां पुरतः प्रत्येकं २ मुखमण्डपः प्रज्ञप्तः, ते च मुखमण्डपा एकं योजनशतमायामतः पञ्चाशत् योजनानि, विष्कम्भतः सातिरेकाणि षोडश योजनानि ऊर्ध्वमुच्चैस्त्वेन, एतेषामपि 'अणेगखंभसयसंनिविट्ठा' इत्यादि वर्णनं सुधर्मसभाया इव निरवशेषं द्रष्टव्यं, तेषां च मुखमण्डपानां पुरतः प्रत्येकं २ प्रेक्षागृहमण्डपः प्रज्ञप्तः, ते च प्रेक्षागृहमण्डपा आयामविष्कम्भोच्चैस्त्वैः प्राग्वत् तावद्वाच्यं यावन्मणीनां स्पर्शः, तेषां च बहुरमणीयानां भूमिभागानां बहुमध्यदेशभागे प्रत्येकं २ वज्रमयोऽक्षपाटकः प्रज्ञप्तः, तेषां च वज्रमयानामक्षपाटकानां बहुमध्यदेशभागे प्रत्येकं २ मणिपीठिका अष्ट योजनान्यायामविष्कम्भाभ्यां चत्वारि योजनानि बाहल्येन-पिण्डभावेन सर्वात्मना मणिमया 'अच्छाओ' इत्यादि विशेषणजातं प्राग्वत् । तासां च मणिपीठिकानामुपरि प्रत्येकं २ सिंहासनं प्रज्ञप्तं, तेषां च सिंहासनानां वर्णनं परिवारश्च प्राग्वद्वक्तव्यः, तेषां च प्रेक्षागृहमण्डपानामुपरि अष्टावष्टौ मङ्गलकानि बहवः कृष्णचामरध्वजा इत्यादि प्राग्व-

त, तेषां प्रेक्षागृहमण्डपानां पुरतः प्रत्येकं २ मणिपीठिका प्रज्ञप्ता ताश्च मणिपीठिका प्रत्येकं षोडश योजनान्यायामविष्कम्भाभ्यामष्टौ योजनानि बाहल्येन सर्वात्मना मणिमया 'अच्छा' इत्यादि विशेषणकदम्बकं प्राग्वत्, तासां च मणिपीठिकानामुपरि प्रत्येकं २ चैत्यस्तूपः प्रज्ञप्तः, ते च चैत्यस्तूपा षोडश योजनान्यायामविष्कम्भाभ्यां सातिरेकाणि षोडश योजनान्यूर्ध्वमुच्चैस्त्वेन 'संखंक' इत्यादि तद्वर्णनं सुगमं, तेषां च चैत्यस्तूपानामुपर्यष्टावष्टौ स्वस्तिकादीनि मङ्गलकानि 'जाव सहस्सपत्तहत्थया' इति यावत्करणात् 'तेसि चेइयथूभाणं उप्पिं बहवे किण्हचामरज्झया ०जाव सुक्किल्लचामरज्झया अच्छा सण्हा रुप्पपट्टवइरदंडा जमलजामलगंधी सुरूवा पासाइया ०जाव पडिरूवा, तेसि चेइयथूभाणं उप्पिं बहवे छत्ताइच्छत्ता पडागा घंटाजुगला उप्पलहत्थगा ०जाव सयसहस्सपत्तहत्थगा सव्वरयणामया ०जाव पडिरूवा इति, एतच्च समस्तं प्राग्वत्। 'तेसि णं' मित्यादि, तेषां चैत्यस्तूपानां प्रत्येकं २ 'चउद्दिसिं' ति चतुर्दिशि—चतसृषु दिक्षु एकैकस्यां दिशि एकैकमणिपीठिकाभावेन चतस्रो मणिपीठिकाः प्रज्ञप्ताः अष्टौ योजनान्यायामविष्कम्भाभ्यां चत्वारि योजनानि बाहल्येन सर्वात्मना मणिमया 'अच्छा' इत्यादि प्राग्वत्, तासां च मणिपीठिकानामुपरि एकैकप्रतिमाभावेन चतस्रो जिनप्रतिमा जिनोत्सेधप्रमाणमात्राः, जिनोत्सेध उत्कर्षतः पञ्च धनुःशतानि जघन्यतः सप्त हस्ताः, इह तु पञ्च धनुःशतानि संभाव्यन्ते, 'पलियंकसनिसण्णाउ' इति पर्यङ्कासनसन्निषण्णाः, स्तूपाभिमुख्यः सन्निक्षिप्ताः, तथा जगत्स्थितिस्वाभाव्येन सम्यग्निवेशितास्तिष्ठन्ति, तद्यथा—ऋषभा वर्द्धमाना चन्द्रानना वारिषेणा इति, 'तेसि णं' मित्यादि तेषां चैत्यस्तूपानां पुरतः प्रत्येकं २ मणिपीठिका प्रज्ञप्ता ताश्च मणिपीठिका षोडश योजनान्यायामविष्कम्भाभ्यामष्टौ योजनानि बाहल्यतः 'सव्वमणिमईओ' इत्यादि प्राग्वत्, तासां च मणिपीठिकानामुपरि प्रत्येकं २ चैत्यवृक्षाः अष्टौ योजनान्यूर्ध्वमुच्चैस्त्वेनार्द्धयोजनमुद्वेधेन—उण्डत्वेन द्वे योजने उच्चैस्त्वेन स्कन्धः स एवार्द्धं योजनं विष्कम्भतया बहुमध्यदेशभागे विडिमा—ऊर्ध्वं विनिर्गता शाखा सा ऊर्ध्वमुच्चैस्त्वेन षड् योजनानि अष्टौ योजनानि विष्कम्भेन सर्वाग्रेण सातिरेकाण्यष्टौ योजनानि प्रज्ञप्तास्तेषां चैत्यवृक्षाणामयमेतद्रूपो वर्णावासः प्रज्ञप्तस्तथा—'वइरामयमूला रययसुपइट्ठियविडिमा' वज्राणि—वज्रमयानि मूलानि येषां—ते वज्रमयमूला रजते सुप्रतिष्ठिता विडिमा—बहुमध्यदेशभागे ऊर्ध्वं विनिर्गता शाखा येषां ते रजतसुप्रतिष्ठितविडिमास्ततः पूर्वपदेन कर्मधारयः समासः, 'रिट्ठामयकंदवेरुलियरुइलखंधा' रिष्ठमयो रिष्ठरत्नमयः कन्दो येषां ते रिष्ठमयकन्दाः, तथा वैडूर्यरत्नमयो रुचिरः स्कन्धो येषां ते तथा ततः पूर्वपदेन कर्मधारयः, 'सुजायवरजायरूवपढमगविसालसाला' सुजातं-मूलद्रव्यशुद्धं वरं-प्रधानं यत् जातरूपं तदात्मका प्रथमका-मूलभूता विशाला शाखा येषां ते सुजातवरजातरूपप्रथमकविशालशालाः 'नानामणिरयणविविहसाहप्पसाहवेरुलियपत्ततवणिज्जपत्तविंटा' इति नानामणिरत्नात्मिका विविधाः शाखाः प्रशाखा येषां ते तथा वैडूर्याणि-वैडूर्यमयानि पत्राणि येषां ते तथा तपनीयमयानि पत्रवृन्तानि येषां ते तथा, ततः पूर्ववत् पदद्वयस्य २ मीलनेन कर्मधारयः, 'जंबूणयरत्तमउयसुकुमालपवालपल्लववरंकुरधरा' जाम्बूनदा—जाम्बूनदसुवर्णविशेषमया रक्ता-रक्तवर्णा मृदवः-मनाक्षाः सुकुमारा—सुकुमारस्पर्शाः प्रवालाः-ईषदुन्मीलितपत्रभावाः पल्लवाः—संजातपरिपूर्णप्रथमपत्रभावरूपा वराङ्कुराः-प्रथममुद्भिद्यमाना अङ्कुरास्तान् धरन्तीति जाम्बूनदरक्तमृदुसुकुमारप्रवालपल्लवाङ्कुरधराः 'विचित्तमणिरयणसुरभिकुसुमफलभरेण नमियसाला' इति विचित्रमणिरत्नमयानि यानि सुरभीणि कुसुमानि फलानि च तेषां भरेण नमिताः शालाः-शाखा येषां ते तथा, तथा सती-शोभना छाया येषां ते सच्छायाः, सती—शोभना प्रभा-कान्तिर्येषां ते सत्प्रभाः, अत एव सश्रीकाः, तथा सह उद्द्योतेन वर्त्तन्ते मणिरत्नानामुद्द्योतभावात् सोद्द्योताः, अधिकं नयनमनोनिर्वृतिकराः अमृतरससमरसानि फलानि येषां ते तथा, 'पासाईया' इत्यादिविशेषणचतुष्टयं प्राग्वत्। एते च चैत्यवृक्षा अन्यैर्बहुभिस्तिलकलवकच्छत्रौपगशिरीषसप्तपर्णदधिपर्णलुध्रकधवलचन्दननीपकुटजपनसतालतमालप्रियालप्रियङ्गुपारापतराजवृक्षनन्दिवृक्षैः सर्वतः—समन्तात् सपरिक्षिप्ताः, ते च तिलका यावन्नन्दिवृक्षा मूलमन्तः कन्दमन्त इत्यादि सर्वमशोकपादपवर्णनायामिव तावद्वक्तव्यं यावत् परिपूर्णं लतावर्णनं, 'तेसि णं' मित्यादि, तेषां चैत्यवृक्षाणामुपरि अष्टावष्टौ मङ्गलकानि बहवः कृष्णचामरध्वजा इत्यादि चैत्यस्तूप इव तावद्वक्तव्यं यावद् बहवः सहस्रपत्रहस्तकाः सर्वरत्नमयाः यावत् प्रतिरूपका इति, 'तेसि णं' मित्यादि, तेषां च चैत्यवृक्षाणां पुरतः प्रत्येकं मणिपीठिकाः प्रज्ञप्ताः, ताश्च मणिपीठिका अष्टौ योजनान्यायामविष्कम्भाभ्यां चत्वारि योजनानि, बाहल्यतः 'सव्वरयणामईओ' इत्यादि प्राग्वत्, तासां च मणिपीठिकानामुपरि प्रत्येकं महेन्द्रध्वजाः प्रज्ञप्ताः, ते च महेन्द्रध्वजाः षष्टियोजनान्यूर्ध्वमुच्चैस्त्वेन अर्द्धक्रोशम्—अर्द्धगव्यूतमुद्वेधेन—उण्डत्वेन अर्द्धक्रोशं विष्कम्भतः 'वइरामयवट्टलट्ठसंठियसुसिलिट्ठपरिघट्ठमट्ठसुपइट्ठिया' इति वज्रमया—वज्ररत्नमया तथा वृत्तं—वर्तुलं लष्टं मनोज्ञं संस्थितं—संस्थानं येषां ते वृत्तलष्टसंस्थितास्तथा सुश्लिष्टा यथा भवन्ति एवं परिघृष्टा इव खरशाणया पाषाणप्रतिमेव सुश्लिष्टपरिघृष्टा मृष्टाः सुकुमारशाणया पाषाणप्रतिमावत् सुप्रतिष्ठिता मनागपि चलनासंभवात्, ततो विशेषणसमासः, 'अणेगवरपंचवण्णकुडभीसहस्सपरिमंडियाभिरामा वाउद्धूयविजयवेजयंतीपडागा छत्ताइच्छत्तकलिया तुंगा गगनतलमभिलंघमाणसिहरा पासाईया ०जाव पडिरूवा' इति प्राग्वत्, 'तेसि णं' मित्यादि, तेषां महेन्द्रध्वजानामुपरि अष्टावष्टौ मङ्गलकानि बहवः कृष्णचामरध्वजा इत्यादि तोरणवत् सर्वं वक्तव्यं, तेषां च महेन्द्रध्वजानां पुरतः प्रत्येकं नन्दाभिधाना पुष्करिणी प्रज्ञप्ता, एकं योजनशतमायामतः पञ्चाशत् योजनानि विष्कम्भतः द्वासप्ततियोजनान्युद्वेधेन—उण्डत्वेन, तासां च नन्दापुष्करिणीनाम् 'अच्छाओ सण्हाओ रययामयकूलाओ' इत्यादि वर्णनं प्राग्वत्, ताश्च नन्दापुष्करिण्यः प्रत्येकं २ पद्मवरवेदिकया प्रत्येकं २ वनखण्डेन परिक्षिप्ताः, तासां च नन्दा

पुष्करिणीनां प्रत्येकं त्रिदिशि त्रिसोपानप्रतिरूपकतोरणवर्णनं प्रागिव । 'सभाए णं सुहम्माए' इत्यादि, सभायां सुधर्मायामष्टचत्वारिंशन्मनोगुलिकासहस्राणि-पीठिकासहस्राणि प्रज्ञप्तानि, तद्यथा—पूर्वस्यां दिशि षोडश मनोगुलिकासहस्राणि, षोडश सहस्राणि पूर्वतः, षोडश सहस्राणि पश्चिमायामष्टौ सहस्राणि दक्षिणतोऽष्टौ सहस्राणि उत्तरतः, तेष्वपि फलकनागदन्तकमाल्यदामवर्णनं प्राग्वत् सिक्कगवर्णनं धूपघटिकावर्णनं द्वारवत् । 'सभाए णं सुहम्माए' इत्यादि, सभायां सुधर्मायाम् अष्टाचत्वारिंशत् गोमानसिकाः-शय्यारूपस्थानविशेषास्तेषां सहस्राणि प्रज्ञप्तानि तद्यथा-षोडश सहस्राणि पूर्वतः षोडश सहस्राणि पश्चिमायामष्टौ सहस्राणि दक्षिणतोऽष्टौ सहस्राणि उत्तरतः, तास्वपि फलकवर्णनं नागदन्तवर्णनं सिक्कगवर्णनं धूपघटिकावर्णनं च द्वारवत्, 'सभाए णं सुहम्माए' इत्यादिना भूमिभागवर्णनं 'सभाए णं सुहम्माए' इत्यादिना उल्लोकवर्णनं च प्राग्वत्, 'तस्स णं' मित्यादि, तस्य बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागेऽत्र महती एका मणिपीठिका प्रज्ञप्ता, षोडश योजनान्यायामविष्कम्भाभ्याम् अष्टौ योजनानि बाहल्येन सर्वरत्नमयी इत्यादि प्राग्वत्, तस्याश्च मणिपीठिकाया उपरि महानेको माणवकनामा चैत्यस्तम्भः प्रज्ञप्तः षष्टियोजनान्यूर्ध्वमुच्चैस्त्वेन योजनमुद्वेधेन योजनं विष्कम्भेण अष्टाचत्वारिंशदस्रिकः 'अडयालीसइ कोडीए अडयालीसइ विग्गहिए' इत्यादि सम्प्रदायगम्यं. 'वइरामयवट्टलट्ठसंठिए' इत्यादि महेन्द्रध्वजवत् वर्णनं निरवशेषं तावद्वक्तव्यं यावत् 'सहस्सपत्तहत्थगा सव्वरयणामया ०जाव पडिरूवा' इति, तस्य च माणवकस्य चैत्यस्तम्भस्य उपरि द्वादश योजनानि अवगाह्य, उपरितनभागात् द्वादश योजनानि वर्जयित्वेति भावः, अधस्तादपि द्वादश योजनानि वर्जयित्वा मध्ये षट्त्रिंशति योजनेषु 'बहवे सुवण्णरुप्पमया फलका' इत्यादि फलकवर्णनं नागदन्तवर्णनं सिक्ककवर्णनं च प्राग्वत्, तेषु च रजतमयेषु सिक्ककेषु बहवो वज्रमया गोलवृत्ताः समुद्गकाः प्रज्ञप्ताः, तेषु च वज्रमयेषु समुद्गकेषु बहूनि जिनसक्थीनि सन्निक्षिप्तानि तिष्ठन्ति, यानि सूर्याभस्य देवस्य अन्येषां च बहूनां वैमानिकानां देवानां देवीनां च अर्चनीयानि चन्दनादिना वन्दनीयानि स्तुत्यादिना पूजनीयानि पुष्पादिना माननीयानि बहुमानेन सत्करणीयानि वस्त्रादिना कल्याणं मङ्गलं दैवतं चैत्यमिति बुद्ध्या पर्युपासनीयानि, 'तस्स णं चेइयखंभस्स उवरिं बहवे अट्ठट्ठ मंगलगा' इत्यादि प्राग्वत् ।

तस्स णं माणवगस्स चेइयखंभस्स पुरच्छिमेणं एत्थ णं महेगा मणिपेढिया पण्णत्ता, अट्ठ जोयणाइं आयामविक्खंभेणं चत्तारि जोअणाइं बाहल्लेणं सव्वमणिमई अच्छा ०जाव पडिरूवा, तीसे णं मणिपेढियाए उवरिं एत्थ णं महेगे सीहासणे० वण्णओ सपरिवारो, तस्स णं माणवगस्स चेइयखंभस्स पच्चत्थिमेणं एत्थ णं महेगा मणिपेढिया पण्णत्ता अट्ठ जोयणाइं आयामविक्खंभेणं चत्तारि जोयणाइं बाहल्लेणं सव्वमणिमई अच्छा ०जाव पडिरूवा, तीसे णं मणिपेढियाए उवरिं एत्थ णं महेगे देवसयणिज्जे पण्णत्ते, तस्स णं देवसयणिज्जस्स इमेयारूवे वण्णावासे पण्णत्ते, तं जहा-णाणामणिमया पडिपाया सोवन्निया पाया णाणामणिमयाइं पायसीसगाइं जंबूणयमयाइं गत्तगाइं णाणामणिमए विच्चे रययामया तूली तवणिज्जमया गंडोवहाणया लोहियक्खमया बिब्बोयणा, से णं सयणिज्जे उभओ बिब्बोयणे दुहतो उण्णते मज्झे णतगंभीरे सालिंगणवट्टिए गंगापुलिनवालुयाउद्दालसालिसए सुविरइयरयत्ताणे उवचियखोमदुगुल्लपट्टपडिच्छायणे रत्तंसुयसंवुए सुरम्मे आईणगरूयबूरणवणीयतूलफासे मउले । ( सू० ३७ )

'तस्स णं' मित्यादि, तस्य माणवकस्य चैत्यस्तम्भस्य पूर्वस्यां दिशि अत्र महत्येका मणिपीठिका प्रज्ञप्ता, सा च अष्टौ योजनान्यायामविष्कम्भाभ्यां चत्वारि योजनानि बाहल्येन 'सव्वमणिमया' इत्यादि प्राग्वत् । तस्याश्च मणिपीठिकाया उपरि अत्र महदेकं देवशयनीयं प्रज्ञप्तं तस्य च देवशयनीयस्य अयमेतद्रूपो वर्णावासो-वर्णकनिवेशः प्रज्ञप्तः, तद्यथा-नानामणिमयाः प्रतिपादाः-मूलपादानां प्रतिविशिष्टोपष्टम्भकरणाय पादाः प्रतिपादाः, सौवर्णिकाः—सुवर्णमयाः पादाः-मूलपादाः, नानामणिमयानि पादशीर्षकाणि जाम्बूनदमयानि गात्राणि—ईषादीनि वज्रमयाः--वज्ररत्नापूरिताः सन्धयः 'नानामणिमयं विच्चं' इति नानामणिमयं व्यूतं-विशिष्टवानं रजतमयी तूली लोहिताक्षमयानि 'बिब्बोयणा' इति उपधानकानि, आह च जीवाभिगममूलटीकाकारः-'बिब्बोयणा-उपधानकान्युच्यन्ते' इति, तपनीयमय्यो गण्डोपधानिकाः, 'से णं देवसयणिज्जे' इत्यादि, तद्देवशयनीयं सालिङ्गनवर्त्तिकं-सह आलिङ्गनवर्त्त्या--शरीरप्रमाणेनोपधानेन यत् तत्तथा, 'उभओ बिब्बोयणे' इति उभयतः-उभौ--शिरोऽन्तपादान्तावाश्रित्य बिब्बोयणे-उपधाने यत्र तत् 'उभओ बिब्बोयणं दुहतो उन्नते' इति उभयत उन्नतं 'मज्झे णतगंभीरे' मध्ये नतं च तत् निम्नत्वात् गम्भीरं च-महत्त्वान्नतगम्भीरं गङ्गापुलिनवालुकाया अवदालो-विदलनं पादादिन्यासे अधोगमनमिति भावः तेन 'सालिसए' इति सदृशकं गङ्गापुलिनवालुकावदानसदृशकं, दृश्यते चायं प्रकारो हंसतूल्यादिष्विति, तथा 'उयचिय' इति विशिष्टपरिकर्मितं क्षौमं-कार्पासिकं दुकूलं-वस्त्रं तदेव पट्टः उयचियक्षौमदुकूलपट्टः स प्रतिच्छदनम्-आच्छादनं यस्य तत्तथा 'आईणगरूयबूरनवणीयतूलफासे' इति प्राग्वत्, 'रत्तंसुयसंवुए' इति रक्तांशुकेन संवृतं रक्तांशुकसंवृतम् अत एव सुरम्यं 'पासाइय' इत्यादि पदचतुष्टयं प्राग्वत्

तस्स णं देवसयणिज्जस्स उत्तरपुरच्छिमेणं महेगा मणिपेढिया पण्णत्ता, अट्ठ जोयणाइं आयामविक्खंभेणं चत्तारि जोअणाइं बाहल्लेणं सव्वमणिमयी अच्छा

०जाव पडिरूवा, तीसे णं मणिपेढिय.ए उवरिं एत्थ णं महेगे खुड्डुए महिंदज्झए पएणत्ते , सट्ठिं जोयणाइं उड्ढं उच्चत्तेणं जोयणं विक्खंभेणं वइरामया वट्ट-लट्ठसंठियसुसिलिट्ठ ०जाव पडिरूवा, उवरिं अट्ठट्ठ मंगलगा झया छत्तातिच्छत्ता , तस्स णं खुड्डागमहिंदज्झयस्स पच्चत्थिमेणं एत्थ णं सूरियाभस्स देवस्स चोप्पाले नाम पहरणकोसे पन्नत्ते सव्ववइरामए अच्छे ०जाव पडिरूवे, तत्थ णं सूरियाभस्स देवस्स फलिहरयणखग्गगयाधणुप्पमुहा बहवे पहरणरयणा संनिखित्ता चिट्ठंति, उज्जला निसिया सुतिक्खधारा पासादीया दरिसणिज्जा अभिरूवा पडिरूवा। सभाए णं सुहम्माए उवरिं अट्ठट्ठ मंगलगा झया छत्तातिच्छत्ता। ( सू० ३८ )

'तस्स ण' मित्यादि, तस्य देवशयनीयस्य उत्तरपूर्वस्या दिशि अत्र महत्येका मणिपीठिका प्रज्ञप्ता, सा चाष्टौ योजनान्यायामविष्कम्भाभ्यां चत्वारि योजनानि बाहल्यत. 'सव्वमणिमयी' इत्यादि प्राग्वत् , तस्याश्च मणिपीठिकाया उपरि क्षुल्लको महेन्द्रध्वज प्रज्ञप्त , तस्य प्रमाण वर्णकश्च महेन्द्रध्वजवद्वक्तव्यं , 'तस्स ण' मित्यादि तस्य क्षुल्लकमहेन्द्रध्वजस्य पश्चिमायामत्र सूर्याभस्य देवस्य महानेक चोप्पालो नाम प्रहरणकोश -प्रहरणस्थान प्रज्ञप्त किंविशिष्ट ? इत्याह-'सव्ववइरामए अच्छे ०जाव पडिरूवे' इति प्राग्वत् , 'तत्थ ण' मित्यादि, तत्र चोप्पालकाभिधाने प्रहरणकोशे बहूनि परिघरत्नखड्गगदाधनु प्रमुखादीनि प्रहरणरत्नानि सन्निक्षिप्तानि तिष्ठन्ति , कथंभूतानीत्यत आह—उज्ज्वलानि—निर्मलानि निशितानि—अतितेजितानि अत एव तीक्ष्णधाराणि प्रासादीयानीत्यादि प्राग्वत् , तस्याश्च सभाया सुधर्माया उपरि बहून्यष्टाष्टौ मङ्गलकानीत्यादि सर्वं प्राग्वद्वक्तव्यम् ।

सभाए णं सुहम्माए उत्तरपुरच्छिमेणं एत्थ णं महेगे सिद्धायतणे पएणत्ते, एगं जोयणसयं आयामेणं पन्नासं जोयणाइं विक्खंभेणं बावत्तरिं जोयणाइं उड्ढं उच्चत्तेणं सभागमेणं ०जाव गोमाणसियाओ भूमिभागा उल्लोया तहेव, तस्स णं सिद्धायतणस्स बहुमज्झदेसभाए एत्थ णं महेगा मणिपेढिया पएणत्ता, सोलस जोयणाइं आयामविक्खंभेणं अट्ठ जोयणाइं बाहल्लेणं, तीसे णं मणिपेढियाए उवरिं एत्थ णं महेगे देवच्छंदए पएणत्ते, सोलस जोयणाइं आयामविक्खंभेणं साइरेगाइं सोलस जोयणाइं उड्ढं उच्चत्तेणं सव्वरयणामए ०जाव पडिरूवे, एत्थ णं अट्ठसयं जिणपडिमाणं जिणुस्सेहप्पमाणमित्ताणं संनिखित्तं संचिट्ठति, तासि णं जिणपडिमाणं इमेयारूवे वण्णावासे पण्णत्ते, तं जहा—तवणिज्जमया हत्थतलपायतला अंकामयाइं नक्खाइं अंतोलोहियक्खपडिसेगाइं कणगामईओ जंघाओ कणगामया जाणू कणगामया ऊरू कणगामईओ गायलट्ठीओ तवणिज्जमयाओ नाभीओ रिट्ठामईओ रोमराईओ तवणिज्जमया चुचुया तवणिज्जमया सिरिवच्छा सिलप्पवालमया ओट्ठा फालियामया दंता तवणिज्जमईओ जीहाओ तवणिज्जमया तालुया कणगामईओ नासिगाओ अंतोलोहियक्खपडिसेगाओ अंकामयाणि अच्छीणि अंतोलोहियक्खपडिसेगाणि रिट्ठामईओ ताराओ रिट्ठामयाणि अच्छिपत्ताणि रिट्ठामईओ भमुहाओ कणगामया कवोला कणगामया सवणा कणगामईओ णिडालपट्टियाओ वइरामईओ सीसघडीओ तवणिज्जमईओ केसंतकेसभूमीओ रिट्ठामया उवरि मुद्धया, तासि णं जिणपडिमाणं पिट्ठतो पत्तेयं २ छत्तधारगपडिमाओ पएणत्ताओ, ताओ णं छत्तधारगपडिमाओ हिमरययकुंदेंदुप्पगासाइं सकोरेंटमल्लदामाइं धवलाइं आयवत्ताइं सलीलं धारेमाणीओ २ चिट्ठंति, तासि णं जिणपडिमाणं उभओ पासे पत्तेयं २ चामरधारपडिमाओ पएणत्ताओ , ताओ णं चामरधारपडिमाओ नानामणिकणगरयणविमलमहरिह ०जाव सलीलं धारेमाणीओ २ चिट्ठंति, तासि णं जिणपडिमाणं पुरतो दो दो नागपडिमाओ भूयपडिमाओ जक्खपडिमाओ कुंडधारपडिमाओ सव्वरयणामईओ अच्छाओ ०जाव चिट्ठंति, तासि णं जिणपडिमाणं पुरतो अट्ठसयं घंटाणं अट्ठसयं कलसाणं अट्ठसयं भिंगाराणं एवं आयंसगाणं थालाणं पाईणं सुपइट्ठाणं मणोगुलियाणं वायकरगाणं चित्तगराणं रयणकरंडगाणं हयकंठाणं ०जाव उसभकंठाणं पुप्फचंगेरीणं ०जाव लोमहत्थचंगेरीणं पुप्फपडलगाणं तेल्लसमुग्गाणं ०जाव अंजणसमुग्गाणं अट्ठसयं धूवकडुच्छुयाणं संनिखित्तं चिट्ठंति, सिद्धायतणस्स णं उवरिं अट्ठट्ठ मंगलगा झया छत्तातिच्छत्ता। ( सू० ३९ )

'सभाए ण' मित्यादि सभाया सुधर्माया 'उत्तरपुरच्छिमेण' मिति उत्तरपूर्वस्या दिशि महदेक सिद्धायतनं प्रज्ञप्तम् , एकं योजनशतमायामत पञ्चाशत् विष्कम्भतो द्वासप्ततियोजनान्यूर्ध्वमुच्चैस्त्वेनेत्यादि सर्वं सुधर्मावत् वक्तव्यं यावत् गोमानसीवक्तव्यता, तथा चाह—'सभागमएण ०जाव गोमाणसियाओ' इति, किमुक्तं भवति ?—यथा सुधर्माया सभाया पूर्वदक्षिणोत्तरवर्त्तीनि त्रीणि द्वाराणि तेषा च द्वाराणां पुरतो मुखमण्डपा तेषां च मुखमण्डपाना पुरत प्रेक्षागृहमण्डपा तेषां च प्रेक्षागृहमण्डपाना पुरतश्चैत्यस्तूपा सप्रतिमा तेषा च चैत्यस्तूपाना पुरत चैत्यवृक्षा तेषा च चैत्यवृक्षाणा पुरतो महेन्द्रध्वजा तेषामपि पुरतो नन्दापुष्करिण्यस्तदनन्तर गुलिका गोमानस्यश्चोक्ता तथाऽत्रापि सर्वमनेनैव क्रमेण निरवशेष वक्तव्यम् उल्लोकवर्णन भूमिभागवर्णन च प्राग्वत् , 'तस्स ण' मित्यादि , तस्य सिद्धायतनस्य बहुमध्यदेशभागेऽत्र महत्येका मणिपीठिका प्रज्ञप्ता, सा-

षोडश योजनान्यायामविष्कम्भाभ्यामष्टौ योजनानि बाहल्यतः 'सव्वमणिमयी' त्यादि प्राग्वत् । 'तसि ण' मित्यादि, तस्याश्च मणिपीठिकाया उपरि अत्र महानेको देवच्छन्दक प्रज्ञप्त, स च षोडश योजनान्यायामविष्कम्भाभ्यां सातिरेकाणि षोडश योजनान्यूर्ध्वमुच्चैस्त्वेन 'सव्वरयणामए' इत्यादि प्राग्वत्, तत्र च देवच्छन्दके अष्टशतम्—अष्टाधिकं शतं जिनप्रतिमानां जिनोत्सेधप्रमाणमात्राणां पञ्चधनुःशतप्रमाणानामिति भाव, संनिक्षिप्तं तिष्ठति । 'तासि णं जिणपडिमाणं' मित्यादि, तासां जिनप्रतिमानामयमेतद्रूपो वर्णावासो—वर्णकनिवेश प्रज्ञप्त, तपनीयमयानि हस्ततलपादतलानि अङ्करत्नमया अन्त —मध्ये लोहिताक्षरत्नप्रतिसेका नखाः कनकमया जङ्घा कनकमयानि जानूनि कनकमया ऊरव कनकमय्यो गात्रयष्टय तपनीयमया नाभयो रिष्टमय्यो रोमराजय तपनीयमया चूचुका —स्तनाग्रभागा तपनीयमया श्रीवत्सं शिलाप्रवालमया विद्रुममया ओष्ठाः स्फटिकमया दन्ता तपनीयमया जिह्वा तपनीयमयानि तालुकानि कनकमय्यो नासिका अन्तर्लोहिताक्षप्रतिसेका, अङ्कमयान्यक्षीणि अन्तर्लोहिताक्षप्रतिसेकानि रिष्टरत्नमयानि अक्षिपत्राणि रिष्टरत्नमय्यो भ्रुव कनकमया कपोला कनकमया श्रवणा कनकमय्या ललाटपट्टिका वज्रमय्यः शीर्षघटिका तपनीयमय्य केशान्तकेशभूमय, केशान्तभूमय केशभूमयश्चेति भाव, रिष्टमया उपरि मूर्द्धजा —केशा, तासां जिनप्रतिमानां पृष्ठत एकैका छत्रधारप्रतिमा हिमरजतकुन्देन्दुप्रकाशं सकोरेण्टमाल्यादिधवलमातपत्रं गृहीत्वा सलीलं धरन्ती तिष्ठति, तथा तासां जिनप्रतिमानां प्रत्येकमुभयोः पार्श्वयोर्द्वे द्वे चामरधारप्रतिमे प्रज्ञप्ते, ते च 'चंदप्पभवयरवेरुलियनानामणिरयणखचियचित्तदंडाओ' इति चन्द्रप्रभ —चन्द्रकान्तो वज्रं वैडूर्यं च प्रतीतं चन्द्रप्रभवज्रवैडूर्याणि शेषाणि च नानामणिरत्नानि खचितानि येषु दण्डेषु ते तथा, एवरूपाश्चित्रा—नानाप्रकारा दण्डा येषा तानि तथा, सूत्रे स्त्रीत्वं प्राकृतत्वात्, 'सुहुमरययदीहवालाउ' इति सूक्ष्मा रजतमया दीर्घा वाला येषा तानि तथा 'संखककुंददगरयअमयमहियफेणपुंजसन्निकासाओ धवलाओ' इति प्रतीतं, चामराणि गृहीत्वा सलीलं वीजयन्त्यस्तिष्ठन्ति, ताश्च 'सव्वरयणामईओ अच्छाओ' इत्यादि प्राग्वत् 'तासि ण मित्यादि, तासा जिनप्रतिमानां पुरतो द्वे द्वे नागप्रतिमे द्वे द्वे यक्षप्रतिमे द्वे द्वे भूतप्रतिमे द्वे द्वे कुण्डधारप्रतिमे संनिक्षिप्ते तिष्ठत, तस्मिंश्च देवच्छन्दके तासां जिनप्रतिमाना पुरत अष्टशतं घण्टानामष्टशतं चन्दनकलशानामष्टशत मङ्गलकलशानामष्टशत भृङ्गाराणामष्टशतमादर्शानामष्टशतं स्थालानामष्टशतं पात्रीणामष्टशतं सुप्रतिष्ठानामष्टशत मनोगुलिकाना—पीठिकाविशेषाणामष्टशतं वातकरकाणामष्टशतं चित्राणां रत्नकरण्डकानामष्टशतं हयकण्ठानामष्टशतं गजकण्ठानाम् अष्टशत नरकण्ठानामष्टशतं किन्नरकण्ठानामष्टशत किंपुरुषकण्ठानामष्टशत महोरगकण्ठानामष्टशतं वृषभकण्ठानामष्टशतं पुष्पचङ्गेरीणामष्टशतं माल्यचङ्गेरीणां, मुकुलानि पुष्पाणि ग्रथितानि माल्यानि, अष्टशतं चूर्णचङ्गेरीणामष्टशतं गन्धचङ्गेरीणामष्टशतं वस्त्रचङ्गेरीणामष्टशतमाभरणचङ्गेरीणामष्टशतं सिद्धार्थचङ्गेरीणामष्टशतं लोमहस्तचङ्गेरीणाम्, अष्टशतं लोमहस्तकानां लोमहस्तकं च मयूरपुच्छपुञ्जनिका, अष्टशत पुष्पपटलकानामेव माल्यचूर्णगन्धवस्त्राभरणसिद्धार्थकलोमहस्तकपटलकानामपि प्रत्येकम् २ अष्टशतं वक्तव्यम्, अष्टशतं सिंहासनानामष्टशतं छत्राणामष्टशतं चामराणामष्टशतं तैलसमुद्गकानामष्टशत कोष्ठसमुद्गकानामष्टशतं पत्रसमुद्गकानामष्टशतं चोयकसमुद्गकानामष्टशतं तगरसमुद्गकानामष्टशतमेलासमुद्गकानामष्टशतं हरितालसमुद्गकानामष्टशतं हिङ्गुलकसमुद्गकानामष्टशतं मनःशिलासमुद्गकानामष्टशतमञ्जनसमुद्गकानां सर्वाण्यपि अमूनि तैलादीनि परमसुरभिगन्धोपेतानि, अष्टशतं ध्वजानाम्, अत्र सङ्ग्रहणिगाथा—"चंदणकलसा भिंगा-रगा य आयंसया य थाला य । पातीई सुपइट्ठा, मणगुलिका वायकरगा य ॥१॥ चित्ता रयणकरंडा हयगयनरकंठगा य चंगेरी । पडलगसीहणछत्त, चामरा समुग्गक झया य ॥२॥' अष्टशतं धूपकडुच्छुकानां संनिक्षिप्तं तिष्ठति, तस्य च सिद्धायतनस्य उपरि अष्टावष्टौ मङ्गलकानि ध्वजच्छत्रातिच्छत्रादीनि तु प्राग्वत् ।

तस्स णं सिद्धायतणस्स उत्तरपुरच्छिमे णं एत्थ णं महेगा उववायसभा पण्णत्ता, जहा सभाए सुहम्माए तहेव ०जाव मणिपेढिया अट्ठ जोयणाइं देवसयणिज्जं तहेव सयणिज्जवण्णओ अट्ठट्ठ मंगलगा झया छत्तातिच्छत्ता । तीसे णं उववाएसभाए उत्तरपुरच्छिमेणं एत्थ णं महेगे हरए पण्णत्ते एगं जोयणसयं आयामेणं पण्णासं जोयणाइं विक्खंभेणं दस जोयणाइं उव्वेहेणं तहेव, तस्स णं हरयस्स उत्तरपुरच्छिमे णं एत्थ णं महेगा अभिसेयसभा पण्णत्ता सुहम्मागमएणं ०जाव गोमाणसियाओ मणिपेढिया सीहासणं सपरिवारं ०जाव दामा चिट्ठंति, तत्थ णं सूरियाभस्स देवस्स बहुअभिसेयभंडे संनिक्खित्ते चिट्ठइ, अट्ठट्ठ मंगलगा तहेव, तीसे णं अभिसेगसभाए उत्तरपुरच्छिमेणं एत्थ णं अलंकारियसभा पण्णत्ता, जहा सभा सुधम्मा मणिपेढिया अट्ठ जोयणाइं सीहासणं सपरिवारं, तत्थ णं सूरियाभस्स देवस्स सुबहुअलंकारियभंडे संनिक्खित्ते चिट्ठति, सेसं तहेव, तीसे णं अलंकारियसभाए उत्तरपुरच्छिमे णं एत्थ णं महेगा ववसायसभा पण्णत्ता, जहा उववायसभा ०जाव सीहासणं सपरिवारं मणिपेढिया अट्ठट्ठ मंगलगा तत्थ णं सूरियाभस्स देवस्स, एत्थ णं महेगे पोत्थयरयणे सन्निक्खित्ते चिट्ठइ, तस्स णं पोत्थयरयणस्स इमेयारूवे वण्णावासे पण्णत्ते, तं जहा—रयणामयाइं पत्तगाइं रिट्ठामईओ कंबिआओ तवणिज्जमए दोरे नाणामणिमए गंठी वेरुलियमए लिप्पासणे रिट्ठामए छंदणे तवणिज्जमई संकला रिट्ठामई मसी वइरामई लेहणी रिट्ठामयाइं अक्खराइं धम्मिए सत्थे, ववसायसभाए णं उवरिं अट्ठट्ठ मंगलगा, तीसे णं ववसायसभाए उत्तरपुरच्छिमेणं एत्थ णं नंदापुक्खरिणी पण्णत्ता

हरयसरिसा, तीसे णं णंदाए पुक्खरिणीए उत्तरपुरच्छिमेणं महेगे बलिपीढे पण्णत्ते सव्वरयणामए अच्छे ०जाव पडिरूवे। ( सू० ४० )

तस्य च सिद्धायतनस्य उत्तरपूर्वस्यामत्र महत्येका उपपात सभा प्रज्ञप्ता तस्याश्च सुधर्मागमेन स्वरूपवर्णनपूर्वोदिद्वारत्रयवर्णनमुखमण्डपप्रेक्षागृहमण्डपादिवर्णनादिप्रकारेरूपण सा यद्वक्तव्य यावदुल्लोकवर्णन,तस्याश्च बहुसमरमणीयभूमिभागस्य बहुमध्यदेशभागेऽत्र महत्येका मणिपीठिका प्रज्ञप्ता. सा चाष्टौ योजनान्यायामविष्कम्भाभ्यां चत्वारि योजनानि बाहल्येन 'सव्वमणिमयी' इत्यादि प्राग्वत्, तस्याश्च मणिपीठिकाया उपरि अत्र महदेक देवशयनीयं प्रज्ञप्तं, तस्य स्वरूप यथा सुधर्मायां सभायां देवशयनीयस्य, तस्या अप्युपपातसभाया उपरि अष्टाष्ट मङ्गलकादीनि प्राग्वत्। 'तसि ण' मित्यादि, तस्या उपपातसभाया उत्तरपूर्वस्या दिशि महानेको ह्रद प्रज्ञप्त, स चैक योजनशतमायामत पञ्चाशत् योजनानि विष्कम्भतो दश योजनान्युद्वेधेन 'अच्छे रययामयकूले' इत्यादि नन्दापुष्करिण्या इव वर्णन निरवशेष वक्तव्यं, 'से ण' मित्यादि, स ह्रद एकया पद्मवरवेदिकया एकेन च वनखण्डेन सर्वत समन्तात् संपरिक्षिप्तः, पद्मवरवेदिकावर्णन वनखण्डवर्णन च प्राग्वत्, तस्य ह्रदस्य त्रिदिशि—तिसृषु दिक्षु त्रिसोपानप्रतिरूपकाणि प्रज्ञप्तानि, तेषां च त्रिसोपानप्रतिरूपकाणा तोरणाना च वर्णन प्राग्वत्, तस्य च ह्रदस्य उत्तरपूर्वस्यां दिशि अत्र महत्येका अभिषेकसभा प्रज्ञप्ता, सा च सुधर्मसभावत् प्रमाणस्वरूपद्वारत्रयमुखमण्डपादिप्रकारेण तावद्वक्तव्या यावद् गोमानसीवक्तव्यता, तदनन्तर तथैव उल्लोकवर्णनं भूमिभागवर्णन च तावत् यावन्मणीना स्पर्श, तस्या अभिषेकसभाया बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागे महत्येका मणिपीठिका प्रज्ञप्ता, साऽप्यष्टौ योजनान्यायामविष्कम्भाभ्यां चत्वारि योजनानि बाहल्यत 'सव्वरयणामयी' इत्यादि प्राग्वत्, तस्या मणिपीठिकाया उपरि अत्र महदेक सिंहासनं सिंहासनवर्णक प्राग्वत्, नवरमत्र परिवारभूतानि भद्रासनानि च वक्तव्यानि, तस्मिँश्च सिंहासने सूर्याभस्य देवस्य सुबहु अभिषेकभाण्डम्—अभिषेकयोग्य उपस्कार सन्निक्षिप्त तिष्ठति, 'तीसे ण अभिसेयसभाए अट्ठट्ठ मंगलगा' इत्यादि प्राग्वत्, तस्याश्च अभिषेकसभाया उत्तरपूर्वस्या दिशि अत्र महत्येका अलङ्कारसभा प्रज्ञप्ता, सा चाभिषेकसभावत् प्रमाणस्वरूपद्वारत्रयमुखमण्डपप्रेक्षागृहमण्डपादिवर्णनप्रकारेण तावद्वक्तव्या यावद् परिवारसिंहासनं. तत्र सूर्याभस्य देवस्य अलङ्कारिकम्—अलङ्कारयोग्य भाण्ड संनिक्षिप्तमस्ति शेषं प्राग्वत्। तस्याश्च अलंकारसभाया उत्तरपूर्वस्यां दिशि अत्र महत्येका व्यवसायसभा प्रज्ञप्ता, सा च अभिषेकसभावत् प्रमाणस्वरूपद्वारत्रयमुखमण्डपादिवर्णनप्रकारेण तावद्वक्तव्या यावत सिंहासनं सपरिवार, तत्र महदेक पुस्तकरत्न सन्निक्षिप्तमस्ति, तस्य च पुस्तकरत्नस्य अयमेतद्रूपो 'वण्णावासो' वर्णकनिवेश प्रज्ञप्त., रिष्ठमय्यौ—रिष्ठरत्नमय्यौ कम्बिके पृष्ठके इति भाव' रत्नमयो दवरका यत्र पत्राणि प्रोतानि सन्ति, नानामणिमयो ग्रन्थि दवरकस्यादौ येन पत्राणि न निर्गच्छन्ति. अङ्कारत्नमयानि पत्राणि, नानामणिमयं लिप्यासनं; मषीभाजनमित्यर्थ, तपनीयमयी शृङ्खला मषीभाजनसक्ता, रिष्ठरत्नमयम् उपरितनं तस्य छादन रिष्ठमयी—रिष्ठरत्नमयी मषी वज्रमयी लेखनी, रिष्ठमयान्यक्षराणि. धार्मिक लेख्य, क्वचित्—'धम्मिए सत्थे' इति पाठ, तत्र धार्मिकं शास्त्रमिति व्याख्येय, तस्याश्च उपपातसभाया उत्तरपूर्वस्या दिशि महदेकं बलिपीठ प्रज्ञप्त, तच्चाष्टौ योजनानि आयामविष्कम्भत. चत्वारि योजनानि बाहल्यत सर्वरत्नमयम 'अच्छ' मित्यादि प्राग्वत्। तस्य च बलिपीठस्य उत्तरपूर्वस्या दिशि अत्र महत्येका नन्दापुष्करिणी प्रज्ञप्ता, सा च ह्रदप्रमाणा, ह्रदस्येव च तस्या अपि त्रिसोपानवर्णनं तोरणवर्णन च प्राग्वत्।

तदेव यत्र यादृग्रूपं च सूर्याभस्य देवस्य विमानं तत्र तादृग्रूपं चोपवर्णित, सम्प्रति सूर्याभो देव उत्पन्न सन् यदकरोत् यथा च तस्याऽभिषेकोऽभवत् तदुपदर्शयति—

तेणं कालेणं तेणं समएणं सूरियाभे देवे अहुणोववण्णमित्तए चेव समाणे पंचविहाए पज्जत्तीए पज्जत्तीभावं गच्छइ, तं जहा—आहारपज्जत्तीए, सरीरपज्जत्तीए, इंदियपज्जत्तीए, आणपाणपज्जत्तीए, भासामणपज्जत्तीए। तए णं तस्स सूरियाभस्स देवस्स पंचविहाए पज्जत्तीए पज्जत्तीभावं गयस्स समाणस्स इमेयारूवे अब्भत्थिए चिंतिए पत्थिए मणोगए संकप्पे समुप्पज्जित्था—किं मे पुव्विं करणिज्जं ? किं मे पच्छा करणिज्जं? किं मे पुव्विं सेयं ? किं मे पच्छा सेयं ? किं मे पुव्विंपि पच्छावि हियाए सुहाए खमाए णिस्सेसाए आणुगामियत्ताए भविस्सइ ?, तए णं तस्स सूरियाभस्स देवस्स सामाणियपरिसोववन्नगा देवा सूरियाभस्स देवस्स इमेयारूवमब्भत्थियं ०जाव समुप्पन्नं समभिजाणित्ता जेणेव सूरियाभे देवे तेणेव उवागच्छंति, सूरियाभं देवं करयलपरिग्गहियं सिरसावत्तं मत्थए अंजलिकट्टु जएणं विजएणं वद्धाविन्ति वद्धावित्ता एवं वयासी—एवं खलु देवाणुप्पिया णं सूरियाभे विमाणे सिद्धायतणंमि जिणपडिमाणं जिणुस्सेहपमाणमित्ताणं अट्ठसयं संनिखित्तं चिट्ठति, सभाए णं सुहम्माए माणवए चेइए खंभे वइरामएसु गोलवट्टसमुग्गएसु बहुओ जिणसकहाओ संनिखित्ताओ चिट्ठंति, ताओ णं देवाणुप्पियाणं अन्नेसिं च बहूणं वेमाणियाणं देवाण य देवीण य अच्चणिज्जाओ ०जाव पज्जुवासणिज्जाओ, तं एयं णं देवाणुप्पियाणं पुव्विं करणिज्जं, तं एयं णं देवाणुप्पियाणं पच्छा करणिज्जं तं एयं णं देवाणुप्पिया णं पुव्विं सेयं तं एयं णं देवाणुप्पियाणं पच्छा सेयं तं एयं

णं देवाणुप्पियाणं पुव्विं पि पच्छा वि हियाए सुहाए खमाए निस्सेसाए आणुगामियत्ताए भविस्सति । (सू० ४१)

तए णं से सूरियाभे देवे तेसिं सामाणियपरिसोववन्नगाणं देवाणं अंतिए एयमट्ठं सोच्चा निसम्म हट्ठतुट्ठ ०जाव हयहियए सयणिज्जाओ अब्भुट्ठेइ २ त्ता उववायसभाओ पुरच्छिमिल्लेणं दारेणं निग्गच्छइ, जेणेव हरए तेणेव उवागच्छति उवागच्छित्ता हरयं अणुपयाहिणीकरेमाणे अणु० करेमाणे पुरच्छिमिल्लेणं तोरणेणं अणुपविसइ अणुपविसित्ता पुरच्छिमिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहइ पच्चोरुहित्ता जलावगाहं जलमज्जणं करेइ २ त्ता जलकिड्डं करेइ २ त्ता जलाभिसेयं करेइ २ त्ता आयंते चोक्खे परमसुईभूए हरयाओ पच्चुत्तरइ २ त्ता, जेणेव अभिसेयसभा तेणेव उवागच्छति जे० तेणेव उवागच्छित्ता अभिसेयसभं अणुपयाहिणीकरेमाणे अणु० करेमाणे पुरच्छिमिल्लेणं दारेणं अणुपविसइ २ त्ता जेणेव सीहासणे तेणेव उवागच्छइ २ त्ता सीहासणवरगए पुरत्थाभिमुहे सन्निसन्ने । तए णं सूरियाभस्स देवस्स सामाणियपरिसोववन्नगा देवा आभिओगिए देवे सद्दावेंति सद्दावित्ता एवं वयासी खिप्पामेव भो ! देवाणुप्पिया ! सूरियाभस्स देवस्स महत्थं महग्घं महरिहं विउलं इंदाभिसेयं उवट्ठवेह, तए णं ते आभिओगिआ देवा सामाणियपरिसोववन्नेहिं देवेहिं एवं वुत्ता समाणा हट्ठा ०जाव हियया करयलपरिग्गहियं सिरसावत्तं मत्थए अंजलिं कट्टु एवं देवो ! तह त्ति आणाए विणएणं वयणं पडिसुणंति, पडिसुणित्ता उत्तरपुरच्छिमं दिसीभागं अवक्कमंति, उत्तरपुरच्छिमं दिसीभागं अवक्कमित्ता वेउव्वियसमुग्घाएणं समोहणंति समोहणित्ता संखेज्जाइं जोयणाइं ०जाव दोच्चं पि वेउव्वियसमुग्घाएणं समोहणइ समोहणित्ता अट्ठसहस्सं सोवन्नियाणं कलसाणं १ अट्ठसहस्सं रुप्पमयाणं कलसाणं २ अट्ठसहस्सं मणिमयाणं कलसाणं ३ अट्ठसहस्सं सुवण्णरुप्पमयाणं कलसाणं ४ अट्ठसहस्सं सुवन्नमणिमयाणं कलसाणं ५ अट्ठसहस्सं रुप्पमणिमयाणं कलसाणं ६ अट्ठसहस्सं सुवण्णरुप्पमणिमयाणं कलसाणं ७ अट्ठसहस्सं भोमिज्जाणं कलसाणं ८, एवं भिंगाराणं आयंसाणं थालीणं पाईणं सुपतिट्ठाणं रयणकरंडगाणं पुप्फचंगेरीणं ०जाव लोमहत्थचंगेरीणं पुप्फपडलगाणं ०जाव लोमहत्थपडलगाणं छत्ताणं चामराणं तेल्लसमुग्गाणं ०जाव अंजणसमुग्गाणं अट्ठसहस्सं धूवकडुच्छुयाणं विउव्वंति, विउव्वित्ता ते साभाविए य विउव्विए य कलसे य ०जाव कडुच्छुए य गिण्हंति गिण्हित्ता सूरियाभाओ विमाणाओ पडिनिक्खमंति पडिनिक्खमित्ता ताए उक्किट्ठाए चवलाए ०जाव तिरियमसंखेज्जाणं ०जाव वीतिवयमाणे वीतिवयमाणे जेणेव खीरोदयसमुद्दे तेणेव उवागच्छंति उवागच्छित्ता खीरोयगं गिण्हंति जाइं तत्थुप्पलाइं ताइं गेण्हंति ०जाव सयसहस्सपत्ताइं गिण्हंति २ गिण्हित्ता जेणेव पुक्खरोदए समुद्दे तेणेव उवागच्छंति उवागच्छित्ता पुक्खरोदयं गेण्हंति गिण्हित्ता जाइं तत्थुप्पलाइं सयसहस्सपत्ताइं ताइं ०जाव गिण्हंति गिण्हित्ता जेणेव समयखेत्ते जेणेव भरहेरवयाइं वासाइं जेणेव मागहवरदामपभासाइं तित्थाइं तेणेव उवागच्छंति २ त्ता तित्थोदगं गेण्हंति २ गिण्हित्ता तित्थमट्टियं गेण्हंति २ त्ता जेणेव गंगासिंधुरत्तारत्तवईओ महानईओ तेणेव उवागच्छंति २ त्ता सलिलोदगं गेण्हंति सलिलोदगं गेण्हित्ता उभओ कूलमट्टियं गेण्हंति कूलमट्टियं गेण्हित्ता जेणेव चुल्लहिमवंतसिहरिवासहरपव्वया तेणेव उवागच्छंति तेणेव उवागच्छित्ता दगं गेण्हंति सव्वतुयरे सव्वपुप्फे सव्वगंधे सव्वमल्ले सव्वोसहिसिद्धत्थए गिण्हंति गिण्हित्ता जेणेव पउमपुंडरीयदहे तेणेव उवागच्छंति उवागच्छित्ता दहोदगं गेण्हंति गेण्हित्ता जाइं तत्थ उप्पलाइं० जाव सयसहस्सपत्ताइं ताइं गेण्हंति गेण्हित्ता जेणेव हेमवयएरवयाइं वासाइं जेणेव रोहियरोहियंसासुवण्णकूलरुप्पकूलाओ महाणईओ तेणेव उवागच्छंति, सलिलोदगं गेण्हंति २ त्ता उभओ कूलमट्टियं गिण्हंति २ त्ता जेणेव सद्दावतिवियडावातिपरियागा वट्टवेयड्ढपव्वया तेणेव उवागच्छन्ति उवागच्छित्ता सव्वतुयरे तहेव जेणेव महाहिमवंतरुप्पिवासहरपव्वया तेणेव उवागच्छंति, तहेव जेणेव महापउमसहापुंडरीयद्दहा तेणेव उवागच्छंति उवागच्छित्ता दहोदगं गिण्हंति तहेव जेणेव हरिवासरम्मगवासाइं जेणेव हरिकंतनारिकंताओ महाणईओ तेणेव उवागच्छंति, तहेव जेणेव गंधावइमालवंतपरियाया वट्टवेयड्ढपव्वया तेणेव तहेव जेणेव णिसढणीलवंतवासधरपव्वया तहेव जेणेव तिगिच्छिकेसरिद्दहाओ तेणेव उवागच्छंति उवागच्छित्ता तहेव जेणेव महाविदेहे वासे जेणेव सीतासीतोदाओ महाणदीओ तेणेव तहेव जेणेव सव्वचक्कवट्टिविजया जेणेव सव्वमागहवरदामपभासाइं तित्थाइं तेणेव उवागच्छंति तेणेव उवागच्छित्ता तित्थोदगं गेण्हंति गेण्हित्ता सव्वंतरणईओ जेणेव सव्ववक्खारपव्वया तेणेव उवागच्छंति सव्वतुयरे तहेव जेणेव मंदरे प-

व्वते जेणेव भद्दमालवणे तेणेव उवागच्छंति सव्वतुयरे सव्वपुप्फे सव्वमल्ले सव्वोसहिसिद्धत्थए य गेण्हंति गेण्हित्ता जेणेव णंदणवणे तेणेव उवागच्छंति उवागच्छित्ता सव्वतुयरे ०जाव सव्वोसहिसिद्धत्थए य सरसगोसीसचंदणं गिण्हंति गिण्हित्ता जेणेव सोमणस्सवणे तेणेव उवागच्छंति सव्वतुयरे ०जाव सव्वोसहिसिद्धत्थए य सरसगोसीसचंदणं च दिव्वं च सुमणदामं दद्दरमलयसुगंधिए य गंधे गिण्हंति गिण्हित्ता एगतो मिलायंति २ यित्ता ताए उक्किट्ठाए ०जाव जेणेव सोहम्मे कप्पे जेणेव सूरियाभे विमाणे जेणेव अभिसेयसभा जेणेव सूरियाभे देवे तेणेव उवागच्छंति उवागच्छित्ता सूरियाभं देवं करयलपरिग्गहियं सिरसावत्तं मत्थए अंजलिं कट्टु जएणं विजएणं वद्धाविंति वद्धावित्ता तं महत्थं महग्घं महरिहं विउलं इंदाभिसेयं उवट्ठवेंति । तए णं तं सूरियाभं देवं चत्तारि सामाणियसाहस्सीओ अग्गमहिसीओ सपरिवारातो तिन्नि परिसाओ सत्त अणियाहिवइणो ०जाव अन्नेवि बहवे सूरियाभविमाणवासिणो देवा य देवीओ य तेहिं साभाविएहि य वेउव्विएहि य वरकमलपइट्ठाणेहि य सुरभिवरवारिपडिपुन्नेहिं चंदणकयचच्चिएहिं आविद्धकंठेगुणेहिं पउमुप्पलपिहाणेहिं सुकुमालकोमलकरयलपरिग्गहिएहिं अट्ठसहस्सेणं सोवन्नियाणं कलसाणं ०जाव अट्ठसहस्सेणं भोमिज्जाणं कलसाणं सव्वोदएहिं सव्वमट्टियाहिं सव्वतुयरेहिं ०जाव सव्वोसहिसिद्धत्थएहि य सव्विड्ढीए ०जाव वाइएणं महया २ इंदाभिसेएणं अभिसिंचति, तए णं तस्स सूरियाभस्स देवस्स महया २ इंदाभिसेए वट्टमाणे अप्पेगतिया देवा सूरियाभं विमाणं णच्चोयगं नातिमट्टियं पविरलफुसियरयरेणुविणासणं दिव्वं सुरभिगंधोदगं वासं वासंति, अप्पेगतिया देवा हयरयं नट्ठरयं भट्ठरयं उवसंतरयं पसंतरयं करेंति, अप्पेगतिया देवा सूरियाभं विमाणं आसियसंमज्जिओवलित्तं सुइसंमट्ठरत्थंतरावणवीहियं करेंति, अप्पेगतिया देवा सूरियाभं विमाणं मंचाइमंचकलियं करेंति, अप्पेगइया देवा सूरियाभं विमाणं णाणाविहरागोसियं झयपडागाइपडागमंडियं करेंति, अप्पेगतिया देवा सूरियाभं विमाणं लाउल्लोइयमहियं गोसीससरसरत्तचंदणदद्दरदिण्णपंचंगुलितलं करेंति अप्पेगतिया देवा सूरियाभं विमाणं उवचियचंदणकलसं चंदणघडसुकयतोरणपडिदुवारदेसभागं करेंति, अप्पेगतिया देवा सूरियाभं विमाणं आसत्तोसत्तविउलवट्टवग्घारियमल्लदामकलावं करेंति अप्पेगतिया देवा सूरियाभं विमाणं पंचवण्णसुरभिमुक्कपुप्फपुंजोवयारकलियं करेंति, अप्पेगतिया देवा सूरियाभं कालागुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुद्धुयाभिरामं करेंति, अप्पेगइया देवा सूरियाभं विमाणं सुगंधगंधियं गंधवट्टिभूतं करेंति अप्पेगतिया देवा हिरण्णवासं वासंति सुवण्णवासं वासंति रययवासं वासंति वइरवासं वासंति पुप्फवासं० फलवासं० मल्लवासं० गंधवासं० चुण्णवासं० आभरणवासं वासंति अप्पेगतिया देवा हिरण्णविहिं भाएंति, एवं सुवन्नविहिं भाएंति रयणविहिं पुप्फविहिं फलविहिं मल्लविहिं चुण्णविहिं वत्थविहिं गंधविहिं भाएंति, तत्थ अप्पेगतिया देवा आभरणविहिं भाएंति, अप्पेगतिया चउव्विहं वाइत्तं वाएंति ततं विततं घणं झुसिरं; अप्पेगइया देवा चउव्विहं गीयं गायंति, तं जहा–उक्खित्तायं पायत्तायं मंदायं रोइतावसाणं; अप्पेगतिया देवा दुयं नट्टविहिं उवदंसिंति अप्पेगतिया विलंबियनट्टविहिं उवदंसेंति अप्पेगतिया देवा दुतविलंबियं णट्टविहिं उवदंसेंति, एवं अप्पेगतिया अंचियं नट्टविहिं उवदंसेंति अप्पेगतिया देवा आरभडं भसोलं आरभडभसोलं उप्पयनिवयपसत्तं संकुचियपसारियं रियारियं भंतसंभंतणामं दिव्वं णट्टविहिं उवदंसेंति अप्पेगतिया देवा चउव्विहं अभिणयं अभिणयंति; तं जहा–दिट्ठंतियं पाडंतियं सामंतोवणिवाइयं लोगअंतोमज्झावसाणियं; अप्पेगतिया देवा बुक्कारेंति अप्पेगतिया देवा पीणेंति अप्पेगतिया वासेंति अप्पेगतिया हक्कारेंति अप्पेगतिया विणेंति तडवेंति अप्पेगइया वग्गंति अप्फोडेंति अप्पेगतिया अप्फोडेंति वग्गंति अप्पे० तिवइं छिंदंति अप्पेगतिया हयहेसियं करेंति, अप्पेगतिया हत्थियगुलगुलाइयं करेंति, अप्पेगतिया रहघणघणाइयं करेंति, अप्पेगतिया हयहेसियहत्थिगुलगुलाइयरहघणघणाइयं करेंति, अप्पेगतिया उच्छोलेंति अप्पेगतिया पच्छोलेंति अप्पेगतिया उक्किट्ठियं करेंति अप्प० उच्छोलेंति पच्छोलेंति उक्कि० अप्पेगतिया तिन्नि वि, अप्पेगतिया उवयंति अप्पेगतिया उववायंति अप्पेगतिया परिवयंति अप्पेगइया तिन्नि वि, अप्पेगइया सीहनायंति अप्पेगतिया दद्दरयं करेंति अप्पेगतिया भूमिचवेडं दलयंति अप्पे० तिन्नि वि, अप्पेगतिया गज्जंति अप्पेगतिया विज्जुयायंति अप्पेगतिया वासं वासंति अप्पेगतिया तिन्नि वि करेंति, अप्पेगतिया जलंति अप्पेगतिया तवंति अप्पेगतिया पतवेंति अप्पेगतिया तिन्नि वि, अप्पेगतिया हक्कारेंति अप्पेगतिया थुक्कारेंति अप्पेगतिया धक्कारेंति, अप्पेगतिया साइं साइं नामाइं साहेंति अप्पेगतिया चत्तारि वि, अप्पेगइया देवा देवसन्निवायं करेंति, अप्पेगतिया देवुज्जोयं करेंति, अप्पेगइया देवुक–

लियं करेंति, अप्पेगइया देवा कहकहगं करेंति, अप्पेगतिया देवा दुहदुहगं करेंति, कप्पेगतिया चेलुक्खेवं करेंति, अप्पेगइया देवसन्निवायं देवुज्जोयं देवुक्कलियं देवकहकहगं देवदुहदुहगं चेलुक्खेवं करेंति, अप्पेगतिया उप्पलहत्थगया ०जाव सयसहस्सपत्तहत्थगया अप्पेगतिया कलसहत्थगया ०जाव धूवकडुच्छुयहत्थगया हट्ठ तुट्ठ०जाव हियया सव्वतो समंता आहावंति परिधावंति। तए णं तं सूरियाभं देवं चत्तारि सामाणियसाहस्सीओ ०जाव सोलस आयरक्खदेवसाहस्सीओ अन्ने य बहवे सूरियाभरायहाणिवत्थव्वा देवा य देवीओ य महया इंदाभिसेगेणं अभिसिंचंति अभिसिंचित्ता पत्तेयं २ करयलपरिग्गहियं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी—जय जय नंदा जय जय भद्दा ते अजियं जिणाहि जियं च पालेहि जियमज्झे वसाहि इंदो इव देवाणं चंदो इव ताराणं चमरो इव असुराणं धरणो इव नागाणं भरहो इव मणुयाणं बहूइं पलिओवमाइं बहूइं सागरोवमाइं बहूइं पलिओवमसागरोवमाइं चउण्हं सामाणियसाहस्सीणं ०जाव आयरक्खदेवसाहस्सीणं सूरियाभस्स विमाणस्स अन्नेसिं च बहूणं सूरियाभविमाणवासीणं देवाण य देवीण य आहेवच्चं ०जाव महया २ कारेमाणे पालेमाणे विहराहि त्ति कट्टु जय २ सद्दं पउंजंति। तए णं से सूरियाभे देवे महया महया इंदाभिसेगेणं अभिसित्ते समाणे अभिसेयसभाओ पुरच्छिमिल्लेणं दारेणं निग्गच्छति निग्गच्छित्ता जेणेव अलंकारियसभा तेणेव उवागच्छति उवागच्छित्ता अलंकारियसभं अणुप्पयाहिणीकरेमाणे २ अलंकारियसभं पुरच्छिमिल्लेणं दारेणं अणुपविसति २ सित्ता जेणेव सीहासणे तेणेव उवागच्छति सीहासणवरगते पुरत्थाभिमुहे सन्निसन्ने। तए णं तस्स सूरियाभस्स देवस्स सामाणियपरिसोववन्नगा अलंकारियभंडं उवट्ठवेंति, तए णं से सूरियाभे देवे तप्पढमयाए पम्हलसूमालाए सुरभीए गंधकासाईए गायाइं लूहेति लूहित्ता सरसेणं गोसीसचंदणेणं गायाइं अणुलिंपति अणुलिंपित्ता नासानीसासवायवोज्झं चक्खुहरं वन्नफरिसजुत्तं हयलालापेलवातिरेगं धवलं कणगखचियन्तकम्मं आगासफालियसमप्पभं दिव्वं देवदूसजुयलं नियंसेति नियंसेत्ता हारं पिणद्धेति २ द्धेत्ता अद्धहारं पिणद्धेइ २ द्धेत्ता एगावलिं पिणद्धेति २ त्ता मुत्तावलिं पिणद्धेति २ द्धेत्ता रयणावलिं पिणद्धेइ २ द्धेत्ता एवं अंगयाइं केयूराइं कडगाइं तुडियाइं कडिसुत्तगं दसमुद्दाणंतगं विकच्छसुत्तगं मुरविं पालंबं कुंडलाइं चूडामणिं मउडं पिणद्धेइ २ द्धेत्ता गंथिमवेढिमपूरिमसंघाइमेणं चउव्विहेणं मल्लेणं कप्परुक्खगं पिव अप्पाणं अलंकियविभूसियं करेइ २ रित्ता दद्दरमलयसुगंधगंधिएहिं गायाइं भुखंडेइ दिव्वं च सुमणदामं पिणद्धेइ। ( सू० ४२ )

' तेणं कालेणं तेणं समएणं ' मित्यादि, तस्मिन् काले तस्मिन् समये सूर्याभो देवः सूर्याभे विमाने उपपातसभायां देवशयनीये देवदूष्यान्तरे प्रथमतोऽङ्गुलासंख्येयभागमात्रयाऽवगाहनया समुत्पन्नः ' तए णं ' मित्यादि सुगमं, नवरम् इह भाषामनःपर्याप्त्योः समाप्तिकालान्तरस्य प्रायः शेषपर्याप्तिसमाप्तिकालान्तरापेक्षया स्तोकत्वादेकत्वेन विवक्षणमिति ' पंचविहाए पज्जत्तीए पज्जत्तीभावं गच्छइ ' इत्युक्तं ' तए णं ' मित्यादि, ततस्तस्य सूर्याभस्य देवस्य पञ्चविधया पर्याप्त्या पर्याप्तभावमुपगतस्य सतोऽयमेतद्रूपः संकल्पः समुदपद्यत। ' अब्भत्थिए ' इत्यादि पदव्याख्यानं पूर्ववत्, किं ' मे ' मम पूर्वं करणीयं किं मे पश्चात्करणीयं ? किं मे पूर्वं कर्त्तुं श्रेयः ? किं मे पश्चात् कर्त्तुं श्रेयः ?, तथा किं मे पूर्वमपि च पश्चादपि च हिताय भावप्रधानोऽयं निर्देशो हितत्वाय—परिणामसुन्दरतायै सुखाय-शर्मणे क्षमाय अयमपि भावप्रधानो निर्देशः संगतत्वाय निःश्रेयसाय निश्चितकल्याणाय अनुगामिकतायै-परम्परशुभानुबन्धसुखाय भविष्यतीति, इह प्राक्तनो ग्रन्थः प्रायोऽपूर्वो भूयानपि च पुस्तकेषु वाचनाभेदस्ततो माभूत् शिष्याणां सम्मोह इति क्वापि सुगमोऽपि यथावस्थितवाचनाक्रमप्रदर्शनार्थं लिखितः, इत ऊर्ध्वं तु प्रायः सुगमः प्राग्व्याख्यातस्वरूपश्च। न च वाचनाभेदोऽप्यतिबादर इति स्वयं परिभावनीयो, विषमपदव्याख्या तु विधास्यते इति। ' तए णं तस्स सूरियाभस्स देवस्स सामाणियपरिसोववन्नगा देवा इमेयारूवं ' मित्यादि ' आयंते ' इति नवानामपि श्रोतसां शुद्धोदकप्रक्षालनेन आचान्तो-गृहीताचमनश्चोक्षः स्वल्पस्यापि शङ्कितमलस्यापनयनात् अत एव परमशुचिभूतः, ' महत्थं महग्घं महरिहं विउलं इंदाभिसेयं ' मिति, महान् अर्थो-मणिकनकरत्नादिक उपयुज्यमानो यस्मिन् स महार्थः तं, तथा महान् अर्घः—पूजा यत्र स महार्घः तं, महम्—उत्सवमर्हतीति महार्हस्तं, विस्तीर्णं शक्राभिषेकवत् इन्द्राभिषेकमुपस्थापयत ' अट्ठसहस्सं सोवण्णियाणं कलसाणं विउव्वंति ' इत्यादि, अत्र भूयान् वाचनाभेद इति यथावस्थितवाचनाप्रदर्शनाय लिख्यते—अष्टसहस्रम्—अष्टाधिकं सहस्रं सौवर्णिकानां कलशानाम्—अष्टसहस्रं रूप्यमयानाम् २ अष्टसहस्रं मणिमयानाम् ३ अष्टसहस्रं सुवर्णमणिमयानाम् ४ अष्टसहस्रं सुवर्णरूप्यमयानाम् ५ अष्टसहस्रं रूप्यमणिमयानाम् ६ अष्टसहस्रं सुवर्णमणिमयानाम् ७ अष्टसहस्रं भौमेयानां कलशानाम् ८ अष्टसहस्रं भृङ्गाराणामेवमादर्शस्थालपात्रीसुप्रतिष्ठितवातकरकचित्ररत्नकरण्डकपुष्पचङ्गेरीयावल्लोमहस्तकपटलकसिंहासनच्छत्रचामरसमुद्गकध्वजधूपकडुच्छुकानां प्रत्येकं प्रत्येकमष्टसहस्रं २ विकुर्वन्ति विकुर्वित्वा ' ताए उक्किट्ठाए ' इत्यादि व्याख्यानार्थं, ' सव्व( तू )तुवरे ' इत्यादि, सर्वान् तु ( तू ) वरान्—कषायान् सर्वाणि पुष्पाणि सर्वान् गन्धान्—गन्धवासादीन् सर्वा-

णि माल्यानि ग्रथितादिभेदभिन्नानि सर्वौषधीन सिद्धार्थकान्—सर्षपकान् गृह्णन्ति, इहैव क्रम—पूर्वं पौरस्समुद्रे उपागच्छन्ति तत्रोदकमुत्पलादीनि च गृह्णन्ति, ततः पुष्करोदे समुद्रे तत्रापि तथैव, ततो मनुष्यक्षेत्रे भरतैरावतवर्षेषु मागधादिषु तीर्थेषु तीर्थोदकं तीर्थमृत्तिकां च गृह्णन्ति. ततो गङ्गासिन्धुरक्तारक्तवतीषु नदीषु सलिलोदकं नद्युदकमुभयतटमृत्तिकां च गृह्णन्ति. ततः क्षुल्लहिमवच्छिखरिषु सर्वतु ( तु ) वरान्सर्वपुष्पान्सर्वमाल्यसर्वौषधिसिद्धार्थकान्, ततस्तत्रैव पद्मह्रदपौण्डरीकहृदेषु ह्रदोदकमुत्पलादीनि च तद्वत्तानि, ततो हैमवतैरण्यवतवर्षेषु रोहितारोहितांशासुवर्णकूलारूप्यकूलासु महानदीषु सलिलोदकमुभयतटमृत्तिकां, तदनन्तरं शब्दापातिविकटापातिवृत्तवैताढ्येषु सर्वतूवरादीन्, ततो महाहिमवद्रुक्मिवर्षधरपर्वतेषु सर्वतूवरादीन्, ततो महापद्मपुण्डरीकहृदेषु ह्रदोदकादीनि, तदनन्तरं हरिवर्षरम्यकवर्षेषु हरिसलिलाहरिकान्तानारीकान्तासु महानदीषु सलिलोदकमुभयतटमृत्तिकां च, ततो गन्धापातिमाल्यवत्पर्यायवृत्तवैताढ्येषु तूवरादीन्, ततो निषिधनीलवद्वर्षधरपर्वतेषु सर्वतूवरादीन्, तदनन्तरं तद्गतेषु तिगिञ्छिकेसरिमहाह्रदेषु ह्रदोदकादीनि. ततः पूर्वविदेहापरविदेहेषु सीतासीतोदानदीषु सलिलोदकमुभयतटमृत्तिकां च ततः सर्वेषु चक्रवर्त्तिविजयेषु मागधादिषु तीर्थेषु तीर्थोदकं तीर्थमृत्तिकां च, तदनन्तरं वक्षस्कारपर्वतेषु सर्वतूवरादीन्, ततः सर्वासु अन्तरनदीषु सलिलोदकमुभयतटमृत्तिकां च, तदनन्तरं मन्दरपर्वते भद्रशालवने तूवरादीन्, ततो नन्दनवने तूवरादीन् सरसं च गोशीर्षचन्दनं तदनन्तरं सौमनसवने सर्वतूवरादीन् सरसं च गोशीर्षचन्दनं दिव्यं च सुमनोदाम गृह्णन्ति, ततः पण्डकवने तूवरपुष्पगन्धमाल्यसरसगोशीर्षचन्दनदिव्यसुमनोदामानि, 'दद्दरमलए सुगंधिए य गंधे गिएहति' इति दर्दरः—चीवरावनद्धं कुण्डिकादिभाजनमुखं तेन गालितं तत्र पक्वं वा यत् मलयोद्भवतया प्रसिद्धत्वात् मलयजं—श्रीखण्डं येषु तान् सुगन्धिकान्—परमगन्धोपेतान् गन्धान् गृह्णन्ति, 'आसियसमज्जिओवलित्त सुइसंमट्ठरत्थंतरावणवीहिय करेइ' इति आसिक्तम्—उदकच्छटकेन सन्मार्जितं—संभाव्यमानकचवरशोधनेन उपलिप्तमिव गोमयादिना उपलिप्तं तथा सिक्तानि जलेनात एव शुचीनि—पवित्राणि सम्मृष्टानि—कचवरापनयनेन रथ्यान्तराणि आपणवीथय इव—हट्टमार्गा इवापणवीथ्यो—रथ्याविशेषा यस्मिन् तत्तथा कुर्वन्ति, 'अप्पेगइया देवा हिरण्णविहिं भाएंति' अप्येकका—कतिचन देवा हिरण्यविधिं—हिरण्यरूपं मङ्गलभूतं प्रकारं भाजयन्ति—विश्राणयन्ति शेषदेवेभ्यो ददतीति भावः, एवं सुवर्णरत्नपुष्पफलमाल्यगन्धचूर्णाभरणविधिभाजनमपि भावनीयम् । 'उप्पायनिवयं' त्यादि,उत्पातपूर्वो निपातो यस्मिन् स उत्पातनिपातस्तम् एवं निपातोत्पातं सकुञ्चितप्रसारितं 'रियारिय' मिति गमनागमनं भ्रान्तसंभ्रान्तनामम् आरभटभसोलं दिव्यं नाट्यविधिमुपदर्शयन्ति अप्येकका देवा 'बुक्कारेंति' बुक्कारशब्दं कुर्वन्ति,'पीणेंति' पीनयन्ति—पीनमात्मानं कुर्वन्ति स्थूला भवन्तीत्यर्थः, 'लासंति' लासयन्ति लास्यरूपं नृत्यं कुर्वन्ति 'तंडवेंति' त्ति ताण्डवयन्ति—ताण्डवरूपं नृत्यं कुर्वन्ति, 'बुक्कारेंति' बुक्कारं कुर्वन्ति 'अप्फोडंति' आस्फोटयन्ति, भूम्यादिकमिति गम्यते, 'उच्छलेंति' त्ति उच्छलयन्ति 'पोच्छलेंति' प्रोच्छलयन्ति 'उवयंति' त्ति अवपतन्ति 'उप्पयंति' त्ति उत्पतन्ति 'परिवयंति' त्ति परिपतन्ति, तिर्यक् निपतन्तीत्यर्थः । 'जलेंति' त्ति ज्वालामालाकुला भवन्ति 'तवेंति' त्ति तप्ता भवन्ति प्रतप्ता भवन्ति 'थुक्कारेंति' त्ति महता शब्देन थूत्कुर्वन्ति 'देवोक्कलियं करेंति' त्ति देवानां वातस्येवोत्कलिका देवोत्कलिका तां कुर्वन्ति, 'देवकहकहं करेंति' त्ति प्राकृतानां देवानां प्रमोदभरवशतः स्वेच्छावचनैर्बोलकोलाहलो देवकहकहकस्तं कुर्वन्ति 'दुहदुहगं करेंति' दुहदुहकमित्यनुकरणमेतत् । तएणं मयाए पम्हलीए सुकुमालाए सुरभीए गंधकासाइयाए गायाइं लूहइ' इति तत्प्रथमतया—तस्यामलङ्कारसभायां प्रथमतया पक्ष्मला च सा सुकुमारा च पक्ष्मलसुकुमारा तया सुरभ्या गन्धकाषायिक्या—सुरभिगन्धकषायद्रव्यपरिकर्मितया लघुशाटिकया गात्राणि रूक्षयन्ति'नासानीसासवायवोज्झ' मिति नासिकानि श्वासवातवाह्यमतेन तच्छ्लक्ष्णतामाह,'चक्खुहर' मिति चक्षुर्हरति आत्मवशं नयति विशिष्टरूपातिशयकलितत्वात् इति चक्षुर्हरं 'वरणफरिसजुत्तं' मिति वर्णेन स्पर्शेन चातिशयेनेति गम्यते युक्तं वर्णस्पर्शयुक्तं, 'हयलालापेलवाइरेग' मिति हयलाला—अश्वलाला तस्या अपि पेलवमतिरेकेण हयलालापेलवातिरेकं 'नाम नाम्नैकार्थे समासो बहुल' मिति समासः, अतिविशिष्टमृदुत्वलघुत्वगुणोपेतमिति भावः, धवलं—श्वेतं, तथा कनकेन खचितानि—विच्छुरितानि अन्तकर्माणि—अञ्चलयोर्वानलक्षणानि यस्य तत् कनकखचितान्तकर्म आकाशस्फटिकं नामातिस्वच्छः स्फटिकविशेषस्तत्समप्रभं दिव्यं देवदूष्ययुगलं 'नियंसेइ' परिधत्ते परिधाय हारादीन्याभरणानि पिनह्यति, तत्र हारः—अष्टादशसरिकः अर्द्धहारो—नवसरिकः एकावली—विचित्रमणिका मुक्तावली—मुक्ताफलमयी रत्नावली—रत्नमयमणिकात्मिका प्रालम्बः—तपनीयमयो विचित्रमणिरत्नभक्तिचित्र आत्मनः प्रमाणेन सुप्रमाणः आभरणविशेषः, कटकानि—कलाचिकाभरणानि त्रुटितानि—बाहुरक्षिका अङ्गदानि—बाह्वाभरणविशेषाः दशमुद्रिकानन्तकं हस्ताङ्गुलिसंबन्धि मुद्रिकादशकं कुण्डले—कर्णाभरणे 'चूडामणि' मिति चूडामणिर्नाम सकलपार्थिवरत्नसर्वसारो देवेन्द्रमनुष्येन्द्रमूर्द्धकृतनिवासो निःशेषामङ्गलाशान्तिरोगप्रमुखदोषापहारकारी प्रवरलक्षणोपेतः परममङ्गलभूत आभरणविशेषः 'चित्तरयणसंकडं मउडमिति' चित्राणि—नानाप्रकाराणि यानि रत्नानि तैः संकटश्चित्ररत्नसङ्कटः प्रभूतरत्ननिचयोपेत इति भावः, तं 'दिव्वं सुमणदाम' ति पुष्पमालां 'गंथिमे' त्यादि, ग्रन्थिमं—ग्रन्थनं ग्रन्थस्तेन निर्वृत्तं ग्रन्थिमं 'भावादिमः' ॥६।४।२१॥ प्रत्ययः सूत्रादिना ग्रथ्यते तद्ग्रन्थिममिति भावः, पूरिमं यत् ग्रथितं सत् वेष्ट्यते, तथा पुष्पलम्बूसको, गेण्डुक इत्यर्थः, पूरिमं येन वंशशलाकामयं पञ्जरादि पूर्यते, सङ्घातिमं यत् परस्परतो नालसंघातेन संघात्यते ।

तए णं से सूरियाभे देवे केसालंकारेणं मल्लालंकारेणं आभरणालंकारेणं वत्थालंकारेणं चउव्विहेणं अलंकारेणं

अलंकियविभूसिए समाणे पडिपुण्णालंकारे सीहासणाओ अब्भुट्ठेति२ट्ठित्ता अलंकारियसभाओ पुरच्छिमिल्लेणं दारेणं पडिणिक्खमइ २ मित्ता जेणेव ववसायसभा तेणेव उवागच्छति ववसायसभं अणुपयाहिणीकरेमाणे२ पुरच्छिमिल्लेणं दारेणं अणुपविसति, जेणेव सीहासणवरगए०जाव सन्निसन्ने । तए णं तस्स सूरियाभस्स देवस्स सामाणियपरिसोववन्नगा देवा पोत्थयरयणं उवणेति, तते णं से सूरियाभे देवे पोत्थयरयणं गिण्हति पोत्थ० गिण्हित्ता पोत्थयरयणं मुयइ पोत्थ० मुइत्ता पोत्थयरयणं विहाडेइ विहाडित्ता पोत्थयरयणं वाएति पोत्थयरयणं वाएत्ता धम्मियं ववसायं गिण्हति गिण्हित्ता पोत्थयरयणं पडिनिक्खमइ सीहासणातो अब्भुट्ठेति अब्भुट्ठेत्ता ववसायसभातो पुरच्छिमिल्लेणं दारेणं पडिनिक्खमइ २ मित्ता जेणेव नंदा पुक्खरणी तेणेव उवागच्छति उवागच्छित्ता णंदापुक्खरिणीपुरच्छिमिल्लेणं तोरणेणं पुरच्छिमिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहइ पच्चोरुहित्ता हत्थपादं पक्खालेति पक्खालित्ता आयति चोक्खे परमसुइभूए एगं महं सेयं रययामयं विमलं सलिलपुण्णं मत्तगयमुहागितिकुंभसमाणं भिंगारं पगेण्हति २ गिण्हित्ता जाइं तत्थ उप्पलाइं ०जाव सतसहस्सपत्ताइं ताइं गेण्हति २ गिण्हित्ता णंदातो पुक्खरिणीतो पच्चोरुहति पच्चोरुहित्ता जेणेव सिद्धायतणे तेणेव पहारेत्थ गमणाए ।(सू०४३)

तए णं तं सूरियाभं देवं चत्तारि य सामाणियसाहस्सीओ ०जाव सोलस आयरक्खदेवसाहस्सीओ अन्ने य बहवे सूरियाभं ०जाव देवीओ य अप्पेगतिया देवा उप्पलहत्थगया ०जाव सयसहस्सपत्तहत्थगया सूरियाभं देवं पिट्ठतो २ समणुगच्छंति । तए णं तं सूरियाभं देवं बहवे आभिओगिया देवा य देवीओ य अप्पेगतिया कलसहत्थगया ०जाव अप्पेगतिया धूवकडुच्छुयहत्थगता हट्ठतुट्ठ ०जाव सूरियाभं देवं पिट्ठतो समणुगच्छंति । तए णं से सूरियाभे देवे चउहिं सामाणियसाहस्सीहिं ०जाव अन्नेहि य बहूहि य सूरियाभं ०जाव देवेहि य देवीहि य सद्धिं संपरिवुडे सव्विड्ढीए ०जाव णातियरवेणं जेणेव सिद्धायतणे तेणेव उवागच्छति२ त्ता सिद्धायतणं पुरत्थिमिल्लेणं दारेणं अणुपविसति अणुपविसित्ता जेणेव देवच्छंदए जेणेव जिणपडिमाओ तेणेव उवागच्छति२त्ता जिणपडिमाणं आलोए पणामं करेति २त्ता लोमहत्थगं गिण्हति२त्ता जिणपडिमाणं लोमहत्थएणं पमज्जइ पमज्जित्ता जिणपडिमाओ सुरभिणा गंधोदएणं ण्हाणेइ ण्हाणित्ता सरसेणं गोसीसचंदणेणं गायाइं अणुलिंपइ अणुलिंपित्ता सुरभिगंधकासाइएणं गायाइं लूहेति लूहित्ता जिणपडिमाणं अहयाइं देवदूसजुयलाइं नियंसेइ नियंसित्ता पुप्फारुहणं मल्लारुहणं गंधारुहणं चुण्णारुहणं वन्नारुहणं वत्थारुहणं आभरणारुहणं करेइ करित्ता आसत्तोसत्तविउलवट्टवग्घारियमल्लदामकलावं करेइ आसत्तोसत्त० करेत्ता कयग्गाहगहियकरयलपब्भट्ठविप्पमुक्केणं दसद्धवन्नेणं कुसुमेणं मुक्कपुप्फपुंजोवयारकलियं करेति करित्ता जिणपडिमाणं पुरतो अच्छेहिं सण्हेहिं रययामएहिं अच्छरसातंदुलेहिं अट्ठट्ठ मंगले आलिहइ,तं जहा-सोत्थिय ०जाव दप्पणं, तयाणंतरं च णं चंदप्पभरयणवइरवेरुलियविमलदंडं कंचणमणिरयणभत्तिचित्तं कालागुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुत्तमाणुविद्धं च धूववट्टिं विणिम्मुयंतं वेरुलियमयं कडुच्छुयं पग्गहियं पयत्तेणं धूवं दाऊण जिणवराणं अट्ठसयविसुद्धगन्थजुत्तेहिं अत्थजुत्तेहिं अपुणरुत्तेहिं महावित्तेहिं संथुणइ२ णित्ता सत्तट्ठ पयाइं पच्चोसक्कइ २ त्ता वामं जाणुं अंचेइ२त्ता दाहिणं जाणुं धरणितलंसि निहट्टु तिक्खुत्तो मुद्धाणं धरणितलंसि निवाडेइ २ त्ता ईसिं पच्चुण्णमइ २ त्ता करयलपरिग्गहियं सिरसावत्तं मत्थए अञ्जलिं कट्टु एवं वयासी- नमोत्थु णं अरहंताणं भगवंताणं० जाव संपत्ताणं, वंदइ वंदित्ता नमंसइ २ सित्ता जेणेव देवच्छंदए जेणेव सिद्धायतणस्स बहुमज्झदेसभाए तेणेव उवागच्छइ २ त्ता लोमहत्थगं परामुसइ २ सित्ता सिद्धायतणस्स बहुमज्झदेसभागं लोमहत्थेणं पमज्जति, दिव्वाए दगधाराए अब्भुक्खेइ, सरसेणं गोसीसचंदणेणं पंचंगुलितलं मंडलगं आलिहइ २ त्ता कयग्गाहगहियं ०जाव पुंजोवयारकलियं करेइ करेत्ता धूवं दलयइ, जेणेव सिद्धायतणस्स दाहिणिल्ले दारे तेणेव उवागच्छति२त्ता लोमहत्थगं परामुसइ २ त्ता दारचेडीओ य सालभंजियाओ य वालरूवए य लोमहत्थएणं पमज्जइ २ त्ता दिव्वाए दगधाराए अब्भुक्खेइ २ त्ता सरसेणं गोसीसचंदणेणं चच्चए दलयइ दलइत्ता पुप्फारुहणं मल्ला० जाव आभरणारुहणं करेइ करेत्ता आसत्तोसत्त ०जाव धूवं दलयइ २ त्ता जेणेव दाहिणिल्ले दारे मुहमंडवे जेणेव दाहिणिल्लस्स मुहमंडवस्स बहुमज्झदेसभाए तेणेव उवागच्छइ २ त्ता लोमहत्थगं परामुसइ २ त्ता बहुमज्झदेसभागं लोमहत्थेणं पमज्जइ २ त्ता दिव्वाए दगधाराए अब्भुक्खेइ २ त्ता सरसेणं गोसीसचंदणेणं पंचंगुलितलं मंडलगं आलिहइ २ त्ता कयग्गाहगहिय ०जाव धूवं दलयइ २ त्ता जेणेव दाहिणिल्लस्स मुहमंडवस्स पचत्थिमिल्ले दारे तेणेव उवागच्छ २ च्छित्ता लोमहत्थगं परामुसइ २ त्ता दारचेडीओ य सालिभंजियाओ य वालरूवए य लोमहत्थगं पमज्जइ २ त्ता दिव्वाए दगधाराए० सरसेणं

गोसीमचंदणेणं चच्चए दलयइ २ त्ता पुप्फारुहणं ०जाव आभरणारुहणं करेइ २ त्ता आसत्तोसत्त० कयग्गाहग्गहियं० धूवं दलयइ २ त्ता जेणेव दाहिणिल्लमुहमंडवस्स उत्तरिल्ला खंभपंती तेणेव उवागच्छइ २ च्छित्ता लोमहत्थं परामुसइ २ त्ता थंभे य सालिभंजियाओ य वालरूवए य लोमहत्थएणं पम० जहा चेव पच्चत्थिमिल्लस्स दारस्स ०जाव धूवं दलेयइ २ त्ता जेणेव दाहिणिल्लस्स मुहमंडवस्स पुरत्थिमिल्ले दारे तणेव उवागच्छइ २ त्ता लोमहत्थगं परामुसति दारचेडीओ तं चेव सव्वं जेणेव दाहिणिल्लस्स मुहमंडवस्स दाहिणिल्ले दारे तेणेव उवागच्छइ २ त्ता दारचेडीओ तं चेव सव्वं जेणेव दाहिणिल्ले पेच्छाघरमंडवे जेणेव दाहिणिल्लस्स पेच्छाघरमंडवस्स बहुमज्झदेसभागे जेणेव वइरामए अक्खाडए जेणेव मणिपेढिया जेणेव सीहासणे तेणेव उवागच्छइ २ त्ता लोमहत्थगं परामुसइ २ त्ता अक्खाडगं च मणिपेढियं च सीहासणं च लोमहत्थएणं पमज्जइ २ त्ता दिव्वाए दगधाराए सरसेणं गोसीसचंदणेणं चच्चए दलयइ, पुप्फारुहणं आसत्तोसत्त ०जाव धूवं दलेइ २ त्ता जेणेव दाहिणिल्लस्स पेच्छाघरमंडवस्स पच्चत्थिमिल्ले दारे तेण० उत्तरिल्ले दारे तं चेव जं चेव पुरत्थिमिल्ले दारे तं चेव, दाहिणे दारे तं चेव, जेणेव दाहिणिल्ले चेइयथूभे तेणेव उवागच्छइ २ त्ता थूभं च मणिपेढियं च दिव्वाए दगधाराए अब्भु० सरसेणं गोसीस० चच्चए दलेइ २ त्ता पुप्फारु० आसत्तो० जाव धूवं दलेइ, जेणेव पच्चत्थिमिल्ला मणिपेढिया जेणेव जिणपडिमा तं चेव, जेणेव उत्तरिल्ला जिणपडिमा तं चेव सव्वं, जेणेव पुरत्थिमिल्ला मणिपेढिया जेणेव पुरत्थिमिल्ला जिणपडिमा तेणेव उवागच्छइ २ त्ता तं चेव, दाहिणिल्ला मणिपेढिया दाहिणिल्ला जिणपडिमा तं चेव, जेणेव दाहिणिल्ले चेइयरुक्खे तेणेव उवागच्छइ २ च्छित्ता तं चेव, जेणेव महिंदज्झए जेणेव दाहिणिल्ला तेणेव उवागच्छति २ त्ता लोमहत्थगं परामुसति तोरणे य तिसोवाणपडिरूवए सालिभंजियाओ य वालरूवए य लोमहत्थएणं पमज्जइ दिव्वाए दगधाराए सरसेणं गोसीसचंदणेणं० पुप्फारुहणं० आसत्तोसत्त० धूवं दलयति, सिद्धायणं अणुपयाहिणीकरेमाणे जेणेव उत्तरिल्ला णंदापुक्खरिणी तेणेव उवागच्छति २ त्ता तं चेव, जेणेव उत्तरिल्ले चेइयरुक्खे तेणेव उवागच्छति, जेणेव उत्तरिल्ले चेइयथूभे तहेव, जेणेव पच्चत्थिमिल्ला पेढिया जेणेव पच्चत्थिमिल्ला जिणपडिमा तं चेव, उत्तरिल्ले पेच्छाघरमंडवे तेणेव उवागच्छति २ च्छित्ता जा चेव दाहिणिल्लवत्तव्वया सा चेव सव्वा पुरत्थिमिल्ले दारे, दाहिणिल्ला खंभपंती तं चेव सव्वं, जेणेव उत्तरिल्ले मुहमंडवे जेणेव उत्तरिल्लस्स मुहमंडवस्स बहुमज्झदेसभाए तं चेव सव्वं, पच्चत्थिमिल्ले दारे तेणेव उवाग० त्ता उत्तरिल्ले दारे दाहिणिल्ला खंभपंती सेसं तं चेव सव्वं जेणेव सिद्धायतणस्स उत्तरिल्ले दारे तं चेव, जेणेव सिद्धायतणस्स पुरत्थिमिल्ले दारे तेणेव उवागच्छइ २ त्ता त चेव, जेणेव पुरत्थिमिल्ले मुहमंडवे जेणेव पुरत्थिमिल्लस्स मुहमंडवस्स बहुमज्झदेसभाए तेणेव उवागच्छइ २ त्ता तं चेव, पुरत्थिमिल्लस्स मुहमंडवस्स दाहिणिल्ले दारे पच्चत्थिमिल्ला खंभपंती उत्तरिल्ले दारे तं चेव, जेणेव, पुरत्थिमिल्ले दारे तं चेव, जेणेव पुरत्थिमिल्ले पेच्छाघरमंडवे, एवं थूभे जिणपडिमाओ चेइयरुक्खा महिंदज्झया णंदापुक्खरिणी तं चेव ०जाव धूवं दलइ २ त्ता जेणेव सभा सुहम्मा तेणेव उवागच्छति २ त्ता सभं सुहम्मं पुरत्थिमिल्लेणं दारेणं अणुपविसइ २ त्ता जेणेव माणवए चेइयखंभे जेणेव वइरामए गोलवट्टसमुग्गे तेणेव उवागच्छइ उवागच्छित्ता लोमहत्थयं परामुसइ २ त्ता वइरामए गोलवट्टसमुग्गए लोमहत्थेणं पमज्जइ २ त्ता वइरामए गोलवट्टसमुग्गए विहाडेइ २ त्ता जिणसगहाओ लोमहत्थेणं पमज्जइ २ त्ता सुरभिणा गंधोदएणं पक्खालेइ पक्खालित्ता अग्गेहिं वरेहिं गंधेहिं य मल्लेहि य अच्चेइ धूवं दलयइ २ त्ता जिणसकहाओ वइरामएसु गोलवट्टसमुग्गएसु पडिनिक्खमइ माणवगं चेइयखंभं लोमहत्थएणं पमज्जइ दिव्वाए दगधाराए सरसेणं गोसीसचंदणेणं चच्चए दलयइ, पुप्फारुहणं ०जाव धूवं दलयइ, जेणेव सीहासणे तं चेव, जेणेव देवसयणिज्जे तं चेव, जेणेव खुड्डागमहिंदज्झए तं चेव, जेणेव पहरणकोसे चोप्पालए तेणेव उवागच्छइ २ त्ता लोमहत्थगं परामुसइ २ त्ता पहरणकोसं चोप्पालं लोमहत्थएणं पमज्जइ २ त्ता दिव्वाए दगधाराए सरसेणं गोसीसचंदणेणं चच्चए दलेइ पुप्फारुहणं आसत्तोसत्त ०जाव धूवं दलयइ जेणेव सभाए सुहम्माए बहुमज्झदेसभाए जेणेव मणिपेढिया जेणेव देवसयणिज्जे तेणेव उवागच्छइ २ च्छित्ता लोमहत्थगं परामुसइ देवसयणिज्जं च मणिपेढियं च लोमहत्थएणं पमज्जइ ०जाव धूवं दलयइ २ त्ता जेणेव उववायसभाए दाहिणिल्ले दारे तहेव अभिसेयसभासरिसं ०जाव पुरत्थिमिल्ला णंदापुक्खरिणी जेणेव हरए तेणेव उवागच्छइ २ त्ता तोरणे य तिसोवाणे य सालिभंजियाओ य वालरूवए य तहेव, जेणेव अभिसेयसभा तेणेव उवागच्छइ उवागच्छित्ता तहेव सीहा-

सुणं च मणिपढियं च नमं तहेव आययणसरिसं ०जाव पुरत्थिमिल्ला णंदा पुक्खरिणी जेणेव अलंकारियसभा तेणेव उवागच्छइ २ च्छित्ता जहा अभिसेयसभा तहेव सव्वं जेणेव ववसायसभा तेणेव उवागच्छइ २ त्ता तहेव लोमहत्थयं परामुसति पोत्थयरयणं लोमहत्थएणं पमज्जइ पमज्जित्ता दिव्वाए दगधाराए अग्गेहिं वरेहि य गंधेहिं मल्लेहि य अच्चेति २च्चित्ता मणिपढियं सीहासणं च सेसं तं चेव, पुरत्थिमिल्ला नंदा पुक्खरिणी जेणेव हरए तेणेव उवागच्छइ २ त्ता तोरणे य तिसोवाणे य सालिभंजियाओ य वालरूवए य तहेव। जेणेव बलिपीढं तेणेव उवागच्छइ २ त्ता बलिविसज्जणं करेइ करित्ता आभिओगिए देवे सद्दावेइ सद्दावित्ता एवं वयासी–खिप्पामेव भो देवाणुप्पिया! सूरियाभे विमाणे सिंघाडएसु तिएसु चउक्केसु चच्चरेसु चउम्मुहेसु महापहेसु पागारेसु अट्टालएसु चरियासु दारेसु गोपुरेसु तोरणेसु आरामेसु उज्जाणेसु वणेसु वणराईसु काणणेसु वणसंडेसु अच्चणियं करेह अच्चणियं करेत्ता एवमाणत्तियं खिप्पामेव पच्चप्पिणह, तए णं ते आभिओगिया देवा सूरियाभेणं देवेणं एवं वुत्ता समाणा ०जाव पडिसुणित्ता सूरियाभे विमाणे सिंघाडएसु तिएसु चउक्कएसु चच्चरेसु चउम्मुहेसु महापहेसु पागारेसु अट्टालएसु चरियासु दारेसु गोपुरेसु तोरणेसु आरामेसु उज्जाणेसु वणेसु वणरातीसु काणणेसु वणसंडेसु अच्चणियं करेइ २ त्ता जेणेव सूरियाभे देवे ० जाव पच्चप्पिणंति, तते णं से सूरियाभे देवे जेणेव नंदा पुक्खरिणी तेणेव उवागच्छइ २ त्ता नंदापुक्खरिणी पुरत्थिमिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहति २ हित्ता हत्थपाए पक्खालेइ २ लेत्ता णंदाओ पुक्खरिणीओ पच्चुत्तरइ जेणेव सभा सुधम्मा तेणेव पहारित्थगमणाए। तए णं से सूरियाभे देवे चउहिं सामाणियसाहस्सीहिं ०जाव सोलसहिं आयरक्खदेवसाहस्सीहिं अन्नेहि य बहूहिं सूरियाभविमाणवासीहिं वेमाणिएहिं देवेहिं देवीहि य सद्धिं संपरिवुडे सव्विड्ढीए ०जाव नाइयरवेणं जेणेव सभा सुहम्मा तेणेव उवागच्छइ सभं सुधम्मं पुरत्थिमिल्लेणं दारेणं अणुपविसति अणुपविसित्ता जेणेव सीहासणे तेणेव उवागच्छइ २ त्ता सीहासणवरगए पुरत्थाभिमुहे सण्णिसण्णे। (सू० ४४)

'जेणेव ववसायसभा' इति व्यवसायसभा नाम व्यवसायनिबन्धनभूता सभा, क्षेत्रादेरपि कर्मोदयादिनिमित्तत्वात्. उक्तं च—"उदयक्खयक्खओवस-मोवसमा जं च कम्मुणो भणिया। दव्वं खेत्तं कालं, भावं च भवं च संपप्प ॥ १ ॥" इति, 'पोत्थयरयणं मुयइ' इति उत्सङ्गे स्थानविशेषे वा उत्तमे इति द्रष्टव्यं, 'विहाडेइ' इति उद्घाटयति, 'धम्मियं ववसायं ववस्सइ' इति धार्मिकं—धर्मानुगतं व्यवसायं व्यवस्यति, कर्तुमभिलषतीति भावः। 'अच्छरसातंदुलेहिं' अच्छो रसो येषु ते अच्छरसाः; प्रत्यासन्नवस्तुप्रतिबिम्बाधारभूता इवातिनिर्मला इत्यर्थः, अच्छरसाश्च ते तन्दुलाश्च तैः, दिव्यतन्दुलैरिति भावः, 'पुप्फपुंजोवयारकलियं करित्ता, चंदप्पभवइरवेरुलियविमलदंड' मिति चन्द्रप्रभवज्रवैडूर्यमयो विमलो दण्डो यस्य स तथा तं, काञ्चनमणिरत्नभक्तिचित्रं कालागुरुपवरकुंदुरुक्कतुरुक्कसत्केन धूपेन उत्तमगन्धिनाऽनुविद्धा कालागुरुप्रवरकुन्दुरुक्कतुरुक्कधूपगन्धोत्तमानुविद्धा प्राकृतत्वात् पदव्यत्ययः धूपवर्तिं विनिर्मुञ्चन्तं वैडूर्यमयं धूपकडुच्छुयं प्रगृह्य प्रयत्नतो धूपं दत्त्वा जिनवरेभ्यः, सूत्रे षष्ठी प्राकृतत्वात्, सप्ताष्टानि पदानि पश्चादपसृत्य दशाङ्गुलिमञ्जलिं मस्तके रचयित्वा प्रयत्नतः 'अट्ठसयविसुद्धगंथजुत्तेहिं' ति विशुद्धो—निर्मलो लक्षणदोषरहित इति भावः यो ग्रन्थः—शब्दसंदर्भस्तेन युक्तानि, अष्टशतं च तानि विशुद्धग्रन्थयुक्तानि च तैः अर्थयुक्तैः—अर्थसारैरपुनरुक्तैर्महावृत्तैः, तथाविधदेवलब्धिप्रभावत एव, संस्तौति संस्तुत्य वामं जानुम् अञ्चति इत्यादिना विधिना प्रणामं कुर्वन् प्रणिपातदण्डकं पठति, तद्यथा—'नमोऽत्थु णं अरिहंताणं' मित्यादि, नमोऽस्तु 'णं' मिति वाक्यालङ्कारे देवादिभ्योऽतिशयपूजामर्हन्तीत्यर्हन्तस्तेभ्यः, सूत्रे षष्ठी 'छट्ठीविभत्तीए भण्णइ चउत्थी' इति प्राकृतलक्षणवशात्, ते चार्हन्तो नामादिरूपा अपि सन्ति ततो भावार्हत्प्रतिपत्त्यर्थमाह—'भगवंताणं' भगः—समग्रैश्वर्यादिलक्षणः स एषामस्तीति भगवन्तस्तेभ्यः, आदिः,—धर्मस्य प्रथमा प्रवृत्तिस्तत्करणशीला आदिकरास्तेभ्यः, तीर्यते संसारसमुद्रोऽनेनेति तीर्थं—प्रवचनं तत्करणशीलास्तीर्थकराः तेभ्यः स्वयम्–अपरोपदेशेन सम्यग् वरबोधिप्राप्त्या बुद्धा–मिथ्यात्वनिद्रापगमसंबोधेन स्वयंसंबुद्धास्तेभ्यः, तथा पुरुषाणामुत्तमाः पुरुषोत्तमाः भगवन्तो हि संसारमध्यावसन्तः सदा परार्थव्यसनिन उपसर्जनीकृतस्वार्था उचितक्रियावन्तोऽदीनभावाः कृतज्ञतापनयोऽनुपहतचित्ता देवगुरुबहुमानिन इति भवन्ति पुरुषोत्तमास्तेभ्यः, तथा पुरुषाः सिंहा इव कर्मगजान् प्रति पुरुषसिंहास्तेभ्यः, तथा पुरुषवरपुण्डरीकाणीव संसाररजलासङ्गादिना कर्ममलाभावतो वा पुरुषेषु वरपुण्डरीकाणि तेभ्यः, तथा पुरुषवरगन्धहस्तिन इव परचक्रदुर्भिक्षमारिप्रभृतिक्षुद्रगजनिराकरणेनेति पुरुषवरगन्धहस्तिनस्तेभ्यः तथा लोकाः—भव्यसत्त्वलोकः तस्य सकलकल्याणैकनिबन्धनतया भव्यत्वभावेनोत्तमा लोकोत्तमास्तेभ्यः, तथा लोकस्य नाथाः—योगक्षेमकृतो लोकनाथास्तेभ्यः, तत्र योगो बीजाधानोद्भेदपोषणकरणं क्षेमं च तत्तदुपद्रवाद्यभावापादनं तथा लोकस्य–प्राणिलोकस्य पञ्चास्तिकायात्मकस्य वा हिता–हितोपदेशेन सम्यक्प्ररूपणया वा लोकहितास्तेभ्यः, तथा लोकस्य देशनायोग्यस्य प्रदीपाः देशनांशुभिर्यथावस्थितवस्तुप्रकाशका लोकप्रदीपास्तेभ्यः, तथा लोकस्य उत्कृष्टमतेर्भव्यसत्त्वलोकस्य प्रद्योतकत्वविशिष्टा ज्ञानशक्तिस्तत्करणशीला लोकप्रद्योतकराः, तथा च भवन्ति भगवत्प्रसादात्तत्क्षणमेव भगवन्तो गणभृतो विशिष्टज्ञानसंपत्स-

-मन्विता यद्वशाद् द्वादशाङ्गमाचक्षयन्तीति, तेभ्यः, तथा अभयं विशिष्टमात्मनः स्वास्थ्यं, निःश्रेयसधर्मभूमिकानिबन्धनभूता परमा धृतिरिति भावः, तत् अभयं ददतीत्यभयदास्तेभ्यः. सूत्रे च कः प्रत्ययः स्वार्थिकः प्राकृतलक्षणवशात्. एवमन्यत्रापि. तथा चक्षुरिव चक्षुः—विशिष्ट आत्मधर्मः तत्त्वावबोधनिबन्धनः श्रद्धास्वभावः, श्रद्धाविहीनस्याचक्षुष्मत इव रूपं तत्त्वदर्शनायोगात्, तद् ददतीति चक्षुर्दास्तेभ्यः, तथा मार्गो—विशिष्टगुणस्थानावाप्तिप्रगुणः स्वरसवाही क्षयोपशमविशेषस्तं ददतीति मार्गदाः, तथा शरणं—संसारकान्तारगतानामतिप्रबलरागादिपीडितानां समाश्वासनस्थानकल्पं तत्त्वचिन्तारूपमध्यवसानं तद्ददतीति शरणदास्तेभ्यः, तथा बोधिः—जिनप्रणीतधर्मप्राप्तिस्तत्त्वार्थश्रद्धानलक्षणसम्यग्दर्शनरूपा तां ददतीति बोधिदास्तेभ्यः, तथा धर्मं—चारित्ररूपं ददतीति धर्मदास्तेभ्यः, कथं धर्मदाः ? इत्याह—धर्मं दिशन्तीति धर्मदेशकास्तेभ्यः, तथा धर्मस्य नायकाः—स्वामिनस्तद्वशीकरणभावात् तत्फलपरिभोगाच्च धर्मनायकास्तेभ्यः, धर्मस्य सारथय इव सम्यक् प्रवर्त्तनयोगेन धर्मसारथयस्तेभ्यः, तथा धर्म एव वरं—प्रधानं चतुरन्तहेतुत्वात् चतुरन्तं चक्रमिव चतुरन्तचक्रं तेन वर्तितुं शीलं येषां ते तथा तेभ्यः, तथा अप्रतिहते—अप्रतिस्खलिते क्षायिकत्वात् वरे—प्रधाने ज्ञानदर्शने धरन्तीति अप्रतिहतवरज्ञानदर्शनधरास्तेभ्यः, तथा छादयन्तीति छद्म घातिकर्मचतुष्टयं व्यावृत्तम्—अपगतं छद्म येभ्यस्ते व्यावृत्तच्छद्मानस्तेभ्यः, तथा रागद्वेषकषायेन्द्रियपरीषहोपसर्गघातिकर्मशत्रून् स्वयं जितवन्तोऽन्यांश्च जापयन्तीति जिना जापकास्तेभ्यो जिनेभ्यो जापकेभ्यः, तथा भवार्णवं स्वयं तीर्णवन्तोऽन्यांश्च तारयन्तीति तीर्णास्तारकास्तेभ्यः, तथा केवलवेदसा अवगततत्त्वा बुद्धा अन्यांश्च बोधयन्तीति बोधकास्तेभ्यः, मुक्ताः कृतकृत्या निष्ठितार्था इति भावस्तेभ्योऽन्यांश्च मोचयन्तीति मोचकास्तेभ्यः, सर्वज्ञेभ्यः सर्वदर्शिभ्यः, शिवं सर्वोपद्रवरहितत्वात् अचलं स्वाभाविकप्रायोगिकचलनक्रियाऽपोहात् अरुजं शरीरमनसोरभावे—नाधिव्याध्यसम्भवात् अनन्तं केवलात्मनाऽनन्तत्वात् अक्षयं विनाशकारणाभावात् अव्याबाधं केनापि बाधयितुमशक्यममूर्त्तत्वात् न पुनरावृत्तिर्यस्मात् तदपुनरावृत्ति सिध्यन्ति—निष्ठितार्था भवन्त्यस्यामिति सिद्धिः—लोकान्तक्षेत्रलक्षणा सैव गम्यमानत्वात् गतिः सिद्धिगतिरिति नामधेयं यस्य तत् सिद्धिगतिनामधेयं तिष्ठत्यस्मिन् इति स्थानं—व्यवहारतः सिद्धिक्षेत्रं निश्चयतो यथावस्थितं स्वस्वरूपं स्थानस्थानिनोरभेदोपचारात् तत् सिद्धिगतिनामधेयं स्थानं तत्संप्राप्तेभ्यः, एवं प्रणिपातदण्डकं पठित्वा ततो ' वंदइ नमसइ ' इति वन्दते ताः प्रतिमाश्चैत्यवन्दनविधिना प्रसिद्धेन, नमस्करोति पश्चात्प्रणिधानादियोगेनेत्येके. अन्ये त्वभिदधति—विरतिमतामेव प्रसिद्धश्चैत्यवन्दनविधिरन्यथा तथाऽभ्युपगमपुरस्सरकायव्युत्सर्गासिद्धेरिति वन्दते सामान्येन नमस्करोति आशयवृद्धेरभ्युत्थाननमस्कारेणेति, तत्त्वमत्र भगवन्तः परमर्षयः केवलिनो विदन्ति, अत ऊर्ध्वं सूत्रं सुगमं केवलं भूयान् विधिविषयो वाचनाभेद इति यथावस्थितवाचनाप्रदर्शनार्थं विधिमात्रमुपदर्श्यते—तदनन्तरं लोमहस्तकेन देवच्छन्दकं प्रमार्जयति पानीयधारया अभ्युक्षति अभिमुखं सिञ्चतीत्यर्थः, तदनन्तरं गोशीर्षचन्दनेन पञ्चाङ्गुलितलं ददाति, ततः पुष्पारोहणादि धूपदहनं च करोति, तदनन्तरं सिद्धायतनबहुमध्यदेशभागे उदकधाराऽभ्युक्षणचन्दनपञ्चाङ्गुलितलप्रदानपुष्पपुञ्जोपचारधूपदानादि करोति, ततः सिद्धायतनदक्षिणद्वारे समागत्य लोमहस्तकं गृहीत्वा तेन द्वारशाखे शालिभञ्जिकाव्यालरूपाणि च प्रमार्जयति. ततः उदकधारयाऽभ्युक्षणं गोशीर्षचन्दनचर्चा पुष्पाद्यारोहणं धूपदानं करोति । ततो दक्षिणद्वारेण निर्गत्य दाक्षिणात्यस्य मुखमण्डपस्य बहुमध्यदेशभागे लोमहस्तकेन प्रमार्ज्योदकधाराभ्युक्षणं चन्दनपञ्चाङ्गुलितलप्रदानपुष्पपुञ्जोपचारधूपदानादि करोति, कृत्वा पश्चिमद्वारे समागत्य पूर्ववत् द्वारार्चनिकां करोति कृत्वा च तस्यैव दाक्षिणात्यस्य मुखमण्डपस्योत्तरस्यां स्तम्भपङ्क्तौ समागत्य पूर्ववदर्चनिकां विधत्ते, इह यस्यां दिशि सिद्धायतनाद्द्वारं तत्रेतरस्य मुखमण्डपस्य स्तम्भपङ्क्तिः, ततस्तस्यैव दाक्षिणात्यस्य मुखमण्डपस्य पूर्वद्वारे समागत्य तत्पूजां करोति, कृत्वा तस्य दाक्षिणात्यस्य मुखमण्डपस्य दक्षिणद्वारे समागत्य पूर्ववत्पूजां विधाय तेन द्वारेण विनिर्गत्य प्रेक्षागृहमण्डपस्य बहुमध्यदेशभागे समागत्याक्षपाटकं मणिपीठिकां सिंहासनं च लोमहस्तकेन प्रमार्ज्योदकधारयाऽभ्युक्ष्य चन्दनचर्चापुष्पपूजाधूपदानानि कृत्वा तस्यैव प्रेक्षामण्डपस्य क्रमेण पश्चिमोत्तरपूर्वदक्षिणद्वाराणामर्चनिकां कृत्वा दक्षिणद्वारेण विनिर्गत्य चैत्यस्तूपं मणिपीठिकां च लोमहस्तकेन प्रमार्ज्योदकधारयाऽभ्युक्ष्य सरसेन गोशीर्षचन्दनकेन पञ्चाङ्गुलितलं दत्त्वा पुष्पाद्यारोहणं च विधाय धूपं ददाति, ततो यत्र पाश्चात्या मणिपीठिका तत्रागच्छति, तत्रागत्याऽऽलोके प्रणामं करोति, कृत्वा लोमहस्तकेन प्रमार्जनं सुरभिगन्धोदकेन स्नानं सरसेन गोशीर्षचन्दनेन गात्रानुलेपनं देवदूष्ययुगलपरिधानं पुष्पाद्यारोहणं पुरतः पुष्पपुञ्जोपचारं धूपदानं पुरतो दिव्यतन्दुलैरष्टमङ्गलकालेखनमष्टोत्तरशतवृत्तैः स्तुतिं प्रणिपातदण्डकपाठं च कृत्वा वन्दते नमस्यति, तत एवमेव क्रमेण उत्तरपूर्वदक्षिणप्रतिमानामप्यर्चनिकां कृत्वा दक्षिणद्वारेण निर्विनिर्गत्य दक्षिणस्यां दिशि यत्र चैत्यवृक्षः तत्र समागत्य चैत्यवृक्षस्य द्वारवदर्चनिकां करोति, ततो महेन्द्रध्वजस्य ततो यत्र दाक्षिणात्या नन्दा पुष्करिणी तत्र समागच्छति, समागत्य तोरणत्रिसोपानप्रतिरूपकगतशालभञ्जिकाव्यालरूपाणां लोमहस्तकेन प्रमार्जनं जलधारयाऽभ्युक्षणं चन्दनचर्चा पुष्पाद्यारोहणं धूपदहनं च कृत्वा सिद्धायतनमनुप्रदक्षिणीकृत्योत्तरस्यां नन्दापुष्करिण्यां समागत्य पूर्ववत्तस्या अर्चनिकां करोति, तत उत्तराहे महेन्द्रध्वजे तदनन्तरमुत्तराहे चैत्यवृक्षे तत उत्तराहे चैत्यस्तूपे ततः पश्चिमोत्तरपूर्वदक्षिण जिनप्रतिमानां पूर्ववत् पूजां विधायोत्तराहे प्रेक्षागृहमण्डपे समागच्छति, तत्र दाक्षिणात्यप्रेक्षागृहमण्डपवत् सर्वा वक्तव्यता वक्तव्या, ततो दक्षिणस्तम्भपङ्क्त्या विनिर्गत्योत्तराहे मुखमण्डपे समागच्छति, तत्रापि दाक्षिणात्यमुखमण्डपवत् सर्वं पश्चिमोत्तरपूर्वद्वारक्रमेण कृत्वा दक्षिणस्तम्भपङ्क्त्या विनिर्गत्य सिद्धायतनस्योत्तरद्वारे समागत्य पूर्वव-

दर्चनिका कृत्वा पूर्वद्वारेण समागच्छति, तत्रार्चनिकां पूर्ववत् कृत्वा पूर्वस्य मुखमण्डपस्य दक्षिणद्वारे पश्चिमस्तम्भपङ्क्त्योत्तरपूर्वद्वारेषु क्रमेणोक्तरूपां पूजां विधाय पूर्वद्वारेण विनिर्गत्य पूर्वप्रेक्षागृहमण्डपं समागत्य पूर्ववत् द्वारमध्यभागदक्षिणद्वारपश्चिमस्तम्भपङ्क्त्योत्तरपूर्वद्वारेषु पूर्ववदर्चनिकां करोति, ततः पूर्वप्रकारेणैव क्रमेण चैत्यस्तूपजिनप्रतिमाचैत्यवृक्षमहेन्द्रध्वजनन्दापुष्करिणीना, तत्र सभाया सुधर्माया पूर्वद्वारेण प्रविशति, प्रविश्य यत्रैव मणिपीठिका तत्राऽऽगच्छति, आलोके च जिनप्रतिमानां प्रणाम करोति, कृत्वा यत्र माणकचैत्यस्तम्भो यत्र वज्रमया गोलवृत्ताः समुद्गकाः तत्रागत्य समुद्गकान् गृह्णाति, गृहीत्वा विघाटयति विघाट्य च लोमहस्तकं परामृश्य तेन प्रमार्ज्योदकधारया अभ्युक्ष्य गोशीर्षचन्दनेनानुलिम्पति, ततः प्रधानैर्गन्धमाल्यैरर्चयति धूपं ददाति, तदनन्तरं भूयोऽपि वज्रमयेषु गोलवृत्तसमुद्गकेषु प्रतिनिक्षिपति, प्रतिनिक्षिप्य तान् वज्रमयान् गोलवृत्तसमुद्गकान् स्वस्थाने प्रतिनिक्षिपति, तेषु पुष्पगन्धमाल्यवस्त्राभरणानि चारोपयति, ततो लोमहस्तकेन माणकचैत्यस्तम्भं प्रमार्ज्योदकधारयाऽभ्युक्षणचन्दनचर्चापुष्पाद्यारोपणं धूपदानं च करोति, कृत्वा च सिंहासनप्रदेशं समागत्य मणिपीठिकायाः सिंहासनस्य च लोमहस्तकेन प्रमार्जनादिरूपां पूर्ववदर्चनिकां करोति, कृत्वा यत्र मणिपीठिका यत्र च देवशयनीयं तत्रोपागत्य मणिपीठिकाया देवशयनीयस्य च द्वारवदर्चनिकां करोति, तत उक्तप्रकारेणैव क्षुल्लकेन्द्रध्वजे पूजां करोति, ततो यत्र चोप्पालको नाम प्रहरणकोशस्तत्र समागत्य लोमहस्तकेन परिघरत्नप्रमुखाणि प्रहरणरत्नानि प्रमार्जयति, प्रमार्ज्योदकधारयाऽभ्युक्षणं चन्दनचर्चा पुष्पाद्यारोपणं धूपदानं च करोति, ततः सभाया सुधर्माया बहुमध्यदेशभागेऽर्चनिकां पूर्ववत् करोति, कृत्वा सुधर्माया सभाया दक्षिणद्वारे समागत्य तस्य अर्चनिकां पूर्ववत् कुरुते, ततो दक्षिणद्वारेण विनिर्गच्छति, इत ऊर्ध्वं यथैव सिद्धायतनान्निष्क्रामतो दक्षिणद्वारादिका दक्षिणनन्दापुष्करिणीपर्यवसाना पुनरपि प्रविशत उत्तरनन्दापुष्करिण्यादिका उत्तरद्वारान्ता ततो द्वितीयद्वारान्निष्क्रामतः पूर्वद्वारादिका पूर्वनन्दापुष्करिणीपर्यवसाना अर्चनिका वक्तव्यता सैव सुधर्माया सभाया अप्यन्यूनातिरिक्ता वक्तव्या, ततः पूर्वनन्दापुष्करिण्या अर्चनिकां कृत्वा उपपातसभां पूर्वद्वारेण प्रविशति, प्रविश्य च मणिपीठिकाया देवशयनीयस्य तदनन्तरं बहुमध्यदेशभागे प्राग्वदर्चनिकां विदधाति, ततो दक्षिणद्वारे समागत्य तस्यार्चनिकां कुरुते, अत ऊर्ध्वमत्रापि सिद्धायतनवत् दक्षिणद्वारादिका पूर्वनन्दापुष्करिणीपर्यवसानाऽर्चनिका वक्तव्या, ततः पूर्वनन्दापुष्करिणीतोऽपक्रम्य ह्रदं समागत्य पूर्ववत् तोरणार्चनिकां करोति, कृत्वा पूर्वद्वारेणाभिषेकसभां प्रविशति, प्रविश्य मणिपीठिकायाः सिंहासनस्याभिषेकभाण्डस्य बहुमध्यदेशभागस्य च क्रमेण पूर्ववदर्चनिकां करोति ततोऽन्यत्रापि सिद्धायतनवत् दक्षिणद्वारादिका पूर्वनन्दापुष्करिणीपर्यवसानाऽर्चनिका वक्तव्यता, ततः पूर्वनन्दापुष्करिणीतः पूर्वद्वारेणालङ्कारिकसभां प्रविशति, प्रविश्य मणिपीठिकायाः सिंहासनस्य बहुमध्यदेशभागस्य च क्रमेण पूर्ववदर्चनिकां करोति, तत्रापि क्रमेण सिद्धायतनवत् दक्षिणद्वाराऽऽदिका पूर्वनन्दापुष्करिणीपर्यवसानाऽर्चनिका वक्तव्या, ततः पूर्वनन्दापुष्करिणीतः पूर्वद्वारेण व्यवसायसभां प्रविशति, प्रविश्य पुस्तकरत्नं लोमहस्तकेन प्रमृज्योदकधारया अभ्युक्ष्य चन्दनेन चर्चयित्वा वरगन्धमाल्यैरर्चयित्वा, पुष्पाद्यारोपणं धूपदानं च करोति । तदनन्तरं मणिपीठिकाया सिंहासनस्य बहुमध्यदेशभागस्य च क्रमेण पूर्ववदर्चनिकां करोति, तदनन्तरमत्रापि सिद्धायतनवत् दक्षिणद्वारादिका पूर्वनन्दापुष्करिणीपर्यवसाना अर्चनिका वक्तव्या, ततः पूर्वनन्दापुष्करिणीतो बलिपीठं समागत्य तस्य बहुमध्यदेशभागवत् अर्चनिकां करोति, कृत्वा चाभियोगिकदेवान् शब्दापयति, शब्दापयित्वा एवमवादीत्-'खिप्पामेव' इत्यादि सुगमं यावत् 'तमाणत्तियं पच्चप्पिणंति' नवरं शृङ्गाटकं शृङ्गाटकाऽऽकृतिपथयुक्तं त्रिकोणं स्थानं, त्रिकं-यत्र रथ्यात्रयं मिलति, चतुष्कं-चतुष्पथयुक्तं, चत्वरं-बहुरथ्यापातस्थानं, चतुर्मुखं-यस्माच्चतसृष्वपि दिक्षु पन्थानो निस्सरन्ति, महापथो-राजपथः शेषः सामान्यः पन्थाः प्राकारः प्रतीतः, अट्टालिका-प्राकारस्योपरि भृत्याश्रयविशेषाः, चरिका-अष्टहस्तप्रमाणो नगरप्राकारान्तरालमार्गः, द्वाराणि-प्रासादादीनां गोपुराणि-प्राकारद्वाराणि तोरणानि-द्वारादिसम्बन्धीनि आरमन्ते यत्र माधवीलतागृहादिषु दम्पत्यादित्यस्मादारामः, पुष्पादिमयवृक्षसङ्कुलमुत्सवादौ बहुजनोपभोग्यमुद्यानं, सामान्यवृक्षवृन्दं नगरासन्नं काननं, नगरविप्रकृष्टं वनम्, एकाऽनेकजातीयोत्तमवृक्षसमूहो वनखण्डं, एकजातीयोत्तमवृक्षसमूहो वनराजी, 'तए णं' मित्यादि, ततः सूर्याभदेवो बलिपीठं बलिविसर्जनं करोति, कृत्वा चोत्तरपूर्वा नन्दापुष्करिणीमनुप्रदक्षिणीकुर्वन् पूर्वतोरणेनानुप्रविशति, अनुप्रविश्य च हस्तौ पादौ प्रक्षालयति प्रक्षाल्य नन्दापुष्करिण्याः प्रत्यवतीर्य सामानिकादिपरिवारसहितः सर्वर्द्ध्या यावद् दुन्दुभिनिर्घोषनादितरवेण सूर्याभविमानं मध्यंमध्येन समागच्छन् यत्र सुधर्मा सभा तत्रागत्य तां पूर्वद्वारेण प्रविशति, प्रविश्य मणिपीठिकाया उपरि सिंहासने पूर्वाभिमुखो निषीदति ।

तए णं तस्स सूरियाभस्स देवस्स अवरुत्तरेणं उत्तरपुरच्छिमेणं दिसि भाए णं चत्तारि य सामाणियसाहस्सीओ चउसु भद्दासणसाहस्सीसु निसीयंति, तए णं तस्स पुरत्थिमिल्लेणं चत्तारि अग्गमहिसीओ चउसु भद्दासणेसु निसीयंति तए णं दाहिणपुरत्थिमेणं अब्भिंतरियपरिसाए अट्ठ देवसाहस्सीओ अट्ठसु भद्दासणसाहस्सीसु निसीयंति, तए णं तस्स सूरियाभस्स देवस्स दाहिणेणं मज्झिमाए परिसाए दस देवसाहस्सीओ दससु भद्दासणसाहस्सीसु निसीयंति, तए णं दाहिणपच्चत्थिमेणं बाहिरियाए परिसाए बारस देवसाहस्सीओ बारससु भद्दासणसाहस्सीसु निसीयंति, तए णं देवस्स पच्चत्थिमेणं सत्त अणियाहिवइणो सत्तहिं भद्दासणेहिं णिसीयंति, तए णं तस्स सूरियाभस्स देवस्स चउद्दि-

निरुवहयलिंगभेदे, गुरुगा कप्पंति कारणज्जाए ।
गेलयणलोयरोगे, सरीरवेतावडियमादी ॥ २६२ ॥

टीका—निरुपहतो नाम नीरोगस्तस्य लिङ्गभेदं कुर्वन् चतुर्गुरुका । अथवा-निरुपहतं नाम यथाजातलिङ्गं तस्य भेदं चतुर्गुरु। वृ०(व्याख्या अचेलग शब्दे १भाग १८८ पृष्ठे उक्ता ।)

पुनरपि तदेवाह—

जे भिक्खू वरणमंतं विवरणं करेइ करंतं वा साइज्जइ ।१०। जे भिक्खू विवरणं वरणमंतं करेइ करंतं वा साइज्जइ । ११ । जे भिक्खू णवए मे वत्थे लद्धे त्ति कट्टु तेल्लेण वा घएण वा वसाए वा णवणीएण वा मंखेज्ज वा भिलिंगेज्ज वा मंखंतं वा भिलिंगतं वा साइज्जइ ।१२। जे भिक्खू णवए मे वत्थे लद्धे त्ति कट्टु लोद्धेण वा कक्केण वा एहाणेन वा चुस्रेण वा उल्लोलेज्ज वा उव्वलेज्ज वा उल्लोलतं वा उव्वलंतं वा साइज्जइ । १३ । जे भिक्खू णवए मे वत्थे लद्धे त्ति कट्टु सीओदगवियडेण वा उसिणोदगवियडेण वा उच्छोलेज्ज वा पधोएज्ज वा उच्छोलंतं वा पधोयंतं वा साइज्जइ ॥ १४ ॥ जे भिक्खू णवए मे वत्थे लद्धे त्ति कट्टु बहुदिवसिएण तेल्लेण वा घएण वा वसाए वा णवणीएण वा मंखेज्ज वा भिलिंगेज्ज वा मंखंतं वा भिलिंगतं वा साइज्जइ १५,१६,१७। जेभिक्खू णवए मे वत्थे लद्धे त्ति कट्टु बहुदिवसिएण लोद्धेण वा कक्केण वा पउमेण वा पउमचुस्रेण वा वस्रेण वा उल्लोलेज्ज वा उव्वट्टेज्ज वा उल्लोलंतं वा उव्वट्टंतं वा साइज्जइ ॥ १८ ॥ नि० चू० १४ उ० ।

( पुनरपि निशीथचूर्णौ अष्टादशे उद्देशे चतुर्दशोद्देशकवत् वस्त्रादिग्रहणविधिरित्युक्तम् । )

" जो वत्थं किणति किणावेति कीयमाहु दिज्जमाणं पडिगाहेति "

इत्यादि सुत्ताणि पणुवीसं उच्चारेयव्वाणि ०जाव समत्तो उद्देसगो । एतेसिं अत्थो चोद्दसमे जहा , चोद्दसमे पादं भणितं तहा अट्ठारसमे वत्थं भाणियव्वं । नि० चू० १८ उ० । ( इति तत्र ' पात्र ' पदस्थाने वस्त्रपदोच्चारणपुरस्सरं सकलं सूत्रं पठितव्यम्, ततश्च पात्ररञ्जननिषेधाद् वस्त्ररञ्जननिषेध प्रतिफलति । )

पुनरपि तदेवाह—

अचेलगो य जो धम्मो, जो इमो संतरुत्तरो ।
देसिओ वद्धमाणेण, पासेण य महायसा ॥ २६ ॥
एककज्जपवन्नाणं, विसेसे किं नु कारणं ।
लिंगे दुविहे मेहावी, कह विप्पच्चओ न ते ॥ ३० ॥

लक्ष्मीवल्लभ्यामपि—

वर्धमानेन-चतुर्विंशतितमतीर्थकरेण यो धर्मोऽचेलक , प्रमाणोपेतजीर्णप्राय धवलवस्त्रधारणात्मक साध्वाचारो निर्दिष्ट । च-पुन पार्श्वजिनेन महायशसा त्रयोविंशतितमतीर्थकरेण योऽयं धर्म सान्तरुत्तर -पञ्चवर्ण बहुमूल्यप्रमाणरहितवस्त्रधारणात्मक. साध्वाचार , प्रदर्शित , हे मेधाविन् ! एककार्यप्रतिपन्नयो श्रीवीरपार्श्वयोर्विशेषे भेदे-किं कारणं-को हेतु ? । हे गौतम ! द्विविधे लिङ्गे-द्विप्रकारके साधुवेषे 'ते'-तव कथं किं विप्रत्ययो न उत्पद्यते-कथं संदेहो न जायते । उभौ अपि तीर्थकरौ मोक्षसाधकौ कथं ताभ्यां वेषभेद प्रकाशित' , इति कथं तवायं संशयो न भवति । उत्त० २३ अ० । ( इत्युपक्रम्य महावीरसमयादनन्तरं साधूनां श्वेतवस्त्रधारणमेवोचितमिति अचेलकपदेन सूचयता ग्रन्थकारेण तदेव व्याचक्षाणेन टीकाकारेण च स्थिरीकृतम् । )

आवश्यकवृत्तावपि—

अचेलकश्चोक्तन्यायेन अविद्यमानचेलक कुत्सितचेलको वा यो धर्मो वर्द्धमानेन देशित इत्यपेक्षत । तथा ' जो इमो त्ति ' पूर्ववत् । यश्चायं सान्तराणि वर्धमानस्वामिसत्कयतिवस्त्रापेक्षया कस्यचित्कदाचिन्मानवर्णविशेषत सविशेषाणि, उत्तराणि च महाधनमूल्यतया प्रधानानि प्रक्रमाद्वस्त्राणि यस्मिन्नसौ सान्तरुत्तरो धर्म. प्ररूपित । (इत्यादिना स्फुटीकृतमेतन्महावीरदेशनाप्रवृत्ताना साधूनां श्वेतमानोपेतवस्त्रधारणमेवोचितमिति दिक् । ) आव० ।

भगवतीसूत्रेऽपि—

लिंगंतरेहिं । भ० ।

तद्वृत्तावपि-

लिङ्गं साधुवेषस्तत्र च यदि मध्यमजिनैर्यथालब्धवस्त्ररूपं लिङ्ग-साधूनामुपदिष्टं तदा,किमिति प्रथमचरमजिनाभ्यां सप्रमाणधवलवसनरूपं तदेवोक्त सर्वज्ञानामविरोधिवचनत्वादिति ? प्रश्ने ऋजुजडवक्रजडऋजुप्रज्ञशिष्यानाश्रित्य भगवता तस्योपदेशस्तथैव तेषामुपकारसंभवादिति । भ० ।

कल्पसूत्रेऽपि किरणावलीवृत्तौ-

अचेलककल्पाधिकारे वीरजिनसाधूनां श्वेतमानाद्युपेतवस्त्राधारित्वेनाचेलकत्वमित्याद्युक्तम् । पुनस्तत्रैव श्रीऋषभवीरतीर्थयतीना च सर्वेषामपि श्वेतमानोपेतजीर्णप्रायवस्त्रधारित्वेनाचेलकत्वमेव ।

कल्पकिरणावलीवृत्ते प्रशस्तौ—

तेषा पट्टे संप्रति, विजयन्तो हीरविजयसूरीशा. ।
ये श्वेताम्बरयतिना, सर्वेषामाधिपत्यभृत. ॥ ६ ॥
इति जैनसाधुना श्वेतवस्त्रमेवोपयुज्यते ।

विनयविजयकृतकल्पसुबोधिकायामपि—

प्रथमकल्पे श्वेतमानोपेतवस्त्रधारित्वेन साधूनामचेलकत्वमर्गाति । तथा हेमविमलसूरिकृतटब्बा-उपरपण्डितोपाध्यायकृतकल्पसूत्रटब्बा-बालावबोधप्रमुखेषु बहुषु ग्रन्थेषु सर्वत्र अचेलकत्वं श्वेतमानोपेतवस्त्रधारित्वमिति स्थिरीकृतम् ।

विवेकविलासेऽपि अष्टमोल्लासे—

रजोहरणधारी भैक्ष—भुजो लुञ्चितमूर्धजा ।
श्वेताम्बरा क्षमाशीला, नि सङ्गा जैनसाधव । १ ।

संबोधसत्तरीग्रन्थेऽपि—

" सेयंबरो य आसंबरो य बुद्धो य अहव अन्नो वा ",इत्यादि

१—पुस्तकान्तरे 'पडिग्गहं ' इति ।

अनुयोगद्वारसूत्रेऽपि—

पांडुपाउरणा । अनु० ।

आवश्यकनिर्युक्तौ च-

सुक्कंबरा य समणा, निरंबरा मज्झ धाउरत्ताइं ।

हुंतु अ मे वत्थाइं, अरिहोऽम्हि कसायकलुसमई ॥४७॥

वृत्तावपि—

शुक्लान्यम्बराणि येषां ते शुक्लाम्बराः शुक्लाम्बराश्च श्रमणाः । तथा निर्गतमम्बरं येभ्यस्ते निरम्बरा-जिनकल्पिकादयः । 'मज्झि' त्ति मम च पते श्रमणाः । पतेन तत्कालोत्पन्नता-पसश्रमणव्युदास , धातुरक्तानि भवन्तु मम वस्त्राणि किमि त्यहोऽस्मि—योग्योऽस्मि तथामेव, कषायैः कलुषा मतिर्यस्य सोऽहं कषायकलुषमतिरिति गाथाक्षरार्थः । आव० ।

कल्पकिरणावल्यामपि मरीचिभवप्रकरणे—

तथा शुक्लाम्बराः श्रमणाः निरम्बराश्च जिनकल्पिकादय कषायाकलुषितमतयो यतयः, नाहमेवमतो मे कषायकलुषि-तस्य धातुरक्तानि वस्त्राणि भवन्तु । कल्प० ।

सेयंबिया-श्वेताम्बिका-स्त्री० । केकयजनपदार्धराजधान्याम् , प्रज्ञा० १ पद । सूत्र० । उत्त० । कल्प० । आ० चू० । आ० म०, रा० । आ० क० । प्रव० ।

सेयंस- श्रेयस्-त्रि० । अतिशयेन प्रशस्ये, स्था० ४ ठा० ४ उ० । श्रेयांस-पुं० । बाहुबलिसुतसोमप्रभसुते, कल्प० १ अधि० ७ क्षण । भगवत्प्रतिमादर्शनेन अस्य सामायिकलाभः । आव० ४ अ० ।

सेयंसा-श्रेयांसा-स्त्री० । विदिशि रुचकनिवासिन्या तृतीया-यां विद्युत्कुमारीमहत्तरिकायाम् , स्था० ४ ठा० १ उ० ।

सेयकंठ- श्वेतकण्ठ-पुं० । भूतानन्दनागकुमारेन्द्रस्य महिषानी-काधिपतौ , स्था० ५ ठा० १ उ० ।

सेयकणवीर-श्वेतकणवीर-पुं० । श्वेतवर्णपुष्पे कणवीरे, रा० ।

सेयचंदण-श्वेतचन्दन-न० । श्रीखण्डे, प्रश्न० ५ संव० द्वार ।

सेयण-स्वेदन-न० । सप्तधान्यादिभिः स्वेदोत्पादने , आ० १ श्रु० १३ अ० ।

सेयणग-सेचनक-पुं० । चम्पायां कूणिकस्य महाराजस्य स्व-नामख्याते गन्धहस्तिनि, भ० ७ श० ६ उ० । नि० । आव० । "सेयणगस्स का उप्पत्ती ?, एगत्थ वणे हत्थिजूहं परिवसइ, तम्मि जूहे एगो हत्थी जाए जाए हत्थिचेल्लए मारेइ , एगा गुव्विणी हत्थिणिगा, सा य ओसरित्ता एकल्लिया चरइ, अ-ण्णया कयाइ तणपिंडिय सीसे काऊण तावसासमं गया , तेसिं तावसाणं पाएसु पडिया, तेहिं णायं सरणागया वराई । अण्णया तत्थ चरंती वियाया पुत्तं, हत्थिजूहेण समं चरंती छिड्डेण आगंतूण थणं देइ, एवं संवड्ढइ, तत्थ तावसपुत्ता पु-प्फजाईओ सिंचंति, सो वि सोंडाए पाणियं नेऊण सिंचइ ताहे नामं कयं सेयणओ त्ति, संवड्ढिओ मयगलो जाओ, ताहे तेण जूहवई मारिओ, अण्णया जूहं पडिवण्णो, अण्णया तेहिं तावसेहिं राया गामं दाहिति त्ति मोयगेहिं लोभित्ता गयगिहं नीओ, णयरं पवेसेत्ता बद्धो सालाए, अण्णया कुलवती तेण चेव पुव्वब्भासेण दुक्को किं पुत्ता ! सेयणग ! ओच्छुग च मे पणामेइ , तेण सो मारिओ , अण्णे भणंति—जूहवइत्तणे ठिएण मा अण्णाधि वियाति त्ति ते नायसउडया भग्गा तेहिं तावसेहिं रुट्ठेहिं सेणियस्स रण्णो कहियं, ताहे सेणिएण गहिओ, एसा सेयणगस्स उप्पत्ती । पुव्वभवो त-स्स—एगो धिज्जाइओ जन्नं जयइ, तस्स दासो तेण जन्नवाडे ठविओ, सो भणइ— जइ सेसं मम देहि तो ठामि इयरहा ण, एवं होउ त्ति सो वि ठिओ, सेसं साहूण देइ, देवाउयं निबद्धं देवलोगाओ चुओ सेणियस्स पुत्तो नंदिसेणो जाओ धिज्जा-इओऽवि संसारं हिंडित्ता सेयणगो जाओ । जाहे किर नंदिसे-णो विलग्गइ ताहे ओहयमणसंकप्पो भवइ, चिमणो होइ, ओहिणा जाणइ, सामी पुच्छिओ, एवं सव्वं कहेइ, एस से-यणगस्स पुव्वभवो । " आव० ४ अ० ।

सेयणवह-सेचनपथ-पुं० । सिक्तमार्गे, आचा० २ श्रु० २ चू० ।

सेयपड-श्वेतपट-पुं० । श्वेताम्बरे जैने, नि० चू० ३ उ० ।

सेयप्पभ-श्वेतप्रभ-त्रि० । श्वेता—उज्ज्वला श्रेया या आश्रय-णयोग्या प्रभा कान्तिर्यस्य स तथा । उज्ज्वलकान्तौ, कल्प० १ अधि० ३ क्षण । रत्ना० ।

सेयबन्धुजीव-श्वेतबन्धुजीव-पुं० । श्वेतवर्णपुष्पे वनस्पति-भेद, रा० ।

सेयभद्द-श्वेतभद्र-पुं० । यक्षभेदे, प्रज्ञा० १ पद ।

सेयमलपुच्चड-श्वेतमलपुच्चट-न० । दुर्गन्धिस्वेदमलचिग-चिगायमाने शरीरे, तं० ।

सेयमाल-श्वेतमाल-पुं० । सुषमसुषमाभाविनि कल्पवृक्षभे-दे, जं० २ वक्ष० ।

सेयविया-श्वेतविका-स्त्री० । केकयजनपदस्य स्वनामख्यातायां प्रधाननगर्याम् , विशे० ।

सेयसच्चपरक्कम-श्रेयःसत्यपराक्रम-पुं० । श्रेयसि अतिप्रशस्ये सत्ये संयमे पराक्रम सामर्थ्यं,यस्यासौ श्रेय सत्यपराक्रम । स्यने, उत्त० १८ अ० ।

सेयसरिसव-श्वेतसर्षप-पुं० । श्वेतवर्णे सर्षपभेदे, चत्वारि स-मधुरतृणफलान्येक श्वेत सर्षप । सुवर्णमानभेदे, स्था० ८ ठा० ३ उ० ।

सेयापीय-श्वेतापीत-त्रि० । रजतसुवर्णमये श्वेतपीतवर्णे, भ० ६ श० ३४ उ० । विपा० ।

सेयावंग-श्वेतापाङ्ग-त्रि० । सितनेत्रप्रान्ते, आ० १ श्रु० ३ अ० ।

सेयावण्ण-स्वेदापन्न-त्रि० । जातस्वेदे, आ० १ श्रु० ३ अ० ।

सेयाल-एष्यत्काल-पुं० । ग्रहणोत्तरकाले, भ० १ श० १ उ० ।

सेयासेय-श्वेताश्वेत-न० । कनकपुरनगरे स्वनामख्याते उद्याने, विपा० २ श्रु० ६ अ० । ( अस्य वक्तव्यता ' धणवइ ' शब्दे चतुर्थभागे गता । )

सेयाऽसोग-श्वेताशोक-पुं० । श्वेतवर्णपुष्पे वृक्षविशेषे, रा० ।

सेर-स्मेर-त्रि० । 'अधो म-न-याम् ॥८।२।७८॥' मनया संयुक्तस्य अधोवर्तमानस्य लुग् भवति । इति मस्य लुक् । स्मिते, प्रा० २ पाद ।

सेरटी-सेरटी-स्त्री० । भुजसर्पिणीभेदे, जी० २ प्रति० ।

सेरपयारि-स्वैरप्रचारिन्-पुं० । स्वच्छन्दविहारिणि, आ० १ श्रु० १८ अ० ।

सेरिणी-स्वैरिणी-स्त्री० । स्वच्छन्दाचारिण्यां नर्तक्याम्, आचा० १ श्रु० २ अ० ३ उ० ।

सेरियय-सेरितक-पुं० । गुल्मभेदे, प्रज्ञा० १ पद ।

सेरी-सेरी-स्त्री० । देशीवचनमेतत्, यन्त्रमय्यां नर्तक्याम्, व्य० २ उ० ।

सेरीस-सेरीश-पुं० । स्वनामख्याते नगरे, यत्र देवेन्द्रसूरि. कायोत्सर्गेनकार्षीत् । व्य० ३ उ० ।

सेल-शैल-पुं० । शिलाया विकार. शैल । स्था० ३ ठा० ३ उ० । श्लक्ष्णरूपे पाषाणे, स्था० ४ ठा० ३ उ० । विशे० । शिखरहीनपर्वते, प्रज्ञा० २ पद । मुण्डपर्वते. भ० ५ श० १ उ० । आ० क० । प्रश्न० । हिमवदादिपर्वतेषु, स० । विशे० । नं० । कृष्णवासुदेवसमकालिके नन्दिपुरराजे, ज्ञा० २ श्रु० १ वर्ग १ अ० । पर्वतगृहे, कल्प० १ अधि० ४ क्षण ।

सेलग-शैलक-पुं० । अश्वरूपधारके स्वनामख्याते यक्षे, रत्नद्वीपदेवतातुभितमाकन्दीदारकरक्षको हि स. । ज्ञा० १ श्रु० ६ अ० । ध० र० । स्वनामख्याते शैलकपुरराजे, ज्ञा० १ श्रु० ५ अ० । (थावच्चापुत्त' शब्दे चतुर्थभागे ३६८ पृष्ठे कथा ।) तद्वक्तव्यताप्रतिपादके पञ्चमे ज्ञाताध्ययने च । आव० १ अ० । स्था० । ज्ञा० ।

सेलगराय-शैलकराज-पुं० । नेमिनाथशिष्यस्यान्तिके श्रमणोपासकधर्मप्रतिपन्ने शैलकपुरराजे, ग०१ अधि० । पञ्चा० ।

सेलगिह-शैलगृह-न० । पर्वतमुत्कीर्यकृते गृहे, भ० २ श० ८ उ० ।

सेलगुहा-शैलगुहा-स्त्री० । गिरिकन्दरायाम्, शैलगुहायां तपस्यन्तं महातपस्विनं पश्यतु । हा० २३ अष्ट० ।

सेलगोलय-शैलगोलक-पुं० । वृत्ते पाषाणगोलके, सूत्र० २ श्रु० २ अ० ।

सेलघर-शैलगृह-न० । पर्वतमुत्कीर्यकृते गृहे, स्था० ४ ठा० १ उ० । कल्प० ।

सेलपाय-शैलपात्र-न० । पाषाणपात्रे, आचा० २ श्रु० १ चू० ६ अ० १ उ० ।

सेलपुर-शैलपुर-न० । स्वनामख्याते, नगरभेदे, वृ० १ उ० ३ प्रक० ।

सेलयपुर-शैलकपुर-न० । शैलकराजपर्यावासभूते नगरे, ज्ञा० १ श्रु० ५ अ० ।

सेलयय-शैलकज-पुं० । वत्सगोत्रान्तर्गतगोत्रविशेषप्रवर्तके ऋषौ, स्था० ७ ठा० ३ उ० ।

सेलवाल-शैलपाल-पुं० । धरणभूतानन्दयोर्नागकुमारेन्द्रयोर्लोकपाले, स्था० ४ ठा० १ उ० । कालोदाय्यादिष्वन्यतमे यूथिके भ० ७ श० १० उ० ।

सेलवियारि-शैलविचारिन्-पुं० । ऋषभदेवपुत्राणामेकाशीतितमे पुत्रे, कल्प० १ अधि० ७ क्षण ।

सेलसंकड-शैलसंकट-पुं० । पर्वतैः संकीर्णे, स० १४६ सम० ।

सेलसुआ-शैलसुता-स्त्री० । पार्वत्याम्, को० ।

सेला-शैला-स्त्री० । सप्तमानां नरकपृथिवीनां मध्ये तृतीयस्या नरकपृथिव्याम्, स्था० ७ ठा० ३ उ० । भुजसर्पिणीभेदे, जी० २ प्रति० ।

सेलियघर-शैलिकगृह-न० । पाषाणष्टकादिभि कृते गृहे, व्य० ४ उ० ।

सेलु-शैलु-पुं० । श्लेष्मान्तके कफे, प्रज्ञा० १ पद ।

सेलूस-शैलूष-पुं० । स्वनामख्याते अन्यथावादिनि नटे, शैलूषा इवान्यथावादिनोऽन्यथाकारिणः । आचा० १ श्रु० २ अ० ३ उ० ।

सेलेस-शैलेश-पुं० । मेरौ, विशे० । स्था० । आ० चू० ।

सेलेसिपडिवण्णग-शैलेशीप्रतिपन्नक-पुं० । अयोग्यावस्थां प्राप्ते, प्रज्ञा० २२ पद ।

सेलेसिसत्तागा-शैलेशीसत्ताका-स्त्री० । शैलेशी-अयोग्यवस्थानस्या सत्ता यासां प्रकृतीनां ताः शैलेशीसत्ताकाः । तथाविधासु कर्मप्रकृतिषु क० प्र० १० प्रक० । ताश्च द्विधा तद्यथा-उदयवत्य., अनुदयवत्यश्च । तत्रोदयवत्यो मनुष्यगतिमनुष्यायु पञ्चेन्द्रियजातित्रससुभगादेयपर्याप्तवादरयशःकीर्तितीर्थकरोच्चैर्गोत्रसातासातान्यतरवेदिनीयरूपा द्वादश तासां प्रकृतीनां तेनायोगिकालेन तुल्यानि स्पर्द्धकानि एकैकेनाधिकानि भवन्ति । क० प्र० १० प्रक० ।

सेलेसी-शैलेशी-स्त्री० । शैलेश इव मेरोरिव स्थिरता शैलेशी । दर्श० ४ तत्त्व । चतुर्दशगुणस्थानस्थायित्वे, उत्त० २६ अ० । विशे० । आचा० । कर्म० । औ० । आ० म० । आ० चू० । ('अकम्मया' शब्दे प्रथमभागे एतत्फलमुक्तम् ।)

शैलेशीशब्दव्युत्पत्तिमाह—

सेलेसो किल मेरू, सेलेसी होइ जा य तदचलया ।
होउं व असेलेसो, सेलेसी होइ थिरयाए ॥ ३०६५ ॥
अहवा सेलु व्व इसी, सेलेसी होइ सोऽतिथिरयाए ।
से व असेलेसी होइ, सेलेसी हो अलोवाओ ॥३०६६॥
सीलं व समाहाणं, निच्छयओ सव्वसंवरो सो य ।
तस्सेसो सीलेसो, सेलेसी होइ तदवत्था ॥ ३०६७ ॥

शैलेशो—मेरुस्तस्येवाऽचलता स्थिरताऽस्यामवस्थायां सा शैलेशी । अथवा—अशैलेशः शैलेश इव स्थिरतया भवति शैलेशीभवति, 'भवति' इत्यध्याहार. । अथवा-प्राकृतसंज्ञामाश्रित्य स्थिरतया 'सेलु व्व इसी महरिसी' तस्य-सम्बन्धिनी स्थिरतावस्थाऽप्युपचारेण शैलेशी । अथवा-प्राकृतत्वादेव " से भिक्खू वा भिक्खुणी वा " इत्यादिन्यायेन 'सेत्ति सो महरिसी' अलेश्यो-लश्यारहितो भवति यस्यामवस्थायां सा शैलेशी, अकारलोपादिति । अथवा—शीलं समाधानं, तच्च निश्चयेन प्रकर्षप्राप्तसमाधानरूपत्वात् सर्वसंवर, ततस्तस्य सर्वसंवररूपस्य शीलस्येशः शीलेशस्तस्येयमवस्था शैलेशीति । विशे० ।

सेलेसीकरण-शैलेशीकरण-न०। शैलेशो मेरुस्तस्येव स्थिरता साम्यावस्था शैलेशी। यद्वा-सर्वसंवरः शीलं तस्य य ईश शीलेश तस्येयं योगनिरोधावस्था शैलेशी तस्याः करणम्। पूर्वविरचितशैलेशीसमयसमानगुणश्रेणीकस्य वेदनीयनामगोत्राख्याघातिकर्मत्रितयस्यासंख्येयगुणया श्रेण्या आयुःशेषस्य तु यथास्वरूपस्थितया श्रेण्या निर्जरणे, कर्म० २ कर्म०। प्रव०।

सेलेसीमद्धा-शैलेश्यद्धा-स्त्री०। शैलेशीकाले, औ०।

सेलोदाइ-शैलोदायिन्-पुं०। राजगृहनगरस्य शिलापट्टकस्यादूरे सामन्तपरिवास्यन्ययूथिकभेदे, भ० ७ श० १० उ०।

सेलोवट्ठाण-शैलोपस्थान-न०। पाषाणमण्डपे, आचा० २ श्रु० १ चू० २ अ० २ उ०।

सेलोवट्ठाणकम्मंत-शैलोपस्थानकर्मान्त-न०। स्थानविशेषे, यत्र पाषाणपरिकर्म क्रियते। आचा० २ श्रु० १ चू० १ अ० ११ उ०।

सेलोवट्ठाणघर-शैलोपस्थानगृह-न०। पाषाणमण्डपे, स्था० ५ ठा० १ उ०।

सेल्ल-शल्य-न०। बालमये कुशिरे, सेल्लं बालमयं कुसिरं तं खारं वुज्जति किं खारो संजाओ न वि तत्थ असंकिलिट्ठ कम्म भणियं। नि० चू० १ उ०।

सेल्लग-शल्यक-पुं०। भुजपरिसर्पजन्तुभेदे, यच्चर्मकर्त्तलकैः कङ्कणकाः विधीयन्ते, प्रश्न० १ आश्र० द्वार।

सेव-शैव-त्रि०। शिवो भक्तिरस्येति। पाशुपते, 'शैवो द्वादशवर्षाणि, व्रत कृत्वा ततः परम्। यद्यसक्तस्त्यजेद्वापि, योगं कृत्वा वनेश्वरे॥ १॥' विशे०। आचा०। आ० म०। शैवोदीक्षातः एव मोक्ष इत्येवं व्यवस्थितताः। सूत्र० १ श्रु० १ अ० ३ उ०। (एतद्वक्तव्यता 'कडवाइ' शब्दे तृतीयभागे २०५ पृष्ठे उक्ता।) शिवनिर्मिते व्याकरणभेदे, कल्प० १ अधि० १ क्षण।

सेवग-सेवक-त्रि०। भजके, प्रश्न० २ आश्र० ४ द्वार। अनुष्ठानरते, पञ्चा० १२ विव०। कारके, नि० चू० १ उ०। चोरभेदके, चू० ३ उ०। सेवकोऽशेषकर्ममोक्षनाय परेतो भवति। सूत्र० १ श्रु० १३ अ०।

सेवण-सेवन-न०। पर्युपासने, उत्त० ३५ अ०। भजने, स्था० ४ ठा० २ उ०। प्रव०। आव०।

सेवणा-सेवना-स्त्री०। भजनायाम्, विशे०। सूत्र०। आश्रयणे, पञ्चा० १६ विव०। उपभोगे, आचा० १ श्रु० ६ अ० १ उ०। विशोधौ, नि० चू० १ उ०।

सेवणाहिगार-सेवनाधिकार-पुं०। सेवनायां चौर्यादिसेवना योर्मधिकारो नियोग सेवनाधिकारः। गौणमैथुन, अब्रह्मप्रवृत्तो हि चौर्याद्यनर्थसेवास्वधिकृतो भवति, आह च- 'सर्वेऽनर्था विधीयन्ते, नरैरर्थैकलालसैः। अर्थस्तु प्रार्थ्यते प्रायः, प्रेयसीप्रेमकामिभिः॥ १॥' प्रश्न० ४ आश्र० द्वार।

सेवमाण-सेवमान-त्रि०। कुर्वाणे, उत्त० १२ अ०। सूत्र०।

सेवा-सेवा-स्त्री०। पर्युपासनायाम्, अभ्युत्थानदण्डग्रहणासनदानादौ, नि० चू० १ उ०। शक्रस्य देवेन्द्रस्याग्रमहिषीषु द्वितीयायामग्रमहिष्याम्, भ० १० श० ५ उ०।

सेवाल-शैवाल-न०। तन्त्वाकारे जलरुहभेदे, प्रसिद्धं चैतत् जले भवति। प्रज्ञा० १ पद। शैवाले जलोपरि मलरूपम्। आचा० १ श्रु० २ अ०। आ० म०। अष्टापदपर्वतस्य द्वितीयमेखलायां पञ्चशतीतापसयूथाधिपतौ गौतमप्रव्राजिते तापसे, उत्त० १० अ०। पञ्च० दे० ना० ८ वर्ग ४३ गाथा।

सेवालोदाइ-शैवालोदायिन्-पुं०। कालोदाय्यादिषु अन्ययूथिकेष्वन्यतमे यूथिके, भ० ७ श० १० उ०।

सेविय-सेवित-त्रि०। जुष्टे, क्षिप्ते च। स्था० ४ ठा० २ उ०। प्रश्न०।

सेवियव्व-सेवितव्य-त्रि०। सेवनीये, उत्त० ३२ अ०।

सेस-शेष-त्रि०। उक्तादन्यस्मिन्, पञ्चा० १६ विव०। प्रज्ञा०। उत्त०। स्था०। आव०। आचा०। उद्वलनोमेक्रमाभिधानेऽवसरे, यत्प्रागभिहितं चरमखण्ड तत्र शेषमित्युच्यते। क० प्र०। अल्पे कृते, आ० म० १ अ०। नागराजे, नी० ३२ कल्प।

सेसदविया-शेषद्रव्या-स्त्री०। गृहोपयुक्तशेषद्रव्येण कृता शेषद्रव्या। लेपोपासकस्य गृहपतेः सम्बन्धिन्या नालन्दाया पूर्वोत्तरस्यां दिशि उदकशालायाम्, सूत्र० २ श्रु० ७ अ०। (अस्या विशेषः 'पेढालपुत्त' शब्दे पञ्चमभागे उक्तः)

सेसमइ-शेषमति-स्त्री०। पूर्वरुचकवास्तव्याया दिक्कुमारीमहत्तरिकायाम्, द्वी०।

सेसव-शैशव-न०। शिशोरवस्थायाम्, आचा० १ श्रु० २ अ० १ उ०। सूत्र०।

शेषवत्-न०। अनुमानभेदे, अनु० ('अणुमाण' शब्दे प्रथमभागे ४०३ पृष्ठे व्याख्यातमेतत्।)

सेसवई-शेषवती-स्त्री०। दक्षिणरुचकवास्तव्याया दिक्कुमारीमहत्तरिकायाम्, स्था० ८ ठा० ३ उ०। औ० म०। ति०। आव०। आ० क०। आ० चू०। ज०। सप्तमवासुदेवमातरि, आव० १ अ०। स०। भगवतो महावीरस्य दौहित्र्यां जमालिपुत्र्याम्, आचा० २ श्रु० ३ चू०। आ० चू०। कल्प०।

सेसिंद-शेषेन्द्र-पुं०। दर्वीकरसर्पभेदे, प्रज्ञा० १ पद।

सेसिय-शेषित-त्रि०। अल्पीकृते, 'कम्म सेसियमट्ठहा' 'सेसियमट्ठह' त्ति-ज्ञानावरणाद्यष्टप्रकारं पूर्वं 'से' तस्य सितमिति ब्रह्म अथवा-'सेसियं' ति अनाभोगनिर्वर्तितयथाप्रवृत्तकरणेन सम्यग्ज्ञानादुपायतश्च क्रमेण शेषितं-शेषं कृतं-स्थित्यनुभवादिभिरल्पीकृतम्। विशे०।

सेसीकय-शेषीकृत-त्रि०। स्थित्यादिभिरल्पीकृते, आ० म० १ अ०।

सेह-सेध-पुं०। 'सिध' संराद्धाविति वचनात्, सेध्यते-निष्पाद्यते यः स सेधः। शिष्ये, स्था० ३ ठा० २ उ०।

शैक्ष-पुं०। शिक्षां पाठयतीति शैक्षः। स्था० ३ ठा० २ उ०। अभिनवप्रव्रजिते, स्था० ५ ठा० १ उ०। सूत्र०। प्रति०। 'तिहि उत्तराहिं गोहिराहिं, कुट्ठा उ सेहनिक्खमणं। सेहसंट्टा-

घणं कुज्जा, अणुण्णा गणिवायए ' ॥ २६ ॥ ८७२ ॥ वृ० प० । आचा० । लघुमाघौ, कल्प० ३ अधि० ६ क्षण । नि० चू० । अल्पपर्याये. दशा० ३ अ० । प्रथमकल्पिके साधौ, ध० ३ अधि० । शिक्षार्हे साधौ, ध० ३ अधि० । ग० । वृ० ।

णश्--धा०। अदर्शने, " णशेर्णिरणास-णिवहावसेह-पडिसा-सेहावहरा ॥८।४।१७८॥ इति णश्धातोः सेह इत्यादेश । सेहइ । नश्यति । प्रा० ४ पाद ।

सेहट्ठवणाकप्प-शैक्षस्थापनाकल्प--पु०। अभिनवशिष्यप्रव्राजनायाम्, सेहट्ठवणाकप्पो नाम अट्ठारसपुरिसेसुं वीसुं-इत्थीसुं पुव्वभणियजीवदवियकप्पे एए जो पव्वावेइ सो सेहट्ठवणाकप्पो । पं० चू० २ कल्प ।

सेहण--शिक्षण--न०। ग्रहणासेवनाभ्यासे, सूत्र० १ श्रु० २ अ० १ उ० ।

सेहणिक्खमण- शैक्षनिष्क्रमण--न०। शिष्यस्य प्रव्रजने,द०प०।

पढमी पञ्चमि दसमी, पन्नरसिकारसीवि य तहेव ।
एएसु य दिवसेसुं सेह निक्खमणं करे । ८ । ८५४ । द०प०।
नंद जए य पुन्ने, सेहनिक्खमणं करे ।।१०। ८५५ ;द०प०।
तिहिं उत्तराहिं, रोहिणीहिं, कुज्जा उ सेहनिक्खमणं ।
सेहोवट्ठावणं कुज्जा,अणुन्ना गणिवायए।२६।८७२।द०प०

सेहणिप्फेडण-शैक्षनिष्फेटन--न०। शिष्यापहारे, द० प०।

पढमी पंचमि दसमीए, पन्नरसिकारसी वि य ।
तह एएसु दिवसेसुं, सेहणिप्फेडणं करे । द० प० ।

सेहणिप्फेडिया--शैक्षनिष्फेटिका--स्त्री०। शैक्षकस्य दीक्षितुमिष्टस्य निष्फेटिका-अपहरणम् । तद्योगाद्यो मातापित्रादिभिरननुज्ञातोऽपहृत्य दीक्षितुमिष्यते सोऽपि शैक्षनिष्फेटिक । ग० १ अधि० । दीक्षितुमिष्टस्यापहरणे, ध० ३ अधि० । नि० चू० । तदपहरणकर्तरि, त्रि० । ग० १ अधि० ।

इयाणिं सेहणिप्फेडिता—

ततियव्वयाइयारे, णिप्फेडगतेणियं वियाणाहि ।
अतिसेसियम्मि भयणा,अमूढलक्खे य पुरिसम्मि ।४३४।

सेहणिप्फेडियं जो करेति से ततियं वयं अदिण्णादाणवेरमणं अतिचरति, तं केरिसं कह वा णिप्फेडतो ततियव्वतं अतिचरति ? ।

गाहा—

अपडुप्पणो वालो, वरिट्ठवरिसूणो अहव अणिविट्ठो ।
अम्मापितुअविदिण्णो,ण कप्पती तत्थ वाऽण्णत्थ।।४३५।।

अपडुप्पन्नो अट्ठवरिसो किं वाऽधिको वा अट्ठवरिसूणं वा सोलसवरिसूणं वा अवंजणं जातं, अहवा—अणिविट्ठं अविवाहितं तहप्पगारं अम्मापितिअविदिन्नं तत्थ वा गामे अन्नत्थ वा ण कप्पति पव्वावेतुं । अह णिप्फेडितो तं णिप्फेडगतेण वियाणाहि । इमो एत्थ तेणगविगप्पो ।

गाहा—

तेणे य तेणतेणे, अपडिच्छग पडिच्छगे य णायव्वं ।
एते तु सेहणिप्फे-डियाएँ चत्तारि उ विगप्पा ।।४३६।।

इमं वक्खाणं । गाहा—

जो तं उप्पामयए, से तेणे होति लोगउत्तरिते ।
भिक्खातिए गतंमि उ, हरमाणो तेणतेणो उ ।।४३७।।

अपडुप्पन्नं बालं हरंतो तेणो, से तेणो तं सेहं जाहिं गामादियाए ठवेत्ता अप्पणा भिक्खस्स पविट्ठो, एत्थंतरे जो तं सेहं अण्णो उप्पासेत्ता हरति सो तेणतेणो (नि० चू०) (प्रतिच्छकविषय. 'पडिच्छग' शब्दे पञ्चमभागे गत. ।)

सेहनिप्फेडियं करेंतस्स चउगुरुं आणादिया य दोसा,इमे य।

गाहा—

अम्मापियरो कस्स वि,विपुलं घेत्तूण अत्थसारं तु ।
रायादीणं कहिए,कड्ढणम्मि य गिण्हणादीया ।।४३९।।

कंठा ।

गाहा—

विपरिणमेज्जा सन्नी, केई संबंधिणो भवे तस्स ।
विपहिणताए धम्मं, सुएज्ज कुज्जा व गहणादी ।।४४०।।
णिप्फेडणेँ सेहस्स उ,सुयधम्मो खलु विराहितो होति ।
सुयधम्मस्स व लोवा, चरित्तलोवं वियाणाहि ।।४४१।।

सेयमवहडं नाउं सन्नी विपरिणमेज्जा सेहस्स वा संबंधी ते य विपरिणता धम्मं सुएज्जा, रायमादिएहिं वा गहणादि कारवेज्जा ।

गाहा--

आयरिय उवज्झाया, कुलगणसंघो य धम्मो य ।
सव्वेऽवि परिच्चत्ता, सेहं णिप्फेडयंतेण ।। ४४२ ।।

रायादि रुट्ठो स तेसिं कडुगमहं करेज्ज तम्हा मातापियरेण अदत्ता सेहणिप्फेडिया ण कायव्वा । बितियपदेण या करेज्जा । अतिसेसगंमि भयणेति अस्य व्याख्या ।

गाहा—

होहिति जुगप्पहाणो, दोसा वि न केवि तत्थ होहिंति ।
तेणऽतिसेसा दिक्खे, अमोहहत्थे य तत्थेव ।।४४३।।

जो ओहिमादीअतिसएण जाणति एस नित्थारगो जुगप्पहाणो होहिति,दोसा य ण केऽवि भविस्संति तेण अतिसयी दिक्खति । अह जाणति होहिंति दोसा तो ण पव्वावेति । एस भयणा 'अमूढलक्खो व आयरिओ'अमोहहत्थो जं जं पव्वावेति सो अवस्सं णित्थरति न य केऽवि दोसा उप्पज्जंति तं च नान्यत्र नयंतीत्यर्थः । सेहणिप्फेडिता अट्ठारसपुरिसु त्ति गतं । नि० चू० ११ उ० । पं० भा० । पं० चू० । तोसलिपुत्राऽऽचार्येणार्यरक्षिताचार्यश्चोरित इति प्रथमशैक्षनिष्फेटितेति । आ० क० १ अ० । ('अणवट्ठप्प' शब्दे प्रथमभागे शैक्षचौर्यमुक्तम् ।)

सेहभूमि-शैक्षभूमि- स्त्री०। शिष्यस्य महाव्रतारोपणकाले,व्य०।

तओ सेहभूमिओ पण्णत्ताओ,तं जहा-सत्तराइंदिया, चाउम्मासिया,छम्मासिया य। छम्मासिया उक्कोसिया,चाउम्मासिया मज्झिमिया, सत्तराइंदिया जहन्निया ।। (सू० १५)

अस्य संबन्धमाह—

तुल्लाउ भूमिसंखा,ठिया व ठावेंति ते इमे हुंति ।
पडिवक्खतो व सुत्तं,परियाए दीहहस्से य ।।५०।।

तुल्या भूमिसंख्या शैक्षकाणामिति कृत्वा, अथवा—पूर्व-

सूत्रे स्थविरा उक्तास्ते च स्वयं स्थित्वा अन्यान् स्थापयन्ति ते चाप्येवं स्थाप्यमाना इमे वक्ष्यमाणा भवन्तीति तत्प्रतिपादनार्थमिदं सूत्रम्। अथवा-प्रतिपक्षत इदं सूत्रमापतितम्। तद्यथा-पूर्वसूत्रे स्थविरा ,तेषां च प्रतिपक्षा शैक्षा ,यदि वा-स्थविराणां दीर्घ पर्याय , शैक्षकाणां शैक्षकत्वेन ह्रस्व इति स्थविरसूत्रानन्तरं शैक्षकसूत्रम्। अस्याक्षरगमनिका प्राग्वत्।

सम्प्रति शैक्षकाणां यद् वक्तव्यं तत्ससूचनाय द्वारगाथामाह—

सेहस्स तिन्नि भूमिउ, दुविहा परिणामगा दुवे जड्डा ।
पत्तजहंते संभुं-जणा य भूमित्तियविवेगो ॥५१॥

शैक्षकस्य तिस्रो भूमयो वक्तव्या ,सूत्रोपात्तत्वात्तथा शैक्षका द्विविधा -परिणामका, अपरिणामका वक्तव्या । द्वौ च जड्डौ। तथा पात्राणि पात्रभूतान् त्यजति दोषा वक्तव्या , संभोजना च तथा भूमित्रिकस्य जलमूकैलमूककरणजड (ड्ड) लक्षणस्य विवेक· परित्यागो वक्तव्य , एष द्वारगाथासंक्षेपार्थ· । व्यासार्थवस्तु प्रतिद्वारमभिधातव्य ।

तत्र प्रथमतो भूमिद्वारमाह—

सेहस्स तिन्नि भूमि, जहणॉ तह मज्झिमा य उक्कोसा ।
राइंदिसत्त चउमा-सिया य छम्मासिया चेव ॥५२॥

शैक्षकस्य तिस्रो भूमयस्तद्यथा—जघन्या मध्यमा उत्कृष्टा च। तत्र जघन्या सप्तरात्रिन्दिवा, मध्यमा चातुर्मासिकी, उत्कृष्टा पाण्मासिकी ।

पुव्वोवट्ठपुराणे, करणजयट्ठा जहन्निया भूमी ।
उक्कोसा दुम्मेहं, पडुच्च अस्सद्दहाणं च ॥५३॥

पूर्वमुपस्थ —उपस्थित पूर्वोपस्थ स चासौ पुराणश्च पूर्वोपस्थपुराणस्तस्मिन् करणजयाय जघन्या भूमिर्भवति । इयमत्र भावना—य पूर्वं प्रव्रज्योत्प्रव्रजित पश्चात्पुनरपि प्रव्रज्या प्रतिपन्नवान् स सप्तमे दिवसे उपस्थापयितव्य , तस्य हि यावद्भिर्दिवसै पूर्वविस्मृतसामाचारीकरणमल्पेन्न दु प्रभवति एपा जघन्या भूमि , दुर्मेधसमश्रद्दधानं च प्रतीत्य उत्कृष्टा पाण्मासिकी भूमि ।

एमेव य मज्झिमिया, अणहिज्जंते असद्दहंते य ।
भावियमेहाविस्स वि,करणजयट्ठा य मज्झिमिया॥५४॥

एवमुक्ते उत्कृष्टे अनधीयाने अश्रद्दधाने च माध्यमिकी भूमि प्रतिपत्तव्या। अथवा-भावितस्यापि-श्रद्दधानस्यापि मेधाविनश्चापि च करणजयार्थं माध्यमिकी भूमि । गतं भूमिद्वारम्।

अधुना द्विविधपरिणामकद्वारमाह—

आणादिट्ठंतेण य, दुविहो परिणामगो समासेणं ।
आणापरिणामो खलु, तत्थ इमो होइ नायव्वो ॥५५॥

स द्विविध· परिणामको भवति, तद्यथा-आज्ञया, दृष्टान्तेन च। तत्र समासेन—सक्षेपेण आज्ञापरिणाम· खल्वयं वक्ष्यमाणो भवति । तमेवाह—

तमेव सच्चं नीसंकं, जं जिणेहिं पवेदियं ।
आणाए एस अक्खाओ, जिणेहिं परिणामगो ॥५६॥

तदेव सत्यं यज्जिनैः प्रवेदितमित्येवं यो निःशङ्कं श्रद्दधाति न च कारणं जनयते एप आज्ञया परिणामको जिनैराख्यात ।

दृष्टान्तपरिणामकमाह—

परोक्खं हेउगं अत्थं, पच्चक्खेण व साहियं ।
जिणेहिं एस अक्खातो, दिट्ठंतपरिणामगो ॥५७॥

परोक्ष हेतुक हेतुना लिङ्गेन गम्य हेतुकमर्थं प्रत्यक्षेण प्रत्यक्षप्रसिद्धेन दृष्टान्तेन साधयन् आत्मबुद्धावारोपयन् यो वर्त्तते दृष्टान्तपरिणामको जिनैराख्यात । दृष्टान्तेन विवक्षितमर्थं परिणमयत्यात्मबुद्धावारोपयतीति दृष्टान्तपरिणामक इति व्युत्पत्ते । तत्राज्ञापरिणामक , आज्ञयैव कायान् श्रद्दधाति, दृष्टान्तपरिणामकस्तु दृष्टान्तेन श्रद्धापयितव्य इति ।

तस्य कायश्रद्धानोत्पादनार्थमिदमाह—

तस्मिंदियाणि पुव्वं, सीमंते जइ उ ताणि सद्दहइ ।
तो से नाणावरणं, सीसइ ताहे दसविहं तु ॥५८॥

तस्य दृष्टान्तपरिणामस्य पूर्वमिन्द्रियाणि श्रोत्रादीनि शिष्यन्ति तत्र यदि तानीन्द्रियाणि श्रद्दधाति तत· तमेतस्य ज्ञानावरणं दशविध शिष्यते ।

कथमित्याह—

इन्दियावरणं चेव, नाणावरणे इ य ।
तो नाणावरणं चेव,साहियं तु दुपंचहा ॥ ५९ ॥

इन्द्रियावरणं,ज्ञानावरण च । तत्रेन्द्रियावरण नाम इन्द्रियविषयशब्दादिसामान्योपयोगावरण , ज्ञानावरणमिन्द्रियविषयेष्वेव शब्दादिषु विशेषोपयोगावरणम्। इन्द्रियावरण ज्ञानावरणं च श्रोत्रेन्द्रियादिभेदत प्रत्येक पञ्चप्रकारमेव ज्ञानावरणम्। द्विपञ्चधा-एव दशप्रकारमाख्यानम् ।

तानेव दश भेदान् विवेक्तुमाह—

सोयावरणं चेव, णाणावरणं होइ तस्सेव ।
एवं दुयभेएणं, णायव्वं जाव फासो त्ति ॥ ६० ॥

श्रोत्रावरण तथा तस्यैव श्रोत्रस्य ज्ञानावरणमेव द्विकभेदेन तावत् ज्ञातव्यं यावत्स्पर्श , तद्यथा-चक्षुरिन्द्रियावरणम्,चक्षुरिन्द्रियज्ञानावरणम्। घ्राणेन्द्रियावरणम्,घ्राणेन्द्रियज्ञानावरणम्। रसनेन्द्रियावरणम्, रसनेन्द्रियज्ञानावरणम्। स्पर्शेन्द्रियावरणम् स्पर्शेन्द्रियज्ञानावरणमिति।

साम्प्रतमिन्द्रियावरणस्य विज्ञानावरणस्य च विषयविभागार्थमिदमाह—

बहिरस्स उ विन्नाणं, आवरियं न उण सोयमावरियं ।
अपडुप्पण्णो बालो, अतिवुड्ढो तह असन्नी वा ॥ ६१ ॥
विन्नाणावरियं तेसिं, कम्हा जम्हा उ ते सुणंता वि ।
न वि जाणंते किमयं, सद्दो संखस्स पडहस्स ॥ ६२ ॥

बधिरस्य विज्ञानं श्रोत्रेन्द्रियविज्ञानमावृतम्, सामान्यत· शब्दमात्रश्रवणेऽपि तद्गतविशेषापरिज्ञानात्, न तु श्रोत्रमावृतं सामान्यत शब्दमात्रश्रवणात्, तथा योऽपटुप्रज्ञो-बालो यश्चातिवृद्धो यो वा असंज्ञी अमनस्क , पञ्चेन्द्रिय , एतेषां विज्ञानमावृतम्। कस्मात्?, यस्माच्च शृण्वन्तोऽपि न विजानते किमयं शब्द शङ्खस्य, उत—पटहस्येति ।

किं ते जीवमजीवं, जीवा एवेति तेसु उद्दियम्मि ।
भणइ एवं विजाणसु, जीवा चउरिंदिया त्तिंति ॥ ६३ ॥

किं ने वधिरादयो जीवा. अजीवा वा ? । तत्र जीवा एवेति तेनोदिते भएयते-एवं वधिरादिवत् चतुरिन्द्रिया अपि जीवा इति विजानीहि श्रोत्रावरणमात्रेण जीवत्वाप्रच्युतेः ।

एवं चक्खिदियघा-णिंदियजिब्भिदिओवघाएहिं ।
एकेक्कयहाणीए, जाव उ एगिंदिया नेया ॥६४॥

एवमेकैकहान्या एकैकेन्द्रियपरिहानित चक्षुरिन्द्रियघ्राणे-न्द्रियजिह्वेन्द्रियोपघातैः क्रमेण त्रीन्द्रियादयः तावत् ज्ञेया यावदेकेन्द्रिया , तद्यथा—चक्षुरिन्द्रियोपघातेऽपि त्रीन्द्रियाः घ्राणेन्द्रियोपघातेऽपि द्वीन्द्रिया , जिह्वेन्द्रियोपघाते-प्येके-न्द्रिया । इह पूर्वं विज्ञानावरणेऽपीन्द्रियमनावृतमुक्तम् ।

इदानीमिन्द्रियावरणेऽपि विज्ञानमनावृतमुपदर्शयति—

सन्निस्सिंदियघाए वि, तन्नाणं न विरिज्झइ ।
विन्नाणं नतु सन्नीणं, विज्जमाणे वि इंदिए ॥ ६५ ॥

संज्ञिन इन्द्रियघातेऽपि न ज्ञानमुपहतेन्द्रियज्ञानं नाऽऽस्रि-यते । एतच्चाग्रे भावयिष्यते । असंज्ञिनां पुनर्विद्यमानेऽपी-न्द्रिये विज्ञानं नास्ति । यथोक्तं प्राक् तथा चाग्रे वक्ष्यते ।

एतदेव भावयति—

जो जाणइ य जच्चंधो, वन्ने रूवे विकप्पसो ।
नेत्ते वाऽऽवरिते तस्स, विन्नाणं तं तु चिट्ठइ ॥६६॥
पासन्ता वि न याणंति, विसेसं वण्णमादीणं ।
बाला असन्निणो चेव, विन्नाणावरियम्मि उ ॥६७॥

यो नाम जात्यन्धः अस्पृष्टचक्षुर्वर्णान् रूपाणि च विकल्प-शोऽनेकप्रकारं जानाति तस्य नेत्रे अप्यावृते तत् विजाना-ति अन्धीभूतोऽपि वर्णविशेषान् रूपविशेषांश्च, तथैव स्प-र्शनो जानातीत्यर्थः तथा बाला असंज्ञिनश्च पश्यन्तोऽपि वि-ज्ञाने आवृते वर्णादीनां विशेषं न जानन्ति । तदेवमिन्द्रि-योपघातेऽपि न विज्ञानोपघात , ज्ञानोपघातेऽपि नेन्द्रि-योपघात इति विज्ञानेन्द्रिययोर्भेद ,तेनेह तयोर्भेदात्तदावरण योरपि भेद इति । ज्ञानावरणं दशधा ।

सांप्रतमेकैकेन्द्रियहान्या यत् एकेन्द्रियत्वं पूर्वमुक्तं तद्भा-षयति—

इंदियउववाएणं, कमसो एगिंदिओ य संवुत्तो ।
अणुवहए उवकरणे, विसुज्झए ओसहादीहिं ॥६८॥
अवचिज्जए य उवचि-ज्जए उ जह इंदिएहिं सो पुरिसो ।
एस उवमा पमत्था, संसारीणिंदियविभागे ॥६९॥

कोऽपि पुरुष क्रमशः-क्रमेणेन्द्रियाणां श्रोत्रादीनामुपघा-तेन एकेन्द्रिय एव संवृत्त , तत्र चानुपहते उपकरणे—उ-पकरणेन्द्रिये पुनरौषधादिभिर्विशुध्यति—सर्वस्पष्टेन्द्रियो भवति । तत्र यथा स पुरुष इन्द्रियैरपचीयते उपचीयते च एषा उपमा संसारिणामिन्द्रियविभागे प्रशस्ता । तथैव सं-सारिणोऽपि पञ्चेन्द्रिया भूत्वा चतुरिन्द्रियास्त्रीन्द्रिया द्वीन्द्रिया एकेन्द्रिया भूत्वा पुनर्द्वीन्द्रियास्त्रीन्द्रियाश्च-तुरिन्द्रियाः पञ्चेन्द्रियाश्च भवन्तीत्यर्थः । ( व्य० १ ) -

-( परिणामकविषयः ' परिणामग ' शब्दे पञ्चमभागे गतः । )
एतदर्थं सुखेन जीवत्वप्रतिपत्त्यर्थमुपसंहरन्नाह—

एस परिणामगो भणितो, अहुणा उ जड्डं वोच्छामि ।
सो दुविहो नायव्वो, भासाएँ सरीरजड्डो उ ॥ ७७ ॥

एष द्विविधो विपरिणामक उक्तः । अधुना ज(ड्ड)डं वक्ष्ये, स जडो द्विविधो ज्ञातव्य , तद्यथा—' भासाए ' त्ति भाषा-जड , शरीरजडश्च ।

जलमूगएलमूगो, मम्मणमूको य भासजड्डो य ।
दुविहो सरीरजड्डो, थुल्लाकरणे अनिपुणो य ॥ ७८ ॥

भाषाजडस्त्रिविध , तद्यथा-जलमूक ,एलमूको,मम्मनमूक-श्च । शरीरजडो द्विविधस्तद्यथा-शरीरेण,क्रियायामनिपुणश्च ।

पढमस्स नत्थि सद्दो, जलमज्झे व भासतो ।
बीयो उ एलगो चेव, अव्वत्तं बुब्बुयायइ ॥ ७९ ॥

प्रथमस्य जलमूकस्य जलमध्ये इव भाषमाणस्य नास्ति-शब्द , द्वितीय एडमूकः एडकमिव बुद्बुदायते ।

मम्मणो पुण भासंतो, खलए अंतरंतरा ।
चिरेणं नीति से वायं, अविसुद्धा व भासतो ॥ ८० ॥

मम्मन पुनर्भाषमाणोऽन्तरा अन्तरा स्खलति, यदिवा-'से' तस्य भाषमाणस्य वाक् चिरेण 'नीति' निर्गच्छति अवि-शुद्धा वा ।

सम्प्रति ' दुवे जड्डु ' त्ति द्वारमाह—

दुविहेहिं जड्डदोसेहिं, विसुद्धं जो उ उज्झति ।
कायाचत्ता भवे तेणं,मासा चत्तारि भारिया (गुरुकंतं) ८१

द्विविधेन जाड्यदोषेण विशुद्धं य उज्झति तेन काया -पद् कायास्त्यक्ता भवेयु , न संरक्षिता , तथास्य प्रायश्चित्तं च-त्वारो गुरुका मासाः । एतेन संभोजनद्वारं व्याख्यातम् ।

कहिए सद्दहिए चेव, उववेंति परिग्गहे ।
मंडलीए उ वट्टंतो, इमे दोसा उ अंतरा ॥ ८२ ॥

अन्तराऽन्तरा षड्जीवनिकाये कथिते श्रद्धिते च 'उववेंति' एतच्छेह, तत्र समुद्देशाप्यते इत्यर्थ , एतदनुपस्थापितो भवति, तदा न मण्डल्यां समुद्देशयेत् अन्तरा पुनर्भेद्यमाने इमे व-क्ष्यमाणा दोषा ।

तान् ( दोषान् ) एवाह—

पायस्स वा विराहण, अतिही दट्ठूण उड्ड गमणं वा ।
सेहस्स वा दुगुंछा, सव्वे दुट्ठिधम्म त्ति ॥ ८३ ॥

उत्पाटयतो-नयत आनयतो वा पात्रस्य विराधना स्यात् । यदिवा-अतिथीन् दृष्ट्वा तस्य 'उड्ढं' ति वमनं प्रवर्त्तते,गमनं वा तत एव प्रदेशात् कुर्यात् , शैक्षकस्य वा जुगुप्सा जनेन क्रिय-ते, यथा केनापि दोषेण दुष्ट एष । तत पृथग् भुङ्क्ते सर्वान् वा कश्चित् जुगुप्सते, यथा-पात्रमप्येवंभूतं भोजनात् बहिः कुर्वन्ति अहो दुष्टधर्माण इति ।

सम्प्रति 'भूमितियविवेगो' इति व्याख्यानार्थमाह—

जलमूग एलमूगो, सरीरजड्डो य जो य अतिथुल्लो ।

जं वुत्तं तु विवेगो, भूमितियं ते न दिक्खिज्जा ॥८४॥

यदुक्तं भूमित्रिकस्य विवेक इति तस्यायमर्थः जलमूक एडमूक शरीरजडश्च योऽतिस्थूलस्तानतान् त्रीन् न दीक्षयेत्।

दुम्मेहमणतिसेसी, न जाणती जो तु करणतो जड्डो।
ते दुन्नि वि तेण उ सो,दिक्खेइ सिया तो ऽतिसेसी॥८५॥

दुर्मेधसं यश्च करणतो जडस्तमनतिशेषी अनतिशयी न जानाति तेन कारणेन तौ द्वावपि स दीक्षयेत्।

अथ स्यात्सोऽतिशेषी ततो न दीक्षयति—

अहव न भासाजड्डं, जहाति परंपरागयं छउमा।
इयरं पि देसहिंडग-असतीए वा विविंचि(ठवि)ज्जा॥८६॥

अथवा 'भासाजड्ड' त्ति दुर्मेधस परपरागत मातृपक्षपरपरागतं गुरुपक्षपरंपरागतं च छद्मस्था न त्यजन्ति, इतरमपि करणजडं देशहिण्डकस्य देशदर्शनाय असति वा अन्यास्मिन् साधौ दीक्षयेदन्यथा विवेचयेत्-न दीक्षयेत्, दीक्षयन् वा परिष्ठापयेत्।

अत्रैव मतान्तरं दूषयति—

मानुसनाएणं वा, दुम्मेह तमं पि केइ इच्छंति।
तं न भवति पलिमंथो,णया वि चरणं विणा णाणं॥८७॥

केचित् मनुष्यज्ञातेन दुर्मेधास्तमपि दीक्षितुमिच्छन्ति, तन्न भवति, यतो दुर्मेधसः पाठने स्वयं सूत्रार्थयोः पलिमन्थः, नचापि तस्य ज्ञानं विना चरणं ततः आत्मनः परस्य च केवलक्लेशान्न तद्दीक्षणमिति।

नातिथुल्लं न उज्झंति, मेहावी जो अ वोच्चडो।
जलमूगेलमूगं च, परिट्ठावेज्ज दोण्णि वि॥ ८८॥

नातिस्थूल नोज्झन्तीत्यर्थः यश्च मेधावी वोचडो भाषाजडस्तमपि नोज्झन्ति, जलमूकैडमूकं द्वावप्येतौ परिष्ठापयेत्।

मुत्तूण करणजड्डं, परियट्टंति जाव सेसछम्मासा।
एक्केक्कं छम्मासा, जस्स व दड्डुं विविंचणया॥८९॥

मुक्त्वा करणजड शेष दुर्मेधसं भाषाजडं यावत् षण्मासास्तावत् परिवर्त्तयन्ति-अनुवर्त्तयन्ति,तत परमन्यस्याचार्यस्य समर्प्यते सोऽपि षण्मासान् परिवर्त्तयति तदनन्तरमन्यस्य सोऽपि षण्मासान् परमेकैक तस्य षण्मासा। तत्र त्रयाणा मध्ये यस्य समीपे संख्या गृहीतवान् यावन्तं दृष्ट्वा याचते ममैनं शिष्यं देहि इति तस्य विवेचनं—तस्य दानमित्यर्थः।

अमुमेवार्थ स्पष्टतरमाह—

तिण्हं आयरियाणं, जो तं गाहेइ सीमो ऽ तस्सेव।
जइ एत्तिएण गाहितो, तो न परिट्ठावए ताहे॥९०॥

त्रयाणामाचार्याणा मध्ये यो ग्राहयति तस्यैव शिष्य स दीयते, यदि एतावता आचार्यत्रिकेण परिपाट्या मिलित्वा ग्राहितो भवति ततस्तदा न परिष्ठाप्यते।

देंति अजंगमथेरा-ण वावि अहवा वि दट्टुणं जो उ।
भणति मज्झ कज्ज, दिज्जति तस्सेव सो ताहे॥९१॥

अथवा अजङ्गमस्थविराणा स वैयावृत्तिकरणाय दीयते। यदिवा—यस्तं दृष्ट्वा भणति मम कार्यमेतेन, तस्माद्दीयतामिति ततस्तस्यैव दीयते।

जो पुण करणे जड्डो, उक्कोसं तस्स होइ छम्मासा।
कुलगणसंघनिवेयण, एयं तु विहिं तहिं कुज्जा॥९२॥

य पुन करणजड तस्योत्कृष्ट परिपालनं भवति, यावत्षण्मासा, तत पर कुलस्य गणस्य संघस्य वा निवेदनं क्रियते स यत्करोति तत्प्रमाणमेत विधिं तत्र कुर्यादिति। व्य० १० उ०।

सेहम्बदालियंब-सिद्धाम्लदालिकाम्र-न०। सिद्धे आम्लसंस्कृते मुद्गादिमये दालिपदार्थे, 'सेहे' सिद्धे सति यानि अम्लेन तीमनादिना संस्क्रियन्ते तानि सिद्धाम्लानि, यानि दाल्या मुद्गादिमय्या निष्पादितानि अम्लानि च तानि दालिकाम्लानीति सम्भाव्यन्ते। उपा० १ अ०।

सेहय-शैक्षक-पुं०। अभिनवप्रव्रजिते, स्था० ८ ठा० ३ उ०।

सेहर-शेखर-पुं०। शिरोभूषणे, लोमपक्षिभेदे च। जी० १ प्रति०।

सेहाविय-शिक्षा(सेधा) यित-त्रि०। उपाध्यायादिप्रयोजनतः व्रतित्वेन सेविते, पा०। व्रतिसमाचारसेवायाम्, तस्य भगवतो हेतुभूतत्वात्। भ० १५ श०। शिक्षिते, स्वयमेव गुरुभिः शिक्षा ग्राहिते, उपाध्यायादिपार्श्वात्सगृहीते आचारविशेषविनयविशेषेषु कुशलीकृते, ध० ३ अधि०।

सेहिय-सेधित-त्रि०। निष्पादिते, आचारविशेषविनय—विशेषेषु कुशलीकृते, पा०। ज्ञा०। प्रत्युपेक्षणादिक्रियाकलापतो निष्पादिते, भ० २ श० १ उ०।

शिक्षित-त्रि०। गुरुभि स्वयमेव शिक्षा ग्राहिते, पा०। ध०। भ०।

सैद्धिक-त्रि०। सिद्धापवर्गलक्षणायां भवे, सूत्र० १ श्रु० १ अ० २ उ०।

सेही-शैक्षी-स्त्री०। नवशिक्षितायाम्, ग० ३ अधि०।

सेहोवट्ठावण-शैक्षोपस्थापन-न०। शिष्यस्य उपस्थापना—करणे," तिहिं उत्तराहिं रोहिणीहिं, कुज्जा उ सेहनिक्खमण। सेहोवट्ठावण कुज्जा, अणुन्ना गणिवायए।" द० प०।

सोअ-शौच-न०। परद्रव्यापहारमालिन्याभावे, स० १४३ सम०।

सोअणवत्तिया-स्वप्नप्रत्यया-स्त्री०। स्वप्ननिमित्तविराधनाया अतिचारभेदे, आव० १ अ०।

सोअण-शोचन-न०। अश्रुपरिपूर्णनयनस्य दैन्ये, आव० ४ अ०।

सोअमल्ल-सौकुमार्य-न०। "उतो मुकुलादिष्वत्" ॥८।१।१०७॥ इत्यादेरुतोऽत्वम्। सोअमल्ल। प्रा०। " पर्यस्त-पर्याण-सौकुमार्ये ल्ल" ॥८।२।६८॥ इति यस्य ल्ल। सोअमल्ल। शरीरसौष्ठवे, प्रा० २ पाद।

सोआमिणी-सौदामिनी-स्त्री०। विद्युति, जं० ३ वक्ष०।

सोइंदिय-श्रोत्रेन्द्रिय-न०। श्रूयतेऽनेनेति श्रोत्रं तच्च तदिन्द्रियं

म श्रोत्रेन्द्रियम्। शब्दग्राहके इन्द्रिये, आ० म० १ अ०। स्था०। प्रज्ञा०। आ० क०।

श्रोत्रेन्द्रिय उदाहरणम्—

गायकः पुष्पशालोऽभू—द्वसन्तपुरपत्तने।
कर्णानन्दी स्वरस्तस्य, वैरूप्यं चाचितुःखदम् ॥ १ ॥
गायता तेन सर्वोऽपि, लोको हृतमना कृतः।
सार्थवाहो धनस्तस्मात्, पुरो देशान्तरं गतः ॥ २ ॥
पत्न्यास्त्रद्राऽस्ति तद्भार्या, तत्र प्रोषितभर्तृका।
दास्यस्तस्या गता आसन्, बहिः कार्येण केनचित् ॥ ३ ॥
तास्तं गायन्तं शृण्वाना कालं नाज्ञासिषुर्गतम्।
चिरागताश्च तास्तीव्रौ-र्वचोभिः संततच्च सा ॥ ४ ॥
ऊचुस्ता देवि ! मा कुप्य, श्रुतमस्माभिरद्य यत्।
गीतं तत्कस्य नानन्दि, पशूनामपि वल्लभम् ॥ ५ ॥
बुध्वा सा तत्कथं श्राव्यं, कथं प्रेक्ष्य स गीतकृत्।
इत पूर्ववनागारे, यात्रारम्भस्तदाऽभवत् ॥ ६ ॥
पौराः सर्वे ययुस्तत्र, साऽपि तत्र तदाऽगमत्।
गायकः स च निःशेषां, रात्रिं गीत्वा परिश्रमात् ॥ ७ ॥
तत्रैवायतने पश्चाद्, भागे निद्रामुपागतः।
सार्थवाही च तां देवीं, प्रणम्याभ्यर्च्य भक्तितः ॥ ८ ॥
प्रदक्षिणीकृतस्तस्या, अर्थिभिर्दर्शितोऽथ सः।
दृष्टोऽयं रूपमानेन, भावी गीतस्वरोऽपि हि ॥ ९ ॥
इत्युक्त्वा तत्र निष्ठीव्य, साऽगमन्मन्दिरं निजम्।
गायकस्य प्रबुद्धस्या-ख्यातं तच्चाप्रिनैः नटैः ॥ १० ॥
गायकः सोऽथ सामर्षः प्रातस्तस्या गृहान्तिके।
जगौ विरहसंबद्ध—गीतं स्फीतं रसोर्मिभिः ॥ ११ ॥
आसवेन प्रपीतेन, तेन गीतेन पूरिता।
मत्तेवास्ववशा साऽभू—त्संनिपातभृतेव वा ॥ १२ ॥
तत्क्षणादुत्थितोत्कण्ठा, कण्ठाश्लेषे प्रियस्य सा।
तदैवाप्रपयत्नं, प्रेयसे जविनः करे ॥ १३ ॥
अध्यारुरोह सौधाग्रं, तन्मार्गान्वेषणाय सा।
ऊचे च सखि ! लेखस्य, गतस्यासन् दिना घना ॥ १४ ॥
स लेखदर्शनादेव, चलितः फलितं मया।
अभ्येष्यति दिनैर्द्वित्रै—र्वेद्यमस्त्यधुना पथि ॥ १५ ॥
अथोन्नाय सर्खाना सा, प्रेद्यालदं दिशोऽखिला।
अदर्शयत्कराग्रेण हला ! पश्यत पश्यत ॥ १६ ॥
अयमयमयि प्रेयान् श्रेयान् स एव मनोहरो,
नयननलिनोल्लासस्यासक्रियासु निशापतिः।
वपुरपि पुलकोद्भेदस्वेदोद्गमक्षममंगमं,
किमपि रमयत्यन्तः कान्तः सुखं सखि ! मेऽधुना ॥ १७ ॥
मंस्यते दुर्विनीतां मां, चेद्यास्यामि न संमुखीं।
अभ्रंलिहाग्रसौधाग्रा—द्विस्यात्मानं मुमोच सा ॥ १८ ॥
मृता च तत्क्षणादेव, श्रोत्रेन्द्रियदुरन्तता।
ध्यायितुं तद्य दुर्ग्राह्या, मुख्येन कर्णनर्तकी ॥ १९ ॥

आ० क० १ अ०। ग०। आ० चू०। ('पुट्ठ सुणइ सद्दं' इति श्रोत्रेन्द्रियस्य स्पृष्टविषयग्राहकत्वम् 'इंदिय' शब्दे द्वितीयभाग ५४७ पृष्ठ गतम्।)

**सोइंदियणिग्गह**—श्रोत्रेन्द्रियनिग्रह—पुं०। श्रवणेन्द्रियस्यावरोधे, उत्त०।

सोइंदियणिग्गहेणं भंते ! जीवे किं जणयइ ? सोइंदियणिग्गहेणं मणुण्णामणुण्णेसु सद्देसु रागदोसनिग्गहं जणयइ, तप्पच्चइयं च कम्मं ण बंधइ, पुव्वबद्धं निज्जरेइ। उत्त० २९ अ०।

**सोइंदियत्थ**—श्रोत्रेन्द्रियार्थ—पुं०। श्रूयतेऽनेनेति श्रोत्रं तच्च तद् इन्द्रियं च श्रोत्रेन्द्रियं तस्यार्थो-ग्राह्य श्रोत्रेन्द्रियार्थः। शब्दे, स्था० ५ ठा० ३ उ०।

**सोइंदियबल**—श्रोत्रेन्द्रियबल—न०। श्रोत्रबलसामर्थ्यग्राहके, स्था० १० ठा० ३ उ०।

**सोइंदियमुंड**—श्रोत्रेन्द्रियमुण्ड—पुं०। श्रोत्रेन्द्रियनिबन्धने मुण्डभेदे, स्था० १० ठा० ३ उ०।

**सोइंदियवसट्ट**—श्रोत्रेन्द्रियवशार्त्त—त्रि०। श्रोत्रेन्द्रियवशेन तत्पारतन्त्र्येण ऋतः—पीडितः। श्रवणेन्द्रियपरतन्त्रतया दुःखिते, भ० १२ श० २ उ०।

**सोइंदियविसयप्पयार**—श्रोत्रेन्द्रियविषयप्रचार—पुं०। श्रोत्रेन्द्रियस्य यो विषयेष्विष्टानिष्टशब्देषु प्रचारः स श्रोत्रेन्द्रियविषयप्रचारः। श्रवणलक्षणप्रवृत्तौ, भ० २५ श० ७ उ०।

**सोइय**—शोकित—न०। मानसे विकारे, अनु०।

**सोइयव्व**—शोकितव्य—त्रि०। शोकविषये, संथा० १ अधि० १ प्रस्ता०।

**सोउआण**—श्रुत्वा— "क्त्वस्तुमत्तूण-तुआणाः" ॥८।२।१४६॥ इति क्त्वाप्रत्ययस्य तुआणादेशः। सोउआण। आकर्ण्येत्यर्थे प्रा० २ पाद।

**सोऊण**—श्रुत्वा—अव्य०। "युवर्णस्य गुणः" ॥८।४।२३७॥ धातोरिवर्णस्योवर्णस्य च क्ङित्यपि गुणो भवति। सोऊण। प्रा०। "चि—जि—श्रु—हु—स्तु—लू—पू—धूगां णो ह्रस्वश्च।" ॥ ८। ४। २४१ ॥ च्यादीनां धातूनामन्ते णकारागमः, एषां स्वरस्य च ह्रस्वो भवति। बहुलाधिकारात्क्वचिद्विकल्पः। सोऊण। प्रा०। निशम्येत्यर्थे, सूत्र० १ श्रु० १ अ० १ उ०। आकर्णयितुमित्यर्थे, पञ्चा० २ विव०।

**सोएव**—शोचितव्य—त्रि०। "तव्यस्य इएव्वउं एव्वउं एवा" ॥ ८। ४। ४३८ ॥ इति अपभ्रंशे तव्यप्रत्ययस्य एवादेशः। शोचनीये, प्रा० ४ पाद।

**सोंड**—शौण्ड—न०। गर्वे, स्था० १० ठा० ३ उ०।

**सोंडामगर**—शौण्डमकर—पुं०। मकरभेदे, जी० १ प्रति०। प्रज्ञा०।

**सोंडीर**—शौण्डीर्य—न०। 'ब्रह्मचर्य—तूर्य—सौन्दर्य—शौण्डीर्ये र्यो रः' ॥८।२।६३॥ इति र्यस्य रः। सोंडीर। प्रा०। त्यागसम्पन्नतायाम्, सूत्र० १ श्रु० ८ अ०। कर्मशत्रून्प्रति शूरे, कल्प० १ अधि० ६ क्षण। स्था०। शौर्यवतां शूर इव रणकरणेन वशीकृतः। पुत्रतया प्रतिपाद्यमाने पुत्रभेदे, स्था० १० ठा० ३ उ०। चारभटे, प्रश्न० ५ संव० द्वार।

**सोक्ख**—सौख्य—न०। आनन्दे, स्था० २ ठा० ३ उ०। सुखे, ज्ञा० १ श्रु० १३ अ०। गन्धरसस्पर्शलक्षणविषयसंपाद्ये, स्था० ६ ठा० ३ उ०। प्रज्ञा०। उत्त०। गन्धोपादाने, स्था० ६ ठा० ३ उ०।

सोग-शोक-पुं० । इष्टवियोगोत्थदु खे, औ० । प्रश्न० । उत्त० । नि० चू० । चित्तखेद , आ० १ श्रु० १ अ० । दैन्ये , आ-व० ४ अ० । चित्तवैधुर्ये , प्रव० ५१ द्वार । आ० म० । मानसे दु खविशेषे ल० । आव० । स च सचित्ताचित्तमिश्राणामिष्टानां वियोगेन, अनिष्टानां संयोगेन च भवति । जीत० । स्था० । प्रश्न० । ध० । वृ० । औ० । इष्टाप्राप्तिविनाशोद्भवे ( आचा० १ श्रु० ३ अ० १ उ० । आतु० । म० । ) इष्टवियोगनाशादिजनिते चित्तोद्वेगे, दर्श० १ तत्त्व । नोकषायवेदनीयकर्मभेदे, यदुदयेन शोकरहितस्यापि जीवस्याक्रन्दनादि शोको जायते । स्था० ६ ठा० ३ उ० । शोचनं शोको दैन्यमुपलक्षणत्वादेवास्य सकलमानसदु खपरिग्रह । भ० १६ श० २ उ० । 'सोगभरपवेवियगमगी ' शोकभरेण प्रवेपित-कम्पितमङ्गं यस्यास्सा तथा । भ० ६ श० ३३ उ० । प्रियविप्रयोगादिविकलचेतोवृत्तितयाऽऽक्रन्दनादि येन करोति स शोक. । वृ० १ उ० २ प्रक० ।

सौगंधिय-सौगन्धिक-न० । कह्वारे, जी० ३ प्रति० ४ अधि० । आ० म० । प्रज्ञा० । रा० । जं० । रत्नविशेषे,रा० । प्रज्ञा० । आ० म० । ज्ञा० । सूत्र० । य सुभगं मन्वान स्वलिङ्गं जिघ्रति स सौगन्धिक । पुं० । नपुसकभेदे, ग०१ अधि० । सौगन्धिको नाम सागारिकस्य गन्धं शुभ मन्यते स च सागारिक जिघ्रति मलयित्वा वा हस्तं जिघ्रति । वृ० ४ उ० । नि० चू० । प्रव० । गं० चू० । पं० भा० ।

सोगंधियकंड-सौगन्धिककाण्ड-न० । रत्नप्रभाया पृथिव्याः सौगन्धिकरत्ननिभे काण्डे, स्था० १० ठा० ३ उ० ।

सोगंधिया-सौगन्धिकी-स्त्री० । स्वनामख्यातायां नगर्याम् , ज्ञा० १ श्रु० ५ अ० ।

सोगमल्ल-सौकुमार्य-न० । अतिसुकुमारतायाम् ,'आयावयाही चय सोगमल्लं ' दश० २ अ० ।

सोगमोहणिज्ज-शोकमोहनीय-न० । मोहनीयकर्मभेदे, यद्वशात्प्रियविप्रयोगे सोरस्ताडमाक्रन्दति परिदेवते दीर्घं च नि -श्वसिति भूपीठे च लुठति तच्छोकमोहनीयम् । कर्म० ६ कर्म० ।

सोगविहाण-शोकविधान-न० । प्राजमनके चारितादिके, व्य० १ उ० ।

सोग्गइ-सुगति-स्त्री० । मोक्षमार्गे, सुदेवत्वादिके, 'एत्थ सुग्गती णाणदसणचरणा भवंति ' । अथवा सुग्गई सुदेवत्तादिका । आ० चू० १ अ० ।

सोच्चा-श्रुत्वा-अव्य० । "त्व-थ्व-द्व-ध्वा-च-छ-ज-झा. क्वचित् " ॥ ८ । २ । १५ ॥ इति त्वास्थाने च्चा इत्यादेश । सोच्चा । प्रा० । निशम्येत्यर्थे , अवगम्येत्यर्थे , सूत्र० १ श्रु० ३ अ० २ उ० । आचा० । गुरुमुखात्कर्णे धृत्वेत्यर्थे, उत्त० २ अ० । श्रोत्रेण निशम्येत्यर्थे, स्था० ३ ठा० १ उ० । त० । दश० । कल्प० । भ० । आगमापेक्षे, भ० ६ श० ३२ उ० । अवधार्येत्यर्थे, विपा० १ श्रु० २ अ० । भ० । आचा० ।

सोच्चिय-शोचित-त्रि० । " सेवादौ वा" ॥८।२।९९। इति द्वित्वम् । शोकविषये, प्रा० २ पाद ।

सोज्जोय-सोद्द्योत-त्रि० । उद्द्योतभावसहिते,जी०३ प्रति० ४ अधि० । बहिर्व्यवस्थितवस्तुस्तोमप्रकाशकरे, जी० ३ प्रति० ४ अधि० ।

सोड-शोड-न० । सीधुनि,आचा० २ श्रु० १ चू० १ अ० ३ उ० ।

सोडमय-षोडशक-पुं० । षोडशावयवे समुदाये, "प्रकृतेर्महांस्ततोऽहंकारस्तस्माद् गणश्च षोडशक. । " आ० म० १ अ० ।

सोडसिगा-षोडशिका-स्त्री० । मगधदेशप्रसिद्धे रसमानविशेषे, रा० ।

सोढ-सोढ -त्रि० । अनुभूते,उत्त० १६ अ० ।

सोण-शोण-न० । दन्तकाष्ठिकामध्ये रक्तवर्णे, तं० ।

सोणिचक्क-श्रोणिचक्र-न० । कटितटे, कल्प० १ अधि० २ क्षण ।

सोणिय-शोणित-न० । पललरुधिरे,उत्त० २ अ० । आचा० । ज्ञा० । तं० । स्था० । आर्त्तवे रुधिरे, सामान्येन वा रुधिरे , ज्ञा० १ श्रु० ८ अ० । शोणित—रुधिर, द्वितीयो धातु । तं० । आचा० । आ० म० ।

सोणियलव-शोणितलव-पुं० । शोणितबिन्दौ, तं० ।

सोणियानुसारि-शोणितानुसारिन्-पुं० । शोणितान्तव्यापके धातौ, स्था० ६ ठा० ३ उ० ।

सोणिसुत्त-श्रोणिसूत्र-न० । कटीसूत्रे, भ० ६ श० ३३ उ० । बालकानां चर्मादिदवरकरूपे कटीसूत्रे,ज्ञा० १ श्रु० १७ अ० ।

सोणी-श्रोणी-स्त्री० । कटेरग्रभागे, ज० २ वक्ष० । कटौ, प्रश्न० ४ आश्र० द्वार ।

सोण्हग—सोण्हक—पुं० । पक्षिविशेषे, उत्त० ५ अ० ।

सोण्हियालिंग-शोणिकालिङ्ग-न० । अभ्रेराश्रयविशेषे, जी० ३ प्रति० १ अधि० २ उ० ।

सोत्त-श्रोत्र-न० । श्रूयतेऽनेनेति श्रोत्रम् । शब्दग्राहकेन्द्रिये, स्था० ८ ठा० ३ उ० । प्रज्ञा० । अचित्तं जीवरहितं सोत्तं छिड्डं पुणसद्दो भेदप्पदरिसणे तं अचित्तसोत्त तिविहं-देहजुयं, पडिमजुय, वेरय च । नि० चू० १ उ० ।

श्रोतस्-न० । "तैलादौ" ॥८ । २ । ९८॥ इति अन्तव्यञ्जनस्य द्वित्वम् । जलप्रवाहे, प्रा०२ पाद ।

सोत्तबंधण-श्रोतोबन्धन-न० । जलप्रवाहबन्धने, प्रश्न० १ आश्र० द्वार ।

सोत्तामणि सौत्रामणि स्त्री० । रुचकद्वीपभवाया दिक्कुमारिकायाम् , आ० क० १ अ० ।

सोत्तिंदिय-श्रोत्रेन्द्रिय-न० । श्रवणेन्द्रिये, आ० म० १ अ० ।

सोत्तिय-सौत्रिक-त्रि० । सूत्रं पण्यमस्येति सौत्रिकः। सूत्रक्रयविक्रयकारिणि , अनु० । जीवा० ।

शौक्तिक-पुं० । द्वीन्द्रियभेदे, प्रज्ञा० १ पद ।

सोत्तियमई-शौक्तिकवती-स्त्री० । केकयार्द्धजनपदार्द्धराजधान्याम् , प्रज्ञा० १ पद ।

सोत्थिय-स्वस्तिक-पुं०। लोकप्रसिद्धे माङ्गलिके चिह्नभेदे,रा०। प्रश्न०। जं० । प्रज्ञा० । आ० म० । अष्टाशीतिमहाग्रहेषु षष्टितमे ग्रहे,स्था०२ठा०३उ०। आ०म०। सू०प्र०। आ०चू०। चं० प्र० ।

द्वो सोत्थिया । स्था० २ ठा० ३ उ० ।

सोत्थियकूड-स्वस्तिककूट-न० । जम्बूद्वीपे मन्दरस्य दक्षिणे रुचकवरपर्वतस्य प्रथमे कूटे, स्था० ८ ठा० ३ उ० । द्वी० ।

सोदयबंधिणी-स्वोदयबन्धिनी-स्त्री० । स्वस्योदय एव बन्धो यासां तास्तथा । तथाविधासु कर्मप्रकृतिषु , पं० सं० ३ द्वार ।

सोदर-सोदर-पुं० । एकमातृके , उत्त० २२ अ० ।

सोदामिन्-सौदामिन्-पुं० । चमरस्यासुरेन्द्रस्याश्वानीकाधिपतौ , स्था० ५ ठा० १ उ० ।

सोदामिणी-सौदामिनी-स्त्री० । विद्युति, औ० । विदिग्रुचकवास्तव्यायां दिक्कुमारीमहत्तरिकायाम् , जं० ५ वक्ष० ।

सोदास-सौदास-पुं० । स्वनामख्याते मांसप्रिये राजनि, आ० चू० ४ अ० । आ० क० । आ० म० । जिह्वेन्द्रिये उदाहरणम् । आ० चू० १ अ० । आचा० । आ० क० ।

सोद्द-शौद्र-पुं० । शुष्ककाष्ठे, वृ० २ उ० ।

सोपारग-सोपारक-पुं० । स्वनामख्याते समुद्रतटीयनगरे , आ० म० १ अ०। आ० क०। उज्जेणी नगरी, जितसत्तू राया , तम्म अट्टणो मल्लो,सव्वरज्जेसु अजयो। इतो य समुद्दतडे सोपारगं नगरं तत्थ सीयगिरी राया। आ० चू० ४ अ० ।

सोप्पास-सोत्प्रास-न० । उत्प्रासयुक्ते गाने,स्था० ७ ठा०३उ०।

सोभग्ग-सौभाग्य-न० । सुभगत्वे, प्रज्ञा० ३४ पद ।

सोभग्गकर-शौभाग्यकर-न० । एकचत्वारिंशे कलाभेदे, स० ७२ सम० ।

सोभग्गसुंदरी-सौभाग्यसुंदरी-स्त्री० । इभ्यश्रेष्ठिनः पुत्रस्नुषायाम् , आ० क० १ अ० ।

सोभग्गसेवहि-सौभाग्यसेवधि-पुं० । सौभाग्यनिधौ, कल्प०१ अधि० ७ क्षण ।

सोभण-शोभन-न० । सुन्दरे, सूत्र० २ श्रु० १ अ० । जी० । कल्प० ।

सोभद्द-सौभद्र-पुं० । सुभद्रात्मजे चम्पानगरीवास्तव्यस्य कौशिकाचार्यस्य शिष्ये, आ० चू० ८ अ० । ( 'अज्जव ' शब्दे प्रथमभागेऽस्य कथा । )

सोभावज्जण-शोभवर्जन-न०। विभूषापरित्यागे,दश०६ अ० ।

सोभित्ता-शोभयित्वा-अव्य० । विधिवत्करणेन शोभां कृत्वेत्यर्थे, कल्प० ३ अधि० ६ क्षण ।

सोभिय-शोभित-त्रि० । तत्समाप्तौ गुर्वादिप्रदानशेषभोजनासेवनेन शोभां प्रापिते अतिचारवर्जनेन कृतशोधे, स्था० ७ ठा० ३ उ० । रा० । आ० चू० ।

सोम-सोम-पुं० । चतुर्थबलदेववासुदेवयोः पितरि, आव० १ अ० । स्था० । ति० । यज्ञेषु देवपेये लताविशेषे, 'अपाम सोममममृता अभूवम्' । आ० म० १ अ० । तद्रसे, विशे० । चन्द्रे, जं०७ वक्ष० । ज्यो०। चं०प्र०। मृगशिरोनक्षत्रस्याधिप सोमः। ज्यो० ६ पाहु० । सू० प्र० । अनु० । स्था० । अष्टाशीतिग्रहेषु द्वादशे महाग्रहे, जं० ७ वक्ष० । सू० प्र० । कल्प० । चं० प्र० । शक्रस्य देवेन्द्रस्येशानस्य च स्वनामख्याते उत्तरदिग्लोकपाले चमरस्यासुरेन्द्रस्येन्द्रे, भ० ३ श० ७ उ०। आ० म०। ग० । स्था० । ( वक्तव्यताऽस्य 'लोगपाल' शब्दे षष्ठे भागे गता । ) ( अस्याग्रमहिष्यः 'अग्गमहिसी' शब्दे प्रथमभागे १७१पृष्ठे उक्ताः । ) पार्श्वस्वामिनः पञ्चमे गणधरे, कल्प० १ अधि० ७ क्षण । स्था० । शान्तदृष्टौ,प्रव० ६५ द्वार। शान्ताकृतौ, व्य० ६ उ० । सुभगे, जं० १ वक्ष० । रा० । अरौद्राकारे, रा० । सू० प्र० । विपा० । जं० । नीरोगे च । भ० १२ श० ६ उ० । उत्तमया कीर्त्या सहिते, कल्प० १ अधि० ३ क्षण । गुर्जरधरित्रीपण्डलीमहानगर्यां श्रीमद्वीसलदेवराजस्य पुरोहिते , ती० ४१ कल्प । चम्पावास्तव्ये स्वनामख्याते ब्राह्मणे , ज्ञा० १ श्रु० १६ अ० । ( 'दुवई' शब्दे चतुर्थभागे २५७७ पृष्ठे कथा गता । कोडीनगरवासिनि स्वनामख्याते ब्राह्मणे, ती० ५५ कल्प । ( 'कोहंडिदेव' शब्दे तृतीयभागे ६८४ पृष्ठे कथा । )

सोमंगलग-सौमङ्गलक-पुं०। द्वीन्द्रियजीवभेदे,जी० १ प्रति०। प्रज्ञा० ।

सोमकाइय-सोमकायिक-पुं०। सोमस्य कायो निकायो येषामस्ति ते सोमकायिका। सोमपरिवारभूतेषु देवेषु,भ० ३ श० ७ उ०

सोमचंद-सोमचन्द्र-पुं०। भरतक्षेत्रजसुपार्श्वजिनकालिकैरवतजे तीर्थकरे, ति०। प्रव०। स० । स्वनामख्याते शिवचन्द्रनृपपुत्रे, ध०र० । ( अस्य वृत्तम् 'सिवभद्द' शब्देऽस्मिन्नेव भागे गतम् ।) स्वनामख्याते पोतनपुरराजे, आ०चू० १ अ० ।

सोमचंदसूरि-सोमचन्द्रसूरि-पुं० । तपागच्छीये श्रीरत्नशेखरसूरिशिष्ये, येन विक्रम-१५०४ वर्षे कथामहोदधिनामग्रन्थो रचितः । जै० इ० ।

सोमजसा-सोमयशस्-स्त्री० । सौर्यपुरे यक्षयशसस्तापसस्य पुत्रस्नुषायाम् आव० ४ अ० । आ० क० । आ० म० । आ० चू० । ही० ।

सोमणंतिय-स्वप्नान्तिक-न० । स्वप्नस्य स्वप्नक्रियाया अन्ते अवसाने भवं स्वप्नान्तिकम् । स्वप्नविशेषे क्रियमाणे प्रतिक्रमणभेदे, स्था० ६ ठा० ३ उ० ।

सोमणस-सौमनस्य-न० । शोभनं मनो यस्यासौ सुमनास्तस्य

भाव सौमनस्यम्। शोभने मनसि,रा०। भ०। जी०।आ०म०।

सौमनस–पुं०।जम्बूद्वीपे मन्दरस्य दक्षिणत देवकुरुपु अश्व-स्कन्धसदृशे वक्षस्कारपर्वते,तदधिपतौ च। स्था०२ठा०३उ०।

दो सोमणमा। स्था० २ ठा० ३ उ०।

निषधस्य पर्वतस्योत्तरस्यां मन्दरस्य दक्षिणपूर्वस्यामाग्नेयदिशि मङ्गलावतीविजयस्य पश्चिमायां देवकुरूणां पूर्वस्यां सौमनसो वक्षस्कारपर्वत। जं० ४ वक्ष०।

कहि णं भन्ते! जम्बुद्दीवे दीवे महाविदेहे वासे सोमणसे णामं वक्खारपव्वए पण्णत्ते?, गोयमा! णिसहस्स वासहरपव्वयस्स उत्तरेणं मन्दरस्स पव्वयस्स दाहिणपुरत्थिमेणं मंगलावईविजयस्स पचत्थिमेणं देवकुराए पुरत्थिमेणं एत्थ णं जम्बुद्दीवे दीवे महाविदेहे वासे सोमणसे णामं वक्खारपव्वए पण्णत्ते, उत्तरदाहिणायए पाईणपडीणविच्छिण्णे जहा मालवन्ते वक्खारपव्वए तहा णवरं सव्वरययामए अच्छे ०जाव पडिरूवे। णिसहवासहरपव्वयतेणं चत्तारि जोअणसयाइं उड्ढं उच्चत्तेणं चत्तारि गाऊ(उ)असयाइं उव्वेहेणं सेसं तहेव सव्वं णवरं अट्ठो से गोअमा! ०जाव सोमणसे वक्खारपव्वए बहवे देवा य देवीओ अ सोमा सुमणा सोमणसे अ इत्थ देवे महिड्ढीए ०जाव परिवसइ, से एएणट्ठेणं गोअमा! ०जाव णिच्चे। ( सू०+९७ )

'कहि ण' मित्यादि, क भदन्तेत्यादिप्रश्न सुलभ, उत्तरसूत्रे निषधस्य वर्षधरपर्वतस्य उत्तरस्या मन्दरस्य पर्वतस्य पूर्वदक्षिणस्याम्–आग्नेयकोणे मङ्गलावतीविजयस्य पश्चिमायां देवकुरूणा पूर्वस्यां यावत् सौमनसो वक्षस्कारपर्वत प्रज्ञप्त इत्यादि सर्वं माल्यवद्गजदन्तानुसारेण भाव्यम्, यत्तु सप्रपञ्चं प्रथमं व्याख्यातं गन्धमादनेऽतिदेशयितव्ये माल्यवतोऽतिदेशन तदस्यासन्नवर्त्तित्वेन सूत्रकारशैलीवैचित्र्यज्ञापनार्थं, नवरं सर्वात्मना रजतमयोऽयं, माल्यवास्तु नीलमणिमय, अयं च निषधवर्षधरपर्वतान्ते चत्वारि योजनशतान्यूर्ध्वोच्चत्वेन चत्वारि गव्यूतिशतान्युद्वेधेन माल्यवांस्तु नीलवत्समीपे इति विशेष, अर्थे च विशेषमाह— 'से केणट्ठेण' मित्यादि, प्राग्वत्, भगवानाह—गौतम! सौमनसवक्षस्कारपर्वते बहवो देवा देव्यश्च सौम्या कायकुचेष्टाया अभावात्, सुमनसो–मन कालुष्याभावात् परिवसन्ति, तत सुमनसामयमावास इति सौमनस, सोमनसनामा चात्र देवो महर्द्धिक परिवसति तेन तद्योगात् सौमनस इति। 'से एएणट्ठेण' मित्यादि, प्राग्वत्, 'सौमणसे' इति प्राय सूत्रं व्यक्तम्। जं० ४ वक्ष०।

कूटपृच्छा—

जंबुद्दीवे दीवे सोमणसे वक्खारपव्वए सत्त कूडा पण्णत्ता, तं जहा–"सिद्धे १ सोमणसे २ तह,बोधव्वे मंगलावईकूडे ३। देवकुरु ४ विमल ५ कंचण ६, विसिट्ठकूडे ७ य बोधव्वे" ॥१॥ (सू०+५९०) स्था० ७ ठा० ३ उ०।

मेरो परित स्थिते वने, नपु०। जं० ४ वक्ष०। मेरोर्द्वितीयमेखलाया स्वनामख्याते वने, जं० १ वक्ष०। सूत्र०।

कहि णं भंते! मन्दरए पव्वए सोमणसवणे णामं वणे पण्णत्ते?, गोयमा! णन्दणवणस्स बहुसमरमणिज्जाओ भूमिभागाओ अद्धतेवट्ठिं जोअणसहस्साइं उड्ढं उप्पइत्ता एत्थ णं मन्दरे पव्वए सोमणसवणे णामं वणे पण्णत्ते। पञ्चजोयणसयाइं चक्कवालविक्खम्भेणं वट्टे वलयाकारसंठाणसंठिए जे णं मन्दरं पव्वयं सव्वओ समंता संपरिक्खित्ता णं चिट्ठइ, चत्तारि जोअणसहस्साइं दुण्णि य बावत्तरे जोअणसए अट्ठ य इक्कारसभाए जोअणस्स बाहिं गिरिविक्खम्भेणं तेरस जोअणसहस्साइं पंच य एक्कारे जोअणसए छच्च इक्कारसभाए जोअणस्स बाहिं गिरिपरिरएणं तिण्णि जोअणसहस्साइं दुण्णि अ बावत्तरे जोअणसए अट्ठ य इक्कारसभाए जोअणस्स अंतो गिरिविक्खम्भेणं दस जोअणसहस्साइं तिण्णि अ अउणापण्णे जोअणसए तिण्णि अ इक्कारसभाए जोअणस्स अंतो गिरिपरिरएणं ति। से णं एगाए पउमवरवेइआए एगेण य वणसंडेणं सव्वओ समन्ता संपरिक्खित्ते। वण्णओ किण्हे किण्होभासे ०जाव आसयन्ति एवं कूडवज्जा सच्चेव णन्दणवणवत्तव्वया भाणियव्वा, तं चेव ओगाहिऊण ०जाव पासायवडेंसगा सक्कीसाणाणं ति। ( सू० १०५ )

'कहि ण' मित्यादि, क्व भदन्त! मेरौ सौमनसवनं नाम वन प्रज्ञप्तम्?, गौतम! नन्दनवनस्य बहुसमरमणीयाद् भूमिभागादर्द्धत्रिषष्टिः सार्द्धद्वाषष्टिरित्यर्थ, योजनसहस्राण्यूर्ध्वमुत्पत्याऽत्रान्तरे मन्दरपर्वते सौमनसवनं नाम वन प्रज्ञप्त, प्रञ्चयोजनशतानि चक्रवालविष्कम्भेनेत्यादिपदानि प्राग्वत्, यन्मन्दरं पर्वतं सर्वत समन्तात् सम्परिक्षिप्य तिष्ठति एतच्च कियता विष्कम्भेन कियता च परिक्षेपेणेत्याह— 'चत्तारी' त्यादि, प्रथममेखलायामिव द्वितीयमेखलायामपि विष्कम्भद्वय वाच्य, तत्र बहिर्गिरिविष्कम्भेन चत्वारि योजनसहस्राणि द्वे च योजनशते द्विसप्तत्यधिके अष्टौ चैकादशभागा योजनस्य, एतदुपपत्तिरेवम्–धरणीतलात् सौमनसं यावद् गमने मेरूच्छ्रयस्य त्रिषष्टिसहस्रयोजनान्यतिक्रान्तानि एषा चैकादशभिर्भागे लब्धम् ५७२७$\frac{3}{11}$ अस्मिंश्च राशौ धरणीतलगतमेरुव्यासाद्दशसहस्रयोजनप्रमाणाच्छोधिते जातं यथोक्तं मानमिति। बहिर्गिरिपरिरयेण त्रयोदश योजनसहस्राणि पञ्चयोजनशतानि एकादशानि–एकादशाधिकानि षट् च एकादशभागा योजनस्य, तथाऽन्तर्गिरिविष्कम्भेन त्रीणि योजनसहस्राणि द्वे द्वासप्तत्यधिके योजनशते अष्टौ चैकादशभागा योजनस्य, उपपत्तिस्तु बहिर्गिरिविष्कम्भात् उभयतो मेखलाद्वयव्यासे पञ्चशत २ योजनरूपेऽपनीते यथोक्तं मानम्, अन्तर्गिरिपरिरयेण तु दश सहस्रं योजनानि त्रीणि च योजनशतानि एकोनपञ्चाशदधिकानि त्रयश्चैकादशभागा योजनस्येति। अथास्य वर्णकसूत्रम्–'से णं




ह-ह-अव्य० । कण्ठस्थानीय ऊष्मसंज्ञकोऽयं वर्णः । अधिक्षेपार्थे, स्था० ७ ठा० ३ उ० । पादपूरणे, संबोधने, नियोगे, लोपे निग्रहे, प्रसिद्धौ च । 'हकारः पुंसि यजने, वरुणे हरिहंसयोः । ईश्वरे चावलेपे च रणरोमाञ्चवाजिषु " ॥९४॥ एका० । हीरे, हारे, एका० । 'हा स्त्रिया त्यजने गत्या, वर्जनाया वा निगद्यते । नपुंसके हकारस्तु, कथितं मणिरात्रिषु ॥९५॥ " एका० । खेदे, वृ० ४ उ० ।

हा-अव्य० । "वाऽव्ययोत्खातादावदातः " ॥ ८ । १ । ६७ ॥ इति आकारस्य वा अकारः । विषादे, शोके, पीडायाम् , कुत्सायाञ्च । प्रा० १ पाद ।

हअ-हत-त्रि० । हन्-क्त । नाशिते, प्रतिहते प्रयिद्धे, आशारहिते गुणिते च, भावे क्त । हनने गुणने, न० । प्रा० ।

हत-त्रि० । हृ-क्त । अत्र कश्चित् । ऋत्वादिषु द इत्यारब्धवन्तः स तु शौरसेनीमागधीविषय एव दृश्यते इति नोच्यते ; प्राकृते हि । हनम् । हअं । प्रा० । " हन्खनोऽन्त्यस्य " ॥ ८ । ४ । २४४ ॥ इत्यन्त्यस्य द्वित्वं न, क्वचिन्न भवतीत्युक्तं । प्रा० । अपहृते, स्थानान्तरं गमिते च । प्रा० ।

हआस-हताश-त्रि० । अत्र कश्चित् ऋत्वादिषु द इत्यारब्धवन्त स तु शौरसेनीमागधीविषय एव दृश्यते इति नोच्यते । प्राकृते हि—हताशः , हआसो । प्रा० । आशाशून्ये, वध्ये, निर्दये पिशुने च । प्रा० ।

हइ-हति-स्त्री० । हन्-क्तिन्-हनने, मारणे, व्याघाते, अपकर्षे, गुणने च । प्रा० ४ पाद ।

हउं-अहम्-त्रि० । "सायम्मशे हउं" ॥ ८ । ४ । ३७५ ॥ इत्यपभ्रंशे अस्मच्छब्दस्य सौ परे हउं इत्यादेशः । तसु हउं कलिजुगि दुल्लहहो । प्रा० ४ पाद ।

हं-हं-अव्य० । हर्षे, हिंसायां च । एका० ।

अहम्-त्रि० 'अस्सदो म्मि अम्मि अम्हि-हं-अहं अहयं सिना' ॥८।३।१०५॥ इति सिना सहितस्य अस्मच्छब्दस्य हं इत्यादेशः । अस्मच्छब्दस्य प्रथमैकवचनार्थे, जेण हं विद्धा । प्रा० । ज्ञा० ।

हंजे-हञ्जे-अव्य० । "हञ्जे चेट्याह्वाने" ॥८।४।२८१॥ शौरसेन्यां चेट्याह्वाने हञ्जे इति निपातः प्रयोक्तव्यः । हञ्जे । चतुरिके ! नाट्योक्त्याया नट्याभिनये कृते चेटीसंबोधने, प्रा० ४ पाद ।

हंडिया-हण्डिका-स्त्री० । लघुकुम्भ्याम् , मस्तकन्यस्तदधिहण्डिका । विशे० ।

हंत-हन्त-अव्य० । वाक्योपन्यासे, आचा० १ श्रु० ६ अ० १ उ० । प्रत्ययधारणे , कोमलामन्त्रणे, हा० १६ अष्ट० । ज्ञा० । औ० । अनु० । प्रति० । पञ्चा० । दर्श० । शिष्यामन्त्रणे , आचा० २ श्रु० २ अ० ३ उ० । अभ्युपगमद्योतने , अनु० । संप्रेषणे, सूत्र० १ श्रु० १ अ० २ उ० । खेदे सूत्र० २ श्रु० १ अ० । प्रति० । अष्ट० । एवमेवेत्यर्थे, औ० । निर्देशे, प्रति० । वाक्यारम्भे , जं० २ वक्ष० । आमन्त्रणे, आचा० २ श्रु० १ चू० १ अ० ४ उ० । हर्षे, अनुकम्पायाम् , रा० ।

हन्त-अव्य० । दीर्घत्वं च मागधदेशीयत्वात् , 'हंता अत्थि णो चेव ।' अत्र भगवानाह—हंतेत्यादि, आमन्त्रणे, जं० २ वक्ष० ।

हंतव्व-हन्तव्य-त्रि० । "हन्खनोऽन्त्यस्य " ॥ ८ । ४ । २४४ ॥ अत्र बहुलाधिकाराद्धन्तेः कर्मण्यपि द्वित्वं तच्च क्वचिन्न भवतीत्युक्तेर्न भवति । हंतव्व । प्रा० । दण्डकशादिभिर्वध्ये, आचा० १ श्रु० ४ अ० १ उ० ।

हंता-हत्वा-अव्य० । विनाश्येत्यर्थे, स्था० ३ ठा० २ उ० । लगुडादिभिरभ्याहार्येत्यर्थे भ० ८ श० ५ उ० ।

हंतृ-त्रि० । ताच्छीलिकस्तृन् मृगशूकरादिकत्रसप्राणिहन्तरि, सूत्र० २ श्रु० २ अ० । आचा० ।

हंतुं-हन्तुम्-अव्य० । विनाशयितुमित्यर्थे, वृ० १ उ० २ प्रक० ।

हंतूण-हत्वा-अव्य० । " हन्खनोऽन्त्यस्य " ॥ ८ । ४ । २४४ ॥ अत्र बहुलाधिकाराद्धन्तेः कर्मण्यपि द्वित्वं , तच्च क्वचिन्न भवतीत्युक्तेर्न भवति । प्रा० । विनाश्येत्यर्थे, संथा० । आतु० ।

हंद-गृहाण-अव्य० । " हन्द च गृहाणार्थे ॥८।२।१८१॥ गृहाणार्थे हन्द इति प्रयोक्तव्यम् 'हंद पलोएसु इमं' गृहाणेत्यर्थः । प्रा० ।

हन्त-अव्य० । कोमलामन्त्रणे , स्था० ५ ठा० १ उ० । आमन्त्रणे , नि० चू० ४ उ० । हर्षे , आ० म० १ अ० ।

हंदि-हन्दि-अव्य० । "हंदि—विषाद-विकल्प-पश्चात्ताप—निश्चय-सत्ये" ॥ ८ । २ । १८० ॥ हंदि इति विषादादिषु प्रयोक्तव्यम् । "हंदि चलणे णओ सो, ण माणिओ हंदि हुज्ज एत्ताहे । हंदि ण होही भणिरी, सा सिज्जइ हंदि तुह कज्जे ।' प्रा० । उपप्रदर्शने, वृ० ४ उ० । अनु० । आचा० । स्था० । दश० । पञ्चा० । सम्म० । नं० । आ० चू० । आव० । आमन्त्रणे, ज्ञा० १ श्रु० १५ अ० । कोमलामन्त्रणे , जीवा० ११ अधि० । चोदकामन्त्रणे, व्य० १० उ० । स्वसंबोधने, पिं० । प्रत्यक्षवाक्यदर्शने, नि० चू० १२ उ० । लोकसाधककारणोपप्रदर्शने , वृ० ३ उ० ।

हंभो-हम्भो-अव्य० । आमन्त्रणे, ज्ञा० १ श्रु० १४ अ० । शिष्याऽऽमन्त्रणे, दश० १ चू० ।

हंश-हंस-पुं० । "रसोर्लशौ" ॥८।४।२८८॥ इति मागध्यां दन्त्यसकारस्य तालव्यशकारः । स्वनामख्याते पक्षिभेदे , प्रा० ।

हंस-हंस-पुं० । चतुरिन्द्रियजीवविशेषे , अनु० । स्वनामख्याते पक्षिभेदे . "अम्लत्वेन रसज्ञाया , मिथयोः क्षीरनीरयोः । विवेच्य पिबति क्षीरं,नीरं हंसो विमुञ्चति," आ० क० १ अ० । अनुयोगे हंसोदाहरणमुक्तम् । आ० म० १ अ० । अनु० । प्रश्न० । रजके "वत्थधोवा हवंति हंसा वा " वस्त्रधावका—वस्त्रप्रक्षालका हंसा इव रजका इव भवन्ति । सूत्र० १ श्रु० ४ अ० २ उ० । परिव्राजकमते यतिविशेषेषु, ये पर्वतकुहर-

पथ्याश्रमदेवकुलारामवासिनो भिक्षार्थं च ग्रामं प्रविशन्ति। औ०।

हंसगब्भ-हंसगर्भ-पुं०। हंस-पतङ्गश्चतुरिन्द्रियो जीवविशेषः, गर्भस्तु तन्निर्वर्तितः कोसिकारः, हंसस्य गर्भो हंसगर्भः। हंसनिर्वर्तिते कोसिकारे, अनु०। जं०। रत्नविशेषे, जी० ३ प्रति० ४ अधि०। सूत्र०। रत्नप्रभायाः पृथिव्याः षष्ठे रत्नगर्भकाण्डे, आ० म० १ अ०। ज्ञा०। स्था०। प्रज्ञा०।

हंसगब्भमय-हंसगर्भमय-न०। हंसगर्भाख्यरत्नमये, रा०।

हंसतेल्ल (ल्ल)-हंसतैल-न०। हंसपक्षिपाकतैले, "हंसो पक्खी भण्णति, सो फाडऊण मुत्तपुरीसाणि णीहरिज्जन्ति, ताहे सो हंसो दव्वाण भरिज्जति, ताहे पुणरवि सो सीविज्जति। तेण तव्वत्थेण तेल्लं पच्चति तं हंसतेल्लं भण्णति। नि० चू० १ उ०।

हंसदीव-हंसद्वीप-पुं०। स्वनामख्याते तीर्थभेदे, यत्र श्रीसुमनिनाथदेवपादुका। ती० ४३ कल्प।

हंसलक्खण-हंसलक्षण-त्रि०। हंसस्येव लक्षणं स्वरूपं शुक्लता हंसा वा लक्षणं चिह्नं यस्य स। ज्ञा० १ श्रु० १ अ०। शुक्ले हंसचिह्ने, भ० ९ श० ३३ उ०। हंसवद्विशदे, जं०२ वक्ष०।

हंससर-हंसस्वर-त्रि०। हंसस्येव मधुरः स्वरो येषां ते। हंससदृशमधुरस्वरयुक्तेषु, जं० २ वक्ष०। तं०। जी०।

हंससरिसगइ-हंससदृशगति-त्रि०। हंसस्य सदृशी गतिर्येषां ते। हंसतुल्यगतिषु, जी० ३ प्रति ४ अधि०।

हंसासन-हंसासन-न०। येषामासनानां मध्यभागे हंसा व्यवस्थितास्तानि हंसासनानि। हंसाकृतिव्यवस्थितेषु आसनेषु, जं० १ वक्ष०। जी०।

हंसासनसंठिय-हंसासनसंस्थित-त्रि०। हंसासनवत्संस्थिते, जी० ३ प्रति० २ अधि०।

हंहो-हंहो-अव्य०। हमित्यव्यक्तं जहाति हा-डो। संबोधने, दर्पे, दम्भे, प्रश्ने च। प्रा०।

हक्क-निषिध्-धा०। प्रतिषेधे, "निषेधेर्हक्कः" ॥८।४।१३४॥ इति निषेधतेर्हक्क इत्यादेशः। हक्कइ। निसेहइ। प्रा०। कुमारेण स करी हक्कितः। उत्त० १३ अ०।

हक्कार-हाकार-पुं०। हा इति हाकारलक्षणा या नीतिः-प्रवृत्तिः सा हाकारः। आ० म० १ अ०। प्रथमद्वितीयकुलकरदण्डनीतौ, "हक्कारे मक्कारे धिक्कारे चेव दंडनीतीओ" आ०म०१अ०। दण्डनीतिस्तावत् विमलवाहनचक्षुष्मत्कुलकरकाले अल्पापराधित्वेन हक्काररूपैवाभूत्। यशस्विनोऽभिचन्द्रस्य च काले अल्पऽपराधे हक्काररूपा महति च अपराधे मक्काररूपा, अथ प्रसेनजिन्मरुदेवनाभिकुलकरकाले च जघन्यमध्यमोत्कृष्टापराधेषु क्रमेण हक्कारमक्कारधिक्काररूपा दण्डनीतयोऽभूवन्। कल्प० १ अधि० ७ क्षण। ति०। आ० म०। रा०। आ० चू०।

हक्कोद्ध-देशी-अभिलषिते, दे० ना० ८ वर्ग ६० गाथा।

हक्खुत्त-देशी-उत्पादिते, दे० ८ वर्ग ६० गाथा।

हक्खुप्प-उत्क्षिप्-धा०। ऊर्ध्वं प्रक्षेपे, "उत्क्षिपेर्गुलगुञ्छोत्थङ्घाल्लत्थोब्भुत्तोस्सिक्क-हक्खुप्पाः" ॥८।४।१४४॥ इति उत्पूर्वस्य क्षिपेः हक्खुप्प इत्यादेशः। हक्खुप्पइ। उक्खिप्पइ। प्रा०।

हगे-अहम्-वयम्-त्रि०। "अहं-वयमोर्हगे" ॥८।४।३०१॥ मागध्यामहंवयमोः स्थाने हगे इत्यादेशः। अस्मच्छब्दस्यैकत्वे, बहुत्वे च। प्रा० ४ पाद।

हच्छंकर-हच्छङ्कर-पुं०। वनस्पतिभेदे, आचा० २ श्रु० २ चू० ३ अ०।

हट्ट-हट्ट-पुं०। आपणे, नानागृहाद्याश्रिते त्रिकोणे भूभागविशेषे, अनु०। पण्यशालायाम्, आचा० १ श्रु० ६ अ० २ उ०। आ० म०।

हट्ठ-हृष्ट-त्रि०। हर्षिते, उत्त० १८ अ०। विस्मयमापन्ने, यथा-अहो भगवान् तीर्थकरः समुत्पन्न इति। आ० म० १ अ०। जी०। भ०। औ०। रा०। ज्ञा०। नीरोगे, प्रव० ४ द्वार। भ०। नि० चू०। स्था०। स०। तारुण्येन समर्थे, तरुणा अपि केचिद्रोगिणो निर्बलशरीराश्च भवन्ति। कल्प० ३ अधि० ६ क्षण। हृष्टतुष्टानन्दिताः एकार्थाश्चेति, विपा० १ श्रु० १ अ०।

हट्ठतुट्ठ-हृष्टतुष्ट-त्रि०। अतितुष्टे, ज्ञा० १ श्रु०१ अ०। आ० म० १ अ०। भ०। औ०। विपा०। दशा०। भ०। 'हट्ठतुट्ठचित्तमाणंदिए' हृष्टतुष्टोऽतीव तुष्टः। अथवा-हृष्टो नाम विस्मयमापन्नो यथा अहो भगवानास्ते इति तुष्टस्तोषं कृतवान् यथा अध्यमभूत् यन्मया भगवानवलोकितः तोषवशादेव चित्तमानन्दितं स्फीतीभूतं 'टुनदि' समृद्धाविति वचनात् यस्य स चित्तानन्दितः सुखादिदर्शनात् पाक्षिको निष्ठान्तस्य परनिपातः। मकारः प्राकृतत्वादलाक्षणिकस्ततः पदत्रयस्य पदद्वयमीलनेन कर्मधारयः। रा०। भ०। कल्प०। जी०।

हड-देशी-वनस्पतिविशेषे, उत्त० २२ अ०।

हृत-त्रि०। अपहृते, स्थानान्तरं गमिते च। कल्प० १ अधि० ४ क्षण।

हडप्प-देशी-आभरणकरण्डके, ज्ञा० १ श्रु० १ अ०। द्रम्मादिभाजने, ताम्बूलार्थे पूगफलादिभाजने, भ० ६ श० ३३ उ०। औ०।

हडाला-हडाला-पुं०। स्वनामख्याते ग्रामे, यत्र वस्तुपालतेजःपालाभ्यां निधिर्लब्धः। ती० ४१ कल्प।

हडाहड-हृताहृत-न०। अत्यर्थे, 'फुट्टहडाहडसीसं' विपा० १ श्रु० १ अ०। ज्ञा०।

हडि-हडि-पुं०। खोटके, औ०। विपा०। कर्म०। काष्ठखोटके, दशा० ६ अ०। काष्ठविशेषे, प्रश्न० ३ आश्र० द्वार।

हडिबंधण-हडिबन्धन-न०। खोटकक्षेपके, प्रश्न० ४ संव० द्वार। सूत्र०।

हड्ड-देशी-अस्थनि त०।

हढ-हठ-पुं०। जलरुहवनस्पतिविशेषे, प्रज्ञा० १ पद। आचा०।

हढकारग-हठकारक-त्रि०। हठेन कुर्वन्ति ये ते हठकारकाः। हठपूर्वककर्मकर्तरि, प्रश्न० ३ आश्र० द्वार।

हणु-श्रु-धा०। श्रवणे,स्वादि-पर०सक० अनिट्। "श्रृणोतेर्हणु" ॥ ८। ४। ५८॥ इति श्रृणोतेर्हण इत्यादेशः। हणइ। सुणइ। शृणोति। प्रा० ४ पाद।

हन्-धा०। वधे, गतौ च। स्वादि-पर० सक० अनिट्। हन्ति अवधीत्। "कुञ्जं हन्ति कृशोदरी" इत्यादौ आलङ्कारिकास्तु निहतार्थतामाहुः। वाच०। प्रा०।

हणंत-घ्नत्-त्रि०। प्राणवियोगकर्त्तरि, सूत्र० १ श्रु० ११ अ०। प्रश्न०। गोधूमादिदलनेन घातयति। स्था० ६ ठा० ३ उ०।

हणण-हनन-न० हिंसने, सूत्र० २ श्रु० १ अ०। आचा०। व्यापादने, सूत्र०। गुणने, विनाशने, आ० १ श्रु० १८ अ०। प्रश्न०।जिघांसने, आ०। पीडने, सूत्र० १ श्रु० ५ अ० २ उ०।

हणावण-घातन-न०। मनोऽनुज्ञायाम्, स्था० ६ ठा० ३ उ०।

हणु-ह(नु)-नू-पुं०। स्त्री०। हन्-उन्-वा-ऊङ्। कपोलद्वयोपरिस्थ मुखभागे, हट्टविलासिन्याम्, रोगे,अस्त्रविशेषे, मृतौ च। स्त्री। वाच०। चिबुके,तं०। औ०। प्रश्न०। अणु०। सूत्र०।

हणुमंत-हनूमत्-पुं०। "उर्ध्व-हनूमत्कण्डूय-वातूले" ॥ ८।१। १२१॥ इति ऊत्कारस्य उकारः। प्रा०। "आल्विल्लोल्लाल-वन्त-मन्तेत्तेर-मणा मतो." ॥ ८। २। १५९॥ इति मतो. स्थाने मन्त इत्यादेशः। प्रा०। रामस्य अनुचरे अञ्जनागर्भजाते पवनतनये वानरभेदे, प्रा०।

हणुया-हनुका-स्त्री०। दंष्ट्राविशेषे, उत्त०२ अ०।

हतसंक-हतशङ्क-त्रि०। हास्यादिविकारविकलतया भावनीयव्यलीकशङ्के, बृ० ३ उ०।

हतसार-हृतसार-त्रि०। अपहृतद्रव्ये, प्रश्न० ३ आश्र० द्वार।

हत्ता-हत्या-स्त्री०। विघातिते, नि० चू० १ उ०। हनने, विपा० १ श्रु० ७ अ०।

हत्थ-हस्त-पुं०। हस्यतेऽनेनेति हस्त., हसति वा मुखमावृत्येति हस्त। नि०चू० १ उ०। "स्तस्य थोऽसमस्त-स्तम्बे" ॥ ८।२।४५॥ इति स्तस्य थकार.। प्रा०। 'द्वितीय-तुर्ययोरुपरि पूर्वः'॥८।२।९०॥ इति द्वित्वप्रसङ्गे द्वितीयस्य थकारस्योपरि प्रथमस्तकार। प्रा०। आदाननिक्षेपादिसमर्थे शरीरैकदेशे, नि० चू० १ उ०। सूत्र०। उत्त०। द्वे वितस्ति. हस्त.। प्रव० २५४ द्वार। ज्यो०। यद्यप्यजादीनां हस्तौ न विद्येते तथाप्यग्रे पादौ हस्त इव हस्तौ। उपा० ७ अ०।

अत्र कवि —

"स्वाम्याह दक्षिणं हस्तं, कथं भिक्षां न लासि भो!।
स प्राह दातृहस्तस्या-धो भवामि कथं प्रभो! ॥ १ ॥"

पूजाभोजनदानशान्तिककलापाणिग्रहस्थापना—
सोत्प्रेक्षणहस्तकार्यगणमुख्यव्यापारबद्धस्पृहम्।
(इत्यभिधाय दक्षिणहस्त स्थिते)
वामोऽहं रणसंमुखाङ्कगणनावामाङ्गशय्यादिकृत्,
द्यूतादिव्यसनी त्वसौ स तु जगौ चोक्षोऽस्मि न त्वं शुचिः॥१॥

तत.-

राज्यश्रीर्भवताऽर्जिनार्थिनिवहस्यागे. कृता धीकृत,
संतुष्टोऽपि गृहाण दानमधुना तन्वन् दया दानिषु।
इत्यम्वं प्रतिबोध्य हस्तयुगलं श्रेयांसत. कारयन्,
प्रत्यग्रेक्षुरसेन पूर्णमृषभ पायात्स वः श्रीजिन. ॥ २ ॥"

कल्प० १ अधि० ७ क्षण। (हस्तनिक्षेपा 'हत्थकम्म' शब्दे अनुपदमेव वक्ष्यते।) चतुर्विंशत्यङ्गुलमाने अवमानविशेषे, अनु०। स्था०। 'हत्थेसु अंगुलीओ' उपा० २ अ०। स्वनाख्याते नक्षत्रविशेषे, जं० ७ वक्ष०। स्था०। विशे०। हस्तनक्षत्रं पञ्चतारम्। ज्यो० ५ पाहु०। स०।

हत्थकम्म-हस्तकर्मन्-न०। हन्ति दशति वा मुखमावृत्याऽनेनेति हस्त.,शरीरैकदेशो निक्षेपादानादिसमर्थस्तेन यत्कर्म क्रियते तद्धस्तकर्म। बृ० १ उ०३ प्रक०। समयप्रसिद्धे (स्था०५ ठा० २ उ०।) लिङ्गस्य करमर्दनेन शुक्रपुद्गलनिष्काशने, जी०। हस्तकर्म आगमप्रसिद्धम्, स्था० ३ ठा० ४ उ०। वेदविकारविशेषे, दशा० २ अ०। "णो सयं पाणिणा णिलज्जेज्जा"। न संबाधनं कुर्यात् यतस्तदपि हस्तसंबाधनं चारित्रं शबलीकरोति। सूत्र० १ श्रु०४ अ० २ उ० स०।

हस्तकर्मकरणे प्रायश्चित्तम्—

जे भिक्खु हत्थकम्मं करेइ करंतं वा साइज्जइ। (सू०१)

इदाणिं सुत्तालावगो भणति-जे-त्ति पदं,भि त्ति पदं खु त्ति, पयं, हत्थ त्ति पयं, कम्मं ति पदं, करेति पदं, सातिज्जति त्ति पदं।

इदाणिं पदत्थो भएणइ—

जे त्ती खलु णिद्देसे,भि त्ती पुण भेदणे खुवस्स खलु।
हत्थेण जं च करणं,कीरति तं हत्थकम्मं ति ॥ १ ॥

जे इति निर्देशे, खलु विशेषणे, किं विशिनष्टि?. भिदोर्नान्यस्य, भि इति विदारणं खु इति कर्मण आख्यानं ज्ञानावरणादिकर्म भिनत्तीति भिक्षु.। भावभिक्षोर्विशेषण पुन 'हत्थे' त्ति हस्यते अनेनेति हस्त:, हसति वा मुखमावृत्यैति हस्तः, आदाननिक्षेपादिसमर्थः शरीरैकदेशो हस्त, अनस्तेन यत्करणं व्यापार इत्यर्थ, स च व्यापार क्रिया भवति,अत. सा हस्तक्रिया क्रियमाणा कर्म भवतीत्यर्थः। नि० चू० १ उ०।

हस्तकर्मादीनां त्रयाणां पदानां प्रत्येकं पृथक् पृथक् प्ररूपणां वक्ष्ये। यथाप्रतिज्ञातमेव निर्वाहयितुकामो हस्तकर्मप्ररूपणां तावदाह—

नामं ठवणा हत्थो य, दव्वहत्थो य भावहत्थो य।
दुविहो य दव्वहत्थो, मूलगुणे उत्तरगुणे य ॥१२१॥

नामहस्त स्थापनाहस्तो द्रव्यहस्तो भावहस्तश्चेति, चतुर्धा हस्त.। तत्र नामस्थापनाहस्तौ गतार्थौ। द्रव्यहस्तो, ज्ञशरीरभव्यशरीरव्यतिरिक्तो द्विविधो भवति। तद्यथा— मूलगुणनिर्वर्तितो उत्तरगुणनिर्वर्तितो च यो जीवविप्रमुक्तस्य शरीरस्य हस्त स मूलस्य-जीवस्य गुणेन—प्रयोगेण निर्वर्त्तित इति मूलगुणनिर्वर्त्तित। यस्तु काष्ठचित्रलेप्यकर्मादिषु निवर्त्तितो हस्तः स उत्तरगुणनिर्वर्त्तित उच्यते।

अथ भावहस्तमाह—

जीवो उ भावहत्थो, णेयव्वो होइ कम्मसंजुत्तो।
बितिओ वि य आदेसो,जो तस्स विजाणओ पुरिसो १२२।

'जीवो' त्ति-विभक्तिव्यत्ययात् यो जीवस्य हस्त कर्मसंयुक्त-आदाननिक्षेपादिक्रियायुक्त स नोआगमतो भावहस्त उच्यते । द्वितीयोऽपि चात्रादेश समस्ति, यस्तस्य विज्ञायकस्तदुपयुक्त पुरुष. सोऽपि भावहस्त'; आगमत इत्यर्थ । अत्र नोआगमतो भावहस्तेनेहाधिकार ।(वृ०)(कर्मपदव्याख्या 'कम्म' शब्दे तृतीयभागे २४४ पृष्ठे गता ।) एषां मध्ये अत्र कतमेनाधिकार'. इति चेदत आह-अधिकारोऽत्र भावकर्मणो मोहोदयलक्षणेन शेषास्तु शिष्यमतिव्युत्पादनार्थं प्ररूपिताः ततो भावहस्तेन यत्कर्म क्रियते तत् हस्तकर्म भण्यते इति प्रक्रम ।

अथ भावकर्मैव व्याचिख्यासुराह-

**दुविहं च भावकम्मं, असंकिलिट्ठं च संकिलिट्ठं च ।**
**थप्पं तु संकिलिट्ठं, असंकिलिट्ठं तु वोच्छामि ॥१२२२॥**

द्विविधं च भावकर्म, तद्यथा—असंक्लिष्टं च, संक्लिष्टं च । चशब्दौ स्वगतानेकभेदसूचकौ, तत्र संक्लिष्टं स्थाप्यं-पश्चाद्वक्ष्यते । असंक्लिष्टं तु साम्प्रतमेव वक्ष्यामि ।

यथा प्रतिज्ञातमेव प्रमाणयति—

**छेदणे भेदणे चेव, घंसणे पीसणे तहा ।**
**अहिघाते सिणेहे य, काये खारे त्ति या वरे ॥१२२३॥**

छेदनं भेदनं चैव घर्षणं पेषण तथा अभिघात. स्नेहश्च काये क्षार इति वा पर । एवमसंक्लिष्टस्य कर्मणोऽष्टौ भेदाः भवन्ति । एतानि च छेदनादीनि शुषिरे वा कुर्यात्, अशुषिरे वा ।

पुनरेकैकं शुषिरादिछेदन द्विधा कथमिति चेदुच्यते—

**एकेकं तं दुविहं, अणंतर परंपरं च णायव्वं ।**
**अट्ठाणट्ठा य पुणो, होति अणट्ठाएँ मासलहुं । १२२४।**

यत् शुषिरस्य अशुषिरस्य वा छेदन तदेकैकं द्विविधम्-अनन्तर, परपरं च ज्ञातव्यम् । पुनरेकैकं द्विधा—अर्थाद्, अनर्थाच्च; सार्थकं निरर्थक चेत्यर्थ । अनर्थकं छेदनादिक कुर्वता मासलघु असमाचारीनिष्पन्नमिति भाव ।

कथ पुन छेदनमनन्तरं परपरं वा सभवतीत्याह—

**नहदंतादि अणंतर, पिप्पलमादी परंपरे आणा ।**
**छप्पइमादि असंजमे, छेदे परितावणादीया ॥१२२५॥**

नखैर्दन्तैरादिग्रहणात्-पादेन वा यच्छिद्यते तदनन्तरछेदनमुच्यते, पिप्पलकेन, आदिग्रहणात्-पाइल्लकछुरिकाकुठारादिभिर्यच्छिद्यते तत् परंपरछेदनम्, परस्पर वा छिन्दता तीर्थकरगणधराणामाज्ञा न कृता भवति । तं छिन्दन्त दृष्ट्वा अन्येऽपि छिन्दन्ति इत्यनवस्था,एते तिष्ठन्त छेदनादिकं सिद्धुर कुर्वन्ति न स्वाध्यायम्, एव शय्यातरादौ चिन्तयति मिथ्यात्वम् । विराधना द्विविधा-संयमे,आत्मनि च । तत्र यत्राङ्गौ छिद्यमाने षट्पदिकादयो यद्विनाशमश्नुवते सोऽसयम; संयमविराधनेत्यर्थ, अथ छेदनं कुर्वतो हस्तस्य वा पादस्य वा छेदो भवति तत आत्मविराधना । तत्र च परितापमहादु खादिनिष्पन्नं पाराञ्चिकान्त प्रायश्चित्तम् ।

अथ शुद्धं शुद्धेन प्रायश्चित्तमाह—

**झुसिरमझुसिरे लहुगा,लहुगा गुरुगो य होंति गुरुगा य।**
**संघट्टणपरितावण, लहुगुरुग तिवायणे मूलं ॥१२२६॥**

अशुषिरमनन्तरं छिनत्ति मासलघु शुषिरमनन्तर छिनत्ति चतुर्लघुकम् । अशुषिर परपर छिन्दतो गुरुको मास, शुषिरं परपरं छिन्दतश्चतुर्गुरुका भवन्ति । शुषिरे बहुतरदोषत्वात् गुरुतरं परंपरे शस्त्रग्रहणं संक्लिष्टतर चित्तमिति कृत्वा गुरुतमं प्रायश्चित्तम् । एवं शुद्धपदं त्वप्कायविराधनाभावे मन्तव्यम्.अशुद्धपदे पुनरिदमपर प्रायश्चित्तम्-'सघट्टणमि'त्यादि, छेदनादिकं कुर्वन् द्वीन्द्रियान् संघट्टयति चतुर्लघु परितापयति चतुर्गुरु. उपद्रावयति षड्लघु. त्रीन्द्रियान् संघट्टयति चतुर्गुरु, परितापयति षड्लघु. उपद्रावयति षड्गुरु, चतुरिन्द्रियान् संघट्टयति षड्लघु, परितापयति षड्गुरु, उपद्रावयति छेद., पञ्चेन्द्रियान् संघट्टयति षड्गुरु, परितापयति छेदः, पञ्चेन्द्रियमतिपातयति मूलम् । एवमिन्द्रियानुलोम्येन सविस्तरं यथा पीठिकायामुक्त तथैवात्राऽपि मन्तव्यम् ।

अथ द्वितीयोऽयमादेश.—

**अझुसिरणंतरँ लहुओ, गुरुगो अ परंपरे अझुसिरम्मि ।**
**झुसिराण चरे लहुगा,गुरुगा तु परंपरे अहवा ॥१२२७॥**

अशुषिरे अनन्तरे लघुको मास., अशुषिरे परंपरे गुरुको मास., शुषिरे अनन्तरे चतुर्लघु शुषिरे परपरे चतुर्गुरव । अथ वेति प्रायश्चित्तस्य प्रकारान्तरद्योतकः एवं तावच्छेदनपरंपरं व्याख्यानम् ।

अथ भेदनादीनि व्याख्यातुकाम इदमाह—

**एमेव सेसएसु वि, करपादादी अणंतरं होइ ।**
**जं तु परंपरकरणं, तस्स विहाणं इमं होति ॥ १२२८ ॥**

एवमेव छेदनवत् शेषेष्वपि भेदनादिषु च वक्तव्यं नवरं करपादाभ्यामादिशब्दात्-जानुकूर्परादिभि. शरीरावयवै. क्रियमाणाभ्या भेदनादिकमनन्तरं भवति, यत् भेदनादे. परपराकरण तस्य विधानमिदं भवति ।

तद्यथा—

**कुवणयमादी भेदो, घंसलमणिगादियाण कट्ठादी ।**
**पट्टगवरादिपीसण-गोप्फणधणुमादि अभिघातो॥१२२९**

कुवणयो-लगुडस्तेन आदिशब्दादुपललेष्टुकादिभिर्वा घटादिभेद भेदनं,द्विधा त्रिधा छिद्रपातनमित्यर्थः,एतत्परंपराभेदमुच्यते । एवं घर्षणं मणिकादीनां मन्तव्य. यथा मणिकारा लगुडबंधान् कृत्वा मणिकान् घर्षयन्ति, आदिशब्दात्प्रवालादिपरिग्रह, 'कट्ठाइ' त्ति चन्दनकाष्ठफलकादिके वा यत् घर्षति तद्वा घर्षणम्, पट्टग त्ति,गन्धपट्टकस्तत्र वराः प्रधाना ये गन्धास्तद्वादीनां पेषण मन्तव्यम् । गोफणा चर्मदवरकमयी प्रसिद्धा तया, धनु प्रभृतिभिर्वा लेष्टुकमुपलं वा यत्प्रक्षिपति एषोऽभिघात उच्यते ( अभिघातव्याख्या 'अभिघाय' शब्दे प्रथमभागे ७१४ पृष्ठे गता । ) तत शस्त्रेण परपराकरणभूतेन पत्रछेद्यादिषु निवर्त्तयति । क्षारो लवणतमशुषिरे शुषिरे वा कलिञ्जादिभि प्रक्षिपति । कलिञ्जो वंशकर्परी ।

एषु दोषानाह—

एक्केक्कवयणातो, आणादीया य संजमे दोसा ।
एवं तु अणट्ठाए, कप्पइ अट्ठाएँ जयणाए ॥ १२३१ ॥

एकैकस्माद्वचनादिपदादागाढानागाढाद्यो दोषा संयमे आत्मनि च प्रागुक्ताः संयमात्मविराधनायामेते दोषा अनर्थकं छेदनादिकं कुर्वतो भवन्ति। अथ-अर्थ-प्रयोजन तस्मिन्प्राप्ते यतनया छेदनादिकं कुर्वाणि तदा कल्पते।

इदमेव द्वितीयपदं भावयति—

असती अहाकडाणं, दसिगादिगछेदणं च जयणाए।
गुलमादि लाउणालं, कप्परभेदादि एमेव ॥ १२३२ ॥

यथाकृतानां वस्त्राणामभावे दशिका छेत्तव्या, आदिशब्दात्प्रमाणाधिकस्य वा वस्त्रादेः छेदनं यतनया यथा संयमात्मविराधना न भवति तथा कर्त्तव्यम्। भेदनद्वारे गुडादिपिण्डस्य, भेदं कुर्यात्, अलाबु-तुम्बकं तस्य वा नालमधिकरणं भिन्द्यात्। कर्परं-कपालं तदादिना वा कार्यमुत्पन्नं ततो घटग्रीवादेर्भेदमेवमेव यतनया कुर्यात्।

अक्खाणचंदणे वा, विघंसण पीसणं तु अगतादी।
वग्घातीणऽभिघातो, अगतादि य ताव सुणगादी॥१२३३॥

घर्षणद्वारे अक्षाः प्रसिद्धास्तेषां समीकरणार्थं चन्दनस्य वा ग्लानादेः परिहारोपशमनार्थं घर्षणं कर्त्तव्यम्। पेषणद्वारे ग्लानादिनिमित्तमेवमेव अगदादेः पेषणं विधेयम्। अभिघातद्वारे व्याघ्रादीनामभिभवतो गोफणया धनुषा वा अभिघातः कार्यः. अगदादेर्वा प्रताप्यमानस्य शुनककाकादयोऽभिपतन्तो लगुडेन भेषयितव्याः।

बितिए उज्झणे जतणा, दाहे वा भूमिदेहसिंचणता।
पडिणीगामित्रसमणी,पडिमा खारे तु मल्लादि॥१२३४॥

स्नेहद्वारे द्वितीयमपवादपदं प्रतीत्य स्नेहमुद्धरित्वा क्षारमध्ये प्रक्षिप्य परिष्ठापयेत्, द्रव—पानकं तस्योज्झनं यतनया विधेयम्, 'दाहे' त्ति लताया उष्णस्य वा गाढतरमभितापे प्रतिश्रयभूमिकायामाकर्षणं कुर्यात्, तृषाभिभूतं वा देहं सिञ्चेत् ग्लानं भक्तप्रत्याख्यायिनं वा दाहाभिभूतं सिञ्चेत्। कायद्वारे कश्चिद् गृहस्थः प्रत्यनीकस्तस्योपशमनीं प्रतिमां कृत्वा ततो यावदसावनुकूलो भवति तावन्मन्त्रं जपेत् अशिवप्रशमनीं वा प्रतिमां विदध्यात्। क्षारद्वारे अनन्तरं परंपरं वा शृङ्गारे वा प्रस्रवणनिशमनार्थं क्षारं प्रक्षिपेत् तत्र शुषिरं दर्शयति 'खारे तु मल्लादि" त्ति मल्लं बालमयं सिन्दूरं तत्र क्षारं क्षपणीय किं सजातं न वेति।

उपसंहरन्नाह—

कम्मं असंकिलिट्ठं, एवमियं वण्णियं समासेणं।
कम्मं तु संकिलिट्ठं,वोच्छामि अहाणुपुव्वीए ॥१२३५॥

एवमिदमसंक्लिष्टं हस्तकर्म समासेन वर्णितम्। साम्प्रतं संक्लिष्टं हस्तकर्म यथानुपूर्व्या वक्ष्यामि।

तदेवाह—

वसहीए दोसेणं, दट्ठुं सरितुं व पुव्वभुत्ताइं।
एतेहिं संकिलिट्ठं, तमहं वोच्छं समासेणं ॥ १२३६ ॥

वसतेर्दोषेण वा स्त्रीणां वा आलिङ्गनादिकं विधीयमानं दृष्ट्वा, पूर्वभुक्तानि वा स्त्रीभिः सह हसितक्रीडितादीनि स्मृत्वा, एतैः कारणैः संक्लिष्टं-हस्तकर्म यथोत्पद्यते तदहं वक्ष्ये समासेन।

तत्र वसतिदोषं तावदाह—

दुविहो वसहीदोसो, वित्थरदोसो य रूवदोसो य।
दुविहो य रूवदोसो,इत्थिगतणपुंसगो चेव ॥१२३७॥

द्विविधो वसतिदोषो भवति. तद्यथा-विस्तरदोषो. रूपदोषश्च। तत्र विस्तरदोषो घट्टशालादिक कुशीलादिसंसर्गतो वा, रूपदोष -स्त्रीरूपगतो, नपुंसकरूपगतश्च। स च दोषः एकैको द्विविध -सचित्त ; अचित्तश्च, जीवविषय. अजीवविषयश्चेत्यर्थः।

अचित्त पुनरपि द्विविधस्तत्रगत, आगन्तुकश्च।
उभयमपि व्याचष्टे—

कट्ठे पुत्थे चित्ते, दंतोवलमट्टियं व तत्थगतं।
एमेव य आगंतुं, पालत्तय वेट्टिया जवणा ॥ १२३८ ॥

या. काष्ठकर्मणि वा पुस्तकर्मणि वा चित्रकर्मणि वा निर्वर्तिता स्त्रीप्रतिमा,यद्वा-दन्तमयमुपलमयं मृत्तिकामयं वा स्त्रीरूपं यस्यां वसतौ अस्ति तत् तत्रगतं मन्तव्यम्। तद्विषयो दोषोऽप्युपचारात्तत्रगत उच्यते। एवमेव चागन्तुकमपि मन्तव्यम्. आगन्तुकं नाम-यदन्यत आगतं ततो यथा तत्र गता स्त्रीप्रतिमा भवन्ति तथा आगन्तुका अपि भवेयुः, तथा चात्र पादलिप्ताचार्यकृता 'वट्टक' त्ति राजकन्यकादृष्टान्तः, स चायं "पा(य)लित्तायरिएहिं रन्नो भगिणीसरिसिया चंकमणुम्मेसनिमेससमयी बालविट्टहत्थगा आयरियाणं पुरतो विया। राया वि अईव पा(य)लित्तगासिणेहं करेइ। धिज्जाइएहिं पउट्ठेहिं रन्नो कहियं—भगिणी ते समणएहिं अभिओगिया'राया न पत्तियति भणिओ आयच्छ देसेसु।ततो राया आगतो पामित्ता पालित्तायरियाणं रुट्ठो पओसाग्गिओ। तओ सा आयरिएहिं कड त्ति विगरणीकया, राया सुट्ठुतरं आउट्टो" एवमागन्तुका अपि स्त्रीप्रतिमा भवन्ति। 'जवण' त्ति जवनविषये ईदृशानि स्त्रीरूपाणि प्राचुर्येण क्रियन्ते। व्याख्यातं द्विविधमप्यचित्तम्। अथ सचित्तं व्याख्यायते, तदपि द्विविधम्-तत्रगतम्, आगन्तुकं च।

तदुभयमपि व्याख्यानयति—

पडिवासिग एकघरे, सचित्तरूवं तु होति तत्थगतं।
सुण्णमसुण्णघरे वा, एमेव य होति आगंतू ॥ १२३९ ॥

प्रातिवेशिमकगृहे एकत्रैवोपाश्रये कारणेन स्थितानां यत् स्त्रिया रूपं दृश्यते तत्तत्रगतं सचित्तरूपं भवति। अथवा-शून्यगृहमशून्यगृहं वा प्रविष्टस्य या तत्र स्थिता स्त्री विलोक्यते, तदपि तत्रगतम्। एवमेव चागन्तुकमपि सचित्तं स्त्रीरूपं भवति, प्रतिश्रये या स्त्री समागच्छति तदागन्तुकमिति भावः।

अत्र तिष्ठतां दोषानुपदर्शयति—

आलिंगणादी पडिसेवणं वा,
दव्वं सचित्ताणमचेदणं वा ।
सद्देहिँ रूवेहि य इंधिते तु,
मोहग्गी संदिप्पति हीणसत्ते ॥ १२४० ॥

तेषां तत्रगतानाम्-आगन्तुकानां वा सचित्तानां स्त्रीरूपाणाम् आलिङ्गनादीनि प्रतिसेवना कुर्वतो दृष्ट्वा अचेतनानि वा स्त्रीरूपाणि विलोक्य प्रतिसेव्यमानाया वा स्त्रिया शब्दान् श्रुत्वा तैः शब्दै रूपैश्च इन्धित -प्रज्वालितो मोहाग्निः कस्यापि हीनसत्त्वस्य भुक्तभोगिनोऽभुक्तभोगिनो वा संदीप्यते, ततः स्मृतिकरणकौतुकदोषा भवेयुः ।

कथमित्याह—

कुतूहलं च गमणं, सिंगारं कुड्डछिड्डकरणे य ।
दिट्ठे परिणयकरणे,भिक्खुणो मूलं दुवे इतरे ॥१२४१॥

कुतूहलं तस्योत्पद्यते यथाऽत्र गत्वा पश्यामि शृणोमि शब्दम्, एवं कुतूहले उत्पन्ने तत्र गमनं कुर्यात्, शृङ्गारं वा गायन्तीं श्रुत्वा गच्छेत्,कुड्यस्य वा छिद्रं कृत्वा प्रलोकयेत्। दृष्टे च सोऽपि तद्भावपरिणतो भवेत् अहमप्येवं करोमीति। एवं तद्भावपरिणतः कश्चित्तदेवालिङ्गनाऽऽदिकरणं कुर्यात्। एतेषु स्थानेषु भिक्षोर्मूलं यावत्प्रायश्चित्तम्। इतरयोरुपाध्यायाचार्ययोर्यथाक्रमं, द्वे अनवस्थाप्यपाराञ्चिके चरमपदे भवतः।

इदमेव व्याचष्टे—

लहुगो लहुआ गुरुगा, छम्मासा छेदमूलदुगमेव ।
दिट्ठे य गहणमादी, पुव्वुत्ता पच्छकम्मं वा ॥ १२४२ ॥

तत्र गतः शृणोति मासलघु, कुतूहलं तस्योत्पद्यते मासगुरु, व्रजतश्चतुर्लघुकाः, शृङ्गारं शृण्वतश्चतुर्गुरुकाः, कुड्यस्य छिद्रकरणे षण्मासा लघवः, छिद्रेण पश्यन्नास्ते षड्गुरवः, तद्भावपरिणते छेदः, आलिङ्गनादिकरणे मूलम्, एवं भिक्षोः प्रायश्चित्तमुक्तम्। उपाध्यायस्य मासगुरुकादारब्धमनवस्थाप्ये पर्यवस्यति। आचार्यस्य चतुर्लघुकादारब्धं पाराञ्चिके तिष्ठति। अन्यच्च आरक्षिकादिभिर्दृष्टे सति ग्रहणाऽऽकर्षणादयः पूर्वोक्ता दोषाः, या प्रतिमा सा कदाचिदालिङ्ग्यमाना भज्येत ततः पश्चात्कर्मदोषः, एष वसतिविषयो रूपदोष उक्तः।

अथ विस्तरतो दोषमाह—

अप्पो य गच्छो महती य साला,
निक्कारणे ते य तहिं ठिताओ ।
कज्जट्ठिया वा जतणाएँ हीणा,
पावंति दोसं जतणा इय तु ॥ १२४३ ॥

अल्पश्चासौ गच्छस्तत्र प्रतिश्रये स्थितः, शाला च सा महती-विस्तीर्णा, ते च साधवो निष्कारणं तत्रोपाश्रये स्थिता वर्तन्ते। अथवा-कार्यस्थिताः परं यतनया वक्ष्यमाणया हीनास्ततो वेश्याप्रभृतिषु स्त्रीषु समागच्छन्तीषु दोषं कौतुकस्मृतिकरणादिकं प्राप्नुवन्ति, कारणे तु तत्र तिष्ठतामियं यतना।



यतनास्वरूपमाह—

असिवादिकारणेहिं, अणासति वित्थडीए ठायंति ।
ओतप्पोतं करिंती, संथारगवत्थपादेहिं ॥१२४४॥

अशिवादिभिः कारणैः क्षेत्रान्तरे अतिष्ठन्तस्तत्राऽन्यस्या वसतेरभावे विस्तृतायामपि वसतौ तिष्ठन्ति, तत्र च संस्तारकैर्वस्त्रपात्रैश्च भूमिकाम् 'ओतप्पोतं' ति ( आस्तृताः) कुर्वन्ति; पालयन्तीत्यर्थः ।

इदमेव व्यनक्ति—

भूमीए संथारे, अद्धवियड्ढे करिंति तह दट्ठुं ।
ठातुमणा वि दिवसओ,न ठंति रत्तिं तिमा जयणा॥१२४५

विस्तीर्णायां वसतौ तथा भूम्या संस्तारकमर्द्धं विवर्द्धितं ते कुर्वन्ति,तथा तान् दृष्ट्वा स्थातु मनसोऽपि न तिष्ठन्ति, एषा दिवसतो यतना। रात्रौ पुनरियं यतना।

वेसत्थीआगमणे, अवारणे चउगुरू व आणादी ।
अणुलोममनिग्गमणे,ठाणं अन्नत्थ रुक्खादी॥१२४६॥

वेश्यास्त्री यदि रात्रावागच्छति भणति च अहमप्यत्र वसामीति सा वारणीया। अथ न वारयन्ति ततश्चतुर्गुरुकम्, आज्ञादयश्च दोषाः। 'अणुलोम' त्ति अनुकूलैर्वचनैः सा प्रतिषेद्धव्या न खरपरुषैः, सा साधूनामभ्याख्यानं दद्यादिति कृत्वा 'निग्गमणे' त्ति यदि सा वेश्या गन्तुं नेच्छति ततः साधुभिर्गन्तव्यम्, अन्यस्मिन्-अन्यगृहादिस्थाने स्थातव्यम्, तदभावे वृक्षमूलादावपि स्थेयं न पुनस्तत्रेति।

इदमेव व्यक्तीकरोति-

पुढवीउ सा सजोती, हरियतसा तेणउवहि वासं वा ।
सावगसरीरतेणग, फरुसादी जाव ववहारो ॥१२४७॥

यद्यपि बहिः पृथिवीकायः, सा वेश्या सज्योतिर्वा साग्निका, अन्या वसतिः हरितकायस्त्रसप्राणिनो वा तत्र सन्ति तथापि निर्गन्तव्यम्। अथ बहिरुपधिस्तेनभयं वर्षं वा वर्षति, श्वापदाः शरीरस्तेनका वा तत्र सन्ति, ततः परुषवचनैरपि सा वेश्या भणितव्या-निर्गच्छास्मदीयप्रतिश्रयात्,आदिशब्दात्तथाऽप्यनिर्गच्छन्त्या बन्धनादिकमपि विधीयते यावद् व्यवहारोऽपि करणे उपस्थितायाः कर्तव्यः।

इदमेव भावयति-

अम्हे दाणि वि सहिमो, इड्ढिमपुत्तबलवं असहणो ऽयं ।
णीहि अणिते बंधण,णिवकहणे सिरिघरोहरणं ।१२४८।

साधवो भणन्ति-वयं क्षमाशीला इदानीं विविधं विशिष्टं वा सहामहे, ततो यस्त्वाकारवान् साधुः स दर्शनीयः, अयं तु ऋद्धिमत्पुत्रो राजकुमारादिर्बलवान् सहस्रयोधी असहनः-कोपनो बलादपि भवन्तीं निष्काशयिष्यति, तत स्वयमेव निर्गच्छ, यदि निर्गच्छति ततो लष्टम्,अथ न निर्गच्छति तदा सर्वेऽपि साधव एको वा बलवान् तां बध्नाति ततः प्रभाते मुच्यते। मुक्ता च यदि नृपस्यान्तिके साधूनाकर्षयति तदा करणे गत्वा कारणिकादीनां व्यवहारे दीयते।तत्र च श्रीगृहोदाहरणं कर्त्तव्यम्।यथा-यदि राज्ञः श्रीगृहे रत्नापहार

कुर्वन् कश्चिच्चौर. प्राप्यते ततस्तस्य कं दण्डं प्रयच्छथ?,कारणिका आहु -शिरस्तदीयं गृह्यते। साधवो भणन्ति अस्माकमप्येषा रत्नापहारिणी अव्यापादिता मुधैव मुक्ता। ते आहु'-कानि युष्माकं रत्नानि ?, साधवो भणन्ति-ज्ञानादीनि। कथं तेषामपहार.?, अनाचारप्रतिसेवनादपध्यानगमनादिनेति ।

अथ सस्त्रीक पुरुषः समागच्छेत् सोऽपि वारणीय.।

तथा चाह—

अहिकारो वारणम्मि, जत्तिय अप्फुन्न तत्तिया वसही।
अतिरेगदोस भगिणी,रत्तिं आरद्धे णिच्छुभणं।१२४९।

अत्र केवला पुरुषमिश्रीभावा स्त्री समागच्छति तत्र सर्वत्रापि वारणायामधिकार, सोऽपि कर्त्तव्यति भाव अत एव श्रोत्सर्गिको यद्दशालायां न वस्तव्य, किं तु यावद्भि., साधुभि सा 'अप्फुन्न' त्ति व्याप्ता भवति तावती-तावत्प्रमाणा वसतिरन्वेषणीया। अथातिरिक्ताया वसतौ वसन्ति ततो दोषा. पूर्वोक्ता भवन्ति। कारणतस्तस्यामपि स्थितानां कश्चित्पुरुष स्त्रीसहित समागच्छति,स चानुत्कटैर्वचोभिर्वारणीय, वार्यमाणश्च ब्रूयात्—एषा मे भगिनी संरक्षणीया, साधूनां समीपे वा न शङ्कनीया इति छद्मना भणित्वा स्थित., रात्रौ च प्रारब्धवांस्तां प्रतिसेवितुम्, तत साधुभिर्वक्तव्य., अरे! निर्लज्ज! किमस्मान् स्थितान् न पश्यसि, यदेवमकार्यं करोषि एवमुक्त्वा निष्काशनं तस्य कर्त्तव्यम्।

अथासौ निष्काश्यमानो रुष्येत्, रुष्टश्च—

आवरितो कम्मेहिं, सत्तू विव उवट्ठितो थरथरंतो।
मुंचति य भेंडिता तो, एकेक्कं ते निवाएमि॥ १२५०॥

कर्मभि -कषायमोहनीयादिभिरावृत.—आच्छादित साधूनामुपरि शत्रुरिव रोषेण 'थरथरंतो' त्ति भृशं कम्पमान. प्रहारं दातुमुत्थितो वाग्योगेन च भेंडिकां गिरं महता शब्देन मुञ्चति, यथा—युष्माकमेकैकं निपातयामि।

निग्गमणं तह चेव य, णिद्देसे सदोसनिग्गमे जतणा।
मज्झाए झाणे वा, आवरणे सद्दकरणे य॥ १२५१॥

एवं तस्मिन् विरुद्धे तस्या वसते साधुभिर्निर्गमनं तथैव कर्त्तव्यम्. यथा पूर्वं वेश्यास्त्रियामुक्तं यदि वहिर्निर्दोषम्, अथ सदोषं तत अनिर्गमे अनिर्गच्छतामियं यतना-स्वाध्यायो महता शब्देन क्रियते, ध्यानं वा ध्यायते, यस्य स्वाध्याये ध्याने वा लब्धिर्न भवति स आवरणं-कर्णयो स्थगनं विदधाति, शब्दकरणं वा महता शब्देन वोलो विधीयते। एवमपि यतमानस्य कस्यापि तत्प्रतिसेवनं दृष्ट्वा कर्मोदयो भवेत्,

कथम्? इति चेदुच्यते—

वडपादवउम्मूलण, तिक्खम्मि वि विज्जलम्मि वच्चंतो।
कुणमाणो वि पयत्तं, अवसो जह पावती पडणं।१२५२।
तह समणसुविहियाणं, सव्वपयत्तेण वी जतंताणं।
कम्मोदयपच्चइया, विराधणा कस्स वि हवेज्जा॥१२५३॥

यथा वटपादपस्याऽनेकमूलप्रतिबद्धस्यापि गिरिनदीसलिलवेगेनोन्मूलनं भवति, यथा वा-तीक्ष्णेन नदीपूरेण कृतप्रयत्नोऽपि पुरुषो ह्रियते, विजले वा-कर्दमाकुले व्रजन् प्रयत्नं कुर्वाणोऽपि अवश पतनं यथा प्राप्नोति, तथा श्रमणसुविहितानां सर्वप्रयत्नेनापि निर्विकृतिकविधानवाचनाप्रदानादिना यतमानानां वसतिदोषेण अनाचारदर्शनान्मोहोदयः संजायते, ततश्च कर्मोदयप्रत्ययिका कस्यचिद् नवचारित्रविराधना भवेत्। पञ्चमासादुदीर्णमोहो धृतिदुर्बलश्च उदयमधिसोढुमशक्तो हस्तकर्म करोति।

तत्र प्रायश्चित्तमाह—

पढमाएँ पोरिसीए, बितियाततियाएँ तह चउत्थीए।
मूलं छेदो छम्मा-समेव चत्तारिया गुरुगा॥ १२५४॥

प्रथमायां पौरुष्यां हस्तकर्म करोति मूलं, द्वितीयाया छेद., तृतीयायां षण्मासा गुरवः, चतुर्थ्यां चतुर्मासा गुरव.।

एतामेव निर्युक्तिगाथा (भाष्यकार) व्याचष्टे—

निसि पढमपोरिसीए, अदढधिती सेवणे भवे मूलं।
पोरिसी पोरिसी हसणे, एक्केकं ठाणगं हसई॥१२५५॥

निशि-रात्रौ प्रथमपौरुष्या मोहोद्भवोऽजनि यतस्तस्यामेवाद्दढधृतिर्यदि हस्तकर्म सेवते तदा मूलम्। अथ प्रथमपौरुषीमतीत्य द्वितीयाया सेवते छेद, द्वे पौरुष्यावधिसह्य तृतीयायां सेवते षड्गुरव, मिश्रपौरुषीरधिसह्य चतुर्थ्यां सेवमानस्य चतुर्गुरुका। एवं पौरुषीं पौरुषीम् एकैकपौरुषीहसने प्रायश्चित्तस्थानं हसति।

बितियम्मि वि दिवसम्मि, पडिसेवंतस्स मासियं गुरुअं।
छट्ठे पच्चक्खाणं, सत्तमगे होति तेगिच्छं॥ १२५६॥

एवं रात्रौ चतुरो यामानतिसह्य द्वितीये दिवसे प्रथमपौरुष्या प्रतिसेवमानस्य मासगुरुकं,ततः परं सर्वत्रापि मासगुरुं, लघूनि तु प्रायश्चित्तानि अत्र न भवन्ति, अत एवेदं हस्तकर्मसेवनमनुद्घातिकमुच्यते, एवमसौ प्रतिसेव्य साङ्घाटिकस्यान्यस्य वा कस्याप्यालोचयेत्। स च प्रागुक्तदस्तकर्मकारकं साधुं पञ्चकारणतया षष्ठ साधुस्तं प्रति ब्रवीति। यत्कृतं यदकृतं न भवति, संप्रति भक्तप्रत्याख्यानमङ्गीकुरु। सप्तमको चैकित्स्यं भवति। इयमत्र भावना-सप्तमो ब्रवीति, अस्य मोहोदयस्य निर्विकृतिका वाऽमौदरिकादिरूपा चिकित्सा कर्त्तव्या।

तथा—

पडिलाभणऽट्ठमम्मि, णवमे सड्ढी उवस्सए फासे।
दसमम्मि पिता पुत्ता, एकारसमम्मि आयरिए॥१२५७॥

अष्टमसाधोः प्रतिलाभनाया उपदेशो भवति, नवमो ब्रूते श्राद्धिका उपाश्रये समानीयते सा भवत. शरीरं स्पृशतु, दशमसाधो. पितापुत्रौ युवां संज्ञातिकग्रामं गत्वा चिकित्सां कुरुतमित्युपदेशो भवति, एकादशस्य साङ्घाटिकसाधो आचार्या इत्युल्लेखनोपदेशो भवति। किमुक्तं भवति-एकादशो ब्रवीति—यदाचार्या आदिशन्ति तद्विधेहि, अयं शुद्ध.।

शेषेषु प्रायश्चित्तमाह—

छट्ठो य सत्तमो य, अह सुद्धा तेसि मासियं लहुयं।
उवरिल्ल जं भणंती, थेरस्स वि मासियं गुरुअं॥१२५८॥

षष्ठसप्तमौ यथा शुद्धौ न, दोषयुक्तादेशं ददातः; यतश्च

गुरूणामुपदेशमन्तरेण स्वेच्छया भणनस्ततो मासिक लघुकं तयो. प्रायश्चित्तम्। उपरितना अष्टमनवमदशमा यत्सदोषमुपदेशं भणन्ति तेन त्रयाणामपि मासगुरुकम्। स्थविरस्यापि पितुः पुत्रेण सह संज्ञातं ग्रामं गच्छतो मासिकं गुरुकम् ।

तथा उक्तेन च षष्ठादिसाधूनामुपदेशेन विवृणोति–

संघाडगादिकहणे, जं कतँ तं कतँ इयाणि पच्चक्खा ।
अविसुद्धो दुट्ठवणो,ण समिति किरिया से कायव्वा१२५९

सघाटकस्यादिशब्दादन्यस्य वा हस्तकर्म कृतं मयेत्येवं कथने कृते सति ब्रूयात्—यत्कृतं तत्कृतमेव इदानीं भक्तप्रत्याचक्ष्व, किं ते भ्रष्टप्रतिज्ञस्य जीवितेनेति। सप्तम प्राह–अविशुद्धो दुष्टव्रणोऽप्युक्तादिका क्रिया विना न शाम्यति अत' क्रिया ' से ' तस्य कर्तव्या , एव भवताऽस्य मोहोदयव्रणस्य निर्विकृतिकावमौदरिका क्रिया विधेया , येनोपशमो भवति ।

पडिलाभणा उ सड्ढी, करसीसे वंद ऊरु दोच्चंगे ।
मूलादिरुयपमज्जण ओअट्टणे, सड्डिमाणेमो ॥१२६०॥

अष्टम. प्राह–' श्राद्धी श्राविका सा प्रतिलाभनां करोति,प्रतिलाभयन्त्यां चोर्वो. पात्रके स्थिते यथाभावेनाभ्युपेत्य वा चालिते ऊरुमध्ये द्वितीयाङ्गादिकमवगलति,तत सा श्राविका करेण स्पृशन्ती वन्दते शीर्षेण वा वन्दमाना पादौ स्पृशेत्, तत स्त्रीस्पर्शेन वीर्यनिसर्गो भवेत् , नवम प्राह–'मूलादिरुये ' ति मूलमादिग्रहणादन्यतरद्वा तनुरूपं रुग्जातकमसमादुत्पद्यते तत श्राद्धिका आनीयते, सा स्वतश्चेलादिकं प्रमार्जयति ' ओअट्टण ' त्ति गाढतरमुद्वर्तयति एव वीर्यनिसर्गो भवेत्, तत. श्राद्धिकामानयाम ।

सन्नायपल्लि णेहि, मेहुणि खुड्डुंत निग्गमोवसमो ।
अविधितिगिच्छा एसा, आयरिकहणे विधिकारो१२६१

यस्य मोहोदय समुत्पन्नस्तस्य पितरं प्रति दशमो भणति–संज्ञातकपल्लिं संज्ञातकग्रामं 'ण'मित्येनमात्मीयं पुत्रं नय त्व तत्र मैथुनिका मातुलदुहिता तया सह 'खुड्डुंत' त्ति सोपहासवचनैर्भिज्ञकथाभि परस्परं हस्तसंकर्षेण च क्रीडतो वीर्यनिर्गमो भवेत् , ततश्च मोहोपशमो भवति । एषा सर्वाप्यविधिचिकित्सा भणिता । यस्तु ब्रवीति–आचार्याणा गत्वा आलोचयत ततस्ते यां चिकित्सामुपदिशन्ति सा कर्त्तव्या । एतदेवास्य साधोर्विधिकथनमुच्यते ।

अत्रैव प्रकारान्तरमाह—

सारूविए गिहत्थे, परतित्थिनपुंसगे य सूयणया ।
चउरो य हुंति लहुगा,पच्छाकम्मम्मि ते चेव ॥१२६२॥

कश्चित् ब्रूयात्–सारूपिक सिद्धपुत्रस्तद्भूगो यो नपुंसकस्तेन हस्तकर्म कार्यताम्। द्वितीय प्राह—गृहस्थपुराणनपुंसकेन,तृतीयो भणति–मिथ्यादृष्टिनपुंसकेन. चतुर्थो ब्रवीति–परतीर्थिकनपुंसकेन। एतया चतुर्णामपि 'सूयणय' ति हस्तकर्मकरणसूचना-प्रेरणा कुर्वाणाना चत्वारो लघव तप–कालविशेषिता भवन्ति। तत्र प्रथमे द्वाभ्यामपि लघवः, द्वितीये तपसा लघव. तृतीये कालेन लघवश्चतुर्थे द्वाभ्यामपि गुरव इति । अथ ते हस्तकर्म कृत्वा पश्चात्कर्म कुर्वन्ति–उदकेन हस्तौ धावन्तीत्यर्थ , तत्रापि त एव चतुर्लघवः।

एसेव कमो णियमा,इत्थीसु वि होइ आणुपुव्वीए ।
चउरो य अणुग्घाया,पच्छाकम्मम्मि ते लहुगा॥१२६३॥

एष एव सारूपिकादिक क्रमो नियमात्स्त्रीणामप्यानुपूर्व्या वक्तव्यो भवति। तद्यथा–प्रथमो ब्रवीति सिद्धपुत्रिकया हस्तकर्म कार्यताम्। एवं द्वितीयो गृहस्थपुराणिकया , तृतीयो मिथ्यादृष्टिगृहस्थया, चतुर्थ परतीर्थिकया चतुर्णामप्येव भणतां स्त्रीस्पर्शकारापणप्रत्ययाश्चत्वारोऽनुद्धाता गुरुका मासा ,तथैव तप'कालविशेषिता. प्रायश्चित्तम् । पश्चात्कर्मणि तु एवं चत्वारो मासा लघुका' । तदेवं गतं वसतेर्दोषेणेति द्वारम् । दृष्ट्वा स्मृत्वा पूर्वभक्तानीति द्वारद्वयं तु यथा निशीथे प्रथमोद्देशके प्रथमसूत्रे व्याख्यातं तथैवात्राप्यवगन्तव्यम् । तदेवमुक्त हस्तकर्म । बृ० ४ उ० । नि– चू० । हस्तक्रियाया परस्पर हस्तव्यापारप्रधाने कलहे, सूत्र० १ श्रु० १ अ० १ उ० ( हस्तकर्मविषयक-त्रयोदश बृहत्कल्पसूत्रम् ' मेहुण' शब्दे षष्ठे भागे गतम् । )

हत्थणिक्खेव–हस्तनिक्षेप–त्रि० । न्यास' समर्पणं यस्य द्रव्यस्य तद्धस्तनिक्षेपम् करन्यस्तद्रव्ये , विपा० १ श्रु० २ अ० ।

हत्थताल–हस्तताल–पु० । हस्तेन ताडने , स्था० ३ ठा० ४ उ० ।

हत्थताडण–हस्तताडन–न० । मुष्टियष्ट्यादिभिर्मरणनिरपेक्षतयाऽऽत्मन परस्य घा स्वपक्षगतस्य परपक्षगतस्य वा घोरपरिणामत. प्रहरणे, पञ्चा० १६ विव० ।

हत्थन्दुय–हस्तान्दुक–न०। हस्तयो. काष्ठादिमयबन्धनविशेषे, विपा० १ श्रु० ६ अ० ।

हत्थपाय–हस्तपाद–पुं० । करचरणरूपे युगले,प्रश्न० ३ संव० द्वार ।

हत्थपायनिहुय–हस्तपादनिभृत–त्रि० । हस्तौ पादौ च निभृतौ परधनादानव्यापारादुपरतौ यत्र तत् । अदत्तादानवद्धे, प्रश्न० ३ संव० द्वार ।

हत्थपायपडिच्छण्ण–हस्तपादप्रतिच्छन्न–त्रि० । कृत्तकरचरणे, दश० ८ अ० ।

हत्थमालय–हस्तमालव–पुं० । अङ्गणेनिकाख्ये आभरणविशेषे , औ० ।

हत्थलिज्ज–हस्तलीय–न० । आर्यरोहणनिर्गतस्य उद्देहगणस्य चतुर्थे कुले , कल्प० २ अधि० ८ क्षण ।

हत्थाइधोवण–हस्तादिधावन–न० । करचरणप्रभृतिशरीरावयावाना कारणमुद्दिश्य प्रक्षालने , पिं० ।

हत्थागय–हस्तागत–त्रि० । हन्ति हसति वा मुखमावृत्य अनेनेति हस्तस्तमागता हस्तागता । करगतेषु उत्त० ५ अ० । हस्ते आगता हस्तागता । स्वाधीनतया वर्त्तमानेषु , उत्त० ५ अ० ।

हत्थायत–त्रि । विस्तीर्णे , पं० व० २ द्वार ।

हत्थादाण-हस्तादान-न०। परस्परहस्तदाने, बृ० ४ उ०। (हस्तनाडन दत्तवनवस्थाप्यो भवतीति, ' अणवट्ठप्प ' शब्दे प्रथमभागे गतम्।)

हत्थादान-हस्ताताड-पुं०। हस्तेनाताडनं हस्ताताड·। हस्तताडनं पूर्वोक्तार्थे, प्रश्ना० २ पद। वृ०।

हत्थाभरण-हस्ताभरण-न०। हस्ताभरणाङ्गुलीयकादिके करभूषण, स्था० ८ ठा० ३ उ०।

हत्थामास-हस्तामर्ष-पुं०। हस्तेन हिरण्यस्यामर्ष -परामर्षो ग्रहो हस्तामर्ष । करेण स्वर्णग्रहे, तत्परिमाणे सुवर्णे च । ज्ञा० १ श्रु० ८ अ०।

हत्थालंव-हस्तालम्ब-पुं०। करालम्बने, हस्तालम्ब इव हस्तालम्बस्त हस्तालम्बं ददत् अशिवपुररोधादौ तत्प्रशमनार्थमभिचारुकमन्त्रविद्यादि प्रयुञ्जान इत्यर्थ।स्था० ३ ठा० ४ उ०। (स च अनुद्घातिको भवतीति ' अणुग्घाइय ' शब्दे प्रथमभागे ३६४ पृष्ठे उक्तम्।)

हत्थि(ण्)-हस्तिन्-पुं०। कुञ्जरे,करिवरे,सूत्र० १ श्रु० ६ अ०। अनु०। आचा०।

चत्तारि हत्थी पण्णत्ता, तं जहा-भद्दे मंदे मिते संकिन्ने। चत्तारि हत्थी पण्णत्ता, तं जहा-भद्दे णाममेगे भद्दमणे, भद्दे णाममेगे मंदमणे,भद्दे णाममेगे मियमणे,भद्दे णाममेगे संकिन्नमणे। चत्तारि हत्थी पण्णत्ता,त जहा-मंदे णाममेगे भद्दमणे, मंदे णाममेगे मंदमणे, मंदे णाममेगे मियमणे, मंदे णाममेगे संकिण्णमणे। चत्तारि हत्थी पण्णत्ता, तं जहा-मिते णाममेगे भद्दमणे,मिते णाममेगे मंदमणे,मिते णाममेगे मियमणे,मिते णाममेगे संकिन्नमणे। चत्तारि हत्थी पण्णत्ता,तं जहा-संकिण्णे नाममेगे भद्दमणे,संकिन्ने नाममेगे मंदमणे,संकिन्ने नाममेगे मियमणे, संकिन्ने णाममेगे संकिन्नमणे। (सू० २८१×) स्था० ४ ठा० २ उ०।

(अत्रत्यविस्तर 'पुरिसजाय' शब्दे पञ्चमभागे उक्त।) हस्तिनापुरनगरनिवेशके कुरुपुत्रे राज्ञि, ती० ४८ कल्प। स्वनामख्याते काश्यपगोत्रोत्पन्ने स्थविरे, कल्प० २ अधि० ८ क्षण।

हत्थिकन्न-हस्तिकर्ण-पुं०।लवणसमुद्रस्यान्तर्वर्तिनि स्वनामख्याते अन्तर्द्वीपे, स्था० ४ ठा० १ उ०। (' अंतरदीव' शब्दे प्रथमभागे ८६ पृष्ठेऽयं व्याख्यात)

हत्थिकप्प-हस्तिकल्प-न०। स्वनामख्याते सौराष्ट्रदेशमध्यगे नगर, यत्र मासिकीं संलेखना कृत्वा शत्रुञ्जये पर्वते आरुह्य पञ्च पाण्डवा सिद्धा। ज्ञा० १ श्रु० १६ अ०।

हत्थिगुलगुलाइय-हस्तिगुलगुलायित-न०। हस्तिनो गुलगुलशब्दे, रा०। अप्पेगइया हत्थिगुलगुलाइं करेंति,' आ० म० १ अ०। हस्तिनो यद् गुलगुलायित शब्दविशेषं एवं। प्रश्न० ३ आश्र० द्वार।

हत्थिजाम-हस्तियाम-न०। नालन्दाया पूर्वोत्तरस्यां दिशि स्वनामख्याते वनखण्डे,सूत्र०२ श्रु०७अ०। (विशेषस्त्वत्रत्य ' पेढालपुत्त ' शब्दे पञ्चमभागे गतः।)

हत्थिणाउर-हस्तिनापुर-न०।कुरुजनपदे नागपुरनगरे, स्था० १० ठा० ३ उ०। उत्त०। विपा०। आ० चू०।

हस्तिनापुरकल्प-

"सिरिसंतिकुंथुअरम-ल्लिसामिणो गयउरट्ठए नमिउं। पभणामि हत्थिणाउर-तित्थस्स समासओ कप्पं॥ १॥" सिरि आइतित्थेसरस्स दोण्णि पुत्ता, भरहभर-बाहुबली नामाणो आसि। भरहस्स सहोयरा अट्ठाणउई कुमारा। तत्थ भगवया पव्वयंतेण भरहो निअपए अभिसित्तो,वाहुवलिणो तक्खसिला दिण्णा। एवं सेसाण वि तेसु तेसु रज्जाइं दिण्णाइं अंगकुमारनामेणं अंगदेसो जाओ, कुरुनामेणं कुरुखित्त पसिद्धं, एवं वंगकलिंगसूरसेण अवंतिमाइसु विभासा। कुरू तस्स पुत्तो हत्थी नाम राया हुत्था,तेण हत्थिणाउरं निवेसिअं तत्थ भागीरही महानई पवित्तवारिपूरा परिवहइ। तत्थ सिरिसंतिकुंथुअरनाहा जहासंखं सोलसमसत्तरसमअट्ठारसमा जिणिंदा जाया। पंचम-छट्ठ-सत्तमा य कमेण चक्कवट्टी होउं छक्खंडभरहवासरिद्धिं भुंजिसु दिक्खागहणं केवलनाणं च तेसिं तत्थेव संजायं। तत्थेव संवच्छरमणसिओ भयवं उसभसामी, वाहुबलिनत्तुअस्स सिज्जंसकुमरस्स तिहुअणगुरुदसणजायजाईसरणजणिअदाणविहिणो गेहे अक्खयतइयादिणे इक्खुरसेणं पढमपारणयमकासी। तत्थ पंच दिव्वाइं पाउब्भूआइं मल्लिसामी अ तत्थेव नयरे समोसढो, तत्थ विण्हुकुमारो महरिसी तवसत्तीए विउव्विअ लक्खजोअणप्पमाणसरीरो निद्दिं पएहिं अक्कंतेतलुक्को नमुइं सासित्था, तत्थ पुरिसे णं कुमारमहापउमसुभूमपरसुरामाई महापरिसा उप्पण्णा। तत्थ पंच पंडवा उत्तमपुरिसा चरमसरीरा दुज्जोहणपमुहा य महाबलनिवा अणेगे समुप्पण्णा। तत्थ सत्तकोडिसुवण्णाहिवई गंगदत्तसिट्ठी, तहा सोहम्मिंदस्स जीवो रायाभिओगेणं परिवायगस्स परिवेसणं काउं पवेरग्गेणं नरगणसहस्सपडिवुडो कत्तियसिट्ठी सिरिमुणिसुव्वयसामिसमीवे निक्खंतो। तत्थ महानयरे संतिकुंथुअरमल्लिजिणाण चेइयाइं, मणहराइं, अंबादेवीए य देउलं आसि, एवमणेगअच्छेरिअसहस्सनिहाणे तत्थ महातित्थे जे जिणसासणपभावणं कुणंति विहिपुव्वं, जत्तामहूसवे निम्मवंति ते कइवयभवग्गणेहिं धुअकम्मकिलेसा सिद्धिसुवगच्छंति त्ति " श्रीगजाह्वयतीर्थस्य, कल्प स्वल्पतरोऽप्ययम्। सतां संकल्पसंपूर्त्यै , धत्ता कल्पद्रुकल्पताम् ॥१॥ " इति श्रीहस्तिनापुरतीर्थकल्प समाप्त। ती० १५ कल्प।

"अभिवन्द्य जगद्वन्द्यान् श्रीमत शान्तिकुन्थ्वरान्।
स्तुतिं वा स्तोष्यति स्तोमैः, स्तौमि तीर्थं गजाह्वयम्॥ १॥
शतपुत्र्यामभूत्राभि-सूनोः सूनु कुरुर्नृप।
कुरुक्षेत्रमिति ख्यातं, राष्ट्रमेतत्तदाख्यया ॥ २॥
कुरो पुत्रोऽभवद्धस्ती, तदुपज्ञमिदं पुरम्।
हस्तिनापुरमित्याहु-रनेकाश्चर्यसेवधिम्॥ ३॥
श्रीयुगादिप्रभोराद्या, चातुर्मासिकपारणम्(?)रिह।
श्रेयासस्य गृहे पञ्च, दिव्यान्यजनि पारणा॥ ४॥

जिनास्त्रयोऽत्र जायन्ते, शान्तिः कुन्थुररस्तथा ।
आद्दिमाद्भूसार्वभौमा, छिभुजस्ते महीभुजः ॥ ५ ॥
मल्लिश्च समवासार्षी—त्तेन चैत्यचतुष्टयी ।
अत्र निर्मापिता श्राद्धै—वींक्ष्यते महिमाऽद्भुता ॥ ६ ॥
भासतेऽत्र जगन्नेत्र-पवित्रीकारकारणम् ।
भवनं चाम्बिकादेव्या, याम्बिकोपप्लवच्छिद ॥ ७ ॥
जाह्नवी लालयत्येन—चैत्यभित्ती स्ववारिभि ।
कल्लोलोच्छालितैर्भूयो, भक्त्या स्नात्रचिकीरिव ॥ ८ ॥
सनत्कुमारः सुभूमो, महापद्मश्च चक्रिणः ।
अत्रासन् पाण्डवाः पञ्च, मुक्तिश्रीर्जीवितेश्वराः ॥ ९ ॥
गङ्गदत्त कार्त्तिकश्च, श्रेष्ठिनौ सुव्रतप्रभोः ।
शिष्यावभूतां विष्णुश्च, नमुचेरत्र शासिता ॥ १० ॥
कलिदर्पहरं स्फीत—सङ्गीतां सद्वसुव्ययाम् ।
यात्रामासूत्रयन्त्यत्र, भव्या निर्व्याजभक्तय ॥ ११ ॥
शान्ते कुन्थोरथ चतु —कल्याणी चात्रपत्तने ।
जज्ञे जगज्जनानन्दा, सम्मेताऽद्रौ च निर्वृतिः ॥ १२ ॥
भाद्रस्य सप्तमी श्यामा, नभसा नवमी शिति ।
द्वितीया फाल्गुनस्यैषा , तिथ्योऽभूवन् दिवश्च्युते ॥ १४ ॥
ज्येष्ठ त्रयोदशी कृष्णा, माधवे च चतुर्दशी ।
मार्गे च दशमी शुक्ला, तिथयो जनुपस्तु व ॥ १४ ॥
शुक्ला चतुर्दशी श्यामा, राधे वहुलपञ्चमी ।
साहस्यैकादशी शुभ्रा, जगुर्दीक्षादिनानि च ॥ १५ ॥
पौषस्य नवमी श्वेता, तृतीया धवला मधोः ।
ऊर्जस्य द्वादशी श्वेता, ज्ञानोत्पत्तेरहानि व ॥ १६ ॥
शुक्ल त्रयोदशी कृष्णा, वैशाखे पञ्चतिः शितिः ।
मार्ये यलज्ञा दशमी, मुक्तेर्वस्तिथयः क्रमात् ॥ १७ ॥
भवादृशाना पुरुष-रत्नानां जन्मभूरियम् ।
स्पृष्टाऽप्यनिष्ट शिष्टानां, पिनष्टि किमुत स्तुता ॥ १८ ॥
तादृग्विधैरतिशयैः पुरुषप्रणीतै—
विभ्राजितं जिनपरि(र)त्रितयैर्महैश्च ।
भागीरथीसलिलसङ्गपवित्रमेत—
ज्जीयाच्चिर गजपुरं भुवि तीर्थरत्नम् ॥ १९ ॥
इष्टं पृथक्त्वविषयार्कमिते शकाब्दे,
वैशाखमासि शितिपक्षगषष्ठतिथ्याम् ।
यात्रोत्सवोपनतसङ्घयुतो यतीन्द्रः,
स्तोत्रं व्यधात् गजपुरस्य जिनप्रभाख्य ॥ २० ॥"

श्रीहस्तिनापुरस्तवनकृतिः श्रीजिनप्रभसूरिणाम् ॥ ती० ४८ कल्प । स्था० । ज्ञा० । कल्प० ।

हत्थिणिया–हस्तिनिका–स्त्री० । करेणुकायाम् , आ०म०१अ० ।

हत्थितावस–हस्तितापस–पुं० । तापसविशेषेषु,ये हस्तिनं मारयित्वा तेनैव बहुकालं भोजनतो यापयन्ति । भ० ११ श० ६ उ० । औ० । नि० । हस्तिनं व्यापाद्याऽऽत्मनो वृत्तिं कल्पयत्सु बौद्धसाधुषु , सूत्र० २ श्रु० ६ अ० । (' अद्दगकुमार ' शब्दे प्रथमभागे ५६० पृष्ठे हस्तितापसमतं व्याख्यानम् । )

हत्थिदीव–हस्तिद्वीप–पुं० । राजगृहनगरबाहिरिकाया नालन्दाभिधानाया उत्तरपूर्वस्या दिशि खण्डे , स्था० ६ ठा० ३ उ० ।

हत्थिपाल–हस्तिपाल–पुं० । पापायां मध्यमायां नगर्यां स्वनामख्याते राजनि , यस्य शालाया वीरजिनो निर्वृतः । स० ५५ सम० । ती० ।

हत्थिपिप्पली–हस्तिपिप्पली–स्त्री० । गजपिप्पल्याम् , उत्त० ३४ अ० ।

हत्थिबंधणखंभ–हस्तिबन्धनस्तम्भ–पुं० । हस्तिनां बन्धनभूते स्तम्भे, पाइ० ना० २०३ गाथा ।

हत्थिभूइ–हस्तिभूति–पुं० । हस्तिमित्रपुत्रे, उत्त० १ अ० ।

हत्थिमित्त–हस्तिमित्र–पुं० । उज्जयिन्या स्वनामख्याते गृहपतौ , उत्त० २ अ० ।

हत्थिमुह–हस्तिमुख–पुं० । लवणसमुद्रस्यान्तर्द्वीपे, स्था० ४ ठा० २ उ० । प्रज्ञा० । नं० । उत्त० । ( स च ' अंतरदीव ' शब्दे प्रथमभागे ८६ पृष्ठे विशेषतो व्याख्यात । )

हत्थिरयण–हस्तिरत्न–न०।उत्कृष्टे हस्तिनि, स्था०७ठा०३उ० ।

हत्थिराय–हस्तिराज–पुं० । हस्त्यनीकाधिपतौ, स्था० ४ ठा० २ उ० । स० ।

हत्थिलावय–हस्तिलावक–पुं० । हस्ती च शालीनां लावकाश्च हस्तिलावकाः । करिणी व्रीहिच्छेदकेषु च व्याक्षेपे , व्य० ६ उ० ।

हत्थिवाउय–हस्तिव्यापृत–पुं० । महामात्रे , औ० ।

हत्थिवाहण–हस्तिवाहन–पुं० । नन्दीश्वरद्वीपदेवे , सू० प्र० १९ पाहु० ।

हत्थिसिक्खा–हत्थिशिक्षा–स्त्री० । कलाविशेषे, स० ७२ सम० । हस्तिदमने, औ० ।

हत्थिसीसग–हस्तिशीर्षक–न०।स्वनामख्याते नगरे, ज्ञा०१श्रु० १७ अ० । "इहास्ति भरतक्षेत्रे, नगरं हस्तिशीर्षकम् । सुवृत्तरूमुक्तेद,हस्तिशीर्षमिवोद्यतम् ," आ० क० १ अ० । आ० म० । ज्ञा० । 'हत्थिसीसं नगर तत्थ दमयन्तो राया' आ० म०१ अ० ।

हत्थिसुंडिया–हस्तिशुण्डिका–स्त्री० । यत्र पुताभ्यामुपविष्टः सन् एकं पादमुत्पाट्यास्ते सा हस्तिशुण्डिका । निषद्याभेदे , स्था० ५ ठा० १ उ० ।

हत्थिसोंडा–हस्तिशुण्डा–स्त्री० । त्रीन्द्रियजीवभेदे , प्रज्ञा० १ पद । जी० ।

हत्थुत्तरा–हस्तोत्तरा–स्त्री० । हस्तोपलक्षिता उत्तरा यासां ता हस्तोत्तरा । उत्तराफाल्गुनीषु , स्था० ५ ठा० १ उ० । आचा० । आ० म० । कल्प० ।

हत्थुल्ल–हस्त–पुं० । " स्वार्थे कश्च वा " ॥ ८ । २ । १६४ ॥ इति स्वार्थे उल्लप्रत्ययः । हत्थुल्लो । करे , प्रा० २ पाद ।

हदण–हदन–पुं० । स्वनामख्याते स्त्रीवशवर्त्तिनि , ( हदनव्याख्या ' माणपिंड ' शब्दे षष्ठे भागे गता । )

हद्धी–अव्य० । " हद्धी, निर्वेदे " ॥ ८ । २ । १९२ ॥ हद्धी इत्यव्ययमत एव निर्देशात् , हाधिकशब्दादेशो वा निर्वेदे प्रयोक्तव्यम् । हद्धी । निर्वेदे , प्रा० २ पाद ।

हम्म–हन्–धा० । हिंसायाम् , "हन्खनोऽन्त्यस्य " ॥ ८ । ४ ।

२४४ ॥ इति यस्य द्विरुक्तो मो वा , यस्य च लुक् । हम्मइ । हन्यते । प्रा० ४ पाद ।

हर्म्य—न० । शिखररहिते धनवतां भवने, जी० ३ प्रति० ४ अधि० ।

हम्ममाण—हन्यमान—पुं० । कशाभि (सूत्र० २ श्रु० १ अ० । ) यष्टिमुष्टिलकुटादिभि , (सूत्र० १ श्रु० ६ अ० । ) ताड्यमाने, सूत्र० १ श्रु० ६ अ० १ उ० ।

हम्मियतल—हर्म्यतल—न० । अट्टाले, आचा० २ श्रु० १ चू० २ अ० १ उ० ।

हम्मीरमहम्मद—पुं० । पारसीकोऽयं शब्द ,विक्रमादित्यस्य प्रथयिकत्रयोदशशततमे १३६० संवत्सरे जाते लक्ष्मणपुराधिपे यवनराजे, ती०३४कल्प । "नन्दानेकपशक्तिशीतगुमिते श्रीविक्रमार्कीपते-र्वर्षे भाद्रपदस्य मास्यवरजे सौम्ये दशम्यां तिथौ । श्रीहम्मीरमहम्मदे क्षितिपतौ दमामण्डलाखण्डले, ग्रन्थोऽयं परिपूर्णनामभजत श्रीयोगिनीपत्तने ॥ १ ॥" ती० ४८ कल्प ।

हय—हत—त्रि० । यष्ट्यादिभिस्ताडिते,उत्त० २ अ० । आचा० । ज्ञा० । 'हयमहियपवरवीरघाइय' भ० ७ श० ६ उ० । व्यवच्छिन्ने, विशे० । मृत, उत्त० ३२ अ० । "प्रत्यूषेण हता मार्गा , पङ्क्तिहासहतास्त्रिय । मन्दबीजं हत क्षेत्रं , हतं सैन्यमनायकम् ॥ १ ॥" बृ० १ उ० २ प्रक० ।

हय—पुं० । अश्वे, प्रश्न० १ आश्र० द्वार । तुरगे, अनु० ।

हयकंठग—हयकण्ठक—पुं० । हयकण्ठप्रमाणे रत्नविशेषे, रा० । जी० ।

हयकण्ण—हयकर्ण—पुं० । लवणसमुद्रस्यान्तर्द्वीपविशेषे, कर्म० ५ कर्म० । उत्त० । न० । स्था० । ( अस्य व्याख्या ' अन्तर्दीव ' शब्दे प्रथमभागे ८६ पृष्ठे उक्ता । ) अनार्यदेशविशेषे, प्रव० २७४ द्वार ।

हयगय—हयगत—पुं० । अश्वारूढे. औ० ।

हयजूहियट्ठाण—हययूथिकस्थान—न० । हयोऽश्व तेषां परस्परतो युद्धं यत्र पश्चात्सन्धिश्च क्रियते तादृशे स्थाने, नि० चू० १२ उ० । आचा० ।

हयजोह—हतयोध—पुं० । हता-विनाशिता योधा-अश्वारोहादयो यैस्ते हतयोधा । विनाशितयोधेषु प्रश्न०३ आश्र० द्वार ।

हयजोहि(ण्)—हययोधिन्—पुं० । हयेन युध्यते इति हययोधी । ज्ञा० १ श्रु० १ अ० । रा० । अश्वारोहेण युध्यमाने, औ० ।

हयघी—हतधी—स्त्री० । मूलाच्छिन्नवृद्धौ , बहुव्रीहिसमासे तु तादृशबुद्धियुक्ते त्रि० । प्रति० ।

हयपर—हतपर—पुं० । हता अधमा ये परे तीर्थान्तरीयास्ते तथा । कुतीर्थिकेषु स्था० ।

हयपुव्व—हतपूर्व—त्रि० । पूर्वहते, आचा०१ श्रु० ६ अ० ३ उ० ।

हयमहिय—हतमथित—त्रि० । प्रहारतो हते मानमन्थनात् मथित, ज्ञा० १ श्रु० १६ अ० ।

हयमुह—हयमुख—पुं० । लवणसमुद्रस्यान्तर्द्वीपविशेषे, उत्त० ३६ अ० । ( 'अंतरदीव' शब्दे प्रथमभागे ८६ पृष्ठे वक्तव्यतोक्ता । ) अनार्यदेशविशेषे, प्रव० २७४ द्वार ।

हयरस्सि—हयरश्मि—पुं० । खलीने, दश० १ चू० ।

हयलक्खण—हयलक्षण—न० । दीर्घग्रीवात्रिकूटेत्यादिके अश्वलक्षणविज्ञाने, जं० २ वक्ष० । ज्ञा० । कल्प० ।

हयलाला—हयलाला—स्त्री० । अश्वमुखजले, जं० ३ वक्ष० । औ० । ' हयलालापलवाइरेगं ' जी० ३ प्रति० ४ अधि० ।

हयवर—हयवर—न० । अश्वानां मध्ये प्रधाने, ज्ञा० १ श्रु० १७ अ० ।

हयविलंबिय—हयविलम्बित—न० । चतुर्विंशतितमनाट्यविधौ रा० ।

हयवीहि—हयवीथि—स्त्री० । शुक्रस्य महाग्रहस्य नागवीथीत्यन्यत्र प्रसिद्धे शुक्रादिग्रहचारयोग्यक्षेत्रभागे, " भरणीस्वात्याग्नेयं नागाख्या वीथिरुत्तरे मार्गे " स्था० ६ ठा० ३ उ० ।

हयसंघाडग—हयसंघाटक—पुं० । अश्वद्वये , संघाटकशब्दो युग्मवाची यथा साधुसंघाटक इत्यत्र , ततो द्वे द्वे हययुग्मं हयसंघाटक इत्युच्यते । रा० । जी० । जं० ।

हयसंठिय—हयसंस्थित—पुं० । अश्वाकारे, भ० १ श० २ उ० ।

हयहसिय—हयहसित—न० । हयशब्दविशेषे , प्रश्न० १ आश्र० द्वार । औ० । आ० म० । जं० ।

हयाणीय—हयानीक—घोटककटके, उत्त० १७ अ० ।

हर—हर—पुं० । हर.-काल. स मनुष्यं हरति प्राणिनामायुरिति हर । दिवसरजन्यात्मके काले , उत्त० १४ अ० । रुद्रे, अनु० ।

हृ—धा० । हरणे, " व्यञ्जनाददन्ते " ॥ ८ । ४ । २३६ ॥ इति अन्तेऽकार । हरइ । हरति । प्रा० ४ पाद ।

ग्रह—धा०।ग्रहणे, "ग्रहो वल गेण्ह हर पङ्ग निरुवाराहिपच्चुआ "॥८।४।२०६॥ इति हर इत्यादेश । हरति। गृह्णाति ।प्रा० ।

हरडई—हरीतकी—स्त्री० । "हरीतक्यामीतोऽत्" ॥८ । १ । ६६॥ इति आदेरीकारस्याऽद्भवति , " प्रत्ययादौ ड " ॥ ८ । १ । २०६ ॥ इति तस्य ड , । हरडई । हरीतकी । स्वनामख्याते वृक्षे, तत्फले च । प्रा० १ पाद ।

हरण—हरण—न० । हृतौ , " हारो त्ति वा हरणं त्ति वा हरइ त्ति वा एगट्ठा " हार हृतिर्हरणं ह्रियते इति वा एकार्था इत्यर्थ. । व्य० १ उ० । परद्रव्यस्य हृतौ ,प्रश्न० ३ आश्र० द्वार ।

हरतणु—हरतनु—पुं० । तृणाग्रव्यवस्थिते जलबिन्दौ. सूत्र० २ श्रु० ३ अ० । पं० व० । ध० । यो भुवमुद्भिद्य गोधूमाङ्कुरतृणाग्रादिषु बद्धो बिन्दुरुपजायते । बादरकायभेदे, प्रज्ञा० १ पद । कल्प० । दश० । जी० ।

हरय—ह्रद—पुं० । महागाधजले , आचा० १ श्रु० ६ अ० १ उ० । उत्त० । भ० । स्था० । जी० । रा० ।

हरहरा—हरहरा—स्त्री० । अतीव भिक्षाप्रस्तावे , " निद्धूमगं च गामं, महिलाथूभं च सुण्णयं दट्ठुं । नीयं च काया ओलिंति, जाया भिक्खस्स हरहरा ॥ २०६४ ॥ " विशे० । ( इयं निर्युक्तिगाथा ' देसकाल ' शब्दे ४ भागे व्याख्याता । )

**हरि-हरि**-पुं० । वासुदेवे, सूत्र० १ श्रु० १ अ० १ उ०। स्था० अष्ट० । सिंहे, स्था० ४ ठा० २ उ०। शाखामृगे, आव० ४ अ० । स्था० । हरिवर्षक्षेत्रविशेषस्याधिष्ठातृदेवे, स्था० ६ ठा० ३ उ० । ज०। विद्युत्कुमारेन्द्रे, आ० चू० १ अ० । महाग्रहे चं० प्र० २० पाहु० । ( अत्रत्या व्याख्या 'महग्गह' शब्दे पञ्चमभागे १७१ पृष्ठ गता ।) औत्तराहाणामग्निकुमाराणामिन्द्रे, स्था० २ ठा० ३ उ० ।

**हरिअंद-हरिश्चन्द्र**-पुं० । " श्चो हरिश्चन्द्रे " ॥८।२।८७॥ इति श्चस्य लुक् । हरिअंदो । सूर्यवंशजे त्रिशङ्कुपुत्रे नृपविशेषे, प्रा० ।

**हरिएस-हरिकेश**-पुं० । मातङ्गे चाण्डाले, उत्त० ।

हरिकेशनिक्षेपमाह निर्युक्तिकृत्—

हरिएसे णिक्खेवो, चउव्विहो दुविहो होइ दव्वम्मि ।
आगम नोआगमतो, नोआगमतो य सो तिविहो ॥३१८॥
जाणगसरीरभविए, तव्वइरित्ते य सो पुणो तिविहो ।
एगभवियबद्धाउ य, अभिमुहतो नामगोए य ॥३१९॥
हरिएसनामगोअं, वेअंतो भावओ अ हरिएसो ।
तत्तो समुट्ठियमिणं, हरिएसिज्जं ति अज्झयणं ॥३२०॥

हरिकेशे निक्षेपश्चतुर्विधो नामादि , तत्र नामस्थापने क्षुण्णे, द्विविधो भवति द्रव्ये—द्रव्यविषय —आगमतो, नोआगमतश्च । तत्र आगमतो ज्ञाताऽनुपयुक्तो , नोआगमतश्च स त्रिविधो ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तश्च । स पुन त्रिविध —एकभविको बद्धायुष्कोऽभिमुखनामगोत्रश्च । हरिकेशनामगोत्र वेदयन् भावतस्तु हरिकेश उच्यते, ततोऽभिधेयभूतात् समुत्थितमिद हरिकेशीयमित्यध्ययनमुच्यते इति शेष., इति गाथात्रयार्थ ।

सम्प्रति हरिकेशवक्तव्यतामाह निर्युक्तिकृत्—

पुव्वभवे संखस्स उ , जुवरन्नो अंतिअं तु पव्वज्जा ।
जाईमयं तु काउं , हरिएसकुलम्मि आयाओ ॥ ३२१ ॥
महुराए संखो खलु , पुरोहिअसुओ अ गयउरे आसी ।
दट्ठूण पाडिहेरं, हुयवहरत्थाइनिक्खंतो ॥ ३२२ ॥
हरिएसा चंडाला , सोवाग मयंग बाहिरा पाणा ।
साणधणा य मयासा,सुसाणवित्ती य नीया य ।३२३।
जम्मं मयंगतीरे , वाणारसिगंडितिंदुगवणं च ।
कोसलिएसु सुभद्दा , इसिवंता जन्नवाडम्मि ॥ ३२४ ॥
बलकुट्ट बलकुट्टो, गोरी गंधारि सुविणगवसंतो ।
नामनिरुत्ती छणं स-प्प संभवो दुंदुहे बीओ ॥ ३२५ ॥
भद्दएणेव होअव्वं, पावइ भद्दाणि भद्दओ ।
सविसो हम्मए सप्पो, भेरुंडो तत्थ मुच्चई ॥ ३२६ ॥
इत्थीण कहित्थ वट्टई, जणवयरायकहित्थ वट्टई ।
पडिगच्छह रम्मतिंदुअं,अइसहसा बहुमुंडिए जणे ॥३२७॥

एतदक्षरार्थ., सुगम एव, नवर 'अंतिय तु' इति अन्तिके-समीपे तु पूरणे, 'पाडिहेर ' ति प्रतिहारा—दौवारिकस्तद्वत्सदा सन्निहितवृत्तिर्देवताविशेषोऽपि प्रतिहारस्तस्य कर्म प्रातिहार्यम् , तच्चेह हुतवहरथ्याया शीतलत्वम् तथा हरिकेशाश्चाण्डाला श्वपाका मातङ्गा बाह्या पाणा , श्वधनाश्च-मृताशाः श्मशानवृत्तयश्च नीचाश्चेत्येकार्थिका , तथा 'मय-ङ्गतीरे ' त्ति मृतैव मृता विवक्षितभूदेशे, तत्कालप्रवाहिणी सा चासौ गङ्गा च मृतगङ्गा तस्यास्तीरं तस्मिन् ऋषिवान्ता-ऋषिरित्यक्ता,तथा भद्र एव भद्रको,यो न कस्यचिदशुभे प्रवर्त्तते भद्राणि—कल्याणानि, तथा स्त्रीणां कथा—तासा नेपथ्याभरणभाषादिविषया अत्र—अस्मिन् यत्याश्रमे प्रवर्त्तते , 'जणवयरायकह' त्ति जनपदकथा मालवकादिदेशप्रशस्तानिन्दात्मिका राजकथा च राज्ञां शौर्यादिगुणवर्णनादिरूपा , " पडिगच्छह ' त्ति निष्क्रम्यत्यथात् प्रतिगच्छामो—निवर्त्तामहे," अयी' त्यामन्त्रणे 'सहसेत्यपर्यालोच्य , कोऽर्थ ?,—अपरीक्षितयोग्यताविशेषा, 'बहुमुण्डिते जने ' मुण्डमात्रेणैव गृहीतदीक्ष प्रायोजनो, गृहीतभावदीक्षस्तु स्वल्प एवेति भाव । तथेहाद्यगाथायां एव पादद्वयं द्वितीयगाथाया स्पष्टीकृत, ततस्तृतीयपाद स्पष्ट एवेति, शेषगाथाभिश्चतुर्थपादस्य पर्यायदर्शनतस्तत्सूचितार्थाभिधानतश्चाभिव्यञ्जनम् । भावार्थस्तु कथानकादवसेय , तत्र च सम्प्रादय –' महुराए नयरीए संखो नाम जुवराया, सो धम्म सोउं पव्वतितो,विहरतो य गयउर गओ, तहिं च भिक्ख हिंडतो एगं रत्थं पत्तो , सा य किर अतीव उण्हा मुम्मुरसमा, उण्हकाले ण सक्कति कोऽवि वोलेउं। जो तत्थ अजाणंतो उप्फंदति सो विणस्सति। तीसे पुण णाम चेव हुयवहरत्था, तेण साहुणा पुरोहियपुत्तो पुच्छितो—एस रत्था निव्वहति ? , सो पुरोहियस्स पुत्तो चिंतेति—एस डज्झउ त्ति निव्वहति इइ वुत्त, सो पट्ठिओ , इयरो य अलिंदट्ठिओ पेच्छति आतुरियाए गईए वच्चत त , सो आसक्काए उइण्णो तं रत्थं, जाव सा तस्स तव्वपभावेण, सीतीभूया । आउट्टो—अहो इमो महातवस्सी मए आसादितो, उज्जाणट्ठिय गन्तु भणति—भगव ! मए पावकम्म कयं, कह वा तस्स मुच्चेज्जामि ?, तेण भणति—पव्वयह , पव्वइतो, जातिमय रूवमय च काउ मओ । देवलोगगमण , चुओ सतो मयंगगाए तीरे बलकोट्टा नाम हरिएसा , तत्थ अहिवई बलकोट्टो नाम, तस्स दुवे भारियाओ-गोरी, गधारी य । गोरीए कुच्छिंसि उववण्णो, सुमिणदसण वसतमासे पेच्छति, तत्थ कुसुमिय चूयपायव पेच्छइ , सुमिणपाढयाण कहिय, तेहिं भणति-महप्पा ते पुत्तो भविस्सति । समए पसूया, दारगो जाओ कालो विरूओ पुव्वभवजाइरूवमयदोसेण, बलकोट्टेसु जाउ त्ति बलो से नाम कयं। भडणसीलो असहणो। अण्णया ते छणेण समागया भुंजति सुरं च पियंति,सोऽवि अप्पियणियं करेइ त्ति निच्छूढो अच्छति समतओ पुलाएतो, जाव अही आगतो। उट्ठिया सहसा सव्वे, सो अही णेहिं मारिओ , अण्णमुहुत्तस्स भेरुडसप्पो आगतो। भेरुंडो नाम दिव्वगो, भीया पुण उट्ठिया , णाए दिव्वगो त्ति काऊण मुक्को । बलस्स चिंता जाता— अहो सदोसेण जीवा किलेसभागिणो भवंति , तम्हा— " भद्दएणेव होयव्वं, पावति भद्दाणि भद्दिओ । सविसो हम्मति सप्पो, भेरुंडो तत्थ मुच्चति ॥ १ ॥" एयं चिंतेंतो संबुद्धो पव्वतिओ विहरंतो वाणारसिं गओ । उज्जाणं तेंदु-

यवणं, तेंदुग नाम जक्खाययणं, तत्थ गंडीतेंदुगो नाम जक्खो परिवसति, सो तत्थ अणुरणेवउं ठितो, जक्खो उवसंतो, अरणो जक्खो अरणहिं वणे वसति, तत्थ वि अरणे बहू साहुणो ठिया, सो य गंडीजक्खं पुच्छति—ए-हीससि ?, पुणे तेण भणियं—साहुं पज्जुवासामि, तत्थ य तेंदुएण दिट्ठो, सो वि उवसंतो, सो भणति—मम वि उज्जाणे बहवे साहू ठिया, एहि पासामो, ते गया, तेऽवि समाव-त्तीए साहुणो विकहमाणा अच्छंति । ततो सो जक्खो इमं भणति—"इत्थीण कहऽत्थ वट्टई, जणवयरायकहत्थ वट्टई । पडिगच्छह रम्मतेंदुगं, अइसहसा बहुमुंडिए जणे ॥ १ ॥ " अह अरणया जक्खाययणं कोसलियरायधूआ भद्दा नाम पुप्फधूवमादी गहाय अच्चिउं निग्गया, पयाहि-णं करेमाणा तं ददट्ठूण कालं विगरालं छि त्ति काऊण णिट्ठुव-ति, जक्खेण रुट्ठेण अरणइट्ठा कया, णीया नीयघरं, आवे-सिया भणति ने, णवरं मुंचामि जइ णं तस्सेव देह , तं च साहति—जहा एईए सो साहू ओहूढो, रएणा वि जीव-उ त्ति काऊण दिएणा, महत्तरियाहिं समं तत्थाणीया, रत्ति ताहिं भएणति—वच्च पतिसगासं ति, पविट्ठा जक्खाययणं सो पडिमं ठिओ णेच्छति, ताहे जक्खो वि इसिसरीरं छाइ-ऊण दिव्वरूपं दंसेति, पुणो मुणिरुवं, एवं सव्वरत्ति वि-लंबिया, पभाए णेच्छए त्ति काऊणं पविसंती सघरं पुरो-हिएण गया भणिओ—एसा रिसिभज्जा बंभणाणं कप्प-इ त्ति दिएणा तस्सेव । सो य जएणे दिक्खिज्जिउकामो सा अरणेण लद्धा, सा वि जएणपत्ति त्ति काऊण दिक्खिया । " इत्युक्तः सम्प्रदायोऽवसितश्च नामनिष्पन्ननिक्षेपः ।

सम्प्रति सूत्रालापकनिष्पन्नस्यावसरः, स च सूत्रे सति सम्भवत्यतः सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

सोवागकुलसंभूओ, गुणुत्तरधरो मुणी ।
हरिएसबलो नाम, आसि भिक्खू जिइंदिओ ॥ १ ॥

श्वपाकाः—चाण्डालास्तेषां कुलम्—अन्वयस्तस्मिन् स-म्भूतः-समुत्पन्नः श्वपाककुलसम्भूतः, तत्किं तत्कुलोत्पत्त्य-नुरूप एवायम् उत नेत्याह-गुणोत्तराः-प्रधाना गुणोत्तराः-ज्ञानादयः तान् धारयति गुणोत्तरधरः, पठन्ति च—'अ-णुत्तरधरे' त्ति, तत्र न विद्यते उत्तरम्—अन्यत्प्रधान-मेषामित्यनुत्तराः, ते च प्रक्रमात्प्रकर्षप्राप्ता ज्ञानादय एव गुणास्तान् धारयत्यनुत्तरधरः, यद्वा—अनुत्तरान्—गुणान् धारयतीत्यनुत्तरधर इति मयूरव्यंसकादिषु द्रष्टव्यो, मु-णति—प्रतिजानीते सर्व्वविरतिमिति मुणिः, श्वपाककुलो-त्पन्नोऽपि कदाचित्संवासादिनाऽन्यथैव प्रतीतः स्यादत आ-ह-हरिकेशः सर्वत्र हरिकेशतयैव प्रतीतो बलो नाम-बला-भिधान आसीद्-अभूत् । तस्य च मुनित्वं प्रतिज्ञामात्रे-णापि स्यादत आह-'भिक्खु' त्ति भिनत्ति—यथाप्रतिज्ञा-तनानुष्ठानेन क्षुधमष्टविधं वा कर्मेति भिक्षुः । अत एव जितानि—वशीकृतानीन्द्रियाणि-स्पर्शनादीन्यनेनेति जिते-न्द्रिय इति सूत्रार्थः ।

तथा—

हरिएसणभासाए, उच्चारसमिईसु य ।
जओ आयाणणिक्खेवे, संजओ सुसमाहिओ ॥ २ ॥

ईरणमीर्य्या एष्यत इत्येषणा अनयोर्द्वन्द्वस्ततस्ताभ्यां स-हिता भाष्यत इति भाषा ईर्येषणाभाषेति मध्यपदलोपी समासः,तस्याम् ,तथा उच्चारम् ,पुरीषपरिष्ठापनमपीहोच्चा-र उक्तः,प्रश्रवणपरिष्ठापनोपलक्षणं चैतत् ,तद्विषया समितिः-सम्यग्गमनं, तत्र सम्यक्प्रवर्त्तनमिति यावत् , उच्चारसमि-तिः, तस्यां च, यतत इति यतो—यत्नवान् , तथा आ-दानं च—ग्रहणं पीठफलकादेर्निक्षेपश्च—स्थापनं तस्यैव आदाननिक्षेपं, तत इहापि चकारानुवृत्तेस्तस्मिंश्च, इह च 'उच्चारसमिएसु' त्ति एकत्वेऽपि बहुवचनं सूत्रत्वात् , समितिशब्दश्च मध्यव्यवस्थितो डमरुकमणिरिवाद्यन्तयोर-पि सम्बध्यते, ततश्च ईर्यासमितावेषणासमितौ भाषासमि-तावादाननिक्षेपसमिताविति योज्यं, यद्वा-ईर्येषणाभाषो-च्चारसमितिष्वित्येकमेव पदं, 'भासाए' इति च एकारोऽ लाक्षणिकः, स चैवं कीदृगित्याह—संयतः—संयमान्वितः सुसमाहितः—सुष्ठु समाधिमानिति सूत्रार्थः ।

तथा—

मणगुत्तो वयगुत्तो, कायगुत्तो जिइंदिओ ।
भिक्खट्ठा बंभइज्जम्मि, जन्नवाडमुवट्ठिओ ॥३॥

मनोगुप्त्या-मनोनियन्त्रणात्मिकया गुप्तः-संवृतो मनोगुप्तो, मध्यपदलोपी समासः, मनो गुप्तमस्येति वा मनोगुप्त , आ-हिताग्न्यादित्वाच्च गुप्तशब्दस्य परनिपातः, एवं वाग्गुप्तो-निरुद्धवाक्प्रसरः, कायगुप्त असत्कायक्रियाविकलो, जि-तेन्द्रियः प्राग्वत् , पुनरुपादानमस्य कादाचित्कत्वनिराकर-णार्थमतिशयख्यापनार्थं वा, भिक्षार्थं—भिक्षानिमित्तं, न तु निष्प्रयोजनमेव, निष्प्रयोजनगमनस्यागमे निषिद्धत्वात् ,'बं-भइज्जमि' त्ति ब्रह्मणां—ब्राह्मणानामिज्या-यजनं यस्मिन् सोऽयं ब्रह्मेज्यस्तस्मिन् , 'जएणवाडं' ति यज्ञवाटे यज्ञपाटे वा उपस्थितः प्राप्त-इति सूत्रार्थः ।

तं च तत्राऽऽयान्तमवलोक्य तत्रत्यलो-
का यदकुर्वंस्तदाह—

तं पासिऊणमिज्जंतं, तवेण परिसोसियं ।
पंतोवहिउवगरणं, उवहसंति अणारिया ॥४॥

'त' मिति बलनामानं मुनिं 'पासिऊणं' ति दृष्ट्वा-निरी-क्ष्य 'इज्जंतं' ति आयन्तमागच्छन्तं तपसा-षष्ठाष्टमादि-रूपेण परि-समन्ताच्छोषितम्-अपचितीकृतमांसशोणितं कृ-शीकृतमिति यावत् परिशोषितं, तथा प्रान्तं-जीर्णमलिन-त्वादिभिरसारमुपधि —वर्षाकल्पादिः स एव च उपकर-णं-धर्म्मशरीरोपष्टम्भहेतुरस्येति प्रान्तोपध्युपकरणस्तं,यद्वा-उपधिः स एवोपकरणम्-औपग्रहिकं, द्वन्द्वगर्भश्च बहुव्रीहि , 'उवहसंति' त्ति उपहसन्ति आर्या -उक्तनिरुक्ता न तथा अनार्याः, यद्वा-अनार्या-म्लेच्छा , ततश्च साधुनिन्दादिना अनार्या इव अनार्या इति सूत्रार्थ ।

कथं पुनरनार्या ?, कथं चोपहासितवन्तस्ते ? इत्याह—

जाइमयं पडिथद्धा, हिंसगा अजिइंदिया ।
अबंभचारिणो बाला, इमं वयणमब्बवी ॥५॥
कयरे आगच्छई दित्तरूवे, काले विकराले फुक्कनासे ।
ओमचेलए पंसुपिसायभूए, संकरदूसं परिहरिय कंठे॥६॥

जातिमदो- जातिदर्पो यदुत ब्राह्मणा वयमिति तेन प्रतिस्तब्धाः पाठान्तरत प्रतिबद्धा वा ये ते तथा हिंसका — प्राएयुपमर्दकारिण. अजितेन्द्रिया —न वशीकृतस्पर्शनादयोऽत एवाब्रह्म-मैथुनं तच्चरितुम्-आसेवितुं शीलं धर्मो वा येषां तेऽमी अब्रह्मचारिणः, वर्ण्यते हि तन्मते मैथुनमपि- ' धर्म्मार्थं पुत्रकामस्य, स्वदारेष्वधिकारिण. । ऋतुकाले विधानेन, तत्र दोषो न विद्यते ॥ १ ॥ ' तथा ' अपुत्रस्य गतिर्नास्ति ' इत्यादि, अत एव बाला इव बालक्रीडितानुकारिण्व ग्निहोत्रादिषु तत्प्रवृत्त , उक्तं हि केनचिद्-" अग्निहोत्रादिकं कर्म, बालक्रीडेति लक्ष्यते ' ईदृशास्ते किमित्याह इदं- वक्ष्यमाणलक्षणं वचनं—वचः ' अब्बवि ' त्ति आर्षत्वाद्वचनव्यत्ययेन अब्रुवन्—उक्तवन्त. । किं तदित्याह—' कयरे ' त्ति कतर , एकारस्तु प्राकृतत्वात् , तथा च तल्लक्षणम् ' ए होनि अयारंते ' इत्यादि, एवमन्यत्रापि, आगच्छति—आयाति , पठ्यते च ' को रे आगच्छइ ' त्ति, ते ह्यन्योऽन्यमाहु. कोऽयमीदृक् ' रे ' इति लघोरामन्त्रणं साक्षेपवचनेषु च दृश्यते, ' दित्तरूवे ' त्ति दीप्तं रूपमस्येति दीप्तरूप , दीप्तवचनं त्वतिबीभत्सोपलक्षकम् , अत्यन्तदाहिषु स्फोटकेषु शीतलकव्यपदेशवत् , विकृततया वा दुर्दर्शमिति दीप्तमिव दीप्तमुच्यते , कालो वर्णतो विकरालो दन्तुरतादिना भयानक. पिशाचवत् स एव विकरालक , ' फोक्क ' त्ति देशी पदं, ततश्च फोक्का अग्रे स्थूलोन्नता च नासाऽस्येति फोक्कनास , अवमानि—असाराणि लघुत्वजीर्णत्वादिना चेलानि-वस्त्राएयस्येत्यवमचेलक., पांशुना-रजसा-पिशाचवद्भूतो— जात. पांशुपिशाचभूत., गमकत्वात्समास , पिशाचो हि लौकिकानां दीर्घश्मश्रुनखरोमा पुनश्च पांशुभि समविध्वस्त इष्ट , तत सोऽपि निष्परिकर्मतया—रजोदिग्धदेहतया चैवमुच्यते, ' संकरे ' ति सङ्कर , स चेह प्रस्तावात्तृणभस्मगोमयाङ्गारादिमीलक उकुरुडिकेति यावत् तत्र दूष्यं-वस्त्रं सङ्करदूष्यं, तत्र हि यदत्यन्तनिकृष्टं निरुपयोगि तल्लोकैरुत्सृज्यते-ततस्तत्प्रायमन्यदपि तथोक्तं, यद्वा-उज्झितधर्म्मकमेवासौ गृह्णातीत्येवमभिधानं ' परिहरिय ' त्ति परिहृत्य , निक्षिप्येत्यर्थ , क्व ?-कण्ठे—गले , स ह्यनिक्षिप्तोपकरण इति स्वमुपधिमुपादायैव भ्राम्यति, अत्र कण्ठैकपार्श्वे. कण्ठशब्द इति कण्ठे परिहृत्येत्युच्यत इति सूत्रद्वयार्थ ।

इत्थं दूरादागच्छन्नुक्त , सन्निकृष्टं चैनं किमूचुरित्याह—

कयरे तुमं इय अदंसणिज्जे ?,
काए व आसा इहमागओऽसि ? ।
ओमचेलगा पंसुपिसायभूया,
गच्छ क्खलाहि किमिहं ठिओऽसि ? ॥ ७ ॥

कतरस्त्वं, पाठान्तरश्च-को रे त्वम्, अधिक्षेपे रेशब्द. ' इती ' त्येवमदर्शनीयो-द्रष्टुमनर्ह., ' कया वा ' किंरूपया वा ?, ' आसा इहमागओऽसि ' त्ति ' अचां सन्धिलोपौ बहुल ' मिति वचनादेकारलोपो, मकारश्चागमिक , तत आशया वाञ्छया इह—अस्मिन्यज्ञपट्टके आगत -प्राप्तोऽसि-भवसि, अवमचेलक पांसुपिशाचभूत इति च प्राग्वत् , पुनरनयोरुपादानमत्यन्ताधिक्षेपदर्शनार्थं, गच्छ प्रव्रज , प्रक्रमादितो-यज्ञवाटकात्, 'खलाहि ' त्ति देशीपदमपसरेत्यस्यार्थे वर्त्तते, ततोऽयमर्थ -अस्मद्दृष्टिपथादपसर,तथा किमिह स्थितोऽसि त्वं ?, नैवेह त्वया स्थातव्यमिति भाव इति सूत्रार्थ. ।

एवमधिक्षिप्तेऽपि तस्मिन् मुनौ प्रशमपरतया किञ्चिदप्यजल्पति तत्सान्निध्यकारी गण्डीतिन्दुकयक्षो यदचेष्टत तदाह—

जक्खो तहिं तिंदुयरुक्खवासी,
ऽणुकंपओ तस्स महामुणिस्स ।
पच्छायइत्ता नियगं सरीरं,
इमाइँ वयणाइँ उदाहरित्था ॥ ८ ॥

यक्षो—व्यन्तरविशेष तस्मिन् अवसर इति गम्यते, तिन्दुको नाम वृक्षस्तद्वासी तथा च सम्प्रदाय -"तस्स तिंदुगवणस्स मज्झे महंतो तिंदुगरुक्खो, तहिं सो वसति तस्सेव हेट्ठा चेइयं, जत्थ सो साहू चिट्ठति । " ' अणुकंपओ ' त्ति अनुशब्दोऽनुरूपार्थे ततश्चानुरूपं कम्पते-चेष्टत इत्यनुकम्पक —अनुरूपक्रियाप्रवृत्ति , कस्येत्याह—तस्य—हरिकेशबलस्य महामुने.—प्रशस्यतपस्विन. प्रच्छाद्य—प्रकर्षेणावृत्त्य निजकम्—आत्मीयं शरीरं, कोऽभिप्राय ?, तपस्विशरीर एवाविश्य स्वयमनुपलक्ष्य सन्निमानि वक्ष्यमाणानि-वचनानि वचांसि ' उदाहरित्थ ' त्ति उदाहार्षीदुदाहृतवानित्यर्थ , इति सूत्रार्थ ।

कानि पुनस्तानि ?, इत्याह—

समणो अहं संजओ बंभयारी,
विरओ धणपयणपरिग्गहाओ ।
परप्पवित्तस्स उ-भिक्खकाले,
अन्नस्स अट्ठा इहमागओ मि ॥ ९ ॥
वियरिज्जइ खज्जइ भुज्जई य,
अन्नं पभूयं भवयाणमेयं ।
जाणाहि मे जायणजीविणु त्ति,
सेसावसेसं लहओ तवस्सी ॥ १० ॥

श्रमणो—मुनि ' अह ' मित्यात्मनिर्देश , किमभिधानत एवेत्याशङ्कयाह—सम्यग् यत संयत —असद्व्यापारेभ्य उपरत , अत एव च ब्रह्मचारी—ब्रह्मचर्यवान् , तथा विरतो निवृत्त , कुतो ?—धनं च पचनं च परिग्रहश्च धनपचनपरिग्रहमिति समाहार तस्मात् , तत्र धनं चतुष्पदादि, पचनमाहारनिष्पादन, परिग्रहो द्रव्यादिषु मूर्च्छा, अत एव च परस्मै प्रवृत्तं परै स्वार्थं निष्पादितत्वेन परप्रवृत्त तस्य, तुरवधारणे, तत. परप्रवृत्तस्यैव, न तु मदर्थं साधितस्येति भाव., भिक्षाकाले-भिक्षाप्रस्तावे,कदाचिदकालोऽयं ब्रूयादित्येवमुक्तम् , अन्नस्य—अशनस्य ' अट्ठ ' त्ति सूत्रत्वादर्थाय , भोजनार्थमिति भाव , इह—अस्मिन् यज्ञवाटके आगतोऽस्मि, अनेन यदुक्तं—कतरस्त्वं किमिहागतोऽसि ?, तत्प्रतिवचनमुक्तम् , एवमुक्ते च ते कदाचिदभिदध्यु —नेह किञ्चित् कस्मैचिद्दीयते न वा देयमस्त्यत आह-वितीर्यते—दीयते दीनानाथादिभ्य खाद्यते खण्डखाद्यादि , भुज्यते च भक्तसूपादि, अद्यत इत्यन्नं स सर्व्वमपि सामान्येनोच्यते, तदप्यल्पमेव स्यादत आह-प्रभूतं—बहु, प्रभूतमपि परकीयमेव स्यात् , अत आह—भवता—युष्माकमेव सम्बन्धि ' एतदि ति प्रत्यक्षं, व-

था च जानीत-अवगच्छत 'मे' त्ति सूत्रत्वान्मा 'जायण-जीविणो' त्ति याचनेन जीवनं—प्राणधारणमस्येति याचनजीवनम्, आर्षत्वादिकार. पठ्यते च-'जायणजीवणो' त्ति, इतिशब्द स्वरूपपरामर्शक, तत एवंस्वरूपम्, यतश्चैवमतो मह्यमपि दद्ध्वमिति भाव, कदाचित्दुत्कृष्टसंवासौ याचन इति तेषामाशय स्यादत आह. अथवा-जानीत मां याचन जीविन-याचनेन जीवनशीलं द्वितीयार्थे षष्ठी, पाठान्तरे तु प्रथमा, 'इनी' त्यस्मात्रेतो, किमित्याह-शेषावशेषम्-उद्धरितस्याप्युद्धरितम्, अन्नप्रान्तमित्यर्थ, लभतां-प्राप्नोतु तप-स्वी-यतिर्वराको वा भवदभिप्रायेण, अनेनात्मान निर्दिशतीति सूत्रद्वयार्थ।

एवं यक्षेणोक्ते यज्ञवाटवासिन प्राहु—

उवक्खडं भोयणं माहणाणं,
अत्तट्ठियं सिद्धमिहेगपक्खं।
न ऊ वयं एरिसमन्नपाणं,
दाहासु तुज्झं किमिहं ठिओऽसि ॥११॥

उपस्कृतं—लवणवेसवारादिसंस्कृत 'भोयण' त्ति भोजनं माहनाना-ब्राह्मणानाम् आत्मनोऽर्थ आत्मार्थस्तस्मिन् भव-मात्मार्थिक, ब्राह्मणैरप्यात्मनैव भोज्यं न त्वन्यस्मै देयं. किमिति?, यत सिद्धं-निष्पन्नम् इह-अस्मिन् यज्ञे एक पक्षो-ब्राह्मणलक्षणो यस्य तदेकपक्षं, किमुक्तं भवति?-यदस्मिन्नुपस्क्रियते न तद्ब्राह्मणव्यतिरिक्तायान्यस्मै दीयते, विशेषतस्तु शूद्राय, यत उक्तम्—" न शूद्राय मतिं दद्या-न्नोच्छिष्टं न हवि कृतम्। न चास्योपदिशेद् धर्मं. न चास्य व्रतमादिशेत् ॥ १ ॥" यतश्चैवमतो 'न तु' नैव वयमीदृशमुक्तरूपम् अन्नं च-ओदनादि पानं च-द्राक्षापानादि अन्नपान 'दाहामो' त्ति दास्याम. 'तुज्झं' ति तुभ्यं, किमिह स्थितोऽसि?, नैवेहावस्थितावपि तव किञ्चिदिति भाव इति सूत्रार्थ।

यक्ष आह—

थलेसु बीयाइँ वयंति कासगा,
तहेव निन्नेसु य आससाए।
एयाइ सद्धाइँ दलाह मज्झं,
आराहए पुण्णमिणं खु खित्तं ॥१२॥

स्थलेषु—जलावस्थितिविरहितपृथ्वीभूभागेषु बीजानि—गोधूमशाल्यादीनि वपन्ति-रोपयन्ति 'कासग' त्ति कर्षका॰ कृषीवला तथैव यथाच्चस्थलेष्वेवमेव निम्नेषु च-नीचभूभागेषु च 'आससाए' त्ति आशंसया—यद्यत्यन्तप्रवर्षणं भावि तदा स्थलेषु फलावाप्तिरथान्यथा तदा निम्नेष्विति एवमभिलाषात्मिकया एतयैव एतया-एतदुपमया. कोऽर्थ?-उत्कृष्टपकर्षप्रकाशसातुल्यया श्रद्धया-वाञ्छया 'दलाह' त्ति दद्ध्वं मह्यं, किमुक्तं भवति?-यद्यपि भवतां निम्नोपमत्वबुद्धिरात्मनि मयि तु स्थलतुल्यताधीः तथापि मह्यमपि दातुमुचितम्, अथ स्याद्-एव दत्तेऽपि न फलावाप्तिरित्याह-'आराहए पुण्णमिणं खु' त्ति खुशब्दस्यावधारणार्थस्य भिन्नक्रमत्वादाराधयेदेव-समन्तात्साधयेदेव नान्यथाभाव, पुण्य—शुभमिदं-परिदृश्यमानं क्षेत्रमिव क्षेत्रं पुण्यशस्यप्ररोहहेतुतया, आत्मानमेव पात्रभूतमेवमाह, पठ्यते च—'आराहगा होहिम पुण्णखेत्तं' ति आराधका—आवर्जका गम्यमानत्वात्पुण्यस्य भवत, अनेन दानफलमाह, कुत एतदित्याह—इदं पुण्यक्षेत्रं—पुण्यप्राप्तिहेतु क्षेत्रं यत इति गम्यते. इति सूत्रार्थ।

यक्षवचनानन्तरं त इदमाहु—

खित्ताणि अम्हं विइयाणि लोए,
जहिं पकिन्ना विरुहंति पुण्णा।
जे माहणा जाइविज्जोववेया,
ताइं तु खित्ताइँ सुपेसलाइं ॥ १३ ॥

'क्षेत्राणि' इति क्षेत्रोपमानि पात्राण्यस्माकं विदितानि—ज्ञातानि, वर्तन्त इति गम्यते. लोके—जगति 'जहिं' ति वचनव्यत्ययाद्येषु क्षेत्रेषु प्रकीर्णानीव प्रकीर्णानि—दत्तान्यशनादीनि विरोहन्ति—जन्मान्तरोपस्थानत. प्रादुर्भवन्ति पूर्णानि—समस्तानि, न तु तथाविधदोषसद्भावतः कानिचिदेव, स्यादेतद्-अहमपि तन्मध्यवर्त्त्येवेत्याशङ्क्याह-ये ब्राह्मणा—द्विजा, नेऽपि न नामत एव, किन्तु जातिश्च-ब्राह्मणजातिरूपा विद्या च-चतुर्दशविद्यास्थानात्मिका ताभ्याम् 'उववेय' त्ति उपेता—अन्विता जातिविद्योपेता, 'ताइं तु' त्ति तान्येव क्षेत्राणि 'सुपेसलाणि' त्ति सुपेशलं नाम शोभनं प्रीतिकरं वा इति वृद्धा, ततश्च सुपेशलानि—शोभनानि प्रीतिकराणि वा, न तु भवादृशानि शूद्रजातीनि, शूद्रजातित्वादेव वेदादिविद्यावहिष्कृतानीति, यत उक्तम्—"सममश्रोत्रिये दानं, द्विगुणं ब्राह्मणब्रुवे। सहस्रगुणमाचार्ये, अनन्तं वेदपारगे ॥ १ ॥" इति सूत्रार्थ।

यक्ष उवाच—

कोहो य माणो य वहो य जेसिं,
मोसं अदत्तं च परिग्गहं च।
ते माहणा जाइविज्जाविहीणा,
ताइं तु खित्ताइँ सुपावयाइं ॥ १४ ॥

क्रोधश्च—रोष मानश्च—गर्व, चशब्दान्मायालोभौ च, वधश्च—प्राणिघातो 'येषा' मिति प्रक्रमाद्भवता ब्राह्मणाना 'मोसं' ति मृषा-अलीकभाषणम् 'अदत्तं' ति पदेऽपि पदैकदेशस्य दर्शनात्सत्यभामा-सत्या इतिवत् अदत्तादानमुक्तं, चशब्दान्मैथुन, परिग्रहश्च-गोभूम्यादिस्वीकार अस्तीति सर्वत्र गम्यते 'ते' इति क्रोधाद्युपेता यूयं ब्राह्मणा जातिविद्याभ्यां विहीना-रहिता जातिविद्याविहीना, क्रियाकर्मविभागेन हि चातुर्वर्ण्यव्यवस्था, यत उक्तम्-'एकवर्णमिदं सर्व्वं, पूर्वमासीद्युधिष्ठिर!। क्रियाकर्मविभागेन चातुर्वर्ण्यं व्यवस्थितम् ॥ १ ॥ ब्राह्मणो ब्रह्मचर्येण, यथा शिल्पेन शिल्पक। अन्यथा नाममात्र स्या-दिन्द्रगोपककीटवत् ॥२॥" न चैवंविधक्रिया ब्रह्मचर्यात्मिका कोपाद्युपेतेषु तत्त्वत सम्भवत्यतो न तावज्जातिसम्भव, तथा विद्याऽपि सच्छास्त्रात्मिका, सच्छास्त्रेषु च सर्वैरप्यहिंसादिपञ्चकमेव वाच्य, यत उक्तम्— 'पञ्चैतानि पवित्राणि, सर्व्वेषां धर्म्मचारिणाम्। अहिंसा सत्यमस्तेय, त्यागो मैथुनवर्जनम् ॥ १ ॥" तद्युक्तत्वं च तत्त्वज्ञानादेव भवति, ज्ञानस्य तु विरति फल गीयमानश्च, यत उक्तम्—"तज्ज्ञानमेव न भवति, यस्मिन्नुदिते विभाति रागगण। तमस कुतोऽस्ति? शक्ति-र्दिनकरकिर-

णाग्रत. स्थातुम् ॥ १ ॥" न चैवमग्न्याद्यारम्भिषु कोपादिमत्सु च भवत्सु त्रिन्ते रागाद्यभावस्य च सम्भवोऽस्ति, न च निश्चयनयमनेन फलरहित वस्तु सत्, तथा च निश्चयो यद्यार्थक्रियाकारि तदेव परमार्थमदित्याह, तत स्थितमेतत्—' नाह तु ' त्ति तुरवधारणे, भिन्नक्रमश्च। ततश्च तानि भवद्भिरितानि ब्राह्मणलक्षणानि, क्षेत्राणि, सुपापकान्येव, न तु सुपेशलानि, क्रोधाद्युपेतत्वेनातिशयपापहेतुत्वादिति सूत्रार्थः।

कदाचित्ते वदेयु —वेदविद्याविदो वयमत एव च ब्राह्मणजातयस्तत्कथ जातिविद्याविहीना इत्युक्तवानसीत्याह—

तुब्भित्थ भो ! भारहरा गिराणं,
अट्ठं न याणाह अहिज्ज वेए।
उच्चावयाइं मुणिणो चरंति,
ताइं तु खित्ताइं सुपेसलाइं ॥ १५ ॥

यूयमत्रेति—लोके ' भो ' इत्यामन्त्रणे, भारं धरन्तीति भारधरा, पाठान्तरतो वा—' भारवहा ' वा, कासा ?-गिराम्-वाचा, प्रक्रमाद्वेदसम्बन्धिनीनाम्, इह च भारस्तासा भूयस्त्वमेव, किमिति भारधरा भारवहा वेति उच्यते, यतोऽर्थम्—अभिधेयं न जानीथ—नावबुध्यध्वे ?, ' अहिज्ज ' त्ति अपेर्गम्यमानत्वादधीत्यापि वेदान्—ऋग्वेदादीन्, तथाहि—' आत्मा वा रे ज्ञातव्यो मन्तव्यो निदिध्यासितव्य ' तथा ' कर्मभिर्मृत्युमृषयो निषेदु, प्रजावन्तो द्रविणमन्विच्छमाना, अथापर कर्मभ्योऽमृतत्वमानशु " परेण नाक निहित गुहाया, विभ्राजते यद्यतयो विशन्ति। वेदाहमेन पुरुष महान्त, तमेव विदित्वा अमृतत्वमेति ॥ १ ॥ " नान्य पन्था. अयनाये ' त्यादिवचनाना यथार्थवेत्तार. स्युस्तत्किमित्थं यागादि कुर्वीरन् ?, ततस्तत्त्वतो वेदविद्याविदो भवन्तो न भवन्ति, तत्कथ जातिविद्यासम्पन्नत्वेन क्षेत्रभूता स्यु ?। कानि तर्हि भवदभिप्रायेण क्षेत्राणीत्याह—'उच्चावयाइ ' ति उच्चावचानि-उत्तमाधमानि मुनयश्चरन्ति भिक्षानिमित्त पर्यटन्ति गृहाणि ये इति गम्यते, न तु भवन्त इव पचनाद्यारम्भप्रवृत्तय न एव परमार्थतो वेदार्थं विदन्ति तत्रापि भैक्षवृत्तेरेव समर्थितत्वात्, तथा च वेदानुवादिन -'चरेद् माधुकरीं वृत्ति-मपि म्लेच्छकुलादपि। एकान्नं नैव भुञ्जीत, बृहस्पतिसमादपि ॥ १ ॥" यदिवोच्चावचानि-विकृष्टाविकृष्टतया नानाविधानि, तपांसीनि गम्यते, उच्चव्रतानि वा शेषव्रतापेक्षया महाव्रतानि ये मुनयश्चरन्ति-आसेवन्ते, न तु यूयमिवाऽजितेन्द्रिया अशीला वा, तान्येव मुनिलक्षणानि क्षेत्राणि सुपेशलानीति प्राग्वदिति सूत्रार्थः।

इत्थमध्यापकं यक्षेण निर्मुखीकृतमवलोक्य तच्छात्रा. प्राहु

अज्झावयाणं पडिकूलभासी,
पभासमे किन्नु सगासि अम्हं ?।
अवि एयं विणस्सउ अन्नपाणं,
न य णं दाहामु तुमं नियंठा ! ॥ १३ ॥

अध्यापयन्ति-पाठयन्तीत्यध्यापका -उपाध्यायास्तेषा प्रतिकूलं-प्रतिलोमं भाषते वक्तीत्येवंशील. प्रतिकूलभाषी सन् प्रकर्षेण भाषसे-ब्रूषे प्रभाषसे, किमिति क्षेपे, तुरित्यक्षमाया, ततश्च धिग् भवन्तं न वयं क्षमामहे यदित्थं भवान् ब्रूते सकाशे—समीपे ' अम्ह ' त्ति अस्माकम्, अपि सम्भावनायाम् एतत्—परिदृश्यमानं विनश्यतु—क्वथितत्वादिना स्वरूपहानिमाप्नोतु अन्नपानम्-ओदनकाञ्जिकादि, 'न च'-नैव ' ण ' मिति वाक्यालङ्कारे ' दाहामु ' त्ति दास्यामस्तवेह निर्ग्रन्थ ! निष्किञ्चन !, गुरुप्रत्यनीको हि भवान्, अन्यथा तु कदाचिदनुकम्पया किञ्चिदन्तप्रान्तादि दद्यामोऽपीति भाव इति सूत्रार्थः।

यक्ष आह-

समिईहि मज्झं सुसमाहियस्स,
गुत्तीहि गुत्तस्स जिइंदियस्स।
जइ मे न दाहित्थ अहेसणिज्जं,
किमज्ज जन्नाण लभित्थ लाभं ? ॥ १७ ॥

समितिभिः-ईर्यासमित्यादिभिर्मह्य सुष्ठु समाहिताय-समाधिमते सुसमाहिताय गुप्तिभि —मनोगुप्त्यादिभिर्गुप्ताय जितेन्द्रियायेति च प्राग्वत्, सर्वत्र च चतुर्थ्यर्थे षष्ठी, 'यदीत्यभ्युपगमे' मे' मह्य ' मज्झ ' तीत्यस्य व्यवहितत्वात् क्रियां प्रति पुनरुपादानमदुष्टमेव न दास्यथ—न वितरिष्यथ, ' अथे ' त्युपन्यासे आनन्तर्ये वा, एषणीयम्—एषणाविशुद्धमन्नादिकं, किं न किञ्चिदित्यर्थ, ' अज्ज ' त्ति अद्य ये यज्ञास्तेषामिदानीमारब्धयज्ञाना,यद्वा-'अज्ज' त्ति हे आर्या ! यज्ञाना,' लभित्थ ' त्ति सूत्रत्वाल्लप्स्यध्वे-प्राप्स्यध्वे लाभं—पुण्यप्राप्तिरूपं, पात्रदानादेव हि विशिष्टपुण्यावाप्ति, अन्यत्र तु तथाविधफलाभावेन दीयमानस्य हानिरेव, उक्तं हि-"दधिमधुघृतान्यपात्रे, क्षिप्तानि यथाऽशु नाशमुपयान्ति। एवमपात्रे दत्ता-नि केवल नाशमुपयान्ति ॥१॥ " इति सूत्रार्थः।

इत्थं तेनोक्ते यदध्यापकप्रधान आह तदुच्यते-

के इत्थ खत्ता उवजोइया वा,
अज्झावया वा सह खंडिएहिं ?।
एयं खु दंडेण फलेण हता,
कंठम्मि घित्तूण खलिज्ज जो णं ॥ १८ ॥

के ' अत्रे ' त्येतस्मिन् स्थाने क्षत्रा -क्षत्रियजातयो वर्णसङ्करोत्पन्ना वा तत्कर्मनियुक्ता ' उवजोइय ' त्ति ज्योतिष समीपे ये त उपज्योतिषस्त एवोपज्योतिष्का —अग्निसमीपवर्तिनो महानसिका ऋत्विजो वा अध्यापका -पाठका, ते वा उभयत्र वा विकल्पे ' सह ' ति युक्ता कै ?-' खण्डिकै ' छात्रै, ये किमित्याह—एनं-श्रवणकं दण्डेन-वंशयष्ट्यादिना फलेन—बिल्वादिना ' हंत ' त्ति हत्वा—ताडयित्वा यद्वा—' दण्डेने ' ति कूर्पराभिधानेन फलेन—च मुष्टिप्रहारेणेति वृद्धा, ततश्च कण्ठे-गले गृहीत्वा—उपादाय ' खलिज्ज ' त्ति स्खलयेयु —निष्काशयेयु —' यो ' त्ति वचनव्यत्ययाद्ये इत्थमेतदभिघाते निष्काशने वा शक्ता, ' णमि ' वाक्यालङ्कारे. इतिसूत्रार्थः।

अथान्तरे यद्भूत्तदाह—

अज्झावयाणं वयणं सुणित्ता,
उद्धाइया तत्थ बहू कुमारा।

दंडेहिँ वित्तेहिँ कसेहिँ चेव,
समागया तं इसिं तालयंति ॥ १६ ॥

अध्यापकानाम्—उपाध्यायानाम्, एकत्वेऽपि पूज्यत्वाद्बहुवचनं, वचनम्-उक्तरूपं श्रुत्वा—आकर्ण्य उद्धाविता—वेगेन प्रसृता तत्र—यत्रासौ मुनिस्तिष्ठति बहव-प्रभूता कुमारा-द्वितीयवयोवर्त्तिनश्छात्रादय इति गम्यते, न हि क्रीडनकपरा इत्यहो क्रीडनकमागतमिति रभसतो दण्डै-वंशयष्ट्यादिभिर्वेत्रै—जलजवंशात्मकैः कशैः—वर्ध्रविकारैः, च समुच्चये, एवेति पूरणे, समागता—सम्प्राप्ता मिलिता वा तमृषिं—मुनिं ताडयन्ति-घ्नन्ति, सर्वत्र वर्त्तमाननिर्देशः प्राग्वत् इति सूत्रार्थः ।

अस्मिंश्चावसरे—

रण्णो तहिं कोसलियस्स धूया,
भद्द त्ति नामेण अणिंदियंगी ।
तं पासिया संजयँ हम्ममाणं ।
कुद्धे कुमारे परिनिव्ववेइ ॥ २० ॥

राज्ञो-नृपतेस्तत्र—यज्ञवाटे कोशलाया भवः कौशलिकस्तस्य 'धूय' त्ति दुहिता भद्रेति नाम्ना—अभिधानेन अनिन्दिताङ्गी—कल्याणशरीरा तं—हरिकेशबलं 'पासिय' त्ति दृष्ट्वा 'संजय' त्ति संयतं तस्यामप्यवस्थायां हिंसादेः सम्यगुपरतं हन्यमानं दण्डादिभिस्ताड्यमानं क्रुद्धान् कोपवतः कुमारान् उक्तरूपान् परिनिर्व्वापयति—कोपाग्निविध्यापनात् समन्तात् शीतीकरोति-उपशमयतीति यावदिति सूत्रार्थः ।

सा च तान् परिनिर्व्वापयन्ती तस्य माहात्म्यमतिनिःस्पृहतां चाह—

देवाभिओगेण निओइएणं,
दिन्ना मु रण्णा मणसा न झाया ।
नरिंददेविंदऽभिवंदिएणं,
जेणामि वंता इसिणा स एसो ॥ २१ ॥
एसो हु सो उग्गतवो महप्पा,
जिइंदिओ संजओ बंभयारी ।
जो मे तया निच्छइ दिज्जमाणी,
पिउणा सयं कोसलिएण रण्णा ॥ २२ ॥
महाजसो एस महाणुभागो,
घोरव्वओ घोरपरक्कमो य ।
मा एयं हीलह अहीलणिज्जं,
मा सव्वे तेएण भे निद्दहिज्जा ॥ २३ ॥

देवस्य अमरस्याभियोगो बलात्कारो देवाभियोगस्तेन नियोजितेन—व्यापारितेन न त्वप्रियेति कृत्वा 'दिन्नामु' त्ति दत्ताऽस्मि अहं यस्मै इति गम्यते दत्ता च केन? राज्ञा प्रक्रमात् कौशलिकेन, तथापि 'मणसा' त्ति अपेर्गम्यमानत्वान्मनसाऽपि चित्तेनापि न ध्याता-न चिन्तिता नाभिलषितेति यावत्, प्रक्रमादेतेन मुनिना, कीदृशेन ? नरेन्द्राश्च-नृपतयो देवेन्द्राश्च-शक्रादयो नरेन्द्रदेवेन्द्रास्तैरभिआभिमुख्येन वन्दित—स्तुतो नरेन्द्रदेवेन्द्राभिवन्दितस्तेन, अनभिध्याताऽपि नृपोपरोधतः स्वीकृता स्यादत आह येनास्म्यहं वान्ता—त्यक्ता ऋषिणा-मुनिना, स एष युष्माभिर्य कदर्थयितुमारब्धः, ततो न कदर्थयितुमुचित इति भावः । पुनरिममेवार्थं समर्थयितुमाह-'एसो हु सो' त्ति, एष एव स न मनागप्यत्र संशयः, उग्रम्-उत्कटं दारुणं वा कर्म्मशत्रून् प्रति तपः-अनशनाद्यस्येति उग्रतपाः, अत एव महान्-प्रशस्यो विशिष्टवीर्योल्लासत आत्मा अस्येति महात्मा, जितेन्द्रियः संयतो ब्रह्मचारी च प्राग्वत्, स इति, क? इत्याह-यो 'मे' त्ति मां तदा-तस्मिन् विवक्षितसमये नेच्छति—नाभिलषति-दीयमानां निसृज्यमानां, केन ? पित्रा-जनकेन स्वयम्-आत्मना, न तु प्रधानप्रेषणात्, तेनापि कीदृशा ? कौशलिकेन राज्ञा न त्वितरजनसाधारणेन, तदनेन विभूतावपि निःस्पृहत्वमुक्तं, पुनस्तन्माहात्म्यमाह—महायशा—अपरिमितकीर्त्तिः एष-प्रत्यक्षो मुनिर्महानुभागः अतिशयाचिन्त्यशक्तिः, पाठान्तरतो महानुभावो वा, तत्र चानुभावः शापानुग्रहसामर्थ्यं, घोरव्रतो धृतात्यन्तदुर्द्धरमहाव्रतः-घोरपराक्रमश्च-कषायादिजयं प्रति रौद्रसामर्थ्यो, यतोऽयमीदृक् ततः किमित्याह 'मा' इति निषेधे एतं—यतिं हीलयत-अवधूतं पश्यत अहीलनीयम्-अवज्ञातुमनुचितं, किमित्यत आह—मा सर्व्वान् समस्तांस्तेजसा तपोमाहात्म्येन 'भे' भवतो निर्धाक्षीद्-भस्मसात्कार्षीद्, अयं हि हीलितो यदि कदाचित्क्रुध्येत्तदा सर्व्वं भस्मसादेव कुर्यादिति भाव इति सूत्रत्रयार्थः ।

अत्रान्तरे मा भूदेतस्या वचनं मृषेति यक्षस्तःकृतवांस्तदाह—

एयाइँ तीसे वयणाइँ सुच्चा,
पत्तीइ भद्दाइ सुभासियाइं ।
इसिस्स वेयावडियट्ठयाए,
जक्खा कुमारे विणिवारयंति ॥२४॥
ते घोररूवा ठिअ अंतलिक्खे,
असुरा तहिं तं जणँ तालयंति ।
ते भिन्नदेहे रुहिरं वमंते,
पासित्तु भद्दा इणमाहु भुज्जो ॥२५॥

एतानि—अनन्तरोक्तानि तस्याः-अनन्तरोक्ताया वचनानि-भाषितानि श्रुत्वा—निशम्य पत्न्याः-यज्ञवाटकाधिपतेः सोमदेवपुरोहितस्य, तस्यैव वा मुनेरिति गम्यते, भद्रायाः-भद्राभिधानायाः सुभाषितानि-सूक्तानि वचनानीति योज्यते, ऋषेः—तस्यैव तपस्विनः 'वेयावडियट्ठयाए' त्ति सूत्रत्वाद्वैयावृत्त्यार्थमेतत् प्रत्यनीकनिवारणलक्षणं प्रयोजनं व्यावृत्ता भवाम इत्येवमर्थं यक्षाः, यक्षपरिवारस्य बहुत्वात् बहुवचनं, कुमारान् प्रक्रमात्तानेवोपहन्तॄन् विनिपातयन्ति-विविधं नितरां पातयन्ति—भूमौ विलोलयन्ति, पठ्यते च—'विणिवारयंति' त्ति विशेषेणापहर्तिं कुर्वन्तो निराकुर्वन्ति, तथा 'ते' इति यक्षाः घोररूपा

रौद्राकारधारिण 'ठिय' त्ति स्थिता अन्तरिक्षे-आकाशे असुरा—आसुरभावान्वितत्वात् त एव यक्षा तस्मिन्-य-क्षवाटे तम्—उपसर्गकारिणं जनं-छात्रलोकं ताडयन्ति-घ्नन्ति ततस्तान् कुमारान् भिन्ना-विदारिता प्रक्रमाद्यक्षप्रहारैर्देहा -शरीराणि येषा ते भिन्नदेहास्तान् रुधिर-शोणित वमत -उद्गिरत 'पासित्त' त्ति दृष्ट्वा ' भद्रा' सैव कौशलिकराजदुहिता इदं—वक्ष्यमाणम् ' आहु ' त्ति वचनव्यत्ययेन आह-ब्रूते भूय.—पुनरिति सूत्रद्वयार्थ ।

किं तदित्याह—

गिरिं नहेहिं खणह, अयं दंतेहिं खायह।
जायतेयं पायेहिं हणह, जे भिक्खुं अवमन्नह ॥२६॥
आसीविसो उग्गतवो महेसी,
घोरव्वओ घोरपरक्कमो य।
अगणिं व पक्खंद पयंगसेणा,
जे भिक्खुं भत्तकाले वहेह ॥ २७ ॥
सीसेण एवं सरणं उवेह,
समागया सव्वजणेण तुम्हे।
जइ इच्छह जीवियं वा धणं वा,
लोगं पि एसो कुविओ डहिज्जा ॥ २८ ॥

गिरिं-पर्वतं नखै-करुहै खनथ-विदारयथ इह च मुख्यखननक्रियाद्यसम्भवादिवचनमन्तरेणाप्युपमार्थो गम्यते ततश्च खनथेव खनथ , अयो-लोहं दन्तै-दशनै खादथेव खादथ, जाततेजसम् अग्निं पादै -चरणैर्हथेव हथ, ताडयथेत्यर्थ , ये वयं किं कुर्म इत्याह-ये यूयं भिक्षुं प्रक्रमादेनम्, 'अवमन्नह' त्ति अवमन्यध्वे-अवधीरयथ,अनर्थफलत्वात् भिदवपमानस्येति भाव. , कथमिदमित्याह-आस्यां-दंष्ट्रास्तासु विषमस्येत्यासीविष· आसीविषलब्धिमान्, शापानुग्रहसमर्थ इत्यर्थ., यद्वा-आसीविष इव आसीविष , यथा ह्य-तमत्यन्तमवजानानो मृत्युमेवाप्नोति, एवमेनमपि मुनिमवमन्यमानानामवश्य भावि मरणमित्याशय., कुत पुनरयमेवंविधो ?, यत -उग्रतपा: प्राग्वत्, 'महेसि' त्ति महान्—बृहन् शेषस्वर्गाद्यपेक्षया मोक्षस्तमिच्छति—अभिलषतीति महदेषी महर्षिर्वा, घोरव्रतो घोरपराक्रमश्च पूर्ववत्, यतश्चैवमत· अगणिं व' त्ति अग्निं—ज्वलनं, वाशब्द इवार्थो, भिन्नक्रमश्च। तत 'पक्खद' त्ति प्रस्कन्दथेव—आक्रामथेव, केव ?—'पतंगसेणा' त्ति उपमार्थस्य गम्यमानत्वात्पतङ्गाना—शलभाना सेनेव सेना—महती सन्तति पतङ्गसेना तद्वत्, तथा हि-असौ तत्र निपतन्त्याशु घातमाप्नोत्येवं भवन्तोऽपीति भाव , ये यूयमनुकम्पितं भिक्षुं—भिक्षुकं भक्तकाले-भोजनसमये, तत्र दीनादेरवश्य देयमिति शिष्टसमयो यूयं तु न कवल न यच्छत; किन्तु-तत्रापि 'वधह' त्ति विध्यथ—ताडयथ, अयमाशयो—यतोऽयमासीविषादिविशेषणान्वितो मुनिरतो गिरिनखखननादिप्रायमेव यदेनं भक्तकालेऽपि भक्तार्थिनमित्थ विध्यथ। अथ स्वकृत्योपदेशमाह—शीर्षेण—शिरसा एन—मुनिं शरणार्थं—रक्षणार्थमाश्रयमुपेत-अभ्युपगच्छत, किमुक्तं भवति—शिर प्रणामपूर्वकमयमेवास्माकं शरणमिति प्रपद्यध्व , समागता -सम्मिलिताः सर्वजनेन-समस्तलोकेन , सहार्थे तृतीया , यूय—भवेन्तो यदीच्छत—अभिलषत जीवितं—प्राणधारणात्मकं धनं वा द्रव्यं, न तस्मिन् कुपिते जीवितव्यादिरक्षाक्षममन्यच्छरणमस्ति, किमित्येवमत आह-लोकमपि-भुवनमप्येष कुपित·-क्रुद्धो,'दहेद्' भस्मसात्कुर्यात्, तथा च वाचक -"कल्पान्तोग्रानलवत्प्रज्वलनं तेजसैकनस्तेषाम्" तथा लौकिका अप्याहु -"न तत् दूरं यदश्वेषु, यवाग्नौ यच्च मारुते। विषे च रुधिरे ग्रासे, साधौ च कृतनिश्चये ॥१॥" इति सूत्रत्रयार्थः।

सम्प्रति तत्पत्निस्तान् यादृशान् ददर्श दृष्ट्वा च यच्चेष्टत तदाह—

अवहेडियपिट्ठिसउत्तमंगे, पसारियाबाहुअकम्मचिट्ठे।
निब्भेरियच्छे रुहिरं वमंते,उड्ढमुहे निग्गयजीहनित्ते॥२६॥
ते पासिया खंडियकट्ठभूए,
विमणो विसन्नो अह माहणो सो।
इसिं पसाएइ सभारियाओ,
हीलं च निंदं च खमाह भंते ! ॥ ३० ॥

'अवे' त्ति अधो 'हेडिय' त्ति हेठितानि-'बाधितानि' किमुक्तं भवति ?—अधोनामितानि, पठन्ति च—'आवडिए' त्ति तत्र सूत्रत्वादवकोटितानि अधस्तादामोटितानि, ' पट्ठि ' त्ति पृष्ठं यावत् तदभिमुखं वा सन्ति शोभनान्युत्तमाङ्गानियेषा ते अवहठितपृष्ठसदुत्तमाङ्गा अवकोटितपृष्ठसदुत्तमाङ्गा वा प्राग्वन्मध्यपदलोपी समासस्तान्, ' पसारियाबाहु अकम्मचिट्ठ ' त्ति प्रसारिता विरलीकृता बाहवो भुजा येषां वा ते तथा, ततस्ते च ते अकर्मचेष्टाश्च अविद्यमानकर्महेतुव्यापारतया प्रसारितबाहुकर्मचेष्टास्तान्, यद्वाक्रियन्त इति कर्माणि-अग्नौ समित्प्रक्षेपणादीनि तद्विषया चेष्टा कर्मचेष्टेह गृह्यते, 'निब्भेरिय' त्ति प्रसारितान्यक्षीणिलोचनानि येषा ते तथोक्तास्तान्, रुधिर वमत -उद्गिरत. ' उड्ढमुह ' त्ति ऊर्ध्वमुखान्-उन्मुखीभूतवक्त्रान् अत एव निर्गतानि-नि सृतानि जिह्वाश्च प्रतीता नेत्राणि च—नयनानि जिह्वानेत्राणि येषा ते तथा तान्, ' तान् ' इत्युक्तरूपान् दृष्ट्वा-अवलोक्य 'खंडिय' त्ति आर्षत्वात्सुपो लुकि खण्डिकान्—छात्रान् काष्ठभूतान्-अत्यन्तनिश्चेष्टतया काष्ठोपमान् विगतमिव विगतं मन -चित्तमस्येति विमना , विषण्ण -कथममी प्रगुणीभविष्यन्तीति चिन्तया व्याकुलित 'अथे' ति दर्शनानन्तरं ब्राह्मणो-द्विजाति ' स ' इति सोमदेवनामा ऋषि-तमेव हरिकेशबलनामानं मुनिं प्रसादयति-प्रसत्तिं ग्राहयति, सह भार्यया-पत्न्या तयैव भद्राभिधानया वर्त्तते इति सभार्यक , कथमित्याह-हीलां च अवज्ञा निन्दा च दोषोद्घट्टन 'खमाह' त्ति क्षमस्व-सहस्व 'भंते' त्ति सूत्रद्वयार्थ.।

पुन स प्रसादनामेवाह—

बालेहिं मूढेहिं अयाणएहिं,
जं हीलिया तस्स खमाह भंते !।
महप्पसाया इसिणो हवंति,
न हु(हू) मुणी कोवपरा हवंति ॥ ३१ ॥

याले -शिशुभिर्मूढै -कषायमोहनीयोदयाद्विचित्तता गतै अत एव चाज्ञै -हिताहितविवेकविकलै 'यदि' त्युपप्रदर्शने, हीलिता -अवज्ञाता 'तस्स' त्ति सूत्रत्वात् तत् 'खमाह' त्ति क्षमध्व भदन्त !, अनेनैतदाह-यतोऽमी शिशवो मूढा अज्ञानाश्च तत्किमेतामुपरि कोपेन ?, यतोऽनुकम्पनीया एवामी, उक्तं च केनचिद्-"आत्मद्रुहममर्यादं , मूढमुज्झितसत्पथम् । सुतरामनुकम्पेत, नरकार्चिष्मदिन्धनम् ॥ १ ॥" किं च-महान् प्रसाद -चित्तप्रसत्तिरूपो येषां ते महाप्रसादा ऋषय —साधवो भवन्ति , व्यतिरेकमाह—'न हु' त्ति न पुनर्मुनयो—यतय कोपपरा -क्रोधवशगा भवन्ति, भिन्नवाक्यत्वाच्च मुनिग्रहणमदुष्टमेवेति सूत्रार्थ. ।

मुनिराह—

पुव्विं च इण्हिं च अणागयं च,
मणप्पओसो न मे अत्थि कोई ।
जक्खा हु वेयावडियं करिंति,
तम्हा हु एए निहया कुमारा ॥ ३२ ॥

'पुव्विं च' त्ति पूर्वं च पुरा इदानीं च-अस्मिन् काले 'अणागयं चे' ति अनागते च भविष्यत्काले मन.प्रद्वेष.—चित्तानुशयलक्षणो न 'मे' ममास्तीत्युपलक्षणत्वादासीद्भविष्यति च, कोऽपी ' त्यल्पोऽपि, इह च भाविनि प्रमाणाभावेऽपि 'अनागतं प्रत्याचक्षे' इति वचनादनागतस्यापि तस्य निषिद्धत्वाच्छ्रुतज्ञानबलत. कालत्रयपरिज्ञानसम्भवाच्चैवमभिधानम् , पठन्ति च—' पुव्विं च पच्छा व तहेव मज्झे ' तत्र च पूर्वं वा पश्चाद्वेति विहेठनकालापेक्ष तथैव मध्ये विहेठनकाल एव, न च कुमाराविहेठनादिदर्शनात्प्रत्यक्षविरुद्धता शङ्कनीया , यक्षा-देवविशेषा 'हु' रिति यस्माद्वैयावृत्त्यं प्रत्यनीकप्रतिघातरूपं कुर्वन्ति-विदधति , 'तम्ह' त्ति तस्मात् हुरवधारणे, ततस्तस्मादेव हेतोरेते-पुरोवर्त्तिनो नितरां हता —ताडिता. कुमारा , न तु मम ,मन प्रद्वेषोऽत्र हेतुरिति भाव इति सूत्रार्थ ।

सम्प्रति तद्गुणाकृष्टचेतस उपाध्यायप्रमुखा इदमाहु -

अत्थं च धम्मं च वियाणमाणा ,
तुब्भे न वि कुप्पह भूइपन्ना ।
तुब्भं तु पाए सरणं उवेमो,
समागया सव्वजणेण अम्हे ॥ ३३ ॥

अर्यत इत्यर्थो—ज्ञेयत्वात्सर्व्वमेव वस्तु, इह तु प्रक्रमाच्छुभाशुभकर्म्मविभागो रागद्वेषविपाको वा परिगृह्यते, यद्वा-अर्थ —अभिधेय. स चार्थाच्छास्त्राणामेव तं, चशब्दस्तद्गतानेकभेदसंसूचक , धर्म —सदाचारो दशविधो वा यतिधर्मस्तं च ' वियाणमाणे ' त्ति विशेषेण विविधं वा जानन्त —अवगच्छन्तो यूयं नापि-नैव कुप्यथ—क्रोधं कुरुध्व , भूतिप्रज्ञा इति, भूतिर्मङ्गलं वृद्धी रक्षा चेति वृद्धा , प्रज्ञायतेऽनया वस्तुतत्त्वमिति प्रज्ञा . ततश्च भूति —मङ्गलं सर्वमङ्गलोत्तमत्वेन वृद्धिर्वा वृद्धिविशिष्टत्वेन रक्षा वा प्राणिरक्षकत्वेन प्रज्ञा-बुद्धिरस्येति भूतिप्रज्ञ , अतश्च ' तुब्भं तु ' त्ति तुशब्दस्यैवकारार्थत्वात् युष्माकमेव पादौ—चरणौ शरणमुपेम -उपगच्छाम समागता.-मिलिता , केन सह ?-सर्वजनेन, वयमिति सूत्रार्थ. ।

किं च—

अच्चेमु ते महाभागा !, न ते किंचन नाच्चिमो ।
भुंजाहि सालिमं कूरं,नाणावंजणसंजुयं ॥ ३४ ॥

अर्च्चयामः-पूजयाम. 'ते'--तव सम्बन्धि सर्व्वमपीति गम्यते, प्रविश पिण्डिमित्युक्त यथा गृहमिति भक्षयेति च । महाभाग ! अतिशयाचिन्त्यशक्तियुक्तत्वेनेति, नैव 'ते' तव किञ्चिदिति चरणरेणवादिकमपि नार्च्चयामो-न पूजयाम., अपि तु सर्व्वमर्च्चयामः, अस्य च पूर्व्वेणैव गतार्थत्वे पुनरभिधानमन्वयव्यतिरेकाभ्यामुक्तोऽर्थ सुखावगमो भवतीति कृत्वा । अथवा अर्च्चयामस्ते इति सुब्व्यत्ययात्त्वाम् , अनेन स्वतस्तस्य पूज्यत्वमुक्तम् , उत्तरेण तु तत्स्वामित्वमपि पूज्यताहेतुरिति, तथा भुङ्क्ष्वेनो गृहीत्वेति गम्यते ' सालिमं ' ति शालिमयं , कोऽर्थ ?--शालिनिष्पन्नं कूरम्--ओदनं नानाव्यञ्जनै -अनेकप्रकारैर्दध्यादिभि सयुतं--सम्मिश्रं नानाव्यञ्जनसंयुत ,न त्वेकमेवेति सूत्रार्थ. ।

अन्यच्च--

इमं च मे अत्थि पभूयमन्नं,
तं भुंजसू अम्ह अणुग्गहट्ठा ।
बाढंति पडिच्छइ भत्तपाणं,
मासस्स ऊ पारणए महप्पा ॥ ३५ ॥

'इदं च' प्रत्यक्षत एव परिदृश्यमानं 'मे' ममास्ति--विद्यते प्रभूतं-प्रचुरमन्नं-मण्डकखण्डखाद्यादि समस्तमपि भोजनं, यत्प्राक् पृथगोदनग्रहण तत्तस्य सर्वान्नप्रधानत्वख्यापनार्थं, तद्भुङ्क्ष्वास्माकमनुग्रहार्थं-वयमनुगृहीता भवाम इति हेतो. । एवं च तेनोक्ते मुनिराह--'बाढम्' एवं कुर्म्म इतीत्येवं ब्रुवाण इति शेष , प्रतीच्छति-द्रव्यादित. शुद्धमिति गृह्णाति , भक्तपानमुक्तरूपं , 'मासस्स उ' त्ति मासादेव, यद्वा-अन्त इत्यध्याह्रियते , ततश्च मासस्यैवान्ते यत्पार्यते-पर्यन्तः क्रियते गृहीतनियमस्यानेनेति पारणं तदेव पारणक, भोजनमित्युक्तं भवति , तस्मिन्--तन्निमित्तं , ' निमित्तात्कर्मयोगे सप्तमीति' ( पा० २-३-३६ वार्तिकम् ) सप्तमी , महात्मेति प्राग्वत् इति सूत्रार्थ ।

तदा च तत्र यदभूत्तदाह--

तहियं गंधोदयपुप्फवासं. दिव्वा तहिं वसुहारा य वुट्ठा ।
पहया दुंदुहीओ सुरेहिं ,आगासे अहो दाणं च घुट्ठं॥३६॥

' तहियं' ति तस्मिन् मुनौ भक्तपानं प्रतीच्छति यज्ञवाटे वा गन्ध--आमोदस्तत्प्रधानमुदकं--जलं गन्धोदकं तच्च पुष्पाणि च--कुसुमानि तेषां वर्षे--वर्षणं गन्धोदकपुष्पवर्षं, सुरैरिति सम्बन्धात् कृतमिति गम्यते,दिव्या-श्रेष्ठा, यद्दिवा-दिवि-गगने भवा दिव्या ' तहिं' ति तस्मिन्नेव नान्यत्र, अनेन कथमियतामेकत्र कल्याणाना मीलक इत्यन्यत्रैवान्यतरत्कल्याणान्तरं भविष्यतीत्याशङ्का निराकृता । वसु-द्रव्यं तस्य धारा-सततपातजनिता सन्ततिर्वसुधारा सा च ' वुट्ठ ' त्ति पातिता 'सुरैरित्यत्रापि सम्बध्यते ' तथा प्रकर्षेण हता -ताडिताः प्रहता , के ते ? ' दुन्दुभयो ' देवानकाः , उपलक्षणत्वाच्छेषातोद्यानि च । कै ?—सुरै.—देवै. , तथा तैरेव आकाशे-नभसि 'अहो' इति विस्मये , विस्मयनीयमिदं दानं, कोऽ-

म्य किलैवं शक्नोति दातुम्?, एवं दत्तं सुदत्तमिति च घुष्टं संशब्दितमिति सूत्रार्थः ।

तेऽपि ब्राह्मणा विस्मितमनस इदमाहु --

सक्खं खु दीसइ तवोविसेसो,
न दीसई जाइविसेसो कोई ।
सोवागपुत्तं हरिएससाहुं,
जस्सेरिसा इड्ढिमहाणुभागा ॥ ३७ ॥

साक्षात्—प्रत्यक्ष 'खु' त्ति निश्चितं अवधारणे वा तत: साक्षादेव दृश्यते—अवलोक्यते, कोऽसौ ?—तपो—लोकप्रसिद्धया व्रतमुपवासादिर्वा तस्य विशेषे-विशिष्टत्वमाहात्म्यमिति यावत्तपोविशेषः, 'न' नैव दृश्यते जातिविशेषो-जातिमाहात्म्यलक्षण., 'कोऽपी' ति स्वल्पोऽपि, किमित्येवमत आह—यत: स्वपाकपुत्र —चाण्डालसुतो हरिकेशश्चासौ मातङ्गत्वेन प्रसिद्धत्वात् साधुश्च यतित्वाद्धरिकेशसाधु, पठ्यते च—' सोवागपुत्त हरिएससाहुं ' ति अत्र च पश्यतेति शेष, कदाचिदन्य एव कश्चिदत आह—यस्येदृशी—दृश्यमानरूपा ऋद्धि:—देवसन्निधानात्मिका सम्पत् महानुभागा सातिशयमाहात्म्या, जातिविशेषे हि सति सर्वोत्तमत्वाद् ब्राह्मणजातेस्तद्वतामस्माकमेव देवा वैयावृत्त्यं कुर्युरिति भाव इति सूत्रार्थः ।

साम्प्रत स एव मुनिस्तापशान्तमिथ्यात्वमोहनीयोदयानिव पश्यन्निदमाह—

किं माहणा! जोइसमारभंता,
उदएण सोहिं बहिया विमग्गहा ।
जं मग्गहा बाहिरियं विसोहिं,
न तं सुदिट्ठं कुसला वयंति ॥३८॥

' कि ' मिति क्षेपे, ततो न युक्तमिदं, यत् माहना—ब्राह्मणा ज्योति —अग्नि समारभमाणा —प्रस्तावाद् यागकरणत: प्रवर्त्तमाना , यागं कुर्वन्त इत्यर्थ , उदकेन जलेन ' सोहिं' ति शुद्धिं निर्म्मलता ' बहिय ' त्ति बाह्या, कोऽर्थो? बाह्यहेतुका, याग हि समारभमाणैर्जलेन या शुद्धिर्मार्ग्यते तत्र यागस्नाने एव तत्त्वतो हेतुत्वेनेष्टे, ते च भवदभिमते बाह्ये एवेति विमार्गयथ-विशेषेणान्वेषयथ , किमेवमुपदिश्यत इत्याह—यद्यूय मार्गयथ बाह्या—बाह्यहेतुकां विशुद्धिं, न तत् सुदृष्ट सुष्ठु प्रेक्षितं कुशला —तत्त्वविचारं प्रति निपुणा वदन्ति—प्रतिपादयन्तीति सूत्रार्थः ।

यथा चैतत् सुदृष्ट न भवति तथा स्वत एवाह—

कुसं च जूवं तणकट्ठमग्गिं,
सायं च पायं उदयं फुसंता ।
पाणाइँ भूयाइँ विहेडयंता,
भुज्जोऽवि मंदा! पकरेह पावं ॥ ३९ ॥

कुश च—दर्भं च यूप—प्रतीतमेव तृणं च—वीरणादि काष्ठ—समिदादि तृणकाष्ठम् अग्निं प्रतीतं सर्वत्र परिगृह्णन्त इति शेष, साय—सन्ध्यायां, चशब्दो भिन्नक्रमस्तत: ' पायं ' ति प्रातश्च प्रभाते उदकं—जलं स्पृशन्त — आचमनादिषु परामृशन्त. ' पाणाइ ' ति प्राणयोगात् प्राणिनो, यद्वा-प्रकर्षेणानन्तीति वसन्तीति प्राणा. द्वीन्द्रियादय:, सम्भवन्ति हि जले पूतरकादिरूपास्त इति. 'भूयाइ' इति भूतान्—तरून् ' भूताश्च तरव स्मृता ' इति वचनात् , पृथिव्याद्येकेन्द्रियोपलक्षणं चैतत् ' विहेडयंति' त्ति विहेटयन्तो—विशेषेण विविधं वा बाधमाना ; विनाशयन्त इत्यर्थ , किमित्याह—भूयोऽपि—पुनरपि , न केवल पुरा किन्तु विशुद्धिकालेऽपि जलानलादिजीवोपमर्द्दनो मन्दा — जडा प्रकुरुथ-प्रकर्षेणोपचिनुथ यूयं , किं तत् ?—पापम्—अशुभकर्म्म, अयमाशय —कुशला हि कर्म्ममलविलयात्मिकां तात्त्विकीमेव शुद्धिं मन्यन्ते, भवदभिमतयागस्नाने च यूपादिपरिग्रहजलस्पर्शाविनाभावित्वेन भूतोपमर्द्दहेतुतया प्रत्युत कर्म्ममलोपचयनिबन्धने एवेति नात तत्सम्भव इति कथं तद्धेतुकशुद्धिमार्गणं सुदृष्ट ते वदेयु: ?, तथा च वाचक:-" शौचमाध्यात्मिकं त्यक्त्वा, भावशुद्ध्यात्मकं शुभम् । जलादिशौचं यत्रेष्टं, मूढविस्मापकं हि तत् ॥ १ ॥ " इति सूत्रार्थः ।

इत्थ तद्वचनतः समुत्पन्नशङ्कास्ते यागं प्रति तावदेवं पप्रच्छु —

कहं चरे भिक्खु! वयं जयामो?,
पावाइँ कम्माइँ पणुल्लयामो ।
अक्खाहि णे संजय जक्खपूइआ,
कहं सुइट्ठं कुसला वयंति? ॥ ४० ॥

कथं—केन प्रकारेण ' चरि ' त्ति " विभाषा कथमि लिङ् च " इति ( पा० ३-३-१४३ ) लिङि वचनव्यत्ययाच्चरेमहि-यागार्थं प्रवर्त्तेमहि, हे भिक्षो! मुने! वयमित्यात्मनिर्देश , तथा यजामो-यागं कुर्म्म , कथमिति योग ?' पापानि अशुभानि कर्म्माणि पुरोपचितान्यविद्यारूपाणि ' पणुल्लयामो' त्ति प्रणुदाम -प्रेरयामो येनेति गम्यते, आख्याहि—कथय न -अस्माकं संयत.-पापस्थानेभ्य सम्यगुपरत यक्षपूजित! यक्षार्चित!, किमुक्त भवति ?-यो ह्यस्मद्विदित कर्म्मप्रणोदनोपायत्वेन याग स युष्माभिर्दूषित इति भवन्त एवापर यागमुपदिशन्तु. कदाचिदविशिष्टमेव यजनमुपदिशेदित्याशङ्क्याह-कथ-केन प्रकारेण स्विष्टं-शोभनं यजनं कुशला-उत्तरूपा वदन्ति—प्रतिपादयन्ति, न तं ' सुदिट्ठ कुसला वयंति ' त्ति कुशलमुखेनैव मुनिना-दूषितमिति तैरपि पृष्टमिति सूत्रार्थः ।

मुनिराह—

छज्जीवकाए असमारभंता,
मोसं अदत्तं च असेवमाणा ।
परिग्गहं इत्थिउ माण मायं,
एयं परिन्नाय चरंति दंता ॥ ४१ ॥

षड्जीवकायान्-पृथिव्यादीन् 'असमारभमाणा' अनुपमर्द्दयन्त ' मोसं ' ति मृषा अलीकभाषणम् ' अदत्त चे-त्यदत्तादानं चानासेवमाना -अनाचरन्त. परिग्रहं-मूर्च्छां स्त्रियो-योषितो ' माण ' त्ति मानम्-अहङ्कार माया-परवञ्चनात्मिका तत्सहचारित्वात्क्रोधलोभौ च, एतद्—अनन्तरोक्त परिग्रहादि परिज्ञाय-ज्ञपरिज्ञया सर्वप्रकारं ज्ञात्वा

प्रत्याख्यानपरिज्ञया च प्रत्याख्याय 'चरेज्ज दन्त' त्ति वचनव्यत्ययाच्चरेयुर्यागे प्रवर्त्तेरन्, भवन्त इति गम्यते । पठन्ति च-'चरन्ति दंत' त्ति अत्र च यत एवं दान्ताश्चरन्त्यतो भवद्भिरप्येवं चरितव्यमिति भाव इति सूत्रार्थः ।

प्रथमप्रश्नप्रतिवचनमुक्त्वा शेषप्रश्नप्रतिवचनमाह-

सुसंवुडा पंचहिँ संवरेहिँ,
इह जीवियं अणवकंखमाणो ।
वोसट्ठकाओ सुइचत्तदेहो,
महाजयं जयई जन्नसिट्ठं ॥ ४२ ॥

सुष्ठु संवृत -स्थगितसमस्ताश्रवद्वारः सुसंवृतः कैः ?-पञ्चभिः-पञ्चसंख्यैः संवरैः-प्राणातिपातविरत्यादिभिः 'इह' अस्मिन् मनुष्यजन्मनि; उपलक्षणत्वात्परत्र च जीवितं-प्रस्तावादसंयमजीवितम् अनवकाङ्क्षन्-अनिच्छन्, यद्वा-अपगम्यमानत्वाज्जीवितमपि-आयुरप्यास्तामन्यच्चनादि, अनवकाङ्क्षन् यत्र हि क्षतबाधा तत्रासौ जीवितमपि न गणयति, अत एव व्युत्सृष्टो-विविधैरुपायैर्विशेषेण वा परीषहोपसर्गसहिष्णुतालक्षणेनोत्सृष्ट-त्यक्तः-कायः शरीरमनेनेति व्युत्सृष्टकायः, शुचिः-अकलुषव्रतः स चासौ त्यक्तदेहश्च अत्यन्तनिष्प्रतिकर्मतया शुचित्यक्तदेहः, महान् जयः कर्मशत्रुपराभवनलक्षणो यस्मिन् यज्ञश्रेष्ठेऽसौ महाजयस्तं, क्रियाविशेषणं वा महाजयं यथा भवत्येवं यजते यतिरिति गम्यते ततो भवन्तोऽप्येवमेव यजन्तामिति भावः' तिङ्वचनव्यत्ययेन वा 'जइय' त्ति यजत, कमित्याह-'जण्णसिट्ठं' ति प्राकृतत्वाच्छ्रेष्ठयज्ञं, श्रेष्ठवचनेन चैतद्यजनं एव स्विष्टं कुशला वदन्ति, एष एव च कर्मप्रणोदनोपाय इत्युक्तं भवतीति सूत्रार्थः ।

यदीदृग्गुणः श्रेष्ठयज्ञं यजते अतस्त्वमपीदृग्गुण एव,तथा च त यजमानस्य कान्युपकरणानि को वा यजनविधिरित्यभिप्रायेण त एवमाहु -

के ते जोई के व ते जोइठाणं ?,
का ते सुया किं च ते कारिसंऽगं ? ।
एहा य ते कयरा संति भिक्खू ?,
कयरेण होमेण हुणासि जोइं ? ॥ ४३ ॥

किम्, अयमर्थः -किंरूपं ते-तव 'ज्योति' रिति अग्निः 'के व ते जोइठाणं' त्ति किं वा ते-तव ज्योतिः स्थानं यत्र ज्योतिर्निधीयते, का स्रुवो ?-घृतादिप्रक्षेपिका दर्व्यं, 'किं च' त्ति किं वा करीषः -प्रतीतः स एवाङ्गम्-अग्न्युद्दीपनकारणं करीषाङ्गं येनासौ सन्धुक्ष्यते, एधाश्च-समिधो यकाभिरग्निः प्रज्वाल्यते, ते-तव कतराः इति-काः ? 'संति-' त्ति चस्य गम्यमानत्वाच्छान्तिश्च-दुरितोपशमनहेतुरध्ययनपद्धतिः कतरेति प्रक्रमः, 'भिक्खु' इति भिक्षो ! कतरेण होमेन-हवनविधिना, सप्तम घावनीत्यादिकन् तृतीया जुहोषि-आहुतिभिः प्रीणयसि, किं ?-ज्योतिः -अग्निम् एवञ्जीवनिकायसमारम्भनिवर्त्तनं ह्यस्मदभिमतो होमः तदुपकरणानि च पूर्वं निषिद्धानीति कथं भवतो यजनसंभव ? इति सूत्रार्थः ।

मुनिराह-

तवो जोई जीवो जोइठाणं,
जोगा सुया सरीरं कारिसंऽगं ।
कम्म एहा संजमजोग संती,
होमं हुणामी इसिणं पसत्थं ॥ ४४ ॥

तपो-बाह्याभ्यन्तरभेदभिन्नं ज्योति -अग्निः, यथा हि-ज्योतिरिन्धनानि भस्मीकरोत्येवं तपोऽपि भावेन्धनानि-कर्म्माणि, जीवो-जन्तुर्ज्योतिः स्थानं-तपोज्योतिषस्तदाश्रयत्वात्, युज्यन्ते-सम्बध्यन्ते स्वकर्म्मणेति योगा -मनोवाक्कायाः स्रुवः; ते हि शुभव्यापाराः स्नेहस्थानीया, तपोज्योतिषो ज्वलनहेतुभूता तत्र संस्थाप्यन्त इति, शरीर-करीषाङ्गं, तेनैव हि तपोज्योतिरुद्दीप्यते,तद्भावभावित्वात्तस्य, कर्म-उक्तरूपम् एधास्तस्यैव तपसा भस्मीभावनयनात्, 'संजमजोग' त्ति संयमयोगाः -संयमव्यापाराः शान्तिः सर्व्वप्राण्युपद्रवापहारित्वात्तेषां, तथा 'होमं' ति होमेन जुहोति तपोज्योतिरिति गम्यते-ऋषीणां-मुनीनां सम्बन्धिना 'पसत्थं' ति प्रशस्तेन जीवोपघातरहितत्वेन विवेकिभिः श्लाघितेन सम्यक्चारित्रेणेति भावः । अनेन च कतरेण होमेन जुहोषि ज्योतिरिति प्रत्युक्तमिति सूत्रार्थः । तदनेन 'किं माहणा जोइसमारभंता' इत्यादिना लोकप्रसिद्धयज्ञात्स्नानस्य च निषिद्धत्वाद्यज्ञस्वरूपं तैः पृष्टं कथितं च मुनिना ।

इदानीं स्नानस्वरूपं पिपृच्छिषव इदमाहु -

के ते हरए के य ते संतितित्थे ?,
कहंसि ण्हाओ व रयं जहासि ? ।
आयक्ख णे संजय ! जक्खपूइया, !
इच्छामु नाउं भवओ सगासे ॥ ४५ ॥

कस्ते-तव ह्रदः-नदः ?, 'के य ते संतितित्थे' त्ति किं च 'ते'-तव शान्त्यै-पापोपशमननिमित्तं तीर्थं-पुण्यक्षेत्रं-शान्तितीर्थम्, अथवा-'कानि च' किंरूपाणि 'ते'-तव सन्ति-विद्यन्ते तीर्थानि-संसारोदधितरणोपायभूतानि,लोकप्रसिद्धतीर्थानि हि त्वया निषिद्धानीति, तथा च-'कहिंसि ण्हाओ वे' ति वाशब्दस्य भिन्नक्रमत्वात्कस्मिन् वा स्नातः-शुचिर्भूतो रज इव रजः-कर्म जहासि-त्यजसि त्वं ?, गम्भीराभिप्रायो हि भवांस्तत् किमस्माकमिव भवतोऽपि ह्रदतीर्थ एव शुद्धिस्थानमन्यद्वेति न विद्म इति भाव -आचक्ष्व-व्यक्तं वद संयत ! यक्षपूजित ! इच्छामः-अभिलषामो ज्ञातुम्-अवगन्तुं भवतः-तव सकाशे-समीपे इति सूत्रार्थः ।

मुनिराह-

धम्मे हरए बंभे संतितित्थे,
अणाविले अत्तपसन्नलेसे ।
जहिं सि ण्हाओ विमलो विसुद्धो,
सुसीइभूओ पजहामि दोसं ॥ ४६ ॥
एयं सिणाणं कुसलेण दिट्ठं,
महासिणाणं इसिणं पसत्थं ।
जहिं सि ण्हाया विमला विसुद्धा,
महारिसी उत्तमं ठाणं पत्ति ॥ ४७ ॥

धर्म्म -अहिंसाद्यात्मको हद·--कर्म्मरजोऽपहन्तृत्वाद् ब्रह्मे-ति-ब्रह्मचर्य शान्तितीर्थ.तदासेवनेन हि सकलमलमूलं रागद्वेषावुन्मूलितावेव भवत , तदुन्मूलनाच्च न कदाचिन्मलस्य सम्भवोऽस्ति, सत्याद्युपलक्षण चैतत्, तथा चाऽऽह-"ब्रह्मचर्येण सत्येन, तपसा संयमेन च । मातङ्गर्षिगत. शुद्धिं, न शुद्धिस्तीर्थयात्रया ॥ १ ॥" अथवा-' ब्रह्मे ' ति ब्रह्मचर्यवन्तो मतुब्लोपादभेदापचाराद्वा साधव उच्यन्ते , सुब्व्यत्ययाच्चैकवचनं, सन्ति-विद्यन्ते तीर्थानि ममेति गम्यते , उक्तं हि-"साधूना दर्शनं श्रेष्ठ, तीर्थभूता हि साधवः । तीर्थं पुनाति कालेन, सद्य साधुसमागम ॥ १ ॥ " किं च--भवत्प्रतीत-तीर्थानि प्राण्युपमर्दहेतुतया प्रत्युत मलोपचयनिमित्तानीति कुतस्तेषा शुद्धिहेतुता ?, तथा चोक्तम्--" कुर्याद्वर्षसहस्र तु, अहन्यहनि मज्जनम्। सागरेणापि कृत्स्नेन, वधको नैव शुद्ध्यति ॥ १ ॥ " हृदशान्तितीर्थे एव विशिनष्टि--अनाविले मिथ्यात्वगुप्तिविराधनादिभिरकलुषे अनाविलत्वादेवात्मनो-जीवस्य प्रसन्ना-मनागप्यकलुषा पीताद्यन्यतरा लेश्या यस्मिं स्तदात्मप्रसन्नलेश्यं तस्मिन् ,अथवा-आप्ता प्राणिनामिह परत्र च हिता प्राप्ता वा तैरेव प्रसन्नलेश्या-उत्कृष्टा यस्मिंस्तदात्मप्रसन्नलेश्यं तस्मिन्नेवंविधे धर्म्महृदे,ब्रह्माख्यशान्तितीर्थे च यदाह-ब्रह्मशब्देन ब्रह्म चर्यवन्त उच्यन्ते तत्पक्षे वचनविपरिणामेन विशेषणद्वय व्याख्येय, 'जहिंसि' त्ति यत्राऽस्मि स्नात इव स्नात.-अत्यन्तशुद्धिभवनाद्विमलो-भावमलरहितोऽत एवाऽतिविशुद्धो-गतकलङ्क , ' सुसीतीभूओ ' त्ति सुशीतीभूतो रागाद्युत्पत्तिविरहत सुष्ठु शैत्य प्राप्त , पठ्यते च--' सुसीलभूओ' त्ति सुष्ठु--शोभन शील--समाधाने चारित्र वाभूत --प्राप्त सुशीलभूत प्रजहामि--प्रकर्षेण त्यजामि दूषयति-विशुद्धमप्यात्मानं विकृतिं नयतीति दोष -कर्म्म तम् , अनेनैतदाह--ममापि हृदतीर्थे एव शुद्धिस्थानं परमेवंविधं एवेति, निगमयितुमाह-'एतदि' त्यनन्तरमुक्तं स्नानं-रजोहीनं कुशलै.-प्रागुक्तरूपैर्दृष्ट-प्रेक्षितमिदमेव महास्नान, न तु युष्मत्प्रतीतम् , अस्यैव सकलमलापहारित्वाद् , अत एव चेदं ऋषीणा प्रशस्तं-प्रशंसास्पद, न तु जलस्नानवत्सदोषतया निन्द्यम् , अस्यैव फलमाह-'जहिंसि' त्ति सुब्व्यत्ययाद् येन स्नाता विमला विशुद्धा इति च प्राग्वत् महर्षयो-महामुनय उत्तमं स्थान मुक्तिलक्षण प्राप्ता -गता इति सूत्रद्वयार्थ । इति परिसमाप्तौ,ब्रवीमीति पूर्ववद् , गतोऽनुगम , सम्प्रति नयास्ते च प्राग्वदेव। उत्त० १२ अ० । स्था० । ती०। व्य० । प्रश्न० । राजगृहनगरे श्रेणिकस्याध्यापके, नि० चू० १ उ०।

**हरिओभास**--**हरितावभास**-पुं० । हरितत्वेन अवभासमाने , रा० । जी० ।

**हरिकंखीणयर**--**हरिकंखीनगर**--न० । स्वनामख्याते नगरे , ती०। "पणमिय पासजिणेसं,हरिकंखीणयरचेइयनिविट्ठं । तस्सेव कप्पमप्प, भणामि निद्दलिअकप्पमयं ॥ १ ॥" गुज्जरधराए हरिकखी नामो अभिरामो गामो अच्छइ । तत्थ जिणभवणे उत्तुंगसिहरे सच्चिहियपाडिहेरा सिरिपासनाहपडिमा विविहपूआहिं पूइज्जइ भविअजणेणं ति काव । अन्नया चालुक्कवंसपईवेण सिरिभीमदेवरज्जे तुरुक्कमंडलाओ आगएणं सवलवाहणेण अत्तनुचुक्काभिहाणमल्लारेण अणहिलवाडयपट्टणगढ भंजित्ता चलतेण दिट्ठं हरिकखीगामे तं चेइयं । भज्जं पविसित्ता भग्गा भगवओ पासनाहपडिमा। तं च गामं उवद्दविता चलिओ सट्ठाण पइ मल्लारो । पुणो वसिओ गामो समागया गुट्ठियसावया भगवतं भग्ग तं निरूवित्ता परुप्पर भणिओऽहिवती अहो ! भगवओ महामहप्पस्सावि कहं नाम भगो विहिओ चिलाएहिं, कत्थ पुण सा भगवओ तारिसी कला गय त्ति ? । तओ तेसिं पसुत्ताण सुमिणे आइट्ठमहिट्ठायगसुरेहिं जहा एयाए पडिमाए खडाणि सव्वाणि एगट्ठीकाऊण गब्भहरे ठवित्ता दुवार--कवाड रुंधित्ता भग दाऊण छम्मासं ०जाव पडिवालेयव्वं । तओ परं दुवारमुग्घाडियव्व पडिमा निग्गिक्खियव्वा संपुण्णगोवंगा होहिइ। गुट्ठिएहिं भोगं काऊण तहेव कयं०जाव पंच मासा वोलीणा, छट्ठस्स पारंते उस्सुगीहोऊण गोट्ठिएहिं दुवारमुग्घाडियं ० जाव दिट्ठा भगवओ सपुण्णगो--वगकप्पा केवलं ठाणे ठाणे मसनिवहपूरिआ । तओ तत्तमवियारित्ता तेहिं आढ्ढओ सुत्तधारो । तेण टंकियाए मसा छिंदिउमारद्धा ०जाव निमरियं मसहिंतो रुहिरं । तओ भीआ गुट्ठिआ भूओ--भूओ भोगाइएहिं पसाएउमारद्धा, तओ रत्तीए सुमिणे आइट्ठमहिट्ठायगेहिं, जहा--न सोहणं कय तुम्मेहिं जओ अपुन्नाए वि छम्मासीए दुआरमुग्घाडिअमिति। दारे दिट्ठा पाससामिस्स पडिमा निरुवहयअखंडिअगोवगा केवल नहसुत्तीसु अंगुट्ठे य मणागं तुच्छा, परिट्ठियगुट्ठियापुव्वं च पूइओ पवच्चागच्छंति चाउद्दिसाओ सघा, करिंति जत्तामहूसव । एव च सुकरकारी माहप्पनिही सिरिपासनाहो " इय हरिकखीनयरे, पारट्ठिअस्सासएण तणयस्स । सिरिजिणपहसूरीहिं, कप्पो विहिओ समासेणं ॥ १ ॥ " इति । ती० २८ कल्प ।

**हरिकंत**--**हरिकान्त**--पुं० । दाक्षिणात्याना कुमाराणामिन्द्रे, भ० ३ श० ८ उ० । स्था० । स० । प्रज्ञा० ।

**हरिकंतप्पवायद्दह**--**हरिकान्ताप्रपातह्रद**--पुं० । हरिकान्तायाः महानद्या प्रपातह्रदे, हरिकान्तोक्तरूपा महानदी यत्र निपतति, यश्च हरित्कुण्डसमानो हरिद्द्वीपसमानेन हरिकान्तादेवीद्वीपेन सभवनेन भूषितमध्यभाग स हरिकान्ताप्रपातह्रद इति । स्था० २ ठा० ३ उ० ।

**हरिकंता**--**हरिकान्ता**--स्त्री० । हरिवर्षे महानद्याम् , रा० । जं० । स० । हरिकान्ता तु महापद्मह्रदा देवोत्तरेण तोरणेन निर्गत्य पञ्चोत्तराणि षोडश शतानि सातिरेकाणि उत्तराभिमुखीपर्वतेन गत्वा सातिरेकयोजनशतद्वयप्रमाणेन प्रपातेन हरिकान्ताकुण्डे तथैव प्रपति । मकरमुखजिह्वि--काप्रमाणं पूर्वोक्ताद्विगुण, तत प्रपातकुण्डादुत्तरतोरणेन निर्गत्य हरिवर्षमध्यभागवर्त्तिनं गन्धापातिवृत्तवैताढ्य योजनेनासम्प्राप्ता पश्चिमाभिमुखीभूता षट्पञ्चाशता सरित्सहस्रैः समग्रा समुद्रमभिगच्छति, इयं च हरिकान्ता प्रमाणतो रोहिन्नदीतो द्विगुणेति । स्था० २ ठा० ३ उ० ।

**हरिकंताकूड**--**हरिकान्ताकूट**--पुं० । नदीदेवतासत्के कूटे,स्था०८ ठा०३ उ०। जम्बूद्वीपे महाहिमवत षष्ठ कूटे, स्था०२ ठा०३उ०।

**हरिकण्ण**--**हरिकर्ण**--पुं० । अपरनामके अन्तर्द्वीपे, नं० ।

**हरिकूड**--**हरिकूट**--पुं० । नीलवत्पर्वतस्य नीलवत्कूटाद्दक्षिणतः सहस्रप्रमाणे विद्युत्प्रभवर्त्तिकूटे , स्था० ६ ठा० ३ उ० ।

तस्मात्पूर्वमेव प्रत्युपेक्ष्य—निरूप्य पश्चाद् विधिना—यतनया सङ्क्रमणं कर्त्तव्यम् । इदानीं यदुपन्यस्तम् 'आमंतणा य' त्यवयवेन तं व्याख्यानयन्नाह—' पेसेति जइ अणापुच्छिउं गणं ' प्रेषयति क्षेत्रप्रत्युपेक्षकान् यदि गणमनापृच्छ्य तत्रेमे दोषाः वक्ष्यमाणलक्षणाः ।

अइरेगोवहिपडिले-हणाए कत्थ वि गय त्ति तो पुच्छे ।
खेत्ते पडिलेहेउं, अमुगत्थ गय त्ति तं दुट्ठं ॥ १३१ ॥

यदा क्षेत्रप्रत्युपेक्षकाः शेषप्रव्रजितानानापृच्छ्य गतास्तदा कथं ज्ञायन्ते ?, अत आह—अतिरिक्तोपधिप्रत्युपेक्षणायां सत्यां ते पृच्छन्ति—कुत्र गतास्त इत्येवं पृच्छन्ति । आचार्योऽप्याह—क्षेत्र प्रत्युपेक्षितुममुकत्र क्षेत्रे गता इति, तेऽप्याहुः—'तं दुट्ठं ' ति, तत्—क्षेत्रं न शोभनम् ।

यतस्तत्र गच्छताम्—

तेणा सावय मसगा, ओमऽसिवे सेह इत्थिपडिणीए ।
थंडिल्लअगणि उट्ठा-ण एवमाई भवे दोसा ॥१३२॥

स्तेनाः अर्द्धपथे स्वापदानि—व्याघ्रादीनि मशका वाऽतिदुष्टाः ओमं-दुर्भिक्षम् 'असिवं' देवताकृत उपद्रवो यदि वा—' सेह ' त्ति अभिनवप्रव्रजितस्य स्वजना विद्यन्ते, ते चोत्प्रव्राजयन्ति, ' इत्थि ' त्ति स्त्रियो वा मोहप्रचुराः, 'पडिणीए ' त्ति प्रत्यनीकोपद्रवश्च, ' थंडिल्ल ' त्ति स्थण्डिलानि वा न तत्र विद्यन्ते, ' अगणि ' त्ति अग्निना वा दग्धः स देशः, ' उट्ठाणे ' त्ति उत्थितः—उद्वसितः प्रदेशो वाऽपान्तराले इत्येवमादयो दोषा भवन्ति ।

तत्रापि प्राप्तस्यैते दोषाः —

पच्चंतितावसीओ, सावयदुब्भिक्खतेणपउराइं ।
णियगपदुट्ठुट्ठाणे, फेडणहरियाइपण्णीए ॥

स हि प्रत्यन्तदेशः म्लेच्छाद्युपद्रवोपेतः तापस्यः-तापसप्रव्राजिकाः ताश्च प्रचुरमोहाः संयमाद् भ्रंशयन्ति स्वापद-भयदुर्भिक्षभयस्तेनप्रचुराणि वा क्षेत्राणि ' नियग ' त्ति अभिनवप्रव्रजितस्य निज—स्वजनादिः स चोत्प्रव्राजयति ' पदुट्ठ ' त्ति प्रद्विष्टो वा तत्र कश्चित् ' उट्ठाणे ' त्ति उत्थित—उद्वसितः स कदाचिद्देशो भवेत् ' फेडण ' त्ति प्राक् तत्र वसतिरासीत् इदानीं तु कदाचिदपनीता भवेत् । (हरि) 'हरितपण्णीय' त्ति हरितं तत्र शाकादि बाहुल्येन भक्ष्यते, तच्च साधूनां न कल्पते दुर्भिक्षप्रायं वा ' हरितपर्णी ' ति तत्र देशे केषुचिद् गृहेषु राज्ञो दण्ड दत्त्वा देवतायै बल्यर्थं पुरुषो मार्यते, स च प्रव्रजितादिर्भिक्षार्थं प्रविष्टः सन्, तत्र गृहस्योपरि आर्द्रा वृक्षशाखा चिह्नं क्रियते, तच्च गृहीतसङ्केतो दूरत एव परिहरति, अगृहीतसङ्केतश्च विनश्यति, तस्मादगण पृष्ट्वा गन्तव्यमिति । अथवा-अन्यकर्तृकीय गाथा, ततश्च न पुनरुक्तदोषः ।

इदानीं स आचार्यः क्षेत्रप्रत्युपेक्षकान् प्रेषयन् सर्वं गणमालोचयति , अथ तु विशिष्य कांश्चिदेकमालोचयति शिष्यादिकं ततश्चैते दोषा भवन्ति—

सीसे जइ आमंतइ, पडिच्छगा तेण बाहिरं भावं ।
जइ इयरा तो सीसा, ते वि समत्तम्मि गच्छंति ॥१३४॥

शिष्यान् विशिष्य केवलान् यद्यामन्त्रयति ततश्च को दोषः ?, ' पडिच्छ ' त्ति सूत्रार्थग्रहणार्थं ये आयाताः साधवस्ते प्रतीच्छकाः ' तेण ' त्ति तेन अनालोचनेन ' बाहिर भावं ' ति बहिर्भावं चिन्तयन्ति, बाह्या वयमत्र । अथेतरान्—प्रतीच्छकानालोचयति ततः शिष्या बहिर्भावं मन्यन्ते, प्रतीच्छकाश्च सूत्रार्थग्रहणसमाप्तौ गच्छन्ति ततश्चाचार्य एकाकी सजायत इत्येवं दोषस्तावत् ।

अथ वृद्धान् पृच्छति ततः—

तरुणा बाहिरभावं, न य पडिलेहोवही न किइकम्मं ।
मूलयपत्तसरिसया, परिभूया वच्चिमो थेरा ॥ १३५ ॥

वृद्धानालोचयति तरुणा बहिर्भावं मन्यन्ते , ततश्च ते तरुणाः किं कुर्वन्त्यत आह—' न य पडिलेहोवही ' उपधेः प्रत्युपेक्षणां न कुर्वन्ति, न च कृतिकर्म—पादप्रक्षालनादि कुर्वन्ति । अथ तरुणानेव पृच्छति ततः को दोषः ।?, वृद्धा एवं चिन्तयन्ति-' मूलयपत्तसरिसया ' 'मूलम्-आद्यं यत्पूर्णं निस्सारं परिपक्कप्रायं तत्तुल्या वयमत एव च परिभूतास्ततश्च व्रजाम इत्येवं स्थविराश्चिन्तयन्ति, यदिवा-'मूलयपत्तसरिसया ' मूलकपत्रतुल्या -शाकपत्रप्राया वयम् ,

अथ मतं स्थविरा न प्रष्टव्या एव, तत्तु न, यतः, आह—

जुण्णमएहि विहूणं, जं जूहं होइ सुट्ठु वि महल्लं ।
तं तरुणरहसपोईय-मयगुम्मइअ सुहं हंतुं ॥ १३६ ॥

जीर्णमृगैर्विहीनं यद्यूथं भवति सुष्ठ्वपि महत्तद्यूथं तरुणरभसे-रागे पोतितं-निमग्नं मदेन गुल्मयितं-मूढं सुखं हन्तुं-विनाशयितुं-सुखेन तद्वथापाद्यते ।

यस्मादेतदेवं तस्मात्सर्वे एव मिलिताः
सन्तः प्रष्टव्याः , कथम् ?—

थुइमंगलमामंतण, नागच्छइ जो य पुच्छिओ न कहे ।
तस्सुवरिं ते दोसा, तम्हा मिलिएसु पुच्छेज्जा ॥ १३७ ॥

स्तुतिमङ्गलं कृत्वा—प्रतिक्रमणस्यान्ते स्तुतित्रय पठित्वा ततश्चामन्त्रयति आकारिते च दूरस्थो यदि नागच्छति कश्चिद्यो वा पृष्टः सन्न कथयति ततस्तस्योपरि ते दोषाः , तस्मान्मिलितेषु प्रच्छनीयमेकत्रीभूतेषु ।

केई भणंति पुव्वं, पडिलेहिअ एवमेव गंतव्वं ।
तं च न जुज्जइ वसही,फेडण आगंतु पडिणीए ॥१३८॥

केचनाचार्या एवं ब्रुवते—प्राक् प्रत्युपेक्षिते यस्मिन् क्षेत्रे प्रागपि स्थिता आसन् तस्मिन् पुनरप्रत्युपेक्ष्य गम्यते , तच्च न युज्यते, यस्मात्तत्र कदाचित् ' वसही फेडण ' त्ति सा प्राक्तनी वसतिरपनीता, आगन्तुको वा प्रत्यनीकः सञ्जातः , अत एव दोषभयात्पूर्वदृष्टाऽपि वसतिः प्रत्युपेक्षणीया ।

इदं च ते प्रष्टव्या —

कयरी दिसा पसत्था ?, अमुई सव्वेसि अणुमई गमणं ।
चउदिसि ति दुएगं वा, सत्तग पणगं तिग जहण्णं ॥१३९॥

कतरा दिक् प्रशस्ता-शोभना ?, सुक्षेमपथेत्यर्थः , तेऽप्याहुः ' अमुई ' अमुका दिक् सुक्षेमेति । एवं सर्वेषां यदा अनुमता—अभिरुचिता भवति , दिगित्यर्थः , तदा गमनं कर्त्तव्यम् । तत्र चतसृष्वपि दिक्षु—पूर्वदक्षिणपश्चिमोत्तरासु प्रत्युपेक्षकाः प्रयान्ति, अथवा—चतसृणां

दिशामुपद्रवादिसम्भवे तिसृषु यान्ति, तदभावे द्वयोर्दिशो-र्यान्ति, तदभावेऽप्येकस्या दिशि । तासु च दिक्षु व्रजन्त. कियन्तो व्रजन्त्यत आह—' सत्तग पणगं तिग जहएणं ' एकैकस्या दिशि उत्कृष्टतः सप्त सप्त प्रयान्ति, सप्तानाम-भावे पञ्च पञ्च व्रजन्ति, पञ्चानामभावे जघन्येन त्रयस्त्रयः प्रयान्तीति ।

अत्र च ये आभिग्रहिकास्ते प्रहेतव्या , तेषां त्वभावे-

अणभिग्गहिए वावा-रणा उ तत्थ उ इमे न वावारे ।
वालं वुड्डमगीअं, जोगिं वसहं तहा खमगं ॥ १४० ॥

' अणभिग्गहिए ' त्ति यैरभिग्रहो न गृहीतस्तान् व्यापा-रयेद्-गमनाय चोदयेदित्यर्थः । तत्र तु वालं वृद्धम् अगीतार्थं योगिनं वृषभं—वैयावृत्त्यकरं तथा क्षपकं—मासक्षपका-दिकम् , एतान्न व्यापारयेद्गमनाय ।

इदानीमेतामेव गाथां भाष्यकृद् व्याख्यानयन्नाह—

हीलेज्ज व खेलेज्ज व, कज्जाकज्जं न याणई वालो ।
सो वाऽणुकंपणिज्जो, न दिंति वा किंचि वालस्स ॥ ६८ ॥

वाले प्रेष्यमाणेऽयं दोषः -ह्रियते म्लेच्छादिना क्रीडेत वा वालस्वभावत्वात् कार्याकार्यं च-कर्त्तव्याकर्त्तव्यं वा न जा नाति वालः, स च वाल क्षेत्रप्रत्युपेक्षणार्थं प्रहितः सन् अनुकम्पया सर्वं लभते, आगत्य चाचार्याय कथयति यदुत सर्वं लभ्यते, ततश्च तत्र गच्छो यावन्न किञ्चिल्लभते, वेल्लक-स्यैवानुकम्पया स लाभ आसीत् , अथवा—न ददाति वा किञ्चिद्वालाय परिभवेनातस्तं न व्यापारयेत् ।

वृद्धोऽपि न प्रेषणीयो, यतस्तत्रैते दोषा —

वुड्ढोऽणुकंपणिज्जो, चिरेण न य मग्गथंडिले पेहे ।
अहवावि वालवुड्डा,असमत्था गोयरतिअस्स॥६९॥(भा०)

वृद्धोऽनुकम्पनीयस्ततश्चासावेव लभते, नान्यः, तथा 'चि-रेण ' त्ति चिरेण-प्रभूतेन कालेन गमनम् आगमनं च करो-ति,न च मार्गं—पन्थानं प्रत्युपेक्षितुं समर्थः . नापि स्थण्डि-लानि प्रत्युपेक्षितुं समर्थः ,इदानीं तु द्वयोरपि वालवृद्धयोस्तु-ल्यदोषोद्भावनार्थमाह-अथवा-वाला वृद्धाश्च असमर्थाः— अशक्ता गोचरत्रिकस्य—त्रिकालभिक्षाटनस्येत्यर्थः । दारं । अगीतार्थेऽपि प्रेष्यमाणे एते दोषा —

पंथं च मासवासं, उवस्सयं एचिरेण कालेणं ।
एहामो त्ति न याणइ,चउव्विहमणुण्ण ठाणं च॥७०॥(भा०)

पन्थानं—मार्गं न जानाति वक्ष्यमाणं ' मासं ' ति मास-कल्पं न जानाति ' वासं ' ति वर्षाकल्पं न जानाति, तथा उपाश्रयं—वसतिं परीक्षितुं न जानाति, तथा शय्यातरेण पृष्टः —कदा आगमिष्यथ ?, ततश्च ब्रवीति—' एचिरेण ए-हामो' त्ति इयता कालेन—अर्द्धमासादिना एष्याम इत्येवं वदतो यो दोषः अविधिभाषणजनितस्तं न जानाति, यतः कदाचिदन्या दिक् शोभनतरा शुद्धा भवति तत्र गम्यते, अतो नैव वक्तव्यम्—एतावता कालेनैष्याम । तथा ' चउ-व्विहमणुण्ण ' त्ति तत्रोपाश्रयं शय्यातरश्चतुर्विधमनुज्ञाप्य-ते—द्रव्यतः क्षेत्रतः कालतो भावतश्चेति । तत्र द्रव्यतस्तृण-डगलादि अनुज्ञाप्यते,क्षेत्रतः पात्रकप्रक्षालनभूमिरनुज्ञाप्यते, कालतो दिवा रात्रौ वा निस्सरणमनुज्ञाप्यते, भावतो ग्ला-नस्य कस्यचिद्भावप्रणिधानार्थं कायिकासंज्ञादि निरूप्यते , एता चतुर्विधामनुज्ञामनुज्ञापयितुं न जनाति । 'ठाणं च' त्ति वसतिः कीदृशे प्रशस्ते स्थाने भवतीत्येतन्न जानाति । दारं ।

योगिनमपि न प्रेषयेत् , कस्मात् ?—

तूरंतो अ ण पेहे,पंथं पाढट्ठिओ न चिर हिंडे ।
विगई पडिसेहेइ,तम्हा जोगिं न पेसेज्जा ॥७१॥ (भा०)

त्वरमाणः सन्न प्रत्युपेक्षते पन्थानं, तथा पाठार्थी सन्न चिरं भिक्षां हिण्डते. तथा लभ्यमाना विकृतीः —दध्यादिकाः प्रति-षेधयति. तस्माद्योगिनं न प्रेषयेत् । दारं ।

वृषभोऽपि न प्रेषणीयो यत एते दोषा भवन्ति—

ठवणाकुलाणि न साहे,सिड्ढाणि न देंति जा विराहणया ।
परितावणअणुकंपण,तिण्हऽसमत्थो भवे खमगो ७२।भा०

वृषभो हि प्रेष्यमाणः कदाचिद्रुषा स्थापनाकुलानि ' न सा-हे ' त्ति न कथयति, अथवा—' सिड्ढाणि न देंति ' त्ति कथि-तान्यपि तानि स्थापनाकुलानि न ददति अन्यस्य , तस्यैव तानि परिचितानि, ' जा विराहणया ' त्ति ततश्च स्थापना-कुलेषु अलभ्यमानेषु या विराधना ग्लानादीनां सा सर्वा आचार्यस्य दोषेण कृता भवति । दारं । अथ क्षपकोऽपि न प्रेष्यते, यतः परितापना—दुःखासिका आतपादिना भवति क्षपकस्य, 'अणुकंपण' त्ति अनुकम्पया वा लोकः क्षपकस्यैव ददाति नान्यस्य, तथा ' तिण्हऽसमत्थो भवे खमओ ' त्रयो वारा यद्भिक्षाटनं तस्य-वारत्रयाटनस्यासमर्थः क्षपकः । दारं

यदा तु पुनः प्रेषणार्हा न भवन्ति—

एए चेव हवेज्जा, पडिलोमेणं तु पेसए विहिणा ।
अविही पेसिज्जंते, ते चेव तहिं तु पडिलोमं ॥ १४१ ॥

एत एव वालादयो भवेयुस्तदा किं कर्त्तव्यमित्याह—'पडि-लोमेणं तु पेसए विहिणा ' अनुलोम —उत्सर्गस्तद्विपरीतः प्रतिलोम —अपवादस्तं प्रतिलोमम्-अपवादमङ्गीकृत्य एता-नेव वालादीन् प्रेषयेत् , कथम् ?—विधिना—यतनया— वक्ष्यमाणया । यदा पुनस्त एव वालादयोऽविधिना प्रेष्यन्ते , तदाऽविधिना प्रेष्यमाणेषु त एव दोषाः , क ?, ' तहिं तु ' तस्मिन् ' क्षेत्रे प्रेष्यमाणानां कथयन् ?—' पडिलोमं ' ति प्रतिलोमं अपवादमङ्गीकृत्य । अथवा-अविधिना प्रेष्यमाणेषु त एव दोषाः , तत्र ' पडिलोमं ' ति अविधिप्रतिलोमा विधिस्तेन-अप्रतिलोमविधिना प्रेषयेत् । ओघ० । ( हि-ण्डकसामाचारी ' सामायारी ' शब्दे उक्ता । )

इदानीं तेषां गमनविधिं प्रतिपादयन्नाह—

पंथुच्चारे उदए, ठाणे भिक्खंतरा य वसहीओ ।
तेणा सावयवाला, पच्चावाया य जाणविही ॥१४२॥

'पंथ ' त्ति पन्थानं—मार्गं चतुर्विधया प्रत्युपेक्षणया निरूप-यन्तो गच्छन्ति , ' उच्चारे ' त्ति उच्चारप्रस्रवणभूमिं निरूपयन्तो व्रजन्ति, 'उदए' त्ति पानकस्थानानि निरूपयन्ति, येन वालादीनां पानीयमानीय दीयते, ' ठाण ' त्ति विश्राम-स्थानं गच्छस्य निरूपयन्तो व्रजन्ति,'भिक्खं' त्ति भिक्षा नि-रूपयन्ति , येषु प्रदेशेषु लभ्यते येषु वा न लभ्यत इति । ' अंतरा य वसहीउ ' त्ति अन्तराले वसतीश्च निरूपयन्तो

गच्छन्ति यत्र गच्छ सुखेन वसितुं याति, स्तेनाश्च यत्र न सन्ति, यत्र व्याला तथा स्वापदा न सन्ति—स्वापदभुजगादयो न सन्ति, 'पच्चवाय' त्ति एकस्मिन् पथि गच्छतां दिवा प्रत्यपाय, अन्यत्र रात्रौ प्रत्यपाय., ततो निरूप्य गन्तव्यम्। 'जाणविहि' त्ति अयं गमनविधि।

कथं पुनस्ते व्रजन्तीत्याह—

सुत्तत्थं अकरिंता, भिक्खं काउं अइंति अवरण्हे।
बिइयदिणे सज्झाओ, पोरिसिअद्धाइ संघाडो ॥१४४॥

सूत्रपौरुषीम् अर्थपौरुषीं चाकुर्वन्तो व्रजन्ति तावद्यावदभिमतं क्षेत्र प्राप्ता भवन्ति, पुनश्च ते किं कुर्वन्तीत्यत आह—'भिक्ख काउं अइति अवरण्हे' भिक्षा कृत्वा—तदासन्नग्रामे तद्बहिर्वा भक्षयित्वा पुनश्चापराह्ने प्रविशन्ति, ततो वसतिमन्वेषयन्ति, लब्धाया च वसतौ कालं गृहीत्वा द्वितीयदिवसे किञ्चिन्न्यूनपौरुषीमात्रं कालं स्वाध्यायं कुर्वन्ति। पुनश्च 'पोरिसिअद्धाइ संघाडो' 'पोरुसिअद्धाए' पौरुषीकाले सङ्घाटकं कृत्वा भिक्षार्थं प्रविशन्ति, अथवा-स्वाध्यायं कियन्तमपि कालं कृत्वा 'पोरुसिअद्धाए' अर्द्धपौरुष्यामित्यर्थ, सङ्घाटकं कृत्वा प्रविशन्तीति।

इदानीं ते सङ्घाटकेन प्रविष्टास्तत् क्षेत्रं त्रिधा विभजयन्ति, एतदेवाह—

खेत्तं तिहा करेत्ता, दोसीणे नीणिअम्मि ण वयंति।
अएणो लद्धो बहुओ, थोवं दे मा य रूसेज्जा ॥१४५॥

क्षेत्रं त्रिधा कृत्वा—त्रिभिर्भागैर्विभज्य एको विभाग प्रत्युषस्येव हिण्ड्यते, अपरो मध्याह्ने हिण्ड्यते, अपरोऽपराह्णे, एवं ते भिक्षामटन्ति। 'दोसीणे नीणियम्मि उ वदंति' 'दोसीणे' पर्युषिते आहारे निस्सारिते सति वदन्ति—'अएणो लद्धो बहुओ' अन्य आहारो लब्ध प्रचुर, ततश्च 'थोव दे' त्ति स्तोक ददस्व—स्वल्प प्रयच्छ, 'मा य रूसेज्ज' त्ति मा वा रोषं ग्रहीष्यस्यनादरजनितम्, एतच्चासौ परीक्षार्थं करोति, किमयं लोको दानशीलो? न वेति।

अहव ण दोसीणं चिअ, जायामो देहि दहि घयंखीरं।
खीरे घयगुलपेज्जा, थोवं थोवं च सव्वत्थ ॥१४६॥

अथवा—एतदसौ साधुर्ब्रवीति—न वय 'दोसीण च्चिअ' याचयाम, किन्तु दधि याचयाम, तथा क्षीरं याचयाम, तथा क्षीरे लब्धे सति गुडं घृतं पेया ददस्व। सर्वत्र—सर्वेषु कुलेषु स्तोकं स्तोकं गृह्णन्ति ते साधव, एव तावत्प्रत्युषसि भिक्षाटन कुर्वन्ति।

अधुना मध्याह्नाटनविधिरुच्यते—

मज्झण्हि पउरभिक्खं, परितावियअपिज्जजूसपयकढिअ।
ओभट्ठमणोभट्ठं, लब्भइ जं जत्थ पाउग्गं ॥१४७॥

मध्याह्ने प्रचुरा भिक्षा लभ्यते 'परितावियं' त्ति परितलित सुकुमारिकादि, तथा पेया लभ्यते, जूष पाटलादे, [पटालादे] तथा पय.—क्वथितम् 'ओहट्ठमणोभट्ठ लब्भति' प्रार्थितमप्रार्थितं वा लभ्यते 'ज जत्थ' यद्-वस्तु यत्र क्षेत्रे प्रायोग्यम्—इष्ट तदित्थंभूत क्षेत्र प्रधानमिति।

इदानीमपराह्णे भिक्षावेलां प्रतिपादयन्नाह—

चरिमे परितावियपे-ज्ज जूस आएस अतरणट्ठाए।
एक्केक्कगसंजुत्तं, भत्तट्ठं एक्कमेक्कस्स ॥१४८॥

चरिमे—चरमपौरुष्यामटन्ति, तत्र च परितलितानि पेया यूषश्च यदि लभ्यते तत 'आएस'त्ति प्राघूर्णक 'अतरण' त्ति ग्लानस्तदेषामर्थाय भवति, ततश्च तत्प्रधानम्। एव तेऽटित्वा 'भत्तट्ठ' ति उदरपूरणमेकस्यानयन्ति, कथम्?—'एक्केक्कगसंजुत्त' एक साधुरेकेन संयुक्तो यस्मिन्नानयने तदेकैकसंयुक्तमानयन्ति, 'एक्कमेक्कस्स' त्ति परस्परस्य आनयन्ति, एतदुक्तं भवति—द्वौ साधू अटत एक आस्ते प्रत्युषसि पुनर्द्वितीयवेलायां तयोर्द्वयोर्मध्यादेक आस्ते अपर. प्रयाति प्रथमव्यवस्थितं गृहीत्वा, तृतीयवेलाया च यो द्वितीयवेलाया रत्नपाल स्थित स प्रथमस्थितरत्नपालेन सह व्रजति, इतरस्तु येन वारद्वयमटितं स तिष्ठति। एवमेव एषा त्रयाणामेकैकस्य सङ्घाटककल्पनया पर्यटनं द्वयोर्योजनीयम्।

एवम्—

ओसह भेसज्जाणि अ, कालं च कुले य दाणमाईणि।
सग्गामे पेहित्ता, पेहंति ततो परग्गामे ॥१४९॥

एवम् औषधं—हरीतक्यादि, भेषज-पेयादि, एतच्च प्रार्थनाद्वारेण प्रत्युपेक्षते, 'कालं च' त्ति कालं प्रत्युपेक्षते, 'कुले य दाणमाईणि' कुलानि च दानश्राद्धकादीनि, "दाणे अहिगमसड्ढे" एवमादि, एतानि कुलानि प्रत्युपेक्षते। एतानि च स्वग्रामे 'पेहेत्ता' प्रत्युपेक्ष्य तत परग्रामे प्रत्युपेक्षते।

चोयगवयणं दीहं, पणीयगहणे य नणु भवे दोसा।
जुज्जइ तं गुरुपाहुण-गिलाणगट्ठा न दप्पट्ठा ॥१५०॥

चोदकवचन, किमित्यत आह—दीहं' दीर्घं भिक्षाटनं कुर्वन्ति ते 'पणीयगहणे' त्ति स्नेहवद्द्रव्यग्रहणे च ननु भवन्ति दोषा.। आचार्यस्त्वाह—'जुज्जति त' युज्यते तत्सर्वं दीर्घं भिक्षाटनं यत् प्रणीतग्रहण च, यत 'गुरुपाहुणगिलाणगट्ठा' गुरुप्राघूर्णकग्लानार्थमसौ प्रत्युप्रेक्षते न दर्पार्थ, न चात्मार्थं प्रणीतादिग्रहणमिति।

जइ पुण खद्धपणीए, अकारणे एक्कसिं पि गिरहेज्जा।
तहिअं दोसा तेण उ, अकारणे खद्धनिद्धाइं ॥१५१॥

यदि पुन खद्धं-प्रचुर प्रणीतं-स्निग्धम्, एतानि अकारणे सकृदपि गृह्णीयात् 'तहिअ दोसा' ततस्तस्मिन् ग्रहणे दोषा भवेयु। किं कारणम्?—यत 'तेण उ' तेन—साधुना 'अकारणे खद्धनिद्धाइ' अकारणे-कारणमन्तरेणैव 'खद्धाइ' भक्षितानि स्निग्धानि-स्नेहवन्ति द्रव्याणि, अथवा-अकारणे 'खद्धनिद्धाइं' प्रचुरस्निग्धानि तेनासेवितानीति।

एवं रुइए थंडिल वसही, य देउलिअसुण्णगेहमाईणि।
पाओग्गमणुण्णावण, वियालगे तस्स परिकहणा ॥१५२॥

एवम्—उक्तेन प्रकारेण 'रुचिए' त्ति 'रुचिते' अभीष्टे क्षेत्रे सति 'थंडिल' त्ति तत स्थण्डिलानि प्रत्युपेक्षन्ते, यथु मूत्र. परिष्ठाप्यते महास्थण्डिल 'वसहि' त्ति वसतिं निरूपयन्ति।

१–एवमित्यधिकमपि पुस्तकानुरोधात् टीकाकृता व्याख्यातत्वाच्च मूले एव गृहीतम्।

किं प्रशस्ते प्रदेशे आहोश्विदप्रशस्ते—सिंगखोडादियुक्ते इति, पत्तनमध्ये शालादि, तदभावे 'देउलिआ' देवकुल शून्य प्रत्युपेक्ष्यते 'सुन्नगेहमादीणि' शून्यगृहादीनि आदिशब्देन-सभा गृह्यते, ता च वसतिं लब्ध्वा किं कर्त्तव्यम् ?—'पाउग्गअणुणवणा' प्रायोग्याना-तृणडगलकादीना शय्यातरोऽनुज्ञापना कार्यते-यथा उत्सकलय एतानि वस्तूनि । अथासौ प्रायोग्यानि न जानाति 'वियालणे' त्ति विचारयति, प्रायोग्यं किमभिधीयते ? इति, एवंविधे विचारे तस्य शय्यातरस्य कथ्यते ' परिकहणा ' यथाऽस्माकं तृणक्षारडगलादि उत्संकलयेत् ।

एता निर्युक्तिगाथा भाष्यकरो व्याख्यानयति, तत्र रुचिते क्षेत्र स्थण्डिल परीक्ष्यते, तच्च बहुवक्तव्यत्वादुपरिष्टाद्वक्ष्यति, वसतिस्तु कीदृशे स्थाने कर्त्तव्या कीदृशे च न कर्त्तव्येति व्याख्यानयन्नाह—

सिंगक्खोडे कलहो, ठाणं पुण नेव होइ चलणेसुं ।
अहिठाणि मोट्टरोगो,पुच्छम्मि अ फेडणं जाण७६(भा०)
मुहमूलम्मि अ चारी, सिरे य कउहे य पूयसक्कारो ।
खंधे पट्टीएँ भरो,पोट्टम्मि य धायओ वसहो ॥७७॥(भा०)

तत्र वामपार्श्वोपविष्टपूर्वाभिमुखवृषभरूप क्षेत्रं बुद्ध्या कल्पयित्वा तत इदमुच्यते-शृङ्गखोडे-शृङ्गप्रदेशे यदि वसतिं करोति तत कलहो भवतीति क्रियां वक्ष्यति, स्थानम्-अवस्थितिर्नास्ति चरणेषु—पादप्रदेशेषु , अधिष्ठाने—अपानप्रदेशे वसतौ क्रियमाणायामुदररोगो भवतीति क्रिया सर्वत्र योजनीया । ' पुच्छे ' पुच्छप्रदेशे ' फेडण ' अपनयन भवति वसत्या. । मुखमूले चारी भवति, शिरसि—शृङ्गयोर्मध्ये ककुदे च पूजासत्कारो भवति, स्कन्धे पृष्ठे च भारो भवति, साधुभिरागच्छद्भिराकुलो भवति, उदरप्रदेशे तु नित्यं तृप्त एव भवति क्षेत्रवृषभ. । वसतिर्व्याख्याता, तद्व्याख्यानाच्च देवकुलशून्यगृहाद्यपि व्याख्यातमेव द्रष्टव्यम् । इयं च वृषभपरिकल्पना यावन्मात्र वसतिनाऽऽक्रान्तं तस्मिन् नोपरिष्टात् , उपरिष्टात्तु तदनुसारेण कर्त्तव्या वसति. ।

अधुना 'पाउग्गअणुण्णवणे' त्यमुमेवावयवं व्याख्यानयन्नाह, तत्र प्रायोग्यानामनुज्ञापना कर्तव्या-द्रव्यत. क्षेत्रत. कालतो भावतश्च, तत्र द्रव्यत —

दव्वे तणडगलाई, अच्छणभाणाइधोवणा खेत्ते ।
काले उच्चाराई, भावेण गिलाणकुरुवमा ॥७८॥ (भा०)

द्रव्यत.-द्रव्यमङ्गीकृत्य तृणाना संस्तारकार्थं डगलाना च-अधिष्ठानप्रोञ्छनार्थं लेष्टूनामनुज्ञापना-क्रियते 'अच्छण' ति आस्या-यत्राऽऽस्यते यथासुखेन स्वाध्यायपूर्वक ' भाणादिधोवणा ' भाजनादिधावनं-क्षालनं पात्रकादेर्यत्र क्रियते सा क्षेत्रानुज्ञा । कालविषयाऽनुज्ञा दिवा रात्रौ वा उच्चारादिव्युत्सर्जनम् । भावविषयाऽनुज्ञापना ग्लानादे' साम्यकरणार्थं निवातप्रदेशाद्यनुज्ञापना क्रियते । इदानीं ' वियालणे तस्स परिकहण ' त्ति अमुमवयव—व्याख्यानयन्नाह—' कुरुवमा ' यदा शय्यातर एव ब्रूते—इयति प्रदेशे मयाऽवस्थानमनुज्ञात भवतां नोपरिष्टात् , तदा तस्य परिकथना क्रियते कुरुदृष्टान्तेन । यो हि भोजन कस्यचिद्ददाति स नियमेनैव भोजनोदकासेचनाद्यपि ददात्यनुक्तमपि सामर्थ्याक्षिप्तम् , एवं वसतिं प्रयच्छता उच्चारप्रश्रवणभूम्यादि सामर्थ्याक्षिप्त सर्वमेव दत्तं भवति । अथवा-इदमसौ शय्यातरो विचारयति-कियन्तं कालमत्र स्थास्यन्ति भवन्त. ?, अस्मिन् विचारे "तस्सपरिकहणा"—

जाव गुरूण य तुज्झ य, केवइया तत्थ सागरेणुवमा ।
केवइकालेणेहिह ?, सागार ठवंति अण्णे वि ॥१५३॥

यावद् गुरूणां 'ते'—तव च प्रतिभाति तावदवस्थानं करिष्याम., अथैवमसौ विचारयति-'वियालणा' यदुत 'केवइआ' कियन्त इहावस्थास्यन्ते ? 'तस्स परिकहणा' क्रियते सागरेणोपमा, यथा हि सागरं क्वचित्काल प्रचुरसलिलो भवति क्वचित्पुनर्मर्यादावस्थ एव भवति, एवं गच्छोऽपि कदाचिद्बहुप्रव्रजितो भवति कदाचित्स्वल्पप्रव्रजित इति । अथासौ पुनरपि 'विआलए' त्ति विचारयति-यथा 'केवइ कालेणेहिह' त्ति कियता कालेनागमिष्यथ ?, एवमुक्ता सन्त. साधव. तत्र 'सागारठविंति' सविकल्प कुर्वन्तीत्यर्थ. । कथं कुर्वन्ति ?—' अन्ने वि ' अन्येऽपि साधव. क्षेत्रप्रत्युपेक्षणार्थं गता एव, ततश्च तदालोचनेनागमिष्याम इति ।

पुव्वदिट्ठे इच्छइ, अहव भणिज्जा हवंतु एवइया ।
तत्थ न कप्पइ वासो, असई खेत्ताणऽणुन्नाओ ॥१५४॥

यदा त्वसौ पूर्वदृष्टानेवेच्छति ये. प्राग् मासकल्पः कृतः स्वभावेनेर्ष्यालु स दृष्टप्रत्ययानिच्छति, नान्यान् , तत्र न कल्पते वास' । अथवा—भणेदसौ एतावन्त एवात्र तिष्ठन्तु, तत्र ' न कल्पते वास ' न युज्यतेऽवस्थानं, यत साधवः कदाचित्स्तोकाः कदाचिद्बहवो भवन्ति । अथान्यानि क्षेत्राणि न सन्ति तदा असति-क्षेत्राणामन्येषामभावे 'अणुन्नाउ' त्ति तस्यामेव वसतावनुज्ञातो वास' ।

शेषक्षेत्राभावे सति तत्र च नियतपरिमितायां वसतौ यदि प्राघूर्णका आगच्छन्ति तत को विधिरित्यत आह—

सक्कारो सम्माणो, भिक्खग्गहणं च होइ पाहुणए ।
जइ जाणउ वसइ तहिं,साहम्मिअवच्छलाऽऽणाई १५५॥

सत्कार —वन्दनाभ्युत्थानादिक' सन्मान'—पादप्रक्षालनादिक भिक्षाग्रहणं—भिक्षानयनं च एतत्प्राघूर्णके आगते सति क्रियते । पुनश्च तस्य प्राघूर्णकस्य वसतिस्वरूप कथ्यते यथा-परिमितैरेवैषा लब्धा, नान्यस्यावकाश , ततश्च त्वयाऽन्यत्र वसितव्यम् । ' यदि जाणउ वसइ तहिं ' ति एवमसावुक्तो क्षोऽपि सन्—यदि जानन्नपि तत्र वसति तत' को दोषोऽत आह-' साहम्मिअवच्छलाऽऽणाई ' साधर्मिकवात्सल्यं न कृत भवति, यतोऽसौ शय्यातरो रुष्टस्तानपि निर्द्धाटयति , आज्ञाभङ्गश्च कृत —आज्ञालोपश्चैव कृतो भवति सूत्रस्य , आदिशब्दात्तद्द्रव्यान्यद्रव्यव्यवच्छेद. ।

इदानीं ते क्षेत्रप्रत्युपेक्षका आचार्यसमीपमागच्छन्त.—
किं कुर्वन्तीत्यत आह—

जइ तिन्नि सव्वगमणं,एसु न एसु त्ति दोसु वि अ दोसा।
अप्पपहेणऽसुणंता, नियया वासोऽह मा गुरुणो ॥१५६॥

यदि ने क्षेत्रप्रत्युपेक्षकास्त्रय एव तत सर्वे एव गमन कुर्व-

न्ति अथ सप्त पञ्च वा ततः सङ्घाटकमेकं मुक्त्वा व्रजन्ति, 'पसु न पसु' त्ति शय्यातरेण पृष्टाः सन्तस्ते नैवं वदन्ति-पश्यामो न वा पश्याम इति, यत एवं भणने दोष, किं कारणं?, यदैवं भणन्ति यदुत आगमिष्याम., ततश्च शोभनतरे क्षेत्रे लब्धे सति नागच्छन्ति ततश्चाद्गुतदोषः, अथ भणन्ति-नागमिष्याम ततश्च कदाचिदन्यत्क्षेत्रे न परिदृश्यते ततश्च पुनस्तत्रागच्छता दोषोऽनूनजनितः । 'अएणपहेण' ति ते हि क्षेत्रप्रत्युपेक्षका गुरुसमीपमागच्छन्तोऽन्येन मार्गेणागच्छन्ति, कदाचित्तत्र शोभनतरो भवेत्, 'अगुणंत' त्ति सूत्रपौरुषीमकुर्वन्त. प्रयान्ति,मा भूच्चिरवासो गुरोरिति, किं कारणं ?, यतस्तेषां विश्रब्धमागच्छता मासकल्पोऽधिको भवति, ततश्च नित्यवासो गुरोरिति ।

गंतूण गुरुसमीवं, आलोएत्ता कर्हेति खेत्तगुणा ।
न य सेसकहण मा हो-ज्ज संखडं रत्ति साहेंति ॥१५७॥

गत्वा गुरुसमीपम् आलोचयित्वा ईर्यापथिकीतिचारं कथयन्त्याचार्याय क्षेत्रगुणान् । 'न य सेसकहण' ति न च शेषसाधुभ्य क्षेत्रगुणान् कथयन्ति । किं कारण ?—' मा होज्ज संखडं ' मा भवेत् स्वक्षेत्रपक्षपातजनिता राटिरिति, तस्मात् 'रत्ति साहेंति' त्ति रात्रौ, मिलितानां सर्वेषां साधूनां क्षेत्रगुणान् कथयन्ति ।

ते च गत्वा एतत्कथयन्ति—

पढमाए नत्थि पढमा, तत्थ उ घयखीरकूरदहिलंभो ।
बिइयाए बिइ तइया-ए दोवि तेसिं च धुवलंभो ॥१५८॥
ओहासिअधुवलंभो, पाउग्गाणं चउत्थिए नियमा ।
इहराविं जहिच्छाए, तिकालजोगं च सव्वेसिं ॥१५९॥

प्रथमायां—पूर्वस्या दिशि नास्ति प्रथमा—नास्ति सूत्रपौरुषीत्यर्थ. किन्तु तत्र घृतक्षीरकूरदधिलाभोऽस्ति, अन्ये त्वन्यस्या दिशि कथयन्ति, द्वितीयाया दिशि नास्ति द्वितीया-नास्त्यर्थपौरुषी, यतस्तत्र द्वितीयायां पौरुष्यामेव भोजनं, घृतादिकस्तु लभ्यत एव, 'तइआए दो वि' त्ति तृतीयायां दिशि द्वे अपि सूत्रार्थपौरुष्यौ विद्येते 'तेसिं च धुवलंभो' त्ति तेषा घृतादीना निश्चितं लाभ. । 'ओभासिअधुवलंभो' त्ति प्रार्थितस्य ध्रुवो लाभ., केषां?—प्रायोग्यानां घृतादीनाम्, 'चउत्थीए' चतुर्थ्यां दिशि नियमात्—अवश्यम् 'इहरावि' त्ति अप्रार्थितेऽपि यदृच्छया त्रिकालयोग्यं प्रातर्मध्याह्नसायाह्नेषु त्रिकालमपि 'सव्वेसिं' ति सर्वेषां बालादीनां योग्यं प्राप्यत इति ।

एवं तै. सर्वै क्षेत्रप्रत्युपेक्षकैराख्याते सत्याचार्य किं करोतीत्याह—

मयगहणं आयरिओ, कत्थ वयामो त्ति ? तत्थ ओयरिआ ।
खुभिआ भणंति पढमं, तं चिअ अणुओगतत्तिल्ला ॥१६०॥

मतग्रहणम् अभिप्रायग्रहणम् आचार्य शिष्याणां करोति यदुत भो आयुष्मन्त. ! तत्क व्रजाम ?-कया दिशा गच्छाम ? तत्रैवमामन्त्रिते शिष्यगणे आचार्येण 'तत्र औदरिका ' उदरभरणैकचित्ता. क्षुभिता.—आकुला भणन्ति—यदुत 'पढमं' ति प्रथमा दिश व्रजाम., यत्र प्रथमपौरुष्या भुज्यते, 'तं चिअ' त्ति तामेव दिशम्, 'अणुओगतत्तिल्ला' व्याख्यानार्थिन इच्छन्ति, यतस्ते सूत्रग्रहणनिरपेक्षाः केवलमर्थग्रहणार्थिन., तेषा चार्थग्रहणप्रश्नो द्वितीयाया पौरुष्या भवतीत्यतस्तामेवेच्छन्तीति ।

बिइयं सुत्तग्गाही, उभयग्गाही अ तइययं खेत्तं ।
आयरिओ अ चउत्थं,सो उ पमाणं हवइ तत्थ ॥१६१॥

द्वितीयां च दिशं सूत्रग्राहिण इच्छन्ति, यतः प्रथमपौरुष्यामेव स्वाध्यायो भवति, स च तेषामस्ति, उभयग्राहिणश्च—सूत्रार्थग्राहिणस्तृतीयं क्षेत्रमिच्छन्ति-; आचार्यस्तु चतुर्थं क्षेत्रमिच्छति यतस्तत्र चतुर्थ्यामपि पौरुष्यां प्राघूर्णकादि. प्रायोग्यं लभ्यत इति, 'स एव प्रमाणम्' आचार्य एव सर्वेषा प्रमाणं भवति 'तत्थ' ति तत्र शिष्यगणमध्ये ।

किं पुन. कारणम् आचार्यश्चतुर्थमेव क्षेत्रमिच्छन्ति ?, अत आह—

मोहुब्भवो उ बलिए, दुब्बलदेहो न साहए जोए ।
तो मज्झबला साहू, दुट्ठऽस्सेणेत्थ दिट्ठंतो ॥१६२॥

प्रथमद्वितीययोः क्षेत्रयो. प्रचुरभक्तपानकेभ्यः सकाशाद्बलवान् भवति, बलिनश्च मोहोद्भवो भवति—कामोद्भवो भवतीत्यर्थ । आह—एवं तर्हि यत्र भिक्षा न लभ्यते तत्र प्रयान्तु, उच्यते—दुर्बलदेह —कृशशरीरो न साधयति—नाराधयति योगान्—व्यापारान् यतस्ततो मध्यमबलाः साधव इष्यन्ते । दुष्टाश्वेन चात्र दृष्टान्त, दुष्टाश्वो-गर्दभ उच्यते, स यथा प्रचुरभक्षणादर्पित सन् कुम्भकारारोपितभाण्डकानि भनक्ति दर्पोत्सेकादुत्प्लुत्य, पुनस्तेनैव कुम्भकारेण निरुद्धाहार. सन्नतिदुर्बलत्वात्प्रस्खलितः सन् भनक्ति, स एव च गर्दभो मध्यमाहारक्रियया सम्यग् भाण्डानि वहति, एवं साधवोऽपि संयमक्रियां मध्यमबला वहन्ति ।

पणपन्नगस्स हाणी, आरेणं जेण तेण वा धरइ ।
जइ तरुणा नीरोगा, वच्चंति चउत्थगं ताहे ॥१६३॥

अथ तस्मिन् गच्छे पञ्चपञ्चाशद्वर्षदेशीया. त्रिंशद्वर्षा वा चत्वारिंशद्वर्षा वा भवन्ति,ततो गम्यते चतुर्थं क्षेत्रं, यतस्ते येन केनचिद् ध्रियन्ते-यापयन्ति तथा यदि च तरुणा नीरोगा.—शक्ता भवन्ति ततश्चतुर्थमेव क्षेत्रं व्रजन्ति ।

अह पुण जुण्णा थेरा, रोगविमुक्का य साहुणो तरुणा ।
ते अणुकूलं खेत्तं, पेसंति न यावि खग्गूडे ॥१६४॥

अथ पुनर्जूर्णाः ( जीर्णा ) स्थविरा भवन्ति, रोगेण च-ज्वरादिना मुक्तमात्रास्तरुणा, नाद्यापि येषां साम्यं भवति शरीरस्य, ततस्ताननुकूलं क्षेत्रं प्रेषयन्त्याचार्या । 'न यावि खग्गूडे' त्ति 'खग्गूडा' अलसा निर्द्धर्मप्रायास्तान्न प्रेषयन्ति ।

कियता पुन. कालेन वृद्धादय आप्याय्यन्ते ?, उच्यते—पञ्चमात्रैर्दिवसैः, यत उक्तं वैद्यके—

एगपणअद्धमासं, सट्ठी सुणमणुयगोणहत्थीणं ।
राइंदिएण उ बलं, पणगं तो एक दो तिन्नि ॥१६५॥

एकेन रात्रिन्दिवेन शुनो बल भवति, पञ्चभिर्दिनैर्मनुजस्य बलं भवति,अर्द्धमासेन बलीवर्दस्य, षष्टिभिर्दिनैर्हस्तिनो बलं भवति । एवमेतद्यथासंख्यं योजनीयम् । ' पणगं तो एक

ऽ निरिए' एवमसौ तस्मिन् क्षेत्रे पञ्चकमेकं धार्यते, अथ तथाऽपि यलं न गृह्णाति द्वौ पञ्चकौ धार्येते, त्रीन् वा पञ्चकान् धार्यते, पुनरानीयत इति। एवं ते आलोचितशिष्यगणा आचार्या शय्यातरमापृच्छय क्षेत्रान्तरं संक्रामन्ति।

अथ न पृच्छन्ति ततो दोष उपजायते। एतदेवाह—

सागारिअपुच्छगमणं,बाहि(ही)रग मिच्छ छेय कयनासी।
गिहिसाहू अभिधारण, तेणगसंकाइ जं चऽएणं ॥१६६॥

सागारिकं—शय्यातरम् अनापृच्छय यदि गमनं क्रियते ततो 'बाहिर' त्ति बाह्या लोकधर्मस्यैते भिक्षव इत्येवं ब्रूते शय्यातरः. य न धर्मं लोकधर्मं न जानन्ति इष्टं, ते कथमदृष्टं जानन्ति? इत्यतः 'मिच्छ' त्ति मिथ्यात्वं प्रतिपद्यते, 'छेद' त्ति अपरच्छेदो वसतिदानस्य, पुनस्तेऽन्ये वा वसतिं न लभन्ते, 'कयणासि' त्ति अकृतज्ञा इते प्रव्रजिता इत्येवं मन्यते, 'गिहिसाधू अभिधारण' त्ति गृही कश्चिच्छ्रावकस्तमाचार्यमभिधार्य-संचिन्त्यायातः प्रव्रज्यार्थं, तेनाप्यागत्य शय्यातरः पृष्टः—काऽऽचार्यः?, सोऽपि रुष्टः सन्नाह—य. कथयित्वा व्रजति स ज्ञायते, तं तु को जानाति?, नमस्कारं स श्रावकः कदाचिद्दर्शनमप्युज्झति, लोकज्ञानमप्येषां नास्ति कुतः परलोकज्ञानमिति?. कदाचित्साधुः कश्चित्तमाचार्यम् अभिधार्य—मनसि कृत्वा उपसंपदाद्यानार्थमायाति, सोऽपि शय्यातरं पृच्छति, शय्यातरोऽप्याह—न जाने क्व गत इति, ततः स साधुः अनाख्यानाचार्य इति विचिन्त्यान्यत्र गतः, सोऽपि निर्जराया आचार्योऽनाभागी जात इति। 'तेणग' त्ति कदाचित्तद्गृहं केनचित्तस्मिन्नेव दिवसे मुष्टं भवेत्तत एवंविधा बुद्धिर्भवेत्—यदुत स्तेनास्ते इत्येवं शङ्कां करोति, आदिशब्दादार्योपित् केनचिन्महं गता, ततो गृहात् तेऽप्यनाख्याय गताः ततश्च शङ्कोपजायते, 'जं चऽएणं ति यच्चान्यत् शङ्कादि जातं पत्तनगतं तत्सर्वमुपजायत इति गच्छद्भिश्च शय्यातर आपृच्छनीयः।

स च विधिना, यतोऽविधिना पृच्छन एते दोषा—

अविहीपुच्छा उग्गा-हिएण सिज्जातरी उ रोएज्जा।
सागरियस्स संका,कलह य मएजिआ खिंसे ॥१६७॥

अविधिपृच्छा इयं वर्त्तते, यदुत—'उग्गाहितेन' उत्क्षिप्तेन उपकरणेन पृच्छति, तत्र 'सेज्जातरी उ रोएज्जा' तेनाकस्मिकेन गमनेन शय्यातर्यो रोदनं कुर्युः, ततश्च सागारिकस्य—शय्यातरस्य शङ्कोपजायते, कलहे च सति 'मार्जाजिआए' सह सखिक्रियया 'खिंस' त्ति यथा न शोभना त्वं येन त्वया तत्र काले भिन्नागच्छतो रुदितम्। किं च—ते स पिता भवति? येन रोदिषीति।

अथानागतमेव कथयन्ति—अमुकदिवसे गमिष्यामः, तत्राप्येते दोषा—

हरिअच्छेयण छप्पइ-य घसणं किच्चणं च पोत्ताणं।
छएणयरं च पगयं, इच्छमणिच्छे य दोसा उ ॥१६८॥

तद्धि शय्यातरकुटुम्बं साधवो यास्यन्तीति विमुक्तशेषव्यापारं सत् गृह एव तिष्ठति, कृष्यादिप्रतिजागरणं न करोति, ततश्च क्षणिकं सत् स्वगृहआनीतहरितच्छेदं करोति। तथा निर्व्यापारत्वाद्य च ता रण्डाः षट्पदीनां परस्परानिरूपणेनोपमर्दं कुर्वन्ति। 'किच्चणं च पोत्ताणं' ति तत्र दिवसे क्षणिका विमुक्तकापिलवनव्यापारा वस्त्राणि शोधयन्ति। 'छएणयरं च पगयं' प्राकृतं—भोजनं छन्नं कुर्वन्ति, अप्रगटमित्यर्थः, 'इयरं व' त्ति प्रकटमेव भोजनं संयतार्थं कुर्वन्ति; तत्र इच्छतामनिच्छतां च दोषा भवन्ति, कथं?, यदि तद्भोजनं गृह्णन्ति, ततस्तदकल्पनीयम्, अथ न गृह्णन्ति ततो रोषभावं कदाचित्प्रतिपद्यन्ते।

एते दोषा अनागतकथने, ततश्च कः पृच्छाविधिरित्याह—

जइआ चेव उ खेत्तं, गया उ पडिलेहगा तओ पाए।
सागारियस्स भावं, तणुएंति गुरू इमेहिं तु ॥१६९॥

यदैव क्षेत्रं गता: प्रत्युपेक्षकाः 'तओ पाए' त्ति ततः प्रभृति सागारिकस्य—शय्यातरस्य भावं—स्नेहप्रतिबन्धं तनूकुर्वन्ति, के?—गुरवः एभिः-वक्ष्यमाणगाथाद्वयोपन्यस्तैर्वचनैरिति—

उच्छू वोलिंति वई, तुंबीओ जायपुत्तभंडा य।
वसभा जायत्थामा, गामा पव्वायचिक्खल्ला ॥१७०॥
अप्पोदगा य मग्गा, वसुहा वि अ पक्कमट्टिआ जाया।
अएणक्कंता पंथा, साहूणं विहरिउं कालो ॥१७१॥

एतद्गाथाद्वयं शृण्वतः शय्यातरस्य पठन्ति। ततः सोऽपि श्रुत्वा भणति-किं यूयं गमनोत्सुकाः?

आचार्योऽप्याह—

समणाणं सउणाणं, भमरकुलाणं च गोउलाणं च।
अनियाओ वसहीओ, सारइयाणं च मेहाणं ॥१७२॥

सुगमा।

ततश्चैनां गाथां पठित्वा इदमाचरन्ति—

आवस्सगकयनियमा, कल्लं गच्छाम तो उ आयरिआ।
सपरिजणं सागारिअ,वाहिरिउं दिंति अणुसिट्ठिं ॥१७३॥

आवश्यककृतनियमा—कृतप्रतिक्रमणा इत्यर्थः, विकालवेलायां कृतावश्यका इदं भणन्ति-यदुत कल्लं गच्छाम। पुनश्च तत आचार्याः सपरिजनं सागारिकम् शय्यातरं आहूय अनुशास्तिं ददति—धर्मकथां कुर्वन्तीत्यर्थः।

पव्वज्ज सावओ वा, दंसणभद्दो जहएणयं वसहिं।
जोगम्मि वट्टमाणे, अमुगं वेलं गमिस्सामो ॥१७४॥

सोऽपि सागारिको धर्मकथां श्रुत्वा एवंविधो भवति-प्रव्रज्यां प्रतिपद्यते, श्रावको वा भवति, दर्शनधरो वा भवति, भद्रको वा भवति, सर्वथा जघन्यतो वसतिमात्रमवश्यं ददाति। पुनश्च धर्मकथां कृत्वाऽऽचार्या एव ब्रुवते-यदुत 'योगे वर्त्तमाने' योऽसौ योगो गमनाय मां प्रेरयति तस्मिन् वर्त्तमाने—भवति सति अमुकवेलाया गमिष्याम इति।

इदानीं ते विकालवेलायां कथयित्वा प्रत्युषसि व्रजन्ति, किं कृत्वेत्यत आह—

तदुभयसुत्तं पडिले-हणा य उग्गयमणुग्गये वावि।

पडिछाहिंगरख तेणे, नट्ठे खग्गूड संगारो ॥ १७५ ॥

तदुभय—सूत्रपौरुषीमर्थपौरुषीं च कृत्वा व्रजन्ति, 'सुत्तं' ति सूत्रपौरुषीं वा कृत्वा व्रजन्ति, अथ दूरतरं क्षेत्रं भवति तत पादोनप्रहर एव पात्रप्रतिलेखनामकृत्वा व्रजन्ति, 'उग्गय' त्ति उद्गतमात्र एव वा सूर्ये गच्छन्ति, 'अणुग्गय' त्ति अनुद्गते वा सूर्ये रात्रावेव गच्छन्ति, 'पडिच्छं' ति ते साधवस्तस्मादिनिर्गताः परस्परं प्रतीक्षन्ते, 'अधिकरण' त्ति अथ ते साधवो न प्रतीक्षन्ते ततो मार्गमजानानाः परस्परतः पूत्कुर्वन्ति, तेन च पूत्कृतेन लोको विबुध्यते, ततश्चाधिकरणं भवति, 'तेण' त्ति स्तेनका वा विबुद्धाः सन्तो मोषणार्थं पश्चाद् व्रजन्ति, 'नट्ठ' त्ति कदाचित्कश्चिन्नश्यति, ततश्च प्रदोष एव सङ्केतः क्रियते, अमुकत्र विश्रमणं करिष्यामः अमुकत्र भिक्षाममुकत्र वसतिमिति । ततश्च रात्रौ गच्छद्भिः सङ्केतः क्रियते । 'खग्गूडे' त्ति कश्चित् खग्गूडप्रायो भवति, स इदं ब्रूते-यदुत साधूनां रात्रौ न युज्यते एवं गन्तुं पुनः, स आस्ते, ततश्च 'संगारो' त्ति सङ्केतं खग्गूडाय प्रयच्छन्ति, यदुत त्वयाऽमुकत्र देशे आगन्तव्यमिति ।

इदानीमस्या एव गाथाया भाष्यकृत् कांश्चिदवयवान् व्याख्यानयति, तत्र प्रथमावयवं व्याख्यानयन्नाह—

पडिलेहंतच्चिय बें-टियाउ काऊण पोरिसिं करिंति ।
चरिमा उग्गाहेउं, सोच्चा मज्झरिहं वच्चंति ॥७६ ॥

ते हि साधवः प्रभातमात्र एव प्रतिलेखयित्वा उपधिकां पुनश्च वेण्टलिका कुर्वन्ति-संवर्त्तयन्तीत्यर्थः । ततश्चानिक्षिप्तोपधय एव 'पोरिसिं करेंति' सूत्रपौरुषीं कुर्वन्ति, 'चरिमा उग्गाहेउं' त्ति चरिमवेलायां पादोनपौरुष्यां पात्रकाणि उद्ग्राह्य-संयन्त्रयित्वा पुनश्चानिक्षिप्तैरेव पात्रकैः 'सोच्च' त्ति श्रुत्वा अर्थपौरुषीं कृत्वेत्यर्थः, ततो मध्याह्ने व्रजन्तीति । तं च शोभन एवाह्नि व्रजन्तीति ।

अत एवाह—( भा० )

तिहिकरणम्मि पसत्थे, नक्खत्ते अहिवइस्स अणुकूले ।
घेत्तूण निंति वसभा, अक्खे सउणे परिक्खंता ॥८०॥

'तिथौ प्रशस्तायां, करणे' च बवादिके प्रशस्ते नक्षत्रे वा अधिपते—आचार्यस्य अनुकूले सति गृहीत्वा अक्षान् प्राग् वृषभा निर्गच्छन्ति । किंकुर्वाणा अत आह-' सउणे परिक्खंता ' शकुनान्—प्रशस्तान् परीक्षमाणा सन्तो वृषभा निर्गच्छन्तीति पश्चादाचार्या ।

किं पुन कारणं पश्चादाचार्या निर्गच्छति ?, तत्र कारणमाह—( भा० )

वासस्स य आगमणे, अवसउणे पट्ठिआ निवत्तंति ।
ओभावणा पवयणे, आयरिआ मग्गओ तम्हा ॥८१॥

वर्षेण वर्षस्तस्यागमनं कदाचिद्भवति, अपशकुनं वा दृष्टं प्रस्थिता अपि निवर्त्तन्ते वृषभाः । यदि पुनराचार्या एव प्राग् निर्गच्छन्ति ततोऽपशकुनदर्शने वृष्टौ च निवर्तमानस्य सतः किं भवति ?, अत आह-' ओहावणा पवयणे ' प्रवचने हीलना भवति, यदुत-यदपि ज्योतिषिकाणां विज्ञानं तदप्येतेषां नास्तीति, ' आयरिया मग्गओ ' त्ति अत आचार्या मार्गत —पृष्ठतो निर्गच्छन्तीति ।

गच्छद्भिश्च शकुना अपशकुना वा निरूपणीया, तत्रापशकुनं प्रतिपादयन्नाह—( भा० )

मइलकुचेले अब्भं-गिएल्लए साण खुज्जवडभे य ।
एए उ अप्पसत्था, हवंति खित्ताउ निंताणं ॥८२॥
नारी पीवरगब्भा, वड्डकुमारी य कट्ठभारो अ ।
कासायवत्थ कुच्चं-धरा य कज्जं न साहेंति ॥ ८३ ॥

मलिन शरीरकर्पटैः कुचेलो-जीर्णकपट 'अब्भंगिएल्लिय' त्ति स्नेहाभ्यक्तशरीरः श्वा यदि वामपार्श्वाद्दक्षिणपार्श्वं प्रयाति कुब्जो-वक्र वडभो-वामन , एतेऽप्रशस्ताः-पीवरगर्भा-आसन्नप्रसवकाला । शेषं सुगमम् ।

[ चंकयरम्मि भमाडो, भुक्खामारो य पंडुरंगम्मि ।
तच्चन्नि रुहिरपडणं, बोडियमसिए धुवं मरणं ]
जंबू चासमऊरे, भारद्दाए तहेव नउले अ ।
दंसणमेव पसत्थं, पयाहिणे सव्वसंपत्ती ॥८४ ॥ (भा०)

सुगमा ।

नंदी तूरं पुण्ण-स्स दंसणं संखपडहसद्दो य ।
भिंगारछत्तचामर, धयप्पडागा पसत्थाई ॥८५॥ (भा०)

सुगमम् । नवर-पूर्णकलशदर्शनं, ध्वज एव पताका ध्वजपताका ।

समणं संजयं दंतं, सुमणं मोयगा दहिं ।
मीणं घंटं पडागं च, सिद्धमत्थं विआगरे ॥८६॥ (भा०)

श्रमण—लिङ्गमात्रधारी संयतः—सम्यक् संयमानुष्ठाने यत —यत्नपरः दान्तः—इन्द्रियनोइन्द्रियैः सुमनसः—पुष्पाणि , शेष सुगमम् ।

गच्छश्चासौ—

सेज्जातरेऽणुभासइ, आयरिओ सेसगा चिलिमिलीए ।
अंतो गिण्हन्तुवहिं, सारविअपडिस्सया पुव्विं ॥१८७॥

व्रजनसमये शय्यातरानुभाषते—व्रजाम इत्येवमादि आचार्यः । ' सेसगा चिलिमिलीए अंतो' शेषाः साधवः चिलिमिलिएया -जवनिकाया अन्त --अभ्यन्तरे, किम् ?-उपधिं गृह्णन्ति—संयन्त्रयन्तीत्यर्थः । ' सारविअपडिस्सया पुव्विं' ति किंविशिष्टाः सन्तस्ते साधव उपधिं गृह्णन्ति ?—संमार्जितः—उपलिप्त प्रतिश्रयो यैस्ते समार्जितप्रतिश्रयाः 'पुव्विं' प्रागेवः प्रथममेवेत्यर्थः ।

इदानीं क कियदुपकरणं गृह्णातीत्याह—

बालाई उवगरणं, जावइयं तरति तत्तिअं गिण्हे ।
जहण्णेण जहाजायं, सेसं तरुणा विरिंचिंति ॥ ८८ ॥

बालादय , आदिशब्दाद्-वृद्धा गृह्यन्ते, ते ह्युपकरणं याव-

१-[ चक्रचरे भ्रमणं क्षुधा मरणं च पाण्डुराङ्गे ।
तच्चन्निके रुधिरपातं बोटिकेऽसिते ध्रुवं मरणम् ]

न्मात्रं तरन्ति-अस्तुवन्ति तावन्मात्रं गृह्णन्ति तैश्च बालादिभिः, जघन्येन-जघन्यतः 'जहाजायं' रजोहरणं चोलपट्टकश्च, एतदशक्तुवद्भिरपि ग्राह्यं शेषम् उपकरणं तरुणाः आभिग्रहिका विगिञ्चन्ति-विभजन्ति बालादिसत्कम् ।

यदा तु पुनराभिग्रहिका न सन्ति तदा--

आयरिओवहि बाला-इयाण गिण्हंति संघयणजुत्ता ।
दो मुत्ति उरिणसंथा-रए य गहणेक्कपासेणं ॥८६॥ (भा०)

आचार्योपधिं 'बालाइयाणं' ति बालादीनां च संबन्धिनमुपधिं गृह्णन्ति, के ?-'संघयणजुत्ता' येऽन्ये शेषा अनाभिग्रहिका संहननोपेतास्ते गृह्णन्ति, कथं पुनर्गृह्णन्ति ते उपाधिं?-'दो सुत्तिउ' त्ति द्वौ सौत्रिकौ कल्पौ एक और्णिकः कल्पः संस्तारकश्चशब्दादुत्तरपट्टकश्च, एषां ग्रहणम् 'एक्कपासेण' तिग्रहणम् एकस्मिन् पार्श्वे-एकत्र स्कन्धे ग्रहणं करोति, द्वितीये तु पार्श्वे स्कन्धे पात्रकाणि गृह्णन्ति, आत्मीयां तूपधिं विण्टलिकां कृत्वा यत्र स्कन्धे उपधिः कृतस्तथैव दिशा कक्षायां करोति ।

इदानीम् 'अधिकरणतेणे' त्ति अमुमवयवं व्याख्यानयन्नाह-

आउज्जोवण वणिए, अगणि कुडुंबी कुगम्म कम्मरिए ।
तेणे मालागारे, उब्भामग पंथिए जंते ॥६०॥ (भा०)

ते हि यदि सशब्दं व्रजन्ति ततश्च लोको विबुध्यते, विबुद्धश्च सन् 'आउज्जोवण' त्ति अप्कायपन्थानि योज्यन्ते-वहनाय सज्जीक्रियन्ते । अथवा-'आउ' त्ति अप्कायाय योषितो विबुद्धा व्रजन्ति 'जोवणं' ति धान्यप्रकरः तदर्थं लोको याति, प्रकरो--मर्दनं धान्यस्य, लाटविषये 'जोवणं घगणपइरगं भण्णइ', 'वणिय' त्ति वणिजो--बालञ्जुका चिभानमिति कृत्वा व्रजन्ति । 'अगणि' त्ति लोहकारशालादिषु अग्निं प्रज्वालयते 'कुडुंबि' त्ति कुटुम्बिनः स्वकर्मणि लगन्ति 'कुगम्म' त्ति कुत्सितं कर्म येषां ते कुकर्माणः मात्सिकादयः कुत्सिता माराः कुमारा --सौकरिका,एषां बोधो भवति रात्रौ पूत्कारयता, 'तेणे' त्ति स्तेनकानां च, 'मालाकार' त्ति मालिका विबुध्यन्ते 'उब्भामग' त्ति पारदारिका विबुध्यन्ते 'पंथिए' त्ति पथिका विबुध्यन्ते 'जंत' त्ति यान्त्रिकाः विबुद्धाः सन्तो यन्त्राणि वाहयन्ति चाक्रिकादयः ।

तत्र यदुक्तं प्राक् "नट्ठ खग्गूडंसिगारो" तत्रेदमुक्तं निर्युक्तिकृता सङ्कारकरणमात्रम्, इह पुनः स एव निर्युक्तिकारः ससङ्कारः कया यतनया कर्त्तव्यः ? कस्यां च वेलाया कर्त्तव्यः ? इत्येदाह--

संगार बीय वसही,तइए सएणी चउत्थ साहम्मी ।
पंचमगम्मि अ वसही,छट्ठे ठाणट्ठिओ होति ॥१७६॥

'संगार' त्ति सङ्केतोऽभिधीयते, तद्विधिर्वक्तव्यः, 'बितिय वसहि' त्ति द्वितीयं द्वारं वसतिः कर्तव्या, पूर्वप्रत्युपेक्षिता तस्या व्याघाते वा वसनेर्ग्रहणविधिर्वक्तव्य, 'ततिए सण्णि' त्ति तृतीये द्वारे संज्ञी श्रावको वक्तव्य, 'चउत्थ साहम्मि' त्ति चतुर्थे द्वारे साधर्मिका वक्तव्या, 'पंचमगम्मि अ वसहि', त्ति पञ्चमे द्वारे वसतिर्वक्तव्या-'विच्छिन्ना खुड्डुलिआ' इत्येवमादि, 'छट्ठे ठाणट्ठिओ होति' षष्ठे द्वारे स्थानस्थितो भवति । द्वारगाथेयम् ।

इदानीं निर्युक्तिकृतोपन्यस्तं सङ्कारद्वयं भाष्यकृद् व्याख्यानयन्नाह-

आओसे संगारो, अमुई वेलाएँ निग्गए ठाणं ।
अमुगत्थ वसहिमिक्खं, बीओ खग्गूडसंगारो ॥६१॥

'आओसे' त्ति प्रदोषे 'संगारो' त्ति सङ्केतः आचार्येण कर्त्तव्यः, कथम् ?-'अमुई वेलाए' त्ति अमुकया वेलया यास्यामः, पुनश्च 'निग्गए ठाणं अमुगत्थ' निर्गतानां सताम् अमुकत्र स्थाने-विश्रामसंस्थानं करिष्यामः, 'वसहि' त्ति अमुकत्र वसतिर्भविष्यति-वासको भविष्यतीत्यर्थः, 'भिक्ख' त्ति अमुकत्र ग्रामे भिक्षाटनं कर्त्तव्यम्, एकस्तावदयं 'सङ्कारः' सङ्केतः । 'बितिओ खग्गूडसंगारो' त्ति द्वितीयः संकेतः खग्गूडस्य दीयते ।

स चैवमाह-

रत्तिं न चेव कप्पइ, नीयदुवारे विराहणा दुविहा ।
पएणवणा बहुतरगुणे,अणिच्छ बीउव्व उवही वा ॥६२॥(भा०)

'रत्तिं न चेव कप्पति' त्ति रात्रौ साधूना गमनं न कल्पते, द्विविधविराधनासंभवात्, यत उक्तं-दिवाऽपि तावत्-'नीयदुवारे विराहणा दुविहा' त्ति दिवाऽपि तावदयं दोषः, "नीयदुवारं तमसं,कोट्ठगं परिवज्जए" इति वचनात्, नीचद्वारे द्विविधा विराधना सतमस्कत्वाद् आस्तां तावद्रात्रौ, एष च धर्मश्रद्धया न निर्गच्छति । 'पएणवणा बहुतरगुण' त्ति पुनश्च तस्य प्रज्ञापना-प्ररूपणा क्रियते, तत्र रात्रिगमने बहवो गुणा दृश्यन्ते, बालवृद्धादयः सुखेन गच्छन्ति रात्रौ, न तृषा बाध्यन्त इति । 'अणिच्छ' त्ति अथ तथाऽपि नेच्छति गमनम् 'बितिओ व' त्ति द्वितीयस्तस्य दीयते-तदर्थं मुच्यत इति । 'उवही व' त्ति उपधिस्तस्य दीयते जीर्णः, तदीयश्च शोभनो गृह्यत इति, मा भूत्तत्पार्श्वे स्थितमुपधिं स्तेनका आच्छेत्स्यन्ति ।

इदानीमसावेकाकी यदि स्वपिति ततो दोषः प्रमादजनितस्तत्रश्चोपधिरुपहन्यते, उपहतश्चाकल्प्यो भवति । एतदेवाह-

सुवणे बीसुवघातो, पडिबज्झंतो अ जो उ न मिलेज्जा ।
जग्गण अप्पडिबज्झण,जइ वि चिरेणं न उवहम्मे ॥६३॥(भा०)

स्वापे 'बीसुं' एकाकिनो निद्रावशे सति, को दोषः ?-'उवघाउ' त्ति तस्यैकाकिन सुप्तस्य उपधिरुपहन्यते, स ह्येकाकी स्वपन् प्रमादवान् भवति कुयाद्यभियोगसंभवात्, ततश्च निद्रावशं प्राप्तस्य उपधिरुपहन्यते, अतोऽकल्पनीयो भवति परिष्ठाप्यश्चासौ । गच्छे तु स्वपतोऽपि नोपहन्यते, किं कारणम् ?, यतस्तत्र केचित्सूत्रपौरुषीं कुर्वन्ति, अन्ये द्वितीयप्रहरेऽर्थानुचिन्तनं कुर्वन्ति, तृतीये तु प्रहरे आचार्य उत्तिष्ठति ध्यानाद्यर्थं, चतुर्थे तु प्रहरे सर्व एव भिक्षव उत्तिष्ठन्ति, ततश्च रात्रेर्नैकोऽपि प्रहरः शून्यः, ततो नोपहन्यते उपधिः । एकाकिनस्तु जागरणं नास्त्यत उपघातः, 'पडिबज्झंते व जो उ न मिलेज्ज' त्ति प्रतिबध्यमानो वा वसा-

दिपु क्षीरयाचनेच्छया प्रतिवध्यमानो यो न मिलेत् तस्याप्युपहन्यते उपधिः । किं कारणम् ?, एकाकिन पर्यटनं नोक्कम् । एकाकी च पर्यटन् प्रमादभाग् भवति अतो प्रजादिप्रतिबन्धेऽप्युपधिरुपहन्यते । यस्तु पुनर्जागर्त्ति तस्मिन् दिवसेऽभुक्तो न व्रजादिपु प्रतिवध्यते स एवंविधस्तस्मिन् दिवसे मिलन्नपि नोपधिमुपहन्ति । ' जइवि चिरेण ' ति किं बहुना ?, जाग्रन्निशि गोकुलादिपु वाऽप्रतिवध्यमानो यद्यपि चिरेण मिलति बहुभिर्दिवसैस्तथाऽप्युपधिस्तस्य नोपहन्यते, अप्रमादपरत्वात्तस्येति ।

इदानीं गच्छस्य गमनविधिं प्रतिपादयन्नाह—

पुरओ मज्झे तह म-ग्गओ य ठायंति खित्तपडिलेहा ।
दाइंतुचाराई, भावासरणाइरक्खट्ठा ॥१७७॥

क्षेत्रप्रत्युपेक्षका एपु विभागेपु भवन्ति—केचन पुरत—अग्रतो गच्छस्य, केचन मध्ये गच्छस्य, ते हि मार्गोनभिज्ञा । मार्गतश्च—पृष्ठतश्च तिष्ठन्ति क्षेत्रप्रत्युपेक्षका । किमर्थं पुरत एव तिष्ठन्ति ?, 'दाइतुच्चाराई ' उच्चारप्रश्रवणस्थानानि दर्शयन्ति गच्छस्य , " भावासरणादिरक्खट्ठ " त्ति भावासरणो—अणहियासओ , तद्रक्षणार्थम् । एतदुक्तं भवति—उच्चारादिना बाध्यमानस्य ते मार्गज्ञा स्थण्डिलानि दर्शयन्ति ।

डहरे भिक्खग्गामे, अंतरगामम्मि ठावए तरुणे ।
उवगरणगहण असहू, व ठावए जाणगं चेगं ॥१७८॥

'डहरे भिक्खग्गामे ' त्ति यत्र ग्रामे वासकोऽभिप्रेत. भिक्षा च अटितुमभिप्रेता तस्मिन् 'डहरे' क्षुल्लके ग्रामे सति किं कर्त्तव्यमत आह—' अंतरगामम्मि ' अपान्तराल एव यो ग्रामस्तस्मिन् भिक्षार्थ तरुणान् स्थापयेत् , ' उवगरणगहणं ' ति तदीयमुपकरणमन्ये भिक्षवो गृह्णन्ति , ' असहू व ठावए ' त्ति अथ ते तत्स्थापितेतरभिक्षुसत्कमुपकरणं ग्रहीतुं न शक्नुवन्ति ततोऽसहिष्णव एव तत्रान्तग्रामे भिक्षार्थं स्थाप्यन्ते ' जाणग चेग ' ति ज्ञं चैक—मार्गज्ञं चैकं तेषां मध्ये स्थापयेत् येन सुखेनैवागच्छन्ति ।

दूरुट्ठिअ खुड्डलए, नव भड अगणी य पंत पडिणीए ।
संघाडेगो धुवक-म्मिओ व सुन्ने नवरि रिखा ॥१७९॥

अथवा-असौ वासकभिक्षार्थमभिप्रेतो ग्रामो दूरे स्थित स्याद् , उत्थितो वा—उद्वसित. क्षुल्लको वा प्राक् संपूर्णो दृष्ट इदानीमर्द्धमुद्वसितमत क्षुल्लक , नव—प्राग् यस्मिन् स्थाने दृष्टस्तत. स्थानादन्यत्र प्रदेशे जात ' भड ' त्ति भटाक्रान्तो जात ' अगणि ' त्ति अग्निना वा इदानीं दग्ध प्रान्त—प्राक् शोभनो दृष्ट इदानीं प्रान्तीभूतो विरूपो जात ' पडिणीए' त्ति प्रत्यनीकाक्रान्त इदानीं जात , प्राक् प्रतिलेखनाकाले प्रत्यनीकस्तत्र नासीत् इदानीं तु आयात , पूर्वप्रतिलेखिते ग्रामे एवंविधे जाते सति दूरोत्थितादिदोषाभिभूते सति किं कर्त्तव्यम् ?—' संघाड ' त्ति तत्र सङ्घाटक स्थाप्यते, पाश्चात्यप्रव्रजितमीलनार्थम् 'एगोवि' त्ति सङ्घाटकाभावे एक स्थाप्यते साधु ' धुवकम्मिओ ' त्ति ध्रुवकर्मिको—लोहकारादिस्तस्य कथ्यते—यथा वयमन्यत्र ग्रामे यास्याम , त्वया पाश्चात्यसाधुभ्य कथनीयं—यथाऽनेन मार्गेणागन्तव्यमिति, एवं तावत् वसति ग्रामे ' एस विही ' । ' सुन्ने नवरि रिक्ख ' त्ति यदा त्वसौ शून्यो ग्रामस्तदा किं कर्त्तव्यम् ?—' नवरि रिक्ख ' त्ति वर्त्मनि—अनभिप्रेते तिरश्चीन रेखाद्वयं पात्यते, येन तु वर्त्मना गतास्तत्र दीर्घां रेखां कुर्वन्ति । यदा तु पुनरेभिरुक्तदोषैर्युक्तो न भवति स ग्रामस्तदा तत्रैव या वसतिस्तस्यां प्रविशन्ति । ततश्च ये ते भिक्षार्थमन्तरालग्रामे स्थिता आसन् तेषा मध्ये यदि वसतिमार्गज्ञो भवति ततस्तस्यामेव वसतौ आगच्छन्ति, न कश्चित्प्रतिपालयति ।

एतदेवाह—

जाणंतठिएँ ता एउ, वसहीए नत्थि कोइ पडियरइ ।
अण्णाएऽजाणते-सु वावि संघाड धुवकम्मी ॥१८०॥

' जाणतठिए ' मार्गाभिज्ञे स्थिते तस्यां वसतावागच्छन्ति ' नत्थि कोइ पडियरइ ' त्ति न कश्चित् तान् प्रतिपालयति बहि—स्थित. , ' अण्णाए ' त्ति यदा तस्याः पूर्वप्रत्युपेक्षिताया वसतेर्व्याघात. सजात. किन्त्वन्या, तस्यामन्यस्या वसतौ जाताया ' अजाणतेसु वावि,' अथवा-ये ते भिक्षानिमित्तं स्थिता पश्चादागमिष्यन्ति तेषु अजानत्सु ' सघाडधुवकम्मि ' त्ति वसतिपरिज्ञानार्थं सङ्घाटको बहि स्थाप्यते, ध्रुवकर्मिको—लोहकारस्तस्य कथ्यते, यदुत—साधव आगमिष्यन्ति तेषामियं वसतिर्दर्शनीया कथनीया वेति ।

इदानीं ये ते भिक्षार्थे पश्चाद्ग्रामे स्थापितास्तैः किं कर्त्तव्यमत आह—

जइ अब्भासे गमणं, दूरे गंतुं दुगाउयं पेसे ।
ते वि असंथरमाणा, इंती अहवा विसज्जंति ॥१८१॥

यदि अभ्यासे-आसन्ने गच्छस्ततस्ते ' गमणं ' ति गच्छसमीपमेव गच्छन्ति, 'दूरे' त्ति अथ दूरे गच्छस्ततो गन्तुं द्विगव्यूत गत्वा क्रोशद्वय, किम् ?—'पेसे' त्ति एक श्रमणं गच्छसमीपे प्रेषयन्ति , ' तेवि असंथरमाणा इति ' तेऽपि गच्छगता. साधव असंस्तरमाणा —अतृप्ता सन्त किं कुर्वन्ति ?—' एंति ' आगच्छन्ति, क्व ?—यत्र ते साधवो भिक्षया गृहीतया तिष्ठन्ति, अथ च तृप्तास्ततस्तं साधुं विसर्जयन्ति यदुत—पर्याप्तमस्माक , यूय भक्षयित्वाऽऽगच्छत । ' संगारे ' त्ति दार, व्याख्यात, तत्प्रसङ्गायातं च व्याख्यातम् ।

इदानीं वसतिद्वारमुच्यते, तत्प्रतिपादनायेदमाह—

पढमवियाए गमणं, गहणं पडिलेहणा पवेसो उ ।
काले संघाडेगो, वऽसंथरंताण तह चेव ॥ १८२ ॥

'पढम' त्ति तस्या च वसतौ गमन-प्राप्ति कदाचित्प्रथमपौरुष्यां भवति, कदाचिच्च 'वितियाए' त्ति द्वितीयपौरुष्यां गमनं, प्राप्तिरित्यर्थ । 'गहण' ति 'दंडउंछयणदोरयचिलिमिलीण' कृत्वा ग्रहणं वृषभा प्रविशन्ति । पुनश्च 'पडिलेहणा' तां वसतिं प्रमार्जयन्ति, ' पवेसो ' त्ति ततो गच्छ प्रविशति, 'काले' त्ति कदाचिद्भिक्षाकाल एव प्राप्तास्तनश्च को विधि ?, अत आह—सङ्घाटक एको वसतिं प्रमार्जयति, अन्ये भिक्षार्थं व्रजन्ति । ' एगो व ' त्ति यदा सङ्घाटको न पर्याप्यते तदा एको गीतार्थो वसतिप्रत्युपेक्षणार्थं प्रेष्यते, यदा तु पुनरेको-

ऽपि न पर्याप्यन्ते तदा किम् ?-' असंथरंताणं अणुघट्टंताणं' अतृप्यन्तः सर्वे पर्याटन्ति , या तु वसतिः पूर्वलब्धा तां कथमन्विषन्ति ?—' तह चेव ' त्ति यथा भिक्षामन्विषन्ति एवं वसतिमपि सर्वे पूर्वप्रत्युपेक्षितामन्विषन्ति , अन्विष्य च तत्रैव प्रविशन्ति । यदा तु पूर्वप्रत्युपेक्षितायाः वसतेर्व्याघातो जातस्तदाऽपि 'तह चेव ' त्ति यथा हि भिक्षां मार्गयन्ति तथा वसतिमपि , लब्धायां च तत्रैव परस्परं हिण्डन्तः कथयन्ति । ' वसहीए निअट्टिअव्वं ' ति ।

इदानीं "पढमबिइयाए' त्ति इदं द्वारं भाष्यकृद् व्याख्यानयन्नाह—

पढमबितियाए गमणं, बाहिं ठाणं च चिलिमिणी दोरे ।
घित्तूण इंति वसहा, वसहिं पडिलेहिउं पुव्विं ॥ ८२ ॥

प्रथमपौरुष्यां गमनं-प्राप्तिर्भवति तत्र क्षेत्रे , कदाचिद् द्वितीयायां प्राप्तिस्तत्र को विधिरित्यत आह-' बाहिं ठाण च ' बहिरेव तावदवस्थानं कुर्वन्ति , स्थित्वा चोत्तरकाले ततश्चिलिमिणीं—जवनिका दवरिकाश्च गृहीत्वा प्रविशन्ति वसतौ वृषभा , ग्रहणद्वारं व्याख्यानम् । किं कर्त्तु ?—वसतिं प्रत्युपेक्षितुम् , वसतिप्रत्युपेक्षणार्थं प्राग् वृषभा गृहीतचिलिमिलिस्युपकरणा आगच्छन्ति,'पडिलेहण' त्तिद्वारं भणितम् । द्वारं ।

एव तावत्पूर्वप्रत्युपेक्षितायां वसतौ विधि , यदा तु पुनः पूर्वप्रत्युपेक्षिताया व्याघातस्तदा—

वाघाए अण्णं म-ग्गिऊण चिलिमिणिपमज्जणा वसहे ।
पत्ताण भिक्खवेलं, संघाडेगो परिणओ वा ॥ १८३ ॥

पूर्वप्रत्युपेक्षिताया वसतेर्व्याघाते सति अन्या वसतिं मार्गयित्वा तत्र किञ्चित् 'चिलिमिणिपमज्जणा वसहे' त्ति ततो वृषभाश्चिलिमिलिन्यादीनि गृहीत्वा प्रमार्जयन्ति । ' पत्ताण भिक्खवेलं ' यदा तु पुनर्भिक्षावेलायामेव प्राप्तास्तदा किं कर्तव्यम्?, 'काले' त्ति भणित, 'सघाड' त्ति सङ्घाटको वसतिप्रत्युपेक्षणार्थं प्रेष्यते, 'संघाडत्ति भणिअं' , ' एगो व ' त्ति सङ्घाटकाभावे एको वा प्रेष्यते , किंविशिष्टः ?-परिणत —गीतार्थ , 'एगो त्ति भणिअ' यदा तु पुनरेको नास्ति तदा किम् ?-

सव्वे वा हिंडंता, वसहिं मग्गंति जह व समुयाणं ।
लद्धे संकलिअनिवे-अणं तु तत्थेव उ नियट्टे ॥१८४॥

सर्वे वा हिण्डन्त एव वसतिं मार्गयन्ति-अन्विषन्ति , कथ ?-' जह व समुदाणं ' यथा समुदान-भिक्षा प्रार्थयन्ति-निरूपयन्ति एव वसतिमपि अन्विषन्ति , ' तह चेव ' त्ति अवयवो भणित , ' लद्धे संकलिअनिवेअणं तु ' भिक्षामटद्भिर्लब्धायां वसतौ संकलिकया निवेदनं-यो यथा य पश्यति स तथा तं वक्ति-यदुत इह वसतिर्लब्धा इह निवर्त्तनीयं , तस्मात्तस्यामेव च वसतौ निवर्त्तते ।

तत्र च प्रवेशे को विधि ?—

एक्को धरेइ भाणं, एक्को दोएह वि पवेसए उवहिं ।
सव्वो उवेइ गच्छो, सबालवुड्ढाउलो ताहे॥ १८३ ॥

एको धारयति-संघट्टयति भाजन पात्रकम् एक-अन्यस्तस्य द्वितीय बहिर्व्यवस्थित गच्छात् सकाशाद् भिक्षामटद्भ्या मुक्तामुपधिं द्वयोरपीति आत्मनः संबन्धिनीं तस्य च पात्रकसंघट्टयितु संबन्धिनीमुपधिं प्रवेशयन्ति , तत उत्तरकाले गच्छ उपैति-प्रविशति सबालवृद्धत्वादाकुल तदा-तस्मिन् काले । द्वारं ।

चोयगपुच्छा दोसा, मंडलिबंधम्मि होइ आगमणं ।
संजमआयविराहण, वियालगहणे य जे दोसा ॥१०६॥

चोदकस्य पृच्छा चोदकपृच्छा , चोदक एवमाह-यदुत बाह्यत एव भुक्त्वा प्रवेशः क्रियते, किं कारणम् ?, उपधिमानयतः क्षुधार्त्तस्य तृषितस्य च ईर्यापथमशोधयतः संयमविराधना, उपधिभाराक्रान्तस्य कण्टकादीनानिरूपयत आत्मविराधना , ततश्च बहिरेव भुक्त्वा विकाले प्रविशन्तु । आचार्यस्त्वाह-बहिर्भुञ्जता दोषा , कथं ?-मण्डलिबन्धे सति आगमनं भवति सागारिकाणाम् , तत्र च संयमात्मविराधना भवति ' वियालगहणे' त्ति विकालवेलायां च वसतिग्रहणे ये दोषा भवन्ति ते वक्ष्यन्ते । द्वारगाथेयम् ।

चोदकपृच्छेति व्याख्यानयन्नाह—

अइभारेण उ इरिअं, न सोहए कंठगाइ आयाए ।
भुत्तट्ठिअ वोसिरिआ, अइंतु एवं जढा दोसा ॥१८७॥

चोदक एवमाह-यदुत गच्छसमीपादुपधिं प्रवेशयन् अतिभारेण बुभुक्षया च पीडित सन्नीर्यापथिकां न शोधयति यतोऽतः संयमविराधना भवति , तथा कण्टकादीनि च न पश्यति बुभुक्षितत्वादेव यतोऽत आत्मविराधना भवति , तस्माद् ' भुत्तट्ठिय ' त्ति बहिरेव भुक्ताः सन्तः , तथा ' वोसिरिय ' त्ति उच्चारप्रश्रवणं कृत्वा ततः ' अइंतु ' त्ति प्रविशन्तु , क ?-वसतौ , ' एवं जढा दोस ' त्ति एवं क्रियमाणे दोषः आत्मविराधनादयः परित्यक्ता भवन्ति ।

एवमुक्ते सत्याहाचार्यः—

आयरिअवयण दोसा, दुविहा नियमा उ संजमायाए ।
वच्चह न तुज्झ सामी,असंखडं मंडलीए वा ॥ १८८ ॥

आचार्यस्य वचनम् , आचार्यवचन. किं तदित्याह-'दोसा' बाह्यतो भुञ्जतां दोषा भवन्ति द्विविधाः नियमाद्-अवश्यतया , ' संजम ' त्ति संयमविराधनादोष ' आयाए ' त्ति आत्मविराधनादोषः । तत्र संयमविराधनादोष एवं भवति-तत्र च भोजनस्थाने सागारिका यदि बहवस्तिष्ठन्ति ततस्ते साधवो भिक्षामटित्वाऽऽगताः सन्तो यद्येवं भणन्ति-यदुत 'वच्चह' हे सागारिका गच्छतास्मात्स्थानात् , ततश्चैवमुच्यमाने संयमविराधना भवति । आत्मविराधना चैवं भवति-यदा ते सागारिका उच्यमाना न गच्छन्ति , किन्त्वेवं भणन्ति—' न तुज्झ सामी ' नास्य प्रदेशस्य भवन्तः स्वामिन , ततश्च असंखडं भवति । ' मंडलीए व ' त्ति अथ मण्डल्या जातायां सत्याम्—

कोऊहल आगमणं, संखोभेण अकंठगमणाइं ।
ते चेव संखडाई, वसहिं व न देंति जं वऽन्नं ॥ १०६ ॥

मण्डलकाया जाताया कौतुकेन सागारिका आगमनं कुर्वन्ति, ततश्च 'संखोभेण' त्ति संक्षोभेण तेषा प्रव्रजितानां अकण्ठगमनादि-कण्ठेन भक्तकवलो नोपक्रामति, ' ते चेव संखडाइं ति त एव वा संखडादयो दोषा भवन्ति ' वसहिं

व ण देंति ' एव त्र सागारिका दृष्टा. सन्तो वसतिं न प्रयच्छन्ति, तत्र ग्रामे ' जं वऽसं ' ति ग्रहणाकर्षणादि कुर्वन्ति ।

इदानीं तस्माद् ग्रामादन्यत्र ग्रामे भोजनं गृहीत्वा गन्तव्यं, तत्र चैते दोषाः —

भारेण वेयणाए, न पेहए थाणुकंटआयाए ।

हरियाई संजमम्मि अ, परिगलमाणेण छक्काया ॥१६०॥

उपधिभिक्षाभारेण या वेदना सुद्रदना वा तया न ' पेहइ ' त्ति न पश्यति स्थाणुकण्टकादीन्, ततश्चात्मविराधना भवति, ' हरियाइ ' त्ति संयमविषया विराधना ईर्यादि, तथा परिगलमाने च पानादौ षट्कायविराधना भवति ।

तथा चैते चान्यत्र ग्रामे गच्छता दोषा भवन्ति—

सावयतेणा दुविहा, विराहणा जा य उवहिणा उ विणा ।

तणअग्गिगहणसेवण, वियालगमणे इमे दोसा ॥१६१॥

श्वापदभयं भवति, तथा ' तेणा दुविहा भवन्ति '-शरीरापहारिणः, उपध्यपहारिणश्च । ' विराहणा जा य उवहिणा उ विणा ' या च उपधिना—संस्तारकादिना विना विराधना भवति, का चासौ ?-' तणअग्गिगहणसेवणा ' यथासंख्यं तृणाना ग्रहणे संयमविराधना, अग्नेश्च सेवने संयमविराधनेति । द्वारम् । एवं तावद् ग्रामे भुञ्जानानामन्यग्रामे च गच्छतां दोषा व्याख्याता. । इदानीं तु यदुक्तमासीद्यादकेन यदुत विकाले प्रवेष्टुं युज्यते तद्विरस्यन्नाह- वियालगम (ह) णे इमे दोसा ' विकालगमने वसतौ एते—वक्ष्यमाणलक्षणा दोषा भवन्ति । ते चामी—

पविसणमग्गणठाणे, वेसित्थिदुगुंछिए य बोद्धव्वे ।

सज्झाए संथारे, उच्चारे चेव पासवणे ॥ १६२ ॥

' पविसण ' त्ति तत्र ग्रामे विकाले प्रविशतां ये दोषास्तान् वक्ष्याम, 'मग्गण' त्ति वसतिमार्गणा अन्वेषणे च विकालवेलाया ये दोषास्तान् वक्ष्याम । ठाणे वेसित्थिदुगुंछिए अ ' इत्येतद्वयमपि विकालवेलायां बोद्धव्य-ज्ञेयम् । 'सज्झाए' त्ति स्वाध्यायम् अप्रत्युपेक्षितायां वसतौ अगृहीते काले कुर्वतो दोष, अथ न करोति तथाऽपि दोष हानिलक्षण । 'संथार' त्ति अप्रत्युपेक्षितायां वसतौ संस्तारकभुवं गृह्णत संयमात्मविराधनादोष । ' उच्चारे ' त्ति अप्रत्युपेक्षितायां वसतौ स्थण्डिलेष्वनिरूपितेषु व्युत्सृजतां दोष, धारणेऽपि दोष. ' पासवणे ' त्ति अप्रत्युपेक्षितेषु स्थण्डिलेषु व्युत्सृजतो दोष, धारयतोऽपि दोष एव ।

इयं द्वारगाथा, इदानीं प्रतिपदं व्याख्यायते—

सावयतेणा दुविहा, विराहणा जा य उवहिणा उ विणा ।

गुम्मिअगहणाऽऽहणणा, गोणाईचमढणा चेव ॥१६३॥

विकाले प्रविशता ग्रामे श्वापदभयं भवति । स्तेना द्विप्रकारा -शरीरस्तेना, उपधिस्तेनाश्च । तद्भयं भवति विकाले प्रविशताम्, विराधना या च उपधिना विना भवति अग्नितृणयोर्ग्रहणसेवनादिका, सा च विकाले प्रवेशे दोष । ' गुम्मिय ' त्ति गुल्मं-स्थानं तद्रक्षपाला गुल्मिकास्तैर्ग्रहणमाहननं च भवति विकाले प्रविशतामयं दोष । ' गोणादिचमढणा ' बलीवर्दादिपादप्रहारादिश्च, एवमयं विकालप्रवेशे दोष । " पविसणे " त्ति गयं ।

इदानीं ' मग्गणे ' त्ति व्याख्यायते—

फिडिए अण्णोण्णारए, तेणे य राओ दिया य पंथम्मि ।

साणाइ वेसकुत्थिअ, तवोवणं मूसिआ जं च ॥१६४॥

' फिडिए ' त्ति विकालवेलायां वसतिमार्गणे अन्वेषणे ' फिडित ' भ्रष्टो भवेत्, तत्र अन्योऽन्यं—परस्परत. ' आरए ' सशब्दं तच्छ्रुत्वा स्तेनका रात्रौ मुषितुमभिलषन्ति, 'दिया य पंथम्मि' त्ति दिवा वा प्रभाते पथि गच्छतस्तान् श्रमणान् मुष्णन्ति ' साणादि ' त्ति रात्रौ वसतेरन्वेषणे श्वादिर्दशति । ' मग्गणे ' त्ति भणिअं, ' वेसत्थिदुगुछिए ' त्ति व्याख्यायतेऽवयव, तत्राह-' वेसकुत्थिअ तवोवण मूसिगा चेव ' रात्रौ वसतिलाभे न जानन्ति किमेतत्स्थानं वेश्यापाटकासन्नमनासन्नं वा ?, ते चाजानानास्तस्यां वसतौ निवसन्ति, तत्र चायं दोष -वेश्यासमीपे वसतां लोको भणति,अहो तपोवनमिति । कुत्सितछिम्पकादिस्थानासन्ने लोको ब्रवीति-स्वस्थाने मूषिका गता, एतेऽप्येवंजातीया एव । ' वेसित्थिकुच्छिते ' त्ति गतम् । स्वाध्यायद्वारं व्याख्यातमेव द्रष्टव्यम् ।

इदानीं 'संथार ' त्ति व्याख्यायते-

अप्पडिलेहिअकंटा-विलम्मि संथारगम्मि आयाए ।

छक्कायसंजमम्मि अ, चिलिणे सेहऽन्नहाभावो ॥१६५॥

अप्रत्युपेक्षितायां वसतौ कण्टका भवन्ति, बिलं वा । तत्र संस्तारके क्रियमाणे ' आयाए ' त्ति आत्मविराधना भवति ' छक्काय ' त्ति षट्कायस्यापि अप्रत्युपेक्षितवसतौ स्वपत. ' संजमम्मि ' त्ति संयमविषया विराधना भवति । ' चिलिणे ' त्ति तथा चिलीनम्-अशुचिकं भवति, तस्मिंश्च सेहस्य जुगुप्सया अश्रुतार्थस्यान्यथाभाव.—उन्निष्क्रमणादिर्भवति । ' संथार ' त्ति गयं ।

इदानीम् ' उच्चारपासवणे' त्ति व्याख्यायते-

कंटगथाणुगवाला-विलम्मि जइ वोसिरेज्ज आयाए ।

संजमओ छक्काया, गमणे पत्ते अइंते य ॥१६६॥

अप्रत्युपेक्षितायां वसतौ कण्टकस्थाणुव्यालबिल-समाकुले प्रदेशे व्युत्सृजत आत्मविराधना भवति, ' संजमओ ' त्ति संयमतो विराधना षट्कायोपमर्दे सति रात्रौ भवति । ' गमणे ' त्ति कायिकाव्युत्सर्जनार्थं गमने दोषा ' पत्ते ' त्ति कायिकाभुवं प्राप्तस्य व्युत्सृजत. ' अयंते य ' त्ति पुन कायिकां व्युत्सृज्य वसतिं प्रविशतो षट्कायोपमर्दो भवतीति ।

अथ तु पुनर्निरोधं करोति ततश्चैते दोषा भवन्ति—

मुत्तनिरोहे चक्खू, वच्चनिरोहेण जीवियं चयई ।

उड्डनिरोहे कोढं, गेलन्नं वा भवे तिसु वि ॥१६७॥

सुगमा । ' उच्चारपासवणे ' त्ति गयं ।

इदानीमपवाद उच्यते—

जइ पुण वियालपत्ता, पए व पत्ता उवस्सयं न लभे ।

सुन्नवरदेउले वा, उज्जाणे वा अपरिभोगे ॥१६८॥

यदि पुनर्विकाल एव प्राप्ता, ततश्च तेषां विकालवेलायां वसतौ प्रविशतां प्रमादकृतो दोषो न भवति, ' पए व पत्त ' ति प्रागेव प्रत्यूषस्येव प्राप्ता किन्तु उपाश्रयं न लभन्ते

तत क समुद्दिशन्तु ? शून्यगृहे देवकुले वा उद्याने वा अपरिभोगे-लोकपरिभोगरहिते समुद्दिशन्तीति क्रियां वर्त्तयन्ति।

आयरिअचिलिमिणीए, रणे वा निब्भए समुद्दिसणं ।
सभए पच्छन्नाऽसइ-कमढय कुरुया य संतरिआ ।।१९९।।

अथ शून्यगृहादौ सागारिकाणामापातो भवति, तत आपाते सति चिलिमिणी-यवनिका दीयते, 'रणे व' त्ति अथ शून्यगृहादि सागारिकाक्रान्तं ततः अरण्ये निर्भये समुद्दिशनं क्रियते, सभयेऽरण्ये प्रच्छन्नस्य वा असति—अभावे ततो वसतिसमीप एव कमढकेषु शुक्लेन लेपेन सबाह्याभ्यन्तरेषु लिप्तेषु भुज्यते, 'कुरुआ य' त्ति कुरुकुचा—पादप्रक्षालनादिका क्रियते 'संतरित' त्ति सान्तरा —सावकाशा वृहदन्तराला उपविशन्ति । इदानीं भुक्त्वा यदि पुनर्विकाले वसतिमन्विषन्ति, सा च काष्ठकादिका भवति । ( ओघ० ।) (लब्धाया वसतेर्विधि 'संथारग' शब्देऽस्मिन्नेव भागे गतः ।)

इदानीं संज्ञिद्वारं व्याख्यायते-द्वारं ।

दुविहो य विहरियाविह-रिओ उ भयणाउ विहरिए होइ।
संदिट्ठो जो विहरितो,अविहरिअविही इमो होइ ।।२१०।।

एव ते व्रजन्त कञ्चिद्ग्रामं प्राप्ता. स च ग्रामो द्विविध.-विहृतोऽविहृतश्च. । विहृत. साधुभिर्य क्षुण्ण -आसेवित इत्यर्थ , अविहृतो य. साधुभिर्न क्षुण्णो—नासेवित इत्यर्थ. । तुशब्दो विशेषणार्थ । किं विशिनष्टि ?-योऽसौ विहृत. स संज्ञियुक्त संज्ञिरहितो वा । 'भयणा उ विहरिए होति' त्ति योऽसौ विहृत संज्ञियुक्तस्तत्र भजना—विकल्पना , यद्यसौ संज्ञी संविग्नभावितस्तत प्रविशन्ति , अथ तु पार्श्वस्थादिभावितस्ततो न प्रविशन्ति । 'संदिट्ठो जो विहरितो' त्ति संविग्नविहृते संज्ञिगृहे संदिष्ट —उक्त यथाऽऽचार्यप्रायोग्यं त्वया संज्ञिकुलादानयनीयमित्यत. प्रविशन्ति । अथवाऽन्यथा व्याख्यायते-द्विविध., कतर. ?-, संज्ञिद्वारस्य प्रक्रान्तत्वाद् संज्ञिनो वा, कतमेन द्वैविध्यमत आह-विहृतोऽविहृतश्च , साधुभि क्षुण्णोऽक्षुण्णश्च, तत्र भजना विहृते श्रावके सति , यद्यसौ संविग्नविहृत. प्रवेश क्रियते. अथ पार्श्वस्थादिविहृतस्ततो न प्रवेष्टव्यम् । संदिष्टो विहृतोऽत्र स संविग्नै साम्भोगिकैश्च यैर्विहृतस्ततोऽत्राचार्यसंदिष्ट. प्रविशति, आचार्यप्रायोग्यग्रहणार्थम् 'अविहरिअविही इमो होति' त्ति अविहृते ग्रामे संज्ञिनि वा अयं विधि -वक्ष्यमाणलक्षणः सप्तमगाथायाम् , ' अविहरिअमसंदिट्ठो चेतिअ पाहुडिअ "अस्यां गाथायामिति ।

इदानीं भाष्यकार एतामेव गाथां व्याख्यानयन्नाह—

अविहरिअ विहरिओ वा,जइ सड्ढो नत्थि नत्थि उ निओगो ।
नाए जइ ओमसा,पविसंति तओ य पसरस ।।९५।।

अविहृतो विहृतो वा ग्राम ,तत्र विहृते यदि श्राद्धको नास्ति ततो नास्ति नियोग -न नियुज्यते साधु आचार्यप्रायोग्यानयनार्थम् । 'णाए' त्ति अथ तु ज्ञात-विज्ञाते एवं यदुतास्ति श्रावकः , तत्र च ' यदि ओमसा पविसंति ' यद्यवमग्ना प्रविशन्ति तथाऽपि नास्ति नियोग , अथ तु प्रविशन्ति 'तओ र पन्नरस ' त्ति पञ्चदशोद्गमदोषा भवन्ति , ते चामी-"आहाकम्मुद्देसिय पूइकम्मे य मीसजाए अ । ठवणा पाहुडियाए, पाओयरकीय पामिच्चे ॥ १ ॥ परियट्टिए अभिहडं, उब्भिन्ने मालोहडे इअ । अच्छिज्जे अणिसट्ठे, अज्झोयरए अ सोलसमे ॥२॥" ननु चामी षोडश उच्यन्ते-"अज्झोयरतो य मीसजाये च दोर्हि वि एक्को चेव भेदो ।" अथवा-इयमपि गाथा संज्ञिनमेवाङ्गीकृत्य व्याख्यायते-द्विविधः श्रावको-विहृत.,अविहृतो वा । "जइ सड्ढो नत्थि णत्थि उ निओगो तओ विहरितो" यदि श्राद्धो नास्ति ततो नास्ति नियोग साधोः । 'णाए' त्ति अथ ज्ञाते सति श्राद्धके यदुतास्ति ततश्च तत्र ज्ञाते सति 'जइ ओसण्णा पविसति' यद्यवसन्नो प्रविशन्ति तथाऽपि नास्ति नियोग । अथैवंविधेऽपि प्रविशन्ति ततश्च पञ्चदश दोषा उद्गमादयो नियमाद्भवन्ति ।

यद्यपि तत्रावमग्ना न गृह्णन्ति—

संविग्गमणुण्णाए, अइंति अहवा कुले विरिंचंति ।
अण्णाउंछं व सहू, एमेव य संजईवग्गे ।।९६।। ( भा० )

अथ तु ससञ्ज्ञैः संविग्नैश्च विहृतः-अमनोज्ञैर्वसद्भिर्भावित तत ' अणुण्णाए अइंति ' त्ति तैरेवानुज्ञाते सति श्रावकगृहे प्रविशन्ति । अथवा—श्रावककुलानि विरिञ्चन्ति—विभजन्ति , एते चान्यसाम्भोगिका. संविग्ना. 'अण्णाउंछं व सहू' अण्णाउंछं जत्थ सावगा नत्थि तहिं हिंडंति वत्थव्वा । जइ सहू समत्था इयरे अ पाहुणगा अप्पसरीरा ततो सावगकुलानि हिंडन्ति । अह वत्थव्वा अप्पसरीरगा पाहुणगा य सहू ततो अण्णायउंछं हिंडंति । ' एमेव य संजईवग्गे ' एवमेव संयतीवर्गे विधि', यदुत ताभिरनुज्ञातेषु श्रावककुलेषु प्रवेष्टव्यम् । बहुषु च कुलेषु सत्सु ता एवं विरिञ्चन्ति "अण्णाउंछं व सहू " इति , अयं च विधिर्द्रष्टव्यः ।

एवं तु असमंभो-इयाण संभोइयाण ते चेव ।
जाणित्ता निब्बंधं,वत्थव्वेणं स उ पमाणं ।।९७।। (भा०)

एवमन्यसाम्भोगिकानां संभवे उक्तलक्षणो विधिर्द्रष्टव्य । 'संभोइयाण ते चेव ' त्ति अथ साम्भोगिकास्तत्र ग्रामे भवन्ति तत. ' ते चेव ' त्ति त एव वास्तव्या साधवो भैक्षमानयन्ति । अथ तत्र साम्भोगिकसमीपे प्राप्तमात्राणां कश्चिच्छ्रावक आयात , स च प्राघूर्णकवत्सल एवं वदति यदुत मदीये गृहे भिक्षार्थं साधु प्रहेतव्य. , तत्रोच्यते-वास्तव्या एव गमिष्यन्ति । अथैवमुक्तेऽपि 'निब्बन्धं' ति निर्बन्धं करोति—आग्रहं करोत्यसौ श्रावकस्तत ' वत्थव्वेणं ' वास्तव्येन सहैकेन गन्तव्यं, यत स एव वास्तव्यः प्राघूर्णकानां प्रमाणमल्पाधिकवस्तुग्रहणे ।

अथासौ साम्भोगिकवसति. संकुला भवति तत—

असइ वसहीएँ वीसुं, राइणिए वसहि भोयणागम्म ।
असहू अपरिणया वा,ताहे वीसुं सहू वियरे ।।९८।।(भा०)

असति—अभावे विस्तीर्णाया वसते. ' वीसुं ' ति पृथग्-अन्यत्र वसतौ अवस्थानं कुर्वन्ति , तत्र च तेषां को भोजनविधिरित्यत आह-'राइणिए वसहि भोयणागम्म' त्ति रत्नाधिकस्य वसतौ भोजनमागम्य कर्त्तव्यं, सत्र रत्नाधिक कदाचिद्वास्तव्यो भवति,कदाचिदागन्तुक इति । अथान्यतरो रत्नाधिका 'असहु' त्ति भिक्षावेलां प्रतिपालयितुमशक्त तथापरिणता वा साधव सहभाया मा भूद् गार्दि करिष्यन्ति तत 'वी-

सुं ' पृथग् वसतिर्भवति। तथा यदि च ते वास्तव्या साधव ' सड्ढ ' समर्थास्ततो ' वियरे ' त्ति भिक्षामटित्वा प्राघूर्णकेभ्य. प्रयच्छन्ति।

तिरहं एक्केण समं, भत्तट्ठो अप्पणो अवड्ढं तु।
पच्छा इयरेण समं,आगमणविरेगु सो चेव ॥९९॥(भा०)

अथ तत्र त्रय आचार्या भवन्ति, द्वावागन्तुकौ एको वास्तव्य. तदा ' एक्केण समं ' ति एकेनागन्तुकाचार्यप्रव्रजितेन सह वास्तव्य पर्यटति। तावद्यावद् ' भत्तट्ठो ' त्ति एकस्य प्राघूर्णकाचार्यस्य भक्तार्थो भवति-उदरपूरणमात्रमित्यर्थ, अत. ' अप्पणो अवड्ढं तु ' त्ति आत्माचार्यार्थे वाऽसौ वास्तव्य. ' अवड्ढं तु ' अर्धभवमात्र श्रावककुलेभ्यो गृह्णाति। ' पच्छा इयरेण समं ' ति पश्चादितरेण द्वितीयागन्तुकाचार्यप्रव्रजितेन समं पर्यटति। तत्रापि भक्तार्थो यावद्भवति प्राघूर्णकस्य तावत्पर्यटति, आत्मनश्चार्द्धभवमात्र गृह्णाति, एवं पूर्णो भवो भवति वास्तव्याचार्यस्य। ' आगमणं ' ति एवं ते पर्यटित्वाऽऽत्मीयायां वसतौ आगमनं कुर्वन्ति। ' विरेगु सो चेव ' त्ति स एव ' विरेगो ' विभजन श्रावककुलेपु, योऽसौ भिक्षामटद्भि कृत, न तु पुनर्वसतिकायाम् आगताना भवतीति। "असति वसहीए वीसुं, राइणिए वसहि भोयणागमम। असइ अपरिणया वा, ताये वीसुं सड्ढ वियरे॥ १॥" त्ति यो विधिरुक्त, अयं च द्वितीयाद्याचार्येष्वप्यागतेपु द्रष्टव्य इति। एवं तावद्विहृतक्षेत्रे यत्र साधुपु निष्ठत्सु यो विधि. स उक्त।

इदानीमविहृते क्षेत्रे साधुरहिते च यो
विधिस्तत्प्रतिपादयन्नाह—

चेइअवंदनिमंतण, गुरूहिं संदिट्ठ जो वऽसंदिट्ठो।
निब्बंध जोगगहणं,निवेय नयणं गुरुसगासे॥१००॥(भा०)

एव विहरन्न क्वचिद्ग्रामादौ प्राप्ता, तत्र च यदि सन्ती विद्यते ततश्चैत्यवन्दनार्थमाचार्यो व्रजति, ततश्च श्रावको गृहागमनमाचार्यं निमन्त्रयति, यथा—प्रायोग्य गृहाण-ततश्च यो गुरुसंदिष्ट स गृह्णाति। ' जो वऽसंदिट्ठो ' त्ति यो वा असंदिष्ट—अनुक्त स वा गृह्णाति श्रावकनिर्बन्धे सति। एतदुक्त भवति—योऽसावाचार्येण संदिष्ट स यावआगच्छत्येव तावत्तेन श्रावकेणान्य सङ्घाटको दृष्ट, स च निर्बन्धग्रहणे कृते सति योग्यग्रहणं—प्रायोग्योपादानं करोति। ततश्च ' निवेयणं ' ति अन्येभ्य. सङ्घाटकेभ्यो निवेदयति, यथा यदुत मया श्रावकगृहे प्रायोग्यं गृहीत न तत्र भवद्भि प्रवेष्टव्यम्। ततश्च ' नयणं गुरुसगासे ' त्ति तत्प्रायोग्य गृहीत्वा गुरुसमीपं नयति तत्क्षणादेव येनासावुपभुङ्क्त इति।

इदानीं यदुक्तं प्राक् " अविहरिअविही इमो
होति " त्ति तद्व्याख्यानयन्नाह—

अविहरिअमसंदिट्ठो, चेइय पाहुडिअमेत्त गेण्हंति।
पाउग्गपउरलंभे,नऽम्हे किं वा न भुंजंति?॥१०१॥(भा०)

अविहृत ग्रामादौ असंदिष्टा एव सर्वे भिक्षार्थं प्रविष्टा, तत्र च भिक्षामटन्त श्रावकगृहे प्रविष्टा, तत्र च ' चेइए ' त्ति चैत्यानि च वन्दन्ते, तत्र च ' पाहुडिअमेत्तं गिण्हन्ति ' त्ति प्राभृतिकामात्रं यदि तत्र लभ्यते ततो गृह्णन्त्येव। अथाचार्यप्रायोग्य लभ्यते प्रचुरं वा लभ्यते ततः ' पाउग्गपउरलंभे सति' इदमुच्यते—' णऽम्हे ' त्ति न वयमाचार्यप्रायोग्यग्रहणे नियुक्ता, किन्त्वन्ये। एवमुक्त श्रावकोऽप्याह—' किं वा न भुंजति ' त्ति किं भवद्भिर्नीतं न भुञ्जते आचार्या. ?, एवं निर्बन्धे सति त एव गृह्णन्ति।

कियत्पुनर्गृह्णन्तीत्यत आह—

गच्छस्स परीमाणं, नाउं घेत्तुं तओ निवेयंति।
गुरुसंघाडग इयरे, लद्धं नेयं गुरुसमीवं ॥१०२॥(भा०)

गच्छस्य परिमाणं ज्ञात्वा गृह्णन्ति, गृहीत्वा च ततो निवेदयन्ति, कस्मै ?, अत आह—गुरुसघाटकाय, यदुताचार्यप्रायोग्यमन्येषा च गुडघृतादि लब्धं प्रचुरम्, ' इयरे व ' त्ति इतरसङ्घाटकेभ्यो वा—शेषसङ्घाटकेभ्यो निवेदयति, ' मा वच्चह ' त्ति मा व्रजत गृहीत गुरुयोग्यं, ततश्च लब्धमात्रमेव तद् गुरुसमीपं नेतव्यम्।

तथा चाह—

एगागिसमुद्दिसगा, भुत्ता उ पहेणएण दिट्ठंतो।
हिंडणदव्वविणासो, निद्धं महुरं च पुव्वं तु॥१०३॥(भा०)

'एगागिसमुद्दिसगा' ये न मण्डल्युपजीविनः पृथग् भुञ्जते, व्याध्याद्याक्रान्ताश्च, तेषा भुक्ताना सतां पश्चादानीतं नोपयुज्यते, अत्र च ' पहेणएण दिट्ठंतो ' " काले दिण्णस्स पहेणयस्स अग्घो न तीरए काउं। तस्सेव अथक्कपणामियस्स गेण्हतया नत्थि॥१॥ " तथाऽऽनयनेऽयमपरो दोष.—येन द्रव्येण घृतादिना गृहीतेन हिण्डता द्रव्यविनाशो भवति, कथञ्चित्प्रमादात्पात्रकविनाशे सति क्षीरादि च विनश्यत्येव। तथा 'निद्धमहुराइ पुव्विं' यदुक्तमागमे तच्च कृतं न भवति। " सरिए " त्ति दार गयं।

इदानीं साधर्मिकद्वार प्रतिपादयन्नाह—

भ (भु) त्तट्ठिअ आवस्सग, सोहेउं तो अइंति अवरण्हे।
अब्भुट्ठाणं दंडा–इयाण गहणेक्कवयणेणं ॥२११॥

इदानीं ते साधर्मिकसमीपे प्रविशन्त 'भ (भु) त्तट्ठिअ" त्ति भुक्त्वा तथा 'आवस्सग सोहेउं' ति आवश्यक च कायिकोच्चारादि शोधयित्वा-कृत्वेत्यर्थ, अतोऽपराह्णसमये आगच्छन्ति,येन वास्तव्याना भिक्षाटनाद्याकुलत्व न भवति। वास्तव्या अपि कुर्वन्ति,किमित्यत आह-' अब्भुट्ठाणं ' ति तेपा प्रविशतामभ्युत्थानादि कुर्वन्ति, ' दंडादियाण गहणं ' ति दण्डकादीनां ग्रहणं कुर्वन्ति,कथं ?-'एगवयणेणं' ति एकेनैव वचनेन उक्ता, सन्त पात्रकादीन् समर्पयन्ति, वास्तव्येनोक्ते मुञ्चत्ति ततश्च मुञ्चन्ति। अथ न मुञ्चत्येकवचनेन ततो न गृह्यन्ते, मा भूत् प्रमाद इति।

खुड्डलविगिट्ठतेणा, उण्हं आवरणिह तेणु उ पए वि।
पक्खित्तं मोत्तूणं, निक्खिवमुक्खित्तमोहेणं॥२१२॥

यदा तु पुनस्तै. साधुभिरभिप्रेता ग्राम स क्षुल्लक, न तत्र भिक्षा भवति ततश्च प्रत्युषस्येवागच्छन्ति, विगिट्ठ ' त्ति विकृष्टमध्वान यत्र साधर्मिकास्तिष्ठन्ति तत प्रत्यूषस्येवागच्छन्ति ' तेण ' त्ति अथ तत अपराह्णे आगच्छतो स्तेन-

भय भवेत्तनश्च प्रत्यूषस्यैवागच्छन्तीति । उक्तं वा अपराह्णे आगच्छन्तां भवति यतोऽत प्रत्यूषस्यैवागच्छन्ति । एवं ते प्रत्यूषसि तस्माद् ग्रामात्प्रवृत्ता साधुभोजनकाले प्राप्ता साधर्मिकसमीपं नैषेधिकीं कृत्वा प्रविशन्ति । ततश्च तेषां प्रविशतां वास्तव्यसाधुभिः किं कर्त्तव्यमित्यत आह-'पक्खित्तं मोत्तूणं' ति प्रक्षिप्तम्-आस्यगतं मुखे प्रक्षिप्तं केवलं मुक्त्वा 'निक्खिवमुक्खित्तं' ति यदुत्क्षिप्तं भाजनगतं तत् निक्षिपन्ति, मुञ्चन्ति नैषेधिकीश्रवणानन्तरमेव, ततस्ते प्राघूर्णकाः 'ओघेण' ति संक्षेपेण आलोचनां प्रयच्छन्ति ।

ततो भुञ्जते मण्डल्यां, सा चेयम्,

अप्पा मूलगुणेसुं, विराहणा अप्प उत्तरगुणेसुं ।
अप्पा पासत्थाइसु, दाणग्गहसंपओगोहा ॥ २१३ ॥

अल्पा मूलगुणेषु एतदुक्तं भवति-मूलगुणविषया न काचिद्विराधना, अल्पा उत्तरगुणविषया विराधना, अल्पा पार्श्वस्थादिषु दानग्रहणसेवाविराधना 'संपओगो' त्ति तैरेव पार्श्वस्थादिभिः संप्रयोगे—संपर्के । एतदुक्तं भवति-न पार्श्वस्थादिभिः सह संप्रयोग आसीत् । 'ओघ त्ति गयं' ओघतः-संक्षेपत आलोचना दीयते, दत्त्वा चालोचनां यदि तु अभुक्तास्ततो भुञ्जते ।

अथ भुक्तास्ते साधवस्तत इदं भणन्ति—

भुंजह भुत्ता अम्हे, जो वा इच्छे अभुत्त सह भोज्जं ।
सव्वं च तेसि दाउं, अन्नं गेण्हंति वत्थव्वा ॥ २१४ ॥

भुञ्जीत यूयं भुक्ता वयं, 'यो वा इच्छे' त्ति ये वा साधवो भोक्तुमिच्छन्ति ततः 'अभुत्त सह भोज्जं' ति तेनाभुक्तेन सह भोज्यं कुर्वन्ति । एवं यदि तेषामात्मनश्च पूर्वानीतं भक्तं पर्याप्यते ततः साध्वेव, अथ न पर्याप्यते ततः सर्वं तेभ्यः प्राघूर्णकेभ्यो दत्त्वा भक्तमन्यद् गृह्णन्ति—पर्यटन्ति वास्तव्यभिक्षव ।

एवमानीय कति दिनानि भक्तं प्राघूर्णकेभ्यो दीयते इत्यत आह—

तिण्णि दिणे पाहुन्नं, सव्वेसिं असइ बालवुड्ढाणं ।
जे तरुणा सग्गामे, वत्थव्वा बाहिं हिंडंति ॥ २१५ ॥

त्रीणि दिनानि प्राघूर्णकं सर्वेषामसति बालवृद्धानां कर्त्तव्यं, ततश्च ये प्राघूर्णकास्तरुणास्ते स्वग्राम एव भिक्षामटन्ति, वास्तव्यास्तु बहिर्ग्रामे हिण्डन्ति ।

अथ ते प्राघूर्णकाः केवला हिण्डितुं न जानन्ति तत किं कर्त्तव्यमित्यत आह—

संघाडगसंजोगो, आगंतुगभद्दएयरे बाहिं ।
आगंतुगा व बाहिं, वत्थव्वगभद्दए हिंडे ॥ २१६ ॥

सङ्घाटकसंयोगः क्रियते । एतदुक्तं भवति—एको वास्तव्य एकश्च प्राघूर्णक, ततश्चैवं सङ्घाटकयोगं कृत्वा भिक्षामटन्ति । 'आगंतुगभद्दएयरे' त्ति अथासौ ग्राम आगन्तुकानामेव भद्रकस्तत 'इयरे' त्ति वास्तव्या 'बाहिं' ति बहिर्ग्रामे हिण्डन्ति, आगन्तुका वा बहिर्ग्रामे हिण्डन्ति वास्तव्यभद्रके सति ग्रामे । उक्तं साधर्मिकद्वारम् ।

इदानीं वसतिद्वारं प्रतिपादयन्नाह-

वित्थिण्णा खुड्डलिआ, पमाणजुत्ता य तिविहँ वसहीओ ।
पढमविइयासु ठाणे, तत्थ य दोसा इमे होंति ॥२१७॥

विस्तीर्णा क्षुल्लिका प्रमाणयुक्ता वा त्रिविधा वसतिः । 'पढमवितियासु ठाणे' त्ति यदा प्रथमायां वसतौ स्थानं भवति; विस्तीर्णायामित्यर्थः, द्वितीया क्षुल्लिका तस्यां वसतौ वा यदा भवति तदा; तत्र तयोर्वसत्योः एते—वक्ष्यमाणका दोषा भवन्ति ।

खरकम्मिअवाणियगा, कप्पडिअसरक्खगा य वंठा य ।
संमीसाऽऽवासणं, दोसा य हवंति णेगविहा ॥२१८॥

तत्र विस्तीर्णायां वसतौ 'खरकम्मिअ' त्ति दण्डपासका रात्रिं भ्रान्त्वा स्वपन्ति, वाणिज्यकाश्च वालुञ्जकप्राया आगत्य स्वपन्ति, तथा कार्पटिकाः स्वपन्ति, सरजस्काश्च-भौताः स्वपन्ति, वण्ठाश्च स्वपन्त्यागत्य "अकयविवाहा भीतिजीविणो य वंठ" त्ति । एभिः सह यदा संमिश्र आवासो भवति तदा तेन संमिश्रावासेन दोषा वक्ष्यमाणका अनेकविधा भवन्ति ।

ते चामी-

आवासगअहिकरणे, तदुभय उच्चारकाइयनिरोहे ।
संजयआयविराहण, संका तेणे नपुंसित्थी ॥२१९॥

आवश्यके—प्रतिक्रमणे क्रियमाणे सागारिकाणामग्रतस्त एव उद्घट्टकान् कुर्वन्ति, ततश्च केचिदसहना राटिं कुर्वन्ति, ततश्चाधिकरणदोषः । 'तदुभए' त्ति सूत्रपौरुषीकरणे अर्थपौरुषीकरणे च दोष -उद्घट्टकान् कुर्वन्ति । निरोधश्च उच्चारस्य कायिकायाश्च निरोधे दोष । अथ करोति तथाऽपि दोष , संयमात्मविराधनाकृतोऽप्रत्युपेक्षितस्थण्डिले । 'संका तेणे' त्ति स्तेनकशङ्कादोषश्च—चौराशङ्का, नपुंसककृतदोषः संभवति ततश्च स्त्रीदोषश्च भवतीति द्वारगाथेयम् ।

इदानीं प्रतिपदं व्याख्यानयन्नाह—

आवस्सयं करिंते, पवंचए झाणजोगवाघाओ ।
असहण अपरिणया वा, भायणभेओ य छक्काया ।२२०।

आवश्यकं—प्रतिक्रमणं कुर्वताम् 'पवंचए' त्ति ते सागारिका उद्घट्टकान् कुर्वन्ति, तथा ध्यानयोगव्याघातश्च भवति-चलनमापद्यते चेतो यत । दारं । अहिगरणं भण्णइ- असहणे' त्ति कश्चिद् असहनः--कोपनो भवति, अपरिणतो वा--सेहप्रायः, एते राटिं सागारिकैः सह कुर्वन्ति, ततश्च भाजनानि-पात्रकाणि तद्भेदो--विनाशो भवति, षट्कायाश्च विराध्यन्ते । दारं ।

तदुभयं' ति व्याख्यायते--

सुत्तत्थऽकरण नासो, करणे उड्डंचगाइ अहिगरणं ।
पासवणिअरनिरोहे, गेलन्नं दिट्ठि उड्डाहो ॥ २२१ ॥

'सुत्तत्थअकरण' त्ति सूत्रार्थपौरुष्यकरणे नाश -तयोरेव विस्मरणम् । अथ सूत्रार्थपौरुष्यौ क्रियेते ततश्च 'उड्डंचकादि' उद्घट्टकादि कुर्वन्ति । ततश्चासहना राटिं कुर्वन्ति, ततोऽधिकरणदोष इति । दारं । 'उच्चारका-

अनिरोहो " त्ति व्याख्यायते-' पासवणि ' त्ति प्रश्रवणस्य कायिकाया ' इयर ' त्ति पुरीषस्य च निरोधे, ' गलण ' ग्लानत्वं भवति। अथ व्युत्सृजन्ति ततो ' दिट्ठे उड्डाहो ' त्ति सागारिकैर्दृष्टे सति उड्डाह —उपघात प्रवचनस्य भवति।

"संजमआयविराहण" त्ति व्याख्यायते—

मा दिच्छिहिंति तो अ-प्पडिलिहिए दूरं गंतु वोसिरति।
संजमआयविराहण-गहणं आरक्खितेणेहिं ॥ २२२ ॥

अथ सागारिका मा मा द्राक्षुरिति कृत्वाऽस्थण्डिल एव दूरे गत्वा व्युत्सृजति तत संयमात्मनोर्विराधना भवति, ग्रहणं चारक्षिका कुर्वन्ति। ' तेण ' त्ति स्तेनका वा ग्रहणं कुर्वन्ति। द्वारं।

" संकातेण" त्ति व्याख्यायते—

ओसरपमज्जमाणं, दट्ठु तेणे त्ति आहणे कोई।
सागारिअसंघट्टण, अपुमेत्थी गेण्हइ साहइ वा ॥२२३॥

स हि रात्रौ कायिकार्थमुत्थितः सम्यवनत. प्रमार्जयन् निर्गच्छति, ततस्तमवनतकाय दृष्ट्वा स्तेन इति मत्वा आ-हन्यात्कश्चित्। द्वारं। ' नपुमित्थि ' त्ति व्याख्यायते-'सागारिअसंघट्टण' त्ति सागारिकसंस्पर्शे सति, स हि रात्रौ ह-स्तेन परामृशन् गच्छति, यतस्तत. स्पर्शने सति कश्चि-त्सागारिको विबुद्ध एव चिन्तयति-यदुतायं 'अपुमेत्थि' त्ति नपुंसक तेन कारणेन मां स्पृशति, तत सागारिकस्तं सा-धुं नपुंसकबुद्ध्या गृह्णाति। अथ कदाचित्स्त्री स्पृष्टा तत सा शङ्कते, यदुतायं मम समीपे आगच्छति, तत ' सा हेति' कथयति निजभर्तु सौभाग्यं ख्यापयन्ती परमार्थेन वा।

ओरालसरीरं वा,इत्थि नपुंसा बला वि गेण्हंति।
सावाहाए ठाणे,निंते आवडणपडणाई ॥ २२४ ॥

औदारिकशरीरं वा तं साधु दृष्ट्वा दिवा, ततो रात्रौ स्त्री नपुंसकं बलाद् गृह्णाति, औदारिक चाङ्गिकम्। एते विस्तीर्ण-वसतिदोषा व्याख्याता ॥ इदानीं क्षुल्लिकावसतिदोषान् प्रति-पादयन्नाह-' सावाहाए ' त्ति संकटाया वसतौ स्थाने—अ-वस्थाने सति ' णिंत आवडणपडणादी ' ति निर्गच्छन्नापति-तश्च—निर्गच्छन्नापतनपतनादयो दोषा.।

तथा—

तेणो त्ति मण्णमाणो, इमो वि तेणो त्ति आवडइ जुद्धं।
संजमआयविराहण-भायणभेयाइणो दोसा ॥ २२५ ॥

एवं साधोरुपरि प्रस्खलिते साधौ यस्योपरि प्रस्खलित स तं स्तेनकमिति मन्यमान, अयं च समुत्थित अमु प्र-स्खलितं स्तेनक मन्यमान सन्, आपतति युद्धं—युद्धं भवति, ततश्च संयमात्मनोर्विराधना भाजनभेदादयश्च दो-षा। भाजन—पात्रक भण्यते। उक्ता क्षुल्लिका वसति। यस्मात्क्षुल्लिकायामेते दोषास्तस्मात्प्रमाणयुक्ता वसतिर्ग्राह्या।

एतदेवाह—

तम्हा पमाणजुत्ता, एक्केकस्स उ तिहत्थसंथारो।
भायणसंथारंतर, जह वीसं अंगुला हुंति ॥ २२६ ॥

तस्मात्प्रमाणयुक्ता वसतिर्ग्राह्या, तत्र चैकैकस्य साधो-र्बाहुल्यतस्त्रिहस्तप्रमाण संस्तारक कर्तव्य'। तुशब्दो वि-शेषणार्थ'। किं विशिनष्टि ?—संस्तारकोऽत्र भूमिरूप इति, तत्र तेषु त्रिषु हस्तेषु ऊर्णामय. संस्तारको हस्त," च-त्तारि अ अंगुलाइं रुभइ भायणाइं हत्थं रुधति।" इदानीं संस्तारकभाजनयोर्यदन्तराल तत्प्रमाणं प्रतिपादयन्नाह—' भायणसंथारंतर ' भाजनसंस्तारान्तरे—अन्तराल यथा विंशतिरङ्गुलानि भवन्ति तथा कर्तव्यम्। एवं त्रिहस्तप्र-माणोऽपि संस्तारक पूरितः।

किं पुन' कारणमिह दूरे भाजनानि न स्थाप्यन्ते?,उच्यते—

मज्जारमूसगाइ य, वारे नवि अ जाणुघट्टणया।
दो हत्था य अवाहा, नियमा साहुस्स साहूओ ॥२२७॥

मार्जारमूषकादीन् पात्रकेषु लगतो वारयेत्। अथ कस्मा-दासन्नतराणि न क्रियन्ते ? उच्यते-'नवि य जाणुघट्टणाय ' त्ति तावति प्रदेशे तिष्ठति पात्रकेषु जानुकृतोद्घट्टना-जानु-कृतं चलनं न भवति। इदानीं प्रव्रजितस्य प्रव्रजितस्य चान्तरा-लं प्रतिपादयन्नाह-द्वौ हस्तौ अबाधा-अन्तराले नियमात्साधो साधोश्च भवति,साधुश्चात्र त्रिहस्तसंस्तारकप्रमाणो ग्रा-ह्य स्थापना चेयम्-"उत्तमओ संथारओऽट्ठावीसंगुलप्प-माणो, संथारभायणाण अंतरं वीसंगुला २०, भायणाणि अ हत्थप्पमाणे पाउंछणे ठविज्जति २४, एवं तिहिं घरएहिं सव्वे वि तिण्णि हत्था, साहुस्स य साहुस्स य अंतरं दो हत्था॥ २८। २८। २४ हत्था ३-हत्था २॥ एवमेतद्गाथाद्वयं व्याख्यातम्। अत्र च द्विहस्तप्रमाणायामबाधायां महदन्त-राले साधो साधोश्च भवति, ततश्च तदन्तराल शून्यं महद् दृष्ट्वा सागारिको बलात्स्वपिति, तस्मादन्यथा व्याख्या-यते-"तम्हा पमाणजुत्ता एक्केकस्स उ तिहत्थसंथारो।' अत्र हस्तं साधू रुणद्धि, भाजनानि संस्तारकद्विंशत्यङ्गुलानि भवन्ति एतदवाह-' भायणसंथारतर जह वीसं अंगुलाइं हों-ति' पात्रकमष्टाङ्गुलानि रुणद्धि,पात्रकाद्विंशत्यङ्गुलानि मुक्त्वा परतोऽन्य साधु स्वपिति। एतच्च कुतो निश्चीयत ? यदुत-पात्रकात्परतो विंशत्यङ्गुलान्यतीत्य साधु स्वपिति, यत उक्तम्—' दो हत्थे य अवाहा नियमा साहुस्स साहूओ '। स्थापना चेयम्—'साहू सरीरेण हत्थ रुभइ २४, साहुस्स सरीरप्पमाण, संथारयस्स पत्तयाणं च अतरं वीसंगुला २० अट्ठहिं अंगुलेहिं पत्तया ठइति ८, पत्तस्स बितिय-साहुस्स य अतर वीसंगुलाइ २० एवं एते सव्वेऽवि तिण्णि हत्था, एसो बितिओ साहू। २४। २०। ८। २०। एवं सव्वत्थ।' अत्र चोर्णामय संस्तारक अष्टाविंश-त्यङ्गुलप्रमाण एव बाहुल्येन द्रष्टव्य, किन्तु साधुना श-रीरेण चतुर्विंशत्यङ्गुलानि रुद्धानि. अन्यानि ऊर्णामयसं-स्तारकसबन्धीनि यानि चत्वार्यङ्गुलानि तै सह यानि विंशत्यङ्गुलानि, ततपरत पात्रकाणि भवन्ति। अत्र हस्त-द्वयमबाधा साधुशरीराद्यावदन्यसाधुशरीर तावद् द्रष्टव्य-म्। " मज्जाय " इत्येतद्व्याख्यातमेव।

भुत्ताभुत्तसमुत्था, भंडणदोसा य वज्जिआ एवं।
सीसंतेण व कुड्डं, तु हत्थं मोत्तूण ठायंति ॥२२८॥

द्विहस्तान्तरालेन मुच्यमानेन ' भुत्ताभुत्तसमुत्था ' इति यो भुक्तभोग ' अभुक्त ' इति य. कुमार एव प्रव्रजित,

तत्र भुक्तभोगस्य आसन्नस्य स्वपतोऽन्यसाधुसंस्पर्शादन्यत्पूर्वक्रीडितानुस्मरणं भवति, यदुतास्मद्योषितोऽप्येवंविध स्पर्श इति, अभुक्तभोगस्याप्यन्यसाधुसंस्पर्शेन सुकुमारेण कौतुकं स्त्रिय प्रति भवति । अयमभिप्रायः—तस्या सुकुमारतरः स्पर्श इति, ततश्च द्विहस्ताबाधायां स्वपतामेते दोषा. परिहृता भवन्ति । तथा भण्डनं—कलह. परस्परं हस्तस्पर्शजनित आसन्नशयने, ते च दोषा एवं वर्जिता भवन्ति । 'सीसनेण व कुड्ड तु हत्थं मोत्तूणं ठायंति ' त्ति शिरो यतो यत्र कुड्यं तत्र हस्तमात्रं मुक्त्वा 'ठायंति' त्ति स्वपन्ति , पादान्तेऽनुगमनमार्गे विमुच्य हस्तमात्र स्वपन्ति । अथवाऽन्यथा पाठ —' सीसंतेण व कुड्डं तिहत्थं मोत्तूण ठायंति ' तत्र प्रदीर्घायां वसतौ स्वापविधिरुक्त, यदि पुनश्चतुरस्रा भवति तदा ' सीसंतेण व कुड्डं' ति शिरो यतो यत्कुड्य तस्मात्कुड्यात् हस्तत्रयं मुक्त्वा स्वपन्ति । तत्र कुड्य हस्तमात्रेण प्रोज्झ्य ततो भाजनानि स्थाप्यन्ते , तानि , तानि च हस्तमात्रे पादप्रोञ्छने क्रियन्ते , ततो हस्तमात्रं व्याप्नुवन्ति , भाजनसाध्वोरन्तराले हस्तमात्रमेव मुच्यते, तत साधु. स्वपिति ।

एवमनया भङ्ग्या स्वपतां निर्यक् साधो. साधोश्चान्तरालं हस्तद्वयं द्रष्टव्यम्—

पुव्वुद्दिट्ठो उ विही, इह वि वसंताण होइ सो चेव ।
आसज्ज तिन्नि वारे, निसन्न आउंटए सेसा ॥२२९॥

अत्र स्वापकाले पूर्वोद्दिष्ट एव विधिर्द्रष्टव्य , कश्चासौ ?, "पोरिसिआपुच्छणया, सामाइयउभयकायपडिलेहा । साहणिय दुवे पट्टे, पमज्ज पाए जओ भूमिं ॥ १ ॥ अणुजाणह संथारं " इत्येवमादिक । इहापि वसता स्वपतां भवति स एव विधि , किं त्वयं विशेष —' आसज्ज तिन्नि वारे निसन्नो ' त्ति आसज्जं त्रयो वारा करोति ' निसन्नो' त्ति तत्रैव संस्तारके उपविष्ट सन् , शेषाश्च साधव. किं कुर्वन्तीत्याह—' आउंटए सेसा ' शेषा साधव पादान् आकुञ्चयन्ति ।

पुनश्चासौ कायिकार्थं व्रजन् किं करोतीत्यत आह—

आवस्सिअमासज्जं, नीइ पयज्जंतु जाव उ च्छन्नं ।
सागारिय तेणुब्भा-मए य संका तउ परेणं ॥ २३० ॥

आवश्यिकीम् आसज्जं च पुन पुन कुर्वन् प्रमार्जयन्निर्गच्छति, कियद् दूर यावदित्यत आह—" जाव उच्छन्नं या चच्छण्णं" यावद्वसतेरभ्यन्तरमित्यर्थ . बाह्यतश्च नैवं प्रमार्जनादि कर्त्तव्यं, यत ' सागारिय तेणुब्भामए य संका तउ परेणं ' सागारिकाणा स्तेनशङ्कोपजायते , यदुत किमयं चौर. ? ' उब्भामओ ' पारदारिकस्तत—स्तदाशङ्कोपजायते , अतस्तत्परेण—संछन्नाद्बाह्यतो नेदं प्रमार्जनादि कर्त्तव्यमिति । एव प्रमाणयुक्ताया वसतौ वसना विधिरुक्त ।

यदा ते पुन —

नत्थि-उ पमाणजुत्ता, खुड्डुलिया चेव वसति जयणाए ।
पुरहत्थ पच्छपाए, पमज्ज जयणाएँ निग्गमणं ॥२३१॥

यदा प्रमाणयुक्ता वसतिर्नास्ति तदा क्षुल्लिकायामेव वसतौ वसन्ति यतनया । का चासौ यतना ?- पुरहत्थ पच्छपाए' त्ति पुरतः—अग्रतो हस्तेन परामृशति पश्चात्पादौ प्रमृज्य न्यस्यति , ततश्चैवं यतनया बाह्यतो निर्गच्छति । एव तावत्कायिकाद्यर्थं गमनागमने विधिरुक्तः ।

इदानीं स्वपनविधिं प्रतिपादयन्नाह—

उस्सीसभायणाइं, मज्झे विसमे अहाकडा उवरिं ।
ओवग्गहिओ दोरो, तेण य वेहासिलंबणया ॥ २३२ ॥

उपशीर्षकाणा मध्ये भाजनानि-पात्रकाणि क्रियन्ते । स्थापना चेयम्—ꣿ । 'विसमे' त्ति विषमा भू गर्त्तोपेता भवति, ततश्च तस्यां गर्त्तायां पात्रकाणि पुञ्जीक्रियन्ते । ' अहागडा उवरिं' ति प्राशुकानि-अल्पपरिकर्माणि च यानि तान्येतेषां पात्रकाणामुपरि पुञ्जीक्रियन्ते, माङ्गलिकत्वात्तेषाम् । अथातिसङ्कटत्वाद्वसतेर्भूमौ नास्ति स्थानं पात्रकाणां ततश्च'ओवग्गहितो दोरो' औपग्रहिको यो दवरको यवनिकार्थं गृहीतः 'ओवग्गहितो-गच्छसाहरणो तेन विहायसि—आकाशे लंबणय' त्ति तेन दवरकेण लम्बयन्ते—कीलिकादौ क्रियन्ते ।

खुड्डुलियाए असई, विदित्थिन्नाए उ मालणा भूमी ।
विलधम्मो चारभडा, साहरणेगंतकडपोत्ती ॥ २३३ ॥

क्षुल्लिकाया वसतेरभावे 'विदित्थिन्नाए उ' त्ति विस्तीर्णायां वसतौ स्थातव्यम् । तत्र का विधिरित्यत आह-'मालणा भूमी' विस्तीर्णवसतेर्भूमिर्माल्यते—व्याप्यते पुष्पप्रकरसदृशैः स्वपद्भि' , ' विलधम्मो चारभडे ' त्ति अवलगकादय आगत्य इदं भणन्ति—यदुत विलधर्मो यस्मिन् विले यावनामवस्थान भवति तावन्त एव प्रविशन्ति , तत साधव किं कुर्वन्ति ? , ' साहरणे' त्ति संहृत्य उपकरणजातं विरलत्वं च ' एगंत' त्ति एकान्ते तिष्ठन्ति । 'कडपोत्ती ' ति यदि कटोऽस्ति ततस्तमन्तराले ददाति , अथ स नास्ति ततः 'पोत्ति' चिलिमिलीं ददाति ।

असई य चिलिमिलीए, भए व पच्छन्न भूइए लक्खे ।
आहारो नीहारो, निग्गमणपवेस वज्जेह ॥ २३४ ॥

असति-अभावे चिलिमिलिन्या ' भए व' त्ति चिलिमिलीहरणभये वा न ददति । किं वा कुर्वन्त्यत आह-'पच्छण्णे ' त्ति तत प्रच्छन्नतरे प्रदेशे तिष्ठन्ति । 'भूइए लक्खे ' त्ति स च प्रदेशो भूत्या लक्ष्यते—चिह्नयते अवटोऽयं प्रदेश इति कथ्यते । इदं च तेऽभिधीयन्ते—आहारान्नीहारो भवत्यवश्यमतो निर्गमनप्रवेशौ वर्जनीयाविति ।

इद च कर्त्तव्यं साधुभि —

पिंडेण सुत्तकरणं, आसज्ज निसीहियं च न करिंति ।
कासण न पमज्जणया, न य हत्थो जयण वेरत्ति ॥२३५॥

पिंडेन—समुदायेन सूत्रपौरुषीकरणं कर्त्तव्यं , मा भूत् कश्चित्पदवाक्यं या करणादिदिति रत्ति ' त्ति । तथा आसज्ज निसीहिअं च' तत्र न कुर्वन्ति । किं वा कर्त्तव्यमित्यत आह— ' कासण ति कासनं—खादकरणं करोति , न च प्रमार्जनं

करोति , ' ख य हत्थो ' त्ति न च हस्तेन पुरस्तात्परामृश्य निर्गच्छति, यतनया च 'वेरत्तिअं' कुर्वन्ति । 'वेरत्तिओ कालो घेप्पइ दोण्हं पहराणं उवरिं, ततो सज्झाओ कीरति, यदि-वा ताए वेलाए सज्झाओ ' उक्तं वसतिद्वारम् ।

इदानीं स्थानस्थितद्वारमुच्यते, तत्राह—

पत्ताण खेत्ते जयणा, काऊणावस्सयं ततो ठवणा ।
पडणीयपत्तमामग, भद्दगसड्ढे य भत्तियत्ते ॥२३६॥

एवं तेषां विहरतां प्राप्तानामभिमतक्षेत्रं ' जयणे ' ति यथा यतना कर्त्तव्या तथा च वक्ष्यति, ' काउं आवस्सकं ' कृत्वा चावश्यकं प्रतिक्रमणं ' ततो ठवण ' त्ति ततः स्थापना क्रियते केषाञ्चित्कुलानाम्, कानि च तानीत्यत आह-प्रत्यनीक शासनादेः, प्रान्त —अदानशीलः मामको य एवं वक्ति-' मा मम स्रमणा प्रसमंतु '-भद्रकश्राद्धौ प्रसिद्धौ ' भत्तिअत्ति ' त्ति य. साधुभिरागच्छद्भिर्दृष्टैः खेलास्ते, शोभनं भवति यद्येते नायान्ति गृहे । एतेषां कुलानां यो विभागः क्रियते प्रतिषेधाप्रतिषेधरूपः स स्थापनेत्युच्यते ।

इदानीं भाष्यकार एनां गाथां प्रतिपदं व्याख्यानयन्नाह दारगाहा—

बाहिरगामे वुच्छा, उज्जाणे ठाणि वसहिपडिलेहा ।
इहरा उ गहिअभंडा, वसहीवाघाय उड्डाहो ॥१०४॥ (भा०)

एव ते बाह्यग्रामे—आसन्नग्रामे पर्युषिता सन्तोऽभिमतं क्षेत्रं प्राप्य तावदवतिष्ठन्ते । ' उज्जाणे ठाणे ' ति उद्याने तावत्स्थाने आस्था कुर्वन्ति । ' वसहिपडिलेह ' त्ति पुनर्वसतिप्रत्युपेक्षका प्रेष्यन्ते । ' इहरा उ ' त्ति यदि प्रत्युपेक्षका वसतेर्न प्रेष्यन्ते ततः गृहीतभाण्डा—गृहीतोपकरणा वसतिव्याघाते सति निवर्त्तन्ते ततश्च उड्डाहो भवति-उपघात इत्यर्थः ।

तत्र च प्रविशतां शकुनापशकुननिरूपणमाह—

मइल कुचेले अब्भं-गिएल्लए साण खुज्ज वडभे य ।
एए उ अप्पसत्था, हवंति खित्ताउ निंताणं ॥१०५॥ (भा०)
नारी पीवरगब्भा, वड्डकुमारी य कट्ठभारो य ।
कासायवत्थ कुच्च-धरा य कज्जं न साहेंति ॥१०६॥ (भा०)
चक्कयरम्मि भमाडो, भुक्खा मारो य पंडुरंगम्मि ।
तच्चन्निरुहिरपडणं, बोडियमसिए धुवं मरणं ॥१०७॥ (भा०)
जंबूय चास मऊरे, भारद्दाए तहेव नउले अ ।
दंसणमेव पसत्थं, पयाहिणे सव्वसंपत्ती ॥१०८॥ (भा०)
नदीतूरं पुण्ण-स्स दंसणं संखपडहसद्दो य ।
भिंगारछत्तचामर, धयप्पडागा पसत्थाई ॥१०९॥ (भा०)
समणं संजयं दंतं, सुमणं मोयगा दहिं ।
मीणं घंटं पडागं च, सिद्धमत्थं वियागरे ॥११०॥ (भा०)

एता निगदसिद्धा

तम्हा पडिलेहिअ दी-वियम्मि पुव्वगय असइ सारविए ।
फड्डयफड्डपवेसो, कहणा न य उट्ठ इयरेसिं ॥१११॥ (भा०)

यस्मात्पूर्वमप्रत्युपेक्षितायां वसतौ उड्डाहो भवति तस्मात्प्रत्युपेक्ष्य प्रवेष्टव्यम् । ' दीवियम्मि ' दीपिते-कथिते शय्यातरस्य; यदुताचार्या आगताः, " पुव्वगय " त्ति पूर्वगतक्षेत्रप्रत्युपेक्षकैः प्रमार्जितः ततः साध्वेव, ' असति ' त्ति पूर्वगतक्षेत्रप्रत्युपेक्षकाभावे, ततः क्षेत्रप्रत्युपेक्षकैः प्रविश्य सारविते—प्रमार्जितायां वसतौ, कथं प्रवेष्टव्यमित्यत आह-फड्डकफड्डकैः प्रवेशः कर्त्तव्यः । ' कहण ' त्ति यो धर्मकथालब्धिसंपन्नः स पूर्वमेव गत्वा शय्यातराय वसतेर्बहिर्धर्मकथां करोति । ' न य उट्ठ ' त्ति न चासौ धर्मकथां कुर्वन् उत्तिष्ठति—अभ्युत्थानं करोति , ' इयरेसिं ' ति ज्येष्ठार्याणाम्, आह-किमाचार्यागमने धर्मकथी अभ्युत्थानं करोति उत नेति ?, आचार्य आह-अवश्यमेवाभ्युत्थानमाचार्याय करोति ।

यतोऽकरणे एते दोषाः—

आयरियअणुट्ठाणे, ओहावण बाहिरा य अदक्खिन्ना ।
साहणवंदणिज्जा, अणालवंतेऽवि आलावो ॥११२॥ (भा०)

आचार्यागमने सत्यनुत्थाने ' ओहावण ' त्ति मलना भवति, ' बाहिर ' त्ति लोकाचारस्य बाह्या एत इति । पश्चानामप्यकुलीनामेका महत्तरा भवति, ' अदक्खिण्ण ' त्ति दाक्षिण्यमप्येषामाचार्याणां नास्तीत्येवं शय्यातरश्चिन्तयति । ' साहणय ' त्ति तेन धर्मकथिनाऽऽचार्याय कथनीयं, यदुतायमस्मद्वसतिदाता । ' वंदणिज्ज ' त्ति शय्यातरोऽपि धर्मकथिनेदं वक्तव्यो-वन्दनीया आचार्याः । एवमुक्ते यदि असौ वन्दनं करोति ततः साध्वेव, अथ न करोति ततः ' अणालवंतेऽवि ' तस्मिन् शय्यातरेऽनालपत्यपि आचार्येणालापकः कर्त्तव्यः, यदुत कीदृशा यूयम् ? ।

अथाचार्य आलपनं न करोति तत एते दोषाः—

(भा०) थुद्धा निरोवयारा, अग्गहणं लोगजत्तवोच्छेओ ।
तम्हा खलु आलवणं, सयमेव उ तत्थ धम्मकहा ॥११३॥

तथाहि-एत आचार्यास्तथा निरुपकारा-उपकारमपि न बहु मन्यन्ते, ' अग्गहणं ' ति अनादारोऽस्याचार्यस्य मां प्रति, ' अलोगजत्त ' त्ति लोकयात्राबाह्या ' वोच्छेओ ' त्ति व्यवच्छेदो वसतेरन्यद्रव्यस्य वा, तस्मात्खल्वालपना कर्त्तव्या, स्वयमेव च तत्र धर्मकथा कर्तव्याऽऽचार्येणेति ।

वसहिफलं धम्मकहा, कहणअलद्धी उ सीस वावारे ।
पच्छा अइंति वसहिं, तत्थ य भुज्जो इमा जयणा ॥११४॥

धर्मकथा कुर्वन् वसतेः फलं कथयति , ' कहणअलद्धी उ ' यदा तु पुनराचार्यस्य धर्मकथालब्धिर्न भवति तदा ' सीस वावारि ' त्ति शिष्यं व्यापारयति-नियुङ्क्ते धर्मकथाकथने, शिष्यं च धर्मकथायां व्यापार्य पश्चादाचार्याः प्रविशन्ति वसतिम्, तत्र च वसतौ भूयः—पुनः इयं यतना वक्ष्यमाणलक्षणा कर्त्तव्या ।

( भाष्यम् )—

पडिलेहण संथारग, आयरिए तिन्नि सेस उ कमेण ।
विंटिअउक्खेवणया, पविसइ ताहे य धम्मकही ॥११५॥

तत्र च वसतौ प्रविष्टाः सन्तः पात्रकादेः प्रत्युपेक्षणां कुर्वन्ति, संस्तारकग्रहणं च क्रियते, ततः आचार्यस्य त्रयः

संस्थारका निरूप्यन्ते . शय्या क्रमेण यथारत्नाधिकतया। न च साधव आत्मीयात्मीयोपविवरटलिकानामुन्दपणं कुर्वन्ति येन भूमिभागो छाद्यते, अस्मिन्नवसरे वास्तव्यो धर्मकथी संस्तारकग्रहणार्थं प्रविशति।

(भा०) उच्चार पासवणे, लाउयनिल्लेवणे य अच्छणए।
पुव्वट्ठिय तेसि कहे-ऽकहिए आयरणवोच्छेओ ॥११६॥

ते हि क्षेत्रप्रत्युपेक्षका उच्चाराय भुवं दर्शयन्ति ग्लानाद्यर्थं. 'पासवणे' त्ति कायिकाभूमिं दर्शयन्ति, 'लाउए' त्ति तुम्बकक्षेपणभुवं दर्शयन्ति, निर्लेपनस्थानं च दर्शयन्ति 'अच्छणए' त्ति यत्र स्वाध्यायं कुर्वद्भिरास्यते, पूर्वस्थिता., क्षेत्रप्रत्युपेक्षका, एवं तेषाम्—आगन्तुकाना कथयन्ति। 'अकहिए' त्ति यदि न कथयन्ति तत. 'आयरणवोच्छेओ' त्ति अस्थाने कायिकादेराचरणे सति व्यवच्छेदस्तद्द्रव्यान्यद्रव्ययो., वसतेर्निर्धाटयतीति।

(भा०)भत्तट्ठिआ य खवगा,अमंगलं चोयए जिणाहरणं।
जइ खमगा वंदंता, दायंतियरे विहिं वोच्छं॥ ११७॥

ते हि श्रमणा क्षेत्रे प्रविशन्तः कदाचिद्भक्तार्थिन कदाचित्क्षपकाः उपवासिका इत्यर्थ. , तत्रोपवासिकानां प्रविशताम्—'अमगलं चोयए' त्ति चोदक इदं वक्ति-यदुत क्षेत्रे प्रविशताम् अमङ्गलमिदं यदुपवास क्रियते, तत्र 'जिनाहरण' मिति जिनोदाहरणम्-यथा हि जिना निष्क्रमणकाले उपवासं कुर्वन्ति न च तेषां तदमङ्गलं , किन्तु प्रत्युत मङ्गल तत्तेषामवमिदमपीति। इदानीं यदि क्षपकास्तस्मिन् दिवसे साधव उपवासिकास्तत्र च सन्निवेशे यदि श्रावका सन्ति ततस्तद्गृहेषु चैत्यानि वन्दतो दर्शयन्ति, कानि ?-स्थापनादीनि कुलानि आगन्तुकेभ्य , 'इयरे' त्ति भक्तार्थिषु यो विधिस्तं वक्ष्ये।

कश्चासौ विधिरित्यत आह—

सव्वे दट्ठुं उग्गा-हिएण ओयरिअ भयं समुप्पज्जे।
तम्हा ति दु एगो वा,उग्गाहिअ चेइए वंदे॥११८॥ (भा०)

ते हि भक्तार्थिन श्रावककुलेषु चैत्यवन्दनार्थं व्रजन्त, यदि सर्व एव पात्रकाण्युद्ग्राह्य प्रविशन्ति तत को दोष इत्यत आह—'दट्ठुमुग्गाहिएहिं ओदरिअ' त्ति दृष्ट्वा तान् साधून् पात्रकैरुद्ग्राहितै औदरिका एत इति—भट्टवुआ इति,एव श्रावकश्चिन्तयति। 'भयं समुप्पज्जे' त्ति भयं च श्रावकस्योत्पद्यते. यदुत कस्याहमत्र ददामि? कस्य वा न ददामीति? कथं वा एतावता दास्यामीति. यस्मादेवं तस्मात् 'ति दु एगो वा' त्रय उद्ग्राहितेन प्रविशन्ति आचार्येण सह द्वौ वा एको वा उद्ग्राहितेन प्रविशति चैत्यवन्दनार्थमिति।

अत —

सड्ढाभंगोऽणुग्गा-हियम्मि ठवणाइया य दोसा उ।
घरचेइअ आयरिए,कइवयगमणं च गहणं च॥११९(भा०)

अथानुद्ग्राहितपात्रका एव प्रविशन्ति दानश्च च सतिर्जाता श्राद्धस्य, ततश्च पात्रकाभावेऽग्रहणमग्रहणाच्च श्रद्धाभङ्गो भवति। अथैवं भणन्ति—पात्रकं गृहीत्वाऽऽगच्छाम ततश्च स्थापनादिका दोषा भवन्ति, आदिशब्दात्-कदाचित्संस्कारमपि कुर्वन्ति,. तस्माद् गृहचैत्यवन्दनार्थम् आचार्येण कतिपयैः साधुभिः सह गमनं कार्यं, ग्रहणं घृतादेः कर्त्तव्यमिति।

'पत्ताए खेत्तजयणा' त्ति व्याख्यायते—

खेत्तम्मि अपुव्वम्मी,तिट्ठाणट्ठा कहिंति दाणाई।
असई अ चेइयाणं,हिंडंता चेव दायंति॥१२०॥(भा०)

यदि तत्क्षेत्रमपूर्वं न तत्र मासकल्प कृत आसीत् तत 'तिट्ठाणट्ठ' त्ति त्रिषु स्थानेषु श्रावकगृहचैत्यवन्दनवेलायां भिक्षामटन्त प्रतिक्रमणावसाने वा कथयन्ति दानादीनि कुलानि। 'असइ अ चेइयाणं' यदा पुनस्तत्र श्रावककुलेषु चैत्यानि न सन्ति ततोऽसति चैत्यानां भिक्षामेव हिण्डन्त. कथयन्ति।

कानि पुनस्तानि कथयन्तीत्यत आह—

दाणे अभिगमसड्ढे, संमत्ते खलु तहेव मिच्छत्ते।
मामाए अचियत्ते,कुलाइं दायंति गीयत्था॥१२१॥(भा०)

दानश्राद्धकान् अभिगमश्राद्धः अभिनवसम्यक्त्वसाधुः तथा मिथ्यादृष्टिकुलानि कथयन्ति। शेषं सुगमम्।

इदानीं यदि तत्र चैत्यानि न सन्ति उपवासैर्न भिक्षा पर्यटिता, तत आवश्यकान्ते क्षेत्रप्रत्युपेक्षका कथयन्त्याचार्याय। एतदेवाऽऽह—

(भा०)कयउस्सग्गामंतण,पुच्छणया अकहिएगयरदोसा।
ठवणकुलाण य ठवणा,पविसइ गीयत्थसंघाडो॥१२२॥

आवश्यककायोत्सर्गस्यान्ते 'आमंतण' ति आचार्य आमन्त्र्य तान् प्रत्युपेक्षकान् 'पुच्छणय' त्ति पृच्छति, यदुत कान्यत्र स्थापनाकुलानि? कानि चेतराणि? पुनश्च ते पृष्टा कथयन्ति, 'अकहिएगतरदोस' त्ति क्षेत्रप्रत्युपेक्षकैरकथितेषु कुलेषु सत्सु एकतर -अन्यतमो दोष —संयमात्मविराधनाजनित , कथिते च सति स्थापनादिकुलानां स्थापना क्रियते। पुनश्च स्थापनाकुलेषु गीतार्थसङ्घाटक प्रविशति।

गच्छम्मि एस कप्पो, वासावासे तहेव उडुबद्धे।
गामागरनिगमेसुं, अइसेसी ठावए सड्ढी॥१२३॥(भा०)

गच्छे एष कल्प.—एष विधिरित्यर्थः, यत स्थापनाकुलानां स्थापना क्रियते, कदा ?—'वासावासे तहेव उडुवद्धे' वर्षाकाले शीतोष्णकालयोश्च। केषु पुनरयं नियम कृत ? इत्यत आह—'गामागरनिगमेसु ग्राम.—प्रसिद्ध. आकरः-सुवर्णादिरुत्पत्तिस्थानं निगमो—वाणिजकप्राय सन्निवेश , एषु स्थापनाकुलानि स्थापयेत् । किंविशिष्टानीत्यत आह—'अतिसेसि' त्ति स्फीतानीत्यर्थ 'सड्ढि' त्ति श्रद्धावन्ति कुलानि स्थापयेदिति।

किं कारणं चमढणा,दव्वखओ उग्गमोऽवि अ न सुज्झे।
गच्छम्मि निययकज्जे,आयरियगिलाणपाहुणए॥१२४॥

किं कारणं तानि कुलानि स्थाप्यन्ते?, यत 'चमढण' त्ति अन्यैरन्यैश्च साधुभि प्रविशद्भिश्चमढ्यन्ते—कदर्थ्यन्त इत्यर्थ , तत को दोष इत्यत आह—'दव्वखओ' आचार्यादियोग्याना द्रव्याणां क्षयो भवति। 'उग्गमोऽवि अ न सुज्झे' उद्गमस्तत्र गृहे न शुद्ध्यति। 'गच्छे' त्ति नि-

यतं कार्यं योग्येन, केषामित्यत आह—' आयरिअगिलाणपाहुणए ' आचार्यग्लानप्राघूर्णकानामर्थाय नित्यमेव कार्यं भवति इति निर्युक्तिगाथार्थम् ।

इदानीं भाष्यकारो व्याख्यानयति, तत्र ' चमढण ' त्ति व्याख्यानयन्नाह ( दारगाहा )-

पुव्विं पि वीरसुणिआ, छिक्का छिक्का पहावए तुरिअं ।
सा चमढणाएँ सिन्ना,संतं पि न इच्छए घेत्तुं ।।१२४।।(भा०)

जहा काचित् वीरसुणिआ केणइ आहिंडइल्लेणं तित्तिर मयूराईणं गहणे छिक्कारिआ तित्तिराईणि गिरहेइ, एवं पुणो तित्तिराईहिं विणा वि सो छिंछिक्कारेइ सा य पहाविआ जया न किंचि पेच्छइ तया विअरिआ संती कज्जे वि न धावति । एवं सड्ढयकुलाइं अरणमरणेहिं चमढिज्जंताइ पओयणे कारणे समुप्पएणेऽवि संतं पि न देंति । किं कारणं ?, जतो अकारणा एव निद्धाइयाणि तेण कारणे समुप्पएणे वि न देंति त्ति । इदानीं गाथाऽक्षरार्थ उच्यते—पुनरपि वीरशुनी छीत्कृता छीत्कृता प्रधावति त्वरितं, पुनश्चासौ अलीकचमढणतया सिन्ना—विश्रान्ता सदपि मयूरादि नेच्छति ग्रहीतुम् ।

(भा०) एवं सड्ढकुलाइं, चमढिज्जंताइँ ताइँ असेहिं ।
निच्छंति किंचि दाउं,संतं पि तयं गिलाणस्स ।।१२५।।

सुगमा । "चमढण" त्ति गयं ।

" दव्वक्खय " त्ति व्याख्यायते—

दव्वक्खएण पंतो, इत्थि घाएज्ज कीस ते दिएणं ? ।
भद्दो हट्ठपहट्ठो,करेज्ज अन्न पि समणट्ठा ।।१२६।। (भा०)

बहूनां साधूना घृतादिद्रव्ये दीयमाने तद्द्रव्यक्षय सञ्जातस्ततस्तेन द्रव्यक्षयेण यदि प्रान्तो गृहपतिस्तत स्त्रियं घातयेत्, एतच्च भणति—किमिति तेभ्य —प्रव्रजितेभ्यो दत्तम् ? । " दव्वक्खए" त्ति गयं ॥ 'उग्गमो वि अ न सुज्झे' त्ति व्याख्यायते, तत्राह—' भद्दो हट्ठपहट्ठो करेज्ज अन्न पि साहूण ' भद्रो यदि गृहपतिस्ततो दत्तमपि मोदकादि पुनरपि कारयेत् । ' उग्गमोऽवि य न सुज्झे " त्ति गयं ।

"गच्छम्मि नियमकज्जं आयरिए" त्ति व्याख्यानयन्नाह—

आयरिअणुकंपाए, गच्छो अणुकंपिओ महाभागो ।
गच्छाणुकंपयाए,अव्वोच्छित्ती कया तित्थे।१२७।(भा०)

सुगमा ।

इदानीं "गिलाण" त्ति व्याख्यायते—

(भा०)परिहीणं तं दव्वं,चमढिज्जंतं तु असमसेहिं ।
परिहीणम्मि य दव्वे,नत्थि गिलाणस्स णं जोग्गं ।१२८।

सुगमा ।

तथा चात्र दृष्टान्तो द्रष्टव्य —

चत्ता होंति गिलाणा, आयरिया बालवुड्ढसेहा य ।
खमगा पाहुणगा वि य,मज्जायमइक्कमंतेणं।।१२९।।(भा०)
सारक्खिया गिलाणा, आयरिया बालवुड्ढसेहा य ।
खमगा पाहुणगा वि य,मज्जायं ठावयंतेणं ।।१३०।।(भा०)

सुगमे ।

जड्डे महिसे चारी, आमे गोणे अ तेसि जावसिआ ।
एएसिं पडिवक्खे, चत्तारि उ संजया हुंति।। १३८ ।।

जहा एक्के महावीयं परिसुअं, तत्थ य चारीओ नाणाविहाओ अत्थि, तंजहा-जड्डस्स-हत्थिस्स जा होइ सा तत्थ अत्थि, महिसस्स सुकुमारा जोग्गा सावि तत्थ अत्थि, आसस्स मधुरा-जोग्गा सावि तत्थ अत्थि, गोणस्स सुयंधा जोग्गा सावि तत्थ अत्थि । तं च रायपुरिसेहिं रक्खिज्जइ । ताए चेव जड्डाईणं, जइ परं कारणे घसिआ आणेति, अह पुण तं मोक्कलयं मुच्चइ ताहे पट्टणगोणेहिं गामगोणेहिं चमढिज्जइ चमढिए अ तस्सि महापरिसूए ताणं रायकेराणं जड्डाईणं अणुरूवा चारी ण लब्भइ विध्वंसितत्वात् गोधनैस्तस्य । एवं सड्ढयकुलाणि वि जइ न रक्खिज्जंति ततो अन्नमन्नेहिं चमढिज्जंति, तेसु चमढिएसु जं जड्डाइसंभावपाहुणयाण पाउग्गं तं न देंति । इदानीमक्षरार्थं उच्यते-जड्डो-हस्ती महिष प्रसिद्धस्तयोरनुरूपां चारीं यावसिका—घासवाहिका ददति, तथा अश्वस्य गोणो—बलीवर्दस्तस्य च चारीमानयन्ति यावसिका. । एतेषां—जड्डादीनां प्रतिरूप —अनुरूप पक्षः प्रतिपक्ष, तुल्यपक्ष इत्यर्थ , तस्मिन् चत्वार संयता प्राघूर्णका भवन्ति ।

इदानीमेतेषामेव जड्डादीनां यथासङ्ख्येन भोजनं प्रतिपादयन्नाह—

जड्डा जं वा तं वा, सुकुमारं महिसिओ महुरमासो ।
गोणो सुगंधदव्वं,इच्छइ एमेव साहू वि ।।१३१।। ( भा० )

सुगमा । नवरं साधुरप्येवमेव द्रष्टव्य —तत्थ पढमो पाहुणसाहू भणइ—जं मम दोसीणं अरहगं वा कंजिअं वा लब्भइ तं चेव आणेहि, तए एयं भणिते किं ?-दोसीणं चेव आणिअव्वं , न विसेसेण तस्स. सोहणं तस्स आणेयव्वं । बिनिओ पाहुणसाहू भणइ-वरं मे णेहरहियावि पूपलिआ सुकुमाला होउ । ततीओ भणति-महुरं नवरि मे होउ चउत्थो भणति-तिप्पडिगंधं अवपाणं वा होउ । एवं ताण भणताणं जं जोग्गं त सड्ढयकुलेहिंतो वि ससयं आणिज्जइ । एवमुक्ते सत्याह पर • यस्मादेवं तस्मात्र कदाचित्केनचित्प्रवेष्टव्यं प्राघूर्णकागमनमन्तरेण श्रावककुलेषु , यदैव प्राघूर्णका आगमिष्यन्ति तदैव तेषु प्रवेशो युक्त । एवमुक्ते सत्याहाऽऽचार्य —

एवं च पुणो ठविए,अप्पविसंते भवे इमे दोसा ।
वीसरण संजयाणं,विसुक्खगोणी अ आरामो ।।१३२ ।।

एवं च पुन ' ठविते ' स्थापिते स्थापनाकुले यदि सर्वथा न प्रवेश क्रियत तदैते दोषा । अप्रविशत्सु एते दोषा.-' वीसरणसंजयाणं ' विस्मरण संयतविषय तेषां श्रावकाणां भवति तत्र च विशुष्कगोरूपा—गवा आरामेण च दृष्टान्त । जहा एगस्स माहणस्स गावी सा कुडदोहणी.ताहे सो चिंतेति—एसा गावी बहुअं खीरं देइ मज्झाय मासेण एगत्थं होहिति । तो अच्छउ ताहे चेव एकवारिआए दुहिज्जति । एवं सो न दुहति । ताहे सा तेण कालेण विसुक्का तद्दिवसं बिंदु पि न देइ । एवं संजया तेसिं सड्ढाणं अणागच्छंता तेसिं सड्ढाण पम्हुट्ठा ए चेव जाणंति किं संजया अत्थि न वा ?, ताव संजय-

अमि दिवसे कज्जं जायं नदिवसे गया जाव नत्थि ताणि द-व्वाणि, तम्हा दोएहं वा तिएहं वा दिवसाणं अयस्स गंतव्व। अथवा आरामदिट्ठंतो. एगो मालिओ चिंतेइ—अच्छंतु एयाणि पुप्फाणि अहं कोमुईए एक्कवारिआए उव्वेहामि जेण बहूणि हुंति, ताहे सो आरामे उप्फुल्लो कोमुईए न एकं पि फुल्लं जायं। एवं सावगकुलेसु एए चेव दोसा एक्कवारिआए पविसणे तम्हा पविसिअव्वं कहिंचि दिवसे त्ति।" (ओघ०) (आचार्यादीनां वैयावृत्यकरवक्तव्यता 'साहु' शब्दे उक्ता।)

कीदृशं पुन कारयेद्वैयावृत्त्यम्? इत्यत आह—

एयद्दोसविमुक्कं, कडजोगिं नायसीलमायारं।
गुरुभत्तिसंविणीयं, वेयावच्चं तु कारेज्जा ॥१३४॥ (भा०)

एभिरुक्तदोषैर्विमुक्तं, किंविशिष्टम्? इत्याह-' कडजोगि' त्ति कृतो योगो-घटना ज्ञानदर्शनचारित्रैः सह येन स कृतयोगी-गीतार्थ तं, पुनरसावेव विशिष्यते-ज्ञातौ शीलमाचारश्च यस्य तं वैयावृत्त्यं कारयेत्। गुरौ भक्तिः-भावप्रतिबन्ध. संविनीतो-बाह्योपचारेण।

(भा०) साहंति अपि अधम्मा, एसणदोसे अभिग्गहविसेसे।
एवं तु विहिग्गहणे, दव्वं वड्ढंति गीयत्था ॥ १३५ ॥

ते चैव वैयावृत्त्यकरा· श्राद्धकुलेषु प्रविष्टा· सन्तः कथयन्ति एषणादोषान्-शङ्कितादीन् अभिग्रहविशेषांश्च साधुसंबन्धिन। कीदृशास्ते वैयावृत्त्यकरा.?-प्रियः-इष्टो धर्मो येषां ते प्रियधर्माण 'एवम्-उक्तेन प्रकारेण विधिग्रहणं द्रव्यं, घृतादिवृद्धिं नयन्ति अव्यवच्छित्तिलाभेन, के?-गीतार्था.।

तैश्च गीतार्थैर्भिर्क्षा गृह्णद्भि· श्राद्धकुले इदं ज्ञातव्यम्—

दव्वप्पमाणगणणा, खारिअफोडिअ तहेव अद्धा य।
संविग्ग एगठाणे, अणेगसाहूसु पन्नरस ॥१३६॥ (भा०)

द्रव्यं-गोधूमादि तद्विषयं कियत्सूपकारशालायां प्रविशति दिने दिने ततश्च तदनुरूपं गृह्णाति, 'गणण' त्ति एतावन्मात्राणि घृतगुडादीनि प्रविशन्त्यस्मिन् इत्येतावन्मात्रं ग्राह्यम्। 'खारिअ' त्ति सलवणानि कानि?—व्यञ्जनानि-सलवणकरीरादीनि कियन्ति सन्ति? इति, ततश्च ज्ञात्वा यथाऽनुरूपाणि गृह्णाति 'फोडिअ' त्ति वाईगणाणि मत्थाफोडिआणि कत्तिआणि घरे सिज्झिज्जंति नाऊण जहारूवाणि घेप्पंति। तथा 'अद्धा य' त्ति काल उच्यते, किमत्र प्रहर वेला आहोस्विद्प्रहरद्वय इति विज्ञेयं, 'संविग्ग एगठाणे' त्ति संविग्नो—मोक्षाभिलाषी 'एगठाणे' त्ति एक सङ्घाटक प्रविशति, 'अणेगसाहूसु' त्ति अनेकेषु साधुषु प्रविशत्सु 'पन्नरस' त्ति पञ्चदश दोषा नियमाद्भवन्ति 'आहाकम्मुद्देसिअ" इत्येवमादय.। अज्झोयरओ मीसजायं च एको भेओ।

यस्मादनेकेषु साधुषु दोषास्तस्मात्—

संघाडेगो ठवणा-कुलेसु सेसेसु बालवुड्ढाई।
तरुणा बाहिरगामे, पुच्छा दिट्ठंतऽगारीए ॥१३७॥ (भा०)

सङ्घाटक· एक. स्थापनाकुलेषु प्रविशति, शेषेषु कुलेषु बाला वृद्धाश्च प्रविशन्ति, आदिशब्दात्तपकाश्च। तरुणा -शक्तिमन्तो बहिर्ग्रामे हिण्डन्ति। अत्र चोदक पृच्छति-पूर्वमेव क्षेत्रं प्रत्युपेक्षितं यत्र सबालवृद्धस्य गच्छस्योपग्रहपानं पर्याप्त्या भवति तत्रैव स्थीयते ततः कस्मात्तरुणा बहिर्ग्रामे हिण्डन्ति?, आचार्य आह 'दिट्ठंतऽगारीए' एकस्या अगार्या दृष्टान्तो दातव्य., तं च तृतीयगाथायां भाष्यकारो वक्ष्यति।

तथा इयमपरा द्वारगाथा—

पुच्छा गिहिणो चिंता, दिट्ठंतो तत्थ खुज्जबोरीए।
आपुच्छिऊण गमणं, दोसा य इमे अणापुच्छे ॥२३६॥

'पुच्छ' त्ति चोदकः पृच्छति—ननु च तस्या अगार्या घृतादिसंग्रहः कर्त्तुं युक्तो भर्तृप्रदत्तवर्णिमध्यात् येन प्राघूर्णकादे. सुखेनैवोपचारः क्रियते, साधूनां पुन स्थापनाकुलसंरक्षणे न किञ्चित्प्रयोजन यतस्तत्र यावन्मात्रस्याहारस्य पाक. क्रियते तत्सर्वं प्रतिदिवसमुपयुज्यते, न तु तानि कुलानि संचयित्वा साधुप्राघूर्णकागमने सर्वमेकमुखेनैव प्रयच्छन्ति, एवं चोदकेनोक्ते आचार्य आह-'गिहिणो चिंता' गृहिणश्चिन्ता भवति, यदुत—एते साधवः प्राघूर्णकाद्यागमने आगच्छन्ति ततश्च एतेभ्यो यत्नेन देयमिति, एवंविधामादरपूर्विकां चिन्तां करोति। यच्चोक्तं-तरुणा बहिर्ग्रामे किमिति हिण्डन्ति?, 'दिट्ठंतो तत्थ खुज्जबोरीए' स च दृष्टान्तो वक्ष्यमाण.। 'आपुच्छिऊण गमणं' ति तत्र च बहिर्ग्रामान्तौ आचार्यमापृच्छ्य गन्तव्यं, यत. 'दोसा य इमे अणापुच्छे' त्ति दोषा अनापृच्छायाम् ,एते च वक्ष्यमाणलक्षणा भवन्ति। इदानीं भाष्यकार· प्रतिपदमेतानि द्वाराणि व्याख्यानयति। तत्र च यदुक्तं दृष्टान्तोऽगार्याः, स उच्यते—"एगो वाणिओ परिमिअं भत्तं अप्पणो महिलाए देइ, सा य ततो दिणे दिणे थोवं थोवं अवणेइ, किं निमित्तं?, जदा एयस्स अवेलाए मित्तो वा सही वा एइस्सइ तदा किं सक्का आवणाउ आणेउं?, एवं सव्वतो संगहं करोति। अएणया तस्स अवेलाए पाहुणगो आगतो, ताहे सो भणइ—किं कीरउ? रयणी वट्टइ, णीसंचाराओ रत्थाओ, ताहे ताए भणिअं-मा आतुरो हाहि। ताहे तस्स पाहुणगस्स उवक्खडिअं, गतो तग्गुणसहस्सेहिं वड्ढंतो भत्तारोऽवि से परितुट्ठो। एवं आयरिआ वि ठवणकुलाइं ठवेंति, जेण अवेलागयस्स पाहुणयस्स तेहिंतो आणेउं दिज्जइ, तेण तरुणा संतेसु वि कुलेसु बाहिरगामे हिंडंति त्ति। इदाणिं एसिं चेव विवरीओ भण्णइ, अएणो अएणाए अगारीए परिमिअं देइ सा य तओ मज्झाओ थोवं थोवं न गेएहइ, तओ पाहुणए आगए विसूरेति।

अमुमेवार्थं गाथाद्वयेनोपसंहरन्नाह—

(भा०) परिमिअभत्तपदाणे, नेहादवहरइ थोवँ थोवं तु।
पाहुणवियालआगम,विसन्न आसासणादाणं ॥१३८॥

परिमितभक्तप्रदाने सति साऽगारी स्नेहादि-घृतादि स्तोकं स्तोकमपहरति। पुनश्च प्राघूर्णकस्य विकालागमने विषण्ण· स्त्रिया आश्वासित· 'दाण' ति तया स्त्रिया भक्तदानं दत्तं प्राघूर्णकायेति।

(भा०) एवं पीइविवुड्ढी, विवरीयम्मेण होइ दिट्ठंतो।
लोउत्तरे विसेसो, असंचया जेण समणा उ ॥ १३९ ॥

एवं तयोर्दम्पत्यो प्रीतिवृद्धि· संजाता, विपरीतश्चान्येन

प्रकारेण भवति दृष्टान्तः । एव तावद्यदि गृहस्था अपि सञ्चयपरा भवन्ति—अनागतमेव चिन्तयन्ति, साधुना पुनः कुलादिशब्दबलेन सुतरामनागतमेव चिन्तनीयं, यदि परं लोकोत्तरेऽयं विशेष., यदुत निःसञ्चयाः सुतरां चिन्तामाचार्या वहन्तीति । "पुच्छा दिट्ठंते" त्ति भणिअं ।

इदानीं "पुच्छा गिहिणो चिंत" त्ति गाथायाः प्रथमावयवं ( भाष्यकारः ) व्याख्यानयन्नाह—

जणलावो परगामे, हिंडन्ताऽऽणेंति वसइ इह गामे ।
दिज्जइ बालाईणं, कारणजाए य सुलभं तु ॥ १४० ॥

यस्योद्रेकेन पृष्टमासीत्तत्रेदमुत्तरं-जनानामालापो जनाऽऽलापो लोक एव ब्रवीति, यदुत परग्रामे हिण्डयित्वाऽऽनयन्ति-अत्र भुञ्जते । 'वसहि इह गामे' त्ति वसति केवलमत्र एतेषां साधूनाम् । ततश्च 'दिज्जइ' बालादीनां दुग्धम्, आदिशब्दात्प्राघूर्णकादयो गृह्यन्ते, एवंविधां चिन्तां गृहस्थः करोति । ततश्च 'कारणजाते य सुलभं तु' त्ति एवंविधायां चिन्तायां प्राघूर्णकादिकारणे उत्पन्ने घृतादि सुलभं भवतीति ।

(भाष्यकार) आह—किं पुन कारणं प्राघूर्णकानां दीयते ?, तथा चायमपरो गुण.—

पाहुणविसेसदाणे, निज्जर कित्ती अ इहर विवरीयं ।
पुव्वं चमढणसिग्गा, न देंति संतं पि कज्जेसु ॥१४१॥

प्राघूर्णकाय विशेषदाने सति निर्जरा-कर्मक्षयो भवति, इहलोके च कीर्तिश्च भवति । 'इहर विवरीयं' त्ति यदि प्राघूर्णकविशेषदानं न क्रियते ततश्च निर्जराकीर्त्ती न भवत । एवं प्राघूर्णकविशेषदानं न भवति यस्मात्पूर्वं 'चमढणसिग्गा' ततश्च 'न देंति संतं पि कज्जेसु' गिहिणो चिंत' त्ति वक्खाणिअं ।

इदानीं (भाष्यकार.) कुब्जवदरीदृष्टान्तं व्याख्यानयन्नाह—

गामब्भासे बयरी, नीसंदकडुप्फला य खुज्जा य ।
पक्कामालसडिंभा, घायंति घरे गया दूरं ॥१४२॥

"एगो गामो तत्थ खुज्जबोरी, सा य नाम निज्जासिण कडुया । तत्थ चेडरूवाणि भणंति-वजामो बोराणि खामो । तत्थ खुज्जबोरीविलग्गाइं ताइं डिंभरूवाणि तूवराणि वि खायंति, न य पज्जत्तीए होइ । अण्णाणि भणंति-किं एएहिं, ताहे अडविं गतया तत्थ बोराणि धरणीए खाइऊण बहूणि पोट्टलगा बंधिऊण आगया सिग्घतरं जाव इमे भाडेना चेव अच्छंति न तत्तिया जाया। ताहे ते तेसिं अन्नेसिं च देंति । एव चेव इमं सत्तं चमढिअं, एत्थ अविलक्कुगे घेचूण चेव आगच्छंति दिवस च हिंडियव्वं एव किलेसो अप्पगं च भत्तं होति । जहा ते अणालसचेडा (तहा जे तरुणा) आयपरहिआवहा ते बाहिरगामभिक्खायरिअ जंति, ताहे ते अचमढिअगामाओ खीरं दहिमाइयाइं घेचूण लहुं आगया उग्गमदोसाई य जढा होंति, बालवुड्ढा य अणुकंपिया होंति, वीरियायारो य अणुचिन्नो हाइ तम्हा गतव्वं बाहिरगामे हिंडएहिं तरुणएहिं ।

इदानीममुमेवार्थं (भाष्यकार ) गाथाभिरुपसंहरन्नाह—.

गामब्भासे बयरी, नीसंदकडुप्फला य खुज्जा य ।
पक्कामालसडिंभा, खायंतियरे गया दूरं ॥१४३॥
सिग्घयरं आगमणं, तेसिंऽण्णेसिं च देंति सयमेव ।
खायंती एमेव उ,आयपरहिआवहा तरुणा ॥१४४॥
खीरदहिमाइयाणं, लंभो सिग्घतरगं च आगमणं ।
पइरिक्क उग्गमाई, विजढा अणुकंपिआ इयरे ॥१४५॥

ग्रामभ्यासे बदरी सा च निस्स्वादुकटुकफला कुब्जा च । सा च फलिता, तत्र च फलानि 'पक्काम' त्ति तानि च फलानि पक्कानि आमानि च पक्कामानि—अर्द्धपक्कानीत्यर्थः, ये अलसा डिम्भास्ते भक्षयन्ति । 'इयर' त्ति अनलसाः—उत्साहवन्तो डिम्भास्ते दूरं गताः । तेषां च शीघ्रतरमागमनं संजातं, ततश्च बाह्यन् आगत्य "तेसिं अण्णेसिं च देंति' तेषामलसशिशूनामन्येषां च ददति, स्वयमेव च भक्षयन्ति । एवमेव तरुणा अपि आत्मपरयोर्हितमावहन्तीति आत्मपरहितावहास्तरुणा 'एवं तरुणानां क्षीरदध्यादीनां लम्भ. शीघ्रतरं चागमनम् । "पइरिक्क' ति प्रचुरतरं लभन्ते, उद्गमादयश्च दोषा. परित्यक्ता भवन्ति तथाऽनुकम्पिताश्चेतरे बालादयो भवन्तीति उक्तः कुब्जबदरीदृष्टान्त. ।

इदानीम् " आपुच्छिऊण गमणं " ति
( भाष्यकारः ) व्याख्यानयन्नाह—

आपुच्छिअ उग्गाहिअ, अण्णं गामं वयं तु वच्चामो ।
अण्णं च अपज्जत्ते, होंति अपुच्छे इमे दोसा ॥१४६॥

आपृच्छय गुरुमुद्ग्राहितपात्रका एवं भणन्ति, यदुत अन्यं ग्रामं वयं व्रजाम.,'अण्णं च अपज्जत्ते' त्ति यदि तस्मिन् ग्रामे पर्याप्त्या न भविष्यति ततस्तस्मादपि अन्यं ग्रामं गमिष्याम. । "आपुच्छिऊण गमणं" ति भणियं, इदाणिं "दोसा य इमे अणापुच्छि" त्ति व्याख्यानयन्नाह, दोषा एतेऽनापृच्छयगतानां भवन्ति ।

के च ते दोषा ? ( भाष्यकारस्तान् ) व्याख्यानयन्नाह—

तेणाएसगिलाणे, सावय इत्थी नपुंसमुच्छा य ।
आयरिअबालवुड्ढा, सेहा खमगा परिच्चत्ता ॥ १४७ ॥

कदाचिदन्यग्रामान्तराले व्रजतां स्तेना भवन्ति, ततश्च तद्ग्रहणे ( तत्र गमने । ) उपधिशरीरापहरणं भवति, आचार्योऽप्यकथितो न जानाति कया दिशा गता ? इति, ततश्च दुःखान्वेषणं करोति । अथवा-आदेश.—प्राघूर्णक आयात., तं चानापृच्छय गता, 'ते य आयरिया एवं भणंता जहा पाहुणयस्स वट्टविह, अहवा गिलाणस्स पाउग्गं गेण्हह, अहवा अंतराले सावयाणि अत्थि, तेहिं भक्खियाणि होंति ; अहवा तत्थ गामे इत्थिदोसा नपुंसगदोसा वा अहवा मुच्छाए पडेज्जा ताहे न नज्जइ, अपुच्छिए कयराए दिसाए गय त्ति न नज्जति ।' ततश्चानापृच्छय गच्छतां बालवृद्धसेहक्षपका. परित्यक्ता भवन्ति । यत आचार्यादीनां प्रायोग्यमार्गं नानयन्ति अनुकूलत्वात् न च प्रच्छन्नं कृतं येनाऽऽनयन्ते । यत एते दोषा. परित्यागजनितास्तस्मादेनद्दोषभयात्—

आयरिए आपुच्छा, तस्संदिट्ठे व तम्मि उवसंते ।
चेइयगिलाणकज्ज—इएसु गुरुणो अ निग्गमण ॥ २४० ॥

तस्मादाचार्यमापृच्छ्य गन्तव्यम्।अथाचार्य कथञ्चिन्न भवति'तस्संदिट्ठे व'त्ति तेनाचार्येण यः संदिष्ट यथाऽमुमापृच्छ्य गन्तव्यं ततस्तमापृच्छ्य व्रजन्ति । तस्मिन्नमनि—आचार्ये अविद्यमाने कचिन्निर्गते, केन पुनः कारणेनाचार्यो निर्गच्छति ? अत्र आह—' चेइय' चैत्यवन्दनार्थं ग्लानादिकार्येषु गुरोर्निर्गमनं भवति ।

अथाचार्येण गच्छता न कश्चिन्नियुक्तस्ततः ?—

भसइ पुव्वनिउत्ते, आपुच्छित्ता वयंति ते समणा ।
अणभोगे आसन्ने, काइयउच्चारभोमाई ॥ २४१ ॥

अभणिते पूर्वनियुक्तान्—कर्स्मिश्चिद्भिक्षावेलायां य प्रागेव नियुक्त आस्ते तमापृच्छ्य व्रजन्ति त श्रमणा भिक्षार्थम्।'अणाभोग ' त्ति अनाभोगेन-अत्यन्तस्मृतिभ्रंशेन गता. ततः 'आसन्ने' त्ति आसन्ने भूमिप्रदेशे यदि स्मृतं तत आगत्य पुन. कथयित्वा यान्ति.'काइय'त्ति कायिकार्थे यो निर्गत साधुस्तस्मै कथयन्ति, यदुत वयममुकत्र गता. । 'उच्चारभोमादि' त्ति संज्ञाभूमिं यो गतस्तस्मै कथयन्ति , यदुत कथनीयमहममुकत्र गत इति । आदिग्रहणात्प्रथमालिकार्थं वा यो गतस्तस्य वा हस्ते संदिशन्ति ।

दव्वमाइनिग्गयं वा, सेज्जायर पाहुणं च अप्पाहे ।
असई दूरगओ वि अ,नियत्त इहरा उ ते दोसा ॥२४२॥

द्रवं-पानकं तदर्थे निर्गतो य. साधुस्तं दृष्ट्वा कथयन्ति, 'सेज्जायर पाहुणं च अप्पाहे' त्ति शय्यातरं वा दृष्ट्वा संदिशन्ति प्राघूर्णकं वा साध्वादि दृष्ट्वा संदिशन्ति , यतः कथनीयं मम विस्मृतमिति । यदा त्वेतान् गच्छन्न पश्यति तदा दूरगतः ' वि अ णियत्तइ ' त्ति दूरगत. सन्निवर्त्तन,'इहरा उ ' त्ति यदि न निवर्त्तते तत ' त दोस ' त्ति ' ते पूर्वोक्ताः स्तेनादयो दोषा भवन्तीति ।

अन्नं गामं च वए, इमाइँ कज्जाइँ तत्थ नाऊणं ।
तत्थ वि अप्पाहणया, नियत्तई वा सई काले ॥२४३॥

अथासौ साधुस्तस्माद्ग्रामादन्यं ग्रामं व्रजेत्, एतानि कार्याणि-वक्ष्यमाणलक्षणानि , कानि ?-' दूरट्ठिअखुड्डुलए ' इत्येवमादीनि ' तत्रे ' ति तस्मिन् ग्रामे योऽसावभिप्रेतो ज्ञात्वा-विज्ञाय , ततश्च किं कर्त्तव्यमित्यत आह-तत्रापि-अन्यस्मिन् ग्रामे व्रजता 'अप्पाहणया ' संदेशकस्तथैव दातव्य । अथ कश्चित्तत्रास्ति यस्य हस्ते संदिश्यते ततो निवर्त्तते वा क्रियते । कदा ? अत आह—सति काले विद्यमाने ' पहुप्पंति ' काले तत्तदनुष्ठीयते ।

यदुक्तम् , एतानि कार्याणि तत्र ज्ञात्वाऽन्यत्र ग्रामे व्रजन्ति। तानि दर्शयन्नाह—

दूरट्ठिअखुड्डलए, नव भड अगणी य पंत पडिणीए ।
पाओग्गकालइक्कम, एक्कगलंभो अपज्जत्तं ॥२४४॥

प्रथम गाथार्द्धं सुगमम् । एतानि दूरस्थितादीनि कारणानि अर्द्धपथ एव ज्ञातानि, कदाचिद्गत. सन् तत्र ' पाउग्ग त्ति तत्र ग्रामे प्रायोग्यमाचार्यादीनां न लब्धं ततोऽन्यत्र व्रजति. 'कालातिक्कम' त्ति भिक्षाकालस्य वाऽतिक्रमो जात., एकस्य वा साधोस्तत्र भोजनलाभो जातस्ततोऽन्यग्रामं व्रजन्ति । ' अपज्जत्तं ' ति न वा पर्याप्त्या तत्र भक्तजातं लब्धं, पानकं वा न लब्धम् , एभिरनन्तरोक्तैः कारणैरन्यग्रामं व्रजन्तीति ।

पाउग्गाईणमसइ, संविग्गं सन्निमाइ अप्पाहे ।
जइ य चिरं तो इयरे, ठविंतु साहारणं भुंजे ॥ २४५ ॥

एवमसौ प्रायोग्यादीनाम् असति अन्यग्रामं व्रजति, व्रजंश्च संविग्नं-साधुं यदि पश्यति ततस्तस्य हस्ते संदिशति. सञ्ज्ञी—श्रावकस्तस्य हस्ते संदिशत्यन्यस्य वा आदिग्रहणात्-पूर्ववच्छेषम् । एवं तावद्भिक्षामटतां विधिरुक्त । ये पुनर्वसतौ तिष्ठन्ति साधवस्तैः किं कर्त्तव्यमित्यत आह-' जइ य चिरं ' यदि च चिरं तेषां ग्रामं गतानां तत इतरं-वसतिनिवासिन साधवः ' ठवेन्तु साहारणं ' यद्गच्छसाधारणं विशिष्टं किञ्चित्तत्स्थापयित्वा शेषमपरं प्रान्तप्रायं भुञ्जते ।

अथ तथाऽपि चिरयन्ति—

जाए दिसाए उ गया, भत्तं घेत्तुं तओ पडियरंति ।
अणपुच्छनिग्गयाणं, चउद्दिसिं होइ पडिलेहा ॥ २४६ ॥

' जाए दिसाए उ गया ' यया दिशा भिक्षाटनार्थं गतास्तया दिशा गृहीतभक्तपानका. साधव. ' पडियरंति ' त्ति प्रतिजागरणां-निरूपणां कुर्वन्ति । अथ तु ते भिक्षाटका अनाभोगेनाकथयित्वैव गतास्तत किं कर्त्तव्यमित्यत आह-अनापृच्छ्य निर्गतानां भिक्षाहिण्डकानां चतसृष्वपि दिक्षु प्रतिजागरणं-निरूपणं कर्त्तव्यं साधुभि. ।

प्रतिजागरणगमनविधि कः ?,

पंथेणेगो दो उ-प्पहेण सद्दं करेंति वच्चंता ।
अक्खरपडिसाडणया, पडियरणिअरेसि मग्गेणं॥२४७॥

पथा—मार्गेण प्रसिद्धेन एक साधु प्रव्रजति, द्वौ साधू उत्पथेन—उन्मार्गेण व्रजतः , वर्त्तन्या एक एकया दिशाऽन्यश्चान्यया । ते च त्रयोऽपि व्रजन्त शब्दं कुर्वन्ति । ते च व्रजन्त. स्तेनादिना नीयमानाः साधवः किं कुर्वन्तीत्यत आह-' अक्खर ' त्ति वर्त्तिन्यामक्षराणि लिखन्त पादादिना व्रजन्ति, ' परिसाडणय ' त्ति परिशाटनं वस्त्रादे कुर्वन्तो व्रजन्ति येन कश्चित्तेन मार्गेणान्वेषयन्ति । ' पडिअरणियरेसिं ' ति इतरेषामन्वेषणार्थं निर्गतानां साधूनां मार्गेण तत्कृतेन चिह्नेन प्रतिजागरणं कर्त्तव्यम् ।

गामे गंतुं पुच्छे, घरपरिवाडीएँ जत्थ उ न दिट्ठा ।
तत्थेव बोलकरणं, पिंडियजणसाहणं चेव ॥ २४८ ॥

यदा तु पुनस्तेषां स्तेननीतानां चिह्न न किञ्चित्पश्यति तदाऽपि ग्राममेव गत्वा पृच्छन्ति , कथं ?, गृहपरिपाट्या, ' जत्थ उ ण दिट्ठ ' त्ति यत्र न दृष्टास्तस्मिन् ग्राम . न च तद्ग्रामनिर्गतानां वार्त्ता तत्रैव ' बोलकरणं ' बोल कुर्वन्ति, पश्चाच्च ' पिंडितजणसाहणं ' पिण्डितो-मिलितो यो जनस्तस्य कथयन्ति, यदुत अस्मिन् ग्रामे प्रव्राजिता भिक्षार्थं प्रविष्टा न च तेषां पुनरस्मात् ग्रामाद्वार्त्ता श्रूयते ।

एवं तैस्तैरुपैरेतद्व च कृत भवति अन्यग्रामेऽटद्भिः—

एवं उग्गमदोसा, विजढा पइरिकया अणोमाणं ।

१-अत्र आत्मकृत एकत्व बहुत्व च साधुसंघाटकपरत्वेनोक्तम् ।

मोहतिगिच्छा अ कया, विरियारीय अणुजिण्णो । २४८ ॥

एवम्—अन्यग्रामे भिक्षाटनेन उद्गमदोषा:—आधाकर्मादय: 'विजढा' परित्यक्ता भवन्ति । 'पउरिक्कय' त्ति प्रचुरस्य भक्तादेर्लाभो भवति 'अणोमाणं' ति न वा अपमानम्-अनादरकृतं भवति लोके । तथा मोहचिकित्सा च कृता भवति, श्रमाऽऽतपवैयावृत्यादिभिर्मोहस्य निग्रहः कृतो भवति-अवकाशो दत्तो न भवतीति । 'विरियायारो य' वीर्याचारश्च अनुचीर्ण:-अनुष्ठितो भवति ।

अणुकंपायरियाई, दोसा पइरिक्कजयणसंसट्ठं ।

पुरिसे काले खमणे, पढमालिय तीसु ठाणेसु ॥ २५० ॥

एवमुक्ते सति चोदक आह-सत्यमाचार्यादयोऽनुकम्पिता भवन्ति किन्तु त एव वृषभा परित्यक्ता भवन्ति । आचार्योऽप्यनेनैव वाक्येन प्रत्युत्तरं ददाति काका-' अणुकंपायरिआइ' त्ति एवमाचार्यादीनामनुकम्पा, यत एव परलोके निर्जरा इह लोके प्रशंसा । पुनरप्याह पर -' दोसा ' इति भवतु नाम परलोकाऽ( चार्या ) नुकम्पा किन्तु क्षुत्पीडा पिपासापीडा च तदवस्थैव । आचार्योऽप्याह-क्रियत एव प्रथमालिका , किन्तु ?-त्रिषु स्थानेषु, कानि च तानि ?, अत आह-'पुरिसे ' त्ति पुरुष:—असहिष्णु , पुरुषो यद्यसहिष्णुस्तत: करोति,काले-उष्णकालादौ, यद्युष्णकालस्तत करोति, 'खवण' त्ति कदाचित्क्षपको भवति अक्षपको वा । यदि क्षपकस्तत: करोति , एवमेतेषु त्रिषु स्थानकेषु प्रथमालिका करोति । क्व करोति ? आचार्योऽप्यनेनैव वाक्येनोत्तरं ददाति । कथं वा करोति ? , अत आह- ' पतिरिक्कजयण'त्ति प्रतिरिक्ते एकान्ते यतनया करोति , पुनरप्याह पर -आचार्यादीनां तेन तद्भक्तं संसृष्टं कृतं भवति , आचार्योऽप्यनेनैव वाक्येनोत्तरं ददाति-" पतिरिक्कजयणसंसट्ठं ' एकान्ते यतनयाऽसंसृष्टं च यथा भवति तथा ' पढमालियं ' ति-मात्रके प्रथममाकृष्य भुङ्क्ते हस्तेन वा द्वितीयहस्ते कृत्वा, अकारप्रश्लेष आचार्यवाक्ये द्रष्टव्य ।

इदानीमेतामेव गाथां भाष्यकार: प्रतिपदं व्याख्यानयन्नाह-तत्र प्रथमावयवव्याचिख्यासुराह—

चोयगवयणं अप्पा-णुकंपिओ ते अ भे परिच्चत्ता ।

आयरियऽणुकंपाय, परलोए इह पसंसणया ॥१४८॥

चोदकस्य वचनं, किं तद् ?, आत्मैवैवमनुकम्पित आचार्येण, ते च भगवता परित्यक्ता भवन्ति । आचार्योऽप्याह-आचार्यानुकम्पया परलोको भवति , इहलोके च प्रशंसा भवति । ' अणुकंपाऽऽयरियाई ' यख्याणिअ ।

इदानीं (भाष्यकार ) ' दोस ' त्ति व्याख्यानयन्नाह—

एवं पि अपरिचत्ता, काले खवणे अ असहुपुरिसे य ।

कालो गिम्हो उ भवे, खमगो वा पढमबिइएहिं ॥१४६॥

चोदक: पुनरप्याह—एवमपि ते परित्यक्ता एव,यत: क्षुधादिना बाध्यन्ते । आचार्योऽप्याह—'काले' त्ति काले,उष्णकाले करोति ' खवण' त्ति क्षपको यदि भवति तत स करोति प्रथमालिकाम् असहिष्णुश्च पुरुषो यदि भवति तत स करोति प्रथमालिकाम् ,तत्र कालो—ग्रीष्मो यदि भवेत्,पुरुष: क्षपको यदि भवेत् , ' पढमबिइएहिं ' ति अत्र पुन केन कारणेनासहिष्णुर्भवति ?—' पढमे ' त्ति प्रथमपरीषहेण बाध्यमान: , क्षुधेत्यर्थ । द्वितीयपरीषहेण तृषा बाध्यमान:-पिपासया पीड्यमानोऽसहिष्णुर्भवति ।

अत्राऽऽह पर:-

(भा०) जइ एवं संसट्ठं, अप्पत्ते दोसिणाइणं गहणं ।

लंबणभिक्खा दुविहा, जहन्नमुक्कोस तिअपणए ॥१५०॥

यद्येवमसौ बाह्यत एव प्रथमालिकां करोति ततो भक्तं संसृष्टं कृतं भवति । आचार्योऽप्याह ' अप्पत्ते दोसिणादिणं गहणं ' अप्राप्तायामेव भिक्षावेलायां पर्युषितान्नग्रहणं कृत्वा प्रथमालयति । कियत्प्रमाणां पुनः प्रथमालिकां करोत्यसौ ? द्विविधा प्रथमालिका भवति-' लंबणभिक्खा दुविहा ' लम्बनै:-कवलैर्भिक्षाभिश्च द्विविधा प्रथमालिका भवति । इदानीं जघन्योत्कृष्टत: प्रमाणप्रतिपादनायाह-' जहन्नमुक्कोस तिअपणए ' यथासंख्येन जघन्यतस्त्रय कवलास्तिस्रो वा भिक्षा:, उत्कृष्टत: पञ्च कवला पञ्च वा भिक्षा: ।

इदानीं तेन सङ्घाटकेन किं वस्तु केषु पात्रकेषु गृह्यते ? का वा प्रथमालिकाकरणे यतना क्रियते ?, एतत्प्रतिपादयन्नाह—

एगत्थ होइ भत्तं, बिइअम्मि पडिग्गहे दवं होइ ।

पाउग्गायरियाई, मत्ते बिइए उ संसत्तं ॥ २५१ ॥

एकस्मिन् पात्रके भक्तं गृह्णाति , द्वितीये च पतद्ग्रहे द्रवं भवति । तथा ' पाउग्गायरियाई मत्ते ' त्ति प्रायोग्यमाचार्यादीनामेकस्मिन् मात्रके भक्तं गृह्यते । ' बितिए उ संसत्त ' द्वितीये तु मात्रके संसृष्टं किञ्चित्पानकं गृह्यते ।

जइ रित्तो तो दवम-त्तगम्मि पढमालियाए करणं तु ।

संसत्तगहण दवदु-ल्लहे य तत्थेव जं पत्तं ॥ २५२ ॥

यदि रिक्त: संसक्तद्रवमात्रकस्ततस्तस्मिन् प्रथमालिकाया: करण , ' संसत्तगहणं ' ति अथ तस्मिन् द्रवमात्रके संसक्तद्रवग्रहणं कृतं ततस्तत्रैव पात्रके यत्प्रान्तं तद् भुङ्क्ते । 'दवदुल्लभ य' त्ति अथ दुर्लभं ( द्रवं ) पानकं तत्र क्षेत्रे ततश्च तत्रापि संसक्तमात्रके पानकाकाङ्क्षिणि सति ' तत्थेव ' त्ति तस्मिन्नेव भक्तपतद्ग्रहे यत्प्रान्त: तद्धस्तेनाकृष्यान्यस्मिन् हस्ते कृत्वा समुद्दिशति ।

एव त्वसौ संघाटक: प्रथमालिकां करोति-

अंतरपल्लीगहिअं पढमागहियं व सव्वं भुंजेज्जा ।

धुवलंभसंखडीयँ व, जं गहिअं दोसिणं वावि ॥ २५३ ॥

अन्तरपल्ली-तस्माद् ग्रामात्परतो योऽन्य आसन्नग्रामस्तत्र यद् गृहीतं तद्भुङ्क्ते पुनस्तत्तत्र क्षेत्रातिक्रान्तत्वादभोज्यं भवति । ' पढमागहिअ व ' त्ति प्रथमाया वा पौरुष्यां यद् गृहीतं तत्सर्वं भुङ्क्ते तृतीयपौरुष्यामकल्प्य यतस्तद्भवति । ' धुवलंभ संखडीय व ' ध्रुवो वा—अवश्यं भावी-अत्र संखड्या लाभो भविष्यतीति मत्वा , ततश्च यद् गृहीतं ' दोसिण वावि ' पर्युषितमन्नं तत्सर्वं भुङ्क्ते ।

दरहिंडिए व भाणं, भरिअं भोत्ता पुणो वि हिंडिज्जा ।

कालो वाऽइक्कमई, भुंजेज्जा अंतरं सव्वं ॥ २५४ ॥

अर्द्धहिण्डित वा यत्पात्रक गृहीतं तद्भृतं, ततश्च तद्भु—

त्वा पुनरपि हिण्डेत । 'कालो वाऽनिक्कमति' त्ति भाजनकालो वा प्रव्रजितानामतिक्रामति यावदसौ तद्भक्तं गृहीत्वा व्रजन्ति ततश्चान्तराल एव सर्व भुक्त्वा प्रविशति । ओघ० । अनु० । आ० म० । हिण्डकत्वेन हिण्डकः । जीवे, भ० २० श० २ उ० ।

हिंडन्त-हिण्डमान-त्रि० । इतस्ततः पर्यटति, सू० २ उ० २ प्रक० ।

हिंडमाण-हिण्डमान-त्रि० । अधिगच्छति, प्रश्न० १ आश्र० द्वार ।

हिंडिऊण-हिण्डित्वा-अव्य० । अटित्वेत्यर्थे, पं० व० २ द्वार ।

हिंडिय-हिण्डित-त्रि० । विहृते, ज्ञा० १ श्रु० ६ अ० ।

हिंदु-हिन्दु-पुं० । सिन्धुनदोपलक्षितदेशवासिनि मनुष्ये,स च देश पश्चिमायाम् आ सिन्धुनदात्प्राच्याम् आ ब्रह्मपुत्रनदात् उत्तरस्याम् आ हिमालयदक्षिणश्रेणेर्दक्षिणस्याम् आ समुद्रात् , सिन्धुरिति संस्कृतशब्दः सिन्धोः पाश्चात्यात् आ-पे-गम्बरपारसीकयवनैर्म्लेच्छैः स्वदेशोच्चारणशैल्या हिन्दुरिति व्यवहारतो जनपदपरोऽपि तात्स्थ्यादार्यमनुष्यपरोऽजायत क्रमादेतद्देशप्रसिद्धवेदमूलकलोकागमानुसारिष्वपि बोधको जातः । ती० २० कल्प । नि० चू० ।

हिंदोल-देशी-क्षेत्ररक्षणयन्त्रे, दे० ना० ८ वर्ग ६६ गाथा ।

हिंदोलय-देशी-क्षेत्रे मृगनिषेधरवे, दे० ना० ८ वर्ग ६६ गाथा ।

हिंविअ-देशी-एकपदगमनक्रीडने , दे० ना० ८ वर्ग ६८ गाथा ।

हिंस-हिंस्र-त्रि० । हिनस्तीत्येवं शीलो हिंस्रः । स्वभावतः प्राण्यपरोपणकृति, उत्त० पाई० ७ अ० । हिंसनशीले , उत्त० ७ अ० । स्था० ।

हिंसग-हिंसक-त्रि० । जीवहिंसाकरणशीले, उत्त० १२ अ० ।

हिंसप्पयाण-हिंसाप्रदान-न० । हिंसाहेतुत्वादायुधानलविषादयो हिंसोच्यन्ते, कारणे कार्योपचारात् , तेषां प्रदानमन्यस्मै क्रोधाद्यभिभूताय अनभिभूताय वा । आव० ६ अ० । हिंस्रं हिंसाकारि शस्त्रादि, तत्प्रदानं परेषां समर्पणम् । उपा०१ अ० । हिंसनशीलानि हिंस्रकाणि,हिंसोपकरणानि-आयुधानलविषादयस्तेषां प्रदानम्-अर्पणम् । अनर्थदण्डभेदे, ध० २ अधि० ।

हिंसप्पेहि(ण्)-हिंसाप्रेक्षिन्-पुं० । हिंसां-वधं साध्वादेः प्रेक्षते गवेषयतीति हिंसाप्रेक्षी । साध्वादिवधकं पाराञ्चितार्हे, स्था० ५ ठा० १ उ० ।

हिंसविहिंसा-हिंस्रविहिंसा-स्त्री० । गौणहिंसायाम् , प्रश्न० १ आश्र० द्वार ( अस्या व्याख्या 'पाणवह' शब्दे पञ्चमभागे ८३३ पृष्ठे गता । )

हिंसा-हिंसा-स्त्री० । हिंसनं हिंसा , हिसि हिंसायामित्यस्य "इदितो नुम धातोः" इति नुमि कृते स्त्र्यधिकारे टाप् । दश० ? अ० । प्राण्युपमर्द्दे, सूत्र० २ श्रु० २ अ० । सत्त्ववधे, विशे० । व्यापादने, उत्त० ५ अ० । प्राणवियोगप्रयोजके व्यापारे, द्वा० २१ द्वा० । सूत्र० । प्रमादानाभोगाभ्यां व्यापादने, दश० ४ अ० । जीववधे,कर्म० १ कर्म० । प्रश्न० । प्रमत्तयोगात्प्राणिव्यपरोपणे, सत्त्वानां वधबन्धनादिभिः प्रकारैः पीडायाम् , स्था० ४ ठा० १ उ० । स० । आ० म० । आ० चू० । "पञ्चेन्द्रियाणि त्रिविधं बलं च , उच्छ्वासनिःश्वासमथान्यदायुः । प्राणा दशैते भगवद्भिरुक्ता-स्तेषां वियोजीकरणं तु हिंसा ॥ १ ॥" आचा० १ श्रु० ५ अ० ५ उ० । विशे० । आव० । स्था० ।

अधुना मीमांसकभेदाभिमतं वेदविहितहिंसाया धर्महेतुत्वमुपपत्तिपुरस्सरं निरस्यन्नाह—

न धर्महेतुर्विहिताऽपि हिंसा,
नोत्सृष्टमन्यार्थमपोद्यते च ।
स्वपुत्रघाताद् नृपतित्वलिप्सा—
सब्रह्मचारि स्फुरितं परेषाम् ॥ ११ ॥

इह खल्वर्चिर्मार्गप्रतिपक्षधूममार्गाश्रिता जैमिनीया इत्थमाचक्षते—या हिंसा गार्द्ध्याद् , व्यसनितया वा क्रियते, सैवाऽधर्मानुबन्धहेतुः, प्रमादसंपादितत्वात् , शौनिकलुब्धकादीनामिव । वेदविहिता तु हिंसा प्रत्युत धर्महेतुः, देवताऽतिथिपितॄणां प्रीतिसंपादकत्वात् , तथाविधपूजोपचारवत् । न च तत्प्रीतिसम्पादकत्वमसिद्धम् ; कारीरीप्रभृतियज्ञानां स्वसाध्ये वृष्ट्यादिफले यः खल्वव्यभिचारः, स तत्प्रीणितदेवताविशेषानुग्रहहेतुकः । एवं त्रिपुरार्णववर्णितच्छगलजाङ्गलहोमात् परराष्ट्रवशीकृतिरपि तद्नुकूलितदैवतप्रसादसंपाद्या । अतिथिप्रीतिस्तु—मधुपर्कसंस्कारऽऽदिसमास्वादजा प्रत्यक्षोपलक्ष्यैव । पितॄणामपि तत्तदुपयाचितश्राद्धाऽऽदिविधानेन प्रीणिताऽऽत्मनां स्वसन्तानवृद्धिविधानं साक्षादेव वीक्ष्यते । आगमश्चात्र प्रमाणम् स च देवप्रीत्यर्थमश्वमेधगोमेधनरमेधाऽऽदिविधानाभिधायकः प्रतीत एव । अतिथिविषयस्तु—" महोक्षं वा महाजं वा श्रोत्रियाय प्रकल्पयेत् " इत्यादि । पितृप्रीत्यर्थस्तु—"द्वौ मासौ मात्स्यमांसेन, त्रीन् मासान् हारिणेन तु । औरभ्रेणाथ चतुरः, शाकुनेनेह पञ्च तु " ॥ १ ॥ इत्यादि ।

एवं पराभिप्रायं हृदि संप्रधार्याऽऽचार्यः प्रतिविधत्ते—'नधर्म' त्यादि,विहिताऽपि-वेदप्रतिपादिताऽपि;आस्ता तावदविहिता, हिंसा प्राणिप्राणव्यपरोपणरूपा, न धर्महेतुः-न धर्मानुबन्धनिबन्धनम् । यतोऽत्र प्रकट एव स्ववचनविरोधः । तथाहि-हिंसा चेद् धर्महेतुः कथम् ? ' धर्महेतुश्चेद् हिंसा कथम् ' ? "श्रूयतां धर्मसर्वस्वं , श्रुत्वा चैवावधार्यताम् " इत्यादि । न हि भवति माता च, वन्ध्या चेति । हिंसा कारणं धर्मस्तु तत्कार्यमिति पराभिप्रायः, तच्चायं निरपाय , यतो—यद् यस्यान्वयव्यतिरेकावनुविधत्ते तत् तस्य कार्यम् ; यथा मृत्पिण्डादेर्घटादिः । न च धर्मो हिंसात एव भवतीति प्रातीतिकम् ; तपोविधानदानध्यानादीनां तदकारणत्वप्रसङ्गात् । अथ न वयं सामान्येन हिंसा धर्महेतुं ब्रूमः, किन्तु विशिष्टामेव; विशिष्टा च सैव-या वेदविहिता इति चेत्-ननु तस्या धर्महेतुत्वं किं वध्यजीवाना मरणाऽभावेन, मरणेऽपि तेषामार्त्तध्यानाऽभावात् सुगतिलाभेन वा ? । नाद्य पक्षः -प्राणत्यागस्य तेषा साक्षाद्दृश्यमा-

णत्वात् । न द्वितीयः-परचेतोवृत्तीनां दुर्लक्ष्यतयाऽऽर्त्तध्यानाऽभावस्य वाङ्मात्रत्वात्, प्रत्युत हा ! कष्टमस्ति-न कोऽपि कारुणिकः शरणम्? इति स्वभाषया विरसमारसत्सु तेषु वदनदैन्यनयनतरलताऽऽदीनां लिङ्गानां दर्शनाद् दुर्ध्यानस्य स्पष्टमेव निष्टङ्कयमानत्वात् । अथेत्थमाचक्षीथाः-यथा अयःपिण्डो गुरुतया मज्जनाऽऽत्मकोऽपि तनुतरपत्राऽऽदिकरणेन संस्कृतः सन् जलोपरि प्लवते, यथा च मारणाऽऽत्मकमपि विषं मन्त्राऽऽदिसंस्कारविशिष्टं सद् गुणाय जायते, यथा वा दहनस्वभावोऽप्यग्निः सत्यादिप्रभावप्रतिहतशक्तिः सन् नहि दहति । एवं मन्त्राऽऽदिविधिसंस्काराद् न खलु वेदविहिता हिंसा दोषपोषाय । न च तस्याः कुत्सितत्वं शङ्कनीयम्, तत्कारिणां याज्ञिकानां लोके पूज्यत्वदर्शनादिति । तदेतद् न दक्षाणां क्षमते क्षोदम्, वैषम्येण दृष्टान्तानामसाधकतमत्वात् । अय पिण्डादयो हि पत्राऽऽदिभावान्तराऽऽपन्नाः सन्तः सलिलतरणादिक्रियासमर्थाः, न च वैदिकमन्त्रसंस्कारविधिनाऽपि विशस्यमानानां पशूनां काचिद् वेदनाऽनुत्पादादिरूपा भावान्तराऽऽपत्तिः प्रतीयते । अथ तेषां वधाऽनन्तरं देवत्वाऽऽपत्तिर्भावान्तरमस्त्येवेति चेत्-किमत्र प्रमाणम्? । न तावत् प्रत्यक्षम्-तस्य संबद्धवर्तमानार्थग्राहकत्वात्-"सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिना" इति वचनात् । नाप्यनुमानम्-तत्प्रतिबद्धलिङ्गानुपलब्धेः । नाप्यागमः-तस्यापि विवादाऽऽस्पदत्वात् । अर्थापत्त्युपमानयोस्त्वनुमानान्तर्गततया तद्दूषणेनैव गतार्थत्वात् । अथ भवतामपि जिनाऽऽयतनाऽऽदिविधाने परिणामविशेषात् पृथिव्यादिजन्तुजातघातनमपि यथा पुण्याय कल्प्यते इति कल्पना, तथा अस्माकमपि किं नेष्यते? । वेदोक्तविधिविधानरूपस्य परिणामविशेषस्य निर्विकल्पं तत्रापि भावात् । नैवम्, परिणामविशेषोऽपि स एव शुभफलो, यत्राऽनन्योपायत्वेन यतनयाऽप्रकृष्टप्रतनुचैतन्यानां पृथिव्यादिजीवानां वधेऽपि स्वल्पपुण्यव्ययेनाऽपरिमितसुकृतसंप्राप्तिः, न पुनरितरः । भवत्पक्षे तु सत्स्वपि तत्तच्छ्रुतिस्मृतिपुराणेतिहासप्रतिपादितेषु यमनियमादिषु स्वर्गावाप्त्युपायेषु तांस्तान् देवानुद्दिश्य प्रतिप्रतीकं कर्तनकदर्थनया कान्दिशीकान् कृपणपञ्चेन्द्रियान् शौनिकाधिकं मारयतां कृत्स्नसुकृतव्ययेन दुर्गतिमेवानुकूलयतां दुर्लभः शुभपरिणामविशेषः, एवं च य कश्चन पदार्थे किञ्चित्साधर्म्यद्वारेणैव दृष्टान्तीकुर्वतां भवतामतिप्रसङ्गः सङ्गच्छते । न च जिनाऽऽयतनविधापनादौ पृथिव्यादिजीववधेऽपि न गुणः । तथाहि-तद्दर्शनाद् गुणाऽनुरागितया भव्यानां बोधिलाभः, पूजाऽतिशयविलोकनाऽऽदिना च मनःप्रसादः, ततः समाधिः, ततश्च क्रमेण निःश्रेयसप्राप्तिरिति । तथा च भगवान् पञ्चलिङ्गीकारः-

"पुढवाइयाण जइ वि हु, होइ विणासो जिणालयाहिन्तो ।
तव्विसया वि सुदिट्ठि-स्स णियमओ अत्थि अणुकंपा ॥१॥
एयाहिंतो बुद्धा, विरया रक्खन्ति जेण पुढवाई ।
इत्तो निव्वाणगया, अवाहिया आभवमिमाणं ॥ २ ॥
रोगिसिरावेहो इव, सुविज्जकिरिया व सुप्पउत्ताओ ।
परिणामसुंदरच्चिय, चिट्ठा से बाहजोगे वि ॥ ३ ॥" इति ।

वैदिकवधविधाने तु न कश्चित्पुण्यार्जनानुगुणं पश्यामः । अथ विप्रेभ्यः पुरोडाशाऽऽदिप्रदानेन पुण्यानुबन्धी गुणोऽस्त्येव इति चेत्, न; पवित्रसुवर्णाऽऽदिप्रदानमात्रेणैव पुण्योपार्जनसम्भवात् कृपणपशुगणव्यपरोपणसमुत्थमांसदानं केवलं निर्घृणत्वमेव व्यनक्ति । अथ न प्रदानमात्रं पशुवधक्रियायाः फलं, किन्तु भूत्यादिकम्, यदाह श्रुतिः-"श्वेतं वायव्यमजमालभेत भूतिकामः" इत्यादि । एतदपि व्यभिचारपिशाचग्रस्तत्वादप्रमाणमेव, भूतेश्चौपयिकान्तरैरपि साध्यमानत्वात् । अथ तत्र सत्रे हन्यमानानां छागादीनां प्रेत्य सद्गतिप्राप्तिरूपोऽस्त्येवोपकार इति चेत्; वाङ्मात्रमेतत्, प्रमाणाऽभावात्; नहि ते निहताः पशवः सद्गतिलाभमुदितमनसः कस्मैचिदागत्य तथाभूतमात्मानं कथयन्ति । अथास्त्यागमाऽऽख्यं प्रमाणम् । यथा-"ओषध्यः पशवो वृक्षा-स्तिर्यञ्चः पक्षिणस्तथा । यज्ञार्थं निधनं प्राप्ताः, प्राप्नुवन्त्युच्छ्रितं पुनः" ॥ १ ॥ इत्यादि । नैवम्; तस्य पौरुषेयाऽपौरुषेयविकल्पाभ्यां निराकरिष्यमाणत्वात् । न च श्रौतेन विधिना पशुविशसनविधायिनां स्वर्गावाप्तिरुपकार इति वाच्यम्, यदि हि हिंसयाऽपि स्वर्गप्राप्तिः स्यात्, तर्हि बाढं पिहिता नरकपुरप्रतोल्यः, शौनिकादीनामपि स्वर्गप्राप्तिप्रसङ्गात् । तथा च पठन्ति पारमर्षाः-"यूपं छित्त्वा पशून् हत्वा, कृत्वा रुधिरकर्दमम् । यद्येव गम्यते स्वर्गे, नरके केन गम्यते?" किञ्च-अपरिचिताऽस्पष्टचैतन्याऽनुपकारिपशुहिंसनेनापि यदि त्रिदिवपदवीप्राप्तिः, तदा परिचितस्पष्टचैतन्यपरमोपकारिमातापित्रादिव्यापादनेन यज्ञकारिणामधिकतरपदप्राप्तिः प्रसज्यते । अथ "अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः" इति वचनाद् वैदिकमन्त्राणामचिन्त्यप्रभावत्वात् तत्संस्कृतपशुवधे संभवत्येव स्वर्गप्राप्तिः, इति चेत् । न, इह लोके विवाहगर्भाऽऽधानजातकर्माऽऽदिषु तन्मन्त्राणां व्यभिचारोपलम्भाद्, अदृष्टे स्वर्गादावपि तद्व्यभिचारोऽनुमीयते । दृश्यन्ते हि वेदोक्तमन्त्रसंस्कारविशिष्टेभ्योऽपि विवाहाऽऽदिभ्योऽनन्तरं वैधव्याऽल्पायुष्कतादारिद्र्याऽऽद्युपद्रवविधुराः परःशताः; अपरे च मन्त्रसंस्कारं विना कृतेभ्योऽपि तेभ्योऽनन्तरं तद्विपरीताः । अथ तत्र क्रियावैगुण्यं विसंवादहेतुः, इति चेत् । न, संशयाऽनिवृत्तेः । किं तत्र क्रियावैगुण्यात् फले विसंवादः, किं वा मन्त्राणामसामर्थ्याद्?, इति न निश्चयः, तया फलेनाविनाभावासिद्धेः । अथ यथा युष्मन्मते-"आरोग्ग बोहिलाभं समाहिवरमुत्तमं दिंतु" इत्यादीनां वाक्यानां लोकान्तर एव फलमिष्यते, एवमस्मदभिमतवेदवाक्यानामपि नेह जन्मनि फलमिति किं न प्रतिपद्यते?, अतश्च विवाहाऽऽदौ नोपलम्भावकाशः, इति चेत् । अहो! वचनवैचित्री यथा वर्तमानजन्मनि विवाहाऽऽदिषु प्रयुक्तैर्मन्त्रसंस्कारैरागामिनि जन्मनि तत्फलम्, एवं द्वितीयादिजन्मान्तरेष्वपि विवाहाऽऽदीनामेवं प्रवृत्तिधर्माणां पुण्यहेतुत्वाङ्गीकारेऽनन्तभवानुसन्धानं प्रसज्यते, एवं च न कदाचन संसारस्य परिसमाप्तिः, तथा च न कस्यचिदपवर्गप्राप्तिः, इति मातः भवदभिमतवेदस्य पर्यवसितसंसारवल्लरीमूलकन्दत्वम् । आरोग्याऽऽदिप्रार्थना तु असत्याऽमृषाभाषापरिणामविशुद्धिकारणत्वाद् न दोषाय, तत्र हि-भावाऽऽरोग्याऽऽदिकमेव विवक्षितम्, तच्च चातुर्गतिकसंसारलक्षण भावरोगपरिक्षयस्वरूपत्वाद्-उत्तमफलम्, तद्धिकर्मा च

१-अलवयवम् ।

प्रार्थिनो कथमिव विवेकिनामनादरणीया ? । नच तज्जन्यपरिणामविशुद्धेस्तत्फलं न प्राप्स्यते, सर्ववादिनां भावशुद्धेरपवर्गफलसम्पादनेऽविप्रतिपत्तेरिति । नच वेदविहिता हिंसा न कुत्सिता, सम्यग्दर्शनज्ञानसम्पन्नैस्तत्त्वमार्गप्रपन्नैर्वेदान्तवादिभिश्च गर्हितत्वात् । तथा च तत्त्वदर्शिनः पठन्ति—

" देवोपहारव्याजेन, यज्ञव्याजेन येऽथवा ।
घ्नन्ति जन्तून् गतघृणा, घोरां ते यान्ति दुर्गतिम् " ॥ १ ॥

वेदान्तिका अप्याहुः—

" अन्धे तमसि मज्जामः, पशुभिर्ये यजामहे ।
हिंसा नाम भवेद् धर्मो, न भूतो न भविष्यति " ॥ १ ॥

तथा ' अग्निर्मामेतस्माद्धिंसाकृतादेनसो मुञ्चतु ' छान्दसत्वाद् मोचयतु इत्यर्थः, इति ।

व्यासेनाप्युक्तम्—

" ज्ञानपालिपरिक्षिप्ते ब्रह्मचर्यदयाम्भसि ।
स्नात्वाऽतिविमले तीर्थे, पापपङ्कापहारिणि ॥ १ ॥
ध्यानाग्नौ जीवकुण्डस्थे दममारुतदीपिते ।
असत्कर्मसमित्क्षेपै—रग्निहोत्रं कुरूत्तमम् ॥ २ ॥
कषायपशुभिर्दुष्टै—र्धर्मकामार्थनाशकैः ।
शममन्त्रहुतैर्यज्ञं, विधेहि विहितं बुधैः ॥ ३ ॥
प्राणिघातात्तु यो धर्म—मीहते मूढमानसः ।
स वाञ्छति सुधावृष्टिं, कृष्णाऽहिमुखकोटरात् " ॥ ४ ॥

इत्यादि । यच्च याज्ञिकानां लोकपूज्यत्वोपलम्भादित्युक्तम् तदप्यसारम्, अबुधा एव हि पूजयन्ति तान् न तु विविक्तबुद्धयः । अबुधपूज्यता तु न प्रमाणम्, तस्याः सारमेयाऽऽदिष्वप्युपलम्भात् । (स्या०) ( ' अग्निहोत्रविषयः ' ' अग्गिहोत्त ' शब्दे प्रथमभागे ) पितॄणां पुनः प्रीतिरनैकान्तिकी, श्राद्धाऽऽदिविधानेनापि भूयसां सन्तानवृद्धेरनुपलब्धेः, तदविधानेऽपि च केषाञ्चिद् गर्दभशूकराऽजादीनामिव सुतरां तद्दर्शनात्; ततश्च श्राद्धादिविधानं मुग्धजनविप्रतारणमात्रफलमेव । ये हि लोकान्तरं प्राप्तास्ते तावत् स्वकृतसुकृतदुष्कृतकर्मानुसारेण सुरनारकादिगतिषु सुखमसुखं वा भुञ्जाना एवासते; ते कथमिव तनयाऽऽदिभिरावर्जितं पिण्डमुपभोक्तुं स्पृहयालवोऽपि स्युः ? । तथा च युष्मद्यूथिनः पठन्ति—" मृतानामपि जन्तूनां, श्राद्धं चेद् तृप्तिकारणम् । तन्निर्वाणप्रदीपस्य, स्नेहः संवर्धयेच्छिखाम् " ॥ १ ॥ इति । कथं च श्राद्धविधानाद्यर्जितं पुण्यं तेषां समीपमुपैतु, तस्य तदन्यकृतत्वात्, जडत्वात्, निश्चरणत्वाच्च । अथ तेषामुद्देशेन श्राद्धादिविधानेऽपि पुण्यं दातुरेव तनयादेः स्यादिति चेत् । सत्यम्; तेन तज्जन्यपुण्यस्य स्वाध्यवसायादुत्तारितत्वात् । एवं च तत्पुण्यं न कृतस्यापि इति—विचाल एव विलीनं त्रिशङ्कुज्ञातेन, किन्तु पापानुबन्धिपुण्यत्वात् तत्त्वतः पापमेव । अथ विप्रोपभुक्तं तेभ्य उपतिष्ठत इति चेत् 'क इवैतत्प्रत्येतु ?, विप्राणामेव मेदुरोदरतादर्शनात्, तद्वपुषि च तेषां सङ्क्रमः श्रद्धातुमपि न शक्यते, भोजनावसरे तत्सङ्क्रमलिङ्गस्य कस्याप्यनवलोकनात्, विप्राणामेव च तृप्तेः साक्षात्करणात्, यदि परं न एव स्थूलकवलैराकुलतरमतिगार्ध्याद् भक्षयन्तः प्रेतप्रायाः, इति मुधैव श्राद्धादिविधानम् । यदपि च गयाश्राद्धादियाचनमुपलभ्यते, तदपि ताद्दशविप्रलम्भकविभङ्गज्ञानिव्यन्तराऽऽदिकृतमेव निश्चेयम् । (स्या०) ( ' आगमविषयः ' ' आगम ' शब्दे द्वितीयभागे ५३ पृष्ठे उक्तः । ) नच वयमेव यागविधेः सुगतिहेतुत्वं नाङ्गीकुर्महे, किन्तु भवदाप्ता अपि । यदाह व्यासमहर्षिः—" पूजया विपुलं राज्य—मग्निकार्येण संपदः । तपः पापविशुद्ध्यर्थं, ज्ञानं ध्यानं च मुक्तिदम् " ॥ १ ॥ अत्राग्निकार्यशब्दवाच्यस्य यागादिविधेरुपायान्तरैरपि लभ्यानां संपदामेव हेतुत्वं यदभ्याचार्य—तस्य सुगतिहेतुत्वमर्थात् कदर्थितवान् । तथा च स एव भावाग्निहोत्रं ' ज्ञानपालि ' त्यादिश्लोकैः स्थापितवान् । तदेवं स्थिते तेषां वादिनां चेष्टामुपमया दूषयति—स्वपुत्रेत्यादि । परेषां—भवत्प्रणीतवचनपराङ्मुखानां स्फुरितं—चेष्टितं, ' स्वपुत्रघातात् नृपतित्वलिप्सासब्रह्मचारि—निजसुतनिपातनेन राज्यप्राप्तिमनोरथसदृशम् । यथा किल कश्चिदविपश्चित् पुरुषः परुषाऽऽशयतया निजमङ्गजं व्यापाद्य राज्यश्रियं प्राप्तुमीहते, नच तस्य तत्प्राप्तावपि पुत्रघातपातककलङ्कपङ्कः क्वचिदपयाति, एवं वेदविहितहिंसया देवताऽऽदिप्रीतिसिद्धावपि, हिंसासमुत्थं दुष्कृतं न खलु पराहन्येत । अत्र च लिप्साशब्दं प्रयुञ्जानः स्तुतिकारो ज्ञापयति—यथा तस्य दुराशयस्याऽसद्दृशतादृशदुष्कर्मनिर्माणनिर्मूलितसत्कर्मणो राज्यप्राप्तौ केवलं समीहामात्रमेव, न पुनस्तत्सिद्धिः, एवं तेषां दुर्मतिदन्तानां वेदविहितां हिंसामनुतिष्ठतामपि देवताऽऽदिपरितोषणं मनोराज्यमेव, न पुनस्तेषामुत्तमजनपूज्यत्वमिन्द्राऽऽदिदिवौकसां च तृप्तिः, प्रागुक्तयुक्त्या निराकृतत्वात् । इति काव्यार्थः । स्या० ।

पुरुषव्याघातेन तदन्यजीवव्याघातः—

तेणं कालेणं तेणं समएणं रायगिहे ०जाव एवं वयासी—पुरिसेणं भंते ! पुरिसं हणमाणे किं पुरिसं हणइ नो पुरिसे हणइ ?, गोयमा ! पुरिसं पि हणइ नो पुरिसे वि हणति । से केणट्ठेणं भंते ! एवं वुच्चइ पुरिसं पि हणइ नो पुरिसे वि हणइ ?, गोयमा ! तस्स णं एवं भवइ एवं खलु अहं एगं पुरिसं हणामि से णं एगं पुरिसं हणमाणे अणेगजीवा हणइ, से तेणट्ठेणं गोयमा ! एवं वुच्चइ पुरिसं पि हणइ नो पुरिसे वि हणति । पुरिसे णं भंते ! आसं हणमाणे किं आसं हणइ नो आसे वि हणइ ?, गोयमा ! आसं पि हणइ नो आसे वि हणइ, से केणट्ठेणं अट्ठो तहेव, एवं हत्थिं सीहं वग्घं ०जाव चिल्ललगं । पुरिसे णं भंते ! अन्नयरं तसपाणं हणमाणे किं अन्नयरं तसपाणं हणइ नो अन्नयरे तसपाणे हणइ ?, गोयमा ! अन्नयरं पि तसपाणं हणइ नो अन्नयरे वि तसे पाणे हणइ, से केणट्ठेणं भंते ! एवं वुच्चइ अन्नयरं पि तसं पाणं नो अन्नयरे वि तसे पाणे हणइ ?, गोयमा ! तस्स णं एवं भवइ, एवं खलु अहं एगं अन्नयरं तसं पाणं हणामि, से णं एगं अन्नयरं तसं पाणं हणमाणे अणेगे जीवे हणइ, से तेणट्ठेणं गोयमा ! तं चेव एए सव्वे वि एक्कगमा । पुरिसे णं भंते ! इसिं हणमा—

णो किं इसिं हणइ नो इसिं हणइ ?, गोयमा ! इसिं पि हणइ नो इसिं पि हणइ । से केणट्ठेणं भंते ! एवं वुच्चइ०जाव नो इसिं पि हणइ ?, गोयमा ! तस्स णं एवं भवइ एवं खलु अहं एगं इसिं हणामि, से णं एग इसिं हणमाणे अणंते जीवे हणइ, से तेणट्ठेणं निक्खेवओ । पुरिसे णं भंते ! पुरिसं हणमाणे किं पुरिसवेरेणं पुट्ठे नो पुरिसवेरेणं पुट्ठे ?, गोयमा ! नियमा ताव पुरिसवेरेणं पुट्ठे, अहवा पुरिसवेरेण य णो पुरिसवेरेण य पुट्ठे अहवा पुरिसवेरेण य नोपुरिसवेरेहिं य पुट्ठे, एवं आसं एवं०जाव चिल्ललगं०जाव अहवा चिल्ललगवेरेण य णो चिल्ललगवेरेहि य पुट्ठे । पुरिसे णं भंते ! इसिं हणमाणे किं इसिवेरेणं पुट्ठे, नो इसिवेरेणं ?, गोयमा ! नियमा इसिवेरेण य नो इसिवेरेहि य पुट्ठे । ( सू० ३६१ )

'तेण' मित्यादि, नो पुरिसं हणइ' त्ति पुरुषव्यतिरिक्त जीवान्तरं हन्ति । 'अणेगे जीवे हणइ' त्ति अनेकान् जीवान् यूकाषट्पदिकाकृमिगण्डोलकादीन् तदाश्रितान् तच्छरीरावष्टब्धास्तद्रुधिरप्लावितादींश्च हन्ति, अथवा स्वकायस्याकुञ्चनप्रसारणादिनेति, 'छणइ' त्ति क्वचित्पाठस्तत्रापि स एवार्थः, क्षणधातोर्हिंसार्थत्वात्, बाहुल्याश्रयं चेदं सूत्रम्, तेन पुरुषं घ्नन् तथाविधसामग्रीवशात् कश्चित्तमेव हन्ति कश्चिदकमपि जीवान्तरं हन्तीत्यपि द्रष्टव्यम्, वक्ष्यमाणभङ्गकत्रयान्यथाऽनुपपत्तेरिति । 'एते सव्वे एक्कगमा' एत-हस्त्यादय एकगमाः—सदृशाभिलापाः । 'इसिं' ति ऋषिम् 'अणते जीवे हणइ' त्ति ऋषिं घ्नन्ननन्तान् जीवान् हन्ति, यतस्तद्घातेऽनन्तानां घातो भवति, मृतस्य तस्य विरतेरभावेनानन्तजीवघातकत्वभावात्, अथवा-ऋषिर्जीवन् बहून् प्राणिनः प्रतिबोधयति, ते च प्रतिबुद्धा क्रमेण मोक्षमासादयन्ति, मुक्ताश्चानन्तानामपि संसारिणामघातका भवन्ति, तद्वधे चैतत्सर्वं न भवन्त्यतस्तद्वधेऽनन्तजीववधो भवतीति, 'निक्खेवओ' त्ति निगमनम् । 'नियमा पुरिसवेरेणं' त्यादि, पुरुषस्य हतत्वान्म्रियमाणपुरुषवधपापेन स्पृष्ट इत्येको भङ्गः, तत्र च यदि प्राण्यन्तरमपि हतं तदा पुरुषवैरेण नो-पुरुषवैरेण चेति द्वितीयः । यदि तु बहवः प्राणिनो हतास्तत्र तदा पुरुषवैरेण नो पुरुषवैरैश्चेति तृतीयः । एवं सर्वत्र त्रयम् । ऋषिपक्षे तु ऋषिवैरेण नो ऋषिवैरैश्चेत्येवमेक एव, तुर्यं या मृतौ मौर्यं यास्यत्यविरतो न भविष्यति तस्यर्षेर्वधे ऋषिवैरमेव भवत्यतः प्रथमविकल्पसम्भवः । अथ चरमशरीरस्य निरुपक्रमायुष्कत्वात् हननसम्भवस्ततोऽचरमशरीरापेक्षया यथोक्तभङ्गकसम्भवः, नैवम्, यतो यद्यपि चरमशरीरो निरुपक्रमायुष्कस्तथाऽपि तद्वधाय प्रवृत्तस्य यमुनराजस्येव वैरमस्त्येवेति प्रथमभङ्गकसम्भव इति, सत्यम्, किन्तु यस्य ऋषेः सोपक्रमायुष्कत्वात् पुरुषकृतो वधो भवति तमाश्रित्येदं सूत्रं प्रवृत्तम्, तस्यैव हननस्य मुख्यवृत्त्या पुरुषकृतत्वादिति । भ० ९ श० ३४ उ० । ( एकान्तनित्येऽनित्ये वाऽऽत्मनि हिंसा न घटते किन्तु स्याद्वादे इति 'अहिंसा' शब्दे प्रथमभागे ८८१ पृष्ठे उक्तम् ।) षड्जीवनिकायव्यापादनं न कुर्यादिति पृथिवीकायादिशब्देषु विस्तरत उक्तम् । ) -षड्जीवनिकायानां हिंसा न कर्त्तव्या । ग० २ अधि० । -( जिनायतननिर्माणे जिनपूजायां च कायवधदोषः 'चेइय' शब्दे तृतीयभागे १२३० पृष्ठे प्रतिक्षिप्त । )

प्रथमहिंसाभेदमाह—

उच्चालियम्मि पाए, इरियासमियस्स संकमट्ठाए ।
वावज्जिज्ज कुलिंगी, मरिज्ज तं जोगमासज्ज ॥ २२३ ॥

उच्चालिते—उत्क्षिप्ते पादे संक्रमार्थं गमनार्थमिति योगः, ईर्यासमितस्योपयुक्तस्य साधोः किं व्यापद्येत महतीं वेदनां प्राप्नुयात्, म्रियेत—प्राणत्यागं कुर्यात् कुलिङ्गी कुत्सितलिङ्गवान् द्वीन्द्रियादिसत्त्वः तं योगमासाद्य-तथाप्रयुक्तसाधुव्यापारं प्राप्येति ।

न य तस्स तन्निमित्तो, बंधो सुहुमो वि देसिओ समए ।
जम्हा सो अपमत्तो,सा उ पमाओ त्ति निद्दिट्ठा ॥२२४॥

नच तस्य साधोस्तन्निमित्तः कुलिङ्गिव्यापत्तिकारणो बन्धः सूक्ष्मोऽपि देशितः समये । किमिति ? यस्मात्सोऽप्रमत्तः सूत्राज्ञया प्रवृत्तेः ,सा च हिंसा प्रमाद इत्येवं निर्दिष्टा तीर्थकरगणधरैरिति । इय द्रव्यतो हिंसा न भावतः ।

साम्प्रतं भावतो न द्रव्यत इत्युच्यते—

मंदपगासे देसे, रज्जुं किण्हाहिसरिसयं दट्ठुं ।
अच्छित्तु तिक्खखग्गं, वहिज्ज तं तप्परीणामो ॥२२५॥

मन्दप्रकाशे देशे-श्यामले निम्नादौ रज्जुं दर्भादिविकाररूपां कृष्णाहिसदृशीं कृष्णसर्पतुल्यां दृष्ट्वा आकृष्य तीक्ष्णखड्गं वधेत्तां—हन्यादित्यर्थः, तत्परिणामो वधपरिणाम इति ।

सप्पवहाभावम्मि वि, वहपरिणामा उ चेव एयस्स ।
नियमेण संपराइय-बंधो खलु होइ नायव्वो ॥२२६॥

सर्पवधाभावेऽपि तत्त्वतः वधपरिणामादेवैतस्य व्यापादकस्य नियमेन साम्परायिको बन्धो—भवपरंपराहेतुः कर्मयोग खलु भवति ज्ञातव्य इति ।

तृतीय हिंसाभेदमाह—

मिगवहपरिणामगओ, आयण्णं कड्ढिऊण कोदंडं ।
मोत्तूणमिसुं उभेओ, वहिज्ज तं पागडो एस ॥ २२७ ॥

मृगवधपरिणामपरिणतः सन्नाकर्णमाकृष्य कोदण्डं धनुर्मुक्त्वा इषुं—बाणं उभयतो वधेत्—हन्याद् द्रव्यतो भावतश्च तं मृगं प्रकट एष हिंसक इति ।

चतुर्थभेदमाह—

उभयाभावे हिंसा, धणिमित्तं भंगयाणुपुव्वीए ।
तह वि य दंसिज्जंती, सीसमइविगोवणमदुट्ठा ॥२२८॥

उभयाभावे-द्रव्यतो भावतश्च वधाभावे हिंसा ध्वनिमात्रं न विषयतः भङ्गकानुपूर्व्यायाताः, तथापि च दर्श्यमाना शिष्यमतिविकोपनं विनेयबुद्धिविकाशायाऽदुष्टैवेति ।

इयपरिणामा बंधे, बालो वुड्ढ त्ति थोवमियमित्थ ।
बाले वि सो न तिव्वो,कयाइ वुड्ढे वि तिव्वु त्ति॥२२९॥

'इय' एवं परिणामाद्वन्धे सति बालो वृद्ध इति स्तोकमिदमत्र-हिंसाप्रक्रमे, किमिति?, बालोऽप्यसौ न तीव्र परिणाम कदाचिद् वृद्धेऽपि तीव्र इति जिघांसतामाशयवैचित्र्यादिति ।

अह परिणामाभावे, वहे वि बंधो न पावई एवं ।
कहं न वहे परिणामो;तब्भावे कहँ य नो बंधो ॥२३०॥

अथैवं मन्यसे परिणामाभावे सति वधेऽप्यबन्ध एव प्राप्नोत्येवं परिणामवादे एतदाशङ्क्याह-कथं न वधे परिणामः किं तर्हि भवत्येवादुष्टाशयस्य तत्राप्रवृत्तेः तद्भावे-वधपरिणामभावे कथं च वधे न बन्धो, बन्ध एवेति ।

मिय न वहे परिणामो, अन्नाणकुसत्थभावणाओ य ।
उभयत्थ तदेव तओ, किलिट्ठबंधस्स हेउ त्ति ॥ २३१ ॥

स्यान्न वधे परिणामः क्लिष्ट अज्ञानात्, अज्ञान व्यापादयतः कुशास्त्रभावनातश्च, यागादावेतदाशङ्क्याह—उभयत्र तदेवाज्ञानमसौ परिणामः क्लिष्टबन्धस्य हेतुरिति साम्परायिकस्येति ।

जम्हा सो परिणामो, अन्नाणादवगमेण नो होइ ।
तम्हा तयभावत्थी, नाणाईसुं सइ जइज्जा ॥ २३२ ॥

यस्मादसौ वधपरिणामः अज्ञानापगमेन हेतुना न भवति सति त्वज्ञानादौ भवत्येव, वस्तुनस्तस्यैव तद्रूपत्वात्; तस्मात्तदभावार्थी-वधपरिणामाभावार्थी ज्ञानादिषु सदा यतेत तत्प्रतिपक्षत्वात् इति ।

एवं वस्तुस्थितिमभिधायाधुना परोपन्यस्तहेतोरनैकान्तिकत्वमुद्भावयति—

बहुतरकम्मोवक्कम-भावो वेगंतिओ न जं केइ ।
बाला वि य थोवाऊ,हवंति वुड्ढा वि दीहाऊ ॥ २३३ ॥

बहुतरकर्मोपक्रमभावोऽपि बालादिवृद्धादिष्वैकान्तिको न, यद्यस्मात्केचन बाला अपि स्तोकायुषो भवन्ति, वृद्धा अपि दीर्घायुषस्तथा लोके दर्शनादिति ।

तम्हा सव्वेसिं चिय, वहम्मि पावं अपावभावेहिं ।
भणियमहिगाइभावो, परिणामविसेसओ पायं ॥२३४॥

यस्मादेवं तस्मात्सर्वेषामेव बालादीनां वधे पापमपापभावैर्वीतरागैर्भणितम् अधिकादिभावस्तस्य पाप्मनः परिणामविशेषतः प्रायो भणित इति वर्तते। प्रायोग्रहणं तपस्वीतरादिभेदसंग्रहार्थमिति।

साम्प्रतमन्यद्वादशस्थानकम्—

संभवइ वहो जेसिं, जुज्जइ तेसिं निवित्तिकरणं पि ।
अवडियाकरणम्मि य, सत्तिनिरोहा फलं तत्थ ॥२३५॥

संभवति वधो येषु कृमिपिपीलिकादिषु युज्यते तेषु निवृत्तिकरणमपि विषयप्रवृत्तेः, अपतिताकरणे च पर्युपस्थितानामेव च सति शक्तिनिरोधात्फलं तत्र युज्यत इति वर्तते। अविषयशक्त्यभावयोस्तु कुतः फलमिति।

तथा चाह—

नो अविसए पवित्ती, तन्निवित्तीइ अचरणपाणिस्स ।
झसनायधम्मतुल्लं, तत्थ फलमबहुमयं केइ ॥ २३६ ॥

नो अविषये नारकादौ प्रवृत्तिर्वधक्रियायास्ततश्च तन्निवृत्त्या अविषयप्रवृत्तिनिवृत्त्या अचरणपाणेः-छिन्नगोदुकरस्य झषज्ञातधर्मतुल्य-छिन्नगोदुकरस्य मत्स्यनाशे धर्म इत्येवं कल्पम्, तत्र निवृत्तौ फलम् अबहुमतं विदुषामश्लाघ्यं केचन मन्यन्त इत्येष पूर्वपक्षः। अत्रोत्तरमाह—संभवति वधो यस्वित्युक्तम्।

अथ कोऽयं संभव इति—

किं ताव तव्वहु च्चिय, उयाहु कालंतरेण वहणं तु ।
किं वा वहु त्ति किं वा, सत्ती को संभवो एत्थ ॥२३७॥

किं तावत्तद्वध एव तेषां व्यापाद्यमानानां वधस्तद्वधः क्रियारूप एव, उताहो कालान्तरेण हननं-जिघांसनमेव वा किमवध —अव्यापादनमित्यर्थः ?; किं वा शक्तिः व्यापादकस्य व्यापाद्यविषया ?, कः सम्भवोऽत्र प्रक्रम इति सर्वेऽप्यमी पक्षा दुष्टाः।

तथा चाह—

जइ ताव तव्वहु च्चिय, अलं निवित्तीइ अविसयाए उ ।
कालंतरवहणम्मि वि, किं तीए नियमभंगाओ ॥२३८॥

यदि तावत्तद्वध एव तथा व्यापाद्यमानवधक्रियैव संभव इति। अत्र दोषमाह—अलं निवृत्त्या न किञ्चिद्वधनिवृत्त्यविषयेति हेतु, 'निमित्तकारणहेतुषु सर्वासां प्रायो दर्शन'मिति वचनात् अविषयत्वं च वधक्रियायां एव असंभवात्, संभवे च सति निवृत्त्यभ्युपगमात्; ततश्च वधक्रियानियमभावे अविषया वधनिवृत्तिरिति। कालान्तरहननेऽपि नियमतः सम्भवेऽभ्युपगम्यमाने किं तया निवृत्त्या न किञ्चिदित्यर्थः, कुत इत्याह-नियमभङ्गात् संभव एव सति निवृत्त्यभ्युपगमः। संभवश्च कालान्तरहननमेवेति नियमभङ्ग इति।

चरमविकल्पद्वयाभिधित्सयाऽऽह—

अवह वि नो पमाणं, सुट्ठुयरं अविसओ य विसओ से ।
सत्ती उ कज्जगम्मा, सइ तम्मि य किं पुणो तीए॥२३९॥

अवधोऽपि न प्रमाणम्, यद्यवधः सम्भवः इत्यत्रापि प्रमाणं न ज्ञायते एतेषामस्मादवध इति। सुष्ठुतरम् अतितराम् अविषयश्च, विषयः 'से' तस्या निवृत्तेः, अविषयत्वं तु तेषां वधासंभवात् अवधस्यैव संभवत्वात्। अस्मिंश्च सति निवृत्त्यभ्युपगमादिति। शक्तिस्तु कार्यगम्या वधशक्तेरपि संभवो न युज्यते यतोऽसौ कार्यगम्यैवेति; न वधमन्तरेण ज्ञायते। सति च तस्मिन्वधे किं पुनस्तया निवृत्त्या तस्य संपादितत्वादेवेति।

संभवमधिकृत्य पक्षान्तरमाह—

जज्जाईओ अ हओ, तज्जाईएसु संभवो तस्स ।
तेसु सफला निवित्ती, न जुत्तमेयं पि वभिचारा ॥२४०॥

यज्जातीय एव हतः स्यात् कृम्यादिस्तज्जातीयेषु सम्भवस्तस्य वधस्य; अतस्तेषु सफला निवृत्तिः, सविषयत्वादिति एतदाशङ्क्याह न युक्तमेतदपि व्यभिचारात्।

व्यभिचारमेवाह—

वावाडइज्ज कोई, हए वि मणुयम्मि अन्नमणुएणं ।

१-दर्वेषुपुलम्धपुत्त्येषु स्यादृशमेवेति नारसाक्त अतीपोन्सिपोऽत्र।

अहए वि य सीहाश्रो, दीसइ वहणं पि वभिचारो॥२४१॥

व्यापाद्यते कश्चिदेव हतेऽपि मनुष्ये सकृत् अन्यमनुष्येण तथा लोके दर्शनात्; अतो यज्जातीयस्तु हतस्तज्जातीयेषु सम्भवस्तस्येति नैकान्त. तेनैव-अन्यमनुष्येणैव व्यापादनात् । तथा अहतेऽपि च सिंहादौ आ जन्म दृश्यते हननं कादाचित्कमिति व्यभिचार इति ।

नियमो न संभवो इह, हंतव्वा किं तु सत्तिमित्तं तु ।
सा जेण कज्जगम्मा, तयभावे किं न सेसेसु ॥ २४२ ॥

नियमो न संभव -इहावश्यंतया न सम्भव , इहोच्यते-यदुत यज्जातीय एको हतस्तज्जातीयाः सर्वेऽपि हन्तव्याः, यज्जातीयस्तु न हतस्तज्जातीया न हन्तव्या एव किन्तु शक्तिमात्रमेव—तज्जातीयेतरेषु व्यापादनशक्तिमात्रमेव सम्भव , तत्कथं दोषोऽनन्तगोचरो नैवेत्यभिप्राय इति, एतदाशङ्क्याह—'सा येन कार्यगम्य' ति सा—शक्तिर्यस्मात्कार्यगम्या वर्तते अतो दोष इति, वधमन्तरेण तदपरिज्ञानात् , सति च तस्मिन् किं तयेत्यभिहितमेवैतत् । अथ सा कार्यमन्तरेणाभ्युपगम्यत इति एतदाशङ्क्याह—तदभावे—कार्याभावे किं न शेषेषु—सर्वेषु साऽभ्युपगम्यते, तथा च सत्यविशेषत एव निवृत्तिसिद्धिरिति ।

स्यादेतन्न सर्वसत्त्वेषु सा अतो नाभ्युपगम्यत इति आह च—

नारगदेवाईसुं, असंभवा समयमाणसिद्धीओ ।
इत्तो च्चिय तस्सिद्धी, असुहासयवज्जणमदुट्ठा ॥ २४३ ॥

नारकदेवादिष्वसंभवाद्व्यापादनशक्तेर्निरुपक्रमायुष्ट्वे इति । आदिशब्दाद्देवकुरुनिवास्यादिपरिग्रह., कुत एतदिति चेत् समयमानसिद्धेः-आगमप्रामाण्यादिति। एतदाशङ्क्याह-अत एव समयमानसिद्धे. तत्सिद्धि.—सर्वप्राणातिपातनिवृत्तिसिद्धि. " सव्वं भंते ! पाणाइवायं पञ्चक्खामि " इत्यादिवचनप्रामाण्याद् , आगमस्याप्यविषयप्रवृत्तिर्दुष्टैवेति एतदाशङ्क्याह—अशुभाशयवर्जनमिति कृत्वा अदुष्टा .तद्वधनिवृत्ति. अन्त.करणादिसंभवालम्बनत्वाच्चेति वक्ष्यतीति ।

आवडियाकरणं पि हु, न अप्पमायाउ नियमओ अन्नं ।
अन्नत्ते तब्भावे, वि हंत विहला तई होइ ॥ २४४ ॥

आपतिताकरणमपि पूर्वपक्षवाद्युपन्यस्तं नाप्रमादान्नियमतोऽन्यत् अपि त्वप्रमाद एव तदिति । अन्यत्वे—अप्रमादादर्थान्तरत्व आपतिताकरणस्य,तद्भावेऽपि-अप्रमादभावेऽपि हन्त ! विफलाऽसौ निवृत्तिर्भवति, इष्यते चादिप्रतिपत्त्या अप्रमत्ततायाः फलमिति ।

अह परपीडाकरणे, ईसिं वहसत्तिविप्फुरणभावे ।
जो तीइ निरोहो खलु, आवडियाकरणमेयं तु ॥२४५॥

अथैव मन्यत् पर.—परपीडाकरणे—व्यापाद्यपीडासंपादने सति ईषद्वधशक्तिविस्फुरणभावे व्यापादकस्य मनाग्वधसामर्थ्यविजृम्भणसत्तायां सत्यां यस्तस्या. शक्तेर्निरोधो-दुष्करतर आपतिताकरणमेतदेवेति ।

एतदाशङ्क्याह—

विहिउत्तरमेवेयं, अणेण सत्ती उ कज्जगम्म त्ति ।



विप्फुरणं पि हु तीए, बुहाण नो बहुमयं लोए॥२४६॥

विहितोत्तरमेवेदम् , केनेति अत्राह-अनेन शक्तिस्तु कार्यगम्येति । विस्फुरणमपि तस्या शक्तेर्बुधानां न बहुमतं लोके मरणाभावेऽपि परपीडाकरणे बन्धादिति ।

एवं च जा निवित्ती, सा च्चेव वहोऽहवा वि वहहेऊ ।
विसओ वि सु-च्चिय फुडं,अणुबंधा होइ नायव्वा ।२४७।

एवं च व्यवस्थिते सति ,या अनिवृत्तिः सैव वधो निश्चयतः प्रमादरूपत्वात् , अथवाऽपि वधहेतुरनिवृत्तितो वधप्रवृत्तेः, विषयोऽपि—वस्तुतो गोचरोऽपि सैवानिवृत्तिर्वधस्य स्फुटं व्यक्तम् ,अनुबन्धात्प्रवृत्त्यध्यवसायानुपरमलक्षणाद्भवति ज्ञातव्या,अस्या एवं वधसाधकत्वप्राधान्यख्यापनार्थं हेतुविषयाभिधानमदुष्टमेवेति ।

अमुमेवार्थं समर्थयन्नाह—

हिंसाइपायगाओ, अप्पडिविरयस्स अत्थि अणुबंधो ।
अत्तो अणिवत्तीओ, कुलाइवेरं व नियमेण ॥२४८॥

हिंसादिपातकादादिशब्दात् मृषावादादिपरिग्रह., अप्रतिविरतस्यानिवृत्तस्यास्त्यनुबन्धः प्रवृत्त्यध्यवसायानुपरमलक्षणः । उपपत्तिमाह—अत एवानिवृत्तेः,प्रवृत्ते. कुलादिवैरवन्नियमेनावश्यंतयेति ।

दृष्टान्तं व्याचिख्यासुराह—

जेसिमिहो कुलवेरं, अप्पडिविरई उ तेसिमन्नोन्नं ।
वहकिरियाभावम्मि वि, न तं सयं चेव उवसमइ ॥२४९॥

येषां पुरुषाणां मिथ -परस्परं कुलवैरमन्वयासंखण्डम् अप्रतिविरते कारणात्तेषाम् अन्योऽन्यं—परस्परं वधक्रियाभावेऽपि सति न तत्स्वयमेवोपशाम्यति किं तूपशमिन सदिति ।

तत्तो य तन्निमित्तं, इह बंधणमाइ जह तहा बंधो ।
सव्वेसु नाभिसंधी, जह तेसुं तस्स तो नत्थि ॥२५०॥

ततश्च तस्मादनुपशमात्तन्निमित्तं वैरनिबन्धनमिह बन्धनादि—बन्धवधादि यथा भवति तेषां, तथेतरेषामनिवृत्तानां तन्निबन्धनो बन्ध इति । अत्राह-सर्वेषु प्राणिषु नाभिसन्धिर्व्यापादनपरिणामः यथा तेषु द्रङ्गनिवासिषु वैरवत इति तस्य प्रत्याख्यातुस्ततो नास्ति बन्धः इति । तथाहि-तेऽपि न यथादर्शनमेव प्राणिनां वधादि कुर्वन्ति किन्तु वैरिद्रङ्गनिवासिनामेव, एवं प्रत्याख्यातुरपि न सर्वेषु वधाभिसंधिरिति तद्विषये बन्धाभाव इति ।

एतदाशङ्क्याह—

अत्थि च्चिय अभिसंधी,अविसेसपवित्तिओ जहा तेसु ।
अपवित्ती विणिवित्ती,जो उ तेसिं व दोसो उ ॥२५१॥

अस्त्येवाभिसंधिरनन्तरोदितलक्षण सर्वेषु कुतोऽविशेषप्रवृत्तित. सामान्येन वधप्रवृत्ते ,न यथा तेषु रिपुद्रङ्गनिवासिषु वैरवत ,ततश्चाप्रवृत्तावपि वधे अनिवृत्तिज एव तेषामिव वैरवतां दोष ।

एवमनिवृत्तस्य गर्भार्थो भावित एवेति अदृष्टान्तं एवायं सर्वसत्त्वैर्वैरासंभवादिति आशङ्क्याह—

सव्वेसिं विराहणाओ, परिभोगाओ य हंत वेराई ।

सिद्धा अणाइनिहणो, जं संसारो विचित्तो य ॥२५२॥

सर्वेषां प्राणिनां विराधनात्तेन तेन प्रकारेण परिभोगाच्च अकृत्रन्दनोपकरणत्वेन हन्त ! वैरादय सिद्धा..हन्त ! संप्रपणे स्थानान्तरप्रापणे सति वैरोन्माथकादय कृटयन्त्रकादयः प्रतिष्ठिता सर्वसत्त्वविषया इति। उपपत्त्यन्तरमाह—अनादिनिधनो यत्संसारो विचित्रश्चातो युज्यते सर्वमेतदिति।

उपसंहरन्नाह—

ता बंधमणिच्छंतो, कुज्जा सावज्जजोगविनिवित्ति।
अविसयअनिवित्तीए, सुहभावा दढयरं स भवे ॥२५३॥

यस्मादेवं तस्माद्बन्धमनिच्छन्नात्मन कर्मणां कुर्यात् सावद्ययोगविनिवृत्तिमोघत सपापव्यापारनिवृत्तिमित्यर्थ। अविषयानिवृत्त्या नारकादिवधभावेऽपि तदनिवृत्त्या अशुभभावादविषयेऽपि वधविरति न करोतीत्यशुभो भाव, तस्मात् दृढतरं सुतरां स भवेद्बन्धो भावप्रधानत्वात्तस्येति।

इत्तो य इमा जुत्ता, योगतिगनिबंधणा पवित्तीओ।
जं ता इमीइ विसओ,सव्वु चिय होइ विन्नेओ ॥२५४॥

इतश्चेयं निवृत्तिर्युक्ता योगत्रिकनिबन्धना-मनोवाक्काययोगपूर्विका प्रवृत्तिर्यद्यस्मादस्या अनिवृत्तेर्विषय सर्व एव भवति विज्ञेय, पाठान्तर योगत्रिकनिबन्धना निवृत्तिर्यस्मात्संगतार्थमेवेति।

तथा चाह—

किं चिंतेइ न मणसा, किं वायाए न जंपए पावं।
न य इत्तो वि न बंधो,ता विरइं सव्वहा कुज्जा ॥२५५॥

किं चिन्तयति न मनसा अनिरुद्धत्वात्सर्वत्राप्रतिहतत्वात् तस्य, किं वाचा न जल्पति पापं तस्या अपि प्रायोऽनिरुद्धत्वादिति। न चातोऽपि योगद्वयव्यापाराच्च बन्ध किन्तु बन्ध एव, यस्मादेवं तत्तस्माद्विरतिं सर्वथा कुर्यात् अविशेषेण कुर्यादित्यर्थ।

एवं मिच्छादंसण, वियप्पवसओऽसमंजसं केइ।
जंपंति जं पि अन्नं, तं पि असारं मुणेयव्वं॥ २५३॥

एवमुक्तप्रकारं मिथ्यादर्शनविकल्पसामर्थ्येन असमञ्जसम् अघटमानकं केचन कुवादिनो जल्पन्ति, यदप्यन्यत्-किंचित्तदप्यसारं मुणितव्यम्, उक्तन्यायानुसारत एवेति। आ०। ओघ०। विशे०। स्था०। स०। (त्रिचत्वारिंशदधिकशतत्रयविधा हिंसा 'पाणाइवायवेरमण' शब्दे पञ्चमभागे व्याख्याता।) (यतनया कर्मबन्धो न भवतीति 'बंध' शब्दे पञ्चमभागे। 'सम्मत्त' शब्देऽस्मिन्नेव भागे च उक्तम्।)
('जले जीवा स्थले जीवा, आकाशे जीवमालिनि। जीवमालाकुले लोके, कथं भिक्षुरहिंसक ॥१॥' इति 'अत्थिवाय' शब्दे प्रथमभागे ५२२ पृष्ठे सिद्धिसाधनप्रस्तावे उपपादि।)
(केषांचित्परतीर्थिकाना हिंसकानां निन्दा 'पुरिसविजयविभंग' शब्दे पञ्चमभागे अकारि।) जिनसमवसरणे बल्युपभोगे हिंसादोषपरिहार 'अद्दगकुमार' शब्दे प्रथमभागे ५४५ पृष्ठे कृत) (एकेन्द्रियादीना हिंसाया सदृश पापमिति 'अणगार' शब्दे प्रथमभागे सम्यगभ्यधायि।)
(कुपखननाद्यर्थं राजादिना पृष्टे हिंसानुमोदनपरं न वदेदिति 'दाण' शब्दे चतुर्थभागे २४६६ पृष्ठे प्रतिपादितम्।)
(आत्मैव हिंसेति शब्दनयानां मतं प्राणातिपातेन क्रिया क्रियत इति प्रस्तावे 'किरिया' शब्दे तृतीयभागे ५५३ पृष्ठे उपपादितम्। ("एवं खु नाणिणो सारं,जन्न हिंसइ किंचण। अहिंसा समयं चेव, एतावंतं वियाणिये' ति 'अहिंसा' शब्दे प्रथमभागे ८७८ पृष्ठे व्याख्यातम्।) (दर्पिका कल्पिका च हिंसा 'मूलगुणपडिसेवणा' शब्दे षष्ठभागे उक्ता।)

एगो बेंदिए पाणी एगं सयमेव हत्थेण वा पाएण वा अन्नयरेण वा सलागाइअहिगरणभूओवगरणजाएणं जेणं केइ संघट्टावेज्जा पासं त्रद्वियं वा अपरं समणुजाणेज्जा से णं तक्कम्मं जया उदिण्णं भवेज्जा तया जहा उच्छुखंडाइ जंते तहा निप्पीडिज्जमाणे छम्मासेणं खवेज्जा। एवं गाढे दुवालसेहिं संवच्छरेहिं तं कम्मं वेदेज्जा। एवं अगाढपरियावणे वाससहस्सं गाढपरियावणे दस वाससहस्सं एवं आगाढकिलावणे वासलक्खं गाढकिलावणे दस-वासलक्खाइं उद्दवणं वासकोडी एवं तेइंदियाइसुं पि णेयं ता एवं वियाणमाणे मा तुम्हे मुज्झह त्ति। (महा०६अ०)

"परिनिव्वुयम्मि भग-वंते धम्मतित्थंकरे।
जिणाभिहियं सुत्तत्थं, गणहरो जो परूवई।
ताव मालावगं एयं वक्खाणम्मि समागयं॥
पुढवीकाइगमेगं, जो वावाए सो ऽसंजओ।
ताईसरो विचिंतेइ, सुहुमे पुढविकाइए॥
सव्वत्थ उद्दविज्जंति, को ताई रक्खिउं तरे।
लहुईकरेइ अत्ताणं, एस एव महायसो।
असद्धेयं जणे सयले, किमट्ठ य पव्वइक्खइ॥
अच्चंतकडुयं एयं, वक्खाणंतस्स वीफुड।
कट्ठं व सोयरं लाभे, एरिसं को णु चिट्ठइ।"

महा० ६ अ०।

(विकलेन्द्रियहिंसायां जीतव्यवहारो 'जीयववहार' शब्दे चतुर्थभागे १५६ पृष्ठे उक्त।) "पीडाकर्तृत्वतो देहव्यापत्या दुष्टभावत।" इत्यादि 'वाद' शब्दे षष्ठभागे उक्तम्।) दु खितप्राणिहिंसाया धर्मत्वसाधकाना संसारमोचकानां मतं 'संसारमोयग' शब्दे खण्डितम्।)

हिंसाज्झाण-हिंसाध्यान-न०। हिंसा महिषादिजीवमारणं तस्या ध्यानं कुपचितकालसौकरिकस्येव। मारणाध्यवसाये, आतु०।

हिंसाणंद-हिंसानन्द-न०। हिंसायामानन्दो रुचिर्यस्मिंस्तत् हिंसानन्दम्। आर्तध्यानभेदे, सम्म०। एतदपि बाह्याध्यात्मिकभेदात् द्विविधं, परुषनिष्ठुरवचनाक्रोशनिर्भर्त्सनाताडनपरदारातिक्रमाभिनिवेशादिरूप बाह्यं स्वपराभ्यां स्वसंवेदनानुमानगम्य बाह्यम्। आध्यात्मिक-हिंसाया संरम्भादिलक्षणाया नैर्घृण्येन प्रवर्त्तमानस्य संकल्पाध्यवसानं, संकल्पश्चित्ताप्रबन्धस्तस्याध्यवसानं तीव्रकषायानुरक्तत्वं प्रथमं हिंसानन्दं नाम। सम्म० ३ काण्ड।

हिंसाणुबंधि-हिंसानुबन्धिन्-न० । हिंसां सत्वानां वधवेधबन्धनादिभिः प्रकारैः पीडामनुबध्नाति सततप्रवृत्तां करोतीत्येवंशीलं यत् प्रणिधानं, हिंसानुबन्धो वा यत्रास्ति तत् हिंसानुबन्धि । आर्त्तध्यानभेदे, भ० २५ श० ७ उ० । दश० ।

हिंसादंड-हिंसादण्ड-पुं० । हिंसामाश्रित्य हिंसितवान् हिनस्ति हिंसिष्यति वा अयं वैरिकादिर्मामित्येवं प्रणिधानेन दण्डो विनाशनं हिंसादण्ड । स० १२ सम० । हिंसितवान् हिनस्ति हिंसिष्यत्ययमित्यभिसंधेः सर्प्पवैरिकादिवधे, स्था० ५ ठा० २ उ० ।

तृतीयं दण्डसमादानं हिंसादण्डप्रत्ययिकमाख्यायते—

अहावरे तच्चे दंडसमादाणे हिंसादंडवत्तिए त्ति आहिज्जइ, से जहा णामए केइ पुरिसे ममं वा ममिं वा अन्नं वा अन्निं वा हिंसिंसु वा हिंसइ वा हिंसिस्सइ वा तं दंडं तसथावरेहिं पाणेहिं सयमेव णिसिरति अन्नेण वि णिसिरावेति अन्नं पि णिसिरंतं समणुजाणइ हिंसादंडे, एवं खलु तस्स तप्पत्तियं सावज्जं ति आहिज्जइ, तच्चे दंडसमादाणे हिंसादंडवत्तिए त्ति आहिए । ( सू० १६ )

अथापरं तृतीयं दण्डसमादानं हिंसादण्डप्रत्ययिकमाख्यायते, तद्यथा नाम कश्चित्पुरुषः—पुरुषकारं वहन् स्वतो मरणभीरुतया वा मामयं घातयिष्यतीत्येवं मत्वा कंसवद्देवकीसुतान् भावतो जघान, मदीयं वा पितरमन्यं वा मामकं ममीकारोपेतं परशुरामवत्कार्तवीर्यं जघान, अन्यं वा कंचनायं सर्पसिंहादिर्व्यापादयिष्यतीति मत्वा सर्पादिकं व्यापादयति, अन्यदीयस्य वा कस्यचिद्धिरण्यपश्वादेरयमुपद्रवकारीति कृत्वा तत्र दण्डं निसृजति तदेवमयं मा मदीयमन्यदीयं वा हिंसितवान् हिनस्ति हिंसिष्यतीत्येवं संभाविते त्रसे स्थावरे वा तं दण्डं प्राणव्यपरोपणलक्षणं स्वयमेव निसृजति अन्येन निसर्जयति निसृजन्तं वाऽन्यं समनुजानीते इत्येतत्तृतीयं दण्डसमादानं हिंसादण्डप्रत्ययिकमाख्यातमिति । सूत्र० २ श्रु० २ अ० । प्रव० ।

हिंसाययण-हिंसायतन-न० । व्यापत्तिधामसु, ओघ० ।

हिंसिय हिंसित-न० । हिंसाप्राप्ते, सूत्र० १ श्रु० १२ अ० ।

हिका-देशी—रजक्याम् , दे० ना० ८ वर्ग ।

हिकास-देशी—पङ्के, दे० ना० ८ वर्ग ६६ गाथा ।

हिकिअ-देशी—अश्वरवे, दे० ना० ८ वर्ग ६८ गाथा ।

हिच्चा-हित्वा-अव्य० । उपशमे उषित्वेत्यर्थे, आचा० । 'हि' गतावित्यस्मात् पूर्वकाले क्त्वा । हित्वा गत्वा—प्रतिपद्येत्यर्थे, आचा०१ श्रु०४ अ०४ उ० । 'ओहाक्' त्यागे, हाधातोः क्त्वा । त्यक्त्वेत्यर्थे, आचा० १ श्रु० ६ अ० ४ उ० ।

हिज्ज-ह्यस्-अव्य० । कल्ये, दे० ना० ८ वर्ग ६७ गाथा ।

हिट्ठ-अधस्-अव्य० । "अधसो हेट्ठं ॥८ । २ । १४१॥ इति हेट्ठादेशः । सयोगपूर्वस्यैकारस्य ह्रस्व इकारः । अधस्तादर्थे, प्रा० । स्था० । आकुले, दे० ना० ८ वर्ग ६७ गाथा ।

हिट्ठगइ-अधस्ताद्गति-स्त्री० । नरकेषूपपाते, दश० १ चू० ।

हिट्ठाहिड-देशी—आकुले, दे० ना० ८ वर्ग ६७ गाथा ।

हिट्ठिमउवरिमगेविज्जग-अधस्तादुपरितनग्रैवेयक-पुं० । ग्रैवेयकदेवभेदे, स्था० ६ ठा० ३ उ० ।

हिट्ठिमगेविज्ज-अधस्तनग्रैवेय-पुं० । ग्रैवेयकदेवभेदे, स्था० ६ ठा० ३ उ० ।

हिट्ठिममज्झिमगेविज्जग-अधस्तनमध्यमग्रैवेयक-पुं० । ग्रैवेयकदेवभेदे, स्था० ६ ठा० ३ उ० ।

हिट्ठिल्ल-अधस्तन-त्रि० । नीचे, अनु० ।

हिडि-धा० । गतौ । भ्रमणे,भ्वादि आत्मनेपद सकर्मक सेट् इदित् । हिंडइ । प्रा० ।

हिडिंबा-हिडिम्बा-स्त्री० । भीमसेनस्य भार्यायां घटोत्कचस्य मातरि स्वनामख्यातायां राक्षस्याम् , प्रा० ४ पाद ।

हिडु-देशी—वामने, दे० ना० ८ वर्ग ६७ गाथा ।

हित-हित-न० । पथ्यान्नवत् ,( भ० २ श० १ उ० ।) उपकारके, उत्त० २ अ० ।

हितपक-हृदयक-न० । स्वार्थे क । कृपादित्वात् इ । "तदोस्तः" ॥८।४।३०७॥ इति दस्य त । "हृदये यस्य पः" ॥८।४।३१०॥ इति यस्य प । हितपकं । अन्तःकरणे, प्रा० ४ पाद ।

हितमितभोजि-हितमितभोजिन्-पुं० । पथ्याल्पाहाराभ्यवहारिणि, पञ्चा० १६ विव० ।

हित्थ-त्रस्त-पुं० । " त्रस्तस्य हित्थ-तट्ठौ " ॥८।२।१३६॥ इति त्रस्तस्थाने हित्थादेशः । उद्विग्ने, प्रा० । लज्जिते,दे० ना०८ वर्ग ६७ गाथा । पाइ०ना० ।

हित्था-देशी—लज्जायाम् , दे० ना० ८ वर्ग ६७ गाथा ।

हिम-हिम-न० । तुषारे, "तुहिणं हिमं तुसारं" पाइ० ना० १५७ गाथा । शीते, बृ० १ उ० ३ प्रक० । ओघ० । तुहिने, ध० २ अधि० । स्था० । स्त्यानोदके, जी० १ प्रति० । प्रज्ञा० । हिमं तु शिशिरसमये शीतपुद्गलसम्पर्काज्जलमेव कठिनीभूतमिति । आचा० १ श्रु० १ अ० ३ उ० ।

हिमग-हिमक-न० । हिम एव हिमकम् । तुहिने, स्था० ४ ठा० । शिशिरादौ रातरिने हिमकणे, सूत्र० २ श्रु० ३ अ० । संस्त्याने जलबिन्दौ, कल्प० ३ अधि० ६ क्षण । भ० । आचा० । बृ० ।

हिमयर-हिमकर-पुं० । चन्द्रे, "मयलंछणो हिमयरो" पाइ० ना० ५ गाथा ।

हिमवंत-हिमवत्-पुं० । वर्षधरपर्वतविशेषे, स्था० ६ ठा० ३ उ० । अन्त० । प्रश्न० । रा० । नं० । इह जम्बूद्वीपे भरतस्य हैमवतस्य च क्षेत्रस्य सीमाकारी भूमिनिमग्नपञ्चविंशतियोजनो योजनशतोच्छ्रायप्रमाणो भरतक्षेत्रापेक्षया द्विगुणविष्कम्भो हेममयः चीनपट्टवर्णो नानावर्णचि-

शिष्टद्युतिमणिनिकरपरिमण्डितपार्श्व. सर्वत्र तुल्यविस्तारो गगनमण्डलोल्लिखितरत्नमयैकादशकूटोपशोभित. तपनीयमयतलविविधमणिकनकमण्डिततद्दशयोजनावगाढ—पूर्वपश्चिमयोजनसहस्रायामदक्षिणोत्तरयोजनपञ्चशतविस्तृतपद्मह्रदोपशोभितशिरोमध्यभाग. कल्पपादपश्रेणिरमणीयः पूर्वापरपर्यन्ताभ्यां लवणार्णवजलसंस्पर्शी हिमवन्नामा पर्वत. । नं०।

दो हिमवंताइं। स्था० २ ठा० ३ उ०।

(अत्र सूत्रप्रतिबद्धवक्तव्यता क्षुल्लहिमवन्महाहिमवच्छब्दयोः तृतीयषष्ठभागयोरुक्ता ।) स्कन्दिलाचार्यस्य स्वनामख्याते शिष्ये, नं०।

हिमवाय-हिमपात-पुं०। तुहिनपाते, आचा० १ श्रु० ६ अ० २ उ०। "गिरिपज्जुन्नवयारे,अविअओ समए यं च नामेण। नत्थ वि पावा पुढवी, हिमवाए होइ वरहेमं ॥" ती०३ कल्प।

हिमसीयल-हिमशीतल-पुं०। अत्यन्तशीतले, अत्यन्तशीतलवेदनोत्पादकत्वात् तथाविधे नैरयिकाणामाहारे, स्था० ४ ठा० ४ उ०। चन्द्रं सूर्यं च गृह्णतो राहो: कृष्णपुद्गलभेदे, चं० प्र० २०,पाहु० सू० प्र०।

हिय-हित-न०। ऐहिके आमुष्मिके च पथ्ये, उत्त० १ अ०। आव०। दर्श०। ज्ञा०। प्रश्न०। स्था०। दशा०। भ०। पथ्यान्नवत् (भ० ६ श० ३३ उ०। नि०।) अदोषकरे,स्था० ३ ठा० ४ उ०। सद्गतिप्रापके, अनर्थनिवारके च। सूत्र० १ श्रु० १२ अ०। परिणामसुखावहत्वात् सामायिके, आ० म० १ अ०। जी०। परिणामपथ्ये, कुशलानुबन्धिनि, आ० म० २ अ०। परमार्थतो मुक्त्यवाप्तिस्तत्कारणं वा हितं तच्च सम्यग्दर्शनचारित्राख्यमवगन्तव्यमिति। सूत्र० १श्रु० ११अ०। उत्त०। अशेषापायरहिते, ईप्सितस्थानप्रापके च। सूत्र० १ श्रु० १४ अ०। अभिप्रेतार्थसाधनात्, ( आचा० १ श्रु० ८ अ० ८ उ०।) जन्मान्तरेऽपि कल्याणवहे, रा०। अनर्थपरिहाररूपे ( स० १४६ सूत्र।) प्राणिगणानुपतापके, दर्श० ४ तत्त्व०। अनर्थप्रतिघातार्थप्राप्तिरूपे ( स० १४० सूत्र।) अभ्युदयनिःश्रेयसयो, नं०। उत्त०। ( अत्रत्यव्याख्या 'कविल' शब्दे तृतीयभागे ३८६ पृष्ठे गता।) आत्यन्तिकतद्दशाप्रकर्षप्ररूपणेनानुकूलवृत्तौ, स० १ सम०। उपकारके, विशे०। कल्याणे, पा०।

हियउड्डावण-हृदयोड्डापन-न०। चित्ताकर्षणहेतौ, ज्ञा० १ श्रु० १४ अ०। शून्यचित्तकारके, विपा० १ श्रु० २ अ०।

हियउप्पाडिय-उत्पाटितहृदय-त्रि०। आकृष्टकालेज्यकमांसे, औ०।

हियकंखि-हितकाङ्क्षिन्-पुं०। हिताभिलाषिणि, पो० १६ विव०। हितेच्छौ, ध० ३ अधि०।

हियकर-हितकर-पुं०। निर्याहाभ्युदयहेतौ,स्था०६ ठा०३ उ०।

हियकरी-हितकरी-स्त्री०। इह परत्र च तथ्यविधायिन्याम्, उत्त० ३ अ०।

हियकाम-हितकाम-त्रि०। सुखनिबन्धनं वस्तु इह हितम् अपायाभावात् तत्र कामोऽस्येति हितकामः। भ० १५ श०। प्रति०। हिताभिलाषिणि, षो० ६ विव०।

हियएसि-हितान्वेषिन्-हितमन्वेषयत इत्येवंशीलो हितान्वेषी। हितगवेषके, ध० ३ अधि०।

हियत्थ-हितार्थ-पुं०। हितमनर्थप्रतिघातार्थप्राप्तिरूपं तदेवार्थः प्रार्थ्यमानत्वात्। हितलक्षणेऽर्थे, स० १५० सूत्र। उत्त०।

हियभासि-हितभाषिन्-त्रि०। हितं परिणामसुन्दरं तद्भाषते इत्येवंशीलो हितभाषी। हितवक्तरि, व्य० १ उ०।

हियमियअफरुसवाइ-हितमितापरुषवा(च्)दिन्-पुं०। हितस्याभिमतस्यापरुषस्य च वक्तरि,'हितमितापरुषवागिति'।हितवाक् हितं वाक्ति परिणामसुन्दरं मितवाग्मितं स्तोकैरक्षरैः अपरुषवाक् अपरुषमनिष्ठुरम्। दश० ६ अ० १ उ०।

हियय-हितक-त्रि०। प्रकृत्यनुकूले, ज्ञा० १ श्रु० १७ अ०।

हृदय-न०। आशये, पाइ० ना० २७० गाथा। सम्यगभिप्राये, व्य० २ उ०। मनसि,ज्ञा० १ श्रु० १ अ०। आ० म०। शरीरप्रदेशे, द्वा० २६ द्वा०। सूत्र०।

हिययउट्ठ-हृदयोत्थ-न०। हृदयमांसपिण्डे, विपा० १ श्रु० ५ अ०।

हिययंगम-हृदयंगम-पुं० किन्नरविशेषे, प्रज्ञा० १ पद।

हिययगमणिज्ज-हृदयगमनीय-त्रि०। अर्थपाकत्वचातुरीसचिवत्वात्सुबोध, जं० २ वक्ष०। औ०। हृदयं ये गच्छन्ति कोमलत्वात्सुबोधत्वाच्च। ज्ञा० १ श्रु० १ अ०। भ०। हृदयंगमे, स० ३४ सम०।

हिययग्गाहि(ण्)-हृदयग्राहिन्-त्रि०। हृदयं गृह्णाति हृदये सम्यग् निविशते इत्येवंशील हृदयग्राही। अन्तरभिनिविष्टे, व्य० १ उ०।

हिययगाहित्त-हृदयग्राहित्व-न०। श्रोतृमनोहरतायाम्, स० ३५ सम०।औ०। दुर्गमस्याप्यर्थस्य परहृदयप्रवेशकरणे, रा०।

हिययट्ठ-हृदयस्थ-त्रि०। चित्तस्थे, षो० १२ विव०।

हिययणयणकंत-हृदयनयनकान्त-त्रि०। लोकानां हृदयनयनयोर्वल्लभे, कल्प० १ अधि० ३ क्षण।

हिययद-हृदयद-पुं०। वल्लभे, प्रति०।

हिययदइया-हृदयदयिता-स्त्री०। वल्लभायाम्, प्रश्न०४ आश्र० द्वार।

हिययपल्हायणिज्ज-हृदयप्रह्लादनीय-त्रि०। हृदयगतकोपशोकादिग्रन्थिविलयनकारिणि,भ०६श०३३उ०। औ०। जं०।

हिययसूल-हृदयशूल-पुं०। न०। हृदयपीडायाम्, जी० ३ प्रति०४ अधि०।

हिययाणंदजणण-हृदयानन्दजनन-न०। मन:समृद्धिकारके, भ० ९ श० ३३ उ०।

हियसुहणिस्सेसकामय-हितसुखनिश्शेषकामक-पुं०। हितं सुखम्—अदु खानुबन्धमित्यर्थः, निश्शेषाणां सर्वेषां कामयते वाञ्छति य स तथेति। सर्वेषां सुखप्रार्थके, प्रति०।

हियाऽकारय-हिताकारक-पुं० । जनहितस्याऽकर्त्तरि, ज्ञा० १ श्रु० २ अ० ।

हियाणुप्पेहि-हितानुप्रेक्षिण्-त्रि० । हितं पथ्यमनुप्रेक्षते पर्यालोचयतीत्येवंशीलो हितानुप्रेक्षी । हितपर्यालोचके, उत्त० १३ अ० ।

हियारंभ-हितारम्भ-पुं० । पारलौकिकप्रशस्तानुष्ठानप्रवृत्तौ, द्वा० २२ द्वा० ।

हियाहार-हिताहार-पुं० । हितं द्विधा—द्रव्यतो, भावतश्च । द्रव्यतोऽविरुद्धानि द्रव्याणि, भावत एषणीयं तदाहारयन्ति ये ते हिताहाराः । हितभोजिषु, पिं० ।

हिरणा-देशी—लज्जायाम्, दे० ना० ८ वर्ग ६७ गाथा ।

हिरएण-हिरण्य-न० । अघटिते, (जी०३ प्रति० ४ अधि० । आ० म० ।) सुवर्णे, पञ्चा० १ विव० । उत्त० । रूप्ये, ज्ञा० १ श्रु० १ अ० । उत्त० । नि० चू० । द्रव्यजाते, सूत्र० १ श्रु० ३ अ० २ उ० । आव० । अघटितस्वर्णात्मके द्रव्ये, दशा० ६ अ० ।

हिरएणगब्भ-हिरण्यगर्भ-पुं० । हिरण्यं स्वर्णमयाख्यं गर्भ उत्पत्तिस्थानमस्य । चतुर्मुखे ब्रह्मणि, हिरण्यगर्भादीनामनादिविवक्षितभगयोगोऽभ्युपगम्यते । उक्तं च—" ज्ञानमप्रतिघं यस्य, वैराग्य च जगत्पते । ऐश्वर्यं चैव धर्मश्च, सह सिद्धं चतुष्टयम् ॥१॥ " आ० म० १ अ० ।

हिरएणजुत्ति-हिरण्ययुक्ति-स्त्री० । रूप्यस्य यथोचितस्थाने योजने, ज्ञा० १ श्रु० १ अ० । जं० ।

हिरएणपाग-हिरण्यपाक-पुं० । रजतसिद्धौ, ज्ञा० १ श्रु० १ अ० । जं० । स० । आचा० ।

हिरएणपेडा-हिरण्यपेटा-स्त्री० । हिरण्यमञ्जूषायाम्, भ०१३ श० ६ उ० ।

हिरएणवास-हिरण्यवर्ष-पुं० । रूप्यस्य अघटितसुवर्णस्य वा वर्षणे, कल्प० २ अधि० ८ क्षण । जी० । भ० ।

हिरएणसुवएणपमाणाइक्कम-हिरण्यसुवर्णप्रमाणातिक्रम-पुं० । हिरण्यसुवर्णयोः प्रत्याख्यानकालगृहीतप्रमाणोल्लङ्घने, उपा० । ' हिरएणसुवएणपमाणाइक्कमे ' त्ति प्राग्वत् । अथवा—राजादेः सकाशाल्लब्धं हिरण्याद्यभिग्रहोऽवधिं यावदन्यस्मै प्रयच्छति पुनरवधे पूर्त्तौ ग्रहीष्यामीत्यध्यवसायवतोऽयमतिचार । उपा० १ अ० ।

हिरएणसुवएणविहि-हिरण्यसुवर्णविधि-पुं० । रजतस्य सुवर्णस्य च प्रकारे, उपा० । हिरण्यं-रजतं सुवर्णं प्रतीतम् विधि -प्रकार । उपा० १ अ० ।

हिरएणाऽऽगर-हिरण्याऽऽकर-पुं० । हिरण्योत्पत्तिभूमौ, ज्ञा० १ श्रु० १६ अ० । जी० ।

हिरएणुक्कडी-हिरण्योत्कटी-स्त्री० । सुगृहीतनामधेयाया आर्यायाः पूर्वभववज्रस्वामिनः धर्माचार्योपलब्धिस्थानभूतायां राजधान्याम्, महा० २ चू० ।



हिरमिक्क-हिरमिक्क-पुं० । प्राणिनां पूज्ये आएडवरापरनामके यक्षे, व्य० ७ उ० ।

हिरिअ-ह्रीक-पुं० । ई-श्री-ह्री-कृत्स्न-क्रिया-दिष्टयामित् ॥ ८ । २ । १०४ ॥ इति संयुक्तस्यान्त्यव्यञ्जनात्पूर्वं इकारः । लज्जायुक्ते, प्रा० । उत्त० ।

हिरिंब-देशी-पल्वले, दे० ना० ८ वर्ग ६६ गाथा ।

हिरिकूड-ह्रीकूट-पुं० । न० । महापद्माख्यतद्ह्रदनिवासिन्ह्रीनामकदेवतासत्के महाहिमवतः कूटे, स्था० ८ ठा० ३ उ० ।

हिरिमंथा-देशी-चणके, दे० ना० ८ वर्ग ७० गाथा ।

हिरिमाणसत्त-ह्रीमनःसत्त्व-पुं० । ह्रिया हसिष्यन्ति मामुच्चकुलजातं जना इति लज्जया मनस्येव न काये रोमहर्षकम्पादिभयलिङ्गोपदर्शनात् सत्त्वं यस्य सः ह्रीमनःसत्त्वः । स्था० ४ ठा० ३ उ० । ह्रियाऽपि मनस्येव सत्त्वं न देहे शीतादिषु कम्पादिविकारभावात् यस्य स ह्रीमनःसत्त्वः । तथाविधसत्त्वशालिनि पुरुषे, स्था० ५ ठा० ३ उ० ।

हिरिली-हिरिली-स्त्री० । कन्दविशेषे, उत्त० ३५ अ० । भ० ।

हिरिवत्तिय-ह्रीप्रत्यय-न० । ह्री-लज्जा संयमो वा प्रत्ययो निमित्तं यस्य धारणस्य तत्तथा । लज्जार्थे, ' हिरिवत्तियं वत्थं धारेज्जा ' स्था० ३ ठा० ३ उ० ।

हिरिवेर-ह्रीवेर-पुं० । न० । वालके, गन्धद्रव्यविशेषे च । ज्ञा० १ श्रु० १७ अ० । उत्त० । पाइ० ना० २१५ गाथा ।

हिरिसत्त-ह्रीसत्त्व-पुं० । ह्रिया—लज्जया सत्त्वं परीषहेषु साधोः संग्रामादावितरस्य वाऽवष्टम्भोऽविचलनं यस्य स ह्रीसत्त्व । स्था० ५ ठा० ३ उ० । ह्रिया—लज्जया सत्त्व परीषहादिसहने रणाङ्गणे वाऽवष्टम्भो यस्य स ह्रीसत्त्वः । तथाविधसत्त्वे पुरुषजाते, स्था० ४ ठा० ३ उ० ।

हिरी-ह्री-स्त्री० । " ई-श्री-ह्री-कृत्स्न-क्रिया-दिष्टयामित् " ॥ ८ । २ । १०४ ॥ इति संयुक्तस्यान्त्यव्यञ्जनात्पूर्वं इकारः । ह्री । हिरी । प्रा० । लज्जायाम्, आचा० १ श्रु० ८ अ० ७ उ० । स्था० । सूत्र० । द्वा० । ध० । विशे० । सूत्र० । रा० । देवताविशेषे, अनु० । जम्बूद्वीपे मन्दरस्य दक्षिणे महापद्मह्रदवास्तव्यायां स्वनामख्यातायां देव्याम्, स्था० ३ ठा० ४ उ० । उत्तररुचकपर्वतवास्तव्याया दिक्कुमारीमहत्तरिकायाम्, आ० म० १ अ० । जं० । आ० क० । द्वी० । आ० चू० । सुपुरुषस्य किंपुरुषेन्द्रस्याग्रमहिष्याम्, स्था० ४ ठा० १ उ० । भ० । शक्रादिलोकसोममहाराजस्याग्रमहिष्याम्, ज्ञा० २ श्रु० ४ वर्ग १ अ० ।

हिरिवंग-देशी । लगुडे, दे० ना० ८ वर्ग ६३ गाथा ।

हिरीमण-ह्रीमनस्-पुं० । ह्रीर्लज्जा संयमो मूलोत्तरगुणभेदभिन्नस्तत्र मनो यस्यासौ ह्रीमना, यदि वा—अनाचारं कुर्वन्नाचार्यादिभ्यो लज्जते स एवमुच्यते । पापभीरुतया लज्जालौ, सूत्र० १ श्रु० १३ अ० ।

हिल्ला-देशी—वालुकायाम्, दे० ना० ८ वर्ग ६६ गाथा ।

हिल्लिया-हिल्लिका-स्त्री० । त्रीन्द्रियजीवविशेषे, प्रज्ञा० १ पद ।

हिल्लूरी-देशी-लहर्याम् , दे० ना० ८ वर्ग ६७ गाथा।

हिल्लोडग-देशी-क्षेत्रे मृगनिषेधकरवे, दे०ना०८ वर्ग ६६ गाथा।

हिसीय-हृषीक-न०। इन्द्रिये,नं०। 'हृषीकं करणं स्मृत'मिति वचनात्। आ० म० १ अ०। द्वा०।

हिमोहिसा-देशी-स्पर्धने, दे० ना० ८ वर्ग ६६ गाथा।

ही-हि-अव्य०। कन्दर्पातिशयद्योतने, सूत्र० १ श्रु० २ अ० २ उ०। अनु०। निश्चये, अष्ट० १५ अष्ट०।

ह्री-स्त्री०। लज्जायाम् , सूत्र० १ श्रु० २ अ० २ उ०।

हीण-हीन-त्रि०। असमग्रे , ज्ञा० १ श्रु० ८ अ० । असंपूर्णे, उपा० २ अ०। न्यूने, ज्ञा० १ श्रु० १ अ०।

हीणक्खर-हीनाक्षर-न०। अक्षरन्यूने, ध० ३ अधि०। आव०। वृ०। तत्र हीनं द्विधा-द्रव्यहीनं, भावहीनं च।

द्रव्यहीने उदाहरणमाह—

तित्त कडु भेसयाइं, मार्ग पीलेज्जऊण ते देइ।
पउणइ ण तेहि अहिते-हि मरइ वालो तहाहारो ॥२६१॥

"एगाए अविरइयाए पुत्तो गिलाणो, तीए विज्जो पुच्छिओ,तेण ओसहाणि दिण्णाणि। सा चिंतेइ—इमाणि कडुय त्ति ताणिमाणि पीडिज्जते ऊणाइ एअद्धाणि अवणीयानि सो नेहिं न पगुणीकओ मओ। तओ एगा उण अहिगं देइ तीसे वि मओ "। अक्षरगमनिका-तत्र कटुकौषधानि मा अमुं बालं पीडयेयुरिति न तानि परिपूर्णानि ददाति किंत्वर्द्धानि। नच तैरर्द्धैर्बाल प्रगुणानि, किन्तु म्रियते स तथा आहारे ऊने म्रियते,एष दृष्टान्त। अयमर्थोपनयः-यथा तौ बालात्रेकभविकं दुःखं प्राप्तावेवं यो भावहीनस्सूत्रमुच्चरति पठति वा; अक्षरैर्हीनमित्यर्थः , तस्य प्रायश्चित्तं मासलघु, आज्ञां तीर्थकराणामतिचरतश्चतुर्गुरु, अनवस्थायां चतुर्गुरु, मिथ्यात्वे चतुर्लघु। विराधना द्विविधा—आत्मविराधना, संयमविराधना च। तत्रात्मविराधना-प्रसज्य देवता छलयेत् अन्यो वा साधुर्ब्रूयात् किंचिद्वयसि सूत्रं कलहप्रसङ्ग अस्थिभङ्गमरणादिदोषप्रसङ्ग श्रुतं हीनं कुर्वता संयमो विराधित एव।

कथमित्याह—

अक्खरपयाइएहिं, हीणइरेगं च तेसु यं चेव।
दोसु वि अत्थविवत्ती,चरणं अत्थे य न य मुक्खो॥२६२॥

हीनमक्षरपदादिभिरूनं नैर्व्यात्तरपदादिभिरतिरेकं साधिकं द्वयोरपि हीनाक्षरे अधिकाक्षरे चेत्यर्थ। अर्थस्यापत्तिः अर्थस्य विसंवाद अनर्थार्थस्य विसंवादे चरणस्य विसंवादः, चरणविसंवादाच्च मोक्ष —मोक्षाभावः मोक्षाभावे सर्वा दीक्षा निरर्थिका, एष भावहीने दोष।

तस्मिन्नेव भावहीने दृष्टान्तमाह—

विज्जाहरो रायगिहे, उप्पयपडणं च हीणदोसेणं।
गुणवया मरणागमणं,दयाणुसारिस्स दाणं च ॥२६३॥

"रायगिहे सामी समोसढो, तत्थ एगो विज्जाहरो वंदिउं पडिनिउत्तो विज्जं आवाहेइ. तस्स तीए विज्जाए कइंचि अक्खराणि विस्सरियाणि सो उप्पयइ पडइ च करेइ। अभओ तं दट्ठूण तस्स सगासे गओ। पुच्छइ-तेण सिट्ठं अभएण जइ मम पि देसि तो वावारेमि इयरेण पडिवन्नं। तओ अभओ भणइ-तो खायं भण एगं पयं, तेण भणियं ताहे अभएण पयाणुसारिणा निरिण अक्खराणि समग्गियाणि, विज्जाहरो उप्पइत्ता गओ। अभयस्स विज्जं दाउं।" अक्षरगमनिका-राजगृहे विद्याधरः, कतिपयविद्याक्षरगलनात् हीनदोषेण उत्पतनं पतनं च करोति, ततो विद्यापदानामभयस्य श्रवणात् तत्प्रवणतो अभयस्य पदानुसारिप्रज्ञाया विस्मृतपदानां स्मारणात्तदनन्तरं पदानुसारिणोऽभयस्य विद्यादानं कृत्वा विद्याधरस्य स्वस्थाने गमनम्। वृ० १ उ० १ प्रक०। (तादृशं विद्याधरं दृष्ट्वा श्रेणिको भगवन्तमप्राक्षीत् कथमयमुत्पातनिपातं करोति? भगवतोक्तम्-अस्यैकं विद्याक्षरं विस्मृतमिति अनुयोगद्वारचूर्ण्याश्रयेण संघाचारेऽधिकम्।)

हीणणाय-हीनज्ञात-न०। तुच्छोदाहरणे, पं० व० २ द्वार। पञ्चा०।

हीणणेत्त-हीननेत्र-पुं०। अपगतचक्षुषि,सूत्र० १ श्रु० १२ अ०।

हीणपुण्णचाउद्दस-हीनपुण्यचातुर्दश-पुं०। हीना-असम्पूर्णा चतुर्दशी तिथिर्जन्मकाले यस्य स हीनपुण्यचतुर्दशकः। उपा० २ अ०। हीनायां चतुर्दश्यां जाते, भ०।

हीणपुण्णचाउद्दसे जं णं। ( सू० १४४ X)

'हीणपुण्णचाउद्दसे' त्ति हीनाया पुण्यचतुर्दश्या जातो हीनपुण्यचातुर्दश। किल चतुर्दशी तिथिः पुण्या जन्माश्रित्य भवति, सा च पूर्णाऽत्यन्तभाग्यवतो जन्मनि भवति अत आक्रोशतोक्तं 'हीणपुण्णचाउद्दसे' त्ति। भ० ३ श०२ उ०।

हीणसत्तया-हीनसत्त्वता-स्त्री०। सत्त्वाभावे , स्था० ४ ठा० ४ उ०।

हीणस्सर-हीनस्वर-त्रि०। लघुध्वनौ, तं०। अल्पस्वरे, भ० १ श० ७ उ०। स्था०।

हीणायार-हीनाचार-पुं०। पार्श्वस्थावसन्नकुशीलसंसक्ताहाच्छन्दनित्यवासिषु , दर्श० ४ तत्त्व।

हीमंत-ह्रीमत्-त्रि०। ह्रीरसंयमं प्रति लज्जा तद्वान्। असंयमजुगुप्सावति, सूत्र० १ श्रु० २ अ० २ उ०।

हीमाणहे-अव्य०। विस्मयनिर्वेदयो, "हीमाणहे-विस्मयनिर्वेदे" ॥८।४।२८२॥ शौरसेन्यां हीमाणहे इत्ययं निपातो विस्मये निर्वेदे च प्रयोक्तव्य। प्रा०। विस्मये—यथा उदात्तराघवे राक्षस —"हीमाणहे जीवन्त-वश्चा मे जणणी।" निर्वेदे यथा विक्रान्तभीमे राक्षस —"हीमाणहे पलिस्संता हगे एदेण नियविधिणो दुव्ववशिदेण।" प्रा० ४ पाद।

हीयमाणय-हीयमानक-न०। हीयते तथाविधसामग्र्यभावतो हानिमुपगच्छति हीयमानम् , कर्मकर्तृविवक्षायामानश्-

प्रत्यय' । हीयमानमेव हीयमानकम् ' कुत्सितानल्पाज्ञाने ' ॥७।३।३३॥ (सिद्धहै०) इति कः प्रत्यय । पूर्वावस्थानोऽधोऽधो ह्रासमुपगच्छत्यवधिज्ञानं, 'हीयमाणं पुव्वावत्थाओ 'अहोहो हस्समाणं' इति । नं० ।

से किं तं हीयमाणयं ओहिनाणं ?, हीयमाणयं ओहिनाणं अप्पसत्थेहिं अज्झवसाणट्ठाणेहिं वट्टमाणस्स वट्टमाणचरित्तस्स- संकिलिस्समाणस्स संकिलिस्समाणचरित्तस्स सव्वओ ममंता ओही परिहायइ। से तं हीयमाणयं ओहिनाणं । ( सू० १३ )

'से किं तं' मित्यादि, अथ किं तद्धीयमानकमवधिज्ञानम् ?, सूरिराह—हीयमानकमवधिज्ञानं कथंचिदवाप्तं सत् अप्रशस्तेष्वध्यवसायस्थानेषु वर्त्तमानस्याविरतसम्यग्दृष्टेर्वर्त्तमानचारित्रस्य—देशविरतादे संक्लिश्यमानस्य उत्तरोत्तरं संक्लेशमासादयत , इद च विशेषणमविरतसम्यग्दृष्टेरवसेयं तथा संक्लिश्यमानचारित्रस्य देशविरतादे. सर्वत - समन्तादवधि. परिहीयते पूर्वावस्थातो हानिमुपगच्छति तदेतत् हीयमानकमवधिज्ञानम् । नं० । कर्म० । स्था० ।

हीर–हीर–न० । लघुकुत्सिते तृणे, जी० ३ प्रति० ४ अधि० । वृक्षमध्यसारे, नि० चू० १५ उ० । वज्रमणौ , प्रश्न० १ पद । सूचीमुखाभे दार्वादिवस्तुनि, भस्मनि च । दे० ना० ८ वर्ग ७० गाथा ।

हीरग–हीरक–पु० । सकोणकर्करिकाविशेषे, दशा० ७ अ० । ' वज्रे , मणिविशेषे, अनु० ।

हीरपसिण–हीरप्रश्न–पु० । विमलगणिप्रभृतिकृतप्रश्नोत्तरग्रन्थे, ही० । "स्वस्ति श्रियो निदानं , जन्तूनां धर्मकारिणां सम्यक् । श्रीवर्धमानतीर्था-धिराजमभिनम्य सद्भक्त्या ॥ १ ॥ गीतार्थसार्थनिर्मित-पृच्छानामुत्तराणि लिख्यन्ते । श्रीहीरविजयसूरि—प्रसादितानि प्रबोधाय ॥ २ ॥" ही० १ प्रका० ।

हीरमाण–ह्रियमाण–त्रि० । नीयमाने, आचा० २ श्रु० १ चू० ४ अ० ४ उ० ।

हीरविजय–हीरविजय–पुं० । अकब्बरशाहप्रतिबोधके तपागच्छीयसूरौ, द्वा० । " प्रतापार्के येषा स्फुरति विहिताऽकब्बरमन , सरोजप्रोल्लासे भवति कुमतध्वान्तविलय । विरेजु सूरीन्द्रास्त इह जयिनो हीरविजया, दयावल्लीवृद्धौ जलदजलधारायितगिर ॥१॥" द्वा० ३२ द्वा० । प्रति० । "येनाऽकब्बरभूधरेऽपि हि दयावल्लि समारोपिता, विश्वव्यासिमतीवभूरि फलिता धर्मोर्जितै कर्मभि । हीर क्षीरसमुद्रसान्द्रलहरीप्रस्पर्द्धिकीर्तिर्भ्रमन् , स श्रीमान् जिनशासनोन्नतिकरस्तत्पट्टेनताऽजनि ॥२२॥ " प्रति० । द्वा० । " प्रख्यावान जनिष्ट हीरविजय सूरि सतामग्रणी "। ध०३ अधि०। "आसत्तदीयपट्टे, प्रभवश्रीविजयदानसूरीन्द्रा । सर्वत्र विजयवन्तो, नयवन्त समयवन्तश्च ॥१॥ तेषां पट्टे सम्प्रति, विजयन्ते सर्वसूरिपारीन्द्रा । सुविहितसाधुप्रभव ,श्रीमन्तो हीरविजयाह्वा ॥२॥" ग०३ अधि०। ( अवत्यविस्तार' ' कप्पसुबोहिया' शब्दे तृतीयभागे २३८ पृष्ठे गत ।) केचन वदन्ति श्रीमहावीरशिष्यश्रीसुधर्मस्वामिन आरभ्य परम्परया कलिकालयुगप्रधानसमानश्रीहरिविजयसूरय त्रिपष्टितमपट्टे केचन वदन्ति एकषष्टितमपट्ट उपाध्यायश्रीधर्मसागरगणिकृतपट्टावल्यां त्वष्टपञ्चाशत्तमपट्टे सन्तीति त्रयाणां मध्ये किं प्रमाणमिति प्रश्न , अत्रोत्तरम्-श्रीमहावीरशिष्यसुधर्मस्वामिन आरभ्य परम्परया श्रीहीरविजयसूरयोऽष्टपञ्चाशत्तमपट्टे सन्तीति ज्ञेयम् ॥ ७६२ ॥ सेन० ४ उल्ला० ।

हीलण–हीलन–न० । जात्याद्युद्घट्टनतोऽवमाने, स्था० ३ ठा० १ उ० । सूत्र० । गुरुकुलाद्युद्घाटनत (ज्ञा०१ श्रु०३अ० ।) जात्याद्युद्घाटनतो वा । ज्ञा० १ श्रु०८ अ० ।) अनभ्युत्थानादिके, अन्त० । ) असूयया दुष्टाभिधाने, दश० ६ अ० ३ उ० ।

हीलणा–हीलना–स्त्री० । जन्मकर्ममर्मोद्घाटने, औ०। आष० ।

हीलणिज्ज–हीलनीय–त्रि० । अवज्ञातुमुचिते, उत्त० १२ अ० ।

हीला–हीला–स्त्री० । निन्दायाम् , सूत्र० १ श्रु० २ अ० २ उ०। अवमाने, उत्त० १२ अ० ।

हीलिज्जमाण–हील्यमान–त्रि० । निन्द्यमाने, आ० म० १अ० ।

हीलिय–हीलित–न० । कदर्थिते, आचा० २ श्रु० ४ चू० । निन्दिते, वन्दनदोषे, न० । वृ० ।

एकविंशतितमं दोषमाह—

गणि वायग जिट्ठज्जति, हीलियं किन्तु मे घढम्मि ।

गणिन् ! वाचक ! ज्येष्ठार्य ! किन्तु यो वन्दते तत्पादौ सोत्प्रास हीलयित्वा यत्र वन्दते तद् हीलित वन्दनकम् । वृ० ३ उ० । आव० । आ० चू० । ध० ।

हीलियवयण–हीलितवचन–न० । सासूयमवगणयता वाचकज्येष्ठार्येत्यादिजल्पने, प्रव० २२५ द्वार । स्था० ।

अथ हीलितवचनं व्याख्याति—

गणिवायए बहुस्सुय, मेहावीयरियधम्मकहिवादी ।
अप्पकसाए थूले, तणुए दीहे य मडहे य ॥ २१ ॥

इह गणिवाचकादिपदै सूचया असूचया वा परं हीलयति , सूचया यथा वय नगरवृषभा अत. को नाम गणिवृषभै सहास्माक विरोध , असूचया यथा कस्त्व गणी नामासि किं वा त्वया गणिना निष्पन्नेन । यद्वा-गणी भवन्नपि त्वं न किंचित् जानासि केन वा त्व गणी कृत इति, एव वाचकादिष्वपि पदेषु भावनीयम् । नवरं वाचक पूर्वगतश्रुतधारी बहुश्रुत -अधीतविचित्रश्रुत , मेधावी—ग्रहणधारणामर्यादाभेदात् त्रिधा । आचार्यो गच्छाधिपति धर्मकथावादी च प्रतीत । 'अप्पकसाए'त्ति बहुकषाया वय को नामाल्पकषायै. सह विरोध ' थूले तणुए ' त्ति स्थूलशरीरा वय कस्तनुदेहै सह विरोध ' दीहे मडहे य ' त्ति दीर्घदेहा वय सदैवोपरि शिरोद्घट्टन प्राप्नुम , को मडहदेहै सम विरोध एषा सूचा असूचायां तु बहुकषायत्वं स्थूलशरीरस्त्वमित्यादिक परिस्फुटमेव जल्पति । एव सूचया वा यत्पर हीलयति तदेतत् हीलितवचनम् । वृ० ६ उ० ।

हीसमण–हेषित–न० । 'क्लेनाप्फुण्णादय '॥ ८ । ४ । २५८॥ इति

हेषितस्थाने हीसमणेति निपात्यते। हीसमणं । अश्वशब्दे, प्रा०। दे० ना०।

हीही-देशी-अव्य०। हर्षे,प्रा०"हीही विदूषकस्य" ॥८।४।२८५॥ शौरसेन्यां हीही इति निपातो विदूषकस्य हर्षद्योत्ये प्रयोक्तव्यः "हीही भो सम्पन्ना मणोरधा पियवयस्सस्स, " प्रा०।

हु-हु-अव्य०। निश्चये, उत्त० १ अ०। त्य०। आ० म०। यस्मादर्थे, आचा० १ श्रु० ६ अ० १ उ०। सूत्र०। नि० चू०। शब्दार्थे, विशेषणे च। सूत्र० १ श्रु० १२ अ०। आचा०। आ० म०। हेतौ, अवधारणे च। आचा० १ श्रु० ६ अ० १ उ०। सूत्र०। नि० चू०। आ०। सम्म०। पञ्चा०। वाक्यालङ्कारे, आ० म० १ अ०। सूत्र०। तं०। प्रश्न०। पञ्चा०। प्राकट्ये, प्रव० १ द्वार। स्फुटार्थे, आतु०। पादपूरणार्थे, जीवा० २८ अधि०। पं० चू०। पञ्चकार्थे, उत्त० १ अ०। दर्श०। आ० म०। पं० सं०। तर्कितार्थसमर्थने, आव० २ अ०।-"हु खु निश्चय-वितर्क-संभावन-विस्मये" ॥ ८। २। १९८॥ हु खु इत्येतौ निश्चयादिषु प्रयोक्तव्यौ। निश्चये-तं पि हु अच्छिन्नसिरी परहस्ते। वितर्क ऊह संशयो वा। ऊहे-'न हु णवरं संगहिया' बहुलाधिकारादनुस्वारात्परो हुर्न प्रयोक्तव्यः। प्रा० २ पाद।

हुअवह-हुतवह-पुं०। अग्नौ, "धूमद्धओ हुअवहो" पाइ० ना० ६ गाथा।

हुआस-हुताश-पुं०। वह्नौ, आव० ४ अ०।

हुआसण-हुताशन-पुं०। राजगृहे नगरे स्वनामख्याते ब्राह्मणे, "नगरं पाटलीपुत्रे, श्रावकोऽभूत् हुताशन। तद्भार्या-ज्वलनशिखा,दहनज्वलनौ सुतौ" आ० क० ४ अ०। अग्नौ, पाइ० ना० ६ गाथा।

हुं-हुं-अव्य०। दानादिषु,प्रा०। " हुं दानपृच्छानिवारणे " ॥ ८। २। १९७॥, हुं इति दानादिषु प्रयुज्यते। दाने-हुं गेण्ह अप्पणच्चिअ। पृच्छायां-हुं साहसु सब्भावं। निवारणे-हु निल्लज्ज! समोसर। प्रा० २ पाद।

हुंकअ-देशी-अञ्जलौ, दे० ना० ८ वर्ग ७१ गाथा।

हुंकार-हुंकार-पुं०। वन्दने, हुंकारं दद्यात्-वन्दनं कुर्यादित्यर्थः। विशे०। आ० म०। प्रा०। तं०।

हुंकुरुव-देशी-अञ्जलौ; दे० ना० ८ वर्ग ७१ गाथा।

हुंड-हुण्ड-न०।अव्यवस्थिताङ्गावयवे,विपा० १ श्रु० १ अ०। सर्वत्रासंस्थितं,यस्य हि प्रायेणैकोऽप्यवयवः शरीरलक्षणोक्तप्रमाणे न संवदति सर्वत्रासंस्थितं हुण्डमिति। स्था० ६ ठा० ३ उ०। प्रश्न०। कर्म०। हुण्डं प्राय सर्वावयवेषु आदिलक्षणविसंवादोपेतमिति। भ० १४ श० ७ उ०। तं०। अनु०। प्रज्ञा०। जी०। विशे०। सर्वावयवप्रमाणविकले संस्थानविशेषे, विपा० १ श्रु० १ अ०। कर्म०।

हुंडणाम-हुण्डनामन्-न०। संस्थाननामकर्मभेदे, यदुदयाज्जन्तुशरीरं हुण्डसंस्थानं भवति। कर्म०। १ कर्म०।

हुंडी-हुण्डी-स्त्री०। घटिकायाम्, "हुंडी घडा" पाइ० ना० २६४ गाथा।

हुंतए-भवितुम्-अव्य०। सत्तां लब्धुमित्यर्थे, बृ० ६ उ०।

हुंतावायपगासण-भाव्यपायप्रकाशन-न०। अशुद्धव्यवहारकृतां भाविनोऽपायस्य प्रकटने, 'मा कृथा पापानि चौर्यादीनि, इह परत्र चानर्थकराणि' त्याश्रितं शिक्षयति, ध० २ अधि०। ध० र०।

हुंवउट्ठ-हुम्बउष्ट-पुं०। कुण्डिकाश्रमणे, भ० ११ श० ६ उ०। नि०। औ०।

हुड-देशी-मेषे, दे० ना० ८ वर्ग ७० गाथा।

हुडुअ-देशी-प्रवाहे, दे० ना० ८ वर्ग ७० गाथा।

हुडुक्का-हुडुक्का-स्त्री०। काहलानामके तूर्यविशेषे, जी० ३ प्रति० ४ अधि०। आ० म०। औ०। रा०।

हुडुम-देशी-पताकायाम्, दे० ना० ८ वर्ग ७० गाथा। पाइ० ना०।

हुड्डा-हुड्डा-स्त्री०। हुड्डां पारापतनालिकेरादिसम्बन्धिनीं विधत्ते। द्वापञ्चाशत्तमे श्रावकस्य आशातनादोषे, प्रव० ३८ द्वार।

हुण-हु-धा०। दानादानयोः, "चि-जि-श्रु-हु-स्तु-लू-पू-धूगां णो ह्रस्वश्च" ॥८।४।२४१॥ इति अन्ते णकारागमः। हुणइ। जुहोति। प्रा०। नि० चू०। "न वा कर्मभावे व्वः क्यस्य च लुक्" ॥ ८। ४। २४२॥ इति अन्ते द्विरुक्तो वकारागमो वा क्यस्य च लुक्। हुव्वइ। हुणिज्जइ। हूयते। प्रा० ४ पाद।

हुत्त-हुत-त्रि०। 'सेवादौ वा' ॥ ८। २। ९९॥ इति अन्त्यस्य द्वित्वं वा। हुत्तं। हुअं। अग्निक्षिप्ते घृतादिके, प्रा०। स्था०। सूत्र०। अभिमुखे, दे० ना० ८ वर्ग ६० गाथा। (अस्य व्याख्या 'कुसील' शब्दे तृतीयभागे ६१० पृष्ठे। 'उदग' शब्दे द्वितीयभागे ७६६ पृष्ठे च द्रष्टव्या।)

हुन्त-भवत्-त्रि०। "भविति हु" ॥ ८। ४। ६१॥ इति भुवो हु इत्यादेशः। विद्यमानार्थे, प्रा० ४ पाद।

हुयवह-हुतवह-पुं०। वैश्वानरे, जी० ३ प्रति० ४ अधि०। प्रज्ञा०। अग्नौ, आ० १ श्रु० १ अ०। तं०। औ०। आ० म०। को०। आव०। 'हुयवहणिद्धंतधोयतत्ततवणिज्जरत्ततलतालुजीहा' हुतवहेन-अग्निना निर्ध्मातं सत् यत् धौतं शोधितमलं तप्तं तपनीयं सुवर्णविशेषस्तद्वत् रक्ते तले हस्ततले तालु ककुदं जिह्वा च-रसना येषां ते हुतवहनिर्ध्मातधौतनप्ततपनीयरक्ततलतालुजिह्वाः। जी० ३ प्रति० ४ अधि०। तं०।

हुयहुयासण-हुतहुताशन-पुं०। दीप्तवह्नौ सूत्र०२श्रु०२ अ०।

हुयासण-हुताशन-पुं०। वैश्वानरे, ज्ञा० १ श्रु० ५ अ०। अग्नौ, कल्प० १ अधि० ६ क्षण। देवमायाकृते वह्नौ, उत्त० १३ अ०। माहिश्वर्यां नगर्यां स्वनामख्याते व्यन्तरगृहे, पञ्चा० ६ विव०। आ० म०। आ० चू०।

हुरत्था-देशी-बहिर्वा निर्गत्यत्यर्थे, आचा० २ श्रु० १ चू० १ अ० ३ उ०। उपाश्रयाद् बहिर्विनिम्ना वगडायाम्, बृ० २ उ०।

हुरब्भ-हुरभ-पुं०। वाद्यविशेषे, उपा० २ अ०। ' हुरब्भ-खुडसंठाणसठिए' हुरब्भो वाद्यविशेषस्तस्य पुट पुष्करं तत्सस्थानेन सस्थित.। उपा० २ अ०।

हुरुडी-देशी-विपादिकायाम्, दे० ना० ८ वर्ग ७१ गाथा।

हुल-क्षिप्-धा०। प्रेरणे, "क्षिपेर्गलत्थाड्डक्ख-सोल्ल-पेल्ल-णोल्ल-छुह-हुल-परी-घत्ताः॥ ८।४।१४३॥ इति क्षिप्स्थाने हुलेत्यादेश.। हुलइ। क्षिपति'। प्रा० ४ पाद।

मृज्-धा०। शुद्धौ, "मृजेरुग्घुस-लुञ्छ-पुञ्छ-पुंस-फुस-पुस-लुह-हुल-रोसाणा'"॥ ८।४।१०५॥ इति मृज्धातोर्हुलेत्यादेश.। हुलइ। मार्ष्टि। प्रा० ४ पाद।

हुलिय-देशी-शीघ्र, प्रश्न०१ आश्र० द्वार। प्रा०औ०। दे०ना०।

हुलुव्व-देशी-प्रसवपरायां स्त्रियाम्, दे०ना०८ वर्ग ७१ गाथा।

हुव-भू-धा०। सत्तायाम्, "भुवेर्हो-हुव-हवा."॥८।४।६०॥ इति भूधातोर्हुवादेशः। हुवइ। भवति। प्रा० ४ पाद।

हुहुय-हुहुक-न०। चतुरशीतिलक्षगुणितेषु हुहुकाङ्गेषु, अनु०। स्था०। जी०। भ०। ज०। कर्म्म०।

हुहुयंग-हुहुकाङ्ग-न०। चतुरशीतिलक्षगुणिते अववे, स्था० २ ठा० ४ उ०। चतुरशीतिरववशतसहस्राणि एकं हुहुकाङ्गम्। जी० ३ प्रति० ४ अधि०। भ०। कर्म्म०। अनु०। जं०।

हुहुरु-हुहुरु-अव्य०। शब्दानुकरणे, प्रा०। "हुहुरु घुग्घादय.-शब्दचेष्टानुकरणयो." ॥ ८।४।४२३॥ अपभ्रंशे हुहुर्वादय. शब्दानुकरणे घुग्घादयश्चेष्टानुकरणे यथासंख्य प्रयोक्तव्याः। "मइँ जाणिउँ बुड्डीसु हउँ, पेम्मद्रहि हुहुरु त्ति।" प्रा०४ पाद।

हुहुहुहुय-हुहुहुहुक-न०। अणुकरणवचने, "अप्पेगइया हुहुहुहुपंति" आ० म० १ अ०। रा०।

हूअ-भूत-त्रि०। "क्ते हू"॥ ८।४।६४॥ भुव. क्ते प्रत्यये हू आदेश। हूअं। अणुहूअं। जाते, प्रा० ४ पाद।

हूण-हूण-पुं०। अनार्यक्षेत्रविशेषे, तद्वासिनि जने च। त्रि०। सूत्र० १ श्रु० ५ अ० १ उ०। प्रज्ञा०।

हीन-त्रि०। "ऊर्हीनविहीने वा"॥ ८।१।१०३॥ इति ईत ऊत्वम्, हूणो। हीणो। त्यक्ते, रहिते, प्रा० १ पाद।

हूम-देशी-लोहकारे, दे० ना० ८ वर्ग ७१ गाथा।

हूयच्छी-हूताक्षी-स्त्री०। कन्दविशेषे, उत्त० ३६ अ०।

हूयमाण-हूयमान-त्रि०। मयूराकग्रामवासिषु पाखण्डिगृहिषु, पञ्चा० ७ विव०।

हे-हे-अव्य-सम्बोधने, आह्वाने, असूयादौ च। प्रा०।

हेआल-देशी-सर्पशिर सन्निभ हस्तेन निषेधे, दे० ना० ८ वर्ग १७२ गाथा।

हेउ-हेतु-पुं०। हिनोति गमयति ज्ञेयमिति हेतु.। अन्यथाऽनुपपत्तिलक्षणे, स्था०।

हेऊ चउव्विहे पण्णत्ते, तं जहा-जावते १, थावते २, वंसते ३, लूसते ४।

उक्तञ्च-"अन्यथाऽनुपपन्नत्वं, हेतोर्लक्षणमीरितम्। तदप्रसिद्धिसदेह-विपर्यासैस्तदाभता ॥१॥" इति। प्रागुक्तश्च हेतुः पर्यनुयुक्तस्योत्तररूपमुपपत्तिमात्रम्-अयन्तु माध्यं प्रत्यन्वयव्यतिरेकवान् तथाविधदृष्टान्तस्मृतत्द्भाव इति। स चैकलक्षणोऽपि किञ्चिद्विशेषाच्चतुर्द्धा। तत्र 'जावए' त्ति यापयति-वादिन. कालयापनां करोति, यथा काचिद्असती एकैकरूपकेण एकैकमुष्टिपिण्डं दातव्यमिति दत्तशिक्षस्य पत्युस्तद्विक्रयार्थमुज्जयनीप्रेषणोपायेन विटसेवायां कालयापनां कृतवतीति यापक'। उक्तञ्च-"उब्भामिया य महिला, जावगहेउम्मि उट्टलिंडाइ॥" इति, इह वृद्धैर्व्याख्यातम्-प्रतिवादिनं ज्ञात्वा तथा तथा विशेषणबहुलो हेतु कर्त्तव्यो यथा कालयापना भवति, ततोऽसौ नावगच्छति प्रकृतमिति, स चेदृश' संभाव्यते-सचेतना वायवः अपरप्रेरणे सति तिर्यगनियतत्वाभ्या गतिमत्त्वात् गोशरीरवदिति। अयं हि हेतुर्विशेषणबहुलतया परस्य दुरधिगमत्वात् वादिनः कालयापना करोति, स्वरूपमस्यानवबुद्धयमानो हि परो न झगित्येवानैकान्तिकत्वादिदूषणोद्भावनाय प्रवर्त्तितुं शक्नोति, अतो भवत्यस्माद् वादिनः कालयापनेति। अथवा-योऽप्रतीतव्याप्तिकतया व्याप्तिसाधकप्रमाणान्तरसव्यपेक्षत्वान्न झगित्येव साध्यप्रतीतिं करोति, अपि तु कालक्षेपेणेत्यसौ साध्यप्रतीतिं प्रति कालयापनाकारित्वाद् यापक। यथा-क्षणिकं वस्त्विति पक्षे बौद्धस्य सत्त्वादिति हेतुः, नहि सत्त्वश्रवणादेव क्षणिकत्वं प्रत्येति पर इत्यतो बौद्धः सत्त्वं क्षणिकत्वेन व्याप्तमिति प्रसाधयितुमुपक्रमते, तथाहि-सत्त्वं नामार्थक्रियाकारित्वमेव, अन्यथा बन्ध्यासुतस्यापि सत्त्वप्रसङ्ग', अर्थक्रिया तु नित्यस्यैकरूपत्वान्न क्रमेण, नापि यौगपद्येन, क्षणान्तरे अकर्तृत्वप्रसङ्गादित्यतोऽर्थक्रियालक्षणं सत्त्वमक्षणिकान्निवर्त्तमान क्षणिक एवावतिष्ठत इत्येव क्षेपेण साध्यसाधने कालयापनाकारित्वाद् यापक. सत्त्वलक्षणो हेतुरिति १। स्था० ४ ठा० ३ उ०। (द्वितीयस्थापकहेतुवक्तव्यता 'थावय' शब्दे ४ भागे २४०८ पृष्ठे गता।) (तृतीयव्यंसकहेतुवक्तव्यता 'वंसग' शब्दे षष्ठे भागे द्रष्टव्या।) तथा 'लूसए' त्ति लूषयति-मुष्णाति व्यंसकापादितमनिष्टमिति लूषको हेतु, स एव शाकटिक, यथा-धूर्त्तान्तरशिक्षितेन हि शाकटिकेन तेन याचितोऽसौ धूर्त्त, तर्हि देहि मे तर्प्पणालोडिकामिति', ततो धूर्त्तेनोक्ता स्वभार्या-देह्यस्मै सक्तूनालोड्येति, ताञ्च तथा कुर्वतीं तद्भार्यां गृहीत्वाऽसौ प्रस्थितोऽवादीच्च धूर्त्तमभि-मदीयेय तर्पणमिति सक्तूनालोडयतीति तर्पणालोडिकेति भवतैव दत्तत्वादिति। स चायं यदि जीवघटयोरस्तित्ववृत्त्या एकत्व सम्भावयसि, तदा सर्वभावानामेकत्व स्यात्, सर्वेष्वप्यस्तित्ववृत्तेरविशेषात् न चैवमिति, इहास्तित्ववृत्तेरविशेषादित्ययं लूषको जीवघटयोरेकत्वापादनलक्षणस्याभावापत्तिलक्षणस्य वाऽनिष्टस्य परापादितस्यानेन लूषितत्त्वादिति ४। स्था०४ ठा०३ उ०। अन्वयव्यतिरेकलक्षणे, (अनु०। सूत्र०। आ० म०। व्य०।) साध्याधिगमके युक्तिविशेषे, विशे०।

हेऊ अणुगमवइरे-गलक्खणो सज्झवत्थुपज्जाओ।
आहरणं दिट्ठंतो, कारणमुववत्तिमेत्तं तु ॥१०७७॥

एवं पयाणनिवहो, हेऊदाहरणकारणत्थाणं ।
अहवा पयनिवहो चिय, कारणमाहरणहेऊणं ॥१०७८॥

यत्र साधनं तत्र साध्यं भवत्येवेत्यन्वयलक्षणः साध्यस्य साधनेन सहान्वयोऽनुगमः, साध्याभावे साधनाभावरूपो व्यतिरेकः । अनुगमश्च व्यतिरेकश्च तौ लक्षणं-स्वरूपं यस्य स एवंभूतो हेतुः, यथा अनित्यत्वादिविशिष्टे शब्दादौ साध्ये कृतकत्वादि ,कथंभूतोऽयम् ?,इत्याह-साध्यस्य नित्यत्वादिविशिष्टस्य शब्दादिवस्तुनः पर्यायः, अन्यस्य वैयधिकरण्यादिदोषदुष्टत्वेन साध्यसाधकत्वायोगादिति । विशे० ।

हेतुस्वरूपं निरूपयन्ति—

निश्चितान्यथानुपपत्त्येकलक्षणो हेतुः ॥ ११ ॥

अन्यथा साध्यं विनाऽनुपपत्तिरेव न मनागप्युपपत्तिः, प्रयत्नानन्तरीयकत्वे साध्ये विपक्षैकदेशवृत्तेरनित्यत्वस्यापि गमकत्वापत्तेः । ततो निश्चिता निर्णीताऽन्यथानुपपत्तिरेवैका लक्षणं यस्य स तादृशो हेतुर्ज्ञेयः अन्यथाऽनुपपत्तिश्चात्र हेतुप्रक्रमात्साध्यधर्मेणैव सार्द्धं ग्राह्या । तत तद्विरार्थान्यथानुपपत्तेः-प्रत्यक्षादिप्रमाणैर्नानिष्टयामि ।

एतदव्यवच्छेद्यं दर्शयन्ति—

न तु त्रिलक्षणकादिः ॥ १२ ॥

त्रीणि—पक्षधर्मत्व—सपक्षसत्त्व—विपक्षासत्त्वानि लक्षणानि यस्यासौ गतसम्मतस्य हेतोः, आदिशब्दाद्यौगसंमतपञ्चलक्षणकहेत्ववरोधः । तेनाबाधितविषयत्वा—सत्प्रतिपक्षत्वयोरपि तल्लक्षणत्वकथनात्, तथा हि-वह्निमत्त्वे साध्ये धूमवत्त्वं पक्षस्य पर्वतस्य धर्मः, न शब्दे चाक्षुषत्ववदतद्धर्मः स पक्षे पाकस्थाने सन्, न तु प्राभाकरेण शब्दनित्यत्वे साध्ये श्रावणत्ववत्ततो व्यावृत्तं विपक्षे पयस्याति प्रदेशे सत्र तु तत्रैव साध्ये प्रमेयत्ववत् तत्र वर्त्तमानम् अबाधितविषयं प्रत्यक्षागमाभ्यामबाध्यमानसाध्यत्वात्, नतु अनुष्णस्तेजोऽवयवी द्रव्यत्वाज्जलवद्विप्रेण सुरा पेया द्रवत्वात् तद्वदेवेतिवत् ताभ्यां बाधितविषयम् । असत्प्रतिपक्षं, साध्यविपरीतार्थोपस्थापकानुमानरहितं न पुनर्नित्यः शब्दोऽनित्यधर्मानुपलब्धेरित्यनुमानसमन्वितम्, अनित्यः, शब्दो नित्यधर्मानुपलब्धेरित्यनुमानमिव सत्प्रतिपक्षमिति लक्षणत्रयपञ्चकसद्भावात् गमकम् । तत एतादृग्लक्षणलक्षितमेवाप्तुः लिङ्गम्, इति सौगतयौगयोरभिप्रायः । न चायं निरपायः ।

एतदुपपादयन्ति—

तस्य हेत्वाभासस्यापि संभवात् ॥ १३ ॥

अननानिव्याप्तिप्रागुक्तलक्षणस्याचष्टे—स श्यामस्तत्पुत्रत्वात्, प्रेक्ष्यमाणेतरतत्पुत्रवदित्यत्र समग्रतल्लक्षणयोगेऽपि हेतुत्वाभावात् । अत्र विपक्षेऽसत्त्वं निश्चितं नास्ति न हि श्यामत्वासत्त्वे तत्पुत्रत्वेनावश्यं निवर्तनीयमित्यत्र प्रमाणमस्तीति सौगतः । स एवं निश्चितान्यथानुपपत्तिमेव-शब्दान्तरेणोपदेशेन शठ शरणीकरोतीति सैव भगवती लक्षणत्वेनास्तु यौगस्तु गर्जति—अनौपाधिकः संबन्धो व्याप्तिः । नचायं तत्पुत्रत्वेऽस्ति, शाकाद्याहारपरिणामोपाधिनिबन्धनत्वात् । साधनाव्यापकः साध्येन समव्याप्तिश्च खलूपाधिरभिधीयते, तथा चात्र शाकाद्याहारपरिणाम इत्युपाधिसद्भावात्र तत्पुत्रे विपक्षासत्त्वसमन्वय इति । सोऽपि न निश्चितान्यथानुपपत्तेरतिरिक्तमुक्तवानिति सै-

वैकाऽस्तु । नह्यनौपाधिकसम्बन्धे सति किञ्चित्स्ववशिष्यते यदपोहाय शेषलक्षणप्रणयनमवचूर्णं स्यात्, पक्षधर्मत्वाभावे रसवतीधूमोऽपि पर्वते सप्तार्चिषं गमयेत्, इत्यभिदधानो बौद्धो न बुद्धिमान् यतः पक्षधर्मत्वाभावेऽपि किं नैष तत्र तं गमयेत् ? ननु कौतुकमेतत्कथं हि नाम पक्षधर्मतापगमे रसवतीधर्मः सन् धूमो महीधरकन्दराधिकरणं धनंजयं ज्ञापयत्विति चेत्, एवं तर्हि जलचन्द्रोऽपि नभश्चन्द्रमा जिज्ञपत्, जलचन्द्रस्य जलधर्मत्वात् । अथ जलनभश्चन्द्रान्तरालवर्त्तिनस्तावतो देशस्यैकस्य धर्मित्वेन जलचन्द्रस्य तद्धर्मत्वनिश्चयात् कुतो न तत् ज्ञापकत्वमिति चेत्, एवं तर्हि रसवतीपर्वतान्तरालवर्त्तिवसुंधराप्रदेशस्य धर्मकत्वमस्तु, तथा च महानसधूमस्यापि पर्वतधर्मतानिर्णयात् जलचन्द्रवत् कथं न तत्र तद्गमकत्वं स्यात् ? । पक्षधर्मता खलूभयत्रापि निमित्त, ततो यथाऽसौ खसमीपदेशधूमस्य धूमध्वजं गमयतोऽस्तानननुरास्ते तथा व्यवहितदेशेऽपि पर्वतादौ तदवस्थैव, अन्यथा जलचन्द्रेऽपि नासौ स्याद्देशव्यवधानात् । अथ नयमेवात्र गमकत्वाङ्गं किंतु कार्यकारणभावोऽपि । कार्यं च किमपि कीदृशं, तदिह कपीटजन्मा खसमीपप्रदेशमेव धूमकार्यमर्जयितुमधीशान, नभश्चन्द्रस्तु व्यवहितदेशमपीति न महानसधूमो महीधरकन्दराकोणचारिमाशुशुक्षणिं गमयतीति चेत्, नन्वेवं धूमस्तद्देशेनैव पावकेनान्यथानुपपन्नः, नीरचन्द्रमा, पुनरतद्देशेनापि नभश्चन्द्रेण, इत्यन्यथानुपपत्तिनिर्णयमात्रसद्भावादेव साध्यसिद्धेः संभवात्किं नाम जलाकाशमृगाङ्कमण्डलान्तरालादेर्धर्मित्वकल्पनाकदर्थनमात्रनिमित्तेन पक्षधर्मतावर्णनेन, यौगस्याप्येवमेव च पक्षधर्मत्वानुपयोगो दर्शनीयः । सपक्षसत्त्वमप्यनौपयिकं सत्त्वादेरगमकत्वापत्तेः । यस्तु पक्षाद्बहिष्कृत्य किमपि कुटादिकं दृष्टान्तयति तस्यापूर्वः पाण्डित्यप्रकारः, कुटस्यापि पटादिवद्विवादास्पदत्वेन पक्षाद्बहिष्कारणानुपपत्तेः । तथा च कथमयं निदर्शनतयोपदर्श्येत, प्रमाणान्तरात्तत्रैव क्षणिकत्वं प्राक् प्रसाध्य निदर्शनतयोपादानमिति चेत्?, ननु तत्रापि कः सपक्षीकरिष्यते यदि क्षणिकत्वप्रसाधनपूर्वं पदार्थान्तरमेव तदा दुर्वारमनवस्थाकदर्थनम्, अन्यथा तु न स पक्षः कश्चित्, यत एव च प्रमाणात् क्षणिकत्वनिष्टङ्कनं कुटे प्रकल्पते, तत एव पटादिपदार्थान्तरेष्वपि प्रकल्पना किमपरप्रमाणोपन्यासालीकप्रागल्भीप्रकाशनेन, यस्तु साध्यधर्मवान्सः सपक्ष इति सपक्षं लक्षयित्वा पक्षमेव सपक्षमाचक्षीत, साध्यधर्मवत्तया हि सपक्षत्वं साध्यत्वेनेष्टतया तु पक्षत्वं, न च विरोधः, वास्तवस्य सपक्षत्वस्येच्छाव्यवस्थितेन पक्षत्वेन निराकर्त्तुमशक्यत्वादिति । स महात्मा निश्चितं निर्विण्णः सत्त्वादेः क्षणिकत्वाद्यनुमाने सपक्षसत्त्वावसायवेलायामेव साध्यधर्मस्यावबोधनानुमानानर्थक्यात्, पक्षो हि साध्यधर्मवत्तया सपक्षश्चेन्निश्चिक्ये, हेतोश्च तत्र सत्त्वं, तदा किं नाम पश्चाद्धेतुना साधनीयम् ? । किं चैवमनेन पक्षं लक्षयता "साध्यधर्मसामान्येन समानोऽर्थः सपक्षः" इति दिग्नागस्य, "अनुमेयेऽथ तत्तुल्ये, सद्भावो नास्तिताऽसति" इति । धर्मकीर्तेश्च वचो निश्चितं वञ्चितमेव स्यात्, यौगश्च केवलान्वयव्यतिरेकमनुमानमनुमन्यमानः कथं पञ्चलक्षण-

ता लिङ्गस्य संवाहयेत् ?, इति निश्चितान्यथानुपपत्तिरेवैकं लिङ्गलक्षणमक्षूणम् । तत्त्वमेतदेव, प्रपञ्चः पुनरयमिति चेत् , तर्हि सौगतेनाबाधितविषयत्वमसत्प्रतिपक्षत्वम् ज्ञातत्वं च; यौगेन च ज्ञातत्वं लक्षणमाख्यानीयम् । अथ विपक्षान्निश्चितव्यावृत्तिमात्रेणाबाधितविषयत्वमसत्प्रतिपक्षत्वं च ज्ञापकहेत्वधिकारात् ,ज्ञातत्वं च लब्धमेवेति चेत् , तर्हि गमकहेत्वधिकारादशेषमपि लब्धमेवेति किं शेषेणापि प्रपञ्चेनेति ।

साध्यविज्ञानमित्युक्तमिति साध्यमभिदधति—

**अप्रतीतमनिराकृतमभीप्सितं साध्यम् ॥ १४ ॥**

अप्रतीतम्-अनिश्चितम् , अनिराकृतम्—प्रत्यक्षाद्यबाधितम् , अभीप्सितम्-साध्यत्वेनेष्टम् ।

अप्रतीतत्वं समर्थयन्ते—

**शङ्कितविपरीतानध्यवसितवस्तूनां साध्यताप्रतिपत्त्यर्थमप्रतीतवचनम् ॥ १५ ॥**

एवंविधमेव हि साध्यम् , अन्यथा साधनवैफल्यात् ।

अनिराकृतत्वं सफलयन्ति—

**प्रत्यक्षादिविरुद्धस्य साध्यत्वं मा प्रसज्यतामित्यनिराकृतग्रहणम् ॥ १६ ॥**

प्रत्यक्षादिविरुद्धस्य घनंजयादौ शैत्यादेः ।

अभीप्सितत्वं व्यञ्जयन्ति—

**अनभिमतस्यासाध्यत्वप्रतिपत्तयेऽभीप्सितपदोपादानम् १७**

अनभिमतस्य—साधयितुमनिष्टस्य ।

साध्यत्वं सूत्रत्रयेण विषयविभागेन संगिरन्ते—

**व्याप्तिग्रहणसमयापेक्षया साध्यं धर्म एवान्यथा तदनुपपत्तेः ॥ १८ ॥**

धर्म्मो वह्निमत्त्वादि , तस्या व्याप्तेरनुपपत्ते ।

एतदेव भावयन्ति—

**नहि यत्र यत्र धूमस्तत्र तत्र चित्रभानोरिव धरित्रीधरस्याप्यनुवृत्तिरस्ति ॥ १९ ॥**

व्यक्तमेतत् ।

**आनुमानिकप्रतिपत्त्यवसरापेक्षया तु पक्षापरपर्यायस्तद्विशिष्टः प्रसिद्धो धर्मी ॥ २० ॥**

आनुमानिकी प्रतिपत्तिरनुमानोद्भवा प्रमितिः , तद्विशिष्ट-व्याप्तिकालापेक्षया साध्यत्वाभिमतेन धर्मेण विशिष्टः प्रसिद्धो-धर्मीत्युक्तम् ।

अथ यतोऽस्य प्रसिद्धिस्तदभिदधति—

**धर्मिणः प्रसिद्धिः क्वचिद् विकल्पतः, कुत्रचित्प्रमाणतः, क्वापि विकल्पप्रमाणाभ्याम् ॥ २१ ॥**

विकल्पः—अध्यवसायमात्रम् ।

अथात्र क्रमेणोदाहरन्ति—

**यथा समस्ति समस्तवस्तुवेदी, क्षितिधरकन्धरेयं धूमध्वजवती, ध्वनिः परिणतिमान् ॥ २२ ॥**

अत्राद्योदाहरणे धर्मिणो विकल्पेन सिद्धिः । नहि हेतुप्रयोगात् पूर्वं विकल्पं विहाय विश्ववित् कुतोऽपि प्रसिद्धस्त् । द्वितीये प्रमाणेन-प्रत्यक्षादिना, क्षितिधरकन्धरायास्तदानीं संवेदनात् । तृतीये तूभाभ्याम् । नहि श्रूयमाणादन्येषां देशकालस्वभावव्यवहितध्वनीनां ग्राहकं किञ्चित् तदानीं प्रमाणं प्रवर्त्तत इति विकल्पादेव तेषां सिद्धिः । ननु नास्ति विकल्पसिद्धो धर्मी , तन्मात्रेण सिद्धेः कस्याप्यसंभवात् । अन्यथाऽहंप्रथमिकया प्रमाणपर्येषणप्रयासः परीक्षकाणामकक्षीकरणीय एव भवेत् , प्रमाणमूलतायां पुनरेतस्य प्रमाणसिद्धप्रकारेणैव गतार्थत्वादिति । सोऽयं स्वयं विकल्पसिद्धं धर्मिणमाचक्षाणः परोक्षं प्रत्याचक्षाणश्च नियतमुत्स्वप्नायते । 'यदि हि विकल्पसिद्धो धर्मी नास्त्येव,' तदा नास्ति विकल्पसिद्धो धर्मी, तन्मात्रेण सिद्धेः कस्याप्यसंभवात् ' इत्यत्र कथं तमेवावोचथा ? । परोपगमादयमस्त्येवेति चेत् । " यदि परोपगमः प्रमितिस्तदा, कथमयं प्रतिषेधविधिर्भवेत् । अथ तथा न तदापि वतोच्यतां, कथमयं प्रतिषेधविधिर्भवेत् " ॥ १ ॥ तस्मात् प्रमाणात् पृथग्भूतादपि विकल्पादस्ति काचित्तथाविधा सिद्धिः ,यामनाश्रयता तार्किकेण न क्षेमेणासितु शक्यत इति ।रत्ना० ३परि० ।हिनोति गमयति ज्ञानमिति हेतुः , सूत्र०२श्रु०५अ० ।स० ।हिनोति गमयति जिज्ञासितधर्मविशिष्टमर्थमिति हेतुः ।नं० । उत्त० । दश० ।अनुमानोत्थापके लिङ्गे, स्था० १० ठा० ३ उ० । उपचारात् ( आव० ४ अ० ) पञ्चावयववाक्यरूपे (उत्त० ६ अ० ।) अनुमाने;स्था० । हिनोतिगमयतीति हेतुः । साध्यसद्भावतदभावाभावलक्षणेऽर्थे , स्था० १० ठा० ३ उ० ।

प्रागुक्तमेव हेतुं प्रकारतो दर्शयन्ति—

**उक्तलक्षणो हेतुर्द्विप्रकारः, उपलब्ध्यनुपलब्धिभ्यां भिद्यमानत्वात् ॥५४॥ रत्ना० ३ परि० ।**

हेतुप्रयोगप्रकारं दर्शयन्ति—

**हेतुप्रयोगस्तथोपपत्त्यन्यथानुपपत्तिभ्यां द्विप्रकारः॥२९॥**

तथैव साध्यसंभवप्रकारेणैवोपपत्तिस्तथोपपत्तिः , अन्यथा साध्याभावप्रकारेणानुपपत्तिरेवान्यथानुपपत्तिः ।

अमू एव स्वरूपतो निरूपयन्ति—

**सत्येव साध्ये हेतोरुपपत्तिस्तथोपपत्तिः , असति साध्ये हेतोरनुपपत्तिरेवान्यथानुपपत्तिः ॥ ३० ॥**

निगदव्याख्यानम् ।

प्रयोगतोऽपि प्रकटयन्ति—

**यथा कृशानुमानयं पाकप्रदेशः सत्येव कृशानुमत्त्वे धूमवत्त्वस्योपपत्तेः, असत्यनुपपत्तेर्वा ॥ ३१ ॥**

एतदपि तथैव ।

अमुयो प्रयोगौ नियमयन्ति—

**अनयोरन्यतरप्रयोगेणैव साध्यप्रतिपत्तौ द्वितीयप्रयोगस्यैकत्रानुपयोगः ॥ ३२ ॥**

अयमर्थः , प्रयोगयुग्मेऽपि वाक्यविन्यास एव विशिष्यते नार्थः । स चान्यतरप्रयोगेणैव प्रकटीबभूवेति किमपरप्रयोगेण ? इति । रत्ना० ३ परि० । 'उपलब्ध्यनुपलब्धी स्वस्वस्थाने व्याख्याते । ) अनुभावप्रतिपादके वचसि परार्थानुमाने,आ०

एवं पयाणनिवहो, हेऊदाहरणकारणत्थाणं ।
अहवा पयनिवहो चिय, कारणमाहरणहेऊणं ॥१०७८॥

यत्र साधनं तत्र साध्यं भवत्येवेत्येवंलक्षणः सान्वयस्य साधनेन सहान्वयोऽनुगमः, साध्याभावे साधनाभावरूपो व्यतिरेकः, अनुगमश्च व्यतिरेकश्च तौ लक्षणं-स्वरूपं यस्य स एवंभूतो हेतुः, यथा अनित्यत्वादिविशिष्टे शब्दादौ साध्ये कृतकत्वादिः, कथंभूतोऽयम् ?, इत्याह-साध्यस्य नित्यत्वादिविशिष्टस्य शब्दादिवस्तुनः पर्यायः, अन्यस्य वैयधिकरण्यादिदोषदुष्टत्वेन साध्यसाधकत्वायोगादिति । विशे० ।

हेतुस्वरूपं निरूपयन्ति—

निश्चितान्यथानुपपत्त्येकलक्षणो हेतुः ॥ ११ ॥

अन्यथा साध्यं विनाऽनुपपत्तिरेव न मनागप्युपपत्तिः, प्रयत्नानन्तरीयकत्वे साध्ये विपक्षैकदेशवृत्तेरनित्यत्वस्यापि गमकत्वापत्तेः । ततो निश्चिता निर्णीताऽन्यथानुपपत्तिरेवैका लक्षणं यस्य स तादृशो हेतुर्ज्ञेयः । अन्यथाऽनुपपत्तिश्चात्र हेतुप्रक्रमात्साध्यधर्मेणैव सार्द्धं ग्राह्या । तेन तद्विपर्यासान्यथानुपपन्ने प्रत्यक्षादिक्षानैर्नातिव्याप्तिः ।

एतद्व्यवच्छेद्यं दर्शयन्ति—

न तु त्रिलक्षणकादिः ॥ १२ ॥

त्रीणि—पक्षधर्मत्व—सपक्षसत्त्व—विपक्षासत्त्वानि लक्षणानि यस्यासौ गतसम्मतस्य हेतोः, आदिशब्दाद्यौगसंगीतपञ्चलक्षणकहेतुत्वपरोधः । तेनाबाधितविषयत्वासत्प्रतिपक्षत्वयोरपि तल्लक्षणत्वकथनात्, तथा हि-वह्निमत्त्वे साध्ये धूमवत्त्वं पक्षस्य पर्वतस्य धर्मः, न शब्दे चाक्षुषत्ववदतद्धर्मः स पक्षे पाकस्थाने सन्, न तु प्राभाकरेण शब्दनित्यत्वे साध्ये श्रावणत्ववत्ततो व्यावृत्तः विपक्षे पयस्यति प्रदेशे सत्र तु तत्रैव साध्ये प्रमेयत्ववत् तत्र वर्त्तमानम् अबाधितविषयं, प्रत्यक्षागमाभ्यामबाध्यमानसाध्यत्वात्, न तु अनुष्णस्तेजोऽवयवी द्रव्यत्वाज्जलवद्विप्रेण सुरा पेया द्रवत्वात् तद्वदेवेतिवत् ताभ्यां बाधितविषयम् । असत्प्रतिपक्षं, साध्यविपरीतार्थोपस्थापकानुमानरहितं न पुनर्नित्यः शब्दोऽनित्यधर्मानुपलब्धेरित्यनुमानसमन्वितम्, अनित्यः शब्दो नित्यधर्मानुपलब्धेरित्यनुमानमिव सत्प्रतिपक्षमिति लक्षणत्रयपञ्चकसद्भावात् गमकम् । तत एतादृक्लक्षणलक्षितमेवाक्षूणं लिङ्गम्, इति सौगतयौगयोरभिप्रायः । न चायं निरपायः ।

एतदुपपादयन्ति—

तस्य हेत्वाभासस्यापि संभवात् ॥ १३ ॥

अनतातिव्याप्तिभागुक्तलक्षणस्याचक्ष्युः-स श्यामस्तत्पुत्रत्वात्, प्रेक्ष्यमाणेतरतत्पुत्रवदित्यत्र समग्रतल्लक्षणवीक्षणेऽपि हेतुत्वाभावात् । अत्र विपक्षेऽसत्त्वं निश्चितं नास्ति न हि श्यामत्वासत्त्वे तत्पुत्रत्वेनावश्यं निवर्त्तनीयमित्यत्र प्रमाणमस्तीति सौगतः । स एवं निश्चितान्यथानुपपत्तिमेव शब्दान्तरोपदेशेन शठ शरणीकरोतीति सैव भगवती लक्षणत्वेनास्तु, यौगस्तु गर्जति—अनौपाधिकः संबन्धो व्याप्तिः । नचायं तत्पुत्रत्वेऽस्ति, शाकाद्याहारपरिणामाद्युपाधिनिबन्धनत्वात् । साधनाव्यापकः साध्येन समव्याप्तिकः किलोपाधिराश्रयते, तथा चात्र शाकाद्याहारपरिणाम इत्युपाधिसद्भावान्न तत्पुत्रे विपक्षासत्त्वसम्भव इति । सोऽपि न निश्चितान्यथानुपपत्तेरतिरिक्तमुक्तवानिति सैवैकाऽस्तु । तथानौपाधिकसम्बन्धे सति किञ्चिदवशिष्यते यदपोह्य शेषलक्षणप्रणयनमक्षूणं स्यात्, पक्षधर्मत्वाभावे रसवतीधूमोऽपि पर्वते समर्चिषं गमयेत्, इत्यभिदधानो बौद्धो न बुद्धिमान्, यतः पक्षधर्मत्वाभावेऽपि किं नैष तत्र तं गमयेत् ? ननु कौतुकमेतत्कथं हि नाम पक्षधर्मतापगमे रसवतीधर्मः सन् धूमो महीध्रकन्दराधिकरणं धनंजयं ज्ञापयत्विति चेत्, एवं तर्हि जलचन्द्रोऽपि नभश्चन्द्रमा जिज्ञपत्, जलचन्द्रस्य जलधर्मत्वात् । अथ जलनभश्चन्द्रान्तरालवर्त्तिनस्तावतो देशस्यैकस्य धर्मित्वेन जलचन्द्रस्य तद्धर्मत्वनिश्चयात् कुतो न तत् ज्ञापकत्वमिति चेत्; एवं तर्हि रसवतीपर्वतान्तरालवर्त्तिवसुंधराप्रदेशस्य धर्मकत्वमस्तु, तथा च महानसधूमस्यापि पर्वतधर्मतानिर्णयात् जलचन्द्रवत् कथं न तत्र तद्गमकत्वं स्यात् ? । पक्षधर्मता खलूभयत्रापि निमित्तं, ततो यथाऽसौ स्वसमीपदेशधूमस्य धूमध्वजं गमयतोऽस्तानतनुरास्ते तथा व्यवहितदेशेऽपि पर्वतादौ तद्वदस्थैव, अन्यथा जलचन्द्रेऽपि नासौ स्याद्देशव्यवधानात् । अथ नेयमत्र गमकत्वाङ्गं किंतु कार्यकारणभावोऽपि । कार्यं च किमपि कीदृशं, तदिह कृपीटजन्मा स्वसमीपप्रदेशमेव धूमकार्यमर्जयितुमधीशानः, नभश्चन्द्रस्तु व्यवहितदेशमपीति न महानसधूमो महीधरकन्दराकोणचारिमाशुशुक्षणिं गमयतीति चेत्, नन्वेवं धूमस्तद्देशेनैव पावकेनान्यथानुपपन्नः, नीरचन्द्रमा, पुनरतद्देशेनापि नभश्चन्द्रेण, इत्यन्यथानुपपत्तिनिर्णयमात्रसद्भावादेव साध्यसिद्धेः संभवात्किं नाम जलाकाशमृगाङ्कमण्डलान्तरालादेर्धर्मित्वकल्पनाकदर्थनमात्रनिमित्तेन पक्षधर्मतावर्णनेन, यौगस्याप्येवमेव च पक्षधर्मत्वानुपयोगो दर्शनीयः । सपक्षसत्त्वमप्यनौपयिकं सत्त्वादेरगमकत्वापत्ते । यस्तु पक्षाद्बहिष्कृत्य किमपि कुटादिकं दृष्टान्तयति तस्यापूर्वः पाण्डित्यप्रकारः, कुटस्यापि पटादिवद्विवादास्पदत्वेन पक्षाद्बहिष्कारणानुपपत्तेः । तथा च कथमयं निदर्शनतयोपदर्श्येत, प्रमाणान्तरात्तत्रैव क्षणिकत्वं प्राक् प्रसाध्य निदर्शनतयोपादानमिति चेत्?, ननु तत्रापि कः सपक्षीकरिष्यते यदि क्षणिकत्वप्रसाधनपूर्वं पदार्थान्तरमेव तदा दुर्वारमनवस्थाकदर्थनम्, अन्यथा तु न स पक्षः कश्चित्, यत एव च प्रमाणात् क्षणिकत्वनिष्टङ्कनं कुटे प्रकल्प्यते, तत एव पटादिपदार्थान्तरेष्वपि प्रकल्प्यतां किमपरप्रमाणोपन्यासालीकप्रागल्भीप्रकाशनेन, यस्तु साध्यधर्मवान्स सपक्ष इति सपक्षं लक्षयित्वा पक्षमेव सपक्षमाचक्षीत, साध्यधर्मवत्तया हि सपक्षत्वं साध्यत्वेनेष्टतया तु पक्षत्वं, न च विरोधः, वास्तव्यस्य सपक्षत्वस्येच्छाव्यवस्थितेन पक्षत्वेन निराकर्त्तुमशक्यत्वादिति । स महात्मा निश्चितं निर्विण्णः सत्त्वादेः क्षणिकत्वाद्यनुमाने सपक्षसत्त्वावसायवेलायामेव साध्यधर्मस्यावबोधनानुमानानर्थक्यात्, पक्षो हि साध्यधर्मवत्तया सपक्षश्चेन्निश्चिक्ये, हेतोश्च तत्र सत्त्वं तदा किं नाम पश्चाद्धेतुना साधनीयम् ? । किं चैवमनेन पक्षं लक्षयता "साध्यधर्मसामान्येन समानोऽर्थः सपक्षः" इति दिग्नागस्य, "अनुमेयेऽथ तत्तुल्ये, सद्भावो नास्तिताऽसति" इति । धर्मकीर्तेश्च वचो निश्चितं वञ्चितमेव स्यात्, यौगश्च केवलान्वयव्यतिरेकमनुमानमनुमन्यमानः कथं पञ्चलक्षण-

ता लिङ्गस्य सबाह्येत् ?, इति निश्चितान्यथानुपपत्तिरवैक लिङ्गलक्षणमक्षूणम् । तत्त्वमेतदेव, प्रपञ्च पुनरयमिति चेत्, तर्हि सौगतेनाबाधितविषयत्वमसत्प्रतिपक्षत्वम् ज्ञातत्वं च, यौगेन च ज्ञातत्व लक्षणमाख्यानीयम् । अथ विपक्षाद्यश्च- तव्यावृत्तिमात्रेणाबाधितविषयत्वमसत्प्रतिपक्षत्वं च ज्ञा- पकहेत्वधिकारात्,ज्ञातत्वं च लब्धमेवेति चेत्, तर्हि गमकहे- त्वधिकारादशेषमपि लब्धमेवेति किं शेषेणापि प्रपञ्चेनेति ।

साध्यविज्ञानमित्युक्तमिति साध्यमभिदधति—

**अप्रतीतमनिराकृतमभीप्सितं साध्यम् ॥ १४ ॥**

अप्रतीतम्-अनिश्चितम्, अनिराकृतम्-प्रत्यक्षाद्यबाधि- तम्, अभीप्सितम्-साध्यत्वेनेष्टम् ।

अप्रतीतत्वं समर्थयन्ते—

**शङ्कितविपरीतानध्यवसितवस्तूनां साध्यताप्रतिपत्त्यर्थम- प्रतीतवचनम् ॥ १५ ॥**

एवंविधमेव हि साध्यम्, अन्यथा साधनवैफल्यात् ।

अनिराकृतत्वं सफलयन्ति—

**प्रत्यक्षादिविरुद्धस्य साध्यत्वं मा प्रसज्यतामित्यनिराकृ- तग्रहणम् ॥ १६ ॥**

प्रत्यक्षादिविरुद्धस्य धनंजयादौ शैत्यादेः ।

अभीप्सितत्वं व्यञ्जयन्ति—

**अनभिमतस्यासाध्यत्वप्रतिपत्तयेऽभीप्सितपदोपादानम् १७**

अनभिमतस्य—साधयितुमनिष्टस्य ।

साध्यत्व सूत्रत्रयेण विषयविभागेन संगिरन्ते—

**व्याप्तिग्रहणसमयापेक्षया साध्यं धर्म एवान्यथा तदनु- पपत्तेः ॥ १८ ॥**

धर्म्मो वह्निमत्त्वादि, तस्या व्याप्तेरनुपपत्ते ।

एतदेव भावयन्ति—

**नहि यत्र यत्र धूमस्तत्र तत्र चित्रभानोरिव धरित्रीध- रस्याप्यनुवृत्तिरस्ति ॥ १९ ॥**

व्यक्तमेतत् ।

**आनुमानिकप्रतिपत्त्यवसरापेक्षया तु पक्षाऽपरपर्यायस्त- द्विशिष्टः प्रसिद्धो धर्मी ॥ २० ॥**

आनुमानिकी प्रतिपत्तिरनुमानोद्भवा प्रमिति, तद्विशिष्ट- व्याप्तिकालापेक्षया साध्यत्वाभिमतेन धर्मेण विशिष्ट प्रसि- द्धो-धर्मीत्युक्तम् ।

अथ यतोऽस्य प्रसिद्धिस्तदभिदधति—

**धर्मिणः प्रसिद्धिः क्वचिद् विकल्पतः, कुत्रचित्प्रमाणतः, क्वापि विकल्पप्रमाणाभ्याम् ॥ २१ ॥**

विकल्पः—अध्यवसायमात्रम् ।

अथात्र क्रमेणोदाहरन्ति—

**यथा समस्ति समस्तवस्तुवेदी, क्षितिधरकन्धरेयं धूम- ध्वजवती, ध्वनिः परिणतिमान् ॥ २२ ॥**

अत्राद्योदाहरणे धर्मिणो विकल्पेन सिद्धिः । नहि हेतुप्र- योगात् पूर्वं विकल्प विहाय विश्ववित् कुतोऽपि प्रसिद्ध्य- त् । द्वितीये प्रमाणेन-प्रत्यक्षादिना, क्षितिधरकन्धरायास्त- दानीं संवेदनात् । तृतीये तूभाभ्याम् । नहि श्रूयमाणादन्येषां देशकालस्वभावव्यवहितध्वनीनां ग्राहकं किञ्चित् तदानीं- प्रमाणं प्रवर्त्तत इति विकल्पादेव तेषां सिद्धिः । ननु नास्ति विकल्पसिद्धो धर्मी, तन्मात्रेण सिद्धेः कस्या- प्यसंभवात् । अन्यथाऽहंप्रथमिकया प्रमाणपर्येषणप्रयासः परीक्षकाणामकक्षीकरणीय एव भवेत्, प्रमाणमूलताया पु- नरेतस्य प्रमाणसिद्धप्रकारेणैव गतार्थत्वादिति । सोऽयं स्वयं विकल्पसिद्धं धर्मिणमाचक्षाणः परोक्षं प्रत्याचक्षाण- श्च नियतमुत्स्वप्नायते । 'यदि हि विकल्पसिद्धो धर्मी ना- स्त्येव, 'तदा नास्ति विकल्पसिद्धो धर्मी, तन्मात्रेण सिद्धेः कस्याप्यसंभवात्' इत्यत्र कथं तमेवात्रोक्तथा ? । परोपगमादयमस्त्येवेति चेत् । "यदि परोपगम प्र- मितिस्तदा, कथमयं प्रतिषेधविधिर्भवेत् । अथ तथा न तदापि वतोच्यतां, कथमयं प्रतिषेधविधिर्भवेत्" ॥ १ ॥ तस्मात् प्रमाणात् पृथग्भूतादपि विकल्पादस्ति काचित्त- थाविधा सिद्धि,यामनाश्रयता तार्किकेण न क्षेमेणासितु श- क्यत इति ।रत्ना० ३परि० ।हिनोति गमयति ज्ञानमिति हेतु, सूत्र०२श्रु०५अ० ।स० ।हिनोति गमयति जिज्ञासितधर्मविशि- ष्टमर्थमिति हेतु ।नं० । उत्त० । दश० ।अनुमानोत्थापके लिङ्गे, स्था० १० ठा० ३ उ० । उपचारात् ( आव० ४ अ० ) पञ्चा- वयववाक्यरूपे (उत्त० ६ अ० ।) अनुमाने,स्था० । हिनोति- गमयतीति हेतु । साध्यसद्भावतदभावाभावलक्षणेऽर्थे, स्था० १० ठा० ३ उ० ।

प्रागुक्तमेव हेतु प्रकारतो दर्शयन्ति—

**उक्तलक्षणो हेतुर्द्विप्रकारः, उपलब्ध्यनुपलब्धिभ्यां भि- द्यमानत्वात् ॥५४॥ रत्ना० ३ परि० ।**

हेतुप्रयोगप्रकार दर्शयन्ति—

**हेतुप्रयोगस्तथोपपत्त्यन्यथानुपपत्तिभ्यां द्विप्रकारः॥२९॥**

तथैव साध्यसंभवप्रकारेणैवोपपत्तिस्तथोपपत्ति, अन्यथा साध्याभावप्रकारेणानुपपत्तिरेवान्यथानुपपत्तिः ।

अमू एव स्वरूपतो निरूपयन्ति—

**सत्येव साध्ये हेतोरुपपत्तिस्तथोपपत्तिः, असति साध्ये हेतोरनुपपत्तिरेवान्यथानुपपत्तिः ॥ ३० ॥**

निगदव्याख्यानम् ।

प्रयोगतोऽपि प्रकटयन्ति—

**यथा कृशानुमानयं पाकप्रदेशः सत्येव कृशानुमत्त्वे धू- मत्त्वस्योपपत्तेः, असत्यनुपपत्तेर्वा ॥ ३१ ॥**

एतदपि तथैव ।

अमुयो प्रयोगौ नियमयन्ति—

**अनयोरन्यतरप्रयोगेणैव साध्यप्रतिपत्तौ द्वितीयप्रयोगस्यै- कत्रानुपयोगः ॥ ३२ ॥**

अयमर्थ, प्रयोगयुग्मेऽपि वाक्यविन्यास एव विशिष्यते नार्थ । स चान्यतरप्रयोगेणैव प्रकटीबभूवेति किमपरप्रयोगे- ण ? इति । रत्ना० ३ परि० । 'उपलब्ध्यनुपलब्धी स्वस्वस्थाने व्याख्याते ।) अनुभावप्रतिपादके वचसि परार्थानुमाने,आ०

म० १ अ० । आ० चू० । आ० क० । फलसाधनयोग्ये कारणे, संथा० १ अधि० १ प्रस्ता० । कारणे , विशे० । निमित्ते , सूत्र० १ श्रु० ७ अ० । नि० चू० । कल्प० । उपपत्तौ , चं० प्र० १ पाहु० । हेतुर्द्विधा—कारको , ज्ञापकश्च । तत्र कारको यथा—घटस्य कर्त्ता कुम्भकारः, ज्ञापको यथा-तमसि घटादीनामभिव्यञ्जकः प्रदीपः । ग० १ अधि० । प्रश्न० । आ म० । ति० । यत्रोपन्यासोपनये पर्यनुयोगस्य हेतुरुत्तरतयाऽभिधीयते स हेतुरिति । उपन्यासोपनयभेदे, स्था० । तथा ' हेउ ' त्ति , यत्रोपन्यासोपनये पर्यनुयोगस्य हेतुरुत्तरतयाऽभिधीयते स हेतुरिति , यथा केनापि कश्चित्पर्यनुयुक्तः—अहो ! किं यवा क्रीयन्ते त्वया ?, स त्वाह—येन मुधैव न लभ्यन्ते इति , तथा कस्मात् ब्रह्मचर्यादिकष्टमनुष्ठीयते ? , यस्मादकृततपसा नरकादौ गुरुतरा वेदना भवतीति , इदमपि उपपत्तिमात्रमेव ज्ञातत्वेनाक्तमर्थज्ञापकत्वादिति । अथवाऽयमपि यथारूढं ज्ञातमेव तथा ह्यस्यैवं प्रयोगः—कस्मात् त्वया प्रव्रज्या क्रियत इति पृष्टः सन् केनापि साधुराह—यतस्ता विना मोक्षो न भवति , एतत्समर्थनायैव साधुस्तमाह—भो यवग्राहिन् ! किमिति त्वया यवा क्रीयन्ते ? , स त्वाह—येन मुधा न लभ्यन्ते, साधोश्चायमभिप्रायो यथा-मुधा लाभाभावात् तान् क्रीणासि त्वमेवमहं तां विना तदभावात्तां करोमीति । इह च मुधा यवालाभस्य क्रयणे हेतोः सतो दृष्टान्ततयोपन्यस्तत्वाद्धेतूपन्यासोपनयज्ञाततेति । इह च किञ्चिद्विशेषेणैवंविधा ज्ञातभेदाः संभवन्त्यन्येऽपि किन्तु ते न विवक्षिता , अन्तर्भावो वा कथञ्चित् गुरुभिर्विवक्षित , नच त वयं सम्यग् जानीम इति । स्था० ४ ठा० ३ उ० । दश० ।

साम्प्रतं हेतुरुच्यते—

अहवा वि इमो हेऊ, विन्नेओ तत्थिमो चउविअप्पो ।
जावग थावग वंसग,लूमग हेऊ चउरथो उ ॥ ८६ ॥

अथवा—निवृत्तु एव उपन्यासः , उदाहरणचरमभेदलक्षणो हेतु । अपि —सम्भावने । किं सम्भावयति ? , ' इमो ' अयम् अन्यद्वारे एवोपन्यस्तत्वात्तदुपन्यासनान्तरीयकत्वेन गुणभूतत्वाद्धेतुरपि , किं तु ' हेऊ विएणेओ तत्थिमो ' त्ति व्यवहितोपन्यासात् तत्रायं-वक्ष्यमाणो हेतुर्विज्ञेयः ' चतुर्विकल्प ' इति चतुर्भेदः, विकल्पानुपदर्शयति-यापकः, स्थापक , व्यंसक , लूषक हेतुश्चतुर्थस्तु । अन्ये त्वेवं पठन्ति—'हेउ त्ति दारमहुणा, चउव्विहो सो उ होइ नायव्वो ' त्ति , अत्राप्युक्तमुदाहरणम्, हेतुरित्येतद् द्वारमधुना तुशब्दस्य पुन शब्दार्थत्वात् स पुनर्हेतुश्चतुर्विधो भवति ज्ञातव्य इत्येवं गमनिका क्रियते , पश्चार्द्धं तु पूर्ववदेवेति गाथाक्षरार्थ । दश० १ अ० । प्रमेयस्य प्रमितौ कारणे प्रमाणे , स्था० ।

स च चतुर्विध प्रत्यक्षादिभेदात्—

अथवा हेऊ चउव्विहे पएणत्ते,तं जहा–पच्चक्खे, अणुमाणे, ओवमे, आगमे । अथवा हेऊ चउव्विहे पन्नत्ते, तं जहा–अत्थित्तं अत्थि सो हेऊ, अत्थित्तं णत्थि सो हेऊ, णत्थित्तं अत्थि सो हेऊ, णत्थित्तं णत्थि सो हेऊ । (३३८)

अथवेति द्वितीयः प्रकारान्तरताद्योतको विकल्पार्थ ,हिनोति-गमयति-प्रमेयमर्थं स वा हीयते-अधिगम्यते अनेनेति हेतु -प्रमेयस्य प्रमितौ कारणं, प्रमाणमित्यर्थ , स चतुर्विधः स्वरूपादिभेदात् । ( तत्र प्रत्यक्षहेतुवक्तव्यता ' पच्चक्ख ' शब्दे पञ्चमभागे ७३ पृष्ठे द्रष्टव्या । ) अन्वितिः—लिङ्गदर्शनसम्बन्धानुस्मरणयोः पश्चान्मानं-ज्ञानमनुमानम्, एतल्लक्षणमिदम्-"साध्याविनाभुवो लिङ्गात् , साध्यनिश्चायकं स्मृतम् । अनुमानं तदभ्रान्तं , प्रमाणत्वात् समक्षवद् ॥ १ ॥" इति । एतच्च साध्याविनाभूतहेतुजन्यत्वेनाप्युपचाराद्धेतुरिति, तथा उपमानमुपमा,सैवौपम्यम् , अनेन गवयेन सदृशोऽसौ गौरिति सादृश्यप्रतिपत्तिरूपम् । उक्तञ्च-"गां दृष्ट्वाऽयमरण्येऽन्यं, गवयं वीक्षते यदा । भूयोऽवयवसामान्य-भाजं वर्तुलकण्ठकम् ॥ १ ॥ तस्यामेव त्ववस्थायां,यद्विज्ञानं प्रवर्त्तते । पशुनैतेन तुल्योऽसौ,गोपिण्ड इति सोपमा ॥२॥" इति, अथवा-'श्रुतातिदेशवाक्यस्य, समानार्थोपलम्भने । संज्ञासंज्ञिसम्बन्धज्ञानमुपमानमुच्यते' इति । आगम्यन्ते-परिच्छिद्यन्ते अर्था अनेनेत्यागम —आप्तवचनसम्पाद्यो विप्रकृष्टार्थप्रत्ययः, उक्तञ्च-"दृष्टेष्टाव्याहताद् वाक्यात्-परमार्थाभिधायिनः । तत्त्वग्राहितयोत्पन्नं , मानं शाब्दं प्रकीर्तितम् ॥ १ ॥ आप्तोपज्ञमनुल्लङ्घ्य-मदृष्टेष्टविरोधकम् । तत्त्वोपदेशकृत् सार्वं , शास्त्रं कापथघट्टनम् ॥ २ ॥ " इति । इहान्यथानुपपन्नत्वलक्षणहेतुजन्यत्वादनुमानमेव, कार्ये कारणोपचाराद्धेतु , स च चतुर्विधः, चतुर्भङ्गीरूपत्वात् , तत्र अस्ति-विद्यते तदिति—लिङ्गभूतं धूमादिवस्तु इति कृत्वा अस्ति सः-अग्न्यादिक साध्योऽर्थ इत्येव हेतुरिति अनुमानम् । तथा अस्ति तदग्न्यादिकं वस्त्वतो नास्त्यसौ तद्विरुद्धः शीतादिरर्थ इत्येवमपि हेतुरनुमानमिति, तथा नास्ति तदग्न्यादिकमतः शीतकालेऽस्ति स शीतादिरर्थः इत्येवमपि हेतुरनुमानमिति । तथा नास्ति तद्वृक्षत्वादिकमिति नास्ति शिंशपत्वादिकोऽर्थ इत्यपि हेतुरनुमानमिति । इह च शब्दे कृतकत्वस्यास्तित्वादस्त्यनित्यत्वं घटवत् , तथा धूमस्यास्तित्वादिहास्त्यग्निर्महानस इवेत्यादिकं स्वभावानुमान कार्यानुमानञ्च प्रथमभङ्गकेन सूचितम् १ । तथा अग्नेरस्तित्वाद्भूमास्तित्वाद्वा नास्ति शीतस्पर्श इत्यादिविरुद्धोपलम्भानुमानं विरुद्धकार्योपलम्भानुमानञ्च तथा अग्नेर्धूमस्य वाऽस्तित्वान्नास्ति शीतस्पर्शजनितदन्तवीणारोमहर्षादि पुरुषविकारो महानसवदित्यादिकारणविरुद्धोपलम्भानुमानम् , कारणविरुद्धकार्योपलम्भानुमानं च द्वितीयभङ्गकेनाभिहितम् २ । तथा छत्रादेरग्नेर्वा नास्तित्वादस्ति कचित्कालादिविशेषे आतपः शीतस्पर्शो वा पूर्वोपलब्धप्रदेश इवेत्यादिकं विरुद्धकारणानुपलम्भानुमानं विरुद्धानुपलम्भानुमानञ्च तृतीयभङ्गकेनोपात्तम्३ । तथा दर्शनसामग्र्या सत्यां घटोपलम्भस्य नास्तित्वान्नास्तीह घटो विवक्षितप्रदेशवदित्यादिस्वभावानुपलब्ध्यनुमानं,तथा धूमस्य नास्तित्वान्नास्त्यविकलो धूमकारणकलाप प्रदेशान्तरवदित्यादिकार्यानुपलब्ध्यनुमानम् ,तथा वृक्षतानास्तित्वात् शिंशपा नास्तीत्यादि व्यापकानुपलम्भानुमानम् , तथाऽग्नेर्नास्तित्वाद् धूमो नास्तीत्यादि कारणानुपलम्भानुमानञ्च चतुर्थभङ्गकेनावरुद्धमिति । नच वाच्यं न जैनप्रक्रियेयम् सर्वत्र जैनाभिमतान्यथानुपपन्नत्वरूपस्य हेतुलक्षणस्य वि-

द्यमानत्वादिति । स्था० ४ ठा० ३ उ० । हेतुषु वर्त्तमाने पुरुषे, तदुपयोगानन्यत्वात्, स पञ्चविध । भ० ।

पञ्च हेतवः-

पंच हेऊ पएणत्ता, तं जहा-हेउं जाणइ, हेउं पासइ, हेउं बुज्झइ, हेउं अभिसमागच्छइ, हेउं छउमत्थमरणं मरइ । पंच हेऊ पएणत्ता, तं जहा—हेउणा जाणइ ०जाव हेउणा छउमत्थमरणं मरइ । पंच हेऊ पएणत्ता, तं जहा-हेउं न जाणइ ०जाव हेउं अण्णाणमरणं मरइ । पंच हेऊ पएणत्ता, तं जहा-हेउणा न जाणइ ०जाव हेउणा अण्णाणमरणं मरइ । ( सू० २० ×)

'पच हेऊ' इत्यादि, इह हेतुषु वर्त्तमानः पुरुषो हेतुरेव तदुपयोगानन्यत्वात्,पञ्चविधत्वं चास्य क्रियाभेदादित्यत आह-'हेउं जाणइ' त्ति, हेतुं साध्याविनाभूतं साध्यनिश्चयार्थं जानाति, विशेषत. सम्यगवगच्छति सम्यग् दृष्टित्वात्, अयं पञ्चविधोऽपि सम्यग्दृष्टिर्मन्तव्यो मिथ्यादृष्टे सूत्रद्वयात्परतो वक्ष्यमाणत्वादित्येक. । एवं हेतु पश्यति सामान्यत एवावबोधादिति द्वितीय. । एवं बुध्यते सम्यक् श्रद्धत्ते इति बोधेः सम्यक् श्रद्धानपर्यायत्वादिति तृतीय. । तथा हेतुम् अभिसमागच्छति साध्यसिद्धौ व्यापारणत सम्यक् प्राप्नोतीति चतुर्थ । तथा ' हेउं छउमत्थे' त्यादि हेतु-अध्यवसानादिर्मरणकारणं तद्योगान्मरणमपि हेतुरतस्तं हेतुमद्रित्यर्थ. । छद्मस्थमरणं , न केवलिमरणं , तस्याऽहेतुकत्वात्, नाप्यज्ञानमरणमेतस्य सम्यग्ज्ञानित्वात्, अज्ञानमरणस्य च वक्ष्यमाणत्वान्म्रियते करोतीति पञ्चम । प्रकारान्तरेण हेतूनेवाह—' पंचे ' त्यादि, हेतुनाऽनुमानोत्थापकेन जानाति, अनुमेय सम्यगवच्छति सम्यग्दृष्टित्वादित्येक., एवं पश्यतीति द्वितीय., एवं बुध्यते श्रद्धत्ते इति तृतीयः, एवमभिसमागच्छति प्राप्नोतीति चतुर्थ., तथा अकेवलित्वाद्धेतुना-अध्यवसानादिना छद्मस्थमरणं म्रियत इति पञ्चम. । अथ मिथ्यादृष्टिमाश्रित्य हेतूनाह—' पंचे ' त्यादि, पञ्च क्रियाभेदात् हेतवो हेतुव्यवहारित्वात्, तत्र हेतुं—लिङ्गं न जानाति , नञ. कुत्सार्थत्वादसम्यगवैति मिथ्यादृष्टित्वात् १ , एवं न पश्यति २, एवं न बुध्यते ३, एवं नाभिसमागच्छति ४ , तथा हेतुम्-अध्यवसानादिहेतुयुक्तम् अज्ञानमरण म्रियते—करोति , मिथ्यादृष्टित्वेनासम्यग्ज्ञानत्वादिति । हेतूनेव प्रकारान्तरेणाह—' पचे ' त्यादि , हेतुनालिङ्गेन न जानाति-असम्यगवगच्छति,एवमन्येऽपि चत्वारः । भ० ५ श० ७ उ० । स्था० ।

हेउअंतर-हेत्वन्तर-पुं० । पञ्चमे निग्रहस्थानभेदे , स्या० ।

हेउआभास-हेत्वाभास-पुं० । हेतुवदाभासमानेषु अहेतुषु ,ते च त्रय. । रत्ना० ।

हेत्वाभासानाहु'—

असिद्धविरुद्धानैकान्तिकास्त्रयो हेत्वाभासाः ॥ ४७ ॥

निश्चितान्यथानुपपत्त्याख्यैकहेतुलक्षणविकलत्वेनाहेतवोऽपि हेतुस्थाने निवेशाद्धेतुवदाभासमाना हेत्वाभासा । रत्ना०६ परि० । (असिद्धादय. स्वस्वस्थाने उक्ताः।) नैत एव हेत्वाभासा-असिद्धानैकान्तिकविरुद्धा हेत्वाभासा , हेतुवदाभासन्त इति हेत्वाभासा ,तत्र सम्यग्हेतूनामपि न तत्त्वव्यवस्थिति. किं पुनस्तदाभासानाम् । तथाहि-इह यन्नियतं वस्त्वस्ति तदेव तत्त्वं भवितुमर्हति हेतुवस्तु क्वचिद्वस्तुनि साध्ये हेतव. क्वचिदहेतव इत्यनियतास्त इति । सूत्र०१श्रु०१२अ०। यथा नित्य. शब्द श्रावणत्वादित्यादि । सपक्षविपक्षव्यावृत्तत्वेन संशयजनकत्वादसाधारणानैकान्तिक. सौगतैः समाख्यायते, नैष सूक्ष्मतामञ्चति श्रावणत्वाद्धि शब्दस्य सर्वथैव नित्यत्वं यदि साध्यते तदाऽयं विरुद्ध एव हेतु , कथंचिदनित्यत्वसाधनात्। प्राच्याश्रावणत्वस्वभावत्यागेनोत्तरश्रावणत्वस्वभावोत्पत्ते. कथंचिदनित्यत्वमन्तरेण शब्देऽनुपपत्ते. । अथ कथंचिन्नित्यत्वमस्मच्छब्दे साध्यते तदाऽसौ सम्यग्हेतुरेव कथंचिन्नित्यत्वेन सार्द्धमन्यथाऽनुपपत्तिसद्भावादिति नायमनैकान्तिकः, यं च विरुद्धाव्यभिचारिनामानमनैकान्तिकविशेषमेते व्यतानिषुः यथा अनित्य शब्द , कृतकत्वाद् घटवत् । नित्य शब्द., श्रावणत्वाच्छब्दत्ववदिति, सोऽपि नित्यानित्यस्वरूपानेकान्तसिद्धौ सम्यग्घेतुरेव, तदपरपरिणामित्वादिहेतुवत् । सर्वथैकान्तसिद्धये पुनरुपन्यस्तोऽमौ भवत्येव हेत्वाभासः, स तु विरुद्धो वा संदिग्धविपक्षवृत्तिरनैकान्तिको वेति, न कश्चिद्विरुद्धाव्यभिचारी नाम । एवं च असिद्धविरुद्धानैकान्तिकास्त्रय एव हेत्वाभासा इति स्थितम् । नन्वन्योऽप्यकिंचित्कराख्यो हेत्वाभासः परैरुक्तः । ( स ' अकिंचिकर '-शब्दे प्रथमभागे १२६ पृष्ठे गतः । ) नन्वेष हेतुर्निश्चितान्यथानुपपत्त्या सहितः स्याद्रहितो वा ?। प्रथमपक्षे हेतो. सम्यक्त्वेऽपि प्रतीतसाध्यधर्मविशेषणमत्यक्षनिराकृतसाध्यधर्मविशेषणागमनिराकृतसाध्यधर्मविशेषणादिपक्षाभासानां निवारयितुमशक्यत्वात्तैरेव दुष्टमनुमानम् । नच यत्र पक्षदोषस्तत्रावश्यं हेतुदोषोऽपि वाच्य. , दृष्टान्तादिदोषस्याप्यवश्यं वाच्यत्वप्रसक्ते । द्वितीयपक्षे तु यथोक्तहेत्वाभासानामन्यतमेनैवानुमानस्य दुष्टत्व, तथा ह्यन्यथानुपपत्तेरभावोऽनध्यवसायाद्विपर्ययात्संशयाद्वा स्यात्प्रकारान्तरासम्भवात्, तत्र च क्रमेण यथोक्तहेत्वाभासावतार इति नोक्तहेत्वाभासेभ्योऽभ्यधिकः कश्चिदकिंचित्करो नाम । रत्ना० ६ परि० । (अन्यत्रा व्याख्या 'कालच्चयावदिट्ठ' शब्दे तृतीयभागे ४६१ पृष्ठे गता । ) ( अन्यत्रा व्याख्या ' पगरणसम ' शब्दे पञ्चमभागे ७१-७२ पृष्ठे गता । )

हेउगोवएस-हेतुकोपदेश-पुं० । कारणोपदेशे, प्रकरणोपदेशे, आ० चू० १ अ० । ( अस्यैकार्थिकानि ' कारणोवएस ' शब्दे तृतीयभागे ४६६ पृष्ठे गतानि । )

हेउजुत्त-हेतुयुक्त-त्रि० । अन्वयव्यतिरेकलक्षणैर्हेतुभिर्युक्ते , अनु० । विशे० । आ० म० ।

हेउणिज्जुत्ति-हेतुनिर्युक्ति-त्रि० । सोपपत्तिके, दश० २ अ० ।

हेउदोस-हेतुदोष-पुं० । असिद्धविरुद्धानैकान्तिकलक्षणे हेत्वाभासे, स्था० १० ठा० ३ उ० ।

हेउप्पभव-हेतुप्रभव-पुं० । हेतुजन्मनि, दश० ४ अ० ।

हेउभाव-हेतुभाव-पुं० । कारणभावे, पं० व० १ द्वार ।

हेउय-हैतुक-पुं० । हेतुभ्यो जातो हैतुक । कायाकारपरिणतभूतनिष्पादिते लौकायतिकसम्मतात्मनि, सूत्र० १ श्रु० १ अ० १ उ० ।

हेउवाय-हेतुवाद-पुं० । हेतुरनुमानोत्थापकं लिङ्गमुपचारादनुमानमेव वा तद्वादो हेतुवाद. । हगिवादे । स्था० १० ठा० ३ उ० । शुष्कतर्कवादे, पं० व० ४ द्वार । "ज्ञायन्ते हेतुवादेन, पदार्था यद्यतीन्द्रिया. । कालेनैतावता प्राज्ञैः, कृतः स्यात्तेषु निश्चय.।" द्वा० २४ द्वा० । (अत्रत्या व्याख्या 'आगम' शब्दे द्वितीयभागे ७६ पृष्ठे गता ।)

हेउवायउवएस-हेतुवादोपदेश-पुं । हेतुर्निमित्तं कारणमित्यनर्थान्तरं, तस्य वदन वाद तद्विषय उपदेश । कारणोपदेशे, आ० म० १ अ० । प्रव० । (हेतुवादोपदेशेन संज्ञिनोऽसंज्ञिनश्च 'सण्णिसुय' शब्देऽस्मिन्नेव भागे दर्शिताः ।)

हेउविजय-हेतुविजय-पुं० । तर्कानुसारिबुद्धे पुंसः स्याद्वादप्ररूपकागमकपच्छेदतापशुद्धिसमाश्रयणीयतत्त्वगुणानुचिन्तने, सम्म० ३ काण्ड ।

हेउविवागा-हेतुविपाका-स्त्री० । हेतुनो हेतुमधिकृत्य विपाको निर्दिष्टो यासा ता । 'कम्म' शब्दे उक्तासु विपाकतो भिन्नासु कर्मप्रकृतिषु, पं० सं० ३ द्वार ।

हेउसंपया-हेतुसम्पदा-स्त्री० । साधारणासाधारणरूपायां स्तोतव्यसम्पदि, प्रव० १ द्वार ।

हेउवण्णास-हेतूपन्यास-उपन्यासभेदे, दश० । अत्रत्या सर्वा वक्तव्यता 'अणुमाण' शब्दे प्रथमभागे ४०६ पृष्ठे गता ।)

हेच्चा-हित्वा-अव्य० । त्यक्त्वेत्यर्थे, सूत्र० १ श्रु० १५ अ० ।

हेज्ज-हेय-त्रि० । उपेक्षणीये, अनु० ।

हेट्ठ-अधस्-अव्य० । "अधसो हेट्ठं" ॥८।२।१४१॥ इति अधस्शब्दस्य हेट्ठ इत्यादेश. । हेट्ठं । पाताले, अध.स्थानमात्रे च । अनु० । प्रा० ।

हेट्ठिल्ल-अधस्तन-त्रि० । "डिल्ल-डुल्लौ भवे" ॥८।२।१६३॥ इति भावार्थे डिल्लप्रत्यय. । अधोवर्त्तमाने, प्रा० । जं जस्स आदीए तं तस्स हिट्ठिल्लं । जं जस्स उवरिं तं तस्स उवरिल्लं । नि० चू० २० उ० । स्था० । अधस्तनो यत आरभ्य लोकस्याधोमुखा वृद्धि । भ० १३ श० ४ उ० ।

हेठय-हेठक-पुं० । बाधके ऋक्संस्थानीये मन्त्रे, यथा "षट् शतानि नियुज्यन्ते, पशूना मध्यमे अहनि । अश्वमेधस्य वचनात् न्यूनानि पशुभिस्त्रिभि. ॥१॥" सूत्र० १ श्रु० ८ अ० ।

हेम-हैम-न० । भेषजभेदे, जाम्बूनदे (सूत्र० १ श्रु० ६ अ० ।) सुवर्णे, ज्ञा० ५ ज्ञा० । स्वनामख्याते राजपुत्रे, 'हेमपुरिसे नगरे हेमकूडो राया हेमसंभवा भारिया, तस्स पुत्तो सरतिविज्जसन्निभो हेमो णाम कुमारो' । नि० चू० ११ उ० । पं० भा० । (अस्य वेदोपघातो बभूव तद्वृत्तम् 'उवघायपडग' शब्दे द्वितीयभागे ८८१ पृष्ठे गतम् ।)

हेमन्त-हेमन्त-पुं० । शीतकाले, व्य० ४ उ० । पाइ० ना० । ऋतुभेदे, जी० १ प्रति० । पौषमाघौ हेमन्त । ज्ञा० १ श्रु० ६ अ० । ज्यो० । शीतकालमासानां मध्ये चतुर्थो मास । ज्ञा० १ श्रु० ८ अ० । (अत्रत्या व्याख्या 'आउट्टि' शब्दे द्वितीयभागे ३० पृष्ठे गता ।)

हेमंतगिम्ह-हेमन्तग्रीष्म-पुं० । शीतकालोष्णकालयोः, व्य० ४ उ० ।

हेमंधर-हेमन्धर-पुं० । कलिकुण्डसरोवरसमीपविहारिणो महीधरस्य हस्तियूथपस्य विदेहजे पूर्वभवजीवे, ती० ५३ कल्प ।

हेमकड-हेमकृत-पुं० । स्वनामख्याते राज्ञि, वृ० ४ उ० । (अस्य पुत्रस्य वेदोपघातो बभूव तद्वृत्तम् 'उवघायपंडग' शब्दे द्वितीभागे ८८१ पृष्ठे गतम् ।)

हेमकलस-हेमकलश-पुं० । धर्मरत्नवृत्तिसंशोधके स्वनामख्याते सूरौ, "श्रीहेमकलशवाचक-पण्डितवरधर्मकीर्त्तिमुख्यबुधै । स्वपरसमयैककुशलै—स्तदैव संशोधिता चेयम् ॥ १ ॥" ध० र० २ अधि ।

हेमकूड-हेमकूट-पुं० । हेमपुरनगरराजे हेमकुमारपितरि, नि० चू० ११ उ० ।

हेमग-हैमक-पुं० । हिमं तुहिनं तदेव हिमकं तस्येते हैमकाः । हिमपातरूपेषु जलकणेषु, स्था० ४ ठा० ४ उ० ।

हेमचंद-हेमचन्द्र-पुं० । कुमारपालगुरौ, सिद्धहेमचन्द्रव्याकरणकर्त्तरि स्वनामख्याते सूरौ, प्रा० ४ पाद ।

इय रयणावलिणामो, देसीसद्दाण संगहो एसो ।
वायरणसेसलेसो, रइओ सिरिहेमचन्दमुणिवइणा ।७७।

इति एष देशीशब्दसंग्रह- स्वोपज्ञशब्दानुशासनाष्टमाध्यायशेषलेशो रत्नावलीनामाचार्यश्रीहेमचन्द्रेण विरचित इति । दे० ना० ८ वर्ग ।

"आसीद्विशांपतिरमुद्रचतु समुद्र-
मुद्राङ्कितक्षितिभरक्षमबाहुदण्ड. ।
श्रीमूलराज इति दुर्धरवैरिकुम्भि—
कण्ठीरव शुचिचुलुक्यकुलावतस. ॥ १ ॥
तस्यान्वये समजनि प्रबलप्रताप-
तिग्मद्युति क्षितिपतिर्जयसिंहदेव ।
येन स्ववंशसवितर्यपरं सुधांशौ
श्रीसिद्धराज इति नाम निजं व्यलेखि ॥ २ ॥
सम्यङ् निषेव्य चतुरश्चतुरोऽप्युपायान्,
जित्वोपभुज्य च भुव चतुरब्धिकाञ्चीम् ।
विद्या चतुष्टयविनीतमतिर्जितात्मा,
काष्ठामवाप पुरुषार्थचतुष्टये य ॥ ३ ॥
तेनातिविस्तृतदुरागमविप्रकीर्ण-
शब्दानुशासनसमूहकदर्थितेन ।
अभ्यर्थितो निरवमं विधिवद् व्यधत्त,
शब्दानुशासनमिदं मुनिहेमचन्द्र. ॥ ४ ॥" प्रा० ४ पाद ।

एतच्चरित्रलेशस्त्वित्थम्—गुर्जरदेशे धन्धुकाग्रामे चाचश्रेष्ठिन पाहिनीनाम्न्यां भार्यायां चङ्गदेवनामा पुत्रो जात । स च देवचन्द्राचार्येण याचित्वा दीक्षित । वैक्रमीये ११५० संवत्सरे तेनैव तर्कव्याकरणसाहित्यादि पाठितः ।

(सं० ११६६) वर्षे सूरिपदेऽभिषिक्तः हेमचन्द्र इति नाम्ना प्रख्यापितः, अणहिल्लपट्टनेपुरराजेन सिद्धराजेनाभ्यर्थितेन सिद्धहेमनाम व्याकरणं चक्रे । अनेनैव प्रतिबोधितः कुमारपालराजः जैनो जातः, येन च महती शासनोन्नतिः कृता । अनेन सार्द्धत्रिकोटिश्लोकमिता ग्रन्थाः कृता इति किंवदन्ती प्रसिद्धा । अस्य स्वर्गतिः (सं०१२२६ वर्षे आसीत् ।

" यस्य ज्ञानमनन्तवस्तुविषयं यः पूज्यते दैवतै-
र्नित्यं यस्य वचो न दुर्नयकृतैः कोलाहलैर्लुप्यते ।
रागद्वेषमुखद्विषां च परिषत्क्षिप्ता क्षणाद्येन सा ॥
स श्रीवीरविभुर्विधूतकलुषां बुद्धिं विधत्तां मम ॥ १ ॥
निस्सीमप्रतिभैकजीवितधरौ निश्शेषभूमिस्पृशां,
पुण्यौघेन सरस्वतीसुरगुरू स्वाङ्गैकरूपे दधत् ।
यः स्याद्वादमसाधयन्निजवपुर्दृष्टान्ततः सोऽस्तु मे,
सद्बुद्ध्यम्बुनिधिप्रबोधविधये श्रीहेमचन्द्रः प्रभुः ॥२॥
ये हेमचन्द्रं मुनिमेतदुक्त- ग्रन्थार्थसेवामिषतः श्रयन्ते ।
संप्राप्यते गौरवमुज्ज्वलानां, पदं कलानां सुचितं भजन्ति ॥३॥
मातर्भारति ! सन्निधेहि हृदि मे येनेयमाप्तस्तुति-
र्निर्मातुं विवृतिं प्रसिद्ध्यति जवादारम्भसंभावना ।
यद्वा विस्मृतमोष्ठयोः स्फुरति यत् सारस्वतः शाश्वतो,
मन्त्रः श्रीउदयप्रभेति रचनारम्यो ममाहर्निशम् ॥ ४ ॥ "

इह हि विषमदुःषमारजनितिमिरतिरस्कारभास्करानुकारिणा वसुधानलावतीर्णसुधासारणीदेश्यदेशनावितानपरमार्हतीकृतश्रीकुमारपालक्ष्मापालप्रवर्तिताऽभयदानाभिधान-जीवातुसंजीवितनानाजीवप्रदत्ताशीर्वादमाहात्म्यकल्पावधिस्थायिविशदयशःशरीरेण निरवद्यचातुर्विद्यनिर्माणैकब्रह्मणा श्रीहेमचन्द्रसूरिणा जगत्प्रसिद्धश्रीसिद्धसेनदिवाकरविरचितद्वात्रिंशद्द्वात्रिंशिकानुसारि श्रीवर्द्धमानजिनस्तुतिरूपमयोगव्यवच्छेदान्ययोगव्यवच्छेदाभिधानं द्वात्रिंशिकाद्वितयं विद्वज्जनमनस्तत्त्वावबोधनिबन्धनं विदधे । स्या० । अभयदेवसूरिशिष्ये स्वनामख्याते सूरौ, (एतद्वर्णनम् 'अणुओगदार' शब्दे प्रथमभागे ३५६ पृष्ठे दर्शितम् ।)

हेमचंदवागरण-हेमचन्द्रव्याकरण-न० । हेमचन्द्ररचितव्याकरणे, कल्प० १ अधि० १ क्षण ।

हेमजाल-हेमजाल-न० । सुवर्णमयदामसमूहे, रा० । औ० । जी० । (अत्रत्या व्याख्या 'लवणसमुद्द' शब्दे षष्ठे भागे गता ।)

हेमपुरिस-हेमपुरुष-न० । स्वनामख्याते नगरे, हेमपुरिसनगरे हेमकुडो राया हेमसभवा भारिया तस्स पुत्तो वरतिविंज्जसन्निभो हेमो णाम कुमारो । नि० चू० ११ उ० ।

हेमप्पह-हेमप्रभ-पुं० । भुवनमल्लपितरि कुसुमपुरीनाथे, संथा० १ अधि० १ प्रस्ता० ।

हेमव-हेमवत्-पुं० । लोकोत्तररीत्या फाल्गुनमासे, चं० प्र० १० पाहु० । ज्यो० । सू० प्र० । जं० । कल्प० ।

हेमवय हेमवत्-त्रि० । हिमवत्पर्वतोद्भवे, ज्ञा० १ श्रु० १ अ० । औ० ।

हेमवयचित्तविचित्ततिणिसकणगणिज्जुत्तदारुयागस्स । हैमवतं हिमवत्पर्वतभावि चित्रविचित्रं मनोहारि चित्रोपेतं तैनिश-तिनिशदारुसंबन्धि कनकनियुक्तं कनकविच्छुरितं दारु काष्ठं यस्य स हैमवतचित्रविचित्रतैनिशकनकनियुक्तदारुकस्तस्य सूत्रे च द्वितीयककारः स्वार्थिकः, पूर्वस्य च दीर्घत्वं प्राकृतत्वात् । जी० ३ प्रति० ४ अधि० १ उ० । भ० । स्था० । अनु० । जं० । स० ।

अथानेन वर्षधरेण विभक्तस्य हैमवतक्षेत्रस्य वक्तव्यतामाह-

कहि णं भंते ! जंबुद्दीवे दीवे हेमवए णामं वासे पण्णत्ते ?, गोयमा ! महाहिमवंतस्स वासहरपव्वयस्स दक्खिणेणं चुल्लहिमवन्तस्स वासहरपव्वयस्स उत्तरेणं पुरत्थिमलवणसमुद्दस्स पच्चत्थिमेणं पच्चत्थिमलवणसमुद्दस्स पुरत्थिमेणं एत्थ णं जंबुद्दीवे दीवे हेमवए णामं वासे पण्णत्ते, पाईणपडीणायए उदीणदाहिणवित्थिण्णे पलिअंकसंठाणसंठिए दुहा लवणसमुद्दं पुट्ठे पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं लवणसमुद्दं पुट्ठे, पच्चत्थिमिल्लाए कोडीए पच्चत्थिमिल्लं लवणसमुद्दं पुट्ठे, दोण्णि जोअणसहस्साइं एगं च पंचुत्तरं जोअणसयं पंच य एगूणवीसइभागे जोअणस्स विक्खंभेणं । तस्स बाहा पुरत्थिमपच्चत्थिमेणं छज्जोअणसहस्साइं सत्त य पणवण्णे जोअणसए तिण्णि अ एगूणवीसइभागे जोअणस्स आयामेणं, तस्स जीवा उत्तरेणं पाईणपडीणायया दुहओ लवणसमुद्दं पुट्ठा पुरत्थिमिल्लाए कोडीए पुरत्थिमिल्लं लवणसमुद्दं पुट्ठा, पच्चत्थिमिल्लाए ०जाव पुट्ठा सत्ततीसं जोअणसहस्साइं छच्च चउरुत्तरे जोअणसए सोलस य एगूणवीसइभाए जोअणस्स किंचिविसेसूणे आयामेणं । तस्स धणुं दाहिणेणं अट्ठतीसं जोअणसहस्साइं सत्त य चत्ताले जोअणसए दस य एगूणवीसए भागे जोअणस्स परिक्खेवेणं । हेमवयस्स णं भंते ! वासस्स केरिसए आयारभावपडोआरे पण्णत्ते ? गोयमा ! बहुसमरमणिज्जे भूमिभागे पण्णत्ते, एवं तइअसमाणुभावो णेअव्वो त्ति । ( सूत्र० ७९ ) ॥

'कहि णं' मित्यादि, क्व भदन्त ! जम्बूद्वीपे द्वीपे हैमवतं नाम वर्षं प्रज्ञप्तम् ?, गौतम ! महाहिमवतो वर्षधरपर्वतस्य 'दक्खिणेणं' त्यादि, व्यक्तम् । अत्रान्तरे जम्बूद्वीपे द्वीपे हैमवतं नाम वर्षं प्रज्ञप्तमित्यादि सर्वं प्राग्वत्, नवरं पल्यङ्कसंस्थानसंस्थितमायतचतुरस्रत्वात्, तथा द्वे योजनसहस्रे एकं च पञ्चोत्तरं योजनशतं पञ्च चैकोनविंशतिभागान् योजनस्य यावद्विष्कम्भेन, क्षुद्रहिमवद्द्विगुणविष्कम्भादस्य द्विगुणविष्कम्भ इत्यर्थः । अथास्य बाहाद्याह-'तस्स बाहा' इत्यादि, व्यक्तम् । 'तस्स जीवा उत्तरेणं' मित्यादि प्राग्वत्, सप्तत्रिंशद्योजनसहस्राणि षट् चतुरुत्तराणि योजनशतानि षोडशकला किंचिदूना आयामेनेति, 'तस्स धणु' मित्यादि, तस्य धनुःपृष्ठमष्टत्रिंशद्योजनसहस्राणि सप्त च चत्वारिंशानि-चत्वारिंशदधिकानि योजनश-

तानि दश च एकोनविंशतिभागान् योजनस्य परिक्षेपेणेति । अथ कीदृशमस्य स्वरूपमित्याह-'हेमवयस्स ण' मित्यादि, व्याख्यातप्रायम्, नवरम् 'एव' मिति-उक्तप्रकारेण तृतीयसमा-सुषमदुष्षमारकस्तस्या भाव:-स्वभाव; स्वरूपमिति यावत् नेतव्य:-स्मृतिपथं प्रापणीय इत्यर्थ:।

अथात्र क्षेत्रविभागकारिगिरिस्वरूपं निर्दिशति—

कहि णं भंते ! हेमवए वासे सद्दावा(व)ई णामं वट्टवेअद्धपव्वए पण्णत्ते ?, गोयमा ! रोहियाए महाणईए पच्चत्थिमेणं रोहिअंसाए महाणईए पुरत्थिमेणं हेमवयवासस्स बहुमज्झदेसभाए, एत्थ णं सद्दावई णामं वट्टवेअद्धपव्वए पण्णत्ते, एगं जोअणसहस्सं उद्धं उच्चत्तेणं अद्धाइज्जाइं जोयणसयाइं उव्वेहेणं सव्वत्थसमे पल्लंगसंठाणसंठिए एगं जोअणसहस्सं आयामविक्खंभेणं तिण्णि जोअणसहस्साइं एगं च बावट्ठं जोअणसयं किंचि विसेसाहिअं परिक्खेवेणं पण्णत्ते, सव्वरयणामए अच्छे, से णं एगाए पउमवरवेइयाए एगेण य वणसंडेणं सव्वओ समंता संपरिक्खित्ते, वेइआवणसंडवण्णओ भाणिअव्वो । सद्दावइस्स णं वट्टवेअड्ढपव्वयस्स उवरिं बहुसमरमणिज्जे भूमिभागे पण्णत्ते, तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ णं महं एगे पासायवडेंसए पण्णत्ते, बावट्ठिं जोअणाइं अद्धजोयणं च उद्धं उच्चत्तेणं इक्कतीसं जोअणाइं कोसं च आयामविक्खंभेणं ०जाव सीहासणं सपरिवारं । से केणट्ठेणं भंते ! एवं वुच्चइ-सद्दावई वट्टवेयद्धपव्वए ?, गोयमा ! सद्दावइवट्टवेअद्धपव्वए णं खुद्दाखुद्दिआसु वावीसु ० जाव बिलपंतिआसु बहवे उप्पलाइं पउमाइं सद्दावइप्पभाइं सद्दावतिवण्णाभाइं सद्दावई अ इत्थ देवे महिड्ढीए ०जाव महाणुभावे पलिओवमट्ठिइए परिवसइ त्ति । से णं तत्थ चउण्हं सामाणिअसाहस्सीणं ०जाव रायहाणी मंदरस्स पव्वयस्स दाहिणेणं अण्णम्मि जम्बुद्दीवे दीवे । ( सू० ७७ )

'कहि णं भंते !' इत्यादि, क भदन्त ! हैमवतवर्षे शब्दापाती नाम्ना वृत्तवैताढ्यपर्वत प्रज्ञप्त, वैताढ्यान्वर्थस्तु प्रागुक्त, असौ च वृत्ताकारो न भरतादिक्षेत्रवर्त्तिवैताढ्यपर्वतवत् पूर्वापरायतस्तेन वृत्तवैताढ्य इत्युच्यते; अत एव एतत्कृत: क्षेत्रविभाग पूर्वतोऽपरतश्च भवति, यथा—पूर्वहैमवतमपरहैमवतमिति । आह—पञ्चकलाधिकैकविंशतिशतयोजनप्रमाणविस्तारस्य हैमवतस्य मध्यवर्त्ती योजनसहस्रमान एव गिरि: कथं क्षेत्रं द्विधा विभजति ?, उच्यते—प्रस्तुतक्षेत्रव्यासो हि उभयो: पार्श्वयो रोहितारोहितांशाभ्यां नदीभ्यां रुद्ध:, मध्यतस्त्वनेन । अथ नदीरुद्धक्षेत्रं वर्जयित्वाऽवशिष्टक्षेत्रमसौ द्विधा करोतीत्यस्मिन्नन्वर्थवर्त्ती वैताढ्यशब्दप्रवृत्तिरिति एवं शेषेष्वपि वृत्तवैताढ्येषु स्वस्वक्षेत्रनदीनामभिलापेन भाव्यम्, दिग्विभागनियमनं सुलभमिति न व्याख्यायते । एकं योजनसहस्रमूर्ध्वोच्चत्वेन अर्द्धतृतीयानि योजनशतान्युद्वेधेन सर्वत्र सम:—तुल्योऽधोमध्योर्ध्वदेशेषु सहस्रसहस्रविस्तारकत्वात्, अत एव पल्यङ्कसंस्थानसंस्थित: । पल्यङ्कश्च—लाटदेशप्रसिद्धो वंशदलैर्निर्मापितो धान्याधारकोष्ठक:, एकं योजनसहस्रमायामविष्कम्भाभ्यां त्रीणि योजनसहस्राणि एकं च द्वाषष्ट्यधिकं योजनशतं किञ्चिद्विशेषेण करणवशादागतेन सूत्रानिर्दिष्टेन राशिना अधिकं परिक्षेपेण प्रज्ञप्तम् । सर्वात्मना रत्नमय, केचन रजतमयान् वृत्तवैताढ्यानाहु, परं तेषामनेन ग्रन्थेन सह विरुद्धत्वमिति । अथात्र पद्मवरवेदिकाद्याह—'से ण' मित्यादि, व्यक्तम्, 'सद्दावइस्स ण' मित्यादि, व्यक्तम् । अथ नामार्थं निरूपयन्नाह—'से केणट्ठेणं भंते' इत्यादि प्रागुक्तऋषभकूटप्रकरणवद् व्याख्येयम्, नवरम् ऋषभकूटप्रकरणे ऋषभकूटप्रभै: ऋषभकूटवर्णैरुत्पलादिभिर्ऋषभकूटनामनिरुक्तिर्दर्शिता अत्र तु शब्दापातिप्रभै शब्दापातिवर्णै: उत्पलादिभि: शब्दापातिवृत्तवैताढ्यनामनिरुक्तिर्द्रष्टव्या, शब्दापाती चात्र देवो महर्द्धिको यावन्महानुभाव: पल्योपमस्थितिक: परिवसति । अथ शब्दापातिदेवमेव विशिनष्टि—'से णं तत्थ' इत्यादि. स—शब्दापाती देवस्तत्र—प्रस्तुतगिरौ चतुर्णां सामानिकसहस्राणां यावत्पदात् विजयदेववर्णकसूत्रं सर्वमपि ज्ञेयं व्याख्येयं च । कियत्पर्यन्तमित्याह—राजधानी मन्दरस्य दक्षिणस्यामन्यस्मिन् जम्बूद्वीपे द्वीपे इति । जम्बूद्वीपप्रज्ञप्त्यादर्शेषु एतत्सूत्रदृष्टेऽपि 'पलिओवमट्ठिइए परिवसती' त्ययं सूत्रादेश: पूर्वसूत्रे यद्योजितस्तद्बहुषु विजयदेवप्रकरणादिसूत्रेष्वित्थमेव दृष्टत्वात् । बहुग्रन्थसाम्मत्येन क्वचिदादर्शवैगुण्यमुद्भाव्यान्यथा योजनं बहुश्रुतसम्मतमेवास्ति इत्यलं विस्तरेण । ननु अस्य शब्दापातिवृत्तवैताढ्यस्य क्षेत्रविचारादिग्रन्थेषु अधिप: स्वातिनामा उक्त:; तत्कथं न तै: सह विरोध: ?, उच्यते—नामान्तरं, मतान्तरं वा ।

अथ हैमवतवर्षस्य नामार्थं पृच्छति—

से केणऽट्ठेणं भंते ! एवं वुच्चइ हेमवए वासे हेमवए वासे ?, गोयमा ! चुल्लहिमवन्तमहाहिमवन्तेहिं वासहरपव्वएहिं दुहओ समवगूढे णिच्चं हेमं दलइ, णिच्चं हेमं दलइत्ता णिच्चं हेमं पगासइ । हेमवए अ इत्थ देवे महिड्ढीए पलिओवमट्ठिइए परिवसइ, से तेणट्ठेणं गोयमा ! एवं वुच्चइ हेमवए वासे हेमवए वासे । ( सू० ७८ )

'से केणट्ठेण' मित्यादि, अथ केनार्थेन भगवन्! एवमुच्यते-हैमवतं वर्षं हैमवतं वर्षमिति ?, गौतम ! क्षुद्रहिमवन्महाहिमवद्भ्यां वर्षधरपर्वताभ्यां द्विधातो दक्षिणोत्तरपार्श्वयो: समवगाढं—संश्लिष्टं, ततो हिमवतोरिदं हैमवतम् । अयं भाव —क्षुद्रहिमवतो महाहिमवतश्चापान्तराले तत्, क्षेत्रम्, ततो द्वाभ्यामपि ताभ्यां यथाक्रममुभयोर्दक्षिणोत्तरपार्श्वयो क्रान्तसीमाकमिति भवति तयो: सम्बन्धि । यदि वा नित्यं कालत्रयेऽपि हेम—सुवर्णं ददाति आसनप्रदानादिना प्रयच्छति, कोऽर्थ ?, तत्रत्ययुग्मिमनुष्याणामुपवेशनाद्युपभोगे

हेममया शिलापट्टका उपयुज्यन्ते, तत उपचारेण ददाती-त्युक्तम् । नित्य हेम-प्रकाशयति,ततो हेम नित्ययोगि प्रशस्य चाऽस्यास्तीति हेमवत्, हेमवदेव हैमवतम् , प्रज्ञादेराकृतिगणतया'प्रज्ञादिभ्य ' ( श्रीसिद्ध०अ०७पा०२सू० १६५ ) इति स्वार्थेऽणप्रत्यय , हैमवतश्चात्र देवो महर्द्धिक पल्योपम स्थितिक. परिवसति,तेन तद्योगाद्धैमवतमिति व्यपदिश्यते । हैमवनो देव. स्वामित्वेनास्यास्तीति, * अभ्रादित्वादप्रत्ययो वा । जं० ४ वक्ख० ।

हेमवयकूड-हैमवतकूट-न० । हैमवद्वर्षेशसुरकूटे.जं०४वक्ख० । जम्बूद्वीपे हिमवद्वर्षधरपर्वते स्वनामख्याते कूट," स्था० २ ठा० ३ उ० ।

हेमविमलसूरि-हेमविमलसूरि-पुं० । 'हीरविजयसूरिगुरो आनन्दविजयसूरे. गुरौ सोमसुन्दरसूरिशिष्ये , ग० ३ अधि० ।

हेमसंभवा-हेमसंभवा-स्त्री० । हेमकृतराजस्य भार्यायाम् ,वृ० ४ उ० । ( बालिकासु अत्यन्त गृद्धस्य अस्या पुत्रस्य वेदोपघातो जात , तद्वृत्तम् ' उवघायपडग '.शब्दे द्वितीयभागे निरूपितम् । )

हेमसरोवर-हेमसरोवर-न० । स्वनामख्याते तीर्थे, यत्र द्वासप्ततिर्जिनालया । ती० ४३ कल्प ।

हेमसुत्तग-हेमसूत्रक-न० । हेमसङ्कलके, ज्ञा० १ श्रु० १ अ० ।

हेर-हैर-पु० । माण्डव्यगोत्रे गोत्रविशेषप्रवर्त्तके च ऋषौ,तद पत्येपु च । स्था० ७ ठा० ३ उ० ।

हेरंब-देशी-महिष-डिण्डिमयो. , दे० ना० ८ वर्ग ७६ गाथा । पाइ० ना० ।

हेरण्णवय-हैरण्यवत्-पुं० । जम्बूद्वीपे स्वनामख्याते वर्षक्षेत्रे, स्था० ६ ठा० ३ उ० । जं० । प्रज्ञा० । रुक्मिवर्षधरे अष्टकूटानां मध्ये सप्तमे कूट, स्था० २ ठा० ३ उ० ८७ सूत्र टी० ।

दो हेरण्णवयाइं (सूत्र-६२+) । स्था० २ ठा० ३ उ० । ( अस्य ) व्याख्या ' रुप्पि ' शब्दे जम्बूद्वीपप्रज्ञप्ति (१११) सूत्रेण षष्ठे भागे गतार्था ।

हेरण्णवयकूड-हैरण्यवतकूट-न० । शिखरिवर्षधरपर्वतस्य कूटे, स्था० २ ठा० ३ उ० । हैरण्यवतक्षेत्राधिपसत्के रुक्मि वर्षधरकूटे, जं० ४ वक्ख० ।

हेरण्णिय-हैरण्यिक-पुं० । स्वर्णकारे, आ० म० १ अ० । न० ।

हेरिंब-देशी-गणेशे, दे० ना० ८ वर्ग ७२ गाथा ।

हेरिय-हैरिक-पु० । उद्भ्रामके, कल्प० १ अधि० ६ क्षण ।

हेरुयाल-हेरुताल-पु० । वृक्षविशेषे, ज्ञा० १ श्रु० ६ अ० । जं० ।

हेला-हेला-स्त्री० । लीलायाम् , जीवा० १६ अधि० । पाइ० ना० । वेगे, दे० ना० ८ वर्ग ७१ गाथा । अनादरे, पाइ० ना० १६२ गाथा ।

* " अभ्रादिभ्य. " ॥ ७ । २ । ४६ ॥

हेलियामच्छ-हेलिकामत्स्य-पुं० । मत्स्यभेदे, जी० १ प्रति० ।

हेलुअ-देशी-छिक्कायाम् , दे० ना० ८ वर्ग ७२ गाथा ।

हेलुक्का-देशी-हिक्कायाम् , दे० ना० ८ वर्ग ७२ गाथा ।

हेल्लि-हेसखि-सम्बो० । हेसखि इत्यस्य हेल्लि इति निपात्यते । सख्या आमन्त्रणे, ' हेल्लि म झखहि आलु ' । प्रा० ४ पाद ।

हेवाग-हेवाक-पु० । स्वभावे, स्था० ४ ठा० ४ उ० । अभ्यासे च । नि० चू० १ उ० ।

हेव्वस-पु० । पारसीक' शब्द । अलाउद्दीनसुरत्राणस्य मल्लिके, " कलिकालदुल्ललिअवसेण अलाउद्दीनसुरत्ताणस्स मल्लिकेण 'हेव्वस' नामेण । " ती० ३५ कल्प ।

हेसिय-ह्रेषित-न० । हयशब्दे, अनु० । जं० ।

हेहभूय-हेहभूत-न० । गुणदोषपरिज्ञानविकलेऽशठभावे, व्य० १ उ० ।

हेहय-हैहय-पु० । स्वनामख्याते क्षत्रियराजे, आव० ४ अ० ।

हो-हो-अव्य० । विस्मये, पाइ० ना० २७४ गाथा ।

होअऊण-भूत्वा-अव्य० । " स्वरादनतो वा " ॥ ८।४।२४० ॥ इति अकारागमो वा । होअऊण । होऊण । भूत्वा । उत्पद्येत्यर्थे, प्रा० ८ अ० ४ पाद ।

होउकाम-भवितुकाम-पु० । मोक्षार्थिनि भव्यसत्त्वे, प० सू० १ सूत्र ।

होन्त-भवत्-त्रि० । " शत्रानश " ॥ ८ । ३ । १८१ ॥ इति शतृप्रत्ययस्थाने न्त' । प्रा० । जायमाने, विशे० ।

होढ-होढ-पु० । मोषे, ज्ञा० १ श्रु० २ अ० ।

होत्ता-भूत्वा-अव्य० । "क्त्व इअ-दूणौ ' ॥ ८ । ४ । २७१ ॥ इति क्त्वाप्रत्ययस्य इय-दूणौ वा भवत । होत्ता । उत्पद्येत्यर्थे, प्रा० ८ अ० ४ पाद ।

होत्तिय-होत्रिक-पुं० । अग्निहोत्रिके, भ० १ श० ५ उ० । औ० । तृणवनस्पतिविशेषे, प्रज्ञा० १ पद ।

होत्था-अभवत्-क्रिया० । जात इत्यर्थे,विपा० १ श्रु० १ अ० ।

होदूण-भूत्वा-अव्य० । भू-क्त्वा । "क्त्व इय-दूणौ" ॥८।४। २७१॥ इति क्त्वास्थाने दूणादेश । उत्पद्येत्यर्थे, प्रा० ४ पाद ।

होन्तो । अभविष्यत् । " न्त-माणौ " ॥ ८ । ३ । १८० ॥ इति न्ताऽऽदेश । होन्तो । होमाणो । अभविष्यदित्यर्थे, प्रा० ८ अ० ३ पाद ।

होम-होम-पु० । अग्निहोतृभि. क्रियमाणे अग्निहोमे, अनु० । नि० चू० । प० व० ।

होयव्व-भवितव्य-न० । भाव्ये, पञ्चा० ४ विव० । आ० म० । नि० चू० ।

होया-होतृ-पु० । होतरि, अग्नौ हवि'प्रदातरि, ज्ञा० १ श्रु० १ अ० ।

होरंभा–होरम्भा–स्त्री० । महाढक्कायाम् , रा० । तं० । भ० ।

होरण–देशी–वस्त्रे, दे० ना० ८ वर्ग ७२ गाथा ।

होरा–होरा–स्त्री० । ज्योतिषोक्ते लग्ने राश्यर्द्धभागे होराख्या-पकशास्त्रभेदे, रेखायाञ्च । द० प० । सूत्र० ।

होल–देशी–देशप्रसिद्धे नैष्ठुर्ये, दश० ७ अ० । आ० । होल इति वा बोल इति वा एतौ च देशान्तरे अवज्ञासंसूचकौ । आचा० २ श्रु० १ चू० ४ अ० १ उ० ।

होलवाय–होलवाद–पुं० । होलेत्येवं वादो होलवादः । होले-त्येवं पुरुषामन्त्रणे, सूत्र० १ श्रु० ६ अ० ।

ह्व–ह्व–अव्य० । वाक्यालङ्कारे, सूत्र० २ श्रु० ७ अ० ।

ह्वुमा–स्नुषा–स्त्री० । पुत्रवध्वाम् , सूत्र० २ श्रु० ७ अ० ।

ह्व–ह्व–देशी–साङ्केतिकः शब्दः । चतुष्के,ह्वशब्दोपादानात् नारकतिर्यग्नरदेवाश्चत्वारो ग्राह्याः । ग० २ अधि० । नि० चू० ।

## वासे पुण्णारसंकचन्दपमिए चित्तम्मि मासे वरे,
## हत्थे भे सुहतेरसीबुहजुए पक्खे य सुब्भे गए ।
## सम्मं संकलिओ य सूरयपुरे संपुण्णयं संगओ,
## राइंदायरिएण देउ भुवणे राइंदकोसो सुहं ॥ १ ॥

## अथ प्रशस्तिः--

शाखाप्रशाखाभिरतिप्रवृद्धे, वीरोक्तिविस्तारविधानदक्षे ।
सद्धर्म्यसौधर्मबृहत्तपाऽऽख्य–गच्छे जगत्यां जनितप्रतिष्ठे ॥ १ ॥
श्रुतावगाहप्रवरा महान्तः, सच्छासनाऽशेषधुरं वहन्तः ।
श्रीसङ्घवाटीं परिफुल्लयन्तः, सूरीन्द्रमुख्या बहवो बभूवुः ॥ २ ॥
तदन्वयेऽभूद् वररत्नसूरिः, स्वब्रह्मतेजस्वितया करिष्णुः ।
भानुं नभोगं हरिमब्धिवासं, त्रिषद्भुतमं पट्टमलङ्करिष्णुः ॥ ३ ॥
निरन्तराऽऽचाम्लकरः सुखेन, क्षमा–श्रुत-प्राज्यमतिप्रवृद्धः ।
वृद्धक्षमासूरिरलञ्चकार, तत्पट्टमेरुं सवितेव धीरः ॥ ४ ॥

स्वपरसमयवेदी षट्सु भाषासु दक्षो,
विजितयवनवृन्दो मेदपाटीयभर्तुः ।
सदसि जनसमक्षं श्रीलदेवेन्द्रसूरिः,
समभवदतितेजाः पट्टकेऽमुष्य जिष्णुः ॥ ५ ॥

शिश्राय तत्पट्टमशेषकाल-विन्मारजित्स्वाऽन्यशुभं करिष्णुः ।
नैमित्तिकानां प्रथमश्च लोके, कल्याणसूरिर्गणितप्रवीणः ॥ ६ ॥
अन्वर्थनामा समभूत् प्रमोद-सूरिर्जगज्जीवसुमोदहेतुः ।
समाधिलीनो निजकर्मदक्ष–स्तदासनेऽखण्डितशीलशाली ॥ ७ ॥
तत्पट्टमेरावुदियाय भानु–र्जैनागमाब्धिं परिमथ्य कोशम् ।
राजेन्द्रसूरिर्जगदर्चनीयो–ऽभिधानराजेन्द्रमसावकार्षीत् ॥ ८ ॥

अस्मत्पट्टप्रभावी धनविजयमुनिर्वादिवृन्दप्रजेता,
श्रीलोपाध्यायवर्यः प्रतिसमयमदाद् भूरिसाह्राय्यमेषः ।
कोशाब्धेरस्य सृष्टौ सकलजनपदश्लाघनीयत्वलिप्सोः,
सद्विद्वन्मानसाब्जे दिनकरसमतां यास्यमानस्य लोके ॥ ९ ॥
धन्वन्यनूत्तर्कयुगाङ्कपृथ्वी-वर्षे सियाणानगरेऽस्य सृष्टिः ।
पूर्णोऽभवत् सूर्यपुरे ह्यविघ्नं, शून्याङ्गनिध्येकमिते सुवर्षे ॥ १० ॥
तावन्महान् प्राकृतकोश एष, यावत् क्षितौ मेरुरवीन्दवः स्युः ।
सज्जैनजैनेतरविज्ञवर्ग-मानन्दयेत् कोकमिवोष्णरश्मिः ॥ ११ ॥





इति श्रीमत्सौधर्मबृहत्तपागच्छीय-कलिकालसर्वज्ञकल्प-
श्रीमद्भट्टारक-जैन श्वेताम्बराऽऽचार्य श्री श्री १००८ श्री
मद्विजयराजेन्द्रसूरीश्वरविरचिते 'श्रीअभिधानराजेन्द्र-
प्राकृतमहाकोशे' हकारादिशब्दसङ्कलनं समाप्तम् ।



## तत्समाप्तौ च समाप्तश्चायं ग्रन्थः ।







# अथ मुद्रणपरिचयः-



निर्ग्रन्थगच्छः समभूत्सुधर्माऽऽ-ख्यात्सुस्थिताऽऽर्यादथ कोटिकाऽऽह्वः ।
चन्द्रोऽपि चन्द्रप्रभ-चन्द्रसूरेः, सामन्तभद्राद् वनवासिगच्छः ॥ १ ॥
श्रीसर्वदेवाद् वट आविरासीत्, तपा जगच्चन्द्रमुनीन्द्रवर्यात् ।
सौधर्मसंयुक्तबृहत्तपाऽऽख्यो, राजेन्द्रसूरेर्जगति प्रसिद्धः ॥ २ ॥ युग्मकम् ।

एतद्गच्छसुशासनीयसुधुरप्रोद्वाहिसूरिव्रजाऽ-
लङ्कारायितसाधुकर्म विधिवत्संशोधकस्याऽऽज्ञया ।
आजन्माऽनघशीलशोभिततनो राजेन्द्रसूरीशितुः,
संघातान्तिमया विनेयनिवहैः संशोध्य मुद्रापितः ॥ ३ ॥
व्याख्यानी सच्चरित्रः सुबुधगणनतः सेवितः साधुवर्गै-
र्जैनाचार्यः क्रियावान् हि विजयधनचन्द्रोऽस्य पट्टेऽभिषिक्ते ।
दान्ते क्षान्ते महान्ते प्रशमितहृदये संयमे सञ्चरिष्णौ,
सौम्ये रम्ये गभीरे सकलजनहिते वर्त्तमाने महासौ ॥ ४ ॥
चन्द्राशाङ्ककलाधिनाथसहिते वर्षेऽसिते पक्षके,
चैत्रे मासि धरासुतस्य दिवसे ज्येष्ठाख्यतारायुते ।
सप्तम्यां रतलामनामकपुरे भूपेन्द्रसूरीश्वरे,
राजत्येष सुसाधु मुद्रणमितो राजेन्द्रकोषः शुभः ॥५॥



